स्तात्पर्य्यनिर्णये वेदान्तमते तात्पर्य्यनिर्णायके २हेतुभेदे तत्र उपक्रमोपसंहाराभ्यां द्वाभ्यामेव तात्पर्य्यं निर्णोयते नत्वेकैकेनेति बोध्यम्। करणे घञ्। ३सामाद्युपाये "सामादिभिरुपक्रमैः" मनुः। "उपक्रमैरस्खलितैश्चतुर्भिः" रघुः। कर्म्मणि घञ्। ४आरभ्यमाणे पु० तदादित्वविवक्षायाम् तदन्ततत्पुरुषस्य क्लीवता "नन्दोपक्रमं द्रोणः" पा० भा० "रामोपक्रममाचख्यौ रक्षःपरिभवं नवम्" रघुः। करणे घञ्। ५चिकित्सायाम् सुश्रुते भूरिप्रयोगः।

**उपक्रमण** न० उप+क्रम–भावे ल्युट्। १आरम्भे करणे ल्युट्। २तत्साधने सुश्रुतोक्ते दीर्घायुष्यादिज्ञानपूर्व्वकचिकित्सायाम् ३भूमिकायां स्त्री ङीप्। स्वार्थे कन् अत इत्वम्। उपक्रमणिका। ग्रन्थप्रस्तावने सुखबन्धे।

**उपक्रमणीय** त्रि० उप+क्रम–अनीयर्। १आरम्भणीये। उपक्रमणे साधु–छ। २चिकित्साङ्गे दीर्घायुष्यादिज्ञानसाधने लक्षणभेदे। आतुरचिकित्सार्थं यथोपक्रमणं कर्त्तव्यं तद्वेदके ३ग्रन्थे च। तत्प्रकारादि सुश्रुते दर्शितं यथा। "अथात आतुरोपक्रमणीयमध्यायं व्याख्यास्यामः। आतुरमुपक्रममाणेन भिषजायुरेवादौ परीक्षेत। सत्येवायुषि व्याध्यृत्वग्निवयोदेहबलसत्त्वसात्म्यप्रकृतिभेषजदेशान् परीक्षेत। तत्र महापाणिपादपार्श्वपृष्ठस्तनाग्रदशनवदनस्कन्धललाटं दीर्घाङ्गुलिपर्वोच्छ्वासप्रेक्षणबाहुं विस्तीर्णभ्रूस्तनान्तरोरस्कं ह्रस्वजङ्घामेढ्रग्रीवं गम्भीरसत्त्वस्वरनाभिमनुच्चैर्बद्धस्तनमुपचितमहारोमशकर्णं पश्चान्मस्तिष्कं स्नातानुलिप्तं मूर्द्धानुपूर्व्व्या विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद्दीर्घायुः खल्वयमिति। तमेकान्तेनोपक्रमेत्। एभिर्लक्षणैर्विपरीतैरल्पायुर्मिश्रैर्मध्यमायुरिति। गूढसन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः। उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते। गर्भात् प्रभृत्यरोगो यः शनैः समुपचीयते। शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः। मध्यमस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे। अधस्तादक्षयोर्यस्य लेखाः स्युर्व्यक्तमायताः। द्वे वा तिस्रोऽधिका वापि पादौ कर्णौ च मांसलौ। नासाग्रमूर्द्ध्वञ्च भवेदूर्द्ध्वलेखाश्च पृष्ठतः। यस्य स्युस्तस्य परममायुर्भवति सप्ततिः। जघन्यस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे। ह्रस्वानि यस्य पर्वाणि सुमहच्चापि मेहनम्। तथोरस्यवलीढानि न च स्यात् पृष्ठमायतम्। ऊर्द्ध्वञ्च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः। हसतो जल्पतो वापि दन्तमांसं प्रदृश्यते। प्रेक्षते यश्च विभ्रान्तं स जीवेत्पञ्चविंशतिम्। अथ पुनरायुषो विज्ञानार्थमङ्गप्रत्यङ्गप्रमाणसारानुपदेक्ष्यामः। तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि तदवयवाः प्रत्यङ्गानीति। तत्र स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते। प्रदेशिन्यास्तु मध्यमाऽनामिका कनिष्ठिका यथोत्तरं पञ्चमभागहीना। चतुरङ्गुलायते पञ्चाङ्गुलविस्तृते प्रपदपादतले। पञ्चचतुरङ्गुलायतविस्तृता पार्ष्णिः। चतुर्दशाङ्गुलायतः पादः। चतुर्दशाङ्गुलपरिणाहानि पादगुल्फजङ्घाजानुमध्यानि। अष्टादशाङ्गुला जङ्घा जानूपरिष्टाद्द्वात्रिंशदङ्गुलमेवं पञ्चाशत्। जङ्घायामसमावूरू। द्व्यङ्गुलानि वृषणचिबुकदशननासापुटभागकर्णमूलनयनान्तराणि। चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि। द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौल्यानि। इन्द्रवस्तिपरिणाहांसपीठकूर्परान्तरायामः षोड़शाङ्गुलः। चतुर्विंशत्यङ्गुलो हस्तः। द्वात्रिंशदङ्गुलपरिमाणौ भुजौ। द्वात्रिंशदङ्गुलपरिणाहावूरू। मणिबन्धकूर्परान्तरं षोड़शाङ्गुलम्। तलं षट्चतुरङ्गुलायामविस्तारम्। अङ्गुष्ठमूलप्रदेशिनीश्रवणापाङ्गान्तरमध्यमाङ्गुल्यौ पञ्चाङ्गुले। अर्द्धपञ्चाङ्गुले प्रदेशिन्यनामिके। सार्द्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ। चतुर्विंशतिविस्तारपरिणाहं मुखग्रीवम्। त्रिभागाङ्गुलविस्तारा नासापुटमर्य्यादा। नयनत्रिभागपरिणाहा तारका। नवमस्तारकांशो दृष्टिः। केशान्तमस्तकान्तरमेकादशाङ्गुलम्। मस्तकादवटुकेशान्तो दशाङ्गुलः। कर्णावट्वन्तरं चतुर्दशाङ्गुलम्। पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः। अष्टादशाङ्गुलविस्तीर्णमुरः। तत्प्रमाणा पुरुषस्य कटी। सविंशमङ्गुलशतं पुरुषायाम इति भवन्ति चात्र पञ्चविंशे ततो वर्षे पुमान् नारी तु षोड़शे। समत्वागतवीर्य्यौ तौ जानीयात् कुशलो भिषक्। देहः स्वैरङ्गुलैरेव यथावदनुकीर्त्तितः। युक्तः प्रमाणेनानेन पुमान् वा यदि वाऽङ्गना। दीर्घमायुरवाप्नोति वित्तञ्च महदृच्छति। मध्यमं मध्यमैरायुर्वित्तं हीनैस्तथाऽवरम्। अथ सारान् वक्ष्यामि। स्मृतिभक्तिप्रज्ञाशौर्य्यशौचोपेतं कल्याणाभिनिवेशं सत्त्वसारं विद्यात्। स्निग्धं संहतश्वेतास्थिदन्तनखं बहुलकामप्रजं शुक्रेण। अकृशमुत्तमबलं स्निग्धगम्भीरस्वरं सौभाग्योपपन्नं महानेत्रञ्च मज्ज्ञा। महाशिरःस्कन्धदृढदन्तहन्वस्थिनखमस्थिभिः। स्निग्धमूत्रस्वेदस्वरं बृहच्छरीरमायासासहिष्णुं मेदसा। अच्छिद्रगात्रं गूढास्थिसन्धिं मांसोप-

च्चितञ्च मांसेन । स्निग्धताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलं रक्तेन । सुप्रसन्नमृदुत्वग्रोमाणं त्वक्सारं विद्यादित्येषां पूर्वं पूर्वं प्रधानमायुःसौभाग्ययोरपि । भवति चात्र सामान्यतोऽङ्गप्रत्यङ्गप्रमाणादथ सारतः। परीक्ष्यायुः सुनिपुणो भिषक् सिध्यति कर्मसु ।

व्याधिविशेषास्तु प्रागभिहिताः सर्व एवैते त्रिविधाः साध्या याप्याः प्रत्याख्येयाश्च तत्रैतान् भूयस्त्रिधा परीक्षेत किमसावौपसर्गिकः प्राक्केवलोऽन्यलक्षण इति । तत्रौपसर्गिको यः पूर्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूलएवोपद्रवसंज्ञः । प्राक्केवलो यः प्रागेवोत्पन्नो व्याधिरपूर्वरूपोऽनुपद्रवश्च । अन्यलक्षणो यो भविष्यद्व्याधिख्यापकः स पूर्वरूपसंज्ञः । तत्र सोपद्रवमन्योन्याविरोधेनोपक्रमेत बलवन्तमुपद्रवं वा प्राक्केवलं यथास्वं प्रतिकुर्वीत । अन्यलक्षणे त्वादिव्याधौ प्रयतेत । भवति चात्र । नास्तिरोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः । अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् ।

प्रागभिहिता ऋतवः । शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम् । कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत् । अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया। क्रियाहीनाऽतिरिक्ता वा साध्येष्वपि न सिध्यति । या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च । सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत्।

प्रागभिहितोऽग्निरन्नस्य पाचकः (अग्निशब्दे) स चतुर्व्विधो भवति दोषानभिपन्न एको विक्रियामापन्नस्त्रिविधो भवति विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा, चतुर्थः समः सर्वसाम्यादिति तत्र यो यथाकालमन्नमुपयुक्तं सम्यक् पचति स समः, समैर्दोषैः । यः कदाचित्सम्यक्पचति कदाचिदाध्मानशूलोदावर्त्तातिसारजठरगौरवान्त्रकूजनप्रवाहणानि कृत्वा स विषमः । यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः, स एवाभिवर्द्धमानोऽत्यग्निरित्याभाष्यते स मुहुर्मुहुः प्रभूतमप्युपयुक्तमाशुतरं पचति पाकान्ते च गलताल्वोष्ठशोषदाहसन्तापान् जनयति । यः स्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्दिगात्रसदनानि कृत्वा महता कालेन पचति स मन्दः । विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमित्तजान् । करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् । तत्र समे परिरक्षणं कुर्व्वीत विषमे स्निग्धाम्ललवणैः क्रियाविशेषैः प्रतिकुर्व्वीत तीक्ष्णे मधुरस्निग्धशीतैर्व्विरेकैश्च । एवमेवात्यग्नौ विशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिर्मन्दे कटुतिक्तकषायैर्वमनैश्च । जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः । सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते । प्राणापानसमानैस्तु सर्वतः पवनैस्त्रिभिः। ध्मायते पाल्यते चापि स्वे स्वे स्थाने व्यवस्थितैः।

वयस्तु त्रिविधं बालं मध्यं वृद्धमिति । तत्रोनषोडशवर्षा बालास्तेऽपि त्रिविधाः क्षीरपाः क्षीरान्नादा अन्नादा इति तेषु संवत्सरपराः क्षीरपा द्विसंवत्-सरपराः क्षीरान्नादाः परतोऽन्नादा इति । षोड़शसप्तत्योरन्तरे मध्यं वयस्तस्य विकल्पो वृद्धिर्यौवनं संपूर्णता हानिरिति । तत्रा विंशतेर्वृद्धिरात्रिंशतो यौवनमा चत्वारिंशतः सर्व्वधात्विन्द्रियबलवीर्य्यसम्पूर्णता । अतऊर्द्ध्वमीषत् परिहाणिर्य्यावत्सप्ततिरिति । सप्ततेरूर्द्ध्वं क्षीयमाणधात्विन्द्रियबलवीर्य्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्व्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते । तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्त्यृते च परिहाणेस्तत्राद्यापेक्षया प्रतिकुर्वीत । भवन्ति चात्र । बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु । भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् । अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत् । तत्साध्येषु विकारेषु मृद्वीं कुर्य्यात् क्रियां शनैः ।

देहः स्थूलः कृशो मध्य इति प्रागुपदिष्टः । कर्शयेद्बृंहयेच्चापि सदा स्थूलकृशौ नरौ । रक्षणञ्चैव मध्यस्य कुर्व्वीत सततं भिषक् ।

बलमभिहितगुणं दौर्ब्बल्यञ्च स्वभावदोषजरादिभिरवेक्षितव्यम् । यस्माद्बलवतः सर्व्वक्रिया प्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम् । केचित् कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः। तस्मात् स्थिरत्वव्यायामैर्ब्बलं वैद्यः प्रतर्कयेत् ।

सत्वन्तु व्यसनाभ्युदयक्रियादिस्थानेष्वविक्लवकरम् । सत्ववान् सहते सर्व्वं संस्तभ्यात्मानमात्मना । राजसः स्तभ्यमानोऽन्यैः सहते नैव तामसः ।

प्रकृतिं भेषजं चोपरिष्टाद्वक्ष्यामः ( प्रकृतिं शारीर स्थाने, भेषजं तत्तत्प्रकरणे ) ।

सात्म्यानि तु देशकालजात्यृतुरोगव्यायामोदकदिवास्वप्नरसप्रभृतीनि प्रकृतिविरुद्धान्यपि यान्यबाधकराणि भवन्ति । यो रसः कल्पते यस्य सुखायैव निषेवितः । व्यायामजातमन्यद्वा तत् सात्म्यमिति निर्दिशेत् ।

देशस्त्वानूपो जाङ्गलः साधारण इति । तत्र बहूदकनि-

म्नोन्नतनदीवर्षगहनो मृदुशीतानिलो बहुमहापर्व्वतवृक्षो मृदुसुकुमारोपचितशरीरमनुष्यप्रायः कफवातरोगभूयिष्ठश्चानूपः। आकाशसमः प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्पवर्षप्रस्रवणोदपानोदकप्राय उष्णदारुणवातः प्रविरलाल्पशैलः स्थिरकृशशरीरमनुष्यप्रायो वातपित्तरोगभूयिष्ठश्च जाङ्गलः। उभयदेशलक्षणः साधारण इति। भवन्ति चात्र। समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः। दोषाणां समता जन्तोस्तस्मात्साधारणो मतः। न तथा बलवन्तः स्युर्जलजा वा स्थलाहृताः। स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः। उचिते वर्त्तमानस्य नास्ति देशकृतं भयम्। आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति देशप्रकृतिसात्म्यर्त्तुविपरीतोऽचिरोत्थितः। सम्पत्तौ भिषगादीनां बलसत्वायुषां तथा। केवलः समदेहाग्नेः सुखसाध्यतमो गदः। अतोऽन्यथा त्वसाध्यः स्यात् कृच्छ्रो व्यामिश्रलक्षणः। क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्। पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः। गुणालाभेऽपि सपदि यदि सैव क्रिया हिता। कर्त्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि। य एवमेनं विधिमेकरूपं विभर्त्ति कालादिवशेन धीमान्। स मृत्युपाशान् जगतोगदौघान्छिनत्ति भैषज्यपरश्वधेन"।

**उपक्रान्त** त्रि॰उप+क्रम–क्त।१आरब्धे २विस्तृते शब्दार्थचि॰

**उपक्रिया** स्त्री उप+कृ–भावे श। उपकारे "तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया" मनुः।

**उपक्रोश** पु॰ उप–क्रुश–घञ्। निन्दायाम्। "नायं बिभेत्युपक्रोशाद्धर्म्माद्वा पुररोचनः" भा॰ आ॰ १४५ अ॰ "राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा" रघुः अव्या॰स॰। २उपगतक्रोशे आसन्नक्रोशे त्रि॰।अव्ययी॰। ३क्रोशसमीपे अव्य॰। भावे ल्युट् उपक्रोशनमप्यत्र। "वाग्भिर्नत्यर्थैर्लोकोपक्रोशनैः" दशकु॰।"कुलोपक्रोशनकरी कुलाङ्गारी निराश्रया" हरि॰१७६ अ॰। [स्त्रियां ङीप्।

**उपक्रोष्टृ** पु॰ उप+क्रुश–तृच्।१गर्द्दभे। २निन्दके त्रि॰।

**उपक्लेश** पु॰ उपक्लिश्नाति अनेन उप+क्लिश–करणे घञ्। मदादिषु। [घञ्पक्षे अप्। वीणानिनादे।

**उपक्व(क्वा)ण** पु॰ उप+क्वण–शब्दे "क्वणोवीणायाञ्च" पा॰वा

**उपक्षय** पु॰ उप+क्षि–अच्।१अपचये हानौ। सामीप्यादौ अव्ययी॰।२निवाससमीपादौ, अव्य॰। ३उपगतः क्षयम् अत्या॰स॰। ३क्षयं प्राप्ते त्रि॰। तत्पुरुषे उपाद्द्व्यच्कत्वादन्तोदात्तता।

**उपक्षित्** त्रि॰ उप+क्षि–क्विप्। समीपनिवासिनि। "यस्य ते अग्ने अन्ये अग्नय उपक्षितो वया इव" ऋ॰ ८, १६,२२। [२सकार्य्याद्यसामर्थ्यं प्राप्ते च।

**उपक्षीण** त्रि॰ उप+क्षि–क्त तस्य न, दीर्घश्च। १अपचयप्राप्ते

**उपक्षेप** पु॰ उप+क्षिप–भावे घञ्। १आक्षेपे, "कर्णनासाच्छेदोपक्षेपभीषिताभ्याम्" दशकु॰। २समीपे निक्षेपणे च।

**उपक्षेपण** न॰उप+क्षिप–ल्युट्। शूद्रस्वामिकान्नस्य विप्रगृहे पाकार्थं समर्पणे।"उपक्षेपणधर्म्मेण यत्तु पाचयते द्विजैः। अभोज्यं तद्भवेदन्नम्" शाम्ब॰पु॰।"उपक्षेपणधर्म्मेण शूद्रस्वामिकान्नस्य पाकार्थं ब्राह्मणगृहे समर्पणरूपेणेति" कल्पतरुः। २समर्पणमात्रे च।

**उपखात** अव्य॰ सामीप्यादौ अव्ययी॰ १खातसामीप्ये २ख्याते इत्यर्थे च। उपगतः खातम् अत्या॰स॰। ३खातानुगते। उपाद्द्व्यच्कत्वेन तत्पुरुषपक्षे अन्तोदात्ततेतिभेदः

**उपग** त्रि॰ उप+गम–ड। उपगन्तरि "ओषध्यः फलपाकान्ताबहुपुष्पफलोपगाः" मनुः। "त्रेतायां भावसंकल्पाः क्रियादानफलोपगाः" भा॰व॰ १४९अ॰। "केन्द्रोपगा नवमपञ्चमगाश्च सर्वे" ज्यो॰त॰।

**उपगण** त्रि॰ उपगतो गणो येन प्रा॰ब॰ संख्यावचनत्वेऽपि "अबहुगणादिति" पा॰ निषेधात् न डच्। प्राप्तसमुदाये डचि तु चित्त्वात् अन्तोदात्तता स्यात्। अतस्तस्य पूर्वपदप्रकृतिस्वरार्थं डचोनिषधः। "रूपातिप्रसङ्गाभावेऽपि स्वरभेदार्थमेव पर्य्युदासः" सि॰ कौ॰ स्थितम्।

**उपगत** त्रि॰ उप+गम–क्त। १स्वीकृते, २उपस्थिते, ३ज्ञाते ४प्राप्ते च "सर्व्वैर्हि नोपगतमप्यपचीयमानं वर्द्धिष्णुमाश्रयमनागतमभ्युपैति" माघः भावे क्त। ५प्राप्त्यादौ न॰ उपगतं प्राप्तिः सूच्यत्वेनास्त्यस्य अच्। ६प्राप्तिसूचके पत्रे च (रसिद)। "धनी वोपगतं दद्यात् स्वहस्तपरिचिह्नितम्" या॰ स्मृ॰। "उपगतं प्राप्तमिति यद्वा उपगतम् प्रवेशपत्रं स्वहस्तलिखितचिह्नितमधमर्णायोत्तमर्णोदद्यात्" मिता॰।

**उपगति** स्त्री उप+गम–क्तिन्। १प्राप्तौ २ज्ञाने ३स्वीकारे च

**उपगन्तृ** त्रि॰ उप+गम–तृच्। १प्राप्तरि २स्वीकर्त्तरि ३ज्ञातरि च।

**उपगम** पु॰ उप+गम–भावे घञ् अवृद्धिः। १समीपगमने, २अङ्गीकारे ३ज्ञाने, च "सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम्" मेघ॰। "व्यावर्त्ततान्योपगमात् कुमारी" "मृगवनोपगमक्षमवेशभृत्" रघुः। भावे ल्युट्। उपगमन

मप्यत । "यथा कर्म्म शुभं कृत्वा स्वर्गोपगमनं ध्रुवम्" भा० आ० १०३अ० ।

**उपगम्य(त्य)** अव्य० उप+गम–ल्यप् वा मलोपे तुक् । १समीपं गत्वेत्यर्थे । कर्म्मणि यत् उपगम्य । २सामीप्येन गम्ये त्रि० ।

**उपगहन** पु० ऋषिभेदे "महार्न्धिश्च कपिलस्तथर्षिस्ताड्कायनः । तथैव चोपगहनस्तथर्षिश्चासुरायणिः" भा० आ० ४अ० ।

**उपगा** पु० उप+गै–क्विप् । यज्ञे १उपगातरि ऋत्विग्भेदे । भावे अङ् । २उपगाने स्त्री "उपगादर्शनाच्च" कात्या० ६,७,२, "उपगानदर्शनाच्चैवमवसीयते कर्कः ।

**उपगातृ** पु० उपगायति उप+गै–तृच् । यज्ञे उद्गातुः समीपे १गातरि ऋत्विग्भेदे "बृहस्पतिरुद्गाता विश्वेदेवा उपगातारः" तैत्ति० । "ऋत्विग्व्यतिरिक्तानामुपगातॄणामनुपलभ्यत्वादृत्विज एवोपगातारः" कात्या० ६,७,२, कर्कः । "स वडवा उपरुन्धन्ति संशिञ्जते यथोपगातार उपगायन्ति" शत० ब्रा० १३,२,२,२ । समीपगानकर्त्तरि त्रि० (दोयार) स्त्रियां ङीप् ।[गन्तरि २स्तोकर्त्तरि ३ज्ञातरि च

**उपगामिन्** त्रि० उप+गम–णिनि स्त्रियां ङीप् । १समीप-

**उपगिर (रि)** अव्य० सामीप्यादौ अव्ययी० वा अच्समा० । १पर्व्वतसामीप्ये २पर्व्वते इत्यर्थे च । गिरिमुपगतः अत्या० स० । उत्तरदिक्स्थे गिरिसन्निकृष्टे देशभेदे पु० "प्रययावुत्तरां तस्माद्दिशं धनदपालिताम् । अन्तर्गिरिञ्च कौन्तेयस्तथैव च बहिर्गिरिम् । तथैवोपगिरिञ्चैव विजिग्ये पुरुषर्षभः" भा० स० २६ अ० । अन्तोदात्तोऽयम् ।

**उपगीति** स्त्री "आर्य्याद्वितीयकार्द्धे यद्गदितं लक्षणं तत् स्यात् । यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते" वृ० र० उक्ते मात्रावृत्तभेदे ।

**उपगु** त्रि० उपगतो गौरस्य ह्रस्वः गोशब्दोनानार्थः । १प्राप्तकिरणादौ २गोपाले च "उपगोरिदम् अण् । औपगव तत्सम्बन्धिनि त्रि० । "सामीप्येऽव्ययी० । ३गोः सामीप्ये अव्य० । [स्त्रियां गौ० ङीष् ।

**उपगुध** त्रि० उप+गुध–रोधने क । सामीप्येन रोधके ।

**उपगुरु** पु० उपगतः सादृश्येन गुरुम् अत्या० स० अन्तोदात्तः । तन्त्रोक्ते गुरुसदृशे उपदेशादिकारके । सामीप्यादौ अव्ययी० । २गुरोः सामीप्ये ३गुरावित्यर्थे च अव्य० ।

**उपगूढ** न० उप+गुह–भावे क्त । १आलिङ्गने "उपगूढानि सवेपथूनि च" कुमा० । "विभ्रमार्थमुपगूढमजस्रम्" माघः । कर्म्मणि क्त । २आलिङ्गिते त्रि० । ततः ऋश्या० चतुरर्थ्यां क । उपगूढक तत्सन्निकृष्टदेशादौ त्रि० ।

**उपगूहन** न० उप+गुह–ल्युट् ओरुत् । आलिङ्गने "स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनः" भा० स्क० ५अ० ।

**उपगोह्य** त्रि० उप+गुह–ण्यत् ऊत्त्वविधौ अच एव ग्रहणान्न ऊत्त्वम् । १आलिङ्ग्ये, २ग्राह्ये च । भावे ण्यत् । ३आलिङ्गने । पक्षे क्यप् उपगुह्यमप्यत्र ।

**उपगौर** त्रि० उपगतो गौरम् अत्या० स० । गौरवर्णोपगते उपाद् द्व्यच्कत्वेऽपि गौरादिपर्युदासात् नान्तोदात्तता

**उपग्रह** पु० उप+ग्रह–अप् । १कारावन्धने, २वन्दीकरणे, ३उपयोगे, ४आनुकूल्ये च । कर्मणि घञ् । ५कारारुद्धे वन्द्याम् । उपगतोग्रहं सादृश्येन अत्या० स० । ज्योतिषोक्ते ६ग्रहतुल्ये ज्योतिः पदार्थे राहुकेत्वादौ "ग्रहाः सोपग्रहाश्चैव ह्यृक्षाः परिषदां गणाः । एते चान्ये च बहवोघोरास्त्रिदिववासिनः । परिचार्य्य महासेनं स्थिता मातृगणैः सह" भा० व० २२६अ० "उपग्रहाः राहुप्रभृतयः नीलक० "सूर्य्यभात् पञ्चमं धिष्ण्यं ज्ञेयं विद्युन्मुखाभिधम् । शून्यञ्चाष्टमगं प्रोक्तं सन्निपातं चतुर्दशम् । केतुरष्टादशं प्रोक्तमुल्का स्यादेकविंशतिः । द्वाविंशतितमं कम्पस्त्रयोविंशश्च वज्रकम् । निर्घातश्चतुर्विंशमुक्ता अष्टावुपग्रहाः" ज्यो० त० उक्ते सूर्य्याक्रान्तनक्षत्रात् पञ्चमादिषु विद्युन्मुखादिसमाह्वयेषु ७नक्षत्रेषु । तत्फलञ्च "प्रस्थाने विघ्नदा प्रोक्ताः सर्वकार्य्येषु सर्वदा क्रूरवेधसमायोगे यस्योपग्रहसम्भवः । तस्य मृत्युर्न सन्देहो रोगाद्वाऽथ रणादपि ज्यो० त० । ८उपग्रहणशब्दार्थे च ।

**उपग्रहण** न० उप+ग्रह–ल्युट् । १सामीप्येन ग्रहणे २स्वीकारे "वेदोपग्रहणार्थाय तावग्राहयत प्रभुः" रामा० कात्यायनोक्ते आज्याधारकरणभेदे । "एकद्रव्ये साज्ये वेदेनोपग्रहणम्" कात्या० १,१०,६, "दक्षिणहस्तस्यस्य साज्यस्यैकद्रव्यस्य हस्तकम्पनादिनास्कन्दनावरणार्थं सव्यहस्तगृहीतवेदेनाधारकरणमुपग्रहणमुच्यते" कर्कः । अप् उपग्रहोऽप्यत्र । "न सव्येन वेदोपग्रहः" तत्रैव कर्कः ।

**उपग्राह** पु० उप+ग्रह–णिच्–अच् । १उपढौकने उपहारे (भेटदेओया) कर्म्मणि घञ् । २उपहाररूपेण देये "उच्चावचानुपग्राहान् राजभिः प्रापितान् बहून्" भा० स० ५१अ० "उपग्राहान् उपहारान्" नीलक० ।

**उपग्राह्य** त्रि० उप+ग्रह–णिच्–यत् । समीपे ग्राहयितुमुपस्थाप्ये १उपढौकनीयद्रव्ये (भेटी) भावे यत् । २उपहारे न० ।

**उपघात** पु० उप+हन–घञ् । १नाशने, २कर्म्मायोग्यतासम्पादने

"काकेभ्यो रक्ष्यतामन्नमिति बालोऽपि दर्शितः। उपघातप्रधानत्वात् न श्वादिभ्योऽपि रक्षति" मीमां०का०।"बीजदोषोपघातेन प्रख्ये दोषमुपागते" या०स्मृ०। ३अपकारे।"स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च" मनुः। ४इन्द्रियाणां स्वस्वकार्य्यजननासामर्थ्ये च"तथात्वञ्चेदिन्द्रियाणामुपघाते कथं स्मृतिः"भाषा०। इन्द्रियाणामुपघातश्च एकादशेन्द्रियभेदेन बाधिर्य्यादिभेदात् एकादशविधः। अशक्तिशब्दे ४७२पृ० विवृतिः। करणे घञ्।५रोगे ६पापसमूहे च"रेतोरक्तगर्भोपघातः पञ्चगुणोजातकर्मणा प्रथममपोहति" अष्टाभिःसंस्कारैः गर्भोपघातात् पूतो भवति"हारीतः "उपघातः पापसङ्घः पञ्चगुणः पञ्चप्रकारः उपपातकजातिभ्रंशोकरसङ्करीकरणापात्रीकरणमलिनीकरणरूपपापपञ्चकसंघः" सं०त० रघु०"पाणिना मेक्षणेनाथ स्रुवेणैव तु यज्ञविः। हूयते चानुपस्तीर्य उपघातः स उच्यते" इत्युक्तलक्षणोक्ते ७होमभेदे। "अनुपस्तीर्येत्यनेन स्रुचि चतुरावत्तं पञ्चावत्तं वा घृतोपस्तरणादिकं तदत्र नास्ति मेक्षणादिना सकृद् गृहीत्वा होमः" ब्र०त० रघु०। "चरौ तु बहुदैवत्ये होमः, स्यादुपाघतवत्" छन्दोग०।

**उपघातक** त्रि० उप+हन–ण्वुल्। १नाशके २पीड़के च काकशब्दस्य दध्युपघातकत्वेन काकाकाकोभयवृत्तिः, आलङ्कारिकाः "पुंसा सह समायोगो न स धर्मोपघातकः" भा०आ० ७३अ०"कथं सक्तून् ग्रहीष्यामि भूत्वा धर्मोपघातकः" भा०आश्व० ६० अ०।

**उपघातिन्** त्रि० उप+हन–णिनि स्त्रियां ङीप् १नाशके २पीड़के च "शस्त्रं पातयेन्मर्म्मसिरास्नायुसन्धीनां चानुपघाति" सुश्रु०।

**उपघ्न** पु० उप+हन–घजर्थे–क। आसन्ने आश्रये"छेदादिवोपघ्नतरोर्व्रतत्यौ" रघुः "पिप्रायाद्रिगुहोपघ्नान्"भट्टिः।

**उपच(ज)** त्रि० उपचिनोति उपजायते वा उप+चि–जन–वा ड। चान्तपाठे वृद्धिकारके जान्तः अनन्तरजाते।"ब्रीहियवयोर्वा एतदुपचं (जं) यच्छमीधान्यं तद्ब्रीहियवावेतेन भूयांसौ करोति" शत०ब्रा० १,१,१,१०। भाष्यकृता तु अत्र उपचमिति पठित्वा शमीधान्यम् तिलमाषादि उपचिनोति उपचम् अल्पमाषपिष्टेन मिश्रितं ब्रीहिपिष्टं त्रिचतुरमासात् आरोपितम् उपचितं बहु भवतीति" व्याख्यातम्

**उपचक्र** पु० उपमतः सादृश्येन चक्रं चक्रवाकम् अत्या०स०। चक्रवाकसदृशे पक्षिभेदे "भङ्कराजोपचक्राश्च लोहपृष्ठाः पतत्त्रिणः" भा०व०१५८अ०। "चकोरैरुपचक्रैश्च पक्षिभिर्जीवजीवकैः" भा०१७८अ०। तत्पुरुषे उपादृढश्चकत्वादन्तोदात्तः। सामीप्यादौ अव्ययी०। २चक्रस्य सामीप्ये ३चक्रे इत्यर्थे च अत्र चक्रशब्दो नानार्थः।

**उपचक्षुस्** न० उपगतञ्चक्षुर्दर्शनानुगुण्यार्थम् अत्या०स०। उपनेत्रे (चशमा) काचादिनिर्म्मिते दर्शनसाधने द्रव्यभेदे

**उपचतुर** त्रि० उपगताश्चत्वारो यस्य प्रा०ब० गतलोपः डचोबाधकोऽच्। १चतुर्णां समीपवर्त्तिनि। चतुरस्य सामीप्यादौ अव्ययी०। २दक्षसामीप्यादौ अव्य०।

**उपचय** पु० उप+चि–भावे अच्। १वृद्धौ २उन्नतौ "स्वयंत्र्युपचये केचित् परस्य व्यसने परे" माघः। "तदेतेषामस्मत्पुत्राणां ज्ञानोपचये भवन्तः प्रमाणम्" हितो० "षड्टतवो भवन्ति दोषोपचयप्रकोपोपशमननिमित्तम्" सुश्रु०।"षष्ठत्रिदशलाभाश्च लग्नादुपचयाः स्मृताः" इति ज्योतिषोक्ते ३लग्नात् षष्ठादिस्थानेषु च। [च।

**उपचरित** त्रि०उप+चर–क्त। १उपासिते २लक्षणया बोधिते

**उपचर्म्म(न्)** अव्य०चर्मणः सामीप्यादौ अव्ययी०वा अच्समा०। १चर्मसमीपे २चर्मणोऽत्यर्थे च उगतश्चर्म अत्या०स०। नान्तः। चर्मोपगते त्रि०स्त्रियां वा डाप् मनन्तत्वान्न ङीप्।

**उपचर्य्य** त्रि० उप+चर–कर्मणि यत् ततः उपशब्देन अवतरेत्यादिवत् सुप्सुपेति समासः सोपसर्गात्तु यदेवं स्यात्।१सेवनीये"ये च यैरुपचर्य्याःस्युर्नियमैस्तान्निबोधत"। उपचर्य्यः स्त्रिया साध्व्या सततं देववत् पतिः"मनुः "अग्निवच्चोपचर्य्या वै ब्राह्मणाः कुरुसत्तम!" भा०आनु०८अ०। २चिकित्सनीये च। भावे यत् तथा समासः। ३चिकित्सायाम् ४सेवने च न० [इला०

**उपचर्य्या** स्त्री उप+चर–भावे क्यप्। १सेवने २चिकित्सायां

**उपचाकु** त्रि०उप+चक प्रतीघाततृप्त्योः उण्। १प्रतिघातके २प्रीते च ततः बाह्वादि० अपत्यार्थे इञ्। औपचाकवि तदपत्ये पुंस्त्री०।

**उपचायिन्** त्रि०उपचिनोति उप+चि–णिनि स्त्रियां ङीप्। उपचयकारके वृद्धिकारके।"इतो वृद्धोपचायित्वात् शिशुमामद्य शोधय" भा०आश्व०७६अ०।

**उपचाय्य** पु० उपचीयतेऽग्निरत्र उप+चि–आधारे ण्यत्। यज्ञे इष्टकादिनिर्मिते अग्निधारणार्थे स्थलविशेषे"कथाभीरमसे नितरामुपचाय्यवतां शुभे!" भट्टिः।

**उपचार** पु० उप+चर–घञ्। १चिकित्सायां, २सेवायां, "स मे चिरायास्खलितोपचाराम्"। "उपचाराञ्जलिखिन्न-

हृत्तया” रघुः। ३व्यवहारे, “स्रुतेः उपचारात् अन्यार्थदर्शनाच्च” शव० भा०भूरिप्रयोगः अविपह्यशब्दे ४५१ पृष्ठे दर्शितः। ४उत्कोचे ५लक्षणया शक्यार्थत्यागेनान्यार्थबोधने ६अयथार्थवाक्येन सन्तोषकरणे च “उपचारपदं न चेदिदमिति” कुमारः ७धर्म्मानुष्ठानमात्रे “वैश्यशूद्रोपचारञ्च” “व्रतचर्य्योपचारञ्च” मनुः। “प्रयुक्तपाणिग्रहणोपचारौ” कुमा०। करणे घञ्। ८पूजासाधने द्रव्यभेदे “सन्नद्धोपचाराणां सेवादिरचनाऽभवत्” रघुः पूजाङ्गोपचाराश्च नानाविधाः तत्र सर्वोपचारमन्त्रास्तु श्रीतारपूर्व्वाः, कल्पयामि नमः इत्यन्ताः कार्य्याः। “सिद्धजामले “श्रीतारञ्च मुखे कृत्वा देयस्य भुवनेश्वरि! कल्पयामि नमः पश्चादुपचारेष्वयम् विधिरिति” इत्युपक्रम्य तन्त्रसारे “चतुःषष्ट्युपचाराः दर्शिताः यथा आसनारोपणम् १। सुगन्धितैलाभ्यङ्गः २। मज्जनशालाप्रवेशनम् ३। मज्जनमणिपीठोपरिवेशनम्४ | दिव्यस्नानीयमुद्वर्त्तनम् ५। उष्णोदकस्नानम् ६। कनककलसस्थितसकलतीर्थाभिषेचनम्७। धौतवस्त्रपरिमार्ज्जनम् ८। अरुणदुकूलपरिधानम्९ अरुणदुकूलोत्तरीयम्१०। आलेपमण्डपप्रवेशनम्११। आलेपमणिपीठोपवेशनम्१२ | चन्दनागुरुकुङ्कुमकर्पूरकस्तूरीरोचनादिव्यगन्धसर्वाङ्गानुलेपनम् १३। केशभारस्य कालागुरुधूपमल्लिकामालतीजातीचम्पकाशोकशतपत्रपूगकुह्वरीपुन्नागकह्लारयूथीसर्व्वर्त्तुकुसुममालाभूषणम् १४। भूषणमण्डपप्रवेशनम् १५। भूषणमणिपीठोपवेशनम् १६। नवमणिमुकुटम् १७। चन्द्रशकलम्१८। सीमन्तसिन्दूरम् १९। तिलकरत्नम् २०। कालाञ्जनम् २१। कर्णपालियुगलम्२२। नासाभरणम् २३। अधरयावकम् २४। प्रपदभूषणम् २५। कनकचित्रपादुका २६। महापादुका२७। मुक्तावलिः२८ एकावलिः २९। देवच्छन्दकः ३०। केयूरयुगलचतुष्टयम्३१। वलयावलिः ३२। उर्मिकावलिः ३३। काञ्चिदाम३४ कटीसूत्रम्३५। शोभाख्याभरणम्३६। पादकटकम् ३७। रत्ननूपुरम् ३८। पादाङ्गुलीयकम् ३९। एककरे पाशः ४०। अन्यकरे अङ्कुशः ४१। पूर्ण्णचापम् ४२। अपरकरे पुष्पबाणाः ४३। श्रीमन्माणिक्यपादुका ४४। स्वसमानवेशाभिरावरणदेवताभिः सह सिंहासनारोहणम् ४५। कामेश्वरपर्य्यङ्कोपवेशनम् ४६। अमृतासनचषकम् ४७। आचमनीयम् ४८। कर्पूरवटिका४९। आनन्दोल्लासः५०। प्रविलासहासः५१। मङ्गलारात्रिकम् ५२। श्वेतच्छत्रम् ५३। चामरयुगलम् ५४। दर्पणः ५५। तालवृन्तम् ५६। गन्धः५७। पुष्पम् ५८। धूपः ५९। दीपः ६०। नैवेद्यञ्च६१। एतानि कल्पयेत् एषामुपचाराणामभावे तन्मन्त्राजप्याः। “तदुक्तं नवरत्नेश्वरे। “चतुःषष्ट्युपचाराणामभावे तन्मनुं जपेत्। तत्तदेव फलं विन्देत् साधकः स्थिरमानसः”। “आचमनीयं प्रदातव्यमुपचारान्तरान्तरे” तन्त्रसा० तानि च त्रीणि “स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्” नरसिंहपु० तेन चतुषष्टिपूरणम्। एतच्च श्रीविद्याप्रकरणीयत्वात्तद्विषयम्। अन्यत्र यथागमं कल्पनीयम्। शङ्कराचार्य्येण तु स्तोत्रच्छलेन अन्यविधाः चतुःषष्ट्युपचारादर्शिता विस्तरभयान्न ते दर्शितास्तत्स्तोत्रेऽवसेयाः। अथाष्टादशोपचाराः। “आसनम् १स्वागतम् २ पाद्यम्३ अर्घ्यम् ४ आचमनीयकम् ५। स्नानम् ६ वस्त्रोपवीतञ्च७ भूषणानि च सर्वशः ८। गन्धम् ९ पुष्पम् १० तथा धूपम् ११ दीपम् १२ अन्नञ्च १३ तर्पणम्१४ माल्यानुलेपने चैव १५ १६ नमस्कारविसर्ज्जने १७ १८। अष्टादशोपचारैस्तु मन्त्री पूजां समाचरेत्”। अथ षोड़शोपचाराः। “पाद्यमर्घ्यन्तथाचामं स्नानं वसनभूषणे। गन्धं पुष्पधूपदीपं नैवेद्याचमनन्ततः। ताम्बूलमर्च्चने स्तोत्रं तर्पणञ्च नमस्क्रियाम्। प्रयोजयेत् प्रपूजायामुपचारांस्तु षोड़श”अथ दशोपचाराः। “पाद्यमर्घ्यं तथाचामो मधुपर्काचमौ तथा। गन्धादयोनिवेद्यान्ता उपचारा दश क्रमात्। अथ पञ्चोपचाराः। “गन्धपुष्पं तथा धूपं दीपं नैवेद्यमेव च। अखण्डं फलमासाद्य कैवल्यं लभते ध्रुवम्” तन्त्रसा० विधानपा० विष्णुविषये अन्यविधा षोडशोपचारा दर्शिताः ते च तत्तन्मन्त्रसहिता मत्कृततुलादानादिपद्धतौ २२८पृष्ठे दर्शिताः। आ०त० “आसनं स्वागतं पाद्यमर्घ्यमाचनीयकम्। मधुपर्काचमं स्नानवसनाभरणानि च। गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा” एवं षोड़शोपचाराः पठिता शक्तिभेदात् भेद उन्नेयः। तत्रासनादिकं यथा देयं तथोक्तं कालि० पु० “आसनं प्रथमं दद्यात् पौष्पं दारवमेव वा”। (वाकारात् रजताद्यासनम्) “पाद्यार्थमुदकं पाद्यं केवलं तोयमेव तत्। तत्तैजसेन पात्रेण शङ्खेनाथ प्रदापयेत्”। (अर्घ्यमर्घ्य शब्दे उक्तम्)। “उदकं दीयते यत्तु प्रसन्नं फेनवर्जितम्। आचमनाय देवेभ्यस्तदाचमनमिष्यते। तत्तैजसेन पात्रेण शङ्खेनापि प्रदापयेत्। सुसंस्कृतोदके स्नानं कर्पूराद्य

धिवासितम् । तैजसैः कांस्यपात्रैर्वा शङ्खेनाथ प्रदापयेत् । यद्दीयते देवताभ्यो गन्धपुष्पादिकं तथा । अर्घपात्रस्थितैस्तोयैरभिषिच्य समुत्सृजेत् । नैवेद्यं दक्षिणे वा मे पुरतो वा न पृष्ठतः । दीपं दक्षिणतो दद्यात् पुरतो वा न वामतः । वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे । निवेदयेत् पुरोभागे गन्धपुष्पञ्च भूषणम्" नरसिं०पु० । "कार्पासं सर्वतोभद्रं दद्यात सर्वैभ्य एव हि । नैकान्तरक्तं दद्यात्तु वासुदेवस्य चेलकम् । तत् पूर्वं पूजयित्वैव मन्त्रैर्देवाय चोत्सृजेत् । निर्दशं मलिनं जीर्णं छिन्नं गात्रावलिङ्गितम् । परकीयं चाखुदष्टं सूचीविद्धं तयोषितम् । उप्रकेशं विधूतञ्च श्लेष्ममूत्रादिदूषितम् । वर्जयेत् स्वोपयोगे च यत्नादावुपयोजने" । ( उप्रकेशं केशेन सह वापितम्) । "पताकाध्वजवस्त्रादौ सूत्रं वस्त्रं नियोजयेत् । ग्रैवेयकादि संसक्तं सौवर्णं राजतञ्च वा । निवेदयेत्तु देवेभ्यो नान्यतैजससम्भवम् । प्रावरः पान पात्रञ्च गडुको स्टहमेव च । पर्य्यङ्कादि यदन्यच्च सर्वं तदुपभूषणम्" । गन्धविशेषो गन्धशब्दे वक्ष्यते ।

**उपचारच्छल** न०वाद्युक्तवाक्यस्य तत्तात्पर्य्यविषयार्थान्तरपरत्वकल्पनेन छलात्मकासदुत्तररूपे दूषणभेदे । छलस्य सामान्यलक्षणविभागोपचारलक्षणोदाहरणानि गौ०सू०वृत्त्योर्दर्शितानि यथा । "वचनविघातो ऽर्थविकल्पोपपत्त्या च्छलम्" सू० । "अर्थस्य वाद्यभिमतस्य योविकल्पोविरुद्धः कल्पो अर्थान्तरकल्पनेति यावत् तदुपपत्त्या युक्तिविशेषेण योवचनस्य वाद्युक्तस्य विघातोदूषणं तच्छलमित्यर्थः वक्तृतात्पर्य्याविषयार्थकल्पनेन दूषणाभिधानमिति फलितं तात्पर्य्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नवसंख्यापरत्वकल्पनयाऽसिद्ध्यभिधानं, प्रमेयं धर्म्मत्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्ध्यभिधानं, वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम्"वृ० । "तन्त्रिविधं वाक्छलं सामान्यच्छलमुपाचारच्छलञ्च"सू० । "धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्"सू० । "धर्मशब्दस्यार्थेन सम्बन्धस्तस्य विकल्पो द्विविधः कल्पः शक्तिलक्षणान्यतररूपस्तथा च शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलं यथा मञ्चाः क्रोशन्ति नीलोघट इत्यादौ मञ्चस्था एव क्रोशन्ति न तु मञ्चाः, एवं घटस्य कथं नीलरूपाभेदः, एवं अहं नित्य इति शक्त्या प्रयुक्ते अमुकस्मादुत्पन्नस्त्वं कथं नित्य इति प्रतिषेधोऽप्युपचारच्छलम् । वाद्यभिप्रेतार्थस्यादूषणेन छलस्यासदुत्तरत्वम् । न च क्लिष्टलाक्षणिकप्रयोगाद्वादिन एवापराधः स्यादिति वाच्यं तत्तदर्थबोधकतया प्रसिद्धस्य शब्दस्य प्रयोगे वादिनोऽनपराधात् अन्यथा पर्वतोवह्निमानित्युक्ते पर्वतोऽयं कथमवह्निमानित्यादिदूषणेनानुमानाद्युच्छेदः स्यात्" ।

**उपचार्य्य** त्रि० उप+चर–कर्मणि ण्यत् । १सेवनीये २चिकित्सनीये च भावे ण्यत् । ३चिकित्सायां हेम० ४सेवायाञ्च न० ।

**उपचित्** त्रि० उपचिनोति देहम् उप+चि–क्विप् । देहवृद्धिके श्लीपदादौ "नाशयित्री बलासस्यार्शस उपचितामसि" यजु० १२,९७ । "उपचितः श्वयथुगण्डश्लीपदादयः" वेददी० ।

**उपचित** उप+चि–क्त । १समृद्धे "मृगवयोगवयोपचितं वनम्" रघुः । २दिग्धे च मेदि० ३लेपनादिना वर्द्धिष्णौ निदिग्धे अमरः ४समाहिते हेम० ५सञ्चिते च "प्रयतत्वाद्धोपचितमशुभं नाशयतीति प्रायश्चित्तम्" हारीतः । "उपचितं सञ्चितम्"प्रा०त०रघुनन्दनः । [२उन्नतौ च ।

**उपचिति** स्त्री उप+चि–चाय–चिभावो वा भावे क्तिन् । १वृद्धौ

**उपचित्र** न० "उपचित्रमिदं ससलागौ" वृ० र० उक्ते १समवृत्तवर्णवृत्तभेदे । "विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम्" तल्लोक्ते अर्द्धसमे २वर्णवृत्तभेदे च । ३धृतराष्ट्रपुत्रभेदे "चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदस्य ह"धृतराष्ट्रपुत्रनामकथने । भा० आ० ६७ अ० ।

**उपचित्रा** स्त्री उपगता चित्रं वर्णम् चित्रां वा । मूषिकपर्ण्याम् (उन्दुरकानि) अमरः चित्रातारासमीपस्थायां २स्वातौ ३हस्तायाञ्च । राशिचक्रे तयोश्चित्रानुगतत्वात्तथात्वम् । ४दन्तीवृक्षे राजनि० "द्विगुणितवसुलघुरचलधृतिरिह" इत्युपक्रम्य "वाण्यष्टनवसु यदि लघिता उपचित्रा नवमे परयुक्ते"वृ०र०उक्ते षोडशमात्रात्मके ५मात्रावृत्तभेदे च ।

**उपचेय** त्रि० उप+चि–कर्मणि यत् । अङ्कुशादिना विनाश्य चयनीये पुष्पादौ ।

**उपच्छन्दन** न० उप+छदि–णिच् भावे ल्युट् । सान्त्वेन प्रार्थने ( फुसलान) "तथा निवेदितस्य नरपतिरसुभिर्मा वियोज्य उपच्छन्दनैरेव स्वं ते दापयितुं प्रयतिष्यते" दशकु० । २उपमन्त्रणे च "उपमन्त्रणमुपच्छन्दनमिति" सि० कौ० ।

**उपच्यव** पु० उप+च्युङ्–गतौ भावे अप् । स्टहात् निर्गमे । "यत्र नार्य्यपच्यवमुपच्यवञ्च शिक्षते" ऋ०१,२८,२ । "शालायाशिर्गमनमुपच्यवम्" भा० ।

**उपजन** न० उपजायते जन-अच् । स्त्रीपुंसयोगेन जायमाने १देहे । "नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्तः" छा०उ० । "मनसैव नोपजनं स्मरन् स्त्रीपुंसयोरन्योन्योपगमेन जायते इत्युपजनम् आत्मभावेन वात्मसामीप्येन वा जायते इत्युजनमिदं तच्छरीरं" भा० । भावे घञ् अवृद्धिः । २लोमादि वृद्धौ पु० । "तत्रोपजनस्ताच्छ्यं वर्ज्जमग्ने स्तनानाम्" आश्व०श्रौ०६, १, १५ "तत्र लोमवृद्धावुपजनस्यागमुच्यते नारा इ० "लोमातिरेके स्तनयस्योपजन: ६, ७, १ "तदा स्तनयस्त्वोरुपजनोभवति" नारा०इ० । ३उत्पत्तिमात्रे च "योगोहि प्रभवाप्ययौ" कठोप० भाष्ये योगोहि प्रभवाप्ययौ उपजनापायधर्म्मकौ" इति उक्तम् ।

**उपजप्य** त्रि० उप+जप–कर्म्मणि अर्हार्थे यत् । भेदनीये उपपूर्व्वकाज्जपतेर्भेदार्थकत्वात्तथात्वम् । "उपजप्यानुपजपेद् बुध्येतैव च तत्कृतम्" मनुः ।

**उपजरस** अव्य० जरायाः समीपम् अच् समा० जरसादेशश्च । [जरासामीप्ये ।

**उपजला** स्त्री उपगतो जलम् अत्या०स० । यमुनापार्श्वस्थे नदीभेदे "जलाञ्चोपजलाञ्चैव यमुनामभितो नदीम्" भा०व०१३०अ० ।

**उपजल्पिन्** त्रि० उप+जल्प–णिनि । उपदेशके । "अनाहूतोपदिष्टानामनाहूतोपजल्पिनाम् । ये लोकास्तान् हतः कर्ण ! मया त्वं प्रतिपत्स्यसे" भा०आ०१३६अ० ।

**उपजाति** स्त्री "अनन्तरोदितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम" वृ०र० उक्ते वर्णवृत्ते विभिन्नजातिद्वय पादद्वययोगात् चतुर्द्दशप्रकारभिन्ने छन्दोभेदे । यथा उपेन्द्रवज्रेन्द्रवज्रयोः पादद्वयादियोगे १४ भेदाः । तत्र चतुरक्षरप्रस्तारे १६भेदा भवन्ति तत्र शुद्धा एकैका तत्तन्नामभाक् शिष्टा चतुर्दश उपजातिसंज्ञाः । दिङ्मात्रं दर्श्यते । उ उ उ उ । इ उ उ उ । उ इ उ उ । इ इ उ उ । उ उ इ उ । इ उ इ उ । उ इ इ उ । इ इ इ उ । उ उ उ इ । इ उ उ इ । उ इ उ इ । इ इ उ इ । उ उ इ इ । इ उ इ इ । उ इ इ इ इ इ इ इ । अत्राद्यन्तयोः इन्द्रवज्रोपेन्द्रवज्रयोः शुद्धतया तद्भिन्नानां चतुर्द्दशानां भिन्नजातीयचरणद्वयलक्षणयोगात् उपजातित्वम् । यथा "अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम्" इत्यादि" रघुः । एवं वंशस्थेन्द्रवंशयोरपि । यथा "इत्थं रथाश्वेभनिषादिनां प्रगे, गणो नृपाणामथ तोरणाद्बहिः" माघः तुल्यसंख्याक्षरस्य पादयोरेवोपजातित्वमिति न नियमः किन्तु भिन्नसंख्याक्षरपादयोरपि । "रामं लक्ष्मणपूर्व्वजं रघुवरं सीतापतिं सुन्दरं काकुत्स्थं करुणामयं गुणनिधिं विप्रप्रियं धार्म्मिकम् । राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्त्तिम् । वन्दे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम्" इति पद्ये शार्दूलविक्रीडितेन १९ ऊनविंशत्यक्षरपादकेन सह २१ एकविंशत्यक्षरपादका स्रग्धरायाः पादद्वयेन मिश्रणात् उपजातित्वम् । एवं "महिषेऽसुराणामधिपे देवानाञ्च पुरन्दरे" इति देवीमा० अनुष्टुब्बृहत्योः सङ्करादुपजातित्वम् ।

**उपजानु** अव्य० जानुनः समीपम् अव्ययी० । जानुसमीपे । "भीष्मोपजान्वायुपाजान्वरत्निः" भट्टिः । तत्र प्रायभवेऽर्थे ततः ठक् उगन्तत्वात् ठस्य कः । औपजानुक तत्रप्रायभवे त्रि० "पाणी यस्योपजानुकौ" भट्टिः ।

**उपजाप** पु० उप+जप–घञ् । १भेदे, अनैक्यसम्पादके व्यापारे । "उपजापः कृतस्तेन तानाकोपवतस्त्वयि" माघः "तेषु तेषु चाकार्य्येषु प्रावर्त्तन् परोपजापाः" दशकु० । २उपांशुजपे च ।

**उपजापक** त्रि० उप+जप–ण्वुल् । १भेदके "घातयेद्विविधैर्दण्डैररीणाञ्चोपजापकान्" मनुः ।

**उपजापसह** त्रि० उपजापं भेदं सहते सह–अच् । भेदार्हे [भेद्ये ।

**उपजिह्वा** स्त्री उपगता ऊर्द्ध्वमुखी जिह्वा यस्याः । १काकीभेदे । प्रा०स० । २उपरिस्थायां जिह्वायाञ्च (आलजिभ्) "उपजिह्वास्फिचौ वाहू" कात्यश्रौ० या० स्मृ० । सुश्रुतोक्ते मांसदोषजे ३रोगभेदे "अधिमांसार्व्वुदार्शोऽधिजिह्वोपजिह्वोपकुशगलशुण्डिकालजीमांससंघातौष्ठप्रकोपगलगण्ड गण्डमालाप्रभृतयोमांसदोषजाः" स च सप्तसु मुखरोगेषूपजिह्वाधिजिह्वोपकुशदन्तवैदर्भप्रभृतिषु जिह्वागतमुखरोगभेदः । मुखरोगविभागे" सुश्रु० । "जिह्वागताश्च कण्टकास्त्रिविधास्त्रिभिर्दोषैरलासउपजिह्विकेति च सुधा विभज्य "जिह्वाप्ररूपः श्वयथुर्हि जिह्वामुन्नाम्य जातः कफरक्तयोनिः । प्रसेककण्डूपरिदाहयुक्ता प्रकथ्यतेऽसावुपजिह्विकेति" लक्षितः । अत्र स्वार्थे कन् । "उपजिह्विकां तु संलिख्य क्षारेण प्रतिसारयेत्" सुश्रु० । उपजिह्वेव इवार्थे कन् । ४कीटभेदे हारा० कण्टकावृततनुत्वात्तथात्वम्

**उपजीक** त्रि० उ+जीव–क्विप् स्वार्थे कन् वलोपः । उपजीवके "उद्भवन्ति उपजीका समुद्रादधिभेषजम्" अथ०२, ३, ४,

"उपजीका आविसृम् धन्वन्युदकम्" । ६,१००,२,

**उपजीव** त्रि० उपगतो जीवं जीवनम् अत्या०स०। जीवनोपगते । "उपजीवाःस्थो जीव्यासम्" अथ०१९,६९,२, उपादू द्वाचकत्वेन तत्पुरुषेऽन्तोदात्तोऽयम् ।

**उपजीवक** त्रि० उप+जीव–ख्खुल् ।१उपजीवनोपायवति "सूचकाः सेतुभेत्तारः परहत्त्युपजीवकाः । अक्षतज्ञाश्च मित्राणां ते वै निरयगामिनः" भा०आ०२२अ०। उपजीव्यतया २इतराकाङ्क्षके ३प्रयोज्ये "उपजीव्योपजीवकभावः" न्यायप्र० उपजीव्यशब्दे विवृतिः ।

**उपजीवन** न०उप+जीव–करणे ल्युट् । १जीविकायाम् । "क्षत्रियस्यैतदेवाहुर्धर्मं कृष्णोपजीवनम्" भा०व०२१अ० । "उपजीवनञ्च पर्जन्योदानमस्य परायणम्" भा०व० ३१ अ०। भावे ल्युट् । २इत्त्याद्यर्थमाश्रये "स्त्रीशूद्रविट्क्षत्रवधोनिन्दितार्थोपजीवनम्" या०स्मृ० "आत्मप्रदानं सौम्यत्वमद्भ्यश्चैवोपजीवनम्" भा०स०७६अ०।

**उपजीवनीय** त्रि० उप+जीव–कर्मणि अनीयर् । इत्त्याद्यर्थमाश्रयनीये "यत्र वा अस्यै बहुलतया ओषधयस्तदस्या उपजीवनीयतमम्" शत०ब्रा०१,२,२,१०, "सर्वतोमुपजीवनीयामकुर्वत" १,२,५,११,

**उपजीविका** स्त्री उपजीवयति उप+जीव–करणे कर्त्तृत्वोपचारात् ख्खुल् अत इत्त्वम् । जीवनोपायभूतायां वृत्तौ ।

**उपजीविन्** त्रि० उप+जीव–णिनि । १आश्रिते २इत्त्याद्यर्थमालम्बके च "भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्" रघुः। "अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । नैषां प्रतिग्रहोदेयोन शिलाम् तारयेच्छिलाम्" "जातिमात्रोपजीवी वा कामं स्यात् ब्राह्मणब्रुवः" मनुः । स्त्रियां ङीप् ।

**उपजीव्य** त्रि० उप+जीव–ण्यत् । १आश्रये । २ज्ञानसत्ताद्युत्त्याद्यर्थम् अवलम्बनीये "अलमुपजीव्यानां मान्यानांवाक्ये कटाक्षनिक्षेपेण" सा०द०। "उपजीव्यद्रुमाणाञ्च विप्रतेर्हि गुणोदमः" या०स्मृ० । "उपजीव्यबाधपत्तेः" शब्दचि०। उपजीव्यत्वञ्च स्वसत्ताप्रयोजकत्वम् स्वज्ञानप्रयोजकत्वञ्च । उपजीव्योपजीवकभावश्च ज्ञानसत्त्वयोः प्रयोज्यप्रयोजकभावः । यथा एकस्यान्यसत्ताप्रयोजकत्वम् अपरस्य च तत्प्रयोज्यसत्ताकत्वम् । एवम् अन्यज्ञानप्रयोजकत्वम् अन्याधीनज्ञानविषयत्वं च यथायथं प्रयोगानुसारे बोध्यम् । [उपजोषणमप्यत्र नं० ।

**उपजोष** पु०उप+जुष–प्रीतौ घञ् ।१प्रीतौ २सेवने च । ल्युट् ।

**उपजोषम्** अव्य० उप+जुष–प्रीतौ वा० अम् । १प्रीतौ २कल्याणे ३यथाकर्म्मभोगमित्यर्थे च । तत्र प्रीतौ "यथोपजोषं सर्व्वेश्च जनश्चिक्रीड भारत" । भा०आ०११२अ०। "यथोपजोषं विहितैर्हि लक्ष्णा" भा०आ०१६६अ० अत्र सर्व्वत्र उपजोषशब्देनापि यथाशब्दस्याव्ययीभावोऽपि भवितुमर्हति । उप–सामीप्ये जोषम् मौनम् । ४सामीप्येन मौने च "किमिदमुपजोषमास्यते" शकु० ।

**उपज्ञा** स्त्री उप+ज्ञा-कर्म्मणि अङ् । विनोपदेशेन स्वयमुज्ञाद्ये १प्रथमं ज्ञायमाने । उपज्ञाशब्दस्य तु तदादित्व विवक्षायाम् उत्तरपदस्थस्य तत्पुरुषे क्लीवता । "पाणिन्युपज्ञं व्याकरणम्" सि०कौ० । "अथ प्राचेतसोपज्ञं रामायणमितस्ततः" रघुः । "कैकय्युपज्ञं वत वञ्चनर्थम्" । भट्टिः भावे अङ् । २आद्यज्ञाने तत्पुरुषे स्त्री न क्लीवता

**उपज्ञात** त्रि० उप+ज्ञा–क्त । विनोपदेशेन ज्ञातेऽर्थे ।

**उपज्योतिष** न० उपगतं सादृश्येन ज्योतिषम् अत्या०स० । ज्योतिषशास्त्रानुकारिणि, गणितादिशास्त्रे ।

**उपढौकन** न० उप+ढौक-भावे ल्युट् । १उपहारे राजादेः संतोषार्थं द्रव्यादिप्रापणे ( भेटदेओया ) कर्म्मणि ल्युट् । २उपह्रियमाणे उपायनद्रव्ये ।

**उपतन्त्र** न० उपगतं तन्त्रम् अत्या०स०। शिवोक्ततन्त्रसदृशे सिद्धर्षिकृते तन्त्रभेदे तच्च वाराहीतन्त्रे दर्शितं यथा "सैद्धोक्तान्युपतन्त्राणि कपिलोक्तानि यानि च । अद्भुतानि च तन्त्राणि जैमिन्युक्तानि यानि च । वशिष्ठः कपिलश्चैव नारदो गर्ग एव च । पुलस्त्यो भार्गवः सिद्धो याज्ञवल्क्यो भृगुस्तथा । शुक्रो वृहस्पतिश्चैव अन्ये ये मुनिसत्तमाः । एभिः प्रणीतान्यन्यानि उपतन्त्राणि यानि च । न संख्यातानि तान्यत्र धर्म्मविद्भिर्महात्मभिः । सारात् सारतराण्येव सङ्गृहीतानि निबोधतेति" ।

**उपतप्त** त्रि०उप–आधिक्ये–तप–क्त । सन्तप्ते । "क्षारोपतप्तोऽपि भयं न स प्रभुः" नैष० ।

**उपतप्तृ** त्रि० उप+तप–बा०भावे तृच् ।१सन्तापे। अमरे भावप्रकरणे "ज्वारः स्पर्शःस्यादुपतप्तेति" पाठात् भावे एव तृच् इति चीरस्वामी । तेन शब्द कल्पद्रुमे तापकपर्यायताकथनं प्रामादिकमेव । कर्त्तरि तृच् स्त्रियां ङीप् । २तापके ३रोगादौ च ।

**उपताप** पु० उप+आधिक्ये तप–आधारे घञ् । १त्वरायां भावे घञ् ।२सन्तापे यत्नतमेरच ३रोगे मेदि० । करणे घञ् ४अशुभे५पीडने च रत्नावली । "दीक्षितानुपतापे" आश्व०श्रौ०६,९,१, पुंस्त्वोपघातेन्द्रियोपतापान् तथा सुखा-

च्छिपाकरक्तपित्तवातशोणिताध्मोकाप्रभृतीनापादयति” सुश्रु०। “मानसागन्तुभिर्म्मातुरुपतापैः प्रपीड़ितः “बन्धोपतापैश्च भवेद्विशेषशिरोऽभितापः ससमीरणेन” सुश्रु०। [जनके।

**उपतापक** त्रि० उप+आधिक्ये तप-णिच् ण्वुल्। सन्ताप

**उपतापन** त्रि० उप+आधिक्ये तप+णिच् ल्यु। सन्तापके।

**उपतापिन्** त्रि०उप+आधिक्ये तप+णिनि। १सन्तप्ते २रोगिणि च। “गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः” मनुः “उपतापी रोगी” कुल्लू०। णिच्-णिनि। ३सन्तापकारके। “दातापरेभ्यो न परोपतापी” भा० आ० ११अ०। उभयतः स्त्रियां ङीप्।

**उपतारक** त्रि०उप+तॄ णिच्-ण्वुल्। सन्तारके।

**उपतिष्य** न०उपगतं तिष्यम् अत्या०स०। पुष्यसमीपगे १पुनर्वसुतारके २अश्लेषानक्षत्रे च तयोः नक्षत्रचक्रे पुष्योपगतत्वात् तथात्वम्। उपादृ द्व्यच्कत्वादन्तोदात्तोऽयम्।

**उपतीर** अव्य०सामीप्यादौ अव्ययी०। तीरसामीप्यादौ आद्युदात्तता एवम् उपकूल उपमूल उपशाल उपाञ्च इत्यादि तत्तत्सामीप्यादौ अव्य०। अव्ययीभावे आद्युदात्तश्च

**उपतैल** त्रि०उपगतस्तैलम् अत्या०स०। अभ्यक्ततैले उपादृ द्व्यच्कत्वादन्तोदात्तता स्त्रियां गौरा०ङीष्

**उपत्यका** स्त्री उप+भवार्थे त्यकन् त्यकनो निषेधात् नातइत्त्वम्। पर्वतस्यासन्नायां भूमौ। “मलयाद्रेरुपत्यका” रघुः। प्राग्भागतापतदद्रिश्चेदसुपत्यकासु” माघः। “कान्ततरेयं गन्धपाषाणवत्युपत्यका” दशकु०।

**उपदंश** पु०उप+दन्श—कर्मणि घञ्। १मद्यपानरोचके (चाटनी) भक्ष्यद्रव्ये, २भक्ष्यद्रव्योपकरणमात्रे, च। “तथानुष्ठिते चैतया द्वित्रानुपदंशानुपपाद्य” दशकुमा०। भावे घञ्। ३दशने (कामडान) ‘दिदङ्क्षौ उपदंशेच्छावतीति” माघ टीकायां मल्लि०। कर्मणि घञ्। ४समष्ठिलवृक्षे ५शिग्रुवृक्षे च पु० राजनि०। ६उपस्थरोगभेदे (वाओ) (गरमि) तन्निदानिनादि सुश्रुते उक्तं यथा।

“तत्रातिमैथुनादतिब्रह्मचर्य्याद्वा तथा ब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढरोमामल्पद्वारां महाद्वारामप्रियामकामामचौक्ष्यसलिलप्रक्षालितयोनिमक्षालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशनविषमशूकनिपातनादर्हनाद्धस्ताभिघाताच्चतुष्पदीगमनादचौक्ष्यसलिलप्रक्षालनादवपीड़नाच्छुक्रमूत्रवेगविधारणान्मैथुनान्ते वाऽप्रक्षालनादिभिर्मेढ्रमागम्य प्रकुपिता दोषाः क्षतेऽक्षते वा श्वयथुमुपजनयन्ति तमुपदंशमित्याचक्षते। स पञ्चविधस्त्रिभिर्दोषैः पृथक् समस्तैरसृजा चैकः। तत्र वातिके पारुष्यं त्वक्परिपुटनं स्तब्धमेढ्रता परुषशोफता विविधाश्च वातवेदनाः। पैत्तिके ज्वरःश्वयथुः पक्वोडुम्बरसङ्काशस्तीव्रदाहः क्षिप्रपाकः पित्तवेदनाश्च। श्लैष्मिके श्वयथुः कण्डूमान् कठिनः स्निग्धः श्लेष्मवेदनाश्च। रक्तजे कृष्णस्फोटप्रादुर्भावोऽत्यर्थमसृक्प्रवृत्तिः पित्तलिङ्गान्यत्यर्थं ज्वरदाहौ शोषश्च वाप्यसैव कदाचित्। सर्व्वजे सर्व्वलिङ्गदर्शनमवदरणं शेफसः क्रिमिप्रादुर्भावो मरणं चेति”।एतद्व्याख्याच्छलेन भावप्र०उक्तं यथा “तत्रोपदंशस्य विप्रकृष्टनिदानमाह”। हस्ताभिघातान्नखदन्तघातादधावनादृत्युपसेवनाद्वा। योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधापचारैः”। हस्ताभिघातात् हस्तेन मैथुनात्। नखदन्तघातात् नखदन्तयोर्घातस्थानत्वेनानुक्तोऽपि मेहने नखदन्तघातो बलवदनुरागोदयात्। उक्तञ्च कामशास्त्रे। “शास्त्रस्य विषयस्तावद् यावन्मन्दतरो रसः। रतिचक्रे प्रवृत्ते तु न शास्त्रं नापि च क्रमः”। कलहे दुष्टस्त्रीकृतो वा मेहने नखदन्तघातः। उत्कलादौ स्त्रियो मुखयोनयो भवन्ति। ताभिर्व्वा मेहने, नखदन्तघातः। योनिप्रदोषात् दीर्घकर्कशयोनिलोमयोगात्। योनिच्छिद्रस्यातिसूक्ष्मत्वाद्वा वातादिकृताद्वा योनिदोषात्। विविधापचारैः। दुष्टजलप्रक्षालनब्रह्मचारिणीगमनादिभिः पञ्चोपदंशाः। वातिकः पैत्तिकः श्लैष्मिकः सान्निपातिकः आगन्तुजश्चेति। तत्र वातिकस्य पैत्तिकस्य चोपदंशस्य लक्षणमाह। “सतोदभेदस्फुरणैस्तु कृष्णैः स्फोटैर्व्यवस्येन्मरुतोपदंशम्। पीतैर्व्वहुक्लेदयुतैः सदाहैः पित्तेन रक्तैः पिशितावभासैः”। व्यवस्येत् जानीयात् पीतैः रक्तैर्वेति विकल्पः। श्लैष्मिकं सान्निपातिकञ्चाह। “सकण्डुरैः शोफयुतैर्महद्भिः शुक्लैर्घनैः स्रावयुतैः कफेन। नानाविधस्रावरुजोपपन्नमसाध्यमाहुस्त्रिमलोपदंशम्”। असाध्यमाह। “विशीर्णमांसं क्रिमिभिः प्रजग्धं मुष्कावशेषं परिवर्ज्जयेत्तम्”। विशीर्णमांसं गलितमांसं प्रजग्धं खादितं मुष्कावशेषं विशीर्णसमस्तमेहनमांसत्वेनावशिष्टफलकोषमात्रम्। उत्पन्नमात्रस्य चिकित्साया अकरणे दोषमाह “सञ्जातमात्रे न करोति मूढ़ः क्रियां नरो यो विषये प्रसक्तः। कालेन शोफक्रिमिदाहपाकैः प्रशीर्णशिश्नो म्रियते स तेन”। विषये प्रसक्तः अतिस्त्रीरतः। लिङ्गार्शसमाह “अङ्कुरैरिव संजातैरुपर्य्युपरि संस्थितैः। क्रमेण

जायते वर्त्तिस्ताम्रचूड़शिखोपमा। कोषस्याभ्यन्तरे सन्धौ पर्वसन्धिगतापि च। सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा। लिङ्गवर्त्तिरिति ख्याता लिङ्गार्श इति चापरे"। लिङ्गं वर्त्तेः स्थानम्। कोषाभ्यन्तरे अण्ड-कोषाभ्यन्तरे। सन्धौ लिङ्गस्थसन्धौ पर्वसन्धिगता मणि-पर्वणोः सन्धिगता"। तच्चिकित्सादि सुश्रु०चिकि० १९अ०। "उपदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिन" इत्यादि उक्तम्

**उपदर्शक** पु० उप+दृश-णिच्-ण्वुल्। १द्वारपाले। २दर्शयि-तरि त्रि०उप सामीप्ये दृश-ण्वुल्। समीपस्थतया द्रष्टरि ३साक्षिणि। तस्य कार्य्यानुषङ्गित्वाभावादुपद्रष्टृत्वम्।

**उपदश** त्रि० ब०व० दशानां समीपवर्त्तिनः ब०व्री० डच् समा०। दशसंख्यासमीपवर्त्तिषु नवैकादशसंख्याकेषु।

**उपदा** स्त्री उप—दा—भावे अङ्। १उत्कोचे, २उपढौकने च। "तदर्थिनां दुर्गायतामशुल्कोपदा दीयते" पा० कृदभिहि-तोभावो द्रव्यवत् प्रकाशते इत्युक्तेः" २उपह्रियमाणे द्रव्ये च। "उपदा विविशुः शश्वन्नोत्सेकाः कोसलेश्वरम्" "वन्येतरा जानपदोपदाभिः" "प्रत्यर्प्य पूजामुपदाच्छलेन" रघुः। भावे ल्युट् उपदानमप्यत्र न०। स्वार्थे कन्। तत्रैव उत्कोचे च। उपदा+अभूततद्भावे भ्वादौ च्वि। उप-दीभूतः उपदीकृतः "तस्य रत्नमुपदीकृतं नृपाः" माघः। उपददाति उप+दा—कर्त्तरि क्विप्। उपदाद्रव्यदातरि त्रि० "वर्षायानुरुधं वनायोपदाम्" यजु० ३०,९, "उपदाम् उपदानदातारम्" वेददी०

**उपदानवी** स्त्री स्वर्भानुदानवस्य प्रभानामकन्याजे पुलोम्नः कन्या-भेदे। "स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु सुतात्र-यम्। उपदानवी हयशिरा शर्म्मिष्ठा वार्षपर्व्वणी"। हरि०३अ० "उपदानवी सुतान् लेभे चतुरस्त्वैलिकात्मजा-न्। दुष्मन्तमथ सुष्मन्तं प्रवीरमनघं तथा" हरि०३२अ०।

**उपदि(श)श्** अव्य०दिशि, दिशोः समीपं वा वा अच् समा०। १दिशीत्यर्थे २दिशोः सामीप्ये च०उपगता दिशौ अत्या० समा०हलन्तत्वाद्वा टाप्। दिशोर्मध्यवर्त्तिन्यां विदिशि कोणे स्त्री "आवृण्वन् सर्व्वतोव्योम दिशश्चोपदिशस्तथा" भा० व० १७१ अ०।

**उपदिश** पु० "भगिन्यां वसुदेवस्य श्रुतश्रवसि जज्ञिरे। शिशु-पालो दशग्रीवोरैभ्योऽथोपदिशो बली" हरिव० ११७अ० उक्ते शिशुपालभ्रातरि वसुदेवस्य भागिनेये नृपभेदे

**उपदिश्य** अ०उप+दिश-ल्यप्। १उपदेशं कृत्वेत्यर्थे। उप-दिशि भवः दिगा०यत्। २विदिग्भवे त्रि०।

**उपदिष्ट** त्रि०उप+दिश-कर्म्मणि क्त। यस्य जनस्य उपदेशः कृतस्तस्मिन् १जने उपदेशेन २ज्ञापिते च। "उपदिष्टा-तिदिष्ट गोत्रस्यैव निषेधः" उद्वा०त० रघुनन्दनः।

**उपदी** स्त्री उपेत्य दीयते खण्ड्यते उप+दो-घञर्थे क गौ-रा० ङीष्। (परगाछा) वन्दायां राजनि० स्वार्थे कन्। वा ह्रस्वः। उपदिका उपदीकाप्यत्र हेमचन्द्रः। "इमा वम्र्यो यदुपदीका" शत०ब्रा०१४,१,१,८, अत्र वम्री-शब्दस्यैव वन्दापर्यायत्वश्रवणात् हेमचन्द्रे वम्रीतिपाठ कल्पनेन शब्दकल्पद्रुमे तत्पर्य्यायताकथनं प्रामादिकमेव २कीटभेदे च मेदिनिः।

**उपदीक्षिन्** पु० उपगतोदीक्षिणं सामीप्येन अत्या०स०। यज्ञे दीक्षितस्य निकटस्थे "उपदीक्षी स्वेष्वग्निषु नखनि कृन्तनाद्युद्वादनान्तं सन्निपातिकम्" कात्या० २५,१४,२, "उपदीक्षी नेदिष्ठः" कर्कः।

**उपदृश्** त्रि०उपरिस्थः सन् पश्यति उप+दृश-क्विन्। उपरि-स्थतया द्रष्टरि साक्षिणि सूर्य्यचन्द्रादौ। "अयं सूर्य्य इ-वोपदृगयं सरांसि धावति" ऋ०९,५४,२, "अयं सोमः सूर्य्य इवयथा सूर्य्यः सर्व्वस्य लोकस्योपद्रष्टा तत्तत्कर्म्मणा मुपदृगुपद्रष्टा" भा०। "भद्रा सूर्य्य इवोपदृक्" । ८,१०२,१५।

**उपदृषद्(द्)** अव्य० सामीप्यादौ अव्ययी० वा अच् समा०। दृषदः पाषाणस्य सामीप्यादौ

**उपदेव** पु० उपगतोदेवम् सादृश्येन अत्या०स०। "देवकस्य भवन् पुत्राश्चत्वारस्त्रिदशोपमाः। देववानुपदेवश्च सदेवो देव-रक्षितः" हरिवं०३८अ० उक्ते १देवकनृपपुत्रभेदे। "अक्रू-रेणोग्रसेनायां सुगात्र्यां कुरुनन्दन"। प्रसेनश्चोपदेवश्च जज्ञाते देववर्चसौ" हरि० ३४अ० उक्ते २अक्रूरपुत्रभेदे च। देवतुल्यतेजस्कत्वात्तन्नामयोस्तथात्वम्। देवसदृशालौकिक सामर्थ्ययुक्ते ३पिशाचादौ। अन्तोदात्तोऽयम्, उपदेवाश्च दश "विद्याधरोऽप्सरोयक्षोरक्षो गन्धर्वकिन्नरौ। पिशाचो गुह्यकः सिद्धोभूतोऽमी देवयोनयः" इत्यमरोक्ताः बोध्या एषाञ्चालौकिकशक्तिकत्वात्तथात्वम्। उपदेवतादयोऽप्यत्र।

**उपदेवी** स्त्री "याः पत्न्योवसुदेवस्य चतुर्द्दश वराङ्गनाः। पौरवी रोहिणी१नाम मदिराऽपि२ तथा धरा३। वैशाखी च तथा भद्रा४ सुनाम्नी५ चैव पञ्चमी। सहदेवा१ शान्तिदे-वा२ सन्देवा३ देवरक्षिता४। वृकदेव्युपदेवी५,६, च देवकी चैव सप्तमी७। १२। सुतनुर्वडवा चेति द्वे एते परिचा-रिके" १४। हरि० ३७उक्ते वसुदेवस्य पत्नीभेदे। जातौ ङीष् २विद्याधरादिजातिस्त्रियाम्।

**उपदेश** पु० उप+दिश–घञ्। १अनुशासने, २हितकथने, प्रवर्त्तकवाक्ये च। “चन्द्रसूर्य्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये। मन्त्रमात्रप्रकथनमुपदेशः स उच्यते” म० त० रामार्च्चनचन्द्रिकोक्ते ३दीक्षाभेदे। तद्विस्तारस्तु तन्त्रसारे कलावत्यादिदीक्षाप्रकरणे दृश्यः। तदशक्तौ तु “तत्राप्यशक्तः कश्चिच्चेद्गणमभ्यर्च्य साक्षतम्। तदम्बु नाभिषिच्याष्टवारं मूलेन के करम्। निधायाष्टौ जपेत् कर्णे उपदेशे त्वयं विधिः”। विश्वसारतन्त्रोक्तः प्रकारोऽनुज्ञेयः। अजम् शङ्खं के मस्तके।“यथासंख्यमुपदेशः समानाम्” पा०। “वधनिर्धूतशापस्य कबन्धस्योपदेशतः” रघुः। “स्थिरोपदेशामुपदेशकाले” “तपस्विनामप्युपदेशतां गतम्” कुमा०। “आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः”। “धर्मोपदेशं दर्पेण विप्राणामस्य कुर्व्वतः” मनुः। प्रायश्चित्तोपदेश प्रकारस्तु मिता०दर्शितो यथा। “विख्यातदोषः कुर्व्वीत पर्षदोऽनुमतं व्रतम्” या०स्मृ०। “योदोषो यावत्कर्त्तृसम्याद्यस्ततोऽन्यैर्विख्यातो विज्ञातो दोषो यस्यासौ पर्षदुपदिष्टं व्रतं कुर्य्यात्। यद्यपि स्वयं सकलशास्त्रार्थविचारचतुरस्तथापि पर्षत्समीपमुपगम्य तया सह विचार्य तदनुमतमेव कुर्य्यात्। तदुपगमने चाङ्गिरसा विशेष उक्तः। “कृते निःसंशये पापे न भुञ्जीतानुपस्थितः। भुञ्जानो वर्द्धयेत् पापं यावन्नाख्याति पर्षदि। सचेलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः। पर्षदोऽनुमतस्तच्च सर्व्वं विख्यापयेन्नरः। व्रतमाधाय भूयोऽपि तथा स्नात्वा व्रतञ्चरेदिति”। विख्यापनञ्च पर्षद्दक्षिणादानानन्तरं कार्य्यम्। यथाह पराशरः। “पापम्प्रख्यापयेत्पापी दत्त्वा धेनुन्तथा वृषमिति”। एतच्चोपपातकविषयम्। महापातकादिषु धिकङ्कल्प्यम्। यदुक्तम्। “तस्माद्द्विजः प्राप्तपापः सकृदाप्लुत्य वारिणि। विख्याप्य पापं वक्तृभ्यः किञ्चिद्दत्त्वा व्रतञ्चरेदिति”। तत्प्रकीर्णकविषयम्। पर्षत्स्वरूपञ्च मनुना दर्शितम्। “त्रैविद्योहैतुकस्तर्की निरुक्तो धर्मपाठकः। त्रयश्चाश्रमिणः पूर्व्वे पर्षदेषा दशावरा”। हैतुकोमीमांसार्थतत्त्वज्ञः। तर्की न्यायशास्त्रकुशलः। तथान्यदपि पर्षद्द्वयन्तेनैव दर्शितम्। “ऋग्वेदविद्यजुर्वेदी सामवेदविदेव च। त्र्यवरा पर्षद्विज्ञेया धर्मसंशयनिर्णये”इति। तथा।“एकोऽपि वेदविद्धर्मं यं व्यवस्येत्समाहितः। स ज्ञेयः परमोधर्मो नाज्ञानामुदितोऽयुतैरिति”। आसाञ्च पर्षदां सम्भवापेक्षया व्यवस्था। महापातकाद्यपेक्षया वा। यत्तु स्मृत्यन्तरेऽभिहितम्। “पातकेषु शतम्पर्षत्सहस्रं महदादिषु। उपपापेषु पञ्चाशत्स्वल्पे स्वल्पा तथा भवेदिति”। तदपि महापातकादिदोषानुसारेण पर्षदो गुरुलघुभावप्रतिपादनपरं न पुनः संख्यानियमार्थं मन्वादिमहास्मृतिविरोधप्रसङ्गात्। तथा देवलेन चात्र विशेषो दर्शितः। “स्वयन्तु ब्राह्मणा ब्रूयुरल्पदोषेषु निष्कृतिम्। राजा च ब्राह्मणाश्चैव महत्सु सुपरिक्षितमिति”। तया च पर्षदा अवश्यं व्रतमुपदेष्टव्यम्। “आर्त्तानां मार्गमाणानाम्प्रायश्चित्तानि ये द्विजाः। जानन्तो न प्रयच्छन्ति ते यान्ति समतां तु तैः”इत्यङ्गिरःस्मरणात्। तथा तया पर्षदा ज्ञात्वैव व्रतमुपदेष्टव्यम्।“अज्ञात्वा धर्म्मशास्त्राणि प्रायश्चित्तन्ददाति यः। प्रायश्चित्ती भवेत् पूतः किल्बिषम्पर्षदं व्रजेदिति” वशिष्ठस्मरणात्। क्षत्रियादीनान्तु कृतैनसां धर्मोपदेशे विशेषोऽङ्गिरसा दर्शितः। “न्यायतो ब्राह्मणः क्षिप्रं क्षत्रियादेः कृतैनसः। अन्तरा ब्राह्मणं कृत्वा व्रतं सर्व्वं समादिशेत्। तथा शूद्रं समासाद्य सदा विप्रपुरस्सरम्। प्रायश्चित्तम्प्रदातव्यञ्जपहोमविवर्जितमिति”। तत्र च यागाद्यनुष्ठानशीलानाञ्जपादिकं वाच्यमितरेषान्तु तपः।“कर्म्मनिष्ठास्तपोनिष्ठाः कदाचित् पापमागताः। जपहोमादिकन्तेभ्यो विशेषेण प्रदीयते। ये नामधारका विप्रा मूर्खा धनविवर्जिताः। कृच्छ्रचान्द्रायणादीनि तेभ्योदद्याद्विशेषतः” तत्र च सत्रेशपूजनप्रदक्षिणे कर्त्तव्ये इति विधानपरिजातादयः तन्मूलं तत्र दृश्यम्। मत्कृततुलादानादिपद्धतौ च प्रायश्चित्तप्रकरणे तत्प्रकारोदृश्यः। प्रा०त०“तोषयित्वा द्विजोत्तमान्” देवलवचने तोषयित्वेति श्रवणात् तस्यानतिकरत्वेन तद्ग्रहणे न दोषः प्रायश्चित्तद्रव्यग्रहणे च दोष इति”व्यवस्थापितम्। प्रा०वि०तत्प्रपञ्चितं यथा “नन्वेतद्द्रव्यग्रहणस्य पापजनकत्वे प्रमाणं नास्ति। न च पापक्षयार्थत्वात् पापजनकत्वं, प्रमाणाभावात् तुलापुरुषप्रतिग्रहस्यापि गर्हितत्वापत्तेः। तत्र च“अथातः संप्रवक्ष्यामि महापातकनाशनम्” इत्यनेन पापक्षयश्रवणात्। अथ प्रायश्चित्तश्रवणात् पापजनकत्वं यथा याज्ञवल्क्यः। “पात्रे धनं वा पर्य्याप्तं दत्त्वा शुद्धिमवाप्नुयात्”आदातुश्च विशुद्ध्यर्थमिष्टिर्वैश्वानरी स्मृता”। एतस्य महापातकविषयत्वादन्यस्य गर्हितत्वं न स्यात्। अत एव“नाददीत नृपः साधुर्म्महापातकिनोधनमिति” राज्ञोधनग्रहणनिषेधो महापातक एव मनुनोक्तः। पतितद्रव्यग्रहणस्यैव

पापजनकत्वम् "पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य चेति" बृहस्पतिवचनादिति चेन्न पातकेतरप्रायश्चित्तद्रव्यस्य ग्राह्यत्वापत्तेः, उच्यते । "आदानुविशुद्ध्यर्थमिति" महापातकेष्ववणेऽपि लाघवात् सामान्यश्रुतिरेव कल्पनीया पापक्षयमात्रसाधनत्वेन यदुत्सृष्टं तत् प्रायश्चित्तद्रव्यं न ग्राह्यमिति, होलाकाधिकरणन्यायात् । अत एव न तुलापुरुषादावतिव्याप्तिस्तस्य पापक्षयमात्रफलत्वाभावात् स्वर्गादिफलस्यापि तस्य श्रुतत्वात् अत उक्तयाज्ञवल्क्यवचनान्महापातकिप्रायश्चित्तद्रव्यग्रहे सकृत्कृते वैश्वानरीष्टिः । अत्यन्तावृत्त्या द्रव्यत्यागश्च जले क्षेपणीयः ब्रह्मचारिणे वा देयः । यद्यपि प्रायश्चित्तेतरपतितद्रव्यग्रहणे बृहस्पतिना चान्द्रायणमासोपवासौ विहितौ तथापि तावभ्यासविषयौ ज्ञेयौ लघुपापप्रायश्चित्तद्रव्यग्रहणे तु "यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् । तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव चेति" मनूक्तगायत्रीसहस्रजपमासैकगोष्ठवासपयःपानव्रतमाचरणीयम् । लघुतरपापप्रायश्चित्तग्रहणे तु "प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम् । जपंस्तरत्समन्दीयं मुच्यते मानवस्त्र्यहादिति" मनूक्तं दिनत्रयं तरत्समन्दीयजपशतं कुर्यादिति"। तरत्समन्दीयञ्च पावमानसूक्तान्तर्गतं सूक्तं तच्च मत्कृततुलादानादिपद्धतौ १८०।१ पृष्ठे दृश्यम् ।

**उपदेशक** त्रि० उप+दिश-ण्वुल् । उपदेशकर्त्तरि । "उपदेशकमाहात्म्यादार्षज्ञानाच्च पाणिनेः" शब्दा०र० ।

**उपदेशसाहस्री** स्त्री वेदान्तप्रकरणभेदे तत्र हि उपदेशाः सहस्रं सन्तीति तस्यास्तथात्वम् ।

**उपदेशिन्** त्रि० उपदिशति उप+दिश—णिनि । उपदेशकर्त्तरि स्त्रियां ङीप् । "गतानुगतिकोलोकः कुट्टिनीमुपदेशिनीम् । प्रमाणयति नो धर्मं यथा गोघ्नमपि द्विजम्" हितो० ।

**उपदेश्य** त्रि० उप+दिश-कर्म्मणि ण्यत् । १अनुशासनीये । यस्य प्रवर्त्तनार्थमुपदेशः क्रियते तस्मिन् २उपदेशार्हे कर्म्मादौ च "विद्यांश्च वा अविद्यांश्च यच्चान्यदुपदेश्यम्" अथ० ११, ८, २३

**उपदेष्टृ** पु० उप+दिश-तृच् । १गुरौ कर्म्मोपदेशके २आचार्य्ये "चत्वारोवयमृत्विजः स भगवान् कर्म्मोपदेष्टा हरिः" वेणी० । "तस्योपदेष्टारमपि पूजयेच्च ततोगुरुम् । न पूज्यते गुरुर्यत्र सर्व्वास्तत्राफलाः क्रियाः" ति०त०बृह० । "उपदेष्टानुमन्ता च लोके तुल्यफलौ स्मृतौ" आ०त०पु० । ३उपदेशदायके त्रि० स्त्रियां ङीप् ।

**उपदेह** पु० उपदिह्यते उपचीयतेऽनेन उप+दिह—घञ् । देहादिवृद्धौ गण्डमालाश्लीपदादिभिर्देहस्फीततायाम् । "कण्डूर्गुरुत्वं सुप्तत्वमुपदेहोऽल्पवेदनं स्तम्भः शैत्यञ्च यत्र तं श्लैष्मिकमिति विद्यात्" व्रणविभागे सुश्रु० "गुदोपदेहशोफौ तु स्नेहोऽपक्वः करोति हि" तद्दौर्गन्ध्योपदेहौ तु श्लेष्माणञ्चापकर्षति" सुश्रु० । [ हेम० ।

**उपदेहिका** स्त्री उपदेहोविद्यतेऽस्याः ठन् । कीटभेदे (दीमक)

**उपदोह** पु० उपदुह्यतेऽत्र उप+दुह—आधारे घञ् । दोहनपात्रे "ददाति यो वै कपिलां सचेलां कांस्योपदोहां द्रविणैरुत्तरीयैः" भा० व० १८६ अ० । "सदक्षिणां काञ्चनचारुशृङ्गीं कांस्योपदोहाम्" । "गाः कांस्योपदोहाश्च कन्याश्च वस्त्रलङ्कृताः" इति च हरि० ६अ० ।

**उपद्रव** पु० उप+द्रु—भावे घञ् । १उत्पाते । रोगारम्भके धातुवैषम्यजनिते २विकारभेदे च । (उपसर्ग) तल्लक्षणमुक्तं वैद्यके । "यो व्याधि स्तस्य यो हेतुर्दोषस्तस्य प्रकोपतः । योऽन्योविकारो भवति स उपद्रव उच्यते" सुश्रुते चोक्तं "साध्ययाप्यासाध्यरोगभेदमुपक्रम्य । "तत्रौपसर्गिको यः पूर्व्वोत्पन्नव्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञकः" । तेन उपसर्जकत्वात्तस्य तथात्वं अत्रार्थे कर्त्तरि अच् इति" विवेकः । स च व्याधिभेदेन नानाविधः । रोगभेदे तद्भेदाश्च तत्रैवोक्ता बहुशः । तत्र व्रणभेदे "अतिदग्धे मांसालम्बनंगात्रविश्लेषसिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रं ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति" पालीरोगे च "अत ऊर्द्ध्वं नामलिङ्गैर्वक्ष्ये पाल्यामुपद्रवान् । उत्पाटकश्चोत्पुटकः स्नावः कण्डुयुतो भृशम् । अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा । स्रावी च दाहवांश्चैव भृत्स्वेषां क्रमशः क्रियाम्" इति, विभज्य, तल्लक्षणचिकित्से उक्ते । वातव्याध्यादौ प्राणमांसक्षयादय उपद्रवाः । यथा "उपद्रवैस्तु ये जुष्टाव्याधयो यान्त्यसाध्यताम् । रसायनादिना वत्स ! तान् शृणुष्वैकमना मम । वातव्याधिः प्रमेहश्च कुष्ठमर्शोभगन्दरः । अश्मरी मूढगर्भश्च तथैवोदरमष्टमम् । अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदाः । प्राणमांसक्षयश्वासतृष्णाशोषवमीज्वरैः । मूर्च्छातिसारहिक्काभिः पुनश्चैतउपद्रुताः । वर्ज्जनीयाविशेषेण भिषजा सिद्धिमिच्छता" सुश्रु० । एवमन्येऽपि रोगभेदे उपद्रवा स्तत्रोक्ता ग्रन्थविस्तरभयान्नोक्ताः ।

**उपद्रष्टृ** त्रि० उप+दृश—तृच्-अम् । उपदर्शके साक्षिणि

"अग्निर्वा उपद्रष्टा वायुरुपश्रोतादित्योऽनुख्याता" तैत्ति० "उपद्रष्टाऽनुमन्ता च भर्त्ता भोक्ता महेश्वरः"। गीता "उपद्रष्टा पृथग्भूत एव समीपे द्रष्टा साक्षीत्यर्थः श्रीधरः "नमः प्रवक्त्रे नम उपद्रष्ट्रे" आश्व० श्रौ०१,२,१ सोऽयं प्रजानामुपद्रष्टा प्रविष्टः" शत०ब्रा०१,२,४,२,५ "उपद्रष्टा साक्षी" भा० [ सुश्रु०।

**उपद्रुत** त्रि० उप+द्रु–क्त। जातोपद्रवे "पुनश्चैत उपद्रुताः"

**उपधर्म्म** पु० उप+हीने हीनोधर्म्मः प्रा०स०। अप्रधानधर्म्मे "वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः। तं ह्यस्याहुः परं धर्म्ममुपधर्म्मोऽन्य उच्यते" "एष धर्म्मः परः साक्षादुपधर्म्मोऽन्य उच्यते" मनुः "उपधर्म्मो जघन्यधर्म्मः" कुल्लू०।

**उपधा** स्त्री उप+धा–अङ्। १उपधाने स्थापने "धर्म्मार्थकाममोक्षैश्च प्रत्येकं परिशोधने। उपेत्य धीयते यस्मादुपधा तेन कीर्त्तिता" इत्युक्ते धर्म्मार्थाद्युपन्यासेन मन्त्रिणां २परीक्षणे "चिन्तयन्तः कथां चक्रुरुपधाभेदभीरवः" भट्टिः "अर्थकामोपधिभ्यां तु भार्य्यां पुत्रांश्च शोधयेत्। धर्म्मोपधाभिर्विप्रांश्च सर्व्वाभिः सचिवान् पुनः" कालिका पु०। ३छले च। "उपधाभिश्च यः कश्चित् परद्रव्यं हरेन्नरः" मनुः "तत्रापि श्रुत्वा भूयोभूय उपधाभिः" दशकु०।४उपाये च। "अयशोभिदुरालोके कोपधा मरणादृते" माघः। "अलोऽन्त्यात् पूर्व्व उपधा" पाणिन्युक्ते अन्त्यवर्णात् ५पूर्व्ववर्णे च। "अनउपधालोपिनोऽन्यतरस्याम्" "कोपधाच्च" पा०। लिङ्गानुशासनसूत्रे कोपधात् खोपधादित्यादि सूरिप्रयोगः ६उपाधौ च। उपधाभ्रतः।

**उपधातु** पु० उप सादृश्ये प्रा०स०। स्वर्णादिप्रधानधातुसदृशेषु "सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम्। तुत्थं कांस्यञ्च रीतिश्च सिन्दूरञ्च शिलाजतु" भावप्र०उक्तेषु सप्तसु १द्रव्येषु। "उपधातुषु सर्व्वेषु तत्तद्धातुगुणा अपि। सन्ति किन्त्वेषु ते गौणास्तत्तदंशाल्पभावतः" भावप्र०। तत्र कतमस्य द्रव्यस्य कतमोपधातुत्वं तन्निर्णीतं तत्रैव। "किञ्चित् सुवर्णसाहित्यात् स्वर्णमाक्षिकमीरितम्। उपधातुः सुवर्णस्य किञ्चित् स्वर्णगुणान्वितम्"। तारमाक्षिकमन्यत्तु तद्भवेद्रजतोपमम्। किञ्चिद्रजतसाहित्यात् तारमाक्षिकमीरितम्" २ "तुत्थं (तुँते) ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत्। किञ्चित्ताम्रगुणं तस्माद्वक्ष्यमाणगुणञ्च तत्"३। उपधातुर्भवेत् कांस्यं द्वयोस्तरणिरङ्गयोः। कांस्यस्य तु गुणा ज्ञेयाः स्वयोनिसदृशाजनैः" ४। रीतिरप्युपधातुः स्यात्ताम्रस्य यशदस्य च। पित्तलस्य गुणा ज्ञेयाः स्वयोनिसदृशा गुणैः" ५। सीसोपधातुः सिन्दूरं गुणैस्तत् सीसवन्मतम्। संयोगजप्रभावेन तस्यान्ये गुणाः स्मृताः" ६। निदाघे धर्म्मसन्तप्ता धातुसारं धराधराः। निर्य्यासवत् प्रमुञ्चन्ति तच्छिलाजतु कीर्त्तितम्। सौवर्णं राजतं ताम्रमायसं तच्चतुर्विधम्" ७। इति चतुर्णां स्वर्णादीनामुपधातुत्वात् शिलाजतुनश्चतुर्द्धा भेदः। एतेषामन्यान्यगुणास्तत्तच्छब्दे वक्ष्यन्ते। भावप्र०एतएवोपधातुत्वेन गणिताः शब्दकल्प० स्वर्णमाक्षिकतुत्थकर्पूरकालाञ्जनमनःशिलाहरितालरसाञ्जनरूपा उपधातव इत्युक्तं तन्मूलं मृग्यम्। शरीरस्थेषु रसादिजन्येषु २स्तनदुग्धादिषु च। देहस्थाः रसादयः सप्त धातवः तेभ्यो जाताश्च षडुपधातवः। तत्र रसात् स्तनदुग्धम्। रक्तात् स्त्रीरजः २ मांसात् वसा३। मेदसो धर्म्मः ४। अस्थ्नो दन्तः५। मज्जतः केशः ६। शुक्रात् ओजः७। यथोक्तं शार्ङ्गधरे। "स्तन्यं रजोवसास्वेदो दन्ताः केशास्तथैव च। औजस्यं सप्तधातूनां क्रमात् सप्तोपधातवः"। तत्र भावप्र० स्तन्यादिस्वरूपमुक्तं यथा "वनितानां प्रसूतानां धमनीभ्यां स्तनौगतात्। रसादेव हि जायेत स्तन्यं स्तनयुगाश्रयम्। शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता। मेदसस्ताप्यमानस्य स्नेहो वा कथिता वसा"।

**उपधान** न० उपधीयते शिरोऽत्र उप+धा आधारे ल्युट्। (वालिश) १शिरोधाने। करणे कर्म्मणि वा ल्युट्। २प्रणये, व्रतभेदे, हेम०। ३विशेषे ४प्रणये च विश्वः "सोपधानां धियं धीराः स्थेयसीं खट्वयन्ति ये" माघः। "सोपधानां सविशेषां, पक्षे सगेन्दुकामिति" मल्लि० "पट्टोपधानाध्यासितशिरोभागेण" काद०। "आसन्दी सोपधाना दक्षिणानड्वान् सवाश" कात्या०२१,४,२०। ५विषे मेदि० भावे ल्युट्। ६समीपस्थापने न०। करणे ल्युट्। ७उपधानसाधने मन्त्रे पु० "तद्धानासामुपधानोमन्त्रः" पा०

**उपधानीय** न० उपधीयते शिरस उपरि उप+धा–कर्म्मणि अनीयर्। १उपधाने (वालिश) २समीपे स्थापनीये त्रि०।

**उपधाभृत** त्रि० उपधया उपाधिना भृतः। "जातश्चाविभागस्तु भृत्योतश्चोपधाभृतः" हेम० उक्ते करभेदे।

**उपधायिन्** त्रि० उपदधाति शीर्षभागे उप+धा–णिनि स्त्रियां ङीप्। शीर्षभागे उपधानत्वेन धारिणि। "अंशेन सा बाहुलतोपधायिनी" कुमा०।

**उपधारण** न० उप+धृ–णिच्–ल्युट्। उपरिस्थितस्य वस्तुनः

अङ्कुशादिना १आकर्षणे । "अङ्कुशं शौचमित्याङ्कुर-र्थानामुपधारणे। आनाय्य फलितां शाखां पक्वं पक्वं प्र-शातयेत्"१४०। २सम्यक्चिन्तने च । युच्। उपधारणा योगाङ्गे चित्तस्य एकविषये स्थापनार्थव्यापारभेदे स्त्री ।

**उपधावन** न० उप+धाव–ल्युट्। १उपसरणे २अनुचिन्तने

**उपधि** पु०उप+धा–भावे कि । अन्यथास्थितस्य वस्तुनोऽन्यथा प्रकाशनरूपे व्यापारे।"योगाधमनविक्रीतं योगदानप्रतिग्रहम् । यत्र वाप्युपधिं पश्येत् तत्सर्व्वं विनिवर्त्तयेत्"मनुः२छले अमरः"अरिषु हि विजयार्थिनः क्षितीशाः विदधति सोपधि सन्धिदूषणानि" किरा० । "बलोपधिविनिर्वृत्तान् व्यवहारान् निवर्त्तयेत्" या० स्मृतौ दीपकलिकायां पाठः । उपधिश्छलमिति मूलपा०बलोपाधीति" मिता०पाठः उपाधिर्भयादिरिति व्याख्यातञ्च । "बलोपधिकृतम्" या० स्मृ० । "पणं वितथमास्थाय सर्वैरुपधिना कृतम्"भा०आ०२७अ०। "स्मृत्वा चैवोपधिकृतं मातुर्दास्यं निमित्ततः"२४अ० । आधारे कि ।२रथचक्रे हेम० । उपधिना छलेन जीवन्ति ठक् । औपधिक भयादिदर्शनेन धनोपजीविनि "उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा" मनुः औपधिका ये भयादिदर्शनादिनाधनमुपजीवन्तीति कुल्लू०।उपधिका इति पाठोऽनाकरः

**उपधूपित** पु० उप+धूप–क्त । १मृत्यौ २सन्तापयुते त्रि० ।

**उपधूमित** त्रि०धूमोजातोऽस्य तारका० इतच् दाहकायोगात् अल्पं धूमितं प्रा०स०। १जातधूमे (धोआँयान) यात्रादौ वर्ज्जनीये ज्योतिषोक्ते सूर्य्यगन्तव्यदिग्भागे स्त्री "दग्धा दिगैन्द्री ज्वलिता दिगैश्युपधूमिता चानलदिक् प्रभाते प्रत्येकमेवं प्रहराष्टकेन क्रमाद्दिशोऽष्टौ सविता क्रमेत । दग्धा दिगुक्ता दिननाथमुक्ता विवस्वदाप्ता भवति प्रदीप्ता । संधूमिता यां सविता प्रयाता शेषा दिगन्ताः खलु पञ्चशान्ताः" पीयू० वसन्तराजः । तन्निदर्शनचक्रं यथा ।

| | दग्धा | दीप्ता | उपधूमिता | ५शान्ताः |
|---|---|---|---|---|
| १यामे | ऐशी | पूर्व्वा | आग्नेयी | याम्यादिसौम्यान्ताः |
| २यामे | पूर्वा | आग्नेयी | याम्या | नैर्ऋत्यादीशानान्ताः |
| ३यामे | आग्नेयी | याम्या | नैर्ऋती | पश्चिमादिपूर्वान्ताः |
| ४यामे | याम्या | नैर्ऋती | वारुणी | वायव्यादिवह्निदिगन्ताः |
| ५यामे | नैर्ऋती | पश्चिमा | वायवी | सौम्यादियाम्यान्ताः |
| ६यामे | पश्चिमा | वायवी | उत्तरा | ईशादिनैर्ऋत्यन्ताः |
| ७यामे | वायवी | उत्तरा | ऐशी | पूर्वादिपश्चिमान्ताः |
| ८यामे | उत्तरा | ऐशी | पूर्वा | आग्नेयादिवायव्यन्ताः |

तत्र प्रहरभेदेन दग्धादित्रिके न गच्छेत् शान्तासु पञ्चसु गच्छेत् । एवं प्रधूमिता संधूमितादयोऽप्यत्र ।

**उपधृति** स्त्री उप+धृ–क्तिन् । १सम्धारणे २किरणे हेम० ।

**उपधेय** त्रि० उप+धा–यत् । मन्त्रभेदेन स्थापनीये इष्टकादौ "वयःशब्दवन्मन्त्रोपधेयास्विष्टकासु" सि०कौ० ।

**उपध्मान** पु० उ:उवर्णः पश्च ध्मायतेऽनेन उप+ध्मा–करणे ल्युट् ।ओष्ठे "तालव्या ओष्ठजावपू" "उपूपध्मानीयानामोष्ठौ" सि० कौ० उक्तेः तस्य उवर्णपयोरुच्चारस्थानत्वात्तथात्वम् । उपध्माम इति केचिदाहुः ।

**उपध्मानीय** पु० उपाध्माने ओष्ठे भवः छ । पफपरे विसर्गस्थानिके गजकुम्भाकृतितया लेखनीये वर्णभेदे उपध्मानशब्दे उदा०। उपाध्मानीय इति केचिदाहुः ।

**उपध्वस्त** त्रि०उप+ध्वन्स–क्त । १नष्टे २मिश्रिते च।"कृष्णग्रीवा आग्नेया बभ्रवः सौम्याः उपध्वस्ताः साविता वत्सतर्यः" यजु०२४,२४ उपध्वंसनमधःपतनम्"वेददी०"एतद्वास्यै रूपतमभिवेति रोहिणी ह त्वेवोपध्वस्ता"शत०ब्रा० ४,५,८,२ । "सहस्रदक्षिणे त्रिरात्रे प्रतिविभज्य नयन् रोहिणीमुपध्वस्ताम्" कात्या० १२,४,१५। "उपध्वस्तां मिश्रिताम्"संग्रहवृत्तिः ।

**उपनक्षत्र** न० उपगतं नक्षत्रम् अत्या०स० । अश्विन्यादिसप्तविंशतिनक्षत्राणां प्रत्येकं सप्तविंशत्यानुगतेषु ७२९ संख्यातेषु राशिचक्रस्थेषु तारकभेदेषु । "तानि वा एतानि सप्तविंशतिः, नक्षत्राणि सप्तविंशतिः, सप्तविंशतिर्ह्येप नक्षत्राण्येकैकं नक्षत्रमनूपतिष्ठन्ते तानि च सप्त शतानि विंशतिश्चाधि" शत०ब्रा० १०,५,४,५ । अत्राधीत्यनेन नवाधिकत्वं गम्यते सप्तविंशत्या सप्तविंशतिगुणने ७२९ संख्यासम्भवात् श्रुतौ स्पष्टाक्षरेण तथानुक्तिस्तु इष्टकानां ७२०संख्यकत्वात्तत्संख्यासाम्यसम्पादनार्थेति बोध्यम्

**उपनख** न० उपगतमधिष्ठानतया नखं नखमांसम् अत्या०स० । सुश्रुतोक्तेषु चतुश्चत्वारिंशत्क्षुद्ररोगेषु चिप्पाख्ये रोगभेदे । तल्लक्षणं तु तत्रोक्तं "नखमांसमधिष्ठाय पित्तं वातश्च वेदनाम् । करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत् । तदेव क्षतरोमाख्यं तथोपनखमित्यपि"।

**उपनत** त्रि० उप–नम–क्त । १नम्रे "शौरेः प्रतापोपनतैरितस्ततः" माघः २उपगते च "अचिरोपनतां स मेदिनीम्" रघुः । ३उपस्थिते च हेम० ।

**उपनति** स्त्री उप+नम-भावे क्तिन् । १नमने २उपगमे ३उपस्थितौ आधारे क्तिन् ।उपनत्याधारे "मांसं म उप-

नतिर्वस्थि, मज्जा म आनतिः" यजु०२०,१२। "उपनमन्ति भूतानि यत्र" उपनतिः वेददी०। [सामीप्ये।

**उपनद(दि)** अव्य० नद्याः सामीप्यम् वा अव्ययी०। नद्याः

**उपनन्द** पु० उपगतोऽनुगतोनन्दम् अत्या०स०। गोकुलाधिपनन्दभ्रातरि।

**उपनन्दक** त्रि० उप+नन्द–णिच्–ण्वुल्। आनन्दजनके धृतराष्ट्रपुत्रभेदे पु०। "जलसेनाभः पद्मनाभस्तथानन्दोपनन्दकौ" धृतराष्ट्रपुत्रनामोक्तौ भा०आ०६७अ०।

**उपनय** पु० उप+नी–करणे अच्। उपनयने "गृह्योक्तकर्मणा येन समीपं नीयते गुरोः। बालो वेदाय तद्योगाद्बालस्योपनयं विदु"रिति स्मृत्युक्ते १संस्कारजनकर्मविशेषे। "नीचस्थितेऽरिगृहगेऽथ पराजिते वा जीवे भृगावुपनयः स्मृतिकर्महीनः" ज्योति०। न्यायमते यो यो धूमवान् स वह्निमान् अयमपि तथेत्यादिवाक्यरूपे २न्यायावयवभेदे, परार्थानुमानसाधकपञ्चावयवान्तर्गतावयवविशेषोपनयलक्षणभेदौ न्यायसूत्रवृत्त्योर्दर्शितौ यथा

"उदाहरणापेक्षस्तथेत्युपसंहारोन तथेति वा साध्यस्योपनयः"सू० "साध्यस्य पक्षस्य उदाहरणापेक्षउदाहरणानुसारी यउपसंहारउपन्यासः प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टहेतुविशिष्टपक्षविशिष्टबोधजनकोन्यायावयवइत्यर्थः निगमनं हेतुविशिष्टत्वेन न पक्षबोधकं किन्तु पक्षवृत्तिहेतुबोधकमिति तद्व्युदासः। अत्र चान्वयव्यतिरेकव्याप्त्योरन्यतरत्वादिनानुगमः कार्य्य उदाहरणोपदर्शितेति तु परिचायकमात्रमिति तु न वाच्यम् उदाहरणविपरीतव्याप्त्युपदर्शकोपनयवारकत्वात् वस्तुतोऽवयवपदेनैव तद्व्युदासः। स चोपनयोद्विविधोऽन्वयिव्यतिरेकिभेदात्। तथेति साध्यस्योपसंहारोऽन्वय्युपनयः न तथेति साध्यस्योपसंहारोव्यतिरेक्युपनयः अत्र च तथाशब्दप्रयोगावश्यकत्वे न तात्पर्य्यं किन्तु व्याप्तिविशिष्टवत्त्वबोधे, तथाच वह्निव्याप्यधूमवांश्चायमिति वा तथाचायमिति वोपन्यासः एवं व्यतिरेकिण्यपि वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवांश्चायमिति वा न तथेति वोपन्यासः" वृत्तिः

उपनीयते उपस्थाप्यते ज्ञानविषयतामापाद्यतेऽनेन करणे अच्। न्यायमतसिद्धे ज्ञानलक्षणारूपे ३अलौकिकप्रत्यक्षसाधने सन्निकर्षभेदे। तया हि सन्निकर्षरूपया पूर्व्वज्ञातवस्तुनोऽलौकिकप्रत्यक्षं जन्यते। यथा सुरभि चन्दनमिति चाक्षुषे चन्दनस्य चक्षुर्ग्राह्यत्वेऽपि सौरभस्य तदग्राह्यत्वात् पूर्व्वज्ञातस्य सौरभस्यालौकिकं प्रत्यक्षं जन्यते तथा च सुरभि चन्दनमित्यत्र सौरभांशेऽलौकिकत्वं चन्दनांशे तु लौकिकत्वमिति भेदः।

ज्ञानलक्षणाकार्य्यकारणभावश्चेत्थं दीधितिकृतोक्तम्। "इयञ्च धर्म्मिविषयकं ज्ञानं धर्म्मिणां प्रत्यासत्तिरितरा तु यद्विषयकं तस्य प्रत्यासत्तिः। अतएव सुरभि चन्दनमित्यादौ सौरभत्वादेरपि भानमिति" व्याख्यातञ्चैतत् जगदीशेन। "ननु सामान्यं यदि न प्रत्यासत्तिः किन्तु तज्ज्ञानं तदा ज्ञानलक्षणया सह तस्याः कोभेद इत्यत आह इयञ्चेति सामान्यलक्षणा चेत्यर्थः। इतरा ज्ञानलक्षणा तस्येति प्रत्यासत्तिरित्यनुषज्यते तथा च कार्य्यकारणभावभेदादेव प्रत्यासत्त्योः भेद इति भावः। अतएव ज्ञानलक्षणातएवेत्यर्थः अन्यथा यत्र सौरभत्वजात्युपस्थित्यनन्तरं सुरभिगन्ध इति वत् सुरभिचन्दनमित्याकारकं सौरभत्वप्रकारेण चन्दनस्य भ्रमात्मकं चाक्षुषं तत्र सौरभत्वजातेर्भानं न स्यात् न हि तत्र सुरभिगन्धस्य भानसम्भवो येन सामान्यलक्षणायास्तद्धर्म्मप्रकारकतदाश्रयप्रत्यक्षं प्रत्येव हेतुतया सौरभत्वप्रत्यासत्तेः कार्य्यतावच्छेदकतयैव सौरभत्वजातेर्भानं भविष्यतीति सम्भावनीयम् चक्षुषो वहिरिन्द्रियत्वेन स्वायोग्यमुख्यविशेष्यकज्ञानाजनकत्वनियमात् पूर्व्वाऽनुपस्थितस्य सुरभिगन्धस्य तत्र भानासम्भवेनोक्तरीत्या तद्गतजातेरपि तत्र भानादम्भवादिति भावः। इत्यादावित्यादिपदेन भ्रमान्तरस्य तदनुव्यवसायस्य च परिग्रहः। यत्तु ज्ञानस्य तदिन्द्रियजन्यत्वं नियामकमिति पूर्वमतेनायं ग्रन्थः। तथा च सौरभत्वेन सौरभस्मृत्यनन्तरं जायमानायां सुरभिचन्दनमित्याकारकचाक्षुषप्रमायां सामान्यप्रत्यासत्त्या न सौरभत्वस्य भानसम्भवः कारणस्य सौरभत्वचाक्षुषस्यासम्भवादतो ज्ञानलक्षणा पृथक् प्रत्यासत्तिरिति मतं तन्मन्दं ज्ञानस्य तदिन्द्रियजन्यत्वापेक्षायां सुरभिगन्धस्यापि तत्र भानासम्भवे सौरभत्वजातिपर्य्यन्तानुसरणस्य सन्दर्भविरोधापत्तेः सौरभत्वादेरित्यादिपदात् सौरभस्य परिग्रहः तेन न सन्दर्भविरोधदोष इति विभावनीयम्। अत्रेदं तत्त्वं यद्यपि घटत्वादिप्रत्यक्षे तदलौकिकप्रत्यक्षे वा तद्गोचरज्ञानत्वेन ज्ञानलक्षणाया न हेतुत्वं घटत्वादिनिर्व्विकल्पके प्रमेयत्वादिसामान्यलक्षणाजन्यघटत्वादिप्रत्यक्षे च व्यभिचारात् तथापि लौकिकसाधारणं घटत्वादिप्रकारकप्रत्यक्षमात्रं प्रत्येव घटत्वादिगोचरज्ञानत्वेन हेतुत्वमतएव प्राथमिकघटत्वचैत्रत्वादिप्रकारकप्रत्यक्षस्य घटत्वचैत्रत्वादिनिर्व्विकल्पकं

विनानुपपत्तेः तत्सिद्धिरप्यावश्यकी पूर्व्वानुभूतवस्तुमात्रस्यैव तथात्वेन घटत्वाद्यात्मकतत्साप्रत्यभिज्ञानानुरोधेनैव परैरप्युक्तकार्य्यकारणस्याभ्युपेयत्वात् । न चैवं जन्यस्वविषयकसविकल्पकस्यैव प्रत्यासत्तित्वमिति प्राचीनगाथाविरोधः तस्या अकिञ्चित्करत्वात् सखण्डघटादेरुपनीतभानस्थाने एव तथा नियमसम्भवाच्च द्रव्यत्वादिप्रकारेण घटादेरुपनयसत्त्वेऽपि घटत्वप्रकारेण तस्योपनीतप्रत्यक्षानुदयेन घटत्वादिना तद्घटादिप्रकारकप्रत्यक्षं प्रति घटत्वादिप्रकारेणैव तद्घटाद्युपनयस्य हेतुत्वादतएव घटघटत्वयोर्निर्विकल्पकानन्तरं घटे घटत्वस्येव घटत्वेऽपि घटस्य न वैशिष्ट्यावगाहि प्रत्यक्षं घटत्वद्रव्यत्वादिप्रकारेणैव घटादीनां विशिष्टबुद्धेः पारमार्थिकतया तद्धेतुभूतस्य घटत्वादिप्रकारेण घटादिज्ञानस्य तदानीमसत्त्वात् न चैवं निर्विकल्पकोत्तरं विशेष्ये विशेषणमित्यादिक्रमेणापि घटवदित्याकारप्रत्यक्षं न स्यात्, दृष्टत्वात् जातीतरनिष्ठप्रकारतायां किञ्चिदवच्छिन्नत्वनियमात् द्रव्यगुणकर्म्मणां निरवच्छिन्नप्रकारतानभ्युपगमात् । न च निर्विकल्पकस्य प्रत्यासत्तित्वे स्वविषयीभूतघटत्वाद्युपधानेन तस्य प्रत्यक्षापत्तिः विषयानुपधानेन ज्ञानादिप्रत्यक्षस्याङ्गीकतया विषयोपनायकविरहादेव तस्यातीन्द्रियत्वोपगमादिति वाच्यम् सत्यपि सन्निकर्षे प्रत्यक्षसामान्यं प्रत्येवादृष्टत्वादिनेव निर्व्विकल्पकत्वेनापि तादात्म्यसम्बन्धेन विरोधित्वकल्पनादेव निर्विकल्पकस्याप्रत्यक्षत्वादन्यथा सुखत्वादिनिर्व्विकल्पकस्य स्वविषयीभूतसुखत्वाद्युपधानेन साक्षात्कारस्य दुर्व्वारत्वापत्ते सुखत्वस्य निर्विकल्पक इव सुखत्वेऽपि लौकिकस्यैव मनःसन्निकर्षस्य सत्त्वात् तदुपधाने तन्निर्व्विकल्पकस्य प्रत्यक्षे बाधकाभावादिति । यत्तु घटादिप्रकारकप्रत्यक्षं प्रत्येव घटादिज्ञानत्वेन हेतुत्वे घटादिविशेष्यक घटोद्रव्यमित्याकारमानसोपनीतभानं न स्यादिति तन्न घटादिधर्म्मिकद्रव्यत्वाद्यसंसर्गाग्रहादिवशादेव मानसधियो घटादिविशेष्यकत्वसम्भवात् घट इत्येतन्मात्राकारस्य बाधनिर्ण्णयाप्रतिबध्यमानसप्रत्यक्षस्यासत्त्वेऽपि क्षत्यभावात् । न चैवं घटादेरनुपस्थितिदशायामपि तद्विशेष्यकं मानसप्रत्यक्षं स्यात् तद्धर्म्मिकासंसर्गाग्रहस्य तदानीमपि सत्त्वादिति वाच्यं घटत्वप्रकारकप्रत्यक्षत्वस्य घटनिष्ठलौकिकविशेष्यताकप्रत्यक्षत्वव्यापकतया तदवच्छिन्नं प्रति हेतुभूतस्य घटत्वज्ञानस्य विरहादेवानुपस्थितघटादेर्व्विशेष्यविधया मानसग्रहासम्भवात् घटोद्रव्यमित्यादिमानसस्य घटप्रकारकत्वनियमात् अतएव "उपनीतं विशेषणतयैव भासते" इत्यभिधाय "मानसे तु नायं नियम" इति प्राचीनैरप्युक्तमित्यलं पल्लवितेन"।भाषा० मुक्तावल्योश्च "विषयी यस्य तस्यैव व्यापारोज्ञानलक्षणा" "ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा यदा तयोर्भेदो न स्यादत आह । विषयी यस्येति सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति । ज्ञानलक्षणा प्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति"। "एवं ज्ञानलक्षणाया अस्वीकारे सुरभि चन्दनमिति ज्ञाने सौरभस्य भानं कथं स्यात्? । यद्यपि सामान्यलक्षणयापि सौरभभानं सम्भवति तथापि सौरभत्वस्य भानं ज्ञानलक्षणया । एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया" । अत्र दिनकरः । "ज्ञानलक्षणास्वीकारे वीजमाह । एवमित्यादिना कथं स्यादिति । चन्दनखण्डस्य चाक्षुषे जायमाने उपस्थितसौरभमानं न स्यात् सौरभांशे चक्षुःसन्निकर्षाभावादित्यर्थः । सौरभत्वप्रकारकलौकिकप्रत्यक्षसामग्र्याः सहकारिण्याविरहेण सौरभत्वसामान्यलक्षणयापि सौरभभानं न सम्भवतीति भावः । सुरभि चन्दनमित्यादौ सौरभादेर्भानं सौरभत्वादिसामान्यलक्षणयैव सम्भवति । सौरभत्वप्रकारकलौकिकप्रत्यक्षसौरभत्वावच्छिन्नप्रकारकप्रत्यक्षान्यतरसामग्रीसहकारेणैव तस्याः फलजनकत्वाङ्गीकारात् प्रकृते च द्वितीयसामग्र्याः सहकारिण्याः सत्त्वादित्यभिप्रायेणाह यद्यपीति सौरभत्वस्य भानमिति स्वरूपतः सौरभत्वस्य भानमित्यर्थः । ज्ञानलक्षणया ज्ञानलक्षणयैव । तदानीं सौरभत्वांशे धर्मान्तरस्याग्रहीततया सामान्यलक्षणया तज्ज्ञानाऽनिर्वाहादिति भावः । ननु धर्मान्तरस्य सौरभांशेऽग्रहेऽपि सौरभत्वसामान्यलक्षणयैव सौरभत्वादेर्भानमस्तु सौरभत्वप्रकारकसौरभविशेष्यकत्वस्यैव तत्कार्य्यतावच्छेदकत्वादिति चेन्न सौरभत्वादिविषयताप्रयोजिकायाः सामान्यलक्षणायाः स्वविषयसौरभत्वादिमत्त्वरूपस्य सम्बन्धस्य सौरभत्वेऽभावेन सामान्यलक्षणया तज्ज्ञानानिर्वाहात् सौरभत्वसामान्यलक्षणायाः कार्य्यतावच्छेदके सौरभत्वप्रकारत्वनिवेशे प्रयोजनाभावाच्च । न च ज्ञानलक्षणायाः कारणत्वान्तरकल्पने गौरवमियैव सामान्यप्रकारत्वस्य कार्य्यतावच्छेदके प्रवेश इति वक्तव्यम् विशेषणज्ञानहेतुतयैव निर्वाहे ज्ञानलक्षणायाः कारणत्वान्तरकल्पनाविरहादिति । ननु विशेषणज्ञानजन्यतावच्छेदकं

विशिष्टबुद्धित्वं ज्ञानलक्षणयास्तु विशिष्टप्रत्यक्षत्वमिति न क्रमेण निर्वाहः, एवं यत्र ज्ञानलक्षणया स्वविषयमुख्यविशेष्यकं मानसं तत्र विशेषणज्ञानकारणतया न निर्वाह इत्यत आह एवमिति ज्ञानलक्षणया ज्ञानलक्षणयैव। तत्र धूमत्वज्ञानरूपसामान्यलक्षणायाः स्वविषयधूमत्वाश्रयत्वसम्बन्धेन धूलीपटलेऽभावेन सामान्यलक्षणयानुव्यवसाये धूलीपटलभानासम्भवादिति भावः"। उपनयेन निर्वृत्तः ठक्। औपनयिक ज्ञानलक्षणाजन्ये अलौकिके प्रत्यक्षे "अथ सार्थो यदि भवेत्तुस्तर्हि प्रत्यक्ष एवौपनयिके" शब्दश०

**उपनयन** न० उप+नी—ल्युट्। स्मृत्युक्ते संस्कारभेदे १उपनयार्थे २समीपप्रापणे च। तत्रोपनयसंस्कारविभागकालादिर्दर्श्यते। स च संस्कारः त्रिविधः नित्यःकाम्योनैमित्तिकश्च। तत्र द्विजातीनामधिकारः। तत्र नित्यः अष्टमवर्षादिकाले विहितः, ब्रह्मवर्चसादिकामस्य पञ्चमादिवर्षविहितः काम्यः, नैमित्तकस्तु पुनःसंस्कारप्रयोजकपापापनोदनार्थं प्रायश्चित्तात्मकः। तत्र नित्यस्य कालोऽपि द्विविधः मुख्योगौणश्च। तेषु मुख्यकालः "गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्। राज्ञामेकादशे सैके विशामेके यथाकुलम्" मनुः। "गर्भादित्यस्य सर्वत्रानुषङ्गः यथाह आपस्तम्बः "गर्भाष्टमेषु ब्राह्मणमुपनयेत् गर्भैकादशे राजन्यम् गर्भद्वादशे वैश्यम्"। अत एव "अष्टमे वर्षे ब्राह्मणमुपनयेत् १गर्भाष्टमे वा२। एकादशे क्षत्रियम्३। द्वादशे वैश्यम्४। आश्व०सूत्रवृत्तौ "जन्मप्रभृत्यष्टमे वर्षे ब्राह्मणमुपनयेत्१। गर्भप्रभृत्यष्टमे वा२। जन्मप्रभृति गर्भप्रभृति वा एकादशवर्षे क्षत्रियमुपनयेत्३। जन्मप्रभृति गर्भप्रभृति वा द्वादशे वर्षे वैश्यम्४इति नारायणोपाध्यायः। शङ्खोऽप्याह। "गर्भाष्टमाब्दे कर्त्तव्यं ब्राह्मणस्योपनायनम्। गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः"। तत्रापि गर्भाष्टमादिरेव मुख्यःकालः अत एव मनुना यथाकुलमित्यनेन जन्मतोऽष्टमादीनां कुलानुसारेण ग्राह्यतामात्रमुक्तम्। तेनास्य कुलानुसारेण उभयोरपि मुख्यतेत्यपरे आहुः। अतएवानयोः प्रशंसापि दृश्यते। "प्राप्ते गर्भाष्टमे वर्षे शुद्धिर्यस्य न विद्यते। तस्योपनयनं कार्य्यं चैत्रे मीनगते रवौ" व्यवहारचमत्कारः। "शुचिर्नैव गुरुर्यस्य वर्षे प्राप्तेऽष्टमे यदि। चैत्रे मीनगते भानौ तस्योपनयनं शुभम्" नि०सि० स्मृ०। अत्र शुद्धिश्च "रविगुरुशुद्धौ व्रतोद्वाहौ" इत्युक्ता रविगुर्वोर्गोचरशुद्धिः। किञ्च "अष्टमैकादशे चैव द्वादशाब्दे व्रतस्य च। मुख्यं कालं विजानीयाद् ब्रह्मक्षत्रविशां क्रमात्" वचने अष्टमादिवर्षाणां वर्णभेदेन मुख्यत्वमाह। "गर्भाष्टमेषु ब्राह्मणमुपनयेत गर्भैकादशेषु क्षत्रियस्य गर्भद्वादशेषु वैश्यम्" गोभिलः "व्यक्तमाह माण्डव्यः "व्रतबन्धविवाहे च वत्सरपरिगणनमाङ्गराचार्य्याः। आधानपूर्व्वमेके प्रसूतिपूर्वं सदान्ये तु"। काम्यकालः। "ब्रह्मवर्चसकामस्य कुर्याद्विप्रस्य पञ्चमे। राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे" मनुः। "षष्ठे तु बलकामस्य विद्याकामस्य सप्तमे। अष्टमे सर्वकामस्य, नवमे कान्तिमिच्छतः" नि०सि०विष्णुः। अथ काम्यानि, सप्तमे ब्रह्मवर्चसकामम्, अष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकामम्, एकादशे इन्द्रियकामम्, द्वादशे पशुकामम् उपनयेत्" पैठी०। गौणकालोऽपि द्विविधः मध्यमोऽधमश्च स्वल्पाधिकप्रायश्चित्तनिमित्तताभेदात्। ब्रह्मक्षत्रियविशामुपक्रमे "द्वादश षोडश विंशतिश्चेदतीता अवरुद्धकालाभवन्ति" पैठी०। ब्राह्मणस्य द्वादशवर्षात् क्षत्रस्य षोड़शाब्दात् वैश्यस्य विंशत्यब्दात् उत्तरं अवरुद्धकालतादोषश्रवणात् तत्र महाव्याहृतिहोमरूपं प्रायश्चित्तं विप्रादेः षोड़शाद्यतीतत्वे चान्द्रायणादि गुरु प्रायश्चित्तमिति भेदः एवमेव सं० त० रघु०। तथा च गौणकालमध्ये द्वादशाब्दादयो मध्याः तदुत्तरमधम इति भेदः तत्राधमगौणस्तु। "आषोड़शाद् ब्राह्मणस्य सावित्री नातिवर्त्तते। आ द्वाविंशात् क्षत्रबन्धोरा चतुर्विंशतेर्विशः" मनुः "आ षोड़शाब्दात् द्वाविंशाच्चतुर्विंशाच्च वत्सरात्। ब्रह्मक्षत्रविशां काल औपनायनिकः परः" या० स्मृ०। तत्र आ इत्यस्य सर्वत्रान्वयः आङ् चात्राभिविधौ न मर्यादायाम् "षोड़शाब्दो हि विप्रस्य राजन्यस्य द्विविंशतिः। विंशतिः सचतुर्थी च वैश्यस्य परिकीर्त्तिता" विष्णुध०उक्तेः। अतः षोड़शाद्यब्दानामुपनयकालता। "अत ऊर्द्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीपतिताः व्रात्या भवन्त्यार्य्यविगर्हिताः" मनुः। अत्र सर्वत्र गर्भाद्विषोड़शाद्यब्दाग्राह्याः "सावित्री पतिता यस्य दश वर्षाणि पञ्च च। ब्राह्मणस्य विशेषेणेति" यमवचने पञ्चदशवर्षातिक्रमे गुरुप्रायश्चित्तविधानात्" एतच्च जन्मावधिपरं तेन षोड़शाब्दादिभिः सममविरुद्धम् एवमेव सं०त०रघु०। पञ्चदशपदञ्च द्विमासाधिकपञ्चदशपरमिति कल्प्यते सर्वसामञ्जस्यात् अतएव "पञ्चदशवर्षादूर्द्धमपि कियत्कालातिक्रमे उद्दालकव्रतमिति" वदता मिताक्षराकृता तथैव सूचितम्।

एवं तत्तद्भेदेन सामान्यकाले निरूपिते इदानीं शुभसूचक

विशेषकालोऽभिधीयते । तत्रादौ वर्णभेदेन ऋतुभेदस्य मुख्यता यथा ह प्रमि॰ कश्यपः । "ऋतौ वसन्ते विप्राणां ग्रीष्मे राज्ञां शरद्यथो । विशां मुख्यञ्च सर्व्वेषां द्विजानाञ्चोपनायनम्" । नारदः "शरद्ग्रीष्मवसन्तेषु व्युत्क्रमाच्च द्विजन्मनाम् । मुख्यं साधारणं तेषां व्रतं माघादिपञ्चसु" । नि॰ सि॰गर्गः । "विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात् । माघादिशुक्रान्तकपञ्चमासाः साधारणं वा सकलद्विजानाम्" । शुक्रोज्येष्ठः । माघादिमासप्राशस्त्यमाह हेमाद्रौ ज्योतिषे" । "माघादिषु च मासेषु मौञ्जी पञ्चसु शस्यते" । अन्यत्रापि । "ब्राह्मणक्षत्रवैश्यानां माघादिष्वपि पञ्चसु । साधारणं तु सर्व्वेषां व्रतोपनयनं विदुः" । तत्र मासभेदे फलभेदः यथाह व्य॰च॰सुरेश्वरः" । "माघे मासि महागुणोधनपतिः प्राज्ञोधनी फाल्गुने मेधावी भवति व्रतोपनयने चैत्रे च वेदान्वितः । वैशाखे सुभगः सुखी पटुमतिर्ज्यैष्ठे वरिष्ठोबुधोऽप्याषाढेऽपि महाविपक्षविजयी ख्यातो महापण्डितः" । कृत्यचि॰ "माघे द्रविणशीलाढ्यः फाल्गुने च दृढव्रतः । चैत्रे भवति मेधावी वैशाखे कोविदोभवेत् । ज्यैष्ठे गहननीतिज्ञ आषाढ़े क्रतुभाजनम् । शेषेष्वन्येषु रात्रिः स्याच्चिषिद्धं निशि च व्रतम्" । निषिद्धमिति विप्रक्षत्रियविषयं न वैश्य परं तस्य "शरदि वैश्यमिति" श्रुत्या प्रागुक्तकाश्यपेन च शरद्युपनयनविधानात् । यत्तु "विप्रस्य क्षत्रियस्यापि व्रतं स्यादुत्तरायणे । दक्षिणे च विशां कार्य्यं नानध्याये न संक्रमे" इति गर्गवचने चकारात् विप्रक्षत्रयोर्दक्षिणायने उपनयविधानं तत् प्रायश्चित्तोपनयनपरमिति सं॰ त॰ रघु॰ । वस्तुतः चस्त्वर्थे दक्षिणायने तु वैश्यस्य मुख्योपनयनपरम् "उदगयने आपूर्य्यमाणपक्षे कल्याणे नक्षत्रे चूड़ोपनयनगोदानविवाहाः" आश्व॰ सूत्रं तु विप्रक्षत्रविषयम् । प्रायश्चित्तोपनयनपरत्वे "नानध्याये न संक्रमे" इति पर्य्युदासानुपपत्तिः अग्रे प्रदर्शयिष्यमाणगर्गवचनेन प्रायश्चित्तोपनयनस्यानध्यायेऽपि कर्त्तव्यतावगमात् । "जन्मलग्ननक्षत्रमासराशिषु उपनयनप्राशस्त्यमाह" कृत्यचि॰ लल्लः । "जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मनि जन्मभे वा । व्रतेन विप्रो न बहुश्रुतोऽपि विद्याविशेषैः प्रथितः पृथिव्याम्" । "विवाहे मेखलाबन्धे जन्ममासं विवर्जयेत् । विशेषाज्जन्मपक्षन्तु वशिष्ठाद्यैरुदाहृतम्" गर्गवाक्यं तु क्षत्रियवैश्यपरम् न तु ब्राह्मणविषयं लल्लवाक्यविरोधात्" । अथ पक्षनिर्णयः व्य॰ च॰ । "श्रेष्ठं पक्षमुशन्ति शुक्लमसितस्याद्यं त्रिभागं तथा रिक्तां प्रोज्झ्य तिथिं तथा त्वयनयोः सन्धिञ्च शेषाः शुभाः" इति आपूर्य्यमाणे पक्षे इत्यादिप्राप्तकाश्वलायनसूत्रम् "पक्षे च कृष्णेतरे" भुजबलभीमः । तिथिनिर्णयः । निर्णया॰ "तृतीयैकादशी ग्राह्या पञ्चमी द्वादशी तथा" । "द्वितीषु रुद्ररविदिक्प्रमिते तिथौ च कृष्णादिमत्रिलवकेऽपि न चापराह्णे" मु॰ चि॰ । निर्णया॰ व्य॰ च॰ म॰ । "न च षष्ठ्यामथाष्टम्यां पञ्चदश्यां न पर्व्वणि । रिक्तासु च न कर्त्तव्यं त्र्यहस्पृग्दिवसे तथा" । अष्टमीपञ्चदश्योरनध्य । यत्वेऽपि पृथगुपादानं नैमित्तिकविषयमेवमग्रेऽपि । "षष्ठ्यामशुचिरभार्य्यो रिक्तासु बहुदोषभाक्" सं॰ त॰ । "रिक्तायामर्थहानिः स्यात् पौर्णमास्यान्तथैव च । प्रतिपद्यपि चाष्टम्यां कुलवृद्धिविनाशनमिति" । अन्यत्रापि "सप्तम्यामष्टम्यामृतिपदि रिक्तात्रयोदश्याम् । आयुर्विद्यानाशोव्रतवन्धे पञ्चदश्याञ्च" । "द्वितीया पञ्चमी षष्ठी सप्तमी दशमी तथा । त्रयोदशी तृतीया च शुक्ले श्रेष्ठाः प्रकीर्त्तिता" इत्यत्र सप्तमीत्रयोदश्योर्यत् प्राशस्त्यमुक्तं तद्वसन्ताभिप्रायेण । नि॰ सि॰ नारदेन व्यतिरेकमुखेण वसन्ते गलग्रहादिप्रतिप्रसवोक्तेः । यथा "विनर्त्तुना वसन्तेन कृष्णपक्षे गलग्रहे । अपराह्णे चोपनीतः पुनः संस्कारमर्हति" । गलग्रहमाह मदनरत्ने नारदः । "कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशी चतुष्कञ्च अष्टावेते गलग्रहाः" । रा॰मा॰ "आरम्भानन्तरं यत्र प्रत्यारम्भोन विद्यते । गर्गादिमुनयः सर्व्वे तमेवाहुः गलग्रहम्" । दैवज्ञमनोहरे । "प्रदोषे निश्यनध्याये सन्ध्यागर्ज्जे गलग्रहे । मधुं विनोपनीतस्तु पुनः संस्कारमर्हति" । एवं दिवाचतुर्द्दीशस्त्रयोदश्यां यदा भवेत् । द्वादशी तत्र वर्ज्ज्या स्यात् गलग्रहतया मतेति ज्यो॰ वचनात् तादृशद्वादश्या वर्ज्यता । वृद्धगर्गः । "स्मृतिषूक्तानध्यायान् सप्तमीञ्च त्रयोदशीम्" वर्जयेदित्यनुषङ्गः । तत्रानध्यायप्रदोषकालौ अनध्यायशब्दे १४५पृ॰दर्शितौ "अनध्याययेऽपि कर्त्तव्यं यस्य नैमित्तिकं भवेत्" वृद्धगर्गवचनात् "प्रायश्चित्तोपनयनेऽनध्यायस्य न दूषकताऽधिकारात् कृष्णपक्षगलग्रहायोः समुच्चयः । "नो जीवास्तातिचारे सितगुरुदिवसे कालशुद्धौ व्रतं सत्" दीपिकोक्तेः समयाशुद्धिमात्रं वर्ज्जनीयम् । गुरुशुक्रास्तादिषूपनयने दोष-

माह तत्रैव । “अस्तङ्गते दैत्यगुरौ गुरौ वा कृच्छ्रेऽपि वा पापयुतेऽप्यनुक्ते । व्रतोपनीतो द्विजसैः प्रणाशं प्रयाति देवैरपि रक्षितोऽयः” । नक्षत्रनिर्णयः सं०त०भुजब० “स्वातीशक्रधनाश्विमित्रकरभे पौष्णे ध्रुवे चित्राहरिष्विन्द्वौ तोयपतौ भगे दितिसुते भाद्रद्वये सागरे” १५,१८,२२, १,१७,१३,२७,८,१४,२२,५,२४,११,१२, २५,२६,२० एतत्संख्यकेषु सप्तदशसु नक्षत्रेषु उपनयनं सत् । मु०चि० प्रमि० विशेषः “क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वारौद्रेऽर्कविद्गुरुसितेन्दुदिने व्रतं सत्” अस्य व्याख्या प्रमि० “प्राजापत्यादि षड्क्षे भगर्क्षादिषु पञ्चसु । मूलादिदशके चैव समैते व्रतबन्धनम्” । तेन २२ द्वाविंशतिर्नक्षत्राणि विहितानि । अत्र पुनर्वसुग्रहणं क्षत्रियवैश्यविषयं न तु ब्राह्मणविषयम् “पुनर्वसौ कृतोविप्रः पुनः संस्कारमर्हतीति राजमा० । “त्र्यहस्पृशि मले मासि शूद्रत्वमधिगच्छति । पुनर्वसौ कृतोविप्रः पुनः संस्कारमर्हतीति” सारसंग्रहे” च विप्रोपनयननिषेधात् । तथा च “भरणीकृत्तिकाम-घाविशाखाज्येष्ठास्तूपनयनं न कार्य्यम् एतानि नक्षत्राणि च सर्वशाखासमत्वप्रायाणि यथोक्तं तत्रैव ‘भरणी कृत्तिकापित्र्यविशाखाशक्रभानि च । सर्वशाखासमं प्रोक्तं व्रतं तत्र विवर्ज्जयेत्” । वेदभेदे नक्षत्रभेदो यथा ज्योतिर्निबन्धे व्य०च०च । “मूलहस्तात्रये सार्पे शैवे पूर्वात्रये तथा । “ऋग्वेदाध्यायिनां कार्य्यं मेखलाबन्धनं बुधैः” १९, १३, १४, १५, ८, ६, ११, २०, २५, एतन्मितानि ऋग्वेदिविषयाणि “पुष्ये पुनर्वसौ पौष्णे २७हस्ते मैत्रे १७ शशाङ्कभे८ । ध्रुवेषु १२, २१, २६, ४ च प्रशस्तं स्याद्यजुषां मौञ्जीबन्धनम्” । पुष्य३वासव २३हस्ताश्विशिव६ कर्णोत्तरात्रयम् २२,१२,२१,२६ । प्रशस्तं मेखलाबन्धे वटूनां सामगायिनाम्” । भगो ११मैत्रा१७श्विनीहस्तारेवत्यदिति ७वासवम् २३ । अथर्वपाठिनां शस्तोभगणोऽयं व्रतार्पणे” । नि०सि० । “पूर्वा ११,२०,२५, हस्तात्रये१३,१४,१५, सार्पे ६श्रुतिमूले”च २२,१९,बह्वृचाम् । यजुषां पौष्णमैत्रार्कादित्यपुष्यमृदुध्रुवैः । सामगानां हरीशार्कवसुपुष्योत्तराश्विनी । धनिष्ठादितिमैत्रार्काश्वीन्दुपौष्णे ह्यथर्वणाम्” ५,२७, । अन्यत्रापि । “पूर्वाहस्तत्रयाऽश्लेषाशिवमूलानि भानि च । ऋग्वेदाध्यायिनां शस्तभान्याहुर्व्रतबन्धने । उत्तरारोहिणीयुग्मपुष्यापौष्णाकरादितौ । मैत्रे यजुर्विदाञ्चोपनयनन्तु प्रशस्यते । उत्तराश्रवणार्द्राश्विपुष्याहस्ताधनेषु च । सामगानां व्रतं शस्त-मिति वेदविदोविदुः । अश्विनी रेवती हस्ता भगमैत्रधनादितौ । अथर्व्ववेदिनाञ्चोपनयनन्तु शुभावहमिति” प्रमि० एतत्प्रागुक्तवचने ज्येष्ठायामत्यन्तमोक्तावपि प्रागुक्तभुजबलादिवचने “अश्विनीमृगचित्रासु हस्ते स्वात्याञ्च शक्रभे । पुष्ये च पूर्व्वफल्गुन्यां श्रवणे पौष्णभे तथा । वासवे शततरासु व्रतबन्धः प्रशस्यते” श्रीपतिवचने च ज्येष्ठायाग्रहणमत्यन्तापद्विषयम् । वेदभेदेन विहित नक्षत्रेषु तस्याः अकीर्त्तनेऽपि वेदभेदेन प्राशस्त्यमात्रत्व प्रतीतेस्तदलाभेऽन्यवेदिविहितनक्षत्रस्यापि ग्रहणार्थं मुहू० चि० द्वाविंशतिनक्षत्राणां सामान्यतो ग्रहणवदत्रापि तथेति बोध्यम् । ज्येष्ठायास्त्वत्यन्तापद्विषय एव ग्राह्यता केषुपि वेदिषु तदनुक्तेः व्य०च० गुरुः । “त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे । त्वाष्ट्रे सौम्यपुनर्वस्वोरुत्तमं ह्यौपनायनम् । वारुणे वैष्णवे पुष्ये वायव्ये पौष्णभे तथा । अश्विन्यां षट्सु भेषूक्तं मध्यमं तु चतुर्मुखैः । शेषेषु वर्जयेद्धीमान् द्विजानामौपनायनम्” अत्रान्येषां वर्ज्यीयोक्तिरपि अनापद्विषया” एतदतिरिक्तनक्षत्राणां प्रागुक्तवचनैर्विहितत्वात् । ज्योतिर्निबन्धे नारदः । “श्रेष्ठान्यर्कत्रयान्त्येज्य-चन्द्रादित्युत्तरात्रयम् । विष्णुत्रयाश्विमित्राजयोनिभान्युपनायने” । वर्जनीययोगानाह व्य०च० गुरुः । “व्याघातं परिघं वज्रं व्यतीपातञ्च वैधृतिम् । गण्डातिगण्डौ शूलञ्च विष्कुम्भञ्च विवर्ज्जयेत्” अन्यत्रापि । “विष्कुम्भशूलपरिघव्यतिपातगण्डव्याघातवैधृतियुतं त्वतिगण्डवज्रम् । योगं विहाय कुजमन्दपराह्णसन्ध्यां हित्वा निरंशमशुभञ्च व्रतं प्रशस्तम्” प्रमिता० । “क्षीणचन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे । कर्त्तव्यं नोपनयनं नानध्याये गलग्रहे” । निरंशसूर्यमाह तत्रैव । “राशेः प्रथमभागस्थो निरंशः सूर्य उच्यते” । तेन रघुनन्दनेन निरंशशब्दस्य संक्रान्तिपरत्वस्य कल्पनं चिन्त्यम् । वारनिर्णयमाह नारदः । “आचार्य्यसौम्यकाव्यानां वाराः शस्ताः शशीनयोः । वारौ मध्यफलौ प्रोक्ताविततरौ निन्दितौ व्रते” तत्राप्यस्तमितस्य बुधस्य वारोवर्जनीयः । “अस्तं गतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनामिति” नारदोक्तेः । अन्यत्र तु । “शुभो बुधोनास्तमितः पापग्रहयुतो न चेति” । चन्द्रवारस्तु कृष्णे वर्ज्जनीयः । ‘पापग्रहाणां वाराः स्युर्न शुभाश्चन्द्रवासरः । सितपक्षे प्रशस्तः स्यात् कृष्णे वारोविधोर्नहीति” व्य०च० उक्तेः । सामगानां कुजवारेऽप्युनयनमुक्तं श्रीपतिना । “शाखाधिपे बलिनि

केन्द्रगतेऽथवाखिन् वारेऽस्य चोपनयनं कथितं द्विजानाम्। नीचस्थितेऽरिग्टहगेऽथ पराजिते वा जीवे-भृगावुपनयः स्मृतिकर्म्महीनः"। ज्योतिर्निबन्धे नारदः "सर्व्वेषां जीवशुक्रशवाराः प्रोक्ता व्रते शुभाः। चन्द्रार्कौ मध्यमौ चेयौ सामवज्ञयोः कुजः। शाखाधिपतिवाराश्च शाखाधिपबलं तथा। शाखाधिपतिलग्नञ्च दुर्लभं त्रितयं व्रते"। मु० चि० "शाखेशवारतनुवीर्य्यमतीव शस्तं शाखेशसूर्य्यशशिजीवबले व्रतं सत्। जीवे भृगौ रिपुग्टहे विजितेऽथ नीचे स्याद्वेदशाखविधिना रहितोऽव्रतेन"। वशिष्ठः "शाखेशगुरुशुक्राणां मौढ्ये बाल्ये च वार्द्धके। नैवोपनयनं कार्य्यं वर्णेशे दुर्बले सति"। तेन भौमबुधयोरस्तादिषु सामगाथर्वणशाखिनोरुपनयनादि न भवतीति गम्यते। तत्र नीचाद्यवस्थितत्वे स्ववर्गांशस्थोच्चांशस्थितत्वेन शाखेशादेरपवादमाह वशिष्ठः "शत्रुनीचांशगतस्थे स्वांशे वा स्वोच्चभागगे। शाखेशे वा गुरौ शुक्रे न नीचफलमश्नुते"। शाखेशवर्णेशास्तु। "विप्राधीशौ भार्गवेज्यौ कुजार्कौ राजन्यानामोषधीशोविशाञ्च। शूद्राणां चान्त्यजानां शनिः स्याच्छाखेशाः स्युर्जीवशुक्रारसौम्याः" मु०चि० "ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्व्वणः। वेदानामधिपोजीवशुक्रभौमबुधाः क्रमात्" गुरुः। "ऋग्वेदाधिपतिर्जीवोयजुर्व्वेदाधिपो भृगुः। सामवेदाधिपो भौमः शशिजोऽथर्व्ववेदराट्" दीपिका। लग्नभेदे फलमाह व्य० च० वशिष्ठः। "मेषे भवति वाक्कुशलो वित्तविद्यार्ज्जितो वृषे। युग्मे वेदार्थदर्शी च कुलीरे च षडङ्गवित्। शिल्पकर्म्मकरः सिंहे षष्ठे भवति पण्डितः। तुलायां विनयप्राप्तः काण्डस्पृगोऽथ वृश्चिके। सर्व्वत्र पूजितश्चापे शूद्रवृत्तिर्मृगे तथा। राजप्रेष्यान्वितः कुम्भे मीने वेदान्तपारगः"। लग्नकेन्द्रस्थरव्यादि ग्रहफलमाह मु०चि० "राजसेवी वैश्यवृत्तिः शस्त्रवृत्तिश्च पाठकः प्राज्ञोऽर्थवान् म्लेच्छसेवी केन्द्रे सूर्य्यादिखेचरे" व्य० च० गुरुः। "रवौ लग्नादिकेन्द्रस्थे दोषः स्फुरितसंज्ञकः। तत्रोपनीतस्य शिशोः कुलनाशो भवेत् तदा, कुजे लग्नादिकेन्द्रस्थे दोषः कूजितसंज्ञकः। तत्रोपनीतं वक्रारं हन्ति वर्षान्न संशयः। शनौ लग्नादिकेन्द्रस्थे दोषोरुदितसंज्ञकः। करोति महतीं पीड़ां व्रतिनो वा गुरोस्तथा। राहौ लग्नादिकेन्द्रस्थे दोषोरम्भाहृयोभवेत्। व्रतिनोजननीं हन्ति चाथवा धनसञ्चयम्। केतौ लग्नादिकेन्द्रस्थे दोषश्च ग्राससंज्ञकः। समस्तं व्रतिनोवृत्ति-वित्तविद्याविनाशनम्"। लग्नषष्ठाष्टमान्त्यस्थः करोत्येव निशाकरः। व्रतिनोदेहमथनं निधनं दुःखसञ्चयम्"। वशिष्ठः "विशेषान्निधनस्थाने ग्रहान्नेच्छन्ति सर्व्वदा। आचार्य्यास्त्वशुभा घ्नन्ति शिष्यं घ्नन्त्यशुभेतराः"। "केन्द्रत्रिकोणगे जीवे भानौ शुक्रेऽथवा व्यये। द्वितीये च शुभोयोगो द्विजानामौपनायने"। लग्नावधिकस्थानभेदे ग्रहविशेषस्थितौ फलभेदमाह काश्यपः "षष्ठाष्टमं विना जीवः सर्व्वत्र शुभकृत् सदा। सर्व्वत्र शुभकृच्छुक्रः षष्ठसप्ताष्टमं विना। भास्करोलग्नगः कुर्य्याद्वटुं भूपतिसेवकम्। वसुस्थः स्वर्णरहितं भ्रातृस्थः सुखिनं सदा। बन्धुगोदुःखिनं नित्यं सुतगोमतिवर्ज्जितम्। शत्रुगोरोगरहितं सप्तमे मार्गवर्ज्जितम्। अष्टमे दृष्टिरहितं नवमे धर्म्महारिणम्। व्यापारगोभिषग्वृत्तिं दीर्घायुष्यं तथाऽऽयगः। रिपुफगोहानियुक्तञ्च फलमेतद्गुरावपि। सिते चन्द्रे लग्नसंस्थे शुभं स्यादसितेऽशुभम्। वसुगे स्याद्धनप्राप्तिस्तृतीये सुखसंस्थितिः। चतुर्थे बुद्धिवृद्धिं च पञ्चमे सौख्यमुत्तमम्। षष्ठे तु व्याधिपीड़ा स्यात् सप्तमे सुखसन्ततिः। अष्टमे निर्धनः प्राणी नवमे धर्म्मसञ्चयः। दशमे स्यात् सदाचारो लाभे स्याद्धनसञ्चयः। दारिद्र्यं रिपुफगे विद्याचन्द्रे फलमुदाहृतम्। स्थितिनाशः सुखं कार्य्यहानिर्वृद्धिर्म्मृतिर्गदः। अधर्म्मोदुर्म्मतिर्वृद्धिर्नाशो लग्नात् कुजे फलम्। बुद्धिर्वृद्धिर्वित्तनाशो लाभः पुत्रोन्नतिः सुखम्। आयुःक्षयो धर्म्मसौख्ये कोषलाभः क्षयः क्रमात् सौम्ये लग्नादिराशीनां फलमेतदुदाहृतम्। निन्दां हानिं सुखं रोगं द्यूतक्लामं जड़ं मतिम्। विपत्क्लेशं सुखं क्षयमुदयात् कुरुते शनिः। चन्द्रे विशेषमाह लल्लः। "पापात् सप्तमगश्चन्द्रं पापग्रहेण वा युतम्। व्रते विवर्ज्जयेद् यत्नाद्दोषमाहुर्म्मनीषिणः। तत्फलं तत्रैव "पापग्रहात् सप्तमगं शशाङ्कं पापग्रहेणापि युतञ्च हित्वा। व्रतं प्रशस्तं मुनयोवदन्ति नोचेत्तदा मृत्युमुपैति शीघ्रम्"। गुरुस्तु। "पापग्रहेक्षिते लग्ने जीवितार्थी न कारयेत्। चन्द्रो वा क्रूरदृग्युक्तो मृत्युं संप्रयच्छति"। वर्ज्ज्ययोगमाह मु० चि० "कवीज्यचन्द्रलग्नपा रिपौ मृतौ व्रतेऽधमाः। व्ययेऽब्जभार्गवौ तथा तनौ मृतौ सुते खलाः"। अन्यत्रापि। "लग्नाधिनाथसितजीवनिशाधिनाथान् षष्ठाष्टमे व्ययगतावपि चन्द्रशुक्रौ। लग्नाष्टपञ्चमगतानशुभग्रहांश्च यत्नात् त्यजेद्व्रतविधौ मुनयोवदन्ति"। सारसंग्रहे। "मेखलाबन्धकाले तु सर्व्वदा

पञ्चमङ्गृहम्। शुभयुक्तं प्रशंसन्ति तदालोकितमेव वा"। योगान्तरमाह प्रमि० महेश्वरः। 'जीवे खगनधिष्ठिते भृगुसुते धर्मात्मजस्थे विधौ शुक्रांशेऽखिलवेदविद्विनिहतस्यांशे कृतघ्नोऽधमः"। तत्रैव स एव। "विधौ सितांशगे गुरौ तनौ त्रिकोणगे भृगौ। समस्तवेदविद्व्रती यमांशकेऽतिनिर्घृणः"। नवांशफलमाह व्य०च० गुरुः। "गुरुज्ञशुक्रांशकगे च चन्द्रे विद्याधनायुःसुखवान् द्विजन्मा। माहेयमन्दार्कनवांशकस्थे हिंस्रो जड़ो मूर्खतरोऽतिनिःस्वः" सु०चि०। "क्रूरो जड़ो भवेत् पापः पटुः षट्कर्मकृद्वटुः। यज्ञार्थभाक् तथा मूर्खोऽव्याद्यंशे तनौ क्रमात्। विद्यानिरतः शुभराशिलवे पापांशगते हि दरिद्रतरः। चन्द्रे स्वलवे बहुदुःखयुतः कर्णादितिभे धनवान् स्वलवे"। प्रमि० नारदः "श्रवणादितिनक्षत्रे कर्कांशस्थे निशाकरे। तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान्"। एतच्छुक्लपक्षविषयम् "शुक्ले स्वांशे निशानाथे वित्तवान् यज्ञकृद्भवेत्। कृष्णे स्वांशगतश्चन्द्रो जातिभ्रंशं करोति हि" वशिष्ठोक्तेः "रविगुरुशुद्धौ व्रतोद्वाहौ" इत्युक्तेर्व्रते गुरुशुद्धिरावश्यकी। तत्र गुरुशुद्धौ विशेषमाह" सु० चि० 'वटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः। श्रेष्ठो गुरुः खषट्त्र्याद्ये पूजयाऽन्यत्र निन्दितः"। "स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे गुरुः। रिप्फाष्टतुर्य्यगोऽपीष्टो नीचारिस्थः शुभोऽप्यसत्" अत्र जीवस्य नीचस्थत्व इव अरिष्टहस्थत्वेऽपि वर्ज्यता प्रतीयते अतएव "जन्मभादष्टमे सिंहे नीचे वा शत्रुभे गुरौ। मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवाविति" निर्णयसिन्धुधृतवचने मीनगतरविकाल एव प्रतिप्रसवसार्थक्यम्। एतेन "शाखाधिपे बलिनि" इत्यादिवाक्ये उपक्रमे शाखाधिपश्रवणात् गुरोररिष्टहस्थत्वे तस्य ऋग्वेदाधिपतया तद्वेदिनामेवोपनयननिषेधकल्पनमपि निरस्तम् 'शाखेशसूर्य्यशशिजीवबले" इत्यादिप्रागुक्तवचने शाखेशात् पृथक्त्वेन जीवस्य ग्रहणेनारिष्टहस्थत्वेऽपि सर्ववेदिनां दोषस्यावश्यकत्वात् एतेन "नीचस्थितेऽरिष्टहगेऽथ पराजिते वा जीवे भृगौ" इत्यादिवचने क्रमान्वयं वदन् परास्तः तथात्वे प्रतिप्रसवानर्थक्यापत्तेः। अन्यदाकरे दृश्यमिति दिक्
तत्तद्विद्याग्रहणार्थे २कर्म्मभेदे तत्र चिकित्साविद्याङ्गोपनयनप्रकारो दर्शितः सुश्रुतेन यथा।

'अथातः शिष्योपनयनीयमध्यायं व्याख्यास्यामः। ब्राह्मणक्षत्रियवैश्यानामन्यतममन्वयवयःशीलशौर्य्यशौचाचारविनयशक्तिबलमेधाधृतिस्मृतिमतिप्रतिपत्तियुक्तं तनुजिह्वौष्ठदन्ताग्रमृजुवक्त्राक्षिनासं प्रसन्नचित्तवाक्चेष्टं क्लेशसहञ्च भिषक् शिष्यमुपनयेत्। अतो विपरीतगुणं नोपनयेत् उपनयनीयस्तु ब्राह्मणः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु प्रशस्तायां दिशि शुचौ समे देशे चतुर्हस्तं चतुरस्रं स्थण्डिलमुपलिप्य गोमयेन दर्भैः संस्तीर्य्य पुष्पैर्लाजभक्तै रत्नैश्च देवताः पूजयित्वा विप्रान् भिषजश्च, तत्रोल्लिख्याभ्युक्ष्य च दक्षिणतो ब्राह्मणं स्थापयित्वाग्निमुपसमाधाय खदिरपलाशदेवदारुविल्वानां समिद्भिश्चतुर्णां वा क्षीरवृक्षाणां न्यग्रोधोडुम्बराश्वत्थमधूकानां दधिमधुघृताक्ताभिः, दार्व्वी होमिकेन विधिना स्रुवेणाज्याहुतीर्जुहुयात्। सप्रणवाभिर्महाव्याहृतिभिस्ततः प्रतिदैवतमृषींश्च स्वाहाकारञ्च कुर्यात् शिष्यमपि कारयेत्। ब्राह्मणस्त्रयाणां वर्णानामुपनयनं कर्त्तुमर्हति राजन्यो द्वयस्य, वैश्यो वैश्यस्यैवेति। शूद्रमपि कुलगुणसम्पन्नं मन्त्रवर्जमनुपनीतमध्यापयेदित्येके। ततोऽग्निं त्रिःपरिणीयाग्निसाक्षिकं शिष्यं ब्रूयात्। कामक्रोधलोभमोहमानाहङ्कारेर्ष्यापारुष्यपैशुन्यानृतालस्यायशस्यानि हित्वा नीचनखरोमणा शुचिना कषायवाससा सत्यव्रतब्रह्मचर्य्याभिवादनतत्परेणाऽवश्यं भवितव्यं मदनुमतस्थानगमनशयनासनभोजनाध्ययनपरेण भूत्वा मत्प्रियहितेषु वर्त्तितव्यमतोऽन्यथा ते वर्त्तमानस्याधर्मो भवत्यफला च विद्या न च प्राकाश्यं प्राप्नोति। अहं वा त्वयि सम्यग्वर्त्तमाने यद्यन्यथादर्शी स्यामेनोभाग्भवेयमफलविद्यश्च। द्विजगुरुदरिद्रमित्रप्रव्रजितोपनतसाध्वनाथाभ्युपगतानां चात्मबान्धवानामिव स्वभेषजैः प्रतिकर्त्तव्यमेवं साधु भवति। व्याधशाकुनिकपतितपापकारिणां न च प्रतिकर्त्तव्यमेवं विद्या प्रकाशते मित्रयशोधर्मार्थकामांश्च प्राप्नोति" एवं धनुर्विद्याग्रहणाङ्गमप्युपनयनं द्रष्टव्यम्।

उपनयनाय हितम् छ। उपनयनीय उपनयनावेदके शास्त्रे त्रि० तत्र साधु छ। उपनयनीय उपनयनकारके गुरौ पु०। उभयस्य उदा० उक्त सुश्रुतवाक्ये दर्शितम्।

**उपनहन** न० उप+नह—बन्धने भावे ल्युट्। १बन्धने करणे ल्युट्। २बन्धनसाधने वस्त्रादौ।'प्रेष्यति च सोमोपनहनमाहर" कात्या०७,७,१। सोम उपनह्यते बध्यते येन तत् सोमोपनहनं वासः" कर्कः। "आसन्द्यैनमवभृतं कृत्वाभ्युक्ष्य सोमोपनहनेन" कात्या०२२,६,१२। "अथ संप्रेष्यति सोमोपनहनमाहर" यजमानो वा सोमोपनहनमादत्ते" शत०ब्रा० ३३,२,२,४।

**उपनागरिका** स्त्री "माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते" इत्युक्तलक्षणे वृत्त्यनुप्रासवृत्तिभेदे। यथा 'अपसारय घनसारं कुरु हारं दूरएव किं कमलैः। अलमालि! मृणालैरिति वदति दिवानिशं बाला'।

**उपनामुक** त्रि०उप+नम—बा०उकञ्। १सन्नमनशीले २फला-नुगुण्याय प्रस्तुते "यदिष्टिभिर्यजेतोपनामुक एनं यज्ञः स्यात् यमाप्नोत्युपनामुक एनम्" शत०ब्रा० १२, ३,६,६,७।

**उपनाय** पु० उपनाययति उप+नी—णिच् करणस्य कर्त्तृत्व-विवक्षायाम् कर्त्तरि अच्। उपनयसंस्कारे हेम० तस्य आचार्य्यसमोपनयनसम्पादनकरणत्वात्तथात्वम्।

**उपनायक** पु० उपगतोनायकम् अत्या० स०। १नायकसदृशे उपपतौ "नायकस्य गुणोत्कर्षकथका उपनायकाः" संगी-तोक्ते २नायकसहायभेदे उप+नी—ण्वुल्। ३उपस्थापके त्रि०ज्ञानलक्षणारूपसन्निकर्षे पु०। उपनयशब्दे उदा०।

**उपनायन** न० उप+नी—स्वार्थे—णिच्-ल्युट् करणे कर्त्तृत्व-विवक्षायां कर्त्तरि नन्द्या०ल्यु वा। उपनयसंस्कारे। उपनयनशब्दे बहुप्रयोगो दृश्यः। "ब्राह्मणस्योपनायनम्" मनुः। उपनायनं प्रयोजनमस्य ठक्। औपनायनिक उपनयनप्रयोजने विधाने त्रि०। "एष प्रोक्तो द्विजाती-नामौपनायनिकोविधिः" मनुः औपनायनिक इत्यत्र कुल्लू० अनुशतिकादिकादित्वकल्पनमनादरमेव उपनायनशब्देनैव तद्रूपसिद्धेस्तथाकल्पनानौचित्यात्।

**उपनाह** पु० उप+नह—घञ्। १वीणायास्तन्त्रीबन्धनस्थाने, २व्रणाद्युपशमार्थं लेपनद्रव्ये च। "आदौ विम्लापनं कुर्य्यात् द्वितीयमवसेचनम्। तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रि-याम्" "शोफयोरुपनाहन्तु कुर्य्यादामविदग्धयोः" "ति-लोपनाहं कुर्य्याच्च सर्वदा वातरोगिणाम्" "शाल्वणमुप-नाहार्थे बलातैलमनुवासनार्थे" इति च सुश्रुतः।

**उपनाहन** न० उप+नह—स्वार्थे णिच्—भावे ल्युट्। प्रले-पादिबन्धने "प्रशमयेत् स्नेहस्वेदोपनाहनैः"। "वेशवारैः सक्षारैः स्निग्धैः स्यादुपनाहनम्" सुश्रुतः।

**उपनिक्षेप** पु० उप+नि—क्षिप—कर्मणि घञ्। १रूपसंख्या-प्रदर्शनेन रक्षणार्थं परस्य हस्ते निहिते द्रव्ये 'आधिसीमो-पनिक्षेपजड़बालधनैर्विना। तथोपनिधिराजस्त्रीश्रोत्रि-याणां धनैरपि' या०स्मृ०। "उपनिक्षेपो नाम रूपसंख्या-प्रदर्शनेन रक्षणार्थं निहितमिति" मिता० भावे घञ्। २तथाऽर्पणे।

**उपनिधातृ** त्रि० उप+नि+धा—तृच्। उपनिधित्वेनान्य-समीपे १स्वद्रव्यस्थापके २स्थापकमात्रे च। "प्राणेभ्या-मुपनिधाता इत्यं देवाः" शत०ब्रा०१,१,२,१७। उप+नि+धा-ण्वुल्। उपनिधायकोऽप्यत्र।

**उपनिधान** न० उप+नि+धा—भावे ल्युट्। उपनिधित्वेन १स्थापने "उपनिधानमुपनिधिः" मिता०। २समीपे स्थापने "तदभिहितोभाव" इत्याद्युक्तेः उपनिधीयमाने ३द्रव्ये च।

**उपनिधि** क० उप+नि+धा—भावे कि। रूपसंख्ये अप्रदर्श्य परस्यान्तिके रक्षणार्थं १स्वधनस्थापने 'तदभिहितोभावोद्रव्य-वत् प्रकाशत" इत्युक्तेः तथा निधीयमाने २द्रव्ये च। उप-निधिस्वरूपतत्प्रत्यर्पणकर्त्तव्यविशेषौ मिता० दर्शितौ यथा "वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते। द्रव्यन्तदौप-निधिकं प्रतिदेयं तथैव तत्" या०स्मृ०। 'निक्षेप-द्रव्यस्याधारभूतन्द्रव्यान्तरं वासनङ्करण्डादि तत्स्थं यद्द्रव्यं रूपसंख्यादिविशेषमनाख्यायाकथयित्वा मुद्रितम-न्यस्य हस्ते रक्षणार्थं विश्रम्भादर्प्यते तद्द्रव्यमौपनिधिक मुच्यते यथाह नारदः। "असंख्यातमविज्ञातं समुद्रं यन्नि-धीयते। तज्जानीयादुपनिधिं निक्षेपङ्गणितं विदुरिति" प्रतिदेयन्तथैव तत् यस्मिन् स्थापितन्तेनैव पूर्वमुद्रादि चिह्नितमर्पितन्तथैव स्थापकाय प्रतिदेयं प्रत्यर्पणीयम्। प्रति-देयमित्यस्यापवादमाह" मिता०। "न दाप्योऽपहृतन्तु राज दैविकतस्करैः" या०स्मृ० "तमुपनिधिं राज्ञा दैवेनोदकादिना तस्करैर्वापहृतं नष्टं न दाप्योऽसौ राज्ञा तदुपनिहितन्धनि न एव तद्द्रव्यम् नष्टं यदि जिह्मकारितं न भवति यथाह नारदः। "गृहीतुः सह योऽर्थेन नष्टोनष्टः स दायिनः। दैवराजकृते तद्वन्न चेत्तज्जिह्मकारितमिति" मिता०। अस्याप वादमाह। "भ्रेषश्चेन्मार्गितेऽदत्ते दाप्योदण्डञ्च तत्समम्" या०स्मृ०। "स्वामिना मार्गिते याचिते यदि न ददाति तदा तदुत्तरकालं यद्यपि राजादिभिर्भ्रेषोनाशः सञ्जातस्तथापि तद्द्रव्यं मूल्यकल्पनया धनिने गृहीता दाप्यो राज्ञे च त-त्समन्दण्डम्। भोक्तारम्प्रति दण्डमाह" मिता०। "आजीवन् स्वेच्छया दण्ड्योदाप्यस्तं वापि सोदयम्" या०। "यः स्वेच्छया स्वामिनमननुज्ञाप्य उपनिहितन्द्रव्यमाजीवत्युपभुङ्क्ते व्यवह-रति वा प्रयोगादिना लाभार्थमसावुपभोगानुसारेण द-ण्ड्यस्तञ्चोपनिधिं सोदयमुपभोगे सवृद्धिकं व्यवहारे स लाभन्धनिने दाप्यः। वृद्धिप्रमाणञ्च कात्यायनेनोक्तम्। "निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च। याच्यमानो न चेद्दद्याद्वर्द्धते पञ्चकं शतमिति"। एतच्च भक्षिते द्रष्टव्यम्। उपेक्षाऽज्ञाननष्टे तेनैव विशेषो दर्शितः "भक्षितं सोदयं

दाय्यः समन्दापय उपेक्षितम् । किञ्चिन्यूनं प्रदापयः स्याद्व्यमज्ञाननाशितमिति" । किञ्चिन्यूनमिति चतुर्थांशहीनम्" मिता० । "एष एव विधिर्दृष्टो याचितान्वाहितादिषु । शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च" नारदः । "स जातमात्रान् पुत्रांश्च दारांश्च भवतामिह । प्रदायोपनिधिं राजा पाण्डुः स्वर्गमितो गतः" भा० आ० १२६ अ० । उपनिधिमधिकृत्य प्रवृत्तम् तदस्य प्रयोजनमिति वा ठक् । औपनिधिक तदधिकारेण प्रवृत्ते व्यवहारे तत्साधनद्रव्ये च ।

**उपनिपात** पु० उप+नि–पत–घञ् । १समीपे आगतौ २हठादागमने "कृतताक्ष्योंप्रनिपातवेगशङ्कः" किरा० ।

**उपनिपातिन्** त्रि० उप+नि–पत–णिनि । १हठादागते अतर्कितोपगतियुक्ते "रन्ध्रोपनिपातिनोऽनर्थाः" ।

**उपनिबन्धन** न० उप+नि+बन्ध–करणे ल्युट् । १सम्पादनसाधने । "प्रत्ययोपनिबन्धनः" सर्वद० भावे ल्युट् । २ग्रथने

**उपनिमन्त्रण** न० उप+नि+मन्त्र–ल्युट् । उपेत्य आवश्यके कर्म्मणि प्रवर्त्तनाव्यापाररूपे निमन्त्रणे ।

**उपनिवपन** न० उप+नि+वप–ल्युट् । अग्निप्रणयनकर्म्माङ्गभूते इध्माभ्याधानादिव्यापारे" औपनिवपनात् कृत्वा हविर्धाने स्थापयति" ८, ३, २१ । "औपनिवपनात् "इध्माभ्याधानादि उपयमन्युपनिवपनान्तमग्निप्रणयनाख्यं कर्म्म कृत्वा" कर्कः ।

**उपनिवेशित** त्रि० उप+नि+विश–णिच्–क्त । १निवासिते २वसतिविशेषरूपेण स्थापिते च । "स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता" कुमा० । ३निवेशितमात्रे च ।

**उपनिषद्** स्त्री उपनिषीदति प्राप्नोति ब्रह्मात्मभावोऽनया उप+नि–सद–क्विप् । १ब्रह्मविद्यायां, २तत्प्रतिपादके वेदशिरोभागे वेदान्ते च । वृ० भा० उपनिषच्छब्दार्थव्युत्पत्तिर्दर्शिता यथा । "सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनम् उपनिपूर्व्वस्य सदेस्तदर्थत्वात् तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते । मुण्ड० भा० "यथा य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयति अविद्यादिसंसारकारणञ्चात्यन्तमवसादयति विनाशयतीत्युपनिषद् उपनिपूर्व्वस्य सदेरेवमर्थस्मरणात् । "अत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचरः । तच्छब्दावयवार्थस्य विद्यायामेव सम्भवात् । उपोपसर्गः सामीप्ये तत्प्रतीचि समाप्यते । सामीप्यतारतम्यस्य विश्रान्तेः स्वात्मनीक्षणात् । त्रिविधस्य सदर्थस्य निशब्दोऽपि विशेषणम् । उपनीय तमात्मानं ब्रह्मापास्तद्वयं यतः । निहन्त्यविद्यां तज्जञ्च तस्मादुपनिषद्भवेत् । निहत्यानर्थमूलं स्वाऽविद्यां प्रत्यक्तया परम् । नयत्यपास्तसम्भेदमतोवोपनिषद्भवेत् । प्रवृत्तिहेतून्निःशेषांस्तन्मूलोच्छेदकत्वतः । यतोऽवसादयेद्विद्या तस्मादुपनिषद्भवेत् । यथोक्तविद्याहेतुत्वाद्ग्रन्थोऽपि तदभेदतः । भवेदुपनिषन्नामा लाङ्गलं जीवनं यथेति" तस्या निकृष्टार्थ आचार्य्यैर्दर्शितः । उपनिषद्भेदाश्च मुक्तिकोपनिषदि दर्शिता यथा । "१ईशा २केन ३कठ ४प्रश्न ५मुण्ड ६माण्डूक्य ७तित्तिरिः । ८ऐतरेयञ्च ९छान्दोग्यं १०वृहदारण्यकं तथा । ११ ब्रह्म १२ कैवल्य १३ जावाल १४ श्वेताश्वो १५हंस १६आरुणिः । १७गर्भो १८नारायणो १९हंसो २०विन्दु २ २१नाद ३ २२शिरः ४ २३शिखा । २४मैत्रायणी २५कौषितकी २६ वृहज्जावाल २७तापनो । २८ कालाग्निरुद्र २९ मैत्रेयी ३०सुवाल ३१क्षुरि ३२ मन्त्रिका । ३३सर्वसारं ३४निरालम्बं ३५रहस्यं ३६ वज्रसूचिकम् । ३७तेजो ३८नादो ३९ध्यान ४०विद्या ४१, ४२योगतत्त्वात्मबोधकम् । ४३परिव्राट् ४४त्रिशिखी ४५ सीता ४६चूड़ा ४७निर्वाण ४८मण्डलम् । ४९दक्षिणा ५०शरभं ५१स्कान्दं ५२ महानारायणाह्वयम् । ५३रहस्यं ५४रामतपनं ५५वासुदेवञ्च ५६मुद्गलम् । ५७शाण्डिल्यं ५८पैङ्गलं ५९भिक्षु ६० ६१महच्छारीरकं शिखा ६२ । ६३तुरीयातीत ६४संन्यास ६५ परिव्राजा ६६ऽक्षमालिका । ६७अव्यक्तै ६८काक्षरं ६९पूर्णा ७० ७१सूर्याक्ष्य ७२ऽध्यात्म ७४कुण्डिका । ७५सावित्र्या ७६ऽऽत्मा ७७पाशुपतं ७८परब्रह्मा ७९ऽवधूतकम् । ८०त्रिपुरातापनं ८१देवी ८२त्रिपुरा ८३काठ ८४भावना । ८५हृदयं ८६कुण्डली ८७भस्म ८८रुद्राक्ष ८९गण ९०दर्शनम् । ९१तारसार ९२महावाक्य ९३पञ्चब्रह्मा ९४ऽग्निहोत्रकम् । ९५गोपालतापनं ९६कृष्णं ९७याज्ञवल्क्यं ९८वराहकम् । ९९शाट्यायनी १००हयग्रीवं १०१दत्तात्रेयं च १०२गारुड़म् । १०३कलि ७ १०४जावालि १०५सौभाग्य १०६रहस्य ८ १०७ऋच १०८मुक्तिका"

तासाञ्च मध्ये यासां यद्वेदगतत्वं तदपि शान्तिपाठमन्त्रसहितं तत्रैव दर्शितं यथा ।

"१ऐतरेय२कौषकी ३ । ४नादविन्द्वात्मप्रबोध५निर्वाण ६मुद्गलाऽ ७क्षमालिका ८त्रिपुरा ९सौभाग्यं १०वहृचा

ऋग्वेदगतानां दशसङ्ख्यकानामुपनिषदां “वाङ् मे मनसीति” शान्तिः । १ईशावास्य २बृहदारण्यक ३जाबाल ४हंस ५परमहंस ६सुबाल ७मन्त्रिका ८निरालम्ब ९त्रिशिखी” १०ब्राह्मणमण्डल ११अद्वयतारक १२पैङ्गल १३भिक्षु १४।१५तुरीयातीताध्यात्म १६तारसार १७याज्ञवल्क्य १८शाट्यायनी १९मुक्तिकानां शुक्लयजुर्वेदगतानामेकोनविंशतिसङ्ख्यकानामुपनिषदां “पूर्णमदः” इति शान्तिः । १कठवल्ली २तैत्तिरीयक ३ब्रह्म ४कैवल्य ५श्वेताश्वतर ६गर्भ ७।८नारायणामृतबिन्दु ९अमृतनाद १०कालाग्निरुद्र ११क्षुरिका १२सर्वसार १३शुकरहस्य १४तेजोबिन्दु १५ध्यानबिन्दु १६ब्रह्मविद्या १७योगतत्त्व १८दक्षिणामूर्त्ति १९स्कन्द २०शारीरका २१योगशिखै २२,२३काचराक्ष २४ऽवधूत २५कठरुद्र २६हृदय २७योगकुण्डलिनी २८पञ्चब्रह्म २९प्राणाग्निहोत्र ३०वराह ३१कलिसन्तरण ३२सरस्वतीरहस्यानां कृष्णयजुर्वेदगतानां द्वात्रिंशत्सङ्ख्यकानामुपनिषदां “सह नाववत्विति” शान्तिः । १केन २।३छान्दोग्यारुणि ४मैत्रायणी ५मैत्रेयी ६वज्रसूचिक ७योगचूडामणि ८वासुदेव ९महत् १०संन्यासा ऽ ११व्यक्त १२कुण्डिका १३सावित्री १४रुद्राक्ष १५जाबालदर्शन १६जाबालीनां सामवेदगतानां षोड़शसङ्ख्यकानामुपनिषदाम् “आप्यायन्त्विति” शान्तिः । १प्रश्न २मुण्डक ३माण्डूक्या ऽ४थर्वशिरो ऽ५थर्वशिखा ६बृहज्जाबाल ७नृसिंहतापनी ८नारदपरिव्राजक ९सीता १०शरभ ११महानारायण १२रामरहस्य १३रामतापनी १४शाण्डिल्य १५परमहंस १६परिव्राजका ऽऽन्नपूर्णा १७सूर्यात्म १८पाशुपत १९परब्रह्म २०त्रिपुरातपन २१देवी २२भावना २३भस्म २४जाबाल २५गणपति २६महावाक्य २७गोपालतपन २८कृष्ण २९हयग्रीव ३०दत्तात्रेय ३१गारुडानामथर्ववेदगतानामेकत्रिंशत्संख्याकानामुपनिषदां “भद्रं कर्णेभिरिति” शान्तिः” । पूर्व्वोत्तरवाक्ये नामभेदः नामान्तरपरतया समाधेयः । ३योगे च । “यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरम्” छा०उ० “उपनिषदा योगेन युक्तस्येत्यर्थः” भा० “योगो देवतादिविषयमुपासनम्” आनन्दगि० ४धर्मे ५निर्ज्जनस्थाने मेदि० ६समीपसदने त्रिका० । ७द्विजातिकर्त्तव्ये चत्वारिंशत्संस्कारमध्ये वेदव्रतभेदे तच्च व्रतं गोदानाख्यकेशान्तकर्म्मणः प्राक् कर्त्तव्यं यथाह आश्वलायनस्मृतिकारिका “प्रथमं स्यान्महानाम्नी द्वितीयञ्च महाव्रतम् । तृतीयं स्यादुपनिषद्गोदानं च ततः परम्” ततश्च विप्रस्य जन्मतस्त्रयोदशे वर्षे महानाम्नीव्रतं, चतुर्द्दशे महाव्रतं, पञ्चदशे उपनिषद्व्रतं, षोड़शे वर्षे गोदानम्, क्षत्रस्य ऊनविंशादिवर्षचतुष्के, वैश्यस्य एकविंशादिचतुष्के यथाक्रमं महानाम्न्यादिवेदव्रताख्यकर्म्मचतुष्टयं कर्त्तव्यम् । तत्र चूड़ादिनक्षत्रादिक्रमेव ग्राह्यम्” यथाह पी०धा० श्रीधरः । “तिथिनक्षत्रवाराश्च वर्गोदयनिरीक्षणम् । चौलवत् सर्वमाख्यातं सगोदानव्रतेषु च” यदा तु दैवादतीतकालानि महानाम्न्यादिव्रतानि स्युस्तदा समावर्त्तनेन सह कार्य्याणि “यहागामिक्रियामुख्यकालस्याप्यन्तरालवत् । गौणकालत्वमिच्छन्तीत्याद्युक्तेः । उपनिषत्सु व्यज्यते अण् । औपनिषद वेदान्तमात्रवेद्ये परब्रह्मणि । “तन्त्वौपनिषदं पुरुषं वेद” छा०उ० । उपनिषदं वेत्ति अण् । वेदान्ताभिज्ञे “शुद्धबुद्धस्वभाव इत्यौपनिषदाः” कुसु० ।

**उपनिषादिन्** त्रि० उप+नि+सद—णिनि स्त्रियां ङीप् । समीपे स्थायिनि “तद्विशमधस्तादुपनिषादिनीं करोति” शत० ब्रा० ६,४,३,३ ।

**उपनिष्कर** म० उप+निस्+कृ—करणे संज्ञायां घ । महति राजमार्गे अमरः । तत्र हि महतामपि सैन्यानामसंवादेन निष्क्रमणात्तथात्वम् । [अमरः ।

**उपनिष्क्रमण** न०उप+निस्—क्रम करणे ल्युट् । राजपथे ।

**उपनिहित** त्रि० उप+नि—धा—क्त । १उपनिधित्वेन स्थापिते द्रव्ये उपनिधिशब्दे मिता० उदा० २स्थापिते च ।

**उपनीत** त्रि० उप+नी—क्त । १कृतोपनयनसंस्कारे “अथोपनीतं विधिवद्विपश्चितः” रघुः । २ज्ञानलक्षणासन्निकर्षेण ज्ञाते च “उपनीतं विशेषणतयैव भासते मानसे तु नायं नियमः” प्राचीनमाथा उपनयशब्दे दृश्या ३समीपे प्रापिते ४उपस्थापिते च ।

**उपनेतृ** पु०उप+नी—तृच् । १उपनयकर्त्तरि गुरौ २उपढौककर्त्तरि त्रि० स्त्रियां ङीप् । “नियमविधिजलानां बर्हिषां चोपनेत्री” कुमा० ।

**उपनेत्र** न०उपमतं नेत्रम् अत्या०स० । नेत्रसमीपे धार्य्ये काचादिनिर्म्मिते नेत्रतिमिरोपकारके द्रव्यभेदे (चसमा)

**उपन्यास** पु० उप+नि+अस—घञ् । १वाक्योपक्रमे २वाक्यप्रयोगे उपचारच्छलशब्दे उदा० । “तस्माद्ब्रह्मजिज्ञासोपन्याससमुखेन” शारी०भा० । “मालविकायामयमुपन्यासः शङ्कयति” मालवि० । ३विचारे “पुण्यमुपन्यासं निबोधत” मनुः । “उपन्यासं विचारम्” कुल्लू० ।

४विश्वासेनान्यसमीपे स्वद्रव्यन्यासे उपनिधौ च ।

**उपपति** पु० उपमितः पत्या कर्म० स०। जारे । "उपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः" माघः । तस्य पतिवत् स्त्रिया रतिहेतुत्वात्तत्समत्वम् । "यस्य चोपपतिर्गृहे" "त्यजन्ति ये चोपपतिम्" मनुः "सन्धये जारं गेहायोपपतिम्" यजु०३०,९ । गुप्तव्यभिचारमात्रे जारत्वम् पतिसमीपे तस्य गेहस्थित्या व्यभिचारे उपपतित्वमित्यनयोर्भेदः ।

**उपपत्ति** स्त्री उप+पद-क्तिन् । १युक्तौ, २सङ्गतौ ३हेतौ च "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः" "उपपत्तिभिर्हेतुभिरिति मथुरानाथः । "उपपत्तिमदूर्जितं वचः" "प्रियेषु यैः पार्थ ! विनोपपत्तेः" किरा०। "लक्षणा शक्यसम्बन्धस्तात्पर्य्यानुपपत्तितः" भाषा० । "विवक्षितगुणोपपत्तेः" शा० सू०। "उपक्रमोपसंहारावभ्यासोऽपूर्ब्बता फलम् । अर्थवादोपपत्ती च हेतुस्तात्पर्य्यनिर्णये" इत्युक्तलक्षणा: प्रकरणप्रतिपाद्यार्थनिर्णायकत्वं यथा । छान्दोग्ये ६प्र० "यथा सौम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं भवति वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिना विकारमात्रस्य वाचारम्भकथनरूपा युक्तिः । ४उपाये च "अयोपपत्तिं छलनापरोऽपराम्" माघः । "अपेक्षितान्योन्यबलोपपत्तिभिः" माघः । ५प्राप्तौ ६सिद्धौ च "स्वार्थोपपत्तिं प्रति दुर्बलाशः" "असंशयं प्राक् तनयोपपत्तेः" रघुः । युक्तयश्च नानाविधाः सुश्रुते दर्शिताः ताश्च तन्त्रयुक्तिशब्दे दर्शयिष्यन्ते । "असद्वाक्यप्रयुक्तानां वाक्यानां प्रतिषेधनम् । स्ववाक्यसिद्धिरिति च क्रियते तन्त्रयुक्तिभिः" सुश्रुते तत्फलमुक्तम् ।

**उपपद** न० उपोच्चारितं पदम् प्रा०स० । समीपोच्चारिते पूर्वमुच्चार्य्ये शब्दे "तस्याः सराजोपपदं निशान्तम्" रघुः। "फलन्ति कल्पोपपदास्तदेव" माघः । राजनिशान्तं कल्पद्रुमा इत्यर्थः । २नामोत्तरमुच्चारिते शर्म्मवर्म्मादिरूपे शब्दे, (उपाधि) व्याकरणे प्रत्ययादिविधायकसूत्रे ३सप्तम्यन्तपदेन निर्द्दिश्यमाने पदे च । यथा कर्मण्यण् इत्यादौ कर्मणीतिसप्तम्यन्तं पदम् अण्प्रत्ययविधाने उपपदम् । "उपपदमतिङ्" पा०। "गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः" वार्त्ति०उक्तेः कुम्भकार इत्यादौ सुबुत्पत्तेः प्राक् समासे उपपदसमासः । उपपदेन समीपस्थपदेन योगे विभक्तिरुपपदविभक्तिः "उपपदविभक्तेः कारकविभक्तिर्गरीयसीति" व्या०प०

**उपपन्न** त्रि० उप+पद-क्त । १युक्तियुक्ते, "उपपन्नं ननु शिवमिति" रघुः । २प्राप्ते च "अतीन्द्रियेष्वप्युपपन्नदर्शनः" रघुः ३सतोगुणान्तराधानरूपसंस्कारयुक्ते "अयञ्च निष्ठुरः पितृद्रोही नात्युपपन्नसंस्थानः" दशकुमा० ४उत्पन्ने च ।

**उपपात** पु० उप+पत-घञ् । १हठादागतौ २फलोन्मुखत्वे ३नाशे च । "कर्म्मोपपाते प्रायश्चित्तं तत्कालम्" कात्या० २५,१,१। "उपपातो विनाशोऽभ्रेष इत्यनर्थान्तरम्" कर्कः

**उपपातक** न० पातयति नरके पत-णिच्-ण्वुल् उप अल्पार्थे गाऽश्ये वा प्रा०स० । पातकसदृशे ततोन्यूनफलके पापभेदे । "महापातकतुल्यानि पापान्युक्तानि यानि तु । तानि पातकसंज्ञानि तन्न्यूनमुपपातकमिति" पैठीनसिः । पतनञ्च "द्विजातिकर्म्मभ्योहानिः पतनं परलोकासिद्धिस्तमेके नरकम्" गौतमोक्तम् । तस्य न्यूनत्वञ्चाल्पफलदातृत्वेन तस्याल्पफलदातृत्वमाहाङ्गिराः "पातके तु सहस्रं स्यात् महत्सु द्विगुणं तथा । उपपापे तुरीयं स्यात् नरकं वर्षसंचयात्"।

केन केन कर्मणा च तज्जन्यते तन्निरूपितं प्रा०वि०। तत्र मनुः । "गोवधोऽयाज्यसंयाज्यपारदार्य्यात्मविक्रयः । पितृमातृगुरुत्यागः स्वाध्यायाग्न्योः सुतस्य च । परिवित्तितानुजेन परिवेदनमेव च । तयोर्दानञ्च कन्यायास्तयोरेव च याजनम् । कन्याया दूषणञ्चैव वार्द्धुष्यं व्रतच्युतिः । तड़ागारामदाराणामपत्यस्य च विक्रयः । व्रात्यता बान्धवत्यागो भृतकाध्यापनन्तथा । भृताच्चाध्ययनादानमपण्यानाञ्च विक्रयः । सर्व्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम् । हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म्म च । इन्धनार्थमशुष्काणां द्रुमाणामवपातनम् । आत्मार्थञ्च क्रियारम्भो निन्दितान्नादनन्तथा । अनाहिताग्निता स्तेयमृणानाञ्चानपक्रिया । असच्छास्त्राधिगमनं कौशीलव्यस्य च क्रिया । धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम् । स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यञ्चोपपातकम्" । "अस्यार्थः । अयाज्यसंयाज्यमिति प्रतिग्रहाध्यापनञ्चयति। त्यागो योगक्षेमाकरणम् । अनिमित्तं स्वाध्यायत्यागोऽधीतवेदविस्मारणम् । अग्नित्याग आलस्यादिना । सुतत्यागः पोषणविनयाधानाद्यकरणेन चकाराद्भार्य्यात्यागोऽपि । परिवित्तिता कनिष्ठस्य भ्रातुर्दाराग्निहोत्रसंयोगे सति ज्येष्ठस्य भ्रातुर्दाराग्निहोत्रसंयोगप्रागभावः । कनिष्ठस्य परिवेदनं, चकारात् कन्याया अपि तथाभूतायाः परिवेदनीयत्वम् । परिवित्तिपरिवेत्त्रोर्वरत्वेन कन्यादानम् । तयोरेव विवाहादौ ऋत्विक्कार्य्यमिति । कन्याया दूषणमकन्येत्युक्तिः अङ्गुल्या योनिविदारणं वा

वार्द्धुषिकत्वं ब्राह्मणक्षत्रिययोः। व्रतच्युतिरवकीर्णित्वम्। दाराणामपि परिणीतानामपि विक्रयः। अपत्यस्यानेकविधस्य। व्रात्यता यथाकालमनुपनयनमसोमयाजित्वञ्च। बान्धवत्यागो बान्धवस्य सपिण्डादेरनिमित्तत्यागः। भृतकाध्यापनम् मूल्येन वेतनादिना विद्यार्पणम्। भृताच्च वेतनपरिगृहीताद्वेदादि विद्याग्रहणम्। अपण्यानां लाक्षादीनां सकृत्, गोरसादीनां चासकृत्, ब्राह्मणेन विक्रयः। सर्वाकरेषु सुवर्णाद्युत्पत्तिस्थानेषु नियोगः। तैलादियन्त्रस्य भस्त्रतेजनादियन्त्रस्य च प्रवर्त्तनम्। धान्यादीनां यथा कथञ्चिन्नाशनं स्त्रियार्ज्जितधनजीवनम्। अभिचारः परहिंसार्थं जपादिकर्म, मूलकर्म वशीकरणं मूलादिक्रिया। इन्धनार्थम् द्रुमाणामशुष्काणां छेदनम्। आत्मार्थं पाकक्रिया न वैश्वदेवाद्यर्था। गणदेवककृतस्कारान्नभक्षणम्। सामर्थ्येऽपि श्रौतस्मार्त्ताग्न्यपरिग्रहः। स्तेयं हेमनराश्वरजतभूमिमणिनिक्षेपेतरद्रव्यहरणम्। देवर्षिपितृसम्बन्धिन ऋणस्यानपशोधनम्। असच्छास्त्राभिगमनम् पाषण्डशास्त्राभ्यासः। कुशीलवस्य कर्म तौर्य्यत्रिकं तस्य सततानुष्ठानम्। कुप्यस्यासारद्रव्यस्य ताम्रकांस्यादेः स्तेयम्। मद्यपस्त्रिया मद्यपायाश्च स्त्रिया निषेवणम् ब्राह्मणेन। स्त्रियाः शूद्रवैश्यक्षत्रियाणाञ्च वधः। नास्तिक्यं नास्ति परलोक इति व्यवसितिः। उपपातकमेकैकम् "एकैकमुपपातकमिति" याज्ञवल्क्यवचनात्। एवञ्च गोवधादिनास्तिक्यान्तानि पञ्चाशदुपपातकानि। विष्णुना "अनृतवचनमुत्कर्षे राजगामि च पैशुन्यम्। गुरोश्चालीकनिर्बन्धः वेदनिन्दाऽधीतस्य च त्यागः" अन्यानि च मनूक्तानि उक्त्वा "उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नराः" इति उपपातके दर्शितम्। तत्र नृपादिसभासु परापकारव्यतिरेकेणात्मन उत्कर्षख्यापनं तथा राज्ञः पुरतः परापकारव्यतिरेकेण परदोषकीर्त्तनम्। श्रुतमात्रोपकारकगुरोर्मिथ्याभिशंसनम्। तथा परिहासादिना वेदनिन्दा तथाऽसच्छास्त्राभियोगेनाधीतवेदविस्मरणञ्च यत्तु तदुपपातकं गुरूणां पुनरेतेषां मनुनाऽनुपातके दर्शितत्वात्। अन्यानि चोपपातकानि स्मृत्यन्तरेऽनुसन्धेयानि"।

"गोवधो व्रात्यतास्तेयमृणानाञ्चानपक्रिया। अनाहिताग्निताऽपण्यविक्रयः परिवेदनम्। भृतादध्ययनादानं भृतकाध्यापनन्तथा। पारदार्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया। स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम्। नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रयः। धान्यकुप्यपशुस्तेयमयाज्यानाञ्च याजनम्। पितृमातृसुतत्यागस्तड़ागारामविक्रयः। कन्यासन्दूषणञ्चैव परिवेदकयाजनम्। कन्याप्रदानन्तस्यैव कौटिल्यं व्रतलोपनम्। आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम्। स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च। इन्धनार्थेन्द्रुमच्छेदः स्त्रीहिंसौषधजीवनम्। हिंस्रयन्त्रविधानञ्च व्यसनान्यात्मविक्रयः। शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम्। तथैवानाश्रमे वासः परान्नपरिपुष्टता। असच्छास्त्राधिगमनमाकरेष्वधिकारिता। भार्य्याया विक्रयश्चैषामेकैकमुपपातकम्" या०। "गोवधो गोपिण्डव्यापादनम्। कालेऽनुपनीतत्वं व्रात्यता। ब्राह्मणसुवर्णेतरमव्यतिरिक्तपरद्रव्यापहरणं स्तेयम्। गृहीतस्य सुवर्णादेरप्रदानमृणानामनपाकरणम् तथा देवर्षिपितृणां सम्बन्ध्यृणस्यानापाकरणञ्च। सत्यधिकारे अनाहितानग्नित्वम्। ननु ज्योतिष्टोमादिकामश्रुतयः स्वाङ्गभूताग्निनिष्पत्त्यर्थमाधानम्प्रयुञ्जत इति मीमांसकप्रसिद्धिरतश्च यस्याग्निभिः प्रयोजनन्तस्य तदुपायभूताधाने प्रवृत्तिर्व्रीह्याद्यर्थिन इव धनार्जने यस्य पुनरग्निभिः प्रयोजनं नास्ति तस्याप्रवृत्तिरिति कथमनाहिताग्नितादोषः उच्यते। अस्मादेवाधानस्यावश्यकत्ववचनादनित्यश्रुतयोऽपि साधिकारत्वाविशेषादाधानस्य प्रयोजिका इति स्मृतिकाराणामभिप्रायो लक्ष्यत इत्यदोषः। तथा अपण्यस्य लवणादेर्विक्रयः। सहोदरस्य ज्येष्ठस्य तिष्ठतः कनीयसोऽग्रतो दाराग्निसंयोगः परिवेदनम्। पणपूर्व्वाध्यापकादध्ययनग्रहणम्। पणपूर्व्वाध्यापनम्। परदारसेवनङ्गुरुदारतल्पव्यतिरेकेण। पारिवित्त्यं कनीयसि कृतविवाहे ज्येष्ठस्य विवाहराहित्यम्। वार्द्धुष्यम्प्रतिषिद्धवृद्ध्युपजीवित्वम्। लवणक्रिया लवणस्योत्पादनम्। स्त्रियावधो ब्राह्मण्या अपि आत्रेयीव्यतिरेकेण। शूद्रवधः। अदीक्षितविट्क्षत्रवधः निन्दितार्थोपजीवनम् अराजन्याद्यर्पितार्थोपजीवनम्। नास्तिक्यं नास्ति परलोक इत्याद्यभिनिवेशः। व्रतलोपो ब्रह्मचारिणः स्त्रीप्रसङ्गः। सुतानामपत्यानां विक्रयः धान्यं व्रीह्यादि कुप्यमसारद्रव्यन्त्रपुसीसादि पशवो गवादयस्तेषामपहरणम्। "गोवधो व्रात्यतास्तेयम्" इत्यनेन स्तेयग्रहणेनैव सिद्धे पुनर्धान्यकुप्यादिस्तेयग्रहणं निन्दार्थमतो धान्यादिव्यतिरिक्तद्रव्यस्तेये नावश्यमेतदेव प्रायश्चित्तमपि तु ततोऽन्यूनमपि भवतीत्य। एतेन बान्धवत्यागग्रहणे-

नैव सिद्धे पुनः पित्रादित्यागग्रहणं व्याख्यातम् । अयाज्यानाञ्जातिकर्मदुष्टानां शूद्रव्रात्यादीनां याजनम् । पितृमातृसुतानामपतितानां त्यागो गृहाग्निष्कासनम् । तडागस्यारामस्य चोद्यानोपवनादेर्विक्रयः । कन्यायादूषणमङ्गुल्यादिना योनिविदारणं न तु सम्भोगस्तस्य"सखिभार्य्या कुमारीष्विति"गुरुतल्पसमत्वस्योक्तत्वात् । परिविन्दकयाजनन्तस्य च कन्याप्रदानम् । कौटिल्यङ्गुरोरन्यत्र गुरुविषयस्य तु कौटिल्यस्य सुरापाणसमत्वमुक्तम् । पुनर्व्रतलोपग्रहणं शिष्टाप्रतिषिद्धेष्वपि हरिचरणकमलप्रेक्षणात्प्राक्ताम्बूलादिकस्य भक्षणाभितेव्वंरूपेषु प्राप्त्यर्थं न तु स्नातकव्रतप्राप्त्यर्थन्तत्र "स्नातकव्रतलोपे च प्रायश्चित्तमभोजनमिति" मनुना लघुप्रायश्चित्तस्य प्रतिपादितत्वात्तयात्मार्थञ्च पाकलक्षणक्रियारम्भः"अघं स केवलम्भुङ्क्ते यः पचत्यात्मकारणादिति" तस्यैव प्रतिषिद्धत्वात् । क्रियामात्रविषयत्वे तु प्रतिषेधकल्पनागौरवं स्यात् । मद्यपायाः स्त्रियोजायाया अपि निषेवणमुपभोगः । स्वाध्यायत्यागो व्याख्यातः अग्नीनाञ्च श्रौतस्मार्त्तानान्त्यागः सुतत्यागः संस्काराद्यकरणम् । बान्धवानाम्पितृव्यमातुलादीनान्त्यागः सति विभवे अपरिरक्षणम् । पाकादिदृष्टप्रयोजनसिद्धार्थमार्द्रद्रुमच्छेदोन त्वाहवनीयपरिरक्षणार्थमपि । स्त्रिया हिंसया औषधेन च जीवनं वर्त्तनं स्त्रीहिंसौषधजीवनम् । तत्र स्त्रीजीवनं नाम भार्य्याम्पण्यभावेन प्रयोज्य तल्लब्धोपजीवनम् स्त्रीधनोपजीवनं वा । हिंसया जीवनम्प्राणिवधेन जीवनम् । औषधजीवनं वशीकरणेन । हिंस्रयन्त्रस्य तिलेक्षुपीडनकरस्य प्रवर्त्तनम् । व्यसनानि मृगयादीन्यष्टादश । आत्मविक्रयोद्रव्यगृहणेन परदास्यकरणम् । शूद्रसेवनं हीनेषु मैत्रीकरणम् । अनूढसवर्णदारस्य केवलहीनवर्णदारोपयमनम्, साधारणस्त्रीसम्भोगश्च । अनाश्रमे वासः अस्टहोताश्रमित्वम् । परपाकरतित्वम् । असच्छास्त्रस्य चार्वाकादिग्रन्थस्याधिगमः । सर्वाकरेषु सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाधिकारित्वम् । भार्य्यायाविक्रयः । चशब्दान्मन्वाद्युक्ताभिचाराऽमतिपूर्व्वलशुनादिभक्षणादेर्ग्रहणम् । एषां गोवधादीनाम्मतेग्रकमुपपातकसंज्ञावेदितव्या" मिता० । उपपापमप्यत्र ।"जलोदरं यकृत्प्लीहाम्शूलरोगव्रणानि च । श्वासजोर्ण ज्वरच्छर्हि भ्रममोहगलग्रहाः । रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः" शाता० ।

**उपपातिन्** त्रि० उप+पत–णिनि स्त्रियां ङीप् । १हठादागते ।२ अतर्कितोपस्थिते च।"रन्ध्रेषुपपातिनोऽनर्थाः"हितो०

**उपपाद** पु० उप+पद–घञ् । १उपपत्तौ । उपगतः पादम् अत्या०समा० ।२पादोपगते त्रि० । स्त्रियां गौरा०ङीष् ।

**उपपादक** त्रि० उपपादयति उप+पद–णिच्–ण्वुल् । उपपत्तियुक्तकारके पद–ण्वुल् । उपपत्तियुक्ते २युक्तियुक्ते च ।

**उपपादन** न०उप+पद+णिच् ल्युट् । १युक्त्या समर्थने २सम्यक्प्रतिपादने ३प्राप्तियुक्तकरणे च ।"लोहपिण्डं यथा वह्निः प्रविश्य ह्यतिपादयेत् । तथात्वमपि जानीहि गर्भे जीवोपपादनम्" भा० आश्व०१८अ० ।

**उपपादित** त्रि० उप+पद–णिच्–क्त । १युक्त्या समर्थिते, "उपपादितञ्चैतत् पुरस्तात्"जग०२सम्यक् प्रतिपादिते च

**उपपादुक** त्रि० उपपद्यते उप+पद–उकञ् । दृष्टकारणनिरपेक्षतया अदृष्टमात्रसहकृतेभ्योऽणुभ्यो जायमाने देवदेहे नारकिदेहे च"हेम०दिव्योपपादुका देवाः"अमरः ।

**उपपाद्य** त्रि०उप+पद–णिच्–यत् ।१युक्त्या समर्थनीये २प्रतिपाद्ये च । ल्यप् । २उपपत्तियुक्तं कृत्वेत्यर्थे अव्य० ।

**उपपुर** न०समीपस्थं पुरं प्रा०स० । पुरसमीपस्थे शाखानगरे । उपपुरे भवः अण् उत्तरपदवृद्धिः । उपपौर तद्भवे त्रि० ।

**उपपुराण** न० उपतमनुगतं पुराणम् अत्या०स० । व्यासोक्ताष्टादशपुराणसदृशेषु नानामुनिप्रणीतेषु नानाविधेषु पुराणेषु । तानि यथा । आद्यं सनत्कुमारोक्तं नारसिंहमतः परम्२ । तृतीयं वायवीयञ्च ३कुमारेणानुभाषितम् । चतुर्थं शिवधर्माख्यं ४ साक्षान्नन्दीशभाषितम् । दुर्वासोक्तमाश्चर्य्यं ५नारदीयमतः परम्६ । नन्दिकेश्वरयुग्मञ्च७, ८तथैवोशनसेरितम्९, कापिलं वारुणं१० शाम्बं ११ कालिकाह्वयमेव च १२ । माहेश्वरं १३ तथा पाद्मं १४ दैवं १५ सर्व्वार्थसाधकम् पराशरोक्तमपरं १६ मारीचं १७ भास्कराह्वयम् १८ । मत्स्य०कूर्मपु० । हेमाद्रौ तु एतद्वचनमन्यथा पठितम् यथा 'अन्यान्युपपुराणानि मुनिभिः कथितानि तु । आद्यं सनत्कुमारोक्तं नारसिंहमतःपरम् । तृतीयं नारदप्रोक्तं कुमारेण तु भाषितम् । चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् । दुर्वाससोक्तमाश्चर्य्यं नारदोक्तमतःपरम् । कापिलं मानवं चैव तथैवोशनसेरितम् । ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च । माहेश्वरं तथा शाम्बं सौरं सर्वार्थसञ्चयम् पराशरोक्तमप्रवरं तथा भागवताह्वयम् । इदमष्टादशं प्रोक्तं पुराणं कौर्मसंज्ञितम् । चतुर्द्धा संस्थितं पुण्यं संहितानां प्रभेदतः"। अत्र मुद्रितपुस्तके भागवत-

द्वयमिति पाठोऽसङ्गत उपपुराणेषु भागवतद्वयाप्रसिद्धेः । तच्चाग्रे व्यक्तीभविष्यति । पुराणोपपुराणलक्षणं च १२ स्क० भागवते सामान्यत उक्तं यथा "सर्गोऽस्याथ विसर्गश्च वृत्तीरक्षान्तराणि च । वंशो वंशानुचरितं संस्था हेतुरपाश्रयः । दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः । केचित् पञ्चविधं ब्रह्मन् । महदल्पव्यवस्थया" । "अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः । भूतसूक्ष्मेन्द्रियार्थानां सम्भवः सर्ग१ उच्यते । पुरुषानुगृहीतानामेतेषां वासनामयः । विसर्गोऽयं २ समाहारो बीजाद्बीजं चराचरम् । वृत्ति३र्भूतानि भूतानां चराणामचराणि च । कृता तेन नृणां तत्र कामाच्चोदनयापि वा । रक्षा४ऽच्युतावतारेहा विश्वस्यानुयुगे युगे । तिर्य्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः । मन्वन्तरं ५ मनुर्देवा मनुपुत्राः सुरेश्वराः । ऋषयोऽंशावताराश्च हरेः षड्विधमुच्यते । राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः६ । वंशानुचरितं ७ तेषां वृत्तं वंशधराश्च ये । नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः । संस्थेति ८ कविभिः प्रोक्तश्चतुर्द्धास्य स्वभावतः । हेतु९र्जीवोऽस्य सर्गादेरविद्याकर्म्मकारकः । यं चानुशयिनं प्राहुरव्याकृतमुतापरे । व्यतिरेकान्वयौ यस्य जाग्रत्स्वप्नसुषुप्तिषु । मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः १० । पदार्थेषु तथा द्रव्यं तन्मात्रं रूपनामसु । वीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम् । विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम् । योगेन वा तदात्मानं विदेहात्मा निवर्त्तते । एवं लक्षणलक्ष्याणि पुराणानि पुराविदः । मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च" । अत्र क्षुल्लकानीत्युक्तेः उपपुराणस्यापि उक्तदशलक्षणवत्त्व पञ्चलक्षणादिमत्त्वं बोध्यम् । तेषाञ्च संख्यादिनिरूपणम् पञ्चलक्षणवत्त्वञ्च मत्स्यपुराणे उक्तं यथा । "पाद्मे पुराणे या प्रोक्ता नरसिंहोपवर्णना । तच्चाष्टादश साहस्रं नारसिंहमिहोच्यते । नन्दाया यत्र माहात्म्यं कार्त्तिकेयेन वर्ण्यते । नन्दीपुराणं तल्लोके व्याख्यातमिति कीर्त्त्यते । यत्र शाम्बं पुरस्कृत्य भविष्यति कथानकम् । प्रोच्यते तत्पुनर्लोके शाम्बमेव मुनिव्रताः ! । एवमादित्यसंज्ञञ्च तत्रैव परिपठ्यते" इत्युपक्रम्य अष्टादशभ्यस्तु पृथक् पुराणं यत् प्रदृश्यते । विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम् । पञ्चाङ्गवत् पुराणं स्यादाख्यानमितरत् स्मृतम् । सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितञ्चेति पुराणं पञ्चलक्षणम् । ब्रह्मविष्ण्वर्करुद्राणां माहात्म्यं भुवनस्य च । संहारं प्रदृश्येत पुराणे पञ्चवर्णिता । धर्म्मश्चार्थश्च कामश्च मोक्षश्च परिकीर्त्त्यते । सर्व्वेष्वपि पुराणेषु तद्विरुद्धे च यत्फलम् । सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः । राजसेषु कल्पेषु च माहात्म्यं ब्रह्मणो विदुः । तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च । सङ्कीर्णेषु सरस्वत्याः पितॄणाञ्च निगद्यते" । "हेमाद्रौ कालिकापुरा० अस्य किंमूलकत्वमिति कथनप्रस्तावे नारसिंहस्य पाद्ममूलकत्वमुक्त्वा "इदम् यत् कालिकाख्यन्तु मूलं भागवतन्तु तत्" इत्युक्तं तत्र भागवतं तत्तस्य कालिकाख्यस्य मूलमित्यर्थः । भागवतशब्देनात्र देवीभागवतं ग्राह्यं तयोरुभयोरपि कालिकादेवीमाहात्म्यकीर्त्तनेन एकदेवताप्रतिपादकत्वेन एकमूलत्वौचित्यात् । न तु वैष्णवभागवतं तस्य विष्णुदेवताकत्वे नैकदेवताकत्वाभावेन तन्मूलत्वासम्भवात् । एवञ्च देवीभागवतमेव महापुराणमिति केचित् । विष्णुभागवतमेव महापुराणमिति तु बहवः । तत्र हेमाद्रौ मत्स्यपुरा० "वृत्रासुरवधोपेतं तद्भागवतमुच्यते । सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः । तद्वृत्तान्तोद्भवं लोके तद्भागवतमुच्यते । लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् । पौर्णमास्यां प्रोष्ठपद्यां स याति परमं पदम् । अष्टादश सहस्राणि पुराणं तत् प्रकीर्त्तितम्" इति महापुराणान्तर्गतभागवतलक्षणमुक्तं वैष्णवे भागवते तु सारस्वतकल्पोद्भवनरादिकथाऽभावात् तल्लक्षणाऽभावेन नैतत् महापुराणं किन्तु उपपुराणम् । देवीभागवतं तु सारस्वतकल्पोद्भवनरादिकथावर्णनेन उक्तलक्षणवत्त्वेन महापुराणमिति पूर्वेषामाशयः । देवीभागवतं विष्णुभागवतञ्चोभयमपि अष्टादशसाहस्रं द्वादशस्कन्धयुक्तञ्चेति द्वयोर्महापुराणत्वसंशये विष्णुभागवतस्य तत्त्वे बहूनां विवादात् तन्निर्णयाय देवीभागवतटीकायां यथा व्यवस्थापितं तत् प्रदर्श्यते "तत्र तावत् पुराणेषु भागवतद्वयं प्रसिद्धमेकं महापुराणान्तर्गतमपरमुपपुराणान्तर्गतं लोकेऽप्युपलभ्यो द्वयोर्देवीभागवतनाम्ना विष्णुभागवतनाम्ना चास्त्येव तत्रैकं महापुराणान्तर्गतमन्यदुपपुराणान्तर्गतमित्यपि निर्विवादमेव । तथापि किन्देवीभागवतं महापुराणमन्यदुपपुराणमथ वा विष्णुभागवतं महापुराणमन्यदुपपुराणमिति संशये केचिद्विष्णुभागवतमेव महापुराणमिति वदन्ति केचिद्देवीभागवतमेव महापुराणमिति वदन्ति । तत्र प्रथमपक्षैकदेशिनः केचिदुपपुराणेषु द्वितीयभागवतं नास्त्येव महापुराणेष्वेवैकं भागवतं प्रसिद्धं तच्च विष्णु

तेषु सारस्वतपदेन पाद्मस्य ग्रहणं न स्यादिति वाच्यम्
प्रभासखण्डे त्रिंशत्कल्पेषु विष्णुजकल्पाग्निकल्पस्कुपु-
ङ्कल्पानां ग्रहणेऽपि तेषां कल्पानां यथा मात्स्याग्नि-
माध्याये न ग्रहणं तथा पाद्मस्यापि न ग्रहणमित्यस्य तु-
ल्यत्वात्। यदि तेषां पर्य्यायत्वेन कुत्रचिदन्तर्भावः
क्रियते तर्ह्यस्यापि कुत्रचिदन्तर्भावोऽस्तु अतएव विष्णुभाग
वतस्य प्रबन्धटीकाकारेण "पितृकल्पे एव पूर्वार्धान्ते पद्मस्यो-
द्भवात् पितृकल्पपदेन पाद्मत्वग्रहो वेदितव्यः" इत्युक्तम्
पुराणकथनप्रस्तावे सारस्वतकल्पपाद्मकल्पयोः पृथक्कर-
णेन सारस्वतपदेन पाद्मस्य सर्व्वथा न ग्रहणम्। वस्तुतस्तु
त्रिंशत्कल्पा ब्रह्मणस्त्रिंशत्तिथ्यात्मकाः त्रिंशत्तिथिषु
प्रतिपदादिषूत्पद्यन्ते "भवः भुवः स्तवः भूर्भुवः स्तव इत्या-
दयस्त्रिंशत्कल्पाः "पाद्मादयश्च पुराणोक्ता दिनकल्पा
ब्रह्मणः प्रतिदिवसेषूत्पद्यन्ते इति दिनकल्पतिथिकल्पानां
सुतरां भेदात् तिथिकल्पेषु दिनकल्पानां पाद्मादीनां न
गृहणमिति सिद्धान्तः। यत्तु विष्णुभागवतस्यारम्भतः
पाद्मकल्पकथाश्रयत्वेऽपि कृष्णजन्मखण्डस्यैव सारस्वत-
कल्पभवत्वेन तस्य च दशमस्कन्धे सत्त्वात् "सारस्वतस्य
कल्पस्य मध्ये ये स्युर्नरामराः इति" वचनस्य विष्णुभागवतं
विषयोऽस्त्वित्याङ्स्तदसत् कृष्णजन्मखण्डस्य सारस्वतकल्प-
भवत्वप्रतिपादकानां वचनानां निर्मूलत्वात् समूलत्वे-
ऽपि यस्मिन् पुराणे यस्य कल्पस्य प्रथमतः प्रतिपा-
दनं तत्कल्पप्रतिपादकमेव तत्पुराणमिति नियमः।
सर्व्वपुराणे तथा दृष्टत्वात् तथा च कृष्णजन्मखण्डस्य
दशमस्कन्धे विद्यमानत्वेऽपि प्रथमतस्तत्कथाया अभावात्
पाद्मकल्पकथायाः प्रथमतो विद्यमानत्वस्य स्वेनैवोक्तत्वाच्च
न "सारस्वतस्य कल्पस्येति" वचनस्य विष्णुभागवतं विषयः।
किं च कृष्णजन्मखण्डस्य यथा दशमस्कन्धे कथनं तथा
सर्व्वपुराणेषु तत्कथनं वर्त्तत एवेति सर्व्वपुराणानां तद्वचन-
विषयत्वं स्यात्तथा च सर्व्वपुराणानि भागवतपदवाच्यानि-
स्युस्तस्मात् सारस्वतकल्पस्य यत्र प्रथमतः प्रतिपादनं स
एव तद्वचनस्य विषयो वक्तव्यस्तादृशं च देवीभागवतमेवा-
स्तीति देवीभागवतमेव तद्विषयो वक्तव्य इति। किं च शि-
वपुराणे उमासंहितायाम् "ब्रह्मणा संस्तुता सेयं मधुकैटभना-
शने। महाविद्या जगद्धात्री सर्व्वविद्याधिदेवता। द्वादश्यां
फाल्गुनस्यैव शुक्लायां समभून्नृपेति" वचनात् फाल्गुनशुक्ल
द्वादश्यां देव्या उद्भवस्तद्दिन एव च सारस्वतकल्पोद्भवस्तदुक्तं
हेमाद्रौ" कल्पश्राद्धप्रकरणे नागरखण्डे "सारस्वतस्तु द्वादश्यां
शुक्लायां फाल्गुनस्य चेति"। तथा च सरस्वत्याः कल्प इत्यर्थ-
कस्य "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः" इति वचनस्य
सर्व्वथा देवीभागवतमेव विषयो न विष्णुभागवतमिति बोध्यं
किं च तस्य ग्रहणे तस्य हरिमाहात्म्यप्रतिपादकत्वात्
तदाश्रितकल्पस्य सात्त्विकत्वमेव यास्यति 'सात्त्विकेष्वथ कल्पेषु
माहात्म्यमधिकं हरेरिति' वचनात्। ततश्च "संकीर्णेषु सर-
स्वत्या" इति वचनेन सारस्वतकल्प इति नाम्ना च परमहंस
सामर्थ्येन कर्त्तव्या स्यात् अतो विष्णुभागवतं विहाय
देवीभागवतमेवास्य वचनस्य विषयोऽनिच्छतापि वक्तव्यस्तस्मात्
सारस्वतस्य कल्पस्येति वचनात् देवीभागवतमेव महापुराणम्
अस्ति चात्र सरस्वत्याविर्भावप्रतिपादकं वचनं तदुक्तं दे-
वीभागवते प्रथमस्कन्धे "तस्यास्तु सात्त्विकी शक्ती राजसी ताम-
सी तथा। महालक्ष्मीः सरस्वती महाकालीति ताः स्त्रियः।
तासां तिसृणां शक्तीनां देहाङ्गीकारलक्षणः। सृष्ट्यर्थञ्च
समाख्यातः सर्गः शास्त्रविशारदैरिति"" "अम्बरीष शुकप्रोक्तं
नित्यं भागवतं शृणु" इति वचनमपि शुकाय प्रोक्तमिति व्युत्-
पत्त्या देवीभागवतपरमपि संगच्छते। भवति हि देवीभागवतं
शुकायैव प्रोक्तं व्यासेनेति। किं च अष्टादशपुराणानि कृत्वा
सत्यवतीसुतः। भारताख्यानमखिलं चक्रे तदुपबृंहणमिति"
मात्स्यवचनमपि देवीभागवतस्यैव महापुराणत्वं बोध-
यति अष्टादशपुराणोत्तरं भारतस्य जातत्वात् भारतो-
त्तरं च विष्णुभागवतस्य जातत्वात् भारतोत्तरकालं निर्व्वि-
ण्णो व्यासश्चकारेति विष्णुभागवते १स्क० एवोक्तत्वात्। ननु
"वेदशाखाः पुराणानि वेदान्तभारतं तथा। कृत्वा संमोह
संमूढोऽभवं राजन्मनस्यपीति" देवीभागवते तृतीयस्कन्धे ए-
वोक्तत्वात् तत्रापि स विरोधस्तदवस्थ एवेति चेन्न मन्मते
तदानीं ग्रन्थोनैव जातः किन्तु जनमेजयं प्रति एवं वक्ष्या-
मीति ज्ञानचक्षुषा ज्ञात्वा भारतात् पूर्व्वमेव देवीभागवतं
कृतमित्यर्थस्य कल्पनात्। त्वन्मते तु तथा कल्पयितुं न शक्यते
चतुःश्लोक्या भागवतोपदेशस्य जायमानत्वात् उपदेशात्
पूर्व्वं तज्ज्ञानाभावस्यावश्यं कल्पनीयत्वात् यदि तत्रापि
पूर्व्वं व्यासस्य ज्ञानमस्तीति स्वीक्रियते तदा वक्ष्यमाणः स-
र्वोऽप्यर्थवादः स्यात् ततश्च ग्रन्थस्वारस्यभङ्गप्रसङ्ग इत्यास्तां
तावत्। वस्तुतस्तु वेदशाखाः पुराणानीति पाठोऽसङ्गत इति
वक्ष्यते तृतीयस्कन्धे तदा न कोऽपि विरोधः। यत्तु पाद्मे
भागवतमाहात्म्ये श्रीमद्भागवतकथाश्रवणाय समागता-
नां परिगणनप्रसङ्गे "वेदान्तानि च वेदाश्च मन्त्रास्त-
न्त्राणि संहिताः। दश सप्त पुराणानि षट् शास्त्राणि समाय

षु:" इत्युक्तं तत्र व्यासकृतपुराणानामष्टादशत्वादष्टादशेति वक्तव्ये सप्तदशत्वोक्तिः श्रीमद्भागवतस्याष्टादशत्वक्रमयति तस्याष्टादशान्तर्गतत्वे देवीभागवतस्याष्टादशान्तर्गतत्वे वा अष्टादशानां श्रोतुमागतानां पुराणानां अष्टादशत्वानुक्तेर्निर्बीजत्वप्रसङ्गात् एवं पाद्मे "दश सप्त पुराणानि कृत्वा सत्यवतीसुतः। नाप्तवानमनसा तोषं भारतेनापि भामिनि"। चकार संहितामेतां श्रीमद्भागवतीं परामिति" सप्तदशत्वोक्तिः श्रीमद्भागवतस्यैव एतां संहितामिति निर्दिष्टस्याष्टादशत्वक्रमयति देवीभागवतस्याष्टादशत्वेऽष्टादशपुराणानीत्यनुक्तेर्निर्बीजत्वप्रसङ्गादित्याहु स्तदसत् तेषामेव वचनैर्विष्णुभागवतस्याष्टादशपुराणान्तर्गतत्वं न सिद्ध्यति किन्तु देवीभागवतस्यैवेति वार्धकिकत्वं कुर्वाणो मूलमेव विनाशितवानिति न्याय आगतः। तथा हि भारतं व्यासमुखाच्छ्रुत्वा तत्र संहितानः कौष्टुकिर्मार्कण्डेयं प्रत्यागत्य सन्देहं पृष्टवान् तस्मै मार्कण्डेयो मार्कण्डेयपुराणमुक्तवान् तदुक्तं मार्कण्डेयपुराणे "तदिदं भारताख्यानं बह्वर्थं श्रुतिविस्तरम्। तत्त्वतो ज्ञातुकामोऽहं भगवन्तमुपस्थितः" इति तथा च भारतोत्तरं मार्कण्डेयपुराणमभवत् तथैव त्वदुक्तरीत्यैव विष्णुभागवतमपि तथा च भारतात् पूर्वं षोड्श पुराणान्येव सिद्धानि तथा च पूर्वोक्तवचनमध्ये षोडशेत्येव वक्तव्ये सप्तदशेत्युक्तत्वात् देवीभागवतमेव महापुराणमन्यथा सप्तदशत्वपूर्त्तिर्न स्यात् तस्मात् तद्वचनप्रामाण्याद्देवीभागवतमेव महापुराणमिति सिद्ध्यति न तु विष्णुभागवतं, भारतात् पूर्वं सप्तदश मदीयभागवतसहितानि मार्कण्डेयमष्टादशमुभयमतसिद्धमेव विष्णुभागवतस्य भारतोत्तरं जायमानत्वेन तन्मध्ये तस्यावस्थानस्थलाभावादित्येवं स्थापनेनापि दोषाभावादिति सुधियो विभावयन्तु। यत्तु पाद्मे "वैष्णवं नारदीयञ्च तथा भागवतं शुभम्। गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने॥ सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै" इत्युक्त्वा भागवतस्य सात्त्विकत्वमुक्तं सात्त्विकेषु पुराणेष्विति कौर्मोक्त्या च सात्त्विकपुराणानां विष्णुपरत्वमुक्तम् अतो विष्णुपरमेव भागवतमष्टादशपुराणान्तर्गतं न तु देवीभागवतमिति अपि च स्कान्दे प्रभासखण्डे "चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः। अष्टादशपुराणेषु शेषेषु भगवान् भवः" इत्युक्तं स्कान्दे सौरसंहितायां च 'कथ्यते दशभिर्विप्राः! पुराणैः परमेश्वरः। चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्त्तितः। एकेनाग्निस्तथैकेन भगवांश्चण्डभास्करः" इत्युक्तमतोऽपि विष्णुभागवतमष्टादशान्तर्गतमुत्वन्यदित्याहु स्तदसत् त्वन्मते मात्स्योक्तसात्त्विकराजसतामससंकीर्णपुराणेषु मध्ये त्रयाणां व्यवस्था पूर्ववचनैस्त्वयोक्ता संकीर्णपुराणानान्तु नोक्ता तेषाङ्केषु पुराणेष्वन्तर्भाव इति वद करिष्यामि कुत्रचिदिति चेत् मन्मतेऽपि श्रीभगवत्या विष्णुशक्तित्वाभिमानेन "विष्णुमन्त्राधिष्ठात्रीं देवतां वेदमातो दुर्गां दुर्बोधध्वान्तभानुं गुरुं चेति श्रीप्रमदीपिकोक्तप्रकारेण विष्णुमन्त्राणां दुर्गाया अधिष्ठातृत्वेन तयोरैक्याद्वा तत्प्रतिपादकभागवतस्य वैष्णवेष्वेवान्तर्भावात् अतएव "हरिर्द्वाभ्यां रविर्द्वाभ्यां द्वाभ्यां चण्डीविनायकौ। द्वाभ्यां ब्रह्मा समाख्यातः शेषेषु भगवान् शिवः इति वचनं सङ्गच्छते" वस्तुतस्तु द्वयोरपि भागवतयोरस्मन्मते प्रमाणत्वात् विष्णुभागवतपक्षपातिनां वचनानामस्माकं विरोधाभावेन तत्खापने प्रयोजनाभावएव। तथा च नारदीयादिपुराणनते श्रीविष्णुभागवतं महापुराणन्तद्वचनानि प्रसिद्धान्येवेति न लिखितानि देवीभागवतं तु तन्मते उपपुराणम्। शैवमात्स्यपुराणादिमते तु देवीभागवतं महापुराणं विष्णुभागवतमर्थादुपपुराणमिति सिद्धम्"।

वृहद्धा० ९६ अ० महापुराणप्रतिपाद्यविषयवर्णने "श्रीब्रह्मोवाच, मारीचे! शृणु वक्ष्यामि वेदव्यासेन यत् कृतम्। श्रीमद्भागवतं नाम पुराणं ब्रह्मसम्मितम्। तदष्टादशसाहस्रं कीर्त्तितं पापनाशनम्। सुरपादपरूपोऽयं स्कन्धैर्द्वादशभिर्युतः। भगवानेव विप्रेन्द्र! विश्वरूपी समीरितः। तत्र तु प्रथमे स्कन्धे सूतर्षीणां समागमः। व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च। पारीक्षितमुपाख्यानमितीदं समुदाहृतम्। परीक्षिच्छुकसंवादे सृतिद्वयनिरूपणम्। ब्रह्मनारदसंवादेऽवतारचरिताहृतम्। पुराणलक्षणं चैव सृष्टिकारणसम्भवः। द्वितीयोऽयं समुदितः स्कन्धो व्यासेन धीमता। चरितं विदुरस्याथ मैत्रेयेणास्य सङ्गमः। सृष्टिप्रकरणं पश्चाद्ब्रह्मणः परमात्मनः। कापिलं साङ्ख्यमप्यत्र तृतीयोऽयमुदाहृतः। सत्याश्चरितमादौ तु ध्रुवस्य चरितं ततः। पृथोः पुण्यसमाख्यानं ततः प्राचीनबर्हिषः। इत्येष तुर्य्यो गदितो विसर्गे स्कन्ध उत्तमः। प्रियव्रतस्य चरितं तद्वंशानाञ्च पुण्यदम्। ब्रह्माण्डान्तर्गतानाञ्च लोकानां वर्णनन्ततः। नरकस्थितिरित्येव संस्थाने पञ्चमो मतः। अजामिलस्य चरितं दक्षसृष्टिनिरूपणम्। वृत्राख्यानं ततः पश्चान्मरुतां जन्म पुण्यदम्। षष्ठोऽयमुदितः स्कन्धो व्यासेन परिपोषणे। प्रह्लादचरितं पुण्यं

वर्णाश्रमनिरूपणम् । सप्तमो गदितो वत्स ! वासनाकर्मकीर्त्तने । गजेन्द्रमोक्षणाख्यानं मन्वन्तरनिरूपणम् । समुद्रमथनञ्चैव बलिवैभवबन्धनम् । मत्स्यावतारचरितमष्टमोऽयं प्रकीर्त्तितः । सूर्यवंशसमाख्यानं सोमवंशनिरूपणम् । वंश्यानुचरिते प्रोक्तो नवमोऽयं महामते !। कृष्णस्य बालचरितं कौमारञ्च व्रजस्थितिः । कैशोरं मथुरास्थानं यौवनं द्वारकास्थितिः । भूभारहरणञ्चात्र निरोधे दशमः स्मृतः । नारदेन तु संवादो वसुदेवस्य कीर्त्तितः । यदोश्च दत्तात्रेयेण श्रीकृष्णेनोद्धवस्य च । यादवानां मिथोऽन्तश्च मुक्ताविक दशः स्मृतः । भविष्यकलिनिर्देशो मोक्षो राज्ञः परीक्षितः । वेदशाखाप्रणयनं मार्कण्डेयतपः स्मृतम् । सौरी विभूतिरुदिता सात्वती च ततः परम्" । इत्युक्तेः विष्णुभागवत एव तेषां पदार्थानां सत्त्वात् महापुराणत्वं देवीभागवते तदभावात् न महापुराणत्वम् । एवञ्च मतभेदेन कस्यचित् पुराणत्वं कस्यचिदुपपुराणत्वं तच्च कल्पभेदादविरुद्धम् । एतेन विष्णुभागवतस्य वोपदेवत्वशङ्का निर्मूलैव । वोपदेवेन "चतुरेण चतुर्वर्गचिन्तामणि वणिज्यया हेमाद्रिर्वोपदेवेन मुक्ताफलमचीकरत्" इति मुक्ताफलग्रन्थे स्वयं लिखितत्वेन तस्य हेमाद्रिसभासदत्वप्रतीतेः हेमाद्रौ च नानास्थानेषु विष्णुभागवतवचनस्य प्रमाणत्वेन धृतत्वेन न तत्कृतत्वमिति प्रतिभाति ।

**उपपुष्पिका** स्त्री उपगता पुष्पमिव विकाशभावम् अत्या० स० संज्ञायां कन् टापि अत इत्त्वम् । जृम्भायाम् (हाइतोला) हारा० तत्र हि मुखस्य पुष्पस्येव विकाशभावात् तथात्वम् ।

**उपपृच्** त्रि० उप+पृच्—क्विप् । उपरि सामीप्येन संपृक्ते "विपृक्वाहिः शयत उपपृक् पृथिव्याः" ऋ० १,३२,५,

**उपपौर्णमास(सि)** अव्य० सामीप्ये अव्ययी० वा अच् समा०। पौर्णमास्याः समीपे ।

**उपप्रदान** न० उप उपाधौ तेन प्रदानम् । १उत्कोचे स्वकार्यसाधनार्थं तत्प्रतिबन्धकेभ्योराजभृत्यादिभ्योदाने (घुसदेओया) २सम्भ्यर्थं भूम्यादेर्दाने च हेम० "तस्योपप्रदानेन सन्धिरेव युक्तः" हितो० 'उपप्रदानं लिप्सूनामेकं ह्याकर्षणौषधम्" कठस० "साम चोपप्रदानं च भेदोदण्डश्च तत्त्वतः" रामा० । प्रलोभनार्थं ३द्रव्यदाने "उपप्रदानैर्मार्जारोऽहितकृत् प्रार्थ्यते नरैः पञ्चत०। समीपे दाने च ।

**उपप्रलोभन** न० उप+प्र+लुभ—ल्युट् । १सम्यक्प्रलोभने "असुष्य चोपप्रलोभनाय" दशकु०। करणे ल्युट् । २सम्यक्प्रलोभनसाधने द्रव्ये "उच्चावचानुपप्रलोभनानि" दशकु० ।

**उपप्लव** पु० उप+प्लु—अप् । गगनादुल्कापातादिरूपे १उपद्रवे, "उपप्लवाय लोकानां धूमकेतुरिवोत्थितः" कुमा०। "कद-भिहित" इत्याद्युक्तेः २उत्पातसूचके वाय्वादौ "त्वामासारप्रशमितवनोपप्लवं साधु मूर्द्ध्ना" मेघ० । "कच्चिन्न वाय्वादिरुपप्लवोवः" रघुः ३भये "नृपा इवोपप्लविनः परेभ्यः" रघुः "उपप्लविनो भयवन्तः" मल्लि० । ४विघ्ने 'जीवन् पुनः शश्वदुपप्लवेभ्यः' रघुः। उपप्लवेभ्यः विघ्नेभ्यः' मल्लि० । ५औपसर्गिकात्यन्तमरकपीड़ने ६राजविप्लवे "दुर्भिक्षे चाप्युपप्लवे" कूर्म्म पु० । "उपप्लवे राजविप्लवे औपसर्गिकात्यन्तमरकपीड़ने" शु० त० रघु०। ७उपरोधे वेष्टने "अमेघोपप्लवे यस्य शक्रचापतडिद्गुणान्" सुश्रु० । ८चन्द्रसूर्य्ययोर्ग्रहणे "उपप्लवे चन्द्रमसोरवेश्च" स्मृतिः । ९विपत्तौ "अथ मदनवधूरुपप्लवान्तम्" कुमा० । १०समीपे प्लवने गतौ च । 'तद्भीममत्स्यार्य्यजनं युद्धमासीदुपप्लवे ०भा०स० २२अ० । 'कल्पनापोढ़मभ्रान्तं प्रत्यक्षं निर्विकल्पकम् । विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः इति बौद्धमतसिद्धे ११विकल्पे स च संसारिणां सविकल्पज्ञानमात्रेऽस्ति ईश्वरज्ञानं तु निरुपप्लवम् । उपप्लवति लोकानुपद्रवति उप-प्लु-कर्त्तरि अच् ।१२राहौ मेदि० । "केतूपप्लवभौममन्दगतयः षष्ठे तृतीये शुभाः" ज्यो० त० ।

**उपप्लव्य** न० उप+प्लु—आधारे बा० यत् ।१विराटनगरसमीपस्थे पुरभेदे । "उपप्लव्ये निविष्टेषु पाण्डवेषु जिगीषया" "आगम्य हास्तिनपुरादुपप्लव्यमरिन्दम" भा० आ० १अ० "ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः ॥ उपप्लव्यं विराटस्य समपद्यन्त सर्व्वशः" भा० वि० ७२अ० । "विराटनगरसमीपस्थं नगरान्तरम्" नील० । "राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य सञ्जयः। उपप्लव्यं ययौ शीघ्रं पाण्डवानमितौजसः" भा० उ० २२अ०। कर्मणि यत् ।२उपप्लवनीये त्रि०। आवश्यके तु ण्यत् । उपप्लाव्य अवश्यपप्लवनीये त्रि०।

**उपप्लुत** त्रि० उप+प्लु—क्त । उपद्रवयुक्ते "उपप्लुतं पातुमदो मदोद्धतैः" माघः ।

**उपबन्ध** पु० उप+बन्ध—घञ् । १बन्धनदार्ढ्यार्थं तत्समीपे वस्त्वन्तरबन्धने । उपमितः बन्धेन अवा० स०। २पद्मासनरूपबन्धसदृशे अवान्तरासनभेदे ३संख्याविशेषेण संबन्धप्रतिपादने च 'नोदनागुणेषु च प्रकृत्युपबन्धाभ्याम्" कात्या० १,८,२२, "सोमस्य प्रकृप्तेः उपबन्धाच्च" कर्कः अत्र उपबन्धश्च संख्याविशेषेण सम्बन्धप्रतिपादनं तत्संख्या च शत० ब्रा० ३,३,३,१८, दर्शिता यथा 'अथ यदपामन्ते

क्रीणाति रसो वा आपः स रसमेवैतत् क्रीणात्यथ यद्धिरण्यं भवति स शुक्रमेवैतत् क्रीणात्यथ यद्वासो भवति सत्वचसमेवैतत् क्रीणात्यथ यदजा भवति स तपसमेवैतत् क्रीणात्यथ यद्धेनुर्भवति सा शिरमेवैतत् क्रीणात्यथ यन्मिथुनौ भवतः स मिथुनमेवैतत् क्रीणाति तं वै दशभिरेव क्रीणीयाद्दशाक्षरा वै विराड्वैराजः सोमस्तस्माद्दशभिरेव क्रीणीयाद्दशभिः" ।

**उपबर्ह** पु० उपबर्ह्यते आस्तीर्यते उप+बर्ह-स्तृतौ कर्मणि घञ् । (बालिश) १उपधाने बर्ह-हिंसायाम् भावे घञ् । २उपपीड़ने च ।

**उपबर्हण** न० उपबर्ह्यतेकर्मणि ल्युट् । १उपधाने "पुराणा यवाः पुराण्यासन्दी सोपबर्हणेषान्वाहिष्टा दक्षिणा" शत० ब्रा० १३,८४,१०,बर्ह हिंसायां भावे ल्युट् ।२उपपोड़ने च

**उपबहु** त्रि० उपगता बहवो यस्य संख्यात्वेऽपि पर्य्युदासात् न डच् । बहुसंख्यासमीपवर्त्तिनि ।

**उपबाधा** स्त्री उप+बाध-अ । संपीडने ।

**उपबाहु** पु०उपगतो बाहुम् अत्या० । १बाह्वोः समीपवर्त्तिन्यङ्गभेदे ततः इदमर्थे बाह्वादि० इञ् । औपबाहवि तत्सम्बन्धिनि त्रि० । सामीप्यादौ अव्ययी० । २बाहुसामीप्यादौ अव्य० ।

**उपब्द** पु०उपगतःशब्दः प्रा०स० पृषो० । "सोमाभिषवशब्दे "ग्रावाणो घ्नन्तु रक्षस उपब्दैः" ऋ०७,१०४,१७, "उपब्दैः अभिषवशब्दैः" भा०

**उपब्दि** पु०उप+शब्द-इन् पृषो० । श्रोतुमर्हे शब्दे "न योरुपब्दिरश्व्यः" ऋ०१,७४,७, "उपब्दिः श्रवणार्हः" भा० "मरुतां शृण्व आयतामुपब्दिः" ऋ०१,१६९,७, ततोऽस्त्यर्थे मतुप् । उपब्दिमत् श्रोतुं योग्ये शब्दयुक्ते "सशब्दमब्दिमत्" तैत्ति० "उच्चैर्घोष उपब्दिमान् त्वतस्व रूपम्" ऐत०ब्रा० । [सम्यग् भञ्जने २द्वैधीभावे च ।

**उपभङ्ग** पु० उप+भन्ज घञ् कुत्वम् । १युद्धादितः पलायने

**उपभुक्त** त्रि० उप+भुज-क्त । कृतोपभोगे वस्तुनि

**उपभुक्ति** स्त्री उप+भुज क्तिन् । उपभोगे

**उपभूषण** न० उपमितं भूषणेन अत्या०स० । घण्टाचामरादौ "घण्टाचामरकुम्भादिपात्रोपकरणादिकम् । तद्भूषणान्तरेदद्याद्यस्मात्तदुपभूषणम्" पु० । उपचारशब्दे१२०३पृ०दृश्यम् ।

**उपभृत्** स्त्री उप+भृ-आधारे क्विप् । आश्वत्थे यज्ञाङ्गपात्रभेदे स्रुचि "आश्वत्थ्युपभृत्" कात्या०१,३,३५,उपभृत्संज्ञका स्रुक् आश्वत्थी" कर्कः "पाणिभ्यां जुहूं परिगृह्योपभृत्यासादनम्" ११०,९"सव्यउपभृत्" आश्व०गृ० ४,३,३ ।

**उपभोग** पु० उप+भुज-घञ् कुत्वम् । विषयसेवाजन्यसुखभेदे "स्त्रीणां स्वपतिदायस्तु भोगफलः स्मृतः" दा०भा०स्मृ० । "न जातु कामः कामानामुपभोगेन शाम्यति" मनुः भारतञ्च । "आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा" । "इह कर्मोपभोगाय तैः संसरति सोऽवशः" या०स्मृ० । "प्रियोपभोगचिह्नेषु पौरोभाग्यमिवाचरत्" कृत्वोपभोगोत्सुकयेव लक्ष्म्या" रघुः भोगश्च विषयसंसर्गजन्यसुखभेदः । अधिकं भोगशब्दे वक्ष्यते । ततः अस्त्यर्थे इनि । उपभोगिन् तद्वति त्रि० "ब्राह्मणांश्च हनिष्यन्ति ब्राह्मणस्वोपभोगिनः । भा० व० १९० अ० स्त्रियां ङीप् ।।

**उपभोग्य** उप+भुज-ण्यत् अनन्नार्थत्वे कुत्वम् । उपभोगयोग्ये वस्तुनि अन्ने तु न कुत्वम् । उपभोज्यमित्येव । "असूत सा नागवधूपभोग्यम्" कुमा० । "किञ्चित्कालोपभोग्यानि यौवनानि धनानि च" पञ्चत० । "विविधान्यन्नपानानि पुरुषा येऽनुयाचिनः । ते वै स्वपोपभोज्यानि ब्राह्मणानां ददुश्च ह" भा० आश्व० ८५अ० ।

**उपभोजिन्** त्रि० उ+भुज-णिनि । उपभोगकारके । "निवृत्तावारशौचेषु परपाकोपभोजिषु" "उच्छिन्नबलिभिक्षेषु भिन्नकांस्योपभोजिषु" सुश्रु० ।

**उपम** त्रि० उपमीयते उप+मा-घञर्थे क । १उपमेये । "पदं यद्विष्णोरुपमं निधायि" ऋ०५,३,३ । "उपममुपमेयमिव" भा० । उपमीयते समीपे क्षिप्यते मि-बा० ड । २अन्तिके निरु० "यत् केतुमुपमं समत्सु" ऋ०७,३०,३ । "उपममन्तिकम्" भा० । ३अन्तिकस्थे त्रि० । दिवश्चिदन्ता उपमा" ऋ० १०,८,१ । "उपमान् समीपस्थान्" भा० "राजासि कृष्टेरुपमस्य वव्रेः" ऋ०४, ४२, १ ।

**उपमद्गु** पु० "अक्रूरःसुषुवे तस्मात् श्वफल्काद्भूरिदक्षिणः । उपमद्गुस्तथा मद्गुर्मेदरश्चारिमेजयः" हरिवं० ३५ अ० इत्युक्ते श्वफल्कपुत्रे अक्रूरानुजे यदुवंश्ये क्षत्रियभेदे ।

**उपमन्त्रण** न० उप+मन्त्र-ल्युट् । आमन्त्रणे कर्त्तव्यकरणाय प्रार्थनापूर्व्वकप्रवर्त्तनारूपे व्यापारभेदे । "भासनोपसम्भाषणज्ञानयत्नविमत्युपमन्त्रणेषु वदः" पा० । "उपमन्त्रणमुपच्छन्दनम्" सि० कौ० । २उपच्छन्दने । (खोसामदी) ततः अस्त्यर्थे इनि उपमन्त्रिन् । (खोसामुदिया) उपच्छन्दनकारके नर्मसचिवे । "हसनामुपमन्त्रिणः" ऋ० ८,११२,४ । "उपमन्त्रिणः उपमन्त्र-

वसन्तो नर्म्मसचिवा हसनामुपहासयुक्तां वाचमिच्छन्ति" भा०

**उपमन्थनी** स्त्री उपमथ्यतेऽनया उप+मन्थ–करणे ल्युट् ङीप् । अग्निमन्थनसाधनद्रव्ये "चतुरौदुम्बरो भवति औदुम्बरश्चमस औदुम्बर, स्रुव औदुम्बर इध्म औदुम्बर्य्यौ उपमन्थन्यौ" शत० ब्रा० १४, ८, ३, २१ ।

**उपमन्यु** पु० आयोदधौम्यशिष्ये ऋषिभेदे । "धौम्यो नामायोदस्तस्य त्रयः शिष्या बभूवुरुपमन्युरारुणिर्वेदश्चेति" भा० ३अ० तच्चरितञ्च तत्र वर्णितं यथा ।

"अथापरः शिष्यस्तस्यैवायोदधौम्यस्योपमन्युर्नाम । तं चोपाध्यायः प्रेषयामास वत्सोपमन्यो ! गा रक्षस्वेति । स उपाध्यायवचनादरक्षद्गाः स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायः पीवानमपश्यदुवाच चैनं वत्सोपमन्यो ! केन वृत्तिं कल्पयसि पीवानसि दृढमिति । स उपाध्यायं प्रत्युवाच भो भैक्ष्येण वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच । मय्यनिवेद्य भैक्ष्यं नोपयोक्तव्यमिति । स तथेत्युक्तो भैक्ष्यं चरित्वोपाध्यायाय न्यवेदयत् । स तस्मादुपाध्यायः सर्व्वमेव भैक्ष्यमगृह्णात् । स तथेत्युक्तः पुनररक्षद्गाः अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो ! सर्व्वमशेषतस्ते भैक्ष्यं गृह्णामि केनेदानीं वृत्तिं कल्पयसीति । स एवमुक्त उपाध्यायं प्रत्युवाच भगवते निवेद्य पूर्व्वमपरं चरामि तेन वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच । नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं करोषि इत्येवं वर्त्तमानो लुब्धोऽसीति । स तथेत्युक्त्वा गा अरक्षत् रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच वत्सोपमन्यो ! अहं ते सर्व्वं भैक्ष्यं गृह्णामि न चान्यच्चरसि पीवानसि भृशं केन वृत्तिं कल्पयसीति । स एवमुक्तस्तमुपाध्यायं प्रत्युवाच भो एतासां गवां पयसा वृत्तिं कल्पयामीति तमुवाचोपाध्यायो नैतन्न्याय्यं पय उपयोक्तुं भवतो मया नाभ्यनुज्ञातमिति । स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायः पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो ! भैक्ष्यं नाश्नासि न चान्यच्चरसि पयो न पिबसि पीवानसि भृशं केनेदानीं वृत्तिं कल्पयसीति । स एवमुक्त उपाध्यायं प्रत्युवाच भो फेनं पिबामि यमिमे वत्सा मातॄणां स्तनात् पिबन्त उद्गिरन्ति । तमुपाध्यायः प्रत्युवाच एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्त्तमानः फेनमपि भवान्न पातुमर्हतीति स तथेति प्रतिश्रुत्य पुनररक्षद्गाः । तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति न चान्यच्चरति पयो न पिबति फेनं नोपयुङ्क्ते स कदाचिदरण्ये क्षुधार्त्तोऽर्कपत्राण्यभक्षयत् । स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धो बभूव ततः सोऽन्धोऽपि चङ्क्रम्यमाणः कूपे पपात । अथ तस्मिन्ननागच्छति सूर्य्ये चास्ताचलावलम्बिनि उपाध्यायः शिष्यानवोचत् नायात्युपमन्युः त ऊचुर्वनङ्गतो गा रक्षितुमिति तानाह उपाध्यायः । मयोपमन्युः सर्व्वतः प्रतिषिद्धः स नियतं कुपितस्ततो नागच्छति चिरं ततोऽन्वेष्य इत्येवमुक्त्वा शिष्यैः सार्द्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार, भो उपमन्यो ! क्वासि वत्सैहीति । स उपाध्यायवचनं श्रुत्वा प्रत्युवाचोच्चैरयमस्मिन् कूपे पतितोऽहमिति तमुपाध्यायः प्रत्युवाच कथं त्वमस्मिन् कूपे पतित इति । स उपाध्यायं प्रत्युवाच अर्कपत्राणि भक्षयित्वाऽन्धीभूतोऽस्म्यतः कूपे पतित इति । तमुपाध्यायः प्रत्युवाच । अश्विनौ स्तुहि तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्त्ताराविति स एवमुक्त उपाध्यायेनोपमन्युरश्विनौ स्तोतुमुपचक्रमे देवावश्विनौ वाग्भिरृग्भिः" । अश्विस्तुतिमपवर्ग्य कथां समापयामास यथा "इत्येवं तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनं प्रीतौ स्व एष तेऽपूपोऽशानैनमिति । स एवमुक्तः प्रत्युवाच नानृतपूर्व्वमूचतुर्भगवन्तौ । न त्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्येति । ततस्तमश्विनावूचतुः आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपो दत्त उपयुक्तः स तेनानिवेद्य गुरवे, त्वमपि तथैव कुरुष्व यथाकृतमुपाध्यायेनेति । स एवमुक्तः प्रत्युवाच एतत्प्रत्यनुनये भवन्तावश्विनौ नोत्सहेऽहमनिवेद्य गुरवेऽपूपमेनमुपयोक्तुमिति । तमाश्विनावाहतुः प्रीतौ स्वस्तवानया गुरुभक्त्या उपाध्यायस्य ते कार्ष्णायसा दन्ता भवतोऽपि हिरण्मया भविष्यन्ति चक्षुष्मांश्च भविष्यसि श्रेयश्चावाप्स्यसीति । स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्योपाध्यायमभ्यवादयत आचचक्षे च स चास्य प्रीतिमान् बभूव आह चैनं यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति । सर्व्वे च ते वेदाः प्रतिभास्यन्ति सर्व्वाणि च धर्म्मशास्त्रा-

षोति एषा तत्रापि परीक्षोपमन्योः"। उपमन्योरपत्यम् विदा० अञ्। औपमन्यव तदपत्ये बहुत्वे तु तस्य लुक्। उपमन्यवः "उपमन्यु पराशरकुण्डिनेभ्यः" "उपमन्यूनां वासिष्ठाभरद्वसिन्द्रप्रमदेति" आश्व०श्रौ०सू० १२।१५।१,२,

**उपमर्द** पु० उप+मृद–घञ्।१आलोडने, २हिंसने, पूर्वधर्म-विनाशनेन ३धर्मान्तरोत्पादने। यथा अस्तेर्भूः चक्षिङो वचिः ख्या–तिष्ठ इत्याद्यादेशे। ३निष्पीडने "अन्यासु तावदुपमर्दसहासु भृङ्ग" सा०द०। धान्यादेः ४निष्पललीकरणे च। (धानमाडा) भावे ल्युट् उपमर्दनमप्यत्रार्थे न०। कर्त्तरि ण्वुल्। उपमर्दक तत्कारके त्रि०।

**उपमा** स्त्री उप+मि–अ। १सादृश्ये, "अतुलोपमाभ्याम्" पा० उक्तेः तद्योगे उपमानवाचकात् षष्ठी नतु तृतीया। "स्फुटोपमं भूतिसितेन शम्भुना" माघे तु सहार्थे तृतीया मल्लि०। २अर्थालङ्कारभेदे च अर्थालङ्कारभेदस्य ३८६ पृ० विवृतर्द्दश्या। न्यायमतसिद्धे उपमानजन्ये ३गवयादिशब्दशक्तिज्ञानरूपे, वेदान्तिमतसिद्धे ४गवादिसादृश्यज्ञानरूपे अनुभवभेदे च उपमानशब्दे विवृतिः। करणे वा० अ। ५उपमाने च। "अपि लङ्घितमध्वानं बुबुधे न बुधोपमः" रघुः। "यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता" गीता "यजते सोपमा दिवः" ऋ० १,३१,१५, स्वार्थे घञ्। औपम्य उपमाने न०।

**उपमात्** स्त्री उपमीयते प्रक्षिप्यते उप+मिञ–क्षेपे–बा०अति। स्थूणायाम् वत्सबन्धनसाधने स्तम्भे "सानुमुपमादिव द्योः" ऋ०६,६७,६,।"उपमीयते प्रक्षिप्यते इत्युपमात् स्थूणा" सा यथा वत्सं धारयति तद्वदित्यर्थः"भा०।

**उपमाति** स्त्री उप+मि–क्तिन् वेदे नि०आत्।१उपमायाम्। "पूर्वीष्ट इन्द्रोपमातयः" ऋ०८,४०,६, लोके तु उपमितिरित्येव उक्तार्थे। उप+मीङ–बधे–क्तिन् वा०आत्। २हिंसने उपमातिवनिः। "रयि भादबाक भूदुपमाति वनिः" ऋ०५,४१,१६, उपमातये वनति वनु व्याप्तौ इन्। हिंसनव्याप्त इत्यर्थः उपमातिर्वनिर्हन्ता" भा०।

**उपमातृ** स्त्री उपमिता माता अवा०स०। १धात्र्याम् अमरः। सा हि मातृतुल्यं प्रतिपालयतीति तस्यास्तथात्वम् २मातृतुल्यासु मातृष्वस्रादिषु च। तास्व "मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा। श्वश्रूः पूर्व्वजपत्नी च मातृतुल्याः प्रकीर्त्तिता" दायभा० इह० स्मृ० उक्ताः। स्वस्रादिपर्युदासात् ऋदन्तत्वेऽपि स्त्रियां न ङीप्। उप+मा–तृच्। ३उपमानकर्त्तरि त्रि०। स्त्रियां ङीप्।

**उपमाद्** त्रि० उपमादयति उप+मद–णिच् अच्। उपमादके हर्षजनके "देवानामुपमादकृद्भः" ऋ०३,५,५, "उपमादमुपमादकं यज्ञम्" भा०।

**उपमान** न० उपमीयतेऽनेन उप+मा–भावे ल्युट्। १सादृश्यज्ञाने। करणे ल्युट्। २सादृश्यज्ञानसाधने सादृश्यप्रतियोगिनि, येन सादृश्यं भवति तस्मिन्, यथा चन्द्र इव सुखमित्यादौ चन्द्र उपमानम्। प्रसिद्धस्यैवोपमानत्वम् प्रसिद्धस्योपमेयत्वम्। उपमानमभूद्विलासिनाम्" कुमा० "उपमानमलुज्जामह्नीकराणाम्" माघः। ३उपमितिप्रमाकरणे उपमानलक्षणञ्च न्या०सू० हत्योदर्शितं यथा "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्"सू०। "प्रसिद्धस्य पूर्व्वप्रमितस्य गवादेः साधर्म्यात् सादृश्यात् तज्ज्ञानात् साध्यस्य गवयादिपदवाच्यत्वस्य साधनं सिद्धिरुपमानमुपमितिर्यत इत्यध्याहारेण करणलक्षणम् अथ वा साध्यसाधनमिति करणल्युटा करणलक्षणमेवेदम् अत्र च वैधर्म्योपमितिं मन्यन्ते टीकाकृतः यथा अतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्यज्ञानादुष्ट्र करभपदवाच्यतापत्तः। एवमन्योऽप्युपमानस्य विषयइति भाष्यं यथा मुद्गपर्णीसदृशी ओषधी विषं हन्तीत्यतिदेशवाक्यार्थे ज्ञाते मुद्गपर्णीसादृश्यज्ञाने जाते इयमोषधी विषहरणीत्युपमित्या विषयीक्रियतइत्यादि"।

उपमानचि० सादृश्यपदार्थनिरुक्तिपूर्व्वकमुपमानस्य प्रमाणान्तरत्वं व्यवस्थापितं यथा। "तत्र सादृश्यप्रमाकरणमुपमानमिति केचित्। सादृश्यञ्च पदार्थान्तरम्। तथा हि। सदृशव्यवहारादबाधितादस्ति सादृश्यं तच्च न प्रतिपदार्थमेकं सर्व्वस्य सर्व्वसदृशत्वापत्तेः स्वसदृशत्वापत्तेश्च सुसदृशमन्दसदृशव्यवहारस्य तदेकत्वेऽनुपपत्तेश्च। न च व्यञ्जकभूयःसामान्याल्पत्वभूयस्त्वाभ्यां तद्वीरिति वाच्यं बहुभिरल्पैश्च व्यज्यमानघटादौ ह्रासवृद्ध्योरदर्शनात् व्यञ्जकाभिमतादेव व्यवहारसिद्धौ अतिरिक्तासिद्धेश्च। नापि संयोगवत् व्यासज्यवृत्त्यनेकम्, गोत्वोपलक्षितसादृश्याश्रयत्वात् गवयवत्, गोरपि स्वसदृशत्वप्रसङ्गात् गोरसन्निकर्षे संयोगवदप्रत्यक्षत्वप्रसङ्गाच्च। प्रत्यक्षत्वे वा गवयनिरूपितस्यैकवित्तिवेद्यत्वेन गोनिष्ठतया चाक्षुषत्वप्रसङ्गः। किन्तु प्रत्याश्रयं भिन्नम्। नचैकैकव्यभिचारादनुगतरूपाभावाच्चानुगतप्रत्ययः सादृश्यपदव्युत्पत्तिश्च न स्यादिति वाच्यम् अनुगतवित्तिवेद्यसादृश्यत्वसामान्यात् सप्तपदार्थातिरिक्तत्वाद्वा जातिवदन्त्यविशेषवच्च स्वलक्षणत्वात्तयोरुपपत्तेः। तच्च द्रव्ये न गुणः कर्म वा, गुणकर्मवृत्तित्वात् न च सदृशाश्रय-

शान्तोनर्म्मसचिवा हसनामुपहासयुक्तां वाचमिच्छन्ति" भा०

**उपमन्थनी** स्त्री उपमथ्यतेऽनया उप+मन्थ–करणे ल्युट् ङीप् । अग्निमन्थनसाधनद्रव्ये "चतुरौदुम्बरो भवति औदुम्बरश्चमस औदुम्बर. स्रुव औदुम्बर इध्मा औदुम्बर्यौ उपमन्थन्यौ" शत० ब्रा० १४, ८, २, २१ ।

**उपमन्यु** पु० आयोदधौम्यशिष्ये ऋषिभेदे । "धौम्योनामायोदस्तस्य त्रयः शिष्या बभूवुरुपमन्युरारुणिर्वेदश्चेति" भा० ३अ० तच्चरितञ्च तत्र वर्णितं यथा ।

"अथापरः शिष्यस्तस्यैवायोदधौम्यस्योपमन्युर्नाम । तं चोपाध्यायः प्रेषयामास वत्सोपमन्यो ! गा रक्षस्वेति । स उपाध्यायवचनादरक्षद्गाः स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायः पीवानमपश्यदुवाच चैनं वत्सोपमन्यो ! केन वृत्तिं कल्पयसि पीवानसि दृढमिति । स उपाध्यायं प्रत्युवाच भो भैक्ष्येण वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच । मय्यनिवेद्य भैक्ष्यं नोपयोक्तव्यमिति । स तथेत्युक्तो भैक्ष्यं चरित्वोपाध्यायाय न्यवेदयत् । स तस्मादुपाध्यायः सर्व्वमेव भैक्ष्यमगृह्णात् । स तथेत्युक्तः पुनररक्षद्गाः अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो ! सर्व्वमशेषतस्ते भैक्ष्यं गृह्णामि केनेदानीं वृत्तिं कल्पयसीति । स एवमुक्त उपाध्यायं प्रत्युवाच भगवते निवेद्य पूर्व्वमपरं चरामि तेन वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच । नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं करोषि इत्येवं वर्त्तमानो लुब्धोऽसीति । स तथेत्युक्त्वा गा अरक्षत् रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच वत्सोपमन्यो ! अहं ते सर्व्वं भैक्ष्यं गृह्णामि न चान्यच्चरसि पीवानसि भृशं केन वृत्तिं कल्पयसीति । स एवमुक्तस्तमुपाध्यायं प्रत्युवाच भो एतासां गवां पयसा वृत्तिं कल्पयामीति तमुवाचोपाध्यायो नैतन्न्याय्यं पय उपयोक्तुं भवतो मया नाभ्यनुज्ञातमिति । स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायः पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो ! भैक्ष्यं नाश्नासि न चान्यच्चरसि पयो न पिबसि पीवानसि भृशं केनेदानीं वृत्तिं कल्पयसीति । स एवमुक्त उपाध्यायं प्रत्युवाच भो फेनं पिबामि यमिमे वत्सा मातॄणां स्तनान् पिबन्त उद्गिरन्ति । तमुपाध्यायः प्रत्युवाच एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्त्तमानः फेनमपि भवान्न पातुमर्हतीति स तथेति प्रतिश्रुत्य पुनररक्षद्गाः । तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति न चान्यच्चरति पयो न पिबति फेनं नोपयुङ्क्ते स कदाचिदरण्ये क्षुधार्त्तोऽर्कपत्राण्यभक्षयत् । स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धो बभूव ततः सोऽन्धोऽपि चङ्क्रम्यमाणः कूपे पपात । अथ तस्मिन्ननागच्छति सूर्य्ये चास्ताचलावलम्बिनि उपाध्यायः शिष्यानवोचत् नायात्युपमन्युः त ऊचुर्वनङ्गतो गा रक्षितुमिति तानाह उपाध्यायः । मयोपमन्युः सर्व्वतः प्रतिषिद्धः स नियतं कुपितस्ततो नागच्छति चिरं ततोऽन्वेष्य इत्येवमुक्त्वा शिष्यैः सार्द्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार, भो उपमन्यो ! क्वासि वत्सैहीति । स उपाध्यायवचनं श्रुत्वा प्रत्युवाचोच्चैरयमस्मिन् कूपे पतितोऽहमिति तमुपाध्यायः प्रत्युवाच कथं त्वमस्मिन् कूपे पतित इति । स उपाध्यायं प्रत्युवाच अर्कपत्राणि भक्षयित्वाऽन्धीभूतोऽस्म्यतः कूपे पतित इति । तमुपाध्यायः प्रत्युवाच । अश्विनौ स्तुहि तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्त्ताराविति स एवमुक्त उपाध्यायेनोपमन्युरश्विनौ स्तोतुमुपचक्रमे देवावश्विनौ वाग्भिरृग्भिः" । अश्विस्तुतिमुपवर्ण्य कथां समापयामास यथा "इत्येवं तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनं प्रीतौ स्व एष तेऽपूपोऽशानैनमिति । स एवमुक्तः प्रत्युवाच नानृतमूचतुर्भगवन्तौ । नत्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्येति । ततस्तमश्विनावूचतुः आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपो दत्त उपयुक्तः स तेनानिवेद्य गुरवे, त्वमपि तथैव कुरुष्व यथाकृतमुपाध्यायेनेति । स एवमुक्तः प्रत्युवाच एतत्प्रत्यनुनये भवन्तावश्विनौ नोत्सहेऽहमनिवेद्य गुरवेऽपूपमेनमुपयोक्तुमिति । तमाश्विनावाहतुः प्रीतौ स्वस्तवानया गुरुभक्त्या उपाध्यायस्य ते कार्ष्णायसा दन्ता भवतोऽपि हिरण्मया भविष्यन्ति चक्षुष्मांश्च भविष्यसि श्रेयश्चावाप्स्यसीति । स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्योपाध्यायमभ्यवादयत आचचक्षे च स चास्य प्रीतिमान् बभूव आह चैनं यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति । सर्व्वे च ते वेदाः प्रतिभास्यन्ति सर्व्वाणि च धर्म्मशास्त्रा-

श्चीति एषा तत्रापि परीक्षोपमन्योः''। उपमन्योरपत्यम् विदा० अञ्। औपमन्यव तदपतेत्र बहुत्वे तु तस्य लुक्। उपमन्यवः "उपमन्यु पराशरकुण्डिनेभ्यः" "उपमन्यूनां वासिष्ठाभरद्वसिन्द्रप्रमदेति" आश्व०श्रौ०सू० १२।१५।१,२,

**उपमर्द** पु० उप+मृद–घञ्। १आलोडने, २हिंसने, पूर्व्वधर्म्मि-विनाशनेन ३धर्म्मान्तरोत्पादने। यथा असोर्भूः वर्चिक्ते वचिः स्या–तिष्ठ इत्याद्यादेशे। ४निष्पीडने "अन्यासु तावदुपमर्द्दसहासु भृङ्ग" शा०द०। धान्यादेः ४निष्पखलीकरणे च। (धानमाड़ा) भावे ल्युट् उपमर्द्दनमुक्तार्थे न०। कर्त्तरि ण्वुल्। उपमर्द्दक तत्कारके त्रि०।

**उपमा** स्त्री उप+मि–अ। १सादृश्ये, "अतुलोपमाभ्याम्" पा० उक्तेः तद्योगे उपमानवाचकात् षष्ठी नतु तृतीया। "स्फुटोपमं भूतिसितेन शम्भुना" माघे तु सहार्थे तृतीया मल्लि०। २अर्थालङ्कारभेदे च अर्थालङ्कारभेदस्य ३८६ पृ० विस्तरेदृश्या। न्यायमतसिद्धे उपमानजन्ये ३गवयादिशब्दशक्तिज्ञानरूपे, वेदान्तिमतसिद्धे ४गवादिसादृश्यज्ञानरूपे अनुभवभेदे च उपमानशब्दे विवृतिः। करणे बा० अ। ५उपमाने च। "अपि लङ्घितमध्वानं बुबुधे न बुधोपमः" रघुः। "यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता" गीता "यजते सोपमा दिवः" ऋ० १,३१,१५, स्वार्थे घञ्। औपम्य उपमाने न०।

**उपमात्** स्त्री उपमीयते प्रक्षिप्यते उप+मिञ–क्षेपे–बा०अति। स्थूणायाम् वत्सबन्धनसाधने स्तम्भे "सानुमुपमादिव द्योः" ऋ०६,६७,६,।"उपमीयते प्रक्षिप्यते इत्युपमात् स्थूणा" सा यथा वंशं धारयति तद्वदित्यर्थः" भा०।

**उपमाति** स्त्री उप+मि–क्तिन् वेदे नि०आत्।१उपमायाम्। "पूर्वीष्ट इन्द्रोपमातयः" ऋ०८,४०,६, लोके तु उपमितिरित्येव उक्तार्थे। उप+मीङ–बधे–क्तिन् बा०आत्। २हिंसने उपमातिवनिः। "रिषे भादस्याकं भूदुपमातिवनिः" ऋ०५,४१,१६, उपमातये वनति वनु व्याप्तौ इन्। हिंसनव्याप्टत इत्यर्थः उपमातिवनिर्हन्ता" भा०।

**उपमातृ** स्त्री उपमिता मात्रा अवा०स०। १धात्र्याम् अमरः। सा हि मातृतुल्यं प्रतिपालयतीति तस्यास्तथात्वम् २मातृतुल्यासु मातृष्वस्त्रादिषु च। ताश्च "मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा। श्वश्रूः पूर्व्वजपत्नी च मातृतुल्याः प्रकीर्त्तिता" दायभा० दृ० स्मृ० उक्ताः। स्वस्रादिपर्य्युदासात् ऋदन्तत्वेऽपि स्त्रियां न ङीप्। उप+मा–तृच्। ३उपमानकर्त्तरि त्रि०। स्त्रियां ङीप्।

**उपमाद** त्रि० उपमादयति उप+मद–णिच् अच्। उपमादके हर्षजनके "देवानामुपमादमृष्वः" ऋ०३,५,५, "उपमादम् उपमादकं यज्ञम्" भा०।

**उपमान** न० उपमीयतेऽनेन उप+मा–भावे ल्युट्। १सादृश्यज्ञाने। करणे ल्युट्। २सादृश्यज्ञानसाधने सादृश्यप्रतियोगिनि, येन सादृश्यं भवति तस्मिन्, यथा चन्द्र इव मुखमित्यादौ चन्द्र उपमानम्। प्रसिद्धस्यैवोपमानत्वम् प्रसिद्धस्योपमेयत्वम्। उपमानमभूद्विलासिनाम्" कुमा० "उपमानमलुजामकीर्ददाखाम्" माघः। ३उपमितिप्रमाकरणे उपमानलक्षणञ्च न्या०सू० इत्योर्दर्शितं यथा "प्रसिद्ध-साधर्म्यात् साध्यसाधनमुपमानम्" सू०। "प्रसिद्धस्य पूर्व्व-प्रमितस्य गवादेः साधर्म्यात् सादृश्यात् तज्ज्ञानात् साध्यस्य गवयादिपदवाच्यत्वस्य साधनं सिद्धिरुपमानमुपमितिर्यत-इत्यध्याहारेण करणलक्षणम् अथ वा साध्यसाधनमिति करणल्युटा करणलक्षणमेवेदम् अत्र च वैधर्म्योपमितिं मन्यन्ते टीकाकृतः यथा अतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्य-ज्ञानादुष्ट्रे करभपदवाच्यतायहः। एवमन्योऽप्युपमानस्य विषयइति भाष्यं यथा मुद्गपर्णीसदृशी ओषधी विषं हन्तीत्यतिदेशवाक्यार्थे ज्ञाते मुद्गपर्णीसादृश्यज्ञाने जाते इयमोषधी विषहरणीत्युपमित्या विषयीक्रियतइत्यादि"।

उपमानचि० सादृश्यपदार्थनिरुक्तिपूर्व्वकमुपमानस्य प्रमाणान्तरत्वं व्यवस्थापितं यथा। "तत्र सादृश्यप्रमा-करणमुपमानमिति केचित्। सादृश्यञ्च पदार्थान्तरम्। तथा हि। सदृशव्यवहारादबाधितादस्ति सादृश्यं तच्च न प्रतिपदार्थमेकं सर्वस्य सर्वसदृशत्वापत्तेः स्वसदृशत्वापत्तेश्च सुसदृशमन्दसदृशव्यवहारस्य तदेकत्वेऽनुपपत्तेश्च। न च व्यञ्जकभूयःसामान्याल्पत्वभूयस्त्वाभ्यां तद्धीरिति वाच्यं बहुभिरल्पैश्च व्यज्यमानघटादौ ह्रासवृद्ध्योरदर्शनात् व्यञ्जकाभिमतादेव व्यवहारसिद्धौ अतिरिक्तासिद्धेश्च। नापि संयोगवत् व्यासज्यवृत्त्यनेकम्, गोत्वोपलक्षितसादृश्याश्रयत्वात् गवयवत्, गोरपि स्वसदृशत्वप्रसङ्गात् गोरश्विकर्णे संयोगवद्प्रत्यक्षत्वप्रसङ्गाच्च। प्रत्यक्षत्वे वा गवयनिरूपितस्यैकवित्तिवेद्यत्वेन गोनिष्ठतया चाक्षुषत्वप्रसङ्गः। किन्तु प्रत्याश्रयं भिन्नम्। नचैकैकव्यभिचाददनुगतरूपाभावाननुगतप्रत्ययः सादृश्यपदव्युत्पत्तिश्च न स्यादिति वाच्यम् अनुगतविक्तिवेद्यसादृश्यत्वसामान्यात् सप्तपदार्थातिरिक्तत्वाद्वा जातिवदन्त्यविशेषवच्च स्वस्वलक्षणत्वात्तयोरुपपत्तेः। तच्च द्रव्ये न गुणः कर्म वा, गुणकर्मवृत्तित्वात् न च सदृशाश्रय-

वृत्तित्वादेव तत्र व्यवहारः स्वाश्रयवैसादृश्येऽपि तत्र तत्-
प्रतीतेः । अतएव नाश्रयसादृश्यात्तत्,सामग्रीग्रहात्तत्, बा-
धकाभावादविशेषेण वैपरीत्यसम्भवाच्च । नापि सामान्यं
तद्धि न सर्व्ववृत्त्येकमनभ्युपगमात् सुसदृशमन्दसदृश-
व्यवहारानुपपत्तेश्च । अथ विजातीयत्वे सत्यवयवगुणकर्म-
वृत्तिभूयःसामान्यं तत्, अतएव दूरस्थे प्रतियोगिनि
भूयःसामान्यज्ञानाच्च तत्र सादृश्यप्रत्ययः वनं, प्रासाद
इतिवत् बहुत्वस्य समुदायस्यैकत्वादेकं सामान्यमिति धी-
प्रयोगौ अन्यथा वनाद्यपि अर्थान्तरं स्यात् सामान्यबहु-
त्वाल्पत्वाभ्यां सुसदृशमन्दसदृशव्यवहारः । यदुच्यते । "सा-
मान्यान्येव भूयांसि तुल्यावयवकर्मणाम् । भिन्नं प्रधानसा-
मान्यव्यक्तं सादृश्यमिष्यते" इति साजात्येऽप्यरविन्दद्वयवत्
यमजयोरवयवादिशून्ये गुणादौ जातौ च सदृशप्रत्य-
यात् विसदृशयोः करभशरभयोस्तत्सत्त्वाच्च । नापि धर्म्या-
न्तरे धर्म्यन्तरवृत्तिधर्मबाहुल्यम् असाधारणधर्मशून्यत्वे
सति तद्गतभूयोधर्मवत्त्वं वा स्वनिष्ठात्यन्ताभावप्रतियोगि-
धर्मसमानाधिकरणभूयोधर्मवत्त्वं वा त्रिचतुः पञ्चादि-
भेदेन भूयस्त्वस्याननुगतत्वात् । नापि कपिञ्जलवत्त्रित्वप-
र्य्यवसन्नं विसदृशयोरपि हस्तिमशकयोः सादृश्यप्रसङ्गात् ।
तदुक्तं "एवं जातिगुणद्रव्यक्रियाशक्तिषु धर्मतः । एकैक-
द्वित्रिसामस्त्यभेदादेकत्र चित्रतेति"। अथ व्यावर्त्तकधर्मापे-
क्षया तद्गतधर्मबाहुल्यं सादृश्यबाहुल्यञ्च त्रिचतुरादिष्व-
नुगतं हस्तिमशकयोस्तु बहुव्यावर्त्तकं साधारणन्त्वल्पमतएव
भेदाधिष्ठानमुच्यते इति चेन्न व्यावर्त्तकसमसङ्ख्यत्वेनाल्पेना-
गणितेनापि सादृश्यव्यवहारात् । किञ्च सामान्यान्या-
श्रयभेदेनाभिन्नानि सादृश्यन्तु भिन्नम् । सामान्यं
निःप्रतियोगिकं तदनिरूप्यञ्च । सादृश्यन्तु सप्रति-
योगिकं तद्धीव्यङ्ग्यञ्च । अथ भेदे सति तद्गतभूयः-
सामान्यवत्त्वं सादृश्यं भेदस्य प्रत्याश्रयमन्यः सप्रतियो-
गिकश्चेति चेत्तर्हि सादृश्यस्य भेदघटितत्वेन तस्मात्
सदृश इति स्यात् नतु तेन तस्य वा सदृश इति स्यात् ।
नच सादृश्यस्यापि सप्रतियोगिकत्वेन तस्मात् सदृश इति
स्यात्, अवधौ हि तथाप्रतीतिप्रयोगौ न तु प्रतियोगिनि,
अभावेऽपि घटान्नेति प्रतीतिप्रसङ्गात् । अपि च तद्धर्मवत्त्वं
यदि सादृश्यं तदा तत्तातद्वत्त्वयोः सङ्करप्रसङ्गात् । तद्धर्म-
वत्ता हि तत्ता तदन्या च तद्वत्ता यदि च तत्त्वैव तद्वत्ता
तदा तदेव तद्वदिति स्यात् । तथा च तद्धर्मवत्ताज्ञाने
प्रत्यभिज्ञानवत् सोऽयमिति स्यात् नतु तद्वदिति । एवं तद्व-
त्त्वैव हि तत्तेति गवयेऽपि गोबुद्धिव्यपदेशौ स्याताम्
गोगतसामान्ययोगित्वेन गोवत्तत्ताश्रयत्वात् । नापि विशेषः
प्रत्यक्षत्वात् । न समवायः, वृत्तिमत्त्वात् इत्यतिरिक्तं साद-
श्यम् यत्तु सादृश्यं भावोऽभावो वा भावोऽपि सगुणं निर्गुणं
वा, निर्गुणमप्याश्रितमनाश्रितं वा । आश्रितमपि सा-
मान्यवन्निःसामान्यं वा सामान्यवत्त्वे स्पन्दोऽस्पन्दो वा
निर्गुणं निःसामान्यमाश्रितमनाश्रितमनेकाश्रितम् वा ।
इति यथायथं सप्तपदार्थान्तर्गतमिति तन्न व्यवहारानुप-
पत्त्या तद्बहिर्भावात् अन्यथैतादृशविकल्पेन सामान्यवि-
शेषसमवायानामपि द्रव्यादित्रयधर्मात्तदन्तर्गतत्वं स्या-
दिति । उच्यते । असाधारणान्यतद्गतबहुधर्मवत्त्वं तत्सा-
दृश्यं यमजादिसाधारणं भेदाघटिततया च निरवधि,
तद्गतबहुधर्मवत्त्वं तन्निरूप्यमिति तन्निरूप्यत्वमेव तस्य स-
प्रतियोगिकत्वं तथापि सादृश्ये तदेव सप्रतियोगिकत्वं
न तु भेददीर्घादिवत्सावधित्वं तस्मात् सदृश इति प्रत्यया-
पत्तेः । बहुत्वञ्च त्रिचतुरादिसाधारणमिति नानुगमः।
न चातिप्रसङ्गः हस्तिमशकयोरपि प्राणित्वसुखित्वदुःखि-
त्वादिना सादृश्यात् । अतएव वैसादृश्येऽपि आह्लादक-
त्वादिना चन्द्र इव मुखं, बहुक्षीरत्वादिना महिषीव
गौरिति । बह्वल्पतद्गतधर्मवत्त्वेन सुसदृशमन्दसदृशत्वम् ।
अतएव गवये गोसादृश्यं मन्दतद्धर्मवत्त्वमेव विवेचयति ।
वराहं गावोऽनुधावन्तीत्यत्र गोसदृश्यं वराहेऽप्युक्तम् ।
तत्तद्धर्मवत्त्वेनोपमेयव्यवहारः काव्यादौ, साध्यसाधनवत्त्व-
मात्रेण दृष्टान्ते पक्षसादृश्यवाचकवति प्रयोगः परीक्ष-
काणाम् । न चैते गौणा मुख्ये बाधकाभावात् । तस्मात्
केनचित् कस्यचित् क्वचित् सादृश्यं नत्वनुगतमस्ति ॥ किञ्च
यादृशबहुतद्धर्मवत्त्वज्ञानं सादृश्यव्यञ्जकं तदेव तद्व्यव-
हारनियामकमस्तु किमधिकेन । अन्यथा त्रिरतुरादित्वे
तु व्यञ्जकमपि बहुधर्मवत्त्वमननुगतं स्यात् । व्यञ्जक-
मननुगतमपि वह्नौ प्रत्यक्षादिवदिति चेन्न तत्र व्यक्तीनां
वैजात्यात् धूमालोकादौ वह्निव्याप्यत्वमेवानुगतम् ।
अत्रापि तद्व्याप्यत्वमस्तीति चेत् यादृशं तद्व्याप्यं तदेव
तद्व्यवहारनिमित्तं न तु तद्गतबहुधर्मवत्त्वज्ञानं, न
व्यञ्जकमेवानुभवविरोधात् तद्गतभूयोधर्मस्य बह्वल्पत्वज्ञानं
विना सुसदृश-मन्दसदृशत्वज्ञानाभावाच्च । अथ तद्गत-
बहुधर्मवत्त्वं न सप्रतियोगिकं, सादृश्यं तु तथेति व्यव-
हर्त्तव्यमधिकमिति चेन्न सादृश्यवत्तस्यापि सप्रतियोक-
त्वात् यत्तु तत्तातद्वत्तयोः सङ्करः स्यादिति तन्न तत्रैव

तद्धर्मवत्ता तदभेदो वा तत्ता सा च सोऽयमिति प्रत्यभिज्ञाने भासते। भेदे भासमाने तदन्यस्मिन् तद्धर्मवत्ता तद्वत्ता यतो भवति तद्वदयं न तु स इति तयोर्भेदात्। नन्वेवं व्यक्त्यन्तरे गोत्वपक्षे तद्गोवदयमिति स्यात्तथापि गौरिति चेन्न गोत्वमात्रस्य तदन्यव्यक्तिवृत्तित्वपक्षे समुच्चयः, एकत्र नानासम्बन्धावगमात्। तद्गोवृत्तिबहुधर्मज्ञाने भवत्वेव यवत्वावद्भवत्वेति। तथाप्ययमपि शृङ्गादिमानिति समुच्चयधीः स्यात् न तु गोसदृश इति चेन्न एकत्रोभयसम्बन्धः समुच्चयोऽल्पगतभूयोधर्मवत्त्वमन्यत्र सादृश्यमिति विवेकात् नवीनास्तु। विलक्षणसुखद्वये इतरसकलव्यावृत्तसादृश्यमनुभूयते न तु तद्द्वयमात्रवृत्तिजातिरस्ति तद्द्व्याभावे जातेरनाश्रयत्वेनानित्यत्वप्रसङ्गात्। नापि जन्यं धर्मान्तरमतोऽधिकं सादृश्यमुपेयं तथापि समानधर्मवत्त्वव्यञ्जकं विना कथं तत्र सादृश्याभिव्यक्तिरिति चेन्न प्रतीतिबलात् द्रव्ये तथा, गुणादौ तु व्यभिचारात् अतएव न व्यञ्जकेनान्यथासिद्धिस्तदभावेऽपि सादृश्यानुभवादित्याहुः। तत्तुच्छं विलक्षणं सुखद्वयं न सुखमात्रहेतुजन्यं सुखान्तरस्यापि सदृशत्वापत्तेः किन्तु विलक्षणादृष्टजन्यं तच्चादृष्टं विहिततत्तत्क्रियाविशेषानुष्ठानादन्येषामप्यस्तीति तेषामपि तादृशानि सुखानि भवन्तीति तेषु कारणविशेषप्रयोज्या विलक्षणतास्ति तस्मादात्मनामानन्त्यात् अनादिनिधनत्वादुत्पन्नानागतविजातीयं न सुखमस्ति एवं दुःखान्तरकार्य्येष्वपि नह्यनुत्पन्नमुत्पत्स्यमानजातीयं कार्य्यमस्ति। यच्च व्यक्तिनाशे जातेरनित्यत्वमापादितं तदपि न विनाशकाभावात् अतएव प्रलयेऽपि तदवस्थानम्। अपि चैकत्र प्रतियोगिभेदेन सादृश्यं भिन्नं नत्वेकम्, सुसदृशमन्दसदृशव्यवहारात् तथा च योग्यत्वादेकपक्षे सर्वग्रहप्रसङ्गात्। प्रतियोगिगतभूयोधर्मज्ञानस्य व्यञ्जकस्य क्रमाक्रमे तदेव व्यवहारनिमित्तमित्युक्तम्। किञ्चैवं वैसादृश्यमपि स्यात्। नच सादृश्याभावस्तत्, वैपरीत्यस्यापि सम्भवात् सादृश्याभावत्वेनैव प्रतीतिर्विशब्दस्य निषेधार्थत्वादिति चेत्तर्हि गौरिव महिषीत्यत्र पावनत्वक्षीरवत्त्वादिना विवक्षितसादृश्यानाश्रये गवये वैसादृश्यं न स्यात् न हि तत्र गोसादृश्यं तदभावश्च। तस्मात् साधर्म्यवैधर्म्ये सादृश्यवैसादृश्ये। यत्तु तद्वृत्त्यनेकधर्मवत्त्वं सादृश्यं तेनाभेदेऽपि "गगनं गगनाकारं सागरः सागरोपमः। रामरावणयोर्युद्धं रामरावणयोरिव" इत्यादौ सादृश्यं, न चैवं गोरपि गोसदृशत्वे गवयपदाभिधेयत्वापत्तिः तत्र सदृशपदस्य

विशेषे तात्पर्य्यात्। अन्यथा महिषेऽतिप्रसङ्ग इति तन्न तस्य तेन वा सदृश इति प्रतीतिप्रयोगात् न चाभेदे सम्बन्धः सहार्थौ वा सम्भवति। गगनं गगनाकारमित्यादौ तु गगनाद्येवैतादृशधर्मवन्नान्यदित्यत्र तात्पर्य्यम्। यद्वा सर्गान्तरीयगगनसागरयोरुपमानत्वं तयोर्युद्धविशेषे तयोरेव युद्धान्तरमुपमानमिति। नन्वयं देवदत्तस्तदन्यो वा भवतु तत्सदृशस्तावदयमिति भेदाभेदसंशयेऽपि सादृश्यनिश्चयात् अतिरिक्तं सादृश्यमिति चेत् न देवदत्ताभिप्रायेणैकदेशे सादृश्यपदप्रयोगात् कथमन्यथा स एवायं न तु तत्सदृश इति, सदृशोऽयं न तु स इति प्रतीतिप्रयोगौ। न चात्र सदृशपदं भेदमात्रपरमिति युक्तं मुख्ये सम्भवति लक्षणाया अयोगात्। तस्मान्न पदार्थान्तरं सादृश्यमिति। स्यादेतत्। मा भूत् पदार्थान्तरं तथापि प्रत्यक्षाच्छब्दाद्वा गवये गोसादृश्यज्ञानात् गवयसदृशो गौरितिज्ञानमुपमितिः। न चैतत्प्रत्यक्षं विशेष्यासन्निकर्षात् नानुमानं लिङ्गाभावात्। न च गवयगतं सादृश्यं लिङ्गम् अपक्षधर्मत्वात्। अथ सदृशद्वयान्तरदर्शने यो यद्गतसादृश्यप्रतियोगी स तत्सदृश इति प्रत्यक्षेण व्याप्तिग्रहे सति गवयगतसादृश्यप्रतियोगित्वात् गौर्गवयसदृश इत्यनुमितिरिति चेत् व्याप्तिग्रहं विनैव प्रथममपि प्रत्यक्षाच्छब्दाद्वा गोसदृशं गवयं ज्ञात्वा गवि गवयसादृश्यज्ञानोदयात्। किञ्च गवि गवयसादृश्यं न साध्यं प्रथमतस्तदप्रतीतेः गवयगतसादृश्यप्रतियोगित्वञ्च गवि न प्रत्यक्षं विशेष्यस्यासन्निकर्षादिति नानुमितिगम्यं तल्लिङ्गस्यापि तद्गतत्वेनाप्रत्यक्षस्य लिङ्गान्तरगम्यत्वेऽनवस्थानात्। न च गौरेतद्गवयसदृशः गवयगतभूयोऽवयवादिसामान्यवत्त्वात् गवयान्तरवदिति गवयान्तरज्ञानेऽपि गवि गवयसादृश्यं विनानुपपद्यमानं तत्कल्पयति। न हि गोसदृशो गवय एतद्विसदृशो गौरिति वाच्यम्। गवयनिरूपितगोसादृश्याप्रसिद्धौ तेन विनानुपपत्तिज्ञानाभावात्। किञ्च तवार्थापत्तिर्व्यतिरेक्यनुमानं न च गवयगतसादृश्यप्रतियोगित्वं गवि प्रत्यक्षादिना ज्ञातुं शक्यमित्युक्तम्। नन्वेवं करभे गोवैधर्म्यज्ञानात् गवि करभवैधर्म्यज्ञानमपि मानान्तरं स्यादिति चेत् गवि करभवैधर्म्यं यदि करभवृत्तिधर्म्माभावत्वं तदाऽस्तु ते गवि प्राङ्नास्ति तावदनुपलब्धिगम्यमेव अथ करभव्यावृत्तधर्मवत्त्वं तदा गोधर्म्मा गविगता एव इदानीं स्मृतगोधर्म्माणां करभेऽभावमात्रमधिकं गम्यं तच्च प्रत्यक्षादेव। अथ तत्प्रतियो-

गिकैतन्निष्ठसादृश्ये भासमाने समानसंवित्संवेद्यतया एतत्
प्रतियोगिकतन्निष्ठसादृश्ये वैधर्म्यञ्च ज्ञातमिति चेन्न वि-
षयविशेष्यप्रतियोगिभेदेन समानसंवित्संवेद्यत्वासिद्धेः ।
एतत्सदृश एतद्विधर्मा स इत्येतद्विशेष्यकप्रत्ययानुदयाच्च
तद्विशेष्यकप्रत्यक्षे तत्सन्निकर्षस्य हेतुत्वात् । ननु प्रत्यक्षे
विशेष्यसन्निकर्षो हेतुर्न तु यावद्विशेष्यसन्निकर्षो गौरवात् अ-
न्यथातीतानागतव्याप्यविशेष्यकव्याप्तिप्रत्यक्षं न स्यादिति
चेन्न अतीतानागतविशेष्ये सामान्यलक्षणायाः सत्त्वात् ।
अथ गवयसादृश्यं गवि गवयगतश्टङ्गादिमत्त्वं तच्च गवये
गोसदृशे भासमाने गवि भातमेव यद्वा गोगतश्टङ्गि-
त्वादेर्गवयगतत्वं गवये गोसादृश्यम् एवं तथैव गवयगतस्य
गोगतत्वं गवि गोसादृश्यं तच्चेन्द्रियेणैव ज्ञातं सामान्यस्यैक-
त्वेनेन्द्रियसन्निकृष्टत्वात् अयं न स इति विपरीतप्रत्यभिज्ञा-
यामिवेति चेत् सत्यम् गोविशेष्यकगवयगतश्टङ्गित्वादि-
ज्ञानं नेन्द्रियजन्यं गोरसन्निकर्षात् तस्मादेतत्सदृश एत-
द्विधर्म्मा एतस्माद्दीर्घः स इति ज्ञानं नानुमानात् विशेष्या-
सन्निकर्षे तद्गतलिङ्गाज्ञानात् । एवञ्च सप्रतियोगिकपदार्थ-
ज्ञानेन तत्प्रतियोगिकपदार्थज्ञानमुपमानं प्रत्यक्षादिकं विना-
र्थादर्थापत्तौ पूर्वेषामुपमानतेति वार्त्तमेतत् तथा हि । पर-
स्परसदृशं हस्त्यादिकं प्रत्यक्षमतो यो यत्सादृश्यप्रतियोगी
स तत्सदृश इति सामान्यतो व्याप्तिज्ञाने सति गोर्गवयस-
दृशः तत्सादृश्यप्रतियोगित्वात् यथा भ्राता भगिनी ।
गवयगतसादृश्यप्रतियोगित्वञ्च गोर्गवयगतसादृश्यवित्ति-
वेद्यमेव सादृश्ये गोः प्रतियोगित्वेनैव ज्ञानात् अन्यथा
सादृश्ये गोरनन्वयापत्तिः यत्तद्भ्यां सामान्यतोव्याप्तिग्रहं
विना एतत्सदृशः स इति फलासिद्धेः यत्तद्भ्यां व्याप्ति-
ग्रहेऽस्माकं व्यतिरेकी परेषामर्थापत्तिरित्यन्यदेतत् । सादृ-
श्यस्योभयवृत्तिधर्म्मस्य किञ्चिद्विशेष्यसन्निकर्षात् प्रत्यक्षेण
भानं यावद्विशेष्यसन्निकर्षस्याप्रयोजकत्वात् । अन्यथा
ऽयं स इति भ्रान्तविपरीतप्रत्यभिज्ञायां का गतिः । मन-
सैव चैतन्निष्ठसादृश्यप्रतियोगित्वग्रहः प्रत्यक्षविशेष्यकत्वं
परामर्शे न प्रयोजकमित्युक्तम् । कीदृशो गवय इति जि-
ज्ञासयां यथा गौस्तथागवय इति श्रुतोत्तरवाक्यस्य तथा
भूते पिण्डे दृष्टे तथा गवय इत्यतिदेशवाक्यार्थानुसन्धाने-
ऽयं गवयशब्दवाच्य इति मतिरुपमानफलम् । न चेयं वाक्य-
मात्रात्, अप्रत्यक्षीकृतपिण्डस्यापि प्रसङ्गात् । नापि प्रत्य-
क्षमात्रात् अश्रुतवाक्यस्यापि प्रसङ्गात् । नापि तयोः
समाहारात् स हि प्रमाणसमाकारो वा फलसमाहारो वा
आद्ये प्रमाणत्वे सति समाहारः समाहृतयो र्वा प्रमाणत्वं,
फलानेकत्वे समाहारानुपपत्तेः तस्य परस्परसहकारिरूप-
त्वात् । नान्त्यः वाक्यप्रत्यक्षयोर्भिन्नकालत्वात् वाक्यतदर्थयोः
स्मृतिद्वारोपनयेऽपि गवयपिण्डसम्बन्धेनापि इन्द्रियादिना
तद्गतसादृश्यानुपनये समयपरिच्छेदासिद्धेः । फलसमा-
हारे च तदन्तर्भावे शब्दानुमानयोरपि प्रत्यक्षत्वप्रसङ्गः ।
तत् किं तत्फलस्य प्रमाणबहिर्भाव एव अन्तर्भावे वा
कियती सीमा । तत्तदसाधारणेन्द्रियादिसाहित्यम् अस्ति
तर्हि सादृश्यज्ञानेऽपि विस्फारितस्य चक्षुषो व्यापारः ।
न तस्मिन् सति तस्यानुपयोगात् उपलब्धगोसादृश्यविशि-
ष्टगवयपिण्डस्य वाक्यार्थस्मृतिमतः कालान्तरेऽप्यनुस-
न्धानबलात् समयपरिच्छेदोपपत्तेः । तस्मादागमप्रत्यक्षा-
भ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानमुपमानप्रमा-
णमिति जरन्नैयायिकाजयन्तप्रभृतयः । तन्न वैधर्म्येऽनुप-
पत्तेः । यदोदीच्येन क्रमेलकं निन्दतोक्तं धिक् करभमतिदी-
र्घग्रीवं प्रलम्बचपलौष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सि-
तावयवसन्निवेशमपसदं पशूनामिति, तदुपश्रुत्य दाक्षिणात्य
उत्तरापथं गतस्तादृशं वस्तूपलभ्य नूनमसौ करभ इति
प्रत्येति । तत्र किं मानं न तावदुपमानं सादृश्याभावात्
न च प्रमाणान्तरं सम्भवति । उच्यते । न तावदनुगतं
प्रवृत्तिनिमित्तमुपलक्षणं विना, प्रत्यभिज्ञानतः शरीरैकत्व-
वादिनां शरीरविशेषे चैत्रादिपदवदेकैकशृङ्ग्याहिकया
गवयपदशक्तिग्रहे गवयान्तरेऽपि सम्भवात् । नाप्यनध्यक्षे
पदान्तरोपस्थिते परिभाषाऽऽकाशादिपदवत्, अतएवानध्य-
क्षत्वाच्च उपलक्षणस्य च शक्तौ बहिर्भावात् तद्वदेव । नापि
योगनिर्व्वचनात् पाठकादिवत् सोपलक्षणे, अन्यथा पठि-
क्रियानुपहिते पठतिप्रयोगः स्यात् । अतस्तद्गुणज्ञा-
नादियोगिनि शक्तिः । अवच्छेदकतया तूपलक्षणेऽपीति
योगाभावात् । नाप्युपस्थितनिमित्तसङ्कोचनात् स्वर्गादिप-
दवत् तदभावात् । अतो गन्धाद्युपलक्षितेन पृथिवीत्वेन
निमित्तेन पृथिव्यादिपदवत् सादृश्याद्युपलक्षिते गवय-
त्वादौ गवयादिपदानां शक्तिरिति परमार्थतः । अन्यथा
फलस्याभासत्वे मानत्वविरोधात् न च पूर्वं गवयत्वमुप-
स्थितमुपस्थापकाभावात् न च गवयपदादेव तदुपस्थितिर-
न्योन्याश्रयात् अथ वाक्यादेवानेन समयः परिच्छिन्नः के-
वलमयं प्रत्यभिजानाति योगोसदृशो गवयपदवाच्यत्वेन
मयावगतः सोऽयमिति नोपमानस्य विषय इति चेन्न न हि
सादृश्यमेव निमित्तमसम्भूतीतगूनामव्यवहारप्रसङ्गात् गोर-

वाच्य नापि गवयत्वं तदनुपस्थितेः। अतएव गोभयं स्वयं प्रतीतसमयसंक्रान्तयेऽतिदेशवाक्यप्रयोगानुपपत्तेश्च। गवयत्वे ह्ययं व्युत्पन्नो न गोसादृश्ये निमित्तस्य गवयत्वस्य प्रतीतेः। नच यदा यद्वाक्यं समयपरिच्छेदं पूर्वं नाजीजनत् तदा तदेव वाक्यं स्मृतं तत्प्रवृत्तिनिमित्तं छेत्स्यति अध्ययनसमयगृहीत एव वेदशिरङ्गोपाङ्गपर्य्यवदातस्य कालान्तरे नववाक्यस्येवास्य प्रागेव बोधितत्वात् पर्य्यवसित इति वाच्यं गोः सादृश्योपलक्षणत्वनिमित्तत्वयोः सन्देहात् पश्चाद्गवयत्वेऽवगते तर्कपुरस्कारात्। सादृश्यस्योपलक्षणत्वे गङ्गायां घोषः इत्यत्रेवान्वयो भविष्यतीति चेत् न उपलक्षणनिमित्तत्वसन्देहेऽपि यो गोसदृशः स गवयपदवाच्य इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ मानान्तरोपनीतानपेक्षणात् रक्तारक्तसन्देहेऽपि घटो भवतीति वाक्यवत् अन्यथा पर्य्यवसितेऽपि वाक्ये मानान्तरसहकारात् तत्तदन्वयबुद्धौ वाक्यभेदापत्तेः। गङ्गायां घोष इत्यत्र तु पदार्थ एवान्वयायोग्य इति युक्तं तत्र मानान्तरापेक्षणम्। यदि च प्रतीतसंसर्गबलायातोऽप्यर्थो वाक्यस्यैव तदा वाक्यभेदापत्तिः। अथ तात्पर्य्यानुपपत्त्या यष्टीः प्रवेशयेतिवल्लक्षणास्तु गवयपदाव्युत्पन्नं प्रति तद्व्युत्पत्तये वाक्यमाप्तेनोक्तं तच्च न प्रवृत्तिनिमित्तोपादानं विना। न च गोसादृश्यं तदिति तात्पर्य्यतो गोसादृश्यपदेन गोसमानाधिकरणं गवयत्वमुपलक्षितं कल्प्यते। न तु यथा धूमोऽस्तीत्यत्र वह्नौ तात्पर्यमनुमानेन निर्वहतीति न लक्षणा न चात्र प्रमाणान्तरमस्तीति येन तन्निर्वाह्यं अनुमानस्यासिद्धेः। अन्यथान्योन्याश्रयात् न च वाक्ये न लक्षणा, तस्याः पदधर्मत्वादिति वाच्यं एकपद एव लक्षणा पदान्तरन्तु नियामकमित्यस्य वक्तव्यत्वात्। अथ गवयत्वेन लक्षणया तदुपस्थितावपि व्यक्तिवाच्यता न ज्ञायेत शब्दादिति विशिष्टवाच्यता ग्राहकमानान्तरमवश्यं स्वीकरणीयम्। न च यद्विशिष्टो धर्मी यत्पदवाच्यः सोऽपि तद्वाच्य इति नियमः। जातिपदे व्यभिचारादिति चेत् न प्रवृत्तिवद्वाच्यत्वबोधतात्पर्य्यकत्वेन जातीति देशवाक्ये गवयत्वविशिष्टव्यक्तेरेव लक्षणात्। अथ यदा गवयत्वे साक्षात् तात्पर्यं गोसादृश्यशब्दस्य गृह्यते, तदा लक्षणा न च साक्षात् तात्पर्य्यमवष्टतम् अन्यथा धूमोऽस्तीत्यत्रापि साम्यादिति चेत् न उपस्थापकान्तराभावे तात्पर्य्यस्यैव साक्षात् तात्पर्य्यरूपत्वात् नचोपमानमेव तथा, अन्योन्याश्रयत्वात्। नैवं यत्र प्रवृत्तिनिमित्तविषयबोधने न तात्पर्यं योगोसदृशः स गवयशब्दवाच्य इति स्वरूपाख्यानमात्रं तत्राप्युक्तसामग्रीतः समयपरिच्छित्तिर्भवत्येव न च व्युत्पित्सुव्युत्पत्तये प्रवृत्तिनिमित्तविशेषे तात्पर्यं यदनुपपत्तिर्लक्षणावीजं स्यात्। अपि च धिक् करभमतिदीर्घग्रीवमित्यादिवाक्यस्य करभनिन्दातात्पर्यकस्य प्रवृत्तिनिमित्तपरत्वाभावेऽपि तादृशपिण्डमनुभवतः स्मरतश्च वाक्यार्थम् अयं करभशब्दवाच्य इति भवति मतिः। न च तत्र प्रवृत्तिनिमित्तविशेषे तात्पर्यमस्ति लक्षणाया वीजं, निन्दापरत्वात्। किञ्च सर्वत्रान्वयानुपपत्तिरेव लक्षणावीजं यष्टीः प्रवेशयेत्यादावपि प्रकरणादिना पुरस्कारादिप्रयोजनकत्वं प्रवेशनस्याप्रगतं तादृशे च प्रवेशनादौ यष्ट्यादेरनन्वयात् तात्पर्यानुपपत्तेरपि तात्पर्यमज्ञात्वा ज्ञातुमशक्यत्वात्। अथ प्रकरणादेरननुगमः तात्पर्यव्याप्यत्वेन तदनुगमे तात्पर्यानुपपत्तिरेव तद्वीजमस्तु लाघवादिति चेत् न धूमादिवदननुगतस्यापि व्याप्यत्वाविरोधात्। तस्मात् गवयशब्दः कस्यचिद्वाचकः शिष्टप्रयुक्तत्वादिति सामान्यतो निश्चितेऽपि गवयत्वविशिष्टो धर्मी गवयपदवाच्य इति लाघवान्निर्णेयम्। तच्च प्रमाणसहकारि न च तस्यां दशायां प्रमाणान्तरमस्त्यतो यत् प्रमाणसहकारि तत्प्रमाणान्तरमास्थेयम्। अस्त्वनुमानं तथा हि गवयशब्दो गवयत्वविशिष्टवाचकः असति वृत्त्यन्तरेऽभियुक्तैः प्रयुज्यमानत्वात् गवि गोशब्दवदिति चेत् न गवयत्वविशिष्टो यो धर्मी तस्य वाचकत्वपक्षेऽपि गवयत्वप्रवृत्तिनिमित्तत्वासिद्धेः। न च शक्तिमज्ञात्वा वृत्त्यन्तरं क्वापि अवधारयितुं शक्यते सामानाधिकरण्यमात्रस्य निमित्तोपलक्षणतासाधारणत्वात्। अथ गोसादृश्यनिमित्ततागौरवस्यानवतारेणोपमानस्याप्यनवतारः। तथा च तर्केण तस्य प्रवृत्तिनिमित्तकत्वेऽवगते गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वात् यन्नैवं तन्नैवमिति चेन्न तर्कस्यानिश्चायकत्वात् न चायं तर्को व्याप्तिग्रहमूलको येन विपर्ययानुमानादर्थसिद्धिः। अथ गवयपदं सप्रवृत्तिनिमित्तकमिति सामान्यतो दृष्टमेव तर्कसहकृतं गवयपदस्येतराप्रवृत्तिनिमित्तकत्वं पारिच्छिनत्ति न तु मानान्तरं कल्पयित्वा तर्कः सहकारी कल्प्यते इति चेन्न इदं सप्रवृत्तिनिमित्तकमन्यच्च न प्रवृत्तिनिमित्तमिति बुद्धावपि गवयत्वप्रवृत्तिनिमित्तकं गवयपदमिति मानान्तरं विना प्रतीतेः अनुमितेर्व्यापकतावच्छेदकत्वप्रकारताकत्वनियमात्। अथ यथेच्छायां

सामान्यतो दृष्टेन विशेषबाधसहकृतेनान्यद्रव्यानाश्रितत्वं प्रतीयते अन्यथा विशेषणपदस्य तद्विपर्य्ययस्य वा प्रमाणत्वात् बाधकानां पृथिव्याद्यैकैकमात्रव्यतिरेकविषयकत्वं अन्यद्रव्यानाश्रितत्वं केन ग्राह्यम्, तथात्रापि गौरवाख्य तर्कसहकृतसामान्यतो दृष्टादिना प्रवृत्तिनिमित्तकत्वं ज्ञायते पश्चाद्व्यतिरेकी स्यात् काप्यप्रमाणान्तरापेक्षयो पलक्षप्रमासहकारित्वस्य युक्तत्वादिति चेन्न इच्छायामेकैकबाधसहकृतपरापरबाधकैरेव तावद्रूपविशिष्टवैशिष्ट्यादन्यद्रव्यानाश्रयत्वपरिच्छेदात् न तु सामान्यतोदृष्टेन, विशेषणतयोपस्थित्यैव विशिष्टवैशिष्ट्यबोधनिर्वाहात् तर्कावतारदशायां तस्य तदपरिच्छेदकत्वाच्च। न च व्याप्तिपरमिदं वाक्यं यो गोसदृशः स गवयपदार्थ इति वाक्यादवगतव्याप्तिरनुमिनुयादयं गवयपदवाच्यो गोसदृशत्वात् अतिदेशकालावगतपिण्डवदिति वाच्यं न हि गोसदृशं ज्ञात्वाऽनेन पृष्टः स किंशब्दवाच्य इति किन्तु सामान्यतो गवयपदार्थमवगम्य कीदृगिति तथा च यद्योगप्रायमाख्यानं तस्यैवार्थत्वं ततः,किं तेन। अथ लक्षणपरमिदं वाक्यं किंलक्षणकोऽसाविति प्रश्नार्थः एवञ्च प्रयोक्तव्यम् अयमसौ गवय इति व्यवहर्त्तव्यो गोसदृशत्वात् यस्तु न तथा नासौ गोसदृशः यथा हस्तीति चेन्न न हि हस्त्यादीनां विपक्षत्वे प्रमाणमस्ति सर्वप्रयोगस्य दुर्ज्ञानत्वात् कतिपयव्यवहारस्यैकान्तिकत्वात् अथ कीदृक् किंलिङ्गः इति प्रश्नार्थो नह्यनेन लिङ्गमज्ञात्वा गवयपदस्य वाचकत्वं कस्यचिद्वाच्यत्वमवगतं येन तदर्थः प्रश्नः। अथ प्रवृत्तिनिमित्तविशेषे लिङ्गप्रश्नो गवयपदं येन निमित्तेन वर्त्तते तस्य किं लिङ्गमित्यर्थ इति चेत्न हि तदनुमेयमेवेत्यनेन निश्चितं येन तथा स्यात् ज्ञानहेतुमात्रप्रश्ने तद्विशेषेणोत्तरमिति चेन्न अविशेषादिन्द्रियसन्निकर्षमप्युत्तरयेत् वनं गतो द्रक्ष्यति तस्मान्निमित्तभेदे एवायं प्रश्नः कीदृग् गवयः केन निमित्तेन गवयपदं प्रवर्त्तते, गवयत्वस्य साक्षादुपदर्शयितुमशक्यत्वात् पृष्ट उपलक्षणं सादृश्यमाचष्टे पश्चाद्दृष्टेऽपि पिण्डेऽतिदेशवाक्यं स्मरतस्तर्कसहकारेण गवयत्वविशिष्टो धर्मी गवयशब्दवाच्य इति प्रवृत्तिनिमित्तविशेषः परिच्छित्तिरुपमानफलम्" इत्यन्तेन

वेदान्तपरिभाषायाम् "सादृश्यप्रमाकरणमुपमानम्। तथाहि नगरेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिरयं पिण्डो गोसदृश इति तदनन्तरं च भवति निश्चयोऽनेन सदृशी मदीया गौरिति। तत्रान्वयव्यतिरेकाभ्यां गवयनिष्ठगोसादृश्यज्ञानं करणं गोनिष्ठगवयसादृश्यज्ञानं फलम्। नचेदं प्रत्यक्षेण सम्भवति गोपिण्डस्य तदेन्द्रियासन्निकर्षात् नाप्यनुमानेन गवयनिष्ठगोसादृश्यस्यातल्लिङ्गत्वात्। नापि मदीया गौरेतद्गवयसदृशी एतन्निष्ठसादृश्यप्रतियोगित्वात् योयत्सादृश्यप्रतियोगी स तत्सदृशः यथा मैत्रनिष्ठसादृश्यप्रतियोगी चैत्रो मैत्रसदृश इत्यनुमानात् तत्सम्भव इति वाच्यम् एवंविधानुमानानवतारेऽप्यनेन सदृशी मदीया गौरिति प्रतीतेरनुभवसिद्धत्वादुपमिनोमीत्यनुव्यवसायाच्च। तस्मादुपमानं मानान्तरम्"।

सां०त०कौ० तस्य प्रमाणान्तरत्वं निराकृतं यथा "उपमानं तावत् यथा गौस्तथा गवय इति वाक्यं तज्जनिता धीरागम एव योऽप्ययं गवयशब्दो गोसादृश्यस्य वाचक इति प्रत्ययः सोऽप्यनुमानमेव, यो हि शब्दो यत्र वृद्धैः प्रयुज्यते सोऽसति वृत्त्यन्तरे तस्य वाचको यथा गोशब्दो गोत्वे, प्रयुज्यते चैवं गवयशब्दो गोसदृशे इति तस्यैव वाचक इति ज्ञानमनुमानमेव। यत्तु गवयस्य चक्षुःसन्निकृष्टस्य गोसादृश्यज्ञानं तत् प्रत्यक्षम्। अतएव स्मर्य्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षम् नह्यन्यत् गवि सादृश्यमन्यच्च गवये, भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्त्ती जात्यन्तरे सादृश्यमुच्यते सामान्ययोगश्चैकः स चेद्गवये प्रत्यक्षो गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्ति यत्र प्रमाणमुपमानं भवेदिति न प्रमाणान्तरमुपमानम्"।

एतन्मतं च मणिकृता विस्तरेण निराकृत्य तस्य प्रमाणान्तरत्वं समर्थितम्। तदेतत् संक्षिप्य भाषा०उक्तं यथा "ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम्। सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम्। वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते। गवयादिपदानान्तु शक्तिधीरुपमाफलम्"। अतएव प्राचीनैरपि उपमानस्य शक्तिग्राहकता स्वीकृता यथा "शक्तिग्रहं व्याकरणोपमानात् कोषाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः"।

**उपमानचिन्तामणि** पु० गङ्गेशोपाध्यायकृते उपमानप्रामाण्यव्यवस्थापके ग्रन्थभेदे उपमानशब्दे प्रायेण स ग्रन्थ उपन्यस्तः स एव ग्रन्थ उपमानखण्डत्वेन प्रसिद्धः।

**उपमारण** न०उप–मृ–णिच्-ल्युट्। वरुणप्रघासे यज्ञेऽवभृथोदकसमीपं गत्वा हविषोऽप्सु प्रक्षेपे "उपमारणप्रकारश्च शत०ब्रा०२,५,२,४६,उक्तः "तूष्णीमेव प्रतिप्रस्थाता स्रुचं

प्रच्छाति तद्यो वैश्वदेवेन यजमानयोर्वाससी परिहिते स्यातां ते एवात्रापि स्यातामथास्यै वारुण्यै पयस्यायै चामकर्षमिश्रमादायावभृथं यन्ति वरुण्यं वा एतच्चिरूणतायै तत्र न साम गीयते न ह्यत्र साम्ना किञ्चन क्रियते तूष्णीमेवेत्याभ्यवेत्योपमारयति” “यजमानयोर्यजमानतत्पत्न्योः। चामकर्षमिश्रं चामोऽतिपाकेन दग्धः पात्रे संसक्तः क्षष विलेखने क्षष्यत इति कर्षः चामश्चासौ कर्षश्चेति चामकर्षस्तेन मिश्रं हविरादाय अवभृथमुदकं प्रति यन्ति एतत् चामकर्षमिश्रं हविः वरुणयम्। सौमिकावभृथवत् प्रसक्तं सामगानं निषेधति तत्र न सामेति न ह्यत्रवरुणप्रधासे साम्ना किमपि प्रयोजनं क्रियते अवभृथसमीपमभ्यवेत्य हविरुपमारयति अप्सु प्रक्षिपति” भा०। एतादृशोपमारणाभिप्रायेण कात्या० २०,८,२१,सूत्रवृत्तौ “अतः कुम्भोपमारणान्तमेव पूर्वयोरह्नोः कर्त्तव्यमित्युक्तम्” कर्केण।

**उपमास्य** न० उपमासं प्रतिमासं भवं यत्। प्रतिमासभवे पितृणां श्राद्धे “विराड् वा इदमग्र आसीत्” इत्युपक्रम्य “सोऽनुक्रामत् सा पितृनागच्छत्तां पितरोऽघ्नत सा मासि समभवत् तस्मात् पितृभ्योमास्युपमास्यं ददति प्र पितृयाणं पन्थां जानाति य एवं वेद” अथ० ८,१०,१९।

**उपमित्** त्रि० उपसमीपे मीयते क्षिप्यते उप+मि—क्विप्। १उपनिखाते २उपस्थापयितरि च “स्थूणेव जनाँ उपमिद्ययन्थ” ऋ० १,५९,१, “उपमित् उपस्थापयिता यद्वा उपमिदुपनिखाता स्थूणेव” भा० ३स्थूणायाम् “ऋभायदुपमित्र रोधः” ऋ० ४,५,१, “उपमित् स्थूणा” भा० “उपमितां प्रतिमितामथोपरिमितामुत शालाया विश्ववाराया नद्धानि वि चृतामसि” शालाभिमन्त्रणे, अथ० ९,३,१। कर्त्तरि क्विप्। ४उपमाकर्त्तरि।

**उपमित** त्रि० उप+मि—क्त। १सादृश्यानुयोगिनि। यथा चन्द्र इव मुखमित्यादौ मुखं, तस्य चन्द्रसादृश्यानुयोगित्वात् “उपमितं व्याघ्रादिभिः सामान्याप्रयोगे” पा० नरव्याघ्रः नरो व्याघ्र इव वाक्ये व्याघ्र उपमानं नर उपमितः। अत्र समासे व्याघ्रशब्दस्य व्याघ्रसदृशे लक्षणा व्याघ्रसदृशोनर इति बोधः उपमितस्य विशेष्यत्वेऽपि समासविधिशास्त्रे प्रथमान्ततया निर्द्देशात् पूर्व्वनिपातः। अनेन सूत्रेण विहितसमास उपमितसमास इत्युच्यते।

**उपमिति** स्त्री उप+मि—क्तिन्। १उपमालङ्कारे सादृश्यज्ञानजन्ये गवयादिशब्दशक्तिबोधरूपे २उपमानफले बोधभेदे “प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे” भाषा० करणे क्तिन्। ३सादृश्ये च “पल्लवोपमितिसाम्यसपक्षम्” सा० द०। “तदाननस्योपमितौ दरिद्रता” नैष०।

**उपमेत** त्रि० उपमामुपमानभावं सर्व्ववृक्षेभ्योदीर्घत्वात् इतः २त०। शालवृक्षे वृक्षाणां मध्ये तस्य सर्व्वोच्चत्वात् अन्यस्योपमानतां प्राप्तत्वात्तथात्वम्। “शालप्रांशुर्महाभुजः” रघौ तस्योच्चतायामुपमानत्वं वर्णितम्।

**उपमेय** त्रि० उपमीयतेऽसौ उप+मि—यत्। सादृश्यानुयोगिनि यथा चन्द्र इव मुखमित्यादौ मुखम्। “अन्तःपुरस्यैक कुलोपमेयम्” कुमा० “भूयिष्ठमासीदुपमेयकान्तिः”। “नवेन्दुना तन्नभसोपमेयम्” रघुः “सा पूर्णा यदि सामान्यधर्म्म औपम्यवाचि च। उपमेयं चोपमानं भवेद्वाच्यमियं पुनः” सा० द०।

**उपमेयोपमा** स्त्री अर्थालङ्कार भेदे। ३९८पृष्ठे विवृतिः।

**उपयज्** पु० उप—यज—भावे वेदे विच् लोके तु क्विन्। पशुयागाङ्गे यागभेदे “त्रीणि ह वै पशोरेकादशानि एकादश प्रयाजाः एकादशानुयाजा एकादशोपयजः” शत० ब्रा० ३,८,४,४, इत्युपक्रमे “अथ यद्यजन्तमुपयजति तस्मादुपयजोनाम” इति तन्नामनिरुक्तिं प्रदर्श्य एकादश उपयजः क्रमेण दर्शिताः।

**उपयन्तृ** पु० उप+यम—तृच्। विवाहकर्त्तरि पत्यौ। “अथोपयन्तारमलं समाधिना” कुमा० “अथोपयन्त्रा सदृशेन युक्तम्” रघुः। २संयमनकर्त्तरि त्रि० स्त्रियां ङीप्।

**उपयन्त्र** न० उपगतं यन्त्रम् अत्या० स०। सुश्रुतोक्ते शल्योद्धारणोपाययन्त्रभेदे। यथा “तत्र मनःशरीरावाधकराणि शल्यानि तेषामाहरणोपायो यन्त्राणि तानि च षट्प्रकाराणि तद्यथा स्वस्तिकयन्त्राणि, संदंशयन्त्राणि, तालयन्त्राणि, नाडीयन्त्राणि, शलाकायन्त्राणि, उपयन्त्राणि चेति” विभज्य। “उपयन्त्राण्यपि रज्जुवेणिका पट्टचर्म्मान्तवल्कलतावस्त्राष्ठीलाश्ममुद्गरपाणिपादतलाङ्गुलिजिह्वादन्तनखमुखवालाश्वकटकशाखाष्ठीवनप्रवाहणहर्षायस्कान्तमयानि क्षाराग्निभेषजानि चेति” तानि दर्शितानि। “एतानि देहे सर्व्वस्मिन् देहस्यावयवे तथा। सन्धौ कोष्ठे धमन्याञ्च यथायोगं नियोजयेत्” सुश्रु०।

**उपयम** पु० उप+यम—अप्। विवाहे। “कन्या त्वजातोपयमा सलज्जा नवयौवना” सा० द०। उपयमस्य भेदादिकमुद्वाहशब्दे ११८६पृ० उक्तं तत्काल वरकन्यामेलकादि विशेषोनिरूप्यते। तत्र द्विजातीनां समावर्त्तनानन्तरं

विवाहकालः मनुना "चतुर्थमायुषोभागमुषित्वाद्यं गुरौ द्विजः। द्वितीयमायुषोभागं कृतदारो गृहे वसेत्" आयुर्द्वितीयभागे विवाहकाल उक्तः" कुल्लूकभट्टेन तु पूर्व्वापरविरोधमाशङ्क्य ब्रह्मचर्य्यकालोत्तरत्वमस्य समर्थितं यथा "चतुर्थं भागमिति ब्रह्मचर्य्यकालोपलक्षणार्थम् अनियतपरिमाणत्वादायुषश्चतुर्थभागस्य दुर्ज्ञानत्वात् न च "शतायुर्वै पुरुष" इति श्रुतेः पञ्चविंशतिवर्षपर्य्यन्तपरत्वम्, "षट्त्रिंशदाब्दिकं चर्य्यमित्यादिना विरोधात्। आश्रमसमुच्चयपक्षमाश्रितो ब्राह्मण उक्तं ब्रह्मचर्य्यकालं जन्मापेक्ष्याद्यं यथाशक्ति गुरौ स्थित्वा द्वितीयमायुषश्चतुर्थभागं कृतदारो गृहस्थाश्रममनुतिष्ठेत् "गृहस्थस्तु यदा पश्येत् वलिपलितमात्मनः। पुत्रेषु दारान् निक्षिप्य वनं गच्छेत् सहैव वा" (मनुः) इत्यनियतकालत्वात् द्वितीयमायुषोभागमित्यपि गार्हस्थ्यकालमेव"। "गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि। उद्वहेत द्विजोभार्य्यां सवर्णां लक्षणान्विताम्" मनुना समावर्त्तनोत्तरमेव विवाहकालोविहितः। समावर्त्तनकालश्च "षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्। तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा" मनुना षट्त्रिंशद्वर्षाद्युत्तरकालः उक्तः। स च शक्त्यपेक्षया युगभेदेन वा व्यवस्थाप्यः तथा च सत्ययुगे,३६वर्षाः त्रेतायामष्टादश वर्षाणि द्वापरे नव वर्षाणि कलियुगे वेदग्रहणकालपर्य्यन्तं ब्रह्मचर्य्यं कार्य्यं ततःसमावर्त्तनम्। युक्तञ्चैतत् मनुनासत्ये नराणां चतुःशतायुष्कत्वेन त्रेतायां त्रिशतायुष्कत्वेन द्वापरे द्विशतायुष्कत्वेन कलौ शतायुष्कत्वेन चोक्तेः आयुरुत्तमत्वादिभेदेन व्रतकालाधिक्यादि। अतएव "दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः"इत्यादिपुराणे कलौ आयुषोहीनत्वाभिप्रायेणैव दीर्घकालब्रह्मचर्य्यनिषेधः। तत्रायं भेदः। "केशान्तः षोड़शे वर्षे ब्राह्मणस्य विधीयते। राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः" मनुना स्वस्वोपनयनद्विगुणितकालएव गोदानाख्यस्य केशान्तसंस्कारस्य विधानात् वेदव्रतरूपस्य वक्ष्यमाणस्य महानाम्न्यादिकेशान्तरूपस्यानन्तरं विवाहस्य कर्त्तव्यतायाःसर्वनिबन्धृभिर्व्यवस्थापितत्वेन स्वस्वोपनयनद्विगुणकालोत्तरं विवाहस्य कर्त्तव्यता नार्वाक्। तथा च ब्राह्मणस्य १६वर्षात् क्षत्रियस्य द्वाविंशतेः वैश्यस्य चतुर्विंशतेः परं विवाहकालः। अतएव रघौ वर्णितम् "अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्त्तयत् पिता"

शूद्राणान्तु "वैश्यवच्छौचकल्पश्चेत्युक्तेः वैश्यधर्मातिदेशात् चतुर्विंशतिवर्षोत्तरमेव विवाहकालः "त्रिंशद्वर्षोवहेत्कन्यां हृद्यां द्वादशवार्षिकीम्। त्र्यष्टवर्षोऽष्टवर्षीयां धर्मे सीदति सत्वर" इति मनुना ब्रह्मचर्य्यरक्षणाशक्तौ सत्वरतोक्तेः अशक्तौ ततोऽर्वागपि कर्त्तुं शक्यते इति भेदः। स तु न श्रेयानिति बोध्यम्। अतएव शु० त० रघुनन्दनेन। "अनूढभार्य्यः शूद्रस्तु षोड़शाद्वत्सरात् परमिति" ब्रह्मवचनार्थमीमांसायां "तद्विशेषणेन न्यायवर्त्तिनां शूद्राणां षोड़शवर्षोपरि विवाहकालः कल्प्यते" इति व्यवस्थाप्य तत्समर्थनाय वैश्यवच्छौचकल्पश्चेति चकाराद्वैश्यधर्म्ममात्रस्यातिदेशमुक्त्वा अतिदेशेन शूद्रस्याप्युपनयनप्राप्तौ "विवाहमात्रं संस्कारं शूद्रोऽपि लभते सदेति" ब्रह्मपु० तस्य विवाहस्यैवोपनयनस्थानीयतामुक्त्वा तत्कालाकाङ्क्षायां "गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्। राज्ञामेकादशे सैके विशामेके यथाकुलम्" या० स्मृतौ। उत्तरोत्तरमधिककालस्योक्त्या वैश्योपनयनकालापेक्षयाऽधिकालत्वं शूद्रविवाहस्योक्तम्। तत्रापि यथाकुलमित्यतिदेशेन षोड़शाद्वर्षात् प्रागपि विवाहो दृश्यते स तु न प्रशस्त इत्यन्तेन उक्तरीत्यैव व्यवस्थापितम्। द्विजातिस्त्रीणान्तु यद्यपि हारीतेन "द्विविधाः तत्र ब्रह्मवादिनीनामुपनयनं वेदाध्ययनं भिक्षाचर्य्या च, सद्योवधूनां तु उपस्थिते विवाहे स्त्रियो ब्रह्मवादिन्यः सद्योवधूश्च यथा कथञ्चिदुपनयनं विधाय विवाहः कार्य्यः" सद्योवधूनामप्युपनयनं विहितम्। तथापि तथा विधीयमान उपनयनेन वर्णभेदेनोक्तकालापेक्षा उपस्थिते विवाहे इति कथनात् विवाहकालस्यैव तत्कालता। वस्तुतः स्त्रीणामुपनयनं कल्पान्तरविषयम् यथाह यमः "पुराकल्पे हि नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनञ्च वेदानां सावित्रीग्रहणन्तथा। पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः। स्वगृहे चैव कन्याया भैक्ष्यचर्य्या विधीयते" इति। ननु यद्यपि कलौ मुख्यमुपनयनं स्त्रीणां नास्ति तथापि आतिदेशिकमस्ति यदाह मनुः "वैवाहिकोविधिः स्त्रीणामौपनायनिकः परः। पतिसेवा गुरौ वासोगृहार्थोऽग्निपरिक्रियेति" तेन कालभेदः सेत्स्यतीति सत्यम् अतिदेशोयमुपनयनधर्म्मप्राप्त्यर्थः यथा ब्राह्मणादीनामुपनयनात् प्राक् कामचारकामवादकामभक्षणाद्याचाराणामदोषतास्ति तदनन्तरमुपनयनधर्माणां सन्ध्यास्नानादीनां प्राग धर्मनिरसनपूर्व्वकमनुष्ठानपूर्वकं यथास्ति तथा स्त्रीणा

अपि विवाहात् प्राक् कामचारादिधर्मा न दोषं कुर्वन्ति विवाहस्य तु द्विजत्वसिद्धिकरत्वादनुष्ठिते विवाहे कामचारादिधर्मनिरासपूर्वकं पतिसेवा गुरौ वास इत्यादिकमनुष्ठानं भवेदिति। सर्ववर्णस्त्रीणां षड्वर्षोत्तरं विवाहकालः वचनप्रामाण्यवचनात्। एवं वरकन्ययोः सामान्यकाले निरूपिते इदानीं विशेषकालोऽभिधीयते। तत्र तयोः रव्यादिशुद्धेरावश्यकता यथाह "गुरुशुद्धिवशेन कन्यकानां समवर्षेषु षडब्दकोपरिष्टात्। रविशुद्धिवशाच्छुभोवराणामुभयोश्चन्द्रविशुद्धितोविवाहः" मु० चि० पी० धा० व्या० "कन्यकानां विवाहः षड्वब्दकोपरिष्टात् षड्वर्षातिक्रमानन्तरं समवर्षेषु युग्मवर्षेषु सत्सु, गुरुशुद्धौ सत्यां विवाहः शुभः। अर्थात् पुरुषाणां विषमवर्षेषु रविशुद्धौ विवाहः शुभः। तदाह च्यवनः। "षड्वब्दमध्ये नोद्वाह्या कन्या, वर्षद्वयं यतः। सोमोभुङ्क्तेऽथ गन्धर्वस्ततः पश्चाद्धुताशन" इति जन्मानन्तरं वर्षद्वयं सोमः कन्यां भुङ्क्ते। तदनन्तरं द्वे वर्षे गन्धर्वस्तदनन्तरमग्निस्ततो मनुष्याधिकारःषडब्दतः प्रागविवाहो न कार्य्यः। तत्र षड्वर्षानन्तरं समवर्षे विवाहः शुभः। यदाह नारदः। "युग्मेऽब्दे जन्मतः स्त्रीणां शुभदं पणिपीडनम्। एतत् पुंसामयुग्मेऽब्दे व्यत्ययेनाशुभन्तयोरिति"। कश्यपः "विवाहो जन्मतः स्त्रीणां युग्मेऽब्दे पुत्रपौत्रदः। अयुग्मे श्रीप्रदः पुंसां विपरीते तु मृत्युदः" इति। एवं च सति स्त्रीणां विवाहोऽष्टमदशमवर्षयोर्भवतीत्यर्थः। यथाह व्यासः "अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी। दशवर्षा भवेत् कन्या द्वादशे वृषली स्मृतेति"। अस्य फलभेदमाह वात्स्यः 'गौरीं ददद्ब्रह्मलोकं सावित्रं रोहिणीं ददत्। कन्यां ददत् स्वर्गलोकमतःपरमसद्गतिम्"। प्राप्नोतीति शेषः। "गौरी विवाहिता सौख्यसम्पन्ना स्यात् पतिव्रता। रोहिणी धनधान्यादिपुत्राढ्या सुभगा भवेत्। कन्या विवाहिता सम्पत्समृद्धा स्वामिपूजितेति"। ननु नववर्षाया रोहिण्या अयुग्मवर्षत्वाद्विवाहः कथं सम्भवति गर्भतोनवर्षग्रहणे अयुग्मवर्षत्वापरिहारात् स दोषस्तदवस्थ एव ये तु "अयुग्मे दुर्भगा नारी युग्मे च विधवा भवेदिति" चण्डेश्वरवाक्यमभ्यसन्ति तन्मते सुतरां विवाहाभावः। उच्यते। "युग्मेऽब्दे सम्पदः सौख्यं विद्याधर्मायुषः सदा। भर्त्तुर्दृष्टा भवन्त्योजे निषेकाद्वात्र संशय" इति पराशरवाक्याद्गर्भग्रहणं यथाऽवसीयते नारदादिवाक्ये तथा जन्मत इत्यपि। तत्र षष्ठवर्षानन्तरं जन्मतोविषमवर्षीयमासत्रयानन्तरं नव मासाः शुभाः। समवर्षीयमासत्रयञ्च। इदमेव च मासत्रयं नारदादिमते गृह्यते इति युक्ता व्यवस्थेति युक्तमुत्पश्यामः। एतदेवाभिप्रेत्योक्तं श्रीपतिनिबन्धे। "मासत्रयादूर्द्ध्वमयुग्मवर्षे युग्मे तु मासत्रयमेव यावत्। विवाहशुद्धिं प्रवदन्ति सन्तोवात्स्यादयो गर्गवराहमुख्याः" इति। 'अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत्। तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रतेति" चण्डेश्वरोक्तिश्च साधिका। एवं नवमवर्षस्या युग्मत्वप्रयुक्तनिषेधोऽष्टमवर्षानन्तरं मासत्रयमेव। एवं विहितवर्षे यस्मिन् काले गुरुशुद्धिर्भवेत् तद्वशेन विवाहः कार्य्यः गुरुशुद्धिस्तु 'वटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः। श्रेष्ठोगुरुः खषट्त्र्याद्ये पूजयान्यत्र निन्दित" मु० चि० अभिहिता। यदाह गुरुः "स्त्रीणां गुरुबलेनैव विवाहः शोभनः स्मृतः। वरस्यार्कबलं ग्राह्यमैन्दवन्तूभयोरपीति" "सुरगुरुबलमबलानां पुरुषाणां तीक्ष्णरश्मिबलमेव। चन्द्रबलं दम्पत्योरवलोक्य विशोधयेल्लग्नमिति"। वराहोक्तेश्च। एतच्चावश्यकत्वार्थमभिहितम्। यदा द्वयोरपि गुरुबलमिष्टं भवेत् तदा पाणिग्रहः शुभदः। द्वयोरन्यतरस्य गुर्वर्कशुद्धौ विवाह्यकालान्तरासम्भवे च तत्पित्रादिना पूजाङ्कारयेत् "रविशुद्धौ ग्रहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ। क्षौरन्ताराशुद्धौ शेषं चन्द्राश्रितं कर्मेति" राजमार्त्तण्डोक्तेः। वराणां विवाह्यानां पुंसां रविशुद्धिवशेन विवाहः शुभः। उभयोः स्त्रीपुंसयोश्चन्द्रविशुद्धितोविवाहः शुभः स्मृतः अत्र सम्मतिः प्रागुक्ता। यदा तु कन्या कालातिक्रान्ता भवति तदा गुरुबलमनावश्यकमित्याह व्यासः 'दशवर्षव्यतिक्रान्ता कन्या शुद्धिविवर्ज्जिता। तस्यास्तारेन्दुलग्नानां शुद्धौ पाणिग्रहोमतः" इति। 'ग्रहशुद्धिमब्दशुद्धिं शुद्धिं मासायनर्त्तुदिवसानाम्। अर्वाक् दशवर्षेभ्यो मुनयः कथयन्ति कन्यकानाम्" भुजबलः सा च गुरुरविचन्द्रशुद्धिर्गोचरप्रकरणेऽभिधास्यते। "गोचरबलाभावेऽष्टकवर्गादिबलं ग्राह्यमित्याह नारदः "गोचरं वेधजं चाष्टवर्गजं रूपजं बलम्। यथोत्तरं बलाधिक्यं स्थूलं गोचरमार्गजमिति" पी० धा०।

तत्रादौ अयननिरूपणम्। विवाहोपक्रमे "हरौ प्रसुप्ते न च दक्षिणायने तिथौ च रिक्ते भगिनि त्यजन्ति"राजमा०। 'उदगयन आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चूडोपनयनगोदानविवाहाः, विवाहः सार्व्वकालिक इत्येके" आश्व० गृ० १, ४, १, सू०। सार्व्वकालिक इति दक्षिणायन-

कृष्णपक्षविषयः न तु अशुद्धकालपरस्तस्यानुपस्थितेः अयनपक्षयोरेव प्रक्रान्तत्वात्तद्विषयता सर्व्वशब्देन तथैव परामर्शयोग्यतया अन्यस्य चाप्रक्रान्ततया तेन परामर्शा-योगात्। अत एव भुजबलभी० ग्रहशुद्धिमित्यादिकं प्रागुक्तमभिधाय "एतत्परन्तु विज्ञेयमङ्गिरोवचनं यथा। कालात्यये च कन्यायाः कालदोषो न विद्यते। मलमासादिकालानां विवाहाद्ये प्रयत्नतः। पुंसः प्रति सदा दोषात् सर्व्वदैव हि वर्ज्जिता" इत्युक्तम्। ततश्च वर-कन्ययोर्मध्ये कन्याया दशवर्षातीतत्वे ग्रहशुद्ध्यादिर्नापेक्ष्यः समयाशुद्धिश्च उभयसाधारणत्वादपेक्ष्यैव। एतदेव भङ्ग्य-न्तरेणोक्तं ज्यो० त० "राजभये तथा युद्धे पितॄणां प्राण-संशये। अतिप्रौढा च या कन्या नानुकूलं प्रतीक्षते। अतिप्रौढा च या कन्या कालधर्मविरोधिनी। अविशु-द्धापि सा देया चन्द्रलग्नबलेन तु"। "एतत्परमेव दश-मासाः प्रशस्यन्ते चैत्रपौषविवर्ज्जिताः" राजमा० वाक्यम् "सार्वकालिकमिच्छन्ति विवाहं गौतमादय इति मिहिर-वचनमप्येतत्परम्। वस्तुतः सार्वकालिक इत्यत्र तदासुरा-द्यधर्म्यविवाहविषयम्। प्रमि० "प्राजापत्यब्राह्मदैवार्षसंज्ञाः कालेषूक्तेष्वेव कार्य्याः विवाहाः। गान्धर्वाख्यश्चासुरो-राक्षसश्च पैशाचो वा सर्वकाले विधेयः" श्रीपत्युक्तेः "धर्म्येष्वेव विवाहेषु कालस्यैव परीक्षणम्। नाधर्म्येषु विवाहेषु" गृह्यपरिशिष्टोक्तेश्च। तत्र सौरादिमासनिरूपणम् "मिथुनकुम्भमृगालिवृषाजगे मिथुनगेऽपि रवौ त्रिलवे शुचेः। अलिमृगाजगते करपीडनम्भवति कार्त्तिक-पौषमधुष्वपि" मु० चि०। "मिथुनकुम्भौ प्रसिद्धौ। मृगोमकरः अलिर्वृश्चिकः वृषः प्रसिद्धः अजोमेषः। एतद्राशिगते रवौ सति तत्रापि मिथुनस्थिते सूर्येऽपि शुचेराषाढस्य त्रिलवे तृतीयांशे आषाढ़शुद्धप्रतिपदमारभ्य दशमीपर्य्यन्तं करपीड़नं विवाहो भवति। अर्थादितर-राशिगते सूर्य्ये सति आषाढ़शुक्लदशम्यनन्तरं हरिशयने च सति विवाहो न स्यात् यदाह कश्यपः। "उत्तरायणगते सूर्य्ये मीनं चैत्रञ्च वर्जयेत्। अजगोद्वन्द्वकुम्भालिमृग-राशिगते रवौ। मुख्यं करग्रहं त्वन्यराशिगे न कदा-चनेति" वशिष्ठः। "दिनाधिपे मेषवृषालिकुम्भद्वयुग्मन-क्राख्यघटस्थसंस्थे। माघद्वये माधवशुक्रयोश्च मुख्योऽथ वा कार्त्तिकसौम्ययोश्चेति। घटस्तुला। शुक्रोज्येष्ठः सौम्यो मार्गशीर्षः मुख्यो विवाह इति शेषः। "आर्द्रोदयाद्बुद्ध-मिनस्य कार्य्यं नक्षत्रवृन्दे दशके कदाचित्। मासोक्त-कर्मेतरमङ्गलाद्यं कुर्य्याच्च सुप्तेऽपि तथा मुरारौ"। एतेन हरिशयनात्प्राक्कालः साधीयानित्यभिहितं भवति। अत्र सामान्यतोमासशब्देन चान्द्र एव मासो गृह्यते "इन्द्राग्नी यत्र हूयेते" इत्याद्युक्तेः। अत्र तु सौरचान्द्रमासद्वयोपादा-नादुभयोरैक्ये विवाहफलमविकलं भवति। तदुक्तं केशवार्के च। "प्रायःसौरं मानमिष्टं विवाहे केचिच्चान्द्रं मान-माहुः फलेन। तस्मात् सम्यक् तत्फलाप्तिस्तदैक्ये सौरो-मासः केवलः किञ्चिदूनः" इति। अस्यार्थः। कश्यपा-दिभिः सौरा एव मासाः उक्ताः तेषां च प्राशस्त्यम्। "विवाहादौ स्मृतः सौरो यज्ञादौ सावनोमत" इति वृद्धगर्ग-स्मरणात्। नारदादिभिस्तु "माघफाल्गुनवैशाखज्यैष्ठ-मासाः शुभप्रदाः। मध्यमाः कार्त्तिकोमार्गशीर्षौ वै नि-न्दिताः परे" इति चान्द्रा एवोक्ताः। एतत्प्राशस्त्यं च वशिष्ठेनोक्तम्। "उद्वाहयज्ञोपनयप्रतिष्ठातिथिव्रत-क्षौरमहोत्सवाद्यम्। पर्वक्रियावास्तुगृहप्रवेशः सर्वं हि चान्द्रेण हि गृह्यते तदिति"। अतोद्वयोः सौरचान्द्र-मासयोरैक्ये विवाहादि शुभमेकतरपक्षाश्रयणे मध्यममिति निष्कृष्टोऽर्थः। एवं च मकरसंक्रान्तौ माघः, कुम्भे फा-ल्गुनोमेषे वैशाखः वृषे ज्यैष्ठः,मिथुने आषाढतृतीयांशः, तुलायां कार्त्तिको देवोत्थानादुत्तरः, वृश्चिके मार्गशीर्षः, शुभ इत्यर्थः। केचित्तु चान्द्रमासं मुख्यमाहुस्तेनायमर्थः। फाल्गुनो विहित इति मीनसंक्रमणसद्भावेऽपि शुभः, चैत्रो निषिद्ध इति मेषसंक्रान्तिसद्भावेप्यशुभः। तदुक्तं विवाहवृन्दावने। "झषेण निन्द्यो यदि फाल्गुने स्याद-जस्तु वैशाखगतो न निन्द्यः। मध्याश्रितौ द्वावपि वर्ज-नीयावित्यादिवाचामियमेव युक्तिरिति" "अजस्तु वैशा-खगतो न निन्द्य इति तु निर्मूलमेव। न हि मेषसंक्रमः क्वचित् निषिद्धोऽस्ति। तदेतदविचारितरमणीयं कुतः? य-तोयन्मते सौरमासस्यैव मुख्यत्वं तन्मते मेषः प्रशस्त इति चैत्रेऽपि विवाहप्रसङ्ग इति विपरीतं तस्यापि वक्तुमश-क्यत्वात्। उक्तञ्च चूड़ारत्ने। "पौषेऽपि मकरस्थेऽर्के चैत्रे मेषगते रवौ। आषाढे मिथुनादित्ये केऽप्याहुः करपीडन-मिति"। किञ्च वशिष्ठवाक्ये "दिनाधिपे मेषवृषेत्यादौ, सौर चान्द्रमासयोरुपादानस्य वैयर्थ्यापातात्। तस्मात् द्वयो-रैक्ये विवाहः प्रशस्तः। तत्र माघफाल्गुनवैशाखज्येष्ठा-मुख्याः। यत्र तु निषेधानन्तरं प्रतिप्रसवो यथा दक्षि-णायने विवाहं निषिध्य कार्त्तिकमार्गशीर्षौ विहितौ तत्र मध्यमत्वम् अतएव कार्त्तिकसौम्ययोश्च वसिष्ठेन पृथगुक्तं

नारदवाक्ये स्पष्टमेव मध्यमत्वम् अतो विवाहपटले गर्गः “पुत्रोपेता तु कार्त्तिके धनधान्यसुतोपेता सौम्ये भर्त्तृपरायणा” इत्युक्तवान् तदपि धनुःसंक्रान्तिव्यतिरिक्तविषयं द्रष्टव्यम्। हरिशयनात्प्रागाषाढ़स्तृतीयांशस्य मध्यमः हरिस्वापान्तर्गताः आषाढश्रावणभाद्रपदाश्विनकार्त्तिकाः पौषश्चैते निषिद्धाः। धनुषि पौषस्त्वत्यन्तं निषिद्धः। “मीने धनुषि सिंहे च स्थिते सप्ततुरङ्गमे। क्षौरमन्नं न कुर्वीत विवाहं गृहकर्म चेति” गार्ग्योक्तेः। अन्नमन्नप्राशनं विहितकालातिक्रान्तम्, क्षौरं चौलञ्च स्वतन्त्रम् “यत्तूपनयनाङ्गं क्षौरं तस्य न निषेधः” “चैत्रे मीनगते रवाविति” विहितोपनयनस्य विषयालाभात्। अथोत्तरार्द्धं व्याख्यायते। अलीति। अलिमृगाजाः प्राग्व्याख्याताः। एतद्राशिगते सूर्ये सति कार्त्तिकपौषमधुष्वपि करपीड़नं भवति यथा वृश्चिके कार्त्तिकः मकरे पौषः मेषे चैत्रोऽपीत्यर्थः इदं तु सौरमासग्रहिलानां मतम्। अतएवाधुनोक्तचूडामणिस्थवाक्ये “कौप्याजः करपीड़न” मित्युक्तिः। श्रीधरोऽपि। “पौषे च कुर्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेषगते सदा स्यात्। प्रशस्तमाषाढकृतं विवाहं वदन्ति गर्गा मिथुनस्थितेऽर्के इति तदेतत्प्रागभिहितन्यायादुपेक्ष्यम् अथवा केशवमताङ्गीकारेण मध्यमत्वमङ्गीकृत्य कालान्तरानपेक्ष्यवश्यदेयकन्याविषयम्”। पी॰धा॰। प्रमिता॰ तु देशभेदात् मासभेदस्य ग्राह्यतोक्ता ‘तपतीकृष्णयोर्मध्ये चान्द्रोमासः प्रशस्यते। अन्येषु सर्वदेशेषु सौरो व्रतविवाहयोः। विन्ध्याद्रेर्दक्षिणे भागे चान्द्रोमासः प्रशस्यते। उदग्भागे तु विन्ध्यस्य सौरमानं विधीयते। अन्येषु सर्वदेशेषु मिश्रमानं प्रकल्पयेत्”। मासभेदे फलभेदमाह ज्यो॰त॰ भुजबलः “आषाढे धनधान्यभोगरहिता नष्टप्रजाः श्रावणे वेश्या भाद्रपदे इषे च मरणं रोगान्विता कार्त्तिके। पौषे प्रेतवती वियोगबहुला चैत्रे मदोन्मादिनी” निर्ण॰सि॰ व्यासः। “माघफाल्गुनवैशाखे यदूढा मार्गशीर्षके। ज्यैष्ठे वाषाढमासे वा सुभगा वित्तसंयुता। श्रावणे वापि पौषे वा कन्या भाद्रपदे तथा चैत्राश्वयुक्कार्त्तिकेषु याति वैधव्यतां लघु” अत्राषाढस्य शुभता दशदिनात् प्राक्, तदुत्तरमशुभत्वम् अत्र प्रतिप्रसवः प्रागुक्तः। अत्र जन्ममासादिनिषेधः “आद्यगर्भसुतकन्ययोर्द्वयोर्जन्ममासभतिथौ करग्रहः। नोचितोऽथ विबुधैः प्रशस्यते चेद्द्वितीयजनुषोः सुतप्रदः” मु॰ चि॰ “यस्मिन् चान्द्रे मासे जन्म स जन्ममासः जन्मतिथिमारभ्य त्रिंशत्तिथ्यात्मको मासो जन्ममासोवेत्युच्यते। इयमप्याद्यप्रकरणे “जन्मर्क्षमासतिथय” इति पद्यव्याख्यावसरे विविच्य व्याकृतमस्माभिः, यस्मिन्नक्षत्रे जन्म तज्जन्मभं यस्यां तिथौ जन्म सा जन्मतिथिः। समाहारद्वन्द्वः आगमशासनस्यानित्यत्वान्नुमभावः। उपलक्षणत्वात्तन्मुहूर्त्तोऽपि। तत्राद्यगर्भसुतकन्ययोर्द्वयोः करग्रहो विवाहो नोचितो निषिद्ध इत्यर्थः। यदाह वसिष्ठः। “स्वजन्ममासर्क्षतिथिक्षणेषु वैनाशिकाद्युक्षगणेषु चैवम्। नोद्वाहमात्माभ्युदयाभिकाङ्क्षी नैवाद्यगर्भद्वितये कदाचित्”। क्षणोमुहूर्त्तः नारदोऽपि “न जन्ममासे जन्मर्क्षे न जन्मदिवसेऽपि वा। आद्यगर्भसुतस्याथ दुहितुर्वा करग्रहः” इति। जन्मदिवसे जन्मतिथौ। आवश्यकत्वेऽपवादो जगन्मोहने “जातं दिनं दूषयते वसिष्ठः पञ्चैव गर्गस्त्रिदिनं तथात्रिः। तज्जन्मपक्षं किल भागुरिश्च व्रते विवाहे गमने क्षुरे चेति” पी॰धा॰। ज्यो॰त॰ तु “चाष्टौ च गर्गश्च्यवनोदशाहम्। जन्माख्यमासं किल भागुरिश्च व्रते विवाहे क्षुरकर्णवेधे” तृतीयपादादि पाठः “अथेति द्वितीयजनुषोरनाद्यगर्भयोश्चेद्विवाहः तर्हि सुतप्रदो विबुधैः पण्डितैः प्रशस्यते। एतच्च तृतीयगर्भादावपि द्रष्टव्यम्। सर्वयाद्यगर्भराहित्यं विवक्षितम्। केचित् “चेदनाद्यजनुषोरिति” पठन्ति। यदाह च्यवनः “जन्मर्क्षे जन्ममासे वा तारायामथ जन्मनि। जन्मलग्ने भवेदूढा पुत्राढ्या पतिवल्लभेति”। चण्डेश्वरः “जन्ममासे तु पुत्राढ्या धनाढ्या जन्मभोदये। जन्मलग्ने भवेदूढा दृढ्वा सन्ततिसौख्यभागिति” एतच्चानाद्यगर्भविषयम्। “आद्यगर्भे साक्षान्निषेधाभिधानात्” पी॰धा॰। ज्यो॰त॰ तु कन्याविषयमिदं न वरविषयम्। “उद्वाहश्च कन्याया जन्ममासे प्रशस्यते” इति श्रीपतिवचनात् इति समर्थितम्। अथ ज्यैष्ठादिमासे विवाहे विशेषः। “ज्येष्ठद्वन्द्वं मध्यमं संप्रदिष्टं त्रिज्येष्ठञ्चेन्नैव युक्तं कदापि। केचित्सूर्यं वह्निगं प्रोह्य चाहुर्नैवान्योन्यज्येष्ठयोः स्याद्विवाहः” मु॰ चि॰ “पुत्रोज्येष्ठः कन्या च ज्येष्ठा मासोऽपि ज्येष्ठः इत्येतत्त्रिज्येष्ठम्। इदं ज्येष्ठत्रयमुच्यते। तत् कदापि नैव युक्तं नैव प्रशस्तम्। ज्येष्ठे मासे ज्येष्ठवधूवरयोर्नैव विवाहःकार्य इत्यर्थः। यदात्वेकतरज्येष्ठत्वं तदा ज्येष्ठमासेऽपि भवति। यदाह गुरुः “न ज्येष्ठे ज्येष्ठयोः कार्यं दम्पत्योः पाणिपीड़नम्। तयोरन्यतरे ज्येष्ठे ज्येष्ठमास्यपि कारयेत्” इति। एतच्चान्यतरज्येष्ठत्वं द्विविधं ज्येष्ठमासो ज्येष्ठोवरश्च, ज्येष्ठोमासः कन्या च ज्येष्ठा एतज्ज्येष्ठद्वन्द्वं मध्यमं संप्रदिष्टमगतिविषयकमित्यर्थः। एकोज्येष्ठोऽन्यद्द्वयमज्येष्ठमुत्तममेव यदाह वराहः ‘द्वौ ज्येष्ठौ मध्य-

मौ प्रोक्तावेक ज्येष्ठः शुभावहः । ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसम्मतमिति"। पराशरोऽपि "अज्येष्ठा कन्यका यत्र ज्येष्ठःपुत्रोवरो यदि। व्यत्ययोवा तयोस्तत्र ज्येष्ठमासः शुभप्रदः" इति । केचित्तु ज्येष्ठमासाभावेऽपि वरकन्ययोर्ज्येष्ठत्वमपि मध्यमाहुस्तदसत् । वधूवरान्यतरज्येष्ठताराहित्यं विवक्षितम् । तद्वाक्यं प्रागुक्तं । किन्तु जन्ममासज्येष्ठमासयोरभावेऽपि ज्येष्ठयोर्बधूवरयोः सर्वथा निषिद्धो विवाहः । यदाह गर्गः "ज्येष्ठायाः कन्यकायाश्च ज्येष्ठपुत्रस्य वै मिथः । विवाहो नैव कर्त्तव्यो यदि स्यान्निधनं तयोरिति" । तदेतदुक्तं ग्रन्थकृता "नैवान्योन्यं ज्येष्ठयोः स्याद्विवाहः" इति । ज्येष्ठत्रयनिषेधस्त्वतिदोषाधिक्यसूचनार्थः । (अतःपरं ज्येष्ठशब्दस्य ज्यैष्ठवाचकत्वं समर्थितम्) अथास्यापवाद उच्यते केचिदिति । सत्यावश्यकत्वे सूर्यं वह्निगङ्कृत्तिकास्थं प्रोह्य त्यक्त्वा ज्यैष्ठमासेऽपि ज्येष्ठस्य वरस्य कन्याया वा विवाहः शुभः इति केचिदूचुः एतच्च तुल्यन्यायत्वाज्ज्येष्ठापत्यस्य न ज्येष्ठे इति सामान्यतो मङ्गलकृत्यनिषेधेऽपि द्रष्टव्यं यदाह भरद्वाजः "ज्यैष्ठे ज्येष्ठस्य कुर्वीत भास्करे चानलस्थिते । नोत्सवादीनि कार्य्याणि दिग्दिनानि च वर्जयेत्"। विशेषमाह स एव । "दशाहञ्चैव गर्गस्तु त्रिदशाहं वृहस्पतिः । अर्कभोग्यानग्निभतो मुनिः त्वाह पराशर"इति । तन्त्रान्तरेपि । "कृत्तिकास्थं रविन्त्यक्त्वा ज्यैष्ठे ज्येष्ठस्य कारयेत् । उत्सवादीनि कार्याणि दिनानि दश वर्जयेत् । व्रतबन्धविवाहञ्च चूड़ां कर्णस्य वेधनम् । ज्यैष्ठमासे न कुर्वीत कल्याणज्येष्ठपुत्रगमिति" । अत्र ज्येष्टपुत्रदुहित्रोर्ज्यैष्ठमासवन्मार्गशीर्षेऽपि मङ्गलकृत्यनिषेधमाह वात्स्यः । "मार्गशीर्षे तथा ज्यैष्ठे विवाहञ्चौलमेव च । ज्येष्ठपुत्रदुहित्रोश्च न कुर्वीत व्रतन्तथा" । भरद्वाजोऽपि "मार्गशीर्षे तथा ज्यैष्ठेक्षौरं परिणयं व्रतम् । आद्यपुत्रदुहित्रोश्च यत्नतः परिवर्जयेत्" इति । (जेग्रा०त० । "आद्यगर्भभवपुत्रकन्ययोः जेग्रष्ठमासि न च जातु मङ्गलम्" इत्युक्तम् ) स्वयं च 'ग्रन्थकर्त्रा ज्येष्ठे कैश्चिन्मार्गेऽपि नेष्यते इत्युक्तं प्राक्, कैश्चिद्ग्रहणं शिष्टाचाराभावं सूचयितुङ्कृतम्" पी० धा०। "सुतपरिणयात् षण्मासान्तः सुताकरपीडनं न च निजकुले तद्वद्वा मण्डनादपि मुण्डनम्। न च सहजयोर्दये भ्रात्रोः सहोदरकन्यके न सहजसुतोद्वाहोऽब्दार्धे शुभे न पितृक्रिया" मु०चि०। "देहलीदीपन्यायेनात्रापि निजकुल इति सम्बध्यते निजकुले स्वंशे सुतस्य परिणयाद्विवाहात् परतः सौरमासषट्कमध्ये सुतायाः कन्याया विवाहो न स्यात् । उक्तञ्च वसिष्ठेन । "पुत्रोद्वाहान्नैव पुत्र्याः कदाचिदा षण्मासात्कार्य्यमुद्वाहकर्मेति" । नारदोऽपि । "पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये । कुर्य्यान्न व्रतमुद्वाहं मङ्गलाच्चापि मङ्गलमिति" (ऋतूनां सौरत्वात् सौरषण्मासवर्ज्जनमुक्तम्)अयञ्च निषेधः कुलपरोद्रष्टव्यः । यदाह वात्स्यः ।"स्त्रीविवाहः कुले निर्गमः कथ्यते पुंविवाहः प्रवेशो वसिष्ठादिभिश्च । निर्गमादादितो न प्रवेशोहितस्तत्र संवत्सरान्तोऽवधिः कीर्त्तितश्च"इति । निजकुल इति । स्वंशे पुत्रस्य कन्याया वा मण्डनाद्विवाहान्मुण्डनञ्चौलमुपनयनं महानाम्न्यादिव्रतचतुष्टयं समावर्त्तनं वा तद्वत् षण्मासान्तर्न कार्य्यम् । यदाहात्रिः "कुले ऋतुत्रयादर्वाक् मण्डनान्न तु मुण्डनमिति" । तस्मान्मुण्डनान्मुण्डनं कार्य्यं तथा कन्याविवाहादनन्तरं पुत्रस्य विवाहः कार्य्य इत्यर्थः । यदाह नारदः । "मुण्डनान्मण्डनं कार्य्यं मण्डनान्नैव मुण्डनमिति" । वसिष्ठः "पुत्रीविवाहात् परतः सदैव शुभप्रदं पुत्रविवाहकर्मेति" नचेति, सहजयोः सोदरयोर्भ्रात्रोः सहोदरकन्यके न देये नोद्वाह्ये । उक्तं च नारदेन "नचैकजन्मनोः पुंसोरेकजन्ये तु कन्यके । नूनद्वाचिदुद्वाह्ये नैकदा मुण्डनद्वयमिति" "एकजन्ये तु कन्ये द्वे पुत्रयोर्नैकजन्ययोरिति" वसिष्ठोक्तेश्च । अत्र चकारोऽनुक्तसमुच्चयार्थः । तेनैकस्मै वराय सहोदरकन्याद्वयमपि न देयमित्यर्थः । "न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचनेति" वसिष्ठोक्तेः नारदोपि । "प्रत्युद्वाहोनैव कार्य्योनैकस्मै दुहितृद्वयमिति" । प्रत्युद्वाहोविनिमयविवाहः मत्पुत्राय चेत्त्वया कन्या दीयते तदा मयापि त्वत्पुत्राय कन्या देयेत्येवं पणबन्धरूपः । ( परिवर्त्त ) एतादृशः पणबन्धोभगिन्यादिदानेऽपि द्रष्टव्यः । सुतश्च सुतश्च सुतौ सरूपाणामित्येकशेषः । सुता च सुता च सुते पूर्व्ववदेकशेषः । सुता च सुतश्च सुतौ पुमान् स्त्रियेत्येकशेषः । सुतौ च सुते च इति कृतैकशेषाणां द्वन्द्वः अत्रापि पुमान् स्त्रियेत्येकशेषः । सहजाश्च ते सुताश्चेति कर्मधारयः । तेषां सोदरभ्रातृणां विवाहः अब्दार्द्धे वर्षार्द्धे सौरषण्मासमध्ये न कार्य्यः । यदाह नारदः "विवाहस्त्वेकजन्यानां षण्मासाभ्यन्तरे यदि । असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत्" । विवाह इत्युपलक्षणम् । तेन समानसंस्कार एकमातृजयोः पुत्रयोः कन्ययोर्वा पुत्रकन्ययोर्वा न कार्य्यं

इत्यर्थः । तथा च वृद्धमनुः "एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः । न समानक्रियाकुर्य्यान्मातृभेदे विधीयते" इति । समानक्रिया चूडाकरणादिका एकवर्षमध्ये निषिद्धेत्यर्थः । एकवत्सर इति सावकाशकालद्योतनाय । षण्मासमध्ये तु सर्व्वथैव न कार्य्या । "विवाहस्त्वेकजन्यानां षण्मासाभ्यन्तरे यदीति" नारदवाक्यस्वरसात् । पराशरोऽपि "एकोदरप्रसूतानामेकस्मिन् वत्सरे यदि । पाणिग्रहोभवेन्नूनं तत्रैका विधवा भवेदिति" तुल्यन्यायत्वाद्यज्ञोपवीतसंस्कार्य्यत्वात् तयोरन्यतरस्य नाश इत्यर्थः "नैकदा मुण्डनद्वयमिति" वशिष्ठोक्तेः । एकदा एकस्मिन्वर्षे मुण्डनञ्चौलमुपनयनं वा" "पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम् । पुत्रान्तरस्य कुर्वीत नोद्वाहमिति स्मृतय इति" गर्गवाक्यन्तु भिन्नमातृविषयपूर्वोक्तपराशरवाक्यस्वरसात् । "समानापि क्रिया कार्य्या मातृभेदे तथैव च । विवाहे दुहितुः कार्य्यो न विवाहश्चतुर्द्दिनमिति" नारदोक्तेश्च । वशिष्ठेन तु विशेषोऽभिहितः । "एकोदरप्रसूतानां नात्र कार्य्यत्रयं भवेत् । भिन्नोदरप्रसूतानां नेति शातातपोऽब्रवीदिति" । चौलोपनयनविवाहरूपं कार्य्यत्रयम् । तदुक्तं च्यवनेन । "आदौ चौलं ततो मौञ्जी विवाहश्च शुभप्रदः । मातृभेदे बुधैरुक्तो मातुरैक्ये न कर्हिचिदिति" । एवं स्थिते भिन्नोदरमङ्गलं सत्यावश्यकत्वे एकस्मिन् मण्डपे न कार्य्यम् । किन्तु गृहभेदादाचार्य्यभेदाद्वा कार्य्यं यदाह वशिष्ठः । "द्विशोभनं त्वेकगृहेऽपि नेष्टं शुभं तु पश्चान्नवभिर्दिनैश्च । आवश्यकं शोभनमुत्सवो वा द्वारेऽथवाचार्य्यविभेदतोऽपि" इति । द्वारे द्वारभेदे ।

यमलजातयोस्त्वपत्ययोर्नियतकालानां जातकर्मादिकर्मणामेकक्रियानिषेधाभावो वर्षभेदेन तदसम्भवात् । अतो यमलजातयोरुक्तनिषेधो नास्ति । "एकस्मिन् वत्सरे प्राप्ते कुर्याद्यमलजातयोः । चौरञ्चैव विवाहञ्च मौञ्जीबन्धनमेव चेति" पराशरोक्तेः । चौरश्चौलम् । भट्टकारिकायां च "एकस्मिन् वत्सरे चैव वासरे मण्डपे तथा । कर्त्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमलजातयोरिति" । तत्रापि ज्येष्ठानुक्रमेण । "जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् । यमयोश्चैव गर्भेषु जन्मतोज्येष्ठता मतेति" मनूक्तेराद्योत्पन्नस्य ज्येष्ठत्वम् । "यस्य जातस्य यमयोः पश्यति प्रथमं मुखम् । सन्तानः प्रथमश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितमिति" । सन्तानोवंशः । शुभे इति शुभे विवाहादिमङ्गलकार्य्ये पितृक्रिया श्राद्धक्रिया न कार्य्या विशेषेणानभिधानात् कुलेऽयं निषेधः मङ्गले नाप्यमङ्गलमिति" नारदोक्तेः । अमङ्गलं श्राद्धम् । तु किन्तु समाप्ते एव मङ्गले कार्य्यमित्यर्थः । अथवा श्राद्धदिने समीपस्थिते तदनन्तरं लग्नमवधार्य्य विवाहादिमङ्गलं कृत्यं कार्य्यमित्यर्थः" पी०धा० । "बध्वा वरस्यापि कुले त्रिपूरुषे नाशं व्रजेत्कश्चन निश्चयोत्तरम् । मासोत्तरं तत्र विवाह इष्यते शान्त्याऽथ वा सूतकनिर्गमे परैः" मु०चि० "निश्चयोत्तरं वाग्दानानन्तरं यदि बध्वाः कन्यायास्तथा वरस्यापि कुले वंशे तत्रापि त्रिपूरुषमध्ये कश्चन सपिण्डो-नाशं व्रजेत् प्राप्नुयात् तत्र मासोत्तरं मरणदिनादारभ्य त्रिंशद्दिनं प्रतिकूलं ततः शान्त्या स्वनुष्ठितया विवाहः सुखेनेष्यते । उक्तञ्च स्मृतिचन्द्रिकायाम् । "कृते वाङ्निश्चये पश्चान्मृत्युर्भवति गोत्रिणः । तदा न मङ्गलं कार्य्यं नारीवैधव्यदं ध्रुवमिति" । विशेषमाह मेधातिथिः । "पुरुषत्रयपर्य्यन्तं प्रतिकूलं सगोत्रिणाम् । प्रवेशनिर्गमौ तद्वत् तथा मुण्डनमण्डने" । इदं तु पित्रादिभिन्नविषयं यथोक्तं माण्डव्येन "अन्येषां तु सपिण्डानामाशौचं मासमितम् । तदन्ते शान्तिकं कृत्वा ततोलग्नं विधीयते" इति । पित्रादिमरणे तु विशेषमाह शौनकः । "वरबध्वोः पिता माता पितृव्यश्च सहोदरः । एतेषां प्रतिकूलञ्च महाविघ्नप्रदं भवेत् । पिता पितामहश्चैव माता वापि पितामही । पितृव्यः स्त्रीसुतोभ्राता भगिनी वा विवाहिता । एभिरेव विपन्नैश्च प्रतिकूलं बुधैः स्मृतमिति । अन्यैरपि विपन्नैश्च केचिदूचुर्न तद्भवेत्" । अन्यैः उक्तेभ्योऽन्यैः । प्रतिकूलस्य नियतं कालमाह-माण्डव्यः "वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः । तदा संवत्सरादूर्द्ध्वं विवाहः शुभदो भवेत् । पितुराशौचमब्दं स्यात् तदर्द्धं मातुरेव हि । मासत्रयञ्च भार्य्यायास्तदर्द्धं भ्रातृपुत्रयोः" । दैवज्ञमनोहरे विशेषः "प्रतिकूले सपिण्डस्य मासमेकं विवर्ज्जयेत् । विवाहस्तु ततः पश्चात् तयोरेव विधीयते । दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये । प्रौढायामपि कन्यायां प्रतिकूलं न दुष्यतीति" मेधातिथिः । "दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च । उदासवर्त्तिनश्चैव प्रतिकूलं न विद्यते । सङ्कटे समनुप्राप्ते याज्ञवल्क्येन योगिना । शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् । अकृत्वा शान्तिकं यस्तु निषेधे सति दारुणे । यः करोति शुभं तावद्विघ्नं तस्य पदेपदे" इति । अथावश्यकत्वे ऽपवादमाहाथर्वेति । "स्वस्वर्णपुरस्कारेणाशौचनि-

र्गमे मरणाशौचनिर्गमे सति शान्त्या च स्वनुष्ठितया
विवाहः कार्य्य इति परैराचार्य्यैरिष्यते। यदाह मेधा-
तिथिः। “प्रेतकार्य्याण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियामिति”
ज्योतिःप्रकाशेऽपि। “प्रतिकूलेऽपि कर्त्तव्योविवाहोमास-
मन्ततरा। शान्तिं विधाय गां दत्त्वा वाग्दानादि चरेद्बुधः’
इति। सत्यावश्यकत्वे स्वस्वाशौचादनन्तरं माममध्येऽपि
शान्तिं विधाय विवाहः कार्य्य इत्यर्थः पी०धा० “चूडा
व्रतञ्चापि विवाहतोव्रताच्चूडा नेष्टा पुरुषत्रयान्तरे। वधू-
प्रवेशाच्च सुताविनिर्गमः षण्मासतोवाऽब्दविभेदतः शुभः
मु०चि० “चूड़ा चौलं व्रतमुपनयनञ्च अपिशब्दान्
महानाम्न्यादिसमावर्त्तनञ्च विवाहात् परतः पुरुष-
त्रयान्तरएव नेष्टम्। तथा व्रतादुपनयनाच्चूड़ा पुरुषत्रय-
पर्य्यन्तं नेष्टा। तथा वध्वाः स्नुषायाः कन्यायाः वि-
निर्गमोऽपि पुरुषत्रयपर्य्यन्ते नेष्टः एतन्मूलवाक्यं “पुरुषत्र-
यपर्य्यन्तमित्यादि” “आदौ चौलं ततो मौञ्जीत्यादि” च प्रा-
ग्लिखितम्। तस्मान्मूलपुरुषस्य चतुर्थादौ नायं
दोषः। स चायं दोषः पुरुषत्रये षण्मासपर्य्यन्तमेव अतः
षण्मासत इति मासषट्कानन्तरमयं व्यत्यस्तोऽपि विवा
हादिः सर्वोविधिः शुभः। एतन्मूलवाक्यम् “कुले
ऋतुत्रयदर्वाक्” इत्यादि प्रागुक्तम्। अत्रापवाद उच्यते
वेति अथवाऽब्दभेदात् वर्षभेदात् षण्मासमध्येऽपि
शुभः। यथा माघे मासि विवाहो वैशाखे चौलं यज्ञो-
पवीतं वा भवत्येवेत्यर्थः। तदुक्तं संहितासारावल्याम्
“फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने। भेदादब्दस्य
कुर्वीत नर्त्तुत्रयविलङ्घनमिति” अत्र फाल्गुनपदं प्रागब्द-
गतमासान्तरस्याप्युपलक्षणं चैत्रपदं चोत्तरवर्षगतवैशाखा
द्युपलक्षणं तत्र कैमुतिकन्यायेन यत्र स्वल्पकालान्तरं तत्रा-
पि निषेधाभावस्ततोऽधिकव्यवधाने किं वाच्यम्, अब्द-
भेदस्यैव प्रयोजकत्वात्” पी०धा०। अथ प्रसङ्गान्मूलादि
सूत्पन्नयोर्वधूवरयोः श्वशुरादिपीडकत्वमाह “श्वश्रूविना-
शमहिजौ सुतरां विधत्तः कन्यासुतौ निरृतिजौ श्वशुरं
हतश्च। ज्येष्ठाभजाततनया स्वधवाग्रजञ्च शक्राग्निजा
भवति देवरनाशकर्त्री” मु०चि०। “अहिजावाश्लेषोत्-
पन्नौ कन्यासुतौ श्वश्र्वाः साक्षाद्भर्त्तुर्मातुर्विनाशं विधत्तः
कुरुतः तथा निरृतिजौ मूलोत्पन्नौ कन्यासुतौ श्वशुरं
हतोमारयतः। उक्तञ्च वसिष्ठेन “नैरृत्यभोद्भूतसुतः
सुता वा साक्षादवश्यं श्वशुरं निहन्ति। तदन्त्यपादे जनितो
निहन्ति नैवोत्क्रमेणाहिभवः कलत्रमिति” अहिभव
इति पुंस्त्वमविवक्षितम्। सुतः सुता वेति पूर्व्वोक्तेः
‘मूलजा श्वशुरं हन्ति व्यालजा च तदङ्गनामिति” नारदो-
क्तेश्च तस्य श्वशुरस्याङ्गनां पत्नीम्। वरस्य कन्याया
वा साक्षान्मातरं न तु सापत्नमातरं हन्तीत्यर्थः। तदेव
स्पष्टमुक्तं वसिष्ठेन। ‘जनकं जननीं हन्ति भर्त्तुर्मूला-
हिधिष्ण्यजा”। तुल्यन्यायत्वात् कन्याया अपि साक्षा-
न्मातरम्। ज्येष्ठेति ज्येष्ठानक्षत्रोत्पन्नकन्या स्वधवा-
ग्रजं भर्त्तुर्ज्येष्ठभ्रातरं हन्ति। शक्राग्निजा विशाखा-
नक्षत्रोत्पन्नकन्या देवरस्य भर्त्तुः कनिष्ठबन्धोर्नाशकर्त्री
भवति”। यदाह वसिष्ठः। “सुरेशताराजनिता धवाग्रजं
द्विदैवताराजनिता तु देवरमिति”। हन्तीत्यनुवर्त्तते। ना-
रदोऽपि। “ऐन्द्री पत्यग्रजं हन्ति देवरन्तु द्विदैवजेति” पी०
धा० अत्र विशेषः “द्वीशाद्यपादत्रयजा कन्या देवरसौख्यदा।
मूलान्त्यपादसार्पाद्यपादजातौ तयोः शुभौ”। मु०चि०
‘द्वीशं’ विशाखा। यदाह च्यवनः। “विशाखा तुलया-
युक्ता देवरस्य शुभावहा। विशाखा वृश्चिकोद्भूता देवरं
हन्त्यसंशयमिति”। वृद्धनारदोऽपि “न हन्ति देवरं
कन्या तुलाभिस्त्र्यद्विदैवजा। चतुर्थपादजा त्याज्या दुष्टा
वृश्चिकपुच्छवत्”। तस्माद्विशाखाचतुर्थपादे निषेधः फ-
लित” इत्यर्थः। मूलेति। तयोः श्वशुरश्वश्र्वोः मूल-
चतुर्थचरणोत्पन्नौ तौ कन्यासुतौ श्वशुरसौख्यदौ।
आश्लेषाद्यचरणोत्पन्नौ कन्यासुतौ तयोः सौख्यदौ तदुक्तं
नारदेन। “सुतः सुता वा नियतं श्वशुरं हन्ति मूलजः।
तदन्त्यपादजोनैव तथाऽश्लेषाद्यपादजः” अत्र पुंस्त्वमविव-
क्षितं हेतुः स एव” पी०धा०। इति वधूवरयोः सामान्य-
तोगुणदोषविचारः

अथ वधूवरयोर्मेलकम्। तत्र कूटान्यनेकविधानि तत्र
केचिद्दश कूटान्याहुः। तदाह नारदः। “दिनं गणञ्च
माहेन्द्रं स्त्रीदीर्घं योनिरेव च। राशिराश्यधिपौ रज्जु
र्वश्यं वेधो दश स्मृताः”। “पुनश्च वर्णकूटञ्च माहेन्द्रं
वा ततः परम्। एते द्वादश योगाश्च प्रीतिभेदाः
प्रकीर्त्तिताः”। अन्येऽष्टादशकूटान्याहुः। यदाह गर्गः
“माहेन्द्रं गणकूटञ्च दिनकूटञ्च योनिजम्। स्त्रीदीर्घं
रज्जुकूटञ्च वश्यं वर्णाख्यकूटकम्। राशिराश्यधिपाख्ये
च वेधौ नाड्याख्यकूटकम्। भूतलिङ्गाख्यकूटञ्च जात्याख्यं
पक्षिकूटकम्। योगिनीगोत्रकूटन्तु कूटान्यष्टादशैव तु।
दम्पत्योर्वृद्धिकारीणि यत्नाच्चिन्त्यानि शास्त्रतः” इति। तत्र
दशादिकूटानां तत्तद्देशविशेषप्रसिद्धत्वात् तानि विहाय

सर्व्वदेशप्रसिद्धान्यष्टकूटानि सलक्षणानि आह पी०धा०
"वर्णोवश्यं तथा तारा योनिश्च ग्रहमैत्रकम् । गणमैत्रम्भकूटञ्च नाडी चैते गुणाधिकाः" मु०चि०।
"एते राशिकूटभेदवर्णादिमैत्र्यां सत्यां गुणाधिका एकादिगुणाधिकाः स्युः । वर्णमैत्र्यामेकगुणः, वश्ये द्वौ गुणौ, तारायां त्रयोगुणाः, योनिमैत्र्यां चत्वारः, ग्रहमैत्र्यां पञ्च, गणमैत्र्यां षट्, सद्भकूटे सप्त, नाडीभेदेऽष्टौ इत्यर्थः । तदुक्तम् "वर्णोवश्यं तारा योनिग्रहभकूटनाडिकाश्चेति । ज्ञेया यथोत्तरं ते बलिनः स्त्रीपुंसयोर्घटन" इति । दैवज्ञमनोहरेऽपि । "नाड़ीभेदे गुणा अष्टौ सप्त सद्राशिकूटके । षट् गुणा गणमैत्र्याञ्च सौहार्दे पञ्चकं तयोः । योनिमैत्र्याञ्च चत्वारस्त्रयस्ताराबले गुणाः । वश्यत्वे द्वौ गुणौ प्रोक्तौ वर्णएकः प्रकीर्त्तितः इति" पी०धा०। तत्रादौ वर्णकूटमाह
"द्विजाझषालिकर्कटास्ततो नृपा विशोऽङ्घ्रिजाः । वरस्य वर्णतोऽधिका वधूर्न शस्यते बुधैः" मु०चि०।
"मीनवृश्चिककर्कराश्योर्द्विजाः ब्राह्मणाः। ततोऽनन्तरमन्ये मेषसिंहधनूराशयोनृपाः क्षत्रियाः । वृषकन्यामकराविशो वैश्याः । मिथुनतुलाकुम्भा अङ्घ्रिजाः शूद्राः । ततश्च वधूवरराश्योर्वर्णौ ज्ञात्वा वरस्य वर्णतः ब्राह्मणादिकाद्वधूरधिका ज्येष्ठवर्णा बुधैर्न शस्यते । किन्तु समा हीना वा शस्यत इत्यर्थः। यदाह नारदः । "झषालिकर्कटाविप्रास्तदूर्ध्वाः क्षत्रियादयः । पुंवर्णराशेः स्त्रीराशौ समे हीने तथा शुभम् । वर्णज्येष्ठा तु या नारी वर्णहीनस्तु यः पुमान् । विवाहं यदि कुर्वीत तस्या भर्त्ता विनश्यति"। अत्रैको गुणो वर्णाधिके वरे वर्णसमे वा वर्णहीने तु गुणाभावः तदुक्तं दैवज्ञमनोहरे । "एकोगुणः सदृग्वर्णे तथा वर्णोत्तमे वरे । हीनवर्णे वरे शून्यं केऽप्याहुः सदृशे दलमिति । दलमर्द्धम् । पी० धा० । अथ वश्यकूटम् ।
"हित्वा मृगेन्द्रं नरराशिवश्याः सर्वे तथैषां जलजाश्च भक्ष्याः । सर्वेऽपि सिंहस्य वशे विनालिं ज्ञेयं नराणां व्यवहारतोऽन्यत्" मु० चि० । "नरराशयो मिथुनकन्या तुलाः एषां सर्वेऽपि मेषादयः सिंहं त्यक्त्वा वश्याः ननु मनुष्याणां जलचराः कथं वश्याः यत उभयोः सहावस्थानाभाव इत्यत आह तथेति । एषां नरराशीनां जलजाः कर्कमकरकुम्भमीनास्तु भक्ष्याः किं पुनर्वश्या इति सूचयितुं तुशब्दः । सिंहस्य वशे अलिं वृश्चिकं विना सर्वे राशयोवश्याः अन्यदनुक्तं चतुष्पदानां स्थलचराणां चतुःपदजलचराणां वा परस्परं वश्यावश्यं, नराणां मनुष्याणां व्यवहारतो ज्ञेयं यदाह वशिष्ठः "वश्याख्यक्त्वा राशयोऽन्ये नृभानां सिंहस्यास्येवमन्ये विधेयाः । कीटन्त्यक्त्वा लोकतोऽन्यत्प्रसिद्धम् वश्यावश्यं नैव तोयालयाख्योः" तोयालया जलचराः अलिश्च ते परस्परं वश्या नैव स्युरित्यर्थः । अत्र गुणविभागो दैवज्ञम० "सख्यं वैरं च भक्ष्यं च वश्यमाहुस्त्रिधा बुधाः । वैरे भक्ष्ये गुणाभावोद्वयोः सख्ये गुणद्वयम् । वश्यवैरे गुणस्त्वेको वश्यभक्ष्ये गुणोऽर्द्धक इति" यद्यपीदं वधूवरयोः परस्परं तुल्यमेवोक्तं तथापि सत्यावश्यकत्वे वरं प्रति भक्ष्यत्वं वश्यत्वं वा स्त्रियोऽपेक्ष्यं न तु विपरीतं "वर्णज्येष्ठा तु या नारीत्यनेन" समानन्यायत्वात् "अन्योन्यवश्यत्वे तूत्तममेव" पी०धा०। अथ ताराकूटम् ।
"कन्यर्क्षाद्वरभं यावत् कन्याभं वरभादपि । गणयेन्नवहृच्छेषे त्रीष्वद्रिभमसत् स्मृतम्" मु०चि० "कन्याजन्मनक्षत्रात् वरनक्षत्रं यावद्गणयेत्तथा वरनक्षत्रादपि कन्यानक्षत्रं गणयेत्ततोऽवगतेऽङ्के नवभिर्भक्ते यदवशिष्टं तच्चेत् त्रिपञ्चसप्तमितम्भवेत्तदाऽसत् अशुभदं स्मृतमन्यथा द्वित्रचतुःषडष्टनवमितञ्चेत्स्यात्तदा शुभमित्यर्थादुक्तम्भवति यदाह नारदः "स्त्रीभमारभ्य गणने नवपर्यायतः क्रमात् । जन्मत्रिपञ्चसप्तस्थमृक्षं स्याद्वरनाशनम् । पुम्भमारभ्य गणने स्त्रीभञ्जन्मादिके स्थले । स्त्रीविनाशो भवेत्तस्माद्दिनकूटं विवर्जयेत्" दिनकूटं ताराकूटम् । शार्ङ्गीयेऽपि "नरर्क्षाद्गणयेद्यावत्कन्यर्क्षाद्बाम्भभादपि । वरभं न वह्न्यृक्षे शास्तारः सन्ति परस्परम् । त्यक्त्वा त्रिपञ्चसप्ताख्याः शेषोद्वाहे मिथः शुभाः" इति यत्तु कश्यपेन" "गणयेत्कन्यकाधिष्ण्यादाद्यस्या वरजन्मभम् । जन्मत्रिपञ्चसप्तर्क्षं हित्वाऽन्यर्क्षं शुभप्रदमिति" । कन्यानक्षत्रादेव गणनोक्ता । अत एव "भीरुभादचलपञ्चतृतीयाः शोकवैरविपदेव च तारा" इति केशवार्केणाप्युक्ता सा त्वावश्यकद्योतनार्था । तथाहि । द्वयोरपि परस्परनक्षत्रगणने शुभञ्चेच्छुभमेवाशुभञ्चेदशुभमेव तत्रैकस्मादन्यतरनक्षत्रगणनयाऽशुभत्वेऽपि स्त्रीनक्षत्राद्वरनक्षत्रं त्वशुभं नापेक्षितव्यमेवेति भावः । अत्र गुणविभागो दैवज्ञम० । "एकतोलभ्यते तारा शुभा चैवाशुभाऽन्यतः । तदा सार्द्धो गुणश्चैव ताराशुद्ध्या मिथस्त्रयः । उभयोर्न शुभा तारा तदा शून्यं समादिशेदिति" अत्र यद्यपि नारदादिभिर्जन्मतारा निषिद्धेत्युक्तम् । तद्ग्रन्थकृता एकनक्षत्रे तावत् "राश्यैक्ये चेद्भिन्नमृक्षन्द्वयोः

स्याच्चत्वैक्ये राशियुग्मन्तथैवेति” वक्ष्यमाणत्वाच्चोक्तम् । दशमैकोनविंशतितारयोस्तु निषेधो दुष्टभकूटे ज्ञेयः । सद्भकूटे तु दोषाभावएव”। पी॰धा॰योनिकूटमाह“अश्विन्यम्बुपयोर्हयोनिगदितः स्वात्यर्कयोः कासरः, सिंहोवस्वजपाद्भयोः समुदितोयाम्यान्त्ययोः कुञ्जरः । मेषोदेवपुरोहितानलभयोः कर्णाम्बुनोर्वानरः,स्याद्वैश्वाभिजितोस्तथैव नकुलश्चान्द्राब्जयोन्योरहिः । ज्येष्ठामैत्रभयोः कुरङ्ग उदितो मूलार्द्रयोःश्वा तथा, मार्जारोऽदितिसार्पयोरथ मघायोन्योस्तथैवोन्दुरुः । व्याघ्रोद्वीशभचित्रयोरपि च गौरार्य्यमणबुध्नर्क्षयोर्योनिः पादगयोः परस्परमहावैरं भयोन्योस्त्यजेत्” मु॰चि॰ “अश्विनीशततारयोर्हयः अश्वयोनिरुक्तः१ स्वातीहस्तयोः कासारोमहिषः२ । वसुजपाद्भयोर्धनिष्ठापूर्व्वाभाद्रपदयोः सिंहः३ । याम्यान्त्ययोर्भरणीरेवत्योः कुञ्जरोहस्ती४ । पुष्यकृत्तिकयोः मेषः५ कर्णाम्बुनोः श्रवणपूर्व्वाषाढयोर्वानरःस्यात्६ । उत्तराषाढाभिजितोर्नकुलः ७। चान्द्रं मृगः अब्जयोनिर्ब्रह्मा तद्भं रोहिणी तयोरहिः सर्पः८। ज्येष्ठानुराधयोः कुरङ्गो हरिणउदितः९। मूलार्द्रयोःश्वा कुक्कुरः१० । तथा पुनर्वस्वश्लेषयोर्मार्जारः ११ । मघापूर्व्वाफल्गुन्योरुन्दुरुर्मूषिकः१२। द्वीशं विशाखा चित्रा तयोर्व्याघ्रः१३। आर्य्यमणम् उत्तरफल्गुनी बुध्नर्क्षमुत्तरभाद्रपदा तयोर्गौः१४। तत्फलमाह पादगयोरिति । एकस्मिन् पादे श्लोकचरणे उक्तनक्षत्रयोन्योः परस्परं महावैरंभवेदन्यथा नेत्यर्थः । यथा । “अश्विन्यम्बुपयोर्हयोनिगदितः स्वात्यर्कयोः कासरः” इतिपादस्थोक्तयोन्योरश्वमहिषयोर्महावैरं भवेत् । एवं सिंहहस्तिनोरित्यादिष्वपि द्रष्टव्यम् । यदाह वशिष्ठः ।“अश्वेभमेषभुजगद्वयकुक्कुरोतुमेषौतुमूषकमथोन्दुरुगोलुलापाः । शार्द्दूलमाहिषगवारिमृगद्वयं श्वा कीशोऽथ बभ्रुयुगकीशगवाश्वसिंहाः । गौःकुञ्जराविति यथाक्रममाश्विनादिभानाम्भवन्ति खलु कल्पितयोनिरूपाः”। लुलापो महिषः, गवारिर्व्याघ्रः कीशोवानरः बभ्रुर्नकुलः।“बभ्रूरगं श्वैणमिभेन्द्रसिंहमोत्वाखुसंज्ञन्त्वजवानरौ च । गोव्याघ्रमश्वोत्तरमाहिषञ्च वैरं न्हनार्य्योर्नृपभृत्ययोश्चेति” एतत्फलं सापवादमाहाग्निः । “एकयोनिषु सम्पत्त्यै दम्पत्योः सङ्गमः सदा । भिन्नयोनिषु मध्यःस्यादरिभावो न चेत्तयोः । योनेरभावे नोद्वाहः स तु कार्य्यो वियोगदः । राशिर्वश्यञ्च यद्यस्ति कारयेन्न तु दोषभाक्”। अत्र गुणविभागोदैवज्ञम॰ “अष्टाविंशतितारायां योनयस्तु चतुर्दश । मैत्रं चैवातिमैत्रञ्च विवाहे नरयोषितोः । महावैरे च वैरे च स्वभावे च यथाक्रमम् । मैत्रे चैवातिमैत्रे च स्वेन्दुद्वित्रिचतुर्गुणाः” पी॰धा॰। अथ ग्रहमैत्री “मित्राणि द्युमणेः कुजेज्यशशिनः शुक्रार्कजौ वैरिणौ, सौम्यश्चास्य समो, विधोर्बुधरवी मित्रे, न चास्य द्विषत् । शेषाश्चास्य समाः, कुजस्य सुहृदश्चन्द्रेज्यसूर्य्या, बुधः शत्रुः, शुक्रशनी समौ च, शशभृत्सूनोः सिताहस्करौ । मित्रे, चास्य रिपुः शशी, गुरुशनिक्ष्माजाः समा, गोष्पतेर्मित्राण्यर्ककुजेन्दवोबुधसितौ शत्रू, समः सूर्य्यजः। मित्रे सौम्यशनी, कवेःशशिरवी शत्रू, कुजेज्यौ समौ । मित्रे शुक्रबुधौ,शनेः शशिरविक्ष्माजा द्विषोऽन्यः समः”मु॰चि॰

एतत्फलं सापवादमाह जगन्मोहने वशिष्ठः “अन्योन्यमित्रं शस्तं स्यात् सममित्रं तु मध्यमम् । उदासीनं कनिष्ठं स्यान्मृतिदं शात्रवं स्मृतम् । शत्रुमित्रञ्च विज्ञेयं दम्पत्योः कलहप्रदम् अन्योन्यसमशत्रुत्वं दम्पत्योर्विरहप्रदम्”अस्यापवादस्तत्रैव “राशिनाथे विरुद्धेऽपि सबलावंशकाधिपौ, तन्मैत्रेऽपि च कर्त्तव्यं दम्पत्योः शुभमिच्छता । अत्र गुणभेदो दैवज्ञम॰ । “ग्रहमैत्रं सप्तविधं गुणाः पञ्च प्रकीर्त्तिताः । तत्रैकाधिपतित्वे च मित्रत्वे गुणपञ्चकम्। चत्वारः सममित्रत्वे द्वयोः साम्ये त्रयो गुणाः । मित्रवैरे गुणश्चैकः समवैरे गुणार्द्धकम् । परस्परखेटवैरे गुणंशून्यं विनिर्द्दिशेत् । असद्भे समभित्रादौ व्येका ग्राह्या यथोदिताः”पी॰धा॰। अथ गणकूटम् । “रक्षोनरामरगणाः क्रमतोमघाहिवस्विन्द्रमूलवरुणानलतक्षराधाः। पूर्वोत्तरात्रयविधातृयमेशभानि मैत्रादितीन्दुहरिपौष्णमरुल्लघूनि” मु॰ चि॰।

“क्रमतः रक्षोनरामरगणाः वाक्यत्रयेणोच्यन्ते । मघा प्रसिद्धा अहिरश्लेषा वसुर्धनिष्ठा इन्द्रोज्येष्ठा मूलं प्रसिद्धं वरुणः शततारका अनलः कृत्तिका तक्षा चित्रा राधा विशाखा एतानि भानि रक्षोगणः । पूर्वात्रयम् उत्तरात्रयं चेत्येवं षड्भानि विधाता रोहिणी यमोभरणी ईशः आर्द्रा एतानि भानि नरगणोमनुष्यगणः। मैत्रमनुराधा अदितिः पुनर्वसुः इन्दुर्मृगः हरिः श्रवणः पौष्णं रेवती मरुत् स्वातिः लघूनि अश्विनीहस्तपुष्याणि एतानि भान्यमरगणो देवगण इति । यदाह नारदः । “रक्षोगणः पितृत्वाष्ट्रद्विदैवत्येन्द्रतारकाः । वसुवारीशमूलाहिकृत्तिकाभियुतास्ततः । तिस्रः पूर्वोत्तराधात्रयमाहेशतारकाः । इति मर्त्यगणोज्ञेयः स्याद्-

मर्त्यगणः परे। इत्यादित्यार्कत्रायुत्त्यमित्राश्चीज्येन्दुतारकाः” पी०धा०। फलमाह। “निजनिजगणमध्ये प्रीतिरत्युत्तमा स्यादमरमनुजयोः सा मध्यमा संप्रदिष्टा। असुरमनुजयोश्चेन्मृत्युरेव प्रदिष्टो दनुजविबुधयोः स्याद्वैरमेकान्ततोऽत्र” मु०चि०। “असुरमनुजयोः राक्षसमनुष्यगणयोः स्त्रीपुंसयोः मृत्युरेव प्रदिष्ट उक्तः द्वयोर्वान्यतरस्य वेलाकाङ्क्षायां प्रबलेन दुर्बलं बाध्यते इति न्यायेन मनुष्यगणस्यैव नाशः, यदाह नारदः। “दम्पत्योर्जन्मभे चैकगणे प्रीतिरनेकधा। मध्यमा देवमर्त्यानां रक्षोनृणां तयोर्मृतिः” काश्यपः “स्वगणे चोत्तमा प्रीतिर्मध्यमाऽमरमर्त्ययोः। मर्त्यराक्षसयोर्वैरमसुरासुरयोरपीति” अयमर्थः पुरुषोरक्षोगणः स्त्री मनुष्यगणा तदा वैरं, यदि वैपरीत्यन्तदा मृत्युः। तथा पुरुषोरक्षोगणः स्त्री देवगणा तदा वैरं वैपरीत्ये क्षतिः। उक्तं च। “राक्षसी यदि वा नारी नरो भवति मानुषः। मृत्युस्तत्र न सन्देहो विपरीतः शुभावहः”। शार्ङ्गीये। “रक्षोगणः पुमान् स्याच्चेत्कन्या भवति मानवी। केऽपीच्छन्ति तदोद्वाहं व्यस्तञ्चोऽपीह नेच्छतीति”। एतत्तुल्ययायत्वाद्देवराक्षसयोरपि द्रष्टव्यम्। अत्र गुणविभागो दैवज्ञम०। “षड्गुणा गणसाम्ये पञ्च स्युः सुरमानुषे। नार्या देवो नरः पुंसश्चत्वारो वा गुणास्त्रयः। देवराक्षसयोः शून्यं तथैव नररक्षसोः। पुंसो रक्षोगणो यत्र नार्या देवोऽथ वा नरः। गुणौ द्वौ क्रमतश्चैको गुणो ग्राह्योऽन्यथा न हीति”। अस्यापवादमाह गर्गः। “ग्रहमैत्री च राशीशयोर्विद्यते नियतं यदि। न गणाभावजनितं दूषणं स्याद्विरोधनम्”। अत्रिरपि। “राशीशयोः सुहृद्भावे मित्रत्वे वांशनाथयोः। गणादिदोषेऽप्युद्वाहः पुत्रपौत्रप्रवर्द्धनः”। अमुं परिहारं ग्रन्थकदग्रे वक्ष्यति। मनुरपि। “ग्रहमैत्री च रज्जुश्च यदि नाड़ी पृथक् तयोः। विवाहः शुभदः कन्या राक्षसी वा नरोनरः” इति पी०धा०। रज्जुकूटमन्यत्र दृश्यम्। अथ भकूटम् “मृत्युः षट्काष्टके ज्ञेयोऽपत्यहानिर्नवात्मजे। द्विद्वादशे निधनत्वं द्वयोरन्यत्र सौख्यकृत्” मु०चि०। “स्त्रीपुंसराश्योः परस्परं षष्ठाष्टमराशित्वे सति मृत्युर्ज्ञेयः। यथा मेषकन्ययोः वृषधनुषोः। एवं नवात्मजे नवपञ्चमेऽपत्यानां बालानां हानिर्नाशः स्यात्। यथा सिंहधनुषोः एवं द्विद्वादशे सति निर्द्धनत्वं दारिद्र्यं स्यात्। यथा मेषवृषयोः अन्यत्र तृतीयैकादशे चतुर्थदशमे समसप्तमे वा सति सौख्यकृत्पाणिपीडनं स्यात्। यदाह नारदः “षट्काष्टके मृतिर्नवपञ्चमे त्वनपत्यता। नैःस्वं द्विद्वादशेऽन्येषु दम्पत्योः प्रीतिरुत्तमेति”। अत्र विशेषो ज्योतिःप्रकाशे। “पुंसो मृत्युहात् सुतगृहे सुतहा च कन्या धर्मे स्थिता धनवती पतिवल्लभा च। द्विद्वादशे धनगृहे धनहा च कन्या रिष्फे स्थिता धनवती पतिवल्लभा चेति”। अन्यच्च। “मृगः कुलीरेण घटेन सिंहोवैरप्रदः स्यात् समसप्तकोयम्। तुला मृगेणाथ वृषेण सिंहो मेषेण कर्कोमिथुनेन मीनः। चापेन कन्या घटभेन चालिर्दैौर्भाग्यदैन्ये दशतुर्यकेऽस्मिनिति” पी०धा० अस्यापवादः “प्रोक्ते दुष्टभकूटके परिणयस्त्वेकाधिपत्ये शुभोऽथो राशीश्वरसौहृदेऽपि गदितो नाड्यृक्षशुद्धिर्यदि। अन्यर्क्षेऽशपयोर्बलित्वसखिते नाड्यृक्षशुद्धौ तथा ताराशुद्धिवशेन राशिवशताभावे निरुक्तो बुधैः” मु०चि०। “प्रोक्ते दुष्टराशिकूटे सत्यपि द्वयोःस्त्रीपुरुषराश्योरेकाधिपत्ये एकस्वामित्वे परिणयो विवाहः शुभोगदितः। यथा षट्काष्टके मेषवृश्चिकयोस्तुलावृषयोर्वा। नवमपञ्चमे त्वेकाधिपत्याभावः। द्विद्वादशे मकरकुम्भयोः। अत्र वा राशीश्वरयोः राशिस्वामिनोः सौहृदे मैत्रे परिणयः शुभोगदितः। यथा षट्काष्टके मीनसिंहयोरित्यादौ, नवपञ्चमे मेषधनुषोरित्यादौ। द्विद्वादशे मीनमेषयोरित्यादौ। यदाह वशिष्ठः “द्विद्वादशे वा नवपञ्चमे वा षट्काष्टके राक्षसयोषितोर्वा। एकाधिपत्ये भवनेशमैत्रे शुभाय पाणिग्रहणं विधेयमिति” राजमा० “भवेत्त्रिकोणे बहुपुत्रवित्तं द्विद्वादशे चार्थमपैति कन्या। षट्काष्टके सौख्यफलं विधत्ते स्त्रीणां विवाहे ग्रहमैत्रीभावे” इति एकाधिपत्येपीति शेषः। अतएव ग्रहमैत्रैकाधिपत्याभावे वैरषट्काष्टकमित्यादि वदन्ति। यदाह नारदः “वैरषट्काष्टकं मेषकन्ययोर्घटमीनयोः। चापोक्षयोर्नृयुक्कीटभयोः कुम्भकुलीरयोः। पञ्चास्यमृगयोर्जन्मराशेः प्रोक्तोऽशुभप्रदः” इति। उक्ता इमः चापोक्षयोरित्यकारान्तनिर्देशश्छान्दसः। एतद्भिन्नं मित्रषट्काष्टकमित्याहुः। तदुक्तं जगन्मोहने “मित्रषट्काष्टकं कीटमेषयोर्वृषजूकयोः। कर्किचापभयोर्मीनसिंहयोर्मृगयुग्मयोः। कन्यकाकुम्भयोरन्यत् प्रयत्नादेव वर्जयेदिति”। एवञ्च ग्रहमैत्राभावे वैरनवपञ्चममित्याहुः। तथा च शार्ङ्गधरीये-शुक्रः। “मीनालिभ्यां युते कीटे कुम्भे मिथुनसंयुते। मकरे कन्यकायुक्ते न कुर्यान्नवपञ्चमे” इति। एतादृशस्य नवपञ्चमस्य फलान्तरमुक्तं कैश्चित् यथा ज्योतिर्निबन्धे शार्ङ्गधरः। “वरवध्वोर्मातृपित्रोर्जीविता-

स्त्विनाशकृत् । त्रिकोणमीनकीटाढ्यं न स्यादन्यत्र दोषदमिति" । एतत्फलमनार्षत्वादुपेक्ष्यम् । इतोन्यञ्च मेषसिंहादिकं नवपञ्चमं ग्रहमैत्रीसत्त्वान्मित्रं नवपञ्चममिति 'ननु मीनकर्कादिकमपि त्रिकोणं ग्रहमैत्रीसत्त्वान्मित्रनवपञ्चममिव, कथं ? गुरोश्चन्द्रोमित्रमेव चन्द्रस्य तु गुरुः समोऽपि मित्रमिव "अपदोषतैव विगुणस्य गुणः" इति न्यायात्तथा सति त्रिकोणदोषोच्छेदापत्तिः स्यादिति चेत् उच्यते यत्र ह्येकस्य मित्रत्वमपरस्य समत्वन्तत् दुष्टनवपञ्चममिति व्यवहारः । तादृशं मीनकर्कादिकं त्रिकोणचतुष्टयमेव सम्भवति । यत्र तूभयोरपि ग्रहमैत्री तत्रैव मेषसिंहादिके मित्रनवपञ्चममिति व्यवहृतिः । अयञ्च परिहारो वरवध्वोर्मातृपित्रोरित्यस्यापि दोषान्तरस्य सत्यसति वा समूलत्वे नाशको भवति तुल्यन्यायत्वात् । मृतमातापितृकयोस्तु वरवध्वोर्नायं दोषोन्मेषः एवं द्विद्वादशेऽपि । यथा जगन्मोहने वसिष्ठकश्यपौ । "द्विद्वादशं शुभं प्रोक्तं मीनादौ युग्मराशिषु । मेषाद्ययुग्मराशौ तु विहीनत्वं न संशयः । "आयुष्यसम्पत्सुतभोगसम्पत्पुत्रार्थसम्पत्पतिसौख्यसम्पत् । सौभाग्यसम्पद्धनधान्यसम्पत् झषादियुग्मे क्रमतः फलानि । अजादियुग्मे क्रमतः फलानि वै वैधव्यमृत्युर्धनबन्धनानि । वियोगसन्तापमतीव दुःखं वसिष्ठगर्गप्रमुखैः स्मृतानि" इति । अथैवंविधेऽपि प्रीतिषट्काष्टकादिविषये नाड़ीदोषः सर्वथा त्याज्य एवेत्याह नाड़्यशुद्धिर्यदीति । वक्ष्यमाणानां त्रिविधनाड़ीनक्षत्राणां शुद्धिः स्त्रीपुरुषनक्षत्रस्थितिरेकस्यां कस्यामपि नाड्यां यदि न भवति तदा प्रीतिषट्काष्टकादि भवति तदा विवाहः कार्यः। यद्येकस्यां नाड्यां स्त्रीपुरुषनक्षत्रस्थितिस्तदा तु नैव विवाहः। उक्तञ्च रत्नमालायाम् "भवनपतिसुहृत्त्वं स्यात्तथैकाधिपत्यं यदि भवनवशित्वञ्चैव षट्काष्टकेऽपि । शुभकृदिह विवाहोऽन्योन्यताराविशुद्धौ यदि खलु फणिचक्रे स्यान्न नाड़ीसमाज"इति । अपिशब्दान्नवपञ्चमद्विद्वादशयोरपि । अत्र केचित् षड़ष्टकस्यैव मरणरूपानिष्टफलश्रवणान्न तस्यापवादकः षट्काष्टकेपीति परिहारः, किन्तु निन्दां प्रतिपादयतोऽपिशब्दान्तस्य वाक्यस्याधिपतिमैत्र्यादिगुणप्रशंसाद्वारा नवपञ्चमद्विद्वादशयोरेव दुष्टभकूटयोर्विधानपर्यवसानात्तयोरेवापवादक इति यथा "ब्रह्महापि नरः पूज्यो यदि स्याद्विपुलं धनमिति" अत्र वाक्ये धनस्तुतिर्धनवन्नरपूजापरा न तु धनवद्विप्रघ्ननरपूजापरापीति मैवं वोचः 'द्विद्वादशे वा नवपञ्चमे वा षट्काष्टके" इत्यादि वसिष्ठादिवाक्यानि दुष्टभकूटापवादभूतान्यधिपतिमैत्र्यादिर्विशिष्टं षडष्टकादि विदधते । षट्काष्टके मृत्युरित्यादीनि निन्दार्थवादवाक्यानि ग्रहारिग्रस्तषड़ष्टकादिविषयाणि अन्यथा दुष्टफलषडष्टकनिराकरणस्य नवपञ्चमस्य द्विद्वादशयोरपि तुल्यत्वेनापवादकवाक्यानां विषयालाभात् । दृष्टान्ते तु ब्रह्मघ्नप्रायश्चित्तविधानस्य वैयर्थ्यापातात् धनस्तुतिर्धनवत् प्रशंसापरैवेति युक्तमुत्पश्यामः । अथ नाड़ीसमाजपदस्यायमर्थः । अश्विन्यादित्रिकगणनया त्रिविधानां नाड़ी नक्षत्राणां वेधो नाड़ीसमाजः । यदाह श्रीपतिः "नाड्यस्तिस्रोऽन्यस्तनिःशेषधिष्ण्यास्तिस्रभ्यश्चाश्वादिभ्य एव प्रसूताः । सर्पाकारास्तत्र नाड़ीसमाजो नक्षत्राणामेकनाड़ीस्पृशां स्यादिति"। एवञ्च यत्र भकूटादयः सप्तभेदाः शुभा भवन्ति । तत्र नाड़ीदोषश्चेत्तदा विवाहो न विधेयः । उक्तञ्च सप्तर्षिमते विवाहपटले । "सदा नाशयत्येक नाड़ीसमाजो भकूटादिकान् सप्तभेदान् प्रशस्तानिति'। अत्र केचित् । नाड़ीसमाजशब्दोपादानात् समाजशब्दस्य समुदायवाचित्वात् यदा त्रिचतुःपञ्चपर्वनाड़ीत्रयसमुदाये स्त्रीपुरुषनक्षत्रयोरेकनाड्यां पातस्तदा समस्तवश्यादिगुणसत्त्वे विवाहोनैव भवेत् । यदा त्रिचतुःपञ्चपर्व्वनाडीष्वेकैव नाडी स्त्रीपुरुषयोःस्यात्तदा भवत्येव विवाहः । अतएव "भकूटादिकान् सप्तभेदांश्च ते तामिति" वीपरीतं वचनमनुकूलम् । अस्यायमाशयः" ते इति बहुत्वात्सप्त भकूटादयः शुभास्तामित्येकवचनानुरोधादेकामेव नाड़ीं परिहरेयुः न तु नाडीसमाजमिराहुः । तच्चिन्त्यम् । यतश्चतुस्त्र्यङ्घ्रिभोत्थायाः" इति वाक्याच्चतुश्चरणनक्षत्रोत्पन्नायाः कन्यायास्त्रिपर्व्वैव, त्रिचरणनक्षत्रोत्पन्नायाः कन्यायाःद्विपर्वैव द्विचरणनक्षत्रोत्पन्नायाः कन्यायाः पञ्चपर्वैव नाडी गणनीयेति नियमाद्युगपन्नाडीत्रयविचारासम्भव एव । किञ्च रत्नमालादिवाक्येषु पार्थक्येन नाडीत्रयाभिधानात्तत्रत्यसमाजपदं नाडीसंस्थनक्षत्रसमुदायपरं तथाहि "अश्वादिभ्यस्त्रिभ्य एव नक्षत्रेभ्यः प्रसूता न्यस्तनिःशेषधिष्ण्या सर्पाकारास्तिस्रोनाड्यःस्युः तत्रैकनाडीस्पृशां नक्षत्राणां समाजो नाडी स्यात् इति । ननु"यस्मादनर्थकलहागममृत्यवः स्युः पाणिग्रहादनु तयोः खलु नाडीयोगे । तस्माच्चतुस्त्रियमलाङ्घ्रिषु भेषु नूनं नाडीसमाजइतिचिन्त्यमनुक्रमेणेति" इहगर्गवचनान्नाडीसमाजएव स्थिते दोषः नै-

कस्यां नाड्यामिति चेत् उच्यते । स्वयमेव चतुस्त्रिंय समाङ्घ्रिभेषु इति परिगणितविषयत्वेनाभिधानान्न उ संस्थन नक्षत्रसमुदायविषयकमिति । किञ्च पञ्चपर्वचतुःपर्वनाड्योर्देशविशेषविषयत्वेन त्रिनाड्यास्तु सर्वदेशविषयत्वादेतस्या एव निषेधो युक्तः । तानि च देशविशेषवाक्यान्यग्रेऽभिधास्ये । अतः "भकूटकान् सप्तभेदांश्च ते तानित्यत्रपाठे प्रशस्तानिति पठन्ति अभियुक्ताः शार्ङ्गधरीयज्योतिर्निबन्धकारादयः । तस्मान्नाडीसमाजपदस्य प्राग्वदेव व्याख्यानं न्याय्यम् । ननु यत्र नाडीनक्षत्रशुद्धिरस्ति । यथा भरणीहस्तयोः षट्काष्टकञ्च वर्त्तते ग्रहमैत्र्यपि नास्ति तत्र किं कार्य्यमत आह । अन्यर्क्षेऽंशपयोरिति । अन्यर्क्षे प्रोक्तषट्काष्टकादिभ्योऽन्यराशौ, कोऽर्थः? राशिस्वामिनोः परस्परं शत्रुत्वे वा समत्वे वा षट्काष्टकादौ च सति अंशपयोस्तद्राशिनवांशस्वामिनोर्बलित्वसखित्वे चेत् स्याताम् । बलित्वं सबलत्वमुच्चादिस्थितत्वेन, सखिता परस्परमैत्री ते उभे चेद्भवतः सखितायाः उपलक्षणत्वादेकाधिपत्यमपि तदा विवाहः शुभो निरुक्तः । उक्तञ्च जगन्मोहने वशिष्ठेन । "राशिनाथे विरुद्धेऽपि सबलावंशकाधिपौ । तन्मैत्रेऽपि च कर्त्तव्यं दम्पत्योः सुखमिच्छतेति" नन्वयम्परिहारो राशिनाथे विरुद्धेऽपीत्यनुवादात्केवलग्रहदौस्थ्यापवादको न तु दुष्टभकूटग्रहवैरस्य । उच्यते "खेटारित्वं नाशयेत् सद्भकूटम्" अग्रे वक्ष्यति । तत्र च "नभोगारिभावं हरेत् सद्भकूटमिति" सप्तर्षिमतविवाहपटलीय वाक्यं सम्मतित्वेनास्माभिरभिधास्यते । तदेव केवलग्रहवैरापवादकमस्ति न त्विदमपि । ननु द्वयोर्वाक्ययोर्यथाश्रुतशब्दस्वरसेनार्थे जिज्ञासिते एकस्मिन्नेव ग्रहदौस्थ्यरूपे परिहारद्वयं दृश्यते । अथैकस्मिन्नेव दुष्टभकूटके भवनपतिसुहृत्त्वमित्यादिनानेकपरिहाराभिधानमित्यतोऽत्र वचने न किञ्चित्तादृशं विषयं पश्यामः सत्यम् । "नभोगारिभावं हरेत्सद्भकूटमिति तु निःसन्देहं ग्रहवैरस्यापवादकम् परन्तु "राशिनाथे विरुद्धेऽपि मैत्रत्वे चांशनाथयोः । विवाहङ्कारयेद्धीमान्दम्पत्योः सौख्यवर्द्धनमिति" जगन्मोहनस्थवशिष्ठवाक्येन प्रागुक्तवशिष्ठवचःसमानार्थकं दुष्टभकूटग्रस्तग्रहवैरापवादकम् । तथाहि । न्यूनार्थे एकस्मिन्वाक्ये राशिनाथयोः परस्परविरोधे सति तद्राशिनवांशस्वामिनोः परस्परमैत्री चेच्छुभो विवाह इत्यर्थः । अत्रांशनाथयोः सबलत्वविचारो नास्ति । यत्र त्वंशनाथयोरुच्चादिस्थितत्वेन सबलत्वं परस्परमैत्री चेति द्वयमस्ति तद्दुष्टभकूटग्रस्तग्रहवैरापवादकमित्यधिकार्थवचनस्यार्थः । एवञ्च "नभोगारिभावं हरेत्सद्भकूटमित्यपि" वाक्यं ग्रहवैरापवादकन्तुल्यबलत्वाद्व्रीहियववत् । अंशनाथसबलत्वाभिधायकं तु "राशिनाथे विरुद्धेऽपीत्येतद्वाक्यमुभयविरोधपरिहारार्थकम् । तथाहि । राशी च नाथौ च एतेषां समाहारो राशिनाथन्तस्मिन् राशिनाथे इत्येवं यदि समाहारद्वन्द्व आश्रीयेत तथा सत्ययमर्थः । राशी विरुद्धौ षट्काष्टकादिना, नाथौ विरुद्धौ कयोर्नाथावित्याकाङ्क्षायां ययोः षट्काष्टकादिविचारस्तयोरेव सन्निहितत्वादुपहरणमिति तयोः राश्योर्नाथौ विरुद्धौ "मित्राणि द्युमणेरित्यादिना परस्परं शत्रू स्यातां तद्राशिनवांशस्वामिनोः सबलत्वे मित्रत्वे च समुच्चिते सति विवाहः शुभदः । नन्वतिक्लिष्टे समाहारद्वन्द्वे किं प्रयोजनम्? उच्यते । अंशनाथस्य सबलत्वस्याधिककरणमेव । तच्च युगपदुत्पन्नस्य दोषद्वैविध्यस्य राशिविरोधग्रहविरोधरूपस्य परिहारोऽतएव ज्योतिःशास्त्राभियुक्ताः एवंविध उभयविरोधे एवंविधं समाधिमाश्रित्य विवाहङ्कारयन्तीत्यास्तां प्रसक्तानुप्रसक्तम् । अस्मिन्नपि पक्षे नाडीशुद्धिरपेक्षितैवेत्याह । नाड्यृक्षशुद्धौ तथेति प्रागुक्तप्रकारेण नाडीनक्षत्रेषु स्त्रीपुरुषनक्षत्रयोरेकस्यां नाड्यामवस्थित्यभावश्चेत्तदा विवाहः शुभः । यथा भरणीहस्तयोःसत्युभयविधविरोधे राशिनवांशयोः क्रमेण पञ्चमचतुर्थयोर्यौ स्वामिनौ सूर्य्यभौमौ तयोर्मैत्र्यप्यस्ति स्वनवांशस्थितत्वात्सबलत्वमपि तत्र विवाहः शुभफलदो निगदितः । यतोऽत्र स्त्रीपुंसनक्षत्रयोरेकनाड्यामवस्थित्यभावः । यदात्वश्विनीहस्ताख्ये एव द्वयोर्नक्षत्रे स्यातां तदा नाडीनक्षत्रशुद्ध्यभावात् सकलगुणवत्त्वेऽपि विवाहो न भवति । किं पुनरेवंविधविषये इति "सदा नाशयत्येकनाडीसमाजो भकूटादिकान् सप्तभेदान् प्रशस्तान्" इत्युक्तेः । अथ तत्परिहारासम्भवे परिहारान्तरमाह । ताराशुद्धिवशे इति । अन्यर्क्षे इत्यनुवर्त्तते । प्राग्वदेव व्याख्येयमिदम् । एवंविधे विषये षट्काष्टकादौ च सति यदि स्त्रीपुंसनक्षत्रयोः परस्परन्ताराशुद्धिवशे कन्यार्क्षाद्दूरमं यावदित्यादिना ताराशुद्धिरूपे वशे वक्ष्यचे द्वितीयचतुर्थषष्ठाष्टमनवमतारासंज्ञके सति बुधैर्विवाहः शुभो निगदितः । अत्रोदाहरणानि बुधैर्ज्ञेयानि । अत्र संमतिः "अन्योन्यताराविशुद्धौ" इत्युक्ता । राजमार्त्तण्डेनायमर्थः स्पष्टमभिहितः । "मैत्री चेत्रपयोर्द्वयोरपि तयोरेकाधिपत्येऽपि चेत्तारा

मित्रसुमित्रजन्मशुभदा क्षेमा च संपत्करी । षष्ठाष्टे नव पञ्चमे व्ययधने योगेषु पुंयोषितोः प्रीत्यायुःसुतवृद्धिवित्तजनकः कार्य्यो विवाहस्तदेति" । चकारात् षष्ठी च । जन्मतारा यद्युत्पत्तितारा तदा राशिभेदे चरणभेदे वा शुभा ध्येया । दशमैकोनविंशतितारे शुभे एव । अत्रापि पक्षे नाडीशुद्धिरपेक्षितैव । नाडीशुद्ध्यभावे विवाहोनैव भवेत् । उक्तैवात्र संमतिः" । अथ तस्यापि परिहारस्याभावे परिहारान्तरमाह । अथ राशिवश्यताभाव इति । अत्रापि द्वयोः स्त्रीपुंसयोः राशिनाथविरोधादिके विषये षट्काष्टकादौ सति "हित्वा मृगेन्द्रं नरराशिवश्या" इत्यादिना पुरुषराशेः स्त्रीराशिवश्यताभावे सति विवाहः शुभोनिगदितः । "यदि भवनवशित्वमिति श्रीपत्युक्तेश्च अस्मिन्नपि पक्षे नाडीशुद्धिरपेक्षितैवोक्तादेवहेतोः । तदयमत्र निष्कृष्टोऽर्थः । षट्काष्टकनवमपञ्चमद्विद्वादशाख्येषु दुष्टभकूटेषु सत्सु परस्परं ग्रहमैत्र्य् एकः परिहारः । एकाधिपत्ये द्वितीयः । ग्रहवैरेऽप्यंशपयोः सबलत्वे मैत्रे च तृतीयः । ताराशुद्धौ चतुर्थः । राशिवश्यत्वे पञ्चमः । सर्व्वेष्वपि परिहारेषु नाडी शुद्धिरपेक्षितैव । नाडीविरोधसत्त्वे तु विवाहोनैव स्यादिति। एवञ्च ग्रन्थकर्त्रा "भवनपतिसुहृत्त्वमित्यस्य" श्रीपतिश्लोकस्य वाक्यचतुष्टयमङ्गीकृत्य तत्परिहाराभिधानङ्कृतम् । तट्टीकाकृन्महादेवोऽप्येवमेव व्याख्यत् । यत्र हि प्रत्येकं परिहारकम् तत्र गुणसमुदायः परिहारकः स्यादिति किं वाच्यम् । वस्तुतस्तु । "मैत्री चेत्खपयोर्द्वयोरपि तयोरेकाधिपत्येऽपि चेत्ताराभित्रसुमित्रजन्मशुभदा क्षेमा च सम्पत्करीत्यादि प्राग्लिखितेन राजमार्त्तण्डवाक्येन दुष्टभकूटे ग्रहमैत्र्या सह तथैकाधिपत्येन सह ताराशुद्धिरेव परिहारिका समुचिता । अर्थादेकस्य मित्रत्वेऽपरस्य समत्वे वश्यत्वापेक्षा अतएतद्वाक्यं ज्योतिःसारसागरे विवृतम् "तत्रान्योन्यमित्रत्वे तुल्याधिपतित्वे वा ताराशुद्धिरेव चिन्त्या । एकमित्रतायान्तु वशित्वादि गुणान्तरापेक्षा । शत्रुत्वे तु सर्व्वथा त्याग इति"। अत एवैतस्मिन् पक्षे चेत्पदाभिधानादेकवाक्यतावसायः । एवं श्रीपतिवाक्यमपि व्याकर्त्तव्यमेकवाक्यताबलात् । तत्र षट्काष्टके पुनर्भवनपतिसुहृत्त्वमिति सकलगुणसत्त्वमेव परिहारकम् । अनयोर्दुष्टभकूटयोर्द्वयमेव । यदाह ज्योतिर्निबन्धे गर्गः "ग्रहमैत्र्यां शुभा तारा राशिवश्यं त्रिभिः शुभम् । षडष्टकम्बुधाः प्राहुर्द्वाभ्यां द्व्यर्कन्त्रिकोणक मिति" । "द्व्यर्कन्द्वादशम् । "द्विद्वादशे वा नवपञ्चमे वेत्यादीनि" वशित्वादीनि तूपलक्षणपरतया व्याख्येयानि । अत्र यथासम्प्रदायं व्यवस्था ध्येयेत्यलमियता" पी० धा०

अत्रापवादः । "मैत्र्यां राशिस्वामिनोरंशनाथद्वन्द्वस्यापि स्याद्गणानां न दोषः । खेटारित्वं नाशयेत् सद्भकूटं खेटप्रीतिश्चापि दुष्टं भकूटम्" । मु० चि० "स्त्रीपुंसराशिस्वामिनोर्मैत्र्यां सत्यां तथा राशिनवांशयोर्द्वन्द्वं युग्मं तस्यापि मैत्र्यां सत्यां गणानां दुष्टगणानां दोषो न स्यात्, स्त्री रक्षोगणा पुमान् मनुष्यगणोदेवगणो वा तदा गणदोषो न स्यादित्यर्थः" । यदाहात्रिः "राशीशयोः सुहृद्भावे मित्रत्वे वांशनाथयोः । गणादिदोषेऽप्युद्वाहः पुत्रपौत्रप्रवर्द्धनः" । अथ सद्भकूटं शुभफलदम्भकूटं राशिकूटं तृतीयैकादशादिकं खेटारित्वं ग्रहयोः शत्रुतासम्बन्धिनं दोषं नाशयेत् । एवमेव खेटप्रीतिर्ग्रहमैत्री चापि दुष्टं भकूटं षडष्टकादिसम्बन्धिनं दोषं नाशयेदित्यर्थः" तदुक्तं सप्तर्षिमते विवाहपटले । "नभोगारिभावं हरेत् सद्भकूटं विरुद्धं भकूटं हरेत् खेटमैत्री । सदा नाशयत्येकनाडीसमाजोभकूटादिकान् सप्तभेदांश्च ते ताम्" । (मु० चि०) चतुर्थचरणः "प्रोक्ते दुष्टभकूटक इत्यादिना पुनरुक्तोऽपि स्मरणाविच्छेदार्थं पठितः" । यत्तूक्तं नारदेन "एकाधीशे मित्रभावे शुभदं पाणिपीडनम् । द्विद्वादशे त्रिकोणे च न कदाचित् षडष्टके" इति । एतन्नाडीदोषे सत्येव द्रष्टव्यम् । अधुनोदितवाक्यस्वरसात् । "भवनपतिसुहृत्त्वं स्यात् तथैकाधिपत्यं यदि भवनवशित्वं चैव षष्ठाष्टकेऽपि । शुभकृदिह विवाहोऽन्योऽन्यताराविशुद्धौ यदि खलु फणिचक्रे स्याश्च नाडीसमाज" इति श्रीपत्युक्तेश्च "अन्यथा प्रागभिहितवसिष्ठादिवाक्यान्यनर्थकान्यापद्येरन्निति" । पी० धा० । अथ नाडीकूटमाह । "ज्येष्ठार्यम्णेशनीराधिपभयुगयुगन्दास्रभञ्चैकनाडी पुष्येन्दुत्वाष्ट्रमित्रान्तकवसुजलभं योनिबुध्न्ये च मध्या । वाय्वग्निव्यालविश्वोडुयुगयुगमथोपौष्णभञ्चापरा स्याद्दम्पत्योरेकनाड्यां परिणयनमसन्मध्यनाड्यां हि मृत्युः" मु० चि० ज्येष्ठा प्रसिद्धा । अर्यम्णमुत्तराफल्गुनी । ईश आर्द्रा । नीराधीपोवरुणस्तद्भं शततारका एभ्यो नक्षत्रेभ्यो युगयुगं द्वयं द्वयम् । ज्येष्ठामूलं उत्तराफल्गुनीहस्तश्च । आर्द्रा पुनर्वसुश्च । शततारकापूर्वभाद्रा चेत्यर्थः । दास्रभमश्विनी च एतन्नक्षत्रनवकं परस्परमेकनाडीत्युच्यते । अथ पुष्यः प्रसिद्धः इन्दुर्मृगः त्वाष्ट्रं चित्रा मित्रोऽनुराधा अन्तकं भरणी व-

सुर्धनिष्ठा, जलभं पूर्वाषाढ़ा, योनिः पूर्वफाल्गुनी, बुध्नोऽहिर्बुध्न्य उत्तरभाद्रपदा, एतन्नक्षत्रनवकं परस्परं मध्यनाडीत्युच्यते। अथ वायुः स्वाती, अग्निः कृत्तिका, व्यालोऽश्लेषा, विश्वोत्तराषाढ़ा, एभ्यो युगयुगं स्वाती विशाखा च, कृत्तिका रोहिणी च अश्लेषा मघा च उत्तराषाढ़ाश्रवणे इत्यर्थः। अथ पौष्णभं रेवती च, एतन्नक्षत्रनवकमपरा तृतीयनाडीत्युच्यते। एतत्फलमाह। दम्पत्योः स्त्रीपुंसयोरेकनाड्यां परिणयनमसद्दुष्टफलं स्यात्। मध्यनाड्यां हि निश्चयेन मृत्युर्द्वयोरपि स्यात्। "मूलेन्द्राग्निभपाश्यजैकचरणादित्यार्यमेशाश्विभैर्याम्येन्द्वोज्यभमित्रभाग्यत्वसुभत्वाष्ट्राम्बुहिर्बुध्न्यभैः। अन्यैर्नाड्यहैकनाड़िनवके स्यातां द्विभे चेत्कृतिर्गोदादक्षिणतः क्वचिन्नृपमुखे पार्श्वैकनाड़ी हिता"। गोदादक्षिणतः सर्ववर्णेषु पार्श्वैकनाडी हिता, क्षत्रियादौ क्वचित्, अन्यकन्याया अलाभे पार्श्वैकनाडी हितेत्यर्थः"। यदाह गर्गः। "नाड़ीकूटं तु संग्राह्यं कूटानां तु शिरोमणिः। ब्रह्मणा कन्यकाकण्ठसूत्रत्वेन विनिर्मितमिति"। वराहः "आद्यैकनाडी कुरुते वियोगं मध्याख्यनाड्यामुभयोर्विनाशम्। अन्त्या च वैधव्यमतीव दुःखं तस्माच्च तिस्रः परिवर्जनीयाः" इति। अत्र चक्रन्यासो वशिष्ठेनोक्तः। "आवृत्तिभिर्भैस्त्रिभिरश्विभाद्यं क्रमोत्क्रमात् संगणयेदुडूनि। यद्येकपर्वण्युभयोश्च धिष्ण्ये नेष्टा नृनार्योर्भृशमेकनाडी"। फलेऽपि विशेषमाह वशिष्ठः "सा मध्यनाड़ी पुरुषं निहन्ति तत्पार्श्वनाडी खलु कन्यकां तु। आसन्नपर्यायसमागताश्चेद्वर्षेण साप्यन्तरिता त्रिवर्षैः"। उत्तरार्द्धस्यायमर्थः। आसन्ने समीपस्थिते पर्याये आवृत्तौ चेदेकनाडी समागता। यथाऽश्विन्यार्द्रयोर्भरणीमृगशीर्षरोहिण्याश्लेषयोर्वा सा नाड़ी वर्षेणैकेन स्त्रीपुंसयोरुक्ताऽशुभफलदात्री स्यात्। यदा त्वश्विन्युत्तरफाल्गुन्योरितरकृतव्यवधाना सा नाड़ी त्रिभिर्वर्षैरुक्ताऽशुभफलदात्री स्यात्। इयञ्चाश्विन्यादित्रिकगणना कन्यायाश्चतुश्चरणे जन्मनक्षत्रे सति यदा तु त्रिचरणं नक्षत्रं तदा कृत्तिकामारभ्य साभिजिच्चतुःपर्वगणना द्विचरणत्वे कन्यानक्षत्रस्य मृगशीर्षतः पञ्चपर्वगणना। यदाह नारदः। चतुस्त्रिद्व्यङ्घ्रिभोत्थायाः कन्यायाः क्रमशोऽश्विभात्। वह्निभादिन्दुभान्नाड़ी त्रिचतुःपञ्चपर्वसु। गणयेत् संख्यया चैकनाड्यां मृत्युर्न संशयः"। अमुमर्थं स्पष्टमाह गर्गः। "चतुःपात् कन्यकाऋक्षं गणयेदश्विभादिकम्। त्रिभं सव्यापसव्येन भिन्नं पर्व सुखावहम्। कन्यकर्क्षं त्रिपाच्चेत् स्याद्गणयेत् कृत्तिकादिकम्। चतुर्भिः पर्वभिस्तद्वदभिजित्तारकान्वितम्। कन्यकर्क्षं द्विपाच्चेत् स्याद्गणयेत् सौम्यभादिकम्। पञ्चभिस्त्वपरोहे तु पञ्चमात् त्रिकवर्जिते" एतत्फलमप्याह गर्गः। "संश्लिष्टा मध्यनाड़ी तु पुरुषं हन्ति वेगतः। संश्लिष्टा पार्श्वनाड़ी तु कन्यकां हन्त्यसंशयम्। आसन्ना त्वेकनाड़ी स्यादासन्नमृतिदायिनी। दूरस्था चैकनाड़ी स्याद्दूरानिष्टस्य कारिणीति"। जगन्मोहने नारदः। "एकनाड़ीविवाहश्च गुणैः सर्वैः समन्वितः। वर्ज्जनीयः प्रयत्नेन दम्पत्योर्निधनं यतः"। आसां नाड़ीनां देशभेदेन व्यवस्थामाह जगन्मोहने नारदः। "चतुर्नाड़ी त्वहल्यायां पाञ्चाले पञ्चनाड़िका। त्रिनाड़ी सर्वदेशेषु वर्ज्जनीया प्रयत्नतः" इति। अहल्यापाञ्चालौ देशविशेषौ। तस्माद्वशिष्ठादिभिर्देशभेदेन नक्षत्रभेदेन चानित्यप्रवृत्तिके चतुःपञ्चनाड्यावुपेक्ष्य सकलदेशव्यापित्वात् सकलनक्षत्रव्यापित्वाच्च त्रिनाड्येवोक्ता। नचैतावता चतुःपञ्चनाड्यौ स्वस्वदेशव्यतिरिक्तदेशेषु नैवावलोक्ये किन्तु सर्व्वेष्वपि देशेषु विचार्य्ये तत्र स्वदेशे दोषमहत्त्वमन्यदेशे दोषाल्पता त्रिनाड़ी तु सर्व्वत्रैव समानदोषा" यदाह मनुः। "अहल्यायां चतुर्नाड़ीसंयोगः कालमृत्युदः। एष योगोऽन्यदेशेषु ह्यपमृत्युफलप्रदः। पञ्चनाड़ीसमायोगः पाञ्चाले कालदण्डदः। इतरत्र समायोगो दुःखदारिद्र्यदोषकृत्। त्रिनाड्यां तु समायोगः सर्व्वत्रानिष्टकारकः" इति। यत्तु ज्योतिर्निबन्धे ज्योतिःप्रकाशे अश्विन्यादित्रिनाड़ीं प्रकृत्याभिहितम् "निधनं मध्यमनाड्यां दम्पत्योर्नैव पार्श्वयोर्नाड्योः" अत्र पार्श्वनाड्यां मृत्युरूपमहादोषाभावं मत्वा विवाहादिकरणं शुभायेत्यर्थः। तत् क्षत्रियादिविषयं गोदावरीतोदक्षिणदेशवासिविषयं वा। तदप्युक्तं तत्रैव। "करग्रहे पृष्ठनाड्यौ न निन्द्ये इति यद्वचः। तत्क्षत्रियादिविषयं गौतम्यायाम्यतस्तथेति"। गौतमी गोदावरी। अत्रार्थे आर्षं मूलं मृग्यम्। "इयं चाश्विन्यादित्रिनाड़ी गुरुमन्त्रादिष्वप्यनिष्टा प्रभुपण्याङ्गनादौ तु शुभैव"। उक्तञ्च स्वरोदये "एकनाड़ीस्थिता यत्र गुरुमन्त्राश्च देवताः। तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत्। प्रभुः पण्याङ्गना मित्रं देशो ग्रामः पुरं गृहम्। एकनाड़ीस्थितं भव्यं विरुद्धं वेधवर्जितमिति"। अत्र नाड़ीवेधे चरणवेधेऽधिकदोषः, आवश्यके स एव त्याज्यः" एतदप्युक्तं तत्रैव। "आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम्। द्वितीयेन तृतीयञ्च तृतीयेन द्वितीयकम्।

एवंभांशव्यधो येषां जायते वरकन्ययोः। तेषां मृत्युर्न सन्देहः शेषांशाः स्वल्पदोषदा इति” तत्राप्यावश्यकत्वे गुरुः “दोषापनुत्तये नाड्या मृत्युञ्जयजपादिकम्। विधाय ब्राह्मणांश्चैव तर्पयेत् काञ्चनादिना। हिरण्मयीं दक्षिणाञ्च दद्याद्वर्णादिकूटके। गावोऽन्नं वसनं देयं सर्व्वदोषापहारकमिति”। एवं सर्व्वसम्मतत्वादष्टौ कूटभेदा अभिहिता मानेत्र। “माहेन्द्रं गौड़देशे च मालवे रज्जुसंज्ञकमित्यादिना वादरायणवाक्येनान्यकूटानां तत्तद्देशविषयताप्रादनात्। ते च कूटभेदावसिष्ठसंहितायां तोडलानन्दे च सामान्यविशेषभावसहिता द्रष्टव्याः” पी० धा०। अथ नाडीदोषापवादः “राश्यैक्ये चेद्भिन्नमृक्षं द्वयोः स्यान्नक्षत्रैक्ये राशियुग्मं तथैव। नाड़ीदोषोनोगणानां च दोषो नक्षत्रैक्ये पादभेदे शुभं स्यात्”मु०चि०। “द्वयोः स्त्रीपुंसयोरेकराशित्वे सति यदि भिन्नमृक्षं स्यात् तदा नाड़ीदोषोगणानाञ्च राक्षसमनुष्यगणानाञ्च दोषो नास्ति। यथा एकस्मिन्नपि कुम्भराशौ शततारकापूर्वभाद्रपदापादत्रयं च इत्येवं रूपोनक्षत्रभेदः। तथैव नक्षत्रैक्ये राशियुग्मं राशिद्वयं चेत् स्यात् तदापि प्रागुक्तो दोषो न स्यात्। उपलक्षणत्वात् तारादोषोऽपि न भवेत्। यथा। एकस्मिन्नेव नक्षत्रे पूर्वाभाद्रपदाख्ये पूर्वभाद्रपदायाः प्रथमपादत्रयं कुम्भे चतुर्थचरणश्च मीने इत्येवंरूपो राशिभेदः”। यदाह नारदः। “एकराशौ पृथग् धिष्ण्ये दम्पत्योः पाणिपीड़नम्। उत्तमं मध्यमं भिन्नराशेरेकर्क्षगयोस्तयोः। एकर्क्षे चैकराशौ च विवाहः प्राणहानिदः”। वसिष्ठः। “दम्पत्योर्जन्मभे चैक्ये राशौ च निधनं तयोः। एकस्य च तयोरुवाहे किञ्चिद्भेदे पि वा नवा”। किञ्चिद्भेदे नक्षत्रभेदे राशिभेदे च। गर्गः “एकराशिं विना नाड़ीयोगमादौ विवर्जयेत्। न दोषस्त्वेकराशिस्थे भकूटेऽन्येषु मृत्युदेति”। भृगुरपि “दम्पत्योरेकराशिश्चेत् पृथगृक्षं यदा भवेत्”। वसिष्ठोक्तो विवाहः स्याद्गणनाड़्यौ न योजयेदिति। “अतएवाह केशवार्कः “नक्षत्रमेकं यदि भिन्नराश्योरभिन्नराश्योर्यदि भिन्नमृक्षम्। प्रीतिस्तदानीं निविड़ा नृनार्योश्चेत् कृत्तिकारोहिणिवन्न नाड़ीति”। चतुर्थचरणस्यायमर्थः चेद्यदि कृत्तिकारोहिणीवत् स्यात् तदापि नाड़ीदोषो न स्यात्। उपलक्षणत्वाद्गणदोषोऽपि। यथा कृत्तिकारोहिण्योरेकनाड़ीस्थत्वेऽपि गणदौष्ट्येऽपि ततसंसूचिताऽशुभफलं नैव स्यात्। अत्रापि प्रथमतः पुंतारापेक्षिता द्वितीयतः स्त्रीतारेत्यपि विशेषोध्येयः।

यदाह गर्गः “एकराशौ पृथक् धिष्ण्ये पुंतारा प्रथमा भवेत्। अतीव शोभना प्रोक्ता स्त्रीतारा चेदशोभनेति”। तदेवं कैमुतिकन्यायेन यत्र नाड़ीगणदोषाद्यभावो यथा रोहिण्योमृगयोर्हस्तचित्रयोर्वा तत्र पाणिपीड़नं शुभं स्यादिति किं वाच्यमित्यर्थः। अथैकराशिनक्षत्रत्वेऽपवादमाह। नक्षत्रैक्ये इति। स्त्रीपुंसयोः राश्यैक्ये नक्षत्रैक्ये च यदि चरणभेदो यथा भरण्याः प्रथमपादे पुंसोजन्म द्वितीयपादे स्त्रियास्तदापि शुभं कल्याणं स्यात्। तदुक्तं केशवार्केण। “पराशरः प्राह नवांशभेदादेकर्क्षराश्योरपि सौमनस्यमिति”। सौमनस्यं प्रीतिः। वसिष्ठेनापि “एकर्क्षहस्यमत्रानां भवति विवाहः सुतार्थसम्पत्त्यै। यद्युभयोरेकर्क्षं भवति यदा चांशको भिन्न” इति। एतच्च सङ्कोचविषयं वेदितव्यम्। तथा च जगन्मोहने। “एकर्क्षे चैकराशौ च विवाहस्त्वशुभः स्मृतः। सङ्कोचे तु तदा कार्योभिन्नपादोयदा तयोरिति”। अत्रापि विशेषो ज्योतिर्निबन्धे विधिरत्ने। “रोहिण्यार्द्रा मघेन्द्राग्नी तिष्यश्रवणपौष्णभम्। उत्तराप्रोष्ठपाच्चैव नक्षत्रैक्येऽपि शोभना” इति। इन्द्राग्नी विशाखा तदेतत् स्पष्टमुक्तं तत्रैव विधिरत्ने। “विशाखिकार्द्रश्रवणप्रजेशतिष्यान्त्यतत्पूर्व्वमघाः प्रशस्ताः। स्त्रीपुंसतारैक्यपरिग्रहे तु शेषाविवर्ज्या इति सद्भिरत्न”इति। शेषास्तारा इत्यर्थः। अत्र द्वयोरन्यतरस्य वा जन्मराशिनक्षत्राद्यज्ञाने उपायमाह। वसिष्ठः। “अज्ञातजन्मनां नृणां नामभे परिकल्पना। तेनैव चिन्तयेत् सर्वं राशिकूटादि जन्मवत्। जन्मभं जन्मधिष्ण्येन नामधिष्ण्येन नामभम्। व्यत्ययेन यदा योज्यं दम्पत्योर्निधनप्रदम्। कुर्य्यात् षोड़श कर्माणि जन्मराशौ बलान्विते। सर्वाण्यन्यानि कर्माणि नामराशौ बलान्विते” इति। इहस्पतिरपि। “व्यवहारराजसेवासंग्रामग्रामकर्मेषु। ज्ञातेऽपि जन्मराशौ फलमुक्तं नामराशिवशादिति”। नाम्नः सकाशाज्जन्मनक्षत्रज्ञानं स्वरोदयाभिहितशतपदचक्रान्तर्गतस्वीयनामादिवर्णवशात् ज्ञेयमिति। यत्तु ऋकारादिवर्णं ऋषभादिनामसु दृश्यते तत् यथासम्प्रदायं व्यवस्था” पी० धा०। नाड़ीभेदेऽष्टौ गुणाः प्रागुक्ताः।

ज्यो०त० नाड़ीचक्रलेखनतद्विशेषौ दर्शितौ यथा स्वरोदये। “अश्विन्यादि लिखेच्चक्रं सर्पाकारं त्रिनाड़िकम्। तत्र वेधवशात् ज्ञेयं विवाहादौ शुभाशुभम्। त्रिनाड़ीवेधनक्षत्रमश्विन्यार्द्रायुगोत्तराः। हस्तेन्द्रमूलवा-

रुणयः पूर्वभाद्रपदादिमा । याम्यः सौम्योगुरुर्योनिश्चित्रमित्रजलाह्वयम् । धनिष्ठा चोत्तरा भद्रा मध्यनाड़ी व्यवस्थिता । कृत्तिका रोहिणी सर्पोमघा स्वातीविशाखके । उत्तराश्रवणापौष्णं पृष्ठनाड़ी व्यवस्थिता । अश्व्यादिनाड़ीवेधर्क्षं षष्ठं द्वितीयकं क्रमात् । याम्यादित्रिकतुर्यञ्च कृत्तिकादिद्विषट्ककम् । एवं निरीक्षयेद्वेधं कन्यामन्त्रे सुरे गुरौ । पण्यस्त्रीस्वामिमित्रेषु देशे ग्रामे पुरे गृहे । एकनाड़ीस्थधिष्ण्यानि यदि स्युर्वरकन्ययोः । तदा वेधं विजानीयात् गुर्वादिषु तथैव च । प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतोव्यधः । प्रणष्टं जन्मभं यस्य तस्य नामर्क्षतोवदेत् । द्वयोर्जन्मभयोर्वेधे द्वयोर्नामभयोस्तथा । नामजन्मर्क्षयोर्वेधे न कर्त्तव्यं कदाचन । एकनाड़ीस्थिता चेत् स्यात् भर्त्तुर्नाशाय चाङ्गना । तस्मान्नाड़ीव्यधोवीक्ष्यो विवाहे शुभमिच्छता । प्राङ्नाड़्या वेधतोभर्त्ता मध्यनाड्योभयं तथा । पृष्ठनाड़ीव्यधे कन्या म्रियते नात्र संशयः । एकनाड़ीस्थिता यत्र गुरुर्मन्त्रश्च देवता । तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत् । प्रभुः पण्याङ्गनामित्रं देशोग्रामः पुरं गृहम् । एकनाड़ीगता भव्या अभव्या वेधवर्जिताः” । अस्यापवादः ज्यो०त० । “एकराश्यादियोगे तु नाड़ीदोषो न विद्यते” एकराश्यादिश्च “एकराशौ च दम्पत्योः शुभं स्यात् समसप्तके । चतुर्थे दशमे चैव तृतीयैकादशे तथा” इत्युक्तः । समपदेनाद्विषमसप्तके दोषः । तथा च “योटके सप्तके मेषतुले युग्महयौ तथा । सिंहघटौ सदा वर्ज्यौ मृतिं तत्राब्रवीच्छिवः” । श्रीपतिव्यवहारनिर्णये । “सुहृदेकाधिपयोगे ताराबले वश्यराशौ वा । अपि नाड़्यादिवेधे भवति विवाहोहितार्थाय, राजमार्त्तण्डे च । “न राजयोगे ग्रहवैरिता च न तारशुद्धिर्न गणत्रयं स्यात् । न नाड़ीदोषो न च वर्णदुष्टिर्गर्गादयस्ते मुनयोवदन्ति” अत्र देशभेदात् व्यवस्था । अन्यत्रोक्तम् । “लग्ने व्यये च पाताले जामित्रे चाष्टमे कुजे । भर्त्ता कन्याविनाशाय कन्याभर्त्तृविनाशकृत्” । अस्यापवादः । “अथ वा गुणबाहुल्ये कुजे वा तादृशे द्वयोः” प्रागुक्तरीत्या अष्टानां कूटानां गुणाङ्कानां सङ्कलने अष्टादशतोऽधिकत्वे उभयोर्वरकन्ययोरुक्तलग्नादिस्थाने मङ्गलस्य स्थितौ च न दोषः एवमन्योऽपि वैधव्ययोगोनिन्दनीयः स च जातकशब्दे वक्ष्यते । एवं विवाहे वर्षादिशुद्धिं दम्पत्योरानुकूल्याङ्गं चोक्त्वेदानीं निर्दोषदिनलग्नादि निरूप्यते । “तत्रैकविंशतिः सर्वसम्मता दोषा नारदेन परिगणिताः । “एकविंशतिदोषाणां नामरूपफलानि च । पितामहोक्तं संवीक्ष्य तानि वक्ष्ये समासतः । पञ्चाङ्गशुद्धिरहितोदोषस्त्वाद्यः प्रकीर्त्तितः । उदयास्तशुद्धिरहितो द्वितीयः सूर्यसंक्रमः । तृतीयः पापषड्वर्गो भृगुषष्ठः कुजाष्टमः । गण्डान्तं कर्त्तरी रिष्फषड़ष्टेन्दुश्च संग्रहः । दम्पत्योरष्टमं लग्नं राशिर्विषघटी तथा । दुर्मुहूर्त्तो वारदोषः खार्जूरिकसमङ्घ्रिभम् । ग्रहणोत्पातभं क्रूरविद्धर्क्षं क्रूरसंयुतम् । कुनवांशो महापातो वैधृतिश्चैकविंशतिरिति” अन्यैस्तु दश दोषा उक्ताः “वेधश्च १लत्ता२च तथा च पातः,३खार्जूरयोगो४दशयोगचक्रम्५। युतिश्च६जामित्र७मुपग्रहाश्च८वाणाख्यवर्ज्यौ९दश चैव दोषा इति व्यवहारोच्चयेऽभिधानात् । तत्र “दुर्मुहूर्त्तो रवावर्यमेत्यादिः । वारदोषः कुलिकादिः, क्रूरसंयुतमित्यस्योपलक्षणत्वादकालवृष्टिनामकोऽपि दोषो गृह्यते । यदाह वसिष्ठः । “पञ्चाङ्गशुद्धिरहिताश्चोत्पाताऽकालवृष्टिजाः” इति । एषां दोषाणां कर्मविशेषे फलमाह वसिष्ठः “एकविंशन्महादोषास्त्वेते ब्रह्ममुखोदिताः । कदाचिन्नैव सीदन्ति गुणानां कोटिकोटिभिः । तस्मादेतेषु दोषेषु कदाचिन्नाचरेच्छुभम् । विवाहे विधवा नारी मरणं व्रतबन्धने । ग्रामनाशः प्रतिष्ठायां सीमन्ते गर्भनाशनम् । नवान्नभोजने मृत्युः कृषौ तत्फलनाशनम् । कर्त्तुर्नाशो गृहारम्भे प्रवेशे पतिनाशनम् । यात्रायां कर्त्तृनाशः स्याद्युद्धयाने विशेषतः । लभ्यते सुमहत्पुण्यमेषु श्राद्धादिकर्मभिरिति” पी०धा० ।

तत्र सर्वकर्मोपयोगिषड्वर्गे वक्तव्ये आदौ चैत्रनवांशपानाह “कुजशुक्रसौम्यशशिसूर्यचन्द्रजाः कविभौमजीवशनिसौरयोगुरुः । इह राशिपाः, क्रियमृगास्यतौलिकेन्दुभतो नवांशविधिरुच्यते बुधैः” मु०चि० ।

“अत्र लग्नादीनां लक्षणं नारदोक्तम् । “त्रिंशद्भागात्मकं लग्नं होरा तस्यार्द्धमुच्यते । लग्नत्रिभागोद्रेष्काणो नवमांशो नवांशकः । द्वादशांशोद्वादशांशस्त्रिंशांशस्त्रिंशदंशकः । षड्वर्गाः कथिताह्येते- तेषामीशा इमे स्मृताः” इति । तत्रैते भौमशुक्रबुधचन्द्रसूर्यबुधशुक्रभौमगुरुशनिगुरवः, क्रमेणेह षड्वर्गे राशिपा मेषादिराशीनां स्वामिनः । क्रियेति । क्रियो मेषः मृगास्यो मकरः तौलिकं तुला इन्दुभं कर्कः एभ्यो राशिभ्यो द्वादशस्वपि राशिषु नवांशं बुधैरुच्यते । मेषे मेषादेव, वृषे मकरादेव मिथुने तुलातः कर्के कर्कादेव, एवं सिंहेऽपि मे-

मादेव एव कन्यादिषु अपि राशिषु मकरादित एव। एवमेव धनुरादिष्वपि इत्यर्थः। यदाह नारदः। "सिंहस्याधिपतिर्भानुश्चन्द्रः कर्कटकेश्वरः। मेषवृश्चिकयोर्भौमः कन्यामिथुनयोर्बुधः। धनुर्मीनयोर्देवेज्यः शुक्रोवृषतुलेश्वरः। शनिर्मकरकुम्भेश इत्येते राशिनायकाः"। "नवमांशाः मेषसिंहचापे, मेषादयः क्रमात्। क्रमाद्गोमृगकन्यासु ज्ञेयाः स्युर्मकरादयः। तुलामिथुनकुम्भेषु स्युः क्रमेण तुलादयः। अलिकर्कटमीनेषु क्रमात् स्युः कर्कटादयः" इति पी० धा०। अथ होरेशकथनम्

"समभेऽहमध्ये शशिरविहोरा विषमभमध्ये रविशशिनोः स्यात्" मु०चि०। "पञ्चदशभागात्मिका होरा समराशिमध्ये प्रथमा चन्द्रस्यापरा सूर्य्यस्य। विषमराशिमध्ये प्रथमा रवेः परा चन्द्रस्येत्यर्थः। "होरार्केन्द्वोरोजराशौ समभे चन्द्रसूर्य्ययोरिति नारदोक्तेः" पी०धा०। अथ त्रिंशांशद्रेक्काणेशाः। "शुक्रज्ञजीवशनिभूतनयस्य बाणशैलाष्टपञ्चविशिखाः समराशिमध्ये। त्रिंशांशकोविषमभे विपरीतमस्माद्द्रेक्काणकाः प्रथमपञ्चनवाधिपानाम्" मु० चि०। समराशिमध्ये क्रमेण प्रथमतः पञ्चानामंशानां शुक्रः स्वामी ततः शैलानां सप्तानां ज्ञोबुधः। ततोऽष्टानां जीवो गुरुः। ततः पञ्चानां शनिः। ततो विशिखाबाणाः पञ्च तेषां भूतनयो भौमः। शुक्रस्त्वादिसमाहारद्वन्द्वः। विषमभे तु अस्मात्समराशेर्विपरीतं ज्ञेयम्। यथा प्रथमतः पञ्चानां भौमः ततः पञ्चानां शनिः ततोऽष्टानां गुरुः। ततः सप्तानां बुधः ततः पञ्चानां शुक्रः इत्यर्थः। अयमेव त्रिंशांशकसंज्ञ इति। यथाह नारदः। "कुजार्कीज्यज्ञशुक्राणां बाणेष्वष्टाद्रिमार्गणाः भागाः स्युर्विषमे ते तु समराशौ विपर्य्ययात्" इति। द्रेक्काणा राशिदशांशाः द्वादशसु राशिषु प्रथमोद्रेष्काणः प्रथमस्य स्वराशग्रधीशस्य, द्वितीयोद्रेष्काणः पञ्चमराशीश्वरस्य, तृतीयः स्वराशितो नवमराशीश्वरस्य। यथा वृषे प्रथमो द्रेष्काणो वृषाधीशशुक्रस्य, स्वापेक्षपञ्चमकन्याधीशबुधस्य द्वितीयः, तृतीयः स्वापेक्षनवममकराधीशशनेरित्यर्थः। "स्युर्द्रेक्काणा लग्नपञ्चनवराशीश्वराः क्रमादिति" नारदोक्तेः पी० धा०। द्वादशांशेशानाह।

"स्याद्द्वादशांश इह राशित एव गेहं होराथ दृक्कनवमांशकसूर्यभागाः। त्रिंशांशकश्च षडिमे कथितास्तु वर्गाः सौम्यैः शुभं भवति चाशुभमेव पापैः" मु०चि०। "इह षड्वर्गे द्वादशांशः सार्द्धमंशद्वयं तत् स्वराशित एवेष्टांशान्तं गणितं सद् यस्तद्राशिस्वामी स द्वादशांशेश्वरः "आरभ्य लग्नराशेस्तु द्वादशांशेश्वराः क्रमादिति" नारदोक्तेः। अन्यच्चरणत्रयं स्पष्टतरम्। तदुक्तं वशिष्ठेन। "लग्नं तदर्द्धञ्च ततस्त्रिभागो नवांशकश्च द्विदशांशकश्च। त्रिंशांशकश्चेति हि वर्गषट्कं शुभं शुभव्योमचराधिपत्यम्। यः पापषड्वर्गभवो हि दोषः पञ्चाङ्गसौख्यप्रहलग्नजातम्। गणौघमम्भोधिममोघवाणः शुष्यत्यशेषं खलु राघवस्येति"। तस्मात् सौम्यपापग्रहषड्वर्गसाङ्कर्य्ये सति सौम्यषड्वर्गस्त्रिभ्योऽधिकश्चेच्छुभः त्रिभ्योहीनश्चेदशुभ इत्यर्थः" पी० धा०। अथ गण्डान्तदोषः। "ज्येष्ठापौष्णभसार्पभान्त्यघटिकायुग्मं च मूलाश्विनीपित्र्यादौ घटिकाद्वयं निगदितं तद्भस्य गण्डान्तकम्। कर्कालिझषजभान्ततोऽर्धघटिका सिंहाश्च मेषादिगा पूर्णान्ते घटिकात्मकं त्वशुभदं नन्दातिथेश्चादिमम्" मु० चि०।

"गण्डान्तं नाम सन्धिविशेषः सचानेकविधः नक्षत्रसन्धिस्तिथिसन्धिर्लग्नसन्धिश्च तथा योगसन्धिः करणसन्धिर्वर्षसन्धिरयनसन्धिर्ऋतुसन्धिर्मासस्न्धिः पक्षसन्धिर्दिनसन्धीरात्रिसन्धिमध्याह्नसन्धिः प्रातःसायंसन्धिर्निशीथसन्धिश्च। तत्र तिथिनक्षत्रलग्नविशेषाणां यः सन्धिर्नियतकालः स गण्डान्तसंज्ञः। अन्येषां तु सन्धिर्नियतकालः सन्धिशब्दवाच्य एव। तत्रादौ नक्षत्रगण्डान्तमुच्यते। ज्येष्ठा प्रसिद्धा पौष्णभं रेवती सार्पभमश्लेषा एषामन्ते घटिकाद्वयम् (४दण्डाः)। तथा मूलाश्विन्यौ प्रसिद्धे पित्र्यं मघा। एषामादौ घटिकाद्वयं च गण्डान्तनाम। तथा च रेवत्यश्विन्योरश्लेषामघयोर्ज्येष्ठामूलयोरन्तरालवर्त्ति घटीचतुष्टयं नक्षत्रगण्डान्तमशुभदम् तदुक्तं रत्नमालायाम्। "पौष्णाश्विन्योः सार्पपित्र्याख्ययोश्च यच्च ज्येष्ठामूलयोरन्तरालम्। तद्गण्डान्तं स्याच्चतुर्नाडिकं हि यात्राजन्मोद्वाहकालेष्वनिष्टमिति"। यत्तु वशिष्ठेनोक्तम् "यदन्तरालं पितृसार्पयोश्च मूलेन्द्रयोराश्विनपौष्णयोश्च। ससन्धि गण्डान्तमिति त्रयं तद्यामप्रमाणं शुभकर्महन्तृ इति"। यामः प्रहरो नक्षत्रभोगस्येति शेषः। नारदोऽपि "सार्पेन्द्रपौष्णधिष्ण्यान्ते षोड़शांशा भसन्धयः। तदग्रभेष्वाद्यजाताः पापागण्डान्तसंज्ञकाः। उग्रं सन्धित्रितयजं गण्डान्तत्रितयं महत्। मृत्युदं जन्मयानादिविवाहस्थापनादिषु"। षोड़शांशो नक्षत्रभोगस्यार्द्धप्रहर इति यावत्। आद्यजाताः षोड़शांशाः। तदेतद्दोषमहत्त्वात्पत्त्यसूच-

नार्थम् । तथा हि । चतुर्घटिके नक्षत्रगण्डान्ते महान् दोषः, तदधिके त्वष्टघटिकात्मके मध्यमदोषः। ततोऽधिके चरणावधिके त्वल्पदोषः । अतएवोक्तं सूर्यसिद्धान्ते "सार्पेन्द्रपौष्णधिष्ण्यानामन्त्याः पादा भसन्धयः । तदग्रभेषु साद्धांशो गण्डान्तं नाम कीर्त्त्यते । व्यतीपातत्रयं घोरं गण्डान्तत्रितयं तथा । एतद्भसन्धित्रितयं सर्वकर्मसु वर्जयेदिति" । अर्द्धांशश्चरणार्द्धं प्रहर इत्यर्थः । दीपिकायाञ्च । "आद्ये मघाचतुर्भागे मूलपादाद्य एव च । रेवत्यन्त्यचतुर्भागे विवाहः प्राणनाशकः" इति । अथ लग्नगण्डान्तमुच्यते । कर्कीति कर्कः प्रसिद्धः अलिर्वृश्चिकः झषण्डजो मीनः एषामेषां लग्नानामन्तेऽर्द्धघटिका, तथा सिंहमेषौ प्रसिद्धौ अश्वोधनुः एषां लग्नानामादिभूतार्द्धघटिका गण्डान्तं नाम । तथा च कर्कसिंहयोर्वृश्चिकधनुषोर्मीनमेषयोर्वा लग्नयोरन्तरालवर्त्तिन्येका घटिका लग्नगण्डान्तमशुभदमित्यर्थः । यदाह कश्यपः "सिंहकर्कटयोश्चापकीटयोर्मीनमेषयोः । गण्डान्तमन्तरालं तन्नाडिका निधनप्रदेति" । यत्तु नारदेनोक्तम् "कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः । गण्डान्तमन्तरालं स्यात् घटिकार्द्धं मृतिप्रदमिति" । वसिष्ठेनापि । "लग्नान्तरालं घटिकार्द्धमेतत्कुलीरहर्योरलिचापयोश्च । मीनाजयोः सर्वगुणान्निहन्ति लोभो यथा सर्वगुणान्नरस्येति" । तद्दोषाधिक्यसूचनार्थम् । अथ तिथिगण्डान्तमुच्यते । पूर्णान्त इति । पूर्णाः पञ्चमीदशमीपञ्चदश्यस्तासामन्ते घटिकैका, तथा नन्दाः प्रतिपत्षष्ठ्येकादश्यस्तासामादिभूतैका घटिका तिथिगण्डान्तं नाम । तथा च पञ्चमीषष्ठ्योर्दशम्येकादश्योः, पञ्चदशीप्रतिपदोर्वा तिथ्योरन्तरालवर्त्तिघटीद्वयं तिथिगण्डान्तमशुभमित्यर्थः । यदाह नारदः "पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाड़ीद्वयं सदा । गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु" इति । यत्तु कश्यपेनोक्तम् "पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीचतुष्टयम् । उद्वाहजन्मयानेषु गण्डान्तं निधनप्रदमिति" । तद्दोषतारतम्यसूचनार्थम् । एवं गण्डान्तसंज्ञः सन्धिरुक्तः । तत्र तिथिलग्नगण्डान्तपरिहारः शाकल्यसंहितायाम् । "तथैव तिथिगण्डान्तं नास्तीन्दौ बलशालिनि । तथैव लग्नगण्डान्तं नास्ति जीवे बलान्विते" इति । अथात्र प्रसङ्गादन्येषामपि सन्धिरुच्यतेऽस्माभिः । यदाह गुरुः "घटिकाद्वयमृक्षान्ते मासान्ते तु दिनत्रयम् । वर्षान्ते वर्जयेत्पक्षं ग्रहणाद्दिनसप्तकमिति" । तिथ्यादिसन्धिमप्याह वसिष्ठः "पक्षोऽब्दसन्धिस्त्रिदिनञ्च माससन्धिस्त्रिनाड्यः खलु सन्ध्ययोश्च । नाड्यश्चतस्रस्तिथिऋक्षयोगसन्धिस्तदर्द्धं करणस्य सन्धिः" । वर्षेषु विशेषमाह स एव "सौराब्दान्ते त्यजेत्पक्षं चान्द्रे तु नवमं त्यजेत् । सावनान्तेऽष्टमं त्याज्यं नाक्षत्रे पौष्णभात्त्र्यहमिति" । अत्रापि विशेषमाह स एव । "अब्दाः स्युस्त्रिविधा जीवसौरचान्द्राह्वयाः सदा । तेषामादौ तथा चान्ते त्रिदिनं वर्जयेच्छुभे" इति । अयञ्च सर्वकार्यसाधारणो निषेधः अन्यथा मीनादित्ये विवाहप्रसङ्गाभावादेव वर्षान्तनिषेधस्य वैयर्थ्यापातात् । गुरुः "ऋक्षान्ते पुत्रनाशः स्यान्मासान्ते तु धनक्षयः । वर्षान्ते वर्गनाशः स्याद्ग्रहणात् सर्वनाशनमिति" । आवश्यकत्वे तु "नक्षत्रयोगतिथिसन्धिषु नाड़िकैका तिथ्यष्टविंशतिपलैः सहितोभयत्र । कर्कालिमीनतनुसन्धिषु दिक्पलानि त्याज्यानि शेषविवरेषु च पञ्च पञ्चेति" वासनासिद्धं केशवार्कवाक्यमनुसर्त्तव्यम् । वासना च सिद्धान्तशिरोमणावभिहिता । "शशितनुविकलाभ्यश्चन्द्रभुक्त्येन्दुभान्वोर्गतिविवरकलाभिर्भूय एवाभिरेव । पृथगथ गतिगुण्या नाड़िकाः सन्धिराप्ता भतिथिकरणयोगानां फलं तत्र मिश्रमिति" । सन्धिफलमप्याह केशवार्कः । "सस्त्रौ पुरन्ध्री शुचमेति वन्ध्या मृतप्रजा वा यदि सन्धिसन्धिः । वदन्ति वात्स्या ऋतुनाविमूढां निशीथमध्यंदिनसन्धिपूढाम्" तत्रार्द्धरात्रमध्यन्दिनसन्धिः "मध्ये निशाह्नोर्घटीत्रयम्" मु० चि० । इत्याद्ये प्रकरणेऽभिहितः । सन्धिसन्धिस्तु केशवार्केणोक्तः । "रवेर्भवेदेकगृहाधिकस्य यदंशवृन्दं खलु सायनस्य । तदत्र राशिद्वयभागतष्टं खष्टं वसन्तादृतवो भवन्ति । तत्सन्धियोगाङ्कघटीसमाः स्युर्हि सङ्गुणाश्चेद्विषुवायनीयाः । स सन्धिसन्धिः खलु यत्र शेषं शून्यं भवेदेष विशेषपुण्यः" इति मीनसंक्रान्तिमारभ्य वसन्तर्त्तुगणनेति पक्षमङ्गीकृत्यैकगृहाधिकस्येत्युक्तम् । गण्डान्तदोषपरिहारमाह वसिष्ठः "गण्डान्तदोषमखिलं मुहूर्त्तोऽभिजिदाह्वयः । हन्ति यद्वन्मृगव्याधः पक्षिसङ्घमिवाखिलम्" । तदेतद्दोषापवादाख्यस्य प्रकारस्य नियामकत्वाद्विवाहविषयं न जातकादौ" पी० धा० । अथ कर्त्तरीदोषः । "लग्नात् पापावृज्वनृजू व्ययार्थस्थौ यदा तदा । कर्त्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदा" । मु० चि० "यदा पापग्रहौ लग्नाद्व्ययार्थस्थावृज्वनृजू द्वादशस्थः पापग्रहोमार्गी, द्वितीयस्थः पापग्रहो वक्री स्यात्तदा कर्त्तरी नाम दोषः

कन्तति स्त्रीपुंसयोः प्राणांश्छेदयतीति कृती च्छेदन इति धात्वर्थानुसारादन्वर्था सम्मुखकर्त्तरीयं मृत्युदारिद्र्यशोकदा भवेत्। यदाह नारदः "लग्नाभिमुखयोः पापग्रहयोर्ऋजुवक्रयोः। सा कर्त्तरीति विज्ञेया दम्पत्योर्गलकर्त्तरी। कर्त्तरीदोषसंयुक्तं यल्लग्नं तत् परित्यजेत्। अपि सौम्यग्रहैर्युक्तं गुणैः सर्वैः समन्वितमिति"। गर्गोऽपि।"व्यये मार्गगतिः क्रूरो वक्री क्रूरो धने यदि। तौ च लग्नांशतुल्यौ च तदा घोराख्यकर्त्तरी"। यदा तु द्वितीये मार्गी द्वादशे च वक्री अथ द्वावपि क्रूरौ व्यार्थस्थौ सन्तौ शीघ्रिणौ वा स्यातां तदा कर्त्तरी नास्त्येव। यदाह वशिष्ठः "लग्नस्य पृष्ठाग्रगयोरसाध्वोः सा कर्त्तरी स्यादृजुवक्रगत्योः। तावेव शीघ्रौ यदि व्यक्तचारौ न कर्त्तरी चेति पितामहोक्तिरिति"। इयं कर्त्तरी चन्द्रस्यापि द्रष्टव्या। यदाह कश्यपः "चन्द्रस्य कर्त्तरी तद्वच्छुभदृष्टा न दोषदेति"। परन्तु लग्नस्य चन्द्रस्य वा क्रूरग्रहमध्यगतत्वदोषोऽस्त्येव कर्त्तरीतोऽल्पफलः कन्यानाशकरत्वात्। यदाह वशिष्ठः।"क्रूरग्रहमध्यगते लग्ने चन्द्रेऽथ वा करग्रहणम्। ते यमसदनाभिमुखं गमनञ्चेच्छन्ति कन्यायाः" इति कर्त्तरीदोषेऽन्यदप्यपवादान्तरं "पापौ कर्त्तरिकारकावित्यादिना स्वयं वक्ष्यति। अत्र लग्नादित्युपलक्षणात् सर्वेषामपि भावानां कर्त्तरीदोषोऽध्यवसेयः "यो यो भावः स्वामिदृष्टोयुतोवेत्यादिना" तुल्यन्यायत्वात्। तत्र लग्ने कर्त्तरी महादोषकरी लग्नभङ्गाधायकत्वात्तस्या अन्यत्र तादृशदोषाभाव इति तु तत्त्वम्"पी०धा०। अतःपरं राहुकेत्वोः पापग्रहत्वं व्यवस्थापितं तच्च केतुशब्दे विस्तरेण वक्ष्यते। अथ युतयोगापरपर्य्यायसंग्रहदोषः।"चन्द्रे सूर्य्यादिसं युक्ते दारिद्र्यं मरणं शुभम्। सौख्यसापत्न्यवैराग्यं पापद्वययुते क्षतिः"मु०चि०"सूर्य्ययुक्ते चन्द्रे दारिद्र्यं स्यात्। भौमादियोगे मरणादि फलं क्रमेण स्यादित्यर्थः। पापग्रहसाहित्येऽप्यशुभफलं राहुकेत्वोरपि द्रष्टव्यम्। यथाह नारदः 'शशाङ्के ग्रहसंयुक्ते दोषःसंग्रहसंज्ञकः। सूर्य्येण संयुते चन्द्रे दारिद्र्यम्भवति ध्रुवम्। कुजेन मरणं व्याधिः सौम्येन त्वनपत्यता। दौर्भाग्यङ्गुरुणा युक्ते सापत्न्यम्भार्गवेण तु। प्रव्रज्या सूर्य्यपुत्रेण राहुणा कलहः सदा। केतुना संयुते चन्द्रे नित्यं कष्टंदरिद्रता। तस्मिन् संग्रहदोषे तु विवाहं नैव कारयेत्"। सापत्न्यं भर्त्तुरन्या भार्य्या स्यात्। अत्र गुरुबुधसाहित्यफलमशुभमुक्तम् ग्रन्थकर्त्रा तु वशिष्ठवाक्ये कस्यचिन्मताभिप्रायेण शुभफलमुक्तम्। यथोक्तं वशिष्ठेन "दारिद्र्यं रविणा कुजेन मरणं सौम्येन न स्युः प्रजा दौर्भाग्यं गुरुणा सितेन सहिते चन्द्रे ससापत्नकम्। प्रव्रज्याऽर्कसुतेन सेन्दुजगुरौ वाञ्छन्ति केचिच्छुभं ह्याद्यैर्मृत्युरसङ्ग्रहैः शशियुतैर्दीर्घः प्रवासः शुभैरिति"। अत एव श्रीपतिनोक्तम्। "शुभञ्च दम्भोलिभृदीड्यविद्भ्यामिति" दम्भोलिभृदीड्यो जीवः। पापेति। पापद्वयेन युते उपलक्षणत्वात्सापत्न्यादियुते क्षतिरेव स्यात्। "पापद्वययुते चन्द्रे दम्पत्योर्मरणं ध्रुवमिति" नारदोक्तेः। बहुसौम्यग्रहयोगे तु बहुकालं पत्युर्देशान्तरेऽवस्थानं स्यात् तद्वाक्यमधुनैवाभिहितम्। अथास्य परिहारो नारदोक्तः। "स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो विधुः। युतिदोषाय न भवेद्दम्पत्योः श्रेयसे तदेति"। क्वचिद्वर्गोत्तम इति पठ्यते। कश्यपेनापि। "तुङ्गमित्रस्वराशिस्थः शुभयुक्तः शुभप्रदः। एवंविधः क्रूरयुतः सम्पूर्णफलदः शशीति" पी० धा०।

अथ जन्मराशिलग्नयोरष्टमलग्नदोषं सापवादमाह।

"जन्मलग्नभयोर्मृत्युराशौ नेष्टः करग्रहः। एकाधिपत्ये राशीशे मैत्रे वा नैव दोषकृत्" मु०चि०।

'जन्मलग्नजन्मराश्योः सम्बन्धिनि मृत्युराशावष्टमलग्ने करग्रहोनेष्टः। यदाह नारदः 'दम्पत्योरष्टमं लग्नं त्वष्टमोराशिरेव च। यदि लग्नगतः सोऽपि दम्पत्योर्निधनप्रदः। स राशिः शुभयुक्तोऽपि लग्नं वा शुभसंयुतम्। लग्नं विवर्ज्जयेत् यत्नात् तदंशांश्च तदीश्वरान्"इति। अत्र जन्मलग्ने जन्मराशौ च विशेषमाह कश्यपः। "इष्टं स्वजन्मलग्नं तज्जन्मराशिरनिष्टदः। लग्नगस्तु तयोः स्थानाच्छुभान्युपचयानि वै" इति। नारदोऽपि "जन्मराश्युद्गमोनैव जन्मलग्नोदयः शुभः। तयोरुपचयस्थानं यदि लग्नगतं शुभमिति"। अथाष्टमलग्नदोषपरिहारमाह। एकेति जन्मराशिजन्मलग्नयोरन्यतरस्य विवाहलग्नस्य च स्वाम्यैक्ये सति यथा मेषवृश्चिकयोः, तथा तयोराशीश्वरयोः मैत्रे यथा सिंहमीनयोः। अत्र हि सूर्य्यगुर्वोरन्योन्यप्रीतिरस्ति। एतादृशविषये विवाहो लग्नाष्टमदोषकृत् न स्यात्। यदाह कश्यपः 'जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ। जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः"इति पी०धा०। परिहारान्तरमाह "मीनोच्चकर्कालिमृगस्त्रियोऽष्टमं लग्नं यदा नाष्टमगेहदोषकृत्। अन्योन्यमित्रत्ववशेन सा वधूर्भवेत्सुतायुर्गृहसौख्यभागिनी"। "उक्षा हयः स्त्री कन्या अन्ये प्रसि-

ह्लाः एते राशयो यद्यष्टमलग्नं स्युः यथा सिंहान्मीनः तुलातोऽवृषः धनुषः कर्कः मेषात् वृश्चिकः मिथुनान्मकरः कुम्भात्कन्याऽष्टमलग्नम् । तदाष्टमगेहदोषश्च भवेत् । कुत इत्यत आह । अन्योन्येति । प्रागुक्तपरस्परप्रीति वशे । इदञ्चोपलक्षणम् । मेषवृश्चिकयोस्तुलावृषयोरेकाधिपत्यात् । एवं सति सा वधूः परिणीता कन्या सुता युक्ता इष्टसौख्यभागिनी स्यात् । उक्तञ्च "ऋषकुलीरवृषालिकृगाङ्गना जननराशिविलग्नगृहाष्टमाः । शुभफला भृगुणा कथितास्तयोरधिपती सुहृदौ हि परस्परमिति" । परिहारान्तरमप्याह गुरुः ।"लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः । यद्यष्टमगतस्तोक्त दोषमाशु व्यपोहति । रन्ध्रेशः स्वशुभांशस्थस्तुङ्गः स्वेतन्मित्रगः । अष्टमस्थानदोषोहि विनश्यति न संशय"इति ।

अथ लग्नेऽष्टमेशादियोगफलम् ।"मूर्तिभवनांशोयदि च विलग्ने तदधिपतिर्वा न शुभकरःस्यात् । व्ययभवनं वा भवति तदंशस्तदधिपतिर्वा कलहकरः स्यात्"मु०चि०। "अष्टमभवननवांशोयदि विलग्ने स्यादथ वाष्टमभवनस्वामी विलग्ने स्यात्तदा शुभकरो न स्यात् । यदाह कश्यपः ।"दम्पत्योरष्टमे लग्ने राशौ वापि तदंशके । तदीशे वा लग्नगते तयोर्मृत्युर्न संशय" इति । अथ व्ययभवनञ्जन्मलग्नजन्मराशिभ्यान्द्वादशमभ्यवनम् अथवा व्ययांशो व्ययस्वामी यदि लग्ने स्यात्तदा कलहकृत् स्यात् । उक्तञ्च कश्यपेन "तथैव द्वादशे लग्ने तदंशे वा तदीश्वरे । विवाहे लग्नगे नेस्वा नित्यं स्यात् कलहोद्वयोरिति" । नारदेनापि "दम्पत्योर्द्वादशं लग्नं राशिर्वा यदि लग्नगः । अर्थहानिस्तयोस्तस्मात्तदंशस्वामिनन्त्यजेदिति" ।

अथ विषघटीदोषः।"खरामतो३०ऽन्त्यादितिवह्निपित्र्यभे खवेदतः४०कॆ, रदत३२स्तु सार्पभे। खवाणतो५०ऽश्वे, धृतितो१८ऽर्यमाम्बुपे, कृते२०भगत्वाष्ट्रभविश्वजीवभे । मनो१४र्हिदैवानिलसौम्यशाक्रभे कृपवतः२१ शैवकरेऽष्टि१६ तोऽजभे । युगाश्विनो२४बुध्न्यभतोययाम्यभे, खचन्द्रतो१० मित्रभवासवश्रुतौ । मूलेऽङ्गवाणाद् ५६ विषनाडिकाः कृता४ वर्ज्याः शुभेऽयोविषनाड़िकाध्रुवाः। निघ्ना भभोगेन खतर्क६०भाजिताः स्फुटाभवेयुर्विषनाडिकास्तथा" मु०चि०। "रेवतीपुनर्वसुकृत्तिकामघानक्षत्रेषु खरामतः त्रिंशत्घटिकोत्तरं कृताश्चतस्रो घटिकाविषनाडिकाः शुभकार्ये वर्ज्याः-स्युरिति"तृतीयस्लोकेनान्वयः । एवं सर्व्वत्र व्याख्येयं के रोहिण्यां कृतेर्विंशतेः । अजभे पूर्व्वभाद्रपदायाम् अन्यानि पदानि स्पष्टानि । तदेवं षष्टिघटीरूपे नक्षत्रभोगे ध्रुवकाश्चतस्रो विषनाड़िकाः प्रोक्ताः न्यूनाधिकत्वे तु स्पष्टीकरणमुच्यते । अथो इति । विषनाडीनां ध्रुवाः खरामतः इत्येवमादायो नक्षत्रभोगेनेष्टेन निघ्नाः खतर्कैः षष्ट्या भाजितास्ततोविषनाडिका ध्रुवाः स्पष्टा भवेयुरित्यर्थः । अत्रोपपत्तिस्त्रैराशिकेन । यदि घटीषष्ट्यात्मकभभोगेनेमे ध्रुवका इमाश्चतस्रो विषनाडिकाश्च लभ्यन्ते । तदेष्टभभोगेन किमपि, ध्रुवाविषनाडिकाश्चेष्टभभोगेन गुण्याः षष्ट्या भाज्या फलितम् । यदाह कश्यपः "वियद्बाणा५० वेददस्राः२४ खरामा३०व्योमसागराः४० । वेदचन्द्रा१४ श्चन्द्रदस्राः१२ खरामा३० व्योमबाहवः२० । नेत्राग्नयो३२ व्योमगुणाः३० शून्यदस्रा२० गजेन्दवः१८ । चक्षुर्बाहवो२१ वियद्दस्राः२० शक्रा१४ श्चेन्द्राः१४ खभूमयः१० । वेदचन्द्रा १४ स्तर्कवाणा५६ वेददस्राः२४ खबाहवः२० । व्योमेन्दवो१० व्योमचन्द्रा१० धृतयः१८ स्तर्कभूमयः१६ वेदाश्विनः२४ खरामाः ३० स्तुर्दस्रर्क्षात् घटिकाःक्रमात् । आभ्यः परस्तत्क्रमशश्चतस्रो विषनाडिकाः। कृत्वाद्यन्तघटीनिघ्नाः षष्टिभक्ताः स्फुटाः स्मृताः । विषनाडीदोषदुष्टं लग्नं सर्व्वगुणान्वितम् । शुभैः सर्व्वैश्च संयुक्तमपि यत्नेष्टकं त्यजेदिति" । वशिष्ठः कुर्व्वन्त्युद्वाहितां कन्यां विधवां वत्सरत्रयात् । अन्यस्मिन् मङ्गले तास्च निधनं वाथ निर्द्धनमिति" । ताः विषनाडिकाः ।

अथ प्रसङ्गात् ग्रन्थान्तरोक्तास्तिथिवारविषनाडिकाः प्रोच्यन्तेऽस्माभिः दैवज्ञम०। "तिथौ१५षु५नागा८ऽद्रि७गिरी७षु५ वारिधि४र्गजा८ऽद्रि७दिक्१०पावक३ विश्व१३ वासवाः१४। सुनोभ७,दशं स्यात्प्रथमा तिथेः क्रमात्परं विषं स्यात् घटिकाचतुष्टयम् ।नखा२०द्वयं२द्वादश१२दिक्१० च शैला७बाणाश्च५तत्त्वानि २५यथाक्रमेण । सूर्यादिवारेषु परं चतस्रो नाड्योविषं स्यात्खलु वर्जनीयम्"। ज्योतिः सारे ।"विवाहव्रतचूडासु गृहारम्भप्रवेशयोः। यात्रादिशुभकार्येषु विघ्नदा विषनाड़िकेति"। अस्य परिहारमाह दैवज्ञम० गुरुः"चन्द्रोविषघटीदोषं हन्ति केन्द्रत्रिकोणगः। लग्नं विना शुभैर्दृष्टः केन्द्रे वा लग्नपस्तथेति" फलप्रदीपे "विषनाड्युत्थितं दोषं हन्ति सौम्यखगः शशी । मित्रदृष्टोऽथ वा स्वीयवर्गस्थो लग्नपो भवेत्"पी०धा०। अथ मुहूर्त्तेशाः। "गिरिशभुजगमित्राः पित्र्यवस्वम्बुविश्वेऽभिजिदथ च विधाताऽपीन्द्र इन्द्रानलौ च । निर्ऋतिरुदकनाथोऽप्यर्यमाऽथो भगः स्युः क्रमश इह मुहूर्त्ता वासरे वाणचन्द्राः"मु०चि०।

"अत्र वाणचन्द्रा इत्युक्तेः मुहूर्त्तस्य पार्थक्ये नात्र-लक्षणं नोक्तम्। गिरिशो महादेवः भुजगः सर्पः मित्रः सूर्य्यविशेषः पितरवसवम् विश्वे प्रसिद्धाः अष्टमोऽभिजित् ततो विधाता ब्रह्मा, इन्द्रः इन्द्राग्नी अत्र समुदितयो-र्व्यासज्यवृत्तिदेवतात्वम् अत्र तुर्य्यमुहूर्त्तस्वामिनः पितर इत्यमेलितम् पित्र्यमिति नक्षत्रतदीशयोरभेदोपचारात् तस्य स्वामिनि वृत्तिः। निर्ऋतीराक्षसः उदकनाथो वरुणः अर्य्यमा भगश्चेमौ सूर्य्यविशेषौ। इत्येतद्दीशा वाणचन्द्राः पञ्चदश वासरे मुहूर्त्ताः स्युः यदाह नारदः "दिवामुहूर्त्ता रुद्राहिमित्राः पितृवसूदकम्। विश्वे विधातृब्रह्मेन्द्रा इन्द्राग्न्यसुरतोयपाः। अर्य्यमा-भगसंज्ञश्च विज्ञेयाः दश पञ्च चेति" पी० धा०।

"शिवोऽजपादादष्टौ सुभेशा अदितिजीवकौ। विष्णु-र्कत्वष्टृमरुतो मुहूर्त्ता निशि कीर्त्तिताः" मु०चि०।

"प्रथममुहूर्त्तस्वामी शिवः ततोऽजपादात् पूर्व्वाभाद्रपदा-दष्टौ भेशानक्षत्रस्वामिनोमुहूर्त्तेशाः स्युः। यथा"अजपादः अहिर्बुध्न्यः पूषा अश्विनौ यमः अग्निर्ब्रह्मा सोम इत्यष्टौ भेशाः। ततोदशमेशोऽदितिः जीवको गुरुः। विष्णुर्कत्वष्टृम-रुतः प्रसिद्धाः एतदीशा निशि मुहूर्त्ता प्रकीर्त्तिताः यदाह नारदः "ईशाजपादहिर्बुध्न्यपूषाश्वियमवह्नयः। धातृचन्द्रा-दितीज्याख्यविष्णुर्कत्वष्टृवायवः"इति। मुहूर्त्तलक्षणं कश्य-पेनोक्तम्। "अह्नः पञ्चदशोभागोमुहूर्त्तोऽथ तथा निशः" इति। प्रयोजनमाह नारदः। "यस्मिन्नृक्षे हि यत्कर्म कथितं निखिलञ्च यत्। तद्दैवत्ये तन्मुहूर्त्ते कार्य्यं यात्रा-दिकं सदेति"यात्रेत्युपलक्षणं देवस्थापनाद्यपि कार्य्यम्। पी०धा०। एवं मुहूर्त्तेषु निरूपिते तद्दोषमाह।

"रवावर्य्यमा ब्रह्मरक्षश्च सोमे कुजे वह्निपित्र्ये बुधे चा-भिजित् स्यात्। गुरौ तोयरक्षो भृगौ ब्रह्मपित्र्ये शना वीशसार्पौ मुहूर्त्ता निषिद्धाः" मु०चि०।

"रवेर्वारेऽर्य्यमा लक्षणया अर्य्यमस्वामिकचतुर्दशसं-ख्याकोमुहूर्त्तोनिषिद्धः। एवं सोमवारे ब्रह्मरक्षः द्वन्द्वै-कवद्भावः। ब्रह्मरक्षःस्वामिकौ मुहूर्त्तौ निषिद्धौ एवं सर्व्वत्र व्याख्येयम्। ईशो महादेवः। यदाह-नारदः। "अर्य्यमा राक्षसब्राह्मौ पित्र्याग्नेयौ तथा-भिजित्। रक्षःसार्पौ ब्राह्मपित्र्यौ भौजङ्गेशाविनादिषु। वारेषु वर्जनीयास्ते मुहूर्त्ताः शुभकर्म्मसु" पी० धा०।

"अथ वेधदोषं विवक्षुर्विहितनक्षत्रादिकमभिजिन्मानञ्चाह "निर्व्वेधैः शशिकरमूलमैत्रपित्र्यब्राह्मान्त्योत्तरप-वनैः शुभोविवाहः। रिक्तामारहिततिथौ शुभेऽह्नि वैश्वप्रा-न्त्याङ्घ्रिश्रुतितिथिभागतोऽभिजित् स्यात्"मु०चि०।

"मृगशिराहस्तमूलानुराधा मघारोहिण्युत्तराफाल्-गुन्युत्तराषाढोत्तराभाद्रपदास्वातीनक्षत्रैः निर्व्वेधैः वेधा-ख्यदोषरहितैः विवाहः शुभः शुभफलप्रदः यदाह वशिष्ठः। "स्वातीमघायां निर्ऋतौ ध्रुवान्त्यमित्रेन्दुहस्तेषु च कन्यकानाम्। पाणिग्रहस्त्विष्टफलप्रदः स्यादविद्धभेष्वेव गुणान्वितानामिति"। नारदोऽपि "पौष्णधातृत्तरामैत्र-रक्षन्द्रार्कपितृभैः। समूलभैरविद्धैस्तैः स्त्रीकरग्रह इष्यते" अर्कोहस्तः पी०धा०। वशिष्ठवाक्ये इष्टफलदइत्युक्तेः अन्ये-षामपि ग्रहणमापद्विषये सूचितम् तेन "कुमार्य्याः पाणि-ग्रहोऽर्याम्णिमूत्तरादिषु"पारस्करसूत्रे चित्राश्रवणधनिष्ठा-श्विनीनां ग्रहणं तच्च तस्य यजुर्वेदीयगृह्यसूत्रकर्त्त्वेन तद्वेदिविषयमापद्विषयं वेति ज्यो०रघु०अतएव भीमपरा-क्रमे अन्यान्यनक्षत्रेऽनिष्टमुक्तं यथा

"पूर्वात्रये विशाखायां शिवाद्ये भचतुष्टये। जाता चाशु भ-वेत् कन्या विधवाऽतो विवर्जयेत्। विष्णुभात्तु त्रिके चित्रे ज्येष्ठायां ज्वलने यमे। एभिर्विवाहिता कन्या भवत्येव सु-दुःखिता"।अत्र चित्रादिवर्जनात् यजुर्वेदिनामप्यत्रन्नापद्येव ग्राह्यता। तिथिनिर्णयमाह रिक्तेति। रिक्तामाः प्रसिद्धाः आभिर्वर्जिततिथिषु शुभेऽह्नि शुभग्रहवासरेऽपि विवाहः शुभः। यदाह वशिष्ठः। "शुक्लद्वितीयादित एव कृष्णे पक्षे दशम्यन्तगताः प्रशस्ताः। ताश्चष्टमीस्कन्दगणेशदुर्गाचतुर्दशी चापि तिथिर्विवर्ज्याः। वाराः प्रशस्ताः शुभखेचराणां सूर्य्यार्किवारौ खलु मध्यमौ तु। त्याज्यः सदा भूमिसुतस्य वारः कामार्कतिथ्योरपि तौ प्रदोषाविति" तौ सूर्य्यार्कि-वारौ त्रयोदशीद्वादश्योः प्रदोषौ प्रकृष्टदोषावित्यर्थः। गणेशश्च-तुर्थी दुर्गा नवमी। अत्र यदि विचारितविवाहदिनमारभ्य चतुर्थीकर्मपर्य्यन्तं पित्र्याद्यावश्यकश्राद्धदिनममावास्या वा भवति तदा विवाहो न कार्य्यः। उक्तञ्च "विवाहमा-रभ्य चतुर्थीमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात्। वैधव्यमाप्नोति तदाशु कन्या जीवेत् पतिश्चेदनप-त्यता स्यादिति। अन्यच्च।"विवाहमध्ये यदि तत्क्षयाह-स्तत्रान्नमस्याः पितरो न यान्ति। हस्ते विवाहे परतस्तु कुर्यात् श्राद्धं स्वधाभिर्न तु दूषयेत् तमिति। पी०धा०। तेन कृष्णपक्षे द्वादश्यादिदिनचतुष्टये आपद्यपि विवाहो न कार्य्यः। रिक्ताया वर्ज्यत्वेऽपि शनिवारयुक्तायाः-स्तस्याः ग्राह्यता इति गौड़ा अनार्षमूलत्वात्तच्चिन्त्यम्"न

वारदोषाः प्रभवन्ति रात्रौ सूर्य्यैन्दुनीरुतुशनैश्चरणामिति"। गौड़ावदन्ति तन्मूलमपि मृग्यम्"। अथाभिजित्प्रमाणम्। वैश्वेति पी०धा० 'अभिजिच्छब्दे २२७पृ० तद्विवृतिः।

अथ पञ्चशलाकचक्रे विद्धनक्षत्राणि। "वेधोऽन्योन्यमसौ विरिञ्च्यभिजितोर्याम्यानुराधर्क्षयोर्विश्वेन्द्वोर्हरिपित्र्ययोर्ग्रहकृतोहस्तोत्तराभाद्रयोः। स्वातीवारुणयोर्भवेन्निर्ऋतिभादित्योस्तथोफान्त्ययोः खेटे तत्र गते तुरीयचरणाद्योर्वा तृतीयद्वयोः" मु०चि०।

"विरञ्चिः रोहिणी रोहिण्यभिजितोर्ग्रहैः क्रूराक्रूरैः कृतोवेधोऽन्योन्यं परस्परं भवेत्। रोहिणीस्थे ग्रहे अभिजिद्विद्धः अभिजित्स्थे रोहिणी विद्धेत्यर्थः। एवं सर्व्वत्र उफा उत्तरफल्गुनी। तन्न्यासप्रकारमाह नारदः। "तिर्य्यक्पञ्चोर्द्ध्वगाः पञ्च रेखे द्वे द्वे च कोणयोः। शम्भुकोणे द्वितीयेऽग्निधिष्ण्यं चक्रे च विन्यसेत्। भान्यतः साभिजिन्त्येकरेखाकोणे च विद्धमिति"। चक्रे तस्मिन्नेकरेखास्थितेन तद्विद्धं खेचरेण प्रदिष्टम्। क्रूरैर्विद्धं सर्वधिष्ण्यं विवर्ज्यं सौम्यैर्विद्धं नाखिलं पाद एवेति"। नन्वष्टाविंशतिर्नक्षत्राणि चक्रे तत्र द्वयोर्द्वयोः परस्परवेधे चतुर्दश युग्मानि वक्तव्यानि स्युः कथमष्टावेवाभिहितानि उच्यते विवाहे ह्येकादशनक्षत्राणामेव प्राशस्त्याभिधानात् तद्वेधोपयोगीन्येतावन्त्येव युग्मानि सम्भवन्तीति तावतामेवाभिधानम्। अतएव दैवज्ञम० "रोहिण्यभिजितोर्मूलादित्योर्मृगवैश्वयोः। रेवत्युत्तरफाल्गुन्योर्मघाश्रवणयोर्भवेत्। हस्तोत्तराभाद्रपदोः स्वातीवारुणयोर्मिथः। अनुराधाभरण्योश्च वेधोऽयं पञ्चरेखजः" इति तथैवोक्तम्। वाराहविवाहपटले प्रत्येकवेधफलानि "रविवेधे वैधव्यं पुत्रनाशं करोति कुजवेधे। बन्ध्या पण्डितवेधे दीक्षाकरणं करोति गुरुवेधः। भृगुसुतवेधेऽपुत्रा दासी रविजातराहुसम्भूते" इति। पण्डितो बुधः दीक्षाकरणं प्रव्रज्याम् चरणवेधमाह खेट इति। तत्र तस्मिन् नक्षत्रे विद्यमाने ग्रहे सति यदि चतुर्थपादेऽस्ति तदा विद्धनक्षत्रस्य प्रथमपादे वेधः। यदि तृतीयपादे तदा द्वितीयचरणस्य वेधः एवं यदि द्वितीयपादस्थः तदा तृतीयपादे वेधः यदि प्रथमपादे तदा चतुर्थपादस्य वेध इत्यर्थः। यदाह वसिष्ठः 'अतोऽन्त्यपादमादिगो द्वितीयगस्तृतीयकम्। तृतीयगो द्वितीयकञ्चतुर्थगस्तु चादिमम्। भिनत्ति वेधकृद्ग्रहोन चान्यपादमादिशेत्"। एतद्यद्यपि शुभाशुभग्रहसाधारणं प्रतीयते तथापि सौम्यग्रहपरन्द्रष्टव्यम्। यतोवसिष्ठेनैव खार्जूरदोषाभिधानावसरे "विषप्रदिग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं क्षताहते। तथैव पादो न शुभोऽवशिष्टपादाः शुभाश्चेति पितामहेन" इत्याशङ्क्य समाहितम् 'पादएव न शुभः शुभग्रहैर्विद्ध इत्यखिलशास्त्रसंमतम्। क्रूरविद्धभयुतं न शोभनं शोभनेषु गदितं न पादतः इति। नारदः। "पादमेव शुभैर्विद्धमशुभैश्चैव कृत्स्नभम्" इति। कश्यपोऽपि। "क्रूरविद्धं युतन्धिष्ण्यं क्रूराक्रान्तञ्च कृत्स्नभम्। मणिहेममयं हर्म्यं क्ष्वेलाक्रान्तमिव त्यजेत्" इति कृत्स्नभं सकलनक्षत्रम्। तस्मात्क्रूरग्रहविद्धे संपूर्णनक्षत्रत्यागः शुभविद्धे चरणत्याग इति सिद्धान्तः। तत्र विवाहे पञ्चशलाकावेध एव यदाह वसिष्ठः "पञ्चशलाकाचक्रे पाणिग्रहणे भवेधविधिरुक्तः। शस्तः शुभमित्रकृतः सप्तशलाकाजइतरत्रेति"। श्रीपतिः "वधूप्रवेशने दाने वरणे पाणिपीडने। वेधः पञ्चशलकाख्योऽन्यत्र सप्तशलाकक" इति पी०धा०। अत्र केचित् सप्तशलाकाचक्रवेधमाहुः। तत्र विद्धनक्षत्राणि यथा "शाक्रे ज्ये, शतभानिले, जलशिवे, पौष्णार्य्यमर्क्षे, वसुद्वीशे, वैश्वसुधांशुभे, हयभगे, सार्पानुराधे, तथा। हस्तोपान्तिमभे, विधातृबिधिभे, मूलादिती त्वाष्ट्रभाऽजाङ्घ्री, याम्यमघे, कृशानुहरिभे, विद्धे कुभ्टद्रेयके" मु०चि० "कुभ्टद्रेखके सप्तशलाके चक्रे शाक्रेज्येज्येष्ठापुष्यनक्षत्रे मिथः क्रूराधिष्ठितत्वेन विद्धे ज्ञेये। एवं जलशिवे पूर्व्वाषाढार्द्रे विद्धे ज्ञेये एवं सर्व्वत्र। वैश्वसुधांशुभे उत्तराषाढामृगशिरसी, हयभगे अश्विनीपूर्व्वफाल्गुन्यौ, उपान्तिमभं उत्तराभाद्रपदा, अत्र मूलवाक्यं स्वरोदयस्थं यज्ञोपवीतप्रकरणे भिहितम्। चक्रोद्धारो व्यवहारसमुच्चये "सप्त सप्त विनिपात्य रेखिकास्तिर्यगूर्ध्वमथ कृत्तिकादिकम्। लेखयेदभिजिता समन्वितञ्चैकरेखखगमेन विध्यते" दीपिका। "यस्याः शशी सप्तशलाकभिन्नः पापैरपापैरथवा विवाहे। उद्वाहवस्त्रेण तु संवृताङ्गी श्मशानभूमिं रुदती प्रयाति"। तथा च भोजः। "विद्धे सप्तशलाकाख्ये विधवा लग्नवाससा। पुनर्यात्यचिराच्चारी सुखाम्नौ सुखचन्द्रिकाम्"। वैधव्यञ्च नक्षत्रसंख्यातुल्याब्दैर्भवति तदुक्तं वराहेण "नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सदसदिति"। अत्रापि तुल्यन्यायत्वात् क्रूरवेधे पूर्णं नक्षत्रन्त्याज्यम् शुभग्रहवेधे पादस्त्याज्यः इति ध्येयम्। पी० धा०। "सप्तशलाकाजइतरत्रेति" प्रागुक्तवचनात्

"भुक्तम्भोग्यन्तथाक्रान्तं विद्धं पापग्रहेण च। शुभाशुभेषु कार्य्येषु वर्जनीयं प्रयत्नतः" स्वरोदयवाक्याच्च अस्य कर्मकार्येषु वर्ज्यं तथा चतुर्दशयुग्मानामिहोक्तिः" अत्रापवादः "ऋक्षाणि क्रूरविद्धानि क्रूरयुक्तादिकानि च। भुक्त्वा चन्द्रेण मुक्तानि शुभार्हाणि प्रचक्षते"। मु॰ चि॰ "क्रूरग्रहैर्विद्धानि ऋक्षाणि तथा क्रूरैर्मुक्तानि त्यक्तानि। आदिशब्दात् क्रूरैराक्रान्तानि क्रूरैर्गन्तव्यानि च त्रिविधोत्पातैर्दूषितानि ज्ञेयानि तानि यदि चन्द्रेण भुक्त्वा मुक्तानि तदा शुभार्हाणि प्रचक्षते वदन्ति मुनय इति शेषः। यदाह वात्स्यः "भुक्तम्भोग्यन्तथाक्रान्तं विद्धं पापग्रहेण भम्। मङ्गलेषु च कार्य्येषु यत्नतः परिवर्जयेदिति"। वसिष्ठोऽपि "उत्पातभङ्ग्रहणभं क्रूरविद्धस्थितञ्च यत्। दहत्येव शुभं कर्म्म राघवाग्निशरोम्बुधिमिति"। शार्ङ्गीये "क्रूराश्रितं क्रूरविभुक्तविद्धं गन्तव्यधिष्ण्येषु कुमारिकाणाम्। वदन्ति पाणिग्रहणे मुनीन्द्रा वैधव्यमब्दैस्त्रिभिरेवमाहुरिति"। अस्यापवादमाह केशवार्कः। "उत्पातपापग्रहदूषितर्क्षं यदीन्दुराक्रम्य पुनर्भुनक्ति। तदा तदर्हञ्चिल मङ्गलेषु त्यजेत्समाक्रान्तधनूरवीन्द्वोरिति"। अयमवधिराक्रान्तनक्षत्रभिन्नविषयो वेदितव्यस्तत्र हि चाण्डालधृतहस्तस्नानवच्चन्द्रभोगस्यानिर्णेजकत्वात्। तदुक्तं शार्ङ्गीये "यद्धिष्ण्यान्दोषसंयुक्तं स्यात्तथापीन्दुसंयुतम्। शुभकार्य्येषु तत्त्याज्यमन्यकर्म्मसु सिद्धिदम्। यथा हि चाण्डालधृतैकहस्तो मज्जन्नगाधेऽपि सरित्प्रवाहे। भवेन्न पूतः शशिभोगतोऽपि तथा न शुध्येदुडु पापयुक्तम्। स्पृष्ट्वा गते तु चाण्डाले शुद्धिराप्लवनाद्यथा। तथा भुक्त्वा गते क्रूरे चन्द्रभोगाद्विशोधनमिति। अतएवोक्तं वसिष्ठेन "गन्तव्यधिष्ण्याञ्च भुक्तभं यत् क्रूरैर्महोत्पातविदूषितञ्च। चन्द्रोपभोगादमलन्तदानीं शुभेषु कार्येषु शुभप्रदं चेति। एतच्च सामान्यायत्वात् क्रूरविद्धे भे चन्द्रभोगादपि शुद्धिर्नास्तीत्युक्तम् यत्तु नारदेनोक्तम् "ग्रहणोत्पातभन्त्याज्यं मङ्गलेषु ऋतुत्रयम्। यावच्च रविणा भुक्त्वा मुक्तन्दग्धकाष्ठवदिति" "तद्यावद्वचनं वाचनिकमिति" न्यायेन ग्रहणोत्पातभयोः षण्मासपर्य्यन्तं निषेधस्ततोऽपि यावद्रविणा भुक्त्वा न त्यक्तन्तावत्त्यजेत् तत्रापि चन्द्रग्रहण एव सूर्य्यग्रहणीयनक्षत्रस्य तु षण्मासानन्तरं सूर्य्यभोगासम्भव एव अतो न क्रूरयुक्तादौ रविभोगापेक्षा उत्पातभस्य चन्द्रोपभोगोऽप्यावश्यको वसिष्ठवाक्यालोचनात्। अत्र क्रूरवेधे निखिलभं त्याज्यं न चरण एव। तदुक्तं कश्यपेन "क्रूरविद्धयुतन्धिष्ण्यं निखिलं नैव पादतः। अन्यैरपि गुणैर्युक्तं सर्व्वदोषविवर्जितम्। त्यजेदनर्घमाणिक्यं दुग्धोपहृतं यथेति" अयञ्च क्रूराधिष्ठितत्वे दोषः क्रूरग्रहचन्द्रयोरेकराशिस्थत्वे वेदितव्यः। यदा तु चन्द्रः प्रथमपादे क्रूरग्रहश्च तृतीयपादे एवं सति राशिभेदोऽपि जायते तदा क्रूरग्रहाधिष्ठितत्वदोषो नास्तीति ध्येयम्। उक्तञ्च ज्योतिर्निबन्धे। "एकस्मिन्नपि धिष्ण्ये भिन्ने राशौ खलग्रहे शशिनि। तच्चन्द्रर्क्षं कुर्य्याद्विवाहयात्रादिकं सर्वमिति" यथा मृगशिरसि प्रथमे पादे चन्द्रः तृतीये क्रूरग्रहः तत्र सत्यप्येकनक्षत्रत्वे राशिभेदोद्वयोरिति पी॰ धा॰।

अथ लत्तादोषः। "शराङ्गपूर्णेन्दुसिताः स्वपृष्ठे भं सप्तगोजातिशरैर्मितं हि। संलत्तयन्तेऽर्कशनीज्यभौमाः सूर्य्याष्टतर्काग्निमितं पुरस्तात्" मु॰ चि॰।

"सप्त प्रसिद्धाः गावोनव जातयोद्वाविंशतिः शराः पञ्च एतैर्मितम्भम् स्वाक्रान्तनक्षत्रात् शराङ्गपूर्णेन्दुसिताः स्वपृष्ठे संलत्तयन्ते यथा बुधः सप्तमं, राहुर्नवमं, पूर्णेन्दुः पूर्णिमान्तचन्द्रोद्वाविंशम्, तच्च गतकृष्णपक्षे पञ्चमीषष्ठीसप्तमीनामन्यतमायां सम्भवति। शुक्रः पञ्चमं स्वपृष्ठे लत्तयतीत्यर्थः अर्कशनीज्यभौमाः क्रमेण पुरस्तादग्रे सूर्य्याष्टतर्काग्निमितं संलत्तयन्ते यथा सूर्य्यः स्वाक्रान्तनक्षत्राद्द्वादशं, शनिरष्टमम्, गुरुः षष्ठम्, भौमस्तृतीयमम् अग्रतोलत्तयतीत्यर्थः। यदाह नारदः "पुरतः पृष्ठतोऽर्काद्या दिनर्क्षं लत्तितञ्च यत्। अर्काष्टतिगुणाङ्गर्त्तुबाणाष्टनवसङ्ख्यभमिति, सूर्य्यः पुरतः, चन्द्रः पृष्ठतः एवं क्रमेण भौमादयोपि पुरतः पृष्ठतश्च लत्तयन्तीत्यर्थः। वराहोऽपि "सूर्य्योद्वादशमृक्षं षष्ठं गुरुरवनिजस्तृतीयन्तु। संलत्तयति दिवाकरपुत्रोऽष्टममग्रतः पादैः। पश्चाद्द्वाविंशतिभम्पौर्णिमचन्द्रस्तु पञ्चमं शुक्रः। स्वर्भानुरपि नवमं सप्तममृक्षं शशाङ्कसुत" इति प्रत्येकं वेधफलमाह स एव। "रविलत्ता वित्तहरी नित्यञ्चौजी विनिर्दिशेन्मरणम्। चान्द्री नाशङ्कर्याद्बौधी नाशं वदत्येव। सौरी मरणं कथयति बन्धुविनाशं वृहस्पतेर्लत्ता। मरणं लत्ता राहोः कार्य्यविनाशम्भृगोर्वदन्तीति" नन्वग्रलत्ता वा पृष्ठलत्ता वा वर्त्तव्या किमिति न दूष्यकथनम्। अत्र समाधत्ते केशवार्कः" "इति सति द्युसदामभिलत्तने यदनुलत्तनमुक्तमृषिव्रजैः। तदुडुपश्चिमपूर्व्वविभागयोरनधिकाधिकदोषविवक्षयेति"। अत्र राहोः सदा वक्रित्वात् वमगणना क्रमेणैव ग्राह्या यथाश्विन्यां राहुः तदा अश्लेषां लत्तयति। सम्मुखलत्ता-

वादिमतेऽपि वक्रगामिना राहुणा सन्मुखमश्विनीरेवतीत्या-
दिगणनया विंशतिभम् अस्त्रं येत्र नत्वन्यथास्रयितव्यमिति
साम्प्रदायिकाः” पी॰धा॰ ।

अथ पातदोषः ।“हर्षणवैधृति साध्यव्यतिपातकगण्डशूल-
योग नाम् । अन्ते यन्नक्षत्रं पातेन निपातितन्तत् स्यात्” ।
मु॰चि॰ ।“हर्षणेत्यादि षड्योगानां अन्ते यच्चन्द्रनक्षत्रं
भवेत् तत्पातेन चण्डीशचण्डायुधाख्येन निपाति
तं स्यात् यदाह त्रिविक्रमः “साध्यहर्षणशूलानि वै-
धृतिव्यतिपातयोः । षड्भङ्गगण्डस्य चान्ते स्यात्तत् पातेन
निपातितमिति” । नारदेन प्रकारान्तरेणैतत्प्रकारसम्पा-
दकः पातोऽभिहितः । “सूर्यभात्सार्पपित्र्यान्त्यत्वाष्ट्र-
मित्रोडुविष्णुभे । सङ्ख्यया दिनभे तावदाश्विभात्पातदुष्ट-
भम्” । वसिष्ठेनापि “रविभादहिपित्र्यमित्रत्वाष्ट्रभहरिपौ-
ष्णभेषु गणितेषु । आश्विनभादिन्दुयुतौ तावति वै पतति
गणनया पातः । अयमपि पातोदोषश्चण्डीशचण्डायुधा-
ह्वयोज्ञेयः । अखिलेषु मङ्गलेष्वपि वर्ज्यो यस्माद्विनाशदः
कर्तुरिति” यद्यप्यत्र हर्षणादीनामुपादानं नास्ति तथा-
प्यभिहितास्लेषादिनक्षत्रसाहित्येन पाताभिधानात्तत्तुल्य
संख्याकेष्वेव योगेषु पातसम्भवो जायते इति मत्वा हर्षणा-
दीनामनुक्तिः । एवञ्च प्रागुक्तेषु दशसु विरुद्धयोगेषु
लत्तापातयोः पृथक् कीर्त्तनम्’ । ज्यो॰त॰ रघुनन्दनेन
“ऋक्षं द्वादशसुप्तरश्मिरवनीसूनुस्तृतीयं गुरुः षष्ठं
चाष्टमर्कजस्तु पुरतोहन्ति स्फुटं लत्तया” इत्यादि रत्नमा-
लावाक्य मुक्का “लत्तापातोऽयमिति,यदुक्तं तच्चिन्त्यमूलम्
अनयोर्विभिन्नदोषत्वात् अन्यथा प्रागुक्तव्यवहारोच्चयवाक्ये-
वर्ज्यदशसंख्यानुपपत्तेः तद्वाक्ये पातशब्दस्याश्रवणाच्च ।

अथ क्रान्तिसाम्यम् “पञ्चास्याजौ गोमृगौ तौलिकुम्भौ
कन्यामीनौ कर्क्यली चापयुग्मे । तत्रान्योन्यञ्चन्द्रभान्वो-
र्निरुक्तं क्रान्तेः साम्यं नो शुभं मङ्गलेषु” मु॰चि॰।“पञ्चा-
स्याजौ सिंहमेषौ अन्ये प्रसिद्धाः । एषु राशियुग्मेषु च-
न्द्रभान्वोः पाठक्रमेण व्युत्क्रमेण वा स्थितयोः क्रान्तिसाम्यं
निरुक्तन्तन्मङ्गलेषु नो शुभं स्यात् । अत्र पञ्चास्याजा-
वित्येवमादीनाङ्ग्रहणमुदाहरणदिक्प्रदर्शनार्थत्वात्सर्वथा
सूर्याचन्द्रमसोः सायनयोर्योगः षड्राशिमितो द्वाद-
शराशिमितो वा विवक्षितस्तदैव क्रान्तिसाम्यस्य सम्भ-
वात् । अतः सम्मतिवाक्यस्यानवसरः नन्वेतावन्त एव
षड्राशियोगा द्वादशराशियोगा वा सम्भवन्तीति चेन्न
राश्यन्तावच्छेदस्थित्याधिकानामपि सम्भवात् प्रत्यंश-
कलाविकलान्तस्थितत्वेनानन्तभेदसम्भवाज्ञातः प्रागुक्तं
व्याख्यानं ज्यायः । क्रान्तिसाम्यस्य च महापात इति
नाम । एतस्य निन्द्यतामाह वसिष्ठः “दोषो महा-
पात इति प्रसिद्धः सर्वैष्टतोहन्ति वधूं नरं च । तं र-
क्षितुं लग्नगुणास्त्वशक्ताः स्वबान्धवा नाऽशनितोऽपघातम्” ।
अशनिवज्रम् । नारदोऽपि “यस्मिन् दिने महापात
स्तद्दिनं वर्जयेत् शुभे” इति अतएव पतननात्पातः सकल-
शुभकर्मणामित्यन्वर्थतापि । सा च स्पष्टा सोमसिद्धान्ते ।
“यच्छुभानां विनाशाय नदन्निव पतत्ययम् । व्यतीपातः
प्रसिद्धोऽत्र संज्ञाभेदेन वैधृतिः” इति । महापातशब्दस्य
रूढिस्तु रवीन्दुक्रान्तिसाम्य एव नत्वन्येषां ग्रहाणां क्रान्ति
साम्ये । यथा जलजशब्दस्य रूढिः कमले न तु भेकादौ ।
क्रान्तिर्नाम ग्रहाणां दक्षिणोत्तरवृत्ते गमनम् । या च सू-
र्यस्य क्रान्तिः सा यदा चन्द्रक्रान्त्या तुल्या स्यात्स पातम-
ध्यकालः । तत्रोत्सर्गतोरवीन्दुक्रान्त्योः समानत्वं भुज-
साम्ये सति भवति । भुजोनाम “त्र्यूनं भुजः स्यात्
त्र्यधिकेन हीनं भार्द्धञ्च भार्द्धादधिकं विभार्द्धम् । नवा-
धिकेनोनितमर्कभं चेति” लक्षणलक्षितः तत्साम्यं तु
सूर्याचन्द्रमसोर्योगे षड्राशितुल्ये द्वादशराशितुल्ये वा
सति भवति । अतएव ग्रन्थकृता तादृशायोगा एव पठिताः ।
“विनाशपातेन्दुमिहायनांशकैर्युतोरविः शीतकरश्च दृश्यते ।
समापमत्वे व्यतिपातवैधृताह्वयास्तदैक्ये रसभेऽर्कभे क्रमात्”
इति भास्कराचार्योक्तिमङ्गीकृत्य सामान्यतः क्रान्तिसाम्य-
दिवसस्य शीघ्रोपस्थित्यर्थं भुजसाम्यप्रतिपादनम् । तदुक्तं
वसिष्ठेन स्वसिद्धान्ते “चक्रे चक्रार्द्धतुल्ये वा कियद्भागाधि-
कोनके । सायनार्केन्दुयोगे चेत्तदा पातस्य सम्भवः ।
शुभमङ्गलकर्माणि लोकानां च विनाशयेत् । स्नानदा-
नादिकं तत्र जपश्राद्धादिकाः क्रियाः । कदापि कुरुते-
मर्त्यः सुमहत् फलमश्नुते । सूर्यग्रहे कुरुक्षेत्रे कोटिस्व-
र्णार्पणे फलम् । तत् फलं लभते पाते स्नानश्राद्धजपा-
दिना । उत्पत्तौ लक्षगुणितं भ्रमणे कोटिसङ्गुणम् ।
पातेऽर्बुदसङ्गुणं पतिते दत्तमक्षयमिति” । तथा सूर्यसि-
द्धान्तेऽपि । “एकायनगतौ स्यातां सूर्याचन्द्रमसौ यदा ।
तद्युतौ मण्डले क्रान्त्योस्तुल्यत्वे वैधृताभिधः । विपरीता-
यनगतौ चन्द्रार्कौ क्रान्तिलिप्तिकाः । समास्तदा व्यती-
पातोभगणार्द्धे तयोर्युतौ । तुल्यांशुजालसम्पर्कात्तयोस्तु प्र-
वहाहतः । तादृक् क्रोधोद्भवोवह्निर्लोकाभावाय जायते”
इति । अतएवानन्तरोत्पन्नक्रान्तिसाम्ये महापातदोषो

नास्त्येव । तदुक्तं मणिप्रदैवज्ञैः "पूर्वं तत् स्यात् पातमध्यं द्वितीयं पूर्वैर्नोक्तं तद्गतोनातिदुष्टमिति" । अनेनैषा-ग्रेन वशिष्ठेन स्वसंहितायामुक्तम् । "शाल्लात् समानीत महातिपात: सर्वेष्वतोहन्ति वधूं वरं च । त्रि:सप्तवारा-निव जामदग्न्यक्रोधोऽचिरात् चलकुलं समस्तमिति" । शास्त्राद्वचितया स्वोक्तान्महापाताधिकारादित्यर्थः । तत्र हि योगादेव महापातस्यानित्यत्वात्तस्यैव दोषत्वं नान्य-स्येत्यर्थादुक्तं भवति । किन्तु पञ्चाङ्गीयोऽपि योगः सूर्याच-न्द्रमसोर्योगादेव साधितः स्पष्टाधिकारेऽतस्तस्मादेव महा-पातोऽपि साधयितुमुचित एव" पी०धा० ।

अथ खार्जूरापरपर्यायैकार्गलदोषः

"व्याघातगण्डव्यतिपातपूर्वे शूलान्त्यवज्रे परिघातिगण्डे एकार्गलाख्योह्यभिजित्समेतोदोष: शशी चेद्विषमर्क्षगो-ऽर्कात्"मु०चि० । "अन्त्योवैधृतिः । अन्ये प्रसिद्धाः । यस्मि-न्दिने व्याघातादिके विरुद्धे दुष्टयोगे सति अर्कादर्कनक्षत्रा-च्छशी चन्द्रोऽभिजित्समेतोविषमे विषमसंख्याके ऋक्षे नक्षत्रे स्यात्तदा खार्जूरचक्रोत्पन्न एकार्गलाख्योदोष: स्यात् । यदा समे स्यात्तदा न दोषः इत्यर्थ: । यदाह त्रिविक्रमः "विरुद्धनामयोगेषु साभिजिद्विषमर्क्षगः । अर्कादिन्दुस्तदा योगोनिन्द्य एकार्गलाभिधः" इति वशिष्ठेन तच्चक्र-मभिहितम् । "अन्त्यातिगण्डपरिघव्यतिपातपूर्वव्याघा-तगण्डवरशूलमहाशनीषु । चित्रानुराधपितृपन्नगदस्र-भेषु साहित्यमूलयशिरस्सु मूर्द्धभेषु । "रेखामेकामूर्द्ध्व-गां षट् च सप्त तिर्यक् कृत्वायत खार्जूरचक्रे । तिर्यक्‌रेखा संस्थयोश्चन्द्रभान्वोर्ऋक्षस्यातोदोष एकार्गलाख्य: । "खर-करतुहिनांश्वोर्ऋक्षसम्पातजातस्त्वनलमयशरीरस्तूद्गिरन्नग्नि संस्थान् । भुवि पतति जनानां मङ्गलध्वंसनाय शुभ-मशयतसङ्कैरप्यनार्योऽग्निकोप:" इति अत्र वसिष्ठवाक्येऽ-भिजित्साहित्यमस्ति न वेति सन्देहः नारदस्त्वभिजिद्वर्जितं चक्रमाह "व्याघातशूलपरिघपातपूर्वेषु सत्स्वपि । गण्डातिगण्डकुलिशवैधृत्या सहितेषु च । अदितीन्दु-मघाहस्ताद्यमूलमैत्रेजभानि च । त्र्येयानि सहचित्राभि-र्मूर्ध्नि भानि यथाक्रमम् । लिखेदूर्ध्वगतामेकां तिर्यक्‌रेखा-स्त्रयोदश । तत्र खार्जूरिके चक्रे कथितं मूर्ध्नि भं न्यसेत् । भान्येकरेखागतयोः सूर्याचन्द्रमसोर्मिथः । एकार्गलो दृष्टिपाताच्चाभिजिद्वर्जितानि वै । लाङ्गले कमठे चक्रे फणिचक्रे त्रिनाडिके । अभिजिद्गणना नास्ति चक्रे खार्जूरिके तथेति" । कश्यपेनापि एकार्गलेदृष्टिपात-साभिजिद्वर्जितानि वै" इति । तत्र त्रिविक्रमकश्यपवाक्-वाक्ययोः समूलत्वस्य शिष्टसम्मतत्वाचारदादिवाक्यैः सह विकल्पः ततोऽनयोः पक्षयोर्यथादेशाचाराद्व्यवस्थेति युक्तं प्रतीमः" पी०धा० । खार्जूरवेधे ज्यो०ति०

"एकामूर्द्ध्वगतां त्रयोदश तथा तिर्यग्गताः स्थापयेत् । रेखाचक्रमिदं बुधैरभिहितं खार्जूरिकं तत्र तु । व्या-घातादि तु मूर्ध्नि भन्तु कथितं तत्रैकरेखास्थयोः सूर्या-चन्द्रमसोर्मिथोनिगदितो दृक्पात एकार्गलः" "व्याघा-तादीति व्याघातयोगसंख्याङ्कस्थयोदशाङ्कः । तथा च हस्तादीनि नक्षत्राणि देयानीत्यर्थः" इति यद्व्याख्यातं तच्चिन्त्यमुक्तवाक्यैः व्याघातादिदुष्टयोगयुक्तदिवसे एव खार्जूरवेधप्रतिपादनात् तत्र लेखनक्षत्रादीनां च नारदेन विशेषाभिधानाच्च ।

अथोपग्रहदोष: स च उपग्रहशब्दे १२०२ पृ० उक्तप्रायः विशेषार्थं पुनरुच्यते ।

"शराष्टदिक्‌शक्रनगातिधृत्यस्तिथिर्धृतिश्च प्रकृतेश्च पञ्च । उपग्रहाः सूर्यभतोऽब्जतारा: शुभा न देशे कुरुबाह्लिकानाम्" । "सूर्यभतः सूर्यक्रान्तनक्षत्राद-ब्जताराः चन्द्रनक्षत्राणि पञ्चाष्टदशचतुर्दशसप्तकोन-विंशतिपञ्चदशाष्टादशैकविंशतिद्वाविंशतित्रयोविंशतिचतु-र्विंशतिपञ्चविंशतिसंख्याकाश्चेत्तत्तदोपग्रहनामकादोषा: स्युः प्रकृतिरेकविंशतिः ततः पञ्च । यदाह नारदः "भूकम्पः सूर्यभात्सप्तमर्क्षे विद्युच्च पञ्चमे । शूलोऽ-ष्टमे च नवमेऽशनिरष्टादशे तत: । केतुः पञ्चदशे द-ण्डोल्का एकोनविंशतौ । निर्घातपातसंज्ञश्च ज्ञेय: स नवपञ्चमे । मोहनिर्घातकम्पाश्च कुलिशं परिवेषकम् । विज्ञेयाश्चैकविंशाद्यादारभ्य च यथाक्रमम् । चन्द्रयुक्तेषु भेष्वेषु शुभकर्म न कारयेदिति" । वराहः "उपग्रहर्क्षेषु विवाहिता स्त्री सूर्यर्क्षतो दुर्भगतामुपैति" । अन्यत्रापि । "गृहप्रवेशे दारिद्र्यं विवाहे मरणं भवेत् । प्रस्थाने विपदः प्रोक्ता उपग्रहदिने यदीति" । एवं सामान्यतो निषेधमभिधाय देशभेदेन परिहारमाह । शुभा इति । "बाह्लिके कुरुदेशे च वर्जयेत्तूपग्रहमिति" कश्य-पोक्तेः" पी०धा० । अत्रापवादः ।

"पातोपग्रहलत्तासु नेष्टोऽङ्घ्रि: खेटपत्सम:" मु०चि० ।

"पातश्चण्डीशचण्डायुधाख्योदोषः उपग्रहः प्रागुक्त एव । लत्ता सूराङ्कपूर्णेन्दु सिता:" इत्यादिनोक्ता, तत्र खेटपत्सम: ग्रहचरणतुल्यो नक्षत्रचरणोऽनिष्ट: अस्यार्थः

पाते उपग्रहे च रविर्यस्मिन् स्यात्तत्संख्यचरणस्तस्य नक्षत्रस्य वर्ज्यो नान्यः लत्तायान्तु लत्ताकारिणो ग्रहा-यच्चरणे स्युस्तत्संख्य एव पादो वर्ज्यो नान्यः। उक्तं च मुहूर्त्तदीपिकायाम् "उपग्रहेषु लत्तायां तथा चण्डायुधाह्वये ग्रहोऽस्ति यत्प्रमाणांशे विद्धांशस्तत्प्रमाणकः" इति उपग्रहचण्डायुधयोः सूर्यकृतोऽङ्घ्रिग्राह्यस्तस्यैव सम्भवात्। अयञ्च परिहारस्तुल्यन्यायत्वात् खार्जूरकेऽपि द्रष्टव्यः। सूर्यो यस्मिन् पादे भवेत्तत्समसंख्यचरण एकरेखावस्थितचन्द्रनक्षत्रस्य वर्ज्य इत्यर्थः "खार्जूरिकसमाङ्घ्रिभमिति" नारदोक्तेः ज्योतिर्निबन्धे गर्गः "पूर्वाह्णे दण्डदोषः स्यादपराह्णे तु मोहजः। उल्का चैवार्द्धरात्रे तु कम्पोऽहोरात्रदूषकः"। तत्रापि "कम्पोत्क्रादण्डमोहानामङ्घ्रिभमिति" नारदोक्तेः कालभेद एव वर्ज्यः "खरमार्सदशर्त्तव ७,१२,१०,६, आदितो घटिकास्तेषु वर्जनीयाः पराः शुभा" पी० धा०।

अथ वारदोषः। स च अर्द्धयामकुलिकयमघण्टभेदात् त्रिविधः। ते च कश्यपेनोक्ताः यथा "शैलाब्धस्तनयः सूर्ये चन्द्रे षड्वेदपर्वताः। भौमे बाणाग्निनेत्राणि सौम्ये वेदाब्धिशायवः। गुरुवारेऽग्निचन्द्रेभाः शुक्रे नेत्राद्रिवह्नयः। शनौ चन्द्रेभतर्काःस्युः कुलिकोयमघण्टकः। अर्द्धप्रहरसंज्ञश्च मङ्गलेषु विवर्जयेत्। वारदोषेण दुष्टन्तल्लग्नं सर्व्वगुणान्वितम्। त्यजेद्यथा पुरोडाशं वायसोपहतन्त्वयेति"। फलमाह वसिष्ठः "निधनं प्रहरार्द्धे तु निस्वत्वं यमघण्टके। कुलिके सर्व्वनाशः स्याद्रात्रावेते न दोषदाः" पी० धा०। दिवसाष्टमभागात्मकाश्चैते। तत्र अर्द्धयामशब्दे ३७६ पृ० अर्द्धयामविशेष उक्तः। मुहूर्त्तात्मककुलिकस्तु कुलिकशब्दे वक्ष्यते तत्र कुलिकमुहूर्त्तमुपक्रम्य श्रीपतिना "यात्रायां मरणं काले वैधव्यं पाणिपीड़ने। व्रते ब्रह्मवधः प्रोक्तः सर्वं कर्म ततस्त्यजेत्" उक्तम्।

अथ जामित्रदोषः। "लग्नाच्चन्द्रान्मदनभवनगे खेटे न स्यादिह परिणयनम्। किंवा बाणाशुगमितलवगे जामित्रं स्यादशुभकरमिदम्" मु० चि०। "विवाहलग्नाच्चन्द्राद्वा सप्तमं भवनं गृहं जामित्रं तत्र गते खेटे परिणयनं न स्यात्। उक्तञ्च 'जामित्रं द्विविधं प्रोक्तं गर्गगालवगौतमैः। तस्माल्लग्नाच्च चन्द्राच्च जामित्रं परिवर्ज्जयेदिति"। तत्स्वरूपमाह महेश्वरः 'लग्नाच्छीतकराद्ग्रहा द्युनगता नेष्टा विवाहे स्मृताः' इति। वसिष्ठः लग्नप्रकरणे "सर्वे जामित्रसंस्था विदधति मरणम्" इत्याह स्म। लल्लः "पापात् सप्तमगः शशी यदि भवेत् पापेन युक्तोऽथवा यत्नेनापि विवर्जयेन्मुनिमते दोषोऽपि संकथ्यते। उद्वाहे विधवा, व्रते तु मरणं, मूलञ्च पुंस्कर्मणि, यात्रायां विपदो, गृहेषु दहनः, क्षौरेऽपि रोगो महान्"। भुजबलः "चन्द्रात् सप्तमराशिगे दिनकरे त्यक्ता धनैः कन्यका, भौमे च प्रमदा प्रयाति विलयं, सौरे च वन्ध्या सरुक्। जीवः शुक्रशशाङ्कजौ शुभकराः केचिद्वदन्ति क्रमात् भर्तृप्रेम्णितदीक्षितास्तभवने नित्यं प्रवासान्वितेति"। अस्यापवादमाह। किंवाशब्दो विकल्पे पूर्वग्रहाधिष्ठितराशेः सप्तमराशिस्थितत्रिंशद्भागात्मके लग्नेऽपि चन्द्रो निषिद्ध इत्युक्तमिदानीन्तदधिष्ठितराशिनवांशमारभ्य बाणाशुगाः पञ्च पञ्चाशत् तन्मितनवांशगे लग्ने चन्द्रे सति जामित्रं स्यात्। यथा मेषराशौ पञ्चमनवांशे भौमोऽस्ति तस्मात् तुलायां पञ्चमनवांशस्थं लग्नं तत्र चन्द्रो वा निषिद्धोऽन्येऽष्टौ नवांशाः शुभाः। एवंविधं सूक्ष्मं जामित्रमिदमशुभकरं स्यात्। यदाह महेश्वरः "केचित् कामनवांशकादिषु शरैस्तुल्ये नवांशे स्थिताः" इति। केशवार्कस्तु चन्द्रनवांशादेवाह। "हिमरश्मिनवांशकात् खलो यदि खेटः शरसायकांशके। अयमन्यगुणैर्न हन्यते निबिड़ैरत्युपसर्गडम्बरः" अपवादान्तरमाह राजमार्त्तण्डः "तुङ्गत्रिकोणभवने भवने निजे वा सौम्याधिमित्रगृहगोऽपि तदीक्षितो वा। जामित्रवेधजनितानपहृत्य दोषान् दोषाकरः सुखमनेकविधं विधत्ते" इति। व्यवहारसमुच्चयेऽपि। "स्वोच्चेऽथवा स्वभवने स्फुरदंशुजालः सौम्यालये हितगृहे शुभवर्गगो वा। जामित्रकारिपरिसञ्चितदोषराशिं हत्वा ददाति बहुशः सुखमेव चन्द्रः"। कालखण्डे वात्स्यायनः "गुरुश्चन्द्रस्य जामित्रे तिष्ठेद्यदि बलान्वितः। धनसौभाग्यपुत्रांश्च लभते नात्र संशयः। मणिमुक्ताप्रवालैश्च सुवर्णाभरणैः शुभैः। शोभिता तु सदा तिष्ठेद्गुरुणापि निरीक्षिते। सा तु भर्त्तुः प्रिया नित्यं बुधे चन्द्रस्य सप्तमे" पी० धा०।

"एकार्गलोपग्रहपातलत्ताजामित्रकर्त्तर्युदयास्तदोषाः। नश्यन्ति चन्द्रार्कबलोपपन्ने लग्ने यथार्काभ्युदये तु दोषा" मु० चि०। "एकार्गलः खार्जूरचक्रोक्तः उपग्रहः शराऐत्यादिनोक्तः पातश्चण्डीशचण्डायुधम् लत्ता चराह्वित्यादिनोक्ता, जामित्रमधुनोक्तम्। कर्त्तरी, लग्नात् पापादित्याद्युक्ता उदयास्तदोषा वक्ष्यन्ते। एवंविधादोषा नश्यन्ति। कदा विवाहलग्ने चन्द्रार्कयोर्बलं स्वोच्चमित्रादिराशि-

स्थितत्वरूपं विहितस्थानस्थितत्वञ्च तेनोपपन्ने सहिते सति । अर्कस्य सूर्य्यस्याभ्युदये दोषा रात्रिर्यथा नश्यतीत्यर्थः । गाढ़ान्धकारयुक्तापि रात्रिरेकाकिना सूर्य्यस्योदयेन स्वयमेव नश्यतीति यथा" पी॰धा॰ ।

प्रसङ्गादन्यान्यदोषस्य देशान्तरविषयत्वमाह"उपग्रहर्क्षं कुरुबाह्लिकेषु कलिङ्गवङ्गेषु च पातितम्भम् । सौराष्ट्रशाल्वेषु च लत्तितर्भं त्यजेत् तु विद्धं किल सर्वदेशे" मु॰चि॰ ।

"कुरवोबाह्लिकाश्च पश्चिमदेशास्तेषूपग्रहदोषाक्रान्तम्भं त्यजेन्न तदरिक्तसर्वदेशेषु तेषु शुभमेवेत्यर्थः । कलिङ्गोवङ्गश्च प्राग्देशौ बहुवचनान्मगधाङ्गादयोऽपि । तेषु चण्डीशचण्डायुधापरपर्यायं पातं त्यजेत् । न तु क्रान्तिसाम्यरूपं पातं तस्य महापातत्वव्यवहारात् । सौराष्ट्रः शाल्वदेशः पश्चिमदेशविशेषः बहुवचनाद्ग्रामबाहुल्यं तेषु लत्तितं लत्तासंजातास्य तद्भं परित्यजेत् । विद्धं क्रूरेण शुभेन वा पञ्चशलाकादिचक्रद्वारा भिन्नम्भं भूतलवर्त्तिसर्वदेशेषु त्यजेत् । किल निश्चयेन नत्वस्य देशभेदेन परिहारः एतदपि वाक्यं सम्मत्यन्तरं नार्हति । विवाहपटलेऽपि "लत्तामालवके देशे पातः कोशलके तथा । एकार्गलन्तु काश्मीरे वेधं सर्वत्र वर्जयेदिति" । वराहः । "युतिदोषस्तु विन्ध्याख्ये देशे नान्येषु केषु चेति" । दशयोगो भवेद्गौडे जामित्रस्य च यामुने । वेधदोषस्य शेषेषु" इत्यादि वाक्यानां यथादेशाचारात् व्यवस्था" पी॰धा॰।

अथ दशयोगः "शशाङ्कसूर्य्यर्क्षयुतेर्भशेषे खं भूयुगाङ्गानि दशेशतिथ्यः नागेन्द्वोऽङ्केन्दुमिता नखाश्चेद् भवन्ति चैते दशयोगसंज्ञाः" मु॰ चि॰ । "चेद्यदि चन्द्रसूर्य्यनक्षत्रयोर्युतेर्योगाङ्कैः सप्तविंशत्याभक्ताद्यच्छेषस्तस्मिन् शून्यैकचतुःषड्दशैकादशपञ्चदशाष्टादशैकोनविंशतिविंशतिसंख्याके सति एते अङ्काः दशयोगसंज्ञा भवन्ति नान्ये इत्यर्थः । शिष्टानां दशानामङ्कानामभिहितत्वाद्दशयोग इत्यन्वर्थसंज्ञा तदुक्तं दीपिकायाम् "तिथ्यङ्गवेदैकदिगूनविंशभैकादशाष्टादशविंशसंख्याः । इष्टोडुना सूर्य्ययुतोडुना वा योगादमी चेद्दशयोगदोषः" । लल्लोऽपि "यस्मिन्नृक्षे रविस्तिष्ठेद् यस्मिन्नृक्षे शशी तथा । धिष्ण्ये द्वयोर्योगहृते शेषः स्यात् वादितोदश । शून्यवेदर्त्तुरूपाणि दिग्रुद्रतिथयोष्टतिः । ऊनविंशा नखाश्चेति दश योगाः प्रकीर्त्तिता" इतिपी॰धा॰ तत्फलम्"वाताभ्राग्निमहीपचौरमरणं रुग्वज्रवादाः क्षतिर्योगाङ्के दलिते समे मनुयुतेऽथौजे तु सैकेऽङ्किते । भन्दास्स्यादथ सम्मितास्तु मनुभीरेखाः क्रमात् संलिखेद्भेऽस्मिन् ग्रहचन्द्रयोर्न शुभदः स्यादेकरेखास्थयोः" मु॰चि॰।

"शून्यशेषे वातदोषः स्यात् एकशेषेऽभ्रान्निपात्, चतुर्थ्वशिष्टेष्वग्निः, षट्सु महीपाद्भयः, दशसु चौरात्, एकादशसु मरणं द्वयोरन्यतरस्य वा, पञ्चदशसु रुक्, अष्टादशसु वज्रम् एकोनविंशतिशेषे वादः कलहः, विंशतिशेषे क्षतिः द्रव्यनाशः स्यात् । यदाह लल्लः "मरुन्मेघाग्निभूपालचौरमृत्युरुजोऽशनिः । कलिर्हानिर्दशोद्वाहे दोषास्त्याज्याः सदा बुधैः" । विवाहादौ प्रतिष्ठायां व्रते पुंसवने तथा । कर्णवेधे च चूड़ायां दशयोगं विवर्जयेदिति" । अथापवाद उच्यते । योगाङ्क इति । योगाङ्के समे युग्मसंख्याके सति दलिते सत्यर्द्धीकृते मनुभिश्चतुर्दशभिर्युते योगाङ्के तदा दास्राद्श्विनीतोभं नक्षत्रं स्यात् । यथा समाङ्के अङ्कयोगः दशाङ्कः १० अर्द्धितः ५ मनुयुतः १९मूलनक्षत्रं जातम् । अथ योगाङ्के अयुग्मसंख्याके सति सैके एकयुक्ते ततोऽर्द्धिते अश्विनीतोभं स्यात् । यथा विषमाङ्को योगःपञ्चदश सैकः १६ अर्द्धितः ८ पुष्यनक्षत्रं जातम् । तच्चक्रं यथा अथ मनुभिः सम्मितास्तुर्दश रेखास्तिर्यक् क्रमात् संलिखेत् । अनेन प्रकारेण यन्नक्षत्रमागतं तत आरभ्य साभिजिन्नक्षत्रचन्द्रमस्मिंश्चक्रे लेख्यं तत्र स्वाक्रान्तनक्षत्रे स्थाप्याः । दिननक्षत्रे च चन्द्र एवं सति यदि ग्रहचन्द्रावेकरेखास्थौ स्यातां तयोस्तादृशयोः परस्परावलोकनरूपोवेधोन शुभदः । उक्तञ्च ज्योतिःसागरे "योगाङ्के विषमे सैके समे सवसुलोचने२८।दलीकृतेऽश्विनीपूर्वं दशयोगमुदाहृतम् । दशयोगे महाचक्रे प्रमादाद्यदि विध्यते । क्रूरैः सौम्यग्रहैर्वापि दम्पत्योरेकनाशनमिति" दशयोगापवादान्तरमाह भरद्वाजः । "गुरौ लग्नाधिपे शुक्रे सवीर्ये लग्नकेन्द्रगे । दश दोषा विनश्यन्ति यथाग्नौ तूलराशयः" । व्यासोऽपि "शुक्रेण गुरुणा वापि संयुतं दृष्टमेव च । दशयोगसमायुक्तमपि लग्नं शुभावहमिति" पी॰धा॰ । अपवादान्तरं ज्यो॰त॰। "आद्यपादस्थिते सूर्ये तुरीयांशः प्रदुष्यति । द्वितीयस्थे तृतीयस्थो विपरीतमतोऽन्यथा" । विपरीतं चतुर्थस्थे आद्यः तृतीयस्थे द्वितीयो दुष्यति नान्यस्थे नान्यपादो दुष्यतीत्यर्थः ।

अथ वाणदोषः "लग्नेनाढ्यायाततिथ्योऽङ्कतष्टाः शेषे नागद्व्यब्धितर्केन्दुसंख्ये रोगोवह्नीराजचौरौ च मृत्युर्बाणश्चायं दाक्षिणात्यप्रसिद्धः" मु॰चि॰।"शुक्लपक्षप्रतिप-

दमारभ्य गततिथ्योऽङ्कैर्नवभिस्तष्टाः शेषे नागसंख्येऽष्टसंख्ये रोगाख्योबाणः । एवं द्विसंख्ये शेषे वह्न्याख्यः चतुःसंख्ये शेषे राजा । तर्कः षट् तत्संख्ये शेषे चौराख्यः एकसंख्ये शेषे मृत्युसंज्ञोबाणः । अयं च दाक्षिणात्येषु महाराष्ट्रदेशीयेषु प्रसिद्धः तेन देशाचारात् व्यवस्थया बाणस्य त्यागः । न तु प्राच्योदीच्यपाश्चात्त्यानाम् । तदुक्तं सप्तर्षिमते विवाहपटले । "गततिथियुतलग्नं पञ्चधा स्थापनीयं तिथि १५रवि १२दश१०नागै८र्वेद ४युक्तं क्रमेण । नव९हृतशर५शेषे बाणसंज्ञाः क्रमेण रुगनलन्दप चौराः पञ्चमो मृत्युसंज्ञ इति" पी०धा० अथ प्राच्याख्यबाणापवादौ

"रसगुणशशिनागाब्ध्याढ्यसंक्रान्तियातांशकमितिरथ तष्टाङ्कैर्यदा पञ्चशेषाः । रुगनलन्दपचौरा मृत्युसंज्ञश्च बाणो नवहृतशरशेषे शेषकैक्ये सशल्यः" मु०चि० । "रसगुणशशिनागाब्धिभिराढ्या चासौ संक्रान्तियातांशकमितिश्चेति स्पष्टनिरयनांशस्तूर्यसंक्रान्तिभुक्तांशानाम्मितिः संख्या पञ्चधा स्थाप्या कलादिकमुपेक्ष्यम् । सा क्रमेण षट्त्रिरेकाष्टचतुर्भिराढ्या संयोज्याङ्कैर्नवभिस्तष्टा सती यदा पञ्चशेषा यस्मिन् स्थले पञ्चावशिष्यन्ते तत्र क्रमेण रुगादिबाणोज्ञेयः । यथा आदौ पञ्चशेषे रोगबाणः द्वितीये पञ्चशेषेऽग्निबाणः तृतीये पञ्चशेषे राजबाणः चतुर्थे पञ्चशेषे चौरबाणः पञ्चमे पञ्चशेषे मृत्युबाणः तस्मात्तस्माद्भयं भवतीत्यर्थः । यदाह कश्यपः "संक्रान्तियातांशकनन्दशेषस्त्र्यग्निरूपाष्टयुगैः समेतः । तष्टोग्रहै रोगहुताशभूपस्तेनामृतिश्चेति च पञ्च बाणाः । इति पञ्चेति पृथक् पृथक् पदं शिष्यन्ते तदा बाणाः स्युरित्यर्थः । तत्र बाणोद्विविधः एकः काष्ठशल्योऽपरोलोहशल्यः तत्राभिहितो बाणः काष्ठशल्य उच्यते । अस्य नाम प्राच्याख्यो बाण इत्याहुः । तेन तादृशे बाणे लग्ने तथा पीडा न भवेत्तदर्थं तदपवादभूतो लोहशल्यसहितो बाण उच्यते नवेति । यानि प्रागागतानि शेषाणि तेषामैक्ये नवहृते पश्चाच्छरशेषे सति सशल्यः लोहसहितोबाणः स्यात् । पञ्चव्यतिरिक्ते शेषे शल्यसहितो दुष्टबाणः । अयं तुल्यन्यायत्वात् प्राक् पद्योक्तेऽपि बाणे सशल्यो बाणोज्ञेयः ज्योतिश्चिन्तामणावन्यथा बाणोऽभिहितः । "तिथिवारभलग्नाङ्कोरसाग्न्यब्जाष्टवेदयुक् ६,३,१,८,४, नन्दाप्त पञ्चशेषे रुगवह्निराट्चौरमृत्युकृदिति" पी०धा० । अथ समयादिभेदेन बाणापवादः "रात्रौ चौररुजौ दिवाऽग्निनृपती त्याज्यौ सदा सन्ध्ययोर्मृत्युश्चाथ शनौ नृपोविदि मृतिर्भौमेऽग्निचौरौ रवौ । रोगोऽथ व्रतगेहगोपनृपसेवायानपाणिग्रहे वर्ज्याश्च क्रमतो बुधैरुगनलक्ष्मापालचौरा मृतिः" मु०चि० ।

'रात्रौ चोररुजौ बाणौ त्याज्यौ,दिवा दिवसेऽग्निनृपती वह्निराजबाणौ त्याज्यौ सन्ध्ययोः प्रातःसायंसन्ध्ययोः सदा मृत्युर्बाणस्त्याज्यः । ज्योतिःप्रकाशे "रोगञ्चौरन्त्यजेद्रात्रौ दिवा राजाग्निपञ्चकम् । उभयोः सन्ध्ययोर्मृत्युमन्यकाले न निन्दितः" । अथ शनौ शनिवारे नृपबाणः, विदि बुधवारे मृतिबाणः, भौमेऽग्निचौरबाणौ रवौ रोगबाणः त्याज्यः । उक्तञ्च दैवज्ञम० "रवौ रोगं, कुजे वह्निं, शनौ च नृपपञ्चकम् । वर्जयेच्च कुजे चौरं, बुधवारे च मृत्युदमिति" । एतेषु शुभकर्म्मसु एते बाणा वर्ज्याः यथा व्रते यज्ञोपवीते रुक्, गेहं गृहं तस्य गोप आच्छादनं तत्रानलोऽग्निः, नृपसेवायां क्ष्मापालोराजा, याने यात्रायां चौरः पाणिग्रहे मृतिर्बाणो वर्ज्य इत्यर्थः । तदुक्तं ज्योतिःप्रकाशे "नृपाख्यं राजसेवायां गृहगोपेऽग्निपञ्चकम् । याने चौरं, व्रते रोगन्त्यजेन्मृत्युं करग्रहे इति" । केचिदेवं पाठमाहुः । व्रते विवर्जयेद्रोगं गृहगोपेऽग्निपञ्चकम् । यात्रायां राजचौराख्यौ विवाहे मृतिपञ्चकमिति" पी०धा० ।

अथ लग्नसप्तमयोः शुद्ध्युपयोगिग्रहदृष्टिभेदः 'त्र्याशं त्रिकोणं चतुरस्रमस्तं पश्यन्ति खेटाश्चरणाभिवृद्ध्या । मन्दो गुरुर्भूमिसुतः परे च क्रमेण संपूर्णदृशो भवन्ति" मु०चि० । "खेटाग्रहा यस्मिन् स्थाने तिष्ठन्ति तस्मात् कथ्यमानानि स्थानानि चरणाभिवृद्ध्या पादवृद्ध्या पश्यन्ति तद्यथा त्र्याशं तृतीयं दशमञ्चैकचरणदृष्ट्या पश्यन्ति त्रिकोणं नवपञ्चमं द्विचरणदृष्ट्या पश्यन्ति । चतुरस्रं चतुर्थम् अष्टमं च त्रिचरणदृष्ट्या पश्यन्ति । अस्तं सप्तमस्थानं चतुश्चरणदृष्ट्या पश्यन्ति । अनेन तत्तद्ग्रहोद्भवशुभफलं चरणाभिवृद्ध्यैव भवतीत्यपि सूचितम् । तदुक्तं वराहेण "दशमतृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रं च । पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्तीति" । मन्द इति । मन्दः शनैश्चरः स्वस्थानात् त्र्याशं संपूर्णदृक् चतुश्चरणदृष्टिः । एवं गुरुस्त्रिकोणं, भूमिसुतः चतुरस्रं, परे चन्द्रबुधसूर्यशुक्राः क्रमेण सप्तमे संपूर्णदृश इत्यर्थः यदाह गार्गिः । "दुश्चिक्यदशमान्, सौरिस्त्रिकोणस्थान् वृहस्पतिः । चतुर्थाष्टमगान् भौमः शेषाः सप्तमसंस्थितान् । भवन्ति वीक्षणे नित्यमेवाधिकफला ग्रहाः" इति । वराहोऽपि "पूर्णं पश्यति

रविजस्तृतीयदशमे त्रिकोणमपि जीवः । चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं चेति" पी०धा०। अत्रापि शब्दात् सप्तमस्थानेऽपि पूर्णदृष्टिः एवं शनिकुजयोः। अत एव मु०चि०परे चेत्युक्तम् तत्प्रमाणञ्च ग्रहदृष्टिशब्दे वक्ष्यते।

अथ लग्ननिरूपणम् । दीपिका कन्यातुलाम्बुमिथुनेषु साध्वी शेषेष्वसाध्वी धनवर्जिता च । निन्द्येऽपि लग्ने द्विपदांश इष्टः कन्यादिलग्नेष्वपि नान्यभागः" । कन्यादिलग्नेष्वपि द्विपदांशएव इष्टोनान्य इत्यर्थः । वक्ष्यमाणवचने चरे चरांशवर्ज्जनात् चरलग्नेऽपि तुलातिरिक्तद्विपदांशस्य ग्राह्यता "धनुषि कुलटा तत्पूर्व्वार्द्धे सतीत्यपरे जगुः" विवाहपटले धनुरुत्तरार्द्धनिषेधात् पूर्व्वार्द्धस्य ग्राह्यतैव । मासभेदे लग्नभेदानां शून्यत्वात् तत्तन्मासे शून्यलग्ने विवाहो नेष्टः यदाह व्य०च० "घटमत्स्यवृषा युग्ममेषकन्यालयस्तुला । चापः कर्की मृगः सिंहश्चैत्रादौ शून्यराशयः" पञ्चादिलग्नानि यानि वक्ष्यन्ते तान्यपि तत्तत्काले वर्ज्याणि ।

अथ लग्नसप्तमशुद्धौ 'यदा लग्नांशशोलवमथ तनुं पश्यति युतोभवेद्वाऽयं वोढुः शुभफलमनल्पं रचयति । लवद्यूनस्वामो लवमदनभं लग्नमदनं प्रपश्येद्वा बध्वाः शुभमितरथा ज्ञेयमशुभम्' मु०चि०। "यदा लग्नांशेशोलग्नांशस्तत्स्वेशः स्वामी लवं नवांशं पश्यति । अथ वाऽयं नवांशेन सह युतो वा भवेत्तदा वोढुर्वरस्यानल्पं बहुशुभफलं रचयति। यथा मेषलग्ने मिथुनांशस्तदीशो बुधः तुलायां मिथुनं पश्यति तत्र तिष्ठति वा अयमुदयशुद्धेः प्रथमः कल्पः । तदलाभे तु लग्नांशेशस्तनुं लग्नं पश्यति लग्नेन सह युतो वा भवेत्तदापि वोढुः शुभफलमनल्पं स्यात् यथा मेषलग्न एव मिथुननवांशस्वामी बुधोमकरे स्वनवांशं न पश्यति किन्तु लग्नं पश्यति अथवा मेष एव तिष्ठति । अयं लग्नशुद्धेः द्वितीयः प्रकारः । लवेति । लवद्यूनस्वामी लवान्नवांशात् द्यूनं सप्तमनवांशस्तत्स्वामी लवमदनभं लवान्मदनभं सप्तमनवांशं पश्यति तेन सह युतो वा भवेत् तदा बध्वा अनल्पं शुभं रचयति । यथा मिथुननवांशात् सप्तमोधनुरंशस्तदधीशोगुरुर्मेषे धनुः पश्यति तत्र तिष्ठति वा अयमस्तशुद्धेः प्रथमः प्रकारः। तदलाभे तु लवद्यूनस्वामी लग्नमदनं सप्तमभवनं पश्यति सप्तमभवनेन सहयुतो वा भवेत्तदा बध्वाः शुभं यथा मेषलग्ने गुरुः कर्कौ सप्तमत्वागतं स्वनवांशं धनूरूपं न पश्यति किन्तु सप्तमभवनं तुलां पश्यति अथवा तुलायामेवास्ति । अयमस्तशुद्धेर्द्वितीयः प्रकारः । इतरथेति इतरथा यदा लग्नांशेशोलवन्तनुं वा न पश्यति तत्र युतो वा न स्यात्तदा वरस्याशुभं मृत्युः स्यात् । यदा त्वस्तांशेशोऽस्तांशमस्तभवनं वा न पश्यति तत्र युतो वा न स्यात्तदा कन्याया अशुभं मृत्युरित्यर्थः । यदाह कश्यपः "स्वस्वेशेनोदयास्तांशौ वीक्षितौ वाथ संयुतौ । लग्नं वास्तगृहं तत्तदंशेशेनेक्षितं युतमिति" तदाऽशुभमित्यनुषङ्गः । वशिष्ठः इष्टोदयांशे निजपत्यदृष्टे वरस्य मृत्युस्तनुसंयुते च । अस्तांशकेऽप्येवमदृष्टयुक्ते स्वस्वामिना नाशमुपैति कन्येति" । तुल्यन्यायत्वाल्लग्नेऽप्यस्तलग्नेऽपि उदयलवांशास्तांशस्वामिनोर्दृष्ट्यभावेऽप्येतदेव फलं ध्येयम् । "लवेशोलवं लग्नपोलग्नगेहं प्रपश्येन्मिथो वा शुभं स्याद्वरस्य । लवद्यूनपोऽशं द्युनं लग्नपोऽस्तं मिथोवेक्षते स्याच्छुभं कन्यकायाः" मु०चि० । "नवांशस्वामी नवांशं प्रपश्येल्लग्नस्वामी लग्नं प्रपश्येत्तदा वरस्य शुभं स्यात् । अथ वा मिथः परस्परं लवस्वामी लग्नं लग्नेशोलवकं प्रपश्येत् तदाऽपि वरस्य शुभम् एवं लवद्यूनपोनवांशात्सप्तमनवांशस्वामो अंशं द्यूनमंशं सप्तमराशिमीक्षते लग्नपः लग्नस्वामी अस्तं लग्नात्सप्तमभवनमीक्षते तदा कन्यायाः शुभं स्यात् । वा अथवा मिथः सप्तमाधीशोलग्नसप्तमं वीक्षते लग्नात्सप्तमाधीशश्चांशसप्तममीक्षते तदापि कन्यायाः शुभं स्यात् । अत्रान्यथात्वे दम्पत्योरशुभमित्यर्थः । यदाह नारदः "लग्ननवांशकौ स्वस्वपतिना वीक्षितौ युतौ । न चेद्वान्योऽन्यपतिना शुभमित्रेण वा यथा । वरस्य मृत्युःस्यात्ताभ्यां सप्तसप्तोदयांशकौ। एवन्तौ वीक्षितौ युक्तौ मृत्युर्बध्वाः करग्रहे" । वसिष्ठोऽपि "उदयांशः स्वनाथो मित्रसौम्येन वा युतः । प्रेक्षितो वा तथास्तांशो दम्पत्योः पुत्रपौत्रदः"इति । परस्परवीक्षणेऽप्येतदेव फलं ध्येयं नारदवाक्यस्वरसात् पी०धा० ।

'लवपतिशुभमित्रं वीक्षतेऽशन्तनुं वा परिणयनकरस्य स्याच्छुभं शास्त्रदृष्टम् । मदनलवपमित्रं सौम्यमंशद्युनं वा तनुमदनगृहं चेद्वीक्षते शर्म बध्वाः" मु०चि०। "अथ पूर्वोक्तप्रकारेणोदयास्तशुद्धेरभावेऽपि तृतीयप्रकार उच्यते । लवपतीति शुभमित्रं शुभश्च तन्मित्रं चेति कर्मधारयः । लवपतेर्लग्ननवांशेशस्य शुभग्रहः सोमबुधगुरुशुक्राणामन्यतमश्चेन्मित्रं स्यात् चेदंशं स्वनवांशमन्तनुं लग्नं वा वीक्षते तदा परिणयनकरस्य वरस्य

शास्त्रदृष्टं वशिष्ठोक्तपुत्रपौत्रादिप्राप्तिरूपं शुभं फलं स्यात् अथ वा एवं मदनलवस्यास्तांशेशस्य मित्रं सौम्यं चेत् स्यात्तन्नवांशात् द्यूनं सप्तमनवांशं चेद्वीक्षते वा अथ वा तनुमदनम्लहं लग्नात्सप्तमभवनञ्चेद्वीक्षते तदा बध्वाः शास्त्रदृष्टं शर्म स्यात्। यद्युभयत्रापि नवांशस्वामिनो मित्रं पापग्रहश्चेत्तस्य दृष्टिरशुभैवेति फलितार्थः। यदाह वराहः "शुद्धिस्त्विह स्यान्न यदोदयांशोलग्ने नवांस्तांशमुपैति शुद्धिम्। तदा सुहृत्सौम्यनिरीक्षितोयः शुभाय स स्यात्प्रवदन्ति सन्तः" इति। कश्यपः "राश्यंशौ मित्रसौम्येन वीक्षितौ वाथ संयुतौ। उदयास्तांशयोः शुद्धिस्त्रिविधा मङ्गलप्रदेति"। वसिष्ठः "लग्नास्तशुद्ध्या रहितः सदोषः करोति मृत्युं वरकन्ययोश्च। त्वात्वं तदा लग्नगुणास्त्वशक्तास्तं बन्धुगां इव सर्पदष्टमिति"। केचित्तु विवाहादौ वज्रयोगं निषिद्धमाहुस्तल्लक्षणम्। "तिथिवारं च नक्षत्रं नवभिश्च समन्वितम्। सप्तभिस्तु हरेद्भागं शेषाङ्के फलमादिशेत्। त्रिशेषे तु जलं विद्यात् पञ्चशेषे प्रभञ्जनः। सप्तशेषे वज्रपातोह्येवं वज्रस्य लक्षणमिति टोडरानन्दे" पी॰धा॰

अथ सूर्य्यसंक्रान्तिदोषः "विषुवायनेषु परपूर्व्वमध्यमान्दिवसांस्त्यजेदितरसंक्रमेषु हि। घटिकास्तु षोड़श शुभक्रियाविधौ परतो पि पूर्व्वमपि सन्त्यजेद्बुधः" मु॰चि॰। "विषवन्तुलामेषसंक्रान्तौ अयनं कर्कमकरसंक्रान्तौ एतत्स्वरूपेषु विषुवायनाख्यासु संक्रान्तिषु परपूर्व्वमध्यमान् दिवसान्बुधः शुभक्रियाविधौ विवाहयज्ञोपवीतादिशुभकार्य्येषु त्यजेत्। इतरास्वष्टसंक्रान्तिषु संक्रमकालात्परतोऽग्रेऽपि पूर्व्वं प्रागपि षोड़श घटिकाः मिलित्वा द्वात्रिंशद्घटिकास्त्यजेत्। यदाह वसिष्ठः "विषुवतोरयनयोर्दिवसत्रयं हरिपदे षड़शीतिमुखेषु च। पूर्वतोऽपि परतोऽपि संक्रमान्नाडिकाश्च खलु षोड़श त्यजेत्। संक्रान्तिदोषे त्वचिरात् कृतं यदुद्वाहपूर्वाखिलमङ्गलाद्यम्। लाक्षासमूहज्वलिताग्निमध्ये विलीयते तद्वदशेषमेतदिति" उद्वाहादिग्रहणात्स्नानादावनिषेधः। तद्वाक्यानि संक्रान्तिप्रकरणेऽस्माभिरुक्तानि। किन्तु दिनत्रयं त्याज्यं किं संक्रान्तिकालात् प्राग्दिनत्रयमुत तदनन्तरमुत मध्यमं वेति पक्षत्रयसम्भवे निर्णयमाह गुरुः। "अयने विषुवे पूर्व्वमपरं मध्यन्दिनन्त्यजेत्। अन्यसंक्रमणे पूर्व्वाः पराः षोड़श नाडिका इति"। अयञ्च निषेधः सायनसंक्रान्तिष्वपि ध्येयः। यदाह वसिष्ठः "यदाऽयनप्रवेशः स्यात्तदा तद्राशिसंक्रमः। तस्मिन्नपि दिने त्याज्या नाड्यः षोड़श षोड़शेति"। शौनकः "अयनद्वये समूढा भर्त्तारं नाभिनन्दते नारी। विषुवद्द्वयेऽपि विधवा षड़शीतिमुखेषु सा म्रियते। विष्णुपदेषु विगीता कन्या विकलेन्द्रिया व्यतीपाते। वैधृतिविष्कोर्भ्रष्टा सुभगा शेषेषु करणेष्विति" पी॰ धा॰।

अथ पङ्ग्वादिलग्नदोषः "घस्रे तुलालौ बधिरौ मृगाश्वौ रात्रौ च सिंहाजवृषा-दिवान्धाः। कन्यान्वयुक्कर्कटका निशान्धा दिने घटोऽन्त्यो निशि पङ्गुसंज्ञः" मु॰ चि॰। "घस्रे दिवसे तुलावृश्चिकौ बधिरौ स्मृतौ, मृगाश्वौ मकरधनुषौ रात्रौ न तु दिवसे, सिंहाजवृषा दिवान्धा दिवसे बधिराः न तु रात्रौ। कन्या नृयुक्कर्कटा निशान्धा रात्रावन्धा न तु दिवान्धाः। घटः कुम्भो दिने पङ्गुसंज्ञो न तु रात्रौ। अन्त्यो मीनो निशि पङ्गुसंज्ञो न तु दिने। यदाह वसिष्ठः "मेषादि चान्धकं षट्कं चत्वारो बधिराः स्मृताः। द्वौ पङ्गू चेति विज्ञेयास्तिस्रेतद्वा विलक्षणम्। मेषो वृषो मृगेन्द्रश्च दिवसेऽन्धाः प्रकीर्त्तिताः। नृयुक्कर्कटकन्याश्च रात्रावन्धाः प्रकीर्त्तिताः। तुला च वृश्चिकश्चैव दिवसे बधिरौ तथा। धनुश्च मकरश्चैव बधिरौ निशि कीर्त्तितौ। कुम्भमीनौ च पङ्गू द्वौ दिवारात्रौ यथाक्रममिति"। कुम्भो दिवा पङ्गुर्मीनो रात्रौ पङ्गुः, अनेन यस्मिन्काले लग्नस्य योऽन्धपङ्ग्वादिदोषः उक्तस्तस्मिन्नेव काले तल्लग्नन्दोषावहं न कालान्तरे" पी॰धा॰। तत्फलम्। "दारिद्र्यम्बधिरतनौ दिवान्धलग्ने वैधव्यं शिशुमरणं निशान्धलग्ने पङ्ग्वङ्गे निखिलधनानि नाशमीयुः सर्वत्राधिपगुरुदृष्टिभिर्न दोषः" मु॰चि॰।

"वसिष्ठः "अन्धे वैधव्यमाप्नोति दारिद्र्यं बधिरे तथा। अथ नाशो भवेत् पङ्गाविति धात्रा विनिर्म्मितम्"। व्यासः "मासशून्याह्वयास्तारा राशयो बधिरादयः। गौड़मालवयोस्त्याज्यास्त्वन्यदेशे न गर्हिता इति" पी॰धा॰।

अथ नवांशशुद्धिः। "कार्मुकतौलिककन्यायुग्मलवे झषगे वा। यर्हि भवेदुपयामस्तर्हि सती खलु कन्या" मु॰चि॰। "कार्मुकं धनुस्तौलिकं तुला न्टयुग्मं मिथुनम् एषामंशे नवांशे झषगे मीनगते वाशब्दश्चेकीयमत्सूचनार्थः धनुरादिनवांशाः सर्वमुनिसम्मता इत्यर्थः तेष्वंशेषु यर्हि यदा उपयामो विवाहो भवेत्तर्हि कन्या विवाहोत्तरं सती पतिव्रता खलु यदाह विसष्ठः "लग्ने हि सर्वे शुभराशयश्च शुभेक्षिता वाथ युताः शुभाः स्युः। नवांशकस्तौलिनृयुग्मकन्याचापाद्य-

भाग: शुभदो न चान्ये। द्विभर्तृका मेषनवांशके स्यात् भषांशके सा पशुशीलयुक्ता। धनान्विता पुत्रवती तृतीये कुलीरकांशे कुलटाप्यजस्रम्। सिंहांशके सा पितृमन्दिरस्था कन्यांशके वित्तयुता सुशीला। तुलांशके सर्व्वगुणास्पदा सा कीटांशके निःस्वतरा विशीला। चापांशकाद्ये धनिनी द्वितीये भागेऽन्यसक्ता मलिना गदाढ्या। निःस्वा मृगांशे विगुणा घटांशे विभर्तृका योगरता विशीर्णा। मीनांशके भर्तृसुतार्थहीना शुभग्रहैर्युक्तनिरीक्षिते वा। तस्मात्त्वदैवोक्तनवांशकेषु कुर्याद्विवाहङ्गुणसंघटद्धै। नवांशदोषः सकलङ्गुणौघं लग्नोत्थसौम्यग्रहसम्भवञ्च। ध्रुवं निहन्त्येव दृकोऽजसङ्घं षड्वर्गजं सौम्यवियच्चराणाम्"। पशुशीलयुक्ता पशुचारपरा गदोरोगः एते एव च नवांशाः सकलमुनिभिरुक्ताः "तुलामिथुनकन्यांशाधनुराद्यार्द्धसंयुताः। एते नवांशाः शुभदा यदि नान्त्यांशकाः खल्विति" नारदोक्तेः शौनकस्तु मीनांशकमपि शुभमाह "सुदती सौभाग्यवती प्रहसितवदना च मीनांशे" इति। तत्र निषेधस्य तुल्यबलत्वात् षोड़शीग्रहणाग्रहणवद्विकल्प इत्याहुः तन्न एकबाधेनोपपत्तावनेकबाधोनन्याय्य इति बहुमुनिवचनप्रामाण्यात् मीनांशत्याग एवोचितोन त्वेकमुनिवचनानुरोधात्पाक्षिकोविकल्पविधिस्तस्याष्टदोषग्रस्तत्वात्। का तर्हि शौनकवाक्यस्य गतिरिति चेत् गुणबहुदोषालप्तौ लग्नान्तरासम्भवे मीनांशको निषिद्धोऽपिप्रशस्त इत्येवं विषया गतिर्युक्ता" पी०धा०।

"अन्त्यनवांशे न च परिणेया काचन वर्गोत्तममिह हित्वा। नो चरलग्ने चरलवयोगे तौलिमृगस्थे शशभृति कुर्य्यात्" मु०चि०।" विहितनवांशेष्वपि यथा मेषलग्ने धनुर्नवांशोऽन्तिम इत्येवं विधिविषये लग्नान्तिमनवांशे काचन कन्या न परिणेया न विवाह्या। परन्तु वर्गोत्तमं नवांशं हित्वा तत्र विवाह उचित एव। यथा मिथुनलग्ने मिथुनांशोऽन्तिमोऽपि वर्गोत्तमः। यदाह कश्यपः "अन्त्यांशका अपि श्रेष्ठा यदिवर्गोत्तमाह्वयाः। अनुक्तांशास्तु न ग्राह्या यतस्ते कुनवांशकाः" इति। वसिष्ठोऽपि "वर्गोत्तमं विनान्त्यांशे विवाहो न शुभप्रदः। वर्गोत्तमश्चेदन्त्यांशः पुत्रपौत्रादिदृद्धिदः" इति। अन्यच्च नो चरलग्ने इति। तौलिमृगस्थे तुलामकरस्थे शशभृति चन्द्रे सति चरलग्ने विहितचरलवयोगे नो कुर्य्यात्। यथा मेषलग्ने तुलांशे उक्तञ्च केशवार्केण "चरलवं चरवेश्मगसुतृहजेन्मृगतुलाधरगे मृगलच्छणि। युवतिरत्र भवेत् कृतकौतुका मदनवत्यनवत्यजनोन्मुखीति"। अनवो जीर्णोभर्त्ता तस्य त्यजने त्यागे उन्मुखी परपुरुषरता स्यादित्यर्थः" पी०धा०।

अथ लग्नादिस्थ ग्रहदोषः "व्यये शनिः खेऽवनिजस्तृतीये भृगुस्तनौ चन्द्रखला न शस्ताः। लग्नेट् कविग्लौश्च रिपौ मृतौ ग्लोलग्नेट्शुभारास्त्र मदे च सर्वे" मु०चि०।

"व्यये द्वादशस्थाने स्थितः शनिः न शस्तः "सोमपत्नेऽपि हि जातां द्वादशगे मद्यपां कुरुते" इति शौनकोक्तेः। अत्र रविसुते इत्यनुवर्त्तते। "खे दशमेऽवनिजो मङ्गलो न शस्तः। "शाकिनी व्योम्नि वक्रे" इति केशवार्कोक्तेः। तृतीयो भृगुः शुक्रः न शस्तः "धन्या धनगे शुक्रे कृपणत्वं प्राप्नुयान्नारी। दुश्चिक्यगते तु कन्या त्वाव्हाद्भर्द्रुः कनीयसा-स्वजते" इति शौनकोक्तेः। तनौ लग्ने चन्द्रः खलाः पापग्रहाश्च न शस्ताः। "लग्नस्थेऽर्के कन्या विधवा संवत्सरेऽष्टमे भवति। लग्नस्थो हिमरश्मिर्मृत्युं कुर्य्यात् त्रयोदशे मासे। भौमः सद्यो विधवां लग्नस्थोऽवदान्न सौम्यदृग्योगात्। कामयति नीचवर्णाल्लग्नस्थे रविसुते बहून् पुरुषान्। शनिवद्विधुन्तुदस्य तु विज्ञेयं सदसदिति विज्ञैरिति" शौनकोक्तेः। लग्नेट् लग्नस्वामी, कविः शुक्रः ग्लौश्चन्द्रश्च रिपौ षष्ठस्थाने न शस्ताः। "रन्ध्रे कुजे सौम्यखगे च मृत्युः षष्ठाष्टगे जग्नपतौ च मृत्युरिति" ज्योतिर्निबन्धोक्तेः। "भृगुषट्काह्वयो दोषोलग्नात् षष्ठगते सिते। उच्चगे शुभसंयुक्ते तल्लग्नं सर्वदा त्यजेदिति" नारदोक्तेः। "अब्दचतुष्कान् मृत्युर्दम्पत्योः षष्ठगे चन्द्रे" इति शौनकोक्तेः। ग्लौश्चन्द्रः लग्नेट् शुभाश्चन्द्रबुधगुरुशुक्राः आरोभौमश्चैते मृतावष्टमस्थाने न शस्ताः "मासत्रयेण विधवां निधनगश्चन्द्रमाः कुरुते"। मासत्रयेण कन्या निधनस्थे याति पञ्चत्वम्"। बुध इत्यनुवर्त्तते। "दम्पत्योर्निधनस्थः सप्तदशाब्दाद्वियोगदो जीवः। पञ्चत्वं नयति भृगुर्निधनस्थः सप्तभिर्वर्षैरिति" शौनकोक्तेः। नारदः "कुजाष्टमो महादोषो लग्नादष्टमगे कुजे। शुभत्रययुतं लग्नं त्यजेत् तत्तुङ्गगो यदि"। अत्र सम्मतिः प्रागुक्ता। लग्नेट् च पुनः सर्व्वे सूर्य्यादयोग्रहा मदे सप्तमस्थाने न शस्ताः निषिद्धाः। "सर्वे जामित्रसंस्था विदधति मरणमिति" वसिष्ठोक्तेः। कश्यपोऽपि "सप्तस्थानगाः सर्वे ग्रहाः कुर्व्वन्ति शोभतः। दम्पत्योर्मरणं यत् स्यादेकस्य च न संशयः" इति अर्थादन्येषु स्थानेषु ग्रहाः समीचीनास्तत्र केषुचित् स्थानेषु शुभा एव केषुचिन्मध्यमा

एवेत्येतदपि वक्ष्यति । अतोऽसमर्थमतिसंक्षिप्य तिथि-क्रमेण निषिद्धस्थानान्येवोक्तानि । "त्याज्या लग्नेऽव्धयो मन्दात्, षष्ठे शुक्रेन्दुलग्नपाः। रन्ध्रे चन्द्रादयः पञ्च सर्व्वेऽस्ते ऽजगुरू समाविति"। (मन्दादब्धयः चत्वारो मन्दरविचन्द्रकुजा इत्यर्थः)। अत्रगुरोः समत्वं शौनकमतेन नाडशविरुद्धफलाभावात् । यदाह "कन्यास्तिस्रो जनयति सापत्न्यं चैव सप्तमे शशिनि"। "शीलवरित्वोपेताङ्करोति पत्युः कलत्रगो द्वेष्यमिति"। गुरुरित्यनुवर्त्तते अत्र वचनद्वयप्रामाण्याद्विकल्पः। यत्त्वत्रिणोक्तं "जामित्रगो यदि भवेदुशना बुधो वा गीर्वाणनाथसचिवः सितचन्द्रपक्षे। कन्याविवाहसमये परिहृत्य दोषान् सौभाग्यपुत्रसहितां वनितां करोतीति" तच्चन्द्रजामित्रविषयम् । तथा च भुजबलः "स्त्रीणां विवाहे तु बलैरुपेताः पत्युः प्रणाशं विहगा विदध्युः। त्यक्त्वा बुधं दैत्यगुरुं गुरुं च निशाकरादस्तगृहप्रपन्ना:" इति। अतएव दीपिका "रविमन्दकुजाकान्तं स्मराङ्कात् सप्तमं त्यजेत्। विवाहयात्रा चूड़ासु गृहकर्मप्रवेशने" इतिपी०धा०

अथ लग्नतःस्थानविशेषे ग्रहभेदानां शस्तता "त्र्यायाष्टषट्सु रविकेतुतमोऽर्कपुत्रास्त्र्यायारिगः क्षितिसुतो द्विगुणायगोऽजः। सप्तव्ययाष्टरहितौ ज्ञगुरू सितोऽष्टत्रिद्यूनषड्व्ययगृहान् परिहृत्य शस्तः" मु०चि०।

"तृतीयैकादशाष्टमषष्ठस्थानेषु रविकेतुतमोऽर्कपुत्राः शस्ताः शुभफलदातारः। यदाह शौनकः "बन्धुजनेभ्यः पूजां त्रिंशद्वर्षाणि सहजगे त्वर्के। प्राप्नोति धनं षष्ठे त्र्यब्दादूर्द्धं सुतांश्चैव। दम्पत्योः सह मरणं निधनस्थेऽर्केऽष्टसप्तत्या। कारयति धनविवृद्धिं त्र्यब्दादूर्द्धं तथा यशः सवितेति" (रवे) धनधान्यपुत्रयुक्तां पञ्चमसंवत्सरात्तृतीयस्थः। षष्ठः षड्भिर्मासैरसपत्नीं कन्यकां कुरुते। निधनगतार्किः कुर्यादामरणादामयवियुक्ताम्। आयगतार्किः कन्यां त्रिवर्गयोग्यां करोति षण्मासादिति" (शनेः) अत्र राहुकेत्वोश्च फलं शनिवदेवेति "स्वर्भानौ वाप्य शिखिनि वा लग्नभावादिसंस्थे" इति वशिष्ठोक्तेः त्र्यायारिगः तृतीयैकादशषष्ठस्थानस्थितः क्षितिसुतो भौमः शस्तः।"सहजस्थो भूमिसुतः सौभाग्यकरस्तु यावदायुष्यम्। संवत्सरेण विपुलं धनागमं शत्रुसंस्थस्तु। मणिकाञ्चनरत्नाढ्यामेकादशगः कुजोऽब्दषट्केन" इति शौनकोक्तेः। अजश्चन्द्रोद्विगुणायगोद्वितीयतृतीयैकादशस्थः शस्तः।"अब्दाद्धनसंयुक्तां करोति चन्द्रो धने नार्य्याः। चन्द्रस्तृतीयराशौ सौभाग्यकरस्तु यावदायुष्यम्। लग्नादेकादशगः कन्यामिन्दुर्धनान्वितां कुरुते" इति शौनकोक्तेः। ज्ञगुरू बुधबृहस्पती सप्तमद्वादशाष्टमातिरिक्तस्थानस्थितौ शस्तौ। उक्तस्थानानाम् अशुभत्वादन्येषां शुभदातृत्वात्। यदाह वशिष्ठः। "प्रीतिर्वृद्धिः सगुणनिरतिर्बन्धुपूजा सुताप्तिः सद्वैपक्ष्यं तनयरहितं त्वन्यथा भर्त्तृनाशः। धर्मे बुद्धिर्भवति धरणीलब्धिरत्येव वृद्धिर्हानिः स्त्रीणां हिमकरसुते लग्नभावादिसंस्थे" इति। "लक्ष्मीप्राप्तिर्भवति सुयशः प्रीतिरन्योन्यवृद्धिरिष्टप्राप्तिर्बहुविधमयं चाश्रमाणां विरक्तिः। पापासक्तिः सुकृतविरतिर्भूरिलाभः सुरेज्ये स्त्रीणां सौख्यं रिपुकृतभयं लग्नभावादिसंस्थे" इति अयं शुभदैवं अयः शुभावहो विधिच्छिद्यमरः। क्लीवत्वं त्वापि सु केचिद्बहुविधभयमिति" पठन्ति तन्मकारे भकारभ्रान्तेः "उभयकुलानन्दकरीं करोति न चिराद्गुरुः षष्ठे" इति षष्ठस्थानस्थितगुरोः शौनकेनापि सम्यक्फलाभिधानात्। सित इति अष्टमतृतीयसप्तमषड्द्वादशस्थानानि परिहृत्य त्यक्ताद्येषु स्थानेषु सितः शुक्रः शस्तः। तदुक्तं वशिष्ठेन "भोगप्राप्तिर्विविधविभवं स्वैरवृत्तिर्महत्त्वं द्युम्नाधिक्यं भवति निधनं सर्व्वनाशोऽवसुत्वम्। तथ्यप्रीतिर्बहुविधगुणाः सर्वसम्पत्समृद्धिरस्वं स्त्रीणामुशनसि तथा लग्नभावादिसंस्थे" इति द्युम्नं द्रविणम्। अवसुत्वं दरिद्रता। अस्वं दारिद्र्यम्। वशिष्ठः "मृत्युर्नैस्वं बहुविधधनं भ्रातृहानिः प्रजानां व्याधिः सौख्यं बहुविधमतोभर्त्तृहानिश्चिरायुः। श्रेयोहानिर्भवति हृदयव्याधिरर्थागमश्च भानौ स्त्रीणामतिशयरुजा लग्नभावादिसंस्थे।(रवेः)नाशः सम्पद्बहुविधयशोबन्धुवृद्धिः प्रजाप्तिः शस्त्रान्मृत्युर्भवति न चिराद्दीर्घसापत्न्यबाधा। प्रव्रज्यात्वं दुहितृजननं वर्द्धनं भोगभाक्त्वं दास्यं स्त्रीणां [illegible]करणे लग्नभावादिसंस्थे (इन्दोः)। अत्र चतुर्थचन्द्रे प्रजाप्तिः फलमभिहितम् श्रीपतिनापि "सुखे तु [illegible]यिनो बन्धुकृत: केशनेत्येकीयमतमनुसृत्योक्तमिति धन्यकृता चतुर्थस्थानस्य मध्यमत्वमङ्गीकृतम्। "बधूं श्वशुरवियुक्तां चतुर्थस्थः शशी त्वाब्दादिति" शौनकः। विरुद्धार्थयोः का गतिरिति चेत्। बालचन्द्रविषयमशुभफलम् तद्भिन्नचन्द्रविषयं शुभफलम्। उक्तञ्च केशवार्केण "बालोऽब्जः प्रियविरहं शनिः स्तनाश्रःशून्यत्वं सृजति सुखे सुवासिनीनामिति" वशिष्ठः "मृत्युः शोको बहुविधधनं भ्रातृवैरं कुबुद्धिर्लक्ष्मीप्राप्तिर्भवति मरणञ्चोभयोर्वंशनाशः। स्त्रीणां द्वेषो व्यसननि

रतिः पुत्रपौत्रादिसिद्धिर्भीतिर्भूमेर्बलिनि तनये लग्नभावादिसंस्थे"(कुजस्य)। स्वच्छन्दत्वं कदशनरतिर्वल्लभत्वं विशीलं व्याधिः शुश्रूर्मृतिरथ सुखं गर्भपातप्रवृत्तिः द्यूतासक्तिर्भवति रविजे वैभवं वक्त्ररोगं स्वर्भानौ वाप्यथ शिखिनि वा लग्नभावादिसंस्थे" पी०धा० बुधादीनामनुपदमुक्तम् ।

अथ लग्नादिभुक्तकर्त्तर्यादिदोषापवादः

'पापौ कर्त्तरिकारकौ रिपुगृहे नीचास्तगौ कर्त्तरीदोषोनैव सितेऽरिनीचगृहगे तत्षष्ठदोषोऽपि न । भौमेऽस्ते रिपुनीचगे न हि भवेद्भौमोऽष्टमो दोषकृत्नीचे नीचनवांशके शशिनि रिष्फाष्टारिदोषोऽपि न" मु०चि० ।

"तत्र कर्त्तरीयोगलक्षणं लग्नात् पापावित्यादिनोक्तं यौ क्रूरौ ग्रहौ कर्त्तरिकारकौ रिपुगृहे शत्रुगेहे स्थितौ नीचेऽस्तगौ स्वनीचराशिस्थितौ अस्तं गतौ वा तदा कर्त्तरी नैव स्यात् यदाहुः काश्यपनारदवशिष्ठाः "पापयोः कर्त्तरीकर्त्रोः शत्रुनीचगृहस्थयोः । यदा चास्तगयोर्वापि कर्त्तरी नैव दोषदा" इति इदं विशेषणं शत्रुगृहस्थत्वादिकं समुच्चितं व्यस्तं समस्तं वा ध्येयम, अपवादान्तरमुक्तं दैवज्ञम० गर्गेण । "क्रूरकर्त्तरिसंयुक्तं लग्नं चन्द्रं च न त्यजेत् । केन्द्रत्रिकोणसंस्थेषु गुरुभार्गववित्सु च" । "विधौ धनोपगे शुभगृहेऽथवान्त्यगे गुरौ । न कर्त्तरी भवत्यहोजगाद वादरायणः । क्रूरद्वयस्यान्तरगं विलग्नं मृतिप्रदं चन्द्रमसञ्च रोगदम् । शुभैर्धनस्थैरथ वाऽन्त्यगे गुरौ न कर्त्तरी स्यादिह भार्गवाविदुरिति"।

अथ षष्ठशुक्रापवाद उच्यते ।"सिते शुक्रेऽरिगृहगे नीचगृहगे वा सति तत्षष्ठदोषो भृगुषट्कदोषोऽपि न स्यात् यदाह काश्यपः "नीचराशिगते शुक्रे शत्रुक्षेत्रगतेऽपि वा । भृगुषट्कोत्थितो दोषो नास्ति तत्र न संशयः" अथाष्टमभौमदोषापवाद उच्यते । भौमेऽस्ते अस्तं गते रिपुनीचगे शत्रुगृहे वा स्वनीचगृहगे वा सत्यष्टमो भौमो न दोषकृत् स्यात् । उक्तं च काश्यपेन "अस्तगे नीचगे भौमे शत्रुक्षेत्रगतेऽपि वा । कुजाष्टमोद्भवोदोषो न किञ्चिदपि विद्यते" इति । अथ षडष्टद्वादशस्थान चन्द्रापवाद उच्यते । शशिनि चन्द्रे नीचनवांशके वा सति रिष्फाष्टारिदोषोऽपि द्वादशाष्टमशत्रुस्थानस्थित चन्द्रदोषोऽपि न स्यात् । "नीचराशिगते चन्द्रे नीचांशकगतेऽपि वा । चन्द्रे षष्ठारिरिष्फस्थे दोषो नास्ति न संशयः इति" काश्यपोक्तेः पी०धा० ।

अथावदाद्यादिदोषापवादः"अब्दायनर्तुतिथिमासभपक्ष दग्धतिथ्यन्धकाणबधिराङ्गमुखाश्च दोषा । नश्यन्ति विद् गुरु-सितेष्विह केन्द्रकोणे तद्वच्च पापविधुयुक्तनवांशदोषाः" मु०चि० ।

"अब्ददोषः१ अयनदोषः२ ऋतुदोषः३ तिथिदोषो रिक्तादिः४ मासदोषः५ नक्षत्रदोषः क्रूरधर्षितादिः ६ । पक्षदोषस्त्रयोदशदिनात्मकादि ७ दग्धा तिथिः प्रसिद्धा चापान्त्यगेत्यादिनोक्ता८ । अन्धकाणबधिराख्योलग्नदोषः९ तन्मुखास्तदादयोऽन्ये अकालवृष्ट्याद्या दोषा विद् गुरु सितेषु केन्द्रकोणे केन्द्रं सप्तमस्थानरहितं विवक्षितं जामित्रदोषस्य सत्त्वात् । अतएवोक्तमग्रे "त्रिकोणे केन्द्रे वा मदनरहिते" इति कोणे नवपञ्चमे सत्सु नश्यन्ति । उक्तञ्च काश्यपेन "अब्दायनर्त्तुमासोत्थाः पक्षतिथ्यृक्षसम्भवाः । ते सर्वे नाशमायान्ति केन्द्रसंस्थे शुभग्रहे । काणान्धबधिरोद्भूता दग्धलग्नतिथेर्भवाः । ते दोषानाशमायान्ति केन्द्रसंस्थे शुभग्रहे" इति । 'अकालजाश्च नीहारविद्युत्तांश्वभ्रसम्भवाः । परिवेषप्रतिसूर्यशक्रचापध्वजादयः । दोषप्रदा मङ्गलेषु कालजाश्चेन्न दोषदाः । गुरुरेकोऽपि केन्द्रस्थः शुक्रो वा यदि वा बधः । हरेः स्तुतिर्यथा हन्ति तद्वद्दोषानकालजान् । लत्तोपग्रहचण्डीशचन्द्रजामित्रसम्भवान् । तत् केन्द्रगोगुरुर्हन्ति सुपर्णः पन्नगानिवेति" । तद्वच्चेति तथा यदि पापः क्रूरोविधुयुक्तराशेर्नवांशे स्याद्यथा सचन्द्रे मेषे सूर्यनवांशस्तद्दोषोऽभिहितो यज्ञोपवीतप्रकरणे, तदा तत्कृतदोषो नश्यति । उक्तञ्च संहिताप्रदीपे "सचन्द्रराशेरशुभोनवांशः प्रोक्तः सपापोऽपि विलग्नसंस्थः । त्रिकोणकेन्द्रेषु गुरुः सितो वा यदा तदाऽसावशुभोऽपि शस्तः पी०धा० ।

अथ बहुविधदोषापवाद "केन्द्रे कोणे जीव आये रवौ वा लग्ने चन्द्रे वा पि वर्गोत्तमे वा । सर्वे दोषानाशमायान्ति चन्द्रे लाभे तद्वद्दुर्मुहूर्तांशदोषाः"मु०चि०। "केन्द्रं प्रसिद्धं कोणं नवपञ्चमं तत्र च जीवो गुरुः स्यात्तदा सर्वे दोषानाशमायन्ति उपलक्षणत्वाद्बुधशुक्रावपि । यदाह नारदः 'उक्तानुक्ताश्च ये दोषास्तान्निहन्ति बली गुरुः केन्द्रसंस्थः सितोवापि पन्नगान् गरुड़ो यथेति" सितो बुधस्याप्युपलक्षकः । उक्तञ्च कश्यपेन "काव्ये गुरौ वा सौम्ये वा यदा केन्द्रत्रिकोणगे । नाशं यान्त्यखिलादोषाः पापानीव हरिस्तुतेरिति" तत्रापि लग्नाख्यकेन्द्रस्यातिबलत्वात्तत्र स्थितो जीवः सर्वारिष्टहरः तदुक्तं वशिष्ठेन "कुनवांश

दोषाः ये लग्नदोषाः पापैः कृता दृष्टिनिपातदोषाः। लग्ने गुरुस्तान्विमलीकरोति फलं यथाम्भः कतकद्रुमस्येति"। अथवा आये एकादशे रवौ सति दोषनाशः। "यस्यैकादशगे सूर्ये दोषा नाशं ययुस्तदा। स्मरणादेव रुद्रस्य पापं जन्मशतोद्भवमिति"। अथवा लग्ने वर्गोत्तमे स्वनवांशयुक्ते यथा मिथुने मिथुनांशः तदा दोषनाशः। अथवा चन्द्रे वर्गोत्तमे स्वनवांशस्थिते वा सति दोषनाशः। द्वितीयवाशब्दस्यानुक्तसमुच्चयार्थत्वाच्चन्द्रो लग्नादुपचय३,१०,११ स्थाने चेत् स्यात्तदापि सर्वदोषनाशः। एवं क्रमेण परिहारत्रयमुक्तं यदाह कश्यपः "वर्गोत्तमगते लग्ने वर्गदोषा लयं ययुः। चन्द्रे चोपचये वापि यथेष्टे कुशरितो यथेति"। चन्द्रे इति तद्वत्तेनैव प्रकारेण दुर्मुहूर्त्ता रवावर्यमेत्यादयः, अंशदोषाः पापग्रहनवांशाख्यास्ते सर्वे चन्द्रे लाभे एकादशस्थानस्थिते सति नाशमायान्ति। "मुहूर्तलग्नषड्वर्गकुनवांशग्रहोद्भवाः। ये दोषास्तान्निहन्त्येव यस्यैकादशगः शशीति"। अन्यदप्याह कश्यपः "लग्नाद्दुःस्थानमव्योमचरोत्थं दोषसञ्चयम्। शुभः केन्द्रगतो हन्ति दावाग्निर्विपिनं यथेति" पी०धा०।

"त्रिकोणे केन्द्रे वा मदनरहिते दोषशतकं हरेत् सौम्यः शुक्रो द्विगुणमपि लक्षं सुरगुरुः। भवेदाये केन्द्रेऽङ्गप उत लवेशो यदि तदा समूहं दोषाणां दहन इव तूलं शमयति" मु०चि०। "त्रिकोणे ५,९ केन्द्रे सप्तरहिते १,४,१०, यदि सौम्यो बुधस्तिष्ठेत्तदा दोषशतकं हरेत्। उक्तस्थानस्थितः शुक्रोऽपि द्विगुणं दोषशतकं दोषद्विशतीं हरेत्। तथोक्तस्थानस्थितो गुरुरपि लक्षं दोषान् हरेत्। यदाह नारदः "दोषाणां हि शतं हन्ति बलवान् केन्द्रगो बुधः। अपहाय द्युनं शुक्रो द्विगुणं लक्षमङ्गिराः"। अत्र शतशब्देनानेकसंख्यात्वं विवक्षितम्। अतएवाह कश्यपः "बलवान् केन्द्रगः सौम्यो हन्ति दोषशतत्रयम्। द्यूनं विहाय दैत्येज्यः सहस्रं लक्षमङ्गिराः" इति। भवेदिति अङ्गपो लग्नस्वामी उत यद्वा लवेशो लग्नगतांशनाथो वा आये ११ केन्द्रे १,४,१० यदि भवेत्तदा स दोषाणां समूहं शमयति तत्र दृष्टान्तः दहनोऽग्निस्तूलं कार्पासमिव शमयति। तदुक्तं नारदेन "लग्नेट् लग्नांशनाथो वा चायगः केन्द्रगोऽपि वा। राशिं निहन्ति दोषाणामिन्धनानीव पावकः"

अथ प्रसङ्गेन श्वशुरादिशुभाशुभनिरूपणम् "श्वश्रूः सितोऽर्कः श्वशुरस्तनुस्तनुर्जामित्रपः स्याद्दयितो, मनः शशी। एतद्बलं संप्रतिभाव्य तान्त्रिकस्तेषां सुखं संप्रवदेद्विवाहतः" मु०चि०। "शुक्रः श्वश्रूः, सूर्यः श्वशुरः, अत्र कन्यानिमित्तशुभाशुभस्य विचारप्रसक्तत्वात्तस्याः कन्यायाः श्वश्रूर्वरमाता श्वशुरो वरपिता, तनुर्लग्नं तनुः स्वशरीरं, जामित्रपः सप्तमाधीशो दयितो भर्त्ता ज्ञेयः, शशी मनो ज्ञेयम् एतद्बलम् एतेषां शुक्रादीनां बलं विचार्य तान्त्रिकः तन्त्रसिद्धान्तवित् विवाहतो विवाहादनन्तरं तेषां श्वश्र्वादीनां सुखं स्यादिति प्रवदेत्। यदाह शौनकः "श्वशुरः सहस्रकिरणः श्वश्रूर्भृगुनन्दनो विनिर्दिष्टः। होरागमार्थकुशलैर्जामित्रपतिः पतिः स्त्रीणाम्। शरीरं लग्नवशात् सुखदुःखं मानसं शशाङ्कवशादिति"। शार्ङ्गीयेऽपि "श्वशुरोऽर्कः, सितः श्वश्रूः, स्त्रीणामस्तपतिः पतिः। एभिरुच्चोपगैरेषां शुभं नीचादिगैरसदिति" विशेषान्तरमप्युक्तं शार्ङ्गीये "सूर्यात्पतिः, स्त्री च विधो, स्तथाराद्वित्तं, सुतो ज्ञाच्छ्वशुरं गुरोश्च। धर्मः सितादर्कसुताच्च वेश्म, भूयात्ससुहृद्वाहविधौ स्वयुक्त्या, एतैर्नीचस्थितैः शत्रुगतैर्वाहादिकं न सत्। स्वस्थोच्च त्रिकोणस्थैः शुभमेषां यथोदितमिति"।

अथ संकीर्णजातीनां विवाहे नियतकालविशेषः "कृष्णे पक्षे सौरिकुजार्केऽपि च वारे वर्ज्ये नक्षत्रे यदि वा स्यात्करपीड़ा। संकीर्णानां तर्हि सुतायुर्धनलाभप्रीतिप्राप्त्यै सा भवतीह स्थितिरेषा" मु०चि० "कृष्णपक्षे शनिभौमार्कवारे विवाहोक्तनक्षत्रादिभिन्ननक्षत्रेषु चकाराद्व्याघातशूलेत्यादिदुष्टयोगेष्वपि यदि संकीर्णानाम् अनुलोमप्रतिलोमजानां करपीड़ा विवाहः स्यात्। तर्हि सा करपीड़ा सुतायुर्धनलाभप्रीतिप्राप्त्यै भवति। एषा स्थितिराचारोऽस्ति, अनुलोमजा मूर्द्धावसिक्तादयः प्रतिलोमजाश्चाण्डालादयः। वाकारग्रहणमेतदभावे विवाहाद्यावश्यकत्वे च प्रागुक्तदिनेऽपि स्यादिति सूचनार्थम्। तदुक्तं शार्ङ्गीये "कृष्णे पक्षे भानुभौमार्कजानां वारे योगे चापि धिष्ण्ये निषिद्धे। संकीर्णानां दारकर्म प्रशस्तं प्रीत्यर्थायुःप्राप्तये शौनकाद्याः" इति। केशवार्कः "प्रायेण सङ्करभुवामशुभर्क्षपक्षक्रूरक्षणेषु शुभकृत् करपीड़नं स्यात्" इति

अथ लग्ने वक्तव्ये तदलाभे गोधूलिनिरूपणप्रशंसे "नास्मिन्नृक्षं न तिथिकरणं नैव लग्नस्य चिन्ता नो वा वारो न च लवविधिर्नो मुहूर्त्तस्य चर्चा। नो वा योगो न मृतिभवनं नैव जामित्रदोषो गोधूलिः सा मुनिभिरुदिता सर्वकार्येषु शस्ता" मु०चि०।

"यदयं न ऋक्षमित्यादिः स स्तुत्यर्थवादः तेन गोधूल्याः प्रशंसायां तात्पर्यं न तु विधिरन्यथा निषिद्धेषु अमावास्याभद्राभरण्यादिष्वपि गोधूलिलग्नं भवितुं युक्तं स्यात्। सामान्यैरर्थ्यापत्तेरिष्टापत्तिरपि वक्तुमशक्या। तस्मादभिहिततिथ्यादिष्वेव यावच्छक्याखिलदोषपरिहार पूर्वकघटीलग्नं कार्यं तदभावे गोधूलिलग्नं कार्यम्। यदाह लल्लः 'लग्नं यदा नास्ति विशुद्धमन्यद्गोधूलिकां साधु तदा वदन्ति। लग्ने विशुद्धे सति वीर्ययुक्ते गोधूलिका नैव फलं विधत्ते। शुभाशुभयुतं सर्वं राशिदोषान्वितम्। विवाहलग्नवच्छेषङ्गोधूलौ प्राह भार्गुरिरिति" किन्तु "कुलिकं क्रान्तिसाम्यं च मूर्त्तौ षष्ठाष्टमः शशी। पञ्च गोधूलिके त्याज्या अन्ये दोषाः शुभावहाः" इति दैवज्ञमनोहरीयवाक्यमपि सार्थकम्। गोधूल्यधिकारे आह नारदः "प्राच्यानां च कलिङ्गानां मुख्यं गोधूलिकं स्मृतम्। गान्धर्वादिविवाहेषु वैश्योद्वाहे च योजयेत्। चतुर्थमभिजिल्लग्नमुदयर्क्षात्तु सप्तमम्। गोधूलिकं हि भवति सम्पत्पुत्रादिसौख्यदमिति"। दैवज्ञम० "घटीलग्नं यदा नास्ति तदा गोधूलिकं शुभम्। शूद्रादीनां बुधाः प्राहुर्न द्विजानां कदाचन। महादोषान् परित्यज्य पौष्णधिष्ण्यादिकेषु च। कारयेद्गोरजोयावत्तावल्लग्नं शुभावहमिति। लग्नशुद्धिर्यदा नास्ति कन्या यौवनशालिनी। तदा वै सर्ववर्णानां लग्नं गोधूलिकं शुभमिति"। अतएव भूपालवल्लभे "विप्रेषु घटिकाऽलाभे दातव्यं गोरजो बुधैः। संकीर्णे गोरजः शस्तं परेषु द्वितयं शुभमिति" तत्र गोधूलिलक्षणकालसमयः केशवार्केणोक्तः "अर्वोभयत्र घटिकादलमिष्टमाहुर्ग्राह्यं तदम्बरमणेरपि चार्द्धबिम्बादिति" केचित्तु यावद्दिनान्ते दिशि पश्चिमायां पश्येत्तृतीयं रविबिम्बभागम्। तस्मात्परं नाडीकयुग्ममेके गोधूलिकालं मुनयो वदन्तीति, तदेतयोः पक्षयोर्यथादेशाचारं व्यवस्था पी०धा०।

"पिण्डीभूते दिनकृति हेमन्तर्तौ स्यादर्द्धास्ते तपसमये गोधूलिः। संपूर्णास्ते जलधरमालाकाले त्रेधा योज्या सकलशुभे कार्यादौ" मु०चि०। "हेमन्ताख्ये ऋतौ हेमन्तशब्देन शीतकाल उपलक्ष्यते मार्गशीर्षादिमासचतुष्टये इत्यर्थः तत्र दिनकृति सूर्ये पिण्डीभूते ओदनगोलकसदृशे सन्ध्यायां नीहाराद्यावृतत्वेन निःप्रभे इत्यर्थः। तस्मिन् समये गोधूलिर्ज्ञेया तथा तपसमये उष्णकाले चैत्रादिचतुष्टये सूर्येऽर्द्धास्ते अर्द्धबिम्बस्य दृश्यत्वे च सति गोधूलिः। जलधराः मेघास्तेषां मालासमूहस्तस्योत्पादके काले वर्षाकाले श्रावणादिमासचतुष्टये सूर्ये संपूर्णास्तेऽदर्शनं गते सति गोधूलिः। केवलमियं न विवाह एव किन्तु सकलशुभे समस्तशुभकार्यादिष्वपि ज्ञेया। यदाह वराहः "गोधूलिं त्रिविधां वदन्ति मुनयो नारीविवाहादिके हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे। ग्रीष्मेऽर्द्धास्तमिते वसन्तसमये भानौ गते दृश्यतां सूर्ये चास्तमुपागते भगवति प्रावृट्शरत्कालयोरिति"। पी०धा०।

अथ गोधूलिसमयेऽवश्यवर्ज्यदोषाः "अस्तं याते गुरुदिवसे सौरे सार्के लग्नान्मृत्यौ रिपुभवने लग्ने चेन्दौ। कन्यानाशस्तनुमदमृत्युस्थे भौमे वोढुर्लाभे धनसहजे चन्द्रे सौख्यम्" मु०चि०।

"गोधूलिरित्यनुवर्त्तते गुरुदिवसे वृहस्पतिवारे, सूर्येऽस्तं याते सूर्यास्तादनन्तरं गोधूलिः शुभा स्यात् न तु सूर्यास्तात् पूर्वमर्द्धघटिकङ्गोधूलिलग्नं कार्यमर्द्धयामसद्भावात्। तथा सौरे शनिवारे सार्के सूर्यदर्शनसहिते गोधूलिः शुभा। न तु सूर्यास्तादनन्तरङ्कुलिकसद्भावात्। उपलक्षणत्वात् क्रान्तिसाम्यमपि त्याज्यम् तथा लग्नात्तात्कालीनलग्नान्मृत्यावष्टमे रिपुभवने षष्ठे वा लग्न एव वा चन्द्रे सति कन्यानाशः स्यात्। तदुक्तं दैवज्ञ० "कुलिकङ्क्रान्तिसाम्यञ्च मूर्त्तौ षष्ठाष्टमः शशी। पञ्च गोधूलिके त्याज्या अन्ये दोषाः शुभावहाः"। अत्र कुलिकशब्देन तत्कालसम्भाव्यार्द्धयामाख्यो वारदोषो गृह्यते अन्येषान्त्वसम्भव एव। लग्नस्थे मदनस्थे मृत्युस्थे वा भौमे सति वोढुर्वरस्य नाशो भवति तदुक्तञ्ज्योतिःसंहितासारे "षष्ठेऽष्टमे मूर्त्तिगते शशाङ्के गोधूलिके मृत्युमुपैति कन्या"। कुजेऽष्टमे मूर्त्तिगतेऽथवास्ते वरस्य नाशं प्रवदन्ति गर्गाः" अन्योऽपि विशेषस्तत्रैव "षष्ठाष्टमे चन्द्रजचन्द्रजीवे चौणीसुते वा भृगुनन्दने वा। मूर्त्तौ च चन्द्रे नियमेन मृत्युर्गोधूलिकं स्यादिह वर्जनीयमिति"। "धिष्ण्याङ्कुरयुतन्त्याज्यं मूर्त्तौ षष्ठाष्टमः शशी। गोरजस्तत्प्रशंसन्ति सन्तः शनिदिनं विनेति"। उक्तञ्च "केशवार्केण गोधूलिकेऽपि विधुरष्टमषष्ठमूर्त्तौ यन्मोचयन्ति तदयो स्वरुचिं प्रपन्नाः। पञ्चाङ्गशुद्धिमयमेव विवाहधिष्ण्यैर्यस्मादिदं सततमस्तगते पतङ्गे। नांशो न लग्नमिह दृष्ट्युतं स्वभर्त्ता नार्कारसौरितमसामपि सङ्गभङ्गः। किञ्चन्द्रचारमयमेकमिहास्तु किञ्च नात्र प्रमाणवचनङ्किमपि श्रुतं नः"। सार्के शनौ विरविचित्र

शिखण्डिसूनीतत्केवलकुलिकयामदलोपलम्भादिति"। चन्द्रे लाभस्थे वित्ते द्वितीयस्थे सहजस्थे वा सति स्त्रीपुरुषयोः सौख्यं स्यात्। तदुक्तं संहितासारे "यत्रैकादशगश्चन्द्रो द्वितीयो वा तृतीयगः। गोधूलिका स विज्ञेया शेषा धूलिरिति स्मृतेति" पी०धा०

ज्यो०त०मासभेदे फलभेदः। "मार्गे गोधूलियोगे प्रभवति विधवा, माघमासे तथैव, पुत्रायुर्धनयौवनेन सहिता कुम्भे स्थिते भास्करे। वैशाखे शुभदा, प्रजाबलवती, ज्यैष्ठे पतेर्मानदा आषाढे धनधान्यपुत्रबहुला, पाणिग्रहे कन्यका।

अथ विवाहादौ वर्ज्यदोषसमष्टिः "उत्पातान् सह पातदग्धतिथिभिर्दुष्टांश्च योगांस्तथा चन्द्रेज्योशनसामथास्तमयनं तिथ्याः क्षयर्द्धी तथा। गण्डान्तञ्च सविष्टि संक्रमदिनं तन्वंशपास्तं तथा तन्वंशेशविधूनथाष्टरिपुगान् पापस्य वर्गांस्तथा। सेन्दुक्रूरखगोदयांशमुदयास्ताशुद्धिचण्डायुधम्। खार्जूरं दशयोगयोगसहितं जामित्रलत्ताव्यधम्। बाणोपग्रहपापकर्तरि तथा तिथ्यृक्षयोगोत्थितं दुष्टं योगमथार्द्धयामकुलिकाद्यान् वारदोषानपि। क्रूराक्रान्तविमुक्तभं ग्रहणभं यत् क्रूरगन्तव्यभं त्रेधोत्पातहतञ्च केतुहतभं सन्ध्योदितम्भं तथा। तद्वच्च ग्रहभिन्नयुद्धगतभं सर्वानिमान् सन्त्यजेदुद्वाहे शुभकर्मसु ग्रहकृतान् लग्नस्य दोषानपि" मु०चि०। "उत्पातादीन्दोषानुद्वाहे यज्ञोपवीतादिशुभकर्मसु च सन्त्यजेदिति तृतीयश्लोकेनान्वयः। उद्वाहग्रहणं गोबलीवर्द्दन्यायेन मुख्यत्वसूचनार्थम्। उत्पातान् त्रिविधान् दिव्यान्तरिक्षभौमान् लक्षणया तत्सम्बन्धिनः सप्त वर्ज्यदिवसांस्त्यजेत्। यदाह गुरुः "दिग्दाहे वा महादारुपतने चाम्बुवर्षणे। उल्कापाते महावाते महाशनिनिपातने। अनभ्राशनिपाते च भूकम्पे परिवेषयोः। ग्रामोत्पाते शिवाशब्दे दुर्निमित्ते नभोभने। केतवो यत्र दृश्यन्ते स धूमा वा पृथग्विधाः। चन्द्रसूर्यग्रहे चैव वर्जयेद्दिनसप्तकमिति"। पातो महापातः क्रान्तिसाम्यमिति यावत् तल्लक्षणप्रसिद्धम्। दग्धतिथयः "चापान्त्यगे गोघटगे इत्यादिनोक्ताः एतैः सह त्यजेदिति सम्बन्धः तथा दुष्टान् योगान् व्यतीपातवैधृतिपरिघार्द्धादीन्। अथ चन्द्रेज्योशनसां चन्द्रगुरुशुक्राणाम् अस्तमयंनमस्तं च तिथ्याः क्षयर्द्धी तिथिक्षयं तिथिवृद्धिं च पुनर्गण्डान्तं नक्षत्रतिथिलग्नैः त्रिविधं विष्टिर्भद्रा संक्रमदिनं तद्दिवसे वर्ज्या घटिकाः, अयनेषु विषुवेषु च पूर्वापरं त्रिदिनमिति विशेषोध्येयः। ताभ्यां सहितमिति पूर्वेण सम्बन्धः। तन्वंशस्तनुर्लग्नम् अंशो लग्नगतविहितनवांशः तौ पातः तन्वंशपौ तयोरस्तं लग्नाधीशास्तं लग्नगतनवांशाधीशास्तं चेत्यर्थः तथा तन्वंशेशविधून् लग्ननवांशेशचन्द्रान् अष्टरिपुगान् अष्टमगतान् षष्ठस्थान् इन्दुश्च क्रूरखगश्चेन्दुक्रूरखगौ उदयो लग्नञ्च अंशो नवांशश्च उदयांशमिति समाहारद्वन्द्वैकवचनं इन्दुक्रूरखगाभ्यां सहितमुदयांशम्। इन्दुसहितं लग्नं लग्नांशं च क्रूरग्रहेण सहितं लग्नं लग्नांशं चेत्यर्थः। पापस्येत्येकत्वमविवक्षितं पापानां वर्गानित्यर्थः उदयाशुद्धिरस्ताशुद्धिश्च उदयास्ताशुद्धिः चण्डायुधम् "चण्डायुधं हर्षणवैधृतिसाध्येत्यादिनोक्तम्। खार्जूरं व्याघातगण्डेत्यादिनोक्तं दशयोगः "सूर्यर्क्षचन्द्रर्क्षयुतेरित्यादिनोक्तः, योगो ग्रहयुतिश्च तत्सहितं जामित्रलत्ताव्यधम् समाहारद्वन्द्वैकवचनं जामित्रं द्विविधं लग्नजामित्रं चन्द्रजामित्रञ्च लग्नाच्चन्द्रेत्यादिनोक्तं लत्ता "त्वराङ्कपूर्णेन्दुसिता" इत्युक्ता व्यधम् वेधं सप्तशलाकोक्तं पञ्चशलाकोक्तञ्च। बाणाः पञ्चकम् उपग्रहः प्रसिद्धः शराष्टदिक् शक्रेत्यादिः पापकर्त्तरी क्रूरग्रहकर्त्तरी समाहारद्वन्द्वैकवचनं तिथ्यृक्षवारोत्थितं दुष्टं योगं तिथिनक्षत्रवारैरुत्थितं उत्पन्नं दुष्टयोगम्। तथा तिथिनक्षत्रोद्भवं वैश्वमादिमे इत्यादि। तिथिवारोद्भवं सूर्येशपञ्चेत्यादिनक्षत्रवारोद्भवं यास्यन्त्वाष्ट्रमित्यादि अनेकं दुष्टयोगम् अथार्द्धयामकुलिकाद्यान् वारदोषानपि स्पष्टार्थम् आदिशब्देन दुर्मुहूर्त्तादिकान्। क्रूराक्रान्तविमुक्तभं क्रूराक्रान्तं क्रूरविमुक्तञ्च भं ग्रहणभं यस्मिन् भे सूर्य्यचन्द्रोपरागो जातस्तद्भं यत् क्रूरगन्तव्यभं क्रूरेण जिगमिषितं यद्भं नक्षत्रं त्रेधोत्पातहतञ्च भम्। त्रिविधोत्पातैर्दिव्यभौमान्तरिक्षैर्हतं तन्मासषट्कं त्याज्यमेवं ग्रहणनक्षत्रमपि। केतुहतभञ्च केतुना हतम्भञ्च। सन्ध्योदितम्भम् अत्र सन्ध्याशब्देन सायंसन्ध्या गृह्यते। तत्रोदितं तत्काले यन्नक्षत्रस्य क्षितिजे उदयस्तत् सूर्य्यर्क्षाच्चतुर्दशं नक्षत्रमित्यर्थः। न तु प्रातःसन्ध्यायान्तत्र हि सूर्येणाक्रान्तभुक्तान्यतरत्वसत्त्वात्। यदुक्तं केशवार्केण "तरणितारकतोऽपि चतुर्दशं तदखिलेऽपि खिलं शुभकर्मणीति"। तारकशब्दः क्लीबेऽपि। ननूपग्रहत्वादेव निषेधे सिद्धे पुनर्दोषाभिधान किमर्थम् उच्यते उपग्रहर्क्षदोषस्य सत्यावश्यकत्वे कुरुवाह्लिकदेशविषयत्वाच्चतुर्दशस्य च दोषाधिक्यसूचनादावश्यकेऽपि सर्वदेशविषयत्वेन निषेधो यथा स्यादिति। ग्रहभिन्नयुद्धगतभं ग्रहेण भेदितं ग्रहयुद्धगतञ्च भमासं

निषिद्धं तथा चण्डक्षतान् लग्नस्य दोषान्। "व्यये शनिः खेऽवनिजस्तृतीयादिकान् लग्नसम्बन्धिदोषान् सन्त्यजेत्"। पी०धा०। ज्यो०त० ज्योतिःसारसंग्रहवाक्यम् "विवाहे तु दिवाभागे कन्या स्यात् पुत्रवर्जिता। विवाहानलदग्धा सा नियतं स्वामिघातिनी" एतद्वचनस्यार्षमूलानुपलम्भात् पाश्चात्यादिभिरप्रामाणिकत्वमुररीकृत्य दिवाऽपि विवाह आचर्य्यते। कन्यादानं च रात्रावपि कर्त्तुं शक्यते यथाह ज्यो०त० भारतम् "रात्रौ दानं न शंसन्ति विना चाभयदक्षिणाम्। विद्यां कन्यां द्विजश्रेष्ठाः दीपमन्नं प्रतिश्रयम्"। तत्रैव व्यासः रिक्तासु विधवा कन्या दर्शेऽपि स्याद्विवाहिता। शनैश्चरदिने चैव यदा रिक्ता तिथिर्भवेत्। तस्यां विवाहिता कन्या पतिसन्तानवर्द्धिनी" इत्युक्तेः शनिवारे रिक्तायामपि विवाह इति गौडाः। पाश्चात्यादिभिरेतद्वचनममूलकमेवेति मत्वा शनियुक्तरिक्तायां न तदाचर्य्यते। अथ विवाह्यस्त्रीशुभाशुभलक्षणान्युच्यन्ते। वृह० ७०अ० "स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्य्याः पादौ समोपचितचारुनिगूढगुल्फौ। श्लिष्टाङ्गुली कमलकान्तितलौ च यस्यास्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत्। मत्स्याङ्कुशाब्जयववज्रहलासिचिह्नावस्वेदनौ मृदुतलौ चरणौ प्रशस्तौ। जङ्घे च रोमरहिते विशिरे सुवृत्ते जानुद्वयं सममनुल्बणसन्धिदेशम्। ऊरू घनौ करिकरप्रतिमावरोमावश्वत्थपत्रसदृशं विपुलं च गुह्यम्। श्रोणीललाटमुरुकूर्म्मसमुन्नतं च गूढो मणिश्च विपुलां श्रियमादधाति। विस्तीर्णमांसोपचितो नितम्बो गुरुश्च धत्ते रशनाकलापम्। नाभिर्गभीरा विपुलाङ्गनानां प्रदक्षिणावर्त्तगता प्रशस्ता। मध्यं स्त्रियास्त्रिवलिनाथमरोमशं च वृत्तौ घनावविषमौ कठिनावुरस्यौ। रोमापवर्जितमुरो मृदु चाङ्गनानां ग्रीवा च कम्बुनिचितार्थसुखानि धत्ते। बन्धुजीवकुसुमोपमोऽधरो मांसलो रुचिरबिम्बरूपभृत्। कुन्दकुड्मलनिभाः समा द्विजा योषितां पतिसुखामितार्थदाः। दाक्षिण्ययुक्तमशठं परपुष्टहंसवल्गु प्रभाषितमदीनमनल्पसौख्यम्। नासा समा समपुटा रुचिरा प्रशस्ता दृग्नीलनीरजदलद्युतिहारिणी च। नो सङ्गते नातिपृथू न लम्बे शस्ते भ्रुवौ बालशशाङ्कवक्रे। अर्द्धेन्दुसंस्थानमरोमशं च शस्तं ललाटं न नतं न तुङ्गम्। कर्णयुग्ममपि युक्तमांसलं शस्यते मृदु समं समाहितम्। स्निग्धनीलमृदुकुञ्चितैकजा मूर्द्धजाः सुखकराः समं शिरः। भृङ्गारासनवाजिकुञ्जररथश्रीवृक्षयूपेषुभिर्मालाकुण्डलचामराङ्कुशयवैः शैलैर्ध्वजैस्तोरणैः। मत्स्यस्वस्तिकवेदिकाव्यजनकैः शङ्खातपत्राम्बुजैः पादे पाणितलेऽपि वा युवतयो गच्छन्ति राज्ञीपदम्। निगूढमणिबन्धनौ तरुणपद्मगर्भोपमौ करौ नृपतियोषितां तनुविकृष्टपर्वाङ्गुली। न निम्नमति नोन्नतं करतलं सुरेखान्वितं करोत्यविधवां चिरं सुतसुखार्थसम्भोगिनीम्। मध्याङ्गुलिं या मणिबन्धनोत्था रेखा गता पाणितलेऽङ्गनायाः। ऊर्द्ध्वस्थिता पादतलेऽथवा या पुंसोऽथवा राज्यसुखाय सा स्यात्। कनिष्ठिकामूलभवा गता या प्रदेशिनीमध्यमिकान्तरालम्। करोति रेखा परमायुषः सा प्रमाणमूना तु तदूनमायुः। अङ्गुष्ठमूले प्रसवस्य रेखाः पुत्रा बृहत्यः प्रमदास्तु तन्व्यः। अच्छिन्नदीर्घा बृहदायुषां ताः स्वल्पायुषां छिन्नलघुप्रमाणाः। इतीदमुक्तं शुभमङ्गनानामतो विपर्य्यस्तमनिष्टमुक्तम्। विशेषतोऽनिष्टफलानि यानि समासतस्तान्यनुकीर्त्तयामि। कनिष्ठिका वा तदनन्तरा वा महीं न यस्याः स्पृशती स्त्रियाः स्यात्। गताऽथ वाङ्गुष्ठमतीत्य यस्याः प्रदेशिनी सा कुलटातिपापा। उद्बद्धाभ्यां पिण्डिकाभ्यां शिराले शुष्के जङ्घे रोमशे चातिमांसे। वामावर्त्तं निम्नमल्पं च गुह्यं कुम्भाकारं चोदरं दुःखितानाम्। ह्रस्वयाऽतिनिःस्वता दीर्घया कुलक्षयः। ग्रीवया पृथूत्वया योषितः प्रचण्डता। नेत्रे यस्याः केकरे पिङ्गले वा सा दुःशीला श्यावलोलेक्षणा च। कूपौ यस्या गण्डयोश्च स्मितेषु निःसन्दिग्धं बन्धकीं तां वदन्ति। प्रविलम्बिनि देवरं ललाटे श्वशुरं हन्त्युदरे स्फिचोः पतिं च। अतिरोमचयान्वितोत्तरोष्ठी न शुभा भर्तुरतीव या च दीर्घा। स्तनौ सरोमौ मलिनोल्बणौ च क्लेशं दधाते विषमौ च कर्णौ। स्थूलाः करालाः विषमाश्च दन्ताः क्लेशाय चौर्य्याय च कृष्णमांसाः। क्रव्यादरूपैर्वृककाककङ्कसरीसृपोलूकसमानचिह्नैः। शुष्कैः शिरालैर्विषमैश्च हस्तैर्भवन्ति नार्य्यः सुखवित्तहीनाः। या तूत्तरोष्ठेन समुन्नतेन रूक्षाग्रकेशी कलहप्रिया सा। प्रायो विरूपासु भवन्ति दोषा यत्राकृतिस्तत्र गुणा वसन्ति। पादौ सगुल्फौ प्रथमं प्रदिष्टौ जङ्घे द्वितीयं च सजानुचक्रे। मेढ्रोरुमुष्कं च ततस्तृतीयं नाभिः कटिश्चेति चतुर्थमाहुः। उदरं कथयन्ति पञ्चमं हृदयं षष्ठमतः स्तनान्वितम्। अथ सप्तममंसजत्रुणी कथयन्त्यष्टममोष्ठकन्धरे। नवमं नयने च सभ्रुणी सललाटं दशमं शिरस्तथा। अशुभेष्वशुभं दशाफलं चरणाद्येषु शुभेषु शोभनम्"।

काशीखण्डे ३७ अध्याये स्त्रीणां शुभाशुभलक्षणान्युक्तानि यथा “सदा स्पृही सुखं भुङ्क्ते स्त्री लक्षणवती यदि । अतः सुखसमृद्ध्यर्थमादौ लक्षणमीक्षयेत् । वपुरावर्त्तौ गन्धश्च छाया सत्त्वं स्वरो गतिः । वर्णश्चेत्यष्टधा प्रोक्ता बुधैर्लक्षणभूमिका । आपादतलमारभ्य यावन्मौलिरुहं क्रमात् । शुभाशुभानि वक्ष्यामि लक्षणानि मुने ! शृणु । आदौ पादतले रेखा ततोऽङ्गुष्ठाङ्गुलीनखाः । पृष्ठं गुल्फद्वयं पार्ष्णी जङ्घे रोमाणि जानुनी । ऊरू कटिर्नितम्बः स्फिग् भगो जघनवस्तिके । नाभिः कुक्षिद्वयं पार्श्वोदरमध्यवलित्रयम् । रोमाणि हृदयं वक्षो वक्षोजद्वयचूचुकम् । जत्रु स्कन्धांसकक्षादोर्मणिबन्धकरद्वयम् । पाणिपृष्ठं पाणितलं रेखाङ्गुष्ठाङ्गुलीनखाः । पृष्ठं कृकाटिकाकण्ठे चिबुकञ्च हनुद्वयम् । कपोलवक्त्रमधरोत्तरौष्ठद्विजजिह्विकाः । घण्टिकातालुहसितं नासिका क्षुतमक्षिणी । पक्ष्मभ्रूकर्णभालानि मौलिरोमन्तमौलिजाः । षष्टिः षडुत्तरा योषिदङ्गलक्षणसत्खनिः । स्त्रीणां पादतलं स्निग्धं मांसलं मृदुलं समम् । अस्वेदमुष्णमरुणं बहुभोगोचितं स्मृतम् । रूक्षं विवर्णं परुषं खण्डितप्रतिबिम्बकम् । शूर्पाकारं विशुष्कं च दुःखदौर्भाग्यसूचकम् । चक्रस्वस्तिकशङ्खाब्जध्वजमीनातपत्रवत् । यस्याः पादतले रेखा सा भवेत् क्षितिपाङ्गना । भवेदखण्डभोगार्हा याऽध्याङ्गुलिसङ्गता । रेखाखुसर्पकाकाभा दुःखदारिद्र्यसूचिका । उन्नतो मांसलोऽङ्गुष्ठो वर्त्तुलोऽतुलभोगदः । वक्रो ह्रस्वश्च चिपिटः सुखसौभाग्यभञ्जकः । विधवा विपुलेन स्याद्दीर्घाङ्गुष्ठेन दुर्भगा । मृदवोऽङ्गुलयः शस्ता घनाहृत्ताः समुन्नताः । दीर्घाङ्गुलीभिः कुलटा, कृशाभिरतिनिर्द्धना । ह्रस्वायुष्या च ह्रस्वाभिर्भुग्नाभिर्भुग्नवर्त्तिनी । चिपिटाभिर्भवेद्दासी विरलाभिर्दरिद्रिणी । परस्परं समारूढा यदाङ्गुल्यो भवन्ति हि । हत्वा बहूनपि पतीन् परप्रेष्या तदा भवेत् । यस्याः पथि समायान्त्या रजो भूमेः समुच्छलेत् । सा पांशुला प्रजायेत कुलत्रयविनाशिनी । यस्याः कनिष्ठिका भूमिं न गच्छन्त्याः परिस्पृशेत् । सा निहत्य पतिं पापा द्वितीयं कुरुते पतिम् । अनामिका च मध्या च यस्या भूमिं न संस्पृशेत् । पतिद्वयं निहन्त्याद्या द्वितीया च पतित्रयम् । पतिहीनत्वकारिण्यौ हीने ते द्वे इमे यदि । प्रदेशिनी भवेद्यस्याश्चाङ्गुष्ठव्यतिरेकिणी । कन्यैव कुलटा सा स्यादेष एव विनिश्चयः । स्निग्धाः समुन्नतास्ताम्रा वृत्ताः पादनखाः शुभाः । राज्ञीत्वसूचकं स्त्रीणां पादपृष्ठं समुन्नतम् । अस्वेदमशिराढ्यं च मसृणं मृदु मांसलम् । दरिद्रा मध्यनम्रेण शिरालेन सदाऽध्वगा । रोमाढ्येन भवेद्दासी निर्मांसेन च दुर्भगा । गूढौ गुल्फौ शुभायोक्तावशिरालौ सुवर्त्तुलौ । सुपुष्टौ शिथिलौ दृश्यौ स्यातां दौर्भाग्यसूचकौ । समपार्ष्णिः शुभा नारी पृथुपार्ष्णिश्च दुर्भगा । कुलटोन्नतपार्ष्णिश्च दीर्घपार्ष्णिश्च दुःखभाक् । रोमहीने समे स्निग्धे यज्जङ्घे क्रमवर्त्तुले । सा राजपत्नी भवति विशिरे सुमनोहरे । एकरोमा राजपत्नी द्विरोमापि सुखास्पदम् । त्रिरोमा रोमकूपेषु भवेद्वैधव्यदुःखभाक् । वृत्तं पिशितसंलग्नं जानुयुग्मं प्रशस्यते । निर्मांसं स्वैरचारिण्या दरिद्रायाश्च विश्लथम् । विशिरैः करभाकारैरूरुभिर्मसृणैर्घनैः । सुवृत्तै रोमरहितैर्भवेयुर्भूपवल्लभाः । वैधव्यं रोमशैरुक्तं दौर्भाग्यं चिपिटैरपि । मध्यच्छिद्रैर्महादुःखं दारिद्र्यं कठिनत्वचैः । चतुर्भिरङ्गुलैः शस्ता कटिर्विंशतिसंयुतैः । समुन्नतनितम्बाढ्या चतुरस्रा मृगीदृशाम् । विनता चिपिटा दीर्घा निर्मांसा सङ्कटा कटिः । ह्रस्वरोमयुता नार्य्या दुःखवैधव्यसूचिका । नितम्बबिम्बो नारीणामुन्नतो मांसलः पृथुः । महाभोगाय संप्रोक्तस्तदन्योऽशर्म्मणे मतः । कपित्थफलवद्वृत्तौ मृदुलौ मांसलौ घनौ । स्फिचौ वलिविनिर्मुक्तौ रतिसौख्यप्रवर्द्धनौ । शुभः कमठपृष्ठाभोगजस्कन्धोपमो भगः । वामोन्नतस्तु कन्याजः पुत्रजो दक्षिणोन्नतः । आखुरोमा गूढमांसः सुश्लिष्टः संहतः पृथुः । तुङ्गः कमलवर्णाभः शुभोऽश्वत्थदलाकृतिः । तुरङ्गखुररूपोऽयश्चुल्लीकोटरसन्निभः । रोमशो विवृतास्यश्च दृश्यनासोऽतिदुर्भगः । शङ्खावर्त्तो भगो यस्याः सा गर्भमिह नेच्छति । चिपिटः कर्पराकारः किङ्करीपददो भगः । वंशवेतसपत्राभो गजरोमोच्चनासिकः । विकटः कुटिलाकारो लम्बगल्लस्तथा शुभः । भगस्य भालं जघनं विस्तीर्णं तुङ्गमांसलम् । मृदुलं मृदुलोमाढ्यं दक्षिणावर्त्तमीलितम् । वामावर्त्तं च निर्मांसं भुग्नं वैधव्यसूचकम् । सङ्कटस्फुटं रूक्षं जघनं दुःखदं सदा । वस्तिः प्रशस्ता विपुला मृद्वी स्तोकसमुन्नता । लोमशा च शिराला च रेखाङ्का नैव शोभना । गम्भीरा दक्षिणावर्त्ता नाभी स्यात् सुखसम्पदे । वामावर्त्ता समुत्ताना व्यक्तग्रन्थिर्न शोभना । सूते सुतान् बहून्नारी पृथुकुक्षिः सुखास्पदम् । क्षितीशं जनयेत् पुत्रं मण्डूकाभेन कुक्षिणा । उन्नतेन वलीभाजा सावर्त्तेनापि कुक्षिणा । बन्ध्या प्रव्रजिता दासी

क्रमाद्योषा भवेदिह । समैः समांसैर्मृदुभिर्योषिन्निम्नास्थिभिः शुभैः । पार्श्वैः सौभाग्यसुखयोर्निधानं स्यादसंशयम् । यस्या दृश्यसिरे पार्श्वे उन्नते रोमसंयुते । निरपत्या च दुःशीला सा भवेद्दुःखशेवधिः । उदरेणातितुच्छेन विसिरेण मृदुत्वचा । योषिद्भवति भोग्याढ्या नित्यमिष्टान्नसेविनी । कुम्भाकारं दरिद्रायाः जठरं च मृदङ्गवत् । कुष्माण्डाभं यवाभं च दुःपूरं जायते स्त्रियाः । सुविशालोदरी नारी निरपत्या च दुर्भगा । प्रलम्बजठरा हन्ति श्वशुरं चापि देवरम् । मध्यक्षामा च सुभगाभोगाढ्या सवलित्रया । ऋज्वी तन्वी च रोमाली यस्याः सा नर्मशर्मभूः । कपिला जटिला स्थूला व्युच्छिन्ना रोमराजिका । वैरवैधव्यदौर्भाग्यं विदध्यादिह योषिताम् । निर्लोम हृदयं यस्याः समं निम्नत्ववर्जितम् । ऐश्वर्यं चाप्यवैधव्यं प्रियप्रेम च सा लभेत् । विस्तीर्णहृदया योषा पुंश्चली निर्दया तथा । उद्भिन्नरोमहृदया पतिं हन्ति विनिश्चितम् । अष्टादशाङ्गुलततमुरःपीवरमुन्नतम् । सुखाय, दुःखाय भवेद्रोमशं विषमं पृथु । घनौ वृत्तौ दृढौ पीनौ समौ शस्तौ पयोधरौ । स्थूलाग्रौ विरलौ शुष्कौ वामोरूणां न शर्मदौ । दक्षिणोन्नतवक्षोजा पुत्रिणीष्वग्रणीर्मता । वामोन्नतकुचा सूते कन्यां सौभाग्यसुन्दरीम् । अरघट्टघटीतुल्यौ कुचौ दौःशील्यसूचकौ । पीवरास्यौ सान्तरालौ पृथूपान्तौ न शोभनौ । मूलेस्थूलौ क्रमकृशावग्रे तीक्ष्णौ पयोधरौ । सुखदौ पूर्वकाले तु पश्चादत्यन्तदुःखदौ । सुदृश्यं चूचुकयुगं शस्तं श्यामं सुवर्त्तुलम् । अन्तर्मग्नं च दीर्घं च कृशं क्लेशाय जायते । पीवराभ्यां च बाहुभ्यां धनधान्यनिधिर्वधूः । स्थूलास्थिभ्यां च निम्नाभ्यां विषमाभ्यां दरिद्रिणी । अवक्रावनतौ स्कन्धावदीर्घावकृशौ शुभौ । वक्रास्थूलौ च रोमाढ्यौ प्रेष्यवैधव्यसूचकौ । निगूढसन्धी सुस्ताङ्गौ शुभावंसौ सुसंहतौ । वैधव्यदौ समुच्चाग्रौ निर्मांसावतिदुःखदौ । कक्षे सुसूक्ष्मरोमे च तुङ्गे स्निग्धे च मांसले । शस्ते, न शस्ते गम्भीरे सिराले स्वेदमेदुरे । स्यातां दीर्घौ स्वनिर्दोषौ गूढास्थिग्रन्थिकोमलौ । विसिरौ च विरोमाणौ सरलौ हरिणीदृशाम् । वैधव्यं स्थूलरोमाणौ ह्रस्वौ दौर्भाग्यसूचकौ । परिक्लेशाय नारीणां परिदृश्यशिरोभुजौ । अम्भोजमुकुलाकारमङ्गुष्ठाङ्गुलिसम्मुखम् । हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते । मृदुमध्योन्नतं रक्तं तलं पाण्योररन्ध्रकम् । प्रशस्तं शस्तरेखाढ्यमल्परेखं शुभाश्रयम् । विधवा बहुरेखेण विरेखेण दरिद्रिणी । भिक्षुकी शुषिराढ्येन नारी करतलेन वै । विरोम विसिरं यस्याः पाणिपृष्ठं समुन्नतम् । वैधव्यहेतु रोमाढ्यं निर्मांसं स्नायुमत् त्यजेत् । व्यक्ताव्यक्ता गभीरा च स्निग्धा पूर्णा च वर्त्तुला । कररेखाङ्गनायाः स्याच्छुभा भाग्यानुसारतः । मत्स्येन सुभागा नारी स्वस्तिकेन च सुप्रजाः । पद्मेन भूपतेः पत्नी जनयेद्भूपतिं सुतम् । चक्रवर्त्तिस्त्रियाः पाणौ नन्द्यावर्त्तः प्रदक्षिणः । शङ्खातपत्रकमठा देवमातृत्वसूचकाः । तुलामानाकृती रेखा वणिक्पत्नीत्वहेतुका । गजवाजिवृषाकारा करे वामे मृगीदृशाम् । रेखाः प्रासादवज्राभा अपि तीर्थकराः शुभम् । कृषीवलस्य पत्नी स्याच्छकटेन युगेन वा । तोमराङ्कुशकोदण्डैः राजपत्नी भवेद्ध्रुवम् । अङ्गुष्ठमूलान्निर्गत्य रेखा याति कनिष्ठिकाम् । यदि सा पतिहन्त्री स्याद्दूरतस्तां त्यजेत् सुधीः । त्रिशूलासिगदाशक्तिदुन्दुभ्याकृतिरेखया । नितम्बिनी कीर्त्तिमती पादेन पृथिवीतले । कङ्कजम्बूकमण्डूककण्टकवृश्चिकभोगिनः । रासभोष्ट्रबिडालाः स्युः करस्था दुःखदाः स्त्रियाः । शुभदः सरलाङ्गुष्ठो वृत्तो वृत्तनखो मृदुः । अङ्गुल्यश्च सुपर्व्वाणो दीर्घा वृत्ताः क्रमात् कृशाः । चिपिटाश्चिपुटा रूक्षाः पृष्ठरोमयुजोऽशुभाः । अतिह्रस्वाः कृशा वक्रा विरला रोगहेतुकाः । दुःखायाङ्गुलयः स्त्रीणां बहुपर्व्वसमन्विताः । अरुणाः सशिखास्तुङ्गाः करजाः सुदृशां शुभाः । निम्ना विवर्णाः शुक्त्याभाः पीता दारिद्र्यदायकाः । नखेषु बिन्दवः श्वेताः प्रायः स्युः स्वैरिणीस्त्रियाः । पुरुषा अपि जायन्ते दुःखिनः पुष्पितैर्नखैः । अन्तर्निमग्नवंशास्थिः पृष्ठिः स्यान्मांसला शुभा । पृष्ठेन रोमयुक्तेन वैधव्यं लभते ध्रुवम् । भुग्नेन विनतेनापि ससिरेः नापि दुःखिता । ऋज्वी कृकाटिका श्रेष्ठा समांसा च समुन्नता । शुष्का सिराला लोमाढ्या विशाला कुटिलाऽशुभा । मांसलो वर्त्तुलः कण्ठः प्रशस्तश्चतुरङ्गुलः । शस्ता ग्रीवा त्रिरेखाढ्या त्वव्यक्तास्थिसुसंहता । निर्मांसा चिपिटा दीर्घा स्थपुटा न शुभप्रदा । स्थूलग्रीवा च विधवा वक्रग्रीवा च किङ्करी । वन्ध्या हि चिपिटग्रीवा ह्रस्वग्रीवा च निःसुता । चिबुकं द्व्यङ्गुलं शस्तं वृत्तं पीनं सुकोमलम् । स्थूलं द्विधा संविभक्तमायतं रोमशं त्यजेत् । हनुश्चिबुकसंलग्ना निर्लोमा सुघना शुभा । वक्रा स्थूला कृशा दीर्घा रोमशा न शुभप्रदा । शस्तौ कपोलौ वामाक्ष्याः पीनौ वृत्तौ समुन्नतौ । रोमशौ परुषौ

निम्नौ निर्मांसौ परिवर्ज्जयेत् । समं समांसं सुस्निग्धं स्वामोदं वर्त्तुलं सुखम् । जनेत्ववदनच्छायं धन्यानामिह जायते । पाटलो वर्त्तुलः स्निग्धोरेखाभूषितमध्यभूः । सीमन्तिनीनामधरो धराजानिप्रिया भवेत् । कृशः प्रलम्बः स्फुटितो रूक्षो दौर्भाग्यसूचकः । श्यावः स्थूलोऽधरोष्ठः स्याद्वैधव्यकलहप्रदः । मसृणोमत्तकाशिन्याश्चोत्तरोष्ठः सुभोगदः । किञ्चिन्मध्योन्नतोऽरोमा विपरीतो विरुद्धकृत् । गोक्षीरसन्निभाः स्निग्धा द्वात्रिंशद्दशनाः शुभाः । अधस्तादुपरिष्टाच्च समस्तोकसमन्विताः । पीताः श्यावाश्च दशनाः स्थूला दीर्घा द्विपङ्क्तयः । शुक्त्याकाराश्च विरला दुःखदौर्भाग्यकारिणः । अधस्ताद्धिकैर्दन्तैर्भर्त्तारं भक्षयेत् स्फुटम् । पतिहीना च विकटैः कुलटा विरलैर्भवेत् । जिह्वेष्टमिष्टभोक्त्री स्याच्छोणामृद्वी तथा सिता । दुःखाय मध्यसंकीर्णा पुरोभागसविस्तरा । सितया तोयमरणं श्यामया कलहप्रिया । दरिद्रिणी मांसलया लम्बयाऽभक्ष्यभक्षिणी । विशालया रसनया प्रमादातिप्रमादभाक् । स्निग्धं कोकनदाभासं प्रशस्तं तालु कोमलम् । सिते तालुनि वैधव्यं पीते प्रव्रजिता भवेत् । कृष्णेऽपत्यवियोगार्त्ता रूक्षे चौरकुटुम्बिनी । कण्ठे स्थूला सुवृत्ता च क्रमतीक्ष्णा च लोहिता । अप्रलम्बाङ्गुभा घण्टा स्थूला कृष्णा च दुःखदा । अलक्षितद्विजं किञ्चित् किञ्चित्फुल्लकपोलकम् । स्मितं प्रशस्तं सुदृग्रामनिमीलितलोचनम् । समवृत्तपुटा नासा लघुच्छिद्रा शुभावहा । स्थूलाग्रा मध्यनम्रा च न प्रशस्ता समुन्नता । आकुञ्चिताग्रया च वैधव्यक्लेशदायिनी । परप्रेष्या च चिपिटा ह्रस्वा दीर्घा कलिप्रिया । दीर्घं सकृत् क्षुतं दीर्घं युगपद्द्वित्रिपिण्डितम् । ललनालोचने शस्ते रक्तान्ते कृष्णतारके । गोक्षीरवर्णविशदे सुस्निग्धे कृष्णपक्ष्मणी । उन्नताक्षीन दीर्घायुर्वृत्ताक्षी कुलटा भवेत् । मेषाक्षी महिषाक्षी च केकराक्षी न शोभना । कामग्रहिला नितरां गोपिङ्गाक्षी सुदुष्टता । पारवताक्षी दुःशीला रक्ताक्षी भर्त्तृघातिनी । कोटरानयना दुष्टा गजनेत्रा न शोभना । पुंश्चली वामकाणाक्षी बन्ध्या दक्षिणकाणिका । मधुपिङ्गलाक्षी रमणी धनधान्यसमृद्धिभाक् । पक्ष्मभिः सुघनैः स्निग्धैः कृष्णैः सूक्ष्मैः सुपुण्यभाक् । कपिलैर्विरलैः स्थूलैर्निन्द्या भवति भाविनी । भ्रुवौ सुवर्त्तुले तन्व्यौ स्निग्धे कृष्णे सुसंहते । प्रशस्ते मृदुरोमाणौ सुभ्रुवः कार्मुकाकृती । खररोमा च पृथुला विकीर्णा सरला स्त्रियाः । न भ्रूः प्रशस्ता मिलिता दीर्घलोमा च पिङ्गला । लम्बकर्णौ शुभावर्त्तौ सुखदौ च शुभप्रदौ । शष्कुलीरहितौ निन्द्यौ सिरालौ कुटिलौ कृशौ । भालः सिराविरहितो निर्लोमार्द्धेन्दुसन्निभः । अनिम्नस्त्र्यङ्गुलोनार्य्याः सौभाग्यारोग्यकारणम् । व्यक्तस्वस्तिकरेखञ्च ललाटं राज्यसम्पदे । प्रलम्बमलिकं यस्या देवरं हन्ति सा ध्रुवम् । रोमशेन सिरालेन प्रांशुला रोगिणी मता । सीमन्तः सरलः शस्तोमौलिः शस्तः समुन्नतः । गजकुम्भनिभो वृत्तः सौभाग्यैश्वर्य्यसूचकः । स्थूलमूर्द्धा च विधवा दीर्घशीर्षा च बन्धकी । विशालेनापि शिरसा भवेद्दौर्भाग्यभाजनम् । केशा अलिकुलच्छायाः सूक्ष्माः स्निग्धाः सुकोमलाः । किञ्चिदाकुञ्चिताग्राश्च कुटिला अतिशोभनाः । परुषाः स्फुटिताग्राश्च विरलाश्च शिरोरुहाः । पिङ्गलालघवोरूक्षा दुःखदारिद्र्यबन्धदाः । तिलकं लाञ्छनं वापि हृदि सौभाग्यकारणम् । यस्या दक्षिणवक्षोजे शोणे तिलकलाञ्छने । कन्याचतुष्टयं सूते सूते सा च सुतत्रयम् । भ्रुवोरन्तर्ललाटे वा मसकोराज्यसूचकः । वामे कपोले मसकः शोणोमिष्टान्नदः स्त्रियाः । तिलकं लाञ्छनं शोणं यस्या वामकुचे भवेत् । एकं पुत्रं प्रसूयादौ ततः सा विधवा भवेत् । गुह्यस्य दक्षिणे भागे तिलकं यदि योषितः । तदा क्षितिपतेः पत्नी सूते वा क्षितिपं सुतम् । नासाग्रे मसकः शोणो महिष्या एव जायते । कृष्णः स एव भर्त्तृघ्न्याः पुंश्चल्याश्च प्रकीर्त्तितः । नाभेरधस्तात् तिलकं मसको लाञ्छनं शुभम् । मसकस्तिलकश्चिह्नं गुल्फदेशे दरिद्रकृत् । करेकर्णे कपोले वा कण्ठे वामे भवेद् यदि । एषां त्रयाणामेकन्तु प्राग्गर्भे पुत्रदं भवेत् । भालगेन त्रिशूलेन निर्म्मितेन स्वयम्भुवा । नितम्बिनी सहस्राणां स्वामित्वं योषिदाप्नुयात् । सुप्ता परस्परं या तु दन्तान् कटकटायते । सुलक्ष्मापि न सा शस्ता यत् किञ्चित् प्रलपेत् तथा । पाणौ प्रदक्षिणावर्त्तौ धर्म्म्यौ वामो न शोभनः । नाभौ श्रुतावुरसि वा दक्षिणावर्त्त ईरितः । सुखाय दक्षिणावर्त्तः पृष्ठवंशस्य दक्षिणे । अन्तःपृष्ठे नाभिसमो दृढायुःपुत्रवर्द्धनः । राजपत्न्याः प्रदृश्येत भगमौलौ प्रदक्षिणः । स चेच्च कटिभागे स्याद्बह्वपत्यसुखप्रदः । कटितोगुह्यवेधेन प्रत्यपत्यनिपातनः । स्यातामुदरवेधेन पृष्ठावर्त्तौ न शोभनौ । एकेन हन्ति भर्त्तारं भवेदन्येन पुंश्चली । कण्ठगो दक्षिणावर्त्तौ दुःखवैधव्यहेतुकः । सीमन्तेऽथ

ललाटे वा त्याज्यौ दूरात् प्रयत्नतः । सा पतिं हन्ति वर्षेण यस्या मध्ये कृकाटिकम् । प्रदक्षिणो वा वामो वा रोमणामावर्त्तकः स्त्रियाः । एको वा मूर्द्धनि द्वौ वा वामे वामगतौ अपि । आदशाहं पतिघ्नौ तौ त्याज्यौ दूरात् सुबुद्धिना । कक्ष्यावर्त्ता च कुलटा नाभ्यावर्त्ता पतिव्रता । पृष्ठावर्त्ता च भर्त्तृघ्नी कुलटा वाऽथ जायते" । अथ कन्यायाः समयविशेषे जन्मवशात् विषकन्यात्व दोषः यथाह जातकालङ्कारे । "भौजङ्गे ६ कृत्तिकायां शतभिषजि तथा सूर्य्यमन्दारवारे भद्रासंज्ञे तिथौ या ननु जननमियात् सा कुमारी विषाख्या । लग्नस्थौ सौम्यखेटावशुभगगनगश्चैकस्तस्ते ततो द्वौ वैरिक्षेत्रानुयातौ यदि जनुषि तदा सा हि कन्या विषाख्या । मन्दाश्लेषाद्वितीया यदि तदनु कुजे सप्तमी वारुणर्क्षे २४ द्वादश्यां वा द्विदैवे १६ दिनमणि दिवसे यज्जनिः सा विषाख्या । धर्मस्थो भूमिसूनुस्तनुसदनगतः सूर्य्यसूनुस्तदानीं मार्त्तण्डः सूनुयातो यदि जनिसमये सा कुमारी विषाख्या । लग्नादिन्दोः शुभो वा मदनगृहपतिर्द्यूनयायी विषाख्यं दोषं चैवानपत्यं तदनु च नियतं हन्ति वैधव्यदोषम्" । अन्योऽपि वैधव्यादियोगोऽन्यत्रोक्तः यथा होरागमरत्ने "त्यक्ता धवेनोष्णकरेऽस्तसंस्थे बाल्येऽपि भौमे विधवा प्रदिष्टा । पापग्रहालोकनवर्गयाते कन्यैव बन्ध्या भवतीति सूता । वैधव्यं क्रूरखेटैर्मदनगृहगतैर्मिश्रितैः स्यात् पुनर्भूः पापैस्तैर्वीर्य्ययुक्तैर्भवति परिहृता प्रेयसा सौम्यदृष्टे । अन्योन्यांशस्थयोश्च क्षितिसुतसितयोर्बन्धकी योषिदुक्ता चन्द्रोर्व्वीसूनुशुक्रा यदि मदनगृहे प्रेयसोऽनुज्ञया सेति" "लग्ने व्यये च पाताले इत्यादि" प्रागुक्तम् । एवमन्येऽपि वैधव्यादियोगा आकरे दृश्याः । मु० चि० तत्परिहाराय विधिरुक्तः यथा "जन्मोत्थं च विलोक्य बालविधवायोगं विधाय व्रतं सावित्र्या उत पैप्पलं हि सुतया दद्यादिमां वा रहः । सल्लग्नेऽच्युतमूर्त्तिपिप्पलघटैः कृत्वा विवाहं, स्फुटं दद्यात्तां चिरजीविनेऽत्र न भवेद्दोषः पुनर्भूभवः" संहितासारे "अवैधव्यकरैर्योगैर्विवाहपटलोदितैः । वरायायुष्मते देया. कन्या वैधव्ययोगजा" ज्ञानभास्करे "बलवद्विधवायोगे बाल्ये सति कन्यकानाम् । पिता रहसि कुर्वीत तद्भङ्गं शास्त्रसम्मतम्" मार्क० पु० "बालवैधव्ययोगेऽपि कुम्भद्रुप्रतिमादिभिः । कृत्वा लग्नं रहः पश्चात् कन्योद्वाह्येति चापरे" । तत्र सावित्रीपिप्पलादिव्रतविष्णुप्रतिमादिविवाहप्रयोगादयश्च पी० धा० विधानपारिजातादौ च दृश्याः ।

**उपयमन** न० उप+यम—ल्युट् । १विवाहे २संयमने ३वह्नेरधःस्थापने च । करणे ल्युट् । ४संयमनसाधने कुशादौ ।

**उपयमनी** उपयम्यते कर्म्मणि ल्युट् । अग्न्याधानाङ्गे सिकतादौ "उपयमनीरुपकल्पयन्ति" शत० ब्रा० २,५,२,१ । "उप अग्नेरधस्तात् यच्छन्ति इत्युपयमन्यः सिकताः" भा० । "उपयमनीरुपनिवपति" कात्या० ५,४,२० । "आहवनीयस्योपयमनीष्वाग्नीध्रीयस्याधोपाङ्गने च" ८,६,२,

**उपयष्टृ** पु० उप—यज—तृच् । षोडशसु ऋत्विक्षु मध्ये प्रतिप्रस्थाताख्ये ऋत्विग्भेदे । "मनोमे हार्दि यच्छेति ततोहोपयष्टारमं नानुप्रहर्त्तव्याह" शत० ब्रा० ३,८,५,५ ।

**उपयाचक** त्रि० उपगम्य याचकः उप+याच—ण्वुल् । समीपे आगम्य याच्ञाकर्त्तरि ।

**उपयाचन** न० उपगम्य याचनम् । देवादिसमीपे अभीष्टाप्रार्थने ।

**उपयाचित** त्रि० उपयाच्यतेऽनेन या० करणे क्तच् । अभीष्टसिद्धये देवेभ्योदेये पश्वादौ । "उपयाचितदानेन यतो देवा अभीष्टदाः" पञ्चत० । कर्म्मणि क्त । २उपगम्य प्रार्थिते च । भावे क्त । ३उपगम्ययाचने न० "उपयाचिताय हितम् कन् । स्वेष्टसिद्ध्यर्थं देवेभ्योदीयमाने पश्वादौ । "सिद्धायतनानि कृतविविधदेवतोपयाचितकानि" काद० ।

**उपयाज** च० उप+यज—घञ् यज्ञाङ्गत्वात् प्रयाजादिवत् न कुत्वम् । उपयजि एकादशप्रभेदे, यागाङ्गे यागभेदे । २काश्यपगोत्रे ऋषिभेदे । "तथैव च महाभागः सोऽपश्यच्छंसितव्रतौ । याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ परमेष्ठिनौ । संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ । तारणेयौ वीर्य्ययुक्तौ ब्राह्मणावृषिसत्तमौ" भा० आ० १६७ अ० । "ताभ्यामेव याजनेन द्रुपदेन पुत्रयोःप्राप्तिः "पुत्रार्थमयजद्राजा वधाय मम भारत! । याजोपयाजतपसा पुत्रं लेभे स पावकात् । धृष्टद्युम्नं द्रौपदीञ्च वेदिमध्यादनिन्दिताम्" भा० शा० ७८ अ० ।

**उपयात** पु० त्रि० उप+या—कर्त्तरि क्त । समीपागते । "उपयातायार्घ्यमिति कोहनीया" गोभि० । "उपयाताय आचार्य्यसमीपमागताय" स० त० रघुनन्दनः ।

**उपयान** न० उप+या—ल्युट् । उपसर्पणे । "हरोपयाने त्वरिता बभूव" कुमा० ।

**उपयाम** पु० उपयाम्यत्यनेन उप+यम—णिच्—अच् । १यज्ञाङ्गे

यज्ञरूपे पात्रभेदे। "उपयामगृहीतोऽसि" यजु० ७, ४,११,२०। उपचारात् २तद्गृहे च। "वातं प्राणेनापानेन नासिके, उपयाममधरेण" यजु० २५,२। उप+यम–घञ् वा वृद्धिः। २विवाहे। "यर्हि भवेदुपयामस्तर्हि सतो खलु कन्या" मु०चि०। बला० अस्त्यर्थे वा मतुप्। उपयामवत् तद्विशिष्टे त्रि०। पक्षे इनि उपयामिन् तत्रैव उभयत्र स्त्रियां ङीप्।

**उपयुक्त** त्रि० उप+युज–क्त। १न्याय्ये, २रचिते, ३भुक्ते च।

**उपयोग** पु० उप+युज–घञ्। १आचरणे २भोजने, "पर्य्यागते मदनफलमज्जवदुपयोगः" सुश्रुतः। ३इष्टसिद्धिसाधने व्यापारे आनुकूल्ये च। "अथवा कार्य्यनिर्वृतेरुपयोगो यथाक्रमम्" सुश्रु० "अनङ्गलेखक्रिययोपयोगम्" कुमा०।

**उपयोगिन्** त्रि० उप+युज–घिणुन्। १इष्टसाधनायानुकूले २उपयुक्ते च। "तदुपयोगीनि शारीरकसूत्रादीनि" वेदा० सा०। स्त्रियां ङीप्। तस्य भावः तल् उपयोगिता स्त्री त्व उपयोगित्व न० आनुकूल्ये।

**उपर** त्रि० वप–करन्। १उप्ते स्थापिते "दिवरज उपरमस्तभायः, "उपह्वरे यदुपराः अपिन्वन्" ऋ० १,६२,५,६। "उपरा उप्ताःस्थापिताः" भा०। "त्रिधोभूमीरुपरा षड्विधानाः" ऋ० ७,८७,५। उप+रम–श० आधारे ड। २उपरमाधारे। "ते नः पूर्व्वास उपरास इन्दवः" ऋ० ६,७७,२, "उपरासः उपराः उपरता यत्रेत्युपराः" भा०। कर्त्तरि ड। ३उपरते "पुरः सतोऽपरा एतशे कः" ऋ०५,२९,५ "उपरा उपरताः" भा०। उपरि जन्मसमयत्वेनास्त्यस्य अर्श आ० अच्। उपरिकालोत्पन्ने। "ये पूर्व्वासोय उपरास ईयुः" १०,१५,२, "उपरासः यजमानजन्मन उपर्य्युत्पन्नाः" भा०। उभयोरैक्यात्। ४उपले प्रस्तरे च।

**उपरक्त** पु० उप+रन्ज–क्त। १राहुग्रस्ते चन्द्रे सूर्य्ये च। २व्यसनेष्वासक्ते, ३रञ्जनद्रव्येण रक्ते ४उपाधिसान्निध्यादुपाधिगुणवत्तया प्रतीते च।

**उपरक्ष** पु० उप+रक्ष–ण्वुल्। समीपस्थिता रक्षके सैन्यादौ (वाड़िगार्ड)। [ (पहारा)।

**उपरक्षण** न० उप+रक्ष–ल्युट्। रक्षार्थं सैन्यादिस्थापने

**उपरत** त्रि० उप+रम–क्त। १विरते, २निवृत्ते, ३मृते, "पितर्य्युपरते पुत्राविभजेयुर्धनं पितुः" दा० स्मृ०। "पितर्य्युपरतस्पृहे" या० स्मृ०। "सत्यपि जीवने निवृत्तस्वल्पकामे इत्यर्थः। ५उपरतियुक्ते "शान्तोदान्त उपरतस्तितिक्षुः श्रद्धावान् समाहितो भूत्वात्मन्यात्मानमवलोकयेत्" श्रुतिः।

**उपरताति** स्त्री ताय–कर्मणि क्तिन्। ३त० लस्य वा रः। १युद्धे "अर्य्यं उपरताति वन्वन्" ऋ०७,४८,३। "उपरैरूपलैः पाषाणतुल्यैः शरैस्तायते विस्तीर्य्यते उपरताति युद्धम्" भा०। सप्तम्या लुक्। २उपलरूपकरकाद्याद्यो अन्तरिक्षे च। "स्वरन्ति ता उपरताति" ऋ०१०,५१,५। उपरताति मेघकरकाच्छाद्ये अन्तरिक्षे सप्तम्या लुक्।

**उपरति** स्त्री उप+रम–क्तिन्। १विरतौ, २मृतौ ३लब्ध प्राप्तावौदासीन्ये विषयेभ्य इन्द्रियाणां ४निवारणे, ५विहितकर्मणाम् विधानतस्त्यागरूपे संन्यासे "पुमर्थः कर्मणा नेति धीर्या सोपरतिर्भवेत्" इत्युक्तरूपायां ६बुद्धौ च। सेयमुपरतिर्ब्रह्मविचाराङ्गसाधनचतुष्टयान्तर्गतसाधनविशेषः तानि च साधनानि विवेकचूड़ामणौ शङ्कराचार्येण दर्शितानि यथा "साधनान्यत्र चत्वारि कथितानि मनीषिभिः। येषु सत्स्वेव सन्निष्ठा यदभावे न सिद्ध्यति। आदौ नित्यानित्यवस्तुविवेकः परिगण्यते। इहामुत्र फलभोगविरागस्तदनन्तरम्। शमादिषट्कसम्पत्तिर्मुमुक्षुत्वमिति स्फुटम्। ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः। सोऽयं नित्यानित्यवस्तुविवेकः समुदाहृतः। तद्वैराग्यं जिहासा या दर्शनश्रवणादिभिः। देहादिब्रह्मपर्य्यन्ते ह्यनित्ये भोग्यवस्तुनि। स्वलक्ष्ये नियतावस्था मनसः शम उच्यते। विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके। उभयेषामिन्द्रियाणां स दमः परिकीर्त्तितः। बाह्यानालम्बनं वृत्तेरेषोपरतिरुत्तमा। सहनं सर्व्वदुःखानामप्रतीकारपूर्व्वकम्। चिन्ताविलापरहितं सा तितिक्षा निगद्यते। शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यवधारणम्। सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते। सर्व्वदा स्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्व्वदा। तत्समाधानमित्युक्तं न तु चित्तस्य लालनम्। अहङ्कारादिदेहान्तान् बन्धानज्ञानकल्पितान्। स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता। मन्दमध्यमरूपापि वैराग्येण, शमादिना, प्रसादेन गुरोः, सेयं प्रवृद्धा सूयते फलम्। वैराग्यञ्च मुमुक्षुत्वं तीव्रं यस्य तु विद्यते। तस्मिन्नेवार्थवन्तः स्युः फलवन्तः शमादयः। एतयोर्मन्दता यत्र विरक्तत्वमुमुक्षयोः। मरौ सलिलवत् तत्र शमादेर्भानमात्रता। मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी। स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते। स्वात्मतत्त्वानुसन्धानं भक्तिरित्यपरे जगुः। उक्तसाधनसम्पन्न-

स्तत्त्वजिज्ञासुरात्मनः । उपसीदेत् गुरुं प्राज्ञं यतो बन्धविमोक्षणम्”

**उपरञ्जक** त्रि० उप+रन्ज–णिच्–ण्वुल् । १उपरागकारके । “न बाह्यान्तरयोरुपरञ्ज्योपरञ्जकभावोऽपि देशव्यवधानात्” सां० सू० । [रागाश्रयतया करणीये ।

**उपरञ्ज्य** त्रि० उ+रन्ज–णिच्–यत् । उपरञ्जनीये उप·

**उपरत्न** न० उपमितं रत्नेन अवा० त० । मणिसदृशेषु काचादिषु ‘उपरत्नानि काचश्च कर्पूरोऽश्मा तथैव च । मुक्ता शुक्तिस्तथा शङ्ख इत्यादीनि बहून्यपि । गुणा यथैव रत्नानामुपरत्नेषु ते तथा । किन्तु किञ्चित्ततोहीना विशेषोऽयमुदाहृतः” भा० प्र० ।

**उपरम** पु० उप+रम–घञ् अवृद्धिः । १विषयवैराग्ये, २निवृत्तौ च ।“तथैव फेनोपरमे कल्कद्रव्यं नियोजयेत्”वैद्य० “सन्धिगतेऽस्थिवच्चेष्टोपरमश्च” सुश्रु० । “द्विमासोपरमे काले व्यतीते प्लवगास्ततः” भा० व० २८१अ० । भावे ल्युट् उपरमण । उपरतौ न० ।

**उपरव** पु० उप+रु–आधारे घञ् । सोमाभिषवाङ्गे गर्त्ताकारे देशभेदे । तत्करणप्रकारश्च” शत० ब्रा० ३,५,४,१–१२ उक्तः यथा“इयं वा अभ्युपरवाः खायन्ते । शिरो वै यज्ञस्य हविर्धानं तस्य इमे शीर्षंश्चत्वारः कूपा इमावह द्वाविमौ द्वौ तानेवैतत् करोति तस्मादुपरवान् खनति । देवाश्च वा असुराश्च उभये प्राजापत्याः पस्पृधिरे । ततोऽसुरा एषु लोकेषु कृत्यां वलगान्निचख्नुरेतयैव चिद्देवानभिभवेमेति । तद्वै देवा अस्पृण्वत । त एतैः कृत्यां वलगानुदखनन् यदा वै कृत्यामुत्खनन्त्यथ सालसा मोघा भवति तथो एवैष एतद्यद्यस्मा अत्र कश्चिद्द्विषन् भ्रातृव्यः कृत्यां वलगान्निखनति तानेवैतदुदुषकिरति तस्मादुपरवान् खनति सदक्षिणस्य हविर्धानस्याधोऽधः प्रउगं खनति । सोऽभ्रिमादत्ते “देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्य्यसीति” समान एतस्य यजुषो बन्धुर्योषो वा एषा यदभ्रिस्तस्मादाह नार्यसीति । तान् प्रादेशमात्रं विना परिलिखति । इदमहं रक्षसां ग्रीवा अपिकृन्तामीति वज्रो वा अभ्रिर्वज्रेणैवैतन्नाष्ट्राणां रक्षसां ग्रीवा अपिकृन्तति । तद्यावेतौ पूर्वौ तयोर्दक्षिणमेवाग्रे परिलिखेदथापरयोरुत्तरमथापरयोर्दक्षिणमथ पूर्व्वयोरुत्तरम् । अथो इतरथाहुः अपरयोरेवाग्र उत्तरं परिलिखेदथ पूर्वयोर्दक्षिणमथापरयोर्दक्षिणमथ पूर्वयोरुत्तरमित्यथो अपि समीच एव परिलिखेदेतं त्वेवोत्तमं परिलिखेद्य एष पूर्वयोरुत्तरो भवति तान् यथापरिलिखितमेव यथापूर्वं खनति । इहन्नसि इहद्वा इत्युपसौत्येवैनानेतन्म हयत्येव यदाह इहन्नसि इहद्वा इति इहतीमिन्द्राय वाचं वदेतीन्द्रो वै यज्ञस्य देवता वैष्णवं हविर्धानं तत् सेन्द्रं करोति तस्मादाह इहतीमिन्द्राय वाचं वदेति रक्षोहणं वलगहनमिति रक्षसां ह्येते वलगानां वधाय खायन्ते वैष्णवीमिति वैष्णवी हि हविर्धाने वाक्, तान् यथाखातमेवोत्किरति । इदमहं तं वलगमुत्किरामि यं मे निष्ट्योयममात्यो निचखानेति निष्ट्योवा अमात्यो वा कृत्यां वलगान्निखनति तानेवैदुत्किरति इदमहं तं वलगमुत्किरामि । यं मे समानो यमसमानो निचखानेति समानोवा असमानो वा कृत्यां वलगान्निखनति तानेवैतदुत्किरति । इदमहं तं वलगमुत्किरामि । यं मे सबन्धुर्यमसबन्धुर्निचखानेति सबन्धुर्वा असबन्धुर्वा कृत्यां वलगान्निखनति तानेवैतदुत्किरति । इदमहं तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखानेति सजातोवा असजातोवा कृत्यां वलगान्निखनति तानेवैतदुत्किरत्युत्कृत्यां किरामीत्यन्तत उद्वपति तत्कृत्यामुत्किरति तान्बाहुमात्रान् खनेत् । अन्तो वा एषोऽन्तेनैवैतत् कृत्यां मोहयति तानक्ष्णया संतृन्दन्ति यद्यक्ष्णया न शक्नुयादपि समीचस्तस्मादिमे प्राणाः परः संतृण्णाः तान् यथाखातमेवावमर्शयति” “सोमाभिषवायोपरवाणां खननं विवक्षुः खननस्योभयार्थतामाह इममिति । कर्णच्छिद्रे द्वे नासिकाच्छिद्रे द्वे । द्वेष्यवधार्थं भूमौ स्थापिताः कृत्याविशेषा वलगाः । अस्पृण्वतः हिंसितवन्तः । मधेय मध्ये प्रादेशमात्रान्तरालं विहाय समचतुरस्रे खननप्रदेशे चतुरोऽवटान् प्रादेशमात्रान् परिलिखेत् खननमपि परिलेखनक्रमेण कर्त्तव्यम् । खातायाम्दद उद्वपनेऽपि खननक्रम एव । अङ्गुलिप्रादेशाद्यपेक्षया बाहुप्रमाणस्यान्तत्वम् ततोऽधिकात् प्रदेशात् म्दुद्धरणस्याशक्यत्वाद्वाहुमात्रस्यान्तत्वम् तानक्ष्णया संतृन्दन्ति पूर्वयोर्दक्षिणस्यापरयोरुत्तरस्य चान्तरालदेशम् । अन्तःप्रदेशनिम्नोन्नतत्वपरिहाराय संमृशेत् संमृशेते परस्परहस्तसंस्पर्शं कुर्य्याताम्” । भा० “उत्तरपूर्व्वं जुहोत्युपरवे” कात्या० २५,१२,१०, “उपरवदेशात् स्तम्बयजुर्हरति” ८,२,१२,

**उपरस** पु० उपमितोरसेन अवा० त० । पारदतुल्येषु गन्धकादिषु ।

"गन्धोहिङ्गुलमभ्रतालकशिलास्रोतोऽञ्जनं टङ्कणं राजावर्त्तकचुम्बकौ स्फटिकः शङ्खः खटी गैरिकम्। कासीसं रसकं कपर्द्दसिकताबोलाश्च कङ्कुष्ठकं सौराष्ट्री च मता अमी उपरसाः सूतस्य किञ्चिद्गुणैः" भा०प्र०। अथैषां शोधनविधिः "सूर्य्यावर्त्तो वज्रकन्दः कदली देवदालिका। शिग्रुः कोषातकी वन्ध्या काकमाची च वारुणम्। एषामेकरसेनैव त्रिक्षारैर्लवणैः सह। भावयेदम्लवर्गैश्च दिनमेकं प्रयत्नतः। ततः पचेच्च तद्द्रावैर्दोलायन्त्रे दिनं सुधीः। एवं शुद्ध्यन्ति ते सर्वे प्रोक्ता उपरसा हि ये"। विशेषश्च। "कङ्कुष्ठं गैरिकं शङ्खः कासीसं टङ्कणं तथा। नीलाञ्जनं शुक्तिभेदाः क्षुल्लका सवराटिकाः। जम्बीरवारिणा स्विन्नाः क्षालिताः कोष्णवारिणा। नित्यमायान्त्यमी योज्याभिषग्भिर्योगसिद्धये" भावप्रकाशः।

**उपराग** पु० उप+रन्ज–घञ्। १समीपस्थितस्य स्वनिष्ठगुणादेरन्यत्रारोपे, यथा स्फटिकसान्निकस्थितजवादिगतलौहित्यं स्फटिके आरोप्यते" स चारोप उपाधिकृतत्वादौपाधिकः अमुमुपरागमाश्रित्यैव सांख्यादयः वेदान्तिनश्च बुद्धिगतकर्त्तृत्वादेः पुरुषे, पुरुषगतचैतन्यस्य च बुद्धौ औपाधिकत्वं कल्पयन्ति "उपरागात् कर्त्तृत्वं चित्सान्निध्यात्" सां०सू० "पुरुषस्य यत् कर्त्तृत्वं तद्बुद्ध्युपरागात् बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात् एतदुभयं न वास्तवं यथाऽग्न्ययसोः परस्परसंयोगविशेषात् परस्परधर्मव्यवहार औपाधिकः यथा च जलसूर्य्ययोः संयोगात् परस्परधर्मारोपस्तथैव बुद्धिपुरुषयोः" प्र० भा० "तद्गुणसारत्वात्" शा०सू० "बुद्धेर्गुणैनैव आत्मनोगुणवत्त्वारोप इति समर्थितम्"। बौद्धा अपि बाह्योपरागात् ज्ञानस्य तत्तदाकारता भवतीति मन्यन्ते तत्सर्वं तत्तन्मतावसरे वक्ष्यते अनेनैवोपरागेण बाह्यान्तरयोरुपरञ्ज्योपरञ्जकभावः। २सतोगुणान्तराधानरूपे वासनारूपे संस्कारे "नानादिविषयोपरागनिमित्ततोऽप्यस्य" सां०सू० "अस्यात्मनः प्रवाहरूपेणानादिर्या विषयवासना न ततोबन्धः" प्र०भा०। ३रविचन्द्रयोर्ग्रहणे तत्रापि छादकसान्निध्यात् चन्द्रार्कयोस्तद्रूपारोप एवेति तस्य तथात्वम्। ग्रहणञ्च राहुधिष्ठितभूमिच्छायया चन्द्रस्य, तदधिष्ठितचन्द्रमण्डलेन च रवेर्मण्डलस्य छादनमिति सिद्धान्ते स्थितम्। तत्र सि०शि० ग्रहणं कथं? भवेदित्येतन्निरूपितं यथा "पश्चाद्भागाज्जलदवदधः संस्थितोऽभ्येत्य चन्द्रो भानोर्बिम्बं स्फुरदसिततया छादयत्यात्ममूर्त्या। पश्चात् स्पर्शो हरिदिशि ततो मुक्तिरस्यात एव क्वापि च्छन्नः क्वचिदपिहितो नैष कक्षान्तरत्वात्" शि०। "अर्कादधश्चन्द्रकक्षा। यथा मेघोऽधःस्थः पश्चाद्भागादागत्य रविं छादयति एवं चन्द्रोऽपि शीघ्रत्वात् पश्चाद्भागादागत्य रविं छादयति। ततः पश्चात् स्पर्शः। निःसरति चन्द्रे पूर्व्वतो मोक्षो रवेः। अत एव कक्षाभेदात् क्वचिदर्कश्छन्नो दृश्यते क्वचिदेष न छन्नः। यथाधःस्थे मेघे कैश्चिद्रविर्न दृश्यते कैश्चिद्दृश्यते प्रदेशान्तरस्थैः। इदानीं नतिलम्बयोः कारणमाह" प्रमि०। "पर्वान्तेऽर्कं नतमुडुपतिश्छन्नमेव प्रपश्येत् भूमध्यस्थो न तु वसुमतीपृष्ठनिष्ठस्तदानीम्। तद्दृक्सूत्राद्धिमरुचिरधोलम्बितोऽर्कग्रहेऽतः कक्षाभेदादिह खलु नतिर्लम्बनं चोपपन्नम्। समकलकाले भूभा लगति मृगाङ्के नतस्तया म्लानम्। सर्वे पश्यन्ति समं समकक्षत्वान्न लम्बनावनती। पूर्वाभिमुखो गच्छन् कुच्छायान्तर्यतः शशी विशति। तेन प्राक् प्रग्रहणं पश्चान्मोक्षोऽस्य निःसरतः। भानोर्बिम्बपृथुत्वादपृथुपृथिव्याः प्रभा हि सूच्यग्रा। दीर्घतया शशिकक्षामतीत्य दूरं बहिर्याता। अनुपातात् तद्दैर्घ्यं शशिकक्षायां च तद्बिम्बम्। भूमेन्दोरन्यदिशि व्यस्तः क्षेपः शशिग्रहे तस्मात्" शि०। "दर्शान्तकाले रविं पूर्वतः पश्चिमतो वा नतं चन्द्रेण च्छन्नमेव पश्यति भूमध्यस्थो द्रष्टा, यतो दर्शान्ते समौ भवतः। यो भूपृष्ठस्थो द्रष्टा स तदार्कं छन्नं न पश्यति। यतस्तद्दृष्टिसूत्राच्चन्द्रोऽधो लम्बितो भवति। अतः कक्षाभेदाल्लम्बनं नतिश्चोपपद्यते। चन्द्रग्रहे तु लम्बननत्योरभावः। यतः समकलकाले भूभा चन्द्रे लगति। तया छन्नं सर्वे विदेशान्तरस्था अपि नतमपि तं चन्द्रं समं पश्यन्ति। यतस्तत्र छाद्यच्छादकयोरेकैव कक्षा याता। तथा भूभा तावत् पूर्व्वाभिमुखमर्कगत्या गच्छति। चन्द्रश्च स्वगत्या। स शीघ्रत्वात् पूर्व्वाभिमुखो गच्छन् भूभां प्रविशति। तेन तत्र प्राक् स्पर्शः। भूभाया निःसरतः पश्चान्मुक्तिः। भानोर्बिम्बं विपुलं पृथ्वी लघुः। अतो भूभा सूच्यग्रा भवति। दीर्घत्वेन चन्द्रकक्षामतीत्य दूरं गता। तद्दैर्घ्यमनुपातात् साध्यते। चन्द्रकक्षाप्रदेशे भूभा चन्द्रबिम्बं चेति सर्वं ग्रहणे प्रतिपादितमेव। (अयं स च ग्रन्थोदर्शयिष्यते) इदानीं छादकनिर्णयमाह" प्रमि०। "छादकः पृथुतरस्ततो विधोरर्द्धखण्डिततनोर्विषाणयोः। कुण्ठता च महती स्थितिर्यतो लक्ष्यते हरिणलक्ष्मग्रहे। अर्धखण्डिततनोर्विषाणयोस्तीक्ष्णता भवति तीक्ष्णदीधितेः। स्यात् स्थितिर्लघुरतो

लघुः पृथक् छादको दिनकृतोऽवगम्यते। दिग्देशकालावरणादिभेदाच्च छादको राहुरिति ब्रुवन्ति। यन्मानिनः केवलगोलविद्यास्तत् संहितावेदपुराणबाह्यम्। राहुः कुभामण्डलगः शशाङ्कं, शशाङ्कगश्छादयतीनबिम्बम्। तमोमयः शम्भुवरप्रदानात् सर्वागमानामविरुद्धमेतत्" शि०। "अर्कच्छादकाच्चन्द्रच्छादकः पृथुतरोऽवगम्यते। कुतः यतोऽर्धखण्डितस्येन्दोर्विषाणयोः कुण्ठता दृश्यते स्थितिश्च महती। अर्कस्य पुनरर्धखण्डितस्य तीक्ष्णता विषाणयोः। स्थितिश्च लघ्वी। एतत्कारणद्वयान्यथानुपपत्त्यार्कस्य छादकोऽल्पः। स च लघुकालः। एवं रवीन्द्वोर्न छादको राहुरिति वदन्ति। कुतः दिग्देशकालावरणादिभेदात्। एकस्य प्राक् स्पर्शः इतरस्य पश्चात्, रवेः क्वापि ग्रहणमस्ति क्वापि नास्ति। क्वापि दर्शान्तादग्रतः क्वापि पृष्ठतः। अतो राहुकृतं न ग्रहणम्। नहि बहवो राहवः एवं केचन वदन्ति। केवलगोलविद्यास्तदभिमानिनश्च। इदं संहितावेदपुराणबाह्यम्। यतः संहितासु "राहुरष्टमो ग्रहः"। "स्वर्भानुर्ह वा असुरः सूर्याचन्द्रमसौ विव्याधेति" माध्यन्दिनी श्रुतिः। "सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः। सर्वं भूमिसमं दानं राहुग्रस्ते दिवाकरे" इत्यादिपुराणवाक्यानि। अतोऽविरुद्धमुच्यते। राहुरनियतगतिस्तमोमयो ब्रह्मवरप्रदानाद्भूभां प्रविश्य चन्द्रं, चन्द्रं प्रविश्य रविं, छादयतीति सर्वागमानामविरुद्धम्" प्रमि०। अत्र लल्लः। "ग्रहणे कमलासनानुभावाद् तद्दत्तांशभुजोऽस्य सन्निधानम्। यदतः स्मृतिवेदसंहितासु ग्रहणं राहुकृतं गतं प्रसिद्धिम्"। श्रीपतिः "भूच्छायायां प्रविष्टः स्थगयति शशिनं शुक्लपक्षावसाने राहुर्ब्रह्मप्रसादात् समधिगततरस्तत्तमोव्यासतुल्यः। अद्व्रस्यं भानुबिम्बं सलिलमयतनोरप्यधोवर्ति बिम्बं संस्थैवं च मासव्युपरतिसमये स्वस्य साहित्यहेतोः"।

ग्रहणप्रकारस्तज्ज्ञानोपायश्च सू० सि० रङ्गनाथेन दर्शितो यथा "सार्धानि षट्सहस्राणि ६५००योजनानि विवस्वतः। विष्कम्भो मण्डलस्येन्दोः सहाशीत्या चतुःशती ४८०। स्फुटस्वभुक्त्या गुणितौ मध्यभुक्त्योद्धृतौ स्फुटौ। रवेः स्वभगणाभ्यस्तः शशाङ्कभगणोद्धृतः" सू०सि०। "सूर्यस्य मण्डलस्य गोलरूपबिम्बस्य विष्कम्भो व्यासः। ६५००योजनानि, चन्द्रस्य गोलाकारबिम्बस्य ४८० योजनानि व्यासः" "व्यासस्यैव गणिते बिम्बत्वव्यवहार" र०ना०
"शशाङ्ककक्षागुणितो भाजितो वार्ककक्षया। विष्कम्भश्चन्द्रकक्षायां तिथ्याप्ता मानलिप्तिकाः" सू०सि०।
"सूर्यस्य विष्कम्भः ६५००प्रागुक्तः स्पष्टो व्यासः स्वभगणैः सूर्यभगणैरुक्तैर्गुणितश्चन्द्रभगणैर्भक्तो वाथवा चन्द्रकक्षया वक्ष्यमाणया गुणितः सूर्यकक्षया वक्ष्यमाणया भक्तश्चन्द्रकक्षायां चन्द्राधिष्ठिताकाशगोले सूर्यव्यासः स्पष्टो भवति। ततो व्यासयोजनसङ्ख्या पञ्चदशभक्ता सूर्यचन्द्रयोर्बिम्बव्यासप्रमाणकला भवन्ति। अत्रोपपत्तिः। यदा चक्रकलाभिश्चन्द्रकक्षायोजनानि तदैककलया कानीति चन्द्रकक्षास्थितैककलायां पञ्चदश योजनानि। अतश्चन्द्रस्य स्वकक्षायां स्थितत्वात् स्पष्टचन्द्रबिम्बव्यासयोजनानि पञ्चदशभक्तानि चन्द्रबिम्बव्यासकला भवन्ति। एवं सूर्यकक्षायामेका कला सार्धशतद्वययोजनैरिति स्पष्टसूर्यव्यासस्तैर्भक्तो व्यासकला भवन्ति। तत्र सूर्यस्य लोकैर्दूरान्तराच्चन्द्राकाश इव दर्शनात् प्रत्यक्षतो विनिश्चान्तरेण दर्शनाभावाच्च चन्द्रकक्षाप्रमाणेन सूर्यबिम्बव्यासः यदि सूर्यकक्षयाऽयं तदा चन्द्रकक्षया कः? इत्यनुपातेन गणितार्थमवस्तुभूतः साधितः। न तु वस्तुतश्चन्द्रकक्षायां सूर्यमण्डलावस्थानं सूर्यग्रहणे चन्द्रस्य छादकत्वानुक्तिप्रसङ्गात् अथ सूर्यस्पष्टव्यासश्चन्द्रभगणभक्तस्वकक्षारूपचन्द्रकक्षया भक्त इति स्वकक्षारूपगुणहरयोर्नाशात् सूर्यभगणगुणितश्चन्द्रभगणभक्त इति पूर्वं कक्षयोरनुक्तेरयं प्रकारो मुख्यत्वात् प्रथममुक्तस्ततश्चन्द्रकक्षासिद्धसूर्यबिम्बव्यासः पञ्चदशभक्तः सूर्यबिम्बव्यासकलाः सिद्धा इत्युपपन्नम्" रङ्ग०
"स्फुटेन्दुभुक्तिर्भूव्यासगुणिता मध्ययोद्धृता। लब्धं सूची महीव्यासस्फुटार्कश्रवणान्तरम् मध्येन्दुव्यासगुणितं मध्यार्कव्यासभाजितम्। विशोध्य लब्धं सूच्यां तु तमोलिप्तास्तु पूर्ववत्" सू०सि०।
"स्पष्टा चन्द्रस्य गतिर्भूव्यासेन गुणिता मध्यया चन्द्रगत्या भक्ता फलं सूचीसंज्ञं स्यात्। भूव्यासस्पष्टसूर्यबिम्बव्यासयोरन्तरं मध्येन चन्द्रबिम्बव्यासेन ४८० योजनेन गुणितं मध्येन सूर्यबिम्बव्यासेन ६५०० योजनेन भक्तं फलं सूच्यां प्राक्सिद्धायां न्यूनीकृत्य तुकाराच्छेषं तमः भूच्छायारूपं योजनात्मकं भाभावस्तम इति छायायास्तमस्त्वात्। अस्य कलात्मकं मानमाह। लिप्ता इति। पूर्ववत् तिथ्याप्ता मानलिप्तिका इति पूर्वोक्तेन भूच्छायायाः कलाः कार्याः। अत्रोपपत्तिः। "भूव्यासहीनं रविबिम्बमिन्दुकर्णाहतं भास्करकर्णभक्तम्। भूविस्तृतिर्लब्धफलेन हीना

भवेत् कुभाविस्तृतिरिन्दुमार्गे" इति सि॰शि॰ उक्ता तत्र ४८००भूव्यासोनस्य रविबिम्बस्य ६५००स्वल्पान्तराङ्गीकारेण स्पष्टगतिभक्तमध्यगतिगुणितचन्द्रमध्ययोजनकर्णरूपस्पष्टेन्दुयोजनकर्णो गुणः । तादृशसूर्यकर्णो हरः । तत्रैतत्खण्डस्य कलाकरणार्थं त्रिज्यागुणश्चन्द्रकर्णस्तादृशो हर इति चन्द्रस्पष्टमध्यगत्योस्तुल्यगुणहरत्वेन नाशात् त्रिज्यामध्येन्दुयोजनकर्णयोस्त्रिज्यापवर्तनेन हरः पञ्चदश पृथगुक्तः । अथेऽवशिष्टौ भूव्यासहीनमध्यार्कबिम्बयोजनानां रविस्पष्टगतिमध्यमगतौ गुणहरौ । चन्द्रसूर्ययोजनकर्णावपि क्रमेण गुणहरौ । तत्र कर्णस्थाने लाघवात् तयोर्बिम्बयोजनानि गृहीतानि । यद्यपि सूर्यचन्द्रयोर्मध्ययोजनकर्णानुसारित्वाभावाद्बिम्बयोजनग्रहणमनुचितं तथाप्यल्पान्तराङ्गीकारेण तददोषः । इन्दुव्यासार्कव्यासयोर्भूगोलाध्यायोक्तकक्षा भूकर्णगुणिता महीमण्डलभाजिता तत्कर्ण इति । तत्कक्षाव्यासार्धत्वे तु सुतराम् । तत्रापि स्पष्टार्कबिम्बयोजनग्रहणे मध्यार्कयोजनबिम्बं सूर्यस्पष्टगतिगुणितं सूर्यमध्यगतिभक्तमिति सिद्धम् । न चोक्तरीत्या सूर्यस्पष्टमध्यगती गुणहरौ भूव्यासमध्यार्कबिम्बयोजनान्तरस्योत्पन्नौ न केवलं बिम्बस्येति भूव्यासस्तादृशो महीव्यास इत्यनेन कथं सिद्ध इति वाच्यम् भगवता स्वल्पान्तरेण महीव्यासस्य यथास्थितस्यैवाङ्गीकारात् । महीव्यासस्फुटार्कश्रवणान्तरमित्युक्त्या मध्यस्फुटपदस्योभयत्रान्वयेनार्कश्रवणसन्निधानेन च सूर्यबिम्बस्फुटरीत्यैव महीव्यासस्य स्फुटत्वसिद्धेश्च । अथैतत्खण्डसिद्धं फलं भूव्यासाद्धीनं भूभायोजनानि । तत्र कलाकरणार्थं भूव्यासस्यापरखण्डस्य त्रिज्या गुणः स्पष्टचन्द्रगतिभक्तमध्यगतिगुणितचन्द्रमध्ययोजनकर्णरूपस्पष्टयोजनकर्णो हरः । तत्र त्रिज्यामध्ययोजनकर्णौ गुणहरौ गुणेनापवर्त्य हरस्थाने पञ्चदश चन्द्रस्पष्टमध्यगती गुणहराविति सूच्युक्तोपपन्ना । भूभायाः सूच्यनुकारत्वात् प्रथमखण्डं द्वितीयखण्डे हीनं भूभायोजनात्मिका सा पञ्चदशभक्ता कलादिकेत्युक्तमुपपन्नम् । यदि तु भूव्यासहीनं रविबिम्बमित्यादौ मध्यबिम्बादुक्तेः प्रथममेव स्पष्टार्कबिम्बग्रहणं तदा महीव्यासस्य स्पष्टत्वाप्रसिद्ध्या महीव्यासस्फुटार्कश्रवणान्तरमित्येव यथाश्रुतं सम्यक् । परन्तु तदा भूव्यासोनार्कबिम्बस्य सूर्यमध्यस्पष्टगती हरगुणाववशिष्टौ वाच्यावपि भगवता स्वल्पान्तरत्वादनुक्तौ । न चानुपाते सूर्यचन्द्रयोर्मध्ययोजनकर्णावेव गृहीतौ न स्फुटाविति मध्यस्फुटगती हरगुणावनुत्पन्नौ नोक्ताविति वाच्यम् । चन्द्रस्पष्टयोजनकर्णस्वरूपग्रहणेनोत्पन्नसूच्या अनुक्तत्वापत्तेः । न च चन्द्रकर्णस्य मध्यत्वेन गृहीते बह्वन्तरमतः स्पष्टत्वेन तस्य ग्रहे सूच्युपपन्ना सूर्यकर्णस्य मध्यत्वेन गृहीतेत्यल्पान्तरमिति वाच्यम् । मध्यार्कबिम्बयोजनग्रहणेन स्फुटार्कश्रवणानुपपत्तेः । न चोभयत्रागृहीते प्रत्येकमल्पान्तरमपि बह्वन्तरमत एकत्र सूर्यगतिग्रहणमुचितमिति वाच्यम् विनिगमनाविरहात् पूर्वं सूर्यबिम्बस्यैव सूर्यस्पष्टगती गुणहरौ न महीव्यासस्य प्रान्त्ये तूभयोरिति स्थूलसूक्ष्मविनिगमके तु प्रान्त्ये सूर्यगतिग्रहणस्यौचित्याच्च । अथ महीव्यासस्य प्रथमखण्डस्य चन्द्रगतिग्रहणेन सूच्युक्तावेव द्वितीयखण्डस्य भूव्यासोनस्फुटरविबिम्बस्यार्थात् सूर्यगतिग्रहणं सूचितमिति न क्षतिरिति चेन्न व्याख्याप्रसङ्गे सूर्यगतिग्रहणे मानाभावात् उपपत्तेरप्रसङ्गाच्च । अन्यथात्रापि चन्द्रगतिग्रहणापत्तेरिति । एतेन यदा चन्द्रमध्यगत्या भूव्यासस्तदा चन्द्रस्पष्टगत्या क ? इति भूव्यासरूपं खण्डं स्पष्टं सूचीसञ्ज्ञं यदा सूर्यबिम्बप्रमाणेनापरं भूव्यासोनस्फुटरविबिम्बखण्डं तदा चन्द्रबिम्बप्रमाणेन किमिति स्पष्टं द्वितीयं खण्डं तयोः, स्पष्टयोरन्तरं स्पष्टा भूभेति सर्वमुपपन्नमिति निरस्तम् । उक्तानुपाताभ्यां तयोः स्पष्टत्वसिद्धौ मानाभावात् स्पष्टत्वस्याप्रसङ्गाच्च चन्द्रसूर्ययोर्मध्यबिम्बानुपपत्तेश्च" र॰ना॰।

अथ चन्द्रार्कग्रहणद्वयसम्भवमाह ।

'भानोर्भार्धे महीच्छाया तत्तुल्येऽर्कसमेऽपि वा । शशाङ्कपाते ग्रहणं कियद्भागाधिकोनके" सू॰सि॰।

"सूर्यात् सकाशात् षड्भान्तरे भूच्छाया सूर्यापरदिक्स्था । तत्तुल्ये सषड्भार्करूपच्छायास्थानादिना समे चन्द्रपाते अपि वाऽथवा सूर्यतुल्ये चन्द्रपाते सूर्यचन्द्रयोः प्रत्येकं ग्रहणम् । ननु समत्वाभावेऽपि ग्रहणमिष्यत एवेत्यत आह कियद्भागेत्यादि । सषड्भार्कादर्काद्वा कतिपयैर्भागैरधिके ऊनेऽपि चन्द्रपाते ग्रहणम् । तथा च न क्षतिः । भागाश्चन्द्रग्रहणे द्वादश, सूर्यग्रहणे तु नतांशषडंशसंस्कारात् सप्तेत्यापाततः । अत्रोपपत्तिः । सषड्भार्ककेवलार्कान्यतरतुल्ये चन्द्रपाते शराभावश्चन्द्रस्य तत्तुल्यत्वात् । तदा चन्द्रो भूच्छायायां भवतीति ग्रहणम् । एवं शरसत्त्वेऽपि मानैक्यखण्डादल्पे भूच्छायायां मण्डलैकदेशस्य सत्त्वेन ग्रहणम् । एवं शराभावे मानैक्यखण्डान्यूनशरे च चन्द्रमण्डलं सूर्यमण्डलस्याच्छादकं भवति परन्तु तत्र शरो नति-

संस्कृतोऽतः सम्यगुक्तमुपपन्नम्" र०ना०। तत्र ग्रहणकालः "तुल्यौ राश्यादिभिः स्याताममावास्यान्तकालिकौ"। सूर्येन्दू पौर्णमास्यन्ते भार्द्धे भागादिकैः समौ" सू०सि०। "अमावास्यान्तकालोत्पन्नौ सूर्यचन्द्रौ राश्याद्यवयवैः समौ भवतः। पौर्णमास्यन्ते भागादिकैः तुल्यौ सूर्यचन्द्रौ षड्भान्तरे स्याताम्। तथा चामान्ते सूर्यचन्द्रयोरेकत्वोर्ध्वाधरान्तरेण सत्त्वात् सूर्यग्रहणम्। पौर्णमास्यन्ते चन्द्रभूभयोरेकत्रावस्थानाच्चन्द्रग्रहणम्। एतेन पूर्वश्लोके शशाङ्कपातइत्यत्र चन्द्रचन्द्रपातौ द्वौ न ग्राह्याविति सूचितम् एतच्छ्लोकस्य वैयर्थ्यापत्तेः। अत्रोपपत्तिः। अमान्ते सूर्यचन्द्रयोः पूर्वापरान्तराभावेन योगात् तुल्यौ सूर्यचन्द्रौ, पूर्णिमान्ते भचक्रार्धान्तरत्वात् षड्राश्यन्तरौ भागादिसमाविति" र०ना०।

"गतैष्यपर्वनाडीनां स्वफलेनोनसंयुतौ। समलिप्तौ भवेतां तौ पातस्तात्कालिकोऽन्यथा" सू०सि०।

अथ पर्वान्ते सूर्यचन्द्रचन्द्रपातानां साधनमाह। "तौ सूर्यचन्द्रौ गतैष्यपर्वनाडीनां यत्कालिकौ सूर्यचन्द्रौ तत्कालाद्गता एष्या वा दर्शान्तपूर्णिमान्तान्यतरघटिकास्तासां स्वफलेन स्वगतिसम्बन्धेन यत् फलम्। "इष्टनाड़ीगुणा भुक्तिः षष्ट्या भक्ता कलादिकम्" इति मध्याधिकारोक्तेनानीतम्। तेन गतैष्यक्रमेणोनयुतौ तत्र समकलौ स्तः। यद्यपि समांशाविति वक्तुं युक्तं तथाप्यन्यतिथ्यन्तीयसाधितौ समकलाविति द्योतनार्थं समकलावित्युक्तम्। पातः स्वगत्युत्पन्नफलेनान्यथा गतैष्यक्रमेण युतोनस्तात्कालिकः पर्वान्तकालिकः स्यात्" र०ना०।

अथ प्रागुक्तानां बिम्बानां प्रयोजनमाह "छादको भास्करस्येन्दुरधःस्थो घनवद्भवेत्। भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसौ" सू०सि० "सूर्यमण्डलस्याच्छादकश्चन्द्रः स्यात्। नन्वाकाशे द्वयोः सत्त्वेन सूर्य्य एव चन्द्रस्य छादकः कथं? न स्यादित्यत आह अधःस्थ इति। वक्ष्यमाणकक्षाध्याये सूर्यकक्षातोऽधःकक्षास्थत्वाच्चन्द्रस्यैवाच्छादकत्वम्। न ह्यूर्द्ध्वस्थच्छादको येन सूर्य्यश्चन्द्रस्य छादकः। ननु विनैकत्वावस्थानं छादनं न भवत्यत आह। घनवदिति। यथाऽधःस्थो मेघः सूर्य्यस्याच्छादको भवति तथा चन्द्रो भवतीत्यर्थः। प्राङ्मुखः पूर्व्वाभिमुखो गच्छंश्चन्द्रो भूच्छायां प्रति प्रविशति। अतः कारणादस्य चन्द्रस्यासौ भूभा छादिका भवेत्। तथा च सूर्य्यग्रहणे सूर्य्यचन्द्रबिम्बयोः प्रयोजनं चन्द्रग्रहणे चन्द्रभूभाबिम्बयोः प्रयोजनमिति भावः। अत्रोपपत्तिः। चन्द्रो दर्शान्ते सूर्य्यादधो भवतीति चन्द्रः सूर्य्यस्याच्छादकः। बुधशुक्रयोस्तु मण्डलाल्पत्वान्नाच्छादकत्वम्। चन्द्रस्याधो ग्रहाभावात् षड्भान्तरे भूम्या प्रतिबद्धाः सूर्य्यकिरणाश्चन्द्रगोले न पतन्ति। अतो निष्प्रभस्य चन्द्रस्य भूभायां प्रवेश इति चन्द्रस्य भूभाच्छादिका" र०ना०। अथ ग्रासानयनमाह "तात्कालिकेन्दुविक्षेपं छाद्यच्छादकमानयोः। योगार्धात् प्रोज्झ्य यच्छेषं तावच्छन्नं तदुच्यते" सू०सि०। "यच्छाद्यते स छाद्यः सूर्यग्रहणे सूर्यश्चन्द्रग्रहणे चन्द्रः। यश्छादयति स छादकः। सूर्य्यचन्द्रग्रहणयोः क्रमेण चन्द्रभूभे। तयोः पूर्व्वानीतमानतत्त्वयोरैक्यस्यार्धात् तात्कालिकचन्द्रात् पूर्व्वोक्तप्रकारेण साधितं विक्षेपं कलादिकं विशोध्य यदवशिष्टं तत्प्रमाणकम् छन्नं छादकेन छाद्यस्य यावान्मण्डलप्रदेश आच्छादितस्तावत्प्रदेशात्मकं ग्रासरूपं ग्रहणतत्त्वज्ञैः कथ्यते। अत्रोपपत्तिः। छाद्यच्छादकमण्डलनेमियोगे ग्रहणाद्यन्तरूपे मण्डलकेन्द्रयोरन्तरं स्वबिम्बखण्डयोगरूपम् बिम्बस्य व्यासमानात्मकत्वात्। तत् तु समत्वाल्लाघवाच्च योगार्द्धरूपं कृतम्। ततो यथा प्रवेशस्तथा ग्रासो भवतीति पर्वान्ते छाद्यच्छादकयोर्विक्षेपान्तरितत्वात् तदूने विक्षेपे मण्डलयोगस्तदन्तरमितः स एव ग्रासः" र०ना०

अथ सम्पूर्णन्यूनग्रहणज्ञानं ग्रहणाभावज्ञानं चाह "यद्ग्राह्यमधिके तस्मिन् सकलं न्यूनमन्यथा। योगार्द्धादधिके न स्याद्विक्षेपे ग्राससम्भवः" सू०सि०।

"तस्मिन् छन्नमानेऽधिके ग्राह्यमानाधिके यस्मात् कारणाद्ग्राह्यमानमस्ति। अतः कारणात् सकलं सम्पूर्णं ग्रहणं भवति। अन्यथा ग्राह्यमानाल्पके ग्रासे न्यूनं ग्राह्यमानान्तर्गतं ग्रहणं स्यात्। मानैक्यखण्डाद्विक्षेपेऽधिके सति न ग्राससम्भवः ग्रहणं न स्यात्। अत्रोपपत्तिः। ग्राह्यमानादधिके ग्रासे सम्पूर्णग्रहणं न्यूने न्यूनं मानैक्यखण्डादधिके विक्षेपे मण्डलस्पर्शाभावाद्ग्रहणाभावः" र०ना०।

अथ स्थित्यर्धविमर्दार्धे आह। "ग्राह्यग्राहकसंयोगवियोगौ दलितौ पृथक्। विक्षेपवर्गहीनाभ्यां तद्वर्गाभ्यामुभे पदे। षष्ट्या सङ्गुण्य सूर्येन्दोर्भुक्त्यन्तरविभाजिते। स्यातां स्थितिविमर्दार्धे नाड़िकादिफले तयोः" सू०सि०।

"ग्राह्यग्राहकमानयोर्योगान्तरे अर्धिते पृथक् स्थानान्तरे स्थाप्ये। असिमक्रियायां कदाचिद्गुरुत्वसम्भवे पुनः क्रियार्थमेतयोरावश्यकत्वात्। तद्वर्गाभ्यां योगार्द्धा-

न्तरार्धयोर्वर्गाभ्यां विक्षेपवर्गेण वर्जिताभ्यामुभे द्वे मूले षष्ट्या गुणयित्वा सूर्यचन्द्रयोर्गत्यन्तरकलाभिर्भक्ते तयोर्मानवियोगयोः स्थाने षष्ट्यादिभक्ते क्रमेण स्थित्यर्धविमर्दार्धे भवतः। अत्रोपपत्तिः। ग्रहणारम्भाद् ग्रहणान्तपर्यन्तः यः कालः स स्थितिसञ्ज्ञः। तस्य द्वे खण्डे, एकं ग्रहणारम्भान्मध्यग्रहणपर्यन्त,मपरं मध्यग्रहणाद् ग्रहणान्तपर्यन्तम्। तत्र बिम्बनेमिस्पर्शकाले मानैक्यखण्डं कर्णः स्पर्शमोक्षकालिकशरो भुजः स्पर्शमोक्षान्यतरकालिकशराग्रमध्यकालिकशराग्रयोरन्तरं पूर्वापरं कोटिरिति तत्खण्डसाधकं क्षेत्रम्। एवं सम्पूर्णग्रहणे सम्मीलनोन्मीलनकालयोरन्तरकालो विमर्दस्तत्र मध्यग्रहणात् सम्मीलनोन्मीलनकालावधिखण्डे तत्साधकं छाद्यच्छादकमण्डलकेन्द्रयोरन्तरं विक्षेपस्ते पूर्वापरं कोटिरिति क्षेत्रम्। सम्मीलनं छाद्यमण्डलस्याच्छादनसमाप्तिः। उन्मीलनं तु छादकमण्डलादाच्छादितसम्पूर्णच्छाद्यमण्डलस्य निःसरणारम्भः। तत्र स्पर्शमोक्षसम्मीलनोन्मीलनकालानामज्ञानान्मध्यकालिकविक्षेपग्रहणम्। भुजकर्णवर्गान्तरपदं कोटिरिति पूर्वश्लोकोक्तमुपपन्नम्। छाद्यच्छादकमण्डलकेन्द्रयोः पूर्वापरान्तराभावे मध्यग्रहणसम्भवाच्छाद्यच्छादकयुतिर्गत्यन्तरकलाभिर्यदि षष्टिघटिकास्तदानीतकोटिकलाभिः का इत्यनुपातेन स्थिति विमर्दखण्डे। तत्र चन्द्रग्रहणे भूभागतेः सूर्यगत्यनुरोधात् सूर्यगतित्वमित्युपपन्नं द्वितीयश्लोकोक्तम्" र०ना०।

अथ स्थित्यर्धविमर्दार्धे असकृत् साध्ये इत्याह। "स्थित्यर्धनाड़िकाभ्यस्ता गतयः षष्टिभाजिताः। लिप्तादि प्रग्रहे शोध्यं मोक्षे देयं पुनः पुनः। तद्विक्षेपैः स्थितिदलं विमर्दार्धं तथाऽसकृत्। संसाध्यमन्यथा पाते तल्लिप्तादि फलं स्वकम्" सू०सि०।

"सूर्यचन्द्रपातानां गतयः स्थित्यर्धघटीभिर्गुणिताः षष्ट्या भक्ताः फलं कलादि प्रग्रहे स्पर्शस्थित्यर्द्धनिमित्तं सूर्यचन्द्रयोर्हीनं मोक्षे मोक्षस्थित्यर्द्धनिमित्तं सूर्यचन्द्रयोर्देयं योज्यम्। चन्द्रपाते तल्लिप्तादि फलं स्थित्यर्धघट्यानीतं कलादिपूर्वं फलं स्वकं स्वगत्युत्पन्नमन्यथा विपरीतं प्रग्रहस्थित्यर्धनिमित्तं योज्यं मोक्षस्थित्यर्धनिमित्तं हीनमित्यर्थः। तद्विक्षेपैस्तात्कालिकचन्द्रपाताभ्यामानीतशरकलाभिः कलानां बहुत्वाद्विक्षेपैरिति बहुवचनम्। विक्षेपाभ्यामित्यर्थः। पुनः पुनः स्थितिदलं कार्यम् अत्रैकं पुनः पदं स्पर्शस्थित्यर्धसम्बद्धं, द्वितीयं मोक्षस्थित्यर्धसम्बद्धं पुनः पदम्। तेन स्पर्शस्थित्यर्धार्थसाधितचन्द्रपाताभ्यामानीतशरेण प्रागुक्तप्रकारेण स्पर्शस्थित्यर्धं संसाध्यम्। मोक्षस्थित्यर्धार्थसाधितचन्द्रपाताभ्यामानीतशरेण पूर्वोक्तरीत्या मोक्षस्थित्यर्धं साध्यमित्यर्थः। तच्चोभयमसकृद्वारंवारं स्पर्शस्थित्यर्धानीतचालनेन मध्यकालिकौ चन्द्रपातावुक्तरीत्या प्रचाल्य तच्छरेण पूर्वोक्तरीत्या स्पर्शस्थित्यर्धमस्मादप्युक्तरीत्या स्पर्शस्थित्यर्धमेवं यावदविशेषः। एवं मोक्षस्थित्यर्धानीतचालनेन मध्यकालिकौ चन्द्रपातावुक्तरीत्या प्रचाल्य तच्छरेण पूर्वोक्तरीत्या मोक्षस्थित्यर्धमस्मादप्युक्तरीत्या मोक्षस्थित्यर्धमेवं यावदविशेष इत्यर्थः। ननु स्थित्यर्धविमर्दार्धयोरेकरीत्युक्तेः कथं विमर्दार्धमसकृत् साध्यमिति नोक्तमित्यत आह विमर्दार्धमिति। तथा च स्पर्शमोक्षस्थित्यर्धसाधनरीत्याऽसकृद्यावदविशेषस्तावत् स्पर्शमर्दार्धं मोक्षमर्दार्धं च संसाध्यम्। तथा हि स्थित्यर्धनाड़िकाभ्यस्ता इत्यत्र विमर्दार्धनाडिकाग्रहात् स्पर्शमर्दार्धमोक्षमर्दार्धे साध्ये। आभ्यां प्रत्येकमसकृत् स्पर्शमर्दार्धमोक्षमर्दार्धे स्फुटे स्तः। अत्रोपपत्तिः। प्रागुक्तं क्षेत्रं स्पर्शमोक्षसम्मीलनोन्मीनकालिकशरवशादिति तदज्ञानान्मध्यकालिशरग्रहणेन स्थूलं स्थित्यर्धं मर्दार्धं चातो मध्यकालात् तदन्तरेण पूर्वागिमकालिकयोस्तेषां सम्भवात् तत्कालचालितचन्द्रपाताभ्यां विक्षेपस्तात्कालिको भवति परं स्थूलः स्थूलस्थित्यर्धाद्यानीतत्वात्। अतोऽस्मादानीतं स्थित्यर्धादि पूर्वापेक्षया सूक्ष्ममपि स्थूलमित्यसकृत् सूक्ष्ममिति। तत्र सम्मीलनोन्मीलनकालयोराकाशस्पर्शमोक्षसम्भवात् स्पर्शमोक्षमर्दार्धमिति ध्येयम्" र०ना०।

अथ मध्यग्रहणस्पर्शमोक्षकालानाह। "स्फुटतिथ्यवसाने तु मध्यग्रहणमादिशेत्। स्थित्यर्धनाडिकाहीने ग्रासो मोक्षस्तु संयुते" सू०सि०।

"स्पष्टतिथ्यन्तकाले तुकारात् तत्पूर्वापरकालनिरासः। मध्यग्रहणं ग्रासोपचयसमाप्तिं कथयेत्। मध्यग्रहणसम्बन्धेन मध्यसूर्यचन्द्रानीतमध्यतिथ्यन्ते तत्सम्भव इति कस्यचिद्भ्रमस्तद्वारणार्थं स्फुटेति स्थित्यर्धघटिकाभिर्हीने तिथ्यन्तकाले ग्रासः स्पर्शः। संयुते स्थित्यर्धघटीभिर्युते तिथ्यन्तकाले मोक्षः। तुकारः स्पर्शमोक्षस्थित्यर्धाभ्यां स्पर्शमोक्षकालाविति विषयव्यवस्थार्थकः। अत्रोपपत्तिः। तिथ्यन्तकाले छाद्यच्छादकयोः पूर्वापरान्तराभावाद्योगे मण्डलस्पर्शो यावान् भवति ततः पूर्वागिमकालयोर्न्यून एवानोऽत्र मध्यग्रहणकालः। मध्यग्रहणकालात् पूर्वं स्पर्शस्थित्यर्ध-

घटीभिः स्पर्शः । अपिमकाले मोक्षस्थित्यर्धघटीभिर्मोक्षः । स्थित्यर्धयोस्तदन्तररूपत्वेन सिद्धेः" र०ना० ।

अथ सम्पूर्णग्रहणे निमीलनोन्मीलनकालावप्याह "तद्वदेव विमर्दार्धनाड़िकाहीनसंयुते । निमीलनोन्मीलनाख्ये भवेतां सकलग्रहे" सू०सि० ।

"सम्पूर्णग्रहणे तद्वत् यथा स्थित्यर्धोनाधिके तिथ्यन्ते स्पर्शमोक्षौ तथेत्यर्थः । एवकारात् तद्भिन्नरीतिव्युदासः । स्पर्शविमर्दार्धमोक्षविमर्दार्धघटीभ्यां क्रमेणोनयुते तिथ्यन्ते क्रमेण निमीलनोन्मीलनसञ्ज्ञे स्याताम् । अत्रोपपत्तिः । मर्दार्धस्य मध्यकालात् तदन्तररूपत्वेन तदूनाधिके तस्मिन् क्रमेण निमीलनोन्मीलने सम्पूर्णग्रहण एव भवतः । न्यूनग्रहणे तत्स्वरूपव्याघातात् तदभावः" र०ना० ।

अथेष्टकाले इष्टग्रासज्ञानार्थं कोटिकलानयनमाह । "इष्टनाड़ीविहीनेन स्थित्यर्धेनार्कचन्द्रयोः । भुक्त्यन्तरं समाहन्यात् षष्ट्याप्ताः कोटिलिप्तिकाः" सू०सि० । "सूर्यचन्द्रयोर्गत्यन्तरं कलात्मकं ग्रहणारम्भाद्या इष्टघटिकाः स्पर्शस्थित्यर्धघट्यनधिकास्ताभिरूनेन स्पर्शस्थित्यर्धेन गुणयेत् । अस्मात् षष्टिविभक्तप्राप्ताः कोटिकला भवन्ति । अत्रोपपत्तिः । इष्टकाले छाद्यच्छादकमण्डलकेन्द्रयोरन्तरं विक्षेपवृत्ते कोटिरिति चेत्ते इष्टघट्यूनस्पर्शस्थित्यर्धघटिकानां कलाः कोटिः सिद्धाः । पूर्वं स्पर्शकालिककोट्याः स्थित्यर्धघटिकानां सिद्धत्वात्" र०ना० ।

"भानोर्ग्रहे कोटिलिप्ता मध्यस्थित्यर्धसङ्गुणाः । स्फुटस्थित्यर्धसम्भक्ताः स्फुटाः कोटिकलाः स्मृताः" सू०सि० ।

"अथात्र सूर्यग्रहणे विशेषमाह । सूर्यस्य ग्रहणे उक्तप्रकारेण याः कोटिकलाः सूर्यग्रहणोक्तस्पष्टस्थित्यर्धानीतस्थित्यर्धेन सङ्गुणिताः स्फुटस्थित्यर्धेन सूर्यग्रहणाधिकारोक्तेन भक्ताः सत्यः स्पष्टाः कोटिकलाः सूर्यग्रहणतत्त्वज्ञैरुक्ताः । अत्रोपपत्तिः । सूर्यग्रहणे स्पर्शमोक्षान्यतरमध्यकालयोरन्तरस्य स्थित्यर्धत्वात् तस्य च स्पष्टशरोद्भूतस्थित्यर्धलम्बनान्तरैक्यसंस्कारमितत्वात् स्पष्टस्थित्यर्धानुरुद्धा उक्तरीत्यानीताः कोटिकलाः । अपेक्षिताश्च स्पष्टशरोद्भूतस्थित्यर्धानुरुद्धाः । एतत् कोटिसम्बद्धं क्षेत्रम् स्थित्यर्धक्षेत्रान्तर्गतत्वात् । स्पष्टस्थित्यर्धस्य लम्बनान्तरैक्यसंस्कारानुक्तिप्रसङ्गः । अतः स्पष्टस्थित्यर्धेनैता आगताः कोटिकलास्तदा स्पष्टशरोद्भूतक्षेत्रजमध्यमरूपस्थितर्धेन का ? इति स्फुटाः कलाः सिद्धाः र०ना० । 'क्षेपो भुजस्तयोर्वर्गयुतेर्मूलं श्रवस्तु तत् । मानयोगार्धतः प्रोज्झ्य ग्रासस्तात्कालिको भवेत्" । सू०सि०

"अथेष्टग्रासानयनमाह । क्षेपो विक्षेपो भुजः, कोटिभुजयोः कर्णसापेक्षत्वादाह तयोरिति । कर्णस्तु तयोः कोटिभुजयोर्वर्गयोगान्मूलं सिद्ध एव । तत् कर्णवर्गात्मकं मूलं ग्राह्यग्राहकमानैक्यार्धाद्विशोध्य शेषं तात्कालिकः कल्पितेष्टकालसम्बन्धी ग्रासोऽवान्तरग्रासः स्यात् । अत्रोपपत्तिः क्षेत्रं पूर्वं प्रतिपादितम् । स्पर्शकाले मानैक्यखण्डस्य कर्णत्वात् क्षेत्रयोरुभयोर्मध्यकालावधित्वादिष्टकर्णोनं मानैक्यखण्डमिष्टग्रास एव" र०ना० । "मध्यग्रहणतश्चोर्ध्वमिष्टनाड़ीर्विशोधयेत् । स्थित्यर्धान्मौक्षिकाच्छेषं प्राग्वच्छेषं तु मौक्षिके" सू०सि० । "अथ मध्यग्रहणानन्तरमिष्टग्रासानयनमाह । 'मध्यग्रहणकालादूर्ध्वमनन्तरम् । चकारो विशेषार्थकस्तुकारपरः । इष्टघटिकाः कर्म । मौक्षिकान्मोक्षकालसम्बद्धात् स्थित्यर्धात् । न स्पर्शस्थित्यर्धात् । विशोधयेत् गणक इति कर्त्राक्षेपः । शेषं कोटिलिप्तादिग्रासानयनान्तं गणितकर्म प्राग्वद्भुक्त्यन्तरं समाहन्यादित्युक्तप्रकारेण कुर्यात् । मौक्षिके मोक्षस्थित्यर्धान्तर्गतेष्टकाले तुर्विशेषे ग्रासः शेषस्तुर्वरितो ग्रासोऽवान्तरग्रासो भवति । न पूर्ववद्गतः । अत्रोपपत्तिः । मध्यग्रहणात् पूर्वमिष्टकालस्य ग्रहणारम्भावधिकस्य स्पर्शस्थित्यर्धसम्बद्धत्वादागतो ग्रास उपचयात्मकः । नावशिष्टः । अवशिष्टमण्डलस्य शुद्धत्वेन ग्रस्तत्वासम्भवात् । एवं मध्यग्रहणानन्तरमिष्टकालस्य मोक्षस्थित्यर्धान्तर्गतत्वादुक्तरीत्यानीतो ग्रासोऽपचयात्मकः । न शुद्धबिम्बदर्शनात्मकः । ग्रस्तत्वाभावात्" रङ्ग० । "ग्राह्यग्राहकयोगार्धाच्छोध्याः स्वच्छन्नलिप्तिकाः । तद्वर्गात् प्रोज्झ्य तत्कालविक्षेपस्य कृतिं पदम् । कोटिलिप्ता रवेः स्पष्टस्थित्यर्धेनाहता हृताः । मध्येन लिप्तास्तन्नाड्यः स्थितिवद्ग्रासनाड़िकाः" सू०सि० । "अथाभीष्टग्रासादिष्टकालानयनमाह छाद्यच्छादकमानैक्यखण्डादभीष्टग्रासकलाः शोध्याः शेषस्य वर्गादभीष्टग्रासकालिकविक्षेपस्य वर्गं विशोध्य शेषस्य मूलं कोटिकलाः । सूर्यग्रहणे विशेषमाह रवेरिति सूर्यस्य ग्रहणे इति शेषः भानोर्ग्रह इति पूर्वमुक्तेः । उक्तप्रकारेण याः कलास्ता मध्यग्रहणकालस्पर्शमोक्षान्यतरकालयोरन्तररूपेण स्पष्टस्थित्यर्धेन गुण्याः । स्पष्टशरोत्पन्नस्थित्यर्धेन मध्यमेन भक्ताः फलं कोटिकला भवन्ति । स्थितिवत् स्थित्यर्धसाधनरीत्या । "षष्ट्या सङ्गुण्य सूर्येन्दोर्भुक्त्यन्तरविभाजिताः" इत्युक्तेन

शाखां कोटिफलानां घटिका यास्ता अभीष्टग्रासमध्यस्थितिघटिकाः स्पर्शमोक्षान्यतरस्थित्यर्धान्तर्गताः क्रमेण मध्यग्रहणाच्छेषा गता वा भवन्ति। अत्रोपपत्तिः पूर्वोक्तन्यासात् सुगमतरा। परन्तु खाभीष्टग्रासकालिकशरस्थाने स्फुटम्। तच्छरस्थाने मध्यकालिकशरग्रहणेन स्थूलम्। अतएव भास्कराचार्यैः "कालसाधने तत्कालवाणेन सुधीः स्फुट इत्युक्तमिति" रङ्ग०।

अथ वक्ष्यमाणग्रहणपरिलेखोपयुक्तवलनानयनमाह।

"नतज्याघ्नज्यया भक्ता त्रिज्याप्ता तस्य कार्मुकम्। वलनांशाः सौम्ययाम्याः पूर्वापरकपालयोः। राशित्रययुताद्ग्राह्यात् क्रान्त्यंशैर्दिक्समैर्युताः। भेदेऽन्तरात् ज्या वलना सप्तत्यङ्गुलभाजिता" सू० सि०।

"यत्कालिकं वलनं कर्तुमिष्टं तात्कालिकं नतं, चन्द्रग्रहणे चन्द्रस्य, सूर्यग्रहणे सूर्यस्य साध्यम्। तद्यथा खोदयात् खास्ताद्गतशेषघटिकाः खदिनार्धान्तर्गताः खदिनार्धादूनाः क्रमेण पूर्वापरनतघटिका भवन्ति। तन्नतं नवतिगुणं खदिनार्धभक्तं नतांशास्तेषां ज्या नतज्येत्यर्थः। खदेशाक्षांशज्यया गुणिता त्रिज्यया भक्ता फलं धनुः कलात्मकं षष्टिभक्तं पूर्वापरकपालयोः पूर्वापरनतयोः क्रमेणोत्तरदक्षिणा वलनांशा भवन्ति। यत्कालिकं वलनं तात्कालिकाद्ग्राह्याद्राशित्रययुतात् सायनांशाद्ये क्रान्त्यंशास्तैर्दिक्तुल्यैर्युतास्तेषां ज्या, भेदे भिन्नदिक्त्वेऽन्तरात् क्रान्त्यंशवलनांशयोरन्तराज्ज्या सप्तत्यङ्गुलैर्भक्ता शेषदिक्का। अङ्गुलात्मकत्वेन हरस्योद्देशादङ्गुलादिका वलना भवति। अत्रोपपत्तिः। समवृत्तपूर्वापरादिदिग्भ्यः क्रान्तिवृत्तपूर्वापरादिदिशो यावतान्तरेण वलिता उत्तरस्यां दक्षिणस्यां वा वलनांशाः। तदानयनार्थं प्रथमतः समवृत्तात्तुन्मण्डलदिग्भ्यो विषुवद्वृत्तदिशो यावतान्तरेण वलिता दक्षिणोत्तरयोस्तदाक्षवलनम्। तथा हि समप्रोतवलयवृत्तं ग्रहचिह्नस्थं समविषुवद्वृत्तयोर्यत्र लग्नं तत्प्रदेशाक्षवलयांशान्तरे प्राच्योरन्तरं वलनं तत्तुल्यमेवेतरदिशामन्तरं पूर्वकपालस्थग्रहे समवृत्तप्राचीतो विषुवद्वृत्तप्राच्या उत्तरादुत्तरम्। पश्चिमकपालस्थे तु समवृत्तप्राचीतो विषुवद्वृत्तप्राच्या दक्षिणत्वाद्दक्षिणम्। तत्र क्षितिजस्थे ग्रहे तदन्तरमक्षांशतुल्यम्। याम्योत्तरवृत्तस्थे ग्रहे तदन्तराभावः। अतो यदि त्रिज्यातुल्यया नतकालज्यया ऽक्षज्यातुल्याक्षवलनज्या तदेष्टनतज्यया कोऽत्यनुपातागताक्षज्याया धनुराक्षं वलनमुपपन्नम्। द्वितीयं तु विषुवद्वृत्तदिग्भ्यः क्रान्तिवृत्तदिशो यावतान्तरेण वलिता दक्षिणोत्तरयोस्तदायनं वलनम्। तथा हि ध्रुवप्रोतवृत्तं ग्रहचिह्नस्थं विषुवद्वृत्ते यत्रासन्नं लगति तत्स्थानाच्चतुर्थांशान्तरे यत् स्थानं तद्विषुवत्प्राची। तस्मात् ग्रहचिह्नात् त्रिभान्तरितक्रान्तिवृत्तप्राची यदन्तरेण तदायनं वलनम्। तत्तुल्यमेवेतरदिशामन्तरम्। उत्तरायणस्थे ग्रहे उत्तरं, दक्षिणायनस्थे ग्रहे दक्षिणम्। तत्तु अयनसन्ध्यावभावात्मकम् गोलसन्धौ परमक्रान्तितुल्यमतः स त्रिभक्रान्तितुल्यं सत्रिभग्रहगोलदिक्कमित्युपपन्नं राशित्रययुताद्ग्राह्यात् क्रान्त्यंशैरिति। द्वयोर्वलनयोरेकदिक्त्वे समवृत्तप्राचीतः क्रान्तिवृत्तप्राची तद्योगरूपस्फुटवलनान्तरेण वलनदिशि भवति। भिन्नदिक्त्वे तु वलनान्तररूपस्फुटवलनान्तरेण शेषदिशि भवति। तज्ज्या स्फुटवलनज्या त्रिज्यावृत्ते। अथ परिलेखे एकोनपञ्चाशन्मितव्यासार्धवृत्ते दानार्थं त्रिज्यावृत्ते यदीयम्, तदैकोनपञ्चाशन्मितज्या कोऽत्यनुपाते प्रमाणेच्छयोरिच्छापवर्तनाद्धरस्थानेऽधोऽवयवत्यागात् सप्ततिः। अतो दिक्समैर्युता इत्याद्युपपन्नम्" रङ्ग०।

अथ कलात्मकबिम्बविक्षेपादोनामङ्गुलीकरणमाह।

"सोन्नतं दिनमध्यर्धं दिनार्धाप्तं फलेन तु। छिन्द्याद्विक्षेपमानानि तान्येषामङ्गुलानि तु" सू० सि०।

"दिनमानमर्द्धेनाधिकम् इत्यध्यर्धं स्वार्धयुक्तमित्यर्थः। अभीष्टकालिकोन्नतघटीभिः सहितं दिनार्द्धेन भक्तं फलेन। तुकारो यद्ग्रहणं तस्य दिनमानोन्नते ग्राह्ये इत्यर्थकः। विक्षेपग्राहग्राहकबिम्बमानानि। तानि पूर्वोक्तानि कलात्मकानि। ग्रासादिकमपि ध्येयम्। भजेत्। तुकारात् फलमेषां कलात्मकानामङ्गुलानि भवन्ति। अत्रोपपत्तिः। उदयास्तकाले बिम्बकिरणानां भूमिगोलावरुद्धत्वेनाल्पोर्द्धस्थकिरणानां नयनप्रतिहननानर्हत्वाद्बिम्बं व्यक्तत्वान्महद्भासते। तत्राङ्गुलात्मकं बिम्बं कलात्रयात्मकाङ्गुलप्रमाणेन भवति। खमध्यस्थे ग्रहे तु बिम्बस्य सर्वकिरणानवरुद्धत्वान्नयनप्रतिघाताच्च सूक्ष्मं बिम्बं भासते। तत्राङ्गुलात्मकं बिम्बं कलाचतुष्टयात्मकाङ्गुलप्रमाणेन भवति। तत्रोदयास्तकाले शङ्कोरभावात् खमध्यस्थे तस्य त्रिज्यातुल्यत्वात् त्रिज्यातुल्यशङ्कावुदयकालिकैकाङ्गुलमानस्य कलात्रयस्यैकाङ्गुलमुपचयो लभ्यते तदेष्टशङ्कौ कः? इत्यनुपातेनाभीष्टकाले फलं त्रयमेकाङ्गुलस्य कलात्मकं मानं भवति। अत एव

भास्कराचार्य्यैरुदयास्तकाले सार्द्धद्वयं कलाङ्गुलमानमङ्गीकृत्य "त्रिज्योद्धृतस्तत्समशेत्यशङ्कुः सार्द्धद्वियुक्तोऽङ्गुललिप्तिकाः स्युः" इत्युक्तम्। तत्र भगवता लोकानुकम्पया स्वल्पान्तरत्वाच्च मध्याह्नेऽपि कलाचतुष्टयात्मकाङ्गुलमङ्गीकृत्य दिनार्द्धतुल्यपरमोन्नतकाल एवोपचयस्तदेष्टोन्नतकाले क इत्यनुपातागतफलमुक्तं त्रयं कला एकाङ्गुलमानमभीष्टकाले। तत्र दिनार्द्धभक्तोन्नतकालस्य फलस्वरूपत्वात् त्रयाणां समच्छेदतया योजने त्रिगुणितं दिनार्द्धं सार्द्धैकगुणदिनमानरूपस्वनतकालयुक्तं दिनार्द्धभक्तमिति सिद्धम्। तत एतत्कलाभिरेकाङ्गुलं यदा तदेष्टकलाभिः किमित्यनुपातेन कलात्मकानामङ्गुलीकरणमुक्तमुपपन्नम्" रङ्ग०। इति चन्द्रग्रहणाधिकारः

अथ सूर्य्यग्रहणाधिकारस्तत्र विशेषः।

"मध्यलग्नसमे भानौ हरिजस्य न सम्भवः। अक्षोदङ्मध्यभक्रान्तिसाम्ये नावनतेरपि" सू०सि०। "सूर्य्येऽमावास्यान्तकालिके मध्यलग्नसमे सति दिनमध्यस्थाने ऊर्द्ध्वयाम्योत्तरवृत्ते लग्नः क्रान्तिवृत्तप्रदेशो मध्यलग्नं त्रिप्रश्नाधिकारोक्तम्। तत्तुल्ये सति मध्याह्न इति फलितम्। हरिजस्य लम्बनस्य भूपृष्ठक्षितिजवशाल्लम्बनोत्पत्तेर्लम्बनस्यापि क्षितिजवाचकहरिजशब्देनाभिधानात् सम्भव उत्पत्तिर्न। तत्र लम्बनाभावः इत्यर्थः। लग्नयोरुदयक्षितिजास्तक्षितिजप्रदेशयोः संलग्नक्रान्तिवृत्तप्रदेशयोर्मध्यम् ऊर्द्ध्वमध्यप्रदेशयोस्त्रिभोनलग्नमित्यर्थः। प्रयोगस्तु मध्याह्न इतिवत्। तत्तुल्येऽर्के लम्बनस्याभाव इति। नत्यभावस्थानमाह।

अक्षेत्यादि। अक्षांशा उत्तरा ये मध्यभस्य मध्यलग्नस्य क्रान्त्यंशाः। अत्र मध्यलग्नशब्देन दशमभावस्त्रिभोनलग्नं वा ग्राह्यमुभयपक्षेऽप्यदोषः। अनयोस्तुल्यत्वेऽवनतेर्नतेः। अपिशब्दात् सम्भवः नाभाव इत्यर्थः। न त्वपिशब्दाल्लम्बनस्यापि तत्राभावः। उत्तरक्रान्त्यक्षयोस्तुल्यत्वे मध्यलग्नतुल्यार्कत्वाभावेऽपि तदभावापत्तेः। अत्रोपपत्तिः। अमावास्यान्तकाले समौ सूर्य्यचन्द्रौ। तत्र चन्द्रशराभावे भूगर्भाच्चीयमानं सूत्रमर्कस्थानावधि चन्द्रं स्पृशत्येवेति भूगर्भे छादकत्वं चन्द्रस्य सूर्य्यस्य छाद्यत्वं सम्भवति। तत्र मनुष्याणामसत्त्वाद्भूपृष्ठे तेषां सत्त्वाच्च भूपृष्ठाच्चीयमानमर्कोपरि सूत्रं चन्द्रे न लगत्येव। किन्तु चन्द्राधिष्ठानगोले। चन्द्रचिह्नादूर्द्ध्वं लगति। तत्र यदा चन्द्र आयाति तदा भूपृष्ठे सूर्य्यस्य चन्द्रश्छादको भवति। यदा तु खमध्ये सूर्य्यस्तदा भूगर्भसूत्रं भूपृष्ठसूत्रं च सूर्य्योपरिगमेकमेव चन्द्रे लगतीति भूपृष्ठेऽमान्तकाले चन्द्रश्छादको भवति। अत एव भूगर्भपृष्ठसूत्रान्तरं लम्बनम्। भूपृष्ठसूत्रात् सूर्य्योपरिगाच्चन्द्राधिष्ठानाकाशगोले चन्द्रस्य शरसत्त्वे चन्द्रचिह्नस्याधो लम्बितत्वात्। अत एव भास्कराचार्य्यैरुक्तम् "दृग्गर्भसूत्रयोरैक्यात् खमध्ये नास्ति लम्बनम्" इति। अथ चन्द्राधिष्ठानगोले भूपृष्ठसूत्रमर्कोपरिगतं चन्द्रचिह्नादूर्द्ध्वं चन्द्रदिग्वृत्ते यदंशैर्लगति तल्लम्बनं दृग्वृत्ताकारक्रान्तिवृत्ते भवति। यदा तु दृग्वृत्ताद्भिन्नं क्रान्तिवृत्तं तदा भूपृष्ठसूत्रं चन्द्राधिष्ठानगोले चन्द्रदृग्वृत्ते चन्द्रादूर्द्ध्वं यत्र लग्नं तत्र चन्द्रगोलस्थक्रान्तिवृत्तयाम्योत्तररूपकदम्बप्रोतवृत्तमानीय चन्द्रगोलस्थक्रान्तिवृत्ते यत्र लग्नं तच्चन्द्रचिह्नयोरन्तरं क्रान्तिवृत्ते पूर्वापरं स्फुटलम्बनकलाः कोटिः चन्द्रस्य क्रान्तिवृत्तानुसारेण गमनात् प्रोतवृत्ते क्रान्तिवृत्तदृग्वृत्तयोरन्तरं याम्योत्तरं कलात्मकं नतिर्भुजः। भूगर्भपृष्ठसूत्रान्तरं दृग्वृत्ते कलात्मकं दृग्लम्बनं कर्णः। दृग्वृत्तस्य कदम्बप्रोतवृत्ताकारत्वे क्रान्तिवृत्ते तयोरन्तराभावाल्लम्बनाभावः। याम्योत्तरमन्तरं दृग्लम्बनं नतिरेवोत्पन्ना। दृग्वृत्ताकारक्रान्तिवृत्ते तु दृग्लम्बनमेव क्रान्तिवृत्ते तयोरन्तरमिति लम्बनमुत्पन्नं नत्यभावश्च। तथा च दृग्वृत्तस्य कदम्बप्रोतवृत्ताकारत्वे त्रिभोनलग्नस्थानेऽर्को भवति। तद्वृत्तस्य क्रान्तिवृत्तयाम्योत्तरत्वेनोदयास्तलग्नमध्यवर्त्तित्वेन लग्नस्थानात् त्रिभान्तरितत्वात्। न हि क्रान्तिवृत्तस्य याम्योत्तरान्तरज्ञानार्थं समप्रोतवृत्तमङ्गीकार्य्यम्। येन दशमभावतुल्यार्के लम्बनाभाव उपपन्नः स्यात् क्रान्तिवृत्तस्य गोलवृत्तत्वेन समप्रोतवृत्तस्य देशवृत्तत्वेन सम्बन्धाभावात्। अत एव भगवता सर्वज्ञेन नतिसाधनार्थमप्ये दृक्क्षेपः कदम्बप्रोतवृत्ते त्रिभोनलग्नस्यैव साधितः। दृक्क्षेपाभावे त्रिभोनलग्नस्य खमध्यस्थत्वेन तदा तस्य दशमभावतुल्यत्वेन दशमभावनतांशाभावाद्दृक्क्षेपाभावः। तदा त्रिभोनलग्नस्य नतांशाभावश्च। नतांशाभावस्त्वक्षांशतुल्योत्तरक्रान्तौ सुखार्थं स्थूलाङ्गीकारे तु दशमभावस्यैव नतांशोन्नतज्ज्या दृक्क्षेपदृग्गती नतिलम्बयोः साधनार्थं समनन्तरमेव भगवतोक्ते न तु वस्तुरूपे। आयासेन दृक्क्षेपसाधनस्योक्तस्य वैयर्थ्यापत्तेः" रङ्ग०।

"देशकालविशेषेण यथावनतिसम्भवः। लम्बनस्यापि पूर्वान्यदिग्वशाच्च तथोच्यते" सू०सि०। "देशविशेषेण काल-

विशेषेणावनतिसम्भवो नतिकालोत्पत्तिर्गोलस्थित्या यथा भवति। लम्बनस्यापिः समुच्चये। त्रिभोनलग्नस्थानात् पूर्वापरदिगनुरोधात्। चकारात् सम्भवो देशकालविशेषेण यथा भवतीत्यर्थः। तथा तत्तुल्येन नतिलम्बने आनयनद्वारा मया कथ्येते" रङ्ग०। तत्रोपयुक्तामुदयाभिधामाह। "लग्नं पर्वविनाडीनां कुर्य्यात् स्वैरुदयासुभिः। तज्ज्यान्त्यापक्रमज्याघ्नी लम्बज्याप्तोदयाभिधा" सू० सि०। "स्वैः स्वदेशीयैरुदयासुभी राश्युदयासुभिः पर्वघटिकाणां लग्नं गणकः कुर्य्यात्। पर्वान्तकालिकं लग्नं साध्यमित्यर्थः। यद्यपि पूर्वं लग्नसाधनं स्वोदयैरेवोक्तमिति स्वैरुदयासुभिरिति व्यर्थं तथापि समनन्तरमेव दशमलग्नसाधनोक्त्या कस्यचिल्लग्नं व्यस्तोदयैरेवात्र साध्यमिति भ्रमस्य वारणाय पुनरुक्तिः। तस्य लग्नस्यायनांशसंस्कृतस्य ज्या भुजज्या परमक्रान्तिगुणा स्वदेशीयलम्बज्यया भक्ता फलमुदयसंज्ञं स्यात्। अत्रोपपत्तिः। लग्नक्रान्तिज्यासाधनार्थं लग्नभुजज्यायाः परमक्रान्तिज्या गुणस्त्रिज्या हरस्ततो लम्बज्या कोटी त्रिज्या कर्णस्तदा लग्नक्रान्तिज्याकोटौ कः कर्ण इत्यनुपाते त्रिज्ययोर्नाशाल्लग्नभुजज्या परमक्रान्तिज्या गुणलम्बज्यया भक्ता फलं लग्नस्यापा। इयं भगवतोदयसंज्ञोक्ता लग्नस्योदयसंज्ञत्वात् उदयसम्बन्धाच्चेत्युक्तमुपपन्नम्" रङ्ग०। "तदा लङ्कोदयैर्लग्नं मध्यसंज्ञं यथोदितम्। तत्क्रान्त्यक्षांशसंयोगो दिक्साम्येऽन्तरमन्यथा। शेषं नतांशास्तन्मौर्वी मध्यज्या साभिधीयते" सू० सि०। "अत्रोपयुक्तां मध्यज्यामाह। तदा पर्वान्तकाले लङ्कोदयैर्व्यक्षदेशीयराश्युदयैर्यथोदितं पूर्वोक्तप्रकारेण जातकपद्धत्युक्तनतघटीभिर्धनर्णं यथायोग्यं मध्यसंज्ञं लग्नं दशमभावात्मकं साध्यम्। अत्र लग्नसम्बन्धेन स्वदेशराश्युदयासुग्रहणभ्रमवारणाय लङ्कोदयैरित्युक्तम्। तस्य दशमभावस्यायनांशसंस्कृतस्य क्रान्तिः स्वदेशाक्षांशाः। अनयोर्योग एकदिक्त्वे कार्यः। अन्यथा भिन्नदिक्त्वेऽन्तरं तयोरेव शेषं संस्कारदिक्का नतांशास्तेषां ज्या कार्या सा मध्यलग्ननतांशज्या मध्यज्योच्यते तत्सम्बन्धात्" रङ्ग०। 'अथास्यामुपयुक्तं दृक्क्षेपं लम्बनोपयुक्तां दृग्गतिंचाह।

'मध्योदयज्ययाभ्यस्ता त्रिज्याप्ता वर्गितं फलम्। मध्यज्यावर्गविश्लिष्टं दृक्क्षेपः शेषतः पदम्। तत्त्रिज्यावर्गविश्लेषान्मूलं शङ्कुः स दृग्गतिः" सू० सि०।

"पूर्वोक्तमध्यज्या पूर्वानीतोदयाभिधयोदयज्यया अस्या ज्यारूपत्वाज्ज्येत्युक्तम्। गुणिता त्रिज्यया भक्ता फलं वर्गितं वर्गः सञ्जातो यस्य तत्। फलस्य वर्गः कार्य इत्यर्थः। मध्यज्याया वर्गे विश्लिष्टं हीनं वर्गितं फलं कार्यम्। शेषान्मूलं दृक्क्षेपः स्यात्। दृक्क्षेपत्रिज्ययोर्यौ वर्गौ तयोरन्तरान्मूलं शङ्कुः। स आनीतः शङ्कुर्दृग्गतिसंज्ञो भवति न तु शङ्कुमात्रम्। अत्रोपपत्तिः। त्रिभोनलग्नस्य दृग्ज्यानयनार्थं क्षेत्रम्। मध्यलग्नदृग्ज्याकर्णस्त्रिभोनलग्नस्य याम्योत्तरवृत्तात् प्रागपरस्थितत्वेन तत्खस्वस्तिकान्तरस्थिततदीयदृग्वृत्तप्रदेशांशज्या कोटिः। मध्यलग्नत्रिभोनलग्नान्तरांशज्या क्रान्तिवृत्तस्थो भुजः। अत्र भुजानयनं चोदयलग्नस्य क्रान्तिवृत्तप्रदेशः प्राक्स्वस्तिकात् तदग्रान्तरेणोत्तरदक्षिणो भवति। एवमस्तलग्नप्रदेशः परस्वस्तिकाद्दक्षिणोत्तरः। तदनुरोधेन च त्रिभोनलग्नप्रदेशक्रान्तिवृत्तीययाम्योत्तरवृत्तरूपदृग्वृत्तं क्षितिजे याम्योत्तरवृत्तक्षितिजसम्पातात् तदग्रान्तरेण लग्नमवश्यं भवति। अतस्त्रिज्यातुल्यमध्यलग्नदृग्ज्यया लग्नाग्रातुल्यो भुजस्तदाभीष्टतद्दृग्ज्यया क इत्यनुपातेन स फलसंज्ञः। तद्वर्गोनान्मध्यलग्नदृग्ज्यावर्गान्मूलं त्रिभोनलग्नस्य दृग्ज्या दृक्क्षेपाख्या। एतद्वर्गोनात् त्रिज्यावर्गान्मूलं त्रिभोनलग्नशङ्कुर्दृग्गतिसंज्ञः। अत्रेदमवधेयम्। त्रिप्रश्नाधिकारोक्तप्रकारेण त्रिभोनलग्नस्य शङ्कुदृग्ज्ये दृग्गतिदृक्क्षेपतुल्ये न भवतः। किन्तु दृग्गतिदृक्क्षेपाभ्यां क्रमेण न्यूनाधिके भवतः सर्वदा भूलोकसर्वानुभवात्। अत आनीतोऽयं दृक्क्षेपस्त्रिभोनलग्नदृङ्मण्डलस्थितोऽपि न त्रिज्यानुरुद्धः। किन्तु फलवर्गोनत्रिज्यावर्गपदरूपविलक्षणवृत्तव्यासार्धप्रमाणेन सिद्ध इति गम्यते। अतो दृग्ज्यायास्त्रिज्यानुरुद्धत्वेन त्रिज्यावृत्तपरिणतो दृक्क्षेपस्त्रिभोनलग्नस्य दृग्ज्या स्फुटदृक्क्षेपरूपा। अस्मात्तत्त्रिज्यावर्गेत्यादिना दृग्गतिः स्फुटा त्रिभोनलग्नशङ्कुरूपा। एतदुक्तिः स्वल्पान्तरत्वाद्गणितसुखार्थं कृपालुना कृता। त्रिप्रश्नक्रियागौरवभियैतन्मार्गान्तरं लाघवादुक्तमिति" रङ्ग०।

अथ लाघवाद्दृक्क्षेपदृग्गती गणितसुखार्थमाह। "नतांशबाहुकोटिज्ये स्फुटे दृक्क्षेपदृग्गती" सू० सि०।

"दशमभावनतांशानां भुजकोट्योर्नतांशतदूननवतिरूपयोरनयोर्ज्ये क्रमेण दृक्क्षेपदृग्गती अस्फुटे स्थूले। यद्वा स्फुटे प्रागुक्ते दृक्क्षेपदृग्गती विहाय गणितलाघ-

वार्थं दशमभावनतांशभुजकोट्योर्ज्ये तत्स्थानापन्ने ग्राह्ये । अत्रोपपत्तिः त्रिभोनलग्नस्य दशमभावासन्नत्वेन दशमभावस्य याम्योत्तरवृत्तस्थत्वेन लाघवार्थं दशमभावमेव त्रिभोनलग्नं प्रकल्प्य तन्नतांशज्या मध्यज्यारूपा त्रिभोनलग्नदृक्क्षेपः । उन्नतज्याशङ्कुर्दृग्गतिः । इदमतिस्थूलम् । यैस्तु भगवतोक्तं मध्यलग्नं दशमभावपरतया व्याख्यातं तेषां मत एतदुक्तमिति । प्रयाससाधितदृक्क्षेपदृग्गतौ प्रागुक्ते सूक्ष्मे अप्यतिस्थूले इति ध्येयम् । भास्कराचार्यैस्तु "त्रिभोनलग्नस्य दिनार्धजाते नतोन्नतज्ये यदि वा सुखार्थम्" इति यदुक्तं तदस्मात् सूक्ष्ममिति ध्येयम्" रङ्ग० ।

अथ लम्बनोपयुक्तच्छेदकथनपूर्वकं लम्बनानयनमाह ।

"एकज्यावर्गतश्छेदो लब्धं दृग्गतिजीवया । मध्यलग्नार्कविश्लेषज्या छेदेन विभाजिता । रवीन्द्वोर्लम्बनं ज्ञेयं प्राक् पश्चाद्घटिकादिकम्" सू० सि० ।

"एकराशिज्याया वर्गात् दृग्गतिजीवया प्रागुक्तदृग्गत्या दृग्गतेस्त्रिशङ्कुरूपत्वेन ज्यारूपत्वाज्जीवयेति स्वरूपप्रतिपादनम् । भागहरणेन लब्धं छेदसंज्ञं स्यात् । अथ मध्यलग्नम् त्रिभोनलग्नं दर्शान्तकालिकं नतु दशमभावः तात्कालिकः सूर्यः अनयोरन्तरस्य त्रिभानधिकस्य ज्या छेदेन प्राक्साधितेन भक्त्वा फलं घटिकादिकं प्राक् पश्चात् त्रिभोनलग्नरूपमध्यलग्नस्थानात् पूर्वापरविभागयोः सूर्यचन्द्रयोस्तुल्यं लम्बनं ज्ञेयम् । अत्रोपपत्तिः "त्रिभोनलग्नार्कविशेषशिञ्जिनी कृताहता व्यासदलेन भाजिता । हृतात् फलाद्विविभलग्नशङ्कुना त्रिजीवयाप्तं घटिकादि लम्बनम्" सि० शि० सूक्ष्मं लम्बनानयनमुक्तम् । मध्यलग्नस्य त्रिभोनपरत्वेन व्याख्यानान्मध्यलग्नार्कविश्लेषज्या त्रिभोनलग्नार्कविश्लेषशिञ्जिनीरूपा जाता । इयं चतुर्गुणा त्रिभोनलग्नशङ्कुरूपदृग्गत्या च गुण्या त्रिज्यावर्गेण भाज्येति लम्बनानयनप्रकारेण सिद्धम् । तत्र चतुस्त्रिज्यावर्गयोर्गुणहरयोर्गुणापवर्तनेन हरस्थान एकराशिज्यावर्गः सिद्धः । अत्रापि दृग्गत्येकराशिज्यावर्गौ गुणहरौ गुणेनापवर्त्य हरस्थान एकज्यावर्ग इत्यादिना छेद उपपन्नः हरस्य छेदाभिधानात् । अतो मध्यलग्नार्केत्याद्युक्तमुपपन्नम् । लम्बनघटीभिरुभयोश्चालनं वक्ष्यमाणगणित आवश्यकमिति सूचनार्थं रवीन्द्वोर्लम्बनमित्युक्तम् । अन्यथा दर्शान्तकाले सूर्यगतभूपृष्ठसूत्राच्चन्द्रकक्षायां चन्द्रचिह्नस्य तद्घटीभिर्लम्बितत्वाद्द्वयोरत्यनुपपत्तिः । त्रिभोनलग्नसमेऽर्के लम्बनाभावात् पूर्वापरविभागे सूर्ये सति लम्बनं भवतीति प्राक् पश्चादित्युक्तम् । अत्रेदमवधेयम् । लम्बनानयने मध्यलग्नस्य त्रिभोनलग्नस्येत्यर्थे छेदः पूर्वसाधितसूक्ष्मदृग्गत्या सूक्ष्मो नतांशेत्यादिगृहीतस्थूलदृग्गत्या स्थूल इति । एवं मध्यलग्नेत्यस्य दशमभावार्थे तु विपरीतमिति" रङ्ग० ।

अथ मध्यग्रहणकालज्ञानार्थं तिथौ लम्बनसंस्कारं तदसकृत् साध्यमिति च ह ।

"मध्यलग्नाधिके भानौ तिथ्यन्तात् प्रविशोधयेत् । धनमूनेऽसकृत् कर्म यावत् सर्वं स्थिरीभवेत्" सू० सि० ।

"सूर्ये मध्यलग्नं त्रिभोनलग्नं तस्मादधिके सति तिथ्यन्ताद्दर्शतिथ्यन्तकालादागतं लम्बनं शोधयेत् । सूर्ये त्रिभोनलग्नादूने सति तिथ्यन्तकाले लम्बनं धनं युतं कार्यम् । एवं कर्म गणितमसकृन्मुहुः कार्यम् । अयमर्थः । तिथ्यन्तकालिकः सूर्यो लम्बनघटीभिः क्रमेण पूर्वापरकाले चाल्यो लम्बनसंस्कृततिथ्यन्तेऽर्कौ भवति तस्माल्लम्बनसंस्कृततिथ्यन्तकाले लग्नदशमभावौ प्रसाध्य पूर्वोक्तरीत्या लम्बनं साध्यम् । इदमपि केवलतिथ्यन्ते संस्कार्योक्तरीत्या लम्बनं केवलं तिथ्यन्ते संस्कार्यम् । अस्मादपि लम्बनं तिथ्यन्ते संस्कार्यमित्यसकृदिति । गणितावधिमाह । यावदिति । सर्वं गणितं लम्बनादि यावद्यत्परिवर्तावधि स्थिरीभवेत् । अविलक्षणं यावदविशेष इत्यर्थः । अत्रोपपत्तिः दर्शान्तकाले रविगतभूपृष्ठसूत्राच्चन्द्रस्याधो लम्बितत्वेन त्रिभोनलग्नादूने रवौ क्रान्तिवृत्ते पूर्वापरान्तराभावेनैकसूत्रस्थितत्वरूपयुतिर्दर्शान्तकालाल्लम्बनकालेनाग्रे भवति शीघ्रचन्द्रस्य मन्दगरवितः पृष्ठे स्थितत्वात् । अधिके रवौ चन्द्रस्य पुरः स्थितत्वेन दर्शान्तकालाल्लम्बनकालेन पूर्वं युतिर्भवति । अतो दर्शान्तकालो लम्बनसंस्कृतो मध्यग्रहणकालः स्यात् । युतिकालस्य मध्यग्रहणकालत्वात् । परन्तु तावता लम्बनकालेन सूर्यस्यापि क्रान्तिवृत्ते चलनाल्लम्बनसंस्कृतदर्शान्तकाले रविगतभूपृष्ठसूत्राच्चन्द्रस्य लम्बितत्वं स्यादेवेति मध्यग्रहणकालस्त्वसिद्धः । न हि सूर्यो धनलम्बन ऋणलम्बने चन्द्रस्य लम्बनकाले स्थिरो येन तयोर्युतिः सङ्गता स्यात् । अतस्तादृशकालात् पुनस्तात्कालिकं लम्बनं प्रसाध्य दर्शान्ते पुनः संस्कार्यम् मध्यकालः स्यात् । एवं तादृशलम्बनसंस्कृतदर्शान्तेऽपि तयोर्भूपृष्ठसूत्रस्थत्वाभावात् पुनर्लम्बनं साध्यम् । तत्संस्कृतो दर्शान्तो मध्यग्रह इत्य-

स्कृद्विधिना यदा लम्बनं पूर्वलम्बनतुल्यं सिध्यति तदावश्यं तादृशलम्बनसंस्कृतदर्शान्तरूपमध्यग्रहणकाले भूपृष्ठसूत्रे तयोः सन्निवेशः यतस्तदा सूर्य्यगतभूपृष्ठसूत्रचन्द्रयोरन्तराभावेन पूर्वागतलम्बनतुल्यलम्बनस्य पुनः सिद्धिः अन्यथा तुल्यलम्बनानुपपत्तेः। तस्मान्मध्यकालोऽसकृद्यावदविशेषः साध्य इत्युपपन्नं मध्यलग्नेत्यादि" रङ्ग०।

अथ नतिसाधनम्। "दृक्क्षेपः शीततिग्मांश्वोर्मध्यभुक्त्यन्तराहृतः। तिथिघ्नत्रिज्यया भक्तो लब्धं साऽवनतिर्भवेत्" सू०सि०। "दृक्क्षेपः प्रागानीतः शीततिग्मांश्वोश्चन्द्रार्कयोर्मध्यगतोः कलात्मिके तयोरन्तरेण गुणितया त्रिज्यया भक्तः फलं सा देशकालविशेषाभ्यां या गोले सिद्धा भवति सैवात्र गणिते नतिर्भवेत्। अत्रोपपत्तिः यदा क्रान्तिवृत्तं दृग्वृत्ताकारं तदा नत्यभाव इति प्रागुक्तम्। तत्र त्रिभोनलग्नस्य खमध्यस्थत्वेन दृक्क्षेपाभावः। यत्र च षष्ठ्यंशास्तत्र देशे त्रिभोनलग्नस्य क्षितिस्थत्वेन परमा नतिः। परमास्तु नतिकला भूगर्भक्षितिजाद्भूपृष्ठक्षितिजस्य भूव्यासार्द्धान्तरेणोच्छ्रितत्वात् गतियोजनैर्यदि गत्यन्तरकला लभ्यन्ते तदा भूव्यासार्धयोजनैः का इत्यनुपातेन तत्र मध्यमगतियोजनानां भूव्यासार्धस्य च नियतत्वाद्भूव्यासार्द्धेनापवर्त्तः कृतः। तेन मध्यगत्यन्तरकलानां खत्र्यन्तरेण पञ्चदशांशः परमा नतिकलाः। अतएव षष्टिघटिकानां पञ्चदशांशो घटिकाचतुष्टयं परमं लम्बनं सिद्धम्। आभिस्त्रिज्यातुल्यदृक्क्षेपे सूर्य्यगतभूपृष्ठसूत्राच्चन्द्रस्य दक्षिणोत्तरेणावलम्बनं भवति। अतस्त्रिज्यातुल्यदृक्क्षेपेण यदि मध्यगत्यन्तरपञ्चदशांशो नतिस्तदेष्टदृक्क्षेपेण केत्यनुपातेन गत्यन्तरगुणो दृक्क्षेपो हरघातेन पञ्चदशगुणितत्रिज्यात्मकेन भक्तो नतिकला इत्युपपन्नम्" रङ्ग०।

अथ प्रकारान्तराभ्यां नतिसाधनं लाघवादाह।

"दृक्क्षेपात् सप्ततिहृताद्भवेद्वाऽवनतिः फलम्। अथवा त्रिज्यया भक्तात् सप्तसप्तकसङ्गुणात्" सू०सि०।

"सप्तत्या भक्ताद्दृक्क्षेपात् फलं कलादिका नतिः प्रकारान्तरेण भवेत्। अथवा प्रकारान्तरेण सप्तसप्तकसङ्गुणात् सप्तानां सप्तकं सप्तवारमावृत्तिर्वर्ग एकोनपञ्चाशदित्यर्थः तेन गुणितादृक्क्षेपात् त्रिज्यया भक्ता कलादिका नतिः। अत्रोपपत्तिः दृक्क्षेपस्य गत्यन्तरकलामित ७३।२७ गुणकपञ्चदशगुणितत्रिज्यामितहरौ ५१५७० प्रथमप्रकारे गत्यन्तरापवर्त्तितौ हरस्थाने सप्ततिः। द्वितीयप्रकारे पञ्चदशभिरपवर्त्त्य गुणस्थाने खत्र्यन्तरादेकोनपञ्चाशद्धरस्थाने त्रिजेत्युपपन्नम्" रङ्ग०।

अथ नतेर्दिग्ज्ञानं स्पष्टविक्षेपं चाह।

"मध्यज्या दिग्वशात् सा च विज्ञेया दक्षिणोत्तरा। सेन्दुविक्षेपदिक्साम्ये युक्ता विश्लेषिताऽन्यथा" सू०सि०।

"साऽवनतिर्मध्यजाया दिगनुरोधाद्दक्षिणोत्तरा मध्यज्या चेद्दक्षिणा तदा नतिरपि दक्षिणा चेदुत्तरा तदोत्तरा ज्ञेया। चः समुच्चये। तेन मध्यज्या नतांशदिक्केति। सा दक्षिणोत्तरा नतिश्चन्द्रविक्षेपदिक्समत्वे तयोरेकदिक्त्वे इत्यर्थः। युक्ता विक्षेपेण युतेत्यर्थः। अन्यथा तयोर्भिन्नदिक्त्वे विक्षेपेणान्तरिता शेषदिक्का विक्षेपसंस्कृता नतिः स्पष्टशररूपा स्यात्। चन्द्रविक्षेपो मध्यग्रहणकालिक इति ध्येयम्। अत्रोपपत्तिः नतांशदिक्कमध्यज्यावशाद्दृक्क्षेपस्योत्पन्नत्वात् तदुत्पन्ननतेस्तद्दिक्त्वं युक्तमेव। अथ रविगतभूपृष्ठसूत्राच्चन्द्राकाशगोले क्रान्तिवृत्तावधियाम्योत्तरान्तरस्य नतित्वात् क्रान्तिमण्डलाच्चन्द्रबिम्बावधि विक्षेपत्वाद्रविगतभूपृष्ठसूत्राच्चन्द्रबिम्बावधि याम्योत्तरान्तरस्य सूर्य्यग्रहणोपयुक्तनतिसंस्कृतविक्षेपरूपस्य स्पष्टविक्षेपत्वाद्द्वयोरेकदिशि योगो भिन्नदिश्यन्तरमित्युपपन्नम्" रङ्ग०।

अत्र चन्द्रग्रहणातिदेशः "तथा स्थितिविमर्दार्द्ध ग्रासाद्यं तद्यथोदितम्। प्रमाणं वलनाभीष्टग्रासादि हिमरश्मिवत्" सू०सि०। "अथ चन्द्रग्रहणाधिकारोक्तया विक्षेपसंस्कृतया नत्या स्पष्टविक्षेपरूपयेत्यर्थः। स्थित्यर्धविमर्दार्धग्रासाः आद्यशब्दात् स्पर्शमोक्षसम्मीलनोन्मीलनं यथोदितं चन्द्रग्रहणे यथोक्तं तथा। तुकारस्तदतिरिक्तरीतिव्यवच्छेदार्थकैवकारपरः। प्रमाणं मतमित्यर्थः। अवशिष्टमप्याह वलनेत्यादि। वलनाभीष्टग्रासौ। आदिशब्दादिष्टग्रासादिष्टकालानयनम्। हिमरश्मिवत् चन्द्रग्रहणोक्तरीत्या कार्यमित्यर्थः। अत्रोपपत्तिरविशेष एव" रङ्ग०।

अथ स्थित्यर्धे विमर्दार्धे च विशेषः।

"स्थित्यर्धोनाधिकात् प्राग्वत् तिथ्यन्ताल्लम्बनं पुनः। ग्रासमोक्षोद्भवं साध्यं तन्मध्यहरिजान्तरम्। प्राक्कपालेऽधिकं मध्याद्भवेत् प्राग्ग्रहणं यदि। मौक्षिकं लम्बनं हीनं पश्चार्धे तु विपर्ययः। तदा मोक्षस्थितिदले देयं प्रग्रहणे तथा। हरिजान्तरकं शोध्यं यत्रैतत् स्याद्विपर्ययः। एतदुक्तं कपालैक्ये तद्भेदे लम्बनैकता। स्वे स्वे स्थितिदले योज्या विमर्दार्धेऽपि चोक्तवत्" सू०सि०।

"चन्द्रग्रहणाधिकारोक्तप्रकारेणासकृत् साधितं स्पर्शस्थित्यर्धं मोक्षस्थित्यर्धं च। तद्यथा मध्यग्रहणकालिकस्पष्टशरादुक्तरीत्या स्थित्यर्धघटिकास्ताभिस्तिथ्यन्तकालिकग्रहाः। स्पर्शस्थित्यर्धनिमित्तं पूर्वं चाल्याः। मोक्षस्थित्यर्द्धनिमित्तमग्रे चाल्याः। तत्कालयोः प्रत्येकं नतिशरौ प्रसाध्य स्पष्टशरः साध्यः। ततः प्रथमकालिकस्पष्टशरात् स्थित्यर्धमनेन पूर्वं तिथ्यन्तकालिकग्रहात् प्रचाल्योक्तरीत्या स्पष्टशरं प्रसाध्य स्थित्यर्धं साध्यम्। एवमसकृत् स्पर्शस्थित्यर्धम्। एवमेव द्वितीयकालिकस्पष्टशरात् स्थित्यर्धमनेनाग्रे तिथ्यन्तकालिकग्रहान् प्रचाल्योक्तरीत्या स्पष्टशरं प्रसाध्य स्थित्यर्धं साध्यम्। एवमसकृन्मोक्षस्थित्यर्धमिति। अथाभ्यां स्पर्शमोक्षस्थित्यर्धाभ्यां क्रमेण हीनयुताद्दर्शान्तकालात् प्राग्वदुक्तरीत्या लम्बनं पुनरसकृद्ग्रासमोक्षोद्भवं स्पर्शमोक्षकालिकं कार्यम्। तथाहि स्पर्शस्थित्यर्धहीनात् तिथ्यन्तात् तात्कालिकसूर्याल्लग्नदृग्गमभावौ प्रसाध्योक्तरीत्या लम्बनं साध्यम्। तेन स्पर्शस्थित्यर्धोनतिथ्यन्तं संस्कृत्यास्माल्लम्बनमनेनापि स्पर्शस्थित्यर्धोनतिथ्यन्तं संस्कृत्यास्माल्लम्बनमेवमसकृत् स्पर्शकालिकं लम्बनम्। एवमेव मोक्षस्थित्यर्धयुतात् तात्कालिकसूर्याल्लग्नदृग्गमभावौ प्रसाध्योक्तरीत्या लम्बनं साध्यम्। तेन मोक्षस्थित्यर्धयुततिथ्यन्तं संस्कृत्यास्माल्लम्बनमनेनापि मोक्षस्थित्यर्धयुततिथ्यन्तं संस्कृत्यास्माल्लम्बनमेवमसकृन्मोक्षकालिकं लम्बनमिति। प्राक्कपाले त्रिभोनलग्नात् पूर्वभागे त्रिभोनलग्नाधिके रवौ मध्यान्मध्यकालिकात्। अग्रोक्तलम्बनस्य विभक्तिविपरिणामादन्वयेन लम्बनात् प्राग्ग्रहणं प्रगृह्यं स्पर्शः स्पर्शकालिकम्। अत्रापि लम्बनमित्यस्यान्वयः। लम्बनं चेदधिकं स्यात्। मौक्तिकं मोक्षकालसम्बन्धि लम्बनं न्यूनं स्यात्। पश्चार्धे त्रिभोनलग्नात् पश्चिमभागे त्रिभोनलग्नाद्धीने रवौ। तुकारः समुच्चयार्थचकारपरः। विपर्यय उक्तवैपरीत्यम्। मध्यकालिकलम्बनात् स्पर्शकालिकं लम्बनं न्यूनं मोक्षकालिकं लम्बनमधिकमित्यर्थः। तदा तर्हि तन्मध्यहरिजान्तरम्। तयोः स्पर्शमोक्षकालिकलम्बनेन प्रत्येकमन्तरं मोक्षस्थित्यर्धे योज्यम्। प्राग्ग्रहणे स्पर्शस्थित्यर्धे तथा देयम्। मोक्षमध्यकालिकलम्बनयोरन्तरं मोक्षस्थित्यर्द्धे योज्यम्। स्पर्शमध्यकालिकलम्बनयोरन्तरं स्पर्शस्थित्यर्धे योज्यमित्यर्थः। यत्र यस्मिन् काले विपर्यय उक्तवैपरीत्यं प्राक्कपाले मध्यकालिकलम्बनात् स्पर्शकालिकलम्बनं न्यूनं मोक्षकालिकलम्बनमधिकं पश्चिमकपाले तु मध्यकालिकलम्बनात् स्पर्शकालिकलम्बनमधिकं मोक्षकालिकलम्बनं न्यूनं भवतीत्यर्थः। तत्र तन्मोक्षस्पर्शमध्यकालिकं हरिजान्तरकं लम्बनान्तरं मोक्षस्थित्यर्द्धे, मध्यमोक्षकालिकलम्बनयोरन्तरं स्पर्शस्थित्यर्द्धे मध्यस्पर्शकालिकलम्बनयोरन्तरमित्यर्थः। शोध्यं हीनं कुर्यात् एतल्लम्बनान्तरं योज्यं शोध्यं वा कपालैक्ये द्वयोः स्पर्शमध्ययोर्मध्यमोक्षयोर्वैककपाले स्वस्वकालिकत्रिभोनलग्नात् स्वस्वकालिकसूर्य्ये उभयत्राधिके न्यूने वेत्यर्थः। उक्तं कथितम्। तद्भेदे तयोः स्पर्शमध्ययोर्मध्यमोक्षयोश्च भेदे कपालभेदे स्पर्शकालिकत्रिभोनलग्नात् तात्कालिकसूर्य्यस्याधिक्ये मध्यकालिकत्रिभोनलग्नात् तात्कालिकार्कस्य न्यूनत्वे मध्यकालिकत्रिभोनलग्नात् तात्कालिकार्कस्याधिकत्वे मोक्षकालिकत्रिभोनलग्नात् तात्कालिकार्कस्य न्यूनत्वे इत्यर्थः। लम्बनैकता लम्बनैक्यम्। स्पर्शमध्ययोर्भेदे तात्कालिकलम्बनयोर्योगः मध्यमोक्षयोर्भेदात् तात्कालिक लम्बनयोर्योग इत्यर्थः। स्वकीये स्वकीये स्थित्यर्धे संयुता कार्या। स्पर्शस्थित्यर्द्धे स्पर्शमध्यकालिकलम्बनयोर्योगो योज्यः मोक्षस्थित्यर्द्धे मोक्षमध्यकालिकलम्बनयोर्योगो योज्य इत्यर्थः। स्पर्शस्थित्यर्धं मोक्षस्थित्यर्धं च स्फुटं भवति। आभ्यां चन्द्रग्रहणोक्तदिशा मध्यग्रहणकालात् पूर्वमपरत्र क्रमेण स्पर्शमोक्षकालौ स्त इत्यर्थसिद्धम्। अथोक्तरीत्या विमर्दार्धेऽपि स्पष्टत्वमतिदिशति। विमर्दार्धे इति। स्पर्शमर्दार्धमोक्षमर्दार्धे चन्द्रग्रहणाधिकारोक्तरीत्या स्पष्टशरेण असकृत् साधिते उक्तवत् "स्थित्यर्धोनाधिकात् प्राग्वत् तिथ्यन्ताल्लम्बनं पुनः" इत्याद्युक्तरीत्या स्थित्यर्धस्थाने मर्दार्धग्रहणेन ग्रासमोक्षोद्भवमित्यत्र सम्मीलनोन्मीलनोद्भवमिति ग्रहणेन प्राग्ग्रहणमित्यत्र सम्मीलनग्रहणेन मौक्तिकमित्यत्रोन्मीलनग्रहणेन स्फुटे साध्ये। अपिः समुच्चये। चकारात् ताभ्यां सम्मीलनोन्मीलनकालौ मध्यग्रहणकालात् पूर्ववत् साध्यावित्यर्थः। अत्रोपपत्तिः स्थित्यर्धोनयुतौ मध्यग्रहणकालः स्पर्शमोक्षकालः मध्यकालिकलम्बनसंस्कारात् स्पर्शमोक्षकालिकलम्बनसंस्कारस्यापेक्षितत्वाच्च। न हि यः कालो लम्बनसंस्कृतः स्फुटः स स्वभिन्नकालिकलम्बनसंस्कृतः स्फुटः स्यात् सम्बन्धाभावात् पूर्वं स्पर्शमोक्षकालयोरज्ञानात् तात्कालिकलम्बनज्ञानाभावाच्च। अतो मध्यकालज्ञानार्थं यथा तिथ्यन्तादसकृल्लम्बनं प्रसाध्य तिथ्यन्ते संस्कृत्य

मध्यकालस्तथा स्पर्शमोक्षस्थित्यर्धहीनयुक्ततिथ्यन्तकालाभ्यां स्पर्शमोक्षतिथ्यन्तरूपाभ्यां प्रत्येकं लम्बनमसकृत् प्रसाध्य स्वस्वतिथ्यन्ते संस्कृत्य स्पर्शमोक्षकालौ स्फुटौ तन्मध्यकालयोरन्तरं स्फुटं स्थित्यर्धम्। तत्रर्णलम्बनेन स्पर्शमध्यमोक्षोत्पत्तौ यदा मध्यलम्बनादधिकं स्पर्शलम्बनं मोक्षलम्बनं च न्यूनं तदा स्पर्शस्थित्यर्धोनतिथ्यन्तस्याधिकलम्बनोनितस्य स्पर्शकालत्वान्न्यूनलम्बनोनितस्य तिथ्यन्तस्य मध्यकालत्वात् तयोरन्तरे तिथेः समत्वेन नाशात् स्पर्शस्थित्यर्धं स्पर्शकालिकलम्बनेन युतं मध्यकालिकलम्बनेन हीनमिति लम्बनयोरन्तरं तत्र धनं योज्यम्। एवं मोक्षस्थित्यर्धयुततिथ्यन्तस्य न्यूनलम्बनोनितस्य मोक्षकालत्वान्मध्यमोक्षकालयोरन्तरे पूर्वरीत्या मध्यमोक्षकालिकयोर्लम्बनयोरन्तरं धनं मोक्षस्थित्यर्धे योज्यम्। यदा तु मध्यलम्बनाद्धीनं स्पर्शलम्बनं मोक्षलम्बनं चाधिकं तदा न्यूनलम्बनहीनस्य स्पर्शकालत्वादधिकलम्बनम्। हीनस्य मध्यकालत्वादुक्तरीत्या तदन्तरे स्पर्शस्थित्यर्धे लम्बनान्तरं हीनम्। एवमधिकलम्बनहीनस्य मोक्षकालत्वान्मध्यमोक्षयोरन्तरे मोक्षस्थित्यर्धे लम्बनान्तरं हीनम्। धनलम्बनेन स्पर्शमध्यमोक्षोत्पत्तौ तु यदा मध्यलम्बनान्न्यूनं स्पर्शलम्बनं मोक्षलम्बनं चाधिकं तदा स्पर्शस्थित्यर्धोनतिथ्यन्तस्य न्यूनलम्बनाधिकस्य स्पर्शकालत्वादधिकलम्बनाधिकस्य तिथ्यन्तस्य मध्यकालत्वात् तयोरन्तरे लम्बनान्तरं स्पर्शस्थित्यर्धे योज्यम्। एवं मोक्षस्थित्यर्धयुततिथ्यन्तस्याधिकलम्बनाधिकस्य मोक्षकालत्वान्मध्यमोक्षयोरन्तरं मोक्षस्थित्यर्धे पूर्व्वरीत्या योज्यम्। यदा तु मध्यलम्बनादधिकं स्पर्शलम्बनं मोक्षलम्बनं च न्यूनं तदाऽधिकलम्बनाधिकस्य स्पर्शकालत्वाद्धीनलम्बनाधिकस्य मध्यकालत्वात् तयोरन्तरे उक्तरीत्या स्पर्शस्थित्यर्द्धे लम्बनान्तरं हीनम्। एवं न्यूनलम्बनाधिकस्य मोक्षकालत्वात् तन्मध्यकालान्तरे मोक्षस्थित्यर्द्धे लम्बनान्तरं हीनमिति सिद्धम्। नन्वयं लम्बनान्तरहीनपक्षो न सङ्गतः बाधात् तथाहि ऋणलम्बनस्य क्रमेणापचयात् स्पर्शमोक्षकालानां यथोत्तरं सम्भवाच्च मध्यकालिकलम्बनात् स्पर्शमोक्षकालिकलम्बनयोः क्रमेण न्यूनाधिकत्वमसिद्धम् एवं धनलम्बनस्य क्रमेणोपचयान्मध्यलम्बनात् स्पर्शमोक्षकालिकलम्बनयोः क्रमेणाधिकन्यूनत्वमसिद्धम्! न हि कदाचिन्मध्यकालात् स्पर्शमोक्षकालौ क्रमेणाग्रिमपूर्वकालयोः सम्भवतो येनोक्तं युक्तम् बाधात् तथा च लम्बनान्तरं योज्यमित्यस्यैवोपपन्नत्वे मद्दतैतावता प्रपञ्चेन "हरिजान्तरकं शोध्यं यत्रैतत् स्याद्विपर्ययः" इति सर्वज्ञभगवदुक्तं कथं निर्वहतीति चेत् मैवम् लम्बनसंस्कृतस्पर्शमोक्षकालयोः स्फुटयोरवस्तुभूतयोः सर्वदा मध्यकालात् क्रमेण पूर्वोत्तरावश्यंभावित्वेऽपि लम्बनासंस्कृतयोः स्थित्यर्द्धोनयुततिथ्यन्तरूपस्पर्शमोक्षकालयोः पारिभाषिकत्वेनावास्तवयोः कदाचिन्मध्यकालर्णधनलम्बनाभ्यां स्पर्शस्थित्यर्द्धमोक्षस्थित्यर्द्धयोः क्रमेण न्यूनत्वे मध्यकालादग्रिमपूर्वकालयोः क्रमेण सम्भवात् स्फुटो निर्वाहः। परन्त्वृणलम्बने धनलम्बने च मध्यलम्बनात् क्रमेण मोक्षस्पर्शलम्बनयोरधिकत्वासम्भवः। मध्यकालात् पूर्वाग्रिमकालयोर्मोक्षस्पर्शयोः पारिभाषिकयोः क्रमेणासम्भवात्। अतः साक्षात् कण्ठोक्तेरभावाद्विपर्य्यय इत्यनेन विपर्ययविशेषस्यैव विवक्षितत्वन्। पूर्व्वं तु साधारण्याच्छब्दस्य साधारण्येन व्याख्यानं कृतमित्यदोषः"। 'वस्तुतस्तु सूर्योदयाद्यत्र प्राक् स्पर्शोऽनन्तरं मध्यकालस्तदा मध्यलम्बनात् स्पर्शलम्बनं सत्रिभलग्नचतुर्थभावसाधितं कदाचिन्न्यूनं भवति। यत्र चोदयात् पूर्वं मध्यः परतो मोक्षस्तत्र कदाचित् सत्रिभलग्नचतुर्भावानीतमध्यकाललम्बनान्मोक्षकाललम्बनमधिकं भवति। यत्र चास्तात् पूर्वं स्पर्शः परतो मध्यस्तदा मध्यकाललम्बनाद्रात्रिसम्बन्धात् स्पर्शकाललम्बनं कदाचिदधिकं भवति। यत्र चास्तात् पूर्वं मध्यकालः परतो मोक्षस्तदापि मध्यकाललम्बनान्मोक्षकाललम्बनं रात्रिसम्बद्धं न्यूनं न भवति। कदाचिदिति। ग्रस्तोदयग्रस्तास्तयोः कदाचिद्विपर्ययसम्भवाद्धरिजान्तरकं शोध्यमित्यस्य नाप्रसिद्धिः विमर्दार्द्धेऽप्युक्तरीतिस्तुल्येति सर्वमुपपन्नम्। भास्कराचार्यैस्तु। "तिथ्यन्ताद्गणितागतात् स्थितिदलेनोनाधिकाल्लम्बनं तत्कालोत्थनतीषुसंस्कृतिभवस्थित्यर्द्धहीनाधिके। दर्शान्ते गणितागते धनमृणं यद्वा विधायासकृत् ज्ञेयौ प्रग्रहमोक्षसंज्ञसमयावेवं क्रमात् प्रस्फुटौ। तन्मध्यकालान्तरयोः समाने स्पष्टे भवेतां स्थितिखण्डके च। दृशीनातो मर्दलेनयुक्तात् सम्मीलनोन्मीलनकाल एवम्" इत्यनेन भगवदुक्त दर्शितस्वल्पमुक्तमित्यलं पल्लवितेन" रङ्ग०। इतः परं परिलेखवलनाद्यानयनं तत्त्व शि० गून्थेऽविशिष्टं तदग्रे वक्ष्यते इतीह तन्नोक्तम्।

सिद्धान्तशिरोमणौ ग्रहणसम्भवनिर्णयार्थमाह यथा 'कलेर्गताब्दा रवि १२भिर्विनिघ्नाश्चैत्रादिमासैः सहिताः पृ-

थक्स्थाः। द्विघ्नाः खनागाङ्कगजांश ८९८ होनाः पञ्चाङ्ग ६५ भक्ताः प्रथमान्विताः स्युः। मासाः पृथक्ते द्विगुणास्त्रिपूर्णवाणाऽ ५०३धिकाः स्वाङ्कन्टपांश १९६ युक्ताः। त्रिभि ३र्विभक्ताः फलसंशपूर्वं मासौघतुल्यैश्च गृहैर्युतं स्यात्। सपातसूर्योऽस्य भुजांशका यदा मनू १४नकाः स्याद्ग्रहणस्य सम्भवः" शि०। "कलिमुखादेरारभ्य गताब्दा द्वादशगुणाश्चैत्रादिगतमासयुताः पृथक्स्था द्विघ्नाः स्वकीयेन गजाङ्काष्ट ८९८ भागेनोनाः पञ्चषष्ट्या ६५ भक्ताः फलमधिमासाः। तैः पृथक्स्था युताश्चान्द्रा मासा भवन्ति। अत्रोपपत्तिस्त्रैराशिकेन। यदि युगरविमासै ५१८४०००० र्युगाधिमासा १५९३-३००लभ्यन्ते तदैभिः कलिगतैः किमिति। अत्राधिमासानामर्धेनानेन ७९६६५०गुणकभाजकावपवर्त्तितौ जातं गुणकस्थाने द्वयम् भागहारस्थाने पञ्चषष्टिः किञ्चिदभ्यधिका ६५।४। २१। अतः पञ्चषष्टिगुणानामधिमासानां १०३५९४५००द्विगुणानां रविमासानां च १०३६८०००० यदन्तरं ११५५००। तेन द्विगुणा रविमासा भक्ता लब्धमष्टाङ्कगजाः ८९८। तैर्द्विगुणाः कलिगतमासा भाज्याः। यल्लभ्यते तेन तान् वर्जितान् कृत्वा पञ्चषष्ट्या ६५ भागे हृतेऽधिमासा लभ्यन्त इत्युपपन्नम्। तैरधिमासैः पृथक्स्था युताश्चान्द्रमासाः स्युः। ते चान्द्रमासाः पृथग्द्विनिघ्नास्त्रिपूर्णबाणैः ५०३ सहिताः स्वकीयेनाङ्कन्टपांशेन १९६ युक्तास्त्रिभिर्भाज्याः। फलमंशाद्यं ग्राह्यम्। तानंशांस्त्रिंशता ३०विभज्य फलं राशयस्तदुपरि स्थाप्याः। राशिस्थाने मासौघतुल्या राशयश्च क्षेप्याः। एवमसौ सपातसूर्यो भवति। तस्य भुजांशा यदि चतुर्दशभ्य १४ ऊना भवन्ति तदा चन्द्रग्रहणस्य सम्भवो वेदितव्यः। अत्रोपपत्तिः। ग्रहणं हि मानैक्यार्धादूने विक्षेपे भवति। चन्द्रग्रहे मध्यमं मानैक्यार्द्धं षट्पञ्चाशत् कलाः६५। सूर्यग्रहे द्वात्रिंशत्३२। षट्पञ्चाशत् कलाः शरो द्वादशभिर्भुजभागैर्भवति (चन्द्रग्रहे)। द्वात्रिंशन्मिताः सप्तभिर्भुजभागैर्भवति (रविग्रहे)। अतः स विक्षेपः सपातेन्दोः साध्यते। दर्शान्ते यावान् विधुस्तावानेव रविर्भवति। पौर्णमास्यन्ते तु षड्भाधिकस्यापि भुजस्तुल्य एव। अतः सपातार्काद्विक्षेपः कृतः। अतः सपातसूर्यसाधनेऽनुपातः। तत्रार्कपातयोः कल्पभगणानामैक्यं द्वादशभिः १२ सङ्गुण्य राश्यात्मकं कार्यम्। यदि कल्पचान्द्रमासैरेभिः ५३४३३३०००० रेते राशयो ५४६२-७७३४०१६लभ्यन्ते तदैकेन किमिति लब्धमेको राशिः १। शेषं त्रिंशता ३०सङ्गुण्य तेनैव हारेण भागे ह्रियमाणे लब्धं पूर्णम्०। शेषं भागांशा अधश्छेदश्च ३५८३३०२०४८०/५३४३३३००००। छेदत्र्यंशेन१७८१११०००० छेदेऽपवर्तिते जातं त्रयम्३। तेनैव छेदत्र्यंशेन भाज्यराशावपवर्तिते जातं द्वयम् २। शेषार्धेन शेषे ३१०८३०४८०ऽपवर्त्तिते जातं द्वयम् २। पूर्वच्छेदस्य त्र्यंशे च शेषार्धेनापवर्तिते जाता अङ्कन्टपाः १९६। अतो द्विगुणान्मासगणात् स्वाङ्कन्टपां, १९६ शाधिकात् त्रिभिर्विभक्तात् फलं भागादि मासगणतुल्या राशयश्च तत्र क्षेप्याः एवं सपातसूर्यो भवतीत्युपपन्नम्। यदुक्तं त्रिपूर्णवाणा ५०३ धिका इति। अयं कलियुगादौ पातस्य क्षेपस्तथा सपातसूर्यमासार्धक्षेपश्चात्र योजितः। तथात्र मध्यमः सूर्यः सपात आगच्छति। तेन स्फुटेन भवितव्यम्। स्फुटमध्ययोरन्तरं स्थूलं किल भागद्वयम्। अत उक्तं मनूनका इति अन्यथा द्वादशभिरेव भुजभागैर्मानैक्यार्द्धतुल्यः शर उत्पद्यते। तथा गूढक्रियया फलमानीय सपातसूर्य इति नामनिर्देशः कृतः। तेन तयोर्बीजकर्म सूचितम्। तदप्यत्र सपातार्के कार्यम्" प्रमि०। अथ सूर्यग्रहार्थं विशेषः। "गृहार्धयुक्तस्य सपातभास्वतो भुजांशकान् गोलदिशोऽवगम्य च। क्षयोऽर्कोरविसंक्रमाद्गतदिनैर्दशान्तनाड़ीनताद्देदां४शेन गृहादिनोनसहितः प्राक् पश्चिमेऽस्थापमः। अत्रांशैः खलु संस्कृतो रसलवेनाश्याथ ते संस्कृताः पाताढ्यार्कभुजांशका यदि नगो७नाः स्युस्तदार्कग्रहः। रूपं १ वियत् ०पूर्णकृतान् ४०सपादान् १५ क्षिप्त्वा सपाते प्रतिमाससमर्के। तत्सम्भवं प्रागवलोक्य धीमान् ग्रहान् ग्रहार्थं विदधीत तत्र" शि०। "अत्रोक्तवद् यः सपातसूर्यो ज्ञातः। असौ पञ्चदशभि १५भागैरधिकः कार्यः। यदि सूर्यग्रहणसम्भवो ज्ञातव्यः। ततस्तस्य भुजांशा यदि सपातः सूर्य उत्तरगोले तदोत्तरा यदि दक्षिणे तदा दक्षिणाः, तद्दिक्चिह्निता अनष्टाः स्थाप्याः। रविसंक्रमात् सूर्यो ज्ञेयः। रविसंक्रमाद्यावन्तो दिवसा गतास्तावन्तो भागा कल्प्याः। गतसंक्रान्तितुल्या राशयश्च। ततोऽमावास्यान्तकालस्य स्थूलस्य नतघटिकाः कार्याः। तासां चतुर्भि ४ र्भागे हृते यल्लभ्यते तद्राश्यादिकं फलं ग्राह्यम्। तेन राश्यादिना फलेन पूर्वाह्णे रविरूनः कार्योऽपराह्णे युतः तस्य सायनांशस्य क्रान्तिः साध्या। क्रान्त्यक्षांशानां च

तुल्यदिशां योगोऽन्यदिशामन्तरमेवं ते नतांशा भवन्ति। तेषां रसांशेन ६ तेऽनष्टाः स्थापिता भागाः संस्कृता कार्याः। समदिशां योगोभिन्नदिशामन्तरमित्यर्थः। एवं ते भागा यदि सप्तभ्य ७ ऊना भवन्ति तदा सूर्यग्रहणसम्भवो वेदितव्यः। अथ सपातसूर्यस्य प्रतिमासक्षेपः। यदि तस्मिन् मासे नार्कग्रहस्तदा सपातसूर्ये राशिस्थाने रूपम् १। भागस्थाने पूर्णम् ० सपादाश्चत्वारिंशत् कलाश्च ४०। १५। प्रतिमासं प्रक्षिप्य सम्भवो ज्ञेयः। ज्ञाते सम्भवे स्फुटार्थं तत्र गृहाः कार्याः। अत्रोपपत्तिः। ये सपातसूर्यस्य भुजांशास्ते शरार्थं पृथक् स्थापिताः। अथ च सूर्यग्रहे शरो नत्या संस्कृतः कार्यः। तदर्थं दर्शान्ते या नतघटिकास्ता लम्बनेनोनाधिकाः कार्याः नतघटीनां चतुर्थांशः स्थूलं लम्बनम्। पञ्चभिः पञ्चभिर्घटिकाभिरेकैकः किल राशिः। याः किल नतघटिकास्ताश्चतुर्थांशेन लम्बनेनाधिकाः कार्याः। ततः पञ्चभिर्भाज्याः। एवं कृते पूर्वघटिकाश्चतुर्भिर्भक्ता भवन्ति। अतस्तेन राश्यादिनोनो रविः पूर्वाह्णे त्रिविभासन्नो भवति। पश्चिमकपाले तु युतः सन्। यतस्तत्रार्कादग्रतो वित्रिभं वर्तते। एवं वित्रिभलग्नस्य क्रान्तिरक्षांशैः संस्कृता नतांशा जाताः। ते यदा नतांशाः पञ्चचत्वारिंशद् ४५ भवन्ति तदा। यदि त्रिजयया परमावनति ४८। ४६ लभ्यते तदा पञ्चचत्वारिंशदंशानां ज्यया। २४३१ किमिति। फलं नतिः सार्धाश्चतुस्त्रिंशत् कलाः ३४। ३० एतावांश्छरो यैर्भुजभागैरुत्पद्यते ते ज्ञेयाः। यदि सप्तत्या कलानां पञ्चदश १५ भागा लभ्यन्ते तदाभिर्नतिकलाभिः ३४।३० किमिति लब्धा अंशाः सप्त ७,२४ चतुर्विंशति कलाश्च। एते तु नतलवानां षडंशेनोत्पद्यन्ते। अत उक्तं रसलवेनाढ्याथ ते संस्कृता इत्युपपन्नम्" प्रमि०।

एवं सिद्धान्तोक्ते ग्रहणसम्भवनियमे स्थिते"ज्यो०त०। "भत्रिपादान्तरे राहोः केतोर्वा संस्थितो रविः। चतुष्पादान्तरे चन्द्रस्तदा सम्भाव्यते ग्रहः। अस्मिन्नृक्षे रविस्तस्माच्चतुर्दशगतः शशी। पूर्णिमाप्रतिपत्सन्धौ राहुणा ग्रस्यते शशी। कृष्णपक्षे तृतीयायां मासर्क्षं यदि जायते। ततस्तयोदशे सूर्ये राहुणा ग्रस्यते रविः" इत्युक्तिर्निर्मूला, समूलत्वे अतिस्थूलदृष्ट्या तयोक्तिः कथञ्चित्समर्थनीया। सिद्धान्तशिरमणौ पाताद्यानयने विशेष उक्तो यथा "समग्टहांशकलाविकलौ स्फुटौ रविविधू विदधीत रविग्रहम्। समलवावयवौ तु विधुग्रहं समवगन्तुमगुं च तदोक्तवत्" शि०। "सति संभवे रविग्रहं ज्ञातुममावास्यायां रविविधू तमश्च स्फुटं कृत्वा ततोऽर्केन्दू देशान्तरादिस्पष्टीकरणैः स्फुटौ विधाय तिथिं च कृत्वा यथोक्तं नतकर्म च। तथा कृते सति तिथ्यन्तकालिकौ तौ कार्यौ तमश्च एवं चन्द्रग्रहणं ज्ञातुं पौर्णमास्यां च। यतस्ततो ग्रहणक्रिया" प्रमि०।

इदानीमर्केन्द्वोः कक्षाव्यासार्धे आह। "नगनगाग्निनवाष्टरसा ६८९३७७ रवे रथरसेषुमहीषु ५१५६६ मिता विधोः। निगदिताऽवनिमध्यत उच्छ्रितिः श्रुतिरियं किल योजनसंख्यया" शि०। "स्पष्टार्थम्। अत्रोपपत्तिः कक्षाध्याये चन्द्रार्कयोः किल (४३३१४९७,३० रवेः,३२४०००इन्दोः,) कक्षे कथिते। किन्तु व्यासौ न कथितौ। तावदिदानीं त्रैराशिकेन। यदि भनन्दाग्निमित ३९२७ परिधेः खबाणसूर्यै १२५० र्मितो व्यासस्तदा सार्धाद्रिगोमनुसुराब्धिमिता ४३३१४९७। ३० ऽर्ककक्षायास्तथा सहस्रगुणितजिनरामसंख्याया ३२४००० चन्द्रकक्षायाः क इति। फलं क्रमेण तयोः (१३७८७५४ र० १०३१२२ च०) व्यासौ। तयोरर्धे एते (श्लोकोक्ते) स्तो। इयं भूमध्यात् कक्षाया उच्छ्रितिः" प्रमि०।

इदानीमस्य योजनात्मककर्णस्य स्फुटीकरणार्थमाह। "मन्दश्रुतिर्द्राक्श्रुतिवत् प्रसाध्या तया त्रिभज्या द्विगुणा विहीना। त्रिज्याकृतिः शेषहृता स्फुटा स्यात्तिग्मा श्रुतिस्तिग्मरुचेर्विधोश्च" शि०। "यथा ग्रहस्य शीघ्रकर्मणि कर्णः साधितस्तथार्कस्य विधोश्च पृथक् पृथक् मन्दकर्णः साध्यः। तं कर्णं द्विगुणायास्त्रिज्याया विशोध्य शेषेण त्रिज्याकृतिर्भाज्या। फलं स्फुटः कलाकर्णो भवति। एवं विधोश्च। अत्रोपपत्तिः। इह स्पष्टीकरणे ये मन्दनीचोच्चवृत्तपरिधिभागाः पठितास्ते त्रिज्यातुल्ये कक्षाव्यासार्धे यदा ग्रहस्य कर्ण उत्पन्नस्तदा कर्णो व्यासार्धं ग्रहकक्षायाः। अतस्त्रैराशिकेन तत्परिणतास्ते कार्याः। यदि त्रिज्याव्यासार्धे एते मन्दपरिधिभागास्तदा कर्णव्यासार्धे क इति। एवं परिधेः स्फुटत्वं विधायासकृत् कर्णः कार्यः। स कलाकर्णः स्फुटो भवति। एतदसकृत्कर्मोपसंहृत्य सकृत्कर्मणा कर्णस्य स्फुटत्वं कृतम्। प्रथमं यः कर्ण आगतस्तमेव त्रिज्यारूपं प्रकल्प्य स्फुटः कर्णोऽत्र साध्यते। यदा किल कर्णस्त्रिजयातो न्यूनो भवति यावता न्यूनस्तत् त्रिजयया संयोज्य यद्यधिको वर्तते या-

वताधिकस्तत् त्रिजाया विशोध्य शेषेणानुपातः। यद्य-नेन त्रिज्या लभ्यते तदा त्रिज्यया किमिति। अनेनानुपातेन स्फुटः कर्णः सम्भवति। अत्र धूलीकर्मणा प्रत्यक्षप्रतीतिः" प्रमि०।

"इदानीं योजनात्मककर्णस्य स्फुटत्वमाह। "लिप्ताश्रुतिघ्नस्त्रिगुणेन भक्तः स्पष्टो भवेद्योजनकर्ण एवम्" शि०। "स्पष्टार्थम्। अत्रोपपत्तिस्त्रैराशिकेन यदि त्रिज्याव्यासार्धे एतावान् स्फुटः कर्णस्तदा योजनात्मकव्यासार्धे किमिति। फलं भूमध्याद्ग्रहोच्छ्रितियोजनानि" प्रमि०।

इदानीं योजनबिम्बान्याह। "बिम्बं रवेर्द्विद्विशरर्तु ६५२२ संख्यानीन्दोः खनागाम्बुधि ४८० योजनानि। भूव्यासहीनं रविबिम्बमिन्दुकर्णाहतं भास्करकर्णभक्तम्। भूविस्तृतिर्लब्धफलेन हीना भवेत् कुभाविस्तृतिरिन्दुमार्गे" शि०। "रवेर्योजनात्मकं बिम्बं मध्यमं द्वियमबाणषट्कतुल्यानि ६५२२ योजनानि (सौरागमे६५००मितबिम्बोक्तिः किञ्चिदधिकपरत्वपरतया संगमनीया)। इन्दोस्तु शून्यवसुवेद४८० मितानि। अथ राहोरुच्यते। रविबिम्बं भूव्यासेन हीनं ४६४१ कृत्वेन्दुकर्णेन स्फुटेन योजनात्मकेन संगुण्य स्फुटेन रविकर्णेन भजेत्। फलेन भूव्यासो वर्जितश्चन्द्रकक्षायां भूभाव्यासो भवति। एतानि योजनबिम्बानि। अत्रोपपत्तिः। यस्मिन् दिनेऽर्कस्य मध्यतुल्यैव स्फुटा गतिः स्यात् तस्मिन् दिने उदयकाले चक्रकलाव्यासार्धमितेन यष्टिद्वितयेन मूलमिलितेन तत्रस्थदृष्ट्या तदग्राभ्यां बिम्बप्रान्तौ विध्येत्। या यष्ट्यग्रयोरन्तरकलास्ता रविबिम्बकला भवन्ति मध्यमाः। ताश्च द्वात्रिंशत् किंचिदधिकैकत्रिंशद्विकलाधिकाः ३२। ३१। ३३। एवं विधोरपि पौर्णमास्यां यदा मध्यैव गतिः स्पष्टा तदा विध्येत् तस्यैवं द्वात्रिंशत् कलाः ३१। ०। ९ उत्पद्यन्ते। बिम्बकलानां योजनीकरणायानुपातः। यदि त्रिज्याव्यासार्धे एतावत्प्रमाणं बिम्बं तदा पठितश्रुतियोजनैः किमित्येवमुत्पद्यन्ते द्विद्विशरर्तु६५२२ संख्यानि योजनानि। विधोस्तु खनागाम्बुधि ४८० मितानीति। अथ भूभाबिम्बस्योपपत्तिरुच्यते। अर्कबिम्बव्यासाद्भूव्यासो यतोऽल्पोऽतो भूभा सूच्यग्रा भवति दीर्घतया चन्द्रकक्षामतीत्य दूरं बहिर्गच्छति। अतो भूविस्तृतेः कियत्यपचये जाते चन्द्रकक्षायां भूभाविस्तृतिर्भवतीति ज्ञानायानुपातः। यदि रविकर्णेन सूर्यबिम्बभूव्यासान्तरयोजनानि४६४१ लभ्यन्ते तदा चन्द्रकर्णेन किमिति। फलं भूव्यासस्यापचययोजनानि भवन्ति। अतस्तैर्भूव्यास ऊनीकृतश्चन्द्रकक्षायां भूभाव्यासो भवतीत्युपपन्नम्" प्रमि०।

इदानीं योजनानां कलाकरणार्थमाह। "सूर्येन्दुभूभातनुयोजनानि त्रिज्याहतान्यर्कशशाङ्ककर्णैः। भक्तानि तत्कार्मुकलिप्तिकास्तास्तेषां क्रमान्मानकला भवन्ति" शि०। "स्पष्टार्थम्। अत्रोपपत्तिस्त्रैराशिकेन यदि योजनात्मकव्यासार्धे एतावन्ति बिम्बमानानि तदा त्रिज्याव्यासार्धे कियन्तीति फलानां चापानि लघुज्याभिः प्रायेणोक्तानि" प्रमि०।

इदानीं प्रकारान्तरेण बिम्बकलानयनमाह "भानोर्गतिः खदश १० भागयुतार्धिता वा बिम्बं विधोस्त्रि३गुणिता युगशैल ७४ भक्ता। तिथ्यद्रि ७१५ हीनशशिभुक्तिरिषुद्वि २५ भक्ता नन्दाक्षि २९ युग् भवति वा विधुबिम्बमेवम्" शि० "रवेर्गतिः खदशांशेन१०युताऽर्धिता च रवेः कलाबिम्बं भवति। अथ चन्द्रगतिस्त्रिगुणिता युगशैल७४भक्ता तद्विधुबिम्बं भवति। अथ वा चन्द्रभुक्तिस्तिथ्यद्रिभि ७१५ र्हीना पञ्चविंशत्या २५भक्ता फलमेकोनत्रिंशता २९युतं चन्द्रबिम्बं भवति। अत्रोपपत्तिः त्रिज्यातो महति कर्णे ग्रहबिम्बं लघु भवति तथा गतिश्च लघ्वी भूमध्याद्दूरगतत्वाद्ग्रहस्य। अथाल्पे कर्णे बिम्बं पृथु गतिश्च महती तत्रासन्नत्वात्। बिम्बगत्योरुपचयापचययोस्तुल्यकालत्वाद्गतेरपि बिम्बं साधयितुमुचितं भवति। तद्यथा तत्र त्रैराशिकम् यदि योजनात्मिकया गत्या पादोनगोऽत्यष्टिभूमितया ११८५९।४५ द्विद्विशर्तु ६५२२संख्यं बिम्बं लभ्यते तदा कलागत्या किमिति। अत्र गुणकस्य द्विद्विशरर्तुसंख्यस्यैकादशभागेन ५९२। ५५ गुणकभाजकावपवर्तितौ जातौ गुणकस्थान एकादश ११। भाजके विंशतिः २०। अतो रविगतिः सुखार्थं दशगुणा त्रिंशत्या ह्रियते तावदर्धिता भवति यत एकादशभिर्गुणनातो दशांशेनाधिका कृतेत्युपपन्नम्। एवं चन्द्रस्य खनागाम्बुधि ४८० मितो गुणो भागहारो योजनगतिरेव ११८५९।४५। एतौ खन्दपै१६०रपवर्तितौ जातं गुणकस्थाने त्रयं भागहारस्थाने चतुःसप्तति: ७४ अत्र परमं विकलात्रितयं यदन्तरं तत् सुखार्थमङ्गीकृतम्। अथ चन्द्रबिम्बानयने क्रियोपसंहारः सुखोपायार्थं कृतः। तत्र तिथ्यद्रि ७१५ तुल्यस्य गतिखण्डस्यैकोनत्रिंश २९ न्मितं बिम्बखण्डं लभ्यते। गतिशेषस्य पञ्चविंशत्या २५ भागे हृते बिम्बशेषं कलात्रयं ३ लभ्यते। अनस्तु-

इैक्ये द्वात्रिंश ३२ न्मध्यमं चन्द्रविम्बम्। गतेरुपचयापचयवशात् स्फुटत्वे विम्बस्यापि स्फुटत्वमुपपन्नम्” प्रमि०।

इदानीं राहोः प्रकारान्तरेण कलाविम्बमाह । “भानोर्गतिः शर५हृता रविभि१२र्विभक्ता चन्द्रस्य लोचन२गुणा तिथि१५भाजिता च । लब्धान्तरं भवति वाऽवनिभाप्रमाणं भूभा विधुं, विधुरिनं ग्रहणे पिधत्ते” शि० । “रविगतिः पञ्चगुणा द्वादशभक्ता फलं कलात्मकमनष्टं स्याप्यम् । अथ शशिगतिर्द्विगुणिता पञ्चदशभाजिता इदमपि कलात्मकं फलम् । अनयोः फलयोरन्तरं भूमाविम्बप्रमाणं भवति । इदानीं ग्रहणे छाद्यच्छादकमुच्यते भूभा विधुग्रहणे विधुं छादयति रविग्रहणे तु रविं विधुश्छादयति । अत्रोपपत्तिः । अत्र कर्णव्यासान्तरमितानां योजनानां रविकक्षायां कलाकरणायानुपात: । यदि गतियोजनैः ११८ ५९ गतिकला लभ्यन्ते तदा कर्णव्यासान्तरयोजनै: ४९४१ किमिति । अत्र रविगते: कर्णव्यासान्तरं गुण: ४९४१ । गतियोजनानि हर: । एतौ वसुवसुनवभि ९८८ रपवर्तितौ जाता गुणस्थाने पञ्च ५ । हरस्थाने द्वादश १२ । फलं रविगतिसम्बन्धिन्योऽपचयलिप्ताः । अथ भूव्यासस्य चन्द्रकक्षायां लिप्ताकरणार्थमनुपात: । यदि गतियोजनैः ११८५९ चन्द्रगतिकला लभ्यन्ते तदा भूव्यासयोजनैः १५८१ किमिति । अत्र गुणकार्धेन गुणकभाजकावपवर्तितौ जातं गुणकस्थाने द्वयम् २। भागहारस्थाने पञ्चदश १५। फलं भूव्यासकला: । एताभ्यः पूर्वकलाः शोध्याः । यत उपर्युपरि गच्छन्त्या भूभाया विस्तृतिरपचयिनी भवति” प्र०।

इदानीं चन्द्रविक्षेपानयनमाह । “सपाततात्कालिकचन्द्रदोर्ज्या खभै२७० र्हता व्यासदलेन भक्ता । सपातशीतद्युतिगोलदिक् स्याद्विक्षेप इन्दोः स च वाणसंज्ञः” शि० । “यस्मिन् काले विक्षेपः साध्यस्तस्मिन् काले तात्कालिकयोश्चन्द्रपातयोर्योगः कर्त्तव्य इति साधरणेनोक्तम् । इह चन्द्रग्रहणावगमे समकलस्य चन्द्रस्य तात्कालिककपातस्य च योग: कर्त्तव्यः । तस्य दोर्ज्या खभै २७० गुंण्या त्रिज्यया भाज्या फलं कलात्मकश्चन्द्रविक्षेप: । स च वाणसंज्ञः । यदि षड्भादून: सपातचन्द्रस्तदोत्तरो ज्ञेयो यदा षड्भाधिकस्तदा दक्षिणो ज्ञेयः । अत्रोपपत्तिः । चन्द्रो हि विमण्डले भ्रमति क्रान्तिमण्डलस्य विमण्डलस्य च यः संपातस्तस्य पातसंज्ञा । स पातो मीनान्ताद्विलोमं गच्छति । तस्मात् पातादग्रतस्त्रिभेऽन्तरे तद्विमण्डलं सार्द्धैश्चतुर्भि ४,३० र्भागैः क्रान्तिवृत्तादुत्तरतो भवति । पातात् पृष्ठतस्त्रिभेऽन्तरे तैरेव भागै ४,३० र्दक्षिणतो भवति । अथ विमण्डलगतस्य चन्द्रस्य क्रान्तिमण्डलेन सह यदन्तरं स याम्योत्तरो विक्षेपः । तज्ज्ञानार्थं चन्द्रपातयोरन्तरं ज्ञेयम् । तच्च चन्द्रपातयोर्योगे कृते भवति पातस्य विलोमगत्वात् । तस्य सपातचन्द्रस्य दोर्ज्ययानुपातः । यदि त्रिज्यातुल्यया दोर्ज्यया परमः खमुनियम २७० कलातुल्यो विक्षेपस्तदानया कियानिति । फलमिन्दुविक्षेपः । यतः पातादग्रतः षड्भं क्रान्तिवृत्तादुत्तरतोऽन्यद्दक्षिणतोऽतः सपातशीतद्युतिगोलदिक् इत्युपपन्नम्” प्रमि०। इदानीं ग्रहणे ग्रासप्रमाणमाह ।

“यच्छाद्यसंछादकमण्डलैक्यखण्डं शरोनं स्थगितप्रमाणम् । तच्छाद्यविम्बादधिकं यदा स्याज्ज्ञेयं च सर्वग्रहणं तदानीम्” शि०।“स्पष्टार्थम् अत्रोपपत्ति: । रवेरग्रतो भार्धान्तरे क्रान्तिवृत्ते भूभा भ्रमति । अत: पौर्णमास्यन्ते भूभाचन्द्रौ समौ भवत: । किन्तु याम्योत्तरमन्तरं विक्षेपतुल्यं भवति स विक्षेपश्छाद्यच्छादकविम्बमध्ययोरन्तरम् । तद्यदा विम्बार्धैक्यसमं तदा विम्बप्रान्तयोर्योगमात्रं स्यात् । यदा यावता मानैक्यार्द्धादूनं तावच्छाद्यविम्बे छादकविम्बं प्रविशति । अत उक्तं तत्स्थगितप्रमाणमिति । तत् स्थगितं छाद्यविम्बादधिकं यदा भवति तदा सर्वग्रहणमित्यपि सुगमम्” प्रमिताक्षरा ।

इदानीं स्थितिमर्दार्धयोरानयनमाह । “मानार्धयोगान्तरयोः कृतिभ्यां शरस्य वर्गेण विवर्जिताभ्याम् । मूले खषट् ६० संगुणिते विभक्ते भुक्त्यन्तरेण स्थितिमर्दखण्डे” शि० । स्पष्टार्थम् । “अत्रोपपत्तिः । स्पर्शकाले तु विम्बगर्भयोरन्तरं मानैक्यार्धम् । तच्च कर्णरूपं भवति। तत्र य: शरः सा कोटिः । कर्णकोट्योर्वर्गान्तरपदं भुजः । तच्च ग्राहकमार्गखण्डम् । तत्क्रमणकालायानुपातः । तच्चन्द्रार्कयो: प्राग्गमनात् भुक्त्यन्तरेण यदि भुक्त्यन्तरतुल्यकलाभि: षष्टि ६० घटीरर्केन्दू क्रामतस्तदा लब्धाभिर्भुजकलाभिः कियत्य इति । फलं स्थित्यर्धघटिकाः । परं स्पर्शकालशराज्ज्ञानान्मध्यग्रहणशरेणैतत् कर्म कृतमतः स्थूलं स्थित्यर्धं जातम् । अथ मर्दार्धमुच्यते । यदा छादकेन छाद्ये समग्रे छन्ने संमीलनमानं तदा विम्बगर्भयोरन्तरे विम्बार्धान्तरतुल्याः कला भवन्ति । ताश्च कर्णरूपाः । तस्मिन् काले यावान् विक्षेपस्तावती कोटिस्तयोर्वर्गान्तरपदं ग्राहकवर्त्मखण्डं भव-

ति। तत्रापि पूर्ववदनुपातेन घटिकात्मकः कालो मर्दखण्डं भवति। सोऽपि स्थूलः" प्रमिताक्षरा।

इदानीं घटीकरणमाह। "स्थित्यर्धनाडीगुणिता स्वभुक्तिः षष्ट्या ६० हृता तद्रहितौ युतौ च। कल्प्येन्दुपातावसकृच्छराभ्यां स्थित्यर्धमाद्यं स्फुटमन्तिमं च"। "स्पष्टार्थम्। अत्र स्पर्शकालभवशरेण कोटिरूपेण कर्म कार्यम्। एवं स्थित्यर्द्धमसकृत् स्फुटं भवतीति सुगमा वासना" प्रमिताक्षरा।

"इदानीमेवं विमर्दार्धमपीत्यतिदिशति। "एवं विमर्दार्द्धफलोनयुक्तसपातचन्द्रोद्भवसायकाभ्याम्। पृथक् पृथक् पूर्ववदेव सिद्धे स्फुटे स्त आद्यान्त्यविमर्दखण्डे" शि० स्पष्टार्थम्। इदानीमिष्टकाले भुजानयनमाह।

"स्पर्शाग्रतः स्पार्शिकमिष्टमुक्तं प्राङ्मोक्षतो मौक्षिकमत्र पूर्वैः। वीष्टेन निघ्नाः स्थितिखण्डकेन भुक्त्यन्तरांशा भुज इष्टकाले। एवं विमर्दार्द्धहृताः पृथक् ते संमीलनोन्मीलनयोर्भुजौ स्तः" शि०। पूर्वार्द्धं स्पष्टार्थम्। इष्टोनेन स्थितिखण्डेन गुणिता भुक्त्यन्तरभागाः कलात्मको भुजो भवति। एवं त एव भुक्त्यन्तरांशाः प्रथमविमर्दार्द्धगुणाः संमीलनभुजो भवति। द्वितीयगुणास्तदोन्मीलनम्। अत्रोपपत्तिः। इष्टकाले यत्र ग्राहकबिम्बमध्यचिह्नं यत्र च मध्यशराग्रचिह्नं तयोरन्तरं ग्राहकमार्गखण्डं भुज इहोच्यते। तस्यानयनं त्रैराशिकेन। यदि घटीषष्ट्या भुक्त्यन्तरकला लभ्यन्ते तदेष्टोनस्थितिदलेन किमिति। अत्र गुणकभाजकयोः षष्ट्यापवर्त्तने कृते जाता भुक्त्यन्तरांशा गुणकस्थाने। हरस्थाने रूपम्१। एवं विमर्दार्धाभ्यां विमर्दभुजौ" प्रमि०

इदानीं कर्णार्थमाह। "कोटिश्च तत्कालशरोऽथ कोटीदोर्वर्गयोगस्य पदं श्रुतिः स्यात्। मानैक्यखण्डं श्रुतिवर्जितं सद्ग्रासप्रमाणं भवतीष्टकाले" शि०। 'इष्टकाले यावान् शरः सा तत्र कोटिः। कोटिभुजवर्गयोगपदं कर्णः। कर्णोनं मानैक्यार्धमिष्टकाले ग्रासप्रमाणं भवति। अत्रोपपत्तिः। भुजोऽत्र क्रान्तिवृत्ते प्राच्यपरस्त्वाद्याम्योत्तरः शरोऽतः कोटिः। तद्वर्गयोगपदं कर्ण इत्युचितम्। कर्णो नाम बिम्बमध्ययोरन्तरम्। स यावता मानैक्यार्धादूनो भवति तावद्ग्राहकबिम्बं ग्राह्ये प्रविष्टम्। अतस्तावानिष्टकाले ग्रास इत्युपपन्नम्" प्रमि०।

इदानीं ग्रासात् तत्कालज्ञानमाह। "ग्रासोनमानैक्यदलस्य वर्गाद्विक्षेपकृत्या रहितात् पदं यत्। गत्यन्तरांशैर्विहृतं फलोनं स्थित्यर्धकं स्वं भवतीष्टकालः। तत्कालवाणेन मुहुः स्फुटोऽग्रे वक्ष्येऽन्यथा वा परिलेखतोऽमुम्" शि०। इष्टग्रासेनोनस्य मानैक्यार्धस्य वर्गात् तत्कालविक्षेपवर्गेणोनान्मूलं गत्यन्तरांशैर्विभजेत्। फलेन स्पर्शस्थित्यर्धं हीनं यदि स्पार्शिको ग्रासः। यदि मौक्षिकस्तदा मौक्षिकं हीनम्। शेषमिष्टकालो भवति। स च स्थूलः। अथ तत्कालशरेण य आनीयते स सूक्ष्मासन्नः। एवमसकृत् स्फुटः स्यात्। अमुमिष्टकालमग्रे परिलेखादेव वक्ष्ये।
अत्रोपपत्तिर्विलोमगणितेन ग्रासोनमानैक्यार्द्धं कर्णस्तत्कालशरः कोटिस्तद्वर्गान्तरपदं भुजः। स गत्यन्तरांशैर्विहृतः फलमिष्टकालस्य मध्यग्रहस्य च सावनान्तरमतः स्वस्थित्यर्द्धाच्छोधितमित्युपपन्नम्" प्रमि०।

इदानीं स्पर्शादिव्यवस्थितिमाह। "मध्यग्रहः पर्वविरामकाले प्राक् प्रग्रहोऽस्मात् परतश्च मुक्तिः। स्थित्यर्द्धनाड़ीष्वथ मर्दजासु संमीलनोन्मीलनके तथैव" शि०। स्पष्टार्थम्। इदानीं वलनानयनमाह। "खाङ्का ९० हतं स्वद्युदलेन भक्तं स्पर्शादिकालोत्थनतं लवाः स्युः। तेषां क्रमज्या पलशिञ्जिनीघ्नी भक्ता द्युमौर्व्या यदवाप्तचापम्। प्रजायते प्रागपरे नते क्रमादुदग्यमाशं वलनं पलोद्भवम्" शि०।"यस्मिन् काले वलनं साध्यं तस्मिन् काले या नतघटिकास्ताः खाङ्का ९० हताश्चन्द्रग्रहे रात्र्यर्द्धेन भक्ता अर्कग्रहे दिनार्द्धेन, फलमंशाः स्युः। तेषां क्रमज्याऽक्षज्यया गुण्या द्युजीवया भक्ता लब्धस्य चापं पलोद्भवं वलनं जायते। प्राङ्नते सौम्यं, पश्चिमतते याम्यम्। वलनानयनमुत्क्रमजयया कैश्चित् कृतं तन्निरासार्थमत्र क्रमज्येति विशेषणम्। न पुनरेतद्विशेषणबलादन्यत्र सर्वत्रोत्क्रमज्याः प्राप्नुवन्ति" प्रमि०।

इदानीमायनं वलनमाह। "युतायनांशोडुपकोटिशिञ्जिनी जिनांशमौर्व्या १३९७ गुणिता विभाजिता। द्युजीवया लब्धफलस्य कार्मुकं भवेच्छशाङ्कायानदिक्कमायनम्" शि०। "ग्रहस्य सायनांशस्य कोटिज्या जिनांशज्यया १३९७गुण्या द्युज्यया भक्ता फलस्य चापमायनं वलनं भवति। तच्च यस्मिन्नयने ग्रहो वर्त्तते तद्दिक् भवति। अत्रोपपत्तिर्गोले" प्रमि०।

इदानीं स्फुटवलनार्थमाह। "तयोः पलोत्थायनयोः समाशयोर्युतेर्वियुक्तेस्तु विभिन्नकाष्ठयोः। या शिञ्जिनी मानदलैक्यनिघ्नी त्रिज्योद्धृता तद्वलनं स्फुटं स्यात्। यैरुत्क्रमज्याविधिनैतदुक्तं सम्यङ्न ते गोलगतिं विदन्ति" शि०।

"तयोः पलोद्भवायनयोर्वलनचापयोः समाशयोर्योगो भिन्नाशयोरन्तरं तस्य ज्या मानैक्यार्द्धगुणा त्रिज्यया भक्ता फलं स्फुटा वलनज्या भवति। यैरिदं वलनद्वयमुत्क्रमज्याविधिनोक्तं सम्यङ् न ते गोलगतिं विदन्तीति गोलं परिभाव्य दिशां वलनस्योत्क्रमज्ययोपचयः क्रमज्ययावेति तैः सम्यक् क्वापि नावलोकितमित्यर्थः। अत्रोपपत्तिर्गोले सविस्तरा। इह सममण्डलं द्रष्टुः प्राची सममण्डलादिष्टे नते काले विषुवन्मण्डप्राची यावता यतश्चलिता तावत् तद्दिक् पलोद्भवं वलनं ज्ञेयम्। अथ विषुवन्मण्डलात् क्रान्तिवृत्तप्राची यावता यतश्चलिता तदायनं तद्दिक् ज्ञेयम्। तयोर्योगवियोगात् स्फुटमिति। सममण्डलात् क्रान्तिमण्डलप्राची यावता यतश्चलिता तत् स्फुटमित्यर्थः। एवं त्रिज्यापरिणतं तदत्रानुपातेन मानैक्यार्द्धपरिणतं कृतम्। यतोऽत्र मानैक्यार्द्धवृत्ते वलनं देयम्" प्रमि०। इदानीमङ्गुलिप्तार्थमाह।

"त्रिज्योद्धृतस्तत्समयोत्थशङ्कुः सार्द्धद्वि२,३० युक्तोऽङ्गुललिप्तिकाः स्युः। स्थूलाः सुखार्थं द्युदलेन भक्तं समुन्नतं सार्धयमा२,३०न्वितं वा" शि०। "मध्यग्रहणकाले ग्रहस्य त्रिप्रश्नोक्त्या शङ्कुः साध्यः। स शङ्कुस्त्रिज्यया भक्तः। फलं सार्धद्वियुक्तमङ्गुललिप्तिका भवन्ति। अथवोन्नतघटिका ग्रहस्य दिनार्द्धघटीभिर्भक्ताः फलं सार्धद्वियुक्तं सुखार्थं स्थूला अङ्गुललिप्तिका भवन्ति। अत्रोपपत्तिः। गगनमध्यस्थं यद्ग्रहबिम्बं तस्य निखिलकरनिकरपिहितपरिधित्वात् किञ्चित् सूक्ष्मं दृश्यते। अथोदये क्षितिजस्थं भूव्यवहिततत्करनिकरविशालमिव प्रतिभाति। तत् सूक्ष्मत्वं विशालत्वं चोपलभ्य बुद्धिमद्भिः कल्पितम्। तच्च गगनमध्ये सार्धत्रिकलं ३,३०। उदये सार्द्धद्विकलं २,३० अङ्गुलं कल्पितम्। अवान्तरेऽनुपातेन। यदि त्रिज्यातुल्ये शङ्कावङ्गुललिप्तान्तरं रूपं १ लभ्यते तदिष्टेन किमिति फलं सार्धद्वियुक्तमङ्गुललिप्तिकाः स्युरित्युपपन्नम्। अथवा स्थूलोऽनुपातः। यदा दिनार्धतुल्याभिरुन्नतघटिकाभी रूपं१ लभ्यते तदिष्टाभिः किमिति" प्रमि०।

इदानीं वलनादीनामङ्गुलीकरणमाह "आभिर्विभक्ता वलनेषुबिम्बदोर्भ्युच्छ्नलिप्ताः स्युरथाङ्गुलानि। शरा यथाशा ग्रहणे खरांशोश्चन्द्रग्रहे व्यस्तदिशस्तु वेद्याः" शि०। आभिरङ्गुलकलाभिर्वलनविक्षेपबिम्बच्छन्नभुजकोटिकर्णा भाज्याः। फलान्यङ्गुलानि भवन्ति। इह रविग्रहणे शरा यथागतदिश एव। चन्द्रग्रहणे तु व्यस्तदिशो ज्ञातव्याः। अत्रोपपत्तिः अङ्गुलकरणे तु कथितैव। शराग्रे हि चन्द्रः, शरमूले भूभाऽतश्चन्द्रविक्षेपादन्यदिशि भूभा वर्त्तते। तत्स्थानज्ञानार्थं चन्द्रग्रहणे व्यस्तदिशः शरा वेद्या इत्युपपन्नम्" प्रमि०। इदानीं परिलेखमाह।

"ग्राह्यार्धसूत्रेण विधाय वृत्तं मानैक्यखण्डेन च साधिताशम्। बाह्येऽत्र वृत्ते वलनं ज्यकावत् प्राक्चिह्नतः स्पर्शभवं हिमांशोः। सव्यापसव्यं खलु याम्यसौम्यं मौक्षं तथा पश्चिमतश्च देयम्। परिग्रहे पश्चिमपूर्वतस्ते विक्षेपदिक्चिह्नित एव साध्यम्। सूत्राणि केन्द्राद्वलनाग्रसक्तान्यङ्क्यान्यतः स्पर्शविमुक्तिबाणौ। ज्यावन्निजाभ्यां वलनाग्रकाभ्यां देयौ यथाशावथ मध्यवाणः। केन्द्रात् प्रदेयो वलनस्य सूत्रे तेभ्यः पृथग्ग्राहकखण्डकेन। वृत्तैः कृतैः स्पर्शविमुक्तिमध्यग्रासाः क्रमेणैवमिहावगम्याः" शि०। "समायामवनौ ग्राह्यार्धप्रमाणेन सूत्रेणेष्टस्थानकल्पितविन्दोर्वृत्तं लिखित्वा तस्मादेव विन्दोर्मानैक्यखण्डप्रमाणेन सूत्रेणान्यद्वृत्तं कृत्वा तस्य विन्दोरुपरि प्राच्यपरं याम्योत्तरं च सूत्रं खटिकाया रजसोच्छाद्य रेखे कार्य्ये। अथ मानैक्यार्धवृत्ते वलनं देयम्। तत्र चन्द्रस्य स्पार्शिकं प्राचीचिह्नतो, मौक्षिकं प्रतीचीचिह्नतः। रवेस्तु स्पार्शिकं प्रतीचीचिह्नतोमौक्षिकं प्राचीचिह्नतः। अथ मध्यवलनं यदि विक्षेपो दक्षिणतो देयस्तदा दक्षिणचिह्नाद्यदोत्तरस्तदोत्तरचिह्नात्। तत् कथं देयमित्याह। सव्यापसव्यं याम्यसौम्यमिति। यदि याम्यवलनं तदा सव्यक्रमेण प्राचीचिह्नाद्याम्यं, दक्षिणचिह्नात् पश्चिमं, पश्चिमचिह्नादुत्तरमुत्तरचिह्नात् पूर्व्वमिति सव्यम्। इतोऽन्यथापसव्यम्। तच्च वलनं ज्यावद्देयं न धनुर्वत्। एवं वलनानि दत्त्वा केन्द्राद्वलनाग्रगतानि सूत्राण्यङ्क्यानि। अथ स्पर्शवलनाग्रात् स्पार्शिको मोक्षवलनाग्रान्मौक्षिको विक्षेपो देयः। स च ज्यावत्। अथ मध्ये विक्षेपः केन्द्राद्वलनसूत्रे देयः। तेभ्यः शराग्रचिह्नेभ्यो ग्राहकार्धप्रमाणेन सूत्रेण वृत्तान्युत्पाद्य स्पर्शमुक्तिमध्यग्रासाः वेदितव्याः अत्र वासना। मानैक्यार्धवृत्ते ग्राहकवृत्तस्य मध्यं यदा भवति तदा ग्राह्यग्राहकयोर्बिम्बप्रान्तौ संलग्नौ भवतोऽतो मानैक्यार्धवृत्तं बहिर्लिखितं तच्च दिगङ्कितं तत्र या प्राची सा सममण्डलप्राची ततस्तस्या वलने दत्ते या केन्द्राद्वलनाग्रगा रेखा सा क्रान्तिवृत्तप्राची। एवं सर्वदिशां वलनम्। अथ वलनसूत्राज्ज्यावद्विक्षेपः। यतः क्रान्तिवृत्तप्राच्या विक्षेपो याम्योत्तरः। एवं स्पर्शमोक्षयोः किल। अथ

मध्यशरः केन्द्राद्वलनसूत्रेऽतो देयो यतो मध्यवलनं नाम तत्कालक्रान्तिवृत्तप्राच्या याम्योत्तरा दिक् । विक्षेपाग्रे ग्राहकवृत्तमध्यमतस्तत्र कृतैर्वृत्तैः स्पर्शमोक्षमध्या भवन्तीत्युपपन्नम्” प्रमि० ।

इदानीं निमीलनोन्मीलनेष्टग्रासपरिलेखमाह । “केन्द्राद्भुजं स्वे वलनस्य सूत्रे शरं भुजाग्राच्छ्रवणं च केन्द्रात् । प्रसार्य्य कोटिश्रुतियोगचिह्नाद्वृत्ते कृते ग्राहकखण्डकेन । संमीलनोन्मीलनकेष्टकालग्रासाश्च वेद्या यदि वान्यथाऽमी”शि० । “संमीलनकाले वलनमानीय तत् प्राक्चिह्नतः प्राग्वद्दत्त्वा केन्द्राद्वलनाग्रगां रेखां कृत्वा तस्यां रेखायां केन्द्रात् पूर्वतो भुजो देयः । भुजाग्रात् तत्कालशरप्रमाणां शलाकां तथा केन्द्रात् कर्णमितां च प्रसार्य शलाकाग्रयोर्युतिचिह्नाद्ग्राहकार्द्धेन वृत्तं विलिख्य संमीलनस्थानं ज्ञेयम् । एवमुन्मीलनवलनं पश्चिमतो दत्त्वोन्मीलनस्थानं ज्ञेयम् । एवमेव तत्कालवलनमिष्टवशेन प्राक् पश्चिमतो वा दत्त्वोक्तवदिष्टग्रासो ज्ञेयः । यदि वान्यथामी इत्यस्याग्रे सम्बन्धः । अत्रोपपत्तिः । भुजो हि ग्राहकमार्गखण्डम् तत्र शरः कोटिस्तद्वर्गयोगपदं कर्णः । कर्णाद्ग्राहकविम्बे लिखिते संमीलनादिकं भवतीति युक्तमुक्तम् । ननु ग्राह्यविम्बमध्याद्वलनसूत्रे भुजो दत्तस्तत् कथं भुजो ग्राहकमार्गखण्डमित्युच्यते सत्यम् यत्र कुत्रचिद्भुजकोटिकर्णैस्त्र्यस्रमुत्पद्यते तदवश्यमायतचतुरस्रार्द्धं स्यात् । तदत्र भुजाग्राद्विक्षेपः कोटिः । एवं भुजसूत्रादपि । विक्षेपसूत्रयोरन्तरे यावान् भुजस्तावान् विक्षेपाग्रयोरपि । अतो ग्राहकमार्गखण्डं भुज इत्युच्यते तदद्दुष्टम्” प्रमि० ।

इदानीमन्यथा संमीलनादिपरिलेखमाह । “ये स्पर्शमुक्त्योर्विशिखाग्रचिह्ने ताभ्यां पृथङ्मध्यशराग्रयाते । रेखे किल प्रग्रहमोक्षमार्गौ तयोश्च माने विगणय्य वेद्ये । विम्बान्तरार्द्धेन विधाय वृत्तं केन्द्रेऽथ तन्मार्गयुतिद्वयेऽपि । भूभार्द्धसूत्रेण विधाय वृत्ते संमीलनोन्मीलनके च वेद्ये” शि० । स्पर्शशराग्रान्मध्यशराग्रयाता रेखा कार्य्या । स प्रग्रहमार्गो ज्ञेयः । अथ मध्यशराग्रान्मुक्तिशराग्रगा पृथगन्या रेखा कार्या । स मुक्तिमार्गो ज्ञेयः । तयोर्मार्गयोः प्रमाणे अङ्गुलशलाकया मित्वा पृथगनष्टे स्थाप्ये । अथ विम्बान्तरार्धप्रमाणेन सूत्रेण केन्द्रे वृत्तमुत्पाद्य तस्य वृत्तस्य मार्गद्वयेन यौ योगौ तस्माद्योगद्वयचिह्नात् भूभार्धसूत्रेण वृत्ते विधाय संमीलनोन्मीलने ज्ञातव्ये । अत्रोपपत्तिः । स्वमार्गेणागच्छतो ग्राहकमध्यस्य यत्र मानान्तरार्धतुल्यः कर्णो भवति तत्रस्थे तस्मिन् ग्राहके संमीलनमुन्मीलनं च यत उत्पद्यते ततो विम्बान्तरार्धेन वृत्तं विलिख्य ते स्थाने ज्ञातव्ये”प्रमि० ।

इदानीमिष्टग्रासार्थमाह ।“मार्गाङ्गुलघ्नं स्थितिखण्डभक्तमिष्टं स्युरिष्टाङ्गुलसंज्ञकानि । इष्टाङ्गुलानीष्टवशात् स्वमार्गे दत्त्वात्र च ग्राहकखण्डवृत्तम् । कृत्वेष्टखण्डं यदि वाऽवगम्यं स्थूलः सुखार्थं परिलेख एवम्”शि० । “इष्टमितीष्टकालो घटिकादिरनष्टस्थापितैर्मार्गाङ्गुलैर्गुण्यः स्वस्थित्यर्द्धघटीभिर्भाज्यः फलमिष्टाङ्गुलानि भवन्ति । तानीष्टाङ्गुलानि स्वमार्गे दत्त्वा । कथमिति चेत् इष्टवशात् । यदि स्पर्शादगत इष्टं कल्पितं तदा स्पर्शशराग्रादग्रत इष्टाङ्गुलानि देयानि यदि मध्यात् पूर्वत इष्टं तदा मध्यशराग्रात् पूर्वतो देयानि । एवं मुक्तिमार्गेऽपीष्टवशादिष्टाङ्गुलाग्रे ग्राहकविम्बार्द्धेन वृत्तं विलिख्येष्टग्रासो ज्ञेयः । एवं वा स्थूलः सुखार्थं परिलेखः । अत्रोपपत्तिस्त्रैराशिकेन । यदि स्थित्यर्द्धघटीभिर्मार्गाङ्गुलानि लभ्यन्ते तदेष्टघटीभिः किमिति फलमिष्टाङ्गुलानि । तदग्रे ग्राहकविम्बमध्यमित्यर्थः । तत्र ग्राहकार्द्धेन वृत्ते कृते इष्टग्रासो भवतीति किं चित्रम्” प्रमि० । इदानीं ग्रासात् कालानयनं परिलेखेनैवाह ॥ “ग्रासोनमानैक्यदलेन केन्द्रे वृत्तात् कृतान्मार्गदले बहिर्ये । ते संगुणे स्वस्थितिखण्डकेन मार्गाङ्गुलाप्ते पृथगिष्टकालौ” शि० । “मानैक्यार्द्धेन ग्रासोनेन केन्द्रे वृत्तं लिखेत् । तस्माद्वृत्ताद्बहिर्ये मार्गखण्डे भवतस्ते स्वस्थितिखण्डकेन गुणिते स्वमार्गाङ्गुलैर्भाजेत् । फलं स्पर्शादगत इष्टकालो भवति । मोक्षात् पृष्ठतश्च । अत्रोपपत्तिः । ग्रासोनमानैक्यदलमिष्टकाले ग्राह्यग्राहकविम्बमध्ययोरन्तरं कर्ण इत्यर्थः । इदं पूर्व्वमेव कथितम् । तेन कर्णेन केन्द्रे वृत्तात् कृताद्ये मार्गखण्डे वहिर्भवतस्ताभ्यामिष्टानुपातः । यदि मार्गाङ्गुलैः स्थित्यर्द्धघटिका लभ्यन्ते तदा बहिर्भूतखण्डाङ्गुलैः किमिति फलमिष्टकाल इति”प्रमि० ।

इदानीं ग्रहणे वर्णमाह । “खल्पे कृते धूम्रवर्णः सुधांशोरर्द्धे कृष्णः कृष्णरक्तोऽधिकेऽर्धात् । सर्वेकृत्ते वर्ण उक्तः पिशङ्गो भानोश्छन्ने सर्वदा कृष्ण एव” शि० ।

इदानीमादेश्यानादेश्यानाह ।

“इन्दोर्भागःषोड़शः खण्डितोऽपि तेजःपुञ्जच्छन्नभावान्न लक्ष्यः । तेजस्तैक्ष्ण्यात् तीक्ष्णगोर्द्वादशांशो नादेश्योऽतोऽल्पो

गृहो वृद्धिमद्भिः” शि०स्पष्टार्थम् इति चन्द्रग्रहणाधिकारः।

अथ सूर्य्यग्रहणाधिकारः तत्रादौ नतिप्रयोजनोक्तिः। “दर्शान्तकालेऽपि समौ रवीन्दू द्रष्टा नतौ येन विभिन्नकक्षौ। कुर्धोच्छ्रितः पश्यति नैकसूत्रे तल्लम्बनं तेन नतिं च वच्मि” शि०। “अमावास्यान्तकाले समकलावपि चन्द्रार्कौ नतौ स्वाधोदृश्यत्र यतस्ततोऽपि वा स्थितौ भूव्यर्द्धेनोच्छ्रितो द्रष्टैकसूत्रे न पश्यति। येन कारणेन तौ विभिन्नकक्षौ। चन्द्रस्य कक्षा लघ्वी अर्कस्य महती। यथा चन्द्रग्रहणे यैव चन्द्रस्य कक्षा सैव भूभाया अपि तत्र तिथ्यन्ते समौ भूभेन्दू नतावपि कुर्द्धोच्छ्रितोऽपि द्रष्टैकसूत्रे पश्यति तथार्कग्रहणेऽर्केन्दू न पश्यति भिन्नकक्षत्वात्। तेन कारणेन तल्लम्बनाख्यमन्तरं नत्याख्यं च वच्मि” प्रमि०।

इदानीं लम्बनस्य भावाभावं धनर्णत्वं च कथयति। “दर्शान्तलग्नं प्रथमं विधाय न लम्बनं वित्रिभलग्नतुल्ये। रवौ तदूनेऽभ्यधिके च तत् स्यादेवं धनर्णं क्रमतश्च वेद्यम्” शि० “अत्र लम्बनं ज्ञातुं दर्शान्तकाले लग्नं विधाय तत् त्रिभोनं कार्य्यम्। तेन त्रिभोनेन लग्नेन समे रवौ लम्बनं नास्ति। ऊनेऽभ्यधिके च स्यादिति वेदितव्यम्। तथा वित्रिभलग्नादूने रवौ यल्लम्बनमुत्पद्यते तद्धनसंज्ञं वेदितव्यम्। तिथ्यन्तघटिकासु योज्यमित्यर्थः। यदधिके तदृणं तिथ्यन्तघटिकाभ्यः शोध्यमित्यर्थः। अथ लम्बनस्योपपत्तिस्तावदुच्यते। इह किल खमध्यमण्डलयाम्योत्तरकोणवृत्तानामङ्कच्छेदेन परिकरवद्यद्वृत्तं निबध्यते तत् क्षितिजम्। तत्रस्थं ग्रहं भूगर्भस्थो द्रष्टा पश्यति। भूपृष्ठगस्तु भूच्छन्नं तत् क्षितिजमपि न पश्यति। किन्तु भूव्यर्द्धयोजनैस्तस्मात् क्षितिजादुपरि समगादन्यत् क्षितिजं स मन्यते। यतस्तस्मादूर्ध्वं स पश्यति। तदधः क्षितिजं दृक्सूत्रालम्बितं न पश्यति अतो ग्रहकक्षायां दृङ्मण्डले तेषां योजनानां संबन्धिन्यो या लिप्तास्ताः कुच्छन्नलिप्तास्ता एव परमलम्बनलिप्ताः परमावनतिलिप्ताश्च। तास्तु ग्रहभुक्तिपञ्चदशांशतुल्या भवन्ति। यतो गतियोजनानां पञ्चदशांशो भूव्यासार्द्धम्। यदा किल क्षितिजस्थस्तदा कुच्छन्नलिप्ताभिर्नतत्वं गतः। अथ यदा खमध्यस्थो रविस्तदा तं भूगर्भस्थो द्रष्टा भूपृष्ठस्थोऽपि खमध्यस्थमेव पश्यति। न कुतोऽपि नतमतस्तत्र लम्बनाभावः। क्षितिजे तु कुच्छन्नलिप्तातुल्यं परमं लम्बनम् अतो ज्ञातं स्वाधोगते ग्रहे लम्बनदुत्पद्यते। एवं चन्द्रस्यापि। दर्शान्ते चन्द्रलम्बनलिप्ताभ्योऽर्कलम्बनलिप्तास्तु शुद्धास्तु शेषं रविदृक्कक्षाधश्चन्द्रस्य परमा लम्बलिप्ताः। अथ यदा दृङ्मण्डलाकारं क्रान्तिवृत्तं भवति तदा परमलम्बनलिप्तानां घटीकरणायानुपातः। यदि गत्यन्तरकलाभिर्घटीषष्टिर्लभ्यते तदा गत्यन्तरपञ्चदशांशतुल्याभिः किमिति। फलं घटिकाचतुष्टयं परमं लम्बनम्। अतो घटिकाचतुष्टयानुपातेन लम्बनं साधयितुं युज्यते परं यदि दृङ्मण्डाकारं क्रान्तिवृत्तम्। यदा तदपि तिरश्चीनं तदानुपातद्वयेन। लम्बनं हि दृङ्मण्डलस्थत्वेनोत्पद्यते तच्च मध्यमं लम्बनम्। तत् किल कर्णरूपम्। तत् क्रान्तिवृत्तप्राचीपरिणतं कोटिरूपं स्फुटं भवति। यदा दृङ्मण्डलमेव क्रान्तिवृत्तं तदा तदेव स्फुटम्। यतः क्रान्तिवृत्तप्राच्यपरया लम्बनस्य स्फुटत्वम्। अतः क्रान्तिवृत्तस्य परमनीचस्थाने लम्बनस्य परमत्वम्। परमोच्चस्थाने लम्बनाभावः। तच्च तस्य परमोच्चत्वं वित्रिभलग्ने भवति। यदा वित्रिभं खमध्ये भवति तदा तच्छङ्कुस्त्रिज्यातुल्यः स्यात्। तदा मध्यममेव स्फुटं लम्बनम्। यदा तद्वित्रिभं खमध्यान्नतं भवति तदा तच्छङ्कुस्त्रिज्यातो न्यूनो भवति तदा मध्यमलम्बनात् स्फुटं लम्बनं कोटिरूपकरणेन तदल्पतां याति। अतो वित्रिभलग्नशङ्कोरपचयवशेन लम्बनस्यापचयः। अतो वित्रिभलग्नशङ्कुना मध्यमलम्बनस्य स्फुटत्वकरणेऽनुपातः कर्त्तुं युज्यते” प्र०मि०।

अमुमेवार्थं संप्रधार्यानुपातद्वयेन लम्बनमाह। “त्रिभोनलग्नं तरणिं प्रकल्प्य तल्लग्नयोर्य्यः समयोऽन्तरेऽसौ। त्रिभोनलग्नस्य भवेद्द्युयातः शङ्क्वाद्यतस्तस्य परान्तकाद्यैः। त्रिभोनलग्नार्कविशेषशिञ्जिनी कृताहता व्यासदलेन भाजिता। हृतात् फलाद्वित्रिभलग्नशङ्कुना त्रिजीवयाप्तं घटिकादि लम्बनम्” सि०शि०। “दर्शान्तकाले लग्नं विधाय तदनष्टं वित्रिभं च कृत्वा तयोर्वित्रिभस्य भोग्यं लग्नस्य भुक्तमन्तरोदययुतं वित्रिभस्योदितः कालो भवति। तेन कालेन वित्रिभलग्नजनितकुज्याद्युज्यान्त्यादिभिश्च त्रिप्रश्नोक्त्या शङ्कुः साध्यः। शङ्कोश्च दृग्ज्या तच्छायाकर्णश्च साध्यः। अथ त्रिभोनलग्नार्कयोरन्तरस्य ज्या साध्या। अथ तया लम्बनार्थमनुपातः। यदि त्रिज्यातुल्यया वित्रिभलग्नार्कान्तरज्यया चतस्रो घटिका लम्बनं तदानयाभीष्टया किमिति फलं मध्यमलम्बनम्। अतस्तत्स्फुटीकरणार्थं द्वितीयोऽनुपातः। यदि त्रिज्यातुल्यवित्रिभलग्नशङ्कावेतावल्लम्बनं लभ्यते तदा

ऽक्षिवदनन्तरानीते किमित्येवं लम्बनं स्फुटं भवति" प्रमि०।

इदानीं प्रकारान्तरेण स्फुटीकरणमाह। "फलाद्रवि १२ घ्नात् त्रिभहीनलग्नकर्णेन लब्धं खलु लम्बनं वा" सि० शि०। "मध्यलम्बनात् द्वादशगुणाद्वित्रिभलग्नसंभूतच्छायाकर्णेन भक्ताद्यल्लब्धं तद्वा स्फुटं लम्बनं भवति। अत्रोपपत्तिस्त्रैराशिकेन। तत्र वित्रिभलग्नशङ्कोर्द्वादशांशेन वित्रिभलग्नशङ्कुस्त्रिज्या चापवर्जिता जाता गुणकस्थाने द्वादश १२ हरस्थाने वित्रिभलग्नकर्ण इत्युपपन्नम्" प्रमि०।

इदानीं प्रकारान्तरेण लम्बनमाह। "त्रिभोनलग्नस्य रवेश्च शङ्क्वोर्वा दृग्ज्ययोर्वर्गवियोगमूलम्। स्याद्दृङ्नतिर्वेद ४ गुणा त्रिमौर्व्या भक्ताथवा लम्बननाड़िकाः स्युः" सि० शि०। "त्रिभोनलग्नस्य यः शङ्कुः साधितस्तथा दर्शान्तकाले रवेः स्वोपकरणैर्यः शङ्कुरुत्पद्यते तावन्तौ स्थापयित्वा तयोः दृग्ज्ये साध्ये। अथ तयोः शङ्क्वोर्यद्वर्गान्तरपदं तद्दृङ्नतिसंज्ञं भवति। प्रथमप्रकारोऽयम्। अथ दृङ्नतेर्द्वितीयः प्रकारः। तयोर्दृग्ज्ययोर्वर्गान्तरपदं दृङ्नतिसंज्ञं भवति। अथ दृङ्नतेर्लम्बनमुच्यते। दृङ्नतिश्चतुर्गुणा त्रिज्यया भक्ता फलं लम्बननाड़िकाः स्युः अत्रोपपत्तिः सैव। यदा वित्रिभलग्नं खमध्ये भवति तदा दृङ्मण्डलमेव क्रान्तिवृत्तम्। त्रिभोनलग्नार्कयोर्यान्तरज्या सैव तदार्कस्य दृग्ज्या। सा चतुर्गुणा त्रिज्ययाप्ता मध्यमं किल लम्बनं भवति। तदेव स्फुटम् ऊर्ध्वस्थितत्वात् क्रान्तिवृत्तस्य। अथ यदा वित्रिभलग्नं खार्धान्नतम् तिर्यक्स्थितत्वात् क्रान्तिवृत्तस्य तदा तत् प्राच्यपरया स्फुटं लम्बनं कोटिरूपं भवति। तच्च वित्रिभलग्नशङ्क्वनुपातेन तथा स्फुटं कोटिरूपं कृतम्। तत् कथमिति चेत् तदर्थमुच्यते। मध्यलम्बनानयने त्रिज्यैव वित्रिभलग्नशङ्कुः ततः स्फुटत्वार्थं यः साधितो वित्रिभलग्नशङ्कुः स दृक्क्षेपमण्डले स्फुटस्तद्दृग्ज्या भुजस्त्रिज्या कर्णः। वित्रिभलग्नस्य यद्दृङ्मण्डलमिति गोले कथितम्। अतस्त्रिज्यापरिणतया नतज्यया यदानीतं तज्जातं कर्णरूपं तत् कोटिरूपस्य वित्रिभलग्नशङ्कोरनुपातेन कोटित्वं नीतमित्युपपन्नम्। यदेव स्फुटलम्बनस्य कोटिरूपत्वमुपपन्नं तदेव प्रकारान्तरेणोपपादितम्। रवेर्दृङ्मण्डले दृग्ज्या सा कर्णरूपिणी। वित्रिभलग्नस्य या दृग्ज्या स एव दृक्क्षेपः स भुजरूपः। यतः क्रान्तिमण्डलप्राच्याः दृश्यग्द्वित्रिभोत्तरं खार्द्धाद्वित्रिभलग्नोपरिगतं दृक्क्षेपमण्डलम्। तत्र वित्रिभलग्नस्य या दृग्ज्या स दृक्क्षेपः। तज्जनिता नतिकलाश्चन्द्रार्ककक्षयोर्याम्योत्तरमन्तरं सर्वत्र तुल्यमेव द्रष्टा पश्यति। यथोक्तं गोले। "कक्षयोरन्तरं यत् स्याद्वित्रिभे सर्वतोऽपि तत्। नतिलिप्ता भुजः कर्णौ दृग्लम्बनकलास्तयोः। कृत्यन्तरपदं कोटिः स्फुटलम्बनलिप्तिकाः" शि०। यत् इदं लम्बनञ्चेत्मतो दृक्क्षेपार्कदृग्ज्ययोर्वर्गान्तरपदतुल्या दृङ्नतिर्भवितुमर्हति। परं यथा स्थिते गोले क्षेत्रोपरीयं न दृश्यते। यतो वित्रिभलग्नार्कयोरन्तरज्या वित्रिभलग्नशङ्कुव्यासार्द्धपरिणता सती दृङ्नतिर्भवति। अत एवानेनापि प्रकारेण क्षितिजस्थेऽर्के परमा दृङ्नतिर्वित्रिभलग्नशङ्कुतुल्या भवति। अतोऽयमपि प्रकारः पूर्वतुल्य एव। किन्तु दृक्क्षेपार्कदृग्ज्ययोस्तुल्ये शलाके भुजकर्णरूपे समायां भूमौ विन्यस्य तदन्तरे कोटिरूपां दृङ्नतिं दर्शयेत्। एवमनेकविधान्युपपत्त्यनुसारेण क्षेत्राणि परिकल्प्य धूलीकर्मोपसंहारमार्याः कुर्वते। अथ प्रस्तुतमुच्यते। अत्र किल वित्रिभलग्नस्य रवेश्च दृग्ज्ययोर्यद्वर्गान्तरपदं तावदेव तच्छङ्क्वोरपि भवति। तत् कथमिति चेत् तदुच्यते। अत्र स्वस्वशङ्कुवर्गोनौ त्रिज्यावर्गौ दृग्ज्यावर्गौ भवतः। तयोरन्तरे कृते त्रिज्यावर्गयोस्तुल्यत्वान्नतयोःशङ्कुवर्गान्तरमेवावशिष्यते। एवं यत्र कुत्रचिद्व्यासार्द्धेऽपि भुजज्ययोर्वर्गान्तरतुल्यं तत्कोटिज्ययोर्वर्गान्तरं भवतीति। अत उक्तं त्रिभोनलग्नस्य रवेश्च शङ्क्वोर्वा दृग्ज्ययोरिति"। दृङ्नतितस्त्रिज्यानुपातेन लम्बनस्य घटीकरणम्" प्रमि०।

इदानीं प्रकारान्तरेण लम्बनमाह। "शङ्क्वोस्तयोर्दृग्गुणयोस्तयोर्वा त्रिज्याचतुर्थांशविभक्तयोः स्यात्। यद्वर्गविश्लेषपदं द्विधैवं विलम्बनं तद्घटिकादिकं वा" सि० शि०।

"तयोरनन्तरकथितयोर्वित्रिभलग्नार्कशङ्क्वोस्त्रिज्याचतुर्थांशेनापवर्त्तितयोर्यद्वर्गान्तरपदं तल्लम्बनं वा भवति। अथ तयोः शङ्क्वोर्ये दृग्ज्ये तयोस्त्रिज्याचतुर्थांशभक्तवर्गान्तरपदं वा लम्बनं भवति। अत्रोपपत्तिः। अत्र निष्पन्नाया दृङ्नतेः कोटिरूपाया घटीचतुष्टयेन त्रिज्यया चानुपातः। स तदुपकरणभूतयोः शङ्क्वोस्तद्दृग्ज्ययोर्वा क्रियालाघवार्थं यदि क्रियते तदा घटिकात्मिकैव दृङ्नतिरुत्पद्यते। तदेव लम्बनम्। अतस्तथा कृते जातमन्यत् प्रकारद्वयम्" प्रमि०।

लम्बनप्रयोजनमाह । “तस्य स्फुतः पर्वविराम एवं स्फुटोऽसकृत् स ग्रहमध्यकालः” सि० शि० । “एवं यद्दर्शान्तकाले लम्बनमुत्पन्नं तद्वित्रिलग्नादूनेऽर्के धनमतो दर्शान्तघटिकासु क्षेप्यम् । यदि वित्रिभादधिकेऽर्के जातं तदृणं दर्शान्तघटीभ्यः शोध्यम् । एवमसकृल्लम्बनसंस्कृताद्दर्शान्तकाल्लग्नमानीय वित्रिभं च कृत्वोक्तप्रकारेण लम्बनं साध्यम् । तेन गणितागतो दर्शान्तः पुनः संस्कार्य्यः । एवं मुहुर्यावदविशेषः । एवं संस्कृतो दर्शान्तो ग्रहणमध्यकालो भवति । अत्रोपपत्तिः । अत्र चन्द्रकक्षाया आसन्नत्वाद्रविकक्षाया दूरत्वात् कुपृष्ठोच्छ्रिताद्द्रष्टू रविमण्डलगामि यत् सूत्रं तस्मादधश्चन्द्रोऽवलम्बितो दृश्यते तल्लम्बनम् । क्रान्तिवृत्ते परमोच्चस्थाने किल वित्रिभम् । तस्मादूनो यदा रविस्तदार्कादवलम्बितश्चन्द्रः पृष्ठतो भवति । चन्द्रो हि शीघ्रगतिः । शीघ्रे पृष्ठगते युतिरेष्या । अतो लम्बनं तिथौ धनम् । यदा वित्रिभलग्नादधिकोऽर्कस्तदा चन्द्रोऽवलम्बितोऽर्कादग्रतो भवति । शीघ्रेऽग्रगे युतिर्जाता लम्बनतुल्येन कालेनातस्तस्य लम्बनस्यर्णम् । एवं लम्बनसंस्कृतो दर्शान्तो ग्रहणमध्यकालः स्यादित्युपपन्नम् । यदि त्रिज्यातुल्ययार्कदृग्ज्यया परमा भुक्त्यन्तरपञ्चदशांशतुल्या लम्बनलिप्ता ४८ । ४६ लभ्यन्ते तदेष्टयार्कदृग्ज्यया किमिति । फलं दृग्लम्बनकलाः । एवमनेनैवानुपातेन दृक्क्षेपाद्या लम्बनलिप्ता उत्पद्यन्ते ता अवनतिलिप्ताः ता भुजरूपाः । दृग्लम्बनकलाः कर्णः तयोर्वर्गान्तरपदं स्फुटलम्बनलिप्ताः । यतो दृङ्मण्डलानयनेऽर्कदृग्ज्या कर्णो दृक्क्षेपो भुजः । अतो दृक्क्षेपाज्जनिताऽवनतिर्भुजः । स्फुटलम्बनलिप्ताः कोटिः । इदमखिलं गोले लम्बनोपपत्तौ कथितम् । तद्यथा । “यतः कुपृष्ठोच्छ्रितो द्रष्टा चन्द्रं पश्यति लम्बितम् । साध्यते कुदलेनातो लम्बनं च नतिस्तथा । इष्टापवर्तितां पृथ्वीं कक्षे च शशिसूर्य्ययोः । भित्तौ विलिख्य तन्मध्ये तिर्य्यग्रेखां तथोर्ध्वगाम् । तिर्य्यग्रेखायुतौ कल्प्यं कक्षायां क्षितिजं तथा । ऊर्ध्वरेखायुतौ खार्धं दृग्ज्याचापांशकैस्ततो । कृत्वार्केन्दू समुत्पत्तिं लम्बनस्य प्रदर्शयेत् । एकं भूमध्यतः सूत्रं नयेच्चण्डांशुमण्डलम् । द्रष्टुर्भूपृष्ठगादन्यद्दृष्टिसूत्रं तदुच्यते । कक्षायां सूत्रयोर्मध्ये यास्ता लम्बनलिप्तिकाः । गर्भसूत्रे सदा स्यातां चन्द्रार्कौ समलिप्तिकौ । दृक्सूत्रालम्बितश्चन्द्रस्तेन तल्लम्बनं स्मृतम् । दृग्गर्भसूत्रयोरैक्यात् खमध्ये नास्ति लम्बनम् । अथ याम्योत्तरायां तु भित्तौ पूर्वोक्तमालिखेत् । ये कक्षे मण्डले ते तु ज्ञेये विक्षेपमण्डले । त्रिभोनलग्नदृग्ज्या या स दृक्क्षेपो द्वयोरपि । तच्चापांशैस्ततो बिन्दू कृत्वा वित्रिभसंज्ञकौ । प्राग्वद्दृक्सूत्रतश्चन्द्रवित्रिभस्य नतिर्नतिः । कक्षयोरन्तरं यत् स्याद्वित्रिभे सर्वतोऽपि तत् । याम्योत्तरं नतिः साऽत्र दृक्क्षेपात् साध्यते ततः । यत्र तत्र नतादर्कादधश्चन्द्राद्विलम्बनम् । तद्दृग्वृत्तेऽन्तरं चन्द्रभान्वोः पूर्व्वापरं तु तत् । पूर्व्वापरं च याम्योदग्जातं तेनान्तरद्वयम् । अत्रापमण्डलं प्राची तत्तिर्य्यग्दक्षिणोत्तरा । यत् पूर्व्वापरभावेन लम्बनाख्यं तदन्तरम् । यद्याम्योत्तरभावेन नतिसंज्ञं तदुच्यते । नतिलिप्ता भुजः कर्णो दिग्लम्बनकलास्तयोः । कृत्यन्तरपदं कोटिः स्फुटलम्बनलिप्तिकाः । परलम्बनलिप्ता ४८/४६ घ्नी त्रिज्या ३४३८ घ्ना रविदृग्ज्यका । दृग्लम्बनकलास्ताः स्युरेवं दृक्क्षेपयोर्नतिः । गत्यन्तरस्य ७३१/२७ तिथ्यंशः ४८/४६ परलम्बनलिप्तिकाः गतियोजन ११८५९/४५ तिथ्यंश ७९०/२५ कुदलस्य यतो मितिः । स्युर्लम्बनकलानाड्यो गत्यन्तरलवोद्धृताः । प्रागग्रतो रवेश्चन्द्रः पश्चात् पृष्ठेऽवलम्बितः । शीघ्रेऽग्रगे युतिर्जाता गम्या पृष्ठगते यतः । प्राग्घनं तद्धनं पश्चात् क्रियते लम्बनं तिथौ । याम्योत्तरं शरस्तावदन्तरं शशिसूर्य्ययोः । नतिस्तथा तया तस्मात् संस्कृतः स्यात् स्फुटः शरः” प्रसि० ।

इदानीं सकृत्प्रकारेण लम्बनमाह । “त्रिभोनलग्नस्य नरस्त्रिभू १३ घ्नो दन्तै ३२ र्विभक्तः परसंज्ञकः स्यात् । लग्नार्कयोरन्तरकोटिदोर्ज्ये विधाय दोर्ज्यापरयोर्वियोगात् । स्वघ्नाद्युतात् कोटिगुणस्य कृत्या मूलं श्रुतिः कोटिगुणात् परघ्नात् । श्रुत्या हृतात्लब्धधनुःकलायास्ते वाऽसवो लम्बनजाः सकृत् स्युः” सि० शि० । “त्रिभोनलग्नस्य यः शङ्कुः स त्रयोदशगुणो द्वात्रिंशद्भक्तः फलं परसंज्ञं भवति । दर्शान्तकाले यल्लग्नं तस्मादर्कोनाद्भुजकोटिज्ये साध्ये तत्र दोर्ज्याया अनन्तरानीतस्य च परस्य यो विश्लेषस्तस्माद्वर्गीकृतात् कोटिज्यावर्गेण युताद्यत् पदं स कर्णः । कोटिज्यापरयोर्घातात् तेन कर्णेन भक्ताद्यत् फलं तस्य चापे यावत्यः कलास्तावन्तो लम्बनासवः सकृदेव भवेयुः । अत्रोपपत्तिः । यदि त्रिज्यातुल्ये १२० वित्रिभलग्नशङ्कोः परमलम्बनज्यातुल्यगुणकेन त्रिज्या हरस्तदा त्रयोदशगुणकेन कः । फलं द्वात्रिंशत् । तस्य परसंज्ञा कृता । अर्वोऽधःस्थयोरपि चन्द्रार्कयोः क्षिप्तोपसंहारार्थमन्यथा कल्पितं लम्बनद्योतम् । तत्र

रन्तरं मौक्तिकं स्थित्यर्द्धम्। एवं मर्द्दलेनोनाद्गणितागतात् सम्मीलनकालः। मर्द्दलेन युक्तादुन्मीलनकालः। सम्मीलनमध्यग्रहकालयोरन्तरं प्रथमं स्फुटं मर्द्दार्द्धम्। उन्मीलनमध्यग्रहकालयोरन्तरं द्वितीयम्। यद्यसकृद्विधिना लम्बनं क्रियते तदैवम्। यदा पुनः सकृद्विधिना लम्बनं तदा स्पर्शकालो मोक्षकालोऽपि सकृदेव स्फुटो भवति। किन्तु तत्रायं विशेषः। स्पर्शकाले मोक्षकाले वा पुनर्वित्रिभलग्नं कृत्वा तस्मान्नतिः साध्या। तया तत्कालभवो विक्षेपः संस्कृतः सन् स्फुटः स्पार्शिकः। मौक्षिको वा स्फुटो भवति। नचेदेवं तदा स्थूलः। अत्रोपपत्तिः स्थित्यर्धानयने पूर्वोक्तैव। तत्स्फुटीकरणे प्रोच्यते। गणितागतो हि दर्शान्तकालो मध्यग्रहकालो भवितुमर्हति चन्द्रार्कयोस्तत्र तुल्यत्वात्। स्थित्यर्द्धेनोनो दर्शान्तकालः स्पर्शकालो भवति। युतो मोक्षकालः। अथ च द्रष्टुः कक्षोच्छ्रितत्वाल्लम्बनमुत्पन्नम्। अतस्तेन संस्कृतो दर्शान्तो मध्यग्रहकालः स्फुटो भवति। एवं स्पर्शकालोऽपि तत्कालजनितलम्बनेन संस्कृतः स्फुटो भवितुमर्हति। या युक्तिर्मध्यग्रहणकालस्य लम्बनसंस्कारे सैव स्पर्शमोक्षसम्मीलनोन्मीलनकालानां, किन्तु स्पर्शमोक्षकालस्य लम्बनसंस्कारे क्रियमाणे कालान्यत्वाच्छरः किञ्चिदन्यथा भवति। नतिश्च किञ्चिदन्यादृशी। तत्संस्कृतिभवं स्थित्यर्द्धमपि किञ्चिदन्यादृशम्। अतस्तेनोने गणितागते दर्शान्ते तल्लम्बनं धनमृणं वा कर्त्तुं युज्यते। अत उक्तं तत्कालोत्थनतीषुसंस्कृतिभवस्थित्यर्द्धहीनाधिक इत्यादि। यद्यसकृद्विधिना लम्बनं तदा पुनः पुनर्लम्बनं नतिश्च। तया तत्कालशरः स्फुटः स्थित्यर्धार्थं किल क्रियते। तदा स्थित्यर्धं स्फुटं भवति। तदा तत्कालशरोऽपि स्फुटो भवति। स एव स्पार्शिकः शर इति वेदितव्यम्। यदा पुनः सकृद्विधिना लम्बनं तदा तत्र पुनः शरस्य नतेश्चाकरणात् स्पार्शिकः शरः पुनः [illegible] न युज्यते। अत उक्तं किन्त्वत्र बाणावनती पुनः [illegible]लिकाभ्यां विधुवित्रिभाभ्यामिति" प्रमिताक्षरा।

इदानीं विशेषमाह।

"शेषं शशाङ्कग्रहणोक्तमत्र स्फुटेषुणेन स्थितिखण्डकेन। हतोऽथ तेनैव हृतः स्फुटेन बाहुः स्फुटः स्याद्ग्रहणोत्र भानोः। ग्रासात् कालानयने फलं यत् स्फुटेन [illegible] स्थितिखण्डकेन। स्फुटे[illegible]तानाद्युद्धृतं तत् स्थित्यर्द्धशुद्धं भवतीष्टकालः" इति सिद्धान्तशिरोमणिः।

"अत्र रविग्रहणे विम्बवलनभुजकोट्यादीनामानयनं शशाङ्कग्रहणोक्तवत् वेदितव्यम्। किं त्वत्र भुजसाधने विशेषः अत्र पूर्वानयनेन यो भुज आगच्छति। असौ तत्कालस्फुटशरजनितेन स्थित्यर्धेन गुणः स्फुटेन स्थितिखण्डकेन भाज्यः। स्पर्शमध्यकालयोरन्तरेण भाज्यः इत्यर्थः। फलं स्फुटो भुजो भवति"। "ग्रासोनमानैक्यदलस्य वर्गाद्विक्षेपकृत्या रहितात् पदं यत्। गत्यन्तरांशैर्विहृतमिति" यत् फलं लभ्यते तस्य स्फुटीकरणम्। तत् फलं स्फुटेन स्थित्यर्धेन स्पर्शमध्यकालयोरन्तरेण गुणितं तत्कालस्फुटशरजनितेन स्थित्यर्धेन भक्तं स्फुटं भवति। तत् स्वस्थित्यर्द्धाच्छुद्धमिष्टकालो भवति। स च स्पर्शादग्रतो मोक्षात् पृष्ठतः। तस्मिन् काले नतिसंस्कृतं शरं पुनः कृत्वा ग्रासोनमानैक्यदलस्य वर्गाद्विक्षेपकृत्येत्यादिना फलं साध्यम्। तत् फलं पुनः स्फुटं कर्त्तव्यम्। एवं यावदिष्टकालः-स्फुटो भवति तावदसकृत्कर्म। अत्रोपपत्तिः। भुजानयने पूर्वोक्तैव। तत्स्फुटीकरणे प्रोच्यते। यथा चन्द्रग्रहणे स्थित्यर्धं शरमानैक्यार्द्धयोर्वर्गान्तरादुद्भूतं तथेहाप्यानीतम्। तदस्फुटम्। लम्बनसंस्कारे कृते स्पर्शमध्यग्रहकालयोरन्तरं तत् स्फुटं स्थित्यर्द्धम्। लम्बनान्तरसंस्कृतमित्यर्थः। भुजो हि स्थित्यर्द्धसम्बन्धेनागच्छति। यथा चन्द्रग्रहे मध्यममेव स्थित्यर्द्धम्। तत्सम्बन्धेन यादृशो भुजस्तत्रागच्छति तादृशेनेहापि भवितव्यम्। वासनायास्तुल्यत्वात्। अथ च "वीष्टेन निघ्नाः स्थितिखण्डकेनेत्येवम्" यदानीयते तदा स्फुटस्थित्यर्धं वीष्टं कृत्वा गुणक आनीयते तदा स्फुटस्थित्यर्धसम्बन्धी भुजः स्यात्। असावसम्यक्। अतस्तस्य तत्कालस्फुटशरजनितस्थित्यर्द्धसम्बन्धीकरणायानुपातः। यदि स्फुटस्थित्यर्धेनैतावान् भुजस्तदा तत्कालजनितस्फुटशरभवस्थित्यर्द्धेन किमिति। फलं स्फुटो भुजो भवति। एतदेव विपरीतं कर्म ग्रासात् कालानयने। "ग्रासोनमानैक्यदलस्य वर्गात्" इत्यादिना यत् फलमागच्छति तन्मध्यमं स्थित्यर्धं वीष्टम्। तत् स्फुटस्थित्यर्धाद्यावद्विशोध्यते तावदसम्यगिष्टं भवति। अतस्तस्य फलस्य स्फुटस्थित्यर्द्धपरिणामायानुपातः। यदि मध्यमस्थित्यर्धेनैतावत् फलं तदा स्फुटस्थित्यर्द्धेन किमिति। अत्र यल्लभ्यते स्फुटं फलं तस्मिन् स्फुटस्थित्यर्धाच्छोधिते स्फुटमिष्टमवशिष्यते" इति प्रमिताक्षरा।

इह संहितायां ग्रासप्रकारस्तद्भेदस्तत्फलानि चोक्तानि यथा

"अस्त्रात्वद्विशेषाच्छिन्नमपि शिरः किलासुरस्येदम्। प्राहुरपरित्यागं ग्रहणं यातं वदन्त्येके। इन्द्वर्कमण्डलाकृतिरसितत्वात् किल न दृश्यते गगने। अयत्र पर्वकालाद् वरप्रदानात् कमलयोनेः। मुखपुच्छविभक्ताङ्गं भुजङ्गमाकारमुपदिशन्त्यन्ये। कथयन्त्यमूर्त्तमपरे तमोमयं सैंहिकेयाख्यम्। यदि मूर्त्तो भविचारी शिरोऽथवा भवति मण्डली राहुः। भगणार्धेनान्तरितो गृह्णाति कथं नियतचारः। अनियतचारः खलु चेदुपलब्धिः सङ्ख्यया कथं तस्य। पुच्छाननाभिधानोऽन्तरेण कस्मान्न गृह्णाति। अथ तु भुजगेन्द्ररूपः पुच्छेन मुखेन वा न गृह्णाति। मुखपुच्छान्तरसंस्थं स्थगयति कस्मान्न भगणस्यार्द्धम्। राहुद्वयं यदि स्याद्ग्रस्तेऽस्तमितेऽथवोदिते चन्द्रे। तत्समगतिनान्येन ग्रस्तः सूर्य्योऽपि दृश्येत। भूच्छायां स्वग्रहणे भास्करमर्कग्रहे प्रविशतीन्दुः। प्रग्रहणमतः पश्चान्नेन्दोर्भानोश्च पूर्वार्धात्। वृक्षस्य स्वच्छाया यथैकपार्श्वेन भवति दीर्घा च। निशि निशि तद्वद् भूमेरावरणवशाद्दिनेशस्य। सूर्य्यात् सप्तमराशौ यदि चोदग्दक्षिणेन नातिगतः। चन्द्रः पूर्वाभिमुखश्छायामौर्वीं तदा विशति। चन्द्रोऽधःस्थः स्थगयति रविमम्बुदवत् समागतः पश्चात्। प्रतिदेशमतश्चित्रं दृष्टिवशाद्भास्करस्य ग्रहणम्। आवरणं महदिन्दोः, कुण्ठविषाणस्ततोऽर्द्धसंछन्नः। स्वल्पं रवेर्यतोऽतस्तीक्ष्णविषाणो रविर्भवति। एवमुपरागकारणमुक्तमिदं दिव्यदृग्भिराचार्य्यैः। राहुरकारणमस्मिन्नित्युक्तः शास्त्रसद्भावः। योऽसावसुरो राहुस्तस्य वरो ब्रह्मणायमाज्ञप्तः। आप्यायनमुपरागे दत्तहुतांशेन ते भविता। तस्मिन् काले सान्निध्यमस्य तेनोपचर्य्यते राहुः। याम्योत्तरा शशिगतिर्गणितेऽप्युपचर्य्यते तेन। न कथञ्चिदपि निमित्तैर्ग्रहणं विज्ञायते विना तैस्तु। अन्यस्मिन्नपि काले भवन्त्यथोत्पातरूपाणि। पञ्चग्रहसंयोगान्न किल ग्रहणस्य सम्भवो भवति। तैलं च विनाऽष्टम्यां न विचिन्त्यमिदं विपश्चिद्भिः। अवनत्यार्कोग्रासो दिग्ज्ञेया वलनयावनत्या च" अथ वेलाभेदे फलम्।

"तिथ्यवसानाद्वेलाकरणे कथितानि तानि मया। षण्मासोत्तरवृद्ध्या पर्वेशाः सप्त देवताः क्रमशः। ब्रह्मशशीन्द्रकुबेरा वरुणाग्नियमाश्च विज्ञेयाः। ब्राह्मे द्विजपशुवृद्धिः क्षेमारोग्याणि शस्यसम्पच्च। तद्वत् सौम्ये तस्मिन् पीड़ा विदुषामवृष्टिश्च। ऐन्द्रे भूपविरोधः शारदशस्यक्षयो न च क्षेमम्। कौवेरेऽर्थपतीनामर्थविनाशः सुभिक्षं च। वारुणमवनीशाशुभमन्येषां क्षेममस्यवृद्धिकरम्। आग्नेयं मित्राख्यं शस्यारोग्याभयाम्बुकरम्। याम्यं करोत्यवृष्टिं दुर्भिक्षं सङ्क्षयं च शस्यानाम्। यदतः परं तदशुभं क्षुन्माराद्यष्टिदं पर्व। वेलाहीने पर्वणि गर्भविपत्तिश्च शस्त्रकोपश्च। अतिवेले कुसुमफलक्षयो भयं सस्यनाशश्च। हीनातिरिक्तकाले फलमुक्तं पूर्वशास्त्रदृष्टत्वात्"।

अथ एकमासे ग्रासद्वयस्य ग्रासभेदस्य च फलम्। "स्फुटगणितविदः कालः कथञ्चिदपि नान्यथा भवति। यद्येकस्मिन् मासे ग्रहणं रविसोमयोस्तदा क्षितिपाः। स्वबलक्षोभैः सङ्क्षयमायान्त्यतिशस्त्रकोपैश्च। ग्रस्तावुदितास्तमितौ शारदधान्यावनीश्वरक्षयदौ सर्वग्रस्तौ दुर्भिक्षमरकदौ पापसंदृष्टौ" अथ दिनाद्यंशभेदे ग्रासफलम्।

"अर्धोदितोपरक्तो नैकृतिकान् हन्ति सर्वयज्ञांश्च। अग्न्युपजीविगुणाधिपविप्राश्रमिणोऽयुगाभ्युदितः। कर्षकपाषण्डवणिक्क्षत्रियबलनायकान् द्वितीयेंऽशे। कारुकशूद्रम्लेच्छान् खलु तार्तीयांशे समन्त्रिजनान्। मध्याह्ने नरपतिमध्यदेशहा शोभनश्च धान्यार्घः। तृणभुगमात्यान्तःपुरवैश्यघ्नः पञ्चमे खांशे। स्त्रीशूद्रान् षष्ठेंऽशे दस्युप्रत्यन्तहाऽस्तमयकाले। यस्मिन् खांशे मोक्षस्तत्प्रोक्तानां शिवं भवति"।

अथायनादिभेदे फलम् "द्विजनृपतीनुदगयने विट्शूद्रान् दक्षिणायने हन्ति। राहुरुदगादिदृष्टः प्रदक्षिणं हन्ति विप्रादीन्। म्लेच्छान् विदिक्स्थितोऽध्वयायिनश्च हन्याद्धुताशसक्तांश्च। सलिलचरदन्तिघाती याम्येनोदग्गवामशुभः। पूर्वेण सलिलपूर्णां करोति वसुधां समागतो दैत्यः। पश्चात्कर्षकसेवकबीजविनाशाय निर्दिष्टः। पाञ्चालकलिङ्गशूरसेनाः काम्बोजोड्रकिराता शस्त्रवार्त्ताः"

अथ मेषादिराशौ ग्रासफलम्। "जीवन्ति च ये हुताशवृत्त्या ते पीड़ामुपयान्ति मेषसंस्थे। गोपाः पशवोऽथ गोमिनो मनुजा ये च महत्त्वमागताः। पीडामुपयान्ति भास्करे ग्रस्ते शीतकरेऽथवा वृषे। मिथुने प्रवराङ्गना नृपा नृपमात्या बलिनः कलाविदः। यमुनातटजाः सवाह्लिका मत्स्याः सुह्मजनैः समन्विताः। आभीरान्छवरान् सपह्लवान् सह मल्लान् मत्स्यकुरुच्छकानपि। पाञ्चालान्विकलांश्च पीडयत्यन्नं चापि निहन्ति कर्कटे। सिंहे पुलिन्दगणमेकलसत्वयुक्तान् राजोपमान्नरपतीन् वनगोचरांश्च। षष्ठे तु सस्यकविलेखकगेयसक्तान् हन्त्यश्मकत्रिपुरशालियुतांश्च देशान्। तुलाधरेऽवन्त्यपरा-

न्तसाधून् वणिग्दशार्णान् मरुकच्छपांश्च। अर्लिन्यथोदुम्बरमद्रचोलान् द्रुमान् सयौधेयविषायुधीयान् । धन्विन्यमात्यवरवाजिविदेहमल्लान् पाञ्चालवैद्यवणिजो विषमायुधज्ञान् । हन्यान्मृगे तु मृगमन्त्रिकुलानि नीचान् मन्त्रौषधिषु कुशलान् स्थविरायुधीयान् । कुम्भेऽन्तर्गिरिजान् स पश्चिमजनान् भारोद्वहांस्तस्करान् आभीरान्दरदार्य्यसिंहपुरकान्हन्यात्तथा बर्ब्बरान् । मीने सागरकूलसागरजलद्रव्याणि मान्यान् जनान् प्राज्ञान् वार्य्युपजीविनश्च भफलं कूर्म्मोपदेशाद्वदेत्” । ताराफलं कूर्म्मविभागशब्दे वक्ष्यते ।

अथ ग्रासभेदनामतत्फले “सव्यापसव्यलेहग्रसननिरोधावमर्दनारोहाः । आघ्रातं मध्यतमस्तमोऽन्त्य इति ते दश ग्रासाः । सव्यगते तमसि जगज्जलप्लुतं भवति मुदितमभयं च । अपसव्ये नरपतितस्करावमर्दैः प्रजानाशः । जिह्वेव लेढि परितस्तिमिरनुदो मण्डलं यदि स लेहः । प्रमुदितसमस्तभूता प्रभूततोया च तत्र मही । ग्रसनमिति यदा त्र्यंशः पादो वा ग्रस्यतेऽथवाप्यर्द्धम् । स्फीतन्टपवित्तहानिः पीड़ा च स्फीतदेशानाम् । पर्य्यन्तेषु ग्रहीत्वा मध्ये पिण्डीकृतं तमस्तिष्ठेत् । स निरोधो विज्ञेयः प्रमोदकृत् सर्व्वभूतानाम् । अवमर्दनमिति निःशेषमेव सञ्छाद्य यदि चिरं तिष्ठेत् । हन्यात् प्रधानदेशान् प्रधानभूपांश्च तिमिरमयः । वृत्ते ग्रहे यदि तमस्तत्क्षणमावृत्य दृश्यते भूयः । आरोहणमित्यन्योऽन्यमर्दनैर्भयकरं राज्ञाम् । दर्पण इवैकदेशे सवाष्पनिःश्वासमारुतोपहतः । दृश्येताघ्रातं तत् सुवृष्टिवृद्ध्यावहं जगतः । मध्ये तमः प्रविष्टं वितमस्कं मण्डलं च यदि परितः । तन्मध्यदेशनाशं करोति कुक्ष्यामयभयं च ।पर्य्यन्तेष्वतिबहुलं स्वल्पं मध्ये तमस्तमोऽन्त्याख्यम् । सस्यानामीतिभयं भयमस्मिंस्तस्कराणां च” ।

अथौत्पातिकराहुवर्णभेदे फलम् । “श्वेते क्षेमसुभिक्षं ब्राह्मणपीड़ां च निर्दिशेद्राहौ । अग्निभयमनलवर्णे पीड़ा च हुताशवृत्तीनाम् । हरिते रोगोल्वणता सस्यानामीतिभिश्च विध्वंसः । कपिले शीघ्रगसत्वम्लेच्छध्वंसोऽथ दुर्भिक्षम् । अरुणकिरणानुरूपे दुर्भिक्षावृष्टयो विहगपीड़ा । आधूम्रे क्षेमसुभिक्षमादिशेन्मन्दवृष्टिं च । कापोतारुणकपिलश्यावाभे क्षुद्भयं विनिर्देश्यम् । कापोतः शूद्राणां व्याधिकरः कृष्णवर्णश्च । विमलकमणिपीताभो वैश्यध्वंसी भवेत् सुभिक्षाय । सार्चिष्मत्यग्निभयं गैरिकरूपे तु युद्धानि । दूर्वाकाण्डश्यामे हारिद्रे वापि निर्दिशेन्मरकम् । अशनिभयसम्प्रदायी पाटलिकुसुमोपमो राहुः । पांशुविलोहितरूपः क्षत्रध्वंसाय भवति वृष्टेश्च । बालरविकमलसुरचापरूपभृत् स्त्रकोपाय” । शिरोमणयस्तु ग्रासभेदे ग्रासवर्णभेदस्तु स्वाभाविक इत्यविरोधः ।

अथ ग्रहभेददर्शने फलभेदः । “पश्यन् ग्रस्तं सौम्यो घृतमधुतैलक्षयाय राज्ञां च । भौमः समरविमर्दं शिखिकोपं तस्करभयं च । शुक्रः सस्यविमर्दं नानाक्लेशांश्च जनयति धरित्र्याम् । रविजः करोत्यवृष्टिं दुर्भिक्षं तस्करभयं च । यदशुभमवलोकनाभिरुक्तं ग्रहजनितं ग्रहणे प्रमोक्षणे वा । सुरपतिगुरुणावलोकितं तच्छमुपयाति जलैरिवाग्निरिद्धः” ।

अथ ग्रासोत्तरषण्मासाभ्यन्तरे पुनर्ग्रासे भूकम्पादौ सपातेन्दुना सूर्य्यस्येव भौमादिपञ्चकस्याप्याच्छादसम्भवेन तथात्वे चौत्पातिकं ग्रहणं तेष्वनिष्टफलानि चोक्तानि यथा। “ग्रस्ते क्रमान्निमित्तैः पुनर्ग्रहो मासषट्कपरिवृद्ध्या । पवनोल्कापातरजःक्षितिकम्पतमोऽशनिनिपातैः। आवन्तिका जनपदाः कावेरीनर्म्मदातटाश्रयिणः । दृप्ताश्च मनुजपतयः पीड्यन्ते क्षितिसुते ग्रस्ते । अन्तर्वेदीं सरयूं नेपालं पूर्व्वसागरं शोणम् । स्त्रीन्टपयोधकुमारान् सह विद्वद्भिर्बुधो हन्ति । ग्रहणोपगते जीवे विद्वन्नृपमन्त्रिगजहयध्वंसः । सिन्धुतटवासिनामप्युदग्दिशं संश्रितानां च । भृगुतनये राहुगते दसेरकाः सेकैकयाः सयौधेयाः । आर्य्यावर्त्ताः शिवयः स्त्रीसचिवगणाश्च पीड्यन्ते। सौरे मरुभवपुष्करसौराष्ट्रा धावतोऽर्व्वुदान्त्यजनाः । गोमन्तपारियात्राश्रिताश्च नाशं व्रजन्त्याशु” ।

अथ मासभेदे ग्रासफलम् ।“कार्त्तिक्यामनलोपजीविमगधान् प्राच्याधिपान् कोशलान् कल्माषानथ शूरसेनसहितान् काशीं च सन्तापयेत् । हन्याच्चाशु कलिङ्गदेशन्टपतिं सामात्यभृत्यं तमो दृष्टं क्षत्रियतापदं जनयति क्षेमं सुभिक्षान्वितम् । काश्मीरकान् कोशलकान् सपुण्ड्रान् मृगांश्च हन्यादपरान्तकांश्च । ये सोमपास्तांश्च निहन्ति सौमे (मार्गे) सुवृष्टिकृत् क्षेमसुभिक्षकृच्च । पौषे द्विजक्षत्रजनोपरोधः ससैन्धवाख्याः कुकुरा विदेहाः । ध्वंसं व्रजन्त्यत्र च मन्दवृष्टिं भयं च विन्द्यादसुभिक्षयुक्तम् । माघे तु मातृपितृभक्तवसिष्ठगोत्रान् स्वाध्यायधर्मनिरतान् करिणस्तुरङ्गान् । वङ्गाङ्गकाशिमनुजांश्च दुनोति राहुर्वृष्टिं च कर्षकजनानुमतां करोति । पीड़ाकरं फाल्गुनमासि पर्व वङ्गाश्मकावन्तकमेकलानाम् । न्टत्यप्रसस्यप्रवराङ्गनानां ध-

तुषकरवल्कतपस्विनां च। चैत्रे तु चित्रकरलेखकगेयसक्तान् रूपोपजीविनिगमज्ञहिरण्यपण्यांश्च। पौण्ड्रौड्रकैकयजनानथ चाश्मकांश्च तापः स्पृशत्यमरपोऽत्र विचित्रवर्षी। वैशाखमासि ग्रहणे विनाशमायान्ति कर्पासतिलाः समुद्गाः। इक्ष्वाकुयौधेयशकाः कलिङ्गाः सोपद्रवाः किन्तु सुभिक्षमस्मिन्। ज्यैष्ठे नरेन्द्रद्विजराजपत्न्यः सस्यानि वृष्टिश्च महागणाश्च। प्रध्वंसमायान्ति नराश्च सौम्याः साल्वैः समेताश्च निषादसङ्घाः। आषाढपर्वण्युदपानवप्रनदीप्रवाहान् फलमूलवार्त्तान्। गान्धारकाश्मीरपुलिन्दचीनान् हतान् वदेन्मण्डलवर्षमस्मिन्। काश्मीरान् सपुलिन्दचीनयवनान् हन्यात् कुरुक्षेत्रकान् गान्धारानपि मध्यदेशसहितान् दृष्टो ग्रहः श्रावणे। काम्बोजैकशफांश्च शारदमपि त्यक्त्वा यथोक्तानिमान् अन्यत्र प्रचुरान्नहृष्टमनुजैर्धात्रीं करोत्यावृताम्। कलिङ्गवङ्गान् मगधान् सुराष्ट्रान् म्लेच्छान् सुवीरान् दरदाश्मकांश्च। स्त्रीणां च गर्भानसुरो निहन्ति सुभिक्षकृद्भाद्रपदेऽभ्युपेतः। काम्बोजचीनयवनान् सह शल्यहृद्भिर्वाह्लीकसिन्धुतटवासिजनांश्च हन्यात्। आनर्त्तपौण्ड्रभिषजश्च तथा किरातान् दृष्टोऽसुरोऽश्वयुजि भूरिसुभिक्षकृच्च"।

अथ मोक्षभेदनामतत्फलानि "हनुकुक्षिपायुभेदाद्विद्विः सञ्छर्दनं च जरणं च। मध्यान्तयोश्च विदरणमिति दश शशिसूर्य्ययोर्मोक्षाः। आग्नेय्यामपगमनं दक्षिणहनुभेदसंज्ञितं शशिनः। सस्यविमर्दो मुखरुग् नृपपीड़ा स्यात् सुवृष्टिश्च। पूर्वोत्तरेण वामो हनुभेदो नृपकुमारभयदायी। मुखरोगं शस्त्रभयं तस्मिन् विन्द्यात् सुभिक्षञ्च। दक्षिणकुक्षिविभेदो दक्षिणपार्श्वेन यदि भवेन्मोक्षः। पीड़ा नृपपुत्राणामभियोज्या दक्षिणा रिपवः। वामस्तु कुक्षिभेदो यद्युत्तरमार्गसंस्थितो राहुः। स्त्रीणां गर्भविपत्तिः सस्यानि च तत्र मध्यानि। नैरृतवायव्यस्थौ दक्षिणवामौ तु पायुभेदौ द्वौ। गुह्यरुगल्पा वृष्टिर्द्वयोस्तु राज्ञीक्षयो वामे। पूर्व्वेण ग्रहणं कृत्वा प्रागेव चापसर्पेत। सञ्छर्दनमिति तत् क्षेमसस्यहार्दिप्रदं जगतः। प्राक्प्रग्रहणं यस्मिन् पश्चादपसर्पणं तु तज्जरणम्। क्षुच्छस्त्रभयोद्विग्नाः क्व शरणमुपयान्ति तत्र जनाः। मध्ये यदि प्रकाशः प्रथमं तन्मध्यविदरणं नाम। अन्तःकोपकरं स्यात् सुभिक्षदं नातिवृष्टिकरम्। पर्य्यन्तेषु विमलताबहुलं मध्ये तमोऽन्तदरणाख्यम्। मध्याख्यदेशनाशः शारदसस्यक्षयश्चास्मिन्। एते सर्वे मोक्षा वक्तव्या भास्करेऽपि किन्त्वत्र। पूर्वा दिक् शशिनि यथा तथा रवौ पश्चिमा कल्प्या"।

अथ ग्रासोत्तरं सप्तदिनमध्ये पांशुपातादौ फलम्। "मुक्ते सप्ताहान्तः पांशुनिपातोऽन्नसंक्षयं कुरुते। नीहारो रोगभयं भूकम्पः प्रवरनृपमृत्युम्। उल्का मन्त्रिविनाशं नानावर्णा घनाश्च भयमतुलम्। स्तनितं गर्भविनाशं विद्युन्नृपदंष्ट्रिपरिपीड़ाम्। परिवेषो रुक्पीड़ां दिग्दाहो नृपभयं च साग्निभयम्। रूक्षो वायुः प्रबलश्चौरसमुत्थं भयं धत्ते। निर्घातः सुरचापं दण्डश्च क्षुद्भयं सपरचक्रम्। ग्रहयुद्धं नृपयुद्धं केतुश्च तदेव संदृष्टः। अविकृतसलिलनिपाते सप्ताहान्तः सुभिक्षमादेश्यम्। यच्चाशुभं ग्रहणजं तत् सर्वं नाशमुपयाति। सोमग्रहे निवृत्ते पक्षान्ते यदि भवेद्ग्रहोऽर्कस्य। तत्रानयः प्रजानां दम्पत्योर्वैरमन्योऽन्यम्। अर्कग्रहात्तु शशिनो ग्रहणं यदि दृश्यते ततो विप्राः। नैकक्रतुफलभाजो भवन्ति मुदिताः प्रजाश्चैव" वृ०स०।

ज्यो०त० "रविभौमनवांशे तु निरभ्रं ग्रासमादिशेत्। बुधसौरिनवांशे तु मलिनं क्षुद्रवर्षणम्। गुरोरंशक्रमासाद्य दृश्यते सवलाहकः। शशिशुक्रनवांशे तु प्रावृट्काले महज्जलम्। अन्यत्राव्यक्तभूतौ तौ दृश्येते क्वादिताम्बरौ"। "अन्यत्र वर्षे तरत्र तौ चन्द्रार्कौ।

एवं ग्रहणस्य कालभेदेन शुभाशुभसूचकत्वे सामान्यतः स्थिते इदानीं व्यक्तिभेदेन जन्मादिराशिभेदेन ग्रहणस्य दर्शननिषेधस्तत्फलञ्चोच्यते। राजमा० "सप्ताष्टजन्मशेषेषु (१२) चतुर्थे दशमे तथा। नवमे च तथा चन्द्रे न कुर्य्याद्राहुदर्शनम्। श्रीपतिव्यवहारनिर्णये वशिष्ठः। "जन्मभे जन्मराशौ च षष्ठाष्टमगते तयोः। चतुर्थे द्वादशे चन्द्रे न कुर्य्याद्राहुदर्शनम्। ग्रासदर्शनमात्रेण चार्थहानिर्महद्भयम्। जायते नात्र सन्देहस्तस्मात्तत्परिवर्जयेत्"। "जन्मनक्षत्रापेक्षया षष्ठे सप्तमे अर्थात् निधनतारायाम्" ज्यो०रघु०। "जन्मसप्ताष्टरिःफाङ्कदशमस्थे निशाकरे। दृष्टोरिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि च"। "वैनाशिके क्षे दृष्टं ग्रहणं सुधांशुभास्करयोः। जनयति रोगं बहुधा क्लेशं वित्तक्षयं चाशु" वराहः। तच्छान्तिरप्युक्ता ज्यो०त० तत्रैव "जन्माष्टजायान्त्यखधर्मसंस्थे निशाकरे जन्मसु तारकासु। दृष्ट्वा तमश्चन्द्रमसं प्रयत्नादभ्यर्च्य दद्यात् कनकं द्विजाय" चन्द्रमसमित्युपलक्षणं चन्द्रग्रहे चन्द्रं सूर्य्यग्रहे सूर्य्यमभ्यर्च्य तथैः" ज्यो०रघुनन्दनः।

ग्रहणं च स्वराशेः स्थानभेदेन शुभादिसूचकं यथाह ज्योतिषे। "त्रिषडृशायोपगतं नराणां शुभप्रदं स्याद्ग्रहणं रवीन्द्वोः। द्विसप्तनन्देषु च मध्यमं स्याच्छेषेष्वनिष्टं कथितं मुनीन्द्रैरिति"। कृत्य चन्द्रोदये विष्णुधर्म्मे "यन्नक्षत्रगतो राहुर्ग्रसते शशिभास्करौ तज्जातानां भवेत्पीड़ा ये नराः शान्तिवर्ज्जिताः" तत्रैव पुरा० "सूर्य्यस्य संक्रमो वापि ग्रहणं चन्द्रसूर्य्ययोः। यस्य त्रिजन्मनक्षत्रे तस्य रोगोऽथवा क्षतिः। तस्य दानं च होमं च देवार्चनजपौ तथा। उपरागाभिषेकं च कुर्य्याच्छान्तिर्भविष्यति। स्वर्णेन वाथ पिष्टेन कृत्वा सर्पस्य चाकृतिम्। ब्राह्मणाय दद्यात्तस्य न रोगादिश्च तत्कृतः"। त्रिजन्मनक्षत्रम् जन्मदशमैकोनविंशति तारा इति। सर्पस्य तदाकारस्य राहोरित्यर्थः। अद्भुतसागरे भार्गवः। "यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते। राज्यभङ्गं सुहृन्नाशं मरणं वात्र निर्द्दिशेत्"तच्छान्तिश्च निर्णयसिन्धौ दर्शिता तत एवावगम्या

चन्द्रार्कयोर्ग्रहणे यस्य पुंसो दर्शनं न पर्य्युदस्तं तस्यैव श्राद्धाद्यधिकार इति ति० त० रघुनन्दनेन समर्थितं यथा "ननु ज्योतिःशास्त्राद्युक्त निषेधो हिंसावद्दृष्टफलकपरोऽस्तु न तु वैधपरः मैवम्"राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु। स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च" इति देवलवचने दर्शनपदश्रवणाद्दर्शने सति स्नानादेर्महाभ्युदयहेतुत्वाद्दर्शनमपि विधेयम्। तथा च संवत्सरप्रदीपे मार्कण्डेयः। "एकरात्रमुपोष्यैव राहुं दृष्ट्वाऽव्ययं नरः। पुण्यमाप्नोति कृत्वा च दानं श्राद्धं विधानतः"। ततश्च तस्यैव प्रकृतत्वेनोपस्थितस्य वैधदर्शनस्य पर्य्युदासो न तु रागप्राप्तदर्शनस्य निषेधोऽप्रकृतत्वेनानुपस्थितेः। एवञ्च पदार्थान्तरसाकाङ्क्षविशेषविधिमपहाय तदितरत्र सामान्यमन्वेतीति सर्वत्र पदाहवनीयादौ सामान्यस्य विशेषेतरपरत्वे वीजम्। यथा "अहरहर्दद्यात्" इति "दीक्षितो न ददातीति"प्रतिषेधात् दीक्षितेतरपरं न रागप्राप्तनिषेधकम्। तदुक्तं "विधैव ज्ञायते कर्त्ता विशेषेण प्रतिक्रियम्। योग्यत्वं प्रतिषिद्धत्वं विशेषणपदान्वयैः" "यजमानः पठतीति श्रुत्वा तद्योग्यो विद्वान्, दीक्षितो न ददातीति प्रतिषेधाद्दीक्षितेतरः, "स्वर्गकामोऽग्निष्टोमेन यजेत" इत्यत्र विशेषणात् स्वर्गकामः कर्त्तेति तेन सप्तमचन्द्रादीतरो राहुं दृष्ट्वा स्नायादिति लभ्यते। एवं वैधदर्शनपर्य्युदासेऽपि निन्दाप्रायश्चित्तयोः श्रवणाद्रागप्राप्तदर्शनस्य प्रसज्यप्रतिषेधः ऋत्वभिगमननियमे पर्वणः पर्य्युदस्तत्वेऽपि तत्र रागप्राप्तगमनस्य प्रसज्यप्रतिषेधवदिति" तदेतन्निर्णयसिन्धुकृता निराकृतं यथा "केचिद्गौड़तुल्या राहुग्रहणस्य निमित्तत्वेन तन्निश्चयस्य प्रयोजकत्वात् ज्योतिःशास्त्रादिना जातस्य ज्ञानस्य निमित्तत्वे प्राप्तेऽपि "स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने। चन्द्रसूर्य्योपरागे तु यावद्दर्शनगोचर" इति जाबाल्यादिवचनेषु दृशिप्रयोगाच्चाक्षुषज्ञानस्यैवोपसंहारन्यायेन निमित्तत्वम्। अन्यथा दृशौ लक्षणा स्यात्। तेन मेघाच्छादनेऽन्धादीनां, जन्मसप्तमेत्यादिनिषिद्धदर्शनानां च स्नानश्राद्धादौ नाधिकार" इति। कल्पतरुरप्याह। "दर्शनशब्देन चाक्षुषज्ञानं गृह्यते। न ज्ञानमात्रम् अज्ञातस्य निमित्तत्वासम्भवान्निमित्तमहिम्नैव ज्ञानलाभेन दर्शनपदवैयर्थ्यापत्तेः। तेन चाक्षुषधीयोग्यः कालः पुण्यः। योग्यत्वं च प्रयत्नानपनेयचाक्षुषज्ञानप्रतिबन्धकराहित्यं तेन मेघच्छन्ने योग्यताभावान्न स्नानादीति" निर्णयामृतेऽप्येवम्। तदेतत्तुच्छम्। यदि चाक्षुषज्ञानं निमित्तं स्यात्तदा "सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचिदिति" वाक्यं व्यर्थं स्यात्। चाक्षुषज्ञानाभावेन प्राप्त्यभावात् तत्पूर्वकत्वाच्च निषेधस्य। न चेदं ग्रस्तास्तपरम् रविचन्द्रयोरस्तानन्तरं रात्रिदिवापदत्वादिति वाच्यम् तत्रपदस्य ग्रहपरत्वेऽधिकरणत्वायोगान्निमित्तपरत्वे च तद्ग्रहनिमित्तकस्नानादेरस्तात्प्रागप्यभावापत्तेः। अथ तत्रेति रात्रिदिने उच्येते वैश्वदेवीतिवद्गुणभूते अपि तत्र तादृशमन्त्रलिङ्गाभावात्। तयोर्निमित्तत्वेऽधिकरणत्वे वाऽन्यप्रयुक्तस्नानाद्यभावापत्तेश्च। किञ्च "नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन। नोपरक्तं न वारिस्थं न मध्यं नभसो गतमिति" मनुवचनं बाध्येत "दृष्टोऽरिष्टप्रदो राहुरित्यादि"च। न चात्र विहिते दर्शने निषेधाप्रवृत्तिवत्पर्य्युदसनीयतापि न युक्तेति वाच्यम् दर्शनस्यानुवादेन विधेयत्वाभावात्। एतच्चाग्रे वक्ष्यामः। तत्त्वे वा विरुद्धत्रिकद्वयापत्तेः अस्तु सकृद्दर्शनविधानेन सङ्कोच इति चेत् न "मुक्तिं दृष्ट्वा ततः स्नायादिति" मुक्तिस्नानेऽपि चाक्षुषज्ञानस्य निमित्तत्वापत्तेः अस्तु किं नश्छिन्नमिति चेत् न ग्रस्तास्ते "तयोः परेद्युरुदये दृष्ट्वाभ्यवहरेच्छुचिरिति" दर्शनोत्तरं भोजनविधानादभ्रस्य पूर्ववेधकाल इव यावद्दर्शनं भोजननिषेधापत्तिः मध्येऽभ्रीभूतस्य सुतरां यावच्चक्षुःप्राप्त्युपवासप्रसङ्गश्च।

यथाश्रुतोपपतया तत्र स्नानमात्रं विवक्ष्येत तत् तत्पूर्वमपि निर्लज्जेन स्वीक्रियताम्। एतेन यत्तु कैश्चिदुक्तं स्पर्शस्नाने मुक्तिस्नाने च यस्य दर्शनं विहितं तेनैव कार्यं नान्येन क्त्वा-प्रत्ययेन समानकर्त्तृत्वावगतेरिति तन्निरस्तम्। का तर्हि तस्य गतिः इयेदुद्देश्यविशेषणत्वाद्ग्रहैकत्ववदविवक्षयार्थतः सिद्ध-स्नानमात्रानुवादत्वे सर्वं सुस्थम्। अङ्गल्याद्यनादेश्यग्रहव्या-वृत्त्यै वा दर्शनस्यार्थवत्त्वम्। न चोक्तयोग्यतापि सा-क्षी दर्शनोत्तरं मेघच्छन्ने योग्यताभावापत्त्या दानाद्य-भावापत्तेः। तेन तत्तद्देशावच्छेदेन ज्योतिःशास्त्रावेद्यत्वमेव योग्यता। किञ्च "रजसोदर्शने नारी त्रिरात्रमशुचिर्भवेत्" इत्यत्राप्यस्त्रीणामाशौचाभावप्रसङ्गः। यत्तु वर्द्धमानेनो-क्तम् "स्नानोत्तरं ह्यधिकारो न स्नानकाले, स्नानकाले स्नानाभावात्। एवं दर्शनोत्तरं मुक्तिपर्य्यन्तमस्त्येव योग्यतेति" तदपि प्रतिज्ञामात्रम्। किञ्च ग्रस्तास्ते "तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेच्छुचिरित्यादि" वाक्य वैयर्थ्यापत्तिः। चाक्षुषज्ञानान्यथानुपपत्त्यैवार्थाद्दर्श स्नानसिद्धेः ननु मुक्तिस्नाने शास्त्रीयमेव ज्ञानं निमित्तं न चाक्षुषम् "चन्द्रसूर्य्यग्रहे नाद्यात् तस्मिन्नहनि पूर्वतः। राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनमिति" वृद्धगौतमेन विज्ञायेति ज्ञानमात्रोक्तेः। यत्तु "मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततःपरमिति" तदपि ज्ञानमात्रपरम्। "मेघमालादिदोषेण यदि मुक्तिर्न दृ-श्यते। आकलय्य तु तं कालं स्नात्वा भुञ्जीत वाग्यतः"। इति गौड़निबन्धे दर्शनात्" मैवम् अज्ञानस्य निमित्त-त्वाभावेन निमित्तमहिम्नैव ज्ञानलाभे वाक्यवैयर्थ्यात्। ग्रस्तास्तेऽपि तदापत्तेश्च। किञ्च, दर्शनं पुंसोविशेषण-मुपलक्षणं वा, नाद्यः दर्शनावच्छिन्ने काले स्नानतुलादे-र्बाधात्। दर्शनविच्छेदे कृतमपि स्नानादि न ग्रहण निमित्तं स्यात्। नान्त्यः, "यावद्दर्शनगोचर"इति यावत् पदवैयर्थ्यप्रसङ्गात् दृष्टग्रहणोत्तरमपि स्नानाद्यापत्तेश्च। ज्ञानपक्षेऽप्येष दोषस्तुल्य इति चेत्। मूर्खोऽसि। यदि ज्ञानवाचकं पदं श्रूयेत ततस्तस्यान्वयो विचार्य्येत। दर्शिस्तु श्रूयत इति वैषम्यात् कथं तर्हि ज्ञानं लभ्यते। संक्रान्तौ स्नायादिति वदर्थादित्यवेहि। अश्रुतत्वादेव-मोद्देश्यविशेषणविवक्षाकृतो वाक्यभेदोऽपि। अस्तु तर्हि दृष्टग्रहणं निमित्तमिति चेत्। ग्रस्तास्तेऽस्तोत्तरं स्ना-नापत्तेः। विशिष्टोद्देशे वाक्यभेदाच्च तत्राप्येतत्तुल्य-र्मिति चेत् "यावद्दर्शनगोचर" इति वचनेन तन्निषेधात्। तत्र त्वन्यग्रह इव ग्रस्तास्तेऽपि स्यात्। किञ्च, दर्शनस्य विधिरनुवादो वा। आद्ये ग्रहणोद्देशेन दर्शनविधिरुत-दर्शनविशिष्टस्नानविधिः। नाद्यः, ग्रहोद्देशेन स्नान-विधाने दर्शनविधाने च वाक्यभेदात्। एतेन द्विती-योऽपि परास्तः दर्शनस्य निमित्तत्वेनाविधेय-त्वात् स्नानस्याप्राप्तेः। अन्यथा सोमवमनादौ प्रसञ्जनविधिः केन वार्य्येत। अथ नानावाक्येषु कचि-द्दर्शनविशिष्टस्नानविधिः। कचिच्च प्राप्तदर्शननिमित्ती-कृत्य स्नानमात्रविधिः। तन्न, स्नानस्य प्रधानस्य प्राप्तौ तदङ्गदर्शनप्राप्तिः, तस्यां च निमित्ते सति स्नानमित्यन्यो-न्याश्रयात्। एवं दर्शनविधौ सति तन्निमित्तकस्नान-विधिः सति च प्रधानस्नानविधौ तदङ्गदर्शनविधिः। एवमधिकारे प्रयोजकत्वे च योज्यम्। क्त्वार्थपूर्वकाल-त्वविधौ चास्ते च वाक्यभेदः। अन्यथा स्नानोत्तरमपि दर्शनमङ्गं स्यात्। न द्वितीयः। तत्रापि दर्शनग्रहणयो र्निमित्तत्वे स्नानद्वयापत्तेः दर्शनावृत्तौ नैमित्तिकावृत्ति-प्रसङ्गात्। दर्शनविशिष्टग्रहस्य विशिष्टस्यानुवादे वाक्य-भेदापत्तेः। न च इविरार्त्तिवद्विशिष्टं निमित्तमिति वाच्यं आर्त्तिमात्रस्य हि निमित्तत्वे निमेषाद्या-र्त्तेरपि तत्त्वापत्तेर्नैमित्तिकत्वभङ्गाद्युक्तं विशिष्टोद्देश्य-त्वम्। इह तु ग्रहणमात्रस्य निमित्तत्वे न काचित् क्षतिः। तस्माद्दर्शनवाक्यानां ग्रस्तास्तविषयत्वात् अना-देश्यग्रहपरत्वाद्वा ज्ञानस्य चार्थतः प्राप्तेस्तदेव निमि-त्तम्। तेन मेघाच्छादनेऽप्यादेश स्नानादि भवत्येवे-त्यलं वेदबाह्यैः संलापेन"।

"प्रागुक्तमनुवचनेनोपरक्त दिवाकरदर्शननिषेधः साक्षाद्-दर्शनपरः। अतएव ब्रह्मसिद्धान्ते "सर्वैः पटस्थितं वीक्ष्यं स्वच्छतैलाम्बुदर्पणैः। ग्रहणं गुर्विणी जातु न पश्येत्तु पटं विना"पटादिस्थतयैव ग्रहणदर्शनमुक्तम्।

अत्र पूर्वापरवेधः हेमाद्रौ दर्शितो यथा "त्रयोदश्या-दितो वर्ज्यं दिनानां नवकं ध्रुवम्। माङ्गल्येषु समस्तेषु ग्र-हणे चन्द्रसूर्ययोः"। प्रकारान्तरं तत्रैवोक्तम्। "द्वादश्यादि तृतीयान्तो वेध इन्दुग्रहे स्मृतः। एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः"इदं च पूर्णग्रासे, "त्र्यहं खण्डग्रहे तयोरिति"तत्रैवोक्तेः इदञ्च "ग्रस्तास्ते त्रिदिनं पूर्वमिति नारदेन ग्रस्तास्ते विशेषोक्तेर्ग्रस्तास्तभिन्नग्रहणपरम्। ज्योतिर्निबन्धे च्यवनः ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम्। यावच्च रविणा भुक्तं भुक्तं भं दग्धकाष्ठवत्"

चन्द्रार्कग्रहणस्य भूच्छायाचन्द्राभ्यामावरणरूपस्याऽपि अमावास्यासंक्रान्तिकालवत् तत्र स्नानदानादौ बहुपुण्यसाधनत्वं स्मृत्यादिषु प्रसिद्धम् तत्रादौ कालमाधवीये यथा निर्णीतं तत् प्रदर्श्यते वृद्धगार्ग्यः “पूर्णिमाप्रतिपत्सन्धौ राहुः सम्पूर्णमण्डलम्। ग्रसते चन्द्रमर्कञ्च दर्शप्रतिपदन्तरे” इति तत्र पर्वणोऽन्तिमोभागः स्पर्शकालः प्रतिपद आद्योभागोमोक्षकालः तदुक्तं ब्रह्मसिद्धान्ते “यावत्कालः पर्वणोऽन्ते तावान्प्रतिपदादिमः। रवीन्दुग्रहणानेहाः स पुण्योमिश्रणाद्भवेदिति” ग्रहणानेहाः राहुगृहणकालः तत्र कर्त्तव्यमाह वृद्धवसिष्ठः “गङ्गातोये च संप्राप्ते इन्दोःकोटी रवेर्दश। गवाङ्कोटिप्रदानेन सम्यग्दत्तेन यत् फलम्। गङ्गास्नाने तत् फलं स्याद्राहुग्रस्ते निशाकरे। दिवाकरे पुनस्तत्र दशसंख्यमुदाहृतमिति” अस्य श्लोकद्वयस्य प्रथमार्द्धमपेक्षितपदाध्याहारेण योजनीयं इन्द्रोर्ग्रहणे संप्राप्ते सति गङ्गातोये अवगाहनं गोकोटिदानसमं भवति रवेर्ग्रहणे ततो दशगुणं फलम् अयमेवार्थ उपरितनेनार्द्धत्रयेण स्पष्टीकृतः। व्यासोऽपि “इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः। गङ्गातोये तु संप्राप्ते इन्दोः कोटीरवेर्दश। गवाङ्कोटिसहस्रस्य यत् फलं लभते नरः। तत् फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे। दिवाकरे तु स्नानस्य दशसंख्यमुदाहृतम् चन्द्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीम्। स स्नातः सर्वतीर्थेषु किमर्थमटते महीमिति” गङ्गाव्यतिरिक्तमहानदीतोये लक्षगुणदशलक्षगुणत्वं गङ्गातोये तु कोटिगुणदशकोटिगुणत्वम्। ब्रह्मपुराणेऽपि “तिस्रोनद्यो महापुण्या वेणा गोदा च जाह्नवी। गां हरीशाङ्घ्रिकात् प्राप्ता गङ्गा इति हि कीर्त्तिताः” हरेः पादादीश्वरस्य शिरसश्च गाम्भूमिं प्राप्ता गङ्गा। यद्यपि जाह्नव्येव तादृशी न तु वेणागोदे तथापि छत्रिणो गच्छन्तीति न्यायेन जाह्नव्या सह निर्दिष्टयोस्तयोरपि गङ्गात्वमविरुद्धं यद्वा जाह्नवीजलमेव केनचिन्निमित्तेन ब्रह्मगिरिवायुगिर्योरुद्भूतमिति कृत्वा तयोरपि मुख्यमेव गङ्गात्वन्तासु गङ्गासु स्नानं मुख्यं तदसम्भवे नद्यन्तरेषु स्नायात् तदुक्तं महाभारते ‘‘गङ्गास्नानं तु कुर्वीत ग्रहणे चन्द्रसूर्ययोः महानदीषु चान्यासु स्नानं कुर्याद्यथाविधीति” महानद्यो ब्रह्मपुराणे दर्शिताः ‘‘गोदावरी भीमरथी तुङ्गभद्रा च वेणिका। तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्त्तिताः। भागीरथी नर्मदा च यमुना च सरस्वती। विशोका च वितस्ता च विन्ध्यस्योत्तरतस्तथेति” महानद्यसम्भवे जलान्तराण्याह शङ्खः ‘‘वापीकूपतडागेषु गिरिप्रस्रवणेऽपि च। नद्याम्नदे देवखाते सरसीषूद्धृताम्बुनि। उष्णोदकेन वा स्नायात् ग्रहणे चन्द्रसूर्ययोरिति” एतत् सर्वमभिप्रेत्याह व्यासः ‘‘सर्वं गङ्गासमन्तोयं सर्वौ ब्रह्मसमो द्विजः। सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्ययोरिति” उष्णोदकस्यातुरविषयत्वमाह व्याघ्रः “आदित्यकिरणैः पूतं पुनः पूतं च वह्निना। अतोव्याध्यातुरः स्नायाद्ग्रहणेऽप्युष्णवारिणेति’’ गङ्गातोयमारभ्योष्णोदकान्तेषूत्तरोत्तरस्यानुकल्पत्वमुक्तम्। एतदेवाभिप्रेत्योष्णादकादिषु समुद्रजलान्तेषूत्तरोत्तरस्य प्राशस्त्यमाह मार्कण्डेयः ‘‘शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात्। भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम्। ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम्। तीर्थतोयं ततः पुण्यं महानद्यम्बु पावनम्। ततस्ततोऽपि गङ्गाम्बु पुण्यं पुण्यस्ततोऽम्बुधिरिति” मासविशेषेण ग्रहणे नदीविशेषो देवीपुराणेऽभिहितः ‘‘कार्त्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसङ्गमे। मार्गे तु ग्रहणं प्रोक्तं देविकायां महामुने। पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा। फाल्गुने वरणा पुण्या चैत्रे पुण्या सरस्वती। वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा। ज्यैष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी। श्रावणे सिन्धुनामा तु तथा भाद्रे तु चन्द्रिका। आश्विने सरयूः श्रेष्ठा तथा पुण्या तु नर्मदेति’’ ग्रहणविशेषे नदीविशेषस्तत्रैवाभिहितः। “गोदावरी महापुण्या चन्द्रे राहुसमन्विते। सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने!। नर्मदातोयसंस्पर्शैः कृतकृत्या भवन्ति हीति” स्नानवत् स्मरणादिष्वपि पुण्यमाह ‘‘स्मृत्वा शतक्रतुफलं दृष्ट्वा सर्वाघनाशनम्। स्पृष्ट्वा गोमेधपुण्यं तु पीत्वा सौत्रामणेर्लभेत्। स्नात्वा वाजिमखे पुण्यं प्राप्नुयादविचारतः रविचन्द्रोपरागे च अयने चोत्तरे तथेति”। क्षेत्रविशेषमाह। “गङ्गा कनखलं पुण्यं प्रयागः पुष्करं तथा। कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे” इति ग्रहणे श्राद्धं विहितं लिङ्गपुराणे ‘‘व्यतीपातक्षणो यावांश्चन्द्रसूर्यग्रहक्षणः। गजच्छाया तु सा प्रोक्ता पितॄणां दत्तमक्षयम्” इति महाभारतेऽपि ‘सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने। अकुर्वाणस्तु नास्तिक्यात्पङ्के गौरिव सीदतीति”। ऋष्यशृङ्गोऽपि “चन्द्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत्। तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे” इति। विष्णुरपि ‘‘राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्। गुणवत् सर्वकामीयं पितॄणा-

सुपतिष्ठते" इति ग्रहणे रात्रावपि स्नानादेर्न निषेधः। तथा च शातातपः "स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने। आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्ज्जयेदिति" देवलः "यथा स्नानं च दानं च सूर्य्यस्य ग्रहणे दिवा। सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते" श्राद्धं प्रकृत्य कूर्म्मपुराणे "नैमित्तिकं तु कर्त्तव्यं ग्रहणे चन्द्रसूर्य्ययोः। बान्धवानां तु मरणे नारकी स्यादतोऽन्यथा। काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु" वारविशेषे योगफलातिशयमाह व्यासः "रविग्रहः सूर्य्यवारे सोमे सोमग्रहस्तथा। चूडामणिरिति ख्यातस्तत्र दत्तमनन्तकम्। वारेष्वन्येषु यत् पुण्यं ग्रहणे चन्द्रसूर्य्ययोः। तत्पुण्यं कोटिगुणितं ग्रासे चूड़ामणौ स्मृतमिति" अतिथिप्राप्त्यादिवद्ग्रहणस्यापि श्राद्धकालत्वमाह मार्कण्डेयः "विशिष्टे ब्राह्मणे प्राप्ते सूर्य्येन्दुग्रहणे दिने। जन्मर्क्षग्रहपीडासु श्राद्धं कुर्य्यात् तथेच्छयेति"। अत्र च श्राद्धं नान्नेन किन्तु हेमादिना तदाह बौधायनः "अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि। हेमश्राद्धं संग्रहे च कुर्य्याच्छूद्रः सदैव हि" शातातपोऽपि "आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा। आमश्राद्धं प्रकुर्व्वीत हेमश्राद्धमथापि वेति" अशौचिनोऽपि ग्रहणे स्नानादि न निषिद्धं तथा च वृद्धवसिष्ठः "सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते" इति इयञ्च शुद्धिः सर्व्वस्मार्त्तकर्मविषया अविशेषोक्तेः एतदेवाभिप्रेत्य व्याघ्रपादाह "स्मार्त्तकर्म्मपरित्यागो राहोरन्यत्र सूतके। श्रौते कर्म्मणि तत्कालस्नातः शुद्धिमवाप्नुयादिति" यत्तु ग्रहणनिमित्तमाशौचं तत्स्नानेन निवर्त्त्यन्तदुक्तं ब्रह्मपुराणे "आशौचं जायते नृणां ग्रहणे चन्द्रसूर्य्ययोः। राहुस्पर्शे तयोः स्नात्वा दानादौ कल्पते नरः" इति षट्त्रिंशन्मतेऽपि "सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने। स्नात्वा कर्म्माणि कुर्वीत शृतमन्नं विवर्ज्जयेदिति" ग्रहणस्य आद्यन्तयोः स्नानं विहितं स्मृत्यन्तरे "गृह्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते। मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते" होमदानवद्देवार्चनमपि स्नानद्वयमध्ये कार्य्यं तदुक्तं ब्रह्मवैवर्त्ते "स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनमिति" तत्काले स्वापादिकं न कुर्य्यात् तदुक्तं शिवरहस्ये "सूर्य्येन्दुग्रहणं यावत् तावत् कुर्य्याज्जपादिकम्। न स्वपेन्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोरिति" मोचानन्तरभावि यत् स्नानं तस्य शुद्ध्यर्थतया तत् सचेलं विधेयं तदाह वृद्धवसिष्ठः "सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने। सचेलं तु भवेत् स्नानं सूतकान्नञ्च वर्ज्जयेदिति" ग्रहणकाले ततः पूर्वं वा यावत् पक्वं तत्सूतकान्नं तत् पश्चादपि न भुञ्जीत"। अत्र विशेषोऽभक्ष्यशब्दे २८०पृ० उक्तस्तत्रावसेयः "आदिमध्यावसानेषु यद्यद्विहितं तस्य फलातिशय उक्तो ब्रह्मपुराणे "उपमर्द्दे लक्षगुणं ग्रहणे चन्द्रसूर्य्ययोः। पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकमिति" अत्र ग्रहणे यद्दानं तत् सत्पात्रे कर्त्तव्यं तदुक्तं महाभारते। "अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः। पात्रभूताय विप्राय भूमिं दद्यात् सदक्षिणामिति" पात्रलक्षणमाह याज्ञवल्क्यः। "न विद्यया केवलया तपसा वापि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितमिति" पात्रे मुख्यानुकल्पावाह बौधायनः "श्रोत्रियोऽश्रोत्रियो वापि पात्रं वाऽपात्रमेव वा। विप्रब्रुवोऽपि वा विप्रो ग्रहणे दानमर्हतीति"। अह्नि सूर्य्यग्रहणं निशि चन्द्रग्रहणमिति हि प्रसिद्धिः सर्वजनीना, तादृशे ग्रहणे यद्वक्तव्यं तदुक्तं यत्तु कालविपर्य्यासेन स्नाप्यमानं ज्योतिःशास्त्रमात्रप्रसिद्धं ग्रहणं तत्र स्नानादिकं न कर्त्तव्यं तदुक्तं निगमे "सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा। तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचिदिति" ग्रस्तास्तमये जाबालिराह "संक्रान्तौ पुण्यकालस्तु षोड़शोभयतः कलाः। चन्द्रसूर्य्योपरागे तु तु यावद्दर्शनगोचर" इति ग्रस्तस्यास्तमनपर्य्यन्तं दर्शनगोचरत्वात् तावत् पुण्यकालो भवति ग्रहणे भोजनव्यवस्थामाह मनुः। चन्द्रसूर्य्यग्रहे नाद्यादद्यात् स्नात्वा विमुक्तयोः। अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनीति" ग्रहे ग्रहणकाले स्पर्शमारभ्य मोक्षपर्यन्तो ग्रहणकालः तस्मिन् काले न भुञ्जीत किन्तु राहुणा चन्द्रसूर्य्ययोर्मुक्तयोः सतोः पश्चात् स्नात्वा भुञ्जीत यदा तु ग्रस्तास्तमयस्तदा परेद्युस्तौ विमुक्तौ दृष्ट्वा स्नात्वा भुञ्जीत। न केवलं ग्रहणकाल एव भोजनाभावः किन्तु ग्रहणात्प्रागपि तदाह व्यासः "नाद्यात् सूर्य्यग्रहात् पूर्वं मह्नि सायं शशिग्रहात्। ग्रहकाले च नाश्नीयात् स्नात्वाश्नीयाद्विमुक्तयोः। मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा। अमुक्तयोरस्तगयोरद्यात् दृष्ट्वा परेऽहनीति"। पूर्वकाले भोजननिषेधे विशेषः अभक्ष्यशब्दे २८०पृ०उक्तस्तत्रावसेयः। "समर्थस्य भोजने प्रायश्चित्तमुक्तं कात्यायनेन "चन्द्रसूर्य्य-

हे भुक्त्वा प्राजापत्येन शुध्यति"। ग्रस्तास्तसमये विशेषमाह भृगुः "ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि। परेद्युरुदये दृष्ट्वा स्नात्वाभ्यवहरेन्नरः" इति वृद्धगार्ग्योऽपि "सन्ध्याकाले यदा राहुर्ग्रसते शशिभास्करौ। तदहर्नैव भुञ्जीत रात्रावपि कदाचनेति"। विष्णुधर्मोत्तरेऽपि "अहोरात्रं न भोक्तव्यं चन्द्रसूर्य्यग्रहो यदा। मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति" ननु मेघाद्यन्तर्धाने चाक्षुषदर्शनं न सम्भवतीति न दर्शनशब्देन शास्त्रीयज्ञानस्य विवक्षितत्वात् तदाह वृद्ध गौतमः "चन्द्रसूर्य्यग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः। तयोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनमिति" एवं तर्हि परेद्युरुदयात् प्रागपि शास्त्रीयविज्ञानसम्भवात्तदैव भोजनं प्रसज्येतेति चेन्न "परेद्युरुदये दृष्ट्वा स्नात्वाभ्यवहरेन्नरः" "अहोरात्रं न भोक्तव्यमिति" वचनद्वयेन तदप्रसक्तेः यत्तु "स्कान्द-पुराणे "यदा चन्द्रग्रहस्तात निशीथात्परतो भवेत्। भोक्तव्यं तत्र पूर्वाह्णे नापराह्णे कथञ्चन। पूर्वं निशीथाद्ग्रहणं यदा चन्द्रस्य वै भवेत्। तदा निशि न कर्त्तव्यं भोजनं शिखिवाहनेति" तदिदं यामत्रयाभिप्रायं "चन्द्रग्रहे तु यामांस्त्रीनिति" विशेषस्य वृद्धगौतमेनाभिधानात्। पापक्षयकामो ग्रहणदिने उपवसेत् तदाह दक्षः "अयने विषुवे चैव ग्रहणे चन्द्र-सूर्य्ययोः। अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यत" इति पुत्री तु नोपवसेत् तदाह नारदः "संक्रान्त्यामुपवासञ्च कृष्णैकादशिकादिने। चन्द्रसूर्य्यग्रहे चैव न कुर्य्यात् पुत्रवान् गृहीति" ग्रस्तास्तमये तु पुत्रिणोऽप्युपवास एव "अहोरात्रं न भोक्तव्यमिति, भोजनप्रतिषेधात्"। कालमा०।

ग्रहणश्राद्धे विशेषः नि॰ सि॰ "सैंहिकेयो यदा सूर्यं ग्रसते पर्वसन्धिषु। गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत्। घृतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत्" इति वायुपु॰ विज्ञानेश्वरोऽप्याह "ग्रहणश्राद्धे भोक्तुर्दोषो दातुस्त्वभ्युदय इति। "सूतके मृतके भुङ्क्ते गृहीते शशि-भास्करे। छायायां हस्तिनश्चैव न भूयः पुरुषो भवेत् इत्यापस्तम्बेन भोजननिषेधात् अयं च निषेधः श्राद्ध-भोक्तुः। अत्र ग्रहणनिमित्तकश्राद्धे नैवामासंक्रान्त्यादिनिमित्तकानां सिद्धिः"। प्रागुक्तवचनैरशौचाभ्यन्तरेऽपि स्नानादिकर्म्मविधानात् "स्नानमात्रं प्रकुर्वीत दानश्राद्धविवर्जितमिति" निर्मूलं वदन्तो गौडाः परास्ताः नि॰ सि॰। अशौचिनां ग्रहणकाले शुद्धिरविशेषान्मन्त्रदीक्षापुरश्चरणादिसर्वस्मार्त्तकर्मविषया मदनरत्नेऽप्येवम्। रजस्वलायास्तु भार्गवार्चनदीपिकायाम् भेदः। "न सूतकादि दोषोऽस्ति ग्रहे होमजपादिषु। ग्रस्ते स्नायादुदक्यापि तीर्थादुद्धृतवारिणेति" अत्र "स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला। पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत्"। इत्यादि मिताक्षरोक्तो विशेषो ज्ञेयः" नि॰ सि॰।

ग्रहणदिने वार्षिकं श्राद्धं हेमादिना कार्य्यम् यथाह प्रयोगपारिजाते गोभिलः। "दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम्। अन्नेनासम्भवे हेम्ना कुर्य्यादामेन वा सुतः" इति। अत्र दर्शरविपितृसुतशब्दाः प्रदर्शनार्थाः न्यायसाम्यात्। तेन चन्द्रग्रहेऽपि सपिण्डादि वार्षिकमन्नादिना तद्दिन एव कार्य्यमिति" मदनपारिजाते व्याख्यातम्। पृथ्वीचन्द्रोदयेऽप्येवं तेन यानि "आमश्राद्धं तु कुर्वीत माससंवत्सरादृत" इति। "अन्ने नैवाब्दिकं कुर्य्याद्धेम्ना वाऽऽमेन न क्वचिदिति" मरीचिलौगाक्ष्यादिवचनानि तानि ग्रहणदिनातिरिक्तविषयाणि निर्णयामृतेऽप्येवम्। यानि तु "ग्रहणात्तु द्वितीयेऽह्नि रजोदोषात्तु पञ्चमे"। तथा "ग्रस्तावेवास्तमानन्तु रवीन्दू प्राप्नुतो यदि। प्रत्यब्दं तु तदा कार्य्यं परेऽहन्येव सर्वदा"। "चन्द्रसूर्य्योपरागे च तथा श्राद्धं परेऽहनि" इत्यादीनि वचनानि तानि महानिबन्धेषु क्वाप्यनुपलम्भान्निर्मूलानि। प्रत्युत पूर्वोक्तवचनेऽप्येतत्तद्दिन एव श्राद्धमुक्तमित्यलम्" नि॰ सि॰।

"ग्रहणादिसप्तदिनपर्य्यन्तमागमे दीक्षोक्ता शिवार्चनचन्द्रिकायां ज्ञानार्णवे। "मन्त्राद्यारम्भणं कुर्य्यादुपग्रहणे चन्द्रसूर्य्ययोः। ग्रहणाद्वापि देवेशि कालः सप्तदिनावधीति"। रत्नसागरे "सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणि। मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन शोधयेत्"। अत्र सूर्य्यग्रहणमेव मुख्यम्। "सूर्य्यग्रहणकाले तु नान्यदन्वेषितम्भवेत्। सूर्य्यग्रहणकालेन समो नान्यः कदाचन। न मासतिथिवारादिशोधनं सूर्य्यपर्वणीति" तत्रैव कालोत्तरवचनात्। "चन्द्रग्रहे तु या दीक्षा या दीक्षा व्रतचारिणाम्। वनस्थस्य च या दीक्षा दारिद्र्यं सप्तजन्मसु" इति तत्रैव योगिनीतन्त्रे निषेधाच्च" नि॰ सि॰

"पुरश्चरणचन्द्रिकायाम्। "चन्द्रसूर्य्योपरागे च स्नात्वा प्रयतमानसः। स्पर्शादिमोक्षपर्य्यन्तं जपेन्मन्त्रं समाहितः। जपाद्दशांशतो होमस्तथा होमात्तु तर्पणम्। तर्पणस्य दशांशेन मार्ज्जनं कथितं किल। मार्ज्जनस्य दशांशेन ब्राह्मणानपि भोजयेत्। जपार्च्चापूर्वको होमस्तर्पणञ्चाभिषेचनम्। भूदेवपूजनं पञ्चप्रकारोक्ता पुरस्क्रिया। होमाशक्तौ जपं कुर्य्याद्धोमसंख्याचतुर्गुणम्"। ४ विशेषणतया सम्बन्धमात्रे च।

४निन्दायाम् हेम० ५ग्रहकल्लोले ६व्यसने ७दृष्टनीतौ च मेदि० उपरज्यते मिथ्यासम्बन्धेन सम्बध्यतेऽनेन करणे घञ्। आध्यासिकसम्बन्धेन सम्बद्धे ८विशेषणभेदे। यथा घटत्वोपरागेण पटभानम्। घटत्वं हि पटस्य आध्यासिकसम्बन्धेन सम्बद्धं विशेषणम्।

**उपराज** अव्य० सामीप्येऽव्ययी० अच् समा०। १राज्ञः सामीप्ये उपगतो राजानं सादृश्येन अया० स० टच् समा०। २राजतुल्ये त्रि० स्त्रियां ङीप्। ततः काश्या० भवार्थे ठञ् (औपराजिकः तद्भवे त्रि० स्त्रियां ङीप्। तदर्थे ञिठोऽपि रूपमेकं स्त्रियां तु टाप् इति भेदः

**उपराधय** त्रि० उप+राध-णिच्-बा० श। उपसेवके। ततः ब्राह्मणा० भावे कर्म्मणि च ष्यञ्। औपराधय्य तद्भावे तत्कर्म्मणि च न०।

**उपराम** पु० उप+रम-घञ् वा वृद्धिः। १उपरतौ २मृत्यौ ३निवृत्तौ ४संन्यासे च। अव्ययी०। ५रामसामीप्ये अव्य०

**उपराव** पु० उप+रु-घञ्। समीपोच्चारितशब्दे

**उपरि** अव्य० ऊर्द्ध+रिल् उपादेशश्च। प्रथमापञ्चमीसप्तम्यन्तार्थवृत्तेः ऊर्द्धशब्दस्यार्थे। ऊर्द्धं पुरम् ऊर्द्धा वा वसतिः ऊर्द्धात् पुरात् ऊर्द्धायावा वसतेरागतः ऊर्द्धपुरे ऊर्द्धायां वा वसतौ वसति इत्याद्यर्थे सर्व्वत्र उपरीत्येव। "तदुपर्य्यपि वादरायणः" शा० सू०। "नीचानाः स्युरुपरि वुध्नएषामस्मे" ऋ० १,२४,७, "अधः स्विदासीदुपरि स्विदासीत्। १०,१२९,५, "तत्पाणिसात्मोपरिपातुकन्तु" नैष०। "त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्याः" मेघ०। "अवाङ्मुखस्योपरि पुष्पवृष्टिः" "परस्परस्योपरि पर्य्यचीयत" रघुः। "छित्त्वा मांसानि शस्त्रेण यदिवोपरिजोभवेत्" सुश्रु०। "उपरिजतरुजानि याचमानाम्" किरा०। "मिथ्या ततस्त्यादुपरिप्रुता भङ्गेन" यजु० ७,२, अस्य सामीप्ये द्वित्वं उपर्य्युपरि समीपोर्द्धे अव्य० "उपर्य्युपर्य्यम्बुमुचां वितानै" माघः। "अभितस्तसोःकार्य्या धिक्युपर्य्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु तथान्यत्रापि दृश्यते" इत्युक्तेः तद्योगे सम्बन्धिनि द्वितीया। "उपर्य्युपरि लोकं हरिः" सि०कौ०। उपर्य्युपरि गच्छन्तः शैलराजमुदङ्मुखाः" भा० आ० ४२४ अ०। बाहुलकात् क्वचिन्न। "उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः"।

**उपरिचर** त्रि० उपरि+चर-ट। १ऊर्द्धचरे विहगादौ। २राजभेदे पु०। स च वसुनामा चेदिदेशपतिः शक्रध्वजपूजाप्रवर्त्तकः। तस्येतिवृत्तं च भा० आ० ६३अ०। "राजोपरिचरोनाम धर्म्मनित्योमहीपतिः" इत्युपक्रम्य तुष्टेन शक्रेण तस्मै आकाशगं विमानं दत्तं तत्र चरणादुपरिचरनामेत्युक्तं यथा "देवोपभोग्यं दिव्यञ्च आकाशे स्फाटिकं महत्। आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते। त्वमेकः सर्वमर्त्येषु विमानवरमास्थितः। चरिष्यस्युपरिस्थो हि देवो विग्रहवानिव। ददामि ते वैजयन्तीं मालामम्लानपङ्कजाम्। धारयिष्यति संग्रामे या त्वां शस्त्रैरविक्षतम्। लक्षणं चैतदेवेह भविता ते नराधिप। इन्द्रमालेति विख्यातं धन्यमप्रतिमं महत्। वैशम्पायन उवाच। यष्टिञ्च वैणवीं तस्मै ददौ वृत्रनिसूदनः। इष्टप्रदानमुद्दिश्य शिष्टानां प्रतिपालनीम्। तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा। प्रवेशं कारयामास गते संवत्सरे तदा। ततः प्रभृति चाद्यापि यष्टेः क्षितिपसत्तमैः। प्रवेशः क्रियते राजन् यथा तेन प्रवर्त्तितः। अपरेद्युस्ततस्तस्याः क्रियतेऽत्युच्छ्रयो नृपैः। अलङ्कृतायाः पिटकैर्गन्धैर्म्माल्यैश्च भूषणैः। माल्यदामपरिक्षिप्ता विधिवत् क्रियतेऽपि च। भगवान् पूज्यते चात्र हंसरूपेण शङ्करः। स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः। स तां पूजां महेन्द्रस्तु दृष्ट्वा देवः कृतां शुभाम्। वसुना राजमुख्येन प्रीतिमानब्रवीत् प्रभुः। ये पूजयिष्यन्ति नरा राजानश्च महं मम। कारयिष्यन्ति च मुदा यथा चेदिपतिर्नृपः। तेषां श्रीर्विजयश्चैव सराष्ट्राणां भविष्यति। तेषां स्फीतो जनपदो मुदितश्च भविष्यति। एवं महात्मना तेन महेन्द्रेण नराधिपः। वसुः प्रीत्या मघवता महाराजोऽभिसत्कृतः। उत्सवं कारयिष्यन्ति सदा शक्रस्य ये नराः। भूमिरत्नादिभिर्दानैस्तथा पूज्या भवन्ति ते। वरदानमहायज्ञैस्तथा शक्रोत्सवेन च। संपूजितो मघवता वसुश्चेदीश्वरो नृपः। पालयामास धर्म्मेण चेदिस्थः पृथिवीमिमाम्। इन्द्रप्रीत्या चेदिपतिश्चकारेन्द्रमहं वसुः। पुत्राश्चास्य महावीर्य्याः पञ्चासन्नमितौजसः। नानाराज्येषु तान् पुत्रान् स सम्राडभ्यषेचयत्। महारथो मागधानां विश्रुतो यो बृहद्रथः। प्रत्यग्रहः कुशाम्बश्च यमाहुर्मणिवाहनम्। मावेल्लश्च यदुश्चैव राजन्यश्चापराजितः। एते तस्य सुता राजन् राजर्षेर्भूरितेजसः। न्यवेशयन्नामभिः स्वैस्ते देशांश्च पुराणि च। वासवाः पञ्च राजानः पृथग्वंशाश्च शाश्वताः। वसन्तमिन्द्रप्रासादे आकाशे स्फाटिके च तम्। उपतस्थु-

महात्मानं गन्धर्वाप्सरसोन्तमम् । राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम् । पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः । अरौत्सीच्चेतनायुक्तः कामात् कोलाहलः किल । गिरिं कोलाहलं तन्तु पदा वसुरताडयत् । निश्चक्राम ततस्तेन प्रहारविवरेण सा । तस्यां नद्यामजनयन्मिथुनं पर्वतः स्वयम् । तस्माद्विमोक्षणात् प्रीता नदी राज्ञे न्यवेदयत् । यः पुमानभवत्तत्र तं स राजर्षिसत्तमः । वसुर्वसुप्रदश्चक्रे सेनापतिमरिन्दमः । चकार पत्नीं कन्यान्तु तथा तां गिरिकां नृपः"। [ऊर्द्ध्वभवे ।

**उपरितन** त्रि० उपरि भवः ष्युल् तुट् च स्त्रियां ङीप् ।

**उपरिमर्त्य** अव्य०वेदे बा० अव्ययी० । मर्त्यस्योपरीत्यर्थे "अग्नेर्देवमुपरिमर्त्यं कृधि" ऋ० ८,१९,१२, "उपरि मर्त्यं मर्त्यानामुपरि" इति भा० । लोके तु वा ईत० । मर्त्यापरीत्येव । अतएव "तदुपर्य्यपि वादरायणः" शा०सू० । "आत्मोपरिमातृकन्तु" नै० इत्यादौ वा षष्ठीसमासप्रयोगः ।

**उपरिमेखल** पु० उपरि ऊर्द्ध्वा मेखला यस्य । गोत्रप्रवर्त्तके ऋषिभेदे ततः गोत्रार्थे इञ् औपरिमेखलि तद्गोत्रे पुंस्त्री बहुषु तु अस्त्रियाम् यस्कादि०तस्य लुक् । उपरिमेखलाः

**उपरिबृहती** स्त्री वैदिके बृहतीच्छन्दोभेदे "चतुर्थं बृहती तृतीयो द्वादशकः । आद्यश्चेत् पुरस्ताद्बृहती द्वितीयश्चेन्न्यङ्कुसारिणी उपरिष्टबृहती स्कन्धग्रीवा वा अन्त्यश्चेदुपरिष्टाद्बृहती" सर्वानुक्रमणिका० ५अ०। एवमुपरिष्टाद्बृहतीत्यपि वैदिके बृहतीच्छन्दोभेदे ।

**उपरिष्टात्** अव्य०ऊर्द्ध्व+नि०रिष्टातिल् उपादेशश्च। उपरिशब्दार्थे "उपरिष्टादाज्यस्याभिघारयति" शत०ब्रा० १, ६,१,२१, "पुरुष उपरिष्टात् पश्चूनतितिष्ठति" १२,२,६,४, "तस्योपरिष्टाद् वृक्षस्य बलाका संन्यलीयत" भा०व० २०५अ०"क्षिप्रस्योपरिष्टादुभयतः कूर्चः" सुश्रु०।

**उपरिसद्** पु०उपरि सीदति सद–क्विप् । राजसूययज्ञे सोमनेत्रके दुवस्वन्नामके १देवभेदे । "सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा" "ये देवा सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहा" यजु०९,३५,३६।२ऊर्द्ध्वस्थे त्रि०

**उपरिसद्य** न० उपरि सद्यं सदनमुपवेशनम् सद–भावे बा० यत् । ऊर्द्ध्वोपवेशने अन्तरिक्षोपवेशने "उपरिसद्यं वा एष जयति योजयन्तरिक्षसद्यम्" शत० ब्रा०२,१, २२, उपरिसद्यम् अन्तरिक्षसद्यमाकाशे उपवेशनम्"भा०।

**उपरीतक** पु०"एकपादमुरौ कृत्वा द्वितीयं स्कन्धसंस्थितम् । नारीं कामयते कामी बन्धः स्यादुपरीतकः" रतिम० उक्ते शृङ्गारबन्धभेदे

**उपरुद्ध** त्रि०उप+रुध+क्त । १निरुद्धे २आवृते च "अलघुविलम्बिपयोधरोपरुद्धाः" माघः "उपरुद्धाः निरुद्धा आवृताश्च" मल्लि०३प्रतिरुद्धे च । "वृत्तं हि राज्ञामुपरुद्धवृत्तम्" रघुः ४मूत्रादिवेगयुक्ते च ।

**उपरूपक** न० उपगतं रूपकं दृश्यकाव्यम् सादृश्येन अत्या०स०। नाटकभेदे तद्भेदाश्च अष्टादश यथाह सा० द० "नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् । प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा । संलापकं श्रीगदितं शिल्पकञ्च विलासिका । दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च" अष्टादश प्राहुरुपरूपकाणि मनीषिणः । विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" तल्लक्षणानि तत्तच्छब्दे वक्ष्यन्ते

**उपरोध** पु०उप+रुध–घञ् । १आवरणे "शरत्प्रमृष्टाम्बुधरोपरोधम्" रघुः । २प्रतिबन्धे च "अन्येषामपि भैक्षोपजीविनां वृत्त्युपरोधं करोषि" भा०आ०३अ० । "तपोधननिवासिनामुपरोधो मा भूत्" शकु० ३अनुरोधे च । भावे ल्युट् उपरोधनमप्युक्तार्थेषु न० ।

**उपरोधक** न० उप+रुध–ण्वुल् । १वासगृहे शब्दरत्ना०। २उपरोधकर्त्तरि ३आवरके ४प्रतिबन्धके ५अनुरोधकर्त्तरि च त्रि०स्त्रियां टाप् अत इत्त्वम् ।

**उपल** पु० उप+ला–आदाने क उपलीयते गिरिरस्मिन् वा ली वा० ड, पल–गतौ अच् पलः ओः शिवस्य पलः बोधक इत्यपरे । १पाषाणे "रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णाम्" मेघ० "परिस्पृह्य शतघ्नीश्च सचक्राः सगुडोपलाः" भा०व०२८३अ०२वालुकायाम् "भिषगुपलप्रक्षिणी नना" ऋ० ९,११२,३ । "उपलेषु वालुकासु प्रक्षिणन्ति" भा०३रत्नमात्रे मेदि० "वलयार्पितासितमहोपलप्रभाः" "शुकाङ्गनीलोपलनिर्म्मितानाम्" "नीलोपलस्यूतविचित्रधातुः" माघः "मध्यमोपलनिभे लसदंशौ" किरा० । ४शर्करायां स्त्री । उपराति वारि रा–दाने क वा रस्य लः । ५मेघे निरु०। लत्वाभावे उपरोऽपि मेघे

**उपलक्षक** त्रि० उप+लक्ष–ण्वुल् । १उन्नायके "मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः । धीरो यथोक्तवादी च एष दूतो विधीयते" नीतिः उपादानलक्षणया स्वेतरबोधके २शब्दे च यथा काकेभ्योरक्ष्यतामन्नमित्यादौ काकशब्दः उपघातकत्वेन काकतदितरबोधकत्वात् उपलक्षकः ।

**उपलक्षण** न० उपलक्ष्यते स्वं स्वेतरञ्चानेन उप+लक्ष–करणे

ल्युट्। स्वस्य स्वान्यस्य च अजहत्स्वार्थया लक्षणया बोधके शब्दे यथा काकेभ्योदधि रक्ष्यतामित्यत्र काकपदं स्वस्य स्वान्यस्य श्वादेश्च बोधकम्। तल्लक्षणञ्च स्वप्रतिपादकत्वे सति स्वेतरप्रतिपादकत्वम्। भवति चोक्तोदाहरणे उपघातकत्वेन काकाकाकोभयवृत्तित्वं काकशब्दस्येति तथात्वम् तत्र शक्यतावच्छेदकधर्म्मपरित्यागेन इतरधर्म्मरूपेण स्वस्वेतरबोधकं हि शब्दस्युपलक्षणं भवति "मन्त्रपदत्वं ब्राह्मणस्याप्युपलक्षणम्" सि०कौ०। उप+लक्ष–भावे ल्युट्। २तादृशज्ञाने। "कृष्णपदत्वं नियोगोपलक्षणार्थम्" सि०कौ०। [तृणभेदे राजनि०।

**उपलधिप्रिय** पु० वालधिः प्रियोऽस्य पृषो०। चमरनाम-

**उपलब्ध** त्रि० उप+लभ–क्त। १प्राप्ते, २ज्ञाते च। "आख्यायिकोपलब्धार्था" अमरः। क्तवतु। उपलब्धवत् प्राप्तरि ज्ञातरि च स्त्रियां ङीप् "उपलब्धवती दिवच्युतम्" रघुः।

**उपलब्धि** स्त्री उप+लभ–क्तिन्। १प्राप्तौ "कथा हि मे स्यात् स्वपदोपलब्धिः" रघुः। २प्रत्यक्षादिज्ञाने च। "नाभाव उपलब्धेः" शा०सू०। योग्यानुपलब्धिः "अनपायिपदोपलब्धये" रघुः।

**उपलब्धृ** त्रि०उप+लभ–तृच् स्त्रियां ङीप्। १प्राप्तरि २ज्ञातरि ज्ञानाश्रये ३आत्मनि पु०। [पाषाणभेदे वृक्षे राजनि०।

**उपलभेदिन्** पु० उपलं भिनत्ति भिद–णिनि ६त०। पा-

**उपलभ्य** त्रि०उप+लभ–कर्म्मणि यत्। १प्राप्ये "आरम्भसिद्धौ समयोपलभ्यम्" रघुः। २ज्ञेये च प्रशंसायां नुम् उपलम्भ्यः

**उपलम्भ** पु० उप+लभ–घञ् नुम् च। १लाभे, २ज्ञाने च। "कर्त्तृता तदुपलम्भतोऽभवत्" माघः। "ज्ञातौ सुतस्पर्शसुखोपलम्भात्" रघुः।

**उपलिङ्ग** न० उपमितं लिङ्गेन अत्या०स०। लोकनिन्दसाधनभावेन लिङ्गेनानुमापकेन सदृशे अलौकिकसाधनभावके अरिष्टसूचके भूकम्पादौ उपद्रवे।

**उपलेप** पु०उप+लिप–घञ्। १गोमयादिना आलेपने "गात्रेषु सर्वेन्द्रियाणामुपलेपोऽवसादनमिति" सुश्रुतोक्ते २सर्वेन्द्रियावसादने च। "कासोपलेपस्वरभेदनिद्रातन्द्रास्यदौर्गन्ध्यविषोपसर्गाः" शाटोपलेपवलक्षत्" सुश्रु०। भावे ल्युट् उपलेपन गोमयादिना आलेपने न०। "मण्डलालेपनादिकं कर्म समाज्ञापयति" पद्धत०।

**उपवक्तृ** पु० उपवक्ति उपदिशति उपपक्षति वा उप+वच तृच्। यज्ञे कृताकृतावेक्षके ऋत्विग्भेदे १ब्रह्मणि २सदस्ये च "वेषि ह्यध्वरीयतामुपवक्ता जनानाम्" ऋ०४,९,५, "उपवक्ताध्वर्य्युप्रभृतीनां सर्वेषां कर्म्मणामनुज्ञार्थमित्थं प्रणयेत्यादिरूपस्य वाक्यस्य वक्ता सन् ब्रह्मासि, सर्वेषां कर्मणामवैकल्यार्थमुपद्रष्टा सदस्यो वासि" भा०

**उपवङ्ग** पु०उपगतोवङ्गम् अत्या०स०। वङ्गदेशसमीपस्थे देशभेदे देशशब्दे विवृतिः। [वृक्षे राजनि०

**उपवट** पु०उपमितो वटेन अत्या०स०। वटवृक्षसदृशे प्रियासाल-

**उपवन** न०उपमितं वनेन अत्या०स०। वनतुल्ये कृत्रिमे आरोपितवृक्षसमूहे १उद्याने। "पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नैः" मेघ० "साकेतमालोपवना वहन्ति" रघुः आरामशब्दे पृ० ८०१ विवृतिः वनस्य सामीप्यम् वने वा अव्ययी०। २वनसामीप्ये ३वने इत्यर्थे च अव्य० "कुसुमयन् फलिनीरलिनीरवैर्मदविकारिभिराहितहुङ्कृतिः। उपवनं निरभर्त्सयत प्रियान्" माघः।

**उपवर्णन** न० उप+वर्ण–ल्युट्। सम्यक्कीर्त्तने स्वरूपलक्षणगुणादिभिः प्रतिपादने "अतिशयोपवर्णनं व्याख्यानम्" सुश्रु०

**उपवर्त्तन** न०उपेत्य वर्त्तन्तेऽत्र उप+वृत–आधारे ल्युट्। जनपदे १विषये "तस्योपवर्त्तनेऽप्येको न श्रुतो गोत्रभित् क्वचित्" काशी०। तदेकदेशे २सजलस्थले भरतः।

**उपवर्ष** पु० पाणिनिकात्यायनव्याडिप्रभृतीनामध्यापके ऋषिभेदे तत्कथा वृहत्कथायाम् दृष्टव्या "वर्षा एव तु भगवानुपवर्षः" शा०सू०

**उपवर्ह** पु० उप+वृह–उद्यमने करणे घञ्। शिरोधाने (बालिश) हेम०तत्र हि स्थापयित्वा शिर उद्यम्यते इति तस्य तथात्वम्। ल्युट्। उपवर्हणमप्यत्र न०[राजनि०।

**उपवल्लिका** स्त्री उप उत्कर्षे प्रादिस०। अमृतस्रवलतायाम्

**उपवल्ह** पु० उप+वल्ह–प्राधान्ये घञ्। प्राधान्ये उत्कर्षे "तत् पूर्वेषां हतानां धारयतामेव धनमुपाहितं भवत्युपवल्हाय बिभ्यताम्" शत०ब्रा०१,४,२,१,

**उपवसथ** पु० उपेत्य वसन्त्यत्र उप+वस–अधारे अथ। १ग्रामे हेमच०। "यद्याहिताग्निरुपवसथे म्रियते कथमस्य यज्ञः स्यात्" ऐत० "यजमानस्य समीपे वसन्ति देवा अस्मिन्नह्नि आधारे अथ। २यागपूर्व्वदिवसे। तन्निर्वचनादिकं शत० ब्रा० १,११,१,७,२, दर्शितं यथा

"अथातोऽशनानशनस्यैव। तदु हाषाढः सावयसोऽनशनमेव व्रतं मेने मनो ह वै देवा मनुष्यस्याजानन्ति त एनमेतद् व्रतमुपयन्तं विदुः प्रातर्नो यक्ष्यत इति तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स उपवसथः। तस्यैवानवक्लृप्तम्। यो मनुष्येष्वनश्नत्सु पूर्वोऽ-

श्नीयादथ किमु यो देवेभ्यनश्नतुस्तु पूर्व्वोऽश्नीयात्तस्मादु नैवाश्नीयात्। तदुहोवाच याज्ञवल्क्यः। यदि नाश्नाति पितृदेवत्योभवति यद्यु अश्नाति देवानत्यश्नातीति स यद्देवाशितमनशितं तदश्नीयादिति यस्य वै हविर्न गृह्णन्ति तदशितमनशितं स यदश्नाति तेनापितृदेवत्यो भवति यद्यु तदश्नाति यस्य हविर्न गृह्णन्ति तेनो देवान्नात्यश्नाति। स वा आरण्यमेवाश्नीयात्" "व्रतप्रसङ्गादागतं तद्विसर्जनं समाप्य पूर्व्वेद्युर्यजमानेन व्रतानन्तरं यत् कर्त्तव्यं तद्वक्तव्यं प्रतिजानीते अथेति। यतो व्रतानन्तरमशनानशनापरनामकमारण्याद्यशनमेव यजमानेन कर्त्तव्यम् अतस्तदनन्तरमेव तस्य निरूपणं क्रियत इत्यर्थः। प्रतिज्ञा तस्याशनानशनपक्षस्य प्रशंसार्थम्। केवलानशनपक्षं निरसितुमुपन्यस्यति तद्धेति। तत्त-स्मिन्नशनानशनविषये अनशनं सर्व्वात्मना अशनत्यागम्। उपवसथनामनिर्वचनेन देवानामागमनं द्रढयति तेऽस्येति उपसमीपे यजमानस्य वसन्ति देवा अस्मिन्निति पूर्वं दिवस उपवसथनामक इत्यर्थः। गृहे मनुष्येष्वागतेष्वनश्नत्सु पूर्व्वोऽश्नीयादिति यत्तस्यानवक्लृप्तिः किमु वक्तव्या? अपाठेन चेन्मुनिना निर्णीतोऽनशनपक्षः तर्हि स एव परमार्थः। कथमशनानशनपक्षः? इति चेत् अनेन मुनिनैव स्वमतसमर्थनाय प्रत्येकपक्षौ दूषयित्वा याज्ञवल्क्येन सोपपत्तिना नोभयाविव्युक्तम्। यदेति अशनानशनलक्षणं यदीति। दैविके हि कर्म्मणि देवान् प्रत्युद्दिष्टस्यैव हविषः प्रथममनुपयोगः काममन्यस्य, पित्र्ये पुनरनियमाद्धविषोऽन्यदपि अनुपयोग्यमिति पितृदैवत्यतामापादयतीति याज्ञवल्क्यस्याशयः। तत् किं दैविके कर्म्मणि प्रागपि भोक्तव्यमिति यस्त्वमाशयमजानानः शङ्कते तमाह यद्यु इति यदि तु अश्नाति तदा अभिभिषतो देवानतिक्रम्य स्वयं भुक्तवान् स्यात्। अशनानशनपक्षयोरुभयोरपि दोषश्चेत् का गतिरिति यद्द्रव्यमशितमप्यनशितवद्भवति तदश्नीयात्। यस्य द्रव्यस्य संबन्धानं हविष्टेन देवा न गृह्णन्ति तदशितमपि सदनशितवद्भवति। तथात्वे यथोदीरितदोषद्वयाभावमाह स यदिति। आरण्यग्रहणं प्राकृतदर्शपूर्णमासहविर्व्यतिरिक्तोपलक्षणम्" भा०। तत्र विहितः ठञ् भावे अण्। वैदिके कर्मभेदे तच्च कर्म कात्या० ८,८,८, दर्शितम्। नवमाध्यायादौ "उक्तमौपवसथ्यं कर्मेति" कर्कः। [उपवासे अमरः।

**उपवस्त** न० उप+वस स्तम्भे उपस्तब्धत्वादभोजने भावे क्त।

**उपवस्ति** स्त्री उप+वस–स्तम्भे भावे क्तिन्। उपष्टम्भे आलम्बने तेन जीवति वेतना० ठञ्। औपवस्तिक तदुपजीविनि त्रि०।

**उपवाक** पु० उप+वच–घञ् कुत्वम्। उपेतस्य वचने १परस्परालापे "नमस्यन्त इदुपवाकमीयुः" ऋ० १,१६४,८, "उपवाकमुपेतस्य वचनं परस्परवचनम्" भा०। उपवाति उप+वा–भावे क्विप् तस्यै कं जलं यत्र। २यवे पु० "सक्तूनां रूपं बदरमुपवाकाः करम्भस्य" यजु० १९,२२, "सरस्वत्युपवाकैर्व्यानम्"१९,९०, "उपवाका यवाः" वेददी० "अथ नासिकयोर्लोमानि तान्युपवाकसक्तवश्च बदरसक्तवश्च श्रोते एवास्येन्द्रौ यच्छौ" शत०ब्रा० १२,९,१,५, भृष्टयवैर्हि जलस्य शोषणात् तथात्वम्। ३इन्द्रयवे स्त्री ङीप् "बदरैरुपवाकीभिर्भेषजं तोक्मभिः" यजु० २१, ३०, तस्मिन् हितः यत्। उपवाक्य तत्साधने वस्त्रौ उप+वच–कर्मणि ण्यत् कुत्वम्। सम्भाषणीये "अयमग्निर्भ्रातृव्यस्य इलस्य सनकात् प्रेद्धो नमसोपवाक्यः" ऋ० १०,६९,१२, कुत्वाभावे उपवाच्य स्तुते प्रशस्ये च "अहन्निन्द्रो यथा विदे शीर्ष्णाशीर्ष्णोपवाच्यः" ऋ० २,१,१३२,

**उपवाद** पु० उप+वद–घञ्। अपवादे निन्दायाम् "पश्चपवादास्य" कात्या० "पश्चूपवादः पशुदाननिन्दा" कर्कः। णिनि उपवादिन्। तत्कारिणि "तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवति" ऐत० "येऽन्याः कलहिनः पिशुना उपवादिनः" छा०उ०।

**उपवास** पु० उप+वस–घञ्। भोजनाभावे भोजननिवृत्तौ स च वैधः अवैधश्चेति भेदात् द्विविधः। तत्र वैधस्य व्रतरूपत्वम्। तस्य संकल्परूपत्वं निरस्य एका०त० संकल्पजन्यत्वमुक्तम् यथा "दीर्घकालानुपालनीयः सङ्कल्पोव्रतमिति नारायणोपाध्यायानां स्वरसः। स्वकर्त्तव्यविषयोनियतः सङ्कल्पोव्रतमिति श्रीदत्तहरिनाथवर्द्धमानप्रभृतयः। सङ्कल्पस्य भावे मयैतत् कर्त्तव्यमेव, निषेधे न कर्त्तव्यमिति ज्ञानविशेषः अतएव सङ्कल्पः कर्म्म मानसमित्याभिधानिकाः। वस्तुतस्तु पूर्व्वोक्तवराहपुराणवचनेनैकादश्युपवासस्य व्रतत्वाभिधानात् "एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन चैकेन पादकृच्छ्र उदाहृतः" इत्यादियाज्ञवल्क्याद्युक्तेषु एकभक्तनक्तायाचितभोजनोपवासादिषु पादकृच्छ्रादित्वाभिधानाच्च न सङ्कल्पोव्रतं किन्तु सङ्कल्पविषयतत्तत्कर्म्मैव व्रतमिति। अतएव व्रतानां सङ्कल्पसम्भवत्वमाह मनुः "सङ्कल्पमूलः

कामोवै यज्ञाः सङ्कल्पसम्भवाः । व्रतनियमधर्म्माश्च सर्व्वे सङ्कल्पजाः स्मृताः” । अनेन कर्म्मणा इदमिष्टं फलं साध्यते इत्येवंविषया बुद्धिः सङ्कल्पस्तदनन्तरमिष्टसाधन तया अवगते तस्मिन् इच्छा जायते ततस्तदर्थं प्रयत्नं कुर्व्वीत इत्येवं यज्ञा सङ्कल्पसम्भवाः । व्रतनियमरूपाधर्म्माश्चतुर्थाध्याये वक्ष्यमाणाः । सर्व्वे इत्यनेन अन्येऽपि शास्त्रार्थाः सङ्कल्पादेव जायन्तइति कल्पतरुभट्टः । सङ्कल्पनाञ्च वराहपुराणम् । “प्रातःसङ्कल्पयेद्विद्वानुपवासव्रतादिकम् । नापराह्णे न मध्याह्ने पित्र्यौ कालौ हि तौ स्मृतौ अत्र संकल्पोव्रतारम्भः”। तत्र भोजनाभावश्च अहोरात्रकालावच्छिन्नः । यथोक्तं स्मृतौ “तपनोदयमारभ्य यामाष्टकमभोजनम् । उपवासः सविज्ञेयः प्रायश्चित्ते विधीयते” प्रायश्चित्ते इत्युपलक्षणम् । प्राजापत्यादौ त्रिरात्राद्युपोषणस्यैवाहत्या बोध्यम् । उपवासस्य निरुक्त्यन्तरं भवि० पु० दर्शितं यथा “उपावृत्तस्य पापेभ्योयस्तु वासोगुणैः सह । उपवासः स विज्ञेयः सर्व्वभोगविवर्ज्जितः” वैधोपवासस्य यथा निवृत्तिरूपयत्नपरतया भावरूपत्वं तथा एका० त० समर्थितम् यथा एवञ्च सङ्कल्पविषयस्य अनन्तं पूजयेद्धरिमित्यादौ भावत्वं, नैवेतोऽश्नन्नामादश्नमित्यादो चाभावरूपत्वम् । ननु तर्हि व्रतस्य कचिदप्यभावरूपत्वात् “निषेधः कालमात्रके” इत्यस्यैव विषयत्वं स्यादिति चेन्न तस्य केवलनिषेधविषयकत्वात् अस्य तु सङ्कल्पादीतिकर्त्तव्यतायोगित्वेन भावघटितत्वात् “तत्र पूज्य विधेर्व्रत्तिः” इत्यस्यैव विषयत्वमिति । जीमूतवाहनेनापि “एकादश्यां भोजने दोषं दर्शयन्नुपवासं नियमयति । नचायं निषेधः इतिकर्त्तव्यताविधानात् निषेधे चेतिकर्त्तव्यताविरहात् तत्पदाप्रयोगाच्च” इत्युक्तम् । यत्तु निषेधप्रकरणस्यदेवलवचने “न शङ्खेन पिबेत्तोयं न खादेत् कूर्म्मशूकरौ । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि” इत्यत्र नञोनिषेधे मुख्यत्वाद्भोजनाभावः प्रतीयते नत्वभोजनसङ्कल्परूपं व्रतं लक्षणाप्रसङ्गात् । मत्स्यपुराणे “दशम्यां नियताहारो मांसमैथुनवर्ज्जितः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि” इति दशमीनियमपूर्ब्बकं व्रतमभिधाय “रटन्तीह पुराणानि भूयोभूयोवरानने ! । न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे” इत्यादिविधेरनन्यगतिकतया निषेधकत्वमवश्यं वाच्यम् । तथाच निषिद्धे भोजने दोषश्रवणं निषेधातिक्रमजन्यतयैवोपपद्यमानं न फलश्रुत्या काम्यतया निरुद्दस्य व्रतस्य नित्यत्वे प्रमाणमिति तच्चिन्त्यं न खलु “न शङ्खेन पिबेत्तोयमित्यादिभिः” प्रतिपन्ननिषेधभावैः साहचर्य्येणैकादशीभोजननिषेधकमात्रमुत्तरार्द्धं किन्तु “एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृही” इति गोभिलवचने धर्म्मशब्दसमभिव्याहारेणैकादश्यामुपवसेदित्यनेनैकवाक्यतया चोपवासविधायकमपि नहि निषिद्धानां ब्रह्महत्यादीनां त्यागेन कश्चिद्धर्म्मोजायते किन्तु भावरूपाङ्गानुगृहीतो निषिद्धोधर्म्मोभवेदिति, वैधोपवासे च “उपावृत्तस्य पापेभ्योयस्तु वासोगुणैः सह । उपवासः स विज्ञेयः सर्व्वभोगविवर्ज्जितः” इति भविष्यपुराणवचनेन भोगमात्रस्यैव वर्ज्जने प्राप्ते वचनान्तरादहोरात्राभोजनस्यैव पापनिवृत्तगुणवासयुक्तस्य प्राधान्यमन्यभोगवर्ज्जनस्याङ्गत्वम् । तथाच “सूतके मृतके चैव प्रणम्य मनसा हरिम् । एकादश्यां न भुञ्जीत व्रतमेतद्धि वैष्णवम्” । अत्र एकादश्यामुपवासमात्रस्य व्रतत्वमुक्तम् एकादश्यां न भुञ्जीतेत्यस्य व्रतपरत्वेन नाभोजनपरता तस्याश्च पूर्ब्बं दूषितत्वात् । ततश्च यथा एकादश्यां न भुञ्जीत इत्यत्र वचनान्तरादुपवासरूपव्रतपरत्वं तथा न भोक्तव्यमित्यत्रापि । वस्तुतस्तु वराहपुराणे एकादशीव्रतसन्दर्भमध्ये “न शङ्खेन पिबेत्तोयमिति” न भोक्तव्यं न भोक्तव्यमिति वचनद्वयमभिधाय व्रताकरणे प्रत्यवाय उक्तः । नच पौनरुक्त्यभिया तस्य निषेधकत्वमिति वाच्यम् तथात्वे एतद्वचन एव न भोक्तव्यमिति पुनरुपादानं व्यर्थं स्यात् किन्तु वीप्सया तस्यैव व्रतस्य नित्यत्वख्यापनमिति । अन्यथा “निषेधः कालमात्रकः” इत्यनेनैव एकादशीक्षण एव भोजननिषेधः स्यात्” । “एकादश्यां प्रकुर्व्वन्ति उपवासं मनीषिणः” इति भविष्यपुराणे उपवासपदान्निराहारपदं नैकादशीकालमात्राभोजनपरम् किन्तु तद्युक्ताहोरात्राभोजनपरम् । तत्रैवोपवासपदव्यवहारात् । नच वैपरीत्यम् उपवासपदस्याहाराभावमात्रपरत्वे लक्षणाप्रसङ्गात् । निराहारपदस्योपवासपरत्वे तु न लक्षणा सामान्यशास्त्रस्य विशेषतात्पर्य्यकत्वात् । तथाच कात्यायनः “नित्योपवासी योमर्त्यः सायं प्रातर्भुजिक्रियाम् । सन्त्यजेन्मतिमान् विप्रः संप्राप्ते हरिवासरे” । सायं प्रातरिति रात्रिदिवोपलक्षणम् “मुनिभिर्द्दिवशनमुक्तं विप्राणां मर्त्यवासिनां नित्यम् । अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः” इति छन्दोगपरिशिष्टैकवाक्यत्वात् । अतएव स्वण्डतिथेरप्यहोरात्रत्वकीर्त्तनम् अहोरात्रसाध्यकर्म्माङ्गत्वार्थम् । तथाच

विष्णुधर्मोत्तरे। “सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः। तया कर्म्माणि कुर्वीत ह्रासवृद्धी न कारणम्। सा तिथिस्तदहोरात्रं यस्यामस्तमितो रविः। तया कर्म्माणि कुर्वीत ह्रासवृद्धी न कारणम्। शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः”। तच्च तिथ्यन्तरसहायभावं विना प्रायोन सम्भवति अतएव गृह्यपरिशिष्टे युग्माग्नीत्याद्यभिधाय “तिथ्योर्युग्मं महाफलम्” इत्युक्तं अस्य प्रयोजनन्तु तिथेः खण्डविशेषनियमनम्, स्वतिथ्या कर्म्मानिर्वाहे सहायभावेनान्यतिथ्यनुप्रवेशेनाहोरात्रसाध्योपवासाद्याचरणञ्च। एवञ्च प्रातःकाले तत्तिथ्यलाभे तिथ्यन्तरेऽप्युपवाससङ्कल्पः अहोरात्राभोजनरूपस्य तस्य प्रातरारम्भार्हत्वात्। संवत्सरप्रदीपेऽपि “प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेत्” इत्युक्तम्। अत्र च कर्म्मणस्तावदपूर्व्वजनकत्वेन विधेयत्वेन प्राधान्यम् तिथ्यादेर्गुणत्वेन कालोपलक्षणत्वमाह गर्गः। “तिथिनक्षत्रवारादि साधनं पुण्यपापयोः। प्रधानगुणभावेन स्वातन्त्र्येण न ते क्षमाः” इति प्रधानस्य कर्म्मणोगुणभावेनाङ्गत्वेन। एवञ्च निराहारपदस्योपवासपरत्वे न कलञ्जाधिकरणन्यायान्नैकादशीक्षणमतिवाह्य भोजनम्। किन्त्वेकादश्यामिति विहितैकादशीयुक्ताहोरात्रपरम्। अथ कलञ्जाधिकरणम्। तत्र श्रुतिः “न कलञ्जं भक्षयेत्” इति कलञ्जभक्षणाभावविषयकं कार्य्यमित्यर्थः। तत्र कालविशेषानुपादानान्निषिध्यमानक्रियायां प्रवृत्तिमतोनिषेधविधावधिकाराद्यावत्कालमेव तस्यां तस्य निवृत्तिः। न हि कलञ्जभक्षणाद्यतः कुतश्चित् कारणान्निवृत्तस्य निषेधानुपालनं सकृद्वृत्तमिति कलञ्जभक्षणनिषेधो न पुनस्तं निवर्त्तयति किन्तु भक्षणप्रवृत्तिमत्तामात्रमधिकारिविशेषणं यदा यदा भवति तदा तदा एव निषेधविधिरपि तं निवर्त्तयति। न हि कलञ्जस्य भक्षणमुपक्रम्य यावत्कालं तल्लक्षयति। अतस्तदितरकाले निवृत्तिः सिद्धैवेति भवति विफलोविधिः। ननु नासौ निवृत्तिरप्रवृत्तस्य निवृत्त्यनुपपत्तेः, सत्यं प्रवृत्त्युपाधिना विनाशं प्राप्नुवन् प्रागभावएव प्रवृत्तिनिराकरणात् साध्यमानोनिवृत्तिरुच्यते न तु प्रवृत्तिरपि साध्यतयोपदिश्यते किन्तु रागप्राप्तप्रवृत्तिमतएव निषेधविधावधिकारः। यत्तु “मनसा तु प्रवृत्तस्य भूतचेष्टावतोऽपि वा। यदनागतभावस्य वर्ज्जनं तन्निवर्त्तनम्” इति तत्रापि मल्लेनाप्रवृत्तमात्रसमुत्तयात्तु विरोधः भूतचेष्टावत इति। “भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवं त्रिषूचिते। प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना” इति मेदिन्युक्तेः भूते प्राप्ते निषेध्ये चेष्टावत इत्यर्थः। तत्र प्रागभाव एव कालान्तरसम्बन्धितया साध्यत्वेनोपदिश्यते। प्रागभावस्यानादिसंसर्गाभावमात्रपरः सचाप्रवृत्तस्य भक्षणकारणमननुतिष्ठतः सिध्यत्येव। तस्मात् सकृत्क्रियापर्य्यवसायित्वे विफलोविधिः कादाचित्काकरणस्य निषेधमन्तरेणापि प्राप्तेः। न च स्वर्गकामादिवत् साध्यतया प्रवृत्तिमत्कर्त्तृकत्वमप्यङ्गं विषयमात्रानुष्ठानाधीनसिद्धत्वान्निषेधनियोगानामितिकर्त्तव्यताऽऽकाङ्क्षाविरहात् अतएव शुचित्वमपि तत्र नाङ्गम्। तस्मान्निषेधविधिषु काकवन्तोदेवदत्तस्य गृहाइत्यादिवत्तटस्थत्वेनाधिकारिविशेषणीभूतायाः प्रवृत्तेर्यावत्कालमनुवृत्तिस्तावत्कालमेव निवृत्तौ साफल्यं पुनर्निमित्तान्तरवत् सकृदनुष्ठानेनैव शास्त्रार्थसिद्धिः”। गदाधरस्तु विधिस्वरूपे उपवासादिव्रतादेर्निषेधविधिबोध्यतया वैधत्वं कलञ्जभक्षणादेश्च निषेधविषयतया निषिद्धत्वमङ्गीचकार। तस्यायमाशयः। विधिप्रत्ययार्थस्येष्टसाधनत्वादेर्धात्वर्थे एवान्वयव्युत्पत्तेः एकादश्यामुपवसेदित्यादिवाक्येन उपवासे चिडाद्यर्थेष्टसाधनत्वस्यान्वयबोधनात् भोजनाभावरूपोपवासस्य निषेधरूपतया तत्र च विध्यर्थान्वयात् निषेधविधित्वम् तदेकवाक्यतया च एकादश्यां न भुञ्जीतेत्यादौ भुजधातोरुपवासपरत्वकल्पनं नञ् तु तत्र तादृशलक्षणाग्राहकः एवञ्च तत्र निषेधरूपभोजनाभावे इष्टसाधनत्वबोधनान्निषेधविधित्वम्। प्रकृत्यर्थे एव प्रत्ययार्थान्वयनियमेन तथान्वयस्यैवौचित्यम्। न कलञ्जं भक्षयेदित्यादौ तु नञा कलञ्जभक्षण एव विध्यर्थेष्टसाधनत्वस्याभावबोधनात् निषेधरूपत्वम्। नञ्समभिव्याहृतस्थले यत्र यस्यान्वयः तत्समभिव्याहारे तु तत्र तस्याभावान्वयनियमात् चैत्रः पचतीत्यादौ चैत्रे पाचकर्त्तृत्वान्वयेन चैत्रो न पचतीत्यादौ तत्रैव कर्त्तृत्वाभावान्वयदर्शनात्। ननु एकादश्यां न भुञ्जीतेत्यत्रापि कुतो न तथान्वय इति चेत् तत्र तथान्वयसम्भवेऽपि एकादश्यामुपवसेत् इत्यादौ तथान्वयासम्भवात् तत्र धातुनैव भोजनाभावस्योपस्थापनात् तत्रैव विध्यर्थान्वयौचित्यात् न च तत्र स्वातन्त्र्येणाभावबोधकपदमस्ति येन विध्यर्थान्वयस्तत्र स्यात्। तदेकवाक्यतया च न भुञ्जीतेत्यादौ उक्तनिषेध विधित्वमुचितमिति। निषेधविधेश्च इष्टसाधनताज्ञानजननद्वारा प्रवर्त्तकत्वम् निषेधस्य तु उदीच्यानिष्टसाधनत्वज्ञानोपजन-

वात् निवर्त्तकत्वमिति भेदः विस्तरस्तु विधिखण्डे दृश्यः। प्रागुक्त भवि० पु० वाक्यव्याख्यायाम् एका०त० रघु० "उपावृत्तस्य निवृत्तस्य पापेभ्यः पापकर्म्मभ्यः। मैथिलास्तु दोषेभ्य इति पठित्वा दोषेभ्योरागद्वेषमात्सर्य्यादिनिषिद्धात्मधर्म्मेभ्य इत्यर्थमाहुः। गुणानाह गोतमः। "दया सर्व्वभूतेषु क्षान्तिरनसूया शौचमनायासोमङ्गलमकार्पण्यमस्पृहा चेति"। दयादिलक्षणान्याह वृहस्पतिः। "परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा। आत्मवद्वर्त्तितव्यं हि दयैषा प्रकीर्त्तिता"। परे उदासीने। आत्मवदित्यत्र आपत्सु रक्षितव्यमिति कल्पतरौ पाठः। व्यक्तमाह दक्षः। "यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता। सुखदुःखानि तुल्यानि यथात्मनि तथा परे"। वृहस्पतिः। "बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्। न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता। न गुणान् गुणिनोहन्ति स्तौति मन्दगुणानपि। नान्यदोषेषु रमते साऽनसूया प्रकीर्त्तिता। अभक्ष्यपरिहारस्तु संसर्गश्चाप्यनिन्दितैः। स्वधर्मे च व्यवस्थानं शौचमेतत् प्रकीर्त्तितम्। शरीरं पीड्यते येन सुशुभेनापि कर्मणा। अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते। प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः। स्तोकादपि च दातव्यमदीनेनैव चात्मना। अहन्यहनि यत् किञ्चिदकार्पण्यं हि तत् स्मृतम्। यथोत्पन्नेन सन्तोषः कर्त्तव्योऽप्यल्पवस्तुना। परस्याचिन्तयित्वार्थं साऽस्पृहा परिकीर्त्तिता"। देवीपुराणम्। "वन्नधान तज्जपः स्नानं तत्कथाश्रवणादिकम्। उपवासकृतो ह्येते गुणाः प्रोक्ता मनीषिभिः" सर्वभोगविवर्जितः शास्त्रानुमतन्टत्यगीतादिसुखरहितः" अत्र दन्तधावने मैथिलमतमुत्थाप्य दूषितं तत्रैव। "अत्र मैथिलाः वृद्धशातातपोभोगविशेषान् प्रतिप्रसूते। "गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम्। उपवासे न दुष्येत दन्तधावनमञ्जनम्"। गौड़ीयस्मृतिः "उपवासे तथा श्राद्धे न खादेद्दन्तधावनम्। दन्तानां काष्ठसंयोगोदहत्यासप्तमं कुलम्" तत्र योगीश्वरः "तस्मात् सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्" इत्यभिधाय दन्तकाष्ठसंयोगं निषिध्य स्वल्पोष्टादिना दन्तधावनमिति विरोधं परिजहारेति वदन्तोनञर्थं व्याचक्रुः तन्न वृद्धशातातपेन "मुखे पर्युषिते नित्यं भवत्यप्रयतोनरः। तस्मात् सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्" इत्यभिधाय तद्वचनाभिधानेन दन्तधावने दोषएवोक्तः। अन्यथा पौनरुक्त्यापत्तेः "अञ्जनं रोचनञ्चापि गन्धान् सुमनसस्तथा। पुराणके चोपवासे च नियमेव विवर्जयेत्" इति हरिवंशात् मिताक्षरायाम्। "गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुलेपनम्। व्रतस्थोवर्जयेत् सर्वं यच्चान्यद्बलरागकृत्" इत्यनेनानुलेपनरागकृन्निषेधाच्च। अतएव प्रायश्चित्तविवेककृद्भिः सुष्ठूक्तमुपवासेन हेतुनेति"।

जीमूतवाहनेनापि उपवासे चेति पठित्वा चकारादन्नुक्तादिष्वपीति व्याख्यातम्। तस्माद्गन्धेत्यादि सर्व्वभोगस्यैव प्रदर्शकं तेन विलासार्थगन्धादिवर्ज्जनं कार्य्यम्। देवलः "उपवासः प्रणश्येत दिवास्वापाच्च मैथुनैः। अत्यये चाम्बुपाने च नोपवासः प्रणश्यति"। उपवासोऽपि नश्येतेति कल्पतरुपाठे अपिनान्यद्व्रतं समुच्चीयत इति विशेषः। अत्यैदूरतैः। अतये नाशे सम्भाव्यमाने। मैथुने विशेषमाह देवलः। "उपवासे तथा यौनं हन्ति सप्तकुलानि वै। स्त्रीणां संप्रेक्षणात् स्पर्शात्ताभिः सङ्कथनादपि। ब्रह्मचर्य्यं विपद्येत न दारेष्वृतुसङ्गमात्" संप्रेक्षणात् संकथनादित्यत्र सरागत्वं संशब्दस्यार्थः साहचर्य्यात् स्पर्शोऽपि तथेति प्रायश्चित्तविवेकः। कातत्रायनोऽपि "रेतःसेकात्मकं भोगस्ततेऽप्यत्र क्षयः स्मृतः। तथाच दक्षः। "स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। अनुरागात् कृतञ्चैव ब्रह्मचर्य्यविरोधकम्"।

अनुकल्पपक्षप्रधानपक्षयोर्यथायोगम् अन्यान्यपि वर्ज्ज्यानि काल्पमा०उक्तानि यथा "कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान्। शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम्" कूर्म्मपु०। "असकृज्जलपानञ्च दिवास्वापञ्च मैथुनम्। ताम्बूलचर्वणं मांसं वर्ज्जयेद्व्रतवासरे" विष्णुध०। "पतितपाषण्डनास्तिकसम्भाषणमन्टताश्लीलादिकमुपवासादिषु वर्ज्जयेत्" हारीतः। "बहिर्ग्रामान्त्यजान् सूतिं पतितं च रजस्वलाम्। न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे" कूर्म्मपु० "स्मृत्यालोकनगन्धादिसेवनं परिकीर्त्तनम्। अन्नस्य वर्जयेत् सर्व्वं ग्रासानाञ्चाभिकाङ्क्षणम्। गात्रात्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुलेपनम्। व्रतस्थोवर्ज्जयेत् सर्व्वं यच्चान्यत्र निराकृतम्" विष्णुर०। तत्रैकादश्युपवासे "यानि कानि च पापानि ब्रह्महत्यादिकानि च। अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे, इति भवि०पु० अन्नमात्रस्य निषेधेऽपि माषमसूरादिनिषेधोऽ-

नुकल्पपक्षेऽधिकदोषाय। अतएव “अन्नं तु धान्यसंभूतं गिरिजे भुवि जायते। धान्यानि विविधानीह जगत्यां शृणु यत्नतः। श्यामाकाश्च मसूराश्च धान्यकोद्रवसर्षपाः यवगोधूममुद्गाश्च तिलकल्ककुलत्थकाः” इत्यादीन्यष्टादश धान्यान्युक्त्वा “एतैरेव समुद्भूतमन्नं भवति शोभने!। अन्नत्यागे व्रते भक्ष्येष्वेतान्येव विवर्जयेदिति” शाक्तोत्तरवचने धान्यमात्रसंभूतान्नस्य निषेधात्। अतएव नक्तं हविष्यान्नमनोदनं वेत्यत्रेन अनोदनपदेन सिद्धान्नमात्रभिन्नस्यानुकल्पतोक्ता।

एकादश्युपवासेऽधिकारिण एकादशीशब्दे वक्ष्यते। सभर्तृकायान्तु भर्त्रनुमतिं विनोपवासे नाधिकारः। “नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषणम्। पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते” मनूक्तेः सावित्रीव्रतादौ विशेषविधानात् भर्त्रनुज्ञयाऽधिकारः। अतएव शङ्खेन सामान्यत उक्तम् “कामं भर्त्रनुज्ञया व्रतोपवासनियमेज्यादीनामभ्यासः स्त्रीधर्मः” “पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत्। आयुः संहरते पत्युः सा नारी नरकं व्रजेत्” इति विष्णुवाक्यन्तु अनुमत्यभावविषयकम्।

स च उपवासः नित्यः काम्यः नैमित्तिकश्चेति त्रिधा तत्र कार्तिशिवरात्र्याद्युपवासो नित्यः। एकादशीशब्दे शिवरात्र्यादि शब्दे च तत्प्रमाणं द्रष्टव्यम्। काम्यस्तु “अमावस्या द्वादशी च संक्रान्तिश्च विशेषतः। एताः प्रशस्तास्तिथयो भानुवारस्तथैव च। अत्र स्नानं जपो होमो देवतानाञ्च पूजनम्। उपवासस्तथा दानमेकैकं पावनं स्मृतम्” सं० “सप्त वारानुपोष्यैव सप्तधा संयतेन्द्रियः। सप्तजन्मकृतं पापं तत्क्षणादेव नाशयेत्” सं०प्रदी० “नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः। चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु। अहोरात्रोषितः स्नानं दानं होमं तथा जपम्। यः करोति प्रसन्नात्मा तस्य स्यादक्षयञ्च तत्” ब्रह्मपु० इत्यादौ विहितः तत्रायनविषवत्तुनित्य इति भेदः। नैमित्तिकः प्रायश्चित्तरूपः “त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परञ्च नाश्नीयात् प्राजापत्यं चरन् द्विजः” मन्वादिविहितः एवमन्यान्यपि प्रायश्चित्तविधायकानि वाक्यानि स्मृतितोज्ञेयानि

तत्र काम्ये सर्व्वशक्तिमानधिकारी भवतीत्युक्तेः सर्व्वाङ्गोपेतस्यैवाधिकारः। नित्ये तु यथाकथञ्चिदनुष्ठानमिति समर्थितम् एका०त० “एवञ्चैकादशीव्रतस्य नित्यत्वात् किञ्चिदङ्गवैकल्येऽपि प्रधानोपवासादेराचरणं यावज्जीवाधिकरणन्यायात्। स च न्यायोयथा “यावज्जीवमग्निहोत्रं जुहुयादिति श्रूयते तत्र किं सर्वाङ्गोपसंहारेणैवाधिकारः उत यावज्जीवपदेन यावन्ति शक्नोत्युपसंहर्त्तुं यदा तदा तावद्भिरङ्गैरुपेतं प्रधानं कुर्वन्नधिकरोतीति संशयः। तत्राद्ये सर्वाङ्गोपेतस्य प्रधानस्य फलसाधनत्वादङ्गवैकल्ये फलानुदयात् सर्वाङ्गोपसंहार इति पूर्वपक्षः तत्र सिद्धान्तः “सायं प्रातर्जुहोतीति” श्रुतेः सायंप्रातःकालावच्छिन्नं जीवनमग्निहोत्रस्य निमित्ततया श्रूयते नत्वङ्गानां, सति निमित्ते नैमित्तिकमवश्यंभावि अन्यथा निमित्तत्वासम्भवात्। अतोऽशक्याङ्गपरित्यागेन प्रधानं कर्त्तव्यम् तावतैव शास्त्रार्थात् फलसिद्धिरिति अतएव नैमित्तिकाधिकारे औचरस्मामिष्टता श्रुतिः “यथा शक्नुयात्तथा कुर्य्यादिति”। बौधायनोऽपि स्मरति। “यथा कथञ्चिन्नित्यानि शक्यवस्तुनिरूपतः। येन केनापि कार्य्याणि नैव नित्यानि लोपयेत्”।

असमर्थस्यानुकल्पेनाप्याचरणम् अनुकल्पश्च कर्त्तृद्रव्यादिषु प्रतिनिधिरूपः तत्राह मनुः। “विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः। आपत्सु मरणाद्भीतैर्विधिः प्रतिनिधिः कृतः। प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते। न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्”। अत्रापत्प्रतिनिध्यनुकल्पानां पर्यायता। कालविवेकधृतवराहपुराणे “उपवासासमर्थस्तु किञ्चिद्भक्ष्यं प्रयोजयेत्” तथा एकादशीमधिकृत्य स्मृतिः “एकभक्तेन नक्तेन भक्षन् वृद्धातुरः क्षिपेत्” नारदीये “अनुकल्पोन्नृणां प्रोक्तः क्षीणानां वरवर्णिनि!। मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभम्। नत्वेवं भोजनं कैश्चिदेकादश्यां प्रकीर्त्तितम्”। एवमनुकल्पासामर्थ्ये ब्रह्मवैवर्त्तः। “उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत। तावद्धनानि वा दद्यात् यद्भक्ताद्द्विगुणं भवेत्। सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमान्। कुर्य्याद्द्वादशसंख्याकान् यथाशक्ति व्रते नरः”। देवीं गायत्रीम्। वायुपुराणे “उपवासनिषेधे तु किञ्चिद्भक्ष्यं प्रकल्पयेत्। न दुष्यत्युपवासेन उपवासफलं भवेत्। नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु वाज्यम्। यत् पञ्चगव्यं यदि वाथ वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च”। उपवासनिषेधे तु असामर्थ्यादिव हविष्यादिरनुकल्पः। तानि च “अष्टौ तान्यव्रतघ्नानि आपोमूलं फलं पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्” बौधायनः। एकादश्यतिरिक्तोपवासे अनुकल्पपक्षे विशेषः नि०सि०। “नित्य-

स्नायी मिताहारो गुरुदेवद्विजार्चकः। क्षारं क्षौद्रञ्च लवणम् मधुमांसानि वर्जयेत्” पृथ्वीच० अग्निपु०। क्षाराश्च तत्रैवोक्ताः “तिलमुद्गादृते शिम्बाः गसे गोधूमकोद्रवौ। धन्याकं देवधान्यञ्च शमीधान्यं तथैव च। शिम्बधान्यं तथा पक्वं मूलं क्षारगणाः स्मृताः” गोधूमस्य क्षारत्वेऽपि उपवासानुकल्पे प्रतिप्रसवस्तत्रैव “व्रीहिषष्टिकमुद्गाश्च कलायाः सतिलं पयः। श्यामाकश्चैव नीवारा गोधूमाद्या व्रते हिताः”। कुष्माण्डालाववार्त्ताकुपालङ्क्यज्योत्स्निका- स्त्यजेत्। चतुर्भिश्च सक्तुकणाः शाकं दधि घृतं मधु। श्यामाकशालिनीवारा यावकं मूलतत्फलम्। हविष्यं व्रतनक्तादावग्निकार्यादिके हितम्। मधुमांसं विहायान्यव्रते वा हितमीरितम्”। “चतुर्भिश्च सक्तुकणाया- वकशाकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरं प्रशस्तानि” मिता०गौत०। निर्णया० संप०। स्तेनहिंसकयोः सख्यम् कृत्वा सैन्यञ्च हिंसनम्। प्रायश्चित्तं व्रती कुर्यात् जपन्नामशतत्रयम्। मिथ्यावादे दिवास्वापे बहुशोऽम्बुनिषेवणे। अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः”। स्मृतएव समर्थस्य किञ्चिद्भक्षणमपि भङ्क्त्वा निषिद्धम्। “उपवासो यदा राम! श्राद्धं नैमित्तिकं भवेत्। उपवासं तदा कुर्य्यादाघ्राय पितृसेवितमिति” काला०।

अथ कर्त्तृप्रतिनिधिः स्वयमशक्तौ प्रतिनिधिनाऽपि उपवासादिव्रतं कार्य्यमित्याह स्कन्दपु०। “पुत्रञ्च विनयोपेतं भगिनीं भ्रातरन्तथा। एषामभाव एवान्यं ब्राह्मणं विनियोजयेत्” गरुड़पुरा०। “भार्य्या भर्त्तुर्व्रतं कुर्य्याद्भार्य्यायाश्च पतिस्तथा। असामर्थ्ये द्वयोस्ताभ्यां व्रतभङ्गो न जायते”। वराहपुराणे “पितृमातृपतिभ्रातृश्वश्रूगुर्वादिभूभुजाम्। उद्देशार्थमुपोष्यैव स्वयञ्च फलभाग्भवेत्”।

अत्र नि०सि०त्रिकाण्डमण्डने विशेषः “काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः। काम्येऽप्युपक्रमादूर्द्ध्वं केचित् प्रतिनिधिं विदुः। न स्यात् प्रतिनिधिर्मन्त्रस्वामिदेवाग्निकर्म्मसु। न देशकालयोर्नास्ति नारणेरग्निरेव सा। नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित्”। ततश्च शक्तौ उपोषणादिकमनुकल्पादिना कार्य्यं पूजादिकं तु स्वयमसामर्थ्ये अन्येन कारयेदिति एका०त० रघु०।

नित्यकाम्ययोरुपवासयोरेव भेदः “उपवासफलं प्रेप्सुस्त्यजेत् भक्तचतुष्टयमिति” कालमा० भारतम् “अहोरात्रद्वयं निशे काम्ये भक्तचतुष्टयम्। सायमाद्यन्तयोर्भक्तमेकैकं मध्यमे द्वयम्” एका०त० स्मृतिः। अत्र सायमित्यस्य एकभोजनमात्रपरत्वम् तेन दैवात् पूर्व्वदिने दिवसाऽभोजने रात्रिभोजनेऽपि न फलाप्राप्तिः “अहोरात्र्यन्तयोरेकमेकैकं मध्यतो द्वयम्। उपवासफलं प्रेप्सोर्वर्ज्यं भक्तच तुष्टयमिति” वाराहात्।

उपवासव्रतस्य वैधतया तत्तत्तिथेः पूर्व्वखण्डएव कर्त्तव्यता तन्निरूपणाय प्रतिपदमारभ्य खण्डविशेषनियमनं कालमा० दर्शितं तत्रादौ प्रतिपत्प्रकरणे यथोक्तं तदुच्यते ततो मार्गशिरे मासि प्रतिपद्यपरेऽहनि। इष्ट्वा गुरुञ्चोपवसेन्महादेवं भरत्नहरिति”। ननु पूर्व्वविद्धायां शुक्लप्रतिपदि योऽयदुपवासो विहितस्तस्य संकल्पः किं प्रातः कार्यः किं वा परत्र, नाद्य प्रातस्तदभावेन संकल्पायोगात्। अतएव बौधायनः “योयस्य विहितः कालः कर्मणस्तस्य पक्रमे। तिथिर्य्याऽभिमता सा तु कार्य्या नोपक्रमोज्झितेति” स्कन्दपुराणेऽपि “योयस्य विहितः कालः कर्मणस्तदुपक्रमे। विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु”(सश्विरार्थः)। न द्वितीयः प्रातःकालस्यैव संकल्पाङ्गत्वात् तथा च स्मर्यते “प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकमिति”। तथा “प्रातरारभ्य मतिमान् कुर्य्यान्नक्तव्रतादिकम्। नापराह्णे न मध्याह्ने पित्र्यौ कालौ हि तौ स्मृताविति”। अत्रोच्यते यथोक्तवचनबलात् प्रातरेव संकल्पः कार्यः तदानीं ज्योतिःशास्त्रप्रसिद्धप्रतिपदभावेऽपि स्मृतिभिरापादितायाः प्रतिपदः सत्त्वात् अतएव देवलः “यान्तिथिं समनुप्राप्य अस्तं याति दिवाकरः। तिथिः सा सकला ज्ञेया दानाध्ययनकर्मस्विति” अत्र दानाध्ययनयोरुपवासादिनिखिलदैवोपलक्षणार्थत्वविवक्षया कर्म्मस्विति बहुवचनं निर्दिष्टम्। अतास्तमयात् पूर्व्वं मुहूर्त्तत्रयव्यापिनीं तिथिं समनुप्राप्येति व्याख्येयम्। न तु ततोऽल्पव्याप्तिर्विवक्षिता तथा सति पूर्व्वोत्तरवेधाभावेनोत्तरतिथेरेव ग्राह्यत्वप्रसङ्गात् तथा च त्रिमुहूर्त्तव्याप्तिः स्कन्दपुराणे दर्शिता। “यान्तिथिं समनुप्राप्य यात्यस्तं पद्मिनीप्रियः। सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्त्ता यदा भवेदिति”। शिवरहस्यसौरपुराणयोरपि “यां प्राप्यास्तमुपैत्यर्कः सा चेत् स्यात्त्रिमुहूर्त्तिका। धर्म्मकृत्येषु सर्व्वेषु संपूर्णां तां विदुर्बुधाः” इति। एतद्द्विशिष्टोऽपि “यस्यान्तिथावस्तमियात् सूर्य्यस्तु त्रिमुहूर्त्तकैः। यामदानजपादिभ्यस्तामेवोपक्रमेत् तिथिमिति”। ननु सायन्तनत्रिमुहूर्त्तशुक्लप्रतिपदुपेतायां तिथौ प्रातरेव संकल्प्य प्रतिपदुपवासः कार्य इति युष्मादिवचनमाश्रित्य निर्णीतं तत्तिथिक्षये तथाऽस्तु ह्रासवृद्धोस्तु सर्व्वादि

वाक्यात्परेद्युरुपवासः प्राप्नोतीति चेत् मैवं खर्वादिवाक्यस्यैकोद्दिष्टादिविषयत्वात् तथा च व्यासः "द्वितीयादिकयुग्मानां पूज्यता नियमादिषु। एकोद्दिष्टादि वृद्ध्यादौ ह्रासवृद्ध्यादि नोदनेति" नियमादिष्वित्यादिशब्देन पित्र्यकर्मव्यतिरिक्तव्रतोपवासादिसकलकर्मणोग्रहणम्, एकोद्दिष्टादीत्यादिशब्देन विवाहादिमङ्गलाङ्गभूतश्राद्धव्यतिरिक्तपार्वणश्राद्धस्य, वृद्ध्यादावित्यादिशब्देन माङ्गलिकश्राद्धस्य, ह्रासवृद्ध्यादीत्यादिशब्देन ययास्तमित्यादिशास्त्रस्य"। पूर्वाह्णवाक्यस्य सामान्यरूपत्वेन परविद्धोपवासविषयतया संकोचनीयत्वादिति तत्रोक्ते र्न पूर्वाह्णादिशास्त्रवैयर्थ्यम्। एतदेवाभिप्रेत्य निगमे श्रूयते। "पूर्वविद्धासु तिथिषु भेषु च श्रवणं विना। उपोष्य विधिवत् कुर्य्यात्तदन्ते चैव पारणमिति"। भेषु नक्षत्रेषु स्कान्दपुराणेऽपि। "तिथीनामेव सर्वासामुपवासव्रतादिषु। तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीम्"। अत्रोपवासव्रतादिष्वित्यादिशब्देनैकभक्तानक्तायाचितानि गृह्यन्ते।यान्तिथिमुद्दिश्यैतानि पूर्वेद्युर्विहितानि परेद्युस्तत्तिथिभागे समाप्ते पश्चाद्भोजनं कार्यम् अन्यथा पूर्व्वदिनानुष्ठितैकभक्तादिव्रतानां वैकल्यं स्यादित्यभिप्रायः। अस्य च तिथिभान्तपारणस्यापवादः क्वचित् स्मर्यते। "तिथ्यन्ते चैव भान्ते च पारणं यत्र नोद्यते। यामत्रयोर्द्ध्वगामिन्यां प्रातरेव हि पारणमिति"। तदलाभे उदयगामिन्याः पूज्यता यथाह तत्रैव देवलः।"यान्तिथिं समनुप्राप्य उदयं याति भास्करः। सा तिथिः सकला ज्ञेया स्नानदानजपादिषु"ति" व्यासोऽपि "उदयन्नेव सविता यां तिथिं प्रतिपद्यते। सा तिथिः सकला ज्ञेया दानाध्ययनकर्मस्विति"। भविष्योत्तरपुराणेऽपि। "व्रतोपवासनियमे घटिकैका यदोदये। सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकीति"। पद्मपुराणेऽपि "व्रतोपवासनियमे घटिकैका यदा भवेत्। उदये सा तिथिस्तत्र विपरीता तु पैतृके" इति। स्कान्दपुराणेऽपि "व्रतोपवासस्नानादौ घटिकैका यदा भवेत्। उदये सा तिथिर्ग्राह्या विपरीता तु पैतृक" इति। विष्णुधर्मोत्तरेऽपि व्रतोपवासस्नानादौ घटिकैका यदा भवेत्। उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी"। बौधायनोऽपि "आदित्योदयवेलायां याऽल्पापि च तिथिर्भवेत् पूर्णा इत्येव सा ज्ञेया प्रभूता नोदयं विनेति" अत्रमा०। "नन्वस्त्वेवं तत्तद्दिवसाभ्यनुज्ञा। तथाप्युत्तरविद्धायास्तिथेर्ग्रहणे कियत्परिमाणमुदयेऽपेक्षणीयमिति विवेचनीयम्। तत्र बौधायनेनाल्पापीत्यभिधानात् निमेषमात्रं प्रतिभाति। तथा व्यासवाक्येऽपि प्रतिभाति उदयन्नेवेत्यभिधानात्। भविष्योत्पुराणादिवचनेषु घटिकामात्रं प्रतीयते। वचनान्तरे तु विष्णुधर्मोत्तरबौधायनप्रोक्तं घटिकाचतुष्टयं प्रतिभासते। तथा च पठ्यते। "उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ" द्विमुहूर्त्ता त्रिमुहूर्त्ता सा तिथिर्हव्यकव्ययोरिति"। अस्यार्थः। भानावुदिते सत्युत्तरकालेऽह्नो मुहूर्त्तद्वयं दैवत्यं तस्मिंश्चास्तमिते ततः पूर्वकालीनमह्नोमुहूर्त्तत्रयं पितृदैवत्यम् अतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमेण हव्यकव्ययोर्ग्राह्या भवतीति"। तत्रैवान्यत्र "पौर्वाह्णिकादिवचनेन दैवे पूर्वाह्णव्याप्तायास्त्रिमुहूर्त्तपरिमितायास्तिथेर्ग्रहणं त्रिमुहूर्त्तन्यूनायास्तिथेः पूर्वाह्णव्याप्त्यभावात् पूर्वाह्णस्य पञ्चधा विभक्तस्य मुख्यत्वादुदिते भानौ त्रिमूर्त्ता तिथिर्ग्रहीतव्या। यत्तु दक्षेणोक्तं "त्रिमुहूर्त्ताऽपि नोकार्य्या यातिथ्युदयगामिनीति" न तत् त्रिमुहूर्त्तव्याप्तेर्बाधकं प्रत्युतोपोद्बलकमेव। तथा हि प्रतिषेधः सर्वत्र प्रसक्तिपूर्वकः प्रसक्तिश्च यथोक्तरीत्या पौर्वाह्णिकवाक्याद्वा त्रिमुहूर्त्तवेधविधायिपैठीनसिवाक्याद्वा भवति तच्च प्रसक्तं त्रिमुहूर्त्तत्वं समतिथौ बाधकाभावात्तथैव व्यवतिष्ठते तिथिक्षये त्वधिकव्याप्तिविवक्षया प्रतिषिध्यते। अतश्च तत्र चतुर्थमुहूर्त्तस्पर्शिनी तिथिर्ग्राह्या तिथिसाम्यवृद्ध्योर्वृद्धावपि मुहूर्त्तत्रयमेव मुख्यं मुहूर्त्तद्वयं त्वनुकल्पः। एतदेव सूचयितुं त्रिमुहूर्त्तापीत्यपिशब्दः पठ्यते"। तत्रैव स्थलान्तरे स्मृत्यन्तरे "एकादशी तथा षष्ठी अमावास्या चतुर्थिका। उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः"। शिवगीतायाम् वृद्धवशिष्ठः "द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी। चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी" द्वितीयादयः स्ववेधेन पूर्वामुत्तराञ्च हन्युरित्याह। तेन प्रतिपद् द्वितीयायुक्ता उपवासे निषिद्धा। "प्रतिपत् सद्वितीया स्याद् -द्वितीया प्रतिपद्युतेति" आपस्तम्बवाक्यं कृष्णप्रतिपद्विषयम् उपवासातिरिक्तदैवकर्मपरं चेति माधवः। उपवासस्याहोरात्रसाध्यत्वेन खण्डतिथौ संपूर्णकालव्याप्त्यसम्भवेन व्याप्तिबाहुल्यं पूर्वविद्धायामेव सम्भवति अह्नोऽपरभागे सकलरात्रौ च तद्व्याप्तेः। "उदये सा तिथिर्ग्राह्येति सामान्यशास्त्रस्य विशेषशास्त्राद्दुर्बलत्वम् ततश्च अपराह्णादित्रिमुहूर्त्तव्यापिन्येव पूर्वविद्धा उपोष्येति माधवमते स्थितम्। रघुनन्दनमते तु "पञ्चमी सप्तमी चैव दशमी च त्रयोदशी।

प्रतिपन्नवमी चैव कर्त्तव्या साम्मुखी तिथिः”। पैठी०उक्तेः “साम्मुख्यं नाम सायाह्नव्यापिनी दृश्यते यदा” इतिस्कन्दपुराणोक्तसाम्मुख्ययुक्तायाः प्रतिपदोग्राह्यता सायाह्नव्याप्तिश्च मुहूर्त्तान्यूनत्वेन ग्राह्यमिति । उभयदिने तत्प्राप्तौ त्रिसन्ध्यव्यापित्वे तु परैवोपोष्या “त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः। न तत्र युग्मादरणमन्यत्र हरिवासरादिति” पराशरवाक्येन तदपवादः एतच्च जयन्तीशिवरात्र्यादि विशेषेतरपरमिति ति०त०तेनोक्तम् । अत्र प्रागुक्तविशेषवचनानुसारिमाधवमतमेव न्याय्यः। गौडादृतमपि रघुनन्दनमतन्तु सामान्यशास्त्रानुसारित्वाद् दुर्बलमिति सुधीभिरपक्षपातिभिर्विवेच्यम् ।

अन्यासु तिथिषु व्यवस्था तु तत एवावगन्तव्या दिङ्मात्रमिह दर्शितम् तिथिशब्दे विवृतिः। उपवासे दीयते कार्यं वा वुद्दा० अण्। औपवास तत्र देये तत्र कार्ये च त्रि०। तस्मै प्रभवति विमुक्ता०ठञ्। औपवासिक तस्मै पर्याप्ते त्रि०।

**उपवासक** त्रि० उप+वस–ण्वुल्। १अनाहारकारिणि। उपवासे हितम् कन्। २व्रतभेदे त्रि० “नैव यज्ञक्रियाः काश्चिन्न श्राद्धं नोपवासकम्” भा० २०४ अ०।

**उपवासन** न० उप+वास–उपसेवायाम् भावे ल्युट्। उपसेवने। “यदा सन्ध्यामुपाधाने यद्दोपवासने कृतम्” अथ० १४,२,६३।

**उपवासिन्** त्रि० उप+वस–णिनि। अनाहारकर्त्तरि “दिनोपवासी तु निशामिषाशी जटाधरः सन् कुलटाभिलाषी” हास्यार्णवः “विमानैर्हंससंयुक्तैर्यान्ति मासोपवासिनः” भा० व० १६६ अ०।

**उपवाहन** न० उप+वह–णिच्–भावे ल्युट्। समीपनयने।

**उपवाह्य** पु० उप उत्कर्षे प्रा०स०। राजवाह्यहस्तिनि हेम०

**उपविद्** स्त्री उप+विन्दते: वेत्तेर्वा सम्प० क्विप्। १उपलम्भे प्राप्तौ २ज्ञाने च “उपविदा वह्निर्विन्दते वसु” ऋ० ८,२३,३। “उपविदा उपवेदनेनैते हवींषि देवार्थं न प्रयच्छन्तीत्येतज्ज्ञानेन” भा०। कर्त्तरि क्विप्। ३प्राप्तरि ४बोद्धरि च त्रि०।

**उपविन्दु** पु० उपगतो विन्दुम् अत्या०स०। राजभेदे तस्यापत्यम् बाह्वा० इञ्। औपविन्दवि तदपत्ये पुंस्त्री०।

**उपविष** पु० उपमितं विषेण अवा०स०। “अर्कक्षीरं स्नुहीक्षीरं तथैव कलिहारिका। धत्तूरः करवीरश्च पञ्च चोपविषाः स्मृताः” इत्युक्तेषु १अर्कक्षीरादिषु २कृत्रिमविष न० हेम०। ३अतिविषायां (आतइच्) स्त्री।

**उपविष्ट** त्रि० उप+विश–कर्त्तरि क्त। कृतोपवेशने “उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः” कात्या० १,२,७।

**उपवीणि** वीणया उपगायति उप+वीणा+णिच् नामधातुः सक०उभ०सेट्। उपवीणयति ते उपाविवीणत् त। उपवीणयाम् बभूव आस चकार चक्रे उपवीणित: “श्रितगोकर्णनिकेतमीश्वरम् उपवीणयितुं ययौ रवेरुदयावृत्तिपथेन नारदः” रघुः।

**उपवीत** न० उप+व्ये–क्त संप्र०। वह्निर्भूतदक्षिणहस्ततया वामांसस्थापिते कार्पासादि यज्ञसूत्रे। तच्च त्रिगुणीकृतस्य सूत्रस्य पुनस्त्रैगुण्ये भवति यथाह छन्दो०-प० “ऊर्द्ध्वं तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतम्। त्रिवृतञ्चोपवीतं स्यात् तस्यैकोग्रन्थिरिष्यते”। तथा च प्रथमं ऊर्द्ध्ववर्त्तनेन सूत्रत्रयमेकीकृत्य पुनस्तथाभूतसूत्रत्रयस्याध आवर्त्तनेन नवसूत्रात्मकमेकत्र पिण्डीकृतं भवति तच्च पुनस्त्रिवृतमसंवृतरूपेण पिण्डीकृतमेकग्रन्थियुक्तमेकमुपवीतं भवति। व्यक्तमाह देवलः “यज्ञोपवीतकं कुर्यात् सूत्राणि नव तन्तवः” इति। तद्द्वयमेव सर्व्वदा धार्य्यम् उत्तरीयवस्त्राभावे तु तत्त्रितयं धार्य्यम् “यज्ञोपवीते द्वे धार्य्ये श्रौते स्मार्त्ते च कर्म्मणि। तृतीयमुत्तरीयार्थं वस्त्राभावेऽतिदिश्यते” आ०त० स्मृतेः। तद्ग्रन्थिश्च सावित्रीमन्त्रेण कार्य्यः “सावित्रीग्रन्थिसंयुक्तमुपवीतं तवाच्युत” विष्णुपूजने ब्रह्मपुराणात् “लौकिकास्तु सावित्रीग्रन्थिःप्रवरसंख्यावेष्टितग्रन्थिरित्याहुः” आ०त०रघु० अत्र सावित्रीग्रन्थिरित्युक्तेः देवपूजादौ सावित्रीग्रन्थिः देवान्यत्र सावित्रीग्रन्थि ब्रह्मग्रन्थिर्वेति शाखिभेदाद्व्यवस्था। तत्सूत्रभेदश्च मनुना वर्णभेदेन उक्तः “कार्पासमुपवीतं स्यात् विप्रस्योर्द्ध्ववृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्”। “ऊर्द्ध्ववृतं दक्षिणावर्त्तितम्” कुल्लू०। इदञ्चोपनयनकाले उत्तरकाले तु सर्वेषामेव कार्पासमयमिति भेदः। क्रमेणान्तु यथेच्छसूत्रमयम् अत एव माघे “विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः। कृतोपवीतं हिमशुभ्रमुच्चकैः” “मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कला: कुमारे च वर्णितम्।

यद्यप्युपनयनप्रकरणे उपवीतधारणं गृह्यसूत्रादौ न विहितं तथापि प्रागुक्तमनुवचने “मेखलामजिनं दण्डमुपवीतं कमण्डलुम्। अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत्” इति मनुवचने समन्त्रकधारणविधानात् “सदोपवीतिना भाव्य

मिति स्मृतेः "दण्डाजिनोपवीतञ्च मेखलाञ्चैव धारयेत्" याज्ञ० वाक्यात् "पवित्रं चास्मै प्रयच्छतीति" जातकर्म्मवाक्यात् तद्धारणमवश्यं कार्य्यमिति गम्यते। किञ्च गृह्यकारेणापि कर्मविशेषे यज्ञोपवीतधारणनियमोऽभिहित: "यज्ञोपवीतशौचे च" आश्व० गृ० १, १, १० "मानुषपैतृकव्यतिरिक्ते कर्ममात्रे उपवीतधारणनियमः" ना० वृ०। "यज्ञोपवीतिना आचान्तेन कृत्यमिति" गोभिलसूत्रे च तथा नियम्यते। "यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनेह्यामि" भट्टभाष्यधृतमन्त्रलिङ्गात् "यज्ञोपवीतिनं कुर्य्यादिति" सांख्यायनगृह्याच्च "वैणवीं धारयेद्यष्टिं सोदकञ्च कमण्डलुम्। यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले" इति मानवाच्च तद्धारणविधिः। "यज्ञोपवीतं परमं पवित्रम् बृहस्पतेर्यत् सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः" इति मन्त्रोक्तफलमेव तद्धारणे ज्ञेयम्। तथाभूते २वस्त्रे च

न केवलं यज्ञसूत्रस्यैव तथात्वं तथानिवेशितस्य वस्त्रस्यापि तथात्वम् "दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येऽंसे प्रतिष्ठापयति दक्षिणं कक्षमवलम्बनं भवति एवं यज्ञोपवीती भवति सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेऽंसे प्रतिष्ठापयति सव्यं कक्षमवलम्बनं भवत्येवं प्राचीनावीती भवति, निवीती कण्ठसज्जन इति" गोभिलेन सामान्यतोऽभिधानात् "शिरोऽवधाय दक्षिणादिपाणावनुद्धृते कण्ठादेव सज्जने ऋजु प्रालम्बे यज्ञसूत्रे वस्त्रे च निवीती भवति" कुल्लू०उक्तेः मनुना "उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः। सव्ये तु प्राचीनावीती निवीती कण्ठसज्जने" इति सामान्यतोऽभिधानाच्च। उपवीतमस्यास्ति इनि। उपवीतिन् तथासन्निवेशितसूत्रवस्त्रधारिणि। उपवीतस्य वस्त्रादिसंनिवेशविशेषरूपस्य प्राकरणिकाङ्गता मीमांसायां ३अ० १पादे निर्णीता यथा "दर्शपौर्णमासयोः ७। ८ब्राह्मणानुवाकयोः सामधेन्य उक्ता नवमे निविदः दशमे काम्याः सामधेनीकल्पाः, एकादशे यज्ञोपवीतमाम्नातम्। "उपव्ययते देवलक्ष्मैव तत् कुरुते" इति श्रुतिवाक्यार्थस्य उपवीतं सामधेनीनां प्रकरणे निवृत्तेऽनिवृत्ते वा इति सन्देहे सामधेनीप्रकरणमनिवृत्तं तत्र उपवीतं समाम्नातमिति कुतः? काम्यानां सामधेनीकल्पानामानन्तर्य्यवचनात् हृदयमनुविपरिवर्त्तमानासु सामधेनीषु उपवीतमामनन्ति कर्त्तुश्च वासो विन्यासमात्रं गुणो भवति उपवीतं नाम, किं कुर्वता तत्कर्त्तव्यमिति? भवति तत्र पदार्थाकाङ्क्षा तत्र बुद्धौ सन्निहितेनाविप्रकृष्टेन सामधेनीवाक्येन एकवाक्यतारूपगम्य सामधेनीषु उपवीतम् उपव्ययते इति यज्ञोविदधाति इति गम्यते इति पूर्व्वपक्षः। सिद्धान्ते तु निविदा व्यवधानात् बुद्ध्या विप्रकृष्टत्वाच्च वाक्यभेदभिया च न सामधेनीभिः सहैकवाक्यतोपवीतस्य, तस्मात् दर्शादिप्रकरणे यदनुष्ठेयं तदुपवीतिना कार्य्यम् इति"। श्रुतौ उपव्ययते इति श्रवणात् उपपूर्वकात् व्येञ एव रूपमुपवीतमिति तु न्याय्यमित्यन्यदुपेक्षितम्। अजधातुरूपोक्तिः श्रुत्यदर्शनात् प्रामादिकी।

**उपवृंहित** त्रि० उप+वृन्ह–णिच्–कर्म्मणि क्त। १वर्द्धिते बहुलं करोति बहुल+णिच्–बृंहादेशे क्त। २बहुलीकृते अत्रार्थे वर्ग्यबादिरयमिति भेदः।

**उपवेणा** स्त्री उपगता वेणाम् अत्या०स०। नदीभेदे "वेणोपवेणा भीमा च बड़वा चैव भारत"। भा०व०२२१ अ०।

**उपवेद** पु० उपमितः वेदेन अवा०स०। वेदसदृशे आयुर्वेदादौ। स च वेदभेदेन चतुर्द्धा "तत्रर्ग्वेदस्यायुर्वेद उपवेदः, यजुर्वेदस्य धनुर्वेदः, सामवेदस्य गान्धर्ववेदः, अथर्ववेदस्य शस्त्रशास्त्राणीति" शौनकोक्तचरणव्यूहोक्तादिशावसेयः। भावप्रकाशमते तु "विधाताथर्वसर्वस्वमायुर्वेदं प्रकाशयन्" इत्युक्तेः अथर्ववेदोपवेदत्वमायुर्वेदस्येति भेदः। अतएव सुश्रुते "इह खल्वायुर्वेदोनाम यदुपाङ्गमथर्ववेदस्येत्युक्तम्"

**उपवेश** पु० उप+विश–भावे घञ्। (वसा) १स्थितौ "प्रातः सवने जुहोति संवेशायोपवेशाय गायत्र्यै छन्दसेऽभिभूत्यै स्वाहा" कात्या०२५, ४, १६, उपमितोवेशेन अवा०स०। आहार्यरूपवेशसदृशे २वेशे। तेन जीवति ३वेतनादि०ठञ्। औपवेशिक तेनोपजीविनि त्रि० स्त्रियां ङीप्।

**उपवेशन** न० उप+विश–भावे ल्युट्। (वसा) १आसने "प्रायोपवेशनमतिर्न्नृपतिर्बभूव" रघुः। "अन्वासितमरुन्धत्या" रघुव्या० "पश्चादुपवेशनेनोपसेवितम्" मल्लि०। "प्रादेशोपवेशने" आश्व०श्रौ०४, ८, २, "ब्रह्मोपवेशने विनियोगः" भवदेवः णिच्–भावे ल्युट्। निवेशने २स्थापने च

**उपवेशि** पु० उप+विश–इन्। यजुर्वेदसम्प्रदायप्रवर्त्तके ऋषिभेदे "अरुणादरुण उपवेशेरुपवेशिः" शत०ब्रा०१४, ६, ४, ३३, वंशवर्णने उक्तम्। [पविष्टे।

**उपवेशिन्** त्रि० उप+विश–णिनि। उपवेशनकर्त्तरि उ-

**उपवेष** पु० उप+विष–करणे घञ्। अङ्गारविभजनार्थे काष्ठे "स उपवेषमादत्ते धृष्टिरसीति" शत०ब्रा०१, २, १२, अङ्गारविभजनार्थं काष्ठविशेष उपवेषः" भा० सचारत्निमात्रः प्रा-

देशमात्रो वा तत्करणप्रकार: "मूलादुपवेषं करोति" का० ४,१,१२, दर्शित: "प्रथमं तुष्णीं शाखामूलमरत्निप्रमाणाधिकप्रमाणं छित्त्वा पृथक् कार्यं ततस्तस्मादुपवेषं करोति उपवेषश्चारत्निमात्रः प्रादेशमात्रो वा पराशरोक्तः" कर्कः । स च हस्ताकृतिः "धृष्टिरसीत्युपवेषमादायापाग्न इत्यङ्गारान् प्राच करोति" कात्या० २,४,२६, व्या० उपवेषोऽङ्गारापोहनसमर्थं हस्ताकृति काष्ठम्" कर्कोक्तेः "धृतावभिवासयति भस्मना वेदेनोपवेषेण वा" कात्या० २,५,२५,

**उपवैणव** न० उपवेणु—अण् उत्तरपदवृद्धिः । त्रिसन्ध्ये हेम०

**उपव्याख्यान** न० उप+वि+आ+ख्या—ल्युट् । फलमाहात्म्योपासनप्रकारादिकथने । "ओमित्युद्गायति तस्योपव्याख्यानम्" छा० उ० "तस्याक्षरस्योपव्याख्यानम् एवमुपासनम्, एवं विभूति, एवं फलमित्यादिकथनम्" शा० भा० । "आदित्या ब्रह्मेत्यादेशस्तस्योपव्याख्यानम्" "ओमित्येतदक्षरं सर्वं तस्योपव्याख्यानम्" इति च छा० उ० ।

**उपव्याघ्र** पु० उपमितो व्याघ्रेण उपा० स० । १व्याघ्रतुल्ये मृगान्तके (चिताबाघ) चित्रकाख्ये पशुभेदे । सामीप्ये अव्ययी० । २व्याघ्रसमीपे अव्य० ।

**उपव्युषस** अव्य० विगता उषाः व्युषाः प्रा० स० ततः विभक्त्यर्थे सामीप्ये वा अव्ययी० अच् समा० । विगतायामुषसीत्यर्थे "उपव्युषसं सशरीरा दक्षिणा गच्छन्ति" कात्या० २१,३,१२, "उषसि विगच्छन्त्याम्" कर्कः । २विगच्छन्त्या उषसः समीपे च ।

**उपशम** पु० उप+शम—घञ् अवृद्धिः । १इन्द्रियाणां निग्रहे २तृष्णानाशे, ३रोगोपद्रवशान्तौ च । "तेषां पैत्तिकानां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां, निदाघे वातिकानां घनात्यये स्वभावत एव त एते सञ्चयप्रकोपोपशमाः" "तत्कालमेव क्षतोष्मणः प्रकृतस्योपशमार्थम्" इति च सुश्रु० । ४निवृत्तौ "जगत्युपशमं याते नष्टयज्ञोत्सवाकुले" भा० व० २० अ० ।

**उपशमन** न० उप+शम—भावे ल्युट् । उपशमार्थे "व्याधीनामुपशमनार्थम्" सुश्रु० । उप+शम—णिच्-ल्युट् । अवृद्धिः २निवारणे । तस्मै हितम् छ । उपशमनीय रोगशान्तिहेतौ आयुर्वेदे । कर्म्मणि अनीयर् । निवारणीये । "कटुकौषधिशमनीयस्य" सा० द० ।

**उपशय** पु० उप+शी—अच् । १समीपशयने । "हेतुव्याधिविपर्य्यासविपर्य्यस्तार्थकारिणाम् । औषधान्नविहाराणामुपयोगं सुखावहम् । विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः" इति निदानोक्ते व्याधिहेतुविपरीतौषधादितः २सुखावहोपयोगे । शयः हस्तः तस्मिन् तत्सामीप्ये वा अव्ययी० । ३हस्ते इत्यर्थे ४हस्तसमीपे च अव्य० ।

**उपशरद** अव्य० विभक्त्यर्थे सामीप्ये वा अव्ययी० अच् समा० । १शरदि इत्यर्थे २शरत्समीपे च

**उपशल्य** न० उपगतं शल्यम् अस्थिस्थानं (भागाड़) अत्या० स० । ग्रामान्ते "क्रमं च विशालोपशल्ये कमप्याक्रीडमासाद्य" दशकुमा० । "उपशल्यनिविष्टैस्तैः" "अथोपशल्ये रिपुमग्नशल्यः" रघुः । उपचारात् २प्रान्तभागे च । "शैलोपशल्यनिपतद्रथनेमिधारा" इति माघः ।

**उपशान्ति** स्त्री उप+शम—क्तिन् । निवृत्तौ उपशमे । "बलमार्त्तभयोपशान्तये" रघुः "वेदनोपशान्तिरुक्प्रसादो मार्द्दवञ्च" सुश्रु० । ["निशोपशायः कर्त्तव्यः" भट्टिः ।

**उपशाय** पु० उप+शी-घञ् । यामिकभटानां पर्य्यायेण शयने ।

**उपशायिन्** त्रि० उप+शी-णिनि । समीपशयनशीले "ब्रह्मचार्य्यग्निनित्यधारी क्षीरहोम्यग्निमुपशायी द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः" कात्या० ४,१०,१६, "अग्निमुपशायी अग्निसमीप एव भूमीशयः" कर्कः । शीलार्थत्वात् नात्र कर्म्मणि षष्ठी । "आहूताध्यायी गुरुकर्म्मस्वचोद्यः पूर्व्वोत्थायी चरमं चोपशायी । मृदुर्दान्तो धृतिमानप्रमत्तः स्वाध्यायशील: सिध्यति ब्रह्मचारी" भा० आ० ९१अ०

**उपशिक्षा** स्त्री उप+शिक्ष—अ । सम्यक्शिक्षणे "उपशिक्षाया अभिप्रश्निनम्" यजु० ३०,१०, ल्युट् । उपशिक्षण तत्रार्थे न०

**उपशिङ्घन** न० उप+शिघि—आघ्राणे ल्युट् । १आघ्राणे । णिच्-ल्युट् । २आघ्रापणव्यापारे च । (शोञान) "तीक्ष्णाञ्जनावपीडाभ्यां तीक्ष्णगन्धोपशिङ्घनैः । वर्त्तिप्रयोगैरथ वा क्षवशक्तिं प्रवर्त्तयेत्" सुश्रु० । तत्र सिङ्घनैः शिंहनैरिति वा पाठः प्रामादिकः गणपाठे शिघिधातोरेव पाठात् सिघिधातोर्हान्तशिंहधातोश्चाभावाच्च ।

**उपशिष्य** पु० उपगतः शिष्यम् अत्या० स० । शिष्यशिष्ये "स्वतःप्रमाणं परतःप्रमाणं शुकाङ्गना यत्र सङ्गिरन्ति । शिष्योपशिष्यैरुपगीयमानमवेहि तन्मण्डनमिश्रधाम" उद्भ०

**उपशुन** अव्य० शुनि, तस्य समीपे वा अव्ययी० अच् समा० । १कुक्कुर इत्यर्थे २कुक्कुरस्य सामीप्ये वा ।

**उपशोभ** स्त्री उपगता शोभां सादृश्येन अत्या० स० । आरोपितशोभायाम् "विहितोपशोभमुपयाति माधवे" माघः ।

**उपशोषण** न० उप+शुष-णिच्—ल्युट् । १शोषणसाधने व्यापारे । उपशोषयति कर्त्तरि ल्यु । २तत्कारके त्रि०

(कटुकः) "विस्रस्रतक्लेदमेदोऽसृक्पूयोपशोषणश्चेति" (कषायः) "क्लेदोपशोषणश्चेति" सुश्रु०। शोषणश्चान्तःस्थितजलादेर्वातोष्मादिना नाशनम्।

**उपश्रुत्** पु० श्रूयते श्रु+सम्प० क्विप् श्रुत् स्तुतिः उपगता श्रुद् यस्मिन्। यज्ञे "आ नो यातमुपश्रुत्यश्विना" ऋ० ८, ८, ५, "उपश्रुति यज्ञे" भा०

**उपश्रुति** स्त्री उप+श्रु—क्तिन्। १समीपश्रवणे "सुश्रुतिश्च मोपश्रुतिश्च मा हासिष्टाम्" अथ० १६, २, ५, "सोमपा गिरामुपश्रुतिः" ऋ० १, १०, ३, "उपश्रुतिः समीपे श्रवणम्" भा० श्रुतिः श्रवणम् समीप्ये अव्ययी०। २श्रवणसमीपे "आ नो याह्युपश्रुत्युक्थेषु" ऋ० ८, ३४, ११, उपश्रुति श्रवणसमीपमायाहि" भा० "नक्तं निर्गत्य यत्किञ्चित् शुभाशुभकरं वचः। श्रूयते तद्विदुर्धीरा देवप्रश्नमुपश्रुतिम्" हारावल्युक्ते ३देवं प्रति कृतशुभाशुभप्रश्नस्य तदाविष्टबालादिभिर्हठादुक्ते उत्तरवाक्ये च "परिजनोऽपि चास्याः सततमुपश्रुत्यै निर्जगाम" काद०। उपश्रुतिश्रवणप्रकारश्च विधानपा०यज्ञकाण्डे दर्शितो यथा "उपश्रुतौ विधानं तु यथा कार्यं फलार्थिना। ज्ञातव्या यज्ञकर्मान्ते सा पौरमुखजा दिः। अन्त्यजानां गृहे वाक्यं पूर्वरात्रे यदुच्यते। स्त्रिया वा बालकैर्वापि तथा पुम्भिः परस्परम्। विचार्य तद्वचस्त्वमादेष्टव्यं फलं बुधैः। निर्णेजकालये पश्येत् प्रतिपद्येव बुद्धिमान्। मद्यकृत्सदने पश्येत् द्वितीयायां न संशयः। तैलविक्रयिणो गेहे पुक्कसस्य तथालये। लोहकृत्सदने चैव किंशुकानां गृहे तथा। मद्यकारिगृहे चैव तथा वेश्यागृहेऽपि च। योगिजातिकुले पश्येत्तथा पौष्कलगेहके। सिन्दोलकगृहे पश्येत् कुम्भकारगृहे तथा। स्वर्णकारालये चैव कापालिकद्विजन्मनोः। तृतीयादितिथौ ज्ञेया क्रमेणोपश्रुतिर्भवेत्। अमायां शूद्रजातीनां गृहे पश्येदुपश्रुतिम्"। पश्येत् शुभाशुभमालोचयेत्। तत्र क्रमश्च। "उपास्य पश्चिमां सन्ध्यां स्वरत्नालङ्कृतः सुधीः। स्वस्तिवाच्य द्विजान् गच्छेद्बहुधन्यैर्मुदान्वितः। चन्दनेनानुलिप्ताङ्गः श्वेतमाल्यधरः शुचिः। श्वेतवस्त्रसमायुक्तो धृतहेमविभूषणः। अक्षतानञ्जलौ धृत्वा मन्त्रेणानेन मन्त्रितान्। ओँ ऐँ ह्रीँ श्रीँ महादेवि! महादेवस्य वल्लभे!। विमोहय जनान् सर्वान् ममात्र वशगान् कुरु। वस्त्रेण बद्धनेत्रः सन्नीयतेऽन्येन तद्गृहम्। गृहोपरि परिक्षिप्य मुक्तनेत्रः श्रुतिर्भवेत्"। "तद्गृहे मनुष्यशब्दान् यदि शृणुयात्। तच्छुभमशुभं वा विचार्यादेष्टव्यम्। तेषु शब्देषु कसरान्वर्जयित्वान्यशब्दादिवर्णाः श्रेष्ठाः। प्रयाहि गृहाण गच्छ भवति अर्थार्जनार्था दानार्था लाभार्थाः साधुशब्दाः प्रशस्ताः तेष्वपि काकार्था दुष्टाः न याहि न गच्छ नास्ति भवत्यर्था अयानशब्दाश्च गमने दुष्टाः तच्छब्दान् शृण्वन् यात्रां निवर्त्तयेत्। अत्युत्कटकार्ये तु द्विराचम्य कुलदेवतां संस्मृत्य मुहूर्त्तं तिष्ठन् गच्छेत्। वैन्यं पृथुं हैहयमित्यादि पठन् पुनरपि निषिद्धप्रयाणश्चेत् घृतादिभिस्तदा सिद्धिविनायकव्रतोपयाचितं संकल्प्य गच्छेत्। तत्रापि निषिद्धश्चेन्न गच्छेदेव" वि०पा०।

**उपश्लेष** पु० उप ईषदर्थे एकदेशेन श्लेषः संबन्धः। आधाराधेययोरेकदेशसंबन्धे। यथा गृहघटयोः। उपश्लेषे साधु ठक्। औपश्लेषिक आधारभेदे "औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा" सि०कौ०। भावे ल्युट्। उपश्लेषण तत्रैव न० "अत्याधानमुपश्लेषणम्" सि०कौ०।

**उपश्लोकि** श्लोकैरुपस्तौति उप+श्लोक+णिच् नामधातुः उभ०सक० सेट्। उपश्लोकयति-ते उपाशुश्लोकत्-त उपश्लोकयाम्-बभूव-आस-चकार-चक्रे उपश्लोकयन् उपश्लोकितः उपश्लोकयितुम् उपश्लोकनम्।

**उपष्टम्भ** पु० उप+स्तम्भ-घञ् वा०षत्वम्। १पतनप्रतिरोधे (थामान) २आलम्बने ३आडम्बरे च स्वार्थे कन्। तत्रार्थे ४आधिक्ये च। उपस्तभ्नाति ण्वुल्। उपष्टम्भक पतनप्रतिरोधके, स्थूणायां न० "सर्व एव द्विप्रकारोऽन्तःप्राणः उपष्टम्भकः" छा०उ० "उपष्टम्भकः गृहस्येव स्तम्भादिलक्षणः" भा०।

**उपष्टुत्** त्रि० उप+स्तु-कर्मणि क्विप् वा०षत्वम्। उपस्तूयमाने "शचीव स्तवता उपष्टुत्" ऋ० ६, ८७, ६,

**उपसं(सङ्)क्रमण** न० उप+सम्+क्रम-भावे ल्युट् वा ङः। १सन्निवेशे कस्यचित् वस्तुनः पूर्वाधारत्यागेन समीपस्थितवस्तुनि संक्रमणे "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे" इत्यादौ विशिष्टे विधिनिषेधबाधे तद्धर्मविशेषणे उपसंक्रमणं भवतीत्युक्तं यथा शिखी विनष्टः पुरुषो न नष्ट इत्यत्र विशेषणीभूतशिखायामेव नाशस्योपसंक्रमणम्। उपसंक्रमणे दीयते कार्यं वा व्युष्टा०अण्। औपसंक्रमण तत्र देये कार्ये त्रि०। स्त्रियां ङीप्।

**उपसं(सङ्)ग्रह** पु० उपसंगृह्यते पादावत्र उप+सम्-ग्रह-आधारे अच् वा ङः। १पादग्रहणपूर्वकमभिवादने उपसंगृह्यतेऽनेन करणे अच्। २उपकरणे "उपातिष्ठत मेधाभिः

पर्य्यङ्के सोपसंग्रहे" भा०वि०१७अ०। भावे अच्। ३सम्यक् संग्रहे "बलानामुपसंग्रहः" रामा०

**उपसं(सङ्ग्र)ग्रहण** न० उप+सम्+ग्रह—आधारे ल्युट् वा ङः। पादग्रहणपूर्व्वकप्रणामे "उपसंग्रहणं कृत्वा द्रोणाय स विशांपते" भा०द्रो०७४अ० "व्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः" मनुः। २सम्यक् संग्रहणे च।

**उपसं(सङ्ग्रा)ग्राह्य** त्रि० उप+सम्+ग्रह—कर्म्मणि ण्यत् वा ङः। पादग्रहणेन अभिवाद्ये "भ्रातुर्भार्य्योपसंग्राह्या सवर्णाऽहन्यहन्यपि। विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः" मनुः। [२सम्यग्नियमे ३बन्धने च।

**उपसंयम** पु० उप+सम्+यम—घञ् अवृद्धिः। १उपसंहारे।

**उपसंयमन** न० उप+सम्+यम-णिच् ल्युट्। १सम्यग्बन्धने करणे ल्युट्। २तत्साधने।

**उपसंयोग** पु० सामीप्येन संयोगः। समीपसंबन्धे। "नामाख्यातयोस्तु कर्म्मोपसंयोगद्योतका भवन्ति उपसर्गाः" व्या०

**उपसंरोह** पु० उपगतः संरोहः प्रा०स०। समीपप्ररोहे "शल्यमार्गानुपसंरोहः" सुश्रु०।

**उपसंवाद** पु० उपेत्य अङ्गीकृत्य संवादोवदनम्। पणबन्धेनाङ्गीकारपूर्व्वककथने उपसंवादाशङ्कयोश्च" पा०। "उपसंवादः पणबन्धः" सि०कौ०। स च "यदि भवानिदं कुर्य्यात् तर्हि इदमहं ते दास्यामीत्येवं वाक्यरूपः।

**उपसंव्यान** न० उपसंवीयतेऽनेन उप+सम्+व्येञ्—संवृतौ करणे ल्युट्। परिधानवस्त्रे "अन्तरं बहिर्योगोपसंव्यानयोः" पा०।

**उपसंहार** पु०उप+सम्+हृ—घञ्। १समाप्तौ, स च ग्रन्थतात्पर्य्यावधारकलिङ्गभेदः "उपक्रमोपसंहारौ—हेतुस्तात्पर्य्यनिर्णये, इत्युक्तेः। तत्रोभयोरेव तद्धेतुत्वं न तु प्रत्येकस्येत्युक्तमुपक्रमशब्दे। २संग्रहे च। ३सम्यग्हरणे ४एकत्र श्रुतार्थस्यान्यत्रान्वयार्थमुपनयने यथा गुणोपसंहारः। तच्छब्दे विवृतिः। ५साकल्येन सम्बन्धे "सर्वोपसंहारवत्याव्याप्तेर्दुर्ज्ञानत्वात्" सर्व०स०।

**उपसंहारिन्** त्रि० उप+सम्+—हृ—णिनि। १उपसंहारके साकल्येन सम्बन्धेन व्याप्ते अनुपसंहारिशब्दे उदा०।

**उपसङ्ख्यान** न० उपरि सूत्रोक्तादतिरिक्तार्थः संख्यायते अनेन उप+सम्+ख्या—करणे—ल्युट्। सूत्रानुक्तस्यार्थस्य वार्त्तिकादिभिः कथने वाक्यभेदे। "प्रकृत्यादिभ्य उपसंख्यानमित्यादि" वार्त्तिके भूरिप्रयोगः। "इष्टत्र्युपसंख्यानवतीः शुद्धिः" पद्मा। इत्युपसंख्याननैरपेक्ष्येण" २,११२,माघव्या० मल्लिनाथः।

**उपसत्ति** स्त्री उप+सद—भावे क्तिन्। १नैकट्येन सम्बन्धे २आनुगत्ये ३सम्बन्धमात्रे च। करणे क्तिन्। ४सेवायाम् मेदि०।

**उपसत्तृ** त्रि० उप+सद-तृच्। १आसन्ने निकटस्थिते २अनुगते ३सेवके च। "मा च रिषदुपसत्ता ते अग्ने!" "त्वमग्ने सुयममस्तु तुभ्यमुपसत्ता" यजु०२७.२.४, उपसत्ता सेवकः वेददी०।

**उपसद्** त्रि० उपसीदति उप+सद—क्विप्। १समीपस्थिते। "प्रकामोद्यायोपसदम्" यजु०३०.९.करणे क्विप्। २इष्टिभेदे स्त्री। सा चेष्टिः "अथोपसद्" आश्व०श्रौ०४.८.१, आरभ्य प्राग्वंशोपसदः" इत्यन्तेषु ११सूत्रेषु उक्ता द्रष्टव्या। "अथोपसद्भिः प्रचरति" "यदोपसद्भिः प्रचरति अथैतानि हवींषि निर्वपति आग्नेयमष्टाकपालं पुरोडाशं सौम्यं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन यथेष्ट्यैवं यजते। तद्व तथा न कुर्य्यात् ह्वलति वा एष यो यज्ञपथादेत्येति वा एष यज्ञपथाद्य उपसत्पथाद्वेति तस्मादुपसत्पथादेव नेयात्" शत०५,४,५,१६, "अत्र दशपेयेतं ब्रह्मादहे स्थापितं सोममाहृत्यामन्द्रामासद्यां तथ्यया प्रचरेयुः तदनन्तरमुपसद्यागः तत्राग्निसोमविष्णु देवता कोपसत्प्रतिनिधित्वेन संस्थयागसम्बन्धिनामुत्तमानां त्रयाणामाग्नेय सौम्यवैष्णवानामेव निर्वापं पूर्वपक्षयति यदोपसद्भिरिति। तेन यथेष्टीति एकैकोपसत्स्थाने तेन एकेन हविषा यथेष्टि इष्टितन्त्रेण कुर्यात् उपसत्त्रयार्थमेतद्धविस्त्रयं कर्त्तव्यमिति शाखान्तरीयः पक्षः। तमिमं निराकरोति तद्व तथेति। नेयात् न प्रच्युतोभवेत् तत उपसदः पृथक् कुर्य्यात् तदन्त एतानि संस्थापामन्तिमानि त्रीणि हवींषि चेष्टितन्त्रेण पृथक् कुर्य्यात् स एष दशपेयः क्रतुः सप्तदशस्तोमसाध्योऽग्निष्टोमसंस्थोभवति भा०। "उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोति" श्रुतिः। "रूपमुपसदामेतत्तिस्रोरात्रीः यजु० १९,१४, "उपसत्सु रौहिणौ कुर्य्यात्" कात्या०४,६,४४,"उपांशूपसदः। ७,२,२२,। ज्योतिष्टोमे ३प्रवर्ग्याङ्गहविर्द्वयाश्रितौ ४गार्हपत्यादिभिन्नेऽग्नौ च। "गार्हपत्योदक्षिणाग्निस्तथैवा हवनीयकः। एतेऽग्नयस्त्रयो मुख्याः शेषाश्चोपसदस्त्रयः" अग्नि पु० गणभेदनामाध्याये। उपसद् तच्छब्दोऽस्त्यस्मिन् विमक्ता०अण्। औपसद तच्छब्दयुक्ते स्वाध्याये अनुवाके च पु०।

**उपसद** पु० उपसीदत्यस्मिन् उप+सद—वेदे बा० घञर्थे क। उपसद्यागे "अथ यदश्नाति यत् पिबति यद्रमते तदुपसदै

रेति” छा०उ०। “यद्रमते रतिञ्चानुभवति इष्टादि संयोगात्तदुपसदैः समानतामेति उपसदाञ्च पयोव्रतनिमित्तं सुखमस्ति अल्पभोजनीयानि चाहानि आसन्नानीति प्रश्वासोऽशनादीनामुपसदाञ्च सामान्यम्” शा०भा०। “पयोव्रतत्वं पयोभक्षण,मात्रम् यज्ञे यान्यहान्यभोजनीयानि तानि प्रसिद्धानि उपसत्सु क्रियमाणासु प्रश्वासः स्वास्थ्यविशेषः अशनादिषु सोऽस्तीति प्रसिद्धमित्यङ्गसुखनिमित्तत्वं क्लेशहेतुत्वञ्च सामान्यम्” आ०गि०

**उपसदन** न०उप+सद–ल्युट्। १सेवायामुपसेवने २आनुगत्यादिना प्राप्तौ “तत्रोपसदनं चक्रे द्रोणस्येषुस्त्रकर्म्मणि” भा० व० २०८ अ० “प्रतिगृह्य च तान् सर्वान् द्रोणस्यैवं समब्रवीत्। रहस्येकः प्रतीतात्मा कृतोपसदनांस्तथा” आ० १३२अ०सामीप्ये अव्ययी०। ३गृहसमीपे अव्य०। “धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव!। यज्ञोपसदनं ब्रह्मन् प्राप्तोऽसि मुनिभिः सह” रामा०। अत्राव्ययीभावस्यापि यत्नेन समासः आर्षः।

**उपसदी** स्त्री उप+सद–घञर्थे क गौ० ङीष्। सन्ततौ धारायाम्। ‘स्वगृहेऽस्योपसद्यां मा च्छैत्सीत् प्रजाता च पशुभिश्चाशितम् शत०१४,९,४,२२। अस्य यजमानस्य उपसद्यां सन्ततौ” भा०। सन्ततिश्च द्वेधा कालिकी दैशिकी च। तत्र समानानेककालिककार्य्यमात्रधर्मत्वं कालिकसन्ततित्वम्। विभिन्नकालीनघटपटादिकार्य्यमात्रवृत्तिधर्मघटत्वादौ सन्ततित्ववारणाय समानेति सामान्यञ्चान्वयितावच्छेदकधर्मेण। तेन सत्त्वद्रव्यत्वादिना घटपटयोः समत्वेऽपि न क्षतिः। सत्त्वद्रव्यत्वादिकमादाय तद्वारणाय कार्य्यमात्रेति। एककालोत्पन्नेषु बहुषु घटेषु तद्वारणाय अनेककालिकेति। दैशिकसन्ततित्वञ्च समानानेकवृत्ति कार्य्यमात्रधर्मत्वमितिभेदः। तत्र कालिकसन्ततेः प्रवाहादिपदेन व्यपदेशः यथा ज्ञानप्रवाहः, दुःखप्रवाहः इत्यादि दैशिकसन्ततौ तु श्रेणिप्रभृतिशब्दव्यवहारः यथा वृक्षश्रेणी वृक्षपङ्क्तिरित्यादि। उभयसन्ततौ तु सन्ततिधारादि शब्दप्रयोगः यथा ज्ञानधारा सुखधारा दुःखसन्ततिरित्यादि एवं जलधारा तैलधारा तैलसन्ततिरित्यादि। तादृशधर्मश्च सुखत्वदुःखत्वज्ञानत्वादिकं वृक्षत्वतैलत्वादिकञ्च। उभयविधापि सन्ततिःपुनर्द्विविधा अविच्छिन्ना विच्छिन्ना च देशकालयोरव्यवधानेऽविच्छिन्ना यथा धारावाहिक स्थले ज्ञानादिधारा। तयोर्व्यवधाने विच्छिन्ना यथा विच्छिद्य विच्छिद्य जायमानदुःखानाम्। विच्छिन्नसन्ततिमादायैव वृष्टिप्रवाहः। सुखदुःखसन्ततिरित्यादिव्यवहारः।

**उपसद्य** त्रि०उपसदं सेवामर्हति यत् उप+सद–कर्म्मणि वा० यत् वा। १सेवनीये २नैकट्येन प्राप्ये च “भरेषु हव्यो नमसोपसद्योगन्ता” ऋ० २,२३,१३। “उपसद्याय मीढुष आस्ये जुहुता हविः” ऋ० ७,१५,१।

**उपसद्वन्** त्रि० उप+सद–ङ्वनिप् स्त्रियां ङीप् वश्चान्तादेशः। १उपसन्ने २सेवके च। कर्म्मणि ङ्वनिप्। ३सेव्ये च। “नमस्ते अस्तु मीढुषे नमस्त उपसद्वने” अा०श्री०२,५,६।

**उपसद्व्रत** न० उपसत्सु विहितं व्रतम्। उपसद्विहिते पयोव्रते। “आपूर्य्यमाणपक्षस्य द्वादशाहमुपसद्व्रती भूत्वा” वृ०उ०। ‘उपसत्सु व्रतमुपसद्व्रतमुपसदः प्रसिद्धाः ज्योतिष्टोमे। तत्र स्तनोपचयापचयद्वारेण पयोभक्षणं व्रतं तत्र च तत्कर्मानुपसंहारात् केवलमिति कर्त्तव्यताशून्यं पयोभक्षणमात्रमुपादीयते। उपसद्व्रती पयोव्रती सन्नित्यर्थः शा०भा०।

**उपसन्न** त्रि० उप+सद–क्त। १उपस्थिते, २निकटागते ३उपसेवके च ४आनुगत्येन नैकट्यप्राप्ते “ब्रवीतु भगवांस्तन्मे उपसन्नोऽस्म्यधीहि भोः” भा०शा०२८९ अ०। “भगवन्नुदधौ मृतिजन्मजले सुखदुःखझषे पतितं व्यथितम्। कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम्”“तस्मै स विद्वानुपसन्नाय–प्रोवाच तत्त्वतो ब्रह्मविद्याम्”श्रुतिः।

**उपसमाधान** न० उप+सम–आ–धा–ल्युट्। राशीकरणे, “निवासचितिशरीरोपसमाधानेत्यादि”पा०। “उपसमाधानं राशीकरणम्”सि०कौ०। २समिधः प्रक्षिप्य ज्वालने। “विवाहाग्निमुपसमाधाय पश्चादस्याः” आश्व०गृ०१,८,९, “उपसमाधाय समिधःप्रक्षिप्य प्रज्वाल्य” ना०वृत्तौ। अग्निमुपसमाधाय”गो०सू०“उपसमाधाय ज्वालयित्वेति सं तत्त्वे च समापूर्व्वधाञ्धातोस्तथार्थदर्शनात् तथार्थत्वम्।

**उपसमिध(ध्)** अव्य०समिधः समीपे अव्ययी०वा अच्समा०। समिधः समीपे।

**उपसम्पत्ति** स्त्री उप+सम्+पद–क्तिन्। अभिनवत्वेन सम्पत्तौ। “प्रथमोऽचिरोपसम्पत्तौ” पा०“अभिसम्पत्तौ अभिनवत्वे”सि०कौ०। सम्पत्तिश्चानुरूपात्मभावः सि०कौ०

**उपसम्पन्न** त्रि०उप+सम्–पद+क्त। १प्राप्ते २मृते च हेम०। “श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्” मनुः।

**उपसम्भाषा** स्त्री उप+सम्+भाष–भावे अ। उपसान्त्वने। ‘भाषणोपसंभाषाज्ञानयत्नेत्यादि” पा० “उपसम्भाषा उपसान्त्वनम्” सि०कौ०।

**उपसर** पु॰ उप+सृ "प्रजनने सर्त्तेः" पा॰ अच्। गर्भग्रहणार्थं स्त्रीपशुषु पुम्पशुगमने। "प्रजननं प्रथमगर्भग्रहणम्। गवामुपसरः" सि॰कौ॰। उपचारात् २नैरन्तर्य्येणनिगमने "वीनामुपसरं दृष्ट्वा" भट्टिः "वीनामुपसरं नैरन्तर्य्येण निर्गमनम् दृष्ट्वा उपसर इव उपसरः नैरन्तर्य्यमात्रेणोपलक्षितत्वात् उपसरो हि स्त्रीगवीषु पुङ्गवानामभिगमनमुच्यते स च नैरन्तर्य्येण भवति" जय मङ्गलः।

**उपसरण** न॰उप+सृ–ल्युट्। १उपसरार्थे २समीपगमने च। "यस्तूर्द्ध्वमधो वा भेषजवेगं प्रवृत्तमत्यर्थाद्विनिहन्ति तस्योपसरणं हृदि कुर्व्वन्ति दोषाः" "परिस्रावः प्रवाहिका हृदयोपसरणं विबन्धः" सुश्रु॰ कर्म्मणि ल्युट्। २उपसर्त्तव्ये उपगम्ये च। "अथ खल्वाशीःसम्पद्भिरुपसरणानीत्युपासीत" छा॰उ॰। "उपसरणानि उपसर्त्तव्यानि उपगन्तव्यानि ज्ञेयानि" भा॰।

**उपसर्ग** पु॰ उप+सृज–घञ्। १रोगविकारे २उपद्रवे, शुभाशुभसूचके ३दिव्यादिविकाररूपे उत्पाते, व्याकरणोक्तेषु "निपाताश्चादयोज्ञेयाः प्रादयस्तूपसर्गकाः। द्योतकत्वात् क्रियायोगे लोकादवगता इमे" इत्युक्तलक्षणेषु क्रियायोगे ४प्रादिषु च। "उपसर्गाः क्रियायोगे" पा॰। "यत्र प्रादीनामन्वयस्तं प्रत्येवोपसर्गतेतिद्योतनाय योगग्रहणम्। तेन निर्गतः सेचको यस्मादिति वाक्ये निःसेचक इत्यादौ न षत्वम्" शब्देन्दु॰। ते च द्वाविंशतिविधा यथा, प्र, परा अप, सम्, अनु, अव, निस्, निर् दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अति, प्रति, परि, उप एते प्रादयः। निस् दुस् इति सान्तौ "निसस्तपतावनासेवने" पा॰ सूत्रे निस इति निर्द्देशात्। निष्कृतं दुष्कृतमित्युदाहृत्य इदुदुपधस्य रो विसर्जनीयः" इति भाष्योक्तेश्च 'निरःकुष इति" "सुदुरोरधिकरणे" इति च पा॰निर्द्देशात् रान्तावपि" मनो॰। निर्दुरोरभेदारोपेण कचिद्विंशतिधाकथनं द्रष्टव्यम्। "तस्य त्रिधा प्रवृत्तिः "धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते। तमेव विशिनष्टन्य उपसर्गगतिस्त्रिधा। क्रमेणोदाहरणानि यथा। आदत्ते प्रस्तुते प्रणमतीति। अपि च। "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते। प्रहाराहारसंहारविहारपरिहारवत्"। "विभाषोपसर्गे" "द्व्यन्तरुपसर्गेभ्योऽपईत्" पा॰।

प्रादयस्तूपसर्गा न सार्थकाः, सार्थकाश्च चादयो निपाता वाचकत्वात् उपसर्गास्तु न तथा किन्तु द्योतका इति नैयायिकाः। वैयाकरणास्तु उभयेऽपि द्योतका इति मेनिरे तदेतत् वै॰भू॰दर्शितम् "प्रादयोद्योतकाश्चादयोवाचका इति नैयायिकमतमयुक्तम् वैषम्ये बीजाभावादिति ध्वनयन्निपातानां द्योतकत्वं समर्थयते। "द्योतकाः प्रादयो येन निपाताश्चादयस्तथा। उपास्येते हरिहरौ लकारोदृश्यते यथा" येन हेतुना प्रादयोद्योतकास्तेनैव हेतुना चादयोनिपातास्तथा द्योतका इत्यर्थः। अयं भावः। ईश्वरमनुभवतीत्यादावनुभवादि प्रतीयमानो न धात्वर्थः भवतीत्यत्राप्यापत्तेः। नोपसर्गार्थः तथा सत्यनुकत्यर्थतया तत्राख्यातार्थानन्वयापत्तेः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः अनुगच्छतीत्यादौ अनुभवादिप्रत्ययापत्तेश्च। न विशिष्टार्थः गौरवात्। तथा च धातोरेव विद्यमानत्वादिवाचकस्य लक्षणा उपसर्गस्तात्पर्य्यग्राहक इत्यस्तु। तथा च तात्पर्य्यग्राहकत्वमेव द्योतकत्वमिति। तच्च चादिष्वपि तुल्यम् चैत्रमिव पश्यतीत्यादौ सादृश्यविशिष्टं चैत्रपदलक्ष्यम् इवशब्दस्तात्पर्य्यग्राहक इत्यस्य सुवचत्वादिति। स्वयं युक्त्यन्तरमाह। उपास्येते इति। अत्र ह्युपासना किमुपसर्गार्थः ? विशिष्टस्य ? धातुमात्रस्य ? वा। नाद्यः तथा सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्याऽऽसधातोरुपासनारूपफलवाचकत्वेनाभावादकर्मकत्वापत्तेस्ततः कर्मणि लकारोन स्यात्। न द्वितीय गौरवात्। तृतीये त्वागतं द्योतकत्वं तात्पर्य्यग्राहकत्वलाभात् इति भावः। दृश्यते इत्यत्र कर्मणीति शेषः। तच्चादिष्वपि तुल्यमित्याह। "तथान्यत्र निपातेऽपि लकारः कर्म्मवाचकः। विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः"। (अन्यत्र) साक्षात्क्रियते अलङ्क्रियते उरीक्रियते शिव इत्यादौ। अत्रापि धातोस्तत्तदर्थे कर्म्मणि लकारसिद्ध्यर्थं तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गवद्द्योतकत्वमनीषामपीत्यर्थः। यद्यपि कृधातोः सकर्मकत्वमस्त्येव तथाप्येष्वर्थेषु सकर्मकता न स्यात्। अन्यथा वायुर्विकुरुते सैन्धवा विकुर्वत इत्यत्रापि स्यादिति भावः। अथोपासनासाक्षात्कारादि निपातार्थोऽस्तु "साक्षात्प्रत्यक्षतुल्ययोरिति" कोषस्वरसात् तदनुकूलोव्यापार एव धात्वर्थोऽस्तु स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवत्त्वं सकर्मकत्वमपि सुवचमिति दृष्टान्तदार्ष्टान्तिकावयुक्ताविति नेदं साधकमिति चेन्न नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयासम्भवेन निपातधात्वर्थयोरन्वयासम्भवात्। अन्यथा तण्डुलः पचतीत्यत्रापि कर्मतया तण्डुलानां धात्वर्थेऽन्वयापत्तेरिति। किञ्च प्रादीनां वाचकत्वे भूयान् प्रकर्षः कोटशोनिश्चय इतिवक्तु-

यान् प्र, कीदृशोनिरित्यपि स्यात् । अस्मन्मते प्रादेरनर्थकत्वान्न तदन्वय इत्यत एव द्योतकता तेषां स्यादिति । साधकान्तरमभिप्रेत्याह । विशेषणेति । शोभनः सनुश्च योद्रष्टव्य इति वच्छोभनश्च द्रष्टव्य इत्यस्यान्वयापत्तेस्तुल्यसमाधेयत्वादिति भावः। अपि च निपातानां वाचकत्वे प्रातिपदिकार्थयोर्विना षष्ठ्यादिकं भेदेनान्वयासम्भवः । अन्यथा राजा पुरुष इत्यस्य राजसम्बन्धी पुरुष इत्यर्थापत्तेरित्यभिप्रेत्याह आदोति । धवखदिरयोः समुच्चय इति वद्धवस्य च खदिरस्य चेत्येव स्यादिति भावः । ननु प्रातिपदिकार्थयोरभेदान्वयबोधे विभक्तिजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावो निपातातिरिक्तविषय एवेति नोक्तदोष इत्याशङ्क्याह ।"पदार्थः सदृशान्वेति विभागेन कदा च न। निपातेतरसङ्कोचे प्रमाणं किं विभावय" । (सदृशा) सदृशेन समानाधिकरणेनेति यावत् । (अन्वेति)अभेदेनेति शेषः । (विभागेन) असदृशेन असमानाधिकरणेनेति यावत् । अयमर्थः समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिर्निपातातिरिक्तविषयेति कल्पने मानाभावोगौरवञ्च । अस्माकं निपातानां द्योतकत्वादन्वय एव नास्तीति नायं दोषः अतएव घटोनास्तीत्यादौ घटपदं तत्प्रतियोगिके लाक्षणिकमिति नैयायिकाः। अपि च निपातानां वाचकत्वे काव्यादावन्वयोन स्यादिति साधकान्तरमाह । "शरैरुस्रैरिवोदीच्यान् उद्धरिष्यन् रसानिव । इत्यादावन्वयोन स्यात् प्राज्ञ श्रवणं ततः" । अत्रोस्रसदृशैः शरैः रससदृशानुदीच्यानुद्धरिष्यन्नित्यर्थः । अयञ्चोस्रादिशब्दानां तत्सदृशपरत्वे इवशब्दस्य द्योतकत्वे च सङ्गच्छते । अन्यथा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधः । तथाहि । उस्रैरिति करणे तृतीया । न चोस्रोऽत्र करणम् इवार्थसदृशस्य करणत्वेऽपि तस्य करणत्वं नानेन बोधयितुं शक्यम् अप्रकृत्यर्थत्वात् । इवशब्दस्य चासत्त्वार्थकतया तदुत्तरतृतीयाया असम्भवात् । सम्भवे वा श्रवणप्रसङ्गात् । उस्रपदोत्तरतृतीयानन्वयप्रसङ्गाच्चेत्याह । सुपां चेति । सुपां श्रवणञ्चेत्यर्थः । चकारादुस्रपदोत्तरतृतीयानन्वयः समुच्चीयते इत्यादावित्यादिपदात् "वागर्थाविव सम्पृक्तौ वन्दे पार्वतीपरमेश्वरौ" इत्यत्र वागर्थयोर्वन्दिकर्मत्वाभावात्तदुत्तरद्वितीयाया अनन्वयः इवार्थस्य कर्मत्वान्वयबोधासम्भवश्च संगृह्यते । यदि च विशेषणविभक्तिरभेदार्था साधुत्वमात्रार्था वा तदापि इवशब्दस्य वाचकत्वेऽनन्वय एव उस्रसदृशशरयोः समानाधिकरणपदोपस्थाप्यतया भेदेनान्वयायोगात् । बाधादभेदेनापि न षः । नह्युस्राभिन्नसदृशाभिन्नः शर इत्यर्थ एष्टव्यः" ।

उत्पातरूप उपसर्गश्च त्रिविधः "अतिलोभादसत्याद्वा नास्तिक्याद्वाऽप्यधर्मतः । नरापचारान्नियतमुपसर्गः प्रवर्त्तते । अतोऽपचारान्नियतमपवर्ज्जन्ति देवताः । ताः सृजन्त्यद्भुतांस्तावद्दिव्यनाभसभूमिजान् । तएव त्रिविधा लोके उत्पाता देवनिर्म्मिताः । विचरन्ति विनाशाय रूपैः सम्भावयन्ति च" गर्गः । "उपसर्गस्तते चैव सद्यः शोषं विशोयते"पराश० । उपद्रवरोगकृताश्चोपसर्गा सुश्रु० उक्ताः "दैवबलप्रवृत्ता ये देवद्रोहादभिशस्तका अथर्वकृता उपसर्गकृताश्च तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च पुनश्च द्विविधाः संसर्गजा आकस्मिकाश्च" "उपसर्गादयोरोगा ये चाप्यागन्तवः स्मृताः" चीर्णं हन्युश्चोपसर्गाः प्रभूताः" सुश्रुतः उपद्रवशब्दे विवृतिः । "उपसर्गानशेषांस्तु महामारीसमुद्भवान् । तथा त्रिविधमुत्पातं माहात्म्यं च शमयेन्मम" देवीमा० । तस्मै प्रभवति सन्तापा० तेन निर्वृत्तम् वा ठञ् । औपसर्गिक तत्र पर्य्याप्ते तेन निर्वृत्ते च त्रि० । औपसर्गिकात्यन्तमरकपीडायाम् शु०त०।

**उपसर्ज्जन** त्रि० उप+सृज-ल्युट् । १दैवाद्युपद्रवे "निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्ज्जने" मनुः। २अप्रधाने गौणे-विशेषणे "वोपसर्ज्जनस्य" "गोस्त्रियोरुपसर्ज्जनस्य"पा०। "उपसर्ज्जनं प्रधानस्य धर्मतो नोपपद्यते" मनुः "उपसर्ज्जनमप्रधानम्" कुल्लू० । "अनुपसर्ज्जनात्" "आचार्य्योपसर्ज्जनश्चान्तेवासी" पा० उपसृजत्यनेन करणे ल्युट् । ३संमार्गसाधने त्रि०स्त्रियां ङीप् । "अथैक उपसर्ज्जनीभिरेभिः" शत०१,२,२,२, "पिष्टसमार्जनार्थासु अपस्तु पिष्टसमार्ज्जनार्थश्चोपसर्ग साधनानि उपसर्जन्यः" भा० "प्रथमानिर्द्दिष्टमुपसर्ज्जनम्"पा० उक्ते । समासविधायकशास्त्रे ४प्रथमान्तपदनिर्द्दिष्टे ।"एकविभक्ति चापूर्वनिपाते" विग्रहवाक्ये यन्नियतविभक्तिकं तदुपसर्जनसंज्ञम् इत्यर्थक पाणिनिसूत्रोक्ते ५शब्दभेदे च "उपसर्ज्जनं पूर्व्वम्"पा० समासे उपसर्ज्जनस्य पूर्व्वप्रयोगः यथा "द्वितीया श्रितेत्यादि" पा०सूत्रे द्वितीयेति प्रथमान्तम् पदं तदेव प्राक्प्रयोज्यम् यथा कष्टं श्रित इत्यादि वाक्ये कष्टश्रित इत्यादि

**उपसर्पण** न० उप+सृप-भावे ल्युट्। समीपगमने "न तावदयमुपसर्पणकालः" विक्र० । "मक्षिकोपसर्पणमात्रस्य-मित्यादि" सुश्रु० ।

**उपसर्पिन्** त्रि० उप+सृप-गतौ णिनि । समीपसन्तरि

"एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्" मनुः। "युक्तं मात्रा कृतं तेषां परपीड़ोपसर्पिणाम्" भा०अ०२०अ०।

**उपसर्य्या** स्त्री उपसृियतेऽसौ सृ-कर्म्मणि यत्। गर्भग्रहण-योग्यायाम् ऋतुमत्यां स्त्रीगव्यादौ। अप्रजनार्थे तु ण्यत् उपसार्य्य प्राप्ये त्रि०।

**उपसि** अव्य०उप+सो बा०कि। समीपस्थाने "आसीन ऊर्द्ध्वामुपसि क्षिणाति" ऋ०१०,२७,१३। "उपसि समीपस्थाने" भा० "पि नं पुत्र उपसि प्रेष्ठः" ऋ०५,४३,७।

**उपसीर** अव्य० सीरे हले तत्सामीप्यं वा अव्यय०। १हले इत्यर्थे २हलसमीपे वा। ततो भवार्थे परिमुखा० ञ्य। उपसीर्य्य तत्रभवे त्रि० अव्या०स०। हलोपगते त्रि० ततोभवार्थेऽण्। औपसीर तद्भवे त्रि०

**उपसुन्द** पु० दैत्यभेदे तत्कथा भा० आ० "महासुरस्यान्वाये हिरण्यकशिपोः पुरा। निकुम्भो नाम दैत्येन्द्रस्तेजस्वी बलवानभूत्। तस्य पुत्रौ महावीर्य्यौ जातौ भीमपराक्रमौ। सुन्दोपसुन्दौ दैत्येन्द्रौ दारुणौ क्रूरमानसौ। तावेकनिश्चयौ दैत्यावेककार्य्यार्थसम्मतौ। निरन्तरमवर्त्तेतां समदुःखसुखावुभौ। विनान्योन्यं न भुञ्जाते विनान्योन्यं न गच्छतः। अन्योन्यस्य प्रियकरावन्योन्यस्य प्रियंवदौ। एकशीलसमाचारौ द्विधैवैकं यथा कृतौ। तौ विवृद्धौ महावीर्य्यौ कार्य्येष्वेकनिश्चयौ। त्रैलोक्यविजयार्थाय समाधायैकनिश्चयौ। दीक्षां कृत्वा गतौ विन्ध्यं तावुग्रं तेपतुस्तपः। तौ तु दीर्घेण कालेन तपोयुक्तौ बभूवतुः। क्षुत्पिपासापरिश्रान्तौ जटावल्कलधारिणौ। मलोपचितसर्वाङ्गौ वायुभक्षौ बभूवतुः। आत्ममांसानि जुह्वन्तौ पादाङ्गुष्ठाग्रधिष्ठितौ। ऊर्द्ध्वबाहू चानिमिषौ दीर्घकालं धृतव्रतौ। तयोस्तपःप्रभावेण दीर्घकालं प्रतापितः। धूमं प्रमुमुचे विन्ध्यस्तदद्भुतमिवाभवत्। ततो देवा भयं जग्मुरुग्रं दृष्ट्वा तयोस्तपः। तपोविघातार्थमथो देवा विघ्नानि चक्रिरे। रत्नैः प्रलोभयामासुः स्त्रीभिश्चोभौ पुनः पुनः। न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ। अथ मायां पुनर्देवास्तयोश्चक्रुर्महात्मनोः। भगिन्यो मातरो भार्य्यास्तयोश्चात्मजनस्तथा। प्रपात्यमाना वित्रस्ताः शूलहस्तेन रक्षसा। भ्रष्टाभरणकेशान्ता भ्रष्टाभरणवाससः। अभिभाष्य ततः सर्वास्तौ त्राहीति विचुक्रुशुः। न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ। यदा क्षोभं नोपयाति नार्त्तिमन्यतरस्तयोः! ततः स्त्रियस्ता भूतञ्च सर्वमन्तरधीयत। ततः पितामहः साक्षादभिगम्य महासुरौ। वरेणच्छन्दयामास सर्वलोकहितः प्रभुः। ततः सुन्दोपसुन्दौ तौ भ्रातरौ दृढविक्रमौ। दृष्ट्वा पितामहं देवं तस्थतुः प्राञ्जली तदा। ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा। आवयोस्तपसाऽनेन यदि प्रीतः पितामहः। मायाविदावस्त्रविदौ बलिनौ कामरूपिणौ। उभावप्यमरौ स्याव प्रसन्नो यदि नौ प्रभुः। ब्रह्मोवाच। ऋतेऽमरत्वं युवयोः सर्वमुक्तं भविष्यति। अन्यद्वृणीतं मृत्योश्च विधानममरैः समम्। प्रभविष्याव इति यन्महदभ्युद्यतं तपः। युवयोर्हेतुनानेन नामरत्वं विधीयते। त्रैलोक्यविजयार्थाय भवद्भ्यामास्थितं तपः। हेतुनानेन दैत्येन्द्रौ न वां कामं करोम्यहम्। सुन्दोपसुन्दावूचतुः। त्रिषु लोकेषु यद्भूतं किञ्चित् स्थावरजङ्गमम्। सर्वस्मान्नो भयं न स्यादृतेऽन्योन्यं पितामह!। पितामह उवाच। यत्प्रार्थितं यथोक्तञ्च काममेतं ददानि वाम्। मृत्योर्विधानमेतच्च यथावद्वां भविष्यति। नारद उवाच। ततः पितामहो दत्त्वा वरमेतत्तदा तयोः। निवर्त्त्य तपसस्तौ च ब्रह्मलोकं जगाम ह। लब्ध्वा वराणि दैत्येन्द्रावथ तौ भ्रातरावुभौ। अवध्यौ सर्वलोकस्य स्वमेव भवनं गतौ" २११०अ० "तावन्तरीक्षमुत्पुत्य दैत्यौ कामगमावुभौ। देवानामेव भवनं जग्मतुर्युद्धदुर्म्मदौ। तयोरागमनं ज्ञात्वा वरदानञ्च तत् प्रभोः। हित्वा त्रिपिष्टपं जग्मुर्ब्रह्मलोकं ततः सुराः। ताविन्द्रलोकं निर्ज्जित्य यक्षरक्षोगणांस्तथा। खेचराण्यपि भूतानि जग्मतुस्तीव्रविक्रमौ। अन्तर्भूमिगतान् नागान् जित्वा तौ च महारथौ। समुद्रवासिनीः सर्वा म्लेच्छजातीर्विजिग्यतुः। ततः सर्वां महीं जेतुमारब्धावुग्रशासनौ। सैनिकांश्च समाहूय सुतीक्ष्णं वाक्यमूचतुः। राजर्षयो महायज्ञैर्हव्यकव्यैर्द्विजातयः। तेजो बलञ्च देवानां वर्द्धयन्ति श्रियं तथा। तेषामेवं प्रवृत्तानां सर्वेषामसुरद्विषाम्। सम्भूय सर्वैरस्माभिः कार्य्यः सर्वात्मना वधः। एवं सर्वान् समादिश्य पूर्वतीरे महोदधेः। क्रूरां मतिं समास्थाय जग्मतुः सर्वतोमुखौ। यज्ञैर्यजन्ति ये केचिद्याजयन्ति च ये द्विजाः। तान् सर्वान् प्रसभं हत्वा बलिनौ जग्मतुस्ततः। आश्रमेष्वग्निहोत्राणि मुनीनां भावितात्मनाम्। गृहीत्वा प्रक्षिपन्त्यप्सु विस्रब्धं सैनिकास्तयोः। तपोधनैश्च ये क्रुद्धैः शापा उक्ता महात्मभिः। नाक्रामन्त तयोस्तेऽपि वरदाननिराकृताः। नाक्रामन्त यदा शापा बाणा मुक्ताः शिलास्विव। नियमान् सम्परित्यज्य व्यद्रवन्त द्विजातयः। पृथिव्यां ये

तपःसिद्धा दान्ताः शमपरायणाः। तयोर्भयाद्द्रुवुस्ते वैनतेयादिवोरगाः। मथितैराश्रमैर्भग्नैर्विकीर्णकलशस्रुवैः। शून्यमासीत् जगत् सर्वं कालेनेव हृतं तदा। ततो राजन्नदृश्यद्भिर्ऋषिभिश्च महासुरौ। उभौ विनिश्चयं कृत्वा विकुर्वाते वधैषिणौ। प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जररूपिणौ। संलीनमपि दुर्गेषु निन्यतुर्यमसादनम्। सिंहौ भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावुभौ। तैस्तैरुपायैस्तौ क्रूरावृषीन् दृष्ट्वा निजघ्नतुः। निवृत्तयज्ञस्वाध्याया प्रनष्टनृपतिद्विजा। उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा। हाहाभूता भयार्त्ता च निवृत्तविपणापणा। निवृत्तदेवकार्य्या च पुण्योद्वाहविवर्ज्जिता। निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रमा। अस्थिकङ्कालसङ्कीर्णा भूर्बभूवोग्रदर्शना। निवृत्तपितृकार्य्यञ्च निर्वषट्कारमण्डलम्। जगत् प्रतिभयाकारं दुष्प्रेक्ष्यमभवत्तदा। चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौकसः। जग्मुर्विषादं तत् कर्म दृष्ट्वा सुन्दोपसुन्दयोः। एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्मणा। निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः” २११अ०। ततस्तिलोत्तमासृष्टिमुपवर्ण्य तस्यास्तत्समीपयानं तयोस्तदासक्तत्वमुक्त्वा तत्रान्योन्ययुद्धेनान्योन्यवधः २१२अ०उक्तः यथा “ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती। वेशमाक्षिप्तमाधाय रक्तेनैकेन वाससा। नदीतीरेषु जातान् सा कर्णिकारान् प्रचिन्वती। शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ। तौ तु पीत्वा परं पानं मदरक्तान्तलोचनौ। दृष्ट्वैव तां वरारोहां व्यथितौ सम्बभूवतुः। तावुत्थायासनं हित्वा जग्मतुर्यत्र सा स्थिता। उभौ च कामसम्मत्तावुभौ प्रार्थयतश्च ताम्। दक्षिणे तां करे सुभ्रूं सुन्दो जग्राह पाणिना। उपसुन्दोऽपि जग्राह वामे पाणौ तिलोत्तमाम्। वरप्रदानमत्तौ तावौरसेन बलेन च। धनरत्नमदाभ्याञ्च सुरापानमदेन च। सर्वैरेतैर्मदैर्मत्तावन्योन्यं भ्रुकुटीकृतौ। मदकामसमाविष्टौ परस्परमथोचतुः। मम भार्य्या तव गुरुरिति सुन्दोऽभ्यभाषत। मम भार्य्या तव वधूरुपसुन्दोऽभ्यभाषत। नैषा तव ममैषेति ततस्तौ मन्युराविशत्। तस्या रूपेण संमत्तौ विगतस्नेहसौहृदौ। तस्या हेतोर्गदे भीमे संगृह्णीतामुभौ तदा। प्रगृह्य च गदे भीमे तस्यां तौ काममोहितौ। अहंपूर्वमहंपूर्वमित्यन्योन्यं निजघ्नतुः। तौ गदाभिहतौ भीमौ पेततुर्धरणीतले। रुधिरेणावसिक्ताङ्गौ द्वाविवार्कौ नभश्च्युतौ”। सुन्दोपसुन्दाध्यायः।

**उपसूर्य्यक** न०उपगतं सूर्यं चन्द्रं वा संज्ञायां कन्। चन्द्रार्कसमीपे मण्डलाकारे परिधौ।

**उपसृष्ट** न०उप+सृज–क्त। १मैथुने। २व्याकरणोक्ते प्राद्युपसर्गयुक्ते, “क्रुधद्रुहोरुपसृष्टयोः” पा०। ३विसृष्टे ४उपद्रुते च त्रि०। ५ग्रहोपरक्ते चन्द्रेऽर्के पु०“नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन। नोपसृष्टं न वारिस्थं न मध्यं नभसोगतम्” मनुः ६कामुके “उपसृष्टा इव क्षुद्राधिष्ठितभवना” काद०। ७व्याप्ते च रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः” रघुः। [करणे।

**उपसेक** पु० उप+सिच–भावे घञ्। जलादिसेचनेन मृदू

**उपसेचन** त्रि० उप+सिच-ल्यु। उपसेककर्त्तरि “तयः कोशास उपसेचनासः” ऋ०७,१०१, ४.तृच्। उपसेक्तृ तत्रार्थे त्रि० “लोकेभ्य उपसेक्तारमवकृत्यै” यजु०३०, १२,स्त्रियां ङीप्। भावे ल्युट्।२उपसेके न०दुहन्त्यूधरुपसेचनाय कम्” ऋ०१०,७६,७, “पर्य्यूहणाद्योपसेचनात् कृत्वा” कात्या०८,५,२६, भा० कर्त्तरि ल्युट्। ३उपसेचके त्रि० स्त्रियां ङीप् “वेति त्वामुपसेचनी” ऋ०१०,२१,२, उपसेचनी उपरिक्षरणशीला आहुतिः भा०। करणे ल्युट्। ४तत्साधने

**उपसेवक** त्रि०उप+सेव–ण्वुल्। उपभोगादिना १सेवनासक्ते २भोगप्रसक्ते। “अदत्तादाननिरतः परदारोपसेवकः” याज्ञ० ३उपेत्य सेवके च।

**उपसेवन** न० उप+सेव–भावे ल्युट्। १उपभोगप्रसक्ते। “नहीदृशमनायुष्यं लोके किञ्चन विद्यते। यादृशं पुरुषस्येह परदारोपसेवनम्”मनुः २समीपस्थित्या सेवने च। “निरताहं सदा सत्ये! भर्तृणामुपसेवने” भा०व०२३२ अ०३तत्तत्कर्म्मणि अत्यन्तासक्तौ “अजीर्णाध्यशनाया-सविरुद्धान्नोपसेवनात्” “एवंविधानां द्रव्याणामन्येषाञ्चोपसेवनात्” सुश्रु०। भावे अ उपसेवा। तत्रार्थे स्त्री। “गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया”। “परदारोपसेवा च शारीरं त्रिविधं स्मृतम्” “विषयोपसेवा चाऽजस्रम्” मनुः।

**उपसेविन्** त्रि० उप+सेव–णिनि। उपसेवके “अभिवादनशीलस्य नित्यं वृद्धोपसेविनः। तेषां सततमज्ञानां विषयान्नुपसेविनाम्” मनुः। “ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः” पञ्चत०। “हृष्टात्मा पुलिनवनान्तरोपसेवी” सुश्रु०। स्त्रियां ङीप्।

**उपसोम** पु० उपगतः सोमम् अत्या०स०। सोमोपगते सोमयाजिनि। अत्र तत्पुरुषत्वात् द्व्यच्कत्वादन्तोदा-

सता । उपगतः सोमोऽनेन प्रा०ब० । तत्रार्थे सामीप्ये अव्ययी० । २सोमसामीप्ये अव्य० एतयोर्नान्तोदात्ततेति भेदः

**उपस्कर** पु० उप+कृ-भावे अप् हिंसने सुट् । १हिंसने उपस्करोति उप+कृ-अच् भूषणे समवाये प्रतियत्ने विकारे अध्याहारे च सुट् । २भूषके कटकवण्डलादौ ३समुदिते संहते । ४व्यञ्जनसंस्कारकपिष्टधन्याकादिद्रव्ये (वाटना) । गृहसंस्कारके ५सम्मार्जन्यादौ । ६विकृते अध्याहारेण ७कथके च "पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः" । "वक्रो भवति हुताग्निं यद्दकारी ह्युपस्करम्" मनुः ।

**उपस्करण** न० उप+कृ-भावे ल्युट् हिंसने सुट् । १हिंसने । उप+कृ-भावे ल्युट् उपस्करणशब्दोक्तभूषणादौ सुट् । २भूषणे ३संघाते ४सतोगुणान्तराधानरूपसंस्कारे ५विकारे ६वाक्याध्याहारे च । उभाभ्यां करणे ल्युट् । उक्तार्थतदर्थेषु सुट् । ७हिंसासाधने ८भूषणादिसाधने कटकादौ च न० ।

**उपस्कार** पु० उप+कृ-भावे घञ् उपस्कारशब्दोक्त भूषणादौ सुट् । १भूषणे २संहते ३प्रतियत्नरूपसंस्कारे ४विकारे ५अध्याहारे च ।"साकाङ्क्षमनुपस्कारं विष्वग्गति निराकुलम्" किरा० ।

**उपस्कीर्ण** त्रि० उप+कॄ-क्त हिंसने सुट् । हिंसिते

**उपस्कृत** त्रि० उप+कृ-क्त उपस्कारशब्दोक्तभूषणादौ सुट् । १भूषिते २संहते ३संस्कृते ४विकृते ५अध्याहृते च । भावे क्तिन् उक्तार्थेषु सुट् । उपस्कृति उपस्कारशब्दार्थे स्त्री । उप+कॄ-भावे क्तिन् हिंसने सुट् । उपस्कीर्णि हिंसने स्त्री ।

**उप(ष्ट)स्तम्भ** पु० उप+स्तन्भ घञ् । पतनप्रतिरोधने अवलम्बने "भूमिकस्योपस्त(ष्ट)म्भो केनापि कारणेनात्र भवितव्यम्" हितो० । नि०षत्वम् । उपष्टम्भ १उपष्टम्भशब्दार्थे २आलम्बने ३स्थितौ ४सहकारे च "स्थानात् बीजादुपष्टम्भात् प्रस्यन्दात् निधनादपि" पात० भा० गाथा । भावे ल्युट् । उपस्तम्भन तत्रैवार्थे न० । करणे ल्युट् । तत्साधने शकटाद्याधारकाष्ठे च "वरुणस्योत्तम्भनमसीत्युपस्तम्भनेनोपस्तभ्नाति" शत० ब्रा० ३,३,४,२५, "उपस्तभ्यते प्रतिबध्यते इत्युपस्तम्भनं शकटाद्याधारकाष्ठम्" भा० "देवानामिव्युपस्तम्भनस्य पश्चादीषाम्" कात्या० २,२,१४, "शकटस्य काष्ठमीषा तदग्रस्य भूमिस्पर्शो मा भूदिति तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनम्" वेददी० । ततो स्तुल् । उपस्त(ष्ट)म्भक वा नि०षत्वम् ।उपस्त(ष्ट)म्भकर्तरि आधिक्याधायके त्रि० ।

**उपस्तरण** न० उप+स्तॄ-ल्युट् । १आस्तरणे (बिछान) २भूमेः समीकरणे च । "पुनर्नवाकृत्य लेपनोपस्तरणैः" आ०गृ०२, ३,आधारे ल्युट् । ३आस्तरणाधारे "अमृतोपस्तरणमसि" भोजनस्यादौ जलपानमन्त्रः "अथाचमनीयमाचामति अमृतोपस्तरणमसीति" आ० गृ०१,२४,११, । "स्तरणमाच्छादनम् उपस्तरणं भूमेः समीकरणम्" ना०वृत्तिः

**उपस्ति** पु० उप+स्त्यै-इन् नि० । इव्ये । "उपस्तिरस्तु सोऽस्माकम्" यजु०१२,१०१,"उपास्त्यायन्ति उपकारायोपद्रवनिराकरणाय च समीपे संहतास्तिष्ठन्तीत्युपस्तयः इव्याः वेददी० ।

**उपस्तिर्** त्रि० उप+स्तॄ-कर्मणि क्विप् । आस्तीर्यमाणे आस्तरणीये । "अभि शुक्रमुपस्तिरम्" ऋ०९,६२,२८,

**उपस्तुत** त्रि० उप+स्तु-क्त । समीपस्तुते श्रवणयोग्यस्तवेन स्तुते "चोदद्राध उपस्तुतश्चिदर्वाक्" ऋ०७,२७,३, "त्वं त्वमहर्यथा उपस्तुतः पूर्वेभिरिन्द्रः" ऋ०१०,९६,५ ।

**उपस्तुति** स्त्री उप+स्तु-क्तिन् । समोपस्तवे श्रवणयोग्यस्तुतिवाक्ये "कर्मोपस्तुतिं भरमाणस्य" ऋ०१,१४८,२,

**उपस्तुत्य** त्रि० उप+स्तु-क्यप् । समीपे स्तवनीये । "उपस्तुत्यं महिजातं ते अर्व्वन्" ऋ०१,१६३,१,

**उपस्थ** पु०न० अर्द्धर्चादि । उप+स्था-क । १स्त्रीपुंसयोरिन्द्रियविशेषे तत्र पुमिन्द्रिये "स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः" याज्ञ० । स्त्रीन्द्रिये "दक्षिणेन पाणिना उपस्थमभिमृशेत् विष्णुर्योनिं कल्पयत्वित्येतयर्चा" गोभि० । "वितिष्ठन्तां मातुरस्या उपस्थान्नानारूपाः पशवो जायमानाः" अथ० १४,२,२५ । "मुखदघ्नं ब्राह्मणस्योपस्थदघ्नं स्त्रियाः" शत०१३,८,३,११ । उभयेन्द्रिये "हस्तौ पायूपस्थश्च वाक्पादौ चेति पञ्च वै । कर्मेन्द्रियाणि जानीयात्" याज्ञ० । "उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चकम्" मनुः "सर्वेषामानन्दानामुपस्थ एकायनम्" शत० ब्रा० १४,५,४,११ । उपस्थश्च न तयोश्चिह्नस्थानमात्रं किन्तु तत्स्थानाधिष्ठितः प्रजापतिदेवतानियमितशक्तिक आनन्दनव्यापारकारकः कर्मेन्द्रियभेदः । तत्र "ब्रह्मेन्द्रोपेन्द्रमित्रकाः" इति शा०ति०तस्य कशब्दवाच्यप्रजापतिदेवताकत्वमुक्तम् शत०ब्रा० उक्तवाक्ये चानन्दनव्यापारसाधनत्वमुक्तम् तस्यैवापाटवे क्लैव्यम् । इन्द्रियाणां भौतिकत्वमते तस्य पृथिवीरजोगुणोपादानकता आहङ्कारिकत्वमते गन्धतन्मात्रसहिताहङ्कारोपादानकता । स च सूक्ष्म

लिङ्गदेहान्तर्गत इति वेदान्तिनः सांख्याश्चाहुः। तेन जीवति चेतना० ठञ्। औपस्थिक जारकर्म्मोपजीविनि जारभेदे पु०। वेश्यायां स्त्री। २उत्सङ्गे क्रोड़े ३अन्तरे च "अन्तमुपस्थेन वृक्णस्य लोम" यजु० १९.९२। "वरीयओभा घ्नन्ती पितोरुपस्था" ऋ०१,१२४.५। "उपस्था उपस्थे उत्सङ्गेऽन्तरालदेशे वा" भा० "तस्याः कुमारमुपस्थ आदधु" गोभि० "उपस्थे उत्सङ्गे" सं०त० "भूम्या उपस्थेऽरपञ्जवत्वात्" ऋ०२,१४,७। "रथोपस्थ उपाविशत्" गीता। उप+स्था घञर्थे भावे क। सर्वाङ्गुलीभिः भूमिमाश्रित्य ४स्थितौ "समस्त जङ्घोदरतलिभ्यां जानुभ्यां चोपस्थं कृत्वा" आश्व०श्रौ० ६,५,५। "उपस्थं कृत्वा भूमिमाश्रित्येत्यर्थः पादाङ्गुलीभिश्च भूमिमाश्रित्यैवमुपविशेत्" नारा०वृ०। "प्राङ्मुख उपविश्योपस्थं कृत्वा" आश्व०गृ० ३,२,२,। उप+तिष्ठति स्था— क। "उपस्थकृतस्त्वेवाश्विनं शंसेत्" आ०श्रौ०६,५,५। ५समोपस्थिते त्रि०।

**उपस्थपत्र** पु० उपस्थं स्त्रीचिह्नमिव पत्रमस्य। अश्वत्थे वृक्षे तत्पत्रस्य तदाकारत्वात्तथात्वम् अतएव नैष०दमयन्त्यास्तदङ्गवर्णने। अश्वत्थस्य चलपत्रनामता कारणमुत्प्रेक्षितम्। "अङ्गेन केनापि विजेतुमस्या गवेष्यते किं ? चलपत्रपत्रम्। नो चेद्विशेषादितरच्छदेभ्यस्तस्यास्तु कम्पस्तु कुतोभयेन" उपस्थदलादयोऽप्यत्र। उपयमशब्दे स्त्रीलक्षणे च तदङ्गस्य अश्वत्थदलाकारतोक्ता।

**उपस्थातृ** त्रि०उप+स्था—तृच्। १उपासके, २उपनते, च ३यथोक्तकाले उपगते "अन्यथावादी क्रियाद्वेषी नोपस्थाता निरुत्तरः। आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः" मिता०स्मृतिः। ४ऋत्विग्भेदे पु०।

**उपस्थान** न० उप+स्था—ल्युट्। १उपेत्य स्थितौ, २अनुसन्धाने स्मरणे "तत्त्वस्मृतेरुपस्थानात् मनोयोगात् परिच्चयात्। कर्म्मणां सन्निकर्षाच्च सतां योगः प्रवर्त्तते" याज्ञ०। "कर्म्मसन्निहितं नैव बुद्धौ विपरिवर्त्तते। शब्दात्तु तदुपस्थानमुपादेये गुणो भवेत्" भट्टका०। ३उपसेवने उपासने "सूर्योपस्थाने विनियोगः" सन्ध्याप्रयोगः "तूष्णीं वोपस्थानम्" कात्या०४,१२,२०, ४उपसर्पणे। "तस्योक्तमुपस्थानम्" आश्व०श्रौ०५,१२,२,"उपस्थानं प्रसर्पणम्" नारा०वृ०। ५आनतीकरणायोपगतौ "सुरद्विषश्चैव जगच्च सर्व्वमुपस्थाने सन्नमन्ति प्रभावात्" भा०आ० ७६। ६समीपस्थाने "कृशान् यवांश्चासनोपस्थानेषु प्रोक्षेत्" पार०गृ०। उपस्थायतेऽत्र आधारे ल्युट्। ७उपासनाधारे गृहादौ। "पार्थिवैर्व्विङ्गुभिः कार्य्यमुपस्थानं दिदृक्षुभिः" भा०स०४७ अ० "उपस्थानगृहैर्भद्रैर्वलभीभिश्च शोभितम्" भा०आ०१२८ अ०। अनुसन्धानञ्च स्मरणम् तस्य च चित्तेऽनुभवाहितसंस्कारेणोपस्थितत्वात् तथात्वम्।

**उपस्थानीय** त्रि० उप+स्था—"भव्येत्यादि" पा०नि० कर्त्तरि अनीयर्। १उपासके। कर्म्मणि अनीयर्। २उपास्ये त्रि०

**उपस्थापक** त्रि० उप+स्था—णिच्—ण्वुल्। स्मारके अनुभवजन्यसंस्कारेण चित्तेऽनुसन्धानसम्पादके। उपस्थितौ च समानविषयत्वं तन्त्रम् यद्विषयकोऽनुभवस्तद्विषयकः संस्कारस्तद्विषयिकैव स्मृतिरिति कार्य्यकारणभावः स च समवायेनैव, तेनान्यानुभवसंस्काराभ्यां नान्यस्य स्मरणम्। तत्र च सादृश्यादिज्ञानादि सहकारि कारणम् तत्समवहितसंस्कारस्यैव स्मृतौ हेतुत्वात्। उपेक्षात्मकज्ञानेन च संस्कारो न जन्यते। संस्कारश्च चरमफलनाश्यः तेन स्मृतिधारायां न संस्कारान्तरकल्पनमिति वेदा०प०। क्वचिच्च दीर्घकालरोगादिना जन्मान्तरेण वा तन्नाशः। जन्मान्तरन्तु कर्म्मविशेषाभावसहकृतमेव तन्नाशकम् तेन "जातिं स्मरति पौर्व्विकीम्" इत्यादिमन्वाद्युक्तकर्म्मविशेषसत्त्वे न तन्नाशः। उपस्थापकञ्च यथा पदज्ञानं पदार्थस्य हस्तिज्ञानं हस्तिपकस्येत्यादि एकसंबन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वनियमात् पदपदार्थयोश्च शक्तिसम्बन्धेन सम्बन्धितेति तथात्वम्।

भावे ल्युट्। उपस्थापन—उपस्थिति साधन व्यापारे उद्बोधकसमवधाने तत्सहकारे। उपस्थापनं प्रयोजनमस्य प्रप्रवचना०छ। उपस्थापनीय उपस्थापनसाधने उद्बोधकादौ त्रि० उप+स्थापि—कर्म्मणि अनीयर्। स्मार्य्ये त्रि०।

**उपस्थावरा** स्त्री उप+स्था—बा०कर्म्मणि वरच्। उपसेवनीये पुरुषमेधयज्ञाङ्गे देवताभेदे "सरोभ्यो धैवरमुपस्थावराभ्योदाशम्" यजु० ३०,१६,

**उपस्थित** त्रि० उप+स्था—क्त। १समीपस्थिते, २समीपागते "तदनुपस्थितमग्निहोत्रं तस्मानुपस्थितिमन्वनुपस्थिता इमाः प्रजाः प्रजायन्तेऽनुपस्थितो ह वै श्रिया प्रजाया प्रजायते" शत०ब्रा० २,३,१, १३, "उपस्थितेयं कल्याणी" रघुः। "हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्" भट्टिः। ३प्राप्ते, उपस्थितपरित्यागे प्रमाणाभावात्" न्यायवाक्यम् "अनुपस्थितकल्पनाः

न्याय्या" इति म॰ भा॰ ४वेदाप्रयुक्ते अनार्षे च । "अ-
न्तु तवदुपस्थिते" पा॰। "उपस्थितोऽनार्षः" सि॰कौ॰
"उद्बुद्धसंस्कारेण चित्ते उपगते ५स्मृते "तौ जौ गुरु-
णेयमुपस्थिता" वृ॰र॰उक्ते दशाक्षरपादके ६छन्दोभेदे
स्त्री "उपस्थितमिदं जसौतसौ यदि गुरु स्यात्" इति वृ॰
र॰ उक्ते त्रयोदशाक्षरपादके ७छन्दोभेदे न॰ । ८सेविते
त्रि॰ । भावे क्त सेवने ९उपस्थाने न॰ । तेन जीवति
वेतना॰ ठक् । औपस्थितिक सेवनोपजीविनि त्रि॰

**उपस्थिति** स्त्री उप+स्था—क्तिन् । १उपसेवने २उपनतौ
३स्मृतौ च "आसत्तिरव्यवधानेन पदजन्यपदार्थोपस्थितिः
शा॰ द॰आसत्तिशब्दे उपसर्गशब्दे च उदा॰ ।

**उपस्थूण** अव्य॰स्थूणायां तत्समीपे वा अव्ययी॰। १स्थूणा-
यामित्यर्थे २तत्समीपे च तत्र भवः परिमुखा॰ञ्य । औप-
स्थूण्य तद्भवे त्रि॰। उपगता स्थूणाम् अत्या॰स॰। ३गृह-
स्तम्भोपगते त्रि॰ ततो भवार्थे अण्, न ञ्य इति भेदः

**उपस्थेय** त्रि॰ उप+स्था—सेवार्थत्वात् कर्मणि यत् । उपसेव्ये
"वातसमं कृत्वोपस्थेयं चेत्"कात्या॰१७,१,२, "यदीदृशै
रुद्रैः विप्रैरुपस्थेयैरुपस्थितः" रामा॰।

**उपस्नेह** पु॰ उप+स्निह—घञ् । क्लिन्नस्य नैकट्यसम्बन्धेन
क्लेदे "मूत्रयुक्त उपस्नेहात् प्रविश्य कुरुतेऽश्मरीम्" ।
"गर्भस्य मातुराहाररसवीर्य्यमभिवहन्ति तेनोपस्नेहेनास्या
भिवृद्धिर्भवति" । "सर्वशरीरावयवानुसारिणीनां रसव-
हानां तिर्य्यग्गतानां धमनीनामुपस्नेहो जीवयति" सुश्रु॰।

**उपस्पर्श** पु॰उप+स्पृश—घञ् । १स्पर्शे, २स्नाने च । उपस्पृ-
श्यन्ते इन्द्रियाण्यत्र आधारे घञ् । विधिना जलपान-
पूर्वके मुखादिस्पर्शयुक्ते ३वैधाचमने तत्र हि "त्रिःप्राश्या-
पोद्विरुन्मृज्य मुखमेतानुपस्पृशेत् । आत्मनासाक्षि कर्णांश्च
नाभिवक्षःशिरोऽंसकान्" छन्दो॰ आस्यनासिकादिस्पर्शो
विहित इति तस्य तथात्वम्। "तथेत्युपस्पृश्य पयः पवि-
त्रम्" रघौ आचमनार्थे उपात्स्पृशतेः प्रयोगात् । भावे
ल्युट् । उपस्पर्शनम् तत्रार्थे न॰ "अथात उपस्पर्श-
नम्" कात्या॰५,१०,२०

**उपस्रवण** न॰ उप+स्रु—भावे ल्युट् । सम्यक्क्षरणे उपरतं
स्रवणम् प्रा॰स॰। १विरतस्रवणे क्षरणनिवृत्तौ "पत्न्युद-
क्या दोलाकुपाणि निधाय सिकतास्वासीतोपस्रवणात्"
का॰२५,११,१३, "ज्योतिष्टोमादौ दीक्षितस्य पत्नी रज-
स्वला दोलाकुपाणि शङ्खादीनि निधाय सिकतासु आ-
सीत आ रक्तस्रावविरमणात्" कर्कः ।

**उपस्वत्व** न॰उपगतमुत्पत्तिकाले एव प्राप्तं स्वत्वं यत्र । स्वत्वा-
स्पदीभूतभूम्यादिभ्य उत्पद्यमानशस्यादिद्रव्ये । लोकव्यवहारः ।
अन्यस्य द्रव्यस्य प्रतिग्रहार्जनाधीनं स्वत्वं न तु उत्पत्ति-
कालात्, अस्य तु तत्काले एव स्वत्वमेव तथात्वम् ।

**उपस्वावत्** पु॰ सत्राजितो नृपस्य पुत्रभेदे । "सत्राजितो-
दश त्वासन् भार्यास्तासां शतं सुताः । ख्यातिमन्त-
स्त्रयस्तेषां भङ्गकारश्च पूर्वजः । वीरोवातपतिश्चैव उ-
पस्वावांस्तथैव च" हरिवं॰३८अ॰

**उपस्वेद** पु॰ उप+स्विद—करणे घञ् । १वस्त्रादिसमीपस्था-
नात् जाते ऊष्मणि "तयोरखण्डानि निदधुः प्रहृष्टाः परि-
चारिकाः। सोपस्वेदेषु भाण्डेषु पञ्च वर्ष शतानि च" भा॰
आ॰१६अ॰"सोपस्वेदेषु ऊष्मवत्सु तत्र ह्यखण्डान्नर्जलमू-
ष्मणा गात्रं घनीभवतीति"नी॰क॰ "अलाबुमध्यान्निष्कृत्य
वीजं यत्नेन गोप्यताम् । सोपस्वेदेषु पात्रेषु घृतपूर्णेषु
भागशः"भा॰व॰१०६अ॰। भावे घञ् । २उपतापे

**उपहत** त्रि॰उप+हन—क्त । १तिरस्कृते"करोत्यवत्तोपहतं पृ-
थग्जनम्" किरा॰।"उपहतं तिरस्कृतम्" मल्लि॰। २दू-
षिते "कृमिभिराशोपहतात्मवृत्तिभिः" कुमा॰ "आशया
उपहता दूषिता" मल्लि॰ । ३विनाशिते ४उत्पातग्रस्ते
अशुद्धद्रव्यसंयोगेन ५अशुद्धे च "शारीरैर्मलैः सुराभिर्म-
द्यैर्वा यदुपहतं तदत्यन्तोपहतम्" विष्णुः । ६अभिभूते
"शम्भुमुपहृत्य सहसा" किरा॰ ।

**उपहति** स्त्री उप+हन—क्तिन् । १उपघाते। २कार्यसामार्थ्य
प्रयोजकापाटवे ३प्रतिहनने च ।

**उपहत्नु** त्रि॰ उप+हन—क्नु । उपहन्तरि "मृगं न भीममु-
पहत्नुमुग्रम्" ऋ॰२,३३,११,

**उपहन्तृ** त्रि॰ उप+हन—तृच् स्त्रियां ङीप्। उपघातके
( कटुकः ) "स्तन्यशुक्रमेदसामुपहन्ता चेति" सुश्रु॰।

**उपहरण** न॰उप+हृ—ल्युट् । १परिवेषणे २उपायनदाने च

**उपहर्तृ** त्रि॰ उप+हृ—तृच स्त्रियां ङीप। परिवेषण-
कर्त्तरि "अनुमन्ता विशसिता नियन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः" मनुः।
२उपायनदातरि च ।

**उपहव** पु॰उप+ह्वे—अप् संप्र॰गुणः । आह्वाने, "वीना-
मुपसरं दृष्ट्वा तेऽन्योन्योपहवाः गुहाम्" भट्टिः । "अ-
ध्वर्युर्होतर्युपहवं काङ्क्षते" आ॰श्रौ॰५,७,४, "प्रति-
ष्टस्योपहवमिष्टाऽवेक्षेत" ६,१२,१,

**उपहव्य** पु॰ उपहूयतेऽत्र उप+ह्वे—बा॰आधारे यत् । सप्त-

दशस्तोमकेषु पञ्चसु क्रतुषु मध्ये क्रतुभेदे । ते च क्रतवः कात्या० २२, दर्शिताः यथा । "सप्तदशाः पञ्च" ६, "वक्ष्यमाणाः पञ्च क्रतवः सप्तदशस्तोमका भवन्तीत्यर्थः" कर्कः । "उपहव्योऽनिरुक्तो ग्रामकामस्य" ७ "उपहव्य इति विशेषसत्ता स ग्रामकामस्य भवति अनिरुक्तश्च" कर्कः । "अनृतेनाभिशस्यमानस्य" ८ "अलं केनाभिशस्यमानस्याप्युपहव्यो भवति" कर्कः "श्यावोऽश्वो दक्षिणा तं ब्रह्मणे ददाति" ६, इत्युपक्रम्याये चत्वारस्तत्र दर्शिताः ।

**उपहसित** न० उप+हस–भावे क्त । उपहासे (ठाट्टाकरा) निन्दासूचके हासभेदे । कर्मणि क्त । २हासेन सूचितनिन्दे त्रि० ।

**उपहस्त** पु० उपहस्ति–भावे अच् । हस्तेन यद्ग्रहणे प्रतिपद्ये तेन जीवति वेतना० ठञ् । औपहस्तिक तदुपजीविनि त्रि० ।

**उपहस्ति** हस्तेन उपग्रह्णाति उप+हस्त–णिच् नामधातुः उभ० सक० सेट् । उपहस्तयति ते उपा(ज)जीहस्तत त ।

**उपहस्तिका** स्त्री उपगता हस्तम् अत्या० स० संज्ञायां कन् अत इत्वम् । (बेट्या) वस्त्रादिनिर्म्मिते ताम्बूलाद्याधार पात्रभेदे । "उपहस्तिकायास्ताम्बूलं कर्पूरसहितमुद्धृत्य मह्यं दत्त्वा" दशकु० ।

**उपहार** पु० उप+हृ–घञ् । (भेट) १उपढौकने उपायने "ततः सपर्य्यां सपशूपहाराम्" "रत्नपुष्पोपहारेण छायामानर्च्च पादयोः" रघुः कर्मणि घञ् । २उपढौकनीये उपायनद्रव्ये "बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः" मेघ० उपगतः हारम् अत्या० स० । ३हारसमीपस्थे तदुपयोगिके द्रव्ये । अव्ययी० । ४हारसमीपे अव्य० । उभयत्र "उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम्" नै० । "ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम्" कुमा० । [प्रसक्तो यत्र । कुन्तलदेशे हेम० ।

**उपहालक** पु० हले प्रसृतः बा० वुण् उपगतो हालको हल-

**उपहास** पु० उप+हस–भावे घञ् । निन्दासूचके हास्ये (ठाट्टा) "फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम्" रघुः

**उपहास्य** त्रि० उप+हस–कर्मणि ण्यत् । उपहासेन निन्दनीये "गमिष्याम्युपहास्यताम्" रघुः ।

**उपहित** त्रि० उप+धा–क्त । १निहिते २अर्पिते ३समीपस्थापिते ४आरोपिते च । "बलमुपहितशोभां तर्षमायादयोध्याम्" भट्टिः । "पुष्पं प्रवालोपहितं यदि स्यात्" कुमा० । ५उपाधिसङ्गते उपलक्षिते "अन्तःकरणोपहितं चैतन्यं जीवः अज्ञानोपहितचैतन्यमीश्वरः" वेदान्तप० ।

**उपहूत** त्रि० उप+ह्वे–क्त संप्रसारणे दीर्घः । समाहूते आचितादित्वाद्गतिपूर्व्वकत्वेऽपि नान्तोदात्तता ।

**उपहूति** स्त्री उप+ह्वे–क्तिन् संप्रसारणे दीर्घः । आह्वाने "पटहप्रणादविहितोपहूतयः" माघः ।

**उपहृत** त्रि० उप+हृ–क्त । १उपढौकिते उपहाररूपेण दत्ते "उपहृतपशुरुद्रः" सि० कौ० ।

**उपहोम** पु० उपगतः होमं प्रधानहोमम् अत्या० स० । प्रधानयागसमीपे विहितत्वात् पूर्व्वं होतव्ये अग्नीषोमादिदशदेवताके प्रत्येकं दशाहुतिके दशदक्षिणाके होमभेदे । स च शत० ब्रा० ११,४,३,८, अवधि १७, पर्य्यन्तेषु दर्शितः । "सैतानुपहोमानपश्यत्" इत्युपक्रम्य "अग्निरन्नाद इत्यादि१" "सोमो राजेत्यादि२" "वरुणः सम्राडिति३ "मित्रः क्षत्रमिति४ "इन्द्रो बलमिति ५" बृहस्पतिर्ब्रह्मेति ६ "सविता राष्ट्रमिति७ "पूषा भगमिति८" "सरस्वती पुष्टिमिति९" "त्वष्टा रूपाणामिति १०" इत्येतद्दश देवता उक्त्वा "तावा एता दश देवता, हवींषि दशाहुतयो दश, दश दक्षिणाः" इति यथोक्तविशेषणतया दर्शितः ।

**उपह्वर** उप+ह्वृ–आधारे घ । निर्जने रहस्योपगमाधारे "उपह्वरे पुनरित्यभिहितं धनमिदम्" दशकु० । "यत्सीमुपह्वरे विदत्" ऋ० ८,६९,६, "वरन्तमुपह्वरे नद्यः" ऋ० ८,९६,१४, "उपह्वरे अत्यन्तगुह्यस्थाने" भा० । २अन्तिकस्थाने "कर्म्मीतरङ्गैर्जाह्नव्याः समानीतामुपह्वरम्" भा० व० ३०८ अ० । ३भूप्रदेशमात्रे च "उपह्वरे यदुपरा अपिन्वन्" ऋ० १,६२,६, "कौटिल्यलक्षणगतिवाचिमात्र गतिमात्रं लक्ष्यते उपह्वरन्ति गच्छन्त्यस्मिन् घः इत्युपह्वरो भूप्रदेशः" भा० । कर्मणि घ । ४गन्तव्ये "उपह्वरेषु यदचिध्वम्" १,८७,२ । "उपह्वरेषु गन्तव्येषु" भा० ५प्रान्तभागे । उपह्वरे गिरीणां संगथे च" ऋ० ८,६,२८ "उपह्वरे प्रान्तभागे" भा० ।

**उपह्वान** न० उप+ह्वे–ल्युट् । १आह्वाने २मन्त्रोच्चारणे माह्वाने च "द्यावापृथिव्योरुपह्वाने षडवत्तम्" कात्या० ३,४,१९, "आग्नीध्रे भक्षणं वषट्कारोपह्वानाभ्याम्" १०,६,२२,

**उपांशु** अव्य० उप+अन्श–उ । १निर्जने "परिचेतुमुपांशु धारणाम्" रघुः । "उपांशु विजने" भट्टि० । २अप्रकाशे च । "जिह्वोष्ठौ चालयेत् किञ्चित् देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः" इत्युक्तलक्षणे ३मन्त्रादेर्जपभेदे पु० । जपो हि त्रिविधः नरसिंहपु० उक्तः ।

"त्रिविधो जपयज्ञः स्यात् तस्य भेदान् निबोधत । वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः । त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः । यत्नोच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः । मन्त्रमुच्चारयेद्व्यक्तं जपः प्रोक्तः स वाचिकः । शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् । किञ्चिच्छब्दं स्वरं विद्यादुपांशुः स जपः स्मृतः । धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम् । शब्दार्थमाननाभ्यासः स उक्तो मानसो जपः" । तेन स्वरादिसुव्यक्तवर्णोच्चारणवान् वाचिकः स्वयंग्रहणयोग्यः किञ्चिच्छब्दवान् उपांशुः । जिह्वोष्ठचालनमन्तरेण वर्णार्थानुसन्धानवान् मानसः" आ० त० । हारीतः "यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः । मन्त्रमुच्चारयेत् वाचा जपयज्ञस्तु वाचिकः । शनैरुच्चारयेन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत् । किञ्चिच्छ्रवणयोग्यः स्यात् स उपांशुर्जपः स्मृतः । धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम् । शब्दार्थचिन्तनाभ्यासः तदुक्तं मानसं स्मृतम्" . "तेषामुत्तरोत्तरफलतारतम्यमाह" मनुः "विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः" "उपांशु देवतां यजत्यनिरुक्तं वा उपांशु इति शत० ब्रा० १,३,५,२, उक्ते ४ अनिरुक्तमात्रे ५ मौने । "उपांशु वै रेतः सिच्यते" शत० ६,२,२,२, मैथुनकाले मौनविधानात् तस्योपांशुत्वम् । ६ निगूढे च "अस्य त्वेकमुपांशु व्रतम्" भा० आ० २अ० । परग्रहणायोग्यतया निगूढमित्यर्थः नील० क०

**उपांशुयाज** पु० यज-घञ् यज्ञाङ्गत्वात् प्रयाजादिवत् न कुत्वम् । उपांशु अनुष्ठेयो याजः । यज्ञभेदे तच्च शत० ब्रा० १,६,२,६१ दर्शयित्वा "एतेन वै देवा: उपांशुयाजेन वं यमसुराणामकामयन्त तमुपत्सर्थ वज्रेण वषट्कारेणाघ्नंस्तत एवैष एतेनोपांशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यमुपतसर्थ वज्रेण वषट्कारेण हन्ति तस्मादुपांशुयाजं यजते" तत्फलमुक्तम् । "उपांशुयाजमन्तरा यजति" प्रयाजादियागेतिकर्त्तव्यतायां श्रुतिः ।

**उपाक** पु० उप+अक-अच् । १परस्परं समीपगते सन्निहिते "आसुष्वयन्ती यजते उपाके" यजु० २९,३१, उपाके परस्परसमीपगते" वेददी० । "आ भन्दमाने उषसा उपाके" ऋ० ३,४,६, "आभन्दमाने उपाके" १,१४२,७, २अन्तिके च । "सूर उपाकचक्षसम्" ऋ० ८,६,२५, "उपाक इत्यन्तिकनाम" भा० ।

**उपाकरण** न० उप+आ+कृ-ल्युट् । १उपावर्त्तध्वमित्येवं स्तोत्रप्रैषे "नापव्याहरेदोपाकरणादुपावर्तध्वमित्येवाध्वर्युरुद्गातृभ्यः" शत० ब्रा० १,५,२,१२, "यदा उद्गातारः स्तोत्रं प्रारभेरन् तावदध्वर्युग्रहणादनन्तरं नापव्याहरेत्" भा० "प्राग्वा च प्रवदितोः प्रातरनुवाकोपाकरणम्" कात्या० ९,१,१०, । "सोमे च ग्रहं गृहीत्वोपकरणात्" ३,३,१७, उपावर्त्तध्वमित्ययं स्तोत्रप्रैषः उपाकरणशब्देनोच्यते" कर्क: । तथा प्रैषणे हि स्तोत्रस्यारम्भणात्तस्य तथात्वम् । २यज्ञियपशुसंस्कारविशेषे च "गोतमस्तोमः प्रथमं द्वितीयस्याह्न पशोरुपाकरणकालेऽश्वमानीय बर्हिर्वेद्यामेवास्थापयेयः" आश्व० श्रौ० १०,८,२ । "तमवस्थितमुपाकरणाय यदक्रन्दत्प्रथमेकादशभिः स्तौत्र प्रणुवन्" ५ "पशुकल्पेन पशुं संज्ञप्य प्रोक्षणोपाकरणवर्ज्जं वपामुत्खिद्य जुहुयात्" आश्व० गृ० २,४,१५, ३आरम्भे च । "अथातोऽध्यायोपाकरणम्" आश्व० गृ० ३,५,२, "उपाकरणमारम्भः" ना० ह० । उपाकर्म्मशब्दार्थे च तत्प्रकारकालादिकं वक्ष्यते

**उपाकर्म्मन्** न० उप+आ+कृ-करणे मनिन् । येन कर्मविशेषेण वर्षान्ते पुनर्वेदः पठितुमारभ्यते तादृशे, कर्मभेदे तच्च "अथातोऽध्यायोपाकरणम्" इत्युपक्रम्य आश्व० सू० दर्शितम् तत्कालकर्त्तव्यतादि च तत्रैवोक्तः विशेषस्तु नि० सि० उक्तो यथा "तत्र बह्वृचानां प्रयोगपारिजाते शौनकः । "अथातः श्रावणे मासि श्रवणर्क्षयुते दिने । श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते । दिवसे विदधीतैतदुपाकर्म यथोदितम् । स्वाध्यायोपाकृतिं कुर्य्यात्तत्रोपासनवह्निना" अत्र पौर्णमासी उपसंहारन्यायेन यजुर्वेदपरेति हेमाद्रिः । अत्र हस्तयुक्ता पञ्चम्युक्ता कारिकयाऽपि "तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते" इति । केवलपञ्चम्यां हस्तयुतेऽन्यस्मिन् वा दिन इति तु हेमाद्रिः । उपासनवह्निनेति तु "कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वते" इति कारिकोक्तलौकिकाग्निना विकल्प्यते । तत्र "अध्याप्यैरन्वारब्धः" इति सूत्रात् शिष्यत्वेन तदधिकारित्वात् नाचार्य्याग्नौ "नान्यस्याग्नावन्यो जुहुयादिति" निषेधाल्लौकिक एव । तदभावे स्मार्त्त इति निगर्वः । यद्यपि दीपिकायाम् । "वेदोपाकृतिरोषधिप्रजनने पक्षे सिते श्रावणे" इति शुक्लपक्षोऽपि सर्वेषां मुख्यकालत्वेनोक्तः । वक्ष्यमाणगार्ग्यवचनेन छन्दोगान् प्रति विहितस्य तस्याविरोधिता सर्वान् प्रति निवृत्तिश्च । तथापि श्रावणमाससंबन्धस्य सूत्रोक्तत्वात् कृष्णपक्षेऽपि कार्य्यमिति वृद्धाः । तथा च आश्व०

सूत्राणि “अथातोऽध्यायोपाकरणम्” “ओषधीनां प्रादुर्भावे” “श्रवणेन श्रावण्यस्य पञ्चम्यां हस्तेन वा”। अत्र श्रवणो मुख्योऽन्यो गौणः। तस्यार्द्रयोगे हेमाद्रौ व्यासः। “धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत्। तत्कर्म सकलं ज्ञेयमुपाकरणसंज्ञितम्। श्रवणेन तु यत् कर्म उत्तराषाढसंयुतम्। संवत्सरकृतोध्यायस्तत्क्षणादेव नश्यतीति”। प्रयोगपारिजाते गार्ग्योऽपि। “उदयव्यापिनी त्वेव विष्णुर्क्षे घटिकाद्वयम्। तत्कर्म सकलं ज्ञेयं तस्य पुण्यमनन्तकमिति” पूर्वेद्युरुत्तराषाढायोगे, परेद्युः श्रवणाभावे घटिकाद्वयन्यूने वा पञ्चम्यादौ कार्यम्। न तु पूर्वविद्धायां सङ्गवेऽपि, अपवादाभावात्। किञ्च परेद्युः सङ्गवास्पर्शे निषिद्धपूर्वग्रहणे किं मानम्। सङ्गववाक्यं श्रवणवाक्यं वेति चेत् तर्हि व्रीहिवाक्यादश्वशफवाक्याच्च माषमिश्राणामप्युपादानं स्यादिति महत्पाण्डित्यम्। एतेन पर्वाप्यौदयिकं व्याख्यातम् निषेधप्रवेशस्योभयत्र साम्यात्। श्रवणयुतदिने संक्रान्त्यादौ तु “उपाकर्म न कुर्वन्ति क्रमात्सामर्ग्यजुर्विदः। ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्वसु” इति हेमाद्रौ निषेधात् पञ्चम्यादयो ग्राह्याः। अत्र ग्रहसंक्रान्तिदिने येषां प्राप्तस्तैः सर्वैरुपाकर्म न कार्यम् इत्येको वाक्यार्थः। तेनाथर्ववेदिनामपि निषेधः। अन्यथा हस्तादित्रये प्रत्येकं ग्रहसंक्रान्त्योः षड्वाक्यकल्पनापत्तेः। मदनरत्नेऽपि “यदि स्यात् श्रावणं पर्व ग्रहसंक्रान्तिदूषितम्। स्यादुपाकरणं शुक्लपञ्चम्यां श्रवणस्य तु” स्मृतिः, स्मृतिमहार्णवे “संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते। तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते”। तत्रापि प्रयोगपारिजाते दृष्टमनुकात्यायनौ। “अर्द्धरात्रादधस्ताच्चेत् संक्रान्तिर्ग्रहणं यदा। उपाकर्म न कुर्वीत परतश्चेन्न दोषकृदिति”। मदनरत्ने गार्ग्योऽपि। “यद्यर्द्धरात्रादर्वाक् तु ग्रहः संक्रम एव वा। नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेऽपि वा”। एतेन ग्रहणकाले श्रवणसत्त्वे एव निषेधो नान्यथेति मूर्खशङ्कापरास्ता, ग्रहविशिष्टानां हस्तश्रवणपर्वणां प्रत्येकं निषेधे तद्युक्तोपाकर्मनिषेधे च विशिष्टोद्देशे वाक्यभेदात् पञ्चम्यां संक्रान्तौ निषेधाभावापत्तेश्च। तेनार्द्धरात्रात् पूर्वं ग्रहसत्त्वमात्रे उपाकर्मनिषेधो न तद्योगे। यत्तु “प्रतिपन्मिश्रिते नैव नोत्तराषाढसंयुते। श्रवणे श्रावणं कुर्य्याद्ग्रहसंक्रान्तिवर्जिते” इति प्रतिपन्मिश्रितनिषेधकं वचनं तन्निर्मूलम्। हेमाद्रौ निगमः। “ग्रहयोगो गुरुं हन्ति संक्रान्तिः शिष्यघातिनी। तपो हन्त्युत्तराषाढा उपाकर्मणि वैष्णवे” अत्र च “वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ। उपाकर्म न कर्त्तव्यं कर्त्तव्यं सिंहयुक्तके” इति वचनं देशान्तरविषयम्। “नर्मदोत्तरभागे तु कर्त्तव्यं सिंहयुक्तके। कर्कटे संस्थिते भानावुपाकुर्य्यात्तु दक्षिणा” इत्यादि वचनात् इति प्रयो॰ पा॰ उक्तम्। पराशरमाधवीयेऽप्येवम्। सामगानां सिंहस्थरवावुक्तविषयमेवेदं, पुरोडाशचतुर्द्धाकरणवदुपसंह्रियत इति। न तु बह्वृचादिपरम्। तेषां सूत्रे चान्द्रश्रावणोक्तेः सौरे पञ्चम्ययोगात् सामान्येन सौत्रविशेषस्य बाधायोगादिति तु वयं पश्यामः। यत्तु कालादर्शे “अध्यायानामुपाकर्म श्रावण्यां तैत्तिरीयकाः। बह्वृचाः श्रवणे कुर्युः सिंहस्थोऽर्को भवेद्यदि। सहस्यशुक्लपञ्चम्यां तद्वद्ग्रहणसंक्रमे। असिंहार्कप्रौष्ठपद्यां श्रवणेन व्यवस्थयेति” तन्मूलाल्लिखनात् सूत्रविरोधाच्च चिन्त्यम्। सूत्रे हि श्रवणेन श्रावणस्येति चान्द्रमास एवोक्तो न सौरः तस्य पञ्चम्यभावात् श्रुतिलक्षणाभ्यामुभयपरत्वे दृष्टिद्वयविरोधाच्च। तेन सिंहस्थोऽर्को भवेद्यदि तदा कर्केऽपि ग्रहणसंक्रमे सति असिंहार्के शुक्लपञ्चम्यां श्रवणे वा बह्वृचाः, प्रौष्ठपद्यां तैत्तिरीया इति व्याख्येयम् तेषां सौरमासाभावात्। श्रावणे शस्यानुद्गमादौ बह्वृचपरिशिष्टे “अदृष्टौषधयस्तस्मिन् मासे तु न भवन्ति चेत्। तदा भाद्रपदे मासि श्रवणेन तदिष्यत इति”। “तस्यानुद्गमे तु “कुर्यादेव तद्वार्षिकमित्याचक्षते” इति सूत्रात्। वर्षर्त्तौ भवं वार्षिकम्। एतच्च शुक्रास्तादावपि कार्यम्। “उपाकर्मोत्सर्जनं च पवित्रदमनार्पणमिति” दमनारोपणे लिखितवचनात् “नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च। उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते” इति प्रयोगपारिजाते हेमाद्रौ च संग्रहोक्तेः। पर्वणि ग्रहणे सति पूर्वं त्रिरात्रादिवेधाभावं वक्ष्यति पूर्वं त्रिरात्रादिवेधाभावं वक्ष्यमिदम्। तेन पर्वणि ग्रहणेऽपि चतुर्द्दश्यां श्रवणे कार्यमिति हेमाद्रिः। प्रथमारम्भस्तु न भवति “गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्द्धकेऽपि वा। तथाधिमाससंसर्गे मलमासादिषु द्विज! प्रथमोपाकृतिर्न स्यात् कृता कर्मविनाशकृदिति” तत्रैव कश्यपोक्तेः। अत्र प्रथमारम्भे वृद्धिश्राद्धं कुर्यादिति। नारायणवृत्तौ एतच्चाधिमासे न कार्यम् “उपाकर्म्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः। माप-

वृद्धौ पराःकार्य्या वर्जयित्वा तु पैतृकमिति” ज्योतिःपराशरोक्तेः “उत्कर्षः कालवृद्धौ स्यादुपाकर्म्मादिकर्म्मणि। अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिष्विति” कात्यायनोक्तेश्च। यत्तु “उपाकर्म्मणि चोत्सर्गे ह्येतदिष्टं वृषादित” इति ऋष्यशृङ्गवचनं तत्सामगविषयम् तेषां सिंहार्के एवोक्तेः। एतच्चापराह्णे कार्य्यम्। “उपाकर्मापराह्णे स्यादुत्सर्गः प्रातरेव त्विति” “अध्यायानामुपाकर्म्म कुर्य्यात्कालेऽपराह्णके। पूर्व्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुरिति” हेमाद्रौ गोभिलोक्तेः। वस्तुतस्तु ‘भवेदुपाकृतिः पौर्णमास्यां पूर्व्वाह्ण एव त्विति”प्रचेतोवचनात् पूर्व्व वाक्यं सामगविषयम्। तेषामपराह्णे एवोक्तेरिदमनुपदं वक्ष्यते। दीपिकापि। “अस्य तु विधिः पूर्व्वाह्णकालः स्मृत”इति। याजुषास्तु पर्व्वणि कुर्युः। तच्चापस्तम्बैरौदयिकं ग्राह्यम्। अन्यैस्तु पूर्वम्। “पर्व्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः। बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते” इति गर्गोक्तेः “संप्राप्तवान् स्तुतीर्ब्रह्मा पर्व्वण्यौदयिके पुनः। अतो भूतदिने तस्मिन्नोपाकरणमिष्यते” इति कालिकापुराणात्। “अथ चेद्दोषसंयुक्ते पर्व्वणि स्यादुपाक्रिया। दुःखशोकामयग्रस्तास्ते तस्मिन् द्विजातयः” इति मदनरत्ने गर्गोक्तेः। अत्र सिद्धान्तभट्टीये विशेषः। “श्रवणः श्रावणं पर्व्व सङ्गवस्पृग्यदा भवेत्। तदैवौदयिकं कार्य्यं नान्यदौदयिकं भवेत्”। पराशरमाधवीयेऽपि गार्ग्यः “श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि। तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्”। कर्म्मकालमाह कालादर्शे निगमः। “श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत् षण्मुहूर्त्तकैः। विद्धा स्याच्छन्दसां तत्रोपाकर्म्मोत्सर्जनं भवेत्”। अत्र पौर्णमासी श्रवणहस्तयोरुपलक्षणं तेन तावपि सङ्गवस्पृशौ ग्राह्यौ। “उदये षड्घटीस्पर्शे स्थिते पर्व्वणि शार्क्भे। कुर्युर्भस्युपाकर्म ऋग्यजुःसामगाः क्रमात्” इति पृथ्वीचन्द्रः। “त्रिमुहूर्त्ते घटिकाद्वयमिति” पूर्वोक्तविरोधात् सामान्यवाक्यादौदयिकी कर्म्मपर्य्याप्ता ग्राह्या न पूर्वा। सङ्गवनिमित्तपूर्वविद्धापवादाभावात् भाद्रादौ कालान्तरे वास्तु, न तु निषिद्धम्। न हि व्रीह्यलाभे निषिद्धमाषग्रहणं युक्तम्। अतएव परेद्युः सङ्गवव्याप्तौ पूर्वनिषेधः। तदभावे तु नेति मूर्खव्यवस्थाप्यपास्ता विधिवैषम्यात् माषनिषेधे तथापत्तेश्च। पूर्वविद्धावचनसत्त्वे हि सा युज्यते। एवं श्रवणेऽपि ज्ञेयम्। एतच्च कालाधिक्यपरं तेन यथाग्निहोत्रादौ सायं प्रातः कालबाधे सामान्यस्य जीवमावच्छिन्नकालदर्शादेरनुष्ठानम्। यथा व्रीह्यश्वशफाद्यभावे यागाच्छिप्रानिषिद्धावर्ज्यद्रव्येण तथात्र सङ्गवाभावेऽनिषिद्धावर्ज्यकर्म्मपर्य्याप्तौदयिके कालान्तरे वानुष्ठानं न तु कदापि निषिद्धे अपवादाभावे उत्सर्गस्यैव प्राप्तेः। कात्यायनादीनान्तु दिनद्वये पूर्वाह्णव्याप्तौ एकदेशस्पर्शे वा पूर्वैवेति हेमाद्रिः। घटिकाद्वयमिति पूर्वोक्तविरोधात् तेन प्राशस्त्यमात्रपरमिदम्। यदपि “श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी। पूर्वविद्धा प्रकर्त्तव्या शिवरात्रिर्बलेर्दिनमिति” ब्रह्मवैवर्त्तम् तद्ब्रह्मपवित्रविषयमिति हेमाद्रिः। मदनपारिजातेऽपि पूर्वविद्धायां श्रावण्यां वाजसनेयिनामुपाकर्मेत्युक्तम् मदनरत्नेऽपि “पर्व्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः” इति बह्वृचपरिशिष्टाद्बह्वृचान् प्रति कर्म्मविधानार्थं प्रवृत्ते तत्र तैतिरीयककर्म्मविध्ययोगात् पूर्वोक्तकालिकापुराणादौ सामान्यत औदयिकपर्वप्राप्तेस्तन्निषेधे न बह्वृचानां श्रवणविधानात्तैत्तिरीयकपदम् अनुवादत्वात्तस्य च प्राप्त्यधीनत्वात् प्राप्तेश्च यजुर्वेदमात्रपरत्वात् सर्वयजुर्वेद्युपलक्षणार्थम्। अवयुत्यनुवादो वा। न तु विधायकम्। तेन विशेषविधिना उपसंहारः स्यात्। अनुवादत्वाल्लक्षणा न दोषः। अन्यथौदयिकपर्वविशिष्टोपाकर्मोद्देशेन कर्त्तृविधौ कर्त्तृविशिष्टे औदयिकपर्वविधौ वाक्यभेदापत्तेः। तस्मात्तैत्तिरीयकपदाविवक्षया सर्वयजुर्वेदिनामौदयिकमेव पर्व्वेत्युक्तम्। तत्र न तावत्परिशिष्टे बह्वृचान् प्रत्येव विधिः। धनिष्ठाप्रतिपद्युक्तत्वात् ‘त्वाष्ट्रर्क्षसमन्वितमित्यादि तदुदाहृते एव परिशिष्टे वेदान्तरधर्म्मविधीनां दर्शनात्। नाप्यनुवादोऽयम् कालिकापुराणाद्बह्वृचादीनामपि तदापत्तेः कुर्युरित्यस्य विधित्वेन तस्यैवार्थवादत्वेनैतत्प्राप्त्यानुवादित्वाच्च। न च तैत्तिरीयकाणां मध्ये तद्विधिरस्ति येनानुवादः स्यात्। न च वाक्यभेदः। तैत्तिरीयकपदमात्रस्य कर्म्ममात्रस्य वा उद्देश्यत्वायोगेन हविरार्त्तिवदष्टवर्षं ब्राह्मणमुपनयीतेतिवच्चागत्या विशिष्टोद्देश्यत्वात्। अन्यथोत्तरार्द्धे बह्वृचपदस्याऽप्यविवक्षापत्त्या श्रावणस्य सर्वसाधारण्यापत्तेः। तस्मात् हेमाद्रिमतमेव युक्तमिति दिक्। इदं च। शिष्यानध्यापयत आवसथ्येऽग्नौ अनध्यापयतो नाधिकार इति कर्कः। श्रावण्यामपि ग्रहणादिदुष्टायां कातीयभिन्नैः प्रौष्ठपद्यां कार्यं तैस्तु श्रावणपञ्चम्याम्। “संक्रान्तिग्रहणं वापि पौर्णमास्यां यदा भवेत्। उपा-

कृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिरिति” स्मृतिमहार्णवे वाजसनेयिग्रहणादिति हेमाद्रिः। इदं स्वसूत्रोक्तकालपरत्वात् बह्वृचपरमपि। शाङ्खायनैस्तु हस्ते कार्यम्। आपस्तम्बैराथर्वणैश्च प्रौष्ठपद्याम्। यत्तु बौधायनः “श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्येत्यूचे। तत् प्रौष्ठपद्यामपि दोषे आषाढ्यां कार्यमित्येवमर्थम्। तच्छाखीयविषयं वा। सामगास्तु श्रावणे हस्ते कुर्युः। “बह्वृचाः श्रावणे चैव हस्तर्क्षे सामवेदिन” इति निर्णयामृते गोभिलोक्तेः। सोऽप्युत्तरः “धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम्। श्रावणं कर्म कुर्वीरन्नृग्यजुःसामपाठकाः” इति मदनरत्ने परिशिष्टोक्तेः। गर्गोऽपि “सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णेऽविवरे बहिः। छन्दोगाभिलिताः कुर्युरुत्सर्गं स्वस्वछन्दसाम्। शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकमिति”। पुष्यर्क्षे पूर्वाह्णे उत्सर्गः आपराह्णिकमुपाकर्मेत्यन्वयः। अविवरे ग्रहादिदोषरहिते। अन्योविशेषः पूर्वमुक्तः। प्रयोगपारिजाते गोभिलः “उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते। धारणाध्ययनाङ्गत्वाद्गृहस्थिनां ब्रह्मचारिणाम्। उत्सर्जनं च वेदानामुपाकरणकर्म च। अकृत्वा वेदजप्येन फलं नाप्नोति मानवः”। सर्वथा लोपे तु कृच्छ्र उपवासश्च “वेदोदितानां नित्यानामिति” मनुनाऽभोजनोक्तेः। एवमुत्सर्गेऽपि।

अथ प्रसङ्गादत्रैवोत्सर्जनमुच्यते। तच्च पौषमासे रोहिण्यां तत्कृष्णाष्टम्यां वा कार्यम्। “पौषमासस्य रोहिण्यामष्टकायामथापि वा। जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिरिति” याज्ञ० उक्तेः। श्रावण्यां प्रौष्ठपद्यां चोपाकृतौ क्रमेण पौषशुक्लप्रतिपदि, माघशुक्लप्रतिपदि च कार्यम् “अर्द्धपञ्चमासानधीयीतेति” तेनैवोक्तेः। यत्तु हारीतः “अर्धपञ्चमान्मासानधीत्योर्ध्वमुत्सृजेत् पञ्चार्धषष्ठान्वेति”। तदाषाढ्युपाकर्मविषयम्। बौधायनास्तु पौष्यां माघ्यां वा कुर्युः। “पौष्यां माघ्यां वोत्सृजेदिति” तत्सूत्रात्। तैत्तिरीयैस्तु तैष्यां कार्यं “तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदिति” तत्सूत्रात्। बह्वृचैस्तु माघ्यां कार्यम् “अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते” इति कारिकोक्तेः। कातीयास्तु भाद्रपदे कुर्युः। “उत्सर्गश्च तदा तिष्यतिथ्यां प्रौष्ठपदेऽपि वेति” कात्यायनोक्तेः। सामगास्तु सिंहार्के पुष्ये कुर्युः। तथा च सिंहे रवौ चेति गार्ग्यवचनं पूर्वमुक्तम्। सर्वैरुपाकर्मदिने वा कार्यम्। “पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथ वेति” हेमाद्रौ वादरमल्लोक्तेः। यदा सिंहस्थे सूर्ये सति तन्मध्यस्थहस्तनक्षत्रात्प्राक् पुष्यः कर्कस्थो भवति तदा तस्मिन् पुष्ये उत्सर्गं कृत्वा तदुत्तरहस्ते उपाकर्म सामगाः कुर्युः। “मासे प्रोष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदि। तदा तु श्रावणं कुर्यादुत्सर्गं छन्दसां द्विजः” इति तत्रैव परिशिष्टोक्तेः। अत्र द्वावपि सौरौ मासौ ज्ञेयौ तेषां सौरस्यैवोक्तेः। अत्र विशेषमाह कार्ष्णाजिनिः। “उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च। ऋषीन्दर्भमयान् कृत्वा पूजयेत्तर्पयेत्ततः। संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये। स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः। उपाकर्मादिकं प्रोक्तमृषीणाञ्चैव तर्पणम्। शूद्राणां मन्त्ररहितं स्नानं दानं प्रशस्यते”। “उपाकर्मण्युत्सर्गे च त्रिरात्रं पक्षिणीमहोरात्रं वानध्याय” इति मिताक्षरायामुक्तम्। अत्र नदीनां रजोदोषोनास्ति। “उपाकर्मणि चोत्सर्गे रजोदोषो न विद्यते इति” गर्गोक्तेः। “उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च। चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते” छन्दो० उक्तेश्च उपाकर्मणि चोत्सर्गे युगादौ व्रतवासरे। निषेधेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम्” स्मृतिः। “त्रयोदशादितो वर्ज्यं दिनानां नवकं ध्रुवम्। मङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोरिति” सामान्यतो ग्रहणे दिननवकनिषेधस्तु अनियतकालीनकर्मपरः न तु नियतकालीनकर्मपरः। “नित्ये नैमित्तिके जप्ये होमे यज्ञक्रियासु च। उपाकर्मणि चोत्सर्गे ग्रहदोषो न विद्यते इति नि० सि० स्मृत्युक्तेर्नोपाकर्मणि ग्रहणवेधदोषः। आषाढ्यामपि उपाकर्मविधानात् आषाढीप्रयोजनकत्वात् दण्डस्याषाढनामता वेदग्रहणस्य दण्डपूर्वकत्वात् तथात्वमिति बोध्यम्। करणे क्तिन् उपाकृतिरप्यत्र स्त्री कर्मकरणयोरभेदोपचारात् उपाक्रियाप्यत्र स्त्री।

**उपाकृत** त्रि० उप+आ+कृ—क्त। यज्ञे हननार्थं १कृतसंस्कारे पशौ, “अनुपाकृतमांसानि देवान्नानि हवींषि च” अभक्ष्ये मनुः। “पशुयागादौ मन्त्रबलेन पशोः स्पर्शनमुपाकरणं तद्रहितपशुरनुपाकृतः” कुल्लू०। “पशुश्चेदुपाकृतः पलायेत वायवे तमनुदिश्य तद्वर्णं तद्वयसमालभेत” कात्या० २५,८,१ २स्तोत्रप्रैषेण प्रेषिते च “उपाकृत उद्गातार आह्वोत्प्रैषात्” कात्या० ३,३,१८। ४आरब्धे च। भावे क्त। ५उपाकरणे ६यज्ञियपशुसंस्कारे ७आरम्भे च न०। ततः इष्टा० कर्त्तरि इनि। उपाकृतिन् उपा-

करणकर्त्तरि त्रि० स्त्रियां ङीप् उपाकृतिनी ।

**उपात्त** अव्य० अक्ष्णः समीपम् अव्ययी० नि० टच्समा० । नेत्रसमीपे "कूलतीरतूलमूलाशालाक्षसममव्ययीभावे" पा० अन्तोदात्तता अत्रैव अक्षेतिनिर्द्देशात् नि० टच्समा०

**उपाख्या** स्त्री उप+आ+ख्या—भावे अ । १प्रत्यक्षे "द्वितीयेऽ-नुपाख्ये" पा० । उपाख्या प्रत्यक्षं तच्छून्ये ऽनुमान-गम्ये इत्यर्थः । २शब्दादिभिर्निर्वचने च । "ज्ञानविज्ञान-युक्तानां निरुपाख्या निरञ्जना । कैवल्या या गतिर्देवः परमो स गतिर्भवेत्" भा० अनु० २६अ० । निरु-पाख्योऽभावः । तस्य च भावभिन्नत्वादिना यथा निर्वक्तु-मशक्यत्वं तथाऽभावशब्दे उक्तम् "प्रतिसंख्याऽप्रतिसंख्या-निरोधावाकाशञ्चेति" शा०सू० भाष्ये "तदवस्तु अभाव-मात्रं निरुपाख्यम्" "न हि भावानां निरन्वयो निरु-पाख्योविनाशः सम्भवति" "निरोधद्वयमाकाशञ्चेति निरु-पाख्यम्" । "तत्र निरोधद्वयस्य निरुपाख्यत्वम् पुरस्ता-न्निराकृतमाकाशस्येदानीं निराक्रियते" "आकाशे च न युक्तो निरुपाख्यत्वाभ्युपगमः" इत्येवम् सौगतमतनिरा-करणे अभावपरतयाऽस्यप्रयुक्तम् ।

**उपाख्यान** न० उप+आ+ख्या—ल्युट् । १पूर्ववृत्तकथने "रामोपाख्यानमत्रैवेति" भा०आ०१अ० । एवं नलोपा-ख्यानाद्योपाख्यानानि बहून्युपाख्यानानि तत्र सन्ति । "चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् । उपाख्यानै-र्विना तावत् भारतं प्रोच्यते बुधैः" भा०आ० १अ० । २विशेषकथने । "सर्वाख्यानं श्रुतं ब्रह्मन् ! अतीव परमा-द्भुतम् । अधुना श्रोतुमिच्छामि दुर्गोपाख्यानमद्भु-तम्" "शृणु नारद ! वक्ष्यामि सुधोपाख्यानमद्भुतम्" इति च ब्रह्मवै० । तत्र साधु कन् । उपाख्यानक तत्प्रति-पादके ग्रन्थभेदे स्वार्थे कन् । कथनमात्रे च । [गते च ।

**उपागत** त्रि० उप+आ+गम—क्त । १स्वयमुपस्थिते २अभ्युप-

**उपागम** पु० उप+आ+गम "ग्रहवृदनिश्चिगमश्च" पा० अप् । १स्वीकारे २समीपगमने च ।

**उपाग्रहण** न० उप+आ+ग्रह—ल्युट् । संस्कारपूर्वकवेद-प्रारम्भे अमरटीकायां रायमु० ।

**उपाग्रहायण(णि)** अव्य० आग्रहायण्याः समीपं अव्ययी० वा० टच्समा० । आग्रहायणीसमीपे

**उपाङ्ग** न०उपमितमङ्गेन अवा०स० । १प्रधानस्याङ्गोपयोगिनि "साङ्गोपाङ्गैरिहोदितम्" इत्यमरः २वेदाङ्गसदृशे शास्त्रभेदे उपाङ्गानि शास्त्राणि च "पुराणन्यायमीमांसाधर्मशा-स्त्राणि । चत्वार्युपाङ्गानि इत्युक्तानि तेषां अङ्गवत् वेदार्थस्य बहुलीकरणादुपाङ्गत्वम् । "साङ्गोपाङ्गोपनिषदः" हरि० २५अ० "साङ्गोपाङ्गाश्चतुर्वेदाः सरहस्याः क्रमेण तु विक्र-मो० । "यद्वेदशास्त्रं तत्रापि कृतस्नमखिलं प्रतिष्ठितम् । तत्र पुत्रे महाबाहौ साङ्गोपाङ्गं महात्मनि भा०अ०३०० अ० । अङ्गं देहस्तदुपयोगिनि ३प्रत्यङ्गे प्रत्यङ्गानि च अङ्गशब्दे ७२ पृ०दर्शितानि ४तिलके पु०जटाधरः ।

**उपाजिन** त्रि० उपगतोऽजिनम् अत्या०स० । चर्मोपगते उ-पात् आजिनान्ततत्पुरुषत्वात् अन्तोदात्तता । अजिनस्य समीपम् अव्ययी० । २चर्मसमीपे अव्य० । निरुदकादि-त्वात् अन्तोदात्तता । उपगतमजिनं येन प्रा०ब० । ३उपगतचर्मके त्रि० अत्र प्रकृतिस्वरः इति भेदः

**उपाजे** अव्य०उप+अज—बा०के वीभावाभावः। दुर्बलस्य बला-धाने, "उपाजे अन्वाजे" पा० कृञि परे तस्य गतित्वम् तेन समासे उपाजेकृत्य असमासे तु उपाजे कृत्वेति दुर्बलस्य बलमाधायेत्यर्थः" सि०कौ० । एतौ च विभक्तिप्रतिरूप-काव्यये इत्यन्ये

**उपाञ्जन** न० उप+अञ्ज—ल्युट् । १लेपने "मार्ज्जनोपाञ्ज-नैर्वेश्म पुनःपाकेन मृण्मयम्" मनु २गोमयादिनानु-लेपने च "सम्मार्जनोपाञ्जनेन सेकेनोल्लेखनेन च । गवाञ्च परिवासेन भूमिः शुध्यति पञ्चभिः" "ज्ञानं तपोऽग्निरा-हारो मृण्मनो वार्य्युपाञ्जनम् । वायुः कर्मकालौ च शुद्धेः कर्त्तॄणि देहिनाम्" मनुः उपाञ्जनमनुलेपनम्" कुल्लू० । आधारे ल्युट् । ३अञ्जनाधारे हस्तादौ च । "चतुर्जैक आहवनीयस्योपयमनीष्वाग्नीध्रीयस्याद्योपाञ्जने च" कात्या०८,६,२४, तृतीयं चतुर्भागमद्योपाञ्जने अच्छ-धरावनकोलञ्जनार्थाज्यशेषे पत्नीपाणाविल्यर्थः" कर्कः । अच्छधराञ्जनप्रकारस्तत्रैव "दक्षिणया द्वाराऽऽनीता पत्नी पाणिभ्यां शेषं प्रतिमृह्णाऽऽच्छधरावनक्ति "पराग् देवस्तुति-रिति" "प्रतिप्रस्थात्रा समानीता पत्नी होमशेषेणाज्ये-नाच्छस्याज्यस्यभागावपनक्त्यादिति सूत्रार्थः" वेददी० ।

**उपात्त** त्रि०उप+आ+दा—क्त । १गृहीते, २प्राप्ते च "त्वयं केचिदुपात्तस्य दुरितस्य प्रचक्षते" शावा०लः । ३अन्तर्गतमदे गजे पु० हलायुधः ।

**उपात्यय** पु० उप+अति—इण—अच् । १लोकशास्त्राचाराति-क्रमे, २व्यतिक्रमे, क्रमोल्लङ्घने, ३नाशे च । "परावनुपात्यय इणः" पा० क्रमप्राप्तस्यानतिपातोऽनुपात्ययः" सि०कौ० ।

**उपादान** न०उप+आ+दा—ल्युट् । १ग्रहणे "विलब्धं आ-

ज्ञायः शूद्रात् द्रव्योपादानमाचरेत्" मनुः । "स्वादात्मनोऽ-
प्युपादानात्" सा० द० । स्वस्वविषयेभ्य इन्द्रियाणां निवारणरूपे
२ प्रत्याहारे, कर्म्मणि ल्युट् । कार्य्यजननार्थमुपादीयमाने
कार्य्यान्विते ३ कारणे, यथा मृदादि घटादेः स्वर्णादि अल-
ङ्कारादेः, जननार्थं गृह्यते । तच्च सर्वदा कार्येष्वनुगतम् ।
"असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् । शक्तस्य
शक्यकरणात् कारणभावाच्च सत् कार्य्यम्" सां० का०
"उपादानानि कारणानि तेषां ग्रहणं कार्येण सह सम्बन्धः
उपादानैः कार्यस्य सम्बन्धादिति यावत् एतदुक्तं भवति
कार्य्येण संबन्धि कारणं कार्यस्य जनकं सम्बन्धश्च कार्य-
स्यासतो न सम्भवति तस्मात् सत् कार्यमिति" सां० कौ०
"उपादाननियमात्" "नकर्म्मण उपादत्वायोगात्" सां० सू०
उपादानकारणञ्च कार्य्याभिन्नकारणमिति सांख्या वेदान्ति
नश्च मन्यन्ते यथा मृत्तिकादयः घटादिकं प्रति, सुवर्णं
कुण्डलादिकं प्रति, तन्तवः पटं प्रति, तत्तत्कार्य्याभिन्नत्वादु-
पादानकारणम् । नैयायिकास्तु उपादानकारणं समवायि-
कारणतया व्यवह्रियते । "यत्समवेतं कार्य्यं भवति ज्ञे-
यन्तु समवायि जनकं तत्" भाषा० तेषांमते उपादान-
शब्देनापि तस्य व्यवहारोऽस्त्येव "उपादानस्य चाध्यक्षं
प्रवृत्तौ जनकं भवेत्" भाषोक्तेः । तत्तदुपादानगोचर
चिकीर्षाकृतज्ञानाश्रयत्वेन तैः ईश्वरस्य सर्व्वकर्तृत्व-
स्याभ्युपगमात् तच्च ईश्वरशब्दे चिन्तामणिग्रन्थे विवृतम्
सांख्यमतसिद्धे ४ आध्यात्मिकतुष्टिभेदे च यथाह सां० का० ।
"आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।
बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः" । "या
तु प्राकृत्यविवेकख्यातिः सा प्रकृतिमात्रात् मा भूत्
सर्व्वस्य सर्व्वदा तन्मात्रस्य सर्व्वान् प्रत्यविशेषात् प्रव्रज्या-
यास्तु सा भवति तस्मात् प्रव्रज्यामुपाददीथाः कृतं ते
ध्यानाभ्यासेनायुष्मन् ! इति उपदेशे या तुष्टिः सोपादा-
नाख्या नामाम्भ इत्युच्यते" सां० कौ० । सलिलस्येव अङ्कुरं
प्रति प्रव्रज्यायाः साक्षात्कारं प्रति सहकारिकारणत्वेन
सलिलसदृशत्वात् सलिलत्वम् । आत्मसाक्षात्काराय च
फलार्थिभिरुपादीयमानतया तस्या उपादानत्वमिति बो-
ध्यम् । तेन निर्वृत्तम् ठक् । औपदानिक स्वीकारमात्र-
जन्ये स्वत्वादौ यथा निध्यादौ द्रव्ये ग्रहणमात्रादेव स्वत्व-
मुत्पद्यते । उपादानोपादेयभावः

**उपादानलक्षणा** स्त्री उपादानात् स्वार्थस्य ग्रहणात् लक्षणा ।
"मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये । स्वात्मनो-
ऽप्युपादानादेषोपादानलक्षणा" सा० द० उक्ते अजहत्-
स्वार्थारूपे लक्षणाभेदे । यथा कुन्ताः प्रविशन्तीत्यादौ कुन्तश-
ब्दस्य कुन्तधारिणि लक्षणाभ्युपगमेऽपि तत्र कुन्तरूप-
स्वार्थस्यापि विशेषणविधयाऽन्वयात्तथात्वम् ।

**उपादिक** पु० उप+अद-इन् संज्ञायां कन् । कीटभेदे ।
उपोदिकायां स्त्री

**उपादेय** त्रि० उप+आ+दा-कर्म्मणि यत् । १ ग्राह्ये ग्रहीतुं
योग्ये विषये "उपादेयतारतम्यमेव" सा० द० । "भवे सौख्यं
हित्वा समस्तसुखमुपादेयमनघम्" शान्तिश० उपादानकारण
सम्बद्धे २ तद्भवे कार्य्ये । ३ विधेयत्वादिना उत्कृष्टे च
"कर्म्मासन्निहितं नैव बुद्धौ विपरिवर्त्तते । यद्धात्मन्
तदुपस्थानमुपादेये गुणोभवेत्" भट्टका० । "उपादेये
विधेये" ति० त० रघुनन्दनः ।
उपादेयं ग्रहणयोग्यं तच्चानुकूलवेदनीयं सुखं तत्साधनञ्च
"हेयोपादेयरहिते परिनिष्ठिते" शा० भा० वाक्ये "स यथा
मत्स्यार्थी सशल्कान् सकण्टकान् मत्स्यानुपादत्ते स याव-
दुपादेयं तावदादाय निवर्त्तते" सर्व० दर्शने च प्रयुक्तम् ।

**उपाधि** पु० उप+आ-धा-कि । अन्यथास्थितस्य वस्तुनोऽन्यथा
प्रकाशनरूपे १ कपटे, उपधिशब्दे उदा० । उपाधीयते
स्वधर्म्मोऽनेन करणे वा० कि । स्वसामीप्यादिना अन्यस्मिन्
स्वधर्म्मारोपसाधने विशेषणभेदे । २ उपाधिभेदोऽप्येकस्य
नानायोगः आकाशस्येव घटादिना" गतिश्रुतिरप्युपा-
धियोगादाकाशवत्" सां० सू० "उपाधिना क्रियते भिन्न
रूपः" इति श्रुतिः "कार्य्योपाधिरयं जीवः कारणो-
पाधिरीश्वरः" पञ्चद० कार्यमन्तःकरणं कारणमज्ञानमिति
वक्ष्यमाणोपाधिवादे उदा० ३ उपलक्षणरूपे विशेषणे च ।
स च जात्यादिस्तद्भिन्नश्च पदार्थवृत्तिधर्म्मः । "पदार्थविभा-
जकोपाधिमत्त्वम्" मुक्ता० । पदार्थविभाजकाश्च द्रव्यत्व
गुणत्वकर्म्मत्वसामान्यत्वविशेषत्वसमवायत्वभावत्वरूपाः तत्र
द्रव्यत्वादयो जातिरूपाः सामान्यत्वादयस्तद्भिन्नाः तत्र
नित्यत्वे सति समवेतत्वम् जातित्वम् परमसीमावर्त्तित्वे
सति नित्यद्रव्यमात्रवृत्तित्वं विशेषत्वम् । नित्यत्वे सति
सम्बन्धत्वम् समवायत्वम् । भावभिन्नत्वमभावत्वमन्योन्या-
श्रयभावात् अखण्डोपाधिरभावत्वमिति नव्याः । एवं
प्रतियोगित्वादयोऽपि अखण्डोपाधयः तैः कल्प्यन्ते ।
"उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक्" भाषा०
४ कुटुम्बव्यापृते । उपाधीयते नामसमीपे कर्म्मणि कि ।
५ उपनामनि यथा भट्टाचार्य्यमिश्रादयः उपाधीयतेमनोऽत्र

आधारे च । ६धर्मचिन्तायाम् ७व्यभिचारोन्नायके न्यायमतसिद्धे पदार्थभेदे च । “सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता” भाषा० उपाधिपदार्थनिरूपणग्रन्थस्य प्रायेण वङ्गदेशादौ पठनपाठनाभावेन लुप्तप्रायतया प्रचारो नास्तीति अनुमानचिन्तामणिकृता यथा उपाधिवादे तन्निरूपितं यथा च तस्य दूषकतायां वीजं निरूपितं तदत्र प्रदर्श्यते ।

“तत्रोपाधिः साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकः । अनौपाधिकत्वज्ञानञ्च न व्याप्तिज्ञाने हेतुरतो व्यापकत्वादिज्ञानेन नान्योऽन्याश्रयः । यद्वा व्यापकत्वं तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं तत्प्रतियोगित्वञ्चाव्यापकत्वं प्रतियोगित्वञ्च तदधिकरणानधिकरणत्वमिति वदन्ति तत्र साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेः न च तयोरनुपाधित्वं दूषकतावीजसाम्यात् मित्रातनयत्वेन श्यामत्वसाधने शाकपाकजत्वस्य, प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च शास्त्रेऽप्रयोजकत्वेनोपाधित्वस्वीकारात् पक्षेतरेऽतिव्याप्तेश्च । न च व्यतिरेके पर्वतेतरान्यत्वादित्यत्र इतरान्यत्वस्यासिद्धिवारणार्थं पर्वतपदं विशेषणमिति व्यतिरेके व्यर्थविशेषणत्वान्न स उपाधिः, बाधोन्नीतस्याप्यनुपाधितापत्तेः । न चेष्टापत्तिः इतरान्यत्वस्याप्रसिद्ध्या विशेषणं विना व्याप्त्यग्रहेण तत्सार्थकत्वात् । वस्तुगत्या साध्यव्यापकः पक्षेतर उपाधिरिति चेत् अस्तु तथा, तथापि पक्षातिरिक्ते साध्यव्यापकताग्रहादुपाधेर्दूषकत्वं तच्च तत्राप्यस्ति, अन्यथा पक्षे साध्यसन्देहादनुपाधित्वे उपाधिमात्रमुच्छिद्येत विपक्षाव्यावर्त्तकविशेषणशून्यत्वं विशेषणं तेन बाधोन्नीतपक्षेतरस्य परिग्रहः तत्र पक्षस्यैव विपक्षत्वात् न तु पर्वतेतरत्वादेरिति चेन्न न हि वस्तु विपक्षव्यावर्तकविशेषणशून्यं सर्वत्र प्रमेयत्वादेः सत्त्वात्तत्रोपात्तेति विशेषणे सिद्ध्यसिद्धिव्याघातः तथापि च साध्यव्यापकत्वसाधनाव्यापकत्वे तत्र स्त इति तद्व्यावृत्त्या पक्षे साध्यव्यावृत्तिरतो हेतोर्व्यभिचार एव व्यभिचारे चावश्यमुपाधिरिति पक्षेतर एव तत्रोपाधिः स्यात् तावन्मात्रस्यैव दूषकत्वाच्च व्यर्थं विशेषणम् । अत एवानुमानमात्रोच्छेदकतया जातित्वान्न पक्षेतर उपाधिरित्यपास्तम् दूषणसमर्थत्वेन जातित्वाभावात् । एतेन पक्षेतरव्यावृत्त्यर्थं प्रकारान्तरमपि निरस्तम्, उपाधित्वाभावेऽपि दूषणसमर्थत्वात् । अथोपाधिः स्वव्यतिरेकेण सत्प्रतिपक्षोत्थापकतया दूषणं, पक्षेतरत्वव्यतिरेकश्च न साध्याभावसाधकोऽसाधारणत्वात् न तु व्यभिचारोन्नायकतया दूषणं यथा हि साध्यव्यापकोपाध्यव्याप्यतया हेतोः साध्याव्याप्यत्वं तथा साध्यव्याप्यहेत्वव्यापकतयोपाधेर्न साध्यव्यापकत्वमपि सिध्येत् व्याप्तिग्राहकस्योभयत्रापि साम्येन विनिगमकविरहात् । तस्माद्यथा साध्यव्याप्येन हेतुना साध्यं साधनीयं तथा साध्यव्यापकोपाधिव्यावृत्त्या साध्याभावोऽपि साधनीयो व्याप्तिग्रहतौल्यादिति दूषकतावीजं सोऽयं सत्प्रतिपक्ष एवेति मैवम् एवं हि सत्प्रतिपक्ष उपाध्युद्भावनं न स्यात् सत्प्रतिपक्षान्तरवत् । किञ्चैवं बाधोन्नीतोऽपि पक्षेतरो नोपाधिः स्यात् व्यतिरेकेऽसाधारण्यात् । ननु बाधे नोपाधिनियमः धूमेन ह्रदे वह्निसाधने तदभावात् । न च हेतुमति पक्षे बाधे पक्षेतरोपाधिनियमः प्रत्यक्षे वह्नौ कृतकत्वेनानुष्णत्वे साध्येऽतेजस्त्वादेरुपाधित्वसम्भवादिति चेत् न तेजोमात्रपक्षत्वेऽतेजस्त्वं विनान्यस्य उपाधेरभावात् । किञ्च पर्वतावयववृत्त्यन्यत्वं पर्वतेतरद्रव्यत्वं ह्रदपर्वतसंयोगानाधारत्वं ह्रदपर्वतान्यत्वादिकमुपाधिः स्यादेव व्यतिरेकेऽसाधारण्याभावात् व्यतिरेकिणा सत्प्रतिपक्षसम्भवाच्च । न चासाधारण्यं, तस्यापि सत्प्रतिपक्षोत्थापकतया दोषत्वात् तस्मादुभयोरपि व्याप्तिग्राहकसाम्ये विरोधान्न व्याप्तिनिश्चयः किन्तूभयत्र व्यभिचारसंशयः तथा च व्यभिचारसंशयाधायकत्वेनोपाधेर्दूषकत्वं तच्च पक्षेतरेऽप्यस्ति तदुक्तमुपाधेरेव व्यभिचारशङ्केति । भवतु वोक्तन्यायेन सकलानुमानभङ्गभिया पक्षेतरोऽनुपाधिः तथापि लक्षणमतिव्यापकम् । नापि साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमुपाधित्वं दूषकतावीजस्य व्यभिचारोन्नयनस्य सत्प्रतिपक्षस्य वा साम्येन विषमव्याप्तस्याप्युपाधित्वात् तथा दूषकतायां साध्यव्याप्यत्वस्याप्रयोजकत्वाच्च । अथ साध्यप्रयोजको धर्म्म उपाधिः प्रयोजकत्वञ्च न न्यूनाधिकदेशवृत्तेः तस्मिन् सत्यभवतस्तेन विनापि भवतस्तदप्रयोजकत्वात् अन्यथा पक्षेतरस्याप्युपाधित्वप्रसङ्ग इति चेत् न दूषणौपयिकं हि प्रयोजकत्वमिह विवक्षितं तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवेति तदेव प्रयोजकं नत्वधिकं व्यर्थत्वात् ।

अथोपाधिः स उच्यते यद्धर्मोऽन्यत्र प्रतिबिम्बते यथा जवाकुसुमं स्फटिकलौहित्ये उपाधिः तथा चोपाधिवृत्तिव्यापत्वं हेतुत्वाभिमते चकास्ति तेनासावुपाधिः न च व्याप्यत्वमात्रेण दूषकत्वमिति साध्यव्यापकतापीष्यते तथा च समव्याप्त एवोपाधिरिति चेत् तत् किं विषमव्याप्तस्य

दूषकताबीजाभावाच्चोपाधिशब्दवाच्यत्वं तथात्वेऽप्युपाधिपदप्रवृत्तिनिमित्ताभावाद्वा नाद्यः तस्यापि व्यभिचाराद्युन्नायकत्वात्। नापरः न हि लोके समव्याप्त एवान्यत्र स्वधर्मप्रतिबिम्बजनक एवोपाधिपदप्रयोगः लाभाद्युपाधिना कृतमित्यादौ लाभादावुपाधिपदप्रयोगात्। किञ्च न शास्त्रे लौकिकव्यवहारार्थमुपाधिव्युत्पादनं किन्त्वनुमानदूषणार्थं तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमात्रमिति शास्त्रे तत्रैवोपाधिपदप्रयोगात्। अन्ये तु यदभावो व्यभिचारविरोधी स उपाधिः न च विषमव्याप्तस्याभावो व्यभिचारं विरुणद्धि तस्याभावेऽपि व्यभिचारात् अस्ति ह्यनित्यत्वव्यापकं प्रमेयत्वं तद्व्यत्यस्य गुणत्वे नचानित्यत्वगुणत्वयोर्व्याप्तिरस्ति समव्याप्तिकस्य च व्यतिरेकस्तथा, न हि साध्यव्यापकव्याप्यीभूतस्य व्याप्यं यत्तत् साध्यं व्यभिचरति व्यभिचारे चान्ततः साध्यमेवोपाधिः अभेदेऽपि व्याप्यव्यापकत्वात् साधनव्यापकत्वादिति स्वीचक्रुस्तन्न तत्रापि ह्यव्यभिचारे साध्यव्याप्यव्याप्यत्वं तन्त्रमावश्यकत्वाल्लाघवाच्च न साध्यव्यापकव्याप्यत्वमपि भवतैव व्यभिचारस्य दर्शितत्वात्। न च साध्यव्याप्यव्याप्यत्वमेवानौपाधिकत्वं साध्यव्याप्यमित्यत्रापि ह्यनौपाधिकत्वं तदेव वाच्यं तथा चानवस्थेति। अनौपाधिकत्वे च व्याप्तिलक्षणे यावदिति पदं साध्यव्यापके विशेषणं दत्तमेव किञ्च यस्मिन् सत्यनुमितिर्न भवति तदेव तत्र दूषणं न तु यद्व्यतिरेके न भवत्येवेत्येतद्गर्भं विरुद्धत्वादेरप्यदोषत्वापत्तेः नापि पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनव्यापकत्वमुपाधित्वं साधनावच्छिन्नसाध्यव्यापकोपाध्यव्यापनात्। शब्दोऽभिधेयः प्रमेयत्वादित्यत्र श्रावणत्वस्योपाधित्वापत्तेश्च शब्दधर्मगुणत्वावच्छिन्नाभिधेयत्वं यत्र रूपादौ तत्र श्रावणत्वं व्यापकं पक्षे प्रमेयत्वस्य साधनस्याव्यापकं हि तत्। आर्द्रेन्धनवत्त्वादावुपाधौ पक्षनियततादृशधर्माभावाच्च। अथ साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः तेन ध्वंसस्य जन्यत्वेन ध्वंसप्रतियोगित्वे साध्ये साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिः। श्यामत्वे शाकपाकजत्वमुपाधिरिति तन्न पक्षधर्मावच्छिन्नसाध्यव्यापकाग्निशीतत्वस्योपाधित्वप्रसङ्गात् सोपाधित्वादसाधकमित्यत्र साधनावच्छिन्नसाध्यव्यापकव्यभिचारित्वे साधनावच्छिन्नत्वस्य व्यर्थत्वप्रसङ्गाच्च। किञ्च पक्षद्वयेऽपि विशिष्टसाध्यव्यभिचारं विशिष्टसाध्यव्यतिरेकं वा प्रसाध्य पश्चात् केवलसाध्यव्यभिचारः केवलसाध्यव्यतिरेको वा साधनीयस्तथा चार्थान्तरं केवलसाध्ये हि विवादो न तु विशिष्टे। अथ प्रकृतसाध्यव्यभिचारसिद्ध्यर्थं विशिष्टसाध्यव्यभिचारः साध्य इति चेन्न अप्राप्तकालत्वात् प्रथमं साध्यव्यभिचार एवोद्भाव्यस्तत्सिद्धावुपाधिरिति चेत् तर्हि प्रकृतानुमाने नोपाधिर्दूषणं स्यात्। किञ्च साध्यव्यभिचारहेतुत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकव्यभिचार एवोपन्यसनीयो नोपाधिः। स्यादेतत् पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः पर्यवसितं साध्यं च पक्षधर्मताबललभ्यं यथा शब्दोऽनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान् प्रमेयत्वादित्यत्र पर्यवसितं यत्साध्यम् अनित्यत्वं तस्य व्यापकं कृतकत्वमुपाधिः यदि च तथैव कृतकत्वमपि शब्दे साध्यते तदा अनित्यत्वमुपाधिः तदुक्तं वाद्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः पर्यवसितं नियमयन् दूषकताबीजसाम्याज्ज्यादिति। अनेन पक्षधर्मसाधनावच्छिन्नसाध्यव्यापकोपाधिः संगृह्यते तादृशसाध्यस्य पर्यवसितत्वादिति तन्न एवं हि द्व्यणुकस्य सावयवत्वे सिद्धे द्व्यणुकमनित्यद्रव्यासमवेतं जन्यमहत्त्वानधिकरणद्रव्यत्वादित्यत्र नित्यद्रव्यसमवेतत्वमुपाधिः स्यात्। भवति हि नित्यद्रव्यसमवेतत्वं पर्यवसितं साध्यं तस्य, व्यापकं साधनाव्यापकञ्च। किञ्च पक्षधर्मताबललभ्यसाध्यसिद्धौ निष्फल उपाधिः तदसिद्धौ च कस्य व्यापकः न हि सोपाधौ पक्षधर्मताबलात् साध्यं सिध्यति यस्य व्यापक उपाधिः स्यादिति। अत्रोच्यते यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिः लक्षणन्तु पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वं यद्धर्मावच्छेदेन साध्यं स च धर्मः। क्वचित् साधनमेव क्वचिद्द्रव्यत्वादि क्वचिन्महानसत्वादि। तथा हि समव्याप्तस्य विषमव्याप्तस्य वा साध्यव्यापकस्य व्यभिचारेण साधनस्य साध्यव्यभिचारः स्फुट एव व्यापकव्यभिचारिणस्तद्व्याप्यव्यभिचारनियमात् साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकयोर्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वमेव यथा ध्वंसस्यानित्यत्वे साध्ये भावत्वस्य, वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च विशेषणाव्यभिचारिणि साधने विशिष्टव्यभिचारस्य विशेष्यव्यभिचारित्वनियमात्। अतएव नार्थान्तरं, विशेषणाव्यभिचारित्वेन ज्ञाते साधने विशिष्टव्यभिचारः सिध्यन् विशेष्यसाध्यव्यभिचारमादायैव सिध्यति पक्षधर्मताबलात्। अन्यथा प्रतीतेरपर्यवसानात्। न च पक्षधर्मताबलात् प्रकृतसिद्धावर्थान्तरम्। यद्वा प्र-

त्वचस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि द्रव्यत्वाव्यभिचारित्वे सति द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वान्महत्त्ववत् तथा मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनयत्वाव्यभिचारित्वे सति श्याममित्रातनयत्वव्यापकव्यभिचारित्वात् अघटत्ववत् । अव्यभिचारश्च तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वं तच्चाभेदेऽपि । यद्वा यः साधनव्यभिचारी साध्यव्यभिचारोन्नायकः स उपाधिः तच्च साक्षात् परम्परया वेति नार्थान्तरम् । किञ्च अर्थान्तरस्य पुरुषदोषत्वादाभासान्तरस्य तत्राभावादुपाधिरेव भावत्वादिकं दोषः न चैवं शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वं, जलं प्रमेयं रसवत्त्वादित्यत्र पृथिवीत्वमुपाधिः स्यात् केवलान्वयित्वसाधकप्रमाणेन तत्र साध्यसिद्धेरुपाधेर्विशिष्टाव्यापकत्वात् न च पक्षेतरे स्वव्याघातकत्वेनानुपाधावतिव्याप्तिः तत्रानुकूलतर्काभावेन साध्यव्यापकत्वानिश्चयात् सहचारदर्शनादेस्तेन विना संशायकत्वादित्युक्तं बाधोन्नीते चानुकूलतर्कोऽस्त्येवेति । एवं पर्व्वतावयवत्त्वान्यत्वादेरपि नोपाधित्वं पक्षमात्रव्यावर्त्तकविशेषणवत्त्वात् अतएव धूमे आर्द्रेन्धनप्रभववह्निमत्त्वं बहिरिन्द्रियप्रत्यक्षत्वे उद्भूतरूपवत्त्वं मित्रातनयश्यामत्वे शाकपाकजत्वं जन्यानित्यत्वे भावत्वमुपाधिः तदुत्कर्षेण साध्योत्कर्षात् अनन्यथासिद्धान्वयव्यतिरेकतो वैद्यकात् कारणतावगमेन घटोन्मज्जनप्रसङ्गेन साध्यव्यापकतानिश्चयात् । तत् किं कार्य्यकारणयोरेव व्याप्तिः तथा च बहुधा व्याकुलोस्यादिति चेन्न तदुपजीव्यान्येषामप्यनुकूलतर्केण व्याप्तिग्रहात् यत्र साध्योपाध्योर्हेतुसाध्ययोर्वा व्याप्तिग्राहकसाम्याच्चैकत्र व्याप्तिनिश्चयस्तत्र सन्दिग्धोपाधित्वं व्यभिचारसंशयोपाधायकत्वात् । यदा च तादृशैकत्रानुकूलतर्कावतारस्तदा हेतुत्वमुपाधित्वं वा निश्चितं पक्षेतरस्य स्वव्याघातकत्वेन न हेतुव्यभिचारसंशायकत्वमतो न सन्दिग्धोपाधिरपि सः । यत्तु पक्षेतरस्य यथा साध्यव्यापकत्वं तथा साध्याभावव्यापकत्वमपि ग्राहकसाम्यात् तथा चोभयव्यापकनिवृत्त्या साध्यतदभावाभ्यां पक्षे निवर्त्तितव्यम् न चैवम् । तथा च पक्षेतरः साध्यव्यापकतासंशयेन सन्दिग्धः कथं परं दूषयेदिति तन्न तथापि हि साध्यव्यापकता पक्षमात्रस्य हेतुव्यभिचार संशयाधायकत्वेन दूषणं स्यादेव । ननु यत्रोपाधिस्तत्रानुकूलतर्को यदि नास्ति तदा तदभावेनैव व्याप्तेरग्रहः अथास्ति तदा साध्यव्याप्याव्यापकत्वेनोपाधिः साध्यव्यापकत्वनिश्चयान्नोपाधिरित्युभयथापि नोपाधिर्दूषणं न च व्याप्यतदभावव्याप्यमुभयमत उपाधिरपि तदभावोन्नयनेन दोष इति वाच्यं उपाधेरात्मलाभार्थमनुकूलतर्काभावोपजीवकत्वेन तस्यैव दोषत्वादिति चेन्न सोपाधावेकत्र साध्यतदभावसम्बन्धस्य विरुद्धत्वादवच्छेदभेदेन तदुभयसम्बन्धो वाच्यः तथा च साधने साध्यसम्बन्धितावच्छेदकरूपमनुकूलतर्काभावोपजीवनमन्तरेणोपाधिरावश्यकस्तथानुकूलतर्काभावोऽप्यावश्यक इति उभयोरपि विनिगमकाभावाद्दूषकत्वम् । अन्ये तु यद्व्यावृत्त्या यस्य साधनस्य साध्यं निवर्त्तते स धर्म्मस्तत्र हेतावुपाधिः स च धर्म्मी यस्याभावात् पक्षे साध्यसाधनसम्बन्धाभावः यथा आर्द्रेन्धनवत्त्वं, व्यावर्त्तते हि तद्व्यावृत्त्या धूमवत्त्वमयोगोलके । अतएव तत्र साध्यसाधनसम्बन्धाभावः पक्षे । एवं भावत्वव्यावृत्त्या ध्वंसे जन्यत्वानित्यत्वयोः सम्बन्धोनिवर्त्तमानः पक्षधर्म्मताबलादनित्यत्वाभावमादाय सिध्यति । तथा वायावुद्भूतरूपवत्त्वं निवर्त्तमानं बहिर्द्रव्यत्वे सति प्रत्यक्षत्वं निवर्त्तयत् प्रत्यक्षत्वाभावमादाय सिध्यति तथा चोभयत्रापि पक्षे साध्याभावसिद्ध्या साध्यसाधनसम्बन्धाभावोऽस्तीति अतएव बाधानुन्नीतपक्षेतरस्यानुपाधित्वं स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्त्तकत्वादिति । यत्तूपाधिमात्रस्य लक्षणं व्यतिरेकिधर्म्मत्वं पक्षेतरोऽपि क्वचिदुपाधिः तत्तदुपाधेस्तु तत्तत्साध्यव्यापकत्वे सति तत्तत्साधनाव्यापकत्वं न च धूमवह्निसम्बन्धोपाधिः पक्षेतरत्वं स्यादिति वाच्यम् आपाद्याप्रसिद्धेरिति तन्न अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूप्यं तच्च न व्यतिरेकित्वमतिप्रसङ्गात् विशेषलक्षणे वह्निधूमसम्बन्धे पक्षेतरत्वस्योपाधित्वप्रसङ्गाच्च । केचित्तु साधनव्यापकोऽप्युपाधिः क्वचिद्यत्र पक्षावृत्तिर्हेतुः यथा करका पृथिवी कठिनसंयोगात् इत्यत्रानुष्णाशीतस्पर्शवत्त्वं न च तत्र स्वरूपासिद्धेरेव दोषः सर्व्वत्रोपाधेर्दूषणान्तरसङ्करादित्याहुः । साध्यञ्च नोपाधिः व्यभिचारसाधने साध्याविशिष्टत्वात् अनुमितिमात्रोच्छेदप्रसङ्गाच्च ।

स चायं द्विविधः निश्चितः सन्दिग्धश्च साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितोव्यभिचारनिश्चयाधायकत्वेन निश्चितोपाधिः यथा वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वम् । यत्र साधनव्यापकत्वसन्देहः साध्यव्यापकत्वसंशयो वा तदुभयसन्देहो वा तत्र हेतुव्यभिचारसंशायकत्वेन सन्दिग्धोपाधिः यथा मित्रातनयत्वेन श्यामत्वे साध्ये

शाकाद्याहारपरिणतिजत्वं न च तेन हेतुना शाकपाकजत्वमपि साध्यं तत्र श्यामत्वस्योपाधित्वादुभयस्यापि साधने अर्थान्तरं श्यामत्वमात्रे विवादो नतूभयत्र । न चैवं धूमाद्वह्न्यनुमानेऽपि वह्निसामग्र्युपाधिः स्यात् तत्र वह्निनेव तत्सामग्र्यापि समं धूमस्यानौपाधिकत्वनिश्चयात् । अत्र तु मित्रातनयत्वव्याप्यश्यामसामग्र्या स्यातव्यमित्यत्र कार्यकारणभावादीनां व्याप्तिग्राहकाणामभावात् । अतएव साध्यसामग्र्या सह हेतोरपि यत्र व्याप्तिग्राहकमस्ति तत्र सामग्री नोपाधिः यत्र तु तन्नास्ति तत्र साप्युपाधिरित्यभिसन्धाय सामग्री च क्वचिन्नोपाधिर्नतु सर्वत्र इत्युक्तं यथा तुल्ययोगक्षेमयोरुपाधेर्व्यापकतासन्देहे ईश्वरानुमाने शरीरजन्यत्वाणुत्वादिः यथा च शाकपाकजत्वस्य साध्यव्यापकतासन्देहे मित्रातनयत्वे । यत्तु उपाधिसन्देहो नोपाधिर्न वा हेत्वाभासान्तरमिति तदुद्भावने निरनुयोज्यानुयोग इति तन्न सन्दिग्धानैकान्तिकव्यभिचारसंशयाधायकत्वेन दूषणत्वादुपाधेरिव व्यभिचारनिश्चयाधायकतया ।

इदानीमुपाधेर्दूषकताबीजं निरूप्यते । नाप्यस्य व्यतिरेकद्वारा सत्प्रतिपक्षत्वेन दूषकत्वं तदा हि सत्प्रतिपक्षे सत्प्रतिपक्षान्तरवदुपाधेरुद्भावनं न स्यात् न च प्रतिपक्षबाहुल्येनाधिकबलार्थमुद्भावनं शतमप्यन्धो न पश्यतीति न्यायात् एकेनापि बहूनां प्रतिबन्धाच्च व्याप्तिपक्षधर्मतेति बलं तच्च तुल्यमेव न तु भूयस्त्वमपि एकस्मादनुमितेरदर्शनात् । सन्दिग्धोपाधेरदूषकतापाताच्च तद्व्यतिरेकस्य पक्षे सन्दिग्धत्वात् अपि चैवं बाधोन्नीतपक्षेतरस्योपाधित्वं न स्यात् व्यतिरेकेऽसाधारण्यात् पक्षधर्मस्योपाधिर्न स्यात् यथा घटोऽनित्यो द्रव्यत्वादित्यत्र कार्यत्वं, गन्धाधरो द्रव्यं स्वातन्त्र्य प्रतीयमानत्वादित्यत्राश्रावणत्वं, तद्व्यतिरेकस्य पक्षावृत्तित्वात् । न च नायमुपाधिः, तल्लक्षणसत्त्वात् अन्यथा दूषकत्वसम्भवाच्च । किञ्च साध्यव्यापकव्याप्यत्वेनोपाधेः साध्याव्यापकत्वे तद्व्यतिरेकेण कथं सत्प्रतिपक्षः, न ह्यव्यापकव्यतिरेकादव्याप्यव्यतिरेकः । नापि व्याप्तिविरहरूपतया असिद्धत्वेनानौपाधिकत्वस्य व्याप्तित्वनिरासात् । नाप्यनौपाधित्वज्ञानस्य व्याप्तिधीहेतुत्वस्य तत्त्वेन व्याप्तिज्ञानकारणविघटकतया व्याप्यत्वासिद्धावन्तर्भावात् । नह्यन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यव्याप्तिज्ञानं प्रति प्रतिबन्धकमित्युक्तम् । न च साध्यव्यापकत्वसाध्यव्याप्यत्वज्ञाने विद्यमाने साधनस्य साध्यव्यापकत्वज्ञानं नोत्पत्तुमर्हतीति वाच्यं न हि साध्यव्यापकव्याप्यत्वज्ञानं व्याप्तिज्ञानकारणं येन तत् प्रतिबन्धकं स्यात् किन्तु साध्यव्यापकव्यभिचारित्वेन साध्यव्यभिचारित्वज्ञानद्वारा, नापि व्यभिचारोन्नायकत्वेन । यथा हि साध्यव्यापकव्यभिचारितया साधनस्य साध्यव्यभिचारित्वमनुमेयं तथा साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमुपाधेरप्यनुमेयं व्याप्तिग्राहकसाम्यात् । नापि साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया, साध्यव्याप्याव्यापकत्वेनोपाधेरेव साध्याव्यापकत्वसाधनात् तस्मादुपाधिर्हेत्वाभासान्तरमिति । उच्यते आर्द्रेन्धनवत्त्वादेस्तर्कादिना साध्यव्यापकत्वसाधने व्यापकत्वे निश्चिते दूषकताबीजचिन्तनं यदि हि साध्यसाधनसहचारदर्शनेनोपाधौ साध्यव्यापकतानिश्चय एव नास्ति तदोपाधित्वनिश्चयाभावात् दूषकतैव नास्तीति क्व बहिर्भावान्तर्भावचिन्ता । किञ्च सत्प्रतिपक्षतया व्याप्यत्वासिद्धतया स्वातन्त्र्येण वा यदि दोषत्वं सर्वथा साध्यव्यापकतानिश्चयो वाच्यः तेन विना तेषामभावात् । तस्मादुपाधिनिश्चयाद्व्यभिचारनिश्चयः तत्संशयात् संशय इति व्यभिचारज्ञानद्वारा साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया वोपाधेर्दूषकत्वम् । यद्वा साध्यव्यापकाभाववद्वृत्तितया साध्यव्यभिचारित्वमुन्नेयं न च साधनाभाववद्वृत्तित्वमुपाधेरिति वाच्यम् उपाधिमात्रोच्छेदप्रसङ्गात् सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकवत् अवृत्तिगगनादौ साध्याव्यापकत्वात् संयोगादौ हेतौ साधनव्यापकत्वाच्च । अथोपाध्याभासाः । असाधारणविपर्ययो यथान्वयव्यतिरेकिणि साध्ये बाधोन्नीतान्यपक्षेतरत्वम् । अप्रसिद्धसाध्यविपर्ययो यथा केवलान्वयिनि साध्ये पक्षेतरत्वादिः । बाधितसाधकविपर्ययो यथा वह्निरनुष्णस्तेजस्त्वादित्यत्राकृतकत्वम् । पक्षाविपर्ययो यथा क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्राणुव्यतिरिक्तत्वम् अत्राणुव्यतिरेकव्यतिरेकस्य क्षित्यादेरेकदेशवृत्त्या भागासिद्धेः । पूर्वसाधनव्यतिरेको यथा शर्करारसोऽनित्योऽनित्यवृत्तिगुणत्वात्, रसोऽनित्यो रसनेन्द्रियजन्यनिर्विकल्पकविषयत्वात् रसत्ववदित्यादौ पूर्वसाधनतायाः प्रयोगानुरोधित्वेनाव्यवस्थितत्वात् कदाचिन्नित्यत्वसाधनव्यतिरेकस्योपाधित्वं कदाचिदनित्यत्वसाधनव्यतिरेकित्वस्येति वस्तुव्यवस्था न स्यात् उपाधेर्नित्यदोषत्वाच्च । न हि सद्येन

सोपाधिसम्बद्धं तत्त्वेनानुपाधित्वसम्बद्धं सम्भवति न तु सत्प्रतिपक्षोच्छेदः पूर्व्वसाधनव्यतिरेकस्यानुपाधित्वे बीजं स्थापनाया बलाभासत्वं तत्र पूर्व्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधित्वात् न च पूर्वहेतोस्तत एवासाधकत्वात् सत्प्रतिपक्षवैयर्थ्यं तत्रेति वाच्यम् अस्फुटव्याप्यविशेषदशायां सत्प्रतिपक्षसम्भवात्। पूर्वसाधनव्याप्यव्यतिरेको यथा अकर्त्तृत्वानुमाने नित्यत्वादिः। पक्षविपक्षान्यतरान्यो यथा प्रसिद्धानुमाने पर्वतजलह्रदान्यतरान्यत्वम्। पक्षेतरसाध्याभावो यथात्रैव पर्वतेतराग्निमत्त्वं न चात्र व्यर्थविशेषणत्वं दूषणं सत्त्वेऽप्युपाधेराभासत्वात्। तत्तुल्यश्च यथात्रैव पर्व्वतेतरेन्धनवत्त्वम्। एवं वह्निसामग्र्यादिकमूह्यम्" विवरणं दीधित्यादौ दृश्यं विस्तरभयान्नोक्तम्।

उपाधिना निर्मितः ठञ् स्त्रियां ङीप्। औपाधिक उपाधिजनिते मिथ्याभूते आरोपिते स्फटिकलौहित्यादौ जवासन्निकर्षात् स्फटिके च मिथ्याभूतं लौहित्यमुत्पद्यते इति वेदान्तिनः। नैयायिकादयस्तु तत्र लौहित्यस्य भ्रान्तिरित्युररीचक्रुः। प्रमेयवि० सं० धृते तयोः पक्षयोर्युक्तायुक्तत्वं यथावस्थितं तदत्र दर्श्यते।

"यस्तु लौहित्यमिथ्यात्वं न सहते स वक्तव्यः किं स्फटिकप्रवृत्ता नयनरश्मयः स्फटिकप्रतिफलितजवाकुसुमसम्पर्येयुः? किं वा कुसुमगतरूपमात्रं स्फटिके प्रतिबिम्बितं स्फटिकात्मना भासते? उत पद्मरागादिमणिप्रभयेव कुसुमप्रभया व्याप्तत्वात् स्फटिको लोहितइवावभासते?। अथ वा तत्र व्याप्तवती प्रभैव लोहिता भाति? आहोस्वित्तया प्रभया स्फटिके नूतनं लौहित्यमुत्पादितम्! आद्ये नेत्राभिमुखं कुसुममपि प्रतीयेत। यदि च दोषवशात् कुसुमेन संयोगः तर्हि लौहित्यमपि न भासेत तद्युक्तसम्भवस्य तत्राभावात्। न द्वितीयः क्वचिदपि द्रव्यं परित्यज्य रूपमात्रस्य प्रतिबिम्बादर्शनात्। तृतीये तु स्फटिकलौहित्ययोः सम्बन्धो मिथ्येति त्वयाभ्युपगतमेव स्यात् इवशब्दप्रयोगात्। चतुर्थे स्फटिकशौक्ल्यमपि प्रतीयेत अप्रतीतिकारणाभावात् न च जवाप्रभया विरोधिगुणयुक्तया शौक्ल्यमपसारितं तथासति नीरूपस्य स्फटिकस्य चाक्षुषत्वप्रसङ्गात् न हि रूपं विहाय द्रव्यमात्रस्य चाक्षुषत्वं सम्भवति वायोरपि तत्प्रसङ्गात्। पञ्चमेऽपि प्रभा निमित्तकारणं चेत्तदा प्रभापगमेऽपि स्फटिके लौहित्यमवतिष्ठेत्। उपादानं प्रभेति चेत् न मणाविव कुसुमे प्रभाया एवादर्शनात् पूर्वोक्तविकल्पदूषणानामङ्गीकारवादत्वात् तदेवं स्फटिके मिथ्या लौहित्यं कुसुमनिमित्तमित्यङ्गीकर्त्तव्यम्। एवमात्मन्यहङ्कारनिमित्तं कर्तृत्वादिकमारोप्यते"। प्रतिबिम्बपक्षेऽपि प्रतिबिम्बपदार्थस्य यथा मिथ्यात्वं तदपि तत्रैव निर्णीतं यथा ननु जीवस्याहङ्कारस्थप्रतिबिम्बत्वे दर्पणस्थमुखप्रतिबिम्बवद्बिम्बाद्भेदः स्यात्। तत्र हि ग्रीवास्थदर्पणस्थयोरन्योन्याभिमुखत्वेन भेदोऽनुभूयते। नैवं मदीयमिदं मुखमित्यैक्यप्रत्यभिज्ञया भेदानुभवस्य बाधात्। न च प्रत्यभिज्ञैवेतरेण बाध्येति वाच्यम् सति भेदे प्रतिबिम्बासम्भवात्। किं प्रतिबिम्बो नाम मुखलाञ्छितमुद्रा उत दर्पणावयवा एव बिम्बस्य सन्निधिवशात्तथा परिणमन्ते। नाद्यः दर्पणस्थमुखस्येतरस्मादल्पत्वात्। यत्र तु प्रौढ दर्पणे प्रौढं मुखमुपलभ्यते तत्रापि तस्य न मुद्रात्वम् दर्पणमुखयोः संयोगाभावात्। न द्वितीयः निमित्तकारणस्य बिम्बस्यापायेऽपि तस्यावस्थानप्रसङ्गात् न हि तथावतिष्ठते। तेनैव पुरुषेण दर्पणे तिर्य्यङ्नीक्षिते पुरुषान्तरेण सम्यगवलोकिते वा तन्मुखानुपलम्भात्। न चैवं मन्तव्यम् क्वचिन्निमित्तापाये कार्यमप्यपैति हस्तसंयोगजन्यस्य कटप्रसारणस्य हस्तसंयोगापायेऽपायदर्शनादिति। न तत्र निमित्तापायात् कार्यापायः किन्तु चिरकालसंवेष्टनाहितेन संस्कारेण संवेष्टनलक्षणविरुद्धकार्योत्पादनात्। अन्यथा चिरकालप्रसारणेन संवेष्टनसंस्कारे विनाशितेऽपि हस्तापाये प्रसारणमपेयात्। न चैवमपैति। इह तु चिरकालबिम्बसन्निधावप्यन्ते बिम्बापाये प्रतिबिम्बोऽपि गच्छत्येवेति न बिम्बं परिणामस्य निमित्तम्। अथ मन्यसे चिरकालावस्थितोऽपि कमलविकासः सवितृकिरणस्य निमित्तस्यापायेऽपगच्छतीति। तन्न तत्रापि प्राथमिकमुकुलत्वे हेतुभिः पार्थिवैराप्यैश्च कमलावयवैः पुनरपि रात्रौ मुकुलत्वे विरुद्धकार्ये जनिते विकासापायात्। अन्यथा तादृगवयवरहिते स्थाने कमलेऽपि रात्रौ विकासोऽपगच्छेत्। आदर्शे तु मुखाकारपरिणते पुनः केन हेतुना समतलाकारपरिणामः तदवयवानां कारककर्मव्यतिरेकेण अकिञ्चित्करत्वात्। अतएव बिम्बासन्निधिमात्रेण नादर्शावयवा मुखाकारेण परिणमेरन्। अन्यथा दर्पणद्रव्ये प्रतिमाकृते कर्त्तव्ये सति लौकिका बिम्बमेव सन्निधापयेयुर्नतद्धेतुमपेक्षेरन्। दर्पणद्रव्यस्याप्याकार परिणामे कारकसापेक्षायामपि प्रतिबिम्बपरिणामे पुनः स्वरूपपरिणामे वा न तदपेक्षेति चेत् एवमपि न मुख-

प्रतिबिम्बाकारपरिणामो युक्तिसहः चक्षुर्नासिकादिनिम्नोन्नतभावस्य स्पर्शेनानुपलम्भात्। समतलमेव हि पाणिना स्पृश्यते। समतलेन व्यवहितं मुखमिति चेत्। तर्हि चाक्षुषमपि न स्यात्। तत एतत्सिद्धम्। विमत आदर्शमुखव्यक्त्यन्तररहितः तज्जन्मकारणशून्यत्वात्। यथा विषाणजन्मकारणशून्यं विषाणरहितं शशमस्तकमिति। ननु तर्हि शुक्तिरजतवन्मिथ्यात्वापत्तेर्न बिम्बैकत्वसिद्धिः प्रत्यभिज्ञा तु व्यभिचारिणी मिथ्यारजतेऽपि मदीयमिदं रजतमिति तद्दर्शनादिति चेत्। विषमोदृष्टान्तः नेदं रजतमिति हि तत्र रजतस्वरूपबाधया रजताभिज्ञाया भ्रमत्वे तत्प्रत्यभिज्ञाया अपि भ्रमत्वमुचितम् इह तु न तथा नेदं मुखमिति स्वरूपबाधः किन्तु नात्र मुखमिति देशसम्बन्धमात्रबाधे सत्युत्पन्ना मदीयमेव मुखमिति प्रत्यभिज्ञा कथं भ्रमःस्यात्। न च स्वमुखावयवानामचाक्षुषत्वात् कथं प्रत्यभिज्ञानमिति वाच्यम् नासाग्रादिकतिपयावयवदर्शनादपि घटादिवदवयविनश्चाक्षुषत्वोपपत्तेः। यः पुनर्दर्पणापगमे प्रतिबिम्बापगमः नासौ स्वरूपबाधः दर्पणेऽपि तत्प्रसङ्गात्। ननु तत्त्वमसिवाक्येन जीवरूपः प्रतिबिम्बो बाध्यते यः स्थाणुरसौ पुरुष इति वद्बाधायां सामानाधिकरण्यात् संसार्य्यविनाशे च मोक्षानुपपत्तेः। मैवम् सोऽयं देवदत्त इति वदैक्यपरत्वेनापि सामानाधिकरण्यसम्भवात् विरुद्धांशबाधमात्रेण मोक्षोपपत्तेः। कृत्स्नस्य जीवस्य बाधे मोक्षस्यापुरुषार्थत्वात्। यस्तु मन्यते प्रतिबिम्ब एव नास्ति, दर्पणप्रतिस्फालिता नेत्ररश्मयः परावृत्य बिम्बमेव दर्पणादविविक्तं गृह्णन्तीति, स्पष्टप्रत्यङ्मुखत्वाद्यनुभवेनैवासौ निराकरणीयः। कथं तर्हि मूर्त्तद्रव्यस्य मुखस्यैकस्य विच्छिन्नदेशद्वये युगपत् कार्त्स्न्येन वृत्तिः। दर्पणदेशवृत्तेर्मायाकृतत्वादिति ब्रूमः। न हि मायायामसम्भावनीयं नाम स्वशिरश्छेदादिकमपि स्वप्ने माया दर्शयति। नन्वेवमेव जलमध्येऽधोमुखस्य वृक्षप्रतिबिम्बस्य तीरस्थवृक्षेणैक्ये सति तीरस्थवृक्षोऽधिष्ठानं तत्र च मायया जलगतत्वमधोमुखत्वं चाध्यस्तमिति वक्तव्यम्। न चात्राध्यासहेतुरस्ति। अधिष्ठानस्य साकल्येन प्रतीतेस्तत्कथमयमध्यासः। उच्यते। किमत्र वृक्षावरणाभावादध्यासाभावः? किं वा दोषाभावात्। उतोपादानाभावात्? आहोस्विदध्यासविरोधिनोऽधिष्ठानतत्त्वज्ञानस्य सद्भावात्?। नाद्यः। चैतन्यावरणस्यैवाध्यासोपादानतया जडे पृथगावरणानुपयोगात्। एतेन तृतीयोऽपि निरस्तः। न द्वितीयः। सोपाधिकभ्रमेषूपाधेरेव दोषत्वात्। न चतुर्थः। निरुपाधिकभ्रमस्यैवाधिष्ठानतत्त्वज्ञानविरोधित्वात्। तर्हि सोपाधिकभ्रमस्य कर्त्तृत्वादेर्नात्मतत्त्वज्ञानान्निवृत्तिः किन्तु अहङ्कारोपाध्यपगमादिति चेत्। बाढम्। पारमार्थिकदर्पणाद्युपाधेस्तत्कृतभ्रमस्य च ज्ञानादनिवृत्तावप्यज्ञानजन्योपाधेरहङ्कारस्य निरुपाधिकभ्रमरूपस्यात्मतत्त्वज्ञानान्निवृत्तौ कर्त्तृत्वादेर्ज्ञानान्निवृत्तिरर्थात् सिध्यति"।

परिभाषायां तु उपाधिसन्निकर्षस्थले भ्रममेवाङ्गीचकार न तु तत्र मिथ्यात्वमिति भेदः। "तत्र सङ्केतवन्नाम सैव संज्ञेति कीर्त्त्यते। नैमित्तिकी पारिभाषिक्यौपाधिक्यपि तद्भिदा" इति संज्ञां त्रिधा विभज्य। "उभयावृत्तिधर्मेण संज्ञा स्यात् पारिभाषिकी। औपाधिकी त्वनुगतोपाधिना या प्रवर्त्तते" इति "यद्वाधुनिकसङ्केतशालित्वात् पारिभाषिकम्। जात्या नैमित्तिकं शक्तमौपाधिकमुपाधिना"। "यदुपाध्यवच्छिन्नशक्तिमन्नाम तदौपाधिकं यथाकाशपदादि" इति च शब्दप्र०। अत्र उपाधिना शक्तेरवच्छेदकरणात् तत्कृतत्वम् इति बोध्यम्।

**उपाधेय** त्रि० उप+आ+धा–कर्मणि यत्। १अभिनिवेशनीये २आरोप्ये ३उपाधिना विशेष्ये च। "उपाधेयसङ्करेऽपि उपाधेरसङ्करात्" जगदी०।

**उपाध्याय** पु० उपेत्याधीयतेऽस्मात् उप+अधि+इङ्–घञ्। "एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः। योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते" इति मनूक्तलक्षणे वेदैकदेशतदङ्गाध्यापके। स्त्रियां ङीपि उपाध्याया उपाध्यायीतिरूपद्वयम्। उपाध्यायस्य पत्न्यर्थे ङीष् आनुक् वा उपाध्यायानी "उपाध्यायानी कृतमतो" मा० आ० ३अ० उपाध्यायी च। "उपाध्यायान् दशाचार्य आचार्य्याणां शतं पिता"। "आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम्" मनुः। तन्मरणे एकरात्राशौचम् "आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वशुर्य्यसहाध्यायिशिष्येष्वेकरात्रेण" विष्णूक्तेः।

**उपानस्** त्रि० उपगतमनः शकटं पितरं वा अत्या० समा०। १शकटसदृशे २पितृसदृशे पितृव्यादौ च। जातौ अच् समा०। उपानस शकटसदृशे तृणमयादौ शकटे आकरेव्यङ्ग्यतयाऽस्य जातित्वम्। वेदे तु पुंस्त्वमपि "सचायोरिन्द्रश्चकृष उपानसः" ऋ०१०,१०५,४,

**उपानह्** स्त्री उप+नह–क्विप् उपसर्गदीर्घः। चर्मपादुकायाम्। "क्षतावरोहस्य ह्ययादुपानहौ नियोक्तुकामे किमु बद्धवर्मणी" इति नैध०अत्रोपानहोः वर्मत्वेनोत्प्रेक्षणात् तस्याः सर्वाङ्गावरकत्वं गम्यते तेन लोके (मोजा) इत्यादिप्रसिद्धाया एव तथात्वम् एकदेशमात्रावरकत्वे तु पादुकाशब्दप्रयोगः। "अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम्" "चेलं हिरण्यं गामश्वं छत्रोपानहमासनम्" मनुः छत्रोपानहमित्यत्र समा०द्व०अच् समा०। एवमन्यशब्देन द्वन्द्वेऽपि। दण्डोपानहमित्यादि "उपानहौ च वासश्च धृतमन्यैर्न धारयेत्" "स्वयं नोपानहौ हरेत्" "सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते" मनुः। [शब्दे वैदिके वाक्यभेदे

**उपानुवाक्य** न०उपगतमनुवाक्याम् अत्या०स०। अनुवाक्या-

**उपान्त** पु०उपमितमन्तेन अवा०स०। १निकटे, २प्रान्ते च। "दिशामुपान्तेषु ससर्ज दृष्टिम्" "नयनोपान्तविलोकितञ्च यत्" "उपान्तभागेषु च रोचनाङ्कः" कुमा०। "मेरोरुपान्तेष्वपि वर्त्तमानः" "उपान्तवानीरगृहाणि दृष्ट्वा" रघुः। "शय्योपान्तनिविष्टसस्मितसुखी" सा०द०"तिरोहितोपान्तनभोदिगन्तरा" किरा०। अन्तश्च सीमाभेदः स च दैशिकः कालिकः बुद्धिकल्पितश्च। "उपान्त्यतो निवर्त्तेत" वृ०र०। अन्तस्य समीपम् अव्ययी०। ३अन्तसमीपे अव्य०।

**उपान्तिक** न०उप आधिक्ये प्रा०स०। १अत्यन्तान्तिके अतिनिकटे "यदुपान्तिकेषु ददतोमहीरुहः" माघः "प्रसभानुपान्तिकनीपरेणुकीर्णम्" किरा०। २तद्वृत्तौ त्रि० अस्याः दर्थत्वात् ततः प्रातिपदिकार्थे पञ्चमी "यञ्च वीरं न पश्यामि धनञ्जयमुपान्तिकात्" भा०व० अ०

**उपान्तिम** त्रि० उपगतमन्तिमम् अत्या०स० उपान्तशब्दात्तु न डिमच् प्रत्ययविधौ तदन्तविध्यभावात्। १अन्तिमोपगते "गुण्यान्त्यमङ्कं गुणकेन हन्यादुत्सारितेनैवमुपान्तिमादीन्" लीला०। सामीप्ये अव्ययी०। २अन्तिमसमीपे अव्य०

**उपान्त्य** त्रि० उपान्ते भवः दिगा० यत्। अन्तसमीपवर्त्तिनि "अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः" ज्यो०त० "उत्तमपदमुपान्त्यस्योपलक्षणार्थम्" सि०कौ०।

**उपाप्ति** स्त्री उप+आप–क्तिन्। प्राप्तौ, "यदेतानि सर्वाणि सह दुरुपापानि कैतेषामुपाप्तिरिति" शत०ब्रा०१०,१,२,६

**उपाभृत्** स्त्री उप+आ–भृ–क्विप् तुक्। उपाहरणे, "स न जज्ञीमुपाभृत्यया क्षपा न जूर्व्वति" ऋ० १,१०८,२। "उपाभृति उपाहरणे" भा०।

**उपाय** पु० उप+अय–भावे घञ्। १उपगमे। उपायतेऽर्थोऽनेन करणे घञ्। २साधने, स च द्विविधः लौकिकोऽलौकिकश्च तत्र घटादिकं प्रति दण्डादिर्लौकिक उपायः स्वर्गं प्रति यागादिरलौकिक उपायः। "उपायेन च यच्छक्यं तच्छक्यं न पराक्रमैः" हितो०। "पुंसोनेष्टाभ्युपायत्वात्" कुसु०। ३राज्ञां रिपुनिराकरणहेतुषु सामादिषु च। "चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया"। "उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः" माघः। "सर्व्वोपायैस्तथा कुर्य्यान्नीतिज्ञः पृथिवीपतिः" मनुः। राज्ञां विजयोपायाश्च सामादयश्चत्वारः "साम भेदश्च दण्डश्च दानञ्चैव चतुष्टयम्। उपायाः कथितारा राज्ञां स्वार्थसम्पत्तये भुवम्" इत्युक्तेः एतेषां लक्षणानि तत्तच्छब्दे वक्ष्यन्ते। क्वचित् सप्तोपायाः पठ्यन्ते। "साम दानञ्च भेदश्च दण्डश्चेति चतुष्टयम्। मायोपेक्षेन्द्रजालञ्च सप्तोपायाः प्रकीर्त्तिताः" शृङ्गारोपायौ च द्वौ "शृङ्गारे तु पुराविद्भिरुपायौ द्वौ प्रकीर्त्तितौ। उपायौ द्वौ प्रयोक्तव्यौ कान्तासु सुविचक्षणैः। सामदाने इति प्राहुः शृङ्गाररसकोविदाः। भेदे प्रयुज्यमाने हि रसाभासस्तु जायते। निग्रहे रसभङ्गः स्यात्तस्मात्तौ दूषितौ बुधैः" इत्यालङ्कारिकोक्तेः। ४प्रयुक्तधनप्राप्तिसाधने उत्तमर्णव्यापारभेदे च "यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः। तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम्" मनुः। ते चोपायाः मनुना दर्शिता यथा "धर्म्मेण व्यवहारेण, छलेनाचरितेन च। प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च"। तत्र धर्म उक्तो बृहस्पतिना "सुहृत्सम्बन्धिसन्दिष्टैः साम्ना चानुगमेन च। प्रायेण वा ऋणी दाप्योधर्म एष उदाहृतः" छलादीनि लोयुक्तानि तेनैव "छद्मना याचितञ्चार्थमानीय ऋणिकाद्धनी। अन्याहृतानि वाऽऽहृत्य दाप्यते यत्र सोपधिः। दारपुत्रपशून् हृत्वा कृत्वा द्वारोपवेशनम्। यत्रार्थी दाप्यतेऽस्वार्थं तदाचरितमुच्यते। बद्ध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः। ऋणिकोदाप्यते यत्र बलात्कारः स कीर्त्तितः" व्यवहारस्तु मनुना स्वयं दर्शितः। "अर्थेऽपवदमानं तु कारणेन विभावितम्। दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तितः"। तेन राजावेदनरूपोव्यवहारः" कुल्लू० (नालिश)। मेधातिथिस्तु निःस्वो व्यवहारेण दापयितव्यः अन्यत् कर्मोपकरणं धनं दत्त्वा, कृषिवाणिज्यादि तेन कारयित्वा तत्रोत्पन्नं धनं तस्मादृणगृह्णीयादित्याह"। ५उपक्रमे च।

**उपायन** न० उपायते समीपे उपह्रियते उप+अय-ल्युट् । १उपढौकने ( भेटेओया ) "तस्योपायनयोग्यानि रत्नानि सरितां पतिः" कुमा० कर्म्मणि ल्युट् । २उपढौकनीये "परस्परेण विज्ञातस्तेषूपायनपाणिषु" रघुः "साधिवेश्म निर्हरैरुपायनैः" माघः "प्रतीच्छन्नुपायनानि" काद० । भावे ल्युट् । ३उपगमने "उप यन उषसा गोमत नाम्" ऋ० ७,७८,१. "उपायने उपगमने" भा० । "सहोपायनकौत्र्या उवास" कः उ० "उपायनकौत्र्या उपगमनकौतुकमात्रेण" शा० भा० ।

**उपायिन्** त्रि० उपायोऽस्त्यस्य इनि । १साधनयुक्ते । उप+इण-णिनि । २उपगन्तरि । "सर्व्वान् वोत्तमेनोपायित्वात्" काश्य ०३,२,८, "पञ्चमसत्रप्रे सर्व्वे उपयन्ति उपगच्छन्ति" कर्कः । "स्वस्थानान्त्येन वोपायित्वात्" कात्या० २.५ ।१६ एकोऽधः प्राक्शायाः मध्वाच्यतुजायोपायी कात्या० ५,२,२१, ऋतुकाल एव सर्व्वोपायी" कात्या० १८,६,१७, । उभयतः स्त्रियां ङीप् ।

**उपायु** त्रि० उप+इण्-उण् । उपगन्तरि । "तस्मादाह वायवः स्थेति उपायवः स्थेत्येकैक आह्वयप हि द्वितीयोऽयतीति" शत० ब्रा० १७.१.२,

**उपार** पु० उप+ऋ-गतौ कर्म्मणि घञ् । उपागते १समीपे । "अस्ति ज्यायान् कनीयस उपारे" ऋ० ७,८६,६, "उपारे उपागते समीपे" भा० ।

**उपारण** पु० उपेत्य न रमणं यत्र पृषो० । उपेतस्यारतिस्थाने "सुष् वा सदुपारणे" ऋ० ८.२२,२१. उपारणे ब्राह्मणा उपेत्य यस्मिन् देशे न रमन्ते स उपारणः" भा० ।

**उपारत** त्रि० उप+आ+रम-क्त । १प्रतिनिवृत्ते "उपारताः पश्चिमरात्रगोचरात्" किरा० ।

**उपारम्भ** उप+आ+रभ-घञ मुम् । प्रारम्भे "सर्व्वकर्म्मोपारम्भे विनियोगः" सन्ध्यापद्धतिः

**उपार्ज्जन** न० उप+अर्ज्जि-ल्युट् । स्वत्वसम्पादकव्यापारभेदे स च अर्ज्जनशब्दे ३६५ पृ० दर्शितः "शस्त्राणां सरथानाञ्च कृत्वा सम्यगुपार्ज्जनम्" रामा० ।° ण्वुल् । उपार्ज्जक तत्कर्त्तरि त्रि० ।

**उपालब्ध** त्रि० उप+आ+लभ-क्त । तिरस्कारेण निन्दिते

**उपालम्भ** पु० उप+आ-लभ-घञ् मुम् च । निन्दापूर्व्वकतिरस्कारे । ल्युट् । उपालम्भन तत्रार्थे न० । कर्म्मणि यत् । उपालभ्य हिंसनीये । "सौर्य्यः पशुरुपालम्भ्यः सवनीयस्य" आश्व० श्रौ० । तिरस्कार्य्ये तु न मुम् । उपलभ्य इत्येव ।

**उपावर्त्तन** न० उप+आ+वृत-ल्युट् । १पुनरागमने प्रत्यावृत्तौ "तदुपावर्त्तनशङ्कि मे मनः" रघुः । २भूमौ लुठने च ।

**उपावृत्त** त्रि० उप+आ+वृत-क्त । १श्रमापनयनाय पुनः पुनः भूमिलुण्ठितेऽश्वे, २प्रतिनिवृत्ते च । "उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह" ए० त० भविष्यपुराणम् ।

**उपावृत्** स्त्री उप+आ-वृत-क्विप् । १आवर्त्तिनां समीपे आवृत्तौ । "शतं ते सन्तु वृतः सहस्रं त उपावृतः" यजु० १२,८ । "स्वस्यैवावर्त्तनमावृत् तत्समीपवर्त्तिनामावर्त्तनमुपावृत्" वेददी० । २निवृत्तौ च । उप+आ+वृत-क्तिन् । उपावृत्तिरप्यत्र स्त्री

**उपाश्रम** पु० उपमितमाश्रमेण अना० स० । १अश्रमरूपे पाशुपतादिदीक्षादौ । "उपाश्रमानप्यपरान् पाषण्डान् विविधानपि" भा० शा० ३५ अ० । "उपाश्रमान् पाशुपतपाञ्चरात्राद्युक्त दीक्षायोगान्" नीलक० । सामीप्ये अव्य० । २आश्रमसमीपे अव्य० ।

**उपाश्रय** पु० उप+आ+श्रि-पचाद्यच् । १ आश्रयकर्त्तरि "ब्राह्मणोपाश्रयं नत्य सुतहर्ता जातिमश्नुते" मनुः कर्म्मणि अच् । २आश्रयणीये "राजर्षीणां हि सर्व्वेषामन्ते वनमुपाश्रयः" भा० आश्र० ४अ० । "त्वं हि नस्तात ! सर्व्वेषां दुःखितानामुपाश्रयः" भा० व० ६११ अ० । भावे अच् । ३आश्रये ।

**उपाश्रित** त्रि० उप+आ+श्रि-कर्म्मणि क्त । यस्याश्रयो गृहीतस्तस्मिन् "तथैवोपाश्रिता देवी बुद्धिर्बुद्धिमतांवर !" भा० शा० ४५ अ० उपश्रितेति पाठान्तरम् । कर्त्तरि क्त । २कृताश्रये त्रि० ।

**उपासक** त्रि० उप+आस-ण्वुल् । १सेवके २उपासनाकर्त्तरि "चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पना" वेदा० । ३शूद्रे पुंस्त्री तस्य द्विजसेवकत्वात् तथात्वम् स्त्रियां जातित्वात् ङीष् । हेमचन्द्रोक्ते ४वाक्यदशाभेदे यथा वाक्यमुपक्रम्य "आचाराङ्गं सूत्रकृतं स्थानाङ्गं समवाययुक् । पञ्चमं भगवत्यङ्गं ज्ञाता धर्म्मकथापि च । उपासकान्तकृदनुत्तरोपपातिकादशाः । प्रश्नव्याकरणञ्चैव विपाकश्रुतमेव च । इत्येकादश सोपाङ्गान्यङ्गानि द्वादश पुनः" इति । उपासनञ्च चिन्तनापरपर्य्यायमननात्मिका मानसी क्रिया । सा च क्वचिद्गुणादिकमारोप्य प्रवर्त्तते यथा निर्गुणे ब्रह्मणि सगुणत्वाद्यारोपेण शास्त्रवचने निर्गुणस्य ब्रह्मणो रूपारोपेणैव उपासनोक्तेः अतएव "सर्वं खल्विदं ब्रह्म तज्जलान् इति

मान्न उपासीत यथाक्रतुरस्मिन् लोके भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत” इत्युपक्रम्य “मनोमयः प्राणशरीरः” इत्यादिना छा० उ० “उपासनायां तत्तद्गुणोपाधयोऽभिहिता निर्गुणे प्रथमं चित्तप्रवेशासम्भवेन सगुणे एव मनोऽभिनिवेश्यम् ततो निविष्टमनसः चित्तैकाग्र्यम् ततः उपासितेश्वरानुग्रहादेव समाधियोग सिद्धः इति पात० सू० भाष्ययोर्दर्शितम्। “ईश्वरप्रणिधानाद्वा” सू० “प्रणिधानाद्भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णाति अभिध्यानमात्रेण” व्यास भा० “प्रणिधानाद्भक्तिविशेषात् मानसाद्वाचिकात् कायिकाद्वा आवर्जित अभिमुखीभूतस्तमनुगृह्णाति अभिध्यानमात्रेण यन्नेऽयं इच्छा इदमस्याभिप्रेतमस्त्विति, तावन्मात्रेण न व्यापारान्तरेण” विव०। तादृशेश्वरोपासनाऽसमर्थस्य तु प्रथमं स्थूलादिभ्यो विविच्यात्मन इन्द्रियाद्यात्मकतया चिन्तनं कार्य्यं तच्चिन्तने च फलमुक्तं वायुपु०। “दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः। भौताः दश सहस्राणि तिष्ठन्ति विगतज्वराः। पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः” विरक्तिश्च तत् पात० भाष्ये उक्तौ वाचस्पतिना “अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वन्यतममात्मत्वेन प्रतिपन्नाः तदुपासनवासनावासितान्तःकरणाः पिण्डपातानन्तरमव्यक्तादीनामन्यतमे लीनाः” उक्ततत्तत्कालपर्य्यन्तं तिष्ठन्तीत्यर्थः। उपासकशब्देऽधिकं वक्ष्यते। तन्त्रोक्ता उपासकाश्च पञ्चविधा पञ्चदेवतोपासकत्वात्। “शाक्तः शैवो गाणपत्यः सौरश्च वैष्णवः क्रमात्। उपासकाः पञ्चविधास्तन्त्रशास्त्रविधानतः”। पुनस्ते त्रिविधाः। “सात्त्विको राजसश्चैव तामसश्चेति ते त्रिधा”। प्रकारान्तरेणापि यथा-सङ्ख्यं त्रिधा। “पशुर्वीरस्तथा दिव्य आचारभेदतस्त्रिधा”

**उपासङ्ग** पु० उपासज्यन्ते शरा अत्र उप+आ+सन्ज-आधारे घञ्। तूणे। “इमे च कस्य नाराचाः सहस्रा लोमवाहिनः। समन्तात्कलधौताग्रा उपासङ्गे हिरण्मये” भा० वि० ४२ अ० “एतान् सर्व्वानुपासङ्गान् क्षिप्रं बधान मे रथे” वि० ४५ अ० भावे घञ्। २समीपासङ्गे च।

**उपासन** न० उपास्यन्ते भूयः क्षिप्यन्ते शरा अत्र उप+अस-क्षेपे आधारे ल्युट्। १शरक्षेपशिक्षार्थे शराभ्यासे अमरः। उप+आस-भावे ल्युट्। २चिन्तने मनने ३सेवने च “नित्यनैमित्तिकप्रायश्चित्तोपासनेन” “उपासनानि शाण्डिल्यविद्यादीनि” “उपासनस्य चित्तैकाग्र्यं परं प्रयोजनम् अचिरादिमार्गेण ब्रह्मलोकप्राप्तिरवान्तरफलम्” इति वेदान्तसा०। “आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः” इत्युपक्रम्य “एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा” गीतायाम् आचार्य्योपासनस्य ज्ञानसाधनत्वेन ज्ञानत्वमुक्तम् आचार्य्योपदेशं विना हि ज्ञानानुत्पत्तिः “आचार्य्योपासनं वेदशास्त्रार्थेषु विवेकिता” इत्युपक्रम्य “एतैरुपायैः संशुद्धः सत्त्वयुक्तोऽमृती भवेत्” याज्ञ० तद्धेतुत्वमुक्तम्। “आचार्य्यमग्निकं चैव सन्ध्योपासनमेव च” मनुः। ब्रह्मण उपासनानि च वेदे नानाविधान्युक्तानि तत्र प्रतीकोपासनेतरेषामवान्तरफलमर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिः। प्राप्तब्रह्मलोकस्य तत्र श्रवणमननादिसम्भवेन क्रममुक्तिः “न स पुनरावर्त्तते” इति श्रुतेः तत्र प्राप्तविवेकस्यैवानावृत्तिर्नान्यस्येत्यपेक्षते “तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः” सां० सू० उक्तेः। अतएव “इमं मानवं नावर्त्तन्ते” इति श्रुतौ इममिति इदमा विशेषणात् मानवान्तरे आवृत्तिरिति सूचितम्। कार्य्यब्रह्मणोऽधिकारसमाप्तिपर्य्यन्तं तत्रस्थायिनस्तु तेन सहैव मोक्षः। “कार्य्यात्यये तदध्यक्षेण सहातः परमभिधानात्” शा० सू० उक्तेः “ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्” श्रुतेः। प्रतीकोपासनायां तु नार्चिरादिना ब्रह्मलोकप्राप्त्यादि फलम् किन्तु तत्तच्छास्त्रोक्तं फलं तत्र तावत् प्रतीकोपासनं तत्फलञ्च शा० सू० भाष्ययोः दर्शितं यथा “न प्रतीके न हि सः” “मनो ब्रह्मेत्युपासीतेत्यध्यात्मम् अथाधिदैवतमाकाशो ब्रह्मेति” तथा “आदित्यो ब्रह्मेत्यादेशः”, “स यो नाम ब्रह्मेत्युपास्ते” इत्येवमादिषु प्रतीकोपासनेषु संशयः किमेष्वात्मग्रहः कर्त्तव्यो न वेति। किन्तावत् प्राप्तं तेष्वात्मग्रह एव युक्तः कस्मात्? ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वात् प्रतीकानामपि ब्रह्मविकारत्वात् ब्रह्मत्वे सत्यात्मत्वोपपत्तेरित्येवं प्राप्ते ब्रूमः। न प्रतीकेष्वात्ममतिं बध्नीयात् न हि स उपासकः प्रतीकानि व्यस्तान्यात्मत्वेनाकलयेत्। यत्पुनर्ब्रह्मविकारत्वात् प्रतीकानां ब्रह्मत्वं ततश्चात्मत्वमिति, तदसत् प्रतीकाभावप्रसङ्गात् विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा। न च ब्रह्मण आत्मत्वाद्ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या कर्त्तृत्वाद्यनिराकरणात् कर्त्तृत्वादिसर्व्वसंसारधर्म्मनिराकरणेन हि ब्रह्मण आत्मत्वोपदेशस्तदनिराकरणेन चोपासनविधानं

ततश्चोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते। न हि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति किन्तु सुवर्णात्मत्वमेव। ब्रह्मात्मत्वे चैकत्वे प्रतीकाभावप्रसङ्गमवोचाम। अतो न प्रतीकेष्वात्मत्वदृष्टिः क्रियते" भा०। "ब्रह्मदृष्टिरुत्कर्षात्" भा०। "तेष्वेवोदाहरणेष्वन्यः संशयः किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः? किं वा ब्रह्मदृष्टिरादित्यादिष्विति?। कुतः संशयः? सामानाधिकरण्ये कारणानवधारणात् अत्र हि ब्रह्मशब्दस्यादित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते "आदित्यो ब्रह्म" प्राणो ब्रह्म" "विद्युद्ब्रह्म" इत्यादिसमानविभक्तिनिर्देशात्। न चात्राञ्जसं समानाधिकरण्यमवकल्पते अर्थान्तरवचनत्वाद्ब्रह्मादित्यादिशब्दानां न हि भवति गौरश्व इति सामानाधिकरण्यम्। ननु प्रकृतिविकारभावाद्ब्रह्मादित्यादीनां मृच्छरावादिवत् सामानाधिकरण्यं स्यात् नेत्युच्यते विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात् स्यात् ततश्च प्रतीकाभावप्रसङ्गमवोचाम। परमात्मवाक्यञ्चेदन्तदानीं स्यात् ततश्चोपासनाधिकारो बाध्येत परिमितविकारोपादानञ्च व्यर्थम्। तस्माद्ब्राह्मणः "अग्निर्वैश्वानरः" इत्यादिवदन्यतरत्रान्यतरदृष्ट्यध्यासे सति क्व दृष्टिरध्यस्यतामिति संशयः। तत्रानियमः नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्तम्। अथवा आदित्यादिदृष्टय एव ब्रह्मणि कर्त्तव्या इत्येवं प्राप्तम् एवं ह्यादित्यादिदृष्टिभिर्ब्रह्मोपसनञ्च फलवदिति शास्त्रमर्यादा। तस्माच्च ब्रह्मदृष्टिरादित्यादिष्वित्येवं प्राप्ते ब्रूमः। ब्रह्मदृष्टिरेवादित्यादिषु स्यादिति। कस्मात्? उत्कर्षात् एवमुत्कर्षेणादित्यादयो दृष्टा भवन्ति उत्कृष्टदृष्टेस्तेष्वध्यासात्। तथा च लौकिको न्यायोऽनुगतो भवति। उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति लौकिको न्यायः यथा राजदृष्टिः क्षत्तरि, स चानुगन्तव्यः विपर्यये प्रत्यवायप्रसङ्गात्। न हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात्। ननु शास्त्रप्रामाण्यादनाशङ्कनीयोऽत्र प्रत्यवायप्रसङ्गः न च लौकिकेन न्यायेन शास्त्रीया दृष्टिर्नियन्तुं युक्तेति। अत्रोच्यते निर्द्धारिते शास्त्रार्थे एतदेवं स्यात् सन्दिग्धे तु तस्मिंस्तन्निर्णयं प्रति लौकिकोऽपि न्याय आश्रीयमाणो न विरुध्यते। तेन चोत्कृष्टदृष्ट्यध्यासे शास्त्रार्थेऽवधार्यमाणे निकृष्टदृष्टिमध्यस्य प्रत्यवेयादिति श्लिष्यते। प्राथम्याच्चादित्यादिशब्दानां मुख्यार्थत्वमविरोधादुपगृहीतव्यम्। तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्यवृत्त्या सामानाधिकरण्यासम्भवाद् ब्रह्मदृष्टिविधानार्थतैवावतिष्ठते। इतिपरत्वादपि ब्रह्मशब्दस्यैव एषोऽर्थोन्याय्यः। तथा हि ब्रह्मेत्यादेशः ब्रह्मेत्युपासीत, ब्रह्मेत्युपास्त इति च सर्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति शुद्धांस्त्वादित्यादिशब्दान्। ततश्च यथा शुक्तिकां रजतमिति प्रत्येतीत्यत्र शुक्तिवचनएव शुक्तिकाशब्दः रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः प्रतीत्यैव हि केवलं रजतमिति न तु तत्र रजतमस्ति, एवमत्राप्यादित्यादीन् ब्रह्मेति प्रतीयादिति गम्यते। वाक्यशेषोऽपि च द्वितीयानिर्देशेनादित्यादीनेवोपास्तिक्रियया व्याप्यमानान् दर्शयति "स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते" "यो वाचं ब्रह्मेत्युपास्ते "यः सङ्कल्पं ब्रह्मेत्युपास्त" इति। यत्तूक्तं ब्रह्मोपासनमेवात्रादरणीयं फलवत्त्वायेति तदयुक्तं उक्तेन न्यायेनादित्यादीनामेवोपास्यत्वस्यावगमात्। फलन्त्वतिथ्याद्युपासन इवादित्याद्युपासनेऽपि ब्रह्मैव दास्यति सर्वाध्यक्षत्वात्। वर्णितञ्चैतत् "फलमत उपपत्ते"रित्यत्र"। ईदृशञ्चात्र ब्रह्मण उपास्यत्वं यत्प्रतीकेषु तद्दृष्ट्यध्यारोपणं प्रतिमादिष्विव विष्ण्वादीनाम्" भा०। एवं प्रतीकोपासनं निरूप्य तत्फलमुक्तम् तत्रैव ४ अ० ३ पादे

"अप्रतीकालम्बनान्नयतीति वादरायण उभयथाऽदोषात्तत्क्रतुश्च" सू०। "स्थितमेतत् कार्य्यविषया गतिर्न परविषयेति। इदमिदानीं सन्दिह्यते किं सर्वान् विकारालम्बनानविशेषेणैवामानवः पुरुषः प्रापयति ब्रह्मलोकम्? उत कांश्चिदेवेति?। किं तावत् प्राप्तं सर्वेषामेवैषां विदुषामन्यत्र परस्माद्ब्रह्मणोगतिःस्यात्। तथा हि नियमः सर्वस्यामीत्यत्राविशेषणैवैषा विद्यान्तरेष्ववतारितेत्येवं प्राप्ते प्रत्याह। अप्रतीकालम्बनानिति। प्रतीकालम्बनान् वर्जयित्वा सर्वानन्यान् विकारालम्बनान्नयति ब्रह्मलोकमिति बादरायणाचार्य्यो मन्यते। न ह्येवमुभयथाभावाभ्युपगमे कश्चिद्दोषोऽस्ति। अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वप्युपासनेषूपपत्तेः। तत्क्रतुश्चास्योभयथाभावस्य समर्थको हेतुर्द्रष्टव्यः। यो हि ब्रह्मक्रतुः स ब्राह्ममैश्वर्य्यमासीदेदिति श्लिष्टतरं "यथा यथोपासते तदेव भवतीति" श्रुतेः। न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति प्रतीकप्रधानत्वादुपासनस्य। ननु अब्रह्मक्रतुमानपि ब्रह्म गच्छतीति श्रूयते यथा पञ्चाग्निविद्यायां सएनान् ब्रह्म गमयतीति"। भवतु यत्रैवमाहृत्य वाद उपलभ्यते, तदभावे-

ल्पोत्कर्षेणैव तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिर्नेतरेषामिति गम्यते" भा०। "विशेषञ्च दर्शयति" सू०। "नामादिषु च प्रतीकोपासनेषु पूर्वस्मात् पूर्वस्मात् फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति "यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" "वाग्वाव नाम्नो भूयसी" "यावद्वाचो गतं तत्रास्य यथाकामचारो भवति" "मनो वाव वाचो भूयः" इत्यादिना। स चायं फलविशेषः प्रतीकतन्त्रत्वादुपासनानामुपपद्यते, ब्रह्मतन्त्रत्वे तु ब्रह्मणोऽविशिष्टत्वात् कथं फलविशेषः स्यात्?। तस्मान्न प्रतीकालम्बनानामितरैस्तुल्यफलत्वमिति" भा०।

उपासनञ्च मानसव्यापारो यद्यपि देहव्यापाराणामेकस्तथापि आसीनस्यैव सम्भवति नान्यस्य यथाह शा०सू०भाष्ययोः" "आसीनः सम्भवात्" सू०। "कर्माङ्गसम्बद्धेषु कर्मतन्त्रत्वादासनादिचिन्तनेऽपि सम्यग्दर्शने वस्तुतन्त्रत्वात् ज्ञानस्य, इतरेषूपासनेषु किमनियमेन तिष्ठन्नासीनः शयानो वा प्रवर्त्तेतानियमे न आसीन एवेति। तत्र मानसत्वादुपासनस्यानियमः शरीरस्थितेरित्येवं प्राप्ते ब्रवीति आसीन एवोपासीतेति कुतः? सम्भवात्। उपासनं नाम समानप्रत्ययप्रवाहकरणं न च तद्गच्छतो धावतो वा सम्भवति गत्यादीनां चित्तविक्षेपकरत्वात्। तिष्ठतोऽपि देहधारणे व्यापृतं मनो न सूक्ष्मवस्तुनिरीक्षणक्षमं भवति। शयानस्याप्यकस्मादेव निद्रयाऽभिभूयते। आसीनस्य त्वेवंजातीयको भूयान्दोषः सुपरिहर इति सम्भवति तस्योपासनम्" भा०। "ध्यानाच्च" सू० "अपि च ध्यायत्यर्थ एषः यत्समानप्रत्ययप्रवाहकरणं, ध्यायतिश्च प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टिष्वेकविषयाक्षिप्तचित्तेषूपचर्यमाणो दृश्यते ध्यायति बको ध्यायति प्रोषितबन्धुरिति। आसीनश्चानायासो भवति। तस्मादप्यासीनकर्म उपासनम्" भा०। "अचलत्वञ्चापेक्ष्य" सू०। "अपि च ध्यायतीव पृथिवीत्यत्र पृथिव्यादिष्वचलत्वमेवापेक्ष्य ध्यायतिवादो भवति तच्च लिङ्गमुपासनस्यासीनकर्मत्वे" भा०। "स्मरन्ति च" सू०। "स्मरन्त्यपि च शिष्टा उपासनाङ्गत्वेनासनम्" "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः" इत्यादिना अत एव च पद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे" भा०। उपासनस्यामरणात् भूयः कर्त्तव्यत्वमित्यपि तत्रैवोक्तम्।

"आ प्रायणात् तत्रापि हि दृष्टम्" सू०। "आवृत्तिः सर्वोपासनेष्वादर्त्तव्येति स्थितमाद्येऽधिकरणे। तत्र यानि तावत् सम्यग्दर्शनार्थान्युपासनानि तान्यवघातादिवत् कार्यपर्यवसानानीति ज्ञातमेवैषामावृत्तिपरिमाणं न हि सम्यग्दर्शने कार्ये निष्पन्ने यत्नान्तरं किञ्चिच्छासितुं शक्यम् अनियोज्यब्रह्मात्मत्वप्रतीतेः शास्त्रस्याविषयत्वात्। यानि पुनरभ्युदयफलानि तेष्वेषा चिन्ता किं कियन्तञ्चित्कालं प्रत्ययमावर्त्योपरमेत् उत यावज्जीवमावर्त्तयेदिति। किन्तावत् प्राप्तं कियन्तञ्चित्कालं प्रत्ययमभ्यस्योत्सृजेत् आवृत्तिविशिष्टस्योपासनशब्दार्थस्य कृतत्वादित्येवं प्राप्ते ब्रूमः। आ प्रायणादेवावर्त्तयेत् प्रत्ययम्, अन्त्यप्रत्ययवशाद् अदृष्टफलप्राप्तेः। कर्माण्यपि हि जन्मान्तरोपभोग्यं फलमारभमाणानि तदनुरूपं भावनाविज्ञानं प्रायणकाले आक्षिपन्ति। "सविज्ञानो भवति" "सविज्ञानमेवान्ववक्रामति" "यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथासङ्कल्पितं लोकं नयतीति" चैवमादिश्रुतिभ्यः तृणजलायुकानिदर्शनाच्च। प्रत्ययास्त्वेते स्वरूपानुवृत्तिं मुक्त्वा किमन्यत् प्रायणकाले भावनाविज्ञानमपेक्षेरन्। तस्माद्ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययास्तेषु प्रायणादावृत्तिः। तथा च श्रुतिः "स यावत्क्रतुरयमस्माल्लोकात् प्रैतीति" प्रायणकालेऽपि प्रत्ययानुवृत्तिं दर्शयति। स्मृतिरपि "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय! सदा तद्भावभावितः" इति "प्रयाणकाले मनसाऽचलेनेति" च। "सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येतेति" च मरणवेलायां कर्त्तव्यशेषं श्रावयति" भा०। प्रतीकभिन्नेषु उपासनेषु अर्चिरादिमार्गेण ब्रह्मलोकावाप्तिः फलम्। "अर्चिरादिना तत्प्रथितेः" शा०सू० भाष्ययोरुक्तम् तच्च अर्चिरादिमार्गशब्दे आतिवाहिकशब्दे च उक्तम्। युच् उपासनाप्यत्र स्त्री। "न्यायचर्चेयमीशस्य मननव्यपदेशभाक्। उपासनैव क्रियते श्रवणानन्तरागता" कुसु०। सेवने च "उपासनामेत्य पितुः स्म सृज्यते" नैष०। शाण्डिल्योक्ता भक्तिरूपोपासना भक्तिशब्दे वक्ष्यते।

**उपासा** स्त्री उप+आस भावे अ। उपासने "उपासासिद्धस्य असंशयात्मम्" सां०सू०

**उपासादित** त्रि० उप+आ+सद–णिच्-कर्मणि क्त। १प्राप्ते भावे क्त। २प्राप्तौ नत; तत्कृतमनेन इष्टा० इनि उपासादितिन् कृतलाभे स्त्रियां ङीप्।

**उपासित** त्रि० उप+आस–सेवनार्थत्वात् कर्मणि क्त। कृतोपासने यस्योपासनं कृतं तस्मिन् देवादौ।

**उपास्ति** स्त्री उप+आस-क्तिन् स्त्रीप्रत्ययत्वेऽपि वा० युच् न वा न क्तिनोबाधकः। उपासनायाम् "स्वर्गापवर्गयोर्मार्गमामनन्ति

मनीषिणः । यदुपास्तिमसावत्र परमात्मा निरूप्यते" कुसु० ।

**उपास्त्र** न० उपगतमस्त्रम् उपकरणत्वेन अत्या०स० । अस्त्रोपकरणे तूणादौ" । "राजानौ नीतिमार्गरतौ अस्त्रोपास्त्रकृतिनौ भा०व०१८६अ० ।

**उपास्य** त्रि० उप+आस–सेवनार्थत्वात् कर्म्मणि ण्यत् । १सेवनीये २चिन्तनीये "पुत्रवच्च ततो रक्ष्या उपास्या गुरवच्च ते" भा०अनु०८अ० "गङ्गा सदैवात्मवशैरुपास्या" भा०अनु० २६अ० उप+आस–ल्यप् । ३सेवयित्वेत्यर्थे ४चिन्तयित्वेत्यर्थे च अव्य० । ४उपास्य सन्ध्यां विधिवत्" स्मृतिः ।

**उपाहित** पु०उप आसन्नमहितं यतः । १उल्कापातादौ अग्न्युत्पातरूपे उपद्रवे उप+आ–धा–क्त । २आरोपिते, त्रि० ।

**उपेक्ष** पु०गान्दिनीसुते अक्रूरभ्रातृभेदे । "अक्रूरः सुषुवे तस्मात् श्वफल्कात् भूरिदक्षिणः । उपमद्गुस्तथा मद्गुर्मृदरश्चारिमेजयः । अविक्षिपस्तथोपेक्षः शत्रुघ्नोऽथारिमर्दनः" हरि० २५ तत्रैव ३८अध्याये च गान्दिनीसुतत्वमस्योक्तम् ।

**उपेक्षक** त्रि०उप+ईक्ष–ण्वुल् । उपेक्षाकारके योगिनि "उपेक्षकोऽसङ्कुसुको मुनिर्भावसमन्वितः" मनुः "दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरता त्वन्या" सां०का० ।

**उपेक्षण** न०उप+ईक्ष–भावे ल्युट् । १त्यागे २औदासीन्ये च ३राज्ञां सप्तविधोपायान्तर्गते उपायभेदे "साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च" भा० व० १५० । उपेक्षणस्य यथोपायत्वं तथा उपायशब्दे उक्तम् ।

**उपेक्षणीय** त्रि०उप+ईक्ष–अनीयर् । १त्याज्ये २प्रतीकारार्थमनालोचनीये च "नश्यत् पुरस्तादनुपेक्षणीयम्" रघुः ।

**उपेक्षा** स्त्री उप+ईक्ष–अ । १त्यागे इदं न मम स्यादिति इच्छाभेदे ३औदासीन्ये ४अनपेक्षणे च । उपेक्षा च परस्वत्वानभिसन्धानापूर्वकस्वप्रागभावासमानकालीनस्वत्वाविषयकेच्छा । उपेक्षायाः स्वत्वनाशकत्वम् स्मृतौ व्यवस्थापितम् "उपेक्षानात्मकं तत्र निश्चयः कारणं भवेत्" भाषोक्ते ५इदमुपादेयं न भवतीत्याकारकज्ञानभेदे च "कुर्यामुपेक्षां हतजीवितेऽस्मिन्" रघुः । ६योगशास्त्रोक्ते चित्तप्रसादनार्थं भावनाचतुष्टयान्तर्गते भावनाभेदे । "मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" पात०सू० ।

**उपेत** त्रि०उप+इण–क्त । १उपगते २समीपगते सेवादिधर्म्मेण ३प्राप्ते ४उपनीते च । "यं प्रव्रजन्तमनुपेतमपेतकृत्यम्" भा०१स्क० । "न स्त्री जुहुयाच्चानुपेतः" स्मृतिः । "अनुपेतः अनुपनीतः" म०त०रघु० । गर्भाधानार्थं ५स्त्रियमुगते च "गर्भाधानमुपेतो ब्रह्मगर्भं सन्दधाति" हारीतः "उपेतः स्त्रियमुपगतः" सं०त०रघुनन्दनः ।

**उपेन्द्र** पु०उपगत इन्द्रम् अनुजत्वात् अत्या०स० । १विष्णौ । स हि कश्यपात् अदितौ इन्द्रादनन्तरं वामनरूपतया संजातः इति तस्य तथात्वम् । "उपेन्द्रो वामनः प्रांशुः" विष्णु स० । अत्र भाष्ये अन्यापि निरुक्तिर्दर्शिता यथा । "ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः । उपेन्द्र इति कृष्ण ! त्वां गास्यन्ति दिवि देवताः" इति हरिवंशवचनात् उपरि इन्द्रः उपेन्द्रः" इति । अत्र वासुदेवस्यैव यथोपेन्द्रनामता, तथा गोवर्द्धनोद्धारणेन गोषु रक्षितासु तत्प्रीतये गोभिस्तस्य सर्वोपरिलोकस्थितत्वेन उपेन्द्रनामतयाऽभिषेकः कृत इति वर्णितं हरिवं० ७६अ० यथा । "अपामधस्तात्लोकोऽयं तस्योपरि महीधराः । नागानामुपरिष्टाद्भूः पृथिव्युपरि मानुषाः । मनुष्यलोकादूर्द्ध्वं तु खगानां गतिरुच्यते । आकाशस्योपरि रविर्द्वारं स्वर्गस्य भानुमान् । देवलोकः परस्तस्माद्विमानगमनो महान् । यत्राहं कृष्ण ! देवानामैन्द्रे विनिहितः पदे । स्वर्गादूर्द्ध्वं ब्रह्मलोको महर्षिगणपूजितः । तत्र सोमगतिश्चैव ज्योतिषाञ्च महात्मनाम् । तस्योपरि गवां लोकः सिद्धास्तं पालयन्ति हि । स हि सर्वगतः कृष्ण ! महाकाशगतो महान् । उपर्य्युपरि तत्रापि गतिस्तव तपोमयी । यां न विद्म वयं सर्वे पृच्छन्तोऽपि पितामहम् । लोकास्त्वधो दुष्कृतिनां नागलोकस्तु दारुणः । पृथिवी कर्म्मशीलानां क्षेत्रं सर्वस्य कर्म्मणः । खमस्थिराणां विषयो वायुना तुल्यवृत्तिनाम् । गतिः शमदमाढ्यानां स्वर्गः सुकृतकर्म्मणाम् । ब्राह्मे तपसि युक्तानां ब्रह्मलोकः परा गतिः । गवामेव तु गोलोको दुरारोहा हि सा गतिः । स तु लोकस्त्वया कृष्ण ! सीदमानः कृतात्मना । धृतो धृतिमता वीर ! निघ्नतोपद्रवं गवाम् । तदहं समनुप्राप्तो गवां वाक्येन नोदितः । ब्रह्मणश्च महाभाग ! गौरवात्तव चानघ ! । अहं भूतपतिः कृष्ण ! देवराजः पुरन्दरः । अदितेर्गर्भपर्य्याये पूर्व्वजस्ते पुरातनः । तेजस्तेजस्विनश्चैव यत्ते दर्शितवानहम् । मेघरूपेण तत्सर्वं क्षन्तुमर्हसि मे विभो ! । एवं क्षान्तमनाः कृष्ण ! स्वेन सौम्येन तेजसा । ब्रह्मणः शृणु मे वाक्यं गवाञ्च गजविक्रम ! । आह त्वां भगवान् ब्रह्मा गावश्चाकाशगा दिवि । कर्म्मभिस्तोषिता दिव्यैस्तव संरक्षणादिभिः । भवता रक्षिता लोका गोलोकस्य महानयम् । तदयं पुङ्गवैः सार्द्धं वर्द्धामः प्रसवैस्तथा । कर्म-

मान् पुङ्गवैर्गोभिर्मेध्येन हविषा सुरान् । श्रियं शक्रप्रवृत्तेन तर्पयिष्यामः कामदाः । तदस्माकं गुरुस्त्वं हि प्राणदश्च महाबल ! । अद्यप्रभृति नो राजा त्वमिन्द्रो वै भव प्रभो ! । तस्मात्त्वं काञ्चनैः पूर्णैर्दिव्यस्य पयसो घटैः । एभिरद्याभिषिच्यस्व मया हस्तावनामितैः । अहं किलेन्द्रो देवानां त्वङ्गवामिन्द्रतां गतः । गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम् । ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः । उपेन्द्र इति कृष्ण ! त्वां गास्यन्ति दिवि देवताः" ।

"ततः शक्रस्तु तान् गृह्य घटान् दिव्यपयोधरान् । अभिषेकेन गोविन्दं योजयामास योगवित् । दृष्ट्वाऽभिषिच्यमानं तं गावस्ताः सह यूथपैः । स्तनैः प्रस्नवसंयुक्तैः सिषिचुः कृष्णमव्ययम् । मेघाश्च दिवि मुक्ताभिः सामृताभिः समन्ततः । सिषिचुस्तोयधाराभिः सिच्यमानं तमव्ययम् । वनस्पतीनां सर्वेषां सुस्रावेन्दुनिभं पयः । ववर्षुः पुष्पवर्षञ्च नेदुस्तूर्याणि चाम्बरे । स्तुवन्ति मुनयः सर्वे वाग्भिर्मन्त्रपरायणाः । एकार्णवविनिर्मुक्ता दधार वसुधा वपुः । प्रसादं सागरा जग्मुर्ववौ वाता जगद्धिताः । मार्गस्थो विबभौ भानुः सोमो नक्षत्रसंयुतः । ईतयः प्रशमं जग्मुर्जग्मुर्निर्वैरतां नृपाः । प्रवालपल्लवदलाः पुष्पवन्तश्च पादपाः । मदं प्रसुस्रुवुर्नागा यातास्तोषं वने मृगाः । अलङ्कृता मानवद्भिर्धातुभिर्भान्ति पर्वताः । देवलोकोपमो लोकस्तृप्तोऽमृतरसैरिव । आसीत् कृष्णाभिषेके हि दिव्यः स्वर्गरसोक्षितः । अभिषिक्तन्तु तं गोभिः शक्रो गोविन्दमव्ययम् । दिव्यमाल्याम्बरधरं देवदेवोऽब्रवीदिदम् । एष ते प्रथमः कृष्ण ! नियोगो गोषु यः कृतः" । तत्रैव १७अ० । "शक्रस्तु स्वयमागत्य दैवतैः सह वृत्रहा । अभिषिच्याब्रवीत् कृष्णमुपेन्द्रेति शचीपतिः" । वासुदेवस्यैवेन्द्रेण उपेन्द्रनाम्नाऽभिषेकः कृतः इत्युक्तम् । भा०व०२३ अ० तु वामनस्यैव तन्नामतोक्ता यथा वामनेन बलेर्दमनानन्तरम् । "कश्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च । लोकानां लोकपालानामकरोत् वामनं पतिम् । वेदानां सर्वदेवानां धर्मस्य यशसां श्रियः । मङ्गलानां व्रतानाञ्च कल्पं स्वर्गापवर्गयोः । उपेन्द्रं कल्पयाञ्चक्रे इति सर्वविभूतये इति" "प्राप्य त्रिभुवनञ्चेन्द्र उपेन्द्रभुजपालितः" इति तत्रैव । वामनस्य उपेन्द्रत्वमिन्द्रानुजातत्वात् वासुदेवस्य तु पूर्वोक्तप्रकारेण तन्नामता उभयोरेव एकपरमेश्वरांशत्वाच्च विरोधः । "तदिन्द्रसन्दिष्टमुपेन्द्र ! यद्वचः" माघे नारदस्य वासुदेवसम्बोधनतया प्रयोगः ।

**उपेन्द्रवज्रा** स्त्री "उपेन्द्रवज्रा जतजास्ततो गौ" इति छ०र० उक्ते एकादशाक्षरपादके छन्दोभेदे । अस्याश्च इन्द्रवज्रया संमेलने यथोपजातित्वं तथा इन्द्रवज्राशब्दे दर्शितम् ।

**उपेय** त्रि० उप+इण्–यत् । १उपायसाध्ये, २प्राप्तव्ये च । ३उपगम्ये "उपेतारमुपेयञ्च सर्वोपायाश्च कृत्स्नशः" मनुः "ज्ञातित्वेनानुपेयास्ताः" मनुः ।४अन्विष्य गम्ये "भूधरस्थिरमुपेयमागतम्" माघः । "उपेयमन्विष्य गम्यम्" मल्लि०

**उपेयिवस्** त्रि०उप+इण्–क्वसु लोकेऽपि नि०। उपगते "पश्चाद्वेदमुपेयुषे" कुमा० "उपेयिवांसि कर्त्तारः पुरीमाजातशात्रवीम् । राजन्यकानि" "उपेयुषो मोक्षपथं मनस्विनः" माघः । स्त्रियां ङीपि उपेयुषी ।

**उपोढ** त्रि० उप+वह–क्त । सन्निवेशविशेषयुक्ते १व्यूढे सैन्ये २निकटे, "तदुपोढैश्च नभश्चरैः पृषत्कैः" किरा० त० "वराहमुपोढैः प्रत्यासन्नैः" मल्लि० । ३ऊढे कृतविवाहे च । भावे क्त । सैन्यविन्यासभेदे व्यूहे न० ।

**उपोत** त्रि०उप+वेञ्–क्त । उपस्यूते । गौरा०ङीष् । पूतिकायां स्त्री शब्दरत्ना०

**उपोत्तम** त्रि० उपगतमुत्तमम् अव्यधानेन अत्या० स० । उपान्तिमे अन्त्यात् पूर्व्वतने । "गुरूपोत्तमयोः ष्यङ् गोत्रे" । "योपधाद्गुरूपोत्तमाद्वुञ्" "अन्त्युपोत्तमम्" "उपोत्तमं रिति" पा०

**उपोदक** पु० उपगतमुदकम् अत्या०स० । उदकसमीपस्थे । "प्रजापतौ त्वा देवतायामुपोदके" यजु०३५,६, "अयं वै लोक उपोदकस्तदेनं प्रजापतौ देवतायामुपोदके लोके निदधाति" शत०ब्रा०१३,८,२,३, सामीप्ये अव्ययी० । २उदकसमीपे अव्ययम् ।

**उपोदकी** स्त्री उपगतमुदकमत्र गौरा०ङीष् । पूतिकायाम् (पुइशाक) । राजनि० । "द्वादश्यां पारणं कुर्य्याद्वर्ज्जयित्वाप्युपोदकीम्" ए०त०कूर्म्मपुराणम् ।

**उपोदिका** स्त्री उपाधिकमुदकं यत्र उदादेशः संज्ञायां कन् अतइत्त्वम् । पूतिकायाके अमरः तत्पाकादि प्रकारगुणादि वैद्यके उक्तम् ।"एकाहं मद्गुभोपेता किमन्यैर्व्यञ्जनान्तरैः । तण्डुलैरानतव्याजैर्हसत्येषा उपोदिका । वटपत्रवच्छुभपत्रिका परितप्ततैलसुपाचिता । नवहिङ्गुवासवासिता परिभोक्तृचित्तसुविकासिका । सुतप्ततैलविपाचिता सुधनाम्लतक्रसुपाचिता । उपोदिकाम्लभर्ज्जिता भोक्तृरायु रसमाप्नतस्त्वकी । पोदिका शीतला मल्ला ...

वातपित्तहा । पथ्यात्र दीपनमनी निद्रापुष्टिकरी मता" उपाधिकाद्दकं यत्र उद्दाहेयः गौरा० ङीप् स्वार्थे कन् वा ह्रस्वः । उपोदीकाप्यत्र स्त्री

**उपोद्ग्रह** पु० उप+उद्+ग्रह–अप् । ज्ञाने । "तस्माद् स्व-यमुपोद्ग्रहच्छेति" श्रा०त०। "उपोद्ग्रहपूर्वकपदैः ज्ञानार्थ त्वदर्शनात् तथार्थत्वम् ।

**उपोद्घात:** पु० समीपवर्त्तिनः प्रकृतस्य उद्घातः उद्गननम् ज्ञानं चिन्तनम् यत्र । उप+उद्–हन-गतौ गत्यर्थत्वात् ज्ञानार्थता आधारे घञ् । १प्रकृतसिद्ध्यर्थमालोचनात्मके सङ्गतिभेदे । "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" अवसरशब्दे विवृतिः । २तदर्थवर्णने च । तच्चोपोद्घातेन विशिष्टज्ञानस्य,कारणत्वं व्यवस्थापयति" दीधि० ३प्रारम्भे च

**उपोद्दलन** न० उप+उ+द्दल–ल्युट् । उद्दीपने उत्तेजने ।

**उपोषण** न० उप+उष–ल्युट् । उपवासे अहोरात्राभोजने । "प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः । उपोषणं न कुरुते कुम्भीपाके महीयते" । "उपोषणं मकस्याख्य दशम्यामेव पारणम्" ति० त० अगस्त्यं० । उपवास-शब्दे विवृतिः । उपवासस्य उपदाहरूपत्वात् तथात्वम् ।

**उपोषित** न० उप+वास+भावे–क्त । १उपवासे । "नास्ति स्त्रीणां पृथग्यज्ञः न व्रतं नाप्युपोषितम्" मनुः । कर्त्तरि क्त । २उपवासकर्त्तरि त्रि० । "उपोषितो द्वितीयेऽह्नि पूजयेत् पुनरेव ताम्" दुर्ग० त०पु० ।

**उपोष्य** त्रि० उप+वस–अकर्मकधातुयोगे कालस्य कर्मसंज्ञा विधानात् कर्मणि वा०क्यप् । १उपवासेन यापनीये तिथ्यादौ । "त्रिसन्ध्यव्यापिनी या तु सैवोपोष्या सदा तिथिः" कालमा०पु० । उप+वस–ल्यप् । २उपवासं कृत्वेत्यर्थे अव्य० ।

**उप्त** त्रि०वप-क्त । १कृतवापे धान्यादौ अधिकरणे क्त । २उप्त-धान्यादौ क्षेत्रे । "सर्वं स्वबेन तदभूद्यदीय ! रिक्तं भवान् क्षुत्तं कुहकराडमिवोप्तभूम्याम्" भाग० । ३मुण्डिते च । "पर्युप्तशिरसमिति"पार०सू० । परितःसर्वतोभावेन उप्तशिरसम् मुण्डितशिरसम्" हरिनाथः । भावे क्तिन् । उप्ति वपने स्त्री "बीजानामुप्तिविच्च स्यात्" मनुः ।

**उप्तकृष्ट** त्रि० पूर्व्वमुप्तं पश्चात् कृष्टं पूर्व्वकालेत्यादिना स० । बीजवपनानन्तरं कृष्टे क्षेत्रे (बीजाकृते क्षेत्रे) । (काड़ान)

**उप्तिम** त्रि० वप+क्त्रि मप् च । वपनजाते ।

**उप्य** त्रि० वप–वा० कर्मणि क्यप् । वपनीये व्रीह्यादौ "दीक्षितस्य इपतन्त्रोप्याणां येनेच्छेत् निक्षिपेत्" कात्या० २५,१२,२० । "उप्यानां व्रीहियवादीनाम्" कर्कः ।

**उब्ज** आर्जवे तुदा०पर० अक० सेट् । उब्जति औब्जीत् । णिचि उब्जयति ते औब्जिजत् त । "इन्द्राग्नीरद्य उब्ज-तम्" ऋ० १,२१,५ । "उब्जन्तु तं सुभ्वः पर्वतासः" ६,५२,१। घञ् नि०वस्य दः समुद्रः अभ्युद्रः । नि+उब्ज (उवटान) उत्तानस्यावतानकरणे न्युब्जति उत्तानं वस्तु अवतानं करोतीत्यर्थः ।

**उब्जक** त्रि० उब्ज–ण्वुल् । आर्ज्जवयुक्ते । ततः तिका० फिञ् औब्जायनि तदपत्ये पुंस्त्री । तिककितवादित्वात् गोत्रप्रत्ययस्य बहुषु द्वन्द्वे लुक् । उब्जककुभाः ।

**उभ(म्भ)** पूर्त्तौ तुदा० प० सक० सेट् । उभति औभीत् । उवोभ । उम्भति उम्भीत् अयं मुचादिरिति कविकल्प० तन्मते औम्भत्" मोपधत्वात् नोपधालोपः उम्भाम् बभूव आस चकार । वेदे गणव्यत्ययः उनप्ति उम्भाति "दृढा-न्यौम्भादुश्मानस्त्रोजः" ऋ० ४,१९,४ । "दृभस्तां मा ये मानम् परिषन्तमद्रिम्"ऋ०४,१,१५ ।"सर्वमर्माणि काकुत्स्थमौम्भत्तीक्ष्णैः शिलीमुखैः" भट्टिः । पा०मते लुङि रूपम् । अन्यमते लङि रूपम् ।

**उभ** त्रि०द्वि०। उङ्गतौ–भक् । उभ–पूर्त्तौ क वा । द्वित्ववि-शिष्टे एकत्वापेक्षाबुद्ध्या प्रथमं द्वित्वस्यैव जननेन द्वित्व-स्यैकत्वेन ज्ञानद्वारा गम्यमानत्वात् पूर्त्तिसाधनत्वाद्वोपचारात् तथात्वम् । "उभौ यदि व्योम्नि पृथक् पतेताम्" माघः । "उभावपि हि तौ धर्म्यौ सम्यगुक्तौ मनीषिभिः" "अप्सुचा श्वयावुभौ" "आचम्य प्रयतोनित्यमुभे सन्ध्ये समाहितः" मनुः । ततः वृत्तिमात्रे नित्यम् अयच् । "उभयपक्ष-विनीतनिद्राः"रघुः । उभयविधः, उभयथा उभयतः उभयत्र । अस्य सर्वादि०सर्व्वनामकार्यम् तेनास्य द्विवचना-न्तत्वेन अन्यकार्याभावेऽपि टेरकच् । उभकौ मायच् । स्वार्थे तद्धितकनि तु अयच्प्रसङ्गः । ततः प्रथमापञ्चमी सप्तम्यर्थे तसिल् अयच् । उभयतस् । द्वाभ्यां द्वाविनित्यर्थे द्वयोरित्यर्थे च अव्य० "तत्सुतः पुनात्युभयतः पुरुषा-नेकविंशतिम्" याज्ञ० । "यज्ञिं चोभयतश्छोकामायस दृष्टमेव वा"। "ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः । अपुष्पाः फलवन्तोये ते वनस्पतयः स्मृताः । पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः" मनुः । प्रकारे थाल् अयच् । उभयथा द्विप्रकारार्थे अव्य० । "नैव नः प्रियतमोभयथासौ वद्यमुं न दृषते दृषते वा" नैष० । "विनाशे नाशे वा तव सति वियोगोऽप्युभयथा" ।

प्रको०। सप्तम्यर्थे त्रल् अयच्। उभयत्र द्वयोरित्यर्थे अव्य० "उभयत्रचरौ मुनीन्द्राः" जातकप० "द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा" छन्दो०। अह्नि द्युस् एद्युस् वा-अयच्। उभयद्युस् उभयेद्युस् च द्वयोरह्नोरित्यर्थे अव्य०। "यो अन्येद्युरुभयद्युरभ्येति" अथ० १,२५,४। "उभयेद्युस्तथा प्राप्तौ परोपोष्या मनीषिभिः" स्मृतिः।

**उभय** त्रि० उभ+अयच्। द्वावयवे द्वित्वविशिष्टे अस्य द्वित्वबोधकत्वेऽपि एकबहुवचनान्ततयैव प्रयोगः न द्विवचनप्रयोगः। सि०कौ०। "उभयमानशिरे वसुधाधिपाः" रघुः। सर्वादि० सर्वनामकार्य्यम्। उभयस्मै उभयेषाम्! "अथा न उभयेषाममृत मर्त्यानाम्" ऋ० १,२६,८। जसि वा शी। उभये उभयाः। "परेऽवर उभया अमित्राः" ऋ० २,१२, १८। "ये जना उभये भुञ्जते विशः" २,२४,१०। "किं तत्साध्यं यदुभये साधयेयुर्न सङ्गताः" रघुः। स्त्रियां गौरा० ङीष्। "उभयीं सिद्धिमुभाववापतुः" रघुः।

**उभय(य)चर** पुंस्त्री० उभयत्र उभयोर्वा चरति चर—ट। भूम्यन्तरिक्षचरे पक्षिभेदे स्त्रियां ङीप्। सूर्य्याक्रान्तराशेर्द्वितीयस्थग्रहयोगभेदे स्त्री "सूर्य्याद्व्ययेऽपि च धने च तथोभयत्र संस्थैर्विना विधुमुशन्ति खगैस्तु योगान्। वेशीं च वोशिमुभयत्रचरीं मुनीन्द्राः स्पष्टं फलानि विविधानि वदन्ति तेषाम्" "समो रामोभयचरीप्रभवो बहुधनभाक्" जातकपद्धतिः।

**उभयतोदत्(न्त)** पुंस्त्री उभयतोदन्ताः दन्तपङ्क्तिरस्य वा दत्रादेशः। उभयदन्तपङ्क्तियुक्ते मनुष्यादौ। "पशून् मृगान् मनुष्यांश्च व्यालांश्चोभयतोदतः" मनुः। स्त्रियां ङीप्। दत्रादेशाभावपक्षे तत्र वार्थे स्त्रियां वा ङीष्। "उभयतोदन्ताः प्रजाः प्रजायन्ते" शत०ब्रा० १,६,३,२,

**उभयतोमुख** त्रि० उभयतो मुखे यस्य। द्विमुखे घटादौ "उभयतोमुखाभ्यां पात्राभ्याम्" शत०ब्रा० ४,७,१,७, स्त्रियां स्वाङ्गत्वाभावे टाप् स्वाङ्गे तु ङीष्। उभयतोमुखी धेनुः। "यावन्ति रोमकूपाणि सुताम्युभयतोमुखी। दातास्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत्। यावद्वत्सस्य पादौ द्वौ मुखं योनौ च दृश्यते। तावत् गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति" याज्ञ०उक्तो धेनुभेदः। अन्यत्र स्वयमेव उत्क्रान्तिसंज्ञोक्ता। "उत्क्रान्ते तु प्रत्यक्षमुखोत्क्रान्तिस्वरूपे। तुभ्यं संप्रददे नाम्ना गावमुत्क्रान्तिसंज्ञिताम्" विधा० पा० महादानमन्त्रः।

**उभयतश्शीर्ष्णी** स्त्री उभयतः शीर्षे यस्याः शीर्षन्नादेशः ङीष् अल्लोपः विसर्गस्य वा शः। उभयतःशीर्षत्वप्रायणीयादियुक्तायां गवि "अदितिरस्युभयतश्शीर्ष्णी" यजु० ४,१९, "उभयतः शीर्षे यस्याः ज्योतिष्टोमस्याद्यन्तयोः प्रायणीयोदयनीययोः शीर्षत्वम् "द्वे शीर्षे प्रायणीयोदयनीये" याज्ञोक्ते:" वेददी०।

**उभयवेतन** पु० उभयोः भेद्ये स्वामिनि च वेतनं यस्य अयच्। दूतभेदे यो हि स्वामिसकाशात् प्रच्छन्नां भृतिं गृहीत्वा तद्भेद्यशत्रुसकाशे तदीयदासत्वेनात्मानं ख्यापयित्वा तत्सकाशात् भृतिं गृह्णन्नपि पूर्वस्वामिनोऽगृहीतभृतिनिष्क्रयार्थमुत्तरस्य सचिवादिभेदं जनयति स उभयवेतन इत्युच्यते। "अज्ञातदोषैर्दोषज्ञैरुदूष्योभयवेतनैः। भेद्याः शत्रोरभिव्यक्तशासनैः सामवायिकाः" माघः। तादृशदूताश्च मुद्राराक्षसे चाणक्यप्रेषिता बहवो वर्णिताः ते च मलयकेतोः प्रधानसचिवादीन् राक्षसादीन् ततो विभिद्य चाणक्यकार्य्यं साधितवन्तः तच्च तत एवावसेयं विस्तरभयान्नोक्तम्।

**उभयादन्ति** अव्य० उभौ दन्तौ प्रहरणं यत्र युद्धे द्विदण्ड्या० इच् समा० अयच्। उभयदन्तसाध्ये युद्धे एवम् उभयाञ्जलि उभयाबाहु उभयाहस्ति उभयाकर्णि इत्यादयोऽपि नि० साध्याः तत्तत्साधनयुद्धे। उभाहस्ति उभाकर्णि उभाबाहु उभादन्ति इत्यादयः नि० साध्याः तत्र नायच्। तेऽपि तत्तदर्थेषु।

**उम्** अव्य० उ—बा० डुमि। १रोषे, २स्वीकारे, ३प्रश्ने च।

**उमा** स्त्री ओः शिवस्य मा लक्ष्मीरिव उं शिवं माति मन्यते पतित्वेन मा+क वा। शिवपत्न्याम् १दुर्गायाम् "उ मेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगामेति" कुमारे निरुक्तायां २पार्वत्याम्। "यदाह तपसे पुत्रीं वनं गन्तुञ्च मेनका। उ मेति, तेन सोमेति नाम प्राप तदा सती" कालि०पु०। "मात्रा निषिद्धा तपसे यदा सा तथामुमाख्यां भवभक्तिभाविनी" शिवपु० अत्र पक्षे उ मेति शब्दः नामहेतुत्वेनाख्यस्याः अर्श आ० अच् "यस्येति" पा० आलोपे टाप्। "उमामुखे विम्बफलाधरोष्ठे" "उमामुखन्तु प्रतिपद्य लोला" "उमारूपेण ते यूयम्" "उमा वधूर्भवान् दाता" इति च कुमा०। "नियोजयितुकामस्तु उमायां चन्द्रशेखरम्" शि०पु० उमामाहेश्वरव्रतम्। व्रतशब्दे वक्ष्यते। वे—बा० मक् संप्रसारणम्। ३हरिद्रायाम् ४अतसीवृक्षे (मसिना) उमाकटः उम्यः औमीनः। ५कीर्त्तौ ६कान्तौ, ७शान्तौ च।

**उमाकट** पु॰ उमाया अतस्या हरिद्राया वा रजः कटच् । अतस्या हरिद्रायाश्च रजसि ।

**उमागुरु** पु॰ ६त॰ । हिमालये तस्य उमायाजनकत्वात्तथात्वम् । उमाजनकादयोऽप्यत्र । तस्याश्च तदुत्पत्तिकथा शिवपु॰ दृश्या ।

**उमाचतुर्थी** स्त्री उमायाजन्मदिनम् चतुर्थी । ज्यैष्ठशुक्लचतुर्थ्याम् "ज्यैष्ठशुक्लचतुर्थ्यान्तु जाता पूर्वमुमा सती । तस्मात् सा तत्र संपूज्य स्त्रीभिः सौभाग्यवृद्धये" ब्र॰पु॰

**उमापति** पु॰ ६त॰ । महादेवे । स च यथा तामुपयेमे तत्कथा शिवपु॰ दृश्या कुमारे च वर्णिता एवमन्यत्रापि पुराणे दृश्या । "मेनां यावत् सती माघ हिमाचलपतिव्रताम् । उमरूपा हि तपसा पतिं प्राप पिनाकिनम्"। काशीख॰ उमाधवादयोऽप्यत्र

**उमावन** न॰ उमाप्रीतये वनमत्र । पुरभेदे शोणितपुरे हेम॰

**उमासहाय** पु॰ ६त॰ । महादेवे दुर्गासहायतत्सहचरादयोऽप्यत्र

**उमासुत** पु॰ ६त॰ । कार्त्तिकेये । तत्कथा अग्निकुमारशब्दे ५५पृ॰ शिवपुराणे च दृश्या । उमातनयपार्वतीसुतादयोऽप्यत्र

**उम्बर** पु॰ उमित्यव्यक्तशब्दं वृणाति वृ अच् । १द्वारोर्द्धकाष्ठे, २गन्धर्वभेदे च । "उम्बरस्तुम्बुरुश्चैव जगुरन्ये च मद्गणान्" हरि॰ १२८अ॰ ।

**उम्बी** स्त्री उम्+वा-क गौरा॰ ङीष् पृषो॰ वस्य बः । "मञ्जरी स्वर्द्धपक्वा या यवगोधूमयोर्भवेत् । तृणानलेन सम्भृष्टा बुधैरुम्बीति सा स्मृता" इति भा॰प्र॰ उक्तायाम् अर्द्धपक्वयवगोधूमयोर्मञ्जर्याम् । "उम्बी कफप्रदा बल्या लघ्वी पित्तानिलापहा" भा॰प्र॰ ।

**उम्बुर** पु॰ उम्+वृ-क उत् रपरः । द्वारोर्द्धकाष्ठे ।

**उर्मि** त्रि॰ उम्भ-इन् । पूरके । ततः कच्छ्या॰ जातायर्थे ठञ् । औम्भेयक तज्जातादौ त्रि॰

**उम्य** न॰ उमाया अतस्या भवनं क्षेत्रम् वा यत् । अतसीभवनक्षेत्रे पक्षे खञ् औमीन तत्रार्थे न॰

**उम्लोचा** स्त्री अप्सरोभेदे । "ऋतुस्थला घृताची च विश्वाची पूर्वचित्त्यपि । उम्लोचेति च विख्याता" भा॰आ॰१२२अ॰

**उर** गतौ भ्वा॰पर॰सक॰सेट् । ओरति औरीत् उवोर ऊरतुः

**उर** पुंस्त्री उर-क । १मेषे स्त्रियाम् अजा॰टाप् । "अला वि नेमिरेषामुराम्" ८,३४,३, "उरां मेषीम्" भा॰ २गन्तरि त्रि॰ । "उरार्थविरा वसुनेषु" ऋ॰ ८,६६,८ ।

**उरःछदिका** स्त्री ७त॰ । उराहारे अमरः ।

**उरग** पुंस्त्री॰ उरसा गच्छति उरस्+गम-ड सलोपश्च । १सर्पे, स्त्रियां जातित्वात् ङीष् पादशून्यतया उरसैव तेषां हि गमनम् । "भित्त्वोत्थितं भूमिमिवोरगाणाम्" "बिलमध्याविवोरगौ" "अङ्गुलीवोरगक्षता" रघु॰ । २तद्देवताके अश्लेषानक्षत्रे । "उरगविधियताख्याः शर्वरीनाथवारे" ज्यो॰त॰ । ४सीसके तस्य नागनेजजन्येनाऽभेदोपचारात्तथात्वम् । अहिशब्दे ५८१ पृ॰ विवृतिः ।

**उरगभूषण** पु॰ उरगोभूषणमस्य । सर्पभूषणे महादेवे

**उरगराज** पु॰ ६त॰ टच् समा॰ । १सर्पराजे वासुकौ । उरगोराजेव उपमि॰स॰ । २महासर्पे च । "प्रहृत्तुरेवोरगराजरज्जवः" माघः उरगेश्वरदिन्द्रादयोऽप्यत्र । "उरगेन्द्रमूर्द्धरत्नसन्निधेः" माघः । [तथात्वम् ।

**उरगस्थान** न॰ ६त॰ । पाताले तेषां तत्रस्थितत्वात् पातालस्य

**उरगाशन** पु॰ उरगानश्नाति अश-ल्यु ६त॰ । सर्पभक्षके १गरुड़े च २मयूरे उरगभक्षादयोऽप्यत्र । "खाधासभाम मुरगाशनकेतयष्ट्या" माघः ।

**उरङ्ग** पुंस्त्री उरसा गच्छति उरस्+गम-ड नि॰ । सर्पे स्त्रियां जातित्वात् ङीष् । [ सर्पे स्त्रियां जातित्वात् ङीष् ।

**उरङ्गम** पुंस्त्री उरसा गच्छति उरस्+गम-खच् सलोपः ।

**उरण** पुंस्त्री ऋ-क्यु, धातोरुच्च रपरः । १मेषे स्त्रियां जातित्वात् ङीष् । "वृकोवोरणमासाद्य मृगुराराय गच्छति" भा॰शा॰६५ अ॰ । "य उरणं जघान नव चख्वांसं नवतिं च बाहून्" ऋ॰ २,१४,४, २दद्रु मर्दके पु॰ शब्दार्थचि॰ ।

**उरणाक्ष** पु॰ उरणस्य मेषस्य अक्षीव अक्षि पुष्पं यस्य । दद्रुघ्ने (दादमर्द्दन) वृक्षे । स्वामी तु उरणाख्यशब्दार्थे इत्याह । तन्मते उरणस्याख्या आख्या यस्येति विग्रहः

**उरभ्र** पुंस्त्री उरु उत्कटं भ्रमति भ्रम-ड पृषो॰ उलोपः । १मेषे स्त्रियां जातित्वात् ङीष् २दद्रुघ्ने पु॰ स्वामी । तस्येदम् अण् । औरभ्र मेषमांसादौ "हविषान्नेन वै मासं पायसेन च वत्सरम् । मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः । ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् । मासाभिवृद्ध्या तृप्यन्ति दत्तैरेह पितामहाः" याज्ञ॰ । "दर्पिता व्याघ्रखड्गाह्यमहिषोरभ्रकुञ्जराः" सुश्रुते पशुषु तस्य दर्पितत्वमुक्तम् स च ग्राम्यपशुः "अश्वाश्वतरगोखरोष्ट्रबस्तोरभ्रमेदःपुच्छप्रभृतयो ग्राम्याः" सुश्रु॰ तन्मांसगुणाश्च तत्रैव "ग्राम्या वातहराः सर्वे बृंहणाः कफपित्तलाः । मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः" "बृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु" ।

**उरभ्रसारिका** स्त्री सुश्रुतोक्ते कीटभेदे कीटशब्दे विवृतिः।

**उररी** अव्य० उर–बा०अरीक्। १अङ्गीकारे, २विस्तारे च। कृञि अस्य गतित्वात् तेन सह समासः उररीकृत्य इति "काल्पनिकं भेदमुररीकृत्य" सा०द०। घञ् उररीकार अङ्गीकारे पु०। क्त। उररीकृत स्वीकृते त्रि०

**उरल** त्रि० उर–बा० कलच्। गतियुक्ते ततो बला० चतुरर्थ्यां यत्। उरल्य तत्सन्निकृष्टदेशादौ त्रि०।

**उरश** पु० मुनिभेदे तस्यापत्यम् पाठान्तरे तिका० फिञ् औरशा-यनि तस्य भर्गा० स्त्रियां तत्प्रत्ययस्य न लुक् औरशायनी।

**उरश्छद** पु० उरश्छाद्यतेऽनेन छद–णिच्-घ ह्रस्वः। कवचे

**उरस्** बलार्थे कण्ड्वा० प० अक० सेट्। उरस्यति बलवान् भवतीत्य-र्थः औरसीत् औरशीत् उरसाम्(साम्)बभूव आस चकार

**उरस्** न० ऋ-असुन् धातोरुत्त्व रपरः। वक्षःस्थले। "कवाटविस्ती-र्णमनोरमोरःस्थलस्थित श्रीललनस्य तस्य" "जनितमुदमु-दस्थादुच्चकैरच्युतोरःस्थलनियतनिषण्णश्रीस्तुतां सुस्तवान् सः' माघः। "उरोमुकुलितस्तनं जघनमंसबन्धोद्धुरम्" मालती० अस्य स० व० अन्तस्य सकप् समा० "व्यूढोरस्को वृषस्कन्धः" रघुः। "प्रत्यर्थ्येव शिलोरस्कः" कुमा०। क्वचित्। "हारोरा ममार सा" सुप्रसिद्धपद्यम्। तेन निर्मित अण् औरस, पुत्रभेदे "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव चेति" कालि० पु० उरोजातमात्रे च औरसं भयम्। पक्षे यत् उरस्य। वक्षोगते। २श्रेष्ठे न०। तस्य हित० अन्ते अच् समा०। अश्वोरस अश्वप्रधाने। ३ऋषिभेदे पु० तस्यापत्यम् तिका० फिञ् औरसायनि। उरशवत् भर्गादिकार्यम्। उरः प्राशस्त्येनास्त्यस्य अर्श्आ० अच्। उरस प्रशस्तोरस्के त्रि०। पाठान्तरे तिकादिषु उरसशब्दोऽपि पठ्यते उर-शवत् फिञ् भर्गादिकार्यञ्च।

**उरसिज** पु० उरसि जायते जन–ड त० सप्तम्या अलुक्। स्तनवक्षोजाते स्तने। "परिपस्पृशिरे चैनं पीनैरुरसिजैः मुहुः" रामा०। उरसिजातोरसिरुहादयोऽप्यत्र। "मेनानामुरसिरुहेषु हारलीलाम्" माघः

**उरसिल** त्रि० उरः प्राशस्त्येनास्त्यस्य पिच्छा० इलच्। प्रशस्तो-रस्के। पक्षे मतुप् मस्य वः। उरस्वत् तत्रार्थे स्त्रियां ङीप्।

**उरस्कट** पु० उरः कटते आव्रियतेऽनेन कट-घञर्थे करणे क। १बालानामुत्तरीयभेदे तदीये यज्ञोपवीताकारे २वस्त्र-भेदे च। (पुरबाकाड़)। त्रिका०।

**उरस्तस्** अव्य० उरसैका दिक् तसिः, पञ्चम्याद्यर्थे तसिल् वा। १हृदयैकदेशभवे पुत्रे २वक्षस इत्याद्यर्थे च अत्र स्तिथ्यात्

स्वरितस्वर इति भेदः। [ल्युट्। उरस्तायमानत्वात् न०।

**उरस्त्र** न० उरस्त्रायते त्रै–क। वक्षोरक्षके कवचे। करणे

**उरस्य** पु० उरसैका दिक् यत्। वक्षसैकदेशगते। "कर्मणा वाष्पुरस्येन वक्षो यस्य विदारितम्" सुश्रुतः निर्मितार्थे यत्। २पुत्रे

**उरी** अव्य० उर–गतौ बा० ईक्। १अङ्गीकारे, २विस्तारे च। ऊर्यादि० कृञि गतित्वम् तेन समा०। ल्यप् उरीकृत्य "तदुरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते" माघ०।

**उरीकार** पु० उरी+कृ–घञ्। १स्वीकारे, विस्तारे च।

**उरीकृत** त्रि० उरी+कृ–क्त। १अङ्गीकृते, २विस्तृते, च।

**उरु** त्रि० ऊर्णु–कु नुलोपो ह्रस्वश्च। १विशाले, २बृहति च "विस्तीर्णं दृष्टवानुरम्बरप्रकाशं तेऽगाधं निधिमुरुमम्बु-राशिमन्तम्" भा० आ० २२अ०। ३बहुत्वे निरु० "तुविजाता उरुक्षया" ऋ० १,२,९, "उरुत्रया बहुनि-वासौ" भा० "रथे युक्तमुरुचक्रे"। ४विस्तीर्णे च इदृशस्य विस्तीर्णत्वात्। "जनाय उरु ज्योतिं सुज-निमा चकार" ऋ० ७,१००,४, "स्वस्तिमदुरुक्षितौ स्वर्वीहि", ऋ० ९,८४,१, उरुगायः "उरुगव्यूतिरभयानि" ऋ० ९,९०,४, अहोश्चिदस्मा उरुचक्रिरद्भुतः" २,२६,४, "अन्यामिषमुरुधारामरङ्कृतम्" ८,१,१०, "उरुप्रथाः प्रथमानम्" यजु० २०,३९, "गाथयोरौ रथ उरुयुगे" ऋ० ८,९८,९, ।५दीर्घे च "गतोरुमार्गाः" माघः भाषितपुंस्क-त्वात् क्लीबे तृतीयादौ वा पुंवत्। उरवे उरुणे इत्यादि स्त्रियां गुणवचनत्वात् वा ङीष्। "शिरोभिस्ते स्फोत्वोर्वी स्रजमारकाव सः" मनुः उरोर्विः इष्या० इमनिच्। वरिमन् तद्भावे। पक्षे त्व, उरुत्व न०। तल् उरुता स्त्री अण् औरव न०। तद्भावे।

**उरुकाल** पु० उरुः कालः पाकोऽस्य। (राखालशशा) १महा-कालतायाम्" रत्नमा०। कर्म०। २दीर्घकाले।

**उरुक्रम** पु० उरवः भूम्यादिव्यापकत्वात् क्रमाः पादविक्षेपा अस्य। १वामनरूपे भगवदवतारे "यस्योरुषु विक्रमणेष्वधि-क्षियन्ति भुवनानि विश्वा" ऋ० १,१५४,२, "यस्य विष्णो-रुरुषु विस्तीर्णेषु त्रिसंख्याकेषु विक्रमणेषु पादप्रक्षेपेषु विश्वा सर्वाणि भुवनानि भूतजातान्याश्रित्य निवसन्ति स विष्णुः स्तूयते" भा०। इति तस्योरुक्रमत्वे विक्रमुक्तम्। "शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः" ऋ० १,९, ९, उरु विस्तीर्णं क्रामति पादान् विक्षिपतीत्युरुक्रमः विष्णुः" भा०। उरु प्रधानं पदमाक्रमं क्रामति-क्रम–

अच् ईत० । भगवतोऽष्टमावतारे २ऋषभदेवे च । "अष्टमे मेरुदेव्यान्तु नाभेर्जात उरुक्रमः । दर्शयन् वर्त्म धीराणां सर्वाश्रमनमस्कृतम्" भा० १स्क० ३अ० ऋषभशब्दे विवृतिर्दृश्या ।

**उरुगाय** पु० उरुभिः श्रेष्ठैर्गीयते गम्यते वा गै—गाने गाङ् गतौ वा कर्मणि घञ् । परमेश्वरे वासुदेवे "लोकेक उरुगाय ! विक्रमे" ऋ० ८,२९,७, "उरुभिर्बहुभिर्गातव्यः बहुषु देशेषु गन्ता बहुकीर्त्तिर्वा" भा० बहुकीर्त्तिरिति पक्षे गीयते गायः कीर्त्तिरित्यर्थः "अत्राह तदुरुगायस्य विष्णोः" यजु० ६,३, "विष्णु उरुगायैष" यजु० ८,१, यः पार्थिवानि त्रिभिरिद्वि गामभिरुरु क्रमिष्टोरुगायाय जीवसे" ऋ०१,१५५,४, "उरुगायाय उरुगातव्याय" भा० । गाङ् गतौ भावे घञ् गायो गतिः कर्म० । २विस्तीर्णायां गतौ "स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा" कठवल्ली । "उरुगाय विस्तीर्णां गतिम्" शा० भा० "असम्बाधानुरुगायवतोऽभिध्याय त" क्रा० उ० उरुगायवतोविस्तीर्णगतीन्" गै गाने घञ् कर्म० । ३बहुकीर्त्तने । "प्राणस्य माता-योरुगायं कुरुते" शत० ब्रा०,१,२,१४,

**उरुचक्षस्** त्रि० उरु यथा स्यात् तथा चष्टे चक्ष-असुन् । १महादर्शने "वर्षिष्ठक्षत्रा उरुचक्षसा नराः" ऋ० ८, १०१,२, सर्वद्रष्टृत्वात् २सूर्य्ये पु० "नमोभिरुरुचक्षो नृन्विप्वान्" ६,५१,९, "यं नः सूर्य उरुचक्षा उदेतु" ७,३५,८,

**उरुज्मन्** त्रि० उर्वी ज्मा क्षितिर्यस्य । बहुभूमियुक्ते "उरुष्या, ण उरुज्मन्नप्रयुच्छन्" अथ० ६,४,३,

**उरुज्रयस्** त्रि० ज्रि—अभिभवे करणे असुन् उरु ज्रयोवेगोऽस्य विस्तीर्णवेगे । वेगेन हि सर्वाभिभवात् ज्रयसस्तथात्वम् । "उरुज्रयसमिन्दुभिः" ऋ० ८,६,२७, "उरुज्रयसं विस्तीर्णवेगम्" भा० । "उरुज्रयं घृतयोनिमाहुतम्" ५,८,६, "सेहानः पृतना उरु ज्रयः" ८,२६,१, इत्यत्र ज्रयसोवेगार्थकस्यासुवन्ततया प्रयोगात् तस्या दन्तकत्वं प्रमादिकम् ।

**उरुजि** त्रि० उरु यथा तथा ज्रवति ज्रि क्विप् वेदे नि० न तुक् । जृ-बा० कि वा । प्रभूतगतियुक्ते । "अर्वाक्पथ उरुज्रयः क्षणुध्वम्" ऋ० ७,२९,२, "उरुज्रय प्रभूतगमनाः" भा० ।

**उरुण्ड** पु० उपद्रावके असुरभेदे । "यवनाः सकधूमका उरुण्डा ये च मट्मटाः । कुम्भमुष्का अयाशवः । तानस्या ब्रह्मणस्पते प्रतिबोधेन नाशय" अथ० ८,६,१५,

**उरुबिल** त्रि० उरु दृहत् बिलमस्य । दृहच्छिद्रयुक्ते पात्रे स्थाल्यां स्त्री गौरा० ङीप् । "यद्योखा भिद्येत वाऽभिन्ना नवा स्याल्युरुबिली स्यात्तस्यामिमं पर्य्यावपेत्" शत० ब्रा०१,६, ४,८,

**उरुज** पु० उरुभ्योऽद्भ्यो जायते जनयति अन्तर्भूतण्यर्थे जन—ड पृषो० अल्लोपः । प्रभूतपयोजनके । "गवामुरुजमभ्यर्षि व्रजम्" ऋ० ९,७७,४, "उरुज प्रभूतानामपां जनकम्" भा०

**उररी** अव्य० उरु राति रा—बा० की । १अङ्गीकारे २विस्तारे च ।

**उरुलोक** न० उरु यथा तथा लोक्यते लोक—कर्मणि घञ् । १अन्तरिक्षे तस्य सर्वलोकेभ्यो महत्त्वेन ज्ञानात् तथात्वम् । "कालस्याकाशदिशां सर्वगतत्वं परमं महत्" भाषोक्तेस्तस्य परममहत्त्वम् । "ममान्तरिक्षमुरुलोकमस्तु" ऋ०१०,१२८,२ । कर्म० । २महल्लोके पु० ।

**उरुवु** पु० उरु वायति वै शोषणे कु । एरण्डवृक्षे "मस्याकोरुवुवर्षाभूशाजिगन्धानिशाच्छदैः" सुश्रु० स्वार्थे कन् तत्रैव । रायमुकुटस्तु उरुवुकस्थाने उरुवकइत्यङ्गीचकार पृषो० साधु ।

**उरुवूक** पु० उरु वायति वै शोषणे "उलूकादयश्च" उणा० नि० । रक्तैरण्डे "पुनर्नवावरुणतर्कार्य्युरुवूकवत्साद्नीविल्वशाकप्रभृतीनि उष्णानि स्वादुतिक्तानि वातप्रशमनानि च" सुश्रु० । "पटोलवार्त्ताकुकारवेल्लकटुकिकावेत्रकोरुवूकपर्पटककिराततिक्तकर्कोटकारिष्टकोषातकीवेतकरीराटरूषार्कपुष्पप्रभृतीनि रक्तपित्तहरायल्पानि हृद्यानि कुष्ठमेहज्वरश्वासकासारुचिहराणि च" सुश्रुतः ।

**उरुव्यचस्** त्रि० उरु विचति व्यच—व्याजे (विशेषव्याप्तौ) असुन् अतिव्यापके । "ओरुव्यचाः पृथताम्" ऋ० २,५०१ । "उरुव्यचाः प्रभूतव्याप्तिः" भा० । २विस्तीर्णे "उरुव्यचसे महिने" ऋ० ७,३१,११ । "उरुव्यचसा विस्तीर्णे" भा० । "गमदुरुव्यचा अदितिः" ५,४६,६ । "उरुव्यचसो-धाम्ना पत्यमानाः" यजु० २७,१६,

**उरुषा** त्रि० उरु सनोति सन—विट् ङा वेदे षत्वम् । बहुदातरि "महीमस्मभ्यमुरुषामुरुज्रयः" ऋ० ५,४४, ६ । "उरुषां बहुदातारम्" भा० ।

**उरुष्य** रक्षणे पर० सक० सेट् । उरुष्यति औरुष्योत् । "उरुष्य राय एषो यजस्व" यजु० ७,४, अस्य व्याख्याने "उरुष्य रक्ष उरुष्यतीरक्षणकर्मा" वेददी० । "उरुष्यतन्नि: पित्रोरुपस्थे" ऋ० ३,५,८ । अरुष्यत् रक्षत" भा० । "गोपीथे न उरुष्यतम्" ऋ० ५,६५,६ ।

**उरुष्या** स्त्री उरुष्यं रक्षणमिच्छति क्यच् अ यलोपः रक्षणेच्छायाम् । "उरुष्या पायुरभवत् सखिभ्यः" ऋ० ६,४४,७ । "उरुष्या रक्षणेच्छया" भा० तृतीयाया लुक् । ततः उ । "उरुष्यु रक्षणेच्छावति "इमे मा पीता यशस उरुष्यवोरथम्" ऋ० ८,४८,५ । "उरुष्यवः रक्षाकामाः" भा० ।

**उरूची** स्त्री उरु अञ्चति क्विप् ङीप् अल्लोपे पूर्व्वाणो दीर्घः । अतिव्यापिन्यां स्त्रियाम् । "उरूची विश्वे यजते निपातम्" ऋ० ४,५६,४ । "शं न उरूची भवतु स्वधाभिः" ऋ० ७,३५,३ 'विश्वव्यचसो अमतिमुरूचीम्' ऋ० ७,३६,२ "आ ते जिह्वा मधुमती सुमेधा अग्ने देवेषूच्यत उरूची" ऋ० ३,५७,५ । स्त्रीभिन्ने उर्वञ्च् तदर्थे यथायथमपि उरूचः उरूचा इत्यादि ।

**उरूणस्** त्रि० उरु दीर्घे नासिके तस्य नसादेशः वेदे नि०णत्वं दीर्घश्च । दीर्घनासिकायुक्ते "उरूणसावसुतृपा" ऋ० १०,१४,१२ ।

**उरोज** पु० उरसि जायते जन–ड "ङे विभाषा" पा० सप्तम्या लुक् । स्त्रीस्तने "दृष्टलुरोजद्वयमर्द्धपीतलम्" "रेजाते रुचिरदृशावुरोजकुम्भौ" माघः स्तनादिकं सूक्ष्मरूपेण जन्मकाले उत्पन्नमपि यौवने उद्भिद्यते । यथाह भावप्रका० । "बालानां मुकुलस्येव किन्तु यौवनात् दृश्यते । तेषां तदेव तारुण्ये पुष्टत्वादुद्भिमेष्यति । कुसुमानां प्रफुल्लानां गन्धः प्रादुर्भवेद्यथा । रोमराज्यादयः पुंसां नारीणामपि यौवने । प्रावन्ते तत्तयोर्भेदो ज्ञेयो व्याख्यानतः स च", तथा च पुंसां रोमराजीश्मश्रुप्रभृतयः नारीणां तु रोमराजीस्तनस्तन्यार्त्तवप्रभृतयः" । आर्त्तवस्तनोद्भेदकालस्तु एकादशवर्षादुत्तरः स्मृतावुक्तः । "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी । दशमे कन्यका प्रोक्ता तत ऊर्द्ध्वं रजस्वला" उ०त० स्मृतिः । इदमपि बाह्यावितविषयम् मातृभेदेन तत उत्तरमपि भवतीति लोके दृश्यते बाल्यावस्थाभिया दशमाब्दादर्वाक् देयेति तत्त्वम् । सुश्रुते तु द्वादशवर्षोपरि रजःसम्भव उक्तः । "रसादेव रजः स्त्रीणाम् मासि मासि त्र्यहं स्रवेत् । तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम्" रजःपदं स्तनोद्भेदस्याप्युपलक्षणम् । गर्भिण्याः पीनस्तनत्वे दुग्धवत्त्वे च कारणमुक्तम् भा०प्र० । "व्यहीतगर्भाणां स्त्रीणामार्त्तव वहानां स्रोतसां गर्भेणार्त्तवरोधादार्त्तवं न स्रवति तदेव प्रतिहतमूर्द्धं मागतमुपचीयमानमपरा भवति शेषञ्चोर्द्ध्व तरमागतं पयोधरौ याति तस्मात् गर्भिण्याः पीनोन्नौ पयोधरौ भवतः" इति । उरोभूप्रकृतयोऽप्यत्र "उरोभुवा कुम्भयुगेन जृम्भितम्" नैष० ।

**उरोभूषण** न० उरो भूष्यतेऽनेन भूष–करणे ल्युट् ६त० । १वक्षोऽलङ्कारे हारे । उरो भूषयति ल्यु । २तदर्थे त्रि० ।

**उरोबृहती** स्त्री वैदिके छन्दोभेदे । "बृहती जागतस्त्रयश्च गायत्राः । पथ्या पूर्वश्चेत् तृतीयः । न्यङ्कुसारिणी द्वितीयः । स्कन्धोग्रीवी क्रौष्टुकेः । उरोबृहती यास्कस्य" छन्दो० उक्तेः यास्कमते द्वितीयचरणस्य जागतात्मकत्वे अन्येषां त्रयाणां गायत्रात्मकत्वे च सा भवतीत्यर्थः ।

**उरोहस्त** न० उरसि हस्तचपेटाघातोऽत्र । बाहुयुद्धभेदे बाहुयुद्धप्रकारः भा०स०२२अ० दर्शितः यथा "करग्रहणपूर्वन्तु कृत्वा पादाभिवादनम् । कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः । स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः । अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं विभो ! । चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः । गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम् । बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ । उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तौ । करसंपीडनं कृत्वा गर्जन्तौ वारणाविव । दुर्दान्तौ मेघसङ्काशौ बाहुप्रहरणावुभौ । तलेनाहन्यमानौ तु अन्योन्यं कृतवीक्षणौ । सिंहाविव सुसंक्रुद्धावाकृष्याकृष्य युध्यताम् । अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि । आवृत्य बाहुभिश्चापि उदरं च प्रचक्रतुः । उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ । अधोहस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत् । सर्वातिक्रान्तमर्यादं पृष्ठभङ्गञ्च चक्रतुः । संपूर्णमूर्च्छां बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः । तृणपीडं यथाकामं पूर्णयोगं समुष्टिकम् । एवमादिनियुद्धानि प्रकुर्वन्तौ परस्परम्" । व्याख्यातञ्चैतत् नीलकण्ठेन "कक्षैः दोर्मूलैः कक्षां प्रकोष्ठगतां रज्जुं धुन्वानौ । यतः तत्र कक्षैः आस्फोटं चक्रतुः बाहुमूलास्फालनेन अङ्गदबन्धरज्जुयोगं कम्पयन्तावित्यर्थः । चित्रहस्तादिकं हस्तलाघवेन बाहुकुञ्चनप्रसारणोपर्यधश्चालनमुष्टीकरणानि चित्रहस्ताः आदिपदात् पादस्थाप्याकुञ्चनादि । कक्षाबन्धं परस्परकक्षायां हस्तौ कृत्वा बन्धनम् गलेन गण्डेन भालदेशेनाभिघातस्तेन पाषाणवदृढाङ्गत्वात्तयोरभिघातेन विस्फुलिङ्गोत्पत्त्याऽशनिं वज्रमिव वज्रजनिरित्यर्थः । बाहुपाशादिकं चरणपाश आदिपदार्थः । पादस्थाभ्यामाहताः

शिरः स्कन्धयोरेयाभ्यान्तौ दृढप्रहारौ नाड़ीपर्य्यन्तमपि वेदनावन्ताविल्यर्थः । उरोहस्तं उरसि चपेटाप्रहारम् । पूर्णकुम्भौ द्विलं परस्परं द्वावपि चक्रतुरिति वक्तुम् । तलेन चपेटया । आहत्य जत्रुदेशे पृष्ठं कृत्वा बाहुभिः बद्धत्वाद्द्वावपि मिथः उदरम् आदाय प्रचक्रतुः प्रचिक्षिपतुः क्षिपेः लिटि क्षिपेऽस्य छान्दसं रूपम् । एवं कथां सुपार्श्वं च प्रचक्रतुः । तत्रवन्तौ तत्स्तनकरणं गात्रसङ्कोच इत्यर्थः तद्वन्तौ । अधोहस्तं उदरस्याधस्तात् हस्तं कृत्वा हस्ताभ्यामुदरमावेष्ट्य स्वकण्ठे स्वोरसि च कण्ठोरःसमीपे आनीय आक्षिपत् आस्फालितवान् । पृष्ठस्य भूसम्बन्धेन जातं भङ्गं पराभवं बाहुभ्यां उदरादिनिपीड़ने सम्पूर्णमूर्द्धाक्षपीड़ं पूर्णयोगं योगोविश्रब्धघातनं तच्च पूर्णम् । अन्यत्र मुष्टेः पातं प्रदर्श्य अन्यत्र पातनमित्यर्थः एवमादिनियुद्धानि पादाकर्षणशीर्षकस्त्रीकरणादीनि”

**उ(ऊ)र्ज** जीवने वा चु० उभ० अक० पक्षे भ्वा० पर० सेट् । उ(ऊ)र्ज्जयति ते उ(ऊ)र्ज्जति । और्ज्जिजत्-त और्ज्जीत् । उ(ऊ)र्ज्जयाम् बभूव आस चकार चक्रे पक्षे उ(ऊ)र्जाम् बभूव आस चकार । क्त उ(ऊ)र्ज्जित, इद्धे बलान्विते । णिजन्तत्वे वर्ज्जिते लि० दीर्घादिरयमिति बहवः

**उ(ऊ)र्णनाभ** पु० ऊर्णेव सूत्रं नाभौ गर्भेऽस्य अच् समा० ह्रस्वः । लूतायाम् (माकड़सा) दीर्घादिरयमिति केचित् ।

**उ(ऊ)र्णा** स्त्री ऊर्णूयते आच्छाद्यते ऊर्णु-ड ह्रस्वः । १मेषादिलोम्नि २ललाटस्थलोमसमूहात्मके चिह्नभेदे । “ललाटपट्टे नवनलिननालभङ्गतन्वीयमूर्णा परिस्फुरति” काद० । दीर्घादिरयमिति बहवः

**उ(ऊ)र्द** दाने स्वादे सक० क्रीड़ायाम् अक० भ्वा० आत्म० सेट् । उ(ऊ)र्दते और्द्दिष्ट दीर्घादिरयमिति बहवः ।

**उ(ऊ)र्द्र** पु० उर्द-रक् । जलविड़ाले (उद्बिराल) दीर्घादिरयमिति बहवः ।

**उ(ऊ)र्व** हिंसायां भ्वा० पर० सक० सेट् । उ(ऊ)र्वति और्वीत् । क्विपि वलोपे ऊः उरौ दीर्घादित्वे ऊरौ इति भेदः ।

**उर्व्व** पु० उर्वी पृथिवी सञ्चारस्थानत्वेनास्त्यस्य अर्श० अच् । १पृथिवीसञ्चारिणि पितृभेदे ताण्ड्य० ब्रा० दृश्यः । २ऋषिभेदे ततः विदा० अञ् । और्व तदपत्ये पुंस्त्री ।

**उर्वट** पु० उरु यथा तथाऽटति अट+अच् ६त० । वत्सतिका० । तस्य दीर्घोल्लम्फादिना अटनात् तथात्वम् ।

**उर्वरा** स्त्री उरु सस्यादिकमृच्छति ऋ-अच् ६त० । १सर्वसस्याढ्यभूमौ “पततां गणैः पिबतु सार्द्रमुर्वरा” माघः २भूमिमात्रे विश्वः ३अधिके त्रि० उर्वरमधिकं जातमस्य तारका० इतच् । उर्वरित आधिक्ययुक्ते (उपचान) अर्थके । उरून् महत ऋच्छति ऋ-अच् ६त० । अप्सरोभेदे “कलानिधिर्गुणनिधिकर्पूरतिलकोर्व्वरा” काशीख० ।

**उर्वरासा** त्रि० उर्वरां भूमिं सनोति सन-विट् ङा । भूमिविभाजके पुत्रादौ “क्षेत्रासां ददथुरुर्वरासाम्” ऋ० ४, ३८,१, उर्वरासां पुत्रम्” भा० । २उर्व्वराविभाजके त्रि० “त्वं नः सहस्रभरमुर्वरासाम्” ६,२०,१ । “उर्वराणां भूमीनां सनितारं संभक्तारम्” भा० ।

**उर्वरी** स्त्री ऋ—गतौ वनिप् ङीप् वनोरश्च । आधिक्यप्राप्तायां स्त्रियाम् “ओषधीनामहं वृण उर्वरीरिव साधुया” अथ० १०,४,२, अन्यलिङ्गे उर्वन् इत्येव

**उर्वर्य** त्रि० उर्वरायां भवः यत् । १सर्वसस्याढ्यभूमिभवे रुद्रभेदे “नम उर्वर्याय खल्याय” यजु० १६,३३,रुद्राध्यायः ।

**उर्वशी** स्त्री उरून् अश्नुते वशीकरोति उरु+अश—क गौरा० ङीष् । स्वर्गवेश्याभेदे । अप्सरोभेदाश्च अप्सरःशब्दे उक्ताः इयञ्च नारायणोरुं भित्त्वा जाता यथोक्तं हरिवं० ८५ अ० “नारायणोरुं निर्भिद्य सम्भूता वरवर्णिनी । ऐलस्य दयिता देवी योषिद्रत्नं किमुर्वशी” ततश्च ऊरुं नारायणोरुं कारणत्वेनाश्नुते प्राप्नोति अश-क ङीष् पृ० ह्रस्वः । इति विग्रहः । इयमेव पुरूरवसःपत्नी आसीत् । “पुत्रोबुधस्योत्तमवीर्यकर्मा पुरूरवा यस्य सुतो सुदेवः । तथैव पश्चात्सकमे महात्मा पुरोर्वशीमप्सरसां वरिष्ठाम्” १५४ अ० “पुरूरवाः सुतोविद्वानिलायां समपद्यत” इत्युपक्रम्य “षट् सुता जज्ञिरे चैलादायुर्धीमानमावसुः । दृढायुश्च वनायुश्च शतायुश्चोर्वशीसुताः” भा० आ० ७५ अ० । सा च इन्द्रलोकगतार्ज्जुनस्य समीपे रिरंसया गत्वा तेन प्रत्याख्याता तस्मै शापं ददाविति कथा भा० व० ४६ अ० “तव पित्राभ्यनुज्ञातां स्वयञ्च गृहमागताम् । यस्मान्मां नाभिनन्देथाः कामबाणवशंगताम् । तस्मात्त्वं नर्त्तनः पार्थ ! स्त्रीमध्ये मानवर्जितः । अपुमानिति विख्यातः षण्ढवद्विचरिष्यसि” २नदीभेदे उर्वशीतीर्थशब्दे उदा० ।

**उर्वशीतीर्थ** न० भारतोक्ते तीर्थभेदे । “उर्व्वशीतीर्थमासाद्य ततः सोमाश्रमं बुधः” भा० व० ८४ । तच्च नदीरूपम् । “उर्वशीं कृत्तिकायोगे गत्वा चैव समाहितः लौहित्ये विधिवत् स्नात्वा पुण्डरीकफलं लभेत्” भा० अनु० २५ अ० ।

**उर्वशीरमण** पु० उर्वशीं रमयति रम-ल्यु ६त० । चन्द्रवंश्ये

बुधपुत्रे पुरूरवसि स्वपे उर्वशीवल्लभादयोऽप्यत्र ।

**उर्वारु** पु० उरु-यथा तथा ऋच्छति ऋ—उण् । कर्कव्याम् । स्वार्थे कन् अत्रैव । "उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्" ऋ० ७,५९, १२, । यजु० ३,६, "उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः" ३,७, अस्य स्त्रीत्वमपि अप्राणिजातिवचनत्वात् ऊङ् । उर्वारूः तदर्थे "छिन्ध्यस्य बन्धनं मूलमुर्वार्वा इव" अथ० ६,१४,१,

**उर्वी** स्त्री उरु+गुणवचनत्वात् स्त्रियां वा ङीप् । १बृहत्त्वगुणायां स्त्रियाम् "उर्वीं स्रजम्" उरुशब्दे उदा० २पृथिव्यां च तस्याबृहत्त्वात् तथात्वम् । "तैरुर्वीनिहितचलत्पदं प्रचेले माघः । "अनन्यशासनामुर्वीं शशासैकपुरीमिव" "स्थितः सर्वोन्नतेनोर्वीम्" रघुः वेदे "सुपांसुलुगित्यादिना" पा० सर्वविभक्तौ डियजादेशः "सिन्धुर्नक्षोद उर्विया व्यश्वैत्" ऋ० १,९२,१२, "उर्विया महती" भा० "प्रतीची चक्षुरुर्विया विभाति" १,९२,९ । ३नद्याम् निरु० ।

**उर्वीधर** पु० उर्वीं धरति धृ—अच् ६त० । पर्वते तेषां कीलकरूपेण अवष्टम्भनेन पृथिव्याधारकत्वात् तथात्वम् भूधरादयोऽप्यत्र "गर्भोऽभवत् भूधरराजपत्न्याः" कुमा०

**उर्वीधव** पु० ६त० । पृथिवीनाथे राजनि । उर्वीशोर्वीश्वर तन्नाथादयोऽप्यत्र

**उर्वीभृत्** पु० उर्वीं बिभर्त्ति धारयति पालयति वा भृ-क्विप् तुक् ६त० । १पर्वते २राजनि च एवं पृथिवीभृद्धरणीभृदादयोऽप्यत्र । "उदयति स्म तदद्भुतमालिभिर्धरणिभृद्भुवि तत्र विस्मयं यत् । अनुमितोऽपि हि बाष्पनिरीक्षणात् व्यभिचकार न तापकरोऽनलः" नैष० तत्र धरणीभृत् राजा पर्वतश्च अत्र व्यभिचारश्च साधनसमानाधिकरणाभावप्रतियोगित्वरूपः तेन साध्ये तत्सम्भवः तादृशव्यभिचारश्च उपाधिवादे चिन्तामणौ अङ्गीकृतः तच्च उपाधिशब्दे दर्शितम्

**उर्वीरुह** पु० उर्व्यां रोहति रुह-क ७त० । वृक्षे "हरिणयोर्वीरुहवल्लितन्तुभिः" माघ:

**उर्व्या** स्त्री उरोर्भावः ब० व्यत् उकोपश्च । महत्त्वे "रुद्राणामुर्व्यायां स्वादित्याः" शत० ब्रा० १,५,१,१७, "उर्व्यायां महत्त्वे" भा०

**उल** दाहे (सौत्रः) पर० सक० सेट् । ओलति औलीत्

**उल** पु० उल—दाहे कर्मणि घञर्थे क । मृगभेदे "उलो हलिक्ष्णो वृषदंशस्ते धात्रे" यजु० २४,३१ । "उलोमृगभेदः" वेददी० । ततः चतुरर्थ्यां प्रक्षा० य । उल्य मत्कसन्निकृष्टदेशादौ त्रि० ।

**उ(ओ)लड** उत्क्षेपे इदित् वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । उ(ओ)लण्डयति ते उ(ओ)लण्डति औलिलण्डत् त औलण्डीत् अयं लडि ओदित् इत्येके ।

**उलन्द्र(न्द)** पु० राजभेदे तेन निर्वृत्तम् अरीहणादि० वुञ् । औलिन्द(न्द्र)क तन्निर्म्मितपुरादौ त्रि०

**उलप** पु० न० वल—कपच् संप्रसारणम् । १शाखापत्रप्रचययुतायां लतायाम् २कोमले तृणभेदे न० (उलुखड) । "नवोलपालङ्कृतसैकताभः" "उत्तीर्णभारलघुनाप्यवलम्बपोषसौहित्यनिःसहतरेण तयोरधस्तात्" माघः ।

**उलप्य** पु० उलपे भवः यत् । रुद्रभेदे । "नमोलप्याय चोलप्याय" यजु० १६,४५, रुद्राध्यायः

**उलिन्द** पु० वल-बा० किन्दच् संप्र० । देशभेदे उणादिकोषः ।

**उलु** त्रि० उरु रस्य लः । १बृहति २वृद्धियुक्तशब्दे च विवाहादौ स्त्रीभिरुच्चार्य्ये शब्दभेदे "प्रकारे गुणवचनस्य" पा० प्रकारे द्वित्वम् । उलूलु उरुप्रकारे । "उच्चैरुलूलुध्वनिरुच्चचार" नैष० "यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन् सर्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनुतिष्ठन्ति" छा० उ० । "उलूलवः उरुतराः विस्तीर्णरवाः" शा० भा० ।

**उलुप** पु० उरु पायते रक्ष्यते अस्मात् पा रक्षणे—अपादाने घञर्थे क रस्य लः । उलपतृणे । "तृणोलुपपुलाकचिह्नानुमेयैर्जरत्कान्तारकूपैरिव" काद०

**उलुलि** पु० उल—उलि । हर्षसूचकशब्दे । "पृथग् घोषा उलूलयः केतुमन्त उदीरताम्" अथ० ४,१९,६,

**उलूक** पु० वल—समवाये ऊक संप्रसारणम् । १पेचके, जातित्वात् स्त्रियां ङीष् उलूकीसा च ताम्रायाः कन्यायाः श्येन्याः कन्या "षट् सुतास्तु महासत्वास्ताम्रायाः परिकीर्त्तिताः" इत्युपक्रम्य "शुकीशुकानजनयदुलूकी प्रत्युलूककान्" विष्णुपु० । २इन्द्रे, कैतव्ये ३दुर्य्योधनदूतभेदे ४तृणभेदे । (उलुखड़) "त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः" माघः "श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत्" मनुः "यदुलूको वदति मोघमेतत्" ऋ० १०,१६५,४, "त्रिविधाश्चैव सम्भोज्याः काकोलूकैश्च भक्षणम्" मनुः । अत्र काकोलूकैरित्युक्तेः काकोलूकमित्यादि विरोधे समाहारैकत्वविधानं प्रायिकमिति गम्यते । "उलूकान् सुषुवे काकी श्येनी श्येनान् व्यजायत" भा० आ० ६२ । उलूकनामा दूतश्च युधिष्ठिरादीनां समीपे दुर्य्योधनेन प्रेषितः यथा "काङ्क्षोपप्लवे

राजन्नुलूकमिदमब्रवीत् । उलूक! गच्छ कैतव्य! पाण्डवान् सहसोमकान्" इत्यादिना भा० उ० ५०१अ० । उलूकश्च कैतव्यः कितव्यस्यापत्यम् । तदागमनमधिकृत्यैव उलूकदूतगमनपर्व्व उद्योगपर्वान्तर्गतं पर्व्व ।४देशभेदे । "उलूकवासिनं राजन् वृहन्तमुपजग्मिवान्" । "उलूकानुत्तरांश्चैव तांश्च राज्ञः समानयत्" भा० स०अ० । अयञ्च देशः "प्रययावुत्तरां तस्माद्दिशं धनदपालिताम्" इत्युपक्रम्य तस्य कीर्त्तनात् धनञ्जयस्य उत्तरदिग्विजय एव तस्य उलूकदेशस्य वर्णनाच्च उत्तरदेशवर्त्तीति गम्यते । ५तद्देशनृपे च "उत्तरं पर्वतोद्देशं ये ते दुर्गसहा नृपाः । आरोहन्तु विमर्द्दन्तो वज्रप्रतिमगौरवाः । उलूकः कैतवेयश्च" हरिवं०६६।

**उलूकयातु** पु० उलूकरूपेण याति या—तुन् । असुरभेदे । "उलूकयातुं शुशुलूकयातुं जहि" ऋ० ७,१०४,१२ । "उलूकरूपेण यातमुलूकयातुम्" भा० ।

**उलूखल** न० ऊर्द्ध्वं खम् उलूखं पृषो० तत् खाति खनति वा—क । धान्यादिकण्डनसाधने काष्ठमये १पात्रे (उखरी) तच्च यज्ञियपात्रभेदः । तल्लक्षणमुक्तम् "उलूखलमुषले अरत्निमात्रे औदुम्बरे प्रादेशमात्रे चतुरस्रमुलूखलं मध्यसंगृहीतमूर्द्ध्वं वृत्तम्, मुषलं दक्षिणमुलूखलात्" कात्या०१७,५,२ । तदुत्तरत्र स्थलेऽपि उदा० । "वनस्पतिभ्य इत्येव मुषलोलूखले हरेत्" मनुः "स्फ्यस्य शूर्पशकटानाञ्च मुषलोलूखलस्य च । अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्" तस्य मनूक्तशौचं ज्ञेयम् उलूखलशब्दस्य यास्केनान्यथा निरुक्तिर्दर्शिता यथा । "उलूखलमुत्करं वोर्करं वोर्द्ध्वकं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभयमुत्करं वै तदुलूखलमित्याचक्षते परोक्षेण" । स्वार्थे कन् तत्रार्थे "गृहे गृह उलूखलकं" ऋ० १,१२८,५ । तदस्य साधनत्वेनास्त्यस्य ठन् । उलूखलिकः । तत्साधनके जने "दन्तोलूखलिकोऽपि वा" मनुः।२गुग्गुलौ पु०

**उलूखलसुत** पु० ३त० । उलूखलेनाभिषुते सोमरसे "उलूखलसुतानामवेदिन्द्रः" ऋ० १,२८,१,२,३ ।

**उलूत** पु० उब—वा० ऊतच् । अजगरसर्पे त्रिका० ।

**उलूपिन्** पु० ओः शम्भोः रूपमस्त्यस्य इनि रस्य लः । शिशुमारे अमरः । पृ० ह्रस्वपाठोऽपि तत्रैव उलपिन् इत्यपि पाठः क्वचित् तत्रार्थे ।

**उलूपी** स्त्री कौरव्यनागकन्याभेदे तत्कथा भा०आ०२४१अ० । "उलूप्युवाच ऐरावतकुले जातः कौरव्यो नाम पन्नगः । तस्याऽस्मि दुहिता राजन्! उलूपी नाम पन्नगी । साऽहं त्वामभिषेकार्थमवतीर्णं समुद्रगाम् । दृष्ट्वैव पुरुषव्याघ्र! कन्दर्पेणाभिमूर्च्छिता । तां मामनङ्गग्लपितां त्वत्कृते कुरुनन्दन! । अनन्यां नन्दयस्वाद्य प्रदानेनात्मनोऽनघ! । अर्जुन उवाच । ब्रह्मचर्य्यमिदं भद्रे! मम द्वादशवार्षिकम् । धर्म्मराजेन चादिष्टं नाहमस्मि स्वयंवशः । तव चापि प्रियं कर्त्तुमिच्छामि जलचारिणि! । अनृतं नोक्तपूर्वञ्च मया किञ्चन कर्हिचित् । कथञ्च नानृतं मे स्यात्तव परिप्रियं भवेत् । न च पीड्येत मे धर्म्मस्तथा कुर्य्यां भुजङ्गमि! । उलूप्युवाच । जानाम्यहं पाण्डवेय! यथा चरसि मेदिनीम् । यथा च ते ब्रह्मचर्य्यमिदमादिष्टवान् गुरुः । परस्परं वर्त्तमानान् द्रुपदस्यात्मजां प्रति । यो नोऽनुप्रविशेन्मोहात्स वै द्वादशवार्षिकम् । वने चरेद्ब्रह्मचर्य्यमिति वः समयः कृतः । तदिदं द्रौपदीहेतोरन्योऽन्यस्य प्रवासनम् । कृतवांस्तत्र धर्म्मार्थमत्र धर्मो न दुष्यति । परित्राणञ्च कर्त्तव्यमार्त्तानां पृथुलोचन! । कृत्वा मम परित्राणं तव धर्म्मो न लुप्यते । यदि वाऽप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः । स च ते धर्म्म एव स्याद्दत्त्वा प्राणान्ममार्जुन! । भक्ताञ्च भज मां पार्थ! सतामेतन्मतं प्रभो! । न करिष्यसि चेदेवं मृतां मामुपधारय । प्राणदानान्महाबाहो! चर धर्म्ममनुत्तमम् । शरणञ्च प्रपन्नाऽस्मि त्वामद्य पुरुषोत्तम । दीनाननाथान् कौन्तेय! परिरक्षसि नित्यशः । साऽहं शरणमभ्यैमि रोरवीमि च दुःखिता । याचे त्वां चाभिकामाऽहं तस्मात्कुरु मम प्रियम् । स त्वमात्मप्रदानेन सकामां कर्त्तुमर्हसि । वैशम्पायन उवाच । एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया । कृतवांस्तत्तथा सर्व्वं धर्ममुद्दिश्य कारणम् । स नागभवने रात्रिं तामुषित्वा प्रतापवान् । उदितेऽभ्युत्थितः सूर्य्ये कौरव्यस्य निवेशनात् । आगतस्तु पुनस्तत्र गङ्गाद्वारं तया सह । परित्यज्य गता साध्वी उलूपी निजमन्दिरम् । दत्त्वा वरमजेयत्वं जले सर्व्वत्र भारत! । साध्या जलचराः सर्व्वे भविष्यन्ति न संशयः" ।

**उल्का** स्त्री उष-दाहे क नि० षस्य लः । रेखाकारे गगनात् पतत्तेजःपुञ्जे । अन्युत्पातशब्दे ६२पृष्ठे तत्स्वरूपफलादिकमुक्तम् । "बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः" मेघ० । "उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च" । "उल्कापाते दिशां दाहे गोमायुविरुते तथा" "विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे" मनुः । स्फुर-

मुल्काकृति विक्षिपन्वनेषु" किरा० । उल्काकारणमुक्तम् श्रीपतिना "यासां गतिर्दिवि भवेद्दर्शितेन गम्या तास्तारकाः सकलखेचरतोऽतिदूरे । तिष्ठन्ति या अनिशतोद्गतयश्च ताराश्चन्द्रादधोऽहि निवसन्ति तदन्वितास्ताः । शीतांशुवज्जलमयास्तपनात् स्फुरन्ति ताश्चावहप्रवहमारुतसन्निसंस्थाः । पूर्व्वानिलैः स्तिमितभावमुपागतेऽस्मिं स्तारा: पतन्ति कुहचिद्दुरितावशेन" । (ज्वलन्तकटेरतुड़ा) २शुष्कतृणवस्त्रादिदीपिते (मशाल) इति प्रसिद्धे ३दीपभेदे च । "तुलाराशिं गते भानौ अमावास्यां नराधिपः । स्नात्वा देवान् पितॄन् भक्त्या संपूज्याथ प्रणम्य च । कृत्वा तु पार्व्वणश्राद्धं दधिक्षीरगुड़ादिभिः । ततोऽपराह्णसमये घोषयेन्नगरे नृपः । लक्ष्मीः संपूज्यतां लोका ! उल्काभिश्चापि वेष्ट्यताम्" ति०त०ज्यो० उल्कादाने दर्शद्वैधे निर्णयः । "तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः । उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम्" ति०त०ज्यो०वचनात् प्रदोषव्यापिदर्शे कार्यम् । उभयत्र प्रदोषप्राप्तौ परदिने एव, युग्मादिशास्त्रात् । "दण्डैकरजनीयोगोदर्शस्य स्यात् परेऽहनि । तदा विहाय पूर्व्वेद्युः परेद्युः सुखरात्रिका" ज्योतिर्वचनाच्च । उभयत्र प्रदोषाप्राप्तावपि उल्कादानं पूर्व्वोक्तपार्व्वणानुरोधात्, न पूर्व्वदिने भूताहे ये प्रकुर्वन्ति उल्काग्रहणचेतसः । निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम्" ज्योतिर्वचनात् । उल्काग्रहणादि पितृकृत्यत्वात् प्राचीनावीतिना दक्षिणाभिमुखेन कार्यम् । "प्राचीनवीतिना सम्यगपसव्यमतन्द्रिणा । पित्र्यमा निधनात् कार्यं विधिवद्दर्भपाणिना" मनूक्तेः । तद्दानमन्त्रादि ति०त०द्रष्टव्यम् । ४ज्योतिषोक्ते नाक्षत्रिकदशाभेदे । "मङ्गला पिङ्गला धान्या भ्रामरी भद्रिका तथा । उल्का सिद्धा सङ्कटा च ह्यष्टौ ज्ञेया महादशाः" ज्यो० । तदानयनञ्च "वह्निभान्नीनमस्तात्जन्मर्क्षाच्छिवभादथ" इत्युक्तेः मतभेदेन कृत्तिकानक्षत्रात् पूर्व्वभाद्रपदचतुर्थपादात् जन्मनक्षत्राद्वाऽऽरभ्य एकैकास्त्रिरावृत्त्या क्रमेण मङ्गलादिका दशा भवन्ति इत्येवं चतुर्विंशतिनक्षत्रेषु त्रिरावृत्त्या अष्टौ दशा अवसेयाः ततोऽन्तिमत्रिभेषु मङ्गलाद्यास्तिस्रो भवन्ति । एवमन्यत्राप्यूह्यम् । तासां भोगकालश्च । "एकाद्येकोत्तरा अष्टयोगिनीवत्सरा मताः इत्युक्त्या मङ्गलायाः १एकोवर्षः पिङ्गलायाः २द्वौ, धान्यायास्त्रयः, भ्रामर्याः ४वर्षाः, भद्रिकायाः पञ्च, उल्कायाः षट्, सिद्धायाः सप्त, सङ्कटायाः अष्टौ वर्षाः,

तेषां योगेन ३६वर्षा मङ्गलाद्यानां भोगकालाः, इत्येवं त्रिरावृत्त्या अष्टोत्तरशतवर्षास्तासां भोगकालः । अन्तर्दशादिकं योगिनीशब्दे वक्ष्यते ।

**उल्काचक्र** न० रुद्रयामलोक्ते ग्राह्यमन्त्रशुभाशुभज्ञापके चक्रभेदे "उल्काचक्रं सर्व्वसारं मन्त्रदोषादिनिर्णयम् । मत्स्याकारमूर्द्ध्वमुखं सर्व्वमन्त्रादिविग्रहम् । स्कन्धदेशावधि नाथ ! पुच्छपर्य्यन्तमेव च । अकाराक्षरमारभ्य द्वादशाक्षरमात्मकम् । विलिखेत् पृष्ठदेशे तु शुभाशुभविशुद्धये । त्रयोदशाक्षराद्दाथ ! एकविंशाक्षरान्तकम् । नेतव्यं साधकैर्मन्त्रं पृष्ठस्थं समुदाहृतम् । तथा श्रीशुभदं प्रोक्तं कण्ठादिपुच्छकान्तकम् । द्वाविंशादि चतुस्त्रिंशदक्षरान्तं शुभं मतम् । पुच्छस्थं नापि गृह्णीयान्मुखस्थञ्च तथा प्रभो । शीर्षस्थञ्चापि गृह्णीयात् तदक्षरं शृणु प्रभो ! । पञ्चत्रिंशादि द्वाचत्वारिंशद्वर्णान्तमेव च । मस्तकस्थं शुभं प्रोक्तं मुखवर्णान् शृणु प्रभो । त्रिचत्वारिंशवर्णादि एकपञ्चाशदन्तकम् । मुखस्थमन्त्रं मन्त्री तु न गृह्णीयात् कदाचन । पुच्छस्थं शृणु यत्नेन निरर्थकमहर्निदम् । भ्रमो गात्रस्य पीडाभिः देवता कुप्यतेऽनिशम् । द्विपञ्चाशदक्षरादि एकषष्टिमान्तिकान् । वर्णान् पुच्छस्थितान् प्रोक्तान् नेत्रस्थान् शृणु वल्लभ ! । द्विषष्टितमवर्णादि चतुषष्ट्यक्षरान्तकम् । अङ्गं लोचनमन्त्रञ्च ततोऽन्यत् रसनास्थितम् । तत् सर्व्वं शुभदं प्रोक्तं एतदन्यतमं शृणु । वैष्णवानाञ्च शैवानां शाक्तानां मन्त्रजापनम् । अन्यदेवेषु भक्तानां भक्तिमुक्तिप्रदं नृणाम्" । "एतच्च चतुष्षष्टिस्त्रिषष्टिर्वा वर्णाः सम्भवतोमताः । स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृताश्चाष्टौ चत्वारश्च यमास्तथा । अनुस्वारो विसर्गश्च ≍कँ≍पौ चापि पराश्रितौ । दुःस्पृष्टश्चेति विज्ञेयो लृकारः प्लुत एव च" इति शिक्षोक्तविभागाभिप्रायं चतुःषष्टेरन्यकथनम् लृकारस्य दीर्घसत्त्वमतेनेति बोध्यम् ।

**उल्काजिह्व** पु० उल्केव जिह्वाऽस्य । रामा० प्रसिद्धे राक्षसभेदे

**उल्कामुख** पु० उल्केव मुखमस्य । प्रेतभेदे "वान्ताश्युल्कामुखः प्रेतो विप्रोधर्म्मात् स्वकात् च्युतः" मनुः ( स्याकसेकोयालि ) इति प्रसिद्धे जन्तुभेदे स्त्री ङीष् ।

**उल्कुषी** स्त्री उष–दाहे क्विप् उषा दाहेन कुष्णाति कुष–क गौ० ङीष् । उल्कायाम् । "अग्निरेव प्रथमोऽनुयाजः ह्रादुनिर्द्वितीय उल्कुषी तृतीयः" । "उल्कुष्यस्तं जुहोति तृतीयम्" 'उल्कुषीह तमनुयाजो हन्ति' उल-

कृण्वन्तस्तस्माद्दै देवानां यज्ञः" इति शत० ब्रा० ११,२,७, २१,२५, "उलृणो उल्का" भा०। "अभिचरन्ननुयाजानुमन्त्रणमशन्यमुं जहि ह्लादुन्यमुं जहि उल्कृष्यमुं जहि" कात्या० ३,५,१४,

**उल्ब** न० उला दाहेन वणति वण-बा० ड। जरायौ गर्भवेष्टनचर्म्मणि। "यथोल्बेनावृतोगर्भस्तथा तेनेदमावृतम्" गीता। "तस्योत जायमानस्योल्ब आसीद्धिरण्मयः" अथ० ४,२,८, "गर्भो वा एष यद्दीक्षित उल्बं वासः प्रोर्णुते"। "तस्माद्गर्भाः प्रावृता उल्बेन जायन्ते" तैत्ति० सं० "उल्बे गर्भवेष्टने तिष्ठति" यजु० ५,३,४,१८, "गर्भोजरायुणावृतः उल्वं जहाति जन्मना" १९,७६,

**उल्बण** त्रि० उला वणति अच्। १उत्कटे २प्रकाशान्विते ३नतोन्नते च। "त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः। तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः" रघुः "प्रववर्ष च तत्रैव सहसा तोयमुल्बणम् भा०व०९अ०।

**उल्मुक** न०उष-दाहे मुक, षस्य लः। १ज्वलदङ्गारे अमरः। २वृष्णिभेदे "उल्मुकोनिशठश्चैव वीरश्चाङ्गावहस्तथा भा०स० ३३अ० ३अग्न्याधानार्थे ज्वलदङ्गारे च। "अन्वाहार्यपचनादुल्मुकमादायोदङ्परेत्य जुहोति" शत०ब्रा०२,६, २,७ "उद्यत एवैष आग्नीध्रीयोऽग्निर्भवत्यथैत एकैकमेवोल्मुकमादाय यथाधिक्यं विपरायन्ति तैरेव तेषामुल्मुकैः प्रघ्नन्तीति" ४,६,८,७। उल्मुके भवः यत्। उल्मुखसाध्ये त्रि०। "अथ हैक उल्मुक्येन दहन्ति" शत० ब्रा० १२,५,१,१६।

**उल्लङ्घन** न० उद्+लघि-भावे ल्युट्। अतिक्रमे, ऊर्द्ध्वभागगमनादिना अतिक्रमणे (डिङ्गान)। [२उज्ज्वलिते त्रि०।

**उल्लल** त्रि० उत्+लल-अच्। १बहुरोमयुक्ते हारा०।

**उल्ललित** त्रि० उद्+लल-क्त। १उज्ज्वलिते २तरलिते, ३आन्दोलिते च।

**उल्लसन** न० उद्+लस-ल्युट्। १उल्लासे हर्षजनकव्यापारे आधारे ल्युट्। संज्ञायां कन्। २रोमाञ्चे हेम०।

**उल्लसित** त्रि० उद्+लस-क्त। १स्फुरिते २उद्धते ३हृष्टे च।

**उल्लाघ** त्रि० उद्+लाघ-क्त नि०। १रोगनिर्मुक्ते, २दक्षे, ३शुचौ, च। ४मरिचे पु०।

**उल्लाप** पु० उद्+लप-घञ्। १काकुवाक्ये, २शोकरोगादिना विकृतस्वरयुक्तवाक्ये ३दुष्टवाक्ये "खलोल्लापाः सोढाः कथमपि तदाराधनपरैः" वारा०। ४ सूचने च ततोऽस्त्यर्थे ठन्। सूचके त्रि० "लाजोल्लापिकधूमाढ्यसुधाप्राकारतोरणम्" भा० उ०१९२अ० [स्थाने।

**उल्लापन** न० उद्+लप-णिच्-ल्युट्। स्तुत्यादिना व्या-

**उल्लास** पु० उद्-लस-घञ्। १प्रकाशे, २आह्लादे, "निपतन्ति कन्दलवनोल्लासाः पयोबिन्दवः" अमरुशत०। "सौहित्यवचनोल्लाससहासप्रतिभादिकृत्" सा० द०। ग्रन्थस्याध्यायस्थानीये ३परिच्छेदे च यथा काव्यप्रकाशे। ४प्रारम्भे च

**उल्लासिन्** त्रि० उद+लस-णिनि। १उल्लासयुक्ते प्रभान्विते २आह्लादिनि स्त्रियां ङीप्। "सुमनसामुल्लासिनी मानसे" चन्द्रालोकः।

**उल्लिखित** त्रि०उद्+लिख-क्त। १उत्कीर्णे २तनूकृते "त्वष्ट्रेव यन्त्रोल्लिखितो विभाति" रघुः। ३उपरि लिखिते। ४चित्रिते ५कर्त्तव्यतया कृतोल्लेखे पदार्थे च।

**उल्लुञ्चन** न०उद्+लुचि-अपनयने ल्युट्।१उत्कर्त्तने (उपड़ान) २उन्मूलने च"पादकेशांशुककरोल्लुञ्चने च पणान् दश" या०

**उल्लुण्ठन** न० उद्+लुठि-क्तौ। स्वाभिप्रायापह्नवेन अन्यथाभावप्रकाशने (ठाट्टा) अ। उल्लुण्ठाऽप्यत्र स्त्री। "धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम्" यथा "अनलङ्कृतोऽपि सततं हरसि मनोमे यतः प्रसभम्। किं पुनरलङ्कृतस्त्वं सम्प्रति नखरक्षतैस्तस्याः" सा०द० अत्र सपत्नीनखक्षतदर्शनजातेर्ष्यापह्नवेन मनोहर्षजनकत्वोक्तिस्तदभावद्योतनार्था"।

**उल्लू** त्रि० उद्+लू-क्विप्। उत्पाटके

**उल्लेख** पु० उद्+लिख-घञ्। इदं कर्त्तव्यमित्यादिना संकल्पितार्थप्रतिपादकशब्दोच्चारणे "संज्ञाशब्दस्येदमेव प्रयोजनम् यत्तयोल्लेखः" ति०त०। अलङ्कारभेदे पु० स च १९८पृ०उक्तः। २घर्षणे च। "असकृन्निशितशस्त्रोल्लेखविषमितशिखरेण" का०द०। ३उत्कीर्त्तने च

**उल्लेखन** न०उद्+लिख-ल्युट्। १वमने, २खनने, कर्त्तव्यतया ३संकल्पितार्थकवाक्योच्चारणे "मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्व्वशः। उल्लेखनमकुर्व्वाणो न तस्य फलभाग् भवेत्"ति०त०ब्र०पु०। "संकल्पेन विना राजन्। यत्किञ्चित् कुरुते नरः। फलं चाल्पाल्पकं तस्य धर्म्मस्यार्द्धक्षयो भवेत्"ति०त०ब्र०पुराणाच्च संकल्पवाक्ये मासादीनामवश्यं कीर्त्तनीयताऽवगम्यते। "मनसा सङ्कल्पयति वाचाऽभिलपतीत्युक्तेरपि अभिलापस्यावश्यकता। अभिलापवाक्ये च मासादिनिमित्तानामिव आत्मसम्बन्धित्वेन तत्तत्कर्मादिकस्यापि कीर्त्तनं कर्त्तव्यम्" "प्रत्येकं नि-

यत् कालमात्मनोव्रतमादिशेत्" प्रा०त०संस्क० उक्तेः। "सेकादुल्लेखनाल्लेपात् गृहं मार्ज्जनलेपनात्" "सम्मार्ज्जनोपाञ्जनेन सेकेनोल्लेखनेन च" मनुः। यज्ञे वह्निस्थापनाङ्गस्थण्डिलादिस्थबालुकादौ रेखाभिः ४चिह्नकरणे। "ओल्लेखनात् करोति मेखलादि चेत्" कात्या० ७,४,८। तदा भूमौ प्राच्यां रेखया उल्लेखनान्तं कर्म्म कुर्य्यात्" कर्कः। ५घर्षणे च।

**उल्लोच** पु० ऊर्द्ध्वं लोच्यते उद्+लोच–कर्मणि घञ् निष्ठायां सेट्कत्वात् न कुत्वम्। चन्द्रातपे विताने।

**उल्लोप्य** न० उद्+लुप–यत्। लौकिकगीतिभेदे। तच्च मिताक्षरायां दर्शितं यथा।

"यस्य पुनश्चित्तवृत्तिर्निराकारालम्बनतया समाधौ नाभिरमते तेन शब्दब्रह्मोपासनं कार्य्यमित्याह। "यथाविधानेन पठन् सामगायमविच्युतम्। सावधानस्तदभ्यासात्परं ब्रह्माधिगच्छति" या०। "स्वाध्यायावगतमार्गानतिक्रमेण सामगायं साम्नोगानात्मकत्वेऽपि गायमिति विशेषणम् अगीतमन्त्रव्युदासार्थम्। अविच्युतमस्खलितम्। सावधानः समाध्यनुष्ठानत्मैकाग्र्यचित्तवृत्तिः। पठन् तदभ्यासवशात्तत्र निष्णातः। शब्दाकारशून्योपासने परब्रह्माधिगच्छति। तदुक्तम्। "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीति"। यस्य पुनर्वैदिक्याङ्गीतौ चित्तं नाभिरमते तेन लौकिकगीतानुष्यूतात्मोपासनङ्कार्य्यमित्याह। "अपरान्तकमुल्लोप्यं मद्रकम्प्रकरीन्तथा। औवेणकं सरोविन्दुमुत्तरङ्गीतकानि च। ऋग्गाथापाणिकादक्षविहिता ब्रह्मगीतिका। गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम्" या०। "अपरान्तकोल्लोप्यमद्रकप्रकर्य्यौवेणकानि सरोविन्दुकसहितञ्चोत्तरमित्येतानि प्रकरणाख्यानि सप्त गीतकानि। चशब्दादासारितवर्द्धमानकादि गीतकानि गृह्यन्ते। गाथाद्याश्चतस्रोगीतकानि गृह्यन्ते। ऋग्गाथाद्याश्चतस्रोगीतिका इत्येतदपरान्तकादिगीतजातमध्यारोपितात्मभावमोक्षसाधनत्वान्मोक्षसंज्ञितं मन्तव्यम्। तदभ्यासस्यैकाग्रतापादनद्वारेणात्मैकतापत्तिहेतुत्वात्। "चित्तविक्षेपाद्यन्तरायहतस्य गीतज्ञस्य फलान्तरमाह। "गीतज्ञो यदि योगेन नाप्नोति परमम्पदम्। रुद्रस्यानुचरोभूत्वा सह तेनैव मोदते" या०। "गीतज्ञोयदि कथञ्चिद्योगेन परमम्पदं न प्राप्नोति। तर्हि रुद्रस्य सचिवोभूत्वा तेनैव सह मोदते"। [ २कर्त्तव्यच्छेदेऽपि त्रि०।

**उल्लोल** पु० उद्+लोल–घञ्। १महातरङ्गे अमरः।

**उल्व** पु० उच–समवाये आधारे वन् "उल्वादयश्च" उणा० नि० चस्य लः गुणाभावश्च। गर्भवेष्टनचर्म्मणि "उल्वावृतो गर्भोदश वा मासानन्तः शयित्वा यावद्वाऽथ जायते" छा० उ०। "उल्वावृत इत्यादि वैराग्यहेतोरिदमुच्यते। कष्टं हि मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्वाऽशुचिपूयावृतस्य लोहितरेतोऽशुचिबीजस्य मातुरशितपीतरसानुप्रवेशेन विवर्द्धमानस्य निरुद्धशक्तिबलवीर्य्यतेजःप्रज्ञाचेष्टस्य शयनं, ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिर्जन्मेति वैराग्यं ग्राहयति मुहूर्त्तमप्यसह्यं दश वा मासानतिदीर्घकालमन्तःशयित्वेति" इति शा० भा०। कर्त्तरि वन्। २गर्भे

**उल्वण** त्रि० उल्वा दाहेन वलति पचाद्यच् पृषो०। व्यक्ते स्पष्टे उल्वणशब्दे उदा०। [ऋ० २,६,७। "कामयमानदाही" भा०

**उश** त्रि० वश–क। कामयमाने "अपो यदग्न उशधग्वनेषु"

**उशत्** त्रि० वश–शतृ सम्प्र०। कामयमाने। "उशन् ह वै वाजश्रवसः सर्वसवेदसं ददौ" कठ उ०। स्त्रियां ङीप्। "उशतीरिव मातरः" अघमर्षणसूक्तम्। सा च अकल्याणायां वाचि" शब्दरत्ना०। तत्र रुशतीत्येव पाठोयुक्तः रुश हिंसायामित्यादिकस्यैव शत्रन्तस्य तद्रूपम्। इति अमरटीकायां भानुजदीक्षितः। उशतीति पाठस्तु लिपिकरप्रमादात्। तन्मूल एव शब्दकल्पद्रुमोऽपि चिन्त्यः वशधातोरिच्छार्थकतया तथार्थत्वासम्भवात्।

**उशनस्** पु० वश–कनसि सम्प्र०। भार्गवे शुक्रे। सौ उशना संबुद्धौ उशनन्–उशन,–उशनः। "अध्यापितस्योशनसापि नीतिम्" कुमा०। उशनसा प्रोक्तम् अण्। औशनस तत्कृते धर्मशास्त्रे "मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः" इत्युपक्रम्य "धर्मशास्त्रप्रयोजकाः" याज्ञ०। तस्येदम् अण्। तदीये त्रि० स्त्रियां ङीप् औशनसी नीतिः। अयञ्चासुराणां पुरोहितः यथोक्तम् "सुराणामसुराणाञ्च समजायत वै मिथः। ऐश्वर्यं प्रति संघर्षस्त्रैलोक्ये सचराचरे। जिगीषया ततो देवावव्रिरेऽङ्गिरसं मुनिम्। पौरोहित्येन याज्यार्थे काव्यं तूशनसं परे। ब्राह्मणौ तावुभौ नित्यमन्योन्यस्पर्द्धिनौ नृप!" भा० आ० ७६ अ०। "असुराणामुपाध्यायः शुक्रस्त्वृषिसुतोऽभवत्। ख्याता उशनसः पुत्राश्चत्वारोऽसुरयाजकाः" भा० आ० ६५ अ०। स च भृगुपुत्रः भा० आ० ६६ अ० उक्तः "भृगोः पुत्रः कविर्विद्वान् शुक्रः कविसुतो ग्रहः। त्रैलोक्यप्राणयात्रार्थं वर्षावर्षे भयाभये। स्वयम्भुवा नियुक्तः

ध्नन् भुवनं परिधावति। योगाचार्य्यामिताहारो दैत्यानामभवद्गुरुः”। तस्य नक्षत्रविशेषगत्या वर्षादिफलादिकम् वृ० सं० ६ अ० उक्तम् “नागगजैरावतवृषभगोजरद्गवमृगाजदहनाख्याः। अश्विन्याद्याः कैश्चित् त्रिभाः क्रमाद्वीथयः कथिताः। नागा तु पवनयाम्यानलानि पैतामहात्त्रिभास्त्रिस्रः। गोवीथ्यामश्विन्यः पौष्णं द्वे चापि भाद्रपदे। जरद्गव्यां श्रवणात् त्रिभं मृगाख्यात् त्रिभं च मैत्राद्यम्। हस्तविशाखात्वाष्ट्राण्यजेत्यषाढाद्वयं दहना। तिस्रस्तिस्रस्तासां क्रमादुदङ्मध्ययाम्यमार्गस्थाः। तासामप्युत्तरमध्यदक्षिणावस्थितैकैका। वीथीमार्गानपरे कथयन्ति यथा स्थिता भमार्गस्य। नक्षत्राणां तारा याम्योत्तरमध्यमास्तद्वत्। उत्तरमार्गो याम्यादिर्निगदितो मध्यमस्तु भाग्याद्यः। दक्षिणमार्गोऽषाढादिः कैश्चिदेवं कृता मार्गाः। ज्योतिषमागमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम्। स्वयमेव विकल्पयितुं किन्तु बहूनां मतं वक्ष्ये।

उत्तरवीथिषु शुक्रः सुभिक्षशिवकृद्गतोऽस्तमुदयं वा। मध्यासु मध्यफलदः कष्टफलो दक्षिणस्थासु। अत्युत्तमोत्तमोनं सममध्यन्यूनमधमकष्टफलम्। कष्टतमं सौम्याद्यासु वीथिषु यथाक्रमं ब्रूयात्। भरणीपूर्वं मण्डलमृक्षचतुष्कं सुभिक्षकरमाद्यम्। वङ्गाङ्गमहिषबाह्लीककलिङ्गदेशेषु भयजननम्। अत्रोदितमारोहेद्ग्रहोऽपरो यदि सितं ततो हन्यात्। भद्राश्वशूरसेनकयौधेयककोटिवर्षनृपान्। भचतुष्टयमार्द्राद्यं द्वितीयममिताम्बुशस्यसम्पत्त्यै। विप्राणामशुभकरं विशेषतः क्रूरचेष्टानाम्। अन्यनाक्रान्ते म्लेच्छाटविकाश्वजाविगोमन्तान्। गोनर्दनीचशूद्रान् वैदेहांश्चानयः स्पृशति। विचरन् मघादिपञ्चकमुदितः शस्यप्रणाशकृच्छुक्रः। क्षुत्तस्करभयजननो नीचोन्नतिसङ्करकरश्च। पित्र्याद्योऽवष्टब्धो हन्यच्चेनाविकान् शबरशूद्रान्। पुण्ड्रापरान्त्यशूलिकवनवासिद्रविडसामुद्रान्। स्वात्याद्यं भत्रितयं मण्डलमेतच्चतुर्थमभयकरम्। ब्रह्मक्षत्रसुभिक्षाभिवृद्धये मित्रभेदाय। अत्राक्रान्ते मृत्युः किरातभर्त्तुः पिनष्टि चेक्ष्वाकून्। प्रत्यन्तावन्तिपुलिन्दतङ्गणाञ्छूरसेनांश्च। ज्येष्ठाद्यं पञ्चर्क्षं क्षुत्तस्कररोगदं प्रबाधयते। काश्मीराश्मकमत्स्यान् सचारुदेवानवन्तींश्च। आरोहेऽत्राभीरान् द्रविडाम्बष्ठत्रिगर्त्तसौराष्ट्रान्। नाशयति सिन्धुसौवीरकांश्च काशीश्वरस्य वधः। षष्ठं षण्नक्षत्रं शुभमेतन्मण्डलं धनिष्ठाद्यम्। भूरिधनगोकुलाकुलमनल्पधान्यं क्वचित् सभयम्। अत्रारोहे शूलिकगान्धारावन्तयः प्रपीड्यन्ते। वैदेहवधः प्रत्यन्तयवनशकदासपरिवृद्धिः। अपरस्यां स्वात्याद्यं ज्येष्ठाद्यं चापि मण्डलं शुभदम्। पित्र्याद्यं पूर्वस्यां शेषाणि यथोक्तफलदानि। दृष्टोऽनस्तगतेऽर्के भयकृत् क्षुद्रोगकृत् समस्तमहः। अर्द्धदिवसं च सेन्दुर्नृपबलपुरभेदकृच्छुक्रः। भिन्दन् गतोऽनलर्क्षं कूलातिक्रान्तवारिवाहाभिः। अव्यक्ततुङ्गनिम्ना समा सरिद्भिर्भवति धात्री। प्राजापत्ये शकटे भिन्ने कृत्वेव पातकं वसुधा। केशास्थिशकलशबला कापालमिव व्रतं धत्ते। सौम्योपगतो रसशस्यसङ्क्षयायोशनाः समुद्दिष्टः। आर्द्रागतस्तु कोशलकलिङ्गहा सलिलनिकरकरः। अश्मकवैदर्भाणां पुनर्वसुस्थे सिते महाननयः। पुष्ये पुष्टा वृष्टिर्विद्याधरगणविमर्दश्च। अश्लेषासु भुजङ्गमदारुणपीडावहश्चरञ्छुक्रः। भिन्दन् मघां महामात्रदोषकृद्भूरिवृष्टिकरः। भाग्ये शबरपुलिन्दप्रध्वंसकरोऽम्बुनिवहमोक्षाय। आर्यम्णे कुरुजाङ्गलपाञ्चालघ्नः सलिलदायी। कौरवचित्रकराणां हस्ते पीडा जलस्य च निरोधः। कूपकृदण्डजपीडा चित्रास्थे शोभना वृष्टिः। स्वातौ प्रभूतवृष्टिर्दूतवणिग्नाविकान् स्पृशत्यनयः। ऐन्द्राग्न्येऽपि सुवृष्टिर्वणिजां च भयं विजानीयात्। मैत्रे क्षत्रविरोधो ज्येष्ठायां क्षत्रमुख्यसन्तापः। मौलिकभिषजां मूले त्रिष्वपि चैतेषु नावृष्टिः। आप्ये सलिलजपीडा विश्वेशे व्याधयः प्रकुप्यन्ति। श्रवणे श्रवणव्याधिः पाषण्डभयं धनिष्ठासु। शतभिषजि शौण्डिकानामजैकपे द्यूतजीविनां पीडा। कुरुपाञ्चालानामपि करोति चास्मिन् सितः सलिलम्। आहिर्बुध्न्ये फलमूलतापकृद्यायिनां च रेवत्याम्। अश्विन्यां हयपानां याम्ये तु किरातयवनानाम्। चतुर्दशे पञ्चदशे तथाष्टमे तमिस्रपक्षस्य तिथौ भृगोः सुतः। यदा व्रजेद्दर्शनमस्तमेति वा तदा मही वारिमयीव लक्ष्यते। गुरुर्भृगुश्चापरपूर्वकाष्ठयोः परस्परं सप्तमराशिगौ यदा। तदा प्रजा रुग्भयशोकपीडिता न वारि पश्यन्ति पुरन्दरोज्झितम्। यदा स्थिता जीवबुधारसूर्यजाः सितस्य सर्वेऽप्यपथानुवर्त्तिनः। नृनागविद्याधरसङ्गरास्तदा भवन्ति वाताश्च समुच्छ्रितान्तकाः। न मित्रभावे सुहृदो व्यवस्थिताः क्रियासु सम्यङ्न रता द्विजातयः। न चाल्पमप्यम्बु ददाति वासवो भिनत्ति वज्रेण शिरांसि भूभृताम्। शनैश्चरे म्लेच्छबिडालकुञ्जराः खरा महिष्योऽसितधान्यशूकराः। पुलिन्दशूद्राश्च

सदक्षिणापथाः सर्य व्रजन्त्यशिवमन्तु दोद्भवैः । निहन्ति शुक्रः क्षितिजेऽपतः प्रजा हुताशशस्त्रक्षुदहष्टितस्करैः। चराचरं व्यक्तमथोत्तरापथं दिशोऽग्निविद्युद्रजसा च पीडयेत् । वृहस्पतौ हन्ति पुरःस्थिते सितः सितं समस्तं द्विजगोसुरालयान् । दिशं च पूर्वां करकास्त्रजोऽम्बुदा गलेगदा भूरि भवेच्च शारदम् । सौम्योऽस्तोदययोः पुरो भृगुसुतस्यावस्थितस्तोयहृद् रोगान् पित्तजकामलांश्च कुरुते पुष्णाति च ग्रैष्मिकम् । हन्यात् प्रव्रजिताग्निहोत्रिकभिषक्कोपजीव्यान् हयान् वैश्यान् गाः सह वाहनैर्नरपतीन् पीतानि पश्चाद्दिशम् । शिखिभयमनलाभे शस्त्रकोपश्च रक्ते कनकनिकषगौरे व्याधयो दैत्यपूज्ये । हरितकपिलरूपे श्वासकासप्रकोपः पतति न सलिलं खाद्भस्मरूक्षासिताभे । दधिकुमुदशशाङ्ककान्तिभृत् स्फुटविकसत्किरणो वृहत्तनुः।सुगतिरविकृतो जयान्वितः कृतयुगरूपकरः सिताह्वयः।” “उशने काव्याय” ऋ० ६,२०,११।“उशने उशनसे” भा० छान्दसम्।

**उशनसस्तोम** पु० उशनसः स्तोमो यत्र अलुक्समा० वा विसर्गस्य लुक्। एकाहसाध्ये यागभेदे “उशनसस्तोमेन गरगीर्णमिवात्मानं मन्यमानो यजेत” आ०श्रौ०९,५,१। “उशनसस्तोमोनाम एकाहसाध्यः पुनः स्तोम इति चास्यैव संज्ञा गरोविषं गीर्णं येन स गरगीर्णः यो बहुप्रतिग्रहादिना पापादिभयात् गरगीर्णमिवात्मानं मन्यते स एतेन यजेत” नारा० वृ० “उशना यत् सहस्यैरयातं त्वमपीयदवेतुर्वशायेति सूक्तमुखीये” इति तत्रैव सूक्तप्रारम्भः २सूते उक्तः।

**उशाना** स्त्री वश–ताच्छील्ये चानश्। सोमसाधनभूतायां गिरिजातायामोषधौ। “यद्युदाप्यायन्ति देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम आसीत् तस्यैतच्छरीरं यद्गिरयः यदश्मानस्तदेषोशाना नामौषधिर्जायत इति स्माह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याभिषुण्वन्ति” शत०ब्रा० ३,४,३,२०। “उशानाख्या ओषधिर्जायते इत्येवं श्वेतकेतुराह अतस्तामेव गिरावुत्पन्नाम् इदानीन्तना यजमाना अभिषुण्वन्ति न साक्षात् सोमम्” भा०।

**उशिज्** पु० वश–इजि किच्च सं प्र०। १अग्नौ २घृते च उज्ज्व० तत्र वह्नेः हविःकामयमानत्वात्, घृतस्य तु काम्यमानत्वात् तथात्वम्। २कामयमाने त्रि०। “उशिगसि कविरिति” “उशिगसि वसुभ्य इति” च ता०ब्रा० “इमद्युशिजोयथाविदुः” ऋ० १, १३१,५, “उशिजः कामयमानान् यजमानान्” भा०। उशिजोमनीषिणः” ऋ० २,२१,२, “उशिज इन्द्रं कामयमानान्” भा०। “स हव्यवाडमर्त्य उशिग्दूतश्च नोहितः” ३,११,२। “उशिक् हविःकामयमानः” भा० उशिजोयविष्ठो वह्नितमानाम्” ३,१५, २३। “प्र पूर्वादिगुरुशिजः” यजु० “उशिजः हवींषि कामयमानान्” वेददी०४काम्ये “उशिक् त्वं देव! सोमाग्नेः प्रियं पाथोऽपीहि” यजु०८,५५ “उशिक् काम्यमानः” वेददीपः। “उशिगसि कविः” ५,२२,। उशिक्कामयमानः” वेददी० ५अग्नौ तस्य काम्यमानत्वात्तथात्वम्। “उशिजा वसुभ्योवसून् जिन्वः” यजु० १५,६। उशिजा वश कान्तौ इति उशिगग्नं तेन” वेददी०। ततः प्रज्ञा० स्वार्थे ण। औशिजः उक्तार्थे। करणे इजि। ६इच्छाहेतौ मेधायाम् निरु०। मेधारूपज्ञानस्ये च्छाहेतुत्वात् तथात्वम्। ततः अस्त्यर्थे अर्श० अच्। उशिजः मेधाविनि त्रि० निरु०

**उशी** स्त्री वश–ई–संप्र०। इच्छाभेदे उशीनरः।

**उशीनर** पु० १वृष्णिवंशोद्भये क्षत्रियभेदे। “उशीनरस्य विक्रान्तो वृष्णयस्ते प्रकीर्त्तिताः” भा०आ०१८६ अ०। २पौरवे नृपभेदे “शृणु पुरोर्महाराज! वंशमुत्तमपौरुषम्” इत्युपक्रम्य “सृञ्जयस्याभवत् पुत्रो वीरो राजा पुरञ्जयः। जनमेजयो महाराजो पुरञ्जयसुतोऽभवत्। जनमेजयस्य राजर्षेर्महाशालोऽभवत् सुतः। महामना नाम सुतो महाशालस्य धार्मिकः। महामनास्तु द्वौ पुत्रौ जनयामास भारत!। उशीनरं च धर्मज्ञं तितिक्षुञ्च महाबलम्” हरिवं० ३१अ० तस्य चरितं वर्णितम्” भा०व० “अत्रागच्छन्नृपवरं ज्ञातुमग्निः सवासवः। जिज्ञासमानो वरदो महात्मानमुशीनरम्। इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः। ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद्भयात्। शरणार्थी तदा राजन्! निलिल्ये भयपीड़ितः” १२०अ०। “श्येन उवाच। धर्मात्मानं त्वाहुरेकं सर्व्वे राजन्महीक्षितः। स वै धर्मविरुद्धं त्वं कस्मात् कर्म्म चिकीर्षसि?। विहितं भक्षणं राजन्! पीड्यमानस्य मे क्षुधा। मा रक्षीर्धर्मलोभेन धर्ममुत्सृष्टवानसि। राजोवाच। सन्त्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज!। मत्सकाशमनुप्राप्तः प्राणगृप्सुरयं द्विजः। एवमभ्यागतस्येह कपोतस्याभयार्थिनः। अप्रदाने परं धर्मं कथं श्येन! न पश्यसि?। प्रस्पन्दमानः संभ्रान्तः कपोतः श्येन! लक्ष्यते। मत्सकाशे जीवितार्थी

तस्य त्यागो विगर्हितः । यो हि कश्चिद्द्विजान् हन्याद्गां वा लोकस्य मातरम् । शरणागतञ्च त्यजते तुल्यं तेषां हि हि पातकम् । श्येन उवाच । आहारात् सर्व्वभूतानि सम्भवन्ति महीपते ! । आहारेण विवर्द्धन्ते तेन जीवन्ति जन्तवः । शक्यते दुस्त्यजेऽप्यर्थे चिररात्राय जीवितुम् । न तु भोजनमुत्सृज्य शक्यं वर्त्तयितुं चिरम् । भक्ष्याद्वियोजितस्याद्य मम प्राणा विशाम्पते ! । विसृज्य कायमेष्यन्ति पन्थानमकुतोभयम् । प्रसृते मयि धर्म्मात्मन् ! पुत्रदारं विनङ्क्ष्यति । रक्षमाणः कपोतं त्वं बहून् प्राणान्न रक्षसि । धर्म्मं यो बाधते धर्म्मो न स धर्म्मः कुधर्म्मवत् । अविरोधात्तु यो धर्म्मः स धर्म्मः सत्यविक्रम ! । विरोधिषु महीपाल ! निश्चित्य गुरुलाघवम् । न बाधा विद्यते यत्र तं धर्म्मं समुपाचरेत् । गुरुलाघवमादाय धर्म्माधर्म्मविनिश्चये । यतो भूयांस्ततो राजन् ! कुरुष्व धर्म्मनिश्चयम् । राजोवाच । बहुकल्याणसंयुक्तं भाषसे विहगोत्तम ! । सुपर्णः पक्षिराट् किं त्वं धर्म्मज्ञश्चास्यसंशयम् । तथा हि धर्म्मसंयुक्तं बहु चित्रञ्च भाषसे । न तेऽस्त्यविदितं किञ्चिदिति त्वां लक्षयाम्यहम् । शरणैषिपरित्यागं कथं साध्विति मन्यसे । आहारार्थं समारम्भस्तव चायं विहङ्गम ! । शक्यश्चाप्यन्यथा कर्त्तुमाहारोऽप्यधिकस्त्वया । गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा । त्वदर्थमद्य क्रियतां यद्वान्यदिह काङ्क्षसि । श्येन उवाच । न वराहं न चोक्षाणं न मृगान् विविधांस्तथा । भक्षयामि महाराज ! किं ममान्येन केनचित् । यस्तु मे दैवविहितो भक्ष्यः क्षत्रियपुङ्गव ! । तमुत्सृज महीपाल ! कपोतमिममेव मे । श्येनः कपोतमत्तीति स्थितिरेषा सनातनी । मा राजन् ! सारमज्ञात्वा कदलीस्कन्धमाश्रज । राजोवाच । राष्ट्रं शिवीनामृद्धं वै ददानि तव खेचर ! । यं वा कामयसे कामं श्येन ! सर्वं ददानि ते । विनेमं पक्षिणं श्येन ! शरणार्थिनमागतम् । येनेमं वर्जयेथास्त्वं कर्म्मणा पक्षिसत्तम ! । तदाचक्ष्व करिष्यामि न हि दास्ये कपोतकम् । श्येन उवाच । उशीनर ! कपोते ते यदि स्नेहो नराधिप ! । आत्मनो मांसमुत्कृत्य कपोततुलया धृतम् । यदा समं कपोतेन तव मांसं नृपोत्तम ! । तथा देयन्तु तन्मह्यं सा मे तुष्टिर्भविष्यति । राजोवाच । अनुग्रहमिमं मन्ये श्येन ! यन्माभियाचसे । तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम् । लोमश उवाच । उत्कृत्य स स्वयं मांसं राजा परमधर्म्मवित् । तुलयामास कौन्तेय ! कपोतेन समं विभो । ध्रियमाणः कपोतस्तु मांसेनाप्यतिरिच्यते । पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः । न विद्यते यदा मांसं कपोतेन समं धृतम् । तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम् । श्येन उवाच । इन्द्रोऽहमस्मि धर्म्मज्ञ ! कपोतो हव्यवाडयम् । जिज्ञासमानौ धर्म्मे त्वां यज्ञवाटमुपागतौ । यत्ते मांसानि गात्रेभ्य उत्कृत्तानि विशाम्पते ! । एषा ते भास्वरी कीर्त्तिर्लोकानभिभविष्यति । यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ! । तावत् कीर्त्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः । इत्येवमुक्त्वा राजानमारुरोह दिवं पुनः । उशीनरोऽपि धर्म्मात्मा धर्म्मेणावृत्य रोदसी । विराजमानो वपुषा प्रारुरोह त्रिपिष्टपम्" १३१ अ० । उशीपूरको वाञ्छापूरको नरो यत्र । २तदधिकृतदेशे जटाधरः ।

**उशीर** पु०न० वश–ईरन् किच्च । वीरणमूले (खसखस) तस्य गुणा "उशीरं पाचनं शीतं स्तम्भनं लघु तिक्तकम् । मधुरं ज्वरहृद्वान्तिमदनुत् कफपित्तनुत् । तृष्णास्रविषवीसर्पदाहकृच्छ्रव्रणापहम्" भावप्र० "अगरुष्ठकोशीरभद्रदारुकुङ्कुमानि पुन्नागकेशरञ्चेति" "चन्दनकुचन्दनह्रीबेरोशीरमञ्जिष्ठापयस्याविदारीशतावरीहिङ्गुभिः" सुश्रु० स्वार्थे कन् तत्रैव । उशीरं पण्यमस्य किशरादि ष्ठन् । उशीरिक तद्विक्रेतरि स्त्रियां षित्त्वात् ङीष् । उशीनरस्यापत्यम् अण् । औशीनर तदपत्ये शिविप्रभृतौ ।

**उशीरबीज** पु० उशीरस्य वीरणमूलस्य वीजं योनिरत्र । उत्तरदिक्स्थे पर्वतभेदे "उशीरबीजं मैनाकं गिरिं श्वेतञ्च भारत ! । समतीतोऽसि कौन्तेय ! नीलशैलञ्च पार्थिव ! "इत्युपक्रम्य "श्वेतं गिरिं प्रवेक्ष्यामो मन्दरञ्चैव पर्वतम् । यत्र माणिवरो यक्षः कुवेरश्चैव यक्षराट्" भा०व० १२०अ० उक्तेस्तस्य उत्तरदिक्स्थत्वं मन्दरगिरिसन्निकृष्टत्वञ्च "तुषारचयसङ्काशो मन्दरश्चैव पर्वतः । उशीरबीजश्च गिरीरुद्रोमस्यस्तथाद्रिराट्" हरि० २२६अ० उक्तेः कैलाससन्निकृष्टत्वमपि

**उशीरादि** न० चक्रदत्तेन ज्वरातिसाराधिकारोक्ते पाचनभेदे । "उशीरं बालकं मुस्तं धान्यकं विश्वभेषजम् । समङ्गाधातकी लोध्रं विल्वं दीपनपाचनम् । हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् । सशोणितमतीसारं सज्वरं वाथ विज्वरम्" ।

**उशेन्य** त्रि० वश–बा० केन्य सं०प्र० । कमनीये । "आ मे-मात्रोरुशेन्योजनिष्ट" ऋ० ८, ३, ९, "उशेन्यः कमनीयः" भा०

**उष** दाहे बधे च भ्वा० पर० सक० सेट्। ओषति औषीत् ओषाम् बभूव आस चकार उवोष ओषित्वा। ओषितः—उषित। उष्टा। कर्म्मणि उष्यते ओषामासे जवे "ओषामासे मत्सरो तुपातवाताश्लिष्यद्हत्नच्छाराक्षम्" माघः। "हिरण्यमायुरन्नञ्च भूर्गौश्चाप्योषतस्तनुम्" मनुः। "दण्डेनैव तमप्योषेत् स्वकाद्धर्म्माद्धि विच्युतम्" मनुः ओषाञ्चकार कामाग्निर्दशकण्ठमहर्निशम्" भट्टिः "चिचेव रामस्तत्क्षणमोषाञ्चक्रे शुचेश्वरः" भट्टिः तस्य "मूत्रप्रतीघाताद्दुष्यते चूष्यते दह्यते पच्यते इव" सुश्रुतः।

**उष** दाहे बधे च भ्वा० पर० सेट् उदित् सक० सेट्। ओषति औषीत् ओषाम् बभूव—आस—चकार उवोष। उदित्वात् ओषित्वा उष्ट्वा वेट्। क्त। उष्टः। ओषणः।
अभि—सर्व्वतो दाहे। "येऽभ्युष्टमिव इव" शत० ब्रा० ११,२,७,२३। अभित ओषणं अभ्युष्टं सर्व्वतोदाहः तेनभिन्न इव" भा०। [ अन्नभेदः अपूपादि०।
अव—अधःसन्तापनेन दाहे। अवोषः अधोभागे दग्धो
उद्—आधिक्येन दाहे। "मा मोदोषिष्टम् मा मा हिंसिष्टम्" शत०ब्रा० १,५,१,२५। "युवां मासुत्क्रष्टमाधिक्येन वा उदोषिष्टं दाहं काष्टम्" भा०।
उप—सामीप्येन दाहे। "अग्निना वा कत्तुमुपोषेत्" आश्व० श्रौ० २,४,६। तमग्निभिः समुपोषेत्तदेनम्" शत० ब्रा० १२,५,१,१२। उपवासे च उपोषणम्।
प्रति—प्रतिदाहे। "स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः" ऋ०१०,११८,८। प्रत्येकदाहे च "प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः" यजु०१,७, "प्रत्युष्टं प्रत्येकं दग्धम्" वेददी०।

**उषस्** प्रभातीभावे कण्ड्वा० पर०सक० सेट्। उषस्यति औषस्यीत् औषसीत् उषस्याम् साम् बभूव आस चकार।

**उष** त्रि०उष—क। १दाहके २सन्ध्यात्रयसमये ३कामिनि ४गुग्गुलौ। ५रात्रिशेषे पु०मेदि०। रात्रिशेषश्च मुहूर्त्तात्मककालः पञ्चपञ्चाशद्घटिकोत्तरसूर्य्योदयपर्य्यन्तकालः। ६दिवसे पु०।

**उषङ्गु** पु०उष बा०अङ्गु। रुद्रे तस्य संहर्त्तृत्वात्तथात्वम्। "उषङ्गुश्च विधाता च मान्धाता भूतभावनः" भा० अनु०१७

**उषण** न०उष—क्युन्। १मरिचे २पिप्पलीमूले च ३शुण्ठ्यां, ४चव्यिके(चइ)। पिप्पल्यां च स्त्री। ऊषणशब्दे विवृतिः

**उषती** स्त्री उष—शतृ—बा०नुम् गुणाभावः रायमुकुटः। अकल्याणवाक्यां वाचि। "ययाऽस्य वाचा पर उद्विजेत न तां वदेदुषतीं पापलोक्याम्" भा०स०६४अ०८७अ०। शब्दे पु० उषन् शब्दः वाक्ये न० उषत् वाक्यं तेनास्य त्रिलिङ्गता

**उषत्** पु०यदुवंश्ये नृपभेदे। क्रोष्टुवंशवर्णने "अनन्तरं सुयज्ञस्तु सुयज्ञतनयोऽभवत्। उषन् यो यज्ञमखिलं स्वधर्म्मसुषतांवरः। शिनेयुरभवत् पुत्र उषतः शत्रुतापनः" हरि०३७

**उषद्गु** पु० यदुवंश्ये नृपभेदे। "स्वाहेः पुत्रोऽभवद्राजा उषद्गु-र्वेदतांवरः। महाक्रतुभिरीजे योविविधैर्भूरिदक्षिणैः। ततः प्रसूतिमिच्छन् वै उषद्गुःसोऽप्यग्रमात्मजम्" हरि०३७

**उषद्रथ** पु० पौरवे नृपभेदे उशीनरस्य भ्रातृस्तितिक्षोःसुतभेदे। "तैतिक्षवोऽभवद्राजा पूर्व्वस्यां दिशि भारत!। उषद्रथो महाराज! फेनस्तस्य सुतोऽभवत्" हरि० ३१अ०।

**उषप** पु० उष-दाहे कपन्। १वह्नौ २सूर्य्ये च तयोस्तापकत्वात्तथात्वम्। ३चित्रकवृक्षे च।

**उषर्बुध्** त्रि० उषसि बुध्यते बुध—क्विप् अहरादि० नित्यं रः। अग्निहोत्रकाले प्रबुद्धे। "मर्त्येषूषर्भुद्भ्रतिथिर्जातवेदाः" ऋ०६,४,२। "आकाँ सूर्य्यस्य रोचनाद्विश्वान् देवानुषर्बुधः" १,१४,६ "आ दाशुषे जातवेदो वहायां देवा उषर्बुधः" ऋ० १,४४,१।

**उषर्बुध** त्रि० उषसि बुध्यते बुध—क अहरा० नित्यं रः। अग्निहोत्रकाले प्रबुद्धे। "इमम् ष वो अतिथिमुषर्बुधम्" ऋ०६,१५,११२ अग्नौ पु०२चित्रकवृक्षे च अमरः।

**उषस्** न० ओषत्यन्धकारम् उष—असुन् किञ्च। १प्रत्यूषे, "उष उषो हि वसो अग्रमेषि" १०,८,४। स च कालः। "पञ्चपञ्च उषःकालः" स्मृतेः पञ्चपञ्चाशद्घटिकोत्तरः। "आसीदासन्ननिर्वाणः प्रदीपार्च्चिरिवोषसि" रघुः। "पुनरुषसि विविक्तैर्मातरिश्वावचूर्ण्य" माघः २सन्ध्यात्रये स्त्री "इह सुरिन्द्राय पूर्व्वीरुषसोद्दहानाः" ऋ०६,२८,१। तेन उषा उषसौ—उषस इत्यादि भकारादौ परे वेदे सस्य दः उषद्भिः सि० कौ०। "निम्रुच उषसस्तकवीरिव" ऋ० १,१५१,५, ३तदभिमानिदेवताभेदे अस्य देवताद्वन्द्वे पूर्व्वापरयोः उषासादेशः। "नक्तोषासा सुपेशसा" ऋ०१,१३२,७। तदभिमानिदेवताभेदाभिधायित्वेन देवताद्वन्द्वः। "जिगीषोषासानक्ता सुदुघेव धेनुः" १,१८६४,। आदिपदलोपेऽपि उषासावश्विना" यजु० २१,५०। नक्तोषासाविति प्राप्ते आदिपदलोपः वेददी०। "उषासा वां सुहिरण्ये" यजु० २६,६। नक्तोषासावित्यर्थः वेददी०। "साऽस्य देवता यत्। उषस्य तद्देवताके पश्वादौ "कृष्णाङ्गिरलाङ्गिर्महाङ्गिस्त उषस्याः" यजु०२४,४,उषस्या उषादेवताकास्त्रयो यूपे नियोज्याः"

वेददी० ४ब्राह्ममुहूर्त्ते "उषावं अश्वस्य मेध्यस्य विव्याध" वृ०उ०। "उषा ब्राह्मो मुहूर्त्तकालः" भ०भा०।
५दिवोदुहितृदेवतायाम् स्त्री प्रौढ़मनोरमा।

**उषसी** स्त्री उषं तापकत्वात् दिवसं स्यति सो–क गौरा० ङीष्। सायं सन्ध्यायाम् मेदिनिः।

**उषस्ति** पु० ऋषिभेदे "उषस्तिर्ह चाक्रायणः" का०उ०। उषस्तोऽप्यत्र "अथ हैनमुषस्तश्चाक्रायणः पपच्छ" "ततो होषस्तश्चाक्रायण उपरराम" इति च शत०ब्रा०१४,६,५,१।

**उषा** स्त्री ओषत्यन्धकारम् उष+क। १प्रातरादिसन्ध्यासु "वेनीरनुव्रतमुषास्तिस्रः" ऋ०८,४१,३। तिस्रः प्रातःसायं मध्याह्नरूपा उषाः" भा०। "उषा विभातीरनु भासि पूर्व्वीः" ३,६,७, "तेजःपरिहानिरुषा भानोरर्द्धोदयं यावत्" वृ०सं०उक्ते २काले नक्षत्रप्रभाक्षयः काल उषा। तेन पञ्चपञ्चाशद्घटिकोत्तरमारभ्य सूर्य्यार्द्धोदयपर्य्यन्तः स कालः। लग्नाद्यलाभे उषाकाले यात्रा शस्ता यथाह ज्यो० "प्रत्युष्टद्युतितारका स्फुटतटी प्राची भवेन्निर्म्मला स्तोषद्रक्तविलोहितान्तधवला देवैः सदा वाञ्छिता। नो वारं न तिथिं न योगकरणं लग्नञ्च नापेक्षते कृत्वा दोषसहस्रसञ्चयमुषा नूनं करोत्युन्नतिमिति"। "तिथ्यादिषु निषिद्धेषु चन्द्रताराविलोमतः। उषां गोधूलियोगं वा स्वीकृत्य गमनं चरेत्। प्राच्यामुषां प्रतीच्याञ्च गोधूलिं वर्जयेन्नृप। दक्षिणेऽभिजितं चैवमुत्तरे च निशां तथा'। "आरक्तबिम्बं रजनीविरामं वदन्त्युषायोगमिह प्रवीणाः। व्यासः" "आहुः प्रयातुः सकलार्थसिद्धिः संलक्ष्यते हस्ततलस्थितेव" ज्यो०त०व्यासः। अन्धकारेण सन्तापकारिण्यां ३रात्रौ मेदि० "अधिकरुचिरशेषामप्युषां जागरित्वा" माघः। ४क्षारभूमौ०। ततः कचित् गौरा० ङीष्। "भस्मन् हुतं कुहकराद्धमिवोप्तमुष्याम्" भाग० ५स्त्रीगव्यां हेम० ६उखायां विश्वः ७स्थाल्यां रमानाथः। ८बाणराजसुतायाञ्च तत्र दीर्घादित्वमपि भारतादौ तथैव निर्द्देशात्। तया च यथा अनिरुद्धः पतित्वेनाप्तः तथा वर्णितं भाग०१०स्क०६२अ० यथा (बाणस्य) "तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम्। कन्यालभतकान्तेन प्रागदृष्टश्रुतेन सा। सा तत्र तमपश्यन्ती कासि कान्तेति वादिनी। सखीनां मध्य उत्तस्थौ विह्वला व्रीड़िता भृशम्। बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता। सख्यपृच्छत् सखीं भूयः कौतूहलसमन्विता। कं त्वं मृगयसे सुभ्रु! कोदृशस्ते मनोरथः। हस्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये। उषोवाच। दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः। पीतवासा बृहद्बाहुर्योषितां हृदयङ्गमः। तमहं मृगये कान्तं पाययित्वाऽधरं मधु। क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे। चित्रलेखोवाच। व्यसनमपकर्षामि त्रिलोक्यां यदि भाव्यते। तदानेष्ये नरं! यस्ते मनोहर्त्ता तमादिश। इत्युक्त्वा देवगन्धर्व्वसिद्धचारणपन्नगान्। दैत्यविद्याधरान् यक्षान् मनुष्यांश्च तथाऽलिखत्। मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम्। व्यलिखत् रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता। अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया। सोऽसावसाविति प्राह स्मयमाना महीपते!। चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी। ययौ विहायसा राजन्! द्वारकां कृष्णपालिताम्। तत्र सुप्तं सुपर्य्यङ्के प्राद्युम्निं योगमास्थिता। गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत्। सा च तं सुन्दरवरं विलोक्य मुदितानना। दुष्प्रेक्ष्ये स्वगृहे पुंसा रेमे प्राद्युम्निना समम्। परार्ध्यवासःस्रग्गन्धधूपदीपासनादिभिः। पानभोजनभक्ष्यैश्च वाक्यैः सुश्रूषयार्च्चितः। गूढः कन्यापुरे शश्वत् प्रवृद्धस्नेहया तया। नाहर्गणान् स बुबुधे ऊषयोपहृतेन्द्रियः" विस्तरस्तु हरिवं०१७६अ०। प्रातःकाले अव्य० मेदि० अव्ययत्वात् ततो भवार्थे ट्युल् तुट च। उषातन तद्भवे त्रि० स्त्रियां ङीप्।

**उषाकल** पु० उषायां कलोरवो यस्य। कुक्कुटे।

**उषापति** पु० ६त०। कृष्णपौत्रे प्रद्युम्नपुत्रे यदुवंश्ये अनिरुद्धे तत्पतित्वप्राप्तिकथा उषाशब्दे उक्ता उषानाथादयोऽप्यत्र, अमरे 'अनिरुद्ध उषापतिरिति" ह्रस्वपाठः भारतादौ तु दीर्घपाठः।

**उषित** त्रि० वस क्त। १पर्य्युषिते २कृतवासे च। उष–दाहे क्त। ३दग्धे मेदि०। ४चरिते धरणिः। भावे क्त। ५वासे न० "चाण्डालैरुषितं यत्र" शु०त० देवलः।

**उषीर** पुंन० उष–कीरच्। वीरणमूले रायमुकुटः।

**उष्टृ** पु० उक्ष–सेचने तृन् वेदे नेट्। १सम्यक्सेक्तरि बलीवर्द्दे। तस्यामोघवीर्य्यत्वात् तथात्वम् "ओष्टारौ वा" कात्या० ५,११,१२। "ओष्टारौ महाबलीवर्द्दौ" कर्कः। आ+सम्यक् उष्टारौ इति विग्रहः। "उष्टारेव फर्वरेषु श्रयेथे" ऋ० १५,१०६,२। लोके तु उक्षितृ इत्येव। सेक्तरि त्रि० स्त्रियां ङीप्।

**उष्ट्र** पुंस्त्री० उष+ष्ट्रन् किच्च। (उट) प्रसिद्धे पशुभेदे

स्त्रियां जातित्वात् ङीष् । "हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति" "नाधीयीताश्वमारूढो न रथं न च हस्तिनम् । न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः" मनुः । तद्यान-निषेधमाह "उष्ट्रयानं समारुह्य खरयानं तु कामतः । स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति" मनुः । कामतः" इत्युक्त्या कर्मभेदे तद्याने न दोष इति सूचितम् अतएव "उष्ट्रमारोक्ष्यन्नभिमन्त्रयते त्वाष्ट्रोऽसि" पार० गृ०सू० मन्त्रलिङ्गेन तद्यानं विहितम् । तस्य मांसं न भक्ष्यम् "भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः" मनूक्तेः । तेनास्य एकदन्तपङ्क्तियुक्तत्वम् । "गौरजो महिषः कृष्णः सूकरो गवयो रुरुः । द्विशफाः पशवश्चेमे अ-विरुष्ट्रश्च सत्तम !" भाग० उक्तेः गवादयः उष्ट्रान्ता द्विशफाः इति बोध्यम् । तथा तद्घाते दोषः "मनुष्यमारणे क्षिप्रं चौरवत् किल्बिषं भवेत् । प्राणभृत्सु महत्-स्वर्द्धं गोगजोष्ट्रहयादिषु" मनूक्तेः । अश्वहत्याशेष-पापेन तज्जातिर्भवति यथाह मनुः "यां यां योनिन्तु जीवोऽयं येन येनेह कर्मणा । क्रमशो याति लोकेऽस्मिंस्तत्तत् सर्वं निबोधत । बहून् वर्षगणान् घोरान्नरकान् प्राप्य दारुणान् । संसारान् प्रतिपद्यन्ते महा-पातकिनस्त्विमे । श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षि-णाम् । चण्डालपुक्कसानाञ्च ब्रह्महा योनिमृच्छति" । यान-हरणपापेऽप्युष्ट्रयोनिप्राप्तिमाह तत्रैवानुवृत्तौ मनुः "स्त्री-मृगः स्तोककोवारि, यानान्युष्ट्रः, पशूनजः" । तद्बधे प्रायश्चि-त्तमाह "हयच्छागाविकोष्ट्रेषु गर्द्दभेषु च मारणात् । प्राजा-पत्यार्द्धमेवेह प्रायश्चित्तं विधीयते" प्रा० वि० विष्णुः । तद्भ-क्षणे प्रायश्चित्तमाह भुक्त्वेत्यनुवृत्तौ प्रा० वि० शङ्खः "गामश्वं कुञ्जरोष्ट्रौ च सर्वं पञ्चनखं तथा । क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरव्रतम्" "अथोष्ट्रवामीशतवाहितार्थः" रघुः । "इतिश्च तत्र कुर्व्वीत वाहुष्ट्रोनावलोकयेत्" मनुः । "अन्योन्यतः पथि वताविमीताभिभोष्ट्रौ" माघः । तन्मूत्रगुणाः सुश्रु० उक्ताः । "अथ मूत्राणि गोमहि-षाजाविगजहयखरोष्ट्राणां तीक्ष्णानि कटून्युष्णानि ति-क्तानि लवणानुरसानि लघूनि शोधनानि कफवातक्रिमि-मेदोविषगुल्मार्शउदरकुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि दीपनानि च सामान्यतः । भवन्ति चात्र । तत्सर्वं कटु तीक्ष्णोष्णं लवणानुरसं लघु । शोधनं कफ-वातघ्नं क्रिमिमेदोविषापहम् । अर्शोजठरगुल्मघ्नं शोफा-रोचकनाशनम् । पाण्डुरोगहरं भेदि हृद्यं दीपनपाच-नम्" । सामान्यत उक्त्वा "अर्शोघ्नं कारभं मूत्रमिति" विशे-षगुण उक्तः । तन्मांसगुणाः सुश्रुते उक्ताः तच्च उरभ्रशब्दे दर्शितम् । तस्य ग्राम्यत्वं तत्रोक्तम् । तच्च उरभ्रशब्दे दर्शितम् । किन्तु तस्यारण्यत्वमपि अतएव "उष्ट्रमारण्य-मनु ते दिशामि" यजु० १३, २४, तस्यारण्यत्वमुक्तम् । तस्य त्वष्टृदेवतायै अश्वमेधे देयतोक्ता "बृहस्पतये गवयां-स्त्वष्ट्र उष्ट्रान्" यजु० २४, २८, द्वित्वे गोयुगम् उष्ट्रगोयुग उष्ट्रद्वित्वे न० शालायां गोष्ठच् । उष्ट्रगोष्ठ उष्ट्रशालायां न० षट्के षड्गवच् । उष्ट्रषड्गव उष्ट्रषट्के न० । तस्ये-दमण् । औष्ट्र तत्सम्बन्धिमांसादौ त्रि० । "परं चौष्ट्रं मैषं नरमहिषयोश्छागमपि वा" कर्पूरस्तवः ।

**उष्ट्रकर्णिक** पु० उष्ट्रस्य कर्णः भेदनम् कर्ण+भिदि—अच् । सोऽस्त्यस्य ठन् । दक्षिणस्थे यवनदेशभेदे तद्देशवासिभिर्हि भोजनार्थम् उष्ट्रभेदनात् तद्देशस्य तथात्वम् । सहदेवदक्षि-णदिग्विजयवर्णने "अश्वांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णि-कान् । आटवीं च पुरीं रम्यां यवनानां पुरीं तथा" भा० स० २० अ० उष्ट्रतुल्यकर्णजनवत्त्वाद्वा तथात्वम् ।

**उष्ट्रकाण्डी** स्त्री उष्ट्र इव काण्डोऽस्य जातित्वात् ङीष् (उटाटी) पुष्पभेदे राजनि० ।

**उष्ट्रग्रीव** पु० उष्ट्रग्रीवा आकारत्वेनास्त्यस्य अर्श० अच् । सुश्रुतोक्ते पैत्तिके भगन्दररोगभेदे । तन्निदानस्वरू-पादि तत्रोक्तं यथा "वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्त्तोन्मार्गिणो यथासङ्ख्यं पञ्च भगन्दरा भवन्ति । ते तु भगगुदवस्तिप्रदेशदारणाच्च भगन्दरा इत्युच्यन्ते । अपक्वाः पिडकाः पक्वास्तु भगन्दराः । तेषान्तु पूर्वरूपाणि कटीकपालवेदना गुदकण्डूर्दाहः शोफश्च गुदस्य भवति" इत्युपक्रम्य । "पित्तन्तु प्रकुपितमनिलेनाधः-प्रेरितं पूर्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति । साऽस्यचोषादीन्वेदनविशेषान् जनयत्य-प्रतिक्रियमाणा च पाकमुपैति वह्न्यग्निक्षाराभ्यामिव दह्यते दुर्गन्धमुष्णमास्रावं स्रवत्युपेक्षितश्च वातमूत्रपुरी-षरेतांसि विसृजति, तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते" । उष्ट्रशिरोधरोऽप्यत्र "प्रकोपणैः पित्तमतिप्रकोपितं करोति रक्तां पिडकां गुदागताम् । तदाशुपाकाहिमपूतिवाहिनीम् भगन्दरं तूष्ट्रशिरोधरं वदेत्" निदानम् ।

**उष्ट्रधूसरपुच्छी** स्त्री उष्ट्रस्येव धूसरः पुच्छ इव मञ्जरी अस्याः जातित्वात् ङीष् । (विछाति) वृक्षभेदे रत्नमाला स्वार्थे कन् ह्रस्वः । तत्रार्थे ।

**उष्ट्रपादिका** स्त्री उष्ट्रस्य पादा इव पादोमूलमस्याः कपि अत इत्त्वम्। (मदनमालो) भूमिलतायाम् रत्नमा०

**उष्ट्रस्थान** न०६त०। उष्ट्रस्य शालायाम्। तत्र भवः अण्। स्थानान्तत्वात् तस्य लुक्। उष्ट्रस्थान तत्रभवे त्रि०तद्धित लुकि विशेष्यलिङ्गत्वनियमात् त्रिलिङ्गत्वम्।

**उष्ट्रासिका** स्त्री आसनम् आसिका आस—भावे ण्वुच् उष्ट्रस्येवासिका। उष्ट्रस्येव आसने। "उष्ट्रासिकाः आसन्ते" पा० भाष्यम् अत्र क्रियाविशेषणस्यापि यथा बहुवचनान्तताऽक्लीवता च तथाकारे समर्थितम् तच्च शब्दार्थरत्ने अस्माभिर्दर्शितम्।

**उष्ट्रिका** स्त्री उष्ट्रस्याकारः पृष्ठावयव इव आकारोऽस्त्यस्याः ठन्। मृण्मये मद्यभाण्डभेदे विश्वः 'भूर्भङ्गविक्षेपविदारितोष्ट्रिका" माघः। उष्ट्री+स्वार्थे कन्। उष्ट्रजातिस्त्रियाञ्च।

**उष्ण** पु० उष+नक्। १ग्रीष्मे, ऋतौ, २आतपे, ३पलाण्डौ ४नरकभेदे, ५शीतविरोधिस्पर्शे च। अर्श०अच्। ६तद्वति, ७आलस्यरहिते दक्षे च त्रि०। "सूतके मृतके चैव न स्नायादुष्णवारिणा"स्मृतिः "आददे नातिशीतोष्णः नभस्वानिव दक्षिणः" रघुः"अभीक्ष्णमुष्णैरपि तस्य सोष्मणः" "म्लापयन्नभिमानोष्णैर्वनमालां मुखानिलैः" माघः ८तापे पु०मुष्णान्तमुष्णं ततिभिस्तरूणाम्" माघः "उष्णं तापम्" मल्लि०। तत्र ग्रीष्मस्य सूर्य्यतापाधिक्यवत्त्वात् उष्णत्वम् "ग्रीष्मातीव्रकरोभानुर्न हेमन्ते तथाविधः"इति मयप्रश्ने "अत्यासन्नतया तेन ग्रीष्मे तीव्राः कराः रवेः। देवभागेऽसुराणान्तु हेमन्ते मन्दताऽन्यथा" सू०सि०तथैवोक्तेः। विवृतञ्चेदं रङ्गनाथेन "तेन उत्तरदक्षिणगोलयोः सूर्य्यस्योत्तरदक्षिणसञ्चाररूपकारणेनेत्यर्थः। देवभागे जम्बूद्वीपे अत्यासन्नतया सूर्य्यस्यात्यन्तनिकटस्थत्वेन ग्रीष्मे ग्रीष्मर्त्तौ सूर्य्यस्य तेजोगोलकस्थकिरणास्तीक्ष्णा अत्युष्णाः। असुराणां देवभाग इत्यस्य समन्वयाद्दैत्यानां भागे समुद्राद्दक्षिणप्रदेशे हेमन्ते हेमन्तर्त्तौ तुकारात् सूर्य्यस्यात्युष्णाः किरणाः सूर्य्यस्यात्यासन्नत्वात्। अन्यथा सूर्य्यस्य दूरस्थत्वे मन्दता किरणानामुष्णताभावः। देवभागे हेमन्तर्त्तौ कराणां मन्दता। अतएव तत्र शीताधिक्यम्, दैत्यभागे ग्रीष्मे कराणां मन्दता शीताधिक्यं च। तथाच देवभागे दक्षिणगोले सूर्य्यस्य दूरस्थत्वमुत्तरगोले निकटस्थत्वं मध्यगतदेशानां क्रमेणाधिकाल्पत्वादीति भावः"। अतएवोक्तं "मिथकर्कटयोर्मध्ये गाढं तपति भास्करः" ति०त० पु०। एतच्च देवभाग एव नासुरभागे, ग्रीष्म ऋतुश्च ज्यैष्ठाषाढात्मकः। "मधुश्च माधवश्च वासन्तिकावृतुः शुक्रश्च शुचिश्च ग्रीष्मर्त्तुः"काल०मा०इष्टकोपधानमन्त्रोक्तेः। ततो भावे इमनिच्। उष्णिमन् पु० तल् उष्णता स्त्री त्व उष्णत्व न० ष्यञ् औष्ण्य न०। उष्णस्पर्शे स्वार्थे कन् उष्णस्पर्शाद्यर्थे। उष्णस्पर्शस्तु तेजसोगुणः "स्पर्श उष्णस्तेजसस्तु" भाषोक्तेः जलादीनां तेजःसंयोगविशेषादौपाधिकः। देहस्य तथात्वे कारणमूष्मन्शब्दे वक्ष्यते गुणवचनत्वात् प्रकारे द्वित्वम् उष्णोष्ण उष्णप्रकारे। "उष्णोष्णशीकरसृजः" माघः

**उष्णक** त्रि०उष्णमिव करोति कन्। १अनलसे, क्षिप्रकारिणि क्षिप्रकारी हि जाड्याधायकमालस्यमनादृत्य स्वकर्त्तव्ये व्याप्रियते इति तस्य तथात्वम्। उष्णं करोति उष्ण+णिच्-ण्वुल्। २ज्वरे पु०।

**उष्णकर** प० उष्णः करः किरणोऽस्य। १सूर्य्ये। उष्णकिरणोष्णदीधिति प्रभृतयोऽप्यत्र। उष्णं करोति कृ—अच् ६त०। २उष्णकारके त्रि०

**उष्णकाल** पु०कर्म्म०६त०वा। ग्रीष्मे ऋतौ। "तक्रं नैव क्षते-दद्यात् नोष्णकाले न दुर्ब्बले" सुश्रुतः।

**उष्णग** पु०उष्णमुष्णस्पर्शं गच्छति यत्र गम-बा०आधारे ड। ग्रीष्मे काले "मातङ्गोन्यपतत् भूमौ नदीरोधइवोष्णगे" भा०उ०२२३अ०। आधारे घञ् उष्णगमोऽप्यत्र हेम०।

**उष्णगु** पु० उष्णागावः कराः अस्य ह्रस्वः। सूर्य्ये। उष्णरश्म्यादयोऽप्यत्र "कुवेरगुप्तां दिशमुष्णरश्मौ" कुमा०।

**उष्णङ्करण** न० ६त०करणे परे मुम्। उष्णसाधने।

**उष्णनदी** स्त्री कर्म्म०। "यमद्वारे महाघोरे तप्ता वैतरणी नदी" इत्युक्तायाम् तप्तायां वैतरण्याम् नद्याम्।

**उष्णवारण** न०उष्णं वारयति वृ—णिच्—ल्यु ६त०। आतपत्रे, छत्रे "यदर्थमम्भोजमिवोष्णवारणम्" कुमा०अस्योत्पत्त्यादिकम् आतपत्रशब्दे ६४६ पृ० उक्तम्। तल्लक्षणं वृह०सं० दर्शितं यथा "निचितं तु हंसपक्षैः कृकवाकुमयूरसारसानां च। दौकूलेन नवेन तु समन्ततश्छादितं शुक्लम्। मुक्ताफलैरुपचितप्रलम्बमालाविलं स्फटिकमूलम्। षड्ढस्तशुद्धहैमं नवपर्व नगैकदण्डं च। दण्डार्धविस्तृतं तत् समावृतं रत्नविभूषितमुदग्रम्। नृपतेस्तदातपत्रं कल्याणकरं विजयदं च। युवराजनृपतिपत्न्याः सेनापतिदण्डनायकानां च। दण्डोऽर्धपञ्चहस्तः समपञ्चकृतार्धविस्तारः। अन्येषामुष्णघ्नं प्रसादपट्टैर्विभूषितशिरस्कम्। व्यालम्बिरत्नमालं छत्रं कार्य्यं च मायूरम्।

अशेषां च नराणामातपवारणं तु चतुरस्रम्। समदण्डदण्डयुक्तं छत्रं कार्य्यं तु विप्राणाम्" उष्णाद्यो ऽप्यत्र। तद्धारणे गुणाः सुश्रुते उक्ता यथा "वर्षानिलरजोघर्महिमादीनां निवारणम्। बल्यं चक्षुष्यमौजस्यं मङ्गलं छत्रधारणम्"।

**उष्णवीर्य्य** पु० उष्णमुग्रं वीर्य्यमस्य। १शिशुमाराख्ये जलजन्तौ। २उग्रवीर्य्यवति त्रि०हेम०। उष्णवीर्य्यद्रव्याणि च सुश्रुते नानास्थाने उक्तानि तानि तत्र एवावगम्यानि

**उष्णांशु** पु० उष्णाः अंशवोयस्य। सूर्य्ये।

**उष्णागम** पु० उष्ण आगम्यतेऽत्र गम+आधारे-अप्। निदाघकाले। उष्णाभिगमोऽप्यत्र शब्दच०।

**उष्णालु** त्रि०उष्णं न सहते आलु। उष्णाऽसहने। "उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी" विक्रमो०।

**उष्णासह** पु०उष्णा आसह्यतेऽत्र आ+सह-अच्। १हेमन्ते ऋतौ। उष्णं न सहते अच्। २असह्योष्णे त्रि०।

**उष्णिका** स्त्री अल्पमुष्णमस्याम् अल्पार्थे कन् नि० कनस्य उष्णादेशः। १यवाग्वाम्(याउ)। उष्णकशब्दात् स्त्रियां टाप् अत इत्त्वम्। २दलायाम् स्त्रियाम्।

**उष्णिज** पु० उष-इजिक् बा० नुट्। उष्णस्पर्शयुक्ते ततः प्रज्ञा० स्वार्थे वा। औष्णिज तदर्थे।

**उष्णिह्** स्त्री उत्स्निह्यति क्विन् नि०उदोऽन्त्यलोपे षत्वम्। सप्ताक्षरपादके १छन्दोभेदे। स्वादौ कुः उष्णिक्। उष्णिग्भ्याम्। "गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च" इ०र०। "अथ छन्दांसि गायत्र्युष्णिगनुष्टुब् बृहती" इत्युपक्रम्य "द्वितीयस्तूष्णिक् त्रिपदान्त्योद्वादशकः। आद्यश्चेत् पुरउष्णिक्, मध्यमश्चेत् ककुप्। त्रैष्टुभ जागतचतुष्काः ककुबन्यङ्कुशिरःकादशिनोः परः षट्कस्तनुशिराः मध्ये चेत् पिपीलिका मध्याद्यपञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भा चतुःसप्तकोष्णिगेव" सर्वानु० ५अ०। "एवमेवोष्णिहं सवितारं ग्रीवास्वनूके" इति सर्वानु० ४अ० उक्तेः तस्याः सवितृदेवताकत्वेन ग्रीवासु अनूके च न्यासः। तस्या उपधानप्रकारः शत०ब्रा० ८,६,२,३, आदौ दर्शितं तत्र एवावसेयः। २तदभिमानिदेवभेदे च। अश्वमेधे "त्रिवत्सा अनुष्टुभे तुर्य्यवाह उष्णिहे" यजु० २५,१२१। पशुविशेषाणामुक्तदेवताविशेषोद्देशेन यूपादौ बन्धनक्रमम्। अस्य हलन्तत्वेऽपि अजादि०टाप्। उष्णिहा "उष्णिहा छन्द इन्द्रियम्" यजु० २१,१३, "इन्द्रस्युष्णिहा ककुभ् सूचीभिः शम्यन्तु त्वा २३,३३, "श्वात् ग्रीवाः प्र श्या तूष्णिहा हलस्येव शचीपतिः" अथर्ववेदे ६,१३४,१,

**उष्णीगङ्ग** न०उष्णीभूता गङ्गा नदीभेदो यत्र मध्यपदलोपः। भृगुतुङ्गपर्वतस्थे तीर्थभेदे "अपां ह्रदं च पुण्याख्यं भृगुतुङ्गं च पर्वतम्। उष्णीगङ्गं च कौन्तेय! सामात्यः समुपस्पृश" भा०व०१३५ अ०।

**उष्णीष** पु०न०उष्णमीषते हिनस्ति ईष-क शक० पररूपम्। १शिरोवेष्टनवस्त्रे(पागड़ि)२किरीटे च "अथास्मा अध्वर्युरुष्णीषं प्रयच्छति तदञ्जलिना प्रतिगृह्य त्रिःप्रदक्षिणं शिरः सम्मुखं वेष्टयित्वा" आ०श्रौ०सू०६,७। यद्वा लोहितोष्णीषा निर्ल्लिंशिनो याजयेयुः" आ०श्रौ० ८,७,४। "लोहितोष्णीषा ऋत्विजश्चरन्तीति" श्रुतिः। समावर्त्तनकाले च तस्य धारणमाचार्य्याय दानं च विहितम्। "अथैतान्युपकल्पयीत समावर्त्तमाने मणिकुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने आचार्य्याय च"। "यद्युभयोर्न विन्देताचार्य्यायैव"आ० गृ० ३,८,१,२। तद्धारणगुणः सुश्रु० उक्तः "पवित्रं केश्यमुष्णीषं वातातपरजोऽपहम्। वर्षानिलरजोघर्महिमादीनां निवारणम्"।

**उष्णीषिन्** त्रि० उष्णीष+अस्त्यर्थे इनि। १उष्णीषधारिणि स्त्रियां ङीप् २महादेवे पु०। "उष्णीषी च सुवक्त्रश्च उदग्रोविनतस्तथा" शिवस्तुतौ" भा०अनु०१७। "उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे" भा० अनु० ८।

**उष्णोदक** न० कर्म०। अग्निना तप्तजले क्वाथ्यमानपादशेषार्द्धविशेषपादार्द्धहीनके जले तद्गुणादि भावप्र० "अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा। अथवा क्वथनेनैव सिद्धमुष्णोदकं वदेत्"। तद्गुणाः"श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम्। कासश्वासज्वरान् हन्ति पीतमुष्णोदकं निशि। क्वाथ्यमानन्तु निर्वेगं निष्फेनं निर्म्मलन्तथा। अर्द्धावशिष्टं यत्तोयं तदुष्णोदकमुच्यते। ज्वरकासकफश्वासवातपित्तामभेदसाम्। नाशनं वस्तिसंशोधि पथ्यमुष्णोदकं सदा। त्रिपादशेषं सलिलं ग्रीष्मे शरदि शस्यते। हिमेऽर्द्धशेषं शिशिरे तथा वर्षावसन्तयोः" अन्ये तु "निदाघे तत्तु पादोनं पादहीनन्तु शारदम्। शिशिरे च वसन्ते च हिमे चार्द्धावशेषितम्। अष्टमांशावशेषन्तु वारि वर्षासु शस्यते" केचित्तु "विभिन्नेष्वेषु वाक्येषु वेदेषु त्रिषु पक्षयोः। एकभागावशेषं स्यादम्बु वर्षादिषु क्रमात्"। अत्र दोषाणां यथोल्बणता हीनता वा तथा व्यवस्था कल्पनीया। "तत् पादहीनं पित्तघ्न-

र्द्धहीनन्तु वातनुत् । त्रिपादहीनं संघृष्टं संग्राह्यग्निकरं लघु"।त्रिपादहीनस्य तन्त्रान्तरे आरोग्याम्बु संज्ञा। तस्य लक्षणगुणास्तु। "पादशेषन्तु यत्तोयमारोग्याम्बु तदुच्यते। आरोग्याम्बु सदा पथ्यं कासश्वासकफापहम्। सद्योज्वरहरं ग्राहि दीपनं पाचनं लघु। आनाहपाण्डुम्नुलार्शोगुल्मशोथोदरापहम्"भा०प्र०"दिवा शृतन्तु यत् तोयं रात्रौ तद्गुरुतां व्रजेत्" वैद्यकम्। "संक्रान्तौ पर्वणोश्चैव च पक्षयो चन्द्रसूर्ययोः। सूतके मृतके चैव न स्नायादुष्णवारिणा" स्मृतिः। "शैत्यमुष्णं वापि शीतमुष्णमथापि वा। मार्कं पयः पुनात्याशु पापमामरणान्तिकम्" मरीचिः। "नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणम्। तीर्थाभावे च कर्त्तव्यमुष्णोदकपरोदकैः" यमः। "उष्णाम्बुनाधःकायस्य परिषेको बलापहम्। तेनैव चोत्तमाङ्गस्य बलहृत् केशचक्षुषोः" आ०त० आयुर्वेदः। उष्णोदकेनाचमननिषेध आचमनशब्दे उक्तः।

**उष्णोपगम** पु० उष्णं उपगम्यतेऽत्र आधारे घञ् अवृद्धिः। निदाघकाले। ग्रीष्मर्त्तौ [कन्। तत्रैव आतपे च।

**उष्म** पु०उष–मक्। १घर्मे, २आतपे, ३ग्रीष्मर्त्तौ च। स्वार्थे

**उ(ऊ)ष्मन्** त्रि०उष–आधारे मनिन् वा०वा गुणः। १ग्रीष्मर्त्तौ कर्त्तरि मनिन्। २आतपे "नोपतापि मनः सोष्म" "उष्णोष्मशीकरस्तनः प्रवलोष्मणोऽन्तः""अभ्रंलिहमुष्णैरपि तस्य सोष्मणः" माघः। दीर्घादिः श्शषसहवर्णेषु।

**उ(ऊ)ष्मप** पु०उष्माणं पिबति पा–क्विप्। भृगोः पुत्रे १पितृगणभेदे "शुकालिनो बर्हिषद उ(ऊ)ष्मपा आज्यपास्तथा"पितृगणनायां स्मृतिः। २उ(ऊ)ष्मपानकर्त्तरि तपस्विभेदे त्रि०। "ऊर्द्धमुखैरिव रविनिविष्टदृष्टिभिरु(रू)ष्मपैः" काद०। [घञ् अवृद्धिः। निदाघकाले।

**उ(ऊ)ष्मागम** पु० उ(ऊ)ष्मा आगम्यतेऽत्र आ+गम–आधारे

**उ(ऊ)ष्माय** नामधा० उ(ऊ)ष्माणमुद्वमति उ(ऊ)ष्मन्+क्यङ्। उ(ऊ)ष्मायते औष्मायिष्ट उ(ऊ)ष्मायमाणः।

**उस्र** पु०वसन्ति रसा अत्र वस–रक् नि० न षत्वम्। १किरणे, सूर्यकिरणानां जलाकर्षकत्वेन रसवत्त्वात्तथात्वम्। २अन्येषां यथायथं रसवत्त्वम् बोध्यम्। ३वृषे। ३सुरभ्यां ४लतायां ५पृथिव्यां च स्त्री निरु०। देवमात्रे पु०उज्ज्व० "उस्रावेतं धूर्षाहौ" यजु०४,३३। "उस्रौ अनड्वाहौ" वेददी० "कृत्वा नार्वोस्रः पितेव" ऋ०६,१२,४। "उस्रो वृषभः"भा०"शरदम्भ्रैरिवोदीच्यानुद्धरिष्यन् रसानिव"रघुः "यो धर्त्ता भुवनानां य उस्राणामपीच्या" ऋ०८,४१,५। ७सूर्ये "प्रमिनानो न द्रुदुस्रो अघ्ने" १,५८,४। "वसति नभसीत्युस्रः सूर्यः" भा०। सूर्यरश्मिसम्बन्धात् ८दिवसे च। "वसुमाँ उस्रयामा" ऋ०७,७१,४, उस्रयामा दिवसं प्रति गन्ता" भा० उस्रमिच्छति उस्रीयति "उस्रोमाङ्क्षाटः प्रतिषेधः"वार्त्ति० लङादौ माट उस्रीत्युक्तेः षत्वाभावश्च औस्रीयत्। इसहवासिनो: अश्विनीकुमारयोः द्वि०व०। "अग्नयः उस्रा जरन्ते" ऋ० ४,४, ५,५, उस्रा सहनिवसन्तावश्विनीसुतौ" भा०।

**उस्रि** स्त्री वस–बा० कि षत्वाभावः। गन्त्र्याम्"छिन्दन्ति स्वर मुस्रयः" ऋ०९ ६५,१, "उस्रयः सर्वत्र गन्त्र्यः" भा०।

**उस्रिक** पु० उस्र+अल्पार्थे स्वार्थे वा ठन्। अल्पशाक्वे १जीर्णवृषभे अल्पक्षीरस्राविण्यां २स्त्रीगव्याम् स्त्री

**उस्रिय** पु०उस्र+स्वार्थे अल्पार्थे वा घ। १जीर्णवृषभे "उस्रियो वृषभः क्रन्दतु द्यौः" ऋ०५,५८,६, २स्त्रीगव्याम् स्त्री निरु०। "गवामूर्व मुस्रियाणाम्"ऋ०५,३,४,उस्रियाणां क्षीरमनुसारयन्तीनाम्"भा०।

**उह** अर्दने भ्वादि० पर० सक०सेट् इरित्। ओहति औहत्, औहीत्, उवोह ऊहतुः। अप अपसारणे तामपौहीत् निशाचरः"भट्टिः "अपौहद्दुस्तर." रघुः

**उह** अव्य० उ च ह च द्व०। १संबोधने, २एवार्थे च।

**उहह** अव्य० उह च ह च। सम्बोधने।

**उहू** स्त्री उह–कू। १खेदसूचके शब्दे "नखानि विधुवन्त्या करतलेन तत्प्रान्ताडयोत् ततः किसलयभ्रमात् करभयास्थि पहूरतः। ततोवलयशिञ्जिते भ्रमरगुञ्जिताशङ्कया उहूरिति कुहूरवध्वनिभियाऽपतत् मूर्च्छिता"। वह–कू। वाहके त्रि०। "हिरण्यपर्णा उहुव उषर्बुधः" ऋ० ४,४५, ४, उहुव. वाहकाः" भा० उवङ् छान्दसः

**उह्यमान** त्रि०वह–कर्म्मणि शानच्। यस्य वहनं क्रियते तस्मिन् "यथोह्यमानःकिल भोगिवैरिणा" नैषध०।

**उक्ष** पु० वह–रक्। वृषभे शब्दार्थचिन्तामणिः

इति वाचस्पत्ये उकारादिशब्दार्थसङ्कलनम्।

# ज

जकारः स्वरवर्णभेदः "ओष्ठजावू" इत्युक्तेः ओष्ठस्थानोच्चारणीयः स च उदात्तानुदात्तस्वरितभेदात् त्रिविधः दीर्घएव द्वाभ्यां मात्राकालाभ्यामुच्चार्यत्वात् तस्य प्लुतत्वोक्तिश्चिन्त्या त्रिमात्रकालस्यैव प्लुतत्वात् व्यङ्काकारभेदाच्च प्लुतस्य पार्श्वस्थत्र्यङ्कचिह्नितस्वस्वाकारेणैव लेखनसमाचारात्। त्रिविधोऽपि अनुनासिकाननुनासिकभेदात् द्विधा तेन षड्विधः तस्योच्चारणे विवार आन्तरप्रयत्नः "स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्" शिक्षोक्तेः विवृतञ्च जिह्वाग्रादेः स्पर्शाभावः। "अचोऽस्पृष्टायणस्त्वीषत्, नेमस्पृष्टाः शलः स्मृताः" इति शिक्षोक्तेः तस्य तन्त्रे शुक्लाद्याकारतया ध्येयतोक्ता यथा "शुक्लकुन्दसमाकार ऊकारः परकुण्डली" कामधेनुतन्त्रम्। तस्य वामकर्णे सविन्दुकतया निर्विन्दुकतया वा मातृकान्यासे न्यासः। अतएव वामकर्णशब्देन तस्याभिधेयता "ईशानः सेन्दुवामश्रवणपरिगतो वीजमन्यन्महेशि!" कर्पूरस्तवे हूङ्कारमन्त्रोद्धारः। तत. स्वरूपे कारप्रत्ययः। तप्रत्ययस्य। अधिकं स्वरवर्णसमाप्तौ वक्ष्यते।

**ऊ** अव्य० वेञ् क्विप्। १सम्बोधने, २वाक्यारम्भे, ३दयायां, ४रक्षायाञ्च मेदि० उञः स्थाने इतौ परे अनुनासिक ऊँ इति आदेशे तदर्थे तस्य प्रगृह्यत्वादितौ न सन्धिः।

**ऊं** पु० अवतीति अव-क्विप् ऊठ्। १महादेवे २चन्द्रे च। ३पालके त्रि० शब्दरत्ना०

**ऊढ़** पु० वह-प्रापणे ज्ञानार्थत्वात् १कर्त्तरि क्त। १कृतविवाहे पुंसि "परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात्" अमरः ऊढवत् ऊढवत् तत्रैव पु०। कर्मणि क्त। कृतविवाहायां स्त्रियाम् स्त्री। "भार्योढं तमवज्ञाय तस्ये सौमित्रयेऽसकौ" भट्टिः "कन्या पितुर्धनहरो यद्यनूढा भवेत्तदा" स्मृतिः "ऊढानूढासमवायेऽनूढैव प्रथमं धनहारिणी" दायक०। ऊढमाख्यत् इति वाक्ये औजढत् त सि० कौ० औडढत् त इत्यन्ये। २कृतवहने धृते त्रि०। अस्य प्रशब्देन प्रा० स० वृद्धिः। प्रौढः "प्रौढकन्यायादोषदर्शनात्" रघु० "अथवहूपहरणे नार्थकस्येति" परिभाषया प्रोढवानित्यत्र न वृद्धिः

**ऊढकङ्कट** पु० ऊढो धृतः कङ्कटः कवचो येन। धृतकवचे वर्म्मिते।

**ऊढि** स्त्री वह-भावे क्तिन् संप्र०। १वहने २विवाहे च। प्र+ऊढि प्रा० स० वृद्धिः। प्रौढिः। ऊढिमाख्यत् औजिढत् त सि० कौ० औडिढत् त इत्यन्ये।

**ऊत** त्रि० वेञ्-क्त संप्र० दीर्घः। १कृतवयने २ग्रथिते। ऊयीतन्तुसन्ताने क्त। ३स्यूते "यस्मिन्नोतञ्च प्रोतञ्च" श्रुतिः। अव-क्त ऊठ्। ४रक्षिते त्रि०।

**ऊति** स्त्री अव-क्तिन् ऊठ्। १रक्षणे। "देवस्य यन्त्यूतयो विविधाः" ऋ० ३,१४,६, "शतमस्माम् सहस्रमूतयः" ४,३१,१०, कर्त्तरि क्तिच् ऊठ्। २रक्षितरि "उरुष्यन्नसमाध्वोदस्मा न ऊतीः" ऋ० ४४,२, "ऊती ऊतयः रक्षन्तः" भा० ऊय-वेञ्-वा क्तिन्। ३सीवने (सेलाइ) ४वयने (वोना) ५चरणे शब्दचि०। ६लीलायाम् "नचास्य कश्चिन्निपुणेन धातुरवैति जन्तुः कुमनीष ऊतीः" भा० १,५,३८, "ऊतीर्लीलाः" श्रीधरः वेञ्-कर्म्मणि कर्त्तरि वा क्तिन् क्तिच् वा। पुराणलक्षणमध्ये ७कर्म्मवासनारूपे तल्लक्षणभेदे। "तस्मादिदं भागवतं पुराणं दशलक्षणम्" इत्युक्ता "अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः" इति दश लक्षणान्युद्दिश्य तेषां लक्षणान्युक्तानि यथा "भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः। ब्रह्मणो गुणवैषम्यात् विसर्गः पौरुषः स्मृतः। स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः। मन्वन्तराणि सद्धर्म्मऊतयः कर्म्मवासनाः। अवतारानुचरितं हरेश्चास्यानुवर्त्तिनाम्। पुंसामीशकथाः प्रोक्ताः नानाख्यानोपबृंहिताः। निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः। मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः। आभासस्य निरोधस्य यतोऽस्त्यध्यवसीयते। स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते" भाग० २,१०,२,८ "कर्म्मणां वासनाः ऊयन्ते कर्मभिः सन्तन्यन्ते इत्यूतय यद्वा हृद्यर्थात् संश्लेषार्थाद्वा वयतेर्धातोरिदं रूपम्। ऊयन्ते कर्मभिर्बध्यन्ते संश्लिष्यन्ते वा ऊतयः" श्रीधरः

**ऊधन्** न० ऊधस्+पृषो० सस्य नः। स्त्रीपशोः दुग्धाधारस्थाने (मेड़) "वत्सो न मातरुप सर्ज्यूधनि" ऋ० ९,६९,१। "यदा पीतासो अंशवो गावो न दुह्र ऊधभिः" ८,९,१९। "प्र धेनवः सिस्रते वृष्ण ऊध्नः" ऋ० ४,२२,६।

**ऊधर** न० ऊधस्+पृ० सस्य रः। स्त्रीगव्यादेः ऊधसि (मेड़) "ऊधर्नग्ना ऊरन्ते" ऋ० ८,२,१२।

**ऊधस्** न० उन्द-क्लेदने असुन् किच्च दीर्घः। स्त्रीगव्यादेः दुग्धाधारे स्थाने (मेड़) "गवामूधस्सु वक्षणासु" ऋ० १०,४९,१०।

"यदेव स्त्रियै स्तनावाप्यायेते ऊधः पशूनाम्" शत० ब्रा० २,५,१,५। अस्य बहु० स०अनङ् समा० ङीप्। पीनोघ्नी घटोघ्नी। "भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि" रघुः। अस्त्रियान्तु न कुण्डोधं धैनुकम्" सि०कौ०। अनन्तत्वेनैवोपपत्तौ अनङ्विधानं समासे सान्तप्रयोगवारणार्थम्। समासान्तविधेरनित्यत्वात् क्वचिन्न "मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम्। अभिनन्द्य स तां राजन्नन्दिनीं गाधिनन्दनः" भा० आ०१७५ अ०। आर्षत्वाद्वा तथा प्रयोगः। लोके तु न तथा। तत्र भवः शरीरावयवत्वात् यत्। ऊधस्य तद्भवे दुग्धे न०। "ऊधस्यमिच्छामि तवोपभोक्तुम्" रघुः। प्राशस्त्ये मतुप् मस्य वः ङीप्। ऊधस्वती प्रशस्तोधोयुक्तायां गवि। "सिषिचुःस्म व्रजान् गावः पयसोधस्वतीर्मुदा" भा० १,१०,५। ऊधसे हितम् गवादि० यत् अनङ् च। ऊधन्य ऊधसोहिते द्रव्यभेदे, यद्भोजने आपीनं पीनं भवति तस्मिन् द्रव्ये त्रि०। २रात्रौ निरु० तस्याश्च हि मकरकरसम्पर्केण क्लेदयोगात्तथात्वम्।

**ऊन** परिहाणे अदन्तचुरा० उभ० सक० सेट्। ऊनयति ते औनिनत् त लुङि वा चङ् औनयीत् औनयिष्ट। ऊनः ऊनितः। "मा त्वायतोजरितुर्माम्ननयोः" ऋ० १,५,२,२।

**ऊन** त्रि० ऊन-हानौ अच्। १हीने, २असंपूर्णे च। "ऊनं न सत्वेष्वधिकोबबाधे" "किञ्चिदूनमनूनर्द्धेः शरदामयुतं ययौ" रघुः। "ऊने दद्याद्गुरुहनेव यावत् सर्व्वलघुर्भवेत्" ह० र०। "ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः" मनुः "ऊनं वाप्यधिकं वापि लिखेद्यो राजशासनम्" याज्ञ०। ऊनार्थशब्दयोगे तृतीया। एकेनोनः। ऊनार्थकशब्देन वा तृतीयास०। माषेणोनः माषोनः कलोनः कलयोनः। एकोनविंशतिः एकोनत्रिंशत् एकोनचत्वारिंशत् एकोनपञ्चाशत् एकोनषष्टिः एकोनसप्ततिः एकोनाशीतिः एकोननवतिः एकोनशतम्। तत्तत्संख्याया एकैकोनसंख्यायाम्। एवं द्व्यूनविंशत्यादयोपि अष्टादशादिसंख्यासु। संख्यासु एकत्वस्य प्रथमोपस्थितत्वात् एकशब्दाप्रयोगेऽपि एकत्वेनैवोनत्वावगमात् ऊनविंशत्यादिशब्दानामेकोनविंशत्यादीनां बोधकत्वम्। "एकेन द्वाभ्यामित्यूनके निवृतः" सर्वानु०।

**ऊनचत्वारिंश** त्रि० ऊनचत्वारिंशतः पूरणः डट्। ऊनचत्वारिंशत्संख्यापूरणे एवमूनविंश ऊनत्रिंश ऊनपञ्चाशत्यादयः तत्तत्संख्यापूरणेषु। स्त्रियां ङीप्। तत्रार्थे तमप्। ऊनचारिंशत्तम तदर्थे। एवमूनविंशतितमादयस्तत्तत्संख्यापूरणेषु स्त्रियां ङीप्।

**ऊवध्य** न० ऊ-ईषदर्थे वध्यं जीर्णम्। ईषज्जीर्णे तृणादौ "यदूवध्यमुदरस्यापयाति" ऋ० १,१६२,१० "ऊवध्यम् अजीर्णं तृणादि" भा० "अपामतिं दुर्मतिं बाधमाना ऊवध्यं वातं सब्वं तदारात्" यज०१९,८४, "ऊवध्यमामाशयगतम् वेददी०। २तत्स्थाने च "एतद्वोऽत्र तद्वरध्वमिति सर्पेभ्योयत्तत्राशगूवध्यं यावत्तु तं भवति तद्धरन्ति सर्पाः" आश्व० गृ० ४,८,२६। अस्य अन्तःस्थ व मध्यत्वमित्येके।

**ऊवध्यगोह** पु० ऊवध्यस्य गोहः प्रच्छादनं यत्र। आन्त्रप्रच्छादनस्थाने। "सव्यावृतः शामितोबध्यगोहचात्वालोत्करास्तावान्" आश्व० गृ० श्रौ० ५,३,१६, "ऊवध्य गोहोनाम आन्त्रप्रच्छादनस्थानम्" नारा० वृ०। [याञ्च।

**ऊम्** अव्य० ऊय-मुक्। १रोषोक्तौ, २प्रश्ने, ३निन्दायां, ४स्पर्द्धा-

**ऊम** न० अव-मन् कित् ऊठ् च। नगरभेदे उज्ज्वलद०। कर्त्तरि मन्। २रक्षितरि त्रि०। "परि व ऊमेभ्यः सिञ्चता मधु" ऋ० १०,३२,५, "ऊमेभ्यो रक्षितृभ्यः" भा०। भावे मन्। ३रक्षणे न०। "ये मर्त्यं पृतनयान्तमूमैः" १,१६९,७, "ऊमैः अत्यरक्षणैः" भा०। उज्ज्वलदत्तस्तु तस्य वा० ह्रस्व प्रकल्प्य उमाशब्दमाह। स च उमाशब्दार्थे। वेदोक्तपम् यदि वाऽवतेः रूपमुभयथापि वा० ह्रस्व इति बोध्यम्।

**ऊय** तन्तुसन्ताने भ्वा० ईदित् आत्म० स क० सेट्। ऊयते औयिष्ट। ईदित्त्वात् निष्ठायां नेट् ऊतः ऊतवान् ऊतिः

**ऊररी** अव्य० ऊय-बा० ररीक्। १अङ्गीकारे, २विस्तारे च। क्वि गतिस० ऊररीकृत्य। क्त ऊररीकृत अङ्गीकृते विस्तीर्णे च त्रि०। घञ् ऊररीकारः अङ्गीकारे विस्तारे च पु०।

**ऊरव्य** पुंस्त्री ऊरौ भवः शरीरावयवत्वात् यत्। १वैश्ये तज्जातिस्त्रियां टाप् योपधत्वात् न ङीप्। वैश्यानां ब्रह्मण ऊरुजातत्वञ्च "ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत" यजु० ३१,११, उक्तेः "लोकानां स विवृद्ध्यर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्" मनूक्तेश्च। तस्य वृत्तिरपि तत्रोक्ता। "मुखबाहूरुपज्जानां पृथक् कार्य्याण्यतन्द्रितः" इत्युपक्रम्य "पशूनां रक्षणं दानमिज्याध्ययनमेव च। वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च"। २ऊरुभवमात्रे त्रि०।

**ऊरी** अव्य० ऊय-बा० रीक्। १अङ्गीकारे, २विस्तारे च।

ऊर्य्यादि० छ्वि गतिसमासादि ऊररीवत् द्रष्टव्यम् ।

**ऊरु** पु० ऊर्णूयते आच्छाद्यते ऊर्णु-कर्मणि कु नुलोपश्च । जानूपरिभागे तस्य वस्त्रादिभिराच्छादनीयत्वात् तथात्वम् । "नितम्बनारीपरिधानधूननस्फुटागसाप्यूरुषु लोलचक्षुषः" "करभकरोरुभिरूरुभिर्दधानैः" माघः । "कदली कदली, करभः करभः करिराजकरः करिराजकरः । भुवनत्रितये न बिभर्त्ति तुलामिदमूरुयुगं न चमूरुदृशः" प्रसन्नरा० । "धात्रीकराभ्यां करभोपमोरुः" "भुजमूर्द्धोरुबाहुल्या-देकोऽपि धनदानुजः" रघुः अस्य उपमानपूर्व्वकत्वे उत्त-रपदस्यस्य बहु०स०स्त्रियाम् ऊङ् । करभोरूः "करभोरु ! रतिप्रान्ते द्वितीये पश्चमेऽप्यहम्" विद्यासुन्द० संहितश-फलक्षणवामपूर्वकस्यापि ऊङ् । संहितोरूः सम्यग्हितो-रुका इत्यर्थः शफाविव संश्लिष्टौ ऊरू यस्याः शफोरूः । लक्षणयुक्तावूरू यस्याः लक्षणोरूः । वामौ मनोहरौ ऊरू यस्याः वामोरूः "लसन्तो चलशफरीविघट्टितो-रुर्वामोरुरतिशयमाप विभ्रमस्य" किरा० । सहितसह-पूर्व्वकस्यापि तादृशस्य ऊङ् । सहितौ हितयुतौ ऊरू यस्याः सहितोरूः । भारं सहेते सहावूरू यस्याः सहोरूः । ऊरौ भवः शरीरावयवत्वात् यत् । ऊरव्य ऊरुभवे वैश्ये पुंस्त्री तद्भवमात्रे त्रि० । स्वाङ्गतयाऽस्मात् निष्ठान्तात् बहु०स०स्त्रियां ङीष् । ऊरुभिन्नी ।

**ऊरुग्राह** पु० ऊरू गृह्णाति स्तभ्नाति ग्रह-अण् उप०स० । ऊरुस्तम्भरोगे ऊरुस्तम्भशब्दे विवृतिः । "ऊरुग्रा-हगृहीताश्च केचित्तत्राभवन् भुवि" भा०द्रो०१४६ अ० ।

**ऊरुज** पुंस्त्री ऊरोर्जायते जन-ड । वैश्ये स्त्रियां जातित्वात् ङीष् । २ ऊरुजातमात्रे त्रि० ऊरुजातोरुजन्मादयोऽप्यत्र । ३ भृगुवंश्ये और्व्वे ऋषिभेदे पु० तस्य ऊरुतोजन्मकथा भा० आ०१७८,७९ पु० "कृतवीर्य्य इति ख्यातो बभूव पृथिवी-पतिः । याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभः । स तानग्रभुजस्तात ! धान्येन च धनेन च । सोमान्ते तर्पया-मास विपुलेन विशाम्पते ! । तस्मिन्नृपतिशार्दूले स्वर्यातेऽथ कथञ्चन । बभूव तत्कुलेयानां द्रव्यकार्य्यमुपस्थितम् । भृगू-णान्तु धनं ज्ञात्वा राजानः सर्व्व एव ते । याचिष्णवो-ऽभिजग्मुस्तांस्तो भार्गवसत्तमान् । भूमौ तु निदधुः केचित् भृगवो धनमक्षयम् । ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम् । भृगवस्तु ददुः केचित्तेषां वित्तं यथेप्सितम् । क्षत्रियाणां तदा तात ! कारणान्तरदर्श-नात् । ततो महीतलं तात ! क्षत्रियेण यदृच्छया । खन-ताधिगतं वित्तं केनचिद्भृगुवेश्मनि । तद्वित्तं ददृशुः सर्वे समेताः क्षत्रियर्षभाः । अवमन्य ततः क्रोधाद्भृगूं-स्तांश्छरणागतान् । निजघ्नुः परमेष्वासाः सर्वांस्तान्नि-शितैः शरैः । आगर्भादवकृन्तन्तश्चेरुः सर्वां वसुन्धराम् । तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा । भृगुपत्न्यो गिरिं दुर्गं हिमवन्तं प्रपेदिरे । तासामन्यतमा गर्भं भ-याद्दध्रे महौजसम् । ऊरुणैकेन वामोरुर्भर्त्तुः कुलवि-वृद्धये । तद्गर्भमुपलभ्याशु ब्राह्मण्यास्तु भयार्दिता । गत्वैका कथयामास क्षत्रियाणामुपह्वरे । ततस्ते क्ष-त्रिया जग्मुस्तं गर्भं हन्तुमुद्यताः । ददृशुर्ब्राह्मणीं तेऽथ दीप्यमानां स्वतेजसा । अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह । मुष्णन् दृष्टीः क्षत्रियाणां म-ध्याह्न इव भास्करः । ततश्चक्षुर्विहीनास्ते गिरिदुर्गेषु बभ्रमुः । ततस्ते मोहमापन्ना राजानो नष्टदृष्टयः । ब्रा-ह्मणीं शरणं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम् । ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः । ज्योतिःप्रहीणा दुः-खार्त्ताः शान्तार्च्चिष इवाग्नयः । भगवत्याः प्रसादेन गच्छेत् क्षत्रं सचक्षुषम् । उपरम्य च गच्छेम सहिताः पापकर्मणः । सपुत्रा त्वं प्रसादं नः कर्त्तुमर्हसि शो-भने ! । पुनर्दृष्टिप्रदानेन राज्ञः सन्त्रातुमर्हसि । ब्राह्म-ण्युवाच । नाहं गृह्णामि वस्ताता ! दृष्टीर्नास्मि रुषान्विता । अयन्तु भार्गवो नूनमूरुजः कुपितोऽद्य वः । तेन चक्षूंषि वस्ताता ! व्यक्तं कोपान्महात्मना । स्मरता निहतान् बन्धूनादत्तानि न संशयः । गर्भानपि यदा नूनं भृगूणां घ्नत पुत्रकाः ! । तदायमूरुणा गर्भो मया वर्षशतं धृतः । षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव ह । विवेश भृगुवं-शस्य भूयः प्रियचिकीर्षया । सोऽयं पितृवधाद्व्यक्तं क्रोधाद्वो हन्तुमिच्छति । तेजसा तस्य दिव्येन चक्षूंषि मुषितानि वः । तमिमं ताता । याचध्वमौर्वं मम सुतो-त्तमम् । अयं वः प्रणिपातेन तुष्टो दृष्टीः प्रमोक्ष्यति । वसिष्ठ उवाच । एवमुक्तास्ततः सर्वे राजानस्ते तमूरुजम् । ऊचुः प्रसीदेति तदा प्रसादञ्च चकार सः । अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः । स और्व इति वि-प्रर्षिरूरुं भित्त्वा व्यजायत । चक्षूंषि प्रतिलभ्या च प्र-तिजग्मुस्ततो नृपाः" ।

**ऊरुदघ्न** त्रि० ऊरु+"प्रमाणे द्वयसज्दघ्नञ्मात्रचः" "प्रथमश्च द्वितीयस्य ऊर्द्धमाने मतौ मम" वार्त्तिकोक्तेः ऊर्द्धमाने दघ्नच् । ऊरुपर्य्यन्तोर्द्धमाना-न्विते खातादौ । "यावानुद्वाङ्कः पुरुषस्तावत् क्षत्रियस्य

कुर्य्यात् गुल्फदघ्नं ब्राह्मणस्योपस्थदघ्नं स्त्रिया ऊरुदघ्नं वैश्यस्याष्ठीवद्घ्नं शूद्रस्यैवंवीर्य्या ह्येते" शत॰ब्रा॰ १३,८,३,११। "ऊरुदघ्नो द्वितीयोजानुदघ्नस्तृतीयः १२,२,१,२। अत्रार्थे द्वयसच् तत्परिमाणे उभयत्र स्त्रियां ङीप्।

**ऊरुपर्व्वन्** पु॰ ऊर्वोः पर्व्वेव। जानुनि (हांटु)।

**ऊररी** अव्य॰ऊय-ररीक्।१अङ्गीकारे २विस्तारे च ऊर्य्यादि॰ गतित्वात् कृञि स॰। ऊररीकृत्य। घञ्। ऊररीकारः अङ्गीकारे विस्तारे च पु॰। क्त। ऊररीकृत अङ्गीकृते विस्तीर्णे च त्रि॰।

**ऊरुस्तम्भ** पु॰ऊरू स्तभ्नाति स्तम्भ—अण् उप॰स॰। १रोगभेदे स च रोगः भावप्र॰ सनिदानपूर्व्वरूपादिर्दर्शितः यथा "शीतोष्णद्रवसंशुष्ककगुरुस्निग्धैर्निषेवितैः। जीर्णाजीर्णतयायाससंक्षोभस्वप्नजागरैः। सश्लेष्ममेदःपवनः साममत्यर्थसञ्चितम्। अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते। सक्थ्यस्थिनी प्रपूर्य्यान्तः श्लेष्मणा स्तिमितेन सः। तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ। परकीयाविव गुरू स्याताम् अतिशयव्यथौ। ध्यानाङ्गमर्द्दस्तैमित्यतन्द्राच्छर्द्द्यरुचिज्वरैः। संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः। तमूरुस्तम्भमित्याहुराढ्यवातमथापरे" "प्राग्रूपं तस्य निद्रा ऽतिध्यानं स्तिमितता ज्वरः। रोमहर्षोऽरुचिश्छर्द्दिर्जङ्घोर्वोः सदनं तथा। वातशङ्किभिरज्ञानात्तत्र स्यात् स्नेहनात् पुनः। पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा। जङ्घोरुग्लानिरत्यर्थं शश्वदादाहवेदना। पदं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च। संस्थाने पीड़ने गत्यां चालने चाप्यनीश्वरः। अन्यनेयौ हि सम्भग्नावूरुपादौ च मन्यते। यदा दाहार्त्तितोदाद्यै वेपनः पुरुषो भवेत्। ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम्" अन्यथा दाहाद्युक्तोपद्रवरहितं तमपि नवमुत्पन्नमात्रं साधयेत्। सात्त्विकभावेन २ऊर्वोःस्तम्भे च। "करिणीवोरुस्तम्भविघ्नता" काद॰।

**ऊर्ज्ज** बलाधाने जीवने वा अदन्तचु॰ पक्षे भ्वा॰अक॰ तत्करणे सक॰ सेट्। ऊर्ज्जयत्। नाभयो वाजिनमूर्जयन्ति' ऋ॰९,८६,४, "यो ह्येवान्नमत्ति स प्राणिति तमूर्ज्जयति" शत॰ब्रा॰७,५,१,१८, "तां वो देवाःसुमतिमूर्ज्जयन्तीमिषमश्याम" ऋ॰५,४१,१८।

**ऊर्ज्ज्** स्त्री ऊर्ज्ज—भावे क्विप्।१बले। करणे क्विप्।२अन्ने न॰। ३अमृतरसाभिधेयेऽन्नस्य अत्यन्तसारभूते रसभेदे स्त्री "विश्वेदेवा यामूर्ज्जं मदन्ति" ऋ॰७,४९,४, "यास्त ऊर्ज्जस्तन्वः सम्बभूवुः" अथ॰१२,१,१२, इह पृथिव्याः सम्बोधनेन तस्या विकारान्नस्यांशत्वमूर्जास्तक्तम्। "स ऊर्जमुपजीवतीति" वृ॰ उ॰ "ऊर्ज्जं स्वधिति सूनृम्" ऋ॰ २,२०, "उर्गस्याङ्गिरस्यूर्णम्रदा ऊर्ज्जं मयि धेहि" यजु॰४,४०, "ऊर्क् अन्नरसरूपा" वेददी॰ऊर्ज्जं बलं धेहि इत्यर्थः "अन्नमूलं बलं पुंसाम्" इत्युक्तेः अन्नरसस्य बलाधायकत्वम्। "तमःसमूहाकृतिमप्यशेषादूर्जा जयन्तं प्रथितप्रकाशान्"भट्टिः ऊर्ज्जा बलेन "बलमूर्ज्जश्च यच्छति"मनुः अत्र बलोर्जोर्भेदोदैहिकमानसिकत्वाभ्यां शारीरिकं बलमूर्क् इति बोध्यम्। ४जले स्त्री। "ऊर्जो नपातं स हि नायमस्मयुः" यजु॰२७,४४, ऊर्क् शब्देनाप उच्यन्ते अद्भ्यो वृक्षाजायन्ते ततोऽग्निः इत्यग्नेरप्पौत्रत्वम्। वेददी॰। "ऊर्ज्जांपते पाहि" यजु॰२७,४२।

**ऊर्ज्ज** पु॰ऊर्जति रसादिकं सोमोऽत्राधारे अच्। १कार्त्तिके मासि तस्य शरदृतोरुत्तरावयवत्वात् तत्र सोमेन रसवीर्य्याधिक्यवर्द्धनेन तथात्वम्। "इषोर्जौ शरत्" इत्युपक्रम्य अयने विभज्य च "तयोर्दक्षिणं वर्षाशरद्धेमन्तास्तेषु भगवानाप्यायते सोमोऽम्ललवणमधुररसा बलवन्तो भवन्त्युत्तरोत्तरं च सर्व्वप्राणिनां बलमभिवर्द्धते" सुश्रुते शरदृतोरन्तिमस्य कार्त्तिकस्य उत्तरोत्तरबलाधिक्याभिधानेनास्य तथात्वम्। करणे अच् घञ् वा सेट्कत्वान्न कुत्वम्। २उत्साहे। भावे अच् घञ् वा। ३बले ४जीवने च। करणे अच् घञ् वा। ५जले न॰ "ऊर्जं वहन्तीरमृतं घृतं पयः कीलालम्" यजु॰ २,३४। जलस्योर्जाधायकतात् अन्नस्य जलाधीनतयैव बलहेतुत्वाच्च तथात्वम् "ऊर्जसन! ऊर्ज्जं धाः" ऋ॰६,४,४, "ऊर्जस्य सने! अन्नस्य दातः!" भा॰ "ऊर्जाद उत यज्ञियासः" ऋ॰१०,५३,४। ऊर्जादः अन्नादाः भा॰ "अत्र ऊर्जशब्दःअन्नगतं रसमभिधत्ते तेन तदाधायकत्वात् तथात्वम्। "तदच्चितर्पणादेष लभेतोर्जमसंशयम्" सुश्रु॰ कर्त्तरि अच्। ६बलान्विते त्रि॰ "कृतजगत्त्रयभूर्जमतङ्गजम्" माघः।

**ऊर्ज्जयोनि** पु॰ ऋषिभेदे "ऊर्ज्जयोनिरुदापेक्षी नारदोऽपि महानृषिः" भा॰ अनु॰४अ॰।

**ऊर्ज्जव्य** पु॰राजभेदे "सिषक्तु न ऊर्ज्जव्यस्य पुष्टेः" ऋ॰५,४१,२०, ऊर्ज्जव्यस्य एतन्नामकस्य राज्ञः" भा॰

**ऊर्ज्जस्** न॰ ऊर्ज्ज—असुन्। १उत्साहातिशयाधायके बले २अन्नरसभेदे च। ततोऽस्त्यर्थे विनि ऊर्ज्जस्विन्, बलच् ऊ-

र्जस्वल, मतुप् मस्य वः। ऊर्ज्जस्वत्। तद्वति त्रि॰ तत्र विन्यन्तस्य मतुबन्तस्य च स्त्रियां ङीप्। "ऊर्ज्जस्वन्तं हविषोदस्त भागम्" ऋ॰ १०,५१,८, "ऊर्ज्जस्वती चासि पयस्वती च" यजु॰ १,२७, "ऊर्जस्वन्तं मन्यमानम् आत्मानं भगवानजः" भाग॰ ३,२०,४२, "ऊर्ज्जस्वलं हस्तितुरङ्ग मेतत्" भट्टिः "ओङ्कारमूर्ज्जस्वलमात्मदेहम्" रघुः "ऊर्ज्जस्विन्य ऊर्ज्जमेधाश्च यज्ञे" भा॰ अनु॰ ७६ अ॰। "अन्नमूर्ज्जस्करं लोके दत्त्वोर्ज्जस्वी भवेन्नरः" भा॰ अनु॰ ११२अ॰ ऊर्जः करोति। ऊर्जस्+कृ—अच् इत॰। अस्ततायमानरसाधायके त्रि॰। "ऊर्ज्जस्करान् हव्यवाहान्" भा॰ व॰ २२२अ॰।

**ऊर्जा** स्त्री भ्वा॰ ऊर्ज—भावे अ। १बले २उत्साहे ३अन्नरसविकारे ४वृद्धौ च। ३ऊर्ज्जास्त्यस्य मतुप् मस्य वः। ऊर्जावत् बलान्विते वृद्धिमति च त्रि॰ स्त्रियां ङीप्। "ऊर्जावतीं महापुण्यां मधुमतीं त्रिवर्त्मगाम्" भा॰ अनु॰ २६ अ॰।

**ऊर्ज्जित** त्रि॰ ऊर्ज्ज-कर्त्तरि क्त। १बलान्विते २वृद्धियुक्ते च। "मारुकं च धनुरूर्ज्जितं दधत्" रघुः। "विनिहत्य बलमूर्ज्जितश्रीः" माघः। भावे क्त। ३बले ४सामर्थ्ये ५उत्साहे च न॰। "उपपत्तिमदूर्ज्जिताश्रयम्" किरा॰ णिच् क्त। कृतवृद्धौ ६वर्द्धिते त्रि॰। "हिमकरोमकरोर्ज्जितकेतनम्" रघुः।

**ऊर्ण** न॰ ऊर्णा अस्त्यस्य कारणत्वेन अर्श॰ अच्। मेषलोमरचितवस्त्रादौ "ऊर्णञ्च राङ्कवं चैव कीटजं पट्टजं तथा। कुटीकृतं तथैवात्र कमलानां सहस्रशः। श्लक्ष्णं वस्त्रमकार्पासमाविकं मृदु चाजिनम्" भा॰ स॰ ५०अ॰। २मेषलोम्नि स्त्री। "माऋक्षोर्णावलयिनि पुरः पावकस्योच्छिखस्य" रघुः "कार्पासकीटजोर्णानां द्विशफैकशफस्य च" मनुः। ३ललाटस्थचिह्नभेदे ऊर्णाशब्दे उदा॰। स च चक्रवर्त्तित्वसूचकः भ्रूद्वयमध्यगत मृणालतन्तुसूक्ष्मांशुनिभः प्रदक्षिणावर्त्तः। नरलक्षणशब्दे वक्ष्यते।

**ऊर्णनाभ** पु॰ ऊर्णं नाभवत्। (माकडसा) १लूतायाम् "यस्तूर्णनाभ इव तन्तुभिः प्रधानजैः" श्वा॰ उ॰। गोत्रप्रवर्त्तके २ऋषिभेदे ततः अपत्ये शिवा॰ अण्। और्णनाभ तदपत्ये पुंस्त्री। स्त्रियां ङीप्। तस्य परिशीलितोदेशः राजन्या॰ वुञ्। और्णनाभक तच्छीलितदेशे। समासान्तविधेरनित्यत्वात् क्वचित् अच् न। "मायारेव विना सृष्टिरूर्णनाभेरपीष्यते। न च निःसाधनः कर्त्ता कश्चित् सृजति किञ्चन" शब्दा॰ धृतवाक्यम्। "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति" मुण्डकोप॰।

**ऊर्णम्रदस्** त्रि॰ ऊर्णमिव ऊर्णानिर्म्मितवस्त्रमिव म्रदीयः अतिशयेन मृदु वेदे म्रदीयस्+नि॰ ईयसोरीयोलोपः। ऊर्णतुल्यातिमृदौ "ऊर्णम्रदा युवतिर्दक्षिणावतः" ऋ॰ १०, १८,१०, "ऊर्णम्रदसं त्वा स्तृणामि" यजु॰ २,२, "ऊर्णम्राङ्गिरस्यूर्णम्रदा ऊर्जं मयि धेहि ४,१०। अत्र मृदुत्वेनोर्णाया उपमानतोक्तिः काश्मीरदेशजस्य (पशम) प्रसिद्धस्य आविकलोमस्य एव ऊर्णत्वं तस्यैवातिमृदुत्वात्।

**ऊर्णवाभि** पु॰ ऊर्णनाभिः पृ॰ परोक्षे वा नस्य वः। (माकड़सा)। लूतायां "यथोर्णवाभिस्तन्तुनोच्चरेत्" शत॰ ब्रा॰ १४,५,१,२३।

**ऊर्णामय** ऊर्णा+विकारे मयट्। मेषलोमविकारे सूत्रादौ "ऊर्णामयं कौतुकहस्तसूत्रम्" कुमा॰।

**ऊर्णायु** त्रि॰ ऊर्णा—अस्त्यर्थे युस् सित्त्वात् भत्वाभावेन न आतो लोपः। १ऊर्णाविशिष्टे "हंसमूर्णायुं वरुणस्य नाभिम्" यजु॰ १३,५० "ऊर्णायुमूर्णावन्तम्" वेददी॰। २गन्धर्वभेदे "ऊर्णायुश्चित्रसेनश्च हाहा हुहूश्च भारत! हरिवं॰ १२८ अ॰ "बहुभिः सह गन्धर्वैः प्रागास्यत च तुम्बुरुः। महाश्रुतिश्चित्रशिरा ऊर्णायुतनयस्तथा" भा॰ २६१ अ॰। "सोमदा नाम गन्धर्वी ऊर्णायुदुहिताऽभवत्" रामाय॰।

**ऊर्णावत** त्रि॰ ऊर्णा अस्त्यर्थे वा॰ वनच्। ऊर्णायुक्ते। "अग्नावेः इममूर्णायुमित्यूर्णावतं हृत्येतद्वरुणस्य नाभिम्" शत॰ ब्रा॰ ७,५,२,३५।

**ऊर्णास्तुक** त्रि॰ अस्तीति विभक्तिप्रतिरूपकम् अव्ययम् ऊर्णास्त्यत्र बा॰ जक। ऊर्णायुक्ते "ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः" आश्व॰ गृ॰ १,७,१७,

**ऊर्णु** आच्छादने अदा॰ उभ॰ सक॰ सेट्। ऊर्णौति ऊर्णोति ऊर्णुतः ऊर्णुवन्ति ऊर्णुते। ऊर्णुयात् ऊर्णुवीत। ऊर्णौतु ऊर्णोतु ऊर्णुहि ऊर्णुताम्। और्णौत् और्णोत्। और्णुत। और्णवीत् और्णावीत् और्णुवीत् और्ण(र्णा)(र्णु)विष्ट ऊर्णुनाव ऊर्णुनुवतुः। ऊर्णुनुविरे। ऊर्णु(र्ण)विता। ऊर्णूयात् ऊर्णु(र्णु)विषीष्ट। ऊर्ण(र्णु)विष्यति ते और्णु(र्ण)विष्यत् त। ऊर्णुवन् ऊर्णुवानः ऊर्णुतः। "स द्यामौर्णोदन्तरिक्षम्" अथ॰ ७,१,२, "ऊर्णुनाव दिशः शस्त्रैः" "दृष्ट्वोर्णुवानान् ककुभो बलौघान्" भट्टिः "ऊर्णुवा-

मिर्यद्योर्णुते" भा० २,६,२७,। सनि ऊर्णुनूषति ते ऊर्णुनुविषति ते ऊर्णुनविषति ते ।

अप+अपहृतावरणे "अपोद्दता अपोर्णुवन्तो अस्थुः" ऋ० १ १६०,६, "अपोर्णुवन्तः अपगतनिरसनवन्तः" भा०।

अभि+आभिमुख्येन आच्छादने । "अभ्यूर्णोति यन्नग्नं भिषक्ति" ऋ० ८,७६,२, [ २,१४,२

आ— सम्यगाच्छादने । "इन्द्रं सोमैरोर्णुत जूर्णुवस्त्रैः" ऋ०

प्र— प्रच्छादने । प्रौर्णुवन् शरवर्षेण तानपौहोशियाचरः" । "प्रोर्णुवन्तं दिशोबाणैः" भट्टिः ।

वि—विगतावरणे प्रकाशने । "सवितर्व्यूर्णुषेऽनुचीना" ऋ०४, ५४,२, "व्यूर्णुषे प्रकाशयसि" भा०

**ऊर्द्द** उर्द्द धातुवत् ।

**ऊर्द्द** त्रि० ऊर्द्द—अच् । क्रीड़ायुक्ते स्त्रियां गौ० ङीष् ।

**ऊर्द्दर** न० ऊर्ज्जा बलेन दृणाति दृ—"ऊर्ज्जि दृणातेरलचौ पूर्व्वान्त्यलोपश्च" उणा० अल् अच् वा ऊर्ज्जोऽन्त्यलोपश्च ३त० । १शूरे २राक्षसे च उज्ज्वल० । उद्दीर्य्यम् पूर्य्यम् उद् दृ-अच् पृषो० उद जरादेशः । धान्याधारभेदे कुसूले माधवः । "ऊर्द्दरं पृणता यवेनेदम्" ऋ० २,१४,११ । उद्दर्दीर्य्यम् ऊर्द्दरं कुसूलम्" भा० ।

**ऊर्द्ध(र्द्ध्व)** त्रि० उद्-हाङ्-ड पृषो० ऊरादेशः । १उच्चे २उपरि ३उपरिवने च "प्रबोधयत्यूर्द्ध्वमुखैर्मयूखैः" कुमा० "नीलोर्द्धरेखाशबलेन शंसन्" । "व्यक्तोर्द्धरेखाभ्रुकुटीर्वहद्भिः" "गङ्गेवोर्द्धप्रवर्त्तिनी" रघुः । ४उत्पाटिते ऊर्द्धकचः हेम० । ५अनुपविष्टे दण्डायमाने "आसीनः ऊर्द्धः प्रह्वो वा नियमोयत्र नेदृशः" छन्दो० "ऊर्द्ध्वः अनुपविष्टः" आ०त० रघु० । ६उत्तमे "ऊर्द्धग्रावाणः" ऋ० ३,५४,१२ । ऊर्द्धग्रावाणः सोमाभिषवार्थमुद्यतग्रावाणः भा० । ह्वयतेर्वा ड तेन सम्बकारत्वमपि तत्रार्थे

**ऊर्द्ध(र्द्ध्व)क** पु० ऊर्द्धः सन् कायति शब्दायते । मृदङ्गभेदे स च गोपुच्छवदाकारस्थितात्पपरिमितः मुखेऽष्टाङ्गुलः ऊर्द्ध्वं धृत्वा वाद्यते । "ऊर्द्धकोगोपुच्छसमस्थितोऽष्टाङ्गुलो मुखे । धृत्वोर्द्ध्वं वाद्यते" शब्दार्थचिन्तोक्तेः । "हरीतक्याकृतिस्त्वङ्गस्तथालिङ्गोयवाकृतिः । ऊर्द्धकोदण्डतुल्यः स्यात् मुरजाभेदतोमताः" शब्दचि० ।

**ऊर्द्ध(र्द्ध्व)कच** त्रि० ऊर्द्धा उत्पाटिता कचा यस्य । विकचे हेम० स्त्रियां स्वाङ्गत्वात् वा ङीष् ।

**ऊर्द्ध(र्द्ध्व)कण्ठ** त्रि० ऊर्द्ध्वः कण्ठोऽस्य । १उन्नतकन्धरे स्त्रियां वा ङीष् । २महाशतावरीलतायां स्त्री ङीप् राजनि० ।

**ऊर्द्ध(र्द्ध्व)कर्म्मन्** न० ऊर्द्ध्वं ऊर्द्धदेशप्राप्त्यर्थं कर्म क्रिया । उत्थानक्रियायाम् "उदोऽनूर्द्धकर्मणि" पा० । ऊर्द्धचेष्टोर्द्धक्रियादयोऽप्यत्र । बहु०स० । तत्कर्म्मवति त्रि० स्त्रियां वा डाप् ।

**ऊर्द्धकाय** पु०न० । ऊर्द्ध्वं कायस्य एकदे ३त० । देहस्योर्द्धभागे

**ऊर्द्धकेतु** त्रि० ऊर्द्ध्वः उच्छ्रितः केतुर्यस्य यत्र वा । १उच्छ्रितध्वजे राजादौ तथाभूतपुर्य्यां स्त्री । २जनकवंश्ये नृपभेदे पु० । "ऊर्द्धकेतुःसनद्वाजादजोऽथ पुरजित्सुतः" भाग० ६,१३,११ ।

**ऊर्द्धकेश** पु० ऊर्द्ध्वः केश इव कुशाग्रं यस्य । "ऊर्द्धकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः" स्मृत्युक्ते कुशमयब्राह्मणे । उद्यतायकेशयुक्ते त्रि० स्त्रियां वा ङीष्

**ऊर्द्धग** त्रि० ऊर्द्ध्वं गच्छति गम—ड । १उपरिगते । "भवा मृत्योर्माथमस्मुच्चदूर्द्धगम्" कुमा० शरांशाशीविषाकारानूर्द्ध्वगान् दीप्ततेजसः" भा० व० २२अ० । ऊर्द्धगतदेहस्यवायुकृते २रोगभेदे "ऊर्द्धगे रक्तपित्ते च शीतमम्बः प्रशस्यते" सुश्रु० "तस्योर्द्धगोऽनिलः कार्श्यं दौर्बल्यं पाण्डुगात्रता" सुश्रु० । सर्वेषामुपरिगतत्वात् ३परमेश्वरे पु० "ऊर्द्ध्वगः सत्पथाचारः" विष्णुस० । "सर्वेषामुपरि तिष्ठन्नूर्द्ध्वगः" शा०भा० । ऊर्द्धगतिशालिनि ४धार्म्मिके त्रि० "धर्म्मेण गमनमूर्द्धमधस्ताद्भवत्यधर्म्मेण" सां०का० धर्म्मेणोर्द्धगत्यभिधानात् धार्म्मिकस्य तथात्वम् । ऊर्द्धगतादयोऽप्यत्र । ५ऊर्द्धगतियुक्ते उत्थायिनि त्रि० ।

**ऊर्द्धगति** स्त्री० ऊर्द्ध्वं गतिः । १ऊर्द्धगमने । यथा स्वभावादेः यथोक्तं सुश्रु० "उष्णतीक्ष्णरूक्षसरलघुविशदं रूपगुणबहुलमीषच्चवणं कटुकरसप्रायम् विशेषतश्चोर्द्धगतिस्वभावमिति तैजसं समूहनपचनदारणतापप्रकाशनप्रभावर्ण्णकरमिति" । ऊर्द्धज्वलनादयोऽप्यत्र । "भ्रमणं रेचनं स्पन्दनोर्द्धज्वलनमेव च । तिर्य्यग्गमनमप्यत्र गमनादेव लभ्यते" भाषा० । "प्रसिद्धमूर्द्धज्वलनं हविर्भुजः" माघः ऊर्द्धगतिश्च लाघवातिशयेन भवति सत्वस्य च लघुत्वामूर्द्धगतिहेतुत्वमुक्तम्" सा०का० "सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकञ्चलञ्च रजः" । "तत्र कार्योद्गमने हेतुर्लाघवं गौरवप्रतिद्वन्द्वि, यतोऽग्नेरूर्द्धज्वलनं भवति" सा०कौ० । २ऊर्द्धलोके स्वर्गादौ गमने च तद्धेतुः धर्म्मः "धर्मेण गमनमूर्द्धमिति" सा०का०उक्तेः "ऊर्द्ध्वं गच्छन्ति सत्वस्थाः" इति गीतोक्तेश्च सात्विकभावमात्रस्यापि तद्धेतुत्वम् । ऊर्द्धम् देहात् ३उत्क्रमणे । ऊर्द्ध्वं गतिर्यस्य ४ऊर्द्धगामिनि त्रि० ।

**ऊर्द्धगपुर** न० कर्म० । अम्बरस्थपुरे खपुरे हरिश्चन्द्रपुरे त्रिका० । हरिश्चन्द्रशब्दे तत्पुरस्योर्द्धत्वं वक्ष्यते । २त्रिपुरासुरपुरे च तत्पुरस्याम्बरस्थत्वमुक्तम् हरिवं० २२४ अ० यथा

"त्रिपुरं पुरुषव्याघ्र ! हृहृहातुसमीरितम् । विक्रामति नभोमध्ये मेघवृन्दमिवोत्थितम् । प्राकारेण महद्धेन काञ्चनेन विराजता । मणिभिश्च प्रकाशद्भिः सर्वरत्नैश्च तोरणैः । बभासे नभसो मध्ये श्रिया परमया ज्वलत् । गन्धर्वाणामिवोदग्रं कर्म्मणा साधितं पुरम् । वाजिनः पक्षसंयुक्ता वहन्ति बलदर्पिताः । पुरं प्रभाकरं श्रेष्ठं मनोभिः कामचारिणः । धावन्तो हेषमाणाश्च विक्रमैः प्राक्संस्थितैः । आह्वयन्त इवाकाशं खुरैः शष्पदलप्रभैः । वायुवेगसमैर्वेगैः कम्पयन्त इवाम्बरम् । सर्वतः समदृश्यन्त चक्षुर्भिर्विदितात्मभिः । ऋषिभिर्ज्वलनप्रख्यैस्तपसा दग्धकिल्विषैः । गीतवादित्रबहुलं गन्धर्वनगरोपमम् । चित्रायुधसमाकीर्णैः प्रतप्तकनकप्रभैः । भवनैर्बहुवर्णैश्च पांशुभिः समलङ्कृतैः । देवेन्द्रभवनाकारैः शुशुभे तन्महाद्युति । प्रासादाग्रैः प्रवृद्धैश्च कैलासशिखरप्रभैः । शुशुभे दैत्यनगरं बहुसूर्य्यमिवाम्बरम् । चयाट्टालकसम्पन्नं तप्तकाञ्चनसप्रभम् । क्ष्वेडितोत्कुष्टबहुलं सिंहनादविनादितम् । बभौ वल्गुजनाकीर्णं वनं चैत्ररथं यथा । समुद्गतपताकं तद्ध्वजैश्च विराजितम् । रराज त्रिपुरं राजन् ! महाविद्युदिवाम्बरे" ।

**ऊर्द्धचरण** पु० ऊर्द्ध ऊर्द्धस्थः चरणोऽस्य । १तपस्विभेदे ऊर्द्धपादादयोऽप्यत्र । २अष्टपादे शरभे च तस्याष्टानां पादानां मध्ये चतुर्णामूर्द्धस्थत्वात् तथात्वम् ।

**ऊर्द्धजानु** त्रि० ऊर्द्धमुच्चम् जानु यस्य । उच्चजानुके वा कप् ऊर्द्धजानुक तदर्थे । कबभावपक्षे वा जानुनोज्ञुः ऊर्द्धज्ञु तदर्थे "क्षणमथमनुभूय स्वप्नमूर्द्धज्ञुरेव" माघः अत्रार्थे ऊर्द्धज्ञः इति द्विरूपकोषः पृषो० साधु ।

**ऊर्द्धथा** अव्य० ऊर्द्ध+था० थाल् । ऊर्द्धप्रकारे ऊर्द्ध इत्यर्थे च "प्र यस्य दोधवदूर्ध्वथाऽभूत्" ऋ० १०,२२,१ ।

**ऊर्द्धदंष्ट्रकेश** पु० ऊर्द्ध दंष्ट्रकाणामुन्नतदंष्ट्राणां भूतानामीशः । १महादेवे "नमोर्द्धदंष्ट्रकेशाय शुष्कायावतताय च । विलोहिताय धूम्राय नीलग्रीवाय वै नमः" भा० शा० २८६ अ० नमोर्द्धेत्यत्र "सैषदाशरथी रामः" इति वत् पादपूरणाय सन्धिः ।

**ऊर्द्धदृष्टि** स्त्री ऊर्द्धा भ्रुवोर्मध्यस्था दृष्टिः । उपासनाङ्गे योगार्थं भ्रुवोरन्तरालस्थदृष्टौ २ऊर्द्धालुचित्तदृष्टौ च ऊर्द्धा दृष्टिरस्य बहु० । ३तादृशदृष्टियुते ४ऊर्द्धालुचित्तदृष्टियुक्ते च ऊर्द्धनेत्रोर्द्धदृगादयोऽप्यत्र ।

**ऊर्द्धदेव** पु० ऊर्द्ध उच्चो देव. । १पञ्चमेश्वरे २विष्णौ शब्दरत्ना० ।

**ऊर्द्धदेह** पु० ऊर्द्धःमरणोत्तरं भावी देहः । मरणोत्तरभाविनि देहे "ऊर्द्धदेहनिमित्तार्थमह दातुं जलाञ्जलीन्" रामा० ऊर्द्धदेहाय साधु "ऊर्द्धन्दमाच्च देहाच्च लोकोत्तरपदस्य च" का० ठञ् । और्द्धदेहिक मरणोत्तरकर्त्तव्ये श्राद्धादौ तच्च कर्म स्मृतिषु प्रसिद्धम् और्द्धदेहिकशब्दे विवृतिः ।

**ऊर्द्धनभस्** पु० ऊर्द्धं नभोयस्य । नभोमध्ये वर्त्तमाने वायौ "स्वाहाकृते ऊर्द्धनभसं मारुतं गच्छतम्" यजु० ६,१६,

**ऊर्द्धन्दम** त्रि० ऊर्द्धम्+दम–अच् । ऊर्द्धस्थे त्रिका० ततो भवाद्यर्थे ठञ् । और्द्धन्दमिक तद्भवादौ त्रि० ।

**ऊर्द्धपात्र** न० ऊर्द्धं नेतव्यं पात्रम् । यज्ञपात्रे उलूखलादौ "सौवर्णरजदीनामूर्द्धपात्रग्रहाश्मनाम्" याज्ञ० "ऊर्द्धपात्रम् यज्ञियोलुखलादि ग्रहादिसाहचर्य्यात्" मिता० ।

**ऊर्द्धपुण्ड्र** पु० ऊर्द्ध ऊर्द्धमुखः पुण्ड्रः इक्षुयष्टिरिव । ललाटस्थे ऊर्द्धमुखे पुण्ड्रेक्षुवत् रेखात्मके तिलकभेदे । तद्धारणे विधिनिषेधादिकं निरूप्यते । "ऊर्द्धपुण्ड्रं मृदा कुर्यात् त्रिपुण्ड्रं भस्मना सदा । तिलकं वै द्विजः कुर्याच्चन्दनेन यदृच्छया" आ० त० पु० । "ऊर्द्धपुण्ड्रं द्विजः कुर्यात् क्षत्रियस्तु त्रिपुण्ड्रकम् । अर्द्धचन्द्रन्तु वैश्यश्च वर्त्तुलं शूद्रयोनिजः" आ० त० ब्रह्मा० पु० । "अशुचिर्वाप्यनाचारो मनसा पापमाचरन् । शुचिरेव भवेन्नित्यमूर्द्धपुण्ड्राङ्कितोनरः" ऊर्द्धपुण्ड्रधरो मर्त्यो म्रियते यत्र कुत्रचित् । श्वपाकोऽपि विमानस्थो मम लोके महीयते" इति ब्रह्मपु० । तद्धारणे वैदिकद्विजातिरिक्तस्यैवाधिकारः यथोक्तं देवीभागवते श्रीनारायणेन "ऊर्द्धपुण्ड्रं त्रिशूलञ्च वर्त्तुलं चतुरस्रकम् । अर्द्धचन्द्रादि वा लिङ्गं वेदनिष्ठो न धारयेत् ! जन्मना लब्धजातिस्तु वेदपन्थानमाश्रितः । पुण्ड्रान्तरं भ्रमाद्वापि ललाटे नैव धारयेत् । ख्यातिकान्त्यादिसिद्ध्यर्थमपि विष्ण्वागमादिषु । स्थितं पुण्ड्रान्तरं नैव धारयेद्वैदिकोजनः" । नि० सि० स्मृतसं० "विष्ण्वागमादितन्त्रेषु दीक्षितानां विधीयते । शङ्खचक्रगदादग्धैरङ्कनं नान्यदेहिनाम् । वेदमार्गैकनिष्ठस्तु मोहेनाप्यङ्कितोयदि । पतत्येव न सन्देहस्तथा पुण्ड्रान्तरादपि । शङ्खचक्राद्यङ्कनं च गीतनृत्यादिकं तथा । एकजातेरयं धर्मो न जातु स्यात् द्विजन्मनः" । "शङ्खचक्रं मृदा यस्तु कुर्य्यात् तप्तायसेन वा । स शूद्रवद्बहिः कार्य्यः सर्व्वस्मा-

द्विजचर्म्मिणः" यथा श्मशानजं काष्ठमनर्हं सर्व्वकर्म्मसु । द्विजस्तु तप्तशङ्खादिलिङ्गाङ्किततनुस्तथा । संभाष्य रौरवं याति यावदिन्द्राश्चतुर्द्दश" इति वृहन्ना० । "शिवकेशवयोरङ्कान् शूलचक्रादिकान् द्विजः । न धारयेत मतिमान् वैदिके वर्त्मनि स्थितः" ततश्च त्रिपुण्ड्रादिधारणविधायकवाक्यं वैदिकेतरद्विजविषयम् शूद्रविषयञ्च । यदपि ब्राह्मणस्य तद्धारणविधानम् "अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेह तप्तमुद्रादिधारणम्" पद्मपु० । "ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः । शङ्खचक्राङ्किततनुस्तुलसीमञ्जरीधरः । गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः" काशी० । तदपि वैदिकेतरविप्रपरम् सर्व्वेषामङ्गत्वात् एवं शास्त्रार्थे स्थितेऽपि कुलाचारात् तस्य सर्व्वैः कर्त्तव्यता । तथैव भारतटीकायां नीलकण्ठेन निर्णीतम् यथा

"श्रोणामेक उदकं गामवाजति मांसमेकः पिंशति सूनया भृतम् आ निम्रुचः शकृदेको अपाभरत् किं स्वित् पुत्रेभ्यः पितरावुपावतुः" श्रुतिः । "अस्यार्थः हे ऋभवः! भवतां मध्ये एकः श्रोणां लक्ष्णां गां मृदं गोपीचन्दनादिरूपां तीर्थनिकटस्थां मुख्यकर्म्मभूतां प्रति उदकं जलं गौणकर्म अवाजति अवगमयति अन्तर्भावितण्यर्थोऽजतिः । श्रोणां गाम् उदकेन मिश्रयतीत्यर्थः श्रोणां गां रक्तचन्दनादिरूपां वा तथा । एकः सूनया हिंसया तत्कर्त्त्रा आभृतं आहृतं मांसं गोरोचनाख्यं पिंशति पिनष्टि उदकेन सह इति शेषः निम्रुचः नितरामस्तं गच्छतो दग्धेन्धनस्याग्नेः सम्बन्धि शकृत् गोमयं शुष्कगोमयोत्थं भस्मेति यावत् अपाभरत् अपाहृतवान् अत्राप्युदकेन सहेति शेषः व्यवहिताश्चेति छन्दसि व्यवहितेनाप्युपसर्गेण क्रियायाः सम्बन्धः । हृग्रहो र्भश्छन्दसीति हस्य भः । एतानि मन्त्रपदानि असंपूर्णार्थत्वात् स्वार्थलाभाय ब्राह्मणमपेक्षन्ते इषे त्वोर्जे त्वेत्यादिमन्त्रवत् तत्र यथा "इषे त्वेति शाखां छिनत्ति ऊर्जे त्वेत्यनुमार्ष्टीति" ब्राह्मणानुसारात् हे शाखे त्वा त्वाम् इषे अन्नाय छिनद्मीति ऊर्जे पशुभ्यः अनुमार्ज्मीति व्याख्यातम् एवमिहापि वासुदेवोपनिषद्ब्राह्मणतन्त्रपुराणोपबृंहणानुसारात् ऊर्द्धपुण्ड्रार्थं लक्ष्णां मृदं जलेन मिश्रयेदिति व्याख्येयं तथा कालाग्निरुद्रबृहज्जाबालाद्युपनिषद्ब्राह्मणतन्त्रपुराणोपबृंहणानुसारात् त्रिपुण्ड्रकर्त्तुः निम्रुचः शकृदपाभरदिति च व्याख्येयम् एवमितरस्यापि पदस्य ब्राह्मणमन्त्रलिङ्गाद्युपबृंहणे स्मृतिभ्यश्चाष्टकाप्रपा विधिवदनुमेयं तथाच श्रोणामिति पदस्य रक्तामिति व्याख्याने सौरशाक्तगाणेशानां रक्तमेव पार्थिवं द्रव्यं पुण्ड्रार्थं तत्तत्तन्त्रे विधीयते वैष्णवानां पीतं शैवानां भस्मेति अनेन तत्तत्पुण्ड्रविशेषोपलक्षिततत्तद्देवताभजनेनापि देवताभावं प्राप्नुवन्तीति विधीयते । केवलवैदिकानां तु श्रोणां लक्ष्णामिति व्याख्यानेन त्रितयस्यापि समुच्चयः "स्नात्वा पुण्ड्रं मृदा कुर्यात् धृत्वा चैव तु भस्मना । देवान् विप्रान् समभ्यर्च्य चन्दनेन समाचरेदिति" स्मृतिभ्यः अत्र गोरोचनाग्रहणं चन्दनाद्यष्टगन्धोपलक्षणार्थम् एतेषां विकल्पसमुच्चयपक्षाणां पितृपैतामहपरंपराक्रमेण व्यवस्थामाह किं स्वित् पुत्रेभ्यः पितरावुपावतुरिति पुत्रहितार्थं यत्किञ्चिद्व्रतं पितरौ माता पितरौ पितृपितामहौ वा उपेत्य स्वीकृत्य अवतुः व्रतं सम्यक् परिपालयामासतुः तदेव तस्य श्रेयः साधनमित्यर्थः एवं सति तीर्थानि यज्ञादयस्तन्त्रमार्गेण सूर्य्याद्यन्यतमोपास्तिः केवलवैदिकता चेति देवताभावप्राप्तिसाधनानि" इत्यन्तेन ।

श्राद्धकर्म्मणि तु त्रिपुण्ड्रादौ विधिनिषेधयोर्व्यवस्था नि० सि० उक्ता यथा ।

"जपे होमे तथा दाने स्वाध्याये पितृकर्म्मणि । तत्सर्व्वं नश्यति क्षिप्रमूर्द्धपुण्ड्रविनाकृतमिति" हेमाद्रावुक्तेः । "यज्ञो दानं जपो होमः स्वाध्यायः पितृकर्म च । वृथा भवति विप्रेन्द्राः! ऊर्द्धपुण्ड्रविनाकृतमिति" वृहन्नारदीयात् "ऊर्द्धञ्च तिलकं कुर्य्याद्दैवे पित्र्ये च कर्म्मणीति" वृद्धपराशरोक्तेश्च ऊर्द्धपुण्ड्रधारणं पित्र्ये विहितम् । अन्ये तु "ऊर्द्धपुण्ड्रो द्विजातीनामग्निहोत्रसमो विधिः । श्राद्धकाले च संप्राप्ते कर्त्ता भोक्ता च वर्जयेदिति" "वामहस्ते च ये दर्भा म्बद्धे रङ्गवल्लिस्तथा । ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः" इति संग्रहोक्तेः "ऊर्द्धपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा । श्राद्धकर्त्ता न कुर्व्वीत यावत् पिण्डान्न निर्व्वपेत्" इति विश्वप्रकाशे वचनाच्च न धार्य्यमित्याहुः । अत्र कुलाचारादेव व्यवस्था । अत एव वृहन्नारदीये "ऊर्द्धपुण्ड्रञ्च तुलसीं श्राद्धे नेच्छन्ति केचन" इत्यत्र केचनेत्युक्तम् ऊर्द्धपुण्ड्रविधिः श्राद्धभोक्तृपरः, निषेधः कर्तृपरः इति पृथ्वीचन्द्रः । यत्तु हेमाद्रौ देवलः "ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च । निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिमिति" । तद्भस्मत्रिपुण्ड्रविषयम् । "प्राक्पिण्डदानात् गन्धाद्यैर्नालङ्कुर्य्यात्स्वविग्रहम्" इत्याश्वलायनोक्तेः

पुण्ड्रं वर्त्तुलमित्यपरार्के मदनरत्ने च। पृथ्वीचन्द्रस्तु "पुण्ड्रं त्रिपुण्ड्रम् ऊर्द्धञ्च तिलकं कुर्याच्च कुर्याद्वै त्रिपुण्ड्रकम्। निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकमिति" वृद्धपराशरोक्तेः। भोक्तुस्तिर्य्यग्लपो भवत्येव। "वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा। ऊर्द्धपुण्ड्रं त्रिपुण्ड्रं वा धारयेत्तु प्रयत्नतः" इति व्यासोक्तेरित्याह"। पृथ्वीचन्द्रोदये ब्राह्मे "सहदर्भेण हस्तेन यः कुर्य्यात्तिलकं बुधः। आचम्य स विशुध्येत दर्भत्यागेन चैव हि"।

**ऊर्द्धपृश्नि** पु० ऊर्द्धौ पृश्नयोविन्दवोऽस्य। पशुभेदे। अश्वमेधे तृतीययूपे बन्धनीयमारुतपशुकीर्त्तने "पृश्निस्तिरश्चीनपृश्निरूर्द्धपृश्निस्ते मारुताः" यजु० २४,४,

**ऊर्द्धबर्हिस्** पु० ऊर्द्धं प्रागग्रं बर्हिर्येषाम्। सोमपाख्ये पितृभेदे "स्वाहा पितृभ्य ऊर्द्धबर्हिर्भ्यो धर्मपावभ्यः" यजु० २,१५, "ऊर्द्धबर्हिर्भ्यः सोमपाभ्यः" वेददी०

**ऊर्द्धबाहु** पु० ऊर्द्ध उत्तोलितो बाहुः कर्म्म०। १ऊर्द्धोत्तोलिते बाहौ "तद्यदेनमूर्द्धबाहुमभिषिञ्चति" शत० ५,४,१,१७,। बहु०। २प्रसारितबाहुके त्रि० ऊर्द्धबाहुः प्राङ् प्रष्ट्राव्यूर्द्ध ऊ ष् ण इति" कात्या० १६,२,८, ऊर्द्धबाहुः प्रसारिबाहुः" कर्कः "पञ्चमोरैवतो नाम मनुस्तामससोदरः" इत्युपक्रम्य "हिरण्यरेतावेदशिरा ऊर्द्धबाह्वादयो द्विजाः" इति" भाग० ८,५,२,श्लोकोक्ते ३रैवतमन्वन्तरीयसप्तर्षिभेदे ते च "वेदबाहुर्यदुध्रश्च मुनिर्व्वेदशिरास्तथा। हिरण्यरोमा पर्ज्जन्य ऊर्द्धबाहुश्च सोमजः। सत्यनेत्रस्तथाऽत्रेय एते सप्तर्षयोमताः" हरिवं० ७अ० विशेषत उक्ताः। ऊर्द्धमुत्क्षिप्तो बाहुर्येन। ४तपस्यार्थमूर्द्धोत्क्षिप्तबाहौ तपस्विभेदे।

**ऊर्द्धबुध्न** पु० ऊर्द्धं बुध्नं शिरोऽस्य। ऊर्द्धशिरस्के चमसे "अर्वाग्बिलश्चमस ऊर्द्धबुध्नस्तस्मिन् यशोनिहितं विश्वरूपम्। तस्यासत: सप्त धीराः वागष्टमी ब्रह्मणा संविदानेति" "अर्वाग्बिलश्चमस ऊर्द्धबुध्न इति तच्छिरः एष ह्यर्वाग्बिलश्चमस ऊर्द्धबुध्नस्तस्मिन् यशोनिहितं विश्वरूपमिति प्राणा वै यशोनिहितं विश्वरूपं प्राणानेतदाह तस्यासत: ऋषय: सप्त धीरा इति प्राणा वा ऋषय: प्राणानेतदाह" वृ० उ०। "देहस्य चमसरूपेण रूपकमिदम् अर्वाग्बिलश्चमस ऊर्द्धबुध्नः इदं तच्छिरः चमसाकारं हि तत् कथम्? एष ह्यर्वाग्बिलः मुखस्य बिलरूपत्वात्, शिरसोबुध्नाकारत्वात् ऊर्द्धबुध्नः, तस्मिन् यशोनिहितं विश्वरूपमिति यथा सोमश्चमसे एव तस्मिन् शिरसि विश्वरूपं नानारूपं निहितं भवति, किं पुनस्तद्यशः? प्राणा वै यशोविश्वरूपम्। प्राणाः श्रोत्रादयः सप्त ऋषयः धीराः(श्रोत्रे द्वे नासिके द्वे नेत्रे द्वे रसना चैकेति सप्त) तेषां परिस्पन्दात्मकशब्दादिज्ञानहेतुत्वात्"। ऋषिधातोर्गत्यर्थतया परिस्पन्दात्मकवृत्तिमत्त्वम् ज्ञानहेतुत्वेन धीरत्वमिति बोध्यम्।

**ऊर्द्धभाग** पु० ऊर्द्धः उपरिस्थोभाग एकदेशः कर्म्म०। उपरितनदेशे "ताल्वादिषु सभागेषु ऊर्द्धभागे निष्पन्नोऽजुदात्तः" सि० कौ०।

**ऊर्द्धभाज्** त्रि० ऊर्द्धं भजते भज—ण्वि। १उपरिभागस्थे २ऊर्द्धदेशस्थे वह्निभेदे पु०। "ऊर्द्धभागूर्द्धभाङ् नाम कविः प्राणाश्रितस्तु यः" भा० व० २१८अ० अग्निनामतत्कर्म्मभेदकथने।

**ऊर्द्धम्** अव्य० उद्-ह्वेञ डम् आदेरूरादेशश्च। ऊर्द्धशब्दार्थे। "ऊर्द्धं प्राणाह्युत्क्रामन्ति यूनःस्थविर आयति" "तिष्ठन्नूर्द्धं रजः पिबेत्" मनुः "अधश्चोर्द्धञ्च प्रसृतास्तस्य शाखाः" गीता।

**ऊर्द्ध(र्द्ध्व)मन्थिन्** पु० ऊर्द्धं ब्रह्मचर्य्यादुत्तराश्रमं गार्हस्थ्यादि मथ्नाति मन्थ—णिनि ईत०। नैष्ठिकब्रह्मचारिणि स हि ब्रह्मचर्य्योत्तरगार्हस्थ्याद्याश्रमं त्यजतीति तस्य तथात्वम्। "धर्म्मान् प्रदर्शयितुकामोवातरशनानां श्रमणानामृषीणामूर्द्धमन्थिनां शुक्लया तन्वाऽवततार" भाग० ५,३,२१,

**ऊर्द्ध(र्द्ध्व)मान** न० ऊर्द्धमारोप्य मीयते येन मा-करणे ल्युट्। पलकर्षादिमिते पाषाणादौ(बाटखारा)। तेन हि तुलादावारोपितेन स्वर्णादेर्गुरुत्वमुन्मीयते। भावे ल्युट्। २उच्चतापरिच्छेदकपरिमाणे च "ऊर्द्धमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः" व्या० का०। अयमर्थः। तुलादावारोपितस्य स्वर्णादेर्गुरुत्वमितिःतुलापरकोटिदेशे आरोपाद्यदुन्मीयते तदुन्मानम्। प्रस्थादिना स्वगताभ्यामारोहपरिणाहाभ्यां व्रीह्यादेः सर्वतोमानात् परिमाणम्। आयामोदैर्घ्यं वस्त्रादेर्जलादेश्च मितिर्हस्तदण्डादिना यत् मीयते तत् प्रमाणम्। सर्व्वतः उक्तप्रकारमानत्रयाद्बाह्या बहिर्भूता संख्या द्वित्वादिरित्यर्थः। "प्रमाणे द्वयसज्दघ्नज्मात्रचः" पा० विहितौ द्वयसज्दघ्नचौ प्रत्ययौ ऊर्द्धमानादेव "प्रथमश्च द्वितीयश्च ऊर्द्धमाने मतौ मम" वार्त्तिकोक्तेः।

**ऊर्द्धमुख** त्रि० ऊर्द्धं मुखमस्य। १ऊर्द्धगतप्रथमप्रसरे "प-

बोधयत्यूर्द्धमुखैर्मयूखैः" कुमा०२ऊर्द्धस्थिताग्रभागे "अधो-मुखैरूर्द्धमुखैश्च पत्त्रिभिः" रघुः। ३उन्नमितवदने च स्वाङ्गत्वात् स्त्रियां ङीप्। ऊर्द्धं मुखस्य एक०त०। ४मुखस्योर्द्धभागे न० "दन्तान्तोर्द्धमुखं मरीचद्रुमम्" तन्त्रसा०। नाटकान्यासे मुखस्योर्द्धभागे विन्दोर्न्यस्त-त्वादभेदोपचारात् विन्दुवर्णोद्दृङ्तदर्थः।

ऊर्द्धमूल त्रि०ऊर्द्धं मूलमस्य। १ऊर्द्धस्थितमूलभागे कुशादौ ऊर्द्धः ग्ररादुत्कृष्टः पुरुषोत्तमो मूलमस्य। २संसारे च "ऊर्द्धमूलमधःशाखमश्वत्थं प्राहुरव्ययम्" गीता।

ऊर्द्धरेतस् पु० ऊर्द्धमूर्द्धगं नाधःपतत् रेतो यस्य। १महादेवे, २सनकादिमुनौ ३तपस्विभेदे, ४भीष्मे च। रेतो हि पुंचिह्नेन प्रायः सर्वेषामधो गच्छति यस्य अधोगतिं संरुणद्धि स ऊर्द्धरेता इत्युच्यते। सनकादीनां निवृत्ति-धर्मपरत्वेन नैष्ठिकब्रह्मचारितया तथात्वम् "अष्टाशीति-सहस्राणि ऋषीणामूर्द्धरेतसाम्" भा० स०११अ०। "इत्युक्त्वा चोर्द्धमनयद्रेतोवृषभवाहनः। ऊर्द्धरेताः समभवत् ततः प्रभृति चापि सः" भा०अनु०८४अ०। "ऊर्द्धरेता ऊर्द्धलिङ्ग ऊर्द्धशायी नभःस्थलः" भा०अनु० १७० अ० शिवस्तुतौ। भीष्मस्य च कृतसमावर्त्तनस्यापि पितृकाम्यविवाहार्थं सत्यवतीसमीपे गार्हस्थ्यपरित्याग-प्रतिज्ञानात् तथात्वम् तत्कथा "अद्यप्रभृति मे दाश! ब्रह्मचर्य्यं भविष्यति" भा०आ० १००अ० दृश्या।

ऊर्द्धरोमन् पु०ऊर्द्धानि रोमाण्यस्य। १ऊर्द्धमुखतया विकट-रोम्णि यमदूतादौ "स पाशहस्तांस्त्रीन् दृष्ट्वा पुरुषान् भृशदारुणान्। वक्रतुण्डानूर्द्धरोम्ण आत्मानं नेतुमागतान्" भा० ६,१,२६। २कुशद्वीपसीमापर्वतभेदे च। कुशद्वीप-वर्णने "तेषां वर्षेषु सीमागिरयोनद्यश्चाभिज्ञाताः सप्तैव। चक्रवभ्रुश्चतुःशृङ्गः कपिलश्चित्रकूटोदेवानीक ऊर्द्धरोमा द्रविणः" इति भाग०५,२०,११। ऊर्द्धमुखरोमयुक्ते त्रि०। ३रक्ताक्षमूर्द्धरोमाणं काकजङ्घाक्षिनासिकम्" भा०अनु० ६८ अ०। स्त्रियां वा डाप्।

ऊर्द्धलिङ्ग पु०ऊर्द्धमुत्कृष्टं लिङ्गं चिह्नमस्य। १महादेवे "ऊर्द्ध-लिङ्गं विरूपाक्षमिति" सन्ध्याङ्गमन्त्रः "ऊर्द्धरेता ऊर्द्ध-लिङ्ग ऊर्द्धशायो नभःस्थलः। त्रिजटश्चीरवासाश्च रुद्रः सेनापतिर्विभुः" भा० अनु०१७०।

ऊर्द्धलोक पु० कर्म्म०। स्वर्गे।

ऊर्द्धवात पु०ऊर्द्धगतो वातः। सुश्रुतोक्ते स्वाभाविकगतिरोधेन ऊर्द्धगते वायौ। स च मूत्रादिवेगधारणादभवति यथोक्तं सुश्रु०। "अधश्चोर्द्धञ्च भावानां प्रवृत्तानां स्वभावतः। न वेगान् धारयेद्धीमान् वातादीनां जिजीविषुः"। अधिक-मुदावर्त्तशब्दे ११६१ पृ० उक्तम्। "आटोपशूलौ परिवर्त्तनञ्च सङ्गः पुरीषस्य तथोर्द्धवातम्" सुश्रु० २सप्रमारुतान्त-र्गते परीवहे वायौ तस्य सर्ववायूनामुपरिस्थत्वात् तथा-त्वम् आवहशब्दे विवृतिः।

ऊर्द्धवृत त्रि०ऊर्द्धगत्या वेष्टनेन वृतः। ऊर्द्धमावर्त्तनेनावृते दक्षिणावर्त्तनेनावर्त्तिते सूत्रादौ "कार्पासमुपवीतं स्यात् विप्रस्योर्द्धवृतं त्रिवृत्" मनुः। यथा च दक्षिणावर्त्ति-तस्यैव तथात्वम् तथोपवीतशब्दे उक्तम्।

ऊर्द्धवृहती स्त्री वैदिके छन्दोभेदे। "चतुर्थं वृहती"। इत्युप-क्रम्य "अष्टिनोमध्ये द्वाक्रोविंशारदवृहती त्रिजागतोर्द्ध-वृहती" सर्व्वानु० ५अ०।

ऊर्द्धशायिन् त्रि० ऊर्द्धः सन् शेते शी-णिनि। १उत्तान-शायिबालके। स्त्रियां ङीप्। २महादेवे पु०। ऊर्द्ध-लिङ्गशब्दे उदा०।

ऊर्द्धशोषम् अव्य० ऊर्द्धः सन् शुष्यति ऊर्द्ध+शुष-णमुल्। ऊर्द्धतया शुष्के कषादिषु यथाविध्यनुप्रयोगनियमात् शुषधात्वनुप्रयोग एवास्य साधुत्वम्। "ऊर्द्धशोषं शुष्यति वृक्षः ऊर्द्धः सन् शुष्यतीत्यर्थः" सि०कौ०। "वहोर्द्धशोषं तृणवद्विशुष्कः" भट्टिः।

ऊर्द्धसानु पुंन०कर्म्म०। १पर्वतादीनामुपरिस्थे सानौ। ऊर्द्धं स्नाति सो-नु। २उपर्य्युपर्य्युद्गते "कनिक्रदत् पतयदूर्द्ध-सानुः" ऋ० १,१५२,५। "ऊर्द्धसानुरुपर्य्युपरिसमुच्छ्रयः" भा०।

ऊर्द्धस्थिति स्त्री ऊर्द्धं स्थितिर्येन यस्य वा। १अश्वपृष्ठभागे त्रिका०। २ऊर्द्धस्थे त्रि०। ऊर्द्धं स्थितिः। ३ऊर्द्धस्थाने स्त्री

ऊर्द्धस्रोतस् पु० ऊर्द्धम् ऊर्द्धगतं नाधोगामि स्रोतः रेतसः प्रवाहोऽस्य। १ऊर्द्धरेतसि योगिभेदे स हि उत्पतनशील-सत्वाधिक्येन रेतःप्रवाहमूर्द्धमानयतीति तस्य तथात्वम् सत्वबाहुल्ये एव यथोर्द्धस्रोतस्त्वं तथा सां०कौ० उक्तम् यथा "केचित् खलु सत्वबहुलाः सत्त्वनिकाया यथो-र्द्धस्रोतस इति" ऊर्द्धं स्रोत आहारसञ्चारोऽस्य २वनस्पत्यादिषु "वनस्पत्योषधिलतात्वक्सारवीरुधोद्रुमाः। उत्स्रोतसस्तमःप्रायाः अन्तःस्पर्शाविशेषिणः" भाग० ३, ८,२०, तेषां तथात्वोक्तिः "ऊर्द्धं स्रोत आहारसञ्चारो-येषाम्" श्रीधरः। मूले सिक्तजलादीनां मूलेनैवोर्द्धमाक-र्षणात् तेषामूर्द्धस्रोतस्त्वम्।

**ऊर्द्धायन** त्रि॰ ऊर्द्धमयनं यस्य । १ऊर्द्धगते प्लक्षद्वीपस्थे २वैश्य-वर्णस्थानीये पक्षिभेदे । प्लक्षद्वीपवर्णने अरुणादिसप्तनदी-रुक्ता "यासां जलोपस्पर्शनविधूतरजस्तमसो हंसपतङ्गोर्द्धायनसत्याङ्गाख्यत्वारोवर्णाः" भाग॰५,२०,७ । "हंसादयः पक्षिणः ब्राह्मणादिस्थानीयाः" श्रीधरः । २ऊर्द्धगतौ न॰

**ऊर्द्धाम्नाय** पुं ऊर्द्धमाम्नायते आ+म्ना—कर्म्मणि घञ् । वेद-मार्गातिरिक्तबोधके तन्त्रभेदे

**ऊर्द्धावर्त्त** पु॰ ऊर्द्धमावर्त्ततेऽत्र आ+वृत आधारे घञ् । १अश्वपृष्ठस्थाने त्रिका॰भावे घञ् ६त॰ । २दक्षिणावर्त्ते च

**ऊर्द्धासित** पु॰ऊर्द्धभागपरिभागे असितः कृष्णः आसितो वा । १कारवेल्ले (करेला) त्रिका॰ २ऊर्द्धोपविष्टे त्रि॰ ।

**ऊर्द्धेह** पु॰ऊर्द्धमीहा चेष्टा । उत्थानानुकूलायामूर्द्धचेष्टायाम् "उदोऽनूर्द्धेहे" मुग्ध॰ऊर्द्धेहाथत्र स्त्री ।

**ऊर्म्मि** पुंस्त्री॰ ऋ-मि-अर्त्तेरुच्च । १तरङ्गे, "व्योमगङ्गोर्म्मि-वायुभिः" रघुः "महोर्म्मिभिर्व्याहृतवाक्यिताथैः" २प्रकाशे, ३वेगे, ४वस्त्रसङ्कोचरेखायाम्, ५पीडायाम्, ६उत्कण्ठायाम्, ७बुभुक्षादिषु, षट्सु देहमनःप्राणानां यथायथं धर्म्मेषु ते च "बुभुक्षा च पिपासा च प्राणस्य, मनसः स्मृतौ । शोकमोहौ, शरीरस्य जरामृत्यू षडूर्म्मयः" शा॰ ति॰ विभज्योक्ताः "पङ्क्तीकृतानामश्वानां नमनोन्नमनाकृतिः । अतिवेगसमायुक्ता गतिरूर्म्मिरुदाहृता" वैजयन्त्युक्तलक्षणायाम् ८अश्वगतौ स्त्री "ठर्ण पयोधय इवोर्म्मिभिरापतन्तः" माघः "त्रिपद्भिरूर्म्मीनपरैरिवो-र्म्मिभिः" माघः "पक्षे ऊर्म्मिभिरश्वगतिभिरित्यर्थः ।

ऊर्म्मौ भवः यत् । ऊर्म्म्य ऊर्म्मिभवे त्रि॰रात्रौ स्त्री निरु॰ "तिरस्तमोदृदृश ऊर्म्यास्तु" ऋ॰६,४८,६, "ऊ-र्म्यासु रात्रिषु" भा॰ । रुद्रभेदे पु॰ "नम ऊर्म्याय चाव-न्याय च" यजु॰१६,३१ ।

**ऊर्म्मिका** स्त्री ऊर्म्मिरिव कायति कै—क । १तरङ्गवत् प्रकाश-माने अङ्गुरीयके । स्वार्थे कन् । २तरङ्गादौ च । ३उत्-कण्ठायाम् ४भ्रुङ्गनादे ५वस्त्रभङ्गे च हेम॰

**ऊर्म्मिन्** त्रि॰ऊर्म्मिरस्त्यस्य बा॰ इनि । ऊर्म्मियुक्ते स्त्रियां ङीप् । "सम्मृच्यध्वमृतावरीरूर्म्मिणा मधमत्तमाः" काव्या॰ ४,२,२२, "प्रस्रापयन्त्यूर्म्मिणम्" ऋ॰ ६,६८,६, २समुद्रे पु॰ "ततः सागरमासाद्य कुक्षौ तस्य महो-र्म्मिणः" भा॰व॰२०अ॰ ।

**ऊर्म्मिमत्** त्रि॰ ऊर्म्मिरिव वक्रतास्त्यस्य मतुप् यवा॰ मस्य न वः । १वक्रे । "दोर्भ्यां नीलेव चोर्म्मिमतस्तु जयाह केशेषु नरेन्द्रपत्नीम्" भा॰स॰६५अ॰ २तरङ्गवति च ।

**ऊर्म्मिमालिन्** पु॰ ऊर्म्मिमालाऽस्त्यस्य इनि । समुद्रे "दन्द्र-प्रच्छोर्म्मिरिवोर्म्मिमाली" रघुः

**ऊर्म्मिला** स्त्री लक्ष्मणपत्न्याम् जनकस्यौरस्यां कन्यायाम् "पार्थिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्म्मिलाम्" रघुः

**ऊर्य्यादि** पु॰ पाणिन्युक्ते गतिसंज्ञानिमित्ते शब्दसमूहे-स च गणः ऊरी, उररी, तन्थी, ताली, आताली, वेताली, धूली, धूसी, शकला, संशकला, ध्वंसकला, भ्रंसकला, गुलगुधा, सजूः, फल, फली, विक्ली, आलोष्ठी, केवाली, केवासी, पर्याली, शेवाली, वर्षाली, अत्यूमशा, वश्मशा, मस्मशा, मसमसा, श्रौषट्, वौषट्, वषट्, स्वाहा, स्वधा, बन्धा, प्रादुस्, श्रत्, आविस्, अंत पाठान्तरम् उररी उरीति उरीकृत्य ।

**ऊर्व** पु॰ऊरुः कारणत्वेनास्त्यस्य अर्श॰अच् संज्ञापूर्वकविधेरनि-त्यत्वेन स्वायम्भुववत् न गुणः । १और्व्वे ऋषिभेदे उप-चारात् तज्जाते २वाडवानले "ऊर्व इव प्रथे" ऋ॰१,३,१८, ऊर्वः वाडवानलः भा॰३तद्वति समुद्रे "अपार ऊर्वेऽस्तं दुहानाः" ऋ॰ ३,१,१६, समानमूर्वं नद्यः पृणन्ति" ऋ॰ २,३५,३, ऊर्वः साहश्येनास्त्यस्य अच् । वाडवा-नलतुल्ये ४महति "दिव ऊरुर्वौ अभितः" २,१३,७, "ऊर्वान् महतः" भा॰तत्तुल्ये ५विस्तृते च "महश्चिदग्न एनसो अभीक ऊर्वात् ४,१२,५, "ऊर्वात् विस्तृतात्" भा॰ ।

**ऊर्वङ्ग** न॰ऊरुरिव अङ्गम् यस्य । छत्रिकायाम् शिलीन्ध्रे हारा॰

**ऊर्वशी** स्त्री ऊरुं नारायणोरुं कारणत्वेनाश्नुते अश—अच् ६त॰गौरा॰ङीष् । उर्वश्याम् । पृ॰ अस्य दन्त्यसवत्त्वमपि ।

**ऊर्वष्ठीव** न॰ऊरू च अष्ठीवन्तौ च समा॰ द्वन्द्वः नि॰ । ऊर्वो-रष्ठीवतोश्च समाहारे

**ऊर्वी** स्त्री ऊरुमध्यस्थत्वेनास्त्यस्य अर्श॰अच् स्वायम्भुववत् न गुणः गौरा॰ङीष् । ऊरुमध्यस्थाने "ऊरुमध्ये ऊर्वी नाम तत्र शोणितक्षयात् शक्तिशोषः "ऊर्व्या ऊर्द्धम-धोवङ्क्षणसन्धेरूरुमूले लोहिताक्षमिति" लोहिताक्षि जानुर्व्वौ कूर्चः विटकूर्परा" इति च सुश्रु॰ ।

**ऊर्व्य** पु॰ऊर्वे वाडवानले भवः यत् । अधिष्ठातृतया वाडवानल स्थिते रुद्रे "नम ऊर्व्याय च सूर्व्याय च" यजु॰१६,४,

**ऊर्षा** स्त्री उर—स नि॰ नेट् । देवताडवृणे शब्दच॰ ।

**ऊलुपिन्** पु॰उलुपिन्+पृ॰दीर्घः । १जलजन्तुभेदे २मत्स्यभेदे च

**ऊलूक** पुंस्त्री॰ उल—ऊकच् दीर्घश्च । पेचके स्त्रियां ङीप् ।

**ऊष** पु॰ रुजायाम् भ्वा॰पर॰सक॰सेट् । ऊषति औषीत्

ऊषाम् बभूव आस चकार । ऊषितः व्यूषः ऊषणः ।

**ऊष** पु० ऊष–रुजायां क । १क्षारे, २कर्णरन्ध्रे, ३चन्द्रनाद्रौ च । "कौशेयाविकयोरूषैः" मनुः । "सोषैरुदकगोमूत्रैः शुध्यत्याविककौषिकम्" या० । तत्र चन्द्रनाद्रेः विरहितापकत्वात् कर्णच्छिद्रस्य अल्पजन्त्वादिप्रवेशेन उद्वेगहेतुत्वात् क्षारमृत्तिकाया मलापहारकत्वात् तथात्वम् इति भेदः । ऊषति अन्धकारं मेचकम् वा । ४प्रभाते ५रेतसि न० । तस्य च क्षारवत्तीव्रत्वात् उष्णत्वाच्च तथात्वम् । यथा च रेतस ऊषत्वम् तथाह "रेतो वा ऊषाः प्रजननं तदेनं प्रजनम आभजत्येतत्र वै पितरः प्रजननस्याभक्ता भवन्ति यदेषां प्रजाभवति" शत० ब्रा० १२,८,१,१४ । ५क्षारमृत्तिकायां स्त्री [ शब्दच० ।

**ऊषक** न० ऊषति अन्धकारं मेचकं वा ऊष–ण्वुल । प्रत्यूषे

**ऊषण** न० ऊष–ल्यु । १मरिचे, २पिप्पलीमूले, ३शुण्ठ्याञ्च । (चिता) ४चित्रके पु० । ५पिप्पल्यां ६चव्ये च(चइ)स्त्री । मरीच्यादीनां कटुत्वेन जिह्वोद्वेजकतया तथात्वम् । त्र्यूषणं त्रिकटु शुण्ठी पिप्पली मरिचं च यथाह "विश्वोपकुल्या मरिचं त्र्यूषं त्रिकटु कथ्यते । कटुत्रिकं त्रिकटुकं त्र्यूषणं व्योषमुच्यते । त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान् । गुल्ममेहं च त्वक्स्थौल्यं मेदसा सह पीनसान्" भावप्र० । त्र्यूषणं सकणामूलं कथितं यदुलत्र्यूषणकम् । व्योषस्यैव गुणाः प्रोक्ता अधिकस्तु तदूषणे" भा० प्र० । षडूषणम् । "पिप्पली पिप्पलीमूलम् चव्या चित्रकनागरैः । पञ्चभिः कोलमात्रञ्च पञ्चकोलम् तदुच्यते । पञ्चकोलं समरिचं षडूषणमिहेष्यते" भावप्रकाशः ।

**ऊषर** त्रि० ऊष+मत्वर्थीयो रः, ऊषं क्षारमृत्तिकां राति ददाति कः वा । क्षारमृत्तिकायुक्ते देशे यत्र सुप्तं वीजं न प्ररोहति । "अनूषरमविवदिष्णु भूम" आश्व० स्ट० २,७,२ । आधानाङ्गोषरमृदुपग्रहणम् शत० ब्रा० २,१,१,६ । उक्तम् यथा "अथोषान् सम्भरति । "असौ ह वै द्यौरस्यै पृथिव्या एतान् पशून् प्रददौ तस्मात् पशव्यमूषरमित्याह" । "वर्षुकस्य किमपः कृतोन्नतेरम्बुदस्य परिहार्य्यमूषरम्" माघः । "तत्र विद्या न वप्तव्या शुभं वीजमिवोषरे" मनुः "नचोषरां न निदग्धां महीं दद्यात् कदाचन" भा० अनु० २२४ ।

**ऊषरज** न० ऊषराज्जायते जन–ड । (पाङ्गा) लवणभेदे । तद्गुणादि सुश्रु० "उपसृतं वालुकैलं शैलं मूलाकरोद्भवम्" लवणं विभज्य "लवणं कटुकं क्लेदि तिक्तं पटु चोच्यते" सुश्रु०

**ऊषवत्** त्रि० ऊष–मतुप् मस्य वः । ऊषरस्थाने । स्त्रियां ङीप्

**ऊषा** स्त्री बाणराजसुतायाम् उषाशब्दे तत्कथोक्ता ।

**ऊष्म** पु० ऊष–म । १शीतविरोधिनि स्पर्शे । अर्श–अच् । २तद्वति त्रि० । ३निदाघकाले अमरः ।

**ऊष्मण** त्रि० पामादि० अस्त्यर्थे न । ऊष्मयुक्ते मतुप् मस्य वः ऊष्मवत् तदर्थे त्रि० स्त्रियां ङीप् ।

**ऊष्मण्य** त्रि० ऊष्मा निवारणीयत्वेनास्त्यस्य यत् । ऊष्मनिवारणार्हे "ऊष्मण्या पिधानां चरुणामङ्काः" ऋ० १,१६२,१३ । "ऊष्मण्य ऊष्मनिवारणार्हाणि पात्राणि" भा० ।

**ऊष्मन्** पु० ऊष–मनिन् । १ग्रीष्मे २तेजोद्रव्यस्य सूक्ष्मावयवे (भाप) "भुवा सहोष्माणममुञ्चदूर्द्ध्वगम्" कुमा० "यथाग्नेर्धूम उदयते एवमेषामूष्मोदयते" शत० ब्रा० १, ६,२,१,५ । व्याख्यातेषु शोष्मवायुनोच्चार्य्यमाणेषु शषसहरूपेषु वर्णेषु । "स्वराणामूष्मणाञ्चैव विवृतं करणं मतम्" शिक्षा । "शषसहा ऊष्माणः" सि० कौ० । "सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्याः इन्द्रे बलं ददानीति । सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति" छा० उ० । "सर्वे ऊष्माणोऽग्रस्ता अन्तरप्रवेशिता अनिरस्ता अवहिःप्रक्षिप्ता विवृता विवृतप्रयत्नोच्चारिताः प्रजापतेरात्मानं परिददानि प्रयच्छामि" शा० भा० । "अथ यद्येनमूष्मस्रूपालभेत प्रजापतेः शरणोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयात्" छा० उ० । "स्पर्शस्तस्याभवज्जीवः स्वरोदेह उदाहृतः । ऊष्माणमिन्द्रियाण्याहुरन्तःस्था बलमात्मनः । स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः" भाग० ३,१२,३०, ऊष्माणः शषसह इति चतुष्टयम् अन्तःस्था यरलवाः सप्त स्वराः षड्जादयः विहारेण क्रीडया" श्रीधरः । "खे खानि वायौ निश्वासांस्तेजःसूष्माणमात्मवान् । अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम्" भाग० ७,१२,२४, । अत्र तेज ऊष्माणमिति स्वकारणे लयाभिधानात् तस्य तेजःकार्य्यता गम्यते । सुश्रुते च तस्य तेजःकार्य्यत्वदुक्तं तच्च उष्णशब्दे दर्शितम् । देहस्योष्मा च ब्रह्माग्नि कौक्षेयानलोपाधिकजीवसंयोगेनैव भवति यथोक्तं छा० उ० भाष्ययोः । "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः विजानाति" उप० । "इदं वावेदमेव तद्यदिदमस्मिन् पुरुषेऽन्तर्मध्ये ज्योतिः चक्षुःश्रोत्रग्राह्येण लिङ्गेनोष्णिम्ना शब्देन वावगम्यते । यत्त्वचा स्पर्शरूपेण स्पृश्यते तच्चक्षुषैव । दृढप्रतीतिकरत्वात्त्वचोऽविनाभूतत्वाच्च रूप-

स्पर्शयोः । कथं पुनस्तस्य ज्योतिषो लिङ्गं त्वग्दृष्टिगोचरत्वमापद्यते? इत्याह यत्र यस्मिन् काले एतदिति क्रियाविशेषणं अस्मिन् शरीरे हस्तेनालभ्य संस्पर्शेनोष्णिमानं रूपसहभाविनमुष्णस्पर्शभावं विजानाति स ह्युष्णिमा नामरूपव्याकरणाय देहमनुप्रविष्टस्य चैतन्यात्मज्योतिषो लिङ्गमव्यभिचारात् । न हि जीवन्तमात्मानमूष्णिमा व्यभिचरति ।"उष्ण एव जीविष्यन् शीतो मरिष्यन्निति" हि विज्ञायते । मरणकाले च "तेजः परस्यां देवतायामिति" परेणाविभागत्वोपगमादतोऽसाधारणं लिङ्गमौष्ण्यमग्नेरिव धूमः । अतस्तस्य परस्यैषा दृष्टिः साक्षादिव दर्शनं दर्शनोपाय इत्यर्थः" ।

एतद्वाक्यञ्च कौक्षेयानलोपाधिकजीवाभिन्नब्रह्मपरं तस्यैव ज्योतिःशब्दाभिधेयत्वेन तत्सम्पर्कादेव देहस्यौष्ण्यसम्भवः तदेतत् शा॰सू॰भाष्ययोः समर्थितं यथा"ज्योतिश्चरणाभिधानात्"शा॰सू॰"इदमामनन्ति अथ यदतः परोदिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरिति"तत्र संशयः किमिह ज्योतिःशब्देनादित्यादिकं ज्योतिरभिधीयते ? किं वा पर आत्मेति ? । अर्थान्तरविषयस्यापि शब्दस्य तल्लिङ्गाद्ब्रह्मविषयत्वमुक्तम् इह तल्लिङ्गमेवास्ति नास्ति वेति विचार्यते किन्तावत् प्राप्तं आदित्यादिकमेव ज्योतिःशब्देन परिगृह्यते इति । कुतः? प्रसिद्धेः तमो ज्योतिरिति ह्येतौ शब्दौ परस्परप्रतिद्वन्द्विविषयौ प्रसिद्धौ । चक्षुर्वृत्तेर्निरोधकं शार्वरादिकन्तम उच्यते । तस्याएवानुग्राहकमादित्यादिकं ज्योतिः । तथा दीप्यते इतीयमपि श्रुतिरादित्यादिविषया प्रसिद्धा न हि रूपादिहीनं ब्रह्म दीप्यत इति मुख्यां श्रुतिमर्हति । किञ्च द्युमर्यादत्वश्रुतेश्च । न हि चराचरबीजस्य ब्रह्मणः सर्वात्मकस्य द्यौर्मर्यादा युक्ता कार्यस्य तु ज्योतिषः परिच्छिन्नस्य द्यौर्मर्यादा स्यात् "परोदिवो ज्योतिरिति"च ब्राह्मणम् ननु कार्यस्यापि ज्योतिषः सर्वत्र गम्यमानत्वात् मर्यादावत्त्वमसमञ्जसं अस्तु तर्ह्यत्रिवृत्कृतन्तेजः प्रथमजम् । न अत्रिवृत्कृतस्य तेजसः प्रयोजनाभावादिति । इदमेव प्रयोजनं यदुपास्यत्वमिति चेन्न प्रयोजनान्तरप्रयुक्तस्यैवादित्यादेरुपास्यत्वदर्शनात् । "तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति" चाविशेषश्रुतेः । नचात्रिवृत्कृतस्यापि तेजसो द्युमर्यादत्वं प्रसिद्धम् । अस्तु तर्हि त्रिवृत्कृतमेव तेजो ज्योतिःशब्दम् । नन्वूक्तमर्वागपि दिवो गम्यतेऽग्न्यादिकं ज्योतिरिति, नैष दोषः सर्वत्रापि गम्यमानस्य ज्योतिषः परोदिव इत्युपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते न तु निःप्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पनाभागिनी । सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विति चाधारबहुत्वश्रुतिः कार्ये ज्योतिष्युपपद्यतेतराम् । "इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिरिति"च कौक्षेये ज्योतिषि परं ज्योतिरध्यस्यमानं दृश्यते सारूप्यनिमित्ताश्चाध्यासा भवन्ति यथा"तस्य भूरिति शिरः एकं शिर एकमेतदक्षरमिति" कौक्षेयस्य तु ज्योतिषः प्रसिद्धमब्रह्मत्वं तस्यैषा दृष्टिस्तस्यैषा श्रुतिरिति चौष्ण्यघोषविशिष्टत्वश्रवणात्"तदेतद्दृष्टञ्च श्रुतञ्चेत्युपासीतेति"च श्रुतेः ।"चक्षुष्यश्च श्रुतो भवतीति य एवं वेदेति" चाल्पफलश्रवणादब्रह्मत्वं महते हि फलाय ब्रह्मोपासनमिष्यते । नचान्यदपि किञ्चित् स्ववाक्ये प्राणाकाशवत् ज्योतिषोस्ति ब्रह्मलिङ्गम् । न च पूर्वस्मिन्नपि वाक्ये ब्रह्म निर्दिष्टमस्ति । "गायत्री वा इदं सर्वं भूतमिति" छन्दोनिर्देशात् । अथापि कथञ्चित् पूर्वस्मिन् वाक्ये ब्रह्म निर्दिष्टं स्यात् एवमपि न तस्येह प्रत्यभिज्ञानमस्ति । तत्र हि त्रिपादस्यामृतं दिवीति द्यौरधिकरणत्वेन श्रूयते । अत्र पुनः परोदिवो ज्योतिरिति द्यौर्मर्यादात्वेन । तस्मात् प्राकृतं ज्योतिरिह ग्राह्यमित्येवं प्राप्ते ब्रूमः । ज्योतिरिह ब्रह्म ग्राह्यं कुतः ? चरणाभिधानात् पादाभिधानादित्यर्थः । पूर्वस्मिन् हि वाक्ये चतुष्पाद् ब्रह्म निर्दिष्टं "तावानस्य महिमा ततोज्यायांश्च पुरुषः पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि" इत्यनेन मन्त्रेण । तत्र यत् चतुष्पदो ब्रह्मणः त्रिपादमृतं द्युसम्बन्धिरूपं निर्दिष्टं तदेवेह द्युसम्बन्धान्निर्दिष्टमिति प्रत्यभिज्ञायते तत् परित्यज्य प्राकृतं ज्योतिः कल्पयतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येतायाम् । न केवलं ज्योतिर्वाक्य एव ब्रह्मानुवृत्तिः परस्यामपि हि शाण्डिल्य विद्यायामनुवर्तिष्यते ब्रह्म । तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम् । यत्तूक्तं ज्योतिर्दीप्यते इति चैतौ शब्दौ कार्ये ज्योतिषि प्रसिद्धाविति, नायन्दोषः प्रकरणाद्ब्रह्मावगमे सत्यनयोः शब्दयोरविशेषकत्वात् दीप्यमान कार्यज्योतिरुपलक्षिते ब्रह्मण्यपि प्रयोगसम्भवात् "येन सूर्यस्तपति तेजसेद्धः" इति च मन्त्रवर्णात् । यद्वा नायं ज्योतिःशब्दश्चक्षुर्वृत्तेरेवानुग्राहके तेजसि वर्त्तते । अन्यत्रापि प्रयोगदर्शनात् "वाचैवायं ज्योतिषास्ते" मनोज्योतिर्जुषतामिति" च । तस्माद्यद्यत्कस्य चिदवभासकन्तत्तत्

ज्योतिःशब्देनाभिधीयते। तथा सति ब्रह्मणोपि चैतन्यस्वरूपस्य समस्तजगदवभासहेतुत्वादुपपन्नो ज्योतिशब्दः "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्व्वमिदं विभाति"। "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इत्यादिश्रुतिभ्यश्च। यदप्युक्तं द्युमर्यादत्वं सर्व्वगतस्य ब्रह्मणो नोपपद्यते इति। अत्रोच्यते सर्व्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते। ननूक्तं निःप्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना नोपपद्यत इति। नायं दोषः निष्प्रदेशस्यापि ब्रह्मण उपाधिविशेषसम्बन्धात् प्रदेशविशेषकल्पनोपपत्तेः। तथा हि आदित्ये चक्षुषि हृदय इति प्रदेशविशेषसम्बन्धीनि ब्रह्मण उपासनानि श्रूयन्ते। एतेन "विश्वतः पृष्ठेषित्याधारबहुत्वमुपपादितम्। यदप्येतदुक्तं औष्ण्यघोषाभ्यामनुमिते कौक्षेये कार्य्ये ज्योतिष्यध्यस्यमानत्वात् परमपि दिवः कार्य्यं ज्योतिरेवेति। तदप्ययुक्तं परस्यापि ब्रह्मणो नामादि प्रतीकत्ववत् कौक्षेयज्योतिःप्रतीकत्वोपपत्तेः। "दृष्टञ्च श्रुतञ्चेत्युपासीतेति" तु प्रतीकद्वारकं दृष्टत्वं श्रुतत्वञ्च भविष्यति। यदप्यल्पफलश्रवणान्न ब्रह्मेति तदप्यनुपपन्नम्। न हि इयते फलाय ब्रह्माश्रयणीयमियते नेति नियमे हेतुरस्ति। तत्र हि निरस्तसर्वविशेषसम्बन्धं परं ब्रह्मात्मत्वेनोपदिश्यते तत्रैवरूपमेव फलं मोक्ष इत्यवगम्यते यत्र तु गुणविशेषसम्बन्धं प्रतीकविशेषसम्बन्धं वा ब्रह्मोपदिश्यते तत्र संसारगोचराण्येवोच्चावचानि फलानि दृश्यन्ते "अन्नादो वसुदानो विन्दते वसु य एवं वेद" इत्याद्यासु श्रुतिषु। यद्यपि न स्ववाक्ये किञ्चित् ज्योतिषो ब्रह्मलिङ्गमस्ति तथापि पूर्वस्मिन् वाक्ये दृश्यमानं ग्रहीतव्यं भवति। तदुक्तं सूत्रकारेण ज्योतिश्चरणाभिधानादिति। कथं पुनर्वाक्यान्तरगतेन ब्रह्मसन्निधानेन ज्योतिःश्रुतिः स्वविषयात् प्रच्याव्य शक्या व्यावर्त्तयितुम्। नैष दोषः। "यदतः परो दिवो ज्योतिरिति" प्रथमतरपठितेन यच्छब्देन सर्व्वनाम्ना द्युसम्बन्धात् प्रत्यभिज्ञायमाने पूर्व्ववाक्यनिर्दिष्टे ब्रह्मणि स्वसामर्थ्येन परामृष्टे सत्यर्थात् ज्योतिःशब्दस्यापि तद्विषयत्वोपपत्तेः। तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम्" भा०। श्रुत्यन्तरे तु कौक्षेयाग्निसंबन्धात् देहस्यौष्ण्यमुक्तम्। तत्रापि कौक्षेयाग्नेरपि जीवस्थितिनियतत्वात् जीवाधीनत्वं कल्प्यमित्याकरे प्रपञ्चः

ऊह वितर्के भ्वादि० आत्म० सक० सेट्। ऊहते औहिष्ट। ऊहां बभूव आस चक्रे। ऊहितः ऊहमानः ऊहितम् ऊहः। "औहिष्ट तान् वीतविरुद्धबुद्धीन्" भट्टिः। कर्मणि ऊह्यते औहि णिच्। ऊहयति ते औजिहत् त। "रूपेण तावौजिहतां नृसिंहौ" भट्टिः अस्य ऊहशब्दे वक्ष्यमाणेऽर्थेऽपि वृत्तिः। परस्मैपदित्वमप्यस्य ऊहति, इत्यु-हेतद्विदैवतं द्विविक्षु" कात्या० १०१,२,१,१७,यादौ उपसर्गात् परस्यादेर्ह्रस्वः। समुह्यते

अति—एकदेशस्थितस्य तद्विपरीतदेशप्रेरणे "द्रोणकलसमत्यूह्य" कात्या० ९,२,१६। "अत्यूह्य प्राञ्चमेव प्रतीच्यां प्रेर्य्य" कर्कः।

अधि+अञ्जने। "अग्निमग्नीत् संमृड्ढीति यथाधुरमध्यूहेदेवं तद्यत् पूर्वमाघार माघार वत्यध्यूह्य हि धुरं युञ्जन्ति" शत० ब्रा० १,४,४,१३,

अप+निरसने दूरीकरणे। "अपोह्य बर्हींषि" कात्या० २,२,१७, "एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः" मनुः। "सर्वान् रसानपोहेत कृतान्नं च तिलैः सह" मनुः प्रतिकूलतर्केण प्रकृततर्कापनयने अपोहः।

अप+वि+निवारणे "व्यपोहत शरांस्तस्य सर्वानेव धनञ्जयः" भा० आ० ४७०। [३८। "अभ्यूहति आच्छादयति" भा०।

अभि+आच्छादने। "अथाङ्गारैरभ्यूहति" शत० ब्रा० १,२,४, [१,२,५,१७।

उत्+उत्कर्षणे। "रशनामुदुह्य प्राच्याम्" कात्या० १,६,१। "उदुह्य उत्कृष्य" कर्कः निरसने च। "तेन प्राचोऽङ्गारानुदूहति" शत० ब्रा० १,२,१,४।

प्रति+उद्+प्रक्षेपणे "दक्षिणतः पुरीषं प्रत्यूहेत" शत० ब्रा०

वि+उद्+अन्ते विवर्द्धने। "चतुङ्गुलमुभयतो बाह्यतो व्युदूहति" शत० ब्रा० १०२,१,४। व्युदूहति अन्ते विवर्द्धयति" भा०

उप+अधस्तात् प्रवेशने। "पश्चाच्छ्याकुपोहति" कात्या० २,५,४। "उपोहति अधस्तात् प्रवेशयति" कर्कः।

निर्+निष्काश्य ग्रहणे पृथक्करणे च। गार्हपत्यादुष्णं भस्म निरूह्य" शत० ब्रा० १३,४,२,२। "शिरः श्रियमस्य निरौहत्" शत० ब्रा० १०,५,४। वपान्तेऽनपेक्षमध्वर्युः प्रेष्यति निरूहैतं गर्भमिति" "निरूह्यमाणमभिमन्त्रयीत" कात्या० २५,१०,४,५। निरूह्यमाणं पृथक्क्रियमाणम् वेददी० निरूहणम्

परि+परितः खातपूरणे। "अरत्निमात्रे संतसे वोपदधातिपर्यूहति च" कात्या० ८,५,२५। पर्यूहति पांशुभिरन्तरालं परितः पूरयति" कर्कः। पर्य्यूहणम्।

प्र+देशान्तरनयने । "प्रोह्य द्रोणकलशम्" कात्या० ९,५, १४ । "प्रोह्य प्रेष्ये" कर्कः । पातने च "कृष्णाजिने प्रोहति" कात्या० २,५,७ । प्र+ऊहस्यादेर्वृद्धिः प्रौहः ।

प्रति+उपरिस्थापने । "दीक्षितोरौ दक्षिणे प्रत्युह्य वासः" कात्या० ७,८,२२ । "प्रत्युह्य उपरि स्थापयित्वा" वेददी० निवारणे च । "प्रत्यौहतमश्विनो मृत्युमस्मात्" यजु० २७, "प्रत्यौहतं न्यवर्त्तयताम्" वेददी० ।

वि+विपरीततया प्रेरणे "जुहूपभृतौ व्यूहति" कात्या० ३,५, १७ । सैन्यानां सन्निवेशविशेषेण स्थापने च । व्यूहः । "प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक् परीक्षयेत्" मनुः । समवेतभवने । "योऽवेक्षियते ऋतवोऽस्य व्युह्यन्ते" शत० ब्रा० ८,७,१२,११,

प्रति-वि प्रतिरूपव्यूहकरणे । "वार्हस्पत्यविधिं कृत्वा प्रतिव्यूह्य निशाचरम्" भा०व०२८४अ० । विरोधाचरणे च प्रत्यूहः

सम्- समवेतभवने संहनने सम्यक्प्रापणे च । "यद्गमव्यन्ता द्वा जना स्वर्यन्ता समूहसि" ऋ० १,१२१,२, समूहसि प्रापयसि भा० । सम्यक्पूरणे "अङ्गारैरभि समूहति" शत० ब्रा० ४,५,२,१८, समूहः

उप+सम् समीपे सङ्कोचने "पश्चादुपसमूहन्ते" शत० ब्रा० १०, २,१,१, "समूहन्ते मध्यभागसमीपे सङ्कोचयन्ति" भा० ।

परि-सम्-समन्तात् परिमार्जने "वेदिं परिसमुह्य" कात्या० २,६,१२, "परिसमुह्य सम्मार्ज्य" कर्कः । "अग्निं प्रतिष्ठाप्यान्वाधाय परिसमुह्य" आश्व० गृ० १,३,१, "परिसमूहनं नाम चाग्नेः समन्तात् परिमार्जनम्" नारा० वृ० ।

समूढव्यूढनिरूढादिकमस्यैव रूपमाहुः केचित् । अस्य-सेट्कत्वात् ऊहित इत्यादय एव स्युः । अतस्तानि उपसृष्टस्य वहतेरेव रूपाणीत्यन्ये । अस्यैव आङ्पूर्व्वकस्य ओहते इति रूपम् । न तु केवलस्य, दीर्घोपधत्वेन गुणाप्रसक्तेः ।

ऊह पु० ऊह-घञ् । १वितर्के आगमाविरोधिना तर्केण आगमार्थस्य संशयपूर्व्वं पक्षनिवारणपूर्व्वकोत्तरपक्षव्यवस्थापनेन निर्णयरूपे २परीक्षणे, ३अनन्वितार्थकविभक्तिलिङ्गत्यागपूर्व्वके अन्वययोग्यविभक्त्यादिकल्पने, यथा पार्वणे सौम्यास इति बहुवचनमन्वितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्य इत्येकवचनान्ततया कल्पनम् । ४पदान्तरेणाकाङ्क्षापूरणार्थे अध्याहारे च । "ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्व्वोऽङ्कुशस्त्रिविधः" सा० का० उक्ते तारारूये ५सिद्धिभेदे "ऊहस्तर्कः आगमाविरोधिन्यायेनागमार्थपरीक्षणम् । संशयपूर्व्वं पक्षनिराकरणेनोत्तरपक्षव्यवस्थापनं तदिदं मननमाचक्षते आगमिनः सा तृतीया सिद्धिस्तारमुच्यते" सा० कौ० "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" का० वार्त्ति० । "ऊहः खल्वपि न सर्व्वैर्लिङ्गैर्न च सर्व्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदितास्ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः तान्नावैयाकरणः शक्नोति विपरिणमयितुम् तस्मादध्येयं व्याकरणम्" महाभा० । "ऊहः खल्वपीति । इह यस्मिन् यागे इतिकर्त्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः येन चोपजीव्यते सा विकृतिः प्रकृतिवद्विकृतिः कर्त्तव्येति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणस्सम्यग्विजानाति । तत्र अग्नेर्मन्त्रोऽस्ति "अग्नये त्वा जुष्टन्निर्वपामीति" तत्र "सौर्य्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम" इति सौर्य्ये चरौ मन्त्र ऊह्यते सूर्य्याय त्वा जुष्टं निर्वपामीति । विस्तरेण भर्त्तृहरिणा प्रदर्शित ऊहः" कै० । "ऊहः खल्वपीत्यस्य प्रयोजनमिति शेषः । ननु यत्र प्रकरणे ये मन्त्राः पठितास्तत्र तेषां तथैव प्रयोग इष्ट इति नोहेन प्रयोजनमित्याशङ्क्य प्रकृतावूहाभावेऽपि विकृतावूह इति दर्शयितुम् प्रकृतिशब्दार्थमाह । इहेति । यस्मिन्नाग्नेयादौ । यागान्तरेण सौर्य्यादिना । प्रकृतिविकृत्यवगमश्च द्विदैवत्यत्वैकदेवत्यत्वादिसाम्येन बोध्यः । अन्यत्र पठितमन्त्राणाङ्कथमन्यत्र गमनमत आह प्रकृतिवदिति । यथा सोपकारा प्रकृतिरनुष्ठीयते तथा विकृतिरपीति तदर्थः तदनेनोपकारातिदेशे तत् पृष्ठभावेन पदार्था अप्यतिदिश्यन्ते इतिकर्त्तव्यताया भावनायास्साकाङ्क्षत्वादेतन्मूलकमेव प्रकृतिवदितीति मीमांसकसरणिः । यागान्तर्गताश्च मन्त्राः । तत्र अग्निसम्बन्धिनिर्वापप्रकाशकमन्त्रस्याग्निपदस्य सूर्य्यसम्बन्धिनिर्वापप्रकाशनासमर्थत्वात्तदपहाय तत्स्थाने सूर्य्यायेत्यूह्यमित्याह तत्राग्नेरिति । मन्त्र ऊह्यत इत । यद्यप्यूहे न मन्त्रत्वं तथाप्येकदेशस्योहेऽपि अनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात् इघटिते समुदाये मन्त्रत्वव्यवहारः, कर्माङ्गत्वञ्चेति बोध्यम् । सोऽयम्प्रकृत्यूहः अन्येऽप्यूहाः । ऊहज्ञस्य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिःफलमिति बोध्यम् । भाष्ये लिङ्गपदञ्च प्रकृत्यादेरुपलक्षणम् । यथायथमिति । अर्थप्रकाशनसामर्थ्यानतिलङ्घनेनेत्यर्थः' उद्योतः ।

ताद्दशोहभेदस्तु अधिकरणमालादौ द्दश्यः। द्रव्यप्रतिनिधौ तु नोहः। "तैलं प्रतिनिधिं कुर्य्यात् घृतार्थे याज्ञिकोयदि। प्रकृत्यैव तदा होता ब्रूयात् घृतवतीमिति" मीमां० कात्यायनसूत्रादौ प्रतिनिधिविषये ऊहाभावोदर्शितो यथा

"अथेदं चिन्त्यते विहितद्रव्यस्याभावे द्रव्यान्तरे प्रतिनिधित्वेनोपात्ते छागाभावे मेषरूपे अनुवाचनप्रैषादौ किमूहं कृत्वा प्रतिनिहितद्रव्यशब्दस्य प्रयोगः कार्य्यः "अग्नीषोमाभ्यां मेषस्य वपाया" इत्येवम् उत विहितद्रव्य शब्दस्यैव अग्नीषोमाभ्यां छागस्येत्येवमेवेति। तत्र मन्त्रेण द्रव्यमभिधेयम् न चानूहितः प्रतिनिहितं द्रव्यं शक्नोत्यभिधातुम् तस्मादूहित्वा प्रतिनिहितद्रव्यवाचिशब्दस्य प्रयोगे प्राप्त आह" "शब्देऽविप्रतिपत्तिः" कात्या० १, ४, ६, "प्रतिनिधावुपात्तेऽपि विहितद्रव्यवाचिनि शब्दे अविप्रतिपत्तिरविपरिणामः अनूहो भवति अग्नीषोमाभ्यां छागस्य वपाया इत्यनूहितमेव मेषेऽपि प्रयोज्यम् न तु मेषस्येत्येवं विपरिणतरूपमित्यर्थः कुतः? प्रतिनिधिः श्रुतद्रव्यबुद्ध्या गृह्यते न तु द्रव्यान्तर बुद्ध्या अतश्छाग एवायमिति बुद्ध्या गृहीतत्वात्तच्छब्देनैवाभिधानम्। यद्यत्र मेषश्छागवत् साधनं भवेत्ततस्तत्प्रकाशकम् मेषपदं प्रक्षिप्येत न त्वेवम्, किं तर्हि मेषगता ये छागांशास्त एवात्र साधनम् ते च छागगता इव मेषगता अपि छागशब्देनैव प्रकाशयितुं शक्यन्त इत्यनूहेनैव प्रयोगः। यत्र तु द्रव्यान्तरं वचनेन विधीयते यथा "सारस्वतीं मेषीमिति" "ऐन्द्रं मेषमिति" "ऐन्द्र औरभ्रः" इति तत्र द्रव्यान्तरबुद्धिर्भवति तत्र ऊहोऽपि भवति। नचात्रैवंविधं किमपि वचनमस्ति तस्माद्बहूनामवयवानां सामान्याच्छ्रुतद्रव्यमेवेदमिति बुद्ध्या मेषादिद्रव्यस्य छागादिप्रतिनिधित्वेनोपादानम्। तेन श्रुतद्रव्यशब्देनैवाभिधानं युक्तमिति साधूक्तम् शब्देऽविप्रतिपत्तिरिति। यत्र तु वचनेन द्रव्यान्तरं विधीयते तत्र ऊहो भवतीत्युक्तम् तेन सोमाभावे पूतीकानभिषुणुयादिति पूतीकानां वाचनिकत्वादूहो भविष्यतीत्याशङ्क्याह" कर्कः "सोमेन जात्यभावात्" का० सू० १० "सोमेनेति तृतीयैकवचनम्। सोमाभावे पूतीकेषूपात्तेषु सोमशब्देनैव पूतीकानामभिधानं कर्त्तव्यम्। "अंशुरंशुष्टे देव! सोम! पायतामित्येवम् न तु पूतीकाशब्देन। अथ वा सोमे इति सप्तम्येकवचनम् नेनि निषेधः। सोमप्रतिनिधित्वेनोपात्तेषु अर्ज्जुनश्येनहृतपूतीकादिषु सोमे सोमशब्दे ऊहो न भवति कुतः जात्यभावात् जात्यन्तरबुद्ध्यभावात् नह्यत्र वचनेन द्रव्यान्तरं विधीयते किं तर्हि सोमाभावे यागस्यावश्यकर्त्तव्यत्वादनेकेषु कुसदृशेष्वीषत्सदृशेषु च प्राप्तेषु पूतीकादेर्नियमः क्रियते तेनैन्द्रमेषइतिवद् वाचनिक जात्यन्तराभावादतोऽप्यूहो न भवति" कर्कः।

"छाग! त्वं वलिरूपेणेत्यादिमन्त्रे च बहुपशुघाते न बहुत्वोहः। तदेतत् ति० त० "बहुपशुघातेऽपि मन्त्रे एकवचनान्त एव प्रयोज्यः न बहुवचनोहः। "नरं पञ्चत्वमागतम्" इत्यत्र नार्य्यां स्त्रीत्वोहाभाववत् अतएव सपत्नीकयजमानप्रयोगेऽपि "पत्नीं सन्नह्येति" मन्त्र एकवचनान्त एवेति। ऊहं प्रकृत्य "प्रकृतावपूर्व्वत्वात्" कात्यायनेनोहस्य प्रकृतौ प्रतिषेधात्। विकृतावेवोहः। "ऊहोऽपूर्व्वात् प्रेक्षणमिति" जै० तल्लक्षणात् न वान्वयबाधः वैभक्तिकार्थापेक्षया प्राथमिकत्वेन बलवतः प्रातिपदिकार्थस्य समन्वितत्वेनाविरोधात्। एवञ्च प्रकृतौ नररूपबहुपशौ बहुवचनोहाभावात् छागादौ विकृतिभूतेऽपि न बहुवचनोहः किन्तु एकवचनमात्रमिति" वदता रघुनन्दनेन तथा समर्थितम्। संकल्पादिवाक्ये तु ऊह इति भेदः। ऋत्विगादिप्रयोगे च अस्मदादिपदघटिते "दातारोनोऽभिवर्द्धन्तामित्यादि" मन्त्रेऽपि नोहः तैस्तथा प्रयोगेऽपि यजमानगतानामेव तत्तत्फलानामवगम इत्याकरे प्रपञ्चः। तथाचासमवेतार्थस्य समन्वयाय मन्त्रे समवेतार्थकरणरूपमपूर्व्वस्योत्प्रेक्षणमूहः। ५ आरोपे ६ संसूहने च। "इमे मनुष्या दृश्यन्ते ऊहापोहविशारदाः" भा० अनु० १४५ अ० "ऊहापोहाभ्यां तत्त्वावधारणम्" पातञ्ज० भा०।

**ऊहगान** न० सामगानग्रन्थभेदे ऊहगीतिरप्यत्र स्त्री।

**ऊहा** स्त्री ऊह अ स्त्रीत्वात् टाप्। १अध्याहारे २ऊहशब्दार्थे

**ऊहिनी** स्त्री ऊह-णिनि। समवेतायाम् "अक्षात् परस्य तस्यादेर्वृद्धिः अक्षौहिणी सेना।

**ऊह्य** त्रि० ऊह-ण्यत्। १तर्कणीये २उद्भावनीये ३अध्याहार्य्ये ४मीमांसकोक्तोहविषये च। अनीयर्। ऊहनीय तदर्थे त्रि०

**ऊह्यगान** न० सामगानग्रन्थभेदे।

इति वाचस्पत्ये ऊकारादिशब्दार्थसङ्कलनम्।

# ऋ

ऋकारः स्वरवर्णभेदः मूर्द्धन्यः "ऋटुरषाणां मूर्द्धा" इत्युक्तेः। स तु उदात्तानुदात्तस्वरितभेदात् त्रिविधः। अनुनासिकाननुनासिकभेदात् प्रत्येकं द्विधेति षड्विधः। स च ह्रस्वः एकमात्राकालेनोच्चार्य्यत्वात्। तस्य च रक्तविद्युल्लतारूपेण ध्येयतोक्ता। "रक्तविद्युल्लताकारमृकारं प्रणमाम्यहम्" काम०त०। तस्य च मातृकान्यासे वामनासिकायां न्यस्तता उक्ता तेन अभेदोपचारात् वामनासादिशब्दवाच्यता। स्वरूपपरत्वे ततः तकारकारप्रत्ययौ ऋत् ऋकारः तत्कालोच्चार्य्ये "तपरस्तत्कालस्यैव" पा० उक्तेः। व्याकरणशास्त्रे अननुबन्धः ऋ इत्येतत् अष्टादशविधस्य ऋवर्णस्य, द्वादशविधस्य ऌकारस्य संज्ञा भवति तेन "ऋ इति त्रिंशतां संज्ञा" इति सि०कौ०। अधिकं स्वरवर्णादिशब्दसमाप्तौ वक्ष्यते समानवर्णग्रहणद्योतनार्थम् वर्णशब्दोत्तरः प्रयुज्यते ऋवर्णः त्रिंशतां संज्ञा।

ऋ गतौ भ्वा०पर०सक०अनिट्। शिति ऋच्छादेशः। ऋच्छति आर्च्छत् आरत्—आर्षीत्। आर आरिथ अर्त्ता अर्य्यात् अरिष्यति। आरिष्यत्। ऋच्छन् ऋतः ऋतिः अर्त्तव्यः अरणीयः अर्य्यः यत् वैश्यस्वामिनोः अन्यत्र ण्यत् आर्य्यः। अर्त्ता आरी आरिवान् अर्त्तुम्। सङ्गमार्थत्वेनाकर्म्मकात् सम्पूर्व्वकात् ततः आत्म०। समृच्छते। समारत समार्त्त। "सारमानवरारोहा-वनमार सा" उद्भटः। ऋ—णिच् अर्पयति ते। सन् अरिरिषति समरिरिषते गत्यर्थत्वेऽपि कौटिल्ये यङ्। अरार्य्यते "किमभीररारार्य्यसे" भट्टिः। कर्म्मणि अर्य्यते। आरि।

ऋ गतौ प्रापणे च जुहो०पर०सक० अनिट्। लडादौ शपो-लुक्त्वेन शित्परत्वाभावात् न ऋच्छादेशः। शतृशानचोस्तु तदादेशः। इयर्त्ति इयृतः इयृति। इयृयात्। इयर्त्तु इयृहि इयराणि। ऐयः ऐयृताम् ऐयरुः। आरत्-आर्षीत् सृसाहचर्य्यात् अङ्विधौ भ्वादेरेव ग्रहणमित्यन्ये तन्मते आर्षीदित्येव। समारत समार्त्त इत्यन्ये आर इत्यादि भ्वादिवत्। शित्त्वात् इयृच्छन् समृच्छमान इति भेदः। अयं वैदिक एवेति बहवः "बहुलं छन्दसीति" पा० सिद्धेः "अर्त्तिपिपर्त्त्योश्च" पा० इतीत्त्वविधानसामर्थ्यादेवं भाषायामपि" सि०कौ०। "शुभ्र इयर्त्ति प्रभृतो मे अद्रिः" ऋ०१,१६५,४। "इयर्त्ति वाचमरितेव नावम्" २,४२,१। अनयोर्गत्यर्थत्वात् उपसर्गभेदेनार्थभेदस्तु इणधातुवत् स च तच्छब्दे उक्तः "अभैषः कपयोऽभ्यारत् कुम्भकर्णं मरुत्सुतः" "सीतां जिघांसुः सौमित्रे राक्षसावारतां भुवम्" भट्टिः। आ+ऋत आर्त्तः इति "तथार्त्तोऽपि क्रियां धर्म्याम्" भट्टिः "उदयर्षि भानुना" ऋ०१०,१४०,२, "समुद्रादूर्मिमुदियर्त्ति वेनः" १०,१२३, २, "यदा शसा निःशसा भिशसोपारिम जाग्रतो यत् स्वपन्तः" ऋ०१०,१६४,३, एवं यथायथमुपसर्गपूर्वस्य उदाहरणं द्रष्टव्यम्।

ऋ हिंसायां स्वा०पर०सक०अनिट्। ऋणोति। ऋणुयात ऋणोतु ऋणु आर्णत्। आर्षीत् लिङादौ भ्वादिवत् शतृ—ऋण्वन् ता ऋणम् इतिभेदः "त्वेषस्ते धूम ऋण्वति" ऋ०६,२,६, "ऋणं देयमदेयञ्च येन यत्र यथा च यत्" याज्ञ० स्मृतिः। "अपद्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः" ऋ०९'१०,६, ऋणोरवं न शचीभिः" ऋ०१,३०, १५, अस्य रिकारादित्वमित्यन्ये रिणोति इत्यादि।

ऋ अव्य० ऋ—क्विप् बा०न तुक्। १सम्बोधने २गर्हणे ३वाक्ये च मेदि० ४परिहासे वाक्यविकारे शब्दरत्ना० ५देवमातरि स्त्री।

ऋकक्कस् अव्य० ऋच्+शस्। ऋचम् ऋचमित्यर्थे "ऋग्वेदशब्दे चरणव्यूहभाष्यधृतब्राह्मणवाक्ये उदा० दृश्यम्।

ऋक्ण त्रि० व्रश्च—क्त पृ०वलोपः। छिन्ने "वाचमेव तदाप्नां श्रान्तामृक्णवहीं वहराविणीं च्छन्ति" ऐत०।

ऋक्थ न० ऋच्-थक्। १धने २स्वर्णे स्मृतिप्रसिद्धे ३दायरूपे धने च "ऋक्थग्राही ऋणं दाप्यः" याज्ञ० "स्वामी ऋक्थक्रयसंविभागपरिग्रहाधिगमेषु" गौत०तत्र "ऋक्थमप्रतिबन्धोदायः यथा पुत्राणां पौत्राणाञ्च पुत्रत्वेन पौत्रत्वेन च पितृधनं पितामहधनं च स्वं भवतीत्यप्रतिबन्धः" मिता० क्वचित् सप्रतिबन्धदायवाचितापि "पुत्रहीनस्य ऋक्थिनः" इति याज्ञ०प्रयोगात् तथा च सम्बन्धनिमित्तस्वत्वास्पदीभूतं द्रव्यमृक्थम्। क्वचिद्धनमात्रेऽपि प्रयोगः। ऋक्थं रक्षाति णिनि ईत०। ऋक्थग्राहिन् दायहरे त्रि० स्त्रियां ङीप्। "ऋक्थग्राही ऋणं दाप्यः" या० अण् उप०स०। ऋक्थग्राहोऽप्यत्र त्रि०स्त्रियां टाप् तद्धितान्तत्वेन ङीप् सि०कौ०। ऋक्थ+अस्त्यर्थे इनि। ऋक्थिन् तद्ग्राहके "पुत्रहीनस्य ऋक्थिनः" याज्ञ०स्त्रियां ङीप्।

ऋक्ष पु०स्त्री ऋष—स किच्च। १भल्लूके तज्जातिस्त्रियां संयोगोपधत्वात् न ङीप् किन्तु टाप्। २नक्षत्रे।

३मेषादिराशौ च न० ४भल्लूके ऋक्षे ( भेला ) ५श्योनाकवृक्षे (शोना)६पर्व्वतभेदे च पु०मेदि० । स च रैवतापरनामकः “ऋक्षोऽपि रैवताज्जज्ञे तस्य पर्व्वतमूर्द्धनि । ततोरैवत उत्पन्नः पर्वतः सागरान्तिके । नाम्ना रैवतको नाम भूमौ भूमिधरःस्मृतः” हरिवं०३२अ०।स च कुलाचलपर्व्वतः यथोक्तं सि० शि०। “माहेन्द्रशुक्तिमलयर्क्षकपारियात्राः सह्यः सविन्ध्य इह सप्त कुलाचलाख्याः” इति । ७नृपभेदयोः तत्रैकः “आजमीढपुत्रः । “धूमिन्या स तया देव्या त्वजमीढः समीयिवान् । ऋक्षं संजनयामास धूम्रवर्णं सुदर्शनम् । ऋक्षात् संवरणो जज्ञे कुरुः संवरणात्तथा” अपरो विदूरथस्य पुत्रः “विदूरथस्य दायाद ऋक्ष एव महारथः । ऋक्षस्य च द्वितीयस्य भीमसेनोऽभवन्नृपः” इति हरि० ३२अ०। भल्लूकवारण्यपशुः जरायुजश्च । “जरायुजानां प्रवराः मानवाः पशवश्च ये । नानारूपधरा राजन् ! एषां भेदाश्चतुर्द्दश । अरण्यवासिनः सप्त सप्तैषां ग्रामवासिनः । सिंहव्याघ्रवराहाश्च महिषा वारणास्तथा । ऋक्षाश्च वानराश्चैव सप्तारण्याः स्मृता नृप !” भा०आ० तत्र प्रवरा इति विशेषणात् एतद्भिन्नानामारण्यत्वमस्त्येव तेनोष्ट्रस्याप्यारण्यत्वं सुश्रुते उक्तम् तच्च उष्ट्रशब्दे उक्तम् । ८ऋरिहपुत्रे च “ऋरिहः खल्वाङ्गेयीमुपयेमे सुदेवां नाम तस्यां पुत्रमजीजनदृक्षम्” भा०आ०९५अ०। ९उत्तर दिशि स्त्री निरु० यद्यपि नक्षत्रस्य सामान्यतो गगनस्थिततारामात्रवाचकता तथापि ज्योतिषे येषामुदयास्तापनं तेषामेव ऋक्षशब्देन व्यवहारः तानि च सप्तविंशतिः । अभिजिद्भेत्यष्टाविंशतिः । “अश्विनी भरणी चैव कृत्तिका रोहिणी तथा । मृगशीर्षस्तथा चार्द्रा पुनर्वसुकपुष्यकौ । अश्लेषा च मघा पूर्वफल्गुन्युत्तरफल्गुनी । हस्ता चित्रा तथा स्वाती विशाखा चानुराधिका । ज्येष्ठा मूलं तथाषाढे पूर्वोत्तरपदादिके । श्रवणा च धनिष्ठा च शतभिषगाद्यभाद्रिका । उत्तरादिभाद्रपदा रेवती भानि च क्रमात्”ज्योति० अभिजित्तु अभिजिच्छब्दे उक्तम् । एतानि द्वादशधाविभक्तराशिचक्रघटकत्वात् प्राधान्याच्च ऋक्षशब्देन व्यपदिश्यन्ते एतेषां स्वरूपप्रमाणाधिष्ठातृदेवताः अश्लेषाशब्दे ४९७पृ०श्रीपतिवाक्येनोक्ताः अन्यान्यपि यानि उदयास्तभाञ्जि गगनमण्डले सन्ति तेषामपि गति ज्योतिषे आनीता तान्यपि ऋक्षपदवाच्यानि । ऋक्षकक्षाप्रमाणमुक्तं सि०शि० । “अभ्रेभाभ्रगजकुञ्जरगोऽ-

ब्धपक्षाः(२५९८८९८५०योजनानि) कक्षां स्पृशन्ति गणका भगणस्य चैताम्”। नक्षत्रकक्षाया भूमध्यादुच्छ्रितिमानम् “नागाब्धषड्गुणरसाग्निकुवेदसंख्यो( ४१३६२६५८ योजनमितः ) नक्षत्रमण्डलभवः श्रवणोनिरुक्तः” ज्यो० उक्तम् । “तेषामन्येषाञ्चोदयादिज्ञानाय” सि०शि० । ध्रुवकभागा उक्ता यथा “अष्टौ नखा गजगुणाः खशराक्षिषट्काः सप्ताभ्रस्त्रिनव चाक्षदिशोऽष्टकाष्ठाः । गोऽर्काः स्तथाद्रिमनवः शरबाणचन्द्राः खात्यष्टयस्त्रिधृतयो नगनन्दचन्द्राः । अर्काश्विनो जिनयमा नव बाहुदस्राः कृत्याश्विनो जलधितत्त्वमिताश्च भागाः । षष्ट्याश्विनश्च पवनोत्कृतयोऽष्टभानि खाङ्काश्विनो नखगुणा रसदन्तसंख्याः। सप्तामराः खमिति भध्रुवका निरुक्ता दृक्कर्मणा च नभवेन सहाश्विधिष्ण्यात् । ब्रह्माग्निभध्रुवलवा रदलिप्तिकोना मैत्रेन्द्रयोहर्यधिपभस्य च षेषुलिप्ताः” शि० “अष्टौ नखा इत्यादयोऽश्विन्यादीनां साभिजितां ध्रुवभागा वेदितव्याः । तत्रापि विशेषमाह । ब्रह्माग्निभध्रुवलवा इत्यादि । कृत्तिकारोहिणीनक्षत्रयोर्द्वात्रिंशत्कलोनाः । विशाखानुराधाज्येष्ठानां कलापञ्चकेनाधिका ध्रुवकभागा वेदितव्याः” प्रमि० । एषां शरानाह “दिशोऽर्काश्च साधाब्धयः साधवेदा दृशेषा रसाः खं खराः खं च सूर्याः । त्रिचन्द्राः कुचन्द्राः त्रिपादौ च दस्रौ हरक्षाग्नयः सत्रिभागं च रूपम् । त्रिपादं इयं साधरामाश्च साधी गजाः सत्रिभागेषवो मार्गणाश्च । द्विषष्टिः शरामाश्च षड्वर्गसंख्यास्त्रिभागो जिना उत्कृतिः खं च भानाम् । निरुक्ताः स्फुटाः सौम्य राशशांशास्त्रयं ब्रह्मधिष्ण्याद्विशाखादिषट्कम् । करो वारुणं त्वाष्ट्रभं सार्पमेषां शरा दक्षिणा उत्तराः शेषभानाम्” सि०शि०। “दिशोऽर्का इत्यादयस्तेषां भानां शरांशा ज्ञेयाः । शेषं स्पष्टार्थम् । अत्रोपपत्तिः । तत्र भवेधार्थं गोलबन्धोक्तविधिना विपुलं गोलयन्त्रं कार्य्यम् । तत्र खगोलस्यान्तर्भगोल आधारवृत्तद्वयस्योपरि विषुवद्वृत्तम् । तत्र च यथोक्तं क्रान्तिवृत्तं भगणांशा ३६० ङ्कितं च कार्य्यम् । ततस्तद्गोलयन्त्रं सम्यग्ध्रुवाभिमुखयष्टिकं जलसमक्षितिजवलयं यथा भवति तथा स्थिरं कृत्वा रात्रौ गोलमध्यगतया दृष्ट्या रेवतीतारां विलोक्य क्रान्तिवृत्ते यो मीनान्तस्तं रेवतीतारायां निवेश्य मध्यगतयैव दृष्ट्याश्विन्यादेर्नक्षत्रस्य योगतारां विलोक्य तस्योपरि वेधवलयं निवेश्यम् । एवं कृते सति वेधवलयस्य क्रान्ति-

वृत्तस्य च यः संपातः सोनान्ताद्यतोयावद्भिरंशैस्तावन्त स्तस्य धिष्ण्यस्य ध्रुवांशा ज्ञेयाः। अथ वेधवलये तस्यैव संपातस्य योगताराया यावन्तोऽन्तरेंऽशास्तावन्तस्तस्य शरांशा उत्तरा दक्षिणा वा वेदितव्याः। अथ ये ध्रुवभागाः पठितास्ते कृतदृक्कर्मका एव। ये तु शरांशाः पठितास्ते स्फुटा एव। यतो ध्रुवद्वयकीलयोः प्रोतं वेधवलयम्। तस्मिन् वेधवलये यो ज्ञातः शरः स ध्रुवाभिमुखः। ध्रुवाभिमुखः शरः स स्फुटः। अस्फुटस्तु कदम्बाभिमुखः। अत एव पूर्वं भगणोत्पत्तिकथने चक्रवेधवलयं कदम्बकीलयोः प्रोतं कर्त्तव्यमित्युक्तम्। अत एव कारणात् कृतदृक्कर्मका एव भध्रुवाः। यतो ध्रुवाद्दृक्षोपरि नीयमानं सूत्रं यत्र क्रान्तिवृत्ते लगति तत्र कृतायनदृक्कर्मको भग्रह इति दृक्कर्मवासनायां पूर्वं कथितमेव। अथागस्त्य लुब्धकयोराह” प्रमि०। “अगस्त्यध्रुवः सप्तनागास्तु भागास्तुरङ्गाद्रयस्तस्य याम्याः शरांशाः। षडष्टौ स्वरा लुब्धकस्य ध्रुवोऽयं नभोऽम्भोधिभागाः शरस्तस्य याम्यः” सि०शि०। स्वष्टम् “अत्रोपपत्तिः पूर्ववत्। अथेष्टघटिका आह” प्रमि०। “अगस्त्यस्य नाड़ीद्वयं प्रोक्तमिष्टं सषड्भागनाड़ीद्वयं लुब्धकस्य। त्रिभागाधिकं स्थूलभानामथूनां ततश्चाधिकं तारतम्येन कल्प्यम्” सि०शि०स्पष्टार्थम्। “अत्रोपपत्तिः अगस्त्यस्य नाड़ीद्वयं यदिष्टं तत् तस्य द्वादश कालांशा उत्पद्यन्ते। सषड्भागनाड़ीद्वयं लुब्धकस्येति। तत्र त्रयोदश १३ कालांशाः त्रिभागाधिकं स्थूलभानामिति। यानि स्थूलानि नक्षत्राणि तेषां चतुर्दश कालांशाः। अणूनां ततश्चाधिकमिति केषाञ्चित् पञ्चदश केषाञ्चित् षोड़शेति कल्प्यते। अत्र पठितानां भानां या ये कालांशास्ते स्थूलसूक्ष्मत्वतारतम्यपर्य्यालोचनया। याः स्थूलास्ताराश्च अर्कोदयादल्पेन कालेनान्तरिता दृश्या भवन्ति। याः सूक्ष्मास्ता अधिकेनेत्युपपन्नम्” प्रमि०

सू०सि०रङ्गनाथव्याख्यान्तु तदुदयज्ञानार्थमन्यप्रकार उक्तो यथा “प्रोच्यन्ते लिप्तिका भानां स्वभोगोऽथ दशाहतः। भवन्त्यतोऽतिधिष्ण्यानां भोगलिप्ता युता ध्रुवाः” सू०सि०। “भानामश्विन्यादिनक्षत्राणामुत्तराषाढाभिजिच्छ्रवणधनिष्ठावर्जितानां लिप्तिका योगसञ्ज्ञाः कलाः प्रोच्यन्ते सम्मनन्तरमेव कथ्यन्ते। अथानन्तरं स्वभोगः स्वाभीष्टनक्षत्रभोगः कलात्मको वक्ष्यमाणो दशभिर्गुणितः कार्यः। तत्र स्वाभीष्टनक्षत्रगतनक्षत्राणामश्विन्यादीनां भोगलिप्ताः। “भभोगोऽष्टशती लिप्ताः” इत्युक्ताष्टशतकलाः। प्रत्येकं युताः। अश्विन्याद्यतीतनक्षत्रसङ्ख्यागुणिताष्टशत युतमित्यर्थः। ध्रुवा नक्षत्राणां भवन्ति”। रङ्ग०। अथ प्रतिज्ञाता नक्षत्रभोगलिप्ता उत्तराषाढाभिच्छ्रवणधनिष्ठाव्यतिरिक्तानां तेषां ध्रुवकाञ्चक्षत्रशरांश्चाष्टश्लोकैराह। “अष्टार्णवाः शून्यकृताः पञ्चषष्टिर्नगेषवः। अष्टार्था अब्धयोऽष्टागा अङ्गागा मनवस्तथा। कृतेषवो युगरसाः शून्यबाणा वियद्रसाः। खवेदाः सागरनगा गजागाः सागरर्त्तवः। मनवोऽथ रसा वेदा वैश्वमाप्यार्धभोगगम्। आप्यस्यैवाभिजित्प्रान्ते वैश्वान्ते श्रवणस्थितिः। त्रिचतुःपादयोः सन्धौ श्रविष्ठा श्रवणस्य तु। स्वभोगतो वियद्भागाः षट्कृतिर्यमलाश्विनः। रन्ध्रादय क्रमाद्येषां विक्षेपाः स्वादपक्रमात्। दिङ्मासविषयाः सौम्ये याम्ये पञ्च दिशो नव। सौम्ये रसाः खं याम्ये गाः सौम्ये खार्कास्त्रयोदश। दक्षिणे रुद्रयमलाः सप्तत्रिंशदथोत्तरे। याम्येऽध्यर्धत्रिककृता नवसार्धशरेषवः। उत्तरस्यां तथा षष्टिस्त्रिंशत् षट्त्रिंशदेव हि। दक्षिणे त्वर्धभागस्तु चतुर्विंशतिरुत्तरे। भागाः षड्विंशतिः खं च दस्रादीनां यथाक्रमम्” सू०“अश्विन्यादिनक्षत्राणां क्रमाद्भोगा एते। तत्राश्विन्या अष्टचत्वारिंशत् कलाः। भरण्याश्चत्वारिंशत् कृत्तिकायाः कलाः पञ्चषष्टिः। रोहिण्याः सप्तपञ्चाशत् कलाः। मृगशिरसोऽष्टपञ्चाशत्। आर्द्रायाश्चत्वारः। अत्राब्धय इत्यत्र गोऽब्धयो गोऽम्बय इति वा पाठस्त्वयुक्तः। शाकल्यसंहिताविरोधात्। एतेन “सौरोक्तरुद्रभस्यांशास्त्र्यद्रयोऽगाब्धयः कलाः” इति शर्मदोक्तम् “दशकलोनपञ्चदशभागा मिथुने” सर्वजनाभिमतध्रुवको दशकलायुतत्रयोदशभागाः पर्वताभिमतध्रुवकश्च निरस्तः। पुनर्वसोरष्टसप्ततिः। पुष्यस्य षट्सप्ततिः। अश्लेषायाश्चतुर्दश। तथेति छन्दःपूरणार्थम्। मघायाश्चतुःपञ्चाशत्। पूर्व्वफाल्गुन्याश्चतुःषष्टिः। उत्तरफाल्गुन्याः पञ्चाशत्। हस्तस्य षष्टिः। चित्रायाश्चत्वारिंशत्। स्वात्याश्चतुःसप्ततिः। विशाखाया अष्टसप्ततिः। अनुराधायाश्चतुःषष्टिः। ज्येष्ठायाश्चतुर्दश। अनन्तरं मूलस्य षट्। पूर्वाषाढ़ायाश्चत्वारः। उत्तराषाढाया ध्रुवकमाह। वैश्वमिति। उत्तराषाढायोगतारानक्षत्रम्। आप्यार्धभोगगम्। आप्यस्य पूर्वाषाढानक्षत्रस्यार्धभोगः। धनूराशेर्विंशतिभागस्तत्र स्थितं ज्ञेयम्। अष्टौ राशयो विंशतिभागा उत्तराषाढ़ाया ध्रुव इत्यर्थः। एतेन पूर्वाषाढायोगताराया: सकाशादुत्तराषाढ़ायोगतारा

विंशतिकलोनसप्तभागान्तरिता। तेन पूर्वाषाढ़ाध्रुवको-ऽष्टराशयश्चतुर्द्दश भागा विंशतिकलोनसप्तभागैर्युत उत्त राषाढाया ध्रुवश्चत्वारिंशत्कालाधिकोऽष्ट ध्रुव इति पर्वोक्तमपास्तम् ब्रह्मसिद्धान्तविरोधात्। अभिजिद्ध्रुवकमाह। चाप्यस्येति। पूर्वाषाढाया अवसाने धनूराशेर्विंशतिकलोनसप्तविंशतिभागेऽभिजिद्योगतारा ज्ञेया। चत्वारिंशत्कलाधिकषड्विंशतिभागाधिका अष्टौ राशयो-ऽभिजितो ध्रुव इत्यर्थः। एवकारोऽन्ययोगव्यवच्छेदार्थः। तेन संहितासम्मतं श्रवणपञ्चदशांशस्थानं विंशतिविकलायुतत्रयोदशकलायुतचतुर्दशभागादिकनवराशयो निरस्तम्। श्रवणस्य ध्रुवकमाह। वैश्वान्त इति। उत्तराषाढाया अवसाने श्रवणयोगताराया: स्थानं ज्ञेयम्। नव राशयो दश भागा: श्रवणध्रुवक इत्यर्थः। धनिष्ठाया ध्रुवकमाह। त्रिचतुःपादयोरिति। श्रवणस्य तृतीयचतुर्थचरणयोः क्रमेणान्तादिसन्धौ मकरराशेर्विंशतिभागे श्रविष्ठा धनिष्ठा ज्ञेया। नव राशयो विंशतिभागा धनिष्ठाध्रुव इत्यर्थः। तुकारात् क्षेत्रान्तर्गतधनिष्ठास्थानं कुम्भस्य विंशतिकलोनसप्तभागा निरस्तम्। शततारायाः भोगमाह। स्वभोगत इति। धनिष्ठाभोगात् कुम्भस्य विंशतिकलोनसप्तभागावधेरित्यर्थः। शततारायाः अशीतिर्भोगः। अतः प्राग्वद्ध्रुवा इति ज्ञापनार्थं स्वभोगत इत्युक्तम्। शततारयाः स्थानं शततारकाध्रुव इति पर्यवसन्नम्। अवशिष्टनक्षत्राणां भोगानाह। षट्कृतिरिति। पूर्व्वभाद्रपदायाः षट्त्रिंशत् कला भोगः। उत्तरभाद्रपदाया द्वाविंशतिः। रेवत्या एकोनाशीतिः। अथ ध्रुवकानयनं यथा। अश्विन्या भोगः। ४८। दशगुणितः ४८०। अतीतनक्षत्राभावाद्भोगयोजनाभावः। अतोऽश्विन्याः कलात्मको ध्रुवः। ४८०। राश्याद्यस्तु। ०८। भरण्या भोगः। ४०। दशाहतः। ४००। अतीतनक्षत्रस्यैकत्वादष्टशतयुतो भरण्याः परिभाषया राश्याद्यो ध्रुवः। ०। २०। एवमार्द्राभोगः। ४ दशाहतः ४०। अतीतनक्षत्राणां पञ्चतया पञ्चगुणिताष्टशतेन ४००० चतुःसहस्रात्मकेन युतः कलाद्यो ध्रुवः४०४०राश्याद्यस्तु २। ७। २०। एवं पूर्वाषाढ़ाया दशगुणितो भोगः। ४०। एकोनविंशतिगुणिताष्टशतेन। १५२०० युतः परिभाषया राश्याद्यो ध्रुवः। ८। १४। शततारायाः दशगुणितो भोगः। ८००। त्रयोविंशतिगुणिताष्टशतेन। १८४००। युतश्चतुर्विंशतिगुणिताष्टशतरूपो। १९२००। जातो ध्रुवो राश्याद्यः। १०। २०। पूर्वभाद्रपदाया-दशगुणितो भोगः ३६०। चतुर्विंशतिगुणिताष्टशतेन। १९२०० युतः। १९५६० जातो ध्रुवो राश्याद्यः। १०। २६। उत्तराषाढ़ाभिजिच्छ्रवणधनिष्ठानां स्वभोगस्थानात् पश्चात् स्थितत्वेनोक्तरीत्यसम्भवाद्विलक्षणा ध्रुवका उक्ताः स्वादिस्थानाद्योगतारा यदन्तरकलाभिः स्थितास्ता आश्वादृशपर्यन्तिता भोगसञ्ज्ञा उक्ताः। तथा च ब्रह्मसिद्धान्ते। "अष्टौ विंशतिरर्द्धेन गजाग्निर्व्यर्द्धषेषवः। त्रितर्काः सत्रिभागाद्रिरसास्त्र्यङ्काश्च षट्शतम्। नवाशा नवसूर्याश्च वेदेन्द्राः शरशाभूः। स्वात्यष्टिः सष्टतिर्गोऽतिष्टृतिर्विश्वाश्विनस्तथा। वेदाकृतिर्गोऽद्रिदृष्टाः कश्चिद्धृत्ता युगार्थहक्। खोत्कृतिस्त्र्यंशहीनाश्च रसदृष्टाः सहस्तिहक्। खगो-ऽश्विनः खदन्ताः षड्दन्ताः शैलगुणाग्नयः। मेषाद्यष्टा-दिमध्यांशाः सषंशोनाः खषड्[illegible]णाः" इति। अथ न[illegible]त्राणां विक्षेपभागानाह। एषामिति। उक्तध्रुवकस्थश्विनामश्विन्यादिनक्षत्राणां यथाक्रमं क्रमादित्यर्थः। [illegible]स्वात् स्वकीयापक्रमात् क्रान्त्यपात् क्रान्तिवृत्तस्थध्रुवकस्थानादित्यर्थः। विक्षेपा विक्षेपभागा दक्षिणा उत्तरा वा भवन्ति। तत्रोत्तरदिश्यश्विन्यादित्रयाणां दिङ्मासविषयाः क्रमेण दश द्वादश पञ्चेत्यर्थः। दक्षिणदिशि रोहिण्यादित्रयाणां पञ्च दश नव। उत्तरस्यां पुनर्वसोः षड्भागाः। पुष्यस्य खं विक्षेपाभावः। अत्र पञ्चमाक्षरस्य गुरुत्वेन छन्दोभङ्ग आर्षत्वान्न दोषः। दक्षिणस्याश्लेषायाः सप्त। उत्तरस्यां मघादित्रयाणां भूख्यं द्वादश त्रयोदश। दक्षिणस्यां हस्तचित्रयोरेकादश द्वौ। अनन्तरं स्वात्या उत्तरदिशि सप्तत्रिंशत्। दक्षिणस्यां विशाखादीनां षण्णां सार्द्धैकं त्रयं चत्वारः नव सार्धपञ्च पञ्च क्रमेण उत्तरदिशि तथा विक्षेपभागाः। अभिजितः षष्टिः। श्रवणस्य त्रिंशत्। धनिष्ठायाः षट्त्रिंशत्। एवकारो न्यूनाधिकव्यवच्छेदार्थः। चकारः पूरणार्थः। दक्षिणस्यां तुकारस्तथा। अर्धभागः शततारायाः। तुकारस्तथा। उत्तरस्यां पूर्व्वभाद्रपदायाश्चतुर्विंशतिः। तस्यामेव दिशि भागा विक्षेपभागा उत्तरभाद्रपदायाः षड्विंशतिः। रेवत्या विक्षेपाभावः। चकारः पूरणार्थः। अथागस्त्यलुब्धकवह्निब्रह्महृदयताराणां ध्रुवकविक्षेपांशदुपपत्तिं श्लोकत्रयेणाह" इत्यादि। "अशीतिभागैर्याम्यायामगस्त्यो मिथुनान्तगः। विंशे च मिथुनस्यांशे मृगव्याधो व्यव-

स्थितः। विक्षेपो दक्षिणे भागैः खार्णवैः स्वादपक्रमात्। हुतभुग्ब्रह्महृदयौ वृषे द्वाविंशभागगौ। अष्टाभिस्त्रिंशता चैव विक्षिप्तावुत्तरेण तौ। नेत्थं बध्वा परीक्षेत विक्षेपं ध्रुवकं स्फुटम्" सू०"स्वकीयात् क्रान्तिविभागस्थानाद्दक्षिणस्यामशीत्यंशैस्तारात्मकोऽगस्त्यो मिथुनान्तगः कर्कादिभागे स्थितः। अगस्त्यनक्षत्रस्य राशित्रयं ध्रुवकः। दक्षिणविक्षेपोऽशीतिरित्यर्थः। मृगव्याधो लुब्धको मिथुनराशेः विंशतिभागे स्थितः। चकारः समुच्चये। लुब्धकनक्षत्रस्य राशिद्वयं विंशतिभागा ध्रुवक इत्यर्थः। दक्षिणस्यां चत्वारिंशता भागैः परिमितस्तस्य च क्रान्तिवृत्तस्थानाद्विक्षेपः। वृषराशौ वह्निब्रह्महृदयौ द्वाविंशभागस्थितौ वह्निब्रह्महृदयनक्षत्रयोर्द्वाविंशतिभागाधिकैकराशिध्रुवकः। तौ वह्निब्रह्महृदयौ। अष्टाभिस्त्रिंशता। चकारः क्रमार्थे। एवकारो न्यूनाधिकव्यवच्छेदार्थः। उत्तरेणोत्तरस्यामित्यर्थः। विक्षिप्तौ विक्षेपवन्तौ। वह्नेर्विक्षेपोऽष्टभागः उत्तरः। ब्रह्महृदयस्योत्तरे विक्षेपस्त्रिंशदित्यर्थः। नन्वेते ध्रुवा विक्षेपाश्च कालक्रमेण नियता अनियता वेत्यत आह। गोलमिति। गोलं यथाध्यायं बध्वा वंशशलाकादिभिर्निबध्य स्फुटं विक्षेपं क्रान्तिसंस्कारयोग्यं ध्रुवाभिमुखं ध्रुवकं स्फुटमायनदृक्कर्मसंस्कृतं परीक्षेत। अस्मत्काले दृग्गोचरसिद्धमङ्गीकुरुत। यथा च क्रान्तिसंस्कारयोग्यविक्षेपायनसंस्कृतध्रुवकयोरयनांशवशाद् स्थिरत्वादपि मयेदानीन्तनसमयानुरोधेन लाघवार्थमायनदृक्कर्मसंस्कृता ध्रुवाः क्रान्तिसंस्कारयोग्यविक्षेपाश्च नियता उक्ताः। कालान्तरे गोलयन्त्रेण वेधसिद्धा ज्ञेयाः। नैत इति भावः। गोलयन्त्रेण वेधस्तु गोलबन्धोक्तविधिना गोलयन्त्रं कार्यम्। तत्र खगोलस्योपरि भगोलम्, आधारवृत्तस्योपरि विषुवद्वृत्तम्। तत्र यथोक्तं क्रान्तिवृत्तं भगणांशाङ्कितं च बध्वा ध्रुवयष्टिकीलयोः प्रोतमन्यद्वलयं वेधवलयम्। तच्च भगणांशाङ्कितं कार्यम्। ततस्तद्गोलयन्त्रं सम्यग्ध्रुवाभिमुखयष्टिकं जलसमक्षितिजवलयं च यथा भवति तथा स्थिरं कृत्वा रात्रौ गोलमध्यच्छिद्रगतया दृष्ट्या रेवतीतारां विलोक्य क्रान्तिवृत्ते मीनान्ताद्दशकलान्तरितप्रदेशं रेवतीतारायां निवेश्य मध्यगतयैव दृष्ट्याश्विन्यादेर्नक्षत्रस्य योगतारां विलोक्य तस्या उपरि तद्वेधवलयं निवेश्यम्। एवं कृते सति वेधवलयस्य क्रान्तिवृत्तस्य च यः सम्पातः स मीनान्तादग्रतो यावद्भिरंशैस्तत्र नक्षत्रस्य ध्रुवांशा ज्ञेयाः। वेधवलये तस्यैव सम्पातस्य योगतारायाश्च यावन्तोऽन्तरेंऽशास्तावन्तस्तस्य विक्षेपांशा दक्षिणा उत्तरा वा वेद्याः। अथ कदम्बप्रोतवेधवलयेन वेधे तु सदा स्थिरा ध्रुवका आयनदृक्कर्मसंस्कृताः परन्तु कदम्बतारयोरभावादशक्यमिति यथोक्तवेधेनैवायनदृक्कर्मसंस्कृता ध्रुवाः शराश्च ध्रुवाभिमुखाः स्फुटाः सिद्धा भवन्तीति दिक्। अथ रोहिणीशकटभेदमाह" रङ्ग०। "वृषे सप्तदशे भागे यस्य याम्योऽंशकद्वयात्। विक्षेपोऽभ्यधिको भिन्द्याद्रोहिण्याः शकटं तु सः" सू०। "वृषराशौ सप्तदशेंऽशे यस्य ग्रहस्य भागद्वयादधिको विक्षेपो दक्षिणः स ग्रहो रोहिण्याः शकटं शकटाकारसन्निवेशं भिन्द्यात्। तन्मध्यगतो भवेदित्यर्थः। तुकाराद्ग्रहविक्षेपो रोहिणीविक्षेपादल्प इति विशेषार्थकः। विक्षेपस्य दक्षिणस्य रोहिणीविक्षेपादधिकत्वे शकटाद्बहिर्दक्षिणभागे ग्रहस्य स्थितत्वेन तद्भेदकत्वाभावात्। अत्र शकटाग्रिमनक्षत्रस्य ध्रुव एकराशिः सप्तदशांशाः दक्षिणः शरो भागद्वयमिति वेधसिद्धा स्पष्टा युक्तिः। अथ ग्रहयोगसाधनार्थं ग्रहयोगसाधनरीत्यतिदेशमाह" रङ्ग०। "ग्रहवद्द्युनिशे भानां कुर्याद्दृक्कर्म पूर्ववत्। ग्रहमेलनकल्पोक्तं ग्रहभुक्त्या दिनानि च" सू०। "ग्रहवद्द्युनिशे ग्रहाणां यथा दिनरात्रिमाने आक्षदृक्कर्मार्थं कृते तथा दिनमानरात्रिमाने भानां नक्षत्रध्रुवकाणामाक्षदृक्कर्मार्थं गणकः कुर्यात्। तदनन्तरं पूर्ववन्नक्षत्रलग्नोदयास्तौ साधयित्वाभीष्टकाले दिनगतशेषाभ्यां नतं कृत्वा विषुवच्छायाभ्यस्तादित्यादिनेत्यर्थः। दृक्कर्म कुर्यात्। अत्र नक्षत्रध्रुवके पर्वतेनायनदृक्कर्माप्युदाहरणे कृतं तदयुक्तम्। तस्य ध्रुवके स्वतः सिद्धत्वात्। तदनन्तरं शेषं नक्षत्रग्रहयुतिसाधनं ग्रहध्रुवतुल्यतारूपं ग्रहमेलनकल्पग्रहयोगसाधनरीत्या ग्रहान्तरकला इत्यादिना कार्यम्। ननु तत्र ग्रहान्तरकलाः स्वस्वभुक्तिविश्लेषसमाहृताः। भुक्त्यन्तरेण विभजेदित्युक्तेर्नक्षत्रस्य का गतिर्ग्राह्येत्यत आह। ग्रहभुक्त्येति। केवलया ग्रहगत्या ग्रहस्य फलं ग्रहध्रुवान्तररूपग्रहे संस्कार्यं ध्रुवसमो ग्रहो भवति। नक्षत्रस्य पूर्वगत्यभावाद्ध्रुवो यथास्थित इत्यर्थः। ननु तथापि ग्रहनक्षत्रयुतिकालसाधनं भुक्त्यन्तराभावात् कथं कार्यमिति चेन्नाशङ्क्येत्यत आह। दिनानीति। अभीष्टसमयाद्विवरमित्यादिना केवलया ग्रहगत्या ग्रहनक्षत्रयुतिदिनानि साध्यानि। चः समुच्चये। नक्षत्राणां गत्यभावात्। अथाभीष्टकालादुत्पन्ननक्षत्रयुतिकालस्य गतैष्यत्वमवगन्तुमाह" रङ्ग०।

“एष्यो हीने ग्रहे योगो ध्रुवकादधिके गतः । विपर्य्ययाद्वक्रगते ग्रहे ज्ञेयः समागमः” सू०। “नक्षत्रध्रुवादुक्ताद्ग्रह आयनदृक्कर्मसंस्कृतग्रह आक्षदृक्कर्मसंस्कृतनक्षत्रध्रुवकात् दृक्कर्मद्वयसंस्कृतोग्रह इति विवेकार्थः । न्यूने सति योगो नक्षत्रग्रहयोगः स्वाभीष्टसमयाद्भावी । अधिके सति पूर्वं जातः । वक्रगते ग्रहे विपर्ययादुक्तवैपरीत्यात् समागमो नक्षत्रग्रहयोगो ज्ञेयः । हीने ग्रहे गतोऽधिके ग्रह एष्यो योगः । अत्रोपपत्तिर्नक्षत्रस्य गत्यभावेन सदा स्थिरत्वाद्ग्रहगमनेनैव योगसम्भवादिति सुगमतरा । अश्विन्यादिनक्षत्रस्य बहुताराात्मकत्वात् कस्यास्तारायाः एते ध्रुवका इत्यस्य योगताराया ध्रुवकत्वमित्युत्तरं मनसि कृत्वाश्विन्यादिनक्षत्राणां योगतारां विवक्षुः प्रथममेषां नक्षत्राणां योगतारामाह” रङ्ग० ।

“फाल्गुन्योर्भाद्रपदयोस्तथैवाषाढयोर्द्वयोः । विशाखाश्विनिसौम्यानां योगतारोत्तरा स्मृता” सू० । “एषामुक्तनक्षत्राणां प्रत्येकं स्वतारासु योत्तरदिक्स्था तारा सा योगतारा गोलतत्त्वज्ञैरुक्ता । अथान्ययोरनयोराह” रङ्ग० । “पश्चिमोत्तरताराया द्वितीया पश्चिमे स्थिता । हस्तस्य योगतारा सा श्रविष्ठायाश्च पश्चिमा” सू० ।

“हस्तनक्षत्रं पञ्चताराात्मकं हस्तपञ्चाङ्गुलिसन्निवेशाकारम् । तत्र नैरृत्यदिगाश्रितपश्चिमावस्थितताराया उत्तरदिगवस्थितताराया द्वितीया पूर्वोक्तातिरिक्ता पश्चिमे वायव्याश्रिते या स्थिता सा हस्तस्य योगतारा ज्ञेया । उत्तरतारासक्ता पश्चिमाश्रिता तारा हस्तस्य योगतारेति फलितार्थः । धनिष्ठाया योगतारामाह । श्रविष्ठाया इति । धनिष्ठायास्तारासु या पश्चिमदिक्स्था सा तस्या योगतारा । चः समुच्चये । अथान्येषामेषामाह” रङ्ग० । “ज्येष्ठाश्रवणमैत्राणां बार्हस्पत्यस्य मध्यमा । भरण्याग्नेयपित्र्याणां रेवत्याश्चैव दक्षिणा” सू० ।

“ज्येष्ठाश्रवणानुराधानां पुष्यस्य च प्रत्येकं तारात्रयात्मकत्वान्मध्यमतारा योगतारा स्यात् । भरणीकृत्तिकामघानां रेवत्याः । चः समुच्चये । प्रत्येकं स्वतारासु या दक्षिणदिक्स्था सा योगतारा । अथान्येषामवशिष्टानां चाह ।” रङ्ग० । “रोहिण्यादित्यमूलानां प्राची सार्पस्य चैव हि । यथा प्रत्यवशेषाणां स्थूला स्याद्योगतारका” सू० “रोहिणीपुनर्वसुमूलानामश्लेषायाश्च प्रत्येकं स्वतारासु या पूर्वदिक्स्था सैव योगतारेत्यनयोरर्थः । प्रत्यवशेषाणामवशिष्टनक्षत्राणामार्द्राचित्रास्वात्यभिजिच्छततारादीनां स्वतारासु यात्यन्तस्थूला महती सा योगतारा स्यात् । अथ ब्रह्मस्थानवशात्स्थानमाह रङ्ग० । “पूर्वस्यां ब्रह्महृदयादंशकैः पञ्चभिः स्थितः । प्रजापतिर्वृषान्तेऽसौ सौम्येऽष्टत्रिंशदंशकैः” सू० “ब्रह्महृदयस्थानात् पूर्वभागे पञ्चभिरंशैः प्रजापतिस्ताराात्मको ब्रह्मा क्रान्तिवृत्ते स्थितः । कुत्रेत्यत आह । वृषान्त इति । वृषान्तनिकटे । एकराशिः सप्तविंशत्यंशा ब्रह्मध्रुवक इत्यर्थः । अस्य विक्षेपमाह । असाविति । ब्रह्मा उत्तरस्यामष्टत्रिंशद्भागैः स्थितः । अष्टत्रिंशद्भागा अस्य विक्षेप इत्यर्थः । अथापांवत्सापयोस्तारयोरवस्थानमाह” र० । “अपांवत्सस्तु चित्राया उत्तरेंऽशैस्तु पञ्चभिः । वृहत् किञ्चिदतो भागैरापः षड्भिस्तथोत्तरे” सू० “चित्रायाः सकाशादपांवत्ससंज्ञकस्ताराात्मकः पञ्चभिर्भागैरुत्तरस्यां स्थितः । प्रथमतुकारश्चित्राध्रुवतुल्यध्रुवकार्थकः । द्वितीयतुकारश्चित्राविक्षेपस्य दक्षिणभागदृयात्मकत्वादपांवत्सविक्षेप उत्तरांशभाग इति स्फुटार्थकः । अतोऽपांवत्सात् किञ्चिदल्पान्तरेण वृहत् स्थूलताराात्मक आपसंज्ञकः तथाऽपांवत्सात् षड्भिरंशैरुत्तरस्यां स्थितश्चित्राध्रुवक एवापस्य ध्रुवको विक्षेप उत्तरे नवांशा इत्यर्थः” रङ्ग० ।

नक्षत्राणामुदयास्तकालनिरूपणम् उदयशब्दे ११२८ पृष्ठादौ दर्शितम् ।

नक्षत्रघटितत्वात् राशीनां तथात्वम् । राशिनाम भवेत् नाम भम्रूक्षं रहनाम च” ज्यो० । राशयश्च द्वादश “पुनर्द्वादशधात्मानं व्यभजद्राशिसंज्ञकम् । नक्षत्ररूपिणं भूयः सप्तविंशात्मकं वशी” सू० सि० उक्ते: । ते च मेषवृषमिथुनकर्कटसिंहाः कन्या तुला च वृश्चिकम् । धनुश्च मकरः कुम्भो मीन इति च राशयः कथिताः” ज्योति० उक्ताः राशिश्च “विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते । तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव तु” सू० सि० उक्तः १०८००० विकलात्मकः १८०० कलात्मकः त्रिंशत्भागात्मकः । तैर्द्वादशभिः ३६० अंशैर्भगणो राशिचक्रं स्यात् तत्र सप्तविंशतिनक्षत्रात्मकराशिचक्रे द्वादशधा विभक्ते सपादनक्षत्रद्वयस्यैव प्रत्येकराशिघटकता तेन प्रत्येकनक्षत्रस्य ८०० कलात्मकत्वम् । “भभोगोऽष्टशतो लिप्ताः” सू० सि० उक्ते: । राशिभेदे नक्षत्रभेदनिरूपणमुडुचक्रशब्दे १०७१ पृ० दृश्यम् ।

“नाक्षत्रादीन् न शोधयेत्” “जन्मर्क्षे उपतापिते” ज्यो० ।

‘दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः” रघुः ।

नक्षत्रगन्धा स्त्री ऋक्ष° ... अपात्प्रियमस्य मन्न अच् ईष० ।

१जाङ्गलोद्भवे, (ऋषिजाङ्गला) २महाश्वेतायां, ३क्षीरविदार्य्याञ्च । (क्षीरताड़) स्वार्थे कन् तत्रैव

**ऋक्षगिरि** पु० कर्म०। कुलाचलभेदे ऋक्षनामके पर्वते ।

**ऋक्षचक्र** न० ६त०। १नक्षत्रसमुदाये ऋक्षाणां चक्रमिव गगनस्थे नक्षत्रात्मके चक्राकारे पदार्थभेदे। ज्यडुचक्रशब्दे तद्विवृतिः। भचक्रस्य प्रवहवायुना प्रत्यहं पश्चाद्गमनेऽपि ग्रहाणां यथा प्राग्गतित्वं भवेत्तथा सू० सि० रङ्गनाथव्याख्ययोः यथा "अथ ग्रहपूर्वगत्युपपत्तौ कारणमाह।"पश्चाद्व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः। जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः" सू० सि० । "पश्चादनन्तरं पुनरावृत्त्या पश्चात् पश्चिमदिगभिमुखं नक्षत्रैस्तारकादिभिः सह ग्रहाः सूर्यादयोऽतिजवात् प्रवहवायुत्वरगतिवशात् सततं निरन्तरं व्रजन्तो गच्छन्तः स्वमार्गगाः स्वकक्षावृत्तस्था जीयमाना नक्षत्रैः पराजिता नक्षत्राणामग्रे गमनात् । अतएव लज्जयेव गुरुभूता इति तात्पर्यार्थः । तुल्यं समम् । एवकारादधिकन्यूनव्यवच्छेदः । लम्बन्ते स्वस्थानात् पूर्वस्मिन् लम्बायमाना भवन्ति । यथा लज्जितः पश्चाद्भवति माघे । तुकारादधोऽधः कक्षाक्रमानुरोधेन शन्यादिग्रहाणां चन्द्रान्तानां गुरुतापचयः शनिरतिगुरुभूतस्तस्मात् किञ्चिन्न्यूनोगुरुस्तस्मादपि भौम इत्यादि यथोत्तरम् । यस्य कक्षा महती तस्य गुरुत्वाधिक्यं यस्य लघ्वी तस्य तदनुरोधेन गुरुताल्पत्वमिति । एतदुक्तं भवति । ब्रह्मणा प्रवहवायौ नक्षत्राधिष्ठितो मूर्तो गोलः स्थापितस्तदन्तर्गताः स्वस्वाकाशगोलस्थाः शन्यादयो नक्षत्राधिष्ठितमूर्तगोलस्थक्रान्तिवृत्तस्थरेवतीयोगताराासन्नरूपमेषादिप्रदेशसमसूत्रस्थाः स्थापिताः। क्रान्तिवृत्तं तु मेषतुलास्थाने विषुवद्वृत्तलग्नं तस्मातात् त्रिभान्तरितक्रान्तिवृत्तप्रदेशाभ्यां चतुर्विंशत्यंशान्तरेण दक्षिणोत्तरौ मकरकर्कादिरूपौ तदेवं द्वादशराश्यात्मकं वृत्तं ग्रहचारभूतम् । विषुवद्वृत्तं तु ध्रुवमध्यस्थं निरक्षदेशोपरिगम् । तत्र प्रवहवायुना स्वाघातेन मूर्तो नक्षत्रगोलो नाक्षत्रषष्टिघटीभिः परिवर्त्तते । तदन्तर्गतवायुभिस्तदाघातेन ते ग्रहा भ्रमन्तोऽपि नक्षत्रगोलस्थितक्रान्तिवृत्तीयमेषादिप्रदेशेन समं न गच्छन्ति वायूनां स्वल्पत्वात् तदाघातस्याल्पत्वाद्बिम्बानां गुरुत्वाच्च । अतस्तत्स्थानाद्ग्रहाणां लम्बना दृश्यन्ते । अतएव नक्षत्रोदयकाले तेषां द्वितीयदिने नोदयः किन्त्वाव...लम्बितप्रदेशेन वायुना तदनन्तरमूर्तमामकाले...तरमुदयः । लम्बनं तु शन्यादीनां कक्षानुरोधेन गुरुत्वाद्वायूनां तद्घातानां वा कक्षानुरोधेन बहुल्पत्वात् तुल्यम् । यद्यपि वायोर्ध्रुवानुरोधेन स्वल्पत्वाद्ग्रहलम्बनं विषुवद्वृत्ते भवितुमुचितं न क्रान्तिवृत्ते । तथा च वक्ष्यमाणक्रान्त्यनुपपत्तिः क्रान्तिवृत्तस्थद्वादशराशिभोगेन वक्ष्यमाणानां भगणानामनुपपत्तिश्च । तथापि वायुनावलम्बितो ग्रहो विषुवन्मार्गगोऽपि तद्विषुवप्रदेशासन्नक्रान्तिवृत्तप्रदेशेन ग्रहाकाशगोल एव स्वसमसूत्रे आकृष्यत इति नानुपपत्तिः । अतएव स्वमार्गगा इति क्रान्तिवृत्तानुकृतस्वाकाशगोलस्थकक्षामार्गगता इत्यर्थकमुक्तमिति सङ्क्षेपः" रङ्ग० । "अथात एव ग्रहाणां लोके प्राग्गमनित्वं सिद्धमित्याह । 'प्राग्गतित्वमतस्तेषां भगणैः प्रत्यहं गतिः । परिणाहवशाद्भिन्ना तद्वशाद्भानि भुञ्जते" सू० सि०। "अतोऽवलम्बनादेव तेषां ग्रहाणां प्राग्गतित्वं प्राच्यां दिशि गतिर्येषां ते प्राग्गतयस्तद्भावः प्राग्गतित्वं सिद्धम् । लम्बनस्वरूपैव ग्रहाणां पूर्वगतिरुत्पन्ना लोकैः कारणानभिज्ञैः प्रत्यक्षावगता तच्छक्तिजनिता कल्पितेत्यर्थः । सा कियतीत्यत आह । भगणैरिति । वक्ष्यमाणभगणैः प्रत्यहं प्रतिदिनं गतिः प्राग्गमनरूपा भगणानां मत्युपपन्नत्वात् भगणसम्बन्धिवक्ष्यमाणदिनैः सूर्यसावनैर्ग्रहभगणा लभ्यन्ते तदेकेन दिनेन केत्यनुपातानज्ञेया । ननु ग्रहभगणानां तुल्यत्वाभावात् प्रतिदिनं ग्रहगतिर्भिन्नेति पूर्वं लम्बनरूपा ग्रहगतिरयुक्तोक्ता ग्रहलम्बनस्याभिन्नत्वादित्यत आह । परिणाहवशादिति । परिणाहः कक्षापरिधिस्तद्वशात् तदनुरोधादियं ग्रहगतिर्भिन्नाऽतुल्या । अयमभिप्रायः ग्रहाणां लम्बनं तुल्यप्रदेशेन, परन्तु स्वस्वकक्षायां तत्तत्प्रदेशे तुल्येया; कक्षाया गतिकलास्तास्तु महति कक्षावृत्तेऽल्पा लघुकक्षावृत्ते बह्व्यः सर्वकक्षापरिधीनां चक्रकलाङ्कितत्वात् । भगणास्तु गतिवशादेव यस्य कक्षावृत्तं महत् तस्याल्पा यस्य च लघु कक्षावृत्तं तस्य बहवस्तदुत्पन्ना गतिरपि तथेति न विरोधः । नन्वेकरूपगतिं विहाय भिन्नरूपा गतिः कथमङ्गीकृतेत्यत आह । तद्वशादिति । भिन्नगतिवशाद्भानि राशीन् नक्षत्राणि भुञ्जते ग्रहा भुञ्जन्तीत्यर्थः । तथा च ग्रहराश्यादिभोगज्ञानार्थमियमेव गतिरुपयुक्ता नैकरूपेति भावः" रङ्ग० "अथ भभोगे विशेषं वदन् नक्षत्रभोगमयस्वरूपमाह । "शीघ्रगस्तान्यथाल्पेन कालेन महताऽल्पगः । तेषां तु परिवर्त्तेन पौष्णान्ते भगणः स्मृतः" सू० सि० "अथशब्दः पूर्वोक्तविशेषद्योतकः । शीघ्रगोऽल्प-

न्यानि भान्यल्पेन कालेन भुनक्त्यल्पगतिग्रहो बहुकालेन भुनक्ति तुल्यराश्यादिभोगो मन्दशीघ्रगतिग्रहयोस्तुल्यकालेन न भवतीति विशेषार्थः। तेषां राशीनां परिवर्त्तेन भ्रमणेन। तुकाराद्ग्रहादिगतिभोगजनितेन भगणः प्रातीवृत्तः। क्रान्तिवृत्ते द्वादशराशीनां सत्त्वात् तद्भोगेन चक्रभोगसमाप्तेर्यत् स्थानमारभ्य चलितो ग्रहः पुनस्तत् स्थानमायाति स चक्रभोगः परिवर्त्तसंज्ञोऽपि द्वादशराशिभोगात्मक इत्यर्थः। ननु क्रान्तिवृत्ते सर्वप्रदेशेभ्यः परिवर्त्तसम्भवादत्र कः परिवर्त्तादिभूतः प्रदेश इत्यत आह पौष्णान्त इति। सृष्ट्यादौ ब्रह्मणा क्रान्तिवृत्ते रेवतीयोगताराप्रदेशे सर्वग्रहाणां निवेशितत्वात् तदवधितो ग्रहचलनाच्च पौष्णस्य रेवतीयोगतारायाः अन्ते निकटे प्रदेशे तथा च रेवतीयोगताराससम्निधिस्थानमेवाद्यन्तावधिभूतमिति” रङ्ग०।

तत्सन्निवेशप्रकारः सि०शि० उक्तो यथा “स्रष्टा भचक्रं कमलोद्भवेन ग्रहैः सहैतद्भगणादिसंस्थैः। शश्वद्भ्रमे विश्वसृजा नियुक्तं तदन्ततारे च तथा ध्रुवत्वे। ततोऽपराशाभिमुखं भपञ्जरे सखेचरे शाश्वतरे भ्रमत्यपि। तदल्पगत्वेन्द्रदिशं नभश्चराश्चरन्ति नीचोच्चतरात्मवर्त्मसु”

“यदेतद्भचक्रं ग्रहैः समं भ्रमद्दृश्यते तद्विश्वसृजा जगदुत्पादकेन कमलोद्भवेन ब्रह्मणा सृष्ट्यादौ सृष्टं ततः शश्वद्भ्रमेऽनवरतभ्रमणे नियुक्तम्। एतदुक्तं भवति। भान्यश्विन्यादीन्यन्यानि विशिष्टानि ज्योतींषि तेषां समूहश्चक्रं, ग्रहाश्च सूर्यादयस्तैः सह सृष्टम्। तानि भानि प्राक्संस्थया समन्तान्निवेशितानि। ग्रहास्तु भगणादावश्विनीमुखे निवेशितास्त उपर्युपरिसंस्थया। तत्रादौ तावदधश्चन्द्रः। तदुपरि बुधः। ततः शुक्रः। ततो रविः। तस्माद्भौमः। ततो गुरुः। ततः शनिः। सर्वेषामुपरि दूरे भचक्रम्। येषां कक्षाप्रमाणानि कक्षाध्याये प्रतिपादयिष्यन्ते। अथो यद्यूर्ध्वोर्ध्वस्था ग्रहास्तदुपरि दूरतो भगणस्तत् कथं भगणादिसंस्थैर्ग्रहैरित्युच्यते। उच्यते। अत्र भूमध्ये सूत्रस्यैकमग्रं बद्ध्वा द्वितीयमग्रं भचक्रेऽश्विनीमुखे किल निबद्धम्। तस्मिन् सूत्रे प्रोता मणय इव चन्द्रादयो ग्रहाः सृष्ट्यादौ ब्रह्मणा निवेशिताः। भमण्डलं द्वादशधा विभज्यैवं भूमध्यात् सूत्राणि प्रतिभागं नीत्वा किल बद्धानि तैः सूत्रैः सह ग्रहकक्षायां ये संपातास्ते तासु कक्षासु राश्यन्ताः। तद्वत्प्रकारा राशय इति सङ्क्षिप्तमिहोक्तम्। कक्षाध्याये गोले च किञ्चिद्विस्तार्थं वक्ष्यामः। एवंविधं भचक्रं स्वज ब्रह्मणा गगने निवेशितम्। यत्र निवेशितं तत्र प्रवहो नाम वायुः। स च नित्यं प्रत्यग्गतिः। तेन समाहतं भचक्रं सखेचरं पश्चिमाभिमुखभ्रमे प्रवृत्तम्। यत् तत्र प्रत्यग्भ्रमणं तच्छश्वत्तरम्। यत एकेनाह्ना भमण्डलस्य (भूमेः) परिवर्त्तः। एवं तस्मिन् भपञ्जरे सखेचरे शश्वत्तरे भ्रमत्यपि खेचरा इन्द्रदिशं चरन्ति पूर्वाभिमुखं व्रजन्ति। नीचोच्चतरात्मवर्त्मसु। अनन्तरकथितेषु स्वस्वमार्गेषु तेषां प्राग्भ्रमणम्। तत् तदल्पगत्या। प्रत्यग्गतेर्बहुत्वात् प्रागल्पगत्या व्रजन्तो नोपलक्ष्यन्त इति भावः। तथा तस्य भपञ्जरस्य यो दक्षिणोत्तरावन्तौ तत्र ये तारे ते ध्रुवत्वे नियुक्ते” प्रमि०। राशिचक्रस्य प्रवहवायुना पश्चाद्गमनोक्तेरपि व्यवदेशोपरिगतत्वाभिप्रायेण देवासुरयोस्तु सू०सि० सव्यापसव्यभ्रमणोक्तेः यथा “सव्यं भ्रमति देवानामपसव्यं सुरद्विषाम्” इति “व्यक्ते पश्चाद्गतिः सदेति” वस्त्यपश्च पश्चाद्गतेरुक्तत्वेति द्रष्टव्यम्।

**ऋक्षर** पु० ऋष–क्सरन्। १ऋत्विजि। ऋच्छतेः हन्तेः कष्टतेर्वा निरु० कसरन् प्र०। २कण्टके “स्योना पृथिवी भवानृक्षरा निवेशनी” यजु० ३५,२१, “अनृक्षरा अकण्टका” वेददी० ३वारिधारायां स्त्री मेदिनिः।

**ऋक्षराज** पु० ६त० टच्समा०। १नक्षत्रेशे चन्द्रे २भल्लूकेशे जाम्बवति च। “अथ सिंहं प्रधावन्तमृक्षराजो महाबलः” हरिवं० ३९ अ० “लेभे जाम्बवतीं कन्यामृक्षराजस्य सम्मताम्” हरिवं० ३९ “जाम्बवानृक्षराजेन्द्रः” भाग० ८,२१,८। ऋक्षनाथादयोऽप्यत्र।

**ऋक्षला** स्त्री ऋच–सलच् किच्च। गुल्फाधःस्थनाड्याम् “क्रमणं स्थूराभ्यामृक्षलाभिः कपिञ्जलान्” यजु० ५,२, “ऋक्षला गुल्फाधःस्था नाड्यः” वेददी०

**ऋक्षवत्** पु० ऋक्षाः बाहुल्येन सन्त्यत्र मतुप् मस्य वः। नर्मदातीरस्थे पर्वतभेदे “सप्रक्रियामृक्षवतस्तटेषु” रघुः “नर्मदाकूलमेकाकी मेकलां मृत्तिकावतीम्। ऋक्षवन्तं गिरिं जित्वा शुक्तिमत्यामुवास सः” हरिवं० १७ अ० उक्तेः तस्य नर्मदातीरस्थत्वम् बोध्यम् “ऋक्षवन्तं गिरिवरं विन्ध्यस्य गिरिमुत्तमम्” हरिवं० ३९ अ०।

**ऋक्षवन्त** ऋक्ष+बा० वन्त। ?.बैरासुरपुरे नगरभेदे “तमृक्षवन्ते नगरे निहत्यासुरसत्तमम्। स्रष्टा मायावती देवीमागच्छन्नगरं पितुः” मेष्व्य ? १६अ० वं ? म्वरम्।

**ऋक्षीक** ति० ऋक्ष इव इवार्थे ईकन् ? ?तत्स्वे हिंसके।

"ऋक्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन्" शत० ब्रा० १३,२,४,२,४, २ऋक्षाकारपुरुषमेधीयदेवताभेदे स्त्री ।"नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादम्" यजु० ३०,८ । पुरुषमेधे उक्तम् ।

**ऋक्षेष्टि** स्त्री नक्षत्रविशेषविहिते इष्टिभेदे ।

**ऋक्षोद** पु० ऋक्षं नक्षत्रमिव स्वच्छम् उदकं यत्र उदादेशः । पर्वतभेदे । "ऋक्षोदः पर्वतोऽभिजनो येषाम् अण् । आर्क्षोदा द्विजाः" सि०कौ० ।

**ऋक्संहिता** स्त्री ६त० । ऋग्वेदसंहितायाम् ऋग्वेदशब्दे विवृतिः "ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः । साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते" मनुः वेदोहि मन्त्रब्राह्मणभेदेन द्विविधः तत्र मन्त्रात्मको भागः संहिता । "अग्निमीळे" इत्यादिकः ऋक्समुदायात्मकः ऋक्संहिता । मन्त्रेतरवेदभागो ब्राह्मणम् । संहितारूपसन्धिकार्यनियताश्रयतया संहितात्वं ब्राह्मणे पदग्रन्थे च न संहितानियम इति तयोर्न संहितात्वमिति भेदः संहितास्थपदविच्छेदज्ञापकोग्रन्थः पदग्रन्थः । स च ऋष्यादिकृतःपौरुषेय इति बोध्यम् ।

**ऋक्सम** न० ऋचा समम् । सामभेदे । "जगत्या ऋक्समम् ऋक्समाच्छुक्रः" यजु० १३,५६, "ऋक्समम् ऋक्समसंज्ञं यत् साम" वेददी० ।

**ऋक्साम** न० द्वि०। ऋक् च साम तदारूढगानं च द्वयोः समाहारः अच् समा०नि०द्वि० । ऋग्रूपमन्त्रभेदतदारूढगानयोः समाहारे "ऋक्सामाभ्यां संतरन्तः" यजु० ४,१ । "ऋक्सामयोः शिल्पे स्थः" ४,९ । ऋचश्च सामानि चेति बहुत्वे तु नाच् । ऋक्सामन् इत्येव ।"ऋक्सामान्यधुरस एष्योगाम" यजु०१८,४२ ।

**ऋगयन** न० ऋचामयनम् । ऋक्पारायणग्रन्थे पूर्वपदात् णत्वं नेह गत्यवधानात् । ऋगयनस्य व्याख्यानो ग्रन्थः ऋगयनादि० अण् । आर्गयन तद्व्याख्यानग्रन्थे ।

**ऋगयनादि** पु० पाणिन्युक्ते तस्य व्याख्यान इत्यर्थे अण्प्रत्ययनिमित्तप्रकृतिभूतशब्दसमुदाये । स च गणः "ऋगयन, पदव्याख्यान, छन्दोमान, छन्दोभाषा, छन्दोविचिति, न्याय, पुनरुक्त ,निरुक्त, व्याकरण, निगम, वास्तुविद्या, क्षत्रविद्या, अङ्गविद्या, विद्या, उत्पात, उत्पाद, उद्याव संवत्सर, मुहूर्त, उपनिषद्, निमित्त, शिक्षा, भिक्षा"

**ऋगावान** न० आ+नेञ्भावे ल्युट् ऋचामावानं ग्रथनं संहिताकार्यैकतानसम्बन्धानम् । वेदपाठकाले अर्द्धर्चादीनां संहितया पूर्वोत्तरयोः सन्धाने "ऋचमृचमनावानमुक्त्वा प्रणुयादवस्येत्" आश्व० श्रौ० ४,६,२ । "तेनार्द्धर्चाः संहितयैव वक्तव्याः" नारा० इ० । ऋचामन्ते तु न संहितया ग्रथनमित्यर्थः ।"अभिष्टुयादृगावानम्"५,६,१ । "तस्योक्तमृगावानधर्मेण" ५, ११,२ । "तस्याद्यां पच्छ ऋगावानं पच्छः शस्त्वा चेत्" ५,२०,२ ।

**ऋग्गाथा** स्त्री ऋचामिव गाथा । लौकिकगीतिभेदे । "ऋग्गाथापाणिकादक्षविहिताब्रह्मगीतिका:" याज्ञ० ।

**ऋग्मत्** त्रि० ऋक् स्तुतिः पूजा वा अस्त्यस्य मतुप् ।१स्तोतरि २अर्चनीये पूजनीये । "राजानमुपतस्थुर्ऋग्मियम्" ऋ० ६,८,४ स्तुतेर्निरुक्तौ ऋग्मियमृग्मन्तमर्चनीयं पूजनीयम्" निरुक्तकारः । ऋग्मानिव स्वार्थे घ द्वितीयाचः परलोपः । ऋग्मियोऽप्यत्र । "नाभिस्थन्तमृग्मियम्" ऋ०१,९,९ ।

**ऋग्मिन्** त्रि० ऋच्+अस्त्यर्थे मिनि । स्तोतरि ।"गिरा यदि निर्णिजमृग्मिणो ययुः" ऋ० ९,८६,४६ । "ऋग्मिणः स्तोतारः" भा० ।

**ऋग्विधान** न० ऋचा ऋग्वेदेन कर्मविशेषस्य विधानम् । ऋग्वेदोक्तमन्त्रभेदेन कर्मविशेषविधाने तच्च हेमाद्रौ व्रतखण्डे विस्तरेणोक्तम् । वह्निपुराणोक्तमत्र दर्श्यते

"अग्निरुवाच प्रतिवेदन्तु कर्माणि काम्यानि प्रवदामि ते । प्रथमं ऋग्विधानं वै शृणु त्वं भुक्तिमुक्तिदम् । अन्तर्जले तथा होमे जपतो मनसेप्सितम् । कामं करोति गायत्री प्राणायामाद्विशेषतः । गायत्र्यादशसाहस्रो जपो नक्ताशनोद्विजः । आश्रमाद्बहिः स्नातश्च सर्वकल्मषनाशनः । दशायुतानि जप्त्वाथ हविष्याशी स मुक्तिभाक् । प्रणवोहि परं ब्रह्म तज्जपः स च पापहा । ओङ्कार शतजप्तस्तु नाभिमात्रोदके स्थितः । जलं पिबेत् स सर्वैस्तु पापैर्विप्रः प्रमुच्यते । मात्रात्रयं त्रयोवेदास्त्रयोदेवास्त्रयोऽग्नयः । महाव्याहृतयःसप्त लोकाहोमोऽखिलापहः । अन्तर्जले तथा राम! प्रोक्तश्चैवाघमर्षणः । अग्निमोळे पुरोहितं सूक्तोऽयं वह्निदैवतः । शिरसा धारयन् वह्निं योजयेत् परिवत्सरम् । होमं त्रिषवणं भैक्षमनग्निपचनम् चरेत् । अतःपरमृचां सप्त आद्याद्या याः प्रकीर्त्तिताः । भोजयन् प्रयतोनित्यमिष्टान् कामान् समश्नुते । मेधाकामोजपेन्नित्यं सदसस्पतिमित्यृचम् । अम्बयजन्ति याः प्रोक्ता नवर्चो मृत्युनाशनः । शुनःशेफमृषिं वद्धः सन्निरुद्धोऽथ वा जपेत् । मुच्यते सर्वपापेभ्यो गदी चाप्यगदी भवेत् । यइच्छेत् शाश्वतं कामं मित्रं प्राज्ञं

पुरन्दरम् । ऋग्भिः षोड़शभिः कुर्य्यादिन्द्रस्येति दिने-दिने । हिरण्यस्तु समित्येतत् जपन् शत्रून् प्रबाधते । क्षेमी भवति चाध्वाने ये ते पन्था जपन्नरः । रौद्रीति षड्भिरीशानं स्तूयाद्योवै दिने दिने । चरुं वा कल्पयेद्रौद्रं तस्य शान्तिः परा भवेत् । उद्यदुदितमादित्यमुपतिष्ठन् दिनेदिने । क्षिपेज्जलाञ्जलीन् सप्त मनोदुःखविनाशनः । द्विषन्तमित्यथर्व्वं यद्विष्यान्तं जपन् स्मरेत् । आगस्यो सप्तरात्रेण विद्वेषमधिगच्छति । आरोग्यकामो योधी च प्रत्नशाम्यात्तमञ्जपेत् । उत्तमस्तस्य चार्द्धाधोजपेद्वैरिविनाशने । उदयस्यायुरक्षय्यं तेजो मध्यंदिने जपेत् । अस्तं प्रतिगते सूर्य्ये द्विषन्तं प्रतिबाधते । तत्र यश्चेति सूक्तानि जपन् शत्रून्नियच्छति । एकदेशं सुवर्णस्य सर्व्वकामान् विनिर्द्दिशेत् । आध्यात्मिका क इत्येता जपन्मोक्षमवाप्नुयात् । आ नोभद्रा इत्यनेन दीर्घमायुरवाप्नुयात् । त्वा सोमेति च सूक्तेन नवं पश्यन्निशाकरम् । उपतिष्ठेत् समित्पाणिर्व्वासांस्याप्नोत्यसंशयम् । आयुरायूंषि समिति कोषस्तकन्तदा-जपेत् । अपानः शोशुचदिति स्तुत्वा मध्ये दिवाकरम् । यथा मुञ्चति चेषीकान्तथा पापं प्रमुञ्चति । जातवेदस इत्येतज्जपेत् स्वस्त्ययनं पथि । भयैर्व्विमुच्यते सर्व्वैः स्वस्तिमानाप्नुयाद्गृहम् । व्युष्टायाञ्च तथा रात्र्यामेतद्दुःस्वप्ननाशनम् । प्रमन्दिनेति सूयन्त्यां जपेद्गर्भविमोचनम् । जपन्निन्द्रमिति स्नातो वैश्वदेवं तु सप्तकम् । सुस्वल्पेभ्यस्तथा जुह्वत् सकलं किल्विषं नरः । इमामिति जपन् शश्वत् कामानाप्नोत्यभीप्सितान् । मा नस्तोक इति द्वाभ्यां त्रिरात्रोपोषितः शुचिः । औडुम्बरीश्च जुहुयात् समिधश्चाज्यसंभृताः । छित्वा सर्व्वान् मृत्युपाशान् जीवेद्रोगविवर्ज्जितः । ऊर्द्ध्वबाहुरनेनैव स्तुत्वा शम्भुं तथैव च । मा नस्तोकेति च ऋचा शिखाबन्धे कृते नरः । अधृष्यः सर्व्वभूतानां जायते संशयं विना । चित्रमित्युपतिष्ठेत त्रिसन्ध्यं भास्करं तथा । समित्पाणिर्न्नरोनित्यमीप्सितं धनमाप्नुयात् । दुःस्वप्नं नुदते तद्वत् भोजनं चाप्नुयाच्छिवम् । कृतेषवामीति तथा रक्षोघ्नः परिकीर्त्तितः । यदि वासा इत्यृचेन जपन् कामानाप्नुयात् । नमोयशश्चिति जपन् सुप्रगे तापनः शुचिः । कवान इति च जपन् जातिश्रैष्ठ्यमवाप्नुयात् । इमन्तेसोममित्येतत् सर्व्वान् कामानवाप्नुयात् । पितुश्चूपतिष्ठेत नित्यमन्नमुपस्थितम् । अग्ने तत् पतिसूक्तेन स्निग्धमाप्नोत्युत्तमम् । योमेराजन्नित्यपान्तु दुःस्वप्नशमनीमृचम् । अध्वनि प्रस्थितो यस्तु पश्येच्छुभमथाशुभम् । अप्रशस्तं प्रशस्तं वा कनिक्रदमिमं जपेत् । द्वाविंशकं जपन् सूक्तमाध्यात्मिकमनुत्तमम् । पूर्व्वं सुप्रयतोनित्यमिष्टान् कामान् समश्नुते । कृणुष्वेति जपेन्मन्त्रं जुह्वदाज्यं समाहितः । अरातीनां हरेत् प्राणं रक्षांस्यपि च नाशयेत् । उपतिष्ठेत् स्वयं वह्निं परीत्यैकं दिने दिने । सुरक्षति स्वयं वह्निर्व्विश्वतो विश्वतोमुखः । हंसः शुचिषदित्येतत् शुचिरीक्षेत् दिवाकरम् । कृषिं प्रपद्यमानस्तु स्थालीपाकं यथाविधि । जुहुयात् क्षेत्रमध्ये तु स्थालीपाकांस्तु पञ्चभिः । इन्द्र यममरुत्सूर्य्यपर्ज्जन्याय भगाय च । यथालिङ्गं तु विहरेत् लाङ्गलन्तु कृषीवलः । प्रोक्तोधान्याय सीतायै शुनासीरमथोत्तरम् । गन्धमाल्यनमस्कारैर्ज्जपेदेताश्च देवताः । प्रवापने प्रलवने खले स्थापनकारयोः । अमोघं कर्म्म भवति वर्द्धते सर्व्वदा कृषिः । समुद्रादिति सूक्तेन कामानाप्नोति पावकात् । वैश्वानर इति द्वाभ्यां य ऋग्भ्यां वह्निमर्हति । स तरत्यापदः सर्व्वा यशः प्राप्नोति चाक्षयम् । विपुलां श्रियमाप्नोति जयं प्राप्नोत्यनुत्तमम् । अग्ने त्वमिति च स्तुत्वा धनमाप्नोति चोच्छ्रितम् । प्रजाकामोजपेन्नित्यमरुणादेवमित्यृचम् दत्तात्रेयं जपेत् प्रातः सदा स्वस्त्ययनं महत् । स्वस्ति पन्था इति प्रोच्य स्वस्तिमान् व्रजतेऽध्वनि । विजिगीषुर्व्वनस्पते शत्रूणां व्याधिदस्भवेत् । स्त्रियागर्भप्रसूताया गर्भमोचनमुत्तमम् । आ वृद्धादिति सूक्तञ्च वृष्टिकामः प्रयोजयेत् । निराहारः क्लिन्नवासो नचिरेण प्रवर्षति । मनसः काममित्येतां पशुकामो नरोजपेत् । कर्द्दमन इति स्नायात् प्रजाकामः शुचिव्रतः । अश्वपूर्व्वामिति स्नायाद्राज्यकामस्तु मानवः । रोहिते चर्म्मणि स्नायात् ब्राह्मणस्तु यथाविधि । क्षत्रचर्म्मणि वै व्याघ्रे छागे वैश्यस्तथैव च । इत्यसाहस्त्रिकोहोमः प्रत्येकं परिकीर्त्तितः । आ गाव इति सूक्तेन गोष्ठे गां लोकमातरम् । उपतिष्ठेज्जपेच्चैव यदीच्छेत्ताः सदाऽक्षयाः । उपैतेति तिसृभीराजा दुन्दुभिं चाभिमन्त्रयेत् । तेजोबलञ्च प्राप्नोति शत्रूंश्चैव नियच्छति । तृणपाणिर्ज्जपेत् सूक्तं रक्षोघ्नं दस्युभिर्वृतः । ये केचिच्चेत्यृचं जप्त्वा दीर्घमायुरवाप्नुयात् । जीमूतस्येति सूक्तेन वाङ्गान्यभिमन्त्रयेत् । यथा छिद्रं ततो राजा विनिहन्ति रणे रिपून् । अमीवेतित्रिभिः सूक्तैर्धनमाप्नोति चाक्षयम् । अमीवहेति सूक्तेन भूतानि स्थापयेन्निशि । संबाधे विषमे

दुर्गे बद्धो वा निगडैः क्वचित् । पलायन् वा गृहीतो वा सूक्तमेतत्तदा जपेत् । त्रिरात्रमपि चोपोष्य श्रपयेत् पायसं चरुम् । तेनाहुतिशतं पूर्णं जुहुयात् त्र्यम्बकेत्यृचा । समुद्दिश्य महादेवं जीवेदब्दशतं सुखम् । तच्चक्षुरित्यृचा स्नात उपतिष्ठेद्दिवाकरम् । उद्यन्तं मध्यमं चैव दीर्घमायुर्जिजीविषुः । सूक्ताभ्यां परमाभ्यां भूताभ्यां भूतिमाप्नुयात् । इन्द्रा सोमेति सूक्तन्तु कथितं शत्रुनाशनम् । यस्य लुप्तं व्रतं मोहाद्व्रात्यैः संसृजेत वा । उपोष्याज्यं स जुहुयादग्ने व्रतपते इति । आदित्य इत्यसाम्नाज्यं जप्त्वा वादे जयी भवेत् । नदोतीति चतुष्केण मुच्यते महतो भयात् । ऋचं जप्त्वा यदित्येतत् सर्वान् कामानवाप्नुयात् । द्वाचत्वारिंशकं चैन्द्रं जप्त्वा नाशयते रिपून् । रायश्चहीति जप्त्वा च प्राप्नोत्यारोग्यमेव च । यज्ञोभवेति द्वाभ्यान्तु भुञ्जानं प्रयतः शुचिः । हृदयं पाणिना स्पृष्ट्वा व्याधिभिर्नाभिभूयते । उत्तमेदमिति स्नातो भूत्वा शत्रुं प्रमापयेत् । त्वन्नो अग्नेति सूक्तेन हुतेनान्नमवाप्नुयात् । कन्यावामिति सूक्तेन दिग्दोषात् विप्रमुच्यते । यदद्य कच्चेत्युदिते जप्तुर्वश्यं जगद्भवेत् । यद्वागिति च जप्तेन वाग्मी भवति शाश्वती । वाचोविदमितीत्येता जपन् वाचं समश्नुते । पवित्राणां पवित्रन्तु पावमान्य ऋचां मताः । वैखानसा ऋचस्त्रिंशत् पवित्राः परमा मताः । ऋचोद्विषष्टिः प्रोक्ताश्च यत्रस्त्वृषिसत्तम ! । सर्वकल्मषनाशाय परिणामशिवाय च । स्वादिष्ठयेति सूक्तानां सप्तषष्टिरुदाहृता । दशोत्तराण्युपासीताः पावमानीः शतानि षट् । एतज्जपंश्च जुह्वंश्च घोरं मृत्युभयं जयेत् । आपोहिष्ठेति चारिष्टौ जपेत् पापभयार्द्दने । प्रवेदनेति नियतो जपेच्च मरुधन्वसु । प्राणान्तिके भये प्राप्ते क्षिप्रं प्राणांस्तु विन्दति । व्युष्टायामुदिते सूर्य्ये से चेति जयमाप्नुयात् । आयुहोमेति मूढश्च पन्थानं पथि विन्दति । क्षीणे युवति मन्त्रेण यं कञ्चिद्धृदयप्रियम् । यत्त्वेयमेति सुस्नातस्तस्य मूर्द्धानमालभेत् । सहस्रकृत्वः पश्चाहं तेनायुर्विन्दते महत् । इदं मेध्येति जुहुयाद् घृतं प्राज्ञः सहस्रशः । पशुकामो गवाङ्गोष्ठे अर्थकामश्चतुष्पथे । वयः सुपर्ण इत्येतां जपन् वा विन्दते प्रियम् । हविष्यन्तीं समभ्यस्य सर्वपापैः प्रमुच्यते । तस्य रोगा विनश्यन्ति कायाग्निर्वर्द्धते सदा । त्र्यक्षामयः स्वस्त्ययनं सर्वव्याधिविनाशनम् । बृहस्पते अतीत्येतद् इष्टकामः प्रयोजयेत् । सर्वं त्वेति परा शान्तिर्ज्ञेयाप्रतिरथस्तथा । मृतावं कश्यपश्चित्रं प्रजाकामस्य कीर्त्तितम् । अहं रुद्रेभिरित्येतद्वाग्मी भवति मानवः । न रोगी जायते विद्वान् जपंस्त्रिषु रात्रिषु । रात्रिसूक्तं जपन् रात्रौ रात्रिं क्षेमां नयेन्नरः । आकल्पयन्तीति जपेन्नित्यं कृत्याविनाशनम् । आयुष्यञ्चैव वर्च्चस्यं सूक्तं दाक्षायणं महत् । उत देवा इति जपेदाखापान्तं धृतव्रतः । अदमार्गे तु जनिते जपेदग्निभये सति । अरण्यानीत्यरण्येषु जपेत्तद्भयनाशनम् । ब्राह्मीमासाद्य सूक्ते द्वे वरां ब्राह्मीं शतावरीम् । पृथगद्भिर्हुतेनाथ मेधां लक्ष्मीञ्च विन्दति । मास इत्यसपत्नघ्नं संग्रामं विजिगीषतः । ब्रह्मणोऽग्निं संविदानं गर्भमृत्युनिवारणम् । अपैहीति जपेत् सूक्तं शुचिर्दुःस्वप्ननाशनम् । येनेदमिति वै जप्त्वा समाधिं विन्दते परम् । मयोभूर्वात इत्येता जपेत् स्वस्त्ययनं परम् । शामरीमिन्द्रजननम् बाधामेतेन वारयेत् । महित्रीणामवोऽस्त्विति पथि स्वस्त्ययनं जपेत् । अग्नये द्विषद्वेषं जपेच्च रिपुनाशनम् । वास्तोष्पतेति मन्त्रेण जपेच्च गृहदेवताः । जपस्यैव विधिः प्रोक्तो हुतौ त्वेवं विशेषतः । होमान्ते दक्षिणा देया पापशान्तिकृतेन तु । हुतं शमयति प्राज्येन अन्नहोमप्रदानतः । विप्राशिषस्त्वमोघाः स्युर्भिः स्नातं च सर्व्वतः । सिद्धार्थका यवा धान्यं पयोगव्यघृतं तथा । क्षीरवृक्षासयेधन्तु होमा वै सर्व्वकामदाः । समित् कण्टकिनश्चैव राजिका रुधिरं विषम् । अभिचारे तथा शैलुमसनं शक्तवः पयः । दधि भैक्ष्यं फलं मूलमृग्विधानमुदाहृतम्" ।

ऋग्वेद पुं॰ ऋच्यते स्तूयते ऋक् कर्म्म॰ । वेदभेदे । स च मन्त्रब्राह्मणोभयात्मकः । तत्र मन्त्रसमूहात्मकः ऋक्शब्दवक्ष्यमाणवर्गात्मकः संहितारूपो मन्त्रः । तत्र दश मण्डलानि तत्राद्ये मण्डले २४ अनुवाकाः "अग्निमीळे" इत्यादीनि आग्नेयानि १९१ सूक्तानि तानि शतर्चिकर्षिदृष्टानि अध्यायोपाकरणोत्सर्गयोर्विनियुक्तानि ।

द्वितीये शौनकगृत्समदर्षिदृष्टे चत्वारि अनुवाकाः । त्वमग्न इत्यादीनि ४२ सूक्तानि आग्नेयानि उपाकरणोत्सर्गयोर्विनियुक्तानि । शौनकगृत्समदः ऋषिरेतन्मण्डलद्रष्टा स च पूर्व्वमाङ्गिरसकुले शुनहोत्रस्य पुत्रः सन् यज्ञकालेऽसुरैर्गृहीत इन्द्रेण मोचितः । पश्चात्तद्वचनेनैव भृगुकुले शुनकपुत्रो गृत्समदनामाऽभूत् । "य आङ्गिरसः शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत् स गृत्समदो द्वितीयमण्डलमपश्यत्" सर्वानु॰ उक्तेः । "त्वमग्न इति गृत्समदः शौनको भृगुतां गतः । शौनहोत्रः प्रकृत्या तु य

आङ्गिरस उच्यते" इति ऋष्यनुक्रमोक्तेश्च । ऋग्वेदभाष्यम् ।

तृतीये विश्वामित्रदृष्टे पञ्चानुवाकाः सोमस्य मेत्यादीनि ६२ सूक्तानि । तानि च आग्नेयानि प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसि विनियुक्तानि ।

चतुर्थे वामदेवर्षिदृष्टे पञ्चानुवाकाः । आग्नेयानि त्वां ह्यग्ने इत्यादीनि ५८ सूक्तानि । आद्याध्यायोपाकरणे मण्डलादिहोमे च विनियुक्तानि ।

पञ्चमे आत्रेयबुधगविष्ठिराद्यर्षिके षड् अनुवाकाः ८७ अबोध्यग्निरित्यादीनि सूक्तानि आग्नेयानि आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चत्वारि शिष्टानि अध्यायोत्सर्जनोपाकरणयोर्विनियुक्तानि ।

षष्ठे भरद्वाजदृष्टे षडनुवाकाः त्वं ह्यग्ने प्रथम इत्यादीनि ७५ सूक्तानि आग्नेयानि तत्र प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छन्दसि एतदादिसूक्ताष्टकं द्वितीयवर्जं विनियुक्तम् शिष्टानि आद्योपाकरणे विनियुक्तानि ।

सप्तमे वसिष्ठदृष्टे ६ अनुवाकाः अग्निं नर इत्यादीनि १०४ सूक्तानि आग्नेयानि तेषां विशेषतो विनियोगोबाहुल्यात् नोक्त आकरे द्रष्टव्यः ।

अष्टमे मेधातिथिमेध्यातिथ्यादिनानर्षिके । दशानुवाकाः । इन्द्रादिदैवत्यानि "मा चिदन्यद्वीत्यादीनि १०२ सूक्तानि महाव्रतादौ विनियुक्तानि ।

नवमे वैश्वामित्रमधुच्छन्दआद्यृषिके सप्तानुवाकाः पावमानसोमादिदेवताकानि स्वादिष्ठयेत्यादीनि ११४ सूक्तानि तेषाञ्च उपाकर्मणि मण्डलादिग्रहणे च यथायथं विनियोगः ।

दशमे मण्डले आप्त्यत्रिताद्यर्षिके द्वादशानुवाकाः अग्ने बृहन्नित्यादीनि १९१ सूक्तानि आग्नेयादीनि । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छन्दसीत्यादि कर्मसु विनियुक्तानि । इत्येवं दशसु मण्डलेषु १म० १९१, २म० ४३, ३म० ६२, ४म० ५८, ५म० ८७, ६म० ७५, ७म० १०४, ८म० १०२, ९म० ११४, १०म० ११९१ । इत्येवं समष्टि भूतानि १०२८ सूक्तानि । सूक्तानि च एकद्व्यादिवर्ग घटितानि यथायथं तत्तत्सूक्तेषु द्रष्टव्यानि । एतत्संख्या च बालखिल्यसहितानां तद्व्यतिरिक्तानि तु १०१७ सूक्तानि तच्च चरणव्यूहभाष्ययोः स्पष्टम् । तस्य च प्रकारान्तरेण विभागः तत्र अष्टाष्टकानि प्रत्येकाष्टके च अष्टौ अष्टौ अध्यायाः इत्येवं ६४ अध्यायाः

तत्र च वर्गा २००६ संख्यकाश्चरणव्यूहोक्ताः खिल-सहितस्तु ततोऽप्यधिकाः । चरणव्यूहभाष्ययोर्दर्शित-विभागो दृश्यते यथा ।

"चातुर्वेद्यं चत्वारोवेदा विज्ञाता भवन्ति ऋग्वेदो-यजुर्वेदः सामवेदोऽथर्ववेदश्चेति तत्र ऋग्वेदस्याष्टभेदा भवन्ति चर्चा श्रावकश्चर्चक श्रवणीयपारः क्रमपारः क्रमजटाः क्रमदण्डश्चेति चतुष्पारायणमेतेषां शाखाः पञ्च भवन्त्याश्वलायनी सांख्यायनी शाकला बाष्कला माण्डूकाश्चेति तेषामध्ययनम् । अध्यायानां चतुःषष्टिर्मण्डलानि दशैव तु । वर्गाणां परिसंख्यातं द्वे सहस्रे षडुत्तरे सहस्रमेकं सूक्तानां निश्चितं विकल्पितम् । दश सप्त च पठन्ते संख्यातं वै पदक्रमात् । एकशतसहस्रं वा द्विपञ्चाशत्सहस्रार्द्धमेतानि चतुर्दश वासिष्ठामामितरेषां पञ्चाशीतिः । ऋचां दश सहस्राणि ऋचां पञ्चशतानि च । ऋचामशीतिः पादश्च पारायणं प्रकीर्त्तितम् । एकर्चे एकवर्गश्च नवकश्च तथा स्मृतः । द्वौ वर्गौ द्विऋचौ ज्ञेयौ ऋक्त्रयं शतं च स्मृतम् । चतुर्ऋचां पञ्चसप्तत्यधिकञ्च शतं तथा । पञ्चऋचां तु द्विशतं सहस्रं रुद्रसंयुतम् । पञ्चचत्वार्यधिकं तु षड् ऋचां च शतत्रयम् । सप्त ऋचां शतं ज्ञेयं विंशतिसाधिकाः स्मृताः । अष्टऋचां तु पञ्चाशत् पञ्चाधिकास्तथैव च । दशाधिकद्विसहस्राः पञ्चशाखासु निश्चिताः । वर्ग संज्ञा न सूक्तस्य चत्वारश्चात्र कीर्त्तिताः" चरणव्यूहः । वेदपारायणचतुर्विभागात् चरण उच्यते । तस्य व्यूहः समुदायः, चतुर्वेदानां समुदायं व्याख्यास्यामः इत्यर्थः । कथमेकोवेदः तदुक्तं आरण्यके, "सर्वे वेदाः सर्वघोषा एकैव व्याहृतिः प्राणा एव प्राणा ऋच इत्येता विद्यादिति" तस्य चतुर्धा भागः कृतः । तथा चोक्तं भागवते । "तेनासौ चतुरो वेदाः चतुर्भिर्वदनैः प्रभुः । सव्याहृतिकान्सोङ्कारांश्चतुर्होत्रविवक्षया । पुत्रानध्यापयंस्तां तु ब्रह्मर्षीन् ब्रह्मकोविदान् । ते तु धर्मपदेष्टारः स्वपुत्रेभ्यः समादिशन् । ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः । चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः । क्षीणायुःक्षीणसत्त्वान् दुर्मेधा वीक्ष्य कालतः । वेदान् ब्रह्मर्षयोव्यस्यन् हृदिस्थाऽच्युतनोदिताः । अस्मिन्नप्यन्तरे ब्रह्मन् भगवान् लोकभावनः । ब्रह्मेशाद्यैर्लोकपालैर्याचितोधर्मगुप्तये । पराशरात् सत्यवत्यामंशांशकलया विभुः । अवतीर्णोमहाभागो वेदं चक्रे चतु-

विधम् । ऋगथर्वयजुःसाम्नोराशीनुद्धृत्य वर्गशः । चतस्रः संहितास्चक्रे मन्त्रैर्मणिगणा इव । तासां स चतुरः शिष्यान् उपाहूय महामतिः । एकैकसंहितां ब्रह्मन्नेकैकस्मै ददौ विभुः । पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह । वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् । साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् । अथर्वाङ्गिरसं नाम स्वशिष्याय सुमन्तवे । पैलः स्वसंहितामूचे इन्द्रप्रमितये मुनिः । बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् । चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ! । पराशरायाग्निमित्रे इन्द्रप्रमितिरात्मवान् । अध्यापयत् संहितां स्वां माण्डूकेयमृषिं कविम् । तच्छिष्यो देवमित्रश्च सौभार्यादिभ्य ऊचिवान् । (इन्द्रप्रमितिसुतो माण्डूकेयः । माण्डूकेयसुतः शाकल्यः । शाकल्यशिष्यो देवमित्रः) । शाकल्यस्तत्सुतः स्वान्तु पञ्चधा व्यस्य संहिताम् । वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् । जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् । बलाकपैङ्गवैतालविरजेभ्यो ददौ मुनिः । वाष्कलिः प्रतिशाखाभ्यो बालखिल्याख्यसंहिताम् । चक्रे बालायनिर्भज्यः काशारश्चैव तां दधुः । बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः । श्रुत्वैव छन्दसां व्यासं सर्वपापैः प्रमुच्यते" भाग॰ १२, ६ अ॰ । "ब्रह्मणा नोदितो व्यासोवेदान् व्यस्तुं प्रचक्रमे । अथ शिष्यान् स जग्राह चतुरोवेदपारगान् । ऋग्वेदश्रावकं पैलं जग्राह महामतिः । वैशम्पायननामानं यजुर्वेदस्य चाग्रहीत् । जैमिनिः सामवेदस्य तथैवाथर्ववेदवित् । सुमन्तुस्तस्य शिष्योभूद्वेदव्यासस्य धीमतः" विष्णु पु॰ स्कन्दसूत्रम् । "सुमन्तुजैमिनिवैशम्पायनपैलाः सूत्रभाष्यमहाभारतधर्माचार्या" इति । जलतिबाहवीत्यारभ्य माण्डूकेया इत्यन्तामाण्डूकगणाः गर्गीवाचक्रवीत्यारभ्य सांख्यायनमित्यन्ताः सांख्यायनगणाः । एतेषां कौषीतकीसूत्रं ब्राह्मणम् आरण्यकं च । ऐतरेय इत्यारभ्य आश्वलायनान्ताः आश्वलायनगणाः एषान्तु ऐतरेय आरण्यकं ब्राह्मणम् । आश्वलायनसूत्रम् ।

तत्र यदुक्तं चातुर्वेद्यं चत्वारोवेदाविज्ञाता भवन्ति । अस्मिन् ग्रन्थे चातुर्वेद्यं तेन चत्वारोवेदाविज्ञाता भवन्ति ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्चेति इति स्पष्टार्थः । वेदा हि यज्ञार्थम् अभिप्रवृत्ताः । ते यज्ञाः द्विविधाः । अग्नौ हूयमाना, अनग्नौ प्रहुताः । अग्नौ हूयमाना वैतानिकाः । अनग्नौ प्रहुता नित्याभ्यासो ब्रह्मयज्ञः पारायणं च । अत्र स्कन्दसूत्रे ब्रह्मयज्ञखण्डे "यदृचोऽधीते पयआहुतिभिरेव तद्देवतास्तर्पयति, यद्यजूंषि घृताहुतिभिः, यत्सामानि मध्वाहुतिभिः, यदथर्वाङ्गिरसः सोमाहुतिभिः, यत् ब्राह्मणानि कल्पान् गाथानाराशंसीरितिहासपुराणानीत्यमृताहुतिभिर्यदृचोऽधीते स्वधा अस्य पितॄन् उपक्षरन्ति" इति । तत्र ऋग्वेदस्याष्टभेदा भवन्ति । स्थानानि भवन्तीति पाठान्तरम् । शाकलबाष्कलौ २ऐतरेयब्राह्मणारण्यकौ ४ शाङ्खायनमाण्डूकौ ६ । कौषीतकीय ब्राह्मणारण्यकाविति८ अष्टभेदाः । अन्यच्च "वेदाश्च विकृतिः शाखाभेदस्तु त्रिविधस्ततः । पृथग्नामाभिधानेन व्यासेन कथितं पुरा" इति । अत्राष्टभेदेनाष्टस्थानेन वा प्रकृतिर्ग्राह्या विकृतिस्तु अग्रे वक्ष्यामः । तस्मात् ब्रह्मयज्ञार्थे पारायणार्थे च ऋग्वेदस्याध्ययनं कर्त्तव्यम् । ततश्चतुष्पदेन वक्ष्यति । चर्चेत्यादि चर्चाध्ययनम् । ताल्वोष्ठपुटव्यापारेण शब्दस्योच्चारणं क्रियते सा चर्चा । तस्याध्ययनस्य गुरुः श्रावकः । तस्य चर्चकः शिष्यः श्रवणीयपारः । श्रवणीयो वेदः । तस्य पारं समाप्तिः । इति चतुष्पदेन अध्ययनं सूचितम् । अग्रे चतुष्पदेन चत्वारि पारायणानि सूचयति । तत्पारायणं द्विविधम् । प्रकृतिविकृतिरूपम् का प्रकृतिः ? । प्रकृतिः संहिता । सा द्विविधा रूढा योगा च रूढा यथा । "अग्निमीळे पुरोहितमिति । योगा यथा । अग्निम् ईळे पुरोहितमिति । प्रातिशाख्ये द्वितीयपटले भाष्यकारेण व्याख्यातम् । अथ चतुष्पारायणं यथा । क्रमपारः क्रमपदः क्रमजटाः क्रमदण्डश्चेति चतुष्पारायणम् । क्रमशब्देन उभयसंहिता वाच्या स कथम् ? । "अनुलोमविलोमाभ्यां द्विवारं हि पठेत् क्रमम् । विलोमे पदवत्सन्धिरनुलोमे यथाक्रमम्" । यथाक्रमं यथा संहिता इत्यर्थः । अन्यच्च वर्णक्रमः । अक्षरसमाम्नाय एवेत्यारण्यके । "कथमभिष्टयादित्यक्षरशः चतुरक्षरशः पच्छः अर्द्धर्चशः ऋकशः" । इति ब्राह्मणम् । क्रमः संहितावाची कथम् ? । पद प्रकृतिः संहिता इति नैरुक्तवचनात् । सा क्रमरूपा इत्यर्थः । क्रमपदः । क्रमः संहिता तस्याः पदानि इति प्रकृतिपारायणे द्वे प्रकृतिरूपे । विकृतिस्तु अष्टधा भवति । तच्च "जटा माला शिखा लेखा ध्वजो दण्डोरथोघनः । अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः" इति आसां मध्ये जटादण्डयोः प्राधान्यं तत्कथम् ? । जटानुसारिणी शिखा दण्डानुसारिणो मालालेखाध्वजोरथाः । घनस्तु उभयो-

रेशानुसारी। तत्र जटापटले जटावाक्यम्। "क्रमे यथोक्ते पदजातमेव द्विरभ्यसेदुत्तरमेव पूर्व्वम्। अभ्यस्य पूर्व्वं च तथोत्तरे पदेऽवसानमेवं हि जटाभिधीयते" अस्यार्थः। क्रमे यथोक्ते सति क्रमोत्क्रमाभ्यामित्युक्ते क्रमप्रकारे पदजातं पदद्वयं वा पदत्रयं वा द्विवारमभ्यसेत्। द्विवारम्पठेत्। अभ्यासप्रकारः। उत्तरमेव पूर्व्वम्। क्रमवत्पदद्वयं गृहीत्वा पूर्व्वेण समं प्रथमम् उत्तरपदमभ्यसेत्। ततः उत्तरपूर्व्वपदयोः सन्धानद्वारा पूर्व्वम् द्विरभ्यस्योत्तरपदे अवसानम् एवंप्रकारेण अध्ययनं जटा अभिधीयते उदाहरणेन दर्श्यते। अग्निमीळ ईळेऽग्निमग्निमीळे ईळे पुरोहितं पुरोहितमीळ ईळे पुरोहितमित्यादि ज्ञेयम्। अथ दण्डलक्षणम्। "क्रममुक्तं विपर्य्यस्य पुनश्च क्रममुत्तरम्। अर्द्धर्चादेव मुक्तोक्तः क्रमदण्डोऽभिधीयते। उदाहरणम्। अग्निमीळे ईळेऽग्निम् अग्निमीळईळेपुरोहितम् पुरोहितमीळेऽग्निमित्यादि ज्ञेयम्। अथ मालालक्षणम्। "ब्रूयात् क्रमविपर्य्यासावर्द्धर्चस्यादितोऽन्ततः। अन्तं चादिनयेदेवं क्रममालेति गीयते। माला मालेव पुष्पाणां पदानाङ्ग्रथिनी हिता। आवर्त्तने क्रमस्तस्यां क्रमव्युत्क्रमसंक्रमाः। अथ शिखालक्षणम्। "पदोत्तराज्जटामेव शिखामार्य्याः प्रचक्षते। अथ लेखालक्षणम्। क्रमद्वित्रिचतुःपञ्चपदक्रममुदाहरेत्। पृथक् पृथक् विपर्य्यस्य लेखामाहुः पुनः क्रमात्"। अथ ध्वजलक्षणम्। "ब्रूयादादेः क्रमं सम्यगान्तादुत्तारयेद्यदि। वर्गे च क्वचि यत्र स्यात् पठनं स ध्वजः स्मृतः"। अथ रथलक्षणम्। "पादयोर्द्धर्चयो वापि सहोक्त्या दण्डवद्रथः"। अथ घनलक्षणम्। "जटामुक्त्वा विपर्य्यस्य घनमाहुर्मनीषिणः"। अन्यच्च। "जटाशिखाघनाः प्रोक्ता क्रमपूर्व्वा मनीषिभिः"। इति विकृतिलक्षणान्युक्तानि। अध्ययने संहितापारायणम् पदपारायणम् जटापारायणम् क्रमदण्डपारायणं चतुष्पारायणमित्यर्थः! एतेषां शाखाः पञ्च भवन्ति। एतेषां वेदपारायणानां पञ्च शाखा भवन्तीत्यर्थः। ताः काः? । आश्वलायनी सांख्यायनी शाकला बाष्कला माण्डूका चेति इति प्रसिद्धाः। तेषामसध्ययनम्। तेषाम् आश्वलायनादिशाखानां समानाध्ययनं सूचयति। अध्यायाश्चतुःषष्टिः। अग्निमीळे अयं देवायेत्यादि चतुःषष्टिरध्याया इत्यर्थः। मण्डलानि दशैव तु। अग्निमीळे—कुसुम्भकम् इत्यादि उपाकर्म्मणि प्रसिद्धानि इत्यर्थः! वर्गाणां परिसंख्यातन्द्वे सहस्रे षडुत्तरे। वर्गादिः आव-

चान्ताः संख्या बालखिल्यैर्विना ज्ञेया। षडुत्तरसहस्रद्वयं वर्गा इत्यर्थः। सहस्रमेकं सूक्तानां निर्विशङ्कं विकल्पितम्। दश सप्त च पञ्चान्ते। सप्तदशाधिकसहस्रं सूक्तानीत्यर्थः। संख्यातं वै पदक्रमम्। एकं शतसहस्रं च द्विपञ्चाशत्सहस्रकम् सार्द्धम् चतुर्दश वाशिष्ठानामितरेषां पञ्चाशीतिः। एकलक्षद्विपञ्चाशत्सहस्रपञ्चशतं चतुर्दश वाशिष्ठानां वसिष्ठगोत्रिणाम् इन्द्रोभिरेकसप्ततिपदात्मकोवर्गोनास्ति। एतद्गोत्रीयाणां पञ्चाशीत्यधिकपदानीत्यर्थः। अथ बालखिल्यसहितपदसंख्या उच्यते। लक्षैकन्तु त्रिपञ्चाशत्सहस्रं शतसप्तकम्। पदानि च द्विनवतिः प्रमाणं शाकलस्य च। एकलक्षत्रिपञ्चाशत्सहस्रसप्तशतं द्विनवति चाधिकानि पदानि इत्यर्थः। पदानि बालखिल्यस्य अर्कसंख्याशतानि च। अधिकानि तु सप्तैव वर्गा अष्टादश स्मृताः सप्ताधिकद्वादशशतानि पदानीत्यर्थः। इत्याश्वलायनानाम् सांख्यायनानान्तु बालखिल्यसहित पदसंख्या उच्यते। शाकल्यदृष्टे पदलक्षमेकं सार्द्धं तथैव त्रिसहस्रयुक्तम्। शतानि सप्तैव तथाधिकानि चत्वारिंशच्च पदानि चर्चा। शाकल्योमाण्डूकगणस्यतत्संहितापदानि एकलक्षत्रिपञ्चाशत्सहस्रसप्तशतचतुश्चत्वारिंशदधिकानि पदानीत्यर्थः। पदानि बालखिल्यस्य रुद्रसंख्याशतानि च षडशीत्यधिकानि वर्गाः सप्तदशापि च। एकादशशतषट्पञ्चाशदधिकानि बालखिल्य पदानीत्यर्थः। अष्टपञ्चाशत्पदात्मकर्क्त्रयस्य यस्त्रिजो वर्गोनास्ति आश्वलायनानाञ्चतुर्ऋचात्मको वर्गः। इत्याश्वलायनसांख्यायनशाखयोरध्ययनयोर्भेद इत्यर्थः। अथ पारायणे ऋक्परिमाणमुच्यते। ऋचां दश सहस्राणि ऋचां पञ्चशतानि च। ऋचामशीतिः पादश्च पारायणं प्रकीर्त्तितम् एतत्पारायणं बालखिल्यैर्विना संख्यातम्। बालखिल्यानि पारायणे न सन्ति। तदुच्यते। ऋग्वेदान्तर्गतबालखिल्यमेकादशसूक्तम् सूक्तसहस्रसप्तदशाधिकमित्यत्र ऋचां दशसहस्राणीत्येतत्संख्या व्यतिरिक्तानि वालखिल्यानीति प्रसिद्धिः" भाष्यम्। अत्र प्रधान शाखाभेदाभिप्रायेण पञ्चविधत्वमुक्तम् "ऋग्वेदस्य तु शाखाः स्युरेकविंशतिसंख्यकाः" मुक्तिकोपनिषदि एकोनविंशतिभेदोक्तिः प्रशाखाभिप्रायेण अत एव प्रशाखाख्य इति प्रागुक्तभाग० वाक्ये तथोक्तम्। अस्य उपनिषद्वेदस्तु उपनिषच्छब्दे उक्तः। "ऋग्वेदो देवदैवत्यो यजुर्वेदस्तु मानुषः। सामवेदः स्मृतः पैत्रस्तस्मात्तस्याशुचिर्ध्वनिः

मनुः ।"ऋग्वेदाधिपतिर्जीवः" ज्यो॰ उक्तेः जीवस्य ऋग्वेदाधिपत्यं तेन तस्य वारे तद्दले च तत्तत्कर्म ऋग्वेदिभिः करणीयम् "शाखाधिपे बलिनि वीर्य्ययुतेऽथवास्मिन्" । ज्यो॰त॰ तद्ध्यानं तु "ऋग्वेदः पद्मपत्राक्षो गायत्राः सोमदैवतः । आत्रेयगोत्रः" इति विधा॰पा॰ उक्तम् । ऋग्वेदोऽध्येयत्वेनास्त्यस्य इनि । ऋग्वेदिन् तत्पाठके ।

**ऋघा** स्त्री ऋघ–बा॰घञ् किञ्च । हिंसायाम् । "कविशस्त ऋघावान्" ऋ॰ १,१५२,२, "ऋघावान् हिंसकः" भा॰ । "महाव्रातस्तुवि कूर्मिर्ऋघावान्" ऋ॰३,३०,३ ।

**ऋच** स्तुतौ तुदा॰ पर॰ सक॰ सेट् । ऋचति आर्चीत् । आनर्च । कर्मणि ऋच्यते आर्चि । "याभ्यां गायत्रमृच्यते" ऋ॰ ८,३८.१० "ब्रह्माण्यृच्यन्ते युवभ्याम्" ७,७०,६,

**ऋच्** स्त्री ऋच्यते स्तूयतेऽनया ऋच–करणे क्विप् । वेदमन्त्रभेदे "यत्रार्थवशेन पादव्यवस्थितिः सा ऋक्" जै॰ । "ऋचो यजूंषि सामानि निगदा मन्त्राः" कात्या॰ १,२,१, । "ऋगादयो निगदान्ताश्चत्वारो मन्त्राः । तत्रार्थवशेन वृत्तवशेन वा यत्र पादव्यवस्था, सा ऋक् तत्र "समिधाग्निं दुवस्यत" इत्यादौ यत्र प्रत्येकं समाप्तोऽर्थो दृश्यते तत्रार्थवशेन पादव्यवस्था यत्र च क्रियापदानुपादानात् "सुसमिद्धाय शोचिषे तं त्वा समिद्भिरङ्गिरः" इत्यादौ अपर्यवसितोऽर्थस्तत्र वृत्तवशेन पादव्यवस्था भवति अतश्च यत्र नियताक्षराणि नियताश्च पादा नियतानि चावसानानि सा ऋगित्युच्यते । अनियताक्षरपादावसानं यजुः यद्यपि प्रगीतं मन्त्रवाक्यं सामेत्यभियुक्तप्रयोगः तथापि तत्र विशेषणं गीतिः विशेष्यास्त्वृगक्षराणि नागृहीतविशेषणा विशेष्ये बुद्धिरिति प्रथमं प्रतीयमानत्वात् गीतिरेव सामेत्युच्यते तथा च "कवतीषु रथन्तरं गायति" "यद्योन्यां तदुत्तरयोर्गायति" "ऋच्यध्यूढं साम गायति" प्रजापतेर्हृदयमनृचं गायतीत्याद्युपपन्नं भवति अत ऋगक्षरातिरिक्तं यद्गीतिशब्दवाच्यं तत् सामशब्देनोच्यते । ननु यदि रथन्तरादिशब्दा गीतेरेव वाचकाः तदा "रथन्तरेण स्तुवीतेति" कथं स्तुतिसाधनत्वम् गुणगुणिसम्बन्धकीर्त्तनं हि स्तुतिः सा च गीतिरूपेण साम्ना न सम्भवति । उच्यते गीतेः स्वयं स्तुतिवाचकत्वाभावादृगक्षरप्रकटनद्वारा स्तुतिसाधनत्वं भवतीति नोक्तदोषः । निगदाः प्रैषाः परसम्बोधनार्थाः "प्रोक्षणीरासादय" "अग्नीदग्नीन्विहर" इत्येवमादयः । ननु निगदा अपि यजूंष्येव ततः किमर्थं पृथगुक्ताः । उच्यते "उपांशु यजुषा उच्चैर्निगदेनेति" धर्मभेदेन यजुःष्वमन्त्रभीवशङ्कया पृथग्वचनम् । वस्तुतस्तु निगदानां यजुष्ट्वमेव परसम्बोधनार्थत्वात्तु उच्चैर्निगदेनेति धर्मभेदः न च धर्मभेदाद्भेदः ऋक्साम्नयोरपि क्वचिदुपांशुप्रयोगविधानात् अतस्त्रैविध्यमेव मन्त्राणाम् । तथाचोक्तम् "अहेर्बुध्न्य मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः" ऋचः सामानि यजूंषीति त्रीन्वेदान्विदन्तीति त्रिविदः त्रिविदां सम्बन्धिनोऽध्येतारस्त्रैविदाः ते च यं मन्त्रभागमृगादिरूपेण त्रिविधमाहुस्तं गोपायेति योजना । ऋग्यजुःसामात्मको मन्त्रभेदोऽभिहितः तदवान्तरभेदाकाङ्क्षायामृचां च साम्नां चाध्येतृप्रसिद्ध्यैव भेदे सिद्धे लक्षणं न क्रियते" कर्कः । "ऋचैव हौत्रमकरोद्यजुषाध्वर्यवं साम्नोद्गीथम्" ऐत॰ "त्रिधा विहिता वागृचो यजूंषि सामानि" शत॰ब्रा॰ ६,६,२,४ । "ऋचः सामानि जज्ञिरे पुरुषसू॰ । "तदेतदृचाभ्यनूक्तम्" छा॰उ॰ । २विप उत्तरे मिरु॰ । समासे तदन्तात् अच् । अर्द्धर्चः एकर्चम् द्व्यृचं षडृचम् इत्यादि । बहु॰ । अध्येतर्य्येव अच् । अन्यथः बह्वृचः इत्यादि पन्थे तु न अच् । अनृक् साम । प्राचुर्ये मयट् । ऋङ्मय तत्प्रचुरे त्रि॰ स्त्रियां ङीप् । "एतं यज्ञमृङ्मयं यजुर्मयम् साममयमाहुतिमयम्" शत॰ब्रा॰ ४, ३,४,५ । भावे क्विप् । ३स्तुतौ ४पूजायाञ्च ।

**ऋचस्** त्रि॰ ऋच–वा॰असुन् । स्तोतरि । "गा आर्त्तोर्न्नृचसे रिरीहि" ऋ॰ ६,३८,५ । "ऋचसे स्तोत्रे" भा॰

**ऋचसे** अव्य॰ ऋच–तुमर्थे असेन् । स्तोतुमित्यर्थे । "प्र वां मन्मान्यृचसेन वानि" ऋ॰ ७,६१,६ ।

**ऋचीक** पु॰ ऋच–ईकक् ।१दिवःपुत्रे सवितृभेदे । "दिवः पुत्रो बृहद्भानुश्चक्षुरात्मा विभावसुः । सविता स ऋचीकोऽर्कोभानुराशावहोरविः" भा॰आ॰१अ॰ । भृगुवंश्ये २जमदग्निपितरि ऋषिभेदे । "तस्मिन्नियुक्ते विधिना योगक्षेमाय भार्गवे । अन्वयसुत्पादयास पुत्रं भृगुरनिन्दितम् । च्यवनं दीप्ततपसं धर्म्मात्मानं यशस्विनम् । यः सरोषाच्च्युतो गर्भान्मातुर्मोक्षाय भारत ! । आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः । और्वस्तस्यां समभवदूरुं भित्त्वा महायशाः । महातेजा महावीर्य्यो बाल एव गुणैर्युतः । ऋचीकस्तस्य पुत्रस्तु जमदग्निस्ततोऽभवत्" भा॰ आ॰ ६६ अ॰ । तस्य चरितम् । भा॰अनु॰प॰४अ॰ विस्तरेण वर्णितम् संक्षेपतस्तु हरिवंशे २८अ॰ यथा "गाधेः कन्या महाभागा नाम्ना सत्यवती शुभा । तां गाधिर्भृगुपुत्राय ऋचीकाय ददौ प्रभुः । तस्याः प्रीतोऽथ-

ऋर्त्ता भार्गवो भृगुनन्दनः । पुत्त्रार्थं कल्पयामास चरुं गाधेस्तथैव च । उवाचाहूय तां भर्त्ता ऋचीको भार्गवस्तदा । उपयोज्यश्चरुरयं त्वया मात्रा त्वयं तव । तस्यां जनिष्यते पुत्त्रो दीप्तिमान् क्षत्त्रियर्षभः । अजेयः क्षत्त्रियैर्लोके क्षत्त्रियर्षभसूदनः । तवापि पुत्त्रं कल्याणि ! धृतिमन्तं तपोधनम् । शमात्मकं द्विजश्रेष्ठं चरुरेष विधास्यति । एवमुक्त्वा तु तां भार्य्यामृचीको भृगुनन्दनः । तपस्यभिरतो नित्यमरण्यं प्रविवेश ह । गाधिः सदारस्तु तदा ऋचीकाश्रममभ्यगात् । तीर्थयात्राप्रसङ्गेन सुतां द्रष्टुं नरेश्वरः । चरुद्वयं गृहीत्वा तदृषेः सत्यवती तदा । चरुमादाय यत्नेन सा तु मात्रे न्यवेदयत् । माता व्यत्यस्य दैवेन दुहित्रे स्वं चरुं ददौ । तस्याश्चरुमथाज्ञानादात्मसंस्थं चकार ह । अथ सत्यवती गर्भं क्षत्त्रियान्तकरं तदा । धारयामास दीप्तेन वपुषा घोरदर्शनम् । तामृचीकस्ततो दृष्ट्वा योगेनाभ्यनुसृत्य च । तामब्रवीद्द्विजश्रेष्ठः स्वां भार्य्यां वरवर्णिनीम् । मात्राऽसि वञ्चिता भद्रे ! चरुव्यत्यासहेतुना । जनिष्यते हि पुत्रस्ते क्रूरकर्माऽतिदारुणः । भ्राता जनिष्यते चापि ब्रह्मभूतस्तपोधनः । विश्वं हि ब्रह्म तपसा मया तस्मिन् समर्पितम् । एवमुक्ता महाभागा भर्त्त्रा सत्यवती तदा । प्रसादयामास पतिं पुत्त्रो मे नेदृशो भवेत् । ब्राह्मणापसदः त्वात्त इत्युक्तो मुनिरब्रवीत् । नैष सङ्कल्पितः कामो मया भद्रे ! तथाऽस्त्विति । उग्रकर्मा भवेत् पुत्त्रः पितुर्मातुश्च कारणात् । पुनः सत्यवती वाक्यमेवमुक्त्वाऽब्रवीदिदम् । इच्छन् लोकानपि मुने ! सृजेथाः किं पुनः सुतम् । शमात्मकमृजुं त्वं मे पुत्त्रं दातुमिहार्हसि । काममेवंविधः पौत्त्रो मम स्यात्तव च प्रभो ! । यद्यन्यथा न शक्यं वै कर्त्तुमेतद्द्विजोत्तम ! । ततः प्रसादमकरोत् स तस्यास्तपसो बलात् । भद्रे ! नास्ति विशेषो मे पौत्त्रे च वरवर्णिनि । त्वया यथोक्तं वचनं तथा भद्रे ! भविष्यति । ततः सत्यवती पुत्त्रं जनयामास भार्गवम् । तपस्यभिरतं दान्तं जमदग्निं शमात्मकम् । भृगोश्चरुविपर्य्यासे रौद्रवैष्णवयोः पुरा । यजनाद्वैष्णवेऽथांशे जमदग्निरजायत । सा हि सत्यवती पुण्या सत्यधर्मपरायणा । कौशिकीति समाख्याता प्रवृत्तेयं महानदी । इक्ष्वाकुवंशप्रभवो रेणुर्नाम नराधिपः । तस्य कन्या महाभागा कामली नाम रेणुका । रेणुकायान्तु कामल्यां तपोविद्यासमन्वितः । आर्च्चीको जनयामास जामदग्न्यं सुदारुणम् । सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदस्य पारगम् । रामं क्षत्त्रियहन्तारं प्रदीप्तमिव पावकम् । और्वस्यैवमृचीकस्य सत्यवत्यां महायशाः । जमदग्निस्तपोवीर्य्याज्जज्ञे ब्रह्मविदांवरः । मध्यमश्च शुनः शेफः शुनःपुच्छः कनिष्ठकः । विश्वामित्रन्तु दायादं गाधिः कुशिकनन्दनः । जनयामास पुत्त्रन्तु तपोविद्याशमात्मकम् । प्राप्य ब्रह्मर्षिसमतां योऽयं सप्तर्षितां गतः । विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः । जज्ञे भृगुप्रसादेन कौशिकाद्वंशवर्द्धनः" । "अथर्चीकादयोऽभ्येत्य पितरो राममब्रुवन् । राम ! राम ! महाभाग ! प्रीताः स्म तव भार्गव ! भा० आ० २अ० २भरतसुतभुमन्युसुते नृपभेदे । "ततोमहद्भिः क्रतुभिरीजानो भरतस्तदा । लेभे पुत्रं भरद्वाजाद्भूमन्युं नाम भारत ! इत्युपक्रम्य "पुष्करिण्यामृचीकस्य भूमन्योरभवत् सुतः" भा० आ० ९४अ० ।

**ऋचीष** न० ऋच्—कीषन् । पिष्टपचनपात्रे हेम० ।

**ऋचीषम** पु० ऋचा स्तुत्या समः वेदे नि० ईत्त्वं षत्वञ्च । ऋग्विशेषेण समानगुणे । "इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः" ऋ० १०,२२,२ । ऋचीषमः । "यद्द्याव इन्द्र ! ते शतं शतं भूमीरुत स्युः । न त्वा वज्रिन्" इत्यादिकया ऋ० ८,७०,५ । स्तुत्या समानगुणकः" भा० "परोमात्रमृचीषममिन्द्रमुग्रम्" ऋ० ८,६८,६ । ऋचीषमम् ऋचा स्तुत्या समम् यद्यप्यपरिच्छिन्नस्तथापि स्तुतिर्यावन्मात्रं विषयीकरोति तत्समम्" इत्यर्थः भा० । "अवचष्ट ऋचीषमः" ऋ० ८,६२,६ । "वृत्रहा परमज्या ऋचीषमः" ८,९०,१ । "२दीप्त्या समे च "अहन् वृत्रमृचीषमः ऋचा दीप्त्या समः" भा० ।

**ऋचेयु** पु० राजभेदे । पूरुवंशवर्णने "रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः" इत्युपक्रम्य "ऋचेयुरथ कक्षेयुः कृकणेयुश्च वीर्य्यवान्" भा० आ० ९४अ० ।

**ऋच्छ** मोहे मूर्त्तौ (कठिनीभावे) अक० गमने सक० तुदा० पर० सेट् । ऋच्छति आर्च्छीत् आनर्च्छ । उपसर्गात् ऋत्यादेः वृद्धिः प्रार्च्छति उपार्च्छति । "उपसर्गाः क्रियायोगे" पा० इत्युक्तेः यत्क्रियया योगस्तत्क्रियायामेवोपसर्गत्वम् तेन प्रगतः ऋच्छकोऽस्मात् वाक्ये प्रादि० ब० । प्रर्च्छकः इत्यादौ न वृद्धिः अत्र प्रस्य गमेरुपसर्गत्वेन ऋच्छोपसर्गत्वाभावात् ।

**ऋच्छरा** स्त्री ऋच्छ—कर्मणि करणे वा घञ् । वेश्यायाम् । उज्ज्वल० साधारणत्वेन सर्वगम्यत्वात् इन्द्रियमोहजननसाधनत्वाच्च तस्यास्तथात्वम् ।

**ऋज** गतौ अर्जने ( बलाधाने ) अर्ज्जने च भ्वा० आत्म० सक० स्थैर्य्ये अक० सेट् । अर्ज्जते आर्ज्जिष्ट आनृजे ।

**ऋज** भर्ज्जने इदित् भ्वा० आ० सक० सेट् । ऋञ्जते आर्ञ्जिष्ट । ऋञ्जां बभूव आस चक्रे । ऋञ्जानः ।

**ऋजिप्य** त्रि० ऋजु आप्नोति गच्छति आप–यत् पृ० । ऋजुगामिनि "ऋजिप्यं श्येनं प्रुषितप्सुम्" ऋ० ४, २८,२ । "ऋजु आप्नोति गच्छतीत्यृजिप्यः" भा० । "ऋजिप्य इमिन्द्रावतः"४,२७,४ ।

**ऋजिश्वन्** पु० राजभेदे "अप्रमृष्यदृजिश्वने दात्रं दाशुषे" ऋ०६,२०,७ । ऋजिश्वने एतन्नामकाय राज्ञे" भा० ।

**ऋजीक** त्रि० ऋज–गतौ ईकन् किच्च । १इन्द्रे २धूमे च उज्ज्व० । उपार्जीकशब्दे उदा० करणे ईकन् । ३साधने च "आविरृजीको विदथा" ऋ० ४,३८,४ । "आविर्ऋजीका आविर्भूतसाधना" भा० ।

**ऋजीति** पु० ऋजु गच्छति ई–गतौ क्तिच् पृ०। ऋजुगामिनि शाखे "ऋजीते ! परि वृङ्ग्धि नोऽश्मा" ऋ०६,७५,१२ । "ऋजु गच्छति ऋजीतिरिषुः" भा०।

**ऋजीष** न० अर्ज्यते रसोऽस्मिन् अर्ज्ज आधारे कीषन् ऋजादेशः । १पिष्टपचनपात्रे २नरकभेदे पिष्टपचनाकार-पात्रभेदेन पापिनां पचनहेतुत्वेन तस्य तथात्वम् । नरक-गणनायाम् मनुः । "लोहशङ्कुमृजीषञ्च" नर-कशब्दे विवृतिः । ३नीरसे सोमलताचूर्णे "सोमो-राजामृतं सुत ऋजीषेणाजहान्मृत्युम्" यजु० १६,७२ "ऋजीषं नीरसं सोमलताचूर्णम्" वेददी० । ४गतसारे सोमे पु०।"समुद्रे त इति ऋजीषकुम्भं प्लावयति"काव्या० १०,६,१ । "गतसारः सोमः ऋजीषस्तेन पूर्णकुम्भम्" कर्कः । यथा मादकद्रव्यस्याभिषवणेन सारांशे गृह्यते अवशिष्टः नीरसभागः (सिटि) अवतिष्ठते एवं सोमस्याभि-षवणे निःसारांश ऋजीष इत्युच्यते । कर्मणि कीषन् । ५अभिषुते सोमे च "कुविद्राजानं मघवन्नृजीषिन्" ! ऋ०३,४३,५ ।"ऋजीषिन् ! सोमवन् !"भा०।"अन्तरिक्षा-दृजीषी" २,४६,२ ।"ऋजीषी सोमवान्" भा०। तैत्ति० अस्य निरुक्तिर्दर्शिता"तेनांशुमद्यदभिषुणोति तेदेर्जीषि" ततः जातार्थे तारका० इतच् । ऋजीषित नीरसतया जाते त्रि०। ऋजीषं द्रव्यं देयत्वेनास्त्यस्य इनि । ऋजीषिन् गत-सारसोमद्रव्यसम्प्रदाने देवे 'इन्द्र! सोमं सोमपते ! पिबेमं माध्यन्दिनं सवनं चारु यत्ते । प्रप्रुथ्या शिप्रे मघ-वन्नृजीषिन् ! विमुच्या हरी इह मादयस्व" ऋ० ३,३२ १, ऋजीषशब्देन गतसारं सोमद्रव्यमुच्यते" भा० ।

**ऋजु** त्रि० अर्जयति गुणान् अर्ज्ज–कु नि० ऋजादेशः । १प्रगुणे २सरले अवक्रे । सरलस्य बहुगुणार्ज्जकत्वात् तथा त्वम् । स्त्रियां गुणवचनत्वात् वा ङीष् । "ऋज्वीर्दधा-नैरवतस्य कन्धराः" माघः । "ऋज्वायताः स्नेहमिव स्रवन्तीः" भट्टिः "उमां स पश्यन् ऋजुनैव चक्षुषा" कुमा० "ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः" मनुः ते दण्डाः ।"ऋजवोदर्भाः"गोभि०सू०। नान्दीमुखादौ दैवे पैत्रे च दर्भा ऋजवः कार्य्याः । "धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः" या० । ततः वेदे वा० प्रकारे धाच् । ऋजुधा सरलप्रकारे अव्य० "यज्ञमेव तदृजुधा प्रतिष्ठापयति" ऐत० । भावे पृथ्वा० इमनिच् । ऋजि-मन् सारल्ये अकौटिल्ये पु० । भावे तल् । ऋजुता तदर्थे स्त्री "ऋजुतां नयतः स्मरामि ते" कुमा० । त्व । ऋजुत्व न० गुणवचनत्वात् अण् आर्ज्जव न० तत्रार्थे । ४अनुकूले ५कल्याणे । "ऋजुहस्ता ऋजुवनिः" ऋ० ५,४१,१५ ।"ऋजुहस्तास्तदनुकूलहस्ता ऋजुवनिः कल्या-णदाना"भा०। ६शोभने च"धारवाकेष्वृजुगाथः"! ऋ०५, ४४,५"ऋजगाथ ! शोभनस्तुतिकः"भा०। ७वसुदेवपुत्रभेदे पु०। "वसुदेवस्तु देवक्यामष्ट पुत्रानजीजनत् । कीर्त्तिमन्तं सुषेणञ्च भद्रसेनमुदारधीः । ऋजुं संमर्द्दनं भद्रं सङ्कर्षणम-हीश्वरम् । अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल । सुभद्रा च महाभागा तव राजन् ! पितामही" भाग० ९,२४, अ०२५,२६ । अजुत्वञ्च आर्ज्जवशब्दे ८०६ पृष्ठे व्याख्यातम् वाक्यस्य तत्त्वञ्च स्पष्टार्थत्वम् । "धर्मशास्त्र-मृजुभिर्मिताक्षरैः" मिता० ।

**ऋजुकाय** पु० ऋजुः कायोऽस्य । १कश्यपमुनौ त्रिका० २अकुटिलदेहमात्रे त्रि०।"तस्मिन् स्वस्तिकमासीन ऋजु-कायः समभ्यसेत्"भाग०२,२८,९ ।[हारिणि २वाणे पु०।

**ऋजुग** त्रि० ऋजु यथा तथा गच्छति गम ड । १सरलव्यव-

**ऋजुरोहित** न० कर्म्म०। सरले इन्द्रधनुषीति केचित् वस्तुतः "रोहितं रुधिरे प्रोक्तमृजुशक्रशरासने" विश्वोक्तेः उत्-पातसूचके सरले इन्द्रधनुषि रोहितशब्दस्यैव वृत्तिः तेन "इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम्"अमरे"सन्तानस्य धनुर्देवायुधं तदृजु रोहितम्" हेमचन्द्रे च तदेव ऋजु चेत् रोहितमिति व्याख्यानात् न विशिष्टनामेत्यवधेयम् ।

**ऋजुसर्प** पु० कृष्णसर्पवत् नित्यसमा० । सुश्रुतोक्ते दर्व्वी-करविशेषे सर्पभेदे । "तत्र दर्व्वीकरा कृष्णसर्पः ऋजुसर्पः

श्वेतोदरो महाशिरा अलगर्द आशीविष' इति उक्तम् ।

**ऋजूक** पु० ऋज—बा० ऊकङ् । देशभेदे विपाशानदी-जन्मभूमौ । ऋजूके भवा अण्—पृषो०। आर्जीकीया तत्-प्रभवायां विपाशायाम् "इमं मे गङ्गे ! यमुने ! सरस्वति ! शतद्रि ! स्तोमं सचता परुष्ण्या । असिक्न्यामरुद्वृधे "वितस्तयार्जीकीये ! शृणुह्या सुषोमया" ऋ० १०,७५,५, इमामुदाहृत्य निरुक्ते आह ।"आर्जीकीयां विपाडित्याहुः ऋजूकप्रभवा ऋजगामिनी वा" तेन विपाशानद्युत्-पत्तिस्थानमृजूक इति गम्यते ।

**ऋजूकरण** न०अनृजुः ऋजुः क्रियतेऽनेन ऋजु+अभूततद्भावे च्वि+कृ—करणे ल्युट् । १सरलतासम्पादनसाधने सुश्रु-तोक्ते १यन्त्रव्यापारभेदे ।"यन्त्रकर्म्माणि तु निर्घातनपूरण-बन्धनव्यपवर्त्तनचालनविवर्त्तनविवरणपीड़नमार्गविशोधन विकर्षणाहरणोञ्छनोन्नमनविनमनभञ्जनोन्मथनाचूषणैषण दारणर्ज्जूकरणप्रक्षालनप्रधावनप्रमार्जनानि चतुर्विंशतिः" सुश्रु०। २तथाभूतव्यापारमात्रे च ।

**ऋजूयत्** त्रि० ऋजु गच्छति ऋतुं गच्छति वा ऋजु+ अतु+-बा क्यच् ऋजूय -पृषो०तस्य जो वा शतृ । १ऋजु-गामिनि २ऋतुगामिनि च "देवानां भद्रा सुमतिरृजूयतां देवानां रातिरभि नो निवर्त्तताम्" ऋ०१,८९,२,श्रुतिमा-श्रित्य "ऋजूयतामृजुगामिनामृतुगामिनां वेति"निरुक्तम् ।

**ऋज्र** पु० ऋज—गत्यादिषु रन् नि०। १नायके उज्ज्वल० । २ऋजुगामिनि त्रि०।"स्यू मन्यू ऋज्रा वातस्याश्वा"ऋ०१, १७४,५ । "ऋज्रा ऋजुगामिनौ" भा० । "ऋज्रा वाजं न गध्यम्" ऋ० ४,१६,११ ।

**ऋज्वी** स्त्री ऋजु+स्त्रियां वा ङीप् । १आर्ज्जववत्यां स्त्रियाम् ऋजुशब्दे उदा० । सू०सि० उक्ते ग्रहाणां २गतिभेदे । "वक्रानुवक्रा कुटिला मन्दा मन्दतरा समा । तथा शीघ्रा शीघ्रतरा ग्रहाणामष्टधा गतिः । तत्रातिशीघ्रा शीघ्राख्या मन्दा मन्दतरा समा । ऋज्वीति पञ्चधा ज्ञेया या वक्रा सानुवक्रगा" सू०। "तत्राष्टविधगतिषु अतिशीघ्रेत्यादिः समेत्यन्ता इत्येवं पञ्चधा गतिः ऋज्वी-मार्गी गतिर्ज्ञेया या गतिः सानुवक्रगा अनुवक्रगमनेन सह वर्त्तमाना पूर्व्वश्लोकेऽनुवक्रगतेर्वक्रकुटिलमध्येऽभिधा-नात् उभयासत्त्वाच्च सानुवक्रा कुटिलेति गतिर्वक्रा ज्ञेया तथा च ग्रहाणां मार्गी वक्रेति गतिद्वयम्"रङ्ग०।

**ऋञ्जसान** पु० ऋञ्जि—असानच् । मेघे उज्ज्वल० ।

**ऋण** गतौ तना०उभ० सक०सेट् । अर्णोति ऋणोति, ऋणुते आर्णीत् आर्णिष्ट । आनर्ण आनृणतुः आनृणे । ऋणः ।

**ऋण** त्रि० ऋण—क । १गन्तरि । "शशीयान्नृणो न तायुरति धन्वा राट्"ऋ०६,१२,५ "ऋणः शीघ्रगन्ता" भा० "ऋष ऋणेव यातय" १०,१२७,७ । ऋ—क्त नि०। २अवश्यदेये (धार) अर्द्धर्चा० पुंन० । "ऋतावानश्चयमाना ऋ-णानि" ऋ० २,२७,४ । "ऋणानि स्तोतृभिरन्येभ्यो देयानि"भा०।"पर ऋणा सावीरध मत्कृतानि" ऋ०२,२८ ९ । "ऋणानि पित्रादिभिः कृतानि अस्माभिर्देयानि । अथ मत्कृतानि ऋणानि" भा० तच्च अवश्यशोध्यत्वेन लौकिकमलौकिकञ्च । तत्र देवादिविषयाणां चतुर्णां पञ्चानां वा अवश्यशोध्यत्वादलौकिकर्णत्वम् अशोधने पापहेतु-त्वात्तस्य तथात्वम् । ऋणानपक्रियाया उपपातकशब्दे उक्त-शास्त्रेण पापहेतुत्वम् । "देवानाञ्च पितॄणाञ्च ऋषीणाञ्च तथा नरः। ऋणवान् जायते यस्मात् तन्मोक्षे प्रयतेत् सदा । देवानामनृणो जन्तुर्यज्ञैर्भवति मानवः । अल्प-वित्तश्च पूजाभिरुपवासव्रतैस्तथा । श्राद्धेन प्रजया चैव पितृणामनृणी भवेत् । ऋषीणां ब्रह्मचर्य्येण श्रुतेन तपसा तथा" विष्णुधर्मो० पु० । "जायमानो वै ब्राह्म-णस्त्रिभिरृणैरृणवान् भवति ब्रह्मचर्य्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः" मिता०श्रुतिः । "न च जातमात्रोऽकृतदाराग्निपरिग्रहोयज्ञादिष्वधिक्रियते । तस्मादधिकारी जायमानो ब्राह्मणादिर्यज्ञादीननुतिष्ठेत्" मिता०। "ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः" । "मह-र्षिपितृदेवानां गत्वानृण्यं यथाविधि । पुत्रे सर्वं समासज्य वसेन्माध्यस्थ्यमाश्रितः" मनुना क्रमेण चातु-राश्रम्यपक्षमाश्रित्योक्तम् । यथा च ब्रह्मचर्य्यादेव प्रव्र-ज्याधिकारस्तथा आश्रमशब्दे ८२९ पृ० उक्तम् । अवश्यदेयत्वेन चतुर्विधं पञ्चविधञ्चर्णं दर्शितं भा० आ० १२० अ० । "ऋणैश्चतुर्भिः संयुक्ता जायन्ते मानवा भुवि । पितृदेवर्षिमनुजैर्देयं तेभ्यश्च धर्मतः" इत्युपक्रम्य "यज्ञैस्तु देवान् प्रीणाति स्वाध्यायतपसा मुनीन् । पुत्रैः श्राद्धैः पितॄंश्चापि आनृशंस्येन मानवान्" "ऋणमु-न्मुच्य देवानामृषीणाञ्च तथैव च । पितृणामथ विप्राणाम-तिथीनाञ्च पञ्चमम्" अनु० ३७अ० । "ऋणाभिधानात् स्वयमेव केवलं तदा पितृणां मुमुचे स बन्धनात्" "अस-ह्यपीडं भगवन्नृणमन्त्यमवेहि मे" "नचोपलेभे पूर्वेषामृण-निर्मोक्षसाधनम्" रघुः । लौकिकमृणम् (धार) (कर्ज)

ऋणादानशब्दे वक्ष्यते । २दुर्गे ४भूमौ ५जले च सि० कौ० प्रवत्सरकम्बलवसनस्य दशपूर्वकात् ऋणादेर्वृद्धिः प्रार्णम् वत्सरार्णं कम्बलार्णं वसनार्णम् दशार्णो-देशो दशार्णा नदी । ऋणयोधनार्णमृणऋणार्णम् । ऋक्-गास्त्रोक्ते कुतश्चित् राश्यन्तरादवश्यं वियोज्यसंख्यान्विते पदार्थे । तत्सूचकसंख्यायाः सजातीयेन विजातातीयेन धनेन च योगवियोगादिक्रियादिकं वीजग०उक्तं यथा ।

"धनर्णसङ्कलने करणसूत्रं वृत्तार्द्धम् । योगे युतिः स्यात् क्षययोःस्वयोर्वा धनर्णयोरन्तरमेव योगः । उदा० । रूपत्रयं रूपचतुष्टयं च क्षयं धनं वा सहितं वदाशु । स्वर्णं क्षयं स्वं च पृथक् पृथङ्मे धनर्णयोः सङ्कलनाम-वैषि । अत्र रूपाणामव्यक्तानां चाद्याक्षराण्युपलक्षणार्थं लेख्यानि । यानि ऋणगतानि तान्यूर्द्ध्वविन्दूनि । न्यासः रू ३ रू ४ योगे जातं रू ७ न्यासः रू ३ रू ४ योगे जातं रू ७ । न्यासः रू ३ रू ४ योगे जातं रू १ । न्यासः रू ३ रू ४ योगे जातं रू १ । एवं विभिन्नेष्वपि । धनर्णव्यवकलने करणसूत्रं वृत्तार्द्धम् । संशोध्यमानं स्व-मृणत्वमेति स्वत्वं क्षयस्तद्युतिरुक्तवच्च । उदा० त्रयाद्द्वयं स्वात् स्वमृणादृणं च व्यस्तं च संशोध्य वदाशु शेषम् । न्यासः रू ३ रू २ अन्तरे जातं रू १ । न्यासः रू ३ रू २ अन्तरे जातं रू १ । न्यासः रू ३ रू २ अन्तरे जातं रू ५ न्यासः रू ३ रू २ अन्तरे जातं रू ५ ।

गुणनभागे करणसूत्रं वृत्तार्द्धम् । स्वयोरस्वयोःस्वं वधः स्वर्णघाते क्षयोभागहारेऽपि चैवं निरुक्तम् । उदा० । धनं धनेनर्णमृणेन निघ्नं द्वयं त्रयेण स्वमृणेन किं स्यात् । न्यासः रू २ रू ३ धनं धनघ्नं धनं स्यादिति । रू ६ । न्यासः रू २ रू ३ ऋणमृणघ्नं धनं स्यादिति जातं रू ६ । न्यासः रू २ रू ३ धनमृणगुणमृणं स्यादिति जातं रू ६ । न्यासः रू २ रू ३ ऋणं धनगुणमृणं स्या-दिति जातं रू ६ । इति धनर्णगुणनम् ।

भागहारेऽपि चैवं निरुक्तमिति । उदा० । रूपा-ष्टकं रूपचतुष्टयेन धनं धनेनर्णमृणेन भक्तम् । ऋणं ध-नेन स्वमृणेन किं स्याद्द्रुतं वदेदं यदि बोबुधोषि । न्यासः रू ८ रू ४ धनं धनहृतं धनं स्यादिति जातं रू २ । न्यासः रू ८ रू ४ ऋणमृणहृतं धनं स्यादिति जातं रू २ । न्यासः रू ८ रू ४ ऋणं धनहृतम् ऋणं स्यादिति जातं रू २ । न्यासः रू ८ रू ४ धनमृण-हृतमृणं स्यादिति जातं रू २ । इति धनर्णभागहारः ।

वर्गमूलयोः करणसूत्रं वृत्तार्द्धम् । कृतिः स्वर्णयोःस्वं स्वमूले धनर्णे न मूलं क्षयस्यास्ति तस्याकृतित्वात् । उदा० । धनस्य रूपत्रितयस्य वर्गः क्षयस्य च ब्रूहि सखे ममाशु । न्यासः रू ३ रू ३ जातौ वर्गौ रू ९ रू ९ । धनात्मका-नामधनात्मकानां मूलं नवानां च पृथग्वदाशु । न्यासः रू ९ मूलं रू ३ वा रू ३ । न्यासः रू ९ एषामवर्गत्वा-न्मूलं नास्ति । इति धनर्णवर्गमूले ।

खसङ्कलव्यवकलने करणसूत्रं वृत्तार्द्धम् । खयोगे वि-योगे धनर्णं तथैव च्युतं शून्यतस्तद्विपर्यासमेति । उदा० रूपत्रयं स्वं क्षयगं च खं च किं स्यात् खयुक्तं वद खा-च्च्युतं च । न्यासः रू ३ रू ३ रू ० एतानि खयुतान्य-विकृतान्येव । रू ३ रू ३ रू ० एतानि खाच्च्युतानि रू ३ रू ३ विपर्यस्तानि" ।

"छेदं गुणं गुणं छेदं वर्गं मूलं पदं कृतिम् । ऋणं स्वं स्वमृणं कुर्याद्दृश्ये राशिप्रसिद्धये" लीला० ।

**ऋणकाति** त्रि० ऋणवदवश्यफलप्रदा कातिः स्तुतिर्यस्य । अवश्यफलदायकस्तुतिशालिनि "सासह्यिऋणकातिमदा-भ्यम्" ऋ० ८,६१,१२ । ऋणकातिः ऋणवदवश्यफल-प्रदस्तुतिकः भा० ।

**ऋणञ्चय** पु० नृपभेदे "ऋणञ्चयस्य प्रयता मघानि" ऋ० ५, ३०,१२, "ऋणञ्चयस्यैतन्नामकस्य राज्ञः" भा० ऋणञ्चये राजनि रुशमानाम्" ऋ० ५,३०,१४ ।

**ऋणचित्** पु० ऋणमिव चिनोति चि—क्विप् । ऋणस्येव स्तोत्रकामस्याधायके यजमाने । "स ऋणचिदृणया ब्रह्मण-स्पतिः" ऋ० २,२३,१७ । ऋणचित् स्तोत्रकाममृणमिव चिनोति" भा० ।

**ऋणदास** पु० ऋणात् मोचनेन कृतोदासः । दासभेदे । "गृहजातस्तथा क्रीतो लब्धोदायादुपागतः । अनाकाल-भृतस्तद्वदाहितः स्वामिना च यः । मोचितो महतश्च-र्णाद्युद्धे प्राप्तः पणे जितः । तवाहमित्युपगतः प्रव्रज्या-वसितः कृतः । भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः । विक्रेता चात्मनःशास्त्रे दासाःपञ्चदश स्मृताः" नारदः । "गृहे दास्याञ्जातो गृहजातः । क्रीतोमूल्येन, लब्धः प्रति-ग्रहादिना । दायादुपागतः पित्रादिदासः । अनाका-लभृतोदुर्भिक्षे यो दासत्वाय मरणाद्रक्षितः । आहितः स्वामिना धनग्रहणेनाधितां नीतः । ऋणमोचनेन दास-त्वमभ्युपगतः ऋणदासः" मिता० ।

**ऋणमत्कुण** पु० ऋणं परकृतं मर्मवेधि कुणति कुण-क

सुप्सुपेति स०। प्रतिभुवि ( जामिन् ) शब्दर०। स हि परकीयर्णस्य मदीयत्वेन ख्यापयतीति तस्य तथात्वम् ।

**ऋणमार्गण** पु० ऋणं मार्गयते परर्णं स्वगतत्वेन प्रार्थयते मार्ग—ल्यु ६त०। ( जामिन ) प्रतिभुवि हारा० ।

**ऋणमुक्ति** स्त्री ऋणान्मुच्यतेऽनया मुच—करणे क्तिन् । ऋणशोधने त्रिका०। ऋणमोक्षोऽप्यत्र हारा० ।

**ऋणमोचन** न० ऋणात् मोचयति मुच-णिच्—ल्यु ५त० । काशीस्थे तीर्थभेदे काशीखण्डे प्रसिद्धम् ।

**ऋणलेख्य** न० ऋणसूचकं लेख्यं लेखपत्रम् । ऋणग्रहणसूचके व्यवहारोपयोगिनि (खत ) ( तमःसुक ) इत्यादि प्रसिद्धे पत्रभेदे । तल्लेखनप्रकारादि मिता० दर्शितं यथा "तत्र लेख्यं द्विविधं शासनं जानपदं चेति । शासनं निरूपितं जानपदमभिधीयते । तच्च द्विविधम् स्वहस्तकृतमन्यकृतं चेति । तत्र स्वहस्तकृतमसाक्षिकम्, अन्यकृतंससाक्षिकम् । अनयोश्च देशाचारानुसारेण प्रामाण्यम् यदाह नारदः । "लेख्यन्तु द्विविधं ज्ञेयं स्वहस्तान्यकृतं तथा । असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोरिति" तत्रान्यकृतमाह । "यः कश्चिदर्थोनिष्णातः स्वरुच्या तु परस्परम् । लेख्यन्तु साक्षिमत् कार्यं तस्मिन् धनिकपूर्वकम्"या०। धनिकाधमर्णयोर्योऽर्थो हिरण्यादिः परस्परं स्वरुच्या इयता कालेनैतावद्देयमितोयतो च प्रतिमासं वृद्धिरिति निष्णातो व्यवस्थितः तस्मिन्नर्थे कालान्तरे विप्रतिपत्तौ वस्तुतत्त्वनिर्णयार्थं लेख्यम् साक्षिमदुक्तलक्षणसाक्षियुक्तम् धनिकः पूर्वो यस्मिन् तद्धनिकपूर्वकम् धनिकनामलेखनपूर्वकमिति यावत् कार्यं कर्त्तव्यम् । उक्तलक्षणाः साक्षिणो वा कर्त्तव्याः "कर्त्ता तु यत्कृतं कार्यं सिद्ध्यर्थन्तस्य साक्षिणः। प्रवर्त्तन्ते विवादेषु स्वकृतं वाथ्यलेखकमिति" स्मरणात् । अपि च "समामासतदर्द्धाहर्नामजातिस्वगोत्रकैः । सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम्" या० समा संवत्सरः मासः चैत्रादिस्तदर्द्धः पक्षः शुक्लः कृष्णो वा अहस्तिथिः प्रतिपदादिः । नाम धनिकाधमर्णयोः । जातिः ब्राह्मणादिः स्वगोत्रं वाशिष्ठादिगोत्रमेतैः समादिभिश्चिह्नितम् । तथा सब्रह्मचारिकं बह्वृचादिशाखाप्रयुक्तं गुणनाम बह्वृचः कठ इति । आत्मीयपितृनाम धनिकर्णिकपितृनाम । आदिग्रहणाद्द्रव्य जाति संख्याचारादेर्ग्रहणम् । एतैश्चिह्नितं लेख्यं कार्यमिति गतेन सम्बन्धः । किञ्च "समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् । मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम्"या० धनिकाधमर्णयोर्योऽर्थः स्वरुच्या व्यवस्थितः तस्मिन्नर्थे समाप्ते लिखिते ऋणी अधमर्णो नामात्मीयं स्वहस्तेनास्मिल्लेख्ये यदुपरि लेखितं तन्ममामुकपुत्रस्य मतमभिप्रेतमिति निवेशयेत् पत्रे विलिखेत् । तथा "साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् । अत्राहममुकः साक्षी लिखेयुरिति ते समाः"या०। तस्मिन् लेख्ये ये साक्षिणो लिखिताः तेऽप्यात्मीयपितृनामलेखनपूर्वकमस्मिन्नर्थे अहममुको देवदत्तः साक्षीति स्वहस्तेनैकैकशो लिखेयुस्ते च समाः संख्यातो गुणतश्च कर्त्तव्याः। यद्यधमर्णः साक्षी वा लिपिज्ञो न भवति तदाऽधमर्णोऽन्येन साक्षी च साक्ष्यन्तरेण सर्वसाक्षिसन्निधौ स्वमतं लेखयेत् । यथाह नारदः "अलिपिज्ञ ऋणी यः स्यात् स्वमतं तु स लेखयेत् । साक्षी वा साक्षिणान्येन सर्वसाक्षिसमीपतः" इति अपि च "उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना । लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत्"या०। ततो लेखको धनिकाधमर्णिकाभ्यामुभाभ्यां प्रार्थितेन मयाऽमुकेन देवदत्तेन विष्णुमित्रसूनुना एतल्लेख्यं लिखितमित्यन्ते लिखेत्" साम्प्रतं स्वकृतं लेख्यमाह । "विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् । तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते"या०। यल्लेख्यं स्वहस्तेन लिखितं अधमर्णेन तत् साक्षिभिर्विनापि प्रमाणं स्मृतं मन्वादिभिः । बलोपधिकृतादृते । बलेन बलात्कारेण, उपधिना छललोभक्रोधभयमदादिलक्षणेन यत्कृतं तस्माद्विना । नारदोऽप्याह "मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च यत् । तदप्रमाणं लिखितं भयोपधिकृतन्तथेति"। तच्चैतत् स्वहस्तकृतं परहस्तकृतञ्च यल्लेख्यं देशाचारानुसारेण सबन्धकव्यवहारे बन्धकव्यवहारयुक्तमर्थक्रमापरिलोपेन लिप्यक्षरापरिलोपेन च लेख्यमित्येतावच्च पुनः साधुशब्दैरेव प्रातिस्विकदेशभाषयापि लेखनीयम् यथाह नारदः "देशाचाराविरुद्धं यद्व्यक्ताधिविधिलक्षणम् । तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरमिति" । विधानं विधिराधेर्विधिराधीकरणन्तस्य लक्षणम् गोप्याधिभोग्याधिकालकृतमित्यादि तद्व्यक्तं विस्पष्टं यस्मिंस्तद्व्यक्ताधिविधिलक्षणम् । अविलुप्तक्रमाक्षरम् अर्थानां क्रमः क्रमश्चाक्षराणि च क्रमाक्षराणि अविलुप्तानि क्रमाक्षराणि यस्मिंस्तदविलुप्तक्रमाक्षरम् । तदेवंभूतं लिखितं प्रमाणम्। राजशासनवन्न साधुशब्दनियमोऽत्रेत्यभिप्रायः । लेख्यप्रसङ्गेन लेख्यारूढमप्यृणं त्रिभि-

रेव देयमित्याह "ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु। यथा साक्ष्यादिकृतमृणं त्रिभिरेव देयम् तथा लेख्यकृतमप्याहर्त्तृपुत्रतत्पुत्रैस्त्रिभिरेव देयम्। न चतुर्थादिभिरिति नियम्यते। ननु पुत्रपौत्रैर्ऋणन्देयमित्यविशेषेणर्णमात्रं त्रिभिरेव देयमिति नियतमेव। बाढमस्यैवोत्सर्गस्य पत्रारूढर्णविषये स्मृत्यन्तरप्रभवापवादशङ्कामपनेतुमिदं वचनमारब्धम्। तथा हि पत्रलक्षणमभिधाय कात्यायनेनाभिहितम् "एवं कालमतिक्रान्तं पितॄणां दाप्यते ऋणमिति"। इत्थं पत्रारूढमतिक्रान्तकालमपि पितॄणां सम्बन्धि दाप्यते। अत्र पितॄणामिति बहुवचननिर्देशात् कालमतिक्रान्तमिति वचनाच्चतुर्थादिर्दाप्यत इति प्रतीयते। तथा हारीतेनापि "लेख्यं यस्य भवेद्धस्ते लाभस्तस्य विनिर्दिशेदिति"। अत्रापि यस्य हस्ते पत्रमस्ति तस्यर्णलाभ इति सामान्येन चतुर्थादिभ्योऽपृणलाभोऽस्तीति प्रतीयते। अतस्तेनदाशङ्कानिवृत्त्यर्थम् एतद्वचनमिति युक्तम्। वचनद्वयन्तु योगीश्वरवचनानुसारेण योजनीयम्। अस्यापवादमाह "आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते"। सबन्धकेऽपि पत्रारूढे ऋणे त्रिभिरेव देयमिति नियमाद्दणापकरणानधिकरणाऽऽध्याहरणेऽप्यनधिकारप्राप्ताविदमुच्यते। यावच्चतुर्थेन पञ्चमेन वा ऋणं न दीयते तावदेवाधिर्भुज्यत इति वदता सबन्धकर्णापाकरणे चतुर्थादेरप्यधिकारो दर्शितः। नन्वेतदप्ययुक्तमेव। "फलभोग्यो न नश्यतीति" सत्यम्। तदप्येतस्मिन्नसत्यपवादवचने पुरुषत्रयविषयमेव स्यादिति सर्वमनवद्यम्। प्रासङ्गिकं परिसमाप्य प्रकृतमेवानुसरति। "देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा। भिन्ने दग्धेऽथवा छिन्ने लेख्यमन्यत्तु कारयेत्" या०। व्यवहारात्क्षमे पत्रे पत्रान्तरं कुर्यादिति विधीयते। व्यवहाराक्षमत्वं चात्यन्तव्यवहितदेशान्तरस्थे पत्रे दुर्लेख्ये दुष्टानि सन्दिह्यमानानि अवाचकानि वा लेख्यानि लिप्यक्षराणि पदानि वा यस्मिंस्तस्मिन् दुर्लेख्ये नष्टे कालवशेन, उन्मृष्टे मसीदौर्बल्यादिना, मृदिते लिप्यक्षरे, हृते तस्करादिभिः, भिन्ने विदलिते, दग्धे अग्निना, छिन्ने द्विधाभूते सति द्विभवति। एतच्चार्थिप्रत्यर्थिनोः परस्परानुमतौ सत्यां विमत्यान्तु व्यवहारप्राप्तौ देशान्तरस्थपत्रानयनाय्वापेक्षया कालोदातव्यः दुर्देशावस्थिते नष्टे वा पत्रे साक्षिभिरेव व्यवहारनिर्णयः कार्यः। यथा ह नारदः "लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते। सतस्तत्कालकरणमसतो द्रष्टृदर्शनमिति"। सतो विद्यमानपत्रस्य देशान्तरस्थस्यानयनाय कालकरणं कालावधिर्दातव्यः। असतः पुनरविद्यमानस्य पत्रस्य पूर्वं ये द्रष्टारः साक्षिणस्तैर्दर्शनं व्यवहारपरिसमापनं कार्यम्। यदा तु साक्षिणो न सन्ति तदा दिव्येन निर्णयः कार्यः। "अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेदिति" स्मरणात्। एतच्च जानपदं व्यवस्थापत्रं सन्दिग्धं चेत् स्वहस्तलिखितादिभिः शोधनीयम् "सन्दिग्धलेख्यशुद्धिः स्यात् स्वहस्तलिखितादिभिः युक्तिप्राप्तिक्रियाचिह्नसंबन्धागमहेतुभिः" या० उक्तेः।

**ऋणादान** न० ऋणमादीयते यत्र। स्मृत्युक्ते अष्टादशविवादान्तर्गते व्यवहारभेदे "तेषामाद्यमृणादानमित्यादिभिरष्टादश व्यवहारपदानि मनुना दर्शितानि। तत्र ऋणादि नारदादिवाक्येन मिता० दर्शितं यथा "अधुनाष्टादशानां व्यवहारपदानामाद्यमृणादानपदं दर्शयति। "अशीतिभागो वृद्धिः स्यादित्यादिना मोक्ष्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने" इत्येवमन्तेन। तच्चर्णादानं सप्तविधम्। ईदृशमृणन्देयमीदृशमदेयमनेनाधिकारिणा देयमस्मिन् समये देयमनेन प्रकारेण देयमित्यधमर्णे पञ्चविधमुत्तमर्णे दानविधिरादानविधिश्चेति द्विविधमिति। एतच्च नारदेन स्पष्टीकृतम् "ऋणन्देयमदेयञ्च येन यत्र यथा च यत्। दानग्रहणधर्मश्च ऋणादानमिति स्मृतमिति" तत्र प्रथममुत्तमर्णस्य दानविधिमाह तत्पूर्वकत्वादितरेषाम्। "अशीतिभागो वृद्धिः स्यान्मासिमासि सबन्धके। वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा" या० "मासिमासि प्रतिमासं विश्वासार्थं यदाधीयते आधिरिति यावत् बन्धकेन सह वर्त्तत इति सबन्धकः प्रयोगस्तस्मिन् सबन्धके प्रयोगे प्रयुक्तस्य द्रव्यस्याशीतितमोभागो वृद्धिर्धर्म्या भवति। अन्यथा बन्धकरहिते प्रयोगे वर्णानां ब्राह्मणादीनां क्रमेण द्वित्रिचतुःपञ्चकं शतं धर्म्यं भवति ब्राह्मणेऽधमर्णे द्विकं शतम्, क्षत्रिये त्रिकं, वैश्ये चतुष्कं, शूद्रे पञ्चकं, मासिमासीत्येव। द्वौ वा त्रयो वा चत्वारो वा पञ्च वा द्वित्रिचतुःपञ्चाः द्वित्रिचतुःपञ्चा अस्मिन् शते वृद्धिर्दीयते इति द्वित्रिचतुष्पञ्चकं शतम्। "तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते इति (पा०) कन्। इयं वृद्धिर्मासिमासि भवति इति कालिका। इयमेव वृद्धिर्दिवसगणनया विभज्य प्रतिदिवसं गृह्यमाणा कायिका भवति तथा च नारदेन। "कायिका कालिका चैव कारिता च तथाऽपरा। चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा"

इत्युक्तम् "कायाविरोधिनी शश्वत्पणपादादिः कायिका। प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता। वृद्धिः सा कारिता नाम यर्णिकेन स्वयं कृता। वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेति"। गृहीतृविशेषेण वृद्धेः प्रकारान्तरमाह। "कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्" या०। कान्तारमरण्यन्तत्र गच्छन्तीति कान्तारगाः ये वृद्ध्या धनं गृहीत्वाधिकलाभार्थमतिगहनं प्राणधनविनाशशङ्कास्थानं प्रविशन्ति ते दशकं शतं दद्युः। ये च समुद्रगास्ते विंशकं शतं मासि मासीत्येव। एतदुक्तम्भवति कान्तारगेभ्यो दशकं शतं सामुद्रेभ्यश्च विंशकं शतम् उत्तमर्णं आदद्यात् मूलविनाशस्यापि शङ्कितत्वात् इति। इदानीं कारितां वृद्धिमाह। "दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु" या०। "सर्वे ब्राह्मणादयोऽधमर्णा अबन्धके सबन्धके वा स्वकृतां स्वाभ्युपगतां वृद्धिं सर्वासु जातिषु दद्युः। क्वचिदकृतापि वृद्धिर्भवति यथाह नारदः "न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित्। अनाकारितमप्यूर्द्धं वत्सरार्द्धाद्विवर्द्धते" इति। यस्तु याचितकं गृहीत्वा देशान्तरं गतस्तं प्रति कात्यायनेनोक्तम्। "यो याचितकमादाय तददत्त्वा दिशं व्रजेत्। ऊर्द्धं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयादिति" यश्च याचितकमादाय याचितोऽप्यदत्त्वा देशान्तरं याति तम् प्रति तेनैवोक्तम्। "कृतोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत्। ऊर्द्धं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयादिति" यः पुनः स्वदेशे स्थित एव याचितो याचितकं न ददाति तं याचनकालादारभ्य वृद्धिं दापयेद्राजा। यथा ह "स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित्। तन्ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेदिति"। अनाकारितवृद्धेरपवादो नारदेनोक्तः "पण्यमूल्यम्भृतिर्न्यासोदण्डो यश्च प्रकल्पितः। वृथादानाक्षिकपणा वर्द्धन्ते नाविवक्षिताः"। अविवक्षिता अनाकारिता इति। अधुना द्रव्यविशेषे वृद्धिविशेषमाह। "सन्ततिस्तु पशुस्त्रीणाम्" या० "पशूनां स्त्रीणां सन्ततिरेव वृद्धिः पशूनां स्त्रीणाञ्चपोषणासमर्थस्य तत्पुष्टिसन्ततिकामस्य प्रयोगः सम्भवति। ग्रहणञ्च क्षीरपरिचर्यार्थिनः। अधुना प्रयुक्तस्य द्रव्यस्य वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्यैकस्य द्रव्यस्य कियती परा वृद्धिरित्यपेक्षिते आह "रसस्याष्टगुणा परा। वस्त्रधान्यहिरण्यानाञ्चतुस्त्रिद्विगुणा परा" या०। "रसस्य तैलघृतादेर्वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य स्वकृतया वृद्ध्या वर्द्धमानस्याष्टगुणा वृद्धिः परा नातः परं वर्द्धते। तथा वस्त्रधान्यहिरण्यानां यथासंख्यं चतुर्गुणाः त्रिगुणा द्विगुणा च वृद्धिः परा। वसिष्ठेन तु रसस्य त्रैगुण्यमुक्तम् "द्विगुणं हिरण्यं त्रिगुणं धान्यम् धान्येनैव रसा व्याख्याताः पुष्पमूलफलानि च तुलाधृतं त्वष्टगुणमिति"। मनुना तु धान्यस्य पुष्पमूलफलादीनाञ्च पञ्चगुणत्वमुक्तम्। "धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चतामिति" शदः क्षेत्रफलं पुष्पमूलफलादि। लवो मेषोर्णा चमरीकेशादि। वाह्यो बलीवर्द्दतुरगादिः। धान्यशदलववाह्यविषया वृद्धिः पञ्चगुणत्वं नातिक्रामतीति। तत्राधमर्णयोग्यतावशेन दुर्भिक्षादिकालवशेन च व्यवस्था द्रष्टव्या। एतच्च सकृत्प्रयोगे सकृदाहरणे च वेदितव्यम्। पुरुषान्तरसङ्क्रमणेन प्रयोगान्तरकरणे तस्मिन्नेव वा पुरुषे अनेकशः प्रयोगान्तरकरणे सुवर्णादिकं द्वैगुण्याद्यतिक्रम्य पूर्ववद्वर्द्धते। सकृत्प्रयोगेऽपि प्रतिदिनम् प्रतिमासमतिवत्सरं वा वृद्ध्याहरणेऽधमर्णदेयस्य द्वैगुण्यसम्भवात् पूर्वाहृतवृद्ध्या सह द्वैगुण्यमतिक्रम्य वर्द्धत एव यथाह मनुः "कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता"। सकृदाहितेत्यपि पाठोऽस्ति। उपचयार्थं प्रयुक्तं द्रव्यं कुसीदं तस्य वृद्धिः कुसीदवृद्धिर्द्वैगुण्यं नात्येति नातिक्रामति यदि सकृदाहिता सकृत्प्रयुक्ता पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणे द्वैगुण्यमत्येति। सकृदाहृतेति पाठे शनैः प्रतिदिनम्प्रतिमासं प्रतिवत्सरं वाऽधमर्णादाहृता द्वैगुण्यमत्येतीति व्याख्येयम्। तथा गौतमेनाप्युक्तम् "चिरस्थाने द्वैगुण्यम् प्रयोगस्येति" प्रयोगस्यैकवचननिर्देशात् प्रयोगान्तरकरणे द्वैगुण्यातिक्रमोऽभिप्रेतः। चिरस्थान इति निर्देशाच्छनैःशनैर्वृद्धेर्ग्रहणे द्वैगुण्यातिक्रमोदर्शितः। ऋणप्रयोगधर्मा उक्ताः साम्प्रतम् प्रयुक्तस्य धनस्य ग्रहणधर्मा उच्यन्ते। "प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत्। साध्यमानो नृपङ्गच्छन् दण्ड्यो दाप्यश्च तद्धनम्" या०। प्रपन्नमभ्युपगतमधमर्णेन धनं साक्ष्यादिभिर्भावितं साधयन् प्रत्याहरन् धर्मादिभिरुपायैः उत्तमर्णो नरपतेर्न वाच्यो निवारणीयो न भवति। धर्मादयश्चोपाया मनुना दर्शिताः। "धर्मेण व्यवहारेण छलेनाचरितेन च। प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन चेति" धर्मेण प्रीतियुक्तेन सामवचनेन, व्यवहारेण साक्षिलेख्याद्युपायेन, छलेन उत्सवादिव्याजेन भूषणादेर्ग्रहणेन, आचरितेन अभोजनेन। पञ्चमेनोपायेन बलेन निगडबन्धनादिना

उपचयार्थं प्रयुक्तं द्रव्यमेतैरुपायैरात्मसात्कुर्य्यादिति । प्रपन्नं साधयन्नर्थं न वाच्य इति वदन्नप्रतिपन्नं साधयन् राज्ञा निवारणीय इति दर्शयति । एतदेव स्पष्टीकृतङ्कात्यायनेन "पीड़येद्यो धनी कश्चिदृणिकं न्यायवादिनम् । तस्मादर्थात् स हीयेत तत्समं प्राप्नुयाद्दममिति"। यस्तु धर्म्मादिभिरुपायैः प्रपन्नमर्थं साध्यमानो वाच्यमानो नृपं गच्छेत् । राजानमभिगम्य साधयन्तमभियुङ्क्ते स दण्ड्यो भवति यथाशक्त्यनुसारेण । धनिने तद्धनन्दाप्यश्च । राज्ञा दापने च प्रकारा दर्शिताः "राजा तु स्वामिने विप्रं सान्त्वेनैव प्रदापयेत् । देशाचारेण चान्यांस्तु दुष्टान् सम्पीड्य दापयेत् । रिक्थिनं सुहृदं वापि छलेनैव प्रदापयेदिति" या० । वाच्यमानो नृपं गच्छेदित्येतत् स्मृत्याचारव्यपेतेनेत्यस्य प्रत्युदाहरणं बोद्धव्यम् । बहुभ्य उत्तमर्णेभ्यो युगपत्प्राप्तेष्वेकोऽधमर्णिकः केन क्रमेण दाप्यो राज्ञेत्यपेक्षित आह । "गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः । दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम्" या० । समानजातीयेषु येनैव क्रमेण धनं गृहीतन्तेनैव क्रमेणाधमर्णिको दाप्यो राज्ञा, भिन्नजातीयेषु तु ब्राह्मणादिक्रमेण । यदा तु पुनरुत्तमर्णो दुर्बलः प्रतिपन्नमर्थन्धर्म्मादिभिरुपायैः साधयितुमशक्नुवन् राज्ञा साधितार्थो भवति तदाऽधमर्णस्य दण्डमुत्तमर्णस्य च भृतिदानमाह "राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम् । पञ्चकञ्च शतन्दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः" या० । "अधमर्णिको राज्ञा प्रतिपन्नार्थात् साधिताद्दशकं शतं दाप्यः" प्रतिपन्नस्य साधितस्यार्थस्य दशमभागं राजाधमर्णिकाद्दण्डरूपेण गृह्णीयादित्यर्थः । उत्तमर्णिकस्तु प्राप्तार्थः पञ्चकं शतं भृतिरूपेण दाप्यः साधितस्यार्थस्य विंशतितमम्भागम् उत्तमर्णाद्राजा भृत्यर्थं गृह्णीयादित्यर्थः । अप्रतिपन्नार्थसाधने तु दण्डविभागो दर्शितः "निह्नवे भावितो दद्यात्" इत्यादिना । सधनमधमर्णिकम्प्रत्युक्त्वाधुना निर्द्धनमधमर्णिकम्प्रत्याह । "हीनजातिम्परिक्षीणमृणार्थं कर्म्म कारयेत् । ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्" या० । ब्राह्मणादिजातिरुत्तमर्णो हीनजातिं क्षत्रियादिम्परिक्षीणं निर्द्धनमृणार्थमृणनिस्तरणार्थं कर्म्म स्वजात्यनुरूपं कारयेत्तत्कुटुम्बाविरोधेन । ब्राह्मणः पुनः परिक्षीणो निर्द्धनः शनैः शनैर्यथोदयं यथासम्भवमृणन्दाप्यः । अत्र हीनजातिग्रहणं समजातेरप्युपलक्षणमतश्च समजातिमपि परिक्षीणं यथोचितं कर्म्म कारयेत् । ब्राह्मणग्रहणञ्च श्रेयोजातेरुपलक्षणमतश्च क्षत्रियादिरपि क्षीणो वैश्यादेः शनैः शनैर्दाप्यो यथोदयम् एतदेव स्पष्टीकृतं मनुना "कर्म्मणापि समं कुर्य्याद्धनिकेनाधमर्णिकः । समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैरिति" । उत्तमर्णेन समं निष्पन्नोत्तमर्णाधमर्णव्यपदेशमात्रमधमर्णः कर्म्मणा कुर्य्यादित्यर्थः । किञ्च "दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम् । मध्यस्थस्थापितं तत्स्याद्वर्द्धते न ततः परम्" या० उपचयार्थं दत्तं धनमधमर्णेन दीयमानमुत्तमर्णो वृद्धिलोभाद्यदि न गृह्णाति तदाऽधमर्णेन मध्यस्थहस्ते स्थापितं स्यात्तदा ततः स्थापनादूर्द्ध्वं न वर्द्धते । अथ स्थापितमपि याच्यमानो न ददाति ततः पूर्व्ववद्वर्द्धत एव ।

इदानीन्देयमृणं यदा येन च देयन्तदाह । "अविभक्तैः कुटुम्बार्थे यदृणन्तु कृतम्भवेत् । दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि" या० अविभक्तैर्बहुभिः कुटुम्बार्थमेकैकेन वा यदृणं कृतन्तदृणं कुटुम्बी दद्यात्तस्मिन् प्रेते प्रोषिते वा तद्रिक्थिनः सर्वे दद्युः । येन देयमित्यत्र प्रत्युदाहरणमाह । "न योषित् पतिपुत्राभ्यां न पुत्रेण कृतम्पिता । दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतन्तथा" या० । पत्या कृतमृणं योषिद्भार्य्या नैव दद्यात् । पुत्रेण कृतं योषित् माता न दद्यात् । तथा पुत्रेण कृतम्पिता न दद्यात्तथा भार्य्याकृतम्पतिर्न दद्यात्कुटुम्बार्थादृते इति सर्व्वशेषमतश्च कुटुम्बार्थं येन केनापि कृतं तत्कुटुम्बिना देयम् "कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं समाचरेत् । स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत्" इति मनु (अध्यधीनः दासः)। तदभावे तद्दायहरैर्देयमिति उक्तमेव । पुत्रपौत्रैर्ऋणं देयमिति वक्ष्यति तस्य पुरस्तादपवादमाह "सुराकामद्यूतकृतन्दण्डशुल्कावशिष्टकम् । वृथादानन्तथैवेह पुत्रो दद्यान्न पैतृकम्" या० । सुरापानेन यत् कृतमृणं कामकृतं स्त्रीव्यसनेन कृतम् । द्यूते पराजयनिमित्तं दण्डशुल्कयोरवशिष्टं वृथादानं धूर्त्तवन्दिमल्लादिभ्यो यत् प्रतिज्ञातम् "धूर्त्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे चाटचारणचौरेषु दत्तं भवति निष्फलमिति" स्मरणात् । एतद्धनम् पित्रा कृतं पुत्रादिः शौण्डिकादिभ्यो न दद्यात् । अत्र दण्डशुल्कावशिष्टकमित्यवशिष्टग्रहणात् सर्वं दातव्यमिति न मन्तव्यम् "दण्डं वा दण्डशेषं वा शुल्कन्तच्छेषमेव वा । न दातव्यन्तु पुत्रेण यच्च न व्यावहारिकम्" इत्यौशनःस्मरणात् । गौतमेनाप्युक्तम् "मद्यशुल्कद्यूतदण्डा न पुत्रानध्याभवेयुरिति"।

न पुत्रस्योपरि भवन्तीत्यर्थः । अनेनादेयमृणमुक्तम् । न पतिः स्त्रीकृतं तथेत्यस्यापवादमाह । "गोपशौण्डिकशैलूषरजकव्याधयोषिताम् । ऋणं दद्यात् पतिस्तासां यस्माद्वृत्तिस्तदाश्रया" या० । गोपो गोपालः शौण्डिकः सुराकारः शैलूषो नटः रजको वस्त्राणां रञ्जकः । व्याधो मृगयुः एषां योषिद्भिर्यदृणं कृतन्तत्पतिभिर्देयं यस्मात्तेषां वृत्तिर्जीवनं तदाश्रया योषिदधीना । यस्माद्वृत्तिस्तदाश्रयेति हेतुव्यपदेशादन्येऽपि ये योषिदधीनजीविनस्तेऽपि योषित्कृतमृणं दद्युरिति गम्यते । पतिकृतमृणं भार्या न दद्यादित्यस्यापवादमाह "प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत् कृतम् । स्वयंकृतं वा यदृणं नान्यत् स्त्री दातुमर्हति" या० । "मुमूर्षुणा प्रवत्स्यता वा पत्या नियुक्तया ऋणदाने यत्प्रतिपन्नन्तत्पतिकृतमृणन्देयं यच्च पत्या सह भार्यया कृतन्तदपि भर्त्रभावे भार्यया अपुत्रया देयम् । यच्च स्वयमेव कृतमृणं तदपि देयम् । ननु प्रतिपन्नादित्रयं स्त्रिया देयमिति न वक्तव्यम् सन्देहाभावात् उच्यते । "भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमिति" वचनान्निर्धनत्वेन प्रतिपन्नादिष्वदानशङ्कायामिदमुच्यते । प्रतिपन्नं स्त्रिया देयमित्यादि । न चानेन वचनेन स्त्र्यादीनां निर्धनत्वमभिधीयते पारतन्त्र्यमात्रप्रतिपादनपरत्वात् । एतच्च विभागप्रकरणे स्पष्टीकरिष्यते । नान्यत् स्त्री दातुमर्हतीत्येतत्तर्हि न वक्तव्यम् विधानेनैवान्यत्र प्रतिषेधसिद्धेः । उच्यते 'प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत् कृतम्' इत्यनयोरपवादार्थमुच्यते । अन्यच्च सुराकामादिवचनोपात्तं प्रतिपन्नमपि पत्या सहकृतमपि न देयमिति । पुनरपि यदृणं दातव्यं येन च दातव्यं यत्र च काले दातव्यं तत्त्रितयमाह "पितरि प्रोषिते प्रेते व्यसनाभिपरिप्लुते । पुत्रपौत्रैरृणन्देयं निह्नवे साक्षिभावितम्" या० । पिता यदि दातव्यमृणमदत्त्वा प्रेतो दूरदेशङ्गतोऽचिकित्सनीयव्याध्याद्यभिभूतो वा तदा तत्कृतमृणमवश्यन्देयं पुत्रेण पौत्रेण वा पितृधनाभावेऽपि पुत्रत्वेन पौत्रत्वेन च । तत्र क्रमोऽप्ययमेव पित्रभावे पुत्रः, पुत्राभावे पौत्र इति । पुत्रेण पौत्रेण वा निह्नवे कृतेऽर्थिना साक्ष्यादिभिर्भावितमृणन्देयं पुत्रपौत्रैरित्यन्वयः । अत्र पितरि प्रोषित इत्येतावदुक्तं कालविशेषस्तु नारदेनोक्तो द्रष्टव्यः । "नार्वाक् संवत्सराद्विंशात् पितरि प्रोषिते सुतः । ऋणं दद्यात् पितृव्ये वा ज्येष्ठे भ्रातर्य्यपि वेति" प्रेतेऽप्यप्राप्तव्यवहारकालस्तु न दद्यात् प्राप्तव्यवहारकालस्तु दद्यात् स च कालस्तेनैव दर्शितः । 'गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः । बाल आ षोडशाद्वर्षात् पौगण्डश्चेति शब्द्यते । परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते इति" । यद्यपि पितृमरणादूर्द्ध्वं बालोऽपि स्वतन्त्रो जातस्तथापि न ऋणभाग् भवति । यथाह "अप्राप्तव्यवहारश्चेत् स्वतन्त्रोऽपि हि नर्णभाक् । स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतमिति" । तथा आसेधाह्वाननिषेधश्च दृश्यते । "अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती । विषमस्थश्च नासेध्यो न चैतानाह्वयेन्नृपः" इति तस्मात् । "अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः । ऋणात् पिता मोचनीयो यथा नो नरकं व्रजेदिति" । पुत्रेण व्यवहारज्ञतया जातेन निष्पन्नेनेति व्याख्येयम् । श्राद्धे तु बालस्यापि अधिकारः "न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनादिति" गौतमस्मरणात् । पुत्रपौत्रैरिति बहुवचननिर्देशाद्बहवः पुत्रा यदि विभक्ताः, स्वांशानुरूपेणर्णं दद्युः । अविभक्ताश्चेत् सम्भूय समुत्थानेन, गुणप्रधानभावेन वर्त्तमानानां प्रधानभूत एव दद्यादिति गम्यते यथाह नारदः "अत ऊर्द्ध्वं पितुः पुत्रा ऋणं दद्युर्यथांशतः । अविभक्ता विभक्ता वा यस्तां चोद्वहते धुरमिति" । अत्र च यद्यपि पुत्रपौत्रैरृणं देयमित्यविशेषेणोक्तम् । तथापि पुत्रेण यथा पिता सवृद्धिकन्ददाति तथैव देयं पौत्रेण तु समं मूलमेव दातव्यं न वृद्धिरिति विशेषोऽवगन्तव्यः । "ऋणमात्मीयवत् पित्र्यं पुत्रैर्देयं विभावितम् । पैतामहं समं देयमदेयं तत्सुतस्य तु" इति बृहस्पतिवचनात् । अत्र विभावितमित्यविशेषोपादानात् साक्षिभावितमित्यत्र साक्षिग्रहणं प्रमाणोपलक्षणम् । समं यावद्गृहीतं तावदेव देयं न वृद्धिः तत्सुतस्य प्रपौत्रस्यादेयमगृहीतधनस्य । एतच्चोत्तरश्लोके स्पष्टयिष्यते । ऋणापाकरणे ऋणी तत्पुत्रः पौत्र इति त्रयः कर्त्तारो दर्शिताः तेषाञ्च समवाये क्रमोऽपि दर्शितः ।

इदानीं कर्त्रन्तरसमवाये च क्रममाह । "रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च । पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः" या० । अन्यदीयं द्रव्यमन्यस्य क्रयादिव्यतिरेकेण यत् स्वीयं भवति तद्रिक्थं विभागहारेण रिक्थं गृह्णातीति रिक्थग्राहः स ऋणं दाप्यः । एतदुक्तम् भवति यो यदीयन्द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतम् ऋणं दाप्यो न चौरादिरिति । योषितं भार्यां गृह्णातीति योषिद्ग्राहः स तथैव ऋणं दाप्यः । यो यदीयां योषितं

गृह्णाति स तदृणमृणं दाप्यः योषितोऽविभाज्यद्रव्यत्वेन ऋक्थव्यपदेशानर्हत्वाद्भेदेन निर्देशः । पुत्रश्चानन्याश्रितद्रव्य ऋणं दाप्यः अन्यमाश्रितमन्याश्रितम् मातृपितृसम्बन्धि-द्रव्यं यस्यासावन्याश्रितद्रव्यः न अन्याश्रितद्रव्योऽनन्याश्रितद्रव्यः पुत्रहीनस्य ऋक्थिन ऋणं दाप्य इति सम्बन्धः । एतेषां समवाये क्रमश्च पाठक्रमएव ऋक्थग्राह ऋणं दाप्यस्तदभावे योषिद्ग्राहस्तदभावे ( तथाभूतः ) पुत्र इति । नन्वेतेषां समवाय एव नोपपद्यते । "न भ्रातरो न पितरः, पुत्रा ऋक्थहराः पितुरिति" पुत्रे सत्यन्यस्य ऋक्थग्रहणासम्भवात् । योषिद्ग्राहोऽपि नोपपद्यते "न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते" इति स्मरणात् । तदृणं पुत्रो दाप्य इत्यप्ययुक्तं पुत्रपौत्रैरृणं देयमित्युक्तत्वात् । अनन्याश्रितधन इति विशेषणमप्यनर्थकम् पुत्रे सति द्रव्यस्यान्याश्रयत्वासम्भवात् सम्भवे च ऋक्थग्राह इत्यनेनैव गतार्थत्वात् पुत्रहीनस्य ऋक्थिन इत्येतदपि न वक्तव्यम् । पुत्रे सत्यपि ऋक्थग्राह ऋणं दाप्य इति स्थितमसति पुत्रे ऋक्थग्राहः सुतरां दाप्यः इति सिद्धमेवेति । अत्रोच्यते । पुत्रे सत्यप्यन्य ऋक्थग्राही सम्भवति क्लीवान्धबधिरादीनां पुत्रत्वेऽपि ऋक्थहरत्वाभावात् । तथा च क्लीवादीननुक्रम्य "भर्त्तव्यास्तु निरंशकाः" इति वक्ष्यति तथा "सवर्णापुत्रोऽप्यन्यायवृत्तो न लभेतैकेषामिति" गौतमवचनात् । अतश्च क्लीवादिषु पुत्रेषु सत्स्वन्यायवृत्ते च सवर्णापुत्रे सति ऋक्थग्राही पितृव्यतत्पुत्रादिः । योषिद्ग्राहो यद्यपि शास्त्रविरोधेन न सम्भवति तथाप्यतिक्रान्तनिषेधः पूर्वपतिकृतर्णापाकरणाधिकारी भवत्येव । योषिद्ग्राहोऽवरुद्धानां स्वैरिणीनामन्तिमां गृह्णाति, यश्च पुनर्भ्वोन्तिस्थां प्रथमाम्, यथाह नारदः "परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् । पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा । कन्यैवाऽक्षतयोनिर्या पाणिग्रहणदूषिता । पुनर्भूः प्रथमा प्रोक्ता पुनःसंस्कारकर्मणा । देशधर्मानपेक्ष्य स्त्री गुरुभिर्या प्रदीयते । उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्त्तिता" । उत्पन्नसाहसा उत्पन्नव्यभिचारा । "असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते । सवर्णाय सपिण्डाय सा तृतीया प्रकीर्त्तिता । स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति । कामात् समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा । कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषाश्रिता । पुनःपत्युर्गृहं यायात् सा द्वितीया प्रकीर्त्तिता । मृते भर्त्तरि तु प्राप्तान् देवरादीनपास्य या । उपगच्छेत् परं कामात् सा तृतीया प्रकीर्त्तिता । प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा तु या । तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तिता । अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् । ऋणमनयोः प्रतिकृतं दद्याद्यस्ते उपाश्रितः" इति । तथान्योऽपि योषिद्ग्राहः ऋणापाकरणाधिकारी तेनैव दर्शितः "या तु सप्रधनैव स्त्री सापत्या चान्यमाव्रजेत् । सोऽस्या दद्यादृणं भर्त्तुरुत्सृजेद्वा तथैव ताम्" । प्रकृष्टेन धनेन सह वर्त्तत इति सप्रधना बहुधनेति यावत् । तथा "अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् । ऋणं वोढुः स भजते सैव चास्य धनं स्मृतमिति" । पुत्रस्य पुनर्वचनं क्रमार्थम् । अनन्याश्रितद्रव्य इति बहुपुत्रेषु ऋक्थाभावेऽप्यंशग्रहणयोग्यस्यैवर्णापाकरणाधिकारो नायोग्यस्यान्धादेरित्येवमर्थम् । "पुत्रहीनस्य ऋक्थिन" इत्येतदपि पुत्रपौत्रहीनस्य प्रपौत्रादयो यदि ऋक्थं गृह्णन्ति तदृणं दाप्यानान्यथेत्येवमर्थम् । पुत्रपौत्रौ तु ऋक्थग्रहणाभावेऽपि दाप्यावित्युक्तम् यथाह नारदः "क्रमादभ्यागतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् । दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्त्तते" इति सर्वं निरवद्यम् । यद्वा योषिद्ग्राहाभावे पुत्रो दाप्य इत्युक्तं तस्याभावे योषिद्ग्राहो दाप्य इत्युच्यते । पुत्रहीनस्य ऋक्थिनइत्यनेन योषिदेवोच्यते "सैव चास्य धनं स्मृतमिति" स्मरणात् "यो यस्य हरते दारान् स तस्य हरते धनमिति" च । ननु योषिद्ग्राहाभावे पुत्र ऋणं दाप्यः पुत्राभावे योषिद्ग्राह इति, परस्परं विरुद्धम् उभयसद्भावे न कश्चिद्दाप्य इति, नैष दोषः अन्तिमस्वैरिणीग्राहिणः प्रथमपुनर्भूग्राहिणः सप्रधनस्त्रीहारिणश्चाभावे पुत्रो दाप्यः । पुत्राभावे तु निर्द्धननिरपत्ययोषिद्ग्राहो दाप्य इति । एतदेवोक्तं नारदेन "धनस्त्रीहारिपुत्राणामृणभाग् यो धनं हरेत् । पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः" । धनस्त्रीहारिपुत्राणां समवाये यो धनं हरेत् स ऋणभाक् । पुत्रोऽसतोः स्त्रीधनिनोः स्त्री च धनञ्च स्त्रीधने ते विद्येते ययोः तौ स्त्रीधनिनौ तयोः स्त्रीधनिनोः असतोः पुत्र एवर्णभाक् । धनिपुत्रयोरसतोः स्त्रीहार्य्येवर्णभाक् स्त्रीहार्य्यभावे पुत्र ऋणभाक् । पुत्राभावे स्त्रीहारीति विरोधप्रतिभासपरिहारः पूर्ववत् । पुत्रहीनस्य ऋक्थिनः इत्यस्यान्या व्याख्या, एते धनस्त्रीहारिपुत्राः ऋणं कस्य दाप्याः ? इति विवक्षायामुक्त-

र्णस्य दातुस्तदभावे तत्पुत्रादेः पुत्राद्यभावे कस्य दाप्या इत्यपेक्षायामिदमुपतिष्ठते । पुत्रहीनस्य ऋक्थिन इति पुत्राद्यन्वयहीनस्योत्तमर्णस्य य ऋक्थी ऋक्थग्रहणयोग्यः सपिण्डादिस्तस्य ऋक्थिनो दाप्याः । तथा च नारदेन "ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः । निर्वापयेत् सकुल्येषु तदभावेऽस्य बन्धुषु" इत्यभिधायाभिहितम् "यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः । तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु विनिक्षिपेदिति" । अधुना पुरुषविशेषे ऋणग्रहणप्रतिषेधनप्रसङ्गादन्यदपि प्रतिषेधति । "भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि । प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम्" या० । प्रतिभुवो भावः प्रातिभाव्यम् । भ्रातॄणां दम्पत्योः पितापुत्रयोश्च । अविभक्ते द्रव्ये द्रव्यविभागात् प्राक् प्रातिभाव्यमृणं साक्ष्यञ्च न स्मृतं मन्वादिभिः । अपि तु प्रतिषिद्धं साधारणधनत्वात् प्रातिभाव्यसाक्षित्वयोः पक्षे द्रव्यव्ययावसानत्वात् ऋणस्य चावश्यप्रतिदेयत्वात् । एतच्च परस्पराऽननुमत्या अनुमत्या त्वविभक्तानामपि प्रातिभाव्यादि भवत्येव । विभागादूर्द्ध्वन्तु परस्परानुमतिव्यतिरेकेणापि भवति । ननु दम्पत्योर्विभागात् प्राक् प्रातिभाव्यादिप्रतिषेधो न युज्यते तयोर्विभागाभावेन विशेषणानर्थक्याद्विभागाभावश्च आपस्तम्बेन दर्शितः "जायापत्योर्न विभागो विद्यत" इति । सत्यं श्रौतस्मार्त्ताग्निसाध्येषु कर्मसु तत्फलेषु च विभागाभावो न पुनः सर्व्वकर्मसु द्रव्येषु च । तथा हि "जायापत्योर्न विभागो विद्यते" इत्युक्त्वा किमिति न विद्यत इत्यपेक्षायां हेतुमुक्तवान् "पाणिग्रहणाद्धि सहत्वङ्कर्मसु तथा पुण्यफलेषु चेति" हि यस्मात् पाणिग्रहणादारभ्य कर्मसु सहत्वं श्रूयते "जायापती अग्निमादधीयातामिति" । तस्मादाधाने सहाधिकारादाधानसिद्धाग्निसाध्येषु कर्मसु सहाधिकारः । तथा "कर्म स्मार्त्तं विवाहाग्नावित्यादि" स्मरणात् विवाहसिद्धाग्निसाध्येष्वपि कर्मसु सहाधिकार एव । अतश्चोभयविधाग्निनिरपेक्षेषु कर्मसु पूर्त्तेषु जायापत्योः पृथगेवाधिकारः सम्पद्यते । तथा पुण्यानां फलेषु स्वर्गादिषु जायापत्योः सहत्वं श्रूयते "दिवि ज्योतिरजरमारभेतामित्यादि" । येषु पुण्यकर्मसु सहाधिकारस्तेषां फलेषु सहत्वमिति बोद्धव्यम् । न पुनः पूर्त्तानां भर्त्रनुज्ञयानुष्ठितानां फलेष्वपि । ननु द्रव्यस्वामित्वेऽपि सहत्वमुक्तम् "द्रव्यपरिग्रहेषु च न हि भर्त्तुर्विप्रवासे नैमित्तिकदाने स्तेयमुपदिशन्तीति" सत्यं द्रव्यस्वामित्वं पत्न्या दर्शितमनेन न पुनर्विभागाभावः यस्माद्द्रव्यपरिग्रहेषु चेत्युक्त्वा तत्र कारणमुक्तमन्यत्र भर्त्तुर्विप्रवासे नैमित्तिकेऽवश्यकर्त्तव्यदानेऽतिथिभोजनभिक्षादानादौ हि यस्मात् स्तेयमुपदिशन्ति मन्वादयः तस्माद्भार्य्याया अपि द्रव्यस्वामित्वमस्ति अन्यथा स्तेयं स्यादिति तस्माद्भर्त्तुरिच्छया भार्य्याया अपि द्रव्यविभागो भवत्येव न स्वेच्छया यथा वक्ष्यति "यदि कुर्य्यात् समानांशान् पत्न्यः कार्य्याः समांशिकाः" इति । अधुना प्रातिभाव्यं निरूपयितुमाह । "दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते । आद्यौ तु वितथे दाप्याावितरस्य सुता अपि" या० । प्रातिभाव्यं विश्वासार्थं पुरुषान्तरेण सह समयः, तच्च विषयभेदात् त्रिधा भिद्यते । यथा दर्शने दर्शनापेक्षायामेनं दर्शयिष्यामीति, प्रत्यये विश्वासे मत्प्रत्ययेनास्य धनं प्रयच्छ नायं त्वां वञ्चयिष्यते यतोऽमुकस्य पुत्रोऽयमुर्व्वराप्रायभूरस्य ग्रामवरोऽस्तीति, दाने यद्ययं न ददाति तदानीमहमेव धनं दास्यामीति, प्रातिभाव्यं विधीयत इति प्रत्येकं सम्बन्धः । आद्यौ तु दर्शनप्रत्ययप्रतिभुवौ वितथे अन्यथाभावे अदर्शने विश्वासव्यभिचारे च दाप्यौ राज्ञा प्रस्तुतं (अष्टाहिकम्) धनमुत्तमर्णस्य । इतरस्य दानप्रतिभुवः सुता अपि दाप्याः । वितथ इत्येव शाठ्येन निर्द्धनत्वेन वा अधमर्णेऽप्रतिकुर्व्वति । इतरस्य सुता अपीति वदता पूर्व्वयोः सुता न दाप्याः इत्युक्तम् । सुता इति वदता न पौत्रा दाप्या इति दर्शितम् । एतदेव स्पष्टीकर्त्तुमाह । "दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा । न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः" या० । यदा दर्शनप्रतिभूः प्रात्ययिको वा प्रतिभूर्दिवं गतः तदा तयोः पुत्राः प्रातिव्यायातं पैतृकम् ऋणं न दद्युः । यस्तु दानाय स्थितः प्रतिभूर्दिवं गतस्तस्य पुत्रा दद्युर्न पौत्राः । ते च मूलमेव दद्युर्न वृद्धिम् । "ऋणं पैतामहं पौत्राः प्रातिभाव्यागतं सुतः । समं दद्यात् तत्सुतौ तु न दाप्याविति निश्चयः" इति व्यासवचनात् । प्रातिभाव्यव्यतिरिक्तं पैतामहमृणं पौत्रः समं यावद्गृहीतं तावदेव दद्यान्न वृद्धिम् । तथा तत्सुतोऽपि प्रातिभाव्यागतं पित्र्यमृणं सममेव दद्यात्तयोः पौत्रपुत्रयोः सुतौ प्रपौत्रपौत्रौ च प्रातिभाव्यायातमप्रातिभाव्यायातं च ऋणं यथाक्रममगृहीतवित्तौ न दाप्याविति । यदपि स्मरणम् "खादको वित्तहीनः स्याल्लग्नको वित्तवान् यदि । मूलं तस्य भवेद्देयं न वृद्धिं दातुमर्हतीति" तदपि लग्नकः प्रतिभूः खादकोऽध-

मर्थः, बन्धको यदि वित्तवान् स्यात्तदास्य पुत्रेण मूलमेव दातव्यं न वृद्धिरिति व्याख्येयम्। यत्र दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा बन्धकपर्याप्तं गृहीत्वा प्रतिभूर्जातः तत्पुत्रा अपि तस्मादेव बन्धकात् प्रातिभाव्यायातमृणं दद्युरेव। यथाह कात्यायनः "गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत्। विना पित्रा धनात्तस्मात् दाप्यः स्यात् तदृणं सुतः" इति। दर्शनग्रहणं प्रत्ययोपलक्षणम् विना पित्रा पितरि प्रेते दूरदेशगते वेति। यत्रानेकप्रतिभूसम्भवस्तत्र कथं दातव्यमित्याह। "बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम्। एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि" या०। यद्येकस्मिन् प्रयोगे द्वौ बहवो वा प्रतिभुवस्तदृणं विभज्य स्वांशेन दद्युः। एकच्छायाश्रितेषु प्रतिभूषु एकस्याधमर्णस्य छाया सादृश्यं तामाश्रिताः एकच्छायाश्रिताः अधमर्णो यथा कृत्स्नद्रव्यदानाय स्थितस्तथा दानप्रतिभुवोऽपि प्रत्येकं कृत्स्नदानाय स्थिताः एवं दर्शनप्रत्यये च तेष्वेकच्छायाश्रितेषु प्रतिभूषु सत्सु धनिकस्योत्तमर्णस्य यथारुचि यथाकामम्। अतश्च धनिको वित्ताद्यपेक्षया स्वार्थं यं प्रार्थयते स एव कृत्स्नं दद्यात्सर्वतः। एकच्छायाश्रितेषु यदि कश्चिद्देशान्तरं गतस्तत्पुत्रश्च सन्निहितस्तदा धनिकेच्छया स सर्वं दाप्यः मृते तु कस्मिंश्चित् स्वपित्र्यमंशमवृद्धिकं दाप्यः। यथाह कात्यायनः "एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते। प्रोषिते तत्सुतः सर्वं पित्र्यमंशं मृते सति" प्रातिभाव्यर्णदानविधिमुक्त्वा प्रतिभूदत्तस्य प्रतिक्रियाविधिमाह। "प्रतिभूर्दापितो यत्तु प्रकाशं धनिनो धनम्। द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत्" या०। यद्धनं प्रतिभूस्तत्पुत्रो वा धनिकेनोपपीड़ितः प्रकाशं सर्वजनसमक्षं राज्ञा धनिनो दापितो न पुनर्द्वैगुण्यलोभेन स्वयमुपेत्य दत्तम्। यथाह नारदः "यच्चार्णं प्रतिभूर्दद्याद्धनिकेनोपपीड़ितः। ऋणिकस्तं प्रतिभुवे द्विगुणं प्रतिदापयेदिति"। ऋणिकैरधमर्णैस्तस्य प्रतिभुवस्तद्द्रव्यं द्विगुणं प्रतिदातव्यं स्यात्। तच्च कालविशेषमनपेक्ष्य सद्य एव द्विगुणं दातव्यम् वचनारम्भसामर्थ्यात्। एतच्च हिरण्यविषयम्। नन्विदं वचनं द्वैगुण्यमात्रं प्रतिपादयति तच्च पूर्वोक्तकालकलाक्रमाबाधेनाप्युपपद्यते यथा जातेष्टिविधानं शुचित्वाबाधेन। अपि च सद्यः सवृद्धिकदानपक्षे पश्वादीनां सद्यःसन्तत्यभावान्मूलदानमेव प्राप्नोतीति तदसत् "वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा" इत्यनेनैव कालकलाक्रमेण द्वैगुण्यसिद्धेर्द्वैगुण्यमात्रविधाने इदं वचनमनर्थकं स्यात्। पश्वादीनान्तु कालक्रमपक्षे सन्तत्यभावे स्वरूपदानमेव। यदा प्रतिभूरपि द्रव्यदानानन्तरं कियता कालेनाधमर्णेन संघटते तदा संततिरपि सम्भवत्येव यद्वा पूर्व्वसिद्धसन्तत्या सह पश्वादिर्देयो दास्यतीति न किञ्चिदेतत्। अथ प्रातिभाव्यं प्रीतिकृतमतश्च प्रतिभुवा दत्तं प्रीतिदत्तमेव न च प्रीतिदत्तस्य याचनात् प्राक् वृद्धिरस्ति यथाह "प्रीतिदत्तं तु यत्किञ्चिद्वर्द्धते न त्वयाचितम्। याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतमिति"। अतश्च प्रीतिदत्तस्यायाचितस्यापि दानदिवसादारभ्य यावत् द्विगुणं कालक्रमेण वृद्धिरित्यनेन वचनेनोच्यत इति। तदप्यसत् अस्यार्थस्यास्माद्वचनादप्रतीतेः द्विगुणं प्रतिदातव्यमित्येतावदिह प्रतीयते तस्मात् कालक्रममनपेक्ष्यैव द्विगुणं प्रतिदातव्यं वचनारम्भसामर्थ्यादिति सूक्तम्। प्रतिभूदत्तस्य सर्वत्र द्वैगुण्ये प्राप्तेऽपवादमाह "सन्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च। वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा" या०। हिरण्यद्वैगुण्यवत् कालानादरेणैव स्त्रीपश्वादयः प्रतिपादितवृद्ध्या दाप्याः श्लोकस्तु व्याख्यात एव यस्य द्रव्यस्य यावती वृद्धिः पराकाष्ठोक्ता तद्द्रव्यं प्रतिभूदत्तं खादकेन तया वृद्ध्या सह कालविशेषमनपेक्ष्य सद्यो दातव्यमिति तात्पर्यार्थः। यदा तु दर्शनप्रतिभूः स प्रतिपन्ने कालेऽधमर्णं दर्शयितुमसमर्थस्तदा तदन्वेषणाय तस्य पक्षत्रयं (अवधिभूतम्) दातव्यम्। तत्र यदि दर्शयति तदा मोक्तव्योऽन्यथा प्रस्तुतं धनं दाप्यः "नष्टस्यान्वेषणार्थन्तु देयं पक्षत्रयं परम्। यद्यसौ दर्शयेत् तत्र मोक्तव्यः प्रतिभूर्भवेत्। काले व्यतीते प्रतिभूर्यदि तं नैव दर्शयेत्। निबन्धं दापयेत्तन्तु प्रेते चैष विधिः स्मृतः" इति कात्यायनवचनात्। बन्धके विशेषनिषेधश्च तेनैवोक्तः। "न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा। निरुद्धो दण्डितश्चैव संदिग्धश्चैव न क्वचित्। नैव रिक्थी न मित्रञ्च नचैवात्यन्तवासिनः। राजकार्य्यनियुक्तश्च ये च प्रव्रजिता नराः। न शक्तो धनिने दातुं दण्डं राज्ञे च तत्समम्। जीवन्नापि पिता यस्य तथैवेच्छाप्रवर्त्तकः। नाविज्ञातो ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रतीति" सन्दिग्धोऽभियुक्तः। अत्यन्तवासिनो नैष्ठिकब्रह्मचारिणः। इति प्रतिभूविधिः। ऋणप्रयोगे द्वौ "विश्वासहेतू प्रतिभूराधिश्च यथाह नारदः। विश्वासहेतू द्वावत्र प्रतिभूराधिरेव चेति"। प्रतिभूर्विहृतविधिः" मिता०

आधिस्तु विस्तरेणाधिशब्दे ७११ पृष्ठादौ निरूपितः ।

अत्र विशेषः वीरमि० व्यासः "बन्धे भाग आशीतः षष्टोभागः शतागमे । निराधाने द्विकशतं मासलाभ उदाहृतः" अत्र आधानपदं प्रतिभुवोऽप्युपलक्षणम् । तत्रैव नारदः । "स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते । तत्कुसीदमिति ज्ञेयम् तेन वृत्तिः कुसीदिनाम्" स्थानं मूलधनस्यावस्थानं लाभो वृद्धिः तन्निमित्तं तत्प्रयोजनम् । कुसीदशब्दार्थमाह वृह०। "कुत्सितात् सीदतश्चैव निर्विशङ्कैः प्रगृह्यते । चतुर्गुणं चाष्टगुणं कुसीदाख्यमतः स्मृतः" । कुत्सितात् सीदतस्र अधमर्णात् इत्यर्थः। वृद्धौ विशेषमाह स एव। "वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधान्यैः प्रकीर्त्तिता । षड्विधान्यैः समाख्याता तत्त्वतस्तां निबोधत । कायिका कालिका चैव चक्रवृद्धिरतोऽपरा । कारिता च शिखा वृद्धिर्भोगलाभस्तथैव च । कायिका कर्म्मसंयुक्ता मासग्राह्या तु कालिका । वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता । प्रत्यहं गृह्यते या तु शिखा वृद्धिस्तु सा स्मृता । गृहात्तोषः फलं क्षेत्रात् भोगलाभः प्रकीर्त्तितः" कर्म्मसंयुक्ता कायिका यत्र बन्धकीकृतस्य गवाश्वादेर्दोहनवहनादिकं कर्म्म वृद्धित्वेन स्थापितं तत्र सा कायिका । यथाह व्यासः "दोह्यवाह्यकर्मयुता कायिका समुदाहृता" प्रत्यहं गृह्यते या तु शिखा वृद्धिस्तु सा स्मृता । शिखेव वर्द्धते नित्यं शिरश्छेदान्निवर्त्तते । मूले दत्ते तथैवैषा शिखावृद्धिर्निवर्त्तते" । परमवृद्धौ विशेषस्तत्रैव वृह० "हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके । धान्ये चतुर्गुणा प्रोक्ता सदवाह्यलवेषु च । उक्ता पञ्चगुणा शाके वीजेक्षौ षड्गुणा स्मृता । लवणस्नेहमद्येषु वृद्धिरष्टगुणा मता । गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके" कुप्यं त्रपुसीसादि सदः क्षेत्रफलं धान्यस्य पृथगुपादानात्तद्व्यतिरिक्तं पुष्पफलादि । कात्या० "तैलानाञ्चैव सर्वेषां मद्यानामथ सर्पिषाम् । वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य च" । सर्वेषां सर्वप्रकाराणां सर्वत्रान्वयः। गुडादौ विभक्तिव्यत्ययेन सर्वत्रैवान्वयः । वशिष्ठः "वज्रमुक्तिप्रवालानां हेम्नश्च रजतस्य च । द्विगुणा तिष्ठते वृद्धिः कृतकालानुसारिणी" कात्या० "मणिमुक्ताप्रवालानां सुवर्णरजतस्य च । तिष्ठती द्विगुणा वृद्धिः फलकौटाविकस्य च" फलं फलजं कार्पासादि आविकसाहचर्य्यात् कौटं कीटोद्भवं पट्टवस्त्रादि आविकं कम्बलादि । वशिष्ठः "ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च । त्रिगुणा तिष्ठती वृद्धिः कालात् चिरकृतस्य तु" विष्णुः "अनुक्तानां त्रिगुणा" । देशाचारभेदादुक्तायाः सर्वप्रकारवृद्धेरन्यथात्वमाह नारदः "ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः। देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठते । द्विगुणं त्रिगुणञ्चैव तथान्यस्मिंश्चतुर्गुणम् । तथाष्टगुणमन्यस्मिन् तत्र देशेऽवतिष्ठते" । द्रव्यभेदेऽपरवृद्धिमाह वृह० "तृणकाष्ठेष्टकासूत्रकिण्वचर्म्मास्थिवर्म्मणाम् । हेतिपुष्पफलानाञ्च वृद्धिस्तु न निवर्त्तते । किण्वं सुराद्रव्योपकरणं द्रव्यविशेषः । वशिष्ठः "दन्तचर्म्मास्थिशृङ्गाणां मृण्मयानां तथैव च । अक्षया वृद्धिरेतेषां पुष्पमूलफलस्य च" पुष्पादौ पूर्वापरविरोधः अधमर्णशक्त्यपेक्षानपेक्षाभ्यां समाधानीयः । शिखावृद्ध्यादौ वृद्धेरक्षयमाह वृह० "शिखावृद्धिं कालिकाञ्च फलभोगं तथैव च । धनी तावत् समादद्यात् यावन्मूलं न शोधितम्" "कश्चिदनङ्गीकृताऽपि वृद्धिर्भवतीत्याह" विष्णुः "यो गृहीत्वा ऋणं पूर्वं स्वोदासामीति सामकम् । न दद्याल्लोभतः पश्चात् तदहाद्वृद्धिमाप्नुयात्" सामकं सममेवावृद्धिकं स्वोदास्यामीति प्रतिश्रुत्येत्यर्थः श्व इति पदं दानकालोपलक्षणम् । अङ्गीकाराभावे क्वचित् विषये वृद्ध्यभावमाह संव० "न वृद्धिः स्त्रीधने लाभे निःक्षिप्ते च यथास्थिते । सन्दिग्धे प्रतिभाव्ये च यदि न स्यात् स्वयं कृता" स्त्रीधने "अधिविन्नस्त्रियै देयमाधिवेदनिकं समम्" इत्युक्त्याद्युक्तेः स्त्रियै दातव्ये धने स्त्रीशुल्कधने च लाभे क्रय्याद्याये वाणिज्याद्युत्पन्ने आये च कालातिक्रमेऽपि न वृद्धिः । कात्या० "धर्म्मकृत्यासवद्यूते पण्यमूल्ये च सर्वदा । स्त्रीशुल्केषु न वृद्धिः स्यात् प्रातिभाव्यागतेषु च" धर्म्मकृत्ये प्रतिश्रुत्यादत्ते, द्यूते कृतसर्वपराजितस्वे च सुरापानार्थमृणे क्रीतद्रव्यस्य पण्यस्य मूल्ये प्रातिभाव्यागतेषु सन्दिग्धप्रातिभाव्यागतेषु प्रागुक्तसंवर्त्तवाक्यैकवाक्यत्वात् अत्र सर्वदेति विशेषणम् याचनेऽपि न वृद्धिरिति सूचनार्थम् । व्यासः 'न वर्द्धते चिरस्थं च मद्यशुल्कप्रतिश्रुतम्" । शुल्कं घट्टादिदेयं राजकरादि । पूर्णावधौ ऋण-दानासामर्थ्ये विशेषमाह मनुः "ऋणं दातुमशक्तो यः कर्त्तुमिच्छेत् पुनः क्रियाम् । स दत्त्वा निर्जितां वृद्धिं करणं परिवर्त्तयेत् । अदर्शयित्वा तत्रैव हिरण्यं परिवर्त्तयेत् । यावती सम्भवेद्वृद्धिस्तावतीं दातुमर्हति । चक्रवृद्धिं समारूढो देशकालव्यवस्थितः। अतिक्रामन् देशकालौ न तत्फलमवाप्नुयात्" । निर्जितां लभ्यत्वेनात्माधीनत्वं नीताम् । करणमन्यद्दणलेख्यं कुर्यात् । अदर्शयित्वा

साक्षिभ्यो देयद्रव्यमदर्शयित्वैव अधमर्णेन मया एतावती वृद्धिरियन्तु मित्येवमङ्गीकारेण देयमृणं परिवर्त्तयेत् सवृद्धिकत्वेनाधिकतया अन्यथाभावमापादयेत् तदेव पत्रे साक्षिमल्लेख्यम् एतच्च यावतीं वृद्धिं तदा दातुं शक्नोति तावतीं दत्त्वा लेख्यं कार्यं तथाकृते सति द्विगुणातिक्रमेण वृद्धिर्भवतीत्यर्थः तथाकृते च वृद्धेरपि वृद्धिः तस्य सवृद्धिकस्य मूलस्थानीयत्वात् यथाह वृह० "पूर्णावधौ शान्तलाभमृणमुद्धाह्य वेद्धनी। कारयेद्वा ऋणी लेख्यं चक्रवृद्धिव्यवस्थया। द्विगुणस्योपरि यथा चक्रवृद्धिः प्रवर्त्तते। भोगलाभस्तथा तत्र मूलं स्यात् सोदयमृणम्" ऋणग्रहणोपायाश्च मिता० उक्ताः उपायशब्दे च १२५५पृ० विस्तरेण दर्शिताः। अवधिमध्ये सवृद्धिकसर्वर्णदानासम्भवे क्रमेण दाने सलेख्यप्रयोगे लेख्यपृष्ठे लिखित्वैवं दानप्रकारमाह याज्ञ०। "लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वादत्त्वार्णिको धनम्। धनी चोपगतं दद्यात् स्वहस्तपरिचिह्नितम्" उपगतशब्दे १२०१पृ० व्याख्यातम्। विष्णुः "असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वलिखितं दद्यात्" (रसिद) प्रवेशपत्रादाने विशेषमाह नारदः। "गृहीत्वोपगतं दद्यादृणिकायोदयं धनी। अददद्याच्यमानश्च शेषहानिमवाप्नुयात्" "उदयं प्राप्तम्। सर्वस्वदाने तु ऋणलेख्यच्छेदनमाह "दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत्। साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम्" या०।

तत्राशक्तौ विशेषमाह कात्या० "धनदानासहं बुद्ध्वा स्वाधीनं कर्म्म कारयेत्। अशक्तौ बन्धनागारे प्रवेश्यो ब्राह्मणादृते"। अशुभकर्म्मकारणं बन्धनागारप्रवेशनञ्च राजावेदनपूर्वकमेव कार्य्यमन्यथा दण्डमाह कात्या०।"यदि ह्यादावनादिष्टमशुभं कर्म्म कारयेत्। प्राप्नुयात् साहसं पूर्व्वमृणाच्च च्योत चार्णिकः" अनादिष्टम् राज्ञोऽनिवेदितम्। ऋणदातृपुत्रं विशेषयति कात्या० "ऋणं तु दापयेत् पुत्रम् यदि स्यान्निरुपद्रवः। द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत् सुतम्। व्यसनाभिप्लुते पुत्रे बाले वा यत् प्रदृश्यते। द्रव्यहृद्दापयेत्तं तु तस्याभावे पुरस्कृत्" कुटुम्बार्थं कृतस्य विशेषमाह वृह० "पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः। यत् गृहीतं कुटुम्बार्थं तद्गृही दातुमर्हति"। नारदः "शिष्यान्तेवासिदासस्त्रीप्रेष्य-कर्म्मकरैश्च यत्। कुटुम्बहेतोर्यत् क्षिप्तं दातव्यं तत् कुटुम्बिना" शिष्यः वेदशिष्यः अन्तेवासी शिल्पशिष्यः।

"कुटुम्बार्थमृणं दर्शयति" कात्या० "कुटुम्बार्थमशक्ते तु गृहीतं व्याधिते तथा। उपप्लवनिमित्तं च विद्यादापत्कृतन्तु तत्। कन्यावैवाहिके चैव प्रेतकार्य्येषु यत् कृतम्। एतत् सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः"। पुत्रकृते विशेषमाह नार० "पितुरेव नियोगाद्वा कुटुम्बभरणाय वा। कृतं वा यदृणं कृच्छ्रे दद्यात् पुत्रस्य तत्पिता"। स्त्रियाः पतिकृतर्णदाने विशेषमाह कात्या० "मर्त्तुकामेन या भर्त्रा उक्ता देयमृणं त्वया। प्रतिपन्ना च सा दाप्या धनं यद्याश्रितं स्त्रियाम्"। नार० "दद्यादपुत्रा विधवा नियुक्ता या मुमूर्षुणा। या वा तद्रिक्थमादद्यात् यतोरिक्थमृणं ततः"। मातुर्निर्धनत्वेऽपि तत्कृतर्णं पुत्रेण देयमाह" नारदः "पुत्रिणी तु समुत्सृज्य पुत्रं स्त्री यान्यमाश्रयेत्। तस्या ऋणं हरेत् सर्वं निःस्वाया पुत्रएव तु"। अधनत्वे तामुद्वोढैव दद्यात्" यथाह कात्या० "बालपुत्राधिकार्था स्यात् भर्त्तारं यान्यमाश्रिता। आश्रितस्तदृणं दद्यात् बालपुत्राविधिः स्मृतः"। अविभक्तर्णे विशेषमाह विष्णुः "अविभक्तैः कृतमृणं यस्तिष्ठति स दद्यात्"। नारदः "पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम्। मात्रा वा यत् कुटुम्बार्थं दद्युस्तत् सर्व्वरिक्थिनः" अविभक्तकाले कुटुम्बार्थं कृतमृणं विभक्तैरपि देयमाह मनुः। "ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थं कृतोव्ययः। दातव्यं बान्धवैस्तत् स्यात् प्रविभक्तैरपि स्वतः"। कामकृतस्याह कात्या०। "लिखितं शुल्कं वापि देयं यत्तु प्रतिश्रुतम्। परपूर्वस्त्रियै तत्तु विद्यात् कामकृतं त्वृणाम्" शुल्कं लेखरहितम्। अनेकधनिसमवाये विशेषमाह कात्या०। "नानर्णसमवाये तु यद्यत् पूर्व्वकृतं भवेत्। तत्तद्देवापतो देयं राज्ञः स्याच्छ्रोत्रियात् परम्। एकाहे लिखितं यत्र तत्र कुर्य्यादृणं समम्। ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम्"। भिन्नदिवसे कृतं श्रोत्रियपूर्व्वकं देयम्। एकदिनकृतनानर्णसमवाये युगपद्देयम् धनाल्पत्वबहुत्वयोस्तु तदनुसारेण भागं परिकल्प्य देयमित्यर्थः। अत्र विशेषमाह कात्या० "यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत्। तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा" यदुत्तमर्णात् द्रव्यं गृहीत्वा वाणिज्यादिकं करोति तस्मात् लब्धधनं तस्मै एव देयं तद्धस्ते नान्यस्मै इत्यर्थः। पैतामहपित्र्यर्ण-योरप्ये देयतामाह वृह० "पित्र्यं पूर्व्वमृणं देयं पश्चादात्मीयमेव च। तयोः पैतामहं पूर्व्वं देयमेवमृणं

सदा । पितर्य्येव विद्यमाने तु न च पुत्रो धनं हरेत् । देयं तद्धनिके द्रव्यं मृते पौत्रैस्तु दाप्यते"। एवं मातृकर्णेऽपि "मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः" या० उक्तेः। पुत्रपौत्रादिभिर्देय ऋणे विशेषमाह विष्णुः "धनग्राहिणि प्रेते प्रव्रजिते वा द्विदशाः समाः प्रोषिते वा तत्पुत्रपौत्रैर्देयं नातः परमनीप्सुभिः" प्रेते अप्राप्तव्यवहारस्य विंशतिवर्षोत्तरं, संन्यस्ते प्रोषिते च सर्वस्यैव तत् कालोत्तरं देयम् । एतच्च अप्राप्तधनस्य गृहीतधनस्य तु तत् क्षणाद्देयता ऋणावशेषधनग्रहणस्यैव प्रागुक्तशास्त्रसिद्धेः । ऋणापकरणाभावे दोषमाह व्यासः "तपस्वी चाग्निहोत्री वा ऋणवान् म्रियते यदि । तपश्चैवाग्निहोत्रञ्च सर्वं तद्धनिनो भवेत्" । अन्यकृतपुण्यस्यान्यत्र संक्रमाप्रसक्तेरस्य निन्दार्थवादता तेन तत्तत्पुण्यनाशकतेति पर्य्यवसितोऽर्थः । कात्या० "उद्धारादिकमादाय स्वामिने न ददाति यः । स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे" तथा नारदः "याच्यमानं न दद्याद्य ऋणं वापि प्रतिश्रुतम् । तद्द्रव्यं वर्द्धते तस्य यावत् कोटिशतं भवेत् । ततः कोटिशते पूर्णे वेष्टितस्तेन कर्म्मणा । अश्वः खरो वृषो दासो भवेज्जन्मनि जन्मनि" तेनर्णानपक्रियाया उक्तपश्वादियोनिप्राप्तिहेतुदुरदृष्टजनकत्वम् । ऋणग्रहणमेव पापहेतुः तच्छोधनस्य तन्नाशकतेति गदाधर आह स्म ।

**ऋणावन्** त्रि० ऋण–वनिप् दीर्घश्च । ऋणवति । "ऋणावानं न पतयन्त सर्गैः" ऋ० १, १६९, ७ । ऋणावानऋणवन्तम्" भा०। "ऋणावा बिभ्यद्धनम्" ऋ० १०, ३४, १० ।

**ऋणान्तक** पु० ऋणमन्तयति अन्ति–नामधा० ण्वुल् । मङ्गलग्रहे शब्दरत्ना० तत्सेवने ऋणमोचनात्तस्य तथात्वम् ।

**ऋणापकरण** न० ६ त० । ऋणशोधने ऋणापनयनादयोऽप्यत्र ।

**ऋणिक** त्रि० ऋणमस्त्यस्य ठन् । ऋणयुक्ते (खातक) "द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्धनम्" या० ।

**ऋणिन्** त्रि० ऋणमस्त्यस्य इनि स्त्रियां ङीप् । ऋणयुक्ते (खातक) "ऋणी न स्यात् यथा पिता" स्मृ० । "समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्" । "जायमानो वै ब्राह्मणस्त्रिभिरृणैरृणी भवति" श्रुतिः ।

**ऋणिधनिचक्र** न० तन्त्रोक्ते ग्राह्यमन्त्रशुभाशुभज्ञानार्थे चक्रभेदे तच्चक्रलेखनप्रकार उक्तः तन्त्रसारे "अथ ऋणिधनिचक्रम् । तद्यथा रुद्रया० "कोष्ठान्येकादशैवेह वेदेन पूरितानि च । अकारादिहकारान्तं लिखेत् कोष्ठेषु तन्त्रवित् । प्रथमं पञ्चकोष्ठेषु ह्रस्वदीर्घक्रमेण तु । द्वयं द्वयं लिखेत् तत्र विचारे खलु साधकः । शेषेष्वेकैकशो वर्णान् क्रमतस्तु लिखेत् सुधीः । षट्कालकालवियदग्निसमुद्रवेदखाकाशशून्यदहनाः खलु साध्यवर्णाः । शून्यद्विपश्रुवियदम्बरयुक्शशाङ्कव्योमाब्धिवेदशशिनः खलु साधकार्णाः । नामाक्षराद्कठवाङ्कजमङ्कशेषं ज्ञात्वोभयोरधिकशेषमृणं धनं स्यात्"। अस्यार्थः साध्यवर्णान् स्वरव्यञ्जनरूपेण पृथक्कृतान् षट्कालाद्यङ्कैर्गणितान् (मिलितान्) तथा साधकनामाक्षराणि स्वरव्यञ्जनरूपेण पृथक्कृतानि शून्याद्यैरङ्कैर्गणयित्वा (सङ्कलय्य) अष्टसंख्याभिर्हृत्वा उभयोः साध्यसाधकयोर्यदधिकम् ऋणं शेषं धनं ज्ञात्वा मन्त्रं दद्यात् । मन्त्रश्चेदृणी भवति तदा मन्त्रः शुभदायको भवति धनी चेन्न । तन्त्रान्तरे "मन्त्रस्त्वृणी शुभफलोऽप्यशुभो धनी च तुल्यो यदा समफलः कथितो मुनीन्द्रैः" । अन्यच्च "शून्ये मृत्युमवाप्नोति धने च विफलो भवेत् । ऋणे तु प्राप्तिमात्रेण सर्वसिद्धिस्तु जायते" तथा रुद्रयामले "मन्त्रो यद्यधिकाङ्कः स्यात्तदा मन्त्रं जपेत् सुधीः । समेऽपि च जपेन्मन्त्रं न जपेत् तु ऋणाधिके । शून्ये मृत्युं विजानीयात् तस्मात् शून्यं विवर्ज्जयेत् । "तथा इन्द्रचन्द्रेनेत्ररविपक्षदशर्त्तुवेदत्र्यग्र्याशुधाष्टनवभिर्गुणितानथ साध्यवर्णान् । दिग्भूगिरिश्रुतिगजाग्निमुनीषुवेदैः षड्वक्त्रिभिस्तु गुणितानथ साधकार्णान्" इदन्तु वचनं विष्णुविषयम् रामार्च्चनचन्द्रिकाधृतत्वादिति केचित् । वस्तुतस्तु पूर्वस्यैव विवरणं तथा हि इन्द्रचन्द्रेनेत्रेत्याद्यनन्तरं "नामार्णकोष्ठाङ्कमथाभिहन्यात् एकादिरुद्राङ्कगतक्रमेण"। वचनं रुद्रयामले "साध्याङ्कान् साधकाङ्कांश्च पूरयेद्गुणसंख्यया । गुणिते तु हृतेऽष्टाभिर्यच्छेषं जायते स्फुटम् । तदङ्कं कथयाम्यत्र एकादशगृहस्थितम्" इत्युक्त्वा षट्कालेत्याद्युक्तम् । प्रकारान्तरं यथा "नामाद्यक्षरमारभ्य यावत् मन्त्रादिमाक्षरम् । त्रिधा कृत्वा स्वरैर्भिन्नं तदन्यद्विपरीतकम्"। अस्यार्थः साधकनामाद्यक्षरतोगणनया यावत् मन्त्रादिमाक्षरम् तत्संख्यां त्रिधा कृत्वा सप्तभिर्हृत्वा अधिकम् ऋणं शेषं धनं स्यात् । तदन्यदिति मन्त्राद्यक्षरमारभ्य यावत् साधकाद्यक्षरं भवेत् तावत् संख्यां सप्तगुणां कृत्वा त्रिभिर्हरेत् । अन्यच्च "साध्यनाम द्विगुणितं साधकेन समन्वितम् । अष्टभिश्च हरेच्छेषं तदन्यद्विपरीतकम्" । अस्यार्थः साध्यनामस्वरव्यञ्जनभेदेन द्विगुणीकृत्य साधकनाम्ना स्वरव्यञ्जनभेदेन मिलितं कृत्वा अष्टभिर्हरेत् अधिकम् ऋणं शेषं धनम् । तदन्यदिति साधमनाम स्वरव्यञ्जनभेदेन

द्विगुणीकृत्य साध्येन युक्तं कृत्वा ऋक्षैर्हरेत्। नामप्रकारमाह पिङ्गलामते। "प्रसिद्धं यद्भवेन्नाम किं वास्य जन्मनामतः। यद्दीनां पुष्पपातेन गुरुणा यत् कृतं भवेत्। लोकप्रसिद्धमथ वा मात्रा पित्रा तथा कृतम्"। यामले "सुप्तो जागर्त्ति येनासौ दूरस्थश्च प्रभाषते। यद्यन्यमनसस्तोऽपि तन्नाम ग्राह्यमत्र तु"। सनत्कुमारीये "पितृमातृकृतं नाम त्यक्त्वा धर्मादिदैवकान्। श्रीवर्णस्य ततो विद्वान् चक्रेषु योजयेत् क्रमात्"

**ऋत** गतौ जुगुप्सायाञ्च सौत्रः सक०सेट् सार्वधातुके ईयङ् आत्म० आर्द्धधातुके वा ईयङ् ईयङभावे पर०। ऋतीयते ऋतीयेत ऋतीयताम् आर्त्तीयत। आर्त्तीयिष्ट आर्त्तीत्। ऋतीयाम्—बभूव आस चक्रे आनर्त्त। ऋतीयिता-अर्त्तिता। ऋतीयिषीष्ट ऋत्यात्। ऋतीयिष्यते अर्त्तिष्यति। आर्त्तीयिष्यत आर्त्तिष्यत्। ऋतीयमानः भावे क्त। ऋतीया। "तस्मादर्त्तीयेरन् स य एवं विद्वान् मर्त्तीयतेऽप्रियं द्विषतां करोति" शत० ३,४,२,१। ते ह्यर्त्तीयमाने ऊचतुः ३,६,२,२। यद्वै सेनायां च समितौ चर्त्तीयन्ते" ८,६,१,१६।

**ऋत** न० ऋ-क्त। "ऋतमुञ्छशिलं ज्ञेय"मित्युक्ते आञ्छनस्य १उपजीव्यवृत्तिभेदे २मोक्षे, ३जले, "तस्य ऋतं पातु शतशारदाय" ऋ० ७, १०१,६। 'ऋतमुदकम्"भा०। "न गावो नव्यनृतं जरितारस्त इन्द्र!"ऋ०७,२२,४। 'ऋतमुदकम्"भा० "ऋतस्य धाराः सुदुघा दुहानाः" ऋ० ७,४३,४ "गोजा ऋतजा अद्रिजा ऋतम्"ऋ०४,४०,५। ४ कर्मफले "ऋतं पिबन्तौ सुकृतस्य लोके" श्रुतिः ५सुप्रिये वाक्ये ६मानसादिसत्ये च। ७दीप्ते, ८पूजिते च त्रि०। ९यज्ञे पु० "पीतये चारुमृताय पीतये" ऋ० १,१, ३७,२। 'ऋताय यज्ञाय" भा०। "चारु ऋताय पीतये ६,१७,८। "ऋताय यज्ञाय"भा० १०सूर्ये पु०। "एष ते योनिर्ऋतायुभ्याम्" यजु०७,१० "ऋतायुभ्यां मित्रावरुणाभ्याम्। ऋतशब्देन मित्रः आयुशब्देन वरुणः"वेददी०। "ब्रह्म वा ऋतं ब्रह्म हि मित्रो ब्रह्मर्तं वरुण एवायुः"शत०ब्रा०४,१,४,१०। ११आदित्ये न०। "ऋतं सत्यमृतं सत्यम्" यजु० ११,४७, "ऋतमादित्यः" वेददी०। ऋतमिति मन्त्राव्ययमिति तु न्याय्यम् "ऋतञ्च सत्यञ्चाभीद्धात्" अघमर्षणोक्तेः १२परब्रह्मणि। "ऋतमेकाक्षरं ब्रह्म सत्यं स्थानमनन्तकम्"स्मृ० १३सत्ये तु वाक्यादौ। "सतीं वाचमृतां कर्त्तुमर्हसि त्वमरिन्दम!"भा० आश्व०६७। "तस्मात् साक्ष्यं वदेदृतम्" "साक्ष्यं पृच्छेदृतं द्विजान्"मनुः। "सर्वमेतदृतं मन्ये यन्मां वदसि केशव!" गीता १४तद्वति च त्रि०। १५ऋतदेवनामके देवभेदे पु०।'ऋतस्य हि शुरुधः सन्ति'ऋ०४,२३,८ "ऋतस्य ऋतदेवस्य" भा०। "गर्भमृतस्यतिः" ऋ० ६, ४८,५। "ऋतस्य यज्ञस्योदकस्य वा पतिः"भा०पृषो० सुडागमः "ऋतचिद्धि सत्यः" ऋ० १,१४५,५। "ऋतस्य यज्ञस्य जलस्य वा चित् चेतयिता ज्ञाता"भा०। १६यज्ञर्षिभेदे "ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च"यजु०१७,८२।

**ऋतजित्** पु० ऋतं जयति जि-क्विप् ६त०। १यक्षभेदे। "त्वष्टा च जमदग्निश्च कम्बलोऽथ तिलोत्तमा। ब्रह्मापेतोऽथ ऋतजित् धृतराष्ट्रश्च सप्तमः। माघमासे वसन्त्येते सप्त मैत्रेय! भास्करे" विष्णु० १०अ०।"ब्रह्मापेतो ब्रह्मराक्षसः ऋतजित् यक्षभेदः"श्रीधरः। २यज्ञजयिनि त्रि०"ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च अन्तिमित्रश्च दूरेऽमित्रश्च गणः" यजु० १७,८३। अयञ्चाग्नेर्धामप्रियभेदः 'सप्त तेऽग्ने! समिधः, सप्त जिह्वा,ः सप्तऋषयः, सप्तधामप्रियाणि। सप्त होत्राः सप्तधा त्वा यजन्ति। सप्त योनीरापृणस्व घृतेन स्वाहा" यजु० १७,७९ इत्युपक्रम्य "अग्नेः समिधादिसप्तसप्तकोपक्रमेण धामप्रियरूपमध्ये तस्याभिधानात्।

**ऋतद्युम्न** त्रि०ऋतं द्युम्नं कीर्त्तिर्दीप्तिर्वाऽस्य। १सत्येन दीप्यमाने २सत्ययशस्के च।'ऋतं वदन्नृतद्युम्न! सत्यं वदन् सत्यकर्मन्!" ऋ० ९,११३,४। हे ऋतद्युम्न! ऋतेन दीप्यमान! सत्ययशस्क! वा" भा०।

**ऋतधामन्** पु० ऋतं धामास्य। १विष्णौ त्रिका०। "ऋतं प्रियवाक्यं सामगानं धाम स्थानमस्य। २सामगानस्थानयुक्ते त्रि० "ऋतधामासि स्वर्ज्योतिः"यजु०५,३२।"ऋतं सामगानं धाम स्थानमस्याः औदुम्बर्याः"वेददी० ऋतं सत्यमविनश्वरं स्थानमस्य। ३अविनश्वरस्थानयुक्ते त्रि०।"ऋताषाडृतधामाग्निः" यजु० १८,३८। ४इन्द्रभेदे स च द्वादशमन्वन्तरीयः इन्द्रभेदः। "भविता रुद्रसावर्णी राजन् द्वादशमो मनुः। ऋतधामा च देवेन्द्रो देवाश्च हरितादयः" भाग०८,१३,१२। ५यदुवंश्ये नृपभेदे। "कङ्कस्य कर्णिकायां वै ऋतधामाजयावपि"भाग०९,२,२३।

**ऋतध्वज** पु० १ब्रह्मर्षिभेदे। "कुमारो नारद ऋभुरित्युपक्रम्य" "हिरण्यनाभः कौशल्यः श्रुतदेव ऋतध्वजः। एते परे च सिद्धेशाश्चरन्ति ज्ञानहेतवः" भाग० ६,१५,११। २शिवे च तन्नाम कथने "मन्त्रमेघर्महिमसोमहान् शिव ऋतध्वजः

ऊर्द्ध्वरेता भवःकालो वामदेवो धृतव्रतः” भाग० ३,१२,१० ।

**ऋतनि** त्रि० ऋतं जलं यज्ञं वा नयति नी+क्विप् वेदे नि० ह्रस्वः । आदित्ये तस्य जलदायकत्वेन उदयेन यज्ञप्रवर्त्तकत्वेन च तथात्वम् । “यो राजभ्य ऋतनिभ्यो ददाश” ऋ० २,२७,१२ । लोके तु ऋतनीरित्येव ।

**ऋतपर्ण** सूर्य्यवंश्ये नृपभेदे । “भगीरथसुतो राजा” इत्युपक्रम्य “अयुताजित्सुतस्त्वासीदृतपर्णो महायशाः । दिव्याक्षहृदयज्ञोऽयं राजा नलसखो बली । ऋतपर्णसुतस्त्वासीदार्त्तपर्णिर्महीपतिः” हरिवं० १६अ० । तस्य च नलेन सख्यमक्षहृदयज्ञत्वञ्च भा० व० ७२अ० दर्शितं यथा “एवमुक्तो नलेनाथ तदा भाङ्गासुरिर्नृपः । आससाद वने राजन् ! फलवन्तं विभीतकम् । तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत । ममापि सूत ! पश्य त्वं सङ्ख्याने परमं बलम् । सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन । नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित् । वृक्षेऽस्मिन् यानि पर्णानि फलान्यपि च बाहुक ! । पतितान्यपि यान्यत्र तत्रैकमधिकं शतम् । एकपत्राधिकं पत्रं फलमेकञ्च बाहुक । पञ्चकोट्योऽथ पत्राणां द्वयोरपि च शाखयोः । प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः । आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च । ततो रथमवस्थाप्य राजानं बाहुकोऽब्रवीत् । परोक्षमिव मे राजन् ! कत्थसे शत्रुकर्षण ! । प्रत्यक्षमेतत् कर्त्तास्मि शातयित्वा विभीतकम् । अथात्र गणिते राजन् ! विद्यते न परोक्षता । प्रत्यक्षं ते महाराज ! शातयिष्ये विभीतकम् । अहं हि नाभिजानामि भवेदेवं न वेति वा । सङ्ख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप ! । मुहूर्त्तमपि वार्ष्णेयो रश्मीन् यच्छतु वाजिनाम् । तमब्रवीन्नृपः सूतं नायं कालो विलम्बितुम् । बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः । प्रतीक्षस्व मुहूर्त्तं त्वमथ वा त्वरते भवान् । एष याति शिवः पन्था याहि वार्ष्णेय ! सारथिः । अब्रवीदृतुपर्णस्तु सान्त्वयन् कुरुनन्दन ! । त्वमेव यन्ता नान्योऽस्ति पृथिव्यामपि बाहुक ! । त्वत्कृते यातुमिच्छामि विदर्भान् हयकोविद ! । शरणं त्वां प्रपन्नोऽस्मि न विघ्नं कर्त्तुमर्हसि । कामञ्च ते करिष्यामि यन्मां वक्ष्यसि बाहुक ! । विदर्भान् यदि यात्वाद्य सूर्यं दर्शयितासि मे । अथाब्रवीद्बाहुकस्तं संख्याय च विभीतकम् । ततो विदर्भान् यास्यामि कुरुष्वैवं वचो मम । अकाम इव तं राजा गणयस्वेत्युवाच ह । सोऽवतीर्य्य रथात्तूर्णं शातयामास तं द्रुमम् । ततः स विस्मयाविष्टो राजानमिदमब्रवीत् । गणयित्वा यथोक्तानि तावन्त्येव फलानि च । अत्यद्भुतमिदं राजन् ! दृष्टवानस्मि ते बलम् । श्रोतुमिच्छामि ते विद्यां यथैतज्ज्ञायते नृप ! । तमुवाच ततो राजा त्वरितो गमने नृपः । विद्ध्यक्षहृदयज्ञं मां सङ्ख्याने च विशारदम् । बाहुकस्तमुवाचाथ देहि विद्यामिमां मम । मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ! । ऋतुपर्णस्ततो राजा बाहुकं कार्य्यगौरवात् । हयज्ञानस्य लोभाच्च तं तथेत्यब्रवीद्वचः । यथोक्तं त्वं गृहाणेदमक्षाणां हृदयं परम् । निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक !” । नलस्य बाहुकच्छद्मरूपतामुपवर्ण्य अन्त, उक्तं यथा “ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् । दमयन्त्या समायुक्तं जहृषे च नराधिपः । तमानाय्य नलं राजा क्षमयामास पार्थिवम् । स च तं क्षमयामास हेतुभिर्बुद्धिसम्मतः ! । स सत्कृतो महीपालो नैषधं विस्मिताननः । उवाच वाक्यं तत्त्वज्ञो नैषधं वदतां वरः । दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत । कच्चित्तु नापराधं ते कृतवानस्मि नैषध ! । अज्ञातवासं वसतो मद्गृहे वसुधाधिप ! । यदि वा बुद्धिपूर्वाणि यद्यबुद्ध्यापि कानिचित् । मया कृतान्यकार्य्याणि तानि त्वं क्षन्तुमर्हसि । नल उवाच । न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव ! । कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव । पूर्वं ह्यपि सखा मेऽसि सम्बन्धी च जनाधिप ! । अत ऊर्द्ध्वन्तु भूयस्त्वं प्रीतिमाहर्त्तुमर्हसि । सर्वकामैः सुविहितैः सुखमस्म्युषितस्त्वयि । न तथा स्वगृहे राजन् ! यथा तव गृहे सदा । इदञ्चैव हयज्ञानं त्वदीयं मयि तिष्ठति । तदुपाकर्त्तुमिच्छामि मन्यसे यदि पार्थिव ! । एवमुक्त्वा ददौ विद्यामृतपर्णाय नैषधः । स च तां प्रतिजग्राह विधिदृष्टेन कर्म्मणा । गृहीत्वा चाश्वहृदयं राजन् ! भाङ्गासुरिर्नृपः ! । निषधाधिपतेश्चापि दत्त्वाक्षहृदयं नृप !” । भा० व० ७५ अ० । “कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्” भा० “ऋतपर्णमाहृतम्” नैष० ।

**ऋतपेय** पु० ऋतं स्वर्गादिफलं पेयं भोग्यमस्मात् । १एकाहे २यागभेदे । “यः कामयेत नैःष्ण्यं पाप्मन इयामिति स ऋतपेयेन यजेत” का० श्रौ० ६,७,२५ । “निःष्णेहस्य भावो नैःष्ण्यम् यः पाप्मनो नैःष्ण्यमियां गच्छेयमिति कामयेत स ऋतपेयनामकेन एकाहेन यजेत अल्पमपि

पापं मयि मो तिष्ठेत् इति यः कामयेत स ऋतपेयेन यजेतेत्यर्थः" नारा० ह०। सप्तदशस्तोमकेषु पञ्चसु क्रतुषु मध्ये स्वर्गकामकर्त्तव्ये २क्रतुभेदे च। "सप्तदशाः पञ्च" कात्या० २२,८,६। इत्युपक्रम्य "स्वर्गकामस्यर्त्तपेयः" १० सूत्रे दर्शितः।

**ऋतपेशस्** पु० ऋतमुदकं पेशोरूपमस्य। जलात्मके वरुणे "वरुणाय ऋतपेशसे दधीत" ऋ० ५,६६,१।

**ऋतप्सु** पु० ऋतं यज्ञियहविः प्साति प्सा-बा० कु। १यज्ञियहविर्भोजके देवे। ऋतं सत्यं प्सु रूपमस्येति। २सत्यस्वरूपे देवे च। "अन्तर्यद्वनिनो वामृतप्सू" ऋ० १,१८०,२। "ऋतप्सू यज्ञियहविर्भक्षयितारौ सत्यस्वरूपौ वा" भा०।

**ऋतम्** अव्य० ऋत-कमि। सत्यमित्यर्थे। ऋतम्भरः।

**ऋतम्भर** पु० ऋतमित्यव्ययं तद्बिभर्त्ति अच्। १सत्यपालके परमेश्वरे "ततोगतो ब्रह्मगिरोपहूत ऋतम्भरध्याननिवारिताघः" भाग० ६,१३,१२। प्लक्षद्वीपान्तर्गते २नदीभेदे स्त्री। तत्र वर्षाण्यभिधाय "तेषु गिरयोनद्यश्च सप्तैवाभिज्ञाताः" इत्युक्त्वा "अरुणा नृम्णाङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरेति महानद्यः" भाग० ५,२०,६। पात० उक्ते ३विपर्य्यासशून्ये समाधिस्थप्रज्ञाभेदे च स्त्री "ऋतम्भरा तत्र प्रज्ञा" सू० "तस्मिन् समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति संज्ञा भवति अन्वर्था च सा सत्यमेव बिभर्त्ति न तत्र विपर्य्यासज्ञानगन्धोऽप्यस्तीति। तथा चोक्तम् "आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तममिति" पा०भा०। तस्याः शाब्दादिभ्यो विशेषादिकमुक्तं तत्रैव। "श्रुतानुमानप्रज्ञाभ्यामन्यविषयविशेषार्थत्वात्" सू०। "श्रुतमागमविज्ञानं तत् सामान्यविषयं न ह्यागमेन शक्यो विशेषोऽभिधातुं कस्मात्? नहि विशेषेण कृतसङ्केतः शब्द इति। तथानुमानं सामान्यविषयमेव यत्र प्राप्तिस्तत्र गतिः यत्राप्राप्तिस्तत्र न भवति गतिरित्युक्तम् अनुमानेन च सामान्येनोपसंहारः तस्मात् श्रुतानुमानविषयो न विशेषः कश्चिदस्तीति न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनोलोकप्रत्यक्षेण ग्रहणम्। न चास्य विशेषस्याप्रमाणकस्याभावोऽस्तीति" समाधिप्रज्ञानिर्ग्राह्य एव स विशेषो भवति भूतसूक्ष्मगतो वा पुरुषगतो वा तस्मात् श्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वादिति। समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवो नवोजायते। समाधिप्रज्ञाभवः संस्कारोव्युत्थानसंस्काराशयं बाधते व्युत्थानसंस्काराभिभवात् तत्प्रभवाः प्रत्यया न भवन्ति पात० भा०।

"तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी" सू०। "प्रत्ययनिरोधे समाधिरुपतिष्ठते ततः समाधिजा प्रज्ञा ततः प्रज्ञाकृताः संस्कारा इति नवोनवः संस्काराशयो जायते ततः प्रज्ञा ततश्च संस्कारा इति। कथमसौ संस्कारातिशयश्चित्तं साधिकारं न करिष्यतीति? न ते प्रज्ञाकृताः संस्काराः क्लेशक्षयहेतुत्वात् चित्तमधिकारविशिष्टं कुर्व्वन्ति चित्तं हि ते स्वकार्य्यादवसादयन्ति। ख्यातिपर्य्यवसानं हि चित्तचेष्टितमिति" पात०भा०।

विवृतञ्चैतत् वाचस्पतिना। "अत्रैव योगिजनप्रसिद्धान्वर्थसंज्ञाकथनेन योगिसंमतिमाह। ऋतम्भरेति आगमेनेति वेदविहितं श्रवणमुक्तम्। अनुमानेनेति मननं, ध्यानं चिन्ता तत्राभ्यासः पौनःपुन्येनानुष्ठानं तस्मिन् रस आदरः तदनेन निदिध्यासनमुक्तम्। स्यादेतत् आगमानुमानगृहीतार्थविषयभावनाप्रकर्षलब्धजन्मा निर्विचारा आगमानुमानविषयमेव गोचरयेत् न खल्वन्यविषयानुभवजन्मा संस्कारः शक्तोऽन्यत्र ज्ञानं जनयितुम्, अतिप्रसङ्गात् तस्मान्निर्विचारा चेदृतम्भरा आगमानुमानयोरपि तत्प्रसङ्ग इत्यत आह। श्रुतानुमानेत्यादि। बुद्धिसत्वं हि प्रकाशस्वभावं सर्व्वार्थदर्शनेसमर्थमपि तमसावृतं यत्रैव रजसोद्घाट्यते तत्रैव गृह्णाति यदा त्वभ्यासवैराग्याभ्यामपास्तरजस्तमोमलमनवद्यवैशारद्यमुद्द्योतते तदास्यातिपतितसमस्तमानमेयसीम्नः प्रकाशवत्त्वे सति किं नाम यन्न गोचर इति भावः। व्याचष्टे श्रुतमागमज्ञानं तत्सामान्यविषयं कस्मात्? नह्यागमेन शक्योविशेषोऽभिधातुं, कुतः? यस्मादानन्त्याद्व्यभिचाराच्च न विशेषेण कृतसङ्केतः शब्दः यस्मादस्य विशेषेण सह वाच्यवाचकसम्बन्धः प्रतीयेत नच वाक्यार्थोऽपोद्धृतो विशेषः सम्भवति। अनुमानेऽपि लिङ्गलिङ्गिसम्बन्धग्रहणाधीनजन्मनि गतिरेषैवेत्याह तथानुमानमिति। यत्र प्राप्तिरिति यत्रतच्छब्दयोः स्थानपरिवर्त्तनेन व्याप्यव्यापकभावो गमयितव्यः। अतोऽत्रानुमानेन सामान्येनोपसंहारः। उपसंहरति तस्मादिति। अस्तु तर्हि सम्बन्धग्रहणानपेक्षं लोकप्रत्यक्षं न तत् सामान्यविषयमित्यत आह। न चास्येत्यादि। मा भूत् सम्बन्धग्रहाधीनं, लोकप्रत्यक्षमिन्द्रियाधीनत्वात्। नचेन्द्रियाणामस्तिरस्ति योग्यतेत्यर्थः मनु च यद्या-

शमानुमानप्रत्यक्षागोचरः विशेषः तर्हि नास्ति प्रमाण-विरहादित्यत आह न चेति । न हि प्रमाणं व्यापकं कारणं वा प्रमेयस्य, येन तन्निवृत्तौ निवर्त्तेत । न खलु कलावतश्चन्द्रस्य परभागवर्त्तिहरिणसद्भावं प्रति सन्दिहते प्रामाणिका इत्यर्थः । तस्मात् समाधि प्रज्ञानिर्ग्राह्य एवेति । अत्र च विवादाध्यासिताः परमाणवः आत्मानश्च प्रातिस्विकविशेषशालिनः द्रव्यत्वे सति परस्परं व्यवर्त्तमानत्वात् ये द्रव्यत्वे सति परस्परं व्यावर्त्तन्ते ते प्रातिस्विकविशेषशालिनः यथा खण्डमुण्डादय इत्यनुमानेनागमेन च ऋतम्भरप्रज्ञोपदेशपरेण यद्यपि विशेषो निरूप्यते तदनिरूपणे संशयः स्यात् व्यायप्राप्तत्वात् तथाप्यदूरविप्रकर्षेण तत्तत्त्वं कथञ्चिन्निरूपयतः श्रुतानुमाने तु साक्षात्कारार्थमिव सत्त्वञ्चयादि पदानि लिङ्गसंख्यायोगितया, तस्मात् सिद्धं श्रुतानुमानप्रज्ञाभ्यामन्यविषयेति । स्यादेतत् भवतु परमार्थविषयसम्प्रज्ञातो यथोक्तोपायाभ्यासात् अनादिना तु व्युत्थानसंस्कारेण निगूढनिविड़तया प्रतिबन्धनीया समाधिप्रज्ञा वातव्यावर्त्तमध्यवर्त्तिप्रदीपपरमाणुरिवेति शङ्कामपनेतुं सूत्रमवतारयति समाधिप्रज्ञेति सूत्रं पठति । तज्ज इति तदिति निर्विचारां समापत्तिं परामृशति अन्येति । व्युत्थानमाह । भूतार्थपक्षपाते हि धियां स्वभावः, तावदेवेयमनवस्थिता भ्राम्यति न यावत् तत्त्वं प्रतिलभते तत्प्रतिलम्भे तत्र स्थितपदा सती संस्कारवृद्धिः संस्कारवृद्धिचक्रक्रमेणावर्त्तमाना सती अनादिमप्यतत्त्वसंस्कारवृद्धिक्रमं बाधत एवेति तथा च बाह्या अप्याहुः "निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः । न बाधो नादिमत्त्वेऽपि बुद्धेस्तत्पक्षपाततः" इति । स्यादेतत् समाधिप्रज्ञातोऽस्तु व्युत्थानजन्यसंस्कारस्य निरोधः समाधिजस्तु संस्कारातिशयः समाधिप्रज्ञाप्रसवे हेतुरस्त्व्यविकल इति तदवस्थैव चित्तस्य साधिकारतेति चोदयति कथमसाविति । परिहरति न त इति । चित्तस्य हि कार्य्यद्वयं शब्दाद्युपभोगः विवेकख्यातिश्चेति तत्र क्लेशकर्माशयसहितं शब्दाद्युपभोगे वर्त्तते प्रज्ञाप्रभवसंस्कारोन्मूलितनिखिलक्लेशकर्माशयस्य तु चेतसोऽवसितप्रायाधिकारभावस्य विवेकख्यातिमात्रमवशिष्यते कार्यम् । तस्मात् समाधिसंस्काराश्चित्तस्य न भोगाधिकारहेतवः प्रत्युत तत्परिपन्थिन इति स्वकार्य्याद्भोगलक्षणादवसादयन्ति अप्रसर्पं कुर्व्वन्ति इत्यर्थः । कस्मात् ? विवेकख्यातिपर्य्यवसानं हि चित्तचेष्टितम् । तावद्धि भोगाय चित्तं चेष्टते न यावद्विवेकख्यातिमनुभवति सञ्जातविवेकख्यातेस्तु क्लेशनिवृत्तौ न भोगाधिकार इत्यर्थः । तदत्र भोगाधिकारप्रशान्तिः प्रयोजनं प्रज्ञासंस्काराणामित्युक्तम्" "तत् प्रविष्टचित्तप्रसाधनीश्वरस्तोमैत्र्यादिभावनाः प्रसीदतु ते विशोका ज्योतिष्मती नाम चित्तवृत्तिः समापयतु परगुरुञ्च तत्प्रसादज ऋतम्भराभिधानप्रवाहः साधनोपाधेयः" वी० च० ।

**ऋतव्य** त्रि० ऋतुस्तदभिमानी देवो देवताऽस्य यत् । ऋतुदेवताके इष्टकादौ "ऋतव्ये मधुश्च माधवश्चेति" कात्या० १७, ४,२४ । विश्वज्योतिषः पुरोदे पद्ये प्राणलक्षणे ऋतव्ये इष्टके अनूकमभित उदङ्मुख उपदधाति" वेददी० "अथर्त्तव्ये उपदधाति ऋतव एते यदृतव्ये ऋतुनैवेतदुपदधाति मधुश्च माधवश्च वासन्तिकावृतू इति द्वे इष्टके भवतो द्वौ हि मासावृतुः" इति शत० ब्रा० ७,४,२,२९ । "अथ ऋतव्ये उपदधाति" इत्यादि प्राग्वत् । "शुक्रश्च शुचिश्च ग्रैष्मावृतू" इत्युक्ता प्राग्वत् ८,२,१,१६ । "नाकसदोऽनूकेषु पूर्व्ववर्जमृतव्यवेलायाम्" कात्या० १७,१२,१ ।

**ऋतव्रत** पु० ऋतमविनश्वरफलकं व्रतं यस्य । शाकद्वीपस्थे भगदुपासकभेदे । शाकद्वीपवर्णने" भाग० ५,२०,१९ । "तेषु पुरुषा ऋतव्रतसत्यव्रतदानव्रतानुव्रतानाम भगवन्तं वायुात्मकं प्राणायामविधूतरजस्तमसः परमसमाधिना यजन्ते" ऋतव्रतादयोवर्णस्थानीया इति बोध्यम् । अन्यद्वीपेषु वर्णभेदोक्तेरिह तु तेषामेव तत्स्थानीयत्वौचित्यात् चतुःसंख्यासाम्याच्च ।

**ऋतसद्** पु० ऋते यज्ञे सीदति सद–क्विप् ७त० । वह्नौ "नृषद्वरसदृतसद्व्योमसदब्जाः" ऋ० ४,४०,५ । "ऋतसद्भिः" भा० ।

**ऋतसदन** न० ऋतस्य यज्ञार्थं सीदत्यस्मिन् सद–आधारे ल्युट् ६त० । यज्ञार्थकुपवेशनस्थाने । "वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद" यजु० ४,३६ । स्त्रियां ङीप् । "वरुणस्य ऋतसदन्यसि" तत्रैव ।

**ऋतसाप्** त्रि० आप+क्विप् सह्रापा साप् प्राप्ता ६त० । यज्ञस्य प्रापयितरि "ये चिद्धि पूर्व्व ऋतसाप आसन्" ऋ० १,१७९;२ । "ऋतसाप ऋतस्य यज्ञस्यापयितारः" भा० ।

**ऋतस्पति** पु० ऋतस्य पतिः वा० वेदे सुट् । यज्ञपतौ "तव वायवृतस्पते" । ऋ० ८,२६,२१ । "ऋतस्पते ! यज्ञानां पते !" भा० लोके तु ऋतपतिरित्येव ।

**ऋतावन्** त्रि० ऋतमस्त्यस्य "छन्दसीवनिपौ" पा० वनिप दीर्घश्च

यज्ञवति । "ऋतावानं महिषं विश्वदर्शतमग्निम्" यजु० १२,१११ । "ऋतावानो जने जने" ऋ० ५,६८,४ । "ऋतावानः यज्ञवन्तः" भा० । लोके तु मतुप् मस्य वः । ऋतवत् इत्येव । "ऐक्याद्यस्य ऋतवानिति विग्रहश्च" भाग० १५,२० । "ऋतवान् सत्यवान्" इति श्रीधरः ।

**ऋतावृध्** त्रि० ऋतं यज्ञं वर्द्धयति वृध–अन्तर्भूतण्यर्थे क्विप् दीर्घः । यज्ञवर्द्धके । "विश्ववन्त्वावृतावृधोद्धारः" यजु० २८,५ । "सुतः सोम ऋतावृधः" ७,६ । "देवीरृता ऋतावृधः" ४,१२ ।

**ऋताषाह्** त्रि० ऋतं सहते असत्यं न, सह–ण्वि दीर्घः इत० पृ० "सहेः पृतनर्ताभ्याञ्चेति" पा० षत्वम् । सत्यसहने असत्ये कुपिते "ऋताषाडृतधामाग्निः" यजु० १८,३८ ।

**ऋति** स्त्री ऋ–क्तिन् । १गतौ २स्पर्द्धायाम् ३निन्दायाञ्च । कर्म्मणि क्तिन् । ४वर्त्मनि ५मङ्गले च । ६पुरुषमेधयज्ञियदेवभेदे । तत्र चतुर्थ्यन्तबूपे बन्धनीयपशुकीर्त्तने । "ऋतये स्तेनहृदयम्" यजु० ३०,१३ । कर्त्तरि क्तिच् । ७शत्रौ पु० निरु० । "अग्निरक्षांसि तृतीषहम्" ऋ० ६,१४,४ "शरव्यामुखेऽपि नह्यमान ऋतिर्हन्यमाना" अथ० १२,५,२५ । [कारके ।

**ऋतिङ्कर** त्रि० ऋतिं पीड़ां करोति कृ–खच् मुम् । पीड़ा-

**ऋतीय** नामधा० ऋतमिच्छति ऋतीयति आर्त्तीयत् । ऋतीयाम् बभूव आस चकार । वेदे तु "न छन्दसि" पा० न ईत्वम् । ऋतयति इत्येव "अकृत्सार्वधातुकयोः" पा० क्वचिद्दीर्घं ऋतायति । ऋतायन् । "देवा ऋतायते दमे" ऋ० ४,८,३ । "ऋतायते यज्ञमिच्छते" भा० । "अग्निमृतयन्तसादि" ऋ० ५,४३,७ । "ऋतयन् यज्ञमिच्छन् भा० । अर्त्ती ऋतायन" ऋ० ७,८७, १ "ऋतायन् गोष्वगमनमिच्छन्" भा० । तत उ च् । ऋतयु यज्ञकामे "त्वं न इन्द्र ऋतयुस्त्वानिदो नि तृम्पसि" ऋ० ८,७०,१० । दीर्घे ऋतायु तत्रार्थे "न वा एतस्य ब्राह्मणा ऋतायवः" तै० ब्रा० २,२,५,५, भावे अ । ऋतया ऋतायाः वा "धियं वने ऋतया सपन्ता" ऋ० २,११,१२ । "ऋतया ऋतं कर्म्मफलं तत्कामनया" भा० । वेदे सुपांसुलुगित्यादिना तृतीयास्थाने आ० ।

**ऋतीया** स्त्री ऋत–ईयङ् भावे अ । जुगुप्सायाम् अमरः ।

**ऋतीषह्** त्रि० ऋतिं पीड़ां शत्रुं वा सहते क्विप् दीर्घः । "सहेः पृतनर्ताभ्याञ्च" पा० चात् ऋतिशब्दादपि षत्वम् । १पीड़ासहे २शत्रुसहने च "अग्निरक्षांसि तृतीषहम्" ऋ० ६,१४,४ ऋतीषहम् अरातीनां सोढारम्" भा० ।

**ऋतु** पु० ऋ–तु किच्च । शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिमः । माघादिमासयुग्मैस्तु ऋतवः षट् क्रमादिमे इत्युक्ते १कालभेदे । "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः" इति मनूक्ते स्त्रीणां २शोणितदर्शनयोग्ये गर्भधारणसमर्थे च काले "ऋतौ भार्य्यामुपेयात्" श्रुतिः "स्वदारनिरतः सदा" "सन्तुष्टस्तु ऋतावृतौ, ऋतुकालाभिगामी स्यात्" मनुः । ऋतुरस्य प्राप्तः अण् । आर्त्तव स्त्रीरजसि न० आर्त्तवशब्दे ८०८ पृष्ठे विवृतिः । ३दीप्तौ ४मासे च । मासद्वयात्मक ऋतुश्च सौरश्चान्द्रश्च यथा काल० मा० "ऋतुशब्दश्च गताविस्यस्माद्धातोर्निष्पन्नः । इयर्त्ति गच्छति अशोकपुष्पविकासान् साधारणचिह्नमिति वसन्तादिकालविशेष ऋतुः । स च षड्विधः "षड्वा ऋतव इति" श्रुतेः । यत्तु "द्वादश मासाः पञ्चर्त्तव" इति श्रुतं तत्र हेमन्तशिशिरयोरेकीकरणं विवक्षितं याजमानेषु पञ्चप्रयाजानुमन्त्रणमन्त्रेषु हेमन्तशिशिरयोरेकस्मिन्नेवैव पदेनैकीकरणमित्युक्तं तथा हि "वसन्तमृतूनां प्रीणामि ग्रीष्ममृतूनां प्रीणामि वर्षा ऋतूनां प्रीणामि शरदमृतूनां प्रीणामीति" चतुर्णां प्रयाजानां पृथक् पृथगनुमन्त्रणमन्त्रानाम्नाय पञ्चमप्रयाजस्यानुमन्त्रणे मन्त्र एवं श्रूयते "हेमन्तशिशिरावृतूनां प्रीणामीति" एतदेवाभिप्रेत्य बह्वृचब्राह्मणे द्वादश मासाः पञ्चर्त्तवो हेमन्तशिशिरयोः समासेनेति" यत्तत्रयोर्मन्त्रब्राह्मणयोर्द्विवचनं तत्स्वरूपद्वैविध्याभिप्रायेण शिशिरस्य षष्ठस्यान्तिमत्वात्तेनानुमन्त्रणीयस्य षष्ठप्रयाजस्याभावाञ्च तस्यैव पञ्चमे हेमन्तेऽन्तर्भावो न्याय्यः । अतएव प्रयाजब्राह्मणे "वसन्तमेवर्तूनामवरुन्धे" इत्यादिना चतुरः प्रयाजान् प्रशस्य पञ्चमे प्रयाजे केवलेन हेमन्तेन प्रशंसा "स्वाहाकारं यजति हेमन्तमेवावरुन्धे" इति । अस्तु नाम यथा तथा पञ्चसंख्या तथापि सहमेव षोढा भिद्यते द्वादशमासात्मके संवत्सरे एकैकस्य ऋतोर्मासद्वयात्मकत्वे सत्येवादश द्वादशमासयोर्वर्जं विभुमयकत्वात् षड्तौ पृथगनुष्ठानविधानाञ्च तच्चोपरिष्टादुदाहरिष्यामः । मासद्वयात्मकत्वं चाग्निचयने ऋतव्ये ष्टकोपधानब्राह्मणे श्रूयते । "द्वन्द्वमृतुपदधाति तस्मात् द्वन्द्वमृतव" इति । एकस्मिन् ऋतौ कयोर्मासयोर्द्वन्द्वं ग्रहीतव्यमिति चेत् वसन्तादृतुक्रमेण चैत्रमासादि द्वन्द्वमिति ब्रूमः । तच्चेष्टकोपधानमन्त्रेषु श्रूयते "मधुश्च माधवश्च वासन्तिकावृतू" "शुक्रश्च शुचिश्च ग्रैष्मावृतू" "नभश्च नभस्यश्च वार्षिकावृतू" "इषश्चोर्जश्च शारदावृतू" "सहश्च सहस्यश्च हैमन्तिकावृतू" "तपश्च तपस्यश्च

शिशिरावृतू” एषु च वाक्येषु ऋतू इति द्विवचनं मासाभिप्रायम् अन्यथा षडृतव इति श्रूयमाणा षट्संख्या बाध्येत। अवयवावयविनोर्वसन्तादेरेकात्मत्वं सौत्रामणीयहौत्रमन्त्रेषु एकवचनेन व्यवहारादवगन्तव्यं “वसन्तेन ऋतुना देवाः, ग्रीष्मेण ऋतुना देवा” इत्यादि हि तत्र पठ्यते तथैवाधानब्राह्मणे श्रूयते “वसन्तो वै ब्राह्मणस्यर्त्तुः, ग्रीष्मो वै राजन्यस्यर्त्तुः, शरद्वैश्यस्यर्त्तुरिति” यद्यप्येते षडृतवो घटीयन्त्रवन्नैरन्तर्य्येण प्रवर्त्तन्ते तथापि संवत्सरोपक्रमरूपत्वेन वसन्तस्य प्राथम्यं द्रष्टव्यम् एतदेवाभिप्रेत्य श्रूयते “मुखं वा एतदृतूनां वसन्त” इति पूर्वोदाहृतेषु मन्त्रब्राह्मणेषु सर्वत्र वसन्तोपक्रमणाच्च वसन्तस्य प्राथम्यं ते च वसन्ताद्यृतवो द्विविधाः चान्द्राः सौराश्च। चैत्रादयश्चान्द्राः तच्चोदाहृतं “मधुश्च माधवश्चेत्यादिना” न च तत्र चैत्रादयो नोक्ता इति शङ्कनीयं मध्वादिशब्दानां चैत्रादिपर्यायत्वात्। अत एवाहुः “चैत्रोमासो मधुःप्रोक्तो वैशाखो माधवो भवेत्। ज्यैष्ठमासस्तु शुक्रः स्यादाषाढः शुचिरुच्यते। नभोमासः श्रावणः स्यान्नभस्यो भाद्र उच्यते। इषश्चाश्वयुजोमासः कार्त्तिकश्चोर्ज्जसंज्ञकः। सहोमासो मार्गशिरः सहस्यः पुष्यनामकः। माघमासस्तपाः प्रोक्तस्तपस्यः फाल्गुनः स्मृतः” इति। एतेषां चैत्राद्यात्मकानां वसन्तादीनां चन्द्रगतिपरिकल्प्यत्वाच्चान्द्रत्वम्। अतएव होतृमन्त्रेषु आम्नायते “चन्द्रमाः षड्ढोता स ऋतून् कल्पयति तथा” सूक्तविशेषे सूर्य्याचन्द्रमसौ प्रकृत्य आम्नायते “पूर्व्वापरं चरन्तौ माययैतौ शिशू क्रीडन्तौ परियातो अध्वरम्। विश्वान्यन्योभुवनाभिचष्ट ऋतूनन्योविदधज्जायते पुनरिति” अत्र पुनर्जायत इति लिङ्गादृतुविधाता चन्द्र इति अवगम्यते। नन्वस्त्वेवं मध्वादीनां चान्द्रमासानां वसन्ताद्यृतुत्वं संसर्पाख्यस्य तु त्रयोदशस्य चान्द्रमासस्य कथमृतुषु निर्वाहः। तन्मासषट्‌भावषर्तुपट्‌ब्राह्मणे मन्त्रानुवादपुरःसरमाम्नायते “उपयामगृहीतोऽसि संसर्पोऽसि अंहस्पत्यायत्वे स्वाहास्ति त्रयोदशोमास इत्याहुस्तमेव तत् प्रीणातीति” तथा ब्रह्मब्राह्मणेऽपि “अस्ति त्रयोदशोमास इत्याहुः यत्त्रयोदशः परिधिर्भवति तेनैव त्रयोदशं मासमवरुन्धे” इति। तदुत्पत्तिप्रकारोऽस्माभिर्मलमासनिर्णये वक्ष्यते। विद्यतामेवं त्रयोदशोमासस्तस्य का उपपत्तिर्वसन्तादिषु ऋतुषु इति चेत् उच्यते किमयं सप्तम ऋतुः? आहोस्विदुक्तेष्वेव षट्सु अन्तर्भावः? उतत्त्वृद्वयान्तरालवर्त्ती कश्चिदनृतुरूपः? न तावत् प्रथमः ‘ऋतुर्ऋतुनानुद्यमान” इति ऋतूनां नैरन्तर्य्यश्रवणात्। नापि द्वितीयः। ‘षड्वा ऋतवः” इति षट्संख्यानियमात्। वसन्तादिवन्मन्त्रब्राह्मणयोर्नामान्तराश्रवणाच्च नापि मध्यमः मध्वादिषु अपाठात्। उच्यते ययोर्मासयोर्मध्ये मलमासो दृश्यते तयोरुत्तरस्मिंस्तस्यान्तर्भावः। तथा चासौ षष्टिदिवसात्मकोमलिनशुद्धभागद्वयात्मक इति मध्वादिशब्दवाच्यत्वेनोक्तेष्वन्तर्भावान्न काप्यनुपपत्तिः। सौरेषु ऋतुषु बौधायनेन मीनमेषयोर्मेषवृषयोर्वा वसन्त इत्यभिधानात् मीनादित्वं मेषादित्वं च वैकल्पिकं वसन्तस्याङ्गीकृतम्। तथा च तदनुसारेण उत्तरे ग्रीष्मादयोऽपि यथायथं विकल्प्यन्ते। विनियोगश्चैषां ऋतुविशेषाणां श्रुतिस्मृतिपुराणेष्ववगम्यते। तत्र श्रुतिः। “वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीतेत्यादि” स्मृतिरपि“वसन्ते ब्राह्मणं उपनयीत, ग्रीष्मे राजन्यं शरदि वैश्यमिति” विष्णुधर्मोत्तरेऽपि षरामूर्त्तिश्रते वसन्ताद्यृतुषु पृथक्पूजा विशेषतः कथिताः। तथा तत्रैव वसन्ते स्नानानुलेपादिदानम् ग्रीष्मे मानकादिदानमुक्तं देवीपुराणे। वर्षासु तिलदानं तथा शरद्यन्नदानं हेमन्ते वस्त्राग्निदानं शिशिरे वस्त्रदानमित्येतानि विष्णुधर्मोत्तर एवोक्तानि एवमन्यदप्युदाहार्य्यम्’।

“वसन्तेन ऋतुना देवा वसवस्त्रिवृतास्तुताः” “ग्रीष्मेण ऋतुना देवा रुद्राः पञ्चदशे स्तुताः” “वर्षाभिर्ऋतुनादित्या स्तोमे सप्तदशे स्तुताः” “शारदेन ऋतुना देवा एकविंश ऋभवस्तुताः” “हेमन्तेन ऋतुना देवास्त्रिणवे मरुतस्तुताः” “शैशिरेण ऋतुना देवास्त्रयस्त्रिंशेऽमृतास्तुताः प्राक्सत्यात्” यजु० २१,२३,२४,२५,२६,२७,२८। सूर्य्यसिद्धान्ते तु सौरत्वमङ्गीकृतम्। यथा “द्विराशिनाथा ऋतवस्ततोऽपि शिशिरादयः। मेषादयो द्वादशैते मासास्तैरेव वत्सरः”। ऋतुमध्ये च वत्सरारम्भकत्वं वसन्तस्यैव तच्च काल०मा० उक्तम् अतएव गीतायाम्‘ऋतूनां कुसुमाकारः” इत्यनेन वसन्तस्य ऋतुषु प्रथमत्वेव भगवद्विभूतित्वमुक्तम्” म०त०ब्रह्मपु०। “चैत्रे मासि जगत् ब्रह्मा ससर्ज्ज प्रथमेऽहनि। शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति। प्रवर्त्तयामास तदा कालस्य गणनामपि। ग्रहान्नाशीन्दृतून् मासान् वत्सरान् वत्सराधिपान्”। मासवत्सराणां व्यक्तं चान्द्रत्वमुक्तम् ब्रह्मसिद्धान्तेऽपि “चैत्रसितादेरुदयाद्भानोर्दिवसर्त्तुमासयुगकल्पाः। सृष्ट्यादौ लङ्कायामाह प्रवृत्ता दिनैर्वारैः”। चैत्रसितादेश्चैत्रशुक्लप्रतिपदा-

रथ्ये शर्धः दिनैस्त्रिभिः” म० त०। ५ मासद्वयमात्रे “सुस्थं स्याद् मासि मासि अपथ्याप्राकृतं प्रति” स्मृतिः। सुश्रुते ऋतुनिरूपणं तद्गुणलिङ्गादि च दर्शितं यथा “अथात ऋतुचर्य्याध्यायं व्याख्यास्यामः कालो हि नाम भगवान् स्वयम्भूरनादिमध्यनिधनोऽत्र रसव्यापत्सम्पत्ती जीवितमरणे च मनुष्याणामायत्ते स सूक्ष्मामपि कलां न लीयत इति कालः सङ्कलयति कालयति वा भूतानीति कालः। तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षिनिमेषकाष्ठाकलामुहूर्त्ताहोरात्रपक्षमासर्त्त्वयनसंवत्सरयुगप्रविभागं करोति। तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः। पञ्चदशाक्षिनिमेषाः काष्ठा। त्रिंशत्काष्ठाः कला विंशतिकलो मुहूर्त्तः कलादशभागश्च। त्रिंशन्मुहूर्त्तमहोरात्रम्। पञ्चदशाहोरात्राणि पक्षः। स च द्विविधः शुक्लः कृष्णश्च तौ मासः। तत्र माघादयो द्वादश मासा द्विमासिकमृतुं कृत्वा षडृतवो भवन्ति। ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः। तेषां तपस्तपस्यौ शिशिरः। मधुमाधवौ वसन्तः। शुचिशुक्रौ ग्रीष्मः। नभोनभस्यौ वर्षाः। इषोर्जौ शरत्। सहःसहस्यौ हेमन्त इति। त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालविभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरञ्च। तयोर्दक्षिणं वर्षाशरद्धेमन्तास्तेषु भगवानाप्यायते सोमोऽम्ललवणमधुराश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्वप्राणिनां बलमभिवर्द्धते। उत्तरञ्च शिशिरवसन्तग्रीष्मास्तेषु भगवानाप्यायतेऽर्कस्तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्वप्राणिनां बलमपहीयते। भवति चात्र। शीतांशुः क्लेदयत्युर्वीं विवस्वान् शोषयत्यपि। तावुभावपि संश्रित्य वायुः पालयति प्रजाः। अथ खल्वयने द्वे युगपत् संवत्सरो भवति। ते तु पञ्च युगमिति संज्ञां लभन्ते। स एष निमेषादिर्युगपर्य्यन्तः कालश्चक्रवत्परिवर्त्तमानः कालचक्रमुच्यत इत्येके। इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षडृतवो भवन्ति दोषोपचयप्रकोपोपशमनिमित्तम्। ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः। तद्यथा भाद्रपदाश्वयुजौ वर्षाः। कार्त्तिकमार्गशीर्षौ शरत्। पौषमाघौ हेमन्तः। फाल्गुनचैत्रौ वसन्तः। वैशाखज्यैष्ठौ ग्रीष्मः। आषाढश्रावणौ प्रावृडिति। तत्र वर्षास्वोषधयस्तरुणाोऽल्पवीर्य्या आपश्चाप्रसन्नाः क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टम्भिताग्नीनां विदह्यन्ते विदाहात् पित्तसञ्चयमापादयन्ति स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलायितः पैत्तिकान् व्याधीन् जनयति। ता एवौषधयः कालपरिणामात्परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्व्यस्ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमापादयन्ति स सञ्चयो वसन्तेऽर्करश्मिप्रविलायित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति। ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति। एवमेष दोषाणां सञ्चयप्रकोपहेतुरुक्तः। तत्र वर्षाहेमन्तग्रीष्मेषु सञ्चितानां दोषाणां शरद्वसन्तप्रावृट्सु च प्रकुपितानां निर्हरणं कर्त्तव्यम्। तत्र पैत्तिकानां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां निदाघे, वातिकानां शरदि, स्वभावत एव, त एते सञ्चयप्रकोपोपशमा व्याख्याताः। तत्र पूर्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकम्, शारदमर्द्धरात्रे प्रत्यूषसि हैमन्तमुपलक्षयेत्। एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात्। तत्राव्यापन्नेष्वृतुष्वव्यापन्ना ओषधयो भवन्त्यापश्च ता उपयुज्यमानाः प्राणायुर्बलवीर्य्यौजस्कर्य्यो भवन्ति। तेषां व्यापदोऽदृष्टकारिताः। शीतोष्णवातवर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च, तासामुपयोगाद्विविधरोगप्रादुर्भावो मरको वा भवेदिति। तत्राव्यापन्नानामोषधीनामपाञ्चोपयोगः। कदाचिदव्यापन्नेष्वप्यृतुषु कृत्याभिशापरक्षःक्रोधाधर्म्मैरुपध्वस्यन्ते जनपदाः। विषौषधीपुष्पगन्धेन वायुनोपनीतेनाक्रम्यते यो देशस्तत्र दोषप्रकृत्यविशेषेण कासश्वासवमथुप्रतिश्यायशिरोरुग्ज्वरैरुपतप्यन्ते ग्रहनक्षत्रचरितैर्वा गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावैर्वा। तत्र स्थानपरित्यागशान्तिकर्मप्रायश्चित्तमङ्गलजपहोमोपहारेज्याञ्जलिनमस्कारतपोनियमदयादानदीक्षाभ्युपगमदेवताब्राह्मणगुरुपरैर्भवितव्यमेवं साधु भवति। ऋतूनामत ऊर्द्ध्वमव्यापन्नानां लक्षणान्युपदेक्ष्यामः। वायुर्वात्युत्तरः शीतो रजोधूमाकुला दिशः। अवश्या-

षारः सविता हिमानद्धा जलाशयाः। दर्पिता ध्वाङ्क्षखड्गाह्वमहिषोरभ्रकुञ्जराः। लोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये। शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः। शेषं हेमन्तवत्सर्वं विज्ञेयं लक्षणं बुधैः। दिशो वसन्ते विमलाः काननैरुपशोभिताः। किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः। कोकिलाः षट्पदगणैरुपगीता मनोहराः। दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः। ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैरृतोऽसुखः। भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव। भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः। ध्वस्तवीरुत्तृणलताविपर्णाङ्घ्रिपादपाः। प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः। अम्बुदैर्विद्युदुद्योतप्रस्रुतैस्तुमुलस्वनैः। कोमलश्यामशस्याढ्या शक्रगोपोज्ज्वला मही। कदम्बनीपकुटजसर्जकेतकिभूषिता। तत्र वर्षासु नद्यम्भःपूरोद्भग्नतटद्रुमाः। वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः। भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता। नातिगर्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः। वभ्रुरुष्णः शरद्यर्कः श्वेताभ्रविमलं नभः। तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः। पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः। बाणसप्ताह्वबन्धूककाशासनविराजिता। स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः। विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम्। हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत्। वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात्" ऋतुचार्य्याध्यायः। आ० त० ऋतुगुणादि यथा "मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षडृतवः" स्मृताः। हेमन्ते कुपिताद्वायोः स्वाद्वम्ललवणान् रसान्। गोधूमपिष्टमांसेक्षुक्षीरोत्थविकृतिर्भजेत्। नवमन्नं रसान् तैलं शौचे तप्तोदकं नरः। शस्तार्ककिरणान् स्वेदं पादत्राणञ्च सर्वदा। उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत्। अयमेव विधिः कार्य्यः शिशिरेऽपि विशेषतः। वसन्ते कुपितः श्लेष्मा ह्यग्निमान्द्यं करोत्यतः। तीक्ष्णं वमननस्यादि कवलग्रहमञ्जनम्। व्यायामोद्वर्त्तनं धूमं शौचे तप्तोदकं भजेत्। पुराणयवगोधूमक्षौद्रजाङ्गलमांसभुक्। गुरुष्णस्निग्धमधुरं दिवा स्वप्नञ्च वर्जयेत्। स्वादु शीतं द्रवं स्निग्धमनुपानं सशर्करम्। घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति। मध्याह्ने शीतले सुप्यात् निशि वातहिमान्विते। लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्जयेत्। वर्षास्वग्निबले हीने कुप्यन्ति पवनादयः। अग्नेः संवर्द्धकं द्रव्यं जीर्णधान्यं रसान् लघु। जाङ्गलं पिशितं मुद्गान् दिव्यं कौपं जलं शुचि। हृद्याम्ललवणं स्नेहं संशुष्कं क्षौद्रमेव च। नदीजलौदनस्वाहःस्वप्नायासातपांस्त्यजेत्। शरदि कुपिते पित्ते विरेकं रक्तमोक्षणम्। स्वादुतिक्तकषायेक्षुशालिमुद्गसरोजलम्। तुषारक्षारसौहित्यदधितैलवसातपान्। अम्लतीक्ष्णदिवास्वप्नप्राग्वातान् विवर्जयेत्। नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ। ऋतूनां शेषसप्ताहे सेवितव्यः पराक्रमः। तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येन प्रवर्त्तते। अजातानां विकाराणामनुत्पत्तिकरञ्च यत्। व्यायामादपतर्पणादभिघाताद्भङ्गात् क्षयाज्जागरात् वेगानाञ्च विधारणादतिशुचः शैत्यादतित्रासतः। रूक्षक्षोभकषायतिक्तकटुकैरेभिः प्रकोपं व्रजेद्वायुर्वारिधरागमे परिणते चान्नेऽपराह्णेऽपि च। कट्वम्लोष्णविदाहितीक्ष्णलवणक्रोधोपवासातपस्त्रीसम्पर्कतिलातसीदधिसुराशुक्तारनालादिभिः। भुक्ते जीर्य्यति भोजने च शरदि ग्रीष्मे सति प्राणिनाम् मध्याह्ने च तथार्द्धरात्रसमये पित्तप्रकोपं व्रजेत्। गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रापूपसर्पिःप्रपूरैः। तुहिनपतनकाले श्लेष्मणः संप्रकोपः प्रभवति दिवसादौ भुक्तमात्रे वसन्ते"। ६कालमात्रे ऋतुशब्दे उदा०। ७तदभिमानिदेवे पु०। ऋतव्यशब्दे उदा०। ८विष्णौ पु०। "ऋतुः सुदर्शनः कालः" विष्णुस०। "कालात्मना ऋतुशब्देन लक्ष्यते इति ऋतुः" भा०। "प्रधानपुरुषक्षोभकं यत्कालाख्यं रूपं तदृतुशब्देन लक्ष्यते" आनन्दगि०। ऋतुरस्य प्राप्तः अण्। आर्त्तव प्राप्तर्त्तुके त्रि० स्त्रियां ङीप्। छन्दसि यस् सित्त्वान्न गुणः। ऋत्विय तदर्थे त्रि०। ऋतुर्देवताऽस्य यत्। ऋतव्य ऋतुदेवताके इष्टकादौ।

**ऋतुकाल** पु० वसन्तसमयवत् कर्म्म० राहुशिरोवत् ६त० वा। स्त्रीणां पुष्पदर्शनयोग्ये षोडशरात्रात्मके काले। "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः" मनुः। "ऋतुकालाभिगामी स्यात्" मनुः। पर्व्वादिवर्जं तत्काले च स्त्रीगमनं नियम्यते। तत्र नियमस्वरूपनिर्वाहककारणादिप्रदर्शनेन ऋत्वभिगमस्य यथानियमविधित्वं तथा प्रा०त० न्यायवाक्येनोक्तम् यथा "स्वरुच्या क्रियमाणे तु यत्नावश्यं क्रिया क्वचित्। नोद्यते नियमस्तत्र ऋतावभिगमो यथा" मीमांसकवाक्यम्। ऋत्वभिगमनस्य परिसंख्यापरत्वनिराकरणेन नियमपरत्वं समर्थितं मिता० यथा।

"तस्मिन् युग्मासु संविशेदिति" । "किमयं विधिर्नियमः परिसंख्या वा । "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्या निगद्यते" । उच्यते । न तावद्विधिः, प्राप्तार्थत्वात् । नापि परिसंख्या, दोषत्रयसमासक्तेः । अतो नियमस्तूपेयिरे न्यायविदः । कः पुनरेषां भेदः । उच्यते । अत्यन्ताप्राप्तप्रापणं विधिः । यथा अग्निहोत्रं जुहुयात् "अष्टकाः कर्त्तव्याः" इति । पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः । यथा "समे यजेतेति" "दर्शपूर्णमासाभ्यां यजेतेति" यागः कर्त्तव्यतया-विहितः स च देशमन्तरेण कर्त्तुमशक्य इत्यर्थात् देशः प्राप्तः । स च समो विषमश्चेति द्विविधः । यदा यजमानः समे यियक्षते तदा "समे यजेतेति" वचनमुदास्ते स्वार्थस्य प्राप्तार्थत्वात् । यदा तु विषमे देशे यियक्षते तदा समे यजेतेति" स्वार्थं विधत्ते स्वार्थस्य तदानीमप्राप्तत्वात् । विषमदेशनिवृत्तिस्त्वार्थिकी नोदितदेशेनैव यागनिष्पत्तेः । अनोदितदेशोपादानेन यथाशास्त्रं यागोनानुष्ठितः स्यादिति । तथा "प्राङ्मुखोऽन्नानि भुञ्जीतेति" । इदमपि स्मार्त्तमुदाहरणं पूर्वेण व्याख्यातम् । एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्वचनं परिसंख्या । तद्यथा । "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्ययं मन्त्रः स्वसामर्थ्यादश्वाभिधान्या गर्दभाभिधान्याश्च रशनाया ग्रहणे विनियुक्तः । पुनरश्वाभिधानीमादत्त इति वचनेनाश्वाभिधान्यां विनियुज्यमानो गर्दभाभिधान्या विनिवर्त्तते । तथा "पञ्च पञ्चनखा भक्ष्याः" इत्यत्र यदृच्छया शशादिषु श्वादिषु च भक्षणं प्राप्तम् । पुनः शशादिषु श्रूयमाणं श्वादिभ्यो निवर्त्तत इति । किं पुनरत्र युक्तं परिसंख्येत्याह । तथाहि कृतदारसंग्रहस्य स्वेच्छयैव ऋतौ गमनं प्राप्तमिति न विधेरयं विषयः । नापि नियमस्य, गृह्यस्मृतिविरोधात् । एवं हि स्मरन्ति गृह्यकाराः "दारसंग्रहानन्तरं त्रिरात्रं द्वादशरात्रं संवत्सरं वा ब्रह्मचारी स्यादिति" । तत्र द्वादशरात्रात् संवत्सरात् वा पूर्वमेवर्त्तुसम्भवे ऋतौ गच्छेदेवेति नियमात् ब्रह्मचर्य्यस्मरणं बाध्येत । अपि च प्राप्ते भावार्थे वचनं विशेषणपरं युक्तम् । प्राप्तश्चर्त्तौ भार्य्यागमनमिच्छयैवातो यदि गच्छेदृतावेवेति वचनव्यक्तिर्युक्ता । किञ्च नैयमिकात् पुत्रोत्पत्तिविधेरेवर्त्तौ नित्यं गमनं प्राप्तमेवेति ऋतौ गच्छेदेवेति नियमोऽनर्थकः स्यात् । नियमे चादृष्टं कल्पनीयम् । किञ्च ऋतौ गन्तव्यमेवेति नियमेऽसन्निहितस्य व्याध्यादिनाऽसमर्थस्यानिच्छोश्चाशक्योऽर्थ उपदिष्टः स्यात् । विध्यनुवादविरोधश्च नियमे । तथा हि एकः शब्दः सकृदुच्चरितस्तमेवार्थं पक्षेऽनुवदति पक्षे विधत्ते चेति । तस्मादृतावेव गच्छेन्नान्यत्र इति परिसंख्यैव युक्ता । तदिदमाहुर्विश्वरूपादयोनानुमन्यन्ते । यतो नियम एव युक्तः पक्षे स्वार्थविधिसम्भवात् । अगमने दोषश्रवणाच्च यथाह पराशरः "ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशय इति" न च विध्यनुवादविरोधोऽनुवादाभावात् विध्यर्थत्वाद्वचनस्य । तत्र हि विध्यनुवादविरोधो यत्र विधेयावधितया तदेवानुवदितव्यमप्राप्ततयान्योद्देशेन विधातव्यञ्चेति । यथा वाजपेयाधिकरणे पूर्वपक्षे "वाजपेयेन स्वाराज्यकामो यजेतेति" वाजपेयलक्षणगुणविधानावधित्वेन यागोनुवदितव्यः स एव स्वाराज्यलक्षणफलोद्देशेन विधातव्यश्चेति । न चानुवादेनेह कृत्यमस्ति । यत्तु नियमेऽदृष्टं कल्पनीयमित्युक्तं तत्परिसंख्यायामपि समानम् । अनृतौ गच्छतो दोषकल्पनात् । यत्तु नैयमिकपुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमनप्राप्तेर्न नियम इति । तदसत् स एवायं नैयमिकः पुत्रोत्पादनविधिः । स्यान्मतम् 'एवं गच्छन् स्त्रियं क्षामां लक्षण्यं पुत्रं जनयेदिति" स्त्र्यभिगमनातिरिक्तः पुत्रोत्पादनविधिरिति । तन्न गमनकरणिकाया भावनाया एव पुत्रोत्पत्तिकर्मता प्रतीयते । "एवं गच्छन् लक्षण्यं पुत्रं जनयेदित्यनेन" यथाग्निहोत्रं जुह्वत् स्वर्गं भावयेदिति । न चासन्निहितादेरशक्यार्थविधिप्रसङ्गः सन्निहितशक्तयोरेवोपदेशात् "ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छतीति" "यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छतीति" विशेषोपादानात् । अनिच्छानिवृत्तिस्तु नियमविधानादेव । न च विशेषणपरता पक्षे भावार्थविधिसम्भवात् । नापि गृह्यस्मृतिविरोधः संवत्सरात् पूर्वमेवर्त्तुदर्शने संविशतो न ब्रह्मचर्यस्खलनदोषः । यथा श्राद्धादिषु, तस्मात् स्वार्थहानिपरार्थकल्पनप्राप्तबाधलक्षणदोषत्रयवती परिसंख्या न युक्ता । "पञ्च पञ्चनखा भक्ष्याः" इत्यत्र यद्यपि शशादिषु भक्षणस्य पक्षे प्राप्ते नियमः, शशादिषु श्वादिषु च प्राप्ते परिसंख्येति उभयसम्भवस्तथापि नियमपक्षे शशाद्यभक्षणे दोषप्रसङ्गः । श्वादिभक्षणे चादोषप्रसङ्गेन प्रायश्चित्तस्मृतिविरोध इति परिसंख्यैवाश्रिता । एतेन "चाव

प्रातर्हि जातीनामशनं श्रुतिनोदितम्” इत्यत्रापि नियमो व्याख्यातः “नान्तरा भोजनं कुर्य्यादिति” च पुनरुक्तं स्यात् परिसंख्यायाम्। एवं च ‘नियमे सकृत्सकृदृताहृता विति” वीप्सा लभ्यते “निमित्तावृत्तौ नैमित्तिकमप्यावर्त्तेत” इति न्यायात्। “यदा कामी भवेदित्यपि” नियम एवानृतावपि स्त्रीकामनायां सत्यां स्त्रियमभिरमयेदेवेति”। “ऋतावुपेयात् सर्व्वत्र वा प्रतिषिद्धवर्जम्” इत्येतदपि गौतमीयं सूत्रद्वयं नियमपरमेव। ऋतावुपेयादेवानृतावपि स्त्रीकामनायां प्रतिषिद्धवर्जमुपेयादेवेत्यलमतिप्रसङ्गेनेति”। “अनृतावृतुकाले च मन्त्रसंस्कारकृत् पतिः। सुखस्य नित्यं दातेह परलोके च योषितः” “तद्व्रतो रतिकाम्यया” इति च मनुना अन्यकाले स्त्रीकामनया गमनस्योक्तेः ‘यथा कामी भवेद्वापि स्त्रीणां वरमनुस्मरन्” या० अन्यकाले स्त्रीगमनोक्तेश्च न परिसंख्यापरत्वम्। तासां स्त्रीणां वरश्च इन्द्रदत्तः। स च मिता० श्रुतौ दर्शितो यथा “ता अब्रुवन् वरं वृणीमहै ऋत्वियात् प्रजां विन्दामहै ऋत्वियो भर्त्तुः काममाविजनितोः सम्भवामेति तस्मादृत्वियाः स्त्रियः प्रजां विन्दते काममाविजनितोः सम्भवन्तीति वरं वृतं ह्यासाम्” इति तासां वरमुपवर्ण्य “भवतीनां कामविहन्ता पातकी स्यादिति” इन्द्रेण तासां वरो दत्तः। वृत्रासुरवधजन्यब्रह्महत्याया भागशः स्त्रीभिर्ग्रहणतोषितेन शक्रेण तासां वरदानम् भारतादौ वर्णितम्।

ऋतुग्रह पु० ऋतूनां ग्रहः पात्रभेदग्रहणं यत्र। यागभेदे तत्परिपाटी कात्या० ९,१२अ० दर्शिता यथा “उपविष्टेऽच्छावाके” इत्युपक्रम्य। “ऋतुग्रहैश्चरतः” १सू०। “अच्छावाके सदः प्रविश्य स्वस्य धिष्ण्यस्य पश्चादुपविष्टे सत्यध्वर्य्युप्रतिप्रस्थातारौ ऋतुग्रहैश्चरतः। अत्रेडाभक्षणे पत्नीयजमानाभ्यामृत्विग्भिश्चाशने च कृते मार्ज्जनभागपरिहरणवाजिनयागप्रणीताविमोकराक्षसभागभागावेक्षणभागप्राशनानि कर्त्तव्यानि तत ऋतुग्रहप्रचारः। अथ “ऋतुग्रहप्रचारस्य विधिमुपदिशति” कर्कः। “द्रोणकलशादुपयामगृहीतोऽसि मधवे त्वेति द्वादशप्रतिमन्त्रम्” २सू०। “ऋतुग्रहान् गृह्णीत द्रोणकलशादिति नियमार्थमुक्तम्। मन्त्रविभागमाह” कर्कः “अध्वर्य्योः पूर्व्वः” ३सू०। पूर्व्वमन्त्रः। सर्व्वां मन्त्रयुग्मानां पूर्व्वमन्त्रोऽध्वर्य्योः स्यात्” कर्कः। “उत्तर उत्तरः प्रतिप्रस्थातुः” ४सू०। “युगपत्प्रथमौ गृह्णीतः” ५सू०। “उत्तमौ च” ६सू०। “व्यत्यासम्” ७सू० “मध्ये न युगपत् प्रचरणं च सर्व्वेषाम्” ८सू०। “सर्व्वेषाम् द्वादशानामप्यृतुग्रहाणां प्रचरणं यथानुष्ठानं चकारात् व्यत्यासं व्यत्यासेनैव पूर्व्वमध्वर्य्योः ततः प्रतिप्रस्थातुः। पुनरध्वर्य्योः पुनः प्रतिप्रस्थातुरित्येवं सर्व्वेषामपि। स व्यत्यासः कथं कर्त्तव्य इत्यपेक्षायामाह। “निष्क्रामत्येकः प्रविशतीतरः” ९सू०। “हविर्धानमध्यात् अपरो हविर्धानं प्रविशति” कर्कः। “उत्तरउत्तरः प्रतिप्रस्थाता परकालत्वात्” १०सू०। अत्र ग्रहणे प्रचरणे च देशतः कालतश्च प्रतिप्रस्थाता उत्तरो भवेत् कुतः अपरकालत्वात् प्रतिप्रस्थातृमन्त्राणां पश्चात्कालीनत्वात् परकालत्वादिति केचित् स एवार्थोऽस्मिन्नपि पाठे “उभयतोऽध्वर्य्युपात्रेण परिप्रगृह्णाति” ११सू०। उभयत इति ‘स वै हविर्धानाविष्क्रामन्तं हविर्धाने प्रविशन्तं चाध्वर्य्युं प्रतिप्रस्थाता पात्रेण परि गृह्णाति अव्यवायार्थं पात्रमध्वर्य्योर्दक्षिणतोहरति स्वयमुत्तरतो यातीत्यर्थः मानवे ‘हुत्वा गृहीत्वा च प्रतिप्रस्थाता दक्षिणेनाध्वर्य्युमभिप्रपद्य पात्रं हरति नान्योऽन्यमभि प्रपद्येते येषे पूर्व्वस्योत्तरमभि परिगृह्णीतः” इति काठके “प्रपद्यमानः प्रतिप्रस्थाता दक्षिणेनाध्वर्य्योः पात्रं हरेदुत्तर एव सञ्चरेदिति” कर्कः। “सर्व्वहुताः प्रागुत्तमाभ्याम्” १२सू०। “उत्तमाभ्यामेकादशद्वादशाभ्यां प्राग्ये दश ऋतुग्रहाः ते सर्व्वहुताः कार्य्याः सकृदेव सर्व्वं होतव्यम् अनुवषट्कारोऽपि न भवति” कर्कः। ‘ऋतुनेति षट् प्रेष्यतः” १३सू०। “आद्येषु षट्सु ऋतुग्रहयागेषु ऋतुना प्रेष्येत्येवं मैत्रावरुणं प्रेष्यतः” कर्कः। ‘ऋतुभिरिति चतुरः पात्रमुखे विपर्य्यस्य” १४सू०। ‘ततः पात्रमुखयोर्विपर्य्यासं कृत्वा सप्तमाष्टमनवमदशमेष्वृतुग्रहयागेषु ऋतुभिः प्रेष्येत्येवं प्रशास्तारं प्रेष्यतः मानवे ‘ऋतुना प्रेष्येति षड्भिः प्रचरतो यतो हुतम्। ततः पात्रे गृहीत्वा ऋतुभि. प्रेष्येति चतुर्भिर्यथादितस्तथा गृहीत्वा ऋतुना प्रेष्येति द्वाभ्यामिति” अतश्च सस्रामग्रेण होमः। ततश्चतुर्णां पात्रमूलेन होमोऽग्रं हस्ते गृहीत्वा उत्तमयोः पुनरग्रेणैव ग्रहणमपि पात्रमुखयोर्विपर्य्यस्यैव कार्य्यम्” कर्कः। “सकृदुत्तमौ” १५सू० “उत्तमावेकादशद्वादशावृतुग्रहौ सकृत् प्रचरतः तेन पात्रयोरग्रेण होमः ऋतुना प्रेष्येति चेत्येतद्वतिना गृह्यते कः पुनर्मन्त्रार्थः ऋतुना इत्येवंरूपां तृतीयैकवचनान्तर्तुशब्दयुक्तां याज्यां प्रेष्येत्यर्थः ऋतुनेत्येतत्पदयुक्तेन प्रैषेण वा एवमृतुभिः प्रेष्येत्यत्रापि” कर्कः। “य-

यजमानः प्रेषितो होतरेतद्यजेति ब्रूयात्” १६सू०। “द्वादशे ऋतुग्रहे गृह्यते। यजेत्येव प्रैषाक्षा प्रेषितो यजमानः होतरेतद्यजेति एवं ब्रूयात् ततस्तां यजमानयाज्यां होता ब्रूयात्” कर्कः। “अध्वर्यू च” १७सू० “एकादशे ऋतुपशे प्रैषाक्षा अध्वर्यू यजतमित्येवं प्रेषितावध्वर्यू होतरेतद्यजेति एवं ब्रूयाताम् ततश्च तद्याज्यामपि होतैव ब्रूयात्। शाखान्तरे तु विकल्पेन होतुः प्रैषः स्वयं वा याज्यापठनमित्येषक्रमोऽस्ति। मानवे “एकादशे प्रैषेऽध्वर्यू यजतमित्युक्ते तयोरन्यतरो मध्यमस्य परिधेः पश्चादुपविश्य ये यजामहेऽश्विनावध्वर्यू आध्वर्यवादृतुना सोमं पिबतां वौषडिति प्रैषेण यजेद्यथेष्टया। ये यजामहेऽश्विना पिबतं मधु दीद्यग्नी शुचिव्रत ऋतुना यज्ञवाहसा वौषडित्यनयाम यजेति होतरेतद्यजेति वा न प्रेष्यत्युत्तमे प्रैषे यजमानस्य याज्यानि प्रैषो वेति” काठके विशेषः “द्वारे हविर्धानस्योपविश्याध्वर्यू यजतमित्युक्तेऽश्विनावध्वर्यू यजतम् आध्वर्यवादृतुना सोमं पिबतमिति होतारं वा प्रेष्य होतरेतद्यजेति यद्यध्वर्यू यजेतां होता यद्येव चरेदिति” कर्कः। “त्रयोदशं गृह्णीयादित्युपयामगृहीतोऽस्यंहस्पतये त्वेति” १८सू०। शत०ब्रा० ४,३,१,२, द्वादशादिपक्षपक्षे हेतुर्दर्शितो यथा “सचेऽच्छावाके। ऋतुपहैश्चरति तद्यत् सचेऽच्छावाक ऋतुपहैश्चरति मिथुनं वा अच्छावाक ऐन्द्राग्नो ह्यच्छावाको द्वौ ह्यैन्द्राग्नौ द्वन्द्वं हि मिथुनं प्रजननं स एतस्मान्मिथुनात् प्रजननादृतून् संवत्सरं प्रजनयति यद्वेव सचेऽच्छावाके ऋतुपहैश्चरति सर्वं वा ऋतवः संवत्सरः सर्वमेवैतत् प्रजनयति तस्मात् सचेऽच्छावाक ऋतुपहैश्चरति तान्वै द्वादश गृह्णीयात्। द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश मासा इति द्वादश त्वेव गृह्णीयाद्देवैव सन्मत्। त्रयोदशत्वादु गृह्णीयात् प्रजापतिर्वै त्रयोदशः स एतस्मात् प्रजापतेरृतून् संवत्सरं प्रजनयति उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति। कुतस्तयोरन्तौ वे उभयतोमुखे तस्मादयमनन्तः संवत्सरः परिप्लवते तं गृहीत्वा न सादयति तस्मादयमसन्नः संवत्सरः नानुवाक्यमन्वाह। द्रवति वाऽनुवाक्यया मतोऽह्य वायक्रतुर्यदि दिवा यदि नक्तं नानुवषट्करोति नेदृतून्पक्षान्वा इति यद्वेव प्रथमौ ग्रहौ गृह्णीतः सर्वोत्तमाविदमेवैतत् सर्वं संवत्सरेण परिगृह्णीतस्तदिदं सर्वं संवत्सरेण परिगृहीतम्। नित्येवान्यतरः क्रामति प्रान्यतरः पद्यते तस्मादिमेऽन्वञ्चोमासा यन्त्यन्य ह्युभौ वा सह निष्क्रामेतामुभौ वा सह प्रपद्येयातां पृथगुहैवेमेमासा इंयुस्तस्मादितरोऽन्यतरः क्रामति प्रान्यतरः पद्यते। तौ वा ऋतुनेति षट् प्रचरतः। तद्देवा ऽहरसृजन्त र्तुभिरिति चतुस्त्रिंशद्रात्रिमसृजन्त स यद्देवा तावद्देवामभिरुद्रात्रिमृषौमविमत् आयवत् स्यात् तौ वा ऋतुनेत्युपरिष्टाद्द्विश्चरतः। तद्देवाः परस्तादहरदधुस्तस्मादिदमद्याहरश्च योऽह्नर्भविता। ऋतुनेति वै देवाः मनुष्यानसृजन्तऽर्तुभिरिति पशून् यत् मध्ये येन पशूनसृजन्त तस्मादिमे पशव उभयतः परिगृहीता अनुयेता मनुष्याणाम्। तौ वा ऋतुनेति षट् प्रचर्य इतरथा पात्रे विपर्यस्येते ऋतुभिरिति चतुश्चरित्वेतरथा पात्रे विपर्यस्येते अन्यतरत एव तद्देवा अहरसृजन्तान्यतरतोरात्रिमन्यतरतएव तद्देवा मनुष्यानसृजन्तान्यतरतः पशून्। अथातो गृह्णात्येव उपयामगृहीतोऽसि मधवे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि माधवाय त्वेति प्रतिप्रस्थातैतावेव वासन्तिकौ स यद्वसन्त ओषधयो जायन्ते वनस्पतयः पच्यन्ते तेनो हैतौ मधुश्च माधवश्च। उपयामगृहीतोऽसि शुक्राय त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि शुचये त्वेति प्रतिप्रस्थातैतावेव ग्रैष्मौ स यदेतयोर्बलिष्ठं तपति तेन हैतौ शुक्रश्च शुचिश्च। उपयामगृहीतोऽसि नभसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि नभस्याय त्वेति प्रतिप्रस्थातैतावेव वार्षिकावमुतो वै दिवो वर्षति तेनो हैतौ नभश्च नभस्यश्च। उपयामगृहीतोऽसि इषे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽस्यूर्जे त्वेति प्रतिप्रस्थातैतावेव शारदौ स यच्छरद्यूर्गेव ओषधयः पच्यन्ते तेनो हैताविषश्चोर्जश्च। उपयामगृहीतोऽसि सहसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि सहस्याय त्वेति प्रतिप्रस्थातैतावेव हैमन्तिकौ स यद्धेमन्त इमाः प्रजाः सहसेव स्वं वशमुपनयते तेनो हैतौ सहश्च सहस्यश्च। उपयामगृहीतोऽसि तपसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि तपस्याय त्वेति प्रतिप्रस्थातैतावेव शैशिरौ स यदेतयोर्बलिष्ठं श्यायति तेनो हैतौ तपश्च तपस्यश्च। उपयामगृहीतोऽस्यंहसस्पतये त्वेति त्रयोदशं ग्रहं गृह्णाति यदि त्रयोदशं गृह्णीयादथ प्रतिप्रस्थाताध्वर्य्योः पात्रे संस्रवमवनयत्यध्वर्युर्वा प्रतिप्रस्थातुः पात्रे संस्रवमवनयत्याहरति भक्षम्। अथ प्रतिप्रस्थाता अध्वर्य्योरेव पात्रेण ऐन्द्राग्नं ग्रहं गृह्णाति तद्यदध्वर्य्योरेव पात्रे-

यैन्द्राग्नं ग्रहं गृह्णाति न वा ऋतुग्रहाणामनु वषट्कुर्वन्त्येतेभ्यो वा ऐन्द्राग्नं ग्रहं गृहीष्यन् भवति तदासैन्द्राग्ने नैवानुवषट्कृता भवन्ति यद्वैन्द्राग्नं ग्रहं गृह्णाति सर्वं वा इदं प्राजीजनद्य ऋतुग्रहानग्रहीत्स इदं सर्वं प्रजनय्येदमेवैतत् सर्वं प्राणोदानयोः प्रतिष्ठापयति तदिदं सर्वं प्राणोदानयोः प्रतिष्ठितमिन्द्राग्नी हि प्राणोदानाविमे हि द्यावापृथवी प्राणोदानावनयोर्हीदं सर्वं प्रतिष्ठितम्। यद्वैन्द्राग्नं ग्रहं गृह्णाति। सर्वं वा इदं प्राजीजनद्य ऋतुग्रहानग्रहीत्स इदं सर्वं प्रजनय्यास्मिन्नेवैतत् सर्व्वस्मिन् प्राणोदानौ दधाति ताविमावस्मिन् त्सर्व्वस्मिन् प्राणोदानौ हितौ। अथातो गृह्णात्येव। इन्द्राग्नी आगतं सुतं गोभिर्नभोवरेण्यम्। अस्य पातं धियेषिता। उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते यो निरिन्द्राग्निभ्यां त्वेति सादयतीन्द्राग्निभ्यां ह्येनं गृह्णाति। अथ वैश्वदेवग्रहं गृह्णाति। सर्वं वा इदं प्राजीजनद्य ऋतुग्रहानग्रहीत्स यद्वै तावदेवाभविष्यन्न प्राजनिष्यन्त। अथ यद्वैश्वदेवं ग्रहं गृह्णाति। इदमेवैतत् सर्व्वमिमाः प्रजा यथायथं व्यवसृजति तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते शुक्रपात्रेण गृह्णात्येष वै शुक्रो य एष तपति तस्य ये रश्मयस्ते विश्वे देवास्तस्माच्छुक्रपात्रेण गृह्णाति। अथातो गृह्णात्येव ओमासश्चर्षणीधृतो विश्वे देवास आगत। दाश्वांसो दाशुषः सुतम् उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति"।

**ऋतुथा** अव्य॰ वीप्सार्थे था॰ याच्। काले काले इत्याद्यर्थे "ऋतवस्त ऋतुथा पर्व शमितारो विशासतु" यजु॰ २३,४०, "ऋतुथा ऋतौ ऋतौ काले काले" वेददी॰। "या ते गात्राणामृतुथा कृणोमि" ऋ॰ १,१६२,१९।

**ऋतुपति** पु॰ ६त॰। वसन्तकाले तस्य सर्वर्तुषु प्रथमत्वात् "ऋतूनां कुसुमाकरः" गीतायां भगवद्विभूतित्वोक्तेश्च तथात्वम्। ऋतुनाथादयोऽप्यत्र। [मेवर्तुपर्य्यये" मनुः।

**ऋतुपर्य्यय** पु॰ ६त॰। ऋतूनां परिपाट्या गमने। "स्वय-

**ऋतुपा** पु॰ ऋतून् पाति निर्वाहकतया, ऋतुषु सोमं पिबति ऋतुभिर्मरुद्भिः सह सोमं पिबतीति वा पा-पालने पाने वा क्विप्। वर्षपालके तथाभूतसोमपातरि च १इन्द्रे "उत ऋतुभिर्ऋतुपाः पाहि सोममिन्द्र!" ऋ॰२,४७,२ २ऋतुवाजदेवे च। "सजोषा इन्द्र! वरुणेन सोमम् सजोषाः पाहि गिर्वणो मरुद्भिः। अग्रेपाभिर्ऋतुपाभिः सजोषाः" ऋ॰ ४,२४,७। "ऋतुपाभिः ऋतुवाजदेवैः" भा॰

**ऋतुपात्र** न॰ ऋतूनुद्दिश्य पात्रम्। आश्वत्थे श्रीपर्णीजन्ये वा यज्ञिये ग्रहरूपे पात्रभेदे तदाकारश्च "ऋतुपात्रे पूर्व्वे स्रुक्पुष्कराकृती उभयतोमुखे काश्मर्य्यमये आश्वत्थे वा" कात्या॰९,२,१२ उक्तः। "पूर्वे आपस्तम्बाख्याः पूर्व्वे द्वे ऋतुग्रहपात्रे योजनीये स्रुक्पुष्करस्येवाकारोऽयोस्ते अग्रे मूले च मुखं ययोस्ते द्विमुखे इत्यर्थः। काश्मर्य्यमये श्रीपर्णीवृक्षविकारौ आश्वत्थे वा पिप्पलवृक्षकाष्ठनिर्म्मिते वा" कर्कः। "तदाम्रवत्तीयान् गृह्णातीत्युपक्रम्य। "तस्मादाश्वत्थे ऋतुपात्रे स्यातां काश्मर्य्यमये त्वेव भवतः" शत॰ ४,३,३,४।

**ऋतुप्राप्त** त्रि॰ ऋतुस्तद्योग्यः पुष्पादिः प्राप्तोऽनेन निष्ठान्तस्य परनि॰। फलेग्रहौ अवन्ध्यवृक्षे।

**ऋतुबल** पु॰ ऋतौ ऋतुभेदे बलं यस्य। शिशिरादिषु बलयुक्तरव्यादिग्रहेषु ते च यथा। "शशिशुक्रकुजेन्दुजगुरवः शिशिरादिषु। भवन्ति कालबलिनो ग्रीष्मे सूर्यस्तथैव च" ज्यो॰।

**ऋतुमत्** त्रि॰ ऋतुस्तत्कालयोग्यप्रशस्तपुष्पफलादिर्भोग्यतयाऽस्त्यस्य ऋतु+प्राशस्त्ये मतुप्। १प्रशस्तर्तुफलपुष्पभोक्तरि। "कल्पन्ते हास्मा ऋतव ऋतुमान् भवति य एवं-विद्वानृतुषु पञ्चविधं सामोपास्ते" छा॰उ॰। "आर्त्तवैर्भोगैश्च सम्पन्नो भवति" भा॰। ऋतुकाले २यजनीयपितृभेदे पु॰। "अग्निष्वात्तानृतुमतो हवामहे" यजु॰ १९,६१। ऋतुः स्त्रीरजःकालः प्राप्तत्वेनास्त्यस्याः मतुप् स्त्रियां ङीप्। ३आर्त्तववत्यां स्त्रीधर्म्मिण्यां स्त्रियाम् "काममामरणात् तिष्ठेत् गृहे कन्यर्त्तुमत्यपि" मनुः। "तत्र प्रथमदिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति" सुश्रु॰। "उपाध्यायानी ते ऋतुमती उपाध्यायश्च प्रोषितोऽस्या यथायमृतुर्वन्ध्यो न भवति तथा क्रियताम्" भा॰ आ॰३अ॰। ऋतुमत्या धर्म्मश्च आर्त्तवशब्दे उक्तः। विशेषस्त्वयम् "स्त्रीधर्म्मिणी त्रिरात्रन्तु स्वं मुखं नैव दर्शयेत्। स्ववाक्यं श्रावयेन्नापि यावत् स्नाता न शुद्धितः। सुस्नाता भर्त्तृवदनमीक्षतेऽन्यस्य न कचित्। अथ वा मनसि ध्यात्वा पतिं भानुं विलोकयेत्" काशीख॰।

**ऋतुमयी** त्रि॰ ऋतुप्रचुरा चितिः ऋतु+प्राचुर्य्ये मयट् ङीप्। ऋतुप्रधाने चितिभेदे तदुपधानप्रकारः शत॰ब्रा॰ ८,१,२,१॰उक्तः यथा "अथ उत्तरतः ग्रीष्मस्तासां प्रथमा, वर्षा द्वितीया, हेमन्तस्तृतीया, हेमन्तश्चतुर्थी, वर्षाः पञ्चमी

ग्रीष्मः षष्ठी, ग्रीष्मः सप्तमी, वर्षा अष्टमी, हेमन्तो नवमी, यजमान एवात्र दशमी सएष यजमान एतस्यां विराज्यधिरूढ़ः प्रतिष्ठितः ऋतुमय्यामर्व्वाचीश्च पराचीश्चोपदधाति”

**ऋतुमुख** न० ६त० । गौणचान्द्रमासप्रथमदिने प्रतिपद्रूपे तिथिभेदे । “चातुर्मास्येषु चर्तुमुखश्रुतेः” कात्या० १, २,१२ । “चातुर्मास्येषु च न याथाकाम्यम् कुतः ऋतुमुखश्रुतेः ‘ऋतुमुख ऋतुमुखे चातुर्मास्यैर्यजेतेति” वीप्साश्रवणात् ऋतोर्मुखं प्रथमदिनं प्रतिपत् तत्रेत्यर्थः । अत एव वैश्वदेववरुणप्रघासादीनि चातुर्मास्यपर्वाणि प्रतिपद्येव क्रियन्ते न पौर्णमास्यामित्यवसीयते यतः प्रतिपदेव चर्तुमुखं न पौर्णमासीति तथा च श्रूयते” “एषा ह संवत्सरस्य प्रथमा रात्रिर्यत् फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वा मुखतएव तत् संवत्सरमारभते” शत०ब्रा० ६,२,१,१७, कर्कः । “द्वे ह वै पौर्णमास्यौ द्वे अमावस्ये” इति श्रुतेः योत्तरा पौर्णमासी कृष्णप्रतिपदित्यर्थः । तथा च पौर्णमास्यां दीक्षा प्रतिपदि पौर्णमास्येष्टिसमापनम् ऋतुसन्धिशब्दे विवृतिः । एतच्च पौर्णमासेष्टिविषयम् अमावास्येष्टौ दर्शएव दीक्षा शत० ब्रा० ६,२,२,२०,२६, “अमावास्यायां दीक्षते” इत्युपक्रम्य “या प्रथयामावास्या तस्यां दीक्षित एतद्वै संवत्सरस्य प्रथमान्यहानि तान्यस्य तदारभते” २०इत्युक्तेः ।

**ऋतुराज** पु० ऋतूनां राजा ६त० टच् समा० । वसन्ते ऋतौ

**ऋतुलिङ्ग** न० ६त० । वसन्तादिषु जायमाने चूतमञ्जर्य्यादिरूपे तच्चिह्ने “यथर्त्तुलिङ्गान्यृतवः स्वयमेवर्त्तुपर्य्यये” मनुः । तच्चिह्नानि च ऋतुशब्दे दर्शितसुश्रुतवाक्यादवगम्यानि ।

**ऋतुवृत्ति** पु० ऋतूनां वृत्तिः पर्य्यायेणावर्त्तनं यत्र । १वत्सरे त्रिका० । ६त० । २ऋतुधर्म्मे स्त्री ।

**ऋतुशस्** अव्य० कारकार्थे ऋतु+शस् । ऋतौ ऋतौ इत्याद्यर्थे “अविष्यन्नृतुशोदेवयानम्” ऋ० १,१६२,४ । “ऋतुशः ऋतावृतौ काले काले” भा० “कति होतार ऋतुशो यजन्ति” यजु० २३,५७ । ऋतुशः काले काले” वेददी० ।

**ऋतुष्ठा(स्था)** त्रि० ऋतौ तिष्ठति स्था–क्विप् वेदे षत्वं लोके तु न । वसन्तादिषु स्थायिनि । “ऋतवःस्थ ऋतावृधः ऋतुष्ठाः स्थ ऋतावृधः” यजु० १७,२, ।

**ऋतुसंहार** पु० ऋतूनां संहारः समूहोवर्ण्यत्वेन यत्र । कालिदासप्रणीते काव्यभेदे ।

**ऋतुसन्धि** पु० ऋत्वोः सन्धिः । दर्शान्तमुख्यचान्द्रमासपक्षे १दर्शे, पौर्णमास्यान्तगौणचान्द्रमासपक्षे २पौर्णमास्याम् । ऋतोर्मासघटितत्वात् मासस्य च पर्व्वसन्धियुक्तत्वेन पर्वसन्धिरेव ऋतुसन्धिः अतः प्रसङ्गात् पर्व्वसन्धिर्निरूप्यते स च कालमा० उक्तः यथा “कुहूव्यतिरिक्तानां लघ्वक्षरोच्चारणपरिमितः कालः सन्धिरित्युच्यते कुहूस्त्वक्षरद्वयपरिमितः कालः तदेतदुक्तं भगवतीपुराणे “अनुमत्याश्च राकायाः सिनीवाल्याः कुहूं विना । एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृतेति” तत्र लवस्वरूपं स्मृत्यन्तरे दर्शितम् “लघ्वक्षरचतुर्भागस्त्रुटिरित्यभिधीयते । त्रुटिद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयमिति” एवं च सति त्रुटिशब्दाभिधेयानां भागानां चतुष्टयं लवद्वयरूपं लघ्वक्षरसमं भवति तस्मिन् लघ्वक्षरपरिमिते काले एकः पर्वणोभागः, द्वितीयः प्रतिपदः,तदुभयं मिलित्वा सन्धिर्भवति कुहूप्रतिपदोः सन्धिस्तु पूर्वस्मात् द्विगुणः अक्षरद्वयपरिमितत्वात् मत्स्य ब्रह्माण्डपुराणयोः “राका चानुमतिश्चैव सिनीवाली कुहूस्तथा । एतासां द्विलवः कालः कुहूमात्रा कुहूस्तथा । कुहूरितिकोकिलेनोक्ते यावान् कालः समाप्यते । तत्कालसंमिता चैषा अमावस्या कुहूः स्मृता । इत्येष पर्वसन्धीनां कालोयोद्विविधः स्मृत” इति ।

एवं सन्धौ निरूपिते सति योऽयं प्रक्रान्तोविचारस्तत्र सन्धिरेवेष्टिकाल इति तावत् प्राप्तम् “सन्धौ यजेतेति” श्रुतेः नैवं सूक्ष्मत्वात्तत्र यागानुष्ठानानुपपत्तेः का तर्हि श्रुतेर्गतिः पार्श्वद्वयलक्षणेति ब्रूमः यथा गङ्गायां घोष इत्यत्र गङ्गाशब्दः प्रवाहेऽनुपपन्नस्तत्समीपं तीरं लक्षयति तथा सन्धिशब्दोऽपि पार्श्वद्वयं लक्षयतु । अतएव श्रुत्यन्तरं “सन्धिमभितो यजेतेति” बौधायनोऽपि “सूक्ष्मत्वात् सन्धिकालस्य सन्धेर्विषय उच्यते । सामीप्यं विषयं प्राहुः पूर्वेणाप्यपरेण चेति” अत्र पूर्वापरशब्दाभ्यां सन्धेः प्राचीनं प्रतिपद्दिनं चाभिधीयते । तत्र पूर्व्वस्मिन्पर्वदिने प्रयोगप्रारम्भः नोत्तरस्मिन्, प्रतिपद्दिने यागसमाप्तिः अन्वाधानमिध्माबर्हिःसम्पादनमग्निपरिग्रहणमुपस्तरणं चेत्येवमादि प्रयोगप्रारम्भः स पूर्वेद्युरनुष्ठेयः तथा च तैत्तिरीयब्राह्मणे श्रूयते “पूर्व्वेद्युरिध्माबर्हिः करोति यज्ञमेवारभ्य श्वोभूतेऽत्रोपवसतीति” शतपथब्राह्मणेऽपि “पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्यजतीति” तत्र पक्षं नामाध्वर्युणा आहवनीयगार्हपत्यदक्षिणाग्निषु “ममाग्ने वर्च्च” इत्यादिभिर्मन्त्रैः समिदाधानलक्षणे अन्वाधाने क्रियमाणे पार्श्वस्थितेन यजमानेनाग्निं गृह्णामीत्यादीनां मन्त्राणां पठनं तदिदं पर्वदिने क्रियते । प्रतिपद्दिने तु “कस्त्वा वो देवेभ्य” इ-

श्वादिभिरध्वर्युहस्तप्रक्षालनतण्डुलनिर्वापपुरोडाशप्रदानादि
लक्षणप्रयोगं करोति तदिदं यजनम्। एतदेवाभिप्रेत्य गो-
भिल आह "पक्षान्ता उपवस्तव्याः पक्षादयोऽपि यष्टव्याः"
इति अत्रोपवासशब्देन व्रतोपचरणादिर्विवक्षितः तस्मिन्
क्रियमाणे यजमानसमीपे देवतानां निवासात् तदेतत्तै-
त्तिरीयब्राह्मणे दर्शितम् "उपास्मिन् श्वो यक्ष्यमाणे देवताः
वसन्ति य एवं विद्वानग्निमुपसमाधातीति" उपवासशब्दाभि-
धेयस्य पर्वदिने कर्त्तव्यस्यान्वाधानादेः पर्व्वणि चतुर्थ
भवति आद्यास्त्रयोऽंशाविहितः कालः न तु चतुर्थोऽंशः
यागशब्दाभिधेयस्य पुरोडाशप्रदानादेः पूर्वाह्णः पर्वचतु-
र्थोऽंशः प्रतिपदंशास्त्रयश्च विहितः कालः न तु प्रति-
पदश्चतुर्थोऽंशः। तदेतदाह लौगाक्षिः "लोनंशानौपव-
स्तस्य यागस्य चतुरोविदुः। द्वावंशावुत्सृजेदन्त्यौ यागे च
व्रतकर्मणीति" तमेतं यज्ञकालं यज्ञपार्श्वोऽप्याह "पञ्चदश्याः
परः पादः पक्षादेः प्रथमास्त्रयः। कालः पार्वणयागे स्याद-
वान्ते तु न विद्यत इति" वृद्धशातातपोऽपि "पर्वणोयश्चतुर्थो-
ऽंश आद्याः प्रतिपदस्त्रयः। यागकालः स विज्ञेयः प्रातरु-
क्तोमनीषिभिरिति" अत्र प्रातरिति विशेषणात् सूर्योदय-
स्योपरि मुहूर्त्तत्रयं यागकाल इत्युक्तं भवति प्रतिपदश्च-
तुर्थांशं निषेधति कात्यायनः "न यष्टव्यं चतुर्थेऽंशे यागैः
प्रतिपदः क्वचित्। रक्षांसि तद्धि लुम्पन्ति श्रुतिरेषा सना-
तनीति" तदेवं पर्वण्यन्वाधानादिकं प्रतिपदि चेष्टिरिति
सन्धिपार्श्वयोरुभयोः प्रारम्भपरिसमाप्ती व्यवस्थिते। यदा
पर्वप्रतिपदावुदयमारभ्य सम्पूर्णतिथी भवतः तदा न स-
न्देहः यदा तु खण्डतिथी तदा निर्णयोऽभिधीयते तत्र
गोभिलः "आवर्त्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत्। तदह-
र्यागइष्येत परतश्चेत् परेऽहनि। पर्व प्रतिपदोः सन्धिरर्वा-
गावर्त्तनाद् यदि। तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः।
आवर्त्तनात् परः सन्धिर्यदि तस्मिन्नुपक्रमः। परेद्युरिष्टि-
रित्येष पर्वद्वयविनिश्चयः" इति आवर्त्तनमह्नोमध्यभागः।
लौगाक्षिरपि "पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते।। अपराह्णेऽथवा
रात्रौ यदि पर्व समाप्यते। उपोष्य तस्मिन्नहनि श्वो भूते
याग इष्यत" इति एषु वचनेषु मध्याह्नादिशब्दा यौगिकाः
न तु पञ्चधा विभागमाश्रित्य प्रवृत्ताः यथा सत्यह्नोमध्यो-
मध्याह्न इति व्युत्पत्तेरावर्त्तनं मध्याह्नशब्देनाभिधीयते
अतएव गोभिलेनावर्त्तनशब्दः प्रयुक्तः शातातपेनापि न-
ध्यमशब्दः प्रयुक्तः "पूर्वाह्णे मध्यमे वापि यदि पर्व

समाप्यते। तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते" इति
अह्नोऽपरोभागोऽपराह्णः अनयाभ्यां शब्दाभ्यामा-
वर्त्तनात् पूर्वोत्तरभागावभिधीयेते। वाजसनेयि-
नान्तु विशेषमाह भाष्यार्थसंग्रहकारः "मध्यंदिनात्
स्यादहनीह यस्मिन् प्राक् पर्वणः सन्धिरियं तृतीया।
सा खर्विका वाजसनेयिमत्या तस्यामुपोष्याथ परेद्युरिष्टि-
रिति" आवर्त्तनादूर्द्ध्वमस्तमयादर्वाक् यदा सन्धिर्भवति त-
दाहःसन्धिमती तिथिः प्रथमा, रात्रौ सन्धिश्चेत् सा ति-
थिर्द्वितीया उभे अपेक्ष्य पूर्वाह्णे सन्धिमती पर्वतिथिस्तृ-
तीया भवति तस्यां तृतीयतिथौ पर्वकालस्याल्पत्वात् खा-
र्विकेत्युच्यते। शाखान्तराध्यायिनामीदृशे विषये
पूर्वेद्युरन्वाधानादिकं सन्धितिथाविष्टिर्वाजसनेयिनान्तूत्त-
रतिथाविष्टिः एवं सति वाजसनेयिनां न क्वापि सन्धि-
दिनात्पूर्वेद्युरन्वाधानादिकमस्ति सोऽयं विशेषः आवर्त्तने
ततः पुरा वा यदा सन्धिर्भवति तदा वाजसनेयि
व्यतिरिक्तानां पर्वचतुर्थांशे इष्टिः प्राप्नोति तत्र विशेष-
माह गार्ग्यः "प्रतिपद्यप्रविष्टायां यदि वेष्टिः समाप्यते।
पुनः प्रणीय कर्त्तव्येष्टिः कर्त्तव्या यागवित्तमैरिति" पर्वचतु-
र्थांशः प्रतिपदस्त्रयोऽंशाश्च यागकालत्वेन विहिताः। अत्र
पर्वचतुर्थांशस्य विषय उदाहृतः प्रतिपदंशानां विषय उ-
दाह्रियते। उषःकाले सन्धौ प्रतिपदः प्रथमांशो यागकालः
निशीथे सन्धौ द्वितीयांशः रात्रिप्रारम्भे सन्धौ तृतीयांशः
अनयैव न्यायेनापराह्णे सन्धौ प्रतिपच्चतुर्थांशस्य याग-
कालत्वं प्राप्नोति तच्च प्रतिषिद्धं "न यष्टव्यं चतुर्थेऽंशे"
इति स्मृतेः अतस्तादृशे विषये याग एव कुर्वीतेति चेत्
मैवं वृद्धशातातपेन प्रतिप्रसवाभिधानात् "सन्धिर्यद्यपरा-
ह्णे स्याद्यागं प्रातःपरेऽहनि। कुर्वाणः प्रतिपद्भागे चतुर्थे-
ऽपि न दुष्यतीति" एवं तर्हि प्रतिषेधो निर्विषयः स्यादि-
ति चेन्नैवं सद्यस्कालविषये चरितार्थत्वात् तं च वि-
षयं दर्शयति कात्यायनः "सन्धिश्चेत् सङ्गवादूर्द्ध्वं प्राक्-
चेदावर्त्तनाद्रवेः। सा पौर्णमासी विज्ञेया सद्यस्काल-
विधौ तिथिरिति" भाष्यार्थसंग्रहकारोऽपि "अन्वाहितिस्त-
स्तरणोपवासः पूर्वेद्युरेते खलु पौर्णमास्याम्। आवर्त्तनात्
प्राग्यदि पर्वसन्धिस्तदैव यागः क्रियते समस्तः" इति।
आपस्तम्बोऽपि "पौर्णमास्यामन्वाधानपरिस्तरणोपवासाः
सद्यो वा सद्यस्कालायां सर्वं क्रियते" इति सङ्गवावर्त्त-
नयोर्मध्ये पौर्णमासीप्रतिपदोः सन्धौ सति पूर्वोदाहृत-
वचनैः सन्धिदिनात् पूर्वेद्युरन्वाधानादिकं प्राप्तं तत्र

षष्ठ्यन्तवाक्यैः सन्धिदिन उत्क्रम्यते । सम्मोहके विषये सन्धिदिनात् परदिने याग उत्क्रान्तां तथा सत्यपराह्णादिसन्धिविनान्वाधानयागयोर्दिनभेदो भविष्यति । अस्ति च दृष्टान्तः वाजसनेयिनामीदृशे विषये, अन्वाधानोत्कर्षे सति यागस्याप्युत्कृष्टत्वात् मैवम् अन्वयव्यतिरेकरूपाभ्यां विधिनिषेधाभ्यामस्याः शङ्कायानिरासितत्वात् तत्र षष्ठ्यन्तविषयोऽन्वयरूपाः, प्रतिपच्चतुर्थांशे प्रतिषेधाय व्यतिरेकरूपाः एवं च सति प्रतिषेधवाक्यं सावकाशं भवति । अमावास्यायां विशेषमाह लघ्वाश्वलायनः "द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति" सोऽयं विशेषो नाश्वलायनापस्तम्बविषयः किन्तु बौधायनमतानुयायिविषयः अतएव बौधायनः "द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् । चतुर्दशी चतुर्यामा अमावास्या न दृश्यते । श्वोभूते प्रतिपच्चेत् स्यात् पूर्वां तत्रैव कारयेत् । चतुर्दशी च संपूर्णा द्वितीया क्षयगामिनी । प्रातरिष्टिरमायां स्यादुभूते कर्मादिका क्रियेति" एतेषां वचनानामयमर्थः यस्मिन् चतुर्दशी संपूर्णा तस्मादर्वाममावास्या स्यात् तत एवापराह्णव्याप्त्यभावात् कालाभावान्वाधानाय वा पूर्वोक्तरीत्या यद्यपि निमित्तभावं न भजते तथापि प्रतिपदि द्वितीयायां सत्यां चन्द्रस्य दृश्यमानत्वात्तद्दर्शने चेष्टेर्निषिद्धत्वात् प्रतिपद्युतायाममावास्यायामिष्टिः स्वल्पामावास्योपेतायां चतुर्दश्यां श्राद्धाग्न्याधानादिकं कर्त्तव्यमिति । एतदेवाभिप्रेत्य स्मृत्यन्तरे "आदित्येऽस्तमिते चन्द्रः प्रतीच्यामुदियात् यदा । प्रतिपद्यतिपत्तिः स्यात् पञ्चदश्यां यजेत्तदेति" लघ्वविष्णोऽपि "ऐन्द्रे निरुप्ते पर्वणि पुरस्तादुदिते विधौ । वैगुण्यं स्मृतं तस्मिन् पश्चादपि हि तद्भवेदिति" अस्यायमर्थः यदा संपूर्णचतुर्दश्यामविचारेणामावास्याबुद्धिं कृत्वा अन्वाधानादिकं कृत्वा हविर्निर्वापे कृते तस्मिन् उषःकाले पूर्वस्यां दिशि चन्द्रमा उदेति । तदा न दर्शकर्म भवितुमर्हति दर्शकालस्याप्राप्तत्वात् किन्तु कालापराधं निमित्तीकृत्य दर्शदेवता अपनीय दात्रादिगुणविशिष्टाग्न्यादिदेवतान्तराय हृदस्य हविःप्रक्षेपो विहितः यदेतत् तैत्तिरीयब्राह्मणे श्रूयते "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम् ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति" सोऽयं दृष्टान्तोक्तविधि निरुप्ते सति तदूर्द्ध्वं पूर्व्वस्यां दिशीन्दावुदिते सति दर्शकर्मविधेयहेतुगुणकरीत्यावस्थितं यदेव वैगुण्यं होमदिने पश्चिमदिशि चन्द्रोदये भवतीति । एतदेव बौधायनमतमुपोद्बलयति श्रुतिः "यस्मिन्नह्नि पुरस्तात्पश्चात् सोमोन दृश्यते तदहर्यजेतेति" अयमर्थः सिनीवाल्यां पुरस्ताच्चन्द्रदर्शनं भवति द्वितीयायुक्तायां प्रतिपदि पश्चाच्चन्द्रो दृश्यते तयोरुभयोर्मध्यवर्त्तिन्यां कुह्वां द्विविधमपि चन्द्रदर्शनं नास्ति अतस्तस्मिन् दिने यष्टव्यमिति चन्द्रदर्शनोपेतायां शुक्लप्रतिपदि यागानुष्ठाने प्रायश्चित्तमाह कात्यायनः "यजमानोऽग्निसोमयेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये" इति चन्द्रदर्शनराहित्यमेवाभिप्रेत्य बौधायनकारिकासु पठ्यते "दृष्टे स्व प्रातिपदादि नाड्यः सप्ताष्ट वा यत्र भवन्ति तत् स्यात् । सीमासु नाडीषु दिनस्य पूर्वः कल्पोऽयमुक्तो भवेद्द्वितीयः" इति अयमर्थः अमावास्यातिथेः सम्बन्धिनीषु नाडीषु सीमासु सतीषु तस्मिन् दिने अरुणोदयात् पूर्वं प्रतिपत्सम्बन्धिन्यो नाड्यः सप्ताष्ट वा यदि भवन्ति तदा तद्दिनमिष्टेरेव योग्यं सोऽयमेकः पक्षः । अमावास्याप्रतिपदौ यदा वर्द्धेते तदा द्वितीयः कल्पो भवेत् । अमायामग्न्याधाय सोमदर्शनरहिते प्रतिपद्दिने यागः कर्त्तव्य इति । स्मृत्यन्तरेऽपि "अमां गस्तमयात् यत्र द्वितीया तु प्रदृश्यते । तत्र यागं न कुर्व्वीत स्युर्देवास्तु पराङ्मुखाः" इति बौधायनमतानुसारिणामग्न्याधानवद्दर्शश्राद्धमपि स्वल्पामावास्योपेतायां चतुर्दश्यां कर्त्तव्यं तथा च बौधायनेनोक्तम् "यदा चतुर्दशी यामन्तुरीयमनुपूरयेत् । अमावास्या क्षीयमाणा तदैव श्राद्धमाचरेत् । चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते । श्वोभूते प्रतिपत्तत्र भूते कर्मादिका क्रियेति" चतुर्थे यामे अमावास्या सम्पूर्णा न दृश्यते किन्त्ववसाने स्वल्पा वा चेत् परदिने क्षीयते तदानीं चतुर्दश्यां श्राद्धमाचरेत् । ननु चन्द्रदर्शनोपेतायां प्रतिपदीष्टिः समाम्नाता तथा च शतपथब्राह्मणम् "यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजमानाः कानभ्युदेतीति" । तैत्तिरीयब्राह्मणमपि "एषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोके ऋर्द्धुकं भवतीति" अयमर्थः येयमिष्टिश्चन्द्रदर्शनोपेते दिने क्रियते सेयमिष्टिः सुमनःशब्दवाच्या तादृशीमिष्टिं कृतवन्तं यजमानमभिलक्ष्य तस्मिन् दिने पश्चाच्चन्द्रमा उदेति तस्मै यजमानायास्मिन् लोके समृद्धिर्भवतीति बाढं तदेतच्छ्रुतिद्वयं बौधायनमतानुसारिव्यति-

रिक्तविषयम् एतदेवाभिप्रेत्य प्रतिपच्चतुर्थ्यंशे याग उदाहृतः। ननु बौधायनव्यतिरिक्तानामपि चन्द्रदर्शनयोग्यं द्वितीयायुतं प्रतिपद्दिनमिष्टौ निषिद्धं तथा च स्मृतिः “पर्वणोऽंशे चतुर्थे तु कार्या चेष्टिर्द्विजोत्तमैः। द्वितीयासहितं यस्मात् पश्यन्त्याश्वलायनाः” इति तदेतदावर्त्तनतत्पूर्वकालयोः सन्धौ सति द्रष्टव्यं अपराह्णादिसन्धिषु चतुर्थस्यैवाप्राप्तत्वात्। तदेवं प्रकृतिरूपाया इष्टेः कालो निरूपितः विकृतेस्तु कालो निरूप्यते तत्र कात्यायनः “आवर्त्तनात् प्राग्यदि पर्वसन्धिः कृत्वा तु तस्मिन् दिवसे प्रकृत्याः। तत्रैव यागः परतो यदि स्यात्तस्मिन् विकृत्याः प्रकृतेः परेद्युरिति” आवर्त्तने ततः पुरा वा पर्वसन्धौ तस्मिन् सन्धिदिने प्रकृतियागं कृत्वा पश्चाद्विकृतिसम्बन्धी यागः कर्त्तव्यः। यद्यावर्त्तनात्परतः सन्धिस्तदा केवलं विकृतियागः सन्धिदिने कर्त्तव्यः प्रकृतियागस्तु सन्धिदिनात्परेद्युरनुष्ठेय इत्यर्थः। आवर्त्तनतः पूर्वकाले ततः परकाले वा सन्धिरित्येतेषु त्रिष्वपि पक्षेषु सन्धिदिन एव विकृतेरनुष्ठानं प्रकृतेस्तु पूर्वोक्तरीत्या सन्धिदिने परेद्युर्वानुष्ठानं व्यवतिष्ठते

इष्टीनां सर्वासां प्रकृतिर्दर्शपूर्णमासौ “ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम” इत्यादयः काण्डान्तरपठिताः काम्येष्टयो विकृतयः। तत्र “प्रकृतिवद्विकृतिः कर्त्तव्येति” न्यायेन विकृतीनामपि सन्धिदिनात् परेद्युः कदाचिदनुष्ठानं प्राप्तं तदेतदुदाहृतेन वचनेन निवार्य्यते”।

तेन सन्धेः सूक्ष्मकालत्वेन कर्मानर्हत्वात् संक्रान्तिवत्तदुपलक्षितदिनविशेषे तत्तत्कर्म कर्त्तव्यमिति फलितम्। अत एव “ऋतुसन्धिषु वापयेत्” इतियतिधर्मे स्मृतिः तत्र यदि दर्शान्तविवक्षा स्यात् तदा दर्शस्यैव सन्धित्वात् तत्रैव वपनं कुर्य्युः कुर्व्वन्ति तु पूर्णिमायां तस्मात् दर्शान्तत्वपूर्णिमान्तत्वयोः समो विकल्पः अनुष्ठाने तु तत्र वचनविशेषाच्छिष्टाचाराच्च व्यवस्था” कालमा०। अयञ्च कालः श्रौतस्मार्त्तकर्माङ्गम् वैद्यके तु कालविशेषोऽपि परिभाषितः “यथा ऋत्वोरन्त्यादि सप्ताहावृतुसन्धिरिति स्मृतः। तत्र पूर्वोविधिस्त्याज्यः सेवनीयः परोविधिः” वाग्भटः। ज्योतिःशास्त्रे तु ऋत्वोः सन्ध्युपलक्षितस्य कालभेदस्य “रवेर्भवेदेकमहाभिकस्य यदंशषट्कं खलु सायनस्य। तदत्र राशिद्वयभागतष्टं स्युः षड् वसन्तादृतवो भवन्ति। तत्सन्धयोऽगाङ्क ६७घटीसमाः स्युर्द्विसंगुणा (१३४ घटीसमाः) स्येत् विषुवायनीयाः। स सन्धिसन्धिः खलु यत्र शेषं शून्यं भवेद्वेद विशेषपुण्यः” शेषवाक्येन सन्धिसन्धित्वे नापि परिभाषा कृता तत्र शून्यावशेषे स्नानदानादौ विशेषपुण्यफलम्। इतरस्य विवाहे वर्ज्जता। यथाह स एव “सन्धौ पुरन्ध्री शुचमेति वन्ध्या मृतप्रजा वा यदि सन्धिसन्धिः” इति।

**ऋतुसेव्य** त्रि० ऋतुभेदे सेव्यं वैद्यकोक्तगुणयुतमाहारादि। सुश्रुतोक्ते ऋतुभेदे सेवनीये पथ्यरूपे वस्तुभेदे तच्च सुश्रु०दर्शितं यथा। “यस्मिन्यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम्। तेषु तेषु प्रदातव्याः रसास्ते ते विजानता।

प्रक्लिन्नत्वाच्छरीराणां वर्षासु खलु देहिनाम्। मन्दोऽग्नी कोपमायान्ति संहर्षान्मारुतादयः। तस्मात् क्लेदविशुद्ध्यर्थं दोषसंहरणाय च। कषायतिक्तकटुकै रसैर्युक्तमथाऽन्नम्। नातिस्निग्धं नातिरूक्षमुष्णं दीपनमेव च। देयमन्नं नृपतये यज्जलं चोक्तमादितः। तप्तावरतमश्नीया पिबेन्मधुसमायुतम्। अह्नि मेघानिलाविष्टेऽत्यर्थशीताम्बुसङ्कुले। तरुणत्वाद्विदाहञ्च गच्छन्त्योषधयस्तदा। मतिमांस्तन्निमित्तञ्च नैव व्यायाममाचरेत्। अत्यम्बुपानाववश्यायप्रायधर्मातपांस्तथा। भुवाष्पपरिहारार्थं शयीत च विहायसि। शीते साग्नौ निवाते च गुरुप्रावरणे गृहे। यायाद्गागवधूभिश्च प्रशस्तागुरुभूषितः। दिवास्वप्नमजीर्णञ्च वर्ज्जयेत्तत्र यत्नतः”। वर्षासेव्यासेव्ये।

“सेव्याः शरदि यत्नेन कषायस्वादुतिक्तकाः। क्षीरेक्षुविकृतिक्षौद्रशालिमुद्गादिजाङ्गलाः। सलिलञ्च प्रसन्नत्वात् सर्व्वमेव तदा हितम्। सरःस्नानञ्चैव कमलोत्पलशालिषु। प्रदोषे शशिनः पादाश्चन्दनस्यानुवासनम्। तिक्तस्य सर्पिषः पानैरसृकस्रावैश्च युक्तितः। वर्षास्वपचितं पित्तं हरेच्चापि विरेचनैः। नोपेयात्तीक्ष्णमत्युष्णं क्षारं स्वप्नं दिवाऽऽतपम्। रात्रिजागरणञ्चैव मैथुनञ्चापि वर्जयेत्। स्वादु शीतजलं मद्यं शुचिस्फटिकनिर्मलम्। शरच्चन्द्रांशुनिर्धौतमगस्त्योदयनिर्विषम्। प्रसन्नत्वाच्च सलिलं सर्व्वमेव तदा हितम्। सचन्दनं वा कर्पूरं वाससामलिनं लघु। भजेच्च शारदं माल्यं सौधोः पानञ्च युक्तितः। पित्तप्रशमनं यच्च तच्च सर्व्वं समाचरेत्”। शरदि सेव्यासेव्ये।

“हेमन्तः शीतलो रूक्षो मन्दसूर्योऽनिलाकुलः। ततस्तु शीतमासाद्य वायुस्तत्र प्रकुप्यति। कोष्ठस्थः शीतसंस्पर्शादन्तःपिण्डीकृतोऽनलः। रसमुन्मोचयत्याशु तस्मात् स्निग्धं तदा हितम्। हेमन्ते लवणक्षारतिक्ताम्लकटुकोत्कटम्। सर्पिस्तैलमहिममशनं हितमुच्यते। तीक्ष्णान्यपि च पानानि पिबेदगुरुभूषितः। तैलाभ्यक्तः सुखोष्णे च वारिकोष्ठेऽवगाहयेत्। साङ्गारधाने महति कौशेयास्तरणावृते। शयीत

शयने वापि द्रुते गर्भस्तक्षोदरे । स्त्रीःस्निग्धागुरुधूपाढ्याः पीनोरुजघनस्तनीः । प्रकामञ्च निषेवेत मैथुनं तर्पितो नृपः । मधुरं तिक्तकटुकमम्लं लवणमेव च । अन्नपानं तिलान् माषान् शाकानि च दधीनि च । तथेक्षुविकृतीः शालीन् सुगन्धांश्च नवानपि । प्रसहानूपमांसानि क्रव्यादबिलशायिनाम् । औदकानां प्लवानाञ्च मादिनाञ्चोपजायते । मद्यानि च प्रसन्नानि यच्च किञ्चिद्बलप्रदम् । कामतस्तन्निषेवेत पुष्टिमिच्छन् हिमागमे" हेमन्तसेव्यादि

"एष एव विधिः कार्यः शिशिरे समुदाहृतः" ।

"हेमन्ते निचितः श्लेष्मा शैत्याच्छीतशरीरिणाम् । कोष्णाद्वसन्ते कुपितः कुरुते च गदान् बहून् । ततोऽम्लमधुरस्निग्धलवणानि गुरूणि च । वर्जयेद्वमनादीनि कर्माण्यपि च कारयेत् । षष्टिकांश्च यवान् शालीन् मुद्गान् नीवारकोद्रवान् । लावादिविष्किररसैर्द्याद्यूषैश्च भुक्तितः । पटोलनिम्बवार्त्ताकुतिक्तकैश्च हिमात्यये । सेवेत माधवेऽरिष्टान् शीधु माध्वीकमासवान् । व्यायाममञ्जनं धूमं तीक्ष्णञ्च कवलग्रहम् । सुखाम्बुना च सर्वार्थान् सेवेत कुसुमागमे । तीक्ष्णरूक्षकटुक्षारकषायं कोष्णमद्रवम् । यत्तु रूक्षमधुप्रायं वसन्ते भोजनं हितम् । व्यायामोऽत्र नियुद्धाध्वशिलानिर्घातजो हितः । उत्सादनं तथा स्नानं वनिताः काननानि च । सेवेत निर्हरेच्चापि हेमन्तोपचितं कफम् । शिरोविरेकवमननिरूहकवलादिभिः । वर्ज्जयेन्मधुरस्निग्धदिवास्वप्नगुरुद्रवान्" वसन्तसे०

"व्यायाममुष्णमायासं मैथुनञ्चातिशोषि च । रसांश्चाग्निगुणोद्रिक्तान् निदाघे परिवर्जयेत् । सरांसि सरितोवापि वनानि रुचिराणि च । चन्दनानि परार्घ्यानि स्रजः सकमलोत्पलाः । तालवृन्तानिलाहारांस्तथा शीतच्छायाणि च । घर्मकाले निषेवेत वासांसि सुलघूनि च । शर्कराखण्डदिग्धानि सुगन्धीनि हिमानि च । पानकानि च सेवेत मन्थांश्चापि सशर्करान् । भोजनं च हितं शीतं सघृतं मधुरद्रवम् । शृतेन पयसा रात्रौ शर्करामधुरेण च । प्रत्यग्रकुसुमाकीर्णशयने हर्म्यसंस्थिते । शयीत चन्द्रमाश्लिष्टः स्पृश्यमानोऽनिलैः सुखैः" ग्रीष्मसेव्यादि ।

"तापात्यये हिता नित्यं रसा ये गुरवस्तथा । पयोमांसरसाः कोष्णास्तैलानि च घृतानि च । बृंहणञ्चापि यत्किञ्चिदभिष्यन्दि तथैव च । निदाघोपचितञ्चैव प्रकुप्यन्तं समीरणम् । निहन्यादनिलघ्नेन विधिना विधिकोविदः । नदीजलं रूक्षमुष्णमुदमन्थं तथाऽऽतपम् । व्यायामञ्च दिवास्वप्नं व्यवायञ्चात्र वर्ज्जयेत् । यवषष्टिकगोधूमान् शालींश्चाप्यनवांस्तथा । हर्म्यमध्ये निवाते च भजेच्छय्यां मृदूत्तराम् । सविषप्राणिविण्मूत्रलालानिष्ठीवनादिभिः । समाप्लुतं तदा तोयमान्तरीक्षं विषोपमम् । वायुना विषदुष्टेन प्रावृष्येव च दूषितम् । तद्धि सर्वोपयोगेषु तस्मिन्काले विवर्जयेत् । निरूहैर्वस्तिभिश्चान्यैस्तथान्यैर्मारुतापहैः । कुपितं शमयेद्वायुं वार्षिकं वा चरेद्विधिम् । ऋतावृतौ य एतेन विधिना वर्त्तते नरः । घोरानृतुकृतान् रोगान्नाप्नोति स कदाचन" प्रावृट्से०

**ऋतुस्तोम** पु० एकाहसाध्ये यागभेदे "नाकसद ऋतुस्तोमादिकस्तोमाश्चाभिप्लवाहानि" आश्व० श्रौ० ६,८,२६ । "ऋतुस्तोमनामानश्च षडेकाहाः" नारा० ।

**ऋतुस्थला** स्त्री अप्सरोभेदे "ऋतुस्थला घृताची च विश्वाची पूर्व्वचित्त्यपि" भा० आ० १२२ अ० अप्सरोभेदकथने ।

**ऋतुस्नाता** स्त्री ऋतौ ऋतुकाले विहितदिने (चतुर्थदिवसे) स्नाता । ऋतुकाले चतुर्थदिवसे शुद्ध्यर्थं कृतस्नानायां स्त्रियाम् । "ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति" मिता० स्मृतिः धर्म्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन्" रघुः । "पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना । तादृशं जनयेत् पुत्रं भर्त्तारं दर्शयेदतः" सुश्रुतः । अधिकमुक्तमार्त्तवशब्दे ऋतुमतीशब्दे च । दारविशेषणत्वे पुंस्त्वम् "यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति" मिता०स्मृतिः ।

**ऋतुस्नान** न० ऋतौ शुद्ध्यर्थं स्नानम् । रजस्वलायाश्चतुर्थदिनकर्त्तव्ये स्नाने तस्या आचार्य्याः स्नानप्रकारश्चार्त्तवशब्दे ८०८पृ० उक्तः ।

**ऋतुहरितकी** स्त्री ऋतुभेदे द्रव्यभेदेन सेव्या हरितकी । वर्षादिषु ऋतुषु क्रमेण सैन्धवशर्कराशुण्ठीजीरकमधुगुडैर्मिश्रणेन सेव्यायां हरीतक्याम् । "सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् । वर्षादिष्वभया प्राश्या रसायनगुणैषिणा" भावप्र० ।

**ऋते** अव्य० ऋत (सौत्रः) के । १वर्ज्जने २विनार्थे च । "अवेहि मां प्रीतमृते तुरङ्गमात्" रघुः "क ईशादृते निषिक्तस्य नीललोहितरेतसः" कुमा० । "शक्तोऽन्यः सहितं वेगमृते देवं पिनाकिनम्" भा०व० ३९ अ० । "नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते" मनुः "अभ्यङ्को हरेत्सर्वं दुहितॄणां सुतादृते" या० । एतच्छब्दस्य विनार्थत्वात्

तद्योगे पञ्चमी द्वितीया तृतीया च भवति उक्तोदाहरणेषु पञ्चमी द्वितीयादृष्टव्या। तृतीयाया उदाहरणं मृग्यम्।

**ऋतेकर्म्म** अव्य० वेदे बा०वर्ज्जने अव्ययी० अच्समा०। कर्म विनेत्यर्थे। "ये कर्म्मणः क्रियमाणस्य मह्न ऋतेकर्म्म-मुदाजायन्त देवाः" ऋ० १०,५५,६०।

**ऋतेजा** त्रि०ऋते यज्ञनिमित्तं जायते जन-विट् अलुक्-स०। यज्ञनिमित्तजाते। "अग्ने स क्षेषदृतपा ऋतेजाः" ऋ० ६,३,१। "ऋतेजा यज्ञनिमित्तं जातः" भा०।

**ऋतेयु** पु० वरुणस्य ऋत्विजि १ऋषिभेदे। "दृढेयुश्च ऋतेयुश्च परिव्याधश्च कीर्त्तिमान्। एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः। अत्रेः पुत्रश्च धर्म्मात्मा ऋषिः सारस्वतस्तथा। वरुणस्यर्त्विजः सप्त पश्चिमां दिशमाश्रिताः" भा० आनु० १५० अ०। २पौरवे नृपभेदे। "पूरोर्वंशं प्रवक्ष्यामि" इत्युपक्रम्य। "संयाचितस्त्वहंयातीरौद्राश्वस्तत्सुतः स्मृतः। ऋतेयुस्तस्य कक्षेयुः स्थण्डिलेयुः कृतेयवः। जलेयुः सन्नतेयुश्च धर्म्मसत्यव्रतेयवः। दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः। घृताच्या इन्द्रियाणीव मुख्यस्य जगदात्मनः। ऋतेयोरन्तिनावोऽभूत्" भाग०९।२०,२।

**ऋतेरक्षस्** पु० ऋते उद्देश्यतया वर्ज्जितं रक्षो यतः। यज्ञे "ऋतेरक्षा वै यज्ञः" ऐत०ब्रा०। यज्ञस्य रक्षोभ्यो रक्षणीयत्वात् तथात्वम्।

**ऋतोद्य** न० ऋत+वद्-भावे क्यप्। सत्यकथने "ऋतं वदन्ता ऋतोद्येषु" अथ० १४,१,३१।

**ऋत्विज्** पु०ऋतु+यज्-किन् उ०प०। १याजके, "अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्। यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते" इति मनूक्ते २स्वानुष्ठेयवैदिककर्मकरे। ऋत्विजश्च षोडश तत्र मुख्याश्चत्वारः तेषां प्रत्येकं सहकारिणस्त्रयस्त्रय इति षोडश। विवृतिरध्वाशाकमञ्ज्के ८५पृ०दृश्या। "अयर्त्विजो वा कांश्चिदाशिषमाशासते सा यजमानस्यैवेति श्रुतेः "ऋत्विग्वादे नियुक्तौ च समौ संपरिकीर्त्तितौ। यज्ञे स्वाम्याप्नुयात् पुण्यं हानिं वादेऽथवा जयम्" इति वृहस्पत्युक्तेश्च ऋत्विक्कृतयज्ञफलं वेतनदक्षिणादिना वरयितुरेव। "श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजः स्वयम्" या०। "तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः। कर्त्तृता तदुपलम्भतोऽभवद् वृत्तिभाजि करणे यथर्त्विजि" मा०। ऋत्विजः कर्म ष्यञ्। आर्त्विज्य ऋत्विक्कर्मणि आर्त्विज्यमस्य उदा० ऋत्विक्कर्मार्हति खञ्। आर्त्विजीन ऋत्विक्कर्मार्हे "दाक्षिण्यदिष्ट आर्त्विजीनैः" भट्टिः।

**ऋत्विय** त्रि०ऋतुरस्य प्राप्तः तत्र भवं तत्रानुष्ठेयं वा वेदे घस् छित्वात् भत्वाभावेन न गुणः। १प्राप्तर्तुकाले २काल-भवे ३ऋतुकालानुष्ठेये च "अयं वो गर्भ ऋत्वियः प्रजां सधस्थमासदत्" यजु० ११,४८। "इमे ह गर्भमृत्वियं यतोजातः प्रजापतिः" २३,६२। ऋत्वियावान् लोके तु यत्। ऋतव्य इत्येव तेष्वर्थेषु त्रि०।

**ऋत्वियावत्** त्रि०ऋत्वियमृतुकालभवं प्रजोत्पादनकर्म्म तत्रानुष्ठेयकर्म वाऽस्त्यस्य मतुप् मस्य वः दीर्घः। १प्रजोत्पादनकर्मयुक्ते २तत्रानुष्ठेयकर्मयुक्ते च। "स्तुतं न ऋत्वियावतः" ऋ०८,८,१० स्त्रियां ङीप्। "इयं स ऋत्वियावती धीतिरेति नवीयसी" ऋ० ८,१२,१०। "ऋतौ वसन्तादिकालेऽनुष्ठेयं यज्ञकर्म ऋत्वियं तद्वती" भा०।

**ऋत्व्य** त्रि० ऋतुरस्य प्राप्तः तत्र भवं तत्रानुष्ठेयं वा कर्म यत् संज्ञापूर्वकविधेरनित्यत्वात् न गुणः अजवत्। ऋत्वियश-ब्दार्थे "अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम्" ऋ० १०,१८३,२।

**ऋदूदर** त्रि० ऋदु उदरं यस्य वेदे पृ० सलोपः। ऋदूदरे निरु०। "ऋदूदरः सुहवो मा नो अस्यै" ऋ०२,३३,५, ऋदूदरेण सख्या सचेय" ऋ० ८,४८,१०।

**ऋदूपा** त्रि०पृषो०। १अर्द्दनपातिनि २गमनपातिनि ३दूरपातिनि निरु०। "उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिद्दूवृधा" ऋ० ८,७७,११। इमामेवर्चमधिकृत्य यास्केन तथार्थतया निर्वचनं कृतम्।

**ऋदूवृध** पु० पृषो०। १मर्मण्यर्द्दनवेधिनि २गमनवेधिनि ३म-ध्यवेधिनि ४दूरवेधिनि च निरु०। ऋदूपाशब्दे उदा०। तामेवर्चमधिकृत्य यास्केन तथार्थतया निरुक्तम्।

**ऋद्ध** न० ऋध-क्त। १पकमर्दितधान्ये २सिद्धान्ते ३वृद्धौ च। ४समृद्धे ५सम्पन्ने त्रि "इममृद्धवती इयाऽवनी" नैष०। "अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम्" गीता "धर्मज्ञानवैराग्यादिभिः सम्पन्ने प्रपञ्चरूपेण विवर्त्तमाने च ६विष्णौ पु०। "ऋद्धः स्पष्टाक्षरो मन्त्रः" विष्णुस० धर्मादिभिरुपेतत्वात् ऋद्धः" भा०। "महर्द्धिरृद्धो वृद्धात्मा" विष्णुस०। "प्रपञ्चरूपेण वर्द्धमान ऋद्धः" भा०

**ऋद्धि** स्त्री ऋध-भावे क्तिन्। १वृद्धौ २सम्पत्तौ ३सिद्धौ च। "परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना" कुमा०। "ऋद्ध्या भवान् ज्योतिरिव प्रकाशते" भा० व० १११। कर्त्तरि क्तिच्। ४पार्वत्यां शब्दरत्ना०। ५लक्ष्म्यां

६देवभेदे । करणे क्तिन् । ७ओषधिभेदे स्त्री राजनि० । तल्लक्षणं यथा । "ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवतः कोशयामले । श्वेतलोमान्वितः कन्दो लताजातः सरन्ध्रकः । स एव ऋद्धिर्वृद्धिश्च भेदमप्येतयोर्ब्रुवे । तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफला च सा । वृद्धिस्तु दक्षिणावर्त्तफला प्रोक्ता महर्षिभिः । "ऋद्धिर्बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरुः । प्राणैश्वर्य्यकरी मूर्च्छा रक्तपित्तविनाशिनी" भावप्र० । "काकोली क्षीरकाकोली जीवकर्षभकावुभौ । मेदा महामेदा ऋद्धिर्वृद्धिर्मधूलिका । निरूहेषु यथालाभमेव वर्गो विधीयते" सुश्रु० । तयोरलाभे वर्गमध्ये वाराही देया ऋषभशब्दे प्रमाणम् । ८कुबेरपत्न्याञ्च । "ददौ तत्र निबध्याथ कश्यपं प्रददौ शुभा । अदितिर्मम पुत्रार्थं सौभाग्यार्थं तथैव च । नियुक्तेश्च मया शक्रः कश्यपस्तु तपोधनः । इन्द्रोदत्तस्तथेन्द्राण्या सौभाग्यार्थं ततो मम ! सोमश्चाथ रोहिण्या ऋद्ध्या च धनदस्तथा । एवं सौभाग्यदोहत्वः पारिजातो न संशयः" हरिवं० १२६ । "ऋद्धिः कुबेरकान्ता च जलेश महिषी तथा" हरिवं० १३६अ० । "सावित्री ब्रह्मणः साध्वी कौशिकस्य शची सती । मार्कण्डेयस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य च" भा० अनु० १४६ अ० । "शक्रः शचीपतिर्देवो यमो धूमोर्णया सह । वरुणः सह गौर्य्या च सहर्द्ध्या च धनेश्वरः" हरि० १५अ० । साऽस्यास्ति मतुप् । ऋद्धिमत् ऋद्धियुक्ते त्रि० स्त्रियां ङीप् । "तमृद्धिमद्बन्धुजनाधिरूढैः" कुमा० । "धाराम्बेष्वात पञ्चर्द्धिमन्तः" रघुः तन्त्रोक्ते ६ लकारे । "अथाभिधास्ये त्वरितां त्वरितं फलदायिनीम् । "तारो रमा वर्म्मबीजमृद्धिरीशस्वरान्विता" ऋद्धिः लकारः" तन्त्रसारः ।

ऋध वृद्धौ दिवा० स्वा० च पर० अक० सेट् उदित् इरित् च । दि० ऋध्यति ऋध्यात् ऋध्यतु आर्ध्यत् स्वा० ऋध्नोति ऋध्नुवन्ति ऋध्नुयात् ऋध्नोतु ऋध्नुहि आर्ध्नोत् । उभयतः । आर्धत्–आर्द्धीत् । आनर्द्ध आनृधतुः । अर्द्धिता ऋध्यात् अर्द्धिष्यति आर्द्धिष्यत् । अर्द्धितव्यः अर्द्धनीयः । ऋध्यः । ऋद्धः ऋद्धिः । ऋध्यन् ऋध्नुवन् अर्द्धः । उदित्त्वात् वेट् अर्द्धित्वा-ऋद्ध्वा । सकध्य\ "नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्द्धते" मनुः "सपत्नानृध्यतो दृष्ट्वा हीनमात्मानमेव च । सोऽहं न स्त्री नचाप्यस्त्री न पुमान् नापुमानपि" भा० स० ४६अ० । "पृथिव्यामग्ने समनमन्त् स आर्ध्नोत्" अथ० ४,३९,१ । वे भवन्तो न सदृध्याब्धुः" २,२५,८ । आत्मनेपदित्वमपि "ते च लोमश ! लोकेऽस्मिन्नृध्यन्ते केन हेतुना" भा० व० ९४ । वेदे गणव्यत्यासात् श्नम् । "य एषां भृत्यानृणधत् स जीवात्" ऋ० १,८४,१६ । मन्मानि धीतिरुत यज्ञमृन्धन्" १०,११०,२ । अन्तर्भूतण्यर्थत्वात् सक० । णिचि अर्द्धयति वे "त्वां यज्ञैश्चिये अर्द्धयन्ति" ऋ० ७,८२,४ । सनि वेट् अर्दिधिषति ईर्त्सति । वेदे गणव्यत्यासात् श तेन । "इन्धानास्त्वा शतं हिमा ऋधेम" अथ० १९,५५,४ । ऋधच्छब्दे उदा० । "ऋधद्यस्ते धिया मर्त्तः शशमते" ऋ० ६,२,४ । स्वा० तर्पणे वर्द्धने च सक० । "आ-ऋध्नोति हविष्कृतिम्" ऋ० १,१८,८ । "अन्तत एव तद्देवानृभ्नुवन्ति" ऐ० ब्रा० । "सोऽहं प्रागभवत्तव सुतजननीमृध्नोमि" भवभूतिः ।

अधि+अधिकवृद्धौ । "यदस्मिन्द सर्वमध्यार्ध्नोत्तेनाध्वर्युः" इति शत० ब्रा० १४,६,१० ।

आ+समृद्धौ । "ऋणाल्लोनर्धमेत् समानो यमस्य लोकेऽधिरज्जुरायत्" अथ० ६, ११८,२ । ताच्छील्ये चानश् ।

उप+उपगमे । "तस्मादेतत् क्षत्रिय एव नक्षत्रमुपेर्त्सेज्जिघांसतीव" शत० ब्रा० २,१,२,१७ । "उपेर्त्सेत् स्त्रोकुर्य्यात्" भा० । "एतेषामेव संवत्सरमुपेर्त्सेत्" २,२,२,१४ ।

वि+ऋद्धिविगमे विगतायां वृद्धौ "अथ यस्मान्न कृत्तिकास्वादधीतर्क्षाणां वा एता अग्रे पत्नय आसुः सप्तर्षीन्तु ह स्म वै पुरर्क्षा इत्याचक्षते ता मिथुनेन व्यार्द्धन्तामी ह्युत्तराहि सप्तर्षय उद्यन्ति पुर एता अशर्मिव वै तद्यो मिथुनेन व्यृद्धः स नेन्मिथुनेन व्यृद्ध्या" इति शत० ब्रा० २,१,२,४ । "व्यार्द्धन्त विगतर्द्धिका अभवन्" भा० । गणव्य० साधुः । "यद्यग्निमुखे यज्ञमुखे जुहुयात् पशुभिर्व्यृध्येत पापीयान्स्यात्" १२,१,२,८ । "अव्ययं विभक्तीत्यादि" पा० स्वत्वे विगता ऋद्धिः व्यृद्धिः" सि० कौ० ।

सम्+ऋद्धेराधिक्ये अतिशयितवृद्धौ । "अव्ययं विभक्तीत्यादि" पा० "ऋद्धेराधिक्यं समृद्धिः" सि० कौ० । "कः क्षिपेत् तान् समृध्नुयात्" मनुः । "शत्रुपक्षं समृध्यन्तं यो मोहात् समुपेक्षते" भा० व० ५४ अ० "अयं कामः समृध्यताम्" यजु० २६,२ । पदव्यत्यासः ।

ऋधज्(क्) अव्य० ऋध-वा० अजि(कि)क् स्वरा० । १सत्ये, २वियोगे, ३शैघ्र्ये, ४सामीप्ये, ५लाघवे, च मेदिन० । वियोगः पृथक्करणम् । "ऋधगद्वेषः कृणुत" ऋ० ८,१८,११ । "ऋधक् पृथक् कृणुत कुरुत" भा० । "वहि-

न्द्रो दिवि पर्य्यो यदृधक्" ऋ० ६,४०,५। "ऋधक् सा वो मरुतः" ७,६७,४। "ऋधगदेवा इह यजा चिकित्वः" ३,२५,१। "ऋधगित्था स मर्त्यः" ऋ० ८,१०१,१। "ऋधक् सत्यम्" भा०। "ऋधगयतो अनिमिषं रक्ष-माणाः" ६१,२। "ऋधगयतः सत्येन गच्छतः" भा०। कर्त्तरि अजिक्। ६समृद्धे, ७वृद्धे च त्रि०। "ऋधगया ऋधगुताशमिष्ठाः" यजु०८,२०। "ऋधक् समृद्धमयाः" "ऋधक् यत्तं समर्द्धयन्"वेददी०। "ऋधक् सोम! स्वस्तये" ऋ०९, ६४,३०। "ऋधक् ऋधूवन् तथा च"यास्क० "ऋधगिति पृथग्भावस्यानुप्रवचनम् भवति अथाप्यृध्नोत्यर्थे दृश्यते" भा०। "ऋधगुध्रेम कविनेषितासः" ऋ० ६, ५९,१०। "ऋधक् समृद्धं यथा तथा ऋध्येम" भा०।

**ऋधत्** त्रि० ऋध० शतृ वेदे गणव्यत्यासः। वर्द्धमाने। "द्व श्यावा ऋधद्रयोवीतवारास आशवः" ऋ०८,४६,२३। "ऋधद्रयोऽद्धवेगाः" भा०। रयशब्दो वेगवाची जसः स्थाने प्रथमा। "शमाभिक्षधद्वारायाग्नये ददाश" ६,२, २। "ऋधद्वाराय ऋधत् समृद्धं वारं वरणीयं धनं यस्य" भा०।

**ऋन्फ(म्फ)** हिंसायां तुदा० मुचा० सक० पर० सेट्। ऋम्फति आर्म्फीत्—आर्फीत् ऋम्फाम्-बभूव आस चकार आनर्फ

**ऋफ** दाने हिंसायां निन्दायां युद्धे च सक० स्लाघायाम् अक० तुदा० पर० सेट्। ऋफति आर्फीत्। कविकल्पद्रुमे ऋफधातुस्तदर्थे पा० मते रिफधातुरेवैष्वर्थेषु ऋफधातुस्तु हिंसायामिति भेदः। आनर्फ आनृफतुः।

**ऋबीस** न० ऋ+वर्जने भास-अच् पृ०। १पृथिव्यां निरु० तत्स्थे २अग्नौ च। "हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्ज्जमस्मा अधत्तम्। "ऋबीसे अत्रिमश्विनावनीतमुन्निन्यतुः सर्वगणं स्वस्ति" ऋ० १,११६,८। इमामृचमधिकृत्य यास्केन ऋबीसमपगतभासमन्तर्हितभासं गतभासम् वा इति निरुच्योक्तम् "योऽयं ऋबीसे पृथिव्यामग्निरन्तरौषधिवनस्पतिष्वप्सु तमु न्निन्यतुः" "युवमृबीसमुत तप्तमत्रये" ऋ० १०,३९,९। "तप्तमृबीसमग्निकुण्डम्" भा०। "अत्रिर्यद्वामवरोहन्नृबीसम्" ऋ० ५,७८,४। "ऋबीसं तुषाग्निम्" भा०। "अनृतातिथ्यपनोदपूतिदार्वाधानबीसपकनाव्युदकानि वर्ज्जयेत्" कात्या० ४,१०१,५। "ऋबीसशब्दः पृथिवीवाची "योऽयमृबीसे पृथिव्यामिति" यास्कोक्तेः ऋबीसे यत् पक्वं तिन्दुकादि" कर्कः।

**ऋभु** पु० अरि स्वर्गे अदितौ वा भवति ऋ+भू-डु। १देवे। तेन ऋभुशब्दस्य स्वर्गवाचित्वं द्रष्टव्यं तच्च प्रमादात् पूर्वमनुक्तमिति तस्य च स्वर्गे पुंस्त्वम् बोध्यम्। "शमीभिर्नाक ऋभवः समस्वरन्" ऋ०८,३,७। "तं नेमिमृभवो यथा" ऋ०७५,५। २मेधाविनि निरु०। "अग्नये ब्रह्म ऋभवस्ततक्षुः" ऋ० १०,८०,७। "ऋषिर्विप्रः पुर एता जनानामृभुर्धीर उशना काव्येन" ऋ०९,८७,३। ३देवानामपि यष्टव्ये देवे। "ऋभवोनाम तत्रान्ये देवानामपि देवताः। तेषां लोकाः परतरे यान् यजन्तीह देवताः" भा० व० १५४५९। चाक्षुषमन्वन्तरीये ४देवगणभेदे च। "चाक्षुषस्यान्तरे तात! मनोर्देवानिमान् शृणु। आप्याः प्रभूताः ऋभवः पृथुकाश्च दिवौकसः। लेखानाम महाराज! पञ्च देवगणाः स्मृताः" हरिवं०७। त्रैवर्णिकहीने ५जातिभेदे "ऋभूणां त्वेति रथकृतः" कात्या० ४,९,५, "ऋभुः सौधन्वन सात्वतापरपर्यायस्त्रैवर्णिकेभ्यो हीनो नियतः कश्चिज्जातिविशेषः इति पार्थसारथिमिश्राः" कर्कः। तृतीयवर्णीये सुधन्वनः पुत्ररूपे ६देवभेदे च। "इहोपयात शवसो नपातः सौधन्वना ऋभवो माप भूत" ऋ० ४,३५,१, एतत्सूक्ते च नवर्चैस्तस्यैव गुणादिवर्णनम्। ऋ+भा-डु। ७उरुभासमाने त्रि० "ऋभुमृभुक्षणो रयिम्"। ऋ०४, ३७,५, "ऋभुमुरुभासमानम्" भा० ऋभुरस्यस्य उ-इस्यतया मतुप्। ऋभुमत् ऋभुदेवताके त्रि०। "ऋभुमन्तं वाजवन्तं त्वा कवे"! ऋ०२,५२,६। ऋभुणा दृष्टं साम अण्। आर्भव तदृष्टे सामभेदे आर्भवशब्दे उदा०। क्विप्। ऋभूरपि देवे पु०।

**ऋभुक्ष** पु० ऋभवो देवाः क्षियन्ति वसन्त्यत्र क्षि+आधारे बा० ड। १स्वर्गे २वज्रे ३इन्द्रे च रायमुकुटः। ऋभुनाम्ना-क्षीयते गम्यते कर्म्मणि बा० ड। ऋभुनामके देवे "उप नो-वाजा अध्वरमृभुक्षाः" ऋ० ४,३७,१, "ऋभुक्षा ऋभवः" भा०

**ऋभुक्षन्** पु० ऋभुनाम्ना क्षायते क्षै-क्षये धातूनामनेकार्थत्वात् ख्यातौ कर्म्मणि कनिन्। ऋभुनामख्याते देवभेदे "सोमो-वाजा ऋभुक्षणो ददे वः। "ऋभुमृभुक्षणो रयिम्" ऋ० ४,३७,३,५।

**ऋभुक्षिन्** पु० ऋभुक्षः वज्रं स्वर्गोवाऽस्यास्ति इनि। इन्द्रे स्वादौ ऋभुक्षा ऋभुक्षाणौ शसाद्यजादौ टिलोपः ऋभुक्ष इत्यादि "इन्द्रो विश्वां ऋभुक्षा वाजो अर्य्यः" ऋ०७,४८,३, "ऋभुक्षेवाचरति ऋभुक्षिन्+आचारे क्विप् अनुनासिकदीर्घः ऋभुक्षीयति। ततः क्विप् ऋभुक्षीन्, तद्वदाचारान्विते त्रि०।

**ऋभ्व** त्रि० उरुभूतः पृषो०। महति उरुभूते निरु०। "स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम्" ऋ०१०,१२०,६, अस्या ऋचः यास्केन "स्तोतव्यं बहुरूपमुरुभूतमीश्वरतममाप्तव्यमाप्तव्यानामिति" क्रमेण पदानि निरुक्तानि। ऋभ्वः उरुभूत इवाचरति ऋभ्व+आचारे क्विप् ततो वा० अतु। ऋभ्वत् उरुभूते महति। "पुरुहूतोयः पुरुगूर्त्त ऋभ्वा एकः पुरुप्रशस्तः" ऋ० ६,३४,२, "ऋभ्वान् महान्" भा० अत्वन्तत्वान्नान्त्यलोपः। कनिन्। ऋभ्वन् तत्रार्थे "जुषद्व्या मनुषस्योर्द्ध्वसात्ऋभ्वा यज्ञे" ऋ० १०,२०,५ वा०असच्। ऋभ्वस अतिदृढे। "सत्यशवसमृभ्वसम्" ऋ०५,५२,८, "ऋभ्वसम् अतिप्रवृद्धमिति" भा० "इन्द्रं न यज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टम्" ऋ०८,७०,२,

**ऋश** हिंसायां गतौ च सौ०पर०सक०सेट्। ऋशति आर्शीत् आनर्श आनृशतुः आर्शः। ऋश्यः।

**ऋश्य** त्रि०ऋश-कर्मणि क्यप्। १हिंस्ये २मृगे पुंस्त्री शब्दरत्ना०। स्त्रियां जातित्वेऽपि योपधत्वात् टाप्। "ऋश्यो न तृष्यन्नवपानमा गहि" ऋ०८,४,१०, "ऋश्य ऋश्याख्योमृग इव तृष्यन्" भा० "वसुभ्य ऋश्यानालभेत" यजु०२४,२७, "ऋश्यो मयूरः सुपर्णस्ते गन्धर्वाणाम्" यजु० २४, २७, ततः चतुरर्थ्याम् ऋश्या० क। ऋश्यक तत्सन्निकृष्टदेशादौ। भावे क्यप्। २हिंसायां न०। ऋश्यं हिंसां पतनेन ददाति दा—क। ऋश्यद कूपे पु० "युवं बन्दनमृश्यदादुदूपथुः" ऋ० १०,३९,८। "ऋश्यदात् कूपात्" भा०।

**ऋश्यपाद्** त्रि० ऋश्यस्येव पादावस्य अन्त्यलोपः समा०। ऋश्यपादयुक्ते स्त्रियां ङीप् पद्भावश्च। "ऋश्यपदीं वृषदतीं गोषेधां विधमामुत" अथ० १,१८४।

**ऋश्यादि** पु०पाणिन्युक्ते चतुरर्थ्यां कप्रत्ययनिमित्ते शब्दगणे स च गणः। "ऋश्य, न्यग्रोध, शर, निलीन, निवास, निवात, निधान, निबन्ध, विबद्ध, परिगूढ, उपगूढ, अश्मनि, सित, मत वेश्मन्, उत्तराश्मन्, अश्मन्, स्थूल, बाहु, खदिर, शर्करा, अनडुह्, अरडु, परिवंश, वेणु, वीरण, खण्ड, दण्ड, परिवृत्त, कर्दम, अंशु"।

**ऋष** गतौ वधे च तुदा०पर०सक०सेट्। ऋषति आर्षीत्। आनर्ष आनृषतुः अर्षिता ऋष्यात् अर्षिष्यति आर्षिष्यत्। अर्षितव्यः अर्षणीयः ऋष्यः। अर्षिता ईदित् ऋष्टः ऋष्टवान् ऋष्टिः। "ऋष्टाभ्यां रच ऋषत्यवतिम्" अथ०६, ४,१७। अथ दक्षिणायुग्यमुपार्षति" शत० ब्रा० ५, ४,२,८। "हृदं न हित्वान्वृषन्त्यूर्मयः" ऋ०१,५२,७। "यदुदर्यस्य मेदस परिशिष्यते तद्गुदे न्यृषेत्" शत० ब्रा०२,८,४,५। "अथ पशूर्षति" इत्युपक्रम्य "समं भूमि पर्यर्षणं करोति" २,६,१,१८। अस्य वेदे भ्वादित्वमपि दृश्यते। गणव्यत्ययात् साधुः। "अर्षन्त्यापस्त्वयेह प्रसूताः" ऋ० ३,३०९। "ऋषो गतौ व्यत्ययेन शप्" भा० "तस्मा आपोघृतमर्षन्ति सिन्धवः" १,१२५,५। "सद्गो न धारा त्यश्वो अर्षति" ९,८६,४४। "एता अर्षन्त्यललाभवन्ती" ४,१८,६। "एता अर्षन्ति हृद्यात् समुद्रात्" ४,५८,५। "शशमास्कन्दमर्षति" यजु० २३,५५।

अभि+आभिमुख्येन गतौ "अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु" ऋ०४,५८,१०। "क्रन्दन्ति वह्नयो गवे अभ्यर्षन्ति सुष्टुतिम्" ९,६२,२।

नि+परि+सम्+इत्यादौ गत्यर्थधातोरिवार्थे। "गुहाकरिन्द्रं याता वीर्येण न्यृष्टम्" ऋ०४,१८,०। "न्यृष्टं नितरां प्राप्तम्" भा०। "अयं निधिः सरमे अद्रिबुध्नोगोभिरश्वेभिर्वसुभिर्न्यृष्टः" १०,१०८,७।

**ऋषङ्गु** पु० यदुवंश्ये राजभेदे। "यदुस्तस्मान्महासत्त्वः क्रोष्टा तस्माद्भविष्यति" इत्युपक्रम्य "वृजिनीवतस्तु भविता ऋषङ्गुरपराजितः। ऋषङ्गोर्भविता पुत्रस्ततश्चित्ररथस्तथा" भा० अनु० १४७ अ।

**ऋषभ** पु० ऋष—अभक्। १ओषधिभेदे ओषधिभेदस्य द्रव्यगणान्तर्गतः। स च सुश्रु०दर्शितः यथा "अथातो द्रव्यसंग्रहणीयमध्यायं व्याख्यास्यामः। समासेन सप्तत्रिंशद्द्रव्यगणा भवन्ति। तद्यथा विदारिगन्धा विदारी सहदेवा विश्वदेवाश्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा वृहत्यौ पुनर्णवैरण्डो हंसपादी वृश्चिकाल्यृषभी चेति"। तल्लक्षणाद्युक्तं भावप्र० "ऋषभातिविषा कृष्णा काञ्चनासाच चामरैः। जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ। रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ। जीवकः कूर्चकाकार ऋषभो वृषशृङ्गवत्। जीवकोमधुरः शृङ्गी ह्रस्वाङ्गः कूर्चशीर्षकः। ऋषभो वृषभोवीरो विषाणी ब्राह्म इत्यपि। जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ। मधुरौ पित्तदाहघ्नौ कासवातक्षयापहौ"। अयञ्चाष्टवर्गान्तर्गतः। जीवकर्षभकौ मेदे काकोल्यौ ऋद्धिवृद्धिके। अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः" भावप्र०। "राज्ञामष्टवर्गस्तु यतोऽयमतिदुर्लभः। तस्मादस्य प्रतिनिधिं गृह्णीयात्तद्गुणं

भिषक्। मेदा जीवककाकोली ऋद्धिर्वृद्धिस्तथा ऽसती। वरीविदार्य्यश्वगन्धावाराहीस्तु क्रमात् क्षिपेत्” भावप्र०। २मुनिभेदे च। ऋषभकूटशब्दे मुनिभेदो दृश्यः। वर्षति रेतः वृष–अभक् पृ०वलोपः। ३वृषभे “ते ते भवन्तूक्षण ऋषभासो वशा उत” ऋ० ६,१६,४७। ऋषभासो रेतोवर्षकावृषभाः” भा०। “उप ऋषभस्य रेतस्युपेन्द्र! तव वीर्य्ये”२८,८ “ततो नियुक्ताः पशवो यथा शास्त्रं मनीषिभिः। तं तं देवं समुद्दिश्य पक्षिणश्च यथाविधि ऋषभाः शास्त्रपठितास्तथा जलचराश्च ये” सर्वांस्तानभ्ययुञ्जंस्ते तत्राग्निचयकर्मणि” भा० आश्व०८८। अश्वमेधस्य वृषभादयश्च सलक्षणा अश्वमेधशब्दे दर्शिताः अस्य व्याघ्रादिषु पाठात् उपमितसमासः। नरःऋषभ इव वाक्ये नरर्षभः एवं राजर्षभः पुरुषर्षभ इत्यादि। सर्वत्र प्राशस्त्यं तेन द्योत्यते। “स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः” अमरोक्तेः। क्वचिद्वाक्येऽपि श्रेष्ठत्वं द्योत्यते। “सात्वतामृषभं सर्वे भूतावासममंसत” भाग० ३०२,१०। “स्वलक्षणा प्रादुरभूत् किलास्यतः स मे ऋषीणामृषभः प्रसीदतु” भाग० २,४,२२। गोलक्षणान्तर्गतवृषभलक्षणमुक्तं वृहसं० “सास्राविलरूक्षाक्ष्यो मूषकनयनाश्च न शुभदा गावः। प्रचलच्चिपिटविषाणाः करटाः खरसदृशवर्णाः। दशसप्तचतुर्दन्त्यः प्रलम्बमुण्डानना विनतपृष्ठाः। ह्रस्वस्थूलग्रीवा यवमध्या दारितखुराश्च। श्यावातिदीर्घजिह्वा गुल्फैरतितनुभिरतिवृहद्भिर्वा। अतिककुदाः कृशदेहा नेष्टा हीनाधिकाङ्ग्यश्च। वृषभोऽप्येवं स्थूलातिलम्बवृषणः सिराततक्रोडः। स्थूलासिराचितगण्डस्त्रिस्थानं मेहते यश्च। मार्जाराक्षः कपिलः करटो वा न शुभदो द्विजस्येष्टः। कृष्णौष्ठतालुजिह्वः श्वसनो यूथस्य घातकरः। स्थूलशकृन्मणिशृङ्गः सितोदरः कृष्णसारवर्णश्च। गृहजातोऽपि त्याज्यो यूथविनाशावहो वृषभः। श्यामकपुष्पचिताङ्गो भस्मारुणसन्निभो विडालाक्षः। विप्राणामपि न शुभं करोति वृषभः परिगृहीतः। ये चोद्धरन्ति पादान् पङ्कादिव योजिताः कृशग्रीवाः। कातरनयना हीनाश्च पृष्ठतस्ते न भारसहाः। मृदुसंहतताम्रोष्ठास्तनुस्फिचस्ताम्रतालुजिह्वाश्च। तनुह्रस्वोच्चश्रवणाः सुकुक्षयः स्पृष्टजङ्घाश्च। आताम्रसंहतखुरा व्यूढोरस्का वृहत्ककुदयुक्ताः। स्निग्धश्लक्ष्णतनुत्वग्रोमाणस्ताम्रतनुशृङ्गाः। तनुभूस्पृग्बालधयो रक्तान्तविलोचना महोच्छ्वासाः। सिंहस्कन्धास्तन्वल्पकम्बलाः पूजिताः सुगताः। वामावर्त्तैर्वामे दक्षिणपार्श्वे च दक्षिणावर्त्तैः। शुभदा भवन्त्यनडुहो जङ्घाभिश्चैणकनिभाभिः। वैदूर्य्यमल्लिकाबुद्बुदेक्षणाः स्थूलनेत्रवर्त्माणः। पार्ष्णिभिरस्फुटिताभिः शस्ताः सर्वेऽपि भारवहाः। घ्राणोद्देशे सवलिर्मार्जारमुखः सितश्च दक्षिणतः। कमलोत्पललाक्षाभः सुबालधिर्वाजितुल्यजवः। लम्बैर्वृषणैर्मेषोदरश्च सङ्क्षिप्तवङ्क्षणक्रोडः। ज्ञेयो भाराध्वसहो जवेऽश्वतुल्यश्च शस्तफलः। सितवर्णः पिङ्गाक्षस्ताम्रविषाणेक्षणो महावक्त्रः। हंसो नाम शुभफलो यूथस्य विवर्धनः प्रोक्तः। भूस्पृग्बालधिराताम्रवङ्क्षणो रक्तदृक् ककुद्मी च। कल्माषश्च स्वामिनमचिरात् कुरुते पतिं लक्ष्म्याः। यो वा सितैकचरणो यथेष्टवर्णश्च सोऽपि शस्तफलः। मिश्रफलोऽपि ग्राह्यो यदि नैकान्तप्रशस्तोऽस्ति”। “ऋषभाख्यमेतदुदितं सजसाः सयौ चेत्” इत्युक्ते ४छन्दोभेदे ५कर्णच्छिद्रे ६कुम्भीरपुच्छे मेदि० ७पर्वतभेदे धरणी। ८वराहपुच्छे ९जिनभेदे च हेम०“नाभिमूलात् यदा वर्णं उत्थितः कुरुते ध्वनिम्। वृषभस्येव निर्वाति हेलया ऋषभः स्मृतः” इति सङ्गीतदा० उक्ते १०स्वरभेदे। “निषधर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः” अमरः। ११भगवदवतारभेदे स च नाभेर्मेरुदेव्यामजनि भाग० ५।६ अ०।“नाभिरपत्यकामो मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्माऽयजत्” इत्युपक्रम्य “तपःप्रसन्नो भगवांस्तयोः पुत्रतयावतीर्णः इत्युक्तं तत्रैव। यथा “भवद्भिरवितथगीर्भिर्वरमसुमभियाचितो यदमुष्यात्मजो मया सदृशो भूयादिति” १८। यथाहमेवाभिरूपश्च कैवल्यात् १९ अथापि ब्रह्मवादो न मृषा भवितुमर्हति ममैव हि मुखं यद्द्विजदेवकुलम्। तत आग्नीध्रीयेंऽशकलयाऽवतरिष्याम्यात्मतुल्यमनुपलभमान इति निशामयन्त्या मेरुदेव्याः पतिमभिधायान्तर्दधे भगवान्! बर्हिषि तस्मिन्नेव विष्णुदत्त! भगवान् परमर्षिभिः प्रसादितो नाभेः प्रियचिकीर्षया तदवरोधायने मेरुदेव्यां धर्मान् प्रदर्शयितुकामो वातरसनानां श्रमणानामृषीणामूर्द्ध्वमन्थिनां शुक्लया तन्वाऽवततार” ६अ०। “शुक उवाच अथ तस्योत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणं साम्योपशमवैराग्यैश्वर्य्यमहाविभूतिभिरनुदिनमेधमानानुभावं प्रकृतयः प्रजा ब्राह्मणा देवताश्चावनितलसमवनायातितरां जगृधुः। तस्य ह वा इत्थं वर्ष्मणा वरीयसा वृहच्छ्लो-

त्तेन च ओजसा बलेन श्रिया यशसा वीर्यशौर्य्याभ्याञ्च पिता ऋषभ इतीदं नाम चकार । यस्य हीन्द्रः स्पर्द्धमानो भगवान् वर्षे न ववर्ष तदवधार्य्य भगवानृषभदेवो योगेश्वरः प्रहस्यात्मयोगमायया स्वं वर्षमजनाभं नामाभ्यवर्षत् । नाभिस्तु यथाभिलषितं सुप्रजास्त्वमवरुध्याति प्रमोदभरविह्वलो गद्गदाक्षरया गिरा स्वैरं गृहीतनरलोकधर्म्म्यं भगवन्तं पुराणपुरुषं मायाविलसितमतिर्वत्स तातेति सानुरागमुपलालयन् परां निर्वृतिमुपगतः । विदितानुरागमापौरप्रकृतिजनपदो राजा नाभिरात्मजं समयसेतुरक्षायामभिषिच्य ब्राह्मणेषूपनिधाय सह मेरुदेव्या विशालायां प्रसन्ननिपुणेन तपःसमाधियोगेन नरनारायणाख्यं भगवन्तं वासुदेवमुपासीनः कालेन तन्महिमानमवाप । यत्र ह पाण्डवेय ! श्लोकावुदाहरन्ति । कोनु तत् कर्म राजर्षेर्नाभेरन्वाचरेत् पुमान् । अपत्यतामगाद्यस्य हरिः शुद्धेन कर्मणा । ब्रह्मण्योऽन्यः ! कुतो नाभेर्विप्रा मङ्गलपूजिताः । यस्य बर्हिषि यज्ञेशं दर्शयामासुरोजसा । अथ ह भगवानृषभदेवः स्वं वर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासो लब्धवरैर्गुरुभिरनुज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो जयन्त्यामिन्द्रदत्तायामुभयविधलक्षणं कर्मसमाम्नायमभियुञ्जन्नात्मजानामात्मसमानानां शतं जनयामास । येषां खलु महायोगो भरतोज्येष्ठः श्रेष्ठगुण आसीत् येनेदं वर्षैति भारतमिति व्यपदिशन्ति"। १२राजकर्त्तव्ये ऋषभसहस्रादिदक्षिणके एकाहसाध्ये यागभेदे "ऋषभगोसवौ" कात्या० २२,११,२, "ऋषभश्च गोसवश्च क्रतू भवतः" कर्कः "पूर्वोरात्रः"४ । "पूर्वः ऋषभसंज्ञोरात्रः" कर्कः "दक्षिणा ऋषभसहस्रं द्वादशं वा शतम्" ५ । "ऋषभाणां सहस्रं द्वादशाधिकं शतं वा" संग्रहः । १३ यज्ञतुरपुत्रे नृपभेदे च । "एकविंशस्तोमेन ऋषभो याज्ञतुर ईजे शिक्नानां राजा तदेतद्गाथयाऽभिगीतम् । याज्ञतुरे यजमाने ब्राह्मणा ऋषभे जनाः । अश्वमेधे धनं विप्रा विभजन्तेस्म दक्षिणाः" शत०१३,५,४,१५,

**ऋषभकूट** पु० हेमकूटपर्व्वते भा०व०११०अ०। "पर्व्वतं स समासाद्य हेमकूटमनामयम् । अचिन्त्यानद्भुतान् भावान् ददर्श सुबहून् नृप !" इत्युपक्रम्य तदाश्चर्य्यमूलप्रश्ने युधिष्ठिरं प्रति लोमशवाक्यं यथा

"अस्मिन्नृषभकूटेऽभूदृषभोनाम तापसः । अनेकशतवर्षायुस्तपस्वी कोपनोभृशम् । स वै सम्भाष्यमाणोऽन्यैः कोपाद्गिरिमुवाच ह । य इह व्याहरेत् कश्चिदुपलानुत्सृजेस्त्वमु । वातञ्चाहूय मा शब्दमित्युवाच स तापसः । व्याहरंश्चेह पुरुषो मेघशब्देन वार्य्यताम् । एवमेतानि कर्म्माणि राजंस्तेन महर्षिणा । कृतानि कानि चित् क्रोधात् प्रतिषिद्धानि कानि चित् । नन्दां त्वभिगता देवा पुरा राजन्निति श्रुतिः । अन्वपद्यन्त सहसा पुरुषा देवदर्शिनः । ते दर्शनं त्वनिच्छन्तो देवाः शक्रपुरोगमाः । दुर्गञ्चक्रुरिमं देशं गिरिप्रत्यूहरूपकम् । तदा प्रभृति कौन्तेय ! नरा गिरिमिमं सदा । नाशक्नुवन्नभिद्रष्टुं कुत एवाधिरोहितुम् । नातप्ततपसा शक्यो द्रष्टुमेष महागिरिः । आरोढुं वाऽपि कौन्तेय ! तस्मान्नियतवाग्भव । इह देवास्तदा सर्वे यज्ञानाजह्रुरुत्तमान् । तेषामेतानि लिङ्गानि दृश्यन्तेऽद्यापि भारत ! । कुशाकारेव दूर्वेयं संस्तीर्णेव च भूरियम् । यूपप्रकाराबहवो वृक्षाश्चेमे विशाम्पते ! । देवाश्च ऋषयश्चैव वसन्त्यद्यापि भारत ! ।"

**ऋषभगजविलसित** न० "भतिनगैः स्वरात् खलु ऋषभगजविलसितमिति" वृ०र०उक्ते षोड़शाक्षरपादके वर्णवृत्तभेदे ।

**ऋषभतर** पु० तनुः ऋषभः तनुत्वे ष्टरच् । भारवहने मन्दशक्तौ वृषभे । जातित्वेन षित्त्वात् स्त्रियां ङीष् । वृषभतरी ।

**ऋषभद्वीप** पु०न० ऋषभ इव श्वेतः द्वीपः । द्वीपभेदे श्वेतद्वीपे यत्र क्रौञ्चपर्वतोऽस्ति स च कुमारेण विदारितः "ऋषभद्वीपमासाद्य सेव्यं क्रौञ्चनिसूदकम्" भा०व०८४अ० ।

**ऋषभध्वज** पु० ऋषभो वृषभो ध्वजोऽस्य । वृषवाहने १महादेवे । ऋषभकेतनादयोऽप्यत्र । २अर्हद्विशेषे मेदिनिः ।

**ऋषभी** स्त्री ऋषभ+गौरा० ङीष् जातौ वा ङीष् । १नराकारायां स्त्रियाम् २शूकशिम्ब्याम् ३सिरालायाम् ४विधवायाञ्च मेदिनिः । ५ऋषभजातिस्त्रियां स्त्रीगव्याम् ६कपिकच्छ्वाञ्च । ऋषभशब्दे उदा० ।

**ऋषि** पु० ऋषति ज्ञानेन संसारपारं ऋषी गतौ कि । ज्ञानेन संसारपारगते १वशिष्ठादौ २शास्त्रकृदाचार्य्ये ३वेदे ४किरणे च तस्य व्युत्पत्तिर्यथा । ऋषी हिंसा गतौ धातुर्विद्यासत्यतपःश्रुतिः । एष सन्निचयो यस्मात् ब्राह्मणस्य ततस्त्वृषिः । निवृत्तसमकालं तु बुद्ध्या व्यक्तिमृषिस्त्वयम् । ऋषन्ति परमं यस्मात् परमर्षिस्ततः स्मृतः । गत्यर्थादृषतेर्धातोर्नामनिर्वृत्तिकारणम् । यस्मादेतत् स्वयम्भूतस्तस्माच्च ऋषिता मतेति' मत्स्य०पु०१२०अ० "अजान् ह वै पृश्नीं स्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्त ऋषयोऽभवन् तदृषीणामृषित्वम्" ऐत०ब्रा० इत्यादिरप्यत्र "विद्याविदग्धमतयोविषयः प्रसिद्धाः" भरतः । "सप्त ब्रह्मर्षिदेवर्षिम-

र्षिपरमर्षयः । काण्डर्षिश्च श्रुतर्षिश्च राजर्षिश्च क्रमावराः" रत्नकोषोक्तं सप्तविध ऋषिर्भवति । तेषां विशेषः त्रिका०उक्तः यथा "व्यासाद्यास्तु महर्षयः । परमर्षयस्तु भेलाद्याः देवर्षयः कण्वादयः । ब्रह्मर्षयो वसिष्ठाद्याः सुश्रुताद्याः श्रुतर्षयः । ऋतपर्णादयो राजर्षयः काण्डर्षयस्तमी । जैमिन्याद्याः" वसिष्ठाद्याश्च मरीच्याद्याः दश । "भृगुर्मरीचिरत्रिश्च अङ्गिरा पुलहः क्रतुः । मनुर्दक्षो वसिष्ठश्च पुलस्त्यश्चेति ते दश । ब्रह्मणो मानसाह्येते उत्पन्नाः स्वयमीश्वराः । परत्वेनर्षयस्तस्माद् मतास्तस्मान्महर्षयः" मत्स्य०१२०अ० । तेषां पुत्राणां तु तपसैव ऋषित्वं यथोक्तं तत्रैव "ईश्वराणां सुतास्तेषामृषयस्तान् निबोधत । काव्यो बृहस्पतिश्चैव कश्यपश्च्यवनस्तथा । उतथ्यो वामदेवश्च अगस्त्यः कौशिकस्तथा । कर्दमो वालखिल्याश्च विश्रवाः शक्तिवर्चसः । इत्येते ऋषयः प्रोक्तास्तपसा ऋषितां गताः" । किन्तु मरीच्यादीनामेव ऋषित्वं भूरि प्रसिद्धम् । तएव भोगसमाप्तौ नक्षत्ररूपेण गगनमण्डले उत्तरस्यां सारस्वतीकाः स्थिताश्चरन्त्यन्ते तेषां च गति कालसहितचारादि निरूपितं बृह० सं० यथा "सैकावलीव राजति ससितोत्पलमालिनी सहासेव । नाथवतीव च दिग्यैः कौवेरी सप्तभिर्मुनिभिः । ध्रुवनायकोपदेशान्नरिनर्त्तीवोत्तरा भ्रमद्भिश्च । यैश्चारमहं तेषां कथयिष्ये वृद्धगर्गमतात् । आसन्मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ । षड्द्विकपञ्चद्वियुतः (२५२६) शककालस्तस्य राज्ञश्च । एकैकस्मिन्नृक्षे शतं शतं ते चरन्ति वर्षाणाम् । प्रागुत्तरतश्चैते सदोदयन्ते ससाध्वीकाः । पूर्वे भागे भगवान् मरीचिरपरे स्थितो वसिष्ठोऽस्मात् । तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च । पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्याः । तत्र वसिष्ठं मुनिवरमुपाश्रितारुन्धती साध्वी । उल्काशनिधूमाद्यैर्हता विवर्णा विरश्मयो ह्रस्वाः । हन्युः स्वं स्वं वर्गं विपुलाः स्निग्धाश्च तद्वृद्ध्यै । गन्धर्वदेवदानवमन्त्रौषधिसिद्धयक्षनागानाम् । पीडाकरो मरीचिर्ज्ञेयो विद्याधराणां च । शकयवनदरदपारतकाम्बोजांस्तापसान् वनोपेतान् । हन्ति वसिष्ठोऽभिहतो विवृद्धिदो रश्मिसम्पन्नः । अङ्गिरसो ज्ञानयुता धीमन्तो ब्राह्मणाश्च निर्दिष्टाः । अत्रेः कान्तारभवा जलजान्यम्भोनिधिः सरितः । रक्षःपिशाचदानवदैत्यभुजङ्गाः स्मृताः पुलस्त्यस्य । पुलहस्य तु मूलफलम् क्रतोस्तु यज्ञाः सयज्ञभृतः" ।

एते च स्वायम्भुव मन्वन्तरे सप्तर्षय आसन्, ततोऽधिकारसमाप्तौ नक्षत्ररूपेण नभोमण्डले स्थिताः । मन्वन्तरभेदे तु अन्ये एव सप्तर्षयोभवन्ति यथाह हरि० ।

१ "मरीचिरत्रिर्भगवानङ्गिराः पुलहः क्रतुः । पुलस्त्यश्च वशिष्ठश्च सप्तैते ब्रह्मणः सुताः । उत्तरस्यां दिशि तथा राजन् । सप्तर्षयः स्मृताः । नाभा नाम तथा देवास्त्वासन् स्वायम्भुवेऽन्तरे" ।

२ "और्वो वशिष्ठपुत्रश्च स्तम्बः काश्यप एव च । प्राणो-बृहस्पतिश्चैव दत्तोनिश्च्यवनस्तथा । एते महर्षयस्तात ! वायुप्रोक्ता महाव्रताः ।

३ वसिष्ठपुत्राः सप्तासन् वासिष्ठा इति विश्रुताः । हिरण्यगर्भस्य सुता ऊर्ज्जानाम सुतेजसः । ऋषयोऽत्र मया प्रोक्ताः कीर्त्यमानान्निबोध तान् ।

४ काव्यः पृथुस्तथैवाग्निर्जन्तुर्धामा च भारत । कपीवान् कपीवांश्च तत्र सप्तर्षयोऽपरे ।

५ वेदबाहुर्यदुध्रश्च मुनिर्वेदशिरास्तथा । हिरण्यरोमा-पर्जन्य ऊर्द्धबाहुश्च सोमजः । सत्यनेत्रस्तथाऽत्रेय एते सप्तर्षयोऽपरे

६ भृगुर्नभो विवस्वांश्च सुधामा विरजस्तथा । अतिनामा सहिष्णुश्च सप्तैते तु महर्षयः । चाक्षुषस्यान्तरे तात ! मनोर्वैवानिमान् शृणु

७ अत्रिर्वशिष्ठो भगवान् कश्यपश्च महानृषिः गौतमश्च भरद्वाजोविश्वामित्रस्तथैव च । तथैव पुत्रो भगवानृचीकस्य महात्मनः । सप्तमोजमदग्निश्च ऋषयः साम्प्रतं दिवि । मन्वन्तरे व्यतिक्रान्ते चत्वारः सप्तका गणाः । कृत्वा कर्म दिवं यान्ति ब्रह्मलोकमनामयम् । ततोऽन्ये तपसा युक्ताः स्थानं तत्पूरयन्त्युत । अतीतावर्त्तमानाश्च क्रमेणैतेन भारत ! । एतान्युक्तानि कौरव्य ! सप्तातीतानि भारत !

८ रामो व्यासस्तथात्रेयो दीप्तिमानिति विश्रुतः । भारद्वाजस्तथाद्रौणिरश्वत्थामा महाद्युतिः । गौतमस्यात्मजश्चैव शरद्वान्नाम गौतमः । कौशिको गालवश्चैव रुरुः काश्यप एव च । एते सप्त महात्मानोभविष्या मुनिसत्तमाः । ब्रह्मणः सदृशाश्चैते धन्याः सप्तर्षयः स्मृताः ।

९ मेधातिथिस्तु पौलस्त्योवसुः काश्यप एव च । ज्योतिष्मान् भार्गवश्चैव द्युतिमानङ्गिरास्तथा । सवनश्चैव वाशिष्ठ आत्रेयो हव्यवाहनः । पौलहः सप्तः इत्येते मुनयो रोहितेऽन्तरे

१० दशमे त्वथ पर्याये द्वितीयस्यान्तरे मनोः । हविष्मान्

पौलहश्चैव सुकृतिश्चैव भार्गवः। आपोमूर्त्तिस्तथात्रेयो वाशिष्ठश्चाष्टकः स्मृतः। पौलस्त्यः प्रमतिश्चैव नभोगश्चैव काश्यपः। अङ्गिरानभसः सत्यः सप्तैव परमर्षयः।

११ एकादशे तु पर्य्याये तृतीयस्यान्तरे मनोः। तस्य सप्त ऋषींश्चापि कीर्त्त्यमानान्निबोध मे। हविष्मान् काश्यपश्चापि हविष्मान् यश्च भार्गवः। तरुणश्च तथात्रेयोवाशिष्ठ स्तनयस्तथा। अङ्गिराश्चोदधिष्णश्च पौलस्त्योनिश्चरस्तथा। पुलहश्चाग्नितेजाश्च भव्याः सप्त महर्षयः।

१२ चतुर्थस्याथ सावर्णे ऋषीन् सप्तशृणुष्व मे। द्युतिर्वशिष्ठ पुत्रश्च आत्रेयः सुतपास्तथा। अङ्गिरास्तपसोमूर्त्तिस्तपस्वी काश्यपस्तथा। तपोधनश्च पौलस्त्यः पौलहश्च तपोरविः। भार्गवःसप्तमस्तेषाम्"

१३ त्रयोदशेऽथ पर्य्याये भव्ये मन्वन्तरे मनोः। अङ्गिराश्चैव धृतिमान् पौलस्त्यो हव्यपस्तु यः। पौलहस्तत्त्वदर्शी च भार्गवश्च निरुत्सुकः। निष्प्रकम्पस्तथात्रेयो निर्म्मोहः काश्यपस्तथा। वेतपाश्चैव वाशिष्ठः सप्तैते तु महर्षयः।

१४ चतुर्द्दशेऽथ पर्य्याये भौत्यस्यैवान्तरे मनोः। अग्नीध्रः काश्यपश्चैव पौलस्त्यो भार्गवस्तथा। भार्गवोह्यतिबाहुश्च शुचिराङ्गिरसस्तथा। युक्तश्चैव तथात्रेयः शुक्रोवाशिष्ठ एवच। अजितः पौलहश्चैव अन्त्याः सप्तर्षयश्च ते। सप्तर्षीणां उत्तराह्युदयश्च" शत०ब्रा० २,१,२,१। उक्तःयथा "सप्तर्षीनुह स्म वै पुरर्क्षा इत्याचक्षते अमीह्युत्तराहि सप्तर्षय उद्यन्ति"।

विश्वामित्रसृष्टाः सप्तर्षयस्तु दक्षिणस्यां नभोमण्डले स्थिताः तदुक्तं "ततो ब्रह्मतपोयोगात् प्रजापतिरिवापरः। ससर्ज दक्षिणे भागे सप्तर्षीनपरान् पुनः"। "मनुमेकाग्रमासीनमभिगम्य महर्षयः"। "ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः"। "ऋषयःसंयतात्मानः इति च" मनुः। "वसन्नृषिकुलेषु सः" "आक्रोसमृषिपत्नीनाम्" रघुः। "ऋषीन् ज्योतिर्मयान् सप्त" "सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान् परिवर्त्तमानः" कुमा०। वेदमन्त्रस्य प्रथमं १४द्रष्टरि च। "येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै। मन्त्रेण, तस्य तत् प्रोक्तमृषिभावः स उच्यते" योगि या०। येन ऋषिणा कल्पादौ योमन्त्रोदृष्टस्तस्य मन्त्रस्य स ऋषिः। तज्ज्ञानावश्यकत्वमार्षशब्दे दर्शितम् तत्र वैदिकमन्त्राणामृषिनिरूपणञ्च सर्वानुक्रमणिकादौ द्रष्टव्यं संक्षेपेण तत्रोक्तमत्रोच्यते। "सर्वमाग्नेयं गायत्रं गौतमीयम्, सर्वं सावित्रमौष्णिहं भारद्वाजीयम्, सर्वं सौम्यमानुष्टुभमाथर्व्वणिकम्। सर्वं बार्हस्पत्यं बार्हतमाङ्गिरसम्, सर्वं वारुणं पाङ्क्तमात्स्यायनीयम्, सर्वमैन्द्रं त्रैष्टुभं याज्ञवल्कीयं, सर्वमादित्यदैवतं जागतम् कौत्सम्। ज्योतिष्टोमे दीक्षाप्रभृति वक्ष्यमाण दीक्षायां भृगुरग्नाविष्णू गायत्री। प्रायणीये, आङ्गिरसोऽदितिरुष्णिक्, क्रये विश्वामित्रः सोमोऽनुष्टुप्। आतिथ्ये वसिष्ठो विष्णुर्बृहती, प्रवर्ग्ये कश्यप आदित्यः पङ्क्तिः। उपसत्स्वात्रेय उपसद्देवता त्रिष्टुप्। अग्नीषोमीयेऽगस्त्योऽग्नीषोमौ जगती। प्रायणीयेऽतिरात्र आग्निवेश्योऽहोरात्रे अतिजगती, चतुर्विंशत्यहे सौकरायणः संवत्सरः शक्वरी। अतिप्लवे षडहे सावर्णोऽर्द्धमासा मासाश्चेति शक्वरी, पृष्ठ्ये षडहे सावकायन ऋतवोऽष्टिः, अभिजिति, प्रियव्रतोऽग्निरत्यष्टिः,स्वरसामसु सरस्वत्यापो धृतिः,विषुवति रौहिणायन आदित्योऽतिधृतिः, विश्वजिति सौभर इन्द्र निर्ऋतिः कृतिः,गो आयुषोर्वाङ्क्लिर्मित्रावरुणौ प्रकृतिः, दशरात्र आचार्यो विश्वेदेवा आकृतिः, दशरात्रिके पृष्ठ्ये षडहे मात्रेयो दिशो विकृतिः, छन्दोगेषु स्थौल्वायन इमे लोकाः संकृतिः,दशमेऽहनि पराशरः संवत्सरोऽतिकृतिः, महाव्रते शैलिनः प्रजापतिरुत्कृतिः, उदयनीयेऽतिरात्रे भौवनायनो वायुश्छन्दांसि सर्वाणि, ऋषिभिरुपलक्षितं वाक्यमृषयः"। अधिकं हेमा० व्रत०द्रष्टव्यम्। भावे क्तिन्। १५दर्शने १६ज्ञाने च। ऋषिकृत् ऋषिमनाः। १७तन्त्रोक्तमन्त्रस्य प्रथमोपासनेन सिद्धे ऋष्यादिशब्दे पु० उदा०।

**ऋषिकुल्या** स्त्री ऋषीणां कुल्येव। १नद्यां त्रिका०। ऋषीणां कृतिमा सरित्। मानससरोऽन्तिकस्थे ऋषिनिर्म्मितसरोवरे "तांस्तु सान्त्वेन निर्ज्जित्य मानसं सर उत्तमम्। ऋषिकुल्यास्तथा सर्व्वा ददर्श कुरुनन्दनः। सरो मानसमासाद्य हाटकानभितः प्रभो!। गन्धर्वैरक्षितं देशमजयत् पाण्डवस्ततः" भा०स० २७ अ०। २तीर्थभेदे "ऋषिकुल्यां समासाद्य वासिष्ठञ्चैव भारत!। वासिष्ठीं समभिक्रम्य सर्वे वर्णा द्विजातयः। ऋषिकुल्यां समासाद्य नरःस्नात्वा विकल्मषः। देवान् पितॄंश्चार्चयित्वा ऋषिलोकं प्रपद्यते" भा०व०८४अ०। "भूमिभागास्तथा पुण्या गङ्गाद्वारमथापि च। ऋषिकुल्यास्तथामेध्या नदी चित्रवहातथा" भा०अनु०१६५अ०। ऋषिकुलाय हितं यत्। ४ऋषिकुलहिते त्रि०। "उभयोरृषिकुल्यायाः सरस्वत्याः सुरोधसोः" भाग०३,२२,२६। "ऋषिकुल्यायाः ऋषिकुलहितायाः सरस्वत्याः" श्रीधरः। ऋषिकुलमर्हति

यत्। ५ऋषिकुलयोग्ये त्रि०। "अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम्" भाग० ३,१६,१२,। सा च "भूम्न ऋषिकुल्यायामुद्गीथस्ततः प्रस्तारो देवकुल्यायाम्" भाग० ५,१५,६। भारतवर्षस्थे ६महानदीभेदे तत्रत्यमहानदीकीर्त्तने भा० ५,१६,१८। चन्द्रवशा ताम्रपर्णीत्युपक्रम्य "ऋषिकुल्याऽद्रिसामा कौशिकी मन्दाकिनीति ताः प्रदर्श्य इति महानद्य इत्युक्तम्।

**ऋषिकृत्** त्रि० ऋषिं दर्शनं करोति कृ–क्विप् ६त०। सर्वद्रष्टरि। "ऋषिमनाय ऋषिकृत् स्वर्षाः" ऋ०६,६६,१८,

**ऋषिगिरि** पु० गिरिव्रजाख्यमागधदेशस्यजरासन्धपुरसन्निकृष्टस्थेषु पञ्चसु पर्व्वतेषु मध्ये पर्वतभेदे "एष पार्थ! महान् भाति पशुमान्नित्यमम्बुमान्। निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः। वैहारोविपुलः शैलो वराहो वृषभस्तथा। तथा ऋषिगिरिस्तात! शुभाश्चैत्यकपञ्चमाः। एते पञ्च महाश्रृङ्गाः पर्व्वता शीतलद्रुमाः। रक्षन्तीवाभिसंहत्य संहताङ्गागिरिव्रजम्" भा०स०२०अ० [रत्नमा०

**ऋषिजाङ्गलिकी** स्त्री ऋषिप्रिया जाङ्गलिकी। ऋक्षगन्धायाम्

**ऋषितर्पण** न० ऋषीणां तर्पणम्। ऋषीनुद्दिश्य जलाञ्जलिदाने तद्विधिः आ०त० "कृतोपवीती देवेभ्यो निवीती च भवेत्ततः। मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा। सनकश्च सनन्दश्च तृतीयश्च सनातनः। कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा। सर्वे ते तृप्तिमायान्तु मद्दत्ते नाम्बुना सदा। मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्। प्रचेतसं वसिष्ठञ्च भृगुं नारदमेव च। देवान् सर्वानृषीन् सर्वान् तर्पयेदक्षतोदकैः" अक्षता अत्र यवाः "अक्षताश्च यवाः प्रोक्ताः" इत्युक्तेः। तच्च स्नानकाले नित्यं कर्त्तव्यम् यथाह शाता० "तर्पणञ्च शुचिः कुर्यात् प्रत्यहं स्नातकोद्विजः। देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्। "नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम्" मनुः। तर्पणस्य प्रधानाङ्गभेदेन द्विविधता तर्पणशब्दे वक्ष्यते।

**ऋषिपञ्चमी** स्त्री ऋषीणां सप्तर्षीणां पूजाङ्गं पञ्चमी। भाद्रशुक्लपञ्चम्याम्। तत्र हि सप्तर्षीन् प्रतिमास्थान् पूजयित्वाऽकृष्टभूमिजशाकेन वर्त्तनम् कार्यम्। सप्त वर्षाण्येवं कृत्वा अष्टमेऽब्दे सप्तकलशस्थितासु प्रतिमासु सप्तर्षीन् संपूज्य तन्मन्त्रेणाष्टोत्तरशतं तिलैर्हुत्वा सप्त ब्राह्मणान् भोजयेदिति विधिः। मूलं हेमाद्रौ व्रतखण्डे दृश्यम्। सा च मध्याह्नव्यापिनी ग्राह्या "पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिरिति" माधवीये हारीतोक्तेः दिनद्वये तथालाभे हेमाद्रिमते परा ग्राह्या "पराश्रिता स्यात् पञ्चमीति" दीपिकोक्तेः माधवमते पूर्व्वा "सर्वत्र पञ्चमी पूर्वा" इत्युक्तेः युग्मशास्त्राच्च। "ऋषिपञ्चमी चतुर्थीयुतैव ग्राह्येति" दिवोदासः। [सपर्य्याम्" रत्नमा०।

**ऋषिप्रोक्ता** स्त्री ऋषिणा धन्वन्तरिणा भैषज्याय प्रोक्ता। मा-

**ऋषिबन्धु** पु० ऋषिर्बन्धुः उत्पादकोऽस्य। १ऋषिवंशजाते ब्राह्मणे २शरभनामके ऋषौ च। "वत्सपाद्गणोः शरभाय ऋषिबन्धवे" ऋ०८,१००,५। ६त०। ३ऋषिमित्रे च।

**ऋषिमनस्** पु० ऋषिर्वेदार्थदर्शि मनोऽस्य। सर्वार्थदर्शिमनस्के ऋषिकृच्छब्दे उदा०।

**ऋषियज्ञ** पु० ऋष्युद्देश्यको यज्ञः ऋषिर्वेदस्तदध्ययनरूपो यज्ञो वा। नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते वेदाध्ययनरूपे ब्रह्मयज्ञे "ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्वदा। नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत्। एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः"। स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि। पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्मणा" मनुः

**ऋषिलोक** पु० ऋषिभिर्भोग्योलोकः। सत्यलोकसन्निकृष्टस्थे ऋषीणां भोगस्थानभेदे ऋषिकुल्याशब्दे उदा०। स च लोकः शनिलोकादूर्द्ध्वं ध्रुवलोकादधोवर्त्तमानः यथाह काशीखण्डे शनिलोकवर्णनानन्तरं "नेत्रयोः प्राघुणीचक्रे ततः सप्तर्षिमत्युत्तम्" इत्युपक्रम्य "शिवशर्मन्! शिवमते! सदा सप्तर्षयोऽमलाः। वसन्तीह प्रजाः स्रष्टुं विनियुक्ताः प्रजासृजा। मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः। वशिष्ठश्च महाभागा ब्रह्मणोमानसाः सुताः। सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः। संभूतिरनसूया च क्षमा प्रीतिश्च सन्नतिः। स्मृतिरूर्ज्जा क्रमादेषां पत्न्योलोकस्य मातरः। एतेषां तपसा चैतद्धार्य्यते भुवनत्रयम्। उत्पाद्य ब्रह्मणा पूर्व्वमेतत् प्रोक्ता महर्षयः। प्रजाः सृजत रे पुत्रा! नानारूपाः प्रयत्नतः" इत्यादिकमुपवर्ण्य "ध्रुवतोरिति संकथां तथा गणयोर्वैष्णवयोस्तदावहाम्। ध्रुवलोक उपागतस्तयोर्नयनातिथ्यमतथ्यवर्ज्जितः" १८अ०।

**ऋषिश्राद्ध** न०६त०। ऋषीणां कर्त्तव्ये श्राद्धे। तत्र हि बह्वारम्भे लघुक्रिया तदुक्तम् "अजायुद्धे ऋषिश्राद्धे प्रभाते मेघडम्बरे। दम्पत्योः कलहे चैव बह्वारम्भे लघुक्रिया"।

**ऋषिसाह्** त्रि० ऋषीन् सहते अभिभवति सह–ण्वि ६त०। ऋषीणां द्रष्टॄणामभिभावके। "ऋतस्य धीतिमृषिषाड़वीवशत्" ऋ०६,७६,४। "सहेसाड" पा० सत्वपक्षे

चत्वमन्यत्र ऋषिसाहो इत्यादौ न षत्वमिति भेदः ।

**ऋषिषाण** पु० ऋषिभिः सायते भज्यते षण-संभक्तौ कर्मणि घञ् वेदे षत्वम् । ऋषिभिः संभक्ते । "ये त्वा मृजन्त्यृषिषाण ! वेधसः" ऋ०९,८६,४। "ऋषिषाण ! ऋषिभिः सं भक्त" भा० । लोके तु न षत्वम् ।

**ऋषि(ष्टि)षेण** पु० नृपभेदे । ततो विदा० अञ् । आर्षि (ष्टि)षेणः । तद्गोत्रापत्ये पुंस्त्री० स्त्रियां ङीप् ।

**ऋषिष्टुत** त्रि० ऋषिभिः स्तुतः वेदे षत्वम् । ऋषिभिः स्तुते "ऋषिष्टुता जरयन्ती" ऋ०७,७५,५। २अग्नौ च "ऋषिष्टुत इति ऋषयोह्येतमग्रेऽस्तुवंस्तस्मादाहर्षिष्टुत इति" शत० १,४,२,६ । लोके तु न षत्वम् । क्वचिल्लोकेऽपि षत्वम् । "ऋषिष्टुतां विष्णुपदीं पुराणाम्"भा०अनु०२७

**ऋषिस्तोम** पु० एकाहसाध्ये यागभेदे । "ऋषिस्तोमा व्रात्यस्तोमाश्च द्व्याहानि" आश्व०श्रौ० २५ । "ऋषिस्तोमा नाम सप्त एकाहाः । उभयत्र सप्तमोज्योतिष्टोमः प्रकृतिः" नारा० ।

**ऋषिस्वर** पु० ऋषिभिः स्वर्यते शब्द्यते स्तूयते स्वृ—कर्मणि अप् ईत०। ऋषिभिः स्तुत्ये । "ऋषिस्वरं चरति यासु नाम ते" ऋ० ५,४४,८ । "ऋषिस्वरमृषिभिः स्तुत्यम्" भा० । [ कृते जगत्सर्जने ।

**ऋषिसर्ग** पु० ऋषिभिः कृतः सर्गः । ब्रह्मणानियुक्तैर्ऋषिभिः

**ऋषी** स्त्री ऋषि+गौरा० स्त्रियां ङीष् । ऋषिपत्न्याम् ।

**ऋषि(षी)क** पु० ऋष्यां भवः क वा ह्रस्वः । ऋषिपत्नीगर्भजाते ऋषेरौरसे पुत्रे । "ऋषिपुत्रा ऋषीकास्तु मैथुनात् गर्भसम्भवात् । परत्वेनर्षयस्ते वै भूताये ऋषिकास्ततः। ऋषीकाणां सुताये वै विज्ञेया ऋषिपुत्रकाः" इत्युपक्रम्य कतिचिदृषीनुक्त्वा "तेषां पुत्रान्ऋषीकांस्तु गर्भोत्पन्नान्निबोधत" इत्युपक्रम्य ऋषीणामौरसान् कतिचिदुक्त्वा "इत्येते ऋषिकाः सर्वे सत्येन ऋषितां गताः" मत्स्यपु० १२०अ०।

**ऋषीवत्** त्रि० ऋषिः स्तोतृत्वेनास्त्यस्य मतुप् "छन्दसीरः" पा० मस्य वः दीर्घः । ऋषिस्तोतृके ऋषिस्तुते । "शिप्रिन्नृषीवः शचीवो" ऋ० ८,२,२८, "ऋषीवः ! ऋषिभिर्युक्त"भा०। अत्र "मतुवसोरु सम्बुद्धौ छन्दसि" पा०सम्बुद्धौ नस्याने रुः । ऋषीवःशब्दकल्पनं मामादिकमेव । लोके तु ऋषिमत् इत्येव ।

**ऋषीवह** त्रि० ऋषीन् वहति पचा०अच् ईत० "इक्षोवहेः पीलो" पा० दीर्घः । ऋषिवाहके

**ऋषु** पुं०ऋष-गतौ कु । "अनवरतगतियुक्ते सूर्यरश्मौ" ज्येष्ठे भियो भानुभिर्ऋषूणां पर्येति" ऋ०१०,१,"ऋषूणां सूर्यरश्मीनाम्" भा० १गन्तमात्रे २महति ३बलवति ४ज्ञानवति माने च "अग्ने रेभोन जरत ऋषूणां जूर्णिर्होत ऋषूणाम्" ऋ०१,१२०, "ऋषूणामागन्तॄणाम्" "ऋषूणां महताम् ज्ञानवताञ्च"भा०। ५मन्त्रद्रष्टरि ऋषौ च "इन्द्योभुवद्धस्तुर्ऋषूणाम्" ऋ०८,७१,१५, ऋषूणामृषीणां सूक्तादिद्रष्टॄणाम्"भा०।

**ऋष्टि** स्त्री ऋष-करणे क्तिन् । उभयतो धारायुक्ते १खड्गे । २खड्गमात्रे अमरः । ३आयुधमात्रे च "चित्रोवोयामः प्रयतास्वृष्टिषु" ऋ०१,१६६,४, "ऋष्टिषु युद्धस्यहेतिषु" भा०। "अंसेष्वेषां निमिमृक्षुर्ऋष्टयः" ऋ०१,६४,४, "ऋक्षा ऋष्टीरसृक्षत" ऋ०५,५२,६, "ऋष्टीरायुधविशेषान्" भा० "वाशीमन्त ऋष्टिमन्तो मनीषिणः" ऋ०५, ५७,२,"ऋष्टिर्नाम छुरिका"भा०"शरशक्त्यृष्टि इष्टिभिः" देवीमा० "धनूंषि चाप्यग्राणि शराश्च विविधा ऋष्टयः काञ्चनभूषणाश्च" भा० आ०१९४अ० "कोवोऽन्तर्मरुत ऋष्टिविद्युतः"ऋ०१,१६८,५, "ऋष्टिविद्युत ऋष्ट्या मेघभेदनायुधविशेषेण विद्योतमानाः"भा०भावे क्तिच् । ४हिंसायाम् ५अनिष्टोत्पादने । "हिरण्यनिर्णिगुपरा ऋष्टिः" ऋ०१,१६७६, रिष हिंसायां रिष्टिरप्यत्र 'गोचरे वा विलग्ने वा ये ग्रहा रिष्टिसूचकाः"ज्योति० ईदृशौ च । ऋष्टिरस्त्यस्य मतुप् । रिष्टियुक्ते दीप्तियुक्ते त्रि०स्त्रियां ङीप् 'विद्युद्र्था मरुत ऋष्टिमन्तो दिवोमर्याः" ऋ०३,५४,१३"ऋष्टिमन्तो दीप्तिमन्तः" भा०

**ऋष्टिषेण** पु० नृपभेदे तत: पाठान्तरे विदा० अञ् शिवा० अण् वा । आर्ष्टिषेण तत्पुत्रे । "आर्ष्टिषेणोहोत्रमृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान्" एतामृचमधिकृत्य यास्केनेतिहासो वर्णितः यथा "तत्रेतिहासमाचक्षते देवापिश्चार्ष्टिषेणः शान्तनुश्च द्वौ कौरव्यौ भारतौ बभूवतुः स शान्तनुः कनीयानभिषेचयाञ्चक्रे देवापिस्तपः प्रपेदे ततः शान्तनोराज्ये द्वादश वर्षाणि देवो न ववर्ष तमूचुर्ब्राह्मणाः अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरेत्याभिषेचितं तस्मात्ते देवो न वर्षतीति" ऋष्टिषेणस्य नामान्तरं प्रतीप इति । "प्रतिश्रवसः प्रतीपः खलु शैव्यामुपयेमे मनुं नाम तस्यां पुत्रानुत्पादयामास देवापिं शान्तनुं वाह्लीकं चेति देवापिः खलु बाल एवारण्यं विवेश शान्तनुस्तु महीपालो बभूवेति" भा० आ० ९५ । "कुलस्तस्मादुद्दिलीपोऽभूत् प्रतीपस्तस्य चा-

त्मजः। देवापिः शान्तनुस्तस्य बाह्लीक इति चात्मजाः। पितृराज्यं परित्यज्य देवापिस्तु वनं गतः। अभवच्छान्तनूराजा प्राङ्महाभिषसंज्ञितः। समा द्वादश तद्राज्ये न ववर्ष यदा विभुः। शान्तनुर्ब्राह्मणैरुक्तः परिवेत्ता यदग्रभुक्। राज्यं देह्यग्रजायाशु पुरं राष्ट्रविवृद्धये। एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत्। नाहं राजा त्वमेवाङ्ग विप्रान् दृष्टौ वृणु! प्रभो। तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो गिरा। वेदवादातिवादान् वै ततो देवो ववर्ष ह। देवापिर्योगमास्थाय कलापग्राममास्थितः। सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति" भाग०९,२२, १२ श्लो०। अष्टिषेणशब्दस्यावयवार्थौ निरु० दर्शितो यथा "आर्ष्टिषेण ऋष्टिषेणस्य पुत्रः इषितसेनस्येति वा। सेना सेश्वरा समानगतिर्वा। पुत्रः पुरु त्रायते निपरणाद्वा पुन्नरकं ततस्त्रायते इति वा"।

**ऋष्य** पु० ऋष-हिंसायां कर्मणि क्यप् अघ्न्यादि० यत् नि०। "ऋष्योनीलाण्डकोलोके सरोष इति कीर्त्तितः" इत्युक्ते मृगभेदे।

**ऋष्यकेतु** पु० अनिरुद्धे त्रिका०। ऋष्यकेतनादयोऽप्यत्र।

**ऋष्यगता** स्त्री ऋष्यइव गता ज्ञाता। ऋष्यप्रोक्तावृक्षे शब्दरत्ना०

**ऋष्यगन्धा** स्त्री ऋष्यस्य गन्ध इव गन्धो यस्याः। १वृद्धदारके वृक्षे। २क्षीरविदार्यां ३महाश्वेतायाम्।

**ऋष्यजिह्व** न० सुश्रुतोक्ते महाकुष्ठरोगभेदे। सुश्रुते। "सप्त महाकुष्ठानि" इत्युपक्रम्य "तत्र महाकुष्ठान्यरुणो डुम्बरर्ष्यजिह्वकपालकाकणपुण्डरीकदद्रव इति" विभज्य। तत्र "वातेनारुणं, पित्तेनौडुम्बरर्ष्यजिह्वकपालकाकणानि। श्लेष्मणा पौण्डरीकं दद्रुकुष्ठञ्चेति" तन्निदानमुक्त्वा "ऋष्यजिह्वाप्रकाशखरत्वानि ऋष्यजिह्वानि" लक्षितम्।

**ऋष्यप्रोक्ता** स्त्री ऋषिभिरप्रोक्ता ऋष्य इव प्रोक्ता इति वा। १शतावर्याम्, २अतिबलायाम्, ३शूकशिम्बीवृक्षे च। "ऋष्यप्रोक्ता वयस्था च" सुश्रु०।

**ऋष्यमूक** पु० ऋष्यो मृगो मूको यत्र। "ऋष्यमूकस्तु पम्पायाः पुरतः पुष्पितद्रुमः" इति रामायणोक्ते पम्पासरोऽन्तिकस्थे पर्वतभेदे "ऋष्यमूकमगात् कपिः" भट्टिः अयञ्च पर्वतः कूर्मविभागे बृह० दक्षिणस्यतयोक्तः "अथ दक्षिणेन लङ्केत्युपक्रम्य "क्रौञ्चद्वीपजटाधरकावेर्य ऋष्यमूकश्च"।

**ऋष्यशृङ्ग** पु० ऋष्यस्य मृगभेदस्य शृङ्गमिव शृङ्गमस्य। विभाण्डकमुनिपुत्रे लोमपादराजकन्यायाः शान्तायाः पत्यौ ऋषिभेदे तस्योत्पत्त्यादि भा०व० ११० अ० उक्तं यथा। "विभाण्डकस्य विप्रर्षेस्तपसा भावितात्मनः। अमोघवीर्यस्य सतः प्रजापतिसमद्युतेः। शृणु पुत्रो यथा जात ऋष्यशृङ्गः प्रतापवान्। महाह्रदे महातेजा बालः स्थविरसम्मतः। महाह्रदं समासाद्य काश्यपस्तपसि स्थितः। दीर्घकालं परिश्रान्त ऋषिः स देवसम्मतः। तस्य रेतः प्रचस्कन्द दृष्ट्वाप्सरसमुर्वशीम्। अप्सूपस्पृशतो राजन्! मृगी तच्चापिबत्तदा। सह तोयेन तृषिता गर्भिणी चाभवत्ततः। सा पुरोक्ता भगवता ब्रह्मणा लोककर्त्तृणा। देवकन्या मृगी भूत्वा मुनिं सूय विमोक्ष्यसे। अमोघत्वाद्विधेश्चैव भावित्वाद्दैवनिर्मितात्। तस्यां मृग्यां समभवत्तस्य पुत्रो महानृषिः। ऋष्यशृङ्गस्तपोनित्यो वन एवाभ्यवर्त्तत। तस्यर्षेः शृङ्गं शिरसि राजन्नासीन्महात्मनः। तेनर्ष्यशृङ्ग इत्येवं ततः स प्रथितोऽभवत्। न तेन दृष्टपूर्व्वोऽन्यः पितुरन्यत्र मानुषः। तस्मात्तस्य मनो नित्यं ब्रह्मचर्येऽभवन्नृप। एतस्मिन्नेव काले तु सखा दशरथस्य वै। लोमपाद इति ख्यातो अङ्गानामीश्वरोऽभवत्। तेन कामात् कृतं मिथ्या ब्राह्मणस्येति नः श्रुतम्। स ब्राह्मणैः परित्यक्तस्तदा वै जगतः पतिः। पुरोहितापचाराच्च तस्य राज्ञो यदृच्छया। न ववर्ष सहस्राक्षस्ततोऽपीड्यन्त वै प्रजाः। स ब्राह्मणान् पर्य्यपृच्छत्तपोयुक्तान्मनीषिणः। प्रवर्षणे सुरेन्द्रस्य समर्थान् पृथीवीपते!। कथं प्रवर्षेत् पर्जन्य उपायः परिदृश्यताम्। तमूचुर्नोदितास्तेन स्वमतानि मनीषिणः। तत्र त्वेको मुनिवरस्तं राजानमुवाच ह। कुपितास्तव राजेन्द्र! ब्राह्मणा निष्कृतिं चर। ऋष्यशृङ्गं मुनिसुतमानयस्व च पार्थिव!। वानेयमनभिज्ञञ्च नारीणामार्जवे रतम्। स चेदवतरेद्राजन् विषयं ते महातपाः। सद्यः प्रवर्षेत् पर्जन्य इति मे नात्र संशयः। एतच्छ्रुत्वा वचो राजन्! कृत्वा निष्कृतिमात्मनः। स गत्वा पुनरागच्छत् प्रसन्नेषु द्विजातिषु। राजानमागतं श्रुत्वा प्रतिसंजहृषुः प्रजाः। ततोऽङ्गपतिराहूय सचिवान्मन्त्रकोविदान्। ऋष्यशृङ्गागमे यत्नमकरोन्मन्त्रनिश्चयम्। सोऽध्यगच्छदुपायन्तु तैरमात्यैः सहाच्युत!। शास्त्रज्ञैरलमर्थज्ञैर्नीत्यां च परिनिष्ठितैः। तत आनाययामास वारमुख्या महीपतिः। वेश्याः सर्वत्र निष्णातास्ता उवाच स पार्थिवः। ऋष्यशृङ्गमृषेः पुत्रमानयध्वमुपायतः। लोभयित्वाभिविश्वास्य विषयं मम शोभनाः!"।

ततोवेश्याभिस्छलेन तस्योपहरणमुपवर्ण्य "ततो राजन्!

कश्यपात्मजैकपुत्रं प्रवेश्य योगेन विमुच्य नावम्। प्रमोदयन्त्यो विविधैरुपायै राजस्य रङ्गाधिपतेः समीपम्। संस्थाप्य तामाश्रमदर्शने तु सन्तारितां नावमथातिशुभ्राम्। तीरादुपादाय तथैव चक्रे नाव्याश्रमं नाम वनं विचित्रम्। अन्तःपुरे तं तु निवेश्य राजा विभाण्डकस्यात्मजमेकपुत्रम्। ददर्श देवं सहसा प्रवृष्टमापूर्यमाणञ्च जगज्जलेन। स लोमपादः परिपूर्णकामः सुतां ददावृष्यशृङ्गाय शान्ताम्" अनेनैव याजयित्वा दशरथेन पुत्रचतुष्टयं लेभे इति कथा रामायणादिष्वनुसन्धेया "मान्योमुनिः स्वां पुरमृष्यशृङ्गः" भट्टिः।

**ऋष्यादि** पु॰ ऋषिरादिरस्य। वैदिकमन्त्रस्यावश्यज्ञातव्ये ऋषिप्रभृतिपञ्चके तच्च पञ्चकं यथा "आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च। वेदितव्यं प्रयत्नेन ब्राह्मणेन विपश्चिता" योगिया॰। ब्राह्मणेन सह आर्षादिकमित्यर्थः व्यक्तमाह स एव "यस्तु जानाति तत्त्वेन आर्षं छन्दश्च दैवतम्। विनियोगं ब्राह्मणञ्च मन्त्रार्थज्ञानकर्म च। एकैकस्या ऋचः सोऽभिवन्द्योऽतिथिवद्भवेत्। देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः। पूर्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः। अधिकारो भवेत्तस्य रहस्यादिषु कर्मसु। मन्त्रे मन्त्रे प्रयत्नेन ज्ञातव्यं ब्राह्मणेन तु। विज्ञानपरिपूर्णस्तु स्वाध्यायफलमश्नुते। छन्दांस्ययातयामानि भवन्ति फलदान्यपि। श्रेयश्च लभते सोऽत्र धर्ममायुश्च विन्दति। दिव्यं वर्षसहस्रन्तु स्वस्थाने ऋषिभिः सह। तिष्ठन्ति तत्र तैः सार्द्धं तत्तुल्यश्चैव जायते"। ऋष्यादिपदार्थानाह स एव। "येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै। मन्त्रेण, तस्य तत्प्रोक्तमृषिभावस्तदात्मकः। छादनाच्छन्द इत्युक्तं वाससीवाऽथ वा क्रते। आत्मा तु च्छादितो देवैर्मृत्योर्भीतैस्तु वै पुरा। आदित्यैर्वसुभी रुद्रैस्तेन च्छन्द इतीरितम्। यस्य यस्य च देवस्य उद्दिष्टा या च देवता। तदाकारं भवेत्तस्य दैवतं देवतोच्यते। पुरा कल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च। अनेनेदं तु कर्त्तव्यं विनियोगः स उच्यते। निरुक्तं यस्य मन्त्रस्य समुत्पत्तिः प्रयोजनम्। प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं त्वभिधीयते। एवं पञ्चविधं प्रोक्तं जपकालेष्वनुस्मरेत्। होमे चान्तर्जले योगे स्वाध्याये याजने तथा"।

**ऋष्यादिन्यास** पु॰ ऋष्यादीनां न्यासः। तन्त्रोक्ते मूर्द्धादिषु ऋष्यादीनां न्यासे। ऋष्यादिशब्दार्थप्रदर्शनपूर्व्वकं तन्न्यासप्रकारः तन्त्रसा॰ उक्तः। "महेश्वरमुखाज्ज्ञात्वा यः साक्षात्तपसा मनुम्। संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः। गुरुत्वात् मस्तके चास्य न्यासस्तु परिकीर्त्तितः। सर्वेषां मन्त्रतत्त्वानां छादनात् छन्द उच्यते। अक्षरत्वात् पदत्वाच्च मुखे छन्दः समीरितम्। सर्वेषामेव जन्तूनां भावनात् प्रेरणात्तथा। हृदयाम्भोजमध्यस्था देवता तत्र तां न्यसेत्। ऋषिच्छन्दोऽपरिज्ञानान्न मन्त्रफलभाग्भवेत्। दौर्बल्यं याति मन्त्राणां विनियोगमजानताम्"। तन्त्रान्तरे "ऋषिं न्यसेन्मूर्द्ध्नि देशे छन्दस्तु मुखपङ्कजे। देवतां हृदये चैव बीजन्तु गुह्यदेशके। शक्तिञ्च पादयोश्चैव सर्वाङ्गे कीलकं न्यसेत्"। "आदावृष्यादिकन्यासः करशुद्धिस्ततः परम्। अङ्गुलिव्यापकन्यासौ हृदादिन्यास एव च। तालत्रयञ्च दिग्बन्धः प्राणायामस्ततः परम्। ध्यानं पूजा जपश्चेति सर्वतन्त्रेष्वयं विधिः" तन्त्रम्"। तत्तद्देवमन्त्राणां विशेषत ऋष्यादयस्तु तन्त्रसारादौ द्रष्टव्याः।

**ऋष्व** त्रि॰ ऋष व–उल्वादयश्च नि॰। "महति महन्नामसु निरु॰। "अजा इन्द्रस्य गिरयश्चिदृष्वाः" ऋ॰ ६,२४,८, "ऋष्वा महान्तः" भा॰। "गम्भीरय ऋष्वया यः" ऋ॰ ६,१८,१०। "गिरिर्न यः स्वतवाँ ऋष्व इन्द्रः" ऋ॰ ४,२०,६। "त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य पतिर्भूः" ऋ॰ १,५२,१३। "प्रास्तौदृष्वौजा ऋष्वेभिस्ततक्ष" ऋ॰ १०,१०५,६। "ऋष्वा ऋष्टीः" ऋष्टिशब्दे

**ऋहत्** त्रि॰ रह–शतृ पृ॰ साधु। ह्रस्वकायादौ। "दृहन्तं चिदृहते रन्धयानि" १०,२८,९। "ऋहते ह्रस्वकायाय" भा॰।

इति वाचस्पत्ये ऋकारादिशब्दार्थसङ्कलनम्।

---

# ॠ

ॠकारः स्वरवर्णविशेषः मूर्द्धन्यः स च दीर्घः उदात्तानुदात्तस्वरितभेदात् त्रिविधः पुनः अनुनासिकाननुनासिकभेदेन प्रत्येकं द्विधेति षट्। मातृकान्यासे वामनासायां तस्य न्यस्ततया वामनासाशब्देनाप्यभिधेयता। तस्य कामधेनुतन्त्रे ध्येयस्वरूपमुक्तं यथा। "ॠकारं परमेशानि! स्वयं परमकुण्डलीम्। पीतविद्युल्लताकारं पञ्चदेवमयं

सदा । चतुर्ज्ञानमयं वर्णं पञ्चप्राणयुतं सदा । त्रि-शक्तिसहितं वर्णं प्रणमामि सदा प्रिये !" । अस्य प्लुतत्वोक्तिश्चिन्त्या दीर्घस्य द्विमात्रत्वेन त्रिमात्रोच्चार्य्यप्लुताङ्कितत्वात् आकारभेदाच्च ।

ॠ गत्यां क्र्यादि० ग्रादि० पर० सक० सेट् । ग्रादि० श्नाप्रत्यये ह्रस्वः । ऋणाति ऋणीतः ऋणन्ति । ऋणीयात् ऋणातु ऋणीहि । आर्णात् आर्णीताम् आर्णन् । आरीत् । आर ! आरतुः । अरिता । ईर्यात् । अरिष्यति । आरिष्यत् । अरितव्यः अरणीयः आर्य्यः । अरिता । ऋणन् । ईर्णः । अरः ।

ॠ अव्य० ऋ-क्विप् वा० इत्वाभावः । १वाक्यारम्भे २रक्षायां मेदि० । ३निन्दायां ४भये च शब्दरत्ना० । ५देवमातरि ६दानवमातरि ७स्मृतौ ८गतौ च स्त्री० वाचसि न० मेदि० । ९भैरवे १०दनुजे पु० मेदि० ।

इति वाचस्पत्ये ॠकारादिशब्दार्थसङ्कलनम् ।

---

## ऌ

ऌकारः स्वरवर्णभेदः स च दन्तमूलीयः। उदात्तानुदात्तस्वरितभेदात् त्रिविधः अनुनासिकाननुनासिकभेदात् प्रत्येकं पुनर्द्विधेति षड्विधः । तस्य मातृकान्यासे दक्षगण्डे न्यस्ततया तच्छब्देनाप्यभिधानम् । तस्य ध्येयरूपं कामधेनुतन्त्रे उक्तं यथा । "ऌकारञ्चञ्चलापाङ्गि ! कुण्डली परदेवता । अत्र ब्रह्मादयः सर्व्वे तयोऽस्ति सततं प्रिये ! । पञ्चदेवमयं वर्णं चतुर्ज्ञानमयं सदा । पञ्चप्राणयुतं वर्णं तथागुणत्रयात्मकम् । विन्दुत्रयात्मकं वर्णं पीतविद्युल्लता यथा" । अस्य प्लुतत्वोक्तिश्चिन्त्या एकमात्रत्रिमात्रत्वाभ्यां तयोर्भेदात् । तकाररहितस्तु द्वादशानां बोधक इति सि०कौ० ऋशब्दे विवृतिः ।

ऌ अव्य० ऋगतौ ऋ-क्विप् तुगभावः लत्वम् । १देवमातरि २भूमौ ३पर्व्वते च मेदि० ।

इति वाचस्पत्ये ऌकारादिशब्दार्थसङ्कलनम् ।

---

## ॡ

ॡकारः तन्त्रमते मुग्धबोधमते च स्वरवर्णभेदः पा०मते तस्य दीर्घत्वं नास्ति तेन उदात्तानुदात्तस्वरितभेदात् अनुनासिकानुनासिकभेदाच्च षड्विधः । अत्रेदं बोध्यम् ऌवर्णस्य दीर्घत्वाभावेऽपि "ऌति ॡ वा" वार्त्ति०उक्तेः लकारद्वययुत ऌकारस्य एव तत्र विधेयः तत्र लकारद्वयरूपव्यञ्जनद्वयस्य एका मात्रा अचश्चापरा इति द्विमात्रत्वं तेन होॡकारः इत्यादौ दीर्घत्वव्यवहारः । मुग्धबोधे ऌत्रयमित्युक्तिरपि एकमात्रद्विमात्रत्रिमात्रत्वभेदापेक्षया । तेन न विरोधः । अतएव शिक्षायां "दुस्पृष्टश्चेति विज्ञेय ऌकारः प्लुतएव वेति" ऋकारऌकारयोः दुःस्पृष्टत्वोक्तिः। दुःस्पृष्टत्वञ्च ईषत्स्पृष्टत्वं तस्य रकारलकारादित्वे एव सम्भवति "अचोऽस्पृष्टायणस्त्वीषन्नेमस्पृष्टाःशलस्तथा" शिक्षायां यवरलानामीषत्स्पृष्टत्वोक्तेः । "तेन ऋकारऌकारयोरीषत्स्पृष्टत्वात् दुःस्पृष्टत्वम् । एवं सर्वेषामङ्गस्ये ऌवर्णस्य न दीर्घत्वकल्पनमिति सूक्ष्ममीक्षणीयम् । अस्य च लकारद्वयघटितत्वात् दन्त्यता । अन्ते च स्वरवर्णयोगात् अस्पृष्टत्वम् । तस्य च उदात्तादिभेदैः षड्विधत्वमपि । मातृकान्यासे च तस्य वामगण्डे न्यस्तता तेन तच्छब्देनाप्यस्याभिधानम् । कामधेनुतन्त्रे तस्य ध्येयस्वरूपमुक्तम् यथा "ॡकारं परमेशानि पूर्णचन्द्रसमप्रभम् । पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा । ऋणत्रयात्मकं वर्णं तथाविन्दुत्रयात्मकम् । चतुर्वर्गप्रदं देवि ! ध्यायेत् परमकुण्डलीम्" ।

ॡ अव्य० ऋ-रस्य लः । १देवनार्य्याम् २दैत्यस्त्रियाम् ३दनुजमातरि ४कामधेनुमातरि च स्त्री एकाक्षरकोषः । ५महादेवे पु०एकाक्षरकोषः ।

इति वाचस्पत्ये ॡकारादिशब्दार्थसङ्कलनम् ।

---

# ए

एकारः स्वरवर्णभेदः एषः "एदैतौ कण्ठताल्व्याविल्युक्तेः कण्ठताल्वोः स्थानयोरुच्चार्य्यः । स च दीर्घः द्विमात्रत्वात् उदात्तानुदात्तस्वरितभेदैरनुनासिकाननुनासिकाभेदभ्याञ्च षड्विधः। तस्य मातृकान्यासे ऊर्द्ध्वौष्ठस्थाने न्यस्ततया तच्छब्देनाप्यभिधेयता । तस्य ध्येयरूपं कामधेनुतन्त्रे । "एकारं परमं दिव्यं ब्रह्मविष्णुशिवात्मकम् । रङ्गिनी-कुसुमप्रख्यम् पञ्चदेवमयं सदा । पञ्चप्राणात्मकं वर्णं तथा विन्दुत्रयात्मकम् । चतुर्वर्गप्रदं देवि ! ध्यायेत् परम कुण्डलीम्" । एशब्दस्य वाचकाः शब्दास्तन्त्रे उक्ता यथा "एकारो वास्तवं शक्तिर्भिण्ठोशौञ्जौ भगं मरुत् । सूक्ष्मो भूतोऽर्द्धकेशो च ज्योत्स्ना श्रद्धा प्रमर्द्दनः । भयं ज्ञानं कृशा धीरा जङ्घा सर्वसमुद्भवः । वह्निर्विष्णुर्भगवती कुण्डली मोहिनो वसुः । योषिदाधारशक्तिश्च त्रिकोणा ईशसंज्ञकः । सन्धिरेकादशी भद्रा पद्मनाभः कुलाचलः" । "एकारो वामगण्डान्तः शक्तिर्भिण्टी भगन्तथा । माधवी-जङ्घ विजया श्रोष्ठः एकादशस्वरः" इति वीजवर्णाभिधानम्

**ए** अव्य० इ–विच् वा० न ह्रस्वः । १स्मृतौ २असूयायाम् ३अनुकम्पायाम् ४संबोधने ५आह्वाने च" मेदिनिः ६विष्णौ पु० एकाक्षरकोषः ।

**एक** त्रि० इण्–कन् । १एकत्वरूपप्रथमसंख्यान्विते, २केवले, ३मुख्ये, ४अन्यार्थे, ५सत्ये, ६अद्वितीये, ७समाने, ८अल्पे च । प्रायशः संख्यावाचकस्य संख्यासंख्येयोभयपरत्वेऽपि एकशब्दस्य भूरिशः एकत्वसंख्यान्वितपरत्वम् । तेन एकोघट-इत्यादि न तु घटस्यैकः । क्वचित्तु भावप्रधाननिर्द्देशपरत्वेन संख्यावाचकत्वमपि । "द्व्येकयोर्द्विवचनैकवचने" पा० । इह द्वित्वम् एकत्वं च द्व्येकशब्दयोरर्थः । अत्र द्विवचनान्तत्वमेव तथार्थत्वे लिङ्गम् संख्येयपरत्वे द्व्येकेषामिति स्यात् इन्द्रार्थानां संख्यान्वितानां बहुत्वात् । तेन एकद्विवचनशब्दोऽपि एकत्वद्वित्वार्थकः तत्रार्थे तयोःपरिभाषितत्वात् अतएव "सुपां कर्म्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्" इति सुपां तिङाञ्च संख्यावाचकत्वमुक्तम् । तथा "अनेकमन्यपदार्थे" पा० सूत्रे अनेकपदस्य एकवचनान्ततया प्रयोगात् नास्ति एकत्वं यत्र इति विग्रहेण एकत्वसून्यार्थकता । एकसंख्यान्वितपरत्वे ह्यनेके इति स्यात् "पतन्त्यनेके जलधेरिवोर्मय" इत्यादौ बहुवचनान्ततयैवानेकशब्दस्य प्रयोगात् । स्वारसिकप्रयोगे तु न लक्षणा तेन घटस्यैक इत्यादि न प्रयोगः इति द्रष्टव्यम् । इतरसंख्यासु एकत्वस्यानुगमात् द्वित्वादीनामेकत्वबुद्ध्यैव जननाच्च इण्धात्वर्थानुगमात् तस्य अन्वर्थनामता । संख्या च द्रव्यसमवेतो गुणविशेषः गुणादौ च संख्यान्वयः परम्परयेति विशेषः । एकत्वादेर्जातित्वनिरासेन गुणत्वव्यवस्थापनं कणा० सू०वृत्त्योःकृतं यथा "रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम्" क० सू० "रूपरसगन्धस्पर्शेति संख्यादिपञ्चकभिन्नगुणोपलक्षणं व्यतिरेकादिति व्यभिचारात् । तदयमर्थः, एकोघट इति विशिष्टप्रतीतिर्विशेषणज्ञानजन्या, तत्र विशेषणं न रूपादि, तद्व्यतिरेकेण जायमानत्वात् । न च घटत्वादिकमेव निमित्तम्, पटेऽपि जायमानत्वात्, न चैकत्वं सत्तावत् सामान्यम्, सत्तया सहान्यूनानतिरिक्तवृत्तित्वात्, न च द्रव्यमात्रे सामान्यं तत्, द्रव्यत्वेनान्यूनानतिरिक्तदेशत्वात्, न चान्यूनानतिरिक्तदेशत्वेऽपि प्रतीतिभेदाद्भेदः, प्रतीतिभेदस्य स्वरूपकृतत्वे सत्ताऽपि भिद्येत, विषयभेदकृतत्वे तु विषयभेदानुपपत्तेरुक्तत्वात् अन्यथा घटत्वकलसत्वयोरपि भेदापत्तेः । न च स्वरूपाभेद एकत्वमिति भूषणोक्तं युक्तम् । घटस्वरूपभेदश्चेदेकत्वं तदा पटादावेकत्वप्रत्ययो न स्यात् स्वरूपभेदोद्वित्वादिकमित्यपि भूषणमतमनुपपन्नं स्वरूपभेदस्य त्रिचतुरादिसाधारण्येन व्यवहारवैचित्र्यानुपपत्तेरिति भावः" । वैया० सू० सङ्ख्यानिरूपणपूर्वकं तद्द्विवत्त्वादिनिरूपणं यथा "अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिः । कपिञ्जलालम्भवाक्ये त्रित्वन्यायाद्यथोच्यते । उक्तञ्च वाक्यपदीये । "यथौषधिरसाः सर्वे मधुन्याहितशक्तयः । अविभागेन वर्त्तन्ते संख्यां तां तादृशीं विदुरिति" । परित्यक्तविशेषं वा संख्यासामान्यं तत् । उक्तञ्च "भेदानां वा परित्यागात्संख्यात्मा स तथाविधः । व्यापाराज्जातिभागस्य भेदापोहेन वर्त्तते । अगृहीतविशेषेण यथा रूपेण रूपवान् । प्रख्यायते न शुक्लादि भेदापोहस्तु गम्यते इति" । अस्याः वृत्तौ समासादौ भानं न्यायसिद्धमिति शेषः । इति मतस्थिति-वैयाकरणानाम् । अयं भावः राजपुरुष इत्यादौ राज्ञोराज्ञोः राज्ञां वायं पुरुष इति, जिज्ञासा जायते । विशेषजिज्ञासायां सामान्यरूपेण तत्प्रतीतिः शब्दादव-

श्यको अतस्तस्यां शक्तिरिति । तस्या एकत्वेन प्रतीतौ न्यायमाह कपिञ्जलेति । बहुत्वगणनायां त्रित्वस्यैव प्रथमोपस्थितत्वात् तद्रूपेणैव भानवदेकत्वस्य सर्वतः प्रथमोपस्थितत्वमस्तीति । वस्तुतस्तु जिज्ञासैव नानुभवसिद्धा । तथात्वे वा ज्ञानेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भावात्तत्द्रूपेणैव वाच्यता स्यादिति ध्येयम्" ।

तथा च उत्सर्गात् सर्वत्र अभेदैकत्वसंख्यैव वृत्तौ प्रतीयते न तु विशेषेण । अत एव "संख्या तु व्यञ्जकाभावादव्यक्ता प्रातरादिवत् । यत्र तु व्यञ्जकं किञ्चित् तत्र संख्या प्रतीयते" इति वाक्यपदीये उक्तम्

तेन राजपुरुष इत्यादौ न विशेषसंख्याप्रतीतिः व्यञ्जकाभावात् त्वत्पुत्रः अस्मद्धनम् इत्यादौ तु विशेषेण तत्प्रतीतिः त्वादेशतदभावयोर्व्यञ्जकत्वात् "त्वमावेकवचने" इति पा० एकवचने त्वमादेशस्य विधानात् । तदभावादेव द्वित्वबहुत्वयोर्विशेषेण प्रतीतिः । एवं द्रव्यैक्ये एकदेशितत्पुरुषविधानात् अर्द्धपिप्पलीत्यादौ एकत्वप्रतीतिः द्वित्वादौ विवक्षिते तु पिप्पल्यर्द्धमित्याद्येव स्यादिति तत्र विशेषसंख्याप्रतीतिः । "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके कामधुग्भवति" श्रुतिः एकमेवाद्वितीयं ब्रह्म" श्रुतिः । ६ भेदत्रयशून्ये परमेश्वरे पु० । "एकोऽनेकः सवः कः किम्" विष्णु स० । "परमार्थतः सजातीयविजातीयस्वगतभेदराहित्यात् एकः" भा० । सजातीयभेदः यथा वृक्षे वृक्षान्तरात् भेदः विजातीयभेदः यथा वृक्षे पटाद्भेदः । स्वगतभेदः यथा वृक्षे शाखादिभ्योभेद इत्येवं भेदत्रयराहित्यञ्च सर्वस्य ब्रह्मात्मकत्वात् कार्य्यकारणयोरभेदात् तदतिरिक्तपरमार्थवस्त्वन्तराभावाच्च । तदेव "एकमेवाद्वितीयमिति" श्रुतौ पदत्रयेणोक्तम् इह तु अन्यपदाभावात् एकशब्दस्यैव तथा भेदत्रयराहित्यपरत्वमिति बोध्यम् । सांख्यमते तु "एकोऽद्वितीय इति वेदवचांसि पुंसि वैधर्म्यलक्षणभिदाविरहं वदन्ति" इत्युक्तवैधर्म्यरूपभेदराहित्यमेकत्वमिति बोध्यम् । न्यायमते तु "एकत्वमनुपश्यतः" इति श्रुत्यन्तरात् एकत्वेन चिन्त्यतया, प्राधान्येन वा एकत्वं समर्थनीयम् । "एकातपत्रा पृथिवीभृताङ्गणैः" माघः । "त्वमेकदृश्यं नयनैः पिबन्त्यः" "समात्त भावैकरसं मनः स्थितम्" कुमा० त्वमेकोह्यस्य सर्वस्य विधानस्य स्वयम्भुवः" मनुः । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजोह्येकोऽनुशयानोऽनुशेते" श्रुतिः। "एकातपत्रं जगतः प्रभुत्वम्" "त्वमेका कल्याणी गिरिशरमणी कालि! सततम्" कर्पू० स्त० "हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता" भाषा० । विशेषणयोरेकस्य विशेष्यत्वविवक्षया क० स० एकशब्दस्य पूर्वनिपातः एकधनुर्द्धर इत्यादि "अमोघं सन्दधे शस्त्रं धनुष्येकधनुर्द्धरः" रघुः । वीरशब्देन समासे तु एकवीरः वीरैक इति रूपद्वयं भवतीति भेदः । वस्तुतस्तत्र वीरैकः इत्येव एकेषु मुख्येषु वीरयते इति वीरधातोरूपवीरशब्देन सप्तमीतत्पुरुषे एकवीर इति प्रौढम० । एकशब्दस्य संख्यावाचकत्वेऽपि "संख्यापूर्वो द्विगुः" पा० न द्विगुत्वमिति । अस्य सर्वनामकार्यम् एके एकस्मै एकस्मात् एकेषाम् एकस्मिन् । स्त्रियाम् एकस्यै एकस्याः एकासामेकस्यामित्यादि नञ्तत्पुरुषे तु । अनेक एकभिन्ने त्रि० ब० व० । तत्र एकत्व संख्यान्वयासम्भवाच्चैकवचनप्रयोगः । तत्र च सर्वनामकार्यम् "अनेके अनेकस्मै इत्यादि अनेके सेवन्ते भवदधिकगीर्वाणनिवहान्" कर्पू० स्त० । एकत्वार्थकेन तेन बहुव्रीहौ एकवचनप्रयोगोऽपि "अनेकमन्यपदार्थे" पा० ।

एकस्य भावः त्व । एकत्व न० तल् । एकता स्त्री, ष्यञ् ऐक्य न० एकत्वसंख्यायां साम्ये श्रेष्ठत्वे अभेदे च । "तत्र कोमोहः कः शोक एकत्वमनुपश्यतः" श्रुतिः "अर्थान्तरमेकत्वम्" कणा० सू० । "एकत्वं सागता यस्मात्" स्मृतिः । "समालोक्यैकतामेव शशिनो भास्करस्य च" भा० व० २२३ । "व्रजतोरपि प्रणयपूर्वमेकताम्" माघः "ऐक्यं सोऽन्वये" मुग्धबो० । "द्व्यैक्ये" सि० कौ० ।

डतर । एकतर द्वयोर्मध्ये जातिगुणक्रियादिभिर्निर्धार्य्ये एकस्मिन् त्रि० एकतरो ब्राह्मणः एकतरः कठः एकतरो नीलः एकतरश्चल इत्यादि । "आत्मानं वा शरीरं वा अह्नचैकतरं इह" भा० आ० १६६ अ० । "एकतरपक्षपातिनी युक्तिर्विनिगमना" न्याय० । स च शब्दः अन्यतरान्यतमवत् अव्युत्पन्नं प्रातिपदिकमित्यन्ये अतएव "अडुडतरादिभ्यः" पा० एकतरशब्दात्र अदुड् । एकतरं कुलम् । तेन न सर्वनामकार्य्यम् "द्वयोरेकतरे वृद्धिः क्रियतामित्यादि, एकशब्दस्य भिन्नार्थकत्वेन एकतरशब्दोऽपि भिन्नार्थे अमरः । डतम । एकतम बहूनां मध्ये जात्यादिभिः निर्द्धार्य्ये एकस्मिन् त्रि० "यदि ह्येकतमोह्येकां स्त्रीधनं भक्षयेद्बलात्" कात्या० स्मृ० । सर्वनामकार्य्यम् एकतमे एकतमस्मादित्यादि क्लीवे स्वमोः अदुड् एकतमत् । तसिल् । एकतस् एकस्मिन्नित्यर्थे अव्य० "एकतोदतः" मनुः "वामेक-

तस्तत्र बिभर्त्ति गुरुर्वितन्त्रः" रघुः। त्रल्। एकत्र एकस्मिन्नित्यर्थे अव्य० "एकत्र स्फटिकतटांशुभिन्ननीराः" माघः। "तथैकत्र करे दण" मनुः "अन्त्यजैर्गर्हभैरुष्ट्रैः सहैकत्रावतिष्ठते" या०। दाच्। एकदा एकस्मिन् काले अव्य०। "स स्म भुङ्क्ते सहस्राणां बहूनामन्नमेकदा। एकदा स्वाल्पकं भुङ्क्ते" भा०अनु०१५६ अ०। अल्पाद्यर्थकात् कारकार्थे वीप्सार्थे शस्। एकशस् अल्पमल्पमेकमेकं वेत्याद्यर्थे अव्य० "परिस्तीर्य्य तं पूर्व्ववत् पात्रासादनमेकशः" कात्या० ४,२,४। एवमेकैकेन एकैकस्मै इत्याद्यर्थेऽपि। प्रकारे धा। एकधा एकप्रकारे "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" श्रुतिः। ध्यमुञ् ऐकध्यम् एकधेत्यर्थे अव्य०।

**एकक** त्रि०एक+असहायेऽर्थे वा कन्। असहाये "त्वमाचरिष्णु एककं भरतामप यद्रप:" ऋ० १०,५६,६। "महानप्येकको वृक्षः सर्वतः सुप्रतिष्ठितः। प्रसह्यैव हि वातेन शक्यो धर्षयितुं यतः" पञ्चत०। "विधिरेककचक्रचारिणम्" नैषधम्। सर्वनामत्वेन टेरकचि तु। एकशब्दार्थे इति भेदः

**एककपाल** त्रि० एककपाले संस्कृतः अण् तस्य लुक्। एककपालसंस्कृते पुरोडाशादौ। "एतं द्यावापृथिव्यमेककपालं पुरोडाशम्" शत० ब्रा० २,४,३।

**एककर** त्रि० एकं करोति एक+कृ—"दिवाविभेत्यादिना" पा० संख्यापूर्वकत्वेन अणोबाधकः ट उप०स० स्त्रियाम् ङीप्। एकमात्रकारके एवं द्विकरत्रिकरादयोऽपि तत्तत्संख्यान्वितकारके त्रि० स्त्रियां ङीप्।

**एककार्य्य** त्रि०एकं समानं कार्य्यं यस्य। समानकार्य्यकरे एकस्य पाकर्त्तुर्दर्शने अन्यस्य पाककर्त्तुःस्मरणं भवतीति स्मारकगणमध्ये गौत०सू० उक्तम् यथा। "प्रणिधान निबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्य्य वियोगैककार्य्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषरागार्थित्वक्रियाधर्म्माधर्म्मनिमित्तेभ्यः" सू०। "एककार्य्यात् एककर्त्तुर्दर्शनात् कर्त्रन्तरस्य स्मृतिः" वृत्तिः। एकं कार्य्यं ययोः तयोर्भावः। एककार्य्यत्व तुल्यकार्य्यकरत्वरूपे सङ्गतिभेदे। तथा च समानकार्य्यकारित्वं स्वकर्त्तव्यकार्य्यकारित्वं सङ्गतिः। "सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा। निर्वाहकैककार्य्यत्वं षोढा सङ्गतिरिष्यते" अनुमानजा०। कर्म्मधार०। एकस्मिन् कार्य्ये "एककार्य्यौ समुद्यन्तौ कृष्णौ युद्धेऽपराजितौ" भा० स०१०अ०। "शुभाशुभमनासङ्गमेककार्य्यमनन्तरम्। एतत्तु ब्रह्मणो वृत्तमाहुरेकपदं द्विजम्" भा०व०२१२अ०।

**एककाल** कर्म्मधारयः। एकस्मिन् काले "एककालं चरेद्भैक्ष्यं न प्रसज्येत विस्तरे" मनुः। "मुनिभिर्द्विरशनमुक्तम्" इत्युक्तेर्भोजनस्य द्विकालिकत्वं सार्व्वजनीनं यतेस्तु भिक्षान्नभोजनस्य रागप्राप्ततया तदंशे विधित्वासम्भवेन एककालशब्देन द्वितीयकालनिवृत्त्यर्था परिसंख्यैवेहाश्रयणीया न च नियमः, एककालभोजनाकरणे दोषाश्रवणात्। एककालोजनकतयास्त्यस्य ठन्। "कालाट् ठञ्" तु न भवति समासप्रतिषेधविधौ तदन्तविधेः प्रतिषेधात्। एककालिक एककालभवे त्रि०। "तेभ्यो लब्धेन भैक्ष्येण वर्त्तयेदेककालिकम्" स्मृतिः। तत्रभवः खञ्। एककालीनोऽप्यत्र त्रि०।

**एककुण्डल** पु०एकं कुण्डलमस्य। १बलरामे २कुवेरे च मेदि०

**एककुष्ठ** न० एकमसाध्यत्वात् प्रधानं कुष्ठम्। सुश्रुतोक्ते कुष्ठभेदे। तत्र "एकादशक्षुद्रकुष्ठानीति" उद्दिश्य "क्षुद्रकुष्ठान्यपि स्थूलारुष्कं महाकुष्ठमेककुष्ठं चर्म्मदलम् विसर्पः परिसर्पः सिध्म विचर्चिका किटिभं पामा रकसेति" विभज्य "कृष्णारुणं येन भवेच्छरीरं तदेककुष्ठं प्रवदन्त्यसाध्यमिति" लक्षितम्।

**एकगम्य** त्रि० एकत्वेन गम्यः। १निर्विकल्पकसमाधिगम्ये अखण्डाकारे चिदात्मनि। तत्र च मितिमातृमेयशून्यत्वेनैकरूपतया ज्ञानात् तथात्वम्। परमैकतया गम्ये २परमेश्वरे च "त्वमेको गम्यस्त्वमसि पयसामर्णव इव" पुष्पदन्तेन तस्यैकपगम्यत्वोक्तेस्तथात्वम्।

**एकगुरु** पु० एकोऽभिन्नो गुरुर्य्यस्य। समानाध्यापके सतीर्थ्ये।

**एकग्राम** पु० कर्म०। १अभिन्नग्रामे। "एकग्रामे चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे। पतिना नीयमानायाः पुरः शुक्रो न दुष्यति" ज्यो०। तत्रभवः छ। एकग्रामीय एकग्रामभवे त्रि०। "नैकग्रामीणमतिथिं विप्रं साङ्गतिकं यथा। गृहे उपस्थितं विद्यात् भार्य्या यत्राग्नयोऽपि वा" मनुः अस्य गहा०पाठात् छएव एकग्रामीय तत्रार्थे। एकग्रामीणप्रयोगस्तु आर्षः। एकोग्रामोऽस्य। २समानग्रामवासिनि त्रि०।

**एकचक्र** न०एकं श्रेष्ठं वा चक्रं यत्र। १हरिरथे २सूर्य्यरथे पु०। ३पुरोभेदे स्त्री यत्र बकासुरस्य बधो भीमेन कृतः। "एकचक्रोरथो यस्य" सूर्य्यस्तुतिः "पृथुवर्त्तुलतास्वितलक्ष्म्-मिहिरस्यन्दनशिल्पशिक्षया। विधिरेककचक्रचारिणं किमु निर्मितुमसति मान्मथं रथम्" नैष० सूर्य्यरथस्यैकचक्रता-

रित्यनुक्रम्” । ४ असहायवरे त्रि० “सूर्यरथवर्णनञ्च” ऋ० १,१६४,२ । “सप्त युञ्जन्ति रथमेकचक्रमेकोऽश्वो वहति सप्तनामा । त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधितस्थुः” । व्याख्यातैषा भाष्यकृता यथा

“एकचक्रमेकरथाङ्गोपेतम् । यद्यपि त्रीणि चक्राणि तथापि तेषामेकरूपत्वादेकचक्रमित्युच्यते रथं रंहणस्वभावं सूर्यस्य सम्बन्धिनं सप्तैतत्संख्यका अश्वा युञ्जन्ति अनुबध्नन्ति वहन्त्यहोरात्रनिर्वाहाय किं वस्तुतः सप्त नेत्याह । एकोऽश्वः सप्तनामा । एक एव सप्ताभिधानः सप्तधा नमनप्रकारो वा एक एव वायुः सप्तरूपं कृत्वा वहतीत्यर्थः वाय्वधीनत्वादन्तरिक्षसञ्चारस्य एकचक्रमित्युक्तं कीदृशं तदित्यत आह । त्रिनाभि वलयत्रयमध्यस्थितनाभिस्थानीयच्छिद्रत्रयोपेतम् । अजरम् अमरणधर्मात्मकम् । अनर्वम् अशिथिलं पुनस्तदेव विशेष्यते । यत्र यस्मिंश्चक्रे इमा विश्वा भुवना इमानि प्रसिद्धानि सर्वाणि भूतजातान्यधि आश्रित्य तस्थुः तिष्ठन्ति । यद्वा एकचक्रमेकचारिणमसाहाय्येन सञ्चरन्तं रथमादित्यमण्डलं सप्त युञ्जन्ति सर्पणस्वभावाः सप्तसंख्या वा रश्मयः सप्तप्रकारकार्य्या असाधारणाः परस्परविलक्षणाः षडृतवः एकः-साधारण इत्येवं रूपाः अथवा मासद्वयात्मकाः षट् अपरोऽधिमासात्मक एक इत्येवं सप्तर्त्तवो युञ्जन्ति । एतस्य कार्यं निर्वहन्तीत्यर्थः । स चैकोऽसहायोऽश्वो व्यापनशील आदित्यः सप्तनामा सप्तरसानां सन्नमयितारो रश्मयो यस्य तादृशः । सप्त ऋषिभिः स्तूयमानो वादित्यो वहति धारयति भ्रमयतीत्यर्थः । किं भूतं ? त्रिनाभि चक्रम् । तिस्रो नाभिस्थानीया सन्ध्यासम्बद्धा वा एव ऋतवो यस्य तत्तादृशं के ते ग्रीष्मवर्षाहेमन्ताख्याः यद्वा भूतभविष्यद्वर्त्तमानाख्यास्त्रयः कालास्त्रिनाभयः । तद्विशिष्टं चक्रं चक्रवत् पुनःपुनः परिभ्रममाणं संवत्सराख्यचक्रमजरममरणं न हि कदाचिदपि कालोम्रियते “अनादिनिधनः कालः” इति स्मृतेः । अनर्वमप्रतिहतम् । ईदृशं संवत्सराख्यं चक्रं नानाकालावयवोपेतमयमादित्यः पुनः पुनरावर्त्तयति संवत्सरादर्वाचीनानां तत्रैवान्तर्भावात् युगादीनां तदावृत्तिसाध्यत्वात् संवत्सरस्य चक्रत्वेन रूपणम् । पुनः कीदृशं तत् । यत्र यस्मिंश्चक्र इमा विश्वा भुवना इमानि सर्वाणि भूतान्यधितस्थुः । आश्रित्य तिष्ठन्ति कालाधीनत्वात् सर्वस्याः स्थितेः । ईदृशस्य कालस्य कारणभूतपरमेश्वरपरिज्ञानेन मोक्षसद्भावात् ज्ञानमोक्षाक्षरप्रशंसा चेत्यनुक्रमणयामुक्तम् । अयमपि मन्त्रो यास्केन सप्त युञ्जन्ति रथमेकचक्रमेकचारिणमित्यादिना व्याख्यातः तदत्राप्यनुसन्धेयम्” भा० ।

भाष्येऽनुसन्धेयतयोक्तं यास्कवाक्यमुदाह्रियते “सप्त युञ्जन्ति रथमेकचक्रमित्यादि” श्रुतिमधिकृत्योक्तम् सप्त युञ्जन्ति रथमेकचक्रमेकचारिणम् । चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वा । एकोऽश्वो वहति सप्तनामादित्यः सप्तास्य रश्मयो रसानभि संनामयन्ति सप्तैनमृषयः स्तुवन्तीति वा । इदमपीतरं नामैतस्मादेवाभिसंनामात् । संवत्सरप्रधान उत्तरोऽर्द्धर्चः । त्रिनाभि चक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति । संवत्सरः संवसन्तेऽस्मिन् भूतानि । ग्रीष्मोग्रस्यन्तेऽस्मिन्रसाः, वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवान् हिमं पुनर्हन्तेर्वा हिनोतेर्वा । अजरममरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन् यत्रेमानि सर्वाणि भूतान्यभि संतिष्ठन्ते तं संवत्सरं सर्वमात्राभिः स्तौति । “पञ्चारे चक्रे परिवर्त्तमानः” श्रुतिःपञ्चर्त्तुतया । “पञ्चर्त्तवः संवत्सरस्येति” इति च ब्राह्मणं हेमन्तशिशिरयोः समासेन । “षडर आहुरर्पितमिति” श्रुतिः षडृतुतया । अराः प्रत्यृता नाभौ । षट्पुनः सहतेः । “द्वादशारं नहि तज्जराय द्वादशप्रधयश्चक्रमेकम्” इति श्रुतिः मासानाम् । मासा मानात् । प्रधिः प्रहितोभवति “तस्मिन्त् साकं त्रिंशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः” श्रुतिः । “षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च” ब्राह्मणं समासेन । “सप्तशतानि विंशतिश्च तस्थुः” श्रुतिः । “सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च” ब्राह्मणं विभागेन” ५ दनोः पुत्रभेदे पु० “चत्वारिंशद्दनोः पुत्राः” इत्युपक्रम्य “एकपादेकचक्रश्च विरूपाक्षमहोदरौ” भा० आ० ६५ । स एव प्रतिविन्ध्यतया जातः यथाह भा० आ० ६७ । “एकचक्र इति ख्यात आसीद् यस्तु महासुरः । प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ” भा० पुरीभेदस्तु “एकचक्रां ततो गत्वा पाण्डवाः संशितव्रताः” इत्युपक्रम्य “मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने । तत्रासमाद् क्षुधितं पुरुषादं वृकोदरः । भीमसेनो महाबाहुर्वकं नाम महाबलम्” भा० आ० ६१ अ० उक्तः । एकमेव चक्रं सैन्यसंघो यत्र । ६ एकराजचिह्ने त्रि० । “तावत् शशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः” भाग० ३,१,६० । “एकस्यैव चक्रं सैन्यं

"यत्र" श्रीधरः । "एकराजसमिव स्थितैकचक्राम्" काद० । बकस्य तत्पुरीयस्य भीमकर्त्तृकवधकथा च भा०आ० १५७ अध्यायादौ । "एकचक्रां गतास्ते तु कुन्तीपुत्रा महाबलाः" इत्यादिना "भक्ष्यमानस्य भीमेन तस्य घोरस्य रक्षसः" इत्यन्तेन १६३अ० वर्णिता ।

**एकचत्वारिंशत्** स्त्री एकाधिका चत्वारिंशत् शा०त० । (एकचल्लिश) १एकाधिकचत्वारिंशत्संख्यायां २तत्संख्यान्विते च बहुत्वबोधकत्वेऽपि उभयत्र नित्यैकवचनम् । एवमेकविंशति एकत्रिंशत् एकपञ्चाशत् एकषष्टि एकसप्तति एकाशीति एकनवति इत्येते शब्दाः क्रमेण एकविंशत्यादिसंख्यायां तदन्विते च स्त्री एकाधिकादश इत्यत्र तु आत् एकादश इति भेदः सर्वेभ्यः पूरणे डट् । एकचत्वारिंशादिस्तत्संख्यापूरणे त्रि० स्त्रियां ङीप् ।

**एकचर** त्रि० एकः सन् चरति चर-पचा० अच् सुप्सुपेति स० । एकाकीभूत्वा चारिणि असहायचारिणि । "मुनिरेकचरः श्रीमान्" धर्म्मो विग्रहवानिव" भा०व० ७९अ० । "अनोकशायी लघुरल्पचारश्चरन् देशानेकचरः स भिक्षुः" भा०आ० ९१अ० । "न भक्षयेदेकचरान् अज्ञातांश्च मृगद्विजान्" मनुः । "ये एकाकिनः प्रायेण चरन्ति सर्पादयस्तानेकचरान्" कुल्लू० "अयमेकचरोऽभिवर्त्तते माम्" किरा० । "पृथिव्यामेकचरः परिबभ्राम" भा० ५,५,२० ।

**एकचरण** पु० एकश्चरणो यस्य । एकपादयुक्ते १मनुष्यभेदे २तद्युक्तजनपदभेदे च स च देशः बृहत्सं० कूर्मविभागे ऐशान्यामुक्तः । "ऐशान्यामेकलव्यराज्यपशुपालकीरकाश्मीरा" इत्युपक्रम्य "एकचरणानुविश्वाः सुवर्णभूर्वसुवनं दिविष्ठाश्च" [यममने

**एकचर्य्या** स्त्री एकस्य चर्य्या चर-भावे क्यप् ६त० । असहा-

**एकचारिन्** त्रि० एकः सन् चरति चर-णिनि "सुप्सुपेति" स० । असहायचरे १एकचरे त्रि० । २बुद्धसहचरभेदे पु० त्रिका० ।

**एकच्छाया** स्त्री एकस्य अन्यासहायस्याधमर्णस्य छाया सादृश्यम् । अधमर्णसादृश्ये । "बहवः स्युर्यदि स्वांशान् दद्युः प्रतिभुवो धनम् । एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि" या० । "एकच्छायाश्रितेषु प्रतिभूषु एकस्याधमर्णस्य छाया सादृश्यं तामाश्रिताः एकच्छायाश्रिताः अधमर्णो यथा कृत्स्नदानाय स्थितस्तथा दानप्रतिभुवोऽपि प्रत्येकं द्रव्यदानाय स्थिताः" मिता० । "एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते । प्रोषिते तत्सुतो दाप्यः पितर्य्यथ मृते सति" कात्या० स्मृ० । एकैव छाया आच्छादनरूपा यत्र । तुल्यच्छादने त्रि० "एकच्छायं चक्रतुस्तावाकाशं शरवृष्टिभिः" भा० वि० १८७ ।

**एकज** त्रि० एकस्मात् जायते जन-ड ५त० । १एकस्माज्जाते "साकञ्जानां सप्तथमाहुरेकजम्" ऋ० १, १६४,१५ । साकंजानामेकस्मादादित्यात् सहोत्पन्नानाम् [illegible] मध्ये सप्तथं सप्तमर्तुम् एकजमेकेनोत्पन्नमाहुः कालतत्त्वविदः, चैत्रादीनां द्वादशानां मासानां द्वयमेकेन वसन्ताद्याः षडृतवो भवन्ति अधिमासेनैक उत्पद्यते सप्तमर्त्तुः" भा० । एकेन जातमित्युक्तिश्चिन्त्या कर्त्तृकरणयोरेव तृतीयासमासो न हेतुतृतीयेति नियमात् । २सोदराक्षोदरभ्रातरि तयोरेकशरीरोत्पन्नत्वात् एकजत्वम् ३भगिन्यां स्त्री जन-क्त । ५त० । एकजातादयोऽप्यत्र सर्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वांस्तांस्तेन पुत्रेण पुत्रिणोमनुरब्रवीत्" स्मृतिः "बह्वीषु चैकजातानां नानास्त्रीषु निबोधत" मनुः । एकः असहाय एव जायते जन-ड सुप्सुपेति स० । ४असहायतया जाते "एकजम्" कात्या० ६, १,१ । "एकः असहाय एव भूमेर्जातः तमेकं यूपं इयति" कर्कः । "उप ते पाजो न त्वा दृहन्ते वशी वशं नयस एकज ! त्वम्" ऋ० १०,८४,२ ।

**एकजटा** स्त्री एका जटा यस्याः । सर्व्वतारिणीगणप्रकृतिरूपे देवीभेदे तदाविर्भावः कालिका० ६१अ० वर्णितो यथा "सर्वे सुरगणाः सेन्द्रास्ततोगत्वा हिमाचलम् । गङ्गावतारनिकटे महामायां प्रतुष्टुवुः । अनेकशः स्तुता देवी तदा सर्वामरोत्करैः । मातङ्गवनिताभूर्त्तिर्भूत्वा देवानपृच्छत । युष्माभिरमरैरत्र स्तूयते का च भाविनी । किमर्थमागता यूयं मातङ्गस्याश्रमं प्रति । एवं ब्रुवन्त्या मातङ्ग्यास्तस्यास्तु कायकोषतः । समुद्भूता ब्रवीद्देवी मां स्तुवन्ति सुरा इति । शुम्भो निशुम्भोऽसुरौ बाधेते सकलान् सुरान् । तस्मात् तयोर्वधायाहं स्तुयेऽद्य सकलैः सुरैः । विनिःसृतायां देव्यान्तु मातङ्ग्याः कायतस्तदा । भिन्नाञ्जननिभा कृष्णा साभूत् गौरी क्षणादपि । कालिकाख्याऽभवत् सापि हिमाचलकृताश्रया । तामुग्रतारामृषयो वदन्तीह मनीषिणः । उग्रादपि भयात् त्राति यस्माद्भक्तान् सदाम्बिका । एतस्याः प्रथमं बीजं कथितं तन्त्रमेव च । एषैवैकजटा ख्याता यस्मात्तस्या जटैकिका । इत्युक्तं चिन्तनं चास्याः सम्यक् वेतालभैरवौ ! । यथा ध्यात्वा महादेवीं भक्तः प्राप्नोत्यभीप्सितम् । चतुर्भुजां कृष्णवर्णां मुण्डमालाविभूषिताम् । खड्गं दक्षिणपाणिभ्यां बिभ्रतीन्दीवरं तथः । कर्त्रीञ्च

खर्परञ्चैव क्रमाद्वामेन बिभ्रती। खं लिखन्ती जटामेकां बिभ्रती शिरसा स्वयम्। मुण्डमालाधरा शीर्षे ग्रीवायामपि सर्वदा। वक्षसा नागहारन्तु बिभ्रती रक्तलोचना। कृष्णवस्त्रधरां कट्यां व्याघ्राजिनसमन्विता। वामपादं शवहृदि संस्थाप्य दक्षिणं पदम्। विन्यस्य सिंहपृष्ठे तु लेलिहानाऽऽसवं स्वयम्। साट्टहासमहाघोरारावयुक्ताऽतिभीषणा। चिन्त्योग्रतारा सततं भक्तिमद्भिः सुखेप्सुभिः। एतस्याः संप्रवक्ष्यामि या अष्टौ योगिन्यो मताः। महाकाल्यश्च रुद्राणी उग्रा भीमा तथैव च। घोरा च भ्रामरी चैव महारात्रिश्च सप्तमी। भैरवी चाष्टमी प्रोक्ता योगिनीस्तु प्रपूजयेत्"। तन्त्रसा०। पञ्चाक्षरीं विद्यां प्रदर्श्य "पञ्चाक्षरी एकजटा(ओम्)ताराभावे महेश्वरि!। (ओम्) ताराद्या तु भवेद्देवि! श्रीमन्नीलसरस्वती"। "अन्यासां विद्यानामेकजटैव देवता प्रकृतित्वात्" कृष्णा०। तद्भेदाश्च "ताराचोग्रा महोग्रा च वज्रा काली सरस्वती। कामेश्वरी च चामुण्डा इत्यष्टौ तारिणीभिदाः" तन्त्रसा०।

**एकजन्मन्** पु० एकं प्रधानं जन्म यस्य एकेभ्यो प्रधानेभ्यो दिक्पालांशेभ्यो वा जन्म यस्य वा। १नृपे त्रिका० इतमनुष्यापेक्षया प्रधानभोगसाधनजन्मत्वेन दिक्पालांशभूतत्वेन च तथात्वम्। एकमेव न द्वितीयं जन्म यस्य। २शूद्रजातौ पुंस्त्री तस्य सावित्रजन्माभावात् गर्भमात्रजन्मकत्वात्तथात्वम् स्त्रियां वा ङाप्।

**एकजाति** पुंस्त्री एका जातिर्जन्मास्य। शूद्रजातौ "ब्राह्मणः क्षत्रियोवैश्यस्त्रयोवर्णा द्विजातयः। चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः" मनुना तस्यैकमात्रजन्मत्वप्रतिपादनेन द्विजातिवत् सावित्रजन्मराहित्येन एकजातित्वम्। "एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन्" मनुः। "एकजातेरयं धर्मो यद्विप्रोबिङ्गधारणम्" पुरा०। सुश्रुतोक्ते ३कीटभेदे। "एकजातीनतस्तूर्द्ध्वं कीटान् वक्ष्यामि भेदतः। सामान्यतोदृष्टलिङ्गैः साध्यासाध्यक्रमेण च। त्रिकण्टकः कुणी चापि हस्तिकक्षोऽपराजितः। चत्वार एते कणभा व्याख्यातास्तीव्रवेदनाः" इति कीटशब्दे विवृतिः। एका तुल्या जातिः सामान्यधर्मोऽस्य। २तुल्यधर्मयुक्ते त्रि० कर्मधा०। ४तुल्यधर्मे स्त्री। तामर्हति छ। एकजातीय समानधर्मान्विते त्रि० "स्वमेकजातीयानां महाशरीरेभ्यः कृशशरीराः प्रधानतमाः" सुश्रु० "एकः प्रकारः जातीयर्। एकजातीय। तुल्यप्रकारे त्रि०।

**एकजीववाद** पु० एक एव जीव इत्येवं वादः। एकं चैतन्यमेकयैवाविद्यया बद्धं संसरति तदेव ज्ञानेन कदाचिन्मुच्यते शास्त्रादादीनां बन्धमोक्षौ तु इत्येवं रूपे विदान्तैकदेशिवादभेदे। उक्तौ चैकानेकजीववादौ वेदा०प०यथा "एकजीववादेऽविद्याप्रतिबिम्बो जीवः अनेकजीववादे तु अन्तःकरणप्रतिबिम्बः स च जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान्। तत्र जाग्रद्दशा नाम इन्द्रियजन्यज्ञानावस्था। अवस्थान्तरे इन्द्रियाभावान्नातिव्याप्तिः। इन्द्रियजन्यज्ञानञ्चान्तःकरणवृत्तिः स्वरूपज्ञानस्यानादित्वात्। सा चान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतम्। तथाहि अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटादिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतन्त्रमवस्थापदवाच्यमभ्युपगन्तव्यम्। एवं सति न सर्वदा घटादेर्भानप्रसङ्गः अनावृतचैतन्यसम्बन्धस्यैव भानप्रयोजकत्वात्। तस्य चावरणस्य सदातनत्वे कदाचिदपि घटभानं न स्यादिति तद्भङ्गे वक्तव्ये तद्भङ्गजनकं न चैतन्यमात्रं, तद्भासकस्य तदनिवर्त्तकत्वात् नापि वृत्त्युपहितं चैतन्यं परोक्षस्थलेऽपि तन्निवृत्त्यापत्तेरिति परोक्षव्यावृत्तवृत्तिविशेषस्य आवरणभङ्गकत्वमित्यावरणाभिभवार्था वृत्तिरुच्यते। सम्बन्धार्था वृत्तिरित्यपरं मतम्। तत्राविद्योपाधिकोजीवोऽपरिच्छिन्नः स च घटादिप्रदेशे विद्यमानोऽपि घटाद्याकारापरोक्षवृत्तिविरहदशायां न घटादिकमवभासयति घटादिना समं सम्बन्धाभावात् वृत्तदाकारवृत्तिदशायां तु भासयति तदा सम्बन्धसत्त्वात्। ननु अविद्योपाधिकस्य जीवस्यापरिच्छिन्नस्य स्वतएव समस्तवस्तुसम्बद्धस्य वृत्तिविरहदशायां सम्बन्धाभावाभिधानमसङ्गतं असङ्गत्वश्रुत्या सम्बन्धाभावाभिधाने च वृत्त्युदयानन्तरमपि सम्बन्धो न स्यादिति चेत् उच्यते न हि वृत्तिविरहदशायां जीवस्य घटादिना सह सम्बन्धसामान्यं निषेधामः किन्तर्हि घटादिभानप्रयोजकं सम्बन्धविशेषम्। स च सम्बन्धविशेषोविषयावभासकस्य जीवचैतन्यस्य च व्यङ्ग्यव्यञ्जकतालक्षणः कादाचित्कस्तत्तदाकारवृत्तिनिबन्धनः। तथाहि तैजसमन्तःकरणं स्वच्छद्रव्यत्वात् स्वतएव जीवचैतन्याभिव्यञ्जनसमर्थं घटादिकन्तु न तथा अस्वच्छद्रव्यत्वात्। स्वाकारवृत्तिसंयोगदशायान्तु वृत्त्यभिभूतजाड्यधर्मकतया वृत्त्युत्पादितचैतन्याभिव्यञ्जनयोग्यताश्रयतया च वृत्त्युदयानन्तरं चैतन्यमभिव्यनक्ति।

तदुक्तं विवरणे अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्तियोग्यतामापादयतीति । इदञ्चास्वच्छद्रव्यस्यापि स्वच्छद्रव्यसम्बन्धदशायां प्रतिविम्बग्राहित्वम् । घटादेरभिव्यञ्जकत्वञ्च तत्प्रतिविम्बग्राहित्वम् चैतन्यस्याभिव्यक्तत्वञ्च तत्र प्रतिविम्बितत्वम् । एवंविधाभिव्यञ्जकत्वसिद्ध्यर्थमेव वृत्तेरपरोक्षस्थले वहिर्निर्गमनाङ्गीकारः । परोक्षस्थले तु वह्न्यादेर्वृत्तिसंयोगाभावेन चैतन्यानभिव्यञ्जकतया नापरोक्षत्वम् । एतन्मते च विषयाणामपरोक्षत्वं चैतन्याभिव्यञ्जकत्वमिति द्रष्टव्यम्' । "एकानेकजीववादौ सिद्धान्तलेशे दर्शितौ यथा । "अथ विद्योदये सत्युपाधिविलयादपेतजीवभावस्य किमीश्वरभावापत्तिरुत शुद्धचैतन्यमात्ररूपेणावस्थानमिति विवेचनीयम् । उच्यते । एकजीववादे तदेकाज्ञानकल्पितस्य जीवेश्वरविभागादिकृत्स्नभेदप्रपञ्चस्य तद्विद्योदये विलयान्निर्विशेषचैतन्यरूपेणैवावस्थानम् । अनेकजीववादमभ्युपगम्य बन्धमुक्तव्यवस्थाङ्गीकारे यद्यपि कस्यचिद्विद्योदये तदविद्याकृतप्रपञ्चविलयेऽपि बद्धपुरुषान्तराविद्याकृतोजीवेश्वरविभागादिप्रपञ्चोऽनुवर्त्तते तथापि जीववदीश्वरोऽपि प्रतिविम्बविशेष इति पक्षे मुक्तस्य विम्बभूतशुद्धचैतन्यरूपेणैवावस्थानम् अनेकोपाधिष्वेकस्य प्रतिविम्बे सत्येकोपाधिविलयेन तत्प्रतिविम्बस्य विम्बभावेनैवावस्थानौचित्येन प्रतिविम्बान्तरत्वापत्त्यसम्भवात् तत्सम्भवे कदाचिज्जीवरूपप्रतिविम्बान्तरत्वापत्तेरपि दुर्वारत्वेनावच्छेदपक्ष इव मुक्तस्य पुनर्बन्धापत्तेः । अतएवानेकजीववादेऽवच्छेदपक्षो नाद्रियते तदवच्छेदेनान्तःकरणान्तरसंसर्गे पुनरपि बन्धापत्तेः प्रतिविम्बो जीवः विम्बस्थानीय ईश्वर उभयानुस्यूतं शुद्धचैतन्यमिति पक्षे तु मुक्तस्य यावत्सर्वमुक्ति सर्वज्ञत्वसर्वेश्वरत्वसत्यकामत्वादिगुणकपरमेश्वरभावापत्तिरिष्यते यथानेकेषु दर्पणेषु एकस्य मुखस्य प्रतिविम्बे सत्येकदर्पणापनये तत्प्रतिविम्बो विम्बभावेनावतिष्ठते । न तु मुखमात्ररूपेण, तदानीमपि दर्पणान्तरसन्निधानप्रयुक्तस्य मुखे विम्बत्वस्यानपायात् तथैकस्य ब्रह्मचैतन्यस्यानेकेषूपाधिषु प्रतिविम्बे सत्येकस्मिन् प्रतिविम्बे विद्योदयेन तदुपाधिविलये तत्प्रतिविम्बस्य विम्बभावेनावस्थानावश्यम्भावात् । न च मुक्तस्याविद्याऽभावात् सत्यकामत्वादिगुणविशिष्टसर्वेश्वरत्वानुपपत्तिः तदविद्याभावेऽपि तदानीं बद्धपुरुषान्तराविद्यासत्त्वात् न हीश्वरस्येश्वरत्वं सत्यकामादिगुणविशिष्टत्वञ्च स्वाविद्याकृतं तस्य निरञ्जनत्वात् किन्तु बद्धपुरुषाविद्याकृतमेव तत्सर्वमनवद्यम्" ।

**एकत** पु० पिष्टलिप्तपात्रीप्रक्षालनजलनिनयनेड्ये देवभेदे । तस्योत्पत्तिकथा यज्ञांशभागित्वकथा च शत० ब्रा० १, २, ३, १, दर्शिता यथा । "चतुर्धा विहितोह वा अग्रेऽग्निरास । स यमग्रेऽग्निं होत्राय प्रावृणत स प्रैवाधन्वद् द्वितीयं प्रावृणत स प्रैवाधन्वद् तृतीयं प्रावृणत स प्रैवाधन्वदथ योऽयमेतर्ह्यग्निः स भीषा निलिल्ये सोऽपः प्रविवेश तं देवा अनुविद्य सहसैवाद्भ्य आनिन्युः सोऽपोऽभितिष्ठेवावष्ठ्यूता स्थ या अप्रपदनं स्थ याभ्यो वोमामकामं नयन्तीति तत आप्त्याः सम्बभूवुस्त्रितो द्वित एकतः । तइन्द्रेण सह चेरुः यथेदं ब्राह्मणो राजानमनुचरति स यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान तस्य हैतेऽपि बध्यस्य विदाञ्चक्रुः शश्वद्धैनं त्रित एव जघानात्यह तदिन्द्रोऽमुच्यत देवो हि सः । त उ हैत ऊचुः । उपैवेमएनो गच्छन्तु येऽस्य बध्यस्यावेदिषुरिति किमिति यत्र एवेषु मृष्टामिति तदेषु तद्यज्ञो मृष्टे य देभ्यो: पात्रीनिर्णेजनमङ्गुलिप्रणेजनं निनयन्ति ।

त उ हाप्त्या ऊचुः । अत्येव वयमिदमस्मत् परो नयामेति कमभीति य एवादक्षिणेन हविषा यजाता इति तस्मादक्षिणेन हविषा यजेताप्त्येषु ह यज्ञो मृष्ट आप्त्या उ ह तस्मिन् मृजते, यो दक्षिणेन हविषा यजते । ततो देवाः, एतां दर्शपूर्णमासयोर्दक्षिणामकल्पयन् यदन्वाहार्यं नेददक्षिणं हविरसदिति तत्रामा निनयति तत्तेभ्योऽसमदं करोति तदभि तपति तथैषां शृतं भवति स निनयति त्रिताय त्वा द्विताय त्वैकताय त्वेति" "यं होत्रकर्मणे प्रावृणत ते देवा इत्यर्थः। प्राधन्वत् प्रागच्छन्म्रियत धवि गमने । भीषा पूर्वाग्निमरणभयेन निलीनोऽन्तर्हितो बभूव । ष्ठिव् निरसने । अप्रपदनमनाश्रयभूताः । यः पञ्चम्यर्थे चतुर्थी युष्मत् सकाशात् । ततो निष्ठीवनलक्षणवीर्य्यधारणात्ताभ्योऽद्भ्यः सकाशात् । यथेदानीं ब्राह्मणः पुरोहितः। तं बध्यं बधार्हं ज्ञातवन्तः। अनन्तरं चैनं विश्वरूपं त्रित एवेन्द्रसाहाय्यार्थं जघान इन्द्रश्च तद्धननजनितात् पापादतिमुक्तोऽभवत् यस्मात्स इन्द्रो देवः अतोऽस्मिन् पापसंश्लेषो न युक्त इत्यर्थः । ते लौकिकाजना विश्वरूपहननानन्तरमेतदूचुः । एषु त्रितादिषु यद्विश्वरूपबधजनितमेनस्तद्यज्ञो मृजीत शोधयेदिति अत एतत् एतेन पात्रीनिर्णेजनादिनिनयमेन एषु तदेनो यज्ञः संशोधयति तस्मादयहननपेक्षादिजनितमेनसो रूपं, भा-

त्रयादिनिर्णेजनमाप्तेभ्यो निनेतव्यमित्यर्थः। वयमपोऽसेन: परःपरस्मादन्यत्राधारान्तरे अन्यत्राप्तते नयाम अन्वाहरति यज्ञसम्बन्धि दोषजातं परिहरत्यनेनेति अन्वाहार्य्यो नाम ऋत्विग्भ्यो देय ओदनः। निनीतमुदकमङ्गारेण प्रतपति” भा०।

“त्रिताय त्वा, द्विताय त्वा, एकताय त्वा” यजु० १,२३, “पात्राङ्गुलप्रक्षालनोदकं त्रिताय त्रितनाम्ने देवाय त्वा त्वां निनयामीति, तथा द्विताय त्वा निनयामि, तथा एकताय त्वा निनयामि इति व्याख्याय शत० ब्राह्मणोक्ता कथा संक्षेपेण दर्शिता यथा “पूर्व्वं कुतश्चित् कारणात् भीतोऽग्निरपः प्राविशत्ततोदेवास्तं ज्ञात्वा जस्तस्तदाग्निना वीर्य्यमप्सु सृष्टं तत आप्त्या उत्पन्नाः त्रितद्वितैकतसंज्ञास्ते देवैः सह चरन्तो यज्ञे पात्रप्रक्षालनजललक्षणं भागं लेभिरे” इति वेददी०। “तदुदकनयनप्रकारः” कात्या० २,५,२५, दर्शितो यथा “पात्राङ्गुलिप्रक्षालनमाप्तेभ्यो निनयत्यभितप्य प्रत्यगसंस्पन्दमानं त्रिताय त्वेति प्रतिमन्त्रम्” सू० “पिष्टलिप्तपात्रीप्रक्षालनं पिष्टलिप्ताङ्गुलिप्रक्षालनम् चाभितप्य पात्रीस्थमेव ज्वलतोल्मुकेन तापयित्वा प्रत्यक्संस्थमस्पन्दमानं परस्परसङ्गतिमप्राप्नुवदाप्तेभ्यो देवभूतेभ्यो निनयति स्विष्टकृद्देवोभयरूपमेतत् कर्म प्रतिपत्तिरूपमपूर्व्वोत्पादकञ्च। तेन द्रव्यविनाशेऽपि स्विष्टकृदर्थं द्रव्यान्तरेणापि निनयनं कर्त्तव्यम्। अपरे तु द्रव्यप्रधानत्वात् तद्विनाशे नोत्पत्तिमिच्छन्ति” कर्कः। ब्रह्मणोमानसपुत्रे २ऋषिभेदे “प्रजापतिसुताश्चात्र सदस्याश्चाभवंस्त्रयः। एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः” “द्वितैकतत्रिताश्चोचुस्तदा चित्रशिखण्डिनम्” “वयं हि ब्रह्मणः पुत्रामानसाः परिकीर्त्तिताः” भा० शा० ३३८अ० स एव वरुणस्य र्त्विक्सप्तकान्तर्गतः तत्र प्रमाणम् ऋतेयुशब्दे भा०अनु०१५०अध्यायस्थवाक्यमुदाहृतम्।

**एकतान** त्रि० एकं तानयति चु० तन+श्रद्धायाम् अण् उ० स०। १अनन्यचित्तवृत्तौ एकविषयासक्तचित्ते २तद्गतचित्ते च। “सहैकतानमतयः प्रवाहैः शतत्वद्वैरेणैकतानयोः” भाग० १, २०,२,। ल्युट्। एकतानकोऽप्युक्तार्थे त्रि० “एकस्तानो विस्तारो गीतिभेदोऽस्य। ३एकरूपविस्तारे ४एकताप्राप्ते स्वरभेदे च। “तानोनाम स्वरान्तरप्रवर्त्तकः रागादिस्थितिप्रवृत्त्यादिहेतुः अंशापरनामा वंशावयवसाध्यः स्वरविशेषः। ‘गाता यं यं स्वरं गायेत् तं तं वंशेन तानयेत्” इति भरतः” कुमा०टी०मल्लिनाथः

**एकताल** पु० एकः समस्तालोमानं यत्र। १सम्मिततत्त्वे, विच्छेदरहिते नृत्यवाद्यगीतादौ। एक एव तालोयत्र। २वाद्यभेदे च (एकताला)।

**एकतीर्थिन्** एकं समानं तीर्थमाश्रममस्यास्य इनि। समानाश्रमयुक्ते। “वानप्रस्थयतिब्रह्मचारिणाङ्गृहमागिनः। क्रमेणाचर्य्यसञ्चिन्त्यधर्मश्चात्रैकतीर्थिनः” इति या० “एकतीर्थी एकाश्रमी” मिता०।

**एकतोदत्** त्रि० एकतोदन्ता अस्य दतादेशः। एकपार्श्वे दन्तपङ्क्तियुक्ते पशुभेदे गवादौ “अनुष्ट्राश्चैकतोदतः” मनुः।

**एकत्रिक** पु० अन्नाद्यकामकर्त्तव्ये एकाहसाध्ये यागभेदे “एकत्रिकेण त्र्यकेण वाद्याद्यकामेन” आश्व० श्रौ० ६,५,१२,सू०। “एकत्रिकः त्र्यकश्च द्वावेकाहौ तयोरन्यतरेणान्नाद्यकामो यजेत। एकत्रिक एवं भवति एकस्तोमो बहिष्पवमानः त्रिस्तोमोहोतुराज्यम्, एवं व्यत्यासेन सर्व्वत्र स्तोमौ भवतः त्र्यकस्तावेव स्तोमौ विपरीतौ भवतः त्रिस्तोमो बहिष्पवमानः एकस्तोमोहोतुराज्यम्। एवमेव व्यत्यस्य व्यत्यस्य समापयेत्” नारा०। कात्या० २२,३,२४, २५,२६ सूत्रैः तस्य शाद्यत्वेन परिभाषां कृत्वा तद्विधानाद्युक्तम्। “षट् शाद्याः” ६ सू० इत्युपक्रम्य पञ्च क्रतूनक्रमेण प्रदर्श्य षष्ठमेकत्रिकं प्रतिपादयितुं तद्धर्माः प्रथमक्रतूक्ताः “शाद्यक्रधर्मा हिरण्यस्रग्वत्” २४ सू०। “शाद्यशब्देनात्र श्येनोऽभिधीयते तस्य धर्मालोहितोष्णीषादयः हिरण्यस्रग्वत्। यद्यस्योक्तं तत्तस्य भवति” कर्कः। “शाद्यधर्मा लोहितवस्त्रादय यथा वाजपेये हिरण्यस्रजो यथोपयुक्तं दीयन्ते एवमत्रापि येन यद्वस्त्रादि परिहितं तत्तस्मै देयम्” संप० “एकत्रिके दक्षिणा षष्टिशतं षट् च २५सू०। एकत्रिकः षष्ठः शाद्यः; तत्र षट्षष्टिशतं दक्षिणा” कर्कः। इतःपरं शाद्यधर्माः २६सूत्रजातैः उक्ताः। तत्र स्तोमादि सामसं० भा० निरूपितं यथा

“एकत्रिकनामकः कश्चित् क्रतुर्भवति, सचैवं श्रूयते “अथैष एकत्रिकस्तस्यैकस्यां बहिष्पवमानम्। तिसृषु होतुराज्यम् एकस्यां मैत्रावरुणस्य तिसृषु ब्राह्मणाच्छंसिनः, एकस्यामच्छावाकस्य तिसृषु माध्यन्दिनः पवमानः” इति। सन्ति प्रकृतौ माध्यन्दिनपवमानस्य त्रयस्तृचाः “उचा ते जातम्” इत्ययं (उ१प्र,८सू० २,३ ऋ०) प्रथमोगायत्रीच्छन्दस्कः, “पुनानः सोम” इत्ययं (उ१प्र,६सू० १,२,३ ऋ) द्वितीयोबृहतीच्छन्दस्कः, “प्र तु

स्त्रा" इत्ययं (७।१प,१०सू० १,२,३ क) तृतीयस्त्रि-ष्टुप्छन्दस्कः । एतदेवाभिप्रेत्य श्रुतम्, त्रिच्छन्दा आवापो माध्यन्दिनः इति । एवं सति एकत्रिकस्य माध्यन्दिपवमाने तिस्तृष्विति यदुक्तं तत्र किं तयाणां तृचानामाद्यास्तिस्रः ऋचो ग्राह्याः? किं वा प्रथमतृचस्थाः क्रमपठितास्तिस्रः ? इति संशयः । तत्र त्रिच्छन्दस्त्वश्रुत्या प्रबलया दुर्बलं पाठक्रमं बाधित्वा प्रथमपक्षो ग्राह्यः इति प्राप्ते, अभिधीयते यदेतत् त्रिच्छन्दस्त्वं तदेतत् प्राकृतम्, तत्र छन्दस्त्रयोपेतस्य तृचत्रयस्योपदिष्टत्वात् विकृतावपि तत्सर्वमतिदिष्टमिति चेत् बाढम् ! अत एव पाठक्रमोऽप्यतिदिष्टः, तथा सति प्रक्रान्तगायत्रीच्छन्दस्कस्य तृचस्य समाप्तौ सत्यां पश्चाद् बृहतीच्छन्दस्के तृचे प्रथमायाः ऋचः प्रारम्भावसरः स चारम्भस्तिसृषु इति विशेषविधानेन बाध्यते, तस्मात् दाद्य तृचोनिखिलो ग्राह्यः"

**एकत्वादिविवक्षान्याय** पु० जैमिनीयोक्ते एकत्वादिसंख्याविवक्षावधारणार्थे न्याये स च न्यायः ४अ० १पादे ११सूत्रभाष्यादौ दर्शितो यथा "तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात्" ११सू०अस्ति ज्योतिष्टोमे पशुः अग्नीषोमीयो, यो दीक्षितः 'यत् अग्नीषोमीयं पशुमालभते" इति, तथा, "अनडुहौ युनक्ति" इति, तथा, अश्वमेधे, "वसन्ताय कपिञ्जलानालभते" इति । तत्र सन्देहः, किं विवक्षितम्, एकत्वं द्वित्वं बहुत्वं च, उत अविवक्षितम् ? इति । तत्र एकत्वमयज्ञाङ्गभूतं न विवक्षितम्, इत्यर्थः, अर्थस्य गुणभूतत्वात् न आलम्भस्य गुणभूता संख्या नियोजनस्य वा । कस्य तर्हि ? पशोः अनडुहोः कपिञ्जलानां च, विभक्तिर्हि श्रुत्या प्रातिपदिकार्थगतं संख्यार्थं ब्रूते, वाक्येन सा यज्ञाङ्गं ब्रूयात्, वाक्याच्च श्रुतिर्बलीयसी । तस्मात् न यज्ञाङ्गं विवक्षितम् इति" "आह मा भूत् यज्ञाङ्गम्, पश्वादीनामङ्गम्, विवक्षितं तथापीति" उच्यते, न, पश्वादीनामङ्गेन उक्तेन अनुक्तेन वा किञ्चित् प्रयोजनमस्ति, यज्ञाङ्गेन हि अविपन्नेन प्रयोजनम्, विपन्नेऽपि हि पश्वाद्यङ्गेऽविगुण एव क्रतुर्भवति, यज्ञाच्च फलं न पश्वादेः । तस्मात् पश्वादेर्गुणेन अज्ञातेन ज्ञातेन वा न किञ्चित् प्रयोजनमस्ति इति न तत् विवक्षितम्, यद्धि प्रयोजनवत् तत् विवक्षितम् इत्युच्यते" भा० । "एकश्रुतित्वाच्च" १२सू० "भवति च किञ्चित् वचनं येन विज्ञायते, न तत् विवक्षितम् इति, 'यदि सोममपहरेयुरेकां गां दक्षिणां दद्यात्, इति, यदि हि विवक्षितं भवेत्, नैकामिति ब्रूयात्, गामित्येकवचनस्य विवक्षितत्वात्, तथा, "अजौ द्वे धेनू द्वे" इत्यत्रापि द्वे इति वचनं ज्ञापकम्, अविवक्षितम् अजौ इति द्वित्वम् इति "त्रीन् ललामान्" इत्यत्रापि त्रीनिति वचनं लिङ्गम् । ललामानितिबहुवचनम् अविवक्षितम् इति" भा०। "प्रतीयते इति चेत्" १३सू० "एवं चेत् पश्यसि, अविवक्षिता संख्या इति, तत् न, प्रतीयते हि संख्या आख्यातवचनस्य अङ्गभूता, यथा "पशुमानय" इत्युक्ते एक एवानीयते, पशू इति, द्वौ, पशून् इति बहव आनीयन्ते, यश्च प्रतीयते स शब्दार्थः, तस्मात् यज्ञस्याङ्गभूता संख्या इति शब्दात् गम्यते, न च शब्दात् गम्यमानम् ऋते कारणात्, अविवक्षितं भवति" भा० "नाशब्दं तत्प्रमाणत्वात् पूर्ववत्" १४सू० "नैतदेवं, सत्यं प्रतीयते, न तु अयं शब्दार्थः व्यामोहादेषा प्रतीतिः । कुतः एतत् ? व्याक्याद्धि यज्ञाङ्गम् इत्यवगम्यते, वाक्यं च श्रुत्या बाध्यते । तस्मात् अशब्दार्थोऽयं यज्ञे एकत्वादीति अशब्दार्थोऽपि हि प्रतीयते, यथा पूर्वो धावति इति, स पूर्व इत्युच्यते, यस्य अपरोऽस्ति, तेन पूर्वः इत्युक्ते, अपरो गम्यते, न तु, अपरो, धावति इति श्रवणात् प्रतीयते, एवम् इहापि पशुम् इत्येकत्वं गम्यते, न तु यज्ञे यथैव हि पूर्व इत्युक्तेऽपरो गम्यते एव केवलं, न तु स विधीयते कस्मिंश्चिदर्थे, एवम् इहापि संख्या प्रतीयते एव केवलं, न तु कर्त्तव्यतया यज्ञे विधीयते न पशौ । कथं न पशौ विधीयते ? इति चेत् विधायकस्याभावात् । आख्यातशब्दो विधायको भविष्यति इत्येतदपि नोपपद्यते, द्रव्यदेवतासम्बन्धस्य स विधायकः सन् आलभते इति न संख्यासंख्येयसम्बन्धं विधातुमर्हति इति, भिद्येत हि तथा वाक्यम् । तस्मात् अविवक्षिता संख्या इति" भा० । "शब्दवत्तूपलभ्यते तदागमे हि तत् दृश्यते तस्य ज्ञानं यथाऽन्येषाम्" १५सू० "तुशब्दः पक्षं व्यावर्त्तयति, न तत् अस्ति, न यज्ञे संख्या शब्देन श्रूयते इति, आख्यातवाच्ये हि अर्थे उपलभ्यते, लोके पशुमानय इत्येकवचने सति एकत्वपशुविशिष्टो गम्यते, तत्र हि एकत्वमपैति, द्वित्वमुपजायते । यस्य चागमे यत् उपजायते, स तस्य अर्थः इति गम्यते तस्य ज्ञानं, यथान्येषाम् शब्दानाम्, अश्वमानयेति उक्ते अश्वानयनं प्रतीयते, न गामानय इति ज्ञायते, अश्वशब्दस्य अश्वोऽर्थो गोशब्दस्य गौः इति । यदुक्तं, श्रुत्या

वाक्यार्थो बाध्यते, इति, उच्यते, न श्रुतिर्ब्रूते, वाक्यार्थो नास्ति इति, केवलं तु प्रातिपदिकार्थगतां संख्यामाह। तादृशी संख्या वाक्येन यज्ञे विधीयते, प्रातिपदिकार्थो हि आख्यातवाच्येन सम्बध्यते, विभक्त्यर्थोऽपि, तथा हि तद्विशेषणविशिष्ट आलम्भो गम्यते, तत्र एकार्थत्वात् एकवाक्यम् अवकल्पते। पशौ हि संख्यायां विधीयमानायामेक आख्यातशब्दो न शक्नुयात्, आख्यातार्थं विधातुम्, संख्यासंख्येयसम्बन्धं च। तस्मात् यज्ञे विवक्षिता संख्या इति" भा० "तद्वच्च लिङ्गदर्शनम्" १६सू०। किम्? इति। "कर्णायाम्या, अवलिप्ता रौद्रा, नभोरूपाः पार्जन्याः, तेषाम् ऐन्द्राग्नो दशमः" इति, यदि त्वित्वं विवक्षितं तदा ऐन्द्राग्नो दशमो भवति। तथा "कृष्णा भौमाः, धूम्रा आन्तरिक्षाः, बृहन्तो दिव्याः, शबला वैद्युताः, सिद्धास्तारकाः" इति प्रकृत्य आह। "अङ्गनासानां वा एतत् रूपं यत् पञ्चदशिनः" इति तस्मात् अपि पश्यामि, विवक्षिता संख्या इति। यत्तु उक्तम्, "एकां गाम्" इत्यविवक्षां दर्शयति इति। अत्र उच्यते गोसंख्यासम्बन्धं विधातुम्, एतत् उच्यते, इतरथा हि, गोदक्षिणासम्बन्धो विहितो गम्यते। तस्मात् विवक्षितेऽपि वाच्यमेतत्। अपी द्वे धेनू द्वे तीनुबलामान् इति च अनुवादाः" भा० "तथा च लिङ्गम्" १७सू० "एवं च कृत्वा समानश्रुतिकं लिङ्गमपि विवक्षितं भविष्यति, तत्र इदं दर्शनम् उपपद्यते, "वसन्ते प्रातराग्नेयीं कृष्णग्रीवामालभते, ग्रीष्मे माध्यन्दिने संहितामैन्द्रीं शरदि अपराह्णे श्वेतां बार्हस्पत्याम्" इति। तत्र श्रूयते, "गर्भिण्यो भवन्ति" इति, गर्भः स्त्रीणां गुणः, तेन स्त्रियोदर्शयति इति भविष्यति। तथा "अश्व ऋषभो वृष्णिर्बस्तः पुरुषः इति ते प्राजापत्याः" इति। तत्र श्रूयते "मुष्करा भवन्ति सेन्द्रियत्वाय" इति, मुष्करत्वं पुंसां गुणः, तेन पुंप्राप्तिं दर्शयति इति। अधिकरणान्तरं वा, तथा च लिङ्गम् इति, संख्याधिकरणं लिङ्गाधिकरणेऽतिदिश्यते। लिङ्गम् अविवक्षितं, श्रुत्या वाक्यस्य बाधितत्वात्, न च, विवक्षितमिव श्रूयते इति, भवति लिङ्गं, "स्त्री गौः सोमक्रयणी" इति, स्त्रीवचनात् सोमक्रयणी इत्यविवक्षितमेव लिङ्गं प्रतीयते। 'ननु कथं छागीमालभ इति न छागः आनीयते?" नैवम्, तत्, अश्वन्तु पूर्वो धावति इति यथा। लिङ्गं विवक्षितं वाक्यार्थस्य श्रुत्याऽप्रतिषिद्धत्वात्, तथा च लिङ्गम् "गर्भिण्यो भवन्ति" इति, तथा "मुष्करा भवन्ति" इति। यदुक्तं, "स्त्री गौः सोमक्रयणी" इति, तत्र स्त्रीत्वविवक्षितं, तथा "प्रजापतये पुरुषान् हस्तिन आलभते" इति, पुरुषग्रहणम् अविवक्षितं, विस्पष्टो हि न्याय उक्तो लिङ्गविवक्षायाम्। तस्मात् विवक्षितं लिङ्गम् इति" भा०।

तत्त्वबोधिन्यां स्पष्टमुक्तं यथा "अग्नीषोमीयं पशुमालभेत" "पशुना रुद्रं यजेत्" इत्यादौ पशोरेकत्वं विवक्षितं न वेति संशयः। तत्र पशुमित्यत्र द्वितीयान्तादिश्रुत्या पुंस्त्वैकत्वयोरुपस्थितयोः परस्परान्वये परस्पराकाङ्क्षाभावात् तथैवापेक्षणे पश्वेकत्वयोः परस्परमन्वयः पश्चाच्च आलभेतेत्यादि पदान्तराकाङ्क्षया वाक्यादेकत्वाश्रयपशोर्यागादावन्वय इति वाक्यात् श्रुतेर्बलीयस्त्वेन पशुविशेषणत्वेनोपक्षीणस्यैकत्वस्य न यागादावन्वयः निराकाङ्क्षत्वात् तथा च सूत्रम् "एकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात्"। अर्थस्य पशोर्गुणभूतत्वात् विशेषणत्वेन प्रागन्वयात् तस्मादेकत्वमविवक्षितं द्वाभ्यां बहुभिरपि यागसिद्धिरिति प्राप्ते उच्यते। पशुमित्यादौ प्रकृत्या पशुरुपस्थापितः प्रत्ययेन चैकत्वं कारकत्वञ्च ततश्चैकपदोपात्तत्वप्रत्यासत्त्या एकत्वस्य कर्मत्वादौ कारकेऽन्वयः कारकत्वञ्च क्रियानिमित्तत्वमिति क्रिया चोपस्थितयागादिरिति पशोः प्रथमं कारकद्वारा क्रियायामन्वयः। पश्चाच्चामूर्त्तस्यैकत्वस्य क्रियासाधनत्वान्यथानुपपत्त्या द्रव्यद्वारा तदन्वयार्थं पशुविशेषणत्वेनान्वयः अरुणान्यायादिति विवक्षितमेकत्वमतो द्वाभ्यां बहुभिर्वा न यागसिद्धिः तदुक्तं "समानप्रत्ययस्थेन कारकेणात्मसात्कृता। क्रिया वै नीयते संख्या न परस्वंपदाङ्गवेदिति"। एवमनड्वाहौ युनक्ति कपिञ्जलानालभेतेत्यादौ द्वित्वबहुत्वयोर्विवक्षितत्वम्। एवं पुंस्त्वमपि विवक्षितं प्रत्ययार्थत्वेन कारकान्वयित्वात्। अथ कथं लिङ्गं विवक्षितं शब्दार्थस्य तदनुष्ठानस्य विचारे तदुपयोगादर्शनात् अपुंस्यपि वृक्षे वृक्षशब्दः, मक्षिकादौ चास्त्रियामपि मक्षिकादिशब्दः प्रयुज्यत इति लिङ्गं न शब्दार्थः अपितु प्रयोगसाधुतामात्रार्थं तत्प्रयोगोऽनुष्ठाने एकत्वविशिष्टपशुत्वस्याविशेषात् स्त्रियामपि अनुष्ठानसाम्यात् जात्येकत्वादिवत् लिङ्गस्य वृद्धव्यवहारेणान्वयव्यतिरेकाभ्यां शब्दार्थावगमात् तस्य च तत्तत्पदसमभिव्याहारेण तत्तत्पदवाच्यत्वाभ्युपगमात् वृक्षादिषु न वास्तवं पुंस्त्वं किन्तु अभियुक्तोक्तिबलेन तेषां पुंसि साधुतेति। न चानुष्ठानसाम्यं पुंपशौ विशेषसम्भवात् "बाहू ते आप्यायेताम्" इत्यादि-

मन्त्रैतद्‌ययस्याप्यायनकाले "मेद्‌ं ते आप्यायताम्" इति पुम-बयवस्याप्याप्यायनश्रवणात्। यत्र च सारस्वतमेधीयया-मादौ स्त्रिया आलम्भनमुक्तं तत्र स्त्रीत्वं विवक्षितम्"।

उद्देश्यगतसंख्यायास्तु विवक्षा नास्तीति यच्च न्यायग्रन्थे बच्यते एकत्वविवक्षास्थले गदाधरेण धर्मिपारतन्त्र्येण एकत्वादेर्योगादावन्वयोऽभ्युपगतः धर्मिणः पशोर्यागान्वये तद्गतैकत्वस्य स्वाश्रयपशुकरणकत्वस्यानाश्रयपशुकरणकत्वो भयसत्त्वेन यागेऽन्वय इति तेनोक्तः।

**एकदंष्ट्र** पु० एका दंष्ट्रा यस्य। गणेशे त्रिका०। तस्य परशु-रामेणैकदन्तस्योत्पाटनात् तथात्वम् परशुरामेण त-द्दन्तस्योन्मूलनकथा च ब्रह्मवै०पु० गणेशखण्डे द-र्शिता। शिवपार्वत्योः रहसि वर्त्तमानयोर्द्वारपालत्वेन स्थितेन गणपतिना परशुरामस्य शिवं द्रष्टुं अन्तःपुरमध्ये जिगमिषोर्द्वाररोधे कृते तयोः कलहवादसुपरसंग्र "चि-क्षेप पर्शुमव्यर्थं शिवतुल्यं तु तेजसा" इति गणेशं प्रति प-र्शुनिक्षेपमुक्त्वा "निपत्य पर्शुवेगेन छित्वा दन्तं समूलकम्। जगाम रामहस्तं तु महादेववरेण च" इत्युक्त्वा "पपात भूमौ दन्तश्च महान्तं शब्दमुच्चरन्" इत्युक्तम् अत्र दन्त इत्ये-कवचननिर्द्देशात् एकस्यैव दन्तस्य भग्नता प्रतीयते। एकदन्तादयोऽप्यत्र। "कपिलश्चैकदन्तश्च" गणेशस्तवः।

**एकदण्डिन्** पु० एकः केवलः शिखायज्ञोपवीतादिशून्यो वा दण्डोऽस्यास्ति इनि। "यदा स्तूदाव्यवसितं परं ब्रह्म सना-तनम्। तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेत्" इत्युक्त लक्षणे परिव्राजके। संन्यासी तावत् चतुर्विधः कुटीचक बहूदकहंसपरहंसभेदात्, तत्र कुटीचकबहूदकयोस्त्रिदण्ड-धारणं हंसस्यैकदण्डधारणम् परमहंसस्य न दण्डधारण-मिति भेदः। तदेतत् निर्ण०सि० निरूपितं यथा

"कुटीचकोबहूदकोहंसश्चैव तृतीयकः। चतुर्थः परम-हंसोवीय: पश्चात् स उत्तमः" हारीतः। आद्यः पुत्रा-दिना कुटीङ्कारयित्वा तत्रैव वसन् काषायवासाः शिखो-पवीतत्रिदण्डवान् बन्धुषु स्वगृहे वा भुञ्जान आत्मज्ञो भवेत्। एतदशक्तत्यागपरम्। द्वितीयस्तु बन्धून् हित्वा सप्तागाराणि भैक्षं चरन् पूर्वोक्तवेष: स्यात्। हंसस्तु पूर्वोक्तवेषोऽप्येकदण्ड:। "एकन्तु वैणवं दण्डं धारय-न्नित्यमादरादिति" स्कान्दात्। विष्णुरपि "यज्ञोपवीतं दण्डं च रज्जुं गोबालनिर्मिताम्। शिखां यज्ञोपवीतं च नित्यं कर्म परित्यजेत्" अयमप्येकदण्ड एव। ये तु शिखोपवीतादित्यागनिषेधास्ते कुटीचकादिपराः।

यत्तु मेधातिथिः "यावन्न स्युस्त्रयो दण्डास्तावदेकेन वर्त्तयेदिति"। तदपि तत्परमेव। यच्चाल्रिः "चतुर्धा भि-क्षवः प्रोक्ताः सर्वे चैव त्रिदण्डिनः" इति तत् वाग्दण्डा-दिपरं न यष्टिपरम्। "वाग्दण्डोऽथ मनोदण्डः कर्म-दण्डस्तथैव च। यस्यैते नियता दण्डाः स त्रिदण्डी-ति चोच्यते" इति मनूक्तेः। तस्मात् परमहंसस्यैक-दण्ड एव। सोऽप्यविदुषः। विदुषस्तु सोऽपि नास्ति। "न दण्डं न शिखां नाच्छादनं चरति परमहंस" इति महोपनिषदुक्तेः "ज्ञानमेवास्य दण्ड इति" वाक्यशे-षाच्च। यत्तु यमः "काष्ठदण्डो धृतो येन सर्वाशी-ज्ञानवर्जितः। स याति नरकान् घोरान्महारौरवसंज्ञका-निति" तद्वैराग्यं विना जीवनार्थं संन्यासपरम्। "एक-दण्डं समाश्रित्य जीवन्ति बहवो नराः। नरके रौरवे घोरे कर्मत्यागात्पतन्ति ते" इति स्मृतेः। यच्चाश्वमेधिके "एकदण्डी त्रिदण्डी वा शिखी मुण्डित एव वा। काषा-यमात्रसारोऽपि यतिः पूज्यो युधिष्ठिरेति" तत्रापि पूर्वोक्ता व्यवस्था ज्ञेया। "त्रिदण्डो एकदण्डो वेति" बौधा० "चतुर्थमाश्रमं गच्छेत् ब्रह्मविद्यापरायणः। एक-दण्डी त्रिदण्डी वा सर्वसङ्गविवर्ज्जितः" चतुर्विंशतिम-तञ्च व्यवस्थितविकल्पाश्रयणात् कुटीचकबहूदकवि षयम् इति शङ्कराचार्य्यमतानुसारिणः। रामानुजमता-नुसारिणस्तु त्रिदण्डधारणमेवाचरन्तः सम्प्रदायाचारो व्यवस्थाभेदक इति कल्पयन्ति। एतेषां शिखायज्ञोपवीतधा-रणमपि वैकल्पिकम्। "शिखी मुण्डी वेति" गौतमस्मरणात् "मुण्डोऽममोऽपरिग्रह" इति वशिष्ठस्मरणात्। "सशिखान् केशान्निकृत्य विसृज्य यज्ञोपवीतमिति" काठकश्रुतेः "कुटुम्बपुत्रदारांश्च वेदाङ्गानि च सर्वशः। केशान् यज्ञो-पवीतञ्च त्यक्त्वा गूढश्चरेन्मुनिः" वाक्यवोक्तेः मिता०। एतदपि कुटीचकबहूदकविषयकम् व्यवस्थितविकल्पाश्रय-णेनावगन्तव्यम्। अत्र प्रसङ्गात् यतिधर्म्मा उच्यन्ते ते च मिता० दर्शिता यथा

"सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः। एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत्" या०।

"काषायी मुण्डः त्रिदण्डी सकमण्डलुः पवित्रपादुका-सनकन्थामात्र" इति देवलः। शौचार्थं कमण्डलु परिग्रहश्च भवेत्। एकारामः प्रव्रजितान्तरैरसहायः सम्यासिनीभिः स्त्रीभिश्च "स्त्रीणाञ्चैके" इति बौधायनेन स्त्रीणामपि प्रव्रज्यास्मरणात्। तथा च दक्षः "एकोभिक्षु-

यथोक्तञ्च द्वावेव मिथुनं स्मृतम् । त्रयो ग्रामः समाख्यात ऊर्द्ध्वं तु नगरायते । राजवार्त्तादि तेषान्तु भिक्षावार्त्ता परस्परम् । अपि पैशुन्यमात्सर्य्यं सन्निकर्षान्न संशयः" इति । परिव्रज्य परिपूर्व्वो व्रजतिस्त्यागे वर्त्तते । अतश्चाहंममाभिमानन्तत्कृतञ्च लौकिकङ्कर्म्म निचयं वैदिकञ्च नित्यकाम्यात्मकं सन्त्यज्य । तदुक्तं मनुना "सुखाभ्युदयिकञ्चैव नैःश्रेयसिकमेव च । प्रवृत्तञ्च निवृत्तञ्च द्विविधङ्कर्म्म वैदिकम् । इह चामुत्र वा काम्यं प्रवृत्तङ्कर्म्म कीर्त्यते । निष्कामं ज्ञानपूर्व्वं तु निवृत्तमुपदिश्यते । यथोक्तान्यपि कर्म्माणि परिहाय द्विजोत्तमः । आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवानिति" । अत्र वेदाभ्यासः प्रणवाभ्यासः । तत्र यत्नवान् । भिक्षाप्रयोजनार्थं ग्राममाश्रयेत् प्रविशेत् न पुनः सुखनिवासार्थम् । वर्षाकाले तु न दोषः । "ऊर्द्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासीति" शङ्खस्मरणात् । अशक्तौ पुनर्मासचतुष्टयपर्य्यन्तमपि स्थातव्यम् । "न चिरमेकत्र वसेदन्यत्र वर्षाकालात्" इतिस्मरणात् । "एकरात्रं वसेत् ग्रामे नगरे पञ्चरात्रकम् । वर्षाभ्योऽन्यत्र वर्षासु मासांस्तु चतुरो वसेत्" इति कण्वस्मरणात् कथम्भिक्षाऽऽदानङ्कार्य्यमित्यत आह । "अप्रमत्तश्चरेद्भैक्ष्यं सायाह्ने नाभिलक्षितः । रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः" अप्रमत्तो वाक्चक्षुरादिचापलरहितो भैक्ष्यञ्चरेत् । वसिष्ठेनात्र विशेषो दर्शितः । "सप्तागाराण्यसङ्कल्पितानि चरेद्भैक्ष्यमिति" । सायाह्ने अह्नः पञ्चमे भागे । तथाच मनुः "विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने । वृत्ते शरावसम्पाते नित्यम्भिक्षां यतिश्चरेत्" तथा "एककालञ्चरेद्भैक्ष्यम्प्रसज्जेत विस्तरे । भैक्ष्ये प्रसक्तो हि यतिर्विषयेष्वपि सज्जतीति" । अनभिलक्षितः ज्योतिर्विज्ञानोपदेशादिना अचिह्नितः । "नचोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया । नानुशासनवादाभ्याम्भिक्षां लिप्सेत कर्हिचिदिति" तेनैवोक्तत्वात् । यत्पुनर्वसिष्ठवचनम् "ब्राह्मणकुले यल्लभेत तद्भुञ्जीत सायम्प्रातर्मांसवर्ज्जमिति" । तदशक्तविषयम् । "भिक्षुकैर्भिक्षणशीलैः पाषण्ड्यादिभिर्वर्जिते ग्रामे । मनुना चात्र विशेष उक्तः । "न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः । आकीर्णम्भिक्षुकैरन्यैरागारमुपसं व्रजेदिति" । यावता प्राणयात्रा वर्त्तते तावन्मात्रं भैक्ष्यञ्चरेत् । तथाच संवर्त्तः "अष्टौ भिक्षाः समादाय स मुनिः सप्त पञ्च वा । अद्भिः प्रक्षाल्य ताः सर्व्वास्ततोऽश्नीयाच्च वाग्यत" इति । अलोलुपः मिष्टान्नव्यञ्जनादिष्वप्रसक्तः । भिक्षाचरणार्थं यतिपात्राण्याह । "यति पात्राणि मृद्वेणुदार्व्वलाबुमयानि च । सलिलैः शुद्धिरेतेषाङ्गोबालैश्चावघर्षणम्" या० मृदादिप्रकृतिकानि यतीनां पात्राणि भवेयुः । तेषां सलिलङ्गोबालावघर्षणञ्च शुद्धिसाधनम् । इयञ्च शुद्धिर्भिक्षाचरणादिप्रयोगाङ्गभूताऽमेध्याद्यनुपहतिविषया तदुपघाते द्रव्यशुद्धिप्रकरणोक्ता द्रष्टव्या । अतएव मनुना "अतैजसानि पात्राणि यस्य स्युर्निर्व्रणानि च । तेषामद्भिः स्मृतं शौचञ्चमसानामिवाध्वरे" इति चमसदृष्टान्तोपादानेन प्रायोगिकी शुद्धिर्दर्शिता । पात्रान्तराभावे भोजनमपि तत्रैव कार्य्यम् "तद्भैक्ष्यं गृहीत्वैकान्ते तेन पात्रेणान्येन वा तूष्णीं मात्रया भुञ्जीतेति" देवलस्मरणात् । एवम्भूतस्य यतेरात्मोपासनाङ्गनियमविशेषमाह । "सन्निरुध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च । भयं हृत्वा च भूतानाममृतीभवति द्विजः" या० । चक्षुरादीन्द्रियसमूहं रूपादिविषयेभ्यः सम्यक् निरुध्य विनिवर्त्य रागद्वेषौ प्रियाप्रियविषयौ प्रहाय त्यक्त्वा चशब्दाद्ध्यादीनपि । तथा भूतानामपकारकरणेन भयमकुर्वन् शुद्धान्तःकरणः सदद्वैतसाक्षात्कारेणामृती भवति मुक्तो भवति । किञ्च । "कर्त्तव्याशयशुद्धिस्तु भिक्षुकेण विशेषतः । ज्ञानोत्पत्तिनिमित्तत्वात्स्वातन्त्र्यकरणाय च" या० । विषयाभिलाषद्वेषजनितदोषकलुषितस्याशयस्यान्तःकरणस्य शुद्धिः कल्मषक्षयः प्राणायामैः कर्त्तव्यः । तस्याः शुद्धेरात्माद्वैतसाक्षात्काररूपज्ञानोत्पत्तिनिमित्तत्वात् । एवञ्च सति विषयासक्तिजनितदोषात्मकप्रतिबन्धक्षये सत्यात्मध्यानधारणादौ स्वतन्त्रो भवति । भिक्षुकेण त्वेषा शुद्धिर्विशेषतोऽनुष्ठेया । तस्य मोक्षप्रधानत्वात् मोक्षस्य च शुद्धान्तःकरणतामन्तरेण दुर्लभत्वात् । यथाह मनुः "दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः । तथेन्द्रियाणान्दह्यन्ते दोषाः प्राणस्य निग्रहादिति" ।

तेषां कर्त्तव्यानि च निर्ण० सि० दर्शितानि यथा

"प्रातरुत्थाय ब्रह्मणस्पते इति जपित्वा दण्डादीनि भूमौ निधाय मूत्रपुरीषयोर्गृहस्थचतुर्गुणं शौचं कृत्वाऽऽचम्य पर्णद्वादशीवर्ज्जं प्रणवेन दन्तधावनं कृत्वा तेनैव मृदा बहिःकटिं प्रक्षाल्य जलतर्पणवर्जं स्नात्वा पुनर्जङ्घे प्रक्षाल्य वस्त्रादीनि गृहीत्वा केशवादिनामभिस्तर्पयित्वा भूस्तर्पयामीत्यादिव्यस्तसमस्ताभिर्व्याहृतिभिर्महर्जनस्तर्पयामीति तर्पयेत् । ओं भूः स्वा-

ह्वेति स्वाहायज्ञान्तैर्मन्त्रैरेव पुनस्तर्पयेदिति केचित्। तत आचम्याञ्जलिना प्रणवेन जलमादाय व्याहृतिभिरुद्धृत्य गायत्र्या त्रिः क्षिप्त्वा त्रिः गायत्रीं जपेत्। उदिते सूर्ये प्रणवेन व्याहृतिभिर्वार्घ्यं त्रिर्दत्त्वा मित्रस्य चर्षणीत्याद्यैः पूर्वोक्तैः सौरैः इदं विष्णुरितिवैष्णवैः ब्रह्मयज्ञानमिति सोपस्थाय सर्वभूतेभ्यो नम इति प्रदक्षिणमावर्त्तते। ततो नत्वादित्याय विद्महे सहस्राक्षाय धीमहि। तन्नः सूर्यः प्रचोदयात् इति त्रिर्जपेत्। एवं त्रिकालम्। विष्णुपूजां ब्रह्मयज्ञं च कुर्यात्। अथ भिक्षा। "विधूमे सन्नमुसले व्यङ्गारे" इत्यादिमनूक्तकाले उद्वयमित्यादिनोपस्थाय तेनैक्यं ध्यात्वा "आकृष्णेनेति प्रदक्षिणं कृत्वा "ये ते पन्थान" इति जप्त्वा "योऽसौ चिदाख्ये आदित्ये पुरुषोऽन्तर्हृदिस्थितः। सोऽहं नारायणो देव इति ध्यात्वा प्रणम्य तम्। त्रिदण्डं दक्षिणे त्वंसे ततः सव्यार्थं बाहुना। पात्रं वामकरे क्षिप्त्वा स्थापयेद्दक्षिणेन त्विति" बौधायनोक्तदिशा त्रीन् पञ्च सप्त वा गृहान् गत्वा भवत्पूर्वं भिक्षां याचित्वा "पूर्णमसि पूर्णं मे भूयाः" इत्यागत्य शुचिरन्नं प्रोक्ष्य ओं भूः स्वधा नम इत्यादिव्यस्तसमस्तव्याहृतिभिः सूर्यादिभ्यो भूतेभ्यश्च भूमौ क्षिप्त्वा भुक्त्वाऽऽचम्य प्रणवेन षोडशप्राणायामान् कुर्यादिति संक्षेपः। गौतमव्याख्यायां भृगुः। "यतिहस्ते जलं दद्याद्भैक्षं दद्यात् पुनर्जलम्। भैक्षं पर्वतमात्रं स्यात् तज्जलं सागरोपमम्" अत्र सर्वत्र मूलं माधवापरार्कमदनरत्नस्मृत्यर्थसारादौ ज्ञेयम्। जाबालिश्रुतौ "शून्यागारे देवगृहे तृणकुटीवल्मीकवृक्षमूलकुलालशालाग्निहोत्रगृहनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतनः" इति। शातातपे "अष्टौ मासान् विहारः स्याद्यतीनां संयतात्मनाम्। एकत्र चतुरो मासान् वार्षिकान् निवसेत् पुनः। अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते"। अत्रिः। "भिक्षाटनं जपं स्नानं ध्यानं शौचं सुरार्चनम्। कर्त्तव्यानि षडेतानि सर्वथा नृपदण्डवत्। मञ्चकं शुक्लवस्त्रं च स्त्रीकथा लौल्यमेव च। दिवास्वापश्च यानं च यतीनां पतनानि षट्। आसनं पात्रलोपश्च सञ्चयः शिष्यसंग्रहः। दिवास्वापो वृथाजल्पो यतेर्बन्धकराणि षट्"। दक्षः "नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कथञ्चन"। मदनरत्ने उश॰ "पित्रर्थकल्पितं पूर्वमन्नं देवादिकारणात्। वर्जयेत् तादृशीं भिक्षां परबाधाकरीं तथा" बृहस्पतिः "न तीर्थवासी नित्यं स्यान्नोपवासपरो यतिः। न चाध्ययनशीलः स्यान्न व्याख्यानपरो भवेत्"। एतद्वेदभिन्नपरम्। अत्रिः "स्नानं सुरार्चनं ध्यानं प्राणायामो बलिस्ततः। भिक्षाटनं जपः सन्ध्यात्यागः कर्मफलस्य" च। अन्येऽपि माधवीयमिताक्षरादौ ज्ञेयः। यतिधर्मसमुच्चये "न स्नानमाचरेद्भिक्षुः पुत्रादिनिधने श्रुते। पितृमातृक्षयं श्रुत्वा स्नात्वा शुध्यति साम्बरः"। वापनं च पौर्णमास्यां कार्यम् "ऋतुसन्धिषु वापयेत्" कालमा॰ धृतवाक्यात्। [कदिक्" पा॰।

**एकदिश्** त्रि॰ एका समाना दिक् यस्य। तुल्यदिक्स्थे तेन।

**एकदृश्** त्रि॰ एका दृक् यस्य। १एकनेत्रे काणे। २काके पु॰ एकं सर्वमभिन्नं पश्यति दृश—क्विन्। ३शिवे। एकत्वेन सर्वद्रष्टरि ४तत्त्वज्ञे त्रि॰।

**एकदृष्टि** स्त्री एका अभिन्ना अनन्यविषयत्वात् दृष्टिः। अनन्यविषयदर्शने। "सततमेकदृष्ट्या तमवलोकयत्" पञ्चत॰। बहु॰। २तथादृष्टियुक्ते ३काणे च त्रि॰काणत्वञ्च चक्षुःशून्यैकगोलकवत्त्वमन्धत्वं चक्षुरिन्द्रियशून्यत्वमिति भेदः। ४काके पु॰

**एकदेव** पु॰ कर्म॰। मुख्यदेवे परमेश्वरे "एकोदेवः सर्वभूतेषु गूढः इति" श्रुतेस्तस्य तथात्वम् "स हि पूर्वेषामपि गुरुः कालेनानवच्छेदात्" पात॰ उक्तेः यो "ब्रह्माणं विदधाति पूर्वमिति" श्रुतेश्च ब्रह्मणोऽप्युत्पादकत्वात्तस्य तथात्वम्।

**एकदेवत** त्रि॰ एका देवतास्य। एकदेवताके १अग्निहोत्रादौ। "एकदेवतेषूभयम्" कात्या॰ २२, ८, ४। "यत्र पुनः कर्मण्येकैव देवता यथाऽग्निहोत्रे पुनराधेये च तत्रोभयं तद्देवत्यश्चेति" कर्कः। एकदैवतोऽप्यत्र कर्मधा॰। एकस्यां देवतायां स्त्री।

**एकदेवत्य** त्रि॰ एका श्रेष्ठादेवतातामर्हति यत्। १श्रेष्ठदेवताके। "तस्मादाहुरिन्द्रः सर्वदेवता इन्द्रश्रेष्ठादेवा इत्येतद्वै देवास्त्वैकदेवत्या अभवन्" शत॰ ब्रा॰ १, ६, ३, २२। २एकदेवताके च। "सोमादिषु उभयमेकदेवत्यं भवति" कात्या॰ संग्रहव्याख्या। एकदैवत्योऽप्यत्र त्रि॰।

**एकदेश** पु॰ कर्म॰। १अवयवे, प्रतीके। अवयवश्च समुदायस्यांशरूपः स च वास्तवो बुद्धिकल्पितश्च सावयवानां घटादीनामंशविशेषः ग्रीवामूलादिः वास्तवः, कालवियदादीनां निरवयवानां तु बुद्धिकल्पितः यथा पूर्वाह्णः पूर्वरात्र इत्यादि। तथा गुणविशेषाणामपि शब्दादीनां बुद्धिकल्पितस्तथा "एकदेशविकृतमनन्यवद्भवतीति" व्या॰परिभाषा "एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः" मनुः मन्त्रसमूहात्मकवेदस्य बौद्धमेव तथात्वम्। "सम्भोगहीनसम्पद् विटस्तु धूर्त्तः कलैकदेशज्ञः" सा॰ द॰। विद्याविशेषरूप-

खानां तथात्वम्। "उदाहृत: सर्वथा ते गुणानां मयैकदेश: प्रसमीक्ष्य बुद्ध्या" भा० अनु० २६अ० अत्रापि तथा। "तान्येकदेशान्निभृतं पयोधि:" माघ. "शामित्रं कदेशमाहवनीये प्राखति" कात्या० २, ६, १४। एकदेशशब्दश्च पूर्वापरमध्योत्तरादिशब्द: तेन सहैकदेशिना षष्ठीसमासापवादक: एकदेशिसमास:। "पूर्वापरावरोत्तरमेकदेशिनैकाधिकरणे" पा० "सर्वोऽप्येकदेश: कालेन सह समस्यते" सि०कौ०। "उपारता: पश्चिमरात्रगोचरात्" किरा०। एवं मध्यरात्र इत्यादि। एकाधिकरणे इत्युक्तेः पूर्वश्छात्राणामित्यादौ न। तत्राद्ध शब्दस्यैकदेशवाचकत्वेऽपि समांशवाचिन एव एकदेशिसमा० अर्द्धं पिप्पल्या इति वाक्ये अर्द्धपिप्पलीत्यादि। असमांशवाचित्वे तु षष्ठीसमास: "क्रोशार्द्धं स्तिमितजवेन गत्वा" रघु:। द्रव्यैक्य एव तेन पिप्पलीनामर्द्धमित्यादौ न किन्तु ६त०। एकदेशोऽस्त्यस्य इनि। एकदेशिन् उक्तांशयुक्ते त्रि० स्त्रियां ङीप्। "अमुमेव शब्दमाश्रित्य प्रवृत्तसमासस्य एकदेशिसमाससंज्ञा तत्र प्रमाणम्। "पूर्वापरेत्यादि" पा० सू०।

**एकदेशविभावितन्याय** पु० एकदेशोविभावित: प्रमाणादिना ससाध्याङ्गीकारितो येन तमधिकृत्य न्यायोन्यायसाध्यस्तर्कविशेष:। ऋणादानादिव्यवहारे सुवर्णादिबहुद्रव्याभियोगे प्रतिवादिनाऽपह्नवे वादिनैकदेशमात्रस्य प्रमाणै: साधने एकदेशे तयो: सत्यमिथ्यात्वावधारणमूलके सर्वधनदापनानुकूले तर्कभेदे तत्र एकदेशसाधने क्वचित् पूर्व्वनिवेदितसर्वधनदापनं क्वचिन्नेति विषयविशेषव्यवस्थापनम् मिता० यथा। "निह्नुते लिखितन्नैकमेकदेशविभावित:। दाप्य: सर्वं नृपेणार्थं, न ग्राह्यस्त्वनिवेदित:" या० नैकमनेकं सुवर्णरजतवस्त्रादि लिखितमभियुक्तमर्थिना प्रत्यर्थी यदि सर्व्वमेव निह्नुते अपजानीते तदार्थिनैकदेशे हिरण्ये साक्ष्यादिभि: प्रत्यर्थी भावितोऽङ्गीकारित: सर्वं रजताद्यर्थं पूर्व्वलिखितं दाप्योऽर्थिने नृपेण न ग्राह्यस्त्वनिवेदित: पूर्व्वं भाषाकाले अनिवेदित: पश्चादर्थिना पूर्व्वं मया विस्मृतम् इति निवेद्यमानो न ग्राह्योनादर्त्तव्योनृपेण। एतच्च न केवलं वाचनिकमेकदेशे प्रत्यर्थिनोमिथ्यावादित्वसम्भवात्। अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयादेकदेशान्तरेऽपि सत्यवादित्वसम्भवात्। एवं तर्कापरनामसम्भावनाप्रत्ययानुगृहीतादस्मादेव योगीश्वरवचनत: सर्व्वं दापनीयम् नृपेण इति निर्णय:। एवञ्च तर्कवाक्यानुसरणेन निर्णये क्रियमाणे वस्तुनोऽन्यथात्वेऽपि व्यवहार दर्शनान्न दोष: तथा च गौतम:" "न्यायाधिगमे तर्कोऽभ्युपेयस्तेनाभ्यूह्य यथास्थानङ्गमयेत्" इत्युक्त्वा "तस्माद्राजाचार्य्यावनिन्द्यौ" इत्युपसंहरति। नचैकदेशविभावितोनुपादेयवचन: प्रत्यर्थीत्येतावदिह गम्यते एकदेशविभावितो नृपेण सर्वन्दाप्य इति वचनात्। यत्तु कात्यायनेनोक्तम्। "अनेकार्थाभियोगेऽपि यावत् संसाधयेद्धनी। साक्षिभिस्तावदेवासौ लभते साधितन्धनमिति" तत् पुत्रादिदेयपित्राद्यृणविषयम्। तत्र हि बहूनर्थानभियुक्त: पुत्रादिर्न जानामीति प्रतिवदन् निह्नववादी न भवतीत्येकदेशविभावितोऽपि न क्वचिदसत्यवादीति "निह्नुते लिखितन्नैकमिति शास्त्रन्तत्र न प्रवर्त्तते। निह्नवाभावादपेक्षिततर्काभावाच्च" "अनेकार्थाभियोगेऽपीति" कात्यायनवचनं सामान्यविषयं विशेषशास्त्रस्य विषयं निह्नवोत्तरं परिहृत्याज्ञानोत्तरे प्रवर्त्तते। ननु "ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम्। ऊने वाप्यधिके चार्थे प्रोक्ते साध्यन्न सिध्यतीति" वदता कात्यायनेन अनेकार्थाभियोगे साक्षिभिरेकदेशे विभाविते अधिके वा भाविते साध्यं सर्वमेव न सिध्यतीत्युक्तम्। तथा सत्येकदेशे भाविते अभावितैकदेशसिद्धि: कुतस्स्यात्? उच्यते लिखितसर्वार्थसाधनतयोपन्यस्तै: साक्षिभिरेकदेशाभिधानेऽधिकाभिधाने च कृत्स्नमेव साध्यं न सिध्यतीति तस्यार्थस्तत्रापि निश्चितन्न सिध्यतीति वचनात्पूर्व्ववत् संशय एवेति प्रमाणान्तरस्यावसरोऽस्त्येव "छलं निरस्येति" नियमात्। साहसादौ तु सकलसाध्यसाधनतयोपदिष्टै: साक्षिभिरेकदेशेऽपि साधिते कृत्स्नसाध्यसिद्धिर्भवत्येव तावतैव साहसादे: सिद्धत्वात्कात्यायनवचनाच्च। "साध्यार्थांशेऽपि गदिते साक्षिभि: सकलम्भवेत्। स्त्रीसङ्गे साहसे चौर्य्ये यत्साध्यं परिकीर्त्तितम्"।

अनुयेवार्थमवलम्ब्य एकदेशविभावितन्याय: प्रवर्त्तते इत्येकदेशविभावितन्यायस्य तादृशार्थकत्वम् इति बोध्यम्।

**एकदेह** पु० एक: श्रेष्ठोदेहोऽस्य। १बुधग्रहे त्रिका०। तस्य ग्रहेषु अतिसुन्दरत्वात् तथात्वम्। एकस्तुल्योदेहो यत्र एकस्मात् देहोयत्र वा। २वंशरूपे गोत्रे तत्र सर्वेषां तुल्यदेहत्वादेकस्मादुत्पन्नदेहत्वाच्च तथात्वम्। "बहूनि विप्र! गोत्राणि मुनीनां भावितात्मनाम्। एकदेहानि तिष्ठन्ति विभक्तानि विना प्रजा:" हरिवं० ४६। ३समानदेहारम्भे सपिण्डत्वे च एकमेकतां गतं देहमस्य। ४दम्पत्यो: तयोर्विवाहेन एकदेहतोत्पादनात्तथात्वम् "अस्थिभिर-

स्थीनि मांसैर्मांसानि त्वचा त्वचमिति” श्रुतेः । “आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः । शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा । यस्य नोपरता भार्य्या देहार्द्धं तस्य जीवति । जीवत्यर्द्धशरीरे तु कथमन्योधनं हरेत्” वृह०स्मृतेश्च तयोरेकदेहत्वम् । तत्र पुंसि पुं०, स्त्रियां स्त्रीति भेदः एकाङ्गादयोऽप्यत्र । स्त्रियां ङीप् इति भेदः । कर्म्म०। ५एकस्मिन् देहे न०।

**एकद्यू** पु० एकेन परात्मना दीव्यति दिव–क्विप् ऊठ् ३त० । आत्मारामे ऋषौ सहि आत्मनैव रमत इति प्रसिद्धम् । “अमन्दीदेकद्यूर्देवाउत याश्च देवीः” ऋ०८,८०,१०, “एकद्यूः ऋषिः” भा०।

**एकधन** न० एकमेव धनम् । १एकमात्रधने “हतानां धावतामेकधनमुपाहितम्” शत०ब्रा०११,४,१,१, “एकमेकसममयुग्मं धनं धीयमानमुदकं यत्र । २अयुग्मसंख्याके उदकाधारे कलसे “अयुक्ता अयुक्ता एकधना भवन्ति “त्रयो वा पञ्च वा, पञ्च वा सप्त वा, सप्त वा नव वा, नव वैकादश वा, एकादश वा त्रयोदश वा, त्रयोदश वा पञ्चदश वा द्वन्द्वमहर्मिथुनं प्रजननम् । अथ य एष एकोऽतिरिच्यते स यजमानस्य श्रियमभ्यतिरिच्यते स वा एषां सधनं यो यजमानस्य श्रियमभ्यतिरिच्यते तद्यदेषां सधनं तस्मादेकधना नाम” शत०ब्रा०३,९,२,४, “प्रत्यगेकधनानयुग्मानुदहरणांस्त्रिप्रभृत्यापञ्चदशभ्यः” कात्या० ९, ३,२२, “उत्तरस्यैशानसोऽत्वात् प्रत्यक् अधोभूमौ एकधनानयुग्मसंख्यान्निदधाति एकधनशब्दार्थं स्वयमेव व्याचष्टे उदहरणानिति उदकं ह्रियते एभिरित्युदहरणाः कलसास्तान् त्र्यादिपञ्चदशपर्य्यन्तायुग्मसंख्यान् विषमसंख्यान् । तत्राग्निष्टोमे त्रयः पञ्च वा, अत्यग्निष्टोमेऽपि तावन्त एव, उक्थ्ये पञ्च वा सप्त वा, षोड़शिनि सप्त नव वा, वाजपेये नवैकादश वा, अतिरात्रे एकादश त्रयोदश वा आप्तोर्यामे त्रयोदश पञ्चदश वेति” कर्कः “अत्र कलसपरत्वात् पुंस्त्वम् अपां विशेषणत्वे स्त्रीत्वम् “आवर्त्ततीरधनुद्विधारा इत्याहृतास्त्वेकधनास्तु” आश्व० श्रौ० ५,१,९। “द्विविधा आपः वसतीवर्य एकधनाश्च तत्र पूर्वेद्युरेव वसतीवर्यो गृहीता एकधना इदानीं गृह्यन्ते । ता गृहीता ग्रहणदेशादेव यजनदेशं प्रति यथा वर्त्तन्ते तद्देयमनुवक्ष्यति” नारा० वृ० । अपाञ्चाधारं विना देशान्तरगमनासम्भवात् प्रागुक्तवाक्याच्च पुनरयुग्मकलसैराहरणं कर्त्तव्यमिति बोध्यम् । वस्तुतः एकधनशब्देन अयुग्मसंख्याककलशा एवोच्यन्ते । स आधारत्वेनास्त्यस्य अच् । ३तत्स्थे जलादौ त्रि०इत्येव न्याय्यम् “तावच्चैकधनानाम्” कात्या०९,३,२२,सू० “एकधनानामेकधनस्थानामपामिति” कर्केण तथा व्याख्यानात् “एकधनांस्त्रीनुन्नयन्ति” कात्या० ३,१०, “एकधनान् उन्नयन्ति उदकेन पूरयित्वा उत्क्षिपन्ति जलमध्यादूर्द्ध्वं निनयन्ति निष्कासयन्ति” कर्कः एकं मुख्यं धनम् कर्म०। ४मुख्ये धने न० “सोममाप्यायतामिन्द्रायैकधनविदे” यजु०५,७, “एकं धनं मुख्यं धनं सोमरूपं विन्दते लभते स एकधनवित् । यद्वा सोमकण्डनाय यैर्जलमानीयते ते कुम्भाः एकधना एकं धनं सोमरूपं यत्रेति वेत्ति जानातीति” वेददी० “एकधनस्तादृक् कलसः अस्त्यस्य इनि । एकधनिन् तादृशैकधनयुक्ते त्रि०“प्रत्नैतदानयैकधनिनः” शत०ब्रा०३,९,२,१७, “एकं समानं साधारणं धनं यस्य । ५अविभक्ते ६संसृष्टिनि च त्रि०। अविभक्तधनानां संसृष्टधनानाञ्च साधारणधनत्वात् तथात्वम् । ७एकमात्रधनयुक्ते त्रि०।

**एकधर्म्मन्** त्रि० एकस्तुल्योधर्म्मो यस्य अनिच् स०। तुल्यधर्मयुक्ते स्त्रियां वा डाप् । एकोधर्म्मोऽस्यस्य इनिरप्यत्र साधुः । “सर्वेषामेकधर्म्मिणाम्” स्मृतिः । अत्र स्त्रियां ङीप् ।

**एकधुरा** स्त्री एका धूः कर्म्म०अ समा०। १एकभारे । तद्वहतीत्यर्थेऽण् तस्य लुक् । एकधुर–एकभारवाहके २गवादौ त्रि०। अस्त्यर्थे अच् । ३एकधुरायुक्ते त्रि०। एकधुरं वहति ख । एकधुरीण एकधुरवाहके त्रि०।

**एकधुरावह** त्रि० एकधुरां वहतीति वह–अच् ६त० । एकभारवाहके गवादौ ।

**एकनक्षत्र** न० एकं नक्षत्रं यत्र । एकतारात्मके नक्षत्रभेदे आर्द्रा चित्रा स्वातिश्च एकतारात्मकं नक्षत्रं तच्च अश्विशब्दे ४९७पृ०दर्शितम् । शत०ब्रा०भाष्ये तु पुष्यस्यैकतारात्मकत्वमुक्तं तदनुसारेण सरलायामप्यभिहितमुक्तं किन्तु तन्मूलं ज्योतिषवचनं मृग्यम् । वस्तुतोऽत्र एकशब्दस्यायुग्मपरत्वं पुष्यस्य च त्रितारात्मकत्वेन तथात्वाभिप्रायेण पुष्यस्योक्तिः “अयुग्मं हि पितॄणामेकनक्षत्रे एकनक्षत्रं हि पितॄणाममावास्यायाम् अमावास्या वा एकनक्षत्रमेको हि यद्येतां रात्रिं सर्वाणि भूतानि संवसन्ति तेनो तं काममाप्नोति या सर्वेषु नक्षत्रेषु” शत० ब्रा० १०,१२,८,१,२ । ‘एकनक्षत्रे कात्या० २१, २,२। एकं नक्षत्रं हि पितॄणामिति” एकनक्षत्रं च यत्रैका तारा चित्रा स्वाति रेवत्यादि यथा”

कर्कः। अत्र रेवत्या द्वात्रिंशत्तारकत्वम् अश्लेषाशब्दे उक्तम् अतस्तस्या एकत्वाभावात् रेवत्यादिशब्देन बहु॰अश्विनीति बोध्यम् तस्याश्च त्रितारत्वेनायुग्मतारत्वम्। अमावास्या वा एकनक्षत्रमित्युक्तेः २अमावास्यायाञ्च। तत्र च रविचन्द्रयोरेकनक्षत्रस्थितत्वात् एकनक्षत्रतुल्यफलदातृत्वाद्वा तथात्वम् कर्म॰। ३एकस्मिन् नक्षत्रे

**एकनट** पु॰ एको मुख्यो नटः। नाट्यप्रवर्त्तके मुख्यनटे त्रिका॰

**एकपक्ष** पु॰ एकः पक्षो यस्य। १सहाये कर्म॰। एकत्र २पक्षे पु॰

**एकपत्नी** स्त्री एकः समानः अनन्योवा पतिर्यस्याः नान्तादेशः नान्तत्वात् ङीप् १सपत्न्याम् "सर्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः" मनुः २पतिव्रतायाञ्च। "यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम्" मनुः "ताञ्चावश्यं दिवसगणनातत्परामेकपत्नीम्" मेघ॰। "कामेकपत्नीं व्रतदुःखशीलाम्" कुमा॰। एकःपतिरीशो यस्य वा कप्। एकपतिक एकस्वामिके त्रि॰ स्त्रियां टाप्। "पत्युर्नोयज्ञसम्बन्धे" इत्यधिकारात् भर्त्रर्थकस्यैव नादेशङीपौ नेतरस्य।

**एकपत्रिका** स्त्री एकं गन्धयुक्ततया श्रेष्ठं पत्रं यस्याः कप् टापि अत इत्त्वम्। गन्धपत्रावृक्षे राजनि॰।

**एकपद** न॰ एकं पदं पदोच्चारणयोग्यकालो यत्र। एकपदोच्चारणयोग्यकाले १तत्काले। कर्म॰। एकस्मिन् २स्थाने ३सुप्तिङन्तरूपे पदे च "निहन्त्यरीनेकपदे य उदात्तः स्वरानिव" माघः। "अनुदात्तं पदमेकवर्जम्" पा॰ एकपदे अन्यस्वरस्य उदात्तेन निघातविधानात्तेन सादृश्यमिहोक्तमिति बोध्यम् "कथमेकपदे निरागसम्" रघुः। एकं पदं चरणो यस्य। ४एकचरणमनुष्ये ५तद्युक्ते देशभेदे पु॰ स च देशः वृहत्सं॰कूर्म्मविभागे प्राच्यामुक्तः। अथ पूर्वस्यामञ्जन इत्याद्युपक्रम्य "एकपदतामलिप्तिककोशलकावर्द्धमानस्येति" एकं पदं कोष्ठं पूजास्थानं यस्य। वास्तुमण्डले एककोष्ठपूज्ये ६देवभेदे पु॰ "भृगुश्चैकपदोज्ञेयः" वास्तु॰ त॰ देवीपु॰। एकं पदं कोष्ठरूपं स्थानम्। कर्म्म॰। वास्तुमण्डलस्थे ७एककोष्ठात्मकस्थाने न॰ "इन्द्रश्चेन्द्रात्मजश्चोभावेकैकपद संस्थिता" तत्रैव। तत्कोष्ठविन्यासनादिप्रकारोवास्तुशब्दे वक्ष्यते। एकं पदं चरणोऽस्य। ८मृगभेदे पुंस्त्री। स्त्रियां जातित्वात् ङीष्। "कर्णैरेकपदाश्वास्यैर्निजुष्टं वृकनाभिभिः" भाग॰ ४,६,१५। एकं सुबन्तं पदं वाचकं यस्य। ९एकपदवाच्ये त्रि॰ "किं स्विदेकपदं धर्म्यं किं स्विदेकपदं यशः। किंस्विदेकपदं स्वर्ग्यं किं स्विदेकपदं सुखम्"। यक्षप्रश्ने "दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः। सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम्" भा॰ व॰ ३१२ अ॰। युधिष्ठिरेणैकपदबोध्यदाक्ष्याद्युत्तरे उक्तम् एकं पदं पदविन्यासविशेषो यत्र। १०रतिबन्धभेदे पु॰ "पादमेकं हृदि स्थाप्य द्वितीयं स्कन्धसंस्थितम्। स्त्रनौ धृत्वा रमेत् कामी बन्धस्त्वेकपदः स्मृतः" रतमञ्जर्युक्तेः।

**एकपदि** अव्य॰ एकः पादः साधनं यस्मिन् प्रहरणे। द्विदण्ड्यादि॰ इच्समा॰ भत्वात् पद्भावश्च। पादसाधने प्रहरणे।

**एकपदी** स्त्री एकं गन्तुः समानं पदं तच्चिह्नमत्र गौ॰ ङीष्। पथि अमरः। तत्र हि गन्तुः पदसमानचिह्नं दृश्यते इति तस्य तथात्वम्। एकः पादो यस्याः संख्यापूर्वकत्वात् पाद्भावः कुम्भपद्या॰ ङीष् पद्भावश्च। २एकचरणयुक्तायां स्त्रियाम् ३एकवृत्तचतुर्थांशयुक्तायामृचि च "गायत्र्येकपदी द्विपदी त्रिपदी" श्रुतिः। "एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीम्" यजु॰ ८,३१।

**एकपरि** अव्य॰ एकेन विपरीतं वृत्तम् "अक्षशलाकासंख्याः परिणा" पा॰ अव्ययी॰। एकेन विपरीततया पतनेन पराजये द्यूते व्यवहारेवायं प्रयोग। यस्य यथा पातने जयोभवति तस्य एकस्यान्यथात्वादेः पातने एवं प्रयोजनः एवं व्यवहारेऽपि।

**एकपर्णा** स्त्री एकं पर्णं तपःसाधनतया आहारो यस्याः। शैलराजस्य मेनायादुत्पन्नदुहितृत्रयमध्ये १दुहितृभेदे। "तिस्रः कन्यास्तु मेनायां जनयामास शैलराट्। अपर्णामेकपर्णाञ्च तृतीयामेकपाटलाम्" इत्युपक्रम्य। "आहारमेकपर्णेन एकपर्णा समाचरत्" हरि॰ १८ अ॰। स्वार्थे कन् बहु॰ कप् वा अत इत्त्वम् अपर्णिकाप्यत्र। "अप्यपर्णा निराहारा एकाशा एकपर्णिका" देवीपु॰ ४५ अ॰। अस्य पूर्वोक्तवाक्यैकवाक्यतया हिमवत्कन्याभेदपरत्वम् न तु दुर्गापरत्वमिति बोध्यम्। एकमात्रं पर्णमस्य। एकपत्रावशेषवृक्षादौ त्रि॰

**एकपर्व्वतक** पु॰ पर्वतभेदे "कुरुभ्यः प्रस्थितास्ते तु (कृष्णभीमार्ज्जुनाः) मध्येन कुरुजाङ्गलम्। रम्यं पद्मसरोगत्वा कालकूटमतीत्य च। गण्डकीञ्च महाशोणं सदानीरां तथैव च। एकपर्वतके नद्यः क्रमेणैत्याव्रजन्त ते। उत्तीर्य्य सरयूं रम्यां दृष्ट्वा पूर्वांश्च कोशलाम्" भा॰ स॰ २१६ अ॰।

**एकपलाश** पु॰ एकः पलाशो यस्य। एकपत्रमात्रवृक्षे तत्र भवः तस्येदं वा गहा॰ छ। एकपलाशीय तत्रभवे तदीये च त्रि॰

**एकपाटला** स्त्री एकं पाटलं पुष्पं तपःसाधनतया आहारो

यस्याः। हिमवतोमेनायामुत्पन्नदुहितृत्रयमध्ये दुहितृभेदे एकपर्णाशब्दे मूलं दृश्यं तत्रैव तन्नामनिरुक्तिर्यथा। "पाटलापुत्रमेकञ्च आदधावेकपाटला"।

**एकपातिन्** त्रि० एकः सन् पतति पत—णिनि "सुप्युपेति" स०। एकाकितया १पतनशीले अतिरात्रयागसंस्थे २अहर्विशेषे न० "एकपातीनि त्वहानान्यतिरात्राः" आश्व०श्रौ०१२,६,२२। "चतुर्विंशाभिजिद्विषुवन्महाव्रतादीनि एकपातीन्यहानि तानि अतिरात्रसंस्थानि भवन्ति" नारा०। ३ऋग्भेदे स्त्री ङीप्। "धाय्यास्त्वैकपातिनीः" आश्व०श्रौ० ५,१९,११। "अग्निर्होता स्वहपतिः स राजेति प्रतिपदेकपातिनी पच्छः"६,५,६।

**एकपाद्** त्रि० एकः पादोऽस्य अन्त्यलोपः समा०। १विष्णौ "चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात्" विष्णुसं०। "एकः पादोऽस्येत्येकपात् पादोऽस्य विश्वाभूतानीति" श्रुतेः "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" गीतोक्तेश्च" भा०। परमेश्वराभिन्नत्वेन एकपादयुक्तत्वेन वा २शिवे च। स च रुद्रभेदः। "अजैकपादहिर्बुध्नो विरूपाक्षश्च रेवतः। हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः। रुद्रा एकादश प्रोक्ता जयन्तश्चापराजितः" विष्णुध०। अन्यनामानोऽपि रुद्राः सन्ति तत्र दानादौ त एव पूज्याः। अजेतिनामान्तरं तेन एकादशसंख्यापूर्त्तिः अतएव विष्णुध० "अजनामा महारुद्रः" इत्यादिना तद्ध्यानमुक्तम् "एकपादभिधो विप्र! क्ष्वेडादः शाद्दहन् परम्। चक्रं डमरुकं शूलं मुद्गरं तदधोवरम्। अन्यं शूलं मेखलावान् खट्वाङ्गांश्च मस्तके। धनुर्घण्टां कपालञ्च कौमुदीं तर्ज्जनीघटम्। परशुं चक्रमाधत्ते क्रमाद्वामाष्टके करे। अनेकभोगसम्पत्तिं कुरुते यज्वनः सदा" इति तत्रैव एकपदोध्यानान्तरमुक्तम्। ३एकपादयुक्ते त्रि० स्त्रियां ङीपि पद्भावः एकपदीति भेदः एकपदीशब्दे उदा०।

**एकपाद** पु० कर्म०। "एकमात्रचरणे "व्युत्तिष्ठदकपादेन परमं योगमास्थितः" भा०अनु ०८३अ०। "उत्तिष्ठदेकपादेन ददृशे विबुधर्षभान्" भाग० ४,१,१९. "एकःपादोऽस्य समासान्तविधेरनित्यत्वात् नान्त्यलोपः। एकपादयुक्ते २परमेश्वरे। "पादोऽस्य विश्वाभूतानीत्युक्तेः तस्य सर्व्वभूतरूपैकपादत्वात् तथात्वम् "तत्र शिश्रियेऽज एकपादः" अथ० १२,१,६,२, एकचरणयुक्तमात्रे त्रि० स्त्रियां स्वाङ्गत्वात् ङीष् टाप् वा। "द्राक्षीं लम्बीं विशालाक्षीं दीर्घजिह्वामजिह्मकाम्। त्रिस्तनीमेकपादाञ्च त्रिजटामेकलोचनाम्" भा०व०२७९अ० "एकपादांश्च पुरुषान् केरलान् वनवासिनः" भा० स० ३०अ० सहदेवदक्षिणदिग्विजये" "एकपादांश्च तत्राहमपश्यं द्वारि वारितान्" ५०अ०। ४असुरभेदे "एकपादमहोदरौ" भा०आ० असुरगणनायाम्। एकपादोऽवलम्बनत्वेनास्त्यस्य अच्। ५एकपादमात्रालम्बके। "पर्व्वतारोहणं कृत्वा एकपादो विभावसुम्। निरीक्षेत निराहार ऊर्द्ध्वबाहुः कृताञ्जलिः" भा०आ०१२५अ०

**एकपादिका** स्त्री एकः पादोऽवलम्बनत्वेनास्त्यस्याः ठन्। एकपादावलम्बनेन खगानां स्थितिभेदे "कथावशेष्या तथमेकपादिकाम् तदा निदद्रावुपपल्वलं खगः" नैष०।

**एकपिङ्ग** पु० एकं पिङ्गं नेत्रमस्य। कुबेरे। तस्य क्रूरदृष्ट्या पार्व्वतीदर्शने वामनेत्रस्य स्फुटने शिववाक्येन प्रसन्नायास्तस्या वरेण पिङ्गलं वामनेत्रं जातमिति तस्य तथात्वम् तत्कथा काशी० यथा

"प्रसार्य्य नयने पूर्व्वमुमामेव व्यलोकयत्। शम्भोः समीपे का योषिदेषा सर्वाङ्गसुन्दरी। अनया किं तपस्तप्तं? ममापि तपसोऽधिकम्। अहो रूपमहो प्रेम सौभाग्यश्रीरहो भृशम्। क्रूरदृग्वीक्षते यावत् पुनः पुनरिदं वदन्। तावत् प्रस्फोटितं नेत्रं वामं वामविलोकनात्। अथ देव्यब्रवीद्देवं किमसौ दुष्टतापसः। असकृद्वीक्ष्य मां वक्ति व्यकुर्व्वन्मे तपःप्रभाम्। असकृद्दक्षिणेनाक्ष्णा पुनर्मामेव पश्यति। असूयमानो मे रूपं प्रेमसौभाग्यसम्पदः। इति देवीगिरं श्रुत्वा प्रहस्य प्राह तां प्रभुः। उमे! त्वदीयपुत्रोऽयं न च क्रूरेण चक्षुषा। संपश्यते तपोलक्ष्मीं तव किन्त्वधिवर्णयन्। इति देवीं समाभाष्य तमीशः पुनरब्रवीत्। वरं ददामि ते वत्स! तपसाऽनेन तोषितः। निधीनामधिनाथस्त्वं गुह्यकानां भवेश्वरः। यक्षाणां किन्नराणाञ्च राजा राज्ञाञ्च सुव्रत!। पतिः पुण्यजनानाञ्च सर्वेषां धनदो भव। मया सख्यञ्च ते नित्यं वत्स्यामि च तवान्तिके। अलकां निकषा मित्र! तव प्रीतिविवर्द्धयन्। आगच्छ पादयोरस्याः पत ते जननी त्वियम्। इति दत्त्वा वरान् देवः पुनराह शिवः शिवाम्। प्रसादं कुरु देवेशि! तपस्विन्यङ्गजे तव। देव्युवाच। वत्स! ते निर्म्मला भक्तिर्भवे भवतु सर्व्वदा। भवैकपिङ्गो नेत्रेण वामेन स्फुटितेन च। देवदत्तास्तु ये तुभ्यं वरास्सन्तु तथैव ते। कुबेरो भव नाम्ना त्वं मम रूपेर्ष्यया सुत!" एकपि-

क्षोऽप्यत्र। एकपिङ्गलवर्णनेनयुक्तत्वात्तस्य तथात्वम्।

**एकपिण्ड** त्रि॰एकः समानः पिण्डः देहः श्राद्धदेयपिण्डो वा यस्य। १सपिण्डे तस्य एकदेहारब्धदेहकत्वात् दातृत्व-भोक्तृत्वान्यतरसम्बन्धेनैकपिण्डवत्त्वाद्वा तथात्वम्। "त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः सम्प्रदातैषां पञ्चमोनोपपद्यते" इति मनूक्तेः। लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः" इत्युक्तेः "जीवति यत्पिण्डदाता स मृतः सन् तत्पिण्डभोक्तेत्युक्तेश्च सप्तानामेव सपिण्डत्वमिति दायभागानुसारिणः।

**एकपुरुष** पु॰ एकः श्रेष्ठः पुरुषः। १पुरुषोत्तमे परमेश्वरे तस्य श्रेष्ठत्वमुक्तं गीतायाम् "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" तस्य च पुरुषत्वमन्तर्य्यामितया सर्व्वदेहे पुरि वासात्। "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अन्योऽनश्नन्नभिचाकशीति" श्रुतौ वृक्षरूपदेहे वासोक्तेश्च पुरुषत्वम्। २प्रधानपुरुषे च। एकः पुरुषो यस्मिन्। ३एकपुरुषान्विते त्रि॰। "तदैकपुरुषं राष्ट्रं विलम्बादृष्टनिर्गमम्" भाग॰६,५,७, "एकः पुरुषोभोक्ता यत्र। ४एकपुरुषभोक्तृके भोगभेदे तत्रायं भेदः प्रपितामहादीनां त्रयाणां जीवित्वे एकपुरुष एव भोगः यथाह दा॰त॰ व्यासः "पिता पितामहो यस्य जीवेच्च प्रपितामहः। त्रयाणां जीवतां भोगोविज्ञेयोह्येकपुरुषः"। "युगपद्भोगे वर्षशतेऽपि न त्रैपुरुषिकः प्रपितामहस्य तत्र स्वातन्त्र्यात् तस्यैव भोगस्तेन तत्रैकपुरुषो भोगः" दाय॰त॰ रघु॰

**एकपुष्कल(र)** पु॰एकं पुष्करं मुखं यस्य रस्य वा लः। काहले वाद्यभेदे। "अथ प्रयाते दाशार्हे प्रावाद्यन्तैकपुष्क(रा)-लाः" भा॰उ॰८३अ॰"एकपुष्कराः काहलाः" नीलकण्ठः

**एकपुष्पा** स्त्री एकं पुष्पं यस्याः। वृक्षभेदे यस्यैकमात्रं पुष्पं जायते तस्मिन् जातित्वेऽपि अजा॰ टाप्।

**एकप्रस्थ** पु॰कर्म॰। १एकस्मिन् प्रस्थे धान्यमानभेदे माषादि॰ आद्युदात्तोऽयम्। एकः प्रस्थोऽस्य। २एकप्रस्थयुक्ते पर्वते पु॰

**एकफला(ली)** स्त्री एकं फलमस्याः मुग्धबोधमते टाप्। पा॰मते ङीष्। एकमात्रफलके ओषधिभेदे

**एकभक्त** न॰ एकं भक्तं भोजनं यत्र। पत्युक्ते व्रतभेदे तत्स्वरूपकालादिनिरूपणं कालमाधवीये यथा

"अथैकभक्तनिर्णयः। ब्रह्मपुराणे वैश्वानरव्रते पठ्यते "प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः" इति। तत्रादावेकभक्तव्रतं त्रिविधम् स्वतन्त्रमन्याङ्गमुपवासप्रतिनिधिरूपं चेति। तेष्विदानीमुदाहृतं स्वतन्त्रम्। तत्रेदं चिन्त्यते। किमुपवासवत् तिथिरस्मिन् ग्रहीतव्या? उत प्रकारान्तरेणेति?। उपवासवदिति तावत् प्राप्तम् "दैवं पित्र्यं तथा काम्यम्" इति वचनेन उपवासैकभक्तादिव्रतस्वदैवस्य विवक्षितत्वात्। न च कर्मकालव्याप्त्या तन्निर्णय इति शङ्कनीयम्। तत्कालस्य व्याप्त्यनिर्णीतत्वात्। किञ्च तन्निर्णये कर्मकालव्याप्तिवचनस्य पित्र्यविषयत्वेनोपपत्तेः। तस्मादुपवासवत्तन्निर्णय इति प्राप्ते ब्रूमः। कर्मकालव्याप्तिरेवात्र निर्णयहेतुः। कर्मकालस्तत्कर्मस्वरूपं चेत्युभयं स्कान्दपुराणे दर्शितम्। "दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमिति प्रोक्तमतस्तत् स्याद्दिवैव हीति"। देवलोऽपि "दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तं तु तत् प्रोक्तं न्यूनं ग्रासत्रयेण त्विति"। अत्र च दिनार्द्धस्योपरि सार्द्धमुहूर्त्तपरिमितोमुख्यः कालः पञ्चधा विभागे मध्याह्नस्यापरभाग एकभक्तस्य कालः दिनार्द्धेऽतीते सति समनन्तरत्वात्। अस्तमयात् प्राचीनोऽवशिष्टोगौणः कालः दिवेत्यस्य नुमानात् एवं स्थिते सति मुख्यकालव्यापिनी तिथिर्ग्रहीतव्या अतएव पद्मपुराणम्। "मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिरिति"। बौधायनोऽपि "उदये तूपवासस्य नक्तस्यास्तमये तिथिः। मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथिरिति" नचात्रोपवासन्यायो युक्तः तत्र पूर्वविद्धायामेव विशेषशास्त्रपर्य्यवसानात्। द्विविधं हि विशेषशास्त्रं तिथिप्रयुक्तमेकं कर्मप्रयुक्तमपरम्। तत्र "पौर्वाह्णिकास्तु तिथयोदैवे" इत्यनेन कर्मविषयेण सामान्यशास्त्रेणोत्तरविद्धायां प्राप्तायाम् "उभोभ्याः परसंयुक्ताः पराः पूर्व्वेण संयुताः" इत्यनेन कर्मविषयेण विशेषशास्त्रेण पूर्वविहिततिथिविषये अपि सामान्यविशेषशास्त्रे उदासीते "पूर्वाह्णिकास्तु तिथय" इति तिथिमात्रमुपजीव्य प्रवृत्तत्वात् सामान्यशास्त्रम् "प्रतिपत् सम्मुखी कार्येति" तिथिविशेषमुपजीव्य प्रवृत्तत्वाद्विशेषशास्त्रम्। तथा सति द्विविधेनापि विशेषशास्त्रेण पूर्वविद्धायामेवोपवासः सुस्थितः। अत्र तु मध्याह्नव्यापिनीत्येतत्कर्मविषयं विशेषशास्त्रम्। अतस्तदनुसारेण निर्णयो युज्यते! ननु प्रतिपत्सम्मुखी कार्य्येत्यनेन तिथिविषयेण विशेषशास्त्रेण कुतो न निर्णय इति चेत् उपवासविषयत्वेनापि तस्योपपत्तेरिति ब्रूमः। ननु मध्याह्नव्याप्तिवचनमपि तिथ्यन्तरैकभक्तविषयत्वेनोप-

पादयितुं शक्यम् अतः कर्म्मविशेषशास्त्रतिथिविशेषशास्त्रयोः समानबलत्वमिति चेत् अस्तु नाम किं नश्छिन्नं मध्याह्नव्यापित्वस्य मुख्यत्वयोः पूर्व्वविद्धायामापादयितुं शक्यत्वेन विरोधाभावात्। यदा तूत्तरविद्धायामेव मध्याह्नव्यापित्वं तदा विरोध इति चेत्। बाढम्। तथापि तिथिविषयविशेषशास्त्रात् कर्म्मविषयविशेषशास्त्रं प्रबलं मध्याह्नतिथेर्गुणत्वात् कर्म्मणश्च प्रधानत्वात्। तस्मादेवं विधैर्विषयैः कर्म्मकालव्याप्त्यैव निर्णेतव्यम्। अत्र निर्णेतव्योविषयोभिद्यते। पूर्व्वेद्युरेव मध्याह्नव्यापित्वम् परेद्युरेव तद्व्यापित्वम्। उभयत्र तद्व्यापित्वम् उभयत्र तदव्यापित्वम् उभयत्र साम्येन तदेकदेशव्यापित्वम्। उभयत्र वैषम्येण तदेकदेशव्यापित्वं चेति। तत्र प्रथमद्वितीययोर्मध्याह्नव्यापित्वस्य निर्णायकत्वम्। तृतीये पूर्व्वविद्धा ग्राह्या मुख्यकालव्याप्तेः समत्वेऽपि गौणकालव्याप्तेरधिकत्वात्। अनेनैव न्यायेनोभयत्र मुख्यकालव्याप्त्यभावेऽपि गौणकालव्याप्तिलाभात्पूर्व्वविद्धैव। पञ्चमेऽप्ययमेव न्यायो योज्यः। षष्ठे तु यदा पूर्व्वेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति तदाधिकगौणकालव्याप्तेः पूर्व्वेद्युर्ग्राह्या। यदा परेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति तदा गौणकालव्याप्त्यभावेऽपि मुख्यकालव्याप्त्याधिक्यानुसारेण परेद्युर्ग्राह्या! नन्वस्त्वेवं स्वतन्त्रैकभक्ते निर्णयः अन्याङ्गे तु कथम्?। तत्र कानुपपत्तिः? इति चेत्। "पूजाव्रतेषु सर्व्वत्र मध्याह्नव्यापिनी तिथि"। "मध्याह्ने पूजयेन्नृपेत्यादि" शास्त्रैरङ्गिनः पूजादेर्मध्याह्ने विहितत्वेनाङ्गस्यैकभक्तस्यापराह्णादौ मुख्यकालाश्रयः। मा भूद्दोषविषये मुख्यःकालः। प्रधानानुसारेण गुणस्य नेतव्यत्वात्। यदा स्वतन्त्रैकभक्तेऽपि येनचिन्निमित्तेन मुख्यकालासम्भवे गौणकालोऽभ्यनुज्ञायते तदा किमु वक्तव्यम् अन्याङ्गे। यत्तूपवासप्रतिनिधिरूपमेकभक्तं तदुपवासतिथौ कार्य्यं तस्य गौणेऽभ्यनुज्ञातत्वात्। अतएव सुमन्तुः "तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा तथेति" नच तादृशमेव नास्तीति शङ्कनीयम्। उपवासव्रतं प्रक्रम्य रोगादिना तदशक्तौ गुर्व्वनुज्ञयातस्यैकभक्तस्य सम्भावितत्वात्। 'अष्टौ तान्यव्रतघ्नानि आपोमूलं फलम्पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधमिति' शास्त्रात्"। "एकभक्तेन नक्तेन तथैवायाचितेन च" या० एकस्मिन् नान्यस्मिन् भक्तः। २नितान्तभक्ते ३अन्यस्मिन्नभक्ते च त्रि० "प्रोष्ठासु चैकभक्तासु" मनुः। एकभक्तासु अन्य नाशक्तास्वेव तु।

**एकभक्ति** स्त्री एका अनन्यविषया भक्तिः। १नितान्तभक्तौ २अनन्यभक्तौ एकस्मिन् अनन्यस्मिन् भक्तिरस्य। २नितान्तभक्ते त्रि० "एकभक्तिर्विशिष्यते" गीता।

**एकभङ्गीनय** पु० एका भङ्गी रीतिस्तस्य तामधिकृत्य नयः। एकरूपाणां बहूनां मध्ये एकस्य यथा प्रवृत्तिरन्यस्यापि तथा प्रवृत्तिरित्येवं ज्ञापके न्यायभेदे "सर्व्वेषामेकरूपाणामेकस्यापि यदुच्यते। सर्व्वेषामेव तत्कुर्य्यादेकरूपा हि ते स्मृताः" इत्युक्तत्वात्।

**एकभार्य्या** स्त्री एकस्यैव भार्य्या। १अनन्यपतिकायां साध्व्यां स्त्रियां "तामेकभार्य्यां परिवादभीरोः" रघुः। "एकभार्य्याम् साध्वीम्" मल्लि०। एका भार्य्या यस्य। २अन्यस्त्रीरहिते पु०। एकेन भार्य्यः। ३एकभर्त्तव्ये त्रि०।

**एकभाव** पु० एको भावः। अनन्यविषये १रागे २एकस्वभावे ३एकाशये "स्त्रीणांयस्तोः कुपितस्य पण्यस्त्रीणां विशेषतः। यो भवदेकभावेन न स जीवति मानवः" इति पञ्चत०। एकस्य भावः ष्यञ्। ४अभिन्नत्वे अभेदे "स्वतेजसा सत्त्वगुणप्रवाहमात्मैकभावेन भजध्वमद्धा" भाग० ४, २१, १६, एकोभावोयस्य। ५तुल्यभावके त्रि० "या वै यूयं सौहृदमद्यैकभावः" भा० अनु० ७६अ०।

**एकभूत** त्रि० अनेक एको भूतः च्व्यर्थे अभूततद्भावे एकस्मिन् भूतः। १एकीभूते। २एकासक्ते च "नियतेनैकभूतेन मनसा वरदर्षभम्" भा०शा० ४२अ०।

**एकभूम** पु० एका भूमिर्यत्र ब स०। समा०सुगन्ध०। एकभूमिरस्य अर्श० अच् पा०। (एकतला) प्रासादभेदे एवं द्विभूमादयोऽपि (दोताला) (तेतला) इत्यादि प्रासादभेदे।

**एकमति** स्त्री एका मतिः। एकस्यां मतौ "तथा मनुर्वां भगवान् पितामहोयमेकमत्या पुरुदक्षिणैर्मखैः" ४, १, २४, एका मतिर्यस्य। २एकविषयमतियुक्ते "तैरेकमतिभिर्भूत्वा यच्चोक्तं शास्त्रमुत्तमम्" भा० शा० ३३७अ०। मतेरैक्यत्वञ्च एकरूपविषयावलम्बनं विरोधविषयानवलम्बनञ्च। तस्य भावः ष्यञ्। ऐकमत्य एकविषयज्ञाने विसंवादिज्ञानाभावे च "ऐकमत्यं महाधियाम्" पुरा०।

**एकमुख** न० एकं मुखं प्रधानं यत्र। १एकप्रधाने द्यूतादौ "द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणात्" या०। एकं मुखं द्वारं यत्र। २एकद्वारे मण्डपभेदे। 'मण्डपं कारयेत्तत्र प्राङ्मुखं वाप्युदङ्मुखम्" पुरा० अवाचवादौ एकमुखमण्डपं विहितम् अन्यत्र तु चतुर्मुखमिति भेदः।

एक मुखमिवोद्गताकारविशेषोऽस्य। एकवक्त्राकारोन्नतांश-चिह्नयुक्ते २रुद्राक्षफलभेदे। तत्फलस्य एकादिचतुर्दशमुखता शास्त्रे उक्ता। तन्मुखन्तु "रुद्राक्षस्योन्नतं प्रोक्तं मुखं पुच्छन्तु निम्नगम्" तन्त्रसा० स्कन्दमहेश्वरे उक्तम्। रुद्राक्षशब्दे विवृतिः। एकवक्त्रादयोऽप्यत्र।

**एकमूला** स्त्री एकं मूलमस्त्यस्य अच्। एकं मूलमस्याः बहु० तु जातौ ङीष् स्यात्। (शालपान) १शालपर्ण्याम् अतस्याश्च वैद्यकम्। २एकमूलयुक्ते त्रि०।

**एकयष्टिका** स्त्री एका यष्टिरिवावली यस्याः ब०कप्। (एकनर) एकावलीहारभेदे।

**एकयोनि** त्रि०एका समा योनिर्जातिरस्य।१समानजातौ"एत-द्विधानं विज्ञेयं विभागमेकयोनिषु" मनुः "समानजा-तिषु" कुल्लू०। कर्म०। २एकस्मिन्नुत्पत्तिस्थाने स्त्री एका योनिरुत्पत्तिस्थानं यस्य। ३समानोत्पत्तिस्थानके त्रि०।

**एकरज** पु० एकं श्रेष्ठतया रज्यते केशोऽनेन रन्ज-घञर्थे करणे क। भृङ्गराजे जटा०। स च केशरञ्जनद्रव्यम्।

**एकरस** त्रि० एकोऽनन्यविषयकोरसः रागः अभिप्रायः एको-ऽभिन्नः स्वभावो वाऽस्य। १एकरागे २एकाभिप्राये ३अ-भिन्नस्वभावे च"अस्थूलमनण्वह्रस्वमदीर्घमनन्तमनपरम-बाह्यं प्रज्ञानघनमेकरसम्" इति श्रुतिः "चिदेकरसवस्तुनि वेदा०। एकोरसोयत्र। ४एकरागविषये त्रि०"तपस्येक रसे रतम्" रामा०। एकोरसोवर्ण्यत्वेन यत्र। प्राधा-न्येन एकरसयुक्ते ५नाटके न०।"एकएव भवेदङ्गी शृ-ङ्गारो वीरएव वा। अङ्गान्यन्ये रसास्तत्र" इति सा०द० उक्तेः नाटकस्य प्राधान्येन शृङ्गारवीररसान्यतरवत्त्वेन वर्णनीयत्वात्तथात्वम्।

**एकराज्** पु०एको राजते क्विप्। १सार्वभौमे"हिरण्यकशि-पूराजन्नजेयमजरामरम्। आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत" भाग०७,३,१, "तस्मिन् महेन्द्रभवने महा-बलो महासुरोनिर्ज्जितलोकएकराट्" भाग०७ ४, ११, "यावदीशो महानुर्व्यामाभिमन्यव एकराट्" भाग० १,१८,६, "एकएव राजते राज–क्विप्। २पर-मेश्वरे तस्यैव भासा सर्वस्य भासनात् तस्य तथात्वम्। तथा हि "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" श्रुत्या "यदादित्यगतं तेजो जगद्भासयतेऽखि-लम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" गीतोक्तेः "अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यं त्रिकं ब्रह्मरूपं मायारूपं ततो द्वयम्" इत्युक्तेश्च तस्य सर्वेषां भानप्रयोजकत्वात् "एष स्वयंज्योतिरिति श्रुतेस्तस्य स्वयंप्रकाशमानत्वात् स्वप्रकाशे अन्यानपे-क्षत्वाच्च तथात्वम्।

"स वा एष द्रष्टा नापश्यद्दृश्यमेकराट्" भाग० ३,५,२०,

**एकराज** पु०एको राजा टच्स०। एकस्मिन् श्रेष्ठे च राजनि

**एकरात्र** न०एका रात्रिः–नि०अच् संख्यापूर्वकतया रात्रा-न्तत्वेऽपि न पुंस्त्वम्। एकाहोरात्रे। "एकरात्रं तु नियसन्नतिथिर्ब्राह्मणः स्मृतः" "यत् करोत्येकरात्रेण वृष-लीसेवनात् द्विजः"। "एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतः" मनुः। रात्रिपदमहोरात्रपरम्। "कतलं त्वेक-रात्रेण" भाग० ३,३१,२। एकरात्रभोजने पर्य्याप्तम् ठन्। एकरात्रिक एकदिनभोजननिर्वाहपर्य्याप्ते त्रि० "आददीतान्नमेवास्मादवृत्तावेकरात्रिकम्" मनुः।

**एकराशि** पु० कर्म०। १एकस्मिन् मेषादौ राशौ।"एकराशि-गतौ स्यातामेकर्क्षविषये यदा"ज्यो०। २एकस्मिन् धान्यादेः स्तूपे च। "एकराशिं पञ्चधा कुरुते" सि०कौ०।

**एकरिक्थिन्** त्रि० एकस्य पितुः रिक्थमस्त्यस्य इनि। एकपित्रंशहरे।"यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ" मनुः। एकं समानं रिक्थमस्त्यस्य इनि। २अवि-भक्ते ३संसृष्टे च। स्त्रियां ङीप्।

**एकरूप** त्रि० एकं समानं रूपमस्य। १तुल्यरूपे "सर्वेषामेक-रूपाणामेकस्यापि यदुच्यते। सर्वेषामेव तत् कुर्य्यादेक-रूपा हि ते स्मृताः" स्मृतिः। कर्मधा०। २एकस्मिन् रूपे। "पुरुषार्थं प्रति विमोचयत्येकरूपेण सां०का०। एक-रूपस्य भावः ष्यञ्। ऐकरूप्य तुल्यरूपे न०। त्वएक-रूपत्व न० तल्, एकरूपता स्त्री तत्रार्थे।

**एकरूप्य** त्रि० एकस्मात् एकस्या वा आगतः रूप्यप्। १एकत आगते। कर्म०। २केवलरजते न० बहु०। ३तद्वति त्रि०।

**एकर्च** पुंन० एका ऋक् अ समा० अर्द्धर्चादि। १एकस्यामृचि एका ऋक् यत्र। २एकर्चयुक्ते सूक्ते न०।"चतुरुत्तराण्ये-कर्चानि" शत०ब्रा०१०,१,२,६, ३एकर्चस्तुत्ये देवभेदे"त्र्-चेभ्यः स्वाहा एकर्चेभ्यः स्वाहा" अथ० १६,२३,२०,

**एकल** त्रि० इण–विट् एगता कला यस्य। १अनवयवे एकत्वलायते गृह्यते ला–घञर्थे क "सह सुमेति" स०। २असहाये एकके "अथ ऊर्द्ध्व उदेत्य नैवेदेता नास्तमेतैकल एव मध्ये स्याता" छा०उ० "एकलोऽ-द्वितीयोनवयवो वा" भा० "जायेत चैकलः प्राणीप्रणीयेत तथैकलः। एकलः सुकृतं भुङ्क्तेऽश्नीयाद्व्यतमेकलः" काशी०

एकमेकत्वं याति या क। एकत्वान्वये "तस्मिन् वाव किल स एकलः पुलहाश्रमोपवने" भाग०५,७,१२।

**एकलव्य** पु० निषादराजस्य हिरण्यधनुषः पुत्रे तत्कथा भारते आ० १२४ अ०।

"ततो निषादराजस्य हिरण्यधनुषः सुतः। एकलव्यो महाराज! द्रोणमभ्याजगाम ह। न स तं प्रतिजग्राह नैषादिरिति चिन्तयन्। शिष्यं धनुषि धर्मज्ञस्तेषामेवान्ववेक्षया। स तु द्रोणस्य शिरसा पादौ स्पृष्ट्वा परन्तप!। अरण्यमनुसंप्राप्य कृत्वा द्रोणं महीमयम्। तस्मिन्नाचार्य्यवृत्तिञ्च परमामास्थितस्तदा। इष्वस्त्रे योगमातस्थे परं नियममास्थितः। परया श्रद्धयोपेतो योगेन परमेण च। विमोक्षादानसन्धाने लघुत्वं परमाप सः। अथ द्रोणाभ्यनुज्ञाताः कदाचित् कुरुपाण्डवाः। रथैर्विनिर्ययुः सर्वे मृगयामरिमर्दन!। तत्रोपकरणं गृह्य नरः कश्चिद्यदृच्छया। राजन्ननुजगामैकः श्वानमादाय पाण्डवान्। तेषां विचरतां तत्र तत्तत् कर्मचिकीर्षया। श्वा चरन् स वने मूढो नैषादिं प्रतिजग्मिवान्। स कृष्णमलदिग्धाङ्गं कृष्णाजिनजटाधरम्। नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके। तदा तस्याथ भषतः शुनः सप्त शरान् मुखे। लाघवं दर्शयन्नस्त्रे मुमोच युगपद्यथा। स तु श्वा शरपूर्णास्यः पाण्डवानाजगाम ह। तं दृष्ट्वा पाण्डवा वीराः परं विस्मयमागताः। लाघवं शब्दवेधित्वं दृष्ट्वा तत् परमं तदा। प्रेक्ष्य तं व्रीडिताश्चासन् प्रशशंसुश्च सर्व्वशः। तं ततोऽन्वेषमाणास्ते वने वननिवासिनम्। ददृशुः पाण्डवा राजन्नस्यन्तमनिशं शरान्। न चैनमभ्यजानंस्ते तदा विकृतदर्शनम्। अथैनं परिपप्रच्छुः को भवान् कस्य वेत्युत। एकलव्य उवाच। निषादाधिपतेर्व्वीरा! हिरण्यधनुषः सुतम्। द्रोणशिष्यञ्च मां वित्त धनुर्व्वेदकृतश्रमम्। वैशम्पायन उवाच। ते तमाज्ञाय तत्त्वेन पुनरागम्य पाण्डवाः। यथावृत्तं वने सर्व्वं द्रोणायाचख्युरद्भुतम्। कौन्तेयस्त्वर्ज्जुनो राजन्नेकलव्यमनुस्मरन्। रहो द्रोणं समासाद्य प्रणयादिदमब्रवीत्। अर्ज्जुन उवाच। तदाहं परिरभ्यैकः प्रीतिपूर्व्वमिदं वचः। भवतोक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यति। अथ कस्मान्मद्विशिष्टो लोकादपि च वीर्य्यवान्। अन्योऽस्ति भवतः शिष्यो निषादाधिपतेः सुतः। वैशम्पायन उवाच। मुहूर्त्तमिव तं द्रोणश्चिन्तयित्वा विनिश्चयम्। सव्यसाचिनमादाय नैषादिं प्रति जग्मिवान्। ददर्श मलदिग्धाङ्गं जटिलं चीरवाससम्। एकलव्यं धनुष्पाणिमस्यन्तमनिशं शरान्। एकलव्यस्तु तं दृष्ट्वा द्रोणमायान्तमन्तिकात्। अभिगम्योपसंगृह्य जगाम शिरसा महीम्। पूजयित्वा ततो द्रोणं विधिवत् स निषादजः। निवेद्य शिष्यमात्मानं तस्थौ प्राञ्जलिरग्रतः। ततो द्रोणोऽब्रवीद्राजन्नेकलव्यमिदं वचः। यदि शिष्योऽसि मे वीर! वेतनं दीयतां मम। एकलव्यस्तु तत् श्रुत्वा प्रीयमाणोऽब्रवीदिदम्। एकलव्य उवाच। किं प्रयच्छामि भगवन्नाज्ञापयतु मां गुरुः। न हि किञ्चिददेयं मे गुरवे ब्रह्मवित्तम!। द्रोण उवाच। यद्यवश्यं त्वया देयमेकलव्य! प्रयच्छ मे। एकाङ्गुष्ठं दक्षिणस्य हस्तस्येति मतं मम"। "एकलव्यस्तु तच्छ्रुत्वा वचो द्रोणस्य दारुणम्। प्रतिज्ञामात्मनो रक्षन् सत्ये च नियतः सदा। तथैव हृष्टवदनस्तथैवादीनमानसः। छित्त्वाऽविचार्य्य तं प्रादात् द्रोणायाङ्गुष्ठमात्मनः। ततः शरन्तु नैषादिरङ्गुलीभिर्व्यकर्षत। न तथा च स शीघ्रोऽभूद्यथा पूर्व्वं नराधिप!"। अयञ्च निषादराजस्य पालित पुत्रः श्रुतदेवपुत्रः यथोक्तं हरिवं० ३५ अ०। "श्रुतदेवात् प्रजातस्तु नैषादिर्यः प्रतिश्रुतः। एकलव्यो महाराज! निषादैः परिवर्द्धितः" अतएवांशावतारे "रुक्मी च नृपशार्द्दूल! राजा च जनमेजय"! इत्युपक्रम्य एकलव्यप्रभृतीन् कतिचिन्नृपानुक्त्वा "गणात् क्रोधवशादेष राजपूगोऽभवत् क्षितौ" आ०६७अध्याये तस्य राजवंशत्वेन राजपूगान्तर्गततोक्तिः। "एकलव्यमिव जन्मान्तरगतम्" काद०

**एकलिङ्ग** न० एकं पञ्चक्रोशमध्ये लिङ्गं यत्र। १सिद्धिसाधनक्षेत्रभेदे 'पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्ष्यते। तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमा' आगमः। एकं लिङ्गं पुंस्त्वादि यस्य। २नियतैकलिङ्गे शब्दे पु०। एकं लिङ्गमिन्द्रियं चक्षुर्यस्य। ३कुवेरे शब्दरत्ना०।

**एकलू** पु० एकं लुनाति लू•क्विप् ६त०। ऋषिभेदे ततः गोत्रे गर्गा०यञ्। ऐकलव्य तद्गोत्रापत्ये पुंस्त्री बहुत्वे यञो लुक्। एकल्व इत्येव स्त्रियां न लुक् ऐकलव्यः स्त्रियः

**एकवक्त्र** पु०। १असुरभेदे "एकवक्त्रो महावक्त्रो द्विवक्त्रः कालसन्निभः" हरिवं २६३अ०। २एकमुखे रुद्राक्षफले न०।

**एकवचन** न०एकमेकत्वमुच्यतेऽनेन वच—करणे ल्युट् ६त०। व्याकरणोक्ते एकत्वसंख्यावाचके 'द्व्येकयोर्द्विवचनैकवचने' पा०उक्ते स्वादौ तिङादौ च। "एकत्वबोधकाच

सु अम् टा ङे ङसि ङस् ङि इत्येवं रूपाः तिप् सिप् मिप् ते से इ इत्येवं रूपाश्च प्रत्ययभेदाः "अथोनेदेकवचनेन बहुवचनं व्यवायामेति" शत० ब्रा० १२,५,१,१८ ।

**एकवत्** अव्य० एकस्येव वति । १एकताश्रयस्य सदृशे कार्य्ये "नपुंसकमपुंसकेनैकवच्चास्यान्यतरस्याम्" पा०। शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्रम् इत्येव वाक्ये नपुंसकमात्रशेषे विकल्पेन एकवत् कार्य्यविधानात् इदं शुक्लम् इमानि शुक्लानीति वा" सि०कौ०। २एकवचनवदित्यर्थे च । "एकवन्मन्त्रानूहेतैकोद्दिष्टे" विष्णुः । "एकवत् एकवचनवत् यथा स्यात्तथोहेत" श्रा०त०रघु० । एकेन तुल्यक्रियं वति । २एकेन तुल्यक्रियायाम् अव्य० ।

**एकवद्भाव** पु० एकेन तुल्योभावः भवनम् । एकत्वाश्रयस्याद्येकवचनान्तताद्रूपे शब्दनिष्ठे कार्य्यभेदे ।

**एकवर्ण** त्रि० एकोवर्णो रूपं यस्य । अन्यरूपामिश्रितवर्णयुक्ते । एकोवर्णः जातिभेदो यत्र । २ब्राह्मणादिवर्णविभागशून्ये कलियुगावशेषस्थलोके । "एकवर्णस्तदा लोको भविष्यति युगक्षये" भा०व०१९० अ० । वर्ण्यतेऽनेन वर्णः एकः वर्णः स्वरूपं यस्य । ३एकस्वरूपे । "स एकवर्णं तमसः परम्" (उपास्ते) भाग० ८,५,१८ । एकवर्णमेकस्वरूपं ध्यानम् एकरूपमित्यर्थः । कर्मधा० । एकस्मिन् ४शुक्लादौ रूपे एकस्मिन् ५ब्राह्मणादौ जातिभेदे एकस्मिन्नक्षररूपे ६शब्दे च । ७अन्येवर्णे इत्येवजातौ च पु०। तमर्हति ठञ् । ऐकवर्णिक असाधारणे ब्राह्मणवर्णमात्रार्हे व्रतधर्मादौ त्रि० । "द्विजातीनामतं धर्मोह्येकस्यैकवर्णिकः । यज्ञाध्ययनदानानि त्रयःसाधारणाः स्मृताः" भा०व० १५० अ० । ८वीजगणितोक्ते सजातीये तुल्यवर्णे द्रव्यभेदे च ।

**एकवर्णसमीकरण** न० एकवर्णौ तुल्यरूपौ समीक्रियेते अनेन करणे ल्युट् ६त०। वीजगणितोक्ते वीजचतुष्टयान्तर्गतवीजभेदे अव्यक्तशब्दे तल्लिखितप्रकारो दर्शितः 'प्रथममेकवर्णसमीकरणं वीजं, द्वितीयमनेकवर्णसमीकरणं वीजम्, यत्रैकवर्णयोर्द्वयोर्बहूनां वा वर्गादिगतानां समीकरणं तन्मध्यमाहरणम्, यत्र भाविवस्य तल्लाक्षिकमिति वीजचतुष्टयं वदन्त्याचार्य्याः" भास्कराचार्य्यः । अस्योदाहरणम् । "एकस्य रूपत्रिंशती षडश्वा अश्वादशान्यस्य तु तुल्यमू[illegible]ः । ऋणं तथा रूपशतस्य तस्य तौ तुल्यवित्तौ च किमश्व[illegible]ाम्" एतद्वाक्यशब्दे व्याख्यातम् ।

अत्र [illegible] [illegible]ष्मूकवानरूपसमविषयस्यैव पूर्वमुक्तान्वितस्य समीकरणात् एकवर्णसमीकरणमित्यनुमतार्थसंज्ञा ।

**एकवर्णी** स्त्री एकमसङ्गायं यथा तथा वर्ण्यते शब्द्यतेऽनया वर्ण–करणे अच् २त० गौरा० ङीष् । करतालीरूपे वाद्ये शब्दरत्ना० । कराभ्यामितरकारणानपेक्षया तद्वाद्यवादनात् तथात्वम् ।

**एकवर्षिका** स्त्री एको वर्षो वयःकालोयस्याःकप् अत-इत्वम् । एकहायन्यां स्त्रीगव्याम् हेम० एकवर्षभवे त्रि०।

**एकवस्त्र** त्रि० एकं वस्त्रं यस्य । १उत्तरीयवस्त्रशून्ये २एकजातीयवस्त्रान्विते च एकवासःप्रभृतयोऽप्यत्र । कर्म० । एकस्मिन् वस्त्रे उत्तरीयरहितपरिधानमात्रवस्त्रे न० । तन्मात्रे स्नाननिषेधमाह आ०त० गौतमः "एकवस्त्रेण यत्स्नानं कृत्वा विप्रेण चैव हि । स्नातस्तु न च विशुद्धः स्यात् श्रिया च परिहीयते" अतएव "स्नानं तर्पणपर्य्यन्तं कुर्य्यादेकेन वाससा" । इति यदि समूलं तदा प्रेततर्पणपरमिति । तत्र "एकवस्त्रा स्नातयः" इत्यादिना एकवस्त्रत्वविधानात् "एकेन एकजातीयेन इति" वाचस्पतिमिश्रः "येन वाससा स्नानं कृतं जलस्थस्य तेनैव तर्पणम्" इति तत्वतत्त्वार्णवः । न च "स्नानशाट्यान्तु दातव्यादत्तिस्तोविशुद्धये । जलमध्ये तु यः कश्चित् द्विजातिस्तीव्रदुर्बलः । निष्पीडयति तद्वस्त्रं स्नानं तस्य वृथा भवेत्" । इति वशिष्ठवचने स्नानशाट्यामिति तद्वस्त्रमिति एकवचननिर्देशेन च स्नानेऽप्येकवस्त्रत्वमिति वाच्यम् । अत्र विशुद्धय इत्यभिधानेनाधोष्टतवस्त्रस्यैव अन्त्रयेण प्रक्षालनं नतूत्तरीयस्य एतदर्थमेकवचनम् । अतएव "स्नात्वैवाधरीयवस्त्रं प्रक्षाल्य" इत्याह्निकचिन्तामणिः । वशिष्ठवचनैकवाक्यतया "स्नातोनाङ्गानि निर्मृज्यात् स्नानशाट्या न पाणिना" इति विष्णुपुराणीयेनाधरीयवस्त्रेणैव गात्रमार्ज्जनं निषिध्यते । एतेन "निष्पीड्य स्नानवस्त्रमिति" कात्यायनवचने एकत्वमविवक्षितमिति निरस्तम् । अतएव सर्वत्रैकवचननिर्देशः" श्रा०त० रघु० । एवं वैदिककर्म्ममात्रे एकवस्त्रतानिषेधः उत्तरीयशब्दे दर्शितः ।

**एकवाक्य** न० एकम् एकार्थं वाक्यम् । वाक्यार्थाकाङ्क्षिताकाङ्क्षापूरणेन विशिष्टैकार्थबोधके १वाक्यभेदे तच्च द्विविधं पदैकवाक्यं वाक्यैकवाक्यञ्च तत्र वेदा०प० निरूपितं यथा "एवमर्थवादवाक्यानां प्रशंसापराणां प्राशस्त्ये लक्षणा, सोऽरोदीदित्यादिनिन्दार्थवादवाक्यानां निन्दितत्वे लक्षणा अर्थवादगतपदानां प्राशस्त्यादिलक्षणाभ्युपगमे एकेन पदेन लक्षणया तदुपस्थितिसम्भवे पदान्तरवैयर्थ्यं स्यात्

एतस्य विध्यपेक्षितप्राशस्त्यरूपपदार्थप्रत्यायकतया अर्थवादपदसमुदायस्य पदस्थानीयतया विधिपदेनैकवाक्यता भवतीत्यर्थवादवाक्यानां पदैकवाक्यता । क्व तर्हि वाक्यैकवाक्यता ? यत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वं यथा "दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिवाक्यानां "समिधो यजति" इत्यादिवाक्यानाञ्च परस्पराकाङ्क्षिभावबोधकतयैकवाक्यता । तदुक्तम् भट्टपादैः "स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते इति" । एकमविसंवादितया तुल्यरूपं वाक्यम् । अविसंवादितया तुल्यरूपे २वाक्ये च । "भवचकटु न्टपाणामेकवाक्यं विवव्रुः" रघुः । "एकमविसंवादिवाक्यमेकवाक्यम्" मल्लि० ।

**एकवाद** पु० एकेन हस्तेन वाद्यते वाद-कर्मणि घञ् । १डिण्डिम वाद्ये शब्दरत्ना० तस्यैकहस्तेन वादनात् तथात्वम् । वादः कथाभेदः एकस्य एकत्वस्य ब्रह्माभिन्नत्वस्य वादः । २वेदान्तिभिरुक्ते वादभेदे सर्वेषां ब्रह्माभिन्नत्वेनैकत्वस्य प्रतिपादनात्तद्वादस्य तथात्वम् ।

**एकविंशत्** स्त्री एकाधिका विंशतिः ष० । (एकुश) १संख्याभेदे २तदन्विते च एकविंशतिशब्दोऽप्यत्र स्त्री । एकविंशः एकविंशतेर्वा पूरणः डट् । एकविंश ततृसंख्यापूरणे स्वार्थे कन् तत्रार्थे "दश पूर्वान् परान् वंश्यानात्मानं चैकविंशकम्" मनुः । पूरणार्थे डटि वा तमटि तु एकविंशतम एकविंशतितम इतिभेदः तत्पूरणार्थे स्त्रियामुभयतो ङीप् । तदधिकमधिकं शते सहस्रे चेत्यर्थे कन् । एकविंशतिक एकविंशत्क एकविंशत्यधिकशतादौ वृद्ध्यायवाशोपदारूपेण दीयते इत्यर्थे कन् । एकविंशतिक एकविंशत्क वृद्ध्यादिरूपेण दीयमानविंशतिके शते । अवयवे कन् रूपसत्तात् एकविंशतिसंख्यायां म० । एकविंशतिमन्त्राः परिमाणमस्य स्तोमस्य ड । एकविंश १तावन्मन्त्रके स्तोमभेदे एकविंशस्तोमशब्दे विवृतिः । "शत्शनोडिनिर्वक्तव्यः" "विंशतेश्च" वार्त्ति० डिनि । एकविंशिन् एकविंशतिसंख्यायुक्ते त्रि० स्त्रियां ङीप् । प्रकारे धा एकविंशतिधा एकविंशतिप्रकारे अव्य० । एकाधिका विंशतिः संख्येया डच् समा० । एकाधिकविंशतिसंख्येये । एकविंश संख्यातः स्तोमोऽस्त्यस्य मतुप् मस्य वः । एकविंशवत् एकविंशस्तोमान्विते त्रि० स्त्रियां ङीप् । "त्रिवृद्वतीं पुरस्तादुपदधात्येकविंशवतीं पश्चात्" शत०ब्रा०८,४,४,१।

**एकविंशस्तोम** पु० कर्म० । एकविंशतिसंख्यायुक्ते स्तोमभेदे "एकविंशस्तोमेन ... " शत०ब्रा० १२,५,४,१५, स्तोमश्च सोमादियागेषु सामभिः क्रियमाणः पृष्ठ्यादिसंज्ञः स्तुतिभेदः । एकविंशस्तोमस्य विष्टुतिप्रकाराः ताण्ड्य० ब्रा० भा० दर्शितो यथा "एकविंशस्तोमस्य चतस्रो विष्टुतयः । तत्र चतसृष्वाद्यां प्रथमां विष्टुतिं दर्शयति" भा०। "सप्तभ्यो हिङ्करोति स तिसृभिस्स तिसृभिस्स एकया, सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः, सप्तभ्यो हिङ्करोति स तिसृभिस्स एकया स तिसृभिः, सप्तसप्तैकविंशस्य विष्टुतिः" ब्रा० । "अथास्यैव स्तोमस्य ... द्वितीयां विष्टुतिमाह" भा० । "पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया, सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः, नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिरद्यात्येकविंशस्य विष्टुतिः" ब्रा०। "अथास्यैव स्तोमस्य प्रतिष्ठितिनाम तृतीया विष्टुतिः प्रदर्श्यते" भा० । "नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया, सप्तभ्यो हिङ्करोति स तिसृभिः स एकया स तिसृभिः, प्रतिष्ठितिः" ब्रा० । "त्रिवृदादिस्तोमचतुष्टयप्रतिरूपकत्वात् अस्याः प्रतिष्ठितिरिति संज्ञा यौगिकी अथास्यैव स्तोमस्य ... चतुर्थीं विष्टुतिं दर्शयति" भा० । "नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिः, तिसृभ्यो हिङ्करोति स पराचीभिः, नवभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स तिसृभिः स्तुत्यं भवत आदीप्ता" ब्रा० । "उभयत आद्यान्त्ययोः पर्याययोर्नवकान्ते न स्तिष्वादुभयतः आदीप्ता ... प्रजापतिमुखात् ... रादीप्ता ... अपि मध्यपर्यायस्य ... " भा० । अत्र उद्गातीशब्दे दर्शिततद्भाष्यानुसारेण एतद्बोद्धव्यं ते एकैकस्य साम्नः पञ्च भक्तयः प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः तत्र हिङ्कारस्तु त्रिभित्रिभिरुद्गातृभिः कर्त्तव्यः "साम्ने साम्ने हिंकुर्य्युरिति" ... तथा च सप्तभ्य इति चतुर्थी सप्त ... हिङ्कुर्य्युरित्यर्थः । तत्र एकैकं ... त्रिरावर्त्तनीयम् । ... आद्याया द्वितीयायाश्च त्रिरभ्यासः । द्वितीयाया ... त्रिरभ्यासः । ...

आद्यान्त्ययोस्त्रिरभ्यासः। एवं सप्तसप्तिनी नाम विष्टुतिः। पर्य्यायत्रयेऽपि सप्तर्चैः स्तवनात् तथात्वम् सप्त सप्त ऋचः प्रतिपर्य्यायं परिमाणमस्यां "अनुगतो डिनि" वार्त्ति० डिनि ङीप्। सप्तसप्तिनीति व्युत्पत्तेरन्वर्थसंज्ञा। पञ्चर्च्चोगात् हिङ्कुर्य्युरित्यर्थः। तत्र पञ्चानां मध्ये आद्यावृत्तौ आद्यायास्त्रिरावृत्तिः। द्वितीयावृत्तौ सप्तर्चोगात् हिङ्कुर्य्युः तत्र मध्यमान्त्ययोस्त्रिरावृत्तिः। तृतीयावृत्तौ नवर्चो गात् हिङ्कुर्य्युः तत्र च सर्वासां त्रिरावृत्तिः इयमुग्रत्ये कविंशस्तोमस्य विष्टुतिः। पञ्चर्चसप्तर्चनवर्चानां यथोत्तरमृत्कर्षाधिक्येन उद्यतीतिसंज्ञाऽन्वर्था। नवर्चो गात् हिङ्कुर्य्युः तत्राद्यावृत्तौ सर्वासां त्रिरभ्यासः। ततः पञ्चर्चो गातुम् हिङ्कुर्य्युः। तासु द्वितीयायाः त्रिरावृत्तिः। ततः सप्तर्चोगात् हिङ्कुर्य्युः। तृतीयावृत्तौ तासु आद्यान्त्ययोस्त्रिरभ्यासः। इयं प्रतिष्टुतिर्नाम तस्य स्तोमस्य विष्टुतिः। नवर्चोगात् हिङ्कुर्य्युः आद्यावृत्तौ तासु सर्वासां त्रिराभ्यासः। ततस्त्रिसप्तर्चोगात् हिङ्कुर्य्युः। द्वितीयावृत्तौ तासां कस्याश्चपि न त्रिरावृत्तिः। ततो नवर्चो गात् हिङ्कुर्य्युः तत्र तृतीयावृत्तौ सर्वासां त्रिरावृत्तिः। इयमस्य स्तोमस्य कुर्मी नाम विष्टुतिः तत्संज्ञानिमित्तं भाष्ये उक्तम्।

**एकविध** त्रि० एका विधा प्रकारोऽस्य। एकप्रकारे "मानुषश्चैकविधः समासतो भौतिकः सर्गः" सां०का।

**एकविलोचन** त्रि० एकं विलोचनं यस्य १काणे। २तत्प्रधानदेशभेदे च स च देशः वृहत्सं० कूर्मविभागे पश्चिमोत्तरस्यामुक्तः। पश्चिमोत्तरस्यामिमुपक्रम्य एकविलोचनशूलिकदीर्घग्रीवास्यकेशाश्च"। ३कुवेरे पु० तस्य वामनेत्रस्य स्फोटनात् तथात्वम्। एकपिङ्गशब्दे विवृतिः। ४काके पुंस्त्री स्त्रियां जातित्वात् ङीष्। तस्योभयगोलकवत्त्वेऽपि एकमेव नेत्रेन्द्रियमुभयगोलके सञ्चरतीति तस्य तथात्वम्। एकलोचनादयोऽप्यत्र। कर्म्म०। ५एकस्मिन् लोचने न० बौद्धभेदैर्हि। एकमेव लोचनं नासास्थिभेदेन व्यवधानाद्द्वित्वेन प्रतीयते इत्यङ्गीक्रियते तदेतन्मतमुत्थाप्य गौत०सू० वृत्त्योः खण्डितं यथा

"नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात्" सू०"एकमिदं चक्षुर्मध्ये नासास्थिव्यवहितं तस्यान्तौ गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतः मध्यव्यवहितस्य दीर्घस्येव" वृ०। "एकविनाशे द्वितीयाविनाशान्नैकत्वम्" सू० "एकस्मिन् पहते चोद्धृते वा चक्षुषि द्वितीयमवतिष्ठते चक्षुर्विषयग्रहणलिङ्गम् तस्मादेकस्य व्यवधानानुपपत्तिः" वृ०। "अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः" सू० "एकविनाशे द्वितीयाविनाशादित्यहेतुः कस्मात् वृक्षस्य हि कासुचिच्छाखासु छिन्नासूपलभ्यत एव वृक्षः" वृ०। "दृष्टान्तविरोधादप्रतिषेधः" सू० "न कारणद्रव्यस्य विभागे कार्य्यद्रव्यमवतिष्ठते नित्यत्वप्रसङ्गात् बहुष्ववयविषु यस्य कारणानि विभक्तानि तस्य विनाशः। येषां कारणान्यविभक्तानि तान्यवतिष्ठन्ते अथवा दृश्यमानार्थविरोधो दृष्टान्तविरोधः मृतस्य हि शिरःकपाले द्वाववटौ नासास्थिव्यवहितौ चक्षुषः स्थाने भेदेन गृह्येते न चैतदेकस्मिन्नासास्थिव्यवहिते सम्भवति। अथ चैकविनाशस्यानियमात् द्वाविमाववयवौ तौ च पृथगावरणोपघातौ अनुमीयेते विभिन्नाविति अवपीडनाच्चैकस्य चक्षुषो रश्मिविषयसन्निकर्षस्य भेदाद् दृश्यभेद इव गृह्यते तच्चैकत्वे विरुध्यते अवपीडननिवृत्तौ चाभिन्नप्रतिसन्धानमिति तस्मादेकस्य व्यवधानानुपपत्तिः" अवपीडनं चिपिटीकरणम्।

**एकवीर** पु० कर्म्म० वा० एकशब्दस्य पूर्वनि०। १श्रेष्ठवीरे "यस्यैकवीरोऽतिरथो विजिग्ये" भाग० २,१,४०। "गोप्त्रैकवीरो नरदेवनाथः" ४,१६,१८। २महार्वरे 'मादकोऽम्लो कटुकस्तोदवातार्दिनाशकः। चटुकोकटिपृष्ठादिचलपक्षादिघातकः" इति वैद्यकोक्तगुणके ३वृक्षभेदे वीरैक इत्यपि साधुः वस्तुत एकशब्दस्य संख्यापरत्वे वीरैकः श्रेष्ठपरत्वे एकवीर इति व्यवस्था।

**एकवीराकल्प** पु० एकः प्रधानं वीरः कुलाचारी यस्याः तादृश्याः तारादिविद्यायाः कल्पः उपासनाप्रापकशास्त्रम्। तन्त्रभेदे यत्र वीराचारसेव्यायाः देव्या रहस्यादिकमुक्तं तस्मिन् तन्त्रशास्त्रभेदे।

**एकवृक्ष** पु० एकोवृक्षोयत्र। "चतुः क्रोशान्तरे यत्र न वृक्षान्तरमीक्ष्यते। एकवृक्षः स विज्ञेयो देशः सिद्धिप्रदायकः" इत्यागमोक्ते १देशभेदे। कर्म्म०। २एकस्मिन् वृक्षे "एकवृक्षो यत्र नौका भवतीति" सारमञ्जरी।

**एकवृत्** स्त्री एकधैव वर्त्यते अन्तर्भूतण्यर्थे वृत–भावे क्विप्। १एकधावर्त्तने एकावृत्तौ "एकवृत्करणम्" कात्या०८,२,२८। कर्त्तरि क्विप्। २एकधा वर्त्तमाने। एकधा वर्त्ततेऽत्र आधारे क्विप्। ३स्वर्गलोके। "एकोत्तराजुहोत्येकवृद्वै स्वर्गो लोकएकधैवैनं स्वर्गं लोकं गमयति" शत० ब्रा० १२,२,१,५।

**एकवृन्द** पु० "वृत्तोन्नतोयः श्वयथुःसदाहः कण्ड्वन्वितोऽपाक्यमृदुर्गुरुश्च। नाम्नैकवृन्दः परिकल्पितोऽसौ" इति सु-

सुतोक्ते १रोगभेदे स च कण्ठगतो मुखरोगभेदः। "मुख-रोगाः पञ्चषष्टिः" इत्युपक्रम्य तेषां मध्ये सप्तदश कण्ठमूले इत्युक्त्वा "अथ कण्ठगतास्तु रोहिण्यः पञ्च कण्ठशालूक-मधिजिह्वो वलयं बलास एकवृन्दोऽवृन्दः शतघ्नीगिलायुर्ग-लविद्रधिर्गलौघःस्वरघ्नो मांसतानोविदारी चेति" इति कण्ठ गतान् विभज्य तेषां लक्षणाभिधाने एतल्लक्षणस्योक्तेस्तस्य मुखरोगत्वम्। "एकवृन्दं तु विस्राव्य विधिं शोधनमाचरेत्" सुश्रु०। कर्म्म०। एकस्मिन् वृन्दे २एकरायौ न।

**एकवृष** पु० कर्म्म०। १एकस्मिन् वृषे तस्य स्वामिनोऽनिन्दा-वकत्वम् यथा "एकोवृषस्तयोगावः सम्प्राप्ता नवदन्तिनः। सिंहप्रसूतिका गावः कथिता: स्वामिघातकाः" पुरा० वङ्ग०। २एकवृषयुक्ते त्रि० "एकवृष इन्द्रसखा जिगी-वान्" अथ० ४,२२,६ "इमं विशामेकवृषं कृणु त्वम्" अथ० ४,२२,१।

**एकवेणि(णी)** स्त्री एकीभूता संस्काराभावेन जटावत् संहतिं प्राप्ता वेणी। प्रोषितभर्तृकायाः स्त्रियः केशसंस्काररहितत्वेन एकीभूततां प्राप्तायां जटाकारायां वेण्याम्। "गण्डा-भोगात् पतमविषयामेकवेणीं करेण" मेघ०। "एकवेणीम् एकीभूतां वेणीम्" मल्लि:। वेणीनां संस्काराभावेन एकीभूतत्वेन गुम्फितत्वम् "प्रोषितेषु पतिषु द्युयेषि ताम् गुम्फिता: शिरसि वेणयोऽभवन्" इति माघे वर्णि-तम्। "तत: प्रविशत्येकवेणीधरा शकुन्तला" शकु०।

**एकशत** न० एकाधिकं शतम् शा०त०। १एकाधिकशते एक-मितं शतम्। २एकमिते शते ३तत्संख्यान्विते च। तत्र संख्येये "विश्वामित्रस्य चैवासन् पुत्रा एकशतं नृप!" भाग० ६,१६,१७। संख्यायाम् "प्रमाप्य वैश्यं वृत्तस्थं दद्याच्चैकशतं गवाम्" मनुः तत: पूरणे डट् तमट् च। एकशततमः तत्पू-रणे त्रि०स्त्रियां ङीप्। एकशतं परिमाणमेषाम् कन्। एकशतक तत्परिमाणे त्रि०। अवयवे कन्। एकशतक तत्संख्यायां न०। प्रकारे धाच्। एकशतधा एकशत-प्रकारे अव्य० वीप्सार्थे कारकार्थवृत्तेः शस्। एकशतश् एकशतमेकशतमित्याद्यर्थे अव्य०।

**एकशफ** पु० एकं शफं खुरो यस्य। एकखुरयुक्ते खरादौ ते च "खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा। एते चै-कशफाः वत्स! शृणु पञ्चनखान् पशून्" भा०३,१०,२२ उक्ता:। "अजाविकं चैकशफं न जातु विषमं भजेत्" मनुः अविक्रेयमध्ये "मद्यं नीलीञ्च लाक्षाञ्च सर्वांश्चैकशफां-स्तथा" मनु: अभक्ष्यमध्ये "अनिर्दिष्टांश्चैकशफान् टिट्टि-भञ्च विवर्जयेत्" मनुः "कार्पासकीटजोर्णानां द्विशफैकशफस्य च" "एकशफो वा एष पशुर्यदश्वः" शत०ब्रा०७,५,२, २१। "इमं मा हिंसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु" यजु०१३,४८ "एकविंशत्यास्तुवतैकशफाः पश-वोऽसृज्यन्त वरुणोऽधिपतिरासीत्" यजु० १४,३०। "एकविंशत्यास्तुवतेभिः। दश हस्त्या अङ्गुल्यः दश पाद्याः आत्मैकविंशस्तेनैतदस्तुवतैकशफा: पशवोऽसृजन्तैकश-फा: पशवोऽत्रासृज्यन्त वरुणोऽधिपतिरासीत्" शत०ब्रा० ८,४,१३। एकशफमांसगुणाः "उष्णं मांसं गौरभ्रं पित्तश्लेष्मावहं गुरु। मेदः पुच्छोद्भवं हृद्यमौरभ्रसदृशं गुणैः। औरभ्रवत्तु लवणं मांसमेकशफोद्भवम्" सुश्रुते उक्ताः।

**एकशाख** त्रि० एका तुल्या शाखा वेदशाखा यस्य। १तुल्य-शाखे "एकशाखोद्भवोदत्तो मन्त्रीतश्चोपनायितः" स्मृ-तिः। एका शाखा यस्य। एकशाखके २वृक्षे च। ततः गहादि० भवादौ छ। एकशाखीय तद्भवादौ त्रि०।

**एकशाला** स्त्री कर्म०। एकस्यां शालायाम्। सेव ठन्। ए-कशालिक वा ठक् ऐकशालिक तत्सदृशे त्रि०।

**एकशितिपाद्** पु० एक: शितिः कृष्णः पादोऽस्य। अश्वभेदे। स च अश्वमेधे वरुणदैवत्यः पशुः। "वारुणः कृष्ण एकशितिपात्पेत्वा" यजु० २६,५८। अस्य युक्तारोह्या-दि०आद्युदात्तता। तद्गणे इकन्तपाठात् नि०अन्तलोपः।

**एकशृङ्ग** त्रि० एकं शृङ्गं मङ्गर्थ्यं यस्य। (एकशृङ्गो) "ओषधिभेदे "प्रसूपतोऽस्त्विनोरेकशृङ्गाः प्रतन्वतोरोष-धीरावदामि" अथ० ८,७,४,

**एकशृङ्ग** पु० एकमेकत्वं शृङ्गं प्रधान्यमत। एकत्वस्वभावे १विष्णौ त्रिका०।२पितृगणभेदे। "पितॄणाञ्च गणान् वि-द्धि सप्त वै पुरुषर्षभ!। मूर्त्तिमन्तो वै चत्वारस्त्रयश्चा-प्यशरीरिणः। वैराजाश्च महाभागा अग्निष्वात्ताश्च भारत!। गार्हपत्या नाकचराः पितरोलोकविश्रुताः। सोमपा एकशृङ्गाश्च चतुर्वेदकलास्तथा। एते चतुर्षु वर्णेषु पूज्यन्ते पितरो नृप!। एतैराप्यायितैः पूर्व्वं सोमश्चा-प्यायते पुनः" भा०स० ११अ०। ३शुकदेवमहिष्याम् स्त्री। शृङ्गशब्दस्य प्राधान्यवाचकतया अस्वाङ्गवाचित्वात् न ङीष्। "तत्रैव वंशे या दत्ता शुकस्य महिषी प्रिया। एकशृङ्गेति विख्याता साध्वीनां कीर्त्तिवर्द्धिनी" हरिवं० ११८अ०। एकं शृङ्गं शिखरमस्य। ४एकशिखरे पर्वते पु०। एकं शृङ्गमस्य। ५एकशृङ्गयुक्ते पशौ पुंस्त्री० स्त्रियां ङीष्।

**एकशेप** पु॰ एकः शेपोमूलमस्य ।(एकशिकड़युक्त) एकमूले वृक्षभेदे

**एकशेष** पु॰ एकः शिष्यतेऽन्योलुप्यते यत्र शिष—आधारे घञ् । "सरूपाणामेकशेष एकविभक्तौ" इत्यादिना पा॰ उक्ते वृत्तिभेदे । अस्य समासत्वतदभावौ मतभेदेन सरलाया-मस्माभिर्दर्शितौ यथा सरूपाणां समानार्थानां समानानु-पूर्व्वीकाणां च मध्ये एक एव शिष्यमाणस्तत्तत्समुदाय व्यक्तिबोधकः" तत्र अपरांशोलुप्यते इति बोध्यम् । अय-ञ्चैकशेषः "प्रत्यर्थंशब्दनिवेशः" इति मते व्यक्तिभेदापेक्षया द्वन्द्वप्राप्तौ तदपवादकः । एष च सुबुत्पत्तेः पूर्व्वमेवोत्प-द्यतेऽतः पदनिमित्तकद्वन्द्वबाधकइत्येके । सुबुत्पत्त्यनन्तर-मुत्पद्यत इत्यन्ये । तत्र पदनिमित्तकत्वाभावे समासत्वं नास्तीत्यतः कृत्तद्धितसमासैकशेषेत्यादिवृत्तिभेदगणने पृथनिर्द्देशस्तथा च समासत्वाभावेन पन्थानावित्यत्र न समासान्त इति एकपक्षः । अस्य पदनिमित्तकत्वेऽपि गो-बलीवर्द्दन्यायेन वृत्तिभेदगणने पृथगुपादानं समासत्वाभा-वश्च तत्तत्स्थले एकशेषभिन्नत्वेन निवेशनाच्चेति पक्षान्तरम् । "विरूपाणामपि समानार्थानामिति" वार्त्ति॰ घटश्च कलसश्च घटौ कलसौ वा । तथा च समानानुपूर्व्वीकाणां भिन्नानुपूर्व्वीकाणाञ्च समानार्थानामेकशेषः । स प्रकारा-न्तरेण द्विविधः समानार्थकानां भिन्नार्थकानाञ्चेति भेदात् । तत्र घटौ इत्यादौ समानार्थकानामेकशेषः । भिन्नार्थकैकशेषः यथा पितरौ श्वशुरौ भ्रातरावित्यादि । एकः प्रधानं शेषोऽन्तः । २एकान्ते पु॰ बहु॰ । अतिश-यिते त्रि॰ । "कृत्तद्धितसमासैकशेषस । नाद्यन्तधातवः वृत्तयः पञ्च" सि॰ कौ॰ ।

**एकश्रुति** त्रि॰एका श्रुतिर्यस्य । १उदात्तानुदात्तस्वरितानाम-विभागेनैकस्वरश्रवणायोच्चारिते शब्दभेदे कर्म्म॰ । २तथैक-स्वरश्रुतौ स्त्री । कुत्र कुत्रैकश्रुतिर्भवतीति पा॰ उक्तं यथा "एकश्रुति दूरात् सम्बुद्धौ" पा॰ दूरात् सम्बुद्धौ वाक्यमेकश्रुति स्यात् । उदात्ताद्यपवादः ।"यज्ञकर्म्मण्यजप-न्यूङ्खसामसु" पा॰ यज्ञक्रियायायां मन्त्र एकश्रुतिः स्यात् जपादीन् वर्ज्जयित्वा । यज्ञेत्युक्तेः स्वाध्यायकाले य-थोक्तस्वराः प्रयोक्तव्याः । जपोनाम उपांशुप्रयोगः । यथा जले निमग्नस्य । न्यूङ्खानाम षोड़श ओकाराः सामानि गीतयः । एषु यथोक्तस्वरा नैकश्रुतिरिति बो-ध्यम् । "उच्चैस्तरां वा वषट्कारः" पा॰ यज्ञकर्म्मणि वषट्शब्द उदात्तो वा स्यात् पक्षे एकश्रुतिः । "विभाषा छन्दसि" पा॰ व्यवस्थाविकल्पः संहितायां यथोक्तस्वराः ब्राह्मणे तु एकश्रुतिर्बह्वृचानाम् अन्येषान्तु यथा-सम्प्रदायात् व्यवस्था । अस्यापवादः । "न सुब्रह्मण्यायां स्वरितस्य तूदात्तः" पा॰ सुब्रह्मण्याख्ये निगदे "यज्ञ कर्म्मणीति" "विभाषा छन्दसीति" प्राप्ता एकश्रुति र्न स्यात् स्वरितस्योदात्तश्च स्यात् । "स्वरितात् संहिता-यामनुदात्तानाम्" पा॰ स्वरितात् परेषामनुदा-त्तानामेकश्रुतिः स्यात् एकश्रुतेरेव प्रचयनाम" सि॰ कौ॰ । एकश्रुतेर्भावः ष्यञ् ऐकश्रुत्य "उदात्तानुदा-त्तस्वरितानां परःसन्निकर्ष ऐकश्रुत्यम्" आश्व॰ श्रौ॰ १,२,६ उक्ते उच्चारणभेदे "उदात्तानुदात्तस्वरितानां-मभिव्यञ्जका ये प्रयत्ना आयामविस्रम्भाक्षेपास्तेषामन्यतम-स्यैकस्यैवात्यन्तसन्निकर्षेणासजातीयप्रयत्नाव्यवधानेन यदु-च्चारणं तदैकश्रुत्यम्"नारा॰। कतिचिद्दच उक्ता "ता एक-श्रुतिसन्ततमनुब्रूयात्" आश्व॰ श्रौ॰ १,२,८ । एका श्रुतिः कर्णौ यत्र । क्षेत्रव्यवहारे भुजकोटिवर्गयोगस्य मूल-मितकर्णयुक्ते त्रिकोणादौ ३क्षेत्रे ४एककर्णयुक्ते त्रि॰ । एका श्रुतिर्वेदः कर्म्म॰। एकस्मिन् ५वेदवाक्ये ।"उभयो-रेकश्रुतिमूलकत्वादिति" स्मृतिनिबन्धेषु भूरिप्रयोगः ।

**एकषष्ट** त्रि॰ एकषष्ट्याः पूरणः डट् संख्यापूर्व्वकत्वात् डटि न तमट् । एकषष्टिपूरणे यत्संख्यया एकषष्टिः पूर्य्यते तत्संख्यान्विते स्त्रियां ङीप् । एकषष्ट्या युतं शतादि डट् सुप्॰। २एकषष्ट्या युते शते सहस्रे च तेन सर्वं कविकल्पद्रुमे उक्तम् "इति स्फीतः सप्तदशशत्या षट्-कोनषष्ट्या" । पा॰ मते तु नात्र डट् तेन दशान्तात् शदन्तात् विंशतेश्च तदस्मिन्नधिकमित्यर्थे डटोविधानादिति भेदः । तेन तन्मते एकषष्टिरस्याधिकतया अर्श॰अच् । तेन तद्रूपसिद्धिः स्वरे भेदः । इदन्त्ववधेयम् येषाम् अच्-प्रत्ययेन न रूपसिद्धिस्तेषामेव डटकृता दशान्तस्य शदन्तस्य विंशतेश्च ग्रहणं कृतम् षष्टिसप्तत्यशीतिनवत्य-न्तानां तु अच्प्रत्ययेनैव तद्रूपसिद्धेर्न तेषां ग्रहणमिति । एवमेकसप्ततादयोऽपि तत्तत्संख्यापूरणे त्रि॰ तत्तत्संख्या-धिके शते सहस्रे च न॰। एकषष्ट्यादि परमाणमेषां ड । एकषष्टएकसप्ततादि तत्तत्संख्यामिते त्रि॰ एकषष्ट्यादि अधिकमस्मिन् शते सहस्रे वा कन् एकषष्टिकैकसप्ततिकादि-तत्तत्संख्याधिके शते सहस्रे च । अवयवे कन् । एक-षष्टिकैकसप्ततिकादयस्तत्तत्संख्यायां न॰ ।

**एकसभ** त्रि॰एका सभा गोष्ठी समुदायो यत्र । जमदाग्न्येकाग्नो-युक्ते "त्वमसि ज्वलदसि पूर्णमसि प्रत्नस्यमस्येकसभमसि"

शत० ब्रा० १४,६,२,६। "यास्त्वेका सभा जगदात्मिका सा त्वदात्मिकैवेति त्वमेकसभमसीति" भा०।

**एकसर्ग** पु० एक एकविषयः सर्गः चित्तवृत्तिः यत्र। १एकाग्रे एकताने एकमात्रासक्तचित्ते अमरः। कर्म०।२एकसृष्टौ पु०

**एकसूत्र** पु० एकं सूत्रं वादनसाधनं यत्र। डमरुरूपे वाद्ये शब्दरत्ना०। तस्य एकसूत्रवेष्टनेन वादनात् तथात्वम्।

**एकस्थ** त्रि० एकस्मिन् तिष्ठति स्था-क ७त०। एकत्रस्थिते "एकस्थसौन्दर्य्यदिदृक्षयेव" कुमा०। "तान्येकस्थानि सर्वाणि ततस्त्वं प्रतिपत्स्यसे" भा०व० २७ अ०। 'हन्तैकस्थं क्वचिदपि न ते चण्डि! सादृश्यमस्ति' मेघ०। स्था-क्त ७त०। एकस्थितादयोऽप्यत्र त्रि०।

**एकहंस** म० एकः श्रेष्ठो हंसोऽत्र। सरोभेदरूपे तीर्थभेदे "एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत्। कृतशौचं समासाद्य तीर्थसेवी नराधिप!। पुण्डरीकमवाप्नोति कृतशौचो भवेच्च सः" भा० व० ८२ अ०। "हन्ति गच्छति जाग्रदाद्यवस्था इहलोकपरलोकौ वा हंसः कर्म०।२जीवे। "शुक्रमादाय पुनरैति स्थानं हिरण्मयः पौरुष एकहंसः" "स ईयते अमृतो यत्र कामं हिरण्मयः पौरुष एकहंसः" शत० ब्रा० १४,७,१, १२,१२। "शुक्रं शुद्धं ज्योतिष्मदिन्द्रियादिमात्रारूपं गृहीत्वा पुनः स्वप्नहेतुकर्मोपरमानन्तरं जाग्रद्भोगहेतुकर्मणा जागरितं स्थानमागच्छति हिरण्मयश्चैतन्यज्योतिःस्वभावः पौरुषः पुरुषएव स्वार्थे अण् एकहंसः एकश्चासौ हंसश्चेत्येकहंसः एक एव जाग्रत्स्वप्नादिहलोकपरलोकौ च हन्ति गच्छति हिनस्तीति वा एकहंसः" भा० जीवस्योपाधिकृतजाग्रदाद्यवस्थाभिर्न किञ्चिद्विकृतत्वमिति द्योतनार्थमेकत्वविशेषणम्।

**एकहायनी** स्त्री एकोहायनो वयोमानं यस्याः ङीप्। एकवर्षवयस्कायां स्त्रीगव्यादौ। एकहायन एकवर्षवयस्के पशुमात्रे त्रि०। "अजमेषावनड्वाहं खरं च्चैवैकहायनम्" मनुः। २एकवर्षोत्पन्ने धान्यादौ त्रि०तत्र वयोवाचित्वाभावेन स्त्रियां न ङीबिति भेदः एकहायना इत्येव

**एका** स्त्री सर्वत्र अभिन्नत्वेन स्थितायां १दुर्गायाम् "एका सा तु पृथक्त्वेन विना सर्वत्र विश्रुता। यथा तु व्यज्यते वर्णैर्विचित्रैःस्फटिकोमणिः। तथा गुणवशाद्देवी नानाभावेषु वर्त्तते" देवीपु० ४५अ०। २द्वितीयरहितस्त्रियाम्। "एकैवाहं जगत्यत्र का द्वितीया ममापरा:" देवीमा०। ३एकत्वान्वितस्त्रियाञ्च "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" इति श्रुतिः "एका सुमित्रा सह लक्ष्मणेनेति" भट्टिः। पुत्रयोरेकत्वोत्पत्तिकथनार्थमेकेति विशेषणम्। अन्ये तु ए विष्णौ कायति अभिरमते कै-क अलुक् स०। विष्णुरतेस्तथमाङ्गत्वेन ४तदर्थे त्रि०।

**एकाकिन्** त्रि० एक+असहाये पक्षे आकिनि। सजातीयसहचररहिते "एकाकी हयमारुह्य जगाम गहनं वनम्" देवीमा०। अत्र हयस्य विजातीयत्वात् तत्सहायत्वेऽपि न क्षतिः। असहायत्वञ्च एकजातीयक्रियाकरणे अन्यसहायरहितत्वम् तेन हयस्य स्वगतिक्रियां प्रति सहचरत्वाभावात् नानुपपत्तिः। तत्रान्यत्वं प्रकृत्यर्थसंख्यान्वितपदार्थभिन्नत्वम् तेन "एकाकिनोऽपि परितः पौरुषेयवृता इव" माघे प्रत्येकमेकत्वसंख्यान्वितानां रामकृष्णोद्धवानामन्यासहायकत्वात् एकाकिन इति प्रयोगः। "एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः। एकाकी चिन्तयानोहि परं श्रेयोऽधिगच्छति" मनुः। "एकाकिना चात्ययिके" मनुः। स्त्रियां ङीप्। "एकाकिन्यपि यामि सत्वरमतः स्रोतस्तमालाकुलम्" सा० द०।

**एकाक्ष** पु० एकमक्षि यस्य षच् समा०। १काके। २काणे त्रि०। स्त्रियां ङीष्। काकस्य यथा तथात्वं तथोक्तं रामा०अ० का० १०५ अ० यथा

"एवमुक्तस्तु रामेण संप्रधार्य्य स वायसः। अभ्यगच्छद्द्वयोरक्ष्णोस्त्यागमेकस्य पण्डितः। सोऽब्रवीद्राघवं काको नेत्रमेकं त्यजाम्यहम्। एकनेत्रोऽपि जीवेयं त्वत्प्रसादान्नराधिप! रामानुज्ञातमेकं तत् (इषीकास्त्रम्) काकनेत्रमघातयत्"। तज्जातीयत्वादन्येषामपि तथात्वम्। एकनेत्रादयोऽप्युभयत्र। स्त्रियामुभयार्थे टाप्।

**एकाक्षर** न० एकमद्वितीयमक्षरम्। १एकमात्रवर्णे "एकाक्षरद्व्यक्षराण्येव प्रथमं वदन् कुमारो वदति" शत० ब्रा० ११,११६,४।२एकस्वरवर्णे ""एकाक्षरात् कृतोजातेः सप्तम्याश्च न तौ स्मृतौ" व्या०का० ओमित्येकाक्षरसन्ध्यामुपासीत" छा०उ०। "एकाक्षरं परं ब्रह्म इति" मनुः। "एकाक्षरम् ओङ्कारः" कुल्लू०। ओङ्कारस्य द्विवर्णत्वेऽपि एकस्वरवर्णवत्त्वात् एकाक्षरत्वम्। अष्टाक्षराऽनुष्टुबादौ स्वरवर्णैनैवाक्षरत्वव्यवहारात् स्वरवर्णमनुच्चार्य्य केवलव्यञ्जनवर्णस्य प्राक् अनुच्चार्य्यत्वात् तस्य सर्वत्र उच्चारणे क्षरणाभावात् अक्षरत्वम्। एकमक्षरं यत्र। ३एकाक्षरयुते त्रि० स्त्रियां गौरा० ङीष्। "मिदो मे कालिका पातु क्लीङ्कारैकाक्षरी परा" श्यामाकवचम्।

**एकागार** न० एकमसहायमगारम्। द्वितीयजनानधिष्ठित गृहे तत्प्रयोजनमस्य ठञ् ऐकागारिक चौरे त्रि० स्त्रियां ङीप् "केनचित् हस्तवतैकागारिकेण" दशकुमा०। चौरादन्यत्र इष्टत्वात् क। एकागारीय सुखादौ त्रि०।

**एकाग्र** त्रि० एकमग्रं विषयप्रवणता यस्य। १विषयान्तरव्यावृत्त्यैकमात्रविषयकचित्तवृत्तिके २विच्छेपरहितज्ञाने च। "मनुमेकाग्रमासीनमभिगम्य महर्षयः" मनुः। स्वार्थे अण्। ऐकाग्र अत्रार्थे त्रि०। तस्य भावः ष्यञ् ऐकाग्र्य तद्भावे न० "मनसश्चेन्द्रियाणाञ्चाप्यैकाग्र्यं निश्चितं तपः" भा० व०२५ अ०। "तद्गीतिश्रवणैकाग्र्या संसदश्रुमुखी बभौ" रघु०। तत् एकाग्रता स्त्री, त्व एकाग्रत्व न० तत्रार्थे।

एकाग्रता च चित्तस्य धर्मविशेषः विषयान्तरावलम्बनरूपसंसर्गशून्यः। एकविषयकधारावाहिकवृत्तिरूपः स च त्रिगुणात्मकस्य चित्तस्य सत्वगुणोद्रेके रजोगुणकृतविक्षेपाभावात् तमोगुणकृततन्द्राद्यभावाच्च उदेति। तत्र बाह्याभ्यन्तरकारणान्युक्तानि" पात० सू० भाष्यविवरणेषु यथा "यस्य चित्तस्यावस्थितस्येदं शास्त्रेण परिकर्म निर्दिश्यते, तत्कथम्? भा०।

"मैत्रीकरुणा मुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" सू०।

"तत्र सर्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेत् दुःखितेषु करुणाम्, पुण्यात्मकेषु मुदिताम्, अपुण्यशीलेषूपेक्षाम्। एवमस्य भावयतः शुक्लोधर्म उपजायते ततश्चित्तं प्रसीदति प्रसन्नमेकाग्रं स्थितिपदं लभते" भा०।

"अपरिकर्मितमनसोऽसूयादिमतः समाधितदुपायसम्पत्त्यनुत्पादात् चित्तप्रसादनोपायानसूयादिविरोधिनः प्रतिपादयितुमुपक्रमते-यस्य,-चित्तस्यावस्थितस्येदमिति। मैत्रीकरुणेत्यादि प्रसादनान्तम्। सुखितेषु मैत्रीं सौहार्दं भावयत ईर्षाकालुष्यं निवर्त्तते चित्तस्य। दुःखितेषु च करुणामात्मनीव परस्मिन् दुःखप्रहाणेच्छां भावयतः परापकारचिकीर्षाकालुष्यं चेतसोनिवर्त्तते। पुण्यशीलेषु प्राणिषु मुदितां हर्षं भावयतः असूयाकालुष्यं चेतसो निवर्त्तते। अपुण्यशीलेषु चोपेक्षां माध्यस्थ्यं भावयतोऽमर्षकालुष्यं चेतसोनिवर्त्तते। ततश्चास्य राजसतामसधर्मनिवृत्तौ सात्विकः शुक्लोधर्म उपजायते। सत्वोत्कर्षसम्पन्नः सम्भवति। वृत्तिनिरोधपक्षे तस्य प्रसादस्वाभाव्याच्चित्तं प्रसीदति प्रसन्नञ्च वक्ष्यमाणेभ्य उपायेभ्यः एकाग्रं स्थितिपदं लभते। असत्यां पुनर्मैत्रादिभावनायां न ते उपायाः स्थित्यै कल्पन्ते-तानिदानीं स्थित्युपायानाह" वाचस्पतिविवरणम्।

"प्रच्छर्द्दनविधारणाभ्यां वा प्राणस्य" सू०।

'कोष्ठ्यस्य वायोर्नासिकापुटाभ्यां प्रयत्नविशेषात् वमनं प्रच्छर्द्दनं, विधारणं प्राणायामः ताभ्यां वा मनसः स्थितिं संप्रसादयेत्" भा०

"वाशब्दो वक्ष्यमाणोपायान्तरापेक्षी विकल्पार्थो न, मैत्र्यादिभावनापेक्षया तया सह समुच्चयात्। प्रच्छर्द्दनं विवृणोति-कोष्ठ्यस्येति। प्रयत्नविशेषात् योगशास्त्रविहितात् येन कोष्ठ्योवायुर्नासिकापुटाभ्यां शनैरेच्यते। विधारणं विवृणोति विधारणं प्राणायामः रेचितस्य कोष्ठ्यस्य वायोर्यदायामो बहिरेव स्थापनं न तु सहसाप्रवेशनं तदेताभ्यां प्रच्छर्द्दनविधारणाभ्यां वायोर्लघूकृतशरीरस्य मनः स्थितिपदं लभते। अत्र चोत्तरसूत्रगतात् स्थितिनिबन्धनीतिपदात् स्थितिपदमाकृष्य सम्प्रसादयेदित्यर्थप्राप्तेन सम्बन्धनीयः" विव०। "स्थित्युपायान्तरमाह" भा०

"विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी" सू०

"नासिकाग्रे धारयतोऽस्य या दिव्यगन्धसंवित्सा गन्धप्रवृत्तिः जिह्वाग्रे रसंवित्, तालुनि रूपसंवित्, जिह्वामध्ये स्पर्शसंवित्, जिह्वामूले शब्दसंवित्, इत्येताः प्रवृत्तय उत्पन्नाश्चित्तं स्थितौ निबध्नन्ति संशयं विधमन्ति समाधिप्रज्ञायाञ्च द्वारीभवन्तीति" भा०।

"व्याचष्टे-नासिकाग्रे धारयत इति। धारणाध्यानसमाधीन् कुर्वतस्तज्जयात् या दिव्यगन्धसंवित् साक्षात्कारः एवमन्यास्वपि प्रवृत्तिषु योज्यम्। एतच्चागमात् प्रत्येतव्यं नोपपत्तितः" विवरणम्।

तत्र सामान्यकारणञ्च शौचमेव तत्रोक्तम् "शौचात् स्वाङ्गजुगुप्सापरैरसंसर्गः" सू० "सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च" सू०। "शुचेः सत्वशुद्धिस्ततः सौमनस्यं तत ऐकाग्र्यं तत इन्द्रियजयस्ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्वस्य भवतीति एतत् शौचस्थैर्यादधिगम्यते" भा०। तत्राद्यं सूत्रं बाह्यशौचसूचकं द्वितीयन्तु आन्तरशौचसूचकम् "चित्तमलानां क्षालने चित्तमलं भवति वैमल्यात् सौमनस्यं स्वच्छता स्वच्छत्वादैकाग्र्यं ततो मनोवश्यादिन्द्रियाणां जयस्तज्जयादात्मदर्शनयोग्यं भवतीति क्रमेण आन्तरशौचस्य फलमुक्तम्। एतच्च विवरणे स्थितम् एकाग्रताया आविर्भावे यथा समाधिलाभस्तथा तत्रैवोक्तम् "सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः"

सू० “सर्व्वार्थता चित्तधर्म्मः एकाग्रता च चित्तधर्म्मः सर्व्वार्थतायाः क्षयस्तिरोभाव इत्यर्थः एकाग्रताया उदय आविर्भाव इत्यर्थः तयोर्धर्म्मित्वेनानुगतं चित्तं, तदिदं चित्तमपायोपजनयोः स्वात्मभूतयोर्धर्म्मयोरनुगतं समाधीयते स चित्तस्य समाधिपरिणामः” भा० ।

“संप्रज्ञातसमाधिपरिणामावस्थां चित्तस्य दर्शयति । सर्व्वार्थेत्यादि । विक्षिप्तता सर्व्वार्थता । सच विनश्यतीति क्षयस्तिरोभावः, नासदुत्पद्यत इति उदय आविर्भावः । आत्मभूतयोः सर्व्वार्थतैकाग्रतयोः धर्म्मयोः यौ अपायोपजनौ सर्व्वार्थताया अपायः एकाग्रताया उपजनस्त योरनुगतं चित्तं समाधीयते पूर्व्वापरीभूतसाध्यमान समाधिविशेषणं भवतीति” वा० विवरणम् ।

“ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता-परिणामः” सू० ।

“समाहितचित्तस्य पूर्व्वप्रत्ययः शान्त उत्तरस्तत्सदृश उदितः समाधिचित्तमुभयोरनुगतं पुनस्तथैव आ समाधिभ्रेषादिति । स खल्वयं धर्म्मिणश्चित्तस्यैकाग्रता परिणामः” भा० ।

“पुनः समाधेः पूर्व्वापरीभूताया अवस्थायाः निष्पत्तौ सत्यां शान्तोदितावतीतवर्त्तमानौ तुल्यौ च तौ प्रत्ययौ चेति तुल्यप्रत्ययौ एकाग्रतायान्तु द्वयोः सादृश्यं समाहितचित्तस्येति समाधिनिष्पत्तिः दर्शिता । तथैवैकाग्र्यस्यावधिमाह आसमाधिभ्रेषात् । असमाधिभ्रं-शादिति” । वा० विवरणम् ।

**एकाग्र्य** त्रि० एकमग्रं यस्य । एकतायै एकावलम्बने ।

**एकाङ्ग** पु० एकं प्रधानम् सुन्दरत्वेनाङ्गमस्य । यदूमध्ये-अतिसुन्दराङ्गे १बुधग्रहे त्रिका० । एकं सुन्दरमङ्गं यस्मात् । २चन्दने न० हारा० । कर्म्मधा० । ३एकस्मिन्नङ्गे न० । “अप्येकाङ्गेऽप्यधोवस्तुमिच्छामि च सुकुत्सिते” भा० अनु० ८२ अ० ४शरीरावयवे मस्तके च । एकमङ्गमस्य । एकदेहतां प्राप्तयोः ५दम्पत्योः क्रमेण पुंस्त्री० स्त्रियां ङीप् ।

**एकाण्ड** पु० एकमण्डं वृषणमस्य । अश्वभेदे अश्वशब्दे विवृतिः

**एकात्मन्** पु० कर्म्म० । १एकस्मिन्नात्मनि । एक आत्मा स्वरूपम् स्वभावो वा यस्य । २एकस्वरूपे ३एकस्वभावे त्रि० स्त्रियां वा डाप् । एकोऽसहाय आत्मा यस्य । ४असहायात्मनि त्रि० । “नायन्तु नैनीवमर्थरेकात्मभिरसाधनैः” भा० व० ८२अ० । तस्य भावः ष्यञ् । ऐकात्म्य तद्भावे न० । “अवबोधरसैकात्म्यमानन्दमनुसन्ततम्” भाग० ४,१३,८ ।

“वर्ण्णसमाधर्म्माणां प्रावेष्वैकात्म्यहेतुना” भाग० ४,२१,३९

**एकादशन्** त्रि० एकाधिका दश नि० आत् । (एगार) १संख्यान्विते २तत्संख्यायाञ्च ततः पूरणे डट् । एकादश तत्पूरणे यत्संख्या एकादशसंख्या पूर्य्यते तादृशसंख्यान्विते त्रि० स्त्रियां ङीप् । एकादशी सा च चन्द्रस्य सूर्य्यमण्डलप्रवेशनिर्गमक्रियायुक्त एकादशचन्द्रमण्डलकलाक्रियारूपे तत्क्रियोपलक्षिते वा तिथिभेदे स्त्री । डटि संख्या पूर्व्वकादपि क्वचित् मट् । एकादशम तदर्थे त्रि० । “मनुर्वै धर्मसावर्णिरेकादशमआत्मवान्” भाग० ८,१३, १२ । स्त्रियां ङीप् । एकादश परिमाणमस्य संघस्य कन् । एकादशक तत्संख्यामिते गणे । “एकादशकस्य गणस्यात्मपञ्चकश्चैव” “सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्” सा० का० स च गणस्तत्रैव दर्शितः “बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि । वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्याहुः । उभयात्मकमत्र मनः” सां० का० । एवं रुद्रगणः । एकादशानामवयवः कन् । एकादशक तत्संख्यायाम् न० “रुद्रैकादशकेऽधिकम्” सुश्रु० ।

**एकादशद्वार** न० एकादश द्वाराणि छिद्राण्यस्य । शरीरे तत्र नवद्वारत्वप्रसिद्धावपि क्वचिदेकादशद्वारत्वं श्रूयते । सप्तशीर्षण्यानि नाभिसहितान्यधःस्थाने त्रीणि शिरस्येकं ब्रह्मरन्ध्रमित्येक दशच्छिद्रवत्त्वात्तस्य तथात्वम् । नवद्वारव्यवहारस्तु नाभिशिरसोश्छिद्रस्य सूक्ष्मत्वात् “प्रधानेन व्यपदेशाभवन्तीति” न्यायात् । प्रधाननवच्छिद्रावलम्बनेन ।

**एकादशाह** पु० एकादशानामह्नां समाहारः टच् समाहारे नाह्नादेशः अहान्तत्वात् पुंस्त्वम् । एकादशानामह्नां समाहारे । ङौ तु एकादशाह्ने एकादशाह्नि एकादशाहनि रूपाणि । स साधनतयाऽस्त्यस्य अच् । एकादशाहसाध्ये यागभेदे “एकादशाहैरयजन् सदक्षिणैर्द्वादशाहैरश्वमेधैश्च देव” भा० अनु० १०३अ० । ब्राह्मणजातीनामेकादशाहकर्त्तव्ये ३श्राद्धे च । तमधीष्टो भृतोभूतोभावी वेत्यर्थे ख । एकादशाहीन उक्तार्थे त्रि० ।

**एकादशिन्** त्रि० एकादश संख्या परिमाणमस्य डिनि । एकादशसंख्यामितस्तोमादौ स्त्रियां ङीप् । “एकामेकादशिनीमपश्यत्” “स एकादशिन्या वै प्रजापतिः पुनरात्मानम्” “तस्मै कमेकादशिन्या यजेत” शत० ब्रा० ३,६,१, ४,५ । “यूपैकादशिनी स्यात्” ३,७,१,२२ । यद्यु पत्नैकादशिनी स्यात् ३,६,१,२३ ।

**एकादशी** स्त्री० एकादशानां पूरणी । उभयपक्षीयप्रतिपदादिकः

एकादशपूरण्यां तिथौ । अत्र हि हरिवासरव्रतम् । अस्यां व्रतस्य नित्यत्वादिसमर्थनतद्व्रतकालव्यवस्थादि कालमा० दर्शितं यथा "अथैकादशी निर्णीयते । तत्रैकादश्यामुपवासविधिवाक्येषु नित्यशब्दसदाशब्दादीनां नित्यत्वसाधकानां श्रवणान्नित्यत्वसिद्धिः । तानि च साधकानि संग्रहकारेण संगृहीतानि । "नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत् । उपेत्याऽतिक्रमे दोषश्रुतेरत्यागचोदनात् । फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्त्तितम्"। अत्र च नित्यशब्दादीन्यष्टौ नित्यत्वसाधकानि । नित्यशब्द उदाहृतो गारुड़पुराणे "उपोष्यैकादशी नित्यं पक्षयोरुभयोरपीति" । सदाशब्द उक्तः सनत्कुमारसंहितायाम् "एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयोरिति" यावदायुःशब्द उक्तो विष्णुरहस्ये "द्वादशी न प्रमोक्तव्या यावदायुः प्रवृत्तिभिरिति" । आग्नेयपुराणेऽपि "उपोष्यैकादशी राजन् ! यावदायुः प्रवृत्तिभिरिति" अतिक्रमनिषेधः कण्वेन दर्शितः "एकादश्यामुपवसेन्न कदाचिदतिक्रमेदिति" विष्णुनापि "एकादश्यां न भुञ्जीत कदाचिदपि मानवः" इति । अकरणे दोषमाह सनत्कुमारः "न करोति हि यो मूढ एकादश्यामुपोषणम् । स नरो नरकं याति रौरवन्तमसावृतम् । एकादश्यां मुनिश्रेष्ठ ! यो भुङ्क्ते मूढचेतनः । प्रतिमासं स भुङ्क्ते तु किल्बिषं श्वादिविट्समम् । निष्कृतिर्मद्यपस्योक्ता धर्मशास्त्रे मनीषिभिः । एकादश्यन्नकामस्य निष्कृतिः क्वापि नोदिता । मद्यपानात् मुनिश्रेष्ठ ! पातैर्नरकं व्रजेत् । एकादश्यन्नकामस्तु पितृभिः सह मज्जतीति" नारदीये "पापानि कानि चिद् यानि ब्रह्महत्यासमानि च । अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे । तानि पापान्युपाश्नाति भुञ्जानो हरिवासरे" इति स्कान्दे "मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा । एकादश्यां तु यो भुङ्क्ते पक्षयोरुभयोरपीति" अकरणे इवासमापने दोष उक्तो विष्णुरहस्ये । "परिगृह्य व्रतं सम्यगेकादश्यादिकं नरः । न समापयते तस्य गतिः पापीयसी भवेदिति" अत्यागचोदना दर्शिता विष्णुरहस्ये "परामापदमापन्नोऽहर्षे वा समुपस्थिते । सूतके मृतके चैव न त्यजेत् द्वादशीव्रतमिति" विस्पष्टं फलाश्रवणञ्च केषुचिद्वाक्येषु तत्र कात्यायनः "एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति" स्कान्देऽपि "उपोष्यैकादशी सम्यक् पक्षयोरुभयोरपीति" कूर्मपुराणेऽपि "वदन्तीह पुराणानि भूयोभूयो वरानने ! । न भक्तव्यं न भक्तव्यं संप्राप्ते हरिवासरे" वीप्सामाह सनत्कुमारः "पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणमिति" नारदोऽपि "नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणमिति" तदेवं नित्यशब्दादिभिर्हेतुभिरुपवासस्य नित्यत्वं सिद्धम् । काम्यत्वं च सायुज्यादिश्रवणादवगम्यते तदुक्तं विष्णुरहस्ये "यदीच्छेद्विष्णुसायुज्यं सुतान् सम्पदमात्मनः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति" । कूर्मपुराणेऽपि "यदीच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमात्मनः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति" कात्यायनः "संसारसागरोत्तारमिच्छन् विष्णुपरायणः । ऐश्वर्य्यं सन्ततिं स्वर्गं मुक्तिं वा यद्यदिच्छति । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति" स्कान्दपुराणे "यदीच्छेद्दिव्यान् भोगान् मुक्तिं चात्यन्तदुर्लभाम् । एकादश्यामुपवसेत् पक्षयोरुभयोरपीति" नारदोऽपि "एकादशीसमं किञ्चित् पापत्राणं न विद्यते । स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्रप्रदायिनी । सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनीति" । तदेवं फलश्रवणात् काम्यत्वं सिद्धम् । ननु काम्यत्वमनित्यत्वमसति कामे परित्यक्तुं शक्यत्वात् तथा सत्येकस्य कर्म्मणो नित्यत्वकाम्यत्वाभ्यां द्वैरूप्याङ्गीकारे नित्यानित्यसंयोगविरोधः, नायं दोषः खादिरादिवत् प्रमाणद्वयेन द्वैरूप्योपपत्तेः । तथा हि । "खादिरो यूपो भवतीति" क्रतौ नित्यः खादिरो विहितः । "खादिरं वीर्यकामस्य यूपं कुर्वीतेति" तस्मिन्नेव क्रतौ काम्यत्वेनानित्यः खादिरो विहितः । तत्र यथा प्रमाणद्वयसम्बन्धादेकस्यापि खादिरस्य द्वैरूप्यमङ्गीकृतं तद्वदत्रापि द्विविधप्रमाणसद्भावादुपवासस्य द्वैरूप्यं किं न स्यात् ? । ननु विषमो दृष्टान्तः नित्यः खादिरः क्रत्वर्थः काम्यस्तु पुरुषार्थः । उपवासस्तु नित्योऽपि पुरुषार्थ एव तस्य खादिरवत् क्रत्वङ्गत्वबोधकप्रमाणाभावात्, बाढम् । अस्तु एवं वैषम्यं, प्रयोजकं तु द्वैरूप्ये प्रमाणद्वयमस्त्येव । सूत्रकारेण प्रमाणद्वयस्यैव द्वैरूप्यसाधकत्वोपन्यासात् । तथा च सूत्रम् "एकस्य तूभयत्वे संयोगपृथक्त्वमिति" (जै०) । अतः केवलपुरुषार्थस्याप्युपवासस्य द्वैरूप्यमविरुद्धम् । यदि बध्यारोहस्य सदृशो दृष्टान्तोऽपेक्षितः तदाग्निहोत्रादिदृष्टान्तोऽस्तु । न ह्यग्निहोत्रं क्रत्वर्थं तस्य स्वयमेव क्रतुत्वात् । तस्य च नित्यकाम्यत्वे वाक्यद्वयादवगम्येते । "यावज्जीवमग्निहोत्रं जुहोतीति" नित्यत्वावगमकं वाक्यम् । "अग्निहोत्रं जुहुयात् स्वर्गकामः"

इति च काम्यत्वावगमकम् । तस्य च क्रत्वर्थत्वाभावेन केवलपुरुषार्थत्वैव । अतोऽग्निहोत्रे नित्यत्वं काम्यत्वं चेति द्वैरूप्यमस्ति । तत्र शब्दान्तराभ्यासादिकर्मभेदहेत्वभावेनैकस्यैव कर्मणः सतः प्रयोगभेदोऽवगन्तव्यः । प्रयोगभेदश्च यावज्जीवाधिकरणे निर्णीतः । तस्य चाधिकरणस्य संग्राहकावेतौ श्लोकौ भवतः ।“यावज्जीवं जुहोतीति धर्मः कर्मणि पुंसि वा । काल पुरुषधर्मोऽतः काम्य एकः प्रयुज्यताम् । न कालो जीवनं तेन निमित्तप्रविभागतः । काम्यः प्रयोगभिन्नः स्याद्यावज्जीवप्रयोगतः” इति । अयमर्थः “अग्निहोत्रं जुहुयात् स्वर्गकाम” इति । काम्याग्निहोत्रं श्रूयते तथा वाक्यान्तरं पठ्यते “यावज्जीवमग्निहोत्रं जुहोतीति” तत्र संशयः । किं यावज्जीवमित्यनेनाधिकारान्तरं चोद्यते किं वा काम्याग्निहोत्रे गुणविधिरिति । यदर्थमर्थान्तरचिन्ता किं यावज्जीवमित्यस्यार्थः कर्मधर्मः उत पुरुषधर्म इति । यावज्जीवशब्देन पुरुषायुषपरिमितः कालोऽभिधीयते । काम्येन चाग्निहोत्रेण कालविशेष आकाङ्क्षितः । तस्य च कालस्यानेन समर्पणादयं कर्मधर्मः । तस्मात् गुणविधिः । तथा चाग्निहोत्रस्य काम्यप्रयोगः एक एव न त्वन्यो नित्यप्रयोग इति प्राप्ते, ब्रूमः यावज्जीवशब्दो न कालस्य वाचकः । किन्तु लक्षकः । वाच्यार्थस्तु प्राणिजीवनं तच्च न कर्मधर्मत्वेन विधातुं शक्यं पुरुषधर्मत्वादिति जीविधातुः प्राणधारणमभिधत्ते न तु कालम् । प्राणधारणं च पुरुषधर्मः कालस्य तदसम्भवात् । तेन स्वर्गकामनेव जीवनमपि किञ्चिन्निमित्तम् । तस्मादधिकारान्तरचोदना । तथा सति जीवननिमित्तो नित्यप्रयोगः कामनिमित्तः कादाचित्कप्रयोगश्च परस्परं भिद्येते इति सिद्धान्तः । अनेनाग्निहोत्रन्यायेन प्रकृतस्याप्युपवासस्य निमित्तभेदेन नित्यप्रयोगः काम्यप्रयोगश्चास्तु । नन्वेकस्य कर्मणः कालभेदेन कर्तृभेदेन वा विना द्वौ प्रयोगौ न सम्भवतः । न चात्र कालभेदः संभवति नित्यकाम्योपवासयोरेकादश्यामेव विधानात् । नाप्यत्र कर्तृभेदोऽस्ति । यद्यपि काम्यं परित्यज्य केवलं नित्यमनुष्ठातुं शक्यं तथापि काम्यमनुतिष्ठासुना नित्यस्य परित्यक्तुमशक्यत्वात् । अतः कर्त्रैक्यात् कालैक्याच्च नित्यकाम्यरूपौ द्वौ प्रयोगौ न घटेते । नायं दोषः, विविदिषाधिकरणन्यायेन सकृदेवानुष्ठितः प्रयोगद्वयसिद्धेः । तस्य चाधिकरणस्य संग्राहकावेतौ श्लोकौ भवतः “विद्यार्थमाश्रमार्थं च द्विःप्रयोगोऽथ वा सकृत् । प्रयोजनविभेदेन प्रयोगोऽपि विभिद्यते । श्राद्धं भुक्त्वा यथा तृप्तिर्विद्यार्थेनाश्रमस्तथा । अनित्यनित्यसंयोग उक्तिभ्यां स्याद्दिरे मतः” इति । अयमर्थः “तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति” श्रुतिवाक्येन यज्ञादय आत्मविद्योदयाय विहिताः गृहस्थाद्याश्रमधर्मत्वन्तु यज्ञादीनां सर्वश्रुतिस्मृतिषु प्रसिद्धम् । तत्र संशयः किं यज्ञादीनां द्विःप्रयोग ? उत सकृदिति ? । तत्र प्रयोजनभेदात् प्रयोगभेद इतिपूर्वपक्षः । निमन्त्रितेन ब्राह्मणेन क्रियमाणभोजनेन यथा अन्यकर्तृकश्राद्धनिष्पत्तिः स्वतृप्तिश्च न च द्विर्भुज्यते । तद्वद्ब्रह्मविद्यार्थमनुष्ठितेन कर्मणा प्रयोजनद्वयं सिध्यति । न च नित्यानित्यसंयोगविरोधः स्यात् द्विरवाक्यद्वयेन तदुपपत्तेः । तच्च पूर्वमुपपादितं तस्मात् सकृदेव प्रयोग इति । एवमत्रापि सकृदेवोपवासं कुर्वतः काम्यप्रयोगो नित्यप्रयोगश्चेत्युभयं सिध्यति । ननु सकृदनुष्ठानेनानेकार्थसिद्धिर्द्विधा भवति तन्त्रेण वा प्रसङ्गेन वा । तद्यथा दर्शपूर्णमासयोः षण्णां प्रधानयागानां मध्ये त्रयाणां सकृत्सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकारः सिध्यति । तदिदं तन्त्रम् । पश्वर्थमनुष्ठितेन प्रयाजादिना पशुतन्त्रमध्यपातिनः पशुपुरोडाशस्याप्युपकारः सिध्यति सोऽयं प्रसङ्गः । एवं सति प्रकृतेऽपि तन्त्रप्रसङ्गयोः कतरस्योपादानमिति चेत् । प्रसङ्गस्येति ब्रूमः । काम्यप्रयोगेणैव नित्यप्रयोगस्यापि सिद्धत्वात् तथा च स्मृतिः । “काम्येऽपि नित्यसिद्धिः स्यात् प्रसङ्गेनोभयात्मकः इति” तदेवमेकादश्युपवासस्य नित्यत्वकाम्यत्वलक्षणद्वैरूप्ये विरोधाभावात् द्वैरूप्यमभ्युपेयमिति स्थितम् ।

अत्रोपवासाङ्गविधिनिर्णयस्य वेधाधीनत्वात् प्रथमं दशमीवेधो निरूप्यते । स च वेधस्त्रिविधः अरुणोदयवेधः सूर्योदयवेधः पञ्चदशनाडीवेधश्चेति । तत्रारुणोदयवेधो भविष्यत्पुराणे दर्शितः ।“अरुणोदयकाले तु दशमी यदि दृश्यते । सा विद्धैकादशी तत्र पापमूलमुपोषणमिति” । “अरुणोदयवेलायां दशमी गन्धो भवेद्यदि । दुष्टं तत्तु प्रयत्नेन वर्जनीयं नराधिप !” । गारुडपुराणेऽपि “दशमीवेधसंयुक्तो यदि स्यादरुणोदयः । नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतमिति” । अरुणोदयस्य प्रमाणं स्कान्दनारदाभ्यामुक्तम् । “उदयात् प्राक्चतस्रस्तु नाडिका अरुणोदय” इति । तस्मिन्नरुणोदये वेधा बहुविधाः । ते च प्रश्नोत्तराभ्यां ब्रह्मवैवर्त्ते दर्शिताः । “कीदृशस्तु भवे-

द्वेधो येनोविप्रेन्द्र ! कीदृशः? । योगवेधौ समाचक्ष्व याभ्यां दुष्टमुपोषणम् । चतस्रो घटिकाः प्रातररुणोदयनिश्चयः । चतुष्टयविभागोऽत्र वेधादीनां किलोदितः । अरुणोदयवेधः स्यात्सार्द्धन्तु घटिकात्रयम् । अतिवेधो द्विघटिकः प्रभासन्दर्शनाद्रवेः । महावेधोऽपि तत्रैव दृश्यतेऽर्क्को न दृश्यते । तुरीयस्तत्र विहितो योगः सूर्य्योदये सतीति" । अयमर्थः वेधातिवेधमहावेधयोगाश्चत्वार उपवासस्य दूषकाः । तत्र रवेः प्रभासन्दर्शनात्पूर्व्वं सार्द्धघटिकात्रयमेकादश्या व्याप्तं ततः प्राचीने घटिकार्द्धे अरुणोदयसम्बन्धिनि दशमीसद्भावे वेध इत्युच्यते । यदा सूर्य्यदर्शनात्पूर्व्वं घटिकाद्वयमुपरितनमेकादशीव्याप्तं पूर्व्वं तु घटिकाद्वयं दशमीव्याप्तं तदाऽतिवेध इत्युच्यते । यदा सूर्य्योदयस्य दर्शनादर्शनसन्देहकालमेकादशी व्याप्नोति ततः प्राक् कृत्स्नोऽरुणोदयकालो दशमीव्याप्तस्तदा महावेधः । यदा सूर्य्योदये स्पष्टे सति पश्चादेकादशी प्रवृत्ता ततः प्राच्यामुदयवेलायां दशमी विद्यते तदा योगशब्देनाभिधेयो दोषो भवति । स च वेधाद्यपेक्षया तुरीयो भवतीति । नन्वरुणोदयात्पूर्व्वमपि यदि मध्यरात्रानन्तरं दशमीकला विद्येत तदा नोपवासस्तदभावे तु पर स कर्त्तव्यः । तथा च स्मृतिः "अर्द्धरात्रात्परा यत्र एकादश्युपलभ्यते । तत्रोपवासः कर्त्तव्यो न तु वै दशमीकले"ति" । अतो यथानिर्दिष्टेभ्य स्त्रिभ्योऽन्योऽपि कश्चिद्वेधोऽस्तीति चेत् मैवम् । अर्द्धरात्रवेधोऽपि यदा वर्ज्यस्तदा किमु वक्तव्यम् अरुणोदयवेध इति वक्तुमर्द्धरात्रवेध उपन्यस्तो न तु वेधाभिप्रायेण । तदेव ब्रह्मवैवर्त्ते शौनकेन स्पष्टीकृतम् । "अर्द्धरात्रे तु केषाञ्चिद्दशम्या वेध इष्यते । अरुणोदयवेलायां नावकाशो विचारणे । कापालवेध इत्याहुराचार्य्या ये हरिप्रियाः ! न तन्मम मतं यस्मात्त्रियामा रात्रिरिष्यत"इति । य एते वेधातिवेधमहावेधयोगाः पूर्व्वमभिहितास्तेषु त्रयोऽरुणोदयवेधाश्चतुर्थ उदयवेधः । तश्चोदयवेधद्वयस्योऽप्याह "उदयोपरि विद्धा तु दशम्यैकादशी यदा । दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासन इति" । स्मृत्यन्तरेऽपि । "दशम्याः शल्यमादाय यदोदेति दिवाकरः । तेन स्पृष्टं हरिदिनं दत्तं जम्भासुराय त्विति" । पञ्चदशनाडीवेधस्तु स्कन्दपुराणे दर्शितः "नागोद्वादशनाडीभिर्दिक् पञ्चदशभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरान्तिथिमिति" । तदेवं वेधत्रयं निरूपितम् । तत्र पञ्चदशनाडीवेधस्य वेधान्तरस्य च विषयव्यवस्था निगमे दर्शिता । "सर्व्वप्रकारवेधोऽयमुपवासस्य दूषकः । सार्द्धसप्तमुहूर्त्तस्तु वेधोऽयं बाधते व्रतमिति" । सर्व्वप्रकार इत्यत्र प्रकारशब्देन कलाकाष्ठादयो वेधातिवेधादयो वा स्पष्टह्यन्ते नात्र तिथ्यन्तरवच्छिन्नमुहूर्त्तत्वं वेधेऽपेक्षितं किन्तु लवकलाकाष्ठादिकमपि ग्राह्यम् । तदुक्तं नारदीये । "लवादिवेधे विप्रेन्द्र ! दशम्यैकादशीं त्यजेत् । सुराया बिन्दुना स्पृष्टं गङ्गाम्भ इव निर्म्मलमिति" । स्कन्दपुराणेऽपि "कलाकाष्ठादिगत्यैव दृश्यते दशमी विभो, । एकादश्यां न कर्त्तव्यं व्रतं राजन् ! कदाचनेति" । स्मृत्यन्तरेऽपि । "कलार्द्धेनापि विद्धा स्याद्दशम्यैकादशी यदि । तदाप्येकादशीं हित्वा द्वादशीं समुपोषयेदिति" । सोऽयं कलाकाष्ठादिवेधोऽरुणोदये सूर्य्योदये च समानः । तत्रारुणोदयवेधो वैष्णवविषयः । तच्च गारुडपुराणे विस्पष्टमवगम्यते । "दशमीशेषसंयुक्तो यदि स्यादरुणोदयः । नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतमिति" । वैखानसपञ्चरात्रादिवैष्णवागमोक्तदीक्षां प्राप्तो वैष्णवः । अत एव स्कान्दपुराणे वैष्णवस्वरूपमभिहितम् "परमापदमापन्नोऽहर्षे वा समुपस्थिते । नैकादशीं त्यजेद्यस्तु यस्य दीक्षाऽस्ति वैष्णवी । समात्मा सर्व्वजीवेषु निजाचारादविच्युतः । विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते" इति । विष्णुपुराणेऽपि । "न चलति निजकर्म्मणोयः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हन्ति किञ्चिदुच्चैः सितमनसं तमवेहि विष्णुभक्तमिति" ।

यथोक्तगुणसम्पन्नो वैष्णवदीक्षां प्राप्तोयस्तं प्रति तिथिवेधो निर्णीयते । एकादशी द्विविधा अरुणोदयवेधवती शुद्धा चेति । तत्र वेधवती सर्व्वा त्याज्या । "तद्दिनैकादशीव्रतमिति" गारुडपुराणे सामान्येन प्रतिषेधात् । विशेषस्तु संपूर्णादिभेदेन प्रतिषेधो द्रष्टव्यः य एते वेधातिवेधमहावेधयोगाख्या दोषाः पूर्व्वमुक्तास्तेषु सत्स्वेकादशी संपूर्णसंदिग्धसंयुक्तसंकीर्णनामभिर्व्यवह्रियते । अरुणोदयस्य प्रथमघटिकायां दशमीसद्भावे वेध इत्युक्तः । स च द्विविधः । घटिकाप्रारम्भे कृत्स्नघटिकायां च दशमीवृत्तिभेदात् । तत्र प्रारम्भमात्रदशमीयुक्तैकादशी संपूर्णेत्युच्यते । कृत्स्नघटिकावर्त्तिदशमीसद्भावयुक्तैकादशी सन्दिग्धा । अरुणोदयप्रथममुहूर्त्तादधोदशमीव्याप्तिरतिवेधस्तदुपेतैकादशी संयुक्तेत्युच्यते । सूर्य्यमण्डलदर्शनसन्देहवेलायां दशमीसद्भावे महावेधः तद्यु-

न्तैदकाशी संकीर्णेत्युच्यते । ता एताः संपूर्णादयश्च तसोऽपि त्याज्याः । तथा च गोभिलः "अरुणोदयवेलायां यदिदशमीसङ्गता । संपूर्णैकादशी तान्तु मोहिन्यै दत्तवान् प्रभुरिति" । गारुडपुराणे "उदयात्प्राक् त्रिघटिकाव्यापिन्येकादशी यदि । संदिग्धैकादशी नाम वर्ज्येयं धर्मकाङ्क्षिभिः । उदयात्प्रागमुहूर्त्तेन-व्यापिन्येकादशी यदा । संयुक्तैकादशी नाम वर्जयेद्धर्महृद्धये । आदित्योदयवेलाया आरभ्य षष्टिनाडिका । संकीर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः। पुत्रपौत्रप्रवृद्ध्यर्थन्द्वादश्यामुपवासयेत् । तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणमिति" । यद्यपि पूर्वं त्र वेधवाक्ये "सार्द्धं तु घटिकात्रयम्" इत्युक्तम् अत्र तु सन्दिग्धैकादशीवाक्ये त्रिघटिकेत्युक्तं तथापि नैतावता वैषम्येण विरोधः शङ्कनीयः शास्त्रद्वयस्याऽपि दशमीवेधत्यागपरत्वात् । तदेवं सामान्यविशेषाभ्यां प्रतिषिद्धत्वादरुणोदयविद्धैकादशी वैष्णवेन परित्याज्या । यस्तु योगसंप्रश्नचतुर्णां योगस्तस्य त्याज्यत्वमर्थात्सिद्धम् । अरुणोदयवेधोऽपि यदा त्यज्यते तदा किमु वक्तव्यं सूर्योदयवेध इति । वचनन्त्वत्र कस्मप्रोक्तं पूर्व्वमेवोदाहृतम् । या तु चतुर्विधवेधरहिता शुद्धैकादशी सा द्विविधा । आधिक्येन युक्ता तद्रहिता चेति । आधिक्यं च त्रिविधम् एकादश्याधिक्यं द्वादश्याधिक्यमुभयाधिक्यं चेति । त्रिष्वप्येतेषु पक्षेषु अरुणोदयमारभ्य प्रहत्तां शुद्धामप्येकादशीं परित्यज्य परेद्युरुपवासः कर्त्तव्यः । तत्रैकादश्याधिक्ये नारदः "संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी । द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु पारणमिति" । स्मृत्यन्तरेऽपि "एकादशी यदा पूर्णा परतः पुनरेव सा । पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणमिति" विष्णुरहस्येऽपि "एकादशीकलाप्राप्ता येन द्वादश्युपोषिता । तस्य क्रतुशतं प्रोक्तं त्रयोदश्यान्तु पारणमिति" द्वादश्याधिक्ये व्यास आह "एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत् परमां गतिम्" उभयाधिक्ये गुरुराह "संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । तत्रोपोष्या द्वितीया तु परतो द्वादशी यदीति" नारदोऽपि "संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । सर्वैरेवोत्तरा कार्य्या परतो द्वादशी यदीति" स्मृत्यन्तरेऽपि "एकादशी यदा पूर्णा परतो द्वादशी यदि । एकादशीं परित्यज्य द्वादशीं समुपोषयेदिति" । उभयाधिक्यरहितायां न कोऽपि सन्देहोऽस्ति । इति वैष्णवदीक्षायुक्तानामेकादशी निर्णीता ।

अथ श्रौतस्मार्त्तपर्वसहितानां पञ्चरात्रादिदीक्षारहितानाम् एकादशी निर्णीयते । अरुणोदयवेधस्य वैष्णवविषयत्वे व्यवस्थिते सत्युदयवेधः स्मार्त्तानुष्ठानविषयत्वेन परिशिष्यते । अतएव स्मर्य्यते "अतिवेधा महावेधा ये वेधास्तिथिषु स्मृताः । सर्वेऽप्यवेधा विज्ञेया वेधः सूर्योदये मतः" इति । एवञ्च सति सूर्योदयवेधममेध्यैकादशी द्विधा भिद्यते शुद्धा विद्धा चेति । तत्र शुद्धायां पूर्ववच्चत्वारो भेदा भवन्ति एकादश्याधिक्यं द्वादश्याधिक्यमुभयाधिक्यमनुभयाधिक्यं चेति । एवं विद्धायामपि चत्वारो भेदा उन्नेयाः । शुद्धायामेकादश्याधिक्ये द्वयोस्तिथ्योरुपवासयोग्यतामाह हडवशिष्ठः "संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । लुप्यते द्वादशी तस्मिन् उपवासः कथम्भवेत् ? । उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैरिति" । उभयोरधिकारिभेदेन व्यवस्था स्कान्दपुराणे दर्शिता "प्रथमेऽहनि संपूर्णा व्याप्याहोरात्रसंयुता । द्वादश्यां च तथा तात ! दृश्यते पुनरेव च । पूर्व्वा कार्य्या गृहस्थैस्तु यतिभिरुत्तरा तिथिरिति" एतच्च परेद्युर्द्वादश्यभावविषयम् तथा च स्मृत्यन्तरे । "पुनः प्रभातसमये घटिकैका यदा भवेत् । अत्रोपवासो विहितश्चतुर्थाश्रमवासिनाम् । विधवायाश्च तत्रैव परतो द्वादशी न चेदिति" । गारुड़पुराणेऽपि "पुनः प्रभातसमये घटिकैका यदा भवेत् । अत्रोपवासो विहितो वनस्थस्य यतेस्तथा । विधवायाश्च तत्रैव परतो द्वादशी न चेदिति" । पुराणान्तरे "एकादशी यदा पूर्णा परतः पुनरेव सा ; पुण्यं क्रतुशतस्योक्तं त्रयोदश्यान्तु पारणमिति" एवमेकादश्याधिक्यपक्षे गृहिणोऽव्यवस्थाऽभिहिता । द्वादश्याधिक्ये पूर्वेद्युरुपवासमाह नारदः "न चेदेकादशी विष्णौ द्वादशी परतः स्थिता । उपोष्यैकादशी तत्र यदीच्छेत् परमं पदमिति" । स्कान्दपुराणेऽपि "शुद्धा यदा समा हीना समहीनाऽधिकोत्तरा । एकादश्यामुपवसेत् शुद्धां वैष्णवोमपीति" दशमीवेधरहिता-शुद्धैकादशी यदा परेद्युरुदयादूर्द्धं नास्ति किन्तूदये समा ततोन्यूना वा द्वयोरपीत्यर्थः । एवं च सति प्रकृते द्वादश्याधिक्येऽपि एकादशी समन्यूनयोरन्यतरत्वात् प्रथमैवोपोष्येत्युक्तं भवति । उभयाधिक्ये परेद्युरुपवासो गारुड़पुराणे दर्शितः "संपूर्णैकादशी यत्र प्रभाते पुनरे-

व सा । तत्रोपोष्या पराऽऽयुष्या परतो द्वादशी यदीति” वराहपुराणेऽपि । “एकादशी विष्णुना चेत् द्वादशी परतः स्थिता । उपोष्या द्वादशी तत्र यदीच्छेत् परमं पदमिति” स्मृत्यन्तरेऽपि “संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । वैष्णवी च त्रयोदश्यां घटिकैकापि दृश्यते । गृहस्थोऽपि परां कुर्यात् पूर्वां नोपवसेत्तदा । पूर्णाप्येकादशी त्यक्त्वा वर्द्धते द्वितयं यदीति” एवमेकैकाधिक्ये द्वितयाधिक्येऽपि निर्णयो दर्शितः । अनुभयाधिक्ये तु नास्ति सन्देहः । इति शुद्धायां चत्वारोभेदाव्यवस्थिताः । अथ विद्धायां चत्वारोभेदा व्यवस्थाप्यन्ते । तत्राप्येकादश्याधिक्ये पूर्ववद्गृहियत्योर्व्यवस्था द्रष्टव्या । तदाह प्रचेताः “एकादशी विद्धा चेच्छुक्ले कृष्णेऽविशेषतः । उत्तरान्तु यतिः कुर्यात् पूर्वामुपवसेद्गृहीति” नचैतद्वाक्यं शुद्धाधिक्ये चरितार्थमिति शङ्कनीयम् बाधकाभावेन विद्धाधिक्येऽपि तद्वचनप्रवृत्तेर्निवारयितुमशक्यत्वात् । द्वादश्याधिक्ये परेद्युरुपवासः । तदाह व्यासः “एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत् परमां गतिमिति” लुप्ता आदौ दशमीमिश्रितत्वात् परतोवृद्ध्यभावाच्च क्षयं गतेति यावत् । उभयाधिक्येऽपि परेद्युरुपवासः । तदुक्तं भविष्यपुराणे “एकादशीं दिवा युक्तां वर्द्धमाने विवर्ज्जयेत् । क्षयमार्गस्थिते सोमे कुर्वीत दशमीयुतामिति” उभयानाधिक्ये तु नैवास्ति सन्देहः कोट्यन्तराभावात् । न च विद्धत्वादस्ति सन्देह इति वाच्यं कोट्यन्तराभावे विद्धाया अप्युपादेयत्वात् । तथा च विष्णुरहस्ये ‘एकादशी भवेत् काचिद्दशम्या दूषिता तिथिः । वृद्धिपक्षे भवेद्दोषः क्षयपक्षेऽतिपुण्यदेति” । इति विद्धाभेदाव्यवस्थापिताः । अत्र शुद्धाविद्धयोरप्येष निर्णयसंग्रहः । एकादशीद्वादश्योरुभयोरपि वृद्धौ परेद्युरुपवासः । द्वयोरप्यवृद्धौ पूर्वेद्युः । एकादशीमात्रवृद्धौ गृहियत्योर्व्यवस्था । द्वादशीमात्रवृद्धौ शुद्धायां सर्वेषां पूर्वेद्युः विद्धायां परेद्युरिति”तदेवं शास्त्रार्थे व्यवस्थिते यावन्ति मुनिवाक्यानि विधायकानि निषेधकानि सर्वाणि तान्यविरोधेन व्यवस्थापनीयानि । तत्र व्यवस्थापनप्रकारं दर्शयामः स्कान्दपुराणे ‘प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः । संपूर्णा इति विख्याता हरिवासरवर्जिताः” इति हरिवारेषु तु संपूर्णत्वं प्रकारान्तरेणोक्तं गारुड़पुराणे “उदयात् प्राग्यदा विप्र ! मुहूर्त्तद्वयसंयुता । संपूर्णैकादशी ज्ञेया तत्रैवोपवसेद्गृहीति” भविष्यपुराणेऽपि “आदित्योदयवेलायां प्राङ्मुहूर्त्तद्वयान्विता । एकादशी तु संपूर्णा विद्धाऽन्या परिकीर्त्तितेति” । तदेतद्वचनद्वयमरुणोदयवेधोपजीवनेन प्रवृत्तत्वाद्वैष्णवविषयम् । दशमीवेधे निन्दकानि तु वचनानि द्विविधान्युपलभ्यन्ते । कानिचिदरुणोदयानुवादेन प्रवृत्तानि, कानिचित्तदननुवादेनेति । यथा भविष्यपुराणे “अरुणोदयकाले तु दशमी यदि दृश्यते । तत्र नैकादशी कार्या धर्मकामार्थनाशिनीति” कौत्सः ‘अरुणोदयवेलायां विद्धा गान्धार्य्युपोषिता । तस्याः पुत्रशतं नष्टं तस्मात् तां परिवर्जयेदिति” एतादृशानि सर्वाणि वैष्णवविषयाणि द्रष्टव्यानि । अरुणोदयानुवादमन्तरेण दशमीविद्धानिन्दकानि च कानिचिद्वचनान्युपलभ्यन्ते तद्यथा नारदः ‘दशम्यनुगता यत्र तिथिरेकादशी भवेत् । तत्रोपवासे नाशः स्यात् परेत्य नरकं व्रजेदिति’ ब्रह्मवैवर्त्ते “दशमीशेषसंयुक्तां यः करोति विमूढधीः । एकादशीफलं तस्य नश्येत् द्वादशवार्षिकमिति” विष्णुरहस्येऽपि “दशमीशेषसंयुक्तामुपोष्यैकादशीं किल । संवत्सरकृतेनेह नरो धर्मेण मुच्यते”इति ईदृशानि सर्वाण्यपि वेधविषये वैष्णवविषयाण्यन्यविषये तूभयाधिक्ये द्वादश्याधिक्ये च सर्वपुरुषविषयाणि द्रष्टव्यानि । दशमीविद्धाभ्यनुज्ञापकानि च कानिचिद्वचनान्युपलभ्यन्ते तद्यथा स्कान्दपुराणे ‘त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन । उपोष्यैकादशी तत्र दशमीमिश्रितापि चेति” स्मृत्यन्तरे “उपोष्यैकादशी तत्र द्वादशी न भवेद्यदि । दशम्यापि हि मिश्रैव एकादश्येव धर्मकृदिति” वृहद्वशिष्ठः “द्वादशी स्वल्पस्वल्पापि यदि न स्यात् परेऽहनि । दशमीमिश्रिता कार्या महापातकनाशिनीति” ऋष्यशृङ्गः “एकादशी न लभ्येत सकला द्वादशी भवेत् । उपोष्यैकादशी विद्धा ऋषिरुद्दालकोऽब्रवीदिति” हारीतोऽपि ‘त्रयोदश्यां यदा नष्टं द्वादशीघटिकाद्वयम् । दशम्यैकादशी विद्धा सैवोपोष्या सदा तिथिरिति” एतादृशानि वाक्यानि सर्वाणि अनुभयाधिक्ये सर्वपुरुषविषयाणि एकादश्याधिक्ये तु स्मार्त्तगृहस्थविषयाणि द्रष्टव्यानि नत्वेतानि वैष्णवविषयाणि वैष्णवप्रकरणेषु विद्धाभ्यनुज्ञाया अदर्शनात् । संपूर्णैकादशीपरित्यागविषयाणि कानिचिद्वचनान्युपलभ्यन्ते । तद्यथा स्कान्दपुराणे “एकादशी भवेत् पूर्णा परतो द्वादशी यदि । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेदिति” तथा कालिकापुराणे “एकादशी यदा

पूर्णा परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यत इति” गारुडपुराणे “पूर्णा भवेद् यदा नन्दा भद्रा चैव विवर्द्धते । तदोपोष्या तु भद्रा स्यात् तिथिवृद्धिप्रशस्तित इति” । एतादृशानि सर्वाणि वैष्णवविषयाणि । दिनत्रयविषयाणि कानिचिद्वचनान्युपलभ्यन्ते । यदाह नारदः“यदि दैवात्तु संभिद्येदेकादश्यां तिथित्रयम् । तत्र क्रतुशतं पुण्यं द्वादशीपारणे भवेदिति” कूर्मपुराणेऽपि“द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरिः। तामेवोपवसेत् काममकामो विष्णुतत्परः” इति अत्राद्यन्तयोर्दशमीद्वादश्यौ मध्ये एकादशीत्येतद्दिनत्रयं यदाप्नोति तदा परतो द्वादश्या वृद्धिरवृद्धिश्चेत्युभयं सम्भवति । तत्र यद्यवृद्धिस्तदा यथोक्तं दिनत्रयमुपोष्यम् । तदुक्तं पुराणान्तरे “दिनत्रयस्पृते ! देवि नोपोष्या दशमी युता । सैवोपोष्या सदा पुण्या परतश्चेत् त्रयोदशीति” द्वादशीवृद्धौ“एकादशी यदा लुप्ता”इत्यनेन व्यासवचनेन परेद्युरुपवास इति पूर्वमेव निर्णीतं यदा त्वाद्यन्तयोरेकादशी त्रयोदश्योर्मध्ये द्वादशीत्येतादृशं दिनत्रयं तदा नारदेन स्मर्य्यते “एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम्” । “एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिस्पृशा नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहतीति”। तदेतद्वैष्णवविषयं यतिविषयं वा द्रष्टव्यम् । गृहस्थे तु तन्निषिद्धम् तथा च कूर्मपुराणे “एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः” इति पद्मपुराणे “एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्र्यहस्पृगयदहोरात्रं नोपोष्यं तत् सुतार्थिभिरिति” यत्तु ऋष्यशृङ्गेणोक्तम् । “अविद्धानि निषिद्धैश्च न लभ्यन्ते दिनानि तु । मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः । तदूर्द्धविद्धान्यन्यानि दिनान्युपवसेद्बुधः । पूर्व्वविद्धा न कर्त्तव्या षष्ठ्येकादश्यथाष्टमी । एकादशीं तु कुर्वीत क्षीयते द्वादशी यदीति” अत्र निषेधो यतिविषयः, विधिर्गृहस्थविषयः वेधवाहुल्ये हेयत्वशङ्का मा भूदिति पञ्चभिर्मुहूर्त्तैरित्युक्तम् । तदेवं नानाविधवचनस्य व्यवस्थापनप्रकारो वाग्त्यादिनः । अनया व्युत्पत्त्या मन्दबुद्धिरपि व्यवस्थापयितुं शक्नोत्येव । इत्युपवासतिथिर्निरूपिता ।

अथाधिकारी निरूप्यते तत्र नारदः “अष्टावदादधिको मर्त्त्योह्यपूर्णाशीतिहायनः । भुङ्क्ते यो मानवो मोहादेकादश्यां स पापकृदिति” कात्यायनोऽपि “अष्टवर्षाधिको मर्त्त्यो ह्यशीतिन्यूनवत्सरः । एकादश्यामुपवसेत् पक्षयोरुभयोरपीति” । गृहस्थस्य तु शुक्लैकादश्यामेव नित्योपवासः यथा कूर्मपुराणे “एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । वानप्रस्थो यतिश्चैव शुक्लामेव सदा गृहीति” भविष्योत्तरेऽपि “एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । ब्रह्मचारी च नारी च शुक्लामेव सदा गृहीति” नारी विधवा तस्या एव यतिधर्मत्वात् । पतिमत्यास्तूपवासं निषेधति विष्णुः “पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् । आयुष्यं हरते भर्त्तुर्नरकं चैव गच्छतीति” मनुः“नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणमिति” मार्कण्डेयपुराणे “नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा । निष्फलं तु भवेत् तस्या यत्करोति व्रतादिकमिति” आदिशब्दाद्वस्त्रालङ्कारगन्धधूपाञ्जनानामुपसंग्रहः मनुः “पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनमिति” पत्युरनुमत्या व्रतादिष्वधिकारिणी भवति तदाह कात्यायनः । “भार्या पत्युर्मतेनैव व्रतादीनाचरेत् सदेति” शुक्लामेवेत्येवकारः कृष्णैकादश्युपवासनिषेधपरः । तथा च कूर्मपुराणे “संक्रान्त्यां कृष्णपक्षे च रविशुक्रदिने तथा । एकादश्यां न कुर्वीत उपवासञ्च पारणमिति” गौतमोऽपि “आदित्येऽहनि संक्रान्त्यामसितैकादशीषु च । व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृहीति”। अत्र पुत्रीति विशेषणं पुत्रवतो दोषविशेषप्रतिपादनार्थम् तथा च पद्मपुराणे “संक्रान्त्यामुपवासेन पारणेन युधिष्ठिर ! । एकादश्यां च कृष्णायां ज्येष्ठःपुत्रो विनश्यति” नारदीयेऽपि “इन्दुक्षयेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे । उपवासं न कुर्वीत यदीच्छेत्सन्ततिन्धुवामिति” । अत्र संक्रान्त्यादिषूपवासस्य निषेधः संक्रान्त्यादिनिमित्तकस्य । तथाच कात्यायनः “एकादशीषु कृष्णासु रविसंक्रमणे तथा । चन्द्रसूर्य्योपरागे च न कुर्य्यात्पुत्रवान् गृही । तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः। निमित्तान्तरयुक्तस्य न विधिर्न निषेधनमिति” जैमिनिरपि “तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः। नानुषङ्गकृतोपाद्योयतोनित्यमुपोषणमिति” । अयमर्थः एकादश्युपवासस्य नित्यत्वात्संक्रान्त्याद्युपवासस्य च काम्यत्वात्काम्योपवासनिषेधे सति न नित्योपवासनिषेधः सिध्यतीति । संक्रान्त्यादिनिमित्तस्योपवासः संवर्त्तेनोक्तः । “अमावास्या-द्वादशी च संक्रान्तिश्च विशेषतः । एताः प्रशस्तास्तिथ-

यो भानुवारस्तथैव च । अत्र स्नानं जपो होमो देवतानां च पूजनम् । उपवासस्तथा दानमेकैकं पावनं स्मृतमिति" । गृहस्थस्य तु शुक्लायामेव नित्योपवास इत्युक्तम् । नैमित्तिककाम्योपवासौ तु कृष्णायामपि कर्त्तव्यौ । तत्र नैमित्तिकः स्मृत्यन्तरे पठ्यते । "शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचनेति" । काम्यस्तु स्कन्दपुराणे "पितॄणां गतिमन्विच्छन् कृष्णायां समुपोषयेदिति" सनत्कुमारः "भानुवारेण संयुक्ता कृष्णा संक्रान्तिसंयुता । एकादशी सदोपोष्या सर्व्वसंपत्करी तिथिरिति" । मत्स्यपुराणेऽपि "एकादश्यां तु कृष्णायामुपोष्य विधिवन्नरः । पुत्त्रानायुः समृद्धिं च साम्राज्यं च स गच्छतीति"। दिनक्षये पुत्त्रवतो गृहस्थस्योपवासोऽपि निषिद्धः तथा च पितामहः "एकादश्यां दिनक्षये उपवासं करोति यः। तस्य पुत्त्रा विनश्यन्ति मघायां पिण्डदो यथेति" । मत्स्यपुराणेऽपि "दिनक्षयेऽर्कसंक्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः । उपवासं न कुर्व्वीत पुत्त्रपौत्त्रसमन्वितः" इति । दिनक्षयलक्षणं पद्मपुराणे "द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः" इति । वशिष्ठोऽपि "एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा । तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलमिति"। फलमत्रोपवासव्यतिरिक्तदानादिजन्यं द्रष्टव्यम् उपवासस्य निषिद्धत्वात् । ईदृशे विषये किं कर्त्तव्यमित्याकाङ्क्षायां वायुपुराणे पठ्यते "उपवासे निषिद्धे तु भक्ष्यं किञ्चित्प्रकल्पयेत् । न दुष्यत्युपवासेन उपवासफलम्भवेत्" । "नक्तं हविष्यान्नमनोदनं वा फलन्तिलाः क्षीरमथाम्बु वाज्यम् । यत्पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरं चेति" । उपवासासमर्थस्त्वेकभक्तादीनि कुर्य्यात् तथा च स्मृतिः । "उपवासेत्वशक्तानामशीतेरूर्द्ध्वजीविनाम् । एकभक्तादिकं कार्य्यमाह बौधायनो मुनिरिति" । मार्कण्डेयपुराणे "एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन दानेन न निर्द्वादशिको भवेदिति" । कूर्म्मपुराणेऽपि "एकभक्तेन नक्तेन क्षीणवृद्धातुरः क्षिपेत् । नातिक्रमेद्द्वादशीन्तु उपवासव्रतेन चेति" । स्मृत्यन्तरेऽपि "एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत् । पयोमूलं फलं वाऽपि न निर्द्वादशिको भवेदिति"। भविष्यपुराणेऽपि "एकादश्यामुपवसेन्नक्तं वापि समाचरेदिति"। नित्यकाम्ययोरशक्तास्तु प्रतिनिधिभिर्व्रतङ्कारयेयुः । तथा च विष्णुरहस्ये "असामर्थ्ये शरीरस्य व्रते च समुपस्थिते । कारयेद्धर्म्मपत्नीं वा पुत्त्रं वा विनयान्वितमिति" । पैठीनसिः "भार्य्या पत्युर्व्रतं कुर्य्याद्भार्य्यायाश्च पतिर्व्रतम् । असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न जायते" इति । स्कान्दपुराणे "पुत्त्रं वा विनयोपेतं भगिनीं भ्रातरन्तथा । एषामभाव एवान्यं ब्राह्मणं विनियोजयेत्" । अन्यत्रापि "भ्रातरं भगिनीं शिष्यं कारयेद्ब्राह्मणादिभिरिति" । स्मृत्यन्तरेऽपि "पितृमातृपतिभ्रातृश्वश्रू गुर्व्वर्थ्य भूभुजाम् । अष्टार्थमुपोषित्वा स्वयञ्च फलभाग्भवेदिति" कात्यायनः । "पितृमातृस्वसृभ्रातृगुर्व्वर्थे च विशेषतः । उपवासं प्रकुर्व्वाणः पुण्यं शतगुणं लभेत् । दक्षिणा नात्र दातव्या शुश्रूषा विहिता च सा । नारी च पतिमुद्दिश्य एकादश्यामुपोषिता । पुण्यं शतगुणं प्राहुर्मुनयः पारदर्शिनः । उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयम् । राज्यस्थक्षत्त्रियार्थे च एकादश्यामुपोषितः । पुरोधाः क्षत्त्रियस्यार्द्धं फलं प्राप्नोति निश्चितम् । पितामहादीनुद्दिश्य एकादश्यामुपोषणे । कृते ते तु फलं विप्राः ! समग्रं समवाप्नुयुः । कर्त्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः । यमुद्दिश्य कृतं सोपि संपूर्णं फलमाप्नुयादिति" । प्रतिनिधौ च कश्चिद्विशेषः स्मृतौ "काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः । काम्येऽप्युपक्रमादूर्द्ध्वं केचित्प्रतिनिधिं विदुरिति"। अयमर्थः नित्यं नैमित्तिकं च प्रतिनिधिनाप्युपक्रम्य कारयेत् काम्यं तु स्वसामर्थ्यं परीक्ष्य स्वयमेवोपक्रम्य कुर्य्यात् असामर्थ्ये उपक्रमादूर्द्ध्वं प्रतिनिधिनापि तत् कारयेत् ।

उपवासाकरणे प्रायश्चित्तं स्मर्य्यते "अष्टम्याञ्च चतुर्द्दश्यां दिवा भुक्त्वैन्दवं चरेत् । एकादश्यां दिवा रात्रौ नक्तञ्चैव तु पर्व्वणीति" स्मृत्यन्तरे "अर्के पर्व्वद्वये रात्रौ चतुर्द्दश्यष्टमीदिवा । एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणञ्चरेत्" ।

अथ काम्योपवासक्रमः तत्राङ्गिराः "सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे । उपवासफलं प्रेप्सुर्जह्याद्भक्तचतुष्टयम्" इति । देवलः "दशम्यामेकभक्तस्तु मांसमैथुनवर्जितः एकादशीमुपवसेत् पक्षयोरुभयोरपि । देवतास्तस्य तुष्यन्ति कामितं चास्य सिध्यतीति" बृहस्पतिरपि "दिवानिद्रा परान्नं च पुनर्भोजनमैथुने । क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेदिति" कूर्म्मपुराणे "कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान् । शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियमिति" स्मृत्यन्तरेऽपि "शाकं मांसं मसूरांश्च

पुनर्भोजनमैथुने । द्यूतमत्यम्बुपानञ्च दशम्यां वैष्णवस्त्यजेदिति" विष्णुधर्मोत्तरे "असम्भाष्यान् हि सम्भाष्य तुलस्यशिकादलम् । आमलक्याः फलं वापि पारणे प्राश्य शुध्यति" "असकृज्जलपानं च दिवास्वापञ्च मैथुनम् । ताम्बूलचर्वणं मांसं वर्ज्जयेत् व्रतवासरे" इति च । वशिष्ठः "उपवासे तथा श्राद्धे न खादेद् दन्तधावनम् । दन्तानां काष्ठसंयोगो हन्ति सप्त कुलानि चेति" दन्तधावने प्रायश्चित्तं च विष्णुरहस्ये "श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् । गायत्र्याः शतसंपूतमम्बु प्राश्य विशुद्ध्यतीति" हारीतः "पतितपाषण्डनास्तिकसम्भाषणमन्टतास्लीलादिकमुपवासादिषु वर्जयेदिति" कूर्मपुराणे "बहिर्ग्रामान्त्यजान् सूतिं पतितञ्च रजस्वलाम् । न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे" इति विष्णुरहस्ये "स्मृत्यालोकनगन्धादिस्वादनं परिकीर्त्तनम् । अन्नस्य वर्जयेत् सर्वं ग्रासानाञ्चाभिकाङ्क्षणम् । गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम् । व्रतस्थो वर्ज्जयेत् सर्वं यच्चान्यत् निराकृतमिति" ब्रह्माण्डपुराणे "कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् । व्यायामञ्च प्रवासञ्च दिवास्वप्नं तथाञ्जनम् । तिलपिष्टं मसूरांश्च द्वादशैतानि वैष्णवः । द्वादश्यां वर्ज्जयेन्नित्यं सर्वपापैः प्रमुच्यते" इति ।

एकादश्यां श्राद्धं कृत्वापि न भोक्तव्यं तदाह कात्यायनः "उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्य्यादाघ्राय पितृसेवितमिति" तथा "मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदा । अभ्यर्च्य पितृदेवांस्तु आजिघ्रेत् पितृसेवितमिति" यत्तु वचनम् "श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते पितृसेवितम् । हविर्देवा न गृह्णन्ति कव्यञ्च पितरस्तथेति" तदेकादशीव्यतिरिक्तविषयम् आघ्राणेनापि भोजनकार्य्यं सिध्यति तस्य भोजनकार्य्ये विधानात्"

सूतकादौ दानार्च्चनरहितमुपवासमात्रं कुर्य्यात् तदुक्तं कूर्म्मपुराणे "काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके । तत्र काम्यं व्रतं कुर्य्यात्दानार्च्चनविवर्जितम्" इति वराहपुराणे "सूतके च नरः स्नात्वा प्रणम्य मनसा हरिम् । एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते । मृतके न च भुञ्जीत एकादश्यां सदा नरः । द्वादश्यान्तु समश्नीयात्स्नात्वा विष्णुं प्रणम्य चेति" । तत्र परित्यक्तं देवार्च्चनं सूतकान्ते कुर्य्यात् तदुक्तं मत्स्यपुराणे "सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्द्दनम् । दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते" इति । स्त्रीणां रजोदर्शनेऽपि न व्रतत्यागः किन्तु देवतार्च्चनादिरहितं सूतकादाविवोपवासमात्रं कार्य्यं तदाह पुलस्त्यः "एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि" इति । ऋष्यशृङ्गः "संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतमिति" । सत्यव्रतोऽपि "प्रारब्धदीर्घतपसां नारीणां चेद्रजोभवेत् । न तत्रापि व्रतस्य स्यादुपरोधः कदाचनेति" शुद्ध्यनन्तरं देवतार्च्चनादिकं कुर्य्यात् तथा च स्मृतिः "स्नात्वा भर्त्तुश्चतुर्थेऽह्नि शुद्धा स्यात्परिचारणे । पञ्चमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्म्मणीति"

नित्योपवासप्रकारो विष्णुरहस्येऽभिहितः "अथ नित्योपवासी चेत्त्यायं प्रातर्भुजिक्रियाम् । वर्जयेन्मतिमान् विप्रः संप्राप्ते हरिवासरे" इति ब्रह्मवैवर्त्तेऽपि "इति विज्ञाय कुर्वीत नित्यमेकादशीव्रतम् । विशेषनियमाशक्तोऽप्होरात्रं भुक्तिवर्जितः । निगृहीतेन्द्रियः श्रद्धासहायो विष्णुतत्परः । उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः" । शक्तौ सत्यां नियमानाचरेत् तथा च कात्यायनः "शक्तिमांस्तु ततः कुर्य्यान्नियमं सविशेषणमिति" ।

यदा द्वादश्यां श्रवणनक्षत्रम्भवेत् तदा शुद्धैकादशीमपि परित्यज्य द्वादश्यामेवोपवसेत् तथा च नारदीये "शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता । तयोरेवोपवासश्च त्रयोदश्यां च पारणमिति" तथा "एकादश्यान्त्वविद्धायां संप्राप्ते श्रवणे तदा । उपोष्या द्वादशी शुद्धा सर्व्वपापक्षयावहेति" यदा पारणपर्य्याप्ता द्वादशी स्यात्तदा तस्यामेव पारणा कार्य्या न तु त्रयोदश्यां तदुक्तम् "भवेद्यत्र त्रयोदश्यां द्वादश्यास्तु कलाद्वयम् । द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् । कलाद्वयं त्रयं वापि द्वादशीं न व्यतिक्रमेत् । पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृतेति" ननु द्वादश्यतिक्रमेऽपि नास्ति दोषः "सा तिथिः सकला ज्ञेयेति" वचने साकल्यविधानादिति चेत् नैवं साकल्यस्य स्नानादिविषयत्वात् वाक्यशेषे "स्नानदानजपादिषु" इत्यभिधानात् । पारणे तु साकल्यवचनं न प्रवर्त्तते "तिथिस्तात्कालिकी ज्ञेयेत्युक्तेः"

अल्पद्वादशीकाले यदा पारणन्तदा सद्भिः प्रागेव सर्व्वाः क्रियाः कर्त्तव्याः तदुक्तं नारदीये "अल्पायामथ विप्रेन्द्र! द्वादश्यामरुणोदये । स्नानार्च्चनाक्रियाः कार्य्या दानहोमादिसंयुताः । एतस्मात्कारणाद्विप्र ! प्रत्यूषे स्नानमाचरेत् । पितृतर्पणसंयुक्तं स्वल्पां दृष्ट्वा च द्वादशीम् । महाहानिकरी ह्येषा द्वादशी लङ्घिता नृ-

णाम्। करोति धर्म्महरणमस्नातेव सरस्वतीति" गरुडपुराणेऽपि "यदा स्वल्पा द्वादशी स्यादपकर्षो भुजेर्भवेत्। प्रातर्मध्याह्निकस्यापि तत्र स्यादपकर्षणमिति"। स्कान्दपुराणेऽपि "यदा भवेदतीवाल्पा द्वादशी पारणादिने। उषःकाले द्वयं कुर्य्यात् प्रातर्मध्याह्निकञ्च यदिति"। तत्र पारणासम्भवे अद्भिः पारणङ्कुर्य्यात् तदाह कात्यायनः "सन्ध्यादिकम्भवेन्नित्यं पारणन्तु निमित्ततः। अद्भिस्तु पारयित्वाथ नैत्यिकान्ते भुजिर्भवेदिति" देवलोऽपि "सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम्?। अद्भिस्तु पारणङ्कुर्यात् पुनर्भुक्तं न दोषकृदिति"। यदा कलयापि द्वादशी नास्ति तदा त्रयोदश्यामपि पारणङ्कुर्य्यात् तदुक्तं नारदीये "त्रयोदश्यां तु शुद्धायां पारणं पृथिवीफलम्। शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयमिति"। पारणञ्च नैवेद्यमिश्रितङ्कुर्य्यात् तदुक्तं स्कान्दपुराणे "कृत्वा चैवोपवासन्तु योऽश्नाति द्वादशीदिने। नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनमिति"।

अस्यामेकादश्यां यान्युपवासप्रतिनिधिरूपाणि एकभक्तनक्तायाचितदानानि तेषां प्रतिपद्युक्तन्यायेनोपवासतिथावेवानुष्ठानं, यानि तु स्वतन्त्राण्येकभक्तनक्तादीनि तेषां पूर्व्वोक्तन्यायेन मध्याह्नादिव्यापितिथिग्रहणप्राप्तौ दशमीविद्धा प्रतिषिध्यते द्वादशीकल्पे "पूर्व्वाविद्धां दिनार्द्धेन नन्दां पूर्णामपि त्यजेत्। यदोच्छेदात्मसन्तानं नियमेषु चतुर्ष्वपि। नोपोषितं च नक्तञ्च नैकभक्तमयाचितम्। नन्दायां पूर्व्वविद्धायां कुर्य्यादैश्वर्य्यमोहितः। एकादशी युता यस्ता द्वादश्या समुपोषणे। नक्ते चायाचिते नित्यमेकभक्ते तथाऽनघ!। नक्तञ्चायाचितं तात! नैकभक्तमुपाहरेत्। दशमीसहिते दानमनर्थं हरिवासरे" इति दिनार्द्धेन सार्द्धसप्तमुहूर्त्तैरित्यर्थः। एतदेवाभिप्रेत्य "दिक्पञ्चदशभिस्तथेति" उदाहृतम्। तथा "सार्द्धसप्तमुहूर्त्तैस्तु वेधोऽयं बाधते व्रतमिति" एतदूनवेधे तु तिथ्यन्तरवन्मध्याह्नादिव्याप्तिर्ग्रहीतव्या"।

अत्राधिकारिविशेषः हरि०भ०आग्नेये "गृहस्थोब्रह्मचारी वा आहिताग्निर्यतिस्तथा। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि"। पाद्मोत्तरखण्डे "वर्णानामाश्रमाणाञ्च स्त्रीणाञ्च वरवर्णिनि! एकादश्युपवासस्तु कर्त्तव्योनात्र संशयः"। "एतस्मात् कारणाद्विप्र! एकादश्यामुपोषणम्। कुर्य्यान्नरोवा नारी वा पक्षयोरुभयोरपि" विष्णुधर्म्मोत्तरीयम् "वैष्णवो वाथ शैवोवा कुर्य्यादेकादशीव्रतम्"। सौरपुराणम् "वैष्णवोवाथ शैवोवा सौरोऽप्येतत् समाचरेत्"। स्कान्दम्। "न शैवोन च सौरोवा नाश्रमी तीर्थसेवकः। योभुङ्क्ते वासरे विष्णोः श्वपचादधिको हि सः। त्रिंशद्वर्षं तेन मे गौरि! कृतं दुष्टेन पापिना। मद्भक्तिबलमाश्रित्य येन भुक्तं हरेर्दिने"। "विधवा या भवेन्नारी भुञ्जीतैकादशीदिने। तस्यास्तु सुकृतं नश्येत् भ्रूणहत्या दिनेदिने" कात्या०। एकादशीं विना रण्डा यतिश्च सुमहातपाः। पच्यते ह्यन्धतामिस्रे यावदाहूतसंप्लवम्" नारदीयम्। "सधवायास्तु पत्यनुमत्या सह वाधिकारः। "सपुत्रश्च सभार्य्यश्च स्वजनैर्भक्तिसंयुतः। एकादश्यामुपवसेत् पक्षयोरुभयोरपि" विष्णुध०। तदनुमत्या सधवाया अधिकारिता कालमा० दर्शिता।

"वैष्णवस्योभयपक्षयोर्नित्याधिकारः यथाह तत्त्वसागरे। "यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा। तुल्ये ते मनुते यस्तु स वै वैष्णव उच्यते" एवमेव ए०त०रघु०। "व्याधिभिः परिभूतानां पित्ताधिकशरीरिणाम्। त्रिंशद्वर्षाधिकानाञ्च नक्तादिपरिकल्पनम्" मार्क० पु०।

प्रागुक्तकालमाधवमतानुसारिण्येकादशीव्रतकालादिव्यवस्था सर्वदेशवासिभिः प्रायेणाद्रियते। गौड़निवासिभिस्तु रघुनन्दनोक्ता व्यवस्थाद्रियते। तन्मतसिद्धव्यवस्था तु एकादशीत०धृतवचनजातादनुसन्धेया तत्र संक्षेपस्तत्र दर्शितो यथा "तत्र संक्षेपः पारणादिने द्वादशीलाभे सर्व्व एव पूर्व्वां त्यक्त्वा खण्डामुपवसेत् तदलाभे गृही पूर्व्वां तदन्यःपरां विधवापि। यदा तु पूर्व्वदिने दशम्या उत्तरदिने द्वादश्या युक्तैकादशी तदोत्तरामुपोष्य द्वादश्यां पारणं कुर्य्यात्। परदिने द्वादश्यनिर्गमे त्रयोदश्यामपीति। यदा तु सूर्य्योदयानन्तरं दशमीयुतैकादशी क्षय च परदिने न निःसरति तदा तां विहाय द्वादशीमुपवसेत्। (अत्रमाधवमते भेदः) यदा तु सूर्य्योदयात् प्राक्कालीनदशमीविद्धैकादशी परदिने न निःसरति तदा तामुपवसेत्। यदा तु तथाविधा सती परदिनेऽपि निःसरति तत्परदिने च द्वादशी तदा तां विहाय खण्डामुपोष्य द्वादश्यां पारयेत्। यदा तु पूर्व्वदिने तद्विद्धैकादशी परदिने च द्वादशी तदा षष्टिदण्डात्मिकां विद्धामुपोष्य परदिने द्वादश्याः प्रथमपादमतीत्य पारयेत्। वैष्णवस्तु तत्रापि शुक्लपक्षे परामुपोष्य त्रयोदश्यां पारयेदिति।

सर्व्वेषां कृष्णैकादश्यां वैष्णवानां सपुत्त्राणां गृहस्थानामप्युपवासो नित्यः। ब्राह्मणस्य तु विशेषतो नित्यः। वैष्णवेतरेषान्तु तादृशानां हरिशयनमध्यवर्त्तिनीषु कृष्णैकादशीषूपवासो नित्यः। अपुत्त्रवतां गृहिणान्तु सर्व्वास्वेव नित्याधिकारः। काम्योपवासे तु अविशेषेणैव सर्व्वेषामधिकारः। नित्योपवासे तु रविसंक्रमादिदोषो नास्ति अष्टाब्दादधिकोऽमर्त्त्यो ह्यपूर्णाशीतिवत्सरो नित्याधिकारी विधवायास्तु सर्व्वास्वेव नित्याधिकारः।

अत्र मलमासादिदोषो नास्ति। यथा ज्योतिःपराशरः "अनादिदेवतार्च्चासु कालदोषो न विद्यते। नित्यस्वाध्याययोगे च तथैवैकादशीव्रते" एका० त० रघु०।

अत्र विशेषो हेमाद्रौ स्कान्दे। "एकादशी कला यत्र द्वादशी च क्षयं गता। नक्तं तत्र प्रकुर्व्वीत नोपवासं गृहाश्रमी"। अत्रोपवासविधायकसामान्यशास्त्रस्य नक्तविधायकविशेषशास्त्रेण बाधः। "एकादशी कलाप्येका द्वादशी यत्र लुप्यते। तत्रोपवासं कुर्व्वीत निष्कामो विष्णुतत्परः" तत्रैव स्कान्दम्। "तत्र पूर्व्वापरवचनपर्य्यालोचनया नक्तविधानं कामिनः काम्योपवासव्रतविषयं, निष्कामस्य, नित्योपवासार्थिनो विष्णुपरायणस्य गृहस्थस्याप्युपवासः" ए० त० रघु०। वाचस्पतिमते "निष्कामस्तु गृही कुर्य्यादुत्तरैकादशीं तथा। सकामस्तु तदा पूर्व्वां कुर्य्याद्बौधायनोऽब्रवीत्" विष्णुरहस्यात् सकामेन तत्र दशमीविद्धा कार्य्या निष्कामेण द्वादशीयुक्तोपोष्येति भेदः।

वेधविषये हेमाद्रौ तु सार्द्धघटिकात्रयोक्तिरष्टाविंशतिमानरात्रिविषया महत्तरास्तु रात्रीरपेक्ष्य चतस्रो घटिका ग्राह्या "निशः प्रान्ते तु यामार्द्धे देवतादित्रवादने। सारस्वतानध्ययने चारुणोदय उच्यते इति" स्मृतेरित्युक्तम्। हेमाद्रिमतानुसारेण नि० सि० एकादशीभेदा अष्टादशेत्युक्त्वा तद्व्यवस्था तत्रोक्ता यथा

"शुद्धा विद्धा द्वयो नन्दा त्रेधा न्यूनसमाधिकैः। षट्प्रकाराः पुनस्त्रेधा द्वादश्यूनसमाधिकाः" इत्यष्टादशैकादशीभेदाः तत्र शुद्धाधिकन्यूनद्वादशिका शुद्धाधिकसमद्वादशिका च सकामैः पूर्व्वा निःकामैरुत्तरा कार्य्या "प्रथमेऽहनि संपूर्णेति" पूर्व्वोक्तस्कान्दात् "ऊनद्वादशिकायां तु विष्णुप्रीतिकामैरुपवासद्वयं कार्य्यम् "संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्?। उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैरिति" इत्यवसिष्ठोक्तेः। "शुद्धन्यूना शुद्धाधिका शुद्धसमा विद्धन्यूना विद्धसमाधिकद्वादशिका च सर्व्वेषां परैवेति" हेमाद्रिः मदनरत्ने तु शुद्धाधिका परा। "संपूर्णैकादशी यत्रेति" पूर्व्वोक्तेः। "शुद्धा यदा समा हीना समा हीनाधिकोत्तरा। एकादशीमुपवसेत् शुद्धां वैष्णवोऽमपोति" स्कान्दात् अत्र शुद्धा एकादशी, उत्तरा द्वादशी "नचेदेकादशी विष्णाविति" नारदोक्तेश्च। यत्तु "अविद्धापि च विद्धा स्यादिति" पाद्मन्तच्छुद्धाधिकापरम्। यत्तु "संपूर्णैकादशी त्याज्या परतो द्वादशी यदि। उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम्" इत्यादि तद्वैष्णवपरम्। स्मार्त्तानां तु पूर्व्वैवेत्युक्तम्। विद्धन्यूना समद्वादशिका तु मुमुक्षूणां पुत्त्रवतां च परा अन्येषाञ्च पूर्व्वा। पुत्त्रवतोऽपि पूर्व्वेति मदनरत्ने। विद्धसमा समद्वादशिकोनद्वादशिका च मुमुक्षुभिः पराऽन्यैः पूर्व्वा कार्य्या। "दशमी मिश्रिता पूर्व्वा द्वादशी यदि लुप्यते। शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिरिति" व्यासोक्तेः मोक्षकाङ्क्षिग्रहणादन्येषां पूर्व्वैव। "पारणाहे न लभ्येत द्वादशी कलयापि चेत्। तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिरिति" ऋष्यशृङ्गोक्तेश्च। विद्धाधिका समद्वादशिका च सर्व्वेषां परैव माधवमते त्वत्र गृहिणः पूर्व्वा यतेरुत्तरा "सर्व्वत्रैकादशी कार्य्या द्वादशीमिश्रिता नरैः। प्रातर्भवतु वा मा वा यतो नित्यमुपोषणमिति" पाद्मोक्तेः। विद्धाधिका न्यूनद्वादशिका मोक्षपरैः विष्णुप्रीतिकामैः परा कार्य्या गृहस्थेन तु नक्तं कार्य्यम् "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। उपवासं न कुर्व्वीत पुत्त्रपौत्त्रसमन्वित" इति कौर्म्मे दिनक्षये उपवासनिषेधात्। "दशम्यैकादशी विद्धा द्वादशी च क्षयं गता। क्षीणा सा द्वादशी ज्ञेया नक्तं तु गृहिणः स्मृतमिति" वृद्धशातातपोक्तेश्च गृहिणः पूर्व्वत्रोपवासः। एकादश्याः शुद्धन्यूनत्वे शुद्धसमत्वे वा द्वादश्या न्यूनसमत्वयोरेकादश्यामुपवासः। यानि तु "दशम्यनुगता हन्ति द्वादशद्वादशीफलम्। धर्म्मापत्यधनायूंषि त्रयोदश्यां तु पारणमिति" कौर्म्मादीनि दशमीवेधत्रयोदशीपारणयोर्निषेधकानि तानि विहितभिन्नपराणि, अत्र मूलवचनानि तद्व्यवस्था चाकरे ज्ञेया। यत्तु कालहेमाद्रौ "बहुवाक्यविरोधेन सन्देहो जायते यदा। द्वादशी तु तदा ग्राह्या त्रयोदश्यां तु पारणमिति" मार्कण्डेयोक्तेः "सन्दिग्धेषु च वाक्येषु द्वादशीं समुपोषयेत्। विवादेषु च सर्व्वेषु द्वादश्यां समुपोषणम्। पारणं च त्रयोदश्यामाज्ञैव-का-

भक्ती मुने !" इति पाद्मोक्तेश्च वेधसन्देहे ज्योतिर्विदां वि प्रतिपत्तौ वा परा कार्य्येत्युक्तम् । तद्वैष्णवविषयम्"

"अथात्रोपयुक्तं किञ्चिदुच्यते । तत्र दशम्यामेकादशीयोगे दशमीमध्य एव भोजनम् । "एकादश्यां न भुञ्जीतेति" तस्या एव निमित्तत्वात्, "निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते" इति देवलोक्तेश्च । केचित्तु एकादशीव्रताङ्गत्वेन पूर्वेद्युरेकभक्तविधानाद्विधिस्पृष्टे च विषये निषेधानवकाशेन काम्यव्रताङ्गे न भोजननिषेध प्रवर्त्तते तेनैकादशीमध्येऽपि पूर्वदिने भोजनमित्याहुः" निर्ण० सि० । तत्रैकादशीदिवसे श्राद्धप्राप्तौ विशेषः नि० सि० उक्तः

माधवीये "उपवासो यदा नित्यः" इत्यादि प्रागुक्त कात्यायनवाक्यमाश्रित्य उपवासदिनेश्राद्धं कृत्वा श्राद्धशेष घ्राणं कार्य्यमिति व्यवस्थाप्योक्तम् । "हेमाद्र्यादिसर्वनिबन्धेष्वेवम् । एतेनैकादशीनिमित्तकं श्राद्धं द्वादश्यां कार्य्यमिति" वदन्तः परास्ताः किञ्च, महालये । "स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रतीति, श्रुतं षोडशत्वम् । पौषैकादश्यां च मन्वादिश्राद्धं, क्षयाहापरिज्ञाने च कृष्णैकादश्यां विहितं श्राद्धं बाधितमेव स्यात् । यदपि स्मृतिचन्द्रिकायां पठन्ति । "अन्नाश्रितानि पापानि मद्भोक्तुर्दातुरेव वा । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समा" इति । तस्यापि रागप्राप्तभुजिगोचरस्य वैधं श्राद्धगोचरयतां महत्साहसमित्युक्तम् । योऽपि "अकृतश्राद्धनिचया जलपिण्डविनाकृताः" इति बृहन्नारदीये एकादश्यां श्राद्धादिनिषेधः स मातापितृभिन्नविषयः पूर्ववाक्ये तदुपक्रमात्"

हरिभक्तिविलासानुसारिणस्तु वैष्णवदीक्षावतां तद्दिने श्राद्धनिषेधः द्वादश्यां तत् करणीयमिति वदन्ति यथा "अथोपवासदिने श्राद्धनिषेधः । पाद्मे पुष्करखण्डे "एकादश्यां यदा राम ! श्राद्धं नैमित्तिकं भवेत् । तद्दिनं तु परित्यज्य द्वादश्यां श्राद्धमाचरेत्" । तत्रैवोत्तरखण्डे "एकादश्यान्तु प्राप्तायां मातापित्रोर्मृताहनि । द्वादश्यां तत् प्रदातव्यं नोपवासदिने क्वचित् । गर्हितान्नं नचाश्नन्ति पितरश्च दिवौकसः" । स्कान्दे "एकादशी यदा नित्या श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्य्यात् द्वादश्यां श्राद्धमाचरेत्" । ब्रह्मवैवर्त्ते । "ये कुर्व्वन्ति महीपाल ! श्राद्धं त्वेकादशीदिने । त्रयस्ते नरकं यान्ति दाता भोक्ता परेतकः" । हरिभक्ति० धृतवाक्यानि ।

"एकादश्यां यदा रामेत्यादिना उपवासदिने श्राद्धं निषिद्धम् । यच्च स्कान्दादौ "श्राद्धदिनं समासाद्य उपवासो यदा भवेत् । तदा कृत्वा तु वै श्राद्धं भुक्तशेषन्तु यद्भवेत् । तत् सर्व्वं दक्षिणे पाणौ गृहीत्वाघ्रं शिखिध्वज ! । अवजिघ्रेदनेनाथ भवेत् श्राद्धं शिखिध्वज ! । पितॄणां तृप्तिदं तात ! व्रतभङ्गो न विद्यते" इत्यादि । तच्च वैष्णवेतरविषयं मन्तव्यम् वैष्णवपितॄणामपि श्रीविष्णुदिने श्राद्धभक्षणायोगादिति" तट्टीका ।

अत्रेदं बोध्यं स्मृतिचन्द्रिकास्थवचनेन हरिभक्तिविलासधृतवचनचतुष्टयेन च उपवासदिने श्राद्धनिषेधात् प्रागुक्त कात्यायनस्कान्दादिवचनेन श्राद्धशेषभोजनासम्भवेऽपि आघ्राणमात्राङ्गकतया श्राद्धविधानात् परस्परं विरोधयोर्विरोधपरिहाराय कर्त्तृभेदविषयकत्वमवश्यं कल्पनीयं तद्विना तदपरिहारात् तत्र वैष्णवेतरविषतया आघ्राणाङ्गश्राद्धस्य, वैष्णवविषयकतया च श्राद्धनिषेधस्य कल्पनं युक्तं न च विनिगमनाविरहेण वैपरीत्यं शङ्कनीयं वैष्णवस्य सत्वगुणाधिकविष्णोः सेवकत्वेन सात्त्विकपुराणोक्तविधेरेव ग्राह्यतया सात्त्विकपुराणेषु च पाद्मस्य कीर्त्तनात् वैष्णवैः पाद्मोक्तविधेरेव ग्राह्यतौचित्येन स्कान्दस्य तामसत्वेन तदुक्तविधेस्तदितरैर्ग्राह्यतौचित्येन च विनिगमनासम्भवात्" पाद्मस्कान्दयोर्यथा सात्त्विकतामसत्वं तथोक्तम्"

मात्स्यं कौर्म्मं तथा लैङ्गं शैवं स्कान्दं तथैव च । आग्नेयञ्च षडेतानि तामसानि निबोधत । वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि षट्" पद्मपु० । एवञ्च सति पाद्मवाक्यस्य वैष्णवविषयकत्वनिश्चये स्कान्दकात्यायनादिवाक्यस्य तदितरविषयत्वं निर्णीयते । निर्णयसिन्धुकृता श्राद्धनिषेधवाक्यस्य मातापितृश्राद्धव्यतिरिक्तविषयकत्वं यत्कल्पितं तच्च मनोरथमं पाद्मोक्तवाक्ये गर्हितान्नं न गृह्णन्ती पितर इति पितृमात्रस्यापहृष्टोक्तेः सर्व्वश्राद्धस्यैव निषेधात् मातापित्रोर्मृताहनीत्यादिपाद्मोत्तरवचने तयोरपि श्राद्धनिषेधात् । तेन कैमुतिकन्यायेनेतरश्राद्धस्यापि निषेधः सूपपन्न एव । किञ्च शेषभोजननिमित्तकालयोरुभयोरप्यङ्गतया स्मार्त्तानां शेषभोजनरूपाङ्गबाधः वैष्णवानां तु कालबाध इत्युभयोरपि एकतरबाधस्य शास्त्रबोधिततया न दूषकत्वम् । स्मार्त्तैरपि अस्तोदयादिनिमित्तकोपवासदिने श्राद्धं निषिध्य परदिनात् परेद्युः श्राद्धविधानेन कालरूपाङ्गबाधस्य तत्र स्वीकारात् तद्-

त्वापि एकादश्युपवासदिनसम्भविकृताह्नरूपकालबाधेनोत्तरदिने श्राद्धविधानेनावैधम्यम्। तथा च "यस्तोदये यदा चन्द्रे प्रत्यब्दं समुपस्थितम्। तद्दिने चोपवासः स्यात् प्रत्यब्दं तु परेऽहनि" "यस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि। प्रत्यब्दं तु तदा कार्य्यं परेऽहन्येव सर्व्वदा" नि० सि० धृतवचनैः निमित्तकालबाधेनापरेद्युः श्राद्धकालः। एतेन एकादशीव्रतदिवसे श्राद्धनिषेधे विप्रपतितश्राद्धस्य कृष्णैकादश्यां विधानम् अश्वयुक्कृष्णपक्षनिमित्तकषोडश-श्राद्धविधानस्य निर्विषयं स्यादित्यापत्तिरपास्ता विषयभेदेन व्यवस्थासम्भवात्। तथाहि विप्रपतितश्राद्धे श्राद्धकालव्याप्यैकादशीतिथिमात्रस्य निमित्तता तस्य व्रतदिवसात् पूर्व्वेद्युरपि कदाचित् सम्भवेन तद्रूपविषयलाभेन निर्विषयत्वाभावात् क्वचिदेकदिने तत्प्रसक्तावपि सामान्यमुखेन प्रवृत्तशास्त्रस्य उपवासदिनव्यतिरिक्ततिथिखण्डविषयकत्वकल्पनेनाविरोधः। किञ्चात्र कर्त्तृभेदेनव्यवस्थाप्युपपद्यते वैष्णवेतरसपुत्रगृहस्थस्य कृष्णैकादश्युपवासस्य नित्यत्वाभावेन तत्परं श्राद्धविधानं, वैष्णवविषयः श्राद्धनिषेध इति कर्त्तृभेदसम्भवात्। अश्वयुक्कृष्णपक्षनिमित्तकषोडशश्राद्धविधानमपि न निर्विषयं तिथिह्रासादिवशादेकसावनदिवसे तत्रविहितश्राद्धद्वयवद्वैष्णवैः द्वादश्यां श्राद्धद्वयकरणेन षोडशसंख्यापूर्त्तिसम्भवात्। पौषैकाकाशोक्तपमन्वादिनिमित्तकश्राद्धस्यापि नैमित्तिकतया मन्वादिकृत्यत्वेन पूर्व्वाह्णे विहितत्वेन उपवासदिन एव तत्खण्डस्यैव लाभसम्भवेन पूर्व्वदिवसे च तदसम्भवेन विरोधप्रसङ्गेऽपि वैष्णवानां द्वादश्यामेव कृताह्नश्राद्धस्यैव तस्य कर्त्तव्यता वैष्णवेतरगृहस्थस्य तद्दिने कर्त्तव्यतेति कर्त्तृभेदात् व्यवस्थाया नानुपपत्तिः।

पाद्मे नैमित्तिकमित्युक्तेः ब्रह्मवैवर्त्ते परेतकृत्युक्तेश्च आद्यश्राद्धमपि एकादश्युपवासदिवसे वैष्णवैर्न कर्त्तव्यमेव। "एकोद्दिष्टं तु यत् श्राद्धं तन्नैमित्तिकमुच्यते। तदप्यदैविकं कार्य्यमयुग्मानाशयेद्द्विजान्" इति भविष्य पु० एकोद्दिष्टस्य नैमित्तिकत्वेन परिभाषितत्वात् प्रेतोद्देश्यकश्राद्धस्य च एकोद्दिष्टत्वाच्च तस्यापि तद्दिने निषेध एव प्रेतश्राद्धस्य यथैकोद्दिष्टत्वं तथैकोद्दिष्टशब्दे वक्ष्यते इत्थं स्मार्त्तवैष्णवकर्त्तृभेदात् व्यवस्थाभेदः।

**एकादशगुरु** पु० एकादशमिता गुरवः। "आचार्य्यश्च पिता ज्योष्ठोभ्राता चैव महीपतिः। मातुलः श्वशुरस्त्राता मातामहपितामहौ। वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवोमताः" इति देवलोक्तेषु आचार्य्यादिषु। त्राता त्राणकर्त्ता। वर्णज्येष्ठः क्षत्रियादीनां ब्राह्मणादिः। "अनेनैकादश गुरवःसङ्केतिताः। कथमनेकेषामेकगुरुशब्दवाच्यत्वमेकस्य प्रवृत्तिनिमित्तस्याभावात् इति चेन्न "गुरुरनुगन्तव्यः" इत्यादि श्रुत्या सदापरितोषणीयत्वादि धर्म्मात्मकस्योपाधित्वात् यद्यप्याचार्य्यस्यैव परितोषणीयता श्रूयते तथापि तदन्येष्वतिदिश्यते अतोऽतिदिष्टधर्म्मोऽप्येकपदप्रवृत्तावुपाधिर्भवति इष्टशब्दप्रवृत्ताविव तद्धर्म्मसंबन्धः शास्त्रीयगुरुपदप्रवृत्तिविषयत्वं वोपाधिर्भव तु विशेषाय्यह्रादच्चादिशब्दवदनेकार्थतैव कोदोषः" प्रा० वि०। अयञ्च शब्द एकादशिनृशब्दात् पूर्व्वं बोध्यः प्रमादात्तत्र न लिखितोऽतोऽत्र लिखितः।

**एकादशराशिक** न० एकादश राशीनधिकृत्य प्रवृत्तं गणनम् कन्। लीलावत्युक्ते गणनप्रकारभेदे तत्प्रकारश्च तत्रैव यथा "पञ्चसप्तनवराशिकादिकेऽन्योन्यपक्षनयनं फलच्छिदाम्। संविधाय बहुराशिजे बधे स्वल्पराशिबधभाजिते फलम्" इत्युक्तदिशा फलानयनम्। तत्रोदा० "पिण्डे येऽर्कमिताङ्गुलाः किल चतुर्वर्गाङ्गुला विस्तृतो पट्टादीर्घतया चतुर्द्दश कराख्त्रिंशन्मिताः" "एता विस्तृतिदीर्घपिण्डमितयो येषां चतुर्ज्जिताः" इति नवराशिके उक्ता।

पि० १२ ८
वि० १६ १२
दी० १४ १०
मि० ३० १४

"पट्टांशे प्रथमोदितप्रमितयोगव्यूतिमात्रे गतास्तेषामानमनाय चेच्छकटिनां द्रम्माष्टकं भाटकम्। अन्ये ये तदनन्तरं निगदितामाने चतुर्ज्जितास्तेषां का भवतीति भाटकमितिर्गव्यूतिषट्के वद"। अत्र फलस्येतरपक्षनयने तस्य बहुराशिकत्वं तद्रहितपक्षस्य स्वल्पराशिता तेन समानाङ्केनोभयपक्षयोरपवर्त्तने फलसहितबहुराशिपक्षस्याङ्कस्य परस्परगुणने जाताः ४८अङ्काः फलरहितपक्षाङ्कानां परस्परघातनिष्पन्नेन ६ षड़ङ्केन भाजिते लब्धाः ८अष्टौ अङ्कास्तेन अष्ट द्रम्मास्तत्र भाटकमितिरिति तत्र निश्चयः। अत्रेदमवधेयम् फलच्छिदामित्युक्तावपि फलच्छेदभिन्नराशिच्छेदस्यैव अन्योन्यपक्षनयनम् न तु फलच्छेदस्येति। अयञ्च शब्दः एकादशद्वारशब्दात् परं बोध्यः प्रमादात्तत्र न लिखितोऽतोऽत्रोक्तः।

वि० १२ ८
वि० १६ १२
दी० १४ १०
मि० ३० १४
म० १ ६
भा० ८ ०

**एकादि** त्रि० एक आदिर्यस्य। १एकत्वसंख्यान्वितमारभ्य परार्द्धान्तसंख्यायुक्ते। २तत्प्रकारके रेखागणितविशेषप्रकारे-

अङ्के च । अङ्काश्च नव तेषामेव स्थानविशेषयोगभेदेन विभिन्नसंख्याज्ञापकत्वम् । अथ एकाद्यङ्कैः यद्यत्संख्यान्विताः ज्ञाप्यन्ते तदुच्यते । १ इत्यङ्केन एकः एवं २, द्वौ, ३, त्रयः, ४, चत्वारः ५, पञ्च ६, षट् ७, सप्त ८, अष्टौ ९, नव १०, दश । दशानामेकादिनवभिरङ्कैराधिक्ये ११, १२, १३, १४, १५, १६, १७, १८, १९ इत्येतेऽङ्काः क्रमेण एकादशद्वादशत्रयोदशचतुर्दशपञ्चदशषोड़शसप्तदशाष्टादशनवदशानां ज्ञापकाः । दशाङ्कस्य च द्व्यादिनवभिर्गुणने क्रमेण २०, ३०, ४०, ५० ६०, ७०, ८०, ९० एतेऽङ्काः क्रमेण विंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिसंख्यान्वितानां ज्ञापकाः । एषाञ्च एकादिकनवभिराधिक्ये २१, २२, २३, २४, २५, २६, २७, २८, २९, इत्येतेऽङ्का एकत्रिंशत्यादीनां ज्ञापकाः । एवं ३१ इत्यादयोऽङ्का एकत्रिंशदादीनां ज्ञापकाः । दशभिर्गुणिते दशाङ्के १०० इत्यङ्कः शतस्य ज्ञापकः । क्रमेण दशोत्तरगुणने "एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः । अर्बुदमब्जं खर्व्वनिखर्व्वं महापद्मशङ्कवस्तस्मात् । जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणोत्तराः संज्ञाः संख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्व्वैः" इति लीलावत्युक्तदिशावसेयम् । संक्षेपेण तत्रैकाद्यङ्कानां क्रमशः स्थितानां योगजसंख्याज्ञानार्थमुपायान्तरमुक्तं तत्रैव यथा "एकादिनवानामङ्कानां योगे का संख्येति प्रश्ने "सैकपदघ्नपदार्द्धमथैकाद्यङ्कयुतिः किल सङ्कलिताख्या" इत्युक्तरीत्या पृष्टसंख्यापदं एकयुक्तेन तेन १० अङ्केनाहतं पृष्ठाङ्कार्द्धम् ९/२ ४५ सङ्कलितसंख्या । तथाचैकादिनवाङ्कानां योगे ४५ संख्या भवतीति निश्चय एवमन्यत्राप्यूह्यम् । "एकाद्येकोत्तरा अङ्का व्यस्ता भाज्याः क्रमस्थितैः" लीला० एकादिसंख्यानां वाचकाश्च कतिचित् शब्दाः कविकल्पलतायां संगृहीताः यथा ।

"एको ब्रह्मेन्द्रहर्य्यश्वगजाद्यदन्तशुक्रटक् १ । द्वयं पक्षनदीकूलासिधारारामनन्दनौ २ । त्रयं कालोऽग्निभुवनं गङ्गामार्गशिवदृग्गुणाः । धीवारेखा कालिदासकाव्यम् स्थूलशिखा वलिः । सन्ध्यापुरपुष्करानि रामविष्णुपदं वयः ३ । चत्वारि वेदब्रह्मास्यवर्णाश्रिहरिबाहवः । स्वर्द्दन्तिदन्तसेनाङ्गोपाययामयुगाश्रमाः ४ । पञ्च पाण्डवरुद्रास्येन्द्रियसर्व्वव्रताग्नयः । महापापमहाभूतमहाकाव्यमहामखाः । शुराणलक्षणान्यङ्गानिलकर्म्मेन्द्रियार्थकाः ५ । षट् वज्रकोणत्रिशिरोनेत्रतर्काङ्गदर्शनम् । चक्रवर्त्तिमहासेनवदनानि गुणा रसाः ६ । सप्त पातालभुवनमुनिद्वीपार्कवाजिनः । वाराब्धिच्छन्दःराज्याङ्गव्रीहिर्वङ्गिशिखाद्रयः ७ । अष्टौ योगाङ्गवस्वीशमूर्त्तिदिग्गजसिद्धयः । ब्रह्मश्रुतिव्याकरणदिक्पालाहिकुलाचलाः ८ । नवाङ्गद्वारभूखण्डक्षत्तरावणमस्तकाः । व्याघ्रीस्तनसुराकुण्डसेव्यच्छुरसपहाः ९ । दश हस्ताङ्गुलीशम्भुबाहुरावणमौलयः । कृष्णावतारदिग्विश्वेदेवावस्थेन्दुवाजिनः १० । एकादश महादेवाः सेनाश्च कुरुभूपतेः ११ । द्वादशार्कमासराशिसंक्रान्तिगुहबाहवः । शारीकोष्ठकसेनानीनेत्रच्छायापतिमण्डलाः १२ । त्रयोदश सुस्ताम्बूलगुणा १३ अथ चतुर्दश । विद्यामनुत्रिदिवराड्भुवनभ्रुवतारकाः १४ । तिथयः स्युः पञ्चदश १५ षोडशेन्दुकलात्मिकाः १६ । अष्टादश द्वीपविद्यापुराणस्मृतिधान्यकम् १८ । विंशतीरावणभुजाङ्गुलयो २० ऽथ शतं यथा । धार्त्तराष्ट्राः शतभिषक्तारकाः पुरुषायुषम् । रावणाङ्गुल्यब्जदलशक्रयज्ञाब्धियोजनम् १०० । सहस्रं जाह्नवीवर्त्मशेषशीर्षाम्बुजच्छदम् । रविवाणार्ज्जुनकरा वेदशाखेन्द्रदृष्टयः" । १००० ।

शा० ति० केषाञ्चित् संख्याभेदान्विततयोत्पत्तिकथनेन तेषां तत्तत्संख्याबोधकत्वं सूचितं यथा "हंसवर्णौ परात्मानौ शब्दार्थौ वासरक्षपे । सृजत्येषा परा देवी तदा प्रकृतिपूरुषौ । यद्यदन्यज्जगत्यस्मिन् युग्मं तत्तदजायत २ । त्रिगुणीकृतसर्व्वाङ्गी चिद्रूपा शिवगेहिनी । प्रसूते त्रैपुरं मन्त्रम्" इत्युपक्रम्य "लोकत्रयगुणत्रये । धामत्रयं सा वेदानां त्रयं वर्णत्रयं शुभम् । त्रिपुष्करं स्वरान्देवीब्रह्मादीनां त्रयं तथा । वह्निकालत्रयं शक्तित्रयं वृत्तित्रयं महत् । नाडीत्रयं त्रिवर्गं सा यद्यदन्यत्त्रिधा मतम् । चतुःप्रकारगुणिता शाम्भवी शर्म्मदायिनी" इत्युपक्रम्य "चतुरः सागरानन्तःकरणानां चतुष्टयम् । स्वच्छादींश्चतुरोभावान् विष्णोर्मूर्त्तिचतुष्टयम् । चतुष्टयं गणेशानामात्मादीनां चतुष्टयम् । उड्डियानादिकं पीठं धर्म्मादीनां चतुष्टयम् । दमकादीन् गजान् देवी यद्यदन्यच्चतुष्टयम् ४ । पञ्चधा गुणिता पत्नी शम्भोः सर्व्वार्थसाधिनी । पञ्चरत्नं महादेवी सर्व्वकामफलप्रदम् । पञ्चाक्षरं महेशस्य पञ्चवर्णान् गरुत्मतः । सम्मोहनान् पञ्च वाणान् कामान् पञ्च सुरद्रुमान् । पञ्च प्राणादिकान् वायून् पञ्च वर्णान् महेशितुः । मूर्त्तीः पञ्च, कलाः पञ्च पञ्च ब्रह्मऋचः क्रमात् । सृजत्येषा परा शक्तिर्देवेदार्थरूपिणी ५ । षोढा संगुणिता देवी धत्ते मन्त्रं षडक्षरम् । ऋतून् वसन्तप्रमुखाना-

निरूपं जन्मत्रयम् । वाजपेयोपलक्षितं कर्मत्रयम् तच्च वेदभेदात् द्विजभेदाच्च त्रयम् । त्रीण्येव प्रातर्मध्याह्नतृतीयसवनानि । त्रयो लोकाः स्वर्गो नरकं भूश्चेति भोगभूमयः । त्रीणि ज्योतींषि जाग्रदाद्यवस्थात्रयम् । ३ । निकेतमाश्रमम् यज्ञमिह ज्ञानयज्ञं तेन चातुर्वर्ण्यमध्ये शूद्रस्यापि तत्राधिकारः । दिशः विराट्सूत्रान्तर्यामितुर्य्यसाक्षात्काररूपाः चतस्रः दिशः । वाङ्मयप्रणवस्य वर्णचतुष्टयम् अकारउकारोमकारः अर्द्धमात्रा इत्येवं चतुष्टयम् । चतुष्पदा परा पश्यन्ती मध्यमा वैखरीति भेदात् गीर्वाक् चतुष्पदा ४ । पञ्चाग्नयः गार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्याख्याः । पञ्चपदाऽष्टाक्षरैः पादैः पङ्क्तिः छन्दः पञ्चपदा । यज्ञाः पञ्च ब्रह्मर्षिपितृभूतयज्ञाः पञ्च स्मार्त्ताः, अग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यानि पशुः सोम इति श्रौता वा पञ्च । अप्सु शरीराकारपरिणतासु जलप्रधानासु मात्रासु सरति गच्छतीत्यप्सरा: चितिः पञ्चचूडा तत्तद्विषयाकारतया प्रमाणविपर्य्ययविकल्पनिद्रास्मृतिरूपवृत्तिपञ्चकसारूप्येण शिखापञ्चकवती पञ्चानां विषयरूपस्रोतसां समाहारः पञ्चनदम् ५ षट् आधाने गा इति शेषः । मनस इन्द्रियत्वमभ्युपेत्य षट्कोपपत्तिः साद्यस्का यज्ञविशेषाः ६ । "पाश्यारण्याः पशवश्चतुर्दश गौरविरजोऽश्वोऽश्वतरोगर्दभोमनुष्यश्चेति सप्त ग्राम्याः महिषवानरऋक्षसरीसृपरुरुपृषन्मृगाश्चेति सप्तारण्याः" पैठीनसुक्ताः । सप्त छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीसमाख्यानि । सप्तर्षयः सप्त प्राणाः "प्राणा वै ऋषय" इति श्रुतेः मनोबुद्धिसहिताः प्राणादयः पञ्च सप्तेत्यर्थः । सप्त अर्हणानि अर्हणीयानि सुखानि पञ्चभिरिन्द्रियैः मनोबुद्धिभ्यां प्राप्याणि सुखानीतिभेदात् सुखानि सप्त । ७ "अष्टौ ग्रहा अष्टावतिग्रहाः" श्रुतेः शाणाः शणनिर्मिता गौण्यः आवपनविशेषा इव इन्द्रियप्रवेशयोग्याः अष्टौ । ८ । पितृणामिष्टौ "उशन्तस्त्वा निधीमहीति" ऋक् त्रिरभ्यस्ता प्रत्येकं त्रिसमित्का नव सामधेन्योऽग्निसमिन्धनार्था ऋचः सम्पद्यन्ते । तथा एका प्रकृतिरेव त्रिगुणा एकद्विगुणप्रधानभावविमर्द्दैः प्रत्येकं त्रिविधा नवैव संपद्यते तथा नवैवाङ्काः क्रमस्थानभेदात् यथेष्टसंख्यावाचिनो भवन्ति ९ । दिश उपदेष्टारः दाशाः तत्त्वज्ञापकाः । अर्हास्तत्त्वाधिकारिणश्च दश १० । इन्द्रियाणि मनसा सह ज्ञानकर्म्मेन्द्रियाणि तेषां विषयाः तदुपहजाविकाराश्च एकादश ११ । प्राकृतयज्ञः द्वादशाहसाध्यत्वात् द्वादशाहः १२ । त्रयोदशद्वीपवती भूरादिषट्केन पातालसप्तकेन युक्ता च मध्यस्था मही त्रयोदशद्वीपवती १३ । एवमेकादिसंख्याया बोधकत्वं तत्तत्पदार्थानाम् दर्शितम् । अन्ये च शब्दाः शास्त्रान्तरेषु एकादिसंख्याबोधकतया प्रयुज्यन्ते ते च शब्दाः पूर्व्वदर्शितशब्दाश्च यथा तत्तत्संख्य बोधका भवन्ति तथा दर्श्यन्ते तत्र सर्व्वत्र शब्दतदर्थयोरभेदात् स्ववाच्यार्थगतसंख्यातुल्यसंख्याबोधकत्वेन स्ववाच्यार्थसंख्यापूर्ण्यसंख्यातुल्यसंख्याबोधकत्वेन वा तथात्वं बोध्यम् । सर्वेषाञ्च क्वचित् तत्तत्संख्यापूरणवाचकतापि "द्युम्नाग्नी क्षतभूतानि षण्मुनी वसुरन्ध्रयोः" स्मृतौ द्युम्नादिभिः तत्संख्यापूरणद्वितीयादीनां बोधनात् ।

१ तत्रादौ एकत्वबोधकाः । कवि०ल० । ब्रह्मणः "एकमेवाद्वितीयं ब्रह्मेति" श्रुतेरेकत्वात्तथात्वम् विरञ्चिवाचिब्रह्मणोऽप्येकमहासर्गे एकत्वात्तथा क्ष्मेन्दिन्द्रेति पाठे भूमिचन्द्रयोरेकत्वात्तथा । इन्द्रहस्तिन ऐरावतस्य तदश्वस्योच्चैःश्रवसश्चैकत्वात् तथा । गणेशदन्तस्य शुक्रनेत्रस्य चैकत्वात् तथा एवं काकनेत्रस्यापि । भा०व० उक्ताः । स्वप्रकाशस्य अन्यप्रकाशकस्य सूर्य्यस्याग्नेश्च यमस्य सर्व्वनियन्तुरीश्वरस्य, इन्द्रपदाभिधेयस्य तथा "इन्द्रोमायाभिः पुरुरूप ईयते इति" श्रुतेरीश्वरस्येन्द्रपदवाच्यत्वात् ।

रूपम् वैशेषिकमतसिद्धचतुर्विंशतिगुणेषु आद्यत्वात् तथा । "भजेच्छिदोंऽशैरथ तैर्विमिश्रैः रूपं भजेत् स्यात् परिपूर्त्तिकालः" लीला० । अश्विनी तस्याः तारास्वाद्यत्वात् अभेदात्तदधिपाश्विशब्दोऽपि । तस्य स्वपरत्वे द्वित्वबोधकतेति भेदः । उक्था तस्या एकाक्षरपादकत्वात् प्रधानवाचो प्रकृतिशब्दस्तथा "अजामेकां लोहितशुक्लकृष्णाम्" इत्यादिश्रुतेस्तदर्थस्यैकत्वात् ।

२ द्वित्वबोधकाः । कवि०ल० उक्ताः । चान्द्रमासघटकयोः पक्षिच्छदरूपयोर्वा पक्षयोः, नदीकूलयोः, असिधारयोः, कुशलरूपयोर्दीर्घरघिपुलयोश्च तथा । शा० ति०" उक्ताः । हंस इति वर्णौ जीवपरमरूपौ परात्मानौ शब्दार्थौ दिनरात्री स्त्रीपुरुषौ, परस्परविरोधिगुणरूपा शीतोष्णसुखदुःखादयश्च तथा । भा०व० उक्ताः । इन्द्राग्नी सत्वजीवौ नारदपर्व्वतौ अश्विनौ रथचक्रे च तथा । एवम् भरणी तारासु तस्या द्वितीयत्वात् तदभेदात् तदधिपयमोऽपि । यमशब्दस्य सर्वनियन्त्रीश्वरपरत्वे एकत्वस्य, यमजपरत्वे द्वित्वस्य बोधाकृत-

मोदादीन् गणाधिपान् । कोणानूर्मीन् रसान् शक्तीडाकिन्याद्याः षडध्वनः । यन्त्रं षड्गुणितं शक्तेः षडाधारानजीजनत् । षड्विधं यज्जगत्यस्मिन् सर्वन्तु परमेश्वरीदं । सप्तधा गुणिता नित्या शङ्कराद्धशरीरिणी । सप्तार्णं त्रिपुरामन्त्रं सप्तवर्णं विनायकम् । सप्तकं व्याहृतीनां सा सप्तवर्णं सुदर्शनम् । लोकानद्रीन् स्वरान् धातून् मुनीन् द्वीपान् ग्रहानपि । समिधः सप्त संख्याताः सप्तजिह्वा हविर्भुजः । अन्यत् सप्तविधं यद्यत्तदस्याः समजायत७ । अष्टधा गुणिता शक्तिः शैवमष्टाक्षरद्वयम् । गन्धाष्टकं शुभं देवीदेवानां हृदयङ्गमम् । ब्राह्म्याद्याभैरवान् सर्वान् मूर्त्तीरष्टौ स्वनपि । अष्टपीठं महादेव्या अष्टाष्टकसमन्वितम् । अष्टौ सा प्रकृतीर्विघ्नान् वक्रतुण्डादिकान् क्रमात् । अणिमादिगुणान्नागान् वज्रेमूर्त्तीर्येमादिकान् । अष्टात्मकं जगत्यन्यत् सर्वं वितनुते तदा ८ । गुणिता नवधा नित्या सूते मन्त्रं नवात्मकम् । नवकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी । नवकं पीठशक्तीनां शृङ्गारादीन् रसानपि । माणिक्यादीनि रत्नानि नववर्गयुतानि सा । नवकं प्राणदूतीनां मण्डलं नवकं शुभम् । यद्यन्नवात्मकं लोके सर्वमस्यास्तदद्भुत ९ । दशधा गुणिता शम्भोर्भामिनो भवदुःखहा । दशकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी । नाडीनां दशकं विष्णोरवतारान् दश क्रमात् । दशकं लोकपालानां यद्यन्यत्तकत्पयत्यसौ१० । एकादश क्रमात् संविद् गुणिता सा जगन्मयी । रुद्रैकादशनामाद्या शक्तेरेकादशाक्षरम्११ । समुद्गिरति सर्वात्मा गुणिता द्वादश क्रमात् । राशीन् मासान् हरेर्मूर्त्तीर्यन्त्रं सा द्वादशात्मकम् । अन्यदेताद्दृशं सर्वं यत् तदस्याव्यजायत" ।

अत्र च यो यः पदार्थः यद्यत्संख्यान्विततया उत्पन्नः स तःस्वगतसंख्यातुल्यसंख्यासूचकः भवति च निदर्शित पदार्थानां तत्तत्संख्यायुक्ततया लोकशास्त्रप्रसिद्धिः इत्यत स्तत्तच्छब्दानां तत्तत्संख्यास्मारकत्वम् । तथाचैकविधसंख्यागुणितप्रकृतिकार्य्यत्वेन तुल्यसंख्याबोधकत्वम् । अन्येऽपि केचित् संख्याविशेषसूचकाः भा० व० १२४ अ० दर्शिता यथा । "वन्द्युवा च । एक एवाग्निर्बहुधा समिध्यत एकः सूर्य्यः सर्व्वमिदं विभाति । एको वीरो देवराजोऽरिहन्ता यमः पितॄणामीश्वरश्चैक एव१ । अष्टावक्र उवाच । द्वाविन्द्राग्नी चरतो वै सखायौ द्वौ देवर्षी नारदपर्व्वतौ च । द्वावश्विनौ द्वे रथस्यापि चक्रे भार्य्यापती द्वौ विहितौ विधात्रा२ । वन्द्युवाच । त्रिः सूयते कर्म्मणा वै प्रजेयं त्रयीयुक्ता वाजपेयं वहन्ति । अध्वर्य्यवस्त्रिसवनानि तन्वते त्रयो लोकास्त्रीणि ज्योतींषि चाहुः३ । अष्टावक्र उवाच । चतुष्टयं ब्राह्मणानां निकेतं चत्वारो वर्णा यज्ञमिमं वहन्ति । दिशश्चतस्रो वर्णचतुष्टयञ्च चतुष्पदा गौरपि शश्वदुक्ता४ । वन्द्युवाच । पञ्चाग्नयः पञ्चपदा च पङ्क्तिर्यज्ञाः पञ्चैवाप्यथ पञ्चेन्द्रियाणि । दृष्टा वेदे पञ्चचूडाश्चराश्च लोके ख्यातं पञ्चनदञ्च पुण्यम्५ । अष्टावक्र उवाच । षडाधाने दक्षिणामाहुरेके षड् वै चेमे ऋतवः कालचक्रम् । षडिन्द्रियाण्युत षट् कृत्तिकाश्च षट् साद्यस्काः सर्व्ववेदेषु दृष्टाः६ । वन्द्युवाच सप्त ग्राम्याः पशवः सप्त वन्याः सप्त च्छन्दांसि क्रतुमेकं वहन्ति । सप्तर्षयः सप्त चार्घ्यर्हणानि सप्ततन्त्री प्रथिता चैव वीणा७ । अष्टावक्र उवाच । अष्टौ शाणाः शतमानं वहन्ति तथाष्टपादः शरभः सिंहघाती । अष्टौ वसून् शुश्रुम देवतासु यूपश्चाष्टास्रिर्विहितः सर्व्वयज्ञे८ । वन्द्युवाच । नवैवोक्ताः सामधेन्यः पितॄणां तथा प्राहुर्नवयोगं विसर्गम् । नवाक्षरा बृहती संप्रदिष्टा नवाङ्कयोगो गणनामेति शश्वत्९ । अष्टावक्र उवाच । दिशो दशोक्ताः पुरुषस्य लोके सहस्रमाहुर्दशपूर्णं शतानि । दशैव मासान् बिभ्रति गर्भवत्यो दशैरका दश दाशा दशार्हाः१० । वन्द्युवाच । एकादशैकादशिनः पशूनामेकादशैवात्र भवन्ति यूपाः । एकादश प्राणभृतां विकारा एकादशोक्ता दिवि देवेषु रुद्राः११ । अष्टावक्र उवाच । संवत्सरं द्वादशमासमाहुर्जगत्याः पादो द्वादशैवाक्षराणि । द्वादशाहः प्राकृतयज्ञ उक्तो द्वादशादित्यान् कथयन्तीह धीराः१२ । वन्द्युवाच । त्रयोदशी तिथिरुक्ता प्रशस्ता त्रयोदशद्वीपवती मही च । लोमश उवाच । एतावदुक्त्वा विरराम वन्दी श्लोकस्यार्द्धं व्याजहाराष्टावक्रः । अष्टावक्र उवाच । त्रयोदशाहानि ससार केशी त्रयोदशादीन्यतिछन्दांसि चाहुः" १३ अस्य नीलकण्ठोक्तदिशाव्याख्या यथा एकोऽग्निः सूर्य्यो वा इतराप्रकाश्योऽन्यप्रकाशकश्च । एवं देवानामिन्द्रियाणां राजा प्रधानभूतः अरिहन्ता पराभिभूतत्त्वात्तराभिभावकः । यमः सर्वेन्द्रियाणां नियन्ता पितॄणां विषयोपहारद्वारा पालयितॄणामिन्द्रियाणाम् ईश्वरो भोक्ता कर्त्ता प्रधानभूत एक एव १ । सखायौ सत्वजीवौ जीवेश्वरौ वा । २ पुण्येन देवस्थावरमनुष्यरूपं, पापेन नारकस्थावरतिर्य्यग्यो-

रत्वे अष्टत्वस्य बोधकतेति भेदः। प्रेतराजपरकालशब्द-स्यापि तथात्वम्। तस्य समयपरत्वे त्रित्वस्य, शिवपरत्वे आर्द्राधिपत्वात् षट्कस्येति भेदः। अन्यु क्था द्व्यक्षरपादत्वात्तथा। शकटांशभेदार्थकयुगशब्दस्तथा तस्य शकटादौ द्वित्वसंख्यकतयैव योजनात्। एवं द्वन्द्वार्थकयुगशब्दोऽपि। अयनशब्दोऽपि तथा वर्षे तदर्थयोर्द्वयोरेव घटकत्वात्। पर्वसन्धिः चान्द्रमासे तयोर्द्वित्वात्। शब्दः ध्वन्यात्मकवर्णात्मकरूपः, अदृष्टम् पुण्यापुण्यरूपम्, शब्दशक्तिः अभिधालक्षणारूपा, बुद्धिः अनुभवस्मृतिरूपा, गन्धः सुरभिदुर्गन्धरूपः, ध्वनिधर्मः तारत्वमन्द्रत्वात्मकः, स्पर्शः उष्णानुष्णात्मकः, मृदुत्वकाठिन्यात्मको वा, अभावः, संसर्गाभावभेदात्मकश्च द्वित्वस्य बोधकः। सामान्यं व्याप्यव्यापकात्मकम्, क्रिया सिद्धसाध्यात्मिका वेदान्तिमते पदार्थः चिज्जडरूपः द्रष्टृदृश्यरूपो वा आर्हतमते जीवाजीवरूपो वा न्यायमते भावाभावरूपो वा, परिमाणम् वेदान्तिमते अणुत्वमहत्त्वरूपं च द्वित्वात्तथा। वैशेषिकमते तु अणुमहत्त्वह्रस्वत्वदीर्घत्वरूपं चतुष्कात् चतुष्कस्य तथेति भेदः। पदम् सुबन्ततिङन्तरूपत्वात्, धात्वर्थः फलव्यापाररूपत्वात् तथा। प्रयोजनं गौणमुख्यरूपत्वात्तथा। न्यायमते व्याप्तिः अन्वयव्यतिरेकरूपत्वात्तथा।

वेदान्तादिमते व्यतिरेकव्याप्तेरभावात् तस्याः एकत्वादेकत्वस्येति भेदः। संयोगः कर्मजसंयोगजात्मकः, विभागः कर्मजविभागजात्मकश्च द्वित्वात् तथा। नाटकप्रस्ताव्यवस्तु आधिकारिकप्रासङ्गिकरूपं द्वित्वात् तथा। काव्यम् दृश्यश्राव्यरूपं द्वित्वात् तथा अवान्तरभेदपरत्वे ध्वन्यादिपरत्वात् त्रित्वस्येति भेदः। गुरुत्ववद्द्रव्यम् रसवद्द्रव्यञ्च क्षितिजलात्मकत्वात्तथा। नैमित्तिकद्रववद्द्रव्यं क्षितितेजोरूपत्वात्तथा। समाधिः सविकल्पनिर्विकल्पात्मकः सबीजनिर्बीजात्मकः संप्रज्ञातासंप्रज्ञातात्मको वा द्वित्वात्तथा। समापत्तिः सविचारनिर्विचारात्मिका द्वित्वात् तथा। परमुक्तिर्विदेहकैवल्यात्मिका द्वित्वात्तथा। सालोक्यादिपरत्वे चतुष्कस्येति भेदः। समाधिप्रज्ञा ज्योतिष्मतृम्भरात्मिका द्वित्वात्तथा। कर्मकारकं मुख्यगौणात्मकं द्वित्वात्तथा। कर्तृकारकं स्वतन्त्रप्रयोजकरूपं, सम्प्रदानकारकं प्रेरकानुमन्तृरूपञ्च द्वित्वात्तथा। प्रत्यक्षं लौकिकालौकिकात्मकतया द्वित्वात् तथा अवान्तरप्रत्यक्षपरत्वे षट्त्वस्येति भेदः। ज्ञानं सविकल्पकनिर्विकल्पकात्मकं तथा। अनुमानं स्वार्थपरार्थात्मकं अनुमानफलं तत्त्वनिर्णयविजयरूपं तथा। ब्रह्म सगुणनिर्गुणरूपम्, जीववादः एकानेकविषयात्मकः वेदान्तिमते ज्ञानं वृत्तितदवच्छिन्नचैतन्यात्मकम् जीवभेदकः अवच्छेद प्रतिबिम्बरूपश्च द्वित्वात् तथा। कर्म शुक्लकृष्णात्म पुण्यापुण्यसाधनम् विहितनिषिद्धरूपं, धर्मः प्रवृत्तिनिवृत्तिलक्षणः वेदमेयं सिद्धसाध्यरूपं, प्रयाणःपश्चिमदक्षिणरूपः, वेदान्तिमते अविद्या कार्यकारणरूपा तूलाविद्यामूलाविद्यात्मिका द्वित्वात्तथा। काञ्चिः विष्णुशिवकाञ्चिरूपत्वात् तथा। आगमरूपप्रमाणशब्दः दृष्टादृष्टार्थकत्वात्तथा उदाहरणं साधर्म्यवैधर्म्यकृतम्, शृङ्गारः विप्रलम्भसंभोगात्मकः, मानश्च प्रणयेर्ष्याजातः द्वित्वात्तथा

३ त्रित्वबोधकाः कवि० स० उक्ताः। कालः भूतभविष्यद्वर्त्तमानरूपत्वात्, अग्निः दक्षिणाग्निगार्हपत्याहवनीयरूपत्वात्, लोकः स्वर्गमर्त्यपातालरूपत्वात्, मङ्गावर्त्म त्रिलोकस्थत्वात्, शिवनेत्रम् सूर्येन्दुवह्निरूपत्वात्, गुणः सत्त्वरजस्तमोरूपत्वात् तथा। नीतिशास्त्रप्रसिद्धगुणपरत्वे षट्कस्य, द्रव्यधर्मभेदपरत्वे चतुर्विंशतित्वस्य बोधकइति भेदः। शीवारेखा, कालिदासकृतकाव्यं कुमाररघुवंशमेघदूतरूपत्वात्, त्रिशूलशिखा, देहोदराधःस्थलवलितमांसरूपवलिश्च त्रित्वात् तथा। प्रातर्मध्यसायाह्नरूप सन्ध्यानां, त्रिपुरासुरस्वर्गादिस्थपुराणां, वातपित्तकफभेदात्मकज्योतिषोक्तपुष्करदोषाणाम्, परशुरामदाशरथिबलभद्रात्मकरामाणां, त्रिलोकव्यापिवामनरूपविष्णुपदानां, बाल्ययौवनजरारूपवयसाञ्च त्रित्वात् तथा। शा० ति०उक्ताः। सूर्येन्दुवह्निरूपधाम्नाम्, ऋग्यजुःसामरूपत्रय्यात्मकवेदानां त्रित्वात् तथात्वम्। अथर्ववेदसहितत्रयीपरत्वे तु चतुष्टयस्य बोधकतेति भेदः। प्रणववर्णानाम् अकारोकारमकाररूपाणाम्, उदात्तानुदात्तस्वरितरूपस्वराणाञ्च त्रित्वात् तथा। स्वरस्य षड्जादिपरत्वे सप्तकस्य अज्वर्णपरत्वे षोड़शत्वस्येति भेदः। देवीनां गायत्रीसावित्रीसरस्वतीरूपाणां, ब्रह्मविष्णुशिवरूपेश्वरमूर्त्तीनाञ्च त्रित्वात् तथा। कृषिपाशुपाल्यवाणिज्यरूपा याजनाध्यापनप्रतिग्रहरूपा वा आजीविकात्मिका वृत्तिस्तथा मनोवृत्तिपरत्वे चतुष्कस्य, प्रमाणादिवृत्तिपरत्वे पञ्चकस्य, शब्दनिष्ठबोधनाशक्तिरूपवृत्तिपरत्वे आलङ्कारिकमते त्रित्वस्य, अन्यमते द्वित्वस्य, वाचकशब्दभेदपरत्वे तद्धितादिपञ्चत्वस्येति भेदः। ब्राह्मीरौद्रीवामारूपा, ज्ञानेच्छाक्रियारूपा वा प्रभावोत्साह-

मन्त्रजारूपा वा शक्तिः तथा, नाडी इडापिङ्गला-सुषुम्णात्मकप्रधाननाडीरूपा तथा । गान्धार्य्यादिनाडीपरत्वे सप्तत्वस्य, दण्डपरत्वे तस्याः षष्टिपलात्मकत्वात् दिवसे षष्टिसंख्यकत्वाच्च षष्टित्वस्येति भेदः । भा०व०उक्ताः। प्रजा देवतिर्य्यगमनुष्यरूपा, त्रयीभेदात् द्विजभेदाच्च वा-जपेयादिकर्म च तथा । प्रातर्मध्यसायाह्नकर्त्तव्यानि सवनानि, ज्योतिः विश्वप्राज्ञतैजसरूपम् तथा । एवम् कटु शुण्ठीपिप्पलीमरिचरूपतया, फलम् हरीतक्यामलकीवयस्थारूपतया, दोषः वातपित्तकफरूपतया रागद्वेषमोहरूपतया वा तथा । कृत्तिका तस्या राशिचक्रे तृतीयत्वात्, अभेदोपचारात् तदधिप वह्निरपि । तद्घटकतारापरत्वे तु षट्कस्य बोधिका इति भेदः । मघा त्र्युत्तरपादत्वात् तथा शब्दवृत्तिः शक्तिलक्षणाव्यञ्जनारूपा तथा इत्यालङ्कारिकाः अन्यमते द्वित्वस्येत्युक्तम् । कारणम् समवाय्यसमवायि-निमित्तात्मकं त्रित्वात् तथा । फलावहहेतुः दैवपुरुषकारकालात्मकः "दैवं पुरुषकारश्च काले फलति पार्थिव! । त्रयमेतन्मनुष्यस्य पिण्डितं फलवाहम्" इत्युक्तेस्त्रयाणां तथात्वात्तथा । "अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम् । विविधाश्च पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम्" गीतोक्तत्वात् पञ्चत्वस्यापि । संस्कारः स्थितिस्थापनवेगभावनात्मकस्त्रित्वात् तथा, गर्भाधानादिपरत्वे दशत्वस्य चत्वारिंशत्त्वस्य वेति भेदः । संसर्गाभावः प्रागभावध्वंसात्यन्ताभावात्मकत्वात्तथा । यत्नः प्रवृत्तिनिवृत्तिजीवनयोनिरूपत्वात्तथा । दुःखम् आध्यात्मिकाधिभौतिकाधिदैविकात्मकत्वात्तथा । त्यागिकर्त्तृकरणकर्म्मज्ञानबुद्धिधृतिसुखादिकं गीतोक्तं प्रत्येकं सात्त्विकराजसतामसरूपतया त्रित्वात्तथा । अवस्था सांख्यमते आविर्भावतिरोभावाभिव्यक्तिरूपा वेदान्तमते जागत्स्वप्नसुषुप्तिरूपा, अविकारश्च गङ्गास्रोतोमण्डूकप्लुत सिंहावलोकितात्मकः त्रित्वात् तथा

असिद्धिः आश्रयासिद्धिव्याप्यत्वासिद्धिस्वरूपासिद्धिरूपत्वात् तथा, विरुद्धहेतुदोषः साधारणासाधारणानुपसंहारिरूपत्वात् तथा । न्यायमते "प्रकृतिः प्रत्ययश्चैव निपातश्चेति स त्रिधा" इत्युक्तानां प्रकृत्यादीनां सार्थकशब्दानां त्रित्वात् तथा । वाचकशब्दः रूढयौगिकयोगरूढरूपतया त्रित्वात्तथा वाचकशब्दशक्तिः नैमित्तिक्यौगिकीपारिभाषिक्यात्मकतया त्रित्वात्तथा । लक्षणा जहत्स्वार्थाऽजहत्स्वार्थाजहदजहत्स्वार्थात्मिका त्रित्वात्, आलङ्कारिकमते बहुत्वस्येति भेदः । ग्रामः स्वरारोहावरोहक्रमात्मकः त्रित्वात्तथा "सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः । तानाश्चैकोनपञ्चाशत् मात्रातिस्रो लयास्त्रयः । स्थानत्रयं यतीनाञ्च षडास्यानि रसा नव । रागाः षट्त्रिंशत्तु भावाश्चत्वारिंशन्मताः (तान) स्मृताः" भरतोक्तेः द्रुतमध्यविलम्बितकालरूपा मात्रा, लयः उत्तममध्याधममानात्मकः, आदिमध्यान्त्यरूपयतिस्थानं, च त्रित्वात् तथा । विग्रहफलम् भूमिहिरण्यमित्रलाभात्मकं त्रित्वात् तथा । काव्यं ध्वनिगुणीभूतव्यङ्ग्याव्यङ्ग्यात्मकमुत्तममध्यमाधमात्मकं त्रित्वात् तथा । देहः कारणस्थूलसूक्ष्मात्मकः त्रित्वात् तथा । मूर्त्तभेदः देहेन्द्रियविषयात्मकस्तथा । सर्गः सात्त्विकराजसतामसात्मकस्तथा । मुख्यसिद्धिः दुःखत्रयाभिघातात्मिका प्रमोदमुदितमोदमानाभिधेया त्रित्वात् तथा । सिद्ध्यङ्कुशः विपर्य्ययाशक्तितुष्टिरूपस्त्रित्वात् तथा । कर्मविपाकः जात्यायुर्भोगात्मकस्त्रित्वात् तथा । अतीन्द्रियगुणः गुरुत्वादृष्टभावनात्मकः त्रित्वात् तथा । कर्मजगुणः वेगसंयोगविभागात्मकस्त्रित्वात्तथा । मित्रभेदः शत्रुभेदश्च सहजप्राकृतकृत्रिमात्मकस्त्रित्वात्तथा । संसृतिमार्गः देवयानपितृयान यमयानात्मकः त्रित्वात्तथा । विश्वपत्वम् तस्य प्रत्येकपत्वे त्रित्वात् तथा । वेदान्तिमते सत्ता पारमार्थिकीव्यवहारिकीप्रातिभासिकीरूपा त्रित्वात्तथा । स्रोतः ऊर्द्ध्वाधस्तिर्य्यग्रूपं त्रित्वात्तथा । ईप्सिततमकर्म्म निर्वर्त्त्यविकार्य्यप्राप्यात्मकं त्रित्वात्तथा । आधारकारकम् औपश्लेषिकाभिव्यापकवैषयिकात्मकं त्रित्वात् तथा । अपादानकारकम् निर्द्दिष्टविषयोपात्तविषयापेक्षितक्रियात्मकं त्रित्वात्तथा । व्यापारः कायिकवाचिकमानसात्मकस्तथा । ऋणं देवर्षिपितृसम्बन्धिरूपं तथा । अलौकिकसन्निकर्षः सामान्यलक्षणाज्ञानलक्षणायोगजात्मकस्त्रित्वात्तथा । काव्यगुणः माधुर्य्यौजःप्रसादात्मकः त्रित्वात्तथा । श्लेषौदार्य्यादीनामोजस्यन्तर्भावात् त्रित्वम् सा० द० । नायिका स्वकीयापरकीयासाधारणात्मिका, मुग्धा मध्या प्रगल्भात्मिका वा तथा तासामेकैकस्या उभयधर्मत्वे नवत्वस्य अवस्थाभेदात् बहुत्वस्येति भेदः । अनुमितिलिङ्गं पूर्व्ववच्छेषवत्सामान्यतोदृष्टात्मकं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिरूपं वा त्रित्वात्तथा छलं वाक्सामान्योपचारछलात्मकं त्रित्वात्तथा ।

४ चतुष्कबोधकाः कवि० ल० उक्ताः । वेदः ऋग्यजुःसामाथर्व्वात्मकः, चतुर्ब्रह्मणोमुखानि, पूर्व्वापरदक्षिणो-

त्तरसमुद्रश्च, चतुष्ट्वात् तथा । लवणसमुद्रादिपरत्वे सप्तत्व-बोधक इति भेदः । चतुर्भुजविष्णुबाहुशब्दोऽपि तथा । स्वर्गहस्तिनामैरावतादीनां चतुर्दन्तानामुत्तरं दन्तशब्द-स्तथा । हस्त्यश्वरथपादातरूपसेनाङ्गम्, उपायः साम-दानभेददण्डरूपः, दिनरात्रयोश्चतुर्थांशरूपयामशब्दश्च तथा । युगं सत्यत्रेताद्वापररूपं तथा शकटांशविशेषपरत्वे द्वन्द्वपरत्वे च द्वित्वबोधकमिति । आश्रमः ब्रह्मचर्य्यगा-र्हस्थ्यवानप्रस्थसंन्यासरूपस्तथा । शा० ति० उक्ताः । तत्त्वम् आत्मविद्याशिवतत्त्वरूपम् प्रधानादितत्त्वपरत्वे चतुर्विंशतिसंख्याबोधकमिति भेदः । मनोवृत्तिः संशयनि-श्चयगर्व्वाभिमानरूपा तथा । वाग्वृत्तिः परापश्यन्तीम-ध्यावैखरीरूपा तथा । अर्थबोधनशक्तिविशेषपरत्वे द्वित्वस्य त्रित्वस्य वा मतभेदेन बोधिकेति भेदः । भावः वेदान्तिमते जाग्रत्स्वप्नसुषुप्तितुरीयरूपस्तथा । सांख्यमते तु धर्माद्य-ष्टपरत्वेनाष्टत्वबोधकः वैशेषिकमते षट्त्वस्येति भेदः । विष्णुमूर्त्तिः वासुदेवानिरुद्धसंकर्षणप्रद्युम्नरूपा तथा ; शङ्खा-दिचतुष्टयविन्यासभेदकृता तन्मूर्त्तिस्तु चतुर्विंशतित्वस्य बोधिकेति भेदः । गणेशः “गणाधिपं गणेशानं तृतीयं गणनायकम् । गणक्रीडं पीतगौररक्तनीलरुचः क्रमात्” शा० ति० १२प० उक्तपीतादिवर्णयुक्तगणाधिपादिरूप-स्तथा । आत्मादि आत्मान्तरात्मजीवात्मपरात्मरूप-स्तथा । पीठशब्द उड्डियान जालन्धरपूर्णगिरिकामार्थकः तथा । धर्म्मादि धर्म्मज्ञानैश्वर्य्यवैराग्यरूपम् अधर्मादि अधर्माज्ञानानैश्वर्य्यावैराग्यरूपञ्च तथा सांख्यमते धर्मादि अष्टत्वस्य बोधकमिति भेदः । लक्ष्मीगजः दमकादि-रूपः, दिशः प्राच्यवाचीपश्चिमोत्तररूपा तथा । अवान्तर-दिक्परत्वे अष्टत्वस्य दशत्वस्य वा बोधिका इति भेदः । ज्योतिः विश्वप्राज्ञस्थूलात्मान्तर्यामिरूपम् । एवमन्येऽपि यथा रोहिणी राशिचक्रे तस्याश्चतुर्थत्वात् तदभेदात् तदधिप-ब्रह्माऽपि तथा । प्रतिष्ठा तस्याश्चतुरक्षरपादकत्वात् तथा । सत्ययुगार्थककृतशब्दः चतुस्त्रिद्व्येकसंगुणा” सू० सि० उक्तेः “महायुगप्रमाणद्वादशसहस्रदशांशस्य चतुर्गुणरू-पत्वात्तस्य तथात्वम् । सार्थकशब्दः नामाख्यातनिपातोपस-र्गात्मकत्वात्, पुरुषार्थश्च धर्मार्थकाममोक्षरूपत्वात् तथा । नायकः धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्तात्मकत्वात् दक्षिणधृष्टानुकूलशठात्मकत्वाद्वा तथा तेषां प्रत्येक-मुभयधर्म्मत्वे षोडशभेदत्वात् षोडशत्वस्येति भेदः । काव्यरीतिः वैदर्भीगौडीपाञ्चालीलाटिकात्मिका चतुष्टा-स्तथा । प्रलयः नित्यनैमित्तिक प्राकृतात्यन्तिकात्मकत्वात् तथा भगवद्भक्तः “चतुर्विधा भजन्ते माम्” इत्युपक्रम्य “आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च पुरुषर्षभ !” इति गीतोक्तेः चतुष्कत्वात् तथा । अभिनयः आङ्गिकवाचिकाहार्य्य-सात्त्विकात्मकः चतुष्कत्वात् तथा । नायकादिव्यापार-विशेषात्मकरीतिः कौशिकीसात्त्वत्यारभटीभारतीरूपा चतुष्कत्वात्तथा । कौशिक्यङ्गम् ‘नर्म्म च नर्म्मस्फुर्जो नर्म्मस्फोटश्च नर्म्मगर्भश्च” इत्युक्तनर्मादिरूपं तथा । सात्वत्यङ्गम् । “उत्थापकोऽथ संघात्यः संलापः परिवर्त्तकः । विशेषा इति चत्वारः सात्वत्याः परिकीर्त्तिता” इत्यु-क्तोत्थापकादिरूपस्तथा । आरभट्यङ्गम् “वस्तूत्थापनसंफेटौ संक्षिप्तिरवपातनम् । इति भेदास्तु चत्वार आरभट्याः प्रकीर्त्तिताः” इत्युक्तवस्तूत्थापनादिरूपं तथा । अनेका-श्रितगुणः संयोगविभागद्वित्वादिसंख्याद्व्यादिपृथक्त्वरूपः चतुष्टात्तथा । आध्यात्मिकतुष्टिः “आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः” सा० का० उक्तप्रकृत्यादि-रूपा चतुष्टात्तथा । चित्तपरिकर्मार्थभावना मैत्रीकरुणा-मुदितोपेक्षात्मिका चतुष्टात्तथा । समाधिविघ्नः लयविक्षेप-कषायरसास्वादात्मकः चतुष्कत्वात्तथा । संन्यासी कुटीचक बहूदकहंस परमहंसात्मकस्तथा । अनुबन्धः विषयप्रयो-जनसम्बन्धाधिकारिरूपस्तथा । ब्रह्मविविदिषासाधनम् इहामुत्रार्थफलभोगविरागनित्यानित्यवस्तुविवेक शमादि-षट्कमुमुक्षारूपं तथा । कल्पितकर्मकारकम् । औदासीन्य-प्राप्ताभीप्सिताकथिताऽन्यपूर्वकरूपं तथा । वीजम् एकानेक वर्णसमीकरणमध्यमाहरणभावितात्मकं तथा । सङ्केतविषयः जातिद्रव्यगुणक्रियारूपस्तथा । द्रव्यारम्भकः स्पर्शवद्द्रव्यञ्च क्षितिजलतेजोवायुरूपत्वात्तथा । अपरमुक्तिः सालोक्य-सायुज्यसार्ष्टिसारूप्यात्मिका तथा । कार्य्योत्पत्तिप्रकारः असतः सदुत्पत्तिः सतोऽसदुत्पत्तिः सतोविवर्त्तः सतः सदुत्पत्तिश्चेति चतूरूपत्वात् तथा । वृद्धिः कायिकाका-लिकाकारिताचक्रवृद्धिरूपा तथा । सिद्धान्तः सर्वतन्त्र प्रतितन्त्राधिकरणाभ्युपगमसंस्थितिरूपः चतुष्टात्तथा । वर्णोत्पत्तौ आभ्यन्तरप्रयत्नः स्पृष्टेषत्स्पृष्टविवृतसंवृता-त्मकश्चतुष्कत्वात्तथा । विप्रलम्भः, पूर्वरागमानप्रवास-करुणात्मकः चतुष्कत्वात्तथा ।

५ पञ्चत्वबोधकाः । कवि०ल० युधिष्ठिरभीमार्जुननकुलसहदेवा-नाम् पाण्डुपुत्राणां, पञ्चाननशिवमुखानां, श्रोत्रत्वग्नेत्र-रसनघ्राणात्मकानां ज्ञानेन्द्रियाणाम्, वाक्पाणि-

पादपायूपस्थरूपाणां कर्मेन्द्रियाणां वा, सन्तानकल्पवृक्षमन्दारपारिजातहरिचन्दनानां देववृक्षाणां, महानाम्न्यादिवेदग्रहणार्थानां व्रतानाम्, दक्षिणाग्निगार्हपत्याहवनीयान्वाहार्य्यपचनावसथ्यानां वह्नीनां, ब्रह्महत्यासुरापाणब्राह्मणस्वामिकसुवर्णहरणगुर्वङ्गनागमनतत्संसर्गजानां पातकानाम्, क्षित्यप्तेजोमरुद्व्योमरूपाणां भूतानां, कुमाररघुवंशमाघकिरातनैषधाख्यानां महाकाव्यानां, होमस्वाध्यायपाठपितृतर्पणातिथिपूजनवैश्वदेवबलिरूपाणां गृहस्थकर्त्तव्यानां स्मार्त्तानाम्, अग्निहोत्रादीनां सी०क० प्रागदर्शितानां श्रौतानां वा यज्ञानां, सर्गप्रलयमन्वन्तरराजवंशतच्चरितरूपाणां पुराणलक्षणानाम्, प्राणापानसमानोदानव्यानरूपाणां देहस्थवायूनाम्, उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनात्मिकानां क्रियाणां, ज्ञानेन्द्रियविषयाणां शब्दस्पर्शरूपरसगन्धात्मकानां, कर्मेन्द्रियविषयाणां वचनादानगमनविसर्गानन्दात्मकानां वा पञ्चत्वात् तथा। शा०ति० उक्ताः। नीलकहीरकपद्मरागप्रवालमौक्तिकरूपाणां स्थाप्यघटदेयानां रत्नानां पञ्चत्वस्य बोधकता वास्तुभूमावारोप्यरत्नानां कालिदासादिकवीनाञ्च नवत्वात् तत्परत्वे नवत्वस्य बोधकताग्रे वक्ष्यते। श्वेतगौररक्तहरितश्यामरूपाणां वर्णविशेषाणाम् पञ्चत्वात् तथा पाटलादिवर्णानां मिश्रणेनैव जातत्वात् न पृथग्वर्णता, वर्णशब्दस्य ब्राह्मणादिजातिपरत्वे चतुष्कस्य, अक्षरपरत्वे तन्त्रमते पञ्चाशल्लिपिभिर्विभक्तत्वाद्युक्तेः पञ्चाशत्त्वस्य, शिक्षामते "चतुःषष्टि-स्त्रिषष्टिर्वा वर्णाः सम्भवतोमताः" इत्युक्तसंख्याबोधकत्वमिति भेदः। तत्पुरुषाघोरसद्योजातवामदेवेशानरूपाणां शिवमूर्त्तीनाम्, "सम्मोहनस्तापनश्च शोषणः स्तम्भनस्तथा। उन्मादनश्च कामस्य वाणाः पञ्च प्रकीर्त्तिताः" इत्युक्तानां कामवाणानाम् "निवृत्तिः सुप्रतिष्ठा स्यात् विद्या शान्तिरनन्तरम्। शान्त्यतीता कलाः पञ्च विज्ञेयाः" इति उक्तानां कलाविशेषाणाम्, ईशानमनोभवतत्पुरुषमकरध्वजाघोरकुमारतेजोवामदेवमन्मथसद्योजातकामदेवात्मकानाम् तत्रैव उक्तानां कामदेवभेदानां च पञ्चत्वात्तथा। तत्पुरुषादिमन्त्ररूपाणां ब्रह्मकवाञ्च पञ्चत्वात् तथा। भा०व०उक्ताः। प्रमाणविपर्य्ययविकल्पस्मृतिनिद्रारूपाणां वृत्तीनाम्, इन्द्रियवृत्तिरूपाणां स्रोतसाम्, "किरणा धूतपापा च गुप्ततोया सरस्वती। गङ्गा च यमुना चैव पञ्च नद्यः प्रकीर्त्तिताः" काशी० उक्तानां नदीनां वा पञ्चत्वात्तथा। वृत्तिः कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपा, पल्लवश्च "आम्राश्वत्थवटप्लक्षयज्ञोडुम्बरपल्लवाः। पञ्चपल्लवमित्युक्तम्" इत्युक्तानां पल्लवानां पञ्चत्वात्तथा। मूलम् "विल्वश्योनाकगाम्भारीपाटलागणिकारिका। पञ्चमूलमिति ख्यातम्" इत्युक्तविल्वादिमूलानां पञ्चत्वात्तथा। कषायः "जम्बुशाल्मलिवाट्यालम् वकुलं वदरं तथा। कषायाः पञ्च विज्ञेयाः" इत्युक्तजम्ब्वादीनां कषायाणां पञ्चत्वात् तथा। कोषः वेदान्तोक्तानामन्नप्राणमनोविज्ञानानन्दमयानां कोषाणां पञ्चत्वात्तथा। देहत्वक्परत्वे षट्कबोधकताग्रे वक्ष्यते। गव्यम् "पञ्चगव्यं दधि क्षीरं घृतगोमूत्रगोमयैः" इत्युक्तानां दध्यादीनां, पञ्चत्वात्तथा। तत्त्वम् "मद्यं मांसं तथा मत्स्यो मुद्रा मैथुनमेव च। पञ्चतत्त्वमिदं प्रोक्तम्" इत्युक्तमद्यादीनां पञ्चत्वात् तथा। वल्कलम् "न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलम्। पञ्चवल्कलमित्युक्तम्" इति न्यग्रोधादिवल्कलानां पञ्चत्वात् तथा। शस्यम् "धान्यं मुद्गास्तिलामाषा यवाः शिम्बिकोऽपि वा। पञ्चशस्यमिति प्रोक्तम्" इत्युक्तानां धान्यादीनां पञ्चत्वात्तथा। सुगन्धिः कर्पूरककोललवङ्गपुष्पगुवाकजातिफलरूपाणां सुगन्धिकानां पञ्चत्वात् तथा। सूना "पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च" इत्युक्तचुल्ल्यादिरूपवध्यस्थानानां पञ्चत्वात् तथा। एकवृक्षाङ्गम् "त्वक् पत्रं कुसुमं मूलं फलञ्चैकस्य शाखिनः। एकतस्यन्तु पञ्चाङ्गम्" इत्युक्तानां एकस्य वृक्षस्य त्वगादीनां पञ्चत्वात् तथा। पुरश्चरणाङ्गम् "जपहोमौ तर्पणञ्चाभिषेको विप्रभोजनम्। पञ्चाङ्गोपासनं शास्त्रे पुरश्चरणमिष्यते" इत्युक्तानां जपादीनां पञ्चत्वात्त तथा। अमृतम् "दुग्धं च शर्करा चैव घृतं दधि तथा मधु। पञ्चामृतमिदं प्रोक्तम्" इत्युक्तानां दुग्धादिरूपाणाममृततुल्यस्वादूनां पञ्चत्वात्तथा। नाट्योक्तिः-स्वगतप्रकाशापवारितजनान्तिकाकाशगतात्मिका पञ्चत्वात् तथा। अनुप्रासः छेकवृत्तिश्रुत्यन्त्यलाटानुप्रासात्मकः पञ्चत्वात् तथा। लघुलौहकम् "सुवर्णं रजतं ताम्रं रङ्गं नागं तथैव च। पञ्चलौहमिति प्रोक्तम्" इत्युक्तसुवर्णादिलौहानां पञ्चत्वात्तथा। मृगशिरा तस्याः राशिचक्रे पञ्चमत्वात्तथात्वम्। अभेदोपचारात्तदधिपचन्द्रोऽपि तथा। सुप्रतिष्ठा तस्याः पञ्चाक्षरपादत्वात्तथा। तर्कः आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थकप्रसङ्गरूपतया पञ्चत्वात्तथा। काष्ठावस्था

आरम्भयत्नप्राप्त्याशानियताप्तिफलागमात्मिका पञ्चत्वात्तथा। नाटकस्य सन्धिः मुखप्रतिमुखगर्भविमर्षोपसंहृतिरूपः पञ्चत्वात्तथा। प्रस्तावना उद्घात्यककथोद्घातप्रयोगातिशयप्रवर्त्तकावलगितात्मिका पञ्चत्वात् तथा। प्रयोजनसिद्धिहेतुःबीजबिन्दुपताकाप्रकरीकार्य्यात्मा तथा। विपर्य्ययः अविद्याऽस्मितारागद्वेषाभिनिवेशात्मकः तथा। अश्वगतिः "आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्" इत्युक्तास्कन्दितादिलक्षणा तथा। गर्भस्थानुगामिधर्मः "आयुः कर्म्म च वित्तं च विद्या निधनमेव च। पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः" इत्युक्तायुरादिलक्षणस्तथा। योगाङ्गासनं "पद्मासनं स्वस्तिकाख्यं वज्रभद्रासने तथा। वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम्" शा॰ति॰उक्तस्वस्तिकादीनां पञ्चत्वात्तथा। पूजाङ्गासनं तु आसनशब्दे उक्तसंख्याबोधकमिति भेदः। हेत्वाभासः अनैकान्तविरुद्धासिद्धसत्प्रतिपक्षबाधात्मकः तथा। न्यायावयवः, प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकः तथा। वेदान्तिमते तु त्रित्वस्येति भेदः। कालगुणः दिग्गुणः मूर्त्तामूर्त्तसाधारणगुणश्च संयोगविभागपरत्वापरत्वपृथक्त्वात्मकः तथा। बाह्यैकेन्द्रियग्राह्यगुणः शब्दस्पर्शरूपरसगन्धात्मकस्तथा 'दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्त्तिताः। विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च" इत्युक्तविज्ञानादिलक्षणः स्कन्धस्तथा। प्रातिपदिकार्थः विशेष्यविशेषणसंख्याकारकलिङ्गात्मकस्तथा। अधिकरणावयवः "विषयो विषयश्चैव पूर्व्वपक्षस्तथोत्तरम्। निर्णयश्चेति सिद्धान्तः शास्त्रेऽधिकरणं स्मृतम्" इत्युक्तसंशयादिरूपस्तथा वर्णविभाजकोपाधिः "वर्णान् जनयते तेषां विभागः पञ्चधा मतः। स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः" शिक्षोक्तेः उदात्तादिस्वरोच्चारणकालस्थानाभ्यन्तरबाह्यप्रयत्नानां पञ्चत्वात् तथा।

६ षट्संख्याबोधकाः कवि॰ क॰ उक्ताः। वज्रास्त्रकोणानां, त्रिमूर्द्धासुरनेत्राणां, तर्काणां ज्ञानसाधनप्रमाणानां प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिरूपाणाम्, विनियोगसाधनरूपाणां श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यात्मकानां वा षट्कत्वात्तथात्वम्। आपादकत्ताऽधीनापाद्यज्ञानरूपपरत्वे आत्माश्रयादिपञ्चविधप्रसङ्गरूपत्वात् पञ्चत्वस्य इति भेदः। अङ्गानां मस्तकबाहुद्वयपदद्वयमध्यरूपाणाम् प्रधानाङ्गानां, शिक्षाकल्पव्याकरणनिरुक्तज्योतिषच्छन्दोरूपाणां वेदाङ्गानां वा, न्यायवैशेषिकसांख्यपातञ्जलमीमांसावेदान्तात्मकानां तत्त्वज्ञानसाधनानां, दर्शनानाम् चक्रवर्त्तिनां चक्रावयवरूपाणाम् अराणां, कलौ शकप्रवर्त्तकानाम् "युधिष्ठिरो विक्रमशालिवाहनौ धराधिनाथो विजयाभिनन्दनः। इमे तु नागार्जुनमेदिनीविभुर्बलिः क्रमात् षट् शककारकाः कलौ" ज्योतिर्वि॰ उक्तानां युधिष्ठिरादीनां सार्व्वभौमानां वा, षडाननकार्त्तिकेयमुखानां, सन्धिविग्रहयानासनद्वैधाश्रयरूपाणां नृपगुणानाञ्च षट्त्वात्तथात्वम्। गुणशब्दस्य सत्त्वादिपरत्वे त्रित्वस्य, द्रव्यधर्मभेदपरत्वे चतुर्विंशतित्वस्येति भेदः। मधुरकटुकषायाम्लतिक्तलवणानां रसानां षट्कत्वात्तथा। शृङ्गारादिरसपरत्वे नवत्वस्य बोधकतेति भेदः। शा॰ति॰ उक्ताः। आमोदप्रमोदसुमुखदुर्मुखविघ्नविघ्नकर्त्तृरूपाणां गणेशानां, क्रमेशोक्तामोदादिप्रियाणां सिद्धिसमृद्धिकान्तिमदनावतीमदद्रवाद्राविणीरूपाणाम्, "स्नाय्वस्थिमज्जशुक्राणि त्वङ्मांसरुधिराणि च। षाट्कौषिकमिदं प्रोक्तं सर्व्वदेहेषु देहिनामिति" तन्त्रोक्तानां स्नाय्वादीनां कोषाणाम्, बुभुक्षापिपासाशोकमोहजरामृत्युरूपाणामूर्म्मीणाम्, डाकिनीराकिणीलाकिनीकाकिनीशाकिनीहाकिनीरूपाणाम् षट्चक्राधिष्ठितानां शक्तीनाम्, "कलाध्वा चैव तत्त्वाध्वा भुवनाध्वेति च त्रयम्। वर्णाध्वा च पदाध्वा च मन्त्राध्वेत्यपरं त्रयम्" इत्युक्तानां कलाध्वादीनामध्वनाम्, मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञारूपाणां देहस्थचक्रभेदरूपाणां डाकिन्यादिषट्शक्त्याधाराणां च षट्कत्वात्तथा। ऋतूनां वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिरात्मकानां षट्त्वात्तथा भा॰श॰उक्ताः। आधाने दक्षिणात्वेन विहितगवानां षट्त्वात्तथात्वम्। कृत्तिकाः तासां षट्तारात्मकत्वात् तथा नक्षत्रचक्रस्थतृतीयर्क्षपरत्वे त्रित्वस्येति भेदः। एकाहसाध्यानामेकाहकर्त्तव्यदीक्षोपसदुत्याङ्गकानां सद्यःक्रियावतां "षट् साद्यस्क्राः" कात्या॰ १२,२,६, सू॰ उपक्रम्य १२,१२,२५, सूत्रान्तेषु दर्शितानां साद्यस्क्रदीर्घव्याधिप्रशमादिकामकर्त्तव्यानुक्रीविश्वजिच्छिल्पश्यैनैकत्रिकरूपाणाम् षट्त्वात् तथात्वम्। आर्द्रा राशिचक्रे तस्याः षष्ठत्वात् तथा तदभेदात् तदधिपशिवकालादिशब्दोऽपि तथा। गायत्री तस्याः षडक्षरपादत्वात्। भावविकाराणां जन्मसत्त्ववृद्धिविपरिणामापक्षयनाशरूपाणां यास्कोक्तानां षट्त्वात्तथा। भावपदार्थानां वैशेषिकसूत्रोक्तानां द्रव्यगुणकर्मसामान्यविशेषसमवायात्मकानां षट्कत्वात्तथा। "ऐश्व-

र्म्मस्य समग्रस्य वीर्य्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इहोच्यते" इत्युक्तभगस्य षट्संख्यायोगात्तथा । कारकाणामपादानसम्प्रदानकरणाधारकर्म्मकर्त्तृरूपाणां षट्कत्वात्तथा "सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा । सुबन्तेनेति च प्रोक्तः समासः षड्विधो बुधैः" इत्युक्तानां, द्वन्द्वकर्म्मधारयद्विगुतत्पुरुषबहुव्रीह्यव्ययीभावात्मकानां वा समासानां षट्त्वात्तथा । सङ्गतिः प्रसङ्गोपोद्घातहेतुतावसरनिर्वाहकैककार्य्यत्वरूपा षट्कत्वस्य, शास्त्राध्यायपादसङ्गतिरूपा तु त्रित्वस्य, अधिकरणसङ्गतिरूपावान्तरसङ्गतिस्तु आक्षेपदृष्टान्तप्रत्युदाहरणादिरूपा बहुत्वस्येति भेदः । अङ्गन्यासः शीर्षशिखासुखहृदयनेत्रकरतलतत्पृष्ठन्यासरूपतया षट्त्वस्य, अभिज्ञा दिव्यचक्षुःश्रोत्रपरचित्तज्ञानपूर्वनिवासानुस्मृतिस्वात्मतत्त्वज्ञानवियद्गतिकायव्यूहादिसिद्धिरूपबौद्धधर्मभेदरूपा षट्त्वस्य, नृपसैन्यं मौलभृत्यसुहृच्छ्रेणीपराजितशत्रुसैन्याटविकात्मकम् षट्त्वात् तथा । सुरापाणसमम् "ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः । गर्हितान्नाद्ययोर्जग्धिः सुरापाणसमानि षट्" इत्युक्तम् षट्त्वात् तथा । नारीदूषणानि "पानं दुर्ज्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट्" काशी०उक्तानि षट्त्वात्तथा । शास्त्रतात्पर्य्यनिर्णायकः "उपक्रमोपसंहारावभ्यासोऽपूर्व्वता फलम् । अर्थवादोपपत्ती च हेतुस्तात्पर्य्यनिर्णये" इत्युक्तः षट्त्वात् तथा । प्रीतिलक्षणम् "ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्" इत्युक्तदानाद्यात्मकम् षट्कत्वात् तथा । गीताङ्गवसन्तादिरागः षट्त्वात् तथा । पताकास्थानाङ्गफलम् "इष्टार्थरचनाश्चर्य्यलाभो वृत्तान्तविस्तरः । रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा । प्रकाशनं प्रकाश्यानामङ्गानां षड्विधम् फलम्" इत्युक्तेष्टार्थरचनादिरूपं षट्त्वात्तथा । रिपुः कामक्रोधलोभमोहमदमात्सर्य्यात्मकः षट्त्वात्तथा जन्मलग्नावधिकषष्ठस्थाने चिन्तनीयत्वाद्वा तथा । विप्रकर्म यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहात्मकं षट्त्वात्तथा । अभिचारः मारणोच्चाटनविद्वेषणस्तम्भनमोहनवशीकरणात्मकः षट्त्वात् तथा । शमादिः शमदमोपरतितितिक्षाश्रद्धासमाधिरूपस्तथा । प्रत्यक्षम् श्रावणत्वाचचाक्षुषरासनघ्राणजमानसात्मकं षट्त्वबोधकम् लौकिकप्रत्यक्षसन्निकर्षः इन्द्रियार्थसंयोगतत्संयुक्तसमवायतत्संयुक्तसमवेतसमवायसमवायसमवेतसमवायसंयुक्तविशेषणतात्मकः षट्कत्वात्तथा । आकाशगुणः संख्यापरिमाणपृथक्त्वसंयोगविभागशब्दात्मकः षट्त्वात्तथा । निमित्तासमवायिकारणतापन्नगुणः उष्णस्पर्शद्रवत्वगुरुत्ववेगसंयोगविभागात्मकः षट्त्वात्तथा । मानभङ्गोपायः सामदानभेदनीत्युपेक्षारसान्तरात्मकः षट्कत्वात्तथा ।

७ सप्तसंख्याबोधकाः । कवि०ल० उक्ताः । लोकः भूर्भुवःस्वर्महर्जनतपःसत्यात्मक ऊर्द्ध्वस्थः, अतलवितलसुतलतलातलमहातलरसातलपातालात्मकः अधःस्थो वा, द्वीपः जम्बुशाकशाल्मलिकुशक्रौञ्चगोमेदपुष्करात्मकः, मुनिः वैवस्वतमन्वन्तरे वसिष्ठकश्यपात्रिविश्वामित्रजमदग्निगौतमभारद्वाजात्मकः स्वायम्भुवान्तरे मरीच्यत्रिपुलस्त्यपुलहक्रतुप्रचेतोवशिष्ठात्मको वा सप्तत्वात् तथा । सूर्य्यहयः तदश्वानां सप्तत्वात् तथा । समुद्रः लवणेक्षुसुराघृतदधिक्षीरस्वादूदकात्मकः, नृपराज्याङ्गम् स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलात्मकम्, धान्यम् यवव्रीहितिलमाषश्यामाककङ्गुमुद्गात्मकं सप्तत्वात् तथा । वह्निशिखा कालीकरालीमनोजवासुलोहितासुधूम्रवर्णास्फुलिङ्गिनीविश्वधामात्मिका, अद्रिः महेन्द्रमलयसह्यशुक्तिमदृक्षविन्ध्यपारियात्रकुलपर्व्वतरूपात्मकः सप्तत्वात् तथा । शा०ति० उक्ताः । सुदर्शनम् आचक्रविचक्रसुचक्रधीचक्रसञ्चक्रज्वालाचक्रसुदर्शनचक्रात्मकम्, स्वरः निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमात्मकः सप्तत्वात् तथा उदात्तादित्वे त्रित्वस्य, अज्वर्णरूपत्वे षोडशत्वस्येति भेदः । ग्रहः रविचन्द्रभौमबुधगुरुशुक्रशनिरूपः सप्तत्वात् तथा । राहुकेत्वोर्ग्रहत्वमते तु नवत्वस्य यज्ञियपात्रभेदत्वे दशत्वस्य "दश ग्रहान् गृह्णातीति" श्रुतौ दशानामेव सोमग्रहणपात्राणां विधानात् । "अष्टौ ग्रहा अष्टावतिग्रहाः" इति श्रुतेः ज्ञानसाधनात्मत्वे पञ्चज्ञानेन्द्रियमनोबुद्ध्यहङ्कारात्मकाष्टविधार्थग्रहणहेतुत्वात् अष्टत्वबोधक इति भेदः । समिधाम् अर्कपलाशखदिरापामार्गपिप्पलोडुम्बरशमीरूपाणां, नी०क०उक्तानां ग्राम्यपशूनां गवादीनां, वन्यपशूनां महिषादीनाञ्च भूरादीनां व्याहृतीनाञ्च सप्तत्वात् तथा । भा०व० उक्ताः मनोबुद्धिसहितज्ञानेन्द्रियपञ्चकात्मप्राणरूपः ऋषिः सप्तत्वात् तथा । मनोबुद्ध्यादिप्राणाश्च सुखानि सप्तत्वात् तथा, वीणातन्त्री तासां लोके सप्तत्वप्रसिद्धेस्तथा । छन्दः गायत्र्यादिजगत्यन्तवैदिकच्छन्दोरूपम् सप्तत्वात्तथा लौकिकच्छन्दःपरत्वे

षड्विंशतित्वस्येति भेदः। सामभक्तिः ओङ्कारहिङ्कारप्रस्तावोद्गीथप्रतिहारोपद्रवनिधनरूपा सप्तत्वात् तथा। "लोकेषु सप्तविधं सामोपासीतेति" श्रुतौ साम्नां सप्तविधत्वोक्तेस्तथात्वम्। वैशेषिकमते पदार्थः द्रव्यगुणकर्म्मसामान्यविशेषसमवायाभावात्मकः सप्तत्वात् तथा। प्रकृतिविकृतिः महदहङ्कारशब्दस्पर्शरूपरसगन्धतन्मात्रात्मिका सप्तत्वात् तथा। पुनर्वसुनक्षत्रराशिचक्रे सप्तमत्वात् तथा। अभेदात्तदधिपतिरदितिरपि। उष्णिक् तस्याः सप्ताक्षरपादत्वात् तथा। अश्वजन्मस्थानम् "अमृताद् ब्राह्मतोवह्नेर्वेदेभ्योऽण्डाच्च गर्भतः। साम्नोऽश्वानामुत्पत्तिः सप्तधा परिकीर्त्तिता" इत्युक्तानां सप्तत्वात्तथा। तादृशोत्पत्तिस्थानकत्वेन अश्वशब्दोऽपि तथा। मदस्रुतिशब्दः "करात् कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदस्रुतिः" इत्युक्तानां सप्तत्वात् तथा। वरगुणः "कुलञ्च शीलञ्च सनाथता च विद्या च वित्तं च वपुर्वयश्च। एतान् गुणान् सप्त विचिन्त्य देया कन्या बुधैः शेषमचिन्तनीयम्" इत्युक्तकुलादीनां सप्तत्वात् तथा। पौनर्भवा "सप्त पौनर्भवाः कन्या वर्ज्जनीयाः कुलाधमाः। वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला। उदकस्पर्शिता या च या च पाणिगृहीतिका। अग्निं परिगता या च पुनर्भूप्रभवा च या" इत्युक्तानां सप्तत्वात् तथा। धर्म्यवित्तागमः "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। विभागः संप्रयोगश्च सत्प्रतिग्रह एव च" इत्युक्तदायादीनां सप्तत्वात् तथा। मरुत्, आवहप्रवहोद्वहसंवहविवहपरावहपरीवहात्मकः सप्तत्वात्तथा। अवान्तरभेदपरत्वे ऊनपञ्चाशत्त्वस्येति भेदः। मोक्षदपुरी "अयोध्या मथुरा माया काशी काञ्चिरवन्तिका। पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः" इत्युक्तपुरीणां सप्तत्वात्तथा।

अष्टबोधकाः कवि०ल० उक्ताः। योगाङ्गं यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिरूपं, शिवमूर्त्तिः क्षित्यादिपञ्चभूतचन्द्रसूर्य्ययजमानरूपा, ऐरावतपुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकरूपो दन्ती च अष्टत्वात्तथा एकशेषात् करिणीशब्दोऽपि तथा करिण्यश्च अभ्रमुकपिलापिङ्गलानुपमाताम्रकर्णीशुभ्रदन्त्यङ्गनाञ्जनावतीरूपाः। सिद्धिः अणिमलघिमप्राप्तिप्राकाम्येशितावशिताव्याप्तिकामावशायितात्मिका अष्टत्वात् तथा। चतुर्वदनब्रह्मकर्णस्तथा। व्याकरणम् इन्द्रचन्द्रकाशकृत्स्नापिशलिशाकटायनपाणिन्यमरजैनेन्द्रात्मकाष्टकर्त्तृकृतम् अष्टत्वात् तथा। दिक्पालः इन्द्रवह्नियमनिर्ऋतिवरुणवायुकुवेरेशानात्मकः प्राच्यादीनामष्टानां दिशामीश्वराणामेषामष्टत्वात् तथा। ऊर्द्ध्वाधोदिक्सहितदिक्पालपरत्वे दशत्वस्येति भेदः। अहिः शेषवासुकिपद्ममहापद्मतक्षककुलीरकर्कटशङ्खात्मकः अष्टत्वात्तथा। कुलाचलः मतान्तरे हिमाचलसहितः पूर्व्वोक्तमहेन्द्रादिरूपः अष्टत्वात्तथा। कुलाचलानां सप्तत्वप्रसिद्धावपि क्वचिदष्टत्वव्यवहारः। "अष्टकुलाचलसप्तसमुद्राः" मोहमुद्गरः। शा०ति० उक्ताः। भैरवः असिताङ्गरुरुचण्डोन्मत्तकपालिभीषणक्रोधनसंहारात्मकः। प्रकृतिः प्रधानमहदहङ्कारपञ्चतन्मात्रात्मिका अष्टत्वात्तथा। प्रकृतिशब्दः प्रधानपरत्वे एकत्वस्य तत्त्वान्तरोपादानत्वपरत्वे अष्टत्वस्येति भेदः। गणेशः वक्रतुण्डैकदंष्ट्रमहोदरगजाननलम्बोदरविकटविघ्नराजधूम्रवर्णात्मकः अष्टत्वात्तथा। अग्निमूर्त्तिः "जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः। अश्वोदरजसंज्ञः स्यात् पुनर्वैश्वानराह्वयः। कौमारतेजाः स्याद्विश्वमुखो देवमुखश्च स्मृतः" शा०ति०उक्तानां जातवेदआदीनामष्टत्वात्तथा। भा०व० उक्ताः। शाणः आवपनतुल्यपूरणीयः महदहङ्कारचित्तसहितज्ञानेन्द्रियरूपः अष्टत्वात्तथा। शरभपादस्य लोके ऽष्टत्वप्रसिद्धेस्तथा। यूपकोणस्य वेदे अष्टत्वप्रसिद्धेस्तथा। द्विजगुणाः "दया सर्व्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति" गौतमोक्तानामष्टत्वात्तथा। वैशेषिकोक्तेश्वरगुणः संयोगविभागपृथक्त्वसंख्यापरिमाणबुद्धीच्छाकृतिरूपः अष्टत्वात्तथा। राज्याङ्गम् पौरश्रेणीसहितस्वाम्यमात्यादिसप्तकम् अष्टत्वात्तथा। नृपगतिः "आदाने च विसर्गे च तथा प्रैषनिषेधयोः। पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे। दण्डशुद्ध्योरवक्रः स्यात्तेनाष्टगतिको नृपः" इत्युक्तगतिरूपा अष्टत्वात्तथा। तारिणी "तारा चोग्रा महोग्रा च वज्रा काली सरस्वती। कामेश्वरी च चामुण्डा इत्यष्टौ तारिणीमताः" इत्युक्तानां तारामूर्त्तिभेदानामष्टत्वात्तथा। होमद्रव्यम् "अश्वत्थोडुम्बरप्लक्षन्यग्रोधसमिधस्तिलाः। सिद्धार्थपायसाज्यानि द्रव्याण्यष्टौ विदुर्बुधाः" इत्युक्तानामष्टत्वात्तथा। धातुः "स्वर्णं रौप्यञ्च ताम्रञ्च वङ्गं यशदमेव च। सीसं लौहं रसश्चेति धातवोऽष्टौ प्रकीर्त्तिताः" इत्युक्तानामष्टत्वात् तथा देहस्थधातुपरत्वे सप्तत्वस्येति भेदः। महासरस्वतीभुजस्तस्या अष्टभुजत्वात्तथा। सात्त्विकभावः "स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु

…लय इत्यष्टौ सात्त्विकाः स्मृताः" सा० द० उक्तस्तम्भादीनामष्टत्वात्तथा। असमवायिकारणगुणः रूपरसगन्धस्पर्शपरिमाणैकपृथक्त्वस्नेहशब्दात्मकः अष्टत्वात्तथा। निमित्तकारणगुणः बुद्धिसुखदुःखेच्छाद्वेषयत्नादृष्टभावनात्मकस्तथा। मनोगुणः संख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्ववेगात्मकस्तथा। मङ्गलम् "मृगराजो वृषो नागो कलसो व्यजनं तथा। वैजयन्ती तथा भेरी दीप इत्यष्टमङ्गलम्" इत्युक्तानां "लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो, गौर्हुताशनः। हिरण्यं सर्पिरादित्योमाला राजा तथाष्टमः" इत्युक्तानां वाष्टत्वात्तथा। नायिकावस्था स्वाधीनभर्त्तृका खण्डिताभिसारिकाकलहान्तरिता विप्रलब्धाप्रोषितभर्त्तृकावासकसज्जाविरहोत्कण्ठितात्मिका अष्टत्वात् तथा। दृढलौहम् "सुवर्णं रजतं ताम्रं सीसकं कान्तिकं तथा। रङ्गं लौहं तीक्ष्णलौहं लौहान्यष्टौ इमानि तु" इत्युक्तानामष्टत्वात् तथा। लघुलौहपरत्वे पञ्चत्वस्य बोधकमित्युक्तम्। आयुर्वेदाङ्गम् "शल्यं शालक्यं कायचिकित्सा भूतविद्या कौमारभृत्याऽगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति" सुश्रुतोक्तानामष्टत्वात्तथा। अर्घाङ्गम् "आपः क्षीरं कुशाग्रञ्च दधि सर्पिः सतण्डुलम्। यवः सिद्धार्थकश्चैव अष्टाङ्गोऽर्घः प्रकीर्त्तित" इति इत्युक्तानाम् "आपः क्षीरं कुशाग्राणि घृतं मधु तथा दधि। रक्तानि करवीराणि तथा वै रक्तचन्दनम्। अष्टाङ्ग एष वा अर्घ, इत्युक्तानां वाष्टत्वात् तथा। प्रणामाङ्गम् "जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया। शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः" इत्युक्तानामष्टत्वात्तथा। "मैथुनाङ्गम् स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च। एतन्मैथुनमष्टाङ्गम्" इत्युक्तानामष्टत्वात्तथा। पुष्यं तस्य राशिचक्रे अष्टमत्वात् तथा। तद्भेदात् तदधिपो जीवोऽपि। अनुष्टुप् तस्याः अष्टाक्षरपादत्वात् तथा। तमः अव्यक्तमहदहङ्कारपञ्चतन्मात्रात्मकेष्वनात्मभूतेष्वात्मबुद्धिरूपमष्टविधविषयत्वात् तथा। "भेदस्तमसोऽष्टविधो मोहस्य च तथा" सा० का०। मोहः अणिमादिसिद्धीनामात्मगतानां शाश्वतिकत्वाभिमानरूपः अणिमाद्यष्टविधविषयविषयत्वात् तथा। विवाहः ब्राह्मदैवार्षप्राजापत्यासुरगान्धर्वराक्षसपैशाचात्मकः अष्टत्वात् तथा। सिद्धि "ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः। दानञ्च सिद्धयोऽष्टौ" सा० का० उक्तोहादीनामष्टत्वात्तथा। उक्तसिद्धीनां नामान्तराणि सां० कौ० दर्शितानि। तारसुतारतारतारम्यकसदामुदितप्रमोदमुदितमोदमानरूपाणि। खगगतिः "संपातं विप्रपातञ्च महापातं निपातनम्। वक्रं तिर्य्यक् तथा चोर्द्ध्वमष्टमं लघुसंज्ञकम्" इत्युक्तसम्पातादिरूपा अष्टत्वात् तथा परिकर्म्म अङ्कशास्त्रोक्तयोगवियोगगुणनभागवर्गतत्पदघनतत्पदरूपम् अष्टत्वात् तथा" वर्णोत्पत्तिस्थानम्। "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्तोष्ठौ नासामूलं तालु च" शिक्षोक्तोरआदीनामष्टत्वात् तथा। अव्रतघ्नम् "अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्" स्मृत्युक्तावादीनामष्टत्वात्तथा। महारोगः उन्मादत्वग्दोषराजयक्ष्मश्वासमधुमेहभगन्दरोदराश्मरीरूपः अष्टत्वात् तथा।

नवत्वसंख्याबोधकाः कवि० ल० उक्ताः। मुखनासिकानेत्रकर्णद्वयोपस्थपायुरूपाणां देहद्वाराणाम् नवसंख्यायोगात् तथा भारतकिंपुरुषहरिकुरुहिरण्मयरम्यकेलावृतभद्रतुरगकेतुमालाख्यानां भूखण्डानाम्, तपस्याकाले स्वयंकृत्तानां रावणमस्तकानाम्, व्याघ्रेललनानां "गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा" इति त्रिविधसुरायाः सात्त्विकराजसतामसाधिकारिभेदवैध्यतया नवत्वात्तथा। कुण्डानां अष्टासु दिक्षु अष्टौ ऐशानीप्राच्योर्मध्ये आचार्य्यकुण्डमेकमिति मण्डपाङ्गकुण्डानां नवत्वात्तथा। "पद्मोऽस्त्रियां महापद्मः शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्व्वोऽपि निधयो नव" हारा० उक्तानां पद्मादिनाम्" अङ्कानामेकादीनां नवान्तानां, शृङ्गारवीररौद्रकरुणाद्भुतहास्यभयानकबीभत्सशान्ताख्यानामलङ्कारोक्तानां रसानाम्, रविचन्द्रभौमबुधगुरुशुक्रशनिराहुकेतुरूपाणां ग्रहाणाञ्च नवत्वात् तथात्वम्। शा० ति० उक्ता "सच्चिदानन्दविभवात् सकलात् परमेश्वरात्। आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः। परशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः। बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः। "बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः। समवायः समाख्यातः सर्वागमविशारदैः। रौद्री बिन्दोस्ततो नादात् ज्येष्ठा बीजादजायत। वामा, ताभ्यः समुत्पन्नाः रुद्रब्रह्मरमाधिपाः" तत्र वाद्ये उक्तानां शक्तितत्त्वानां पीठशक्तीनां तत्तद्देवताभेदेन भिन्नानां तन्त्रोक्तानाम् "मुक्तामाणिक्यवैदूर्य्यगोमेदान् वज्रविद्रुमौ। पुष्परागं मरकतं नीलञ्चेति न्यसेत् क्रमात्" इत्युक्तानां रत्नानां

नवत्वात् तथा । वर्गाणामकचटतपयशलरूपाणाम् नवत्वात् तथा लोके ळवरूपलवर्गस्याभावात् अष्टसंख्याबोधक इति भेदः । प्राणरक्षकदुर्गभेदरूपाणाम् शा० ति० २३प० उक्तानां प्राणदूतीनाम्, नवत्वात्तथा । भा० व० । शामधेनो तस्याश्च यथा नवत्वं तथा नी० क०व्या० दर्शितं प्रकृतिसंयोगस्य च सृष्टौ यथा नवधा योगस्तथोक्तं प्राक् ।

ईश्वरलक्षणम् जगज्जन्मस्थितिप्रलयेषु प्रत्येकं ज्ञानचिकीर्षाप्रयत्नात्मतया नवत्वात्तथा । "विश्वसर्गविसर्गादिनवलक्षणलक्षितम्" श्रीधरः । पत्रिका कदली दाडिमी धान्यं हरिद्रामानकं कचुः । विल्वोऽशोको जयन्ती च विज्ञेया नव पत्रिकाः" इत्युक्तानां पत्रिकाणां नवत्वात् तथा । नवपत्रिकास्थदेवीरूपा दुर्गा ब्रह्माणीरक्तदन्तिकालक्ष्मीजयन्तीचामुण्डाकालिकाशिवा शोकरहिताकार्त्तिकीरूपाणां नवत्वात् तथा । कविश्रेष्ठार्थकरत्नशब्दः "धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य" ज्योतिर्वि०उक्तानां विक्रमादित्यसभास्थकविश्रेष्ठानां नवत्वात् तथा । विष्णुभक्तिः "श्रवणं कीर्त्तनं विष्णोःस्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा" भाग० ७,५ उक्तश्रवणादिरूपा नवत्वात् तथा । तुष्टिः "आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः । बाह्या विषयोपरमात् पञ्च नव तुष्टयो भवन्तीह" सां०का० उक्तानां नवत्वात् तथा । अभ्यागतेऽव्ययकार्य्यम् । "नवैतानि गृहस्थेन कार्य्याण्यभ्यागते सदा । अव्ययानि च यत् सौम्यं वाक्यं१ चक्षु२र्मनो३ मुखम्४ । अभ्युत्थान५ मिहायाते सस्नेहं६ पूर्वभाषणम् ७ । उपासन ८ मनुव्रज्या९" काशी० उक्तानि नवत्वात् तथा । अभ्यागते ईषद्व्ययसाध्यकार्य्याणि । "तथेषद्व्ययुक्तानि कार्य्याण्यभ्यागते नव । आसनं १पादशौचं२ च यथाशक्त्यशनं३ क्षितिः ४ । शय्या५ तृणं६जलं ७अभ्यङ्ग८ दीपा९गार्हस्थ्यसिद्धिदाः" काशी० दर्शितानि नवत्वात्तथा । गृहस्थावश्यत्याज्यनिन्द्यकार्य्याणि "तथा नव विकर्माणि त्याज्यानि गृहमेधिना । पैशुन्यं परदाराश्च द्रोहः क्रोधानृताप्रिये । द्वेषोदम्भश्च माया च स्वर्गमार्गार्गलाणि च" काशी० उक्तानि नवत्वात्तथा । अवश्यकर्त्तव्यानि "नवावश्यककर्म्माणि कार्य्याणि प्रतिवासरम् । स्नानं सन्ध्या जपोहोमः स्वाध्यायो देवतार्चनम् । वैश्वदेवं तथातिथ्यं नवमं पितृतर्पणम्" काशी० उक्तानि नवत्वात् तथा । गोप्यानि "जन्मर्क्षं मैथुनं मन्त्रो गृहच्छिद्रञ्च वञ्चनम् । आयुर्धनापमानं स्त्री न प्रकाश्यानि सर्वथा" काशी० उक्तानि नवत्वात्तथा । प्रकाश्यानि "नवैतानि प्रकाश्यानि बहुपापमकुत्सितम्१ । प्रायोग्य २ऋणशुद्धिश्च३ स्वान्वयः ४ क्रय५ विक्रयौ६ । कन्यादानं७ गुणोत्कर्षः९" काशी० दर्शितानि नवत्वात्तथा । अक्षयदानपात्राणि । "पात्रमित्रविनीतेषु दीनानाथोपकारिषु । पितृमातृगुरुष्वेतन्नवकं दत्तमक्षयम्" काशी० उक्तानि नवत्वात्तथा । निष्फलदानपात्राणि "निष्फलं नवकं दृष्टं चाटचारणतस्करे । कुवैद्ये कितवे धूर्त्ते शठे मल्ले च बन्दिनि" काशी० उक्तानि नवत्वात्तथा । अदेयवस्तूनि "आपत्स्वपि न देयानि नव वस्तूनि सर्वदा । अन्वये सति सर्वस्वं दाराश्च शरणागताः । न्यासाधी कुलदत्तश्च निक्षेपः स्त्रीधनं सुतः" काशी० उक्तानि नवत्वात्तथा । साधारणकर्म्म "सत्यं शौचमहिंसा च क्षान्तिर्दानं दया दमः । अस्तेयमिन्द्रियाकोचः कर्म्म साधारणं नवम्" काशी० उक्तानि नवत्वात् तथा । द्रव्यं क्षितिजलतेजोवाय्वाकाशकालदिग्मनआत्मरूपं नवत्वात् तथा । तमसोद्रव्यत्वमते दशत्वबोधकमिति भेदः । स्थायिभावः "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्सा विस्मयश्चेत्यमष्टौ प्रोक्ताः शमोऽपि च" सा०द०उक्तरत्यादीनां नवत्वात्तथा ।

१० दशत्वबोधकाः । कवि०व० उक्ताः । हस्ताङ्गुलीनां, दशभुजशम्भुबाहूनां, दशमुखरावणमौलीनां, मीनकूर्म्मवराहनृसिंहवामनपरशुरामदाशरथिबलभद्रबुद्धकल्किरूपाणां कृष्णावताराणाम्, पूर्व्वाग्नेयीदक्षिणनैरृतीपश्चिमावायव्योत्तरैशान्यूर्द्ध्वाधोरूपाणां दिशां,शविश्वेषां देवानां गणदेवताभेदानां, क्रतुदक्षवसुसत्यकामकालध्वनिरोचकपुरूरवोमाद्रवसोरूपाणाम्, दशाश्वरथचन्द्राश्वानाञ्च दशत्वात्तथा शा०ति०। शक्तितत्त्वानि "निवृत्त्याद्याः कलाः पञ्च ततो विन्दुकला पुनः। नादः शक्तिः सदापूर्वः शिवश्च प्रकृतेर्विदुः" इत्युक्तनिवृत्त्यादिरूपाणि दशत्वात् तथा । नाडीनाम् इडापिङ्गलासुषुम्णासहितानाम् "गान्धारीहस्तिजिह्वाख्या सप्तमालम्बुषा मता । यशस्विनी शङ्खिनी च कुहूः सु:

सप्त नाडिकाः” इत्युक्तानां दशत्वात् तथा । भा० व० । पुरुषस्य वागादीनामधिदैवमधिभूतं स्थितानां विषयसर्पण वर्त्मात्मकदिशां दशत्वात्तथा “ता वा एता दशैव भूतमात्रा अधियज्ञं प्रज्ञामात्रा अधिभूतमिति” श्रुतेस्तथात्वम् । गर्भमासानाम्, उपनिषद्भेदेन उपदेशकमहावाक्यानाम् “ब्रह्माहमस्मीति” एवमादीनां तद्विनेयानां तद्विक्षेपकाणाञ्च दशत्वात्तथा ।

महाविद्या “काली तारा महाविद्या षोडशी भुवनेश्वरी । भैरवी छिन्नमस्ता च विद्या धूमावती तथा । वगला सिद्धविद्या च मातङ्गी कमलात्मिका । एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः” इत्युक्तकाल्यादीनां दशत्वात्तथा । ब्राह्मणः सारस्वतकान्यकुब्जगौडमैथिलोत्कलद्राविडमहाराष्ट्रतैलङ्गगुर्ज्जरनागररूपतया दशत्वात्तथात्वम् । पापानि “अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम् । पारुष्यमनृतं चैव पैशुन्यं चापि सर्व्वशः । असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् । परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् । वितथाभिनिवेशश्च त्रिविधं कर्म्म मानसम् । एतानि दश पापानि” इत्युक्तानां दशत्वात्तथा योगाङ्गरूपो यमः “अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं कृपार्जवम् । क्षमा धृतिर्मिताहारः शौचं चेति यमा दश” इत्युक्ताहिंसादीनां दशत्वात्तथा । नियमः “तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम् । सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपोहुतम् । दशैते नियमाः प्रोक्ताः” या० ति० उक्ततपआदीनां दशत्वात् तथा । रूपककाव्यम् “नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः । ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश” इत्युक्तनाटकादीनां दशत्वात्तथा लास्याङ्गम् “गेयं पदं स्थितपाठ्यमासीनं पुष्पगण्डिका । प्रच्छेदकान्त्रिमूढं च सैन्धवाख्यं द्विगूढकम् । उत्तमोत्तमकं चान्यदुक्तप्रत्युक्तमेव च । लास्ये दशविधं ह्येतदङ्गमुक्तं मनोषिभिः” इत्युक्तगेयादीनां दशत्वात्तथा । धर्म्मलक्षणम् । “धृतिःक्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम्” इत्युक्तधृत्यादीनां दशत्वात् तथा । पञ्चमूलद्वयम् “उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम्” इत्युक्तानां दशत्वात्तथा । पञ्चमूले च “श्रीफलः सर्व्वतोभद्रा पाटला गणिकारिका । शोनाकः पञ्चभिश्चैतैः पञ्चमूलमुदाहृतम् । शालपर्णी पृश्निपर्णी वृहती कण्टकारिका । गोक्षुरः पञ्चभिश्चैतैः कनिष्ठं पञ्चमूलकम्” भा० प्र० परिभाषिते । तेन प्रत्येकमूलशब्दः पञ्चार्थकत्वात् पञ्चत्वस्य बोधक इति भेदः । उपनिषद् “ईशाकेनकठः प्रश्नोमुण्डमाण्डूक्यतित्तिरिः । ऐतरेयं च छान्दोग्यं वृहदारण्यकं दश” इत्युक्तेशादीनां प्रधानोपनिषदां दशत्वात्तथा । मन्त्रसंस्कारः तन्त्रोक्तदशविधतया दशविधत्वात्तथा ।

न्यायावयवः केषांचिन्मते जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशयव्युदाससहितानां प्रतिज्ञाहेतूदाहरणोपनयनिगमानां दशत्वात्तथा । मघा राशिचक्रे तस्या दशमत्वात्तथा तद्भेदात् तदधिपपितृशब्दोऽपि तथा । पङ्क्तिः दशाक्षरपादत्वात्तथा दशरथ इत्यर्थे पङ्क्तिरथः इत्यादिः । बौद्धबलम् “दानं शीलं क्षमा वीर्य्यं ध्यानं प्रज्ञा बलानि च । उपायः प्रणिधिर्ज्ञानं दश बुद्धबलानि वै” इत्युक्तदानादीनां दशत्वात्तथा । वह्निकला “धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी । सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि” इत्युक्तधूम्रार्चिरादीनां दशत्वात्तथा । योगभङ्गः “तिथ्यङ्कवेदैकदशोनविंशभैकादशाष्टादशविंशसंख्याः । इष्टोडुना सूर्य्ययुतोडुयोगाद्योगाश्च भूपैव दश योगभङ्गाः” ज्यो० उक्तयोगजातपञ्चदशाद्यङ्कानां दशत्वात्तथा । विप्राशौचदिनम् “शुध्येद्विप्रो दशाहेन” मनूक्तेः विप्राशौचस्य दशदिनव्यापित्वात्तथा । लघुद्विजसंस्कारः गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्म्मनामकरणनिष्क्रामणान्नप्राशनचूडोपनयनविवाहरूपतया दशत्वात्तथा । वृहत्संस्कारस्तु अष्टचत्वारिंशच्छब्दे उक्तचत्वारिंशत्त्वावबोधक इति भेदः । महापुराणलक्षणम् “सर्गोऽस्याथ विसर्गश्च वृत्तीरक्षान्तराणि च । वंशोवंशानुचरितं संस्था हेतुरपाश्रयः । दशभिर्लक्षणैर्युक्तं पुराणं तद्विदोविदुः । केचित् पञ्चविधं ब्रह्मन्महदल्पव्यवस्थया” भाग० १२, ७ । महामोहः दिव्यादिव्यशब्दादीनां तद्विषयाणां दशत्वात्तथा । “दशविधो महामोहः” सा० का० ।

देहस्थवायुः प्राणादिपञ्चकसहितनागकूर्म्मधनञ्जयकृकलदेवदत्ताख्यानाम् देहस्थानां दशत्वात्तथा । वह्निः “भ्राजकोरञ्जकश्चैव क्लेदकः स्नेहकस्तथा । धारकोबन्धकश्चैव द्रावकाख्यश्च सप्तमः । व्यापकः पावकश्चैव श्लेष्मकः दशमः स्मृतः” इति पदार्थादर्शोक्तानाम् देहस्थाग्नीनां “तेजकोदीपकश्चैव विभ्रमभ्रमशोषणाः । आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च । अन्वाहार्य्यौ गार्हपत्य इत्येते दश वह्नयः” इति तन्त्रोक्तानां बाह्यवह्नीनां वा दशत्वात्त-

था । दिक्पालवाहनम् ऐरावतच्छागमहिषसिंहमकरहरिणाश्ववृषभहंसपद्मरूपम् दशत्वात् तथा । मतान्तरे सोमस्थाने कुवेराधिपतित्वे तस्य नरवाहनत्वमिति भेदः । दिक्पालास्त्रम् वज्रशक्तिदण्डखड्गपाशाङ्कुशगदात्रिशूलचक्रपद्मरूपम् दशत्वात् तथा । दुर्गाभुजः तस्या दशभुजत्वात् तथा । सामान्यगुणः संख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्वनैमित्तिकद्रवगुरुत्ववेगरूपो दशत्वात् तथा । तेषाञ्च अनेकद्रव्यगुणत्वात् सामान्यत्वम् । अमूर्त्तगुणः "धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च । एतेऽमूर्त्तगुणाः सर्वे" इत्युक्तधर्मादीनां दशत्वात् तथा । बुद्ध्यादयश्च षट् बुद्धिसुखदुःखेच्छाद्वेषयत्नरूपा इति दशत्वम् । मूर्त्तगुणः "रूपं रसःस्पर्शगन्धौ परत्वमपरत्वकम् । द्रवो गुरुत्वं स्नेहश्च वेगो मूर्त्तगुणा अमी" इत्युक्तरूपादीनां दशत्वात् तथा ।

एकादशबोधकाः कवि०ल० उक्ताः रुद्राणाम् "अजैकपादहिर्बुध्नोविरूपाक्षश्च रैवतः । हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः । रुद्रा एकादश प्रोक्ता जयन्तश्चापराजितः" इत्युक्ताजादिकानामेकादशत्वात् तथा । दुर्य्योधनसेनानामेकादशाक्षौहिणीमितत्वात् तथा ।

भा०व०उक्ताः । पशुयागे स्तोमभेदानां, तत्रत्ययूपानां चैकादशत्वात्तथा मनःसहितज्ञानकर्मेन्द्रियाणां तद्ग्राह्यविषयाणाञ्च एकादशत्वात् तथा ।

इन्द्रियघातः "बाधिर्य्यं कुष्ठितान्धत्वं जडताऽजिघ्रता तथा । मूकता कौण्यपङ्गुत्वक्लैवोदावर्त्तमन्दताः" इत्युक्तबाधिर्य्यादीनामेकादशत्वात्तथा । "एकादशेन्द्रियबधाः" सां०का०। पूर्वफाल्गुनी तस्याः ऋक्षचक्रे एकादशत्वात् तदधिपोभगश्च तथा । तेजोगुणः रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगनैमित्तिकद्रवरूपतया एकादशत्वात् तथा । कारणोद्भवगुणः अपाकजरूपरसगन्धस्पर्शापाकजद्रवस्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणस्थितिस्थापकसंस्काररूपत्वात् एकादशत्वबोधकः । अव्याप्यवृत्तिगुणः बुद्धिसुखदुःखेच्छाद्वेषयत्नादृष्टभावनाशब्दसंयोगविभागरूपतया एकादशत्वात् तथा ।

द्वादशबोधकाः कवि०ल०उक्ताः "धाता मित्रोऽर्य्यमा रुद्रो वरुणः सूर्य्यएव च । भगोविवस्वान् पूषा च सविता दशमः स्मृतः । एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते" विष्णुध० उक्तधात्रादीनां, चान्द्रचैत्रवैशाखज्यैष्ठाषाढश्रावणभाद्राश्विनकार्त्तिकमार्गपौषमाघफाल्गुनरूपाणां मासानां, मेषवृषमिथुनकर्कटसिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीनरूपाणां राशीनां, तेषु सूर्य्यादिसंक्रान्तीनाञ्च द्वादशत्वात् तथा । कार्त्तिकबाहूनां, तन्नेत्राणां शारीफलककोष्ठानाम् अरिषड्वर्गे दर्शितराजमण्डलस्य च द्वादशत्वात् तथा शा०ति०। आदित्यानां विष्णुधर्ममूर्त्तीनाञ्च तथात्वम् । तत्रैव १५प० "द्वादशादित्यसहितामूर्त्तीर्द्वादश विन्यसेत् । केशवाद्याः क्रमाद्देहे वक्ष्यमाणविधानतः । ललाटे केशवं १धात्रा, कुक्षौ नारायणं २पुनः । अर्यम्णा हृदि मित्रेण३माधवं ३कण्ठदेशतः । वरुणेन४ च गोविन्दं४, पुनर्दक्षिणपार्श्वके । अंशुना५ विष्णु५ मंसस्थं भगेन६ मधुसूदनम्६ । गण्डे विवस्वता७ युक्तं त्रिविक्रम७ मनन्तरम् । वामपार्श्वस्थमिन्द्रेण८ वामनाख्य८ मथांसके । पूष्णा९ श्रीधरनामानं९ गले पर्जन्य१० संयुतम् । हृषीकेशाह्वयं १० पृष्ठे पद्मनाभं११ ततःपरम् । त्वष्ट्रा११ दामोदरं१२ पश्चात् विष्णुना१२ ककुदि न्यसेत्१२" इत्युक्तानां द्वादशत्वात् तथा । भा०व० । जगती तस्याः द्वादशाक्षरपादत्वात्तथा । प्राकृतयज्ञसाधनाहः तस्य द्वादशाहसाध्यत्वात् तथा ।

नाटकीयमुखाङ्गम् "उपक्षेपः परिकरः परिन्यासो विलोभनम् । युक्तिः प्राप्तिः समाधानं विधानं परिभावना । उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे" सा०द०उक्तोपक्षेपादिरूपतया तथा । बौद्धमतसिद्धमायतनम् "अर्थानुपार्ज्य बहुशो द्वादशायतनानि वै । परितः पूजनीयानि किमन्यैरिह पूजितैः । ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च । मनोबुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः" इत्युक्तायतनानां द्वादशत्वात् तथा । उत्तरफाल्गुनी राशिचक्रे तस्या द्वादशत्वात् अभेदोपचारात् तदधिपार्य्यमापि तथा । तुषितः "प्राणापानसमानाश्च उदानोव्यान एव च । चक्षुः श्रोत्ररसाघ्राणस्पर्शौबुद्धिर्मनस्तथा । द्वादशैते च तुषिता देवाः स्वायम्भुवेऽन्तरे" इत्युक्तप्राणादिनामकगणदेवात्मकत्वात्तथा । जटाधरमते "षट्त्रिंशत्तुषितामताः" इत्युक्तेः षट्त्रिंशत्त्वस्येति भेदः । क्षत्रियाशौचदिनम् "द्वादशाहेन भूमिपः" इति मनूक्तेस्तस्याशौचस्य द्वादशाहसमाप्यत्वात्तथा । साध्यः "मनोमन्ता तथा प्राणो नरोऽपानश्च वीर्य्यवान् । विनिर्भयोनयश्चैव दंशो नारायणो वृषः । प्रभुश्चेति समाख्याताः साध्याः द्वादश पौर्विकाः" इत्युक्तमनादिगणदेवात्मकः द्वादशत्वात्तथा । सूर्य्यकला "तपिनी तापिनी धूम्रा मरीचि-

ज्वालिनी रुचिः। सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा” शा॰ति॰ उक्ततपिन्यादीनां द्वादशत्वात् तथा मद्यम् “पानसं द्राक्षमाधूकं खार्ज्जूरं तालमैक्षवम् माक्षिकं टाङ्कमाध्वीकमैरेयं नारिकेलजम्। समानानि विजानीयान्मद्यान्येकादशैव तु। द्वादशन्तु सुरामद्यं सर्वेषामधमं स्मृतम्”। पुलस्त्योक्तपानसादीनां द्वादशत्वात्तथा

१३ त्रयोदशसंख्याबोधकाः। कवि॰ल॰ उक्ताः ताम्बूलगुणः ताम्बूलशब्दे वक्ष्यमाणत्रयोदशविधत्वात्तथा। भा॰ व॰। महाद्वीपः ऊर्द्ध्वलोकषट्काधोलोकसप्तकरूपत्रयोदशद्वीपतुल्ययोगात्तथा। अतिच्छन्दः गायत्र्यादिवैदिकच्छन्दःसप्तकातिक्रान्तातिजगतीच्छन्दोरूपम् त्रयोदशाक्षरपादतया तथा। प्रतिमुखाङ्गं “विलासः परिसर्पश्च विधूतं तापनं तथा। नर्म्म नर्म्मद्युतिश्चैव तथा प्रशमनं पुनः। विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनम्। पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि” सा॰द॰ उक्तविलासादीनां तथात्वात्तथा। गर्भाङ्गम् “अभूताहरणं मार्गो रूपोदाहरणे क्रमः। संग्रहश्चानुमानञ्च प्रार्थना क्षिप्तिरेव च। त्रोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा” तत्रोक्ताभूताहरणादीनां तथासंख्यत्वात्तथा। विमर्षाङ्गम् “अपवादोऽथ संफेटो व्यवसायो द्रवः स्मृतिः। शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम्। प्ररोचना विमर्षे स्यादादानं छादनं तथा” सा॰ द॰ उक्तापवादादीनां त्रयोदशत्वात्तथा। हस्तनक्षत्रं तस्य राशिचक्रे त्रयोदशत्वात्तथा तदभेदात् तदधिपदिनकृदपि तथा। करणं “करणं त्रयोदशविधम्” सा॰का॰ उक्तज्ञानकर्म्मेन्द्रियदशकमनोबुद्ध्यहङ्काररूपं त्रयोदशत्वात्तथा।

चतुर्द्दशसंख्याबोधकाः कवि॰ल॰ उक्ताः। विद्या “अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्द्दश” इत्युक्ताङ्गविद्यादिरूपा मनुः “स्वायम्भुवो मनुरभूत् प्रथमस्ततोऽभौ स्वारोचिषोत्तमजतामसरैवताख्याः। षष्ठस्तु चाक्षुष इति प्रथितः पृथिव्यां वैवस्वतस्तदनु सम्प्रति सप्तमोऽयम्” सि॰शि॰उक्तानां “सावर्णिर्दक्षसावर्णिर्ब्रह्मसावर्णिकस्तथा। धर्म्मसावर्णिको रुद्रपुत्रो रौच्यश्च भौत्यकः” पुराणोक्तानां च चतुर्द्दशत्वात्तथा। इन्द्रः इन्द्रशब्दे मन्वन्तरभेदे उक्तनामयुक्तः, भुवनम् भूरादिसप्तकातलादिसप्तकरूपं ध्रुवतारकयोगताराश्च चतुर्द्दशत्वात् तथा। एवं यममूर्त्तिः यमधर्मराजमृत्यन्तक वैवस्वतकालसर्वभूतक्षयौडुम्बरदध्नीलपरमेष्ठिवृकोदरचित्रचित्रगुप्तात्मिका चतुर्द्दशत्वात्तथा। क्षितिगुणः रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगगुरुत्वद्रवत्वात्मकः, जलगुणः गन्धहीनस्नेहसहितक्षितिगुणात्मकः, आत्मगुणश्च बुद्धिसुखदुःखेच्छाद्वेषयत्नसंख्यापरिमाणपृथक्त्वसंयोगविभागभावनाधर्म्माधर्मात्मकः चतुर्द्दशत्वात्तथा। चित्रा तस्या राशिचक्रे चतुर्द्दशत्वात्तथा तदभेदात्तदधिपत्वष्टापि तथा। शक्करी तस्याश्चतुर्दशाक्षरपादकत्वात् तथा। श्रीविद्यायन्त्रबाह्यकोणम् तन्त्रे तेषां चतुर्द्दशत्वोक्तेस्तथा। निर्वहणाङ्गम्। “सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम्। कृतिः प्रसादश्चानन्दः समयोऽप्युपगूहनम्। भाषणं पूर्ववाक्यञ्च काव्यसंहार एव च। प्रशस्तिरिति संहारे उक्तान्यङ्गानि नामतः” सा॰द॰ उक्तसन्ध्यादीनां चतुर्द्दशत्वात्तथा।

पञ्चदशसंख्याबोधकः विशेषव्यवहार्य्या चन्द्रकलाक्रियात्मिका तिथिः उभयपक्षीयप्रतिपदादिरूपा पञ्चदशत्वात्तथा। चन्द्रस्यामाकलायाः सामान्यतिथित्वेऽपि तस्या विशेषतो व्यवहाराभावात् न पञ्चदशत्वव्याघातः। स्वातिनक्षत्रं तस्यर्क्षचक्रे पञ्चदशत्वात् तदभेदात् तदधिपपवनोऽपि तथा अतिशक्करी तस्याः पञ्चदशाक्षरपादकत्वात् तथा। वैश्याशौचाहः “वैश्यः पञ्चदशाहेन” मनूक्तेस्तस्याशौचस्य पञ्चदशाहव्यापकत्वात्तथा। पक्षमानं तस्य पञ्चदशतिथिरूपत्वात् तथा। कालीयन्त्रकोणं “त्रिपञ्चारे पीठे” इत्युक्तेस्तेषां पञ्चदशत्वात्तथा।

षोडशसंख्याबोधकाः इन्दुकला “अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः। शशिनश्चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा। पूर्णा पूर्णामृता कामदायिन्यः स्वरजाः कलाः” शा॰ति॰। उक्तामृतादिरूपा, कलाशब्दे वक्ष्यमाणा दिगादिरूपा ब्रह्मकला च षोडशत्वात् तथा। स्वरवर्णः तन्त्रमते अकारादिविसर्गान्तकः षोडशत्वात् तथा। शिक्षामते “स्वरा विंशतिरेकश्चेति” इत्युक्तेः एकविंशतित्वस्येति भेदः। अष्टिः षोडशाक्षरपादत्वात् तथा। विशाखा राशिचक्रे तस्याः षोडशत्वात् तथा। तदभेदात् तदधिपौ इन्द्राग्नी अपि तथा। तत्त्वज्ञानोपयोगितया ज्ञातव्यपदार्थः “प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानरूपः गौतमोक्तः षोडशत्वात्तथा। प्रेतश्राद्धम् आद्यद्वादशमासिकपाक्षमासिकद्वयसपिण्डीकरणरूपं षोडशत्वात्तथा। नृप षोडशराजिके प्रसिद्धमरुत्तादिरूपः षोड-

स्यात्तथा। ते च यथा: "मरुत्तः, १सुहोत्रः २ पौरवोऽङ्गः ३ शौशीनरः शिविः ४ दाशरथिरामः ५ भगीरथः ६ ऐलविल-श्चिलीपः ७, यौवनाश्वोमान्धाता ८, नाहुषययातिः ९ नाभागोऽम्बरीषः १० शशविन्दुः ११, गयः १२ साङ्कृतिः रन्तिदेवः १३, दौष्मन्तिर्भरतः १४, वैन्यः १५, जामदग्न्यो-रामः १६ इत्येते भा०द्रो० ५५, ७० अ० दर्शिताः। तत्त्वान्तरानुपादानलक्षणः सांख्योक्तः विकारः एकादशे-न्द्रियपञ्चमहाभूतात्मकत्वेन षोड़शत्वात्तथा। "षोड़शकस्तु विकारः" सां०का०।

१७ सप्तदशसंख्याबोधकाः। अनुराधा राशिचक्रे तस्याः सप्तदश-त्वात् तथा तद्भेदात्तदधिपमित्रोऽपि तथा। अत्यष्टिः सप्त-दशाक्षरपादत्वात् तथा। लिङ्गदेहावयवः "पञ्चप्राणमनोबुद्धि-दशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोग-साधनम्" इत्युक्तानां सप्तदशत्वात् तथेति वेदान्तिनः। सांख्यमते तु पञ्चप्राणस्थाने पञ्चतन्मात्राणीति भेदः "स सप्तदशकेनापि युज्यते नात्र संशयः"। "सप्तदशैकं लिङ्गम्" सां०सू०।

१८ अष्टादशसंख्याबोधकाः कवि० क० सप्त द्वीपाः महाद्वीपा जम्बुप्रभृतयः एकादश उपद्वीपा इत्यष्टादशत्वात् तथा। "अष्टादशद्वीपनिखातयूपः" रघुः "नवद्वयद्वीपपृथग्-जयश्रियामिति" नैष०। विद्या धनुर्वेदायुर्वेदगान्धर्व्वार्थ-शास्त्रसहितचतुर्द्दशविद्यारूपा अष्टादशत्वात् तथा। महापुराणम् उपपुराणशब्दे दर्शितब्राह्मादिरूपम् अष्टादशत्वात् तथा। स्मृतिः अष्टादशस्मृतिकारिशब्दे-दर्शितविष्णुप्रभृतिप्रणीता अष्टादशत्वात् तथा। धान्यम् अष्टादशधान्यशब्दे दर्शितयवादिरूपम् तथा। महा-लक्ष्मीभुजाः तस्या अष्टादशभुजत्वात्तथा। ज्येष्ठा राशि-चक्रे तस्या अष्टादशत्वात्तथा तद्भेदात् तदधिप इन्द्रोऽपि तथा। धृतिः तस्या अष्टादशाक्षरपादत्वात्तथा। विवादः अष्टादशविवादपदशब्दे दर्शितऋणादानादीनामष्टादश-त्वात्तथा। कुण्डसंस्काराः "अष्टादश स्युः संस्काराः कुण्डानां तन्त्रनोदिताः। वीक्षणं मूलमन्त्रेण ह्यस्त्रेण प्रोक्षणं मतम्। तेनैव ताड़नं दर्भैर्व्वर्म्मणाभ्युक्षणं स्मृतम्। अस्त्रेण खननोद्धारौ तन्मन्त्रेण प्रपूरणम्। समीकरण-मस्त्रेण सेचनं वर्म्मणा मतम्। कुट्टनं हेतिमन्त्रेण वर्म्म-मन्त्रेण मार्जनम्। विलेपनं कलारूपं कल्पनं तदनन्त-रम्। त्रिसूत्रीकरणं पश्चाद्वर्म्मणार्च्चनं मतम्। अस्त्रेण वज्रीकरणं हुन्मन्त्रेण कुशैः शुभैः। चतुष्पथं ततस्तेन तनुयाद्वेत्रपाटनम्" शा०ति० उक्तानाम् अष्टादशत्वात्तथा। भाषा संस्कृता शौरसेनी महाराष्ट्री मागधी अर्द्धमागधी आवन्तिका दाक्षिणात्या शाकरी वाह्लिकी द्राविडी आभीरी चाण्डाली शावरी पैशाची प्राकृता चेतिसा०द० उक्तानां षोडशानां राक्षसीपाशात्त्वासहितानामष्टादश-त्वात् तथा "अष्टादशभाषावारविलासिनी" सा०द०। व्यसनम् "दश कामसमुत्थानि तथाष्टौ क्रोधजानि च। व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्। मृगयाऽक्षो-दिवास्वप्नः परिवादः स्त्रियोमदः। तौर्य्यत्रिकं वृथा-ट्या च कामजोदशकोगणः। पैशुन्यं साहसं द्रोह ईर्ष्या-ऽसूयाऽर्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" मनूक्तमृगयादीनामष्टादशत्वात्तथा। भारत पर्व्व तेषामष्टादशत्वात्तथा।

१९ ऊनविंशतिबोधकाः। धर्म्मशास्त्रकारकः "मन्वत्रिविष्णुहा-रीतयाज्ञवल्क्योशनोऽङ्गिराः। यमापस्तम्बसंवर्त्ताः का-त्यायनवृहस्पती। पराशरव्यासशङ्खलिखिता दक्षगौत-मौ। शातातपोवशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः" इत्युक्त मन्वादीनामूनविंशतित्वात्तथा। मूलनक्षत्रम् तस्य राशिचक्रे ऊनविंशतितमत्वात्तथा। तद्भेदात् तदधिप-निर्ऋतिरपि तथा। अतिधृतिस्तस्या ऊनविंशत्यक्षरपादत्वा-त्तथा। अभिजिन्नामम् तस्याः उत्तराषाढापञ्चदशदण्ड-श्रवणचतुर्दशदण्डरूपतयोनविंशतिदण्डात्मकत्वात्तथा।

२० विंशतिबोधकः रावणभुजानां, नखानाम्, अङ्गुलीनां च हस्तपादयोस्तावन्मितत्वात् तथा। पूर्व्वाषाढा राशिचक्रे तस्या विंशत्वात्तथा। तद्भेदात् तदधिपजलमपि तथा। छन्दोरूपा कृतिस्तस्याः विंशत्यक्षरपादत्वात्। शनेस्तुला-याम्स्वांशः मेषे नोचांशश्च तथा। तत्र तस्य विंशांश एव परमोच्चनीचयोः ज्यो० उक्तत्वात्। ताजकोक्तपञ्चोद्भवलम् "त्रिंशत्खभे विंशतिरश्वभे खे" नी० क० उक्ते-स्तस्य विंशतितमत्वात्तथा।

२१ एकविंशतिसंख्याबोधकाः। परशुरामक्षितिजयस्तस्य एकविं-शतिमितत्वात् तथा। उत्तराषाढा तस्या नक्षत्रचक्रे एक-विंशत्वात्तथा। तद्भेदात् तदधिपविश्वोऽपि तथा। छन्दोरूपा प्रकृतिस्तस्या एकविंशत्यक्षरपादत्वात्तथा। मूर्च्छना "मूर्च्छनाश्चैकविंशतिः" भरतोक्तेः सप्तस्वराणाम् आरोहावरोहक्रमरूपैस्त्रिस्थात् एकविंशतिरूपतया तथा। स्वरवर्णः "स्वरा विंशतिरेकश्चेति" शिक्षोक्तेस्तन्मते स्वराणां तत्संख्यत्वात्तथा।

२२ द्वाविंशतिसंख्याबोधकाः। श्रवणा तस्या ऋक्षचक्रे द्वाविंशत्वात्तथा। तदभेदात् तदधिपहरिरपि तथा। आकृतिः तस्या द्वाविंशत्यक्षरपादत्वात्तथा। निग्रहस्थानम् “प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्य्यनुयोज्योपेक्षणम् निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च” गौ० सू० उक्तानां प्रतिज्ञाहान्यादीनां द्वाविंशतित्वात् तथा।

२३ त्रयोविंशतिसंख्याबोधकाः। धनिष्ठा तस्या ऋक्षचक्रे त्रयोविंशत्वात्तथा। तदभेदात् तदधिपवसुरपि तथा। विकृतिः तस्याः त्रयोविंशत्यक्षरपादत्वात् तथा।

२४ चतुर्विंशतिसंख्याबोधकाः। तत्त्वम् प्रधानमहदहङ्कारशब्दस्पर्शरूपरसगन्धतन्मात्रैकादशेन्द्रियपञ्चस्थूलभूतरूपं चतुर्विंशतित्वात् तथा। पुरुषसहितप्रधानादिपरत्वे पञ्चविंशतित्वस्य पुरुषेश्वरयुततत्परत्वे षड्विंशतित्वस्य बोधकमिति भेदः। गायत्र्यक्षरम् तस्याः षडक्षरपादत्वाच्चतुष्पादायां तथासंख्यायोगात् तथात्वम्। जिनः ऋषभाजितसम्भवाभिनन्दनसुमतिपद्मप्रभसुपार्श्वचन्द्रप्रभसुविधिशीतलश्रेयांसवासुपूज्यविमलानन्ततीर्थकृद्धर्मशान्तिकुन्थ्वरमल्लिमुनिसुव्रतनमिनेमिपार्श्ववीराख्यश्चतुर्विंशतित्वात् तथा। ज्या क्रान्तिश्च सि० शि० चतुर्विंशतिमितत्वोक्तेस्तथा। शतभिषा तस्या राशिचक्रे चतुर्विंशत्वात्तथा तदभेदात् तदधिपवरुणोऽपि। स्वगततारासमुदायपरत्वे शतत्वस्येति भेदः। संकृतिस्तस्याश्चतुर्विंशत्यक्षरपादत्वात्तथात्वम्। जातिः न्यायोक्तदोषभेदरूपा प्रतिषेधहेतुः चतुर्विंशतित्वात् तथा। सा च गौ० सू० दर्शिता यथा “साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमाः” इति। वैशेषिकोक्तः द्रव्याश्रितः गुणः रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषयत्नगुरुत्वद्रवत्वस्नेहसंस्कारपुण्यापुण्यशब्दात्मकत्वात् चतुर्विंशतित्वस्य बोधकः। अन्यार्थपरत्वे त्रित्वादीनां बोधक इत्युक्तं प्राक्। विष्णुमूर्त्तिः शङ्खचक्रगदापद्मानां दक्षवामहस्तेषु विन्यासविशेषेण जातचतुर्विंशतिभेदा तथा। तस्य मूर्त्तिभेदो ध्यानशब्दे वक्ष्यते।

२५ पञ्चविंशतिसंख्याबोधकाः “मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः” सा० का० उक्तपुरुषसहितप्रधानादिपञ्चविंशतितत्त्वानामङ्गीकारात् तथा। “पञ्च पञ्चजनाः” इति श्रुतिरेव तत्र मानतया तैरङ्गीकृता। शा० भा० तु तस्याः श्रुतेः देवपितृगन्धर्व्वासुररक्षादीनां पञ्चप्राणादीनां पञ्चविंशतित्वपरतेत्युक्तम्। पूर्वभाद्रपदा तस्या राशिचक्रे पञ्चविंशत्वात्तथा। तदभेदात् तदधिपः अजैकपादपि तथा। उत्कृतिः तस्याः पञ्चविंशत्यक्षरपादत्वात्तथा। स्पर्शः कादिमावसानवर्णानां पञ्चविंशतित्वात् तथा। “स्पर्शानां पञ्चविंशतिः” शिक्षा।

२६ षड्विंशतिसंख्याबोधकाः तत्त्वम् जीवेश्वरसहितप्रकृत्यादिरूपं तस्य षड्विंशत्वात्तथा। उत्तरभाद्रपदा तस्याः राशिचक्रे षड्विंशत्वात् तथा तदभेदात् तदधिपाहिर्बुध्नोऽपि तथा। संकृतिस्तस्याः षड्विंशत्यक्षरपादात्तथा।

२७ सप्तविंशतिः। नक्षत्रं उडुचक्रशब्दे दर्शितराशिचक्रस्थाश्विन्यादिसप्तविंशतिरूपत्वात् तथा। रेवती तस्या राशिचक्रे सप्तविंशत्वात्तथा। शुक्रस्य मीने तुङ्गं कन्यायां सुनीचं च तथा।

२८ अष्टाविंशतिसंख्याबोधकाः साभिजिन्नक्षत्रम् तस्याष्टाविंशत्वात्तथा। सात्त्विकनार्य्यलङ्कारः “यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः। अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः। शोभा कान्तिश्च दीप्तिश्च माधुर्यञ्च प्रगल्भता। औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः। लीला विलासो विच्छित्तिर्विब्वोकः किलकिञ्चितम्। मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः। विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम्। हसितं चकितं केलिरित्यष्टादशसंख्यकाः” सा० द० उक्तदशस्वभावजभावसहितलीलादीनामष्टानामष्टाविंशतित्वात्तथा।

३२ द्वात्रिंशत्त्वबोधकाः दन्तः तस्य नरमुखे द्वात्रिंशत्संख्यकत्वात्तथा। भगवदपराधः अपराधशब्दे २२२ पृ० दर्शितानां यानगमनादीनां अनियमितान्नभोजनादीनां वा द्वात्रिंशत्त्वात्तथा।

३३ त्रयस्त्रिंशत्त्वबोधकः। नाय्यालङ्कारः “आशीराक्रन्दकपटाऽक्षमागर्वोद्यमाश्रयाः। उत्प्रासनं स्पृहाक्षोभपश्चात्तापोपपत्तयः। आशंसाऽध्यवसायौ च विसर्पोल्लेखसंज्ञितौ। उत्तेजनं परीवादो नीतिरर्थविशेषणम्। प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनम्। उत्कीर्त्तनं तथा याच्ञा परीहारो निवेदनम्। प्रवर्त्तनाख्यान

युक्तिप्रहर्षोपदेशनम्” सा० द० उक्ताशीरादीनां तत्संख्यकत्वात्तथा । व्यभिचारिभावः “निर्वेदावेगदैन्य-श्रममदजडता औग्र्यमोहौ विबोधः स्वप्नापस्मारगर्व्वा-मरणमलसताऽमर्षनिद्रावहित्थाः । औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसंत्रासलज्जा हर्षासूयाविषादाः-सधृतिचपलताग्लानिचिन्तावितर्काः” सा० द० उक्तानां तत्संख्यत्वात्तथा ।

३६ षट्त्रिंशत्संख्याबोधकाः । रागिणी “रागाः षट् त्रिंशत्तु भार्याः इति भरतोक्तेः वसन्तादिरागभार्य्याणां तत्संख्यकत्वात् तत्संख्याबोधकता । रागिणीशब्दे तास्तु वक्ष्यन्ते । नाटकलक्षणम् सा०द० “षट्त्रिंशल्लक्षणान्यत्र” इत्युपक्रम्य “भूषणाक्षरसंघातौ शोभोदाहरणं तथा । हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः । निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च । दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा । विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्य्ययौ । दाक्षिण्यानुनयौ मालार्थापत्तिर्गर्हणा तथा । पृच्छा प्रसिद्धिः सारूप्यम् संक्षेपोगुणकीर्त्तनम् । लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा” इत्युक्तभूषणादीनां षट्त्रिंशत्त्वात्तथा ।

३८ अष्टत्रिंशत्संख्याबोधकाः सोमसूर्य्याग्निकला “सोमसूर्य्याग्निभेदेन मातृकावर्णसम्भवाः अष्टत्रिंशत्कलास्तास्तन्मन्त्रेषु व्यवस्थिताः” शा० ति० उक्तानां सोमषोडशकला सूर्य्यद्वादशकलावह्निदशकलारूपाणामष्टत्रिंशत्त्वात्तथा ।

४० चत्वारिंशत्संख्याबोधकः । तानः “चत्वारिंशत्तता मताः” इति भरतोक्तेः ततशब्दवाच्यतानानां तत्संख्यत्वात्तथा ।

४९ ऊनपञ्चाशत्संख्याबोधकः । अनिलः अनिलशब्दे दर्शितोनपञ्चाशद्भेदत्वात्तथा ।

५० पञ्चाशत्संख्याबोधकः । मातृकालिपिः तस्याः तन्त्रमते पञ्चाशद्वर्णात्मकत्वात्तथा । “पञ्चाशल्लिपिभिर्विभक्तत्वादि” शा० ति० ।

५१ एकपञ्चाशद्बोधकः महापीठः महापीठशब्दे वक्ष्यमाणभेदानां महापीठविशेषाणां तत्संख्यकत्वात्तथा ।

६४ संख्याबोधकाः । वर्णाः शिक्षामते “चतुःषष्टिस्त्रिषष्टिर्वा वर्णाः सम्भवतोमताः । स्वराविंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृताह्यष्टौ चत्वारश्च यमाः स्मृताः । अनुस्वारोविसर्गश्च+कँपौ चापि पराश्रितौ । दुस्पृष्टश्चेति विज्ञेय लृकारः प्लुतएव वा” इतिशिक्षोक्तेस्तथा । कला कलाशब्दे वक्ष्यमाणभेदानां तासां चतुःषष्टित्वात्तथा ।

महादेवीपीठम् “मायामङ्गलनागवामनमहालक्ष्मीचरित्राभृगुच्छायाछत्रहिरण्यहास्तिनमहेन्द्रोड्डीशचम्पापुरम् । पद्मं क्षीरकमङ्गलेश्वरपटेशौचन्द्रपूः श्रीगिरिः कोलाकुल्लकपूस्सपर्व्वतकृच्छेलकविङ्काबुदाः । काश्मीरैकाम्रकाञ्चीमलयगिरिवरेकारकृत्भूतदेवीकौ दाक्षालेशजालन्धरसुरभिमणीशाद्रिकाशीप्रयागाः । त्रिस्रोतःकार्क्कोटोज्जयिनिसमथुरं कोशलाकान्यकुब्जौ डार्वङ्काराट्टहासा विरज इह ततः कुण्डिनं राजगेहम् । नेपालं पुण्ड्रवर्द्धनमालवपारसोकामरूपकेदाराः । विन्ध्यमहामठगोश्रुतिकश्मिल्लाश्रीपीठमरुदेशाः” पदार्थादर्शोक्तानां तत्संख्यकत्वात्तथा ।

१०० शतसंख्याबोधकाः पुरुषायुषम् “शतायुर्वै पुरुषः इति श्रुतेस्तथा । रावणहस्ताङ्गुलिः तस्य विंशतिबाहुत्वेन प्रत्येकं बाहौ पञ्चाङ्गुलियोगात् शतत्वेन तथात्वम् । इन्द्रयज्ञः तस्य शतयज्ञत्वेन तद्यज्ञानां शतत्वात् तथा ।

१००० सहस्रबोधकाः । इन्द्रनेत्रः तस्य सहस्रनेत्रतया तन्नेत्राणां सहस्रत्वेन तथा । विराट्पुरुषचक्षुः तत्पादः तद्बाहुस्तन्मूर्द्धा च तथा । “सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्” श्रुतिः । कार्त्तवीर्य्यार्जुनबाहुः वाणासुरबाहुश्च तयोः सहस्रबाहुत्वात् तथा । अनन्तशीर्षम् तस्य सहस्रशीर्षतया तथा । गङ्गास्रोतोमुखम् समुद्रसङ्गमसमीपस्थाने सहस्रमुखतया तस्याः प्रवहनात्तथात्वम् । सामवेदशाखा तद्वेदस्य सहस्रशाखत्वात् तथा ।

१०००० अयुतसंख्याबोधकः रामराज्यकालः “दश वर्षसहस्राणि रामोराज्यमकारयत्” रामा० उक्तेस्तथा ।

अत्रेदं बोध्यम् । शास्त्रकारैः ये ये पदार्था यद्यत्संख्यकतया उक्तास्तच्छब्दास्तत्तत्संख्याबोधकाः । तेषु दिङ्मात्रमत्र दर्शितम् अनयैव रीत्यान्येषामपि वस्तुतादृक्भेदयुक्ततत्तत्पदार्थपराणां शब्दानां तत्तत्संख्यार्थकत्वं कल्पनीयम् । शब्दार्थयोरभेदाच्च कचिच्छब्दस्य तदर्थकता उक्ता कचिच्चार्थस्यैव तत्तत्संख्यायोगउक्तः तेनैव तत्तदर्थकशब्दस्य तत्तत्संख्याबोधकता उन्नेया । इयांस्तु विशेषः समुदायवर्त्तिपदार्थस्यैकदेशवृत्तित्वाभिप्रायेण बहुसंख्यान्वितपदार्थबोधकानामपि एकवचनादिप्रयोगोऽपि । यथा “रामोऽगवेदैर्जलधिस्तु सैलैरित्यादौ” रामजलध्योः त्रित्वचतुष्ट्वबोधकत्वेऽपि एकवचनान्तता अगवेदैरित्यादौ सप्तत्वचतुष्ट्वबोधकयोः बहुवचनान्तता । एवमन्यत्रापि । उक्तशब्दानां कचित्संख्यापरत्वम् कचित्संख्येयपरत्वम्

कचिच्च पूरणार्थताऽपि यथा "दिग्भिर्गुणैरष्टवसैः शरैश्च वाणैभसंख्यैर्नखसंमितैश्च" शी०क० दिगादिशब्दानां दशमाद्यंशपरत्वम्। एवं "युग्माग्नो कृतभूतानि षण्मुनी वसुरन्ध्रयोः" इत्यादौ युग्माग्निप्रभृतीनां तत्तत्संख्यापूरणो द्वितीयादिपरत्वम्। अत्र च ये शब्दा उक्तास्तत्पर्य्याय शब्दा अपि तत्तत्संख्याबोधकाः इति।

**एकादेश** पु० कर्म०। पाणिन्युक्ते उभयस्थानिप्रभवे एकस्मिन्नादेशे। एकादेशश्च यथा मुरारिरित्यत्र मुरशब्दस्य अन्त्याकारस्य अरिशब्दादिभूताकारस्य चेत्युभयोः स्थाने दीर्घभूत एक आकारः एवमन्यत्रापि। "एकादेश उदात्तेनोदात्तः" पा०।

**एकादन(न्न)विंशति** स्त्री एकेन न विंशतिः। एक+न+आदुक् दस्य वा न। १एकोनविंशतिसंख्यायां, २तद्युक्ते च एवमेका(दन)त्रिंशदादयः।

**एकानंशा** स्त्री एको न अंशोयस्याः असमर्थसमा०। अनेकांशत्वात् दुर्गायां सा च यशोदागर्भसंभूता प्रजापतेरंशजाता। तथोक्तं हरिवं०६०अ०यथा "नन्दगोपस्य भार्य्यैका वसुदेवस्य चापरा। तुल्यकालं हि गर्भिण्यौ यशोदा देवकी तथा। देवक्यजनयद्विष्णुं यशोदा तान्तु कन्यकाम्" इत्युपक्रम्य "वसुदेवस्तु संगृह्य दारकं क्षिप्रमेव च। यशोदाया गृहं रात्रौ विवेश सुतवत्सलः। यशोदायास्त्वविज्ञातस्तत्र निक्षिप्य दारकम्। गृहीत्वा दारिकां ताञ्च देवकीशयने न्यसत्। परिवर्त्ते कृते ताभ्यां गर्भाभ्यां भयविक्लवः। वसुदेवः कृतार्थो वै निर्जगाम निवेशनात्। उग्रसेनसुतायाथ कंसायानकदुन्दुभिः। निवेदयामास तदा कन्यां तां वरवर्णिनीम्। तच्छ्रुत्वा त्वरितः कंसो रक्षिभिः सह वेगितः। आजगाम गृहद्वारं वसुदेवस्य वीर्य्यवान्। स तत्र त्वरितं द्वारि किं जातमिति चाब्रवीत्। दीयतां शीघ्रमित्येवं वाग्भिः समभितर्ज्जयन्। ततो हाहाकृताः सर्व्वा देवकीभवने स्त्रियः। उवाच देवकी दीना वाष्पविक्लवया गिरा। दारिका पुत्र! जातेति कंसं समभियाचती। श्रीमन्तो मे हताः सप्त पुत्रगर्भास्त्वया विभो!। दारिकेयं हतैवैषा पश्यस्व यदि मन्यसे। दृष्ट्वा कंसस्तु तां कन्यामाकृष्यत मुदा युतः। हतैवैषा यदा कन्या जातेत्युक्त्वा वृथामतिः। सा गर्भशयनक्लिष्टा गर्भाम्बुक्लिन्नमूर्द्धजा। कंसस्य पुरतोन्यस्ता पृथिव्यां पृथिवीसमा। पादे तां गृह्य पुरुषः समाविध्यावधूय च। उद्यच्छन्नेव सहसा शिलायां समपोथयत्। साऽवधूता शिलापृष्ठे निष्पिष्टा दिवमुत्पतत्। हित्वा गर्भतनुं सा तु सहसा मुक्तमूर्द्धजा। जगामाकाशमाविश्य दिव्यस्रगनुलेपना। कन्यैव चाभवत् सा तु दिव्या देवैरभिष्टुता। नीलपीताम्बरधरा गजकुम्भोपमस्तनी। रथविस्तीर्णजघना चन्द्रवक्त्रा चतुर्भुजा। विद्युद्विस्पष्टवर्णाभा बालार्कसदृशेक्षणा। पयोधरस्तनवती सन्ध्येव सपयोधरा। सा वै निशितमोघने सर्व्वभूतगणाकुले। नृत्यन्ती हसती चैव विपरीते नभस्तले। विहायसि गता रौद्री पपौ पानमनुत्तमम्। जहास च च हाहासं कंसञ्च रुषिताऽब्रवीत्। कंस कंसात्मनाशाय यदहं घातिता त्वया। सहसा च समुत्क्षिप्य शिलायामभिपोथिता। तस्मात्तवान्तकालेऽहं कृष्यमाणस्य शत्रुणा। पाटयित्वा करैर्देहं उष्णं पास्यामि शोणितम्। एवमुक्त्वा वचो घोरं सा यथेष्टेन वर्त्मना। खं सा देवालयं देवी सगणा विचचार ह। सा कन्या ववृधे तत्र वृष्णिसद्मनि पूजिता। पुत्रवत् पाल्यमाना सा देवदेवाज्ञया तदा। विद्धि चैनामथोत्पन्नामंशाद्देवीं प्रजापतेः। एकानंशां योगकन्यां रक्षार्थं केशवस्य च। तां वै सर्व्वे सुमनसः पूजयन्ति स्म यादवाः। देवीव्र दिव्यवपुषं कृष्णः संरक्षितो यया। तस्यां गतायां कंसस्तु तां मेने मृत्युमात्मनः"।
"सा कन्या ववृधे तत्र वृष्णिसद्मनि पूजिता। पुत्रवत् पाल्यमाना वै वसुदेवाज्ञया तदा। एकानंशा तु यामाहुरुत्पन्नां मानवा भुवि। योगकन्यां दुराधर्षाम्" इति च। वृहत्सं० मूर्त्तिलक्षणे "एकानंशा कार्य्या देवी बलदेवकृष्णयोर्मध्ये"।

**एकानुदिष्ट** त्रि० एकमनु दिष्टम् "सहसुपा" पा०। एकोद्देशेन दत्तश्राद्धे। "यावदेकानुदिष्टस्य गन्धोलेपश्च तिष्ठति। विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्त्तयेत्" मनुः।

**एकान्त** त्रि० एकः अन्तः निश्चयः सीमा वा। १अत्यन्ते अतिशये "तेजःक्षमा वा नैकान्तं कालज्ञस्य महीपतेः" माघः। "शकुन्तमेकान्तमनोविनोदिनम्" नै०। क्रियाविशेषणत्वे नास्य न०। "एकान्तविध्वंसिषु मद्विधानाम्" रघु० "नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नतः" गीता। तद्वति २द्रव्ये त्रि०। "एकान्तपाण्डुस्तनलम्बिहारम्" रघुः। "एकान्तशैत्यात् कदलीविशेषाः" कुमा०। एकः एवान्तो यत्र। निर्जने ४रहसि। "तस्मादुद्यान्ते हर्म्यस्थान्तः शय्यैकान्ते कर्त्तव्या" ज्यो०त०। "वासे बहूनां कलहो भवेद्वार्त्ता द्वयोरपि। तस्मादेकान्तमास्थाय चिन्तयेत् नित्यसंयुतः" पुरा०। ततः तसिल्। एकान्ततस् एका-

न्ते इत्याद्यर्थे। "दृष्टे साऽपार्था चेन्नैकान्ततोऽत्यन्ततो ऽभावात्" सां॰का॰। तत्र भवः ठञ्। ऐकान्तिक एकान्तभवे त्रि॰स्त्रियां ङीप्। "ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्पते" पुरा॰। एक एवान्तः स्वभावो यस्य। एकरूपताप्राप्ते त्रि॰। "विलोक्यैकान्तभूतानि भूतान्यादौ प्रजापतिः। स्त्रियं चक्रे स्वदेहार्द्धं यया पुंसां मतिर्हृता" भाग॰ ६,१८,२२।

**एकान्तत्यागवाद** पु॰ वस्तुनः एकान्तता एकस्वरूपता अस्तीत्यादिसम्बन्धरूपता तस्य त्यागप्रतिपादकोवादः। अर्हद्विशेषोक्तवादभेदे। सच वादः अर्हच्छब्दे स्याद्वाद प्रकरणे ३८६ पृ॰ दर्शितः।

**एकान्तदुःषमा** स्त्री दुष्टा समा वर्षोदुःषमा सुषमा॰ षत्वम् एकान्तं दुःषमा २त॰। बौद्धकल्पिते कालभेदे हेमच॰। यथा "कालो द्विविधोऽवसर्पिण्युत्सर्पिणीषु भेदतः। सागरकोटिकोटीनां विंशत्या स समाप्यते। अवसर्पिण्यां षडरा उत्सर्पिण्यां त एव विपरीताः। एवं द्वादशभिररैर्विवर्त्तते कालचक्रमिदम्। तत्रैकान्तसुषमारश्चतस्रः कोटिकोटयः। सागराणां सुषमा तु तिस्रस्तत्कोटिकोटयः। सुखमदुःखमाने द्वे दुःखमसुखमा पुनः। सैका सहस्रैर्वर्षाणां द्विचत्वारिंशतोनिता। अथ दुःखमैकविंशतिरब्दसहस्राणि तावती तु स्यात्। एकान्तदुःषमापि ह्येतत्संख्याः परेऽपि विपरीताः। प्रथमारत्रये मर्त्यास्त्रिद्व्येकपल्यजीविताः। त्रिद्व्येकगव्यूत्युच्छ्राया स्त्रिद्व्येकदिनभोजनाः। कल्पद्रुफलसंतुष्टाश्चतुर्थे त्वरके नराः। पूर्व्वकोट्यायुषः पञ्चधनुःशतसमुच्छ्रयाः। पञ्चमे तु वर्षशतायुषः सप्तकरोच्छ्रयाः। षष्ठे पुनः षोड़शाब्दायुषोहस्तसमुच्छ्रयाः एकान्तदुःखप्रचिता उत्सर्पिण्यामपीदृशाः। पश्चानुपूर्व्या विज्ञेया अरेषु किल षट्स्वपि"।

**एकान्तर** त्रि॰ एकमन्तरं व्यवधानम्। १एकव्यवधाने "एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ तथा स्मृतौ" मनुः। बहु॰। २एकान्तरवर्त्तिनि त्रि॰। "एकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम्" मनुः। एकदिनव्यवधानेन भोजनरूपे ३व्रतभेदे न॰ एकदिनव्यवधानेन जायमाने ४ज्वरभेदे पु॰।

**एकान्तसुषमा** सुष्ठु समा वर्षः सुषमा सुषमादि॰षत्वम् २त॰। बौद्धमतसिद्धे कालभेदे एकान्तदुःषमाशब्दे विवृतिः।

**एकान्तिन्** त्रि॰ एकान्तमस्त्यस्य इनि स्त्रियां ङीप्। १अतिशययुक्ते एकान्तः एकस्वरूपः उपास्यत्वेनास्त्यस्य इनि। स्त्रियां ङीप्। २भगवद्भक्तविशेषे त्रि॰। "एकान्तेनासमोविष्णुर्यस्मादेवं परायणः। तस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतसः" गरुडपु॰ १३१।

**एकान्न** त्रि॰ एकस्यैवान्नं भक्ष्यं यत्र। १एककालिकभक्षणे एकभक्तरूपे व्रते कर्म्म॰। २एकमात्रभक्ष्ये अन्ने न॰। "अब्दं यत्रान्नमश्नीयादेकान्नमथ वा पुनः। वृन्ताकं मूरणञ्चैव मूकशिम्बीञ्च वर्जयेत्" काशी॰। "भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेत् व्रती" मनुः। "क्रीत्वा लब्ध्वा प्राप्य गृहमेकान्नमलवणमेकरात्रं त्रिरात्रं वा भोक्तव्यमिति" शु॰त॰ स्मृतिः। एकस्मिन् स्थाने पचनीयमन्नं यस्य। अविभक्ते भ्रात्रादौ "एकान्नवर्त्तिनाञ्चैव एकोद्दिष्टं न पार्वणम्। एकपाकेन वसतां पितृदेवद्विजार्च्चनम्। एकं भवेद्विभक्तानां तदेव स्यात् गृहेगृहे" वृह॰

**एकायन** त्रि॰ एकमयनं विषयोऽवलम्बनं वा यस्य। १विषयान्तरव्यावृत्तचित्ते एकाग्रमनस्के २एकावलम्बने च। "तानि वा एतानि संकल्पैकायनानि संकल्पप्रतिष्ठितानि" छा॰उ॰। एकमयनमवलम्बनीयं यस्य। ३एकावलम्बनीये त्रि॰। "एवमेकायनं धर्ममाहुर्वेदविदोजनाः" भा॰शा॰ ७८७२ श्लो॰। एकस्यायनं गतिर्यत्र। ४एकमात्रगमनयोग्ये त्रि॰ "भ्रातरं भीमसेनन्तु विज्ञाय हनुमान् कपिः। दिवङ्गमं रुरोधाथ मार्गं भीमस्य कारणात्। अनेन हि पथा मा वै गच्छेदिति विचार्य्य सः। आस्त एकायने मार्गे कदलीखण्डमण्डिते। भ्रातुर्भीमस्य रक्षार्थम्" भा॰ व॰ १४६अ॰। कर्म्म॰। ५एकस्थाने न॰। "यः स्यादेकायने लीनस्तूष्णीं किञ्चिदचिन्तयन्" भा॰ अनु॰ ५२२श्लो॰।

**एकार्थ** पु॰ एकः अर्थः प्रयोजनमभिधेयम् पदार्थो वा। एकस्मिन् १प्रयोजने २अभिधेये ३पदार्थे च। "वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः" सा॰द॰। बहु॰। ४एकाभिधेये शब्दभेदे एकार्थस्य एकशक्त्योपस्थापितार्थकः। ५एकप्रयोजनयुक्ते त्रि॰। अभूततद्भावे च्वि+भू-घञ्। एकार्थीभाव अनेकार्थानामेकार्थताप्राप्तौ पु॰ "समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्। बहूनां वृत्तिधर्म्माणां वचनैरेव साधने। स्यान्महत् गौरवं तस्मादेकार्थीभाव आश्रितः" इति भर्तृहरिः। कर्त्तरि क्त। एकार्थीभूत परस्परमन्विते एकस्मिन् विशिष्टार्थे च "एकार्थमनेकशब्दं वाक्यम्" निरु॰। वै॰मते वाक्येऽपि शक्तिः अखण्डवाक्यस्फोटस्यैव वाचकत्वात् "पदे न वर्णाविद्यन्ते वर्णेष्ववयवा न च। वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।

ब्राह्मणार्थीयथा नास्ति कश्चिद् ब्राह्मणकम्बले। देवदत्तादयो वाक्ये तथैव स्युर्निरर्थकाः” इति “वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिरिति च” हरिः।

**एकावली** स्त्री एकाऽद्वितीया आवली माला मणिश्रेणी। (एकनर) हारभेदे, सा० द० उक्तेऽर्थालङ्कारभेदे अलङ्कारशब्दे ३९८ पृ० विवृतिः।

**एकाब्दा** स्त्री एकः अब्दो वयोमानं यस्याः। १एकहायन्यां स्त्रीगव्याम्। “एकाब्दा त्वेकहायनी” अमरः। २एकवर्षयुक्ते त्रि०। एकवर्षादयोऽप्यत्र। “एकवर्षे गवि हते कृच्छ्रपादो विधीयते” स्मृतिः। एकहायनोऽप्यत्र हायनस्य वयोवाचित्वेन संख्यापूर्व्वकत्वात् स्त्रियां ङीप् इति भेदः। “अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाति” श्रुतिः।

**एकाशीतिपद** न० एकाशीतिः पदान्यत्र। गृहारम्भप्रवेशादौ वास्तुपूजार्थं कर्त्तव्ये तावन्मितकोष्ठके वास्तुमण्डलभेदे। तच्च मण्डलं तिर्य्यगूर्द्ध्वाभिर्दशभीरेखाभिः एकाशीतिकोष्ठात्मकं गृहारम्भाद्यर्थं वास्तुयागे लेख्यम् यथाह देवीपु०। “प्रासादे च चतुःषष्टिरेकाशीतिपदं गृहे” तल्लेखनप्रकारादि वास्तुमण्डलशब्दे वक्ष्यते।

**एकाश्रय** त्रि० एक आश्रय आधारोऽवलम्बनं वा यस्य। १अनन्यगतिके। २एकाधारवृत्तौ ३वैशेषिकोक्तगुणभेदे च ते च गुणाः अनेकाश्रितगुणभिन्नाः। “संयोगश्च विभागश्च संख्याद्वित्वादिकास्तथा। द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः। अतः शेषगुणाः सर्वे मता एकैकवृत्तयः” भाषा० दर्शिताः। एवं च रूपरसगन्धस्पर्शशब्दाः एकत्वमेकपृथक्त्वं परिमाणपरत्वापरत्वानि बुद्धिसुखदुःखेच्छाद्वेषयत्नगुरुत्वस्नेहसंस्कारादृष्टानि च तादृशाः, तेषां प्रत्येकस्य एकैकवृत्तित्वात् संयोगादीनान्तु एकैकस्यैव द्विवृत्तित्वमिति न तथात्वम्। एकाधिकरणादयोऽप्यत्र। कर्म०। ४एकस्मिन् आधारे पु० “हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता” भाषा०।

**एकाष्टका** स्त्री एका अष्टका। १माघकृष्णाष्टम्याम् २तत्कर्त्तव्ये श्राद्धे च। अष्टकानां तासु कर्त्तव्यश्राद्धानां च त्रित्वेऽपि आ० श्रौ० सू० “हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका एकस्यां वेति” एकस्या अपि कर्त्तव्यतया विधानात्तथा। सा च मध्यत्वेन माघकृष्णाष्टमी ग्राह्या। अत एव “गवामयनायैकाष्टकायां दीक्षा” कात्या० १२,१,२, सू० भा० “एकाष्टाका माघ माघस्य कृष्णाष्टमी प्रसिद्धः” कर्केणोक्तम्। ३तदभिमानिदेव्यां शच्याम् “एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्। तेन देवा असहन्त शत्रून् हन्तासुराणामभवच्छचीभिः” सा० ब्रा० २प्र० ३ख०। शचीभिरित्यत्र शचीपतिरिति”अथ० ३,१०,१२,पाठः। “एकाष्टके! सुप्रजसः सुवीरा वयं स्याम पतयो रयीणाम्” अथ० ३,१०,५

**एकाष्ठील** पु० एकमस्थीव काण्डं तद्वत्कठिनत्वात् वाति वा-क पृषो० षत्वं दीर्घश्च। वकवृक्षे अमरः पाठायां स्त्री। (आकनादी) राजनि०।

**एकाह** पु० एकमहः टच्समा० एकशब्दोत्तरत्वात् नाह्नादेशः। “रात्राह्नाहाः पुंसि” पा० पुंस्त्वम्। “एकस्मिन् दिवसे “एकाहेनैव निर्वपेत्” काव्य० स्मृतिः “ब्रह्मचारिण्येकाहः” मनुः। “अश्वस्यैकाहगमः” पा०। उपचारात्। २एकाहसाध्ये अग्निष्टोमादौ यागभेदे च। “उक्तप्रकृतयोऽहीनैकाहाः” आश्व० ९,१,१। “उक्तो ज्योतिष्टोम एकाहाहीनसत्राणां प्रकृतिभूतः उक्तानि पञ्चविंशतिरहानि सात्त्विकानि एतेभ्य एव सात्त्विकेभ्योऽहोभ्यो ऽहीनैकाहा व्याख्यायन्त इत्युक्तम् इदानीं तानेकाहाहीनान् वक्तुकामेनाचार्य्येण “उक्तप्रकृतयोऽहीनैकाहा” इत्युक्तम्। तस्यायमर्थः उक्ता प्रकृतिर्येषां ते इमे उक्तप्रकृतयोऽहीनैकाहाः। प्रकृतिः प्रकारो न रूपान्तरमित्यनर्थान्तरं ज्योतिष्टोमोहि सर्वेषामेकाहाहीनसत्राणां प्रकृतिरिति सिद्धम्” नारा०। “अनतिदेशे त्वेकाहो ज्योतिष्टोमो द्वादशशतदक्षिणस्तेन यस्त्वेकाहानाम्” ९,१,२।

**एकाहगम** पु० एकाहेन गम्यते गम–कर्म्मणि घञ्। एकाहगम्ये देशे “अश्वस्यैकाहगमः” पा०।

**एकाहार** पु० एकस्मिन् दिने एक आहारः। एकस्मिन् दिने सकृद्भोजने “एकाहारस्तया (विधवया) कार्यो न द्वितीयः कथञ्चन” शु० त० पुरा०। “मुनिभिर्द्विरशनमुक्तम्” इत्यादिना द्विर्भोजनस्य विधानेऽपि एककालमात्रभोजनं तस्या विहितम्। एकाहारे च परिसंख्यैव आहारस्य रागप्राप्तेः न द्वितीय इत्यनेन तथैव प्रतिपादनात्। एक आहारो यस्य। एकस्मिन्नह्नि सकृद्भोक्तरि त्रि० “प्रौष्ठपदं तु यो मासमेकाहारो भवेन्नरः” भा० अनु० १०६अ०।

**एकीकरण** न० एक+अभूततद्भावे च्वि-कृ–भावे ल्युट्। अनेकधान्यादेः राशिकरणेन एकतापादने। कर्म्मणि क्त।

एकीकृत तथापादिते धान्यादौ त्रि०एकी+भू-घञ् । एकीभाव अनेकधान्यादेः राशिताप्रापणरूपे व्यापारे पु०। कर्त्तरि क्त । एकीभूत एकत्वप्राप्ते अनेकधान्यादिराश्यादौ । कृ-ल्यप् । एकीकृत्य तथापादनं कृत्वेत्यर्थे अव्य० भू-ल्यप् । एकीभूय एकत्वं प्राप्येत्यर्थे अव्य० ।

**एकीय** त्रि० एक+भवार्थे तस्येदमित्यर्थे वा छ । १एकपक्षभवे सहाये, २एकसम्बन्धिनि च ।

**एकेक्षण** पु० एकमीक्षणं यस्य । १काके २एकचक्षुर्युतमात्रे काणे त्रि० । ३शुक्राचार्य्ये पु०। बलिना वामनाय दीयमानत्रिपदभूमिं प्रतिषेधतः शुक्रस्य वचनमनादृत्य तद्दानाय प्रवर्त्तमानं बलिं वीक्ष्य दानार्थस्वर्णीतजलपात्रद्वारं सूक्ष्ममूर्त्त्या प्रविश्य स्थितस्तस्य छलं बुद्धा जलद्वारावरणनिवारणच्छलेन कुशेन तस्यैकं नेत्रं वामनेन विदारितमिति तस्य तत्कालादेकनेत्रतेति पौराणिकी कथाऽत्रानुसन्धेया ।

**एकैक** त्रि० सुबन्तस्य एकस्य वीप्सार्थे द्वित्वम् "एकं बहुव्रीहिवत्" पा० द्विरुक्त एकशब्दो बहुव्रीहिवत् तेन सुब्लोपपुंवद्भावौ । प्रत्येकपदार्थे इह द्वयोरपि सुपोर्लुकि कृते सति बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात् समुदायात् पुनः सुप् । स्त्रियां टाप् । एकैका आहुतिः । "न बहुव्रीहौ" पा० सर्वनामसंज्ञानिषेधः मुख्यबहुव्रीहिपरत्वेन एकैकस्मै एकैकस्मात् इत्यादौ सर्वनामकार्य्यम् । "दर्शे दर्श वा एकैकस्मिन् प्राणाः" श०ब्रा० ८,१,१,२ । ततः कारकार्थे शस् । एकैकशस् कारकरूपप्रत्येके अव्य० । "एकैकशश्चरेत् कृच्छ्रं द्विजः पापापनुत्तये" प्रा०त० विष्णु० "ब्राह्मस्य त्वयाहस्य यत् प्रमाणं समासतः । एकैकशो युगानां तु क्रमशस्तान् निबोधत" मनुः । स्वार्थे यत् । एकैकश्य तदर्थे न० "एकैकश्येनानुपूर्व्या भूत्वा भूत्वेह जायते" भा०७,१५,४२ "एकैकश्यं तदा योधा धार्त्तराष्ट्रस्य भारत । पर्य्यवर्त्तन्त गन्धर्वैर्दशभिर्दशभिः सह" भा०व०। २४० । नीलकण्ठेन "एकैकस्येति पठित्वा एकैकमिति व्याख्यातम्" एकैकशो भावः यत् । एकैकश्य "एकैकराशिभवने "एकैकश्येन यथानुपूर्व्यम्" भाग०५,१,२५ ।

**एकैषिका** स्त्री नित्यकर्म्मधा० । (श्यामादी) ख्याते रत्नमाला । "एकैषिकाजशृङ्गी च प्रोक्ते कोमलोपकृत्" । "एकैषिकातैलं सघृतमतिशीत पित्तहरमनिलप्रकोपणं श्लेष्माभिहरणम्" इति च सुश्रु० । क्वचित् रत्नमालायाम् एकेषिकेतिपाठं दृष्ट्वा शब्दकल्पद्रुमे तादृशशब्दोऽभिहितः ।

**एकोक्ति** स्त्री एका उक्तिः अभिधाशक्तिः । उभयपदार्थविषयिण्यामेकस्यां शक्तौ । यथा पुष्पवन्तौ इत्यादौ पुष्पवत्पदेन दिवाकरनिशाकरयोरुभयोरेव बोधः न तु अन्यपदादिवत् प्रत्येकपदार्थबोध इत्याकरे दृश्यम् । एवं "जात्याकृतिव्यक्तयः पदार्थः" गौ०सू० जात्यादीनामेकशक्त्यैव बोध इति व्युत्पत्तिवादे गदाधरः ।

**एकोत्तर** त्रि०एकैकमुत्तरं यत्र वृत्तौ सुप्सुपेतिवत् संख्याशब्दस्य वीप्सार्थता । एकैकाधिके । "एकाद्येकोत्तरा अङ्का व्यस्ताभाज्याः क्रमस्थितैः" लीला०। "सर्गादौ तु यथा काशं वायुं ज्योतिर्जलं महीम् । सृजत्येकोत्तरगुणां स्तथादत्ते भवन्नपि" । "तन्मात्रादीन्यहङ्कारादेकोत्तरगुणानि च" इति च याज्ञ० । "यथासंख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरसगन्धाः" सुश्रु० एकाधिकादयोऽप्यत्र त्रि० ।

**एकोदक** पुंस्त्री एकं समानमुदकं यस्य । समानोदके सप्तमपुरुषादूर्द्धं चतुर्द्दशपुरुषपर्य्यन्ते गोत्रजे "समानोदकभावस्तु निवर्त्तताचतुर्दशात्" स्मृतेस्तत्पर्य्यन्तानामेकोदकत्वम् । "जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते" मनुः ।

**एकोदर** पु० एकं समानमुदरं गर्भस्थानं यस्य । समानोदरे १भ्रातरि स्त्रियां टाप् । कर्म्म० । २समाने उदरे न० । "एकोदरप्रसूतानाम्" स्मृतिः ।

**एकोद्दिष्ट** न० एकः प्रेतः उद्दिष्टोयत्र । प्रेतोद्देश्यके श्राद्धभेदे तस्य इतिकर्त्तव्यतादिकं श्रा०त० निरूपितं यथा । गोभिलः । "अथैकोद्दिष्टमेकं पवित्रमेकोऽर्घ एकः पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः सुस्वदितमिति प्रत्युत्तरम् उपतिष्ठतामित्यक्षय्यस्थाने, अभिरम्यतामिति विसर्गे, अभिरतोऽस्मीति प्रतिवचनमेतत् प्रेतश्राद्धमिति" । अथेत्यनेनैकोद्दिष्टस्य पार्व्वणानन्तर्य्याभिधानं तयोः प्रकृतिविकृतित्वं सूचयति । अतएवैकोद्दिष्टे पार्व्वणधर्म्मप्राप्त्याऽऽवाहनादिप्राप्तौ नावाहनमित्यादिनिषेध उपपद्यते अन्यथा प्राप्त्यभावान्निषेधोऽनुपपन्नः स्यात् । एतत् प्रेतश्राद्धमित्युपसंहारात् एकं प्रेतमुद्दिश्य यद्दीयते श्राद्धं तदेकोद्दिष्टमिति वैदिकप्रयोगाधीनयौगिकम् । अतएव प्रतिसांवत्सरिकस्य नैकोद्दिष्टत्वं किन्त्वेकोद्दिष्टविधिकत्वम् । अमावास्यैकाहिद्वदरूपसङ्केतितपवित्रैकत्वप्राप्तौ एकं पवित्रमिति पुनरभिधानसार्थकत्वाय तदन्नवैकदलपरम् ।

आज्योत्पवनप्रकरणे “बर्हिषः प्रादेशमात्रे पवित्रे
कुरुते” इति गोभिलसूत्रे पवित्रपदस्य दलपरत्व-
वत् । अत्र नावाहनं नाग्नौकरणमिति निषेधयोः पौ-
र्व्वापर्य्यादग्नौकरणपूर्व्वकालीनं प्रधानसम्बन्धि श्राद्धसूत्रो-
दितं श्राद्धाङ्गावाहनमेव निषिध्यते नत्वप्रधानसम्बन्धि
पितृयज्ञवदित्यतिदेशप्राप्तं पिण्डाङ्गावाहनमिति । एतेन
पिण्डाङ्गावाहननिषेधो मैथिलोक्तो हेयः । अत्राग्नौ-
करणनिषेधेन हुतशेषस्यालाभे “हुतशेषं दत्त्वा पात्रमा-
लभ्य जपति पृथिवीत्यादि स्वाहेत्यन्तसूत्रोक्तपात्रा-
लम्भनस्यापि बाधः आनन्तर्य्याभावात् अमृतमिति मन्त्र-
लिङ्गविरोधाच्च । स्वदितमिति तृप्तिप्रश्न इति तृप्ताःस्थ
इति तृप्तिप्रश्ने, स्वदितमित प्रश्नः । कुशमयब्राह्मणपक्षे
तु प्रतिवचनानुपपत्त्या प्रश्नस्यापि निवृत्तिः अक्षय्यशब्द-
स्थाने उपतिष्ठतामिति प्रयोगः अत्रोपतिष्ठतामित्यनेना-
न्नादिकमित्यस्यान्वये अक्षितत्वस्यान्वयानुपपत्त्या तस्याप्यप्रयो-
गः । अतएव पितृदयितायामन्नादिकमुपतिष्ठतामिति
लिखितम् । ततश्च “प्रेतायाक्षय्यमस्तु च” इति ब्रह्मपुरा-
णीयं “ततो वदेत् पुनर्धीमानक्षय्यमुपतिष्ठताम्” इति मा-
र्कण्डेयपुराणीयञ्च गोभिलविरुद्धत्वात् शाख्यन्तरीयम् ।
अभिरम्यतामिति “वाजेवाजे” इति स्थानेऽभिरम्यतामि-
त्यनेन विसर्जनमिति । एतेन “प्रेतश्राद्धेषु सर्वेषु न स्वधा
नाभिरम्यताम् । स्वस्त्यस्तु विसृजेदेवं सकृत् प्रणववर्जितम्”
“इत्याश्वलायनगृह्यपरिशिष्टात् एकोद्दिष्टे प्रणववर्जितं-
स्वस्त्यस्त्वित्यनेन यद्विसर्जनं तत्प्रेतश्राद्धविषयम् अभि-
रम्यतामिति तु सांवत्सरिकविषयमिति कल्पतरुश्रीदत्त-
वाचस्पतिमिश्राद्युक्तं निरस्तम् । बह्वृचानामेव पा-
र्व्वणेऽभिरम्यतामिति विसर्जनस्य प्राप्तत्वादेकोद्दिष्टेऽपि
तथात्वात् सर्व्वशाखिसाधारणनिषेधानुपपत्तेश्च । एत-
दिति पूर्व्वोक्तेतिकर्त्तव्यताकश्राद्धमित्यर्थः । प्रेतश्राद्धं
नतु पार्व्वणविकृतित्वेन प्राप्तपितृलोकरूपपितुः श्राद्धम्
अकृतसपिण्डीकरणस्य तथाविधपितृत्वाभावात् । अतएव-
तन्न्यायमूलकमेवाश्वलायनगृह्यपरिशिष्टेऽपि “पितृशब्दं न
युञ्जीत पितृहा चोपजायते” इत्युक्तम् । अतएव विष्णुना
“प्रेतस्य नामगोत्राभ्यां दत्त्वाक्षय्योदकेषु”च इत्यत्र प्रेत-
नामगोत्राभ्यामित्यनेन प्रेतस्येत्युक्तं नतु सम्बन्धिन इत्युक्तम्
ततश्च मन्त्रे प्राप्तपितृलोकोपाधिकएव पितृपदस्थाने प्रेत-
पदोहो नतु अग्निष्वात्ताद्युपाधिके । एवमभिलापवाक्ये
सम्बन्धित्वेन नोल्लेखः किन्तु प्रेतत्वेन असम्बन्धिनोऽपि
मठब्राह्मणादेरपि प्रेतश्राद्धाधिकारित्वात् । अतएव शा-
तातपेनापि “प्रेतान्तनामगोत्राभ्यामनुसृजेदुपतिष्ठताम्”
इत्युक्तम् । अत्र प्रेतस्यान्तः प्रेतान्तो नतु सम्बन्धिवाचक-
स्यान्तः नवा मैथिलोक्तो बहुव्रीहिस्तस्य तत्पुरुषापेक्षया
जघन्यत्वात्, प्रेतपदस्य सम्बन्धिस्थानीयत्वेन तत्पुरुषस्यैव
युक्तत्वाच्च । ततश्च प्रेतान्तनाम च गोत्रञ्च इति द्वन्द्वः
अतएव तर्पणे विष्णुः “ततश्च सर्व्वे शवस्पर्शिनोगत्वा पितृ-
पदस्थाने प्रेतपदोहेन द्वितीयान्तं तर्पयेयुः पितृशब्दोच्चा-
रणे पितृहाभवति” इति । एतेषां वचनानां न्यायमूल-
कत्वात् सांवत्सरिकश्राद्धे एकोद्दिष्टविकृतीभूतेऽपि प्राप्त-
पितृलोकोपाधिकपितृपदवन्मन्त्रेऽभिलापे च सम्बन्धि-
बोधकपितृत्वेनैवोल्लेखः । एवञ्च देवताभ्यः पितृभ्यश्चेत्यत्र
न प्रेतपदोहः तत्र पितृपदस्य दिव्यपितृपरत्वात् एवं
नैकवचनोहोपि तथा “मधु द्यौरस्तु नः पिता” इत्यस्य द्यौः
स्वर्गः पिता पितेव सर्व्वस्याधिगम्यत्वात् मध्वस्तु मधुमयी
भवत्विति भाष्यव्याख्याने द्यौरिति पितेतिपदयोः सामाना-
करण्यं प्रतीयते अत्र च द्युत्वपितृत्वयोर्भेदेऽपि धर्म्मिणोः
सामानाधिकरण्येनाभेदावगमात् दिवः पितृसाधर्म्म्यप्राप्ति-
रिति पितृपदं पितृतुल्यपरं नतु जनकपरं प्राप्तपितृलो-
कपरं वेति तेनात्र मन्त्रे पितेत्येव वक्तव्यं नतु प्रेतपदो-
हः नवा “पितृशब्दं न युञ्जीत” इत्यनेन निषेधः । एवम्
आमावेति मन्त्रे पितरेत्यत्र नोहः यदाऽहं श्राद्धं करोमि
तदा मातरपितरावागच्छतामित्यनुव्रजने क्रियमाणे श्रा-
द्धफलस्य प्रार्थनीयत्वात् । एवं वृद्धिश्राद्धेऽप्येतेषु नान्दी-
मुखविशेषणं न देयमेवेति अन्यत्र सर्व्वत्रोत्सर्गवाक्ये
मन्त्रे च पितृपदप्रयोगनिषेधात् प्रेतपदोहः कार्य्यः ।
“अत्रैकोद्दिष्टे गोभिलानुक्तोविशेषोऽभिधीयते ; यथाह
विष्णुः “एकवन्मन्त्रानूहेतैकोद्दिष्टे” इति एकवत् एक-
वचनवद्यथा स्यात्तथोहेत “अपूर्व्वोत्प्रेक्षणमूहः” (जै०)
इत्युक्तेन पूर्व्वाप्राप्तैकवचनात्मकत्वकल्पनेन बहुवचनान्तान्म-
न्त्रान् विकृतान् कुर्य्यात् एकस्मिन् पितरि बहुवचनस्यासम-
वेतार्थत्वात् प्रकृतावर्थप्रकाशनाख्यदृष्टप्रयोजनकस्य म-
न्त्रस्य विकृतौ बहुवचनस्थाने एकवचनोहः कर्त्तव्य
इति न्यायमूलमिदं वचनम् । यद्वा “पवित्रे स्थो वैष्ण-
व्यावित्यत्र “पवित्रासि वैष्णवी” इति न चात्र पवित्रमसि
वैष्णवम् इति पितृदयितोक्तं युक्तं “पवित्रे स्थो वैष्णव्या-
विति” मन्त्रस्य हे पवित्रे युवां विष्णुदेवताके स्थः भवथः
स्त्रीलिङ्गत्वं छान्दसमिति सायनाचार्य्यव्याख्याने गुण-

विष्णुनापि तथा व्याख्याने सम्बुद्ध्यन्तताप्रतीतेः । एवं "विष्णोर्मनसा पूते स्थः" इत्यत्रापि पूतमसीति । "अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्" इति मन्त्रे अत्र प्रेत ! मादयस्व यथाभागमावृषायस्वेत्यूह्यम् । प्रार्थनार्थकतृतीयलकारीयमध्यमपुरुषबहुवचनस्थाने तदेकवचनस्यैव उह्यत्वात् न तु भूतार्थकचतुर्थलकारीयमावृषायथा इत्यनिरुद्धभट्टोक्तो युक्तः अतएव श्रीदत्तादिभिरपि "मादयस्वेत्युक्तम् "अमीमदन्त पितरः" इत्यत्र अमीमदत्प्रेतेति वृषायिषतेत्यत्र वृषायिष्टेति । एत पितर इत्यादिपिण्डाद्यावाहनमन्त्रे एहि प्रेतेति, सौम्यास इत्यत्र सौम्येति दत्ताग्र्यमित्यत्र देह्यग्र्यमिति, नियच्छतेत्यत्र नियच्छेति, नमोव इत्यादिमन्त्रेषु पितर इति स्थानचतुष्टये प्रेतेत्यूह्यम् । एवं व इत्यत्र ते इति । आशीःप्रार्थने च येभ्य इत्यत्र यस्मै इति तेषामित्यत्र तस्येत्यूह्यम् । एतद्वः पितर इत्यत्र तु प्रेता इति विकृतावूहो न तु बहुवचनस्य "एतद्वः पितरो वास इति जल्पन् पृथक् पृथक्" इति ब्रह्मपुराणेन प्रकृतावेव पार्व्वणे पित्रादिषु प्रत्येकमेतद्वः पितर इति बहुवचनान्तमन्त्रप्रयोगात् अत्रानर्थक्येन तद्विकृतावेकोद्दिष्टेऽप्यसमवेतार्थबहुवचनस्यैव युक्तत्वात् । ततश्च प्रकृतौ समवेतार्थस्यैव विकृतावूहः । सांवत्सरिके त्वेकवचनान्ततयैवोहो न तु पितृपदस्य तत्र प्राप्तपितृलोकत्वेन तथैव युक्तत्वात्" श्रा० त० रघुनन्दनः ।

एकोद्दिष्टञ्च "द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा" इत्युक्तपञ्चदशश्राद्धात्मकम् । अत्र द्वादशपदं त्रयोदशानामप्युपलक्षणम् "संवत्सरे विवृद्धेऽपि प्रतिमासञ्च मासिकमिति" काल० मा० कौथुमिना वत्सरघटकप्रतिमासे तस्य विधानात् अत एव 'द्वादश मासाः संवत्सरः क्वचित् त्रयोदश मासाः संवत्सरः" इति श्रुतौ वत्सरस्य त्रयोदशमासात्मकत्वमुक्तम् ।

अथैकोद्दिष्टनिमित्तकालो निरूप्यते स च श्रा० त० रघुनन्दनेन दर्शितो यथा

याज्ञवल्क्यः । "मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम् । प्रतिसंवत्सरञ्चैवमाद्यमेकादशेऽहनि" । एकादशेऽहनीति स्वस्वाशौचान्तद्वितीयदिनोपलक्षणम् । "व्रतादिः सूतकान्ते तु भोजयेदयुजो द्विजान्" इति मत्स्यपुराणैकवाक्यत्वात् । आद्यं षोडशश्राद्धानामादिभूतम् । तथा च छन्दोगपरिशिष्टम् । "श्राद्धमग्निमतः कुर्य्यात् दाहादेकादशेऽहनि । ध्रुवाणि तु प्रकुर्व्वीत प्रमिताहनि सर्व्वदा । द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा । सपिण्डीकरणञ्चैव इत्येवं श्राद्धषोडशम् । एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः । न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा" । अग्निमतः श्रौताग्निमतो दाहादेकादशेऽहनि श्राद्धं कर्त्तव्यं तस्य दाहावधिदशाहाशौचित्वात् । अन्येषान्तु मरणावधि तथा च शङ्खः "मरणादेव कर्त्तव्यम् संयोगो यस्य नाग्निना । दाहादूर्द्ध्वमशौचं स्याद्यस्य वैतानिको विधिः" । वैतानिकः श्रौतो होमः तस्मादग्निपदं श्रौताग्निपरम् । ततश्च केवलस्मार्त्ताग्निमतो निरग्नेश्च मरणादेवाशौचम् । ध्रुवाणि एतानि षोडश श्राद्धानि नित्यानि सर्व्वदा मृतधनालाभेऽपि । प्रमिताहनि मृततिथौ आद्यश्राद्धषाण्मासिकश्राद्धद्वयेतरश्राद्धानि कार्य्याणि आद्यश्राद्धस्यैकादशाहे विधानात् षाण्मासिकयोस्तु कालान्तरविधानात् । अत्राशौचान्तद्वितीयदिवसीयाद्यश्राद्धस्यादिभवत्वसमाख्यानुरोधेन तदुत्तरकर्त्तव्यमासिकतिथेर्म्मृततिथित्वानुपपत्त्या तत्सजातीयत्वमेव प्रतीयते । तेन प्रथममृततिथिं विहायान्यमृततिथिमादाय मासिकादिसिद्धिरिति । एवञ्च एकाहेन तु षण्मासान्यूना इत्यनेन मृततिथिपूर्व्वतिथिः प्रतीयते । एवं त्रिभिरित्यत्रापि तथा संवत्सरस्याप्येकाहादिन्यूने । अत्र संवत्सरकर्त्तव्यस्यापि षाण्मासिकत्वं द्वितीयषण्मासभवत्वाचानुपपन्नम् । संवत्सराभिधानन्त्वादिमध्याधिमासयुक्तप्रथमाब्दस्य "द्वादश मासाः संवत्सरः क्वचित्त्रयोदश मासाः संवत्सरः" इति श्रुत्यनुसारेण त्रयोदशमासघटितत्वात् त्रयोदशमास एव द्वितीयषाण्मासिककरणाय कालः सप्तममासकर्त्तव्यस्य षाण्मासिकत्वं 'षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः' इत्यनेनाविरुद्धम् । ननु षोडशश्राद्धगणने द्वादशमासिकत्वमुक्तं कथं मलमासयुताब्दे त्रयोदशमासिकत्वमिति चेन्न "संवत्सरस्य मध्ये तु यदि स्यादधिमासकः । तदा त्रयोदशश्राद्धं कार्य्यं तदधिकं भवेत्" इति सत्यव्रतवचनेन द्वादशमासिकादधिकं त्रयोदशमासिकं श्राद्धमित्युक्तेः । एतद्वचनं न्यायमूलकम् । "एवं मृताहनि प्रतिमासं श्राद्धं कुर्य्यादतन्द्रितः" "मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम्" इति वचनद्वयेन पूर्व्वोक्तश्रुतिप्राप्तत्रयोदशमासात्मकं संवत्सरं व्याप्य मृततिथेर्म्मृततिथिं यावच्चान्द्र इत्युक्ततत्प्रतिमासकर्त्तव्यमासिकानुरोधेन तत्पञ्चीयततिथिषु श्राद्धमिति बोधयता अर्थापत्त्या वैशाखादि-

भूतस्यान्यमासिकं तन्मासीयतत्पक्षीयतत्तत्तिथिषु कर्त्तव्यमिति बोधनात् मध्येऽधिमासपाते द्वादशे मासि मृतमासीयतिथ्यप्राप्त्या वर्षान्तविहितस्य मासिकस्य सपिण्डनस्य चाप्राप्तेः। एवमाद्याधिमासेऽपि अतएवाद्याब्देऽधिमासपातेऽपि लघुहारीतेन द्वादशमासे यद्द्वादशमासिकमित्युक्तं तदन्याधिमासविषयम् तत्र द्वादशमासे मृतमासीयतत्तत्तिथिप्राप्तेः। यथा लघुहारीतः 'प्रत्यब्दं द्वादशे मासि कार्य्या पिण्डक्रिया द्विजैः। कचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम्। चक्रवत् परिवर्त्तेत सूर्य्यः कालवशाद्यतः। अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम्। मासचिह्नन्तु कर्त्तव्यं पौषमाघाद्यमेव हि। यतस्तत्र विधानेन मासः स परिकीर्त्तितः। असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः। तथैव मासिकं पूर्व्वं सपिण्डीकरणन्तथा। गर्भे वार्द्धुषिकत्वे च मृतानां पिण्डकर्म्मसु। सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः"। सपिण्डीकरणादूर्द्ध्वं यत् किञ्चित् श्राद्धिकं भवेत्। इष्टं वाप्यथ वा पूर्त्तं तन्न कुर्य्यान्मलिम्लुचे" श्रा०त० रघुनन्दनः।

एकोद्दिष्टञ्च मध्याह्नकालव्यापितिथौ कर्त्तव्यं यथाह "आमश्राद्धं तु पूर्व्वाह्णे एकोद्दिष्टन्तु मध्यतः। पार्व्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्" हारी०। "पूर्व्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्व्वणम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" मनुः। 'यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिः। तया कर्म्माणि कुर्व्वीत ह्रासवृद्धी न कारणम्"याज्ञ०। मध्याह्नकालश्च त्रिधा विभक्तदिनतृतीयभागरूप एव। तत्रापि कुतपप्रथमभागस्यैव तदारम्भकालः "कुतपे प्रथमे भागे एकोद्दिष्टमुपक्रमेत्। आवर्त्तनसमीपे वा तत्रैव नियतात्मवान्"काल० व्यासोक्तिः आवर्त्तनं पश्चिमदिगवस्थितच्छायायाः पूर्व्वदिग्गमनारम्भकालः तत्समीपे कुतपशेषदण्डे। गौतमोऽपि "आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः। विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेत्" अत्र कुतपस्यारम्भकालतयोक्तेः पूर्व्वेद्युः रौहिणमात्रलाभे परदिने कुतपमात्रलाभेऽपि परेद्युरेव श्राद्धं "योयस्यः विहितःकालः कर्म्मणस्तदुपक्रमे। तिथिर्य्याभिमता सा तु ग्राह्या नोपक्रमोज्झिता" बौधायनेनोपक्रमयोग्यतिथेरेव ग्राह्यतोक्तेः। उभयदिने कुतपालाभे रौहिणमात्रलाभे तु तत्रैव श्राद्धम्'रौहिणन्तु न लङ्घयेदित्युक्तेः। उभयदिने तयोरलाभे सप्तममुहूर्त्ते कार्य्यं तस्यालाभे तयोर्लाभे वा पक्षभेदेन व्यवस्था"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितोरविः। तया कर्म्माणि कुर्व्वीत ह्रासवृद्धी न कारणम्। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितोरविः। तया कर्माणीत्यादि स्कन्दपु०वक्तेः। "द्वितीयादिकयुग्मानां पूज्यता नियमादिषु। एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिदेशना"व्यासोक्तेश्च। तत्र स्कान्दवाक्ये ह्रासवृद्धिशब्दः तिथिविषयः व्यासवाक्ये चन्द्रह्रासवृद्धिपरत्वेन कृष्णशुक्लपक्षभेदेन व्यवस्थेति स्थितम्। तदेतत् कालमा० निर्णीतम् यथा। "नन्वत्र क्षयवृद्ध्युपजीवनेन निर्णयः क्रियते। स चानुपपन्नः। व्यासवाक्ये ह्रासवृद्धिनोदनायाः पित्र्याविषयत्वाभिधानात्। "एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिनोदनेति" हि पूर्व्वमुदाहृतम्। "दानव्रते चैतदेवेति" च अतः कथमनयोर्वृद्धिक्षयाभ्यां निर्णयः। किंचोदाहृतयाज्ञवल्क्यस्कान्दपुराणमार्व्ववचनेषु "ह्रासवृद्धी न कारणमित्युक्तं तत्कथमत्र ह्रासवृद्ध्योर्निर्णयकारणत्वम्। अत्रोच्यते। सन्ति ह्यन्यानि ह्रासवृद्धिवाक्यानि। तत्रोशनाः, "खर्व्वो दर्पस्तथा हिंस्रस्त्रिविधं तिथिलक्षणम्। खर्व्वदर्पौ परौ कार्य्यौ हिंस्रा स्यात् पूर्व्वकालिकी"। पितामहोऽपि "खर्व्वोदर्पस्तथा हिंस्रस्त्रिविधं तिथिलक्षणम्। खर्व्वदर्पौ परौ पूज्यौ हिंस्रं पूर्व्वत्र पूजयेदिति"भविष्योत्तरे "खर्व्वोदर्पस्तथा हिंस्रा त्रिविधं तिथिलक्षणम्। खर्व्वदर्पौ परौ कार्य्यौ हिंस्रा स्यात् पूर्व्वकालिकेति"। खर्व्वः साम्यमल्पक्षयो वा। दर्पो वृद्धिः। हिंस्राधिकक्षयः। एतैः खर्व्वादिवाक्यैः सह यस्मिन्विषये युग्मादिवाक्यस्य विरोधः प्राप्नोति तत्र दैवपित्र्यभेदेन व्यवस्थापकं व्यासवाक्यम् ननु प्रकृतयोः क्षयवृद्ध्योः पित्र्यविषयत्वप्रतिपादकयाज्ञवल्क्यादिवचनेष्वपि कर्म्मकालव्याप्तिशास्त्रस्य खर्व्वदर्पादिशास्त्रस्य च विरोधे प्राप्ते सति कर्म्मकालव्याप्तिशास्त्रस्य प्राबल्यमुच्यते न तु प्रकृतयोः क्षयवृद्ध्योः निर्णयहेतुत्वं प्रतिषिध्यते। न तु व्यासः खर्व्वादिवाक्यानि पित्र्यविषयत्वेन संकोचयामास, याज्ञवल्क्यादयस्तु पित्र्येऽपि कर्म्मकालव्याप्त्या खर्व्वादिवाक्यान्यबाधन्त, हन्तैवं निर्विषयत्वमेषां प्रसज्येतेति चेत् मैवं यदा पूर्व्वोत्तरदिनयोः पित्र्यविषयकर्म्मकालव्याप्तिः समाना यदा वा दिनद्वयेऽपि कर्म्मकालव्याप्त्यभावः तत्रोभयत्र खर्व्वादिवाक्यैर्निर्णेतुमशक्यत्वात्"। तत्रैवास्य विषयलाभ इति भावः।

"एकोद्दिष्टे तु संप्राप्ते यदि विघ्नं प्रजायते। मासेऽन्यस्मिन् तिथौ तस्मिन् तदा दद्यात् विचक्षणः"

देवलः"। एकोद्दिष्टविधिकत्वात् सांवत्सरिकं श्राद्धमपि एकोद्दिष्टशब्देन शास्त्रे व्यवह्रियते। "एकोद्दिष्टं सुता दद्य" "एकोद्दिष्टं न पार्वणम्" इति च स्मृत्योः सांवत्सरिकेऽपि तथा प्रयोगात्।

एकोद्दिष्टाधिकारिणस्तु निर्ण०सि०दर्शिताः यथा "चन्द्रिकायां सुमन्तुः "मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः। पैतृमेधिकसंस्कारं मन्त्रपूर्व्वकमादृतः"। तत्रैव हेमाद्रौ शङ्खः "पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया। पुत्राभावे तु पत्नी स्यात्तदभावे तु सोदरः। अत्र पुत्रपदं यद्यपि क्षेत्रजादिद्वादशविधपुत्रपरम्। ते च द्वादशपुत्रा याज्ञवल्क्येनोक्ताः "औरसो धर्म्मपत्नीजस्तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा। गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः। कानीनः कन्यकाजातो मातामहसुतः स्मृतः। अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः। दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्। क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयंकृतः। दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः। उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः। पिण्डदोऽंशहरश्चैषां पूर्व्वाभावे परःपरः"। इति तथापि "दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः" इति हेमाद्रावादित्यपुराणे कलावितरेषां पुत्रत्वनिषेधादौरसदत्तपरमेव। यद्यपि "पिण्डदोऽंशहरश्चैषां पूर्व्वाभावे परःपरः" इति याज्ञवल्क्योक्तेरौरसाभावे दत्तकप्राप्तिस्तथाप्यौरसाभावे पौत्रः प्रपौत्रस्तदभावे दत्तकादय इति ज्ञेयम्। "पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते" इति "अथ पुत्रेण पौत्रेण ब्रध्नस्याप्नोति विष्टपमिति" जीमूतवाहनधृतहारीतवशिष्ठशङ्खलिखितोक्तेः "लोकानन्त्यन्दिवःप्राप्तिः पुत्रपौत्रप्रपौत्रकैरिति" याज्ञवल्क्योक्तेश्च। "पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र एव च। पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा। भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा। असन्निधाने पूर्व्वेषामुत्तरे पिण्डदाः स्मृताः" इति स्मृतिसंग्रहे प्रपौत्रानन्तरं पुत्रिकापुत्रोक्तेस्तत्समत्वाच्च दत्तकस्य। यद्यपि वृहस्पतिना "पौत्रश्च पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ। रिक्थे च पिण्डदाने च समौ तौ परिकीर्त्तिताविति" पौत्रसाम्यमुक्तम्। याज्ञवल्क्येन च "औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः" इत्यौरससाम्यमुक्तम् "तथापि लोके राजसमो मन्त्रीत्यादौ किञ्चिन्न्यूने समशब्दप्रयोगाद्गौणमुख्ययोः साम्यायोगाच्च स्तुत्यर्थन्तत् न तु समविकल्प इति भ्रमितव्यम्। 'पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः। सपिण्डः सन्ततिर्वापि क्रियार्हो नृप! जायते। एषामभावे सर्व्वेषां समानोदकसन्ततिः। मातृपक्षः सपिण्डेन सम्बद्धो यो जलेन वा। कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्य्या क्रिया नृप!। तत्सङ्घातान्तर्गतैर्वापि तद्रिक्थात्कारयेन्नृपः" इति विष्णुपुराणाच्च प्रपौत्रानन्तरन्दत्तकादयः इति पृथ्वीचन्द्रमदनरत्नकालादर्शादयः। मदनपारिजातेऽप्येवम्। वोपदेवकल्पधरादयस्तु "पुत्रेषु विद्यमानेषु नान्यो वै कारयेत्स्वधाम्" इति सुमन्तूक्तेः "पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति। पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम्। नैतत्पौत्रेण कर्त्तव्यं पुत्रवांश्चेत्पितामहः" इति छन्दोगपरिशिष्टे च पुत्रशब्दस्य द्वादशविधसुतपरत्वात् पूर्व्वाभावे परःपर इत्यस्यानन्यपरत्वाच्च दत्तकाद्यभावे पौत्रादीनामधिकार इत्याहुः। अतएव निषेधादुपनीतपौत्रसत्त्वेऽप्यनुपनीतपुत्रस्यैवाधिकारः। औरसश्चाप्यनुपनीतोऽपि कुर्य्यादित्याह पृथ्वीच० सुमन्तुः। "श्राद्धं कुर्य्यादवश्यं तु प्रमीतपितृको द्विजः। व्रतस्थो वाऽव्रतस्थो वा एकएव भवेद्यदि" वृद्धमनुः। "कुर्य्यादनुपनीतोपि श्राद्धमेको हि यः सुतः। पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः" मनुः "नह्यस्मिन् युज्यते कर्म्म किञ्चिदामौञ्जिबन्धनात्"। सुमन्तुरपि नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी निबध्यते। मन्त्राननुपनीतोऽपि पठेदेकैक औरसः"। ब्रह्म वेदम् मन्त्रपाठस्त्रिवर्षकृतचूडस्यैव। "अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम्। यद्यसौ कृतचूड़ः स्याद्यदि स्याच्च त्रिवत्सरः" इति सुमन्तूक्तेः। यत्तु व्याघ्रः 'कृतचूड़स्तु कुर्वीत उदकं पिण्डमेव च। स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेदिति" यच्च स्मृतिसंग्रहे 'कृतचूड़ोऽनुपेतश्च पित्रोः श्राद्धं समाचरेत्। उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसाविति"। तत्प्रथमवर्षचूड़ाविषयमिति माधवमदनरत्नपृथ्वी.चन्द्राः। त्रिवर्षोर्द्ध्वं मन्त्रवत्त्वस्य विकल्प इति चन्द्रिका वोपदेवश्च। मदनरत्ने स्कान्दे। 'यत्तेषु मन्त्रवत्कर्म पत्नी कुर्य्याद्यथा नृप!। तथौर्द्ध्वदैहिकं कर्म कुर्य्यात् सा धर्मसंस्कृता"। अशक्तौ तु कात्यायनः। "असंस्कृतेन पत्न्या च अग्निदानं समन्त्रकम्। कर्त्तव्यमितरत्सर्वं कारयेदन्यमेव हि"। पुत्रश्च न जन्मतोऽधिकारी किन्तु वर्षोत्तरमिति कालादर्शः "चौलादाद्याविद-

काद्वर्षाक् न कुर्य्यात्पैतृमेधिकम्” इत्युक्तेः। मदनरत्ने सुमन्तुरपि “पुत्रश्चोत्पत्तिमात्रेण संस्कुर्य्यादृणमोचनात्। पितरं नाविदृक्काश्चौचात्पितृमेधेन कर्मणा”। एतच्चौरसस्यैव दत्तकादीनां तूपनीतानामेवाधिकारः इति कालादर्शः। पृथ्वीच० स्कान्दे “पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः। और्द्धदेहिकमन्ये तु संस्कृताः श्राद्धकारिणः” इति। अन्यत्रापि दर्शमहालयादावनुपनीतस्याधिकारोऽस्माभिः पूर्वमुक्तः। प्रपौत्राभावे दत्तकादयो द्वादश पुत्राः। तदभावे भर्त्तुः पत्नी तस्याश्च सः “अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत चेति” वृद्धमनूक्तेः। “भार्य्यापिण्डं पतिर्दद्याद्भर्त्तुर्भार्य्या तथैव च। श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः” इति। पुत्राभावे तु पत्नी स्यात्पत्न्यभावे सहोदरः” इति च हेमाद्रौ शङ्खोक्तेः। देवयाज्ञिकस्तु “कानीनगूढसहजपुनर्भूतनयाश्च ये। पत्न्यभावेऽपि कुर्य्युस्ते अप्रशस्ताः स्मृताः हि ते” इति स्मृतिसंग्रहात् पत्न्यभावे कानीनादय इत्याह। पत्युरपि सपत्नीपुत्रे सति नाधिकारः। “पितृपत्न्यः सर्वा मातरः” इति सुमन्तूक्तेः। ‘विदध्यादौरसः पुत्रो जनन्या और्द्धदेहिकम्। तदभावे सपत्नीजः क्षेत्रजाद्यास्तथा सुताः। तेषामभावे तु पतिस्तदभावे सपिण्डकाः” इति मदनरत्ने कात्यायनोक्तेः “बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः। एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः” इति वृहस्पतिवचनाच्च। अपरार्कोऽप्येवम्। तेन यच्छ्राद्धविवेके उक्तम् “सत्यपि सपत्नीपुत्रे पत्युरेवाधिकार इति तन्निरस्तम्। यच्च तत्रैव कात्यायनः “न भार्य्यायाः पतिर्दद्यादपुत्राया अपि क्वचित्”। यच्च विष्णुपु० “कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्य्या क्रिया नृपेति”। यच्च मार्क० पु० “सर्वाभावे स्त्रियः कुर्य्युः स्वभर्त्तॄणाममन्त्रकमिति”। तदासुरादिविवाहोढाविषयम् “धर्म्यैर्विवाहैरूढा या सा पत्नी परिकीर्त्तिता। क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते। न सा दैवे न सा पित्र्ये दासीं तां मुनयो विदुरिति” माधवीये शातातपोक्तेः। यत्तु शुद्धिरत्नाकरः शूलपाणिश्च ‘अपुत्रस्य च या पुत्री सैव पिण्डप्रदा भवेत्। तस्य पिण्डान् दशैकं वा एकाहेनैव निःक्षिपेत्, इति जाबालोक्तेः ‘भर्त्तुर्धनहरा पत्नी तां विना दुहिता स्मृता। अङ्गादङ्गात् सम्भवति पुत्रवद्दुहिता नृणामिति” वृहस्पतिना दुहितुर्धनहारित्वोक्तेश्च पुत्राभावे कन्या तदभावे पत्नी इत्याहतुः। तन्न पूर्वविरोधात् “मातुर्दुहितरः शेषमृणात्ताभ्यऋतेऽन्वयः” इति दुहितुर्मातृधनहारित्वेन पुत्रस्य तच्छ्राद्धानधिकारापत्तेश्चोपेक्ष्यम्। वचनं भ्रातृपुत्राद्यभावविषयम्। पत्न्यभावे अविभक्तस्य सोदरः पूर्वोक्तशङ्खवचनात्। विभक्तस्य तु दुहिता धनहारित्वात् पूर्वोक्तजाबालवचनाच्च। तत्राप्यूढानूढासमवायेऽप्यूढैव “दुहिता पुत्रवत् कुर्य्यान्मातापित्रोस्तु संस्कृता। अशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोरिति” भरद्वाजोक्तेः। तदभावे दौहित्रः धनहारित्वात्। “मातापित्रोरुपाध्यायाचार्य्ययोरौर्द्धदेहिकम्। कुर्वन्मातामहस्यापि व्रती न भ्रश्यते व्रतादिति” चन्द्रिकायां वृद्धमनूक्तेः “यथा व्रतस्थोऽपि सुतः पितुः कुर्य्यात्क्रियां नृप!। उदकाद्यां महाबाहो! दौहित्रो दुहिताऽर्हतीति” अपरार्के भविष्योक्तेश्च। एतद्धनहारिण आवश्यकं नान्यस्येत्याह तत्रैव स्कान्दः “श्राद्धं मातामहानां तु अवश्यं धनहारिणा। दौहित्रेणार्थनिष्कृत्यै कर्त्तव्यं पूर्वमुत्तरमिति”। तेन दौहित्रोऽत्र पुत्रीकृत इति देवयाज्ञिकोक्तिः परास्ता। अत्र पत्नीदौहित्रसमवायेऽशंहरत्वात्पत्न्येव कुर्य्यात्। दौहित्रभ्रातृपुत्रसत्त्वे विभक्तस्य दौहित्रः। अविभागे भ्रातृपुत्रः। भ्रातृतत्पुत्रसत्त्वे कनिष्ठश्चेद्भ्रातैव। ज्येष्ठश्चेत्तत्पुत्रः कुर्य्यादिति दाक्षिणात्यपन्थः। हारलतादौ तु ‘भ्रातुर्भ्राता स्वयं चक्रे तद्भार्य्या चेन्न विद्यते। तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः” इति ब्राह्मोक्तेः ‘पत्नी कुर्य्यात् सुताभावे पत्न्यभावे सहोदरः” इति कौर्माच्च। ज्येष्ठभ्रातैव कुर्य्यान्न तत्पुत्रः। यत्तु “नानुजस्य तथाग्रजः” इति, तत्कनिष्ठभ्रातृसत्त्वविषयम्। यच्च मनुः “सर्वेषामेकजातानामेकश्चेत्पुत्रवान् भवेत्। सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्” इति तत् सोदराभावविषयमित्युक्तम्। एतेन पुत्रत्वातिदेशोऽयम् अतस्तस्मिन् सत्येकादश पुत्राः प्रतिनिधयो न कार्य्याः। स एव पिण्डदोंऽशहरश्च” इत्यत्रापीति वाचस्पतिभट्टटीकाकृत्यरत्नाकरादयः परास्ताः। मदनरत्ने स्मृतिसंग्रहे “पुत्रः कुर्य्यात्पितुः श्राद्धं पत्नी च तदसन्निधौ। धनहार्य्यपि दौहित्रस्ततो भ्राता च तत्सुतः। भ्रात्रोः सहोदरो भ्राता कुर्य्याद्दाहादि तत्सुतः। ततस्त्वसोदरभ्राता तद-

भावे च तत्सुतः" इति । भ्रातृपुत्राभावे क्रमेण पितृमातृस्नुषाश्वशुरतत्पुत्रादयः धनहारित्वात् । "भगिनीतत्सुतयोर्विशेषमाह मदनरत्ने कात्यायनः "अनुजो ह्यग्रजो वापि भ्रातुः कुर्वीत संस्क्रियाम् । ततस्तत्सोदरस्तद्वत्क्रमेण तर्पयेत्तयोः" अपरार्के कार्ष्णाजिनिः । "पुत्रः शिष्योऽपि वा पत्नी पिता भ्राता स्नुषा गुरुः । स्त्रीहारो धनहारी यः कुर्यात्पिण्डोदकक्रियाम्" । मार्कण्डेयपुराणे "पुत्रोभ्राता च तत्पुत्रः पत्नी माता तथा पिता । वित्ताभावे तु शिष्यश्च कुर्वीरन्नौर्ध्वदैहिकम्" । तेन धनहारी एतद्भिन्न इति कालादर्शः। अत्र पाठक्रमो न विवक्षितः पूर्ववाक्येषु अथ ततःशब्दादिभिः श्रौतक्रमोक्तेः "अथ जिह्वाया अथ वक्षसः"इति वत् । कृत्यचन्द्रोदये वृद्धमनुः । "स्नुषास्वस्त्रीयतत्पुत्राज्ञाति सम्बन्धिबान्धवाः । पुत्राभावे तु कुर्वीरन् सपिण्डान्तं यथा विधि" । मार्कण्डेयपुराणे "पुत्राद्युच्छिन्नवंशोऽस्य सखापि श्वशुरस्य च । जामाता स्नेहवत् कुर्यादखिलं पैतृमेधिकम्" । चन्द्रिकायां वृद्धशातातपः "मातुलोभागिनेयस्य स्वस्त्रीयो मातुलस्य च। श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च । एतेषाञ्चैव भार्य्याणां श्वश्रुर्मातुः पितुस्तथा । श्राद्धमेषां तु कर्त्तव्यमिति वेदविदोविदुः"। शुद्धिविवेके ब्राह्मे "दत्तानां वाप्यदत्तानां कन्यानां कुरुते पिता । चतुर्थेऽहनि तास्तेषां कुर्वीरन् सुसमाहिताः" । दत्ता वाग्दत्ताः । "मातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे । तेऽपि तेषां प्रकुर्वन्ति द्वितीयेऽहनि सर्वदा । जामातुः श्वशुराद्यश्च तेषान्तेऽपि च संयताः । मित्राणां तदपत्यानां श्रोत्रियाणां गुरोस्तथा । भागिनेयसुतानां च सर्वेषान्त्वपरेऽहनि । राज्ञोऽथवा सपिण्डे तु निरपत्ये पुरोहितः । मन्त्री वा तदशौचान्ते पुरा चोत्वाकरोति सः" । अत्र द्वितीयाह्लादौ श्राद्धविधानमस्थिसञ्चयनपरम् । कालादर्शे "दाहादि मन्त्रवत्पित्रोर्विदध्यादौरसः सुतः । तदभावे तु पौत्रश्च प्रपौत्रः पुत्रिकासुतः । दौहित्रोधनहारी च भ्राता तत्पुत्र एव च । पिता माता स्नुषा चैव स्वसा तत्पुत्र एव च । सपिण्डः सोदकोमातुः सपिण्डश्च सहोदकः । स्त्री च शिष्यर्त्विगाचार्य्यो जामाता च सखाऽपि च । उच्छिन्नवंशोरिक्थेन कारयेदवनीपतिः" । गौतमः "पुत्राभावे सपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्य्यौ"। यत्तु चन्द्रिकायां वृद्धशातातपः "प्रीत्या श्राद्धं प्रकर्त्तव्यं सर्वेषां वर्णलिङ्गिनामिति" तत्सवर्णविषयम् । "ब्राह्मणस्त्वन्यवर्णानां न कुर्य्यात्कर्म्म किञ्चन । कामाल्लोभाद्भयान्मोहात् कृत्वा तज्जातितां व्रजेत्" इति ब्राह्मोक्तेः "न ब्राह्मणेन कर्त्तव्यं शूद्रस्याप्यौर्ध्वदैहिकम् । शूद्रेण वा ब्राह्मणस्य विना पारशवात् क्वचित्" इति पारस्करोक्तेश्च । पारशवः जटशूद्रापुत्रः । अत्र दत्तकस्य सर्व्वपुत्रादेः पूर्व्वस्याभावे पत्न्यादेरधिकार उक्तः । तत्राभावोऽसन्निधिः नाशश्चोच्यते । अतएव पूर्व्वत्र "असन्निधाने पूर्व्वेषाम्" इत्युक्तम् । तत्रासन्निधौ पत्न्यादेः सर्वत्राधिकारे प्राप्ते "प्रोषितावस्थिते पुत्रः कालादतिचिरादपि । एकादशाद्याः क्रमशोज्येष्ठस्य विधिवत्क्रियाः" "ज्येष्ठेनैव च यत्कृत्यम्" इत्याद्यैर्देशान्तरेऽपत्यादात्पुत्रनाश एव पत्न्यादेः सपिण्डनादावधिकारः। असन्निधौ तु पूर्वमेव नोर्द्ध्वम् । अतोऽनधिकारिणा भ्रात्रादिना कृतमप्यकृतमेवेति पुनरावर्त्तनीयम् । मासिकापकर्षोऽप्यावर्त्तनीयः । एकादशाहमासिकानि नावर्त्त्यन्ते "व्रजन्त्यायसापि कर्त्तव्यं सपिण्डीकरणं पुनरिति" वदावृत्तिविधानाभावादिति केचित् । तन्न अस्य निर्मूलत्वात् । अतस्तदपि कनिष्ठकृतमावर्त्त्यते वृद्धिश्रौतपिण्डपितृयज्ञार्थं तु कृतं नावर्त्त्यते । मासिपिण्डेऽग्निमान् पुत्रः पितृयज्ञं समाचरेत् । न पार्वणं नाभ्युदयिकं कुर्वन्न लभते फलमिति" इत्युत्तरनिषेधनादिति "भ्राता वा भ्रातृपुत्रो वा" इत्यादिहारीतादिवचोभ्यः कनिष्ठादेरप्यधिकारात् तथा चात्र ज्येष्ठकर्तृकत्वबाधः । सपिण्डने तु बहु वक्तव्यं तन्निर्णये वक्ष्यामः। अधिकारिविशेषेण क्रियाव्यवस्थोक्ता विष्णुपुराणे (पूर्व्वादिक्रियाः शुद्धितत्त्वे दर्शयिष्यमाणाः) । "प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्ते याः क्रिया पुत्रैः प्रोच्यन्ते तान्यपोत्तराः । पितृमातृसपिण्डैश्च समानसलिलैस्तथा । तत्सङ्घान्तर्गतैश्चैव राज्ञा वा धनहारिणा । पूर्व्वा मध्याश्च कर्त्तव्याः पुत्राद्यैरेवचोत्तराः । दौहित्रैर्वा नरश्रेष्ठ ! कार्य्यास्तत्तनयैस्तथा । मृताहनि तु कर्त्तव्या स्त्रीणामप्युत्तराः क्रियाः" । दौहित्रतत्पुत्रयोर्धनहारिणोरिदम् । एवमन्यत्र धनहर्त्तुः । "यश्चार्थहरः स पिण्डदायो स्यात्" याज्ञोक्तेः । "प्रेतस्य प्रेतकार्य्याणि अकृत्वा धनहारकः । वर्णानां यद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरेदिति "पृथ्वीचन्द्रोदये-व्याघ्रपादोक्तेः । मदनरत्ने स्कान्देऽपि "मलमेतन्मनुष्याणां द्रविणं यत्प्रकीर्त्तितं"मित्युक्त्वा "कर्मभिस्तस्य

निर्दिष्टा निष्कृतिः पावनी परा। आदेहपतनात्तस्य कुर्यात्पिण्डोदकक्रियाम्” इत्युक्तम्। क्रियानिबन्धे कात्यायनः “न च माता न च पिता कुर्यात्पुत्रस्य पैतृकम्। नाग्रजश्च तथा भ्राता भ्रातॄणां तु कनीयसाम्”। पृथ्वीचन्द्रोदये बौधायनः। “पिता श्राद्धं न कर्त्तव्यं पुत्राणां तु कथञ्चन। भ्राता चैव न कर्त्तव्यं भ्रातॄणाञ्च कनीयसाम्। यदि स्नेहेन कुर्वीत सपिण्डीकरणं विना। गयायां तु विशेषेण ज्यायानपि समाचरेत्”। अन्याभावे पित्रादिरपि कुर्य्यात्। “उच्छिन्नबान्धवं प्रेतं पिता भ्राताथ वाऽग्रजः। जननी वापि संस्कुर्य्यान्महदेनोऽन्यथा भवेदिति” सुमन्तूक्तेः। ब्रह्मचारिणां तु शुद्धिविवेके ब्राह्मे “असमाप्तव्रतस्यापि कर्त्तव्यं ब्रह्मचारिणः। श्राद्धं तु मातापितृभिर्न तु तेषां करोति सः”। श्राद्धं मासिकाब्दिकादि सर्वं कार्य्यमित्यर्थः। नत्विति निषेधोऽन्यसत्त्वे। यत्तु च्छन्दोगपरिशिष्टे “न त्यजेत्सूतके कर्म्म ब्रह्मचारी स्वयं क्वचित्। न दीक्षणात्परं यज्ञे न कृच्छ्रादितपश्चरन्। पितर्य्यपि मृते नैषां दोषोभवति कर्हिचित्। अशौचं कर्म्मणां न स्यात्त्र्यहं वा ब्रह्मचारिणाम्”। यच्च याज्ञवल्क्यः “न ब्रह्मचारिणः कुर्य्युरुदकम्पतितास्तथेति”। तदप्यन्यसत्त्वे। अन्याभावे तु ब्रह्मचारिणापि कार्य्यम् पूर्व्वोक्तवृद्धमनुवचनात्। “आचार्य्यपित्रुपाध्यायान् निर्हृत्यापि व्रती व्रती। स तदन्नं च नाश्नीयान्न च तैः सह संवसेदिति” तेनैवोक्तेः। “ब्रह्मचारिणः शवकर्म्मणा व्रतान्निवृत्तिः अन्यत्र मातापित्रोरिति” वशिष्ठोक्तेः। अत्राशौचमेकाहं वक्ष्यामः। प्रागुपनयनात्तु पञ्चवर्षोत्तरं सपिण्डीकरणवर्ज्जं षोडशश्राद्धादि सर्व्वं कार्य्यमित्युक्तं देवजानीये “असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां कुशेष्विति” प्रचेतोवचनात्। एतच्चाग्रे वक्ष्यामः। अविभक्तानां विशेषमाह पृथ्वीचन्द्रोदये मरीचिः। “बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः। सर्व्वेषां तु मतङ्कृत्वा ज्येष्ठेनैव तु यत्कृतम्। द्रव्येण चाविभक्तेन सर्व्वैरेव कृतम्भवेत्”। ज्येष्ठस्य कर्त्तव्येऽपि सर्व्वे फलभागिन इत्यर्थः। तेन ये ब्रह्मचर्य्यपराद्यवर्ज्जनादयः कथिताः संस्कारास्ते सर्व्वेषां भवन्तीति सिद्धम् संहतिनामप्येवम् तुल्यत्वात्। विभक्तानां विशेषमाहोशनाः। “नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश। एकेनैव तु कार्य्याणि संविभक्तधनेष्वपि”। लघुहारीतः “सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश। पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित्। ऊर्द्ध्वं सपिण्डीकरणात् सर्व्वे कुर्य्युः पृथक्पृथक्”। मदनरत्ने “विभक्तास्तु पृथक्कुर्य्युः प्रतिसंवत्सरादिकम्। एकेनैवाविभक्तेषु कृते सर्व्वैस्तु तत्कृतम्” एतेनाह्निकादिष्वविभक्तानामनियम इति वदन् शूलपाणिः परास्तः”। अयमधिकारिक्रमो दाक्षिणात्यप्रचलितः।

गौड़देशवासिभिस्तु रघुनन्दनमतानुसारिणी व्यवस्था द्रियते सा च व्यवस्था शुद्धितत्त्वे तेन दर्शिता यथा व्याघ्रः “कृतचूड़स्तु कुर्वीत उदकं पिण्डमेव च”। एतच्च पुत्रेतरपरम् “असंस्कृतः सुतः श्रेष्ठोनापरोवेदपारगः” इति दायभागधृतात्। अन्यथा सुतत्वेन विशेषोपादानं व्यर्थं स्यात्। श्राद्धेऽनुपनीतस्य मन्त्रपाठाधिकारमाह मनुः। “नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते। शूद्रेण हि समस्तावद्यावद्वेदे न जायते”। अभिव्याहारयेत् वदेदिति यावत् स्वार्थे णिच्। तत्र प्रथमतो ज्येष्ठपुत्रः यथाह मरीचिः ‘मृते पितरि पुत्रेण क्रिया कार्य्या विधानतः। बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः। सर्व्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम्। द्रव्येण चाविभक्तेन सर्व्वैरेव कृतं भवेत्”। तदभावे यथाक्रमं कनिष्ठपुत्रपौत्रप्रपौत्राः। तथाच विष्णुपुराणम् ‘पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः। सपिण्डसन्ततिर्वापि क्रियार्हा नृप! जायते”। एतच्च षोडशश्राद्धपर्य्यन्तम् तथाच छन्दोगपरिशिष्टम् “पितामहः पितुः पश्चात् प्रेतत्वं यदि गच्छति। पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशम्। नैतत् पौत्रेण कर्त्तव्यं पुत्रवांश्चेत् पितामहः”। सपिण्डीकरणपर्य्यन्तमपृथक्कर्त्तव्यमाह लघुहारीतः ‘सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश। पृथङ्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित्”। एषामभावे पत्नी तथाच शङ्खः ‘पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया। तदभावे तु पत्नी स्यात्तदभावे सहोदरः। भार्य्यापिण्डं पतिर्दद्यात् भर्त्रे भार्य्या तथैव च’। इति “अपुत्रधनं पत्न्यभिगामि तदभावे दुहितृगामीत्यादि” विष्ण्वादिवचनेन धनाधिकारश्रुतेः। तदभावे इति प्रपौत्रपर्य्यन्ताभावपरं पार्व्वणपिण्डदातृत्वेन धनाधिकारित्वेन च तेषां बलवत्त्वात्। ‘अपुत्रा स्त्री यथा पुत्रः पुत्रवत्यपि भर्त्तरि। पिण्डं दद्यात् जलञ्चैव जलमात्रन्तु पुत्रिणी’ इति निर्मूलं समूलत्वेऽपि बालदेशान्तरितपुत्रसद्भावविषयमिति श्राद्धविवेकप्रभृतयः। पत्न्यभावे कन्या। ‘अपुत्रस्य तु

या पुत्री सैव पिण्डप्रदा भवेत् । तस्य पिण्डान् दशैवै-तानेकाहेनैव निर्वपेत्” इति ऋष्यशृङ्गवचनात् “गोत्र-ऋक्थानुगः पिण्डः” इति मनुवचनेन दत्ताद्यपेक्षया तस्याबलवत्वात् । कन्याभावे यथाक्रमं वा दत्तादत्ता-दौहित्राः “दत्तानां चाप्यदत्तानां कन्यानां कुरुते पिता । चतुर्थेऽहनि तास्तेषां कुर्वीरन् सुसमाहिताः” इति ब्रह्मपुराणवचनात् । ननु “दुहिता पुत्रवत् कुर्य्यान्मातापित्रोश्च संस्कृता । अशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोः” इति शङ्खवचनात् पुत्रानन्तरमेव दुहित्रधिकारस्मृतेः इति चेन्न पत्न्याः प्रथमं धनाधिकारस्मृतेः यथा याज्ञवल्क्यः । “पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुतोगोत्रजोबन्धुः शिष्य सब्रह्मचारिणः । एषामभावे पूर्वेषां धनभागुत्तरोत्तरः” इति । तथा “मातामहानां दौहित्राः कुर्वन्त्यहनि चापरे” । इति ब्रह्मपुराणात् । “पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः । तयोर्हि माता पितरौ संभूतौ तस्य देहतः” । इति मनुवचनेन ‘पौत्रदौहित्रसंयुक्ता ये तथा चिरजीविनः । प्रियङ्कराश्च बालानां ते नराः स्वर्गगामिनः” इति विष्णुधर्मोत्तरेण पौत्रतुल्यताभिधानाच्च । तेन यथा पुत्राभावे पौत्रस्तथादुहित्रभावे दौहित्रः । न च दत्तकन्यादौहित्राभ्यां प्राक्सगोत्रत्वात् सोदराधिकार इति वाच्यम् गोत्रवत्त्वापेक्षया पिण्डदानादेर्धनसाध्यत्वात् ऋक्थग्राहिणोर्दुहितृदौहित्रयोर्बलवत्त्वात् । अत एव दुहितृधनाधिकारे तद्धनेन मृतोपकारकरणं हेतुरित्याहापस्तम्बः । “अन्तेवास्यर्थांस्तदर्थेषु धर्मकृत्येषु प्रयोजयेत् दुहिता वेति” तदर्थेषु मासिकादिना तद्भोगार्थं धर्मकृत्येष्वदृष्टार्थमिति । ‘गोत्रऋक्थानुगः पिण्डः” इति मनूक्तेः । “अनंशौ क्लीवपतितौ जात्यन्धवधिरौ तथा । उन्मत्तजड़मूकाश्च ये च केचिन्निरिन्द्रियाः” । इति मनूक्तानां “पितृद्विट्पतितः षण्डोयश्च स्यादौपपातिकः । औरसाअपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः” इति नारदोक्तानाञ्च भागानधिकारिणां पिण्डदानानधिकारः । जात्यन्धवधिरौ जन्मप्रभृतिअन्धवधिरौ निरिन्द्रियाः पङ्ग्वादयः श्रौतस्मार्त्तकर्म्मानधिकारिणोऽपि गृह्यन्ते इति रत्नाकरः । तथाच वृद्धशातातपः । “चाण्डालं पतितं व्यङ्गमुन्मत्तं शवहारकम् । सूतिकां सूयिकां नारीं रजसा च परिप्लुताम् । श्वकुक्कुटवराहांश्च ग्राम्यान् संस्पृश्य मानवः । सचेलं सशिरःस्नात्वा तदानीमेव शु-ध्यति” । व्यङ्गः पाण्यादिविकलः । व्यङ्गोन्मत्तयोः सदाचारहीनत्वात् अस्पृश्यतेति प्रायश्चित्तविवेकः । श्रौतस्मार्त्तक्रियानधिकारित्वं सदाचारहीनत्वञ्च मूत्रपुरीषाद्यशौचापनयनासमर्थत्वेनेति बोध्यम् । सूयिकां प्रसवकारयित्रीम् । पितृद्विट् पोषणौर्द्ध्वदेहिकविमुखः । औपपातिकः उपपातकैः संसृष्टः । उपपातकीति प्रकाशकारपाठेऽपि सएवार्थः । अपपालित इति पाठे तु राजवधादिदोषेण बान्धवैर्यस्य घटापवर्ज्जनं कृतमिति कल्पतरुः । व्यक्तं याज्ञवल्क्येनोक्तम् “न ब्रह्मचारिणः कुर्य्युरुदकं पतिता न च । पाषण्डमाश्रितास्तेनात व्रात्या न विकर्मणः । गर्भभर्त्तृद्रुहश्चैव सुरापाश्चैव योषितः” । पाषण्डं त्रयीबाह्यधर्मम् । स्तेनाः सततं चौर्य्यवृत्तयः । व्रात्याः षोड़शवर्षपर्य्यन्तमप्राप्तोपनयनाः, विकर्मणः शास्त्रेनाश्रद्दधानतया स्वधर्म्माननुष्ठायिनः व्यङ्गत्वादिना स्वधर्म्मानुष्ठानासमर्थाश्च बोध्या इति “कश्चित् क्षिपति सत्पुत्रोदौहित्रोवा सहोदरः । गृहीत्वास्थीनि तद्वत्स नीत्वा तोये विनिःक्षिपेत्” इत्यादिपुराणे क्रमदर्शनादत्रापि दौहित्राभावे सोदरः पूर्व्वोक्तशङ्खवचनेऽप्येवं क्रमोबोध्यः । अत्र ज्येष्ठः कनिष्ठश्चाविशेषात् । “नानुजस्य तथाग्रज”इति छन्दोगपरिशिष्टं कनिष्ठभ्रातृसद्भावविषयं तयोरभावे तथाविधौ वैमात्रेयौ । “भ्रातुर्भ्राता स्वयं चक्रे तद्भार्य्या चेन्न विद्यते । तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः” इति ब्रह्मपुराणाद्वैमात्रेयस्यापि एकजातत्वेन भ्रातृत्वात् । “देशान्तरस्थक्लीवैकवृषणानसहोदरान्”इत्यादिछन्दोगपरिष्टेन परिवेदने वैमात्रेयस्य भ्रातृत्वप्रसक्तावसहोदरानित्यनेन प्रतिप्रसवाच्च । पितृव्यपुत्रादौ भ्रातृपदप्रयोगो गौणः । गुणश्च वीजिपुरुषापेक्षया समानसंस्कजनकजन्यत्वमिति । धनिपितृादि पिण्डद्वयदातुः सोदरपुत्राद् धनिपित्रादिपिण्डत्रयदातृत्वाद्वैमात्रेयस्य धनाधिकारित्वेन बलवत्त्वाच्च । ततश्च सहोदरइति पूर्व्वाङ्गानुरोधात् वैमात्रेयपरमपि अन्यथा सहोदराभावे वैमात्रेयसत्त्वे वैमात्रेयपुत्राधिकारापत्तेः । तेन वैमात्रेयाभावे सोदरवैमात्रेयभ्रातृक्रमवत् सोदरपुत्रस्तदभावे वैमात्रेयपुत्रः । तन्मातृभोग्यपिण्डदातृतया प्रथमाधिकारित्वेन बलवत्त्वात् तस्यातिदिष्टपुत्रत्वाच्च । तदभावे पिता । “पुत्रोभ्राता पिता वापि मातुलोगुरुरेवच । एते पिण्डप्रदाज्ञेयाः सगोत्राश्चैव बान्धवाः” इति प्रचेतोवचनात् । ‘न पुत्रस्य पिता दद्यात्” इति छन्दोग-

परिशिष्टं भ्रातृपुत्रपर्य्यन्तसद्भावविषयम् । तदभावे माता ।"पुत्रोभ्राता पिता वापि" इत्यत्रापिशब्देन मातुः समुच्चयात् । "पितरौ भ्रातरश्चेत्यादौ धनाधिकारे तथा दर्शनाच्च । अतएव श्राद्धविवेके पितुरभावे तुल्यन्यायतया मातापीत्युक्तमिति । तदभावे पुत्रवधूः । तथाच शङ्खः "भार्य्यापिण्डं पतिर्दद्यात् भर्त्रे भार्य्या तथैव च । श्वश्र्वादेश्च स्नुषा चैव तदभावे द्विजोत्तमः" । अत्रादिपदात् श्वशुरादेरपि परिग्रहः इतरत्र स्नुषात्वाभावात् । द्विजोत्तमइत्यत्र सपिण्डक इति मैथिलानां पाठः । स्वस्वपदोपात्तसपिण्डविशेषाभावे "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्" इति धनाधिकारे तथादर्शनादत्रापि सन्निधितारतम्येन माता पुत्रवधूः पौत्री पौत्रवधूः प्रपौत्री प्रपौत्रवधूः पितामहः पितामही पितृव्यादयः सपिण्डाश्चाधिकारिणः" "पुत्राभावे स पिण्डाः"इति वक्ष्यमाणवचनात् । शङ्खवचनस्यमैथिलपाठाच्च । तदभावे समानोदकाः ।"सपिण्डसन्ततिर्वापि" इति वक्ष्यमाणात् । सपिण्डसन्ततिः समानोदकाइत्यर्थः । तदभावे सगोत्राः "सगोत्राश्चैवेति" "गोत्रजक्रमानुगःपिण्ड:"इत्युक्तत्वात् "एषामभावे सर्व्वेषां समानोदकसन्ततिरिति" वक्ष्यमाणाच्च । तदभावे मातामहः "दातामहानां दौहित्राः कुर्व्वन्त्यहनि चापरे । तेऽपि तेषां प्रकुर्वन्ति द्वितीयेऽहनि सर्व्वदा"इति ब्रह्मपुराणात् । तदभावे मातुलः तदभावे भागिनेयः "मातुलोभागिनेयस्य स्वस्रीयोमातुलस्य च"इति शातातपीयपाठक्रमात् । तदभावे सन्निधिक्रमेण मातामहसपिण्डाः । तदभावे मातामहसमानोदकाः ।"सपिण्डसन्ततिर्व्वापि क्रियाहोन्नृप! जायते । एषामभावे सर्व्वेषां समानोदकसन्ततिः । मातृपक्षस्य पिण्डेन सम्बद्धा ये जलेन वा" विष्णुपुराणात् । तदभावे श्वशुरः तदभावे जामाता "जामातुः श्वशुरास्तकुस्तेषां तेऽपि च संयताः" इति ब्रह्मपुराणपाठक्रमात् । तदभावे पितामहीभ्राता । "भागिनेयसुतानाञ्च सर्व्वेषान्त्वपरेऽहनि । श्राद्धं कार्य्यञ्च प्रथमे स्नात्वा कृत्वा जलक्रियाम्" इति ब्रह्मपुराणात् । अपरेऽहनि इत्यत्राशौचान्तदिनस्येति शेषः । तदभावे यथाक्रमं शिष्यर्त्विगाचार्य्याः, गौतमेन "पुत्त्राभावे सपिण्डाः मातृसपिण्डा वा शिष्या वा दद्युः तदभावे ऋत्विगाचार्य्यौ" इत्युक्तत्वात् । तदभावे सुहृत्पितृसुहृदौ "मित्राणां तदपत्यानामिति" ब्रह्मपुराणपाठक्रमात् । तदभावे एकग्रामवासी । "संघातान्तर्गतैर्व्वापि कार्य्या प्रेतस्य क्रिया" इति विष्णुपुराणात् तदभावे तद्धनं गृहीत्वा यः कश्चित् सवर्णः । "उत्सन्नबन्धुरिक्थाद्वा कारयेदवनीपतिः" इति विष्णुपुराणात् । और्द्ध्वदेहिकमधिकृत्य विष्णुपुराणं "ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन । कामाल्लोभाद्भयान्मोहात् कृत्वा तज्जातितामियात्" ।

स्त्रियास्तु यथाक्रमं पुत्त्रपौत्त्रप्रपौत्राः विष्णुपुराणे "पुत्रः पौत्रः प्रपौत्रो वा" इत्यविशेषश्रुतेः । तदभावे कन्या ।"अपुत्रस्य च या पुत्री" इतस्योद्देश्यगतलिङ्गाविवक्षया स्त्री पुंसाधारणत्वात् धनाधिकारित्वाच्च । तदभावे वाग्दत्ता "दत्तानामप्यदत्तानाम्" इत्यत्रापि पितृपदस्य मातृपदोपलक्षकत्वात् । तदभावे दत्ता "दुहिता पुत्रवत् कुर्य्यान्मातापित्रोश्च संस्कृता" इति मनुवचनात् । तदभावे दौहित्रः प्रागुक्तब्रह्मपुराणे तथा दर्शनात् । "पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्म्मतः । तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः" इत्यनेन यथा पुत्राभावे पौत्रः तथा दुहित्रभावे दौहित्रः इति प्रागेव उक्तत्वात् । "मातुलोभागिनेयस्य स्वस्रीयोमातुलस्य च । श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च । एतेषां चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा । पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः" इति वृद्धशातातपवचनेन मातामह्याश्च साक्षात् दौहित्रेण पिण्डदानश्रुतेः धनाधिकारित्वाच्च । दौहित्राभावे सपत्नीपुत्रः । तस्य पुत्रत्वस्मरणात् । यथाह मनुः । "सर्व्वासामेकपत्नीनामेका चेत् पुत्त्रिणी भवेत् । सर्व्वास्तास्तेन पुत्त्रेण प्राह पुत्रवतीर्म्मनुः" । एकपत्नीनामिति एकः पतिर्यासामिति अत्र सपत्नीपुत्रस्य पुत्रत्वातिदेशात् तत्सत्त्वेऽपि स्त्रीणां सपिण्डनं मैथिलैरुक्तं तच्च "पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः । पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोपि ये" इति लघुहारीतवचने एवकारेणातिदिष्टपुत्रनिषेधात् । अतएवोत्तरार्द्धे भ्रातृपुत्रोपादानं सङ्गच्छते । अन्यथा पुंसां तत्र पुत्रत्वातिदेशात् पुत्रत्वेनैव प्राप्तेः भ्रातृपुत्रोपादानं व्यर्थं स्यात् । तथाह मनुः । "भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्व्वे ते तेन पुत्रेण पुत्त्रिणोमनुरब्रवीत्" एकजातानामेकपितामातृजातानां तथाच "वृहस्पतिः । यद्येकजाताबहवोभ्रातरः स्युः सहोदराः । एकस्यापि सुते जाते सर्व्वे ते पुत्त्रिणोमताः" । एतन्न्यायमूलं तदिति चेन्न आदिपदग्राह्येषु "भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्यएव वा ।

सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयन्ततः” इति लघुहारीतोक्तेषु न्यायानुपपत्तेः। भ्राता वेति वाशब्दात् पूर्व्वेषां दौहित्रादीनां तदपेक्षया प्रधानाधिकारिणां समुच्चयः। अत एव सपिण्डत्वेनैव भ्रातृतत्पुत्रयोरधिकारसिद्धौ पृथगुपादानं प्राधान्यज्ञापनार्थम्। पुत्रत्वातिदेशफलन्तु पुन्नामनरकनिस्तारः। अतस्तत्सत्त्वे क्षेत्रजाद्यकरणञ्च। तथाहि “पुन्नाम्नोनरकाद्यस्मात्त्रायते पितरं सुतः। मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः” इति मनुवचने पुन्नामनरकत्राणाय पुत्रोत्पादनं विहितम्। तच्च फलं यद्यतिदिष्टपुत्राभ्यां भ्रातृसपत्नीजाभ्यां निष्पन्नं तदा सिद्धे इच्छाविरहात् तदुपायान्तरपुत्रप्रतिनिधीभूतक्षेत्रजादेर्नोपादानम्। पुत्रोत्पादनन्तु तथापि कार्य्यं पुत्रसत्त्वेऽपि पुत्रान्तरेच्छाविधानेन तत्कर्त्तव्यताप्रतीतेः यथा मत्स्यपुराणम्। “एष्टव्याबहवः पुत्रायद्यप्येकोगयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्”। एवमेव कल्पतरुपारिजातशूलपाणिमहामहोपाध्यायरत्नाकरवाचस्पतिमिश्रादयः। स्त्रीणामपि पुत्रात् पुन्नामनरकनिस्तारणमाह रत्नाकरे शङ्खलिखितौ “आत्मा पुत्त्र इति प्रोक्तः पितुर्मातुरनुग्रहात्। पुन्नाम्नस्त्रायते पुत्त्रस्तेनापि पुत्त्रसंज्ञितः”। पूर्व्वोक्तलघुहारीतवचने पुत्त्रेणेति तत्सत्त्वमात्रं विवक्षितम्। “सपिण्डीकरणान्तानाम् पुत्त्राभावे न विद्यते” इति मार्कण्डेयपुराणैकवाक्यत्वात्। “यानि पञ्चदशाद्यानि अपुत्त्रस्येतराणि च। एकस्यैव तु दातव्यमपुत्त्रायाश्च योषितः” इति छन्दोगपरिशिष्टेनापुत्त्राया एकाद्यपञ्चदशश्राद्धैः प्रेतत्वपरिहारोक्तत्वाच्च। एतत् पत्युरभावे द्रष्टव्यम्। “अपुत्त्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्डनम्। श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्” इति पैठीनसिवचनात्। ततश्च यथा शिशौ पुत्रेऽन्येनापि सपिण्ड्यते। एवं पतिसत्त्वेऽपि। अतएव मैथिलैरवीरायाः सपिण्डनं नास्तीत्युक्तम् तदभावे पतिः। “भार्य्यापिण्डं पतिर्दद्यात्” इति शङ्खवचनात्। “न जायायाः पतिः कुर्य्यादपुत्राया अपि क्वचित्” इति छन्दोगपरिशिष्टवचनम् सपत्नीपुत्रपर्य्यन्तसद्भावविषयम्। पत्यभावे स्नुषा “श्वश्र्वादेश्च स्नुषा चैव” इति यमवचनात्। तदभावे सान्निध्यक्रमेण सपिण्डाः। शङ्खवचने “तदभावे सपिण्डकाः इति मैथिलपाठात्”। “तदभावे सपिण्डः” इति पूर्व्वोक्तगोतमवचने सामान्यतः श्रुतेश्च। तदभावे समानोदकाः। “सपिण्डसन्ततिर्व्वेत्यविशेषश्रुतेः। तदभावे सगोत्राः। समानोदकसन्ततिरिति वक्ष्यमाणात्। श्राद्धविवेकेऽप्येवम्। एषामभावे पिता। “दत्तानाञ्चाप्यदत्तानां कन्यानां कुरुते पिता” इत्युक्तत्वात्। तदभावे भ्राता। “पुत्रोभ्राता पिता वापि” इत्यविशेषश्रुतेः। तदभावे यथाक्रमं दायभागोक्तोपकारतारतम्येन, “मातुलोभागिनेयस्य स्वस्रीयोमातुलस्य च। श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च। एतेषाञ्चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा। पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः” इति शातातपवचनात् भगिनीपुत्रभर्त्तृभागिनेयभ्रातृपुत्रजामातृभर्त्तृमातुलभर्त्तृशिष्याः पत्यपेक्षया पौत्रादिवत् पिण्डदानतारतम्येन क्रमेणाधिकारिणः। तथाहि तत्पिण्डतत्पुत्रदेयतत्पित्रादिपिण्डत्रयदातृत्वात् भगिनीपुत्रः। तदभावे भर्त्तृभागिनेयः। पुत्राद्भर्त्तुर्दुर्बलत्वेन तत्स्थानपातिनोऽपि तथैव बलाबलस्य न्याय्यत्वेन तद्भर्त्तृदेयपुरुषत्रयपिण्डतद्भर्त्तृपिण्डदत्वात्। तदभावे भ्रातृपुत्रः। तत्पिण्डतत्पुत्रदेयतत्पित्रादिपिण्डद्वयदत्वात्। तदभावे जामाता। “मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा। श्वश्रूः पूर्व्वजपत्नी च मातृतुल्या प्रकीर्त्तिता” इति वृहस्पतिवचनेन मातृष्वस्रादीनां मातृतुल्यत्वाभिधानात्। स्वस्रीयाद्यैः सह जामातुः पुत्रतुल्यत्वप्रतीतेः। अतएव तेषां धनभागित्वमाह वृहस्पतिः। “यदासामौरसोन स्यात् सुतोदौहित्रएव वा। तत्सुतोवा धनं तासां स्वस्रीयाद्याः समाप्नुयुः”। धनग्राहित्वेनापि पिण्डदातृत्वमाह मनुः। “गोत्रक्थभागनुगः पिण्डः” इति। तदभावे भर्त्तृमातुलभर्त्तृशिष्याः क्रमेणाधिकारिणः शातातपीयपाठक्रमानुरोधात्। प्रातिस्विकानामभावे पितृवंश्यमातृवंश्यौ। “पितृमातृसपिण्डैस्तु समानसलिलैर्न्नृप!” इति ब्रह्मपुराणेऽविशेषश्रुतेः। तयोरभावेऽसम्बन्धी द्विजोत्तमः पूर्व्वोक्तशङ्खवचने द्विजोत्तम इति गौड़ीयपाठात् संघातान्तर्गतैर्व्वापीति अविशेषश्रुतेः।

त्रिधाक्रियाकर्त्तृनाह विष्णुपुराणम् “पुत्रः पौत्रः प्रपौत्रोवा तद्वद्वा भ्रातृसन्ततिः। सपिण्डसन्ततिर्व्वापि क्रियार्हो नृप! जायते। एषामभावे सर्व्वेषां समानोदकसन्ततिः। मातृपक्षस्य पिण्डेन सम्बद्धाये जलेन वा। कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्य्या क्रिया नृप। संघातान्तर्गतैर्व्वापि कार्य्या प्रेतस्य सत्क्रिया।

उत्सन्नबन्धोक्थंशाहा कारयेद्वनीपतिः । पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः । त्रिप्रकाराः क्रियाह्येतास्तासां भेदान् शृणुष्व मे । आदाह-वाद्यायुधादिस्पर्शाद्यन्ताश्च याः क्रियाः । ताः पूर्वामध्यमामासिमासिकोद्दिष्टसंज्ञिताः । प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते तान्नृपोत्तराः । पितृमातृसपिण्डैश्च समानसलिलैर्नृप ! । संघातान्तर्गतैर्वापि राज्ञा वा धनहारिणा । पूर्वक्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः । दौहित्रैर्वा नरश्रेष्ठ ! कार्य्यास्तत्तनयैस्तथा । मृताहनि तु कर्त्तव्याः स्त्रीणामप्युत्तराः क्रियाः । प्रतिसंवत्सरं राजन् ! एकोद्दिष्टं विधानतः" । आदाहेति दाहावधेरशौचान्तविहितवाद्यायुधादिस्पर्शाद्यन्तास्ताः पूर्वाः । मासिमासीत्येकादशाहादिसपिण्डनान्तप्रेतक्रियोपलक्षणम् । सपिण्डनोत्तराः पार्व्वणादिक्रिया उत्तराः । अत्र पुत्रादिसपिण्डादयः पूर्वाः क्रिया अवश्यं कुर्य्युः । मध्यमक्रियायामनियमः । उत्तरक्रियायां पुत्रादयो भ्रातृसन्ततिपर्य्यन्ता नियताः । श्राद्धविवेकेऽप्येवम् । दौहित्रैर्वेति वाशब्दः समुच्चयार्थः तेन दौहित्रोऽप्युत्तरक्रियायां नियताधिकारी । दौहित्रतनयैरिति पुत्रिकापुत्रविषयमिति कल्पतरुः । कर्त्तृप्रकरणात् स्त्रीणामिति "वा कर्त्तरि कृत्ये" इति कर्त्तरि षष्ठी । उत्तरक्रियायां प्रतिसंवत्सरमेकोद्दिष्टविधाननियमात् । न पार्व्वणवृद्धिश्राद्धादौ स्त्रीणामधिकारः । मार्कण्डेयपुराणम् "सर्वाभावे स्त्रियः कुर्य्युः स्वभर्त्तॄणाममन्त्रकम् । तदभावे च नृपतिः कारयेत् स्वकुटुम्बवत् । स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतम् । मृताहनि यथान्यायं नृणां यद्वदिहोदितम्" । स्त्रियोऽत्रासवर्णोढाऽपरिणीता वेति श्राद्धविवेकः । सवर्णोढायाः पुत्रपौत्रपर्य्यन्ताभाव एव विधानात् । स्त्रीणामिति तु संप्रदानपरम् । एवमेवामन्त्रकमिति श्राद्धविवेकः । अत्र स्त्रिय इत्यस्यासवर्णोढाऽपरिणीतापरत्वव्याख्यानात् स्त्रीणां मन्त्रनिषेधोऽपि तत्संप्रदानकश्राद्ध एवावगम्यते । नतु स्त्रीमातृसंप्रदानके । एतच्च विप्रेतरपरं तस्य हीनवर्णश्राद्धनिषेधात् । कल्पतरौ तु स्त्रीणामप्येवमिति सम्बन्धेन स्त्रीणामेतत् कर्त्तव्यमिति एतद्व्याख्याने स्त्रीसम्प्रदानकश्राद्धे सुतरां मन्त्राः पाठ्याः । याज्ञवल्क्येनापि समन्त्रकमेकोद्दिष्टं सपिण्डीनञ्चोक्ता । एतत् सपिण्डकरणमेकोद्दिष्टं स्त्रियाश्चपि इत्यनेन स्त्रियाश्चपि तथैवेत्युक्तम् । "मातुः सपिण्डीकरणं पितामह्या सहोदितम् । यथोक्तेनैव कल्पेन पुत्रिकाया न चेत् सुतः" इति छन्दोगपरिशिष्टेनापि यथोक्तेनैव कल्पेनेत्यनेन मन्त्रादिकमतिदिष्टम् । व्यवहारोऽपि तथेति ।

तदय संक्षेपः । ज्येष्ठपुत्रकनिष्ठपुत्रपौत्रप्रपौत्रापुत्रपत्नीकन्यासमर्थपुत्रयुक्तपत्नीकन्यावाग्दत्तादत्तकन्यादौहित्रकनिष्ठसहोदरज्येष्ठसहोदरकनिष्ठवैमात्रेयज्येष्ठवैमात्रेयकनिष्ठसहोदरपुत्रज्येष्ठसोदरपुत्रकनिष्ठवैमात्रेयपुत्रज्येष्ठवैमात्रेयपुत्रपितृमातृपुत्रवधूपौत्रीपौत्रवधूप्रपौत्रीप्रपौत्रवधूपितामहपितामहीपितृव्यादिसपिण्डसमानोदकसगोत्रमातामहमातुलभागिनेयमातृपक्षसपिण्डतत्समानोदकासवर्णभार्य्याऽपरिणीतस्त्रीश्वशुरजामातृपितामहीभ्रातृशिष्यर्त्विगाचार्य्यमित्रपितृमित्रैकग्रामवास्युक्तहीतवेतनसजातीयाः षट्चत्वारिंशत्प्रकाराः क्रमेणाधिकारिणः ।

स्त्रियास्तु ज्येष्ठपुत्रकनिष्ठपुत्रपौत्रप्रपौत्रकन्यावाग्दत्तादत्तादौहित्रसपत्नीपुत्रपतिस्नुषासपिण्डसमानोदकसगोत्रपितृभ्रातृभगिनीपुत्रभर्त्तृभागिनेयभ्रातृपुत्रजामातृभर्त्तृमातुलभर्त्तृशिष्यपितृसमानोदकपितृवंश्यमातृसमानोदकमातृवंश्यद्विजोत्तमाश्चतुर्विंशतिप्रकाराः" इति

अथाब्दिकश्राद्धरूपैकोद्दिष्टे विशेषः श्रा॰ त॰ निर्णीतः यथा गोभिलः ।"अत ऊर्द्धं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यादिति"। अत ऊर्द्धं सपिण्डीकरणान्तश्राद्धनिमित्तादाद्यसंवत्सरादूर्द्धं संवत्सरे संवत्सरे प्रतिवर्षं यस्मिन्नहनि मृतस्तस्मिन्नहनि मृताय दद्यात् । व्याघ्रः । 'प्रतिसंवत्सरञ्चैवमेकोद्दिष्टं मृताहनि" । एतेन सपिण्डीकरणापकर्षे आद्यसंवत्सरेऽपि मृताहे श्राद्धान्तरं कर्त्तव्यमिति मैथिलोक्तं हेयम् । व्यक्तमाह हेमाद्रिधृतवचनम् । 'पूर्णे संवत्सरे श्राद्धं षोड़शं परिकीर्त्तितम् । तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते" । अत्र पूर्णसंवत्सरक्रियमाणश्राद्धादुभयोभयनिर्व्वाहस्तथापकृष्टसपिण्डीकरणश्राद्धादप्युभयनिर्व्वाहो न पूर्णसंवत्सरे आब्दिकान्तरम् एवं पञ्चदशश्राद्धेऽप्युन्नेयम् । मत्स्यपुराणम् "ततःप्रभृति संक्रान्तावुपरागादिपर्व्वसु । त्रिपिण्डमाचरेत् श्राद्धमेकोद्दिष्टं मृताहनि" । ततः प्रेतत्वपरीहारात् त्रिपिण्डं त्रैपुरुषम् । निरुपपदमृताहशब्दः मृतसम्बन्धिमासपक्षतिथिविशेषपरः । उपपदात्तु कचित्तिथिविशेषमात्रपरः । यथा मृताहे प्रतिमासम् कुर्य्यादित्यादौ । शङ्खः "सपिण्डीकरणादूर्द्धं यत्नयत्र प्रदीयते । तत्र तत्र त्रयम्

कुर्य्यात् वर्जयित्वा मृताहनि । अमावस्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः । सपिण्डीकरणादूर्द्धं तस्योक्तः पार्व्वणो विधिः” । त्रयं सम्प्रदानानां त्रयं कुर्य्यात् त्रिभ्यो दद्यादित्यर्थः । मृताहपर्य्युदस्तत्रिदैवतत्वस्य प्रतिप्रसवमाह अमावस्यामिति प्रेतपक्षोऽत्र पितृपक्षः आश्वयुक्कृष्णपक्ष इति यावत् न तु कृष्णपक्षमात्रं कृष्णपक्षसामान्यपरत्वेऽमावास्यापदवैयर्थ्यापत्तेः। पितृपक्षं विशेषयति हेमाद्रिमाधवाचार्य्यधृतं नागरखण्डम् 'नभोवाथ नभस्योवा मलमासो यदा भवेत् । सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः” । अत्र श्रावणभाद्रयोरन्यतरस्य मलमासत्वे आषाढ्यपेक्षया सप्तमपक्षस्य पितृपक्षत्वम् । अत्रमृतस्यैव प्रेतपक्षमृतत्वं न तु मलमासभाद्रकृष्णपक्षमृतस्य । ततश्च तत्र मृतस्य वर्षान्तरेऽश्वयुक्कृष्णपक्षेऽपि तच्छ्राद्धकरणे न पार्व्वणं किन्त्वेकोद्दिष्टमिति । अत्र पार्व्वणोविधिः पार्व्वणेतिकर्त्तव्यताकैकोद्दिष्टविधिरिति नव्यवर्द्धमानप्रभृतयः । तच्च पूर्व्ववचनोक्तत्रैपुरुषिकस्य मृताहे पर्य्युदस्तस्य पार्व्वणो विधिरित्यनेन प्रतिप्रसवात् तस्मात् सदैवैकोद्दिष्टं त्रैपुरुषिकं नतु षाट्पौरुषिकं 'कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोड़शम् । प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षड़िति स्थितिः” इति छन्दोगपरिशिष्टवचनेन प्रत्याब्दिकव्यतिरेकेण षट्संख्यानियमात् । एवममावास्यादिमरणनिमित्तेन मातुरपि प्रत्याब्दिकं पार्व्वणविधिनैव 'अपुत्रा ये मृताः केचित् स्त्रियोवा पुरुषाश्च ये । तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम्” इति आपस्तम्बवचने अपुत्त्रा इति विशेषणोपादानात् सपुत्राणां पार्व्वणाभ्यनुज्ञानात् । एतच्च मात्रादित्रितयदैवतं कार्य्यम् । “मात्रे पितामह्यै प्रपितामह्यै च पूर्व्ववत् ब्राह्मणान् भोजयित्वा” इत्यन्वष्टकायां तथादर्शनात् अवसानदिननिमित्तत्वेन पार्व्वणविधिना छन्दोगैरपि मात्रादित्रिकाणां श्राद्धं कर्त्तव्यं “न योषिद्भ्यः पृथगद्यादवसानदिनादृते” इति छन्दोगपरिशिष्टवचने विशेषतः प्रतिप्रसवात् । एवं सपिण्डीकरणेऽपि । एतच्च मृताहपार्व्वणं मातापित्रोरेव । तथाच हेमाद्रिधृतं कात्यायनवचनम् । “सपिण्डीकरणादूर्द्धं पित्रोरेव हि पार्व्वणम् । पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैव तु” । मातृपदं सपत्नीमातृपरम् । सपत्नीमात्रित्यत्र मातृपदस्य राजदन्तादित्वात् परनिपातः । ततश्च वाक्ये मातृसपत्नीति न प्रयोज्यं किन्तु सपत्नीमातरित्यादिकम् । एवं साग्निकौरसक्षेत्रजाभ्यां मृताहे पार्व्वणं कर्त्तव्यम् । 'औरसक्षेत्रजौ पुत्रौ विधिना पार्व्वणेन तु । प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश” इति जावालिवचनस्य “यत्र यत्र प्रदातव्यं सपिण्डीकरणात् परम् । पार्व्वणेन विधानेन देयमग्निमता सदा” इति मत्स्यपुराणवचनस्य चैकवाक्यत्वात् । उशना च 'प्रत्यब्दं दर्शवच्छ्राद्धं साग्निः कुर्व्वीत वै द्विजः । एकोद्दिष्टं सदा कुर्य्यान्निरग्निः श्राद्धदः सुतः” । अत्र प्रागुक्तयुक्त्या प्रेतश्राद्धस्य एकोद्दिष्टत्वाभिधानात् सांवत्सरिकश्राद्धे यदेकोद्दिष्टपदमुक्तं तत् प्रेतश्राद्धधर्म्मप्राप्त्यर्थम् । ततश्च योग्यत्वादेकार्घ्यादिलाभः न च यथा प्रेतश्राद्धे पितृशब्दस्थाने प्रेतपदोहः तथात्रापीति वाच्यं सांवत्सरिके प्रेतत्वाभावात्तथाविधानानुपपत्तेः । एवं प्रतिसांवत्सरिकश्राद्धे सम्बन्धार्थकपदं आशीःप्रार्थनं शेषभोजनञ्च कर्त्तव्यम् ।

रजस्वलायां विशेषयति गोतमः 'अपुत्रा तु यदा भार्य्या सम्प्राप्ते भर्त्तुराब्दिके । रजस्वला भवेत् सा तु कुर्य्यात्तत्पञ्चमे दिने' । कुर्य्याच्छ्राद्धमिति शेषः । यत्तु श्राद्धचिन्तामणौ 'एकोद्दिष्टं त्रैवर्णिकेन सिद्धान्नेन कर्त्तव्यम् । “एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम् । अभावे पाकपात्राणां तदहः समुपोषणम्” इति लघुहारीतवचनात् पाकपात्राभावः पाकसामग्र्यभावोपलक्षणं तदापि नामश्राद्धं किन्तूपोषणमेव श्राद्धस्थानीयमित्यर्थः । स्वयमित्यभिधानाद्पाटवादिनापि नान्यद्वारा कारयितव्यम् अतएव उपवासेनैव श्राद्धस्थानीयेन तदकरणप्रायश्चित्तेन वा कृतकृत्यतया श्राद्धविघ्नहतप्रादिवचनादपि नैकादश्यामनुष्ठानमिति” तन्न पितृत्वप्रेरजातत्वेनैकादश्यां तदनुष्ठानस्य युक्तत्वात् । अन्यथा षोड़शश्राद्धाधिकारिणः कदाचित्तथात्वे 'यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोड़श । पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि” इति यमवचनेन षोड़शश्राद्धाभावे प्रेतत्वपरीहारो न स्यात् । तस्मादुपवासेन श्राद्धार्थः किन्तु तदानीन्तनाकरणप्रायश्चित्तार्थः यथा स्वकालाकृतसंस्कारे प्रायश्चित्तं कृत्वा कालान्तरे तत् करणं तथात्रापि तद्दिने उपवासं कृत्वा एकादश्यां श्राद्धं कर्त्तव्यमिति। एकोद्दिष्टं नान्यद्वारा कार्य्यमित्यत्रापि गोत्रजेतरत्वेन विशेषणीयं 'न कदाचित् सगोत्राय श्राद्धं कार्य्यमगोत्रजैः' इति प्रेतश्राद्धे ब्रह्मपुराणात् । अत्र हि नागोत्रजस्य साक्षात् कर्त्तृत्वं निषिध्यते सगोत्रायेत्यसम्बन्धापत्तेः तस्मादगोत्रजैर्द्वारभूतैः सगोत्राय श्राद्धं न

कार्य्यमित्यर्थः। तथाच पर्य्युदासपक्षे गोत्रजद्वारा कारयितव्यमिति सुव्यक्तमेव प्रसज्यपक्षे तु अगोत्रजविशेषणस्वरसात् गोत्रजलाभः। प्रेतश्राद्धधर्म्मप्राप्तित्वात् सांवत्सरिकमपि तथेति श्राद्धविवेकः। कल्पतरुरत्नाकरयोस्तु स्वगोत्रायेति पठितं स्वमात्मीयं गोत्रं यस्य स स्वगोत्रः विद्यमानगोत्रइत्यर्थः। यस्मै श्राद्धं कर्त्तव्यं तस्य स्वगोत्रजे विद्यमानेऽन्यगोत्रजेन संघातान्तर्गतेन राज्ञा श्राद्धं न कारयितव्यमिति व्याख्यातञ्च। एतन्मतेऽप्यूढदुहित्रादीनामसगोत्रत्वेऽपि न निषेधः। वस्तुतस्तु तत्पाठेऽपि कर्म्मधारयापेक्षया बहुब्रीहेर्जघन्यत्वात् स्वमात्मीयञ्च तत् गोत्रञ्चेति तस्मै अन्यगोत्रजद्वारा श्राद्धं न कार्य्यमित्यर्थः। अतोलघुहारीतवचने स्वयंपदं स्वगोत्रपरम्। अन्यथा ब्रह्मपुराणोक्तागोत्रजपदवैयर्थ्यापत्तेः। एवञ्च भविष्यपुराणप्रभासखण्डयोः "मृताहनि पितुर्यस्तु न कुर्य्यात् श्राद्धमादरात्। मातुश्चैव वरारोहे! वत्सरान्ते मृताहनि। नाहन्तस्य महादेवि! पूजां स्वह्नाभिनोहरिः" ।मरीचिः। "पतिताऽन्नानिनोमूर्खास्त्रियोऽथ ब्रह्मचारिणः। मृताहं समतिक्रम्य चाण्डालेष्वभिजायते"। इत्याभ्यां कालमाधवीयधृताभ्यां वचनाभ्यां सांवत्सरिकश्राद्धस्य मृताहकर्त्तव्यत्वेनावश्यकत्वात् भविष्यन्मृताहे स्वयंकर्त्तव्यत्वसम्भावनारहितेन मृताहात् पूर्वकालेऽपि प्रतिनिधीयते। 'प्रत्विग्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा। प्रवसेत् कार्य्यवान् विप्रोवृथैव न चिरं क्वचित्" इति छन्दोगपरिशिष्टोक्तस्याव प्रातर्होमप्रतिनिधिवत्। एवं सति प्रतिनिध्यकरणएव एकादश्यां क्रियते। नच पाकस्याङ्गत्वेन प्रधानतिथिकर्त्तव्यतानियम इति वाच्यम्। 'व्रतोपवासनियमे घटिकैका यदा भवेत्। सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी" इति वचनेन मुहूर्त्तमात्रलाभेऽपि कर्त्तव्यतोपदेशात् तदानीं पाके तदसम्भवात्। एकादश्यामुद्देशभोजनेऽपि न तन्नियम इति'। एतञ्च पुत्रदुहित्रोर्नित्यं प्रागुक्तवचनेभ्यः। मृतपितृकपौत्रस्यापि तथा। "मृतमासस्य यः पक्षस्तत्तिथौ प्रतिवत्सरम्। "यावत्स्मरति पौत्रोऽपि एकमुद्दिश्य दापयेत्" प्रचेतोवाक्यात्

लघुहारीतवाक्येन द्विजानां सिद्धान्नेनैकोद्दिष्टकरणविधानात् तत्पाकेधिकारिविशेषोनिरूप्यते। तत्र श्रा०त० देवलः "तथैवामन्त्रितोदाता प्रातः स्नातः सहाम्बरः। आरभेत नवैः पात्रैरन्नारम्भं सबान्धवः"। अत्र सबान्धव इत्युक्तेः सपिण्डानामपि पाकाधिकारः इति गौड़ाचारः। नि० सि० विशेष उक्तः। हेमा० आश्वला० "समानप्रवरैर्मित्रैः सपिण्डैश्च गुणान्वितैः। क्षतोपकारिभिश्चैव पितृकार्य्यं प्रशस्यते"। व्यासः "महिला चैव सुस्नाता पाकं कुर्यात् प्रयत्नतः। मिश्रपक्वेषु च पाकेषु पुनः स्नानं समाचरेत्" पृथ्वीचन्द्रोदये ब्राह्मे। "रजस्वलाञ्च पाषण्डां पुंश्चलीं पतितां तथा। त्यजेच्छूद्रां तथा वन्ध्यां विधवाम् चान्यगोत्रजाम्। व्यङ्गकर्णां चतुर्थाहस्नातामपि रजस्वलाम्। वर्जयेच्छ्राद्धपाकार्थममातृपितृवंशजाम्" स्मृतिसारे "न पाकं कारयेत् पुत्रीमन्यां वाप्यसगोत्रजाम्! मृतवन्ध्यां पुंश्चलीं च गर्भिणीञ्चैव दुर्मुखाम्"।

**एकोनचत्वारिंशत्** स्त्री एकेनोना चत्वारिंशत्। (ऊनचल्लिश) ३९संख्यायां ३९तत्संख्यान्विते च एवम् एकोनविंशत्यादयोऽपि एकेनोनतत्संख्यासंख्येययोः स्त्री।

**एकौघ** पु० एकः अविच्छिन्नओघः प्रवाहः। अविच्छिन्नप्रवाहे "एकौघेन स्वर्धुनीर्दिभन्तः" माघः।

**एज** कम्पने भ्वा०आत्म०अक०सेट्। एजते ऐजिष्ट एजांबभूव आस चक्रे। एजकः एजितव्यः एजिता। एजितः एजमानः एजनम् णिच्। एजयति जनमेजयः। "क्षुद्रमन्नमत एजयतेऽक्षिणी मे" भाग०५,२,१५। वेदे गणव्यत्यासः। "एजतु दशमास्यो गर्भः" यजु०,२८ अथास्य मध्यमेजतु" २३,२७ शुष्का विदस्या एजतो गोशफे" २१,२८। "उदेजति पतति यस्य तिष्ठति" अथ० २०८ ११,१। "सुखेन दृष्णिरेजति" ऋ० १,१०,२ उदङ्ङेजत्यन्तरा वा एतदाहवनीयम्" श०ब्रा० १,५,१,२५ क्वचिल्लोके तथा। "शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः। सर्पाणां प्रपद्दा यान्ति धृतराष्ट्रोऽयमेजति" भा०आ० ८० अ० 'त्वत्तःपरं नापरमप्यनेजदेजच्च किञ्चिद्‌ व्यतिरिक्तमस्ति" भाग० ७,२.२०। वलीपलित एजत्कः" भाग० ६,८,४२, एजत्कः कम्पमानशीर्षः"

अप+अपगमने एङि पररूपम् अपेजते। क्वचिदन्तर्भूतण्यर्थेऽपि। "अपेजते शूरो अस्तेव शत्रून्" ऋ० ६.६४,२ "शत्रून् अपेजते अपगमयति भा०। उद्+ऊर्द्ध्वगतौ उदेजते। "उदेजतु प्रजापति र्वषा शुष्मेण वाजिना अथ० ४,४,२, "उदेजयान् भूतगणान्न्यषेधीत्" भट्टिः। प्र+प्रकर्षचलने पररूपम् प्रेजते। सम्+सङ्गतौ नियमेन चलने "एवेदनु द्यून् किरणः समेजात्" ऋ० १०,२७,५। "समेजात् नियमेन प्रयाति" भा०।

**एज** दीप्तौ भ्वादि॰ पर॰ अक॰ सेट्। एजति ऐजीत्। एजाम्-बभूव आस चकार। एजन्। [ युष्टे” अथ॰ १२,१,१८।

**एजथु** पु॰ एज-बा॰ भावे अथु। कम्पे “महानुवेग एजथुर्वेप-

**एजय** त्रि॰ एज-णिच्-खश्। कम्पके जनमेजयः अनङ्ग-मेजयः अरिमेजयः विश्वमेजयः।

**एजि** त्रि॰ एज-इन्। वातरोगग्रस्ते ततोऽपत्ये कुर्वा॰ण्य। ऐज्य तदपत्ये पुंस्त्री।

**एज्य** त्रि॰ आ+यज-कर्मणि क्यप्। सम्यग्यजनीये “आय-जतामेज्या इष इति प्रजाया इषस्ता एतेदायजूकाः” शत॰ ब्रा॰ १‘७,२,१५।

**एठ** बाधने भ्वादि॰ आत्म॰ अक॰ सेट्। एठते ऐठिष्ट एठाम् बभूव आस चक्रे। एठनम् एठितः। बाधनमत्र शाठ्यम्

**एड** पुंस्त्री इल-स्वप्ने अच् डस्य लः। १मेषे “अैडवराहेषूद धारा प्राचीद विष्णुरिति” कात्या॰ २५,४,१८। स्त्रियां जातित्वात् ङीष् २बधिरे त्रि॰। एडमूकः।

**एडक** पुंस्त्री॰ इल-ण्वुल् डस्य लः। १वनच्छागे, २पृथु-शृङ्गे मेषे ३मेषमात्रे च जातित्वात् स्त्रीत्वे अजादि त्वात् टाप् क्षिपकादि॰ नात इत्त्वम् एडका। एड इव प्रतिकृतौ कन्। मेषसदृशे दक्षिणापथप्रसिद्धे ४पशुभेदे। वर्द्धन्ते पक्षिसंघाश्च तथा पशुगवेडकम्” भा॰ व॰ १४२ अ॰। तस्येदम् अण्। ऐडक तत्संबन्धिनि त्रि॰ स्त्रियां ङीष्। “अनैडकीरूर्णाः प्रक्षाल्य” कात्या॰ ५,२,७। एडको नाम दक्षिणापथे मेषाकृतिः पशुः तस्येमाः ऐडक्यः” कर्क॰ “तयोर्मेषे मेष्यां च यद्यनैडकीरूर्णा विन्देत ताः प्रपिज्य निक्षिपयेत्” शत॰ ब्रा॰ २,५,२,१५, एडकइवाचरति क्यच् एडकीयति उपसर्गस्यावर्णात् परस्य वा पररूपम् उपे(पै)डकीयति

**एडगज** पु॰ एडोमेष एव गज इव भक्षकत्वादस्य। (दाद-मर्द्दन) चक्रमर्दे दद्रुघ्ने वृक्षे अमरः। [ शक्तिरहिते।

**एडमूक** त्रि॰ श्रुतिरहितएडोबधिरश्चासौ मूकः। वाक्श्रुति-

**एडु(डू)क** न॰ ईड-(ऊ)उक उलूका॰ नि॰ गुणः। १अ-न्तर्न्यस्तास्थियुक्ते २अन्तर्न्यस्तकठिनद्रव्ययुक्ते च कुड्यतभि-त्तिमात्रे च। एडूकचिह्ना पृथिवी न देवगृहभूषिता:” भा॰ व॰ १०। तस्य पुंस्त्वमपि “एडूकान् पूजयिष्यन्ति वर्ज्जयिष्यन्ति देवता:” भा॰ व॰ १९०अ॰। स्वार्थेऽण्। ऐडूकमपि वा॰ ओकः एडीकमपि तत्रैव द्विरूपकोषः।

**एण** पुंस्त्री इ-ण तस्य नेत्वम्। कृष्णवर्णे मृगे। स्त्रियाम् ङीप् “तस्य स्तनप्रणयिभिर्मुहुरेणशावैः” रघुः। “अष्टा-वेणस्य मांसेन रौरवेण नवैव तु” मनुः। तस्य कृष्णत्व-युक्तम् छन्दोग॰ “अञ्चोमात्ववीरुय एणः कृष्णमृगः स्मृतः। रुरुगौरमुखः प्रोक्तः शंवरः शोण उच्यते”। “तं त्वेणकुणकं कृपणं स्रोतसानुह्यमानम्” भाग॰ ५,८,८ “एणकुणकं मृगशावकम्” श्रीधरः। एण्या क्रीतम् “एण्या ढञ्. पा॰ ढञ्। ऐणेय एणीक्रीते त्रि॰। एणेन क्रीत-मित्यत्राण्येव। ऐण तत्क्रीते त्रि॰। स्वार्थे कन्। एणक तत्रैव शब्दरत्ना॰। [ हारा॰।

**एणतिलक** पु॰ एणस्तिलकमिव चिह्नं यस्य। मृगाङ्के चन्द्रे

**एणभृत्** पु॰ एणं बिभर्त्ति भृ-क्विप् ६त॰। चन्द्रे तस्य-मृगाङ्कत्वात् तथात्वम्।

**एणीपचन** न॰ एणी पच्यते अत्र पच-आधारे ल्युट् “एणी-पाकाधारे देशभेदे स्त्रीपशोरवध्यत्वेऽपि तद्देशवासिभि-र्निषेधमुल्लङ्घ्य तत्पचनात्तथात्वम्। तत्र भवः पक्षे छ। एणी-पचनीय तद्देशभवे त्रि॰ [ एणीपादाकारपादयुक्ते।

**एणीपद** त्रि॰ एण्याःपादाविव पादावस्य अच् नि॰ पद्भावः।

**एत** पु॰ इण-तन्। १कर्बुरवर्णे। २तद्वति त्रि॰। तोपध-वर्णवाचित्वात् स्त्रियां ङीप् तस्य नश्च। “त्रेण्याः शलल्याः” श्रुतिः “मैत्रावरुण्योऽन्यत एन्योमैत्राः” यजु॰ २४,८। वर्णवाचिनि एते परे “वर्णोवर्णेष्वनेते” पा॰ एतशब्दपर्युदासात् तत्पुरुषे पूर्वपदं न प्रकृत्या। कृष्णैतः शुक्लैत इत्यादौ न प्रकृतिस्वरः। आ+इण-कर्त्तरि क्त। ३आगते त्रि॰। “कया मती कुत एतास एतेऽर्चन्ति” ऋ॰ १,१६५,१। “एतास आगताः” भा॰ मरुद्भिरेता उपयुजमहे” ऋ॰ १,१६६,५। “एतानामन्तून्” भा॰

**एतग्व** पु॰ एतवर्णोऽश्वः पृषो॰। १चित्रवर्णाश्वे। “एतग्वा चिद्य एतशा युयोजते हरी” ऋ॰ ८,७०,७। “एतग्वा एतवर्णावश्वौ” भा॰। “पिपर्त्त्येतग्वा चिद्य सुयुजा युजानः” ऋ॰ ७०,७,२। २अश्वमात्रे निरु॰।

**एतद्** त्रि॰ इण्-अदि तुक् च। बुद्धिस्थे समीपवर्त्तिनि “इदमस्तु सन्निकृष्टं समीपवर्त्ति चैतदोरूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्” इत्युक्तेः समीपवर्त्ति बुद्धिस्थोपलक्षितधर्मावच्छिन्ने एतदो वृत्तिः। क्रिया-विशेषणत्वेऽस्य क्लीवता “न वा उ एतन्म्रियसे” ऋ॰ १,१६२,२१। अस्य सर्वनामकार्य्यम्। एते एतस्मै एत-स्मात् एतेषाम् एतस्मिन् एतस्याः एतासामित्यादि। “एते वयममी दाराः” कुमा॰। “देवा एतस्यामवदन्त पूर्वे” १०,१००,१४। एष वै प्रथमः कल्पः” मनुः। “एतस्मि-

न्तरे देवी''देवीमा०''एतान् महाराज ! विशेषधर्म्मान्'' शु०त० पुरा० । ''एषा तेऽभिहिता सांख्ये'' ''एतत्ते सर्वमाख्यातम्''गीता । अनूक्तौ तु ''द्वितीयाटौस्स्वेनः''पा० एनम् एनौ एनान् एनेन एनयोः । ''एनोनिवृत्तेन्द्रियवृत्तिरेनम्'' रघुः । ''महाशनोमहापाप्मा विद्ध्येनमिह वैरिणम्'' गीता क्लीवेऽपि अनूक्तौ एनादेशः । इदं कुलं शोभते एनत्पश्य । परिमाणे वतु आदन्तादेशश्च । एतावत् एतत्परिमाणे त्रि०''एतावानेव पुरुषोयज्जायात्मा प्रजेति ह'' मनुः''किं वेतावन्मात्रमुपजानीत'' शत०ब्रा० १,६,१,४ । ''एतावदुक्त्वा विरते मृगेन्द्रे'' रघुः ''एतावता नन्वनुमेयशोभि''कुमा०स्त्रियां ङीप् । ''एतावती महिमा स' बभूव'' ऋ० १०,१२५८ । एतदि दृश–क्विन् क्स टक् । आदन्तादेशः । एतादृश् एतादृक्ष एतादृश एतत्तुल्यदर्शने त्रि० तत्र क्विनन्तस्य झलि पदान्ते च कुः ''एतादृक्कृशता कुतः''सा०द० । टगन्तस्य स्त्रियां ङीप् । ''अस्थाने पतताऽतीव महतामेतादृशी स्याद्गतिः''उद्भटः । तस्येदमित्यर्थे छ । एतदीय एतत्सम्बन्धिनि त्रि० । एतदात्मकः मयट् एतन्मय एतदात्मके त्रि० । परिमाणे मात्रच् । एतन्मात्र एतत्परिमाणे त्रि० स्त्रियां ङीप् । दिग्देशकालवृत्तेरस्मात् प्रथमापञ्चमीसप्तम्यर्थे त्रल् तसिश्च । एतत्र एतस् प्रथमाद्यर्थयुक्ते तच्छब्दार्थदिगादौ अव्य० । अन्वादेशे ''एतदोऽश् त्रतसोस्त्रतसौ चानुदात्तौ''पा०उक्तेः अशादेशे अत्र अतः इत्येवेति भेदः । [ र्गतित्वात्तथा ।

एतन पु० आ+इण्-तन । निश्वासे हेमच० । निश्वासस्य सन्तत-

एतर्हि अव्य० इदम्+काले र्हिल् ''एतेतौ रथोः'' पा० एतादेशः । अस्मिन् काले इत्यर्थे ''अथ यो ऽयमेतर्ह्यग्निः स भोषा निलिल्ये'' शत०ब्रा० १,२,३,१ । ''एतर्हि खलु वा एतद्यज्ञमुखम्'' तैत्ति० ।

एतश पु० इण्-तशन् । १ब्राह्मणे उज्ज्व० २अश्वे निरु० । ''येन हृशादेतशो ब्रह्मणस्पतिः'' ऋ० १०,५३,९ । ''यत्रैतशोऽभिधीयसे'' यजु० ४,२२ । ''सजूः सूर एतशेन'' १२,७४ । एतशेनाश्वेनेति'' वेददी० ''उभे चक्रं न वर्त्यैतशस्'' ऋ० ८,६,३८ ।

एतशस् त्रि० इण्–तसुन् । १ब्राह्मणे २अश्वे च ।

एदिधिषुःपति पु० इण्-विच् कर्म्म० पृषो० मध्ये सुट् । अग्रेदिधिषुपतौ । ''निर्ऋत्यै परिविन्दानमाराद्ध्या अदित्यै, एदिधिषुःपतिं निष्कृत्यै'' यजु० ३०,९ । पुरुषमेधीयपशुदेवताभेदकीर्त्तने

एध वृद्धौ भ्वादि०आत्म०अक०सेट् । एधते ऐधिष्ट । एधाम्-बभूव-आस-चक्रे । एधितव्यः एधनीयः एध्यः एधिता एधितः एधनम् एधः एधमानः एधित्वा समेध्य एधांसि । ''हिरण्यभूमिसंप्राप्त्या पार्थिवो न तथैधते''मनुः । क्वचिदस्य आमभावः ''यत् मैथुनैरेधिरे प्रजाः'' भाग०३,२१,१ । आर्षत्वात् समाधेयः''तपसा महतैधित ''भा०आ०८८३ । ''विवर्द्धे ज्वलना इवैधमानाः''७१,५५ । ''लोकयोरुभयोः शक्यं नित्यदा सुखमेधितुम्'' रामा० । क्वचित् पर० । ''न हि साहसकर्त्तारः सुखमेधन्ति भारत !'' भा०व० २४५अ० । णिचि एधयति ते ऐदिधत् त । ''किं त्वं मामजुगुप्सिष्ठानैदिधः स्वपराक्रमम्'' भट्टिः । उपसर्गस्यावर्णात् वृद्धिरेव न पररूपं प्रैधते एङादित्वे एव तथा तेन मा प्रैदिधत् इत्यादौ न वृद्धिः ।

एध पु०इध्यतेऽग्निरनेन इन्ध–करणे घञ् नि० नलोपगुणौ । काष्ठे ''एधान् हुताशनवतः स मुनिर्ययाचे''रघुः ''एधोदकं मूलफलमन्नमभ्युदितं च यत्''मनुः । ''यथैधः स्वसमुत्थेन वह्निना नाशमृच्छति'' भा०व०८४अ० ।

एधतु पु० एध–कर्त्तरि चतु । १पुरुषे उज्ज्व० । २अग्नौ मे० ३वृद्धियुक्ते त्रि० शब्दर०भावे चतु । ४वृद्धौ स्त्री । ''युवं ह्यस्था पुरुभुजेममेधतुम्''ऋ०८,८६,३,''एधतुं धनादिवृद्धिम्'' भा० ''ते हैतामेधतुमेधाञ्चक्रिरे'' शत०ब्रा० ६,२,३, ''एतामेधतुर्वृद्धिम्'' भा०

एधस् न० इध्यतेऽग्निरनेन इन्ध–असि नि० नलोपगुणौ । काष्ठे ''यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन !'' गीता । ''अनलायागुरुचन्दनैधसे'' रघुः । ''फलैधः कुसुमस्तेयमधैर्य्यञ्च मलावहम्'' ''यथैधस्तेजसा वह्निः''मनुः ।

एधा स्त्री एध–भावे अ । समृद्धौ अमरः

एधित त्रि० एध–कर्त्तरि क्त । १वृद्धे णिच्–कर्म्मणि क्त । २वर्द्धिते त्रि० । ''मधुसमृद्धिसमेधितमेधया'' माघः ।

एनस् न० एति गच्छति प्रायश्चित्तेन क्षमापणेन वा आगसि अर्थे इण्–असुन् नुट् च । १अपराधे । ईश्वराज्ञालङ्घनरूपनिषिद्धाचरणापराधजन्यत्वात् २पापे च । ''एनोनिवृत्तेन्द्रियवृत्तिरेनम्'' । ''अकामोपनतेनेव साधोर्हृदयमेनसा'' । ''एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम्'' मनुः । पापभेदाश्च प्रा०वि० दर्शिताः यथा ''अथ पापोद्देशः । तत्र विष्णुः ''अथ पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं सुघोरं भवति परिग्रहप्रसङ्गाद्विशेषेण तेनायमाक्रान्तोऽतिपातक

महापातकानुपातकोपपातकेषु प्रवर्त्तते । जातिभ्रंशकरेषु सङ्करीकरणेषु अपात्रीकरणेषु मलावहेषु प्रकीर्णेषु च” । अनेन नवविधत्वं पापस्योक्तम् । हारीतस्तु पञ्चविधत्वमाह ‘पञ्चविधमशुद्धं भवति प्रासङ्गिकोपपातकपातकमहापातकान्यन्तपातकानि” पूर्व्ववचने पूर्व्वं पूर्व्वं गरीयः अत्र तूत्तरोत्तरम् । प्रासङ्गिकं जातिभ्रंशकरादिपञ्चकम् । पातकपदमनुपातकपर्य्यायः । ननु नवस्वेव पापेषु पातकशब्दो दृश्यते यथा पैठीनसिः “स्त्रीगोवृषलवैश्यक्षत्रियघाती शूद्रसहभोजी कन्यादूषणगारदाही वृषलीपतिः अग्न्युच्छेदा चेति पातकानि” नवविधं पापमभिधायाह विष्णुः । “एवं पातकिनः पापमनुभूय सुदुःखिताः । तिर्य्यग्योनौ प्रपद्यन्ते दुःखानि विविधानि च” । याज्ञवल्क्यः “नीचाभिगमनं गर्भपातनं भर्त्तृहिंसनम् । विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्” । पतनीयानि पातकानीत्यर्थः । “कृत्यल्युटो बहुलमिति” करणेऽनीयर् । तथा गौतमः “ब्रह्महासुरापगुरुतल्पगमातृपितृयोनिसम्बन्धागस्तेन नास्तिकनिन्दितकर्म्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताश्च पातकसंयोजकाश्च तैश्चाब्दं समाचरन्” । पातकसंयोजकाः सुरापाणादौ यः परान् प्रयोजयति सः । वाढम् । सामान्यशक्तस्यापि विशेषशक्तिर्भविष्यति स्वर्गादिपदस्येव, हारीतेन विशेषगणने पाठात् । तथा च्यवनः “अथ पातकोपपातकमहापातकानि व्याख्यास्यामः” इति । तथा च पठन्ति । “महापातकतुल्यानि पापान्युक्तानि यानि तु । तानि पातकसंज्ञानि तदूनमुपपातकमिति” । ततो महापातकतुल्यपापविशेषेष्वप्यस्य शक्तिः । पतनशब्दार्थमाह गौतमः “द्विजातिकर्म्मभ्योहानिः पतनम् परत्र चासिद्धिस्तमेके नरकम्” । द्विजातिकर्म्म श्रौतमग्निहोत्रादि स्मार्त्तमष्टकादि प्रायश्चित्ततदङ्गजपादिव्यतिरिक्तम् तेभ्योहानिरनधिकारः इति । द्विजातिग्रहणं प्राधान्यार्थम् शूद्रस्यापि वाक्यान्तरेण पातित्याभिधानात् । इहलोके तावत् पातित्यलक्षणमनिष्टं परलोके चासिद्धिः पापकर्म्मप्रतिबन्धादुपात्तसुकृतफलानिष्पत्तिः नरकं वा । सूतकादिव्यावृत्त्यर्थमिदम्” ।

पापलक्षणं पापसत्तायां प्रमाणञ्च प्रा० वि० दर्शितं यथा “ननु किं पापलक्षणम्” उच्यते ‘मोदनालक्षणार्थोधर्म्मः !” इत्यस्मिन् सूत्रे वेदैः प्रतिपाद्योऽर्थोधर्म्म इति धर्म्मलक्षणं कुर्व्वता सूत्रकारेण जैमिनिना वेदैकप्रतिपाद्योऽनर्थोऽधर्म्म इत्यधर्म्मलक्षणं सूचितम् । अनर्थस्यानिष्टसाधनं तथाचोक्तं भाष्यकृता ‘कोऽर्थोयोऽभ्युदयाय कोऽनर्थोयोऽनभ्युदयायेति” । ननु पापसत्तायां किं प्रमाणं न तावद्वेदः तस्य कार्य्ये कार्य्यान्विते वा प्रामाण्यात् न च दुरितापूर्व्वं कार्य्यं कार्य्यान्वितं वा । न च नित्यकर्म्मानाचरणस्य निषिद्धाचरणस्य च वेदोक्तप्रत्यवायसाधनत्वानुपपत्त्या कल्प्यम् तस्य तथाविधशब्दाभावेन सिद्धत्वेन चावगन्तुमशक्यत्वात् उच्यते “यो ब्राह्मणायावगुरेत्तं शतेन यातयेदिति” श्रुतौ लिङ्द्वयश्रुतेरवगोरणशतयातनयोः साध्यसाधनभावोऽवगम्यते “हेतुहेतुमतोर्लिङिति” पा० लिङः स्मरणादिति यथोक्तं शंयुधिकरणे, तथाऽत्रापि क्वचित् पञ्चम्या क्वचित् तृतीयया क्वचिच्च विशेषणपदादवगम्यते । यथा याज्ञवल्क्यः “विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति” । मनुः “शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः । वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् । इह दुश्चरितैः केचित् केचित् पूर्व्वकृतैस्तथा । प्राप्नुवन्ति दुरात्मानोनरारूपविपर्य्ययम्” । तथा विष्णुपुराणम् “नरकं कर्म्मणःपापादेवमाहुर्महर्षय” । तथा-यमः ‘सुरापो ब्रह्महा गोघ्नः सुवर्णस्तेयकृन्नरः । पतितैः संप्रयुक्तश्च कृतघ्नोगुरुतल्पगः । एते पतन्ति सर्व्वेषु नरकेष्वनुपूर्व्वशः” । अत्रैते सुरापादयः पतन्तीति सुरापादीनां पतनकर्त्तृत्वावगतेः कर्त्तृत्वञ्च साधनत्वविशेषः अतः सुरापाणादिविशिष्टस्य पुरुषस्य पतनसम्बन्धे विशेषणस्य सुरापाणादेः सति सम्भवे पतनसाधनत्वमवगम्यते “सप्तदश प्राजापत्यान् पशूनालभेतेति” वत् । एवं “वारिदस्तृप्तिमाप्नोति” इत्यादावपि । नरकसाधनत्वस्य कार्य्यान्वयाभावात् कथं शब्दादवगतिरिति चेत् शंयुवद्विषयविशेषणतया इति ब्रूमः यथा शतयातनासाधनादवगोरणान्निवर्त्तितव्यमिति विधिः, तथा नरकसाधनात् सुरापाणादेर्निवर्त्तेतेति, नित्येऽपि यस्याकरणे प्रत्यवायस्तस्मिन् कर्म्मणि प्रवर्त्तेतेति विध्यङ्गीकारात् । अथवा यद् यत्साधनं तदभावस्तत्परीहारसाधनमिति लोकादवगतत्वात् अर्थात् प्रत्यवायपरिहारस्योपस्थितत्वात् तदर्थिनोऽधिकारो नित्यनिषेधेष्वपि । ननु “अहरहः सन्ध्यामुपासीत” इत्यादौ जीवनस्य सन्ध्योपासनव्याप्यत्वावगमात् जीवनवतोऽधिकारः । “न कलञ्जम्भक्षयेत्” इत्यादौ निवृत्तिस्वभावनिरुद्धा प्रवृत्ति रधिकारिविशेषणं तथाचोचोक्तं “मनसा तु प्र-

हृतस्य मृतचेष्टावतोऽपि वा। यदनागतभावस्य वर्ज्जनं तन्निवर्त्तनमिति” अतः कथं प्रत्यवायपरीहारार्थिनोऽधिकारः उच्यते प्रत्यवायपरीहारस्याप्युपस्थितत्वात् जातेष्टिवत् संवलिताधिकार एव भविष्यति तथा च जावालः “अयं केचिदुपात्तस्य दुरितस्य प्रचक्षते। अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते। नित्यक्रियाणां चान्ये ह्यनुषङ्गफलां श्रुतिम्”। अनुत्पत्तिमित्यनेन प्रत्यवायपरीहारः फलमित्युक्तम्। अथवा प्रायश्चित्तविधिषु रात्रिसत्रन्यायेनार्थवादिकफलार्थिनोऽधिकारात्। एवं च विधयः पापसत्तां बोधयन्ति तथाचाङ्गिराः “उद्यन्न् यद्वदादित्यस्तमः सर्व्वं व्यपोहति। तद्वत् कल्याणमातिष्ठन् नरं पापं व्यपोहति”। पापञ्चेद् पुरुषं कृत्वा कल्याणमभिपद्यते। मुच्यते पातकैः सर्व्वैर्महाभ्रैरिव चन्द्रमाः”। कल्याणं प्रायश्चित्तम्। यमः “तपसोऽन्ते विशुद्ध्यन्ति कर्मणां सपरिक्षयात्। तस्मात् कर्त्तव्यमेतत्तु प्रायश्चित्तं विशुद्धये”। कर्म्मणां भोगेन परिक्षयादित्यर्थः। अपरं स्मृत्यन्तरे ज्ञेयमिति। ननु किं पापोत्पत्तिकारणम्? उच्यते विहिताकरणं निषिद्धाचरणञ्च पापकारणं तदाह मनुः। अकुर्व्वन् विहितं कर्म्म निन्दितञ्च समाचरन्। प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः”। प्रायश्चित्तार्हताज्ञापनेन पापसत्तां प्रतिपादयति। तथा याज्ञवल्क्यः। “विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति”।

पापस्य यथा वेदबोध्यत्वं तथा मीमां०भा०दर्शितम् यथा “उभयमिह चोदनया लक्ष्यते अर्थोऽनर्थश्च इति कोऽर्थः? यो निःश्रेयसाय ज्योतिष्टोमादिः। कोऽनर्थः? यः प्रत्यवायाय श्येनोवज्रः इषुरित्येवमादिः तत्र अनर्थो धर्म्म उक्तो मा भूत् इति अर्थग्रहणम्। कथं पुनरनर्थः? हिंसा हि सा साच प्रतिषिद्धेति। कथं पुनरनर्थः कर्त्तव्यतयोपदिश्यते?। उच्यते नैव श्येनादयः कर्त्तव्याः विज्ञायते योहि हिंसितुमिच्छेत् तस्यायमभ्युपायः इति हि तेषामुपदेशः “श्येनेनाभिचरन् यजेत” इति समामनन्ति हि “नाभिचरितव्यम्”। “अतएव मूलकर्म्मकृत्याभिचारस्योपपातकसंज्ञा कृता मनुना तेन तस्यानर्थहेतुत्वं सुव्यक्तमेव। यथा च कलञ्जभक्षणश्येनादेरनिष्टसाधनत्वेऽपि वेदबोध्यत्वं तथा मल्ल०चि० समर्थितं यथा ननु “न कलञ्जं भक्षयेत्” इत्यत्र विध्यर्थनिषेधानुपपत्तिः तद्भक्षणस्य इष्टसाधनत्वात्। न चासुराविद्यावत् पर्य्युदासलक्षणया विरोध्यनिष्टसाधनताबोधनं, नञोऽसमस्तत्वात् क्रियासङ्गत्वेन प्रतिषेधवाचकत्वव्युत्पत्तेश्चेति चेत् न विशेष्यवति विशिष्टनिषेधस्य “सविशेषणे हीति” न्यायेन विशेषणनिषेधपर्य्यवसायितया कलञ्जभक्षणमिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखसाधनमिति “न कलञ्जं भक्षयेत्” इत्यनेन बोधनात्। इष्टसाधनतावाचकस्य विधेः सामान्ये निषेधानुपपत्तेर्बलवदनिष्टाननुबन्धीष्टसाधनविशेषे तात्पर्य्यम् तथा चाशक्यविशेषणनिषेधपरत्वं नञ इति कश्चित् तन्न यथाह्ययोग्यतया छिद्रं विहाय घटत्वेन तदितरान्वयो न तु छिद्रेतरत्वेन, युगपद्वृत्तिद्वयविरोधात् तथेहापि बलवदनिष्टाननुबन्धित्वेन नोपस्थितिरिति कथं निषेधः?। “श्येनेनाभिचरन् यजेत” इत्यत्र कथं विधिप्रवृत्तिः हिंसाया बलवदनिष्टसाधनत्वादिति चेत् तत्र कृतिसाध्यत्वे सति इष्टसाधनता योग्यतयान्वेति न तु बलवदनिष्टाननुबन्धित्वमपि अयोग्यत्वात् निन्दार्थवादेन प्रायश्चित्तोपदेशेन वा हिंसाया बलवदनिष्टसाधनत्वोपगमात्। अत एव विहितेऽपि श्येने विगानात् सात्त्विकप्रवृत्तिः। रागद्वेषयोरुत्कटत्वेनानिष्टानुबन्धाभस्य तिरोधानात्तु कस्यचित् प्रवृत्तिरित्येके। अन्ये त्वभिचारस्य वैरिवधफलत्वेन श्रुतत्वात् तत्साधनत्वेन श्येनो विधीयते नतु वधसाध्यनरकसाधनत्वेनाश्रुतत्वात्। न च जनकजनकस्य जनकत्वनियमः कुम्भकारपरम्परायाः कुम्भकारणत्वापत्तेः विधिनैव श्येनस्य बलवदनिष्टाननुबन्धित्वस्य बोधनाच्च। न च श्येनस्य नरकाहेतुत्वेनापेक्षितवैरिवधहेतुत्वे सत्यविगीतत्वेन प्रवृत्तिः स्यादिति वाच्यम्। श्येनाद्वैरिबधोवधाच्चावश्यं नरकमिति प्रतिसन्धानेन विगानात्। ननु श्येनोमरणफलकव्यापारत्वेन हिंसा हिंसा च नरकजनिकेति चेन्न। नहि साक्षात् परम्परासाधारणमरणफलकव्यापारो हिंसा कूपादौ नष्टे गवि तत्कर्त्तुर्हन्तृत्वप्रसङ्गात् बध्यस्यापि हन्तृमन्यूत्पादनद्वारात्महन्तृत्वप्रसङ्गाच्च। न ह्यनुत्पादितमन्युः कश्चित् कञ्चित् व्यापादयति। नन्वनुनिष्पादितमरणफलकव्यापारो हिंसा यदनन्तरं मरणं भवत्येव न च श्येनस्तथा किन्तु खड्गहननादिकमेव। अथ मरणानुकूलोव्यापारो मरणोद्देशेनानुष्ठीयमानो हिंसा श्येनश्च तथा, कूपादौ च न मरणोद्देशेनानुष्ठीयमानत्वमिति चेत् एवं सति गौरवात् मरणानुद्देशेन विप्रनाशाघाद्वते ब्राह्मणे हिंसा न स्यात्।

हिनसिधात्वर्थतावच्छेदकं फलमव्यवहितमेव मरणम् अ-व्यवहितफलकव्यापारस्यैव धातुवाच्यत्वात् अन्यथा परम्परया विक्लित्तिफलकाद्यकामे तण्डुलं कुर्वत्यपि पचतीति प्रसङ्गात् अथ खड्गघातानन्तरं यत्र विलम्बेन मरणं व्रणपाकपरम्परया वा, अन्ने विषप्रयोगेण वा तत्र हन्तृत्वं प्रायश्चित्तादि च न स्यादिति चेत् न प्रायश्चित्ततुल्यत्वार्थं हि तत्र हन्तृत्वव्यपदेशो गौणः विनिगमनन्तु लाघवमेव

वस्तुतस्तु मरणोद्देशेन कृतोऽदृष्टाद्वारकस्तदनुकूलो-व्यापारः हिंसा श्येनस्यादृष्टद्वारामरणसाधनमतो न हिंसा। यद्यदृष्टद्वारा मरणसाधनं हिंसा स्यात्तदा सप्तमीतैलाभ्यङ्गस्यादृष्टद्वारेण विनाशसाधनत्वात् तत्कर्त्तुः हिंसकत्वापत्तिः। अत एव कूपादौ गोमरणेऽपि न गोवधकर्त्तृता तत्कर्त्तुः, गललग्नान्नमरणेन भक्तुराकहन्तृत्वं, परिवेषयितुर्वा ब्राह्मणहन्तृत्वम्। व्रणपाकपरम्परया विलम्बेन विषप्रयोगेण च हन्तृत्वं मुख्यमेव। नाप्यतुनिष्पादितमरणफलकत्वं गललग्नान्नमरणे स्वहन्तृत्वापत्तेः। अन्योद्देशेन चिप्रना टाचहते ब्राह्मणे ब्राह्मणहन्तृत्वं न स्यादिति चेत् न इष्टापत्तेः। व्यपदेशः प्रयोगो वा लक्षणया समर्थयितुं शक्यते, तत्फलेऽतिप्रसङ्गो वारयितुं न शक्यत इतीदमेव विनिगमनम्। अन्योद्देशेन कृतेऽपि निषिद्धे प्रायश्चित्ताद्युक्तम्। अपरे तु अनभिसंहितावान्तरव्यापारमद्वारीकृत्य मरणसाधनं हिंसा, खड्गकारस्यानभिसंहितावान्तरव्यापारद्वारा मरणसाधनत्वं तस्य हि अवान्तरव्यापारोनाभिसंहितः। किन्तु धनलाभ इति खड्गकारो न घातकः विषस्यान्ने प्रक्षेपणमवान्तरव्यापारो भोजनमेवाभिसंहितम् अनेनेदं भोक्तव्यमिति सन्धाय विषप्रयोगादिति हिंसैव विषप्रयोग इति तन्न गललग्नान्नकवलाद्यत्र मरणं तत्र परिवेषयितु घातकतापातात् अनेनेदं भोक्तव्यमित्यभिसन्धायैवान्नपरिवेषणात् भोक्तुःहन्तृत्वापत्तेश्च अनभिसंहितमवान्तर व्यापारमद्वारीकृत्य मरणानुकूलभक्षणानुष्ठानात्। अत एव अव्यवहितप्राणवियोगफलकोव्यापारो हिंसा व्रणपाकपरम्परयामृते न हन्तृत्वं व्यापारव्यवधायकत्वादिति निरस्तम्"

श्येनादेर्वेदबोधितत्वेऽपि यथाऽनर्थहेतुत्वं तथाऽभिचार शब्दे दर्शितवचनैरुक्तम् अधिकं श्येनशब्दे वक्ष्यते। एनसाकृतम् यत्। एनस पापरचिते त्रि॰"यक्ष्ममेनस्यम्" अथ॰ ८,७,३। एनोऽस्त्यस्य मतुप् मस्य वः। एनस्वत् त्रि॰। एनस्विन् पापयुक्ते त्रि॰ उभयत्र स्त्रियां ङीप्। "मा त एनस्वन्तो यक्षिन् भुजेम" ऋ॰७,८८,६।

एनस्वन्तं चिदेनसः सुदानवः८,१८,१२। "एनस्विभिरनिर्णिक्तैः नार्थं किञ्चित् समाचरेत्"। "अब्दार्द्धमिन्द्रमित्येतदेनस्वी सप्तकं जपेत्" मनुः। "इण आगसीति" उणा॰ अपराध एव साधुत्वम् पापे तु ईश्वराज्ञालङ्घनरूपापराधजत्वेनोपचारात् इति बोध्यम्।

**एम** त्रि॰ इण-कर्म्मणि म। १प्राप्ये। "अर्थश्च म एमश्च" यजु॰ १८,१५, "एमः प्राप्तव्यार्थः" वेददी॰।

**एमन्** न॰एत्यनेन मार्गेण इण-करणे मनिन्। १गतिमार्गे "कृष्णं त एम रुशतः"ऋ॰४,७,६। "कृष्णं त एम रुशदूर्मे १,५८,४। "एमनशब्देन गमनमार्ग उच्यते" भा॰ एत्यत्र आधारे मनिन्। २अवस्थितिस्थाने। "पृष्ठे सद्मस्येमन्" यजु॰१३,१७, "एमन् अवस्थाने" वेददी॰। "अपां त्वेमन्त्सादयामि" १३,५३। सप्तम्या लुकि न नलोपः। भावे मनिन्। ३गमने। "दूरे दृशो ये चितयन्त एमभिः" ऋ॰५,५६,२ एमभिर्गमनैः" भा॰।

**एरका** स्त्री इण-बा॰ र ततः संज्ञायां कन्। निर्गन्धितृणभेदे (नलखाडा) "एरका गुन्द्रमूला च शिम्बी गुन्द्रा शरीति च। एरका शिशिरा दृष्या चक्षुष्या वातकोपिनी। मूत्रकृच्छ्राश्मरीदाहपित्तशोणितनाशिनी" भावप्र॰। "ददार करजैरूरावेरकां कटकृद्यथा" भाग॰ १,३१६, "एरकाणां तदा मुष्टिं कोपाज्जग्राह केशवः"। भा॰मौस॰३अ॰ "एरकारूपिभिर्वज्रैर्निजघ्नुरितरेतरम्" भा॰ आ॰ २अ॰। २कौरव्यवंशजे सर्पभेदे "एरकः कुम्भलोवेणो वेणीस्कन्दः कुमारकः" भा॰आ॰५७अ॰। नागनामकीर्त्तने

**एरङ्ग** पु॰ आ+ईर-अङ्गच्। मत्स्यभेदे, "एरङ्गोमधुरः स्निग्धो विष्टम्भी शीतलो गुरुः" राजनि॰ तद्गुणाः।

**एरण्ड** पु॰ ईरयति वायुम् मलं वाऽधः ईर-अण्डच् नि॰गुणश्च। १वृक्षभेदे (एरण्डी)। (भेरण्डा)। "एरण्डयुग्मं मधुरमुष्णं गुरु विनाशयेत्। शूलशोथकटीवस्तिशिरःपीडोदरज्वरान्। व्रध्नश्वासकफानाहकासकुष्ठाममारुतानिति" एरण्डयुग्मम् शुक्लरक्तैरण्डौ "एरण्डपत्रं वातघ्नं कफक्रिमिविनाशनम्॥ मूत्रकृच्छ्रहरञ्चापि पित्तरक्तप्रकोपणम्। वाताग्र्यदलं गुल्मवस्तिशूलहरं परम्। कफवातकृमीन् हन्ति वृद्धिं सप्तविधामपि। एरण्डफलमत्युष्णं गुल्मशूलानिलापहम्। यकृत्प्लीहोदरार्शोघ्नं कटुकं दीपनं मतम्। तद्वन्मज्जा च विड्भेदी वातश्लेष्मोदरापहः। क्वाथोऽस्य मूलं संग्राह्यमित्याङ्करपरे जनाः"

"एरण्डतैलं तीक्ष्णोष्णं दीपनं पिच्छिलं गुरु। वृष्यं त्वच्यं वयःस्थापि मेधाकान्तिबलप्रदम्। कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम्। विस्रं स्वादुरसं पाके सुतिक्तं कटुकं सरम् (रेचकम्) विषमज्वरहृद्रोगपृष्ठ-गुह्यादिशूलहृत्। हन्ति वातोदरानाहगुल्माष्ठीलाकटि-ग्रहान्॥ वातशोणितविड्बन्धब्रध्नशोथामविद्रधीन्। आमवातगजेन्द्रस्य शरीरवनचारिणः। एक एव निह-न्तायमेरण्डस्नेहकेशरी" भावप्र०। स्वार्थे कन्। तत्रैव। एरण्डस्य फलम् अण्। ऐरण्ड तत्फले। "ऐरण्डं कोमलं ग्राह्यं फलं तक्रेण स्वेदितम्। पाचितं कटुतैलेन हिङ्गुनातिसुवासितम्। कफानिलहरं हृद्यं रूक्षमुष्णञ्च पित्तलम्। अग्निसंजननं रुच्यं गुरु पाके-ऽतिपिच्छिलम्" भावप्र०। "फले लुक्" पा० अणोलुग्वि-धानात् एरण्डमित्येव साधु। २पिप्पल्यां स्त्री शब्दच०। टाप् गौ० ङीष् वा।

**एरण्डपत्रिका** स्त्री एरण्डस्य पत्रमिव पत्रमस्याः कप् संज्ञायां वा कन् अत इत्वम्। दन्तीवृक्षे। [वृक्षे। राजनि०।

**एरण्डफला** स्त्री एरण्डस्य फलमिव फलमस्याः। लघुदन्ती-

**एरु** ति० आ+ईर–उन्। गन्तरि। "एजाति ग्लहा कन्येव तुन्नैरुं तुन्दाना पत्येव जाया" अथ० ६,२२,३,

**एर्वारु** पु० आ+ईर–क्विप् एरं वारयति वृ–णिच् उण्। चिर्भट्याम् कर्कटीभेदे (काकुँड) "एर्वारुवीजं तोयेन-पिष्टं वा लवणीकृतम्" सुश्रु०। "कर्टुर्वारौ यथा पक्वे मधुरः सन्रसोऽपि न" या० स्वार्थे कन् तत्रैव।

**एलक** पुंस्त्री एडक+डस्य लः। मेषे स्त्रियां अजा० टाप् क्षिपा० नातइत्त्वम् डलयोरैकत्वस्मरणात्।

**एलङ्ग** पुंस्त्री आ+इल–अङ्गच्। (टाइखड़ा) मत्स्यभेदे स्त्रियां ङीष्। "एलङ्गोमधुरोवृष्यः संग्राही कफ-वातहा। मेधाग्निपुष्टिकारी च शीतलः श्लेष्मलो गुरुः" राजनि०।

**एल(ला)वालु** न० एलेव वलते वल–उण् ङ्याप्पोरिति संज्ञायां वा ह्रस्वः। (वालुका) सुगन्धिद्रव्यभेदे "पुन्नागैलैलवालूनि नागपुष्पोत्पलान्विता" सुश्रु०। स्वार्थे कन् एल(ला)वालुकमप्यत्र न०।

**एला** स्त्री इल–अच्। १स्वनामख्यातलतायाम्। (एलाची) तद्भेदगुणादि भावप्र०उक्तम्। "एला स्थूला च बहुला पृथ्वीका त्रिपुटापि च। भद्रैला बृहदेला च चन्द्रबाला च निष्कुटी। स्थूलैला कटुका पाके रसे वाताहृल्लघुः। रूक्षोष्णा श्लेष्मपित्तास्रकफश्वासतृषापहा। हृल्लासविषवस्त्यास्य शिरोरुग्वमिकासनुत्। सूक्ष्मैला कुञ्चिका तुच्छा कोरङ्गी द्राविडी त्रुटिः। एला सूक्ष्मा कफश्वासकासार्शो-मूत्रकृच्छ्रहृत्। रसे तु कटुका शीता लघ्वी वातहरी मता" "एलालताकिङ्किणितचन्दनासु" रघुः। तस्याः फलम् अण् तस्य लुप् लुपि प्रकृतिलिङ्गत्वेन तत्फलेऽपि स्त्री। "ससङ्कुरस्त्रुवानामेलानाम्तत्पतिष्णवः" रघुः। "सजना नयौ शरद्वयतिरियमेला" वृ०र० उक्ते १पञ्चदशा-क्षरपादके छन्दोभेदे।

**एला** विलासे कण्ड्वा० प० अक० सेट्। एलायति ऐलायीत्। एलायां बभूव आस चकार।

**एलाक** पु० एलाय–ण्वुल्। ऋषिभेदे गर्गा० यञ्। ऐलाक्य तदपत्ये पुंस्त्री०। स्त्रियां ङीपि यलोपः। ऐलाकी।

**एलादिगुटिका** स्त्री "एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्ध-पलं तथा। सितामधूकखर्ज्जूरमृद्वीकाश्च पलोन्मिताः। संचूर्ण्य मधुना युक्ता गुटिकाः कारयेद्भिषक्" चक्रद०उक्ते रक्तपित्ताधिकारस्थे गुटिकारूपौषधभेदे।

**एलापत्र** पु० एलापत्रमिवाकारोऽस्त्यस्य अच्। नागविशेषे-"नागस्तथा पिञ्जरकः एलापत्रोऽथ वामनः" भा० आ० ३५ अ०। नागनामकीर्त्तने। [(काटा आमरूल)।

**एलापर्णी** स्त्री एलाया: पर्णमिव पर्णमस्याः। रास्नायाम्

**एलापुर** न० नगरभेदे।

**एलीका** स्त्री आ+इल–ईकन्। सूक्ष्मैलायाम् (गुजराटि) राजनि०। [च सर्वेषु लवणेषु च" सुश्रु०।

**एलुक** न० इल–उक। गन्धद्रव्यभेदे। "भद्रदार्वेलुकाभ्यां

**एल्लवालुक** न० एलवालुक पृषा० लुडागमः। एलवालुके सुगन्धिद्रव्ये (वालुका) राजनि०

**एव** अव्य० इण्–वन्। १सादृश्ये, २अनियोगे, ३वाक्यभूषणे, ४चारनियोगे, ५विनिग्रहे, ६परिभवे ७ईषदर्थे च। विशेष्यसङ्गतः ८अन्ययोगव्यवच्छेदे। यथा पार्थ एव धनुर्द्धरः इत्यादौ पार्थान्यपदार्थे प्रशस्तधनुर्द्धरत्वम् व्यवच्छिद्यते। विशेषणसङ्गतः ९अयोगव्यवच्छेदे यथा शङ्खः पाण्डुर एवेत्यादौ शङ्खे पाण्डुरत्वायोगो व्यवच्छि-द्यते। क्रियासङ्गतः १०अत्यन्तायोगव्यवच्छेदे यथा नीलं सरोजं भवत्येवेत्यादौ सरोजे नीलत्वात्यन्तायोगो व्यव-च्छिद्यते। ११गन्तरि त्रि०। "एवेत्यवधारणानियोगौ-पम्यनियोगेषु" इत्युक्त्वा गणरत्ने यथाक्रममुदा-हृतम्। "अहमेव ददामि। अद्यैव। इहैव। वीणायव-

मेऽस्तु। अद्यैव गच्छ। अत्रानियोगोऽनवधारणम्। 'एवे चानियोगे" वार्त्ति०। तत्र क्वेव भोक्ष्यसे" इत्यत्र पररूपैकादेशः। एतद्योगे च "न च वाहाहैवयुक्ते"पा० न वमनसाद्यादेशः। "ब्राह्मणस्यैव कर्म्मैतदुपदिष्टं मनोषिभिः"। "स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" मनुः। १२एवमित्यर्थे च। "एवा न इन्द्रोतिभिः" ऋ० ४,२२,७, एवा एवम् भा०। अत्र वेदे "एवा तु दूर्वे प्रतनु" इत्यादि वत् दीर्घः। तत्र गन्तरि "एवा न देव्यादितिरनर्वा" तैत्ति० २,१,१,५, "एवा गमनशीला" भा०। शीघ्रगन्तृत्वात् १३अश्वे पु०। "सूरोनाम पतयन्द्रिरेवैः" ऋ०१,१५८,२, 'एवैरश्वैः" भा०। करणे भावे वा वन्। १४गमनसाधने १५गमने च। "एवेन सद्यः पर्य्येति पार्थिवम्" ऋ० १,१२८,३, "एवेन गमनसाधनेन गमनेन वा" भा०।

**एव** त्रि०एवमस्यास्य अच् अव्य०टिलोपः। एवंक्रियमाणप्रकारे "इदानूनेवया मरुतः" ५,४१,१६, एवया एवंक्रियमाणप्रकारेण" भा० तृतीयस्थाने याच्।

**एवथ** पु० अव-भावे अथ पृषो० अतः एत्वम्। गमने "न को राया नैवथा न भन्दनो"ऋ०८,२४,१५, एवथा शत्रुपुराणि संग्रामं प्रति गमनेन। तृतीयास्थाने आङ्।

**एवम्** अव्य० इण-बा०वम्। "एवमिति प्रकृतपरामर्शप्रकारेवार्थोपदेशनिर्द्देशनिश्चयाङ्गीकारवार्थेषु" गणर० उक्तेषु अर्थेषु। क्रमेण उदा० तत्रैव। १प्रकृतपरामर्शे "एवं वादिनि देवर्षौ" कुमा०। २प्रकारे। एवं कुरुते। इवार्थे ३सादृश्ये अग्निरेवं विप्रः। ४उपदेशे एवं पठ। ५निर्द्देशे एवं तावत्। ६निश्चये। एवमेतत् कः सन्देहः। ७अङ्गीकारे एवं कुर्म्मः। वार्थे ८समुच्चयार्थे "अहार्य्यमेवंस्वगनाभिपतम्"। "यथेतमनेवम्" शा० स्व०। ९सम्बन्धे १०परकृतौ ११प्रश्ने च मेदि०। तत्र एवम्भूतः एवंकृत इत्यादौ क्रियाविशेषणत्वम् एवंविधः एवंप्रकारइत्यादौ द्रव्यविशेषणत्वमिति भेदः 'एवंविधेनाहवचेष्टितेन" रघुः। "एवमादीन् विजनीयात् प्रकाशाल्लोककण्टकान्" "अन्येषाञ्चैवमादीनाम् मद्यानामोदनस्य च" मनुः।

**एवया** त्रि० एव एवं अवनं वा याति या-क्विप् पृषो०। रक्षके "द्युम्न एवया उ सप्रथाः" ऋ० १,१५६,१, "एवया रक्षणप्रापयिता" भा०

**एवयामरुत्** पु० एवया रक्षकोमरुदस्य। ऋषिभेदे। "मरुत्वते गिरिजा एवयामरुत्। "एतन्नामकस्य ऋषेः षष्ठ्यालुक्"भा०।

**एवयावन्** पु० एवस्य एवंप्रकारस्य यावा या-वनिप्। १रक्षके विष्णौ। "विश्वजन्यामप्रयुतामेवयावो मतं दाः" ऋ०७,१००,२, "एवयावः! विष्णो!" भा०। वेदे सम्बुद्धौ रुत्वम्। एवं गन्तरि त्रि० "तान्वो महो मरुत एवयाव्नोः ऋ० २,२४,११, स्त्रियां ङीप् वनोरश्च। एवयावरी। "या सुम्नैरेवयावरी" ऋ० ६,४८,१२,

**एवार** पु०एव एवम्च्छति ऋ-अण्। सोमभेदे। "एवारे वृषभाःसुते"ऋ०८,४५,३८,"एवारोनाम कश्चित सोमः"भा०

**एवावद** पु० एव एवमावदति आ+वद-अच्। ऋषिभेदे "सहि चत्रस्य मनसस्य चित्तिभिरेवावदस्य यजतस्य सध्रेः" अवतसारस्य स्पृणवाम्" ऋ० ५,४४,१, "चत्रस्य मनसस्यैवावदस्य यजतस्य सध्रेरवत्सारस्य चैषामृषीणाम्" भा०

**एष** गतौ भ्वा० आत्म० सक० सेट्। एषते ऐषिष्ट एषाम् बभूव आस चक्रे। एषणीयः एषितव्यः एषितः एषिता। एषितुम् एष्टिः एषणम् एषा एषमाणः।"पराङ्मित एष त्ववीची गौरुपेषतु" अथ० ६,६७,३, वेदे गणव्यत्यासात् पर०। उपेषतु एङिपररूपम्"। "स वै वत अष्टमतिस्तवैषते यः कर्म्मणां पारमपारकर्म्मणः" भाग० ३,१३,४४, धातूनामनेकार्थात् अवलोकयतीत्यर्थः" "तस्माद्दिवा नर्त्तेष एति" शत०ब्रा०१३,२,४,२,।

परि+अन्वेषणे पर्य्येषते पर्य्येष्टिः लोकेऽपि कचित् गणव्यात्यासः। "जम्बूः संसिद्धसंकल्पाः पर्य्येषन्तो ऽभावसम्" भा०अनु०८५।

**एष** स्त्री एष-भावे क्विप्। गतौ 'तावामेषे रथानामुर्व्वीम्" ऋ० ५,६६,३, "एषे गन्तुम्"भा०। "राय एषेऽवसे दधीत"५,४१,५,"एषे प्राप्तुम्" भा०। 'तेभ्यः स्वैषमेव चकार" शत०ब्रा०२,४,२,४,। इष-विच्। २इच्छौ। "न चोदोऽहणीतमेषे" ऋ० १,१८०,४, एषे सौख्यमिच्छते" भा०।

**एषण** पु०एषते यत्र हृदयम् ल्यु। १लौहमयवाणे स्वायुधः। इष इच्छायां णिच् भावे-युच्। एषणा २प्रेरणायां ३पुत्रलोकवित्तकामनायाञ्च स्त्री 'न कश्चिदन्यः संसार उक्तादस्येषणात्रयात्" वेदा०। "तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति। या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे

भवतः” शत० ब्रा० १४,६,४,१, “पुत्रैषणा पुत्रोत्पत्तिमुद्दिश्य दारसंग्रहेच्छालक्षणा। वित्तं द्विविधं मानुषं गवादि, दैवं विद्यादि, तस्य कर्मणा साधनस्य गवादेरुपादानरूपा इच्छा वित्तैषणाऽनेन कर्म कृत्वा पितृलोकं ज्येष्यामीति विद्यासंयुक्तेन वा देवलोकम्। केवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन देवलोकं जेष्यामीतीच्छा लोकैषणा। एवमेकत्वेऽपि लोकैषणायाः साधनमन्तरेणासिद्धेः साध्यसाधनाभेदेन द्वैविध्यमाह उभे होति” भा०। “अपहृतसकलैषणामलात्मन्यविरतमेधितभावनोपहूतः” भाग० ४,२१,१८, एष्यते ज्ञायते मानमनया करणे ल्युट् ङीप् एषणी। ४तुलासाधने (निक्ति) मानयन्त्रभेदे मेदिनिः। स्वार्थे कन्। एषणिकाऽप्यत्र। अमरः। एष्यते व्रणपारमनया करणे ल्युट् ङीप्। (वेलकार) ५व्रणस्फोटनास्त्रभेदे मेदि०। भावे ल्युट्। सुश्रुतोक्ते ६व्रणविदारणव्यापारभेदे। तत्र हि “यन्त्रकर्माणि तु निर्घातनपूरणेत्याद्युपक्रमे “चूषणैषणदारणेत्यादि पठित्वा चतुर्विंशतिरित्युक्तम्। तत्र एषणमभ्यन्तरे शस्त्रप्रवेशनेन पूयादेरपसारणम्। तत्साधनशस्त्रमेषणी यथा ह सुश्रुतः “विंशतिः शस्त्राणि तद्यथा मण्डलाग्रकरपत्रेत्याद्युपक्रमे “वडिशदन्तशङ्क्वेषणी” इत्युक्त्वा “एषण्येषणे चानुलोम्ये च” इति तत्प्रयोजनमुक्तम्। एषणमभ्यन्तरगमनमानुलोम्यं विस्रावणम् तत्रैव एषणीलक्षणं “एषणी गण्डूपदाकारमुखी” उक्तम्। “एष्ये चैषण्यलाभे तु बालाङ्गुल्यङ्कुरा हिताः” सुश्रुतः।

**एषणीय** त्रि० इष–एष–वा कर्मणि अनीयर्। १प्राप्ये “जायापती लौकिक मेषणीयम्” कुमा०। २गम्ये च।

**एषा** स्त्री एष–अ। इच्छायां जटाधरः।

**एषावीर** पुंस्त्री। एषायां यथेष्टं धनादिप्रतिग्रहेच्छायां वीरः। यतः कुतश्चित् प्रतिग्राहके निन्दितब्राह्मणभेदे। स्त्रियां जातित्वात् ङीष्। “यद्येनमेषावीरा याजयेयुः” शत० ब्रा० ११,२,७,३२, “एषावीरोनाम निन्दितब्राह्मणजातिविशेषः तत्संबन्धिन ऋत्विजः” भा०

**एषिन्** त्रि० इष-णिनि। इच्छौ अभिलाषुके। “यौवने विषयैषिणाम्” “बभूव युद्धं तुमुलं परस्परजयैषिणोः” रघुः। स्त्रियां ङीप्। “तदाश्रिता हि सा ज्ञेया बुद्धिस्तस्यैषिणी भवेत्” भा०व० ८१ अ०।

**एष्टव्य** त्रि० इषु वाञ्छायाम् तव्य। वाञ्छनीये। “एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्” शु०त० मत्स्यपु० “तद्ग्रेव ब्राह्मणेनैष्टव्यम्” शत० ब्रा० १,८,३,१७।

**एष्टि** स्त्री आ+यज-आ+इष-वा क्तिन्। १अभियजने २अभिकामनायाञ्च। “पितॄणां शश्वदुभूय सुष्टुएष्टौ” ऋ० ६,२१ ८,। “एष्टौ आयजनेऽभिकामवे वा” भा० करणे क्तिन् ३आग्राशनसाधनेषु ऋक्सामेषु। “प्रजापतिर्वै विश्वकर्मा सर्वमिदं सर्वमकरोत् मनोगन्धर्वस्तस्य ऋक्सामान्यप्सरसः इति मनोह गन्धर्वः ऋक्सामैरप्सरोभिर्मिथुनेन सहोत्क्रामदेष्टयोनामेत्युक्सामानि वा एष्टय ऋक्सामैर्ह्याशासते इति नोऽस्त्विति नोऽस्त्विति” शत० ब्रा० ९,४,१,१२। “प्रजापतिर्विश्वकर्मा मनोगन्धर्वस्तस्य ऋक्सामान्यप्सरस एष्टयोनाम” यजु० १८,४३।

**एष्य** त्रि० इष–कर्मणि ण्यत्। १वाञ्छनीये भावे ण्यत् सुश्रुतोक्ते “तच्च शस्त्रकर्माष्टविधं तद्यथा छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्यं विस्राव्यं सीव्यमित्युक्तेषु अष्टसु मध्ये २शस्त्रकर्मभेदे न०। “एष्येष्वेषण्यलाभे” सुश्रु० “घुणोपहृतकाष्ठे वेणुनलनालीशुष्ककालाङ्कुरमुखेष्वेष्यस्” इत्युक्तेषु तत्कर्माचरणम्। कर्मणि ण्यत्। ४एषणकर्मसाध्ये त्रि०। “एष्या नाड्यः सशल्याश्च व्रणा उन्मार्गिणश्च ये” सुश्रु१ एष गतौ ण्यत्। ५गन्तव्ये त्रि०। “गतैष्यदिवसाद्येन गतिर्निघ्नी खषड्हृता” नील०ता०। इष गतौ दि० इष इच्छायां भ्वा० इष आभीक्ष्ण्ये क्र्या० एभ्यः ण्यत्। एष्य तत्तद्धात्वर्थकर्माणि प्रायु प्रैष्य इत्येव प्रेष्यस्तु ईष गतिहिंसादर्शनेषु इत्यस्य ण्यदन्तस्य रूपम् इति भेदः।

**एह** त्रि० आ+ईह अच्। १सम्यक् चेष्टायुक्ते। एला एहाः परिपाते दहस्मान्” अथ० १२,३,३३। आ ईषदर्थे ईह-घञर्थे करणे क। २क्रोधे निरु०। क्रुद्धस्य सम्यक्कार्यानर्हत्वात् ईषच्चेष्टावत्त्वेन तथात्वम्। [ङीन्। एही।

**एहि** त्रि० आ+ईह-त इन्। सम्यक् चेष्टान्विते स्त्रियां शार्ङ्ग०

**एहीड** न० एहि ईडे इत्युच्यते यस्मिन् कर्मणि मयूर० नि०। एहि ईडे इत्युच्यते यस्मिन् कर्मणि तादृशे कर्मणि एवं एहिकटा एहिवाणिजका एहिद्वितीया एहिस्वागता एहिविघसा इत्यादयोऽपि तत्तत्क्रियायाम् स्त्री एहियवं तु तत्कर्मणि न० इति भेदः।

इति वाचस्पत्ये एकारादिशब्दार्थसङ्कलनम्।

## ऐ

ऐकारः स्वरवर्णभेदः एदैतौ कण्ठतालव्यावित्युक्तेः कण्ठतालुस्थानयोरुच्चार्य्यः । स च दीर्घः द्विमात्रत्वात् प्लुतस्तु त्रिमात्र इति भेदः । द्विमात्रस्य उदात्तानुदात्तस्वरितभेदैः प्रत्येकमनुनासिकाननुनासिकभेदाभ्याञ्च षड्विधः एवं प्लुतस्यापीति द्वादशविधः । तन्त्रे तस्य वाचकशब्दा उक्ता यथा ।"ऐलज्जा भौतिकः कान्ता वायवी मोहिनी विभुः । दक्षा दामोदरः प्रज्ञो धरो विकृतमुख्यपि । क्षमात्मकोजगद्योनिः परः परनिबोधकृत् । ज्ञानामृता कपर्द्दिश्रीः पीठेशोऽग्निः समात्रकः । त्रिपुरा लोहिता राज्ञी वाग्भवो भौतिकासनम् । महेश्वरी द्वादशी च विमलश्च सरस्वती । कामकोटी वामजानुरंशुमान् विजयो जटा" । "ऐकारः कोठराक्षी च मालिन्युन्मत्तभैरवी" इति च वर्णाभिधा० । मातृकान्यासेऽधरोष्ठे न्यस्तत्वात् तच्छब्दाभिधेयता । तस्य ध्येयरूपं कामधेनुत० उक्तं यथा "ऐकारं परमं दिव्यं महाकुण्डलिनीं स्वयम् । कोटिचन्द्रप्रतीकाशं पञ्चप्राणमयं सदा । ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं प्रिये ! । सदाशिवमयं वर्णं विन्दुत्रयसमन्वितम्" । तपरत्वे कारपरत्वे च तत्स्वरूपपरः ।

**ऐ** अव्य० आ+इण–विच् । १आह्वाने २स्मरणे ३आमन्त्रणे च ४महेश्वरे पु० तस्य सर्वगत्वात्तथात्वम् ।

**ऐक** वि० एक+स्वार्थे अण् । एकशब्दार्थे ततोभवाद्यर्थे गहा० छ । ऐकीय एकसम्बन्धिनि तद्भवादौ च त्रि० ।

**ऐकध्यम्** अव्य० एकधा+धास्थाने ध्यमुञ् । एकधेत्यर्थे "ऐकध्यं च श्रपणम्" कात्या० १४,३,२४ । "एतदैकध्यं संहृत्य" सुश्रु० । ततः स्वार्थे ड । ऐकध्य तदर्थे न० "ऐकध्येन श्रपणम्" उक्तकात्या० सूत्रभाष्ये कर्कः ।

**ऐकपत्य** न० एकपतेर्भावः कर्म वा ष्यञ् । सार्वभौमत्वे "अप्रतिद्वन्द्वतामैकपत्यञ्च सर्वदेहिनाम्" भाग०७,३,२४ । एकपतौ भवः पत्युत्तरपदत्वात् ण्य । एकपतिभवे त्रि० ।

**ऐकपदिक** त्रि० एकस्मिन् पदे स्थाने विभक्त्यन्ते वा भवः ठञ् । १एकस्थानभवे २एकविभक्त्यन्तपदभवे च । एकपदाय प्रभवति ठञ् । "कतोऽप्यैकपदिका भवन्ति यथा व्रततिर्दमूनाः" इत्यादि निरु० "एकार्थमनेकशब्दमित्येतदुक्तम् अथ यान्यनेकार्थान्येकपदानि तान्यतोऽनुक्रमिष्यामोऽनवगतसंस्कारांश्च निगमान् तदैकपदिकमित्याचक्षते इति निरु०उक्ते अनेकशब्दे एकार्थपरे समासादिवृत्तिरूपे १वाक्यभेदे च ।

**ऐकपद्य** न० एकपदस्य एकार्थैकविभक्त्यन्तस्य भावः ष्यञ् । संसृष्टार्थत्वे अनेकपादानामेकार्थबोधकतासम्पादने समासादिभावे ।

**ऐकभाव्य** न० एको भावो यस्य तस्य भावः ष्यञ् । एकस्वभावत्वे ।

**ऐकमत्य** न० एकं मतं येषां तेषां भावः ष्यञ् । तुल्यसम्मतौ "स्वर्गाभिषक्तस्य तमैकमत्यात्" रघुः । "ऐकमत्यं हि नो राजन् ! सर्वेषामेव लक्षये" भा०व० ७अ० । "ऐकमत्यञ्च सर्वस्य जनस्याथ नृपं प्रति" भा०व० २६८ अ० । "सुहृदश्चैकमत्यात्" भा०उ० २२ अ० । "कैकमत्यं महाधियाम्" नीतिः । ऐकमत्यमत्रास्ति अच् । ऐकमत्ययुक्ते त्रि० । "गर्हैतान्योन्यमतयो मन्त्रिणो ब्रुवते सदा । नचैकमत्यः श्रेयोऽस्ति मन्त्रः सोऽधम उच्यते" रामा० ।

**ऐकराज्य** न० एकराजो भावः ष्यञ् । चक्रवर्त्तित्वे "यत्सुपर्णो येनैकराज्यमजयो हि ना" आश्व०श्रौ०५,१६,४ ।

**ऐकलव्य** पुंस्त्री एकल्वः अपत्यं गर्गा० यञ् । एकलूनामकर्षेर्गोत्रापत्ये स्त्रियां ङीप् यलोपः ऐकलवी । ऐकलव्यस्य छात्राः कण्वा० ततोऽण् यलोपः । ऐकलव तच्छात्रेषु स्त्रियां ङीप् ।

**ऐकशतिक** त्रि० एकशतमस्यास्ति ठञ् । एकशतपरिमितद्रव्यस्वामिनि । एवमैकसहस्रिकादयोऽपि तत्तत्संख्यद्रव्ययुक्ते त्रि० ।

**ऐकश्रुत्य** न० एका श्रुतिर्यत्र तस्य भावः ष्यञ् । "उदात्तानुदात्तस्वरितानां परः सन्निकर्ष ऐकश्रुत्यम्" आश्व०श्रौ० १,२६, सूत्रोक्ते स्वरभेदे । एकश्रुतिशब्दे विवृतिः ऐकस्वर्य्यमप्यत्र न० ।

**ऐकागारिक** त्रि० एकमसहायमगारं प्रयोजनमस्य ठञ् । चौरे स्त्रियां ङीप् । "ऐकागारिकवद्भूमौ दूराज्जग्मुरदर्शनम्" माघः "केनचिदैकागारिकेण हस्तवता" दशकु० ।

**ऐकाग्र** त्रि० एकाग्र+स्वार्थेऽण् । एकाग्रचित्ते एकतानचित्ते

**ऐकाग्र्य** न० एकाग्रस्य भावः । अनन्यासक्तचित्तत्वे एकमात्रालम्बिचित्तत्वे एकाग्रताशब्दे विवृतिरुदाहरणञ्च ।

**ऐकात्म्य** न० एक आत्मा स्वरूपं यस्य तस्य भावः ष्यञ् । १ऐक्ये २एकस्वरूपत्वे । "तथैकात्म्यानुभावानां विकल्परहितः स्वयम्" भाग० ६,८,२१ । "एतेषां श्रेयआशासे उतैकात्म्यं महात्मनि" ७,१२,२६ । "एकात्म्यगमनात् सद्यः कलुषाद्विप्रमुच्यते" भा०अनु० २७५ । २अभेदे च

"ऐकात्म्यं वासुदेवस्य प्रोक्तवानर्ज्जुनस्य च" भा० आ० १अ०। एकआत्मा तस्य भावः। ४आत्मन एकत्वे ऐकात्म्यवादः ऐकात्म्यवादी

**ऐकादशिन** त्रि० एकादशानां संघ इनि एकादशिनो खलिनीवत् स्त्रीत्वं सा साधनतयाऽस्त्यस्य अण्। एकादशिनीसाध्यफले। "द्वे त्वेवैते एकादशिन्यावालभेत य एवैकादशिनेषु कामस्तस्याप्त्यै" शत० ब्रा० १३,२,२,२ तत्रालभ्यद्विविधैकादशसंख्यपशुभेदाः देवतासहिताः यजु० २९,५८,५९ उक्ता यथा

"आग्नेयः कृष्णग्रीवः१ सारस्वती मेषी २बभ्रुः सौम्यः३ पौष्णः श्यामः४ शितिपृष्ठो वार्हस्पत्यः५ शिल्पोवैश्वदेव६ ऐन्द्रोऽरुणो७ मारुतः कल्माष८ ऐन्द्राग्नः संहितो९ ऽधोरामः सावित्रो १०वारुणः कृष्ण एकशितिपात्११पेत्वः" ५८ "अश्वमेधे श्रुतिरस्ति द्वे त्वेवैते एकादशिन्यावालभेतेति" तयोरेकादशिन्योः पशवस्तद्देवताश्च कण्डिकाद्वयेनोच्यन्ते तेनेमानि ब्राह्मणवाक्यानि द्रव्यदेवताप्रतिपादकानि नतु मन्त्राः। कृष्णा ग्रीवा यस्य स कृष्णग्रीवः पशुराग्नेयः अग्निदेवत्यः १, मेषी सारस्वती सरस्वतीदेवताका२ बभ्रुः पिङ्गलवर्णः पशुः सौम्यः सोमदेवत्यः३ श्यामः कृष्णवर्णः पौष्णः पूषदेवत्यः४ शिति श्यामं पृष्ठमस्य स शितिपृष्ठः वार्हस्पत्यः बृहस्पतिदेवत्यः५ शिल्पो विचित्रवर्णो वैश्वदेवः विश्वदेवदेवत्यः६ अरुणः रक्तः ऐन्द्रः इन्द्रदेवत्यः७ कल्माषः कर्वुरो मारुतः मरुद्देवत्यः८ संहितः दृढाङ्गः ऐन्द्राग्नः इन्द्राग्निदेवत्यः९ अधोरामः अधोदेशे श्वेतः सावित्रः सवितृदेवत्यः१० एकः शितिः श्वेतः पादो यस्य स एकशितिपात् एकपदे श्वेतोऽन्यत्र कृष्णः पेत्वः पतनशीलो वेगवान् पशुः वारुणः वरुणदेवत्यः११। एवमेकादश वेददी०। "अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः कल्माष आग्नेयः कृष्णोऽजः सारस्वती मेषी वारुणः पेत्वः" ५९। "द्वितीयैकादशिनीपशुदेवानाह। रोहितो रक्तोऽञ्जिस्तिलको यस्य सोऽनड्वान् वृषभोऽनीकवतेऽग्नये आलभ्यः अनीकं मुखं सैन्यं वा यस्य सोऽनीकवान् तस्मै १ अधोरामौ अधोभागे श्वेतौ द्वौ पशू सावित्रौ सवितृदेवतौ२,३। रजतवर्णा नाभिर्ययोस्तौ रजतनाभी द्वौ पौष्णौ पूषदेवत्यौ४,५ "पिशङ्गौ पीतौ तूपरौ निःशृङ्गौ वैश्वदेवौ विश्वदेवदेवत्यौ६,७ कल्माषः कर्वुरो मारुतः८ कृष्णः श्यामोऽजोमेषः आग्नेयः आग्निदेवत्यः९ मेषी सारस्वती१० पेत्वः वेगवान् वरुणदेवत्यः११ एवमेकादश" इति वेददी.पः

**ऐकाधिकरण्य** न० एकाधिकरणस्य भावः ष्यञ्। एकाधिकरणवृत्तित्वे सामानाधिकरण्ये। "अथवा हेतुमन्निष्ठविरहाप्रतियोगिना। साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते" भाषा०। तुल्यविभक्तिकपदयोः स्वोपस्थाप्यार्थयोरभेदबोधकत्वे च।

**ऐकान्तिक** त्रि० एकान्तमवश्यं भावी ठञ्। १अवश्यभव्ये। "सुखस्यैकान्तिकस्य च" मनुः। "ऐकान्तिकमात्यन्तिकमुभयमाप्नोति कैवल्यम्" सां०का० ऐकान्तिकमवश्यं भावि" कौ०। एकान्तं भूतः स्वसत्तया व्यापी ठञ्। २एकान्तस्य स्वसत्तया व्यापके "कृष्णस्यैकान्तिकः सुहृत्" भाग० २,२, स्त्रियां ङीप्। "ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्पते" वरा०पु०।

**ऐकान्यिक** त्रि० एकमन्यत् विपरीतं वृत्तमध्ययनेऽस्य। "कर्म्माध्ययने वृत्तम्" पा० ठक्। यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलनमेकं जातम् तादृशे कुपाठके छात्रे।

**ऐकायन** पुंस्त्री एकस्य तन्नाम्नोमुनेर्गोत्रापत्यम् नडा० फक्। एकस्यर्षेर्गोत्रापत्ये स्त्रियां टाप्।

**ऐकार्थ्य** न० एकार्थस्य भावः ष्यञ्। एकशक्त्या विशिष्टकार्थोपस्थापने एकार्थीभावे। १एकप्रयोजने च। "२अवश्वन्नेकार्थ्यं सन्धिः" सि०कौ०।

**ऐकाहिक** त्रि० एकाहमधीष्टोभृतोभृतोभावी वा ठञ्। १एकाहसाध्ये यागादौ स्त्रियां ङीप्। ततोऽन्यान्यैकाहिकानि" आश्व० श्रौ० ८,१६,१६, "ताभ्यां पूर्व्वे ऐकाहिके" २,१०,१०, "अन्यानामैकाहिकानामुत्तमान्" २एकाहव्यापके ज्वरादौ "समुद्रस्योत्तरे तीरे द्विपदोनाम वानरः। ऐकाहिकज्वरं हन्ति तस्य नामानुकीर्त्तनात्"। ऐकाहिकज्वरस्य एकाहानन्तरे एकदिनं व्यापकोज्वरः इति वैद्यके प्रसिद्धम्। एकाहभृते ३दासे एकाहमधीष्टे सत्कृत्य व्यापारिते ४अध्यापके स्वसत्तया एकाह व्याप्यकाले ५ एकाहभाविनि उत्सवादौ च। एकाहसाध्ययागभेद एकाहः तस्य दक्षिणा ठञ् ङीप्। ६एकाहसाध्ययागदक्षिणायां स्त्री।

**ऐक्य** न० एकस्य भावः ष्यञ्। १एकत्वे २अभिन्नत्वे ३एकार्थीभावे च "ऐक्यं सोऽन्वबे" मुग्ध० "ऐक्यसंयोगनानात्वसमवायविशारदः" भा०स०५अ०। ४ऐकमत्ये सौहार्दे च "तेषां द्वयोर्द्वयोरैक्यं बिभेदे न कथञ्चन" रघुः। एकस्या-

त्यं गर्गा० यञ्। एकापत्ये पुंस्त्री०स्त्रियां ङीप् यलोपे ऐक्षी।

**ऐक्षव** त्रि० इक्षोर्विकारः बिल्वा० अण्। इक्षुविकारे गुडादौ इक्षुविकारभेदाश्च इक्षुशब्दे ९०९ पृ० उक्ताः। "ऐक्षवं गुडवर्जितम्" "फलान्यगुडमैक्षवमिति" च स्मृतिः। २मद्यभेदे च। "पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्। माक्षिकं टाङ्कमाध्वीकमैरेयं नारिकेलजम्। समानानि विजानीयान्मद्यान्येकादशैव तु। द्वादशन्तु सुरामद्यं सर्व्वेषामधमं स्मृतम्" पुलस्त्यः। मद्यान्येकादशेत्युक्तिः अधिकदोषार्था अन्येषामपि मद्यानां मदनपालेन दर्शितत्वात्। प्रसङ्गात् तान्यत्र गुणसहितानि दर्श्यन्ते।

"मद्यं हाला सुरा शुण्डा मदिरा वरुणात्मजा। इरा गन्धोत्तमा कल्या देवसृष्टा च वारुणी। मद्यं पित्तकरं प्रायं सरं रोचनदीपनम्। विदाहि सृष्टविण्मूत्रं तीक्ष्णं वातकफापहम्। विधिना तु युतं पीतं तस्मादमृतसन्निभम्। अन्यथा कुरुते रोगानतिपीतं विषोपमम्। १द्राक्षोत्थमविदाहि स्याद्रक्तपित्तेषु शस्यते। बलपुष्टिकरं मद्यं रक्तार्शोहारि दीपनम्। माध्वीकस्य गुणं किञ्चित् २खार्जूरमनिलप्रदम्। तदेव विशदं रुच्यं श्लेष्मघ्नं कर्षणं लघु। शालिषष्टिकपिष्टादिकृतं मद्यं सुरा ३मता। सुरा गुर्वी बलस्तन्यपुष्टिमेदःकफप्रदा। ग्राहिणी शोथगुल्मार्शोग्रहणीमूत्रकृच्छ्रनुत्। पुनर्नवाशालिपिष्टैर्विहिता वारुणी ४मता। सुरावद्वारुणी लघ्वी पीनसाध्मानशूलनुत्। प्रसन्ना ५स्यात् सुरामण्डस्तस्मात्कादम्बरी ६घना। ७जङ्गलस्तदधः प्रोक्तो जङ्गलान्मेदको ८घनः। पक्कसो ९जङ्गलः सारः सुराबीजन्तु किण्वकम् १०। प्रसन्नानाहशूलार्शश्छर्द्यरोचकवातजित्। दीपन्याध्मानहृत्कुक्षितोदशूलप्रणाशिनी। कादम्बरी गुरुर्वृष्या दीपनी वातकृत् सरा। जङ्गलः कफहृद् ग्राही शोफार्शोग्रहणीहरः। मेदको मधुरो बल्यस्तम्भनः शीतलो गुरुः। पक्कसो हृतसारत्वात् विष्टम्भी वातवर्द्धनः। किण्वकं वातशमनमहृद्यं दुर्जरं गुरु। आक्षिकी ११सा सुरा या स्यादक्षत्वकशालितण्डुलैः। आक्षिकी पाण्डुशोथार्शःपित्तास्रकफकुष्ठनुत्। किञ्चिद्वातकरी रूक्षा दीपनी रेचनी लघुः। यवपिष्टकृतं मद्यं प्रोक्तं यवसुरा १२च सा। काकोलिकी १३हला सैया मैरेयो १४धान्यजासवः। आसवस्य सुरायाश्च द्वयोरप्येकभाजनम्। सन्धानं तद्विजानीयान्मैरेयमुभयात्मकम्। कश्चित्तु धातकीपुष्पं गुडधान्याम्लसाधितम्। गुर्वी यवसुरा रूक्षा स्याद्विष्टम्भत्रिदोषकृत्। काकोली बृंहणी वृष्या दृष्टिमान्द्यप्रदा गुरुः। मैरेयं बृंहणं वृष्यं गुरु सन्तर्पणं सरम्। मद्यं सर्व्वरसं जातं मधूलकमुदीर्य्यते। मधूलकं १५गुरु स्वादु स्निग्धं शुक्रकफप्रदम्। पक्करो १६दीपनः स्वादुः पाचनो रोचनो लघुः। स्त्रीविलासकरो वातशोषवस्तिविकारनुत्। मध्वासवो १७लघू रूक्षः कुष्ठमेहविषापहः। गौडो१८ऽग्निवर्द्धनो वर्णबलकृत्तर्पणः कटुः। तिक्तको बृंहणः स्वादुः सृष्टविण्मूत्रमारुतः। इक्षोः शीतरसः १९पक्वः सीधुः २०पक्वरसः स्मृतः। आमैः स एव विहितो बुधैः शीतरसो मतः। सीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत्। वातपित्तकरो हृद्यः स्नेहनो रोचनो जयेत्। विबन्धमेहशोथार्शःशोषोदरकफामयान्। तस्मादल्पगुणः शीतरसः संलेखनः स्मृतः। जाम्बवः क्षौद्रसम्भूतः जम्बूरसगुडोद्भवः। जाम्बवो २१बद्धनिष्यन्दः कषायोऽनिलकोपनः। अरिष्टासवसीधूनां गुणान् कर्म्माणि चादिशेत्। बुद्धा यथास्वं संस्कारमवेक्ष्य कुशलो भिषक्। सान्द्रं विदाहि दुर्गन्धि विरसं कृमिसङ्कुलम्। अहृद्यं तरुणं रूक्षमुष्णं दुर्भाजने हितम्। अल्पौषधं पर्य्युषितमत्यर्थपिच्छलञ्च यत्। कफप्रकोपि तन्मद्यं दुर्जरञ्च विशेषतः। पित्तप्रकोपि बहुलं तीक्ष्णमुष्णं विदाहि च। अहृद्यं पेशलं पूतिकृमिलं विरसं गुरु। तथा पर्य्युषितं वापि विन्द्यादनिलकोपनम्। सर्व्वदोषैरुपेतन्तु सर्व्वदोषप्रकोपणम्। चिरस्थितं यातरसं दीपनं कफवातजित्। रुच्यं प्रसन्नं सुरभि मेध्यं सेव्यं महासवम्। तस्माच्चैकप्रकारस्य मद्यस्य रसवीर्य्यतः। स सौक्ष्म्यादौष्ण्यवातत्वाद् विकाशित्वाच्च वह्निनुत्। समेत्य हृदयं प्राप्य धमनीरूर्द्धमार्गगाः। विक्षिप्येन्द्रियचेतांसि मदयत्याशु वीर्य्यतः। चिरेण श्लैष्मिके पुंसि पातनो जायते मदः। अचिराद्वातिके दृष्टः, पैत्तिके शीघ्रमेव च। नवं मद्यमभिष्यन्दि त्रिदोषजनकं सरम्। अरिष्टं बृंहणं दाहि दुर्गन्धि विशदं गुरु। जीर्णं तदेव रोचिष्णु कृमिश्लेष्मानिलापहम्। हृद्यं सुगन्धि सुगुणं लघु स्रोतोविशोधनम्। सात्त्विके गीतहास्यादि राजसे साहसादिकम्। तामसे निन्द्यकर्माणि निद्रादि कुरुते तदा। शुक्तं कफघ्नं तीक्ष्णोष्णं लघु रोचनपाचनम्। पाण्डु कृमिहरं रूक्षं भेदनं रक्तपित्तकृत्। गौडादिरसयुक्तानि मद्यभूक्तानि यानि च। यथापूर्वं गुरुतराण्यभिष्यन्दकराणि च।

स्यात्काञ्जिकन्तु २२सौवीर २३मारनालं २४तु दोषकृत् । काञ्जिकं शिशिरस्पर्शं पाचनं रोचनं लघु । तुषोदकं यवैरामैः सतुषैः सकलैः कृतम् । सौवीरकं कृतन्त्वामैः पक्वैर्वा निस्तुषैर्यवैः । सर्व्वैरसैरसाम्लं २५स्यात् सौवीरकमिति क्वचित् । तुषाम्बु दीपनं हृद्यं पाण्डु क्रमिगदापहम् । सौवीरकं यहृत्स्वर्शोनाशनं भेदि दीपनम् । धान्याम्ल२५ न्धान्ययोनित्वात्प्रीणनं लघु दीपनम् । स्पर्शदाहकरं पानात्पाचनं श्लेष्मनाशनम् । गण्डूषान्मुखवैरस्यदौर्गन्ध्यकफकृन्तनम्"। ऐक्षवस्य द्वैविध्यमाह भावप्र० "इक्षोः पक्वैः रसैः सिद्धः सीधुः पक्वरसश्च सः । आमैस्तैरेव यः सीधुः स च शीतरसः स्मृतः" इति । इक्षुः काशमूलं तस्येदम् अण् । ३काशमूलावयवभूते स्त्रियां ङीप् । इक्षुः इक्षुपत्राकारः अस्त्यस्य अण् । ४इक्षुपत्राकारे च स्त्रियां ङीप् । "ऐक्षव्यौ विष्टती" कात्या० ८,१,१४, "विष्टती ऐक्षव्यौ काशमूलावयवभूते अत्र भवतः "काशमयः प्रस्तरः काशमूलमये विष्टती" शाखान्तरीयवाक्यशेषात्" कर्कः । अधिकरणमालायां "बर्हिःप्रस्तरयोरन्तराले तिर्य्यक्प्रसार्य्यमाणौ दर्भौ विष्टती ते अत्र इक्षुपत्ररूपे स्याता मिति" माधवः । तेनात्र ऐक्षव्यशब्दकल्पनं प्रामादिकम् । "द्रौणकलशं वायव्यानिध्मकार्ष्मर्य्यमयान् परिधीनाश्ववालं प्रस्तरमैक्षव्यौ विष्टती तद्बर्हिरुपसंनद्धं भवति" शत०ब्रा० ३,६,३,१०,

**ऐक्षुक** त्रि० इक्षौ साधु गुडा० ठञ् । इक्षुसाधुनि क्षेत्रादौ इक्षुं भारभूतं वहति आवहति वा ठञ् । १भारभूतेक्षुवाहके २तद्वावाहके च । इक्षवःसन्त्यस्यां नडादि० छ कुक् च । इक्षुकीया भूमिस्तस्यां भवः अण् विल्वकादि० छस्यातस्य लुक् । ऐक्षुक ; तादृशभूमिभवे त्रि० ।

**ऐक्षुभारिक** त्रि० इक्षुभारं वहत्यावहति वा ठञ् । इक्षु १वाहके २तद्वावाहके च ।

**ऐक्ष्वाक** पु० इक्ष्वाकोर्गोत्रापत्यम् अण् नि० । १सूर्य्यवंश्ये नृपे बहुषु अणोलुक् । "इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः" रघुः । इक्ष्वाकोरयं जनपदः । ऐक्ष्वाक २तद्राजके जनपदे च बहुषु लुक् । तत्र भवः कोपधत्वात्अण् ऐक्ष्वाक तज्जनपदभवे बहुषु लुक् । क्वचिन्न लुक् । "ऐक्ष्वाकेषु च मैथिलेषु च फलन्त्यस्य कामदाशिषः" इति मुरारिः । "ऐक्ष्वाकं पुरुषव्याघ्रमतिमानुषविक्रमम्"भा० शा०२९अ० । "त्रिशङ्कुर्बन्धुभिर्मुक्त ऐक्ष्वाकः प्रीतिपूर्व्वकम् भा० अनु० ३अ० । अत्र ऐक्ष्वाकुरितिपाठस्तु आर्षत्वात् साधुः [इङ्गुदीवृक्षफले (जिँआपुती)

**ऐङ्गुद** न० इङ्गुद्याः फलम् फले अण् तस्य लुक्ना० न लुक् ।

**ऐच्छिक** त्रि०इच्छया निर्वृत्तः ठञ् । इच्छया कृते स्त्रियां ङीप्

**ऐड** पु० इडाशब्दोऽस्त्यत्रानुवाकेऽध्याये वा विमुक्ता० अण् । इडाशब्दयुक्ते १अध्याये २अनुवाके च एडस्येदम् अण् । ३मेषसम्बन्धिनि त्रि० स्त्रियां ङीप् । इडा+अपत्ये शिवा० अण् । इडापत्ये पुरूरवसि पु० ।

**ऐडक** पुंस्त्री एडक एव स्वार्थेऽण् । १मेषाकारे दक्षिणापथप्रसिद्धे पशुभेदे "तयो वा पशवोऽमेध्यादुर्वराह ऐडकः श्वा च" शत०ब्रा० १२,४,१,४ । एडकस्येदम् अण् तत्संबन्धिनि त्रि० एडकशब्दे उदा० ।

**ऐड(ल)विड(ल)** पु०इड(ल) विडा(ला) या अपत्यम् "वृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः" पा० ढकोऽपवादः अण् डलयोरेकत्वस्मरणात् उभयत्र अन्यतरतो वा डस्य लो वा । कुवेरे । "तस्य प्रीतेन मनसा तान् दृष्ट्वैडविडस्ततः" भाग० ४,१२,८ ।

**ऐडिविड**पु० सूर्य्यवंश्ये क्षत्रियभेदे "नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् । ततोदशरथः पुत्रस्तस्मादिडिविडस्ततः" भाग० ९,९,३२ । सूर्य्यवंशवर्णने ।

**ऐण** त्रि० एणस्य कृष्णमृगस्येदम् अण् । कृष्णमृगचर्म्मादौ । एणशब्दे उदा० । [ एणीपचनदेशभवे ।

**ऐणीपचन** त्रि० एणीपचनदेशे भवः छाभावपक्षे अण् ।

**ऐणेय** त्रि० एण्या इदम् ढक् ।१कृष्णमृगचर्म्मादौ "ऐणेयरौरवाजानि अजिनानि" गोभि० । २रतिबन्धभेदे हेम० ।

**ऐतर** त्रि० इतरस्मादूरभवादौ सङ्काशादि० चतुरर्थ्याम् अण् । इतरादूरभवदेशतत्सन्निकृष्टदेशादौ ।

**ऐतरेय** न० इतरस्य तन्नाम्न ऋषेरपत्यम् शुभ्रा० ढक् । १इतरर्षेरपत्ये । "महिदासः ऐतरेयः ऋषि तेन प्रोक्तम् छ०अण् । २आरण्यकादि व्रतारव्यापके ऋग्वेदीयब्राह्मणभेदे "ऐतरेयञ्च कान्दोम्यं बृहदारण्यकं दश"इत्युक्ते तदीये ३उपनिषद्भेदे ४वेदशाखाभेदे च तदधीयते इनि । ऐतरेयिन् तदध्येतृषु "अन्तरेण हविषो विष्णुरुपांश्वैतरेयिणः" आश्व०श्रौ०१,३,१२ "अग्नीषोमावैतरेयिणः ३,६,३ । एकाहांश्चैतरेयिणः"१०,१,१२ ।

**ऐतिकायन** पुंस्त्री इतिकस्यर्षेर्गोत्रापत्यं नडादि० फक् । इतिकर्षेर्गोत्रापत्ये । अनन्तरापत्ये तु इञ् । ऐतिकिरिति

**ऐतिशायन** पुंस्त्री ऐतिकवत् । इतिशर्षेर्गोत्रापत्ये ।

**ऐतिहासिक** त्रि० इतिहासादागतः इतिहासं वेत्त्यधीते वा

ठक् । १इतिहासग्रन्थज्ञे २तद्वेत्तरि ३तदध्येतरि च ।

**ऐतिह्य** न० इतिह पारम्पर्य्योपदेशः अनिर्द्दिष्टप्रवक्तृकोपदेश इति यावत् स्वार्थे ष्यञ् । पारम्पर्य्योपदेशे । यथात्र वटे यक्षः प्रतिवसतीत्यादि परम्परोपदेशमात्रम् न तु केनाप्येतदुपलभ्य कथितम् । अष्टप्रमाणवादिनः पौराणिका इदं प्रमाणान्तरमूरीचक्रुः तदेतन्मतं सां० कौ० निराकृतम् यथा “यच्चानिर्द्दिष्टप्रवक्तृकं प्रवादपारम्पर्य्यमात्रम् इति होचुरित्यैतिह्यं यथा इह वटे यक्षः प्रतिवसतीति न तत् प्रमाणम् अनिर्द्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात् आप्तप्रवक्तृकत्वनिश्चये त्वागम इत्युपपन्नं त्रिविधम् प्रमाणमिति” “स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्” ऐतरे० “ऐतिह्यमनुमानञ्च प्रत्यक्षमपि चागमम् । ये हि सम्यक् परीक्षन्ते कुतस्तेषामबुद्धिता” रामा० । . . [ साधौ

**ऐदंयुगीन** त्रि० इदंयुगे साधु प्रतियुगा० खञ् । इदंयुग-

**ऐनस** न० एन एव प्रज्ञा० स्वार्थे अण् । पापे ।

**ऐन्दव** न० इन्दुर्देवताऽस्य । १मृगशिरोनक्षत्रे २इन्दुदेवताके हविरादौ त्रि० । तस्येदम् अण् । ३चान्द्रे मासे पु० “ऐन्दवस्तिथिभिस्तद्वत् संक्रान्त्या सौर उच्यते” सू० सि० । ४चन्द्रसम्बन्धिनि त्रि० । इन्दुः इन्दुलोकप्राप्तिः प्रयोजनमस्य अण् । ५चान्द्रायणे व्रतभेदे । “सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम्” मनुः । “कर्त्तव्यमैन्दवद्वयम्” स्मृतिः तद्व्रतस्य यथा चन्द्रलोकप्राप्तिफलकत्वं तथा चान्द्रायणशब्दे वक्ष्यते । ६सोमराज्याम् स्त्री ङीप् ।

**ऐन्द्र** त्रि० इन्द्रोदेवताऽस्य अण् । इन्द्रदेवताके १हविरादौ “ऐन्द्रं दधि ऐन्द्रं पयः” श्रुतिः । २ऋग्विशेषे स्त्री । “ऐन्द्र्या गार्हपत्यमुपतिष्ठते” श्रुतिः । सा च ऋक् “कदाचन स्तरीरसीत्यादि” । ३तद्देवताके ज्येष्ठानक्षत्रे न० “ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा” प्रा० त० पुरा० । तस्येदम् अण् । ४इन्द्रसम्बन्धिनि त्रि० “ऋद्धं हि राज्यं पदमैन्द्रमाहुः” “ऐन्द्रं पदं भूमिगतोऽपि भुङ्क्ते” रघुः । ऐन्द्रं स्थानमुपासीना ब्रह्मभूता हि ते सदा” “ऐन्द्रस्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम्” मनुः । ५तच्छक्तिरूपदेवीमूर्त्तिभेदे स्त्री ङीप् । “ऐन्द्रीतमसुरेश्वरम्” देवीमा० तन्त्रोक्ते भूतशुद्ध्यङ्गे ६धारणाभेदे “ऐन्द्र्या धारणया देहं स्थिरीकृत्येति भूतशुद्धौ” रघु० । तत्र भवः अण् । ७अर्ज्जुने ८वालिवानरे च पु० तयोस्तत उत्पत्तिमत्त्वात् । अपत्ये तु इञ् । ऐन्द्रिरित्येव ९वनार्द्रके न० राजनि० । “ज्यैष्ठे मूले च नक्षत्रे चरेद्यदि बृहस्पतिः । ऐन्द्रः संवत्सरः स स्यात् सर्वभूतशिवप्रदः” विष्णुध० उक्ते द्वादशवर्षमध्ये १०संवत्सरभेदे पु० । तत्फलञ्च “ज्यैष्ठे जातिकुलश्रेणी श्रेष्ठा नृपाः सर्वधर्मज्ञाः । पीड्यन्ते सर्वधान्यानि हित्वा कङ्गुशमीजानि” मल० त० ।

**ऐन्द्रजालिक** त्रि० इन्द्रजालेन चरति ठक् । मायाविनि (बाजिकर) जटाधरः ।

**ऐन्द्रद्युम्न** न० इन्द्रद्युम्नमधिकृत्य कृतमाख्यानमण् । इन्द्रद्युम्ननृपाधिकारेण कृते आख्याने “व्रीहिद्रौणिकमाख्यानमैन्द्रद्युम्नं तथैव च” भा० आ० १अ० । इदञ्चाख्यानं व्रीहिद्रौणिकाख्यानात् परं मुद्रितभारते न दृश्यते क्वचित् पुस्तकान्तरेऽस्ति ।

**ऐन्द्रमहिक** त्रि० इन्द्रमहः प्रयोजनं कारणं फलं वास्य ठञ् । १ऐन्द्रमहकारणके २तत्फलके च ।

**ऐन्द्रवायव** त्रि० इन्द्रश्च वायुश्च इन्द्रवायू वायुशब्दयुक्तत्वात् देवताद्वन्द्वेऽपि नानङ् तौ देवते अस्य अण् । इन्द्रवायुदेवताके हविरादौ । ऐन्द्रवायवपात्रं तत्तस्य द्वितीयम्” शत० ब्रा० ४,१,५,१९ “यदैन्द्रवायवाग्रान् प्रातःसवने” ४,४,१,१७ ।

**ऐन्द्रशर्म्मि** पुंस्त्री इन्द्रशर्म्मणोऽपत्यं बाह्वा० इञ्-टिलोपश्च । इन्द्रशर्म्मनामकनृपस्यापत्ये स्त्रियां ङीप् ।

**ऐन्द्रहव** त्रि० ऐन्द्रहव्यस्य छात्रः कण्वा० अण् यञो लुक् । ऐन्द्रहव्यछात्रे । इन्द्रहूशब्दे इन्द्रहव्यसाधनं दृश्यम् ।

**ऐन्द्राग्न** त्रि० इन्द्राग्नी देवते अस्य अण् । इन्द्राग्निदेवताके हविरादौ । “एता ऐन्द्राग्नी द्विरूपा अग्नीषोमीया” यजु० २४,८ “ऐन्द्राग्नः संहितोऽघोरामः” २९,५८ । “ऐन्द्राग्नेन विधानेन” भा० अनु० ६० अ० ।

**ऐन्द्रापौष्ण** त्रि० इन्द्रश्च पूषा च द्वन्द्वे आनङ् इन्द्रापूषाणौ देवते अस्य अण् उपधाऽतोलोपः । इन्द्रापूषदेवताके हविरादौ । “ऐन्द्रापौष्णं चरुमिति” शत० ब्रा० ४,२,५,५ । “आग्नापौष्णः ऐन्द्रापौष्णः” कात्या० १५,२,१४ एवम् ऐन्द्रामारुतैन्द्राबार्हस्पत्यादयोऽपि इन्द्रसहित तत्तद्देवताके हविरादौ त्रि० ।

**ऐन्द्रायण** पु० इन्द्रस्यापत्यम् ना० फक् । इन्द्रापत्ये ततः चतुरर्थ्यां अरीह० वुञ् । ऐन्द्रायणक तेन निर्वृत्तादौ त्रि० ।

**ऐन्द्रि** पु० इन्द्रस्यापत्यम् इञ् । १जयन्ते २अर्ज्जुने ३वालिवानरे ४काके च” मेदिनिः । तत्र काके । ‘ऐन्द्रिः किल

नखैस्तस्याः" रघुः। जयन्ते "कामस्तु कमलेक्षणः। ऐन्द्रिमभ्यर्द्दयामास वार्ष्णेयाशीविषोपमैः" हरिवं० १२२ अ० अर्ज्जुने "सम्मोहनं शलुसहोऽन्यदस्त्रं प्रादुश्चकारैन्द्रिरवारणीयम्" भा०वि० ६६ अ०।

**ऐन्द्रिय** त्रि० इन्द्रियेण प्रकाश्यते अण्। १इन्द्रियप्रकाश्ये प्रत्यक्षात्मके ज्ञानभेदे तस्येदम् अण्। २इन्द्रियसंबन्धिनि त्रि० "चतुर्थस्त्वैन्द्रियः सर्गः" भा०२,१०,१६। स सर्गः "मनसश्चेन्द्रियाणाञ्चेति" भाग० २,१५,२६, उक्तः। स च तैजसएव "तैजसानीन्द्रियाण्येव" भा० ३,२५,३१, उक्तेः। इन्द्रियमेव स्वार्थेऽण्। ३इन्द्रिये न०। "वैकारिकं तामसमैन्द्रियं सृजे" भाग०५,२४,१७।

**ऐन्द्रियक** त्रि० इन्द्रियेण प्रकाश्यः वुञ्। इन्द्रियप्रकाश्ये १प्रत्यक्षात्मके ज्ञाने २तद्विषये च "स च परिणामभेद ऐन्द्रियक इति नास्ति प्रत्यक्षाद्यनवरुद्धोविषय इति" सां०कौ० "यथा मनोरथः स्वप्नः सर्व्वमैन्द्रियकं मृषा" भाग० ७,२,४४।

**ऐन्द्री** स्त्री इन्द्रस्येयम् इन्द्रोदेवताऽस्या वा अण् ङीप्। १शच्याम्। २ज्येष्ठायां तारायां ३पूर्वस्यां दिशि ४अलक्ष्म्याम् त्रिका०। इन्द्रवारुण्यां (राखालसशा) रत्नमा० ६सूक्ष्मैलायाम्" राजनि०। ऐन्द्रशब्दोक्तार्थेषु च।

**ऐन्धायन** पुंस्त्री इन्धस्यर्षेर्गोत्रापत्यम् नडा० फक्। इन्धनामर्षेर्गोत्रापत्ये स्त्रियां टाप्। [र्यिभवे २स्वामिभवे च।

**ऐन्य** त्रि० इने सूर्य्ये स्वामिनि वा भवः कुर्व्वा० ण्य। १सू-

**ऐभावत** पु० इभावतोऽपत्यम् अण्। ऋषिभेदे प्रतीदर्शे। "तद्धैतत् पपच्छुः सृञ्जयाः शाङ्खेयः प्रतीदर्शमैभावतम्" शत०ब्रा० २,८,२१२।

**ऐभी** स्त्री इभ इभवाचकशब्दः अस्त्यस्याः प्रज्ञा०अण् ङीप्। १हस्तिघोषलतायाम् राजनि० इभस्येयम् अण् ङीप्। २हस्तिसम्बन्धिनि त्रि०।

**ऐर** त्रि०इरायाम् अन्ने पृथ्व्यां जले वा भवः अण्। १अन्नभवे मण्डे २तन्नूर्णे ब्रह्मलोकस्थे सरसि न०। "तदैरं मदीयं सरः"छान्दो०उ०। "तत् तत्रैव इराच तन्मय ऐरोमण्डस्तेन पूर्णमैरम् मदीयं तदुपयोगिनां मदकरं हर्षोत्पादकं सरः" भा०। तेन ऐरमित्येकं पदम् मदीयमित्यपरं पदम् ऐरंमदीयमित्येकशब्दकल्पनं प्रामादिकमेव। ३भूमिभवे ४जलभवे च त्रि०।

**ऐरक** त्रि०एरका+भवार्थे कुर्व्वादि०ण्य। एरकाभवादौ त्रि०।

**ऐरावण** पु० इरा सुरा वनमुदकं यत्र तत्र भवः अण्। पूर्व्वपदादिति णत्वम्। १इन्द्रगजे ऐरावते। इरया उदकेन वणते शब्दायते वण-अच् इरावणः समुद्रस्तत्र भवः अणित्येव न्याय्यम्। "श्वेतैर्दन्तैश्चतुर्भिस्तु महाकायस्ततः परम्। ऐरावणो महानागोऽभवत् वज्रभृता धृतः" भा०आ०१८अ०। तस्य क्षीरसमुद्रोद्भवत्वेन सुरासमुद्रोद्भवत्वाभावात्। सुरैवापेयत्वात् वनमुदकमस्य तत्र भवः अण् णत्वमित्यपि साधु। प्रागुक्ता क्षीरस्वाम्युक्ताव्युत्पत्तिस्तु काल्पनिकी सुरासमुद्रे तस्याजातत्वात्। २सर्पभेदे "वासुकिस्तक्षकश्चैव नागश्चैरावणस्तथा" भा०स०९ अ०। वरुणलोकवर्णने।

**ऐरावत** त्रि० इरा जलानि भूम्ना सन्त्यस्य इरा+मतुप् मस्य व इरावान् समुद्रस्तत्र भवः अण्। समुद्रजाते इन्द्रगजे। "प्रावृषेण्यं पयोवाहं विद्युदैरावताविव" ऐरावतास्फालनविश्लथं हरिः" रघुः। "ऐरावतस्फालनकर्कशेन" कुमा० "कुर्व्वन् कामं क्षणमुखपटप्रीतिमैरावतस्य" मेघ०। ३नारङ्गवृक्षे ४नकुचद्रुमे च मेदि०। ५पञ्चकलमालाप्रस्तारे आदिलघुके अन्त्यगुरुद्वयके प्रथमे भेदे पु० ६ऋजुदीर्घे शक्रधनुषि मेदि०। इरावत्याः नद्याः अदूरदेशः अण्। ७मरुस्थलभेदे न०। "बभूव परमात्मानामैरावतपथे यथा"भा०व०१६२अ०तत्र भवः "धन्वयोपधाद्वुञ्" पा० वुञ्। ऐरावतक ऐरावतरूपधन्वदेशभवे त्रि०।

**ऐरावती** स्त्री इराः सन्त्यस्य भूम्ना मतुप् मस्य वः इरावान् मेघः तत्र भवा अण्। १विद्युति। २ऐरावतयोषायां च मेदि०३वटपत्रीवृक्षे राजनि०। ४पाञ्चालदेशस्थे नदीभेदे।

**ऐरिण** न० इरिणे ऊषरे भवम् अण्। लवणभेदे। (पाङ्गा) राजनि० [स्तत्र भवः ढक्। २मङ्गले पु० ३अन्नादौ त्रि०

**ऐरेय** न०इरायामन्ने भवम् ढक्।१अन्नपिष्टभवे मद्ये। इराभूमि-

**ऐर्म्य** न० इर्माय हितम् ष्यञ्। "महावीर्य्यस्तुवरकः कुष्ठमेहापहः परः। सोन्तर्धूमस्तस्य मज्जा तु दग्धः क्षिप्नन्ते सैन्धवं चाञ्जनञ्च। ऐर्म्यं हन्यादिर्मनकाच्यकाचान्नीलीरोगं तैमिरं चाञ्जनेन" सुश्रुतोक्ते अञ्जनभेदे अञ्जनेन नेत्रे लेपनेन।

**ऐल** पु०इलाया अपत्यम् शिवा०अण्। १बुधपुत्रे पुरूरवसि। "सोमपुत्राद्बुधाद्राजंस्तस्यां जज्ञे पुरूरवाः। जनयित्वा सुतं सा तमिला सुद्युम्नतां गता" हरिवं० १७८अ० इड़ाशब्दे विवृतिः। "षट्सुता जज्ञिरे चैलादायुर्धीमानमावसुः। दृढायुश्च वनायुश्च शतायुश्चोर्वशीसुताः" भा० आ० ७५अ०। इला पृथ्वी तस्यां भवः। २भौमे

मङ्गले । इलानामन्नानां समूहः अण् । ३अन्नसमूहे न०। इलायाः पृथिव्या इदम् अण् । ४पृथिवीजाते अन्ने च । "ये पथां पथि रक्षस ऐलबृदा आयुर्युधः" यजु०१६,६०, ऐलमन्नसमूहमन्नं वा बिभ्रति ऐलभृतः परोक्षवृत्त्या भतकारयोर्बदकारौ । डलयोरैक्यात् ऐडशब्दोऽप्युक्तार्थेषु

**ऐलवालुक** एलवालुकमेव स्वार्थे अण् । एलवालुके (वालुका) सुगन्धिद्रव्ये शब्दरत्ना० ।

**ऐलविल** न० राजभेदे । "भरतश्च दिलीपश्च निर्लेभे भूमिशया दर्शिम् । तस्माल्लेभे च धर्म्मज्ञो राजन्नैलविलस्तथा । ततश्चैलविलाल्लेभे" भा० शा०१६१अ० । अशिविद्यावंशवर्ण्णने । २कुवेरे च । "वरासनगतं तत्र यथैवैलविलं तथा" हरिवं०१७७अ० । ऐडविडशब्दे व्युत्पत्तिः ।

**ऐलाक** त्रि० ऐलाक्यस्य छात्रः कण्वा० अण् यञोलोपः । ऐलाक्यछात्रे ।

**ऐलिक** पु० इलिन्यां भवः ठक् पुंवत् । इलिन्यपत्ये दुष्मन्तादिपितामहे तंसौ राजनि "इलिनीनाम तस्यासीत् कन्या वै जनमेजय! । ब्रह्मवादिन्यधि स्त्री च तंसुस्तामभ्यगच्छत । तंसोः सुरोधो राजर्षिर्धर्म्मनेत्रः प्रतापवान् । ब्रह्मवादी पराक्रान्तस्तस्य भार्य्योपदानवी । उपदानवी सुतान् लेभे चतुरस्त्वैलिकात्मजात् । दुष्मन्तमथ सुष्मन्तं प्रवीरमनघं तथा" हरिवं०३२

**ऐलेय** पु० इलायाः अपत्यम् ढक् । १भौमे मङ्गले इलायां भवः ढक् । २एलवालुके गन्धद्रव्ये न० शिवादौ० इलाशब्दस्तु भानुपुत्रोडापरस्तेन ततोऽणेवेति भेदः ।

**ऐश** त्रि० ईशस्येदम् अण् । ईशसंबन्धिनि "सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम्" रघुः "यो लोकवीरसमितौ धनुरैशमुग्रम्" भाग० ८,१०,६ । एवमैशानैश्वरादयोऽप्यत्र स्त्रियां ङीप् । ऐशानी "पूर्व्वोत्तरयोरन्तरालदिशि "ऐशानीक्रमतो रेखोत्तरापा देवमण्डले । नैर्ऋतीक्रमतो रेखा प्रागपा पितृमण्डले" स्मृतिः । "ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने"ति०त०वर्षकृत्यम् । ईश्वरसम्बन्धिनि त्रि० "पश्य मे योगमैश्वरम्" गीता "ऐश्वरं धनुरभाजि यस्त्वया" रघुः २दुर्गायां स्त्री ।

**ऐश्वर्य्य** न० ईश्वरस्य भावः ष्यञ् । १प्रभुत्वे "तस्मै निशाचरैश्वर्य्यं प्रतिशुश्राव राघवः" रघु० । इच्छानभिघातात्मके २ईश्वरधर्मे ३अणिमादौ च "ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः" इति पुरा० । ऐश्वर्य्यञ्च द्विविधं नित्यं नित्येश्वरानुध्यानजन्यं योगजं वा तत्र नित्यैश्वर्य्यमीश्वरस्य स्वाभाविकम् "स्वाम्यं यस्य निजं जगत्सु" आगम० । योगजञ्च बुद्धेः सात्त्विकगुणभेदः यथोक्तम् "अध्यवसायो बुद्धिर्धर्म्मो ज्ञानं विराग ऐश्वर्य्यम् । सात्त्विकमेतद्रूपम् तामसमस्माद्विपर्य्यस्तम्" सां०का० । व्याख्यातञ्चेदं वाचस्पतिना "ऐश्वर्य्यमपि बुद्धिधर्मः यतोऽणिमादिप्रादुर्भावः । तत्राणिमा अणुभावः यतः शिलामपि प्रविशति । लघिमा लघुभावः यतः सूर्य्यमरीचिमालम्ब्य सूर्य्यलोकं याति । महिमा महतोभावः यतोमहान् संभवति । प्राप्तिरङ्गुल्यग्रेण स्पृशति चन्द्रम् । प्राकाम्यमिच्छानभिघातो यतोभूमावुन्मज्जति निमज्जति यथोदके । वशित्वं भूतभौतिकं वशीभवत्यवश्यम् । ईशित्वं भूतभौतिकानां प्रभवस्थितिमोष्टे यच्च कामावसायित्वं सत्यसङ्कल्पता यथास्य सङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति । अन्येषां निश्चया निश्चेतव्यमनुविधीयन्ते योगिनस्तु निश्चेतव्याः पदार्था निश्चयमिति चत्वारः सात्त्विका बुद्धिधर्म्माः" ।

पातञ्जलसूत्रभाष्यविवरणेषु कारणफलसहितं तस्य स्वरूपादिकं दर्शितं यथा । "कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम्" ४१ सू० ।

"यत्र कायस्तत्राकाशं तस्यावकाशदानात् कायस्य तेन सम्बन्धप्राप्तिस्तत्र कृतसंयमो जित्वा तत्सम्बन्धं लघुषु तूलादिष्वापरमाणुभ्यः समापत्तिं लब्ध्वा जितसम्बन्धो लघुर्भवति लघुत्वाच्च जले पादाभ्यां विहरति ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरति ततो यथेष्टमाकाशगतिरस्य भवतीति" भा० ४१ ।

"कायाकाशसम्बन्धसंयमाद्वा लघुनि वा तूलादौ कृतसंयमात्समापत्तिं चेतसस्तत्समलघुतां लब्ध्वेति सिद्धिक्रममाह जल इति" वि० ४१ ।

"बहिरकल्पिता वृत्तिर्म्महाविदेहा ततः प्रकाशावरणक्षयः" सू० "शरीराद्बहिर्मनसोवृत्तिलाभोविदेहा नाम धारणा सा यदि शरीरप्रतिष्ठस्य मनसोबहिर्वृत्तिमात्रेण भवति सा कल्पितेत्युच्यते या तु शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः सा खल्वकल्पिता । तत्र कल्पितया साधयन्त्यकल्पितां महाविदेहामिति यया परशरीराण्याविशन्ति योगिनः ततश्च धारणातः प्रकाशात्मनोबुद्धिसत्त्वस्य यदावरणं क्लेशकर्म्मविपाकत्रयं रजस्तमोमूलं तस्य च क्षयोभवति" भा० ४२ ।

"अपरमपि परशरीरावेशहेतुं संयमं क्लेशकर्म्मविपाकक्षयहेतुं विदेहामाह शरीरादिति । अकल्पितायाः

महाविदेहाया य उपायस्तत् प्रदर्शनाय कल्पितां विदेहामाह सा यदीति। वृत्तिमात्रं कल्पनाज्ञानमात्रं तेन महाविदेहामाह या त्विति। उपायोपेयते कल्पिताकल्पितयोराह तत्रेति। किं परशरीरावेशमात्रमितो नेत्याह ततश्चेति। ततोधारणातो महाविदेहायै मनसि प्रवृत्ते सिद्धे क्लेशश्च कर्म च ताभ्यां विपाकत्रयं जात्यायुर्भोगाः तदेतद्रजस्तमोमूलं विगलितरजस्तमसः सत्वमात्रात् विवेकख्यातिमात्रसमुत्पादात्तदेतद्विपाकत्रयं रजस्तमोमूलतया तदात्मकं सद्बुद्धिसत्वमावृणोति तत्क्षयाच्च निरावरणं योगिचित्तं यथेच्छं विहरति जानाति" वि० "स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः" सू० ४४। "तत्र पार्थिवाद्याः शब्दादयोविशेषाः सहकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिता एतद्भूतानां प्रथमं रूपं द्वितीयं रूपं स्वसामान्यं मूर्त्तिर्भूमिः स्नेहोजलं वह्निरुष्णता वायुः प्रणामी सर्व्वतोगतिराकाशइत्येतत् स्वरूपशब्देनोच्यते अस्य सामान्यस्य शब्दादयोविशेषाः तथाचोक्तम् "एकजातिसमन्वितानामेषां धर्ममात्रव्यावृत्तिरिति" सामान्यविशेषसमुदयोऽत्र द्रष्टव्यः। द्विष्ठोहि समूहः प्रत्यस्तमितभेदावयवानुगतः शरीरं वृक्षोयूथं वनमिति शब्देनोपात्तभेदावयवानुगतः समूह उभये देवमनुष्याः समूहस्य देवा एकोभागो मनुष्या द्वितीयोभागस्ताभ्यामेवाभिधीयते समूहः। स च भेदाभेदविवक्षित आम्राणां वनं ब्राह्मणानां सङ्घ "आम्रवनं ब्राह्मणसंघ"इति स पुनर्द्विविधोयुतसिद्धावयवोऽयुतसिद्धावयवश्च युतसिद्धावयवः समूहोवनं सङ्घइति। अयुतसिद्धावयवः सङ्घातः शरीरं वृक्षः परमाणुरिति। अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः। एतत् स्वरूपमित्युक्तम्। अथ किमेषां सूक्ष्मरूपं? तन्मात्रं भूतकारणं तस्यैकोऽवयवः परमाणुसामान्यविशेषात्मा अयुतसिद्धावयवभेदानुगतः समुदाय इत्येवं सर्व्वतन्मात्राणि एतत् तृतीयम्। अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीलगुणाः कार्य्यस्वभावानुपातिनोऽन्वयशब्देनोक्ताः। अथैषां पञ्चमरूपमर्थवत्त्वं भोगापवर्गार्थता गुणेष्वन्वयिनी गुणास्तन्मात्रभूतभौतिकेष्विति सर्वमर्थवत्। तेष्विदानीं भूतेषु पञ्चसु पञ्चरूपेषु संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति तत्र पञ्चभूतस्वरूपाणि जित्वा भूतजयी भवति तज्जयाद्वत्सानुसारिण्य इव गावोऽस्य सङ्कल्पानुविधायिन्योभूतप्रकृतयो भवन्ति" भा०। स्थूलञ्च स्वरूपञ्च सूक्ष्मञ्चान्वयश्चार्थवत्त्वञ्चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि तेषु संयमात्तज्जयः। स्थूलमाह तत्रेति पार्थिवाः पायसीयास्तैजसा वायवीया आकाशीयाः शब्दस्पर्शरूपरसगन्धा यथासम्भवं विशेषाः षड्जगान्धारादयः शीतोष्णादयो नीलपीतादयः कषायमधुरादयः सौरभादयश्च, एते हि नामरूपप्रयोजनैः परस्परतोभिद्यन्तइति विशेषाः एतेषां पञ्च पृथिव्यां, गन्धवर्ज्जञ्चत्वारोऽप्सु, गन्धरसवर्जं त्रयस्तेजसि, गन्धरसरूपवर्जं द्वौ नभस्वति, शब्दएवाकाशे। तत्र त ईदृशा विशेषाः सहकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः शास्त्रे तत्रापि पार्थिवास्तावद्धर्माः। "आकारो गौरवं रौक्ष्यं वरणं स्थैर्य्यमेव च। वृत्तिभेदः क्षमा कार्ष्ण्य काठिन्यं सर्व्वभोग्यता"। अपां धर्माः "स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्द्दवं गौरवञ्च यत्। शैत्यं रक्षा पवित्रत्वं सन्धानं चौदका गुणाः"। तैजसाधर्माः "ऊर्द्धभाक् पाचकं दग्धृ पावकं लघु भास्वरम्। प्रध्वंस्योजस्वि वै तेजः पूर्व्वाभ्यां भिन्नलक्षणम्"। वायवीयाधर्माः "तिर्य्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम्। चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः"। आकाशीया धर्माः "सर्व्वतो गतिरव्यूहो विष्टम्भश्चेति च त्रयः। आकाशधर्मा व्याख्याता पूर्व्वधर्मविलक्षणाः" इति। तत्र आकारप्रभृतयो धर्मास्तैः सहेति आकारः सामान्यविशेषो गोत्वादि। द्वितीयरूपमाह। द्वितीयं रूपं स्वसामान्यं मूर्त्तिः सांसिद्धिकं काठिन्यं, स्नेहः जलं सक्तुजलजपुष्टिर्बलाधानहेतुः। वह्निरुष्णता औदर्य्ये शौर्य्ये भौमे च सर्व्वत्रैव तेजसि समवेतोष्णतेति सर्व्वस्यैतद्धर्मधर्म्मिणोरभेदविवक्षयाभिधानम्। वायुः प्रणामी वहनशीलः तदाह "चलनेन तृणादीनां शरीरस्फाटनेन च। सर्व्वगं वायुसामान्यं नामित्वमनुमीयते" सर्व्वतोगतिराकाशः सर्व्वत्र शब्दोपलब्धिदर्शनात् श्रोत्राश्रयाकाशगुणेन हि शब्देन पार्थिवादिशब्दोपलब्धिरित्युपपादितमधस्तात् एतत् स्वरूपशब्देनोक्तम्। अस्यैव मूर्त्यादिसामान्यस्य शब्दादयः षड्जादयः उष्णत्वादयः शुक्लादयः कषायत्वादयः सुरभित्वादयो मूर्त्यादीनां भेदाः सामान्यान्यपि मूर्त्यादीनि जम्बीरपनसामलकफलादीनि रसादिभेदात् परस्परं व्यावर्त्तन्ते तेनैतेषाम् एते रसादयो विशेषाः तथा चोक्तम् "एकजातिसमन्वितानां प्रत्येकं पृथिव्यादीनामेकैकया जात्या मूर्त्ति स्नेहादीनां समन्वितानामेषां षड्जादिधर्ममात्रव्यावृत्तिरिति। तदेवं सामान्यं मूर्त्याद्युक्तं विशेषाश्च शब्दादय उक्ताः।

ये चाहुः "सामान्यविशेषाश्रयो द्रव्यमिति" तान् प्रत्याह सामान्यविशेषसमुदायोऽत्र दर्शने द्रव्यम् येऽपि तदाश्रयो द्रव्यमास्थिषत तैरपि तत्समुदायोऽनुभूयमानो नापह्नोतव्यः नच तदपह्नवे तदाधारो द्रव्यमिति भवति तस्मात्तदेवास्तु द्रव्यं न तु ताभ्यां, तत्समुदायाच्च तदाधारमपरद्रव्यमुपलभामहे धावभ्यो धावसमुदायादिवञ्च तदाधारमपरं पृथग्विधं शिखरं समूहो द्रव्यमित्युक्तम्। तत्र समूहमात्रं द्रव्यमिति भ्रमापनुत्तये समूहविशेषोद्रव्यमिति निर्द्धारयितुं समूहप्रकारानाह। द्विष्ठोहीति यस्मादेवं तस्माच्च समूहमात्रं द्रव्यमित्यर्थः। द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः। एकं प्रकारमाह। प्रत्यस्तमितेति प्रत्यस्तमितोभेदो येषामवयवानां ते तथोक्ता प्रत्यस्तमितभेदा अवयवा यस्य स तथोक्तः एतदुक्तं भवति शरीरवृक्षयूथवनशब्देभ्यः समूहः प्रतीयमानोऽप्रतीतावयवभेदस्तदुवाचकशब्दाप्रयोगात् समूह एकोऽवगम्यते इतियुतायुतसिद्धावयवत्वेन चेतनाचेतनत्वेनचोदाहरणचतुष्टयम्। युतायुतसिद्धावयवत्वञ्चाग्रे वक्ष्यते। द्वितीयं प्रकारमाह। शब्देनोपात्तभेदावयवानुगतः समूहः उभये देवमनुष्या इति देवमनुष्याः इति हि शब्देनोभयशब्दवाच्यस्य समूहस्य भागौ भिन्नावुपात्तौ। ननूभयशब्दात्तावद्वयवभेदो न प्रतीयते तत्कथमुपात्त भेदावयवानुगत इत्यतआह। ताभ्यां भागाभ्यामेव समूहोऽभिधीयते उभयशब्देन भागद्वयवाचिशब्दसहितेन समूहोवाच्यः वाक्यस्य वाक्यार्थवाचकत्वादिति भावः। पुनर्द्वैविध्यमाह स चेति। भेदेन चाभेदेन च विवक्षितमाह। आम्राणां वनं ब्राह्मणानां समूहः इति। भेदएव षष्ठीश्रुतेः। यथा गर्गाणां गौरिति। अभेद निवक्षितमाह। आम्रवनम्। आम्राश्च ते वनञ्चेति समूहसमूहिनोरभेदं विवक्षित्वा सामानाधिकरण्यमित्यर्थः। विधान्तरमाह। स पुनर्द्विविधः युतसिद्धावयवः समूहः युतसिद्धाः पृथक्सिद्धाः सान्तराला अवयवा यस्य स तथोक्तः यूथं वनमिति सान्तराला हि तदवयवा वृक्षाश्च गावश्चायुतसिद्धावयवश्च समूहो वृक्षोगौः परमाणुरिति निरन्तराहि तदवयवाः सामान्यविशेषा वा सास्नादयोवेति। तदेतेषु समूहेषु द्रव्यभूतं समूहं निर्धारयति अयुतसिद्धेति तदेवं प्रासङ्गिकं द्रव्यं व्युत्पाद्य प्रकृतमुपसंहरति एतत्स्वरूपमित्युक्तमिति। तृतीयं रूपं विवक्षुः पृच्छति अथेति। उत्तरमाह। तन्मात्रमिति। तस्यैकोऽवयवः परिणामभेदः परमाणुसामान्यं मूर्त्तिः। शब्दादयोविशेषाः तदात्मानः अयुतसिद्धा निरान्तरायेऽवयवाः सामान्यविशेषास्तद्भेदेष्वनुगतः समुदायः यथा च परमाणुः सूक्ष्मं रूपम् एवं सर्वतन्मात्राणि सूक्ष्मं रूपमिति उपसंहरति एतदिति। अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीलागुणाः कार्य्यस्वभावमनुपतितुमनुगन्तुं शीलं येषां ते तथोक्ताः अतएवान्वयशब्देनोक्ताः। अथैषां पञ्चमं रूपमर्थवत्त्वं विवृणोति भोगेति। नन्वेवमपि सन्तु गुणा अर्थवन्तस्तत्कार्य्याणां तु कुतोऽर्थवत्त्वमित्यत आह। गुणा इति। भौतिका गोघटादयः। तदेवं संयमविषयमुक्त्वा संयमं तत् फलञ्चाह तेष्विति। भूतप्रकृतयोभूतस्वभावाः" ४३ वि० ॥

"ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्म्माऽनभिघातश्च" सू०

"तत्राऽणिमा भवत्यणुः। लघिमा लघुर्भवति। महिमा महान् भवति। प्राप्तिरङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम्। प्राकाम्यमिच्छानभिघातः भूमावुन्मज्जति मज्जति यथोदके। वशित्वं भूतभौतिकेषु वशीभवत्यवश्यमथान्येषाम् ईशित्वं तेषां प्रभवाप्ययव्यूहानामीष्टे यच्च कामावसायित्वं सत्यसङ्कल्पता यथासङ्कल्पस्तथाभूतप्रकृतीनामवस्थानम्। न च शक्तोऽपि पदार्थविपर्य्यासं करोति, कस्मात् अन्यस्य यथा कामावसायिनः पूर्वसिद्धस्य तथा भूतेषु सङ्कल्पादिति। एतान्यष्टावैश्वर्य्याणि। कायसम्पद्वक्ष्यमाणा तद्धर्म्मानभिघातश्च पृथ्वी मूर्त्त्या न निरुणद्धि योगिनः, शरीरादिक्रियाः शिलामप्यनुविशतीति, नापः स्निग्धाः क्लेदयन्ति, नाग्निरुष्णो दहति न वायुः प्रणामी वहत्यनावरणात्मकेऽप्याकाशे भवत्यावृतकायः सिद्धानामप्यदृश्योभवति" भा०।

"सङ्कल्पानुविधाने भूतानां किं योगिनः सिध्यतीत्यत आह "स्थूलसंयमविजयाच्चतस्रः सिद्धयो भवन्तीत्याह। तत्राणिमा १महानपि भवत्यणुः। लघिमा २महानपि लघुर्भूत्वेषीकातूल इवाकाशे विहरति। ३महिमाऽल्पोऽपि नागनगगगनपरिमाणो भवति। प्राप्तिः ४सर्वे भावाः सन्निहिता भवन्ति योगिनस्तद्यथा भूमिष्ठ एवाङ्गुल्यग्रेण स्पृशति चन्द्रमसम्। स्वरूपसंयमविजयात् सिद्धिमाह। प्राकाम्यमिच्छानभिघातो ५नास्य रूपं भूतस्वरूपैर्मूर्त्यादिभिरभिहन्यते भूमावुन्मज्जति मज्जति च यथोदके। सूक्ष्मविषयसंयमजयात् सिद्धिमाह वशित्वं भूतानि पृथिव्यादीनि भौतिकानि गोघटादीनि तेषु वशी स्वतन्त्रोभवति६। तेषां त्ववश्यं तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशीकारात्तत्कार्य्यवशीकारत्वेन यानि

यथावस्थापयति तानि तथावतिष्ठन्ते इत्यर्थः। अन्वयविषयसंयमजयात् सिद्धिमाह ईशित्वं ७ तेषां भूतभौतिकानां विजितमूलप्रकृतिः सन् यः प्रभव उत्पादो यश्चापायो विनाशो यश्च व्यूहो यथावदवस्थारूपः तेषामीष्टे। अर्थवत्त्वसंयमात् सिद्धिमाह। यच्च कामावसायित्वं ८ सत्यसङ्कल्पता विजितगुणार्थवत्त्वो हि योगी यद्यदर्थं तया सङ्कल्पयति तत्तस्मै प्रयोजनाय कल्पते। विषमप्यमृतकार्य्ये सङ्कल्प्य भोजयन् जीवयतीति। स्यादेतद् यथा शक्तिविपर्य्यासङ्करोत्येवं पदार्थविपर्य्यासमपि कस्मान्न करोति तथाच चन्द्रमसमादित्यं कुर्य्यात् कुहूञ्च सिनीवालीमित्यत आह न च शक्तोऽपीति। न खल्वेते यत्रकामावसायिनस्तत्र तत्रभवतः परमेश्वरस्याज्ञामतिक्रमितुमुत्सहन्ते। वस्तुपदार्थानां जातिदेशकालावस्थाभेदेनानियतस्वभावा इति युज्यते तासु तदिच्छानुविधानमिति। एतान्यष्टावैश्वर्य्याणि तद्धर्म्मानभिघात इति अणिमादिप्रादुर्भाव इत्यनेनैव तद्धर्म्मानभिघातसिद्धौ पुनरुपादानं कायसिद्धिवत् एतत् सूत्रोपनिबद्धसकलविषयसंयमफलवस्त्वज्ञापनाय। सुगममन्यत्" ॥४४ वि०।

वेदान्तिमते नित्यैश्वर्य्यमीश्वरस्यैव योगिनान्तु ऐश्वर्य्यं तदधीनमित्यतोन जगत्सर्ज्जने तेषां शक्तिः। यथोक्तं शारीरकसूत्रभाष्येषु

"जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च"सू०। "ये सगुणब्रह्मोपासनात् सहैव मनसेश्वरसायुज्यं व्रजन्ति किन्तु एषां निरवग्रहमैश्वर्य्यं? भवत्याहोस्वित् सावग्रहमिति संशयः। किन्तावत् प्राप्तं निरङ्कुशमेवैषामैश्वर्य्यं भवितुमर्हति "आप्नोति स्वाराज्यम्" "सर्व्वेऽस्मै देवाबलिमावहन्ति" "तेषां सर्व्वेषु लोकेषु कामचारोभवतीत्यादि" श्रुतिभ्यः। इत्येवं प्राप्ते पठति जगद्व्यापारवर्जमिति। जगदुत्पत्त्यादिव्यापारं वर्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्य्यं मुक्तानां भवितुमर्हति जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य। कुतः? तस्य तत्र प्रकृतत्वादसन्निहितत्वाच्चेतरेषाम्। परएवहीश्वरो जगद्व्यापारेऽधिकृतः तमेव प्रकृत्योत्पत्त्याद्युपदेशान्नित्यशब्दनिबन्धनत्वाच्च तदन्वेषणविजिज्ञासनपूर्व्वकमितरेषामादिमदैश्वर्य्यं श्रूयते तेनासन्निहितास्ते जगद्व्यापारे। समनस्कत्वादेव चैषामनैकमत्ये कस्य चित् स्थित्यभिप्रायः कस्यचित्संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित् स्यात्। अथ कस्यचित्सङ्कल्पमन्वन्यस्य सङ्कल्प इत्यविरोधः समर्थ्येत। ततः परमेश्वराकूततन्त्रत्वमेवेतरेषामिति व्यवतिष्ठते" भा०।

**ऐषमस्** अव्य० अस्मिन् वत्सरे नि०। वर्त्तमानवत्सरे। ततः भवार्थे ट्युल् तुट् च। ऐषमस्तन तद्भवे स्त्रियां ङीप्। पक्षे त्यप्। ऐषमस्त्य तत्रार्थे त्रि० स्त्रियां टाप्।

**ऐषीक** न० इषीकमेव स्वार्थे अण्। इषीकाशब्दार्थे।

**ऐषुकारि** पु० इषुकारस्यापत्यम् इञ्। शरकारापत्ये तस्य विषयोदेशः भक्तल्। ऐषुकारिभक्त तद्विषये देशे।

**ऐषुकार्य्यादि** पु०पाणिन्युक्ते विषये देशेऽर्थे भक्तल्प्रत्ययनिमित्ते शब्दगण भेदे। स च गणः "ऐषुकारि, सारसायन। चान्द्रायण। द्व्याक्षायण। त्र्याक्षायण। औडायन। जौलायन। खाडायन। दासमित्रि दासमित्रायण शौद्रायण द्राक्षायण, शायण्डायन। तार्क्ष्यायण। शौभ्रायण। सौवीर। सौवीरायण। शयण्ड। शौण्ड। शयाण्ड। वैश्वमानव। वैश्वधेनव। नड। तुण्डदेव। विशदेव। सापिण्डि"।

**ऐष्टिक** पु० इष्टे व्याख्यानो ग्रन्थः द्व्यच्कत्वात् ठक्। इष्टे व्याख्याने १ग्रन्थे इष्टाय हितम् ठक्। इष्टरूपयागादेर्हिते २अन्तर्विदिके कर्मभेदे "दानधर्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम्" मनुः। "अस्ति तावत् प्राचीनवंशशाला तस्यामाहवनीयाद्यग्नित्रयमैष्टिकवेदिश्च" यजु०५,१० वेददी० इष्ट्यै प्रभवति ठक्। ३इष्टिसाधनसमर्थे प्रयोगे च। "यजमानशब्दादैष्टिकेषु निगमेषु" आश्व०श्रौ० ५,२,७,। तेषां समावापादि यथार्थमभिधानमैष्टिके तन्त्रे" ४,१,९।

**ऐहलौकिक** त्रि० इहलोके भवः ठञ् द्विपदवृद्धिः। इहलोकजाते "ऐहलौकिकमेवेह उताहो पारलौकिकम्" भा०व० २८१ अ०। "ऐहलौकिकमीहन्ते मांसशोणितवर्द्धनम्" भा०व०११८ अ०। स्त्रियां ङीप्।

**ऐहिक** त्रि०इह भवः कालाट्ठञ्। १इहलोकभवे २स्फीतशरीरसम्बन्धिनि स्रक्चन्दनादिसुखानुभवादौ च। "क्वचिद्रुमवदैहिकार्थेषु गृहेषु" भाग०५,१४,२२। "यथैहिकामुष्मिककामलम्पटः" भाग० ५,१९,१४। इह विदितः ठञ्। ३इहविदिते ४"ऐहिकब्रह्मणपतेर्दीक्षादिनिषेधाद् जन्मान्तरीयतत्पापवत एव सहमरणेनोद्धारः" शु०त० रघु०। स्त्रियां ङीप्।

इति वाचस्पत्ये ऐकारादिशब्दार्थसङ्कलनम्।

# ओ

ओकारः स्वरवर्णभेदः कण्ठौष्ठस्थानयोरुच्चार्य्यः दीर्घः द्विमात्रत्वात् प्लुतस्तु त्रिमात्रः। स चोदात्तानुदात्त स्वरितभेदैः प्रत्येकमनुनासिकाननुनासिकाभ्यां द्वैविध्यात् षड्विधः तथा प्लुतोऽपि षड्विधः एवं द्वादशविधः। तपरत्वे कारपरत्वे च स्वरूपपरः। तन्त्रे तस्य वाचकशब्दा वर्णाभिधाने उक्ता यथा "ओकारः सत्यपीयूषौ पश्चिमास्यः श्रुतिः स्थिरा। सद्योजातो वासुदेवो गायत्री दीर्घजङ्घकः। आप्यायनी चोर्द्ध्वदन्तो लक्ष्मीर्वाणीमुखो द्विजः। उद्देश्य दर्शकस्तीव्रः कैलासो वसुधाक्षरः। प्रणवांशो ब्रह्मसूत्रमजेयः सर्वमङ्गला। त्रयोदशी दीर्घनासारतिनाथो दिगम्बरः। त्रैलोक्यविजया प्रज्ञा प्रीतिर्बीजादिकर्षिणी" इति। तदधिष्ठातृदेवता च तत्रैवोक्ता "ज्वालास्यौकारगा ज्ञेया भीमा च मत्तमालिनी"। तस्य ध्येयरूपं कामधे॰त॰ उक्तं यथा। "ओकारं चञ्चलापाङ्गि! पञ्चदेवमयं सदा। रक्तविद्युल्लताकारं त्रिगुणात्मानमीश्वरम्। पञ्चप्राणमयं वर्णं नमामि देवमातरम्। एतद्वर्णं महेशानि! स्वयं परमकुण्डलीम्"।

**ओ** अव्य॰ उ—विच्। १सम्बोधने २आह्वाने ३स्मरणे ४अनुकम्पने च मेदि॰। ५ब्रह्मणि पु॰ एकाक्षरकोषः।

**ओक** पु॰ उच—घ चस्य कः। १पक्षिणि २वृषले ३आश्रये च। "अनोकशायी लघुरल्पप्रचारश्चरन् देशानेकचरः स भिक्षुः" भा॰ आ॰ ९१ अ॰। उच भावे घञ् कुः। ४समवाये च। ओकाय हितं यत्। ओक्य निवासाय हिते त्रि॰ "ज्योतीरथः पवते राय ओक्यः" ऋ॰ ९,८६,४५। [ (उकुण) केशकीटे शब्दर॰।

**ओकण(णि)** पु॰ उ—विच् ओः सन् कणति कण—अच्-इन् वा

**ओकस्** न॰ उच—असुन् न्यङ्क्वादित्वात् कुत्वम्। १गृहे २आश्रयमात्रे च। "यस्मिन्निन्द्रः प्रदिवि वावृधान ओको दधे ब्रह्मण्यन्तश्च नरः" ऋ॰ २,१९,१। "यस्मिन् देवा ओकांसि चक्रिरे" १,४०,५। "लोभ्राणाञ्च शुभाः शाखि! गोतमौकःसमीपजाः" भा॰ स॰ २०। वनौकसः त्रिदिवौकसः दिवौकसः जलौकस इत्यादि।

**ओकिवस्** त्रि॰ उच-समवाये क्वसु वेदे नि॰। समवेते "ओकिवांसा सुते सचा" ऋ॰ ६,५९,१। ओकिवांसा ओकिवांसौ समवेतौ" भा॰।

**ओकुल** पु॰ उच—उलक् न्यङ्क्वा॰ नि॰ कु। अर्द्धाग्निदग्धे अपक्वे गोधूमे (हडा) "ओकुलस्तु गुरुर्वृष्योमधुरो बलकारकः। रक्तपित्तापहः स्निग्धो हृद्योमदविवर्द्धनः" राजनि॰। [ गौ॰ ङीष्। (उकुण) केशकीटे शब्दरत्ना॰।

**ओकोदनी** स्त्री ओक आश्रयः मूर्द्धरूपम् अदनं भक्ष्यं यस्याः

**ओक्कणी** स्त्री उच्—विच् ओक् सती कणति कण—अच् गौ॰ ङीष्। (उकुण) केशकीटे शब्दरत्ना॰।

**ओख** शोषे सामर्थ्ये अक॰ भूषणे वारणे सक॰ भ्वा॰ पर॰ सेट् ऋदित्। ओखति औखीत् ओखाम् बभूव आस चकार। ओखितः ओखनम्। ओखः णिचि ओखयति ते मा भवान् ओचिखत् त ऋदित्त्वात् न ह्रस्वः। उपसर्गावर्णात् पररूपम् प्रोखति परोखति।

**ओगण** त्रि॰ अव—गण्यते अव+गण कर्म्मणि घञर्थे क सम्प्र॰। अवगण्ये अधरतया गण्ये। "महि व्राधन्त ओगणास इन्द्र" ऋ॰ १०,८९,१५ [ "बलं सत्यादोगीयः" वृह॰ उ॰।

**ओगीयस्** त्रि॰ ओजीयस् वेदे नि॰। अत्यन्तौजस्विनि।

**ओघ** पु॰ उच—घञ् पृषो॰ घ। १समूहे, २जलवेगे, ३द्रुतनृत्यादौ ४आध्यात्मिक तुष्टिभेदे च सा च तुष्टिः प्रव्रज्यायां चिरकालसमाध्यनुष्ठानेन या तुष्टिः सा कालाख्या तुष्टिरोघ इत्युच्यते" इति सां॰ प्र॰ भा॰ उक्ता। इयं तुष्टिः सां॰ कौ॰ मेघत्वेन परिभाषिता यथा "प्रव्रज्यापि ते न सद्यो निर्वाणदेति सा च कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यति अलमुत्तप्ततया तेवेत्युपदेशे या तुष्टिः सा कालाख्या मेघ उच्यते"। कचित् पुस्तके मेघ इत्यत्र ओघ इत्येव पाठः। तत्र जलवेगे "ओघवाताहृतं वीजं यस्य क्षेत्रे प्ररोहति" मनुः। "भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः" मेघ॰। "पुनरोघेन हि युज्यते नदी" कुमा॰। समूहे "स्वीयोर्ज्जितमर्थौघमवाप्य कुरुसत्तमः" भा॰ व॰ २५५ अ॰ "गजवाजिरथौघेन बलेन महताऽगमत्" आ॰ ११२अ॰ ५परम्परायाम् ६उपदेशे मेदि॰ परम्पराऽविच्छिन्ना सन्ततिः" "तोद्गौघभक्तिमुद्वहन्"भाग॰ ४,१२,११।

**ओघरथ** पु॰ ओघवतो नृपतेः पुत्रे। "अथोघवान्नाम नृपो नृगस्यासीत् पितामहः। तस्याथोघवतो कन्या पुत्रश्चौघरथोऽभवत्" भा॰ अनु॰ २ अ॰।

**ओघवत्** त्रि॰ ओघः जलवेगादिरस्त्यस्य मतुप् मस्य वः। १जलवेगादियुक्ते स्त्रियां ङीप्। "एषा सरस्वती रम्या दिव्या चौघवती नदी"भा॰ व॰ १३९। २नृगनृपस्य पितामहे २नृपभेदे पु॰ ३तत्कन्यायां स्त्री ङीप्। सा च भर्त्तुराज्ञया

द्विजरूपधरधर्म्मरूपातिथेः आत्मपर्य्यन्तप्रदानादिरूपपरिचरणेन तुष्टधर्म्मवरेण अर्द्धदेहेन लोकानां पावनार्थं नदीत्वमाप्ता इति तन्नामप्रसिद्धे कुरुक्षेत्रस्थे २ नदीभेदेऽपि । तत्कथा भा० अनु० २ अ० यथा "तस्यां समभवत्पुत्त्रो नाम्नाग्नेयः सुदर्शनः । सुदर्शनस्तु रूपेण पूर्णेन्दुसदृशोपमः । शिशुरेवाध्यगात्सर्व्वं परं ब्रह्म सनातनम् । अथौघवान्नाम नृपो नृगस्यासीत्पितामहः । तस्याप्यौघवती कन्या पुत्त्रश्चौघरथोऽभवत् । तामोघवान् ददौ तस्मै स्वयमोघवतीं सुताम् । सुदर्शनाय विदुषे भार्य्यार्थे देवरूपिणीम् । स गृहस्थाश्रमरतस्तया सह सुदर्शनः । कुरुक्षेत्रेऽवसद्राजन्नोघवत्या समन्वितः । गृहस्थश्चावजेष्यामि मृत्युमित्येव स प्रभो ! । प्रतिज्ञामकरोद्धीमान् दीप्ततेजा विशाम्पते ! । तामथौघवतीं राजन् ! स पावकसुतोऽब्रवीत् । अतिथेः प्रतिकूलं ते न कर्त्तव्यं कथञ्चन । येन येन च तुष्येत नित्यमेव त्वयाऽतिथिः । अप्यात्मनः प्रदानेन न ते कार्य्या विचारणा । एतद्व्रतं मम सदा हृदि संपरिवर्त्तते । गृहस्थानाञ्च सुश्रोणि ! नातिथेर्व्विद्यते परम् । प्रमाणं यदि वामोरु ! वचस्ते मम शोभने ! । इदं वचनमव्यग्रा हृदि त्वं धारयेः सदा । निष्क्रान्ते मयि कल्याणि ! तथा सन्निहितेऽनघे ! । नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं तव । तमब्रवीदोघवती तथा मूर्द्ध्नि कृताञ्जलिः । न मे त्वद्वचनात्किञ्चिदकर्त्तव्यं कथञ्चन । जिगीषमाणस्तु गृहे तदा मृत्युः सुदर्शनम् । पृष्ठतोऽन्वगमद्राजन् रन्ध्रान्वेषी तदा सदा । इध्मार्थन्तु गते तस्मिन्नग्निपुत्त्रे सुदर्शने । अतिथिर्ब्राह्मणः श्रीमांस्तामाहौघवतीं तदा । आतिथ्यं कृतमिच्छामि त्वयाद्य वरवर्णिनि ! । प्रमाणं यदि धर्म्मस्ते गृहस्थाश्रमसंमतः । इत्युक्ता तेन विप्रेण राजपुत्त्री यशस्विनी । विधिना प्रतिजग्राह वेदोक्तेन विशाम्पते ! । आसनञ्चैव पाद्यञ्च तस्मै दत्त्वा द्विजातये । प्रोवाचौघवती विप्रं केनार्थः किं ददामि ते । तामब्रवीत्ततो विप्रो राजपुत्त्रीं सुदर्शनाम् । त्वया ममार्थः कल्याणि ! निर्व्विशङ्कैतदाचर । यदि प्रमाणं धर्म्मस्ते गृहस्थाश्रमसंमतः । प्रदानेनात्मनो राज्ञि ! कर्त्तुमर्हसि मे प्रियम् । स तथा छन्द्यमानोऽन्यैरीप्सितैर्नृपकन्यया । नान्यमात्मप्रदानात्स तस्या वव्रे वरं द्विजः । सा तु राजसुता स्मृत्वा भर्त्तुर्व्वचनमादितः । तथेति लज्जमाना सा तमुवाच द्विजर्षभम् । ततो विहस्य विप्रर्षिः सा चैवोपविवेश ह । संस्मृत्य भर्त्तुर्व्वचनं गृहस्याश्रमकाङ्क्षिणः । अथेध्मानुपादाय स पावकिरुपागमत् । मृत्युना रौद्रभावेन नित्यं बन्धुरिवान्वितः । ततस्त्वाश्रममागम्य स पावकसुतस्तदा । तां व्याजहारौघवतीं क्वासि यातेति चासकृत् । तस्मै प्रतिवचः सा तु भर्त्त्रे न प्रददौ तदा । कराभ्यां तेन विप्रेण स्पृष्टा भर्त्तृव्रता सती । उच्छिष्टास्मीति मन्वाना लज्जिता भर्त्तुरेव च । तूष्णीम्भूताऽभवत्साध्वी नचोवाचाथ किञ्चन । अथ तां पुनरेवेदं प्रोवाच स सुदर्शनः । क्व सा साध्वी कुतो याता गरीयः किमतो मम । पतिव्रता सत्यशीला नित्यं चैवार्जवे रता । कथं न प्रत्युदेत्यद्य स्मयमाना यथा पुरा । उटजस्थस्तु तं विप्रः प्रत्युवाच सुदर्शनम् । अतिथिं विद्धि संप्राप्तं ब्राह्मणं पावके ! च माम् । अनया छन्द्यमानोऽहं भार्य्यया तव सत्तम । तैस्तैरतिथिसत्कारैर्ब्रह्मन्नेषा वृता मया । अनेन विधिना सेयं मामर्च्चति शुभानना । अनुरूपं यदत्रान्यत्तद्भवान् कर्त्तुमर्हति । कूटमुद्गरहस्तस्तु मृत्युस्तं वै समन्वगात् । हीनप्रतिज्ञमत्रैनं वधिष्यामीति चिन्तयन् । सुदर्शनस्तु मनसा कर्म्मणा चक्षुषा गिरा । त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिदम् । सुरतं तेऽस्तु विप्राग्र्य ! प्रीतिर्हि परमा मम । गृहस्थस्य तु धर्म्मोऽग्र्यः सम्प्राप्तोऽतिथिपूजनम् । अतिथिः पूजितो यस्य गृहस्थस्य हि गच्छति । नान्यस्तस्मात्परो धर्म्म इति प्राहुर्म्मनीषिणः । प्राणा हि मम दाराश्च यच्चान्यद्विद्यते वसु । अतिथिभ्यो मया देयमिति मे व्रतमाहितम् । निःसन्दिग्धं मया वाक्यमेतत्ते समुदाहृतम् । तेनाहं विप्र ! सत्येन स्वयमात्मानमालभे । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् । बुद्धिरात्मा मनः कालो दिशश्चैव गुणा दश । नित्यमेते हि पश्यन्ति देहिनां देहसंश्रिताः । सुकृतं दुष्कृतं चापि कर्म्म धर्म्मभृतां वर ! । यथैषा नानृता वाणी मयाद्य समुदीरिता । तेन सत्येन मां देवाः पालयन्तु दहन्तु वा । ततो नादः समभवद्दिक्षु सर्व्वासु भारत ! । असकृत् सत्यमित्येवं नैतन्मिथ्येति सर्व्वतः । उटजात्तु ततस्तस्मान्निश्चक्राम स वै द्विजः । वपुषा द्याञ्च भूमिञ्च व्याप्य वायुरिवोद्यतः । स्वरेण विप्रः शैक्ष्येण त्रीँल्लोकाननुनादयन् । उवाच चैनं धर्म्मज्ञं पूर्व्वमामन्त्र्य नामतः । धर्म्मोऽहमस्मि भद्रन्ते जिज्ञासार्थं तवानघ ! । प्राप्तः सत्यञ्च ते ज्ञात्वा प्रीतिर्म्मे परमा त्वयि । विजितश्च त्वया मृत्युर्य्योऽयं त्वामनुगच्छति । रन्ध्रान्वेषी तव सदा त्वया धृत्या वशीकृतः । न चास्ति शक्तिस्त्रैलोक्ये

कश्चित् पुरुषोत्तम! । पतिव्रतामिमां साध्वीं तवोद्दीचितुमच्युत । रचिता त्वद्गुणैरेषा पातिव्रत्यगुणैस्तथा । अथ्यया यदियं ब्रूयात्तथा तन्नान्यथा भवेत् । एषा हि तपसा स्वेन संयुक्ता ब्रह्मवादिनी । पावनार्थञ्च लोकस्य परिक्लेशा भविष्यति । अनेन चैतद्देहेन लोकांस्त्वमिह पत्स्यसे । अङ्गैर्नौषवती नाम त्वामङ्गेनानुयास्यति”

**ओङ्कार** पु० ओम्+स्वरूपे कारप्रत्ययः । प्रणवे । “प्राणायामैस्त्रिभिः पूतस्ततओङ्कारमर्हति” मनुः । “ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा” पुरा० अधिकम् ओम्शब्दे वक्ष्यते । “ओङ्कारं पूर्व्वमुच्चार्य्य पश्चाद्वेदमधीयते” इति स्मृतेः “तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्त्तन्ते विधानोक्ताः” इति गीतोक्तेः “स्वस्त्यनोङ्कृतं सर्व्वम्” इत्युक्तेश्च ओङ्कारस्य सर्व्वकर्म्मारम्भादौ पाठ्यत्वात् आरम्भसाधनत्वेन २आरम्भे । सप्तानां सामावयवानां ३प्रथमावयवे च । उद्गीथशब्दे ११७० पृ० सप्तावयवसामानि दृश्यानि । ओङ्कारः तदाकारः अस्त्यस्य अच् । काशीस्थे ४शिवलिङ्गभेदे “ओङ्कारं प्रथमं लिङ्गं द्वितीयन्तु त्रिलोचनमिति” काशीस्थचतुर्द्दशप्रधानलिङ्गकथने । तदाविर्भावकथा तत्रैव ७३अध्याये

“यथोङ्कारस्य लिङ्गस्य प्रादुर्भाव इहाभवत् । पुरानन्दवनेऽत्र ब्रह्मणा विश्वयोनिना । तपस्तप्तं महादेवि ! समाधिं दधता परम् । पूर्णे युगसहस्रेऽथ भित्त्वा पातालसप्तकम् । उदतिष्ठत् पुरोज्योतिर्विद्योतितहरिन्मुखम् । यदन्तराविरभवन्निर्व्याजेन समाधिना । तदेव परमं धाम बहिराविरभूद्विधेः । अभूच्चटचटाशब्दः स्फुटितो भूमिभागतः । तच्छब्दाद्यस्तजन्ह्वेधाः समाधिं क्रमतोवशी । सृष्टाऽसृज्यत तत्सानौ यावदुन्मील्य लोचने । पुरःप्रश्चाद्ददर्शाग्रे तावदत्तरमादिमम् । अकारं सत्वसम्पन्नमकचोलं सृष्टिपालकम् । नारायणात्मकं साक्षात्तमःपारे प्रतिष्ठितम् । ओङ्कारमत्र तस्याग्रे रजोरूपं प्रजर्जनिम् । विधातारं समस्तस्य स्वाकारमिव चिन्तितम् । नीरवध्वान्तसङ्केतसदनाभं तदग्रतः । मकारं स ददर्शाथ तमोरूपं विशेषतः । साम्नां योनिं लये हेतुं साक्षाद्रुद्रस्वरूपिणम् । अथ तत्पुरतोधाता व्यधात् स्वनयनातिथिम् । विश्वरूपमथोङ्कारं सगुणञ्चापि निर्गुणम् । अनाख्यनादसदनं परमानन्दविग्रहम् । यच्छब्दब्रह्मेति यत् ख्यातं सर्व्ववाङ्मयकारणम् । अथोपरिष्टाद्वादस बिन्दुरूपं परात् परम् । कारणं कारणानाञ्च जगदासञ्जनं परम् । विधिर्विलोकयाञ्चक्रे तपसा गोचरीकृतम् । अवनादोमिति ख्यातं सर्व्वस्यास्य स्वभावतः । भक्तसुनयते यस्मात्तदोमिति यदीरितः । अरूपोऽपि स्वरूपाद्यः स धाता नेत्रयोःकृतः । तारयेद्यद्भवाम्भोधेः स्वजपासक्तमानसम् । ततस्तार इति ख्यातोयस्तं ब्रह्मा व्यलोकयत् । प्रणूयते यतः सर्व्वैः पुरनिर्व्वाणकामुकैः । सर्व्वेभ्योऽभ्यधिकस्तस्मात् प्रणवोयः प्रकीर्त्तितः । सुरेवितारं पुरुषं प्रणमेद्यः परमादम् । अतस्तं प्रणवं शान्तं प्रत्यक्षीकृतवान् विधिः । त्रयीमयस्तुरीयोयस्तुर्यातीतोऽखिलात्मकः । नादबिन्दुस्वरूपो यः स प्रैक्षि द्विजगामिना । प्रावर्त्तन्त यतोवेदाः साङ्गाः सर्व्वस्य योनयः । स वेदादिः पद्मभुवा पुरस्तादवलोकितः । इषभोयस्त्रिधाबद्धोरोरवीति महोदयः । स नेत्रविषयं चक्रे परमः परमेष्ठिना । शृङ्गाश्चत्वारि यस्यासन् हस्तासनुषप्त एव च । द्वे शीर्षे च त्रयः पादाः स देवोऽभिनिरीक्षितः । यदन्तर्लीनमखिलं भूतं भावि भवत् पुनः । तद्वीजं वीजरहितं द्रुहिणेन विलोकितम् । लीनं स्मृवेत यत्रैतदाब्रह्मस्तम्बभाजनम् । अतः समाख्यते सद्भिर्यल्लिङ्गं तद्विलोकितम् । पञ्चार्थायत्र भासन्ते पञ्चब्रह्ममयं हि यत् । आदिपञ्चस्वरूपं यद्विरिञ्चि ब्रह्मणा हि तत् । तमालोक्य ततोवेधा लिङ्गरूपिणमीश्वरम्” । ओङ्कारेश्वरोऽप्यत्र । ४बुद्धशक्तिभेदे स्त्री त्रिका० । अवर्णाऽस्यादेः परत्वे पररूपम् ।

**ओज** बले अद० चुरा० उभ० अक० सेट् । ओजय–ति–ते औजिजत्–त ओजयाम् बभूव आस चकार चक्रे । ओजितः

**ओज** पु० ओज–अच् । “ओजोऽथ युग्मं विषमः समश्च” । ज्यो० त० उक्ते मेषादीनां द्वादशानां मध्ये १अयुग्मे विषमे राशौ यथा १,३,५,७,९,११,अङ्कबोधिता मेषमिथुनसिंहतुलाधनुःकुम्भाः ओजराशयः “ओजे रवीन्द्वोः समइन्द्रव्यो” नील०ता० । ओजस् शब्दोऽप्यत्र न० । “कुजार्किगुरुसौम्यानां भागाः शुक्रस्य च क्रमात् । पञ्चपञ्चाष्टसप्तेषु वेषमोजस्य राशिषु” ज्यो० त० अत्र ओजेषु राशिषु इत्येव क्वचित्पाठः । २अयुग्ममात्रे (विजोड) च “भत्रयमोजगतं गुरुणा चेत्” “ओजे तपरौ जरौ गुरुश्चेत्” इत्यादौ अयुग्मपादे प्रयोगात्

**ओजस्** न० उब्ज-असुन् बलोपे गुणः । १दीप्तौ २अवष्टम्भे, ३प्राणबले, ४प्रकाशे, ५सामर्थ्ये ६ज्योतिषोक्ते प्रथमतृतीयादौ विषमराशौ, ७शस्त्रादिकौशले, ८धातुतेजसि, ज्ञानेन्द्रियाणां ९पाटवे, १०काव्यगुणभेदे, ११औद्धा०रीत्याम्,

वैद्यकोक्ते "भ्रमरैः फलपुष्पेभ्यो यथा सम्भ्रियते मधु। तद्वदोजः शरीरेभ्यो धातुभिर्भ्रियते नृणाम्" इति १२लक्षणे धातुरसपोषके वस्तुभेदे च। अच्। ओजशब्दोऽप्यत्र। ओजःस्वरूपं मिता० स्मृत्यन्तरे दर्शितं यथा। "हृदि तिष्ठति यत् शुद्धमीषदुष्णं सपीतकम्। ओजः शरीरे संख्यातं तन्नाशान्नाशमृच्छति"। "पुनर्द्धात्री पुनर्गर्भमोजस्तस्य प्रधावति। अष्टमे मास्यतोगर्भोजातः प्राणैर्वियुज्यते" या० स्मृतिः सुश्रुते तु बलपर्य्यायत्वमस्योक्त्वा तत्फलान्युक्तानि यथा "बललक्षणं बलक्षयलक्षणमत ऊर्द्ध्वं वक्ष्यामः। तत्र रसादीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत्खल्वोजस्तदेव बलमित्युच्यते स्वशास्त्रसिद्धान्तात्। तत्र बलेन स्थितोपचितमांसता सर्व्वचेष्टास्वप्रतिघातः स्वरवर्णप्रसादो बाह्यानामाभ्यन्तराणाञ्च करणानामात्मकार्य्यप्रतिपत्तिर्भवति। भवन्ति चात्र। "ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं सरम्। विविक्तं मृदु मृत्स्नञ्च प्राणायतनमुत्तमम्। देहस्यावयवस्तेन व्याप्तो भवति देहिनाम्। तदभावाच्च शीर्य्यन्ते शरीराणि शरीरिणाम्। अभिघातात्क्षयात्कोपाच्छोकाद्ध्यानात् श्रमात् क्षुधः। ओजः सङ्क्षीयते ह्येभ्यो धातुग्रहणनिःसृतम्। तेजः समीरितं तस्माद्विस्रंसयति देहिनः। तस्य विस्रंसो व्यापत् क्षय इति लिङ्गानि व्यापन्नस्य भवन्ति। सन्धिविश्लेषो गात्राणां सदनं दोषच्यवनं क्रियासन्निरोधश्च विस्रंसे। स्तब्धगुरुगात्रता वातशोथोवर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने। मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति क्षये। भवन्ति चात्र। "एते दोषा बलस्योक्ता व्यापद्विस्रंसलक्षयाः। विश्लेषसादौ गात्राणां दोषविस्रंसनक्षयाः। अप्राचुर्य्यं क्रियाणाञ्च बलविस्रंसलक्षणम्। गुरुत्वं स्तब्धताङ्गेषु ग्लानिर्व्वर्णस्य भेदनम्। तन्द्रा निद्रा वातशोथौ बलव्यापदि लक्षणम्। मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च। पूर्व्वोक्तानि च लिङ्गानि मरणञ्च बलक्षये। तत्र विस्रंसे व्यापन्ने च क्रियाविशेषैरविरुद्धैर्बलमाप्याययेत्। नष्टसंज्ञमितरञ्च वर्जयेत्"।

"ओजः समासभूयस्त्वं मांसलं पदडम्बर" मित्युक्तलक्षणः काव्य गुणभेदः। सा०द०तु 'रसस्याङ्गित्वमाप्तस्य धर्म्माः शौर्य्यादयो यथा। एवं माधुर्य्यमोजोऽथ प्रसाद इति ते" त्रिधा इति गुणान् विभज्य तत्तल्लक्षणमुक्तम् "ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते। वीरबीभत्स रौद्रेषु क्रमेणाधिक्यमस्य तु" इति। तद्व्यञ्जकवर्णादयश्च तत्रोक्ताः। "वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ। उपर्य्यधो द्वयोर्वा स्यात् रेफः टठडढैः सह शकारश्च षकारश्च तस्य व्यञ्जकतां गताः तथा समासबहुला घटनौद्धत्यशालिनी" "बह्वौजसा तु प्रहृतं त्वयाऽस्याम्" रघुः। "महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुद" "पुरुषाणां महौजसाम्" "महात्मानो महौजसः" इति मनुः। अतस्तृतीयायाः कृतादौ अलुक्। ओजसाकृतम् तस्यापत्यम् इञ्। औजसाकृतिः तदपत्ये। ५तद्विशिष्टे त्रि०ततः भृशा० अभूततद्भावे क्यङ् सलोपश्च। "ओजायते ओजायमाना तस्याग्र्यं प्रणीय जनकात्मजा" भट्टिः। "ओजायमानस्तन्वश्च शुम्भते" ऋ० १,१४०,६।

**ओजसीन** न० "ओजसोऽहनि यत्खौ" पा० ओजोऽस्यत्राहनि इत्यर्थे ख। ओजोयुक्तेऽहनि। "शुचिः शुक्रे अहन्योजसीना" तैत्ति० "पक्षे यत् ओजस्यमहः" सि०कौ० "मत्वर्थे मासतन्वो" पा० मत्वर्थे यत्। ओजस्या तनुः।

**ओजस्वत्** त्रि० ओजोऽस्त्यस्य मतुप् मस्य वः। बलवति तेजस्विनि "मरुत्वन्तमृजीषिणमोजस्वन्तम्" ऋ०८,७६,५ विनि। तत्रार्थे त्रि० "रूपं तदोजस्वि तदेव वीर्य्यम्" रघुः। "ओजस्विवर्णोज्ज्वलवृत्तशालिनम्" माघः "शतक्रतुरिवौजस्वी धर्म्मात्मा संशितव्रतः" भा० आश्व० ५अ०। स्त्रियं मतुबन्तो ङीप्। "ओजस्वतीस्थ राष्ट्रदा राष्ट्रममुष्मै दत्त" यजु०१०,२३। ताभ्याम् अतिशायने तरप् तमप् वा। ओजस्वितर ओजस्वितम अत्यन्तौजोयुक्ते। तत्रार्थे इष्ठन् ईयसुन् वा। मतोर्लुक्। ओजिष्ठ ओजीयस् तदर्थे त्रि० ईयसुन्नन्तात् स्त्रियां ङीप् इति भेदः ओजीयसी।

**ओज्मन्** त्रि० आ+वज—ङ्मनिप् बा० सम्प्र०। १प्रेरके २वेगे पु० "अपामोज्मानं परि गोभिः" ऋ०६,४७,२७। "ओज्मानं प्रेरकं वेगं वा" भा०।

**ओडव** पु० सङ्गीतदामोदरोक्तेषु पञ्चस्वरयुक्तरागभेदेषु तत्र पञ्चस्वराश्च ऋषभपञ्चमवर्ज्जिताः निषादगान्धारषड्जमध्यमधैवतात्मकाः।

**ओडिका** स्त्री उ—ड तस्य नेत्त्वम् गौरा० ङीष् स्वार्थे क ह्रस्वः। (उडिधान) नीवारे स च "नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत्" भावप्र० उक्तगुणकः।

**ओडी** स्त्री उ-ड तस्य नेत्त्वम् गौरा० ङीष्। (उडिधान) नीवारे

**ओड्र** न० आ+ईषत् उनत्ति उन्द रक् नि० दस्य डः। १जवापुष्पे २उत्कलदेशे पु० (उडिया) तद्देशस्य राजा तत्रभवो वा

चण्। ओड्र, तद्देशन्दपे तद्भवे मनुष्ये च बहुषु तु तस्य लुक्। ओड्रास्तज्जनपदवासिनः तद्देशन्दपाश्च ते च क्रमेण शूद्रत्वं प्राप्ता यथाह मनुः। "शनकैस्तु क्रियालोपादिमाः क्षत्त्रियजातयः। वृषलत्वं गता लोके ब्राह्मणादर्शनेन च। पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः। पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः"। उत्कलदेशस्य वृह० सं० कूर्म्मविभागे पूर्व्वदिक्स्थिततया उक्तः। अथ पूर्व्वस्यामञ्जनेत्याद्युपक्रमे "उदयगिरिभद्रगौडकपौण्ड्रोत्कल-काशिमेकलाम्बष्ठाः" उत्कलशब्दे ऽधिकमुक्तम्। "तत्रैव चौड्राः पौण्ड्राश्च वामचूलाः सकेरलाः" हरि० २३६

**ओड्रपुष्प** पु० ओड्रं पुष्पमस्य। जवावृक्षे।

**ओण** अपनयने अपसारणे ऋदित् भ्वादि० पर० सक० सेट्। ओणति औणीत्। ओणाम् बभूव आस चकार ओणनम् क्वनिप् ओणावा स्त्रियाम् ओणावरी। ओणयन्त ते मा भवान् ओणिणत् त।

**ओणि** त्रि० ओण–इन्। १अपनयनकारके २द्यावापृथिव्योः स्त्री ङीप् द्वि० निरु०। "प्रते सोतार ओण्योरसम् मदय" ऋ० ९,१६,१। "तं त्वा धर्त्तारमोण्योः" ६,६५,११, "ओण्योः द्यावापृथिव्योः" भा०।

**ओत** त्रि० आ+वेञ्+क्त। १अन्तर्व्याप्तौ कर्म्मणि क्त। २तथाभूते त्रि० "यस्मिंश्चित्तं सर्वमोतं जनानाम्" यजु० ३४,५। "ओतञ्च प्रोतञ्चेति" श्रुतिः। ३पटीयदीर्घतन्तौ च (टानारसुत)। "यदिदं सर्व्वमप्स्वोतञ्च प्रोतञ्च, कस्मिन्नु खल्वाप ओताश्च प्रोताश्च" इत्यादि। छा० उ० बहुशस्तः प्रयोगः। तत्र स्थूलानां परिच्छिन्नानां कारणेन सूक्ष्मेण आपरमात्मपर्य्यन्तं व्याप्यत्वमेवेति छा० उ० भाष्ययोर्निर्णीतं यथा "यदिदं सर्व्वमप्स्वोतञ्च प्रोतञ्च, कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति" छा० उप०। "यदिदं सर्व्वं पार्थिवं धातुजातमप्सूदके ओतञ्च दीर्घपटतन्तुवदोतञ्च तिर्य्यक्तन्तुवदुपरितत वा अद्भिःसर्व्वतोऽन्तर्बहिर्भूताभिर्व्याप्तमित्यर्थः। अन्यथा सक्तुमुष्टिवद्विशीर्य्येत। इदं तावदनुमानमुपन्यस्तम्। यत्कार्य्यं परिच्छिन्नं स्थूलं कारणेनापरिच्छिन्नेन सूक्ष्मेण व्याप्तमिति दृष्टम्। यथा पृथिव्यद्भिस्तथा पूर्व्वं पूर्व्वमुत्तरेणोत्तरेण व्यापिना भवितव्यमित्येष आसर्व्वान्तरादात्मनः प्रश्नार्थः। यत्र भूतानि पञ्च संहतान्येवोत्तरोत्तरं सूक्ष्मभावेन व्यापकेन कारणरूपेण च व्यवतिष्ठन्ते। न च परमात्मनोऽर्व्वाग्वस्त्वन्तरमस्ति "सत्यस्य सत्यमिति" श्रुतेः। सत्यञ्च भूतपञ्चकं सत्यस्य सत्यं च पर आत्मा। कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति। तासामपि कार्य्यत्वात्स्थूलत्वात्परिच्छिन्नत्वाच्च क्वचिदि ओतप्रोतभावेन भवितव्यम्। क्व तासामोतप्रोतभाव इत्येवमुत्तरोत्तरं प्रश्नप्रसङ्गो योजयितव्यः" भा०।

"वायौ गार्गीति, कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेति, अन्तरिक्षलोकेषु गार्गीति, कस्मिन्नु खल्वन्तरिक्षलोका ओताः प्रोताश्चेति, गन्धर्वलोकेषु गार्गीति, कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेति, आदित्यलोकेषु गार्गीति, कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति, चन्द्रलोकेषु गार्गीति, कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति, नक्षत्रलोकेषु गार्गीति, कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति, देवलोकेषु गार्गीति, कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेति, इन्द्रलोकेषु गार्गीति, कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति, प्रजापतिलोकेषु गार्गीति, कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति, ब्रह्मलोकेषु गार्गीति, कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति, स होवाच गार्गि! मातिप्राक्षीर्मा ते मूर्द्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि! मातिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम" उपनि०।

"वायौ गार्गीति। नन्वग्नाविति वक्तव्यम्। नैष दोषोऽग्नेः पार्थिवमपां वा धातुमनाश्रित्येतरभूतवत् स्वातन्त्र्येणात्मलाभो नास्तीति। तस्मिन्नोतप्रोतभावो नोपदिश्यते। कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति। तान्येव भूतानि संहतान्यन्तरिक्षलोकास्तान्यपि गन्धर्वलोकेषु गन्धर्वलोका आदित्यलोकेष्वादित्यलोकाश्चन्द्रलोकेषु चन्द्रलोका नक्षत्रलोकेषु नक्षत्रलोका देवलोकेषु देवलोका इन्द्रलोकेष्विन्द्रलोका विराड्शरीरारम्भकेषु भूतेषु प्रजापतिलोकेषु प्रजापतिलोका ब्रह्मलोकेषु ब्रह्मलोका नामाण्डारम्भकाणि भूतानि। सर्व्वत्र हि सूक्ष्मतारतम्यक्रमेण प्राण्युपभोगाश्रयाकारपरिणतानि संहतानि। तान्येवं पञ्चेति बहुवचनभाञ्जि। कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति। स होवाच याज्ञवल्क्यो हे गार्गि! मातिप्राक्षीः स्वं प्रश्नं न्यायप्रकारमतीत्यागमेन प्रष्टव्यां देवतामनुमानेन मा प्राक्षीरित्यर्थः। पृच्छन्त्याश्च मा ते तव मूर्द्धा शिरो व्यपप्तद्विस्पष्टं मा पतेत्। देवतायाः प्रश्नः आगम-

विषयत्वं प्रश्नविषयमतिक्रान्तो गार्ग्याः प्रश्नः आनुमानिकत्वात् यस्या देवतायाः प्रश्नः सातिप्रश्न्या नातिप्रश्न्यां अनतिप्रश्न्यां स्वप्रश्नाविषयैव केवलागमगम्येत्यर्थः। तामनतिप्रश्न्यां वै देवतामतिपृच्छसि अतो गार्गि! मातिप्राक्षीर्मर्त्तुं चेच्छसि ततो ह गार्गी वाचक्नव्युपरराम" भा०।

**ओतु** पुंस्त्री अव–तुन् ऊठ् गुणः। १विड़ाले मार्ज्जारे। आ+वे–तुन् बा० संप्रसारणम् (पड़ानसुते) तिरश्चीनसूत्रे। "नाहं तन्तुं न विजानाम्योतुम्" ऋ०६,९,२। "तन्तवः पटस्य प्रागायतानि सूत्राणि"ओतवस्तिरश्चीनानि सूत्राणि" भा०। अत्र रूपकतया वियदादीनां विस्तीर्य्यमाणत्वात् ओतुत्वं यथा तत्रैव भाष्ये "वैश्वानरस्य पुत्रोऽसौ परस्तात्दिवि यः स्थितः। छन्दांसुष्वरवस्तस्य सुतयस्त्राणि तन्तवः। यजूंषि स्वेटाश्चैतु स्वादस्तं वातव्यमध्वरः" ओतुः मोतुर् पञ्चीकृतानि स्थूलानि ओतुस्थानीयान्यपि वियदादीनि"भा०। "ये अन्ता यावती सिचो य ओतवो ये च तन्तवः। वासोयत्पत्नीभिरुत्तं तन्नः स्योनमुपस्पृशात्" अथ०१४,२,५१। समासेऽवर्णात्परस्यास्या दैर्वा पररूपम् स्थलौतुः स्थलोतुः।

**ओदती** स्त्री उषसि–निरु०। "नदं व ओदतीनाम्"ऋ० ८,७९,२। "ओदतीनाम् ओदत्यः उषसः तासाम्" भा०

**ओदन** पु० उन्द–युच् नलोपो गुणश्च। १मेघे निघ०। २भक्ते सिद्धान्ने अर्द्धर्चादि० पुं०न०। "अन्नेन व्यञ्जनम्" पा० स० गुडोदनः घृतोदनःदध्योदन इत्यादि मिश्रीकरणद्वारा सामर्थ्यम्। "गुडौदनं पायसं च हविष्यं क्षीरषष्टिकम्। दध्योदनं हविर्भुक्तं मांसं चित्रान्नमेव च" या० स्मृतिः गुडमिश्र ओदनः गुडौदन एवं दध्योदनः हविर्भुक्तौदनः" मिता०ततो हितादौ छ यत् वा। ओदनीय ओदन्य ओदनसाधने तण्डुलादौ। "अमी लगद्वाप्यमखण्डिताखिलं विशुक्लमन्योन्यरूक्षमाईवम्। रसोत्तरं गौरमपीवरं रसाद्भुङ्क्तामोदनमोदनं जनाः" नैषधे अन्नवर्णने "अन्येषाञ्चैवमादीनां मद्यानामोदनस्य च"मनुः

**ओदनपाकी** स्त्री ओदनस्य पाक इव पाको यस्याः ङीष्। १नीलझिण्टिकायाम्। २ओषधिभेदे०शब्दार्थच०।

**ओदनाह्वया** स्त्री ओदनस्याह्वय आह्वयो यस्याः। महासमङ्गायां (वेलियाड़ा) राजनि०।

**ओदनी** स्त्री ओदन इवाचरति ओदन+आचारे क्विप्–ततः अच गौरा० ङीष्। (वेड़ेला) बलायाम्।

**ओद्म** पु० उन्द–क्लेदने भावे मन् नि०। उन्दने क्लेदने।

**ओद्मन्** त्रि० उन्द–मनिन् नलोपश्च। ओषधौ। "अपांत्वोद्मन् सादयामि" यजु०१३,५३। अपाम ओद्मन् ओद्मनि ओषधौ, भा० सप्तम्या लुकि नलोपाभावः।

**ओम्** अव्य०अव–मन् नि०। १प्रणवे, २आरम्भे, ३स्वीकारे, "ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभः" माघः। ४अनुमतौ, ५अपाकृतौ, ६अस्वीकारे, मङ्गले, ७शुभे, ८ज्ञेये, ब्रह्मणि च। अस्य उश्च मश्च तेषां समाहारः। विष्णुमहेश्वरब्रह्मरूपत्वात् ९परमेश्वरे अव्य० यथा तस्येश्वरवाचकता तथा पात०सूत्र भा०विवरणेषु दर्शितं यथा

"तस्य वाचकः प्रणवः" सू०। "वाच्य ईश्वरः प्रणवस्य, किमस्य सङ्केतकृतं वाच्यवाचकत्वम्? अथ प्रदीपप्रकाशवदवस्थितमिति। स्थितोऽस्य वाच्यस्य वाचकेन सह सम्बन्धः, सङ्केतस्त्वीश्वरस्य स्थितमेवार्थमभिनयति। यथावस्थितः पितापुत्रयोः सम्बन्धः, सङ्केतेनावद्योत्यते अयमस्य पिता, अयमस्य पुत्र इति। सर्गान्तरेष्वपि वाच्यवाचकत्वापेक्षस्तथैव सङ्केतः क्रियते" भा०।

"सम्प्रति तत्प्रणिधानं दर्शयितुं तस्य वाचकमाह, तस्य वाचकः प्रणवः। व्याचष्टे, वाच्य इति। तत्र परेषां मतं विमर्षद्वारेणोपन्यस्यति, किमस्येति वाचकत्वं प्रतिपादकत्वम् इत्यर्थः। परे हि पश्यन्ति, यदि स्वाभाविकः शब्दार्थयोः सम्बन्धः सङ्केतेनाख्याच्छब्दादयमर्थः प्रत्येतव्य इत्येवमात्मकेनाभिव्यज्येत ततो यत्र नास्ति स सम्बन्धस्तत्र सङ्केतशतेनापि न व्यज्येत न हि प्रदीपव्यङ्ग्योघटो यत्र नास्ति तत्र प्रदीपसहस्रेणापि शक्यो व्यञ्जयितुम्। अतस्सङ्केतस्तु करभशब्दोवारणे वारणप्रतिपादकोदृष्टः सङ्केतकृतमेव वाच्यकत्वमिति विकल्प्याभिमतमवधारयति, स्थितोऽस्येति। अयमभिप्रायः सर्व एव शब्दा सर्व्वाकारार्थाभिधानसमर्था इति स्थित एवैषां सर्वाकारैरर्थैः स्वाभाविकः सम्बन्धः। ईश्वरसङ्केतस्तु प्रकाशकश्च नियामकश्च, तस्य ईश्वरसङ्केतासङ्केतकृतश्चास्य वाचकापभ्रंशविभागस्तदिदमाह, सङ्केतस्त्वीश्वरस्येति। निदर्शनमाह, यथेति। ननु शब्दस्य प्राधानिकस्य महाप्रलयसमये प्रधानभावमुपगतस्य शक्तिरपि प्रलीना ततोमहदादिक्रमेणोत्पन्नस्य वाचकस्येव नाश्चे-श्वरेण सङ्केतेन न शक्या वाचकशक्तिरभिव्यलयितुं विनष्टशक्तित्वादित्यत आह, सर्गान्तरेष्वपीति। यद्यपि सह शक्त्या प्रधानसाम्यमुपगतः शब्दस्तथापि पुनराविर्भावे

तच्छक्तियुक्त एवाविर्भवति, वर्षातिपातसमधिगतक्षद्भाव इवौद्भिज्जो मेघविसृष्टवारिधारावसेकात्तेन पूर्वसम्बन्धसङ्केतानुसारेण सङ्केतः क्रियते भगवता इति तस्मात् प्रतिपत्तेः सङ्गव्यवहारपरम्परया नित्यतया नित्यःशब्दार्थयोः सम्बन्धः न कूटस्थनित्य इत्यागमिनः प्रतिजानते, न पुनरागमनिरपेक्षाः सर्गान्तरेष्वपि तादृश एव सङ्केत इति प्रतिपत्तव्योयत इति भावः" वि० ।

"तज्जपस्तदर्थभावनम्" सू० ।

'प्रणवस्य जपः प्रणवाभिधेयस्य चेश्वरस्य भावनम् । तदस्य योगिनः प्रणवं जपतः, प्रणवार्थञ्च भावयतश्चित्तमेकाग्रं सम्पद्यते । तथाचोक्तं ।

"स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमामनेत् । स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते" इति भा० ।

"वाचकमाख्याय प्रणिधानमाह, तज्जपस्तदर्थभावनम् । व्याचष्टे, प्रणवस्येति । भावनं पुनःपुनश्चेतसि निवेशनम् । ततः किं सिध्यति इत्यत आह प्रणवमिति । एकस्मिन् भगवति आरमति चित्तम् । अत्रैव वैयासिकीं गाथामुदाहरति, तथा चेति । ततः ईश्वरः समाधितत्फलदानेन तमनुगृह्णाति" वि० ।

ओङ्कारस्य माहात्म्यं स्वरूपादिकं ब्राह्मणसंदर्शितं यथा योगियाज्ञवल्क्यः "प्रणवाद्याः स्मृतामन्त्राश्चतुर्वर्गफलप्रदाः । तस्माच्च निःसृताः सर्व्वे प्रलीयन्ते च तत्र वै । मङ्गल्यं पावनं धर्म्यं सर्व्वकामप्रसाधनम् । ओङ्कारं परमं ब्रह्म सर्व्वमन्त्रेषु नायकम् । प्रजापतेर्मुखोत्पन्नं तपःसिद्धस्य वै पुरा" । स एव "यथा पर्णं पलाशस्य शङ्कुनैकेन धार्य्यते । तथा जगदिदं सर्व्वमोङ्कारेणैव धार्य्यते । जपेन दह्यते पापं प्राणायामैस्तथा मलम् । ध्यानेन जन्मनिर्य्याणं धारणाभिस्तु मुच्यते" । मनुः "अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः । वेदत्रयान्निरदुहत् भूर्भुवःस्वरितीति च । गीता "ओं तत् सदिति निर्द्देशोब्रह्मणस्त्रिविधः स्मृतः । ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा । तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्" । योगियाज्ञ० "शिक्षानाञ्चैव सर्व्वेषां वेदवेदान्तयोस्तथा । अन्येषामपि शास्त्राणां निष्ठाऽथोङ्कार उच्यते । प्रणवाद्यायतोवेदा प्रणवे पर्य्युपस्थिताः । वाङ्मयं प्रणवः सर्व्वं तस्मात् प्रणवमभ्यसेत्" । तथा सएव "आद्यं यत्राक्षरं ब्रह्म त्रयोयत्र प्रतिष्ठिता । सगुह्योऽन्यस्त्रिवृद्वेदोयो वेदैनं स वेदवित् । एक एव तु विज्ञेयः प्रणवोयोगसाधनम् । गृहीतं सर्व्वसिद्धान्तैरितरैर्ब्रह्मवादिभिः । वेदभारभराक्रान्तो यः स वै ब्राह्मणगर्द्दभः । यो वेत्ति ब्रह्मगोप्यन्तं त्रिमात्राङ्गेषु तिष्ठति" । तथा "त्रिमात्रार्द्धं परं ब्रह्म मात्राक्षरविवर्जितम् । अचिन्त्यमव्ययं सूक्ष्मं निष्कलं परमं पदम्" मनुः "क्षरन्ति सर्व्वावैदिक्योजुहोतियजतिक्रियाः । अक्षरं दुष्करं ज्ञेयं ब्रह्म चैव प्रजापतिः" । योगिया० यथाऽमृतेन तृप्तस्य पयसा किं प्रयोजनम् । तथोङ्कारविधिज्ञस्य ध्यानहृष्टैर्न विद्यते । सर्व्वमन्त्रप्रयोगेषु ओमित्यादौ प्रयुज्यते । तेन संपरिपूर्णानि यथोक्तानि भवन्ति हि । यन्न्यूनमतिरिक्तञ्च यत् छिद्रं यदयज्ञियम् । यदमेध्यमशुद्धञ्च यातयामञ्च यद्भवेत् । तत्तदोङ्कारयुक्तेन मन्त्रेणाविकलं भवेत्" । छन्दोगगृह्यपरिशिष्टम् "यदोङ्कारमकृत्वा तु किञ्चिदारभ्यते तद्वज्रं भवति तस्मात् वज्रभयाद्भीत ओङ्कारं पूर्व्वमारभेत्"। गद्यव्यासः ओङ्कारं स्वर्गद्वारं तस्मात्सर्व्वेष्वेव कर्म्मस्वादौ प्रयुञ्जीत" । छन्दोगगृह्यपरिशिष्टम् "ओङ्कारपूर्व्वं हि योगोपासनं यानि नित्यानि पुण्यतमानि कर्म्माणि दानयज्ञतपःस्वाध्यायजपध्यानसन्ध्योपासनप्राणायामहोमदेवपितृमन्त्रोच्चारणब्रह्मारम्भादि यच्चान्यत् किञ्चित्सर्व्वं प्रणवमुच्चार्य्य प्रवर्त्तयेत् समापयेच्च" । मनुः "प्राक्कूले पर्य्युपासीनः पवित्रैश्चैव पावितः । प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति" । व्यासः "प्रणवस्य ऋषिर्ब्रह्मा गायत्री च्छन्द एवच । देवोऽग्निः सर्व्वकार्य्येषु विनियोगः प्रकीर्त्तितः" । तथा "एवमार्षादिकं स्मृत्वा तत ओङ्कारमभ्यसेत् । सार्द्धं त्रिमात्रमुच्चार्य्य दीर्घघण्टानिनादवत्"। योगियाज्ञवल्क्यः "त्रिमात्रस्तु प्रयोक्तव्यः सर्व्वारम्भेषु कर्म्मसु । तिस्रः सार्द्धास्तु कर्त्तव्यामात्रास्तत्त्वार्थचिन्तकैः । देवताध्यानकाले तु प्लुतं कुर्य्यान्न संशयः । तैलधारावदच्छिन्नं दीर्घघण्टानिनादवत् । अप्लुतं प्रणवस्यान्तं यस्तं वेद स वेदवित् । आद्यं तत्राक्षरं ब्रह्म त्रयी यत्र प्रतिष्ठिता । स गुह्योऽन्यस्त्रिवृद्वेदोयोवेदैनं स वेदवित् । छन्दोगपरिशिष्टम् "स्वरितोदात्त एकाक्षर ओङ्कार ऋग्वेदे, त्रैस्वर्य्योदात्तओङ्कारोयजुर्वेदे, दीर्घोदात्तएकाक्षरः सामवेदे, संक्षिप्तोदात्तएकाक्षर ओङ्कारः अथर्व्ववेदे" बौधायनः "अपि वा प्रणवेन त्रिरन्तर्जले पठन् सर्व्वस्मात् पापात् प्रमुच्यते" । दक्षः "स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् । ध्याननिर्म्मन्थनाद्विष्णुं पश्येदात्मनिगूढ-

वत् । गीता “ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन् देहं स याति परमाङ्गतिम्” ।
ओङ्कारस्य मात्राविशेषाभिध्यानफलम् प्रश्नोप निरूपितं यथा

“एतद्वै सत्यकाम ! परञ्चापरञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति । स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति । अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते । स सोमलोकं, स सोमलोके विभूतिमनुभूय पुनरावर्त्तते । यः पुनरेतन्त्रिमात्रेणैवोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्य्ये सम्पन्नः । यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः । “तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः । क्रियासु बाह्यान्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः । ऋग्भिरेतं, यजुर्भिरन्तरिक्षं, स सामभिर्यत्तत्कवयो वेदयन्ते । तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चेति” उ० ।

“एतद्ब्रह्म वै परञ्चापरञ्च ब्रह्म परं सत्यमक्षरं पुरुषाख्यमपरञ्च प्राणाख्यं प्रथमजं यत्तदोङ्कार एवोङ्कारात्मकमोङ्कारप्रतीकत्वात् । परं हि ब्रह्मशब्दाद्युपलक्षणानर्हं सर्वधर्मविशेषवर्जितमतो न शक्यमतीन्द्रियगोचरत्वात्केवलेन मनसाऽवगाहितुमोङ्कारे तु विष्ण्वादिप्रतीमास्थानीये भक्त्यावेशितब्रह्मभावे ध्यायिनां तत्प्रसीदतीत्यवगम्यते शास्त्रप्रामाण्यात् । तथाऽपरञ्च ब्रह्म । तस्मात्परञ्चापरञ्च ब्रह्म यदोङ्कार इत्युपचर्य्यते । तस्मादेवं विद्वानेतेनैवात्मप्राप्तिसाधनेनैव ओङ्काराभिध्यानेनैकतरं परमपरमन्वेति ब्रह्मानुगच्छति नेदिष्ठं ह्यालम्बनमोङ्कारो ब्रह्मणः । स यद्यप्योङ्कारस्य सकलमात्राविभागज्ञो न भवति तथाप्योङ्काराभिध्यानप्रभावाद्विशिष्टामेव गतिं गच्छति किन्तर्हि यद्यप्येवमोङ्कारमेकमात्राविभागज्ञ एव केवलोऽभिध्यायीतैकमात्रं सदा ध्यायीत स तेनैव मात्राविशिष्टोङ्काराभिध्यानेनैव संवेदितः सम्बोधितस्तूर्णं क्षिप्रमेव जगत्यां पृथिव्यामभिसम्पद्यते किं मनुष्यलोकमनेकानि जन्मानि जगत्यां तत्र तं साधकं जगत्यां मनुष्यलोकमेवोपनयन्ते उपनिनयन्ति ऋचः ऋग्वेदरूपा ह्योङ्कारस्य प्रथमा एका मात्रा । तदभिध्यानेन स मनुष्यजन्मनि द्विजाग्र्यः सन् तपसा ब्रह्मचर्य्येण श्रद्धया च सम्पन्नो महिमानं विभूतिमनुभवति न वीतश्रद्धो यथेष्टचेष्टो भवति योगभ्रष्टः कदाचिदपि न दुर्गतिं गच्छति । अथ पुनर्यदि द्विमात्राविभागज्ञो द्विमात्रेण विशिष्टमोङ्कारमभिध्यायीत स्वप्नात्मके मनसि मननीये यजुर्मये सोमदैवत्ये सम्पद्यते एकात्मतयात्मभावं गच्छति स एवं सम्पन्नो मृतोऽन्तरिक्षाधारं द्वितीयरूपं द्वितीयमात्रारूपैरेव यजुर्भिरुन्नीयते सोमलोकं सौम्यं जन्म प्रापयन्ति तं यजूंषीत्यर्थः । स तत्र विभूतिमनुभूय सोमलोके मनुष्यलोकं प्रति पुनरावर्त्तते । यः पुनरेतमोङ्कारं त्रिमात्रेण त्रिमात्राविषयविज्ञानविशिष्टेनोमित्येतेनैवाक्षरेण प्रतीकेन परं सूर्य्यान्तर्गतं पुरुषमभिध्यायीत तेनाभिध्यानेन प्रतीकत्वेन त्वालम्बनत्वं प्रकृतमोङ्कारस्य, परञ्चापरञ्च ब्रह्मेति भेदाभेदश्रुतेरोङ्कारमिति च द्वितीयानेकशः श्रुता बाध्येत अन्यथा यद्यपि तृतीयाभिधानत्वेन करणत्वमुपपद्यते तथापि प्रकृतानुरोधात्त्रिमात्रं परं पुरुषमिति द्वितीयैव परिणम्या । “त्र्यक्षरेकं कुलस्यार्थे” इति न्यायेन । स तृतीयो मात्रारूपस्तेजसि सूर्य्ये सम्पन्नो भवति ध्यायमानो मृतोऽपि सूर्य्यात् सोमलोकादिवन्न पुनरावर्त्तते किन्तु सूर्य्ये सम्पन्नमात्र एव । यथा पादोदरः सर्पस्त्वचा विनिर्मुच्यते जीर्णत्वग्विनिर्मुक्तः स पुनर्नवो भवति । एवं ह वै एष यथा दृष्टान्तः स पाप्मना सर्पत्वक्स्थानीयेनाशुद्धिरूपेण विनिर्मुक्तः सामभिस्तृतीयमात्रारूपैरूर्द्ध्वमुन्नीयते ब्रह्मलोकं हिरण्यगर्भस्य ब्रह्मणो लोकं सत्याख्यम् । स हिरण्यगर्भः सर्वेषां संसारिणां जीवानामात्मभूतः स ह्यन्तरात्मा लिङ्गरूपेण सर्वभूतानां तस्मिन् लिङ्गात्मनि संहताः सर्वे जीवाः । तस्मात्स जीवघनः स विद्वांस्त्रिमात्रोङ्काराभिज्ञः । एतस्माज्जीवघनाद्धिरण्यगर्भात् परात्परं परमात्माख्यं पुरुषमीक्षते । पुरिशयं सर्वशरीरानुप्रविष्टं पश्यति ध्यायमानः । तदेतावस्मिन्यथोक्तार्थप्रकाशकौ मन्त्रौ भवतः । तिस्रस्त्रिसङ्ख्याका अकारोकारमकाराख्या ओङ्कारस्य मात्राः । मृत्युर्यासां विद्यते ता मृत्युमत्यः मृत्युगोचरादनतिक्रान्ता मृत्युगोचरा एवेत्यर्थः । ता आत्मनो ध्यानक्रियासु प्रयुक्ताः । किञ्चान्योन्यसक्ता इतरेतरसम्बद्धाः । अनविप्रयुक्ता विशेषेणैकैकविषय एव प्रयुक्ताः । तथा न विप्रयुक्ता अविप्रयुक्ता नाविप्रयुक्ता अनविप्रयुक्ताः

किन्तर्हि विशेषेणैकस्मिन् ध्यानकालेऽतिशयेन क्रियासु बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तस्थानपुरुषाभिध्यानलक्षणासु योगक्रियासु सम्यक्प्रयुक्तासु सम्यग्ध्यानकाले प्रयोजितासु न कम्पते न चलति यः स योगी यथोक्तविभागज्ञ ओङ्कारस्येत्यर्थः । न तस्यैवंविदश्चलनमुपपद्यते । यस्माज्जाग्रत्स्वप्नसुषुप्तपुरुषाः सह स्थानैर्मात्रात्रयरूपेणोङ्काररूपेण दृष्टाः । स ह्येवं विद्वान् सर्वात्मभूत ओङ्कारमयः कुतो वा चलेत्कस्मिन् वा । सर्वार्थसङ्ग्रहार्थो द्वितीयो मन्त्रः । ऋग्भिरेतं लोकं मनुष्योपलक्षितम् । यजुर्भिरन्तरिक्षं सोमाधिष्ठितम् । सामभिर्यत्तद्ब्रह्मलोकमिति तृतीयं कवयो मेधाविनो विद्यावन्त एव नाविद्वांसो वेदयन्ते । तं त्रिविधलोकमोङ्कारेण साधनेनापरब्रह्मलक्षणमन्वेत्यनुगच्छति विद्वान् । तेनैवोङ्कारेण यत्तत्परं ब्रह्माक्षरं सत्यं पुरुषाख्यं शान्तं विमुक्तं जाग्रत्स्वप्नसुषुप्त्यादिविशेषसर्वप्रपञ्चविवर्जितमत एवाऽजरं जरावर्जितममृतं मृत्युवर्जितमेव । यस्माज्जराविक्रियादिरहितमतोऽभयम् । यस्मादेवाभयं तस्मात्परं निरतिशयम् । तदप्योङ्कारेणायतनेन गमनसाधनेनान्वेतीत्यर्थः" भा० ।

स च सामान्यविभेदः ब्रह्मवाचकः आत्मबोधकाक्षररूपश्च तदेतत् छा० उप० भाष्ययोर्दर्शितं यथा ।

"ओमित्येतदक्षरमुद्गीथमुपासीत" छा० उ० ॥

"ओमित्येतदक्षरमुपासीत । ओमित्येतदक्षरम् । परमात्मनोऽभिधानं नेदिष्ठम् । तस्मिन् हि प्रयुज्यमाने स प्रसीदति प्रियनामग्रहण इव लोकः । तदिहेति परं प्रयुक्तमभिधायकत्वाद्व्यावर्तितं शब्दस्वरूपमात्रं प्रतीयते । तथाचार्चादिवत्परस्यात्मनः प्रतीकं सम्पद्यते ।

एवं नामत्वेन प्रतीकत्वेन च परमात्मोपासनसाधनं श्रेष्ठमिति सर्ववेदान्तेष्ववगतम् । जपकर्मस्वाध्यायाद्यन्तेषु बहुशः प्रयोगात्प्रसिद्धमस्य श्रैष्ठ्यम् । अतस्तदेतदक्षरं वर्णात्मकमुद्गीथभक्त्यवयवत्वादुद्गीथशब्दवाच्यमुपासीत । कर्माङ्गावयवभूते ओङ्कारे परमात्मप्रतीके दृढामैकाग्र्यलक्षणां मतिं सन्तनुयात्" भा० ।

"ओमिति ह्युद्गायति तस्योपव्याख्यानम् । एषां भूतानां पृथिवी रसः पृथिव्या आपो रसः । अपामोषधयो रस ओषधीनां पुरुषो रसः, पुरुषस्य वाग्रसो वाच ऋग्रस, ऋचः साम रसः, साम्न उद्गीथो रसः । स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः । कतमा कतमर्क्, कतमत्कतमत्साम, कतमः कतम उद्गीथ इति विमृष्टं भवति । वागेवर्क्, प्राणः साम, ओमित्येतदक्षरमुद्गीथः, तद्वा एतन्मिथुनं यद्वाक्च प्राणश्चर्क् च साम च । तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् । आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते । तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदाह एषो समृद्धिर्यदनुज्ञा, समर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते । तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन" उप० ।

"स्वयमेव श्रुतिरोङ्कारस्योद्गीथशब्दवाच्यत्वे हेतुमाह । ओमिति ह्युद्गायति । ओमित्यारभ्य हि यस्मादुद्गायति अत उद्गीथ ओङ्कार इत्यर्थः । तस्याक्षरस्योपव्याख्यानमेवमुपासनमेवं विभूत्येवं फलमित्यादिकथनमुपव्याख्यानम् । प्रवर्तत इति वाक्यशेषः । एषां चराचराणां भूतानां पृथिवी रसो गतिः परायणमवष्टम्भः । पृथिव्या आपो रसोऽप्सु ह्योता च प्रोता च पृथिव्यतस्ता रसः पृथिव्याः । अपामोषधयो रसोऽप्परिणामत्वादोषधीनाम् । तासां पुरुषो रसोऽन्नपरिणामत्वात्पुरुषस्य । तत्रापि पुरुषस्य वाग्रसः । पुरुषावयवानां हि वाक् सारिष्ठा । अतो वाक् पुरुषस्य रस उच्यते । तस्या अपि वाच ऋग्रसः सारतरा । ऋचः साम रसः सारतरम् । तस्यापि साम्न उद्गीथः प्रकृतत्वादोङ्कारः सारतरः । एवं स एष उद्गीथाख्य ओङ्कारो भूतादीनामुत्तरोत्तररसानामतिशयेन रसो रसतमः परमात्मप्रतीकत्वात् परार्ध्यः अर्धं स्थानं परञ्च तदर्धञ्च तदर्हतीति परार्ध्यः परमात्मस्थानार्हः परमात्मवदुपास्यत्वादित्यभिप्रायः । अष्टमः पृथिव्यादिरससङ्ख्यायां यदुद्गीथः स उद्गीथः । वाच ऋग्रस इत्युक्तम् कतमा सा ऋक् कतमत्तत्साम कतमो वा स उद्गीथः । कतमा कतमेति वीप्साऽऽदरार्था । ननु 'वा बहूनां जातिपरिप्रश्ने डतमच्' पा० इति स्मरणात् ऋग्जातिबहुत्वं कथं डतमच्प्रत्ययः । नैष दोषो जातौ परिप्रश्नो जातिपरिप्रश्न इत्येतस्मिन् विग्रहे जातावृग्व्यक्तीनां बहुत्वोपपत्तेः । न तु जातेः परिप्रश्न इति विगृह्यते । ननु जातेः परिप्रश्न इत्यस्मिन्विग्रहे कतमः कठ इत्याद्युदाहरणमुपपन्नं जातौ परिप्रश्न इत्यत्र तु न युज्यते । तत्रापि कठादिजातावेव व्यक्तिबहुत्वाभिप्रायेण परिप्रश्न इत्यदोषः । यदि जातेः परिप्रश्नः स्यात् कतमा

कतमा ऋगित्यादौ उपसङ्ख्यानं कर्त्तव्यम् स्यात्। विकृष्टं भवति विमर्शः कृतो भवति। विमर्शे हि कृते सति प्रतिवचनोक्तिरुपपन्ना वागवर्क् प्राणः सामेति। वाग्ऋचोरेकत्वेऽपि नाष्टमत्वव्याघातः पूर्व्वस्माद्वाक्यान्तरत्वादाप्तिगुणसिद्धये ओमित्येतदक्षरमुद्गीथ इति वाक् प्राणाटृक्सामयोनी इति वागेवर्क् प्राणः सामेत्युच्यते। यथाक्रममृक्सामयोर्व्वाक्प्राणयोर्ग्रहणे हि सर्व्वासामृचां सर्व्वेषाञ्च साम्नामवरोधः कृतः स्यात्। सर्वर्क्सामावरोधे चर्क्सामसाध्यानां च सर्वकर्म्मणामवरोधः कृतः स्यात्। तदवरोधे च सर्वे कामा अवरुद्धाः स्युः। ओमित्येतदक्षरमुद्गीथ इति भक्त्याशङ्का निवर्त्त्यते। तद्वैतदिति मिथुनं निर्दिश्यते। किन्तन्मिथुनमित्याह यद्वाक् च प्राणश्च सर्वर्क्सामकारणभूतौ मिथुनम् ऋक् च साम चेति ऋक्सामकारणौ ऋक्सामशब्दोक्तावित्यर्थः। न तु स्वतन्त्रम् ऋक् च साम च मिथुनम्। अन्यथा हि वाक् च प्राणश्चेत्येकमिथुनमृक्साम चापरं मिथुनमिति द्वे मिथुने स्याताम् तथा च तदेतन्मिथुनमित्येकवचननिर्द्देशोऽनुपपन्नः स्यात्। तस्मादृक्सामयोन्योर्वाक्प्राणयोरेव मिथुनत्वम्। तदेतदेवंलक्षणं मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते। एवं सर्वकामावाप्तिगुणविशिष्टं मिथुनमोङ्कारे संसृष्टं विद्यत इत्योङ्कारस्य सर्वकामावाप्तिगुणवत्त्वं प्रसिद्धम्। वाङ्मयत्वमोङ्कारस्य प्राणनिष्पाद्यत्वञ्च मिथुनेन संसृष्टत्वं मिथुनस्य कामापयितृत्वं प्रसिद्धमिति दृष्टान्त उच्यते। यथा लोके मिथुनौ मिथुनावयवौ स्त्रीपुमांसौ यदा समागच्छतो ग्राम्यधर्म्मतया संयुज्येयातां तदाऽऽपयतः प्रापयतोऽन्योन्यस्येतरेतरस्य तौ कामम्। तथा च स्वात्मानुप्रविष्टेन मिथुनेन सर्वकामाप्तिगुणवत्त्वमोङ्कारस्य सिद्धमित्यभिप्रायः। तदुपासकोऽप्युद्गाता तद्धर्म्मा भवतीत्याह आपयिता ह वै कामानां यजमानस्य भवति य एतदक्षरमेवाप्तिगुणवदुद्गीथमुपास्ते तस्यैतद्यथोक्तं फलमित्यर्थः। "तं यथा यथोपासते तदेव भवतीति" श्रुतेः। समृद्धिमांश्चोङ्कारः कथं? तद्वा एतत्प्रकृतमनुज्ञाक्षरमनुज्ञा च साक्षरञ्च तत् अनुज्ञानुमतिरोङ्कार इत्यर्थः। कथमनुज्ञेत्याह श्रुतिरेव। यद्धि किञ्च यत्किञ्च लोके ज्ञानं धनं वानुजानाति विद्वान्धनो वा तत्रानुमतिं कुर्वन्नोमित्येव तदाह। तथा च वेदे यत्र देवास्त्रयस्त्रिंशदित्योमिति होवाचेत्यादि। तथा च लोकेऽपि तवेदं धनं गृह्णामि इत्युक्त ओमित्याह। अत एषा उ एषैव समृद्धिर्यदनुज्ञा या अनुज्ञा सा समृद्धिस्तन्मूलत्वादनुज्ञायाः समृद्धो ह्योमित्यनुज्ञां ददाति तस्मात्समृद्धिगुणवानोङ्कार इत्यर्थः। समृद्धिगुणोपासकत्वात्तद्धर्म्मा समर्द्धयिता ह वै कामानां यजमानस्य भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते इत्यादि पूर्ववत्। अथेदानीमक्षरं स्तौति उपास्यत्वात्प्ररोचनार्थम्। कथं? तेनाक्षरेण प्रकृतेनेयमृग्वेदादिलक्षणा त्रयी विद्या विहितं कर्म्मेत्यर्थः। नहि त्रयी विद्यैवाश्रावणादिभिर्वर्त्तते कर्म्म तु तथा प्रवर्त्तत इति प्रसिद्धम्। कथमोमित्याश्रावयत्योमिति शंसत्योमित्युद्गायतीति लिङ्गाच्च सोमयाग इति गम्यते तच्च कर्म्म एतस्यैवाक्षरस्यापचित्यै पूजार्थम्। परमात्मप्रतीकं हि तत्। तदपचितिः परमात्मन एव सा। "स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति स्मृतेः। महिम्ना रसेन किञ्चैतस्यैवाक्षरस्य महिम्ना महत्त्वेन ऋत्विग्यजमानादिप्राणैरित्यर्थः" भा०।

ओम्शब्दस्य मङ्गलं तु नार्थः किन्तु मङ्गलसाधनत्वं प्रयोगे भवतीत्येतमर्थमभिसन्धाय तदुत्कीर्त्तनम् अथशब्दवत्। अतएव "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ" इत्यत्र ओङ्कारस्य माङ्गलिकत्वमुक्तम् तथाचार्य्यान्तरे प्रयुक्तावथोङ्कारशब्दौ श्रुत्वा अभिप्रेतार्थसिद्धिरूपमङ्गलं जनयत इत्याकरे दृश्यम्। "अवर्णात्ओम् शब्दस्यादेः पररूपैकादेशः ओम्+कृ–घञ्। ओमित्यस्य करणं ओङ्कार क्त। ओङ्कृत अङ्गीकृते ओमित्यादावङ्गीकारयुक्ते च त्रि०। स्वत्वनोङ्कृतं सर्व्वं मनुः।

**ओमन्** पु० अव–मनिन् ऊठ् गुणः। अवने रक्षणे "प्र सम्मोमना वा यो गात्" ऋ० ७,६८,४। "ओमनाऽवनेन रक्षणेन" भा० "यो वामोमानं दधते प्रियः सन्" ७,६८,५। "ओमानं रक्षणम्" भा०। "विश्वेभिर्ग्मन्त्वोमभिर्हुवान" ऋ० ५,४३,१२। "ओमभिः रक्षणैः" भा०। ओमाविद्यतेऽस्य मतुप् मस्य वः नि० नलोपः। ओमन्वत् ओमयुक्ते रक्षके "ओमन्वन्तं चक्रथुः सप्तवध्रये" ऋ०१०,३९,९। "ओमन्वन्तं रक्षणवन्तम्" भा०ओम्ना त्रायते त्रै क नलोपदीर्घौ। ओमात्र अवनेन त्राणकर्त्तरि त्रि०। "त ओमात्रां रुद्रयोविदुः" ५,०,५,ओमनि हितम् यत् टिलोपः। ओम्य रक्षणहिते त्रि० "वसूनां रातौ स्याम रुद्राणामोम्यायाम्" सांख्या०

ऋ० सू० १,६,२। ततोऽस्त्यर्थे मतुप् पूर्व्वस्य दीर्घः ओम्यावत् तद्युक्ते त्रि०। "तम्रधर्म्ममोम्यावन्तमतये" ऋ०१,११२,७

**ओल** पु० ओनत्ति आ+उन्द्–क नलोपे पृषो० दस्य लत्वम्। १सूरणे (ओल) इति ख्याते कन्दे। २आर्द्रे–त्रि० (भिजा) त्रिका०। ओलस्य गुणाः भावप्र० "सूरणः कन्दओलस्य कन्दलोऽर्शोघ्न इत्यपि। सूरणोदीपनोरूक्षः कषायः कण्डूकृत् कटुः। विष्टम्भी विशदोरुच्यः कफार्शःकृन्तनोलघुः। विशेषादर्शसे पथ्यः प्लीहागुल्मविनाशनः। सर्वेषां कन्दशाकानां सूरणः श्रेष्ठ उच्यते। दद्रूणां रक्तपित्तानां कुष्ठानां न हितो हि सः। सन्धानयोगं सम्प्राप्तः सूरणोगुणवत्तरः" उक्ताः।

**ओलज** उत्क्षेपे इदित् भ्वा०पर०सक०सेट्। ओलञ्जति औलञ्जीत्। ओलञ्जाम्–बभूव आस चकार।

**ओलड** क्षेपे इदित् वा चुरा०उभ० पक्षे भ्वादि० पर०सक० सेट्। ओलण्डयति ते औलिलण्डत् त ओलण्डयाम् बभूव आस चकार चक्रे। पक्षे ओलण्डति औलण्डीत् ओलण्डाम् बभूव आस चकार।

**ओल्ल** पु० ओल+पृषो०। ओले सूरणे राजनि०।

**ओष** पु० उष–घञ्। १दाहे। "अग्निक्षाराभ्यामोषचोषपरीदाहाश्च भवन्ति"। "वैवर्ण्यतोदसुप्तत्वगुरुत्वौषसमन्वितौ" "तेषां चतुर्णामप्योषचोषपरीदाहधूमायनानि क्षिप्रोत्थान प्रपाकभेदित्वानि कृमिजन्म च सामान्यानि लिङ्गानि" सुश्रु०। २पाके च व्योषः ३क्षिप्रे न०निघ०।

**ओषण** पु०उष–ल्यु। कटुरसे (झाल) इति ख्याते १रसभेदे। गौ०ङीष्। ओषणी (पुडिया) २शाकभेदे स्त्री। "ओषणी कफवातनुत्" राजवल्लभः।

**ओषधि(धी)** स्त्री ओषः पाको धीयतेऽत्र ओष+धा–कि जातिविषयत्वाद् स्त्रीत्वे वा ङीष् ओषधी च। फलपाकान्ते व्रीहियवादौ स्थावरभेदे। ओषधिश्च स्थावरभेदो यथाह सुश्रुतः "तासां स्थावराश्चतुर्विधाः वनस्पतयो वृक्षा वीरुध ओषधयः। तास्वपुष्पाः फलवन्तो वनस्पतयः। पुष्पफलवन्तो वृक्षाः प्रतानवत्यः स्तम्बिन्यश्च वीरुधः। फलपाकान्ता ओषधयः" मनुरप्याह "उद्भिज्जाः स्थावराः सर्वे वीजकाण्डप्ररोहिणः। ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः। अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः। पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः। गुच्छगुल्मं तु विविधं तथैव तृणजातयः। वीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च। तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना। अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः"। ओषधीनामुत्पत्तिः तन्निर्वचनञ्च" 'तां (आहुतिम्) हैनां नाभिराधयांचकार केशमिश्रेव हास तां व्यौक्षदोषं धयेति तत ओषधयः समभवंस्तस्मादोषधयो नाम' शत०ब्रा० २,२,३,५ दर्शितम्। "ताञ्चाहुतिं तस्मिन्नग्नौ व्यौक्षत् अत्यजत् इदमाहुतिद्रव्यम् ओषं पक्वं कृत्वा धय पिबेति अग्नौ प्रक्षिप्तात्तस्मादोषधयः पृथिव्यां समभवन्" भा०। निरु० "या ओषधीः पूर्वजाताः" इत्येतामृचमधिकृत्य अन्याऽपि निरुक्तिर्दर्शिता "ओषधय ओषं धयन्तीति वौषत्येनाधयतीति वा दोषं धयन्तीति वा"। सर्वत्र पृषो०। भाग०३,१०अ० स्थावराणां षड्भेदा उक्ताः यथा "सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां चयः। वनस्पत्योषधिलतात्वक्सारा वीरुधोद्रुमाः। उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशेषिणः" १८,२०,श्लो०। "मुखमेव मुख्यः प्रथमः मुख्यसर्गः तस्थुषां स्थावराणाम्। षडविधत्वमेवाह ये पुष्पं विना फलन्ति ते वनस्पतयः,१ ओषधयः फलपाकान्ताः२, लता आरोहणापेक्षाः३ त्वक्सारा वेण्वादयः४ लता एव काठिन्येनारोहणानपेक्षा वीरुधः,५ ये पुष्पैः फलन्ति ते द्रुमाः६ तेषां साधारणलक्षणमाह ऊर्द्ध्वं स्रोत आहारसञ्चारो येषां ते तमःप्रधाना अव्यक्तचैतन्या अन्तःस्पर्शमेव जानन्ति नान्यत् तदप्यन्तरेव न बहिः, विशेषिणः अव्यवस्थितपरिणामाद्यनेकभेदवन्तः" श्रीधरः। तत्र भैषज्योपयोगिनोः कतिचिदोषधीः सुश्रुतो लक्षणसहिता दर्शयामास यथा "अथ वक्ष्यामि विज्ञानमोषधीनां पृथक् पृथक्। मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चपर्णिनी। पञ्चारत्निप्रमाणा या विज्ञेयाऽजगरी१ बुधैः। निष्पत्रा कनकाभासा मूले द्व्यङ्गुलसम्मिता। सर्पाकारा लोहितान्ता श्वेतकापोति२ रुच्यते। द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलाम्। द्व्यरत्निमात्रां जानीयाद्गोनसीं ३गोनसाकृतिम्। सक्षीरां रोमशां मृद्वीं रसेनेक्षुरसोपमाम्। एवंरूपरसाञ्चापि कृष्णकापोति४-मादिशेत्। कृष्णसर्पस्वरूपेण वाराही५ कन्दसम्भवा। एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा। छत्रातिच्छत्रके६,७ विद्याद्रक्षोघ्ने कन्दसम्भवे। जरामृत्युनिवारिण्यौ श्वेतकापोतिसंस्थिते। कान्तैर्द्वादशभिः पत्रैर्म्मयूराङ्गरुहोपमैः। कन्दजा काञ्चनक्षीरी कन्या ८ नाम महौषधी। करेणुः ९ सुबहुक्षीरा कन्देन गजरूपिणी। हस्तिकर्ण-

पलाशस्य तुल्यपर्णा द्विपर्णिनी। अजाख्ननाभकन्दा तु सक्षीरा क्षुपरूपिणी। अजा १०महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा। श्वेतां विचित्रकुसुमां काकादन्या समां क्षुपाम्। चक्रका ११मोषधीं विद्याज्जरामृत्युनिवारिणीम्। मूलिनी पञ्चभिः पत्रैः सुरक्ताङ्गुलकोमलैः। आदित्यपर्णिनी १२ज्ञेया सदादित्यानुवर्त्तिनी। कनकाभा जलान्तेषु सर्वतः परिसर्पति। सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला १३। अरत्निमात्रक्षुपका पत्रैरङ्गुलसम्मितैः। पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः। श्रावणी१४महती ज्ञेया कनकाभा पयस्विनी। श्रावणीपाण्डुराभासा महाश्रावणिलक्षणा। गोलोमी१५चाजलोमी १६च रोमशे कन्दसम्भवे। हंसपादी१७च विच्छिन्नैः पत्रैर्मूलसमुद्भवैः अथवा शङ्खपुष्पी च १८समाना सर्वरूपतः। वेगेन महताविष्टा सर्पनिर्म्मोकसन्निभा। एषा वेगवती १९नाम जायते ह्यम्बुदक्षये। सप्तादौ सर्वरूपिण्यो याश्चौषध्यः प्रकीर्त्तिताः। तासामुद्धरणं कार्य्यं मन्त्रेणानेन सर्वदा। महेन्द्रामकृष्णानां वारणानां गवामपि। तपसा तेजसा वापि प्रशाम्यध्वं शिवाय वै। मन्त्रेणानेन मतिमान् सर्व्वानप्यभिमन्त्रयेत्। अश्रद्दधानैरलसैः कृतघ्नैः पापकर्म्मभिः। नैवासादयितुं शक्याः सोमाः २०सोमसमास्तथा। पीतावशेषममृतं देवैर्ब्रह्मपुरोगमैः। निहितं सोमवीर्य्यासु सोमे चाप्यौषधीपतौ। देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे। दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्चला; आदित्यपर्णिनी ज्ञेया तथैव हि हिमक्षये। दृश्यतेऽजगरी नित्यं गोनसी चाम्बुदागमे। काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम्। करेणुस्तत्र कन्या च छत्रातिच्छत्रके तथा। गोलोमी चाजलोमी च महती श्रावणी तथा। वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते। कौशिकीं सरितं तीर्त्त्वा सञ्जयन्त्यास्तु पूर्व्वतः। क्षितिप्रदेशो वल्मीकैराचितो योजनत्रयम्। विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु। मलये नलसेतौ च वेगवत्योषधी ध्रुवा। कार्त्तिक्यां पौर्णमास्याञ्च भक्षयेत्तामुपोषितः। सोमवत्तात्र वर्त्तेत फलं तावच्च कीर्त्तितम्। सर्वा विचेयास्त्वौषध्यः सोमे चाप्यर्बुदे गिरौ। सष्टङ्कैर्देवचरितैरम्बुदानीकभेदिभिः। व्याप्तश्चोर्वैश्च विख्यातैः सिद्धर्षिसुरसेवितैः। गुहाभिर्भीमरूपाभिः सिंहनादितकुक्षिभिः। गजालोडित तोयाभिरामगाभिः समन्ततः। विविधैर्धातुभिश्चित्रैः सर्वत्रैवोपशोभितः। नदीषु शैलेषु सरःसु वापि पुण्येष्वरण्येषु तथाश्रमेषु। सर्वत्र सर्वाः परिमार्गितव्याः सर्वत्र भूमिर्हि वसूनि धत्ते”। शालिवाप्रभृत्योषधीनां लक्षणादिकं भावप्र० दर्शितं तत्तच्छब्दे उक्तं यथास्थानं वक्ष्यते च। वैदिककर्म्मोपयोगिन्य ओषधयो ग्राम्यारण्यभेदेन चतुर्दशविधाः यथा “तिलमाषव्रीहियवाः प्रियङ्गवो गोधूमाश्चेति सप्त ग्राम्याः ओषधयः। वेणुश्यामाक नीवारजर्त्तिला गवेधुका मर्कटका गार्मुताश्चेति सप्त आरण्याः ओषधयः” इति तैत्तरीयसंभाष्ये ४र्थ काण्डे ५प्रपाठके ६अनुवाके। “अथौषधीनामधिपस्य वृद्धौ” “महौषधीं नक्तमिवात्मभासः” कुमा० “भोगीव मन्त्रौषधिरुद्धवीर्य्यः”। “नवोदयं नाथमिवौषधीनाम्” रघुः। ओषधीनामृतुभेदे गुणविशेषा ऋतुशब्दे १४२५पृ०उक्ताः। २देवपत्नीश्च। “देवानां हैतामग्ने पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद्दधु-स्ताभिरेवैनामेतद्दधाति ता है ता ओषधय एवौषधयो वै देवानां पत्न्य ओषधिभिर्हीदं सर्वं हितमोषधिभिरेवैनामेतद्दधाति” शत०ब्रा० ६,५,४,४।

**ओषधिगर्भ** पु० ओषधीनां गर्भ उत्पत्तिर्यस्मात्। १चन्द्रे तत्किरणसम्पर्कादोषधीनामुत्पत्तेस्तस्य तथात्वम्। २सूर्य्ये च। तस्य च वृष्टिद्वारा ओषधीगर्भधायकत्वात् “अपां गर्भं दर्शतमोषधीनाम्” ऋ० १,१६४,५२ मन्त्रे सूर्य्यस्यौषधीगर्भाधायकत्वोक्तेस्य तथात्वम्।

**ओषधिज** त्रि० ओषधिभ्यो जायते जन+ड ५व०। ओषधीजाते १औषधे २तज्जाते वह्नौ पु०। “ज्वलयतौषधिजेन वह्निना” माघः।

**ओषधिपति** पु०६त०। चन्द्रे तस्य किरणैरोषधीनामाप्यायनात् “अमायां तु सदा सोम ओषधीः प्रतिपद्यते। तमोषधिगतं गावःपिबन्त्यम्बुगतवत् तथा” कालमा० सोमोत्पत्तिवाक्याच्च तथात्वम् “अपभागमोषधिपतिः स करैः”। माघः ओषधीनाथौषधीपादयोऽप्यत्र। २कर्पूरे ३सोमलतायाञ्च। यथा च चन्द्रस्यौषधिपतित्वं तथा हरिवं० २५अ०अत्रेः सोमोत्पत्तिमुपवर्ण्य उक्तं यथा “तस्य यच्च्यावितं तेजः पृथिवीमन्वपद्यत। ओषध्यस्ताः समुत्पन्नास्तेजसा प्रज्वलन्त्युत। ताभिर्धार्य्यास्त्रयोलोकाः प्रजाश्चैव चतुर्विधाः। पोष्टा हि भगवान् सोमो जगतां जगतीपते!। स लब्धतेजा भगवान् संस्तवैस्तैश्च कर्म्मभिः। तपस्तेपे महाभागः पद्मानां दशतीर्दश। हिरण्यवर्णा यादेव्यो धारयन्त्यात्मना जगत्। विभुस्तासामभूत्

देवः प्रख्यातः स्वेन कर्मणा । ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः । बीजौषधीनां विप्राणामपाञ्च जनमेजय ! । सोऽभिषिक्तो महाराज राज्येन द्विजराजराट् । लोकान् भासयामास स्वभासा भास्वतां वरः" । काशीख०१४अ० सोमोत्पत्तिप्रक्रमे । "तस्य यत् स्रावितं तेजः पृथिवीमन्वपद्यत । तेनौषध्यः समुद्भूता याभिः संधार्यते जगत् । स लब्धतेजा भगवान् ब्रह्मणा वर्द्धितः स्वयम् । तपस्तेपे महाभागः पद्मानां दशतीर्दश । अविमुक्तं समासाद्य क्षेत्रं परमपावनम् । संस्थाप्य लिङ्गममृतं चन्द्रेशाख्यं स्वनामतः । बीजौषधीनां तोयानां राजाऽभूद्यजन्मनाम् । प्रसादाद्देवदेवस्य विश्वेशस्य पिनाकिनः । तुष्टेन देवदेवेन स्वमौलौ यो धृतः सदा । आदाय तां कलामेकां जगत् संजीवनीं पराम् । पक्षाद्वक्षेष शशोऽपि मासान्ते क्षयमाप्य च । आप्याय्यतेऽसौ कलया पुनरेव यया शशी" ।

**ओषधिप्रस्थ** पु०ओषधियुक्तं प्रस्थमत्र । हिमालयराजधान्याम् "तत् प्रयातौषधीप्रस्थं स्थितये हिमवत्पुरम्" "आसे दुरोषधिप्रस्थम्" "दुश्चौषधिप्रस्थविलासिनीनाम्" कुमा० ।

**ओषम्** अव्य० उष-णमुल् । अभीक्ष्ण्ये पक्षेऽर्थे 'ओषं-घसेति' शत०ब्रा०वाक्यम् ओषधिशब्दे दर्शितम् ।

**ओषिष्ठ** त्रि० उष-दाहे णिनि अतिशयेन ओषी इष्ठन् डि-द्वत्वात् टिलोपः । दाहकतरे "ओषिष्ठहनं शिनिकशा-ख्याम्" तैत्ति० १,४,२६,१ ।

**ओष्ट्राविन्** त्रि० उष+करणे ष्ट्रन् तदस्यास्ति विनि । "छन्दो-विन् करणे ओष्ट्र मेखलादिति" वार्त्ति० दीर्घः । दाह-करणयुक्ते । "पुनरोष्ट्राविन्यचत" श्रुतिः सि०कौ० ।

**ओष्ठ** पु० उष्यते उष्णाहारेण उष-कर्मणि थन् । (ओठ) दशनच्छदे । "अवनिष्ठीवतो दर्पाद् द्वावोष्ठौ छेदयेत् नृपः" मनुः । निरुपपदोष्ठशब्दश्च प्रायेण उत्तरोष्ठएव कविभिः प्रयुज्यते । "ताम्रौष्ठपर्यस्तरुचः स्मितस्य"कुमा० । 'ओष्ठेन रामो रामौष्ठबिम्बचुम्बनचुञ्चुना"माघः । उपपदे तूभयतः "उमामुखे बिम्बफलाधरौष्ठे" कुमा० । अधरौष्ठ उत्तरोष्ठ इत्यादि । "यस्याधरौष्ठः पतितः क्षिप्तश्चोर्द्धं तथोत्तरः । उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम्" सुश्रुतः । ओष्ठस्य स्वाङ्गत्वात् संयोगोपधत्वेऽपि उपसर्ज्जने स्त्रियां वा ङीष् । "बिम्बोष्ठी चारुनेत्रा गजपतिगमना दीर्घकेशी सुमध्या" महाना० । समासे उत्तरपदस्थेऽस्मिन् पूर्वस्यावर्णस्य वा पररूपम् । बिम्बौष्ठः बिम्बोष्ठः । शरीरावयवत्वात् भवादौ यत् । ओष्ठ्य तद्भवे त्रि० उवर्णे पवर्गे च "ओष्ठजावुपू" शिक्षोक्तेः तयोस्तत्भवत्वात्तथात्वम् । ओष्ठे प्रचितः कन् । ओष्ठकः ओष्ठसंस्कारप्रचिते त्रि० । ओष्ठस्य मूलं जाहच् । ओष्ठजाह तन्मूले न० ।

**ओष्ठकोप** पु० ओष्ठस्य कोपो यत्र । सुश्रुतोक्ते मुखरोगभेदे । मुखरोगनिरूपणे तत्रोक्तं यथा

"तत्रौष्ठकोपा वातपित्तश्लेष्मसन्निपातरक्तमांसमेदोऽभिघातनिमित्ताः । कर्कशौ परुषौ स्तब्धौ कृष्णौ तीव्ररुगन्वितौ । दाल्येते परिपाट्येते ओष्ठौ मारुतकोपतः १ । आचितौ पिडकाभिस्तु सर्षपाकृतिभिर्भृशम् । सदाहपाकसंस्रावौ नीलौ पीतौ च पित्ततः २ । सवर्णाभिस्तु चीयेते पिडकाभिरवेदनौ । कण्डूमन्तौ पिच्छिलौ च शीतलौ कफजौ ३ गुरू । सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च । सन्निपातेन४ विज्ञेयावनेकपिडकाचितौ । खर्ज्जूरफलवर्णाभिः पिडकाभिः समाचितौ । रक्तोपसृष्टौ ५ रुधिरं स्रवतः शोणितप्रभौ । मांसदुष्टौ गुरू स्थूलौ मांसपिण्डवदुद्गतौ । जन्तवश्चात्र मूर्च्छन्ति सृक्कस्योभयतो मुखात् । मेदसा ७घृतमण्डाभौ कण्डूमन्तौ स्थिरौ मृदू । अच्छस्फटिकसङ्काशमास्रावं स्रवतो गुरू । क्षतजाभौ विदीर्य्येते पाट्येते चाभिघाततः ८ । ग्रथितौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ" । ईत० ओष्ठरोगादयोऽप्यत्र ।

**ओष्ठपुष्प** पु०ओष्ठोपमानं पुष्पं यस्य । बन्धूकवृक्षे । राजनि० ।

**ओष्ठी** स्त्री ओष्ठ इवाचरति ओष्ठ+क्विप् ततः अच् गौरा० ङीष् । बिम्बफलनामके (तेलाकुचा)वृक्षे । रत्नमाला ।

**ओष्ठोपमफला** स्त्री ओष्ठ उपमीयतेऽनेन ओष्ठोपमं फलं यस्याः । बिम्बिकालतायाम् (तेलाकुचा) जटाधरः ।

**ओष्ण** पु० ईषदुष्णः आ+उष्ण प्रा०स० । ईषदुष्णे ।

**ओह** पु० आ+वह घञर्थे क संप्र० । १सम्यग्वहने । "इन्द्रागोरोहेण तौग्र्यो न जीव्रिः" ऋ०१,१८०,५ । "ओहेन वहनेन" भा० । कर्त्तरि मूलविभु०क । २वाहके ३प्रापके च त्रि० । "ब्रध्यामा त ओहैः" ऋ०४,१०,१ । "ओहैः इन्द्रादिप्रापकैःस्तोमैः" भा० ।

**ओहब्रह्मन्** पु० ऊह एषां ब्रह्मेति वा निरुक्तोक्तेः पृषो० । ऊहब्रह्मयुक्ते । "वेद्याभिरोहब्रह्माणो विचरन्तु त्वे" निरु०१२,१२, । इत्ता श्रुतिः । स्तोत्रेण' भा० ।

**ओहस्** त्रि०आ+ऊह असुन् । वहनसाधने स्तोत्रादौ ।"न ये देवास ओहसा" ऋ०६,६८,६, "ओहसा वहनसाधनेनाभ० इति वाचस्पत्ये ओकारादिशब्दार्थसङ्कलनम् ।

# औ

औकारः स्वरवर्णभेदः कण्ठौष्ठस्थानयोरुच्चार्य्यः दीर्घः द्विमात्रत्वात्। प्लुतस्तु त्रिमात्रः। स च उदात्तानुदात्तस्वरितभेदात् त्रिविधोऽपि अनुनासिकाननुनासिकाभ्यां पुनर्द्वैविध्यात् षड्विधः एवं प्लुतोऽपि षड्विधः। तेन द्वादशविधः। तपरत्वे कारपरत्वे च स्वरूपमात्रपरः। तन्त्रे तस्य वाचकशब्दा वर्णाभिधाने उक्ता यथा। "औकारः शक्तिकोनादस्तैजसोवामजङ्घकः। मनुरुद्दमहेशश्च शङ्कुकर्णः सदाशिवः। अधोदन्तश्च कण्ठौष्ठौ सङ्कर्षणः सरस्वती। आज्ञा चोर्द्ध मुखी शान्ता व्यापिनी प्रकृतिःपरा। अनन्ता ज्वालिनी व्योमा चतुर्द्दशो रतिप्रियः। नेत्रमात्राकर्षिणी च ज्वालामालिनिका भृगुः"। तदधिष्ठातृदेवता च तत्रैवोक्ता। "औकारे डाकिनी सिंहनादिनी चण्डभैरवी" तस्य ध्येयरूपं कामधे०त० उक्तं यथा "रक्तविद्युल्लताकारमोकारं कुण्डलीं स्वयम्। अत्र ब्रह्मादयः सर्व्वे तिष्ठन्ति सततं प्रिये!। पञ्चप्राणमयं वर्णं सदाशिवमयं सदा। सदा ईश्वरसंयुक्तं चतुर्व्वर्गप्रदायकम्"। मातृकान्यासेऽधोदन्तपङ्क्तौन्यस्यत्वात्तच्छब्दवाच्यताऽस्येति बोध्यम्।

**औ** अव्य० आ+अव–क्विप् ऊठ्। १आह्वाने २संबोधने मेदि०। ३विरोधे ४निर्णये" शब्दरत्ना०। ५अनन्ते पु० एकाक्षरकोषः ६निस्वने पु०मेदि०। ७पृथिव्यां स्त्री मेदि० स च "चतुर्द्दशस्वरोयोऽसौ सेतुरौकारसंज्ञितः। सचानुस्वारनादाभ्यां शूद्राणां सेतुरुच्यते" तन्त्रसारधृत कालिकापु० उक्तेः शूद्राणां जप्यमन्त्रभेदः।

**औकथ** त्रि० उकथ–गर्गा० अपत्ये यञ् औकथ्यः तस्य छात्राः कण्वादि० अण् यञोलुक्। औकथाश्छात्रे

**औक्थिक** त्रि० उकथं सामावयवभेदं वेत्त्यधीते वा ठक्। १उकथाध्यायिनि २तद्वेत्तरि च। तेषां धर्म्म आम्नायो वा ततः ञ्य। औक्थ्य औक्थिकानां धर्म्मे तदाम्नाये च न०।

**औक्ष** न०उक्ष्णां वृषाणां समूहः अण् टिलोपः। १वृषसमूहे। वुञ्। औक्षक तत्समूहे न०। तस्येदमण् टिलोपः। २वृषसम्बन्धिनि त्रि०। अपत्ये अणि तु औक्ष्ण इत्येव। वेदे क्वचित् इदमर्थेऽणि उपधातोलोपः। "तामौक्ष्णैर्वृषभिः पश्चात्" शत०ब्रा०१,२,५,२।

**औखीय** त्रि० उखेन प्रोक्तमधीयते छण्। उखप्रोक्तब्राह्मणाध्यायिषु ब०व०।

**औख्य** त्रि० उखायां संस्कृतं यत् ततः स्वार्थे ष्यञ्। १स्थालीपक्वेऽन्नादौ। २नगरीभेदे स्त्री। उख्यायां जातादि कच्छ्यादि० ठकञ्। औख्यीयक तत्रजातादौ त्रि०।

**औघ** पु० वहति पुंसि संज्ञायां घ पृषो०ततः स्वार्थेऽण्। जलसंघाते "औघ इमाः सर्व्वाः प्रजा निर्वोढा" शत० ब्रा० १,८,१,२, "वहतीत्योघ उदकसंघातः" भा०।

**औच(त)थ्य** पु० उतथ्यस्यापत्यम् अण् वेदे पृषो०। उतथ्यापत्ये दीर्घतमसि "उपस्तुतिरौचथ्यमुरुष्येयाः" ऋ० १,१५८,४, "औचथ्यमुतथ्यपुत्रं दीर्घतमसम्" भा०। "दशा ह यद्रेक्ण औचथ्यः" ऋ० १,१५८,१, उतथ्यस्यैव नामान्तरमुचथ्येति तेन "उचथ्यानामाङ्गिरसौचथ्यगौतमेति" आश्व०श्रौ०१२,११,१, उक्तम्। तस्य च गोत्रप्रवर्त्तकत्वम् उक्तवाक्यात्। लोके तु उतथ्यः औतथ्य इत्येव।

**औचित्य** न० उचितस्य भावःष्यञ्। युक्तत्वे। "एता अपि यथौचित्यादुत्तमाधममध्यमाः" सा०द०। चित्त्वसामर्थ्यात् स्त्रीत्वमपि तत्र ङीष् यलोपश्च। औचिती तत्रार्थे। सामर्थ्यमौचिती देशः कालोव्यक्तिः स्वरादयः" सा०द० हठा०इमनिच् उचितिमाप्यत्र पु०।

**औजसिक** त्रि० ओजसा वर्त्तते ठक्। शूरे तेजस्विनि

**औजस्य** न० ओजस्+स्वार्थे ष्यञ्। ओजसि। "दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत्" सा०द०।

**औज्जयनक** त्रि० उज्जयिन्यां जातादि धूमा० वुञ्। उज्जयिनीनगरजातादौ।

**औज्जिहानि** पुंस्त्री उज्जिहानस्यापत्यमत इञ्। उज्जिनापत्ये ततः इञन्तत्वात् यूनि फक् पैलादि०तस्य लुक्। तदीययुवापत्येऽपि।

**औड** त्रि० उन्द–क नलोपः नि० दस्य ड स्वार्थेऽण्। आर्द्रे ततः नडा०फक्। औडायन आर्द्रस्य युवापत्ये तस्य विषयोदेशः ऐषुकार्य्या० भक्तल्। औडायनभक्त तदीये विषये देशे

**औडव** पु० ओडव+स्वार्थेऽण्। "औडवः पञ्चभिः प्रोक्तः स्वरैः षड्भिस्तु षाडवः। सम्पूर्णः सप्तभिः प्रोक्ता राग जातिस्त्रिधा मता" सङ्गीतरत्ना० उक्ते रागभेदे। स च मल्लारादिः इति संगीतदामोदरः।

**औडवि** त्रि० ओडवं रागविशेषमनुशीलयति इञ्। ओडवरागानुशीले। ततः स्वार्थे दामन्या०छ औडवीय। तदर्थे

**औडुप** त्रि॰ उडुपेन निर्वृत्तादि सङ्काशादि॰ अण्। १चन्द्रनिर्वृत्ते २प्लवनिर्वृत्ते ३तत्सन्निकृष्टदेशे च।

**औडुपिक** त्रि॰ उडुपेन प्लवेन तरति ठक्। १प्लवेन तारके उडुपेन हरति उत्सङ्गा॰ ठक्। २प्लवेन हारके च त्रि॰।

**औडु(दु)म्बर** त्रि॰ उडु(दु)म्बरस्य विकारः रजतादि॰ अञ्। १ताम्रविकारे पात्रादौ। "गृहीत्वौडु(दु)म्बरं पात्रम्" स्मृतिः "सौवर्णराजतौदुम्बरखाड्गमणिमयानां पात्राणाम्" गोभि॰। २यज्ञाङ्गवृक्षविकारे च। "पश्चात्पतिरवस्थाय युगमन्तमौडु(दु)म्बरं शलाटुग्रथ्न मा बध्नाति" गोभि॰। स्त्रियां ङीप्। "औडु(दु)म्बरीं स्पृष्ट्वा गायेत" श्रुतिः। "औडु(दु)म्बरीं शाखामुपगूहति" शत॰ब्रा॰५,४,२,२५, ३तपस्विविशेषे पु॰। "वैखानसा वालिखिल्यौडुम्बराः फेनपावने। न्यासे कुटीचरः पूर्व्वम् बह्वोदो हंसनिष्क्रियौ" भाग॰३,१२,२७। "औडु(दु)म्बराः प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति तत आहृतफलादिभिः जीवन्तः" श्रीधरः। औडुम्बरं तत्फलं तस्येवाकारोऽस्त्यस्य अर्श॰ अच्। ४महाकुष्ठभेदे। "तत्र महाकुष्ठान्यरुणौडुम्बरर्ष्य-जिह्वकपालकाकणपुण्डरीकदद्रुकुष्ठानीति" विभज्य "पित्तेन पक्वौडुम्बरफलाकृतिवर्णान्यौडुम्बराणीति" तल्लक्ष्म सुश्रुते उक्तम्। स च रोगः ताम्रस्तेयकर्मविपाकः यथाह शाता॰ "औडु(दु)म्बरी ताम्रचौरो नरकान्ते प्रजायते"। ५यमभेदे च "औडुम्बराय दध्नाय" यमतर्पणमन्त्रः।

**औडुलोमि** पुंस्त्री उडुलोम्नोऽपत्यम् बाह्वा॰ इञ्। उडुलोम्नोऽपत्ये बहुषु च। उडुलोमाः उडुलोमान्

**औड्र** पु॰ ओड्रदेशानां राजा अण्। १अड्रदेशन्रपे ओड्रशब्दे विवृतिः २तद्देशवासिनि च। बहुषु अणो लुक्।

**औत्कण्ठ्य** न॰ उत्कण्ठैव चातुर्व॰ स्वार्थे ष्यञ्। उत्कण्ठायाम् "औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः" भाग॰ १,६,१७। "औत्कण्ठ्याद्देवकीसुतः" १,१०४।

**औत्कर्ष्य** न॰ उत्कर्ष+स्वार्थे ष्यञ्। उत्कर्षे।

**औत्क्षेप** पुंस्त्री उत्क्षेपस्य ऊर्द्धक्षेपकस्यापत्यं शिवा॰ अण्। उत्क्षेपकस्यापत्ये स्त्रियां ङीप्।

**औत्तम** त्रि॰ उत्तमेन निर्वृत्तादि सङ्काशा॰ अण्। १उत्तमेन निर्वृत्ते २तत्सन्निकृष्टदेशादौ च।

**औत्तमि** पु॰ उत्तमस्यापत्यम् इञ्। मनुभेदे उत्तमशब्दे उदा॰। "स्वारोचिषश्चौत्तमिश्च तामसो रैवतस्तथा" मनुः तस्य पत्नी उत्तमी तस्या अपत्यम् ढक्। उत्तमपत्न्यपत्ये तत्पुत्राश्च "औत्तमेयान् महाराज! दश पुत्रान् निबोध तान्" हरिवं॰७अ॰ उत्तमशब्दे ते च नामतोदर्शिताः।

**औत्तर** त्रि॰ उत्तरत्वस्मात् उद्+तॄ—अपादानेऽप् ततः स्वार्थेऽण्। उत्तारके "दूतरेवासुपदेशेन दुःखादिनिवारके ऋषौ। "सत्यौत्तराणां सर्वेषामृषीणाम् नाडुषस्य च" भा॰व॰ १०,५४६।

**औत्तरपथिक** त्रि॰ उत्तरपथेन गच्छति तेनाहृतं वा ठञ्। उत्तरपथेन अर्च्चिरादिमार्गेण १गन्तरि उपासकभेदे २तेनाहृते च। याहके।

**औत्तरपदिक** त्रि॰ उत्तरपदं गृह्णाति ठक्। उत्तरपद-

**औत्तरवेदिक** त्रि॰ उत्तरवेद्यां भवः ठञ्। उत्तरवेद्यां भवे कर्मादौ "औत्तरवेदिकं कर्म कृत्वा" शत॰ब्रा॰ ७,२२,१७

**औत्तराधर्य्य** न॰ उत्तरे च अधरे च तेषां भावः ष्यञ्। ऊर्द्ध नीचभावेन स्थितौ। "संघे चानौत्तराधर्य्ये" पा॰

**औत्तराह** त्रि॰ उत्तरस्मिन् कालादौ भवः "उत्तरादाहञ्" पा॰ उत्तर+आहञ्। उत्तरकालादौ भवे।

**औत्तरेय** पु॰ उत्तराया अपत्यम् ढक्। अभिमन्युसुते विराटदुहितुरुत्तरायाः पुत्रे परिक्षिन्नृपे "औत्तरेयेण दत्तानि न्यवसत्तान्निदेशकृत्" भाग॰ १,१७,४०। "अवधार्य्य मतिं तथा औत्तरेयः सतीं व्यधात्" भाग॰ २,४,२।

**औत्तानपाद(दि)** पु॰ उत्तानपादे नृपे भवः अण्। उत्तानपादभवे ध्रुवे "ध्रुवस्यौत्तानपादस्य ब्रह्मर्षीणां तथैव च" भा॰ अनु॰ ३अ॰। "उत्तानपाद! भगवांस्तव शार्ङ्गधन्वा" भाग॰ ४,१०,२५। अपत्ये तु इञ्। तत्रैव। "उत्तानपादिर्निर्गत्य ततः काननतो द्विज!" काशी॰। तस्य यथा तपस्यया सर्वनक्षत्राधारतापदप्राप्तिस्तथा वर्णितम् भाग॰४, ८,६, "जाये उत्तानपादस्य सुनीतिःसुरुचिस्तयोः। सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतोध्रुवः। एकदा सुरुचेः पुत्रमङ्कमारोप्य लालयन्। उत्तमं नारुरुक्षन्तं ध्रुवं राजाभ्यनन्दत। तथा चिकीर्षमाणं तं सपत्न्यास्तनयं ध्रुवम्। सुरुचिः शृण्वतोराज्ञः सेर्ष्य माहातिगर्व्विता। न वत्स! नृपतेर्धिष्ण्यं भवानारोढुमर्हति। न गृहीतोमया यत्त्वं कुक्षावपि नृपात्मज!। बालोऽसि तत्र नात्मानमन्यस्त्री गर्भसंभृतम्। नूनं वेद भवान् यस्य दुर्लभेऽर्थे मनोरथः। तपसाराध्य पुरुषं तस्यैवानुग्रहेण मे। गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम्। श्रीमैत्रेय उवाच। मातुः सपत्न्याः सुदुरुक्तिविद्धः श्वसन् रुषा दण्डहतो यथाऽहिः। हित्वा मिषन्तं पितरं सन्नवाचं जगाम मातुः स रुदन् सकाशम्। तं निःश्वसन्तं स्फुरिताधरोष्ठं

सुनीतिरुत्सङ्गमुदूह्य बालम् । निशम्य तत्पौरमुखान्नितान्तं सा विव्यथे यद्गदितं सपत्न्या । सोत्सृज्य धैर्य्यं विललाप शोकदावाग्निना दावलतेव बाला । वाक्यं सपत्न्याः स्मरती सरोजश्रिया दृशा बाष्पकलामुवाह । दीर्घं श्वसन्ती वृजिनस्य पारमपश्यती बालकमाह बाला । माऽमङ्गलं तात ! परेषु मंस्था भुङ्क्ते जनो यत् परदुःखदस्तत् । सत्यं सुरुच्याभिहितं भवान्मे यद्दुर्भगाया उदरे गृहीतः । स्तन्येन वृद्धश्च विलज्जते यां भार्य्येति वा वोढुमिडस्पतिर्माम् । आतिष्ठ तत्तात ! विमत्सरस्त्वमुक्तं समातापि यदव्यलीकम् । आराधयाधोक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमो यथा । यस्याङ्घ्रिपद्मं परिचर्य्य विश्वविभावनायात्तगुणाभिपत्तेः । अजोऽध्यतिष्ठत् खलु पारमेष्ठ्यं पदं जितात्मश्वसनाभिवन्द्यम् । तथा मनुर्वो भगवान् पितामहो यमेकमत्या पुरुदक्षिणैर्म्मखैः । इष्ट्वाऽभिपेदे दुरवापमन्यतो भौमं सुखं दिव्यमथापवर्गम् । तमेव वत्साश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् । अनन्यभावे निजधर्म्मभाविते मनस्यवस्थाप्य भजस्व पूरुषम् । नान्यं ततः पद्मपलाशलोचनाद्दुःखच्छिदं ते मृगयामि कञ्चन । यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्ग ! विमृग्य माणया । एवं संजल्पितं मातुराकर्ण्यार्थागमं वचः । संनियम्यात्मनात्मानं निश्चक्राम पितुः पुरात् । नारदस्तदुपाकर्ण्य ज्ञात्वा चास्य चिकीर्षितम् । स्पृष्ट्वा मूर्द्धन्यघघ्नेन पाणिना प्राह विस्मितः । अहो तेजः क्षत्रियाणां मानभङ्गममृष्यताम् । बालोऽप्ययं हृदा धत्ते यत् समातुरसद्वचः । श्रीनारद उवाच । नाधुनाप्यवमानं ते सम्मानञ्चापि पुत्रक ! । लक्षयामः कुमारस्य सक्तस्य क्रीडनादिषु । विकल्पे विद्यमानेऽपि नह्यसन्तोषहेतवः । पुंसो मोहमृते भिन्ना यल्लोके निजकर्म्मभिः । परितुष्येत्ततस्तात ! तावन्मात्रेण पूरुषः । दैवोपसादितं यावद्वीक्ष्येश्वरगतिं बुधः । अथ मात्रोपदिष्टेन योगेनावरुरुत्ससि । यत्प्रसादं स वै पुंसां दुराराध्यो मतो मम । मुनयः पदवीं यस्य निःसङ्गेनोरुजन्मभिः । न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिना । अतोनिवर्त्ततामेष निर्बन्धस्तव निष्फलः । यतिष्यति भवान् काले श्रेयसां समुपस्थिते । यस्य यद्दैवविहितं स तेन सुखदुःखयोः । आत्मानं तोषयन् देही तमसः पारमृच्छति । गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात् । मैत्रीं समानादन्विच्छेन्न तापैरभिभूयते । श्रीध्रुव उवाच । सोऽयं शमो भगवता सुखदुःखहतात्मनाम् । दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः । अथापि मेऽविनीतस्य क्षात्रं घोरमुपेयुषः । सुरुच्या दुर्वचोवाणैर्न भिन्ने श्रयते हृदि । पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे । ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् । नूनं भवान् भगवतो योऽङ्गजः परमेष्ठिनः । वितुदन्नटते वीणां हिताय जगतोऽर्कवत् । मैत्रेय उवाच । इत्युदाहृतमाकर्ण्य भगवान्नारदस्तदा । प्रीतः प्रीत्याह तं बालं सद्वाक्यमनुकम्पया । श्रीनारद उवाच । जनन्याभिहितः पन्थाः सर्वनिःश्रेयसस्य ते । भगवान् वासुदेवस्तं भज तं प्रवणात्मना । धर्म्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः । एकं ह्येव हरेस्तत्र कारणं पादसेवनम् । तत्तात ! गच्छ भद्रन्ते यमुनायास्तटं शुचि । पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः । स्नात्वानुसवनं तस्मिन् कालिन्द्याः सलिले शिवे । कृत्वोचितानि निवसन्नात्मनः कल्पितासनः । प्राणायामेन त्रिवृता प्राणेन्द्रियमनोमलम् । शनैर्व्युदस्याभिध्यायेन्मनसा गुरुणा गुरुम् । प्रसादाभिमुखं शश्वत् प्रसन्नवदनेक्षणम् । सुनसं सुभ्रुवं चारुकपोलं सुरसुन्दरम् । तरुणं रमणीयाङ्गमरुणोष्ठेक्षणाधरम् । प्रणताश्रयणं नृम्णं शरण्यं करुणार्णवम् । श्रीवत्साङ्कं घनश्यामं पुरुषं वनमालिनम् । शङ्खचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् । किरीटिनं कुण्डलिनं केयूरवलयान्वितम् । कौस्तुभाभरणग्रीवं पीतकौशेयवाससम् । काञ्चीकलापपर्य्यस्तं लसत्काञ्चननूपुरम् । दर्शनीयतमं शान्तं मनोनयनवर्द्धनम् । पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्च्चताम् । हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् । स्मयमानमभिध्यायेत् सानुरागावलोकनम् । नियतेनैकभूतेन मनसा वरदर्षभम् । एवं भगवतो रूपं सुभद्रं ध्यायतो मनः । निर्वृत्या परया तूर्णं सम्पन्नं न निवर्त्तते । जपश्च परमो गुह्यः श्रूयतां मे नृपात्मज ! । यं सप्तरात्रं प्रपठन् पुमान् पश्यति खेचरान् । ओँ नमो भगवते वासुदेवाय । मन्त्रेणानेन देवस्य कुर्य्याद् द्रव्यमयीं बुधः । सपर्य्यां विविधैर्द्रव्यैर्देशकालविभागवित् । सलिलैः शुचिभिर्म्माल्यैर्वन्यैर्मूलफलादिभिः । शस्ताङ्कुरांशुकैश्चार्च्चेत्तुलस्या प्रियया प्रभुम् । लब्ध्वा द्रव्यमयीमर्च्चां क्षित्यम्ब्वादिषु वार्च्चयेत् । आभृतात्मा मुनिः शान्तो यतवाङ्मितवन्यभुक् । स्वेच्छावतारचरितैरचिन्त्यं निजमायया । करिष्यत्युत्तमश्लोकस्तद्ध्यायेद्धृदयं गतम् । परिचर्य्या भगवतो यावतीः

पूर्व्वसेविताः । ता मन्त्रहृदयेनैव प्रयुञ्ज्यान्मन्त्रमूर्त्तये । एवं कायेन मनसा वचसा च मनोगतम् । परिचर्य्यमाणो भगवान् भक्तिमत्परिचर्य्यया । पुंसाममायिनां सम्यग्भजतां भाववर्द्धनः । श्रेयोदिशत्यभिमतं यद्धर्म्मादिषु देहिनाम् ! विरक्तश्चेन्द्रियरतौ भक्तियोगेन भूयसा । तं निरन्तरभावेन भजेताद्धा विमुक्तये । इत्युक्तस्तं परिक्रम्य प्रणम्य च नृपार्भकः । ययौ मधुवनं पुण्यं हरेश्चरणचर्च्चितम् । तपोवनं गते तस्मिन् प्रविष्टोऽन्तःपुरं मुनिः । अर्हितार्हणोराज्ञा सुखासीन उवाच ह । श्रीनारद उवाच । राजन् ! किं ध्यायसे दीर्घं मुखेन परिशुष्यता । किं वा न रिष्यते कामो धर्म्मोवार्थेन संयुतः । श्रीराजोवाच । सुतोमे बालकोब्रह्मं स्त्रैणेनाकरुणात्मना । निर्व्वासितः पञ्चवर्षः सह मात्रा महान् कविः । अनाथं वने ब्रह्मन्मा खादन्त्यर्भकं वृकाः । श्रान्तं शयानं क्षुधितं परिम्लानमुखाम्बुजम् । अहो मे बत दौरात्म्यं स्त्रीजितस्योपधारय । योऽङ्कं प्रेम्णारुरुक्षन्तं नाभ्यनन्दमसत्तमः । श्रीनारद उवाच । मा मा शुचः स्वतनयं देवगुप्तं विशाम्पते ! । तत्प्रभावमविज्ञाय प्रावृङ्क्ते यद्यशो जगत् । सुदुष्करं कर्म्म कृत्वा लोकपालैरपि प्रभुः । एष्यत्यचिरतोराजन्यशोविपुलयंस्तव । इति देवर्षिणा प्रोक्तं विश्रुत्य जगतां पतिः । राजलक्ष्मीमनादृत्य पुत्रमेवान्वचिन्तयत्” । “तत्राभिषिक्तः प्रयतस्तामुपोष्य विभावरीम् । समाहितः पर्य्यचरदृष्यादेशेन पूरुषम् । त्रिरात्रान्ते त्रिरात्रान्ते कपित्थवदराशनः । आत्मवृत्त्यनुसारेण मासं निन्येऽर्च्चयन्हरिम् । द्वितीयञ्च तथा मासं षष्ठेषष्ठेऽर्भकोदिने । तृणपर्णादिभिः शीर्णैः कृतान्नोऽभ्यर्च्चयद्विभुम् । तृतीयञ्चानयन्मासं नवमे नवमेऽहनि । अब्भक्ष उत्तमश्लोकमुपधावन् समाधिना । चतुर्थमपि वै मासं द्वादशे द्वादशेऽहनि । वायुभक्षोजितश्वासोध्यायन् देवमधारयत् । पञ्चमे मास्यनुप्राप्ते जितश्वासोन्नृपात्मजः । ध्यायन् ब्रह्मपदैकेन तस्थौ स्थाणुरिवाचलः । सर्व्वतोमनआकृष्य हृदि भूतेन्द्रियाशयम् । ध्यायन् भगवतोरूपं नाद्राक्षीत् किञ्चनापरम् । आधारं महदादीनां प्रधानं पुरुषेश्वरम् । ब्रह्म धारयमाणस्य त्रयोलोकाश्चकम्पिरे । यदैकपादेन स पार्थिवात्मजस्तस्थौ तदङ्गुष्ठनिपीडिता मही । ननाम तत्रार्द्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदेपदे । तस्मिन्नभिध्यायति विश्वमात्मनोद्वारं निरुध्यासुमनन्यया धिया । लोका निरुच्छासनिपीडितास्त्वशं सलोकपालाः शरणं ययुर्हरिम् । श्रीदेवा ऊचुः । नैवं विदामोभगवन् ! प्राणरोधं चराचरस्याखिलसत्वधाम्नः । विधेहि तन्नोवृजिनाद्विमोक्षं प्राप्ता वयं त्वां शरणं शरण्यम् । श्रीभगवानुवाच । मा भैष्ट बालं तपसोदुरत्ययान्निवर्त्तयिष्ये प्रतियात स्वधाम । यतोहि वः प्राणनिरोध आसीदौत्तानपादिर्म्मयि संगतात्मा । तएव मुत्सन्नभयाउरुक्रमं कृतावनामाः प्रययुस्त्रिपिष्टपम् । सहस्रशीर्षाऽपि ततोगरुत्मतामधोर्वनं भृत्यदिदृक्षयागतः । स वै धिया योगविपाकतीव्रया हृत्पद्मकोशे स्फुरितं तडित्प्रभम् । तिरोहितं सहसैवोपलक्ष्य बहिः स्थितं तदवस्थं ददर्श । तद्दर्शनेनागतसाध्वसः क्षिताववन्दताङ्गं विनमय्य दण्डवत् । दृग्भ्यां प्रपश्यन् प्रपिबन्निवार्भकश्चुम्बन्निवास्येन भुजैरिवाश्लिषन् । स तं विवक्षन्तमतद्विदं हरिर्ज्ञात्वास्य सर्व्वस्य च हृद्यवस्थितः । कृताञ्जलिं ब्रह्ममयेन कम्बुना पस्पर्श बालं कृपया कपोले । स वै तदैव प्रतिपादितां गिरं दैवीं परिज्ञातपरात्मनिर्णयः । तं भक्तिभावोऽभ्यगृणादसत्वरं परिश्रुतोरुश्रवसं ध्रुवक्षितिः” । ततो ध्रुवेण स्तुतो भगवान् तस्मै यथा वरं दत्तवांस्तथा वर्णितं तत्रैव “अथाभिष्टुतएवं वै सत्सङ्कल्पेन धीमता । भृत्यानुरक्तो भगवान् प्रतिनन्द्यैनमब्रवीत् । श्रीभगवानुवाच । वेदाहं ते व्यवसितं हृदि राजन्यबालक ! । तत् प्रयच्छामि भद्रं ते दुष्प्रापमपि सुव्रत ! । नान्यैरधिष्ठितं भद्र ! यद्भ्राजिष्णु ध्रुवक्षिति । यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम् । मेध्यां गोचक्रवत् स्थास्नु परस्तात् कल्पवासिनाम् । धर्म्मोऽग्निः कश्यपः शक्रो मुनयो ये वनौकसः । चरन्ति दक्षिणीकृत्य भ्रमन्तोयत् सतारकाः । प्रस्थिते तु वनं पित्रा दत्त्वा गां धर्म्मसंश्रयः । षट्त्रिंशद्वर्षसाहस्रं रक्षिता व्याहतेन्द्रियः । त्वद्भ्रातर्य्युत्तमे नष्टे मृगयायां तु तन्मनाः । अन्वेषती वनं माता दावाग्निं सा प्रवेक्ष्यति । इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः । भुक्त्वा चेहाशिषः सत्या अन्ते मां संस्मरिष्यसि । ततोगन्तासि मत्स्थानं सर्व्वलोकनमस्कृतम् । उपरिष्टादृषिभ्यस्त्वं यतोनावर्त्तते यतिः”

नक्षत्ररूपतत्सन्निवेशविशेषस्तत्रैव ५ स्क० उक्तो यथा “अथ तस्मात् (शनिलोकात्) परतस्त्रयोदशलक्षयोजनान्तरतो यत्तद्विष्णोः परमं पदमभिवन्दन्ति यत्र महाभागवतो ध्रुव औत्तानपादिरग्निनेन्द्रेण प्रजापतिना कश्यपेन धर्म्मेण च समकालयुग्भिः सह बहुमानं दक्षिणतः क्रियमाण इदानीमपि कल्पजोविनामाजीव्य उपास्ते

तस्य महानुभाव उपवर्णितः। स हि सर्वेषां ज्योतिर्गणानां ग्रहनक्षत्रादीनां अनिमिषेणाव्यक्तरंहसा भगवता कालेन भ्राम्यमाणानां स्थाणुरिवावष्टम्भ ईश्वरेण विहितः शश्वदवभासते। यथा मेधीस्तम्भ आक्रमणपशवः संयोजितास्त्रिभिः सवनैर्यथास्थानं मण्डलानि चरन्ति। एवं भगणा ग्रहादय एतस्मिन्नन्तर्बहिर्योगेन कालचक्र आयोजिता ध्रुवमेवावलम्ब्य वायुनोदीर्यमाणा आकल्पान्तं परितः क्रामन्ति। नभसि यथा मेघाः श्येनादयो वायुवशाः कर्म्मसारथयः परिवर्त्तन्ते। एवं ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीताः कर्मनिर्मितगतयो भुवि न पतन्ति। केचिदेतत् ज्योतिरनीकं शिशुमारसंस्थानेन भगवतो वासुदेवस्य योगधारणायामनुवर्णयन्ति। यस्य पुच्छाग्रेऽवाक्शिरसः कुण्डलीभूतदेहस्य ध्रुव उपकल्पितः” ५,२२,१स्क०अ०।

सि०शि० सर्वनक्षत्राद्याधारौ द्वौ ध्रुवौ अङ्गीकृतौ यथा “निरक्षदेशे क्षितिमण्डलोपगौ ध्रुवौ नरः पश्यति दक्षिणेतरौ। तदाश्रितं खे जलयन्त्रवत् तथा भ्रमद्भचक्रं निजमस्तकोपरि। उदग्दिशं याति यथा नरस्तथा तथा स्यान्नतमृक्षमण्डलम्। उदग्ध्रुवं पश्यति चोन्नतं क्षितेस्तदन्तरे योजनजाः पलांशकाः। योजनसंख्या भांशैर्गुणिता स्वपरिधिहृता भवन्त्यंशाः। भूमौ कक्षायां वा भागेभ्यो योजनानि च व्यस्तम्”शि०। “उदग्दिशं याति यथा यथा नर इत्यनेनापसारयोजनैरनुपातः सूचितः। यदि भूपरिधियोजनैश्चक्रांशा लभ्यन्ते तदापसारयोजनैः किमिति। फलमक्षांशाः। यदि चक्रांशमितपरिधिना भूपरिधिर्लभ्यते तदाक्षांशैः किमिति फलं निरक्षदेशस्वदेशयोरन्तरयोजनानि स्युः शेषं स्पष्टम्। एवं निरक्षदेशात् क्षितिचतुर्थांशे किल मेरुः। तत्र नवतिः ९० पलांशाः” प्रमि०। “सौम्यं ध्रुवं मेरुगताः खमध्ये याम्यं च दैत्या निजमस्तकोर्ध्वे। सव्यापसव्यं भ्रमदृक्षचक्रं विलोकयन्ति क्षितिजप्रसक्तम्” शि०।

**औत्पत्तिक** उत्पत्त्या भावेन अवियुक्तः ठक्। १नित्यसंबन्धे शब्दार्थयोः सम्बन्धस्य नित्याविर्युक्तत्वात् औत्पत्तिकत्वम् जै०सू० भाष्ययोर्दर्शितं यथा

“औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात्”। सू०

“औत्पत्तिक” इति नित्यं ब्रूमः, उत्पत्तिर्हि भाव उच्यते लक्षणया। अवियुक्तः शब्दार्थयोर्भावः सम्बन्धः नोत्पन्नयोः पश्चात् सम्बन्धः, औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः, तस्य अग्निहोत्रादिलक्षणस्य धर्म्मस्य प्रत्यक्षादिभिरनवगतस्य ज्ञानं निमित्तम्। कथं?। उपदेशो हि भवति, “उपदेशः” इति विशिष्टस्य उच्चारणम्। अव्यतिरेकश्च ज्ञानस्य, न, हि तदुत्पन्नं ज्ञानं विपर्य्येति! यच्च नाम ज्ञानं न तत् शक्यते वक्तुं ‘न एतदेवम्” इति, यथा विज्ञायते, न तथा भवति, यथैतच्च विज्ञायते, तथैतदिति, अन्यदस्य हृदये, अन्यद्वाचि स्यात्, एवं वदतो विरुद्धमिदं गम्यते, अस्ति नास्ति वेति। तस्मात् तत् प्रमाणमनपेक्षत्वात्। न ह्येवं सति प्रत्ययान्तरमपेक्षितव्यं, पुरुषान्तरं वापि, अयं प्रत्ययो ह्यसौ। बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्त्यते बादरायणं पूजयितुं, नात्मीयं मतं पर्य्युदसितुम्।

उत्पत्तिर्भावः १स्वकालः तत्र भवः ठक्। २स्वभावे स्वभावस्य यावद्द्रव्यभावित्वात् तथात्वम्। “मातुरनुग्रहादौत्पत्तिकेनैव संहननबलोपेताः पित्रा विभक्ताः” भा०ग०५,२,२१, तन्निशम्याथ हर्य्यश्वा औत्पत्तिकमनीषया भाग० ६,५,१०।

**औत्पात** त्रि०उत्पातस्य तज्ज्ञापकशास्त्रस्य व्याख्यानो ग्रन्थः तत्रभवो वा ऋगयना० अण्। १उत्पातावेदकग्रन्थव्याख्याने ग्रन्थे २तत्रभवे च।

**औत्पातिक** त्रि० उत्पाते दैवारिष्टे भवः ठक् १दैवारिष्टभवे- “औत्पातिकं मेघ इवाश्मवर्षम्” रघुः। “औत्पातिकं तदिह देव। विचिन्तनीयम्” उद्भटः। “औत्पातिके महाघोरे तथा दुःस्वप्नदर्शने” वटुकस्तवः उत्पाताय प्रभवति ठक्। उत्पातसम्पादनसमर्थे “प्रयाते तु ततः- स्कन्दे बभूवौत्पातिकं महत्”भा०व०२३०अ०।

**औत्पाद** त्रि० उत्पादं तदावेदकग्रन्थं वा वेत्त्यधीते वा तत्रभवो वा ऋगयना० अण्। १भावानामुत्पादवेत्तरि २तदावेदग्रन्थाध्येतरि ३तत्रभवे च।

**औत्पुट** त्रि०उत्पुटेन निर्वृत्तादि सङ्कला० चतुरर्थ्याम् अण्। उत्पुटेन उन्मुद्रेण १निर्वृत्ते २तत्सन्निकृष्टदेशादौ च।

**औत्पुटिक** त्रि० उत्पुटेन हरति उत्सङ्गा० ठक्। उत्पुटेन हारके। [वनसंस्कारान्वितेन हारके।

**औतुपुतिक** त्रि० उत्पुतेन हरति उत्सङ्गा० ठक्। उत्प-

**औत्स** त्रि० उत्से भवः अञ्। प्रस्रवणभवे स्त्रियांङीप्।

**औत्सङ्गिक** त्रि० उत्सङ्गेन हरति ठक्। क्रोडेन हारके।

**औत्सर्गिक** त्रि० उत्सर्गं सामान्यविधिमर्हति ठञ् । सामान्यविधियोग्ये स्त्रियां ङीप् । [फञ् । उत्सर्गर्षेगोत्रापत्ये ।

**औत्सायन** पुंस्त्री उत्स ऋषिभेदस्तस्य गोत्रापत्यम् अश्वा०

**औत्सुक्य** न० उत्सुकस्य भावः ष्यञ् । उत्कण्ठायाम् । "औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया" रत्नावली "तमाहितौत्सुक्यमदर्शनेन" रघुः । "रथचरणसमाह्वस्यावदौत्सुक्यतुच्चा" माघः "इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे" मेघ० । तत्र अलङ्कारोक्त व्यभिचारिभावभेदः सा०द० निर्वेदावेगेत्याद्युपक्रमे "औत्सुक्योन्मादशङ्का" इत्युक्त्वा "इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता" लक्षितम् । २इच्छामात्रे च । "औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्त्तते लोकः" सा०का० । "औत्सुक्यमिच्छा सा च इष्यमाणप्राप्तौ निवर्त्तते इष्यमाणस्य स्वार्थं इष्टलक्षणत्वात् फलस्य" त०कौ० । "मनोयस्येन्द्रियस्येह विषयान् याति सेवितुम् । तस्यौत्सुक्यं संभवति प्रवृत्तिश्चोपजायते" भा०व० ११४ श्लो० ।

**औदक** त्रि० उदकेन पूर्णं स्थाति उदकस्येदं वा अण् । १उदकपूर्णकुम्भपात्रके "अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्द्धदेशेऽवसिञ्चति" गोभिलः । "औदको स्फीतोदकुम्भः" सं०त०रघु० । २उदकसम्बन्धिनि । "औदकेनैव विधिना निर्वपेत् दक्षिणामुखः" मनुः । उदके भवः अण् । ३जलभवे च । "यानि चैवं प्रकाराणि स्थलजान्यौदकानि च" "स्थलजौदकशाकानि पुष्पमूलफलानि च" मनुः

**औदकि** पुंस्त्री "उदङ्क उदक (संज्ञायाम्)" पा०ग० वाह्वा० अपत्ये इञ् । उदकनामर्षेरपत्ये ततः स्वार्थे दामन्या० छ । औदकीय तत्रार्थे । एवम् औदङ्कि औदङ्कीय इत्यपि उदङ्कापत्ये पुंस्त्री । [स्यापत्ये ।

**औदज्ञायनि** पुंस्त्री उदज्ञस्यर्षेरपत्यं तिका० फिञ् । उदज्ञ-

**औदञ्चन** त्रि० उदच्यते उत्क्षिप्य ध्रियतेऽस्मिन् उदञ्चनो जलाधारः मणिकस्तस्येदम् अण् । मणिकस्थिते जलादौ (जालारजल) "एनां (शफरीम्) तत आदाय न्यधादौदञ्चनोदके" भाग० ८,२४,१५ । "औदञ्चनोदके मणिकस्थजले" श्रीधरः उदञ्चनस्य सन्निकृष्टदेशादि अरीहणादि० वुञ् । औदञ्चनक मणिकस्य सन्निकृष्टदेशादौ त्रि० । [नामकर्षेरपत्ये ।

**औदञ्चवि** पुंस्त्री उदञ्चोरपत्यं बाह्वा० इञ् । उदञ्चु-

**औदञ्जि** पुंस्त्री उदञ्जापत्यम् इञ् । १उदञ्जापत्ये ततः यूनि फिञ् पैला० तस्य लुक् । २तदीययुवापत्येऽपि ।

**औदनिक** त्रि० ओदनाय प्रभवति संतापा० ठञ् । ओदननिष्पादनाय समर्थे सूपकारे ।

**औदन्य** पु० उदन्यायुक्ते ऋषौ भवः अण् । पिपासायुक्तर्षिभवे सुण्डिभे ऋषौ । "एतां ह वै सुण्डिभ औदन्यः ब्रह्महत्यायै प्रायश्चित्तिं विदाञ्चकार" शत०ब्रा० १३,३,५,६ । तस्यापत्ये तु इञ् । औदन्यि इत्येव तत्रार्थे ततः युवप्रत्ययस्य फिञः पैला० लुक् । तदीययुवापत्ये च ।

**औदपान** त्रि० उदपानादागतः शुण्डिका० अण् । आयस्थानरूपोदपानादागते १राजग्राह्यकरादौ । उदपाने भवः पलद्या० अण् । २उदपाननामग्रामभवे करादौ त्रि० । उदपाने जलाधारस्थानभेदे भवः उत्सा०अञ् । ३उदपानभवे त्रि० । स्त्रियां सर्वत्र ङीप् ।

**औदभृज्जि** पुंस्त्री उदभृज्जस्यापत्यम् इञ् । १उदभृज्जस्यापत्ये ततो युवप्रत्ययस्य पैलादि० लुक् । २तदीययुवापत्ये च । एवं औदमज्जि औदमेधि औदव्रजि औदशुद्धि इत्येतेऽपि शब्दाः तत्तदपत्ये तत्तद्युवापत्ये च । [सम्बन्धिनि ।

**औदमेधीय** त्रि० उदमेघेरिदम् रैवतिकादि० छ । औदमेधि

**औदमेयि** पुंस्त्री उदमेयस्यापत्यम् इञ् । उदमेयस्यापत्ये ततः मनुष्यजातित्वात् स्त्रियां ङीष् । [स्त्रियां ङीप् ।

**औदयिक** त्रि० उदये लग्नकाले भवः ठञ् । लग्नकालभवे

**औदरिक** त्रि० उदरे प्रसितः ठक् । आद्यूने, (पेटुक) उदरमात्रपूरणापेक्षके । "ऐश्वर्यवन्तं रौद्रं च शूरं चण्डमसूयकम् । एकाशिनमौदरिकमासुरं सत्त्वमीदृशम्" सुश्रुते तस्यासुरसत्त्वत्वमुक्तम् । अमरे विजिगीषाविवर्ज्जितस्य तथात्वमुक्तम् । विजिगीषा च विगानेच्छा सा च स्वोदरपूरणासक्ततया निन्देच्छा तस्याःत्याग एवास्य प्रवृत्तिः । "सर्व्वमेवौदरिकस्याभ्यवहार्य्याय कल्पते" नाट०

**औदर्य्य** त्रि० उदरे भवः यत् उदर्य्यः ततःस्वार्थे अण् । १उदरभवेऽन्नादौ । २अभ्यन्तरप्रविष्टे च । "स त्वयाराधितः शुक्लो वितन्वन् मामकं यशः । छेत्ता ते हृदयग्रन्थिमौदर्य्यो ब्रह्मभावनः" भाग० ३,२४,५ ।

**औदल** त्रि० चिकितगालवकालववमनुतन्तुकुड़िलानां वैश्वामित्रदेवरातौदलेति" आ०श्रौ० १२,१४,२, उक्ते चिकितादीनां षस्णां प्रवरर्षिभेदे ।

**औदवापि** पुंस्त्री उदवापस्यापत्यम् इञ् । उदवापापत्ये स्त्रियां ङीप् । तस्येदं रैवतिका०छ । औदवापीय तत्सम्बन्धिनि त्रि० ।

**औदवाहि** पु० उदवाहस्यापत्यम् इञ् । ऋग्वेदिनाम्

प्राचीनावीतितया तर्पणीयर्षिभेदे । द्वादशर्षितर्पणानन्तरम् । 'प्राचीनावीती' "सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्याजानन्तिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डूकेया गार्गी वाचक्नवी वड़वा प्राचीथेयी सुलभा मैत्रेयी कहोलं कौषीतकं पैङ्ग्यं महापैङ्ग्यं सुयज्ञं साङ्ख्यायनमैतरेयं महैतरेयं शाकलं वाष्कलं सुजातवक्त्रमौदवाहिं महौदवाहिं सौजामिं शौनकमाश्वलायनं ये चान्ये आचार्यास्ते सर्वे तृप्यन्त्विति" आश्व०गृ०३,४,४, "त्रयोविंशति वाक्यानि तत्र कहोलादिषु अर्थात् तर्पयामीतिशब्दः कार्यः । सर्वत्र प्रतिवाक्यं तर्पणङ्कुर्यात् "एकमन्त्राणि कर्म्माणीति" न्यायात्" नारा० । "औदवाहेश्च शाण्डिल्याच्च शाण्डिल्यः" शत०ब्रा०१४,७,३,२६, वंशवर्णने

**औदश्वित** त्रि० उदश्विति तक्रभेदे संस्कृतः अण् । उदश्विद्रूपतक्रे संस्कृतभक्ष्यद्रव्ये । पक्षे ठक् उदश्वित्कोऽप्यत्र उदश्विदिव अङ्गुल्या० ठक् । औदश्वित्क तत्सदृशे त्रि०।

**औदस्थान** त्रि० उदस्थानं शीलमस्य छत्रा० ण । १उदस्थानशीले। उदस्थाने भवः उत्सा० अञ् ।२उदकस्थानभवे च ।

**औदार्य्य** न० उदारस्य भावः गुणवचनत्वात् ष्यञ् । उदारतायाम् । "औदार्य्यञ्च नायकयोरयत्नसिद्धसात्त्विकालङ्कारविशेषः । यथाह सा० द० "शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता। औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः" इति विभज्य । 'औदार्य्यं विनयः सदेति' लक्षितम् । सात्त्विकपुरुषगुणभेदश्च यथाह तत्रैव । "शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी। ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषागुणाः" इति विभज्य । "दानं सप्रियभाषणमौदार्य्यं शत्रुमित्रयोः समतेति" लक्षितम् ।२वाक्यस्यार्थसम्पत्तौ च।"ससौष्ठवौदार्य्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे" किरा०। "औदार्य्यमर्थसम्पत्तिः" मल्लि० । तच्च वाग्गुणभेदः "संस्कारवत्त्वमौदार्य्यमित्यादिना" हेमच०वाग्गुणदर्शने उक्तः ।

**औदासीन्य** न० उदासीनस्य भावः ष्यञ् । शुभाशुभयोरुपेक्षायाम् ताटस्थ्ये । 'पर्य्याप्तोऽपि प्रजाः पातुमौदासीन्येन वर्त्तितुम्" रघुः । २राहित्ये ३रागनिवृत्तौ च "न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुम्, हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण" "अभावबुद्धिश्चौदासीन्यकारणम्" "तस्मात् प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव "ब्राह्मणो न हन्तव्य" इत्यादिषु प्रतिषेधार्थं मन्यामहे" इति च शारीरकभाष्यम् ।

**औदास्य** न० उदास्ते उद्+आस–अच् तस्य भावः ष्यञ् । वैराग्ये रागशून्यतायाम् २मनोयोगविरहे । "औदास्यसंविद्वलम्बितशून्यमुद्रामस्मिन् दृशोर्निपतितामवगम्य भैम्याः" नैष० "क्षौणीविलिखनहेतोर्वयमपि कुब्जाः किमौदास्यम्" पद्यावली ।

**औदुम्बरक** पु० उदुम्बरस्य विषयोदेशः राजन्या० वुञ् । १उदुम्बरविषये देशे । तस्य समूह इत्यधिकारात् राजन्या० वुञ् । २तत्समूहे न० ।

**औदुम्बरायण** पुंस्त्री उदुम्बरस्य गोत्रापत्यम् नडा० फक् । उदुम्बरस्य गोत्रापत्ये । अनन्तरापत्ये तु इञ् । औदुम्बरि तदीयानन्तरापत्ये पुंस्त्री स्त्रियां ङीप् ।

**औद्गात्र** न० उद्गातुर्धर्म्मम् ऋदन्तत्वात् अञ् । उद्गातः ऋत्विग्भेदस्य १धर्म्मे "खरित्यौद्गात्र आहवनीये" कात्या०२५,१,८, उद्गात्रवेदविहिते भ्रेषे खरित्याहवनीये जुहोति" कर्कः । उद्गातुः कर्म्म भावो वा उद्गात्रा० अञ् । उद्गातुः उच्चैर्गानात्मके २कर्म्मणि ३तद्भावे च ।

**औद्गाहमानि** पुंस्त्री उदगाहमानस्यापत्यम् इञ् ततोयूनि फक् तस्य पैला० लुक् । १उद्गाहमानस्यापत्ये २तदीये युवापत्ये च स्त्रियां गौरा० ङीष् । ततो सवादौ महा० छ । औद्गाहमानीय तत्सखादौ त्रि० ।

**औद्ग्रभण** त्रि०उद्ग्रहणाय साधु अण् वेदे हस्य भः । यज्ञग्रहणसाधने 'सर्वाणि ह वै दीक्षाया यजूंष्यौद्ग्रभणानि" उद्ग्रभनीते वा एषोऽस्माल्लोकाद्देवलोकमभि यद्दीक्षते" शत०ब्रा० ३,१,४,१, "औद्ग्रभणानि जुहोति स्वाहाः स्रुवेणाकूत्या इति प्रतिमन्त्रम्" कात्या० ७,३,१६ । भत्वाभावे औद्ग्रहणमप्यत्र ।

**औद्दण्डक** त्रि० उद्दण्डस्य सन्निकृष्टदेशादि अरीहणा० वुञ् । उद्दण्डसन्निकृष्टदेशादौ ।

**औद्दालक** न० उद्दालेन उद्दलनेन निर्वृत्तः अण् संज्ञायां कन् । "प्रायो वल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः । कुर्वन्ति कपिलं स्वल्पं तत् स्यादौद्दालकं मधु" इत्युक्ते वल्मीककीटसम्भृते मधुनि "औद्दालकं रुचिकरं स्वर्य्यं कुष्ठविषापहम् । कषायमुष्णमम्लञ्च कटुपाकञ्च पित्तलत्" तद्गुणा वैद्यकोक्ताः ज्ञेयाः ।

**औद्दालकि** पुंस्त्री उद्दालकस्यर्षेरपत्यम् इञ् । उद्दालकापत्ये गौतमे ऋषौ स्त्रियां मनुष्यजातित्वात् ङीष् । ततः

यूनि फक्। औद्दालकायन तदीययुवापत्ये प्राच्यभरते तु बह्वच्कत्वात् तस्य बहुषु लुक्। उद्दालकाः। तदीययुवापत्यानि प्राच्यानि भारतानि वा

**औद्धत्य** न० उद्धतस्य भावः। अविनीतभावे तच्च "असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता" सा०द० उक्तलक्षणम्।

**औद्धारिक** त्रि० उद्धाराय उद्धृत्य दानाय प्रभवति ठञ्। विभागकाले उद्धारार्थं देये द्रव्यभेदे। "विप्रस्यौद्धारिकं देयमेकांशश्च प्रधानतः" मनुः।

**औद्धारि** पु० उद्धारस्यर्षेरपत्यम् इञ्। उद्धारर्षेः पुत्रे खण्डिके ऋषौ। "खण्डिक औद्धारिरस्य प्रायश्चित्तं वेद" शत०ब्रा० १,८,२४,१। [राजनि०।

**औद्भिज्ज** न० उद्भिद्य जायते जन–ड स्वार्थेऽण्। पांशुलवणे

**औद्भिद** न०उद्भिनत्ति उद्+भिद्–क–स्वार्थेऽण्। १पांशुलवणे। "औद्भिदं पांशुलवणं यज्जातं भूमितः स्वयम्। क्षारं गुरु कटुस्निग्धं श्लेष्मलं वातनाशनमिति" तस्य गुणाः "विदार्य भूमिं निम्नां यन्महत्या धारया स्रवेत्। तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः" इत्युक्ते २जलभेदे च "औद्भिदं वारि पित्तघ्नमविदाह्यतिशीतलम्। प्रीणनं मधुरं बल्यमीषद्वातकरं लघु"। वैद्यकान्तरम्

सुश्रुते चान्तरिक्षजलमुक्त्वा "तस्याभावे भौमं तत्राकाशगुणबहुलं तत्पुनः सप्तविधम्। तद्यथा कौपं नादेयं सारसं ताडागं प्रास्रवणमौद्भिदं चौण्ड्यमिति। तत्र वर्षास्वान्तरिक्षमौद्भिदं वा सेवेत महागुणत्वात्" इत्यादि उक्त्वा "कफघ्नं दीपनं हृद्यं लघु प्रास्रवणोद्भवम्। मधुरं पित्तशमनमविदाह्यौद्भिदम् स्मृतम्"। तद्गुणाः उक्ताः। औद्भिदलवणगुणास्तु तत्रैव। "लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम्। सतिक्तं कटु सक्षारं विद्याल्लवणमौद्भिदम्"

**औद्भिद्य** न० उद्भिदोभावः ष्यञ्। वृक्षादीनामुत्पत्तौ। "जैत्रं च म औद्भिद्यं च मे यज्ञेन कल्पन्ताम्" यजु० १८,६, उद्भिदोभावः औद्भिद्यं चूतादितरोरुत्पत्तिः वेददी०।

**औद्याव** त्रि० उद्यावस्य व्याख्यानोग्रन्थः तत्र भवो वा ऋगयना० अण्। १उद्यावव्याख्यानग्रन्थे २तत्र भवे च।

**औद्वाहिक** त्रि० उद्वाहकाले लब्धं दीयते वा ठञ्। विवाहकाले १लब्धे दीयमाने च "विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत्! मैत्रमौद्वाहिकञ्चैव माधुपर्किकमेव च" स्मृतिः "पितृद्रव्याविनाशेन यदन्यत् स्वयमर्ज्जयेत्। मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेत्" याज्ञ०। तत्सर्व्वैरविभाज्यम्।

**औद्वेप** त्रि०उद्वेप+चतुरर्थ्याम् सङ्कला० अण्। उद्वेपेन १नि- [कृष्टे २तत्सन्निकृष्टदेशादौ च

**औधस** त्रि० ऊधस इदम् अण्। ऊधःसम्बन्धिनि "यवसं जग्धत्यनुदिनं नैव दोग्ध्यौधसं पयः" भाग० ४,१०,१६, भवार्थे तु शरीरावयवत्वात् यत् ऊधस्यमित्येव। "ऊधस्यमिच्छामि तवोपभोक्तुम्" रघुः। औधस्यमिति क्वचित् पाठः स्वार्थेऽणन्ततया समर्थ्यः।

**औन्नेत्र** न० उन्नेतुः कर्म्म भावो वा उद्गात्रादि० अञ्। उन्नेतुः १कर्म्मणि उन्नयने २तद्भावे च। तस्य धार्म्मीम् ऋदन्तत्वात् अञ्। ३उन्नेतृधर्म्मे च।

**औपकर्णिक** त्रि० उपकर्णं प्रायभवः ठक्। कर्णसमीपे प्रायप्रभवे। "औपकर्णिकलोचनः"। भट्टिः।

**औपकलाप्य** त्रि० उपकलापं भवः परिमुखा० ञ्य। कलापसमीपभवे।

**औपकायन** पुंस्त्री उपकस्य गोत्रापत्यं नडा० फक्। उपकस्य गोत्रापत्ये। बहुत्वे द्वन्द्वेऽद्वन्द्वे च वा फको लुक्। उपका उपकायनाः। उपकलामकाः औपकायनलामकायनाः।

**औपगव** पुंस्त्री उपगतोगौरस्य उपगुर्गोपः तस्यापत्यम् अण्। १गोपालकपुत्रे २तद्याजिपुत्रे च लक्षणया उपगुशब्दस्तद्याजिविप्रोऽपि उपगुशब्देनोच्यते "यं वर्षं याजयेद्यस्तु स तद्वर्णत्वमाप्नुयात्। सद्योवर्षेण वर्षैस्तैरेवमेवाब्रवीद्भृगुः" हारीतोक्तेः। तत्सम्बन्धिनि ३लक्षणे ४अङ्के ५संघे च तस्यापत्ये तु स्त्रियां ङीष्। औपगवस्येदम् गोत्रचरणात् वुञ्" पा० वुञ्। औपगवक औपगवसम्बन्धिनि "तत आगत" इत्यधिकारे "गोत्रादङ्कवत्" पा० वुञ्। औपगवक ततआगतेऽर्थे। तेषां समूहः गोत्रोक्षोष्ट्रेत्यादिना वुञ्। औपगवक तत्समूहे न० औपगवोभक्तिरस्य "गोत्रक्षत्रियाख्येभ्यो बहुलम् वुञ्"पा०। औपगवक तद्भक्तियुक्ते त्रि०

**औपगवि** पुंस्त्री उपगतो गां गिरं पतित्वेन उपगवोगीष्पतिस्तस्यापत्यम् क्षात्रो वा इञ्। १गीष्पतेरपत्ये २तच्छात्रे उद्धवे पु० "त्वामिव पुलिने यमस्वसुस्तां समुषित औपगविर्निशां ततोऽगात्" भाग०२,४,२८ "औपगविरुद्धवः" श्रीधरः"

**औपग्रस्तिक** पु० उपग्रस्तं ग्रासकालं भूतः स्वसत्तया व्याप्तः "तमधीष्टोभृतो भूतोभावी वा"पा० ठञ्। उपग्रासकालस्य स्वसत्तया व्यापके १चन्द्रे २सूर्य्ये च शब्दर०

**औपच(ज)न्धनि** पु०उपच(ज)न्धनस्यापत्यम् इञ्। शुक्लयजु-

ब्राह्मणवंश्ये ऋषिभेदे । "औपच(ज)ङ्घनेरौपच(ज)ङ्घनिः" शत० १४,५,५,२१ । १४,७,३,२६, ब्राह्मणे च ।

**औपचारिक** पु० उपचार+स्वार्थे—विनयादि० ठक् । उपचारे उपचारस्य लक्षणया बोधनम् सेवनञ्च । उपचारः प्रयोजनमस्य ठञ् । उपचारहेतुके त्रि० । स्त्रियां ङीप् । औपचारिकी उक्तिः ।

**औपच्छन्दसिक** त्रि० उपच्छन्दसा निर्वृत्तं बा० ठक् । उपच्छन्दनेन निर्वृत्ते । "आतन्वानं मुरारिकान्तास्वौपच्छन्दसिकं हृदा विनोदम्" छन्दोमञ्ज० । "गङ्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला" इति वैतालीयाद्यलक्षणयुक्ते "पर्य्यन्ते र्यौ तथैव शेषमौपच्छन्दसिकं सुधीभिः" वृ० र० उक्ते २मात्रावृत्तभेदे न० । "पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं विदुः" इत्युक्ते ३पुष्पिताग्राख्यवर्णवृत्तच्छन्दोभेदे च ।

**औपजानुक** त्रि० उपजानु जानुसमीपे प्रायभवः ठक् । जानुसमीपपर्य्यन्तव्यापके "पाशो यस्यौपजानुकौ" भट्टिः ।

**औपतस्विनि** पु० उपतस्विनस्यापत्यम् इञ् । उपतस्विनस्यापत्ये रामनामके ऋषौ । "तदुहोवाच राम औपतस्विनिः" शत० ब्रा० ४,६,१,७ ।

**औपदेशिक** त्रि० उपदेशेन जीवति वेतना० ठक् । उपदेशोपजीविनि । उपदेशेन प्राप्तः बा० ठक् । २उपदेशेन प्राप्ते च

**औपद्रविक** त्रि० उपद्रवमधिकृत्य कृतो ग्रन्थः ठक् । उपद्रवाधिकारेण सुश्रुतान्तर्गते ग्रन्थभेदे स च "अथात औपद्रविकमध्यायं व्याख्यास्यामः" इत्युपक्रम्य उत्तरतन्त्रागतः सुश्रुतकृतः ।

**औपद्रष्ट्र्य** पु० उपद्रष्टृ+स्वार्थे ष्यञ् । पुरुषमेधीये देवभेदे । "विविक्त्यै क्षत्तारम्, औपद्रष्ट्र्यायानुक्षत्तारम्" यजु० ३०,१३ । तत्र तदुद्देशेनानुक्षत्ता द्वारपालसेवकः आलभ्यत्वेन विहितः ।

**औपधर्म्य** उपधर्म+स्वार्थे चातुर्व० ष्यञ् । अपकृष्टधर्मे । "लोकान् घ्नतां मतिविमोहमतिप्रलोभं वेशं विधाय बहु भाष्यत औपधर्म्यम्" भाग० २,७,७८ ।

**औपधेनव** पु० उपगताधेनुरस्य तस्यापत्यम् अण् । सुश्रुतोक्ते धन्वन्तरिं प्रति प्रश्नकारके ऋषिभेदे । "काशीराजं दिवोदासं धन्वन्तरिमौपधेनववैतरणौरभ्रपुष्कलावतकरवीर्य्यगोपुररक्षितसुश्रुतप्रभृतयः ऊचुः । "औपधेनवमौरभ्रं सौश्रुतं पौष्कलावतम्" सुश्रु० । [रथाङ्गे ।

**औपधेय** न० उपधीयते इत्युपधिः रथाङ्गं ततः स्वार्थे ढञ् ।

**औपनायनिक** त्रि० उपनयनं प्रयोजनमस्य ठक् अनुश० द्विपदवृद्धिः कुल्लू० वस्तुतः उपनायनशब्दोऽपि उपनयनार्थे प्रागुक्तः ततः ठक् इत्येव न्याय्यम् । उपनायनप्रयोजनके विधाने "एष प्रोक्तो द्विजातीनामौपनायनिको विधिः" मनुः । उपनायनाय हितः ठक् । २उपनयसाधने च । २ब्रह्मचत्वविषां काल औपनायनिकः परः" याज्ञ० ।

**औपनासिक** त्रि० उपनासं भवः ठञ् स्त्रियां ङीप् । नासासमीपभवे । "द्विर्द्दश नासायां तासामौपनासिकाश्चतस्रस्ताः परिहरेत्" सुश्रुतः ।

**औपनिधिक** न० उपानधिरेव स्वार्थे ठक् । "वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते । द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत्" याज्ञ० विवृतिरुपनिधिशब्दे दृश्या ।

**औपनिषत्क** त्रि० उपनिषदा तदुक्तोपदेशेन जीवति वेतना० ठक् । उपनिषदुक्तोपदेशेनोपजीविनि ।

**औपनिषद** पु० उपनिषत्स्वेवाभिव्यज्यते शैषिकोऽण् । उपनिषन्मात्रवेद्ये १परमात्मनि । "तन्त्वौपनिषदं पुरुषं पृच्छामि" वृ० उ० । उपनिषत् ब्रह्मविद्या तस्या इदम् । २ब्रह्मप्रतिपादके वाक्यादौ स्त्रियां ङीप् । "विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः" मनुः । उपनिषदि भवः प्रकाश्यः तस्या व्याख्यानो ग्रन्थो वा ऋगयना० अण् । उपनिषत्प्रकाश्ये ३ब्रह्मणि तस्याव्याख्याने ४ग्रन्थे च ।

**औपनीविक** त्रि० उपनीवि नीविसमीपे प्रायभवः ठक् । नीविसमीपे प्रायभवे "औपनीविकमरुन्ध किल स्त्री वल्लभस्य करमात्मकराभ्याम्" माघः "वक्षोदुर्ब्बलरत्नार्थमसियैनौपनीविकः" भट्टिः ।

**औपपत्त्य** त्रि० उपपक्षं बाहुमूलं तस्येदम् ष्यञ् । बाहुमूलसम्बन्धिनि । "तस्मादिमाः प्रजा लोमशा जायन्ते यस्मादासां पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्वीरणानि जायन्ते" शत० ब्रा० ११,४,१,६ । "उपपक्षं बाहुमूलं तत्सम्बन्धीनि" भा० ।

**औपपत्तिक** त्रि० उपपत्त्या कल्पितम् ठक् । उपपत्त्या १कल्पिते २युक्ते । "औपपत्तिकमाहारं प्रयच्छस्वेति भारत !" भा० अनु० ९२ अ० ।

**औपपातिक** त्रि० उपपातेन उपपातकेन गोवधादिना संसृष्टः ठक् । उपपातकैः संसृष्टे "पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः" नार० "यश्च स्यादुपपातकीति" प्रकामवृत्त पाठः । [बाह्वोरपत्ये ।

**औपबाहवि** पुंस्त्री उपबाह्वोरपत्यम् बाह्वा० इञ् । उपगत

**औपभृत** त्रि० उपभृता पात्रेण सञ्चितः शैषिकोऽण् । १उप-भृत्पात्रेण सञ्चिते हविरादौ । "अध्वर्युरनुज्ञातोऽनुयाजै-स्त्रिभिश्चरत्यौपभृतं समानीय" कात्या० ३,५,२ अ-ध्वर्यु रौपभृतमाज्यं सर्वं जुह्वां समानीय" कर्कः । तस्येदम् अण् । २उपभृत्सम्बन्धिनि "औपभृतासादनम्" कात्या० ५,४,२८, औपभृतमुपभृत्सम्बन्ध्यासादनम्" कर्कः । "सव्या श्रोणिरित्यौपभृतानि" कात्या०६,७,७ ।

**औपमन्यव** पुंस्त्री उपमन्योरपत्यं विदा० अञ् । उप-मन्योरपत्ये स्त्रियां ङीप् । "प्राचीनशालऔपमन्यवः सत्ययज्ञः पौलुषिः" । "औपमन्यव ! किं त्वमात्मान मुपास्से ?" इति च छा०उ० ।

**औपमिक** त्रि०उपमया निर्दिष्टः ठक् । उपमयानिर्दिष्टे । "अभ्रातृकाया इत्यनिर्वाह औपमिकः" 'मधु सोममि-त्यौपमिकं माद्यतेः" । "पीपिलिकामध्येत्यौपमिकं पीपिलिका पेलतेर्गतकर्मणः" इति च निरु० ।

**औपम्य** न० उपमा+चातुर्व० स्वार्थे ष्यञ् । १उपमायाम् २सादृश्ये "प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः" हितोप० । "आत्मौपम्येन सर्वत्र" गीता "सा पूर्णा यदि सामान्य-धर्म औपम्यवाचि च" । "औपम्यवाचिनो लोपसमासे तद्धिते त्रिधा" इति च सा०द० ।

**औपयज** त्रि० उपयजइदम् अण् । उपयजः सम्बन्धिनि उप यट् च तच्छब्दे दर्शितः । "मार्जिते प्रेष्यत्यग्नीदौपय-जानङ्गारानाहरति" कात्या० ६,८,७,

**औपयिक** त्रि० उप+अय–घञ् उपायस्तेन लब्धः ठक् ह्रस्वश्च । १उपायलब्धे, २युक्ते न्यायागतवस्तुनि च । "एतत्तव महाराज ! पुत्रेषु तेषु चैव हि । वृत्तमौपयिकं मन्ये भीष्मेण सह भारत !" भा०आ०२०४अ० । स्त्रियां ङीप् । "नचैवौपयिकी भार्य्या मानुषी कृपणा तव" भा० व० २८०अ० "यदत्रौपयिकं कार्य्यं तच्चिन्तयि-तुमर्हसि" भा०उ० १७७ अ० । उपायएव विनया० स्वार्थे ठक् ह्रस्वश्च । ३उपाये पु० । "शिवमौपयिकं गरी-यसीम्" किरा० । "औपयिकम् उपायम्" मल्लि० ।

**औपयोगिक** त्रि० उपयोगः प्रयोजनमस्य ठञ् । उपयोग-निमित्ते "अथातः स्नेहौपयोगिकं चिकित्सितं व्याख्या-स्यामः" सुश्रु० स्त्रियां ङीप् ।

**औपरिष्ट** त्रि० उपरिष्टात् भवः अण् । "अमेहक्कतसित्रेभ्य एव"वार्त्ति०नियमात् न त्यप् टिलोपः । उपरिष्टाद्भवे ।

**औपरोधिक** त्रि० उपरोधः प्रयोजनमस्य ठक् । १उपरोध-निमित्ते २पैलवे दण्डे पु० हेमच० ।

**औपल** त्रि० उपलादागतः शुण्डिका० अण् । १आयस्थान रूपोपलादागते । उपलस्येदम् अण् । २प्रस्तरसम्बन्धिनि 'यथा प्लवेनौपलेन निमज्जत्युदके तरन्" मनुः ।

**औपवसथिक** त्रि० उपवसथे भवः ठञ् । उपवसथकर्त्तव्ये कर्म्मादौ । उपवसथस्य यामः यागपूर्वदिवसश्च उपवसथ-शब्दे उक्तः । ष्यञ् औपवसथ्य तत्रार्थे । "अग्निप्रणयनीया औपवसथ्येऽनियमः" आश्व०श्रौ० ४,१,२६ । स्वार्थे ष्यञ् । "यागपूर्व्वदिने च । "औपवसथ्येऽह्नि" श्रुतिः ।

**औपवस्त्र** न० उपवस्त्रमेव प्रज्ञा० अण् । १उपवस्त्रे उपवस्तुः कर्म अण् । २उपवासे । उपवस्त्रा प्राप्नोऽस्येति विग्रहे "ऋतोरण्" पा० सूत्रप्रदर्शनं प्रामादिकमेव । तत्र ऋतुशब्दस्यैव ग्रहणं न तु ऋदन्तस्य तथात्वे ऋतो-ऽण् इत्येव स्यात् आर्त्तवमित्युदाहरणं चासङ्गतम् इति बोध्यम् "माषान् मधुमसूरांश्च वर्जयेदौपवस्त्रवत्"स्मृतिः

**औपवास** त्रि० उपवासे दीयते व्युष्टा० अण् । उपवास-व्रते दीयमाने द्रव्ये ।

**औपवासिक** त्रि० उपवासे साधु गुडा० ठञ् । १उपवासे साधौ । तस्मै प्रभवति सन्तापा० ठञ् । २उपवाससमर्थे च

**औपवास्य** न० उपवास+चातुर्व० स्वार्थे ष्यञ् । उपवासे "लक्ष्मणेन यदानीतं पीत्वा वारि समाहितः । औप-वास्यं तदाऽकार्षीद्राघवः सह सीतया" रामा० ।

**औपवाह्य** पु० उपवाह्य एव स्वार्थेऽण् । उपवाहने रथादौ "औपवाह्यः कुवेरस्य सार्वभौम इति श्रुतः" रामा० । सर्वासु भूमिषु विदितः अण् । सार्वभौम इत्यर्थः ।

**औपविन्दवि** पुंस्त्री । उपविन्दोरपत्यम् बाह्वा० इञ् । उपविन्दोरपत्ये स्त्रियां ङीप् । [वेशेनोपजीविनि ।

**औपवेशिक** त्रि० उपवेशेन जीवति वेतना० ठञ् । उप-

**औपश्लेषिक** त्रि० उपश्लेषेण निर्वृत्तः ठक् । एकदेशेन सम्बन्धे आधारभेदे "औपश्लेषिको वैषयिकोऽभिव्यापक-स्त्वाधार स्त्रिधा" सि०कौ० ।

**औपसंक्रमण** त्रि० उपसंक्रमणे दीयते व्युष्टा० अण् । उपसंक्रमणे देये स्त्रियां ङीप् ।

**औपसद** पु० उपसच्छब्दोऽस्मिन्नस्ति विमुक्ता० अण् । उपस-च्छब्दयुक्ते १स्वाधाये २अनुवाके च । उपसत् समीपस्थानं तदस्त्यस्य प्रज्ञा० अण् । ३इन्द्वे "प्रजापतिकामस्यौ-पसदः" कात्या० २२,१०,१२ । "औपसदोद्वन्द्वः" कर्कः-

**औपसर्गिक** त्रि० उपसर्गाय प्रभवति सन्तापा० ठञ्। उपसर्गसमर्थे। स च सुश्रुतोक्तः रोगभेदः यथा "व्याधिविशेषास्तु प्रागभिहिताः सर्व एवैते त्रिविधाः साध्या याप्याः प्रत्याख्येयाश्च तत्रैतान् भूयस्त्रिधा परीक्षेत किमसावौपसर्गिकः प्राक्केवलोऽन्यलक्षण इति तत्रौपसर्गिको यः पूर्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञः"इति। वैद्यकान्तरे तु "कफोऽनुलोमवातेन यदि पित्तानुगो भवेत्। स्वेदशैत्यादिभिर्जुष्टस्तदा भवति मानवः। प्रतिलोमः पुनस्तेन स्वास्थ्यमायाति तत्क्षणात्। औपसर्गिक एवान्यः सन्निपात उदाहृतः" इत्युक्ते २वातादिसन्निपाते च। ३दैवारिष्टसूचके भूकम्पदौस्थ्यादौ। ४उपसर्गसम्बन्धिनि त्रि० शब्दकल्पद्रुमः। तन्मूलं मृग्यम् सम्बन्ध्यर्थे ठकोऽस्मरणात् कोषान्तराभावाच्च। शीले उपासके।

**औपस्थान** त्रि० उपस्थानं शीलमस्य छत्रा० ण। उपस्थान-

**औपस्थानिक** त्रि० उपस्थानेन सेवनेन जीवति वेतना० ठक्। सेवनोपजीविनि।

**औपस्थ्य** न० उपस्थस्य भावः कर्म्म वा ष्यञ्। उपस्थव्यापारसाध्ये सुखे। "औपस्थ्यजैह्व्यकार्पण्यात्"भाग०७,१५,१६ "औपस्थ्यजैह्व्यं बहु मन्यमानः" भाग० ७,६,१४। औपस्थ्यं शैश्न्यं जैह्व्यञ्च सुखम्" श्रीधरः।

**औपहारिक** त्रि० उपहाराय साधु ठक्। उपहारार्थे द्रव्ये "परमान्नेन यो दद्यात् पितॄणामौपहारिकम्" भा० अनु०६०३० श्लो०।

**औपाधिक** त्रि० तेन निर्वृत्तः बा० ठञ्। उपाधिकृते स्त्रियां ङीप् "रूढं सङ्केतवन्नाम सैव संज्ञेति कीर्त्यते। नैमित्तिकी पारिभाषिक्यौपाधिक्यपि तद्विदा" शब्दश०

पुरुषस्य बन्धस्तु औपाधिक एव न नैमित्तिकः नापि तात्त्विकः इत्येतत् सां०सू०भाष्ययोर्निर्णीतं यथा

"न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः" सू०

"दुःखात्यन्तनिवृत्तेर्मोक्षत्वस्योक्ततया बन्धोऽत्र दुःखयोगएव तस्य बन्धस्य पुरुषे न स्वाभाविकत्वं वक्ष्यमाणलक्षणमस्ति यतो न स्वभावतो बद्धस्य मोक्षाय साधनोपदेशस्य विधिरनुष्ठानं नियोज्यानां घटते। न ह्यग्नेः स्वाभाविकादौष्ण्यान्मोक्षः सम्भवति। स्वाभाविकस्य यावद्द्रव्यभावित्वादित्यर्थः। तदुक्तमीश्वरगीतायाम्।

"यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः। न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि"।

"यस्मिन् सति कारणविलम्बादिलम्बो यस्योत्पत्तौ न भवति तस्य तत् स्वाभाविकमिति स्वाभाविकत्व लक्षणम्। ननु सर्वदोपलम्भापत्तेर्दुःखस्य स्वाभाविकत्वशङ्कैव नास्तीति चेन्न त्रिगुणात्मकत्वेन चित्तस्य दुःखस्वभावत्वेऽपि सत्त्वाधिक्येनाभिभवात् सदा दुःखानुपलब्धिवदात्मनोऽपि तदनुपलब्धिसम्भवात्। दुःखस्वाभाविकत्ववादिभिर्बौद्धैश्चित्तस्यैवात्मताभ्युपगमाच्च। अथैवमात्मनाशादेव मोक्षोऽस्त्विति चेन्न। अहं बद्धो मुक्तः स्यामिति बन्धसामानाधिकरण्येनैव मोक्षस्य पुरुषार्थत्वादिति। भवत्वननुष्ठानं तेन किमित्यत आह" भा०।

"स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम्" सू०।

"स्वभावस्य यावद्द्रव्यभावित्वान्मोक्षासम्भवेन तत्साधनोपदेशश्रुतेरननुष्ठानलक्षणमप्रामाण्यं स्यादित्यर्थः भा०। ननु श्रुतिबलादेवानुष्ठानं स्यात् तत्राह।

"नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः" सू०।

"नाशक्याय फलायोपदेशस्यानुष्ठानं सम्भवति। यत उपदिष्टेऽपि विहितेऽप्यशक्योपाये स उपदेशो न भवति। किन्तूपदेशाभास एव "बाधितमर्थं वेदोऽपि न बोधयतीति" न्यायादित्यर्थः"भा०। अत्र शङ्कते।

"शुक्लपटवद्बीजवच्चेत्" सू०।

"ननु स्वाभाविकस्याप्यपायो दृश्यते। यथा शुक्लपटस्य स्वाभाविकं शौक्ल्यं रागेणापनीयते। यथा च बीजस्य स्वाभाविक्यप्यङ्कुरशक्तिरग्निनापनीयते। अतः शुक्लपटवद्बीजवच्च स्वाभाविकस्य बन्धस्याप्यपायः पुरुषे सम्भवतीति तद्वदेव तत्साधनोपदेशः स्यादिति चेदित्यर्थः" भा०। समाधत्ते।

"शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः" सू०।

"उक्तदृष्टान्तयोरपि नाशक्याय स्वाभाविकायोपदेशो लोकानां भवति। कुतः शक्त्युद्भवानुद्भवाभ्याम्। दृष्टान्तद्वये हि शौक्ल्यादेराविर्भावतिरोभावावेव भवतः। न तु शौक्ल्याङ्कुरशक्त्योरभावो भवति। रजकादिव्यापारैर्योगिसङ्कल्पादिभिश्च रक्तपटभ्रष्टबीजयोः पुनः शौक्ल्याङ्कुरशक्त्याविर्भावादित्यर्थः। नन्वेवं पुरुषेऽपि दुःखशक्तितिरोभाव एव मोक्षोऽस्त्विति चेन्न दुःखात्यन्तनिवृत्तेरेव लोके पुरुषार्थत्वानुमानात् श्रुतिस्मृत्योः पुरुषार्थत्वसिद्धेश्च न तु दृष्टान्तयोरिव तिरोभावमात्रस्येति। किञ्च दुःखशक्तितिरोभावमात्रस्य मोक्षत्वे कदाचिद्योगीश्वरसङ्कल्पादिना शक्त्युद्भवस्य भ्रष्टबीजेष्विव मुक्तेष्वपि सम्भवेनानिर्मोक्षाप-

त्तिरिति" भा० । स्वभावतो बन्धं निराकृत्य निमित्तेभ्योऽपि बन्धमपाकरोति सूत्रजातेन । पुरुषे दुःखस्य नैमित्तिकत्वे ज्ञानाद्युपायोच्छेद्यत्वं न घटेत । अनागतावस्थसूक्ष्मदुःखस्य यावद्द्रव्यभावित्वादित्याशयेन नैमित्तिकत्वं निराक्रियते ।

"न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात्" सू० ।

"नापि कालसम्बन्धनिमित्तकः पुरुषस्य बन्धः कुतः? व्यापिनो नित्यस्य कालस्य सर्वावच्छेदेन सर्वदा मुक्तामुक्तसकलपुरुषसम्बन्धात् सर्वावच्छेदेन सदा सकलपुरुषाणां बन्धापत्तेरित्यर्थः । अत्र च प्रकरणे कालदेशकर्मादीनां निमित्तत्वसामान्यं नापलप्यते श्रुतिस्मृतियुक्तिभिः सिद्धत्वात् । किन्तु यन्नैमित्तिकत्वं पाकजरूपादिवन्निमित्तजन्यत्वं तदेव बन्धे प्रतिषिध्यते पुरुषे बन्धस्यौपाधिकत्वाभ्युपगमात् । नतु कालादिनिमित्तकत्वेऽपि सहकार्यन्तरसन्निधानासन्निधानाभ्यां व्यवस्था स्यादिति चेत् एवं सति यत्संयोगे सत्यवश्यं बन्धस्तस्यैव सहकारित्वे लाघवाद्बन्धो युक्तः पुरुषे बन्धव्यवहारस्यौपाधिकत्वेनाप्युपपत्तेरिति कृतं नैमित्तिकत्वेनेति" भा० "न देशयोगतोऽप्यस्मात्" सू० ।

"देशयोगतोऽपि न बन्धः कुतः? अस्मात् पूर्वसूत्रोक्तान्मुक्तामुक्तसर्वपुरुषसम्बन्धात् मुक्तस्यापि बन्धापत्तेरित्यर्थः" भा० ।

"नावस्थातो देहधर्मत्वात् तस्याः" सू० ।

"सङ्घातविशेषरूपतारूया देहरूपा यावस्था न तन्निमित्ततोऽपि पुरुषस्य बन्धः । कुतः? तस्या अवस्थाया देहधर्मत्वात् अचेतनधर्मत्वादित्यर्थः । अन्यधर्मस्य साक्षादन्यबन्धकत्वेऽतिप्रसङ्गात् । मुक्तस्यापि बन्धापत्तेरित्यर्थः" भा० । ननु पुरुषस्याप्यवस्थायां किं बाधकं तत्राह ।

"असङ्गोऽयं पुरुष इति" सू० ।

"इति शब्दो हेत्वर्थे । पुरुषस्यासङ्गत्वादवस्थाया देहमात्रधर्मत्वमिति पूर्वसूत्रेणान्वयः । पुरुषस्यावस्थारूपविकारस्वीकारे विकारहेतुसंयोगाख्यः सङ्गः प्रसज्येतेति भावः । असङ्गत्वे च श्रुतिः । "स यदत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुष" इति । सङ्गश्च संयोगमात्रं न भवति । कालदेशसम्बन्धस्य पूर्वमुक्तत्वात् । श्रुतिस्मृतिषु पद्मपत्रस्थजलेनेव पद्मपत्रस्यासङ्गतायाः पुरुषासङ्गतायां दृष्टान्ततामवणाच्च" भा० ।

"न कर्मणान्यधर्मत्वादतिप्रसक्तेश्च" सू० ।

"न हि विहितनिषिद्धकर्मणापि पुरुषस्य बन्धः कर्मणामनात्मधर्मत्वात् । अन्यधर्मेण साक्षादन्यस्य बन्धे च मुक्तस्यापि बन्धापत्तेः । ननु स्वस्वोपाधिकर्मणा बन्धाङ्गीकारे नायं दोष इत्याशयेन हेत्वन्तरमाह । अतिप्रसक्तेश्चेति । प्रलयादावपि दुःखयोगरूपबन्धापत्तेश्चेत्यर्थः । सहकार्यन्तरविलम्बतो विलम्बकल्पनं च प्रागेव निराकृतं न कालयोगत इत्यादिसूत्र इति" भा० ।

नन्वेवं दुःखयोगरूपोऽपि बन्धः कर्मसामानाधिकरण्यानुरोधेन चित्तस्यैवास्तु दुःखस्य चित्तधर्मतायाः सिद्धत्वात् । किमर्थं पुरुषस्यापि कल्प्यते बन्ध इत्याशङ्कायामाह ।

"विचित्रभोगानुपपत्तिरन्यधर्मत्वे" सू० ।

"दुःखयोगरूपबन्धस्य चित्तमात्रधर्मत्वे विचित्रभोगानुपपत्तिः । पुरुषस्य हि दुःखयोगं विनापि दुःखसाक्षात्काराख्यभोगस्वीकारे सर्वपुरुषदुःखादीनां सर्वपुरुषभोग्यता स्यान्नियामकाभावात् । ततश्चायं दुःखभोक्तायं च सुखभोक्तेत्यादिरूपभोगवैचित्र्यं नोपपद्येतेत्यर्थः । अतो भोगवैचित्र्योपपत्तये भोगनियामकतया दुःखादियोगरूपो बन्धः पुरुषेऽपि स्वीकार्यः । स च पुरुषे दुःखयोगः प्रतिविम्बरूप एवेति प्रागेवोक्तम् । प्रतिविम्बश्च स्वोपाधिवृत्तेरेव भवतीति न सर्वपुंसां सर्वदुःखभोगः इति भावः । "चित्तवृत्तिभोगे च पुरुषस्यानादिः स्वस्वामिभावः सम्बन्धो हेतुरिति" योगभाष्यादयं सिद्धान्तः सिद्धः । चित्ते च पुरुषस्य स्वत्वं स्वभुक्तवृत्तिवासनावत्त्वमिति । यत् तु चित्तस्यैव बन्धमोक्षौ न पुरुषस्येति श्रुतिस्मृतिषु गीयते तद्बिम्बरूपदुःखयोगरूपं पारमार्थिकं बन्धमादाय बोध्यम्" भा० । साक्षात् प्रकृतिनिमित्तकत्वमपि बन्धस्यापाकरोति ।

"प्रकृतिनिबन्धनाच्चेन्न तस्या अपि पारतन्त्र्यम्" सू० ।

"ननु प्रकृतिनिमित्ताद्बन्धो भवत्विति चेन्न यतस्तस्या अपि बन्धकत्वे संयोगपारतन्त्र्यमुत्तरत्र वक्ष्यमाणमस्ति । संयोगविशेषं विनापि बन्धकत्वे प्रलयादावपि दुःखसम्बन्धप्रसङ्गादित्यर्थः । प्रकृतिनिबन्धना चेदिति पाठे तु प्रकृतिनिबन्धना चेद्बद्ध इतेत्यर्थः" भा० । अतो यत्परतन्त्रा प्रकृतिर्बन्धकारणं सम्भवेत् तस्मादेव संयोगविशेषादौपाधिको बन्धोऽग्निसंयोगाज्जलौष्ण्यवदिति स्वसिद्धान्तमनेनैव प्रसङ्गेनान्तराल एवावधारयति ।

"न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते" सू० ।

"तस्मात् तद्योगादृते प्रकृतिसंयोगं विना न पुरुषस्य तद्योगो बन्धसम्पर्कोऽस्ति । अपि तु स एव बन्धहेतुः । बन्धस्यौपाधिकत्वलाभाय नञ्द्वयेन वक्रोक्तिः । यदि हि बन्धः

प्रकृतिसंयोगजन्यः स्यात् पाकजरूपवत् तदा तद्वदेव तद्वियोगेऽप्यनुवर्त्तेत। न च द्वितीयक्षणादेर्दुःखनाशकत्वं कल्प्यं कारणनाशस्य कार्य्यनाशकतायाः कॢप्तत्वेन तेनैवोपपत्तावधिकाऽकल्पनात्। वृत्तिर्हि दुःखादेरुपादानम्। अतो दीपशिखावत् क्षणभङ्गुरायाः वृत्तेराशुविनाशित्वे नैव तद्धर्म्माणां दुःखेच्छादीनां विनाशः सम्भवतीति। अतः प्रकृतिवियोगे बन्धाभावादौपाधिक एव बन्धो न तु स्वाभाविको नैमित्तिको वेति। तथा तत्संयोगनिवृत्तिरेव साक्षाद्बानोपाय इत्यपि वक्रोक्तिफलम्। तथा च स्मृतिः

"यथा ज्वलद्गृहाश्लिष्टं स्वगृहं विच्छिद्य रक्ष्यते।
तथा सदोषप्रकृतिविच्छिन्नोऽयं न शोचति"।

वैशेषिकाणामिव पारमार्थिको दुःखयोग इति भ्रमो मा भूदित्येतदर्थं नित्येत्यादि। यथा स्वभावशुद्धस्य स्फटिकस्य रागयोगो न जपायोगं विना घटते तथैव नित्यशुद्धादिस्वभावस्य पुरुषस्योपाधिसंयोगं विना दुःखसंयोगो न घटते स्वतो दुःखाद्यसम्भवादित्यर्थः तथाह सौरे

'यथा हि केवलो रक्तः स्फटिको लक्ष्यते जनैः"।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः"।

नित्यत्वं कालानवच्छिन्नत्वम्। शुद्धादिस्वभावत्वं च नित्यशुद्धत्वादिकम्। तत्र नित्यशुद्धत्वं सदा पापपुण्यशून्यत्वम्। नित्यबुद्धत्वमलुप्तचिद्रूपत्वम्। नित्यमुक्तत्वं सदा पारमार्थिकदुःखायुक्तत्वम्। प्रतिविम्बरूपदुःखयोगस्त्वपारमार्थिको बन्धः इति भावः। आत्मनो नित्यशुद्धत्वादौ च श्रुतिः। "अयमात्मा सन्मात्रो नित्यशुद्धः बुद्धः सत्यो मुक्तो निरञ्जनो विभुरित्यादिः" भा०।

अयमेव पक्षो वेदान्तिभिरप्यङ्गीकृतः 'तद्गुणसारत्वादित्यादि" शा०सूत्रभाष्ये 'न हि बुद्धेर्गुणैर्विना केवलस्यात्मनः संसारित्वमस्ति बुद्ध्युपाधिधर्म्माध्यासनिमित्तं हि कर्त्तृत्वभोक्तृत्वलक्षणं संसारित्वमकर्त्तुरभोक्तुश्चासंसारिणोनित्यमुक्तस्य सत आत्मनः" इति "यावदात्मभावित्वादित्यादि"शा०सूत्रभाष्ये च "यावदेव चायं बुद्ध्युपाधिसम्बन्धस्तावदेव चास्य जीवत्वं संसारित्वञ्च। परमार्थतस्तु न जीवोनाम बुद्ध्युपाधिपरिकल्पितस्वरूपव्यतिरेकेण"इति च संसारित्वस्य बुद्ध्युपाधिसंबन्धाधीनतयौपाधिकत्वस्योक्तेः।इयांस्तु विशेषः एतन्मते बन्धस्येव जीवभेदस्यापि औपाधिकत्वं तदपि शां०सू०भाष्ययोर्निर्णीतं यथा "अतएव चोपमा(जल)सूर्य्यकादिवत्"सू० "अतएव चायमात्मा चैतन्यस्वरूपोनिर्विशेषो वाङ्मनसातीतः परप्रतिषेधेनोपदिश्यते अतएव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्य्यकादिवदित्युपमोपादीयते मोक्षशास्त्रेषु "यथाह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपोदेवः क्षेत्रेष्वेवमजोऽयमात्मेति"। "एकएव तु भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवदिति" चैवमादिषु। अत्र प्रत्यवस्थीयते" भा०। "अम्बुवदग्रहणात्तु न तथात्वम्"सू०।"न जलसूर्य्यादितुल्यत्वमिहोपपद्यते तद्वदग्रहणात्। सूर्य्यादिभ्योहि मूर्त्तेभ्यः पृथगभूतं विप्रकृष्टदेशं मूर्त्तञ्च जलं गृह्यते तत्र युक्तः सूर्य्यादिप्रतिविम्बोदयो नत्वात्मा मूर्त्तः नचास्मात् पृथगभूता विप्रकृष्टदेशाश्चोपाधयः, सर्व्वगतत्वात् सर्व्वानन्यत्वाच्च तस्मादयुक्तोऽयं दृष्टान्त इति। अत्र प्रतिविधीयते। भा० "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्"सू०। युक्त एव त्वयं दृष्टान्तः विवक्षितांशसम्भवात् न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित् कञ्चिद्विवक्षितमंशं मुक्त्वा सर्व्वसारूप्यं केनचिद्दर्शयितुं शक्यते सर्व्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात्। न चेदं स्वमनीषया जलसूर्य्यकादिदृष्टान्तप्रणयनम्। शास्त्रप्रणीतस्य त्वस्य प्रयोजनमात्रमुपन्यस्यते। किं पुनरत्र विवक्षितं सारूप्यमिति? तदुच्यते वृद्धिह्रासभाक्त्वमिति। जलगतं हि सूर्य्यप्रतिविम्बं जलवृद्धौ वर्द्धते जलह्रासे ह्रसते जलचलने चलति जलभेदे भिद्यते इत्येवं जलधर्म्मानुविधायि भवति न तु परमार्थतः सूर्य्यस्य तथात्वमस्ति एवं परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद्भजतएवोपाधिधर्म्मान् वृद्धिह्रासादीन् एवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः"भा०। "दर्शनाच्च"सू०।"दर्शयति च श्रुतिः परस्यैव ब्रह्मणोदेहादिषूपाधिष्वनुप्रवेशम् "पुरः स चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति" "अनेन जीवेनात्मनानुप्रविश्येति" च तद्युक्तमेतत्"।

उपाधिरेव विनया० स्वार्थे ठञ्। साध्यसमव्यापकत्वे सति साधनाव्यापकत्वरूपे प्रागुक्ते उपाधौ "अनौपाधिको व्याप्तिः", अनुमा० चि०।

**औपाध्यायक** त्रि० उपाध्यायादागतः वुञ्। उपाध्यायाल्लब्धे

**औपानह्य** पु० उपानह्ये अयम्। "तदर्थं विकृतेः प्रकृतौ" पा० इत्यधिकारे ञ्य। उपनद्रूपविकारसाधने तत्प्रकृतौ १वृक्षे २चर्म्मणि न०।

**औपावि** पुंस्त्री उपावस्यापत्यम् इञ्। उपावर्मैरपत्ये।

"तत्र औपाविमैव जानश्रुतायनेन प्रत्यवरूढम्" शत० ब्रा० ५,१,१,५ । स्त्रियां ङीप् ।

**औपासन** त्रि० उपास्यते प्रतिदिनमित्युपासनो गृह्योऽग्निस्तत्र भवः अण् । गृह्याग्नौ कर्त्तव्ये सायंप्रातर्होमादौ कर्म्मणि । गृह्याग्निश्च विवाहाग्निः । तत्र कर्त्तव्यं दर्शितं "नौपासनश्रुतेः" कात्या० १,१,२, "यदुक्तम् वैतानिकेष्वेवाग्निषु श्रौतं स्मार्तं च कर्त्तव्यमिति तच्च कुतः ? औपासनश्रुतेः यत आहिताग्नेरप्यौपासनः श्रूयते पितृमेधे "अह्नारेणौपासनं निरस्यतीति" यदि स्मार्तमपि वैतानिकेष्वेव क्रियते तदा आहिताग्नेः पितृमेधे औपासनदर्शनं न स्यात् अस्ति च । तस्मात् स्मार्त्तान्यौपासने कर्त्तव्यानीति तथा च स्मृतिः "स्मार्त्तं कर्म्म विवाहाग्नौ कुर्वीत प्रत्यहं गृही । दायकालाहृते वापि श्रौतं वैतानिकाग्निषु इति" । "तस्मिन् गृह्याणीत्यापस्तम्बस्मरणाच्च" । गृहाय हितं गृह्यम् गृहशब्दश्च दम्पत्योर्वर्त्तते तस्मिन्नित्यावसथ्ये । अतश्च यत्किञ्चिद्दम्पत्योर्हितं कर्म शान्तिक पौष्टिक व्रताङ्गहोमादिकं स्मार्त्तं तत् सर्वमावसथ्येऽग्नौ भवतीति । तथा च खादिरगृह्यसूत्रकारिकायाम् "होमानात्मार्थपत्न्यर्थान् कुर्यान्नौपासने न च । परार्थानेकदेशेऽग्नौ स चान्ते लौकिको भवेत्" अत एव कात्यायनः (कर्मप्रदी०) "न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम् । स्वकर्म्म सत्क्रियार्थस्य यावन्नासौ प्रजायते । अग्निस्तु नामधेयादौ होमे सर्व्वत्र लौकिकः । न हि पिता समानीत पुत्रस्य भवति क्वचित्" । अतश्च सीमन्तोन्नयनमपि स्मार्ताग्नावेव कार्य्यम् ! अपिच आधानेनोत्पादितानां गार्हपत्यादीनामग्नीनाम् प्रयोजनापेक्षायां सत्यां "गार्हपत्ये हवींषि श्रपयन्त्याहवनीये जुहोति दक्षिणाग्नावन्वाहार्य्यं पचतीति" प्रत्यक्षवचननिर्द्दिष्टैरेव प्रयोजनैर्निराकाङ्क्षाणाम् न सामर्थ्यमात्रेणोक्तादन्यत्र विनियोगः कल्पयितुं शक्यते"। तस्मात् स्मार्तान्यौपासन एव कार्य्याणि इति" कर्कः । विधानपा० तस्यारम्भकालादि निरूपितं यथा गृह्यपरिशिष्टे "अथ नित्यौपासनं तस्य सायमारम्भ इति । शौनकोऽपि यस्मिन्नह्नि विवाहः स्यात्सायमारभ्य तस्य तु । परिचर्य्यां विवाहाग्नेर्विदधीत स्वयं द्विजः । यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति । उपक्रमोत्तरस्याह्नः सायं परिचरेदमुमिति"। इदमपि नवनाड्यतिक्रमे द्रष्टव्यम् । तथा चापस्तम्बसूत्रे भाष्यकृत्सुदर्शनाचार्य्यः । "अस्यचारम्भणं रात्रावेव यदि नव नाड्योनातीताः । अतीताश्चेत् परेद्युः सायमेवाग्निहोत्रवेलायामारम्भ इति" । अन्यत्रापि । "प्रातर्होमे सङ्गवान्तः कालस्त्वनुदिते ऽथ वा । सायमस्तमिते होमः कालस्तु नवनाडिकेति"। अत्रानुदितहोमकालस्तु वाजसनेयिनां वेदितव्यः । तथा च कात्यायनसूत्रम् । "औपासनस्य परिचरणमस्तमितानुदितयोरिति" । तेषामौपासनसमारम्भोऽपि चतुर्थीहोमानन्तरमाहितेऽग्नौ भवति न तु विवाहाग्नौ "आवसथ्याधानं दारकाले दायाद्यकाले वेति" कात्यायनसूत्रात् तद्भाष्यमपि ।"दारकालश्चतुर्थ्युत्तरकालः । दायाद्यकालो धनविभागकाल इति" औपासनात्पूर्व्वं यदि विवाहाग्निः शाम्येत तदा प्रायश्चित्तमुक्तं विश्वादर्शे "उद्वाहौपासनात् पूर्व्वमनले शान्तिमागते । स्थालीपाकं ततः कृत्वा ह्यौपासनमथाचरेत् । नवनाडीभ्य ऊर्द्ध्वं चेत्स्थालीपाकोभवेत्तु वै ।औपासने तदा कुर्य्यात् परेद्युः सायमेव चेति" । तस्य प्रादुष्करणकाल उक्तः आश्वलायनसूत्रे "तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्याताविति" तत्कारिकायामपि ।"ज्वालयेदपराह्णेऽग्निमस्तं याते दिवाकरे । पर्य्युक्ष्याग्निं परिस्तीर्य्य पर्य्युक्ष्य च ततः परमिति" । स्पष्टमाह कात्यायनः । "सूर्य्ये तु शैलमप्राप्ते षड्भिंशद्भिरिहाङ्गुलैः । प्रादुष्करणमग्नीनां प्रातरासोमदर्शनम्" । तथा "दुहित्रा स्नुषया वाग्निविहारो न विरुध्यते । निलेपनं च पात्राणामुपलेपनमेव चेति" । उक्तकाले प्रादुष्करणाभावे प्रायश्चित्त मुक्तम् आश्वलायन कारिकायाम् । "प्रायश्चित्तं विशेषेण यत्र नोक्तं भवेद्विधिः । होतव्याज्याहुतिस्तत्र भूर्भुवःस्वरितीति चेति" । कात्यायनः अनुदितास्तमयलक्षणमाह । "रात्रेस्तु षोडशे भागे ग्रहनक्षत्रभूषिते । कालं त्वनुदितं ज्ञात्वा तत्र होमं प्रकल्पयेत्" । तथा "यावत्सम्यङ्न भासन्ते नभस्यृक्षाणि सर्वतः । न च लौहित्यमायाति तावत्सायं तु हूयते" । अत्राश्वलायनादीनां होमे मुख्यकालमाह चन्द्रिकायामत्रिः "हस्तादूर्द्ध्वं रवियावद्गूभिं हित्वा न गच्छति । तावद्धोमविधिः पुण्योनान्योऽभ्युदितहोमिनाम् । रात्रौ प्रदोषो मुख्यःस्यादिति वेदविदो विदुरिति" । अत्र गौणकालमाह शौनकः "पश्चादस्तमयात्कालोयोभवेत्त्रिमुहूर्त्तकः । स सायंहोमकालःस्यात् प्रदोषान्त उदाहृतः । यस्तु षड्नाडिकाकालः पश्चादेवोदयाद्रवेः । स होमकालो विप्राणां सङ्गवान्त इति स्मृत"इति । यदि गौणकालोऽप्यतीतस्तदा गृह्यपरिशिष्टे प्रायश्चित्तमुक्तम्

"नित्यहोममतीत्य मनस्वत्या चतुर्गृहीतं जुहुयात् द्वादशरात्रादूर्द्ध्वं पुनराधानमिति"। केचित्तु प्रायश्चित्तं कृत्वा प्रातर्होमकालात् पूर्व्वं सायंहोमः कार्य्यः सायं होमात्पूर्व्वं प्रातर्होमः कार्य्यइत्याहुः "आसायकर्म्मणः प्रातराप्रातः सायकर्म्मणः। आहुतिं नातिपद्येत पार्व्वणं पार्व्वणान्तरादिति" बौधायनस्मृतेरिति। अस्याग्निहोत्रवद् विधानं प्रदर्शितं शौनकेन। "अग्निहोत्रवदित्येतच्छौनकेन प्रपञ्चितम्। पुनः पर्य्युक्ष्य चाङ्गारानुदग्नेरपोह्य च। होम्यानां द्वादशानां तु पक्वमेतेष्वधिश्रयेत्। पयोयवागूः सर्पिश्च ओदनं दधि तण्डुलाः। सोमस्तैलमपो व्रीहिर्द्वादशैते तिलायवाः। पय आदीनि चत्वारि विदुः पक्वानि याज्ञिकाः। दध्यादीनामपक्वानामधिश्रयणमिष्यते। उल्मुकेनैव ज्वलयेदपक्वं पक्वमेव च। अधिश्रिते स्रुवेणापः परिषिञ्चेत्तथाधिकाः। पुनस्त्रिर्ज्वलता तेन परिव्युह्य प्रहृत्य तत्। उदक्कर्षं त्रिधोद्वास्याप्यङ्गारानतिसृज्य च। अग्नेः पश्चात्तृणेष्वेव निधाय समिधा सह। त्रिवारमेकं संस्कृत्य गृहीत्वा सायमग्नये (तेषां द्वादशद्रव्याणां मध्ये एकं द्रव्यमित्यर्थः)। स्वाहेति मन्त्रमुच्चार्य्य कुर्व्वीत प्रथमाहुतिम्। प्रातर्होमे तु सूर्य्याय स्वाहेति प्रथमाहुतिम्। तूष्णीं प्रजापतिं ध्यायन्नुभयत्र द्वितीयिकामिति"। अत्रान्योविशेषः स्मृत्यन्तरोक्तोऽवगन्तव्यः। होमस्थानं स्मृत्यर्थसारे "बहुशुष्केन्धनेनाग्नौ सुसमिद्धे हुताशने। अङ्गारे लेलिहाने च होतव्यं नान्यथा क्वचित्। योऽनर्च्चिषि जुहोत्यग्नौ व्यङ्गारे चैव मानवः। मन्दाग्निरामयावी च दरिद्रश्चोपजायते। अग्निः प्रदक्षिणावर्त्तः शर्मदश्च शुभावहः" इति। अग्न्युपस्थानमन्त्रानाह शौनकः "परिसमुह्य च पर्य्युक्ष्याप्युपतिष्ठेद्धविर्भुजम्। अग्नेः सूक्तैश्च सौरैश्च प्राजापत्यैश्च नित्यशः" याज्ञ०। हुत्वाग्नीन् सूर्य्यदैवत्यान् जपेन्मन्त्रान् समाहितः" एतद्धोमं प्रशंसत्यङ्गिराः "यद्दद्यात्काञ्चनं मेरुं पृथिवीं चससागराम्। तत्सायं प्रातर्होमस्य तुल्यं भवति वा नवेति"। अन्यत्रापि "नाग्निहोत्रात्परोधर्म्मो नाग्निहोत्रात्परं तपः। नग्निहोत्रात्परं स्नानं नाग्निहोत्रात्परा गतिरिति" अकरणे प्रत्यवायमाह गर्गः "कृतदारोन तिष्ठेत क्षणमप्यग्निना विना। तिष्ठेत चेद्द्विजोव्रात्यस्तथा च पतितो भवेत्। यथा स्नानं यथा सन्ध्या वेदस्याध्ययनं यथा। तथैवौपासनं कार्य्यं न स्थितस्तद्वियोगतः। यो हि हित्वा विवाहाग्निं गृहस्थ इति मन्यते। अन्नं तस्य न भोक्तव्यं वृथा पाकोहि स स्मृतः। वृथापाकस्य भुञ्जानः प्रायश्चित्तं समाचरेत्। प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यतीति"।

तस्याशौचेऽपि कर्त्तव्यतामाह याज्ञ०। "वैतानौपासनाः कार्य्याः क्रियाश्च श्रुतिनोदनात्"। ङीबभाव आर्षः लोके तु औपासनीत्येव

**औपोदिति** पुंस्त्री उपोदितस्यापत्यम् इञ्। उपोदितर्पत्ये स्त्रियां ङीप्। तस्या अपत्यम् ढक्। औपोदितेयः तस्या अपत्ये। "उतोहस्माहौपोदितेय एषवाव मह्यं गा दास्यति" शत०ब्रा० १,९,२,१६। [स्याविकारे।

**औमा(क)** त्रि० उमाया विकारः अण् वुञ् वा। अत-

**औमायन** त्रि० उमाया निमित्तं संयोग उत्पातो वा अश्वा० फञ्। अतस्या निमित्ते संयोगे उत्पाते च स्त्रियां ङीप्। [क्षेत्रे।

**औमीन** त्रि० उमानां भवनं क्षेत्रम् खञ्। अतसीभवने

**औरग** न० उरगोदेवताऽस्य अण्। १सर्पाधिष्ठातृदेवताके अश्लेषानक्षत्रे। तस्येदम् अण्। २सर्प सम्बन्धिनि त्रि० स्त्रियां ङीप्।

**औरभ्र** न० उरभ्रस्य मेषस्येदम् अण्। १मेषलोमजाते कम्बले २तत्सम्बन्धिनि त्रि०। "औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै" मनुः। "वृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु" सुश्रु०। धन्वन्तरिं प्रति प्रश्नकारकर्षिमध्ये ३ऋषिभेदे पु० औपधेनवशब्दे उदा०।

**औरभ्रक** न० उरभ्राणां समूहः वुञ्। मेषसमूहे।

**औरभ्रिक** त्रि० उरभ्रः पण्यमस्य ठञ्। मेषविक्रयोपजीविनि "औरभ्रिकोमाहिषिकः परपूर्व्वापतिस्तथा" मनुः। स्त्रियांङीप्।

**औरस** पु० उरसा निर्म्मितः यदभावे अण्। "सवर्णायां संस्कृतायां स्वयमुत्पादयेत्तु यम्। औरसं तं विजानीयात् पुत्रं प्रथमकल्पितम्" मनूक्ते पुत्रभेदे "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च" मनुना द्वादशविधपुत्रमध्ये तस्य प्राथम्योक्तेः "अङ्गादङ्गात् सम्भवति" आत्मा वै जायते पुत्र." श्रुतेश्च स्वदेहजातत्वेनास्य तथात्वम्। १उरसानिर्म्मितमात्रत्वेन असवर्णापुत्रे परपूर्व्वापुत्रेऽपि औरसशब्दस्य वृत्तिः अतएव "अर्जुनस्य परपूर्व्वायां नागकन्यायामुत्पन्नमैरावतमभिप्रेत्य" भा०भी० ९१अ० "अजानन् अर्जुनश्चापि निहतं पुत्रमौरसम्" ऐरावतस्य औरसत्वविशेषणम्। "एकएवौरस पुत्रः सर्व्वस्य वसुनः प्रभुः" मनुः

"औरसः क्षेत्रजः पुत्रौ पितृरिक्थस्य भागिनौ" स्मृतिः औरसे पुनरुत्पन्ने तृतीयांशहराः सुताः" मनुः उरस इदमण्। २हृदयभवे त्रि० उरसा नाम पुरोभेदः तत्र भवः सिन्ध्वा० अण्। ३औरस उरसापुरोभवे त्रि०।

**औरसिक** न० उरस्य अङ्गुल्या० स्वार्थे ठक्। १उरसि। इसुसुक्तान्तात् कः" पा० उक्तेरिसुसादिभिन्नत्वात् औरस्क इति शब्द कल्पन प्रामादिकमेव।

**औरस्य** न० उरसि भवः शरीरावयवत्वात् यत् ततः स्वार्थे अण्। उरसिभवे। "स्वकार पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्। औरस्यं तं विजानीयात्" शिक्षा "औरसपुत्रे तु उरस एव "उरसोऽण् चेति" सूत्रे चाट् ग्रहणात् अतएव औरसपर्य्याये उरस्यशब्द एवामरे बोध्यः तथैव टीकाकृद्भिर्व्याख्यानात्। [लोमविकारे कम्बलादौ।

**और्ण(क)** त्रि० ऊर्णायाः विकारः अञ् पक्षे वुञ्। मेष-

**और्णावत** त्रि० उर्णावतोऽयम् अण्। ऋषिभेदे ततः स्वार्थे ष्यञ्। और्णाविल्योऽप्यत्र। [तन्निमित्तादौ स्त्रियां ङीप्।

**और्णिक** त्रि० ऊर्णायानिमित्त संयोग उत्पातो वा ठञ्।

**और्द्धकालिक** त्रि० ऊर्द्धकाले भवः काश्या० ठञ् ञिठच्। ऊर्द्धकालभवे। ठञि स्त्रियां ङीविति भेदः।

**और्द्धदेह** त्रि० ऊर्द्धदेहस्येदम् अण्। ऊर्द्धदेहसम्बन्धिनि "और्द्धदेहनिमित्तार्थमवतीर्य्योदकं नदीम्" रामा०

**और्द्धदेहिक** त्रि० ऊर्द्धदेहाय साधु—ठञ्। ऊर्द्धदेहप्रापके शास्त्रोक्ते क्रियादौ मरणोत्तरं हि मनुष्याणां प्रथममातिवाहिकदेहोत्पत्तिस्ततः पूरकपिण्डदानेन प्रेतदेहप्राप्तिः आद्यादिसपिण्डान्तक्रियाभिः प्रेतदेहनिवृत्त्या भोगदेहप्राप्तिस्तत्र च पूर्व्वोत्तरभवे क्रिये हेतू। तदेतत् शुद्धितत्त्वे निर्णीतं यथा।

"अत्रेदं वीजं पूर्व्वक्रियायाआतिवाहिकदेहत्यागोत्तरदेहान्तरजननं, मध्यक्रियायाअपि प्रेतत्वपरिहारोत्तरदेहान्तरजननं तत्सत्कयैव तत्सिद्धौ पुनस्तत्करणं वचनाभावेऽनर्थकम्। तथाच विष्णुधर्म्मोत्तरम् "तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम्। ऊर्द्ध्वं व्रजन्ति भूतानि त्रीण्यस्मात्तस्य विग्रहात्"। त्रीणि भूतानि तेजोवायुकाशानि, पृथिवीजले तु अधोगच्छतः। तत्क्षणात् मृत्युक्षणात्। तथा "आतिवाहिकसंज्ञोऽसौ देहोभवति भार्गव!। केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित्"। तथा "प्रेतपिण्डैस्तथा दत्तैर्देहमाप्नोति भार्गवः। भोगदेहमिति प्रोक्तं क्रमादेव न संशयः। प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोक्षणम्। श्मशानिकेभ्योभूतेभ्यश्चाकल्पं नैव विद्यते। तत्रास्य यातना घोरा शीतवातातपोद्भवाः। ततः सपिण्डीकरणे बान्धवैस्तु कृते नरः। पूर्णे संवत्सरे देहमतोऽन्यं प्रतिपद्यते। ततः स नरके याति स्वर्गे वा स्वेन कर्म्मणा"। तथा वायुपुराणम् "पूरकेण तु पिण्डेन देहोनिष्पाद्यते यतः। कृतस्य करणायोगात् पुनर्नावर्त्तयेत् क्रियाम्"। अतएवातिवाहिकदेहपरित्यागाय तत्कालीनकर्म्मासमर्थपुत्रसत्त्वेऽप्यन्येन दाहादि क्रियते। "पितृमातृसपिण्डैस्तु समानसलिलैस्तथा। संघातान्तर्गतैर्वापि राज्ञा वा धनहारिणा। पूर्व्वाः क्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः"।

तत्र क्रियास्त्रिविधाः विष्णुपुराणे दर्शिता यथा "पूर्व्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः। त्रिप्रकाराः क्रिया ह्येतास्तासां भेदान् शृणुष्व मे। आदाहवार्य्यायुधादिस्पर्शाद्यन्तास्च याः क्रियाः। ताः पूर्व्वामध्यमा मासिमास्येकोद्दिष्टसंज्ञिताः। प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु। क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः। पितृमातृसपिण्डैश्च समानसलिलैस्तथा। संघातान्तर्गतैर्वापि राज्ञा वा धनहारिणा। पूर्व्वाः क्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः। दौहित्रैर्वा नरश्रेष्ठ! कार्य्यास्तत्तनयैस्तथा। मृताहानि तु कर्त्तव्याः स्त्रीणामप्युत्तराः क्रियाः। प्रतिसंवत्सरं राजन्! एकोद्दिष्टं विधानतः"। आदाहेति दाहावधेरशौचान्तविहितवार्य्यायुधादिस्पर्शाद्यन्तास्ताः पूर्व्वाः, मासिमासीत्येकादशाहादिसपिण्डनान्तप्रेतक्रियोपलक्षणम्। सपिण्डनोत्तराः पार्व्वणादिक्रिया उत्तराः। अत्र पुत्रादिसपिण्डादयः पूर्व्वाः क्रिया अवश्यं कुर्य्युः। मध्यमक्रियायामनियमः। उत्तरक्रियायां पुत्रादयो भ्रातृसन्ततिपर्य्यन्तानियताः। श्राद्धविवेकेऽप्येवम्। दौहित्रैर्वेति वाशब्दः समुच्चयार्थः तेन दौहित्रोऽप्युत्तरक्रियायां नियताधिकारी"। अत्राधिकारिणश्च एकोद्दिष्टशब्दे १५२५ पृ० उक्ताः "अकरोत् स तदौर्द्ध्वदेहिकम्" रघुः। अनुशतिका० द्विपदवृद्धिरिति मल्लि० अनुशतिकादिगणे तस्य पाठाभावेऽपि आकृतिगणत्वात् तत्सिद्धिरिति तदाशयः। किन्तु बहुषु स्थलेषु एकपदवृद्धियुक्तं दृश्यते तेन उभयमपि साधु इति तत्त्वम्। "भृत्यानामुपरोधेन यत्करोत्यौर्द्धदेहिकम्। तद्भवत्यसुखोदर्कं जीवतश्च मृतस्य च" मनुः। उपानहौ च वस्त्रञ्च प्रतिगृह्यौर्द्धदेहिकम्" भारते अनु० पर्व्वणि ६२२९ श्लो०

**और्द्धदमिक** त्रि॰ऊर्द्धदमे भवः"ऊर्द्धात् दमाच्च देहाच्च लोकोत्तरपदात्तथा"त्युक्तेः ठक् । ऊर्द्धदमभवे त्रि॰स्त्रियां ङीप्

**और्द्धस्रोतसिक** त्रि॰ ऊर्द्धस्रोतसि ऊर्द्धरेतसि प्रसक्तः ठक् । शैवे शिवभक्ते त्रिका॰ ।

**और्व** पु॰ उर्व्वस्यापत्यम् ऋष्यण् । १उर्व्वर्षेरपत्ये गोत्रापत्ये तु विदा॰ अञ् । २उर्व्वगोत्रापत्ये उभयतः स्त्रियां ङीप् । उर्व्व्यां भवः अण् । ३पांशुलवणे न॰ राजनि॰। ४उर्वीभवमात्रे त्रि॰ । ऊरुतोजातः ऊरु+अण् संज्ञापूर्व्वकविधेरनित्यत्वान्न गुणः । भृगुवंश्ये ५ऋषिभेदे । तत्र भवः अण् । ६बाड़वानले । तदुत्पत्तिकथा ऊरुजशब्दे १३८५ पृ॰उक्ता ततो बाड़वनलोत्पत्तिकथा तु भा॰आ॰१८०।१८१ अ॰उक्ता यथा"ब्राह्मण्युवाच ।"नाहं गृह्णामि वस्ताता दृष्टीर्नास्मि रुषान्विता । अयन्तु भार्गवो नूनमूरुजः कुपितोऽद्य वः । तेन चक्षूंषि वस्ताता ! व्यक्तं कोपान्महात्मना । स्मरता निहतान् बन्धूनादत्तानि न संशयः । गर्भानपि यदा नूनं भृगूणां घ्नत पुत्त्रकाः ! । तदायमूरुणा गर्भो मया वर्षशतं धृतः । षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव ह । विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया । सोऽयं पितृबधाद्व्यक्तं क्रोधाद्वो हन्तुमिच्छति । तेजसा तस्य दिव्येन चक्षूंषि मुषितानि वः । तमिमं तात याचध्वमौर्व्वं मम सुतोत्तमम् । अयं वः प्रणिपातेन तुष्टोदृष्टीः प्रमोक्ष्यति । वशिष्ठ उवाच । एवमुक्तास्ततः सर्व्वे राजानस्ते तमूरुजम् । ऊचुः प्रसीदेति तदा प्रसादञ्च चकार सः । अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः । स और्व्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत । चक्षूंषि प्रतिलभ्या च प्रतिजग्मुस्ततो नृपाः" । .

"इच्छन्नपचितिं कर्त्तुं भृगूणां भृगुनन्दनः । सर्व्वलोकविनाशाय तपसा महतैधितः । तापयामास तान्लोकान् सदेवासुरमानुषान् । तपसोग्रेण महता नन्दयिष्यन् पितामहान् । ततस्तं पितरस्तात ! विज्ञाय कुलनन्दनम् । पितृलोकादुपागम्य सर्व्वे ऊचुरिदं वचः । पितर ऊचुः । और्व्व ! दृष्टःप्रभावस्ते तपसोग्रस्य पुत्त्रक ! । प्रसादं कुरु लोकानां नियच्छ क्रोधमात्मनः । नानीशैर्हि तदा तात भृगुभिर्भावितात्मभिः । बधो ह्युपेक्षितः सर्व्वैः क्षत्रियाणां विहिंसताम् । आयुषा विप्रकृष्टेन यदा नः खेद आविशत् । तदास्माभिर्व्वधस्तात ! क्षत्रियैरीप्सितः स्वयम् । निखातं यच्च वै वित्तं भृगुभिर्भृगुवेश्मनि । वैरायैव तदा न्यस्तं क्षत्रियान् कोपयिष्णुभिः । किं हि वित्तेन नः कार्य्यं स्वर्गेप्सूनां द्विजोत्तम ! । यदस्माकं धनाध्यक्षः प्रभूतं धनमाहरत् । यदा तु मृत्युरादातुं न नः शक्नोति सर्वशः । तदास्माभिरयं दृष्ट उपायस्तात ! सम्मतः । आत्महा च पुमांस्तात ! न लोकाल्लँभते शुभान् । ततोऽस्माभिः समीक्ष्यैवं नात्मनात्मा निपातितः । न चैतन्नः प्रियं तात ! यदिदं कर्त्तुमिच्छसि । नियच्छेदं मनः पापात् सर्व्वलोकपराभवात् । मा बधीः क्षत्रियांस्तात ! न लोकान् सप्त पुत्त्रक ! । दूषयन्तं तपस्तेजः क्रोधमुत्पतितं जहि" ।

"और्व्व उवाच । उक्तवानस्मि यां क्रोधात् प्रतिज्ञां पितरस्तदा । सर्व्वलोकविनाशाय न सा मे वितथा भवेत् । वृथारोषप्रतिज्ञो वै नाहं भवितुमुत्सहे । अनिस्तीर्णो हि मां रोषो दहेदग्निरिवारणिम् । यो हि कारणतः क्रोधं संजातं क्षन्तुमर्हति । नालं स मनुजः सम्यक् त्रिवर्गं परिरक्षितुम् । अशिष्टानां निहन्ता हि शिष्टानां परिरक्षिता । स्थाने रोषः प्रयुक्तः स्यान्नृपैः सर्व्वजिगीषुभिः । अश्रौषमहमूरुस्थो गर्भशय्यागतस्तदा । आरावं मातृवर्गस्य भृगूणां क्षत्रियैर्बधे । संहारो हि यदा लोके भृगूणां क्षत्रियाधमैः । आगर्भोच्छेदनात् क्रान्तस्तदा मां मन्युराविशत् । संपूर्णकोपाः किल मे मातरः पितरस्तथा । भयात् सर्व्वेषु लोकेषु नाधिजग्मुः परायणम् । तान् भृगूणां यदा दारान् कश्चिन्नाभ्युपपद्यते । माता तदा दधारेयमूरुणैकेन मां शुभा । प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते । तदा सर्व्वेषु लोकेषु पापकृन्नोपपद्यते । यदा तु प्रतिषेद्धारं पापो न लभते क्वचित् । तिष्ठन्ति बहवो लोकास्तदा पापेषु कर्म्मसु । जानन्नपि च यः पापं शक्तिमान्न नियच्छति । ईशः सन् सोऽपि तेनैव कर्म्मणा सम्प्रयुज्यते । राजभिरीश्वरैश्चैव यदि वै पितरो मम । शक्तैर्न शकितास्त्रातुमिष्टं मत्वेह जीवितम् । अत एषामहं क्रुद्धो लोकानामीश्वरो ह्यहम् । भवताञ्च वचो नालमहं समतिवर्त्तितुम् । ममापि चेद्भवेदेवमीश्वरस्य सतो महत् । उपेक्षमाणस्य पुनर्लोकानां किल्विषाद्भयम् । नन्वयं मन्युजो मेऽग्निर्लोकानादातुमिच्छति । दहेदेष च मामेव निगृहीतः स्वतेजसा भवतां च विजानामि सर्वलोकहितेप्सुताम् । तस्माद्विदद्ध्यं यच्छ्रेयो लोकानां मम चेश्वराः ! । पितर ऊचुः । य एष मन्युजस्तेऽग्निर्लोकानादातुमिच्छति । अप्सु तं मुञ्च भद्रन्ते लोका ह्यप्सु प्रतिष्ठिताः । आपोमयाः सर्वरसाः सर्व्वमापो-

मयं जगत्। तस्मादमुं विसृजेमं क्रोधाग्निं द्विजसत्तम!। अयं तिष्ठतु ते विप्र! यदीच्छसि महोदधौ। मन्युजोऽग्निर्दहन्नापो लोका ह्यापोमयाः स्मृताः। एवं प्रतिज्ञा सत्येयं तवानघ! भविष्यति। न चैवं सामरा लोका गमिष्यन्ति पराभवम्। वशिष्ठ उवाच। ततस्तं क्रोधजं तात! और्वोऽग्निं वरुणालये। उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ। महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः। तमग्निमुद्गिरन् वक्त्रात् पिबत्यापो महोदधौ”।

वाडवानलस्य स्थितिस्थानम् सि॰शि॰उक्तम् भूमेर्याम्येऽर्द्धे सप्तद्वीपसमुद्राणां स्थितिकीर्त्तनान्ते “स्वादूदकान्तर्वडवानलोऽसौ पातालजोकाः पृथिवीपुटानि” इति। और्वस्य च प्रवरर्षित्वम् आर्षेयशब्दे उक्तम्। “जामदग्न्यवत्साः तेषां पञ्चार्षेयो भार्गवच्यावनाप्नवानौर्वजामदग्नेति च आश्व॰श्रौ॰ १२,१०,६,८ और्वमधिकृत्य कृतोग्रन्थः अण्। भारतान्तर्गते और्वचरिताख्याने। “तापत्यमथ वाशिष्ठमौर्वं चाख्यानमुत्तमम्” भा॰ आ॰ १। तच्चाख्यानं भा॰ आ॰ १८६ अध्यायादौ दृश्यम्।

**और्वश** पु॰ उर्व्वशी तच्छब्दोऽस्त्यत्र विभक्त्या॰ अण्। और्वशी शब्दयुक्ते १स्वाध्याये २अनुवाके च। उर्व्वश्या इदम् अण्। २उर्व्वशीसम्बन्धिनि त्रि॰।

**और्वशेय** पु॰ उर्व्वश्या अपत्यम् ढक्। १अगस्त्ये मुनौ हेमच॰ तस्य च उर्व्वशीं दृष्ट्वा मित्रावरुणयोः स्खलितरेतोजातया तथात्वम् तत्प्रमाणञ्चागस्तिशब्दे ४७पृ॰ उक्तम्। ऐलशब्दे दर्शितेषु उर्वशीगर्भजातेषु पुरूरवसः सुतेषु २आयुरादिषु षट्सु च

**औलपि** पु॰ उलपस्य कलाप्यन्तेवासिविशेषस्यापत्यम् इञ्। उलपापत्ये ततः स्वार्थे दामन्या॰ छ। औलपीय तदर्थे बहुषु तस्य लुक्। औलपय इत्यादि।

**औलपिन्** पु॰ ब॰व॰। उलपेन प्रोक्तं छन्दोऽधीयते कलाप्यन्तेवासित्वात् णिनि। उलपप्रोक्तछन्दोध्यायिषु

**औलान** न॰ अवलम्बनं वेदे पृषो॰। अवलम्बने। “विद्वान् पथ ऋतुशोदेवयानानप्यौलानं दिविषे” ऋ॰१०,९८,११।

**औलूक** न॰उलूकानां समूहः खण्डिका॰ अञ्। पेचकसमुदाये

**औलूक्य** पु॰ उलूकर्षेरपत्यम् गर्गा॰ यञ्। उलूकनामर्षेरपत्ये कणादे वैशेषिकसूत्रकारे तस्य छात्रः कण्वादि॰ अण्। ततो यञो लुक्। औलूक औलूक्यच्छात्रे वैशेषिकमताभिज्ञे। उलूक इति ह्रस्वमध्यं केचिदाहुः औलूक्यदर्शनन्तु वैशेषिकदर्शनं तत्प्रतिपाद्यविषया उच्यन्ते

“अथातो धर्मं व्याख्यास्यामः”। १सू॰

“तापत्रयपराहता विवेकिनस्तापत्रयनिवृत्तिनिदानमनुसन्दधाना नानाश्रुतिस्मृतीतिहासपुराणेष्वात्मतत्त्वसाक्षात्कारमेव तदुपायमाकलयाम्बभूवुः। तत्प्राप्तिहेतुमपि पन्थानं जिज्ञासमानाः परमकारुणिकं कणादं मुनिमुपससेदुः अथ कणादो मुनिस्तत्त्वज्ञानवैराग्यैश्वर्यसम्पन्नः षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानमेवात्मतत्त्वसाक्षात्कारप्राप्तये परमः पन्था इति मनसिकृत्य तच्च निवृत्तिलक्षणाद्धर्मादेतेषामनायासेन भविष्यतीति लक्षणतः स्वरूपतश्च धर्ममेव प्रथममुपदिश्याथनन्तरं षडपि पदार्थानुद्देशलक्षणपरीक्षाभिरुपदेक्ष्यामीति हृदि निधाय तेषामवधानाय प्रतिजानीते। अथातो धर्ममित्यादि” उप॰

“यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः”। २सू॰

“को धर्मः किंलक्षणश्चेति? सामान्यतः शिष्यजिज्ञासायां यतोऽभ्युदयनिश्श्रेयससिद्धिरित्युपतिष्ठते” तथा च यतोऽभ्युदयसिद्धिर्यतश्च निःश्रेयससिद्धिस्तदुभयं धर्मः एवं पुरुषार्थसाधारणकारणं धर्म इति वक्तव्ये परमपुरुषार्थयोः सुखदुःखाभावयोर्विशेषतः परिचयार्थमभ्युदयनिःश्रेयससिद्धिरित्युक्तं स्वर्गापवर्गयोरेवान्येच्छानधीनेच्छाविषयत्वेन परमपुरुषार्थत्वात्। साधयिष्यते च दुःखाभावस्यापि पुरुषार्थत्वम्” उपस्कारः।

“तद्वचनादाम्नायस्य प्रामाण्यम्”। ३सू॰

“ननु निवृत्तिलक्षणो धर्मस्तत्त्वज्ञानद्वारा निःश्रेयसहेतुरित्यत्र श्रुतिः प्रमाणं श्रुतेरेव प्रामाण्ये वयं विप्रतिपद्यामहे अनृतव्याघातपुनरुक्तदोषेभ्यः, पुत्रेष्टौ कृतायामपि पुत्रानुत्पादादनृतत्वम् “उदिते जुहोति अनुदिते जुहोति समयाध्युषिते जुहोतीति” विधेः प्राप्त एवोदितादिकाले होमो व्याहन्यते “श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति योऽनुदिते जुहोति श्यावशबलावस्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति” इत्यादिना। तथा “त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाह” इत्यनेन प्रथमोत्तमसामिधेन्योस्त्रिरुच्चारणाभिधानात् पौनरुक्त्यमेव। न चाम्नायप्रामाण्यप्रतिपादकं किञ्चिदस्ति प्रमाणम् नित्यत्वे विप्रतिपत्तौ नित्यनिर्दोषत्वमपि सन्दिग्धं पौरुषेयत्वे तु भ्रमप्रमादविप्रतिपत्तिकरणापाटवादिसम्भावनया आप्तोक्तत्वमपि सन्दिग्धमेवेति न निःश्रेयसं न वा तत्र तत्त्वज्ञानं द्वारं न वा धर्म इति

सर्व्वमेतदाकुलमत आह । तद्वचनादाम्नायस्येत्यादि । तदित्यनुपक्रान्तमपि प्रसिद्धिसिद्धतयेश्वरं परामृशति यथा "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः" इति गौतमीयसूत्रे तच्छब्देनानुपक्रान्तोऽपि वेदः परामृश्यते । तथा च तद्वचनात्तेनेश्वरेण प्रणयनादाम्नायस्य वेदस्य प्रामाण्यं यद्वा तदिति सन्निहितं धर्म्ममेव परामृशति तथाच धर्म्मस्य वचनात् प्रतिपादनात् आम्नायस्य वेदस्य प्रामाण्यं यद्धि वाक्यं प्रामाणिकमर्थं प्रतिपादयति तत्प्रमाणमेव यत इत्यर्थः । ईश्वरस्तदाप्तत्वञ्च साधयिष्यते यच्चोक्तमनृतव्याघातपुनरुक्तदोषेभ्य इति तत्रानृतत्वे जन्मान्तरीयफलकल्पनं कर्म्मकर्त्तृसाधनवैगुण्यकल्पनं वा श्रौतात् साङ्गात् कर्म्मणः फलावश्यम्भावनिश्चयात् न च कारीरीवदैहिकमात्रफलकत्वं तत्र हि शुष्यच्छस्यसञ्जीवनकामस्याधिकारः पुत्रेष्टौ पुत्रकामस्येतिविशेषात् नच व्याघातोऽपि उदितादिहोमं विधेयतः प्रतिज्ञाय तदन्यकाले होमानुष्ठाने "श्यावोऽस्याहुतिमभ्यवहरति" इत्यादिनिन्दाप्रतिपादनात् न च पुनरुक्ततादोषोऽपि एकादशसामिधेनीनां प्रकृतौ पाठात् "पञ्चदशावरेण वाग्वज्रेणावबाधे तमिमं भ्रातृव्यम्" इत्यत्र सामिधेनीनां पञ्चदशत्वस्य प्रथमोत्तमसामिधेन्योस्त्रिरभिधानमन्तरेणानुपपत्तेस्तथाभिधानात्"। उपस्का० २।

शिष्याकाङ्क्षानुरोधेन स्वरूपतोलक्षणतश्च धर्म्मं व्याख्यायाभिधेयसम्बन्धफलप्रतिपादनायाह "धर्म्मविशेषप्रसूतात् द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" ४सू० । "एतादृशं तत्त्वज्ञानं वैशेषिकशास्त्राधीनमिति तस्यापि निःश्रेयसहेतुत्वं दण्डापूपायितम् । तत्त्वं ज्ञायतेऽनेनेति करणव्युत्पत्त्या शास्त्रपरत्वे धर्म्मविशेषप्रसूतादित्यनेनानन्वयापत्तेः। सर्व्वपदार्थप्रधानो द्वन्द्वस्तत्र समासः सर्व्वपदार्थतत्त्वज्ञानस्य निःश्रेयसहेतुत्वात् तदत्र शास्त्रनिःश्रेयसयोर्हेतुहेतुमद्भावः शास्त्रतत्त्वज्ञानयोर्व्यापारव्यापारिभावः निःश्रेयसतत्त्वज्ञानयोः कार्य्यकारणभावः द्रव्यादिपदार्थशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धोऽवगम्यते एतेषाञ्च सम्बन्धानां ज्ञानान्निःश्रेयसार्थिनामिह शास्त्रे प्रवृत्तिः । मोक्षमाणाश्च मुनेर्गृहीताप्तभावा एव शास्त्रे प्रवर्त्तन्ते । निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिः । दुःखनिवृत्तेश्चात्यन्तिकत्वं समानाधिकरणदुःखप्रागभावासमानकालीनत्वं युगपदुत्पन्नसमानाधिकरणसर्व्वात्मविशेषगुणध्वंससमानकालीनत्वं वा । अशेषविशेषगुणध्वंसावधिकदुःखप्रागभावो वा मुक्तिः नचासाध्यत्वान्नायं पुरुषार्थः, कारणविघटनमुखेन प्रागभावस्यापि साध्यत्वात् नच तस्य प्रागभावत्वक्षतिः प्रतियोगिजनकाभावत्वेन तथात्वात्, जनकत्वञ्च स्वरूपयोग्यतामात्रम्, नहि प्रागभावश्चरमसामग्री येन तस्मिन् सति कार्य्यमवश्यम्भवेत् तथा सति कार्य्यस्यानादित्वप्रसङ्गात् तथाच यथा सहकारिविरहादियन्तं कालं नाजीजनत् तथाग्रेऽपि तद्विरहान्न जनयिष्यति हेतूच्छेदे पुरुषव्यापारात् इत्यस्यापि प्रागभावपरिपालन एव तात्पर्य्यात्, अत एव गौतमीयद्वितीयसूत्रे "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इत्यत्र कारणाभावात् कार्य्याभावाभिधानं दुःखप्रागभावरूपामेव मुक्तिं द्रढयति नहि दोषापाये प्रवृत्त्यपायः, प्रवृत्त्यपाये जन्मापायः, जन्मापाये दुःखापाय इत्यत्रापायो ध्वंसः किन्त्वनुत्पत्तिः साच प्रागभाव एव न च प्रतियोग्यप्रसिद्धिः सामान्यतो दुःखत्वेनैव प्रतियोगिप्रसिद्धेः प्रायश्चित्तवत् तत्रापि प्रत्यवायध्वंसद्वारा दुःखानुत्पत्तेरेवापेक्षितत्वात् लोकेऽपि कण्टकादिनिवृत्तेर्दुःखानुत्पत्तिफलकत्वदर्शनात् दुःखसाधननिवृत्त्यर्थमेव प्रेक्षावतां प्रवृत्तेः । केचित्तु दुःखात्यन्ताभाव एव मुक्तिः स च यद्यपि नात्मनिष्ठस्तथापि लोष्टादिनिष्ठ एवात्मनि साध्यते सिद्धिश्च तस्य दुःखप्रागभावासहवर्त्तिदुःखध्वंस एव तस्य तत्सम्बन्धतयोपगमात् तस्मिन् सति तत्र दुःखात्यन्ताभावप्रतीतेः एवञ्च सति "दुःखेनात्यन्तं विमुक्तश्चरति" इत्यादिश्रुतिरप्युपपादिता भवतीत्याहुः तन्न दुःखात्यन्ताभावस्यासाध्यत्वेनापुरुषार्थत्वात् दुःखध्वंसस्य च न तत्र सम्बन्धत्वं परिभाषापत्तेः "दुःखेनात्यन्तं विमुक्तश्चरति" इति श्रुतेर्दुःखप्रागभावस्यैव कारणविघटनमुखेनात्यन्ताभावसमानरूपत्वतात्पर्य्यकत्वात् । नन्वयं न पुरुषार्थः निरुपाधीच्छाविषयत्वाभावात् दुःखकाले सुखं तावन्नोत्पद्यते इति सुखार्थिनामेव दुःखाभावार्थं प्रवृत्तिरिति चेन्न वैपरीत्यस्यापि सुवचत्वात् सुखेच्छापि दुःखाभावौपाधिकीत्येव किं न स्यात् शोकाकुलानां सुखविमुखानामपि दुःखाभावमात्रमभिसन्धाय विषभक्षणोद्बन्धनादौ प्रवृत्तिदर्शनात् । ननु पुरुषार्थोऽप्ययं ज्ञायमान एव मुक्तौ तु दुःखाभावस्य ज्ञायमानतैव नास्ति अन्यथा मूर्च्छाद्यवस्थायामपि प्रवृत्तेरिति चेन्न श्रुत्यनुमानाभ्यां ज्ञायमानस्यावेद्यत्वानुपपत्तेः । अस्ति हि श्रुतिः "दुःखेनात्यन्तं विमुक्त

स्रति" "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिका। अनुमानमप्यस्ति दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदित्यादि चरमदुःखध्वंसस्य दुःखसाक्षात्कारेण क्षणं विषयीकरणात् प्रत्यक्षवेद्यताऽपि। योगिनां योगजधर्म्मबलेनागामिनो दुःखध्वंसस्य प्रत्यक्षोपगमाच्च। तथापि तुल्यव्ययतया नायं पुरुषार्थो दुःखवत् सुखस्यापि हाने द्वयोरपि समानसामग्रीकत्वादिति चेत् उत्सर्गतो वीतरागाणां दुःखदुर्दिनमेघरूपाणां सुखखद्योतिकामात्रेऽलम्प्रत्ययवतां तत्र प्रवृत्तेः। ननु तथापि दुःखनिवृत्तिर्न पुरुषार्थः, अनागतदुःखनिवृत्तेरशक्यत्वात् अतीतदुःखस्यातीतत्वात् वर्त्तमानदुःखस्य पुरुषप्रयत्नमन्तरेणैव निवृत्तेरिति चेन्न हेतूच्छेदे पुरुषव्यापारात् प्रायश्चित्तवत् तथाहि सवासनं मिथ्याज्ञानं संसारहेतुस्तदुच्छेदश्चात्मतत्त्वज्ञानात् तत्त्वज्ञानं च योगविधिसाध्यमिति तदर्थं प्रवृत्त्युपपत्तेः" उपस्कारः कियदन्तरे च "धर्मविशेषप्रसूतादिति तत्त्वज्ञानादित्यस्य विशेषणं तत्र धर्मविशेषो निवृत्तिलक्षणो धर्मः यदि तु तत्त्वं ज्ञायतेऽनेनेति तत्त्वज्ञानं शास्त्रमुच्यते तदा धर्मविशेष ईश्वरनियोगप्रसादरूपो वक्तव्यः श्रूयते हीश्वरनियोगप्रसादवधिगम्य कणादो महर्षिः शास्त्रं प्रणीतवानिति तत्त्वज्ञानमात्मतत्त्वसाक्षात्कार इह विवक्षितस्तस्यैव सवासनमिथ्याज्ञानोन्मूलनक्षमत्वात् "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽनाय" इत्यत्र "द्वे ब्रह्मणी वेदितव्ये" इत्यत्र च वेदनपदस्य साक्षात्कारपरत्वात् "पश्य त्वाचक्षुः" इत्यत्रापि तथा। स च शास्त्रान्मनननिदिध्यासनादिपरम्परयेति हेतुपञ्चम्या तथैवाभिधानात्" उप० न्यायकन्दल्यां प्रयोजनसूत्रमित्थं विवृतं यथा "तच्चेश्वरनोदनाभिव्यक्ताद्धर्म्मादेवेति" भाष्यप्रतीकव्याख्यायाम् "यस्य वस्तुनो यो भावस्तत् तस्य तत्त्वम् साधारणो धर्म्मः, साधर्म्यम् असाधारणो धर्म्मो वैधर्म्यं तयोस्तत्त्वज्ञानं निःश्रेयसहेतुः विषयसंयोगजं सुखं तावत् क्षणिकं विनाशि दुःखबहुलं स्वर्गादिपदं प्राप्यमपि सप्रक्षयं, सातिशयञ्च तथा च कस्यचित्स्वर्गमात्रमपरस्य स्वर्गराज्यम् अतस्तदपि सततं प्रच्युतिशङ्कया परसमुत्कर्षोपतापाच्च दुःखाक्रान्तं न निश्चितं श्रेयः। आत्यन्तिकी दुःखनिवृत्तिरसुखसंवेदनखिलदुःखासंवेदनारूपत्वादपरावृत्तेश्च निश्चितं श्रेयः तस्य कारणं द्रव्यादिस्वरूपज्ञानम्। एतेनैतत् प्रत्युक्तं मण्डनेन यदुक्तं विशेषगुणनिवृत्तिलक्षणा मुक्तिरुच्छेदपक्षान्न भिद्यत इति। विशेषगुणोच्छेदे हि सति आत्मनः स्वरूपेणावस्थानं नोच्छेदो नित्यत्वात् नचायमपुरुषार्थः समस्तदुःखोपरमस्य पुरुषार्थत्वात् समस्तसुखाभावादपुरुषार्थत्वमिति चेत् न सुखस्यापि क्षयितया बहुलप्रत्यनीकतया साधनप्रार्थनाशतपरिक्लिष्टतया च सदा दुःखाक्रान्तस्य विषमिश्रस्येव मधुनो दुःखपक्षे निक्षेपात्"। कियदन्तरे तत्रैव। "तत् निःश्रेयसं धर्म्मादेव भवति द्रव्यादि तत्त्वज्ञानं तस्य कारणत्वेन निःश्रेयससाधनम् इत्यभिप्रायः तत्त्वतो ज्ञातेषु बाह्याध्यात्मिकेषु विषयेषु दोषदर्शनाद्विरक्तस्य समीहानिवृत्तावात्मज्ञस्य तदर्थानि कर्म्माण्यकुर्वतस्तत्परित्यागसाधनानि च श्रुतिस्मृत्युदितानि असंकल्पितफलान्युपाददानस्यात्मज्ञानमभ्यस्यतः प्रकृष्टविनिवर्त्तकधर्म्मोपचये सति परिपक्वात्मज्ञानस्यात्यन्तिकशरीरवियोगस्याभावाद्दृष्टो हि विषयाणामहिकण्टकादीनां, परित्यागो विषयदोषदर्शनादभिसन्धिकृतनिवर्त्तकात्मविशेषगुणात् प्रयत्नात् तेन शरीरादीनामात्यन्तिकः परित्यागो विषयदोषदर्शनपूर्वकानभिसन्धिकृतनिवर्त्तकात्मविशेषगुणनिमित्तविघात इति मोक्षाधिकारे वक्ष्यामः। धर्म्मोऽपि केवलं न तावन्निःश्रेयसं करोति यावदीश्वरेच्छया नानुगृह्यते तेनेदमुक्तम् ईश्वरनोदनेत्यादि। नोद्यन्ते प्रेर्य्यन्ते स्वकार्य्येषु प्रवर्त्त्यन्तेऽनया भावा इति नोदना ईश्वरस्य नोदना ईश्वरेच्छाविशेषः अभिव्यक्तिः कार्य्यारम्भं प्रत्याभिमुख्यम् ईश्वरनोदनयाऽभिव्यक्तात् ईश्वरेच्छाविशेषेण कार्य्यारम्भाभिमुखीकृताद्धर्म्मादेव निःश्रेयसं भवतीति वाक्ययोजना"। सूत्रं विषयप्रयोजनादिकं चतुःसूत्र्यामभिहितं तत्र प्रतिपाद्यविषयाश्च सर्वद० दर्शिता यथा "इह खलु निखिलप्रेक्षावन्निसर्गप्रतिकूलवेदनीयतया निखिलसंवेदनसिद्धं दुःखं जिहासः तद्धानोपायं जिज्ञासुः परमेश्वरसाक्षात्कारमुपायमाकलयति "यदा चर्म्मवदाकाशं वेष्टयन्तीह मानवाः! तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति" इत्यादिवचननिचयप्रामाण्यात्। परमेश्वरसाक्षात्कारश्च श्रवणमननभावनाभिर्भावनीयः यदाह "आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तममिति" तत्र मननमनुमानाधीनमनुमानञ्च व्याप्तिज्ञानाधीनं व्याप्तिज्ञानञ्च पदार्थविवेकापेक्षम्। अतः पदार्थषट्कम्"। "अथातो धर्मं व्याख्यास्याम इत्यादिकायां दशलक्षण्यां कणभक्षेण भगवता व्यवस्थापि तत्राह्निकद्वयात्मके प्रथमे-

ऽध्याये समवेताशेषपदार्थकथनमकारि। तत्रापि प्रथमाह्निके जातिमन्निरूपणं, द्वितीयाह्निके जातिविशेषनिरूपणम्। आह्निकद्वययुक्ते द्वितीयेऽध्याये द्रव्यनिरूपणं, तत्रापि प्रथमाह्निके भूतविशेषलक्षणं, द्वितीये दिक्कालप्रतिपादनम्। आह्निकद्वययुक्ते तृतीये आत्मान्तःकरणलक्षणं, तत्राप्यात्मलक्षणं प्रथमे, द्वितीये अन्तःकरणलक्षणम्। आह्निकद्वययुक्ते चतुर्थे शरीरतदुपयोगिविवेचनं, तत्रापि प्रथमे तदुपयोगिविवेचनं द्वितीये शरीरविवेचनम्। आह्निकद्वयवति पञ्चमे कर्मप्रतिपादनं, तत्रापि प्रथमे शरीरसम्बन्धिकर्मचिन्तनं, द्वितीये मानसकर्मचिन्तनम्। आह्निकद्वयशालिनि षष्ठे श्रौतधर्मनिरूपणं, तत्रापि प्रथमे दानप्रतिग्रहधर्मविवेकः, द्वितीये चातुराश्रम्योचितधर्मनिरूपणम्। तथाविधे सप्तमे गुणसमवायप्रतिपादनं, तत्रापि प्रथमे बुद्धिनिरपेक्षगुणप्रतिपादनं, द्वितीये तत्सापेक्षगुणप्रतिपादनं समवायप्रतिपादनञ्च। अष्टमे निर्विकल्पकसविकल्पकप्रत्यक्षप्रमाणचिन्तनम्। नवमे बुद्धिविशेषप्रतिपादनम्। दशमे अनुमानभेदप्रतिपादनम्। तत्र उद्देशो लक्षणं परीक्षा चेति त्रिविधास्य शास्त्रस्य प्रवृत्तिः। ननु विभागापेक्षया चातुर्विध्ये वक्तव्ये कथं त्रैविध्यमुक्तमिति चेन्मैवं संख्याःविभागस्य विशेषोद्देश एवान्तर्भावात्। तत्र द्रव्यगुणकर्मसामान्यविशेषसमवाया भावा इति षडेवैते पदार्था इत्युद्देशः। किमत्र क्रमनियमे कारणम्? उच्यते समस्तपदार्थायतनत्वेन प्रधानस्य द्रव्यस्य प्रथममुद्देशः। अनन्तरं गुणत्वोपाधिना सकलद्रव्यवृत्तेर्गुणस्य, तदनु सामान्यवत्त्वसाम्यात् कर्मणः, पश्चात्त्रितयाश्रितस्य सामान्यस्य, तदनन्तरं समवायाधिकरणस्य विशेषस्य, अन्ते अवशिष्टस्य समवायस्येति क्रमनियमः। ननु षडेव पदार्था इति कथं कथ्यते, अभावस्यापि सद्भावादिति चेन्मैवं वोचः नञर्थानुल्लिखितधीविषयतया भावरूपतया षडेवेति विवक्षितत्वात् तथापि कथं षडेवेति नियम उपपद्यते विकल्पानुपपत्तेः तथाहि नियमव्यवच्छेद्यं प्रमितं न वा प्रमितत्वे कथं निषेधः अप्रमितत्वे कथन्तराम्, नहि कश्चित् प्रेक्षावान् मूषिकविषाणं प्रतिषेद्धुं यतते, ततश्चानुपपत्तेर्नो नियम इति चेन्मैवं भाषिष्ठाः सप्तमतया प्रमिते अन्धकारादौ भावत्वस्य भावतया प्रमिते शक्तिसादृश्यादौ सप्तमत्वादेश्च निषेधादिति कृतं विस्तरेण।

तत्र द्रव्यादित्रितयस्य द्रव्यत्वादिर्जातिर्लक्षणम्। द्रव्यत्वं नाम गगनारविन्दसमवेतत्वे सति नित्यगन्धासमवेतम्। (गगनसमवेतत्वे सति पद्मसमवेतत्वे सति नित्यत्वे इति गन्धासमवेतत्वं द्रव्यत्वलक्षणम्। सत्तारूपजातिव्यवच्छेदाय गन्धासमवेतत्वमुक्तम् कालिकसम्बन्धेन द्रव्यत्वस्य गन्धवृत्तित्वादसम्भववारणाय गन्धसमवेतत्वमुक्तम् संयोगादेर्गन्धासमवेतत्वेन गगनादिसमवेतत्वेनातिप्रसङ्गवारणाय नित्यत्वे सतीति विशेषणम्। पद्मत्वपृथिवीत्वजातौ पद्मसमवेतत्वस्य नित्यत्वस्य गन्धासमवेतत्वस्य च सत्त्वादतिप्रसङ्गवारणाय गगनसमवेतत्वे सतीति विशेषणम् गगनपरिमाणस्य नित्यस्य गन्धासमवेतस्य तथात्ववारणायारविन्द समवेतत्वे सतीति विशेषणम् इतिबोध्यम्)।

गुणत्वं नाम समवायिकारणासमवायिकारणभिन्नसमवेतसत्तासाक्षाद्व्याप्यजातिः। (सत्तासाक्षाद्व्याप्यस्य समवायिकारणद्रव्यसमवेतस्य द्रव्यत्वस्य, असमवायिकारणसमवेतस्य कर्मसमवेतस्य कर्मत्वस्य च तथात्ववारणाय तदुभयभिन्नसमवेतत्वं जातौ विशेषणम् गुणत्वस्य तु तथात्वम् गुणेषु ज्ञानादिषु असमवायिकारणभिन्नेषु समवेतत्वात् ज्ञानत्वादेः सत्तासाक्षाद्व्याप्यत्वेऽपि नातिप्रसङ्गः) कर्मत्वं नामानित्यसमवेतत्वसहितसत्तासाक्षाद्व्याप्यजातिः। (अनित्यमात्रसमवेतत्वे सति सत्तासाक्षाद्व्याप्यजातित्वम् कर्मत्वलक्षणम् द्रव्यत्वस्य गुणत्वस्य च नित्यमात्रसमवेतत्वाभावान्न तथात्वम्। संयोगत्वादेस्तथात्वेऽपि सत्तासाक्षाद्व्याप्यत्वाभावान्नातिप्रसङ्गः) सामान्यन्तु प्रध्वंसप्रतियोगित्वरहितमनेकसमवेतम्। (संयोगविभागादौ अनेकसमवेतेऽतिप्रसङ्गवारणाय ध्वंसप्रतियोगित्वरहितेति अत्यन्ताभावे तथात्ववारणाय समवेतत्वं विशेषणम्)। विशेषो नामान्योन्याभावविरोधिसामान्यरहितः समवेतः। समवायस्तु समवायरहितः सम्बन्ध इति षण्णां लक्षणानि व्यवस्थितानि।

"द्रव्यं नवविधं पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति। तत्र पृथिव्यादिचतुष्टयस्य पृथिवीत्वादिजातिर्लक्षणम्। पृथिवीत्वं नाम पाकजरूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिः। अप्त्वं नाम सरित्सागरसमवेतत्वे सति सलिलसमवेतं सामान्यम्। तेजस्त्वं नाम चन्द्रचामीकरसमवेतत्वे सति ज्वलनसमवेतं सामान्यम्। वायुत्वं नाम त्वगिन्द्रियसमवेतद्रव्यत्वसाक्षाद्व्याप्यजातिः। आकाशकालदिशामेकैकत्वादपरजात्यभावात् पारिभाषिक्यस्तिस्रः संज्ञा भवन्ति आकाशः कालो दिगिति। संयोगाजन्यजन्यविशेषगुणसमानाधिकरणविशेषाधिकरणमाका-

शद् । विभुत्वे सति दिगसमवेतपरत्वासमवायिकारणाधिकरणम् कालः । अकालत्वे सत्यविशेषगुणा महती दिक् । आत्ममनसोरात्मत्वमनस्त्वे । आत्मत्वं नाम अमूर्त्तसमवेतद्रव्यत्वापरजातिः । मनस्त्वं नाम द्रव्यसमवायिकारणत्वरहिताणुसमवेतद्रव्यत्वापरजातिः । रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्च कण्ठोक्ताः सप्तदश चशब्दसमुच्चिताः गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दाःसप्तैवेत्येवं चतुर्विंशतिर्गुणाः । तत्र रूपादिशब्दान्तानां रूपत्वादिजातिर्लक्षणम् । रूपत्वं नाम नीलसमवेतगुणत्वापरजातिः । अनया दिशा शिष्टानां लक्षणानि द्रष्टव्यानि । कर्म पञ्चविधम् उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदात् । भ्रमणरेचनादीनां गमन एवान्तर्भावः । उत्क्षेपणादीनामुत्क्षेपणत्वादिजातिर्लक्षणम् । तत्र उत्क्षेपणं नाम ऊर्द्ध्वदेशसंयोगासमवायिकारणप्रमेयसमवेतकर्मत्वापरजातिः । एवमवक्षेपणादीनां लक्षणं कर्त्तव्यम् । सामान्यं द्विविधं परमपरञ्च परं सत्ता द्रव्यगुणसमवेता गुणकर्मसमवेता वा । अपरं द्रव्यत्वादि तल्लक्षणं प्रागेवोक्तम् । विशेषाणामनन्तत्वात् समवायस्य चैकत्वाद्विभागो न सम्भवति तल्लक्षणञ्च प्रागेवावादि । ( सर्व्वत्वापरत्वं व्याप्यत्वम् अल्पदेशवृत्तित्वं वा ) ।

"द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे । यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुरिति" आभाणकस्य सद्भावात् द्वित्वाद्युत्पत्तिप्रकारः प्रदर्श्यते । तत्र प्रथममिन्द्रियार्थसन्निकर्षस्तस्मादेकत्वसामान्यज्ञानं ततोऽपेक्षाबुद्धिः ततो द्वित्वोत्पत्तिस्ततो द्वित्वसामान्यज्ञानं तस्मात् द्वित्वगुणज्ञानं ततः संस्कारः" । तदाह
"आदाविन्द्रियसन्निकर्षघटनादेकत्वसामान्यधीरेकत्वोभयगोचरा मतिरतो द्वित्वं ततो जायते । द्वित्वत्वप्रमितिस्ततोऽनु परतो द्वित्वप्रमानन्तरं द्वे द्रव्ये इति धीरियं निगदिता द्वित्वोदयप्रक्रियेति"।

द्वित्वादेरपेक्षाबुद्धिजन्यत्वे किं प्रमाणम् अत्राङ्काचार्य्याःअपेक्षाबुद्धिर्द्वित्वादेरुत्पादिका भवितुमर्हति व्यञ्जकत्वानुपपत्तौ तेनानुविधीयमानत्वात् शब्दं प्रति संयोगवदिति" । वयन्तु ब्रूमः द्वित्वादिकमेकत्वद्वयविषयानित्यबुद्धिव्यङ्ग्यं भवति अनेकाश्रितगुणत्वात् पृथक्त्वादिवदिति ।

निवृत्तिक्रमो निरूप्यते अपेक्षाबुद्धित एकत्वसामान्यज्ञानस्य द्वित्वोत्पत्तिसमकालनिवृत्तिः अपेक्षाबुद्धेर्द्वित्वसामान्यज्ञानात् द्वित्वगुणबुद्धिसमसमयं द्वित्वस्यापेक्षाबुद्धिनिवृत्तेर्द्रव्यबुद्धिसमकालं गुणबुद्धेः, द्रव्यबुद्धितः संस्कारोत्पत्तिसमकालं द्रव्यबुद्धेस्तदनन्तरसंस्कारादिति । तथाच संग्रहः "आदावपेक्षाबुद्ध्या हि नश्येदेकत्वजातिधीः । द्वित्वोदयसमं पश्चात् सा च तज्जातिबुद्धितः । द्वित्वाख्यगुणधीकाले ततो द्वित्वं निवर्त्तते । अपेक्षाबुद्धिनाशेन द्रव्यधीजन्मकालतः । गुणबुद्धिर्द्रव्यबुद्ध्या संस्कारोत्पत्तिकालतः । द्रव्यबुद्धिश्च संस्कारादिति नाशक्रमो मतः" इति ।

बुद्धेर्बुद्ध्यन्तरविनाश्यत्वे संस्कारविनाश्यत्वे च प्रमाणं विवादाध्यासितानि ज्ञानानि उत्तरोत्तरकार्य्यविनाश्यानि क्षणिकविभुविशेषगुणत्वात् शब्दवत् । द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मसमकालमेकत्वसामान्यचिन्तया आश्रयनिवृत्तेरेव द्वित्वनिवृत्तिः कर्मसमकालमपेक्षाबुद्धिचिन्तनादुभाभ्यामिति सङ्क्षेपः । अपेक्षाबुद्धिर्नाम विनाशकविनाशप्रतियोगिनी बुद्धिरिति बोद्धव्यम् ।

अथ द्व्यणुकनाशमारभ्य कतिभिः क्षणैः पुनरन्यद् द्व्यणुकमुत्पद्य रूपादिमद्भवतीति जिज्ञासायामुत्पत्तिप्रकारः कथ्यते । नोदनादिक्रमेण द्व्यणुकनाशः नष्टे द्व्यणुके परमाणावग्निसंयोगात् श्यामादीनां निवृत्तिः निवृत्तेषु श्यामादिषु पुनरन्यस्मादग्निसंयोगाद्द्रव्यादीनामुत्पत्तिः उत्पन्नेषु रक्तादिषु अदृष्टवदात्मसंयोगात् परमाणौ द्रव्यारम्भणाय क्रिया तया पूर्व्वदेशाद्विभागः विभागेन पूर्व्वदेशसंयोगनिवृत्तिः तस्मिन्निवृत्ते परमाण्वन्तरेण संयोगोत्पत्तिः संयुक्ताभ्यां परमाणुभ्यां द्व्यणुकारम्भः आरब्धे द्व्यणुके कारणगुणादिभ्यः कार्य्यगुणादीनां रूपादीनामुत्पत्तिरिति यथाक्रमं नव क्षणाः । दशक्षणादिप्रकारान्तरं विस्तरभयान्नेह प्रतन्यते । इत्थं पीलुपाकप्रक्रिया पीठरपाकप्रक्रिया तु नैयायिकधीसम्मता ।

विभागजविभागो द्विविधः कारणमात्रविभागजः कारणाकारणविभागजश्च । तत्र प्रथमः कथ्यते कार्य्यव्याप्ते कारणे कर्मोत्पन्नं यदावयवान्तराद्विभागं विधत्ते न तदाकाशादिदेशाद्विभागः । यदा त्वाकाशादिदेशाद्विभागः न तदावयवान्तरादित्यिति नियमः कर्म्मणो गगनविभागाकर्त्तृत्वस्य द्रव्यारम्भकसंयोगविरोधिविभागारम्भकत्वेन धूमस्य धूमध्वजवर्गेणैव व्यभिचारानुपलम्भात् ततश्चावयवकर्म अवयवान्तरादेव विभागं करोति नाकाशादिदेशात् तस्माद्विभागाद्द्रव्यारम्भकसंयोगनिवृत्तिः ततः कारणाभावात् कार्य्याभाव इति न्यायादवयविनिवृत्तिः निवृत्तेऽवयविनि तत्का

रणयोरवयवयोर्वर्त्तमानो विभागः कार्यविनाशविशिष्टं कालं स्वतन्त्रं वावयवमपेक्ष्य सक्रियस्यैवावयवस्य कार्यसंयुक्तादाकाशदेशाद्विभागमारभते न निष्क्रियस्य,कारणाभावात्। द्वितीयस्तु हस्ते कर्म्मोत्पन्नमवयवान्तराद्विभागं कुर्व्वत् आकाशादिदेशेभ्यो विभागानारभते, ते कारणाकारणविभागाः। कर्म यां दिशं प्रति कार्य्यारम्भाभिमुखतामपेक्ष्य कार्य्याकार्य्यविभागमारभते यथा हस्ताकाशविभागाच्छरीराकाशविभागः न चासौ शरीरक्रियाकार्य्यस्तदा तस्य निष्क्रियत्वात् नापि हस्तक्रियाकार्य्यः व्यधिकरणस्य कर्मणो विभागकर्त्तृत्वानुपपत्तेः अतः पारिशेष्यात् कारणाकारणविभागस्य कारणत्वमङ्गीकरणीयम्।

यद्वादि अन्धकारादौ भावत्वं निषिध्यत इति तदसङ्गतं तत्र चतुर्द्धा विवादसम्भवात् तथाहि द्रव्यं तम इति भाट्टाः वेदान्तिनश्च भणन्ति, आरोपितनीलरूपमिति श्रीधराचार्य्याः आलोकज्ञानाभाव इति प्राभाकरैकदेशिनः आलोकाभाव इति नैयायिकादयः इति चेत्तत्र द्रव्यत्वपक्षो न घटते विकल्पानुपपत्तेः द्रव्यं भवदन्धकारं द्रव्याद्यन्यतममन्यद्वा नाद्यः यत्रान्तर्भावोऽस्य तस्य यावन्तो गुणास्तावद्गुणकत्वप्रसङ्गात् न च तमसो द्रव्यबहिर्भाव इति साम्प्रतं निर्गुणस्य तस्य द्रव्यत्वासम्भवेन द्रव्यान्तरत्वस्य सुतरामसम्भवात्। ननु तमालश्यामलत्वेनोपलभ्यमानं तमः कथं निर्गुणं, स्यादिति, नीलं नभ इतिवत् भ्रान्तिरेवेत्यवं हृद्बोधया। अत एव नारोपितनीलरूपं तमः अधिष्ठानप्रत्ययमन्तरेणारोपायोगात् बाह्यालोकसहकारिरहितस्य चक्षुषो रूपारोपे सामर्थ्यानुपलम्भाच्च। न चायमचाक्षुषः प्रत्ययः तदनुविधानस्यानन्यथासिद्धत्वात्। न च विधिप्रत्ययवेद्यत्वायोगो भावे इति साम्प्रतं प्रलयविनाशावधानादिषु व्यभिचारात्। अत एव नालोकज्ञानाभावः अभावस्य प्रतियोगिग्राहकेन्द्रियग्राह्यत्वनियमेन मानसत्वप्रसङ्गात्। तस्मादालोकाभाव एव तमः न चाभावे भावधर्माध्यारोपो दुरुपपादः दुःखाभावे सुखत्वारोपस्य संयोगाभावे विभागत्वाभिमानस्य च दृष्टत्वात्। नचालोकाभावस्य घटाद्यभाववद्रूपवदभावत्वे नालोकसापेक्षचक्षुर्जन्यज्ञानविषयत्वं स्यादिति शङ्कितव्यं, यद्ग्रहे यदपेक्षं चक्षुस्तदभावग्रहेऽपि तदपेक्षत इति न्यायेनालोकग्रहे आलोकापेक्षाया अभावेन तदभावग्रहेऽपि तदपेक्षाया अभावात्। न चाधिकरणग्रहणावश्यम्भावः अभावप्रतीतावधिकरणग्रहणावश्यंभावानङ्गीकारादन्यथा निवृत्तः कोलाहल इति शब्दप्रध्वंसप्रत्ययो न स्यादिति अप्रामाणिकं तव वचनं परम्।

तत्सर्व्वमभिसन्धाय भगवान् कणादः प्रणिनाय सूत्रं द्रव्यगुणकर्मनिष्पत्तिवैधर्म्म्यादभावस्तम इति प्रत्ययवेद्यत्वेनापि निरूपितम्।

अथात्र निःश्रेयसस्वरूपमागमस्यः सप्तमो निरूप्यते। स चासम्बन्धत्वे सत्यसमवायः (अनुयोगित्वप्रतियोगित्वतादात्म्यान्यतमसम्बन्धेन समवायशून्यत्वमसमवायत्वम्) स च संक्षेपतो द्विविधः संसर्गाभावान्योन्याभावभेदात् संसर्गाभावोऽपि त्रिविधः प्रागध्वंसात्यन्ताभावभेदात् तत्रानित्यः अनादिस्तमः प्रागभावः, उत्पत्तिमान् विनाशी प्रध्वंसः, प्रतियोग्याश्रयोऽभावोऽत्यन्ताभावः। नन्वन्योन्याभाव एवात्यन्ताभाव इति चेत् अहो राजमार्ग एव भ्रमः अन्योन्याभावो हि तादात्म्यप्रतियोगिकः प्रतिषेधः यथा घटः पटात्मा न भवतीति संसर्गप्रतियोगिकः प्रतिषेधोऽत्यन्ताभावो यथा वायौ रूपसम्बन्धो नास्तीति। न चास्य पुरुषार्थौपयिकत्वं नास्तीत्याशङ्कनीयं दुःखात्यन्तोच्छेदापरपर्य्यायनिःश्रेयसरूपत्वेन परमपुरुषार्थत्वात्”।

शास्त्रान्ते च १०अ० २आह्निके “दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय” सू० । “दृष्टानां प्रमाणत उपलब्धानां यागदानस्नानादीनां दृष्टप्रयोजनानां दृष्टमुपदिष्टं प्रयोजनं येषां तेषाम् तथाहि “स्वर्गकामोयजेत” “अग्निहोत्रं जुहुयात् स्वर्गकाम” इत्यादौ विधिसमभिव्याहृतमेव फलम्, क्वचिदार्थवादिकं यथा “यएता रात्रीरधीयीत तस्य पितरोघृतकुल्यामधुकुल्याःक्षरन्ति”इत्यादौ, क्वचिच्चौपपादनिकम्, यथा “विश्वजिता यजेत” इत्यादौ, अत्र हि न विधिसमभिव्याहृतं नाप्यर्थवादोपस्थितमित्यौपपादनिकं काल्पनिकं स्वर्गस्यैव स्वतः सुन्दरस्य फलस्य कल्पनीयत्वात्, तथाचाशुतरविनाशिनामेतेषां कर्म्मणां चिरभाविने फलाय कारणत्वमनुपपद्यमानमतएषां प्रयोगोऽनुष्ठानमभ्युदयायापूर्व्वायेत्यर्थः। ननु श्रुतिप्रामाण्ये सति स्यादेवं तदेव तु दुर्लभं नहि मीमांसकानामिव नित्यनिर्द्दोषत्वेन श्रुतिप्रामाण्यं त्वयेष्यते पौरुषेयत्वेनाभ्युपगमात्, पुरुषस्य च भ्रमप्रमादविप्रलिप्सादिसम्भवादत आह दृष्टाभाव इति दृष्टं पुरुषान्तरेऽस्मदादौ भ्रमप्रमादविप्रलिप्सादिकं पुरुषदूषणं तदभावे सतीत्यर्थः। क्षितिकर्तृत्वेन वेदवक्तृत्वेन वाऽनुमितस्य पुरुषधौरेयस्य निर्द्दोषत्वेनैवोपस्थितेः, तथा च तद्वचसां न निरभिधेयता न विपरीताभिधेयता न निष्प्रयोजनाभिधे-

यता, भूतेन्द्रियमनसां दोषात् भ्रमप्रमादकरणापाटवादिप्रयुक्ता एव वचसामविशुद्धयः सम्भाव्यन्ते, न चेश्वरवचसि तासां सम्भवः, तदुक्तम् “रागाज्ञानादिभिर्वक्ता ग्रस्तत्वादनृतं वदेत्। ते चेश्वरे न विद्यन्ते स ब्रूयात् कथमन्यथेति”।

ननु तेनेश्वरेण वेदस्य प्रणीत इत्यत्रैव विप्रतिपत्तिरत आह। उप० “तद्वचनादाम्नायस्य प्रामाण्यमिति” १०सू०। “इति शास्त्रपरिसमाप्तौ। तद्वचनात्तेनेश्वरेण वचनात् प्रणयनादाम्नायस्य वेदस्य प्रामाण्यं तथाहि वेदास्तावत् पौरुषेया वाक्यत्वादितिसाधितं नचास्मदादयस्तेषां सहस्रशाखावच्छिन्नानां वक्तारः सम्भाव्यन्ते, अतीन्द्रियार्थत्वात्, नचातीन्द्रियार्थदर्शिनोऽस्मदादयः। किञ्चाप्तोक्ता वेदा महाजनपरिगृहीतत्वात् यन्नाप्तोक्तं न तन्महाजनपरिगृहीतं महाजनपरिगृहीतञ्चेदं तस्मादाप्तोक्तम्। स्वतन्त्रपुरुषप्रणीतत्वञ्चाप्तोक्तत्वम्। महाजनपरिगृहीतत्वञ्च सर्व्वदर्शनान्तःपातिपुरुषानुष्ठीयमानार्थत्वम्, क्वचित् फलाभावः कर्म्मकर्त्तृसाधनवैगुण्यादित्युक्तम्। कर्त्तृस्मरणाभावान्नैवमिति चेन्न कर्त्तृस्मरणस्य पूर्व्वमेव साधितत्वात्, तत्प्रणीतत्वञ्च स्वतन्त्रपुरुषप्रणीतत्वादेव सिद्धम्, न त्वस्मदादीनां सहस्रशाखवेदप्रणयने स्वातन्त्र्यं संभवतीत्युक्तत्वात्। किञ्च प्रमाया गुणजन्यत्वेन वैदिकप्रमायाअपि गुणजन्यत्वमावश्यकं तत्र च गुणोवक्तृयथार्थवाक्यार्थज्ञानमेव वाच्यस्तथा च तादृश एव वेदे वक्ता, यः स्वर्गापूर्व्वादिविषयकसाक्षात्कारवान्, तादृशश्च नेश्वरादन्य इति सुष्ठु”।

**औलूखल** त्रि० उलूखले क्षुण्णं शैषिकोऽण्। १उलूखलेपिष्टयावकादौ। उलूखले भवः अण्। २उलूखलभवे शब्दादौ च। “अभिषुणतोलूखलानुद्गायता” कात्या० १०,२,११,। “उलूखलेभवा औलूखलाः ध्वनयः” कर्कः

**औवेणक** न० “अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा। औवेणकं सरोविन्दुमुत्तरं गीतकानि च” या०उक्ते गीतिभेदे

**औशनस** न० उशनसा शुक्रेण प्रोक्तम् अण्। शुक्रेण प्रणीते १उपपुराणे “तथैवौशनसेरितम्” कूर्म्मपु० २दण्डप्रणयनरूपे शास्त्रे च। ३धर्म्मशास्त्रभेदे तच्च प्रतिलोमजातवर्णसङ्करविभागप्रतिपादकप्रायम्। उशनसा दृष्टं साम अण्। ४उशनसा दृष्टे सामनि। तस्येदम् अण्। ५तत्सम्बन्धिनि त्रि०। “व्यूहश्च चौशनसं व्यूहम्” भा०व० २८४अ०। “लोकमौशनसं दिव्यं शक्रलोकञ्च गच्छति” भा०अनु०१०७अ०। उशनसि भवः अण्। ६शुक्रभवे स्त्रियां ङीप्। सा च ७देवयान्याख्यायां तदीय दुहितरि “धिक्त्वौशनसि! भद्रन्ते न त्वमर्होऽसि भाविनि!” भा० आ० ८१ अ० देवयानीं प्रति कचोक्तिः।

**औशिज** पु० उशिगेव प्रज्ञा० अण्। १इच्छायुक्ते। “औशिजाय वणिजे दीर्घश्रवसे” ऋ० १,११२,११। २प्रवरर्षिभेदे “काक्षीवतामाङ्गिरसौचथ्यगौतमौशिजकाक्षीवतेति” आश्व० श्रौ० १२,११,२।

**औशीनर** पु० उशीनरस्यापत्यम् उत्सा० अञ्। उशीनरस्यापत्येषु शिविप्रभृतिषु। उशीनरनृपस्य१२७५पृ०उशीनरशब्दे उक्तः। तत्सुताश्च “उशीनरस्य पत्न्यस्तु पञ्च राजर्षिवंशजाः। नृगा कृमिर्नवा दर्वा पञ्चमी तु दृशद्वती। उशीनरस्य पुत्रास्तु पञ्च तासु कुलोद्वहाः। तपसा चैव महता जाता वृद्धस्य चात्मजाः। नृगायास्तु नृगःपुत्रः कृम्याः कृमिरजायत। नवायास्तु नवः पुत्रोदर्वायाः सुव्रतोऽभवत्। दृशद्वत्यास्तु संजज्ञे शिविरौशीनरो नृपः” हरिवं०३१अ० उक्ताः तच्चरितञ्च भा०वन०१९६अ०। “देवानां कथा संजाता महीतलं गत्वा महीपतिं शिविमौशीनरं साध्वेनं जिज्ञासिष्याम इति। एवं भो इत्युक्त्वा अग्नीन्द्रावुपातिष्ठेताम्। अग्निः कपोतरूपेण समभ्यधावदामिषार्थमिन्द्रः श्येनरूपेण। अथ कपोतो राज्ञो दिव्यासनासीनस्य उत्सङ्गं न्यपतत्। अथ पुरोहितो राजानमब्रवीत्। प्राणरक्षार्थं श्येनाद्भीतो भवन्तं प्राणार्थी प्रपद्यते। वसु दद्यात् त्वन्नवान् पार्थिवोऽस्य निष्कृतिं कुर्य्यात्। घोरं कपोतस्य निपातमाहुः। अथ कपोतो राजानमब्रवीत्। प्राणरक्षार्थं श्येनाद्भीतो भवन्तं प्राणार्थी प्रपद्ये। अङ्गैरङ्गानि प्राप्यार्थी सुनिभूत्वा प्राणांस्त्वां प्रपद्ये। स्वाध्यायेन कर्षितं ब्रह्मचारिणं मां विद्धि। तपसा दमेन युक्तमाचार्य्यस्याप्रतिकूलभाषिणम् एवं युक्तमपापं मां विद्धि। गदामि वेदान् विचिनोमि छन्दः सर्वे वेदा अक्षरशो मे अधीताः। न साधु दानं श्रोत्रियस्य प्रदानं मा प्रदाः श्येनाय न कपोतोऽस्मि। अथ श्येनो राजानमब्रवीत्। पर्य्यायेण वसतिर्म्मा भवेषु सर्गे जातः पूर्व्वमस्मात् कपोतात्। त्वमाददानोऽथ कपोतमेनं मा त्वं राजन्! विघ्नकर्त्ता भवेथाः। राजोवाच। केनेदृशी जातु पुरा हि दृष्टा वागुच्यमाना शकुनेन संस्कृता। यो वै कपोतोवदतेमाञ्च श्येन उभौ विदित्वा कथमस्तु साधु। नास्य वर्षति वर्षकाले नास्य वीजं रोहति काल उप्तम्। भीतं प्रपन्नं योहि ददाति शत्रवे न त्राणं

लभते त्राणमिच्छन् स काले । जाता ह्रस्वा प्रजा प्रमी-
यते सदा न वै वासं पितरोऽस्य कुर्वते । भीतं प्रपन्नं
योहि ददाति शत्रवे नास्य देवाः प्रतिगृह्णन्ति हव्यम् ।
मोघमन्नं विन्दति चाप्रचेताः स्वर्गाल्लोकाद्भ्रश्यति शीघ्र-
मेव । भीतं प्रपन्नं यो हि ददाति शत्रवे सेन्द्रा देवाः
प्रहरन्त्यस्य वज्रम् । उक्षाणं पक्त्वा सह ओदनेन अस्मात्
कपोतात् प्रति ते नयन्तु । यस्मिन् देशे रमसेऽतीव श्येन !
तत्र मांसं शिवयस्ते वहन्तु । श्येन उवाच । नोक्षाणं
राजन् प्रार्थयेयं न चान्यदस्मान्मांसमधिकं वा कपोतात् ।
देवैर्दत्तः सोऽद्य ममैष भक्ष्यस्तन्मे ददस्व शकुनानामभावात् ।
राजोवाच । उक्षाणं वेहतमनूनं नयन्तु ते पश्यन्तु पु-
रुषा ममैव । भयार्दितस्य दायं ममान्तिकात्त्वां प्राप-
यन्तु त्वं ह्येनं मा हिंसीः । त्यजे प्राणानेव दद्यां क-
पोतं सौम्यो ह्ययं किन्नु जानासि श्येन ! । यथा क्लेशं मा
कुरुष्वेह सौम्य ! नाहं कपोतमर्पयिष्ये कथञ्चित् । यथा
मां हि वै साधुवादैः प्रसन्नाः प्रशंसेयुः शिवयः कर्म्मणा
तु । यथा श्येन ! प्रियमेव कुर्य्यां प्रशाधि मां यद्वदेस्तत्
करोमि । श्येन उवाच । ऊरोर्दक्षिणादुत्कृत्य स्वपि-
शितं तावद्राजन् ! यावन्मांसं कपोतेन समम् । तथा त-
स्मात् साधु त्रातः कपोतः प्रशंसेयुः शिवयः कृतञ्च प्रियं
स्यान्ममेति । अथ स दक्षिणादूरोरुत्कृत्य स्वमांसपेशीं
तुलया धारयन् गुरुतर एव कपोत आसीत् । पुनरन्य-
दुच्चकर्त्त गुरुतर एव कपोतः । एवं सर्व्वं समधिकृत्य
शरीरं तुलायामारोपयामास तत्तथापि गुरुतर एव कपोत
आसीत् । अथ राजा स्वयमेव तुलामारुरोह । न च
व्यलीकमासीद्राज्ञ एतद्वृत्तान्तं दृष्ट्वा त्रात इत्युक्त्वा प्रालीयत
श्येनः । अथ राजा अब्रवीत् कपोतं विदुः शिवयस्त्वां
कपोत ! पृच्छामि ते शकुने ! को नु श्येनः । नानीश्वर
ईदृशं जातु कुर्य्यादेतं प्रश्नं भगवन्मे विचक्ष्व । कपोत उ-
वाच । वैश्वानरोऽहं ज्वलनो धूमकेतुरथैव श्येनो वज्र-
हस्तः शचीपतिः । साधु ज्ञातुं त्वामृषभं सौरथेयं नौ
जिज्ञासया त्वत्सकाशं प्रपन्नौ । यामेतां पेशीं मम
निष्क्रयाय प्रादाद्भवानसिनोत्कृत्य राजन् । एतद्वो लक्ष्म
शिवं करोमि हिरण्यवर्णं रुचिरं पुण्यगन्धम् । एतासां
प्रजानां पालयिता यशस्वी सुरर्षीणामथ सम्मतो भृशम् ।
एतस्मात् पार्श्वात् पुरुषो जनिष्यति कपोतरोमेति च तस्य
नाम । कपोतरोमाणं शिविनौद्भिदं पुत्त्रं प्राप्स्यति नृ-
पवृष संहननं यशोदीप्यमानं द्रष्टासि शूरमृषभं सौर-
थानाम्” उशीनरशब्दे दर्शितश्चरितमेवंरूपं तच्च
शिवेरेवेति बहुभिःकल्प्यते तत्र पितापुत्रयोरभेदोपचारात्
उशीनरशब्दप्रयोगात् इति । वस्तुतः कल्पभेदात् उशीनरस्य
तत्पुत्रशिवेश्च तथा चरितमित्यविरोधः । अयञ्च ययातेर्दौ-
हित्रः तेन च ययातेः पुण्यक्षये स्वर्गात् पतने तस्मै स्वपुण्यं
दत्त्वाऽसौ पुनः स्वर्गलोकं प्रापितः तत्कथा यथा । “पृ-
च्छामि त्वां शिविरौशीनरोऽहं ममापि लोका यदि सन्तीह
तात ! । यद्यन्तरीक्षे यदि वा दिवि श्रिताः क्षेत्रज्ञं त्वां
तस्य धर्म्मस्य मन्ये । ययातिरुवाच । यत्त्वं वाचा हृदये-
नापि साधून् परीप्समानान्नावमंस्था नरेन्द्र ! । तेनानन्ता दि-
वि लोकाः श्रितास्ते विद्युद्रूपाः स्वनवन्तो महान्तः । शिवि-
रुवाच । तांस्त्वं लोकान् प्रतिपद्यस्व राजन् मया दत्तान्यदि
नेष्टः क्रयस्ते । न चाहं तान् प्रतिपत्स्येह दत्त्वा यत्र ग-
त्वा नानुशोचन्ति धीराः” । “अन्ते च ययातिरस्मि नहुषस्य
पुत्रः पूरोः पिता सार्वभौमस्त्विहासम् । गुह्यं चार्थं
मामकेभ्यो ब्रवीमि मातामहोऽहं भवतां प्रकाशम्” भा०
आ० ९३ अ० । उशीनरस्य गोत्रापत्यम् इञ् । औशीन-
रि तद्गोत्रापत्ये पुंस्त्री स्त्रियां ङीप् । “शूद्रायां गौतमो
यत्र महात्मा संशितव्रत । औशीनर्य्यामजनयत् काक्षीवा-
द्यान् सुतान् मुनिः” भा० स० २० अ० । तस्यापत्यम् अत
इञपि । औशीनरि शिविनृपे । “आर्ष्टिषेणो दिलीपश्च
महात्मा चाप्युशीनरः । औशीनरिः पुण्डरीकः शर्य्यातिः
शरभः शुचिः” भा० स० ८ । यमसभावर्णने ।

**औशीर** न० वश–ईरन् किच्च ततः स्वार्थे प्रज्ञाद्यण् । १समुदि-
तयोः शय्यापीठयोः क्षीरस्वामी । २शय्यायाम् ३आसने च
पृथक् इति सुभूतिः । “अभ्यवहार्य्यं परमान्नमौशीरेऽस्य-
कामचारः कृतोऽभूत्” दशकुमा० । उशीरमिवाकारो-
ऽस्त्यस्य अण् । ४चामरे तस्य नलदमूलाकारत्वात्तथात्वम् ।
औशीरं चामरमस्त्यस्य अच् । ५चामरदण्डे अ-
मरः । हेमच० दण्डार्थतोक्तिश्चामरदण्डपरा “छत्रं वेष्टन-
मौशीरमुपानद्व्यजनानि च । यातयामानि देयानि
शूद्राय परिचारिणे” भा० श० ६० अ० । उशीरस्येद-
म् अण् । ६उशीरजे “स्तनन्यस्तौशीरम्” शकु० ।

**औषणशौण्डी** स्त्री ऊषण एव स्वार्थेऽण् औषणो कटुरसे
शौण्डी ७त० । शुण्ठ्याम् तस्याः कटुरसत्वात्तथात्वम् ।

**औषदश्वि** पु० ओषदश्वस्य नृपस्यापत्यम् इञ् । ओषदश्वि
नृपभेदापत्ये वसुमति ययातिदौहित्रे । “पृच्छामि त्वां
वसुमानौषदश्विर्य्यद्यस्ति लोको यदि मे नरेन्द्र !” भा० आ०

९३अ० । अस्य च यथा ययातिर्मातामहस्तथा औशीनरिशब्दे दर्शितः । तत्र भवच्छब्देनैतस्यापि परामर्शात्

**औषध** न० ओषधेरिदम् "ओषधेरजातौ" पा० अण् । ओषधिजाते १अन्नादौ २रोगनाशके द्रव्यभेदे । स्वार्थेऽण् । ३ओषधौ च । औषधशब्दार्थश्च सुश्रुते दर्शितः "एवमेतत्पुरुषो व्याधिरौषधम् क्रियाकाल इति चतुष्टयं व्याख्यातम्" इत्युक्त्वा "औषधग्रहणात् द्रव्यगुणरसवीर्य्यविपाकप्रभावानामादेशः" इत्युक्तम् । तेन द्रव्यमात्रसाध्यस्यौषधत्वम् । अतएव तैलघृतजलविषविशेषाणामप्यौषधत्वम् । "रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् । ततः कर्म्म भिषक् पश्चात् ज्ञानपूर्व्वं समाचरेत्" चक्रद० परिपाटीमुक्त्वा रोगभेदेन औषधविशेषा उक्तास्तत एव तेऽधिगम्याः । तदुपयोगिभूम्यादिकं सुश्रुते दर्शितं यथा

"अथातो भूमिप्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः श्वभ्रशर्कराश्मविषमवल्मीकश्मशानाघातनदेवतायतनसिकताभिरनुपहतामनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधार्थं परीक्षेत तस्यां जातमपि कृमिविषशस्त्रातपपवनदहनतोयसम्बाधमार्गैरनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्यां चौषधमाददीतेत्यौषधभूमिपरीक्षाविशेषः सामान्यः । विशेषतस्तु तत्राश्मवती स्थिरा गुर्व्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा । स्निग्धा शीतला सन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाऽम्बुगुणभूयिष्ठा । नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा । रूक्षा भस्मरासभवर्णा तनुरूक्षकोटराल्परसवृक्षप्रायाऽनिलगुणभूयिष्ठा । मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्वतोऽसारवृक्षा महापर्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा । तत्र केचिदाहुराचार्य्याः । प्रावृड्वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु यथासंख्यं मूलपत्रत्वक्क्षीरसारफलान्याददीतेति तत्तु न सम्यक् कस्मात्सौम्याग्नेयत्वाज्जगतः । सौम्यान्यौषधानि सौम्येषु ऋतुष्वाददीताग्नेयान्याग्नेयेष्वेवमव्यापन्नगुणानि भवन्ति । सौम्यान्यौषधानि सौम्येषु ऋतुषु गृहीतानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्धशीतानि जायन्ते । एतेन शेषं व्याख्यातम् । तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीताग्न्याकाशमारुतगुणभूयिष्ठायां वमनद्रव्याणि । उभयगुणभूयिष्ठायामुभयतोभागानि । आकाशगुणभूयिष्ठायां संशमनान्येवं बलवत्तराणि भवन्ति । सर्वाण्येव चाभिनवान्यन्यत्र मधुघृतगुडपिप्पलीविडङ्गेभ्यः । सर्वाण्येव सक्षीराणि वीर्य्यवन्ति तेषामसम्पत्तावनतिक्रान्तसंवत्सराण्याददीतेति । भवन्ति चात्र । गोपालास्तापसा व्याधा ये चान्ये वनचारिणः । मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते । सर्वावयवसाध्येषु पलाशलवणादिषु । व्यवस्थितो न कालोऽस्ति तत्र सर्वो विधीयते । गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते । तस्माद्भूमिस्वभावेन वीजिनः षड्रसैर्युताः । अव्यक्तः किल तोयस्य रसो नित्यं विनिश्चितः । रस एव सचाव्यक्तो व्यक्तो भूमिरसाद्भवेत् । सर्वलक्षणसम्पन्ना भूमिः साधारणा स्मृता । द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः । विगन्धेनापरामृष्टमविपन्नं रसादिभिः । नवं द्रव्यं पुराणं वा ग्राह्यमेव विनिर्दिशेत् । विडङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम् । शेषमन्यत्त्वभिनवं गृह्णीयाद्दोषवर्जितम् । जङ्गमानां वयःस्थानां रक्तरोमनखादिकम् । क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत् । प्लुतकट्वाण्डफलकशङ्कुविन्यस्तभेषजम् । प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते" ।

औषधग्रहणे परिभाषादिकमुक्तं भावप्र० यथा

"प्रशस्तदेशे सञ्जातं प्रशस्तेऽहनि चोद्धृतम् । अल्पमात्रं बहुगुणं गन्धवर्णरसान्वितम् । दोषघ्नमग्लानिकरमधिकं न विकारि यत् । समीक्ष्य काले दत्तञ्च भेषजं स्याद्गुणावहम् । आग्नेया विन्ध्यशैलाद्याः सौम्यो हिमगिरिः स्मृतः । अतस्तदौषधानि स्युरनुरूपाणि हेतुभिः । आग्नेयाः अधिकाग्न्यंशाः सौम्यः अधिकसोमांशः । औषधय एवौषधानि । अत्र स्वार्थे अण् । अनुरूपाणि सदृशानि । अन्येष्वपि प्ररोहन्ति वनेषूपवनेषु च । गृह्णीयात्तानि सुमनाः शुचिः प्रातः सुवासरे । आदित्यसम्मुखो मौनी नमस्कृत्य शिवं हृदि । साधारणधराद्रव्यं गृह्णीयादुत्तराश्रितम् । साधारणधराद्रव्यम् सर्वभूमिभवन्द्रव्यम् । उत्तराश्रितं स्यात् उत्तरदिग्भवम् । वल्मीककुत्सितानूपश्मशानोषरमार्गजाः । जन्तुवह्निहिमव्याप्ता नौषध्यः कार्य्यसाधिकाः । शरद्यखिलकार्य्यार्थं ग्राह्यं सरसमौषधम् । विरेकवमनार्थन्तु वसन्तान्ते समाहरेत् । वसन्तान्तः वसन्तमध्ये समाहरेत् संगृह्णीयात् । अतिस्थूलजटा याः स्युस्तासां ग्राह्यास्त्वचो ध्रुवम् । गृह्णीयात् सूक्ष्ममूलानि सकलान्यपि बुद्धिमान् । अन्यच्च । महान्ति येषां मूलानि

काष्ठगर्भाणि सर्व्वतः। तेषान्तु वल्कलं ग्राह्यं ह्रस्व मूलानि सर्व्वशः। न्यग्रोधादेस्त्वचो ग्राह्या सारःस्या द्बीजकादितः। तालीशादेश्च पत्राणि फलं स्यात् त्रिफलादितः। क्वचिन्मूलं क्वचित् कन्दः क्वचित् पत्रं क्वचित् फलम्। क्वचित् पुष्पं क्वचित् सर्व्वं क्वचित् सारः क्वचित् त्वचः। चित्रकं सूरणं निम्बो वासा च त्रिफला क्रमात्। धातकी कण्टकारी च खदिरः क्षीरपादपः। क्वचिन्निम्बस्य गृह्णीयात् पत्राभावे त्वचामपि। बालस्फलन्तु बिल्वस्य पक्वमाम्रस्य च। अङ्गेऽनुक्ते जटा ग्राह्या भागेऽनुक्तेऽखिलं समम्। पात्रेऽनुक्ते मृदः पात्रं कालेऽनुक्ते त्वहर्मुखम्। नवान्येव हि योज्यानि द्रव्याण्यखिलकर्मसु। विना विडङ्गकृष्णाभ्यां गुडधान्याज्यमाक्षिकैः। धान्यमन्नम्। पुराणन्तु प्रशस्तं स्यात्ताम्बूलक्षाञ्जिकन्तथा। शुष्कन्नवीनद्रव्यन्तु योज्यं सकलकर्मसु। आर्द्रन्तु द्विगुणं युञ्ज्यादेष सर्व्वत्र निश्चयः। गुडूची कुटजो वासा कूष्माण्डश्च शतावरी। अश्वगन्धा सहचरी शतपुष्पा प्रसारिणी। प्रयोक्तव्या सदैवार्द्रा द्विगुणं नैव कारयेत्। सहचरी कुरण्टकः (कटसैरया) इतिलोके। वासानिम्बपटोलकेतकबला कुष्माण्डकेन्द्री वरी वर्षाभूः कुटजाश्च कन्दसहिता सा पूतिगन्धा स्मृता। ऐन्द्री नागबला कुरण्टक पुरी कलास्मृता सर्व्वदा। सार्द्रा एवतु कुत्रचित् द्विगुणिता कार्य्येषु योज्या बुधैः। ऐन्द्री इन्द्रवारुणी। वरी शतावरी पूतिगन्धा गन्धप्रसादनो नागबला (गुलशकरि) कुरण्टकः (पीतपुष्पझाटि) (कटसरैया) पुरो गुग्गुलुः। घृतन्तैलञ्च पानीयं कषायं व्यञ्जनादिकम्। पक्वा शीतीकृतं चोष्णं तत्सर्व्वं स्याद्विषोपमम्।

द्रव्याणां परीक्षा। सूक्ष्मास्थिमांसला पथ्या सर्वकर्मणि पूजिता। क्षिप्ताम्भसि निमज्जेद्या भल्लातक्य स्तथोत्तमाः। वराहमूर्द्धवत्कन्दो वाराहीकन्दसंज्ञकः। सौवर्चलन्तु काचाभं सैन्धवं स्फटिकप्रभम्। सुवर्णक्षणिकं ज्ञेयं स्वर्णमाक्षिकमुत्तमम्। इन्द्रपुष्पप्रतीकाशा मनोह्वा चोत्तमा मता। श्रेष्ठं शिलाजतु ज्ञेयं प्रक्षिप्तं न विशीर्य्यते। तोयपूर्णे कांस्यपात्रे शतानेन विवर्द्धते। कर्पूरस्तुवरः स्निग्धः एला सूक्ष्मफला वरा। श्वेतचन्दनमत्यन्तं सुगन्धि गुरु पूजितम्। रक्तचन्दनमत्यन्तं लोहितम्प्रवरं मतम्। काकतुण्डानिभः स्निग्धोऽगुरुः श्रेष्ठो गुरुर्मतः। सुगन्धि लघु रूक्षञ्च सुरदारु वरं मतम्। सरलं स्निग्धमत्यर्थं सुगन्धि च गुणावहम्। अतिपीता प्रशस्ता तु ज्ञेया दारुनिशा बुधैः। जातीफलं गुरु स्निग्धं समं शुभ्रान्तरं वरम्। मृद्वीकाशोत्तमा ज्ञेया या स्याद्गोस्तनसन्निभा। करमर्द्दफलाकारा मध्यमा सा प्रकीर्त्तिता। गोस्तनसन्निभा। (मुनका) इति लोके। करमर्द्दफलाकारा। (करोन्दीदाख) इति लोके। खण्डन्तु विमलं श्रेष्ठं चन्द्रकान्तसमप्रभम्। गव्याज्यसदृशं रूच्यगन्धं मधु वरम्मतम्। अथ स्वभावतो हितानि। शालीनां लोहितः शालिः षष्टिकेषु च षष्टिका। शूकधान्येष्वपि यवोगोधूमः प्रवरो मतः। शिम्बीधान्ये वरो मुद्गो मसूरस्वाढ़की तथा। रसेषु मधुरः श्रेष्ठो लवणेषु च सैन्धवम्। दाड़िमामलकन्द्राक्षाखर्ज्जूरञ्च परुषकम्। राजादनं मातुलुङ्गं फलवर्गेषु शस्यते। परुषकं (फालसा) इति लोके। राजादनं (खिरिणी) इति लोके। मातुलुङ्गं (बीजपूरा) इतिलोके। पत्रशाकेषु वास्तूकं जीवन्ती पीतिका वरा। पटोलं फलशाकेषु कन्दशाकेषु सूरणम्। एणः कुरङ्गो हरिणो जाङ्गलेषु प्रशस्यते। पक्षिणां तित्तिरिर्लावो वरो मत्स्येषु रोहितः। हरिणस्ताम्रवर्णः स्यादेणः कृष्णतया मतः। कुरङ्गस्ताम्र उद्दिष्टो हरिणः कृत्तिको महान्। जलेषु दिव्यं दुग्धेषु गव्यमाज्येषु गोभवम्। तैलेषु तिलजन्तैलमैक्षवेषु सिता हिता। अथ स्वभावादहितानि। शिम्बीषु माषान् योग्यत्तौ, लवणेष्वौषरं त्यजेत्। फलेषु लकुचं शाके सार्षपं न हितम्मतम्। गोमांसं ग्राम्यमांसेषु नहितं महिषीवसा। मेषीपयः कुसुम्भस्य तैलन्त्याज्यञ्च फाणितम्। इक्षुरसः परिपक्वो योऽर्द्धघनःस तु फाणितम् तद्धि (क्षोवा-राव) इति लोके। अथ संयोगविरुद्धानि। मत्स्यमानूपमांसञ्च दुग्धयुक्तं विवर्ज्जयेत्। कपोतं सर्षपस्नेहभर्जितं परिवर्जयेत्। मत्स्यानिक्षौनिकारैश्च तथा क्षौद्रेश्च वर्ज्जयेत्। सक्तून् मांसपयोयुक्तानुष्णैर्दधि विवर्ज्जयेत्। उष्णैर्सभोऽम्बुना क्षौद्रं पायसं कृशरान्वितम्। रम्भाफलं त्यजेत् तक्रं दधि विल्वफलान्वितम्। दशाहमुषितं सर्पिः कांस्ये, मधुघृतं समम्। कृताञ्च कषायञ्च पुनरुष्णीकृतं त्यजेत्। एकत्र बहुमांसानि विरुध्यन्ते परस्परम्। मधुसर्पिर्वसातैलं पानीयं वा पयस्तथा। अथ भेषजप्रतिषङ्केतः। बलार्थं सैन्धवं प्रोक्तं चन्दनं रक्तचन्दनम्। चूर्णलेहासवस्नेहाः साध्या धवलचन्दनैः। कषायलेपयोः प्रायो युज्यते रक्तचन्दनम्। अन्तःसम्मार्ज्जने ज्ञेया ह्यजमोदा यवानिका। बहिःसम्मार्ज्जने चैव विज्ञातव्याजमोदिका। पयः सर्पिः प्रयोगेषु मध्यमेषु हि

गृह्यते। अथ प्रतिनिधिः। चित्रकाभावतो दन्ती क्षारः शिखरिजोऽथवा। अभावे धन्वयासस्य पृश्निपर्ण्या दुरालभा। शिखरी अपामार्गः। तगरस्याप्यभावे तु कुष्ठं दद्याद्भिषग्वरः। मूर्वाभावे त्वचो ग्राह्या जिङ्गिनीप्रभवा बुधैः। अहिंस्राया अभावे तु मानकन्दः प्रकीर्त्तितः। लक्ष्मणाया अभावे तु नीलकण्ठशिखा मता। नीलकण्ठशिखा मयूरशिखा। वकुलाभावतो देयं कह्लारोत्पलपङ्कजम्। नीलोत्पलस्याभावे तु कुमुदं देयमिष्यते। जातिपुष्पं न यत्रास्ति लवङ्गं तत्र दीयते। अर्कपर्णादि पयसो ह्यभावे तद्रसो मतः। पौष्कराभावतः कुष्ठं तथा लाङ्गल्यभावतः। स्थौणेयकस्याभावे तु भिषग्भिर्दीयतेऽगदे। चविकागजपिप्पल्यौ पिप्पलीमूलवत् स्मृतौ। अभावे सोमराज्यास्तु प्रपुन्नाटफलं मतम्। यदि न स्याद्दारुनिशा तदा देया निशा बुधैः। सोमराजी वाकुची। प्रपुन्नाटफलं चक्रमर्द्दफलम्। दारुनिशा दारुहरिद्रा निशा हरिद्रा। रसाञ्जनस्याभावे तु सम्यग्दार्व्वी प्रयुज्यते सौराष्ट्र्यभावतो देया स्फटिका तद्गुणा जनैः। सौराष्ट्री (सोरटीमाटी) इति लोके। स्फटिका (फटिकारी) इति लोके। तालीशपत्रकाभावे स्वर्णताली प्रशस्यते। भार्ग्यभावे तु तालीशं कण्टकारी जटाऽथ वा। रुचकाभावतो दद्याल्लवणं पांशुपूर्व्वकम्। अभावे मधुयष्ट्यास्तु धातकीञ्च प्रयोजयेत्। रुचकं(चौहार) इति लोके पांशुलवणं (खारी) अथ वा (रेह इति लोके। अम्लवेतसकाभावे चुक्रं दातव्यमिष्यते। द्राक्षा यदि न लभ्येत प्रदेयं काश्मरीफलम्। तयोरभावे कुसुमं बन्धूकस्य मतं बुधैः। लवङ्गकुसुमं देयं नखस्याभावतः पुनः। कस्तूर्य्यभावे कक्कोलं चोपयोग्यं विदुर्बुधाः। कक्कोलस्याप्यभावे तु जातीपुष्पं प्रदीयते। सुगन्धीमुस्तकं देयं कर्पूराभावतो बुधैः। कर्पूराभावतो देयं ग्रन्थिपर्णं विशेषतः। कुङ्कुमाभावतो दद्यात् कुसुम्भकुसुमं नवम्। श्रीखण्डचन्दनाभावे कर्पूरं देयमिष्यते। अभावे त्वेतयोर्वैद्यः प्रक्षिपेत् रक्तचन्दनम्। रक्तचन्दनकाभावे नवोशीरं विदुर्बुधाः। मुस्ता चातिविषाभावे शिवाभावे शिवा मता। अभावे नागपुष्पस्य पद्मकेशरमिष्यते। मेदा जीवककाकोली ऋद्धिद्वन्द्वेऽपि वा सति। वरी विदार्य्यश्वगन्धा वाराही च क्रमात् स्मृता। वरी शतावरी। वाराह्याश्च तथाभावे चर्म्मकारालुको मतः। वाराहीकन्दसंज्ञस्तु पश्चिमे गृष्टिसंज्ञकः। वाराहीकन्दएवान्यचर्म्मकारालुको मतः। अनूपसम्भवे देशे वराह इव लोमवान्। भल्लातकासम्भवे तु रक्तचन्दनमिष्यते। भल्लाताभावतश्चित्रं नलमूलोरभावतः। सुवर्णाभावतः स्वर्णमाक्षिकं प्रक्षिपेत् बुधः। श्वेतन्तु माक्षिकं ज्ञेयं बुधैः रजतवत् ध्रुवम्। माक्षिकस्याप्यभावे तु प्रदद्यात् स्वर्णगैरिकम्। सुवर्णमय वा रौप्यं मृतं यत्र न लभ्यते। तत्र कान्तेन कर्म्माणि भिषक्कुर्य्यादिचक्षणः। कान्ताभावे तीक्ष्णलोहं योजयेद्वैद्यसत्तमः। अभावे मौक्तिकस्यापि मुक्ताशुक्तिं प्रयोजयेत्। मधु यत्र न लभ्येत तत्र जीर्णगुडो मतः। मत्स्याण्ड्यभावतो दद्युर्भिषजः सितशर्कराम्। असम्भवे सितायास्तु बुधैः खण्डं प्रयुज्यते। क्षीराभावे रसो मौद्गो मासूरो वा प्रदीयते। अत्र प्रोक्तानि वस्तूनि यानि तेषु च तेषु च। योज्यमेकतराभावे परं वैद्येन जानता। रसवीर्य्यविपाकाद्यैः समं द्रव्यं विचिन्त्य च। युञ्ज्याद्विविधमन्यच्च द्रव्याणान्तु रसादिवित्। योगे यद्प्रधानं स्यात्तस्य प्रतिनिधिर्म्मतः। यत्तु प्रधानं तस्यापि सदृशं नैव गृह्यते। व्याधेरयुक्तं यत् द्रव्यं गुणोक्तमपि तत् त्यजेत्। अनुक्तमपि युक्तं यत् योजयेत् तद्रसादिवित्। द्रव्यगतपञ्चपदार्थकर्म्माण्याह। द्रव्ये रसो गुणो वीर्य्यविपाकः शक्तिरेव च। पदार्थाः पञ्च तिष्ठन्ति स्वंस्वं कुर्व्वन्ति कर्म्म च"।

"वीर्य्यवन्त्यौषधिनीव विकारे सान्निपातिके" कुमा०। "द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्त्तस्य यथौषधम्" रघुः। "विषस्य विषमौषधम्"उद्भटः "भवौषधात् श्रोत्रमनोऽभिरामात्" भाग०१,१, "औषधं जाह्नवीतोयं वैद्योनारायणः स्वयम्" पुरा०। संसाररूपदुःखदायकरोगनिवारके ४परमेश्वरे च "औषधं जगतां सेतुः" विष्णु०सं०।

**औषधि** स्त्री आ+ओषधि–प्रा०स०। सम्यगोषधौ। "विरमन्ति न ज्वलितुमौषधयः" किरा० वा ङीप्। औषधी।

**औषर** न० उषरे भवः अण्। पांशुलवणे राजनि०।

**औषरक** न० औषरमिव कन्। (खारी) लवणभेदे राजनि०

**औषस** न० उषसि भवः सन्धिवेलेत्यादिना योगविभागात् अण्। १उषसिभवे। वस्तुतः भवार्थे "कालाट्ठञ्" पा०उक्तेः ठञ् स्यात् तेन उषस इदम् इत्यण् इत्युचितम्। २उषःसम्बन्धिनि। "अनुदितौषसरागेति "औषसातपभयादपलीनम्" इति च" किरा० स्त्रियां ङीप्। "या सोमाः पत्न्यौषसी सा" शत० ब्रा० ६,१,३,८, उषस्+ बा० यत् स्वार्थे अण्। औषस्य उषोभवे त्रि०।

औष(स्त)स्य त्रि०उषस्तेरिदम् अण् ष्यञ् वा । उषस्तिचरितात्मके का०उ० ब्राह्मणकाण्डभेदे । तच्च "उषस्तिश्चाक्रायणः" इत्यादि तत्रत्यं ब्राह्मणं "औषस्ते(स्त्ये) काण्डेऽविदुषामपि आर्त्विज्यदर्शनात्" का०उ०भा० ।

औषसिक त्रि० उषसा चरति ठक् टिलोपः । १उषसाचारिणि । उषसि भवः कालाट्ठञ्"पा० ठञ् । २उषसिभवे च ।

औषिक त्रि० उषा उषसि भवः ठञ् । उषाभवे स्त्रियां ङीप्

औष्ट्र न० उष्ट्रस्येदम् अण् । उष्ट्रदुग्धादौ । "औष्ट्रं दुग्धं लघु स्वादु लवणं दीपनं तथा । क्रमिकुष्ठकफानाहशोथोदरहरं सरम्" भावप्र० । "अनिर्दशाया: गोः क्षीरमौष्ट्रमैकशफं तथेति" मनुः उष्ट्रशब्दे विवृतिः ।

औष्ट्रक न० उष्ट्राणां समूहः गोत्रोक्षोष्ट्रेत्यादिना वुञ् । उष्ट्रसमूहे । उष्ट्रस्य विकारोऽवयवोवा वुञ् । २उष्ट्रविकारे ३तदवयवे च त्रि० ।

औष्ट्ररथ न० उष्ट्ररथस्येदम् "पत्रपूर्व्वादञ्" पा० रथादित्यनुवृत्तौ अञ् । उष्ट्रवाह्यरथसम्बन्धिनि ।

औष्टायण पुंस्त्री उष्ट्रस्यापत्यम् बा० फक् । उष्ट्रापत्ये ततः चतुरर्थ्याम् अरीहणादि० वुञ् । औष्ट्रायणक तत्सन्निकृष्टदेशादौ त्रि० ।

औष्ट्रिक त्रि० उष्ट्रे भवः ठक् । उष्ट्रभवे दध्यादौ "विपाके कटु सक्षारं गुरु भेद्यौष्ट्रिकं दधि" सुश्रुतः ।

औष्ठ त्रि० ओष्ठ ओष्ठाकारोऽस्त्यस्य प्रज्ञा० अण् । ओष्ठाकारकाष्ठावयवयुक्ते आश्विनग्रहपात्रे । "औष्ठमाश्विनम्" कात्या० ९,२,७, "ओष्ठावयवयुक्तमाश्विनग्रहपात्रम्"कर्कः "तद्धिदेवत्यमौष्ठमाश्विनपात्रम्" शत० ब्रा० ४,१,५,१९ ।

औष्ठ्य त्रि० ओष्ठे भवः यत् स्वार्थे अण् । ओष्ठभवे उवर्णपवर्गयोः "औष्ठजावुपू" इतिशिक्षोक्तेस्तयोस्तथात्वम्

औष्णिज न० उष्णिज्+प्रज्ञा०स्वार्थेऽण् । उष्णिगर्थे ।

औष्णिह त्रि०उष्णिहि भवः उत्सा० अञ् तस्येदमण् वा । १उष्णिक्छन्दोभवे २तत्सम्बन्धिनि च । उष्णिहा स्तुत्यः अण् । ३उष्णिक्छन्दसा स्तुत्ये सवितरि "सवित्र औष्णिहाय" यजु० १९,६ ।

औष्णीक त्रि० उष्णीषे शोभते अण् पृषो० । १उष्णीषधारिणि २तद्धारिजनपदविशेषे ३तन्नृपे च "औष्णीकाननवासांश्च योधकान् पुरुषादकान्" भा०स० ५० ।

औष्ण्य न० उष्णस्य भावः गुणवचनत्वात् ष्यञ् । उष्णस्पर्शे स च "उष्णस्पर्शस्तु तेजसः" इत्युक्तेः तेजसएव स्वाभाविकधर्म्मः तत्संयोगादितरेषामौपाधिकः । सुश्रुते तत्कार्य्यं-पित्तस्य धर्म्म इत्युक्तं यथा "औष्ण्यं तैक्ष्ण्यं रौक्ष्यलाघववैशद्यगुणलक्षणं पित्तं तस्य समानयोनिः कटुकोरसः सोऽस्यौष्ण्यादौष्ण्यं वर्द्धयति" सुश्रु० ।

औष्म्य न०ऊष्मणोभावः ऊष्मैव वा ष्यञ् । उष्णस्पर्शे । "पूर्वरामवियोगौष्म्यं क्षतस्य जगतोहृतम्"रघुः । उष्णस्पर्शो यद्यपि तेजोयोगात् भवति तथापि देहस्य तथा स्पर्शः सूक्ष्मदशाङ्गसूक्ष्मदेहसंयोगादेव तथोक्तं शा० सूत्रभाष्ययोः "अस्यैव चोपपत्तेरेष ऊष्मा"सू०"अस्यैव च सूक्ष्मशरीरस्यैष ऊष्मायमेतस्मिन् जीवच्छरीरे संस्पर्शेनोष्णिमानं विजानाति तथाहि मृतावस्थायामवस्थितेऽपि देहे विद्यमानेष्वपि च रूपादिषु देहगुणेषु नोष्मोपलभ्यते जीवदवस्थायामेव तूपलभ्यते इत्यत उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यापाश्रय एवैष ऊष्मेति तथा च श्रुतिः "उष्ण एव जीविष्यञ्छीतो मरिष्यन्निति" भा० । तदुपाधिकत्वात् जीवस्यापि ऊष्मत्वं व्यवह्रियते इत्युक्तं प्राक् ।

इति वाचस्पत्ये औकारादिशब्दार्थसङ्कलनम् ।

इति श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्य-विरचिते वाचस्पत्येऽभिधाने स्वरवर्णादिशब्दार्थसङ्कलनं समाप्तम् ।

ओं तत्सत्

| वर्णः | स्वरः | कालः | स्थानम् | आभ्यन्तरप्रयत्नः | बाह्यप्रयत्नाः । |
|---|---|---|---|---|---|
| अ | उदात्तानुदात्तस्वरिताः | एकमात्रोह्रस्वः | कण्ठः | विवृतम् | संवारनादघोषाः अल्पप्राणश्च |
| आ | उदा० ३ | द्विमात्रोदीर्घः | कण्ठः | विवृतम् | संवारनादघोषाः अल्पप्राणश्च |
| अ३ | उदा० ३ | त्रिमात्रः प्लुतः | सः | तत् | ते सच |
| इ | उदा० ३ | एकमात्रोह्रस्वः | तालु | तत् | ते सच |
| ई | उदा० ३ | २ द्विमात्रोदीर्घः | तत् | तत् | ते सच |
| इ३ | उदा० ३ | त्रिमात्रः प्लुतः | तत् | तत् | ते सच |
| उ | उदा० ३ | एकमात्रोह्रस्वः | ओष्ठौ | तत् | ते सच |
| ऊ | उदा० ३ | द्विमात्रोदीर्घः | तौ | तत् | ते सच |
| उ३ | उदा० ३ | त्रिमात्रः प्लुतः | तौ | तत् | ते सच |
| ऋ | उदा० ३ | एकमात्रोह्रस्वः | मूर्द्धा | तत् | ते सच |
| ॠ | उदा० ३ | द्विमात्रोदीर्घः | सः | तत् | ते सच |
| ऋ३ | उदा० ३ | त्रिमात्रः प्लुतः | सः | तत् | ते सच |
| ऌ | उदा० ३ | एकमात्रोह्रस्वः | दन्तमूलम् | तत् | ते सच |
| ऌ३ | उदा० ३ | त्रिमात्रः प्लुतः | तत् | तत् | ते सच |
| अस्य दीर्घाभावेऽपि लकारद्वययोगात् द्विमात्रता | | | दन्तमूलम् | तत् ईषत्स्पृष्टं च | ते सच |
| ए | उदा० ३ | द्विमात्रोदीर्घः | कण्ठतालुनी | विवृतम् | ते सच |
| ए३ | उदा० ३ | त्रिमात्रः प्लुतः | कण्ठतालुनी | तत् | ते सच |
| ऐ | उदा० ३ | द्विमात्रोदीर्घः | कण्ठतालुनी | तत् | ते सच |
| ऐ३ | उदा० ३ | त्रिमात्रः प्लुतः | कण्ठतालुनी | तत् | ते सच |
| ओ | उदा० ३ | द्विमात्रोदीर्घः | कण्ठोष्ठौ | तत् | ते सच |
| ओ३ | उदा० ३ | त्रिमात्रः प्लुतः | कण्ठौष्ठौ | तत् | ते सच |
| औ | उदा० ३ | द्विमात्रोदीर्घः | कण्ठौष्ठौ | तत् | ते सच |
| औ३ | उदा० ३ | त्रिमात्रः प्लुतः | कण्ठौष्ठौ | तत् | ते सच |
| एषामनुनासिकत्वे उदा० | | यथाप्राप्तम् | यथास्थानं नासिकाऽपि | तत् | यथप्राप्तं बाह्याः |
| ं अनुस्वारस्य | ० | ० | नासिका | स्पृष्टम् | संवारनादघोषा महाप्राणश्च |
| ः विसर्गस्य | ० | ० | कण्ठः | स्पृष्टम् | विवारश्वासाघोषा महाप्राणश्च |
| +क+ख | ० | ० | जिह्वामूलम् | स्पृष्टम् | विवारादयः महाप्राणश्च |
| ᳲप ᳲफ | ० | ० | ओष्ठौ | स्पृष्टम् | विवारादयः महाप्राणश्च |
| क | ० | अर्द्धमात्रा | कण्ठमूलम् | स्पृष्टम् | विवारश्वासाघोषा अल्पप्राणश्च |
| ख | ० | अर्द्धमात्रा | तत् | तत् | विवारादयः महाप्राणश्च |
| ग | ० | सा | तत् | तत् | संवारनादघोषा अल्पप्राणश्च |
| घ | ० | सा | तत् | तत् | संवारादयः महाप्राणश्च |
| ङ | ० | सा | तत् नासा च | तत् | संवारादयः अल्पप्राणश्च |
| च | ० | अर्द्धमात्रा | तालु | तत् | विवारादयः अल्पप्राणश्च |
| छ | ० | सा | तत् | तत् | विवारादयः महाप्राणश्च |
| ज | ० | सा | तत् | तत् | संवारादयः अल्पप्राणश्च |

| वर्णः | स्वरः | कालः | स्थानम् | आभ्यन्तरप्रयत्नः | बाह्यप्रयत्नाः । |
|---|---|---|---|---|---|
| झ | ० | अर्द्धमात्रा | तालु | स्पृष्टम् | संवारादयः महाप्राणश्च |
| ञ | ० | सा; | तालु नासा च | तत् | संवारादयः अल्पप्राणश्च |
| ट | ० | सा | मूर्द्धा | तत् | विवारादयः अल्पप्राणश्च |
| ठ | ० | सा | सः | तत् | विवारादयः महाप्राणश्च |
| ड | ० | सा | सः | तत् | संवारादयः अल्पप्राणश्च |
| ढ | ० | सा | सः | तत् | संवारादयः महाप्राणश्च |
| ण | ० | सा | सः नासा च | तत् | संवारादयः अल्पप्राणश्च |
| त | ० | सा | दन्तमूलम् | तत् | विवारादयः अल्पप्राणश्च |
| थ | ० | सा | तत् | तत् | विवारादयः महाप्राणश्च |
| द | ० | सा | तत् | तत् | संवारादयः अल्पप्राणश्च |
| ध | ० | सा | तत् | तत् | संवारादयः महाप्राणश्च |
| न | ० | सा | तत् नासा च | तत् | संवारादयः अल्पप्राणश्च |
| प | ० | सा | ओष्ठौ | तत् | विवारादयः अल्पप्राणश्च |
| फ | ० | सा | तौ | तत् | विवारादयः महाप्राणश्च |
| ब | ० | सा | तौ | तत् | संवारादयः अल्पप्राणश्च |
| भ | ० | सा | तौ | तत् | संवारादयः महाप्राणश्च |
| म | ० | सा | तौ नासा च | तत् | संवारादयः अल्पप्राणश्च |
| य | ० | सा | तालु | ईषत् स्पृष्टम् | विवारादयः अल्पप्राणश्च |
| र | ० | सा | मूर्द्धा | ईषत् स्पृष्टम् | विवारादयः अल्पप्राणश्च |
| ल | ० | सा | दन्तमूलम् | तत् | ते सच |
| व | ० | सा | दन्तोष्ठौ | तत् | ते सच |
| यवलानामनुनासिकत्वे | | ० | यथास्थानं नासाऽपि | तत् | ते सच |
| श | ० | सा | तालु | अर्द्धस्पृष्टम् | विवारादयः महाप्राणश्च |
| ष | ० | सा | मूर्द्धा | तत् | ते सच |
| स | ० | सा | दन्तमूलम् | तत् | ते सच |
| ह | ० | सा | कण्ठः | अर्द्धस्पृष्टम् | संवारादयः महाप्राणश्च |
| कँ खँ गँ घँ रूपयमानाम् | | सा | यथास्थानं नासिका च | स्पृष्टम् | यथाप्राप्तं बाह्याः |
| ह्ण ह्न ह्म ह्य ह्र ह्ल ह्व | | | उरः यथास्थानञ्च | यथाप्राप्तम् | संवारादयः महाप्राणश्च |

उदात्तादीनां सूचक चिह्नानि तु ऊर्द्ध्वरेखाचिह्नितः अकारादिवर्णः उदात्तः, अधोरेखाचिह्नितः अनुदात्तः, ऊर्द्ध्वाधोरेखारहितः स्वरित इति । तत्र अचामेव स्वरकृतविभागः, न तु व्यञ्जनानां तेषामुदात्तादिस्वराभावात् ।

## स्वरवर्णविभागादि ।

स्वरवर्णा अकारादयः औकारान्ताः शिक्षामते द्वाविंशतिस्त्रयोविंशतिर्वा "स्वरा विंशतिरेकश्च शून्यस्पृष्टश्चेति विज्ञेय ऌकारः प्लुत एव चेति" च शिक्षोक्तेः । तथाहि ह्रस्वदीर्घप्लुतभेदेन अ, इ, उ, ऋ, इत्येते द्वादश ऌकारः ह्रस्व एव तस्य दीर्घाभावात् । ए, ऐ, ओ औ, इत्येते दीर्घप्लुतभेदात् अष्टौ इत्येकविंशतिः ॡकारस्य लकारद्वययुक्तत्वेन ईषत्स्पृष्टतया दुष्पृष्टत्वेन द्वाविंशतिः प्लुतत्वे त्रयोविंशतिर्भेदाः स्थूलाः । तेषां च प्रत्येकमुदात्तानुदात्तस्वरितभेदैः त्रैविध्येन ६६ भेदाः ६९ वा भेदाः । पुनस्तेषामनुनासिकाननुनासिकभेदाभ्यां द्वैविध्यात् १३२ । १३८ वा सूक्ष्मा भेदाः सर्व्वेषाञ्चैषां स्वयं राजमानत्वात् उदात्तादिस्वरवत्त्वाच्च स्वरशब्दवाच्यता ।

तन्त्रमते तु अनुस्वारविसर्गसहिताः अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, ऌ, ॡ, इत्येते दश ए, ऐ, ओ, औ, इत्येते चत्वारः इत्येते षोडश । पाणिनीयमते ॡकारस्य यथा दीर्घत्वाभावेऽपि लकारद्वययुक्तह्रस्वऌकारैकमात्रया द्विमात्रत्वसाम्यात् दीर्घत्वव्यवहारस्तथा ॡकारादिशब्दे उक्तः । अनुस्वारविसर्गयोश्च अक्षरसमाम्नायसूत्रेषु अ, इ, उण्, इत्यादिषु माहेश्वरेषु चतुर्द्दशसु सूत्रेषु आम्नानाभावेऽपि भाष्यकृता अट्सूपसंख्यानेऽपि न स्वरवर्णत्वम् "अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" इत्युक्त्या स्वयंविराजमानत्वाभावात् उदात्तादिस्वरवत्त्वाभावाच्च । तयोः स्वरवर्णत्वाभावेऽपि अट्सूपसंख्यानञ्च षत्वणत्वकार्य्यार्थम् । तेन हवींषि इत्यादौ अनुस्वारव्यवधानेऽपि षत्वम् । अत्र च नुम्स्थानिकानुस्वारस्यैव निमित्तता न तद्भिन्नस्य, तेन सुहिंसु पुंसु इत्यादौ न षत्वम् । णत्वं तु सर्व्वानुस्वारव्यवायेऽपि तेन तृंहणं बृंहणमित्यादौ णत्वम् "अट्कुप्वाङ्नुम्व्यवायेऽपीत्युक्तेः तत्र अड्ग्रहणेनैवानुस्वारप्राप्तेरनुस्वारमात्रव्यवाये णत्वार्थं नुम्ग्रहणम् न तु षत्ववत् नुम्स्थानिकस्यैव ग्रहणमित्युक्तोदाहृतौ णत्वम् । सर्व्वेषां स्वरवर्णोच्चारणे विवृतं दूरावस्थानरूपम् आभ्यन्तरप्रयत्नः "विवृतमूष्मणां स्वराणाञ्च" इति "अचोऽस्पृष्टाः इति चोक्तेः । एषां बाह्यप्रयत्नास्तु घोषनादसंवाराः "कण्ठमध्ये तु घोषाः स्युः संवृता नादभागिनः" इत्युक्तेः । यथा चैषां दूरावस्थानं तथा सरलायामस्माभिरुक्तं तच्च आभ्यन्तरप्रयत्नशब्दे उक्तम् । एतेषामुच्चारणस्थानानि प्रदर्श्यन्ते । अ इति वर्णः कण्ठमूलोच्चार्य्यः "जिह्वामूले तु कुः प्रोक्तः" इत्युक्तेः । तत्र अ इति ह्रस्ववर्णः एकमात्रत्वात् । स च उदात्तानुदात्तस्वरितभेदात् त्रिधा, त्रिविधोऽपि अनुनासिकाननुनासिकरूपद्वैविध्यात् षड्विधः । एवं आ इति दीर्घः द्विमात्रत्वात् तस्य च तथैव षाड्विध्यम् । अ३ प्लुतवर्णः त्रिमात्रत्वात् तस्यापि उक्तरीत्या षाड्विध्यम् तथा च अ इत्येतत् अष्टादशानां संज्ञा पारिभाषिकी कारतकारपरत्वे स्वरूपपरता । एवम् इ, इति तालव्यः "इचुयशानां तालु"इत्युक्तेः । तस्यापि इ, ई, इ३ इति ह्रस्वदीर्घप्लुतसंज्ञा एकमात्रद्विमात्रत्रिमात्रताभेदात् तेषाञ्च प्रत्येकमुक्तरीत्या षाड्विध्यमित्यष्टादशविधता । तथाच इ, इति अष्टादशानां संज्ञा तपरत्वे कारपरत्वे च स्वरूपपरता । उ इति वर्णः ओष्ठोच्चार्य्यः "ओष्ठजावुपू" इत्युक्तेः स च ह्रस्वदीर्घप्लुतरूपः एकमात्रद्विमात्रत्रिमात्रताभेदात् त्रिविधः तेषां प्रत्येकमुक्तरीत्या षाड्विध्यमित्याष्टादशविधता । एवञ्च उ, इत्यष्टादशानां संज्ञा तपरत्वे कारपरत्वे च स्वरूपपरता । ऋ, इति मूर्द्धस्थानोच्चार्य्यः "ऋटुरषाणां मूर्द्धा" इत्युक्तेः स च ह्रस्वदीर्घप्लुतरूपः त्रिधा एकमात्रत्वादिभेदात् । तेषाञ्च प्रत्येकमुक्तरीत्या षाड्विध्यात् अष्टादशविधता । "ऋऌवर्णयोर्मिथः सावर्ण्यम्" इत्युक्तेः ऌकारस्य वक्ष्यमाणद्वादशभेदसहिता अष्टादशभेदाः तेन ऋ इति त्रिंशतां संज्ञा इति भेदः । तपरत्वे कारपरत्वे च स्वरूपपरता ।
• ऌवर्णः दन्तमूलोच्चार्य्यः "ऌतुलसानां दन्ताः" इत्युक्तेः तस्य दीर्घाभावात् ह्रस्वप्लुतभेदेन द्वैविध्यम् तयोश्च प्रत्येकमुक्तरीत्या षाड्विध्यात् द्वादशविधतेति ऌवर्णः द्वादशानां संज्ञा तपरत्वे कारपरत्वे च स्वरूपपरता । अ, इ, उ, ऋ, ऌ, इत्येषां वर्णपरत्वे अष्टादशादीनामुक्तानां संज्ञा । अधिकं सूचीपत्रे द्रष्टव्यम् एप्रभृतीनां विभागादि तत्तच्छब्दादौ उक्तम्

अकारादीनामनुक्ता वाचकशब्दाः तन्त्रोक्ता वर्णाभिधाने दर्शितास्तेऽत्र क्रमेणोच्यन्ते यथा

अ "अः श्रीकण्ठः सुरेशश्च ललाटं चैकमात्रकः । पूर्णोदरी सृष्टिमेषौ सारस्वतप्रियंवदः । महाप्राज्ञी वासुदेवो धनेशः केशवोऽमृतम् । कीर्त्तिर्निवृत्तिर्वागीशो नरकारिर्हरोऽमृत् । ब्रह्मा रामानुजो ह्रस्व कामस्य प्रथमाद्यकः । ब्रह्माणी कामरूपश्च कामेशीवासिनी वियत् । विश्वेशः श्रीविष्णुकण्ठौ प्रतिपत्तिर्धरस्विनी । अर्कमण्डलं वर्णाद्यो ब्राह्मणः कामकर्षिणी" ।

आ "आकारोविजयोऽनन्तोदीर्घच्छायोविनायकः । क्षीरोदधिपयोदश्च पाशोदीर्घास्यवृत्तके । प्रचण्डएकजोरुद्रोनारायणश्चेश्वरः । प्रतिष्ठा मानदा कान्तो विश्वान्तकगजान्तकौ । पितामहोद्विठान्तोऽभ्रू: क्रिया कान्तिश्च सम्भवः । द्वितीया मानदा काशी विघ्नराजः कुजोवियत् । सुरान्तकश्च हृदयश्चाङ्गुष्ठोभगमालिनी ।

इ "इःसूक्ष्मा शाल्मली विद्या चन्द्रः पूषा सुगुह्यकः । सुमित्रः सुन्दरोधीरः कोटरी कोटरःपयः । भ्रूमध्योमाधवस्तुष्टिर्दक्षनेत्रञ्च नासिका । शान्तः कान्तिः कामिनी च कामोविघ्नविनायकः । नेपाली भरणीरुद्रोनित्याक्लिन्ना च पावकः" ।

ई "ईर्मूर्त्तिःस्त्री महामाया लोलाक्षी वामलोचनम् । गोविन्दः शेखरः पुष्टिः सुभद्रा रतिसंज्ञकः । विष्णुर्लक्ष्मीर्महेशश्च वह्निशुद्धःपरापरः । कालोत्तरी भेरुण्डा रतिश्च पाण्डुवर्द्धनः । शिवोत्तमः शिवा तुष्टिश्चतुर्थी विन्दुमालिनी । वैष्णवी वल्लभी जिह्वा कामकला सनादिका । पावकः कोटरः कीर्त्तिर्मोहिनी कालकारिका । कुचद्वन्द्वं तर्ज्जनीशो शान्तिस्त्रिपुरसुन्दरी ।

उ "उः शङ्करोवर्त्तुलाक्षी भूतःकल्याणवाचकः । अमरेशोदक्षकर्णः षड्वक्त्रोमोहनः शिवः । उग्रःप्रभुर्धृतिर्विष्णुः विश्वकर्म्मा महेश्वरः । शत्रुघ्नश्च कटिः पुष्टिः पञ्चमी वह्निवासिनी । कामघ्नः कमलावेशो मोहिनी विघ्नहृन्महो । तटस्थः कुटिला श्रोत्रं पारहीनो वृषोहरः" ।

ऊ "ऊःकण्टकोरतिः शान्तिः क्रोधनोमधुसूदनः । कामःराजकुजेशश्च महेशोवामकर्णकः । अर्घीशोभैरवः सूक्ष्मो दीर्घघोणा सरस्वती । विलासिनी विघ्नकर्त्ता लक्ष्मणो रूपकर्षिणी । महाविद्येश्वरी षष्ठी षण्डोभूःकान्यकुब्जकः" ।

ऋ "ऋःसुदीर्घमुखी रुद्रोदेवमाता त्रिविक्रमः । भारभूतिः क्रिया हारोरेचिका नासिका धृतिः । एकपादः शिरोमाला मण्डना शान्तिनी जलम् । कर्णः कामलता मेघोनिर्ऋतिर्गणनायकः । रोहिणी शिवदूती च पूर्णा गिरिश्च सप्तमी" ।

ॠ "ॠःक्रोधी तिथीशोवाणीवामनो गोमुखो धृतिः । ऊर्द्धमुखो निशानाथः पद्ममाला विनष्टधोः । शशिनी मोचिका श्रेष्ठा दैत्यमाता प्रतिष्ठिता । एकदन्ताह्वयोमातात्वरिता मिथुनोदया । कोमला श्यामला मेधा तारकापतिरष्टमी । ब्रह्माण्यमरकोलाले पावकोगन्धकर्षिणी ।

ऌ ऌःस्थाणुः श्रीधरः शुद्धो मेघोधूम्रो वकोवियत् । देवयोनिर्दक्षगण्डोरुद्रः काकोदरी शुभा । शान्तिकृत् स्वस्तिका शक्रो माया च भ्रामरी शुभा । विश्वेश्वरो दीर्घजिह्वा महास्ती लाङ्गली परा । चन्द्रिका पार्थिवोधूम्रा द्विदन्तः कामवर्द्धनः । शुचिस्मिता च नवमी कान्तिरायतकेश्वरः । चित्तस्याकर्षणकरी तुरीया कुलसुन्दरी" ।

ॡ ॡकारः कमलाकर्षी हृषीकेशोमधुव्रतः । सूक्ष्मा कान्तिर्वामगण्डोरुद्रःकामोदरी शुभा । दशमी सुस्थिरोमाता नीलपीतोगजाननः । कामिनी विश्वपः कालोनित्यशुद्धः शुचिः कृती । सूर्य्योधैर्य्याकर्षिणी च एकाक्षी दनुजप्रसूः"। एकारादीनां वाचका तत्तच्छब्दे उक्ता । एषामधिष्ठातृदेवताश्च तत्रैवोक्ता यथा "अकारे भीषणा कीर्त्तिर्विद्युज्जिह्वेति कीर्त्तिता । आकारे तामसी कालजिह्वाया कालभैरवी । इकारे गर्जिनी चण्डा ज्ञेया रुद्रभयङ्करी । ईकारे सूचिनी ख्याता चण्डोग्रा धूम्रभैरवी । उकारे कालरक्ताख्या प्रचण्डा चण्डवल्लभा । विद्या ह्यूकारगा प्रोक्ता तालजङ्घा कपालिनी । ऋकारे कालिका देवी पिटकाली भयङ्करी । ॠकारे स्यान्महारौद्री ज्वालिनी योगिनात्यपि । संहारिणी ऌकारे स्यान्मेघनादोपवासिनी । रुद्रचण्डा कालराती ॡकारे च कपालिनी" । एकारादीमधिष्ठातृदेवताश्च एकारादिशब्दानामादौ दर्शिताः अकारादीनां ध्येयरूपञ्च कामधेनुतन्त्रे दर्शितं यथा

अ "शृणु तत्त्वमकारस्य अतिगोप्यं वरानने ! । शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा । पञ्चदेवमयं वर्णं शक्तित्रयसमन्वितम् । निर्गुणं त्रिगुणोपेतं स्वयं कैवल्यमूर्त्तिमत् । विन्दुतत्त्वमयं वर्णं स्वयं प्रकृतिरूपकम्" ।

आ "आकारं परमाश्चर्य्यं शङ्खज्योतिर्मयं प्रिये ! । ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं प्रिये ! । पञ्चप्राणमयं वर्णं स्वयं परमकुण्डलीम्" ।

इ "इकारं परमानन्दं सुगन्धकुसुमच्छविम् । हरिब्रह्ममयं वर्णं सदारुद्रयुतं प्रिये ! । सदा शक्तिमयं देवि ! गुरुब्रह्ममयं तथा । सदाशिवमयं वर्णं परं ब्रह्मसमन्वितम् । हरिब्रह्मात्मकं वर्णं गुणत्रयसमन्वितम् । इकारं परमेशानि ! स्वयं कुण्डलीमूर्त्तिकम्" ।

ई "ईकारं परमेशानि स्वयं परमकुण्डलीम् । ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं सदा । पञ्चदेवमयं वर्णं पीतविद्युल्लताकृतिम् । चतुर्ज्ञानमयं वर्णं पञ्चप्राणमयं सदा" ।

उ "उकारं परमेशानि! अधःकुण्डलिनीं स्वयम्। पीतचम्पकसङ्काशं पञ्चदेवमयं सदा। पञ्चप्राणमयं देवि! चतुर्वर्गप्रदायकम्।

ऊ "शङ्खकुन्दसमाकारमूकारं परकुण्डलीम्। पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा। पञ्चप्राणयुतं वर्णं पीतविद्युल्लतां यथा। धर्मार्थकाममोक्षस्य सदा सुखप्रदायकम्"।

ऋ "ऋकारं परमेशानि कुण्डलीमूर्त्तिधारकम्। अत्र ब्रह्मा च विष्णुश्च रुद्रश्चैव वरानने!। सदाशिवमयं वर्णं सदाईश्वरसंयुतम्। पञ्चवर्णमयं वर्णं चतुर्ज्ञानमयं तथा। रक्तविद्युल्लताकारमृकारं प्रणमाम्यहम्।

ॠ "ॠकारं परमेशानि! स्वयं परमकुण्डलीम्। पीतविद्युल्लताकारं पञ्चदेवमयम् सदा। चतुर्ज्ञानमयं वर्णं पञ्चप्राणयुतं सदा। त्रिशक्तिसहितं वर्णं प्रणमामि सदा प्रिये।

ऌ "ऌकारं चञ्चलापाङ्गि! कुण्डली परदेवताम्। अत्र ब्रह्मादयः सर्व्वे तिष्ठन्ति सततं प्रिये!। पञ्चदेवमयं वर्णं चतुर्ज्ञानमयं सदा। पञ्चप्राणयुतं वर्णं तथा गुणत्रयात्मकम्। विन्दुत्रयात्मकं वर्णं पीतविद्युल्लतां यथा।

ॡ ॡकारं परमेशानि! पूर्णचन्द्रसमप्रभम्। पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं सदा। गुणत्रयात्मकं वर्णं तथा विन्दुत्रयात्मकम्। चतुर्व्वर्गप्रदं देवि! स्वयं परमकुण्डलीम्। एकारादीनां ध्येयरूपाण्येकारादिशब्देषु उक्तानि"।

इति वाचस्पत्ये स्वरविभागादि।

## व्यञ्जनवर्णविभागादि

व्यञ्जनवर्णाः त्रिविधाः स्पर्शान्तस्थोष्मभेदात् तत्र कादयो मावसानाः स्पर्शाः, यरलवा अन्तःस्था शषसहा उष्माणः। "आत्मा बुद्ध्या समेत्यार्थान् मनोयुङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। सोदीर्णो मूर्द्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् जनयते तेषां विभागः पञ्चधा मतः। स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः" इति शिक्षोक्तेः सर्वेषां वर्णानां प्राणवायुजन्यत्वम्। तथाहि चेतनेन ज्ञातार्थविवक्षया तद्बोधकशब्दनिष्पादनाय प्रेरितमन्तःकरणं मूलाधारस्थितमनलं चालयति तच्चालितश्चानलस्तत्स्थवस्थानिलचालनाय प्रभवति तच्चालितेन चानिलेन तत्रैव सूक्ष्मरूपेणोत्पादितः शब्दः परा वागित्यभिधीयते। ततो नाभिदेशपर्य्यन्तं चलितेन तेन तद्देशसंयोगादुत्पादितः शब्दः पश्यन्तीति कीर्त्त्यते एतद्द्वयस्य सूक्ष्मसूक्ष्मतरतया ईश्वरयोगिमात्रगम्यता नास्मदीयश्रुतिगोचरता। ततस्तेनैव हृदयदेशं परिसरता हृदयसंयोगेन निष्पादितः शब्दो मध्यमेत्युच्यते सा च स्वकर्णपिधानेन ध्वन्यात्मकतया सूक्ष्मरूपेण कदाचिदस्माकमपि समधिगम्या। ततो मूर्द्धपर्य्यन्तमाक्रमता तेन आहत्य मूर्द्धानं तत्प्रतिघातेन ततः परावृत्य मुखविवरे कण्ठादितत्तत्स्थानेषु स्वाभिघातेनोत्पादितः शब्दो वैखरीत्युच्यते। इत्येवं वर्णोत्पत्तिस्तेषाञ्च विभागः पञ्चधा तद्यथा स्वरतः१ उदात्तानुदात्तस्वरितभेदात् अचां त्रैविध्यम् तथा कालतोऽपि २ त्रैविध्यम् "उदात्तमनुदात्तञ्च स्वरितञ्च स्वरास्तथा। ह्रस्वो दीर्घः प्लुतश्चेति कालतो नियमा अचि" इत्युक्तेः अचामेव स्वरवत्त्वात्तथात्वम् कालस्तु उच्चारणकालभेदः स च यद्यपि अचामेवोक्तस्तथापि "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्द्धमात्रकम्" इत्युक्तेः व्यञ्जनानामप्यर्द्धमात्राकालेनोच्चार्य्यत्वात् कालकृतविभागोऽस्त्येव। मात्राकालस्तु "दशगुर्व्वक्षरैः प्राणः षड्भिः प्राणैर्विनाड़िका" इत्युक्तेः विनाड़िकायाः पलात्मिकायाः षष्टितमभागरूपकालविभागो मात्रा "द्विमात्रो दीर्घ उच्यते" इत्युक्तेः दीर्घस्य गुरुतया पलषष्टितमभागत्वात् तथा च १५ पञ्चदशानुपलात्मककालः अर्द्धमात्राकालः त्रिंशदनुपलात्मकः कालः एकमात्राकालः, विपलात्मकः कालः द्विमात्रकालः सार्द्धविपलात्मक कालः त्रिमात्रकालः। तत्तत्कालोच्चार्य्यत्वात् वर्णानां कालकृतविभागवत्त्वम्। इयांस्तु विशेषः स्वराणामिव व्यञ्जनानां न ह्रस्वादिविभागः किन्तु सर्वेषामर्द्धमात्रत्वमेवेति। स्थानतो(३)विभागो यथा "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु चेति" सामान्यत उक्ता वर्णभेदेन स्थानविशेषः शिक्षायामुक्तः यथा "हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्। औरस्यन्तं विजानीयात् कण्ठ्यमाहुरसंयुतम्। कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू। स्युर्मूर्द्धन्या ऋटुरषा दन्त्या ऌतुलसाः स्मृताः। जिह्वामूले तु कुः प्रोक्तः दन्त्योष्ठ्यो वः स्मृतो बुधैः। ए ऐ तु कण्ठ्यतालव्यावोऔ कण्ठोष्ठजौ स्मृतौ। अर्द्धमात्रा तु कण्ठ्या स्यादेकारैकारयो

भवेत्। ओकारौकारयोस्तद्वदिति” “अनुस्वारयमानाञ्च नासिका स्थानमुच्यते। अयोगवाहा विज्ञेया आश्रयस्थानभागिनः” इति च। यद्यपि सर्व्वेषां वर्णानामुच्चारणे कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे तात्वादिव्यापारोऽधिकोऽप्यपेक्षित इति तन्मात्रामात्रकृतत्वेन वर्णानां वैलक्षण्यम्। “जिह्वामूले तु कुः प्रोक्तः” इति पाणिनिशिक्षाभिधानात् कवर्गस्य कण्ठमूलीयत्वम् कण्ठ्यत्वव्यवहारस्तु कण्ठशब्दस्य कण्ठमूलपरतया भाक्त एव तवर्गस्य दन्तमूलीयत्वेऽपि दन्त्यत्ववत् अन्यथा भग्नदन्तस्य तदनुच्चारापत्तेः। जिह्वामूलीयस्य आश्रयस्थानभागित्वेनोक्तेः तदाश्रयस्य कोरपि जिह्वामूलस्थानत्वौचित्यात्। दन्तोष्ठावित्यादावुभयोरेव वकारस्थानत्वं नतु प्रत्येकस्य तथासति दन्त्यौष्ठ्य इत्येव परिशिष्येत। अतस्तस्य दन्तौष्ठोभयकार्य्यभाक्त्वम् एवमन्येऽपि द्रष्टव्यम्। यमानां प्रातिशाख्यप्रसिद्धानां कँखँगँघँ इत्येषां यम्प्रत्याहारसंज्ञाबोधितानाञ्च नासिकापि स्थानमधिकमुपदिश्यते। तत्र च यमेत्युपलक्षणम् “अमोऽनुनासिका नह्रौ” इत्युक्त्या हकाररकारभिन्नानाम् अम्प्रत्याहारबोधितानाम् नासिकास्थानत्वविधानात् मासामनुगतः स्थानत्वेनेत्यनुनासिक शब्दव्युत्पत्त्या नासिकास्थानत्वप्राप्तेश्च। तत्र नह्राविति पुनः हकाररकारयोः पर्य्युदासः। “मुखनासिकावचनोऽनुनासिकः” पा० सूत्रे मुखपदस्य कण्ठादितत्तत्स्थानपरतया यमानामुभयस्थानत्वम्। अयोगवाहा अनुस्वाराः विसर्गाश्च जिह्वामूलीयोपाध्मानीययोरपि विसर्गविशेषरूपत्वेनाश्रयस्थान भागित्वम्। आश्रयस्थानभागित्वञ्च यमाश्रित्यैते उच्चार्य्यन्ते तत्स्थानभागित्वमतः विसर्गस्य कखयोः परयोर्जिह्वामूलोच्चार्य्यमाणयोराश्रयत्वेन तत्स्थानभागित्वात् जिह्वामूलीयरूपान्वितनामता समुन्नेया। पफयोः परयोरोष्ठोच्चार्य्यमाणयोराश्रयत्वेनोपाध्मानीयता। उप पश्च आध्मायेते अनेन स्थानेनेति व्युत्पत्तेः उपाध्मानशब्द ओष्ठवचनः। तत्स्थानोच्चार्य्यत्वादन्वितनामता बोधव्या। अतएव कौमुद्यां “जिह्वामूलीयस्य जिह्वामूलमुपाध्मानीयस्योष्ठौ”इत्युक्तम्। यद्यपि सर्व्वेषां वर्णानामाकाशस्थानत्वं करणत्वञ्च कण्ठादीनां तदुत्पत्तौ युक्तं तथापि तेषां स्थानत्वव्यवहारः ताल्वादौ वर्णाभिव्यञ्जकवर्णजनकवायुसंयोगाधारे वर्णाधारत्वारोपेण भाक्त एव। तत्तत्स्थानेषु जिह्वाग्रादिसम्बन्धेन वर्णोत्पत्त्या जिह्वाग्रादिस्थिते तत्सम्बन्धजनकप्रयत्नविशेषे आभ्यन्तरप्रयत्नवाच्ये स्पृष्टतादावेव करणत्वव्यवहारः इति मञ्जूषायां स्थितम्।

प्रयत्नाः ४ आभ्यन्तरप्रयत्नाः अनुप्रदानानि ५ बाह्यप्रयत्नास्तैरपि वर्णानां विभागः। तत्र वर्णभेदे प्रयत्नभेदादिकं बाह्याभ्यन्तरप्रयत्नस्वरूपनिरूपणपूर्व्वकं शब्दार्थरत्नेऽभिनिरूपितं यथा

आभ्यन्तरप्रयत्नास्तु वर्णोत्पत्तेः प्रागभाविनः, बाह्यास्तु तदुत्पत्तेः पश्चाद्भाविन इति विवेकः। तथा हि नाभिदेशात् प्रयत्नप्रेरितः प्राणवायुरूर्द्ध्वमाक्रमन् उरःप्रभृतीनि स्थानान्याहत्य वर्णान् तदभिव्यञ्जकध्वनींश्च उत्पादयति तत्र वर्णोत्पत्तेः प्राक् जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादिकं यदा सम्यक् स्पृशन्ति तदा स्पृष्टता प्रयत्नः, यदा ईषत् स्पृशन्ति तदा ईषत्स्पृष्टता, तेषां समीपावस्थाने संवृतता, दूरावस्थाने विवृतता, इत्येवमाभ्यन्तरप्रयत्नभेदैः वर्णानां भेदाः। अतएव इचवर्गयशानां तालव्यत्वाविशेषेऽपि चवर्गोच्चारणे कर्त्तव्ये तालुस्थाने जिह्वाग्रादीनां सम्यक्स्पर्शः, यकारोच्चारणे तु ईषत्स्पर्शः, शकारोच्चारणे समीपावस्थानम् इवर्णोच्चारणे दूरावस्थानमिति भेदः। एतेषां आभ्यन्तरत्वम् ओष्ठप्रभृतिकाकलीध्वनिजनककाकलस्थानपर्य्यन्तरूपास्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां प्रागुक्तस्पर्शादिचतुष्टयरूपाभ्यन्तरकार्य्यकारित्वात् वर्णोत्पत्त्यव्यवहितप्रागभावित्वाच्च बोध्यम्। विवारसंवारौ तु गलबिलस्य विकाशाविकाशात्मकौ बाह्यौ प्रयत्नौ विवृतसंवृताभ्यां भिन्नावेव तयोः समीपदूरावस्थानात्मकत्वादिति विवेक्तव्यम्।

अथ वर्णभेदेनाभ्यन्तरप्रयत्नभेदस्तावदभिधीयते। तत्र कादिमावसानानां स्पृष्टता, अतएव तेषां सम्यक्स्पर्शवत्त्वेन स्पर्शपदवाच्यता। यणः ईषत्स्पृष्टता। तेषाञ्च स्पृष्टविवृतयोर्मध्यस्थितत्वेन लौकिकव्यवहारेष्वपि शषसहानां वर्णानाञ्च मध्यस्थितत्वेन चान्तःस्थाशब्दवाच्यता। शषसहानाम् अचाञ्च विवृतता। शषसहानाञ्च ऊष्मशब्दाभिधेयवायुप्रधानत्वात् ऊष्मशब्दवाच्यता। अचाञ्च स्वयंराजमानत्वात् उदात्तादिस्वरवत्त्वाच्च स्वराभिधेयता “अचः स्वयं विराजन्ते” इत्युक्तेः “उदात्तमनुदात्तञ्च स्वरितञ्च स्वरास्त्रयः। ह्रस्वोदीर्घः प्लुतश्चेति कालतो नियमा अचि” इति चोक्तेः। तत्र ह्रस्वस्य संवृतता। “संवृतं त्वेकमात्रं स्यात् विवृतन्तु द्विमात्रकम्”इत्युक्तेः ह्रस्वस्यैकमात्रतया प्रयोगे संवृतता प्रक्रियायान्तु विवृततैव। तत्र मूलं “अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलस्तथा।

शेषाः स्पृष्टा हलः प्रोक्ता” इति शिक्षावाक्यमेव बोध्यम्। अन्ताचः स्पर्शाभावरूपविवृततावन्तः यथः यरलवास्त्वीषत् स्पृष्टा इत्यर्थः नेमदन्त्यद्ववाचो। शलः शषसहा नेमस्पृष्टा अर्द्धस्पृष्टा अर्थादर्द्धविवृताः “स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्”इत्येकवाक्यत्वात्। एते च स्थानप्रयत्नाः सवर्णसंज्ञायामुपयुक्ताः। बाह्यप्रयत्नास्तु आन्तरतम्यपरीक्षायामेवोपयोगिन इति “तुल्यास्यप्रयत्नं सवर्णमिति” पा० सूत्रभाष्यादौ स्पष्टम्। तेन तकारस्थाने विवारश्वासघोषाल्पप्राणरूपबाह्यप्रयत्नसाम्येन चकारटकारादेश इति “स्थानेऽन्तरतमः” इति सूत्रभाष्ये स्पष्टम् बहुसमानधर्म्मत्वमेवान्तरतम्ये हेतुरिति बोध्यम्।

बाह्याः प्रयत्नाश्चाष्टविधाः काकलकाधःस्थलगलबिलसङ्कोचविकाशश्वासोत्पादकध्वनिविशेषघोषाल्पघोषप्राणाल्पत्वमहत्त्वरूपकार्य्यकरा यथाक्रमं विवारसंवारश्वासनादघोषाघोषाल्पप्राणमहाप्राणनामानो मन्तव्याः। प्रयत्नप्रेरितो वायुर्व्वर्णानभिव्यञ्जन् यत्नविशेषेण गलबिलविकाशादीनपि सम्पादयति अतो गलबिलविकाशादिकरत्वादास्यबहिर्द्देशकार्य्यकरत्वात् चैते बाह्या इति। ते च “खयां यमाः खयः+कँपौ विसर्गः शरएव च। एते श्वासानुप्रदाना अघोषाश्च विवृण्वते। कण्ठम्, अन्ये तु घोषाः स्युः संवारा नादभागिनः। अयुग्मा वर्गयमगायणश्चाल्पासवः स्मृताः” इतिसिद्धान्तकौमुद्युक्तदिशाववेयाः। खयां स्थाने जाता ये यमाः कँ खँ गँ घँ इत्येते प्रातिशाख्यप्रसिद्धाः खयः,जिह्वामूलोयोपध्मानीयविसर्गाः शरः शषसाश्च एते श्वासा अघोषाः कण्ठं विवृण्वते च। अन्ये एतद्भिन्नाः सर्वे वर्णा घोषसंवारनादरूपबाह्यप्रयत्नवन्तः। वर्गीयप्रथमतृतीयपञ्चमवर्णाः पूर्व्वोक्ताः प्रथमतृतीयवर्गजातयमाश्च यणः यरलवाः एते अल्पप्राणास्तद्भिन्नाः सर्व्वे महाप्राणाः इति विवेकः।

तदेवं परस्परविभाजकैर्बाह्याभ्यन्तरप्रयत्नैः स्वरकालविशेषैर्व्वर्णानां परस्परविलक्षणरूपता। प्रसिद्धा हि वर्णाः पुरस्कल्पेन कञ्चिद्विशेषम् विलक्षणतामासादयन्ति तत्र वर्णविभाजकानि सूचीपत्रे दृश्यानि

काव्यादौ विन्यस्तवर्णानां फलमुक्तं वृत्तरत्ना० टी० यथा गणप्रसङ्गेनाक्षरशुद्धिरप्यभिधीयते “अक्षरे परिशुद्धे च नायको भूतिमृच्छति” इत्यक्षरेष्वक्षरशुद्धेरावश्यकत्वात्। “अवर्णात् सम्पत्तिर्भवति, शमिवर्णाद्गनवतान्यु वर्णादख्यातिः, सरभसऋवर्णात् वरहितात्। तथाद्येच; सौख्यं ङञणरहितादक्षरगणात् पदादौ विन्यासात् भरवहलपूर्व्वैर्विरहितात्”। भरवहलास्ततपूर्वाणि यान्यक्षराणि तैर्विरहितादित्यर्थः। हलवर्णानां फलान्युक्तानि तत्रैव। “कः खो गो घश्च लक्ष्मीं वितरति, वियशोङ, स्तथा चः सुखं, छः प्रीतिं, जोमित्रलाभं, भयमरणकरौ झञो, टठौ खेददुःखे,। डः शोभां, ढो विशोभां, भ्रमणमथ च णस्तस्तु खं, थस्तु युद्धं, दो, धः, सौख्यं, मुदं, नः, सुखभयमरणक्लेशदुःखं पवर्गः। यो लक्ष्मीं, रस्तु दाहं, व्यसनमथ लवौ शः सुखं, षस्तु खेदं, सः-सौख्यं, हस्तु खेदं, विलयमपि च लः, क्षः समृद्धिं करोति। संयुक्तं चेह न स्यात् सुखभरणपटुर्वर्णविन्यासयोगं पद्यादौ, गद्यवक्त्रे, वर्चसि च सकले, प्राकृतादौषमोऽयम्”। एतेषां फलाधारनिरूपणमपि तत्रैव “नायको वर्ण्यते यत्र फलं तस्य समादिशेत्। अन्यथा तु कृते काव्ये कवेर्दोषावहं फलम्”। तस्य प्रतिप्रसवोऽप्युक्तः। “देवता वर्ण्यते यत्र क्वापि काव्ये कवीश्वरैः। मित्रामित्रविचारो वा न तत्र फलकल्पना। देवतावाचकाः शब्दा ये च भद्रादिवाचकाः”।

## इति वाचस्पत्ये व्यञ्जनवर्णविभागादि।

## क

व्यञ्जनवर्णभेदः ककारः कण्ठ्यः अर्द्धमात्रः। तस्य तन्त्रे वाचकाः शब्दा वर्णाभिधाने उक्ता यथा। “कः क्रोधीशो महाकाली कामदेवःप्रकाशकः। कपाली तेजसः शान्तिर्वासुदेवोजयानलः। चक्री प्रजापतिः सृष्टिर्वक्षस्थो विशाम्पतिः। अनन्तः पार्थिवोबिन्दुस्तापिनी परमात्मकः। वर्गाद्यश्च सुखो ब्रह्मा वर्णाद्योऽस्थ्यःशिवोजलम्। माहेश्वरो तुला पुष्पं मङ्गलस्मरणं करः। नित्याकामेश्वरी मुख्यः कामरूपी गजेन्द्रकः। श्रीपुरं रमणोरङ्गः कुसुमा परमार्थकः”।

**क** पु० कै-शब्दे कच–दीप्तौ वा ड १ब्रह्मणि २विष्णौ ३कामदेवे ४ अग्नौ ५वायौ ६यमे ७सूर्य्ये ८आत्मनि ९दक्षे-प्रजापतौ १०राजनि ११कामग्रन्थौ १२मयूरे” मेदि०। १३विहगे शब्दचि०। १४चित्ते १५देहे १६काले १७घने मेघे १८शब्दे अनेकार्थकोषः १९प्रकाशे च एकाक्षरकोषः। २०शिरसि न० “द्वाभ्यामोष्ठौ द्विकन्भक्ष

र्वकेन चालयेत् करम् । सुखप्राणनेत्रश्रोत्रमाभ्यु रक्तं भुजौ क्रमात्" तन्त्रसारः कं शिरः २१जले२२सुखे च न० मेदि० २३केशे पु० धरणी। तत्र ब्रह्मणि "दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः" शा०ति०। कः ब्रह्मा। तट्टीका 'कस्मै त्वा काय त्वा" यजु०२०,४। काय सुखाय प्रजापतये इत्येके। "कस्यासि कोनामासीति प्रजापतिर्वै कोनाम" शत० ४,५,६,४। "कतत्योयाज्यानुवाक्या कोहि प्रजापतिः" ६,२,२,५, प्रजापतिर्वै कस्तस्मा एवैतद्विर्वषट्करोति" ६४,२,४। दक्षप्रजापतौ "ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयम्भुवा। षष्टिं स जनयामास दुहितॄः पितृवत्सलाः। दश धर्माय कायेन्दोर्द्विषट् त्रिनव दत्तवान्" भाग०६,३,२०, काय दक्षप्रजापतये द्विषट् द्वादश।"तेभ्यस्तु छन्दांसृषयो मेढ्रतः कः"भाग०८,५,२८। कः प्रजापतिः। "यस्मात्पितामहो भूतः प्रभुरेकः प्रजापतिः। ब्रह्मा सुरगुरुः स्थाणुर्मनुः कः परमेष्ठ्यथ" भा०आ०१अ०। "मारीचमाशु विशिखेन यथा कमुग्रः"८,८,१० कं दक्षम्। सुखे 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति सहोवाच जानाम्यहं यत्प्राणो ब्रह्म कञ्च तु खञ्च न जानामीति तेऽहोचुः यद्वाव कं तदेव खं यदेव खं तदेव कमिति" छा०उप०। अत्र सुखस्वरूपतया ब्रह्मरूपत्वम्। यथाह तद्भाष्ये 'तमेवमुक्तवन्तं ब्रह्मचारिणं ते ह्यग्नयः ऊचुः यद्वाव यदेव वयं कमवोचाम तदेव खमाकाशं इत्येवं खेन विशेष्यमाणं कं विषयेन्द्रियसंयोगजातसुखाद्विवर्त्तितं स्यान्नीलेनेव विशेष्यमाणमुत्पलं रक्तादिभ्यः। यदेव खमाकाशमवोचाम तदेव च कं सुखमिति जानीहि एवञ्च सुखेन विशेष्यमाणं खं भौतिकादचेतनात् खाद्विवर्त्तितं स्यान्नीलोत्पलवदेव"। अत्र कंशब्द एव मान्ताव्ययम् इत्यन्ये। जले "के शवं पतितं दृष्ट्वा द्रोणो हर्षमुपागतः" विदग्धमु०। "के यूयं स्थल एव सम्प्रति वयम्" सा० द०। कः देवताऽस्य अण्। "कस्येत्" पा० इत् वृद्धिः। काय प्रजापतिदैवते विवाहभेदे। "काँ कीन् कायोढजा सुतः" मनुः।

**कंय** त्रि० कमित्यव्ययम् सुखार्थकं तदस्त्यस्य य। सुखान्विते यु। कंयु व—कंव इत्यप्यत्र त्रि० सर्व्वत्र वा यवि पर सवर्णो अनुनासिकौ यँकारवँकारौ

**कँवूल** न० नीलकण्ठोक्ते वर्षलग्नकालिकग्रहयोगभेदे कवूलं कव्वूलमप्यत्र। तत्स्वरूपादिनिरूपणं तत्रैव यथा "कार्य्यलग्नेशयोरित्थशालादिन्दित्थशालतः। कंवूलं श्रेष्ठमध्यादिभेदैर्नानाविधं स्मृतम्। यदीन्दुः स्वगृहोच्चस्थस्थाद्यशौ लग्नकार्यपौ। इत्थशाली कवूलं तदुत्तमोत्तममुच्यते। स्वीयहद्दाद्रेकाणाङ्कभागस्थेनेत्थशालतः। मध्यमोत्तमकंवूलं हीनाधिकृतिनोत्तमम्। उत्तमाधमता नीचरिपुगेहस्थितेन चेत्। स्वहद्दादिगतश्चन्द्रः स्वभोच्चस्थेत्थशालकृत्। मध्यमोत्तममेतच्च पूर्वस्मात्तु विशिष्यते। स्वहद्दादिपदस्थेन कंवूलं मध्यमध्यमम्। मध्यमाधमकंवूलं हीनाधिकृतिखेटजम्। अधमाधमकंवूलं नीचारिभगखेटजम्। इन्दुःपदोनःस्वर्क्षोच्चस्थितेनाप्युत्तमं तु तत्। स्वहद्दादिगतेनापि पूर्ववन्मध्यमुच्यते। पदोनेनापि मध्यं स्यादिति युक्तं प्रतीयते। नीचारिस्थेनेत्थशालेऽधमं कंवूलमुच्यते। नीचशत्रुभगश्चन्द्रः स्वभोच्चस्थेत्थशालकृत्। अधमोत्तमकंवूलं स्वहद्दादिगतेन चेत्। इत्थशाले कंवूलं तदुच्यतेऽधममध्यमम्। पदोनेनेत्थशाली चेत् कंवूलं मध्यमं स्मृतम्। नीचारिभस्थखेटेन नीचारिभगतः शशी। इत्थशाली कवूलं तदधमाधममुच्यते। मेषे रविः कुजो वापि वृषे कर्केऽथ वा शशी। तत्रेत्थशाले कंवूलमुत्तमोत्तममेव तत्। वृश्चिकस्थः शशी भौमः कर्के तत्रेत्थशालतः। अधमाधमकंवूलं कार्य्यविध्वंसदुःखदम्। एवं पूर्वोक्तभेदानामुदाहरणयोजना। उक्तलक्षणसम्बन्धादूहनीया विचक्षणैः"।

**कंस** पु० कम—स। तैजसद्रव्ये, कांस्ये, १ताम्ररङ्गमिश्रणजनितधातुद्रव्ये। (कांसा) २स्वर्णरजतादिनिर्मितपानपात्रे आढक इति प्रसिद्धे ३परिमाणे च अस्त्री। वर्त्तुलाकारे यज्ञिये ४पात्रभेदे। "औदुम्बरे कंसे चमसे वा सर्व्वौषधं समानीय सम्भृतत्र" शत० १४,९,३,१, "कंसे कंसाकारे वर्त्तुलाकारे" भाष्यम्। पृषो० तालव्यान्त इति केचित्। कंसपरिमाणञ्च "शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः। शरावाभ्यां भवेत् प्रस्थश्चतुःप्रस्थैस्तथाढकः। भाजनं कांस्यपात्रञ्च चतुःषष्टिपलश्च सः" भावप्र० उक्तेः चतुःषष्टिपलात्मकाढकरूपम्। उग्रसेनसुतभेदे कृष्णद्वेष्ये ५नृपभेदे पु०। कंसोत्पत्तिकथा तन्नामनिर्वचनञ्च हरिवं० ८५अ० उक्ता यथा कंसं प्रति नारद उवाच "हन्त ते कथयिष्यामि शृणु राजन्! यथार्थतः। द्रुमिलस्य च माता ते संवादञ्च समागमम्। सुयामुनं नाम गिरिं तव माता रजस्वला। प्रेक्षितुं सहिता स्त्रीभिर्गता वनकुतूहलात्" इत्युपक्रम्य यदृच्छयागतस्य सौभपतेर्द्रुमिलस्य तां दृष्ट्वा कामयमानस्य तां प्रति उप-

सेनमूर्त्या गत्वा तस्याःसङ्गमे कंसोत्पत्तिरिति तत्रोक्तम् । "एवमुक्त्वा दानवेन्द्रो गमनाय मनो दधे । हृच्छयाविष्टहृदयो दृष्ट्वा तामसितेक्षणाम् । वार्य्युपस्पृश्य बलवान् ध्यानमेवान्वचिन्तयत् । मुहूर्त्तं ध्यातमात्रे तु दृष्टं ज्ञानबलात्ततः । उग्रसेनस्य पत्नीति ज्ञात्वा हर्षमवाप सः । उग्रसेनस्य वै रूपं कृत्वा स्वं परिवर्त्त्य च । उपासर्पन्महाबाहुः प्रसभं दानवेश्वरः । स्मयमानस्य शनकैर्व्याहामितवीर्य्यवान् । उग्रसेनस्य रूपेण मातरं ते व्यधर्षयत् । सा पतिस्निग्धहृदया भावेनोपससर्प तम् । शङ्किता चाभवत् पश्चात्तस्य गौरवदर्शनात् । सा तमाहोत्थिता भीता न त्वं मम पतिर्ध्रुवम् । कस्य त्वं विकृताचारो येनास्मि मलिनीकृता । एकपत्नीव्रतमिदं मम संदूषितं त्वया । पत्युर्मे रूपमास्थाय नीचनीचेन कर्म्मणा । किं मां वक्ष्यन्ति रुषिता बान्धवाः कुलपांसुलाम् । जुगुप्सिता च वत्स्यामि पतिपक्षैर्निराकृता । धिक् त्वामीदृशमत्यान्तं दुष्कुलं व्युत्थितेन्द्रियम् । अविश्वासमनार्य्यञ्च परदाराभिमर्षणम् । स तामाह प्रसज्जन्तीं क्षिप्तः क्रोधेन दानवः । अहं वै द्रुमिलो नाम सौभस्य पतिरूर्ज्जितः । किं मां क्षिपसि रोषेण मूढे ! पण्डितमानिनि ! । मानुषं पतिमाश्रित्य नीचं स्वल्पवशे स्थितम् । व्यभिचाराच्च दुष्यन्ति स्त्रियः स्त्रीमानगर्व्विते । । न ह्यासां नियता बुद्धिर्म्मानुषीणां विशेषतः । श्रूयन्ते हि स्त्रियो बह्वो व्यभिचारव्यतिक्रमैः । प्रसूता देवसदृशान् पुत्त्रानमितविक्रमान् । अतीव हि त्वं स्त्रीलोके पतिधर्म्मवती सती । शुद्धा केशान् विधुन्वन्ती भाषसे यद्यदिच्छसि । कस्य त्वमिति यच्चाहं त्वयोक्तो मत्तकाशिनि ! । कंसस्त्वरिपुध्वंसी तव पुत्त्रो भविष्यति । सा सरोषा पुनर्भूत्वा निन्दन्ती तस्य तं वरम् । उवाच व्यथिता देवी दानवं दुष्टवादिनम् । धिक् ते वृत्तं सुदुर्वृत्त ! यः सर्व्वा निन्दसि स्त्रियः । सन्ति स्त्रियो नीचवृत्ताः सन्ति चैव पतिव्रताः । यास्त्वेकपत्न्यः श्रूयन्ते ऽरुन्धतीप्रमुखाः स्त्रियः । याभिर्धृताः प्रजाः सर्व्वा लोकाश्चैव कुलाधम ! । यस्त्वया मम पुत्त्रो वै दत्तो दुर्वृत्तभाषणः । न मे बहुमतस्त्वेष शृणु चापि यदुच्यते । उत्पत्स्यति पुमान्नीच ! पतिवंशे ममान्वयः । भविष्यति स ते मृत्युर्यश्च दत्तस्त्वया सुतः । द्रुमिलस्त्वेवमुक्तस्तु जगामाकाशमेव तु"। कांस्यसाधनद्रव्यं कंसकशब्दे वक्ष्यते कांस्यशोधनमारणविधानगुणाः भावप्र० उक्ता यथा

"अथ कांस्यस्य रीतेश्च शोधनन्त्वभिधीयते । पत्तलीकृतपत्राणि कांस्यस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके । गोमूत्रे च कुलत्थानां कषायेऽत्र त्रिधा त्रिधा । एवं कांस्यस्य रीतेश्च विशुद्धिः संप्रजायते" । अथ मारणविधिः "अर्कक्षीरेण संपिष्टो गन्धकस्तेन लेपयेत् । समेन कांस्यपत्राणि शुद्धान्यम्लद्रवैस्ततः । ततोमूषापुटे धृत्वा पचेत् गजपुटेन च । एवं पुटद्वयात् कांस्यं रीतिश्च म्रियते ध्रुवम्" एवं मारितयोः कांस्यस्य रीतेश्च गुणाः "कांस्यं कषायं तीक्ष्णोष्णं लेखनं विशदं सरम् । गुरु नेत्रहितं रूक्षं कफपित्तहरं परम्" ।

"कंसमन्थशूर्पपाय्यकाण्डान्तं द्विगौ" पा० द्विगुसमासे आद्युदात्तता । द्विकंसः । द्वौ कंसौ परिमाणमस्येति तद्धितार्थद्विगुः । कंसशब्दोऽर्द्धर्चादि । "का काली का मधुरा का शीतलवाहिनी गङ्गा । कं सं जघान कृष्णः कम्बलवन्तं न बाधते शीतम्" विदग्धमुखमण्डने समानप्रश्नोत्तरदर्शनात् दन्त्यमध्य एव । ईउग्रसेनकन्याभेदे स्त्री सा च देवभागभार्य्या "कंसा कंसवती कङ्का सुतनूराष्ट्रपालिका । उग्रसेनदुहितरो वसुदेवानुजस्त्रियः" । "देवभागस्य कंसायां चित्रकेतुबृहद्वलौ" भाग० ९, २४, २३,

**कंसक** न० कंसमेव स्वार्थे कन् । १कांस्ये तदुत्पत्तिगुणादि भावप्र० उक्तं यथा

"ताम्रत्रपुजमाख्यातं कांस्यं घोषञ्च कंसकम् । उपधातुर्भवेत् कांस्यं द्वयोस्तरणिरङ्गयोः । कांस्यस्य तु गुणाज्ञेयाः स्वयोनिसदृशा जनैः । संयोगजप्रभावेण तस्यान्येऽपि गुणाः स्मृताः" । "कांस्यं कषायं तिक्तोष्णं लेखनं विशदं सरम् । गुरु नेत्रहितं रूक्षं कफपित्तहरं परम्" । कंसमिव "इवे प्रतिकृतौ" पा० कन् । २कांस्यजाते काशीशे उपधातुभेदे । "काशीशं धातुकाशीशं पांशुकाशीशमित्यपि । तदेव किञ्चित् पीतन्तु पुष्पकाशीशमुच्यते । काशीशमम्लकृष्णञ्च तिक्तञ्च तुवरं तथा । वातश्लेष्महरं केश्यं नेत्रकण्डूविषप्रणुत् । मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकीर्त्तितम्" भावप्र० तद्गुणादि ।

**कंसकार** पु० कंसं तन्मयपात्रं करोति कृ—अण् उप० स० । (कांसारि) वर्णसङ्करजातिभेदे "वैश्यायां ब्राह्मणाज्जातो ह्यम्बष्ठो गान्धिकोवणिक् । कंसकारशङ्खकारौ ब्राह्मणात् संबभूवतुः" इत्युक्तेः गान्धिकोवणिक् । कंसकारशङ्खकारौ ब्राह्मणात् संबभूवतुः" ब्रह्म०पु० । तेनैतस्याम्बष्ठवत् द्विजसंस्कार इति किन्तु सा जातिर्देशान्तरे प्रसिद्धा । गौड़देशवासिनस्तु शूद्राः । "विश्वकर्म्मा च शूद्रायां वीर्य्याधानं चकार सः । ततो

बभूवुः सुताश्च षड़ेते शिल्पकारिणः । मालाकारः कर्म्मकारः शङ्खकारः कुविन्दकः । कुम्भकारः कंसकारः षड़ेते शिल्पिनोवराः” ब्रह्मवै०पु० तेनास्य शूद्राजातत्वात् “मात्ववद्वर्णसङ्कराः” इत्युक्तेः शूद्रत्वम् । उशनसा तु तस्य प्रतिलोमवर्णसङ्करत्वमुक्तम् । “नृपायां वैश्यसंसर्गात् आयोगव इति स्मृतः । तन्तुवायो भवन्त्येते वस्त्रकांस्योपजीविनः । शिल्पिकाः केचिदत्रैव जीवनं वस्तुनिर्म्मितम् । आयोगवेन विप्रायां जातास्ताम्रोपजीविनः” ।

**कंसकृष्** पु० कंसं कृष्टवान् कृष–क्विप् ईत० । वासुदेवे तेन हि तस्य सभामध्ये कर्षणेन नाशनात्तथात्वं यथाह हरि०८६ अ० । “क्षिप्ते पितरि चुक्रोध नन्दगोपे च केशवः । ज्ञातीनाञ्च व्यथां दृष्ट्वा विसंज्ञाञ्चैव देवकीम् । सिंह इव वेगेन केशवो जातविक्रमः । आरुरुक्षुर्महाबाहुः कंसनाशार्थमच्युतः । रङ्गमध्यादुत्पपात कृष्णः कंसासनान्तिके । अस जद्वायुना क्षिप्तो यथाखस्थो घनाघनः । ददृशुर्नहि तं सर्वे रङ्गमध्यादवप्लुतम् । केवलं कंसपार्श्वस्थं ददृशुः पुरवासिनः । सोऽपि कंसस्तदायस्तः परीतः कालधर्म्मणा । आकाशादिव गोविन्दं मेने तत्रागतं विभुम् । स कृष्णेनायतं कृत्वा बाहुं परिघसन्निभम् । मूर्द्धजेषु परामृष्टः कंसो वै रङ्गसंसदि । मुकुटश्चापतत्तस्य काञ्चनो वज्रभूषितः । शिरसस्तत्र कृष्णेन परामृष्टस्य पाणिना । हस्तेन पस्तकेशस्य कंसोनिर्य्यन्त्रतां गतः । तथैव च विसंमूढो विह्वलः समपद्यत । निरष्टौतश्च केशेषु गतासुरिव निश्वसन् । न शशाक मुखं द्रष्टुं कंसः कृष्णस्य वै तदा । विकुण्डलाभ्यां कर्णाभ्यां च्छिन्नहारेण वक्षसा । विलम्बाभ्याञ्च बाहुभ्यां मार्ल्यावस्रत भूषणैः । भ्रंशितेनोत्तरीयेण सहसा चलितानन: । चेष्टमानः समाक्षिप्तः कंसः कृष्णेन तेजसा । चकर्ष च महारङ्गे मञ्चान्निष्क्रम्य केशवः । केशेषु तं बलादुष्टश्च कंसं क्लेशार्हतां गतम् । कृष्यमाणः स कृष्णेन भोजराजो महाद्युतिः । समाजवाटे परिखां देहकृष्टां चकार ह । समाजवाटे विक्रीड्य विकृष्य च गतायुषम् । कृष्णो विसर्ज्जयामास कंसदेहमदूरतः” । “निषेदिवान् कंसकृषः स विष्टरे” माघः । कंसजित्कंसारातिकंसहादयोऽप्यत्र

**कंसवती** स्त्री उग्रसेनदुहितृभेदे देवश्रवसः पत्न्याम् कंसशब्दे उदा० । “कंसवत्यां देवश्रवसः सुवीरइषुमांस्तथा” भाग० ६,२४,२ ।

**कांसार** न० कंसं तदाकारम् ऋच्छति ऋ–अण् उप०स० । अस्मिन् तस्य च कंसवच्छुभ्रत्वात् तथात्वम् “यत्किञ्चित् कांसारं तदस्थि” रैत० ब्रा० । [ १कांस्यधातौ त्रिका०

**कांसास्थि** न० कंसमस्थीव कठिनत्वात् व्याघ्रा० उपमितस० ।

**कांसिक** त्रि० कंसेन चतुःषष्टिपलमानेन क्रीतः “कंसाट्टिठन्” पा० टिठन् इकार उच्चारणार्थः । १कंसेन क्रीते स्त्रियां टित्त्वात् ङीप् । अध्यर्द्धपूर्वद्विगोस्तु तस्य लुक् । अध्यर्द्धकंसं सार्द्धकंसेन क्रीते त्रि० । द्विकंस द्वाभ्यां कंसाभ्यां क्रीते त्रि० ।

**कांसोद्भवा** स्त्री कंस इव शुभ्रत्वादुद्भवति उद्+भू–अच् । सौराष्ट्र्यां मृत्तिकायां तस्याः शुभ्रत्वात् कंसतुल्यत्वम् ।

**कक** इच्छायाम् सक० गर्व्वे चापले च अक०भ्वा०आत्म०सेट् । ककते अककिष्ट चकके [ चकङ्के प्रनिकङ्कते न णत्वम् ।

**कक** गतौ भ्वा० इदित् आत्म०सक०सेट् । कङ्कते । अकङ्किष्ट

**ककान्द** पु०कक–अन्दच् । १स्वर्गे उणादिकोषः २नृपे उज्ज्व०

**ककर** पु० कक–अरच् १ पक्षिभेदे । “हेमन्ताय ककरांश्चिशिराय विककरान्” यजु०२४,२० । ककरः पक्षिविशेषः

**ककरघा(हा)ट** पु०कं विषं करहाटेऽस्य इस्य ष्ट०वा घः । मूलविषे वृक्षभेदे । “तत्र क्लीतकाश्वमारगुञ्जासुगन्धगर्गरककरघा(हा)टविद्युच्छिखाविजयाभीत्यष्टौ मूलविषाणि” सुश्रु० । समध्यस्तु “अन्तपाचक कर्त्तरीयसौरीय ककरघाट करम्भनन्दनवराटकानि सप्त त्वक्सारनिर्य्यासविषाणि” सुश्रुतोक्ते त्वक्सारनिर्यासविषे २वृक्षभेदे ।

**ककर्द्दु** पु० कस्य कर्द्दनं हिंसनम् कर्द्द–भावे उन् ६त० । सुखनाशने । “ककर्द्दवे वृषभोयुक्त आसीत्” ऋ० १०, १०२,६ ककर्द्दवे हिंसनाय” भा० ।

**ककाटिका** स्त्री कृकाटिका पृषो० । १घाटायाम् २ललाटास्थिभेदे च “मस्तिष्कमस्य यतमोललाटं ककाटिकां प्रथमोयः कपालम्” अथ० १०,२,८ ।

**ककुज्जल** पुंस्त्री कं जलं कूजयति कूज–अलच् पृषो० नुम् ह्रस्वश्च । चातकपक्षिणि राजवल्लभः स्त्रियां ङीष् ।

**ककुत्सल** न० ककुत्स्थलं वेदे पृषो० । ककुद्रूपे स्थले. “असौ वा इह ते मनः ककुत्सलमिव जामयः । अभ्येनं भूम ऊर्णुहि” अथ०१८,४,६६, जामयो नवोढाः ककुत्स्थलं वस्त्रेण यथा ऊर्णुवन्ति तथैव मन आच्छादय इत्यर्थः । लोके तु ककुत्स्थलमित्येव ।

**ककुत्स्थ** पु०वृषरूपधरस्य शक्रस्य ककुदि तिष्ठति स्था क । पुरञ्जया-ख्ये इक्ष्वाकुकुलशशादपुत्रे नृपभेदे । तन्नामनिरुक्तिश्चरिते यथा “इक्ष्वाकौ संस्थिते ताते शशादस्तामशासत् । शशादस्य तु दायादः ककुत्स्थोनाम वीर्य्यवान् । इन्द्रस्य वृषभूतस्य ककुत्स्थोऽजयतासुरान् । पूर्वमाडीवके युद्धे ककु-

वृषरूपेन सः स्मृतः” हरिवं० १० अ० । “शशादोजे हरिं यज्ञैः शशाद इति विश्रुतः । पुरञ्जयस्तस्य सुत इन्द्रवाह इतोरितः । ककुत्स्थ इति चाप्युक्तः शृणु नामानि कर्मभिः । कृतान्त आसीत् समरो देवानां सह दानवैः । पार्ष्णिग्राहो हतो वीरो देवैर्दैत्यपराजितैः । वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः । वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः । नमस्कृत्वा धनुर्दिव्यमादाय विशिखान् शितान् । स्तूयमानस्तमारुह्य युयुत्सुः ककुदि स्थितः । तेजसाप्यायितो विष्णोः पुरुषस्य परात्मनः । प्रतीच्यां दिशि दैत्यानां न्यरुणत्त्रिदशैः पुरम् । तैस्तस्य चाभूत् प्रधनं तुमुलं लोमहर्षणम् । यमाय भल्लैरनयद्दैत्यान् येऽभियुयुर्मृधे । तस्येषुपाताभिमुखं युगान्ताग्निमिवोल्बणम् । विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् । जित्वा पुरं धनं सर्व्वमवज्रिणे प्रत्ययच्छत् स राजर्षिरिति नामभिराहृतः” भाग० ९, ६, ११ “इक्ष्वाकुवंश्यः ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत्” रघुः । तस्यापत्यं शिवा० अण् । काकुत्स्थ तदपत्ये । “काकुत्स्थ ईषत् स्मयमान आस्त” भट्टिः ।

**ककुद्** स्त्री कं सुखं कौति कु-शब्दे क्विप् तुक् च पृषो० तस्य दः । वृषस्कन्धपृष्ठस्थमांसपिण्डाकारे, (कुँज) इति ख्याते १वृषाङ्गभेदे २श्वेतच्छत्रादौ नृपचिह्ने, ३प्रधाने, ४पर्व्वताग्रभागे च । “आस्थं विहत्य ककुदि पाणिना प्राविशच्छलैः” भा० अनु० २९ अ० । ककुदिस्थितः ककुत्स्थशब्दे उदा० ।

**ककुद** पु० न० कस्य देहस्य सुखस्य वा कुं भूमिं ददाति दा-क । (कुँट) इति ख्याते १वृषाङ्गभेदे, २प्रधाने, ३नृपचिह्ने, छत्रादौ, ४पर्व्वताग्रभागे च । “इक्ष्वाकुवंश्यः ककुदं नृपाणाम्” रघुः । “नृपतिककुदं दत्त्वा यूने सितातपवारणम्” रघुः । “स राजककुदव्यग्रपाणिभिः पार्श्ववर्त्तिभिः” रघुः । बहु० अवस्थायामन्त्यलोपः समा० । अजातककुत् अस्पष्टवाः वृषः । पूर्णककुत् तरुणः । पर्व्वतभेदे चान्त्यलोपः त्रिककुत् त्रिकूटगिरिः ।

**ककुदाच** त्रि० ककुदं राजचिह्नमश्नोति धारकत्वेन व्याप्नोति अश-अच् उप० स० । राजचिह्नधारके । तस्यापत्यम् रेवत्या० ठक् । काकुदिक तदपत्ये पुं स्त्री ।

**ककुदावर्त्त** पु० ककुदि आवर्त्तः । ककुदिस्थे दुष्टरोमावर्त्तभेदे । तस्य प्राणिस्थत्वात् निन्द्यत्वाच्च मत्वर्थे इनि । ककुदावर्त्तिन् तच्चिह्नयुक्ते निन्द्ये वृषे ।

**ककुद्मत्** पु० ककुदस्त्यस्य मतुप् यवादि० म मस्य वः । १वृषे । “दर्पकलः ककुद्मान्” कुमा० । “अधोमुखोच्चैर्नदितं ककुद्मताम्” माघः । “मदोद्धताः ककुद्मन्तः सरितां कूलमुद्रुजाः” “दृप्तः ककुद्मानिव चित्रकूटः” रघुः । ककुद् सादृश्येनास्त्यस्य मतुप् । २ककुत्सदृशे बहुलोदकसंघातयुक्ते । “ऊर्म्मिः मधूर्म्मिः ककुद्मान्” यजु० ९ ६, ककुद्मान् ककुच्छब्देन वृषस्कन्धे उन्नतप्रदेश उच्यते सादृश्ये मयुप् तत्सामान्यादुदकनिचयैर्युक्तः” वेददी० । ३ऋषभौषधौ” राजनि० ४पर्व्वते स्वामी

**ककुद्मती** स्त्री ककुदिव मांसपिण्डोऽस्त्यस्याः मतुप् यवा० न मस्य वः ङीप् । कट्याम् अमरः

**ककुद्मिन्** पु० ककुद्+अस्त्यर्थे मिनि । १वृषे २पर्व्वते च । “अष्टौ सहस्राणि ककुद्मिनामहम्” भा० आश्व० १०३ अ० । ४रैवते नृपे पु० । “आनर्त्तस्य तु दायादो रेवोनाम महाद्युतिः । आनर्त्तविषयश्चासीत् पुरी चास्य कुशस्थली । रेवस्य रैवतः पुत्रः ककुद्मी नाम धार्म्मिकः” हरिवं० १० अ० ।

**ककुद्मिसुता** स्त्री ६ त० । बलरामभार्य्यायां रेवत्याम् । ककुद्मिकन्यादयोऽप्यत्र “ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया” माघः ।

तस्याः पूर्व्वकालिकायामपि बलदेवपरिणयकथा यथा “रेवस्य रैवतः पुत्रः ककुद्मी नाम धार्म्मिकः । ज्येष्ठः पुत्रशतस्यासीद्राज्यं प्राप्य कुशस्थलीम् । स कन्यासहितः श्रुत्वा गान्धर्वं ब्रह्मणोऽन्तिके । मुहूर्त्तभूतं देवस्य मर्त्यं बहुयुगं प्रभो ! । आजगाम युवैवाथ स्वां पुरीं यादवैर्वृताम् । कृतां द्वारवतीं नाम्ना बहुद्वारां मनोरमाम् । भोजवृष्ण्यन्धकैर्गुप्तां वासुदेवपुरोगमैः । ततस्तद्रैवतो ज्ञात्वा यथातत्त्वमरिन्दम ! । कन्यां तां बलदेवाय सुव्रतां नाम रेवतीम् । दत्त्वा जगाम शिखरं मेरोस्तपसि संश्रितः । रेमे रामोऽपि धर्म्मात्मा रेवत्या सहितः सुखी” १० अ० । युधिष्ठिर उवाच “कथं बहुयुगे काले समतीते द्विजोत्तम ! । न जरा रेवतीं प्राप्ता रैवतं वा ककुद्मिनम् । मेरुं गतस्य वा तस्य शर्य्यातेः सन्ततिः कथम् । स्थिता पृथिव्यामद्यापि श्रोतुमिच्छामि तत्त्वतः ! नारद उवाच । न जरा क्षुत्पिपासा वा न मृत्युर्भरतर्षभ ! । ऋतुचक्रं न भवति ब्रह्मलोके सदाऽनघ । ककुद्मिनस्तु तं लोकं रैवतस्य गतस्य ह । हृता पुण्यजनैस्तात राक्षसैः सा कुशस्थली” भा० हरि० ११ अ० ।

**ककुन्दर** न० कस्य शरीरस्य पृष्ठदेशस्य कुं भूमिं दृणाति दृ-दा० खच् । पृष्ठवंशाधःस्थे गर्त्ताकारे कूपके “सक-

द्विभक्तावतरस्त्रक(कु)कुन्दरविभागः रथाङ्गाकारसंस्थितश्च नितम्बविभागः” दशकुमा० । “कस्यौ शङ्कौ भ्रुवौ दन्तवेष्टावोष्ठौ ककुन्दरे” याज्ञ० “ककुन्दरे जघनकूपकौ” मिता० । पृषो० कुकुन्दरमपि तत्रार्थे ।

**ककुभ्** स्त्री कं प्रकाशं स्कुभ्नाति स्कुन्भ-क्विप् पृषो० । १दिशि, २शोभायाम्, ३चम्पकमालायाम्, ४शास्त्रे, ५रागिणीभेदे च । “अष्टौ व्यख्यत् ककुभः पृथिव्याः” ऋ० १,५८,१ । “दाधर्थ प्राचीं ककुभं पृथिव्याः” ७,६,२ । ६प्राणे । “ककुप्छन्दः” यजु० १५,४ । “कं सुखं शरीरे स्कुभ्नाति धारयतीति ककुप्, कं सुखं कोपयति दीपयतीति कुप-दीप्तौ चुरादि क्विप् । पूर्वत्रपक्षे सलोपश्छान्दसः ककुप् प्राणः “प्राणो वै ककुप् छन्दः इति श्रुतेः” वेददी० । द्वितीयपक्षे पान्तमिति भेदः । वैदिके ७छन्दोभेदे । “उक्षा वयः ककुप्छन्दः” यजु०१४,९ “आद्यन्तावष्टाक्षरौ पादौ मध्यमौ द्वादशाक्षरौ ककुप्” वेददी० । कात्या० सर्व्वा० ५अ० । “द्वितीयमुष्णिक् त्रिपदान्त्यो द्वादशकः आद्यश्चेत् पुर उष्णिक् मध्यमश्चेत् ककुप्” इति तल्लक्षणमुक्तम् । “सर्वाः ककुभः” आश्व० श्रौ० ६,१,२ । ककुब्रागिणीरूपमुक्तम् संगीतदामो० “पीतं वसाना वसनं सुकेशी वने रुदन्ती पिकनाददूना । विलोकयन्ती ककुभोऽतिभीता मूर्त्तिः प्रदिष्टा ककुभस्तथेयम्” ।

**ककुभ** पु० कं वातं स्कुभ्नाति स्कुन्भ-क पृषो० । वीणाङ्गे, तस्याः स्वरगाम्भीर्य्यसम्पादनार्थमधोबद्धालाबूमयभाण्डे । कस्य वातस्य कुः भूमिः भात्यस्मात् ककु+भा—क । विस्तीर्णशाखाभिः वातभूमिप्रकाशकेऽर्ज्जुनवृक्षे, च तद्गुणादि भावप्रका० उक्तं यथा “ककुभः शीतलोभग्नक्षतक्षयविषास्रजित् । मेदोमेहव्रणान् हन्ति तुवरः कफपित्तहृत् । “मध्येसमुद्रं ककुभः पिशङ्गी” माघः तांस्तथ्डुलोन्नतिनिम्नोत्तानविस्तीर्णकुक्षौ ककुभोलूखले” दशकु० काल्क्षपं ककुभसुरभौ पर्व्वते पर्वते ते मेघदू० । ३रागभेदे च ४रागिणीभेदे स्त्री । ककुभ इवाचरति ककुभ+क्विप्-अच् । ५महति त्रि० निघ० “ककुभं रूपं वृषभस्य रोचते” यजु० ८,४९ । ककुभं महत्” वेददी० [ङीप् । नलीनामगन्धद्रव्ये शब्दच०

**ककुभादनी** स्त्री ककुभ इवाद्यते तुल्यरसत्वात् अद-ल्युट्

**ककुम्मती** स्त्री वैदिकेछन्दोभेदे “एकस्मिन्पञ्चकेछन्दः शङ्कुमती षट्के ककुम्मतीति” कात्या० सर्व्वानु० तल्लक्षणमुक्तम् ।

**ककुह** त्रि० कस्य सूर्य्यस्य कुं भूमिं जिहीते उच्छ्रितत्वात् गच्छति हा—क ईत० । १उच्छ्रिते २महति निघण्टुः । “ककुहं चित्त्वा कवे ! मन्दन्तु धृष्णविन्दवः” ऋ० ८,४५,१४ । “ककुहः सौम्योरस इन्दुरिन्द्राय” ९,६७,८ । ककुहः ककुद्मीति निघण्टौ पाठान्तरम् तदर्थे ।

**कक्क** हासे भ्वा० पर० अक० सेट् । कक्कति । अकक्कीत् । चकक्क । कक्कटः । प्रनिकक्कति कादित्वान्न णत्वम् ।

**कक्कट** पुंस्त्री कक्क—अटन् । मृगविशेषे स च अश्वमेधे अनुमतिदेवताकः पशुः । “न्यङ्कुः कक्कटस्तेऽनुमत्यै” यजु० २४,३२ । पेत्वो मृगभेदः न्यङ्कुरपि, कक्कटः सएव, ते त्रयोऽनुमत्यै” वेददी० । स्त्रियां जातित्वात् ङीष् ।

**कक्कुल** पु० कक्क—उलच् । बकुलवृक्षे त्रलितविस्तारः ।

**कक्कोल** पु० ककते गच्छति क्विप् कक्, कोलति संस्त्यायति कुल-अच् कोलः कक् चासौ कोलश्चेति कर्म्म० । गन्धद्रव्यसाधने वृक्षे (कांकोल) इति वङ्गभाषाख्याते (वनकपूर) इति पाश्चात्त्यख्याते । “आकम्पितकक्कोलैः नमेरुकुसुमपांशुपातिभिः” काद० । “कक्कोलं लघु तीक्ष्णोष्णं तिक्तं हृद्यं रुचिप्रदम् । आस्यदुर्गन्धिहृद्रोगकफवातामयान्ध्यहृत्” भावप्र० तद्गुणाः “जातीफललवङ्गकक्कोलमेषाञ्च षट्पलम् । प्रोक्तमाचमनमिति” तन्त्रसारः ।

**कक्कोलक** पु० इदमर्थे कन् । १कक्कोलवृक्षजाते गन्धद्रव्ये (वनकर्पूर) इति ख्याते । तस्य कोषे फलवत्त्वात् कोषफल इति प्रसिद्धिः २स्थूलमरिचे राजनि० । [चकक्ख ।

**कक्ख** हासे भ्वादि० पर० अक० सेट् । कक्खति अकक्खीत् ।

**कक्खट** त्रि० कक्ख—अटन् । १कठिने अमरः । २हासान्विते त्रि०

**कक्खटपत्त्रक** पु० कक्खटं प्रकाशान्वितं पत्त्रमस्य । (पाठ) वृक्षभेदे शब्दमा० [भूमौ वर्ण्णलेखनसाधने द्रव्यभेदे त्रिका० ।

**कक्खटी** स्त्री कक्ख-अटन् गौ० ङीष् । कठिन्याम् (खडी)

**कक्ष** पु० कष हिंसादौ स । १उत्तरीयवस्त्रस्य पश्चाद्भागस्थे अञ्चले (आंचल) २लतायाम्, ३शुष्कतृणे, ४शुष्कवने च मेदि० । ५पार्श्वभागे, ६राजान्तःपुरे, ७बाह्वोर्मूले ८पृष्ठप्रदेशनिहिताधोऽंशुकस्यैकदेशे (काछा) ९हस्तिबन्धनरज्ज्वां, १०काञ्च्याम्, ११प्रकोष्ठके, १२गृहभित्तौ, १३साम्ये १४सद्दीसदे मेदि० १५कक्षरोगभेदे च (कांकविराली) स्त्री । १६पापे न० हेम० । “प्रक्षिप्योदर्चिषं कक्षे” माघः० । “क्रोष्टी वराहं निरतक्त कक्षात्” ऋ० १०,२८,४ । “रूढकक्षवनप्रस्था प्रसन्नजलनिम्नगा” भा० व० १८२ “कक्षान्तरगतोवायुर्जीमूत इव गर्जति” रामा० “यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति” मनुः । “कक्षघ्नः शिशिरघ्नश्च” “महाकक्षे बिलौकसः । न दृष्टे

दिति चात्मानं यो रक्षति स जीवति” भा० आ०१४५ अ०। “अयमग्निर्दहन् कक्षमितश्चायाति भीषणः” भा० आ०८२६६ अरण्ये “अग्निर्महाकक्षमिवान्तकाले”भा० व० १२० अ०। १७ बाहुमात्रे स्त्रीत्वमपि “कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः” भा०स० २२ अ०। वस्त्राञ्चले तु पुंस्त्री “चित्रहस्तादिकं कृत्वा कक्षाबन्धञ्च चक्रतुः” भा०६०२। “वामे पृष्ठे तथा नाभौ कक्षत्रयमुदाहृतम्। एभिः कक्षैः परीधत्ते योविप्रः स शुचिः स्मृतः” स्मृतिः “परिधानात् बहिःकक्षा निबद्धा ह्यासुरी भवेत्”योगिया०। १८नौकाङ्गे हेम०। बाहुमूले (बगल) “वैदूर्य्यरूपान् प्रतिमुच्य काञ्चनानक्षान् स कक्षे परिरूढ्य वाससा” भा०वि०२५ श्लो०। प्रकोष्ठे “आ पश्चयास्तु कक्षाया नैनं कश्चिदवारयत्” रामा०। “क्रान्तानि पूर्व्वं कमलासनेन कक्षान्तराण्यद्रिपतेर्विवेश” कुमा० “करेणुकाभिरम्भून्यकक्षान्तरम्”काद० १९परिकरे“आबद्धनिविडकक्षैः”काद०। कक्षारोगस्तु “बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम्। पित्तप्रकोपात् संभूतां कक्षामिति विनिर्द्दिशेत्”। कक्षाभागेषु ये स्फोटाः जायन्ते मांसदारुणाः। अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः। सप्ताहात् द्वादशाहाद्वा पक्षाद्वा घ्नन्ति मानवम्” सुश्रुते उक्तलक्षणः। “इरिविल्लां गन्धनाम्नीं कक्षां विस्फोटकांस्तथा। पित्तजस्य विसर्पस्य क्रियया साधयेत् भिषक्” सुश्रु० २०कच्छे जलप्राये विश्वः।

**कक्षक** पु० जनमेजयसर्पसत्रहते वासुकिकुलजसर्पभेदे। “हिरण्यबाहुः शरणः कक्षकः कालदन्तकः। एते वासुकिजानागाः प्रविष्टा हव्यवाहनम्” भा०आ०५८अ०।

**कक्षतु** द० कक्ष इव तन्यते विटपं तन—बा० डु। वृक्षभेदे तस्य फलम् अञ् प्लक्षा० न लुक्। काक्षतव तत्फले न० चतुरर्थ्याम् उवर्णान्तत्वात् अण्। काक्षतव तत्सन्निकृष्टदेशादौ त्रि०।

**कक्षधर** न० कक्षां धारयति धृ—अच् नि०ह्रस्वः। सुश्रुतोक्ते वक्षःकक्षयोरन्तरालस्थानस्थिते मर्म्मस्थानभेदे। “विशेषतस्तु यानि सक्थिगुल्फजानुविटपानि तानि बाह्वोर्मणिबन्धकूर्परकक्षधराणि। वङ्क्षणवृषणयोरन्तरे विटपम् एवं वक्षःकक्षयोर्मध्ये कक्षधरमिति” लक्षित्वा कक्षधरे पक्षाघातः”सुश्रुते तद्वेधे पक्षाघात उक्तः। स्त्रियां ङीप्।

**कक्षप** पुंस्त्री कक्षे जलप्राये पिबति पा-क०७त०। कूर्म्मे

**कक्षरुहा** स्त्री कक्षे जलप्राये रोहति रुह—क। (नागरमुथा) नागरमुस्तायाम् राजनि० तस्याजलप्रायभवत्वात्तथात्वम्।

**कक्षशाय** पुंस्त्री कक्षे शुष्कतृणे शेते शी—ण। कुक्कुरे शब्दमाला। स्त्रियां ङीप्।

**कक्षशायु** पुंस्त्री कक्षे शेते शी-उण्। कुक्कुरे राजनि०।

**कक्षसेन** पु० “परीक्षितोऽभवन् पुत्राः सर्व्वे धर्म्मार्थकोविदा। कक्षसेनोग्रसेनौ तु चित्रसेनश्च वीर्य्यवान्” भा० आ० ९४ अ० उक्ते परिक्षिन्नृपपुत्रभेदे। अयञ्च परिक्षित् आविक्षितःपुत्रः “आविक्षितः परिक्षित्” इत्युपक्रमात्। “अलर्कः कक्षसेनश्च गयो गौराश्व एव चेति” यमसभासद्वर्णने उक्तम्। तस्याश्रमश्च अवन्तिदेशस्थासितगिरिस्थः। “अवन्तिषु प्रतीच्यां वै” इत्युपक्रम्य “बहुमूलफलोपेतोऽह्यसितोनाम पर्व्वतः। आश्रमं कक्षसेनस्य पुण्यस्तत्र युधिष्ठिर!” भा० व० ८९अ०। तस्य च संन्यासकथा। “कक्षसेनस्तु राजर्षिर्वसिष्ठाय महात्मने। न्यासं यथावत् संन्यस्य जगामाशु महायशाः” भा० अनु० १०७अ०। तस्य प्रातःस्मर्त्तव्यताप्याह भा०अनु० १६७अ०। “कक्षसेनश्च राजर्षिर्येचान्ये नानुकीर्त्तिताः, कल्यमुत्थाय योनित्यं सन्ध्येऽह्यस्तमयोदये। पठेच्छुचिरनावृत्तः सधर्म्मफलभाग्भवेत्”। “कक्षसेनार्ष्टिषेणौ च सिन्धुद्वीपश्च पार्थिवः। एते चान्ये च बहवः सिद्धिं परमिकां गताः” भा०अश्व०९१अ०। २ऋषिभेदे च। तस्यापत्यमभिप्रतारी। “अथ शौनकञ्च कापेयमभिप्रतारिणं काक्षसेनिं परिवेष्यमाणौ ब्रह्मचारी बिभिक्षे” छा०उ० कक्षसेनस्यापत्यम् इञ्” भा०।

**कक्षा** स्त्री कष—स। १उत्तरीयवस्त्रे २काञ्च्याम् ३मध्यबन्धने ४हस्तिबन्धने च विश्वः ५मध्ये ६संशयकोटौ ७तुल्यतायाञ्च। समकक्षः। कक्षीकृतः क्रोडीकृतः। ८राजान्तःपुरे च तत्र मध्यबन्धने“दधे परैःसह दृढबद्धकक्षया” माघः “कक्षा मध्यबन्धनम्” मल्लि० कक्षशब्दे उक्तार्थेषु च

**कक्षापट** पु० कक्षाकारः पटः। कौपिने हारा०।

**कक्षाय** नामधातुः पापचिकीर्षायाम्। “सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम्” वार्त्ति०क्यङ्। कक्षायते कक्षं (पापम्) चिकीर्षति। अकक्षायिष्ट कक्षायांबभूव आस चक्रे।

**कक्षावेक्षक** प० कक्षं वनमुपवनं साम्यं स्त्रीबाहुमूलं वा कक्षां राजगृहान्तःपुरीं वाऽवेक्षते अव+ईक्ष—ण्वुल्। १शुद्धान्तपालके, २उद्यानपालके, ३रङ्गाजीवे, ४जारे करौ ६द्वाःस्थे च मेदि०।

**कक्षिन्** त्रि० कक्षं पापमस्त्यस्य इनि० इनि। पापयुक्ते

**कक्षीवत्** पु० कक्ष्या अस्त्यस्य मतुप् नि० संज्ञायां संप्रसारणं दीर्घश्च। स्फोटायने ऋषिभेदे हेमच०। अन्यत्र कक्ष्यावत् कक्ष्यायुक्ते। "सोमानं स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजः" निरु० श्रुतिः कक्षीवान् कक्ष्यावान् निरु०। मनुष्यकक्ष एवाभिप्रेतः इति निरु०। "शतं कक्षीवाँ असुरस्य" ऋ० १,१२६,२, "अहं मनुरभवं सूर्य्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः" ऋ० ४, २६,१, "कक्षीवान् दीर्घतमसः पुत्रस्तत्संज्ञकः" भा०। अयञ्चाङ्गिरोगोत्रोत्पन्नः। "यवक्रीतश्च रैभ्यश्च अर्वावसु परावसू। औशिजश्चैव कक्षीवान् बलश्चाङ्गिरसः सुताः" भा० अनु० १५० अ०। "यवक्रीतोऽथ रैभ्यश्च कक्षीवानौशिजस्तथा" भा० अनु० १६५ अ०। अयञ्च गोत्रप्रवर्त्तकः "कक्षीवतामाङ्गिरसौचथ्यगौतमौशिजकाक्षीवतेति। आश्व० श्रौ० १२,११,२, कक्षीवतोऽपत्यम् अण्। काक्षीवत तत्पुत्रे प्रवरर्षिभेदे। "कक्षीवन्तं य औशिजः इति श्रुतिमधिकृत्य उशिजः पुत्रः उशिग् वष्टेः कान्तिकर्म्मणः" निरुक्तोक्तेः औशिजशब्द तालव्यमध्यएव साधुः भारते मूर्द्धन्यमध्यपाठः लिपिकरप्रमादकृत एव। एवं श्रुतिस्थल भारतादौ पा० स्थले च ईकारमध्यपाठदर्शनात् हेम० कक्षीवच्छब्द एव। शब्दकल्पद्रुमे कक्षावच्छब्दकल्पनं निर्मूलम्।

**कक्षेयु** पु० "रौद्राश्वस्य घृताचीसम्भूते पुत्रभेदे। "रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः" इत्युपक्रम्य "ऋचेयुरथ कक्षेयुः कृकणेयुश्च वीर्य्यवान्" इत्यादिना तस्य दश पुत्रा दर्शिताः भा० आ० ९० अ०। "आयुःश्रुपश्च राजर्षिः कक्षेयुश्च नराधिपः" भा० अनु० १६५ अ०। "रौद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः। ऋचेयुः प्रथमस्तेषां कृकणेयुस्तथैव च। कक्षेयुः स्थण्डिलेयुश्च" हरिवं० ३१

**कक्षोत्था** स्त्री० कक्षात् जलप्रायदेशादुत्तिष्ठति उद्+स्था—क ५त०। भद्रमुस्तायां राजनि०। (नागरमुथा) तस्या जलप्रायदेशजत्वात्तथात्वम्। कक्षोद्भवादयोऽप्यत्र।

**कक्ष्य** त्रि० कक्षे भवः यत्। "कक्षोवीरुधि दोर्मूले कक्ष शुष्क वने तृणे" इति विश्वोक्तलतादि १भवे। २रुद्रभेदे पु०। "नमो वन्याय च कक्ष्याय च" यजु० १६,३४, रुद्राध्याये रुद्रभेदकथने। ३कक्षपूरके त्रि०। "श्येन आसामदितिः कक्ष्योमदः" ऋ० ५,४४,११, "कक्ष्यः कक्ष्यापूरकः मदः" भा०। कक्षे मध्ये भवः यत्। ४उत्तरीयवस्त्रे ५हर्म्यादिप्रकोष्ठे राजगृहादेर्द्देहलावच्छिन्ने देशे राजगृहादेः ७प्रारम्भकोष्ठके ८सादृश्ये ९कक्षवद्वरज्जौ १०काञ्च्यां मेखलारज्जौ ११वस्त्राञ्चले १२गजमध्यबन्धनरज्जौ च स्त्री। स्वार्थे यत्। १३उद्योगे १४परिकरबन्धने च स्त्री। "ते त्वतीत्य जनाकीर्णाः कक्ष्यास्तिस्रो नरर्षभाः" भा० स० २० अ०। "अभिगम्य गृहं भ्रातुः कक्ष्यामपि विगृह्य च" रामा०। अत्र क्लीवमपि "अन्ये चहरयोद्वास्था गृहकक्ष्यगतास्तथा" रामा०। १५गुञ्जायां शब्दरत्ना० १६पार्श्वभागे न०। "शोभितं हेमकक्ष्याश्च हेमपट्टैर्विभूषितम्"। रामा० "परार्थे बद्धकक्ष्याणां तादृशां सम्भवः कुतः" पुरा०। १७अङ्गुलौ स्त्री निघण्टुः।

**कक्ष्यावत्** पुंस्त्री कक्ष्यास्त्यस्य मतुप् मस्य वः। ऋषिसंज्ञाभावात् न संप्र०। हस्तिनि हेमच० स्त्रियां ङीप्।

**कक्ष्यावेक्षक** पु० कक्षावेक्षकार्थेषु।

**कख** हासे भ्वा० पर० अक० सेट् एदित् घटादि वोपदेवः। कखति एदित्त्वात् अकखीत्। चकाख णिच् कखयति। पा० मते नास्य एदित्त्वं तेन अकखीत्-अकाखीत् इति भेद न वा तन्मते घटादि। तेन काखयत्येव। कादित्वात् प्रनिकखति इत्यादौ न णत्वम्।

**कख्या** स्त्री कख-यत्। हर्म्यादिप्रकोष्ठे कक्षार्थे शब्दर०।

**कग** क्रियामात्रे भ्वादि० पर० सक० अक० च सेट् एदित् वोप०। कगति अकगीत्। पा० नेदित्त्वम् तेन अकगीत् अकागीत् कागयति। चकाग प्रनिकगति न णत्वम्।

**कङ्क** पुंस्त्री ककि-अच्। १पक्षिभेदे। (काँक)। "कङ्कपत्रः शिलीमुखः" इत्युक्तेस्तस्य पक्षेण शरपुङ्खः क्रियते। "शरास्तयोस्तु बभूवुः कङ्कबर्हिणवाससः" भा० वि० ५८। स च पक्षी सुरमासुतकुलजः "अरुणायाः शुकौ पुत्रौ कङ्कस्तु सुरमासुतः" भा० आ० ६६ अ०। २महाराजचूते राजनि०। ३क्षत्रियमात्रे शब्दमाला। ४यमे ५छद्मना द्विजवेशधरे मेदि०। "कङ्कोनाम द्विजोभूत्वा मताक्षः प्रियदेवनः" भा० व० २अ०। युधिष्ठिरस्य छद्मना द्विजवेशतया तथात्वम्। ६वसुदेवानुजभेदे "देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत्। तस्यां स जनयामास दश पुत्रान् क्रमेण च। वसुदेवं देवभागं देवश्रवसमानकम्। सृञ्जयं श्यामकं कङ्कं शमीकं वत्सकं वृकम्" इत्युक्त्वा "कङ्कस्य कर्णिकायां वै ऋतधामाजयावपि" इति तत्पुत्रोत्पत्तिरुक्ता।

"कृतवर्म्मा ह्यनाधृष्टिः शमीकः समितिञ्जयः। कङ्कः शङ्कुश्च कुन्तिश्च सप्तैते वै महारथाः" भा० स० १२। ७उग्रसेनकन्याभेदे स्त्री। "तेषां (उग्रसेनसुतानाम्)

स्वसारः पञ्चासन् कंसा कंसवती तथा। सुतनूराष्ट्रपाली च कङ्का चैव वराङ्गना" हरि०३८।

**कङ्कट** पु० कं देहं कटति क+कट—मुम् च, ककि लौल्ये अटन् वा। १कवचे। "सर्व्वायुधैः कङ्कटभेदिभिश्च" रघुः तेन निर्वृत्तादि कुमुदा० चतुरर्थ्याम् ठक्। कङ्कटिक तन्निर्वृत्तादौ त्रि०। चतुरर्थ्यां काशा० इल। कङ्कटिल तदर्थे। प्रेक्षा० चतुरर्थ्याम् इनि। कङ्कटिन् तदर्थे त्रि०। अस्त्यर्थे इनि। तद्युक्ते बद्धकवचे त्रि०। उभयत्र स्त्रियां ङीप्। स्वार्थे कन्। कङ्कटकोऽप्यत्र।

**कङ्कण** न०कं शुभं कणति कम्-कण—अच्। १करभूषणे, २भूषणमात्रे च ३शेखरे ४हस्तसूत्रे च विश्वः "सिन्दूरितानेकपकङ्कणाङ्किताः" माघः "उत्क्षिप्तं करकङ्कणद्वयमिदम् बद्धा दृढं मेखला" सा०द०। कङ्कणशब्दस्य करभूषणार्थत्वेऽपि तत्काले करवृत्तित्वसूचनाय कर्णावतंसे कर्णशब्दवत् करशब्दप्रयोगः। भूषणमात्रे "के द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः। नाथ! मत्कङ्कणन्यस्तं येषां मुक्ता फलं फलम्" सा०द०। कमित्यव्ययम् जलार्थकं तस्य कणः। ५जलकणे पु०। "नितम्बे पत्राली नयनयुगलं कङ्कणभरम् मुखे हारावाप्तिः सतिलकमभूत् पाणिकमलम्। अरण्ये कर्णाट! त्वदरिवनितानां विधिवशादपूर्व्वोऽयं भूषाविधिरजनि" उद्भटः।

**कङ्कणीका** स्त्री पुनः पुनः कणति कण-यङ्—लुक्—ईकन् "चङ्कणः कङ्कण च" उणा०कङ्कणादेशश्च। क्षुद्रघण्टिकायाम्"उज्ज्वल० वा० चङ्कणः—अच् कङ्कणादेशश्च गौरा० ङीष्। कङ्कणीत्यपि तत्रैव भरतः। अत्र मूलं मृग्यम्।

**कङ्कत** पु० ककि-अतच्। १नागबलावृक्षे। तक+गतौ अतच् पृषो०। २अल्पविषे डुण्डुभे सर्पे पुंस्त्री जातित्वात् स्त्रियां ङीष्। "कङ्कतो न कङ्कतोऽथ सतीनकङ्कतः" ऋ०१, १९१,१। "कङ्कतोऽल्पविषः सतीनं जलम् तत्र कङ्कतः जलडुण्डुभः" भा०।३केशप्रसाधन्याम् न० (काँकुइ)। "शिरसीव कङ्कतमपेतमूर्द्धजे" माघः पुंस्त्वमपि "क्रतिमः कङ्कतः शतदन्य एषः। अपास्याः केश्यं मलमप शीर्षण्यं लिखात्" अथ०१४,२,६८प्रसाधनीगुणाश्च सुश्रुते उक्ताः "केशप्रसाधनी केश्या रजोजन्तुमलापहा" अस्य स्त्रीत्वमपि तत्र गौ०ङीष्। कङ्कती तत्रार्थे विश्वामरौ। स्वार्थे कन्। कङ्कतिका तत्र कङ्कतं तद्संस्कारः प्रयोजनमस्य छ। कङ्कतीय केशप्रसाधनपरे ऋषिभेदे "तद्वैतच्छाण्डिल्यः कङ्कतीयेभ्योऽहरहः कर्म्म प्रदिश्य प्रवव्राज" शत०ब्रा०९, ४,४,१२। गहस्थं च तस्यैव केशसंस्कारप्रयोजनत्वात्

**कङ्कत्रोटि** पु० कङ्कस्य त्रोटिरिव चञ्चुरस्य। १मत्स्यभेदे(कांकला) बा०अच् समा०। कङ्कत्रोटोऽप्यत्र। स्त्रियां जातित्वात् ङीष्

**कङ्कपत्र** पु० कङ्कस्य पत्रं पत्रं पक्षोऽस्य। पुङ्खे तत्पक्षयुक्ते १शरे "हयांश्च रजतप्रख्यान् कङ्कपत्रैः शिलाशितैः" भा०वि० १८ "छित्त्वा च तानाशुगैश्च कङ्कपत्रान् शिलाशितान्" भा०आश्व०७८अ०। ६त०। २कङ्कखगस्य पक्षे च। कङ्कस्य पत्रं यत्र।३तत्पक्षयुक्ते "नखप्रभाभूषितकङ्कपत्रे सक्ताङ्गुलिः सायकपुङ्ख एव"रघुः। तदस्त्यस्य इनि।कङ्कपत्रिन् कङ्कपत्रयुक्ते वाणे पु० "विव्याध दशभिर्वाणैस्त्वरितः कङ्कपत्रिभिः" भा०व० ५७अ०। "पुनरेवाहनत् पार्थं हृदये कङ्कपत्रिभिः" भा०वि०५९।

**कङ्कपर्व्वन्** पु० कङ्कः कङ्कमुखमिव पर्व्वास्य। सर्पभेदे। तिरश्चिराजेरसितात् पृदाकोः परि संभृतम्। तत् कङ्कपर्वणो विषमियं वीरुदनीनशत्" अथ०७,५६,१,

**कङ्कपुरी** स्त्री कं सुखं तेन कायति प्रकाशते कै—क कर्म्म०। काशीपुर्य्यां तस्यां वसतां हि सुखबाहुल्यात् तथात्वम्। "असि ह्युपसृत्य पुनःपुनः स (अगस्त्य) प्रासादमालाः परितोविलोकयन्। उवाच नेत्रे! स चले! प्रपश्यत काशीं युवां कङ्कपुरी त्रियं वत" काशी०२अ०।

**कङ्कमाला** स्त्री ककि-चापले घञ् कङ्कं चापल्यं करचाञ्चल्यं मलते धारयति मल—धृतौ अण् उप०स०॥ करतालीवाद्ये शब्दर० तत्र हि करचापल्यात् तथात्वम्।

**कङ्कमुख** पु० कङ्कस्य मुखमिव मुखमस्य। (सांड़ाशि) १संदंशे सुश्रुतोक्ते २शल्योद्धारणार्थे यन्त्रभेदे न०। "तत्र नानाप्रकाराणां व्यालानां मृगपक्षिणां मुखैर्मुखानि यन्त्राणां प्रायशः सदृशानि तानि" इत्युक्त्वा "तत्र स्वस्तिकयन्त्राण्यष्टादशाङ्गुलप्रमाणानि सिंहव्याघ्रवृकतरक्ष्वृक्षद्वीपिमार्ज्जारशृगालमृगैर्वारुकाककङ्ककुररचासभासशशघात्युलूकचिल्लिश्येनगृध्रक्रौञ्चभृङ्गराजाञ्जलिकर्णावभञ्जननन्दिमुखमुखानि मसूराकृतिभिः कीलैरवबद्धानि मूलेऽङ्कुशवदावृत्तवराङ्गाण्यस्थिविनष्टशल्योद्धरणार्थमुपदिश्यन्ते" इति तल्लक्षणमुक्तम्। अस्य प्रशंसाऽपि तत्रैव। "निवर्त्तते साध्ववगाहने च शल्यं प्रगृह्णीद्धरते च यस्मात्। यन्त्रेष्वतः कङ्कमुखं प्रधानं स्थानेषु सर्व्वेष्वविकारि चैव"।

**कङ्कर** त्रि०कं सुखं किरति क्षिपति कृ—अच्। कुत्सिते हेमच०। कंजलं भार्य्यतेऽत्र कम्+कृ—आधारे अप्। २तक्रे न०।

**कङ्करोल** पु० कङ्क इव लोलः लस्य रः। अङ्कोठवृक्षे (आँको-

ड़) वङ्गभाषा (टेरा) हिन्दिभाषा । [राजवल्लभः ।
कङ्कलोड्य न० कङ्क इव लोड्यते लोड-ण्यत् । चिञ्चोडमूले
कङ्कवाज पु० कङ्कस्य वाज एव वाजः पक्षोऽस्य । कङ्कपत्रे वाण-
भेदे कङ्कपत्रोऽप्यत्र । कङ्कस्य वाजः जातोऽस्य तार० इतच् ।
कङ्कवाजित कङ्कपत्रयुक्ते सायके । "अताडयदमेयात्मा
नवभिः कङ्कवाजितैः" भा०भी० ११७अ० । [कत्वात्तथात्वम्
कङ्कशत्रु पु० ६त० । दृश्चिपत्रोम् शब्दच० । तस्याः कङ्कमाश-
कङ्कशाय पु० कङ्क इव शेते शी—ण । कुक्कुरे शब्दमाला
कङ्का स्त्री ककि—अच् १गोशीर्षचन्दने शब्दमाला २उग्र-
सेनदुहितृभेदे च कंसशब्दे उदा० ।
कङ्काल पु० कं सुखं शिरो वा कालयति क्षिपति कल-अच् ।
त्वङ्मांसरहितशरीराश्रयेऽस्थिसञ्चये अस्थिपञ्जरे ।
कङ्कालमालिन् पु० कङ्कालानां मालास्त्यस्य इनि । महादेवे
कङ्कालय पु० कङ्कालं याति या—क । देहे ।
कङ्कु पु० ककि-उन् । (काङ्नी) तृणधान्यभेदे विरूपकोषः ।
उग्रसेनस्य पुत्रभेदे कंसभ्रातरि । "कंसः सुनामा न्यग्रोधः
कङ्कुः शङ्कुः सुहूस्तथा । राष्ट्रपालश्च सृष्टिश्च तुष्टिमानुग्र-
सेनजाः" भाग० ६,२४,१४ ।
कङ्कु(ङ्कू)ष्ठ न० कङ्कुः तृणभेदः तत्र तत्समीपे तिष्ठति
स्था—क षत्वम् । पर्व्वतीयमृत्तिकाभेदे । "हिमवत्-
पादशिखरे कङ्कु(ङ्कू)ष्ठं नाम जायते । तत्रैकं नलि-
काख्यं स्यात्तदन्यद्रेणुकं स्मृतम् । पीतप्रभं गुरु स्निग्धं
तत्र श्रेष्ठं च रेणुकम् । कङ्कु(ङ्कू)ष्ठं रेचनं तिक्तं कटूष्णं
वर्ण्यकारकम् । कृमिशोथोदराध्मानगुल्मानाहकफा-
पहम्" भावप्र० अत्र पृषो० कस्य गः कङ्कुष्ठमपि ।
कङ्कूष पु० ककि—ऊषन् । आभ्यन्तरदेहे । "कर्णाभ्यां ते कङ्कू-
षेभ्यः कर्णशूलं विसल्पकम् । सर्वं शीर्षण्यं ते रोगं बहि-
र्निर्मन्त्रयामहे" अथ० ६,८,२ ।
कङ्केरु पु० ककि—एरु । काकभेदे त्रिका० ।
कङ्केलि पु० कम् सुखं तदर्थं केलिरत्र । अशोकवृक्षे राजनि०
कङ्केल्ल पु० ककि-बा-एल्ल । शाखूके शब्दमाला ।
कङ्केल्लि पु० कङ्क-बा० एल्लि पृषो० । अशोकवृक्षे त्रिका० ।
कङ्कह न० कम् खलत्यनेन खल-बा०ड । पापभोगे शब्दमा० ।
कङ्गु स्त्री कं सुखमङ्गति अगयु० कु शकन्धु० । (काङ्निनी)
धान्यभेदे 'सा च चतुर्विधा तासां गुणाः भावप्र० उक्ताः ।
"स्त्रियां कङ्गुः प्रियङ्गुर्द्वे कृष्णरक्तसितास्तथा । पीता,
चतुर्विधा कङ्गुस्तासां पीता वरा स्मृता । कङ्गुस्तु भग्नस-
न्धानवातकृद्बृंहणी गुरुः । रूक्षा श्लेष्महरातीव वाजिनां
गुणकृद् भृशम्" । अप्राणिजातिवाचित्वात् वा ऊङ् ।
"आर्य्यास्तु यवशब्दाद्दीर्घशूकविशेषं प्रतियन्ति म्लेच्छास्तु
कङ्गुम्" अधिकरणमा० स्वार्थे कन् तत्रैव । "कङ्गुका त्रि-
फला लोध्रं काशीशं श्रवणाह्वया" सुश्रु० । इयञ्च ग्राम्य
ओषधिः । "तिलमाषव्रीहियवाः प्रियङ्गवो गोधूमाश्चेति
सप्त ग्राम्या ओषधयः" इति तैत्तिरीयसंहिताभाष्यधृता
श्रुतिः प्रियङ्गुः कङ्गुः । अष्टादशधान्यमध्ये च अस्याग्रह-
णम् अष्टादशधान्यशब्दे ५२५ पृ० तत्प्रमाणम् ।
कङ्गुनी स्त्री कङ्गुः कङ्गुशब्देन नीयते ज्ञायते नी-बा० कर्मणि
ड गौरा० ङीष् । (काङ्गनी) धान्यभेदे राजनि० ।
कङ्गुनीपत्रा स्त्री कङ्गुन्याः पत्रमिव पत्रमस्याः । पण्या-
ख्याख्ये तृणभेदे राजनि० ।
कङ्गुल पु० कङ्गुं लाति ग्रहणात्यनेन ला—बा० घञर्थे
करणे क ६त० । १पाणौ हस्ते शब्दच० ।
कच रवे भ्वा० पर० अक० सेट् । कचति अकचीत् अकाचीत्
चकाच । प्रनिकचति । [कञ्चति अकञ्चीत् कचञ्च ।
कच बन्धे सक० दीप्तौ अक० भ्वादि० पर० इदित् सेट् ।
कच बन्धे सक० दीप्तौ अक० भ्वादि० आत्म० सेट् । कचते अक-
चिष्ट चकचे कचः । "चचाम मधु माध्वीकं स्रक्षा ञ्चाचकचे
वरम्" भट्टिः । कादित्वान्न णत्व प्रनिकचति ।
कच पु० कच—अच् । १केशे, २बृहस्पतिपुत्रे, ३शुष्कव्रणे,
४मेघे शब्दमा० हस्तिन्यां स्त्री० मेदिनी । भावे घ ।
५बन्धे ६शोभायाञ्च । कचार्थचरितञ्च भा०आ० ७६,७७
अ० यथा "जिगीषया ततो देवा वव्रिरेऽङ्गिरसं मुनिम् ।
पौरोहित्येन याज्यार्थे काव्यन्तूशनसं परे । ब्राह्मणौ
तावुभौ नित्यमन्योन्यस्पर्द्धिनौ भृशम् । तत्र देवा निजघ्नु-
र्यान् दानवान् युधि सङ्गतान् । तान् पुनर्जीवयामास
काव्यो विद्याबलाश्रयात् । ततस्ते पुनरुत्थाय योधया-
ञ्चक्रिरे सुरान् । असुरास्तु निजघ्नुर्यान् सुरान् सम-
रमूर्द्धनि । न तान् संजीवयामास बृहस्पतिरुदा-
रधीः । नहि वेद स तां विद्यां यां काव्यो वेत्ति वीर्य्य-
वान् । सञ्जीवनीं ततो देवा विषादमगमन् परम् । ते तु
देवा भयोद्विग्नाः काव्यादुशनसस्तदा । ऊचुः कचमुपा-
गम्य ज्येष्ठं पुत्रं बृहस्पतेः । भजमानान् भजस्वास्मान् कुरु
नः साह्यमुत्तमम् । या सा विद्या निवसति ब्राह्मणेऽ-
मिततेजसि । शुक्रे तामाहर क्षिप्रं भागभाङ्नो भवि-
ष्यसि । वृषपर्व्वसमीपे हि शक्यो द्रष्टुं त्वया द्विजः ।
रक्षते दानवांस्तत्र न स रक्षत्यदानवान् । तमारा-

धयितुं शक्तो भवान् पूर्व्ववयाः कविम्। देवयानीञ्च दयितां सुतां तस्य महात्मनः। त्वमाराधयितुं शक्तो नान्यः कश्चन विद्यते। शीलदाक्षिण्यमाधुर्य्यैराचारेण दमेन च। देवयान्यां हि तुष्टायां विद्यां तां प्राप्स्यसि ध्रुवम्। तथेत्युक्त्वा ततः प्रायाद्बृहस्पतिसुतः कचः। तदाभिपूजितो देवैः समीपं वृषपर्व्वणः। स गत्वा त्वरितो राजन्! देवैः सम्प्रेषितः कचः। असुरेन्द्रपुरे शुक्रं दृष्ट्वा वाक्यमुवाच ह। ऋषेरङ्गिरसः पौत्रं पुत्रं साक्षात् बृहस्पतेः। नाम्ना कचमिति ख्यातं शिष्यं गृह्णातु मां भवान्। ब्रह्मचर्य्यं चरिष्यामि त्वय्यहं परमं गुरौ। अनुमन्यस्व मां ब्रह्मन्! सहस्रं परिवत्सरान्। शुक्र उवाच। कच! सुस्वागतं तेऽस्तु प्रतिगृह्णामि ते वचः। अर्च्चयिष्येऽहमर्च्च्यं त्वामर्च्चितोऽस्तु बृहस्पतिः। वैशम्पायन उवाच। कचस्तु तं तथेत्युक्त्वा प्रतिजग्राह तद्व्रतम्। आदिष्टं कविपुत्त्रेण शुक्रेणोशनसा स्वयम्। व्रतस्य प्राप्तकालं स यथोक्तं प्रत्यगृह्णत। आराधयन्नुपाध्यायं देवयानीञ्च भारत!। नित्यमाराधयिष्यंस्तां युवा यौवनगोचरे। गायन् नृत्यन् वादयंश्च देवयानीमतोषयत्। स शीलयन् देवयानीं कन्यां सम्प्राप्तयौवनाम्। पुष्पैः फलैः प्रेषणैश्च तोषयामास भारत!। देवयान्यपि तं विप्रं नियमव्रतधारिणम्। गायन्ती च ललन्ती च रहः पर्य्यचरत्तदा। पञ्चवर्षशतान्येवं कचस्य चरतो व्रतम्। तत्रातीयुरथो बुद्ध्वा दानवास्तं ततः कचम्। गा रक्षन्तं वने दृष्ट्वा रहस्येकममर्षिताः। जघ्नुर्बृहस्पतेर्द्वेषाद्विद्यारक्षार्थमेव च। हत्वा शालावृकेभ्यश्च प्रायच्छंल्लवशः कृतम्। ततो गावो निवृत्तास्ता अगोपाः स्वन्निवेशनम्। ता दृष्ट्वा रहिता गाश्च कचेनाभ्यागता वनात्। उवाच वचनं काले देवयान्यथ भारत!। देवयान्युवाच। आहुतञ्चाग्निहोत्रन्ते सूर्य्यश्चास्तङ्गतः प्रभो!। अगोपाश्चागता गावः कचस्तात! न दृश्यते। व्यक्तं हतो मृतो वापि कचस्तात भविष्यति। तं विना न च जीवेयमिति सत्यं ब्रवीमि ते। शुक्र उवाच। अयमेहीति संशब्द्य मृतं संजीवयाम्यहम्। ततः सञ्जीवनीं विद्यां प्रयुज्य कचमाह्वयत्। आहूतः प्रादुरभवत् कचो हृष्टोऽथ विद्यया। हतोऽहमिति चाचख्यौ पृष्टो ब्राह्मणकन्यया। स पुनर्देवयान्योक्तः पुष्पाहारो यदृच्छया। वनं ययौ कचो विप्रोददृशुर्दानवाश्च तम्। पुनस्तं पेषयित्वा तु समुद्राम्भस्यमिश्रयन्। चिरं गतं पुनः कन्या पित्रे तं सम्न्यवेदयत्। विप्रेण पुनराहूतो विद्यया गुरुदेहजः। पुनरावृत्य तद्वृत्तं न्यवेदयत तद्यथा। ततस्तृतीयं हत्वा तं दग्ध्वा कृत्वा च चूर्णशः। प्रायच्छन् ब्राह्मणायैव सुरायामसुरास्तदा। देवयान्यथ भूयोऽपि पितरं वाक्यमब्रवीत्। पुष्पाहारः प्रेषणकृत् कचस्तात! न दृश्यते। शुक्र उवाच। बृहस्पतेः सुतः पुत्त्रि! कचः प्रेतगतिं गतः। विद्यया जीवितोऽप्येवं हन्यते करवाणि किम्। मैवं शुचो मा रुदो देवयानि! न त्वादृशी मर्त्यमनु प्रशोचेत्। यस्यास्तव ब्रह्म च ब्राह्मणाश्च सेन्द्रा देवा वसवोऽथाश्विनौ च। सुरद्विषश्चैव जगच्च सर्व्वमुपस्थाने सन्नमन्ति प्रभावात्। अशक्योऽसौ जीवयितुं द्विजातिः सञ्जीवितो बध्यते चैव भूयः। देवयान्युवाच। यस्याङ्गिरा वृद्धतमः पितामहो बृहस्पतिश्चापि पिता तपोनिधिः। ऋषेश्च पौत्त्रं तमथापि पुत्त्रं कथं न शोचेयमहं न रुद्याम्। स ब्रह्मचारी च तपोधनश्च सदोत्थितः कर्म्मसु चैव दक्षः। कचस्य मार्गं प्रतिपत्स्ये न भोक्ष्ये प्रियो हि मे तात! कचोऽभिरूपः। वैशम्पायन उवाच। स पीडितो देवयान्या महर्षिः समाह्वयत् संरम्भाच्चैव काव्यः। असंशयं मामसुरा द्विषन्ति ये मे शिष्यानागतान् सूदयन्ति। अब्राह्मणं कर्त्तुमिच्छन्ति रौद्रास्ते मां यथा प्रस्तुतं दानवैर्हि। अप्यस्य पापस्य भवेदिहान्तः कं ब्रह्महत्या न दहेदपीन्द्रम्। गुरोर्भीतो विद्यया चोपहूतः शनैर्वाचं जठरे व्याजहार। तमब्रवीत् केन पथोपनीतो ममोदरे तिष्ठसि ब्रूहि विप्र!। कच उवाच। भवत्प्रसादान्न जहाति मां स्मृतिः स्मरामि सर्व्वं यच्च यथा च वृत्तम्। न त्वेवं स्यात्तपसः सङ्क्षयो मे क्लेशं ततो घोरमिमं सहामि। असुरैः सुरायां भवतोऽस्मि दत्तो हत्वा दग्ध्वा चूर्णयित्वा च काव्य!। ब्राह्मीं मायामासुरी चैव माया त्वयि स्थिते कथमेवातिवर्त्तेत्। शुक्र उवाच। किन्ते प्रियं करवाण्यद्य वत्से! वधेन मे जीवितं स्यात् कचस्य। नान्यत्र कुक्षेर्मम भेदनेन दृश्येत् कचो मद्गतो देवयानि!। देवयान्युवाच। द्वौ मां शोकावग्नितुल्यौ दहेतां कचस्य नाशस्तव चैवोपघातः। कचस्य नाशे मम नास्ति शर्म्म तवोपघाते जीवितुं नास्मि शक्ता। शुक्र उवाच। संसिद्धरूपोऽसि बृहस्पतेः सुत यत्त्वां भक्तं भजते देवयानी। विद्यामिमां प्राप्नुहि जीवनीं त्वं नचेदिन्द्रः कचरूपी त्वमद्य। न निवर्त्तेत् पुनर्ज्जीवन् कश्चिदन्यो ममोदरात्। ब्राह्मणं वर्ज्जयित्वैकं तस्माद्विद्यामवाप्नुहि। पुत्त्रो भूत्वा भावय भावितो मामस्माद्देहादुपनिष्क्रम्य तात!। समी-

ज्ञेथा धर्म्मवतीमवेक्ष्यां गुरोः सकाशात् प्राप्य विद्यां स-विद्यः । वैशम्पायन उवाच । गुरोः सकाशात् समवाप्य विद्यां भित्त्वा कुक्षिं निर्विचक्राम विप्रः । कचोऽभिरूपस्तत्क्षणं ब्राह्मणस्य शुक्लात्यये पौर्णमास्यामिवेन्दुः । दृष्ट्वा च तं पतितं ब्रह्मराशिमुत्थापयामास मृतं कचोऽपि । विद्यां सिद्धां तामवाप्याभिवाद्य कचस्ततस्तं गुरुमित्युवाच । यः श्रोत्रयोरमृतं स निषिञ्चेद्विद्यामविद्यस्य यथा ममायम् । तं मन्येऽहं पितरं मातरञ्च तस्मै न द्रुह्येत् कृतमस्य जानन् । ऋतस्य दातारमनुत्तमस्य निधिं निधीनां चतुरन्वयानाम् । ये नाद्रियन्ते गुरुमर्च्चनीयं पापाल्लोकांस्ते व्रजन्त्यप्रतिष्ठाः । वैशम्पायन उवाच । सुरापानाद्वञ्चनां प्राप्य विद्वान् संज्ञानाशं चैव महातिघोरम् । दृष्ट्वा कचञ्चापि तथाभिरूपं पीतं तथा सुरया मोहितेन । समन्युरुत्थाय महानुभावस्तदोशना विप्रहितं चिकीर्षुः । काव्यः स्वयं वाक्यमिदं जगाद सुरापाणं प्रति वै जातशङ्कः । यो ब्राह्मणोऽद्यप्रभृतीह कश्चिन्मोहात् सुरां पास्यति मन्दबुद्धिः । अपेतधर्म्मा ब्रह्महा चैव स स्यादस्मिंल्लोके गर्हितः स्यात् परे च । मया चेमां विप्रधर्म्मोक्तिसीमां मर्य्यादां वै स्थापितां सर्व्वलोके । सन्तो विप्राः शुश्रुवांसो गुरूणां देवा लोकाश्चोपशृण्वन्तु सर्व्वे । इतीदमुक्त्वा स महानुभावस्तपोनिधीनां निधिरप्रमेयः । तान् दानवान् दैवविमूढबुद्धीनिदं समाहूय वचोऽभ्युवाच । आचक्षे वो, दानवा वालिशाः स्थ सिद्धः कचो वत्स्यति मत्सकाशे । सञ्जीवनीं प्राप्य विद्यां महार्थां तुल्यप्रभावो ब्राह्मणो ब्रह्मभूतः । वैशम्पायन उवाच । एतावदुक्त्वा वचनं विरराम स भार्गवः । दानवा विस्मयाविष्टाः प्रययुः स्वं निवेशनम् । गुरोरुष्य सकाशे तु दशवर्षशतानि सः । अनुज्ञातः कचो गन्तुमियेष त्रिदशालयम् ।

वैशम्पायन उवाच । समाप्तव्रतं तन्तु विसृष्टं गुरुणा तदा । प्रस्थितं त्रिदशावासं देवयान्यब्रवीदिदम् । ऋषेरङ्गिरसः पौत्र ! वृत्तेनाभिजनेन च । भ्राजसे विद्यया चैव तपसा च दमेन च । ऋषिर्यथाङ्गिरा मान्यः पितुर्म्मम महायशाः । तथा मान्यश्च पूज्यश्च मम भूयो बृहस्पतिः । एवं ज्ञात्वा विजानीहि यद्ब्रवीमि तपोधन ! । व्रतस्थे नियमोपेते यथा वर्त्ताम्यहं त्वयि । स समाप्तविद्यो मां भक्तां भजितुमर्हसि । गृहाण विधिवत् पाणिं मम मन्त्रपुरस्कृतम् । कच उवाच । पूज्यो मान्यश्च भगवान् यथा तव पिता मम । तथा त्वमनवद्याङ्गि ! पूजनीयतरा मम । प्राणेभ्योऽपि प्रियतरा भार्गवस्य महात्मनः । त्वं भद्रे ! धर्म्मतः पूज्या गुरुपुत्री सदा मम । यथा मम गुरुर्नित्यं मान्यः शुक्रः पिता तव । देवयानि ! तथैव त्वं नैवं मां वक्तुमर्हसि । देवयान्युवाच । गुरुपुत्रस्य पुत्रो वै न तु त्वमपि मे पितुः । तस्मात् पूज्यश्च मान्यश्च ममापि त्वं द्विजोत्तम । असुरैर्हन्यमाने च कच ! त्वयि पुनः पुनः । तदा प्रभृति या प्रीतिस्तां त्वमद्य स्मरस्व मे । सौहार्द्दे चानुरागे च वेत्थ मे भक्तिमुत्तमाम् । न मामर्हसि धर्मज्ञ । त्यक्तुं भक्तामनागसम् । कच उवाच । अनियोज्ये नियोगे मां नियुनक्षि शुभव्रते ! । प्रसीद सुभ्रु ! त्वं मह्यं गुरोर्गुरुतरा शुभे ! । यत्रोषितं विशालाक्षि ! त्वया चन्द्रनिभानने ! । तत्राहमुषितो भद्रे ! कुक्षौ काव्यस्य भाविनि ! । भगिनी धर्मतो मे त्वं मैवं वोचः सुमध्यमे ! । सुखमस्म्युषितो भद्रे न मन्युर्विद्यते मम । आपृच्छे त्वां गमिष्यामि शिवमाशंस मे पथि । अविरोधेन धर्मस्य स्मर्त्तव्योऽस्मि कथान्तरे । अप्रमत्तोत्थिता नित्यमाराधय गुरुं मम । देवयान्युवाच । यदि मां धर्मकामार्थे प्रत्याख्यास्यसि याचितः । ततः कच ! न ते विद्या सिद्धिमेषा गमिष्यति । कच उवाच । गुरुपुत्रीति कृत्वाहं प्रत्याचक्षे न दोषतः । गुरुणा चाननुज्ञातः काममेवं शपस्व माम् । आर्षं धर्मं ब्रुवाणोऽहं देवयानि ! यथा त्वया । शप्तो नार्होऽस्मि शापस्य कामतोऽद्य न धर्मतः । तस्माद्भवत्या यः कामो न तथा स भविष्यति । ऋषिपुत्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति । फलिष्यति न ते विद्या यत्त्वं मामात्थ तत्तथा । अध्यापयिष्यामि तु यं तस्य विद्या फलिष्यति । वैशम्पायन उवाच । एवमुक्त्वा द्विजश्रेष्ठो देवयानीं कचस्तदा । त्रिदशेशालयं शीघ्रं जगाम द्विजसत्तमः" ।

**कचग्रह** पु० कचानां ग्रहोयत्र । केशाकर्षणेन धर्षणे "शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः" "अग्रस्पृष्ट रुरुधः कचग्रहैः" रघुः । [हृदस्थाने त्रिका० ।

**कचङ्गन** न० कच–दीप्तौ अच् कर्म्म० शकन्ध्वा० । करमुन्य

**कचङ्गल** पु० कच–बा० अङ्गलच् । समुद्रे त्रिका० ।

**कचप** न० कच–कपन् । शाकपत्रे उज्ज्वलदत्तः ।

**कचपक्ष** पु० कचानां समूहः कच+पक्ष । केशसमूहे अमरः एवं केशपक्षादयोऽप्यत्र ।

**कचपाश** पु०कचानां समूहः कच+पाशप् । केशसमूहे अमरः

एवं केशपाशादयोऽप्यत्र । "केशपाशे मनाये" विक्र० "तं केशपाशं प्रसमीक्ष्य कुर्य्युः" कुमा० ।

**कचमाल** पु० कचं कचकान्तिं मलते मल–धृतौ अण् । उप०स० । धूमे हारा० ।

**कचरिपुफला** स्त्री कचस्य रिपुः फलमस्याः । शठोवृक्षे राजनि० । [ केचहस्तादयोऽप्यत्र ।

**कचहस्त** पु० कचानां समूहः कच+हस्त । केशसमूहे अमरः

**कचाकचि** अव्य० कचेषु कचेषु गृहीत्वा प्रवृत्तं युद्धम् कर्म्म-व्यतीहारे स० इच् समा० पूर्व्वदीर्घश्च । केशेषु केशेषु ग्रहणपूर्व्वके प्रवृत्ते युद्धे एवं केशाकेशिप्रभृतयोऽप्यत्र अव्य०।

**कचाकु** त्रि० कच इव अकति वक्रं गच्छति अक–उण् । १दुःशीले तस्य हि वक्रगतित्वात्तथात्वम् २सर्पे पु० ३दुरा-धर्षे त्रि० मेदि० । तयोः कुटिलगतित्वात् तथात्वम् ।

**कचाग्र** न० ६त० । १केशाग्रभागे २तत्परिमिते त्रसरेणुष्ट-कभागे च । बालाग्रादयोऽप्यत्र "बालाग्रशतभागस्य शत-धा कल्पितस्य च भागोजीवः स विज्ञेयः" श्रुतिः ।

**कचाचित** त्रि० कचैरालुलायितैः आचितः । विकीर्ण्णकेशे "कचाचितौ विष्वगिवागजौ गजौ" किरा० । [ङीप् ।

**कचाटुर** पुंस्त्री कच इवाटति अट+उरच् । दात्यूहे स्त्रियां

**कचामोद** पु०कचमामोदयति आ+मुद-णिच्–अच् । (वाला) इति ख्याते गन्धद्रव्ये । [देशादौ ।

**कचिक** त्रि० कच+चतुरर्थ्यां कुमुदा०ठक् । केशादूरभव-

**कचु** स्त्री कच–उन् । स्वनामख्याते कन्दभेदे "कदली दाडिमी धान्यं हरिद्रा मानकं कचुः । विल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिकाः" दुर्गो०त० । कचुस्था कालिका ।

**कचेल** न० कच्यते बध्यतेऽनेन कच–बा० एलच् । लेख्यपत्र बन्धने सूत्रादौ त्रिका० । [षिते मेदिन्यमरौ ।

**कच्चट** न० कुत्सितं चटति चट-अच् बा० कोः कत् । कुत्-

**कच्चर** त्रि० कुत्सितं चरति चर–अच् कोः कद् । कुत्सिते मेदिन्यमरौ ।

**कच्चित्** अव्य० काम्यते कम–णिच्–कन् चीयते निश्चीयते यस्मात् कम्+चि–क्विप् पृषो० मस्य दः । स्वाभिलषित-ज्ञापनाय कृते कामप्रवेदनरूपे १प्रश्ने, २हर्षे, ३मङ्गले च । कच्चिन्महर्षेस्त्रिविधं तपस्तत्""कच्चिदुपप्लवोवः"इति च रघुः।

**कच्चिदध्याय** पु० भारतान्तर्गते नारदेन कृतप्रश्नेन भङ्ग्या रा-जनीतिज्ञापके ग्रन्थभेदे स च भा०सभा०५अ०

"नारद उवाच । कच्चिदर्थाश्च कल्पन्ते धर्म्मे च रमते मनः । सुखानि चानुभूयन्ते मनश्च न विहन्यते । कच्चि-दाचरितां पूर्व्वैर्नरदेव ! पितामहैः । वर्त्तसे वृत्तिमक्षुद्रां धर्म्मार्थसहितां त्रिषु । कच्चिदर्थेन वा धर्म्मं धर्म्मेणार्थ-मथापि वा । उभौ वा प्रीतिसारेण न कामेन प्रबा-धसे । कच्चिदर्थञ्च धर्म्मञ्च कामञ्च जयतां वर ! । विभज्य काले कालज्ञ! समं वरद ! सेवसे । कच्चिद्राजगुणैः षड्भिः सप्तोपायांस्तथानघ ! । बलाबलेन सम्यक् त्वं चतुर्द्दश परोक्षसे । कच्चिदात्मानमन्वीक्ष्य परांश्च जयतां वर ! । तथा सन्धाय कर्म्माणि अष्टौ भारत! सेवसे । कच्चित् प्रकृ-तयः सप्त न लुप्ता भरतर्षभ ! । आढ्यास्तथा व्यसनिनः स्वनुरक्ताश्च सर्व्वशः । कच्चिन्न कृतकैर्दूतैर्ये चाप्यपरि-शङ्किताः । त्वत्तो वा तव चामात्यैर्भिद्यते मन्त्रितं तथा । मित्रोदासीनशत्रूणां कच्चिद्वेत्सि चिकीर्षितम् । कच्चित् सन्धिं यथाकालं विग्रहं चोपसेवसे । कच्चिद्वृत्तिमुदासीने मध्यमे चानुमन्यसे । कच्चिदात्मसमा वृद्धाः शुद्धाः सम्बोधन-क्षमाः । कुलीनाश्चानुरक्ताश्च कृतास्ते वीर! मन्त्रिणः । वि-जयो मन्त्रमूलो हि राज्ञो भवति भारत! । कच्चित् संवृत-मन्त्रैस्ते अमात्यैः शास्त्रकोविदैः । राष्ट्रं सुरक्षितं तात ! शत्रुभिर्न विलुप्यते । कच्चिन्निद्रावशं नैषि कच्चित् कालेऽपि बुध्यसे । कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित् । कच्चिन्मन्त्र-यसे नैकः कच्चिन्न बहुभिः सह । कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रं परिधावति । कच्चिदर्थान् विनिश्चित्य लघुमूलान् महोदयान् । क्षिप्रमारभसे कर्त्तुं न विघ्नयसि तादृशान् । कच्चिन्न सर्व्वे कर्म्मान्ताः परोक्षास्ते विशङ्किताः । सर्व्वे वा पुनरुत्सृष्टाः संसृष्टं चात्र कारणम् । आप्तैरलुब्धैः क्रमिकैस्ते च कच्चिदनुष्ठिताः । कच्चिद्राजन् ! कृतान्येव कृत-प्रायाणि वा पुनः । विदुस्ते वीर ! कर्म्माणि नानवाप्तानि कानि चित् । कच्चित् कारुणिका धर्म्मे सर्व्वशास्त्रेषु कोविदाः । कारयन्ति कुमारांश्च योधमुख्यांश्च सर्वशः । कच्चित् सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम् । पण्डि-तो ह्यर्थकृच्छ्रेषु कुर्य्यान्निःश्रेयसं परम् । कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः । यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्द्धरैः । एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः । राजानं राजपुत्रं वा प्रापयेन्महतीं श्रिय-म् । कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च । त्रिभि-स्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः । कच्चिद्द्विषाम-विदितः प्रतिपन्नश्च सर्वदा । नित्योद्युक्तो रिपून् सर्वान् वीक्षसे रिपुसूदन ! । कच्चिद्विनयसम्पन्नः कुलपुत्रो बहु-श्रुतः । अनसूयुरसङ्कीर्णः सत्कृतस्ते पुरोहितः ।

कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः । हुतञ्च होष्यमाणञ्च काले वेदयते सदा । कच्चिदङ्गेषु निष्णातो ज्यौतिषः प्रतिपादकः । उत्पातेषु हि सर्व्वेषु दैवज्ञः कुशलस्तव । कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः । जघन्याश्च जघन्येषु भृत्याः कर्म्मसु योजिताः । अमात्यानुपधातीतान् पितृपैतामहान् शुचीन् । श्रेष्ठान् श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्म्मसु । कच्चिन्नोग्रेण दण्डेन भृशमुद्विजसे प्रजाः । राष्ट्रं तवानुशासन्ति मन्त्रिणो भरतर्षभ ! । कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा । उग्रं प्रतिग्रहीतारं कामयानमिव स्त्रियः । कच्चिद्धृष्टश्च शूरश्च मतिमान् धृतिमान् शुचिः । कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तव । कच्चिद्बलस्य ते मुख्याः सर्व्वयुद्धविशारदाः । धृष्टावदाता विक्रान्तास्त्वया सत्कृत्य मानिताः । कच्चिद्बलस्य भक्तञ्च वेतनञ्च यथोचितम् । संप्राप्तकाले दातव्यं ददासि न विकर्षसि । कालातिक्रमणादेते भक्तवेतनयोर्भृताः । भर्त्तुः कुर्व्वन्ति दौर्गत्यात् सोऽनर्थः सुमहान् स्मृतः । कच्चित् सर्व्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः । हृष्टाः प्राणांस्तवार्थेषु संत्यजन्ति सदा युधि । कच्चिन्नैको बहूनर्थान् सर्व्वशः साम्परायिकान् । अनुशास्ति यथाकामं कामात्मा शासनातिगः । कच्चित् पुरुषकारेण पुरुषः कर्म्म शोभयन् । लभते मानमधिकं भूयो वा भक्तवेतनम् । कच्चिद्विद्याविनीतांश्च नरान् ज्ञानविशारदान् । यथार्हं गुणतश्चैव दानेनाभ्युपपद्यसे । कच्चिद्दारान् मनुष्याणां तवार्थे मृत्युमीयुषाम् । व्यसनं चाभ्युपेतानां बिभर्षि भरतर्षभ ! । कच्चिद्भयादुपगतं क्षीणं वा रिपुमागतम् । युद्धे वा विजितं पार्थ ! पुत्त्रवत् परिरक्षसि । कच्चित्त्वमेव सर्व्वस्याः पृथिव्याः पृथिवीपते ! । समश्चानभिशङ्क्यश्च यथा माता यथा पिता । कच्चिद्व्यसनिनं शत्रुं निशम्य भरतर्षभ ! । अभियासि जवेनैव समीक्ष्य त्रिविधं बलम् । यात्रामारभसे दिष्ट्या प्राप्तकालमरिन्दम ! । पार्ष्णिमूलञ्च विज्ञाय व्यवसायं पराजयम् । बलस्य च महाराज ! दत्त्वा वेतनमग्रतः । कच्चिच्च बलमुख्येभ्यः परराष्ट्रे परन्तप ! । उपच्छन्नानि रत्नानि प्रयच्छसि यथार्हतः । कच्चिदात्मानमेवाग्रे विजित्य विजितेन्द्रियः । परान् जिगीषसे पार्थ ! प्रमत्तानजितेन्द्रियान् । कच्चित्ते यास्यतः शत्रून् पूर्व्वं यान्ति स्वनुष्ठिताः । साम दानञ्च भेदश्च दण्डश्च विधिवद्गुणाः । कच्चिन्मूलं दृढं कृत्वा परान् यासि विशाम्पते ! । तांश्च विक्रमसे जेतुं जित्वा च परिरक्षसि । कच्चिदष्टाङ्गसंयुक्ता चतुर्व्विधबला चमूः । बलमुख्यैः सुनीता ते द्विषतां प्रतिबाधिनी । कच्चिल्लवञ्च मुष्टिञ्च परराष्ट्रे परन्तप ! । अविहाय महाराज ! निहंसि समरे रिपून् । कच्चित् स्वपरराष्ट्रेषु बहवोऽधिकृतास्तव । अर्थान् समधितिष्ठन्ति रक्षन्ति च परस्परम् । कच्चिदभ्यवहार्य्याणि गात्रसंघर्षणानि च । घ्रेयाणि च महाराज ! रक्षन्त्यनुमतास्तव । कच्चित् कोषश्च कोष्ठञ्च वाहनं द्वारमायुधम् । आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः । कच्चिदाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशाम्पते ! । रक्षस्यात्मानमेवाग्रे तांश्च स्वेभ्यो मिथश्च तान् । कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु च । प्रतिजानन्ति पूर्व्वाह्णे व्ययं व्यसनजं तव । कच्चिदायस्य चार्द्धेन चतुर्भागेण वा पुनः । पादभागैस्त्रिभिर्व्वापि व्ययः संशोध्यते तव । कच्चिज्ज्ञातीन् गुरून् वृद्धान् बणिजः शिल्पिनः श्रितान् । अभीक्ष्णमनुगृह्णासि धनधान्येन दुर्गतान् । कच्चिच्चायव्यये युक्ताः सर्व्वे गणकलेखकाः । अनुतिष्ठन्ति पूर्व्वाह्णे नित्यमायव्ययं तव । कच्चिदर्थेष्वसंमूढान् हितकामाननुप्रियान् । नापकर्षसि कर्म्मभ्यः पूर्व्वमप्राप्य किल्विषम् । कच्चिद्विदित्वा पुरुषानुत्तमाधममध्यमान् । त्वं कर्म्मस्वनुरूपेषु नियोजयसि भारत ! । कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशाम्पते ! । अप्राप्तव्यवहारा वा तव कर्म्मस्वनिष्ठिताः । कच्चिन्न चौरैर्लुब्धैर्वा कुमारैः स्त्रीवशेन वा । त्वया वा पीड्यते राष्ट्रं कच्चित्तुष्टाः कृषीवलाः । कच्चिद्राष्ट्रे तडागानि पूर्णानि च बृहन्ति च । भागशो विनिविष्टानि न कृषिर्दैवमातृका । कच्चिन्न बीजं भक्तञ्च कर्षकस्यावसीदति । पादिकञ्च शतं वृद्ध्या ददास्यृणमनुग्रहम् । कच्चित् स्वनुष्ठिता तात ! वार्त्ता ते साधुभिर्ज्जनैः । वार्त्तायां संश्रितस्तात लोकोऽयं सुखमेधते । कच्चिच्छूराः कृतप्रज्ञाः पञ्च पञ्च स्वनुष्ठिताः । क्षेमं कुर्व्वन्ति संहत्य राजन् ! जनपदे तव । कच्चिन्नगरगुप्त्यर्थं ग्रामा नगरवत् कृताः । ग्रामवच्च कृताः प्रान्तास्ते च सर्व्वे त्वदर्पणाः । कच्चिद्बलेनानुगताः समानि विषमाणि च । पुराणि चौरा निघ्नन्तश्चरन्ति विषये न ते । कच्चित् स्त्रियः सान्त्वयसि कच्चित्ताश्च सुरक्षिताः । कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे । कच्चिदात्ययिकं श्रुत्वा तदर्थमनुचिन्त्य च । प्रियाण्यनुभवन् शेषे न त्वमन्तःपुरे नृप ! । कच्चित् द्वौ प्रथमौ यामौ रात्रेः सुप्त्वा विशाम्पते ! । संचिन्तयसि

धर्म्मार्थौ याम उत्थाय पश्चिमे । कच्चिद्दर्शयसे नित्यं मनुष्यान् समलङ्कृतः । उत्थाय काले कालज्ञैः सह पाण्डव ! मन्त्रिभिः । कच्चिद्रक्ताम्बरधराः खड्गहस्ताः स्वलङ्कृताः । उपासते त्वामभितो रक्षणार्थमरिन्दम ! । कच्चिद्दण्ड्येषु यमवत् पूज्येषु च विशाम्पते ! । परीक्ष्य वर्त्तसे सम्यगप्रियेषु प्रियेषु च । कच्चिच्छारीरमाबाधमौषधैर्नियमेन वा । मानसं वृद्धसेवाभिः सदा पार्थापकर्षसि । कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः । सुहृदश्चानुरक्ताश्च शरीरे ते हिताः सदा । कच्चिन्न लोभान्मोहाद्वा मानाद्वापि विशाम्पते ! । अर्थिप्रत्यर्थिनः प्राप्तान् पश्यसि कथञ्चन । कच्चिन्न लोभान्मोहाद्वा विश्रम्भात् प्रणयेन वा । आश्रितानां मनुष्याणां वृत्तिं त्वं संरुणत्सि वै । कच्चित् पौरा न सहिता ये च ते राष्ट्रवासिनः । त्वया सह विरुध्यन्ते परैः क्रीताः कथञ्चन । कच्चिन्न दुर्ब्बलः शत्रुर्बलेन परिपीडितः । मन्त्रेण बलवान् कश्चिदुभाभ्यां वा कथञ्चन । कच्चित् सर्व्वेऽनुरक्तास्त्वां भूमिपालाः प्रधानतः । कच्चित् प्राणांस्त्वदर्थेषु संत्यजन्ति त्वयादृताः । कच्चित्ते सर्व्वविद्यासु गुणतोऽर्च्चा प्रवर्त्तते । ब्राह्मणानाञ्च साधूनां तव निःश्रेयसी शुभा । कच्चिद्धर्म्मे त्रयीमूले पूर्व्वैराचरिते जनैः । वर्त्तमानस्तथा कर्त्तुं तस्मिन् कर्म्मणि वर्त्तसे । कच्चित्तव गृहेऽन्नानि स्वादून्यश्नन्ति वै द्विजाः । गुणवन्ति गुणोपेतास्तवाध्यक्षं सदक्षिणम् । कच्चित् क्रतूनेकचित्तो वाजपेयांश्च सर्व्वशः । पुण्डरीकांश्च कार्त्स्न्येन यतसे कर्त्तुमात्मवान् । कच्चिज्ज्ञातीन् गुरून् वृद्धान् दैवतांस्तापसानपि । चैत्यांश्च वृक्षान् कल्याणान् ब्राह्मणांश्च नमस्यसि । कच्चिच्छोको न मन्युर्व्वा त्वया प्रोत्पाद्यतेऽनघ ! । अपि मङ्गलहस्तश्च जनः पार्श्वेऽनुतिष्ठति । कच्चिदेषा च ते बुद्धिर्वृत्तिरेषा च तेऽनघ । आयुष्या च यशस्या च धर्म्मकामार्थदर्शिनी । एतया वर्त्तमानस्य बुद्ध्या राष्ट्रं न सीदति । विजित्य च महीं राजा सोऽत्यन्तं सुखमेधते । कच्चिदार्य्यो विशुद्धात्मा क्षारितश्चौरकर्म्मणि । अदृष्टशास्त्रकुशलैर्न लोभाद्बध्यते शुचिः । दुष्टो गृहीतस्तत्कारी तज्ज्ञैर्दृष्टः सकारणः । कच्चिन्न मुच्यते स्तेनो द्रव्यलोभान्नरर्षभ ! । उत्पन्नान् कच्चिदाढ्यस्य दरिद्रस्य च भारत । अर्थान्न मिथ्या पश्यन्ति तवामात्या हृता धनैः । नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् । अदर्शनं ज्ञानवतामालस्यं क्षिप्तचित्तताम् । एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम् । निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् । अमङ्गल्यप्रयोगञ्च प्रसङ्गं विषयेषु च । कच्चित्त्वं वर्ज्जयस्येतान् राजदोषांश्चतुर्द्दश । प्रायशो यैर्विनश्यन्ति कृतमूला हि पार्थिवाः । कच्चित्ते सफला वेदाः कच्चित्ते सफलं धनम् । कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् । युधिष्ठिर उवाच । कथं वै सफला वेदाः कथं वै सफलं धनम् । कथं वै सफला दाराः कथं वै सफलं श्रुतम् । नारद उवाच । अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् । रतिपुत्त्रफला दाराः शीलवृत्तफलं श्रुतम् । वैशम्पायन उवाच । एतदाख्याय स मुनिर्नारदो वै महातपाः । पप्रच्छानन्तरमिदं धर्म्मात्मानं युधिष्ठिरम् । नारद उवाच । कच्चिदभ्यागता दूराद्वणिजो लाभकारणात् । यथोक्तमवहार्य्यन्ते शुल्कं शुल्कोपजीविभिः । कच्चित्ते पुरुषा राजन् पुरे राष्ट्रे च मानिताः । उपानयन्ति पण्यानि उपधाभिरवञ्चिताः । कच्चिच्छृणोषि वृद्धानां धर्म्मार्थसहिता गिरः । नित्यमर्थविदां तात ! तथा धर्मार्थदर्शिनाम् । कच्चित्ते कृषितन्त्रेषु गोषु पुष्पफलेषु च । धर्मार्थञ्च द्विजातिभ्यो दीयेते मधुसर्पिषी । द्रव्योपकरणं किञ्चित् सर्व्वदा सर्व्वशिल्पिनाम् । चातुर्मास्यावरं सम्यक् नियतं संप्रयच्छसि । कच्चित् कृतं विजानीषे कर्त्तारञ्च प्रशंससि । सतां मध्ये महाराज ! सत्करोषि च पूजयन् । कच्चित् सूत्राणि सर्व्वाणि गृह्णासि भरतर्षभ ! । हस्तिसूत्राश्वसूत्राणि रथसूत्राणि वा विभो । कच्चिदभ्यस्यते सम्यग्गृहे ते भरतर्षभ ! । धनुर्व्वेदस्य सूत्रं वै यन्त्रसूत्रञ्च नागरम् । कच्चिदस्त्राणि सर्व्वाणि ब्रह्मदण्डश्च तेऽनघ । विषयोगास्तथा सर्व्वे विदिताः शत्रुनाशनाः । कच्चिदग्निभयाच्चैव सर्व्वं व्यालभयात्तथा । रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि । कच्चिदन्धांश्च मूकांश्च पङ्गून् व्यङ्गानबान्धवान् । पितेव पासि धर्म्मज्ञ ! तथा प्रव्रजितानपि । षडनर्था महाराज ! कच्चित्ते पृष्ठतः कृताः । निद्रालस्यं भयं क्रोधो मार्द्दवं दीर्घसूत्रता । वैशम्पायन उवाच । एताः कुरूणामृषभो महात्मा श्रुत्वा गिरो ब्राह्मणसत्तमस्य । प्रणम्य पादावभिवाद्य तुष्टो राजाब्रवीन्नारदं देवरूपम् । युधिष्ठिर उवाच । एवं करिष्यामि यथा त्वयोक्तं प्रज्ञा हि मे भूय एवाभिवृद्धा । उक्त्वा तथा चैव चकार राजा लेभे महीं सागरमेखलाञ्च" ।

कच्छ त्रि॰ केन जलेन कृणाति दीप्यते छाद्यते वा कृ—कद— बा॰ ड । १जलप्राये देशे । "स्वच्छन्दोच्छलदच्छ-

कच्छकुहरच्छातेतराम्बुच्छटा” काव्यप्र० “कमूचरैः कच्छभुवां प्रदेशः” माघः। २तटे ३नौकाङ्गे च पु० ४परिधानाञ्चले, स्त्री (काछा) हेम० ५वाराह्याम्, ६चीरिकायाञ्च (झिल्लि) स्त्री मेदि० ७देशभेदे पु०ब० च देशः वृह० सं० कूर्म्मविभागे दक्षिणस्यां दिशि उक्तः “अथ दक्षिणेन लङ्कात्युपक्रम्य” कच्छोऽथ कुञ्जरदरी सताम्रपर्णीति विज्ञेयाः” तत्सीमा च “गणेश्वरात् पूर्व्वभागे समुद्रस्योत्तरे तटे। कच्छदेशः समाख्यातः” शक्तिसङ्गम० त० उक्ता। ८तुन्नवृक्षे पु० (तुँद) हेम०। ९सुखसम्पुटे १०आकाशाच्छादने ११कूर्म्मकर्परे च निरु० कच्छपशब्दे विवृतिः कक्षाशब्दे उदा०।

**कच्छक** पु० कच्छ+संज्ञायां कन्। तुन्नवृक्षे (तुँद) मेदिनिः

**कच्छटिका** स्त्री कच्छः कच्छप्रदेशमटति अट–अच् शक० संज्ञायां कन् अत इत्त्वम्। १कच्छायाम् (काछा) २वस्त्राञ्चले” शब्दार्थर०।

**कच्छप** पुंस्त्री “कच्छमात्मनो मुखसंपुटं पाति सहि किञ्चिद्दृष्ट्वा शरीर एव मुखसम्पुटं प्रवेशयति संपुटे हि कच्छशब्दः प्रसिद्धः प्राचिनाच्यकच्छपुट इति। कच्छेन कटाहेन (कर्परेण) इतराङ्गाणि पाति वा। अथ वा कच्छेन मुखसम्पुटेन पिबतीति कच्छः खमाकाशं छादयतिः कच्छः। कच्छः कच्छदः अयमपीतरो नदीकच्छ एतदीयमुदकं तेन च्छाद्यते” इति च निरुक्तोक्तेः कच्छं पाति कच्छेन पाति वा कच्छेन पिबतीति वा पा–ड। १कूर्म्मे स्त्रियां जातित्वात् ङीष् सा च २वीणाभेदे ३कच्छपस्त्रियाञ्च। ४क्षुद्ररोगभेदे स्त्री ५कुबेरनिधिभेदे ६मल्लबन्धभेदे च पु० मेदि०। कच्छपीरोगश्च भाव० प्रका० दर्शितः “ग्रथिताः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः। कफानिलाभ्यां पिडकाः सा स्मृता कच्छपी बुधैः” कच्छपोन्नता मध्ये प्रोन्नता प्रान्ते नता। इयञ्च प्रमेहरोगोपेक्षायां दशविधपिडकान्तर्गता। निधिभेदः एकादिशब्दे नवसंख्यायां दर्शितस्तत्र द्रष्टव्यः। स्वार्थे कन् कच्छपिकाऽपि रोगभेदे। “सदाहा कूर्म्मसंस्थाना ज्ञेया कच्छपिका बुधैः” वैद्यकम्। कच्छपमांसगुणाः भावप्र० उक्ताः “कच्छपो बलदो वातपित्तनुत् पुंस्त्वकारकः”। अयञ्च भक्ष्यपञ्चनखान्तर्गतः “शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमः। भक्ष्याः पञ्चनखेष्वेते” इति मनूक्तेः “पञ्च पञ्चनखान् भुञ्जीतेति” श्रुतिः। अत्र परिसंख्यैतदतिरिक्तपञ्चनखानां भोजननिषेधफलकत्वादित्याकरे स्पष्टम्। समुद्रमन्थनकाले एतद्रूपं मन्दरधारणार्थं भगवानवततार यथाह भाग० १,३अ० भगवतश्चतुर्विंशत्यवतारकथने। “सुरासुराणामुदधिं मथ्नतां मन्दराचलम्। दध्रे कमठरूपेण पृष्ठ एकादशे विभुः॥७श्लो०।“मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत्। ध्रियमाणोऽपि बलिभिर्गौरवात् पाण्डुनन्दन!॥ ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः। आसन् स्वपौरुषे नष्टे दैवेनातिबलीयसा॥ विलोक्य विघ्नेशविधिं तदेश्वरो दुरन्तवीर्य्योऽवितथाभिसन्धिः। कृत्वा वपुः काच्छपमद्भुतं महत् प्रविश्य तोयं गिरिमुज्जहार॥ समुत्थितं वीक्ष्य कुलाचलं पुनः समुद्यता निर्म्मथने सुरासुराः। दधार पृष्ठेन स लक्षयोजनप्रस्तारिणा द्वीप इवापरो महान्॥ सुरासुरेन्द्रैर्भुजवीर्य्यवेपितं परिभ्रमन्तं गिरिमङ्ग पृष्ठतः। बिभ्रत्तदावर्त्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः” भाग० ८,७, ७विश्वामित्रसुते मुनिभेदे कतशब्दे प्रमाणम्।

**कच्छरुहा** स्त्री कच्छे जलप्राये रोहति रुह–क। दूर्व्वायाम् जटाधरः तस्या जलप्रायदेशभवत्वात्तथात्वम्।

**कच्छादि** पु० पाणिन्युक्ते जाताद्यर्थे अणप्रत्ययनिमित्ते शब्दगणे स च गणः “कच्छ सिन्धु वर्णु गन्धार मधुमत् कम्बोज काश्मीर साल्व कुरु अनुषण्ड द्वीप अनूप अजवाह विजापक कलूतर रङ्कु, एते च देशविशेषवाचकाः तत्र जातादि अण् काच्छ इत्यादि।

**कच्छु (च्छू)** स्त्री कष–हिंसायां “कषकषे ति” उणा० ऊ वा ह्रस्वः। “सूक्ष्मा बह्व्याः पिडकाः स्राववत्यः पामेत्युक्ताः कण्ड्वमत्यः सदाहाः। सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेया पाण्योः कच्छुरुग्रा स्फिचोश्च” उक्ते रोगभेदे (खोस)। [भेदे पटोले राजनि०

**कच्छुघ्नी** स्त्री कच्छुं हन्ति हन–टक् ङीप् ह्रस्वः। कषुणा-

**कच्छुर** त्रि० कच्छूरस्त्यस्य र “कच्छ्वा ह्रस्वश्च” पा० ह्रस्वः। रविधौ दीर्घप्रयोगार्थं ह्रस्वविधिः १कच्छूरोगयुते २व्यभिचारयुते पुरुषे च पु० ३पामरे त्रि० मेदि०।

**कच्छुरा** स्त्री कच्छुः साध्यत्वेनास्त्यस्याः ह्रस्वः १शूकशिम्ब्याम् २शट्याम् ३दुरालभायाञ्च मेदि० ४माक्षिकोद्भवे (चोवड़) रत्नमाला०। ५पुंश्चल्यां स्त्रियाञ्च।

**कच्छुराक्षस** न० “दन्ती निम्बदलञ्चैभिः पृथक्कर्षमितैर्भिषक्। कल्कीकृतैः पचेत्तैलं कटु प्रस्थद्वयोन्मितैः। अर्कक्षीरकुरण्टदुग्धेन पृथक्पलमितेन च। गोमूत्रस्याढकेनापि मृद्वग्निना पचेत्। अभ्यङ्गेन हरेदेतत् कच्छुःसाध्यतामपि पामानञ्च तथा कण्डूं त्वग्व्याधिबधिरामयान्।

कच्छुराक्षसनामेदं तैलं हारीतभाषितम्” इति भावप्रकाशोक्ते तैलभेदे ।

**कच्छुमती** स्त्री कच्छुः साधनत्वेनास्त्यस्याः मतुप् ङीप् । शूकशिम्ब्याम् तत्सेवनेन हि कच्छूरोगजननात् तथात्वम्

**कच्छोटिका** स्त्री कच्छस्य उटस्तृणादिकमिव इवार्थे कन् । चेलाञ्चले (काच्छा) हेमच० । [ शय्याम् रत्नमाला ।

**कच्छोर** पु० केन च्छूर्य्यते छुर-छेदे कर्म्मणि घञ् ।

**कच्ची** स्त्री कचु बा० ङीप् । (कचु) प्रसिद्धे कन्दभेदे । “महिषासुरयुद्धेषु कच्चीरूपासि सुव्रते ! । मम वैरिविनाशाय पूजां गृह्ण प्रसीद मे “दुर्गार्चापद्धतिस्थ तत्पूजामन्त्रः । “कच्ची तु भेदिका गुर्व्वी कटुका पिच्छिला तथा । आमवातपित्तकरी भिषग्भिः परिकीर्त्तिता” राजवल्लभः ।

**कज** रोहे (सौत्रः) इदित् पर०अक०सेट् । कञ्जति अकञ्जीत् चकञ्ज रोहोऽत्र जन्म तेनास्याकर्म्मकता । कञ्जारः ।

**कज** न० के जले जायते जन–ड । पङ्कजे राजनि० ।

**कज्जल** न० कुत्सितं जलमस्मात् कोः कद् । अञ्जने (काजल) तस्य संयोगाच्छुभ्रमप्युदकमसितं भवतीति तस्य तथात्वम् अञ्जनशब्दे ९४ पृ० विवृतिः । “सकज्जलं ताम्रघटे च दृष्टं सर्पिर्युतं सूतकमञ्जनञ्च” सुश्रु० । “गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः” काव्यप्र० । २लेखनसाधने द्रव्ये च (कालि) “असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रम्”पुष्पदन्तस्तवः । मेघे पु०शब्दमा० मत्स्यभेदे पुंस्त्री स्त्रियां गौ०ङीष् । शब्दर० । कज्जलं जातमस्य इतच् । कज्जलित जातकज्जले त्रि० । समयोऽपि एकाक्षरकोषेऽयं पठितः कज्जलमिवाचरति कज्जल+क्विप् ततः अच् गौरा०ङीष् ५मिश्रितरसगन्धके स्त्री । स्वार्थे कन् तत्रार्थे “शुद्धं सूतं तथा गन्धं खल्ले तावद्विमर्दयेत् । यावत् सूतं न दृश्येत किन्तु कज्जलवत् भवेत् । एषा कज्जलिका ख्याता बृंहणी वीर्य्यवर्द्धिनी । नानानुपानयोगेन सर्व्वव्याधिविनाशिनी” वैद्यकम् ।

**कज्जलध्वज** पु० कज्जलं ध्वज इवास्य । दीपे त्रिका० ।

**कज्जलरोचक** पुंन० कज्जलं रोचयति रुच–णिच्–ण्वुल् । (पिलसुज) । वङ्गभाषायां प्रसिद्धे । दीपाधारे जटाध०

**कञ्चट** न० कचि–अटच् । ( कानछिड़ा ) जलतण्डुलीये जलजशाकभेदे “पानीयतण्डुलीयं स्यात्कञ्चटमुदाहृतम् । कञ्चटं तिक्तकं रक्तपित्तानिलहरं लघु । (चकदार) (हिन्दिभाषा) भावप्र० ।

**कञ्चटादि** न० चक्रदत्तोक्ते अतीसारवेगरोधके औषधभेदे “कञ्चटजम्बूदाड़िमशृङ्गाटकपत्रबिल्वह्रीवेरम् । जलधरनिमतसहितं गङ्गावेगमपि रुन्ध्यात्” ।

**कञ्चड** पु० कचि–बा०अडन् । चक्रमर्द्दनृक्षे शब्दचन्द्रिका ।

**कञ्चार** पु० कचि–भावे घञ् कञ्चं प्रकाशमृच्छति ऋ–अण् । कं जलं चारयति किरणेन चर–णिच् अण् वा । सूर्य्ये जटाधरः । २अर्कवृक्षे च । [२क्षुद्रस्फोटे वैद्यकम् ।

**कञ्चिका** स्त्री कचि–ण्वुल् ।१वंशशाखायाम् (कञ्ची) शब्दच०

**कञ्चुक** पु०कचि–दीप्तिबन्धयोः बा०उकन् । १वारबाणे २योधादेर्बोलावतसन्नाहे ३लौहमये कवचे ४सर्पनिर्म्मोके (खोलस)अमरः ४चोलके(कापुलि)५वस्त्रमात्रे उणा०को० ६नर्त्तापकम्पहीतादुःस्थितवस्त्रे (पुत्रादेर्जन्मोत्सवे भृत्यादिभिः स्वामिनोऽङ्गात् बलात्कारेण गृहीते वस्त्रे) हेमच० ।७ओषधीभेदे स्त्री गौरा० ङीष् मेदि० । ८क्षीरीशवृक्षे रत्नमा० “वलानि शूराश्च घनाश्च कञ्चुकाः “घनसंहतकञ्चुकः क्वचिदिवेन्द्रगजाजिनकञ्चुकः” माघः “अन्तःकञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः”रत्ना० । “सख्य किं करवाणि यान्ति शतधा यत् कञ्चुके सन्धयः” अमरुश० । “शुभाशि तरसासाद्जातरोमाञ्चकञ्चुकाः” पञ्चतन्त्रम् । “कञ्चुकं तुलगर्भञ्च तूलिकां उपवीतिकाम् काशी० । सोऽस्य जातः तारका० इतच् । कञ्चुकित जातकञ्चुके त्रि० ।

**कञ्चुकालु** पु० कञ्चुकोऽस्त्यस्य आलुच् । सर्पे शब्दच० ।

**कञ्चुकिन्** पु० कञ्चुक+अस्त्यर्थे इनि । “अन्तःपुरचरोवृद्धो विप्रो गुणगणान्वितः । सर्व्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते” इत्युक्तलक्षणे १राज्ञामन्तःपुराधिकारिणि “अन्तःकञ्चुकिकञ्चुकस्य” रत्ना० । २द्वारपाले,३सर्पे ४जारे, ५यवे, ६चणके च राजनि० । तुषरूपकञ्चुकात्त्वात्तयोस्तथात्वम् । ७आवद्धकवचे त्रि० ।

**कञ्चुलिका** स्त्री कचि–उलच् गौरा०ङीष् स्वार्थे कन् ह्रस्वे टाप् । स्त्रीणां कूर्पासवस्त्रे (काँचली) हेम० “त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीम् लक्ष्मीमित्यभिधायिनि प्रियतमे”सा०द० । कनभावे । कञ्चुलीत्यप्यत्र ।

**कञ्चूल** न० कचि-दीप्तौ ऊलच् । स्त्रीणामाभरणे उज्ज्व०

**कञ्ज** पु० कम् जले जायते । चतुरानने हिरण्यगर्भे “अप एव ससर्ज्जादौ तासु बीजमवासृजत्” “तस्मिन् जज्ञे स्वयं ब्रह्मा” मनूक्तेस्तस्य जलेजातत्वात्तथात्वम् । २पद्मे “चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरम्” भाग० ३,२,९ । ३अमृते च न० मेदिनिः । तत्र पद्मस्य जलजातत्वात् अमृतस्य समुद्रोत्पन्नत्वात्तथात्वम् अमृतशब्दे विवृतिः । कम्

शिरसि जायते जन कर्त्तरि—ड । ४केशे पु० मेदिनिः ।

**कञ्जक** पुंस्त्री कजि-सौत्रधातुः ण्वुल् । (मयना) पक्षिभेदे शब्दच० । स्त्रियां जातित्वात् ङीष् ।

**कञ्जज** पु० कञ्जात् विष्णुनाभिपद्मात् जायते जन—ड । हिरण्यगर्भे चतुर्मुखे ब्रह्मणि शब्दरत्ना० । यथा च ब्रह्मणो विष्णुनाभिजातकमलादुद्भवस्तथा वर्णितं भाग० ३,२,१८,अ० “सोऽन्तःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः । उवास तस्मिन् सलिले पदे स्वे यथानलो दारुणि रुद्धवीर्य्यः । चतुर्युगानाञ्च सहस्रमप्सु स्वपन् स्वयोदीरितया स्वशक्त्या । कालाख्ययासादित कर्मतन्त्रो लोकानपीतान् ददृशे स्वदेहे । तस्यार्थसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसा तनीयान् । गुणेन कालानुगतेन विद्धः सूष्यंस्तदाभिद्यत नाभिदेशात् । स पद्मकोषः सहसोदतिष्ठत् कालेन कर्मप्रतिबोधितेन । स्वरोचिषा तत् सलिलं विशालं विद्योतयन्नर्क इवात्मयोनिः । तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत् सर्वगुणावभासम् । तस्मिन् स्वयं वेदमयो विधाता स्वयम्भुवं यं प्रवदन्ति सोऽभूत् । तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः । परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि । तस्मात् युगान्तश्वसनावघूर्णजलोर्मिचक्रात् सलिलाद्विरूढम् । उपाश्रितः कञ्जमु लोकतत्त्वं नात्मानमद्धाविददादिदेवः” ।

**कञ्जन** पु० कं सुखं जनयति जन—णिच्—अच् । १कन्दर्पे त्रिका० (मयना) २पक्षिभेदे शब्दच० ।

**कञ्जनाभ** पु० कञ्जं पद्मं नाभावस्य संज्ञायाम् अच् समा० । विष्णौ । “व्यञ्जेदं स्वेन रूपेण कञ्जनाभस्तिरोदधे” भाग० ३,६,४४ ।

**कञ्जर** पु० कजि—अरन् कं जलं जृणाति वा जृ-अच् वा । १सूर्य्ये २अर्कवृक्षे ३हस्तिनि ४चतुर्मुखे ५उदरे च उणा० ।

**कञ्जल** पु० कजि-कलच् । (मयना) पक्षिभेदे शब्दचन्द्रिका । स्त्रियां जातित्वात् ङीष् ।

**कञ्जार** पु० कजि आरन् कं जलं जारयति वा जृ-णिच् अण् । १सूर्य्ये २अर्कवृक्षे ३चतुर्मुखे ४गजे ५उदरे ६मुनिभेदे च मेदि० ।

**कञ्जिका** स्त्री कजि—ण्वुल् टाप् अ (वामनहाटी) । ब्रह्मयष्टिकायाम् शब्दर० । [ चकाट । प्रणिकटति न णत्वम् ।

**कट** गतौ भ्वादि० पर० सक० सेट् । कटति अकटीत् अकाटीत्

**कट** गतौ भ्वादि० इदित् पर० सक० सेट् । कण्टति अकण्टीत् । चकण्ट कण्टकः । प्रणिकण्टति न णत्वम् ।

**कट** गतौ भ्वादि० पर० सक० सेट् । कटति अकटीत् अकाटीत् चकाट ईदित् तेन नेट् कट्टः । प्रणिकटति न णत्वम् ।

**कट** वृतौ वर्षणे च भ्वादि० पर० सक० सेट् । कटति एदित् अकटीत् चकाट । कटः कट्टः प्र+प्रकाशे अक० प्रकटति प्रकटः । णिच्—प्र+प्रकाशने सक० । घटादि० प्रकटयति प्रकटितः प्रकटयन् । युच् प्रकटना । नामधातुरित्यन्ये

**कट** पु० कट-कर्म्मणि घ कर्त्तरि अच् वा । १हस्तिगण्डे मदवर्षणात् तथात्वम् “शङ्खन्तिनः कटकटाहतटं मिमङ्क्षो” माघः “कण्डूयमानेन कटं कदाचित् वन्यद्विपेनोन्मथिता त्वगस्य” “कटप्रभेदेन करीव पार्थिवः” २गण्डमात्रे स्वेदवर्षणात् तथात्वम् “तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः” रघुः । नलाख्ये ३तृणभेदे अमरः । येन (मादुर दड़मा) प्रभृतिद्रव्यं विरच्यते तस्य च स्पर्शादेरावरणसाधनत्वेन कटत्वम् ४तन्निर्मिते आसनभेदे च अमरः “गोऽश्वोष्ट्रयानप्रासादस्रस्तरेषु कटेषु” मनुः । “वर्षासु क्लिन्नकटवत्तिष्ठन्त्येवावसीदति” भा० स० १६ अ० । “ददार करजैरूरावेरकां कटकृद्यथा” भा० १,२१८,२ । ५कुम्भे (मराइ) भरतः तस्य तृणादिरज्जुभिरावृतत्वात्तथात्वम् । ६आवरणकारके त्रि० उरस्कटः । ७अतिशये उत्कटे । ८शरे ९समये आचारे मेदि० । १०उशीरादितृणमात्रे धर० कटाग्निः ११शवे प्रेते कटपूतनः १२शकटे (शवहरणार्थरथे) १३ओषधिभेदे १४श्मशाने हेमच० । कटप्रूः १५तृणकाष्ठे (तक्ता) शब्दरत्ना० । १६क्रियाकारकमात्रे त्रि० हेमच० । १७द्यूतक्रीडासाधनद्रव्यभेदे च । “स्रैतापहृतसर्वस्वः पाशरपतनाच्च शोषितशरीरः । नर्दितदर्शितमार्गः कटेन विनिपातितो यामि” मृच्छक० उत्तरपदस्थे कटशब्दे परे पूर्वपदस्योदात्तता । दाक्षिकटः सि० कौ० १८श्रोणौ पुंस्त्री मेदि० स्त्रीत्वे गौरा० ङीष् । ङीषन्तः १९कटुक्याम् वैद्यकम् । [ कटुक्याम् अमरः

**कटंवरा** स्त्री कटं वृणोति कट+वृ—अच् मुम् च । (कट्की)

**कटक** पुंस्त्री कट-क्वुन् अर्द्धर्चादि । १हस्तभूषणे वलये, “कटककुण्डलादिवत्” सा० द० । २पर्वतमध्यभागे “प्रफुल्लवृक्षैः कटकैरिव स्वैः” कुमा० । “मार्गैषिणी सा कटकान्तरेषु” रघुः । “सद्रत्नचित्रकटकासु दृहन्नितम्बाः” माघः । ३चक्रे च अमरः । ४हस्तिदन्तमण्डले । ५सामुद्रलवणे ६राजधान्याञ्च” मेदि० । ७नगर्य्याम् शब्दरत्ना० ८सेनायाम् हेमच० “स च दिग्विजयक्रमेणागत्य चन्द्रभागातीरे समावेशितकटको वर्त्तते” “अगाच्च कटकं सर्वम्” हितो० ९पर्वतसमभूमागे सानौ विश्वः “जलाकोशेषु देवकु

कटकेषु परेषु च" भारते विराटपर्व्वणि ८७२ श्लोकः ।

**कटकट** त्रि० कटप्रकारः प्रकारे द्वित्वम् । १अत्यन्तातिशयिते सर्व्वोत्कृष्टे २महादेवे पु० "नमोनाभाय नाभ्याय नमः कटकटाय च" भा० शा० २८६अ० शिवनामोक्तौ । अव्यक्तानुकरणे डाच् कटकटा तदनुकरणशब्दे अव्य०। "ततः कटकटाशब्दो बभूव सुमहात्मनोः" भा० व० १५७अ० ।

**कटकार** त्रि० कटं करोति कृ–अण् उप० स० । १कटकारिणि शिल्पिभेदे "शूद्रायां वैश्यतश्चौर्य्यात् कटकारः इति स्मृतः" उशनसोक्ते २वर्णसङ्करभेदे पुंस्त्री स्त्रियां ङीष् । "वणिक्शापतस्तेषां केचित् पारशवास्तथा । वैखानसेन केचित्तु केचिद्भागवतेन च । वेदशास्त्रावलम्बास्ते भविष्यन्ति कलौ युगे । कटकारास्ततः पश्चात् नारायणगणाः स्मृताः" । उशनसा तेषां कलौ वैखानसादिसंसर्गेण वेदधर्म्मनिष्ठत्वप्राप्तिः वैष्णवत्वप्राप्तिश्चोक्ता । कृ-क्विप् । कटकृदप्यत्र "एरकां कटकृद्यथा" भाग० १,३,१८ ।

**कटकिन्** पु० कटकोऽस्त्यस्य इनि । १पर्वते त्रिका० २कटकयुक्ते त्रि०

**कटकीय** त्रि० कटकाय वलयाय हितः अपूपा० छ । वलयसाधने स्वर्णादौ पक्षे यत् । कटक्य तत्रार्थे त्रि० ।

**कटकोल** पु० कटति वर्षति स्रवति कट–अच् कटस्य निष्ठीवनरूपजलस्य कोलः घनीभावो यत्र कुल–संस्थाने आधारे घञ् वा । पतद्ग्रहे (पिकदानी) त्रिका० ।

**कटखादक** त्रि० कटमपि खादति–खाद–ण्वुल् । १सर्वभक्षके शृगालके २जम्बुके पुंस्त्री कटस्यावरणस्य खं मध्यस्थितच्छिद्रमस्ति अद्-ण्वुल् । काचनिर्म्मितकलसे तस्य छिद्राभावात् तथात्वम्" मेदि० ।

**कटघोष** पु० कटप्रधानो घोषः आभीरपल्ली । प्राग्देशभवे ग्रामभेदे ततः "प्राचां कटादेः" पा० जातादौ छ । कटघोषीय तज्जातादौ त्रि०। एवं कटपल्वल कटनगरो कटपल्ली इत्यादयः प्राग्देशस्थितग्रामभेदेषु । ततः जातादौ छ कटपल्वलीय कटनगरीय कटपल्लीय इत्यादयः तत्तद्ग्रामजातादौ त्रि०

**कटङ्कट** पु० कटं शवं कटति ज्वालया आवृणोति कट–बा० अच् । १वह्नौ "कटङ्कटाय भावाय नमः पञ्चपदाय च" अग्निपु० "खलो कालकटङ्कटः" भा० अनु० १७अ०। शिवनामसु कालाग्निरूपतया तस्य कालकटङ्कटनामता । उपचारात् वह्निजे २स्वर्णे ३चित्रकवृक्षे तस्य तद्दाहनामत्वात् ४गणेशे च । गणपतिकल्पे याज्ञ० स्मृतौ "मितश्च संमितश्चैव तथा शालकटङ्कटौ । कुष्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः" "मितसम्मितादिभिर्विनायकस्य नामभिः स्वाहान्तैर्जुहुयादिति:" मिताक्षरायामुक्तेः ।

**कटङ्कटेरी** स्त्री कटङ्कटं वह्निजं सुवर्णन्तत्कान्तिमीरयति ईर–गतौ अण् उप० स० अवन्तत्वात् ङीप् गौ० ङीष् वा । १हरिद्रायां त्रिका० तस्याः स्वर्णतुल्यपीतवर्णत्वात् तथात्वम् । २दारुहरिद्रायां रत्नमाला "नीलोत्पलोशीरकटङ्कटेरी" सुश्रु०

**कटदानम्** न० कटं देहावर्त्तनं दीयतेऽत्र दा–ल्युट् । भगवतः पार्श्ववर्त्तनरूपे (करोटदेओया) कर्म्मणि । तन्निमित्तोत्सवादि भाद्रशुक्लैकादश्यादौ सन्ध्यायां श्रवणनक्षत्रमध्यपादयोगेन कार्य्यम् । "प्राप्ते भाद्रपदे मासि एकादश्यां सिते ऽहनि । कटदानं भवेद्विष्णोर्महापूजा प्रवर्त्तते" एका० त० वराहपु०। "कटदानं पार्श्वपरिवर्त्तः" रघु० । अत्र कालव्यवस्था उत्थानैकादशीशब्दे ११०७पृ० उक्ता ।

**कटपूतन** पु० कटस्य शवस्य पूतं पवित्रतां तनोति तन+अच् । प्रेतभेदे । "वान्ताश्युल्कामुखः प्रेतोविप्रोधर्म्मात् स्वकाच्च्युतः। अमेध्यकुणपाशीसात् क्षत्रियः कटपूतनः" मनुः अमेध्यकुणपभक्षकत्वं तस्य धर्म्मोऽनेन दर्शितः ।

**कटप्रू** पु० कटे श्मशाने प्रवते प्रुङ् गतौ क्विप् नि० दीर्घश्च । १महादेवे तस्य श्मशानवासित्वात् तथात्वम् । कटं श्मशानं प्रवते कटेन शवेन प्रवते वा । २राक्षसे ३विद्याधरे च मेदि० तयोः यथाक्रमं श्मशानवासित्वात् प्रेतवाहनत्वाच्च तथात्वम् । कटेन देवनसाधनद्रव्येण प्रवते । ४अक्षदेवके त्रि० मेदि०। कटात् वलयात् आचारात् तमतिक्रम्य प्रवते । ५कामचारिणि त्रि० । कटं नलहरणं प्रवते । ६कीटभेदे च उज्ज्वलदत्तः

**कट(टि)प्रोथ** पुं न० कटस्य कट्याः कटेर्वा प्रोथो मांसपिण्डः । १स्फिचि कटिदेशस्थे मांसपिण्डे, अमरः ।

**कटभङ्ग** पु० कटस्य सैन्यसंघस्य भङ्गो यस्मात् । १सैन्यसंघभङ्गहेतौ नृपसङ्कटे । कटानामोषधीनां भङ्गः छेदनम् । २शस्यानां हस्तादिना छेदने च मेदि० ।

**कटभी** स्त्री कट इव भाति भा–क गौरा० ङीष् । १ज्योतिष्मतीलतायाम् राजनि० २लताभेदे भावप्र० । सा च "कटभी स्वादुपुष्पा च मधुरेणुः कटम्भरः । कटभी तु प्रमेहार्शोनाडीव्रणविषक्रमीन् । हन्त्युष्णा कफकुष्ठघ्नी कटूष्णा च कीर्त्तिता । तत्फलं तुवरं तेषं विशेषात् कफशुक्रहृत् । भा० प्र० उक्तपर्य्यायगुणा । ३अपराजितायाम् श्वेतापराजिता (काँटाशिरीष) वृक्षभेदः रत्नमाला ।

**कटमालिनी** स्त्री कटानां किण्वाद्योषधीनां माला साधनत्वे-

नास्त्यस्याः इति ङीप्। मदिरायां तस्याः किण्वाद्योषधिगणप्रभवत्वात्तथात्वम्।

**कटम्ब** पु॰ कट–धातूनामनेकार्थत्वात् वादने अम्बच्। १वादित्रे उज्ज्व॰ कद्यते आव्रियते शत्रुपुरमनेन करणे अम्बच्। २वाणे उणादिकोषः।

**कटम्भर** पु॰ कटं गुणातिशयं बिभर्त्ति भृ–खच् मुम्। १कटभीवृक्षे भावप्र॰। २श्योनाकवृक्षे राजनि॰। ३नागबलायां स्त्री अमरः (गन्धभादाल)४प्रसारिण्याम्। (कटकी) ५रोहिण्याम्। ६हस्तिन्याम्। ७कलम्बिकायां गोलायाम्। ८वर्षाभ्वि।(पुनर्नवा)९मूर्व्वायाञ्च स्त्री मेदि॰।

**कटव्रण** पु॰ कट उत्कटो व्रणो युद्धकण्डुरस्य। भीमसेने त्रिका॰।

**कटशर्करा** स्त्री कटः नलः शर्करेव मिष्टरसत्वात् यस्याः। (नाटा) गाङ्गेरुकीलतायाम् हारा॰।

**काटा(ठा)कु** पु॰ कट(ठ)–कृच्छ्रजीवने काकु। १विहगे कणशीनानास्थानतआहाराहरणेन कृच्छ्रजीवनात्तस्य तथात्वम् उज्ज्वलदत्तेन तु कठ कृच्छ्रजीवने इत्युक्तेरयं ठान्तमध्य एव कटस्तु तदर्थत्वाभावात् कठेः तद्धनरूपतदर्थत्वाच्च।

**कटाक्ष** पु॰ कटं गण्डम् अक्षति व्याप्नोति अच्। अपाङ्गदृष्टौ। अमरः "हरिणाक्षि! कटाक्षेण आत्मानमवलोकय" उद्भटः। "आमोक्ष्यन्ते त्वयि मधुकरश्रेणयस्ते कटाक्षाः" मेघ॰ "तत्रान्तरे जगृहुरस्य कटाक्षैः" माघः। "भ्रमयति मयि भूयस्ते कृपार्द्रः कटाक्षः" शङ्कराचार्य्यः।

**कटाग्नि** पु॰ कटेन वीरणादिवेष्टनेन जातोऽग्निः। वीरणादिना वेष्टनेन जाते अग्नौ "क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः। राजपत्न्यभिगामी च दग्धव्यास्ते कटाग्निना" या॰ "कटैर्वीरणमयैर्वेष्टयित्वा दहेत्" मिता॰। "उभावपि तु तावेव ब्राह्मण्या गुप्तया सह। विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना" मनुः। [मूले शब्दर॰

**कटायन** न॰ कटस्य तृणामासनस्यायनमुत्पत्तिसाधनम्। वीरण-

**कटार** पु॰ कट–बा॰ आरन्। १नागरे २कामिनि च शब्दमा॰

**कटाल** त्रि॰ दुष्टः कटः अस्यस्य सिध्मादि॰ लच् "जटाघटा कटाकला:क्षेपे" पा॰ ग॰ निर्द्देशात् आत्वम्। दुष्टगण्डयुक्ते।

**कटाह** पु॰ कटमाहन्ति आ+हन–ड। १तैलादिपाकपात्रभेदे (कडाइ) २कूर्म्मपृष्ठे ३द्वीपभेदे। ४जायमानदृष्टशृङ्गमहिषशिशौ च मेदि॰। ५नरकभेदे हारा॰।६खर्परे शब्दरत्ना॰। ७शूर्पे ८स्तूपे ९कच्छे च इति केचित्। "यद्दन्तिभिः कटकटाहतटं मिमङ्क्षोः" माघः। "अस्मिन् महामोहमये कटाहे सूर्य्याग्निना रात्रिदिनेन्धनेन। मासर्त्तुदर्व्वीपरिघट्टनेन भूतानि कालः पचतीति वार्त्ता" भा॰व॰३१२अ॰।

**कटि(टी)** स्त्री कट–इन्। १श्रोणिदेशे (काकाल)। कृदिकारान्तत्वात् वा ङीप्। "सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः। कट्यां कृताङ्को निर्वास्यः" मनुः। "कटिश्च तस्यातिकृतप्रमाणा" भा॰ व॰१०५४। "सव्येन च कटीदेशे गृह्य वाससि पाण्डवः" भा॰आ॰१६२ "कटिस्तु हरते मनः" सा॰द॰। तत्र तच्छब्दस्य पाठ्यत्वमुक्तम्। ङीबन्तः २पिप्पल्यां स्त्री मेदि॰

**कटित्र** न॰ कटिं त्रायते त्रै–क। १काञ्च्याम्, २कटिवस्त्रे, ३कटिवर्म्मणि च मेदि॰। "स्फुरत् किरीटकेयूरकटित्रकङ्कणम्" भाग॰६,१६,२७।

**कटिन्** पु॰ कटोऽस्त्यस्य प्राशस्त्येन इनि। १प्रशस्तगण्डे गजे। कट+चतुरर्थ्यां प्रेक्षा॰ इनि। २कटनिर्वृत्तादौ त्रि॰ स्त्रियामुभयतो ङीप्

**कटिप** त्रि॰ कटिं पाति पा–क। कटिरक्षके। ततः सङ्काशा॰ चतुरर्थ्यां ण्य। काटिप्य कटिपनिर्वृत्तादौ त्रि॰

**कटिमालिका** स्त्री कटौ मालेव कन्। (चन्द्रहार) (गोट) कटिभूषणे। हेमच॰

**कटिरोहक** पु॰ कट्या हस्तिकट्या तं रोहति रुह–ण्वुल् ३त॰। हस्तिपश्चाद्भागेन हस्त्यारोहके शब्दमा॰।

**कटिल्ल** पु॰ कट-बा॰ इल्ल। कारवेल्ले (करेला)। ततः स्वार्थे कन् तत्रैव अमरः। [हेमा॰

**कटिशीर्षक** पु॰ कटिः शीर्षमिव संज्ञायां कन्। कटिदेशे-

**कटिशूल** पु॰ कटिस्थं शूलम्। कटिदेशस्थे कफवातिके शूलरोगभेदे; शूलप्रसङ्गात् तद्भेदनिदानादि भावप्र॰ दर्शितमुच्यते यथा "दोषैः पृथक्समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत्। सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः। प्रभुः कर्त्ता। अथ वातिकस्य विप्रकृष्टं निदानसम्प्राप्तिपूर्व्वकं लक्षणमाह। व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात्। कलायमुद्गाढककोरदूषादत्यर्थरूक्षाध्यशनाभिघातात्। कषायतिक्तातिविरूढजान्नविरुद्धवल्लूरकशुष्कशाकैः विट्शुक्रमूत्रानिलवेगरोधाच्छोकोपवासादतिहास्यभावात्। वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पृष्ठपार्श्वत्रिकबस्तिदेशे। (त्रिकं पृष्ठवंशाधरसन्धिकष्टकशादि) जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम्। मुहुर्मुहुश्चोपशमप्रकोपौ विण्मूत्रसंस्तम्भनतोदभेदैः। संस्वेद-

नाभ्यञ्जनमर्द्दनाद्यैः स्निग्धोष्णभोज्यैश्च शमं प्रयाति । व्यायामो मल्लयुद्धादिः यानं तुरगरथादि । मैथुनं स्त्रीसेवा । प्रजागरः रात्रौ, एषामतियोगात्, शीतलजलप्रभूतपानात् कलायस्त्रिपुटः (मटर) आढकी तुवरी कोरदूषः कोरदूषः अतिरूक्षद्रव्यसेवा अध्यशनं भुक्तस्योपरि भोजनम् अभिघातो लोष्टादिभिः, कषायतिक्तरससेवा । विरूढजान्नम् विरूढ मङ्कुरितमन्नम् कलायचणकादि तज्जमन्नरूपभक्षणम् । वल्लूरकं शुष्कमांसम् । तस्य शूलस्य देशमाह । हृदादीति तत्र हृच्छूलस्य पृथगपि लक्षणं पठन्ति । “कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः । हृदयस्थः प्रकुरुते शूलमुच्छ्वासरोधकम् । स हृच्छूल इति ख्यातो रसमारुतकोपजः” । अथ पार्श्वशूलस्यापि लक्षणमाह । “कफं निगृह्य पवनः सूचीभिरिव निस्तुदन् । पार्श्वस्थः पार्श्वयोः शूलं कुर्य्यादाध्मानसंयुतम् । तेनोच्छ्वसिति वक्त्रेण नरोऽन्नञ्च न काङ्क्षति । निद्राञ्च नाप्नुयादेव पार्श्वशूलः प्रकीर्त्तितः” । वस्तिशूलस्यापि लक्षणमाह । “संरोधात् कुपितो वायुर्वस्तिं संश्रित्य तिष्ठति । वस्तेरध्वनि नाड़ीषु ततः शूलोऽस्य जायते । विण्मूत्र वातसंरोधी वस्तिशूलः स उच्यते” । प्रकृतमनुसरति जीर्णे भुक्ते । प्रदोषे रात्र्यागमे रात्रिभवशीतेन । वातप्रकोपात् । घनागमे वर्षासु मेघोदये च । तथैव पैत्तिकमाह । क्षाराति तीक्ष्णोष्णविदाहितैलनिष्पावपिण्याककुलत्थयूषैः । कट्वम्लसौवीरसुराविकारैः क्रोधानलायासरविप्रतापैः । ग्राम्यातियोगादशनैर्विदग्धैः पित्तं प्रकुप्याशु करोति शूलम् । तृण्मोहदाहार्त्तिकरं हि नाभ्यां संस्वेदमूर्च्छाभ्रमशोषयुक्तम् । मध्यंदिने कुप्यति चार्द्धरात्रे निदाघकाले जलदात्यये च । शीते च शीतैः समुपैति शान्तिं सुस्वादुशीतैरतिभोजनैश्च । निष्पावो राजमाषः । सौवीरं सन्धानभेदः । सुराविकारैः “परिपक्वान्नसन्धानसमुत्पन्ना सुरा मता” । तस्याः विकारैः । रविप्रतापः आतपः । ग्राम्यातियोगो मैथुनाधिक्यम् । विदाहीत्युक्तापि अशनैर्विदग्धैरिति बोधयति अविदाहिवस्तुनोऽपि पित्तवशाद्विदाहित्वं भवतीति । जलदात्यये शरदि । शीतैर्वातादिभिः । श्लैष्मिकमाह । आनूपवारिजकिलाटपयोविकारैर्मांसेक्षुपिष्टकृशरैस्तिलशष्कुलीभिः । अन्यैर्बलासजनकैरपि हेतुभिश्च श्लेष्मा प्रकोपमुपगम्य करोति शूलम् । हृल्लासकासदनारुचिसंप्रसेकैरामाशये स्तिमितकोष्ठशिरोगुरुत्वैः । भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रम् सूर्य्योदयेऽथ शिशिरे कुसुमागमे च । आनूपं बहुलजलदेशजं भक्ष्यम् । वारिजं शालूकादि । “पक्वं दध्ना समं क्षीरं विज्ञेया दधिकूर्चिका । तक्रेण तत्कूर्चिका स्यात्तयोः पिण्डः किलाटकः” । पयोविकारः पायसादिः पिष्टं माषादिः । अन्यैः गुर्वादिभिः । स्तिमितमार्द्रपटावगुण्ठितमिव यत्कोष्ठं शिरश्च तयो गुरुत्वैः सह । सूर्य्योदय इति त्रिधा विभक्तदिवसप्रथमभागस्योपलक्षणम् । शिशिरे तत्र कफस्यातिसञ्चयात् कुसुमागमे वसन्ते । द्वन्द्वजमाह । द्विदोषलक्षणैरेतैर्विद्याच्छूलं द्विदोषजम् । (तस्य भेदा त्रयो वक्ष्यन्ते) त्रिदोषजमाह । सर्व्वेषु देशेषु च सर्व्वलिङ्गं विद्याद्भिषक् सर्व्वभवं हि शूलम् । सुकष्टमेनं विषवज्रकल्पं विवर्ज्जनीयं प्रवदन्ति तज्ज्ञाः । सर्व्वेषु देशेषु हृत्पृष्ठपार्श्वत्रिकवस्तिनाभ्यामाशयेषु सर्व्वभवं त्रिदोषजम् । अथामजमाह । आटोपहृल्लासवमीगुरुत्वस्तैमित्यमानाहकफप्रसेकैः । कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शूलमुदाहरन्ति । कफस्य कफशूलस्य । आमोद्भवं आमादुद्भवो यस्य तम् । अत्रामशूले जाते पश्चाद्दोषसम्बन्धः अतएवास्य शूलस्याष्टमत्वमुक्तम् । सच प्रथममामाशये भवति पश्चात् सम्बन्धिभिर्द्दोषैर्वस्तिनाभिहृत्पार्श्वकुक्षिषु भवति यथादोषसम्बन्धम् । आमशूलस्य दोषविशेषेण देशविशेषमाह । वातात्मकं वस्तिगतं वदन्ति पित्तात्मकञ्चापि वदन्ति नाभ्याम् । हृत्पार्श्वकुक्षौ कफसन्निविष्टं सर्व्वेषु देशेषु च सन्निपातात् । हृत्पार्श्वकुक्षौ हृत्पार्श्वाभ्यां सहिते कुक्षौ । कफसन्निविष्टं कफेनाविष्टम् । “वस्तौ हृत्कटिपार्श्वेषु स शूलः कफवातिकः । कुक्षौ हृन्नाभिमध्ये तु स शूलः कफपैत्तिकः । दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिकः । तन्त्रान्तरोक्तमामशूलमाह । “अतिमात्रं यदा भुक्तं पावके मृदुताङ्गते । स्थिरीकृतन्तु तत्कोष्ठे वायुरावृत्य तिष्ठति । यदान्नं न गतं पाकं तच्छूलं कुरुते भृशम् । मूर्च्छाध्मानं विदाहञ्च हृत्क्लेशम विलम्बितम् । कम्पं वान्तिमतीसारं प्रमेहं जनयेदपि । अविपाकोद्भवं शूलमेतमाहुर्म्मनीषिणः” । अविपाकोद्भवं आमोद्भवमित्यर्थः । अथ शूलस्योपद्रवानाह वेदनाति तृषा मूर्च्छा आनाहो गौरवारुची । कासःश्वासो वमिर्हिक्का शूलस्योपद्रवाः स्मृताः । अथास्य साध्यत्वादिकमाह । एकदोषानुगः साध्यः कृच्छ्रसाध्यो द्विदोषजः । सर्व्वदोषान्वितो घोरस्त्वसाध्यो भूर्य्युपद्रवः । अथारिष्टमाह । वेदनाति तृषा मूर्च्छा आनाहो गौरवं ज्वरः । भ्रमोऽरुचिः कृशत्वञ्च बलहानिस्तथैव च । उपद्रवा दशैवेते यस्य शूलेषु

नास्ति सः। अथ शूलस्यैव भेदं परिणाममाह। स्वैर्निदानैः प्रकुपितो वातः सन्निहितो यदा। कफपित्ते समावृत्य शूलकारी भवेद्बली। भुक्ते जीर्य्यति यच्छूलं तदेव परिणामजम्। स्वैर्निदानैरित्यादिना निदानपूर्व्विका संप्राप्तिरुक्ता भुक्ते जीर्य्यतीत्यादिना लक्षणमुक्तम्। समावृत्य व्याप्य तस्य लक्षणमप्येतत् समासेनाभिधीयते। आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः। स्निग्धोष्णोपशमप्रायं वातिकं तद्वदेत् भिषक्। तृष्णा दाहा रतिस्वेदकट्वम्ललवणोत्तरम्। शूलं शीतशमप्रायं पैत्तिकं लक्षयेत् बुधः। छर्द्दिहृल्लाससंमोहस्वल्परुक् दीर्घसन्ततिः। कटुतिक्तोपशान्तौ च विज्ञेयञ्च कफात्मकम्। संसृष्टलक्षणं बुद्धा द्विदोषं परिकल्पयेत्। त्रिदोषजमसाध्यं स्यात् क्षीणमांसबलानलम्। अथान्नद्रवनामानं शूलविशेषमाह। जीर्णे जीर्य्यति चाप्यन्ने यच्छूलमुपजायते। पथ्यापथ्यप्रयोगेण भोजनाभोजनेन वा। न शमं याति नियमात्सोऽन्नद्रव उदाहृतः। नेदं शूलमसाध्यं चिकित्साभिधानात्”। उभयथा प्रयोगात् क्लीवत्वमप्यस्य।

**कटिशृङ्खला** स्त्री ६त०। कटिधार्य्यक्षुद्रघण्टिकायाम् हारा०

**कटिसूत्र** न० कटौ धार्य्यं सूत्रं शाक०। कटिधार्य्ये कार्पासरचिते धातुमये वा सूत्रे (घुनसी गोट)हला०।“प्रवरमणिमयमुकुटकुण्डलकटकहारकटिसूत्रकेयूरनूपुराद्यङ्गभूषणविभूषितम्” भाग० ५,२,४। अत्र सर्व्वत्र मणिमयेति विशेषणम् प्रायुर्य्ये मयट्। तेन “कटिसूत्रं न धारयेत्” इति न स्मृतिविरोधः केवलसूत्रस्यैव कटौ धारणनिषेधात्। सूत्रञ्च कार्पासमेव उर्णामयादेस्तु न धारणनिषेधः।

**कटीतल** पु० कट्यां तलमास्पदमस्य। १वक्रखड्गे त्रिका०यतोऽसौ कटिदेशे धार्य्यते। ६त०। कट्यास्तले २नितम्बे न०।

**कटीर** पु० कट–ईरन्। १कन्दरे २जघनदेशे च उज्ज्व० ३नितम्बे ४कट्यांजटाधरः। ततः स्वार्थे कन्। कटीरक नितम्बे त्रिका०

**कटु** न० कटति सदाचारमावृणोति रसनामावृणोति वर्षति स्रावयति नासादितो जलम्, कट–उन्। १अकार्य्ये अमरः २दूषणे विश्वः ३रसभेदे(झाल)४तद्वति अमरः त्रि०। स्त्रियां वा ङीष्। तद्रसगुणाः भावप्र०उक्ताः“कटुरुष्णस्तीक्ष्णश्च विशदो वातपित्तकृत्। स ग्रहणलघुराग्नेयः क्रिमिकण्डूविषापहः। कुलस्त्रस्वरस्यापि मेदःस्थौल्यापकर्षणः। वस्तुदो नासिकास्राविजिह्वायोद्वेजको मतः। दीपनः पाचनोरुच्यो नासिकाशोषणो भ्रमम्। क्लेदमेदोवसामज्जाशकृन्मूत्रोपशोषणः। स्रोतःप्रकाशको रूक्षो मेध्यो वर्चोविबन्धकृत्। आग्नेयः अधिकाम्न्यंशः। मेध्यो मेधायै हितः। वर्चोविबन्धकृत् मलबन्धं करोति। अतियुक्तस्य कटुरसस्य गुणाः। सोऽतियुक्तो भ्रान्तिदाहमुखताल्वोष्ठशोषकृत्। कण्ठादिपीड़ामूर्च्छान्तर्दाहदो बलकान्तिहृत्”। कटुरसस्याग्निजन्यपित्तकार्य्यत्वं सुश्रुते उक्तं यथा “कटुमलवणा आग्नेया” इत्युपक्रम्य “औष्ण्यतैक्ष्ण्यरौक्ष्यलाघववैशद्यगुणलक्षणं पित्तं तस्य समानयोनिः कटुको रसः सोऽस्यौष्ण्यादौष्ण्यं वर्द्धयति तैक्ष्ण्यात्तैक्ष्ण्यं रौक्ष्याद्रौक्ष्यं लाघवाल्लाघवं वैशद्याद्वैशद्यमिति”। स्वेपोपक्रमे चोक्तं तत्रैव “पुनरन्ययोनिः कटुको रसः स स्वेष्मणः प्रत्यनीकत्वात् कटुकत्वात् माधुर्य्यमभिभवति रौक्ष्यात् स्नेहम्, लाघवात् गौरवम् औष्ण्यात् शैत्यम्, वैशद्यात् पैच्छिल्यम्”। ५परुषे च। “अयथकटु भिनाद्भेकवाक्यं विवत्रुः” रघुः “कण्ठमाकुण्ठयिष्यामि कटूक्तिवचने पटुम्” नैषधम्।

वाक्यस्य कटुत्वञ्च दुष्टार्थवाचकत्वम् रसविपरीतवर्णयुक्तत्वञ्च। तत्र रसभेदे वर्णभेदानां कटुत्वमकटुत्वञ्च सा० द० दर्शितम्। शृङ्गारकरुणयोर्न्तेषु “मूर्द्धिवर्गान्त्यवर्णेन युक्ताः टठडढान् विना। रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां .गताः”। वीरबीभत्सरौद्रेषु तु “वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ। उपर्य्यधो द्वयो र्वा सरेफः टठडढैः सह। शकारश्च षकारश्च तस्य व्यञ्जकतां गताः”। ६मत्सरिणि ७सुगन्धौ त्रि० मेदि० “सप्तच्छदक्षीरकटुप्रवाहम्” रघुः। कटुः सुरभिः “कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्त्तिताः” यादवोक्तेः। ८अप्रिये त्रिका०। ६दुर्गन्धौ शब्दमा०। (कटकी) १०कटुक्याम् स्त्री अमरः। गुणवचनत्वात् वा ङीष् कट्वी।

**कटुक** पु० कटु–स्वार्थे कन्। कटुरसे “योजिह्वामबाधते उद्वेगं जनयति शिरो गृह्णीते नासिकां च स्रावयति स कटुकः”सुश्रु०२तद्वति त्रि०“उपर्य्युषिस्थात्मकटुकर्णस्ति प्रयोग वर्द्धिततिमिरेण”काद०। ३परुषे च त्रि०। “परुषं ये न भाषन्ते कटुकं निष्ठुरं तथा” भा०अनु०६४५ श्लो०। ४उग्रे त्रि०“ततः प्रावर्त्तत पुनः संग्रामः कटुकोदयः” भा०व० २८६अ०।५पटोले पु०राजनि०। ६सुगन्धितृणे शब्दरत्ना० ७कुटजवृक्षे (कुड्चि) ८अर्कवृक्षे (आकन्द) शब्दच० ६राजसर्षपे च पु० हारा०। १०शुण्ठीपिप्पलीमरिचरूपे त्रिकटुके न० मेदि०।

**कटुकत्रय** न०कटुकानां कटुरसानां त्रयम्। शुण्ठीपिप्पली

मरिचरूपे त्रिकटुनि। "कुक्कुटाण्डकपालानि लशुनं कटुत्रयम्" सुश्रु०। कटु कत्रिकमप्यत्र न०।

**कटुकन्द** पु० कटुः कन्दो मूलं यस्य। १शिग्रुवृक्षे (सजिना) २आर्द्रके, च (आदा) मेदिनिः।

**कटुकफल** पु०कटुकं फलमस्य। कक्कोले राजनि०।

**कटुका** स्त्री कटु+संज्ञायां कन्। (कट्की) १कटुरोहिण्याम्, राजनि० २ताम्बूल्यां, (पान) शब्दच० ३राजिकायां, (राइसरिषा) ४तिक्तालाबुके (तितलाउ) च रत्नमा०। ५कटुरसयुक्तस्त्रियाञ्च। तत्र (कट्की) वृक्षस्य पर्यायगुणादि भावप्र० उक्तं यथा। "कट्वी तु कटुका तिक्ता कृष्णभेदा कटुम्भरा। अशोका मत्स्यशकला चक्राङ्गी शकुलादनी। मत्स्यपित्ता काण्डरुहा रोहिणी कटुरोहिणी। कट्वी तु कटुका पाके तिक्ता रूक्षा हिमा लघुः। भेदिनी दीपनी हृद्या कफपित्तज्वरापहा। प्रमेहश्वासकासास्रदाहकुष्ठकृमिप्रणुत्"

**कटुकालाबु(बू)** स्त्री विपाके कटुका अलाबु(बूः) कर्म०। (तितलाउ)अलाबूभेदे रत्नमाला। कटुतुम्बी शब्दे विवृतिः "प्रत्यहं कटुकालाबुफलेदमारब्धदन्तुरतामतीकारेण" काद० "कटुकालाबुकतत्तेधनसर्षपसर्पनिर्मोकैः" सुश्रु०।

**कटुकी** स्त्री कटु+स्वार्थे कन् गौरा०ङीष्। (कट्की) १कटुकायाम्। कटुकाशब्दे गुणपर्य्यायादि। [मयके जटा०।

**कटुकीटक** पु० कटुः दंशेन दुःखदत्वात् कीटः स्वार्थे कन्।

**कटुक्वाण** पु० कटुस्तीक्ष्णः क्वाणो यस्य। (तितिर) टिट्टिभपक्षिणि हेमच०। [मूले च राजनि०।

**कटुग्रन्थि** पुंन० कटुर्ग्रन्थिरस्य। १पिप्पलीमूले, २शुण्ठी-

**कटुङ्कृता** स्त्री कटु दूषितं करोति कृ–ड पृषो० मुम् तस्य भावः तल्। "नित्यकर्म्मसमाचारनिष्ठुरत्वे कटुङ्कृता" हारा० उक्तार्थे।

**कटुचातुर्जातक** न०चतुर्ष्वौजातकं ततः स्वार्थे अण् कर्म०। एलात्वक्पत्रकमरिचात्मकद्रव्यचतुष्के राजनि०। [रत्ना०।

**कटुच्छद** पु०कटुच्छदः पत्रं यस्य। तगरवृक्षे (टगर) शब्द-

**कटुतिक्तक** पु०कटुश्चासौ तिक्तश्चेति अल्पार्थे कन्।१भूनिम्बे, वैद्य० २शणवृक्षे राजनि०।

**कटुतिक्ता** स्त्री विपाके कटुः स्वादे तिक्ता। कटुतुम्ब्याम्। स्वार्थे कन् अत इत्वम्। कटुतिक्तिका तत्रैव राजनि०।

**कटुतुण्डी** स्त्री कटु तुण्डमस्याः।(कट्तराइ)लताभेदे राजनि० स्वार्थे कन् अतइत्वं कटुतुण्डिकापि तत्रैव। "कटुतुण्डी कटुः पाके रसे तिक्ता च सा मता। कफवान्तिविषघ्नी-चारुच्याससकफपित्तनुत् सदा पथ्या च सा स्मृता" राजनि० उक्तगुणा।

**कटुतुम्बी** स्त्री विपाके कटुस्तुम्बी। (तितलाउ) अलाबुभेदे भावप्र० तद्गुणादि उक्तं यथा "इक्ष्वाकुः कटुतुम्बी स्यात् सा तुम्बी च महाफला। कटुतुम्बी हिमा हृद्या पित्तकासविषापहा। तिक्ता कटुर्विपाके च वातपित्तज्वरान्तकृत्"।

**कटुत्रय** न० शुण्ठीपिप्पलीमरिचरूपे त्रिकटुनि राजनि०। कटुत्रिकमप्यत्र।

**कटुदला** स्त्री कटु दलं यस्याः। (कांकुड़) कर्कट्याम् राजनि०

**कटुनिष्पाव** पु० कर्म्म०। नदीसन्निकृष्टदेशजाते निष्पावधान्यभेदे राजनि०।

**कटुपत्र** पु० कटु पत्रमस्य। पर्पटे सिताज्जके राजनि०।

**कटुपत्रिका** स्त्री कटु पत्रमस्याः बहु० कप् अत इत्वम्। कण्टकारीवृक्षे राजनि०।

**कटुपाक** त्रि० कटुः पाकोऽस्य। यस्य पाककाले कटुत्वं १तादृशद्रव्ये "कटुपाकः सरो हृद्यो गुरुर्लघुः स्निग्धपिच्छिलः"। "क्षौमं तैलं बलवहम् कटुपाकमचाक्षुषम्" सुश्रु०। इत्यादिनानास्थाने दर्शितम्। कर्म०। २कटुरसरूपेण पाके। तथा पाकश्च भावप्र०दर्शितः "जाठरेणाग्निना योगाद्यदुदेति रसान्तरम्। रसानां परिणामान्ते स विपाक इति स्मृतः। मिष्टः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः।(पटुरत्र लवण रसः)"कटुतिक्तकषायाणां पाकः स्यात् प्रायशः कटुः" वाग्भटः "त्रिधा रसानां पाकः स्यात् स्वाद्वम्लकटुकात्मकः" तत्फलमुक्तं भावप्र० "श्लेष्मकृन्मधुरःपाको वातपित्तहरो मतः। अम्लस्तु कुरुते पित्तं वातश्लेष्मदापहम्। कटुः करोति पवनं कफं वातन्तु नाशयेत्। विशेष एष रसतो विपाकानां निदर्शितः" तथा च षण्णामपि रसानां पाके त्रैविध्यमेव मधुराम्लकटुभेदात्। सुश्रुते तु पाकत्रैविध्यं निराकृत्य द्विधैव पाकः समर्थितः यथा

"तस्माद्वीर्यं प्रधानमिति। नेत्याहुरन्ये। विपाकः प्रधानमिति कस्मात्? सम्यङ्मिथ्याविपाकादिह सर्व्वद्रव्याण्यभ्यवहृतानि सम्यक् मिथ्या विपक्वानि गुणं दोषं वा जनयन्ति। तत्राहुरन्ये प्रतिरसं पाक इति। केचित्त्रिविधमिच्छन्ति मधुरमम्लं कटुकं चेति तत्तु न सम्यक् भूतगुणादागमाच्चाम्लो विपाको नास्ति पित्तं हि विदग्धमम्लताउपैत्यग्नेर्मन्दत्वात्। यद्येवं लवणोऽप्यन्यः पाको भविष्यति श्लेष्मा हि विदग्धो लवणतामुपैति मधुरो मधुरसाम्लोऽम्लस्यैवं सर्व्वेषामिति केचिदाहुः दृष्टान्तं चो-

पर्द्दिश्यन्ति यथा तावत् क्षीरं स्थालीगतमभिपच्यमानं मधुरमेव स्यात्तथा शालियवमुद्गादयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि परित्यजन्ति तद्वदिति । केचिद्वदन्त्यबलवन्तोबलवत्तां वा समायान्तीत्येवमनवस्थितिस्तस्मादसिद्धान्त एष । आगमे हि द्विविध एव पाको मधुरः कटुकश्च तयोर्म्मधुराख्यो गुरुः कटुकाख्यो लघुरिति तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुणसाधर्म्याद्गुरुता लघुता च पृथिव्यापश्च गुर्व्यः शेषाणि लघूनि तस्माद्द्विविध एव पाक इति । भवन्ति चात्र । द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः निर्व्वर्त्तन्तेऽधिकास्तत्र पाको मधुर उच्यते । तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु । निर्व्वर्त्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते" । कटु पाकोऽस्त्यस्य इनि । कटुपाकिन् कटुपाकयुक्ते त्रि॰ स्त्रियां ङीप् । "औद्दालकं रुचिकरम्" इत्युपक्रम्य "पित्तकृत् कटुपाकि च" सुश्रुतः कटुविपाकादयोऽप्यत्र ।

**कटुफला** स्त्री कटु फलं यस्य । पटोले तस्य पत्रतिक्तत्वेऽपि फले कटुपाकत्वेन तथात्वम् २श्रीवल्लीवृक्षे च राजनि॰ ।

**कटुभङ्ग** पु॰कटुः भङ्ग एकदेशो यस्य । शुण्ठ्याम् त्रिका॰ ।

**कटुभद्र** पु॰कटुरपि भद्रः हितकारी कर्म॰। शुण्ठ्याम् राजनि॰

**कटुमञ्जरिका** स्त्री कटुस्तीक्ष्णा मञ्जरी अस्त्यस्याः अच् गौरा॰ ङीष् । अपामार्गे । राजनि॰ ।

**कटुमोद** न॰कटु मोदोऽस्य । जवादिनामसुगन्धिद्रव्ये राजनि॰

**कटुर** न॰ कटति वर्षति रसान्तरं मन्थनेन कट—उरन् । तक्रे जटाधरः ।

**कटुरव** पुंस्त्री कटुः परुषः रवोऽस्य ।१मण्डूके राजनि॰ स्त्रियां जातित्वात् ङीष् ।२कठोररवयुक्ते त्रि॰ कर्म्म॰ ३परुषशब्दे पु॰

**कटुरोहिणी** स्त्री कटुः सती रोहति रुह—णिनि । कटुकायाम् (कट्की) अमरः ।

**कटुवर्ग** पु॰ कटूनां वर्गः समुदायः । सुश्रुतोक्ते कटुरसानां द्रव्याणां वर्गे स च वर्गो यथा 'पिप्पल्यादिः सुरसादिः, शिग्रुमधुशिग्रुमूलकलशुनसुमुखशीतशिवकुष्ठदेवदारुहरेणुकावल्गुजफलचण्डागुग्गुलुमुस्तलाङ्गलकीशुकनासापीलुप्रभृतीनि सालसारादिश्च प्रायशः कटुकोवर्गः" । तत्र पिप्पल्यादिः सुरसादिः सालसारादिश्च तत्रैवोक्तो यथा १पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचहस्तिपिप्पलीहरेणुकैलाजमोदेन्द्रयवपाठाजीरकसर्षपमहानिम्बफलहिङ्गुभार्गीमधुरसातिविषावचाविडङ्गानि कटुरोहिणी चेति" पिप्पल्यादिः ।"२सुरसाश्वेतसुरसाफणिज्झकार्जकभूस्तृणसुगन्धकसुमुखकालमालकासमर्द्दक्षवकखरपुष्पाविडङ्गकट्फलसुरसीनिर्गुण्डीकुलाहलोन्दुरुकर्णिकाफञ्जीप्राचीनाबलकाकमाच्यो विषमुष्टिकश्चेति"। २सुरसादिः"३सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेषशृङ्गीतिनिशचन्दनकुचन्दनशिंशपाशिरीषासनधवार्जुनतालशाकनक्तमालपूतीकाश्वकर्णागुरूणि कालीयकश्चेति" ३सालसारादिः।

**कटुवार्त्ताकी** स्त्री कर्म्म॰। श्वेतकण्टकारिकायाम् राजनि॰

**कटुवीजा** स्त्री कटु वीजं यस्याः । पिप्पल्याम् राजनि॰ ।

**कटुशृङ्गाल** न॰ कटूनां शृङ्गाय प्राधान्यायालति पर्य्याप्नोति अल-अण् । सुवर्च्चशाके राजनि॰ ।

**कटुस्नेह** पु॰ कटुःस्नेहोऽस्य । गौरसर्षपे राजनि॰ ।

**कटूत्कट** न॰कटुषु उत्कटम् । १आर्द्रके रत्नमाला । संज्ञायां कन् । कटूत्कटक २शुण्ठ्यां न॰राजनि॰ ।

**कटोदक** न॰कटाय प्रेताय देयमुदकम् शा॰त॰। प्रेततर्पणार्थं देये जले । "हिरण्यकशिपुर्भ्रातुः सम्परेतस्य दुःखितः । कृत्वा कटोदकादीनि" भाग॰ ७,२,१६ । "कटोदकं प्रेताय देयमुदकम्" श्रीधरः ।

**कटोर** न॰ कट्यते इष्यते निक्षिप्यते भक्ष्यद्रव्यमत्र कट-आधारे ओलच् लस्य रः । भक्ष्यद्रव्यदानार्थे खट्टादिपात्रभेदे । "रसाल देवकीदत्त पात्रे काञ्चननिर्म्मिते । कटोराणां चतुःषष्टिः पात्रस्योभयतः स्थिता" जैमिनिभा॰ आश्व॰८अ॰ । स्वार्थे कन् तत्रैवार्थे न॰ । "कनककर्पटसंयुतकाचकूप्यां दत्त्वा सुखं मोहनलोहसूतैः । निष्कासितो धूमरसस्तु तस्य सौगन्धिकैः काचकटोरके यः" । मेरुत॰। अतिक्षुद्रे तथाभूतपात्रे स्त्री कटोरा

**कटोल** पु॰ कटति आवृणोत्यन्यरसम् कट—ओलच् । १कटुरसे २कटुरसयुक्ते त्रि॰ सि॰कौ॰। चण्डाले पुंस्त्री उणादिको॰स्त्रियां ङीष् । स्वार्थे कन् । तत्रार्थे । कटोलकस्य चण्डालस्येव पादावस्य उपमानपूर्व्वकत्वेऽपि हस्त्यादि॰ नान्त्यलोपः। कटोलकपादः इत्येव ।

**कटोलवीणा** स्त्री ६त॰। चण्डालस्य वाद्यभेदे (केन्दुडा)शब्दर॰

**कट्फल** पु॰ कटति आवृणोत्यन्यरसं कट-क्विप् कट् फलमस्य । कटुरसतयाऽन्यरसावरकफलके (कायफल) इति ख्याते श्रीपर्णीवृक्षे अमरः । तत्पर्य्यायगुणादि भावप्र॰ उक्तं यथा "कट्फलः सोमवल्कश्च कैटर्य्यः कुम्भिकाऽपि च । श्रीपर्णिका कुमुदिका भद्रा भद्रवतीति च । कट्फलस्तुवरस्तिक्तः कटुर्वातकफज्वरान् । हन्ति श्वासप्रमेहार्शःकासकण्ठामयारुचीः" । २भार्य्यायां स्त्री

रत्नमा० ३इद्दल्यां ४काकमाच्यां ५देवदाल्यां ६वार्त्ताक्यां ७महेन्द्रवारौ च स्त्री राजनि०।

**कट्फलादिचूर्ण** चक्रद० कासरोगाधिकारोक्ते चूर्णभेदे यथा "कट्फलं कत्तृणं भार्गी मुस्तधान्यं वचाभया। शृङ्गी पर्पटकं शुण्ठी सुराह्वा च जले शृतम्। मधुहिङ्गुयुतं पेयं कासे वातकफात्मके। कण्ठरोगे क्षये शूले श्वासहिक्काज्वरेषु च"।

**कट्वङ्ग** पु० कटु अङ्गमस्य। श्योनाकवृक्षे (शोना) अमरः। कटूनि उग्राणि अङ्गानि यस्य। २सूर्य्यवंश्ये दिलीपनृपे पु० त्रिका०।

**कट्वर** न० कट–वर्णादौ ष्वरच्। १व्यञ्जने उज्ज्व०। २दधिसरे रत्नमा० "दध्नस्तु ससरस्यात्र तक्रं कट्वरमुच्यते" वैद्यकोक्ते ३तक्रभेदे च [(कटकी) २कटुकायाञ्च भावप्र०।

**कट्वी** स्त्री कटु स्त्रियां ङीष्। १कटुरसान्वितायां स्त्रियां

**कठ** आध्याने (उत्कण्ठापूर्व्वकस्मरणे) वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित्। कण्ठयति ते कण्ठति। अचकण्ठत् त अकण्ठीत्। कण्ठयां बभूव आस चकार चक्रे चकण्ठ–कण्ठितः कण्ठा।

**कठ** कृच्छ्रजीवने भ्वादि० पर० अक० सेट्। कठति अकठीत्–अकाठीत्। चकाठ। कठरः कठेरः कठिनः कठोरः।

**कठ** आध्याने (उत्कण्ठापूर्व्वकस्मृतौ) इदित् भ्वा०आत्म०सक० सेट्। प्रायेणोत्पूर्व्वः उत्कण्ठते उदकण्ठिष्ट। उच्चकण्ठे। उत्कण्ठितः उत्कण्ठा "उत्कण्ठायां हृदि न कुरुते कारणानां सहस्रम्"। "रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते" काव्यप्र०।

**कठ** पु० कठ–अच्। १मुनिविशेषे कठेन प्रोक्तमधीयते वैशम्पायनान्तेवासित्वात् णिनि तस्य "कठचरकात् लुक्" पा० लुक्। २तदृष्टशाखाध्यायिषु पु०ब०व०। स्त्रियां तु वेदशाखावाचित्वेन जातित्वात् ङीष् कठी इत्येव। ३स्वरभेदे ४ब्रह्मभेदे च हेम०। "वैशम्पायनान्तेवासिनश्च आलम्बुकङ्कमलकृचमाऽऽरुणि ताण्ड्य श्यामायन कठकलापिन्" इति नव। कठशाखा च यजुर्वेदे ऋग्वेदे चास्ति सैव स्वरभेदः। "देवसुम्नयोर्यजुषि काठके" इत्यस्य पा०सूत्रस्य व्याख्यायां सि०कौ० "यजुःशब्दोऽत्र न मन्त्रमात्रपरः किन्तु वेदोपलक्षकः तेन ऋगात्मकेऽपि मन्त्रे यजुर्वेदस्थे भवति किञ्च ऋग्वेदेऽपि भवति स चेन्मन्त्रो यजुषि-कठशाखायां दृष्टः यजुषीति किम् "देवान् जिगाति सुम्नयुः"। बह्वृचानामप्यस्ति कठशाखा ततोभवति प्रत्युदाहरणमिति हरदत्तः"। ४मन्त्रेतरवेदभागरूपब्राह्मणे "इशाकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः इति उपनिषच्छब्दे दर्शितमुक्तिकोपनिषद्वाक्ये कठेति निर्द्देशात्। तच्च कठवल्लीत्वेन प्रसिद्धम्। सा च कृष्णयजुर्ब्राह्मणरूपा "उशन् ह वै वाजश्रवसः" इत्याद्या। यत्तु कल्पद्रुमे त्रिकाण्डशेषप्रमाणेन ब्राह्मणे इति पुंलिङ्गनिर्द्देशेन विप्रपरतोक्तिश्चिन्त्या त्रिकाण्डशेषे ब्राह्मणपर्य्याये ठान्तनानार्थे च कठशब्दस्यादर्शनात्। [त्रिका०

**कठमर्द्द** पु० कठं कृच्छ्रजीवनं मृद्नाति मृद–अण्। शिवे

**कठर** त्रि० कठ–अरन्। कठिने जटा०।

**कठशाठ** पु० ऋषिभेदे ततः तेन प्रोक्तमधीयते णिनि। काठशाठिन् तत्प्रोक्तछन्दोऽध्यायिषु पु०ब०व०।

**कठाहक** पुंस्त्री कठं कठिनमाहन्ति–आ+हन ड तादृशं कं शिरोऽस्य। दात्यूहे शब्दर०।

**कठिका** स्त्री कठ–बा० वुन्। (खडी) कठिन्याम्।

**कठिञ्जर** पु०कठ–इन् कठिं कठिनं जरयति जॄ–णिच् बा० खच् मुम् च्। तुलस्याम् अमरः।

**कठिन** त्रि० कठ–इनन्। १क्रूरे, २निष्ठुरे, ३कठोरे, ४स्तब्धे च मेदि०५स्थाल्याम् स्त्री हारा०न०च ६गुडस्य शर्करायां विश्वः। "नवजलधरश्यामाः पश्यन् दिशो भवतीं विना कठिनहृदये! जीवत्येव प्रिये! स तव प्रियः" "न विदीर्य्ये कठिनाः खलु स्त्रियः" कुमा० "पराभ्यशत् कठिनकठोरकामिनीत्यादि" माघः। "नितान्तकठिनां रुजं मम न वेद सा मानसीम्" विक्रमो०। "गण्डाभोगात् कठिनविषमामेकवेणीं करेण" मेघ०तस्य भावः त्व। कठिनत्व कठिनभावे न०। तल्। कठिनता तद्भावे स्त्री। ष्यञ्। काठिन्य तद्भावे न०। काठिन्यञ्च द्रव्यस्य आरम्भकसंयोगविशेषात्स्पर्शविशेषः। शब्दादेस्तु दुर्बोधत्वम्। [जातित्वात् ङीष्।

**कठिनपृष्ठ** पु० कठिनं पृष्ठमस्य। १कच्छपे राजनि० स्त्रियां

**कठिनी** स्त्री कठिन+गौरा०ङीष्। भूमौ लेखनसाधने द्रव्ये। खटिकायाम्। "कठिनोः चिणोतीति" नैषधम् "गुणिगणगणनारम्भे न पतति कठिनी ससम्भ्रमा यस्य। तेनाम्बा यदि सुतिनी वद बन्ध्या कीदृशी भवति" नीतिसारः। स्वार्थे कन् कठिनिकापि तत्रार्थे।

**कठेर** त्रि० कठ–कृच्छ्रजीवने एरक्। कृच्छ्रजीविनि उज्ज्व०।

**कठेरणि** पु०ऋषिभेदे ततो गोत्रापत्ये ञ्यो बहुत्वे वा लुक्। काठेरण्याः कठेरणयः तद्गोत्रापत्येषु पुंस्त्री ब० व०।

**कठेरु** पु० कठ–एरु। चामरवाते। शब्दचि०।

**कठोर** त्रि॰ कठ+ओरन् । १कठिने, २पूर्णे, च शब्दचि॰ । "कठोरताराधिपलाञ्छनच्छविरिति" माघः । 'पराङ्मयत् कठिनकठोरकामिनीत्यादि" माघः 'सूच्मार्थग्राहके च । "कलाकलापालोचनकठोरमतिभिः" काद॰ ।

**कठोल** त्रि॰ कठ-ओलच् । कठिने कठोरे अमरः ।

**कड** भक्षणे सक॰मदे अक॰ तुदा॰ सेट् पर॰ । कडति अक-डीत् अकाडीत् चकाड । कडारः कड्म्बः । प्रणिकडति

**कड** दर्पे भ्वा॰इदित् ञित्त्वात्,उभ॰ङित्त्वात् अफलवत्कर्त्तर्य्यपि आत्म॰ अक॰ सेट् । कण्डति ते । अकण्डीत् अकण्डिष्ट चकण्ड चकण्डे । अयं वितुषीकारणार्थे व्यापारभेदे च । (काँड़ान) कण्डति तण्डुलम् इति केचित् ।

**कड** रक्षणे भेदे(वितुषीकरणार्थ व्यापारे)च (काँड़ान) चुरादि॰ इदित् उभ॰ सक॰सेट् । कण्डयति ते अचकण्डत् त । कण्डयाम् बभूव आस चकार चक्रे । कण्डनम् कण्डितः कण्डयन् कण्ठयितुम् । कण्डयित्वा कण्डना ।

**कड** त्रि॰ कड-मदे अच् । मूर्खे हेमा॰ । घञर्थे क । २भक्षणीये च कडङ्गरम् । [ भेदे रत्नमा॰ ।

**कडक** न॰ कड-अच् संज्ञायाम् कन् । (करकच) लवण-

**कडङ्गर** न॰ कडं भक्षणीयं शस्यादि गिरति अभ्यन्तरे निवेशयति गृ-अच् नि॰ मुम् । वुसे मुद्गादेः फलशून्यनाडिकाकाष्टे अमरः ।

**कडङ्गरीय** त्रि॰ कडङ्गरमर्हति । वुसभक्षणयोग्ये गवादौ । "नीवारपाकादिकडङ्गरीयैः" रघुः ।

**कड(ल)त्र** न॰ गड-सेचने अत्रन् "गडेरादेश्च कः" उणा॰ गस्य कः डलयोरेकत्वात् वा लः १श्रोणौ २भार्य्यायाञ्च उज्ज्वलदत्तः। कलत्रशब्दे उदा॰ ।

**कडम्ब** पु॰ कड-अम्बच् । १शाकनाड़िकायाम्(डँटा)अमरः । २कोणे प्रान्तभागे च उणादिवृत्तिः ।

**कडम्बी** स्त्री कडम्बो भूयसा विद्यतेऽस्याः अर्श आद्यच् गौरा॰ङीष् । (कलमी) शाकभेदे शब्दरत्ना॰ तस्याः कडम्बभूयस्त्वात् तथात्वम् कलम्बीशब्दे उदा॰ ।

**कडवक** पु॰"अपभ्रंशनिबन्धेऽस्मिन् सर्गाः कडवकाभिधाः"सा॰ द॰उक्ते अपभ्रंशनिबन्धानामध्यायविरामसूचके सर्गे ।

**कडार** पु॰ गड-सेचने आरन् गस्य कादेशः । १पिङ्गलवर्णे । २तद्वति त्रि॰ । "करभकण्ठकडारमाशाः" माघः । ३दासे पु॰ मेदि॰ । तस्य सेचनकर्तृत्वात् तथात्वम् । कड-दर्पे आरन् । ४दृप्ते त्रि॰ कडारशब्दस्य कर्म-धारये वा पूर्वनिपातः । कडारजैमिनिः जैमिनि-कडारः बहुव्रीहौ तु न ।"कडारपुरुषोत्तमः" सि॰कौ॰। "कडाराः कर्मधारये" पा॰ बहुत्वात्तद्गणोऽत्र विवक्ष्यते स च गणः । कडार, गडुल, खञ्ज, खोड़, काण, कुण्ठ, खलति, गौर, वृद्ध, भिक्षुक, पिङ्ग, पिङ्गल, तनु, जरठ, बधिर, मठर, कब्ज, वर्वर" ।

**कडितुल** पु॰ कट्या तुल्योऽत्र पृषो॰ टस्य डः । खड्गे शब्दर॰ कटिव्यासस्य त्रिंशदङ्गुलाधिकतया ख-ड्गस्य च निस्त्रिंशत्वेन त्रिंशदधिकाङ्गुलतया च तयोः साम्येन तथात्वम् । कड भक्षणे इन् तस्य तुल्योऽत्र । हिंस-कतुल्यत्वाद्वा खड्गस्य तथात्वम् ।

**कड्ड** कार्कश्ये भ्वा॰पर॰ अक॰ सेट् । कड्डति अकड्डीत् । चकड्ड-प्रनिकड्डति डोपधत्वात् क्विपि डट् कड् ।

**कण** आर्त्तस्वरे भ्वा॰ पर॰ अक॰ सेट् । कणति अकाणीत् अकणीत् । इदित् । णिचि अचीकणत् त अचकणत् त । चकाण प्रनिकणति ।

**कण** गतौ भ्वा॰ पर॰ सक॰ सेट् । कणति अका(क)णीत् । घटादि॰ । णिचि कणयति ते ।

**कण** निमीलने वा चुरा॰ पर॰अक॰सेट् । काणयति ते । अचीकणत् त । काणयाम् बभूव आस चकार चक्रे काणः पक्षे पर॰ भ्वा॰ कणति अक(का)णीत् चकाण । निमीलनयत्र नेत्रादेः पक्ष्मावरणं सावयवस्याङ्गस्य सङ्कोचनञ्च।

**कण** पु॰ कण-निमीलने अच् । १धान्यादेरतिसूक्ष्मांशे, राजनि॰ २लेशे च वयवाल्पत्वेन तयोरवयवसङ्कोचवत्त्वात्तथा-त्वम्"तिलातसीसर्षपकणांस्तत्र प्रकिरेत्"सुश्रु॰ । "द्वाद-शाहं कणाशनता"याज्ञ॰"नयनयुगलं कज्जलभरम्"उद्भटः। "उद्यानानां नवजलकणैर्यूथिकाजालकानि" मेघ॰ । कणभक्षः कणादः । ३वनजीरके स्त्री गौरा॰ ङीष् । अल्पार्थे टाप् । ४क्षुद्रांशे, ५जीरके"शुण्ठीपादमिता क-णाऽर्द्धमिता दीप्यायवान्योः क्रमात्"वैद्यकम् । 'द्राक्षा-वल्लीनागवल्ली कणावल्लीशताहृतम्" काशी॰ । ६पिप्-पल्याम्, ७श्वेतजीरके च राजनि॰ । "कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि"मनुः अल्पांशे स्त्रीत्वमपि "कदलीफलमध्यस्थं कणामात्रमपक्वकम्" तिथित॰ । (कुमेरापोका) । ७कुम्भीरमक्षिकायां स्त्री मेदि॰। ८महिषाख्यगुग्गुलौ न॰ "वह्निकाख्यं कणं दारु सिह्लकं सागुरु सितम् । शङ्खं जातीफलं श्रीशे धूपानि स्युः प्रियाणि वै" ति॰ त॰ वामपु॰ । "कणं महिषाख्य गुग्गुलुः" रघु॰ भीमसेनो भीमवत् कणगुग्-

गुलु: कण इत्युत्तरपदलोपात्तथेति चिन्तनीयम् ।

**कणगुग्गुलु** पु० कण–निमीलने अच् कर्म्मधा० । महिषाख्य-गुग्गुलौ राजनि० । प्रसङ्गात् गुग्गुलुभेदगुणादिकं भावप्र० दर्शितमुच्यते । "महिषाख्यो महानीलः कुमुदः पद्म इत्यपि । हिरण्यः पञ्चमो ज्ञेयो गुग्गुलोः पञ्च जातयः । भृङ्गाञ्जनसवर्णस्तु महिषाख्य इति स्मृतः । महानीलस्तु विज्ञेयः स्वनामसमलक्षणः । कुमुदः कुमुदाभः स्यात् पद्मो माणिक्यसन्निभः । हिरण्याख्यस्तु हेमाभः पञ्चानां लिङ्गमीरितम् । महिषाख्यो महानीलो गजेन्द्राणां हिताबुभौ । हयानां कुमुदः पद्मः स्वस्त्यारोग्यकरौ परौ । विशेषेण मनुष्याणां कनकः परिकीर्त्तितः । कदाचिन्महिषाख्यश्च ख्यातः केश्चिन्नृणामपि । गुग्गुलुर्विशदस्तिक्तो वीर्य्योष्णः पित्तलः सरः । कषायः कटुकः पाके कटूरूक्षो लघुः परः । भग्नसन्धानकृद् वृष्यः सूक्ष्मः स्वर्यो रसायनः । दीपनः पिच्छिलो बल्यः कफवातव्रणापहः । मेदोमेहाश्मवातांश्च क्लेदकुष्ठाममारुतान् । पिड़काग्रन्थिशोफार्शोगण्डमालाः क्रमीन् जयेत् । माधुर्य्याच्छमयेद्वातं कषायत्वाच्च पित्तहा । तिक्तत्वात् कफजित्तेन गुग्गुलुः सर्वदोषहा । स नवो वृंहणो वृष्यः पुराणस्त्वतिलेखनः । स्निग्धः काञ्चनसङ्काशः पक्वजम्बूफलोपमः । नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः । शुष्को दुर्गन्धकश्चैव त्यक्तप्रकृतिवर्णकः । पुराणः स तु विज्ञेयो गुग्गुलुर्वीर्य्यवर्ज्जितः । अम्लं तीक्ष्णमजीर्णञ्च व्यवायं श्रममातपम् । मद्यं रोषन्त्यजेत् सम्यग्गुणार्थी पुरसेवकः" ।

**कणजीर** पु० कर्म्मधा० । श्वेतजीरके राजनि० ।

**कणजीरक** पु० कर्म्म० अल्पार्थे कन् । क्षुद्रजीरके रत्नमा० जीरकपर्य्यायभेदगुणादि भावप्र० दर्शितं यथा 'जीरको जरणो जाजी कणा स्याद्दीर्घजीरकः । कृष्णजीरः सुगन्धश्च तथैवोद्गारशोधनः । कालाजाजी तु सुषवी कालिका चोपकालिका । पृथ्वीका कारवी पृथ्वी पृथुकृष्णोपकुञ्चिका । उपकुञ्ची च कुञ्ची च वृहज्जीरक इत्यपि । जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु । संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत् । ज्वरघ्नं पाचनं वृष्यं बल्यं रुच्यं कफापहम् । चक्षुष्यं पवनाध्मानगुल्मच्छर्द्यतिसारहृत्" ।

**कणप** पु० कणान् लौहगुलिकाः पिबति पा–क । यन्त्रभेदे (वन्दुक)येन यन्त्रेण आग्नेयद्रव्ययोगेन गर्भसंभृता लौहगुलिकाः तारका इव विकीर्य्यन्ते तादृशे यन्त्रे "अयःकणपचक्राश्मभुशुण्ड्युद्यतबाहवः" भा० आ० ८२५७ श्लो० नीलकण्ठ व्याख्यायां अयःकणपम् लौहमयमिति क्लीवतया प्रयोगश्चिन्त्यः अमरे "आतपः क्षत्रियेनाभिः कणपः क्षुरकेदरः" इति पुंस्त्वनिर्द्देशात् तत्र कुणप इति पाठान्तरम् । "चापचक्रकणपकर्पणप्रासपट्टिशमुषलतोमरादिप्रहरणजालम्" दशकुमा० पा–णिनि । कणपायिन् इत्यपि तत्र । "परिघान् भिन्दिपालांश्च भुशुण्डी कणपायिनः" भा० कर्ण० ७४४ श्लो० । कणपानपि इति पाठः

**कणभ** पु० कण इव भाति भा–क । अग्निप्रकृतिके सुश्रुतोक्ते कीटभेदे । "त्रिकण्टकः कुणी चापि हस्तिकक्षोऽपराजितः । चत्वार एते कणभा व्याख्यातास्तीव्रवेदनाः" सुश्रु० । स्वार्थे कन् तत्रार्थे । "कौण्डिल्यकः कणभकः" इत्युपक्रम्य "एते ह्यग्निप्रकृतयश्चतुर्विंशतिरेव च । तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः" सुश्रु० ।

**कणलाभ** पु० कणानां लाभोयस्मात् । १पेषणसाधनयन्त्रभेदे (याँता) स हि तत्पेषणेनास्य लाभः श० अच् । २आवर्त्ते लिका० (जलेरघूर्णा) तस्य पेषणयन्त्रवत् आवर्त्तनात् तथात्वम्

**कणशस्** अव्य० कणशब्दात् अल्पार्थात् कारकार्थवृत्तेः वीप्सार्थे शस् । कारकार्थवृत्तेः कणशब्दस्य वीप्सान्वितेऽर्थे "तदिदं कणशोविकीर्य्यते पवनैर्भस्म कपोतकर्बुरम्" कुमा० ।

**कणाटीन** पुंस्त्री कणायाटति अट्–ईनन् । खञ्जनपक्षिणि शब्दर० स्त्रियां ङीष् ।

**कणाटीर** पुंस्त्री कणायाटति अट–ईरन् । खञ्जनखगे शब्दरत्ना० । स्त्रियां ङीष् । स्वार्थे कन् । कणाटीरकोऽप्यत्र

**कणाद** पु० कणमत्ति अद–अण् उप० स० । १वैशेषिकसूत्रकारे काश्यपगोत्रे ऋषिभेदे तन्मतमौलूक्यशब्दे दर्शितम् । २कलादे स्वर्णकारे च सारसुन्दरी ।

**कणिक** पु० कणोविद्यतेऽस्य अस्त्यर्थे ठन् । १गोधूमचूर्णे, (मयदा) राजनि० २अतिसूक्ष्मांशे, ३अग्निमन्थवृक्षे च स्त्री मेदि० । स्वार्थे ठन् ४अल्पार्थे "नाभेरभूत् स्वकणिकाद्वटवन्महाब्जम्" भाग० ७,९,२२, कणैव स्वार्थे कन् । कणिका५जीरके । मेदि० । ६अल्पांशे ७तण्डुलभेदे च रायमुकुटः । "तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन" मेघ०

**कणित** न० कण–आर्त्तस्वरे भावे क्त । १पीड़ितानां शब्दे । कर्त्तरि क्त । २तत्कर्त्तरि त्रि० ।

**कणिश** न० कणो विद्यतेऽस्य इनि कणी तं श्यति शो–क । शस्यमञ्जर्य्यां धान्यादिशीर्षे अमरः ।

**कणीक** त्रि० कण–ईकन् । १अल्पे उणादिकोषः ।

**कणीचि** पु० कण–"कृवणिभ्यामीचिः" उणा० ईचि । १पल्लवां

२निवासे च रभसः। ३पुष्पितायां लतायां ४गुञ्जायां शकटे च स्त्री मेदि० वा ङीप्।

**कणीयस्** त्रि० कण+ईयसुन्। अल्पत्वाले स्त्रियां ङीप्।

**कणे** अव्य०कण–ए। श्रद्धाप्रतिघाते यस्य "कणेमनसी श्रद्धा प्रतिघाते" पा०गतित्वम्। तेन कणेहत्य पयः पिबतीत्यादौ गतित्वात् समासे ल्यप्। श्रद्धाप्रतिघातं कृत्वेत्यर्थः।

**कणेर** पु० कण एर–। १कर्णिकारवृक्षे २वेश्यायां ३हस्तिन्यां च स्त्री उणादिकोषः। [ कारवृक्षे पु०मेदि०।

**कणेरु** स्त्री कण–एरु। १वेश्यायां २करिण्याञ्च ३कर्णि-

**कण्ट** त्रि०कटि–अच्। कण्टके। कण्टफलः

**कण्टक** पु०न० कटि-ण्वुल्। १क्षुद्रशत्रौ, २क्षुद्रशत्रौ, ३रोमाञ्चे, अम० ४मत्स्याद्यस्थि ५द्रुमाङ्गे (कांटा) मेदि० दैवज्ञे दीपिका"लग्नाम्बुद्यूनकर्माणि केन्द्रसञ्ज्ञं कण्टकम्" इति ज्योतिषोक्ते:लग्न तच्चतुर्थसप्तमदशमस्थानरूपं केन्द्रम्। "चेत् कण्टके पनफरे तु यद्वाः समस्ताः स्वादिकत्राल इति राज्यहस्वाप्रिहेतुः"नील०। "अप्रमत्तो निपातार्थे कण्टके पापवर्जिते" षट्प०। तत्र क्षुद्रशत्रौ "सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः" "कण्टकानाञ्च शोधनम्" "एवमादीन् विजानीयात् प्रकाशान् लोककण्टकान्" "कण्टकोद्धरणे नित्यमातिष्ठेत् यत्नमुत्तमम्" मनुः। रोमाञ्चे "प्रीतिकण्टकिततत्वचः" कुमा०। उपचारात् वादे ७दोषभेदे। "एवं क्षुद्रकण्टका उद्धर्त्तव्याः" सर्व्वद०।

**कण्टकद्रुम** पु०कण्टकप्रधानोद्रुमः शा०त०। वर्वरप्रभृतौ कण्टकाचिते वृक्षे। "किं कुलेनोपदिष्टेन शीलमेवात्र कारणम्। भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकद्रुमाः" मृच्छ०। "दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः" भाग० ७,५,१७,। २शाल्मलिवृक्षे (शिमुलगाछ) राजनि० कण्टकोऽस्त्यस्य बाहुल्येन इनि कर्म्मधा०। कण्टकिद्रुमोऽप्यत्र। एवं कण्टकवृक्षकण्टकि वृक्षादयोऽप्यत्र

**कण्टकप्रावृता** स्त्री ३त०। घृतकुमार्य्याम् राजनि०।

**कण्टकफल** पु० कण्टकाचितं फलं यस्य। पनसवृक्षे (काटाल) कण्टकिफलोऽप्यत्र अमरः। २गोक्षुरवृक्षे (गोखुरी) रत्नमाला

**कण्टकवृन्ताकी** स्त्री कण्टकाचिता वृन्ताकी शा०त०। वार्त्ताक्याम् (वेगुण) राजनि०। तस्यावृन्ते कण्टकाचितत्वात् तथात्वम्। [ शब्दच०

**कण्टकश्रेणि** स्त्री कण्टकानां श्रेणिर्यत्र। कण्टकार्य्याम्

**कण्टकस्थल** पु० ६त०सं०। कूर्म्मविभागे आग्नेय्यामुक्तदेशभेदे। स च देशः "आग्नेय्यां दिशि कोसलकलिङ्गवङ्ग- "किष्किन्ध्याकण्टकस्थलनिषादराष्ट्राणि पुरिकदाशार्णाः" इत्युक्तः। [ जन्तुभेदे राजनि० स्त्रियां ङीष्।

**कण्टकागार** पु०स्त्री कण्टकमागिरति आ+गॄ–अण्।(वरट)

**कण्टकाढ्य** पु० कण्टकैराढ्यः। कुब्जके कण्टकस्य प्रचुरप्रधाने वृक्षभेदे राजनि०।

**कण्टकार** पु० कण्टकमृच्छति ऋ–अण्। १शाल्मलिवृक्षे (शिमुल) राजनि०। २विकङ्कते (वँइची) शब्दरत्ना०। ३स्वनामख्यातवृक्षे स्त्री भावप्र० "किट्टाघञ्" सूत्रे तद्धितान्तत्वेन पक्षमते गौरा०ङीष्। अन्यमते अणन्तत्वात् ङीप् इति भेदः। कण्टकारा(री)णां समूहः रजता० अञ्। काण्टकार तत्समूहे। तत्र मध्ये कण्टकारशब्दस्य पाठेऽपि लिङ्गविशिष्टपरिभाषया कण्टकारीशब्दस्यापि ग्रहणात्।

**कण्टकारिका** स्त्री कण्टकान् ऋच्छति कण्टक+ऋ–ण्वुल्। १स्वनामख्याते वृक्षे। फलेऽपि हरितक्यादित्वात् लुप् तत्र फलेऽपि स्त्री। "कण्टकारी तु दुःस्पर्शा क्षुद्रा व्याघ्री निदिग्धिका। कण्टालिका कण्टकिनी धावनी वृहती तथा। उभे च वृहत्यौ। यत्र व्याघ्र शाव्यतः "क्षुद्रायां क्षुद्रभण्टाक्यां वृहतीति निगद्यते"। श्वेता क्षुद्रा चन्द्रहासा लक्ष्मणा क्षेत्रदूतिका। गर्भदा चन्द्रभा चन्द्रा चन्द्रपुष्पा प्रियङ्करी। कण्टकारी सरा तिक्ता कटुका दीपनी लघुः। रूक्षोष्णा पाचनी कासश्वासज्वरकफानिलान्। निहन्ति पीनसं पार्श्वपीडाकृमिहृद्रामयान्। तयोः फलं कटु रसे पाके च कटुकं भवेत्। शुक्रस्य रेचनं भेदि तिक्तं पित्ताग्निकृल्लघु। हन्यात् कफमरुत्कण्डूकासमेदकृमिज्वरान्। तद्वत्प्रोक्ता सिता क्षुद्रा विशेषात् गर्भकारिणी" भावप्र० पर्य्यायभेदगुणा उक्ताः "कण्टकारीफलं तिक्तं कटुकं दीपनं लघु। रूक्षोष्णं श्वासकासघ्नं ज्वरानिलकफापहम्" भावप्र०।

**कण्टकारीघृत** न० चक्रद० उक्ते घृतभेदे "कण्टकारीगुडूचीभ्यां पृथक्त्रिंशत्पलाद्रसे। प्रस्थः सिद्धोघृतात्स्यात्कासज्वराग्निदीपनः"।

**कण्टकार्य्यादिपाचन** न०चक्रद० उक्ते पाचनभेदे "कण्टकार्य्यमृता भार्गी नागरेन्द्रयवासकम्। भूनिम्बञ्चन्दनं मुस्तं पटोलं कटुरोहिणी। कषायं पाययेदेतत्पित्तश्लेष्मज्वरापहम्। दाहतृष्णारुचिच्छर्द्दिकासहृत्पार्श्वशूलनुत्"

**कण्टकाल** पु० कण्टं कण्टकाकारं फले कालयति चुरा० कल—अण् । पनसवृक्षे शब्दच० । [यवासवृक्षे राजनि०

**कण्टकालुक** पु० कण्टकायालति पर्य्याप्नोति अल—उकञ् ।

**कण्टकाशन** पुंस्त्री कण्टकमश्नाति अश—युच् । उष्ट्रे त्रिका० स्त्रियां ङीष् । एवं कण्टकभक्षकादयोऽप्यत्र ।

**कण्ठकाष्ठील** पुंस्त्री कण्ठकमष्ठीलमिवास्य । मत्स्यभेदे त्रिका० स्त्रियां ङीष् ।

**कण्टकित** त्रि० कण्टको रोमाञ्चो जातोऽस्य तार० इतच् । जा पुलके "प्रीतिकण्टकितत्वचः" कुमारः । "आसीद्वरः कण्टकितप्रकोष्ठः" रघुः ।

**कण्टकिन्** पुंस्त्री कण्टकोऽस्त्यस्य कण्टक+इनि । मत्स्ये शब्दर० स्त्रियां ङीप् । २खदिरवृक्षे पु० शब्दमाला ३मदनवृक्षे (मयना) रत्नमा० । ४गोक्षुरे ५वंशे ६वदरवृक्षे च राजनि० । ७कण्टकयुक्तमात्रे त्रि० ।

**कण्टकिफल** पु० कण्टकि कण्टकयुक्तं फलमस्य । पनसे स्त्रियां ङीप् सा च १वार्त्ताक्यां शोणभिण्ट्यां ३मधुखर्ज्जूर्य्याञ्च राजनि० तस्य पर्य्यायगुणादि भाव०उक्तं यथा "पनसः कण्टकिफलः पनसोऽतिबृहत्फलः 'पनसं शीतलं पक्वं स्निग्धं पित्तानिलापहम् । तर्पणं बृंहणं स्वादु मांसलं श्लेष्मलं भृशम् । बल्यं शुक्रप्रदं हन्ति रक्तपित्तक्षतव्रणान् । आमन्तदेव विष्टम्भि वातलन्तुवरं गुरु । दाहकृत् मधुरं बल्यं कफमेदोविवर्द्धनम् । पनसोद्भूतवीजानि वृष्याणि मधुराणि च । गुरूणि बद्धविट्कानि सृष्टमूत्राणि संवदेत्" । अन्यच्च । "मज्जा पनसजोवृष्यो वातपित्तकफापहः । विशेषात् पनसोवर्ज्ज्यः गुल्मिभिर्मन्दवह्निभिः" । [भेदे शब्दच० ।

**कण्टकिल** पु० कण्टक+अस्त्यर्थे इलच् । (वेँडवांश) । वंश-

**कण्टकिलता** स्त्री कण्टकिनी लता कर्म्म० । (त्रपुषीलतायाम् राजनि०

**कण्टकी** स्त्री कण्टक+अर्श्चआदित्वादच् गौरा० ङीष् । वार्त्ताकीभेदे । (काँटावेकुण) राजवल्लभः "कण्टकी कटुतिक्ता च रक्तपित्तप्रकोपिनी । कण्डूकच्छूहरा नित्यं दीपनी परिकीर्त्तिता" इत्युक्तगुणा । २कर्म्मणि च "यातुधानेभ्यः कण्टकीकारीम्" यजु० ३०८ । "कण्टकी कर्म्म तत्-रिणीम्" वेददीपः ।

**कण्टकीद्रुम** पु० कण्टकी द्रुमः पृषो० दीर्घः खदिरवृक्षे रत्नमा०

**कण्टकीफल** पु० कण्टकि फलमस्य पृषो० दीर्घः । पनसे भरतः

**कण्टकुरण्ट** पु० कण्टप्रधानः कुरण्टः । झिण्ट्याम् (झाँटि, राजनि०

**कण्टतनु** स्त्री कण्टा कण्टकान्विता तनुर्यस्याः । वृहत्याम् राजनि० । [राजनि०

**कण्टदला** स्त्री कण्टं कण्टकाचितं दलं यस्याः । केतक्याम् ।

**कण्टपत्र** पु० कण्टं कण्टकान्वितं पत्रं यस्य । विकङ्कतवृक्षे । (वँइची) शब्दमाला [ शृङ्गाटकाम् राजनि० ।

**कण्टपत्रफला** स्त्री कण्टं कण्टकान्वितं पत्रं फलञ्च यस्याः ।

**कण्टपाद** पु० कण्ठः कण्टकान्वितः पादो मूलं यस्य । विकङ्कतवृक्षे । (वँइची) राजनि० ।

**कण्टफल** पु० कण्टं कण्टकान्वितं फलं यस्य । १गोक्षुरे, २पनसे, ३धूस्तूरे, ४लताकरञ्जे, ५एरण्डभेदे च राजनि० । (देवताड) ६देवताडीलतायाम् स्त्री राजनि० ।

**कण्टल** पु० कण्ट+मत्वर्थीयो लच् । वर्वुरे (वावला) शब्दच० ।

**कण्टवल्ली** स्त्री कण्टा कण्टकान्विता वल्ली । श्रीवल्लीवृक्षे राजनि०

**कण्टवृक्ष** पु० कण्टप्रधानोवृक्षः । तेजःफलवृक्षे राजनि० ।

**कण्टाफल** पु० कटि—भावे अ कण्टा वेष्टनम् तया तदुपलक्षितं फलमस्य । पनसे (काटाल) शब्दमाला ।

**कण्टार्त्तगला** स्त्री कण्टा तद्युक्ता आर्त्तगला कर्म० । नीलझिण्ट्याम् । (नीलझाँटि) राजनि० ।

**कण्टालु** स्त्री कण्टाय कण्टकाय अलति पर्य्याप्नोति अल उण् । १वार्त्ताक्यां २वंशे ३वृहत्यां ४वर्वुरे च राजनि० ।

**कण्टाह्व** न० कण्टं कण्टकमाह्वयते स्पर्द्धते आ+ह्वे-क । कटुकन्दे राजनि० ।

**कण्टिन्** त्रि० कण्ट+अस्त्यर्थे इनि । १खदिरे २अपामार्गे (आपाङ)३गोक्षुरे (गोखुरी)४कलायभेदे च राजनि० । ५कण्टकयुक्ते त्रि० स्त्रियां ङीप् । सा च कण्टकार्य्यां भावप्र०

**कण्ठ** पु० कण—ठ ठस्य नेत्त्वम् कठि—अच् वा । १ग्रीवापुरोभागे गले "मनोरथः कण्ठपथं कथं सः" नैष० । नीलकण्ठः शितिकण्ठः कालकण्ठः । "सबाष्पकण्ठस्खलितैः पदैरियम्" । "असत्यकण्ठार्पितबाहुबन्धना" कुमा० । "कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे" मेघ० । "कण्ठं ते कुण्ठयिष्यामि" नैष० कण्ठदेशे च सुषुम्णानाडीमध्यस्य षट्चक्रान्तर्गतं विशुद्धाख्यं चक्रमस्ति । "तदूर्द्ध्वन्तु विशुद्धाख्यं दलषोड़शपङ्कजम् । स्वरैः षोड़शभिर्युक्तं धूम्रवर्णमहाप्रभम् । विशुद्धतत्त्वमाख्यातमाकाशाख्यं महाद्भुतम्" गौत० त० । विशुद्धचक्रे विवृतिः । २मदनवृक्षे, ३समीपे ४होमकुण्डाद्बाह्ये ऽङ्गुलिमितस्थाने च "आतबाह्ये ऽङ्गुलः कण्ठः सर्वकुण्डेष्वयं क्रमः" ति० पु० त० । ५कण्ठध्वनौ ध्वनि-

माले च हेमच०। "सा मुक्तकण्ठं, व्यसनातिभारात्"रघुः मुक्तकण्ठध्वनि यथा तथेत्यर्थः। अस्य स्वाङ्गत्वेन उपसर्ज्जनत्वे संयोगोपधत्वेऽपि ङीष्। किमिदं किन्नरकण्ठि! सुप्यते" रघुः। स्वरद्वारा किन्नरकण्ठसाम्यम्। "ऊर्द्ध्वविस्तृतदोःपाणिन्टमाने पौरुषं त्रिषु। कण्ठोगलोऽथ" इत्यमरे त्रिष्विति पदस्य उत्तरान्वयभ्रमेण शब्दकल्पद्रुमादौ कण्ठशब्दस्य त्रिलिङ्गत्वोक्तिः प्रामादिकी। "पौरुषं पुरुषस्याथ भावे कर्मणि तेजसि। ऊर्द्ध्वविस्तृतदोःपाणिमाने स्यादभिधेयवत्" मेदिन्यां मानभेदे पौरुषशब्दस्यैव वाच्यलिङ्गत्वोक्तेस्तदेकवाक्यतया पौरुषशब्दस्यैव त्रिलिङ्गत्वं युक्तं न तु तस्य कण्ठान्वयित्वम्। युक्तञ्चैतत् पुरुषः प्रमाणमस्येत्यर्थे पुरुषहस्तिभ्यामण् चेति"पा० सूत्रे विहिताणन्ततया अस्येति वाक्यबोधित लिङ्गत्वमिति।

**कण्ठकूणिका** स्त्री कण्ठ इव तद्ध्वनिरिव कूणयति कूण–ण्वुल्। वीणायां हेम०। वीणायाः कण्ठतुल्यस्पष्टध्वनिकत्वात्तथात्वम्।

**कण्ठतलासिका** स्त्री कण्ठतले अश्वकण्ठ स्थाने आस्ते आस–ण्वुल्। अश्वग्रीवावेष्टकचर्म्मादौ शब्दच०।

**कण्ठदघ्न** त्रि०कण्ठः परिमाणमस्य दघ्नच्। गलपरिमाणे"यथोपपचदघ्नं वा कण्ठदघ्नं वा" शत० ब्रा० १२,२,१,२।

**कण्ठधान** पु० देशभेदे स च वृह० कूर्मविभागे "उत्तरतः कैलासः" इत्युपक्रम्य "तक्षशिलपुष्कलावतकैलावतकण्ठधानाश्च" उत्तरत उक्तः।

**कण्ठनीड़क** पु० कण्ठे निकटस्थे नीड़े कायति शब्दायते कै–क (चिल)। पक्षिभेदे त्रिका०।

**कण्ठनीलक** पु०कण्ठं नीलयति धारकस्य स्वशिखाकज्जलेन। नील+णिच्–ण्वुल्। (मशाल)महादीपे शब्दमाला।

**कण्ठपाशक** पु० कण्ठे पाश इव कायति प्रक शते कै–क। गजगलावेष्टनरज्ज्वाम् शब्दमाला। [दड़िवांधा)।

**कण्ठबन्ध** पु०७त०। गले बन्धने। उद्बन्धने। (गलाय-

**कण्ठभूषा** स्त्री ६त०। गलाभरणे अमरः।

**कण्ठमणि** पु० कण्ठे धार्य्योमणिः। गले धार्य्ये मणिभेदे।

**कण्ठशालूक** न०सुश्रुतोक्ते गलगते मुखरोगभेदे"कण्टगतास्तु रोहिण्यः पञ्च, कण्ठशालूकमिति विभज्य"कोलास्थिमात्रः कफसम्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः। खरः स्थिरः शस्त्रनिपातसाध्यस्तं कण्ठशालूकमिति ब्रुवन्ति"सुश्रु०लक्षितम् "विस्राव्य कण्ठशालूकं साधयेत् तुण्डकेरिवत्" सुश्रु०।

**कण्ठशुण्ठी** स्त्री सुश्रुतोक्ते तालुगते मुखरोगभेदे स च रोगः "तालुगतास्तु गलशुण्ठिकेत्युपक्रम्य "श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो दीर्घः शोफाध्मानवस्तिप्रकाशः। तृष्णाश्वासकासकृत् संप्रदिष्टो व्याधिर्वैद्यैः कण्ठशुण्डीति नाम्ना" इति लक्षितः। गलशुण्ठीत्यप्यत्र स्त्री।

**कण्ठसूत्र** न० "यं कुर्वते वक्षसि वल्लभस्य स्तनाभिघातं निबिड़ोपघातात्। परिश्रमार्त्ताः शनकैर्विदग्धास्तत् कण्ठसूत्रं प्रवदन्ति तज्ज्ञाः" इत्युक्तलक्षणे सुरतबन्धभेदे। "तस्य निर्दयरतिश्रमालसाः कण्ठसूत्रमपदिश्य योषितः"रघुः।

**कण्ठाग्नि** पु० कण्ठे अग्निः पाकाग्निर्यस्य। विहगे, तस्य गलाधःकरणमात्रेणैवान्नादेः पाकाद्धोमाग्नित्वात् तथात्वम्

**कण्ठाल** पु० कठि–आलच्। १शूरणे(ओल)२युद्धे, ३नौकाङ्गे, ४खनित्रे विश्वः। ५गोणीभेदे ६जालगर्णिकायां च मेदिनिः स्त्री। [भेदे। हेमच०

**कण्ठिका** स्त्री कण्ठोभूष्यतयाऽस्त्यस्याः ठन्।(एकनर)गलाभरण

**कण्ठी** स्त्री क्षुद्रः कण्ठः अल्पार्थे ङीप्।२अश्ववेष्टनरज्ज्वाम्। शब्दमा०। २गले अमरटीकायां भरतः कण्ठीरवः।

**कण्ठीरव** पुंस्त्री कण्ठ्यां रवो यस्य। १सिंहे२मत्तगजे, "कण्ठीरवमहापहेण"दशकुमा०। ३कपोते च राजनि० स्त्रियां ङीष्। वासकवृक्षे स्त्री गौ०ङीष्। राजनि०

**कण्ठेकाल** पु० कण्टे कालः कण्ठे कालोऽस्य वा सप्तम्या अलुक्। महादेवे। हेमच०।

**कण्ठ्य** त्रि० कण्ठे भवादि"शरीरावयवाद् यत्"पा० यत्। १गलभवे "कीर्त्तितं तालुजानान्तु कण्ठ्यानां कर्म चोच्यते" सुश्रु०। "भवस्य "कण्ठ्यं रुद्रस्यान्तःपार्श्व्यम्" यजु० ३,९, कण्ठ्यं गलभवं मांसम्"वेददी०।२अकुहविसर्जनीयवर्णेषु च। "अकुहविसर्ज्जनीयानां कण्ठ" इत्युक्तवर्णानां तथात्वम्। "अर्द्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत्"शिक्षा "कण्ठ्यमाङ्करसंयुतम्" शिक्षा कण्ठाय कण्ठस्वराय हितं यत्। ३कण्ठस्वरहितकारके "सर्व्वदोषहरा लघ्वी कण्ठ्या मूलकपर्णिका" सुश्रु०।"यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः" सुश्रु०। अस्य च यदन्तद्राचकतया आद्युदात्तस्वरः।

**कण्डन** न० कडि–ल्युट्। मुसलादिना तण्डुलादेर्निस्तुषता सम्पादने १व्यापारे(काडान)"न हि व्रीह्यादिलवनकण्डनपेषणादौ च सविज्ञानानाम्" छा० उ०भा०। कण्ड्यते कर्म्मणि ल्युट्। तण्डुलादेः कण्डनसाध्ये (कुड़ो) इति

ख्याते २द्रव्यभेदे । “क्रियां कुर्य्यात् भिषक् पश्चाच्छालितण्डुलकाण्डनैः” सुश्रु० । “अथ पतितां तण्डुलकाण्डन प्रदिग्धगात्रीम्” सुश्रु० ।

**काण्डनी** स्त्री काण्ड्यतेऽनेन कडि–करणे ल्युट् ।१मूषले२उदूखले च “काण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्” मनुः

**काण्डरा** स्त्री कडि–अरन् । १महास्नायौ महानाड्यां हेमच० तासां विवृतिः भावप्रका० यथा ‘महत्यः स्नायवः प्रोक्ताः कण्डरास्तास्तु षोडश । प्रसारणाकुञ्चनयोर्दृष्टं तासां प्रयोजनम् । चतस्रोहस्तयोस्तासां तावत्यः पादयोः स्मृताः । ग्रीवायामपि तावत्यस्तावत्यः पृष्ठसङ्गताः”। तत्र पादहस्तगतानां कण्डराणां नखाः प्ररोहाः, ग्रीवानिबन्धनानामधोभागगतानां प्ररोहो मेढ्रः, पृष्ठनिबन्धानां प्ररोहो नितम्बमूर्द्धोरुवक्षस्तनपिण्डाः” । “पार्ष्णिं प्रत्यङ्गुलीनां तु काण्डरा याऽनिलार्हिता” “तलं प्रत्यङ्गुलीनां तु काण्डरा बाहुपृष्ठतः” इति च सुश्रुतः ।

**काण्डरीक** पु० सप्तजातिस्मरमध्ये विप्रभेदे तेषां पूर्वजन्मवृत्तान्तसहिता कथा हरिवंशे दर्शिता यथा “सगालवस्य चरितं काण्डरीकस्य चैव हि” इत्युपक्रम्य ।

“वाग्दुष्टः क्रोधनो हिंस्रः पिशुनः कविरेव च । खसृमः पितृवर्त्ती च नामभिः कर्मभिस्तथा । कौशिकस्य सुतास्तात शिष्या गर्गस्य भारत ! । पितर्य्युपरते सर्व्वे व्रतवन्तस्तदाऽभवन् । नियोगात्ते गुरोस्तस्य गां दोगध्रीं समकालयन् । समानवत्सां कपिलां सर्व्वे न्यायागतां तदा । तेषां पथि क्षुधार्त्तानां बाल्यान्मोहाच्च भारत । क्रूरा बुद्धिः समभवत्तां गां वै हिंसितुं तदा । तान् कविः खसृमश्चैवा वोचतां नेति वै तदा । न चाशक्यन्त ताभ्यां ते तदा वारयितुं द्विजाः । पितृवर्त्ती तु यस्तेषां नित्यं श्राद्धान्वितो द्विजः । स सर्व्वानब्रवीद्भ्रातॄन् कोपाद्धर्मे समाहितः । यद्यवश्यं प्रहन्तव्यं पितॄनुद्दिश्य साध्विमाम् । प्रकुर्व्वीमहि गां सम्यक् सर्व्व एव समाहिताः । एवमेषाऽपि गौर्द्धर्मं प्राप्स्यते नात्र संशयः । पितॄनभ्यर्च्य धर्मेण नाधर्मो नो भविष्यति । तथेत्युक्त्वा तु ते सर्वे प्रोक्षयित्वा च गान्ततः । पितृभ्यः कल्पयित्वैनामुपायुञ्जन्त भारत ! । उपयुज्य च गां सर्वे गुरोस्तस्य न्यवेदयन् । शार्दूलेन हता धेनुर्वत्सोऽयं प्रतिगृह्यताम् । आर्ज्जवात् स तु वत्सं तं प्रतिजग्राह वै द्विजः । मिथ्योपचर्य्य ते तन्तु गुरुमन्यायतो द्विजाः । कालेन समयुज्यन्त सर्वे एवायुषः क्षये । ते वै क्रूरतया हिंस्रा अनार्य्यत्वाद्गुरौ तथा । उग्रा हिंसाविहाराश्च सप्ताजायन्त सोदराः । लुब्धकस्यात्मजास्तात । बलवन्तो मनीषिणः । पितॄनभ्यर्च्य धर्मेण प्रोक्षयित्वा च गान्तदा । स्मृतिप्रत्ययमर्षश्च तेषां जात्यन्तरेऽभवत् । जाता व्याधा दशार्णेषु सप्त धर्मविचक्षणाः । स्वधर्मनिरताः सर्वे लोभानृतविवर्ज्जिताः । तावन्मात्रं प्रकुर्व्वन्ति यावता प्राणधारणम् । शेषं ध्यानपराः कालमनुध्यायन्ति कर्म तत् । नामधेयानि चाप्येषामिमान्यासन् विशाम्पते ! । निर्वैरो निर्वृतिः क्षान्तो निर्मन्युः क्लतिरेव च । वैधसो मातृवर्त्ती च व्याधाः परमधार्मिकाः । तैरेवमुषितैस्तात हिंसाधर्मपरैः सदा । माता च पूजिता वृद्धा पिता च परितोषितः । यदा माता पिता चैव संयुक्तौ कालधर्मणा । तदा धनूंषि ते त्यक्त्वा वने प्राणानवासृजन् । शुभेन कर्मणा तेन जाता जातिस्मरा मृगाः । त्रासानुत्पाद्य संविग्ना रम्ये कालञ्जरे गिरौ । उन्मुखो नित्यवित्रस्तः स्तब्धकर्णो विलोचनः । पण्डितो घस्मरो नादी नामतस्तेऽभवन्मृगाः । तमेवार्थमनुध्यान्तो जातिस्मरणसम्भवम् । आसन् वनेचरा दान्ता निर्द्वन्द्वा निष्परिग्रहाः । ते सर्वे शुभकर्माणः सधर्माणो वनेचराः । योगधर्ममनुध्यान्तो विहरन्ति स्म तत्र ह । मरुं साध्य जहुः प्राणान् लघ्वाहारास्तपस्विनः । तेषां मरुं साधयतां पदस्थानानि भारत ! । तथैवाद्यापि दृश्यन्ते गिरौ कालञ्जरे नृप ! । कर्मणा तेन ते तात ! शुभेनाशुभवर्ज्जिताः । शुभाच्छुभतरां योनिं चक्रवाकत्वमागताः । शुभे देशे शरद्वीपे सप्तासन् वै जलौकसः । त्यक्त्वा सहचरीधर्मं मुनयो धर्मचारिणः । सुमनाः शुचिवाक् शुद्धः पाञ्चकश्छिद्रदर्शनः । सुनेत्रश्च स्वतन्त्रश्च शकुना नामतः स्मृताः । पञ्चमः पाञ्चिकस्तत्र सप्तजातिषु जायत । षष्ठस्तु काण्डरीकोऽभूद्ब्रह्मदत्तस्तु सप्तमः । तेषान्तु तपसा तेन सप्तजातिकृतेन वै । योगस्य चाभिनिर्वृत्त्या प्रतिभानाच्च शोभनात् । पूर्व्वजातिषु यद्ब्रह्म श्रुतं गुरुकुलेषु वै । तथैवावस्थिता बुद्धिः संसारेष्वपि वर्त्तताम् । ते ब्रह्मचारिणः सर्वे विहङ्गाः ब्रह्मवादिनः । योगधर्ममनुध्यान्तो विहरन्ति स्म तत्र ह । ते योगधर्मनिरताः सप्त मानसचारिणः । पद्मगर्भोऽरविन्दाक्षः क्षीरगर्भः सुलोचनः । उरुबिन्दुः सुबिन्दुश्च हेमगर्भस्तु सप्तमः । वायुम्बुभक्षाः सततं शरीराण्युपशोषयन् । तत्र ते शकुना राजंश्चत्वारो योगधर्मिणः । योगभ्रष्टास्त्रयश्चैव देहन्यासकृतोऽभवन् । काम्पिल्ये नगरे ते तु ब्रह्मदत्तपुरोगमाः । जाताः सप्त महात्मानः सर्वे विगतकल्मषाः

स्नानध्यानतपःपूता वेदवेदाङ्गपारगाः। स्मृतिमन्तोऽत्र चत्वारस्त्रयस्तु परिमोहिताः। स्वतन्त्रस्त्वणुहाज्जज्ञे ब्रह्मदत्तो महायशाः। यथा ह्यासीत् पक्षिभावे सहृत्सः पूर्वचिन्तितः। छिद्रदर्शी सुनेताश्च तथा बाभ्रव्यवत्सयोः। जातौ श्रोत्रियदायादौ वेदवेदाङ्गपारगौ। सख्यायौ ब्रह्मदत्तस्य पूर्वजातिसहोषितौ। पाञ्चालः पाञ्चिकस्तत्र कण्डरीकस्तथाऽपरः। पाञ्चालो बह्वृचस्त्वासीदाचार्यत्वं चकार ह। द्विवेदः कण्डरीकस्तु छन्दोगोऽध्वर्युरेव च। सर्वसत्त्वरुतज्ञस्तु राजासीदणुहात्मजः। पाञ्चालकण्डरीकाभ्यां तस्य सख्यमभूत्तदा। ते ग्राम्यधर्मनिरताः कामस्य वशवर्त्तिनः। पूर्वजातिकृतेनासन् धर्मकामार्थकोविदाः" प्रसङ्गागतमन्यद्रुपवर्ण्य तेषु चतुर्णां वक्ष्यमाणश्लोकश्रावणाय ब्राह्मणनियोजनमुक्त्वा मुक्तिमुपवर्ण्य अवशिष्टानां मुक्तिदर्शनायोक्तं यथा। "अथ राजा शिरःस्नातो लब्ध्वा नारायणाद्वरम्। प्रविवेश पुरं प्रीतो रथमारुह्य काञ्चनम्। तस्य रश्मीन् प्रत्यगृह्णात् कण्डरीको द्विजर्षभः। चामरव्यजनञ्चापि बाभ्रव्यः समवाक्षिपत्। इदमन्तरमित्येवं ततः स ब्राह्मणस्तदा। श्रावयामास राजानं श्लोकं तं सचिवौ च तौ। [सप्त व्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ। चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे। तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः। प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदथ]। तच्छ्रुत्वा मोहमगमद्ब्रह्मदत्तो नराधिपः। सचिवश्चास्य पाञ्चाल्यः कण्डरीकस्तथैव च। स्रस्तरश्मिप्रतोदौ तौ पतितव्यजनावुभौ। दृष्ट्वा बभूवुरस्वस्थाः पौराश्च सुहृदस्तथा। मुहूर्त्तमेव राजा स सह ताभ्यां रथे स्थितः। प्रतिलभ्य ततः संज्ञां प्रत्यागच्छदरिन्दम!। ततस्ते तत् सरः स्मृत्वा योगमुपलभ्य च। ब्राह्मणं विपुलैरर्थैर्भोगैश्च समयोजयन्। अभिषिच्य स्वराज्ये तु विष्वक्सेनमरिन्दमम्। जगाम ब्रह्मदत्तोऽथ सदारो वनमेव ह। कण्डरीकोऽपि धर्मात्मा साङ्ख्ययोगमनुत्तमम्। प्राप्य योगगतिं सिद्धो विशुद्धः स्वेन कर्मणा" हरिवं० २१,२२,२३,२४ अ०।

**कण्डिका** स्त्री कडि-ण्वुल्। वेदैकदेशे। सा च अध्यायप्रपाठकाद्यन्तर्गतब्राह्मणवाक्यसंघरूपा। छान्दोग्यादौ उदा०।

**कण्डु** स्त्री कडि-मृगय्वादि० उ। १गात्रघर्षणे, २तत्कारके रोगे च (चुलकानी)। "पामेत्युक्ताः पिडकाः कण्डुमत्यः" भावप्र०।

**कण्डुर** पु० कण्डुं राति रा-क। १कारवेल्लवतायाम् (करेला) राजनि०। २शूकशिम्ब्याम् (आलकुशी) ३अत्यम्लपर्ण्याञ्च स्त्री राजनि०।

**कण्डू** गात्रविघर्षणे स्वीकृतकर्मकत्वेन सक० घर्षणमात्रे प्रायस्तु घर्षणमात्रोपाधिः सक० उभ० सेट्। स्वार्थे यक्। कण्डूयति ते अकण्डूयीत् अकण्डूयिष्ट कण्डूयाम्-बभूव-आस चकार चक्रे। कण्डूयनं कण्डूयितः कण्डूः कण्डूया कण्डूयन् कण्डूयमानः "कण्डूयमानेन कटं कदाचित्" रघुः "मृगीमकण्डूयत कृष्णसारः" कुमारः। "न संहताभ्यां पाणिभ्याम् कण्डूयेदात्मनः शिरः" मनुः "शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्" शकु०। कण्ड्वादिश्च धातुः प्रातिपदिकश्च "धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि। आह चायमिमं दीर्घमन्ये धातुर्विभाषितः" इत्युक्तेः। यकः कित्त्वकरणसामर्थ्यात् धातुत्वं प्रातिपदिकत्वे तत्करणं व्यर्थं स्यात् प्रातिपदिकस्य गुणाप्रसक्तेः दीर्घकरणाच्च प्रातिपदिकत्वम् आर्द्धधातुकयकारे धातोः दीर्घसत्त्वेन दीर्घपाठो वृथा स्यात् अत उभयरूपत्वम्।

**कण्डू** स्त्री कण्डूय-क्विप् अल्लोपयलोपौ सम्पदा० क्विप्। १कण्डूयने गात्रघर्षणे (चुलकान) २तत्साधनरोगे (चुलकुनी) "कपोलकण्डूः करिभिर्विनेतुम्" कुमा०। "सकण्डूः पिडका श्यावा बहुस्रावा विचर्चिका" भावप्र०।

**कण्डूकरी** स्त्री कण्डूं करोति कृ-ट। शूकशिम्ब्यां (आलकुशी) भट्टर०

**कण्डूघ्न** पु० कण्डूं हन्ति हन-टक्। १आरग्बधे (सोन्दाल) २गौरसर्षपे च राजनि०।

**कण्डूति** स्त्री कण्डूय-भावे क्तिन् अल्लोपयलोपौ। कण्डूयने (चुलकान) हेला०। "सुभग! त्वत्कथारम्भे कर्णे कण्डूतिलालसा" सा०द०"कण्डूतिवन्मनसिजं विषहेत धीरः" भाग०७,९,४५।

**कण्डूमका** स्त्री "कण्डूमकाभिर्दष्टे पीताङ्गश्छर्द्यतीसारज्वरादिभिरभिहन्यते" सुश्रुतोक्ते कीटभेदे। कीटशब्दे विवृतिः

**कण्डूयन** न० कण्डूय-भावे ल्युट्। गात्रघर्षणभेदे (चुलकान) "कण्डूयनैर्दंशनिवारणैश्च" रघुः। "तद्भावभाविते चित्ते वल्लभस्य कथादिषु। मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम्"। "नेशः कण्डूयनेऽङ्गानामासनमोत्सनचेष्टने" भाग० ३,३१,२७। दोषितस्य तत्साधन द्रव्यम् "कृष्णविषाणां लिखितिं पञ्चवर्षि वीतानां दयायासभीते

तया कण्डूयनम्” कात्या०७,२,२८,२० उक्तम्। “यदा कण्डूरुत्पद्यते दीक्षितेन तदा कण्डूयनं कार्य्यम्”कर्कः। यजमानपत्न्यास्तु कण्डूयने। “पृथुमुखोयज्ञियवृक्षशङ्कुः कण्डूयने” कात्या० ७,५,८। “विपुलाग्रो यज्ञियवृक्षस्योदुम्बरपलाशादेः शङ्कुः पत्न्याः कण्डूयनकर्मणि भवति स च प्रादेशमात्रः” कर्कः। करणे ल्युट्। २ कण्डूयनसाधने स्त्रियां ङीप्। “कण्डूयन्यभिषेकेण प्रक्षिप्यते “प्र पर्वतस्येति”कात्या० १५,६,८। कण्डूयनी कृष्णविषाणा”कर्कः।

**कण्डूया** स्त्री कण्डूय–अ–स्त्रीत्वात् टाप्। कण्डूयने।

**कण्डूरा** स्त्री कण्डूं राति रा–क। (आलकुशी) कपिकच्छ्वाम् अमरः। [राजनि०२कण्डूयुक्ते त्रि०।

**कण्डूल** पु०कण्डू+अस्त्यर्थे लच्। १कण्डूकारके शूरणे।

**कण्डोल** पु०कडि–ओलच्। १नलादिनिर्मिते धान्यादिस्थापन पात्रे (डोल). अमरः। २उष्ट्रे पुंस्त्री० उणा० स्त्रियां ङीष्। स्वार्थे कन् तत्रार्थे। कण्डोलकस्य पादाविव पादावस्य हस्त्या०नान्त्यलोपः। कण्डोलकपादः उष्ट्रपात्।

**कण्डोलवीणा** स्त्री कण्डोल इव वीणा।(केँदड़ा) चण्डालवीणायाम् अमरः। क्वचित् कटोलवीणेति पाठः।

**कण्डोली** स्त्री कण्डोलस्तदाकारोऽस्त्यस्याः अच् गौ० ङीष्। चण्डालवीणायां (केँदड़ा) शब्दच०।

**कण्डोघ** पु० कण्डू नामोघो यस्मात्। १शूककीटे शब्दच० (शुयोयापोका) तत्स्पर्शे हि देहे कण्डूसंघस्य जायमानत्वात्तस्य तथात्वम्।

**कण्व** त्रि०कण–क्वन्। १मेधाविनि निघ०। २स्तोतरि त्रि० “प्रदक्षिणो दिव्यः कण्वहोतारः”ऋ०५,४१,४। “कण्वाः-स्तोतारः होतारः” भा०। “आतूर्षञ्च कण्वमन्तं नद्याविद्या”ऋ०८,२,१२, “कण्वमन्तम् कणतिः शब्दकर्म्मा कण्वाः स्तोतारः कण्वगोत्रा वा तैर्युक्तम्”भा०। वेदे मस्य न वः। लोके कण्ववत् इत्येव। कण्यते अपोद्यते क्वन्। ३पापे न०“कण्वचिकीर्षायाम्” वार्त्ति०। पौरवे ४नृपभेदे पु०। “ऋतेयोरन्तिनावोऽमूत्त्रयस्तस्यात्मजा नृपाः। सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः। तस्य मेधातिथिस्तस्मात् प्रस्कण्वाद्या द्विजातयः” भाग० ९,२०,२,३। काश्यपगोत्रोत्पन्ने ५मुनिभेदे स च गोत्रप्रवर्त्तकः। “कण्वानामाङ्गिरसाजमीढकाण्वेति” आश्व० श्रौ०१२,१०१, “यामस्य कण्वोऽदुहत् प्रपीनां सहस्रधारां पयसा मही गाम्” मन्त्र०१७,७४, एतदधीतशाखायाः काण्वशाखात्वेन प्रसिद्धिः। “यजुर्भिरकरोच्छाखा दशपञ्चशतैर्विभुः। जगृहुर्वाजसंन्यस्ताः काण्वमाध्यन्दिनादयः” भाग०१२,६,६७। तदपत्यस्य काण्वस्य शुक्लयजुर्वेदाध्येतृत्वमुक्तम् बहुषु अणो लुक्। “पिबतो अश्विना मधु कण्वानां सवने सुतम्” ऋ० ८,८,२ अयञ्च मुनिः काश्यपगोत्रः “महर्षिं काश्यपं दृष्ट्वाथ कण्वं तपोधनम्”भा०आ०६७। तस्य चाश्रमः। “मालिनीमभितो राजन्नदीं पुण्यजलां तथा”तत्रोक्तेः कण्वसुताशब्दे वक्ष्यमाणात् भा०वाक्याच्च हिमवत् प्रस्थे मालिनीनदीतीरेऽस्ति। तस्याश्रमयात्रादौ पुण्यविशेषो यथा। “कण्वाश्रमं ततो गच्छेत् श्रीजुष्टं लोकपूजितम्। धर्म्मारण्यं हि तत् पुण्यमाद्यञ्च भरतर्षभ!। यत्र प्रविष्टमात्रोवै सर्वपापैः प्रमुच्यते। अर्च्चयित्वा पितॄन् देवान् नियतोनियताशनः। सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते” भा०व०८२अ०।६स्तुत्ये त्रि०“स इदग्निः कण्वतमः कण्वसखार्य्यः” ऋ०१०,११५,५, “कण्वतमः स्तुत्यतमः” भा०

**कण्वरथन्तर** न० कण्वेन गीतं रथन्तरम्। सामगानभेदे। वैश्यस्तोमे “कण्वरथन्तरं पृष्ठं भवति” श्रुतिः तच्च साम “पुनानः सोम” इत्यादिषु गीतम् उत्तरार्चि० ४प्र क०२० दृश्यम्।

**कण्वसुता** स्त्री कण्वस्य ऋषेः प्रतिपालिता सुता। शकुन्तलायाम् सा च विश्वामित्रात् मेनकायामुत्पन्ना जातमात्रा च तया परित्यक्ता शकुन्तैः रक्षिता कण्वेन प्रतिपालिता दुष्मन्तेन गान्धर्व्वविधिना व्यूढा। कण्वदुहित्रादयोऽप्यत्र। तज्जन्मकथा भा० आ० ७१अ० “तप्यमानः किल पुरा विश्वामित्रो महातपाः। भृशं वै तापयामास शक्रं सुरगणेश्वरम्। तपसा दीप्तवीर्य्योऽयं स्थानान्मां च्यावयेदिति। भीतः पुरन्दरस्तस्मान्मेनकामिदमब्रवीत्। गुणैरप्सरसां दिव्यैर्मेनके! त्वं विशिष्यसे। श्रेयो मे कुरु कल्याणि! यत्त्वां वक्ष्यामि तच्छृणु। असावादित्यसङ्काशो विश्वामित्रो महातपाः। तप्यमानस्तपो घोरं मम कम्पयते मनः। मेनके! तव भारोऽयं विश्वामित्रः सुमध्यमे!। संशितात्मा सुदुर्धर्षं उग्रे तपसि वर्त्तते। स मां न च्यावयेत् स्थानात्तं वै गत्वा प्रलोभय। चर तस्य तपोविघ्नं कुरु मे प्रियमुत्तमम्। रूपयौवनमाधुर्य्यचेष्टितस्मितभाषितैः। लोभयित्वा वरारोहे! तपसस्तं निवर्त्तय” तत्सहायतया वायुं प्रेषयस्वेत्युक्ता “कण्व उवाच। एवमुक्तस्तया शक्रः सन्दिदेश सदागतिम्। प्रातिष्ठत तदा काले मेनका वायुना सह। अथापश्य-

दुरारोहा तपसा दग्धकिल्बिषम् । विश्वामित्रं तप्यमानं मेनका भीरुराश्रमे । अभिवाद्य ततः सा तं प्राक्रीडदृषिसन्निधौ । अपोवाह च वासोऽस्या मारुतः शशिसन्निभम् । साऽगच्छत्त्वरिता भूमिं वासस्तदभिलिप्सती । स्मयमानेव सव्रीडं मरुता वरवर्णिनी । पश्यतस्तस्य तत्रर्षेरप्यग्निसमतेजसः । विश्वामित्रस्ततस्तान्तु विषमस्थामनिन्दिताम् । गृद्धीं वाससि संभ्रान्तां मेनकां मुनिसत्तमः । अनिर्देश्यवयोरूपामपश्यद्विवृतां तदा । तस्या रूपगुणं दृष्ट्वा स तु विप्रर्षभस्तदा । चकार भावसंसर्गं तया कामवशङ्गतः । न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता । तौ तत्र सुचिरं कालमुभौ व्याहरतां तदा । रममाणौ यथाकामं यथैकदिवसं तथा । जनयामास स मुनिर्मेनकायां शकुन्तलाम् । प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् । जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु । कृतकार्य्या ततस्तूर्णमगच्छच्छक्रसंसदम् । तं वने विजने गर्भं सिंहव्याघ्रसमाकुले । दृष्ट्वा शयानं शकुनाः समन्तात् पर्य्यवारयन् । नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः । पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् । उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् । निर्जने विपिने रम्ये शकुन्तैः परिवारिताम् । आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम् । शरीरकृत् प्राणदाता यस्य चान्नानि भुञ्जते । क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्म्मशासने । निर्ज्जने तु वने यस्मात् शकुन्तैः परिवारिता । शकुन्तलेति नामास्याः कृतञ्चापि ततो मया । एवं दुहितरं विद्धि मम विप्र ! शकुन्तलाम् । शकुन्तला च पितरं मन्यते मामनिन्दिता” । तस्याश्च दुष्मन्तेन गान्धर्वविधिना परिणयकथा तत्रैवोक्ता ।

**कण्वाय** नामधातुः कण्व+तत्करणे क्यङ् आत्म०अक० सेट् । कण्वं करोति कण्वायते अकण्वायिष्ट कण्वायाम्बभूव आस चक्रे । कण्वायितः कण्वाया ।

**कत** पु० कं जलं शुद्धं तनोति तन–ड । १कतकवृक्षे २ऋषिभेदे च । कतस्य गोत्रापत्यम् गर्गा०यञ् । कात्य तद्गोत्रापत्ये बहुत्वे तु तस्य लुक् कताः कतगोत्रापत्येषु ब० व० । यञन्तत्वात् यूनिफक् । कात्यायनः तद्गोत्रयुवापत्ये । तस्य छात्राः कण् फकोलुक् । कातीयाः तदीयच्छात्रेषु बहु०व० । कतर्षेश्च विश्वामित्रादुत्पत्तिः विश्वामित्रपुत्रकथने हरिवं०२७अ० । “देवश्रवाः कतश्चैव यस्मात् कात्यायनाः स्मृताः । शालावत्यां, हिरण्याक्षो रेणोर्जज्ञेऽथ रेणुमान् । सांकृतिर्गालवश्चैव मुद्गलश्चेति विश्रुताः । मधुच्छन्दोऽजयश्चैव देवलश्च तथाऽष्टकः । कच्छपो हारितश्चैव विश्वामित्रस्य ते सुताः तेषां ख्यातानि गोत्राणि कौशिकानां महात्मनाम्”

**कतक** पु० तक–हासे वा०घ कस्य जलस्य तको हासः प्रकाशो यस्मात् ५ब० । (निर्माली) वृक्षभेदे राजनि० । तस्य हि फलसम्पर्कात् जलप्रसादः “फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम् । न नामग्रहणादेव तस्य वारि प्रसीदति” मनुः । “कतकस्य फलं नेत्र्यं जलनिर्म्मलताकरम् । वातश्लेष्महरं शीतं मधुरं तुवरं गुरु” भावप्र० तद्गुणाद्युक्तम् । तस्य फलम् अण् तस्य लुक् तत्फले न० । “जलप्रसादि कतकं तत्फलं कतकं स्मृतम्” भावप्र० उक्तेः वृक्षपरत्वेऽपि न० । अयञ्च सुश्रुते काकोल्यादिरित्युपक्रम्य कतकशिवोद्यत्वादिना मधुरवर्गे उक्तः । [कतकवृक्षे राजनि०

**कतफल** पु० कं तनोति प्रसन्नम् तन–ड तादृशं फलमस्य ।

**कतम** त्रि० किम्+डतम् । बहूनां मध्ये जात्यादिभिर्निर्द्धारणार्थप्रश्नविषये एकस्मिन् पदार्थे “कतमा कतमर्क्, कतमत् कतमत् साम, कतमः कतम उद्गीथः” छा० उ० । डतरा कतर द्वयोर्मध्ये जात्यादिभिर्निर्द्धारणार्थप्रश्नविषये त्रि० “यद्योनसुजर्षि तदा कतरोवरस्ते” नैष० “अथैतयोः पथा कतरेण चलितानामपि क्षुद्राण्यसकृदावर्त्तीनि भूतानि” छा० उ० । डतरडतमान्तत्वादनयोः सर्व्वनामकार्य्यं कतमस्मै कतरस्मै क्लीवे स्वमोरद्डु कतमत् कतरत् “कतरन्नो गरीयो यद्वा जयेम यदि वा नोजयेयुः” गीता । “कतमद्द्वैरथं युद्धं यत्राजैषीधनञ्जयम्” “तथैव कतमद्युद्धं यस्मिन् कृष्णाजिता पुरा” भा० वि० ५० अ० । “कतरकतमौ कर्म्मधारये” पा० उक्तेः कर्म० प्रकृतिस्वरः धारये ।

**कतमाल** पु० तम घञ् ह्रस्वः कस्य जलस्य तमाय शोषणाय अलति पर्य्याप्नोति अल–अच् । वह्नौ शब्दमाला तस्य जलशोषणहेतुत्वात्तथात्वम् कचमालः खचमालः इत्यपि पाठान्तरे तत्रार्थे पु० ।

**कति** त्रि० ब० व० किं परिमाणमेषां किम्+डति । संख्यापरिमाणविशेषविषयप्रश्नविषये पदार्थे । “कति देवास्त्रो च दश च” छा० उ० । अस्य संख्यावत्कार्य्यभागित्वात् स्त्रियां न ङीप् । पूरणे डट् थुक् च । कतिथ कियत्संख्यापूरणे त्रि० स्त्रियां ङीप् । धाच् । कतिधा कियत्प्रकारे अव्य० “कत्यस्य विष्ठाः कत्यक्षराणि कति होमासः कतिधा समिद्धः” यजु० २३, ५७ । वीप्सार्थे कारकवृत्तेस्ततः शस् । कतिशस् कियद्वारादौ अव्य० कतिशो ददाति

**कतिपय** त्रि॰त्रि॰कति+अयच् पुक् च। कतिशब्दार्थे २परिमिते च। "वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव" माघः "कतिपयैः परिमितैः" मल्लि॰। "संपत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः" मेघ॰ "पोटायुवतिस्तोककतिपयेत्यादि॰पा॰सूत्रस्य प्रायिकत्वान्न उत्तरनिपातः" मल्लि॰। अन्यत्र तु ब्राह्मण कतिपय इत्यादि। अस्य जसि वा शी कतिपये कतिपया वा "परिष्कुर्वन्त्यर्थान् सहृदय धुरीणाः कतिपये" रसगङ्गा॰। "एवैवं सम्बद्धाः स्युः कतिपये वावरा" शत॰ब्रा॰५,१,२,१०। अद्रव्यवाचित्वे ऋणात् वा करणे पञ्चमी। कतिपयेन मुक्तः कतिपयान्मुक्तो वा समासे तत्र पञ्चम्या अलुक्। द्रव्यपरत्वे तु कतिपयेन विषेण मुक्त इतेत्र "षट्कतिकतिपयचतुरामिति" पा॰ निर्देशात् तस्याऽसंख्यावाचकत्वेऽपि पूरणे डट्, थुक् च। कतिपयथ कतिपयपूरणार्थे त्रि॰ स्त्रियां ङीप्।

**कत्तृण** कुत्सितं तृणं प्रा॰स॰कोः कदादेशः। १पृश्नौ (चाकुलिया) मेदिनिः। २कुम्भिकायां(पाना)रत्नमाला ३सुगन्धितृणे अमरः। अस्य गुणादि भावप्र॰ उक्तम् "कत्तृणं रौहिषं देवजग्धं सौगन्धिकं तथा। भूतिकं व्यामपौरञ्च श्यामकं धूमगन्धिकम्। रौहिषं तुवरं तिक्तं कटुपाकं व्यपोहति। हृत्कण्ठव्याधिपित्तास्रशूलकासकफज्वरान्" (सौगँधिया हिन्दिभाषा)।

**कत्तोय** न॰कुत्सितं तोयम् ईषद्वा तोयं यत्र। मद्ये त्रिका॰

**कत्त्रि** त्रि॰व॰व॰कुत्सितास्त्रयः प्रा॰स॰कोः कद्। कुत्सितेषु त्रिषु। ततो जातादौ ढकञ् कात्त्रेयक तज्जातादौ त्रि॰।

**कत्त्र्यादि** पु॰ पाणिन्युक्ते जातादयर्थे ढकञ्प्रत्ययनिमित्ते शब्दसमूहे स च गणः कत्त्रि उम्भि पुष्कर पुष्कल मोदन कुम्भी कुण्डिन नगरी माहिष्मती वर्मती उख्या ग्राम। (कुड्याया यलोपश्च) गणसूत्रम्।

**कत्थ** श्लाघायाम् (आत्मगुणाविष्करणे) स्वहोतकर्मकत्वात् अक॰ भ्वा॰ आ॰ सेट्। कत्थते अकत्थिष्ट चकत्थे। कत्थमानः कत्थनम् कत्था कत्थितम्। "गर्जितेन वृथा किं ते कत्थितेन च मानुष!। कृत्वैतत् कर्मणा सर्वं कत्थेथा मा चिरं वृथाः" भा॰आ॰१,१५१ अ॰। "परोक्षमिव मे राजन्! कत्थसि शत्रुकर्षण!" भा॰व॰७२अ॰ "हत्वा कत्थिष्यते न कः" भट्टिः "जनस्य गोप्तास्मि विकत्थमानः" भाग॰ ५,१२,७। आर्षप्रयोगे पदव्यत्ययात् पर॰। "तथाऽभिनम्य चित्तानि को विकत्थेद्विचक्षणः" भा॰ वि॰ ५० अ॰। प्रलापेऽपि सक॰। कत्थन्त उग्रपरुषं निरतं श्मशाने" भाग॰ ८,७,२७। "कत्थन्ते प्रलपन्ति" श्रीधरः। विवेकेन कथने। "कोविकत्थितुमर्हति" भा॰प॰ २५३३। कर्त्तरि युच् कत्थनः।

**कत्पय** न॰ कं सुखमिवाचरति क+क्विप् शत्र कत् सुखकरं पयोऽस्य वेदे नि॰ड समा॰। सुखकरजले। "त्वं चिदित्था कत्पयं शयानम्" ऋ॰ ५,३२,६। "कत्पयं सुखकरं पयो यस्य तम्" भा॰। निरुक्ते ६,३ इमान्त्यमधिकृत्योक्तम् "सुखपयसं सुखमस्य पयः" इति लोके तु कत्पयस् इत्येव।

**कत्र** शैथिल्ये अद॰ चुरा॰ उभ॰ अक॰ सेट्। कत्रयति ते अचकत्रत् त। "तत्त्वादन्त्यदीर्घश्च पुक् चेत्यङ्गापयत्यपि" इत्युक्तेःवा दीर्घः पुक् च। कत्रापयति ते इत्यपि। कत्राम् बभूव आस चकार चक्रे। एवं कत्रापयाम् बभूवेत्यादि।

**कत्सवर** न॰ कद्—वैकल्ये स कत्सः विह्वलता व्रियते ह—अप्। स्कन्धे शब्दच॰।

**कथ** वाक्यरचनायां अद॰ चुरा॰ उभ॰ सक॰ सेट्। कथयति ते अचीकथत् त अचकथत् त। कथयाम् बभूव आस चकार चक्रे। कथितः कथयित्वा कथयितुम्—कथनम्। कथा "तं जनाः कथयन्तीह यावत् भवति गौरियम्" भा॰अनु॰३१६८ "हन्त ते कथयिष्येऽसुमितिहासं पुरातनम्" भा॰४,४५,८। "कथाच्छलेन बालानां नीतिस्तदिह कथ्यते" हितो॰ "यो मनुः कथ्यतेऽष्टमः" देवी॰ "प्रत्येकं कथिताह्येताः संक्षेपेण द्विसप्ततिः" मनुः।

अनु+अनुवादे कथितस्य कथने अन्वादेशे अनुकथयति अनुवदति ऽऽद्युपसर्गे प्रकर्षादिना कथने अस्य ब्रुवर्थतया द्विकर्मकत्वम् तत्र गौणे कर्मणि लकारः।

**कथक** त्रि॰ कथ-ण्वुल्। १वाचके २तत्त्वनिर्णयार्थं वादरूपकथाकर्त्तरि च कथकस्य कथायां नियमविशेषः खण्डने दर्शितः यथा।

"अथ कथायां वादिनोर्नियममेतादृशं मन्यन्ते प्रमाणादयः सर्वतन्त्रसिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथकाभ्यामभ्युपेयम् इति। तदपरे न क्षमन्ते। तथाहि प्रमाणादीनां सत्त्वं यदभ्युपेयं कथकेन, तत् कस्य हेतोः,? किं तदनभ्युपगच्छद्भ्यां वादिप्रतिवादिभ्यां तदभ्युपगमसाहित्यनियतस्य तस्य प्रवर्त्तयितुमशक्यत्वात् १,उत कथकाभ्यां प्रवर्त्तनीयवाग्व्यवहारं प्रति हेत्वभावात्२, उत लोकसिद्धत्वात्३ अथवा तदनभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसङ्गकत्वात्४। न तावदाद्यः तदनभ्युपगच्छतोऽपि चार्व्वाकमा-

ध्यमिकादिभिर्व्यवहाराणां सविस्तराणां प्रतीयमानत्वात् तस्यैव वा अनिश्चितो भवतस्तद्वदाग्रहायासानुपपत्तेः। सोऽयमपूर्व्वः प्रमाणादिसत्त्वाभ्युपगमात्मा वाक्स्तम्भनमन्त्रो भवताम्भूदितो नूनं यस्य प्रभावाद्भगवता सुरगुरुणा लोकायतसूत्राणि न प्रणीतानि, तथागतेन वा माध्यमिकागमा नोपदिष्टाः, भगवत्पादेन वा बादरायणीयेषु सूत्रेषु भाष्यं नाभाषि। प्रमाणाद्यनभ्युपगमेऽपि प्रवर्त्तन्तां तन्मते वाचोभङ्ग्यः तास्तु साधनबाधनक्षमा न भवन्ति तावतेति ब्रूमइति चेन्न प्रमाणाद्यनभ्युपगमप्रवर्त्तितत्वं तदीयसाधनबाधनाक्षमतायां न नियामकं किन्तु सद्वचनाभासलक्षणयोगित्वमिति यवश्याभ्युपेयं भवता येनाभ्युपगम्यापि प्रमाणादीनि प्रवर्त्तिताः मतान्तरानुसारिभिर्व्यवहारा अभ्युपगतप्रमाणादिसत्त्वे मतान्तरव्यवहारानुसारिभिरपरैस्तथाभूताइति कथ्यन्ते। यदि त्वमुच्यसि सद्वचनाभासलक्षणं न भवान् दर्शयितुमीष्टे तदा अनभ्युपगम्य प्रमाणादि भवता प्रवर्त्तितोऽयं व्यवहारइति शतकृत्वस्त्वयोच्यमानेऽपि नास्माकमादरः अन्यथाभ्युपगम्य प्रमाणादीनि भवता प्रवर्त्तितोऽयं व्यवहारइत्येतावता भवदीयो व्यवहाराभास इत्यस्माभिरपि वक्तुं शक्यतएव। ननु यदि प्रमाणादीनि न सन्ति व्यवहारएव धर्म्मी कथं सिद्ध्येत्, दूषणादिव्यवस्था वा कथं स्यात् सर्व्वविधिनिषेधानां प्रमाणाधीनत्वात्। मैवम्। न ब्रूमोवयं न सन्ति प्रमाणादीनीति स्वीकृत्य कथारभ्येति किन्नाम सन्ति न सन्ति वा प्रमाणादीनीत्यस्यां चिन्तायामुदासीनैः। यथा स्वीकृत्य तानि भवता व्यवह्रियते तथा व्यवहारिभिरेव कथा प्रवर्त्त्यतामिति। अन्यथा न सन्ति प्रमाणादीनीति मतमस्माकमारोप्य यदिदम्भवता दूषणमुक्तं तदपि न वक्तुं शक्यं कीदृशीं मर्य्यादामालम्ब्य प्रवर्त्तितायां कथायां दूषणमुक्तं किं प्रमाणादीनां सत्त्वमभ्युपगम्योभाभ्यां प्रवर्त्तितायां कथायां उतासत्त्वमभ्युपेत्य, अथैकेन सत्त्वमपरेण चासत्त्वमङ्गीकृत्य। न तावदाद्यः अभ्युपगतप्रमाणादिसत्त्वं प्रति तादृक्पर्य्यनुयोगानवकाशात् द्वितीये तु स्वतोऽप्यापत्तेः न तृतीयः तत्रैव कथान्तरस्य प्रसक्तेः उभयाभ्युपगमानुरोधित्वाच्च कथानियमस्य। अन्यथा स्वाभिप्रायमालम्ब्य तेनापि तद्वचसि यत्किञ्चिद्रागात्मनि दूषणेऽभिहिते कस्य जयो व्यवतिष्ठताम् प्रमाणाद्यभ्युपगन्तुरेव यावन्नियमभरयन्त्रणा महती स्यात्। तस्मात् प्रमाणादिसत्त्वासत्त्वाभ्युपगमौदासीन्येन व्यवहारनियमे समयं बद्ध्वा कथायां प्रवर्त्तितायां भवतेदं दूषणमुक्तं दुरुक्तमेव तथा सति स्यात्। योऽयं भवान् स्वाभिप्रायमपि नावधारयितुं शक्तोऽतिदूरतस्तस्य परमाभिसन्धानावधारणप्रत्याशा। अथ वादीकृत्य दुर्व्वितण्डकं तस्मिन् बोधोऽभिधीयतइत्येव नेष्यते शिष्यादयस्तु तस्य कथानधिकारं ज्ञाप्यन्ते अतएव भाष्यकारः“स प्रयोजनमनुयुक्तो यदि प्रतिपद्यत”इत्याह स न तु प्रतिपद्यतइति। मैवम् शिष्यादीन् प्रत्यपि चार्व्वाकादेर्दोषोऽयमित्येवाभिधातव्यम्। कथञ्च तथा स्यात् तस्य कथाप्रवेशाप्रवेशयोस्तन्त्रानधीनत्वात्कथायामेव हि निग्रहः। नापि द्वितीयः यथा हि स्यादेषोर्यदि कथकप्रवर्त्तनीयवाग्व्यवहारं प्रति प्रमाणादीनां हेतुता तत्सत्त्वानभ्युपगमे निवर्त्तेत नचैवं सम्भवति तथासति तत्सत्त्वानभ्युपगन्तॄणां वाग्व्यवहारस्वरूपमेव न निष्पद्येत हेत्वनुपपत्तेः। उक्तश्चायमर्थो यन्माध्यमिकादिवाग्व्यवहाराणां स्वरूपापलापो न शक्यत इति। अथ मन्यसे कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं सत्त्वाच्चाभ्युपगमः यत्सत्तदभ्युपगन्तव्यमित्यस्य स्थितेरिति। मैवम् कयापि नियमस्थित्या प्रवृत्तायां कथायां कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं सत्त्वाच्चाभ्युपगम भवता प्रसाध्यः कथनात्पूर्वं तत्त्वावधारणं वा परपराजयं वा अभिलषद्भ्यां कथकाभ्यां यावता विना तदभिलषितं न पर्य्यवस्यति तावदनुरोद्धव्यम् तस्य व्यवहारनियमस्यानुबन्धादेव द्वाभ्यामपि ताभ्यां समाश्रयणीयइति। व्यवहारनियमसमयमेव बध्नीतः स च प्रमाणेन तर्केण च व्यवहर्त्तव्योवादिना प्रतिवादिनापि कथाङ्गतत्त्वज्ञानविपर्य्ययलिङ्गप्रतिज्ञाहान्याद्यन्यतमं निग्रहस्थानं तस्य दर्शनीयम् तदुद्भावने प्रथमस्य भङ्गोव्यवहर्त्तव्योऽन्यथा द्वितीयस्यैव तादृशेतरौ च जेतृतया व्यवहर्त्तव्यौ, प्रामाणिकः पञ्चसात्त्विकतया व्यवहर्त्तव्यइत्यादिरूपः। अत एव वाग्व्यवहारनियमबन्धोऽपि हेतुर्वक्तव्यः तथा च सोऽपि हेतुः कथायां प्रवृत्तायामभिधातुं युक्त इति प्रमाणसत्त्वाभ्युपगमहेत्वभिधानवत् प्रत्यवस्थानमनवकाशं द्वाभ्यामपि वादिभ्यां चिरप्रवृत्त्याभिलष्यमाणतत्त्वव्यवस्थाजयमूलत्वेन व्यवहारनियमस्य स्वेच्छयैव परिगृहीतत्वात्। नचैवं प्रमाणानुपपन्नेच्छामात्रगृहीतमूलत्वान्मूलापरिशुद्धिसम्भवेन सर्व्वविचारविचार्य्यतत्फलविप्लवापत्तिः स्यात्। आविद्यविद्यमानानादिपारम्पर्य्यायातस्य लोकव्युत्पत्तिगृहीतसंवादस्य च तस्यान्यथाभावासम्भाव्यतालक्षणस्वतःसिद्धशुद्धत्वात्। न च प्रमा-

वादेनां सत्तापोद्यनेव ताभ्यामङ्गीकर्त्तुमुचिता तादृश-व्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्तेः प्रमाणादिसत्ताभ्युपेयापि तथा व्यवहारनियमव्यतिरेके कथाप्रवृत्तिं विना तत्त्वनिर्णयस्य जयस्य वाऽभिलषितस्य कथकयोरपर्य्यवसानात्। नापि द्वितीयः लोकव्यवहारो हि प्रमाणव्यवहारो वा स्यात् पामरादिसाधारणव्यवहारो वा। नाद्यः। विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वात् तदर्थमेव च पूर्वं नियमस्य गवेषणात्। नापि द्वितीयः शरीरात्मतदीनादौ तथा सति भवता स्वीकर्त्तव्यताऽऽपातात्। पश्चात्तद्विचारबाध्यतया नाभ्युपेयतइति चेत् तर्हि प्रमाणादयोऽपि यदि विचारबाध्या भविष्यन्ति तदा नाभ्युपेया एव अन्यथा तूपगन्तव्या इति लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यतइति तावन्न भवति। नापि चतुर्थः यादृशोभवता प्रमाणादेरन्याभ्युपगमस्य व्यवहारनियमः कथायामालम्ब्यते तस्यैव प्रमाणादिसत्त्वासत्त्वानुसरणोदासीनैरस्माभिरप्यवलम्बनात्। तस्य यदि मां प्रति फलातिप्रसञ्जकत्वं तदा त्वां प्रत्यपि समानः प्रसङ्गः”।
“वाद्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्य” अनु०चि०। २कथोपजीविनि नाटकाचार्य्ये कथाप्राणे। शब्दरत्ना०।

**कथङ्कथिक** त्रि० कथङ्कथमिति, प्रष्टृत्वेनास्त्यस्य कथम् कथम् +बा०ठन् टिलोपः। कथं कथमिति प्रश्नकारके। तस्य भावः तल्। कथङ्कथिकता पृच्छायां स्त्री हेमच०।

**कथङ्कारम्** अव्य० कथम्+कृ-णमुल्। कथंकृत्वेत्यर्थे “कथङ्कारमनालम्बा कीर्त्तिर्द्यामधिरोहति” माघः “अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्” पा० सिद्धाप्रयोगः व्यर्थत्वात् प्रयोगानर्हः” सि०कौ० उक्तेः अनर्थकात् तस्य णमुल्। २कथमित्यर्थे च।

**कथञ्चन** अव्य० कथम्+चन मुग्धबोधः “असाकल्ये तु चिच्चन”इत्यमरोक्तेः पा०तादृशप्रत्ययाभावात् चन शब्दे-अच्। कथम् चनअसकलमिति पदद्वयमिति भेदः। चनशब्दे विवृतिः। १असकले २कथमित्यर्थे एकांशेनेत्यर्थे च। “न विभागः कथञ्चन” स्मृतिः। “न वै जनोजातु कथञ्चन व्रजेत्”भाग०१,५,२०। “अनतिक्रमणीयो हि विधी राजन् कथञ्चन” भा० स्त्री०८अ०। “पदार्थः षड्यान्वेति विभागे न कथञ्चन” हरिकारिका।

**कथञ्चित्** अव्य०। कथम्+चित् मुग्धबो० पा०न चित् प्रत्ययः “किन्तु चिदव्यय”असाकल्ये चिच्चन इत्यमरोक्तेः। “किं वृत्तं चिदुत्तरम्” पा०उक्तेश्च पदद्वयमिदम्। १असाकल्यान्विते कथमित्यर्थे २कष्टेनेत्यर्थे च “अधःकथञ्चिद्धृतभूमिभागः” कुमा०। “कथञ्चित् फणिनः गणैरथः” माघः। ततः स्वार्थे विनया०ठक् तान्तत्वात् क। कथञ्चित्कः। कष्टभवे त्रि०।

**कथन्ता** स्त्री कथम्+भावे तल्। किम्प्रकारतायाम्।

**कथम्** अव्य० किम्+प्रकारार्थे थमु कादेशश्च। कस्मिन् प्रकारेइत्यर्थे। “तानुभक्षाः कथं न स्युः सम्पदोऽपि निरापदः” रघुः “अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः” कुमा० “कथं नु शक्योऽनुनयो महर्षेः” रघुः “सा प्रक्रिया या कथमित्यपेक्षा” मीमा० तत्र “कथमितीतिकर्त्तव्याकाङ्क्षा” कात्या० १, २,१८सू०भा० कर्कः। प्रसङ्गात् तत्र कुत्र कर्मणि कथमाकाङ्क्षोत्थाप्येतिकर्त्तव्यरूपाङ्गस्यापेक्षास्ति कुत्र वा नास्ति तदेतत् कात्यायनसूत्रभाष्ययोर्दर्शितमत्र प्रदर्श्यते। “अथेदं विचार्यते द्विप्रकारं कर्म नित्यं काम्यं च तत्र नित्यं प्रकृत्येदं विचार्यते किं सर्वाङ्गोपेतं कर्त्तव्यम्? उत यावन्त्यङ्गानि कर्त्तुं शक्नोति तावद्भिरङ्गैरुपेतमिति? किं तावत् प्राप्तम्? सर्वाङ्गोपेतमेव कर्त्तव्यमिति कुतः? भावनांशस्य कथम्भावस्य सर्वैरङ्गैः परिपूरणेन सर्वाङ्गोपेतस्यैव प्रधानस्य फलवत्त्वात् अन्यथा अङ्गाम्नानस्य वैयर्थ्यापत्तेः तस्मात् सर्वाङ्गोपेतमेव कर्त्तव्यमित्येवं प्राप्तआह। “विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात्” कात्या०१,२,१८,सू० “नित्यकर्मणि अग्निहोत्रदर्शपूर्णमासादिके विगुणेऽपि अङ्गहीनेऽपि कृते फलनिर्वृत्तिः प्रत्यवायपरिहाररूपस्य फलस्य निष्पत्तिर्भवत्येव अङ्गप्रधानभेदात् यतोऽङ्गानि च प्रधानानि च भिन्नानि नित्येषु चेतिकर्त्तव्यता नास्ति। कुत इतिकर्त्तव्यता नास्ति? अपूर्वाभावात् अपूर्वप्रयुक्ता हीतिकर्त्तव्यता, सा च तस्मिन्नसति न भवितुमर्हति कथम् अपूर्वाभावः? फलाभावात् कालान्तरभाविफलसिद्ध्यर्थं ह्यपूर्वं कल्प्यम् तच्चासति फले कल्पयितुं न शक्यते तस्मात् नित्येषु यागस्यैव भाव्यत्वम् न फलस्य। तस्मात् पौर्णमास्याममावास्यायां वाग्निमुद्दिश्य पुरोडाशस्त्यक्तव्य इत्येतवदुपदिश्यते तेन दृष्टार्थानि यान्यङ्गानि संनिपत्योपकारकाणि यैर्विना प्रधानभूतयागनिष्पत्तिर्न भवति, अन्यथानुपपत्त्या, तावद्भिरुपेतं प्रधानं कर्त्तव्यम् नाङ्गानि। अङ्गाम्नानि तु काम्यप्रयोगार्थम्। अतोऽग्निकालपुरोडाशमात्रमादरणीयम् अन्यदङ्गजातमदृष्टार्थं नादरणीयमिति। कथं तर्ह्यदृष्टे निष्फले पुरुषस्य प्रवृत्तिः? इति चेत् उच्यते प्रत्य-

वायानुत्पत्त्यर्था प्रवृत्तिर्न तु फलार्था, विहिताकरणाद्धि प्रत्यवायः स्मर्यते । (मनुना) "अकुर्व्वन्विहितं कर्म्म प्रायश्चित्तीयते नरः" इति अतो नित्यकर्म्मणो निष्फलत्वादपूर्व्वाभावादितिकर्त्तव्यता नास्तीति हीनाङ्गस्यैव प्रयोग इति केचित् सिद्धान्तमाहुः । तदेतन्नोपपद्यते कथम् ? भावनातो हि तिस्र आकाङ्क्षा जायन्ते किं केन कथमिति, तत्र कथमितीतिकर्त्तव्यताकाङ्क्षा नित्येऽप्यस्ति तस्मादत्राप्यस्तीति कर्त्तव्यता । सत्यम् ? अस्त्येवेहाप्याकाङ्क्षात्रयम् तथापि किम् आकाङ्क्षायाः समानपदोपात्तेन यागेनैव पूरणात्तन्निर्वृत्त्युपयोगिन्येवेतिकर्त्तव्यता कथमाकाङ्क्षया गृह्यते न त्वदृष्टोपयोगिप्रयाजाद्यङ्गम् अदृष्टस्य साध्यस्याभावादिति चेत् न यागस्य स्वतोऽपुरुषार्थत्वेन प्रवृत्त्यन्यथानुपपत्त्या समानपदोपात्तं यागमुत्सृज्य सर्व्वेषामभिमतस्य प्रत्यवायपरिहारस्येह भाव्यतया कल्पनात् ननु सर्व्वेषामभिमतः स्वर्गः किमिति न कल्प्यते ? इति चेत् तस्य शरीरारम्भहेतुतया मोक्षविरोधित्वेन मुमुक्षूणामनभिप्रेतत्वात् प्रत्यवायपरिहारस्तु तैरपीष्यत एव । कथम् ? तस्मिन् पापे एतज्जन्मोपार्ज्जिते भवान्तरोपार्ज्जिते वा स्थिते सति तदुपभोगहेतुभूतशरीरारम्भावश्यंभावेन मोक्षाभावात् । मोक्षार्थिनाप्यवश्यं पापक्षय एषितव्य एव समीहितफलाय, इतरथाऽप्रक्षीणे पापे फलाप्राप्तेः । तस्मान्नित्यानि कर्म्माणि पापक्षयस्योपायत्वेन नोद्यमानानीतिकर्त्तव्यतामपेक्षन्त एव । धर्म्मशास्त्रेषु च यथैवाकरणे प्रत्यवायः स्मृतः तथैव करणादपि पापक्षयः स्मर्यते (मनुना) "पूर्व्वां सन्ध्यां जपंस्तिष्ठन् नैशमेनो व्यपोहति" इत्यादिभिः "नित्यनैमित्तिकैरेव कुर्व्वाणो दुरितक्षयमिति" च । तस्मान्नित्येऽप्यस्त्येव प्रत्यवायपरिहाररूपं फलम् । तस्मान् नित्यान्यपि कर्म्माणि सर्व्वाभिमतस्य पापक्षयस्योपायत्वेन नोद्यमानानीतिकर्त्तव्यतामपेक्षन्त एव । ततश्च सर्व्वाङ्गोपेतानामनुष्ठानं कश्चिदपि सर्व्वदा कर्त्तुं न शक्नोति । जीवनादिनिमित्ते च तानि विधीयन्ते निमित्तस्य चैतदेव रूपं यत् तस्मिन् सति नैमित्तकमवश्यं कर्त्तव्यम् तेन यावज्जीवं कर्त्तव्यम् सर्व्वाङ्गोपेतं च कर्त्तव्यमिति दुःशकमेव तेन यथा शक्नुयादित्युपपद्यते तस्मादवश्यमन्यतरस्मिन्नवहातव्ये निमित्ते सति नैमित्तिकस्य कर्त्तव्यत्वं प्रधानवाक्ये श्रूयते तद्यदि कस्य चिदङ्गस्यानुरोधेन सति निमित्ते नैमित्तिकं न क्रियेत ततः प्रधानवाक्यविरोधः स्यात् प्रधानमात्रं श्रुत्या निमित्ते सति विधीयते अङ्गानि तु तदर्थतया प्रकरणेन गृह्यन्ते अतस्तानि प्रधानवाक्यगतावश्यकत्वानुरोधेन यथाशक्त्युपसंहर्त्तव्यानि इतरथा प्रधानस्यावश्यकर्त्तव्यत्वं श्रुतं हीयेत तस्मात् प्रधानाविरोधेनाङ्गानि यथा शक्त्युपसंहर्त्तव्यानि । नन्वेवं हीनाङ्गादपि प्रधानात् फलसिद्धेरभ्युपगमात् समर्थोऽप्यङ्गानि परित्यक्ष्यतीति नैवम् शक्तस्य कामतोऽङ्गे त्यज्यमाने वैगुण्यं स्यादेव । अङ्गोपदेशं निमित्तं वाक्योश्चोभयानुरोधेन यावन्त्यङ्गानि कर्त्तुं शक्नोति तावद्भिरुपेतं प्रधानमेषः क्षपयतीति शास्त्रार्थोऽवधार्य्यते तावतैव शास्त्रवशात् फलनिष्पत्तिः इति साधूक्तम् "विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदादिति" । एतच्च प्रयोगविध्यनुष्ठाप्येष्वङ्गेषूच्यते यच्च कुर्य्यादित्युच्यते तत् यथाशक्त्युपबध्यते । यानि तु स्वभावसिद्धानि विध्यन्तरसिद्धानि चोपजीव्यन्ते यथा लोके धनार्ज्जनादि, वेदेऽपि कालो विद्याग्नयश्च तेषां स्वरूपेणैवाधिकारिविशेषणत्वं द्रव्यवान् विद्यावानग्निमानिति । एतदुक्तं भवति अङ्गं हि विधिबलादुपादीयते निमित्तानुरोधाद्वा त्यज्यते उभयानुपपत्त्यर्थं वा शक्तं प्रत्युपादीयते अशक्तं प्रति त्यज्यते इति नान्या गतिरस्ति तत्रोभयानुपपत्तौ शक्तौ यदि सम्भवति, सम्भवश्चोपादेयेष्वङ्गेषु यथार्थाक्त व्रीहीन् सम्पादयेत् यथाशक्त्यवहन्यादिति आहवनीयादि स्वरूपं तु नानेन विधिनोपादीयते तस्मादग्निमान् विद्यावान् द्रव्यवान् जीवंश्च यजेतेत्येवमाश्रीयते अतो विद्याग्निकालाद्यपरित्यागेनान्येषामङ्गानां यथाशक्त्यनुष्ठानं सिद्धम् । तथा चोक्तम तन्त्ररत्ने "यानि प्रयोगविधिना कर्त्तुरुपादेयत्वेनाङ्गानि नोद्यन्ते तेषामेव शक्तिपरिमितत्वम् यावन्ति शक्नुयात् तावन्ति कुर्य्यादिति यानि तु विध्यन्तरप्रयुक्तानि स्वयंसिद्धानि वाङ्गत्वेन गृह्यन्ते तानि स्वरूपत एवाधिकारिविशेषणम् यथाग्न्यादीनि तेषामुपादानस्य प्रयोगविधिनानुपादनाच्च यावदुक्तोत्युपबन्धः सम्भवति । किन्तु तदपेक्षो विधिस्तद्वन्तमेवाधिकरोति तेन सपत्नीकस्यार्थवस्य व्याख्यातोपासनस्याविशिष्टस्याग्निमतो विद्यावतः प्रदोषादिकालसंयोगिनोऽधिकारो नान्यस्येति । एवं चाप्रतिसमाधेयाङ्गवैकल्ये ऽप्यग्न्यादिमानधिक्रियेतैव आधानं तु न कुर्य्यात्तस्य नैमितिकत्वादिति" प्रायश्चित्तविधानाच्च" सू० प्रायश्चित्तविधानादप्येवं ज्ञायते यद्विगुणेऽपि फलनिर्वृत्तिर्भवतीति । यदि च विगुणात् फलं न स्यात्तर्हि प्रायश्चित्तं न विदधीत न हि विफलस्याङ्गैः तत्र-

नास्ति अस्ति च विधानम् तस्माद्विगुणादपि फलं भवतीति। येषां मते नित्येषु फलाभावेनापूर्व्वाभावात् तदर्थैतिकर्त्तव्यता नास्ति तेषां प्रायश्चित्तविधानमत्यन्तानुपपन्नम्। सेतिकर्त्तव्यताके तु निमित्ते भेदने जाते वैगुण्यात्तत्परिहारायापरं होमाख्यमङ्गं भिन्ने जुहोतीत्यादिकमनुपन्नं सत् क्रियत एव पक्षान्तरे त्वसत्यामिति कर्त्तव्यतायां भेदने जातेऽपि नास्ति वैगुण्यम् गुणहानि र्हि वैगुण्यम् असति गुणे कस्य हानिः स्यात् ततश्चानुपपन्न एव प्रायश्चित्तविधानमुपपन्नमिति। "तथा च दृष्टम्" सू०। नित्यं कर्म यथा कथञ्चित् श्रुताङ्गपरित्यागेनापि यथाशक्त्यङ्गोपेतमनुष्ठातव्यंत्वेन श्रुतौ दृष्टम्। तथा हि"यत् पयो न स्यात् केन जुहुयात्" इति ब्रीहियवाभ्यामित्यादि "न वा-इत्र तर्हि किञ्चनासीदथैतदहूयत सत्यं श्रद्धया" इत्यन्तेन ग्रन्थेन तथा "तदैव याहक्कीदृक् च होतव्यमिति" शाखान्तराच्च। तस्माद्विगुणेऽपि नित्ये प्रत्यवायपरिहाररूपं फलं भवति अत एवोक्तं कर्काचार्य्यैः "उपात्तदुरितक्षयो वा उत्पत्स्यमानदुरितप्रतिबन्धो वा भवत्येवेति"। अथ काम्ये कर्मणि चिन्त्यते। काम्येऽपि विगुणे फलाभिनिष्पत्तिर्भवत्येव। यतस्तत्राप्यङ्गानि प्रधानानि च भिन्नानि। अश्वमेधे च काम्ये प्रायश्चित्तविधानमप्यस्ति अश्वं प्रकृत्य "अथातः प्रायश्चित्तीनां यद्यश्वोबडवां स्कन्देद्वायव्यं पयोऽनु निर्वपेद्य यदि स्रामो विन्देदित्यादि तथा पञ्चशारदीयेऽपि "उत्सृष्टान् पशून् प्रकृत्य ताण्ड्ये प्रायश्चित्तविधानं दृश्यते "यपीनप्लिये योऽप्सु म्रियते" इत्यादिकं यदि च विगुणादपि काम्यात् फलं न स्यात् प्रायश्चित्तविधानं व्यर्थमेव स्यात् तथा च दृष्टं विगुणमपि काम्यं फलोत्पादकं वेदे दृष्टम्। कारीरीमिष्टिं प्रकृत्य श्रूयते "यदि वर्षेत्तावत्येव जुहुयादिति" अत्रासमाप्तायाम् एव कारीर्यां तत्फलं वृष्टिरूपं वेदे दृष्टम् अतो विगुणेऽपि काम्ये फलं सिध्यतीति पूर्व्वपक्षिते सिद्धान्तमाह। "न श्रुतिलक्षणत्वात्" सू०। यदुक्तम् विगुणेऽपि काम्ये फलं सिध्यतीति तन्न कुतः श्रुतिलक्षणत्वात् काम्यस्य, यतः काम्यं सगुणमेव सर्व्वाङ्गोपेतमेव श्रुत्या-बधितम् फलसाधनत्वेन विहितम् तत्राङ्गलोपे काम्यमानफलस्यानुत्पत्तेः तत्र प्रधानस्य त्यागे यथा फलं नास्ति एवमङ्गत्यागेऽपि, फलसाधनत्वं हि शास्त्रैकसमधिगम्यं ततो यदङ्गं प्रधानं वा यावच्छब्दोपात्तम् तस्य लोपे साधनत्वं नास्ति अतो यदा सर्व्वाङ्गोपेतं कर्त्तुं शक्नोति तदैव तत्र प्रवर्त्तेत न तु यथाशक्ति। न हि तत्राङ्गत्यागे प्रमाणमस्ति प्रधानवाक्यम्, अत्यागेऽप्यविरोधात् न हि तस्यावश्यकत्वं केनचिदुक्तं यतः औदासीन्यं न लभ्येत। कामश्रुतिस्तु समर्थेऽपि वर्त्तमाना श्रुत्यर्थतां न जहातीति नाङ्गत्यागे प्रभवति। निमित्तश्रुतिस्तु निमित्ते सत्यक्रियमाणे नैमित्तिके प्रोच्यतेति वैषम्यम्। अतोनिमित्ते सति नित्यस्यावश्यकर्त्तव्यत्वबलात् सर्व्वदा सर्व्वाङ्गोपेतस्य केनापि कर्त्तुमशक्यत्वाद्यथा शक्नुयात्तथा कुर्य्यादित्येवं कल्प्यते काम्ये त्ववश्यकर्त्तव्यताभावादेवं कल्पयितुं न शक्यते अतः काम्यं विगुणं फलं न साधयत्येवेति सिद्धम्" कथमा योगे गर्हायां "विभाषा कथमि लिङ् च"पा०। लिङ् चात् लट्। "त्वं धर्मं त्यजेस्त्यजसि वा पक्षे कालत्रयलकाराः। तत्र भविष्यति नित्यं लृङ् भूते वेति भेदः। कथं नाम तत्र भवान् धर्मंत्यक्ष्यत्" सि०कौ०। गर्हायामित्यनुवर्त्तनाभावे अगर्हायामपीति प्राञ्चः। तेन "मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः" इत्यादौ अगर्हायामपि लिङ्।

**कथमपि** अव्य० कथम् च अपि च द्व०। १अतिकष्टेनेत्यर्थे २अतिगौरवेणेत्यर्थे च। "विसृज्य कथमप्युमाम्" कुमा० "कथमपि चरणोपलैस्खलद्भिः"माघः "तिष्ठद्भिः कथमपि" किरा०। "कथमपि गुरुशोका मा रुदन् माङ्गलिक्यः" भट्टिः। पदद्वयमित्येके।

**कथम्भाव** पु० कमित्यस्य भावः। १किं प्रकारतायाम् भू-प्राप्तौ घञ् ६त०।२कस्यचित् प्रकारस्य प्राप्तौ ३कथमित्यपेक्षायाञ्च। कथमित्याकाङ्क्षया प्राप्तिर्यस्य। इतिकर्त्तव्यारूपे अङ्गे त्रि०कथंशब्दे कर्कव्याख्यायाम् उदा०।

**कथम्भूत** त्रि०कथं किंप्रकारं भूतःप्राप्तः भू-प्राप्तौ क्त २त०। १किंप्रकारप्राप्ते २कीदृशे च।

**कथा** स्त्री कथ-नि०अ। १कथने, "अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिणाम्" "आप्तामनानुमानाभ्यां साध्यं त्वां प्रति का कथा" रघुः। "का कथा बाणसन्धाने ज्याशब्देनैव दूरतः" शकु०। "सम्बासस्वकथा वृथा" सङ्गमखा०। "कथाप्रसङ्गेन मिथः सखीमुखात्" नैष०। "कथाप्रसङ्गेन जनैरुदाहृतात्" किरा०। "प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः। परम्पराश्रया या स्यात् सा मताख्यायिका बुधैः" इत्युक्तलक्षणे २स्तोकसत्यप्रबन्धरूपे वाक्ये। प्रबन्धरूपवाक्यसमुदायात्मकत्वाच्च कादम्बर्य्यादीनां कथात्वं तत्र

स्यूद्रकन्दपद्वत्तान्तस्य सत्यत्वात् अन्यस्य सर्वस्य मिथ्याभूतस्यैव कविना कल्पनेन प्रबन्धनात्। पक्षप्रतिपक्षोपन्यासेन विचाररूपे ३वाक्ये च। विचाराङ्गकथा हि त्रिविधा वादजल्पवितण्डाभेदात् तत्र "प्रमाणतर्कसाधनोपलम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः"। "यथोक्तोपपन्नच्छलजातिनिग्रहस्थानसाधनोपलम्भोजल्पः" "स्वपक्षस्थापनाहीनो वितण्डा" गौ॰ सूत्रैः वादादयो लक्षिता विशेषस्तत्तच्छब्दे वक्ष्यते। कथायां साधु कथादि॰ ठक्। काथिक कथासाधौ त्रि॰।

**कथादि** पु॰ पाणिन्युक्ते तत्र साधावित्यर्थे ठक्प्रत्ययनिमित्ते शब्दगणे स च गणः "कथा विकथा विश्वकथा सङ्कथा वितण्डा कुष्ठविद् जनवाद जनेवाद जनोवाद वृत्ति संग्रह गुण गण आयुर्वेद"।

**कथानक** न॰ कथयत्यत्र कथ—बा॰ आनक्। (कहानि) (गल्प) ख्याते कथाविशेषे यथा वेतालपञ्चविंशादि तत्र उपाख्यानबाहुल्येन कथानकतया व्यवहारः।

**कथान्तर** न॰ कथाया अन्तरम् अवकाशः। ‘कथावसरे "स्मर्त्तव्योऽस्मि कथान्तरेषु भवता" स्वप्नक॰ "स्मर्त्तव्योऽस्मि कथान्तरे" भा॰ व॰ १५। १८०। अन्या कथा मयूर॰ नञा स॰ असुपदविग्रहे। २अन्यस्यां कथायाम् वादान्तरे। [मुखे।

**कथापीठ** स्त्री कथायाः पीठमिव। कथाप्रस्तावसूचके ग्रन्थ-

**कथाप्रसङ्ग** पु॰ कथायाः प्रसङ्गः। १कथायामासक्तौ "कथाप्रसङ्गेन मिथः सखीमुखात्" नैष॰। २विषवैद्ये त्रि॰ विश्वः "कथाप्रसङ्गेनजनैरुदाहृतात्" किरा॰। कथाप्रसङ्गानां विषवैद्यानामिनैः प्रभुभिर्जनैरित्यर्थः। कथायां प्रसङ्गो यस्य। ३जल्पाके अनवरतं गल्पकारके त्रि॰ शब्दर॰। ४वातुले" त्रि॰ मेदिनिः।

**कथाप्राण** पु॰ कथया प्राणिति जीवति प्र+अन—अच्। कथोपजीविनि नाटकाचार्य्ये शब्दर॰। [प्रारम्भांशभेदे।

**कथामुख** न॰ कथाया आमुखम्। कथाप्रस्तावात्मके ग्रन्थ

**कथाशेष** त्रि॰ कथा कथनमात्रं शेषोऽस्य। १मृते मरणाद्धि जनस्य कथामात्रमवशिष्यते। एवं शब्दशेषनामशेषकथावशेषादयोऽप्यत्र। अतएव नैषधे "कथाशु शिष्यध्वमिति प्रमील्य सः" मरणपरतया कथाशु शिष्यध्वमिति प्रयुक्तम्। ६ त॰। २कथासमाप्तौ पु॰

**कथित** त्रि॰ कथ—गौणकर्म्मसमभिव्याहारे मुख्ये कर्म्मणि—क्त। १उक्ते २आख्यातादिना वाच्येऽर्थे च "अकथितञ्च" पा॰। ३किञ्चिद्रूपेण प्रतिपादिते त्रि॰ ४परमेश्वरे पु॰ सर्व्वेभ्यः परत्वेन तस्य कथितत्वात्तथात्वम्। "इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इत्यनेनेश्वरस्यैव सर्व्वेभ्यः परत्वेन कथितत्वम्। अतएव "संसारसूतः कथितः" विष्णु स॰ तस्य सहस्रनामसु ४कथित इत्येकं नाम व्याख्यातं च भाष्ये उक्तरूपेणैव, गौणे कर्म्मणि क्त। यस्यावबोधाय कश्चिदर्थः प्रतिपाद्यते ५तस्मिन्नर्थे त्रि॰ भावे क्त। ६कथने न॰। "पूर्व्ववृत्तकथितैः पुराविदः" रघुः।

**कथितपदता** स्त्री कथितं पूर्व्वमुक्तं पदं यत्र वाक्ये तस्य भावः तल्। अलङ्कारोक्ते पुनरुक्तताख्ये वाक्यदोषभेदे "अधिकन्यूनकथितपदता हतवृत्तता" सा॰ द॰ वाक्यमात्रगतदोषगणनायामुक्तम् "रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्" अत्र लीलाशब्दस्य द्विःप्रयोगात् कथितपदत्वं वाक्ये दोषः उद्देश्यप्रतिनिर्द्देश्ये तु नायं दोषः। यथा "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इत्यादौ ताम्रशब्दस्योद्देश्यप्रतिनिर्द्देश्यतया नोक्तदोषः।

**कथीकृत** त्रि॰ अकथा कथा कथामात्रशेषा क्रियते स्म कथा+च्वि—कृ—क्त। कथामात्रावशेषिते "अनङ्गस्य कथीकृतं वपुः" कुमा॰

**कद** रोदने, वैक्लव्ये अक॰ आह्वाने सक॰ भ्वा॰ इदित् पर॰ सेट्। कन्दति अकन्दीत्। चकन्द कन्दनम् प्रणिकन्दति

**कद** विक्लवीभावे दिवा॰ आत्म॰ अक॰ सेट्। कद्यते अकदिष्ट। चकदे। घटादि णिच्—कदयति ते। कदनम् णिच्—ल्युट्। कदनम् कद्यतेः कदयतेर्वा क्विप् कद्।

**कद्** अव्य॰। कद-क्विप्। किंशब्दार्थे। "कद्ध प्रव आहनो वीच्या नृन्" ऋ॰ १०, १०, ६, न यत् पुरा चकमा कद्ध" ऋ॰ १०, ४, "कद्ध कदा खलु" भा॰। कदू च स्या कृतम्। "कदू महीरधृष्टा" ऋ॰ ८, ६६, ८, १०। "कदू "कदा खलु" भा॰। [२सुखदायके च त्रि॰।

**कद** पु॰ कं ददाति दा—क। १मेघे शब्दर॰ २जलदायके

**कदक** न॰ कदः मेघ इव कायति प्रकाशते उपरिभागे आच्छादकत्वात् कै—क। १विताने (चाँदोया) हेम॰।

**कदक्षर** न॰ कुत्सितमक्षरम् कोः कद्। कुत्सितवर्णे।

**कदग्नि** पु॰ कुत्सितोऽग्निः कोः कद्। मन्दाग्नौ। बहु॰। मन्दाग्नियुक्ते त्रि॰।

**कदध्वन्** कुत्सितोऽध्वा कोः कद् न समा॰। दुष्टपथे

**कदन** न॰ कद—णिच्—घटादि॰ करणे ल्युट्। १पापे, पाके

ल्युट्। २मर्द्दने, ३मारणे च। आधारे ल्युट्। ४युद्धे। "तथा प्रजानां कदनं विदधुः कदनप्रियाः" भाग० ७,२,११। "संसारचक्रकदनात् ग्रसता प्रणीतः" भाग० ७,९,१६। कद—भावे ल्युट्। ५विह्वलतायाम्।

**कदन्न** न० कुत्सितमन्नं कोः कदु। कुत्सितान्ने। बाल्येऽभक्ष्यत्वेन वैद्यकेऽपथ्यत्वेन च कीर्त्तितमन्नञ्च कदन्नम्।

**कदपत्य** न० कुत्सितमपत्यं कोः कदु। मूर्खादिरूपे कदाचारयुते चापत्ये। "कदपत्यभृतं दुःखं येन विन्दन्ति दुर्भरम्" भाग० ४,१३,२७।"कदपत्यं वरं मन्ये सदपत्याच्छुचां पदात्" भा० ४, १३,४३।

**कदम्ब** पु०कद—करणे अम्बच्। दर्शनेन विरहिवैक्लव्यसाधने (कदम) वृक्षे अमरः। "एकद्वारे चतुश्चक्रं वनमालाविभूषितम्। कदम्बकुसुमाकारं लक्ष्मीनारायणं विदुः" शालग्रामलक्षणे पुरा०। "कदम्बमुकुलस्थूलैरभिवृष्टां प्रजाश्रुभिः"रघुः"कदम्बमुकुले दृष्टिः समारोपिता"उद्भटः। "कदम्बो मधुरः शीतः कषायो लवणो गुरुः। सरोविष्टम्भकृद्रूक्षः कफस्तन्यानिलप्रदः" भावप्र० तद्गुणा उक्ताः। तस्य भेदास्तत्रैव।"नीपो महाकदम्बः स्यात् धारा कदम्ब इत्यपि। द्वितीयोऽल्पप्रसारश्च हस्तपुष्पः कदम्बकः"। हारिद्रस्तु रजोपलः।धूलीकदम्बको धाराकदम्बः षट्पदप्रियः। इत्यनुपः केसराढ्यः प्रावृषेण्यः कदम्बकः। नीपो महाकदम्बोऽपि तथा बहुफलो मतः"इति भरतः। अत्र प्रावृषेण्य इत्युक्तिर्गौड़ादिदेशाभिप्रायेण मथुरादौ चैत्रेऽपि तत्पुष्पाणामाभिः प्रत्यक्षतो बहुशो दृष्टत्वात् अत एव "यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः" काव्यप्र० चैत्रमासे तत्पुष्पवर्णनमुपपद्यते। एतेन कदम्बपदं केलिकदम्बपरमिति" सा० द० रामचरणव्याख्यानं मथुरादिदेशानभिज्ञमनस्कत्वकम्। तेन देशभेदात्तस्य वसन्तप्रावृड्भवत्वमिति न्यायः। कविभिस्तु वर्षाकाले एव तद्वर्णनं क्रियते यथा माघे रैवतकपर्व्वतवर्णने। वर्षर्त्तुवर्णनमधिकृत्य "विहगाः कदम्बसुरभाविह गाः कलयन्त्यनुक्षणमनेकलयम्"। भ्रमयन् पैति मुहुरभ्रमयं पवनश्च धूतनवनीपवनः"। वर्षावर्णने च तत्रैव "क्षमवनी नवनीपवनीरभि" तस्य च प्राहृष्यत्वादेव"कदम्बं भूरणं तथेत्यादिना हरियवने भोजननिषेधः। इति"त्वत्सम्पर्कात् पुलकितमिव प्रौढपुष्पैः कदम्बैः" मेघदू० आषाढमधिकृत्यैव तद्वर्णनप्रवचनात्। इति तस्य प्रावेण्यत्वमपि। कदम्बवृक्षस्य मेरुविष्कम्भपर्वतरूपमन्दरस्य विशेषचिह्नवृक्षः "विष्कम्भशैलाः खलु मन्दरोऽस्य सुगन्धशैलो विपुलः सुपार्श्वः। तेषु क्रमात् सन्ति च केतुवृक्षाः कदम्बजम्बूवटपिप्पलकाख्याः। सि०शि०। अस्य सुमेरोः।

**कदम्बक** पु०स्वार्थे कन्।१कदम्बवृक्षे। संज्ञायां कन् संघतेन विह्वलीकरणसाधने २समूहे न० अमरः। "गजकदम्बकमेचकमुच्चकैः" माघः। "पृथुकदम्बकदम्बकराजितम्" किरा०। "कदम्बकं वातमजं मृगाणाम्" भट्टिः कदम्ब इव कायति कै—क।४हरिद्रौ ३सर्षपे च राजनि० कदम्बकोरकोपरिस्थसूक्ष्मांशतुल्यफलत्वात्तस्य तथात्वम्। ५देवताड़वृक्षे न०रत्नमा०।

**कदम्बकोरकन्याय** पु० कदम्बपुष्पस्य यथा सर्वावयवेषु युगपत्कोरकाणामुत्पत्तिस्तादृशे एकदोत्पत्तौ दृष्टान्तभेदे शब्दानामुत्पत्तिर्हि द्विविधा। "वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता। कदम्बकोरकन्यायादुत्पत्तिः कस्यचिन्मते"भाषा०उक्ता। दशदिक्षु दश शब्दा उत्पद्यन्ते ततस्तान्ये दश शब्दा इत्येवं कदम्बकोरकोत्पत्तिवत् सर्वासु दिक्षूपर्य्युपरि शब्दानामुत्पत्तिरिति कस्य चिन्मतम् न्यायमते तु वीचितरङ्गन्यायेनैव तदुत्पत्तिरिति भेदः।

**कदम्बद** पु०कदम्बः तदुपरिस्थः सूक्ष्मांश इव दीयते खण्ड्यते दो—खण्डने कर्म्मणि घञर्थे क। सर्षपे शब्दचन्द्रिका तस्य कदम्बकोरकोपरिस्थितसूक्ष्मांशतुल्यफलत्वात्तथात्वम्।

**कदम्बपुष्पा** स्त्री कदम्बस्येव पुष्पमस्याः अच्० अर्श०। मुण्डिका वृक्षे (मुण्डेरी)रत्नमाला तस्या पुष्पमिव पुष्पमस्याः विपरीते तु ङीप्। कदम्बपुष्पी तत्रैवार्थे राजनि०।

**कदम्बभ्रमवृत्त** न० कदम्बवत् भ्रमस्य वृत्तं गोलक्षेत्रम्। सि० शि० उक्ते गोलवृत्तभेदे। तद्भ्रमप्रकारस्तत्रैव "तत्रापमण्डलप्राच्या याम्या सौम्या च दिक् सदा। कदम्बभ्रमवृत्तं च बध्नीयात् परितो भ्रुवात्। लोके तु जिनलग्नां शैस्तत्र ज्या क्रान्तिशिञ्जिनी। सर्वतः समवृत्ताच्च याम्योदक् कुजसंगमे। तत्तिर्य्यग्गतसूत्राणां योगः स खमसंज्ञकः। खमभ्रुवः कदम्बानामुपरि द्युचरायेत्। सूत्राणि वृत्तरूपाणि वलनानि तदन्तरे। यन्नतं वलनं मध्ये स्यात् समभ्रुवसूत्रयोः। कदम्बभ्रुवसूत्रान्तरायनं च लिखेद्यात्। कदम्बसमसूत्रान्तः स्फुटं सर्वदिशां च तत्"।

**कदम्बवादिन्** पु०कदम्ब इति वादः संज्ञा अस्त्यस्य इनि। कदम्बसंज्ञायुक्ते नीपे। "कदम्बवादिनो नीपान् दृष्ट्वा कण्टकितैरिव। समन्ततो भ्राजमानं कदम्बकंकदम्बकैः"

काशी० । कदम्बककदम्बकैः कदम्बसमुदायैः स्तवकदम्बशब्दवाच्यान् नीपान् महाकदम्बान् दृष्ट्वा कण्टकितैर्जातपुलकैरिवेत्युत्प्रेक्षा । [जयायाम् राजनि० ।

**कदम्बी** स्त्री कद–करणे अम्बच् गौरा० ङीष् । देवदाल्याम्

**कदर** पु० कं जलं दृणाति दृ–अच् । १श्वेतखदिरे तस्य सेवनात् मुखस्थितस्य श्लेष्मणा संहतरूपजलस्य दारणात् "कदरो विशदोवर्ण्यो मुखरोगकफास्रजित्" इति भावप्र० तद्गुणमध्ये मुखकफनाशित्वोक्तेस्तथात्वम् । २पायसभेदे (छेड़ापायस) न० शब्दमाला । तस्य अम्लादियोगात् दुग्धान्तर्गतजलदारणात् तथात्वम् । कदः विह्वलकारिका अरा अस्य । ३क्रकचे(करात)मेदि०सुश्रुतोक्ते ४क्षुद्ररोगभेदे स च रोगः "समासेन चत्वारिंशत् क्षुद्ररोगा भवन्तीत्युद्दिश्य" "कदरम् अजगल्लिक इत्यादिना विभज्य "शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः। मेदोरक्तानुगैश्चैव दोषैर्वेधाद्यथापि वा । कोलमात्रः सरुक्स्रावो जायते कदरस्तु सः" लक्षितः (पाएरजाङ्गडा) तत्र विभागे कदरमित्युक्तेर्नपुंसकताप्यस्य ।

**कदर्थ** पु०कुत्सितोऽर्थः कोः कद् । कुत्सितपदार्थे । ततः "तत्करोतीति" णिच् । कदर्थयति कुत्सितमर्थं करोतीत्यर्थः । ततः क्त कदर्थितः । कुत्सितार्थीकृते । "भ्रष्टभूषणकदर्थितमाल्यः" माघः। ल्युट् । कदर्थनम् कुत्सितार्थकरणे । युच् । कदर्थना तत्रैव स्त्री । अकदर्थं कदर्थं करोति च्वि कदर्थी+कृ–क्त । कदर्थीकृत अभूतकदर्थे कदर्थतया कृते त्रि०। "कैश्च: कदर्थीकृतवीर्य्यसारः" किरा० ।

**कदर्य्य** त्रि० कुत्सितोऽर्य्यः स्वामी कुगतिस०कोः कद् । सति विभवे १अदातरि,क्षुद्रे ।"आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पातयन् । यो लोभात् सञ्चिनोत्यर्थान् स कदर्य्य इति स्मृतः"इत्युक्तलक्षणे २अर्थसञ्चयकारके च ।"दीक्षितस्य कदर्य्यस्य बद्धस्य निगड़स्य च" "आत्रेयस्य कदर्य्यस्य वदान्यस्य च वार्द्धुषेः" मनुः "उवाच न मे जनपदे कदर्य्यो न मद्यपोनानाहिताग्निर्नाविद्वान् न स्वैरी" छा० उ० ।

**कदल** पु० कद–वृषा०कलच् । १रम्भावृक्षे मेदि० । २पृश्नौ (चाकुलिया) ३डिम्बिकायाम् (डिमि) शाल्मलिवृक्षे च स्त्री मेदि० । अजादेराकृतिगणत्वात् टाप् ।

**कदली** स्त्री काय जलाय दल्यते त्वगादौ जलबाहुल्यात् गौरा० ङीष् । १रम्भावृक्षे, अमरः । कदली गुणादि भावप्र० उक्ता यथा। "कदली वारणा मोचाम्बुसारांशुमतीफला । मोचाफलं स्वादु शीतं विष्टम्भि कफकृद्गुरु । स्निग्धं पित्तास्रतृड्दाहक्षतक्षयसमीरजित् । पक्वं स्वादु हिमं पाके स्वादु वृष्यञ्च वृंहणम् । क्षुत्तृष्णानेत्रगदहृन्मेहघ्नं रुचिमांसकृत् । माणिक्यमर्त्त्यामृतचम्पकाद्या भेदाः कदल्या बहवोऽपि सन्ति । उक्ता गुणास्तेष्वधिका भवन्ति निर्दोषता स्याल्लघुता च तेषाम्"। रम्भायाश्च स्तम्भे जलाधिकयुक्तत्वात् शैत्याधिक्ययुक्तपत्रत्वाच्चतथात्वम् "कदली कदली करभः करभः करिराजकरः करिराजकरः" प्रसन्नरा० । अत्र द्वितीय कदलीपदम् शैत्यादिगुणयोगात् गौणमिति सा०द० समर्थितम् "ऐकान्तशैत्यात्कदलीविशेषाः" कुमा० । २वैजयन्त्याम् कदल्याकारपत्ररूपवस्त्रत्वात् तथात्वम् अत एव माघे कदल्याः कामवैजयन्तीत्वेनोत्प्रेक्षणम् तदीयाकारसाम्यात् यथा । "जगद्वशीकर्त्तुमिमाः स्मरस्य प्रभावनीके तनवै जयन्तोः । इत्यस्य तेने कदलीर्मधुश्रीः प्रवनी केतनवैजयन्ती"माघः ।"क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः""यास्त्यूरुःसरसकदलीस्तम्भगौरश्चलत्वम्"मेघ०। स्वार्थे कन् रम्भावृक्षादौ । "अभ्युन्नतकदलिकावनराजिरन्ध्रैः" माघः । ३हस्तिपताकायां हारा० । "कदलिका कामकारिणः"काद० । ४मृगभेदे "कदलीमृगमोकानि कृष्णश्यामारुणानि च। काम्बोजः प्राहिणोत्तस्मै" भा० स०४७अ०"मोकानि अजिनानि" नीलक० । तेन तस्य काम्बोजदेशस्थत्वं गम्यते तस्य च कदलीस्तम्भवद्भङ्गुरपादकत्वात्तथात्वम् । कदल्याः फलं पुष्पं वा अण् तस्य लुप् लुपि स्त्रीप्रत्ययस्यापि लुक् । कदल तत्फले न० ।"पनसे कदलं कदले च घृतं घृते च लवणं लवणे च दधि"वैद्यकम् ।"कदली लवनी धात्री"इत्यादौ तु उपचारात् तत्फलपरता । संघे खण्ड च । कदलीखण्डतत्संघे न०।

**कदलीकन्द** पु० ६त० । रम्भामूले तद्गुणाश्च भावप्र०उक्ता यथा "शीतलः कदलीकन्दो बल्यः केश्योऽम्लपित्तजित् । वह्निकृद्दाहहारी च मधुरो रुचिकारकः" । "कन्दः कदल्यादलितोनितान्तं संस्वेदितो हिङ्गुघृतेन राद्धः। उद्धृलितः कैम्बरेणुनाथ मरीचसम्पर्कित एष रुच्यः"

**कन्दलीकुसुम** न० ६त० । (मोचा) कदलीपुष्पे । "कदल्याः कुसुमं स्निग्धं मधुरं तुवरं गुरु । वातपित्तहरं शीतं रक्तपित्तक्षयप्रणुत्"भावप्र०तद्गुणा उक्ताः । कदलीपुष्परम्भापुष्पादयोप्यत्र न०

**कदलीदण्ड** पु० ६त० । (थोड) ख्याते कदलीस्तम्भमध्यस्थे पदार्थे "क्षतः छिन्नः सलिलविष्टतः कृततन्तुः प्रभिन्नः

कम्बोर्ध्वया जलविरहितः चारजम्बीरपुष्टः। मध्ये मध्ये तनुशकलितेनार्द्र केणातिपूर्णः स्वादुस्तूर्णं भवति सुतरां गर्भदण्डः कदल्याः। योनिदोषहरोदण्ड कादल्योऽस्रकदरं जयेत्। रक्तपित्तहरः शीतः गुरुः ष्योऽग्निप्रवर्द्धनः” भावप्र० तद्गुणाद्युक्तम्।

**कदा** अव्य०कस्मिन् काले किम्+दा—कादेशः। कस्मिन्काले इत्यर्थे अनद्यतने काले तु तत्रार्थे वा हिल् कर्हि कदा वा। “कदा काश्यां गमिष्यामि कदा द्रक्ष्यामि शङ्करम्। इति ब्रुवाणः सततं काशीवासफलं लभेत्” काशीख०।“न पादौ धावयेत् कांस्ये कदा चिदपि भाजने” मनुः “कदा वाराणस्यामिह सुरधुनीरोधसि वसन्” “कदा वृन्दारण्ये विमलयमुनातीरपुलिने” “कदायोध्यामध्ये विमलसरयूतीरपुलिने। “विभाषा कदाकर्ह्योः” पा० एतद्योगे भव्ये लट्। “कदा कर्हि भुङ्क्ते भोक्ष्यते भोक्ता वा” सि० कौ०। अव्ययत्वात् ततो भवार्थे ट्युल् तुट् च। कदातन कस्मिन् काले भवे त्रि०स्त्रियां ङीप्

**कदाकार** त्रि० कुत्सिताकारोऽस्य कोः कदु। १कुत्सिताकारे कुगति स०। २कुत्सिताकारे पु०।

**कदाख्य** पु० कुत्सिता आख्या यस्य कदादेशः। (कुड़) १इच्चे कुष्ठौषधौ शब्दच०। २कुत्सिताख्ये त्रि०। कुगतिस०। ३कुत्सिताख्यायां स्त्री।

**कदाचन** अव्य० कदा+चन मुग्ध०। अनिर्द्धारिते कस्मिंश्चित् काले इत्यर्थे “कदाचन स्तरीरसि” श्रुतिः। “पञ्चाननगते भानौ पक्षयोरुभयोरपि। चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन” ति०त० पु०। कदा+चित् मुग्ध०।

कदाचित् कदापीत्यर्थे अव्य०। “ततः कदाचिदुर्वश्यां भैरवो मैथुनं ययौ” कालिका० “कण्डूयमानेन कटं कदाचित्” रघुः। पा०चिच्चनप्रत्ययाभावात् “असाकल्ये तु चिच्चनेत्यमरोक्तेश्च पदद्वयमिति विवेक्तव्यम्।

**कदामत्त** पु० कदाचिन्मत्तः। ऋषिभेदे ततः गोत्रापत्ये इञ्। कादामत्ति तदपत्ये पुंस्त्री तस्य बहुत्वे उपका० या इञो लुक्। कादामत्तयः कदामत्ताः।

**कदुष्ण** न०ईषत् उष्णम् ईषदर्थककोः कदु। १ईषदुष्णे स्पर्शे २तद्वति त्रि०। “श्वसन् कदुष्णं पुरमाविवेश” भट्टिः। “कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणः” “कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम्” सुश्रु०। पक्षे कादेशः कोष्ण तदर्थयोः “भुवं कोष्णेन कुण्डोध्नी” रघुः। पक्षे कवादेशः कवोष्ण उक्तार्थयोः।

कदुड कार्द्रवश्ये अक०कडुवत् दोपधत्वात् क्विप् कदु इति भेदः

**कद्रथ** पु० कुत्सितोरथः कोः कदु। कुत्सिते रथे “युधि कद्रथवद्भीमं बभञ्ज ध्वजशालिनम्” भट्टिः।

**कद्रु** पु० कद—रु। १पिङ्गलवर्णे। २तद्वति त्रि० “प्राजापत्यं कद्रुमालभेत” तैत्ति० २,१,४,२, ३कर्वुरवर्णे पु० ४तद्वति त्रि० “वासः कृष्णशं कद्रु” कात्या० २२,४,१२, “कद्रु कर्वुरं वासः” संपद्व्या०। संज्ञायामूङ्। कद्रू ५नागमातरि दक्षप्रजापतेः कन्याभेदरूपे कश्यपपत्नीभेदे स्त्री “कद्रूस्तु सुषुवे नागान्” भा० आ०। काद्रवेयशब्दे विवृतिः। “प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश। अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा। क्रोधा प्रधा च विश्वा च विनता कपिला मुनिः। कद्रूश्च मनुजव्याघ्र! दक्षकन्यैव भारत” भा० आ०६५अ०। “लोका भारतशार्दूल ! कश्यपस्य निबोध मे। अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा खशा। सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा। कद्रुर्मुनिश्च राजेन्द्र ! तास्वपत्यानि मे शृणु भा०हरि०३अ०

**कद्रुण** त्रि० कद्रुरस्त्यस्य पामा० न। पिङ्गलवर्णान्विते।

**कद्रु(द्रू)पुत्र** पु० ६त०पृषो०वा ह्रस्वः। १सर्पे। कद्रु(द्रू)सुतादयोऽप्यत्रार्थे। तस्य कद्रूतनयत्वं काद्रवेयशब्दे वक्ष्यते।

**कद्र्यञ्च्** त्रि०कस्मिन्नञ्चति किम्+अन्चु—क्विप् अद्र्यादेशः किमः कः। अनिश्चितदेशगन्तरि कस्मिन् गन्तरि अनिश्चितदेशगमने। शसादावचि अल्लोपदीर्घौ। कद्रीचः कद्रीचा इत्यादि। स्त्रियां ङीप् अल्लोपदीर्घौ। कद्रीची। “सा कद्रीची कं स्विदर्द्धं परागात्” ऋ० १,१६४,१७।“कद्रीची कगतेत्यनिश्चितगमनादियं प्राप्नवती” भा०।

**कद्वत्** त्रि० कः कशब्दोऽस्त्यस्य मतुप् मस्य वः पृषो०। कशब्दयुक्ते मन्त्रादौ स्त्रियां ङीप्। “कद्वत्यो याज्यानुवाक्याः कोहि प्रजापतिः” शत०ब्रा० ६,२,२,५।

**कद्वद** त्रि०कुत्सितं वदति वद—अच् कोः कदादेशः। गर्हितवाक्यवादिनि अमरः“येन जातं प्रियापाये कद्वदं हंसकोकिलम्” भट्टिः। २दुःश्रवशब्दयुक्ते च “वाग्विदां वरमकद्वदो नृपः” माघः।

**कद्दर** त्रि० कं जलमिवाचरति क+क्विप् शब्द कता म्रियते दृ—कर्मणि अप्। दधिजाते तक्रभेदे कड्वरे त्रिकाण्ड०।

**कधप्रिय** पु०स्तव्यं प्रीणाति प्री—क वेदे पृषो०। स्तव्यप्रिये। “कस्त जषः कधप्रिये भुजे” ऋ०१,३०, २। स्तव्यं प्रीणाति प्री—क्विप् वेदे पृषो०। कधप्री तत्रैवार्थे। “कस्त

नूनं कथप्रियः पिता पुत्रं न हस्तयोः दधिध्वे वृक्तवर्हिषः” ऋ० १,३८,१ ।

**कन** प्रीतौ अक० गतौ सक० भ्वा० पर० सेट् । कनति अकनीत्-अकानीत् चकान । प्रणिकनति । ईदित् । कान्तः । आदित् वर्त्तमाने क्त । कान्तोवर्त्तते । कान्तिः । कननम् । “अविक्रीतो अकानिषं पुनर्यन्” ऋ० ४,२४,६,

**कनक** न० कनी दीप्तौ क्वुन्रादि० वुन् । १स्वर्णे अमरः । २पलाशवृक्षे ३नागकेशरे ४धत्तूरे ५काञ्चनालवृक्षे ६कालीयवृक्षे ७चम्पकवृक्षे च पु० मेदि० । ८कासमर्द्दवृक्षे पु० राजनि० ९काष्ठागुरौ शब्दमा० । “सुप्तः सन् कनकपलाशकर्णिकारान्” सुश्रु० । “सौदामन्या कनकनिकषस्निग्धया दर्शयोर्व्वीम्” “नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः” । अन्ते रव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः” मेघ० “कनककुण्डलवान् किरिटी” विष्णुध्यानम् “कनकचषकमेतद्रोचनालोहितेन” माघः । “अद्यापि तां कनकचम्पकदामगौरीम्” चोरप० । कूर्मविभागे वृह० सं० “अपरस्याम् मणिमान्मेघवान् क्षुद्र तारक्षितिवृक्षवैश्यकनकशकाः” इत्युक्ते १०पश्चिमदेशस्थदेशभेदे पु० । कनकस्येम् परिमाणम् अण् । कानक तत्परिमाणे निष्कादौ त्रि० । काञ्चनोत्पत्तिकथा च अग्निरेतःशब्दे ५८पृष्ठे उक्ता । भावप्र० तदुत्पत्तिगुणादिकमुक्तं यथा “पुरा निजाश्रमस्थानां सप्तर्षीणां जितात्मनाम् । मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वशिष्ठश्चेति सप्तैते कीर्त्तिताः परमर्षयः । पत्नीर्विलोक्य लावण्यलक्ष्मीसम्पन्नयौवनाः । कन्दर्पदर्पविध्वस्तचेतसो जातवेदसः । पतितं यद्धरापृष्ठे रेतस्तद्धेमतामगात् । कृत्रिमञ्चापि भवति तद्रसेन्द्रस्य वेधतः । तारं शुल्वोत्थितं स्निग्धं कोमलं गुरु हेम सत् ।(सत् उत्तमम्)तच्छ्वेतं कठिनं रूक्षं विवर्णं समलं दलम् । दाहे छेदे सितं श्वेतं कषे त्याज्यं लघु स्फुटम् । सुवर्णं शीतलं वृष्यं बल्यं गुरु रसायनम् । स्वादु तिक्तञ्च तुवरं पाके च स्वादु पिच्छिलम् । पवित्रं वृंहणं नेत्र्यं मेधास्मृतिमतिप्रदम् । हृद्यमायुष्करं कान्तिवाग्विशुद्धिस्थिरत्वकृत् । विषद्वयक्षयोन्मादत्रिदोषज्वरशोषजित् । बल्यं सवीर्य्यं हरते नराणां रोगव्रजान् पोषयतीह काये । असौख्यञ्चापि सदा सुवर्णमशुद्धमेतन्मरणञ्च कुर्यात् । अशुद्धमारितं स्वर्णं बलं वीर्य्यञ्च नाशयेत् । करोति रोगान् मृत्युञ्च तद्धन्यादाशु तत्ततः” ।

**कनकक्षार** पु० कनकस्य द्रावणाय क्षारः । (सोहागा) टङ्के राजनि० । तत्सम्पर्कात् हि झटिति कनकं द्रवति ।

**कनकदण्ड** न० कनकस्य दण्डोयत्र । राजच्छत्रे त्रिका० कनकच्छत्रादयोऽप्यत्र ।

**कनकध्वज** पु० धृतराष्ट्रपुत्रभेदे । “दीर्घबाहुर्महाबाहुर्व्यू-ढोरुः कनकध्वजः” भा० आ० ११७अ० । तत्पुत्रकीर्त्तने ।

**कनकपल** पुंस्त्री कनकमिव पलं मांसमस्य । मत्स्यभेदे हारा० स्त्रियां ङीष् । तत्राद्यन्तयोर्मत्स्यपर्य्यायकथनात् मध्ये सुवर्णपलरूपपरिमाणार्थकताकल्पनं शब्दकल्पद्रुमादौ प्रमादिकमेव । ६त० । कनकस्य कर्षचतुष्टयरूपपलपरिमाणे न० ।

**कनकपत्र** न० कनकनिर्म्मितम् पत्रं पत्राकारं भूषणम् । (कानपात) १कनकमयकर्णाभरणभेदे । “अद्यापि तन्मनसि सम्परिवर्त्तते मे रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या । जीवेति मङ्गलवचः परिहृत्य कोपात् कर्णेकृतं कनकपत्रमनालपन्त्या” चोरप० । “कनकपत्रालङ्कृतया” काद० । [ शतीलतायाम् राजनि०

**कनकप्रभा** स्त्री कनकस्य प्रभेव प्रभा यस्याः । महाज्योति

**कनकप्रसवा** स्त्री कनकमिव प्रसवः पुष्पं यस्याः । स्वर्णकेतक्याम् राजनि० ।

**कनकमय** त्रि० कनकस्य विकारः मयट् । स्वर्णविकारे “आधत्ते कनकमयस्य यत्र लक्ष्मीम्” किरा० । [राजनि०

**कनकरम्भा** स्त्री कनकवर्णफलिका रम्भा शा० त० । स्वर्णकदल्याम्

**कनकरस** पु० कनकस्येव रस उपरसः । १हरिताले राजनि० तस्य स्वर्णवर्णत्वात् पारदतुल्यगुणत्वोपरसत्वाच्च तथात्वम् । उपरसाश्च भावप्र० दर्शिताः यथा । “गन्धो हिङ्गुलमभ्रतालकशिलाः स्रोतोऽञ्जनं टङ्कणम् । राजावर्त्तकचुम्बकौ स्फटिकया शङ्खो खटी गैरिकम् । कासीसं रसकं कपर्द्दसिकता बोलाश्च कङ्कुष्ठकम् सौराष्ट्री च मता अमी उपरसाः सूतस्य किञ्चिद्गुणैः” । (सूतस्य पारदस्य) “स्वर्णवर्णं गुरु स्निग्धम् इत्यादिना तस्य गुणादिकमुक्तम् तत्रैव । ततश्च स्वर्णवर्णत्वात् पारदात् किञ्चिदूनगुणकत्वाच्चास्य तथात्वम् । ६त० । स्वर्णस्य द्रवीभूते २रसे च ।

**कनकलीद्भव** पु० कनतीति कना दीप्ता कला अवयवः तया उद्भवति उद्+भू-अच् । (धूना) शालनिर्य्यासे । राजनि०

**कनकसूत्र** न० कनकनिर्म्मितं सूत्रम् । (सोनारतार) स्वर्णसूत्रे

**कनकाङ्गद** न० कनकमयमङ्गदम् । स्वर्णमये केयूरे । “कनकाङ्गदद्युतिरस” माघः । तदस्यास्ति मतुप् मस्य वः । कनका-

कुदयत् इति । कनकाङ्गदिन् तद्युक्ते त्रि० विष्णौ पु० "महावराहोगोविन्दः सुषेणः कनकाङ्गदी" विष्णुस० ।

**कनकाचल** पु० कनकमयोऽचलः । १सुमेरुपर्व्वते, धान्याचलादिषु दशसु दानीयपर्व्वतेषु मध्ये दानीये स्वर्णपर्व्वते च । हेमशैलस्वर्णशैलादयोऽप्यत्र । तद्दानकालपरिमाणादि मत्स्यपु० उक्तं यथा "प्रथमोधान्यशैलः स्याद्द्वितीयो लवणाचलः । गुड़ाचलस्तृतीयस्तु चतुर्थो हेमपर्व्वतः । पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्वतः । सप्तमो घृतशैलश्च रत्नशैलस्तथाष्टमः । राजतो नवमस्तद्वद्दशमः शर्कराचलः । वक्ष्ये विधानमेतेषां यथावदनुपूर्व्वशः । अयने विषुवे पुण्ये व्यतीपाते दिनक्षये । शुक्लपक्षे तृतीयायामुपरागे शशिक्षये । विवाहोत्सवयज्ञेषु द्वादश्यामथवा पुनः । शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे वा विधानतः । धान्यशैलादयो देयाः यथा शास्त्रविधानतः । तीर्थे वायतने वापि गोष्ठे वा भवनाङ्गने । मण्डपं कारयेत्तत्र चतुरस्रमुदङ्मुखम् । प्रागुदक्प्रवणं तद्वत् प्राङ्मुखं वा विधानतः । गोमयेनानुलिप्तायां भूमावास्तीर्य वै कुशान् । तन्मध्ये पर्वतं कुर्य्याद्विष्कम्भपर्व्वतान्वितम्" । विधानयुक्तविष्कम्भपर्व्वतनिर्म्माणप्रकारादि धान्यपर्व्वत शब्दे वक्ष्यते । अस्य परिमाणमुक्तं मत्स्यपु० । "अथ पापहरं वक्ष्ये सुवर्णाचलमुत्तमम् । यस्य प्रदानाद्भवनं विरिञ्चेर्याति मानवः । उत्तमः पलसाहस्रो मध्यमः पञ्चभिः शतैः । तदर्द्धेनाधरस्तद्वत् अल्पवित्तोऽपि शक्तितः । दद्यादेकपलादूर्द्धं यथा शक्त्या विमत्सरः । धान्यपर्व्वतवत् सर्व्वं विदध्यात् विधिसत्तमम् । विष्कम्भशैलांस्तद्वच्च ऋत्विग्भ्यः प्रतिपादयेत्" ।

**कनकाध्यक्ष** पु० ७त० । सुवर्णरक्षणादावधिकृते अमरः ।

**कनकायु** पु० धृतराष्ट्रपुत्रभेदे तत्पुत्रगणने भा०आ०६७अ० "उग्रायुधोभीमरथाः कनकायुर्दृढायुधः" ।

**कनकार** पु० कनकं दीप्तं यथा स्यात्तथा ऋच्छति सर्व्वतो व्याप्नोति ऋ–अण् । कोविदारवृक्षे । राजनि० ।

**कनकालुका** स्त्री कनकनिर्म्मिता आलुः संज्ञायां कन् । भृङ्गारे (झारी) सौवर्णकलसभेदे अमरः ।

**कनकावतीमाधव** कनकावतीं माधवश्चाधिकृत्य कृतोग्रन्थः अण् आख्यायिकायाम् तस्य लुक् । कनकावतीमाधवहत्तान्ताख्यापके शिल्पकरूपनाटकभेदे तल्लक्षणं शिल्पकशब्दे वक्ष्यते ।

**कनकाह्व** पु० कनकस्याह्वा आह्वा यस्य । १सुवर्णनामनामके नागकेशरे न० । २धुस्तूरे पु० । अमरः कनकाह्वयोऽप्यत्र राजनि० । पुष्पमे न० ।

**कनखल** पु० । १तीर्थभेदे तच्च तीर्थं गङ्गाद्वारसमीपस्थम् यथोक्तं भा०व०८१अ० "विमेद तरसा गङ्गां गङ्गाद्वारं युधिष्ठिर! । पुण्यं तद्ख्यायतं राजन् ! ब्रह्मर्षिगणसेवितम् । सनत्कुमारः कौरव्य ! पुण्यं कनखलं तथा । पर्व्वतस्य पुरुर्नाम यत्र जातः पुरूरवाः" । तस्य माहात्म्यमुक्तम् "गङ्गाद्वारे कुशावर्त्ते विल्वके नीलपर्व्वते । तथा कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत्" भा०अनु०२५ । "विशेषो वै कनखले प्रयागे परमं महत् । यद्यकार्य्यशतं कृत्वा कृतं गङ्गावसेचनम् । सर्व्वं तत्तस्य गङ्गापोदहत्यग्निरिवेन्धनम्" भा०व०८५अ० । "ततो गच्छेत धर्मज्ञ नमस्कृत्य महागिरिम् । स्वर्गद्वारेण यत्तुल्यं गङ्गाद्वारं न संशयः" इत्युपक्रम्य "ततः कनखले स्नात्वा त्रिरात्रोपोषितोनरः । अश्वमेधमवाप्नोति स्वर्गलोकञ्च विन्दति" भा०व०८४ । तत्तीर्थस्य २समीपस्थपर्व्वते च "एते कनखला राजन्नृषीणां दयिता नग ! । एषा प्रकाशते गङ्गा युधिष्ठिर ! महानदी" भा०व० १३५अ० "तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णाम्" मेघ० "तीर्थं कनखलं नाम गङ्गाद्वारेऽस्ति पावनम् । यत्र काञ्चनपातेन जाह्नवी देवदन्तिना उशीनरगिरिप्रस्थाद्भित्त्वात्ताववतारिता" कथासरित्सागरः ।

**कनन** त्रि० कन–युच् । काणे एकनेत्रे हेमच० ।

**कनल** त्रि०कन–अलच् । दीप्ते । तेन निर्वृत्तादि अरीहणा० चतुरर्थ्याम् वुञ् । कानलक तन्निर्वृत्तादौ त्रि० ।

**कनवक** पु० यदुवंश्ये वसुदेवभ्रातरि श्वफल्कस्य सुतभेदे । श्वफल्कात् वसुदेवोत्पत्तिरुक्ता । "देवभागस्ततोजज्ञे तथा देवश्रवाः पुनः । अनाधृष्टिः कनवको वत्सवानथ गृञ्जिमः" हरि० ३५ । तत्रैव "तन्द्रिजस्तन्द्रिपालश्च सुतौ कनवकस्य तु"

**कना** स्त्री कनि नामधातु–अच् । कनिष्ठायाम् । "पुनस्तदा वहति यत् कनाया दुहितुः" ऋ० १०,६१,५ ।

**कनि** नामधातु युवानं अल्पं वा करोति णिच्–कनादेशः उभय०सक०सेट् । कनयति ते । "कीर्त्तने कनयन्ति च" भट्टिः

**कनिक्रद** त्रि०क्रन्द–यङ् लुक् अच्–धुत्वाभावः निगमत्वात् । अत्यन्तक्रन्दितरि । "इमं मा हिंसीरेकशफं पशुं कनिक्रदम्" यजु०१३,४८ । दाधर्तीत्यादि पा०सू० कनिक्रददिति प्रकृतिभागमात्रनिपातः तेनान्यप्रत्ययेऽपि रूपं भवत्येव ।

**कनिष्ठ** त्रि० अतिशयेन युवा अल्पो वा इष्ठन् कनादेशः । १अतितरुणे २अत्यल्पे । ३अनुजे इत्येको । ४दुर्गवाक्ष्वो

अल्पाङ्गुलौ (कडेआङ्गुल) स्त्री मेदि० । ५कनिष्ठस्य भार्य्यायां६अल्पवयस्कायां स्त्रियाम् स्त्री । तत्र पुंयोगलक्षणं ङीषं वयोवाचिलक्षणं ङीपं च बाधित्वा अजादिपाठात् टाप् । ७नायिकाभेदे सा च रससञ्जर्य्यां धीराऽधीराधीराधीराभेदेन त्रिविधेति विभज्य परिणीतत्वे सति भर्त्तृन्यूनस्नेहा कनिष्ठेति लक्षयित्वा धीराधीरादिज्येष्ठकनिष्ठयोरुदाहरणमुक्तम् तत्र धीरे ज्येष्ठाकनिष्ठे यथा "एकस्मिन् शयने सरोरुहदृशोर्विज्ञाय निद्राकृतयोरेकां पल्लवितावगुण्ठनवतीमुत्कन्धरीं दृष्टवान्" । अन्यस्याः सविधं समेत्य निभृतं व्यालोलहस्ताङ्गुलिव्यापारैर्वसनाञ्चलं चपलयन् स्वापच्युतिं क्रूप्तवान् । अधीरे ज्येष्ठाकनिष्ठे यथा "अन्तः कोपकषायिते प्रियतमे पश्यन् घने कानने पुष्पस्यावचयाय नम्रवदनामेकां समायोजयन् । अर्द्धोन्मीलितलोचनाञ्चलचमत्काराभिरामाननां स्मेराभाधरपल्लवां नवबधूमन्यां समालिङ्गति"। धीराधीरे ज्येष्ठाकनिष्ठे यथा "धैर्य्याधैर्य्यपरिग्रहग्रहिलयोरेणीदृशोः प्रीतये रत्नद्वन्द्वमनन्तकान्तिरुचिरं मुष्टिद्वये न्यस्तवान् । एकस्याः कलयन् करे प्रथमतोरत्नं परस्याः प्रियो हस्ताहस्तिमिषात् स्पृशन् कुचतटीमानन्दमाविन्दति" । ८अत्यल्पपरिमिते त्रि० ।

"गायत्री छन्दसां कनिष्ठा" तैत्ति० ६,१,६,२ । वैदिकच्छन्दसां गायत्र्याः प्रथमत्वेन उष्णिगादितोऽल्पाक्षरत्वात् कनिष्ठत्वम् "तद्वै कनिष्ठं छन्दः यद् गायत्री प्रथमा छन्दसां युज्यते" शत० १,८,२,१० ।

९उत्तरकालजाते त्रि०।"गर्द्दभः कनिष्ठं पशूनां प्रजायते" तैत्ति०५,१,५,५।"अथ यदजाः कनिष्ठानि पात्राणि खलु प्रजायन्ते तस्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीन् विजनयन्त्य: कनिष्ठाः कनिष्ठानि हि पात्राणि खलु प्रजायन्ते" शत०ब्रा० ४,५,५,६ । १०अधःपदे ११अधरे च त्रि०।"छायैवायं पुरुषः पाप्मनानुषक्तः सोऽस्य एव कनिष्ठो भवत्यधःपदमिवेयस्यते तत्कनिष्ठमिति" शत०ब्रा० ७,७,२,२। १२परजातमात्रे । "अन्वञ्चोऽमात्या अधोनिवीता प्रकृतशिखाः ज्येष्ठप्रथमाः कनिष्ठजघन्याः" आ० ४,२,९ । "यो य कनिष्ठः स पृष्ठतो गच्छेत् नारा० "पुत्रः कनिष्ठः ज्येष्ठायां कनिष्ठायाञ्च पूर्वजः" मनुः । "सर्वं ज्येष्ठः कनिष्ठस्य संहरेतां यथोदितम्" "येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यात् मध्यमं धनमिति" मनुः "सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना" अमरः ।

कनिष्ठायाः अपत्यं ढक्-इनुक् । कानिष्ठिनेय कनिष्ठाया अपत्ये ।"क्षते कानिष्ठिनेयस्य भरतस्य विवासितम्"भट्टिः। १२महादेवे पु० "नमो ज्येष्ठाय कनिष्ठाय च" यजु० १६,३२ । तस्य च "अणोरणीयान् महतोमहीयान्" इति श्रुत्या अणुतरत्वतोक्तेः कनिष्ठत्वम् ।

**कनिष्ठपद** न० बीजगणितोक्ते ज्येष्ठापेक्षया न्यूनसंख्यान्विते पदे वर्गमूले । वर्गप्रकृतौ तदानयनप्रकारः स प्रयोजनं तत्र दर्शितं यथा

"इष्टं ह्रस्वं तस्य वर्गः प्रकृत्या क्षुण्णो युक्तोवर्जितोवा स येन । मूलं दद्यात् क्षेपकं तं धनर्णं मूलं तच्च ज्येष्ठमूलं वदन्ति ॥ ह्रस्वज्येष्ठक्षेपकान्न्यस्य तेषां तानन्यान् वाधोनिवेश्य क्रमेण । साध्यान्येभ्योभावनाभिर्बहूनि मूलान्येषां भावना प्रोच्यतेऽतः । वज्राभ्यासो ज्येष्ठलघ्वोस्तदैक्यं ह्रस्वं लघ्वोराहतिश्च प्रकृत्या । क्षुण्णा ज्येष्ठाभ्यासयुग्ज्येष्ठमूलं तत्राभ्यासः क्षेपयोः क्षेपकः स्यात् ॥ ह्रस्वं वज्राभ्यासयोरन्तरं वा लघ्वोर्घातोयः प्रकृत्या विनिघ्नः । घातो यश्च ज्येष्ठयोस्तद्वियोगोज्येष्ठं क्षेपोऽत्रापि च क्षेपघातः ॥ इष्टवर्गहृतः क्षेपः क्षेपः स्यादिष्टभाजितः । मूले ते स्तोऽथ वा क्षेपः क्षुण्णः क्षुण्णे तदा पदे ॥ इष्टवर्गप्रकृत्योर्यद्विवरं तेन वा भजेत् । द्विघ्नमिष्टं कनिष्ठं तत् पदं स्यादेकसंयुतौ ॥ ततोज्येष्ठमिहानन्त्यं भावनाभिस्तथेष्टतः" ॥ उदाहरणम् । "कोवर्गोऽष्टहतः सैकः कृतिः स्याद्गणकोच्यताम् । एकादशगुणः कोवा वर्गः सैकः कृतिर्भवेत् ॥

प्रथमोदाहरणे

न्यासः प्र ८ क्षे १ अत्रैकमिष्टं ह्रस्वं प्रकल्प्य जाते मूले सक्षेपे क १ ज्ये ३ क्षे १ । एषां भावनार्थं न्यासः

प्र ८ क १ ज्ये ३ क्षे १ । क १ ज्ये ३ क्षे १

वज्राभ्यासौ ज्येष्ठलघ्वोरित्यादि प्रथमकनिष्ठ १ द्वितीयज्येष्ठमूलाभ्यासः ३ द्वितीयकनिष्ठ १ प्रथमज्येष्ठमूलाभ्यासः ३ अनयोरैक्यं ६ कनिष्ठपदं स्यात् कनिष्ठयोराहतिः १ प्रकृतिगुणा ८ ज्येष्ठयोरभ्यासेन ९ अनेन युता १८ ज्येष्ठपदं स्यात् क्षेपयोराहतिः क्षेपकः स्यात् १ प्राङ्मूलक्षेपाणाम् एभिः सह भावनार्थं न्यासः

प्र ८ क १ ज्ये ३ क्षे १ । क ६ ज्ये १७ क्षे १

भावनया लब्धे मूले क ३५ ज्ये ९९ क्षे १

एवं पदानामानन्त्यम्

द्वितीयोदाहरणे रूपमिष्टं कनिष्ठम् प्रकल्प्य तद्वर्गात्प्रकृति-

गुणात् ॥ रूपद्वयमपास्य मूलं ज्येष्ठं ३ अत्र भावनार्थं न्यासः प्र ११ क १ ज्ये ३ चे २ । क १ ज्ये ३ चे २ प्राग्वल्लब्धं चतुःक्षेपमूले क ६ ज्ये २० चे ४ इष्टवर्ग-हृतः क्षेपदूत्यादिना जाते रूपक्षेपमूले क ३ ज्ये १० चे १

अतस्तुल्य भावनया वा कनिष्ठज्येष्ठमूले जाते क ६० ज्ये १९९ चे १ एवमनन्तमूलानि ।

अथवा रूपं कनिष्ठं प्रकल्प्य जाते पञ्चक्षेपपदे क १ ज्ये ४ चे ५० अतस्तुल्यभावनया मूले क८ ज्ये २७ चे २५ । इष्टवर्गहृत इत्यादिना पञ्चकभिष्टं प्रकल्प्य जाते रूपक्षेपपदे क ८/५ ज्ये २७/५ चे १

अनयोः पूर्वमूलेभ्यः मूलभावनार्थं

न्यासः प्र ११ क ८/५ ज्ये २७/५ चे १ ।

क ३ ज्ये १० चे १ भावनया लब्धे मूले क १६१/५ ज्ये ५६४/५ चे १ । अथ वा ह्रस्वं वज्राभ्यासयोरन्तर मित्यादिना कृतया भावनया जाते मूले क १ ज्ये ४ चे ५" चक्रवालेन तदानयनप्रकारः चक्रवालशब्दे वक्ष्यते । क-निष्ठमूलमप्यत्र न०। [स्वार्थे कन् ।२कनिष्ठशब्दार्थे त्रि०

**कनिष्ठक** न० कनिष्ठमिव कायति कै–क । भूकदम्बे राज०

**कनिष्ठिका** स्त्री कनिष्ठैव स्वार्थे कन् । (कडे आङ्गुल) अङ्गुलौ "द्विः कनिष्ठिकया" कात्या० ७,७,१८ । "... षष्ठेच माने अनामिकासुतृस्त्यैतया कनिष्ठिकया द्वि रम्" कर्क: । "परिवर्त्त्यपरिवर्त्त्याङ्गुष्ठकनिष्ठिकाभ्यामात पलाशपूटे प्रास्यति" कात्या० १,५,७,१ । [हेमच

**कनी** स्त्री कन–अच् गौरा० ङीष् । १दुहितरि २कन्याया

**कनीचि** स्त्री कम–बा० ईचि । १गुञ्जायां (कुँच) शब्दर० । २सपुष्पलतायाम् ३शकटे च उणादि०। अयं मूर्द्धन्यम-ध्य एव न मध्यस्तु प्रामादिकः"स्तर्कणिभ्यामीचिः" उज्ज्व-लदत्तेन णान्तकणेरेव ग्रहणात्

**कनीन** त्रि०कन–प्रीतौ ईनन् । १कमनीये । "सद्योजातो वृषभः कनीनः"ऋ० ३,४८,१।"कनीनः कमनीयः"भा० "भिनत् कनीन ओदनं पच्यमानम्" ऋ० ८,६९,१४ । "जारः कनीन इव चक्रदानः" ऋ० १,११७,१८ ।

**कनीनका** स्त्री "कनीनका कन्या कमनीया भवति क्वेयं नेतव्येति वा कमनेनानीयत इति वा कनतेर्वा कान्ति कर्म्मणः" निरुक्तोक्ता व्युत्पत्तिः पृषो० । १कन्यायाम् "कनीनकेव विद्रधे नवे द्रुपदे अर्भके" ऋ०४,३२,२३, इमामृचमधिकृत्य ४,१५,निरुक्ते प्रागुक्ता निरुक्तिर्दर्शिता । भाष्यकृता तु कनीनका कमनीयशालभञ्जिकेति व्याख्यातम्

तेन २तद्र्थेऽपि। कनीनका कन्या काम्यत्वेनास्त्यस्याः अर्श० अच् । ३कन्याकामे पु० । "जनिष्ट योषा पतयत् कनी-नकः"ऋ०१०,४०,९,। कनीनकः कन्याकामः"इति भा०। कनीन इव कायति कै-क। ४कनीनिकायां न०सुश्रु०"ततः कनीनकगतम्" तत्रोक्तेः अक्षिशब्दे ४५पृ० विवृतिः

**कनीनिका** स्त्री कन–कनि–वा ईनन् संज्ञायां कन् टाप् अत इत्वम् । १अक्षितारायां २कनिष्ठाङ्गुलौ च मेदि० । अक्षिशब्दे४५पृ० विवृतिः [ अमरटीका

**कनीनी** स्त्री कनि–नामधा० ईनन् ङीष् । कनिष्ठाङ्गुलौ

**कनीयस्** त्रि० अयमनयोरतिशयेन युवा अल्पो वा ईयसुन् कनादेशः । द्वयोर्मध्ये १अल्पतरे, "अद्य कनीयो भवि-ष्यति" छा०उप० । २युवतरे, ३अनुजे भ्रातरि पु० । "कथं कनीयानहमुत्सहेयम् ?" भट्टिः "कनीयान् वृषमुत्सृजेत्" स्मृतिः 'कलत्रवानहं बाले कनीयां-सं भजस्व मे'रघुः। स्त्रियां ङीप् ।

**कनीयस** न०कन–दीप्तौ अच् कनः सूर्य्यस्तस्येदं क कनीयं तथाभूततया सीयते अवसीयते सो–घञर्थे कर्मणि क। १ताम्रे । हेमच० ताम्रस्य सूर्य्यदेवाकत्वात्तथात्वम् । कनीयस्+स्वार्थे बा० अच् । २कनीयसि कनिष्ठे त्रि० । "अभिषेक्तुकामं नृपतिं पूरुं पुत्रं कनीयसम्" "ययाति-र्नाहुषोराजा पूरुं पुत्रं कनीयसम्"भा० आ० ८६अ०। त्रि० कमित्यव्ययं कं सुखमस्त्यस्य कम्+त। सुखयुक्ते एवम् "शङ्कुभ्यां वभयुस्तिहतयसः" पा० कम्+ति कन्ति [कम्]+त । कन्तु तत्रार्थे त्रि० ।

[क]न्तु पु० कम–तुन् । १कामदेवे २हृदये न०उणा०। कम्+तु सुखान्विते त्रि० । [ तापत्ये पुंस्त्री ।

**कान्यक** पु० ऋषिभेदे ततोगोत्रे गर्गा० यञ् । कान्यक्य तद्गो-

**कन्थरी** स्त्री कम– अरन् पृषो० थुक् च गौरा० ङीष्। दुष्प्रवेशायां तीक्ष्णकण्टकयुक्ते वृक्षभेदे राजनि० । आरन् थुक्। कन्थारीत्यप्यत्र राजनि० ।

**कन्था** स्त्री कम–थन् । रूपणयभित्तौ (कांथा)सूत्रग्रथितजीर्ण-वस्त्रखण्डे । (कांथा) "भिक्षा प्राणस्य रक्षार्थं कन्था-शीतनिवारिणी । अचला केशवे भक्तिः विभवैः किं प्रयो-जनमिति" पुरा० । "कन्थां वहसि दुर्बुद्धे! गर्दभेनापि दुर्वहाम्" शङ्करदि०अस्य तत्पुरुषे "संज्ञायां कन्थोशीन-रेषु" पा० क्लीवता सौशमिकन्थम् । संज्ञाभावे ओशी-नरभेदे च न । दाक्षिकन्था सि०कौ० ।

**कन्द** पुंन०कन्दति कन्दयति कन्द्यते वा कदि-अच्–णिच्–अच्

घञ् वा । १सूरणे (ओल) २शस्यमात्रमूले, ३गृञ्जने च (गाँजर) ४मेघे पु०मेदि० । मेघनामनामके ५कर्पूरे च पु० "कन्दमूलफलाशिनः" चातुर्मास्यव्रतविधिः "कन्दोद्भेदा वैद्रुमा वारिणीव" माघः "वने निवसतां तेषां कन्दमूलफलाशिनाम्" भा०अनु ०४१अ० । कन्दभेदास्तेषां विशेषगुणाश्च सुश्रु०दर्शिताः यथा "कन्दानत ऊर्द्ध्वं वक्ष्यामः । विदारीकन्दशतावरीबिसमृणालशृङ्गाटककशेरुकपिण्डालुकमध्वालुकहस्त्यालुककाष्ठालुकशङ्खालुकरक्तालुकेन्दीवरोत्पलकन्दप्रभृतीनि ।

रक्तपित्तहराण्याहुः शीतानि मधुराणि च । गुरूणि बहुशुक्राणि स्तन्यवृद्धिकराणि च । मधुरो बृंहणो वृष्यः शीतः स्वर्य्योऽतिमूत्रलः । विदारीकन्दो बल्यस्तु पित्तवातहरस्तु सः । वातपित्तहरी वृष्या स्वादुतिक्ता शतावरी । महती चैव हृद्या च मेधाग्निबलवर्द्धिनी । ग्रहण्यर्शोविकारघ्नी वृष्या श्वेता रसायनी । कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः । अविदाहि बिसम्प्रोक्तं रक्तपित्तप्रसादनम् । विष्टम्भि दुर्ज्जरं रूक्षं विरसं मारुतावहम् । गुरुविष्टम्भिशीतौ च शृङ्गाटककशेरुकौ पिण्डालुकं कफकरं गुरु वातप्रकोपणम् । सुरेन्द्रक[ः] श्लेष्मघ्नो विपाके कटुपित्तकृत् । वेणोः करीरा गु[रवः] कफमारुतकोपनाः । स्थूलसूरणमाणकप्रभृतयः ईषत्कषायाः कटुका रूक्षा विष्टम्भिनो गुरवः कफवा[त]पित्तहराश्च । माणकं स्वादु शीतञ्च गुरु चापि प्र[की]र्त्तितम् । स्थूलकन्दस्तु नात्युष्णः सूरणो गुदकी[लहा ।] कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः । कषाये पित्तशमना विपाके मधुरा हिमाः । वाराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः । मेहकुष्ठक्रिमिहरो बल्यो वृष्यो रसायनः" । भावप्र० उक्तगुणादि तत्तच्छब्दे दृश्यम् । माधवनिदानोक्ते ६योनिरोगभेदे पु० । "दिवास्वप्नादतिक्रोधाद्व्यायामादतिमैथुनात् । क्षताच्च नखदन्ताद्यैर्वातात्याः कुपिता यदा । पूयशोणितसङ्काशो लकुचाकृतिसन्निभः । उत्पद्यते यदा योनौ नाम्ना कन्दस्तु योनिजः" स चतुर्विधः वातपित्तकफसन्निपातजभेदैः । "रूक्षं विवर्णं स्फुटितं वातिकं तम् विनिर्द्दिशेत् । दाहरोगज्वरयुतं विद्यात् पित्तात्मकन्तु तम् । नीलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् । सर्वलिङ्गसमायुक्तं सन्निपातात्मकं विदुः । सन्निपातात्मकोऽसाध्यः शेषाः कृच्छ्रप्रसाधनाः" ।

**कन्दगुडुची** स्त्री कन्दोद्भवा गुडूची शाक० । १गुडुचीभेदे, राजनि०(सुयनी) इति ख्याते २कन्दे च शब्दच०

**कन्दट** न०कदि-अटन् । श्वेतोत्पले (सादासुँदि) शब्दरत्ना०

**कन्दफला** स्त्री कन्दात् फलं यस्याः । क्षुद्रकारवेल्लायाम् । (छोटउच्छा) राजनि०

**कन्दबहुला** स्त्री कन्दैर्बहुला । त्रिपर्णिकावृक्षे राजनि०

**कन्दमूल** न० कन्दरूपं मूलमस्य । मूलके (मूलो) राजनि०

**कन्दर** न० कम् जलेन दीर्य्यते दृ-कर्म्मणि अप् । १आर्द्रके २अङ्कुशे च राजनि० ३गुहाकारे पर्वतनितम्बस्थाने पुंस्त्री अमरः । स्त्रीत्वे गौरा०ङीष् स्वामी । ४गुहायां स्त्री टाप् अमरटीकान्तरम् "निर्ह्रादस्ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्" मेघ० । "विदूरगं प्रतिभयमस्य कन्दरम्" माघः "नानामलप्रस्रवणैर्नानाकन्दरसानुभिः" भाग० ४,६,१०, "अन्यार्थमेव शरणमुटजं वाद्रिकन्दरम्" भाग० ७,१२,१८, कन्दरा सन्निकृष्टदेशादि अश्मादि० चतुरर्थ्यां र । कन्दर ५कन्दरसन्निकृष्टदेशादौ त्रि० । कं गजशिरो दीर्य्यतेऽनेन करणे अप् । ६अङ्कुशे मेदि०

**[क]न्दराकर** पु०६त० । पर्व्वते मेदिनिः ।

**[कन्द]राल** पु० कन्दरायाङ्कुरायालति-अल-अच् । १गर्द्दभाण्डवृक्षे २प्लक्षवृक्षे(पाकुड़) ३आक्षोटवृक्षे च राजनि० संज्ञायां कन् । ४प्लक्षवृक्षे पु०शब्दरत्ना० ।

**[कन्]दरोद्भवा** स्त्री कन्दरे उद्भवति उद्+भू-अच् । १क्षुद्रपाषाणभेदीवृक्षे राजनि० २कन्दरोद्भवमात्रे त्रि० । ३गुडुचीभेदे स्त्री राजनि० [राजनि०

**[क]न्दरोहिणी** स्त्री कन्दात् रोहति रुह-णिनि । गुडुचीभेदे

**कन्दर्प** पु० कम् सुखं तस्मै तत्र वा दृप्यति कम्+दृप+अच्, कम् कुत्सितो दर्पोऽस्मात् वा । १कामदेवे अमरः । "तत्र निश्चित्य कन्दर्पमगमत् पाकशासनः" कुमा० । २सङ्गीतोक्ते ध्रुवभेदे । "लघोर्विंशतिवर्णाङ्घ्रिर्ध्रुवः कन्दर्पसंज्ञकः । वीरे वा करुणे वा स्यात् खण्डताले विधीयते" संङ्गी०दा०

**का[न्द]र्पकूप** पु० कन्दर्पस्य कूप इव । स्त्रीचिह्नभेदे जटाधरः ।

**कन्[द]र्पकेलि** पु० कन्दर्पस्य केलिः । कामकेलौ तमधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुक् । प्रहसनभेदे ।

**कन्दर्पजीव** पु०कन्दर्पं जीवयति वर्द्धयति जीव-णिच्-अण् । कामवृद्धिकारफलके पनसवृक्षे राजनि० ।

**कन्दर्पमथन** पु० कन्दर्पं मथ्नाति मथ-ल्यु । १महादेवे कन्दर्पशत्रुकामहादयोऽप्यत्र पु० । [त्रिका० ।

**कन्दर्पमुषल** पु० कन्दर्प मूषल इव । पुरुषचिह्नभेदे ।

**कन्दर्पशृङ्खल** पु० "नारीपदद्वयं न्यस्य कान्तस्योरुद्वयोपरि। कटिञ्च दोलयेदाशु बन्धः कन्दर्पशृङ्खलः" रतिमञ्जर्य्युक्ते रतिबन्धभेदे।

**कन्दल** त्रि० कदि–अलच्। १कलापे २उपरागे ३नवाङ्कुरे ४कलध्वनौ च मेदि० ५अपवादे शब्दर० । ७कलहभेदे (वाग्युद्ध) ७कपाले च पु० धरणिः। गौरा० ङीष् कन्दली ८मृगभेदे ९गुल्मप्रभेदे च स्त्री मेदि०सा च भूमिकदली, "द्रोणपर्णी स्निग्धकन्दा कन्दली भूकदल्य पीति" शब्दार्थवोक्तेः "ध्वजांशुकैस्तर्जितकन्दलीवनः" माघः।"आविर्भूतप्रथममुकुला कन्दली चानुकच्छम्"मेघ० पुष्पे न०। "विडम्ब्यमाना नवकन्दलैस्ते" रघुः। "द्विदलकन्दलकम्पनलालितः"माघः "निष्पीडितेन्दुकरकन्दलजोऽनुसेकः" उत्तररामः ।१०ओले पु० भावप्र०।

**कन्दलता** कन्दप्रधाना लता। माषके राजनि०।

**कन्दलीकुसुम** न० कन्दल्या इव कुसुममस्य। शिलीन्ध्रे। ६त०। १भूमिकदलीपुष्पे च। [राजनि०

**कन्दवर्द्धन** पु० कन्देन वर्द्धते वृध–ल्यु। शूरणे (ओल)

**कन्दवल्ली** स्त्री कन्दाकारा वल्ली। वन्ध्याकर्कोट्याम् राजनि०।

**कन्दशाक** न० कन्दप्रधानः शाकः। कन्दप्रधाने शाके कन्दशब्दे दर्शितकन्दवर्गशाके शूरणादौ। "सर्वेषां कन्दशाकानां शूरणः श्रेष्ठ उच्यते"भावप्र०। [राजनि०

**कन्दशूरण** पु० कन्देषु शूरणः श्रेष्ठः। (ओल)शूर

**कन्दसार** न०कन्दानां सारोऽत्र। १नन्दनवने त्रिका०। न्दः सारोऽस्य। कन्दप्रधाने श्रीलादौ त्रि०। २कन्दश दर्शितकन्दवर्गे त्रि०।

**कन्दाढ्य** पु० कन्दे नाढ्यः। भूमिकन्दे राजनि०। [राजनि०।

**कन्दामृता** स्त्री कन्दप्रधानाऽमृता। कन्दप्रधाने गुडूच्यां भेदे

**कन्दार्ह** पु० कन्देषु अर्हः पूज्यः। शूरणे राजनि० "सर्वेषां कन्दशाकानां शूरणःश्रेष्ठ उच्यते इत्युक्तेस्तस्य कन्देषु प्रधानत्वात्तथात्वम्।

**कन्दालु** पु० कन्देनालुरिव। १कासालौ २भूमिकन्दे रक्तपर्ण्णिकायाञ्च राजनि०। [राजनि०।

**कन्दिन्** त्रि० कन्दोऽस्त्यस्य इनि। १कन्दयुक्ते। २ओले पु०

**कन्दिरी** स्त्री कन्द–इरच् गौरा० ङीष्। लज्जालुवृक्षे वैद्य०

**कन्दी** स्त्री कन्दोऽस्त्यस्य अच् गौरा०ङीष्। मांसकन्द्याम्।

**कन्दु** पुंस्त्री स्कन्द उ सलोपश्च। (ताओया) १स्वेदनीपात्रे "कन्दुपक्वं तैलपक्वमिति" स्मृतिः २तण्डुलादेः भर्जनपात्रमात्रे च (भोजना खोला) "गोकुले कन्दुशालायां तैलयन्त्रे क्षुयन्त्रयोः" स्मृतिः। "कन्दुपक्वानि तैलेन पायसं दधि सक्तवः। द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि" ति० त० कूर्म्मपु०।

**कन्दुक** पु० कं सुखं ददाति दा–मितद्रवा०डु संज्ञायां कन् कन्दु+यावादि० कुमारीक्रीडनकत्वेन कन् वा। १वस्त्रादिनिर्म्मिते उत्पातनावपातनक्रीडासाधनद्रव्यभेदे (गेंदो)। "स्तनाङ्गरागारुणिताच्च कन्दुकात्"। "श्रमं ययौ कन्दुकलीलयापि या" "सा कन्दुकैः कृत्रिमपुत्रकैश्च" कुमा०। "कराभिघातोत्थितकन्दुकेयम्" रघुः "तटभुवि कन्दुकविभ्रमं बभार" माघः। "इदं कन्दुकं यत्र येभ्यश्चहृष्टोगः" इ०र०टीकोक्ते २त्रयोदशाक्षरपादके छन्दोभेदे न०।

**कन्दुकेश्वर** न० काशीस्थे ज्येष्ठस्थानस्थे शिवलिङ्गभेदे कन्दुकखेलनप्रकारः तदाविर्भावकथा च काशी०६५अ० दर्शिता "स्वैरं विहरतस्तस्य ज्येष्ठस्थाने महेशितुः। कौतुकेनैव विक्रीड शिवा कन्दुकलीलया। उदञ्चन्न्यञ्चदङ्गानां लाघवं परितन्वती। निश्वासामोदमिलितभ्रमराकुलितेक्षणा। भ्रश्यद्धम्मिल्लसन्माल्यसुपुटीकृतभूमिका। स्विद्यत्कपोलपत्रालीस्रवदम्बुकणोज्ज्वला। स्फुटच्चेलांशुकपथनिर्यदङ्गप्रभाविला। उल्लसत्कन्दुकास्फालातिशोणितकराम्बुजा। कन्दुकानुगसंदृष्टिनर्त्तितभ्रूलताञ्चला। मृडानी किल खेलन्ती ददृशे जगदम्बिका। अन्तरीक्षचराभ्यां च दितिजाभ्यां मनोहरा। कटाक्षिताभ्यामिव वै समुपस्थितमृत्युना। विदलोत्पलसंज्ञाभ्यां दृप्ताभ्यां वरतोविधेः। तृणीकृतत्रिजगतीपुरुषाभ्यां स्वदोर्बलात्। देवीं परिजिहीर्षू तौ विषमेषुप्रपीडितौ। दिवो ऽवतेरतुः क्षिप्रं मायां स्वीकृत्य शाम्बरीम्। धृत्वा पारिषदीं मूर्त्तिमायातावम्बिकान्तिकम्। तावत्यन्तं सुदुर्वृत्तावतिचञ्चलमानसौ। सर्व्वज्ञेन परिज्ञातौ चाञ्चल्याल्लोचनोद्भवात्। कटाक्षिताथ देवेन दुर्गा दुर्गविघातिनी। विज्ञातनेत्रसंज्ञान्तु सर्वज्ञार्द्धशरीरिणी। तेनैव कन्दुकेनाथ युगपज्जिघान तौ। महाबलौ महादेव्या कन्दुकेन समाहतौ। परिभ्रम्यपरिभ्रम्य तौ दुष्टौ विनिपेततुः। वृन्तादिव फले पक्वे तालादनिललोलिते। दम्भोलिना परिहते शृङ्गे इव महागिरेः। तौ निपात्य महादैत्यावकार्य्यकरणोद्यतौ। ततः परिणतिं यातोलिङ्गरूपेण कन्दुकः। कन्दुकेश्वरसंज्ञं च तल्लिङ्गमभवत्तदा। ज्येष्ठेश्वरसमीपे तु सर्वदुष्टनिवारणम्। कन्दुकेश्वरसमुत्पत्तिं यः श्रोष्यति मुदान्वितः। पूजयिष्यति योभक्त्या तस्य दुःखभवं कुतः। कन्दुकेश्वरभक्तानां मानवानां

निरेनसाम्। योगक्षेमं सदा कुर्य्याद्भवानी भयनाशिनी। मृडानी तस्य लिङ्गस्य पूजां कुर्य्यात् सदैव हि। तत्रैव देव्याः सान्निध्यं पार्व्वत्या भक्तसिद्धिदम्। सर्व्वोपसर्गसंघातविघातकरणं परम्। कन्दुकेशं महालिङ्गं काश्यां येन समर्च्चितम्। कथं तेषां भवानीशौ स्यातां सर्व्वेप्सितप्रदौ। द्रष्टव्यं च प्रयत्नेन तल्लिङ्गं कन्दुकेश्वरम्। कन्दुकेश्वरनामाऽपि श्रुत्वा वृजिनसन्ततिः। क्षिप्रं क्षयमवाप्नोति तमः प्राप्योष्णगुं यथा"। कन्दुकेशमप्यत्र।

**कन्दुपक्क** त्रि॰ जलोपसेकं विना कन्दुपात्रे पक्वं तण्डुलादि। शुष्कतया भ्रष्टतण्डुलादौ। "कन्दुपक्वानि तैलेनेत्यादि ति॰त॰ कूर्मपु॰। कन्दुशब्दे उदा॰।

**कन्दशाला** स्त्री कन्दुपाकार्थां शाला शा॰त॰(कानशाला) कन्दुपाकार्थं शालायाम् "गोकुले कन्दशालायां तैलयन्त्रेक्षुयन्त्रयोः। अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च" स्मृतिः। [शब्दरत्ना॰।

**कन्दोट** पु॰ कदि—ओटन्। १श्वेतोत्पले २नीलोत्पले न॰।

**कन्दोत** पु॰ कन्दे मूले जतः वेञ्—क्त। कुमुदे। त्रिका॰।

**कन्दोद्भवा** स्त्री कन्दादुद्भवोऽस्याः। गुडुचीभेदे।

**कन्ध** पु॰ कं जलं दधाति धा—क। १मेघे शब्दरत्ना॰। तन्[illegible]मनामके २मुस्ते च।

**कन्धर** पु॰ कं जलं शिरो वा धारयति धृ—अच्। १मेघे मेदि[illegible] तन्नामनामके २मुस्ते च। ३मारिषशाके (नटियाशा[illegible]) राजनि॰। ४ग्रीवायाञ्च सारसुन्दरी। ग्रीवायां स[illegible] अमरः। "कन्धराबाहुसक्थ्नाञ्च भङ्गे मध्यमसाहसम्" याज्ञ॰ "उत्कन्धरं दारुक इत्युवाच" माघः "कवाटवक्षाः परिणद्धकन्धरः" रघुः। [२समुद्रे पु॰ राजनि॰।

**कन्धि** स्त्री कं शिरोजलं वा धीयतेऽत्र आधारे कि। १ग्रीवायां

**कन्न** न॰ कन्यते प्राप्यते दुःखमनेन कन—गतौ वा करणे क्त। १पापे २मूर्च्छायाञ्च शब्दमाला।

**कन्यका** स्त्री अज्ञाता कन्या+अज्ञातार्थे कन् क्षिपकादित्वात् नेत्त्वम्। "अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी। दशमे कन्यका प्रोक्ता अतऊर्द्ध्वं रजस्वला" स्मृत्युक्तायां दशमवर्षीयां स्त्रियां तस्माद्दशमवर्षादर्वाक् रजोयुक्ततया अज्ञातत्वात्तथात्वम्। स्वार्थे कन्। १कन्याशब्दार्थे "राक्षसो दुहितृहरणात् पैशाचः कन्यकाच्छलात्" "सुवासिनीबालवृद्धगर्भिण्यातुरकन्यकाः। संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम्" याज्ञ॰। "कन्यकातनयकौतुकक्रियाम्"। "संवृद्धवैखानसकन्यकानि" रघुः। २नायिकाभेदे रसमञ्जर्य्याम् स्वकीयापरकीयासामान्यवनितेति प्रथमं त्रिधा विभज्य अप्रकटितपरपुरुषानुरागा परकीयेति लक्षयित्वा सा च द्विविधा परोढा कन्यका चेति विभज्य कन्यायाः पित्राद्यधीनत्वात् परकीयत्वमिति समर्थ्य अस्या गुप्ता एव सर्वाश्चेष्टा इत्युक्ता उदाहृतम् यथा "किञ्चित् कुञ्चितहारयष्टिसरलभ्रुवल्लिमाचिक्षितभ्रूप्रान्तभ्रान्तविलोचनद्युतिभुजापर्य्यन्तकर्णोत्पलम्। अङ्गुल्याङ्कुरदङ्गुलीयकरुचा गण्डस्थकण्डूयनं कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते"

**कन्यकाजात** पु॰ ५त॰। कानीने व्यासकर्णप्रभृतौ "कानीनः कन्यकाजातोमातामहसुतोमतः" स्मृतेस्तस्य मातामहपुत्रता

**कन्यकापति** पु॰ ६त॰। जामातरि शब्दरत्ना॰।

**कन्यना** स्त्री कन्यामाचष्टे कन्या+णिच्—भावे युच्। कन्याख्याने कन्याह्वाने। "स्तोमं जुषेथां युवशेव कन्यनाम्" ऋ॰ ८,३५, ५, "कन्यनां कन्याह्वानम्" भा॰।

**कन्यला** स्त्री कनयतेर्भावे यत् कन्यं कमनीयतां लाति गृह्णाति ला—क। कन्यायाम्। "इषयन्तीव कन्यला" ऋ॰ ५,५, २, मुद्रितपुस्तके एषा ऋक् न दृश्यते पुस्तकान्तरेऽस्ति।

**कन्यस** पु॰ कन—असुनादि॰ नि॰ कन्यः कन्यत्वेन काम्यत्वेन सीयते अवसीयते सो—घञर्थे क। १कनिष्ठे भ्रातरि सारसुन्दरी "रामस्य कन्यसोभ्राता" रामा॰। २कन्यसी कनिष्ठायां भगिन्यां स्त्री। वयोवाचित्वात् ङीष्। "अभिजित्स्पर्द्धमाना तु रोहिण्याः कन्यसी स्वसा। इच्छन्ती ज्येष्ठतां देवीं तपस्तप्तुं वनं गता" भा॰ व॰ २२९अ॰। ३अधमे त्रि॰ "कन्यसं षड्भिरुद्दिष्टम्" अङ्गुलिपरिमाणे कालि॰ पुरा॰।

**क[illegible]या** स्त्री कन—यत् अघ्न्या॰ नि॰। "कन्यायाः कनीन् चेति निर्देशात् "वयसि प्रथमे" पा॰ न ङीष्। १अनूढायां स्त्रियां २अनूढदुहितरि "अक्षतोपयमा कन्या" सा॰द॰। ३मेषादितः षष्ठे राशौ च। निरुक्तौ ४,१५। अन्यैव निरुक्तिरुक्ता। "कन्या कमनीया भवति क्वेयं नेतव्येति कमनेनानीयते इति वा कनतेर्वा स्यात् कान्तिकर्मणः" तत्र सा दृषो॰ साधु। भा॰व॰३०६अ॰ अन्येव निरुक्तिर्दर्शिता "सर्वान् कामयते यस्मात् कमेर्धातोश्च भामिनि!। तस्मात् कन्येह सुश्रोणि! स्वतन्त्रा वरवर्णिनि!" ४योषिन्मात्रे। "अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा। पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनम्" पुरा॰। "आचारलाजैरिव पौरकन्याः" रघुः ४दुहितृमात्रे "नरेन्द्रकन्यास्तमवाप्य सत्पतिम्" रघुः।

"ब्राह्मणाद्वैश्यकन्यायामम्बष्ठोनाम जायते" "निषादः शूद्रकन्यायां यः पारशव उच्यते"। "क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्। क्षत्रशूद्रवपुर्जन्तुरुग्रोनाम प्रजायते" मनुः तत्र अनूढदुहितरि "कन्यायां दत्तशुल्कायां श्रेयांश्चेत् वर आव्रजेत्" कात्या० स्मृतिः "पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता। सा कन्या वृषली ज्ञेया हरंस्तां न विदुष्यति, विष्णुः। ऋतुत्रयमुपास्यैव कन्या कुर्यात् स्वयंवरम्। ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा" विष्णुः। ५अनूढस्त्रीमात्रे "प्रसह्य कन्याहरणं राक्षसोविधिरुच्यते"। "योऽकन्यां दूषयेत् कन्याम्"। "अभिषह्य तु यः कन्यां कुर्यात् दर्पेण मानवः" इति च याज्ञ०। "कन्यैव कन्यां या कुर्यात् तस्याः स्याद्विशतो दमः"। "या तु कन्यां प्रकुर्यात् सा सद्योवै मौण्ड्यमर्हति" मनुः "कन्यैवाक्षतयोनिर्या" स्मृतिः। "सह चान्यया स्थविरराजकन्यया" माघः। "सैकान्ते पुनःकन्याभिस्तत्क्षणोज्झितदृत्तकम्" रघुः। कन्याया भावः। कन्यात्व संज्ञात्वान्न पुंवद्भावः। पुरुषसङ्गरहितावस्थायां "कन्यात्वे दूषिते चापि कथं शक्त्या द्विजोत्तम!" भा० आ० ६०। विवाहयोग्यावस्थायर "प्रादाच्च तस्यै कन्यात्वं पुनः स परमद्युतिः" आ० ११अ०। कन्यादानविक्रययोर्गुणदोषौ र "कन्यां ये तु प्रयच्छन्ति यथाशक्ति स्वलङ्कृताम्। विवाहे संप्राप्ते यथोक्तसदृशे वरे। क्रमात् क्रमं क्रतुशतं पूर्वं लभन्ति ते। श्रुत्वा कन्याप्रदानन्तु पितरः प्रपितामहाः। विमुक्ताः सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते। ब्राह्मेण तु विवाहेन यस्तु कन्यां प्रयच्छति। ब्रह्मलोकं व्रजेच्छीघ्रं ब्रह्माद्यैः पूजितः सुरैः। दिव्येन तु विवाहेन यस्तु कन्यां प्रयच्छति। भित्त्वा द्वारन्तु सूर्यस्य स्वर्गलोकञ्च गच्छति। गान्धर्वेण विवाहेन यस्तु कन्यां प्रयच्छति। गन्धर्वलोकमासाद्य क्रीडते देववच्चिरम्। शुल्केन दत्त्वा यो कन्यां तां पश्चात् सम्यगर्च्चयेत्। स किन्नरैश्च गन्धर्वैः क्रीडते कालमक्षयम्। (शुल्केन गोमिथुनरूपशुल्कोपलक्षितेनार्षेण) न सद्युं कारयेत्तासां पुत्रश्चाश्च सततं गृहे। ब्रह्मदेया विशेषेण ब्राह्मी भोज्या सदा भवेत्। कन्यायां ब्रह्मदेयायामभुञ्जन् सुखमश्नुते। अथ भुञ्जीत यो मोहात् भुक्त्वा स नरकं व्रजेत्। अप्रजायाञ्च कन्यायां न भुञ्जीयात् कदाचन। दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि"। यः कन्यापालनं कृत्वा करोति यदि विक्रयम्। विक्रेता धनलोभेन कुम्भीपाकं स गच्छति। कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी। कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश। मृतश्च व्याधयोनौ च स लभेज्जन्म निश्चितम्। विक्रीणीते मांसभारं वहत्येव दिवानिशमिति" ब्रह्मवैवर्त्त पुराणम्। विवाह्यकन्यालक्षणमुपयमशब्दे उक्तम्। उद्वाहशब्देऽधिकं दृश्यम्। "स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु" इत्युक्तेः सुतपदस्य पुंस्त्वाविवक्षया कन्यापुत्रसंस्कारेषु वृद्धिश्राद्धे प्राप्ते "स्त्रीणामप्येवमेव स्यात्" मनूक्तेश्च सर्वसंस्कारेषु च प्राप्तेषु च निष्क्रमभिन्नकन्यासंस्काराणाममन्त्रकतया कर्त्तव्यता तत्रापि वृद्धिश्राद्धनिषेधमाह महानि०त०६५ प०। "कन्याया निष्क्रमो नास्ति वृद्धिश्राद्धं न विद्यते"। वृद्धिश्राद्धनिषेधेऽपि विवाहे वृद्धिश्राद्धमिष्यत एव "कन्यापुत्रविवाहेषु वृद्धिश्राद्धं विधीयते इति" स्मृतेः। "नामान्नप्राशनं चूड़ां कुर्यात् स्त्रीणाममन्त्रकम्"। इति "जातकर्मादि चूड़ान्तं कुमार्य्याश्चाप्यमन्त्रकम्। कर्त्तव्यं पञ्चभिर्वर्षैरेकं निष्क्रमणं विनेति" च। तेन निष्क्रमण भिन्नाः संस्काराः अमन्त्रकाः कार्य्याः। विवाहस्य चोपयनस्थानीयत्वात् न तदाचरणम् इति भेदः ६ष्टतकुमार्य्याम् मेदि० ७स्थूलैलावायां ८वाराहीकन्दे ६कन्याकर्कस्याञ्च राजनि०। "ग्मौ चेत् कन्या" इत्युक्तलक्षणे चतुरक्षरपादके १०छन्दोभेदे च। कन्याराशिश्च उत्तरफाल्गुन्याःशेषपादत्रयहस्तचित्रार्द्धनक्षत्रघटितः राशिचक्रे षष्ठः ११५० सार्द्धशतांशोत्तराशीत्युत्तर शतांशपर्य्यन्तस्त्रिंशदंशात्मकः। तदधिष्ठातृदेवतास्वरूपञ्च। "कन्या प्लवस्था स्मृताः। कन्या शस्यहुताशयुक्" इति जातकप०। उक्तम् तस्य राशेश्च तत्स्वादिकमुक्तम् नील०ता०यथा। "पाण्डुर्द्विपात् स्त्री द्वितनुर्यमाशा निशा मरुत् शीतसमोदयः ज्ञा। कन्यार्द्धशब्दा शुभभूमिवैश्यरूक्षाल्पसङ्ग प्रसवा शुभा च"। ततश्चास्य राशेः पाण्डुवर्णः द्विपदराशिता स्त्रीराशिता द्विस्वभावात्मकता दक्षिणदिगभिमुखता रात्रिरूपता वातप्रकृतित्वं शीतवीर्य्यं समराशित्वम्। भूमिरूपता। अर्द्धशब्दः शुभस्वामिकत्वम् वैश्यवर्णः रूक्षत्वम् अल्पसङ्गोऽल्पप्रसवः अक्रूरूपत्वञ्च। तत्र जन्मप्रश्नलग्नफलाद्युपयोगार्थमुक्तम् अस्य स्वामी बुधः। अन्यत्रास्य शीर्षोदयत्वमुक्तम् "कन्यां गते पूषणि" "अप्राप्ते भास्करे कन्याम्" इति च ज्यो०

कन्याका स्त्री कन्यैव कन् अनकपुंस्कत्वात् न ह्रस्वः। कन्यायां शब्दर०।

कन्याकाल पु० कन्यात्वोपलक्षितः कालः शा०त०। अविवा-

ऽपलक्षिते काले विवाहकालश्च उपयमयब्दे उक्तः।

**कन्याकुब्ज** पु० कन्याः कुब्जाः यत्र । कान्यकुब्जदेशे हेम० "कन्याकुब्जेऽपिबत् सोममिन्द्रेण सह कौशिकः" भा० व० ८७अ०। कन्यानां संघः अण् कान्यं तत् कुब्जं यत्र का न्यकुब्जोऽप्यत्र । यथा च तद्देशे कन्यानां वायुना कुब्जत्वं कृतं यथा वर्णितम् रामा० आ० काण्डे।

"कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् । जनयामास धर्मात्मा घृताच्यां रघुनन्दन ! । तास्तु यौवनशालिन्यो रूपवत्यः स्वलङ्कृताः । उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः । गायन्त्यो नृत्यमानाश्च वादयन्त्यस्तु राघव ! । आमोदं परमं जग्मुर्वराभरणभूषिताः । अथ ताश्चारु-सर्वाङ्ग्यो रूपेणाप्रतिमा भुवि । उद्यानभूमिमागम्य तारा इव घनान्तरे । ताः सर्वा गुणसम्पन्ना रूपयौवनसंयुताः । दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् । अहं वः कामये सर्वा भार्या मम भविष्यथ । मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ । चलं हि यौवनं नित्यं मानुषेषु विशेषतः । अक्षयं यौवनं प्राप्ता अमर्यश्च भविष्यथ । तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः । अपहस्य ततो वाक्यं कन्याशतमथाब्रवीत् । अन्तश्चरसि भूतानां सर्वेषां सुरसत्तम ! । प्रभावज्ञाश्च ते सर्वाः किमस्मानव-मन्यसे । कुशनाभसुता देव ! समस्ताः सुरसत्तम !। स्थाना-च्च्यावयितुं देवं रक्षामस्तु तपो वयम्। मा भूत् स कालो दुर्मेधः ! पितरं सत्यवादिनम्। अवमन्य स्वधर्मेण स्वयं वरमुपास्महे । पिता हि प्रभुरस्माकं दैवतं परमञ्च सः। यस्य नो दास्यति पिता स नो भर्त्ता भविष्यति । तासां तु वचनं श्रुत्वा हरिः परमकोपनः । प्रविश्य सर्वगा-त्राणि बभञ्ज भगवान् प्रभुः । ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् । प्रविश्य च सुसम्भ्रान्ताः सलज्जाः साश्रुलोचनाः। स च ता दयिता भग्नाः कन्याः पर-मशोभनाः । दृष्ट्वा दीनस्तदा राजा सम्भ्रान्त इदमब्रवीत् । किमिदं कथ्यतां पुत्र्यः ! को धर्ममवमन्यते । कुब्जाः केन कृताः सर्वाश्चेष्टन्त्यो नाभिभाषथ"।

**कन्याकूप** पु० तीर्थभेदे । "कन्याकूपे उपस्पृश्य बला-कायां कृतोदकः" भा० अनु० २५ अ० ।

**कन्याट** पु० कन्या अटत्यत्र आधारे घञ् । वासभवने त्रिका० स्त्रीणां वासस्थाने एव गतिविधानात् अन्यत्र-गतिनिषेधाच्च तस्य तथात्वम् ।

**कन्यातीर्थ** न० १कुरुक्षेत्रस्थे कुक्कुरसमीपस्थतीर्थभेदे कुक्कुर-तीर्थमुपक्रम्य "ततो गच्छेत धर्मज्ञ: कन्यातीर्थमनुत्तमम् । कन्यातीर्थे नरः स्नात्वा गोसहस्रफलं लभेत्" भा० व० ८३ अ० । समुद्रकावेरीसङ्गमनिकटस्थे २तीर्थभेदे च । "ततो गच्छेत कावेरीं वृतामप्सरसां गणैः । तत्र स्नात्वा नरो राजन् ! गोसहस्रफलं लभेत् । ततस्तीरे समुद्रस्य कन्यातीर्थ उपस्पृशेत् । तत्रोपस्पृश्य राजेन्द्र ! सर्व-पापैः प्रमुच्यते" ८५ अ० । असुरीरूपकन्याद्रवत्वेन तस्य कन्यातीर्थत्वम् ।

**कन्याधन** न० कन्याकाले लब्धं धनम् । स्त्रीधनभेदे शुल्कादौ । अनूढायास्तस्यामरणे तादृग्धने भ्रातुरधिकारः "भगिनी शुल्कं सोदर्याणाम्" गौतमोक्तेः ।

**कन्यापति** पु० ६त० । जामातरि जटाधरः ।

**कन्यापाल** पु० कन्याप्रधानः पालः। पालाख्ये वर्णिग्-जातिभेदे त्रिका० स्त्रियां ङीप् । उप०स०। २कन्यायाः पालके त्रि० ।

**कन्याभर्त्तृ** पु०कन्याभिः प्रार्थनीयः भर्त्ता। १कार्त्तिकेये तस्य सौन्दर्यातिशयात् सर्वभामिनीभिर्भर्त्तृत्वेन प्रार्थनात् तथा-त्वम् । "आग्नेयश्चैव स्कन्दश्च" इत्युपक्रम्य "कन्याभर्त्ता विभक्तश्च स्वाहेयो रेवतीसुतः" भा०व० २३१ कार्त्ति-केयनामसु तन्नाम पठितम् । ६त०। २जामातरि पु० ।

[illegible]मय न० कन्या+प्राचुर्ये मयट् । कन्याप्रचुरे अन्तःपुरे [illegible]राम पु० बुद्धभेदे त्रिका० ।

**कन्यावेदिन्** पु० कन्यां दुहितरमाविन्दति आ+विद-णिनि । जामातरि । "कन्यां कन्यावेदिनश्च पशून् मुख्यान् सुतानपि" या० द्वितीयार्थस्य प्रयत्न-जामातृलाभरूपं फलमुक्तम् ।

**कन्याश्रम** म० तीर्थभेदे । "ततः कन्याश्रमं गच्छेत् नियतो ब्रह्मचर्यवान् । त्रिरात्रोपोषितो राजन् ! नियतो नियता-शनः । लभेत् कन्याशतं दिव्यं स्वर्गलोकञ्च गच्छति" भा०व०८३ ।

**कन्यासंवेद्य** न० तीर्थभेदे । "कन्यासंवेद्यमासाद्य नियतो नियताशनः । मनोः प्रजापतेर्लोकानाप्नोति पुरुषर्षभ ! । कन्यायां ये प्रयच्छन्ति दानमण्वपि भारत ! । तद-क्षयमिति प्राहुर्ऋषयः संशितव्रताः" भा०व०८४ ।

**कन्याह्रद** पु० तीर्थभेदे । "यस्य कन्याह्रदे वासो देवलोकं स गच्छति" भा०अनु०२५अ० ।

**कनिष्ठिका** स्त्री कन्यैव कन् कायत्वेनोद्गुप्तत्वात् वा अत इत्वम् । कन्यायां भद्ररता० ।

कनुप न० कन–दन् कन्या दीप्त्या श्वोपति उष–क । कुत्स-पुच्छे हारा० । [काप प्रनिकृर्पात न शत्वम् कमीलः।

कप चलने (सौत्रः)पर०अक०सेट् । कपति अकपी(क)पीत् च-

कप चलने भ्वादि०इदित् आत्म०अक०सेट् । कम्पते अक-म्पिष्ट चकम्पे । कम्पा कम्पनम् कम्पितः कम्पमानः कम्पितुम् कम्पन: कम्पित्वा । "समुद्रा चकम्पिरे" देवीमा० "चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वरः" रघुः । "महाकटितटश्रोण्यः कम्पमानाः पयोधरैः" भा०व०४२। णिचि कम्पयति अचिकम्पत् । चल फलवत्कर्त्तर्य्यपि पर० "क्ष्मां कम्पयन्त्योनिपतन्ति चोल्काः"। क्वापि कचित् न पर० "अकम्पयत मेदिनीम्" रामा० ।

अनु+दयायामनुपदे सक० "अकम्पेनेनानुचकम्पिरे सुराः" माघः स्वार्थे णिच् तत्रार्थे "प्रथमा दृष्टिविवानुकम्पयत" कुमा० । कर्म्मणि अनुकम्प्यते "अनुकम्प्यतामयं जनः पुनर्दर्शनेन शकु०।

आ+ईषच्चलने । "अनोकहाकम्पितपुष्पगन्धिः" रघुः । सम्यक्कम्पने च "शतं विज्ञानवतामेको धनवानाकम्पयते" छा०उप० । [१४,२,२,१७ ।

उद्+अत्यर्थचलने । "उल्लोलमुत्कम्पयति" शत०ब्रा०

प्रति+प्रतिरूपकम्पने यथा स्वस्य कम्पनं तत्तुल्यमन्यस्य का प्रतिरूपकम्पनम् । "शतेन भूमिं प्रतिकम्पयंस्तदा" भा वि० २० । [र्हसि" गीता ।

वि+विशेषेण चलने । "स्वधर्ममपि चावेक्ष्य न विकम्पितुमसम्+सम्यक् चलने । "यस्य ज्यातलनिर्घोषात् समकम्पन्त शत्रवः"भा० विरा० १८अ० ।

कप पु० कानि जलानि पाति पा–रक्षणे-क । १वरुणे जलपतित्वात् तस्य तथात्वम् पा–पाने क । २जलपायिनि त्रि० । ३असुरविशेषेषु तेषां धर्म्मविशेषप्रतिपादनं ब्राह्मणकर्त्तकवधकथा च यथा ।

"देवाऊचुः सदाख्यातिमिक्कानामस्माकं लोकपूजित ! । वनेन छन्ना भूमिः कपैश्च त्रिदिवं प्रभो ! । ब्रह्मोवाच । गच्छध्वं शरणं विप्रानाशु सेन्द्रादिवौकसः । प्रसाद्य तानुभौ लोकाववाप्स्यथ यथा पुरा । ते ययुः शरणं विप्रानूचुस्ते कान् जयामहे । इत्युक्तास्ते द्विजान् प्राहुर्ज्ज-यतेह कपानिति । भूगतान् हि विजेतारो वयमित्यब्रुवन् द्विजान् । ततः कर्म्म समारब्धं ब्राह्मणैः कपनाशनम् । तच्छ्रुत्वा प्रेषितोदूतो ब्राह्मणेभ्यो धनी कपैः। (धनी तन्नामा दूतः) भूगतान् ब्राह्मणानाह धनी कपवचो यथा । भवद्भिः सदृशाः सर्व्वे कपाः किमिह वर्त्तते । सर्व्वे-वेदविदः प्राज्ञाः सर्व्वे च क्रतुयाजिनः । सर्व्वे सत्यव्रताश्चैव सर्वे तुल्या महर्षिभिः। श्रीश्चैव रमते तेषु धारयन्ति श्रियञ्च ते । वृथा दारान्न गच्छन्ति वृथा मांसं न भुञ्जते । दीप्तमग्निं जुह्वते च गुरूणां वचनेस्थिताः। सर्व्वे च नियतात्मानोबालानां संविभागिनः । उपेत्य शनकैर्यान्ति न सेवन्ति रजस्वलाम् । स्वर्गतिञ्चैव गच्छन्ति तथैव शुभकर्मिणः। अभुक्तवत्सु नाश्नन्ति गर्भिणीवृद्धकादिषु । रमन्ते न च दीव्यन्ति दिवा चैव न शेरते । एतैश्चान्यैश्च बहुभिर्गुणैर्युक्तान् कथं कपान् । विजेष्यथ ? निवर्त्तध्वं निवृत्तानां शुभं हि वः। ब्राह्मणा ऊचुः । कपान् वयं विजेष्यामोये देवास्ते वयं स्मृताः। तस्माद् वध्याः कपास्माकं धनिन् ! याहि यथागतम् । धनी गत्वा कपानाह न वोविप्राः प्रियङ्कराः गृहीत्वा ऽस्त्राण्यतोविप्रान् कपाः सर्व्वे समाद्रवन् समुदग्रायुधान् दृष्ट्वा कपान् सर्वे द्विजातयः । व्यसृजन् ज्वलितानग्नीन् कपानां प्राणनाशनान् । ब्रह्मसृष्टाहव्यभुजः कपान् हत्वा सनातनाः । नभसीव यथाऽभ्राणि व्यवर्द्धन्त नराधिप ! । हत्वा वै दानवान् देवाः सर्व्वे संभूय संयुगे । तेनाभ्यजानन् हि तदा ब्राह्मणैर्निहतान् कपान् । अथागम्य महातेजा नारदोऽकथयद्विभो । यथा हता महाभागैस्तेजसा ब्राह्मणैः कपाः। नारदस्य वचः श्रुत्वा प्रीताः सर्व्वे दिवौकसः । प्रशशंसुर्द्विजांश्चापि ब्राह्मणांश्च यशस्विनः । तेषां तेजस्तथा वीर्य्यं देवानां ववृधे ततः । अवाप्नुवंश्चामरत्वं त्रिषु लोकेषु पूजितम्" । भा० अनु० १५७अ० ।

कपट स्त्री कप–अटन्, क ब्रह्माणमपि पटति व्याच्छादयति पट–अच् इत० वा अर्द्धर्चादि । यथास्थितवस्तुनोऽन्यथा प्रकाशनरूपे हृदयस्थभावनिगूहनरूपे च छले अमरः।"मयि सकपटं किञ्चित् क्वापि प्रणीतविलोचने"सा०द० ।"नरेन्द्रसिंह ! कपटं न वोढुं त्वमिहार्हसि"भा०आ०७४ । कपटस्य भावः ष्यञ् । कापट्य न० तल् कपटता स्त्री त्व कपटत्व न० कपटभावे । कापट्यञ्च अन्यथास्थितवस्तुनोऽन्यथाप्रकाशनरूपव्यापारभेदः स्वकृतभावस्य प्रच्छादनञ्च । कपटमस्त्यस्य ठन् । कपटिक कपटयुक्ते शब्दर० । इनि कपटिन् कपटयुक्ते त्रि० स्त्रियां ङीप् । काच (चिड़ा) नामगन्धद्रव्ये राजनि० । कप–अटन् । गौरा०ङीष् कपटी । परिमाणभेदे (एक आँजाड़) शब्दर०।

कपटधारिन् त्रि० कपटं धारयति धृ–णिनि । कपटयुक्ते शब्दर० स्त्रियां ङीप् ।

**कपटपटु** त्रि॰ कपटे पटुः ७त॰ । १छद्मव्यवहारदक्षे २ऐन्द्रजालिकप्रभृतौ च । “छलयन् प्रजास्त्वमनृतेन कपटपटुरैन्द्रजालिकः” माघः

**कपटेश्वरी** स्त्री कश्चित् शुभ्रः पटस्तत्तुल्यं फलमीष्टे ईश-वरच् । श्वेतकण्टकारीवृक्षे राजनि॰ । तस्याः श्वेतफलस्य जलवच्छुभ्रपटाकारत्वात् तथात्वम् ।

**कपन** पु॰ कप(मौ॰)—ल्यु । कम्पने घुणादौ कमौ “कपनाः कम्पनाः क्रमयो भवन्ति” निरु॰६,४, “वृक्षं कपनेव वेधसः” ऋ॰ ५,५४,६, कपनाः कम्पनाः क्रमयः वृक्षं घुणादयः’ भा॰ । “सैष दाशरथयोरामः” इत्यादिवत् पाद पूरणार्थः कपनेवेत्यत्र सन्धिः ।

**कपर्द** पु॰ पर्व्व पूरणे क्विप् रात् वलोपे पर् पूर्त्तिः कस्य गङ्गाजलस्य परा पूर्त्या दायति शुध्यति क+पर्+दै–क । १हरजटायाम् । केन सुखेन परा पूर्त्या दीयते दा—घञर्थे क । २वराटके स्वल्पार्थे कन् अत्रार्थे पुंस्त्री॰ । स्त्रीत्वे टाप् अत इत्त्वम् । कपर्द्दिकाप्यत्र । दपर्दकभेदाश्च राजनि॰ दर्शिता यथा । १सुवर्णवर्णा सिंही २धूम्रवर्णा व्याघ्री, ३पीतपृष्ठा सितोदरा मृगी, ४श्वेतवर्णा हंसी ५नातिदीर्घिका विदन्ता” । कपर्दस्य उ[illegible]सभेदः भावप्र॰ उक्तः तद्वाक्यञ्च कनकरसशब्दे द[illegible]तम् । तस्य गुणाश्च ततोक्ता यथा ‘कपर्दो दाहपित्त[illegible]स्रशोथहः शीतलः सरः” । राजनि॰ तु “कपर्दः कटुस्तीष्णः कर्णस्थूलव्रणापहः । गुल्मशूलनेत्रदोषनाशनः परिकीर्त्तितः” । “पञ्चाङ्गान् सौवर्णान् कपर्द्दान्” यजु॰ । “यद्यहमिमं सक्तुशरावं विक्रीय दश कपर्द्दकान् प्राप्नोमि” हितो॰

**कपर्द्दिन्** पु॰ कपर्दः अस्त्यस्य इनि । १महादेवे । “नमो रुद्राय तवसे कपर्द्दिने” यजु॰ १६,४७, २जटायुक्तमात्रे त्रि॰ स्त्रियां ङीप् । “मृणालव्यालवलया वेणीबन्धकपर्द्दिनी । हरानुकारिणी पातु लीलया पार्व्वती जगत्” सा॰द॰

**कपर्द्दीश** पु॰ काशीस्थे शिवलिङ्गभेदे । “कालेश्वरकपर्द्दीशौ चरणावर्तिनिर्म्मलौ” काशीख॰ ३३ अ॰ ।

**कपाट** अस्त्री॰ कं वातं पाटयति तद्गतिं रुणद्धि पट–णिच्–अण् । द्वारावरणेन वातरोधके स्वनामख्याते काष्ठमये द्रव्ये । ‘मोक्षद्वारकपाटपाटनकरी माताऽन्नपूर्णेश्वरी’ “अन्नपूर्णास्तवः । अर्द्धर्चादि अमर’ । अणन्तत्वात् स्त्रियां ङीप् । कपाटीत्यप्यन्ये । “कपाटविस्तीर्णमनोरमोरः–”माघः कपाटवक्षाः परिणद्धकन्धरः” रघुः । “कपाटयुक्तमद्वारं सर्व-भूम्याश्च भारत ।” भा॰ का॰ १४७अ॰। “कपाटयन्त्रदुर्द्धर्षा बभूवुः सङ्कटोपलाः” भा॰ व॰ २८३ अ॰ । अल्पार्थे कन् । कपाटिका स्वल्पकपाटे (खिड़कीर कवाट) कपाटिका+स्वार्थे शर्करा॰ अण् । कापाटिक तत्रार्थे न॰स्वार्थिकानां प्रकृतलिङ्गान्यतिवर्त्तन्ते इत्युक्तेः लिङ्गातिक्रमः

**कपा(वा)टघ्न** त्रि॰ कपा(वा)टं हन्ति शक्तौ हन–टक् । कपाटघातशक्तियुक्ते चौरभेदे । (ढाकाइत) ।

**कपाटसन्धि** पु॰ कपाटं सन्धीयतेऽत्र सम्+धा आधारे कि । द्वारकाष्ठेन कपाटयोजनसन्धिभेदे ।

**कपाटसन्धिक** पु॰ सुश्रुतोक्ते कर्णबन्धरूपकर्णरोगभेदे तत्र हि “एवं विवर्द्धितः कर्णश्छिद्यते तु द्विधा नृणाम् । दोषतो वाभिघाताद्वा सन्धानं तस्य मे शृणु । तत्र समासेन पञ्चदश कर्णबन्धनाकृतयः” इत्युद्दिश्य “नेमिसन्धान इत्युपक्रम्य “कपाटसन्धिकोऽर्द्धकपाटसन्धिकः” इत्यादिना विभज्य । “अभ्यन्तरदीर्घैकपालिरितराल्पपालिः कपाटसन्धिक” इति लक्षितः । उत्पलभेद्यकशब्दे ११२२पृ॰ विवृतिः ।

**कपाल** अस्त्री कं जलं शिरो वा पालयति पाल—अण् कप–सौ॰ आलन् वा । १घटादेरवयवे “कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः” भाषा॰। २समूहे च मेदि॰ । ४शिरोऽस्थि (माथारखुलि) नरशिरः कपालं शुचिप्राण्यङ्गत्वाच्छङ्खवदित्यनुमानाप्रामाण्यमिति मथुरानाथ “कपालनेत्रान्तरलब्धमार्गैः” कुमा॰। “कपालि वा स्यादथ चन्द्रशेखरम्” ‘कपालमेवामलशेखरश्रीः” कुमा॰ । ५यत्यादेर्भिक्षापात्रे “कपालं वृक्षमूलानि कुचेलमसहायता । समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम्” मनुः । “नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः” मनुः “कपालपाणिः पृथिवीमटतां चीरसंवृतः” रामा॰ । ६अण्डादीनामवयवे च । “द्राक् पर्य्याप्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदरेत्यादि” वीरच॰ “कुक्कुटाण्डकपालानि सुमनोमुकुलानि च” । कुक्कुटाण्डकपालानि कतकं मधुकं समम्” सुश्रु॰। ७भर्ज्जनपात्रभेदे (खोला) । “कपालभ्रष्टाम् सक्तून् कारयित्वा” सुश्रु॰ । ८यज्ञियपुरोडाशादिसंस्काराधारे मृन्मयपात्रभेदे । “अष्टनः कपाले हविषि” पा॰ । अष्टाकपालः पुरोडाशः एवमेकादशकपाल इत्यादि । “कपालानि चोपदधाति पुरोडाशं चाधिश्रयति” तैत्ति॰ १६,८,२ । “अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपाल,इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हतायैकादशकपालो, विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो, मित्राव-

कृणाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां वैराजाभ्यां पयस्या इन्द्रस्यतये, पाङ्क्ताय त्रिणवाय शाक्वराय चरुः सवित्र औष्णिहाय त्रयस्त्रिंशाय रैवताय द्वादशकपालः प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्या अष्टाकपालः" यजु० २९,६०। कुष्ठरोगभेदे न० हेमच०। तल्लक्षणम् यथा। "कृष्णारुणकपालाभः यद्रूक्षं परुषं तनु। कपालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम्" माधवनि०। सुश्रुते महाकुष्ठान्यष्टौऽडुम्बरर्ष्यजिह्वकपाल काकणकपुण्डरीकदद्रुकुष्ठानीति विभज्य कृष्णकपालिकाप्रकाशानि कपालकुष्ठानीति लक्षितम्।

**कपालनालिका** स्त्री कपालस्य सूत्रसमूहस्य नालिकेव निःसरणहेतुत्वात्। सूत्रसंघनिःसारणहेतौ तर्क्वौ (टोको) त्रिका०।

**कपालभृत्** पु० कपालं ब्रह्मणः शिरोस्थिमयं पात्रं बिभर्त्ति भृ—क्विप्। १शिवे महादेवे अमरः। तस्य यथा ब्रह्मशिरःकपालभृत्त्वं तथा कपालमोचनशब्दे वक्ष्यते २कपालधारके भिक्षुके च त्रि०। कपालधारकादयोऽप्यत्र।

**कपालमालिन्** पु० कपालानां माला विद्यतेऽस्य इनि। १शिवे कपालमोचनशब्दे विवृतिः "कपालमालिने निसुवर्णमुकुटाय च" भा०आश्व०८अ०। २दुर्गायां स्त्री ङीप्।

**कपालमोचन** न० कपालं मुच्यतेऽत्र मुच—आधारे ल्युट्। काशीस्थे तीर्थभेदे। आमूलं तत्कथा काशीख० ३१अ० यथा "पुरा पितामहं विप्र! मेरुशृङ्गे महर्षयः। प्रोचुः प्रणम्य लोकेशं किमेकं तत्त्वमव्ययम्। स मायया महेशस्य मोहितो लोकसम्भवः। अविज्ञाय परं भावमात्मानं प्राह वर्णिणम्। जगद्योनिरहं धाता स्वयम्भूरेक ईश्वरः। अनादिमदहं ब्रह्म मामनर्च्य न मुच्यते। प्रवर्त्तको हि जगतामहमेव निवर्त्तकः। नान्यो मदधिकः सत्यं कश्चित् क्वापि सुरोत्तमः। तस्यैवं ब्रुवतो धातुः क्रतुर्नारायणांशजः। प्रोवाच प्रहसन्वाक्यं रोषताम्रविलोचनः। अविज्ञाय परन्तत्त्वं किमेतत् प्रतिपाद्यते। अज्ञानं योगयुक्तस्य नचैतदुचितन्तव। अहं कर्त्ता हि लोकानां यज्ञो नारायणः परः। न मामनादृत्य विधे! जीवनं जगतामज!। अहमेव परं ज्योतिरहमेव परा गतिः। मत्प्रेषितेन भवता सृष्टिरेषा विधीयते। एवं विप्रकृतौ मोहात् परस्परजयैषिणौ। पप्रच्छतुः प्रमाणज्ञानाम्नायांश्चतुरोऽपि तौ। विधिक्रतू उचतुः। वेदाः प्रमाणं सर्व्वत्र प्रतिष्ठां परमाश्रिताः। यूयमेव न सन्देहः किन्तत्त्वं प्रतितिष्ठत। श्रुतय ऊचुः। यदि मान्यावयन्देवौ! सृष्टिस्थितिकरौ! विभू!। तदा प्रमाणं वक्ष्यामो भवत्सन्देहभेदकम्। इत्युक्तमिदमाकर्ण्य प्रोचतुस्तौ श्रुतीः प्रति। युष्मदुक्तं प्रमाणं नौ तत्त्वं तत्सम्यगुच्यताम्। ऋगुवाच। यदन्तःस्थानि भूतानि यतः सर्वं प्रवर्त्तते। यदाहुस्तत् परं तत्त्वं स रुद्रस्त्वेक एव हि। यजुरुवाच। योयज्ञैरखिलैरीज्यो यो योगेन समीड्यते। चेत् प्रमाणं वयं वां हि स एकः सर्वदृक् शिवः। सामोवाच। येनेदं भ्राम्यते विश्वं योगिभिर्यो विचिन्त्यते। यद्भासा भासते विश्वं स एकस्त्र्यम्बकः परः। अथर्वोवाच। यं प्रपश्यन्ति सर्व्वेशं भक्त्यानुग्राहिणो जनाः। तमाहुरेकं कैवल्यं शङ्करं दुःखतस्करम्। श्रुतीरितं निशम्येत्थं तावतीव विमोहितौ। स्मित्वाहतुः क्रतुविधी महामर्षयुतौ मुने!। कथं प्रमथनाथोऽसौ रममाणो निरन्तरम्। दिगम्बरः पितृवने शिवया धूलिधूसरः। विटङ्कवेशो जटिलो वृषगोव्यालभूषणः। परं ब्रह्मत्वमापन्नः क्व तत्सङ्गविवर्जितम्। तदुदीरितमाकर्ण्य प्रणवात्मा सनातनः। अमूर्त्तोमूर्त्तिमान् भूत्वा हसमान उवाच तौ। प्रणव उवाच। नह्येष भगवान् शक्त्या आत्मनो व्यतिरिक्तया। कदाचिद्रम्यते रुद्रो लीलारूपधरोहरः। असौ हि भगवानीशः स्वयं ज्योतिः सनातनः। आनन्दरूपा तस्यैषा शक्तिर्नागन्तुका शिवा। इत्येवमुक्तोऽपि तदामखमूर्त्तेरजस्य हि। नाज्ञानमगमन्नाशं श्रीकण्ठस्यैव मायया। प्रादुरासीत्ततो ज्योतिरुभयोरन्तरे महत्। पूरयन्निजया भासा द्यावाभूम्योर्यदन्तरम्। ज्योतिर्मण्डलमध्यस्थोदृष्टोपुरुषाकृतिः। प्रजज्वालाथ कोपेन ब्रह्मणः पञ्चमं शिरः। आवयोरन्तरं कोऽसौ बिभृयात् पुरुषाकृतिम्। विधिः संभावये यावत्तावत् सहि विलोकितः। क्षणेन च महान् पुरुषो नीललोहितः। त्रिशूलपाणिर्भालाक्षो नागोडुपविभूषणः। हिरण्यगर्भस्तं प्राह जाने त्वां चन्द्रशेखरम्। भालस्थलान्मम पुरा रुद्रः प्रादुरभूद्भवान्। रोदनाद्रुद्रनामासि योजितोऽसि मया पुरा। मामेव शरणं याहि पुत्र! रक्षां करोमि ते। अथेश्वरः पद्मयोनेः श्रुत्वा गर्ववतीं गिरम्। स कोपतःसमुत्पाद्य पुरुषं भैरवाकृतिम्। प्राह पङ्कजजन्माऽसौ शास्यस्ते कालभैरव!। कालवद्राजसे यस्मात् कालराजस्ततो भवान्। विश्वं भर्त्तुं समर्थोऽसि भरणाद्भैरवः स्मृतः। त्वत्तोभेष्यति कालोऽपि

ततस्त्वं कालभैरवः । आमर्दयिष्यति भवान् रुष्टो दुष्टात्मनो यतः । आमर्दक इति ख्यातिं ततः सर्वत्र यास्यति । यतः पापानि भक्तानां भक्षयिष्यति तत्क्षणात् । पापभक्षण इत्येतत्तव नाम भविष्यति । या मे मुक्तिपुरी काशी सर्वेभ्योऽपि गरीयसी । आधिपत्यञ्च तस्यास्ते कालराज ! सदैव हि । तत्र ये पापकर्त्तारस्तेषां शास्ता त्वमेव हि । शुभाशुभं न तत् कर्म चित्रगुप्तो लिखिष्यति । एतान् वरान् प्रगृह्याथ तत्क्षणात् कालभैरवः । वामाङ्गुलिनखाग्रेण चकर्त्त च शिरोविधेः । यदङ्गमपराध्नोति कार्य्यन्तस्यैव शासनम् । अतो येन कृता निन्दा तच्छिन्नं पञ्चमं शिरः । यज्ञमूर्त्तिधरो विष्णुस्ततस्तुष्टाव शङ्करम् । भीतो हिरण्यगर्भोऽपि जजाप शतरुद्रियम् । आश्वास्य तौ महादेवः प्रीतः प्रणतवत्सलः । प्राह स्वमूर्त्तिमपरां भैरवं तं कपर्द्दिनम् । मान्योऽध्वरेशो भवता तथा शतधृतिस्त्वयम् । कपालं वैधसञ्चापि नीललोहित ! धारय । ब्रह्महत्यापनोदाय व्रतं लोकाय दर्शयन् । चर त्वं सततं भिक्षां कापालिव्रतमास्थितः । इत्युक्त्वान्तर्हितो देवः प्रीतः प्रणतवत्सलः । उत्पाद्य कन्यामेकान्तु ब्रह्महत्येति विश्रुताम् । रक्ताम्बरधरां रक्तां रक्तस्रगनुलेपनाम् । दंष्ट्राकरालवदनां ललज्जिह्वातिभीषणाम् । अन्तरीक्षैकपादाग्रां पिबन्तीं रुधिरं बहु । कर्त्तृकर्पर हस्ताढ्यां स्फुटं पिङ्गोग्रतारकाम् । जनयन्तीं महोद्वेगं भैरवस्यापि भीषणाम् । यावद्वाराणसीन्दिव्यां पुरीमेष गमिष्यति । तावत्त्वं भीषणे । कालमनुगच्छोग्ररूपिणि ! । सर्वत्र ते प्रवेशोऽस्ति मुक्त्वा वाराणसीं पुरीम् । नियोज्य तामिति शिवोऽप्यन्तर्धानं गतस्ततः । तत्सान्निध्याद्भैरवोऽपि कालोऽभूत् कालकालनः । स देवदेववाक्येन बिभ्रत् कापालिकं व्रतम् । कपालपाणिर्विश्वात्मा चचार भुवनत्रयम् । नात्याक्षीच्चापि तं देवं ब्रह्महत्यातिदारुणा । सत्यलोकेऽपि वैकुण्ठे महेन्द्रादिपुरीष्वपि । त्रिजगत्पती रुद्रोऽपि व्रतीति जगतीश्वरम् । प्रतितीर्थं भ्रमन्नापि विमुक्तो ब्रह्महत्यया । अनेनैवानुमानेन महिमा त्ववगम्यताम् । ब्रह्महत्यापनोदिन्याः काश्याः कलशसम्भव ! । सन्ति तीर्थान्यनेकानि बहून्यायतनानि च । अधित्रिलोकि नो काश्याः कलामर्हन्ति षोड़शीम् । तावद्गर्ज्जन्ति पापानि ब्रह्महत्यादिकान्यलम् । यावन्नाम न शृण्वन्ति काश्याः पापावलाशनेः । [illegible]ैः सेव्यमानोऽपि त्रिलोकीं विचरन् हरः । कापालिको ययौ देवो नारायणनिकेतनम् । अथायान्तं महाकालं त्रिनेत्रं धृतकुण्डलम् । महादेवांशसंभूतं भैरवं भीषणाकृतिम् । पपात दण्डवद्भूमौ दृष्ट्वा तं गरुड़ध्वजः । देवाश्च मुनयश्चापि देवनार्य्यः समन्ततः । निपेतुः प्रणिपत्येनं प्रणतः कमलापतिः । शिरस्यञ्जलिमारोप्य स्तुत्वा बहुविधैः स्तवैः । क्षीरोदमथनोद्भूतां प्राह पद्मालयां हरिः । प्रिये ! पद्माक्षनयने ! धन्याऽसि सुभगेऽनघे ! । धन्योऽहं देवि ! सुश्रोणि ! यत् पश्यावोजगत्पतिम् । अयं धाता विधाता च लोकानां प्रभुरीश्वरः । अनादिश्शरणं शान्तः परः षड्विंशसम्मितः । सर्वज्ञः सर्वयोगीशः सर्वभूतैकनायकः । सर्व्वभूतान्तरात्मायं सर्व्वगः सर्व्वदः सदा । यं विनिद्रा विनिःश्वासाः शान्ता ध्यानपरायणाः । धिया पश्यन्ति हृदये सोऽयमद्य निरीक्ष्यताम् । यं विदुर्वेदतत्त्वज्ञा योगिनो जितमानसाः । अरूपो रूपवान् भूत्वा सोऽयमायाति सर्व्वगः । अहोविचित्रं देवस्य चेष्टितं परमेष्ठिनः । यस्याख्यां शृण्वतोनित्यं न देहः सोपि देहभृत् । यं दृष्ट्वा न पुनर्जन्म लभ्यते मानवैर्भुवि । सोऽयमायाति भगवान् त्र्यम्बकः शशिभूषणः । पुण्डरीकदलायामे धन्ये मेऽद्य विलोचने । ययोरतिथितां नीतो लोकालोकधरोहरः । धिक्धिक् पदन्तु देवानां परं दृष्ट्वा तु शङ्करम् । लभ्यते यत्र निर्व्वाणं सर्व्वदुःखान्तकृच्छिवः । देवत्वादशुभं किञ्चिद्देवि ! लोके न विद्यते । दृष्टापि सर्व्वदेवेशं यन्मुक्तिं न लभामहे । एवमुक्त्वा हृषीकेशः संप्रहृष्टतनूरुहः । प्रणिपत्य महादेवमिदमाह वृषध्वजम् । किमिदं देवदेवेन सर्व्वज्ञेन त्वया विभो ! । क्रियते जगतां धात्रा सर्वपापहराव्यय ! । क्रीड़ेयन्तव देवेश ! त्रिलोचन ! महाद्युते ! । किंकारणं विरूपाक्ष ! चेष्टितं ते स्मरार्द्दन ! । किमर्थं भगवन् शम्भो ! भिक्षाश्चरसि शङ्कर ! । संशयो मे जगन्नाथ ! नतत्रैलोक्यराज्यद ! । एवमुक्तस्ततः शम्भुर्विष्णुमेतदुदाहरत् । ब्रह्मणस्तु शिरश्छिन्नमङ्गुष्ठनखेन ह । तदाप्रभृत्यहं विष्णो ! चराम्येतद्व्रतं शुभम् । एवमुक्तो महेशेन पुण्डरीकविलोचनः । स्मित्वा किञ्चिन्नतशिराः पुनरेवं व्यजिज्ञपत् । यथेच्छसि तथा क्रीड़ सर्व्वपिष्टपनायक ! । मायया मां महादेव ! न छादयितुमर्हसि । नाभीकमलकोषात्तु कोटिशः कमलासनान् । कल्पे कल्पे सृजामीश त्वन्नियोगबलाद्विभो ! । त्यज मायामिमां देव । दुस्तरामकृतात्मभिः । मदाद्यो महादेव ! मायया तव मोहिताः । यथावन्नावगच्छामश्चेष्टितन्ते शिवामते ! ।

संहारकाले संप्राप्ते सदेवानखिलान् मुनीन्। लोकान् व-र्णाश्रमवतो हरिष्यसि यदा हर!। तदा क्व ते महादेव! पापं ब्रह्मवधादिकम्। पारतन्त्र्यं न ते शम्भो! स्वैरं लोडेऽस्ततोभवान्। व्यतीतब्रह्मणामस्थ्नां स्रक् कण्ठे तेऽवभासते। यदा तदा क्वानुगता त्वां हत्या ब्रह्मणोऽनघ। कृत्वापि सुमहत् पापं त्वां यः स्मरति भावतः। आधारं जगतामीश! तस्य पापं विलीयते। यथा तमो न तिष्ठेत सन्निधावंशुमालिनः। तथा च तव भक्तस्य पापं न-श्यति तत्क्षणम्। यश्चिन्तयति पुण्यात्मा तव पादाम्बुज-द्वयम्। ब्रह्महत्याभवमपि पापन्तस्य व्रजेत् क्षयम्। तव नामानुरक्ता वाग्यस्य पुंसोजगत्पते!। अप्यद्रिकूटतु-लितं नैनस्तमनुधावति। रजसा तमसा विवर्द्धितं क्व नु पापं परितापदायकम्। क्व च ते शिवनाम मङ्गलं जन-जीवातु जगद्रुजापहम्। यदि जातु चिदन्यकद्विषस्तव नामौष्ठपुटाद्विनिःसृतम्। शिव! शङ्कर! चन्द्रशेखरेत्य-सकृन्नाम न संसृतिः पुनः। परमात्मन्! परं धाम स्वेच्छाविष्टतविग्रह!। कुतूहलं तवेशेदं क्व पराधीनता शिवे। अद्य धन्योऽस्मि देवेश! यन्न पश्यन्ति योगिनः। पश्यामि त्वां जगन्मूलमव्ययं परमेश्वरम्। अद्य वै परमोलाभस्त्वद्य मे मङ्गलं परम्। त्वद्दृष्टिमृतलप्रस्तुत्यं स्वर्गापवर्गकम्। इत्थं वदति गोविन्दे विमल-पद्मया तया। मनोरथवती नाम भिक्षा पात्रे समर्पिता। भिक्षाटनाय देवोऽपि निरगात् परया मुदा। दृष्ट्वानुया-यिनीन्तान्तु समाहूय जनार्द्दनः। संप्रार्थ्य ब्रह्महत्यां विमुञ्चेति त्रिशूलिनम्। ब्रह्महत्योवाच। अनेनापि मिषेणाहं संसेव्याद्य वृषध्वजम्। आत्मानं पावयि-ष्यामि क्व पुनर्भवदर्शनम्। सा तत्याज न तत्पार्श्वं व्या-हृतापि मुरारिणा। तमूचेऽथ हरिं शम्भुः श्रेरास्ते वचनं शुभम्। त्वद्वाक्यामृतपानेन तुष्टोऽस्मि पद्म-नाभद!। वरं वृणीष्व गोविन्द! वरदोऽस्मि तवानघ! न माद्यन्ति तथा भैक्षैर्भक्तवोऽप्यतिसंस्कृतैः। यथा मान सुधापानैर्ननु भिक्षाटनज्वराः। विष्णुरुवाच। एष एव वरः श्लाघ्यो यदहन्देवताधिपम्। पश्यामि त्वां देव देवं मनोरथपथातिगम्। अनभ्रेयं सुधावृष्टिर-नायासो महोत्सवः। अयत्नो निधिलाभोऽयं वीक्षणं हरते सताम्। अवियोगस्तु मे देव। त्वदङ्घ्रियुगलेन वै। एष एव वरः शम्भो! नान्यं कञ्चिद्वरं वृणे। श्रीभैरवउवा-च। एवं भवतु ते देव! यत्त्वयोक्तं महामते!। सर्व्वेषा-मेव देवानां वरदस्त्वं भविष्यसि। अनुज्ञाप्येति दैत्यारिं से-न्द्रादिभुवने चरन्। भेजे विमुक्तिजननीं नाम्ना वारा-णसीं पुरीम्। यत्र स्थितानां जन्तूनां कलां नार्हन्ति षोडशीम्। अपि ब्राह्माणि देवानां पदानि विपदास्प-दम्। वरं वाराणसीवासो जटामुण्डोदिगम्बरः। नान्यत्र छत्रसम्पन्नवसुधामण्डलेश्वरः। वरं वाराणसी भिक्षा न लक्षाधिपतान्यतः। लक्षाधीशोविशेद्गर्भं तद्-भिक्षाशी न गर्भभाक्। भिक्षापि यत्र भिक्षुभ्योदत्ताऽम-लकसम्मिता। सुमेरुणापि तुलिता वाराणस्यां गुरुर्भवेत्। वर्षाशनं हि योदद्यात् काश्यां सीदत्कुटुम्बिने। या-वन्त्यन्नानि तावन्ति युगानि स दिवीज्यते। वाराणस्यां वर्षभोज्यं योदद्यान्निरुपायिने। स कदाचित् तृट्क्षुधा नो दुःखं भुङ्क्ते नरर्षभ!। वाराणस्यां निवसतां यत्पुण्य-मुपजायते। तदेव संवासयितुः फलं त्वविकलं भवेत्। ब्रह्म-हत्यादिपापानि यस्या नाम्नोऽपि कीर्त्तनात्। त्यजन्ति पापिनं काशी सा केनेहोपमीयते। क्षेत्रे प्रविष्टमात्रेऽथ भैरवे भीषणाकृतौ। हाहेत्युक्त्वा ब्रह्महत्या पातालतल-माविशत्। कपालं ब्रह्मणोरुद्रः सर्व्वेषामेव पश्यताम्। हस्तात्पतितमालोक्य ननर्त्त परया मुदा। विधेः कपालं नामुञ्चत् करमत्यन्तदुस्त्यजम्। हरस्य भ्रमतः क्वापि तत् काश्यां क्षणतोऽपतत्। शूलिनो ब्रह्मणोहत्या नापैति क्वैव या क्वचित्। सा काश्यां क्षणतोनष्टा कथं काशी न दुर्लभा। वाराणसीति काशीति महामन्त्रमिमं जपन्। यावज्जीवं त्रिसन्ध्यन्तु जन्तुर्जातु न जायते। अविमुक्तं महाक्षेत्रं स्मरन् प्राणांस्तु यस्त्यजेत्। दूरदेशान्तरस्थोऽपि सोऽपि जातु न जायते। आनन्दकाननं यस्तु निश्चितं स्मरते सदा। तत्क्षेत्रनामस्मरणान्न स-भूयोऽभिजायते। रुद्रावासे वसेन्नित्यं नरोनियतमानसः। एनसामपि सम्भारं कृत्वा तस्माद्विमुच्यते। महाश्म-शानमासाद्य यदि देवाद्विपद्यते। पुनः श्मशानशयनं न क्वापि लभते पुमान्। कपालमोचनं काश्यां ये स्मरि-ष्यन्ति मानवाः। तेषां विनङ्क्ष्यति क्षिप्रमिहान्यत्रापि पा-तकम्। आगत्य तीर्थप्रवरे स्नानं कृत्वा विधानतः। तर्पयित्वा पितॄन् देवान् मुच्यते ब्रह्महत्यया"।

भैरवमहादेवयोरभेदात् महादेवे कपालभृत्त्वादिव्यपदेशः। "कपालमोचनं तीर्थं सर्व्वपापप्रमोचनम्। तत्र स्नात्वा नरव्याघ्र! सर्व्वपापैः प्रमुच्यते" भा० व० ८३ अध्याये।

कपालशिरस् पु० कपालं शिरसि यस्य। महादेवे "त्र्यम्ब-

स्तत्र बहुशोविहृत्य शरदां शतम्। तपसा दिवमारूढाः कपालशिरसा सह"।

**कपालस्फोट** पु० ६त०। शिरःस्फोटने (माथाखोड़ा)

**कपालाधिकरण** न० जैमिनिसूत्रोक्ते अधिकरणभेदे तच्चाधिकरणं ४,१, पादे यथा "अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तादर्थो हि विधीयते" जै० सू०। दर्शपूर्णमासयोः श्रूयते "कपालेषु पुरोडाशं श्रपयति" इति तथा "पुरोडाशकपालेन तुषानुपवपति" इति तत्र संदेहः किम्? उभयं कपालानि प्रयोजयति? पुरोडाशश्रपणं तुषोपवापश्च उत श्रपणं प्रयोजकं न तुषोपवापः? इति किं प्राप्तम्? विनिगमनायां हेतोः अभावात् उभयम् इति प्राप्ते उच्यते अर्थाभिधानम् प्रयोजनसम्बन्धाभिधानं यस्य यथा पुरोडाशकपालम् इति पुरोडाशार्थकपालं पुरोडाशकपालम् कथम् एतदवगम्यते? पुरोडाशं तावत् तस्मिन् काले नास्ति येन वर्त्तमानः सम्बन्धः कपालेन स्यात् तेनैव हेतुना न भूतः अतएव, कपालस्य पुरोडाशेन भविष्यता सम्बन्धः भविष्यता सम्बन्धश्च तन्निमित्तस्य भवति तस्मात् पुरोडाशेन प्रयुक्तं यत् कपालं तेन तुषा उपवप्तव्याः इति कपालं स्यात् न चेत् न, तेन तुषा उपवप्तव्याभवन्ति तस्मात् न तुषोपवापः कपालानाम् प्रयोजकः प्रयोजकन्तु श्रपणम्" एवञ्च सति चरौ पुरोडाशाभावे यदा तुषानुपवप्तुम् कपालमुपादीयते न तत्पुरोडाशम्" भा०।

**कपालि** पु० कं ब्रह्मशिरः पालयति व्रतकाले पाल–इन्। महादेवे त्रि० "कपालिं त्रिपुरान्तकम्" भा०स०४५अ०।

**कपालिका** स्त्री कपाल+अल्पार्थे कन् अत इत्वम्। १भग्नमृण्मयखण्डे (खापरा)। कपालिकैव शर्करा० स्वार्थेऽण्। कापालिक तत्रार्थे न० स्वार्थिकत्वेऽपि क्वचित् लिङ्गातिक्रमनियमात्। नाधितिष्ठेत्तु षं जातु केशभस्मकपालिका." भा०अनु०१०४ अ०। "अधितिष्ठेन्न केशांस्तु न भस्मास्थिकपालिकाः"। "अप्सनोऽस्थीनि गोबालांस्तुषान् भस्मकपालिकाः" मनुः। "कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि" सुश्रुतः "सुश्रुतोक्ते २दन्तरोगभेदे स च "दन्तगतास्तु दालनः क्रमिदन्तको दन्तहर्षोभञ्जनकः शर्करा कपालिका श्यावदन्तकोऽनुमोचश्चेति" विभज्य "दलन्ति दन्तवल्कानि यदाशर्करया सह। ज्ञेया कपालिका सैव दशनानां विनाशिनी" सुश्रुते लक्षितः ३कपालावयवे "कपालिकाभ्यां कपालं कपालाभ्यां च घटआरभ्यते" न्यायकन्दली।

**कपालिन्** पु० कपालमस्त्यस्य इनि। १महादेवे २कपालयुक्ते त्रि० "कपालि वा स्यादथ चन्द्रशेखरम्" कुमा० स्त्रियां ङीप् सा च ३दुर्गायाम्" हेम०। शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन्। ब्रह्महा द्वादशवर्षाणि मितभुक् शुद्धिमाप्नुयात्" याज्ञ० "तन्मालाभस्मनृकपाल्यवसत् पिशाचैः" भाग० ४,४,१७। ४जातिभेदे पुंस्त्री पराशरः। जातिशब्दे तज्जातिविवृतिः। स्त्रियां ङीप् "नटी कपालिनो वेश्या कुलटा नापिताङ्गना" तन्त्रे कुलनारीकीर्त्तने। कपालमस्त्यस्य भोजपात्रत्वेन ठन् कपालिक। कपालाधारेभोजिनि जातिभेदे च। तस्येदमण्। कापालिक तत्सम्बन्धिनि त्रि०कपालमोचनशब्दे उदा० "कापालिकान्नभोक्तॄणां तन्नारीगामिनां तथा। ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्" प्रा०वि०आपस्त०।

**कपि** पु० कपि–इन् नलोपश्च। १वानरे अमरः। "नश्यन्ति ददर्श हन्दानि कपीन्द्रः" भट्टिः। "कुपितकपिकपोलक्रोड़ताम्रस्तमांसि" उद्भटः। "विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः। प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत्" मनुः "रामायणमिव कपिकथासमाकुलम्" काद०। २सिह्लके (शिलारस)। गन्धद्रव्यभेदे तस्य कपिजातत्वात्" भाव०प्र०कपिनामतोक्तेश्च तथात्वम्। ३नारायणे च। मेदि०। "कपिलः कपिरव्ययः" विष्णुस०। कं जलं रश्मिभिः पिबतीति कपिर्वराहो वा "कपिर्वराहः इति वचनात्" भा०। कादुदकात् भूमिं पाति उद्धरति पाक। ४वराहे। ५धात्रिकायां (आमला) शब्दमा०। ६करञ्जभेदे शब्दच०। कपिक्रीडत्वस्यत्वात् ७रक्तचन्दने। तद्वर्णे ८पिङ्गले च पु०। तद्वर्णवति त्रि०। कपेः शाखामृगत्वम् मांसगुणाश्च सुश्रुते दर्शिताः। "मद्गुमूषकवृक्षशायिकावकुशपृतिघासवानरप्रभृतयः पर्णमृगाः" "मधुरा गुरवो वृष्याश्चक्षुष्याः शोषिणे हिताः। सृष्टमूत्रपुरीषाश्च कासार्शःश्वासनाशनाः"

**कपिकच्छु** स्त्री कपीनामपि कच्छुः यस्याः५ब०।(आल्कुशी) कपिकण्डूहेतौ शूकशिम्ब्याम् अमरः। तद्गुणा भावप्र० उक्तायथा "कपिकच्छूर्भृशं वृष्या मधुरा वृंहणी गुरुः। तिक्ता वातहरी बल्या कफपित्तास्रनाशिनी। तद्वीजं वातशमनं स्मृतं वाजीकरं परम्"।

**कपिकच्छुफलोपमा** स्त्री कपिकच्छूफलस्य उपमा यत्र तुल्य

फलत्वात् । जतुकाजतयां राजनि० तस्यास्तत्फल-
त्वात्तथात्वम् । [(आल्कुशी) शूकशिम्ब्याम् भरतः

**कपिकच्छुरा** स्त्री कपिभ्यः कच्छूं राति ददाति रा—क ।

**कपिकन्दुक** न० कपि+कन्दि-उक अतोलोपः कस्य शिरसः
पिकन्दुकम् । शिरोऽस्थि शब्दच० ।

**कपिका** स्त्री कपिरिवाह इव कायति प्रकाशते कृष्णत्वात् कै—
क । नीलसिन्धुवारवृक्षे राजनि० ।

**कपिकेतन** पु०कपिर्हनूमान् केतने यस्य । अर्ज्जुने कपिध्वजे
"सान्त्वपूर्वमिदं वाक्यमब्रवीत् कपिकेतनः"भा०आश्व०८२।
यथा च तस्य कपिकेतनता तथावर्णितं भा०व०१५१अ०।
"एवमुक्तस्तु हनुमान् भीमसेनमभाषत । भ्रातृत्वात् सौ-
हृदाच्चैव करिष्यामि प्रियं तव । चमूं विगाह्य शत्रूणां
परशक्तिसमाकुलाम् । यदा सिंहरवं वीर ! करिष्यसि म-
हाबल ! । तदाहं वृंहयिष्यामि स्वरवेण रवं तव । विज-
यस्य ध्वजस्थश्च नादान् मोक्ष्यामि दारुणान् । शत्रूणां ये
प्राणहराः सुखं येन हनिष्यथ" । कपिध्वजादयोऽप्यत्र ।

**कपिकोलि** पु० कपीनां प्रियः कोलिः । (शेयाकुल)
कोलिभेदे रत्नमा०।

**कपिचूडा** स्त्री कपीनां चूडेव । आम्रातकवृक्षे राजनि० ।
वन्यकुलस्य कपिचूडातुल्यतया तथात्वम् । [ त्रिका०

**कपिचूत** पु०कपीनां चूत इव प्रियत्वात्। आम्रातकवृक्षे

**कपिज** पु० कपितोजायते जन—ड। कपितैले तुरुष्के
(शिलारस) राजनि० ।

**कपिजङ्घिका** स्त्री कपेर्जङ्घेव जङ्घा यस्याः संज्ञायां कन् ।
तैलपिपीलिकायां (तेलोपोका) राजनि० तस्याः कपि-
तुल्यदीर्घजङ्घत्वात्तथात्वम् ।

**कपिञ्जल** पुंस्त्री "कपिरिव जवते ईषत् पिङ्गलो वा कमनीयं
शब्दं पिञ्जयतीति वा" निरुक्तोक्ता व्युत्पत्तिः पृषो० ।
१पक्षिभेदे चातके राजवल्ल०जलयाचनाय तस्य रम्यशब्द-
करणात् तथात्वम् । २तित्तिरौ त्रिका० । तित्तिरि-
रिह श्वेत एव ग्राह्यः । "वर्त्तिकालावबर्त्तीर कपिञ्जल-
कतित्तिराः । कलिङ्गाः कुक्कुटाद्याश्च विष्किराः समुदा-
हृताः । विकीर्य्य भक्ष्ययन्त्येते यस्मात्तस्माद्धि विष्किराः ।
कपिञ्जल इति प्रोक्तः कथितो गौरतित्तिरिः"भावप्र०उक्तेः
अतएव "वसन्ताय कपिञ्जलानालभेत ग्रीष्माय कलविङ्कान्
वर्षाभ्यस्तित्तिरीन्" यजु० ४,२० । कपिञ्जलतित्तिरीणां
भेदेन निर्देशः "कपिञ्जलः कपोत उलूकः शशस्ते निर्ऋ-
त्यै" यजु० २४,३८ तस्य चारत्वात् तत्तद्देवतोद्दे-
शेन उत्सर्ग एवालाभनम् । "कपिञ्जलादींस्तुदृष्ट्वाजति
पर्य्यग्निकृतान्" कात्या०श्रौ०,६,८ उक्तेः । कपिञ्जलमांस-
गुणाश्च भावप्र० उक्ताः कपिञ्जलादीन् विष्किरानुक्त्वा
"विष्किराः मधुरा शीताः कषायाः कटुपाकिनः।
बल्यावृष्याश्च दोषघ्ना पथ्यास्ते लघवः स्मृताः" ।
कपिञ्जलशब्दस्यावर्णान्तत्वेन द्व्यच्त्वाजभिन्नत्वेन च क-
र्म्म शब्देन समासे न आद्युदात्तत्वम् । "अर्म्मे चावर्णं
द्व्यच् त्र्यच्" पा० सूत्रात्

**कपिञ्जलन्याय** पु० बहुत्वस्य त्रित्वपर्य्यवसायिताख्यापके
न्यायभेदे स च न्यायो यथा "वसन्ताय कपिञ्जलाना-
लभेतेति" श्रुत्वा कपिञ्जलगतं बहुत्वं बोधितं तच्च विव-
क्षितं विधेयसंख्यात्वात् कपिञ्जलस्यान्यतोऽप्राप्तत्वात् वि-
धेयत्वं बहुत्वं च त्रित्वमारभ्य परार्द्धपर्य्यन्तपर्य्यवसन्नत्रि-
त्वनव्यवसायेनाप्रवृत्त्या वेदाप्रामाण्यापत्तिरिति प्राप्तेराह
"प्रथमोपस्थितेस्तन्त्रत्वात्" जै० सू० । त्रित्वोत्पत्त्यनन्तरं
त्रित्वसहितैकत्वबुद्ध्या चतुष्टं जन्यते तत्र त्रित्वस्य प्रथमो-
पस्थितत्वात् वेदबोध्यबहुत्वस्य तत्रैव पर्य्यवसानाध्यवसायः
संख्यायाम् एकत्वस्येव बहुत्वसंख्यायायां त्रित्वस्यैव प्रथमो-
पस्थितत्वात्तत्रैव वेदतात्पर्य्यात् । अपेक्षाबुद्धिरूपत्रैक-
त्वविषयेण त्रित्वम् एवं तथाविधैकत्व चतुष्केण चतुष्टं जन्यते
इति मते तु कारणीभूतापेक्षाबुद्धिलाघवेन प्रथमोपस्थित-
त्रित्वस्यैव वेदबोध्यता नातोऽप्रवृत्तिः अतएव वैया०भू०
संख्यायाम् एकत्वसंख्याया एव ग्रहणे कपिञ्जलालम्भ-
वाक्ये त्रित्वग्रहणं दृष्टान्तोकृतं यथा "अभेदैकत्वसंख्या-
या वृत्तौ भानमिति स्थितिः । कपिञ्जलालम्भवाक्ये त्रित्वं
न्यायाद्यथोच्यते" । "बहुत्वगणनायां त्रित्वस्यैव प्रथमो-
पस्थितत्वात् तद्रूपेणैव भानवदेकत्वस्य सर्वतः प्रथमोपस्थित-
त्वमस्तीति भावः" ।

**कपितैल** न०कपिभिः शिलायादारणेन निष्पादितं तैलम् ।
सिह्लके तुरुष्के गन्धद्रव्यभेदे (शिलारस) ।"सिह्लकस्तु तु-
रुष्कः स्याद्यतोयवनदेशजः । कपितैलञ्च संख्यातं तथा
च कपिनामकः" भावप्र० । तेन तुरुष्कदेशयवनदेशो-
द्भवशिलादलनेन कपिभिरुद्भावनात्तस्य तथात्वम् ।

**कपित्थ** पु० कपिस्तिष्ठत्यत्र तत्फलप्रियत्वात् स्था—क पृषो० ।
(कएतवेल) वृक्षभेदे "विरावान्ते विरावान्ते कपित्थव-
दराशनः"भाग०४,८,६४ । अस्य गुणपर्य्यायादि भावप्र०
उक्तं यथा । "कपित्थस्तु दधित्थः स्यात्तथा पुष्पफलः स्मृतः।
कपिप्रियोदधिफलस्तथा दन्तशठोऽपि च । कपित्थमामं

षड्याहि कषायं लघु लेखनम्। पक्वं गुरु तृषाहिक्काशमनं वातपित्तजित्। स्वादम्लन्तुवरङ्कण्ठशोधनं ग्राहि दुर्जरम्"। अपिच "कपित्थमामं कण्ठघ्नं विषदं ग्राहि वातलम्। मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम्" सुश्रुते अम्लवर्गेऽयं पठितः अम्लशब्दे तद्वाक्यं दर्शितम्। हारीतेनास्य भक्षणं सर्वदा निषिद्धं यथा "न वटप्लक्षोदुम्बरनीपदधित्थमातुलाङ्गानि भक्षयेत्। कपित्थोऽस्त्यत्र देशे पुष्करा० इनि कपित्थिनी स्त्री कपित्थयुक्तदेशे। तस्य सन्निकृष्टदेशादि काशा० इनि। कपित्थिन् तत्सन्निकृष्टदेशादौ त्रि०। [कटचे राजनि०

**कपित्थत्वक्** पु० कपित्थस्य त्वगिव त्वक् वल्कलमस्य। एलवालु-

**कपित्थपर्णी** स्त्री कपित्थस्य पर्णमिव पर्णमस्याः गौ०ङीष्। कपित्थतुल्यपत्रिकायां चित्रपत्रिकायां वृक्षभेदे रत्ना०।

**कपित्थाष्टक** न० चक्रदत्तोक्ते चूर्णभेदे। यथा "यमानी पिप्पलीमूलचतुर्जातकनागरैः। रोचनाग्निजलाजाजी धान्यसौवर्चलैः समैः। वृक्षाम्लधातकी कृष्णा विल्वदाडिमतिन्दुकैः। त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः। चूर्णोऽतिसारग्रहणीक्षयगुल्मगलामयान्। कासं श्वासारुचिं हिक्कां कपित्थाष्टमिकमाजयेत्" चक्रद०।

**कपित्थास्य** पुंस्त्री कपित्थमिवास्यं यस्य। गोलाङ्गूलाख्ये वानरभेदे त्रिका०। तस्य कपित्थाकारमुखत्वात्तथात्वम् जातित्वेऽपि संयोगोपधत्वात् स्त्रियां टाप्।

**कपिनामन्** पु० कपेर्नाम नाम यस्य। सिह्लके भावप्र०। कपितैलशब्दे तद्वाक्यं दृश्यम्।

**कपिपिप्पली** स्त्री कपिः कपिवर्णा रक्ता पिप्पलीव। १रक्तापामार्गे वैद्य०। २सूर्य्यावर्त्तवृक्षे रत्नमा०।

**कपिप्रभा** स्त्री कपावपि प्रभा स्वगुणप्रसारोऽस्याः। (आलकुशी) कपिकच्छाम् शब्दरत्ना०। [२सुग्रीवे च

**कपिप्रभु** पु० ६त०। १रघुनाथे रामचन्द्रे शब्दरत्ना०।

**कपिप्रिय** पु० ६त०। १आम्रातकवृक्षे राजनि०। २कपित्थे भावप्र०। कपितैलशब्दे तद्वाक्यमुक्तम्।

**कपिरथ** पु० कपिर्हनुमान् रथ इव वाहनमस्य। १श्रीरामे शब्दरत्ना०। कपिर्हनुमान् रथेऽस्य। २अर्ज्जुने कपिकेतनशब्दे तन्नामताकारणं दर्शितम्।

**कपिल** पु० कम्ब वर्णे इलच् बस्य पत्व, कपि+सिध्मा० लच् वा। सांख्यशास्त्रप्रवर्त्तके १मुनिभेदे कर्द्दमप्रजापतेर्देवहूतिगर्भजपुत्ररूपे २भगवदवतारभेदे। ३वह्नौ ४कुक्कुरे च हेम०। (सिलारस) ५सिह्लके रत्नमा०। ६पिङ्गलवर्णे। ७तद्वति त्रि० अमरः। स च वर्णः नीलपीतमिश्रितवर्ण इति रभसः रोचनाभ इत्यन्ये। साङ्ख्यमतञ्च द्विविधं सेश्वरनिरीश्वरभेदात् तत्र सेश्वरसांख्यशास्त्रं भगवदवतारः कपिलः प्रणीतवान्। निरीश्वरसांख्यन्तु अग्न्यवतारः कपिलः" "अग्निः स कपिलो नाम सांख्यशास्त्रप्रवर्त्तकः" इति स्मृतेः। तत्र निरीश्वरसांख्यप्रवृत्त्यादि यथा सां०का० उक्तं यथा "पुरुषार्थं ज्ञानमिदं गुह्यम्परमर्षिणा समाख्यातम्। स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम्। एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ। आसुरिरपि पञ्चशिखाय तेन बहुधा कृतन्तन्त्रम्। शिष्यपरम्परायातमीश्वरकृष्णेन चैतदार्य्याभिः। संक्षिप्तमार्य्यमतिना सम्यग्विज्ञाय सिद्धान्तम्। सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य। आख्यायिकाविरहिताः परवादविवर्ज्जिताश्चापि" विवृतश्चैतदस्माभिः सा० त० कौ० व्याख्योपक्रमे यथा

"अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इत्यादिकसूत्रजातात्मकं षडध्यायीरूपं शास्त्रम् कपिलमुनिः आसुरिनामानं मुनिमुपलक्ष्यीकृत्य प्रणिनाय तेनापि ततः श्रुत्वा तदर्थानुगुणं संक्षिप्तमपरं शास्त्रं स्वशिष्याय पञ्चशिखायोपदिष्टमेवं लोके प्रचारमुपगतेऽस्मिन् शास्त्रे ईश्वरकृष्णेन विहृदर्थे शाख्यायिकापरवादनिराकरणवर्ज्जं षष्टिपदार्थप्रतिपादनाय द्वासप्ततिरार्य्याः निर्म्मिताः। एतच्छास्त्रस्य तु "सङ्ख्यां प्रकुर्व्वते यस्मात् प्रकृतिं च प्रचक्षते। तत्त्वानि च चतुर्व्विंशत् तेन साङ्ख्यं प्रकीर्त्तितम्" इति महाभारतवाक्यानुसारेण प्रकृतिपुरुषसम्यग्विवेकज्ञानरूपसङ्ख्यायाः, प्रकृत्यादिचतुर्विंशतितत्त्वसङ्ख्यायाश्च प्रतिपादनात् साङ्ख्याशब्दाभिधेयता। तदिदं शास्त्रं चिकित्साशास्त्रमिव चतुर्व्यूहम् यथा रोगः रोगनिदानं रोगनिवृत्त्युपायः रोगनिवृत्तिरित्येते पदार्थाः चिकित्साशास्त्रगताः एवं हेयं दुःखं, तन्निदानं चित्तादि, तन्निवृत्त्युपायो विवेकसाक्षात्कारः, दुःखनिवृत्तिश्चेत्येते पदार्थाः अत्र शास्त्रे प्राधान्येनोपदिष्टाः प्रसङ्गागताश्चान्ये। प्रकृतेः साम्यावस्थापन्नगुणत्रयात्मिकायाः सर्गभेदेऽप्येकत्वं, स्वर्गापवर्गरूपप्रयोजनवत्त्वम्, परार्थतया प्रवृत्तिमत्त्वञ्च, असङ्गस्य चेतनस्य पुरुषस्य प्रकृतिकार्य्येभ्यो भेदः, अकर्तृत्वं जन्ममरणादिव्यवस्थान्यथानुपपत्तेर्बहुत्वञ्च, प्रकृतेः पुरुषस्य चोभयोः अस्तित्वं, संयोगः, वियोगश्च स्थूलसूक्ष्मभूतानां स्थितिरित्येते दश पदार्थाः मौलिकाः। तथा अविद्या-

ऽस्मितारागद्वेषाभिनिवेशात्मकाः पञ्च विपर्य्ययाः इन्द्रियादीनां स्वस्वव्यापारेऽसामर्थ्यम् "बाधिर्य्यं कुष्ठितान्धत्वं जड़ताऽजिघ्रता तथा । मूकता कौण्यपङ्गुत्वं क्लैव्योदावर्त्तमन्दता" । इत्येकादशविधम्, नवधा तुष्टयोऽष्टधा सिद्धयः तासां विपर्य्ययः सप्तदशधा इत्येवमष्टाविंशतिः नवधा तुष्टयोऽष्टौ सिद्धय इत्येवं षष्टिः पदार्थाः "प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता । पारार्थ्यञ्च तथानैक्यं वियोगो योग एव च । शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश। विपर्य्ययः पञ्चविधस्तथोक्ता नव तुष्टयः। करणानामसामर्थ्यमष्टाविंशतिधा मतम् । इति षष्टिः पदार्थानामष्टभिः सिद्धिभिः सह" । इति राजवार्त्तिकोक्ता उपदिष्टाः । प्रकृतिपुरुषविवेकोपदेशाय प्रवृत्तं शास्त्रं प्रथमं चेतनाचेतनत्वेन पदार्थद्वैविध्यं सूचयाम्बभूव । तत्र चेतनाः पुरुषा जन्मादिव्यवस्थान्यथानुपपत्तेर्बहवः । प्रकृत्यादयः चतुर्विंशतिः पदार्थाः संहतपरार्थाः अचेतनाश्च । अचेतना अपि प्रकृत्यादयः पुरुषस्य भोगापवर्गार्थं वत्सवृद्ध्यर्थं क्षीरमिव प्रवर्त्तन्ते । तत्प्रवृत्तौ च अनाद्यविद्या मिथ्याज्ञानजन्यवासनासहकृता पुरुषेण संयोगं सम्पादयन्ती हेतुः । पुरुषसंयुक्ता च साम्यावस्थापन्नगुणत्रयात्मिका प्रकृतिः महत्तत्त्वाकारेण परिणमते इदमित्थमेवेतिनिश्चयात्मकवृत्तिविशिष्टमन्तःकरणमेव महत्तत्त्वसंज्ञकम् । तच्च पुनः इदं मम अनेनाहं कार्य्यं निष्पादयामीत्येवमहङ्कारात्मकवृत्तिविशिष्टान्तःकरणरूपाऽहङ्काराकारेण परिणमते । सोऽपि सूक्ष्मभूत रूपशब्द तन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्राकारेण परिणमते । तानि च श्रोत्रत्वङ्नयनरसनाजिह्वाख्य-पञ्चज्ञानेन्द्रिय-वाक्पाणिपादपायूपस्थाख्य-पञ्चकर्म्मेन्द्रिय-सङ्कल्पविकल्पात्मकवृत्तिकमनोरूपेण, आकाशवायुज्वलनजलभूमिरूपमहाभूताकारेण च परिणमन्ते । तएते चतुर्विंशतिः पदार्थाः "प्रकृतेर्महान्, महतोऽहङ्कारः, अहङ्कारात् पञ्च तन्मात्राणि, तन्मात्रेभ्य एकादशेन्द्रियाणि पञ्च भूतानि चेति" सूत्रोपदिष्टाः । तेभ्य एव च भौतिकब्रह्माण्डचतुर्विधप्राणिदेहादीनामुत्पत्तिः । प्रकृतिश्चैवं भूयोभूयः स्वव्यापारान् पुरुषाय दर्शयित्वा भूयोभूयो भुज्यमानेषु तेषु क्रमशः पुरुषस्य वैराग्यमुत्पाद्य आत्मात्मकार्य्येभ्यः पुरुषस्य विवेकज्ञानं साधयित्वा च दृष्टात्मविवेकं पुरुषं प्रति स्वव्यापारदर्शनेन कृतकृत्यतया निवर्त्तते । तन्निवृत्तौ च तत्कार्य्यसकलपदार्थव्यापारनिवृत्तिरित्यतः सकार्य्यप्रकृति वृत्तिनिवारणाय प्रयत्नः कार्य्यः । तन्निवृत्तिश्च विवेकज्ञानसाध्या इत्येवं विवेकसाधनायेदं शास्त्रं प्रवृत्तम् । विवेकश्च यत् वस्तु यथास्थितम् तत्तथारूपेण ज्ञानम् तत्र पुरुषस्य निःसङ्गतया क्रियाशून्यतया चापरिणामित्वेन कर्तृत्वाभावात् प्रकृतिकार्य्यबुद्धिरेव कर्त्री कृतिसमानाधिकरणत्वेनैव तत्फलस्य सुखदुःखादेः तन्निष्ठतैव । पुरुषे तु प्रधानकार्य्यबुद्धेश्चिदात्मनि प्रतिविम्बात् दुःखादेरपि पुरुषे प्रतिबिम्बनं तेन च पुरुष उपतप्यते, बुद्धेर्दुःखनिवृत्तौ च नैव तस्योपताप इत्यतः प्रतिविम्बरूपदुःखभोक्तृत्वेन आत्मानं जानन् पुरुष उपतप्यमान इव भवति । ततश्च प्रकृतेर्भिन्नतया तत्कार्य्यसुखादिशून्यतया ज्ञातः पुरुषः प्रतिविम्बाकारैः दुःखैर्न संबध्यते इत्येवं प्रकृत्यादीनां चतुर्विंशतितत्त्वानां पुरुषस्य च असाधारणधर्म्मविशेषकथनद्वारा तयोर्विवेकज्ञानोपयोग्युपदेशायैवेदम् शास्त्रं प्रवृत्तम् यथा च तयोर्विवेकस्तथा शास्त्रे तन्मूलके द्वासप्ततिकारिकात्मके प्रबन्धे च आख्यायिकापरवादनिराकरणवर्जमीश्वरकृष्णेन दर्शितम्"। तत्र सांख्यमतं सर्वदर्शसंग्रहे इत्थं समग्राहि

"सङ्क्षेपेण हि साङ्ख्यशास्त्रे चतस्रो विधाः सम्भाव्यन्ते कश्चिदर्थः प्रकृतिरेव, कश्चिद्विकृतिरेव, कश्चिद्विकृतिः प्रकृतिश्च, कश्चिदनुभय इति । तत्र केवला प्रकृतिः प्रधानपदेन वेदनीया मूलप्रकृतिः नासावन्यस्य कस्यचिद्विकृतिः, प्रकरोतीति प्रकृतिरिति व्युत्पत्त्या सत्त्वरजस्तमोगुणानां साम्यावस्थाया अभिधानात् तदुक्तं "मूलप्रकृतिरविकृतिरिति"। मूलञ्चासौ प्रकृतिश्च मूलप्रकृतिः महदादेः कार्य्यकलापस्यासौ मूलं न त्वस्य प्रधानस्य मूलान्तरमस्ति अनवस्थापातात् । न च वीजाङ्कुरवदनवस्थादोषो न भवतीति वाच्यं प्रमाणाभावादिति भावः । विकृतयश्च प्रकृतयश्च महदहङ्कारतन्मात्राणि। तदप्युक्तं "महदाद्याः प्रकृतिविकृतयः सप्तेति" अस्यार्थः प्रकृतयश्च ताः विकृतयश्चेति प्रकृतिविकृतयः सप्त महादादीनि तत्त्वानि तत्रान्तःकरणादिपदवेदनीयं महत्तत्त्वमहङ्कारस्य प्रकृतिः मूलप्रकृतेस्तु विकृतिः । एवमहङ्कारतत्त्वमभिमानापरनामधेयं महतो विकृतिः प्रकृतिश्च पञ्चतन्मात्रादीनाम् तत्राहङ्कारतत्त्वं तामसं सत् पञ्चतन्मात्राणां सूक्ष्माभिधानां प्रकृतिः, तदेव सात्त्विकं सत्प्रकृतिरेकादशेन्द्रियाणां बुद्धीन्द्रियाणां चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानां, कर्म्मेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्यानामुभयात्मकस्य मनसश्च । रजसस्तूभयत्र क्रियोत्पादनद्वारेण कारणत्वमस्तीति न वैयर्थ्यम् । तदुक्तमीश्वरकृष्णेन "अभिमानोऽ-

हङ्कारस्तस्माद्द्विविधः प्रवर्त्तते सर्गः । एकादशकश्च गणस्तन्मात्रपञ्चकञ्चैव । सात्त्विकएकादशकः प्रवर्त्तते वैकृतादहङ्कारात् । भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् । बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि । वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्याहुः । उभयात्मकमत्र मनः सङ्कल्पविकल्पात्मकमिन्द्रियञ्च साधर्म्म्यादिति"।

विवृतञ्च तत्त्वकौमुद्यामाचार्य्यवाचस्पतिभिः । केवला विकृतिस्तु वियदादीनि पञ्च भूतानि एकादशेन्द्रियाणि च तदुक्तं "षोड़शकस्तु विकारः" इति षोड़शसङ्ख्यावच्छिन्नो गणः षोड़शको विकार एव न प्रकृतिरित्यर्थः यद्यपि पृथिव्यादयो गोघटादीनां प्रकृतिस्तथापि न ते पृथिव्यादिभ्यस्तत्त्वान्तरमिति न प्रकृतिः तत्त्वान्तरोपादानत्वं चेह प्रकृतित्वमभिमतं गोघटादीनां स्थूलत्वेन्द्रियग्राह्यत्वयोः समानत्वेन तत्त्वान्तरत्वाभावात् । तत्र शब्दस्पर्शरूपरसगन्धतन्मात्रेभ्यः पूर्व्वपूर्व्वसूक्ष्मभूतसहितेभ्यः पञ्च भूतानि वियदादीनि क्रमेणैकद्वित्रिचतुःपञ्चगुणानि जायन्ते । इन्द्रियसृष्टिस्तु प्रागेवोक्ता । तदुक्तम् "प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोड़शकः । तस्मादपि षोड़शकात् पञ्चभ्यः पञ्च भूतानीति" । अनुभयात्मकः पुरुषः तदुक्तं "न प्रकृतिर्न विकृतिः पुरुष" इति । पुरुषस्तु कूटस्थनित्योऽपरिणामी न कस्यचित् प्रकृतिर्नापि विकृतिः कस्यचिदित्यर्थः । एतत्पञ्चविंशतितत्त्वसाधकत्वेन प्रमाणत्रयमभिमतं तदप्युक्तं "दृष्टमनुमानमाप्तवचनञ्च सर्व्वप्रमाणसिद्धत्वात् । त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धीति" । इह कार्य्यकारणभावे चतुर्द्धा विप्रतिपत्तिः प्रसरति । असतः सज्जायत इति सौगताः सङ्गिरन्ते । नैयायिकादयः सतोऽसज्जायत इति । वेदान्तिनः सतो विवर्त्तः कार्य्यजातं न वस्तुसदिति । सांख्याः पुनः सतः सज्जायत इति । तत्रासतः सज्जायत इति न प्रामाणिकः पक्षः असतो निरुपाख्यस्य शशविषाणवत्कारणत्वानुपपत्तेः तुच्छातुच्छयोस्तादात्म्यानुपपत्तेश्च । नापि सतोऽसज्जायते कारकव्यापारात् प्रागसतः शशविषाणवत्सत्तासम्बन्धलक्षणोत्पत्त्यनुपपत्तेः नहि नीलं निपुणतमेनापि पीतं कर्त्तुं पार्य्यते । ननु सत्त्वासत्त्वे घटस्य धर्म्माविति चेत्तदचारु असति, धर्म्मिणि तद्धर्म्म इति व्यपदेशानुपपत्त्या धर्म्मिणः सत्त्वापत्तेः । तस्मात् कारकव्यापारात् प्रागपि कार्य्यं सदेव, सतश्चाभिव्यक्तिरुपपद्यते यथा पीड़नेन तिलेषु तैलस्य दोहेन सौरभेयीषु पयसः । असतः करणे किमपि निदर्शनं न दृश्यते । किञ्च कार्य्येण सम्बद्धं कारणं तज्जनकम् असम्बद्धं वा प्रथमे कार्य्यस्य सत्त्वमायातं सतोरेव सम्बन्ध इति नियमात् चरमे सर्वं कार्य्यजातं सर्वस्माज्जायेत असम्बद्धत्वाविशेषात् । तदप्युक्तमपि साङ्ख्याचार्य्यैः "असत्त्वान्नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः । असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिरिति" अथैवं मन्येथा असम्बद्धमपि तत् तदेव जनयति यत्र यत्कारणं शक्तिश्च कार्य्यदर्शनोन्नेयेति तन्न सङ्गच्छते तिलेषु तैलजननशक्तिरित्यत्र तैलस्यासत्त्वे सम्बद्धत्वासम्बद्धत्वविकल्पेन तच्छक्तिरिति निरूपणायोगात् । कार्य्यकारणयोरभेदाच्च कार्य्यस्य सत्त्वं कारणात् पृथक् न भवति पटस्तन्तुभ्यो न भिद्यते तद्धर्म्मत्वात् यदेवं न तदेवं यथा गौरश्वः, तद्धर्म्मश्च पटस्तस्मान्नार्थान्तरम् । तर्हि प्रत्येकं त एव प्रावरणकार्य्यं कुर्य्युरिति चेत् संस्थानभेदेनाविर्भूतपटभावानां प्रावरणार्थक्रियाकारित्वोपपत्तेः यथा हि कूर्म्मस्याङ्गानि कूर्म्मशरीरे निविशमानानि तिरोभवन्ति निःसरन्ति चाविर्भवन्ति एवं कारणस्य तन्त्वादेः पटादयो विशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते निविशमानास्तिरोभवन्तो विनश्यन्तीत्युच्यन्ते न पुनरसतामुत्पत्तिः सतां वा विनाशः । यथोक्तं भगवद्गीतायाम् "नासतो विद्यते भावो नाभावो विद्यते सतः" इति । ततश्च कार्य्यानुमानात् तत्प्रधानसिद्धिः । तदुक्तम् "असदकरणादुपादानग्रहणात् सर्व्वसम्भवाभावात् । शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्य्यमिति" । नापि सतो ब्रह्मतत्त्वस्य विवर्त्तः प्रपञ्चः बाधानुपलम्भात् अधिष्ठानारोप्ययोश्चिज्जड़योः कलधौतशुक्त्यादिवत् सारूप्याभावेनारोपासम्भवाच्च । तस्मात् सुखदुःखमोहात्मकस्य तथाविधकारणमवधारणीयं तथा च प्रयोगः विमतं भावजातं सुखदुःखमोहात्मककारणकं तदन्वितत्वात् यद्येनान्वीयते तत्तत्कारणकं यथा रुचकादिकं सुवर्णान्वितं सुवर्णकारणकं तथाचेदं तस्मात्तथेति । तत्र जगत्कारणे येयं सुखात्मकता तत् सत्त्वं, या दुःखात्मकता तद्रजः, या च मोहात्मकता तत्तम इति त्रिगुणात्मककारणसिद्धिः तथा हि प्रत्येकं भावास्त्रैगुण्यवन्तोऽनुभूयन्ते यथा मैत्रदारेषु सत्यवत्यां मैत्रस्य सुखमाविरस्ति तं प्रति सत्त्वगुणप्रादुर्भावात् तत्सपत्नीनां दुःखम् ताः प्रति रजोगुणप्रादुर्भावात् । तामलभमानस्य चैत्रस्य मोहो भवति तं प्रति तमोगुणसमुद्भवात् । एवमन्यदपि घटादिकं लभ्यमानं सुखाकरोति परैरपि ह्रियमाणं दुःखाकरोति उदासीनस्योपेक्षाविषयत्वेनोपतिष्ठते उपेक्षाविषयत्वं नाम मोहः मुह-वैचित्त्ये इत्य-

स्याद्वातोमोहयन्त्रनिवृत्तेः उभयेष्वपीयेषु चित्तवृत्त्यनुदयात्। तस्मात् सर्वं भावजातं सुखदुःखमोहात्मकं त्रिगुणप्रधानकारणकमवगम्यते । तथाच श्वेताश्वतरोपनिषदि श्रूयते "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः । अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति । अत्र लोहितशुक्लकृष्णशब्दा रञ्जकत्वप्रकाशकत्वावरकत्वसाधर्म्यात् रजस्सत्वतमोगुणत्वप्रतिपादनपराः ।

नन्वचेतनं प्रधानं चेतनानधिष्ठितं महदादिकार्य्ये न व्याप्रियते अतः चेनचित्चेतनेनाधिष्ठात्रा भवितव्यं तथाच सर्व्वार्थदर्शी परमेश्वरः स्वीकर्त्तव्यः स्यादिति चेत् तदसङ्गतम् अचेतनस्यापि प्रधानस्य प्रयोजनवशेन प्रवृत्त्युपपत्तेः दृष्टञ्च अचेतनं चेतनानधिष्ठितं पुरुषार्थाय प्रवर्त्तमानं यथा वत्सविवृद्ध्यर्थमचेतनं क्षीरं प्रवर्त्तते यथा जलमचेतनं लोकोपकाराय प्रवर्त्तते तथा प्रकृतिरचेतनापि पुरुषविमोक्षाय प्रवर्त्स्यति । तदुक्तम् "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्येति" । यस्तु परमेश्वरः करुणया प्रवर्त्तक इति परमेश्वरास्तित्ववादिनां डिण्डिमः स प्रायेण गतः विकल्पानुपपत्तेः स किं सृष्टेः प्राक् प्रवर्त्तते सृष्ट्युत्तरकालं वा आद्ये शरीराद्यभावेन दुःखानुत्पत्तौ जीवानां दुःखप्रहाणेच्छानुपपत्तिः, द्वितीये परस्पराश्रयप्रसङ्गः करुणया सृष्टिः सृष्ट्या च कारुण्यमिति । तस्मादचेतनस्यापि चेतनानधिष्ठितस्य प्रधानस्य महदादिरूपेण परिणामः पुरुषार्थप्रयुक्तः प्रधानपुरुषसंयोगनिमित्तः । यथा निर्व्यापारस्याप्ययस्कान्तस्य सन्निधानेन लोहस्य व्यापारः तथा निर्व्यापारस्य पुरुषस्य सन्निधानेन प्रधानव्यापारो युज्यते । प्रकृतिपुरुषसम्बन्धश्च पङ्ग्वन्धवत्परस्परापेक्षानिबन्धनः । प्रकृतिर्हि भोग्यतया भोक्तारं पुरुषमपेक्षते पुरुषोऽपि भेदाग्रहाद्बुद्धिच्छायापत्त्या तद्गतं दुःखत्रयं वारयमाणः कैवल्यमपेक्षते । तत्प्रकृतिपुरुषविवेकनिबन्धनम्। न च तदन्तरेण युक्तमिति कैवल्यार्थं पुरुषः प्रधानमपेक्षते । यथा खलु कौचित् पङ्ग्वन्धौ पथि सार्थेन गच्छन्तौ दैवकृतादुपप्लवात् परित्यक्तसार्थौ मन्दमन्दमितस्ततः परिभ्रमन्तौ भयाकुलौ दैववशात् संयोगमुपगच्छेतां तत्र चान्धेन पङ्गुः स्कन्धमारोपितः ततः पङ्गुदर्शितेन मार्गेणान्धः समीहितं स्थानं प्राप्नोति पङ्गुरपि स्कन्धाधिरूढः । तथा परस्परापेक्षप्रधानपुरुषनिबन्धनः सर्गः । यथोक्तम् "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि सम्बन्धस्तत्कृतः सर्गः" इति । ननु पुरुषार्थनिबन्धना भवतु प्रकृतेः प्रवृत्तिः निवृत्तिस्तु कथमुपपद्यते ? इति चेदुच्यते यथा भर्त्रा दृष्टदोषा स्वैरिणी भर्त्तारं पुनर्नोपैति यथा वा कृतप्रयोजना नर्त्तकी निवर्त्तते तथा प्रकृतिरपि। यथोक्तम् "रङ्गस्य दर्शयित्वा निवर्त्तते नर्त्तकी यथा नृत्यात् । पुरुषस्य तथात्मानं प्रकाश्य विनिवर्त्तते प्रकृतिरिति" । एतदर्थं निरीश्वरसाङ्ख्यशास्त्रप्रवर्त्तककपिलानुसारिणां मतमुपन्यस्तम्" ।

तत्र मूलीभूतमादिमं तत्त्वसमासाख्यसूत्रं तदुक्तार्थप्रवचनात् षडध्यायाः सांख्यप्रवचनसंज्ञेति यथोक्तं तद्भाष्ये "नन्वेवमपि तत्त्वसमासाख्यसूत्रैः सहास्याः षडध्यायाः पौनरुक्त्यमिति चेत् नैवम् संक्षेपविस्तररूपेणोभयोरप्यपौनरुक्त्यात् अतएवाऽस्याः षडध्यायाः योगदर्शनस्येव साङ्ख्यप्रवचनसंज्ञा युक्ता । तत्त्वसमासाख्यं हि यत् सङ्क्षिप्तं साङ्ख्यदर्शनं तस्यैव प्रकर्षेणास्यां निर्वचनमिति,विशेषस्त्वयं यत् षडध्यायां तत्त्वसमासाख्योक्तार्थविस्तरमात्रं योगदर्शने त्वभ्युपगमवादप्रतिषिद्धस्येश्वरस्य निरूपणेन न्यूनतापरिहारोऽपीति" षडध्याय्यां च क्रमेणैतेऽर्था यथा "हेयहाने तयोर्हेतू व्यूहा एते यथाक्रमम् । चत्वारः शास्त्रमुख्यार्थाः आद्याध्याये प्रपञ्चिताः । संक्षिप्तसांख्यसूत्राणामर्थस्यात्र प्रपञ्चनात् । शास्त्रं योगवदेवैतत् सांख्यप्रवचनाभिधम्" १ । लिङ्गदेहस्य घटकं यत् सप्तदशसंख्यकम् । प्रधानकार्य्यं तत्सूक्ष्मं द्वितीयाध्यायगामि च २ । अत्यन्तावसथ्यन्तः कार्य्योऽव्यक्तस्य नात्मनः । तृतीयोक्तोविवेकोऽत्र परवैराग्यसाधनम् ३ । अध्यायत्रितयोक्तस्य विवेकस्यान्तरङ्गकम् । आख्यायिकाभिः संप्रोक्तं तुर्य्येऽध्याये समासतः ४। स्वसिद्धान्तविरुद्धार्थवादिनो ये कुवादिनः । पञ्चमे तान् निराकृत्य स्वसिद्धान्तो दृढीकृतः ५ । शास्त्रमुख्यार्थविस्तारस्तन्त्राख्योऽनुक्तपूरणैः । षष्ठाध्याये कृतः पश्चाद्वाक्यार्थस्योपसंहृतः ।

सेश्वरसांख्यमतन्तु पातञ्जलमतत्वेन प्रसिद्धम् तन्मतञ्च पतञ्जलिशब्दे दर्शयिष्यते । तदेव मतं कर्दमप्रजापतेर्देवहूतावाविर्भूय भगवदवतारकपिलः मातरमुपदिदेश तच्च भाग० ३,२५,२९अध्यायेषु वर्णितम् यथा । "अथ ते संप्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् । यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः । ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् । यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम् । अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः

परः । प्रत्यग्धाम स्वयं ज्योतिर्विश्वं येन समन्वितम् । स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः । यदृच्छयैवोपगतामभ्यपद्यत लीलया । गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः । विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया । एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् । कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते । तदस्य संसृतिर्बन्धः पारतन्त्र्यञ्च तत्कृतम् । भवत्यकर्त्तुरीशस्य साक्षिणो निर्वृतात्मनः । कार्य्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः । भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् । देवहूतिरुवाच । प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम ! । ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् । भगवान् उवाच । यत्तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् । पञ्चभिः पञ्चभिः ब्रह्म चतुर्भिर्दशभिस्तथा । एतच्चतुर्व्विंशतिकं गणं प्राधानिकं विदुः । महाभूतानि पञ्चैव भूरापोऽग्निर्म्मरुन्नभः । तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे । इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः । वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते । मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम् । चतुर्द्धा लक्ष्यते भेदोवृत्त्या लक्षणरूपया । एतावानेव संख्यातो ब्रह्मणः सगुणस्य च । सन्निवेशोमया प्रोक्तोयः कालः पञ्चविंशकः । प्रभावं पौरुषं प्राहुः कालमेके यतोभयम् । अहङ्कारविमूढस्य कर्त्तुः प्रकृतिमीयुषः । प्रकृतेर्गुणसाम्यस्य निर्व्विशेषस्य मानवि ! । चेष्टा यतः स भगवान् काल इत्युपलक्षितः । अन्तः पुरुषरूपेण कालरूपेण योबहिः । समन्वेत्येष सत्वानां भगवानात्ममायया । दैवात् क्षुभितधर्म्मिण्यां स्वस्यां योनौ परः पुमान् । आधत्त वीर्य्यं साऽसूत महत्तत्वं हिरण्मयम् । विश्वमात्मगतं व्यञ्जन् कूटस्थोजगदङ्कुरः । स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनं तमः । यत्तत् सत्वगुणं स्वच्छं शान्तं भगवतः पदम् । तदाहुर्व्वासुदेवाख्यं चित्तं तन्महदात्मकम् । स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतसः । वृत्तिभिर्लक्षणं प्रोक्तं यथा मां प्रकृतिः परा । महत्तत्वाद्विकुर्व्वाणाद्भगवद्वीर्य्यसम्भवात् । क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत । वैकारिकस्तैजसश्च तामसश्च यतोभवः । मनसश्चेन्द्रियाणाञ्च भूतानां महतामपि । सहस्रशिरसं साक्षात् यमनन्तं प्रचक्षते । सङ्कर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम् । कर्तृत्वं करणत्वञ्च कार्य्यत्वञ्चेति लक्षणम् । शान्तघोरविमूढत्वमिति वा स्यादहङ्कृतेः । वैकारिकाद्विकुर्व्वाणान्मनस्तत्त्वमजायत । यत्संकल्पविकल्पाभ्यां वर्त्तते कामसम्भवः । यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् । शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः । तैजसात्तु विकुर्व्वाणाद्बुद्धितत्त्वमभूत् सति ! । द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः । संशयोऽथ विपर्य्यासोनिश्चयः स्मृतिरेव च । स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् । तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः । प्राणस्य हि क्रियाशक्तिर्बुद्धेर्व्विज्ञानशक्तिता । तामसाच्च विकुर्व्वाणाद्भगवद्वीर्य्यनोदितात् । शब्दमात्रमभूत्तस्मान्नभः श्रोत्रन्तु शब्दगम । अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च । तन्मात्रत्वञ्च नभसोलक्षणं कवयोविदुः । भूतानां छिद्रदातृत्वं बहिरन्तरमेव च । प्राणेन्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम् । नभसः शब्दतन्मात्रात् कालगत्या विकुर्व्वतः । स्पर्शोऽभवत्ततोवायुस्त्वक् च स्पर्शस्य संग्रहः । मृदुत्वं कठिनत्वञ्च शैत्यमुष्णत्वमेव च । एतत् स्पर्शस्य स्पर्शत्वं तन्मात्रत्वञ्च नभस्वतः । चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः । सर्व्वेन्द्रियाणामात्मत्वं वायोः कर्म्माभिलक्षणम् । वायोश्च स्पर्शतन्मात्रात् रूपं दैवेरिताद्भूत् । समुत्थितं ततस्तेजश्चक्षूरूपोपलम्भनम् । द्रव्याकृतित्वं गुणता व्यक्तिसंस्थत्वमेव च । तेजस्त्वं तेजसः साध्वि ! रूपमात्रस्य वृत्तयः । द्योतनं पचनं पानमदनं हिममर्द्दनम् । तेजसोवृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च । रूपमात्राद्विकुर्व्वाणात्तेजसो दैवनोदितात् । रसमात्रमभूत्तस्मादम्भोजिह्वा रसग्रहः । कषायोमधुरस्तिक्तः कट्वम्ल इति नैकधा । भौतिकानां विकारेण रसएकोविभिद्यते । क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोदनम् । तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः । रसमात्राद्विकुर्व्वाणादम्भसो दैवनोदितात् । गन्धमात्रमभूत्तस्मात् पृथ्वी घ्राणस्तु गन्धगः । करम्भपूतिसौरभ्यशान्तोदग्रादिभिः पृथक् । द्रव्यावयववैषम्याद्गन्ध एकोविभिद्यते । भावनं ब्रह्मणःस्थानं धारणं सद्विशेषणम् । सर्व्वसत्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् । नभोगुणविशेषोऽर्थो यस्य तत् श्रोत्रमुच्यते । वायोर्गुणविशेषोऽर्थो यस्य तत् स्पर्शनं विदुः । तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते । अम्भोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः । भूमेर्गुणविशेषोऽर्थो यस्य घ्राणः स उच्यते । परस्य दृश्यते धर्म्मोह्यपरस्मिन् समन्वयात् । अतोविशेषो भावानां भूमा-

चेवोपलभ्यते । एतान्यसंहत्य यदा महदादीनि सप्त वै । कालकर्म्मगुणोपेतो जगदादिरुपाविशत् । ततस्तेनानुविद्धेभ्यो युक्तेभ्योऽण्डमचेतनम् । उत्थितं पुरुषो यस्मात् उदतिष्ठदसौ विराट् । एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः । तोयादिभिः परिवृतं प्रधानेनावृतं बहिः । यत्र लोकवितानोऽयं रूपं भगवतो हरेः । हिरण्मयादण्डकोषादुत्थाय सलिलेशयात् । तमाविश्य महादेवो बहुधा निर्बिभेद खम् । निरभिद्यतास्य प्रथमं मुखं वाणी ततोऽभवत् । वाण्यावह्निरथो नासे प्राणतो घ्राण एतयोः । घ्राणाद्वायुरभिद्येतामक्षिणी चक्षुरेतयोः । तस्मात् सूर्य्योऽन्वभिद्येतां कर्णौ श्रोत्रं ततो दिशः । निर्बिभेद विराजस्त्वग्रोमश्मश्र्वादयस्ततः । तत ओषधयश्चासन् शिश्नं निर्बिभिदे ततः । रेतस्तस्मादाप आसन्निरभिद्यत वै गुदम् । गुदादपानोऽपानाच्च मृत्युर्लोकभयङ्करः । हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् । पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः । नाड्योऽस्य निरभिद्यन्त ताभ्यो लोहितमाभृतम् । नद्यस्ततः समभवन्नुदरं समभिद्यत । क्षुत्पिपासे ततः स्यातां समुद्रस्त्वेतयोरभूत् । अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम् । मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेर्गिरां पतिः । अहङ्कारस्ततो रुद्रः चित्तं चैत्यस्ततोऽभवत् । एते ह्यभ्युत्थिता देवा नैवास्योत्थापनेऽशकन् । पुनराविविशुः खानि तमुत्थापयितुं क्रमात् । वह्निर्वाचा मुखं भेजे नोदतिष्ठत्तदा विराट् । घ्राणेन नासिके वायुर्नोदतिष्ठत्तदा विराट् । अक्षिणी चक्षुषादित्यो नोदतिष्ठत्तदा विराट् । हस्ताविन्द्रो बलेनैव नोदतिष्ठत्तदा विराट् । विष्णुर्गत्यैव चरणौ नोदतिष्ठत्तदा विराट् । नाडीर्नद्यो लोहितेन नोदतिष्ठत्तदा विराट् । क्षुत्तृड्भ्यामुदरं सिन्धुर्नोदतिष्ठत्तदा विराट् । बुद्ध्या ब्रह्मापि हृदयं नोदतिष्ठत्तदा विराट् । श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत्तदा विराट् । त्वचं रोमभिरोषध्यो नोदतिष्ठत्तदा विराट् । रेतसा शिश्नमापस्तु नोदतिष्ठत्तदा विराट् । गुदं मृत्युरपानेन नोदतिष्ठत्तदा विराट् । रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्तदा विराट् । चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा । विराट् तदैव पुरुषः सलिलादुदतिष्ठत । यथा प्रसुप्तं हृदयं प्राणेन्द्रियमनोधियः । प्रभवन्ति विना येन नोत्थापयितुमोजसा । तमस्मिन् प्रत्यगात्मानं धिया योगप्रवृत्तया । भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत्"

इति भागवते तृतीयस्कन्धे षड्विंशाध्याये कपिलवचः । "प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः । अविकारादकर्त्तृत्वान्निर्गुणत्वाज्जलार्कवत् । स एष यर्हि प्रकृतेर्गुणेष्वपि विसज्जते । अहङ्क्रियाविमूढात्मा कर्त्तास्मीत्यभिमन्यते । तेन संसारपदवीमवशोऽभ्येत्य निर्वृतः । प्रासङ्गिकैः कर्म्मदोषैः सदसन्मिश्रयोनिषु । अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्त्तते । ध्यायतो विषयानस्य स्वप्नेनार्थागमो यथा । अतएव शनैश्चित्तं प्रसक्तमसतां पथि । भक्तियोगेन तीव्रेण विरक्त्या च नयेद्वशम् । यमादिभिर्योगपथैरभ्यसन् श्रद्धयान्वितः । मयि भावेन सत्येन मत्कथाश्रवणेन च । सर्व्वभूतसमत्वेन निर्वैरेणाऽप्रसङ्गतः । ब्रह्मचर्य्येण मौनेन स्वधर्म्मेण महीयसा । यदृच्छयोपलब्धेन सन्तुष्टो मितभुङ्मुनिः । विविक्तशरणः शान्तो मैत्रः करुण आत्मवान् । सानुबन्धे च देहेऽस्मिन् न कुर्व्वन्नसदाग्रहम् । ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च । निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः । उपलभ्यात्मनात्मानं चक्षुषेवार्कमात्मदृक् । मुक्तलिङ्गं सदाभासमसति प्रतिपद्यते । सतो बन्धुमसच्चक्षुः सर्वानुस्यूतमद्वयम् । यथा जलस्थ आभासः स्थलस्थेनावदृश्यते । स्वाभासेन तथा सूर्यो जलस्थेन दिविस्थितः । एवं त्रिवृदहङ्कारो भूतेन्द्रियमनोमयैः । स्वाभासैर्लक्षितोऽनेन सदाभासेन सत्यदृक् । भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिष्विह निद्रया । लीनेष्वसति यस्तत्र विनिद्रो निरहङ्क्रियः । मन्यमानस्तदात्मानमनष्टो नष्टवन्मृषा । नष्टेऽहङ्करणे द्रष्टा नष्टवित्त इवातुरः । एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते । साहङ्कारस्य द्रव्यस्य योऽवस्थानमनुग्रहः । देवहूतिरुवाच । पुरुषं प्रकृतिर्ब्रह्मन् ! न विमुञ्चति कर्हिचित् । अन्योन्यापाश्रयत्वाच्च नित्यत्वाच्चानयोः प्रभो ! यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः । अपां रसस्य च यथा तथा बुद्धेः परस्य च । अकर्त्तुः कर्म्मबन्धोऽयं पुरुषस्य यदाश्रयः । गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम् ? । क्वचित्तत्त्वावमर्शेन निवृत्तं भयमुल्बणम् । अनिवृत्तनिमित्तत्वात् पुनः प्रत्यवतिष्ठते । श्रीभगवानुवाच । अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना । तीव्रया मयि भक्त्या च श्रुतसंभृतया चिरम् । ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा । तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना । प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् । तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः । भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः ।

नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च । यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् । स एव प्रतिबुद्धस्य न विमोहाय कल्पते । एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् । युञ्जतो नापकुरुते आत्मारामस्य कर्हिचित् । यदैवमध्यात्मरतः कालेन बहुजन्मना । सर्व्वत्र जातवैराग्य आब्रह्मभवनान्मुनिः । मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा । निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् । प्राप्नोतीहाञ्जसा धीरः स्वदृशा च्छिन्नसंशयः । यत् गत्वा न निवर्त्तेत योगी लिङ्गविनिर्गमे । यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेऽङ्ग ! । अनन्यहेतुष्वथ मे गतिः स्यादात्यन्तिकी यत्र न मृत्युहासः” भाग० ३स्क०२७अ०

“योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे ! । मनो येनैव विधिना प्रसन्नं याति सत्पथम् । स्वधर्म्माचरणं शक्त्या विधर्म्माच्च निवर्त्तनम् । दैवाल्लब्धेन सन्तोष आत्मविच्चरणार्च्चनम् । ग्राम्यधर्म्मनिवृत्तिश्च मोक्षधर्म्मरतिस्तथा । मितमेध्यादनं शश्वद्विविक्तक्षेमसेवनम् । अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः । ब्रह्मचर्य्यं तपः शौचं स्वाध्यायः पुरुषार्च्चनम् । मौनं सदासनजयः स्थैर्य्यं प्राणजयः शनैः । प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि । स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणा । वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः । एतैरन्यैश्च पथिभिर्म्मनो दुष्टमसत्पथम् । बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः । शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम् । तस्मिन् स्वस्तिकमासीन ऋजुकायः समभ्यसेत् । प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः । प्रतिकूलेन वा चित्तं यथा स्थिरमचञ्चलम् । मनोऽचिरात् स्याद्विरजं जितश्वासस्य योगिनः । वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम् । प्राणायामैर्द्दहेद्दोषान् धारणाभिश्च किल्विषान् । प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् । यदा मनः स्वं विरजं योगेन सुसमाहितम् । काष्ठां भगवतो ध्यायेत् स्वनासाग्रावलोकनः । प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम् । नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम् । लसत्पङ्कजकिञ्जल्कपीतकौशेयवाससम् । श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् । मत्तद्विरेफकलया परीतं वनमालया । परार्द्ध्यहारवलयकिरीटाङ्गदनूपुरम् । काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम् । दर्शनीयतमं शान्तं मनोनयनवर्द्धनम् । अपीच्यदर्शनं शश्वत् सर्व्वलोकनमस्कृतम् । सन्तं वयसि कैशोरे भृत्यानुग्रहकातरम् । कीर्त्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् । ध्यायेद्देवं समग्राङ्गं यावन्न च्यवते मनः । स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् । प्रेक्षणीयेहितं ध्यायेत् शुद्धभावेन चेतसा । तस्मिन् लब्धपदं चित्तं सर्व्वावयवसंस्थितम् । विलक्ष्यैकत्र संयुञ्ज्यादङ्गे भगवतो मुनिः । सञ्चिन्तयेद्भगवतश्चरणारविन्दं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् । उत्तुङ्गरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयान्धकारम् । यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्द्ध्न्यधिकृतेन शिवः शिवोऽभूत् । ध्यातुर्म्मनःशमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविन्दम् । जानुद्वयं जलजलोचनया जनन्या लक्ष्म्याखिलस्य सुरवन्दितया विधातुः । ऊर्व्वोर्निधाय करपल्लवरोचिषा यत् संलालितं हृदि विभोरभवस्य कुर्य्यात् । ऊरू सुपर्णभुजयोरधिशोभमानावोजोनिधी अतसिकाकुसुमावभासौ । व्यालम्बिपीतवरवाससि वर्त्तमानकाञ्चीकलापपरिरम्भि नितम्बबिम्बम् । नाभीह्रदं भुवनकोषगुहोदरस्थं यत्रात्मयोनिधिषणाखिललोकपद्मम् । व्यूढं हरिन्मणिवृषस्तनयोरमुष्य ध्यायेत् द्वयं विशदहारमयूखगौरम् । वक्षोऽधिवासमृषभस्य महाविभूतेः पुंसां मनोनयननिर्वृतिमादधानम् । कण्ठञ्च कौस्तुभमणेरधिभूषणार्थं कुर्य्यान्मनस्यखिललोकनमस्कृतस्य । बाहूंश्च मन्दरगिरेः परिवर्त्तनेन निर्णिक्तबाहुवलयानधिलोकपालान् । संचिन्तयेद्दशशतारमसह्यतेजः शङ्खञ्च तत्करसरोरुहराजहंसम् । कौमोदकीं भगवतो दयितां स्मरेत दिग्धामरातिभटशोणितकर्द्दमेन । मालां मधुव्रतवरूथगिरोपघुष्टां चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे । भृत्यानुकम्पितधियेह गृहीतमूर्त्तेः सञ्चिन्तयेद्भगवतो वदनारविन्दम् । यद्विस्फुरन्मकरकुण्डलवल्गितेन विद्योतितामलकपोलमुदारनासम् । यत् श्रीनिकेतमलिभिः परिसेव्यमानम् भृत्या स्वया कुटिलकुन्तलवृन्दजुष्टम् । मीनद्वयाश्रयमधिक्षिपदब्जनेत्रम् ध्यायेन्मनोमयमतन्द्रित उल्लसद्भ्रु । तस्यावलोकमधिकं कृपयातिघोरतापत्रयोपशमनाय निसृष्टमक्ष्णोः । स्निग्धस्मितानुगुणितं विपुलप्रसादम् ध्यायेच्चिरं विततभावनया गुहायाम् । हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारम् । संमोहनाय रचितं निजमाययास्य भ्रूमण्डलं मुनिकृते मकरध्वजस्य । ध्यानायनं प्रहसितं बहुलाधरोष्ठभासारुणायिततनुद्विजकुन्दपङ्क्ति । ध्यायेत् स्वदेहकुहरेऽवसितस्य विष्णोर्भक्त्यार्द्रयार्पितमना न पृथक् दिदृक्षेत् । एवं हरौ भगवति

प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकप्रमोदात्। औत्कण्ठ्यवाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तवडिशं शनकैर्वियुङ्क्ते। मुक्ताश्रयं यर्हि तु निर्विषयं विरक्तं निर्व्वाणमृच्छति मनः सहसा यथार्च्चिः। आत्मानमत्र पुरुषोऽव्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः। सोऽप्येतया चरमया मनसो निवृत्त्या तस्मिन्महिम्न्यवसितः सुखदुःखबाह्ये। हेतुत्वमप्यसति कर्त्तरि दुःखयोर्यत् स्वात्मन्! विधत्त उपलब्धपरात्मकाष्ठः। देहञ्च तं न चरमः स्थितमुत्थितं वा सिद्धो विपश्यति यतोऽध्यगमत् स्वरूपम्। दैवादपेतमुत दैववशादुपेतं वासो यथा परिकृतं मदिरामदान्धः। देहोऽपि दैववशगः खलु कर्म्म यावत् स्वारम्भकं प्रतिसमीक्षत एव सासुः। तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तु। यथा पुत्त्राच्च वित्ताच्च पृथङ्मर्त्त्यः प्रतीयते। अप्यात्मत्वेनाभिमताद्देहादेः पुरुषस्तथा। यथोल्मुकाद्विस्फुलिङ्गाद्धूमाद्वापि स्वसम्भवात्। अप्यात्मत्वेनाभिमताद्यथाग्निः पृथगुल्मुकात्। भूतेन्द्रियान्तःकरणात् प्रधानाज्जीवसंज्ञितात्। आत्मा तथा पृथग्द्रष्टा भगवान् ब्रह्मसंज्ञितः। सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि। ईक्षेतानन्यभावेन भूतेष्विव तदात्मताम्। स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते। योनीनां गुणवैषम्यात् तथात्मा प्रकृतौ स्थितः। तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम्। दुर्व्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते” इति भा० ३स्क० २८अ०।

“देवहूतिरुवाच। लक्षणं महदादीनां प्रकृतेः पुरुषस्य च। स्वरूपं लक्ष्यतेऽमीषां येन तत् पारमार्थिकम्। यथा सांख्येषु कथितं यन्मूलं तत् प्रचक्षते। भक्तियोगस्य मे मार्गं ब्रूहि विस्तरतः प्रभो!। विरागो येन पुरुषो भगवन्! सर्व्वतो भवेत्। आचक्ष्व जीवलोकस्य विविधा मम संसृतीः। कालस्येश्वररूपस्य परेषाञ्च परस्य ते। स्वरूपं वत कुर्व्वन्ति यद्धेतोः कुशलं जनाः। लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये। श्रान्तस्य कर्म्मस्वनुविद्धया धिया त्वमाविरासीः किल योगभास्करः। श्रीमैत्रेय उवाच। इति मातुर्वचः श्लक्ष्णं प्रतिनन्द्य महामुनिः। आबभाषे कुरुश्रेष्ठ! प्रीतस्तां करुणार्दितः। श्रीभगवानुवाच। भक्तियोगो बहुविधो मार्गैर्भामिनि! भाव्यते। स्वभावगुणमार्गेण पुंसां भावो विभिद्यते। अभिसन्धाय यो हिंसां दम्भं मात्सर्य्यमेव वा। संरम्भी भिन्नदृग्भावं मयि कुर्य्यात् स तामसः। विषयानभिसन्धाय यश ऐश्वर्य्यमेव वा। अर्च्चादावर्च्चयेद्यो मां पृथग्भावः स राजसः। कर्म्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम्। यजेद् यष्टव्यमिति वा पृथग्भावः स सात्त्विकः। मद्गुणश्रुतिमात्रेण मयि सर्व्वगुहाशये। मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ। लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्। अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे। सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः। स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः। येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते। निषेवितानिमित्तेन स्वधर्म्मेण महीयसा। क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः। मद्धिष्ण्यदर्शनस्पर्शपूजास्तुतिनिबन्धनैः। भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च। महतां बहुमानेन दीनानामनुकम्पया। मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च। आध्यात्मिकानुश्रवणान्नामसंकीर्त्तनाच्च मे। आर्जवेनार्य्यसङ्गेन निरहङ्क्रियया तथा। मद्धर्म्मणो गुणैरेतैः परिसंशुद्ध आशयः। पुरुषस्याञ्जसाभ्येति श्रुतिमात्रगुणं हि माम्। यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात्। एवं योगरतं चेत आत्मानमविकारि यत्। अहं सर्व्वेषु भूतेषु भूतात्मावस्थितः सदा। तमवज्ञाय मां मर्त्त्यः कुरुतेऽर्च्चाविडम्बनम्। यो मां सर्व्वेषु भूतेषु सन्तमात्मानमीश्वरम्। हित्वार्च्चां भजते मौढ्यात् भस्मन्येव जुहोति सः। द्विषतः परकाये मां मानिनो भिन्नदर्शिनः। भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति। अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे!। नैव तुष्येऽर्च्चितोऽर्च्चायां भूतग्रामावमानिनः। अर्च्चादावर्च्चयेत्तावदीश्वरं मां स्वकर्म्मकृत्। यावन्न वेद स्वहृदि सर्व्वभूतेष्ववस्थितम्। आत्मनश्च परस्यापि यः करोत्यन्तरोदरम्। तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्वणम्। अथ मां सर्व्वभूतेषु भूतात्मानं कृतालयम्। अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा। जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे!। ततः सचित्ताः प्रवराः ततश्चेन्द्रियवृत्तयः। तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः। तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः। रूपभेदविदस्तत्र ततश्चोभयतोदतः। तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो द्विपात्। ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः। ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः। अर्थज्ञात् संशयच्छेत्ता ततः श्रेयान् स्वकर्म्मकृत्। मुक्तसङ्गस्ततो भूयानदोग्धा धर्म्ममात्मनः। तस्मिन्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः। मय्यर्पितात्मनः

पुंसोमयि संन्यस्तकर्मणः । न पश्यामि परं भूतमकर्त्तुः समदर्शनात् । मनसैतानि भूतानि प्रणमेद्बहु मानयन् । ईश्वरो जीवकलया प्रविष्टो भगवानिति । भक्तियोगश्च योगश्च मया मानव्युदीरितः । ययोरेकतरेणैव पुरुषः पूरुषं व्रजेत् । एतद्भगवतोरूपं ब्रह्मणः परमात्मनः । परं प्रधानं पुरुषं दैवं कर्म विचेष्टितम् । रूपभेदास्पदं दिव्यं काल इत्यभिधीयते । भूतानां महदादीनां यतोभिन्नदृशां भयम् । योऽन्तः प्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः । स विष्ण्वाख्योऽधियज्ञोऽसौ कालः कलयतां प्रभुः । नचास्य कश्चिद्दयितो न द्वेष्यो न च बान्धवः । आविशत्यप्रमत्तोऽसौ प्रमत्तजनमन्तकृत् । यद्भयाद्वाति वातोऽयं सूर्य्यस्तपति यद्भयात् । यद्भयाद्वर्षते देवो भगणो भाति यद्भयात् । यद्वनस्पतयोभीता लताश्चौषधिभिः सह । स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च । स्रवन्ति सरितो भीतानोत्सर्पत्युदधिर्यतः । अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात् । अदोददाति श्वसतां पदं यन्नियमादमः । लोकं स्वदेहं तनुते महान् सप्तभिरावृतम् । गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात् । वर्त्तन्तेऽनुयुगं येषां वश एतच्चराचरम् । सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः । जनञ्जनेन जनयन् मारयन् मृत्युनान्तकम्" भाग० २९ अ० ।

भगवदवतार एव कपिलः सगरसन्ततीर्हुङ्कारेण भस्मीचकार यथोक्तं रामा० आ० ४० अ० "यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः । महिषी माधवस्यैषा स एष भगवान् प्रभुः । कापिलं रूपमास्थाय धारयत्यनिशं धराम् । तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः । पृथिव्याश्चापि निर्भेदो दृष्ट एव सनातनः । सगरस्य च पुत्राणां विनाशोऽदीर्घदर्शिनाम्" इति ब्रह्मवाक्यमुपवर्ण्य रामं प्रति विश्वामित्रेणोक्तम् । "ततः प्रागुत्तरां गत्वा सागराः प्रथितां दिशम् । रोषादभ्यखनन् सर्वे पृथिवीं सगरात्मजाः । ते तु सर्वे महात्मानो भीमवेगाः महाबलाः । ददृशुः कपिलं तत्र वासुदेवं सनातनम् । हयञ्च तस्य देवस्य चरन्तमविदूरतः । प्रहर्षमतुलं प्राप्ताः सर्वे ते रघुनन्दन ! । ते तं यज्ञहनं ज्ञात्वा क्रोधपर्य्याकुलेक्षणाः । खनित्रलाङ्गलधरा नानावृक्षशिलाधराः । अभ्यधावन्त संक्रुद्धास्तिष्ठतिष्ठेति चाब्रुवन् । अस्माकं त्वं हि तुरगं यज्ञियं हृतवानसि । दुर्मेधस्त्वं हि संप्राप्तान् विद्धि नः सगरात्मजान् । श्रुत्वा तद्वचनं तेषां कपिलो रघुनन्दन ! । रोषेण महताविष्टो हुङ्कारमकरोन्मुनिः । ततस्तेनाप्रमेयेण कपिलेन महात्मना । भस्मराशीकृताः सर्वे काकुत्स्थ ! सगरात्मजाः" । अत्र प्रागुत्तरामिति भूमध्यस्थब्रह्मापेक्षया तत्स्थानस्य तथात्वात् । वस्तुतः सिद्धेशः कपिलोऽपि भगवदवतारसत्र । "पञ्चमे कपिलो नाम सिद्धेशः कालविप्लुतम् । प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्" भा० १,३,११ उक्तेः "सिद्धानां कपिलो मुनिः" गीतोक्तेश्च अन्यावतारकथनन्तु कल्पभेदाभिप्रायमित्यविरोधः । स च प्रत्यहं तर्पणीयर्षिभेदः "सनकश्च सनन्दश्च तृतीयश्च सनातनः । कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा" ब्रह्मपु० तर्पणमन्त्रलिङ्गात् । "कपिलः पिङ्गलः पिङ्गः" इत्यमरे पिङ्गलकपिलयोः पर्य्यायत्वेऽपि तयोरीषद्भेदोऽस्त्येव अत एव सुश्रुते "अत ऊर्द्धं प्रवक्ष्यामि वर्णान् इत्युपक्रम्य नीलः पीतः हरितः श्यामः कर्बुरः कृष्णः रक्तः कपिलः पिङ्गलः इति कपिलपिङ्गलयोर्भेदेन निर्देशः । "वाताय कपिला विद्युत्" सि० कौ० । ८सुश्रुतोक्ते मूषिकभेदे "पूर्व्वमुक्ताः शुक्रविषा मूषिका ये समासतः । नामलक्षणभैषज्यैरष्टादश निबोध मे । लालनः पुत्रक इत्यादिना "श्वेतेन महता सार्द्धं कपिलेनाखुना तथेति विभज्य । तद्दंशोपद्रवचिकित्सा तत्रोक्ता यथा "कपिलेन व्रणक्लेदो ज्वरो ग्रन्थ्युद्गमस्तथा । क्षौद्रेण लिह्यात्त्रिफलां श्वेतां चापि पुनर्नवाम्" सुश्रुतोक्ते ६लूताभेदे स्त्री यथा ।

"विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम् । वशिष्ठं कोपयामास गत्वाश्रमपदं किल । कुपितस्य मुनेस्तस्य ललाटात्स्वेदबिन्दवः । अपतन्दर्शनादेव शकलास्तीव्रतेजसः । लूने तृणे महर्षीणां धेन्वर्थं सम्भृतेऽपि च । ततो जातास्त्विमा घोरा नानारूपा महाविषाः । अपकाराय वर्त्तन्ते नृपसाधनवाहने । यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः । तस्माल्लूतेति भाष्यन्ते सङ्ख्यया ताश्च षोडश । कृच्छ्रसाध्यास्तथाऽसाध्या लूताश्च द्विविधाः स्मृताः । तासामष्टौ कृच्छ्रसाध्या वर्ज्यास्तावन्त एव तु । त्रिमण्डला तथा श्वेता कपिला पीतिका तथा । आखमूत्रविषा रक्ता कसना चाष्टमी स्मृता । ताभिर्दष्टे शिरोदुःखं कण्डूर्दंशे च वेदना । भवन्ति च विशेषेण गदाः श्लैष्मिकवातिकाः । सौवर्णिका लाजवर्णा जालिनी एणीपदी तथा । कृष्णाग्निवर्णा काकाण्डा मालागुणाष्टमी स्मृता । ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च । ज्वरो-

दाहोऽतिसारस्तृ गदाः स्युश्च त्रिदोषजाः । पिडका विविधाकारा मण्डलानि महान्ति च । शोफा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा । सामान्यं सर्वभूतानामेतदादंशलक्षणम् । विशेषलक्षणं तासां वक्ष्यामि सचिकित्सितम्" इत्युपक्रम्य "आद्ये पिडका ताम्रा कपिलायाः स्थिरा भवेत् । शिरसो गौरवं दाहस्तिमिरं भ्रममेव च"१०गोविशेषे स्त्री कपिलादानशब्दे विवृतिः। कपिलानां नरश्रेष्ठ । शतस्य फलमश्नुते"भा०व०८३ अ०।"क्षत्रियस्यैव इत्तस्यो वैश्यः शूद्रोऽथ वा पुनः । यः पिबेत् कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यकृत्" प्रा०वि० आप०।"कापिलं यः पिबेच्छूद्रो नरकेषु विपच्यते"प्रा०वि०भवि०पु० तत्र शूद्रस्य कपिलाक्षीरपाणं महापातकं तत्पाननिषेधस्तु क्षत्रियवैश्ययोरपीति भेदः । ११नदीभेदे स्त्री "कज्जलाचलशैलात्तु पूर्वस्मिन् शुभपर्वतः । यस्या सह पुरा रेमे यत्र शक्रः सुरेश्वरः । तत्पूर्वस्यां महादेवि ! नदी कपिलसंज्ञिता । तां च स्नात्वा नरो गङ्गास्नानजं फलमाप्नुयात्" कालिपु० ८१अ० १२कपिलपुष्पायां शिंशपायां स्त्री राजनि० । १३रेणुकाख्यगन्धद्रव्ये १४पुण्डरीकदिग्गजस्त्रियाञ्च हारा०१५गट्टकन्यायां १६शिंशपामात्रे १७राजनीतौ च स्त्री राजनि० । कपिलवर्णायां स्त्रियां तु टाबेव वर्णवाचित्वेऽपि अनुदात्तत्वाभावात् "नोद्वहेत कपिलां कन्याम्" मनुः कुकुरजातिस्त्रियान्तु जातित्वात् ङीष् । कूर्मविभागे नैरृतदिक्स्थे १८देशभेदे पु०' नैरृत्यां दिशि देशाः" इत्युपक्रम्य "कपिलनारीमुखानर्त्ताः" इति वृह०सं०। अत्र कपिलनारीमुख इत्येकं नाम इत्यन्ये । [म्बिते ।

**कपिलक** त्रि० शौ० कप—इरन् स्वार्थे क रस्य लः । कम्पा·

**कपिलकादि** पु० पाणिन्युक्ते रकारस्थाने लकारादेशनिमित्ते शब्दगणे स च गणः "कपिलक तिर्वीलक लोमानि पांशुल काल शुक्ल कपिलिका तर्पिलिका तर्पिलि"। यथा कपिरक+कपिलक एवं तिर्वीरक+तिर्वीलक इत्यादि ।

**कपिलद्युति** पु०कपिला द्युतिरस्य ।१सूर्ये शब्दच०। कर्म० २कपिलायां द्युतौ स्त्री।

**कपिलद्राक्षा** स्त्री कपिला द्राक्षा । द्राक्षाभेदे राजनि०

**कपिलद्रुम** पु०कर्म० । काञ्चीनामसुगन्धिद्रवृक्षे शब्दच० ।

**कपिलधारा** स्त्री कपिलेव शुभ्रा धारा यस्याः संज्ञात्वात् "ङ्यापोरिति"पा०ह्रस्वः।गङ्गायां हेमच०। कपिलानां तदीयदुग्धानां धारा संज्ञायां "ङ्यापोरिति"पा०ह्रस्वः।२कपिलादीनां दुग्धधारायां ३तत्कृते काशी उत्तरस्यां मास्थे तीर्थभेदे च उपचारात् तयोरभेदात् । तदाविर्भावादि काशी०६२अ०।"एतस्मिन्नन्तरे प्राप्ता गोलोकात् पञ्च धेनवः। सुनन्दा सुमनाश्चापि सुशीला सुरभिस्तथा। पञ्चमी कपिला चापि सर्वाघौघविघट्टिनी । वात्सल्यदृष्ट्या शर्वस्य तासामूधांसि सुस्रुवुः । ववर्षुः पयसां पूरैस्तदूधांसि पयोधराः । धारासारैरविच्छिन्नैस्तत्तद्यावद्ह्रदोऽभवत् । पयःपयोधिरिव स द्वितीयः प्रेक्षि पार्श्वदैः । देवेशसमधिष्ठानात्तत्तीर्थमभवत् परम् । कपिलाह्रद इत्याख्यां चक्रे तस्य महेश्वरः । ततो देवाज्ञया सर्वे स्नातास्तत्र दिवौकसः। आविरासुस्ततस्तीर्थादथ दिव्यपितामहाः। तान् दृष्ट्वा ते सुराः सर्वे तर्पयाञ्चक्रिरे मुदा । अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा । इत्याद्यादिव्यपितरस्तृप्ताः शम्भुं व्यजिज्ञपन् । देवदेव! जगन्नाथ! भक्तानामभयप्रद ! अस्मिंस्तीर्थे त्वदृश्याशाज्जाता नस्तृप्तिरक्षया । तस्माच्छम्भो ! वरं देहि प्रसन्नेनान्तरात्मना । इति दिव्यपितॄणां स श्रुत्वा वाक्यं वृषध्वजः। शृण्वतां सर्वदेवानामिदं वचनमब्रवीत् । सर्वः, धर्मपितॄणां वै परं तृप्तिकरं परम्। श्रीदेवदेव उवाच । शृणु विष्णो ! महाबाहो ! शृणु त्वं च पितामह ! । एतस्मिन् कापिले तीर्थे कापिलेयपयोऽम्भते । ये पिण्डान् निर्वपिष्यन्ति श्रद्धया श्राद्धदा नराः। तेषां पितॄणां सन्तृप्तिर्भविष्यति न मात्रया । अन्यं विशेषं वक्ष्यामि महातृप्तिकरं परम् । कुहूसोमसमायोगे दत्तं श्राद्धमहाक्षयम् । संवर्त्ते काले संप्राप्ते जलराशिजलान्यपि । क्षीयन्ते न क्षयं श्राद्धं याति सोमकुहूकृतम् । अमासोमसमायोगे श्राद्धं यद्यत्र लभ्यते । तीर्थे कापिलधारेऽस्मिन् गयया पुष्करेण किम् । गदाधृक् भगवान् यत्र यत्र त्वं च पितामह ! । वृषध्वजोऽप्यहं यत्र फलास्तत्र न संशयः। दिव्यान्तरीक्षभौमानि यानि तीर्थानि सर्वतः । तान्यत्र निवसिष्यन्ति दर्शे सोमदिनान्विते । कुरुक्षेत्रे नैमिषे च गङ्गासागरसङ्गमे । ग्रहणे श्राद्धतो यत् स्यात्तत्तीर्थे वार्षभध्वजे । अस्य तीर्थस्य नामानि यानि दिव्यपितामहाः! । तान्यहं कथयिष्यामि भवतां तृप्तिदान्यलम्। मधुस्रवेति प्रथममेषा पुष्करिणी मता । कृतकुल्या ततो ज्ञेया ततोऽसौ क्षीरनीरधिः । वृषभध्वजतीर्थञ्च तीर्थं पैतामहं ततः । ततो गदाधराख्यं च पितृतीर्थं ततः परम् । ततः कापिलधारं वै सुधाखनिरियं पुनः । ततः शिवगयाख्यं च ज्ञेयं तीर्थमिदं शुभम् । एतानि दश नामानि तीर्थस्यास्य पितामहाः। भवतां तृप्तिकारीणि वि-

नापि श्राद्धतर्पणैः । सूर्य्येन्दुसङ्गमे यत्र पितॄणां तृप्तिकारकाः । ब्राह्मणान् भोजयिष्यन्ति तेषां श्राद्धमनन्तकम् । श्राद्धे पितॄणां संतृप्त्यै दास्यन्ति कपिलां शुभाम् । येऽत्र, तेषां पितृगणोऽवसेत् क्षीरोदरोधसि । इमोत्सर्गः कृतोयैस्तु तीर्थेऽस्मिन् वृषभध्वजे । अश्वमेधपुरोडाशैः पितरस्तैस्तु तर्पिताः । गयातोऽष्टगुणं पुण्यं अस्मिंस्तीर्थे पितामहाः । अमायां सोमयुक्तायां श्राद्धैः कापिलधारिके । येषां गर्भेऽभवत् स्रावोये दन्तजननान्मृताः । तेषां तृप्तिर्भवेन्नूनं तीर्थे कापिलधारिके । अदत्तभोज्यादामानो ये वाऽदार परिग्रहाः । तेभ्योनिर्वपितं पिण्डमिह ह्यक्षयतां व्रजेत् । अग्निदाहे मृताये वै नाग्निदाहश्च येषु वै । ते सर्वे तृप्तिमायान्ति तीर्थे कापिलधारिके । और्द्ध्वदेहिकहीना ये षोडशश्राद्धवर्ज्जिताः । ते तृप्तिमधिगच्छन्ति वृतकुल्यां निवापिताः । अश्वत्थ मृताये वै येषां नाप्युदकप्रदः । तेऽपि तृप्तिं परां यान्ति मधुस्रवसि तर्पिताः । अपमृत्युमृताये वै चौरविद्युज्जलादिभिः । तेषामिह कृतं श्राद्धं जायते सुगतिप्रदम् । आत्मघातेन निधनं येषामिह दिकर्म्मिणाम् । तेऽपि तृप्तिं लभन्तेऽत्र पिण्डैः शिवकृपाकृतैः । पितृगोत्रे मृता ये वै मातृपक्षे च ये मृताः । तेषामत्र कृतःपिण्डोभवेदक्षयतृप्तिदः । पत्नीवर्गे मृताये वै मित्रवर्गे च ये मृताः । ते सर्वे तृप्तिमायान्ति तर्पिता वृषभध्वजे । ब्रह्मक्षत्रविशां वंशे शूद्रवंशेऽन्त्यजेषु च । येषां नाम स्टहीत्वा वहीयते ते समुद्धृताः । तिर्य्यग्योनिश्रिताये वै ये पिशाचत्वमागताः । तेऽप्यूर्द्ध्वगतिमायान्ति तृप्ताः कापिलधारिके । ये तु मानुषलोकेऽस्मिन् पितरोमर्त्त्ययोनयः । ते दिव्ययोनयः सर्वे मधुस्रवसि तर्पिताः । ये दिव्यलोके पितरः पुण्यदैवत्वमागताः । ते ब्रह्मलोके गच्छन्ति तृप्तास्तीर्थे वृषध्वजे । कृते क्षीरमयं तीर्थं त्रेतायां मधुमत् पुनः । द्वापरे सर्पिषा पूर्णं कलौ जलमयं भवेत् । सीमावच्छिन्नमपि च क्षेयं तीर्थमिदं शुभम् । मध्ये वाराणसि क्षेत्रं मम सान्निध्यतो नरैः । काशीस्थितैर्यतोऽदर्शि ध्वजोमे दृषलाञ्छनः । दृषध्वजेन नाम्नातः ख्यास्यत्यत्र पितामहाः । पितामहेन सहितो गदाधरसमन्वितः । रविणा पार्षदैः सार्द्धं तिष्ठाम्योऽत्र पितामहाः" । । कापिलधारिककापिलधारादयोऽप्यत्र ।

**कपिलफला** स्त्री कपिलं फलमस्याः । द्राक्षाभेदे राजनि० ।

**कपिलशिंशपा** स्त्री कर्म० । पीतपुष्पयुतायां शिंशपायाम् राजनि० । रक्तपीतमिश्रितवर्णस्य पिङ्गलतया पीताधिक्यवर्णमात्रपरतया पीतपुष्पायां इत्तिरिति बोध्यम् ।

**कपिलस्मृति** स्त्री कपिलप्रणीता स्मृतिः । "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इत्यादिके षडध्यायीरूपे सांख्यशास्त्रे तस्य शास्त्रस्य च स्मृतित्वं वेदार्थानुभवपूर्व्वकं मुनिप्रणीतत्वात् अतएव "स्मृत्यनवकाशदोषप्रसङ्ग इत्यादि शा० सू० भाष्ये कपिलस्मृतेरनवकाशदोषमाशङ्क्य मानवादिस्मृत्यन्तरानवकाशदोषात् साङ्ख्यमतं प्रत्याख्यातम् "असङ्गोऽयं पुरुष" इत्यादिश्रुत्वेव तस्य शास्त्रस्य साकाशत्वेन न निरवकाशत्वमिति व्यवस्थापितञ्च ।

**कपिलाक्षी** स्त्री कपिलमक्षि इव पुष्पमस्याः । १पीतपुष्पायां शिंशपायाम् २सुगेर्व्वारौ च राजनि० ।

**कपिलाचार्य्य** पु०कर्म० । विष्णौ । "महर्षिः कपिलाचार्य्यः कृतज्ञोमेदिनीपतिः" वि०स० । "महर्षिः कपिलाचार्य्य इति सविशेषणमेकं नाम । महांश्चासौ ऋषिश्चेति महर्षिः कृत्स्नस्य वेदस्य दर्शनात् कपिलश्चासौ आचार्य्यश्चेति सांख्यस्य शुद्धात्मतत्त्वज्ञानम् "शुद्धात्म तत्त्वविज्ञानं साङ्ख्यम्" इत्यभिधीयते इति व्यासस्मृतेः । "ऋषिं प्रसूतं कपिलं महान्तमिति" श्रुतेः । "सिद्धानां कपिलोमुनिरिति" स्मृतेश्च तस्य तथात्वम्" भा० ।

**कपिलातीर्थ** न० कुरुक्षेत्रस्थे तीर्थभेदे । कुरुक्षेत्रमुपक्रम्य रामह्रदादिषु स्नानमुक्त्वा । "कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः । तत्र स्नात्वार्चयित्वा च पितॄन् स्वान् दैवतान्यपि । कपिलानां सहस्रस्य फलं विन्दति मानवः" भा०व०८३ । [ इन्द्रे । त्रिका० ।

**कपिलाश्व** पु० कपिलरूपेणाश्वहरणात् कपिलवर्णाश्वयोगाच्च

**कपिलादान** न० ६त० वक्ष्यमाणविधिना कपिलायाः गोर्दाने तद्विधानादि हेमा०दा०आदित्यपु० । "कपिलां ये प्रयच्छन्ति चेलच्छन्नां स्वलङ्कृताम् । स्वर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् । श्वेतवस्त्रपरिच्छन्नां घण्टास्वनरवैर्युताम् । (घण्टास्वनरवैर्घण्टाशब्दकोलाहलैः) । "सहस्रं योगवां दत्ते कपिलां चापि सुव्रतः । सममेव तयोः पुण्यं प्राह ब्रह्मविदांवर ! । यावन्ति रोमकूपाणि कपिलाङ्गे भवन्ति हि । तावत्कोटिसहस्राणि वर्षाणां दिवि मोदते । "स्वर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् । कांस्योपदोहनां धेनुं वस्त्रच्छद्मामलङ्कृताम् । दत्त्वा द्विजेन्द्राय नरः स्वर्गलोके महीयते । दशधेनुप्रदानेन तुल्यैका कपिला मता" याज्ञवल्क्यः "हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता । सकांस्यपात्रा दातव्या क्षीरिणी गौः सद-

चिणा। दातास्याः स्वर्गमाप्नोति वत्सरान् रोमसंमितान्। कपिला पुनस्तारयति भूयस्त्वासप्तमं कुलम्" व्यासः "इक्मश्रृङ्गीं रौप्यखुरां वस्त्रकांस्योपदोहनाम्। सवत्सां कपिलां दत्त्वा वंशान् सप्त समुद्धरेत्। यावन्ति तस्या रोमाणि सवत्साया भवन्ति हि। सुरभीलोकमासाद्य रमते तावतीः समाः"। लोकोत्तरे "घण्टाचामरसंयुक्ता किङ्किणीजालमण्डिता। दिव्यवस्त्रसमायुक्ता हेमदर्पणभूषिता। पयस्विनी सुशीला च तरुणी वत्सकान्विता। कपिलैवं प्रदातव्या शिवस्याये विधानतः"दानमन्त्रस्तु मत्स्यपुराणे "कपिले! सर्वभूतानां पूजनीयाऽसि रोहिणी। तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे" इति। रोहितवर्णाधिक्यात् रोहिणी। स्वर्णश्रृङ्गादिमानमुक्तम् हे० दा० कूर्म्मपु० "दशसौवर्णिके श्रृङ्गे खुराः पञ्चपलान्विताः। पञ्चाशत्पलिकं ताम्रं कांस्यं चैतावदेव तु। वस्त्रन्तु त्रिगुणं धेन्वा दक्षिणा च चतुर्गुणा। एतैरलङ्कृतां धेनुं घण्टाभरणभूषिताम्। कपिलां विप्रमुख्याय दत्त्वा मोक्षमवाप्नुयात्। द्विगुणोपस्करोपेता महती कपिला स्मृता। दत्ता सा विप्रमुख्याय स्वर्गमोक्षफलप्रदा। सप्तजन्मकृतात् पापान्मुच्यते दश संयुतः। यान् यान् प्रार्थयते कामांस्तांस्तान् प्राप्नोति मानवः। अन्ते स्वर्गापवर्गौ च फलमाप्नोति संयतः"। २ समानवर्णवत्सरहितकपिलधेनुदाने च "समानवत् सां कपिलां धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंपन्नाम् ब्रह्मलोके महीयते" हेमाद्रिदा० भारतवाक्यम्।

**कपिलावट** पु० कपिलया गोलकस्थया कृतोऽवटः गर्त्तः। गङ्गाद्वारसमीपस्थे तीर्थभेदे। कनखलतीर्थमुक्त्वा "कपिलावटं ततोगच्छेत्" भा०व०अ०।

**कपिलाह्रद** पु० कपिलाभिः कृतो ह्रदः। काश्या उत्तरखण्डस्थे तीर्थभेदे कपिलधाराख्ये विश्रुतः। "ततोवाराणसीं गत्वा अर्च्चयित्वा वृषध्वजम्। कपिलाह्रदे नरः स्नात्वा राजसूयमवाप्नुयात्" भा०व०८४अ०।

**कपिलिका** स्त्री कपिला+संज्ञायां कन् अत इत्त्वम्। शतपदीभेदे। (काणडार) "शतपद्यास्तु वरुणा कृष्णा चित्रा कपिलिका पीतिका रक्ता श्वेता अग्निप्रभा इत्यष्टौ" सुश्रु०

**कपिलेश** न० कपिलेन प्रतिष्ठापितमीशलिङ्गम् शा०त०। काशीस्थे शिवलिङ्गभेदे "कपिलेशं महालिङ्गं कपिलेन प्रतिष्ठितम्। मुच्यन्ते कपयोऽप्यस्य दर्शनात् किमुमानवाः" काशीख० प्रसिद्धिं प्रतिष्ठापितमन्तर्भूतण्यर्थत्वात्।

**कपिलोमन्(मा)** स्त्री कपेर्लोमेव लोम मञ्जरी अस्याः मनन्त्वात् वा डाप्। रेणुकानामकगन्धद्रव्ये राजनि०।

**कपिलोमफला** स्त्री कपिलोमान्यपि फलति कण्डूदानाय प्रभवति फल–अच्। (आलकुशी) शूककिम्बाम् राजनि०।

**कपिलोह** न० कपिवर्णं पिङ्गलं लोहं धातुः। पित्तले। हेमच०। [श्याम् रत्नमा०।

**कपिल्लिका** स्त्री कपिः कपिवर्णा वल्लिका पृषो०। गजपिप्प-

**कपिवक्त्र** पु० कपेर्वक्त्रमिव वक्त्रमस्य। नारदे त्रिका०। पर्वतप्रियायाच्ञास्य तथात्वम् यथाह भा० शा०३०अ०। "नारदः पर्व्वतश्चैव द्वावृषी लोकसत्तमौ। मातुलो भागिनेयश्च देवलोकादिहागतौ। विहर्त्तुकामौ सम्प्रीत्या मानुषेषु पुरा विभो!। हविःपवित्रभोज्येन देवभोज्येन चैव हि। नारदो मातुलश्चैव भागिनेयश्च पर्व्वतः। तावुभौ तपसोपेताववनीतलचारिणौ। भुञ्जानौ मानुषान् भोगान् यथावत्पर्य्यधावताम्। प्रीतिमन्तौ मुदा युक्तौ समयञ्चैव चक्रतुः। यो भवेद्धृदि सङ्कल्पः शुभो वा यदि वाऽशुभः। अन्योन्यस्य स आख्येयो मृषा शापोऽन्यथा भवेत्। तौ तथेति प्रतिज्ञाय महर्षी लोकपूजितौ। सृञ्जयं श्वैत्यमभ्येत्य राजानमिदमूचतुः। आवां भवति वत्स्यावः कञ्चित्कालं हिताय ते। यथावत् पृथिवीपाल! आवयोः प्रगुणीभव। तथेव कृत्वा राजा तौ सत्कृत्योपचचार ह। ततः कदाचित्तौ राजा महात्मानौ तपोधनौ। अब्रवीत् परमप्रीतः सुतेयं वरवर्णिनी। एकैव मम कन्या या सा वां परिचरिष्यति। दर्शनीयाऽनवद्याङ्गी शीलवृत्तसमाहिता। सुकुमारी कुमारी च पद्मकिञ्जल्कसुप्रभा। परमं सौम्यमित्युक्ते ताभ्यां राजा शशास ताम्। कन्ये! विप्रावुपचर देववत्पितृवच्च ह। सा तु कन्या तथेत्युक्त्वा पितरं धर्म्मचारिणी। तथा निदेशं राज्ञस्तौ सत्कृत्योपचचार ह। तस्यास्तेनोपचारेण रूपेणाप्रतिमेन च। नारदं हृच्छयस्तूर्णं सहसैवाभ्यपद्यत। ववृधे हि ततस्तस्य हृदि कामो महात्मनः। यथा शुक्लस्य पक्षस्य प्रवृत्तौ चन्द्रमाः शनैः। न च तं भागिनेयाय पर्व्वताय महात्मने। शशंस हृदयन्तीव्रं व्रीडमानः स धर्मवित्। तपसा चेङ्गितेनैव पर्वतोऽथ बुबोध तम्। कामार्त्तं नारदं क्रुद्धः शशापैनन्ततो भृशम्। कृत्वा समयमव्यग्रो भवान्वै सहितो मया। यो भवेद्धृदि सङ्कल्पः शुभो वा यदि वाऽशुभः। अन्योन्यस्य स आख्येय इति तद्वै मृषा कृतम्। भवता वचनं ब्रह्मंस्तस्मादेव शपास्यहम्। न हि कामं प्रवर्त्तन्तं भवानाचष्ट मे पुरा। सुकुमार्य्यां कुमार्य्यां ते तस्मादेष शपा-

ष्यहम्। ब्रह्मचारी गुरुर्यश्चात्तपस्वी ब्राह्मणश्च सन्। अकार्षीत्त्वमयं भ्रंशमावाभ्यां यः कृतो मिथः। शपस्ते तस्मात् संक्रुद्धो भवन्तं तं निबोध मे। सुकुमारी च ते भार्य्या भविष्यति न संशयः। वानरञ्चैव ते रूपं विवाहात्प्रभृति प्रभो!। संद्रक्ष्यन्ति नरास्त्वन्ये स्वरूपेण विनाननम्। स तद्वाक्यन्तु विज्ञाय नारदः पर्व्वतं तथा। अशपत्तमपि क्रोधाद्भागिनेयं स मातुलः। तपसा ब्रह्मचर्य्येण सत्येन च दमेन च। युक्तोऽपि नित्यधर्म्मश्च न वै स्वर्गमवाप्स्यसि। तौ तु शप्त्वा भृशं क्रुद्धौ परस्परममर्षणौ। प्रतिजग्मतुरन्योन्यं क्रुद्धाविव गजोत्तमौ। पर्व्वतः पृथिवीं कृत्स्नां विचचार महामतिः। पूज्यमानो यथान्यायं तेजसा स्वेन भारत!। अथ तामलभत्कन्यां नारदः सृञ्जयात्मजाम्। धर्म्मेण विप्रप्रवरः सुकुमारीमनिन्दिताम्। सा तु कन्या यथाशापं नारदं तं ददर्श ह। पाणिग्रहणमन्त्राणां नियोगादेव नारदम्। सुकुमारी च देवर्षिं वानरप्रतिमाननम्। नैवावमन्यत तदा प्रीतिमत्येव चाभवत्। उपतस्थे च भर्त्तारं न चान्यं मनसाऽप्यगात्। देवं मुनिं वा यक्षं वा पतित्वे पतिवत्सला। ततः कदाचिद्भगवान्पर्व्वतोऽनुचचार ह। वनं विरहितं किञ्चित्तत्रापश्यत्स नारदम्। ततोऽभिवाद्य प्रोवाच नारदं पर्वतस्तदा। भवान् प्रसादं कुरुतात् स्वर्गादेशाय मे प्रभो!। तमुवाच ततो दृष्ट्वा पर्वतं नारदस्तथा। कृताञ्जलिमुपासीनं दीनं दीनतरः स्वयम्। त्वयाऽहं प्रथमं शप्तो वानरस्त्वं भविष्यसि। इत्युक्तेन मया पश्चाच्छप्तस्त्वमपि मत्सरात्। अद्यप्रभृति वै वासं स्वर्गे नावाप्स्यसीति ह। तव नैतद्धि सदृशं पुत्रस्थाने हि मे भवान्। निवर्त्तयेतां तौ शापावन्योन्येन तदा मुनी। श्रीसमृद्धं तदा दृष्ट्वा नारदं देवरूपिणम्। सुकुमारी प्रदुद्राव परपत्यभिशङ्कया। तां पर्व्वतस्ततो दृष्ट्वा प्रद्रवन्तीमनिन्दिताम्। अब्रवीत्तव भर्त्तैष नात्र कार्य्या विचारणा। ऋषिः परमधर्म्मात्मा नारदो भगवत्प्रभुः। तवैवाभेद्यहृदयो मा तेऽभूदत्र संशयः। साऽनुनीता बहुविधं पर्व्वतेन महात्मना। शापदोषञ्च तं भर्त्तुः श्रुत्वा प्रकृतिमागता। पर्व्वतोऽथ ययौ स्वर्गम् नारदोऽभ्यगमद्गृहान्"। कपिवक्त्रकोशाख्यादयोऽप्यत्र। ईत०वानरमुखे न०।

**कपिवदाग्न** पु० कपिषु वदान्यो बहुफलत्वेन तत्प्रदानात्। आम्रातकवृक्षे। शब्दच०। [अमरः।

**कपिवल्ली** स्त्री कपिरिव तत्रोर्ध्वलत्या वल्ली। गजपिप्पल्याम्

**कपिश** पु० कपिः कपिनामास्त्यस्य लोमा० श। १सिह्लके (शिलारस) मेदि० कपिं कपिवर्णं श्यति शो—क। २कृष्णपीतमिश्रितवर्णे पु० ३तद्युक्ते त्रि० अम०। "मधुकरविटपानमिता तरुपङ्क्तीर्बिभ्रतोऽस्य विटपानमिताः। विपाकपिशङ्गलता—रजसा रोधश्चकासे कपिशं गवता" माघः। अत्र तरुपङ्क्तेः कृष्णत्वात् पिशङ्गलतारजोयोगात् श्यावत्वम्। ४रक्तकृष्णमिश्रवर्णे पु० ५तद्वति त्रि० "सन्ध्याभ्रकपिशस्तस्य विराधोनाम राक्षसः" रघुः। "ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी" विक्र०। "नीपं दृष्ट्वा हरितकपिशं केशरैरर्द्धरूढैः" मेघ०। तत्तुल्यवर्णत्वात् ६मद्यभेदे न० हला०। "प्रासानपश्यत् कपिशं पिपासतः" माघः ७माधवीलतायां मेदि० स्त्री। ८उत्कलदेशसमीपस्थे नदीभेदे। "स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः। उत्कलादर्शितपथः कलिङ्गाभिमुखं ययौ" रघुः।

**कपिशाञ्जन** पु० कपिशमञ्जनं यत्र। शिवे त्रिका०। तस्य श्वेतत्वेनाञ्जनस्य कृष्णत्वात्तयोर्मिश्रणात् तथात्वम्।

**कपिशापुत्र** पु० कपिशायाः पुत्रः। पिशाचे शब्दरत्ना०।

**कपिशी** स्त्री कपिश+वर्णवाचित्वात् ङीष्। १माधव्यां २सुरायाञ्च शब्दकल्पद्रुमे मेदिनिजटाधरवाक्यं प्रमाणत्वेनोक्तम्। तच्चिन्त्यं "कपिशस्त्रिषु श्यावे स्त्री माधव्यां सिह्लके पुमान्" इति मेदिन्यां स्त्रीमात्रोक्तेः ङीषन्ततानुक्तेश्च। "वर्णात्तोपधादनुदात्तात् तोनः" "अन्यतो ङीष्" पा० सूत्रयोः तोपधभिन्नवर्णवाचिनोऽनुदात्तान्तप्रतिपादकात् स्त्रियां ङीष् स्यात् सि० कौ० व्याख्यानात् कपिशशब्दस्यानुदात्तत्वाभावेन ङीषोऽप्रसक्तेः "लघावन्ते द्वयोश्च बह्वषो गुरुः" फिट्सूत्रेण तस्य पिशङ्गकलमाषयोरिव गुरुयुक्तत्वाभावेन अनुदात्तत्वाभावात् अतएव "ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरीति" विक्रमोर्वश्यामृटादन्ततया प्रयोगः। तथा च स्त्रीत्वेऽपि कपिशा इत्येवंरूपेण भवितव्यं न ङीषन्तेनेति द्रष्टव्यम्। किञ्च उक्तमेदिनिवाक्ये तस्य सुरार्थताऽपि न दृश्यते प्रत्युत "कश्यं मद्यञ्च मैरेयं कपिशं कापिशायनम्" हलायुधोक्तेः मद्ये क्लीवत्वमेव। अतएव "प्रासानपश्यत् कपिशं पिपासतः" इति माघे क्लीवतयैव प्रयुक्तम्।

**कपिशीका** स्त्री कपिशैव स्वार्थे वा० ईकन्। मदिरिकायां त्रिका०

**कपिशीर्ष** न० कपीनां प्रियं शीर्षमग्रम् शाक०। प्राकाराग्रे त्रिका०। कपीनां प्राकाराग्रवासित्वं हि लोकसिद्धम्।

**कपिशीर्षक** न० कपेः शीर्षमिव कायति कै—क । हिङ्गुले । शब्दच० ।

**कपिष्ठल** पु० "कपिष्ठलो गोत्रे" पा० नि० षत्वम् । गोत्रप्रवर्त्तके ऋषिभेदे तस्य गोत्रापत्यम् इञ् । कापिष्ठलि तद्गोत्रापत्ये बहुत्वे उपका० इञो वा लुक् । कापिष्ठलयः कपिष्ठलाः । गोत्रादन्यत्र न षत्वम् इति० । कपिस्थल वानरस्थाने न० ।

**कपिस्कन्ध** पु० दानवभेदे "उद्योगं परमं चक्रुर्दानवायुद्धदुर्मदाः" इत्युपक्रम्य "काञ्चनाक्षःकपिस्कन्धोव्याघ्राक्षः क्षितिकम्पनः" हरिवं० १४० अ० ।

**कपीकच्छू** स्त्री कपिकच्छू+संज्ञायां वा दीर्घः । शूकशिम्ब्याम् (आलकुशी) शब्दर० ।

**कपीज्य** पु० कपिभिरिज्यते यज—क्यप् ३त० । १क्षीरिकावृक्षे । जटाध० । २रामचन्द्रे । कपिषु श्रेष्ठः ७त० । ३सुग्रीवे च ।

**कपीत** पु० कं जलवर्षं श्वेतवर्णमपीतः अपेरतो लोपः । श्वेतवृक्षावृक्षे रत्नमा० ।

**कपीतन** पु० कपीनाम् ईं लक्ष्मीं तनोति तन—अच् । १आम्रातकवृक्षे २शिरीषवृक्षे ३गर्द्दभाण्डवृक्षे च अमरः ४अश्वत्थवृक्षे मेदि० । ५गुवाकवृक्षे ६विल्ववृक्षे च शब्दर० । एतेषां यथायथम् कपितुल्यलोमशमञ्जरीकत्वात् तत्प्रियफलकत्वाच्च तथात्वम् ।

**कपीन्द्र** पु० कपिरिन्द्र इव । १हनुमति शब्दच० । "नश्यन्ति ददर्श छन्दानि कपीन्द्रः" भट्टिः । ६त० । कपीनामिन्द्रे स्वामिनि २सुग्रीवे कपीनां यथेष्टं नियोक्तरि ३रामे तद्भेदात् ४विष्णौ च । "शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः" भा० अनु० १३अ० विष्णुनामकीर्त्तने ।

**कपीवत्** पु० वसिष्ठपुत्रभेदे । "और्वोवसिष्ठपुत्रश्च स्तम्बः कश्यप एव च । कपीवानकपीवांश्च दत्तोलिश्च्यवनस्तथा । वसिष्ठपुत्राः सप्तासन्" हरिवं० २६१अ० । [सरोवरभेदे ।

**कपीवह** न० वहति वह—अच् ६त० "इकोवहे" पा० दीर्घः ।

**कपीष्ट** पु० कपीनामिष्टः । १राजादनीवृक्षे २कपित्थे च राजनि०

**कपुच्छल** न० कस्य शिरसः पुच्छमिव लाति—ला—क । १केशचूडायाम् । "अथातस्तृतीये वर्षे चूडाकरणं कपुष्टिका" गोभि० । 'कपुच्छलाख्या केशचूडा तस्याः संस्कारःकपुष्टिका" सं० त० रघु० । कस्य जलस्य पुच्छमिव लाति ला—क । २स्नुगग्रस्थाने । "इदमेव कपुच्छलमयं दण्डः हे भवतो द्वौ होमौ—बाहू" शत० ब्रा० ७,४,१,३६ । "इदमेव ह्यस्यायं ह्वटिहृपेण कपुच्छलम् स्नुगग्रस्थानीयम्" भा० । अत्र मूले कपुच्छलमिति मुद्रितपु० पाठः भाष्ये तु कप्नुत्सलमिति पाठः तत्र कस्य जलस्य प्नुते पूरणाय सलति गच्छतीति व्युत्पत्तिः । वेदे परोक्षवचनत्वात् पृषो० साधुत्वम् । "इदमेव कपुच्छलमयं दण्डः स्वाहाकारः" शत० ब्रा० ८,३,१,१० ।

**कपुष्टिका** स्त्री कस्य शिरसः पुष्ट्यै पोषणाय कायति कै—क कस्य पुष्ट्यै हितं वा कन् । केशचूडासंस्कारकर्मणि" कपुच्छलशब्दे गोभिलवाक्यमुदाहृतम् ।

**कपूय** त्रि० कुत्सितं पूयते पूयी—विसरणे अच् पृषो० उलोपः । कुत्सिते "अथ य इह कपूयचरणा अभ्याशोह ते कपूययोनिमापद्येरन्" छा० उ० । "मघवा यः कसखः यस्य कपूयाः सखाय" निरु० ६,१८ ।

**कपृथ्** त्रि० कुत्सितं प्रथयति प्रथि—क्विप् वेदे नि० संप्र० । कुत्सितप्रथयितरि । "सेदीशे यस्य रम्बतेऽन्तरा सक्थ्या कपृत्" ऋ० १०,८६,१७, "कपृन्नरः कपृथमुद्दधातन चोदयत खुदत वाजसातये" ऋ० १०,१०१'१२,

**कपोत** पुंस्त्री कब्—वर्णे ओत वर्णयत्र, को वायुः पोत इव यस्य वा । पारावते (पायारा) अमरः "कपोतको गुरुस्निग्धो रक्तपित्तानिलापहः । संग्राही शुक्रलः शीतः सुस्वादु रुचिकारकः" भाव० तद्गुणा उक्ताः । (घुघु) इति ख्याते २चित्रकण्ठे धूसरवर्णे वनकपोते मेदिनिः । कपोतजातिस्तु त्रिधा गृहकपोतवनकपोतचित्रकपोतश्चेति भेदात् । वृह०स० तेषां दिवासञ्चारित्वमुक्तम् ।

"श्यामाश्येनशशघ्नवञ्जुलशिखिश्रीकर्णचक्राह्वयाशाषाण्डीरकखञ्जरीटकशुकध्वाङ्क्षाः कपोतास्त्रयः । भारद्वाजकुलालकुक्कुटखरा हारीतगृध्रौ कपिः फेरुः कुक्कुटपूर्णकूटचटकाश्चोक्ता दिवासञ्चराः" । तत्र च कपोतविशेषाणाम् गृहप्रवेशादरिष्टमुक्तं "यानासनशय्यानिलयनं कपोतस्य सद्मनिवेशनं वा । अशुभप्रदं नराणां जातिविभेदेन कालोऽन्यः । आपाण्डुरस्य वर्षाच्चित्रकपोतस्य चैव षण्मासात् । कुङ्कुमधूम्रस्य फलं सद्यः पाकं कपोतस्य" । अपाण्डुरस्य ईषत्पाण्डोर्धूसरस्य "रक्तपादाः कपोताश्च" रामा० उ० । ६रिष्टसूचने विधा० पा० भारते शान्तिसहितं तस्य गृहप्रवेशनेऽरिष्टमुक्तं यथा ।

"युधिष्ठिर उवाच । कपोतोयदि गाङ्गेय ! निविशत्यालयं नृणाम् । कथं शान्तिर्भवेत् तस्य क्षिप्रमेतद्वदस्व मे । भीष्म उवाच । प्रविष्टे सदनं राजन् ! कपोते भयकारिणि । उत्पन्नं जायते सद्म नात्र कार्या विचार-

या। अथ वा सद्मनःस्वामी त्वरितं मृत्युमाप्नुयात्। गेहिनी वा सुतो वापि राजा कुप्यति वा भृशम्। येन केन प्रकारेण प्रोत्सन्नं जायते गृहम्। न च संपद्यते राजन्! कपोते सदनं गते। निर्विशेत्सदनं यस्तु कपोतो विघ्नकारकः। स हन्तव्योऽमृतस्तस्य मेदसा जुहुयात् सुधीः। जीवनेच्छा कपोते चेद्विधानान्तरमस्ति तत्। शालीनां पिष्टमादाय पयसालोड्य तत् पुनः। विदधीत कपोतस्य रूपं शास्त्रविचक्षणः। गुडेनोदरमापूर्य मुखं शर्करया पुनः। मधुना चरणौ तस्य पक्षौ धान्येन पक्षिणः। ततो वह्निमुखं कृत्वा होमयेत् प्रयतः सुधीः। “देवाः कपोताः” इत्येष यजने मन्त्र उत्तमः। खगं पिष्टमयन्तु जुहुयात् सर्पिषा युतम्। शतधा तं खगं कृत्वा भागशः परिकल्पयेत्। शिरसोऽष्टभागांस्तु त्रिंशच्चि गच्च पादयोः। सर्विहृद्वेति शिरसा वसुभ्योयजनं स्मृतम्। मनोज्योतिर्जुषतेति पक्षौ चन्द्रमसे हुनेत्। यस्त्वं सुकृतेति च पादं दक्षिणमग्नये। चरणं वाममश्विभ्यां जुहुयादश्विमन्त्रतः। “श्येनस्य पक्षा” इति च बाहू रुद्राय वै हुनेत्। तिलत्रीहीन् व्याहृतिभिर्यहातुहिस्य संहुनेत्। यद्द्रांशैव पुनः पूज्य यजमानाभिषेचनम्। सालङ्कारां सवत्सां च कामदोहां पयस्विनीम्। धेनुं दद्यात्सुराणां च दक्षिणार्थे विशेषतः। आचार्याय सुशीलाय श्रोत्रियाय कुटुम्बिने। ब्राह्मणान् भोजयेत् पश्चाद्यथाशक्ति च दक्षिणाम्। एवं कृते विधाने तु कपोतः शान्तिकृद्भवेदिति”। ज्यो०त० अद्भुशान्तौ अरिष्टमुक्त्वा उक्तविषये कपोतं विशेष्य शान्त्यन्तरमुक्तम् यथा“गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च। चिल्लश्च चर्मचिल्लश्च भासः पाण्डर एव च। गृहे यस्य पतन्त्येते गेहं तस्य विपद्यते। षण्मासात्तस्य वर्षान्तः मृत्युः स्याद् गृहमेधिनः। पत्न्याः पुत्रस्य वा मृत्युर्द्रव्यस्यापि विनश्यति। ब्राह्मणाय गृहं दत्त्वा दत्त्वा तन्मूल्यमेव वा। गृह्णीयाद् यदि रोचेत शान्तिञ्चेमां प्रयोजयेत्”। वेणवास्तते व्यासः।“यद्वयत्नैः शान्तिकैश्च किं क्लिश्यन्ति नरा द्विज!। महाशान्तिकरः श्रीमांस्तुलस्या पूजितो हरिः। उत्पातान् दारुणान् पुंसां दुर्निमित्तानने कशः। तुलस्या पूजितो भक्त्या महाशान्तिकरोहरिः। अत्र ब्रह्मपुराणीयोमन्त्रः। “नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहेति”। छन्दोगपरिशिष्टम्। “अथातोरजस्वलाभिगमने गोऽश्वभार्यासु गमने यमजजनने विजातीयजनने वा काककङ्कगृध्रवकश्येनभासचिल्लकपोतानां गृहप्रवेशे मक्षिकस्योपरि विश्रामणे एवमेव क्रियमाणे गृहद्वारारोहणे वाद्भुतेषु अल्पदृष्टेन विधिनाऽग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति” अद्भुताय अग्नये स्वाहा, सोमाय, विष्णवे, रुद्राय, वायवे, सूर्याय, मृत्यवे, विश्वेभ्यो देवेभ्यः स्वाहेति”। कपोतं विशेषयति शौनकः “रक्तपादः कपोतास्य चरण्यौकाः शुकच्छविः। स चेच्छाला विशेच्छालासमीपस्थ व्रजेद् यदि। अन्येषु गृहमध्ये वा वल्कलस्योद्गमादिषु”। कल्पदृष्टेन विधिना गृह्योक्तेन प्रायश्चित्ताज्याहुतीः अद्भुतदोषप्रशमनार्थाः सप्ताज्याहुतीः अद्भुतायाग्नये स्वाहा इत्यादि मन्त्रैः। तत्र स्थालीपाकेतिकर्त्तव्यतायां पायसचरुभिरेतेभ्यो देवेभ्यो जुहुयात्”रघु०। छन्दोगप०। “पश्चात् घृतपायसेन ब्राह्मणान् भोजयित्वा गोवरं दत्त्वा शान्तिर्भवतीति”। इह्य‘हितोक्तत्रिविधकपोतभिन्नकपोतानाम् गृहस्थेन अवश्यपोष्यता यथाह ज्यो०त०भारतम्।‘पारावतास्मयूराश्च शुका वैसारिकास्तथा। गृहस्थेन सदा पोष्या आत्मनः श्रेय इच्छता” अत्र प्रागुक्तकपोतत्रिकस्यैवारिष्टसूचकत्वं नान्यस्येति व्यवस्था अतएव प्रागुक्तभारते विघ्नकारक इति विशेषणम्। कपोतस्य प्रतुदः यथाह भावप्र०।‘‘हारीतोधवलःपाण्डु श्चित्र पक्षो हहच्छ्रुकः। कपोतः खञ्जरीटस्तु पिकाद्याः प्रतुदाः स्मृताः। प्रतुद्य भक्षयन्त्येते तुण्डेन प्रतुदास्ततः” तेषां सामान्यमांसगुणाश्च तत्रैवोक्ताः “प्रतुदाः मधुराः पित्तकफघ्नास्तुवरा हिमाः। लघवो बद्धवर्चस्का किञ्चिद्वातकराः स्मृताः”। “आवर्त्तिभिर्ष्टहकपोतशिरोधराभैः” माघः। कपोतोऽस्त्यस्य नडादि०छ कुक् च। कपोतकीय कपोतयुक्ते त्रि० तत्त्रेद् भवः अण् विल्वका० छमात्रस्य लुक्। कापोतक तत्र भवादौ त्रि०। २सुश्रुतोक्ते कपोताभे मूषिकभेदे च कपोताभशब्दे उदा०। [ राजने राजनि०

**कपोतक** न० कपोत इव कायति प्रकाशते कै–क। सौवी-

**कपोतचरणा** स्त्री कपोतस्य चरणस्मरणाकारोऽस्त्यस्याः अर्श०अच्। १नवीनामगन्धद्रव्यसाधने हत्वे जटाधरः। कपोताङ्घ्रिप्रभृत्यत्र अमरः। दैत०। २कपोतपादे च०।

**कपोतपाक** पुंस्त्री कपोतःपाको डिम्बः। कपोतशिशौ तेषां व्रातः ञ्य। कपोतपाक्यः तस्य स्त्रियां बहुषु लुक्। कपोतपाकाः स्त्रियां तु न लुक्-कपोतपाक्याः इत्येव।

**कपोतपाद** त्रि० कपोतस्य पादाविव पादावस्य हस्त्यादि०

पाठात् नान्त्यलोपः समासान्तः। कपोततुल्यचरणे। स्त्रियां वा ङीप्।

**कपोतपालिका** स्त्री पालयति पाल+ण्वुल् इत०। गृह-स्तम्भाग्रप्रसारितदारुभेदे सौधादिप्रान्ते काष्ठादिरचिते पक्षिवासस्थाने विटङ्के (पायराखोप)। अमरः।

**कपोतपाली** स्त्री कपोतं पालयति अच् गौरा०ङीष् इत० टिड्ढाणञित्यत्राद्यन्तयोः साहचर्यात् तद्धितान्तस्यैव सि० कौ० ग्रहणात् न ङीप् मुग्ध० तु ईप् उप० स० इति भेदः। कपोतपालिकार्थे विटङ्के हलायु०। "कपोतपालीषु निकेतनानाम्" माघः।

**कपोतरोमन्** पु० कपोतरूपधारिवह्निवरात् प्राप्ते उ-शीनरपुत्रे राजभेदे। तत्कथा भा० व० १९६अ०। "कपोत उवाच।"वैश्वानरोऽहं ज्वलनो धूमकेतुः"इत्युप-क्रम्य "यामेतां पेशीं मम निष्क्रयाय प्रादा-द्भवानग्निमोत्कृत्य राजन्!। एतद्वो वच्म शिवं करो-मि हिरण्यवर्णं रुचिरं पुण्यगन्धम्। एतासां प्रजानां पालयिता यशस्वी सुरर्षीणामथ सम्मतो भृशम्। एतस्मात् पार्श्वात् पुरुषो जनयिष्यति कपोतरोमेति च तस्य नाम"। २यदुवंश्ये कुकुरस्य नृपतेः पौत्रे नृप-भेदे च"कुकुरस्य सुतो वृष्णिर्वृष्णेस्तु तनयस्तथा। कपो-तरोमा तस्याथ तित्तिरिस्तनयोऽभवत्"हरिवं० ३८अ०।

**कपोतलुब्धकीय** न०कपोतं लुब्धकञ्चाधिकृत्य कृतो ग्रन्थः "द्वन्द्वाच्छः"पा०छ। भारतान्तर्गते गृहस्थस्य प्राणदाने-नाप्यातिथ्यावश्यकर्त्तव्यतासूचके आख्यायिकाभेदे तत्कथा भा०शा०१४६अ०।

"स पत्न्या वचनं श्रुत्वा धर्म्मयुक्तिसमन्वितम्। हर्षेण महता युक्तो वाक्यव्याकुललोचनः। तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्म्मणा। स पक्षी पूजयामास यत्नात्तं पक्षिजीविनम्। उवाच स्वागतं तेऽद्य ब्रूहि किं करवाणि ते। सन्तापश्च न कर्त्तव्यः स्वगृहे वर्त्तते भवान्। तद्ब्रवीतु भवान् क्षिप्रं किं करोमि किमिच्छसि। प्रण-येन ब्रवीमि त्वां त्वं हि नः शरणागतः। अरावप्युचि-तं कार्य्यमातिथ्यं गृहमागते। छेत्तुमप्यागते छायां नोपसंहरते द्रुमः। शरणागतस्य कर्त्तव्यमातिथ्यं हि प्रयत्नतः। पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः। पञ्च-यज्ञांस्तु यो मोहान्न करोति गृहाश्रमे। तस्य नायं न च परो लोको भवति धर्म्मतः। तद्ब्रूहि मां सुवि-स्रब्धो यत्त्वं वाचा वदिष्यसि। तत् करिष्याम्यहं सर्वं मा त्वं शोके मनः कृथाः। तस्य तद्वचनं श्रुत्वा शकुने-र्लुब्धकोऽब्रवीत्। बाधते खलु मे शीतं सन्त्राणं हि विधीयताम्। एवमुक्तस्ततः पक्षी पर्णान्यास्तीर्य्य भूतले। यथाशक्त्या हि पर्णेन ज्वलनार्थं द्रुतं ययौ। गत्वाऽ-ङ्गारकर्मान्तं गृहीत्वाऽग्निमथागमत्। ततः शुष्केषु पर्णेषु पावकं सोऽभ्यदीपयत्। स संदीप्तं महत् कृत्वा तमाह शरणागतम्। प्रतापय सुविस्रब्धः स्वगात्राण्यकुतो भयः। स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत्। अग्निप्रत्यागतप्राणस्ततःप्राह विहङ्गमम्। हर्षेण महताऽऽविष्टो वाक्यं व्याकुललोचनः। तथेमं शकुनिं दृष्ट्वा विधि-दृष्टेन कर्म्मणा। इत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि माम्। स तद्वचः प्रतिश्रुत्य वाक्यमाह विहङ्गमः। न मेऽस्ति विभवो येन नाशयेयं क्षुधान्तव। उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः। सञ्चयो नास्ति चास्माकं मुनीनामिव भोजने। इत्युक्त्वा तं तदा तत्र विवर्णवदनोऽभवत्। कथं नु खलु कर्त्तव्यमिति चिन्ता-परस्तदा। बभूव भरतश्रेष्ठ! गर्हयन् वृत्तिमात्मनः। मुहूर्त्ताल्लब्धसंज्ञस्तु स पक्षी पक्षिघातिनम्। उवाच तर्पयिष्ये त्वां मुहूर्त्तं प्रतिपालय। इत्युक्त्वा शुष्कपर्णैस्तु समुज्ज्वाल्य हुताशनम्। हर्षेण महताऽऽविष्टः स पक्षी वाक्यमब्रवीत्। ऋषीणां देवतानाञ्च पितॄणाञ्च महा-त्मनाम्। श्रुतः पूर्व्वं मया धर्म्मो महानतिथिपूजने। कुरुष्वानुग्रहं सौम्य! सत्यमेतद्ब्रवीमि ते। निश्चिता खलु मे बुद्धिरतिथिप्रतिपूजने। ततः कृतप्रतिज्ञो वै स पक्षी प्रहसन्निव। तमग्निं त्रिः परिक्रम्य प्रविवेश महामतिः। अग्निमध्ये प्रविष्टन्तु लुब्धो दृष्ट्वा तु पक्षिणम्। चिन्तया-मास मनसा किमिदं वै कृतं मया। अहो मम नृशंसस्य गर्हितस्य स्वकर्म्मणा। अधर्म्मः सुमहान् घोरो भवि-ष्यति न संशयः। एवं बहुविधं भूरि विललाप स लुब्धकः। गर्हयन् स्वानि कर्म्माणि द्विजं दृष्ट्वा तथागतम्"।

**कपोतवङ्का** स्त्री कपोतो वञ्च्यते प्रतार्य्यतेऽनया वञ्च-करणे घञ्। ब्राह्मीवृक्षे राजनि०। इमाञ्च सुश्रुते वीरतर्व्वादि-गणे उक्त्वा तद्गुणा उक्ता यथा। "वीरतरुसहचर-द्वयदर्भवृक्षादनीगुन्द्रानलकुशकाशाश्मभेदकाग्निमन्थमोर-टावसुकवसिरभल्लूककुररटकेन्दीवरकपोतवङ्काः श्वदंष्ट्रा-चेति। वीरतर्व्वादिरित्येष गणोवातविकारनुत्। अश्म-रीशर्करामूत्रकृच्छ्राघातरुजापहः"। "कपोतवङ्का-मूलं हि पिबेद्वल्वसुरादिभिः" सुश्रु०। भावप्र० "ब्राह्मी-

कपोतवङ्का च सोमवल्ली सरस्वती” इत्येव पाठः तत्र कपोतवल्लीति पाठकल्पनं प्रामादिकं सुश्रुतैकवाक्यतया कपोतवङ्केति पाठस्यैव न्याय्यत्वात् ।

**कपोतवर्णी** स्त्री कपोतस्य वर्ण इव वर्णोऽस्याः गौरा० ङीष् । सूक्ष्मैलायां राजनि० तत्फलस्य कपोततुल्यशुभ्रत्वात्तथात्वम्

**कपोतवाणा** स्त्री कपोतस्तत्पाद इव वाणस्तत्तुल्याकारोऽस्याः । नलीकनामगन्धद्रव्ये राजनि० शरतुल्यरूपत्वात्तस्यास्तथात्वम् ।

**कपोतवृत्ति** स्त्री कपोतानामिव सद्योहरणेनाकृतसञ्चयेन वृत्तिः । कपोततुल्यायां १सञ्चयरहितजीविकायाम् तस्याश्च सञ्चयराहित्यं कपोतलुब्धकीयशब्दे दर्शितवाक्ये स्फुटम् । कपोतानां वृत्तिरिव वृत्तिरस्य । २तथावृत्तियुक्ते त्रि० । “कपोतवृत्तिर्मासनिचयः संवत्सरनिचयोवा । संवत्सरनिचये पूर्व्वनिचितमाश्वयुज्यां जह्यात्” विष्णुस० । वानप्रस्थधर्म्मकथने । [(वामनहाटी) राजनि० ।

**कपोतवेगा** स्त्री कपोतस्य वेगो यस्याः ५ब० । ब्राह्मीवृक्षे ।

**कपोतसार** न० कपोतः तद्वर्णः इव सारोऽत्र कृष्णत्वात् । स्रोतोऽञ्जने राजनि० । [कापोताञ्जनमिति पाठान्तरम् ।

**कपोताञ्जन** न० कपोतवर्णमञ्जनम् । स्रोतोऽञ्जने अमरः

**कपोताभ** पु० कपोतस्याभेवाभाऽस्य । १कपोतवर्णे हेम० तस्य नानावर्णत्वेऽपि कपोताञ्जनादौ कृष्णवर्णो दृश्यते क्वचित् कर्व्वुरवर्णोऽपि “तदिदं भस्म कपोतकर्व्वुरमिति” कुमारप्रयोगात् कर्व्वुरवर्णस्य कृष्णाधिक्यात् कपोतवर्णत्वम् । सुश्रुतोक्ते २मूषिकभेदे । “पूर्व्वमुक्ताः शुक्रविषा मूषिका ये समासतः । नामलक्षणभैषज्यैरष्टादश निबोध तान्” इत्युपक्रम्य “लालन” इत्यादीन् “मूषिकश्च कपोताभस्तथैवाष्टादश स्मृताः” इति विभज्य “अरुणेनानिलं क्रुद्धोवातजान् कुरुते गदान् । महाकृष्णेन पित्तञ्च श्वेतेन कफमेव च । महता कपिलेनासृक् कपोतेन चतुष्टयम् । भवन्ति चैषां दंशेषु ग्रन्थिमण्डलकर्णिकाः । पिडकोपचयाश्चोग्राः शोथश्च भृशदारुणः” इत्युक्तम् । रूपचतुष्टयं वातपित्तकफरक्तविकाररूपम्” । [तस्य तत्साधकत्वात्तथात्वम्

**कपोतारि** पु० कपोतस्यारिः ६त० । श्येनपक्षिणि शब्दर०

**कपोती** स्त्री कपोतजातिः स्त्री ङीष् । १कपोतजातिस्त्रियाम् । २यूपभेदे च । “अथ यस्यैतद्वक्रास्य सतः स्थूलद्वाग्रं भवति सह कपोती नाम यूपः योह तादृशं यूपं कुरुते बाह्यादुतोऽस्य लोकमेति तस्मात्तादृशमाशुष्कामोयूपं न कुर्वीत” शत० ब्रा० ११,७,२,२ । “वक्रः सनुतीक्ष्णाग्रश्च भवति स कपोती यूप कपोताख्य

स्योपचितसन्निवेशसाम्यात्” भा० । तेनात्र केनचित् कपोतिन् इति शब्दस्य कल्पनं भाष्यविरुद्धत्वादुपेक्ष्यम् ।

**कपोल** पु० सौ० कप–ओलच् । गण्डे गल्ले (गाल) अमरः । “कपोलकण्डूं करिभिर्विनेतुम्” कुमा० । “कपोलपाटलादेशि बभूव रघुचेष्टितम्” रघुः । “लीनालिः सुरकरिणां कपोलकाषः” किरा० “यस्याः कपोलैः कलधौतधामस्तम्भेषु” । “कपोलभित्तीरिव लोध्रगौरीः” माघः कपोलाभित्तय इव विस्तीर्णत्वात् उपमि० स० । एवं कपोलफलकादयः प्रस्तीर्णकपोले ।

**कप्यास** न० आस्यतेऽनेन आस करणे घञ् ६त० । कपिपृष्ठान्तभागे “तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी” छा० उ० । “कपेर्मर्कटस्यास्यम् कप्यासं आसेरुपवेशनार्थस्य करणे घञ् कपिपृष्ठान्तो येनोपविशति” भा० ।

**कफ** पु० केन जलेन फलति फल–ड । शरीरस्थे धातुभेदे श्लेष्मणि । “प्राणप्रयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ स्मरणं कुतस्ते” उद्भटः । कफस्य स्वरूपस्थानकर्मादिकं भावप्र० उक्तं यथा ।

“श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छलः शीतलस्तथा । तमोगुणाऽधिकः स्वादुर्विदग्धो लवणो भवेत् । एकः श्लेष्मा नामस्थानकर्म्मभेदैः पञ्चविधः । अथ श्लेष्मणां नामान्याह “कफस्यैतानि नामानि क्लेदनश्चावलम्बनः । रसनः स्नेहनश्चापि श्लेष्मणः स्थानभेदतः । अथ क्लेदनादीनां स्थानान्याह । आमाशयेऽथ हृदये कण्ठे शिरसि सन्धिषु । स्थानेष्वेषु मनुष्याणां श्लेष्मा तिष्ठत्यनुक्रमात् । दोषाणां सकलशरीरव्यापिनामपि पञ्च स्थानानीति बाहुल्याभिप्रायेणोक्तानि । तथाच वाग्भटः “इति प्रायेण दोषाणां स्थानान्यैकोज्ञतात्मनाम् । व्यापिनामपि जानीयात् कर्माणि च पृथक् पृथक्” । इति चरकश्च “ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्द्ध्वसंश्रयाः” इति अथ तत्तत्स्थानगतस्य श्लेष्मणः कर्माण्याह । क्लेदनः क्लेदयत्यन्नमात्मशक्त्याऽपराण्यपि । अनुग्लाति च श्लेष्मस्थानान्युदककर्म्मणा । अयमर्थः क्लेदनोऽन्नं क्लेदयति तेन संहतमन्नं भेदं प्राप्नोति । अपराण्यपि श्लेष्मस्थानानि हृदयादीनि मार्गेण गत्वा तत्र तत्र हृदयालम्बनसंधारणरसग्रहणसमस्तेन्द्रियतर्पणसन्धिसंश्लेषणाद्युदककर्मभिरनुग्लाति उपकरोति । तथाच “रसयुक्तात्मवीर्येण हृदयस्यावलम्बनम् । त्रिकसन्धारणं चापि विदधात्यवलम्बनः । त्रिकं शिरोबाहुद्वय-

सन्धिः। उभावपि यतः सौम्यौ तिष्ठतश्चान्तिके यतः। ततो रसान्विजानीतोरसनारसनौ समौ। रसना रसनेन्द्रियं रसनः कण्ठस्थकफः। स्नेहनः स्नेहदानेन समस्तेन्द्रियतर्पणः। श्लेष्मणः सर्वसन्धीनां संश्लेषं विदधात्यसौ”। अन्यत्र वैद्यकेऽन्यथानामाद्युक्तम्। “अवलम्बकइत्येकः क्लेदकः श्लेषकोऽपरः। बोधकस्तर्पकश्चेति श्लेष्मा पञ्चविधः स्मृतः। तल्लक्षणानि यथा “कफधाम्नां तु शेषाणां यत् करोत्यवलम्बनम्। ततोऽवलम्बकाख्याति श्लेष्मा प्राप्नोत्युरःस्थितः”। आमाशयाश्रितः सोऽन्नक्लेदनात् क्लेदकः स्मृतः। श्लेष्मकः श्लेषणात् सन्धेः स च सन्धौ व्यवस्थितः। रसनावस्थितः श्लेष्मा बोधको रसबोधनात्। शिरसि प्रस्थितश्चासौ तर्पको नेत्रतर्पणात्”कफस्थानानि“उरः कण्ठः शिरः क्लोमपर्वाण्यामाशयो रसः। मेदोघ्राणञ्च जिह्वा च कफस्थानमुरःपरम्”। अविकृतकफस्य कर्माणि यथा सुखबोधे ‘स्नेहोबन्धः स्थिरत्वञ्च गौरवं वृषता बलम्। क्षमा धृतिरलोभश्च कफकर्माविकारजम्”कफसामान्यलक्षणं यथा“माधुर्य्यस्नेहगौरवशैत्यपैच्छिल्य गुणलक्षणः श्लेष्मा तस्य समानयोनिर्मधुरो रसः सोऽस्य माधुर्य्यान्माधुर्य्यं वर्द्धयति स्नेहात् स्नेहं गौरवाद्गौरवं शैत्यात् शैत्यं पैच्छिल्यमिति तस्य पुनरन्ययोनिः कटुको रसः स श्लेष्मणः प्रत्यनीकत्वात् कटुकत्वान्माधुर्य्यमभिभवति रौक्ष्यात् स्नेहं लाघवाद्गौरवमौष्ण्यात् शैत्यं वैशद्यात्पैच्छिल्यमिति” सुश्रु०। विशेषतस्तन्निदानादिकमुक्तं सुश्रुते

“दिवास्वप्नव्यायामालस्यमधुराम्ललवणशीतस्निग्धगुरुपिच्छिलाभिष्यन्दिहायनकयवकनैषधेत्कटमाषमहामाषगोधूमतिलपिष्टविकृतिदधिदुग्धकृशरापायसेक्षुविकारानूपोदकमांसवसाविसमृणालकशेरुकशृङ्गाटकमधुरवल्लीफलसमशनाध्यशनप्रभृतिभिः श्लेष्मा प्रकोपमापद्यते। स शीतैः शीतकाले च वसन्ते च विशेषतः। पूर्व्वाह्णे च प्रदोषे च भुक्तमात्रे प्रकुप्यति”।

सुश्रुते कफविकारे हेतुरुक्तो यथा“विषमोवातजान् रोगान् तीक्ष्णपित्तनिमित्तजान्। करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान्“ वयोभेदे कफाद्याधिक्यमाह तत्रैव ‘बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु। भूयिष्ठं वर्द्धते वायुर्वृद्धे तानुवीक्ष्य योजयेत्। देशभेदोऽपि कफहेतुस्तत्रोक्तः “कफवातरोगभूयिष्ठश्चानूपः”। कफश्चाम्य एव तद्धर्माणां क्लेदनादेराप्यधर्मत्वात् यथोक्तम् सुश्रुते।

“शीतस्तिमितस्निग्धमन्दगुरुसान्द्रमृदुपिच्छिलरसबहुलभूयिष्ठमल्पकषायाम्ललवणं मधुररसप्रायमाप्यं तत् स्नेहनप्रह्लादनक्लेदनबन्धनविष्यन्दनकरमिति”। अधिकमाकरे दृश्यम्।

**कफकार** त्रि० कफं तद्विकारं करोति कृ—अच्। कफविकारकारके द्रव्यभेदे स च द्रव्यभेदः सुश्रुते उक्तः “काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधूकञ्चेति। काकोल्यादिरयं पित्तशोणितानिलनाशनः; जीवनो वृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा”।

अन्यत्र “कफपित्तकरा मतस्याः कफपित्तकरं दधि”। सुश्रुतेऽपि। सामान्यत उक्तं यथा ‘कटुकं मूलकं श्लेष्माणं वर्द्धयति स्निग्धवीर्य्यत्वात्” ‘वसुधाजलजाताभ्यां बलासं परिवर्द्धते” बलासं कफः। कफकृत्कफवर्द्धनादयोऽप्यत्र। “प्रमेहकृत् स्यात् कफकृच्च सर्वम्” वैद्यकम्।

**कफकूर्चिका** स्त्री कफं कूर्चति निकरोति कुर्च—विकारे ण्वुल्। लालायाम् आस्रासवे(लाल)। हेम०।

**कफघ्नी** कफं तद्विकारं हन्ति टक् ङीप्। १वृक्षभेदे राजनि०। २कफहन्तृद्रव्यभेदे त्रि०तानि द्रव्याणि सुश्रुते दर्शितानि यथा “आरग्वधमदनगोपघोण्टाकुटजपाठाकण्टकीपाटलामूर्व्वेन्द्रयवसप्तपर्णनिम्बकुरुण्टकदासीकुरुण्टकगुडूचीचित्रकशार्ङ्गेष्टाकरञ्जद्वयपटोलकिराततिक्तकानि सुषवी चेति। आरग्बधादिरित्येष गणः श्लेष्मविषापहः”।

“वरुणार्त्तगलशिग्रुमधुशिग्रुतर्कारीमेषशृङ्गीपूतीकानक्तमालमोरटाग्निमन्थसैरीयकद्वयबिम्बीवसुकवसिरचित्रकशतावरीविल्वाजशृङ्गीदर्भा वृहतीद्वयञ्चेति। वरुणादिर्गणोह्येष कफमेदोनिवारणः”।

“सालसारा जकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेषशृङ्गीतिनिशचन्दनकुचन्दनशिंशपाशिरीषासनधवार्जुनतालशाकनक्तमालपूतीकाश्वकर्णागुरूणि कालीयकञ्चेति। सालसारादिरित्येष गणः कुष्ठविनाशनः। मेहपाण्ड्वामयहरः कफमेदविशोषणः”। “रोध्रसावररोध्रपलाशकुटन्नटाशोकफञ्जीकट्फलैलवालुकसल्लकीजिङ्गिनीकदम्बसालाः कदली चेति। एष रोध्रादिरित्युक्तो मेदःकफहरो गणः”। “अर्कालर्ककरञ्जद्वयनागदन्तीमयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेतामहाश्वेतावृश्चिकाल्यलवणास्तापसवृक्षश्चेति। अर्कादिको गणो ह्येष कफमेदोविषापहः”। ‘सुरसाश्वेतसुरसाफणिज्झकार्य्यकगन्धकभूस्तृणसुगन्धकालमालकासमर्द्दक्षवकखरपुष्पाविड़ङ्गकट्फलसुर

शानिर्गुण्डीकुठारीन्दुरुकर्णिकाफञ्जीप्राचीवलकाकमाच्यो
विषमुष्टिकश्चेति। सुरसादिर्गणो ह्येष कफहृत्कृ-
मिसूदन:"। "पिप्पलीपिप्पलीमूलचव्यचित्रकशृ-
ङ्गवेरमरिचहस्तिपिप्पलीहरेणुकैलाजमोदेन्द्रयवपाठाजीरक-
सर्षपमहानिम्बफलहिङ्गुभार्गीमधुरसातिविषावचाविडङ्गा-
नि कटुरोहिणी चेति। पिप्पल्यादि: कफहर:
प्रतिश्यायानिलारुची:। निहन्याद्दीपनो गुल्मशूलघ्न-
श्चामपाचन:"। "एलातगरकुष्ठमांसीध्यामकत्वक्पत्रनागपु-
ष्पप्रियङ्गुहरेणुकाव्याघ्रनखशुक्तिचण्डास्थौणेयकश्रीवेष्टकचो-
चचोरकबालकगुग्गुलुसर्जरसतुरुष्ककुन्दुरुकाऽगुरुस्पृक्कोशी-
रभद्रदारुकुङ्कुमानि पुन्नागकेशरश्चेति। एलादिको
वातकफौ निहन्याद्विषमेव च"। "बृहतीकण्टकारिकाकुटज-
फलपाठा मधुकञ्चेति। पाचनीयो बृहत्यादिर्गण: पि-
त्तानिलापह:। कफारोचकहृद्रोगमूत्रकृच्छ्ररुजापह:"।
"पटोलचन्दनकुचन्दनमूर्वागुडूचीपाठा: कटुरोहिणी चे-
ति। पटोलादिर्गण: पित्तकफारोचकनाशन:"।
"ऊषकसैन्धवशिलाजतुकासीसद्वयहिङ्गूनि तुत्थकञ्चेति
ऊषकादि: कफं हन्ति गणो मेदोविशोषण:। "मुस्ता-
हरिद्रादारुहरिद्राहरीतक्यामलकविभीतककुष्ठहैमवतीव-
चापाठाकटुरोहिणीशार्ङ्गेष्टाऽतिविषाद्राविडीभल्लातकानि चि-
त्रकश्चेति। एष मुस्तादिको नाम्ना गण: श्लेष्मनिषू-
दन:"। "हरितक्यामलकविभीतकानि त्रिफला।
त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशनी"।
"पिप्पलीमरीचशृङ्गवेराणि त्रिकटुकम्। "त्र्यूषणं कफ-
मेदोघ्नं मेहकुष्ठत्वगामयान्। निहन्याद्दीपनं शूलपिनसा-
ग्न्यल्पतामपि"। "आमलकीहरीतकीपिप्पल्यश्चित्रकश्चेति।
आमलक्यादिरित्येष गण: सर्वज्वरापह:। चक्षुष्यो दी-
पनो वृष्य: कफारोचकनाशन:"। "लाक्षारेवतकुटजाऽ-
श्वमारकट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा
श्चेति। कषायस्तिक्तमधुर: कफपित्तार्त्तिनाशन:"।
"बिल्वाग्निमन्थटुण्टुकपाटलाकाश्मर्य्यश्चेति महत्। सतिक्तं
कफवातघ्नं पाके लघ्वग्निदीपनम्। मधुरानुरसञ्चैव पञ्च-
मूलं महत् स्मृतम्"। "कुशकाशनलदर्भकाण्डेक्षुका इति
तृणपञ्चक:। मूत्रदोषविकारञ्च रक्तपित्तं तथैव च।
अन्त्य: प्रयुक्त: क्षीरेण शीघ्रमेव विनाशयेत्। एषां वा-
तहरावाद्यावन्त्य: पित्तविनाशन:। पञ्चकौ श्लेष्म-
शमनावितरौ परिकीर्त्तितौ"। इति विशेषत उक्तम्।
सामान्यतस्तु तत्रैवोक्तम् "अम्लं कपित्थं श्लेष्माणं शम-
यति रूक्षवीर्य्यत्वात् मधुरं क्षौद्रञ्च"। रसभेदस्य तद्धेतुता
तत्रोक्ता। "ये रसा श्लेष्मशमना भवन्ति यदि तेषु वै।
स्नेहगौरवशैत्यानि बलासं बर्द्धयन्ति ते" (बलासं कफम्)
तत्पाकपरिपाटी तत्रैवोक्ता। "श्लेष्मा विदग्धो लवणता-
मुपैति" स्वतेजोनिलजै: श्लेष्मा शमं याति शरीरिणाम्।
"तत्र य इमे गुणा वीर्य्यसंज्ञका: शीतोष्णस्निग्धरूक्षमृदु-
तीक्ष्णपिच्छिलविशदास्तेषां तीक्ष्णोष्णावाग्नेयौ। शीत-
पिच्छिलावम्बुगुणभूयिष्ठौ। पृथिव्यम्बुगुणभूयिष्ठ: स्नेह:।
तोयाकाशगुणभूयिष्ठं मृदुत्वं। वायुगुणभूयिष्ठं रौक्ष्यम्।
क्षितिसमीरणगुणभूयिष्ठं वैशद्यम्। गुरुलघुविपाकावुक्त-
गुणौ। तत्रोष्णस्निग्धौ वातघ्नौ। शीतमृदुपिच्छिला:
पित्तघ्ना:। तीक्ष्णरूक्षविशदा: श्लेष्मघ्ना: गुरुपाको वात-
पित्तघ्न:। लघुपाक: श्लेष्मघ्न:। तेषां मृदुशीतोष्णा:
स्पर्शग्राह्या:। पिच्छिलविशदौ चक्षु:स्पर्शाभ्याम्। स्नि-
ग्धरूक्षौ चाक्षुषौ। शीतोष्णौ सुखदु:खोत्पादनेन। गुरु-
पाक: सृष्टविण्मूत्रतया कफोत्क्लेशेन च। लघुर्बद्धवि-
ण्मूत्रतया मारुतकोपेन च"।
"तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च" सुश्रु०। त-
न्नाशकद्रव्यगुणभेदा: संक्षिप्यान्यत्रोक्ता:। "गुरुशीत-
मृदुस्निग्धमधुरस्थिरपिच्छिला:। श्लेष्मण: प्रशमं यान्ति
विपरीतगुणैर्गुणा:"। तन्निवारणोपाया अन्यत्रोक्ता यथा
"रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवन स्त्रीसेवाध्वनि-
युद्धजागररतिक्रीड़ापदाघातनम्। धूमात्युष्णशिरोविरेकव-
मनस्वेदोपनाहादिकं पानाहारविहारभेषजमिदं श्लेष्मा-
णमुग्रं जयेत्"।

कफहन्तृ कफहादय: श्लेष्महन्तृश्लेष्महादयोऽप्यत्र त्रि०।

**कफणि** पुंस्त्री केन जलेन फणति स्फुरति इन्। भुजमध्य-
पर्व्वौ। कूर्परे (कनुइ) हेमच०। स्त्रीत्वे वा ङीष्।

**कफल** त्रि० कफ: साध्यत्वेनास्त्यस्य लच्। कफदायके
"वेणो: करीरा: कफलामधुरारसपाकत:" सुश्रु०।

**कफवर्द्धन** पु० कफं तद्विकारं वर्द्धयति वृध-णिच्-ल्यु।
१पिण्डीतकवृक्षे त्रिकाण्ड०। २कफवृद्धिकारके त्रि०।

**कफविरोधिन्** पु० कफं विरुणद्धि वि+रुध-णिनि। १मरिचे
राजनि०। कफविरोधकारके २कफविकारनाशके त्रि०।

**कफान्तक** पु० कफमन्तयति अन्त+तत्करोतीति णिच्-ण्वुल्।
१वर्व्वुरवृक्षे, राजनि०। २कफविकारनाशके त्रि०।

**कफारि** पु० ६त०। १शुण्ठ्याम् राजनि०। २कफनाशके त्रि०।

**कफिन्** त्रि० कफोऽस्त्यस्य कफ+इनि। १श्लेष्मप्रधाने जने।

अमरः स्त्रियां ङीप् । कफिनी तस्य भावः तल् । कफिता स्त्री त्व । कफित्व न० कफयुक्तत्वे ।

**कफेलू** पु० कफं लाति ला—कू नि०। १श्लेष्मातकतरौ उज्ज्वल० रूपमञ्जरी । २स्द्रक० कफयुक्ते त्रि०सि० कौ० "प्रमाणतयोक्तं यदुक्तं तच्चिन्त्यं सि०कौ० "कफं लाति कफेलूः श्लेष्मातकः निपातनादेत्वम्" इत्युक्तेः तत्र तदर्थत्वादर्शनात् ।

**कफोणि** पुंस्त्री केन जलेन फणति इन् पृषो० ओत्त्वम् । भुजमध्यपर्व्वणि कूर्परे (कनुइ) अमरः। स्त्रियां वा ङीप् ।

**कफोड** पु० कफोणि+वेदे पृषो० । (कनुइ) कूर्परे । "कति स्तनौ व्यदधुः कः कफोडः" अथ० १०,४,२,

**कब** स्तुतौ वर्णे च भ्वा०सक०प०सेट् । कबति अकबिष्ट चकाब ऋदित् णिचि अचकाबत् । प्रनिकबति ।

**कबन्ध** पु० कं जलं बध्नाति बन्ध—अण्, केन वायुना बध्यते, बन्ध—कर्म्मणि घञ्, कोवायुः प्राणरूपैर्बध्यते संबध्यतेऽत्राधारे घञ् वा यथायथं वाक्यम् । १उदरे तस्य पीतजलनिरोधनात् तथात्वम् । २धूमकेतौ, प्रवहवायुना निचीयमानत्वात्तस्य तथात्वम् ३राहौ, तस्य च्छिन्नमस्तकत्वेऽपि अमृतपानात् जीवनसत्त्वेन क्रियावत्त्वात् तथात्वम् ४राक्षसभेदे च मेदि० ५जले अमरः तस्य प्राणवायुधारकत्वात् तथात्वम् "आपोमयः प्राणः" इति छा०उ० श्रुतेस्तस्य प्राणधारणकरत्वम् "पञ्चदशाहानि माऽशीः काममपः पिबापोमयः प्राणो न पिबतस्ते विच्छेत्स्यते" छा०उ० जलपानं विना प्राणविच्छेदस्योक्तेस्तथात्वम् । "मनुष्याणां सहस्रेषु हतेषु हृतमूर्द्धसु । तदावेशात् कबन्धः स्यादेकोऽमूर्द्धा क्रियान्वितः" इत्युक्तलक्षणे शिरःशून्ये ६क्रियायुक्तदेहे अस्त्री अमरः । "कबन्धाश्छिन्नशिरसः खड्गशक्त्यृष्टिपाणयः" देवीमा० । "नागानामयुतं तुरङ्गनियुतं सार्द्धं रथानां शतं पत्तीनां दश कोटयो निपतिता एकः कबन्धो रणे । तादृक्कोटिकबन्धनर्त्तनविधौ खेलज्ज्वलत् खे शिरस्तेषां कोटिनिपातने रघुपतेः कोदण्डघण्टारवः" प्राचीनगाथा । "यस्य नेश्यति वपुः कबन्धताम्" चलितोर्द्धकबन्धसम्पदः" माघः । "कश्चित् द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य । वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत् कबन्धं समरे ददर्श" । "उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किञ्चन" रघुः । तद्देहस्य शिरःशून्यत्वेऽपि वायोः सम्यग्निःसरणाभावेन वायुना सम्बन्धसत्त्वात् क्रियासम्भव इति बोध्यम् ७मेघे निरुक्त ५,४ "निचीनवारं वरुणं कबन्धम्" इत्यृचमधिकृत्योक्तम् "कबन्धं मेघम् कमुदकं भवति तदस्मिन् धीयते, उदकमपि कबन्धमुच्यते बन्धिरनिभृतत्वे कमनिभृतञ्च इति" तदुक्तेः तत्र पृषो०साधुत्वम् । कबन्धराक्षसकथा च भा०व० २२७अ० यथा । "दुःखशोकसमाविष्टौ वैदेहीहरणार्द्दितौ । जग्मतुर्दण्डकारण्यं दक्षिणेन परन्तपौ । वने महति तस्मिंस्तु रामः सौमित्रिणा सह । ददर्श मृगयूथानि द्रवमाणानि सर्व्वशः । शब्दञ्च घोरं सत्त्वानां दावाग्नेरिव वर्द्धतः । अपश्यतां मुहूर्त्ताच्च कबन्धं घोरदर्शनम् । मेघपर्व्वतसङ्काशं शालस्कन्धं महाभुजम् । उरोगतविशालाक्षं महोदरमहामुखम् । यदृच्छयाथ तद्रक्षः करे जग्राह लक्ष्मणम् । विषादमगमत् सद्यः सौमित्रिरथ भारत ! । स राममभिसंप्रेक्ष्य कृष्यते येन तन्मुखम् । विषण्णश्चाब्रवीद्रामं पश्यावस्थामिमां मम । हरणञ्चैव वैदेह्या मम चायमुपप्लवः । राज्यभ्रंशश्च भवतस्तातस्य मरणं तथा । नाहं त्वां सह वैदेह्या समेतं कोशलागतम् । द्रक्ष्याभि पृथिवीराज्ये पितृपैतामहे स्थितम् । द्रक्ष्यन्त्यार्य्यस्य धन्या ये कुशलाजशमीजलैः । अभिषिक्तस्य वदनं सोमं शान्तघनं यथा । एवं बहुविधं धीमान् विललाप स लक्ष्मणः । तमुवाचाथ काकुत्स्थः सम्भ्रमेष्वप्यसम्भ्रमः । मा विषीद नरव्याघ्र ! नैष कश्चिन्मयि स्थिते । छिन्ध्यस्य दक्षिणं बाहुं छिन्नः सव्यो मया भुजः । इत्येवं वदता तस्य भुजो रामेण पातितः । खड्गेन भृशतीक्ष्णेन निकृत्तस्तिलकाण्डवत् । ततोऽस्य दक्षिणं बाहुं खड्गेन जघ्निवान् बली । सौमित्रिरपि संप्रेक्ष्य भ्रातरं राघवं स्थितम् । पुनर्जघान पार्श्वे वै तद्रक्षो लक्ष्मणो भृशम् । गतासुरपतद्भूमौ कबन्धः सुमहांस्ततः । तस्य देहाद्विनिःसृत्य पुरुषो दिव्यदर्शनः । ददृशे दिवमास्थाय दिवि सूर्य्य इव ज्वलन् । पप्रच्छ रामस्तं वाग्मी कस्त्वं प्रब्रूहि पृच्छतः । का माया किमिदं चित्रमाश्चर्य्यं प्रतिभाति मे । तस्याचचक्षे गन्धर्व्वो विश्वावसुरहं नृप ! । प्राप्तो ब्राह्मणशापेन योनिं राक्षससेविताम् । रावणेन हृता सीता राम ! लङ्काधिवासिना । सुग्रीवमभिगच्छ त्वं स ते सख्यं करिष्यति । एषा पम्पा शिवजला हंसकारण्डवैर्युता । ऋष्यमूकस्य शैलस्य सन्निकर्षे तडागिनी । वसते तत्र सुग्रीवश्चतुर्भिः सचिवैः सह । भ्राता वानरराजस्य वालिनो हेममालिनः । तेन त्वं सह सङ्गम्य दुःखमूलं निवेदय । समानशीलो भवतः साहाय्यं स करिष्यति ।

एतावच्छक्यमस्माभिर्वक्तुं द्रष्टासि जानकीम्। भुवं वानरराजस्य विदितो रावणालयः। इत्युक्त्वान्तर्हितो दिव्यः पुरुषः स महाप्रभः। विस्मितं जग्मतुश्चोभौ प्रवीरौ रामलक्ष्मणौ”। “वधनिर्धूतशापस्य कवन्धस्योपदेशतः” रघुः

**कवन्धिन्** पु० १ऋषिभेदे “अथ कवन्धी कात्यायन उपेत्य पप्रच्छ” प्रश्नोप०। अस्त्यर्थे इनि। २उदकयुक्ते त्रि० “अर्थं सृणोन मरुतः कवन्धिनः” ऋ० ५,५४,८। “कवन्धिनः उदकवन्तः” भा०। स्त्रियां ङीप्।

**कवित्थ** पु० कपयस्तिष्ठन्त्यत्र तत्फलप्रियत्वात् स्था–क पृषो० पस्य वः। कपित्थवृक्षे अमरटीका। [द्विरूपकोषः।

**कविल** पु० कव्–वर्णे इलच्। १कपिलवर्णे २तद्वति त्रि०।

**कम्** अव्य० कम–णिङभावपक्षे विच् चादि। १पादपूरणे,२जले, कञ्जम्।३मस्तके ४सुखे,शब्दर०कन्तिः कन्तुः ५मङ्गले, ६निन्दायाम् शब्दचिन्ता०। “अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पादपूरणास्तेऽमिताक्षरेष्वनर्थकाः कमीमिद्विति” यथा “यत्नीत मर्त्याय कमरिणा” ऋ०४,३०,६, “कमिति पादपूरणम्”निरु० १,६, उक्तेः पादपूरणार्थता “तन्वं कृणुषे दृशे कम्” ऋ० १,१२३,११,“अत्र कमिति पादपूरणे अथवा कमिति सुखवचनम् सुखं यथा भवतीति” भा०“एवेदेषा पुरुतमा दृशे कम् १,१२४,६, “कम् सुखेन” भा० “अरमयः सरपसस्तराय कमलम्” ऋ० २,१३,१२, “कं सुखेन” भा०। ७जलधारके मेघे“पिन्वसि त्वचं कं चित्”ऋ०,१,१२९,३, “कं चित् जलधारिणं मेघम्” भा०। ८सुखकरे “पचिणं तौग्र्याय कम्”ऋ० १,१८२,५, “कम् सुखकरम्” भा० ततः अस्त्यर्थे “कंशम्भ्यां वभयुस्तितुतयसः” पा० वादयः सप्त प्रत्ययाः। कंव कम्भ कंयु कन्ति कन्तु कन्त कंय एते सुखान्विते त्रि०।

**कम** वाञ्छायां भ्वा० आ०सक०सेट्। अतः स्वार्थे णिङ् आर्द्धधातुके वा। कामयते कामयीत कामयताम् अकामयत। अचीकमत। णिङभावपक्षेऽपि चङ् अचकमत। कामयाम् बभूव आस चक्रे चकमे। कामयिता–कमिता कामयिषीष्ट–कमिषीष्ट। कामयिष्यते–कमिष्यते। कामनीयः कमनीयः काम्यः। कामयितव्यः–कमितव्यः। कामी। कामयिता–कमिता कामितः कान्तः। कान्तिः। कर्त्तरि अच् कमः कर्मण्युपपदे अण्। स्वर्गकामः। उदित् कामयित्वा कमित्वा कान्त्वा। कामुकः कम्रः कमनः कामयमानः नि० कामयानः। काम्यते काम्यमानः। घञ् कामः सुख कामना। “नरपतिश्चकमे मृगयारतिम्”“निष्क्रष्टुमर्थं चकमे कुवेरात्” “भीमकान्तैर्नृपगुणैः” “नवं वयः कान्तमिदं वपुश्च” रघुः। “सोऽकामत बहु स्यां प्रजायेय” श्रुतिः “रमणीकमनीयकपोलतले”सा०द०टी०।“स चेत् कामयते दातुं तव मामरिसूदन!” भा० आ०१७२। “सर्वान् कामयते यस्मात्” कन्याशब्दे उक्तम्। “प्रीत्या युक्तः कामितं सर्वशस्ते” भा० आ० ५८ “कामयाञ्चक्रिरे कान्तास्ततस्तुष्टानिशाचराः” “अकम्पनस्ततो योद्धुं चकमे रावणाज्ञया” भट्टिः। आर्षे क्वचित् पर०। “एवं रूपं नलं यो वै कामयेच्छपितुं कले।” भा० व० ५८ अ०। “न च सीता दशग्रीवं मनसापि हि कामयेत्” “अकामोऽपि बलात् कामं दर्शनादेव कामयेत्” रामा०।

अनु+कामनानुरूपकामनायाम्। अनुकामयते।

अभि+आभिमुख्येन कामनायाम्। “दासीं कन्यासहस्रेण शर्मिष्ठामभिकामये” भा०आ०१८।

नि+निःशेषकामनायाम्।“या तस्य ते पादसरोरुहार्हणं निकामयेत् साऽखिलकामलम्पटा” भाग० ५स्क०१८,२२। अतिशये च “निकामतप्ता द्विविधेन वह्निना” कुमा०

प्र+प्रकर्षेण कामनायां अतिशये। प्रकामः।

**कम** वाञ्छायां चुरा० आ०सक० सेट् उदित् कविकल्पद्रुमः। णिङन्तकमवत् सर्वम्। किन्तु तत्र उदित्प्रयोजनं चिन्त्यम्।

**कमक** त्रि० कम–णिङभावे अच् स्वार्थे क। १कामुके २गोत्रप्रवर्त्तके ३ऋषिभेदे पु०। ततः गोत्रापत्ये इञ्। कामकि तद्गोत्रापत्ये पुंस्त्री बहुषु उपका० तस्य लुक्। कमकाः कामकयः।

**कमठ** पुंस्त्री कम–अठन्। १कूर्मे कच्छपशब्दे विवृतिः स्त्रियां जातित्वात् ङीष्।“कमठपृष्ठकठोरमिदं धनुः”महाना०। २विष्णोरेकादशे अवतारभेदे। “सुरासुराणामुदधिं मथ्नतां मन्दराचलम्। दध्रे कमठरूपेण पृष्ठे एकादशे विभुः” भाग० १,३,१७। ३मुनीनां जलपात्रभेदे न० विश्वः। ४वंशे पु० शब्दर०। ५दैत्यभेदे पु० हेमच०। ६शल्लकीवृक्षे पु० धरणिः।

**कमण्डलु** पुंन० मण्डनं मण्डः कस्य जलस्य मण्डं लाति–ला–कु अर्द्धर्चादि। करङ्के संन्यासिनां ब्रह्मचारिणाञ्च १जलपात्रभेदे, अमरः।“मेखलामजिनं दण्डमुपवीतं कमण्डलुम्”। “वैणवीं धारयेद्यष्टिं सोदकञ्च कमण्डलुम्”मनुः। “अशेषतीर्थोपहृताः कमण्डलोः” माघः। “कमण्डलुकपालेन शिरसा च मृजावता” भट्टिः। २प्लक्षवृक्षे,

मेदिनिः । २चतुष्पाज्जातौ च पुंस्त्री "कमण्डलुशब्दश्च-तुष्पादज्जातिभेदः" सि०कौ० । तस्यापत्यम् चतुष्पा-द्भ्यो ढञ्" पा० ढञ् "लोपोऽकद्र्वाः" पा० उ-लोपः । कामण्डलेय तदपत्ये पुंस्त्री । तस्य कर्म भावो वा युवादि०अण् । कामण्डलव तद्भावे तत्कर्मणि च न०।

**कमण्डलुतरु** पु० कमण्डलुस्तदाकृतिस्तरुः कर्म्म० । १प्लक्ष-वृक्षे रत्नमा० । कमण्डलुद्रुमादयोऽप्यत्र ।

**कमन** त्रि० कम–णिङभावे ताच्छील्ये युच् । १कमनीये अ-भिरूपे २कामुके च मेदि० । "कम्रा कमना युवतिः" सि०कौ० । कमनच्छदः । "त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधानम्" (वपुः) भाग० १,६,३१ । करणे युच् । ३कन्दर्पे । ४अशोकवृक्षे च पु० मेदि० । ५ब्रह्मणि पु०हेमच० । [हेमच० । स्त्रियां ङीप् ।

**कमनच्छद** पुंस्त्री कमनः सुन्दरः छदोऽस्य । १कङ्कपक्षिणि ।

**कमनीय** त्रि० कम–णिङभावे कर्मणि अनीयर् । १सुन्दरे, "रमणीकमनीयकपोलतले परिपीतपटीरसेरलसः" सा० द० टी० । "रुचिरं कमनीयतरा गमिता" माघः। २कामनायोग्ये वाञ्छनीये च । "अनन्यनारीकमनीयम-ङ्कम्" कुमा० । कमनीयस्य भावः "योपधाद्गुरूपोत्त-माद्वुञ्" पा० वुञ् । कामनीयक तद्भावे न० ।

**कमन्तक** पु० कम–बा० भ स्वार्थे क । ऋषिभेदे तस्य गोत्रा-पत्यम् इञ् । कामन्तकि तद्गोत्रापत्ये पुंस्त्री बहुत्वे उपका० इञोलुक् । कामन्तकयः कमन्तकाः ।

**कमन्ध** न०जले रायमुकुटे परमतेनोक्तम् । तत्र हि कबन्धमिति स्वयं व्याख्याय कमन्धम् इति ममध्यपाठे कम् अन्धम् इति नामद्वयमेकीयमतेनोक्ता कमन्धमित्येकं नाम परम-तत्वेनोक्तम् ।

**कमर** त्रि० कम–णिङभावे अरच् । कामुके उज्ज्वल० ।

**कमल** न० कम–वृषादि०कलच् । १पद्मे तद्भेदस्य त-द्वयवभेदस्य च गुणादि भावप्र० उक्तं यथा

"कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित् । तृष्णा-दाहास्रविस्फोटविषवीसर्पनाशनम् । विशेषतः सितं पद्मं पुण्डरीकमिति स्मृतम् । रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् । धवलं कमलं शीतं मधुरं कफपित्तजित् । तस्मादल्पगुणं किञ्चिदन्यद्रक्तो-त्पलादिकम् । मूलनालदलोत्फुल्लफलैः समु-दिता पुनः । पद्मिनी प्रोच्यते प्राज्ञैर्बिसिन्यादिश्च सा स्मृता । आदिशब्दाच्च नलिनी कमलिनीत्यादि । पद्मिनी शीतला गुर्व्वी मधुरा लवणा च सा । पित्ता-सृक्कफनुद्रूक्षा वातविष्टम्भकारिणी । अथ नवपत्रादि । संवर्त्तिका नवदलं बीजकोषस्तु कर्णिका । किञ्जल्कः केश-रः प्रोक्तः मकरन्दो रसः स्मृतः । मृणालं पद्मनालं स्यात्तथा बिसमिति स्मृतम् । संवर्त्तिका हिमा तिक्ता कषाया दाहतृट्प्रणुत् । मूत्रकृच्छ्रगुदव्याधिरक्तपित्त विनाशिनी । पद्मस्य कर्णिका तिक्ता कषाया मधुरा हिमा । मुखवैशद्यकृल्लघ्वी तृष्णास्रकफपित्तनुत् । किञ्जल्कः शीतलो वृष्यः कषायो ग्राहकोऽपि सः । कफपित्ततृट्-दाहदाहरक्तार्शोविषशोथजित् । मृणालं वृष्यमधुरं पित्तदाहास्रजिद्गुरु । दुर्ज्जरं स्वदुपाकञ्च स्तन्यानिल-कफप्रदम् । संग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम्" । "नवावतारं कमलादिवोत्पलम्" रघुः । "प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः" "धारापातैस्त्वमिव कम-लान्यभ्यवर्षन्मुखानि" मेघ० "अमलकमलराशेः"लीला० "न कमलं कमलम्भयदम्भसि" माघः। कमलयोनिः कम-लासनः । २क्लोम्नि ३भेषजे ४सलिले ५ताम्रे हेम० ६मृगभेदे पुंस्त्री स्त्रियां ङीप् ७लक्ष्म्यां ८वरनार्यां स्त्री मेदि०।९सारसपक्षिणि अमरः कमलनामनामत्वा-त्तस्य स्त्रियां ङीप् । १०स्वनामख्याते जम्बीरभेदे स्त्री "रम्भाफलं तिन्तिडीकं कमलानागरङ्गकम् । फला-न्येतानि भोज्यानि एभ्योऽन्यानि विवर्जयेत्" तन्त्रसा० पुरश्चरणनियमे । तद्गुणाश्च भावप्र०उक्ता यथा । "मि-ष्टनिम्बूफलं स्वादु गुरु मारुतपित्तनुत् । गररोगविषध्वं-सि कफोत्क्लेशि च रक्तहृत् । शोषारुचितृषाच्छर्द्दिहरं बल्यञ्च बृंहणम्"११मिथिलास्थे नदीभेदे स्त्री । १२छन्दो-भेदे स्त्री । तल्लक्षणं वृत्तरत्नावल्यां द्विधोक्तम् यथा"द्विगुण-नगणरचितः सगणद्वयं हि विहितः । फणिपतिमति-विमला क्षितिप ! भवति कमलेति" "वसुभिः प्रमिता सग-णाविहिताः पुनरेकमितोनिहितोगुरुरन्ते । यदि सत्-कवयोविलसन्मतयोऽभिधया कमलेति तदाकलयन्ते" (गोलापी) १३पाटलवर्णे १४तद्वति त्रि०। "शबलाय स्वाहा कमलाय स्वाहा पृश्नये स्वाहा तैत्ति० ७,३,१८,१ । अस्य गुणवचनत्वात् स्त्रियां बह्वादि० वा ङीष् । कमली कमलानां संघः खण्ड । कमलखण्ड पद्मसंघे न० तस्य देशः पुष्क० इनि । कमलिनी भावप्र० उक्ता बीज-कोषादौ स्त्री "कमलिनीमलिना दिवसात्यये" उद्भटः । "उक्तोमलयतालेन लघुमध्ये स्फुरेद्गुरुः । सप्तदशाक्षर-

र्युक्तः कमलोऽयं भयानके" सङ्गीतशास्त्रोक्ते १५ध्रुवभेदे पु०

**कमलकीट** पु० कमलवर्णः कीटः। कीटभेदे तत्र भवादौ पलद्या० अण्। कामलकीट तद्भवे त्रि०।

**कमलकीरक** पु० कमलवर्णः कीर इव कायति कै—क। कीटभेदे तत्र भवादौ पलद्या० अण्। कामलकीरक तद्भवे त्रि०।

**कमलज** पु० कमलात् विष्णोर्नाभिकमलाज्जायते जन—ड। १ब्रह्मणि चतुर्मुखे कञ्जजशब्दे विवृतिः। "अग्नियमदहनकमलजशशिशूलभृदिति" वृहत्सं०। तदभेदात् २रोहिणीनक्षत्रे च तस्य तदधिष्ठितत्वात्तथात्वम्। ३पद्मजातमात्रे मध्वादौ त्रि०। कमलजातपद्मजातादयोऽप्यत्र।

**कमलभिदा** स्त्री ६त०। कमलपाटने ततो भवादौ पलद्या० अण्। कामलभिद तद्भवे त्रि०।

**कमलयोनि** पु० कमलं विष्णुनाभिकमलं योनिरुत्पत्तिस्थानमस्य। १चतुर्मुखे ब्रह्मणि। कञ्जजशब्दे विवृतिः। पद्मयोन्यादयोऽप्यत्र। ६त०। २कमलानामुत्पत्तिस्थाने स्त्री।

**कमलवीज** न० ६त०। (कमलगट्टा) पद्माख्ये भावप्र० तद्गुणा उक्ता यथा "पद्मवीजं हिमं स्वादु कषायं तिक्तकं गुरु। विष्टम्भि वृष्यं रूक्षञ्च गर्भसंस्थापकं परम्। कफवातहरं बल्यं ग्राहि पित्तास्रदाहनुत्"।

**कमलाकर** पु० कमलानामाकरः उत्पत्तिस्थानम्। १पद्माकरे तडागे। २पद्मानां समूहे च। "हरिदश्वः कमलाकरानिव" रघुः। कमलाकरभट्टनिर्मिते ३स्मृतिनिबन्धभेदे।

**कमलादि** त्रि० वार्त्तिकोक्ते संघार्थे खण्डप्रत्ययनिमित्ते शब्दगणे स च गणः "कमल अम्भोज पद्मिनी नलिनी कुमुद सरोज पद्म नलिन कैरविणी" आकृतिगणः तेन कदलीखण्डमित्यादि सिद्धिः।

**कमलापति** पु० ६त०। नारायणे समुद्रात् लक्ष्म्या आविर्भूतिसुरवर्ण्या तया विवेचनापूर्वकं नारायणस्य पतित्वेन वरणं भाग० ८,८ अ० वर्णितं यथा

"ततस्तते नूपुरवल्गुशिञ्जितैर्विसर्पती हेमलतेव सा बभौ। विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम्। गन्धर्वसिद्धासुरयक्षचारणत्रैपिष्टपेयादिषु नान्वविन्दत। नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित्तत्र न सङ्गवर्ज्जितम्। कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतोव्यपाश्रयः। धर्म्मः क्वचित्तत्र न भूतसौहृदं त्यागः क्वचित्तत्र न मुक्तिकारणम्। वीर्य्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्ज्जितः। कश्चिच्चिरायुर्न हि शीलमङ्गलं कश्चित्तदप्यस्ति न वेद्यमायुषः। यत्रोभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्च न काङ्क्षते हि माम्। एवंविमृश्याव्यभिचारिसद्गुणैर्वरं निजैकाश्रयतागुणाश्रयम्। वव्रे वरं सर्व्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम्। तस्यांस देश उशतीं नवकञ्जमालां माद्यन्मधुव्रतवरूथगिरोपघुष्टाम्। तस्थौ निधाय निकटे तदुरः स्वधाम सव्रीडहासविकसन्नयनेन याता। तस्याः श्रियस्त्रिजगतोजनको जनन्या वक्षोनिवासमकरोत् परमं विभूतेः। श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतींस्त्रिलोकान्। शङ्खतूर्य्यमृदङ्गानां वादित्राणां पृथक् स्वनः। देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत्। ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम्। ईडिरेऽवितथैर्मन्त्रैस्तल्लिङ्गैः पुष्पवर्षिणः। श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः। शीलादिगुणसम्पन्ना लेभिरे निर्वृतिं पराम्। निःसत्त्वा लोलुपा राजन्निरुद्योगा गतत्रपाः। यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः"। पद्मापतिकमलाकान्तादयोऽप्यत्र।

**कमलालया** स्त्री कमलमालयो यस्याः। लक्ष्म्याम्।

**कमलाक्ष** पु० ६त०। नारायणे "साम्यमाप कमलासखविश्वक्सेनेनेत्यादि" माघः।

**कमलासन** पु० कमलमासनं यस्य। चतुरानने ब्रह्मणि। "क्रान्तानि पूर्व्वं कमलासनेनेन" कुमा०

**कमलासनस्थ** पु० कमलं विष्णोर्नाभिकमलरूपमासनम्। तत्र तिष्ठति स्था—क। विधातरि यथा च तस्य विष्णुनाभिकमले स्थितिस्तथा कञ्जजशब्दे उक्तम्।

**कमलिनी** स्त्री कमलानां देशः "पुष्करादिभ्योदेशे" पा० पुष्क० इनि। १कमलाधारदेशे पद्माकरे शब्दर० २कमलसमुदायरूपपद्मलतायाञ्च। "पुष्पिताः कमलिनीरिव द्विपः" रघुः

**कमलोत्तर** न० कमलमिवोत्तरमुत्कृष्टम्। कुसुम्भपुष्पे अमरः

**कमा** स्त्री कम—णिङभावे वा० स्त्रियां भावे अ। शोभायाम् राजनि०।

**कमित** त्रि० कम—णिङभावपक्षे तृच्। कामुके स्त्रियां ङीप्। कमित्री "अनुकाभिकाभीकाः कमिता" पा०। अतिशयेन कमिता ईयसुन् तृणोलोपः। कमीयस् कान्ततरे त्रि० स्त्रियां ङीप्। इष्ठन् कमिष्ठ कान्ततमे त्रि०

**कम्प** पु० कपि—चलने घञ्। गात्रादिकम्पे वेपथौ। "यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः" भाग० ३,७,११

कम्पवत्त्वं स च वातादिना प्रेरणात् स्थावरस्य भूम्यादेर्भवति देहादेस्तु मनसोविकारभेदेन वातादिधातुना च चालनात् भवति । स च रसविशेषे निर्वेदादिव्यभिचारिभावविशेषजन्यः यथोक्तं सा० द० निर्वेदादिव्यभिचारिभावान् विभज्य तेषां लक्षणाभिधाने "आवेगः सम्भ्रमस्तत्र इत्युपक्रम्य "गजादेः स्तम्भकम्पादिः"। "शौर्यापराधादिभवं भवेच्चण्डत्वमुग्रता । तत्र स्वेदः शिरःकम्पतर्जनाताडनादयः"। मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः । भूपातकम्पप्रस्वेदफेनलालादिकारकः"। "निन्दाक्षेपापमानादेरमर्षोऽभिविनिविष्टता । नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्जनादिकृत्"। "परकीयात्मदोषाद्यैः शङ्कानर्थस्य तर्कणम् । वैवर्ण्यकम्पवैस्वर्य्यपार्श्वालोकास्यशोषकृत्" । "निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः"। "रत्यायासमनस्तापक्षुत्पिपासादिसम्भवा । ग्लानिर्निष्प्राणता कम्पकार्श्यानुत्साहतादिकृत्"; कम्पश्च भयानकरसस्यानुभावः यथाह तत्रैव भयानकं प्रकृत्य "अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणम् । प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः"। रौद्ररसस्य व्यभिचारिभावश्च यथाह तत्रैव रौद्रं प्रकृत्य "उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः। मोहामर्षादयश्चात्र भावाः स्युर्व्यभिचारिणः"। शृङ्गारादौ तु तदीयव्यभिचारिभावभेदेनैव कम्पादि जन्यते इति भेदः । ज्वरादिकृतकम्पस्तु वैद्यके प्रसिद्धः । तद्धेतुत्वं च यथाह दृष्टा । दिङ्मात्रमुक्तं भावप्र० "व्यथावेपथुनिद्रानाशविष्टम्भाद्यो वातजाः"। शीतानिलेन च देहस्य कम्पो जायते । अतएव "मुहुर्मुहुर्मुहुर्मुखा कृतवेपथुः" माघे वर्णितम् ।

**कम्पन** त्रि० कपि-युच् । १कम्पयुक्ते । भावे ल्युट् । २चलने न० मेदि०। णिच्-युच् । ३कम्पयितरि त्रि० "दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः"। दुन्दुभिपूजामन्त्रः । "प्रकम्पनेनानुचकम्पिरे सुराः" माघः "एवमुक्ता जकुतुकारम्भा हृदयकम्पनम्" भा०आ०४७अ०। ४शिशिरे ऋतौ पु०। ५अस्त्रभेदे च । "प्रासैस्तथा गदाभिश्च परिघैः कम्पनैस्तथा"। "जडता गद्गदा वाचो रात्रौ निद्रा भवत्यपि । प्रवाल्ये नयने चैव मुखमाधुर्य्यमेव च । कफोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत् । मुनिभिः सन्निपातोऽयमुक्तः कम्पनसंज्ञकः" भावप्र० उक्ते ६सान्निपातिकज्वरभेदे पु० ।

**कम्पलक्ष्मन्** पु० कम्पः लक्ष्म यस्य । वायौ त्रिका० तस्य स्थावराणां चलनहेतुत्वात् तथात्वम् ।

**कम्पा** स्त्री कपि-भावे अ । चलने हेमच० [हेमच० ।

**कम्पाक** पु० कम्पया चलनेन कायति प्रकाशते कै-क । वायौ

**कम्पित** न० कपि-भावे क्त । १कम्पे शब्दच० कपि-णिच् भावे क्त । २चालने "अनोकहाकम्पितपुष्पगन्धिः" रघुः कर्त्तरि क्त । ३कम्पयुक्ते त्रि० । णिच्-कर्म्मणि क्त । ४चालिते त्रि० "अतिचपलकपिकुलकम्पितकम्पिलक्ष्यूतपल्लवफलभरैः" काद० "वाद्यकोलाहलितां प्रकम्पनैः कम्पिताम्" माघः।

**कम्पिन्** त्रि०कम्प-णिनि । १कम्पयुक्ते णिच् णिनि । २कम्पयितरि "गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः" ति०त० पु०।

**कम्पिल** पु०कम्प-इलच् । रोचन्याम् (कमलागुड़ि) अमरः। शब्दो० कम्पीलकम्पिल्यशब्दौ तत्रार्थे रामनुकुटादयः ।

**कम्पिल्ल** पु० कपि-इल्ल । रोचने वृक्षभेदे । "कम्पिल्लः कफचन्द्रो रक्ताङ्गोरोचनोऽपि च । कम्पिल्लः कफपित्तास्रकृमिगुल्मोदरव्रणान् । हन्ति रेची कटूष्णश्च मेहानाहविषाश्मनुत्" भावप्र०।२नगरभेदे "देवीं कम्पिल्लवासिनीम्" यजु०२३,१८, काम्पीलेति पाठान्तरम् । काम्पीले नगरे वासिनीम्" वेददी०कम्पिल्ल इत्यस्य करञ्जभेदः (काटाकरञ्जा) इत्येके "अतिचपलकपिकुलकम्पितकम्पिलक्ष्यूतपल्लवफलभरैः" काद० स्वार्थे कन् कम्पिल्लकोऽप्युक्तार्थे ।

**कम्प्य** त्रि० कपि-णिच् कर्म्मणि यत् । चालनीये "सत्त्वधर्म्मा इवाकम्प्याः" रामा० ।

**कम्र** त्रि० कपि-र । कम्पशीले "विधाय कम्प्राणि मुखानि कम्प्रति" नैष० । [ प्रणिकम्पति

**कम्ब** गतौ भ्वा० पर०सक०सेट् । कम्बति अकम्बीत् चकम्ब

**कम्बर** पु०कम्ब-अरन् । १चित्रवर्णे २तद्वति त्रि० शब्दर०।

**कम्बल** पु०कम्ब-कलच् कं, कुत्सितं शिरोऽम्बु वा बलति बल संवरे अच् वा ।१सर्पभेदे २गवादेर्गलस्थरोमश्रृपसास्नायां, ३प्रावारे, ४कृमौ च । ५लनामख्याते मेषलोमनिर्म्मिते वस्त्रासनादौ, ६जले न०७उत्तरासङ्गे च मेदि० । ८मृगभेदे पु स्त्री०जटा०स्त्रियां ङीप्।"न तथा सुखयत्यग्निर्न प्रावारान कम्बलाः" रामा०। "कम्बलवन्तं न बाधते शीतम्"। विदग्धमु० । कम्बलनामश्च नागलोकपतिः "ततोऽधस्तात् पाताले नागलोकपतयो वासुकिप्रमुखाः शङ्खकुलिककमहाशङ्खश्वेतधनञ्जयधृतराष्ट्रशङ्खचूड़कम्बलाश्वतरदत्तादयो महाभोगिनो महामर्षानिवसन्ति" भाग० ५,२४,३२ । "कम्बलाश्वतरौ चापि नागः कालीयकस्तथा" भा० आ० ३५,नागनामकीर्त्तने । अयञ्च वरुणसभास्थः "कम्बलाश्वतरौ

नागौ धृतराष्ट्रबलाहकौ" भा०स०६अ० वरुणसभ्यकथने। तदधिष्ठिते प्रयागस्थे ६ तीर्थभेदे च। "प्रयागं सप्रतिष्ठानं कम्बलाश्वतरौ तथा। तीर्थं भोगवती चैव वेदिरेषा प्रजापतेः" भा० व० ८५ अ०। प्रयागस्थतीर्थकथने।

**कम्बलबर्हिष** पु० अन्धकनृपस्य पुत्रभेदे "कुकुरोभजमानश्च शुचिः कम्बलबर्हिषः" भाग०९,२४,११। अन्धकस्येति शेषः। "कुकुरभजमानशुचिकम्बलबर्हिषाख्याश्चत्वारोऽन्धकस्य पुत्राः" तट्टीकायां, श्रीधरधृतपराशरवाक्यम्

**कम्बलहार** त्रि० कम्बलं हरति हृ—अण् उप०स०। १कम्बलहारके। २ऋषिभेदे पु० तस्य गोत्रापत्यम् इञ्। काम्बलहारि तदपत्ये पुंस्त्री बहुत्वेऽस्त्रियां तस्य लुक्। कम्बलाः तद्गोत्रपुमपत्येषु। [बहु०। २तथाख्ययुक्ते त्रि०।

**कम्बलार्ण** न० कम्बलरूपमृणम् ६त०। १कम्बलरूपे ऋणे

**कम्बलिका** स्त्री क्षुद्रः कम्बलः ई—स्वार्थे कन् ह्रस्वः। १क्षुद्रकम्बले। २कम्बलमृगजातिस्त्रियाञ्च। ततः चतुरर्थ्यां पक्षा०फक्। काम्बलिकायन तत्सन्निकृष्टदेशादौ त्रि०।

**कम्बलिन्** त्रि० कम्बलः गलकम्बलः प्रशस्तोऽस्त्यस्य कम्बल+प्राशस्त्ये इनि। वृषे "गन्त्री कम्बलिवाह्यकम्" अमर०।

**कम्बलिवाह्यक** न० कम्बलिना वृषेण वाह्यम् वह-कर्मणि ण्यत् संज्ञायां कन्। वृषवाह्ये शकटे गन्त्र्याम् अमरः।

**कम्बलीय** त्रि० कम्बलाय हितं छ। कम्बलसाधने ऊर्णायाम्। संज्ञायान्तु "कम्बलाच्च संज्ञायाम्" पा० यत् कम्बल्यम् ऊर्णापलशते न०।

**कम्बि** स्त्री कम्बति अन्नादानया कम्ब—गतौ करणे इन्। दर्व्याम् अमरः (हाता) वा ङीप् कम्बीत्यप्यत्र

**कम्बु** पुंन० कम—उन् बुक् च, कम्ब-गतौ मृगय्वा०उन् वा। १शङ्खे अमरः। "कम्बोः सपत्नीकृतः" मुरारिः। "महात्मा चारुसर्वाङ्गः कम्बुग्रीवो महाभुजः" भा०व० १६०अ०। २गजे ३शम्बूके ४वलये च मेदि०। ५कर्वुरवर्णे पु० तद्वति त्रि०। ७ग्रीवायाम् ८नलके च (फापाहाड़) स्त्री हेम० स्त्रीत्वे अप्राणिजातित्वात् वा ङष्। वलयस्थाने शङ्खमयः सधवाधार्यालङ्कारभेदः। "शतं दासीसहस्राणि तरुण्यो हेमवल्लिकाः। कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः" भा० स० ५८अ०११ "पिनद्धकम्बुः पाणिभ्यां तृतीयां प्रकृतिं गतः" भा०वि०२अ०। ग्रीवार्थे "प्रतिमुच्य कुण्डले दीर्घे च कम्बूपरि हाटके शुभे" भा०वि० ११अ०।

**कम्बुकण्ठी** स्त्री कम्बुरिव कण्ठोऽस्याः स्वाङ्गत्वात् ङीप्।

१कम्बुग्रीवायाम्। स्वार्थे कन् कम्बुकण्ठिकाप्यत्र। बहु० २तथाकण्ठयुक्ते त्रि० स्त्रियां स्वाङ्गत्वात् वा ङीप्।

**कम्बुका** स्त्री कम्बुरिव काशेन कायति कै—क। १अश्वगन्धायाम् रत्नमा०। स्वार्थे कन्। कम्बुशब्दार्थे ७ग्रीवायाम् स्त्री

**कम्बुकाष्ठा** स्त्री कम्बु चित्रवर्णं काष्ठमस्याः। अश्वगन्धायाम्। राजनि०।

**कम्बुग्रीवा** स्त्री कम्बुरिव रेखात्रययुता ग्रीवा। शङ्खवत्रेखात्रययुक्तायां १ग्रीवायाम्। कम्बुरिव ग्रीवास्य। २तथाभूतग्रीवायुक्ते त्रि०।

**कम्बुग्रीवादि** पु० कम्बुग्रीवा आदि र्यस्य। घटत्वजातिव्यञ्जके व्याकृतिभेदे कम्बुग्रीवाद्युत्तुभ्रोदरप्रभृतयोहि घटत्वजातिव्यञ्जकाः। कम्बुग्रीवादेश्च गुरुत्वात् नावच्छेदकत्वं तेन कम्बुग्रीवादिमान्नास्तीत्यादौ कम्बुग्रीवादेर्नाभावप्रतियोगितावच्छेदकत्वम् किन्तु "सम्भवति लघौ गुरौ तदभावादिति" न्यायात् समनियतं अनतिरिक्तवृत्ति घटत्वमेव तत्तावच्छेदकम्। इतरत्र गुरुधर्मस्यावच्छेदकत्वानङ्गीकारेऽपि शक्यताया अवच्छेदकत्वं स्वीक्रियतएवातः कम्बुग्रीवादिमानिति पदस्य कम्बुग्रीवादिमत्त्वमेव शक्यतावच्छेदकं न घटत्वमिति भेदः इत्याकरे स्थितम्।

**कम्बुपुष्पी** स्त्री कम्बुः शङ्ख इव पुष्पमस्याः। शङ्खपुष्प्याम् राजनि०। [इनि ङीप्। शङ्खपुष्प्याम् राजनि०।

**कम्बुमालिनी** स्त्री कम्बूनां तन्मयपुष्पाणां मालास्त्यस्याः

**कम्बू** त्रि० कम्ब—गतौ कू कम्बूः कृनूभूजम्बूकम्बू इत्यादि० नि०। १परद्रव्यापहारके उज्ज्वल०। कम्बुशब्दात् स्त्रीत्वे ऊङ्। २कम्बुशब्दार्थे स्त्री।

**कम्बोज** पु० कम्ब—ओज।१हस्तिभेदे,२शङ्खभेदे मेदि० "पञ्चनदं समारभ्य स्लेच्छाद्दक्षिणपूर्वतः। कम्बोजदेशः इत्युक्तः" इत्युक्ते ३देशे च। कम्बोजे जातादि कच्छा०अण्। काम्बोज तज्जातादौ त्रि० मनुष्यतत्स्थयोस्तु वुञ्। काम्बोजको मनुष्यः काम्बोजकं हसितमित्यादीति भेदः। बहुत्वे तु तस्य लुक् कम्बोजाः कम्बोजजातेषु। काम्बोजस्य राजानः "कम्बोजाल्लुक्" पा० लुक्। कम्बोजास्तद्राजेषु। "कम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः" रघुः। अत्र काम्बोजा इत्यपपाठः राजनि "कम्बोजाल्लुक्" पा० लुग्विधानात्। कम्बोजाभिजनपरत्वे दीर्घपाठः समर्थनीयः इत्यके। कम्बोजोऽभिजनोऽस्य सिन्ध्वा० अण्। काम्बोज कम्बोजदेशाभिजने त्रि०। अयञ्च देशः वृह०स० कूर्मविभागे नैरृत्यां दिशि कथितः यथा "नैरृत्यां दिशि देशाः पह्लव

कम्बोजसिन्धुसौवीराः” सुण्डशब्देन समासे मयूरव्यं॰ पूर्वनिपातः कम्बोजमुण्ड इत्येव । कम्बोजदेशस्थक्षत्रियास्तु शनकैः क्रियालोपात् शूद्रत्वमाप्ताः यथाह मनुः । “शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः । वृषलत्वं गता लोके ब्राह्मणादर्शनेन च । पौण्ड्रकाश्चौड्रद्रविडाः कम्बोजाः यवनाः शकाः । पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः”

**कम्बोजादि** वार्त्तिकोक्ते तद्राजप्रत्ययस्य लुगनिमित्ते शब्दगणे स च गणः “कम्बोज चोल केरल शक यवन”

**कम्ब्वातायिन्** पु॰ कम्बुरिवातायी । शङ्खतुल्यश्वेतपूर्व्वकाये शङ्खचिल्ले ।

**कम्भ** त्रि॰ कम्+मत्वर्थे भ । १जलयुक्ते २सुखयुक्ते च ।

**कम्भारी** स्त्री कं जलं बिभर्त्ति कम्+भृ—अण् उप॰स॰। गाम्भार्य्याम् (गाम्भार) । राजनि॰ । मुग्ध॰ मते षण् तस्य षित्त्वात् ङीप् । सि॰ कौ॰ मते तु गौरा॰ ङीष् इति भेदः । तस्याः शीतवीर्य्यत्वात्तथात्वम् ।

**कम्भु** न॰ कं जलं तद्वच्छैत्यं बिभर्त्ति—भृ–डु । उशीरे राजनि॰ तस्य शीतवीर्य्यत्वात् तथात्वम् ।

**कम्र** त्रि॰ कम–णिङभावे र । मैथुनेच्छायुक्ते १कामुके अमरः। २मनोहरे च ।“कम्रा कमना: युवतिः”सि॰कौ॰

**कय** त्रि॰ किम्+दृशो॰ वेदे कयादेशः । किंशब्दार्थे “न किं षहन्त्य पर्य्यता कयस्य चित्” ऋ॰१,२७,८ । “नि षू नमातिमतिं कयस्य चित्तेजिष्ठाभिः” १२९,५ “नरोऽभिमातिं कयस्य चित्” ८,२५,१५ ।

**कयस्था** स्त्री कं जलं याति या—ड तथा सतो तिष्ठति स्था क । काकोल्याम् क्षीरस्वामी

**कयाधू** स्त्री जम्भासुरकन्यायां हिरण्यकशिपुभार्य्यायाम् “हिरण्यकशिपोर्भार्य्या कयाधूर्नाम दानवी । जम्भस्य तनया दत्ता सुषुवे चतुरः सुतान् । संह्लादं प्रागनुह्लादं प्रह्लादं ह्लादमेव च” भा॰ ६,१८,९ ।

**कर** पु॰ कीर्य्यते विक्षिप्यतेऽनेन कॄ—करणे अप् । १हस्ते हस्तिशुण्डे च तयोर्जलादिक्षेपसाधनत्वात् तथात्वम् २कर्म्मणि अप् ।३किरणे मेदिनिः । तत्र हस्तकिरणयोः “प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता । अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि” “स्थितः कराग्रैरसमग्रपातिभिः”माघः। हस्ते“केशाचीवोमधःकायं संस्पृशेत् धरणीमपि । यदि स्पृशति चैतानि भूयःप्रक्षालयेत् करम्” आ॰ त॰ देवलः नेत्रवृत्तिः “वामः काञ्चनपिञ्जरे नृपकराम्भोजैस्तनूमार्ज्जनम्” उद्भटः। “तथा वामकरे दश”मनुः । कं सुखं राति रा क । ४राजग्राह्ये राजस्वे तत्र राजग्राह्यस्वयोः “असम्भवद्घनरसा शतालिपरिसेविता । करं न सहते राजन् ! भूमिर्नववधूरिव” ।“तन्वि तव कुचावेतौ नियतं चक्रवर्त्तिनौ । आसमुद्रक्षितीशोऽपि भवान् यत्र करप्रदः” उद्भटः। यथा च राज्ञा करनिवेशनं राष्ट्रे करणीयं तथा मनुनोक्तम् यथा

“क्रयविक्रयमध्वानं भक्तञ्च सपरिव्ययम् । योगक्षेमञ्च सम्प्रेक्ष्य वणिजो दापयेत् करान् । यथा फलेन युज्येत राजा कर्त्ता च कर्म्मणाम् । तथावेक्ष्य नृपो राष्ट्रे कल्पयेत् सततं करान् । यथाल्पाल्पमदन्त्याद्यं वार्य्यौकोवत्सषट्पदाः । तथाल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाब्दिकः करः । पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः । धान्यानामष्टमो भागः षष्ठो द्वादश एव वा । आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम् । गन्धौषधिरसानाञ्च पुष्पमूलफलस्य च । पत्रशाकतृणानाञ्च वैदलस्य च चर्म्मणाम् । मृण्मयानाञ्च भाण्डानां सर्व्वस्याश्ममयस्य च । म्रियमाणोऽप्याददीत न राजा श्रोत्रियात् करम् । न च क्षुधाऽस्य संसीदेच्छ्रोत्रियो विषये वसन् । यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा । तस्यापि तत्क्षुधा राष्ट्रमचिरेणैव सीदति । श्रुतवृत्ते विदित्वाऽस्य वृत्तिं धर्म्म्यां प्रकल्पयेत् । संरक्षेत् सर्व्वतश्चैनं पिता पुत्त्रमिवौरसम् । संरक्ष्यमाणो राज्ञा यं कुरुते धर्म्ममन्वहम् । तेनायुर्व्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव च । यत्किञ्चिदपि वर्षस्य दापयेत् करसंज्ञितम् । व्यवहारेण जीवन्तं राजा राष्ट्रे पृथग्जनम् । कारुकान् शिल्पिनश्चैव शूद्रांश्चात्मोपजीविनः । एकैकं कारयेत् कर्म्म मासि मासि महीपतिः । नोच्छिन्द्यादात्मनो मूलं परेषाञ्चातितृष्णया । उच्छिन्दन् ह्यात्मनो मूलमात्मानं तांश्च पीडयेत्” व्याख्यातञ्चेदं कुल्लूकभट्टेन “क्रयविक्रयमित्यादि । कियता मूल्येन क्रीतमिदं वस्त्रलवणादि द्रव्यं विक्रीयमाणञ्चात्र कियल्लभ्यते कियद्दूरादानीतं किमस्य वणिजो भक्तव्ययेन शाकसूपादिना परिव्ययेन लग्नं किमस्यारण्यादौ चौरादिभ्योरक्षयःरूपेण क्षेमप्रतिविधानेन गतं, कोऽस्य इदानीं लाभयोग इत्येतदवेक्ष्य वणिजः करान् दापयेत् । यथेति । यथा राजाऽवेक्षणादिकर्म्मणः फलेन, यथा च कार्षिकवणिगादा-

कृषिवाणिज्यादिकर्म्मणां फलेन सम्बध्यते । तथा निरूप्य राजा सर्व्वदा राष्ट्रात् करान् गृह्णीयात् । अत्र दृष्टान्तमाह यथेत्यादि । यथा जलौकोवत्सभ्रमराः स्तोकस्तोकानि रक्तक्षीरमधूनि अदन्त्येवं राजा मूलधनमनुच्छिन्दताऽल्पोऽल्पो राष्ट्रादाब्दिकः करो ग्राह्यः । तमाह पञ्चाशद्भागो राज्ञा ग्रहीतव्यः । एवं धान्यानां षष्ठोऽष्टमो द्वादशो वा भागो ग्राह्यः भूम्युत्कर्षापकर्षापेक्षया कर्षणादिक्लेशलाघवगौरवापेक्षोऽयं बह्वल्पग्रहणविकल्पः । आददीतेत्यादि । पत्रशाकतृणानामित्यादि । द्रुशब्दोऽत्र वृक्षवाचकः वृक्षादीनां अश्मसयान्तानां षष्ठोभागो लाभादुपग्रहीतव्यः । म्रियमाणइति । क्षीणधनोऽपि राजा श्रोत्रियब्राह्मणात् करं न गृह्णीयात् न च तदीयदेशे वसन् श्रोत्रियः बुभुक्षया अवसादं गच्छेत् । यस्मात् यस्येत्यादि । यस्य राज्ञो देशे श्रोत्रियः क्षुधाऽवसन्नो भवति तस्य राष्ट्रमपि दुर्भिक्षादिभिः क्षुधा शीघ्रमवसादं गच्छति । अत एवमतः श्रुतेति । शास्त्रज्ञानानुष्ठाने ज्ञात्वा अस्य तदनुरूपां धर्म्मादनपेतां जीविकामुपकल्पयेत् चौरादिभ्यश्चैनम् औरसं पुत्त्रमिव पिता रक्षेत् । यस्मात् संरक्ष्यमाण इत्यादि । स च श्रोत्रियो राज्ञा सम्यग्रक्ष्यमाणो यं धर्म्मं प्रत्यहं करोति तेन राज्ञ आयुर्द्धनराष्ट्राणि वर्द्धन्ते । यदिति । राजा स्वदेशशाकपर्णादिस्वल्पमूल्यवस्तुक्रयविक्रयादिना जीवन्तं निकृष्टजनं स्वल्पमपि कराख्यं वर्षेण दापयेत् । कारुकानिति । कारुकान् सूपकारादीन् शिल्पिभ्य ईषदुत्कृष्टान् शिल्पिनश्च लोहकारादीन् शूद्रांश्च देहक्लेशोपजीविनो भारिकादीन् मासि मास्येकं दिनं कर्म्म कारयेत् । नोच्छिन्द्यादिति । प्रजास्नेहात् करशुल्कादेरग्रहणमात्मनो मूलोच्छेदः अतिलोभेन प्रचुरकरादिग्रहणे परेषां मूलोच्छेदः एतदुभयं न कुर्य्यात् यस्मात् आत्मनो मूलमुच्छिद्य कोषक्षयादात्मानं पीडयेत् । पूर्व्वार्द्धात् परेषाञ्चेत्यपि संबध्यते परेषां मूलमुच्छिद्य तांश्च पीडयेत्”।

भार० शा० ८७अ० विस्तरेणोक्तं यथा

“विक्रयं क्रयमध्वानं भक्तञ्च सपरिच्छदम् । योगक्षेमञ्च सम्प्रेक्ष्य वणिजां कारयेत करान् । उत्पत्तिं दानवृत्तिञ्च शिल्पं संप्रेक्ष्य चासकृत् । शिल्पं प्रति करानेवं शिल्पिनः प्रति कारयेत् । उच्चावचकरा दाप्याः महाराज्ञा युधिष्ठिर । यथा यथा न सीदेरंस्तथा कुर्य्यान्महीपतिः । फलं कर्म्म च सम्प्रेक्ष्य ततः सर्व्वं प्रकल्पयेत् । फलं कर्म्म च निर्हेतु न कश्चित् संप्रवर्त्तते । यथा राजा च कर्त्ता च स्यातां कर्म्मणि भागिनौ । समवेक्ष्य तथा राज्ञा प्रणेयाः सततं कराः । नोच्छिद्यादात्मनो मूलं परेषाञ्चापि तृष्णया । ईहाद्वाराणि संरुध्य राजा सम्प्रीतिदर्शनः । प्रद्विषन्ति परिख्यातं राजानमतिखादिनम् । प्रद्विष्टस्य कुतः श्रेयो नाप्रियो लभते फलम् । वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना । भृतो वत्सो जातबलः पीडां सहति भारत ! । निकार्यं कुरुते वत्सो भृशं दुग्धो युधिष्ठिर ! । राष्ट्रमप्यतिदुग्धं हि न कर्म्म कुरुते महत् । यो राष्ट्रमनुगृह्णाति परिरक्षन् स्वयं नृपः । सञ्जातमुपजीवन् स लभते न महत् फलम् । आपदर्थञ्च निर्यातं राजा न इह विन्दते । राष्ट्रञ्च कोषभूतं स्यात् कोषो वेश्मगतस्तथा । पौरजानपदान् सर्व्वान् संश्रितोपाश्रितांस्तथा । यथाशक्त्यनुकम्पेत सर्व्वान् स्वल्पधनानपि । बाह्यं जनं भेदयित्वा भोक्तव्यो मध्यमः सुखम् । एवं नास्य प्रकुप्यन्ति जनाः सुखितदुःखिताः । प्रागेव तु धनादानमनुभाष्य ततः पुनः । सन्निपत्य स्वविषये भयं राष्ट्रेषु दर्शयेत् । इयमापत् समुत्पन्ना परचक्रभयं महत् । अपि चान्ताय कल्पन्ते वेणोरिव फलागमः । अरयो मे समुत्थाय बहुभिर्दस्युभिः सह । इदमात्मवधायैव राष्ट्रमिच्छन्ति बाधितुम् । अस्यामापदि घोरायां सम्प्राप्ते दारुणे भये । परित्राणाय भवतः प्रार्थयिष्ये धनानि वः । प्रतिदास्ये च भवतां सर्व्वञ्चाहं भयक्षये । नारयः प्रतिदास्यन्ति यद्धरेयुर्ब्बलादितः । कलत्रमादितः कृत्वा सर्व्वं वो विनशेदिति । अपि चेत् पुत्त्रदारार्थमर्थसञ्चय इष्यते । नन्दामि वः प्रभावेण पुत्त्राणामिव चोदये । यथाशक्त्युपगृह्णामि राष्ट्रस्यापीडया च वः । आपत्स्वेव हि वोढव्यं भवद्भिः पुङ्गवैरिव । न प्रियं सततं कार्य्यं धनं कस्याञ्चिदापदि । इति वाचा मधुरया श्लक्ष्णया सोपचारया । स्वरश्मीनभ्यवसृजेद्योगमाधाय कालवित् । प्राकारं भृत्यभरणं व्ययं सङ्ग्रामतो भयम् । योगक्षेमञ्च सम्प्रेक्ष्य गोमिनः कारयेत् करम् । उपेक्षिता हि नश्येयुर्गोमिनोऽरण्यवासिनः । तस्मात्तेषु विशेषेण मृदुपूर्व्वं समाचरेत् । सान्त्वनं रक्षणं दानमवस्था चाप्यभीक्ष्णशः । गोमिनां पार्थ ! कर्त्तव्यः संविभागश्च प्रियाणि च । अजस्रमुपयोक्तव्यं फलं गोमिषु भारत ! । प्रभावयन्ति राष्ट्रञ्च व्यवहारं कृषिस्तथा । तस्माद्गोमिषु यत्नेन प्रीतिं कुर्य्याद्विचक्षणः । दयावानप्रमत्तश्च

करान् सम्प्रणयेन्नृ दून् । सर्व्वत्र क्षेमचरणं सुलभं नाम गोमिष । न ह्यतः सदृशं किञ्चिद्दरमस्ति युधिष्ठिर !"। "मधुदोहं दुहेद्राष्ट्रं भ्रमरा इव पादपम् । वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् । जलौकावत् पिबेद्राष्ट्रं मृदुनैव नराधिपः । व्याघ्रीव च हरेत् पुत्रान् सन्दशेन्न च पीडयेत् । यथा शल्यकवानाखुः पदं धूनयते सदा । अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् । अल्पेनाल्पेन देयेन वर्द्धमानं प्रदापयेत् । ततो भूयस्ततो भूयः क्रमवृद्धिं समाचरेत् । दमयन्निव दम्यानि शश्वद्भारं विवर्द्धयेत् । मृदुपूर्व्वं प्रयत्नेन पाशानभ्यवहारयेत् । सकृत्पाशावकीर्णास्ते न भविष्यन्ति दुर्द्दमाः । उचितेनैव भोक्तव्या न भविष्यन्ति यत्नतः । तस्मात् सर्व्वसमारम्भो दुर्लभः पुरुषं प्रति । यथामुख्यान् सान्त्वयित्वा भोक्तव्य इतरो जनः । ततस्तान् भेदयित्वा तु परस्परविवक्षितान् । भुञ्जीत सान्त्वयंश्चैव यथासुखमयत्नतः । न चास्थाने न चाकाले करांस्तेभ्यो निपातयेत् । आनुपूर्व्व्येण सान्त्वेन यथाकालं यथाविधि" ६०अ० । प्रजाभ्यः करादानप्रकारः रक्षा शब्दस्वभावप्रकारवत् मनूक्तोऽनुसन्धेयः । अत एव सा०कौ० "यथा हि ग्रामाध्यक्षाः कौटुम्बिकेभ्य करमादाय विषयाध्यक्षाय प्रयच्छन्ति विषयाध्यक्षश्च सर्व्वाध्यक्षाय स च भूपतये" इत्युक्तम् ।

६हस्ताकारे हस्तनक्षत्रे । हेत्वादौ कर्म्मोपपदे कृ—कर्त्तरि ट । तत्तत्कर्मकारके त्रि० यथा कर्म्मकरः श्रेयस्करः यशस्करः स्त्रियां ङीप् कर्म्मकरी दासी यशस्करी विद्येत्यादि । दिवाविभादिपूर्व्वात् अहेत्वादावपि ट । तत्तदुपपदार्थकारके त्रि० तानि च "दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्त्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु" पा० दर्शितानि दिवाकरः निशाकरः। अहेत्वादावितोऽन्यत्र अण् । कुम्भकार इत्यादि ।

**करक** पुंन०किरति विक्षिपति करोति वा जलमत्र कॄ—कृ—वा क्वुनादि० संज्ञायां वुन् । कमण्डलौ 'उपवीतमलङ्कारं स्रजं करकमेव च"मनुः २दाड़िमवृक्षे ३पक्षिभेदे पुंस्त्री स्त्रियां जातित्वात् ङीष् । ४मेघोपले (शिला) पुंस्त्री । करकोद्भवकारणं तज्जलगुणाश्च भावप्र० दर्शिताः यथा । "दिव्यवायग्नि योगात् संहताः खात् पतन्ति याः । पाषाणखण्डवच्चापस्ताः कारिक्योऽमृतोपमाः । करकाजं जलं रुक्षं विशदं गुरु सुस्थिरम् । दारुणं शीतलं सान्द्रं पित्तहृत् कफवातकृत्"। (खाटा) ५करङ्कभेदे रत्नमा०स्वार्थे कन् । ६राजकरे७हस्ते च । ८पक्षाशवृक्षे हारा० । ९कोविदारवृक्षे १०बकुलवृक्षे ११करीरे १२नारिकेलास्थि्न च (माला) पु० राजनि० ।

**करकङ्कणन्याय** पु० कङ्कणशब्दस्य करभूषणार्थकत्वेऽपि यथा करशब्दप्रयोगस्तत्काले तत्सम्बन्धताद्योतनार्थः तद्रूपदृष्टान्तसूचके न्याये ।

**करकच** पु० "शनिभार्गवजीवज्ञकुजसोमार्कवासरे । षष्ठ्यादितिथयः सप्त क्रमात् करकचाः स्मृताः" ज्यो० उक्ते योगभेदे । तथा च शनौ षष्ठी, शुक्रे सप्तमी, गुरौ अष्टमी, बुधे नवमी, कुजे दशमी, सोमे एकादशी, रवौ द्वादशी तिथिः करकच इत्यर्थः ।

**करकच्छपिका** स्त्री कच्छपस्तदाकारोऽस्त्यस्याः ठन् करे हस्ते स्थिता कच्छपिका । अङ्गुलिसन्निवेशभेदरूपायां कूर्म्ममुद्रायाम् । "करकच्छपिकां कुर्य्यात् कूर्म्ममन्त्रेण साधकः । तत्र संस्कृतपुष्पेण पूजयेदात्मनो वपुः" कालिकापु० ५६अ० ।

**करकण्टक** पुंन०करस्य कण्टक इव । नखे त्रिका० ।

**करकपात्रिका** स्त्री करकः कमण्डलुरूपा पात्रिका । कमण्डलुरूपपात्रे । [ करकशब्दे भावप्र० वाक्यमुक्तम् ।

**करकाज** न० करकातो जायते जन—ड । करकाभवे जले

**करकाम्भस्** पु० करकाया इव शीतलमम्भोऽस्य । नारिकेले त्रिका० । तज्जलस्यातिशीतत्वात्तथात्वम् । ६त० तदीयजले न० । [कायुर्विरोचनः" भा० आ०११७अ० ।

**करकायु** पु० धृतराष्ट्रपुत्रभेदे । "उग्रायुधोवलाकी च कर-

**करकासार** पु० ६त० । शिलावृष्टौ

**करकुड्मल** न० करः कुड्मलमिव । मुकुलिताङ्गुलौ करे कर मुकुलनवकलशकरकोशादयोऽप्यत्र ।

**करग्रह** पु० करो गृह्यतेऽत्र ग्रह—आधारे अप् । विवाहे तत्र करग्रहणेनैव हि संस्कारो विधीयते इति तस्य तथात्वम् । ६त०।२हस्तधारणे ३प्रजाभ्यः करादाने च । पाणिग्रहकरग्रहणादयोऽप्युभयत्र ।

**करग्रहारम्भ** पु० करग्रहस्य प्रजाभ्यः करादानस्यारम्भः। (पुण्या)वार्षिककरग्रहणारम्भे । करग्रहारम्भदिननक्षत्रादिकं प्रसङ्गादुच्यते "तीक्ष्णोग्रवर्ज्जीतरभेषु लग्ने शीर्षोदये भानुदिने शुभाहे । कुर्यादनुक्तानि समीहितानि करग्रहारम्भमपि प्रजाभ्यः" ज्यो० तत्र तीक्ष्णगणाः ६,६, १८,१९ आर्द्रादयः, उग्रगणाः पूर्व्वात्रयमघा:वह्निः

कृत्तिका तदितरेषु नक्षत्रेषु । शीर्षोदयाः मिथुन-सिंहकन्यातुलावृश्चिककुम्भमीनाः तादृशे लग्ने ।

**करग्राह** पु० करं गृह्णाति ग्रह—अण् । १पत्यौ भर्त्तरि २हस्तग्राहकमात्रे ३राजस्वदायके च त्रि० । णिनि । करग्राहिन्नप्युभयत्र स्त्रियां ङीप् पाणिग्राहादयोऽप्यत्र

**करघर्षण** पु० कराभ्यां घृष्यते घृष—कर्मणि ल्युट् । दधिमन्थनदण्डे हारा० । भावे ल्युट् २त० । करेण घर्षणे न० ।

**करङ्क** पु० कीर्य्यते जलमत्र कॄ—अप् करोऽङ्को गर्भोऽस्य शक० । १नारिकेलास्थ्नि (खोल), २कमण्डलौ ३पात्रभेदे च "ताम्बूलकरङ्कवाहिनो" काद० । कस्य शिरसः रङ्क इव (माथारखुलि), ४मस्तकखर्परे मेदिनिः । ५इक्षुभेदे राज० ।

**करङ्कशालि** पु० करङ्क इव शालते शाल—इन् । इक्षुभेदे । राजनि० । [ २सिन्दूरपुष्पीवृक्षे च राजनि० ।

**करच्छद** पु०कर इवावरकश्छदोऽस्य । १शाखोटवृक्षे (सिहडा)

**करज** पु० करे जायते जन—ड । १नखे "न छिन्द्यात् करजैस्तृणम्" मनुः । तन्नामनामके २व्याघ्रनखाख्यगन्धद्रव्ये च (नखी) । मेदिनिः । ३हस्तजातमात्रे त्रि० । कं शिरः जलं वा रञ्जयति रन्ज—णिच्—अण् नि० । (करमचा)४करञ्जवृक्षे । अमरः ।

**करजाख्य** न०करजस्य नखस्याख्या आख्या यस्य । नखीनामगन्धद्रव्ये रत्नमा० । [ वृक्षभेदे राजनि० ।

**करजोडि** पु०कुटा०जुड़—बन्धे इन् वा०गुणः । (हातजोडा)

**करञ्ज** पु०कं शिरः जलं वा रञ्जयति अण् । (करमचा) इति ख्याते वृक्षे । करञ्जपर्य्यायगुणादि भावप्र० उक्तं यथा । "करञ्जो नक्तमालश्च करजश्चिरबिल्वकः । घृतपूर्णकरञ्जोऽन्यः प्रकीर्यः पूतिकोऽपि च । स चोक्तः पूतिकरजः सोमवल्कश्च स स्मृतः । करञ्जः कटुकस्तीक्ष्णो वीर्य्योष्णोयोनिदोषहृत् । कुष्ठोदावर्त्तगुल्मार्शो व्रणक्रिमिकफापहः । तत्पत्रं कफवातार्शः क्रिमिशोथहरं परम् । भेदनं कटुकं पाके वीर्य्योष्णं पित्तलं लघु । तत्फलं कफवातघ्नं मेहार्शःकफक्रिमिकुष्ठजित् । घृतपूतिकरञ्जोऽपि करञ्जसदृशो गुणैः" । उदकीर्य्यपर्य्याये तु क्लीवमपि गौरा० ङीष् । भावप्र० "उदकीर्य्यस्तु तोयोऽन्यः षड्ग्रन्था हस्तिवारुणी । मर्कटी वायसी चापि करञ्जी करभञ्जिका" । तद्गुणाश्च तत्रैवोक्ताः "करञ्जी स्तम्भनी तिक्ता तुवरा कटुकामिनी । वीर्य्योष्णा वमिपित्तार्शःक्रिमिकुष्ठप्रमेहजित्" । तत्तैलगुणाश्च । "करञ्जतैलं सुस्निग्धं वातहृत् स्थिरदीप्तिकृत् । नेत्रामयवातरोगकुष्ठकण्डूविचर्चिकाः । नाशयेत्तीक्ष्णव्यास्य लेपनाच्चर्मदोषहृत्" राजनि० । स्वार्थे कन् करञ्जकोऽप्यत्र पु० 'यस्तु संवत्सरं पूर्णं दीपं दद्यात् करञ्जके । सुवर्णनामूत्तमः प्रजा तस्य विवर्द्धते" भा० आनु०१२७अ० । अन्यमते करञ्जभेदाश्चत्वारः । (डहरकरमचा) (नाटाकरञ्जा) (काँटाकरमचा)" (वनकरमचा) इति भाषाप्रसिद्धनामभेदात् "यत् पर्णय उत वा करञ्जे" ऋ०१०१०४८,८ । [ (कएतवेल) राजनि० ।

**करञ्जफल** पु० करञ्जस्य फलमिवाम्लं फलं यस्य । कपित्थे

**करट** पु० किरति मदम्—कॄ—अटन् । १गजगण्डे "कच प्रभिन्नकरटं हस्तिनं वनगोचरम् । उपस्थाय महाभागं करेणुः सूकरं स्पृशेत्" भा० व० २७७ । हस्तिगण्डे क्लीवमपि । "ईषादण्डं महानागं प्रभिन्नकरटामुखम् । यद्यकोऽह्वयसे युद्धं कर्ण ! पार्थं धनञ्जयम्" भा०क० ३६अ० क्लीवप्रयोगात् । २काके पुंस्त्री अमरः । स्त्रियां ङीष् । "वरमिह गङ्गातीरे शरटः करटः कृशः शुनीतनयः" गङ्गास्त० ३कुसुम्भवृक्षे पु० ४निन्द्यजीविनि त्रि० । स्त्रियां करटा । ५नवश्राद्धे एकादशाहिकर्त्तव्ये श्राद्धे ६दुर्द्दुरूढे दुरुच्छेद्यमतके वादिनि ७वाद्यकभेदे दुर्दैस्ये ८वाद्यभेदे च पु० मेदि० । दुर्द्दुरूढवाद्यविशेषाभिप्रायेण "मावलाः मालवाश्चैव तथैवापरमालवाः । कुलिन्दाः कालकाश्चैव कुण्डकाः करटास्तथा" भा० भी०६अ० । आहर करट इत्युच्यतेऽत्र कर्मणि आहरयद्वेनास्य । मयू०व० । आहरकरट तथा विधे कर्मणि । ८दुःखेन दोह्यायां गवि हेमच० । स्वार्थे कन् । काके पुंस्त्री शब्दर० स्त्रियां ङीष् । ९स्तेयशास्त्रप्रवर्त्तके कर्णीसुते पु० "कर्णीसुतः करटकः स्तेयशास्त्रप्रवर्त्तकः । तस्याख्यातौ सखायौ द्वौ विपुलाचलसंज्ञकौ" काद०टीका ।

**करटिन्** पु० करटोऽस्त्यस्य प्राशस्त्येन करट+इनि । गजे "दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः" रसगङ्गा०

**करटु** पु० कॄ—अटु ।(करकटिया) इति नामके विहगे । हेम०

**करण** न० क्रियतेऽनेन कृ—करणे ल्युट् ।१व्याकरणोक्ते साधकतमे कारकभेदे "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत् तदा स्मृतम्" हरिका० । विवक्ष्यते इत्यनेनान्यस्यापि विवक्षायां करणत्वम् भवतीति सूचितम् । अतएवाह 'स्थाल्या पच्यते इत्येष प्रयोगो दृश्यते यतः" "साधकतमं करणम्" पा० । तमब्ग्रहणेनाव्यवहितव्यापारवत्त्वं सूचितम् । एवञ्च हेतुकरणयोर्जनकत्वसाम्ये क्रियामात्रविषयत्वं व्यापारवत्त्वं

च करणस्य विशेषः तदुक्तं “द्रव्यादिविषयो हेतुः करणं चरितक्रियम्”। चरितक्रियं व्यापारद्वारा क्रियामात्रविषयम् इत्यर्थः। “स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्” शिक्षा। “भिषक् कर्त्ताथ करणं रसा दोषास्तु कारणम्” सुश्रु०। “न तस्य कार्य्यं करणञ्च विद्यते” श्रुतिः २इन्द्रिये अमरः तस्य ज्ञानक्रियायाम् साधनत्वात्तथात्वम्। यथा च इन्द्रियाणां ज्ञानक्रियायां साधनत्वं तथा इन्द्रियशब्दे उक्तम्। तच्च सांख्ये त्रयोदशविधमित्युक्त्वा तेषां मध्ये अन्तःकरणानां द्वारित्वमितरेषां द्वारत्वमुक्तं यथा सां० का० कौ०
“करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्। कार्य्यञ्च तस्य दशधाहार्य्यं धार्य्यं प्रकाश्यञ्च” का० “करणं त्रयोदशविधमिन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणं कारकविशेषः करणम्। न च व्यापारावेशं विना कारकत्वमिति व्यापारमाह तदाहरणधारणप्रकाशकरम् यथायथं तत्र कर्म्मेन्द्रियाणि वागादीन्याहरन्ति यथास्वमुपाददते स्वव्यापारेण प्राप्नुवन्तीति यावत् बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या प्राणादिलक्षणया धारयन्ति, बुद्धीन्द्रियाणि प्रकाशयन्ति। आहरणधारणादिक्रियाणां सकर्म्मकतया किं कर्म्म, कतिविधं? चेत्यत आह कार्य्यञ्च तस्येति तस्य त्रयोदशविधस्य करणस्य दशधा आहार्य्यं धार्य्यं प्रकाश्यञ्च कार्य्यम्। आहार्य्यं व्याप्यं कर्म्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा यथायथं व्याप्याः ते च यथायथं दिव्यादिव्यतया दश इत्याहार्य्यं दशधा। एवं धार्य्यम् अप्यन्तःकरणादि वृत्तिलक्षणया धृत्या शरीरं, तच्च पार्थिवादि पाञ्चभौतिकं शब्दादीनां पञ्चानां समूहः पृथिवीति, ते च पञ्च दिव्यादिव्यतया दशेति धार्य्यमपि दशधा। एवं बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथायथं व्याप्याः ते च यथायथं दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधेति” कौ० “अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्। साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्” का० “अन्तःकरणं त्रिविधं बुद्धिरहङ्कारो मन इति शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम्। दशधा बाह्यमिन्द्रियं त्रयस्यान्तःकरणस्य विषयाख्यं विषयमाख्याति विषयसङ्कल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्म्मेन्द्रियाणि तु यथास्वं व्यापारेण। बाह्यान्तरयोः करणयोर्विशेषान्तरमाह साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्, साम्प्रतकालं वर्त्तमानकालं बाह्यमिन्द्रियं वर्त्तमानसमीपमनागतमतीतमपि वर्त्तमानम् अतो वागपि वर्त्तमानकालविषया भवति। त्रिकालमाभ्यन्तरं करणं तद्यथा नदीपूरभेदादभूद्वृष्टिः, अस्ति धूमादग्निरिह नगनिकुञ्जे, असत्युपघातके पिपीलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति, तदनुरूपाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति। कालश्च वैशेषिकाभिमत एको न अनागतादिव्यवहारभेदं प्रवर्त्तयितुमर्हतीति तस्मादयं यैरुपाधिभेदैरनागतादिभेदं प्रपद्यते सन्तु त एवोपाधयोऽनागतादिव्यवहारहेतवः, कृतमत्रान्तर्गडुना कालेनेति सांख्याचार्य्याः। तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति” कौ० साम्प्रतकालानां बाह्येन्द्रियाणां विषयं विवेचयति। “बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि। वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि” का० “बुद्धीन्द्रियाणि तेषां दशानामिन्द्रियाणां मध्ये पञ्च विशेषाविशेषविषयाणि विशेषाः स्थूलाः शब्दादयः शान्तघोरमूढाः पृथिव्यादिरूपाः, अविशेषास्तन्मात्राणि सूक्ष्माः शब्दादयः विषयपञ्चकेन भूतभाविनावपाकरोति विशेषाश्चाविशेषाश्च विशेषाविशेषास्त एव विषया येषां बुद्धीन्द्रियाणां तानि तथोक्तानि। तत्रोर्द्ध्वस्रोतसां योगिनाञ्च श्रोत्रं सूक्ष्मशब्दतन्मात्रविषयं, स्थूलशब्दविषयमेव नः। एवं तेषां त्वक् स्थूलसूक्ष्मस्पर्शविषया, अस्मदादीनान्तु स्थूलस्पर्शविषयैव। एवं चक्षुरादयोऽपि तेषामस्मदादीनाञ्च रूपादिषु द्रष्टव्याः। एवं कर्म्मेन्द्रियेषु मध्ये वाग्भवति शब्दविषया स्थूलशब्दविषया तद्धेतुत्वात् न तु शब्दतन्मात्रस्य हेतुः तस्याहङ्कारिकत्वेन वागिन्द्रियेण सहैककारणकत्वात्। शेषाणि तु चत्वारि पायूपस्थपाणिपादाख्यानि पञ्चविषयाणि पाण्याद्याहार्य्याणां घटादीनां पञ्चशब्दाद्यात्मकत्वादिति” कौ०। साम्प्रतं त्रयोदशसु करणेषु केषाञ्चित् प्रधानभावं सहेतुकमाह। “सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्। तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि” का०। “द्वारि प्रधानं शेषाणि करणानि बाह्येन्द्रियाणि द्वाराणि तैरुपनीतं सर्वं विषयं समनोऽहङ्कारा बुद्धिर्यस्मादवगाहतेऽध्यवस्यति तस्माद्बाह्येन्द्रियाणि द्वाराणि द्वारवती च सान्तःकरणा बुद्धिरिति” कौ०। “न केवलं बाह्यानीन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिरपि तु ये अप्यहङ्कारमनसी द्वारिणी ते अप्यपेक्ष्य बुद्धिः प्रधानमित्याह। “एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः। कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति” का०।

"यथा हि ग्रामाध्यक्षाः कौटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छन्ति विषयाध्यक्षश्च सर्व्वाध्यक्षाय, स च भूपतये, तथा वाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति मनश्च सङ्कल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायाम्, तदिदमुक्तं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्तीति। बाह्येन्द्रियमनोऽहङ्काराश्च गुणविशेषाः गुणानां सत्त्वरजस्तमसां विकाराः। ते तु परस्परविरोधशीला अपि पुरुषार्थेन भोगापवर्गरूपेण एकवाक्यतां नीताः यथा वर्त्तितैलवह्नयः सन्तमसापनरूपप्रकाशाय मिलिताः प्रदीपाः, एवमेते गुणविशेषा इति योजना"। न्यायादिमते इन्द्रियाणामेकादशविधता वेदान्तपरिभाषामते दशविधतेति भेदः इन्द्रियशब्दे उक्तः। "वपुषा करणोज्झितेन सा" "करणापायविभिन्नवर्णया" रघुः। "करणैरन्वितस्यापि पूर्ववत्तानं कथञ्चन" याज्ञ०। "आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या" वेणी०। अत्र करणं वाह्येन्द्रियम्। आधारे ल्युट्। २क्षेत्ररूपे देहे अमरः करणाश्रयत्वात् तस्य तथात्वम्। "उपमानमभूत् विलासिनां करणं यत्तव कान्तिमत्तया" कुमा०। भावे ल्युट्। ४क्रियायाम्। "प्र ते पूर्व्वाणि करणानि" ऋ० ४,१९,१०। "आवाहनाग्नौकरणरहितमपसव्यवत्" याज्ञ०। "हलस्य करणे चापि व्यादिष्टाः सर्वशिल्पिनः" भा०व०२५४अ० "कृतस्य करणं नास्तीति" प्राचीनगाथा। ५सैतिकर्त्तव्यके अनुष्ठाने ६व्यापारमात्रे च। ७ज्योतिषोक्तेषु तिथ्यर्द्धात्मकेषु ववादिषु तेषामानयनप्रकारः सूर्य्यसि०रङ्गना० उक्तो यथा।

"ध्रुवाणि शकुनिर्नागं तृतीयं तु चतुष्पदम्। किन्तुघ्नं तु चतुर्दश्याः कृष्णायाश्चापरार्द्धतः" सू० सि०। "कृष्णपक्षीयायाश्चतुर्दश्यास्तिथेर्द्वितीयार्धाद्द्वितीयार्धमारभ्येत्यर्थः। चकार एवार्थे। तेनान्यतिथेरेतत्तिथिपूर्वार्धस्य च निरासः। ध्रुवाणि स्थिराणि करणानि। तान्याह। शकुनिरिति। चतुष्पदं तृतीयमित्यनेन शकुनिनागयोः क्रमेणाद्यद्वितीयत्वं सूचितम्। तुकारात् क्रमेण तिथ्यर्धेषु भवन्ति। किन्तुघ्नं चतुर्थम्। तुरन्तार्थद्योतकः तेनोक्तातिरिक्तं स्थिरकरणं नास्तीति सूचितम्। अथ चरकरणान्याह" रङ्ग०। "ववादीनि ततः सप्त चराख्यकरणानि च। मासेऽष्टकृत्व एकैकं करणानां प्रवर्तते" सू० सि०। "ततः स्थिरकरणपूर्वानन्तरं ववादीनि चरसञ्ज्ञककरणानि सप्त भद्रान्तानि शुक्लप्रतिपद्द्वितीयार्धतश्चतुर्थ्यन्तं भवन्तीति चार्थः। ननु पञ्चम्यादितः कानि करणानि भवन्तीत्यत आह मास इति। चरकरणानां ववादीनां सप्तानां मध्ये एकैकमेकमेकं करणं मासे स्थिरकरणकालोनितत्रिंशत्तिथ्यात्मकमासे स्वल्पान्तरत्वान्मासपदग्रहणम्। अष्टकृत्वोऽष्टवारः प्रवर्तते प्रकर्षेण तिष्ठति भवतीत्यर्थः। तथा च पञ्चम्याद्यर्धादेतानि पुनः पुनः परिभ्रमन्ति। कृष्णचतुर्दश्याद्यार्धपर्यन्तमिति भावः। ननु स्थिरकरणोक्तावपरार्धत इत्युक्त्या तेषां चतुर्णां तिथ्यर्धभोगेन शुक्लप्रतिपदाद्यर्धपर्यन्तं क्रमेणावस्थानं युक्तं चरकरणानां तु केवलोक्त्या तदनन्तरं कृष्णचतुर्दश्याद्यार्धपर्यन्तमेक एव परिभ्रमोऽस्त्वित्यतस्तदुत्तरं कथयन्नन्यदप्याह" रङ्ग०। "तिथ्यर्द्धभोगं सर्वेषां करणानां प्रकल्पयेत्। एषा स्फुटगतिः प्रोक्ता सूर्यादीनां खचारिणाम्" सू० सि०। "सप्तानां चरकरणानां प्रत्येकं तिथ्यर्द्धमासौ भोगश्च तं तिथ्यर्धकालमितावस्थानं प्रकल्पयेत्। "एकत्र निर्णीतः शास्त्रार्थोऽपरत्र भवतीति" न्यायात् करणत्वेनैषामप्यवस्थानं तत्तुल्यं कुर्यादित्यर्थः। अत एव "तिथ्यर्धं करणं स्मृतम्" इत्युक्त्या चान्द्रमासे त्रिंशत्तिथ्यात्मके षष्टिकरणानां सन्निवेशाच्चरकरणानामेव परिभ्रमणे प्रतिमासमनियततिथिभोगकं करणं भवतीति तद्वारकप्रतिमासनियततिथिभोगककरणकसिद्ध्यर्थं चरकरणानामष्टवारपरिभ्रमणोत्तरमवशिष्टतिथ्योश्चतुर्ष्वर्धेषु स्थिरकरणान्युक्तानीति तात्पर्यम्। तत्रापि कृष्णचतुर्दश्यपरार्धतस्तत्कल्पनं तदिच्छानियामकं स्वतन्त्रेच्छस्य नियोगानर्हत्वात्" रङ्ग०

करणानि च ववबालवकौलवतैतिलगरवणिग्विष्टिभद्राख्यानि सप्त चरकरणानि। स्थिरकरणानि शकुन्यादीनीति८दशसंख्यानि। ८जातिभेदे पुंस्त्री अमरः स्त्रियां जातित्वात् ङीष्। तज्जातिश्च व्रात्यात् क्षत्रियात् सवर्णायामुत्पन्नः जातिभेदः "झल्लो मल्लश्च राजन्यात् व्रात्याल्लिच्छिविरेव च। नटश्च करणश्चैव खसो द्रविड़ एव च" मनुः। करणरूपवर्णसङ्करस्यैव कायस्थनामता तस्य कर्मविशेषपरिपाकेण तज्जातिप्राप्तिस्तस्य वृत्तिभेदश्च ब्रह्मवै०पु०जन्मखण्डे ८५ उक्तो यथा। "तैलचौरस्तैलकीटो भूमिकीटस्त्रिजन्मकम्। ततो भवेत् स्वर्णकारो जन्मैकं दुष्टमानसः। तमःकुण्डे वर्षशतं स्थित्वा स्वर्णवणिग् भवेत्। जन्मैकञ्च दुराचारो जन्मैकं करणो भवेत्। विश्वैर्कालिपिकर्त्ता च मद्यदानादर्धनं हरेत्। कायस्थेनोदरस्थेन मातुर्मांसं न खादितम्। तत्र नास्ति कृपा तस्य दन्ताभावेन

कौशलम् । स्वर्णकारः स्वर्णवणिक् कायस्थश्च व्रजेश्वर ! । नरेषु मध्ये ते धूर्त्ताः कृपाहीना महीतले । हृदयं क्षुरधाराभं तेषाञ्च नास्ति सादरम् । शतेषु सज्जनः कोऽपि कायस्थो नेतरौ च तौ । सुबुद्धिः शिवभक्तश्च शास्त्रज्ञो धर्म्मवामसः” । ८वर्णसङ्करजातिभेदे पुंस्त्री “शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः” ब्रह्मवै० पु० । कायस्थश्च चतुर्विधः शात्यक्षत्रियः शूद्रावैश्ययोर्जातः करणनाम्ना प्रसिद्धः अम्बष्ठः चित्रगुप्तजातश्चेवास्तवश्च । कायस्थशब्दे विवृतिः । तस्य वृत्तिमाह पराशरः । “धनधान्याध्यक्षता च राजसेवा तथैव च । द्विजातेः परिचर्य्या च दुर्गान्तःपुररक्षणम् । एषा पारशवस्योक्ता उग्रस्य करणस्य च प्रोक्ता उगनसा वृत्तिरुभयत्र शुभप्रदा” । “नृत्यवादित्रगीतानां प्रयोगवशभेदिनाम् । संस्थानं ताडनं रोधः करणानि प्रचक्षते”राजकन्दर्पोक्ते तालव्यपस्थापके १०ताडनाविशेषे न० “शिखरासक्तमेघानाम् व्यज्यन्ते यत्र वेश्मनाम् । अनुगर्ज्जितसन्दिग्धाः करणैर्मुरजस्वनाः” कुमा० सर्वकरणप्रयोक्तृत्वात् ११परमेश्वरे न० ‘करणं कारणं कर्त्ता विकर्त्ता च मतो गुरुः”विष्णु०सं० । भवाद्यर्थे ततः काशा० ठञ् ञिठ च इकार उच्चारणार्थः । कारणिक तद्भवे स्त्रियां ठञि ङीष् ञिठि टाप् । १२क्रियासाधनस्त्रियां स्त्री ङीप् । क्रियते क्रियाविशेषोऽस्याम् आधारे ल्युट् ङीप् । बीजगणितोक्ते यस्य वर्गमूलादिकं स्पष्टं न प्रतीयते तत्रक्रिया विशेषद्वारा तत्करणविषये राशिभेदे स्त्री । सा च षड्विधा सङ्कलनव्यवकलनगुणभागवर्गवर्गमूलरूपभेदात् । तत्रक्रियाविशेषोबीजगणिते दर्शितो यथा । “अथ करणी षड्विधा । तत्र सङ्कलनव्यवकलनयोः करणसूत्रं वृत्तद्वयम् । योगं करण्योर्महतीं प्रकल्प्य बधस्य मूलं द्विगुणं लघुञ्च । योगान्तरे रूपवदेतयोः स्तोवर्गेण वर्गं गणयेद्भजेच्च । लघ्व्या हृतायास्तु पदं महत्याः सैकं निरेकं स्वहतं लघुघ्नम् । योगान्तरे स्तः क्रमशस्तयोर्व्वा पृथक् स्थितिः स्याद्यदि नास्ति मूलम् । उदाहरणम् । द्विकाष्टमित्योस्त्रिभसङ्ख्ययोश्च योगान्तरे ब्रूहि पृथक्करण्योः । त्रिसप्तमित्योश्च चिरं विचिन्त्य चेत् षड्विधां वेत्सि सखे ! करण्याः ।

न्यासः क२ । क ८ योगे जातम् क १८ अन्तरे च क २

न्यासः क ३ । क २७ योगे जातम् क ४८ अन्तरे च क १२ न्यासः क ३ । क ७ अनयोर्घाते मूलाभावात्पृथक् स्थितिरेव योगे जातम् क ३ क ७ अन्तरे च क ३ क ७ इति करणीसङ्कलनव्यवकलने ।

गुणनोदाहरणम् । द्वित्र्यष्टसङ्ख्यागुणकः करण्या गुण्यस्त्रिसङ्ख्या च सपञ्चरूपा । वधं प्रचक्ष्वाशु विपञ्चरूपे गुणेऽथ वा त्र्यर्कमिते करण्याः । न्यासः गुणकः क २ क ३ क ८ गुण्यः क ३ रू ५

अत्र गुण्ये गुणके वा भाज्ये भाजके करणीनां करण्योर्वा यथासम्भवं लाघवार्थं योगं कृत्वा गुणनभजने कार्य्ये तथा कृते जातो गुणकः क १८ क ३ गुण्यः क २५ क ३ गुणिते जातम् रू ३ क ४५० क ७५ क ५४ ।

अथवर्गादौ विशेषसूत्रं वृत्तम् । क्षयोभवेच्च क्षयरूपवर्गश्चेत्साध्यतेऽसौ करणीत्वहेतोः । ऋणात्मिकायाश्च तथा करण्यामूलं क्षयोरूपविधानहेतोः ।

न्यासः गुणकः क २५ क ३ क १२ गुण्यः क २५ क २ अत्र गुणके करण्योर्योगे कृते गुणकः क २५ क २३ गुणिते जातम् क ६२५ क ३७५ क ७५ क ८१ गता अनयोः क ६२५ क ८१ मूले रू २५ रू ९ अनयोर्योगे जातम् रू १६ अनयोः क ३७५ क ७५ अन्तरे योगइति जातोयोगः क ३०० यथाक्रमं न्यासः रू१६ क ३०० इति करणीगुणनम् । पूर्व्वगुणनफलस्य स्वगुणच्छेदस्य भागार्थं न्यासः भाज्यः क ९ क ४५० क ७५ क ५४ भाजकः क २ क ३ क ८ अत्र क २ क ८ एतयोः करण्योर्योगे कृते जातम् क १८ क ३ “भाज्याच्छेदः शुध्यति प्रच्युतःसन्”इत्यादिकरणेन लब्धोगुण्यः रू ५ क ३

न्यासः भाज्यः क २५६ क ३०० भाजकः क २५ क ३ क १२ करण्योर्योगे कृते जातम् क २५ क २७

अत्रादौ त्रिभिर्गुणयित्वा धनकरण्योः ऋणकरण्योश्च योगं विधाय पश्चात्त्रिंशत्या गुणयित्वा शोधिते लब्धं रू ५ क ३ अत्रापि पूर्व्ववल्लब्धो गुण्यः रू ५ क ३

अथ वान्यथोच्यते । धनर्णताव्यत्ययमीप्सितायाश्छेदे करण्या असकृद्विधाय । तादृक्छिदा भाज्यहरौ निहन्याद्वैका यावत्करणी हरः स्यात् । भाज्यास्तया भाज्यगताः करण्योलब्धाः करण्यो यदि योगजाः स्युः । विश्लेषसूत्रेण पृथक् च कार्य्यास्तथा यथा प्रष्टुरभीप्सिताः स्युः । तथा च विश्लेषसूत्रं वृत्तम् । वर्गेण योगकरणी विहृता विशुध्येत् खण्डानि तत्कृतिपदस्य यथेप्सितानि । कृत्वा

तदीयकृतयः खलु पूर्व्वलब्ध्या क्षुण्णा भवन्ति पृथगेवमिमाः करण्यः ।

न्यासः भाज्यः क ९ क ५४० क ७५ क ५४ भाजकः क १८ क ३ अत्र भाजके त्रिमितकरण्याः ऋणत्वं प्रकल्प्य क १८ क ३ अनेन भाज्ये गुणिते योगे च कृते जातम् क २६२५ क ६७५ भाजके च क २२५ अनया भाज्ये हृते लब्धम् क २५ क ३

न्यासः भाज्यः क २५६ क ३०० भाजकः क २५ क २७ अत्र भाजके पञ्चविंशतिकरण्याधनत्वं प्रकल्प्य क २५ क २७ भाज्ये गुणिते धनर्णकरणीनामन्तरे च कृते जातम् क १०० क १२ भाजके च क ४ अनया भाज्ये हृते लब्धम् क २५ क ३ इदानीं पूर्व्वोदाहरणे गुण्ये भाज्ये कृते न्यासः भाज्यः क ९ क ४५० क ७५ क ५४ भाजकः क २५ क ३ । अत्रापि त्रिकरण्याः ऋणत्वं प्रकल्प्य भाज्ये गुणिते युते च जातम् क ८७१२ क १४५२ भाजके च क ४८४ अनया हृते भाज्ये लब्धो गुणकः क १८ क ३ । पूर्व्वं गुणके खण्डत्रयमासीदिति योगकरणीयम् १८ विश्लेष्या तत्र वर्गेण योगकरणी विहृता विशुद्ध्येदिति नवात्मकवर्गेण ९ विहृता सती शुध्यतीति लब्धं २ नवानां मूलम् ३ अस्य खण्डे, १, ४, पूर्व्वलब्ध्या २ गुणिते, २, ८, एवं जातोगुणकः क २ क ३ क ८ इति करणीभजनम् ।

करणीवर्गादेरुदाहरणम् । द्विकत्रिपञ्चप्रमिताः करण्यस्तासां कृतिं त्रिद्विकसङ्ख्ययोश्च । षट्पञ्चकत्रिद्विकसम्मितानां पृथक् पृथङ्मे कथयाशु विद्वन् ! । अष्टादशाष्टद्विकसम्मितानां कृतीकृतानां च सखे ! पदानि ।

न्यासः प्रथमः क २ क३ क ५ । द्वितीयः क ३ क २ । तृतीयः क ६ क ५ क ३ क २ । चतुर्थः क १८ क ८ क २

स्थाप्योऽन्त्यवर्गश्च चतुर्गुणान्त्यनिघ्न इत्यनेन गुण्यः पृथग्गुणकखण्डसम इत्यनेन वा जाताः क्रमेण वर्गाः प्रथमः रू १० क २४ क ४० क ६० । द्वितीयः रू ५ क २४ । तृतीयः रू १६ क १२० क ७२ क ६० क ४८ क ४० क २४ अत्रापि करणीनां यथासम्भवं योगं कृत्वा वर्गवर्गमूले कार्य्ये तद्यथा क १८ क ८ क २ आसां योगः क ७२ अस्यावर्गः क ५१८४ अस्यामूलं रू ७२। इति करणीवर्गः ।

करणीमूले सूत्रं वृत्तद्वयम् । वर्गे करण्यायदि वा करण्योस्तुल्यानि रूपाण्यथ वा बहूनाम् । विशोधयेद्रूपकृतेः पदेन शेषस्य रूपाणि युतोनितानि । पृथक्तदर्द्धे करणीद्वयं स्यान्मूलेऽथ बह्वी करणी तयोर्या । रूपाणि तान्येव कृतानि भूयः शेषाः करण्योयदि सन्ति वर्गे ।

उदाहरणम् । द्वितीयवर्गस्य मूलार्थं न्यासः रू ५ क २४ रूपकृतेः २५ करणीतुल्यानि रूपाणि २४ अपास्य शेषम् १ अस्य मूलेन १ ऊनाधिकरूपाणामर्द्धे जाते मूलकरण्यौ क २ क३

प्रथमवर्गस्य न्यासः रू १० क २४ क ४० क ६० रूपकृतेः १०० चतुर्विंशतिचत्वारिंशत्करण्योस्तुल्यानि रूपाण्यपास्य शेषम् ३६ अस्यमूलेन ६ ऊनाधिकरूपाणामर्द्धे जाते, २, ८, तत्रापीमां २ मूलकरणीं द्वितीयां रूपाण्येव प्रकल्प्य पुनः शेषकरणीभिः सः एव विधिः कार्य्यस्तत्रेयं रूपकृतिः ६४ अस्याः षष्टिरूपाण्यपास्य शेषम् ४ अस्य मूलम् २ अनेनोनाधिकरूपाणामर्द्धे, ३, ५, जाते मूलकरण्यौ क ३ क ५ मूलकरणीनां यथाक्रमं न्यासः क २ क३ क५

तृतीयवर्गस्य न्यासः रू १६ क १२० क ७२ क ६० क४८ क ४० क २४ रूपकृतेः २५६ करणीत्रितयस्यास्य क ४८ क ४० क २४ तुल्यानि रूपाण्यपास्योक्तवज्जाते खण्डे, २, १४, महती रूपाणीत्यस्याः १४ कृतिः १९६ अस्याः करणीद्वयस्यास्य क ७२ क १२० तुल्यरूपाण्यपास्योक्तवज्जाते खण्डे, ६, ८, पुनारूपकृतेः ६४ षष्टिरूपाण्यपास्योक्तवत्खण्डे, ३, ५, एवं मूलकरणीनां यथाक्रमं न्यासः क ६ क ५ क ३ क २

चतुर्थस्य न्यासः रू ७२ क ० इयमेव लब्धा मूलकरणी ७२ पूर्व्वं खण्डत्रयमासीदिति वर्गेण योगकरणी विहृता शुध्यतीति षट्त्रिंशतोमूलम् ६ एतस्य खण्डानां, १, २, ३, कृतयः, १, ४, ९, पूर्व्वलब्ध्यानया २ क्षुण्णाः, २, ८, १८, एवं पृथक्करण्योजाताः क २ क ८ क १८ ।

अथ वर्गगतर्णकरण्यामूलानयनार्थं सूत्रं वृत्तम् । ऋणात्मिका चेत्करणी कृतौ स्याद्धनात्मिकां तां परिकल्प्य साध्ये। मूले करण्यावनयोरभीष्टा क्षयात्मिकैका सुधियावगम्या ।

उदाहरणम् । त्रिसप्तमित्योर्वद मे करण्योर्विश्लेषवर्गं कृतितः पदं च ।

न्यासः क ३ क७ यद्वा क ३ क ७ अनयोर्वर्गः समएव रू १० क ८४अत्र वर्गे ऋणकरण्याधनत्वं प्रकल्प्य

प्राग्वत् ऋणकरण्योरेकाऽभीष्टा ऋणगता स्यादिति जातम्
क ३॑ क ७ वा क ३ क ७॑
उदाहरणम् । द्विकत्रिपञ्चप्रमिताः करण्यः स्वस्वर्णगाः स्वस्वधनर्णगा वा । तासां कृतिं ब्रूहि कृतेः पदं च चेत् षड्विधां वेत्सि सखे ! करण्याः ।
न्यासः क २ क ३ क ५॑ वा क २॑ क ३॑ क ५ आसां वर्गः समएव जाताः रू १० क २४ क ४०॑ क ६०।
अत्र ऋणकरण्योस्तुल्यानि धनरूपाणि १०० रूपकृतेः १०० अपास्य शेषस्य मूलम् ० अनेनोनाधिकरूपाणामर्द्धे क ५ क ५ अत्रैका ऋणम् क ५॑ अन्या रूपाणीति न्यासः रू ५ क २४ पूर्ववज्जाते करण्यौ धने एव । क ३ क २ यथाक्रमं न्यासः क २ क ३ क ५॑ अथ वानयोः क क २४ क ६० तुल्यानि धनरूपाणि ८४ रूपकृते १०० रपास्योक्तवज्जाते मूलकरण्यौ क ७ क ३ अनयोर्म्महती ऋणं क ७॑ तान्येव रूपाणि प्रकल्प्य रू ७॑ क ४० अतः प्राग्वत्करण्यौ क ५ क २ अनयोरपि महती ऋणमिति यथाक्रमं न्यासः क ३ क २ क ५॑
अथ द्वितीयोदाहरणे प्राग्वत्प्रथमपक्षे मूलकरण्यौ क ५ क ५ अनयोरेका ऋणं क ५॑ तान्येव रूपाणीति ऋणोत्पन्ने करणीखण्डे ऋणे एवेति यथाक्रमं न्यासः क ३॑ क २॑ क ५॑ द्वितीयपक्षेणापि यथोक्ताएव मूलकरण्यः क ३॑ क २॑ क ५॑ एवं बुद्धिमतानुक्तमपि ज्ञायते इति पूर्व्वैर्नायमर्थो विस्तीर्य्योक्तः बालावबोधार्थं तु मयोच्यते ।
एकादिसङ्कलितमितकरणीखण्डानि वर्गराशौ स्युः । वर्गे करणीत्रितये करणीद्वितयस्य तुल्यरूपाणि । करणीषट्के तिसृणां दशचतसृणां तिथिषु च पञ्चानाम् । रूपकृतेः प्रोह्य पदं ग्राह्यं चेदन्यथा न सत् क्वापि । उत्पत्स्यमानयैवं मूलकरण्याल्पया चतुर्गुणया । यासामपवर्त्तः स्याद्रूपकृतेस्ताश्शोध्याः स्युः । अपवर्त्तादपि लब्धामूलकरण्योभवन्ति ताश्चापि । शेषविधिना न यदि ताभवन्ति मूलं तदा तदसत् । करणीवर्गराशौ रूपैरवश्यं भवितव्यम् एककरण्यावर्गे रूपाण्येव । द्वयोः स्वरूपैका करणी । तिसृणां तिस्रः । चतसृणां षट् । पञ्चानां दश । षसां पञ्चदश इत्यादि । अतोद्व्यादीनां वर्गेषु एकादिसङ्कलितमितानि करणीनां खण्डानि रूपाणि यथाक्रमं स्युः ।
अथ यदि उदाहरणे तावन्ति न भवन्ति तदासौ योगकरणी विश्लेष्या वा भवतीति कृत्वा मूलं ग्राह्यमित्यर्थः ।
इर्गे करणीत्रितये करणीद्वितयस्य तुल्यरूपाणीति स्पष्टार्थम् । उदाहरणम् । वर्गे यत्र करण्योदन्तैःसिद्धैर्गजैर्मिताश्विद्वन् ! । रूपैर्द्दशभिरुपेताः किम्मूलं ब्रूहि तस्य स्यात् । न्यासः रू १० क ३२ क २४ क ८ अत्र वर्गे करणीत्रितये करणीद्वितयस्यैव तुल्यानि रूपाणि प्रथमं रूपकृतेरपास्य मूलं ग्राह्यं पुनरेकस्याएवं क्रियमाणेऽत्र पदं नास्तीत्यतोऽस्य करणीगतमूलाभावः । अथानियमेन सर्व्वकरणीतुल्यानि रूपाण्यपास्य मूलमानीयते तदिदम् क २ क ८ समागच्छति इदमसत् यतोऽस्य वर्गोऽयम् रू १८ अथ वा दन्तगजमितयोर्योगं कृत्वा रू १० क ७२ क २४ आनीयते तदिदमप्यसत् रू २ क ६ ।
उदाहरणम् । वर्गे यत्र करण्यस्तिथिविश्वहुताशनैश्चतुर्गुणितैः । तुल्यादशरूपाढ्याः किम्मूलं ब्रूहि तस्य स्यात् । क ६० क ५२ क १२ अत्र किल वर्गे करणीत्रयमस्तीति न्यासः रू १० तत्करणीद्वयस्य द्विपञ्चाशद्द्वादशमितस्य क ५२ क १२ तुल्यरूपाण्यपास्य ये मूलकरण्यावुत्पद्येते क ८ क २ तयोरल्पयानया २ चतुर्गुणया ८ द्विपञ्चाशद्द्वादशमितयोरपवर्त्तो न स्यादतस्ते न शोध्ये यतउक्तमुत्पत्स्यमानयैवमित्यादि । अत्रात्यर्थकत्वेन्युपलक्षणम् तेन कचिन्महत्यापि तदा मूलकरणीरूपाणि प्रकल्प्यान्ये करणीखण्डे साध्ये सा महती प्रकल्प्येत्यर्थः उदाहरणम् । अष्टौ षट्पञ्चाशत् षष्टिः करणी त्रयं कृतौ यत्र । रूपैर्दशभिरुपेतं किम्मूलं ब्रूहि तस्य स्यात् । न्यासः रू १० क ८ क ५६ क ६० अत्राद्यखण्डद्वये क ८ क ५६ शोध्यते उत्पन्नयाल्पया चतुर्गुणया ८ तयोः खण्डयोरपवर्त्तेन लब्धे खण्डे । १ । ७ । परं शेषविधिना मूलकरण्यौ नोत्पद्येते अतस्ते खण्डे न शोध्ये अन्यथा तु शोधने कृते मूलं नायातीत्यतस्तदसत् । उदाहरणम् । चतुर्गुणात् सूर्य्यतिथीषुरुद्रनागर्त्तवोयत्र कृतौ करण्यः । सविश्वरूपावद तत्पदं ते यद्यस्ति वीजे पटुताभिमानः ।
न्यासः रू १३ क ४८ क ६० क २० क ४४ क ३२ क २४ अत्र करणीषट्के तिसृणां करणीनां तुल्यानि रूपाणि प्रथमं रूपकृतेरपास्य मूलं ग्राह्यं पश्चाद्द्वयोस्तत एकस्याएवं कृतेऽत्र मूलाभावः । अथान्यथा तु प्रथममाद्यकरण्यास्तुल्यानि रूपाण्यपास्य पश्चाद्द्वितीयतृतीयोस्ततः शेषाणां रूपकृतेर्विशोध्यानि तन्मूलम् क १ क २ क ५ क ५ तदिदमप्यसत् यतोऽस्य वर्गोऽयम् रू २३ क ८ क ८० क १६० । यैरस्य मूलानयनस्य निमयोन कृतस्तेषामिदं दूषणम् एवंविधवर्गे करणीनामासन्नमूलकरणेन मूलान्या-

णीय रूपेषु प्रक्षिप्य मूलं वाच्यम् । अथ महतीरूपाणो-
त्युपलक्षणम् । यतः क्वचिदल्पापि ।

तत्रोदाहरणम् । चत्वारिंशदशीतिर्द्विशतीतुल्याः क
रण्यश्चेत् । सप्तदशरूपयुक्तास्तत्र कृतौ किम्पदं ब्रूहि ।

न्यासः रू १७ क ४० क ८० २०० शोधिते जाते
खण्डे क १० क ७ पुनः लघ्वीं करणीं रूपाणि कृत्वा
लब्धे करण्यौ क ५ क २ । एवं मूलकरणीनां न्यासः
क १० क ५ क २ । इति करण्याः षड्विधाः। [मस्तके ।

**करणत्राण** न० करणं हस्तादिभिस्त्रायते त्रै—कर्मणि ल्युट् ।

**करणव्यापार** पु० ६त० । करणजन्यजनकत्वविशिष्टे करण-
जन्ये व्यापारभेदे । यथा छेदनादिक्रियायां छेद्यदा
त्रादिसंयोगः तस्य हि दात्रजन्यत्वात् दात्रजन्यच्छेदनज-
नकत्वाच्च तथात्वम् । एवमिन्द्रियाणां विषयसंयोगः तस्य
हि इन्द्रियजन्यत्वात् इन्द्रियजन्यप्रत्यक्षज्ञानजनकत्वाच्च
तथात्वम् न्यायमते अनुमितौ परामर्शः शाब्दबोधे पदार्थ-
स्मृतिः । उपमितौ उपदेशवाक्यार्थस्मृतिः । यथायथमु-
ह्यम् । सांख्यमतसिद्धकरणव्यापारभेदस्तु करणशब्दे उक्ताः।

**करणाधिप** पु० ६त० । १जीवे तदधिष्ठानेनैव करणानां
स्वस्वकार्य्येषु प्रवृत्तेस्तस्य तदधिपत्वम् २इन्द्रियाधिष्ठातृ-
देवभेदे च । तत्र बाह्येन्द्रियाधिष्ठातारश्च शा० ति०
उक्ता यथा "दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ।
श्रोत्रादीनां दशानां तु" । तथा च श्रोत्रस्य
दिक् । त्वचो वायुः । नेत्रस्य अर्कः । रसनायाः प्र-
चेताः नासिकायाः अश्विसुतौ । वाचः वह्निः, पाणेरिन्द्रः
पादस्य उपेन्द्रोविष्णुमूर्त्तिभेदः । पायोः मित्रः सूर्य्य-
मूर्त्तिभेदः । उपस्थस्य कः प्रजापतिः । अन्तःकरणानान्तु
मनसश्चन्द्रः, बुद्धेश्चतुर्मुखः, अहङ्कारस्य रुद्रश्चित्तस्याच्यु-
तोविष्णुमूर्त्तिभेदः । करणाधिपानाञ्च सर्वेषामधिपः प-
रमेश्वरः । करणाधिपाधिपः परमेश्वरः।

**करण्ड** पु० कृ—कर्मणि अण्डन् । १मधुकोषे (मौचाक) तस्य म-
क्षिकाभिश्चिरमधुसञ्चयनेन क्रियमाणत्वात् तथात्वम् वा०
कृ—अण्डच् । २खड्गे शत्रुविच्छेदहेतुत्वात् तस्य तथात्वम्
करण्डस्तदाकारोऽस्त्यस्य अर्श० अच् । ३कारण्डवखगे
पुंस्त्री स्त्रियां जातित्वेऽपि संयोगपधत्वात् न ङीष्
किन्तु टाप् । ४दलाढके च मेदि० ।५वंशादिरचितपुष्पा-
दिपात्रभेदे (साजि) "शुष्कवनलतानिर्मितं महाकुसुमकर-
ण्डकेन" काद० । समुद्गे (कौटा) अमरः । "दापभाज-
नभ्रमरकरण्डकप्रभृत्यनेकोपकरणयुक्तः" दशकुमा० ।
७यकृति कालखण्डे शब्दचि० । ८पुष्पभाण्डे स्त्री टाप्
अत इत्त्वम् करण्डिका । उज्ज्वलदत्तः ।

**करण्डिन्** पु० करण्डस्तदाकारोऽस्त्यस्य इनि । मत्स्ये त्रिका० ।

**करतल** ७त० । ६त० १हस्तस्य तले (हातेरतेलो) । "नखानि
विधुशङ्कया करतलेन तत्त्वग्राहीणोत्" उद्भटः "करतलधृत-
मपि नश्यति" हितो० । करस्तलमिव । २हस्ते च ।

**करताल(क)** न० करेण तालो यत्र वा कप् । झल्लके वाद्ये
(खरताल) "शिवागारे झल्लकञ्च सूर्य्यागारे च शङ्खकम् ।
दुर्गागारे वंशिवाद्यं मधुरीञ्च न वादयेत्" ति० त० पु०
तत्र झल्लकं कांस्यनिर्म्मितकरतालकमिति" रघु० ।

**करताली** स्त्री करेण दीयमानस्तालो यत्र गौरा० ङीष् ।
१वाद्यभेदे (खरतल) त्रिका० । ६त० । २करतलशब्दे
(हाततालि) । पु० क्वचित् स्त्रीत्वमपि "यथा न स्या-
दालीकपटकरतालीपटुरवः" उद्भटः स्वार्थे कन् अत
इत्त्वम् । करतालिकापि करतलशब्दे "उच्चाटनीयः
करतालिकानां दानादिदानीं भवतीभिरेषः" नैष० ।

**करतोया** स्त्री करतोयं हरपार्व्वतीविवाहच्युतजलन् अ-
स्त्यस्याः हेतुत्वेन अच् । नदीभेदे सदानीरायाम् अमरः ।
गौरीविवाहे शङ्करकरच्युतजलभवत्वात् तस्यास्तथात्वम् ।
तस्याश्च यथा सदानीरत्वं तथोक्तं स्मृतौ "प्रथमं कर्कटे
देवी त्र्यहं गङ्गा रजस्वला । सर्व्वा रक्तवहानद्यः करतोया
ऽम्बुवाहिनीति" तेनान्यनदीनामिवास्याः उक्तकाले रक्त-
वहत्वाभावात् सदानीरवाहित्वात्तथात्वम् । "करतोयां
समासाद्य त्रिरात्रोपोषितोनरः । अश्वमेधमवा-
प्नोति प्रजापतिकृतोविधिः" भा० व० ८५ । "करतो-
यां कुरङ्गे च त्रिरात्रोपोषितो नरः । अश्वमेधमवाप्नोति
विगाह्य प्रयतः शुचिः" भा० अनु० २५ अ० । अस्त्यर्थे
इनि करतोयिन्यप्यत्र । "प्रभासं मानसं तीर्थं पुष्क-
राणि महत् सरः । पुण्यञ्च नैमिषं तीर्थं बाहुदां कर-
तोयिनीम्" अनु० प० ।

**करद** त्रि० करं राजस्वं ददाति दा—क । १राजस्वदायके ।
"कच्चिन्न शूद्रेण न हीनजेन वैश्येन वा करदेनोप-
पन्ना" भा० आ० १९२अ० । "य इमे पृथिवीपालाः
करदास्तव पार्थिव !" भा० व० २५४ अ० "भ्रातृभिर्जि-
त्वरैर्द्विषाम्" माघः । २तारणार्थं हस्तदायके त्रि० ।

**करद्रुम** पु० किरति समन्तात् शाखाः कॄ—अच् नित्यस० ।
कारस्करवृक्षे राजनि० ।

**करद्विष** पु० १गोत्रभेदे २वेदशाखिभेदे च । "तामिताः कर-

द्विष उपासते तस्मात्ते सर्व्वमायुर्यन्ति'' ता० २,१५,४, "करङ्घिषोनाम गोत्रभेदाः शाखिभेदा वा" भा० ।

**करन्धम** पु० करं धमति ध्मा—खश् मुम् च । १इक्ष्वाकुवंश्ये खनोनेत्रपुत्रे सार्वौन्नृपे तस्य तन्नामनिरुक्तिः भा०आश्व० ४ अ०।''खनीनेत्रस्य दुर्वृत्ततामुक्त्वा "तमपास्य च तद्राज्ये तस्य पुत्रं सुवर्चसम् । अभ्यषिञ्चन्त राजेन्द्र ! मुदिताह्यभवं स्तदा । स पितुर्विक्रियां दृष्ट्वा राज्यान्निरसनं तथा । नियतोवर्त्तयामास प्रजाहितचिकीर्षया । ब्रह्मण्यः सत्यवादी च शुचिः शमदमान्वितः। प्रजास्तञ्चान्वरज्यन्त धर्मनित्यं मनोषिणम् । तस्य धर्म्मप्रवृत्तस्य व्यशीर्य्यत् कोषवाहनम् । तं क्षीणकोषं सामन्ताः समन्तात् पर्य्यपीडयन् । स पीड्यमानो बहुभिः क्षीणकोषाश्ववाहनः । आर्त्तिमार्च्छत् परां राजा सह भृत्यैः पुरेण च । न चैनमभिहन्तुं ते शक्नुवन्ति बलक्षये । संप्रवृत्तो हि राजा स धर्मनित्यो युधिष्ठिर ! । यदा च परमामार्त्तिं गतोऽसौ सपुरो नृपः। ततः प्रदध्मौ स करं प्रादुरासीत्ततोबलम् । ततस्तानजयत् सर्वान् प्रत्यमित्रान्नराधिपान् । एतस्मात् कारणाद्राजन् ! विश्रुतः स करन्धमः । तस्य कारन्धमः पुत्रस्त्रेतायुगमुखेऽभवत्" २पाणिन्धमे मुखमारुतप्रयोगेण हस्ताध्मायकमात्रे त्रि०।

**करन्धय** त्रि० करं धयति धे—खश् मुम् च । हस्तलेहके ।

**करन्यास** पु० करे करावयवे न्यासः । तन्त्रोक्तमन्त्रभेदेन अङ्गुष्ठतर्ज्जनीमध्यमानामिकाकनिष्ठकातरतलपृष्ठेषु न्यासभेदे ''अङ्गन्यासः करन्यासो बीजन्यासस्तथैव च'' वटुकस्त० ।

**करपत्र** न०करात् पतति—पत—ष्ट्रन् । (करात) १क्रकचे दारुभेदके अस्त्रभेदे अमरः । 'स्फुटश्च पत्रैः करपत्रमूर्त्तिभिर्वियोगहृद्दारुणि दारुणायसे'' नैष० केतकवर्ण्णने । तच्च सुश्रुतोक्तशस्त्रभेदः । तत्र हि ''विंशतिः शस्त्राणि''इत्युद्दिश्य ''मण्डलाग्रकरपत्रेत्यादिना'' विभज्य "तत्र मण्डलाग्रकरपत्रे स्यातां छेदने भेदने चेति"तस्योपयोग उक्तः । करावेव पत्रं वाहनं यत्र । २जलक्रीडायाम् जटाधरः। तत्र हि हस्ताभ्यां जलमुत्तोल्य परस्परं क्रीड्यते ।

**करपत्रवत्** पु०करपत्रं तदाकारः पत्रमस्त्यस्य मतुप् मस्य वः । तालवृक्षे शब्दच०।

**करपत्रिका** स्त्री करौ पत्रमिव वाहनमस्याः कप् अत इत्त्वम् । जलक्रीडायां जटा० । हस्ताभ्यां जलोत्तोलनेन अन्योन्यं तत्क्रीडारचनात्तस्यास्तथात्वम् ।

**करपर्ण** पु० करः हस्त इव पर्णं यस्य । (भेंट) १भिण्डातकवृक्षे २रक्तैरण्डे च ( लालभेरण्डा ) राजनिघण्टुः ।

**करपल्लव** पु० करस्य पल्लव इव । १अङ्गुलौ । करः पल्लव इव रक्तत्वात् । २करकिसलये । ''करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्वतः'' देवोमा० ।

**करपात्र** न० करः पात्रमिव यत्र । १जलक्रीडाभेदे हारा० कररूपेणैव पात्रेण जलोत्तोलनेन तत्क्रीडाकरणात्तस्यास्तथात्वम् । कर एव पात्रम् । २हस्तरूपे पात्रे च । ''करपात्रे स्थिते तोये कृत्वा मूत्रपुरीषके । आतुरं तत् भवेत्तोयं पीत्वा चान्द्रायणं चरेत्" आ० त० स्मृतिः ।

**करपाल** पु०करं पालयति पाल-अण् उप०स० । १खड्गे अमरटीका । गौरा० ङीष् । २हस्तयष्टौ (सोंटा) स्त्री जटा० । स्वुल् टाप् अतइत्त्वम् । करपालिकाऽप्यत्र स्त्री । सा च एकधारास्त्रभेदे क्षीरस्वामी ।

**करपीडन** पु० करस्य बधूकरस्य पीड़नं ग्रहणं वरेण यत्र । १विवाहे ''सुतपरिणयात् षण्मासान्तः सुताकरपीड़नम्'' मु०चि०। पाणिपीडनादयोऽप्यत्र ।

**करवाल** पु० करस्य बालः शिशुरिव । १नखे शब्दमा०। करं वलति संवृणोति वल—संवृणे अण् उप० स० । २खड्गे (तरवाल) भरत: 'शक्तीश्च विविधास्तीक्ष्णाः करवालांश्च निर्मलान्''भा०आ०२७। स्वुल् अत इत्त्वम् । करवालिका अस्त्रभेदे स्त्री ।

**करभ** पु०कृ-अभच्, करे भाति भा-क वा। मणिबन्धात् कनिष्ठापर्य्यन्ते करस्य १बाह्यदेशे, अमरः । २करिशावके, "कदली कदली करभः करभः" प्रसन्नरा० "करभोरु रतिप्रश्ने द्वितीये पञ्चमेऽप्यहम्" शिवाः सु० ३उष्ट्रशिशौ (नखी) नाम ४गन्धद्रव्ये, ५उष्ट्रमात्रे पुंस्त्री मेदि० । स्त्रियां ङीष् 'करभकण्ठकडारमाशाः"माघः "स तु वृत्तस्य परिघं करञ्च करभोपमम्'' भाग० ६,१२,२१ । "व्यजायन्त खरा गोषु करभाऽश्वतरीषु च" भा०मौस० २अ० । करोतिबिभेत्यस्याः क्विप् भी बा० ड गौरा० ङीष् वा । ६करभी वृश्चिकाल्याम् स्त्री (विछाति) स्वार्थे कन् करभक। उष्ट्राद्यर्थे पुंस्त्री । स्त्रियां करभिका ।

**करभकाण्डिका** स्त्री करभप्रियं काण्डमस्याः कप् अत इत्त्वम् । उष्ट्रकाण्डीवृक्षे राजनि० ।

**करभञ्जिका** स्त्री भन्ज-ण्वुल् ६त० । करमर्द्दभेदे भावप्र०

**करभप्रिया** स्त्री ६त० । १कुद्दुरालभायाम् राजनि० उष्ट्रप्रियत्वात्तस्यास्तथात्वम् ।२उष्ट्रयोषिति च ।

**करभवल्लभ** पु० ६त० । १उष्ट्रप्रिये पीलुवृक्षे, २कपित्थवृक्षे

च राजनि०।२करभप्रियमात्रे त्रि० । स्त्रियां टाप् ।

**करभादनी** स्त्री करभैरद्यते अद्–कर्म्मणि ल्युट् ङीप् । उष्ट्रप्रियायां दुरालभायाम् राजनि०

**करभिन्** पुंस्त्री करभः कराग्रवत्भेदस्तदाकारः शुण्डोऽस्त्यस्य इनि । गजे राजनि० तस्य शुण्डे करभाकारत्वात् तथात्वम् । स्त्रियां ङीप् । [ अण् । चिंचे शब्दर० ।

**करभीर** पु० करभिणं गजमीरयति पलायनाय प्रेरयति ईर–

**करभूषण** न० करो भूष्यतेऽनेन भूष–करणे ल्युट् । १कङ्कणे (काङ्गनि) हस्तभूषणे अमरः । करं भूषयति भूष–णिच–ल्यु । २हस्तभूषणमात्रे त्रि० । [उत्तमस्त्रियाम् ।

**करभोरु** स्त्री करभ इव ऊरुर्यस्याः ऊङ् । प्रशस्तोरुकायां

**करमर्द्द** पु० करं हस्तिशुण्डमर्द्दति अर्द्द–अनादरे वा० ख मुम् च । १गुडाकद्रुमे त्रिका० तस्य हस्तिशुण्डवत् काण्डत्वात्तथात्वम् ।(पाणिया आमला) २वृक्षे इत्येके ।

**करमरिन्** त्रि० क्रियन्ते दस्यवोऽत्र कृ–आधारे अप् करो बन्धनागारः तत्र म्रियते वा० इनि । (कयेदी) बन्दिनि त्रिका० तस्य बन्धनागारे मरणात्तथात्वम् ।

**करमर्द्द** पु० करं मृद्नाति मृद-अण् उप०स०। (पाणियाआमला) वृक्षे राजनि०। स्वल्पकरमर्द्दकोऽप्यत्र । तत्स्पर्शो हि करकण्डूरिति तस्य तथात्वम् । "लघुदीर्घफलाभ्यां तु करमर्द्दद्वयं मतम् । करमर्द्दद्वयं त्वाममम्लं गुरु तृषाहरम् । उष्णं रुचिकरं प्रोक्तं पित्तरक्तकफप्रदम् । तत् पक्वं मधुरं रुच्यं लघु पित्तसमीरजित्" भावप्र० करमर्द्दीलघुफला सा ज्ञेया करमर्द्दिका इति तत्रोक्ते लघुफलकेऽत्र स्त्री

**करमर्द्दिन्** पु० करं मृद्नाति णिनि ईत० । करमर्द्द (पाणिया आमला) वृक्षे रत्नमा० ।

**करमाल** पु० करः हस्तिशुण्ड इव तदाकृतिर्मालाऽस्य । धूमे हेम०क्रमेण हस्तिशुण्डाकारेण प्रसरणात्तस्य तथात्वम्

**करमाला** स्त्री करः कराङ्गुलिपर्व मालेव जपसंख्याहेतुत्वात् । "आरभ्यानामिकामध्यं दक्षिणावर्त्तयोगतः । तर्जनीमूलपर्यन्तं करमाला प्रकीर्त्तिता" इत्युक्तलक्षणायां जपसंख्यार्थं कराङ्गुलिपर्वरूपायां मालायाम् । अत्र विशेषस्तन्त्रसा० उक्तः यथा सनत्कुमारसंहितायाम् "तर्ज्जनी मध्यमानामा कनिष्ठा चेति ताः क्रमात् । तिस्रोऽङ्गुल्यस्त्रिपर्वाणो मध्यमा चैकपर्विका । पर्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत्" । क्रममाह तत्रैव "अनामामध्यमारभ्य कनिष्ठादित एव च । तर्जनीमूलपर्यन्तं दशपर्वसु संजपेत्", तत्रैव । "अनामामूलमारभ्य कनिष्ठादित एव च । तर्जनीमध्यपर्यन्तमष्टपर्वसु संजपेत्" । एतद्वचनन्तु अष्टोत्तरशतविषयम् विष्णुविषयञ्च । शक्तिविषये पुनः "अनामिकात्रयं पर्व कनिष्ठा च त्रिपर्विका । मध्यमायाश्च त्रितयं तर्ज्जनीमूलपर्वणि । तर्जन्यग्रे तथा मध्ये यो जपेत् स तु पापकृत्" । अन्यच्च "अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च । मध्यमामूलपर्यन्तं संजपेदष्टपर्वसु" । इदमपि अष्टोत्तरशतविषयम् । हंसपारमेश्वरे "पर्वत्रयमनामायाः परिवर्त्तेन वै क्रमात् । पर्वत्रयं मध्यमायास्तर्जन्येकं समाहरेत । पर्वद्वयन्तु तर्ज्जन्या मेरुं तद्विद्धि पार्वति ! । शक्तिमाला समाख्याता सर्वतन्त्रप्रदीपिता । श्रीविद्याश्रयं विशेषः । "अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च । मध्यमामूलपर्यन्तं दशपर्वसु संजपेत्" । अन्यच्च "मध्यमाया अनामाया मूलाग्रञ्च द्वयं द्वयम् । कनिष्ठायाश्च तर्ज्जन्यास्त्रयं पर्व महेश्वरि ! । अनामामध्यमयोश्च मेरुःस्यात् द्वितयं शुभम् । प्रादक्षिण्यक्रमाद्देवि ! जपेत् त्रिपुरसुन्दरीमिति" यामलात् "कनिष्ठामूलमारभ्य प्रादक्षिण्यक्रमेण तु । तर्ज्जनीमूलपर्य्यन्तं जपेदष्टसु पर्वसु" इति श्रीक्रमवचनाच्च । इदमपि तद्वैव । मुण्डमालातन्त्रे "अनामिकाद्वयं पर्व कनिष्ठादिक्रमेण तु । तर्जनीमूलपर्यन्तं करमाला प्रकीर्त्तिता । अङ्गुलीं न वियुञ्जीत किञ्चिदाकुञ्चिते तले । अङ्गुलीनां वियोगाच्च छिद्राच्च स्रवते जपः" । अन्यत्रापि । "अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने । पर्वसन्धिषु यज्जप्तं तत्सर्वं निष्फलं भवेत् । गणनाविधिमुल्लङ्घ्य यो जपेत् तज्जपं यतः । गृह्णन्ति राक्षसास्तेन गणयेत् सर्वथा बुधः । जपसंख्या तु कर्त्तव्या नासंख्यातं जपेत् सुधीः । असंख्याकारकस्यास्य सर्वं भवति निष्फलम् । हृदये हस्तमारोप्य तिर्यक् कृत्वा कराङ्गुलीः । आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत्" । गायत्रीजपे विशेषः विधानपा० गायत्रीहृदये "अनामिकामध्यरेखावध्यधः प्रक्रमेण च । तर्ज्जन्यादिगतान्ते च अक्षमाला करे स्थिता" अनामिकाया मध्यरेखामादिं कृत्वा तर्जन्या आदिरेखा अन्ते यस्याः सेयं करे स्थिता मालेत्यर्थः विधानपा० । तत्रैव यमः । "सहस्रपरमां देवीं शतमध्यां दशावराम् । गायत्रीं तु जपेन्नित्यं सर्वकल्मषनाशिनीम् । पर्वभिस्तु जपेद्देवीमन्यत्रानियमः स्मृतः । गायत्र्या वेदबीजत्वात् गदितं ब्रह्मणा स्वयम् । अङ्गुष्ठाग्रेण यज्जप्तं यज्जप्तं

मेरुलङ्घनात्। असंख्यातं तथा जप्तं तत्सर्वं निष्फलं भवेत्” मदनपारिजाते तु मध्यमाया इयं पर्वैतिपाठः। आ०त० यद्वः। “तिस्रोऽङ्गुल्यस्त्रिपर्वाणो मध्यमा चैकपर्विका। अनामामध्यमारभ्य जप एवमुदाहृतः” काम्ये मालाऽभावे एवास्याप्याद्यता नित्ये तु सर्वथैव ग्राह्यता यथाह योगिनीत०। “नित्यं जपं करे कुर्य्यान्न काम्यमवरोधनात्। काम्यमपि करे कुर्य्यात् मालाऽभावे प्रियंवदे!। तत्राङ्गुल्या जपं कुर्य्यात् साङ्गुष्ठाङ्गुलिभिर्जपेत्। अङ्गुष्ठेन विना कर्म्म कृतं तन्निष्फलं भवेत्” उत्पत्तितन्त्रे १प० “नित्यं नैमित्तिकं काम्यं करे कुर्य्याद्विचक्षणः। करमाला महादेवि! सर्वदोषविवर्जिता। छिन्नभिन्नादिदोषोऽपि करे नास्ति कदाचन। अन्यया तु करे देवि! माला भवति तादृशी। ग्रन्थिः सा कुण्डलीशक्तिः पञ्चाशद्वर्णरूपिणी। अतएव महेशानि! करमाला महाफला”। ततश्च दक्षिणेनेति प्रागुक्तैः दक्षहस्तपर्वभिरेव दशसंख्यजपः कार्य्यः। शतादिजपे तु दक्षिणहस्तेन कृतजपदशसंख्यायाः प्रत्येकं दशकसंख्यागणना वामहस्तस्थितनिर्द्दिष्टपर्व्वक्रमेण कार्य्या तथा च दशकस्य दशकेन गणने शतसंख्यापूर्त्तिः। अधिकाष्टसंख्या तु दक्षहस्तेनैव प्रागुक्तरीत्या कार्य्येति तत्त्वम्।

**करमुक्त** न० करे स्थापयित्वा मुच्यते शत्रुं प्रति क्षिप्यते मुच-क्त (वड़शी) अस्त्रभेदे हेमच०।

**करम्ब** त्रि० कृ-कर्म्मणि अम्बच्। १मिश्रिते। भावे अम्बच्। २मिश्रणे पु०। हेमच०। ३करम्भे इत्यमरटीकायां नीलकण्ठः

**करम्बित** त्रि० करम्बो मिश्रणं जातोऽस्य तार० इतच्। मिश्रिते “मधुकरनिकरकरम्बितेति” जयदेवः।

**करम्भ** पु० केन जलेन रभ्यते सिच्यते रभ-घञ् मुम् च। १दधिमिश्रितसक्तुषु अमरः “धानावन्तं करम्भिणमपूपवन्तम्” ऋ० ३,५२,१,। “पूषण्वते ते चकृमा करम्भम्” ऋ० ३,५२,७, “अतुषानिव यवान् कृत्वा तानीषद्विभज्य करम्भपात्राणि तेषां कुर्व्वन्ति” शत० ब्रा० २,५,२,४, २उदमन्थे “धानाः करम्भः सक्तवः परिवापः पयो दधि” यजु० १६,२१, “करम्भः उदमन्थः” वेददी०। “रूपं वदरस्योपवाका करम्भस्य” २२। “करम्भादिति पूषणम्” ऋ० ६,५६,१। ३भ्रष्टयवमात्रे। “कामधियस्त्वयि रचिता न परमारोहन्ति यथा करम्भबीजानि” भाग० ३,२६,२७, “करम्भबीजानि भर्जितयवबीजानि” श्रीधरः। “करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान्” मनुः। करम्भपाकार्थं वालुकावदातापोयेषु इति। “करम्भवालुकातप्ताभायसीश्च शिलाः पृथक्” भा० स्वर्गा० २अ०। निरयस्थाने। द्रव्यावयववैषम्यात् ४मिश्रगन्धे। “करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक्” एकोविभिद्यते गन्धः” भाग० ३,२६,४३, “करम्भोमिश्रगन्धः” श्रीधरः। ५प्रियङ्गुवृक्षे ६शतावर्य्यां च राजनि०। स्वार्थे कन् करम्भक तत्रार्थे

**करम्भि** पु० यदुवंश्ये नृपभेदे। “करम्भिः शकुनेः पुत्रोदेवरातस्तदात्मजः” भाग० ६,२४,२,

**कररुह** पु० करे रोहति रुह-क। १नखे अमरः। वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयैः” मेघ०। २कृपाणे च (तरवार)

**करर्द्धि** स्त्री करेण ऋद्धिर्यस्य। १करताल्याम्। त्रिका० ६त०। २हस्तसमृद्धौ च।

**करवी** स्त्री कस्य वायोः रवोऽत्र गौ० ङीष्। १हिङ्गुपत्रे करेण वीयते वी-क्विप्। २करव्यां च त्रिका०

**करवीर** पु० करं वीरयति चु० वीर विक्रान्तौ अण्। १कृपाणे खड्गे, २स्वनामख्याते ३वृक्षे, ४देशभेदे च मेदि०। ५श्मशाने, हेम०। ब्रह्मावर्त्तदेशस्थदृषद्वतीनदीतीरस्थचन्द्रशेखरराजपुरे च। करवीरवृक्षभेदगुणाश्च भाव० उक्ता यथा। “करवीरः श्वेतपुष्पः शतकुम्भोऽश्वमारकः। द्वितीयोरक्तपुष्पश्च चण्डद्रोणः शुभस्तथा। करवीरद्वयं तिक्तं कषायं कटुकञ्च तत्। व्रणलाघवकृच्चेत्कोपकुष्ठव्रणापहम्। वीर्य्योष्णं कृमिकण्डूघ्नं भक्षितं विषवन्मतम्”। ७तीर्थभेदे। “करवीरपुरे स्नात्वा विशालायां कृतोदकः। देवह्रद उपस्पृश्य ब्रह्मभूतो विराजते” भा० अनु० २५अ०। करवीरपुरञ्च चेदिदेशसन्निकृष्टं गोमन्तपर्व्वतात् त्रिदिनगम्यमार्गे स्थितम्। यथोक्तं हरिवं० १००अ० “राज्ञां पराजयं युद्धे गोमन्तेऽचलसत्तमे। श्रवणाद्धारणाच्चास्य स्वर्गलोकं व्रजन्ति ते। तत्गच्छाम महाराज! करवीरं पुरोत्तमम् त्वयादिष्टेन मार्गेण चेदिराज! शिवाय च। ते स्यन्दनगताः सर्व्वे पवनोत्पातिभिर्हयैः। भेजिरे दीर्घमध्वानं मूर्त्तिमन्त इवाग्नयः। ते त्रिरात्रोषिताः प्राप्ताः करवीरं पुरोत्तमम्। शिवाय च शिवे देशे निविष्टास्त्रिदशोपमाः” तत्पुराधीशश्च शृगालनामा नृपतिस्तदप्याह तत्रैव १०१अ० “तानागतान् विदित्वाऽथ शृगालो युद्धदुर्म्मदः। पुरस्य धर्षणं मत्वा निर्जगामेन्द्रविक्रमः”।

**करवीरक** पु० करवीर इव कायति कै-क। १अर्ज्जुनवृक्षे राजनि० स्वार्थे कन्। २करवीरार्थे। करं वीरयति ण्वुल्। ३खड्गे शब्दमा०। करवीरे भवः कन्। ४करवीरमूलज-

रूपे विषभेदे न० हेमच० [ कन्दे राजनि० ।

**करवीरकन्दसंज्ञ** पु० करवीरकस्य संज्ञा संज्ञाऽस्य । तैल-

**करवीरभुजा** स्त्री करवीरस्य भुज इव भुजोऽस्याः । आढ-
क्याम् (अरहर) राजनि० [ (अरहर) शब्दचि०

**करवीरभूषा** स्त्री करवीरस्य भूषेव भूषा यस्याः। आढक्याम् ।

**करवीराद्य** न० करवीरमाद्यं यत्र । "करवीरपुष्पं जात्यसनमल्लिकायाश्च । एतैः समन्तु तैलम् नामार्शो-नाशनञ्च श्रेष्ठम्" इति चक्रदत्तोक्ते तैलभेदे ।

**करवीरी** स्त्री कृ-भावे अप् कराय विक्षेपाय वीरः पुत्रोऽस्याः । १अदितौ तत्पुत्राणां सुरक्षेपकत्वात्तस्यास्तथात्वम् । कं सुखं राति रा—क करः सुखदः वीरः पुत्रोऽस्याः। २पुत्रवत्यां स्त्रियाञ्च मेदि० सर्व्वतः गौरा०ङीष् ।

**करवीर्य्य** पु० करवीरे पुरे भवः यत् । धन्वन्तरिं प्रति आयुर्वेदज्ञानाय प्रश्नकारके ऋषिभेदे । "काशिराजं दिवोदासं धन्वन्तरिमौपधेनववैतरणौरभ्रपौष्कलावतकरवीर्य्यगोपुररक्षितसुश्रुतप्रभृतय ऊचुः" सुश्रु० ।

**करशाखा** स्त्री करस्य शाखेव । अङ्गुलौ अमरः । अङ्गुलशब्दस्य परिमाणविशेषे परिभाषिकत्वेऽपि अस्य तदर्थे पारिभाषिकत्वकल्पनं शब्दकल्पद्रुमे निर्मूलमेव ।

**करशीकर** पु० करस्य हस्तिहस्तस्य शीकरः । हस्तिहस्तात् निर्गते जलकणे अमरः ।

**करशुद्धि** स्त्री ६त० । फडितिमन्त्रेण मन्त्रपुष्पाभ्यां हस्तयोः शोधने । "आदावष्टादिकन्यासः करशुद्धिस्ततः परम्" तन्त्रसा० ।

**करशूक** पु० करस्य शूकः सूचीव । नखे । त्रिका० ।

**करस्** न० कृ—असुन् । कर्मणि । "प्र ते पूर्वाणि करणानि विप्रा विद्वाँ आह विदुषे करांसि" ऋ० ४,१९,२० । "करांसि कर्माणि" भा० ।

**करसूत्र** न० ६त० । विवाहादौ हस्ते मङ्गलार्थं बध्यमाने सूत्रे ।

**करस्थालिन्** पु० करः स्थालीवास्त्यस्य व्रीह्या० इनि । महादेवे "तलतालः करस्थाली ऊर्द्धसंहननो महान्" भा० अनु० १७ अ० शिवसहस्रनामकथने । तस्य कालरूपेण सर्वभूतानां करूपस्थाल्यैव पचनात्तथात्वम् ।

**करस्न** पु०करणं करः कृ—बा० अप् तं स्नाति करोति धातूनामनेकार्थत्वात् स्ना-क । कर्मकरे बाहौ निरु० "रेवत् स्प्रा करस्ना दधिषे वपूंषि" ऋ० ३,१८,५ । करस्ना कर्माणि प्रस्नातारौ बाहू" भा० "पृथू करस्ना बहुला गभस्ती" ऋ०६,१९,३ । एतामृचमधिकृत्य "करस्ना बाहू कर्मणां प्रस्नातारौ" निरु० ६,१६ निरुक्तिर्दर्शिता ।

**करहाट** पु०करैः सूर्य्यकिरणैः हाट्यते दीप्यते हट—दीप्तौ णिच् कर्मणि घञ् । १पद्मादिमूले, अमरः करं हाटयति हट—णिच् अण् । २मदनद्रुमे, ३देशभेदे च । मेदिनिः । ४पिण्डीतकतरौ राजनि० ।

**करहाटक** पु० करं हाटयति हट—दीप्तौ णिच्—ण्वुल् । १मदनवृक्षे । करहाटकार्जुनककुभेत्यादि सुश्रु० । ६त० । २हस्ताभरणे सुवर्णे । अमरः । [हारा० ।

**कराङ्कण** न०करस्य राजस्वादानस्याङ्कणम् । राजस्वादानस्थाने ।

**कराघात** पु० ६त० । करतलाघाते चपेटाघाते (चापडमारा)

**कराट** त्रि०कराय विक्षेपायाटति अट्+अच् । विकटे शब्दचि०

**करामर्द** पु० करमामृद्नाति आ+मृद्-अण् उप० स० । करमर्दे शब्दर० ।

**कराम्बुक** पु० कीर्य्यते कृ-कर्मणि अप् करमम्बु यतः कप् । (पाणिया आमला) करमर्दभेदे शब्दच० । [राजनि० ।

**कराम्लक** पु० करं कीर्य्यमाणयम्लं यतः कप् । करमर्दवृक्षे

**करायिका** स्त्री कर इवाचरति कर+आचारे क्यङ् ण्वुल् । १बलाकायाम् तस्याः सङ्कुचितहस्तवत् प्रकाशमानत्वात्तथात्वम् । २कूटपूर्य्याम् शब्दचि० [त्रिका० ।

**करारोट** पु० करे आरोटते रुट-दीप्तौ अच् । अङ्गुरीयके

**कराल** पु० कराय विक्षेपायालति पर्य्याप्नोति करं लाति ला—क वा । १सर्जरसयुक्ततैले (तेलधुना) २कृष्णकुठेरके (कालतुलसी)३वृक्षे ४दन्तुरे उच्चतदन्ते (दँतो) ५भयानके त्रि० मेदि० । "करालवदनां घोराम्" "घोरदंष्ट्रां करालास्याम्" श्यामाध्यानम् । "वपुर्महोरगस्येव करालफणमण्डलम्" रघुः "लम्बा कराला विनता तथैव बहुपुत्रिका" "दुर्द्दर्शना सुदुर्गन्धा कराला मेघकालिका" (पूतना) सुश्रु० । (अनन्तमूल) ६शारिवौषधौ स्त्री राजनि० । गौरा०ङीष् ।८अग्नेर्जिह्वाभेदे जटाधरः । सा च तामसी यथाह शा०ति० "विश्वमूर्त्ति-स्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा । लोहितान्या कराला च कली तामस ईरिताः" । संज्ञायां कन् अत इत्वम् । करालिका राजसवह्निजिह्वायाम् । "पद्मरागा सुवर्णान्या तृतीया भद्रलोहिता । लोहितानन्तरं श्वता धूमिनी च करालिका । राजसोरसना वह्नेर्विहिताः काम्यकर्मसु" अग्निजिह्वशब्दे दर्शितवाक्यन्तु सामान्यविषयम् । ९दन्तरोगभेदे पु० । "शनैः शनैर्विकुरुते वायुर्दन्तसमाश्रितः। करालान् विकृतान् दन्तान् करालो न स

सिध्यति"भावप्र०। तादृशरोगयुक्तत्वात् दन्तरस्य तथात्वम् । "तप्तस्नेहे पचेत् पूर्वं वेसवारकसंयुतम् । पाकप्राप्तितसौरभ्यं करालं स्वदकैर्मतम्"पाकशास्त्रोक्ते स्नेहपक्वे १०वेसवारे न०।(कडि)११कस्तूरीमृगे पुंस्त्री"एणहरिणर्ष्यकुरङ्गकरालकृतमालशरभश्वदंष्ट्राप्पृषतचारुष्कस्तगमालकाप्रभृतयो जङ्घालाः मृगाः कषया मधुरा लघवो वातपित्तहरास्तीक्ष्णा हृद्या वस्तिशोधनाश्च"सुश्रुते मृगभेदात्तुक्ता तद्गुणा उक्ताः।१२दैत्यभेदे पु०। "सहमः कालवदनः करालः कौशिकः शरः" हरिवं४२ असुरनामकथने ; "सहमः-कालवदनः करालः केशिरेव च"हरिवं० २६२ अ०। स्वार्थे कन् करालकः उक्तार्थे लग्वतुलस्याम् पु०रत्ना०।

**करालत्रिपुटा** स्त्री करालानि त्रीणि पुटान्यस्याः । लङ्काधान्ये त्रिकाण्डिकायाम् राजनि० ।

**करालभैरव** न० तन्त्रभेदे । म०त० कूर्मपु० हिमालयं प्रति देवीवाक्यम् । "करालभैरवञ्चापि यामलं वाममाश्रितम् । एवंविधानि चान्यानि मोहनार्थानि यानि तु । मया सृष्टानि चान्यानि मोहायैषां भवार्णवे" [इत्युक्ते हेमच० ।

**करालिक** त्रि० करायां करतुल्यशाखानामालियत्र कप् ।

**करास्फोट** पु०करेण आस्फोटः शब्दो यत्र । वक्षःस्थले सङ्कुचितरूपेण स्थापिते एकबाहौ इतरकराघातेन ताड़ने (तालठोका) । ६त०। २कराघाते ।

**करिक** पु० करो विक्षेपोऽस्त्यस्य ठन् । विट्खदिरे शब्दच०

**करिकणवल्ली** स्त्री करिकणः गजपिप्पल्यवयव इव वल्ली । चविकावृक्षे (चइ) राजनि० ।

**करिका** स्त्री करोविलेखनमस्त्यस्याम् अर्श० अच् अतइत्त्वम् । नखरेखायाम् वैज० । [चूर्णं शब्दचि०

**करिकुसुम्भ** पु०करो नागकेशरस्तस्य कसुम्भइव । नागकेशर-

**करिज** पुंस्त्री करितोजायते जन—ड । हस्तिशिशौ शब्दरत्ना०

**करिणी** स्त्री करिन्+स्त्रियां ङीप् । १हस्तिन्याम् अमरः "लाक्षावसन्नमदधारकपोलभागाः सम्पादयन्ति करिणः करणीभ्रमं नः" धनञ्जयविज० । २देवताभेदे शब्दचि० ।

**करिदारक** पु०१करिणं दृणाति हिनस्ति दृ-ण्वुल् । सिंहे । शब्दर०स्त्रियां टाप् अत इत्त्वम् । [शब्दचि०

**करिनासिका** स्त्री करिणोनासेवाकारोऽस्याः । यन्त्रभेदे

**करिन्** पुंस्त्री करः शुण्डः प्राशस्त्येनास्त्यस्य इनि । हस्तिनि गजे "बृंहितं करिगर्जितम् अमरः 'मुक्ताफलाय करिणम् हरिणं पलाय" व्या०उदा० । "अरिकेरिहरणार्थं योजनानामशीत्या" लीला० । "करीव सिक्तं पृषतैः पयोमुचाम्" "कटप्रभेदेन करीव पार्थिवः"रघुः "आयामवद्भिः करिणां घटाशतैः"माघः। २अष्टसंख्यायाम् एकाद्यादिशब्दे विवृतिः । करिभेदादिकम् पृ० ९५९ इभशब्दे उक्तम् । तन्नामनामके ३नागकेशरे पु० ।

**करिप** पु० करिणं पाति पा—क । हस्तिपके (माहुत) । चूर्ण्यादि० अप्राणिवाचकषष्ठ्यन्तात् अस्याद्युदात्तता । वनकरिप इत्यादि । [राजनि०

**करिपत्र** न० करी तत्कर्ण इव पत्रमस्य । तालिपत्रवृक्षे

**करिपथ** पु० ६त०अच् समा०। हस्तिगमनयोग्ये पथि ततः संज्ञायां कन् देवपथादि०तस्य लुक् । करिपथनामके देशभेदे पु०। [पिप्पल्याम् अमरः

**करिपिप्पली** स्त्री करिपूर्व्वपदयुक्ता पिप्पली शा०त०। गज

**करिपोत** पु० ६त० । हस्तिशावके हारा० ।

**करिबन्ध** पु० करिणं बध्नातयत्र बन्ध-आधारे घञ् । १हस्तिबन्धस्तम्भे हारा० । भावे घञ् ६त० । २गजबन्धने च

**करिभ** न० करीव भाति भा—क । कुष्ठभेदे त्रिका० ।

**करिमाचल** पुंस्त्री मच-शाठ्ये घञ् करिणि माचं शाठ्यं लाति ला-क । १सिंहे त्रिका० गजमाचलादयोऽप्यत्र स्त्रियां जातित्वात् ङीष् ।

**करिमुख** पु० करिणोमुखं मुखमस्य । १गणेशे यथा चास्य गजवक्त्रता तथा इभाननशब्दे ९८१पृ०उक्तम् । ६त० । २गजस्य मुखे न० ।

**करिर** पुंन० कृ—इरन् । गूढपत्रे उष्ट्रप्रिये मरुभूमिजे करीरे वृक्षभेदे । शब्दरत्ना० । करीरशब्दे गुणादि ।

**करिरत** न० "भुग्नतस्तनमूजाग्रमस्तकाम्यन्नतां स्वयमधोमुखीं स्त्रियम् । क्रामति स्वकरकृष्टमेहने वल्लभे करिरतं तदुच्यते" इत्युक्तलक्षणे १रतिबन्धभेदे शब्दचि० करिपदमिति पाठान्तरे"करिपदमित्यपि तत्रार्थे। ६त०२गजरमणे च ।

**करिव** त्रि० करिणं वाति वा—क । करिगते अप्राणिषष्ठ्यन्तात्तस्य चूर्ण्या० आद्युदात्तता । वनकरिव इत्यादि

**करिशावक** पु० गजशिशौ "यावत्पञ्चाब्दमेतस्मिन् करभः कलभोऽपि च" शब्दर० उक्ते पञ्चाब्दपर्य्यन्ते हस्तिबालके ।

**करिष्ठ** त्रि० अतिशयेन कर्त्ता इष्ठन् तृणोलोपः । कर्त्तृतमे "पुरु सखिभ्य आसुतिं करिष्ठः" ऋ०७,९७,७ । ईयसुन् । करीयस् कर्त्तृतरे त्रि० स्त्रियां ङीप् ।

**करिष्यमाण** त्रि०कृ—भविष्यति शानच् स्यट् । कर्त्तव्ये । वेदे तु नि० मानलोपः । "यानि करिष्या कृणुहि प्रवृद्ध!"

ऋ० १, १६५, ९, "करिष्या कर्त्तव्यानि" भा०। द्वितीयास्थाने आट्।

**करिसुन्दरिका** स्त्री करीव सुन्दरी संज्ञायां कन्। नागयष्टौ वस्त्रशोषणार्थमङ्गणस्थापियन्त्रभेदे हारा०।

**करिस्कन्ध** न० करिणां समूहः स्कन्धच्। गजसमूहे। हेम०। गजस्य २स्कन्धे पुंन०।

**करीर** पु० कृ—ईरन्। १घटे मेदि०। २वंशाङ्कुरे अमरः। (बाँशेरकोँड) ३अङ्कुरमात्रे भावप्र० वंशमुक्त्वा "तत्करीरः कटुः पाके रसे रूक्षो गुरुः सरः। कषायः कफकृत् स्वादुर्विदाही वातपित्तलः" तद्गुणा उक्ताः। "हिमांशुवंशस्य करीरमेव मां निशम्य किन्नासि फलेग्रहिग्रहा" नैष०। "आनिन्यिरे वंशकरीरनीलैः" माघः। "वंशशब्दस्याम्नानताहेतोरलूनतायाः प्रतिपत्त्यर्थत्वान्न पौनरुक्त्यम् अतएव एकार्थं पदम् न प्रयोज्यमित्युक्त्वा करिकलभकर्णावतंसादिषु प्रतिपत्तिविशेषकरेषु न दोष इत्याह वामनः" मल्लि०। तेन वंशाङ्कुरार्थकस्यापि करीरशब्दस्य प्रतिपत्तिविशेषार्थं वंशशब्दप्रयोग इति तत्त्वम्। ३गूढपत्रे मरुभूमिजे उष्ट्रप्रिये वृक्षभेदे भावप्र०। "करीरः कटुकस्तिक्तः स्वेद्युष्णोभेदनः स्मृतः। दुर्नामकफवातामगरशोथव्रणप्रणुत्" भावप्र० ४चीरिकायां झिल्लयाम् (झिंझिपोका) ५हस्तिदन्तमूले च स्त्री उणा०। अस्य प्रस्थशब्देन समासे करीरप्रस्थे कर्क्यादि० माद्युदात्तता। मध्वा० चतुरर्थ्यां मतुप् मस्य वः। करीरवत् तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप्।

**करीरकुण** न० करीरस्य पाकः पील्वा० पाके कुणच्। तत्पाके

**करीरिका** स्त्री करीरमिवाकारोऽस्त्यस्य ठन्। हस्तिदन्तमूले त्रिका०।

**करीरी** स्त्री कृ—ईरन् गौरा० ङीष्। चीरिकायां (झिंझिपोका) १झिल्लयाम् २गजदन्तमूले च मेदि०।

**करीष** पुंन०। कृ—ईषन्। १शुष्कगोमये (घुटिया। "करीषमिष्टकाङ्गारान् शर्करा वालुकास्तथा" मनुः। २पशुपुरीषमात्रे च "उच्छुष्ककरगपुरीषपांशुला" कादम्ब०। करीषाग्निः (घुटेर आगुन)।

**करीषगन्धि** पु० करीषस्य गन्ध इव गन्धोऽस्य इत् समा०। करीषतुल्यगन्धयुक्ते तस्यापत्यमण् स्त्रियां ष्यङ् कारीषगन्ध्या तदीयस्त्र्यपत्ये। तस्याः पुत्रपतिशब्दाभ्यां समासे सं० प्र० दीर्घश्च। कारीषगन्धीपुत्रः कारीषगन्धीपतिः एवं परमकारीषगन्धीपुत्र इत्यादि उपसर्ज्जने तु न अतिकारीषगन्ध्यापुत्र इत्याद्येव सि०कौ०।

**करीषङ्कषा** स्त्री करीषं कषति हिनस्ति कष-खच् मुम् च। वात्यायाम् तस्याः गोमयशोषणात्तथात्वम्।

**करीषिन्** त्रि० करीषस्य देशः पुष्करा० इनि न मतुप्। १करीषयुक्तदेशे स्त्रियां ङीप्। करीषमाश्रयत्वेनास्त्यस्याः इनि ङीप्। गोमयाधिष्ठातृदेव्यां २लक्ष्म्याम् स्त्री। "गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्" श्रीसूक्तम्।

**करुण** त्रि० करोति मनः आनुकूल्याय कृ—उनन्। दयायुक्ते २रसभेदे पु० तल्लक्षणाद्युक्तं सा० द० यथा "इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्। धीरैः कपोतवर्णोऽयं कथितो यमदैवतः। शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम्। तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः। अनुभावा दैवनिन्दाभूपातक्रन्दितादयः। वैवर्ण्योच्छ्वासनिश्वासस्तम्भप्रलपनानि च। निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः। विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः"।

शोच्यं विनष्टबन्धुप्रभृति। यथा राघवविलासे। "विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः। अनयोर्घटना विधेः स्फुटं ननु खड्गेन शिरीषकर्त्तनम्"। अत्र हि रामवनवासजनितशोकार्त्तस्य दशरथस्य दैवनिन्दा। एवं बन्धुवियोगविभवनाशादावप्युदाहार्य्यम्। परिपोषस्तु महाभारते स्त्रीपर्वणि द्रष्टव्यः। अस्य करुणविप्रलम्भाद्भेदमाह। शोकस्थायितया भिन्नो विप्रलम्भादयं रसः। विप्रलम्भे रतिः स्थायी पुनः सम्भोगहेतुकः" ३परदुःखहरणेच्छायां दयायां स्त्री। "अहो विधे त्वां करुणा रुणद्धि नः" नैष०। "प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा" मेघ०। "करुणाविमुखेन मृत्युना" रघुः। दुःखितेषु दया करुणा साऽस्त्यस्य अर्श० अच् विषयत्वेन। ४करुणाविषये दीने त्रि०। "अनिशं निजैरकरुणः करुणम्" माघः। "करुणं दीनं यथा तथेति" मल्लि०। "अनुरोदितीव करुणेन पत्रिणां विरुतेन" माघः। "विरुतैः करुणस्वनैरियम्" कुमा०। (करुणहनेवु) ५वृक्षभेदे पु० त्रिका०। "पिकात् वने शृण्वति भृङ्गहुङ्कृतैर्दशामुदञ्चत्करुणे वियोगिनाम्" नैष०। "करुणस्य फलं स्निग्धवातामेदसां पुनः; नाशनं पित्तकोपस्य शमनं परिकीर्त्तितम्" इति तत्फलगुणाश्च वैद्यकोक्ताः। ६बुद्धभेदे पु० त्रिका०। ७परमेश्वरे ८भूताभयकारके परिव्राजके पु० शब्दचि०।

**करुणमल्ली** स्त्री करुणा करुणाविषयः मल्ली। १नवमल्लिकायाम् शब्दच०। तत्पुष्पस्यातिसुकुमारत्वात् करुणावि-

धयन्येन सदयं धीयमानतया तस्यास्तथाभूतत्वम्।

**करुणविप्रलम्भ** पु॰ शृङ्गाररसभेदे। शृङ्गारशब्दे” सा॰द॰ उक्तं यथा
“विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मतः। तत्र यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ। अभीष्टं नायकं नायिकां वा। स च पूर्व्वरागमान-प्रवासकरुणात्मकश्चतुर्द्धा स्यात्”।

**करुणानिधि** पु॰ करुणा निधीयतेऽत्र नि+धा—आधारे कि उप॰स॰। करुणाधारे दयायुक्ते करुणानिधानादयो-ऽप्यत्र। [यस्य। अत्यन्तकरुणायुक्ते।

**करुणापर** त्रि॰ करुणायां परः आसक्तः करुणा परा वा

**करुणामय** त्रि॰ करुणा+प्राचुर्य्ये मयट्। प्रचुरकरुणावति “काकुत्स्थं करुणामयं गुणनिधिम् विप्रप्रियं धार्मिकम्” महाना॰स्त्रियां ङीप् करुणामयी।

**करुणिन्** त्रि॰ करुणाऽस्यस्य सुखा॰इनि। कृपायुक्ते स्त्रियां ङीप्। सिद्धे सुखादिपक्षणम् ठनादिनिष्टत्यर्थमिति सि॰कौ॰। तेन सुखादिभ्यो न मतुप्। आर्षे तु क्वचि-दिष्यते।

**करुत्थाम** पु॰ तुर्व्वसुवंश्ये दुष्मन्तपुत्रभेदे। “तुर्व्वसोस्तु सुतो-वह्निरित्युपक्रम्य “दुष्मन्तस्य तु दायादः करुत्थामः प्रजे-श्वर” हरिवं॰३२अ॰।

**करुन्धम** पु॰तुर्व्वसुवंश्ये त्रैसानोः पुत्रे नृपभेदे। “करुन्ध-मस्तु त्रैसानोर्मरुत्तस्य चात्मजः” हरिवं॰३२अ॰।

**करुम** पु॰पिशाचभेदे। “ये शालाः परिनृत्यन्ति सायं गर्दभ-नादिनः। कुसूला ये च कुक्षिलाः ककुभाः करुमाः स्रिमाः। तानोषधे! त्वं गन्धेन विषूचीनान् विनाशय” अथ॰८,६,१०।

**करू** स्त्री कृ—हिंसायाम् ऊ। १कर्त्तने। “चतुर्दश वा चाशां करूकराणि”शत॰ब्रा॰२२,२,४,१०। कर्मणि ऊ। २कृत्ते च। “वामं देवः करूलती”ऋ॰४,३०,२४। “करूलती कृत्तदन्तः” भा॰पृषो॰दन्तस्य लतादेशः पूष्णोभग्नदन्तत्वेन तथात्वम्।

**करूष** पु॰ कृ—ऊषन्। १देशभेदे यस्याधिपतिर्दन्तवक्रः “एष मद्रान् वशे कृत्वा कुरूंश्च सह सोमकैः। चेदि-कारूषकौषांश्च कुरुवत्सौं वशिष्यति” भा॰आ॰१२२ अ॰। “शिशुपालः सहसुतः करूषाधिपतिस्तथा” भा॰ व॰४अ॰। करूषाणां जनपदानां राजा अण् तद्राजत्वात् बहुषु तस्य लुक्। करूषाः तद्राजेषु “दन्तवक्रः करूषश्च करभोमेघवाहनः” भा॰स॰१३अ॰। एकत्वेऽपि लुक् आर्षः। अस्य तालव्यमध्यतापि भर्गादिगणे तथापाठात् ततो भर्गा॰स्त्रियां न तद्राजप्रत्ययस्य लुक्” सि॰ कौ॰।

**करूषज** पु॰ करूषदेशे जायते जन—ड। दन्तवक्रे नृपभेदे “ताविहाथ पुनर्जातौ शिशुपालकरूषजौ” भा॰ आ॰७, १०,३०। तौ जयविजयौ विष्णोःपार्षदौ।

**करूषाधिपति** पु॰६त॰। दन्तवक्रे नृपे। “काश्मीरराजो-गोनर्दः करूषाधिपतिस्तथा” हरिवं॰ ६। करूषाधिपा-दयोऽप्यत्र।

**करेऽट** पु॰करे अटति अट–अच् अलुक् स॰। नखे त्रिका॰

**करेऽटव्या** स्त्री करेऽटनं व्ययति व्ये—ड टाप्। धनच्छूप-क्षिणि त्रिका॰। [ख्याते खगे। अमरः।

**करेटु** पु॰ केन मस्तकेन रेटति रेट–कु। (करकटिया) इति

**करेणु** पु॰कृ—एणु(नु)के मस्तके रेणुरस्य वा। १गजे अमरः। “त्रस्तः समस्तजनहासकरः करेणोः” माघः। उत्-क्षिप्तगात्रः स विडम्बयन्नभः—करेणुरारोहयते निषादि-नम्” माघः “स्वातन्त्र्यमुज्ज्वलमवाप करेणुराजः”माघः। २कर्णिकारद्रुमे विश्वः। ३गजस्त्रियां स्त्री अमरः। “ग-न्धाय गण्डूषजलं करेणुः”कुमा॰। “करेणुभिर्दन्तमृणाला-सभङ्गाः” रघुः। करेणुदुग्धगुणाश्च सुश्रुते “अश्वायाश्चैव नार्य्याश्च करेणूनाञ्च यत् पयः। तत्त्वनेकौषधिरसप्रसादं प्रायदं गुरु। मधुरं पिच्छिलं शीतं स्निग्धं श्ल-क्ष्णं मृदु सृतम्”सामान्यत उक्ता। “हस्तिन्याः मधुरं वृष्यं कषायानुरसं गुरु। स्निग्धं स्थैर्य्यकरं शीतं च-क्षुष्यं बलवर्द्धनम्” उक्ताः। “करेणुः सवक्षीरा कन्दे-न गजरूपिणी। हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णि-नी”सुश्रुतोक्तलक्षणायाम् ४ओषधौ स्त्री तदुत्पत्तिकालश्च तत्रैवोक्तः। “करेणुस्तत्र कन्या च छत्रातिच्छत्रके तथा। गोलोमी चाजलोमी च महती श्रावणी तथा। वसन्ते कृष्णसर्पाख्यो गोलोमी च प्रतायते” स्वार्थे कन् करेणु-काप्यत्र स्त्री। रायमुकुटस्तु करेणूशब्दं दीर्घान्तं पठित्वा हस्तिनि पुंस्त्रीत्याह।

**करेणुभू** पु॰ करेणौ भवति भू—क्विप्। १हस्तिशास्त्रप्रवर्त्तके पालकाव्यमुनौ हेमच॰। २हस्तिजातमात्रे त्रि॰।

**करेणुमती** स्त्री नकुलस्य भार्य्याभेदे। “नकुलस्तु चैद्यां करे-णुमतीं भार्य्यामुदावहत्तस्यां पुत्रं निरमित्रं नामाजनयत्” भा॰ आ॰ ६५ अ॰।

**करेणुसुत** पु॰ ६त॰। पालकाव्ये मुनौ त्रिका॰।

**करेनर** पु० तुरुष्कनामगन्धद्रव्ये करेवरोऽप्यत्र राजनि० ।

**करेन्दुक** पु० करेण किरणेनेन्दुरिव भायति कै—क । भूतृणे राजनि० ।

**करोट** न० के शिरसि रोटते रुट—द्युतौ अच् । शिरोऽस्थ्नि । (माथारखुलि) इन् करोटिरप्यत्र स्त्री वा ङीप् अमरः । "वपुषि भटकरोटिन्यस्तकीलालसिन्धुः" धनञ्ज० ।

**करोटक** पु० नागभेदे "आप्तः करोटकश्चैव शङ्खो वालिशिखस्तथा" भा०आ० ३५ अ० नागनामकीर्त्तने । अत्र कर्कोटार्थाभिधानं प्रामादिकमेव । उपक्रमे ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ" इति कर्कोटकस्य पृथगुक्तेस्ततो भिन्न एवायमिति तत्त्वम् । [ प्रनिकर्कति ।

**कर्क** हासे सौत्रः पर०अक० सेट् । कर्कति अकर्कीत् । चकर्क

**कर्क** पु० करोति करोति क्रियते वा कृ—क तस्य नेत्त्वम् कर्क—अच् वा । १वह्नौ २श्वेताश्वे अमरः ३दर्पणे ४घटे ५मेषावधिचतुर्थे राशौ ६कुलीरे ७कर्कटवृक्षे (काँकडाशिङा) च हेम० । ८कात्यायनश्रौतसूत्रभाष्यकारे पु० ।

**कर्कखण्ड** पु० कर्कः श्वेताश्वयुक्तः खण्डः भूमिखण्डो यत्र देशभेदे । "मागधान् कर्कखण्डांश्च निवेश्य विषये स्वनः" भा० व० २५२अ० ।

**कर्कचिर्भटि** स्त्री कर्कवर्णा चिर्भटी । कर्कटीभेदे । राजनि० ।

**कर्कट** पु० सौ०कर्क—अटन् । चद्रामलकवत्क्षुद्रफलके १वृक्षभेदे २जलजन्तुभेदे कुलीरे । ( काँकडा ) "गवनाटत् करकर्कटोत्करम्" नैष० राजनि० । ( करकटिया ) ३पक्षिभेदे । ४अलाबूवृन्ते च मेदि० । ५पद्मकन्दे जटा० मेषादितश्चतुर्थे ६राशौ "पादः पुनर्वसोरन्त्यः पुष्यो ऽश्लेषा च कर्कटः" ज्यो०त०उक्तसपादनक्षत्रद्वयात्मकः । तथा च ३६०अंशात्मके राशिचक्रे ९०अंशोत्तरम् ३० त्रिंशदंशात्मकः स राशिः । "मेषाः स्वनामसदृशाकृतयो भवन्ति" ज्यो०त०उक्तेस्तस्य कुलीराकृतित्वम् । अस्य वर्णाद्युक्तं नील०ता० "बहुप्रजासक्तपदः कुलीरश्चरोऽङ्गना पाटलहीनशब्दः । शुभः कफी स्निग्धजनोऽम्बुचारी समोदयी विप्रनिशोत्तरेशः" तथा च अस्य बहुप्रजाशङ्किता बहुपदता चरराशित्वं स्त्रीरूपता पाटलवर्णता हीनशब्दता शुभत्वं शुभस्वामिकता च । कफप्रकृतित्वं स्निग्धजनत्वम् जलचरत्वम् समराशित्वम् विप्रवर्णत्वम् निशाबलित्वम् उत्तरदिगस्थत्वञ्च । अयं च कीटराशिः "कर्कटवृश्चिकमीना धनुषश्चान्त्यार्द्धञ्च कीटसंज्ञाः स्युः" इत्युक्तेः तत्र समत्वं युग्मराशित्वं समपरिमाणञ्च । "ओजोऽथ युग्मं विषमः समश्च" "क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च" इत्युक्तेः "हस्वास्तिमिगोऽविघटा मिथुनधनुःकर्किहगहस्वाश्च समाः" इत्युक्तेश्च । "पृष्ठोदयाविमिथुना दिवा शीर्षोदयाः परे" इत्युक्तेः अस्य शीर्षोदयत्वम् । अस्याधिपः चन्द्रः ।कुजशुक्रबुधेन्द्वर्क सौम्य शुक्रावनीभुवाम् ।—क्षेत्राणि स्युरजादयः इत्युक्तेः "मेष कर्कटयोर्मध्ये गाढं तपति भास्करः" तिथि० पु० । "कर्कटे प्रथमं देवी त्र्यहं गङ्गा रजस्वला" स्मृतिः । ( काँकुड ) ७एर्वारौ स्त्री गौरा० ङीष् भावप्र० । तस्याः गुणाः भावप्र० उक्तायथा । "एर्वारुः कर्कटी प्रोक्ता कथ्यन्ते तद्गुणा अथ । कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः । रुच्या पित्तहरा साऽमा पक्वा तृष्णाग्निपित्तकृत्" । अस्याः पाकप्रकारस्तु । "त्वग्बीजरहिता प्रौढ़ा गुलिकाकारखण्डिता । तलिता सुघृते तप्ते कर्कटी वाववेष्टिता । विपाचर्चा सखण्डं घृतदुग्धसार्द्धं विभावितं वल्लजशर्कराभ्याम् । कृतैलवासञ्च कटूष्णमेतत् प्रतिक्षणं रोचनमातनोति" । ङी-षन्तः । ८शाल्मलौ मेदि० । ९सर्पे शब्दरत्ना० । १०देवदालीलतायां १२घोषिका१३वृक्षे राजनि० । १४कर्कटजातिस्त्रियाञ्च ।"यथा च कर्कटी गर्भमाधत्ते मृत्युमात्मनः" भा०विरा०२७२श्लो० । कर्कटस्य कोषस्थता तन्मांसगुणाश्च भावप्रका० उक्ता यथा । "शङ्खः शङ्खनखश्चापि शुक्तिशम्बूककर्कटाः । जीवा एवंविधाश्चान्ये कोषस्थाः परिकीर्त्तिताः । कोषस्था मधुराः स्निग्धा वातपित्तहरा हिमाः । "ताम्रचूडकर्कटकृष्णमत्स्यशिशुमार वराहवशाः" सक्षीरं कर्कटरसे सिद्धं चात्र घृतं पिबेत्" सुश्रु० । स्मृतौ चास्याभक्ष्यताोक्ता तच्चाभक्ष्यशब्दे दर्शितम् । कर्कट स्यच्छृङ्गाकारोऽस्त्यस्य अर्श०अच् । तुलाप्रान्तनिक्षेप्ये कर्कट शृङ्गाकारे आयसे १५कीलकभेदे"पु०मिता०१६करटके पु० च । तत्पादाग्रतुल्याग्रत्वात्तस्य तथात्वम् । १७कर्कटशृङ्ग्याम् स्त्री ङीष् भाव०प्र० ।

**कर्कटक** न० कर्कटइव कायति कै—क । १यन्त्रभेदे (कम्पास) "फणिमुखकाकलीदंशकपुरुषशीर्षकयोगचूर्णयोगवर्त्तिकामानसूत्रकर्कटकरज्जुदीपभाजनभ्रमरकरण्डक प्रभृत्यनेकोपकरणयुक्तः" दशकुमा० । कर्कटः वृक्ष इव कायति कै क । २इक्षुभेदे शब्दचिन्ता० । स्वार्थे कन् । ३कुलीरे अमरः ।

**कर्कटशृङ्गी** स्त्री कर्कट इव शृङ्गं यस्याः । (कांकडाशिङा) १वृक्षभेदे । स्वार्थे कन् कर्कटशृङ्गिकाप्यत्र । "शृङ्गी

कर्कटशृङ्गी च स्यात् कुलीरविषाणिका । अजशृङ्गी-च वक्रा च कर्कटाख्या च कीर्त्तिता । शृङ्गी कषाया तिक्तोष्णा कफवातक्षयज्वरान् । श्वासोर्द्ध्ववाततृट्कास हिक्कारुचिवमीन् हरेत्" भावप्र० तद्गुणादि उक्तम्

**कर्कटाक्ष** पु० कर्कट इवाक्षि यन्थिभेदोऽस्य । कर्कट्याम् (काँकुड) रत्नमाला । [शृङ्गाम् भावप्र० ।

**कर्कटाख्या** स्त्री कर्कटस्याख्याख्या यस्याः । (काकडाशिङ्गा)

**कर्कटाङ्गा** स्त्री कर्कटस्याङ्गं शृङ्गमिव शृङ्गमस्त्यस्याः अजा० टाप् । शृङ्गाम् । राजनि० । [बिल्वहक्षे राजनि० ।

**कर्कटाह्व** पु० कर्कटमाह्वायते कण्टकारत्वात् आ+ह्वे-क ।

**कर्कटि** स्त्री कर्कं कण्टकमटति इन् शक०। (काँकुड) १एर्वारौ शब्दचि०। वा ङीप् अत्रार्थे, २शाल्मलीवृक्षे ३कर्कट-शृङ्ग्याञ्च । मेदि० ।

**कर्कटिनी** स्त्री कर्कटस्तदाकारोऽस्त्यस्याः इनि ङीप् । दारु-हरिद्रायाम् राजनि० । [शब्दरत्ना० ।

**कर्कटु** पु० कर्क-बाहुलकात् उ० नि० । (करकटिया) पक्षिभेदे

**कर्कन्धु** स्त्री कर्कं कण्टकं दधाति धा-कू नि०मुम् । १वदर्य्याम् (कुल) "कर्कन्धूफलमुच्चिनोति शवरी मुक्ताफलाशङ्कया" सा०द० । तस्य पुस्त्वमपि । "पुंसि स्त्रियाञ्च कर्कन्धूः वदरी कोलमित्यपि । फेनिलं कुवलं घोटा सौवीरं व-दरं महत् । अजप्रिया कुहा कोली विषमोभयक-ण्टका । पच्यमानं सुमधुरं सौवीरं वदरं महत् । सौवीरं वदरं शीतं भेदनं गुरु शुक्रलम् । वृंहण-म्पित्तदाहास्रक्षयतृष्णानिवारणम् । सौवीरं लघु स-पक्वं मधुरं कोलमुच्यते । कोलन्तु वदरं ग्राहि रुच्य-मुष्णञ्च वातलम् । कफपित्तकरञ्चापि गुरु सारकमी-रितम् । कर्कन्धूः क्षुद्रवदरं कथितं पूर्व्वसूरिभिः । अम्लं स्यात् क्षुद्रवदरं कषायं मधुरं मनाक् । स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम् । शुष्कं भेद्यग्निकृत्सर्वं लघु-तृष्णाक्लमास्रजित्" फले न० । "दध्नोरूपं कर्कन्धूनि" यजु० १९,२३, कर्कन्धूनां पाकः पील्वादि० कुणच् । कर्कन्धूकुण तत्पाके न० । प्रस्थपरे कर्क्यादि० कर्क-न्धूप्रस्थइत्यादौ नाद्युदात्तता । ततः मध्वा० चतुरर्थ्यां मतुप् । कर्कन्धूमत् तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप् । कर्कन्धूमती । तस्या अदूरभवः सुवास्त्वा० अण् । कार्कन्धूमत तददूरदेशभवे त्रि० ।

**कर्कफल** न० कर्क-हासे अच् कर्कं प्रकाशान्वितं सत् फलति फल-अच् । क्षुद्रामलके राजनि० ।

**कर्कर** पु० कर्क-हासे-अरन् ।१दर्पणे,मेदि० २चूर्णसाधने क्षुद्र-पाषाणखण्डे कङ्करे, (काँकर) । कर्क-घञ् कर्कं हासं राति-रा-क । ३दृढे ४कठिने त्रि० मेदि० । "किं नो वर्करकर्करैः प्रियशतैराक्रम्य विक्रीयते" अमरुश० । "करीरः कर्करोऽर्कत्वक्" माघः । २मुद्गरे शब्दचि० ।

**कर्कराङ्ग** पु० कर्करइवाङ्गं यस्य । खञ्जने कालकण्ठविहङ्गमे शब्दमा० ।

**कर्कराट** पु० कर्कं हासं रटति रट-कु । कटाक्षे जटाधरः ।

**कर्कराटुक** पु० कर्कं कठिनं रटति रट-उकञ् । (करकटिया) विहभेदे शब्दर०।

**कर्करान्धुक**पु० कर्करः कठोरः अतिशयितान्धाकारवत्त्वात् अन्धुः कूपः संज्ञायां कन् । अत्यन्तान्धकारवति कूपे । त्रिका०।

**कर्कराल** पु० कर्करः सन् अलति अल-अच् । चूर्णकुन्तले हेमच० । तस्य इतरकेशापेक्षया कठिनत्वात्तथात्वम् ।

**कर्करिका** स्त्री कर्कर इवास्त्यस्याः अच् संज्ञायां कन् अत इत्वम् । नेत्रखर्जूभेदे शब्दचि० । तत्र हि नेत्रे कङ्क-रयुक्ततेवोपलभ्यत इति तस्यास्तथात्वम् ।

**कर्करी** स्त्री कर्कं हासं राति रा-क गौरा० ङीष् । (झारी) १सनालपात्रे, अमरः कन्दोष्टतादिपक्वनिष्का-शनसाधने (आजरा)२द्रव्ये च शब्दचि०। कर्कं राति रा-ईकक् । कर्करीकोऽप्यत्र । कर्करी+स्वार्थे कन् न ह्रस्वः कर्करीका तत्रार्थे स्त्री । [उज्ज्वल० ।

**कर्करीक** न० कर्क-फर्फरीका० ईकन् नि० । शरीरे

**कर्करेट** पु० कर्कं कर्केति शब्दं रेटत्यस्मात् रेट-अपादाने घञ् । अर्द्धचन्द्रे गलहस्ते (गलाटिपि) गलामर्दने हि कर्कशब्दकरणात्तस्य तथात्वम् ।

**कर्करेटु** पु० कर्केति शब्दं रेटति उन् उप० स० । (करक-टिया) पक्षिभेदे अमरः ।

**कर्कश** पु० कञ् हिंसायां विच् कः सन्+कशति-कर्क-अच् कर्क+लोमादि०श, करे कशति कश-शब्दे अच् शक० वा । १काम्पिल्लवृक्षे (गुड़ारोचनी) अमरः । २कासमर्दे । (कास्कासेन्दा) ३इक्षुवृक्षे ४खड्गे च हेम०। ५साहसिके कठोरे च त्रि०अमरः "वेणुकर्कशपर्वया" रघुः । "ऐराव-तास्फालनकर्कशेन" कुमा० । "कृष्णा सश्यावलिप्ता वा जिह्वा शूना च यस्य वै । कर्कशा वा भवेद्यस्य सोऽचिररा-द्विजहात्यसून्" सुश्रु०। कर्कशं परिजीर्णञ्च कृमिजुष्टम-देशजम् । वर्जयेत् पत्रशाकन्तु" सुश्रु० "सुरद्विपास्फालन-

कर्कशाङ्गुलौ" रघुः । ६कठिनस्पर्शवति त्रि० अमरः ७क्रूरे ८निर्दये च त्रि० मेदि० । ९दुर्बोधे च "तर्के वा भृशकर्कशे मम समं लीलायते भारती" प्रसन्न० । १०अत्यन्ते च "तस्य कर्कशविहारसम्भवम्" रघुः कर्कशस्य भावः त्व । कर्कशत्व न० तल् कर्कशता स्त्री । ष्यञ् । कार्कश्य न० इमन् कर्कशिमन् पु० कर्कशभावे "नागेन्द्रहस्तास्त्वचि कर्कशत्वात्" कुमा० । "आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम्" माघः । कार्कश्यञ्च स्पर्शभेदः । "स्पर्शनेन्द्रियविज्ञेयाः शीतोष्णश्लक्ष्णकर्कशमृदुकठिनाः" इत्यादिसुश्रुतोक्तेस्तस्य स्पर्शेन्द्रियग्राह्यता । स च पार्थिवगुणभेदः । अन्यद्रव्ये तु कार्कश्यव्यवहारो भाक्तः । सुश्रुतोक्तेषु चिकित्सोपयोगिविंशतिगुणेषु ११गुणभेदे ते च गुणा यथा

"अत ऊर्द्ध्वं प्रवक्ष्यामि गुणानां कर्म्मविस्तरम् । कर्म्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः । ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्स्वेददाहजित् । उष्णस्तद्विपरीतः स्यात् पाचनश्च विशेषतः । स्नेहमार्दवकृत् स्निग्धो बलवर्णकरस्तथा । रूक्षस्तद्विपरीतः स्याद्विशेषात्स्तम्भनः खरः । पिच्छिलो जीवनो बल्यः सन्धानः श्लेष्मलो गुरुः । विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः । दाहपाककरस्तीक्ष्णः स्रावणो मृदुरन्यथा । सादोपलेपबलकृद् बृंहणस्तर्पणो गुरुः । लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा । दशाद्याः कर्म्मतः प्रोक्तास्तेषां कर्मविशेषणैः । दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तान्निबोध मे । द्रवः प्रक्लेदनः सान्द्रः स्थूलः स्याद्बन्धकारकः । श्लक्ष्णः पिच्छिलवज्ज्ञेयः कर्कशो विशदो यथा । सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः । दुर्गन्धो विपरीतोऽस्माद्धृल्लासारुचिकारकः । सरोऽनुलोमनः प्रोक्तो मन्दो यात्राकरः स्मृतः । व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते । विकाशी विकसन्नेवं धातुबन्धान् विमोक्षयेत् । आशुकारी तथाशुत्वाद्धावत्यम्भसि तैलवत् । सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः । गुणा विंशतिरित्येवं यथावत्परिकीर्त्तिताः" । १२वृश्चिकालीवृक्षे स्त्री राजनि०

**कर्कशच्छद** कर्कशः छदः पत्रमस्य । (शेओड़ा) १शाकोटवृक्षे शब्दमा० २पटोले च त्रिका० कर्कशदलोऽप्यत्र । ३कोषातक्यां स्त्री टाप् राजनि० । कर्कशदला दग्धवृक्षे राजनि० ।

**कर्कशवाक्य** न० कर्म्म० । निष्ठुरवाक्ये परुषवाक्ये शब्दर० ।

**कर्कशिका** स्त्री कर्कश–संज्ञायां कन् अत इत्त्वम् । वनकोलिवृक्षे रत्नमा० । [मिश्रितशक्तुषु हारा० ।

**कर्कसार** न० कर्कः कठिनः सारोऽस्य । करम्भे दधि-

**कर्कारु** पु० कर्कं हासं श्वेततामृच्छति ऋ–उण् । १कुष्माण्डे । (पाङ्कुमड़ा) । अमरः तस्य पक्वे फले श्वेततायुक्तत्वात् तथात्वम् । अस्य स्त्रीत्वमपि "कर्कारुर्ग्राहिणी शीता रक्तपित्तहरा गुरुः । पक्वा तिक्ताग्निजननी सक्षारा कफवातनुत्" इति भावप्र० उक्तेः । २एर्वारुकर्कारुकुष्माण्डप्रभृतीनां तैलानि मधुराणि" सुश्रु० तयोर्भेदनिर्देशात् विशेषकुष्माण्ड एव एर्वारुरिति बोध्यम् । "एर्वारुकं सकर्कारु पक्वं स्यात् कफवातकृत् । सक्षारं मधुरं रुच्यं दीपनं नातिपित्तलम् । सक्षारं मधुरञ्चैव शीर्णवृन्तं कफापहम् । भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघुः वपुः" । इति कर्कारोः "पित्तघ्नं तेषु कुष्माण्डम् बालं मध्यं कफावहम् । पक्वं लघूष्णं क्षारं च दीपनं वस्तिशोधनम्" । इति कुष्माण्डस्य च भेदेन गुणभेदोक्तेस्तयोर्भेदः

**कर्कारुक** पु० कर्कं हासमृच्छति ऋ–उकञ् ईत० । कालिन्दवृक्षे (खेड़ो) हारा० कालिन्दशब्दे गुणादि वक्ष्यते

**कर्कि** पु० कर्क–इन् । कर्कटराशौ । "कर्किमीनधनुर्भ्याश्च हरिः कीटघटेन च" ज्यो० त० ।

**कर्की** कर्क–हासे अच् गौरा० ङीष् । कुष्माण्डयाम् (कांकुड)

**कर्केतन** पुंन० रत्नविशेषे । "रत्नान्याह गरुड़पुराणे" आ० त० "तेषु रक्षोविषव्यालव्याधिघ्नान्यघहानि च । प्रादुर्भवन्ति रत्नानि तथैव विगुणानि च । वज्रं मुक्तामणयः पद्मरागाः समरकताः प्रोक्ताः । अपि चेन्द्रनीलमणिवैदूर्याः पुष्परागाश्च । कर्केतनकुरुविन्दौ रुधिराख्यसमन्वितं तथा स्फटिकम् । विद्रुममणिश्च यत्नादुद्दिष्टं संग्रहे तज्ज्ञैः" इत्युद्दिश्य । "वायुर्नखान् दैत्यपतेर्गृहीत्वा चिक्षेप सासाद्य वनेषु हृष्टः । ततः प्रसूतं पवनोपपन्नं कर्केतनं पूज्यतमं पृथिव्याम् । वर्णेन तद्रुधिरशोभमधुप्रकाशमाताम्रपीतदहनोज्ज्वलितं विभाति । नीलं पुनः शुक्लसितं परुषं विभिन्नं व्याध्यादिदोषहरणेन न तद्विभाति । स्निग्धा विशुद्धाः समरागिणश्च आपीतवर्णा गुरवो विचित्राः । त्रासव्रणव्याधिविवर्जिताश्च कर्केतनास्ते परमाः पवित्राः । पत्रेण काञ्चनमयेन तु वेष्टयित्वा हस्ते मलेऽथ धृतमेतदतिप्रकाशम् । रोगप्रणाशनकरं कलिनाशनञ्च आयुष्करं कुलकरञ्च सुखप्रदञ्च । एवंविधं बहुगुणं मणिमावहन्ति कर्केतनं शुभमलं कतरे नरा ये । ते पूजिता बहुधना बहुबान्धवाश्च नित्योज्ज्वलाः प्रमुदिता अपि ते भवन्ति । एके पिनद्ध-

विकृताकुण्ठनीलभासः प्रम्लानरागमलिनाः कलुषा विरूपाः । तेजोऽतिदीप्तिकुलपुष्टिविहीनवर्णाः कर्केतनस्य सदृशं वपुरुद्वहन्ति । कर्केतनं यदि परीक्षितवर्णरूपं प्रत्यग्रभास्वरदिवाकरसुप्रकाशम् । तस्योत्तमस्य मणिशास्त्रविदा महिम्ना तुल्यन्तु मूल्यमुदितं तुलितस्य कार्य्यम्” ७५अ०

**कर्कोट(क)** पु० कर्क—ओट । १नागभेदे स च अष्टनागान्तर्गतः । “अनन्तोवासुकिः पद्मो महापद्मोऽपि तक्षकः । कर्कोटः कुलिकः शङ्ख इत्यष्टौ नागनायकाः” त्रिका० । ति०त० पुराणान्तरे गारुडे च द्वितीयार्द्धे “कुलिकः कर्कटः शङ्ख इति पाठः । अयञ्च नागपञ्चम्यां पूज्यः यथाह तत्रैव । “शेषः पद्मो महापद्मः कुलिकः शङ्खपालकः वासुकिः शङ्खकश्चैव कालियो मणिभद्रकः । ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ” इति । अयञ्च कद्रूपुत्रभेदः । “शेषः प्रथमतोजातोवासुकिस्तदनन्तरम् । ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ” भा० आ० ३५अ० नागनामकथने । कर्कोटकनागस्य नारदशापेन जडताप्राप्तिकथा नलेन सह संवादश्च भा० व० ६६अ०

“उत्सृज्य दमयन्तीन्तु नलो राजा विशाम्पते ! । ददर्श दावं दह्यन्तं महान्तं गहने वने । तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित् । अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् । मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम् । ददर्श नागराजानं शयानं कुण्डलीकृतम् । स नागः प्राञ्जलिर्भूत्वा वेपमानो नलन्तदा । उवाच विद्धि मां नाम्ना नागं कर्कोटकं नृप ! । मया प्रलब्धो महर्षिर्नारदः सुमहातपाः । तेन मन्युपरीतेन शप्तोऽस्मि मनुजाधिप ! । तिष्ठ त्वं स्थावर इव यावदेव नलः क्वचित् । इतो नेता हि तत्र त्वं शापान्मोक्ष्यसि मत्कृतात् । तस्य शापान्न शक्नोमि पदाद्विचलितुं पदम् । उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् । सखा च ते भविष्यामि मत्समो नास्ति पन्नगः । लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम् । एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः । तं गृहीत्वा नलः प्रायाद्देशं दावविवर्जितम् । आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना । उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत् । पदानि गणयन् गच्छ स्वानि नैषध ! कानिचित् । तत्र तेऽहं महाबाहो ! श्रेयो धास्यामि यत् परम् । ततः सङ्ख्यातुमारब्धमदशद्दशमे पदे । तस्य दष्टस्य रूपं तत् क्षिप्रमन्तरधीयत । स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः । स्वरूपधारिणं नागं ददर्श स महीपतिः । ततः कर्कोटको नागः सान्त्वयन् नलमब्रवीत् । मया तेऽन्तर्हितं रूपं न त्वां विद्युर्जना इति । यत्कृते चासि निकृतो दुःखेन महता नल ! । विषेण स मदीयेन दुःखं त्वयि निवत्स्यति । विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति । तावत्त्वयि महाराज ! दुःखं वै स निवत्स्यति । अनागा येन निकृतस्त्वमनर्हो जनाधिप ! । क्रोधादसूययित्वा तं रक्षा मे भवतः कृता । न ते भयं नरव्याघ्र ! दंष्ट्रिभ्यः शत्रुतोऽपि वा । ब्रह्मविद्भ्यश्च भविता मत्प्रसादान्नराधिप ! । राजन् ! विषनिमित्ता च न ते पीड़ा भविष्यति । संग्रामेषु च राजेन्द्र ! शश्वज्जयमवाप्स्यसि । गच्छ राजन्नितः सूतो वाहुकोऽहमिति ब्रुवन् । समीपमृतुपर्णस्य स हि वैवाक्षनैपुणः । अयोध्यां नगरीं रम्यामद्य वै निषधेश्वर ! । स तेऽक्षहृदयं दाता राजाश्वहृदयेन वै । इक्ष्वाकुकुलजः श्रीमान् मित्रञ्चैव भविष्यति । भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा । समेष्यसि च दारैस्त्वं मा स्म शोके मनः कृथाः । राज्येन तनयाभ्याञ्च सत्यमेतद्ब्रवीमि ते । स्वं रूपञ्च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ! । संस्मर्त्तव्यस्तदा तेऽहं वासश्चेदं निवासयेः । अनेन वाससाच्छन्नः स्वं रूपं प्रतिपत्स्यसे । इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा । एवं नलं समादिश्य वासो दत्त्वा च कौरव ! । नागराजस्ततो राजंस्तत्रैवान्तरधीयत” ।

७२अ० “तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः । कर्कोटकविषं तीक्ष्णं मुखात् सततमुद्वमन्”। ७९अ०।“कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्” संज्ञायां कन् २विल्ववृक्षे पु० राजनि० । ३फललताभेदे (काँकुड) गौरा० ङीष् “कर्कोटकीफलं कुष्ठहृल्लासारुचिनाशनम् । श्वासकासज्वरान् हन्ति कटुपाकञ्च दीपनम् । ईषद्विभिन्नमरिचैः परिपूर्णगर्भं तैलेन रञ्जितमुसैन्धवपातयोगम् । बाह्लीकयुक्तपयसा विहिताभिषेकं कर्कोटकीफलमिदं रुचिकृत्तदुक्तम्” । वैद्यके तद्गुणपाकादि ।४पीतघोषावृक्षे स्त्री राजनि० । स्वार्थे कन् अत इत्त्वम् । कर्कोटिका (काकरोल) वृक्षे (काँकुड) ५कुष्माण्ड्याञ्च स्त्री राजनि० ।

**कर्कोटवापी** स्त्री कर्कोटनागनाशेन कृता वापी । काशोस्थ

तौ भेदे। "कर्कोटवाप्यां ईशाने मरीचेः कुण्डमुत्तमम्" काशीख०।

**कर्क्यादि** पु० प्रस्थे परे अवृद्धपूर्व्वपदस्य आद्युदात्ततापर्य्युदासविषये पाणिन्युक्ते शब्दगणभेदे स च "कर्की मघी मकरी कर्कन्धू करीर कन्दुक कवल बदरी" कर्कीप्रस्थः।

**कर्च्चरिका** स्त्री पूरिकाभेदे (कचुरी) पाकराजेश्वरः। तत्पाकप्रकारः भावप्र० उक्तो यथा "माषाणां पिष्टिका पूर्य्या लवणार्द्रकहिङ्गुभिः। तया पिष्टिकया पूर्णा समिता कृतपोलिका। ततस्तैलेन पक्वा सा पूरिका कथिता बुधैः। रुच्या स्वाद्वी गुरुस्निग्धा बल्या पित्तास्रदूषिका। चक्षुस्तेजोहरी चोष्णा पाके वातविनाशिनी। तथैव घृतपक्वापि चक्षुष्या रक्तपित्तहृत्"।

**कर्च्चरी** स्त्री कं जलं चुर्य्यतेऽत्र चुर—पृषो० क गौरा० ङीष्। जलशून्ये शुष्कफलखण्डे (कचरी) पाश्चात्त्यभाषाप्रसिद्धे द्रव्ये "चीराम्लकृतसंस्कारा शुष्का स्नेहविपाचिता। अरोचकादिरोगाणां कर्च्चरी कण्ठकर्त्तरी। कर्च्चरी रुचिकृद्धृद्या सुस्वादुरतिलेखनी। उष्णा पित्तकरी प्रोक्ता कफकृत् सारिका स्मृता" भावप्र०।

**कर्चूर** न० कर्ज्ज जर+पृषो०। १स्वर्णे। २कर्वूरवर्णे ३तद्वति त्रि० अमरटीका (कचूर)प्रसिद्धे ४गन्धसारे शट्याम् पु० भावप्र०। तद्गुणादि "कर्चूरो वेधमुख्यश्च द्राविडः कल्पकः शठी। कर्चूरो दीपनो रुच्यः कटुकस्तिक्त एव च। सुगन्धिः कटुपाकः स्यात् कुष्ठार्शोव्रणकासनुत्। उष्णो लघुर्हरेच्छ्वासं गुल्मवातकफक्रिमीन्" ५हरिताले न० वैज०। "रराज कर्चूरपिशङ्गवाससः" माघः। "कर्चुरः हरितालम्" मल्लि०।

**कर्चूरक** पु० कर्चूर+स्वार्थे कन् स इव कायति कै-क वा। (काँचा) १हरिद्रायाम् चीरस्वा०। तस्याः शठ्याकृतित्वात् तथात्वम्। २कर्चूरशब्दार्थे च। [चकर्ज्ज प्रनिकर्ज्जति।

**कर्ज्ज** पीडायाम् भ्वा० पर० सक० सेट्। कर्जति अकर्जीत्।

**कर्ण** भेदने अदन्तचुरादि० उभ० सक० सेट्। कर्णयति ते अचकर्णत् त। कर्णयाम्—बभूव आस चकार चक्रे। कर्णयिता कर्णयिष्यति। कर्णनम् कर्णः कर्णितः कर्णयितुम्। कर्णयन् कर्णयमानः। कर्णयित्वा आकर्ण्य कर्णी। कर्ण्यते अकर्णि अकर्णिषाताम् अकर्णयिषाताम् आ+कर्ण—श्रवणे। "आकर्णयन्नुत्सुकहंसनादान्" भट्टिः। "मिथस्तदाकर्णनसज्जकर्णया" देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलम्। "अदस्तदाऽकर्णि फलाढ्यजीवितम्" इति च नैष०। "आकर्ण्य सम्प्रति रुतं चरणायुधानाम्" सा० द०।

**कर्ण** पु०। कर्ण्यते आकर्ण्यतेऽनेन कर्ण करणे अप् कीर्य्यन्ते शब्दा वायुनाऽत्र कॄ—नन् वा। १श्रोत्रे शब्दज्ञानसाधने इन्द्रियभेदे तदाधारे २गोलके च। श्रोत्रञ्च कर्णशष्कुल्यवच्छिन्ननभोरूपमिति नैयायिकादयः। सात्विकाकाशसूक्ष्मांश इति वेदान्तिनः सांख्यादयश्च स्वीचक्रुः। तत्राद्यमते शब्दोत्पत्तिदेशे श्रोत्रस्य गमनाभावेन अन्यत्रोत्पन्नशब्दग्रहणासम्भवः। तथा हि आकाशस्यैकत्वेऽपि उपाधिभेदेन भेदात् यदीयकर्णशष्कुलीप्रदेशे शब्दसमवायस्तस्यैव श्रावणम् नान्यस्य, ततश्च वीचितरङ्गन्यायेन कदम्बकोरकन्यायेन वा शब्दोत्पत्तावपि शब्दोत्पत्तिदेशस्य श्रोतुश्च विभिन्नदेशस्थतया न शब्दोपलब्धिः स्यात्। अतस्तत्तद्देशस्थस्य शीघ्रं धावमानस्य वायोः संयोगविभागादयः श्रोतुः शब्दाभिव्यञ्जकाः। तदेतत् शङ्कापूर्व्वकम् मीमांसाभाष्ये समर्थितम् यथा।

"यदि शब्दं संयोगविभागा एवाभिव्यञ्जन्ति न कुर्व्वन्ति, आकाशविषयत्वाच्छब्दस्य, आकाशस्यैकत्वात्, य एवापरत्र श्रोत्राकाशः, स एव देशान्तरेष्वपीति सुघ्नस्थैः संयोगविभागैरभिव्यक्तः पाटलिपुत्रेऽप्युपलभ्येत?। यस्य पुनः कुर्व्वन्ति, तस्य वायवीयाः संयोगविभागा वाय्वाश्रितत्वाद्वायुष्वेव करिष्यन्ति। यथा, तन्तवः तन्तुष्वेव पटं, तस्य पाटलिपुत्रेष्वनुपलम्भो युक्तः, सुघ्नस्थत्वात्तेषाम्। यस्याप्यभिव्यञ्जन्ति, तस्याप्येष न दोषः, दूरे सत्याः कर्णशष्कुल्याः अनुपकारकाः संयोगविभागाः। तेन दूरे यच्छ्रोत्रं तेन नोपलभ्यते" इति। नैतदेवं, अप्राप्ताश्चेत् संयोगविभागाः श्रोत्रस्योपकुर्युः सन्निकृष्टविप्रकृष्टदेशस्थौ युगपच्छब्दमुपलभेयाताम् न च युगपदुपलभेते। तस्मात्प्राप्ताः उपकुर्वन्ति, न चेदुपकुर्वन्ति, तस्मादनिमित्तं शब्दोपलम्भने संयोगविभागौ इति"। नैतदेवं, अभिघातेन हि प्रेरिताः वायवस्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्व्वतोदिक्कान् संयोगविभागान् उत्पादयन्ति, यावद्वेगमभिप्रतिष्ठन्ते। ते च (संयोगविभागाः) वायोरप्रत्यक्षत्वात् नोपलभ्यन्ते। अनुपरतेष्वेव तेषु शब्दः उपलभ्यते, नोपरतेषु। अतो न दोषः। अत एव चानुवातं दूरादुपलभ्यते शब्दः"। वेदान्त्यादिमते शब्दस्य पञ्चभूतगुणतया शब्दाधारं वायुना झटिति कर्णदेशे यथावेगं धावमानेन कर्णप्रापणसम्भव-

स्तेन शब्दोपलम्भः। तन्मते श्रवणेन्द्रियस्य प्राप्यकारित्वोक्तिरप्येतत्परेति बोध्यम्।

कर्णः स्वाविशाल्देवस्य दिक् इति करणाधिपशब्दे उक्तम्। कर्णपाल्याश्च शब्दात्तद्वेदात्तद्धर्माश्च "कर्णे कृतं कनकपत्त्रमनालपन्त्या" चौरप०। "मिथस्तदाकर्ण्य नमज्जकण्ठ्या" नैष० "तद्गुणैः कर्णमागत्य चापल्याय प्रचोदितः" रघुः श्रवणेन्द्रियस्य सूक्ष्मत्वेऽपि तदाधाराभिप्रायेण "अवलम्बितकर्णशष्कुलीकलशीकं रचयन्नवोचत" नैष० वाक्यम्। २सुवर्णालीवृत्ते मेदि०। त्रिकोणादिक्षेत्रे ४भुजकोटिसंयोजकरेखाभेदे तद्रेखामानज्ञानोपायश्च लीला० उक्तः यथा "इष्टाद्बाहो यः स्यात्तत्स्पर्द्धिन्यां दिशीतरोबाहुः। त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता तज्ज्ञैः। तत्कृत्योर्योगपदं कर्णो, दोःकर्णवर्गयोर्विवरात्। मूलं कोटिः, कोटिश्रुतिकृत्योरन्तरात् पदं बाहुः" इति उदा० दिङ्मात्रमत्रोच्यते भुजः ४ कोटिः ३ अनयोर्वर्गौ १६, ९, तयोर्योगः २५ तस्य मूलम् ५ तथाच चतुर्हस्तबाहुके त्रिहस्तकोटिके क्षेत्रे कर्णमानम् पञ्च हस्ताः। अधिकं क्षेत्रव्यवहारशब्दे वक्ष्यते। अस्य च भुजकोटिभेदनात् कृतिद्वारा तयोर्वर्गव्यापनाच्च कर्णत्वम्। ५कुटिले च "व्याधारवत् प्राण्यन्तः कर्णसहिताः" कात्या० १७, ६, ०। "कर्णेन अक्ष्णया सहिताः" सं०व्या० "अक्ष्णया कौटिल्येन" इति कात्या० ५, ४, १५ सू० व्या० कर्कः। कुन्त्याः कन्यावस्थायां सूर्यात् जाते स्वनामख्याते ६वसुषेणे तदुत्पत्तिकथा यथा "शूरोनाम यदुश्रेष्ठो वसुदेवपिताऽभवत्। तस्य कन्या पृथा नाम रूपेणासदृशी भुवि। पितुः स्वस्रीयपुत्राय सोऽनपत्याय वीर्यवान्। अग्रमग्र प्रतिज्ञाय स्वस्यापत्यस्य वै तदा। अग्रजातेति तां कन्यां शूरोऽनुग्रहकाङ्क्षया। अददत् कुन्तिभोजाय स तां दुहितरं तदा। सा नियुक्ता पितुर्गेहे ब्राह्मणातिथिपूजने। उग्रम्पर्यचरद्घोरं ब्राह्मणं संशितव्रतम्। निगूढ़निश्चयं धर्मवन्तं दुर्वाससं विदुः। तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत्। तस्मोऽभिचारसंयुक्तमाचचक्षे यथाविधि। उवाच चैनां भगवान् प्रीतोऽस्मि सुभगे! तव। यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि। तस्य तस्य प्रसादात्त्वं देवि! पुत्रान् जनिष्यसि। एवमुक्ता च सा बाला तदा कौतूहलान्विता। कन्या सती देवमर्कमाजुहाव यशस्विनी। प्रकाशकर्त्ता भगवांस्तस्यां गर्भं दधौ तदा। अजीजनत् सुतं तस्यां सर्वशस्त्रभृतांवरम्। सकुण्डलं सकवचं देवगर्भं श्रियान्वितम्। दिवाकरसमं दीप्त्या चारुसर्वाङ्गभूषितम्। निगूहमाना जातं वै बन्धुपक्षभयात् तदा। उत्ससर्ज जले कुन्ती तत्कुमारं यशस्विनम्। तमुत्सृष्टं जले गर्भं राधाभर्त्ता महायशाः। राधायाः कल्पयामास पुत्रं सोऽधिरथस्तदा। चक्रतुर्नामधेयञ्च तस्य बालस्य तावुभौ। दम्पती वसुषेणेति दिक्षु सर्वासु विश्रुतम्। स वर्द्धमानो बलवान् सर्वास्त्रेषूत्तमोऽभवत्। वेदाङ्गानि च सर्वाणि समाप जयतां वरः। यस्मिन् काले जपन्नास्ते धीमान् सत्यपराक्रमः। नादेयं ब्राह्मणेष्वासीत्तस्मिन् काले महात्मनः। तमिन्द्रो ब्राह्मणोभूत्वा पुत्रार्थे भूतभावनः। ययाचे कुण्डले वीरं कवचञ्च सहाङ्गजम्। उत्कृत्य कर्णोह्यददत् कवचं कुण्डले तथा। शक्तिं शक्रोददौ तस्मै विस्मितश्चेदमब्रवीत्। देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम्। यस्मिन् क्षेप्स्यसि दुर्द्धर्षे। स एकोन भविष्यति। पुरा नाम च तस्यासीद्वसुषेण इति क्षितौ। ततो वैकर्त्तनः कर्णः कर्मणा तेन सोऽभवत्। आमुक्तकवचोवीरोयस्तु जज्ञे महायशाः। स कर्ण इति विख्यातः पृथायाः प्रथमः सुतः। स तु सूतकुले वीरो ववृधे राजसत्तम। कर्णं नरवरश्रेष्ठं सर्वशस्त्रभृतां वरम्। दुर्योधनस्य सचिवं मित्रं शत्रुविनाशनम्। दिवाकरस्य तं विद्धि राजन्नंशमनुत्तमम्"। तस्याङ्गदेशाधिपताप्राप्तिः अङ्गाधिपशब्दे उक्ता। कर्णोऽस्त्यस्य प्राधान्येन अर्श०अच्। ७लम्बकर्णे त्रि०। "खड्गोवैश्वदेवः श्वा कृष्णः कर्णोगर्दभः" यजु० २४, ४०। "कर्णो लम्बकर्णः" वेददी०। ८अरित्रे च पु० कर्णः "श्रोत्रमरित्रमिति" दुर्ग०। कर्णधारः। "हतकर्णेव नौर्जले" रामा०।

कर्णक पु० कर्णयति विभिद्य जायते कर्ण–ण्वुल्। वृक्षादीनां १पत्रशाखादौ तेषां दारुस्फोटनेन जायमानत्वेन तथात्वम्। "यथोदुम्बरोमाद्धाति ऊर्जैरस उदुम्बर ऊर्ज्जैवैनमेतद्रसेन प्रीणाति कर्णकवती भवति पशवो वै कर्णकाः" "यदि कर्णकवतीं न विन्देत् दधिद्रप्समपहत्यादध्यात्" शत० ब्रा० । ९, २, ३, ४०। "कर्णकशब्देनात्र पत्रशाखादिकं विवक्ष्यते" भा०। पल्लवाश्च कर्णकशब्दवाच्यत्वञ्च पत्रशाखादिना पुष्टिमत्त्वात् इत्यपि तत्रैवोक्तम् पत्राणाञ्च कर्णाकारत्वादपि कर्णकत्वमित्यपि बोध्यम् वृक्षाणां दारस्फोटे २रोगे च। "प्रत्यृचसुत्तमा सकर्णका" कात्या० १८, ४, ६। "कर्णकोदारुस्फोटोरोगस्तद्वती औदुम्बरी" संप०। "कर्णकाभावे दधिद्रप्सान्ताः" कात्या० १८, ४, ७। ततः तारादि० इतच्। कर्णकितजातपत्रादौ त्रि०

कर्णकण्डू स्त्री ६त०। कर्णगतरोगभेदे कर्णगतरोगशब्दे विवृतिः।

**कर्णकीटी** स्त्री कर्णयति भिनत्ति अच् स्वल्पः कीटः अल्पार्थे ङीप् कीटी कर्म०। शतपद्याम् (काणकोटारा)। हेमच०। [कृमिकर्णकोऽप्यत्र।

**कर्णकृमि** पु० कर्णगतरोगशब्दे सुश्रुतोक्ते कर्णरोगभेदे

**कर्णक्ष्वेड** पु० ७त० सुश्रुतोक्ते कर्णगतरोगभेदे कर्णगतरोगशब्दे विवृतिः।

**कर्णगतरोग** पु० कर्णे गतोरोगः। सुश्रुतोक्ते कर्णगते रोगभेदे तद्भेदनिदानादि तत्रैवोक्तं यथा।

"अथातः कर्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः। १कर्णशूलं २प्रणादश्च ३बाधिर्य्यं ४क्ष्वेड एव च। कर्णस्रावः ५कर्णकण्डूः ६कर्णगूथ ७स्तथैव च। कृमि८कर्णप्रतीनाहौ विद्रधि १०र्द्विविध ११स्तथा। कर्णपाकः १२पूतिकर्ण १३स्तथैवार्शश्चतुर्व्विधम् १४,१५,१६,१७। तथार्व्वुदं सप्तविधं १८,२४, शोथश्चापि चतुर्व्विधः २५,२८। एते कर्णगतारोगा अष्टाविंशतिरीरिताः। समीरणः श्रोत्रगतोऽन्यथाचरः समन्ततः शूलमतीव कर्णयोः। करोति दोषैश्च यथास्वमावृतः स कर्णशूलः १कथितो दुराचरः। यदा तु नाडीषु विमार्गमागतः स एव शब्दाभिवहासु तिष्ठति। शृणोति शब्दान् विविधांस्तदा नरः प्रणाद २मेनं कथयन्ति चामयम्। स एव शब्दाभिवहा यदा सिराः कफानुयातो ह्यनुसृत्य तिष्ठति। तदा नरस्याप्रतिकारसेविनो भवेत्तु बाधिर्य्य३मसंशयं खलु। श्रमात् क्षयाद्रूक्षकषायभोजनात् समीरणः शब्दपथे व्यवस्थितः। विरिक्तशीर्षस्य च शीतसेविनः करोति हि क्ष्वेड४मतीव कर्णयोः। शिरोऽभिघातादथ वा निमज्जतो जले प्रपाकादथवापि विद्रधेः। स्रवेत्तु पूयं श्रवणोऽनिलावृतः स कर्णसंस्राव५ इति प्रकीर्त्तितः। कफेन कण्डूः प्रचितेऽथ कर्णयो र्भृशं भवेत् स्रोतसि कर्ण६संज्ञिते। विशोषिते श्लेष्मणि पित्ततेजसा नृणां भवेत् स्रोतसि कर्णगूथकः६। स कर्णगूथो द्रवतां यदागतो विलायितो घ्राणमुखं प्रपद्यते। तदा स कर्णप्रतिनाहसंज्ञितो ७भवेद्विकारः शिरसोऽतितापनः। यदा तु मूर्च्छन्त्यथ वापि जन्तवः सृजन्त्यपत्यान्यथवापि मक्षिकाः। तदञ्जनत्वाच्छ्रवणो निरुच्यते भिषग्भिराद्यैः कृमिकर्णकस्तु ८ सः। क्षताभिघातप्रभवस्तु विद्रधि१०र्भवेत्तथा दोषकृतोऽथवा पुनः। स रक्तपीतारुणमस्रमास्रवेत्प्रतोदधूमायनदाहचोषवान्। भवेत्प्रपाकः ११खलु पित्तकोपतो विकोथविक्लेदकरश्च कर्णयोः। स्थिते कफे स्रोतसि पित्ततेजसा विलाय्यमाने भृशसम्प्रतापनात्। अवेदनो वाप्यथवा सवेदनो घनं स्रवेत्पूति सपूतिकर्णकः १२। प्रदिष्टलिङ्गान्यर्शांसि १४,१५,१६,१७ तत्त्वतस्तथैव शोथा१८—२४र्व्वुद२५—२८लिङ्ग, मीरितम्। मया पुरस्तात्प्रसमीक्ष्य योजयेदिहैव तानि प्रयतो भिषग्वरः"। [२रोगभेदे च।

**कर्णगूथ** न० ६त०। १कर्णमले कर्णगतरोगशब्दे सुश्रुतोक्ते

**कर्णगोचर** पु० कर्णस्य कर्णव्यापारजन्यबोधस्य गोचरः विषयः। श्रवणयोग्ये विषये।

**कर्णग्राह** पु० कर्णमरित्रं गृह्णाति ग्रह—अण् उप०स०। कर्णधारे नाविके। तस्यापत्यं रेवत्या० ठक्। कार्णग्राहिक तदपत्ये पुंस्त्री०।

**कर्णच्छिद्र** न०६त०। कर्णरन्ध्रे "कर्णच्छिद्रैर्वर्त्तमानं कीटं क्लेदमलादि वा। शृङ्गेणापहरेद्धीमानथवापि शलाकया" सुश्रु०।

**कर्ण(र्णे)जप** त्रि० कर्णे जपति वा सप्तम्या अलुक्। खले सूचके। "कर्णेजपैराहितराज्यलोभा" भट्टिः। अण् कर्णजापोऽप्यत्र।

**कर्णजलूका** स्त्री कर्णे जलूकेव। शतपद्याम् (काणकोटारा) कर्णजलौकस् इत्यप्यत्र शब्दरत्ना०। कर्णजलौकाऽप्यत्र अमरः। कर्णजलौकस् इत्यपि तत्रार्थे भरतः।

**कर्णजाह** न० कर्णस्य मूलम् कर्ण+जाह। कर्णमूले "कर्णजाहविलोचनेति" भट्टिः।

**कर्णजित्** पु० कर्णं जितवान् जि—भूते क्विप्। अर्ज्जुने तस्य तज्जयकथा भा०क० ९१ अ०। तयोर्युद्धमुक्त्वा "ततोऽर्ज्जुनस्तस्य शिरोजहार, वृत्रस्य वज्रेण यथा महेन्द्रः। शरोत्तमेनाञ्जलिकेन राजन्! तदा महास्त्रप्रतिमन्त्रितेन"। कर्णहाप्यदयोऽप्यत्र।

**कर्णताल(ड)** पु०६त० तस्य ल वा। कर्णताडने। "अन्वत्यत स्फुटमतकर्णतालया" माघः। [(ड्का) त्रिका०।

**कर्णदर्पण** पु० कर्णे दर्पण इव। कर्णभूषणभेदे (कानत-

**कर्णदुन्दुभि** पु० कर्णे दुन्दुभिरिव तत्तुल्यध्वनिहेतुत्वात्। शतपद्याम्। (काणकोटारा) शब्दमा०तस्याः कर्णप्रवेशे हि दुन्दुभिवद्ध्वानजननात्तस्यास्तथात्वम्।

**कर्णधार** पु० कर्णमरित्रं धारयति धृ—अण् उप०स०। १नाविके (माझी) अमरः। "अकर्णधारा जलधौ विप्लवेतेह नौरिव" हितो०। "साहित्यार्णवकर्णधारेति" सा०द०। २दुःखादिनिवारके त्रि०। "अकर्णधारा

पृथिवी शून्येव प्रतिभाति मे । गते दशरथे स्वर्गं रामे च रण्यमाश्रिते” रामा० ।

**कर्णनाद** पु० कर्णे अङ्गुल्यापिहितकर्णे नादः ध्वनिभेदः । अङ्गुल्यापिहितकर्णे (भों भों) इत्याकारे मध्यमाशब्दस्वरूपे ध्वनिभेदे । “मध्यमा श्रुतिगोचरा” इत्युक्तेस्तस्यास्तथात्वम् ।

**कर्णपत्रक** पु० पत्रमिव कायति कै–क कर्णे पत्रक इव । कर्णपाल्याम् । “कनीनिके चाक्षिकूटे शष्कुली कर्णपत्रकौ । कर्णौ शङ्खौ भ्रुवौ दन्तावेष्टावोष्ठौ ककुन्दरे” याज्ञ० । “कर्णपत्रकौ कर्णपाल्यौ” मिता० ।

**कर्णपथ** पु० कर्ण एव पन्थाः अच् समा० । कर्णरन्ध्ररूपे शब्दप्रवेशनयोग्ये मार्गे ।

**कर्णपरम्परा** स्त्री ६त० । श्रवणपरम्परायाम् । (काणाकाणि) “तेनैव च क्रमेणैष गतः कर्णपरम्पराम् । प्रवादो बहुलीभावं सर्वत्रापि पुरे ययौ” कथासरित्सा० । एकस्य सकाशादन्येन श्रुत्वाऽन्यस्मै कथने तेनापि पुनरन्यस्मै कथने एवं परम्परया श्रवणे चास्य वृत्तिः ।

**कर्णपराक्रम** पु० अपभ्रंशयोग्यबहुच्छन्दोयुक्ते काव्यभेदे ।

**कर्णपर्वन्** न० भारतान्तर्गते अष्टमे पर्वणि । तत्पर्वणि कथासंग्रहश्च भा० आ० १अ० यथा

“अतः परं कर्णपर्व प्रोच्यते परमाद्भुतम् । सारथ्ये विनियोगश्च मद्रराजस्य धीमतः । आख्यानं यत्र पौराणं त्रिपुरस्य निपातनम् । प्रयाणे परुषश्चात्र संवादः कर्णशल्ययोः । हंसकाकीयमाख्यानं तत्रैवाक्षेपसंहितम् । वधः पाण्ड्यस्य च तथा अश्वत्थाम्ना महात्मना । दण्डसेनस्य च ततो दण्डस्य च वधस्तथा । द्वैरथे यत्र कर्णेन धर्मराजो युधिष्ठिरः । संशयं गमितो युद्धे मिषतां सर्वधन्विनाम् । अन्योन्यं प्रति च क्रोधो युधिष्ठिरकिरीटिनोः । तत्रैवानुनयः प्रोक्तो माधवेनार्ज्जुनस्य हि । प्रतिज्ञापूर्वकञ्चापि वक्षो दुःशासनस्य च । भित्त्वा वृकोदरो रक्तं पीतवानत्र संयुगे । द्वैरथे यत्र पार्थेन हतः कर्णो महारथः । अष्टमं पर्व निर्द्दिष्टमेतद्भारतचिन्तकैः । एकोनसप्ततिः प्रोक्ता अध्यायाः कर्णपर्वणि । चत्वार्य्येव सहस्राणि नवश्लोकशतानि च । चतुःषष्टिस्तथा श्लोकाः पर्वण्यस्मिन् प्रकीर्त्तिताः” । “कर्णपर्वण्यपि तथा भोजनं सार्व्वकामिकम् । विप्रेभ्यः संस्कृतं सम्यग्दद्यात् संयतमानसः” भा० स्वर्गा० ६अ० ।

**कर्णपाक** पु० सुश्रुतोक्ते कर्णरोगभेदे कर्णगतरोगशब्दे विवृतिः

**कर्णपालि(ली)** स्त्री ६त० । १कर्णपालके कर्णांशभेदे । (कायेरपाता) तदवयवश्च मांसपेशीभेदः यथाह भावप्र० मांसपेशीसंख्याविभागे “यथार्द्रमूषाणां युक्तोवायुः स्रोतांसि दारयेत् । अनुप्रविश्य पिशितं पेशीर्विभजते तथा । मांसपेश्यः समाख्यातान्नृणां पञ्च शतानि च” इत्युपक्रम्य “गण्डयोश्चतस्तः कर्णयोर्द्वे” इत्युक्तम् । “कर्णशोथोभवेत् पाल्याम्” “कुर्व्वन्ति पाडिकां पाल्याम्” “जिह्यात् स शष्कुलीन् पालेः” । कर्णरोगे भावप्र० “जिह्यात् निर्मांसीकुर्य्यात्” भावप्र० । कर्णं पालयति पाल+अण् उप० स० गौरा० ङीष् । (कानवाला) २कर्णालङ्कारभेदे हारा० ।

**कर्णपाल्यामय** पु० ७त० । कर्णव्यधदोषजे सुश्रुतोक्ते कर्णपालिरोगभेदे स च सुश्रुते सोपद्रवो दर्शितः यथा “कर्णपाल्यामयान्नृणां पुनर्व्वक्ष्यामि सुश्रुत ! । कर्णपाल्यां प्रकुपिता वातपित्तकफास्त्रयः । द्विधा वाप्यथ संसृष्टाः कुर्व्वन्ति विविधा रुजः । विस्फोटः स्तब्धता शोथः पाल्यां दोषे तु वातिके । दाहविस्फोटजननं शोथः पाकश्च पैत्तिके । कण्डूः सश्वयथुस्तम्भो गुरुत्वञ्च कफात्मके । यथादोषञ्च संशोध्य कुर्य्यात्तेषां चिकित्सितम् । स्वेदाभ्यङ्गपरीषेकैः प्रलेपासृग्विमोक्षणैः । मृद्वीं क्रियां वृंहणीयैर्यथास्वं भोजनैस्तथा । य एवं वेत्ति दोषाणां चिकित्सां कर्त्तुमर्हति । अत ऊर्द्ध्वं नामलिङ्गैर्व्वक्ष्ये पाल्यामुपद्रवान् । उत्पाटकश्चोत्पुटकः श्यावः कण्डूयुतो भृशम् । अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा । स्रावी च दाहवांश्चैव इत्येषां क्रमशः क्रियाम्” ।

**कर्णपिशाची** स्त्री देवीभेदे । तन्त्रसारे मूलं दृश्यम् ।

**कर्णपुर** न० ६त० अच् समा० । चम्पानगर्य्याम् हेमच० ।

**कर्णपुष्प** पु० कर्ण इव पुष्पं यस्य । मोरटालतायाम् राजनि० ।

**कर्णपूर** पु० कर्णं पूरयति पूर-अण् । १कर्णाभरणे, २नीलोत्पले, ३शिरीषवृक्षे मेदिनिः । ४अशोकवृक्षे राजनि० । एतेषां पुष्पैः स्त्रीकर्णस्य भूषा भवतीति तेषां तथात्वम् । “यस्याश्चौरश्चिकुरनिकरः कर्णपूरोमयूरः” प्रसन्नरा० । “प्रभ्राणवीजाङ्कुरकर्णपूरः” “विलम्बिनीलोत्पलकर्णपूरा” रघुः ।

**कर्णपूरक** पु० कर्णं पूरयति पूर–ण्वुल् । १कदम्बवृक्षे राजनि० । स्वार्थे कन् । २कर्णाभरणे ३नीलोत्पले, ४शिरीषवृक्षे ५अशोकवृक्षे च राजनि० । एतेषां पुष्पैः स्त्रीकर्णस्य भूषा भवतीति तेषां तथात्वम् ।

**कर्णपूरण** न० ६त० । सुश्रुतोक्ते तैलादिना कर्णस्य पूरणे

"स्नेहसारोऽयं पुरुषः प्राणाश्च स्नेहभूयिष्ठाः स्नेहसाध्याश्च भवन्ति स्नेहोहि पानानुवासनमस्तिष्कशिरोवस्त्युत्तरवस्तिनस्यकर्णपूरणगात्राभ्यङ्गभोजने षूपयोज्यः" सुश्रु० ।

**कर्णप्रणाद** पु० कर्णगतरोगशब्दे सुश्रुतोक्ते कर्णरोगभेदे ।

**कर्णप्रतिनाह** कर्णरोगभेदे कर्णगतरोगशब्दे विवृतिः

**कर्णप्राय** पु० देशभेदे स च वृ० सं० नैर्ऋत्यामुक्तः ।

"नैर्ऋत्यां दिशि देशाः" इत्युपक्रम्य "कर्णप्रायपारशवमूद्राः" १४, १८ । [राजनि० ।

**कर्णफल** कर्णः फलमिवास्य । मत्स्यभेदे (कानलिमाछ)

**कर्णभूषण** न० कर्णं भूषयति भूष–ल्यु । कर्णाभरणे अमरः।

**कर्णमल** न० ६ त०। कर्णस्थे मलाकारे पदार्थे (कानेर खल) हारा० कर्णमलोत्पत्तिप्रकारः भावप्र० उक्तो यथा ।

"ततो मांसाग्निना पुनः पच्यमानः पक्वाशयोरात्मा मार्दवगुणांश्च यावन्मांसेष्वेव तिष्ठति ततः पच्यमानात्तस्मात् मलं निर्गच्छति तद्व्यानवायुना क्षिप्रं कर्णावागत्य कर्णविड्भवति" । कर्णविडादयोऽप्यत्र । [हेम० ।

**कर्णमो(टि)टी** स्त्री कर्णं मोटयति इन् वा ङीप् । दुर्गाभेदे

**कर्णयोनि** त्रि० कर्णः योनिः स्थानमस्य । कर्णग्राह्ये विषये ।

"त्वचक्षो दशमे कर्णयोनयः" भा० २, २४, ८ । "कर्णयोनयः श्रोत्रेन्द्रियग्राह्याः" भा० ।

**कर्णल** त्रि० कर्णः कर्णशक्तिरस्त्यस्य सिध्मा० लच् । प्रशस्तश्रवणशक्तियुक्ते ।

**कर्णलता** स्त्री कर्णस्य लतेव । कर्णपाल्याम् (कानेरपाता) स्वार्थे कन् अत इत्त्वम् । कर्णलतिकापि तथार्थे हेम० ।

**कर्णवंश** पु० कर्णः कर्णाकारोवंशोयत्र । मञ्चे हारा० । तस्य पादेषु वंशाकारत्वात्तथात्वम् ।

**कर्णवर्जित** त्रि० ३ त० । १बधिरे (काला) श्रोत्रशून्ये । २सर्पे पु० स्त्री शब्दच० । स्त्रियां जातौ ङीष् । तस्य चक्षुःश्रवस्त्वात्तथात्वम् । बाधिर्यञ्च श्रवणशक्तिशून्यत्वम् ।

**कर्णविष्** स्त्री कर्णस्य विट् । कर्णमले (कानेरखल) "वसाशुक्रमसृङ्मज्जामूत्रविड्घ्राणकर्णविट् । श्लेष्माश्रुदूषिकास्वेदो द्वादशैते नृणां मलाः" मनुः । "शोधयेत् कर्णविट्कन्तु भिषक् सम्यक् शलाकया" सुश्रु० ।

**कर्णवेध** पु० विध–घञ् ६त० । शास्त्रोक्तविधानेन कर्णयोर्वेधने । तत्प्रकारमुहूर्त्तादिकं मुहूर्त्तचिन्तामणिपीयूषधारयोरुक्तं यथा ।

"हित्वैतांश्चैत्रपौषावमहरिशयनं जन्ममासं च रिक्तां युग्माब्दं जन्मतारामृतुमुनिवसुभिः संमिते मास्यथो वा । जन्माहात्सूर्यभूपैः परिमितदिवसे ज्ञेज्यशुक्रेन्दुवारेऽथोजाब्दे विष्णुयुग्मादितिमृदुलघुभैः कर्णवेधः प्रशस्तः । संशुद्धे मृतिभवने त्रिकोणकेन्द्रत्र्यायस्थैः शुभखचरैः कवीज्यलग्ने । पापाख्यैररिसहजायगेहसंस्थैर्लग्नस्थे त्रिदशगुरौ शुभावहः स्यात्" चिन्ता० ।

"आरभ्य जन्मदिवसं यावत्त्रिंशद्दिनं भवेत् । जन्ममासः स विज्ञेयो गर्हितः सर्वकर्मसु" इतिलक्षणलक्षितम् जन्ममासम् । रिक्तान्तिथिम् ४, ९, १४ । युग्माब्दं समवर्षं द्वितीयचतुर्थादिकम् । जन्मतारां प्रथमदशमैकोनविंशतितारकां हित्वा । उक्तं च व्यवहारोच्चये । "न जन्ममासे न च चैत्रपौषे न जन्मताराद्युहरौ प्रसुप्ते । तिथाव रिक्ते न च विष्टिदुष्टे कर्णस्य वेधोन समानवर्षे" इति । अत्र चैत्रस्य निषेधोमीनार्कविषयः पौषनिषेधोऽपि धनुरर्कविषयः अन्यथा "कार्त्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा । कर्णवेधं प्रशंसन्ति शुक्ले पक्षे शुभेऽहनीति" व्यासवचनमसङ्गतं स्यात् । अत्र कार्त्तिकशुक्लपक्षैकादशीतः परः कार्त्तिकः प्रशस्तः पूर्वत्र देवशयनसत्त्वान्निषेधः। अत्र जन्ममासे वर्ज्यान्तराण्यप्याह प्रयोगपारिजाते व्यासः । "यो जन्ममासे क्षुरकर्मयात्रा कर्णस्य वेधं कुरुते विमोहात् । मूढः स रोगी धनपुत्रनाशं प्राप्नोति गढं निधनं तदाश्विति"। विहितकालमाह ऋत्विति ऋतवः षट् मुनयः सप्त वसवो ऽष्टौ एतैः संमिते गणिते मासि षष्ठमासे सप्तममासेऽष्टममासे वा । अथोवा जन्माहात्सूर्यभूपैर्द्वादशभिः षोडशभिर्वा परिमिते गणिते दिवसे सौरसावने कर्णवेधः प्रशस्तउक्तः यदाह जगन्मोहने वशिष्ठः "मासे षष्ठे सप्तमे वाष्टमे वा वेध्यौ कर्णौ द्वादशे षोडशेऽह्नि । मध्ये चाह्नः पूर्वभागे न रात्राविति" यदा तु षष्ठमासादौ कर्णवेधश्चिकीर्षितः तदा तिथीनाह जगन्मोहने वशिष्ठः "द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी । द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने" इति । ज्ञेज्य शुक्रेन्दुवारे इति बुधबृहस्पतिशुक्रचन्द्रवारेषु प्रशस्तः कर्णवेधः यदाह जगन्मोहने वशिष्ठः "भूमिजार्कात्मजार्काणां वारान् संवर्जयेत् सुधीः । जीवेन्दुजेन्दुशुक्राणां दिवसाः परिपूजिताः" इति । अथेति ओजाब्दे विषमवर्षे वा कर्णवेधः प्रशस्तः। सूर्यबले सतीत्यपि ध्येयं यदाह राजमार्त्तण्डः "अर्केऽनुकूले शशिनि प्रशस्ते ताराबले चन्द्रविवृद्धिपक्षे । अयुग्मवर्षे शुभदं शिशूनां कर्णस्य वेधं मुनयो वदन्ति" अत्र कर्णस्येत्येकवचनं ग्रहैकत्वाधिकरणन्यायेनाविवक्षितं तेन द्वयोरपि कर्णयोर्वेधः । विष्ण्विति श्रवणा धनिष्ठा-

पुनर्वसुचित्रानुराधामृगरेवत्यश्विनीपुष्यहस्तनक्षत्रैरुप-
लक्षिते काले कर्णवेधः प्रशस्तः। उक्तं हि श्रीपतिना
"पौष्णवैष्णवकराश्विनचित्रापुष्यवासवपुनर्वसुभैश्च। सेन्दवैः
श्रवणवेधविधानं निर्दिशन्ति सुनयो हि शिशूनाम्"।
नारदेनापि "चित्रादित्याश्विविष्ण्वन्त्यरविमित्रवसूडुषु।
सम्हगेज्येषु बालानां कर्णवेधक्रिया हितेति" गर्ग-
श्रीसरावयमप्युक्तम्। "पुष्ये धनिष्ठाखदितौ हरीन्दुत्वा-
ष्ट्रे करेऽन्त्ये तिसृषूत्तरासु। दस्रे समैत्रेऽथ कर्णवेधो
नेष्टाश्च सर्वेऽष्टमराशिसंस्थाः" इति। अत्रैच्छिकोवि-
कल्पः। अत्र जन्मनक्षत्रनिषेधः सर्वादिसिद्धः। तदुक्तं
दीपिकायाम् "जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु।
क्षौरभेषजवादाध्वकर्त्तनेषु विवर्जयेत्" कृती छेदन-
इति धात्वर्थानुसारात् कर्त्तनशब्देन कर्णवेधो विव-
क्षितः। तथा च स्मर्यते। "जन्मनि मासि विवाहः शुभ-
दो जन्मर्क्षजन्मराश्योश्च। अशुभं वदन्ति गर्गाः श्रुतिवेध
क्षौरयात्रासु इति"। "मृतिभवनेऽष्टमस्थाने संशुद्धे सर्वग्रह-
वर्जिते सति। यदाह जगन्मोहने वशिष्ठः "न कश्चिदि-
ष्टोऽष्टमराशिसंस्थश्चित्रविहदसश्चावमसंज्ञकं चेति" अत्र
विहितलग्नानि प्रयोगपारिजाते नारदेनोक्तानि। "वृषभे
मिथुने मीने कुलीरे कन्यकासु च। तुलाचापे च कुर्वीत
कर्णवेधं शुभावहम्। मेषश्च मकरश्चैव मध्यमा गुरुणोदितौ।
सिंहवृश्चिककुम्भाश्च अधमत्वाद्विवर्जिताः" इति। अतएवो-
क्तं वराहसंहितायाम् "लाभे तृतीये च शुभैः समेते क्रू-
रैर्विहीने शुभराशिलग्ने। वेध्यौ तु कर्णौ त्रिदशेज्यल-
ग्ने" इति शुभाश्चन्द्रबुधगुरुशुक्राः तेषां राशयः कर्कमिथु-
नकन्यावृषतुलाधनुर्मीनास्तेषामन्यतमे लग्ने क्रूरैर्विहीने
सतीत्यर्थः। अन्यच्च दीपिकाकारमतमाश्रित्याह कवीति।
कवीज्ययोर्लग्ने वृषतुलाधनुर्मीनानामन्यतमे लग्ने सति
त्रिकोणे ५,९, केन्द्रे १,४,७,१० लाभे ३,११, स्थितैः शुभ-
ग्रहैस्तथा पापाख्यैर्हरिसहजायगेहसंस्थैः षष्ठतृतीयै-
कादशस्थानस्थितैरुपलक्षिते तथा लग्नस्थे त्रिदशगुरौ
सति कर्णवेधः शुभावहः शुभकारकः स्यात् उक्तञ्च दीपि-
कायाम् "सौम्यैस्त्र्यायत्रिकोणकण्टकगतैः पापैस्त्रिलाभा-
रिगैरोजावृष्टे श्रुतिवेध इज्यसितयोर्लग्नेऽनुकूले शुभे" इति
गुरु "कर्णवेधादिका यत्र नेष्टाः सर्वेऽष्टमस्थिताः। कर्णवेधो
विनिर्दिष्टो लग्नस्थे च बृहस्पतौ। तदभावेऽन्यकेन्द्रस्थे तद-
भावे त्रिकोणगे" इति अत्र कर्णवेधप्रकारो रत्नमालायाम्
"शिशोरजातदन्तस्य मातुरुत्सङ्गसर्पिणः। सौचिकोवेधयेत्
कर्णौ सूच्या द्विगुणसूत्रया" कर्णरन्ध्रे विशेषमाह देवल-
"कर्णरन्ध्रे रवेश्छाया न विशेदग्रजन्मनः। तं दृष्ट्वा
विलयं यान्ति पुण्यौघाश्च पुरातनाः" शाङ्खायनः "अवि-
द्धकर्णैर्यद्भुक्तं लम्बकर्णैस्तथैव च। दग्धकर्णैश्च यद्भुक्तं
तद्वै रक्षांसि गच्छतीति"। कर्णवेधप्रकारः कर्णव्यधविधि-
शब्दे वक्ष्यमाणसुश्रुतोक्तोऽवगन्तव्यः।

विधा० पा०। श्रीधरः "हरिहरकरचित्रासौम्य-
पौष्णोत्तरार्यादितिवसुषु घटालीसिंहवर्ज्ये सुलग्ने। शशि-
बुधगुरुकाव्यानां दिने पर्वरिक्तारहिततिथिषु शुद्धे नैधने
कर्णवेधः। सुनक्षत्रे शुभे चन्द्रे सुस्थे शशोदये शुभे।
दिनच्छिद्रव्यतीपातविष्टिवैधृतिवर्जिते। शिशोरजात-
दन्तस्य मातुरुत्सङ्गसर्पिणः। सौचिकोवेधयेत् कर्णौ सूच्या
द्विगुणसूत्रया। शातकुम्भमयी सूचिर्वेधने तु शुभप्र-
दा। राजती वायसी वापि यथा विभवतः शुभा। सुभू-
मौ प्राङ्मुखे रम्ये शुचौ देशेऽस्करे रवेः। सन्निधौ वेधयेत्
कर्णौ स्त्रीपुंसोर्वामदक्षिणौ। क्रमेण पूर्वं वेध्यौ द्वौ शि-
शोरायुष्यवर्द्धनौ"। अस्य वेऽप्युक्तम् "शुक्लसूत्रसमायुक्ताम-
सूच्याथ वेधयेत्। वेधात् तृतीये नक्षत्रे क्षालयेदुष्णवारि-
णा। रोपणार्थमुपथ्यर्थं बालसंपत्तिमाप्नुयात्। एवं छिन्ने च
भिन्ने च हित्वा योज्यानि योजयेत्" विष्णुधर्मोत्तरे पुष्करः
"शिशोरेवाद्य कर्तव्यं कर्णवेधं यथा शृणु। पूर्वाह्णे पूज-
नं कृत्वा केशवस्य हरस्य च। ब्रह्मणश्चन्द्रसूर्याभ्यां दिगी-
शानान्तथैव च। नासत्ययोः सरस्वत्या ब्राह्मणानां गवां
तथा। गुरूणां, मण्डलं कृत्वा तत्र दत्त्वा वरासनम्।
तत्रोपवेशयेत्तत्र धात्रीं शुक्लाम्बरां तथा। अलङ्कृतं तदुत्-
सङ्गे बालङ्कृत्वा तु सान्त्वनैः। धृतस्य निश्चलः सम्यक् कर्ण-
युग्मं रसाङ्कितम्। विध्येदक्षुते छिद्रे सकृदेवात लाघवात्।
प्राग्दक्षिणं कुमारस्य भिषग्वामे तु योषितः। शिशोर्वि-
वधनं कार्यं यावदाभरणक्षमम्। कर्णवेधदिने विप्राः
सांवत्सरचिकित्सकौ। पूज्याश्च विविधा नार्यः सुहृदश्च
तथा द्विजाः"। अत्र पुरुषकर्णरन्ध्रवृद्धिविषये विशेषमा-
ह हेमाद्रौ देवलः "कर्णरन्ध्रे रवेश्छाया न विशेदग्रज-
न्मनः। तं दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुरातनाः"।
तत्प्रमाणं प्रसङ्गान्तरेणाह शङ्खः। "अङ्गुष्ठमानसुषिरौ कर्णौ
न भवतो यदि। तस्मै श्राद्धं न दातव्यं यदि चेदसुरं भवेत्।
तस्य श्राद्धेऽपात्रतामाह शाङ्खायनः। "अविद्धकर्णै-
र्यद्भुक्तं लम्बकर्णैस्तथा च यत्। दग्धकर्णैश्च यद्भुक्तं त-
द्वै रक्षांसि गच्छति"। विधा० पा०। तथा च कर्णवेध-

संस्कारः किन्तु श्राद्धादौ पात्रतासम्पादकोऽदृष्टविशेषजनकः क्रियाभेदः इत्याकरे स्थितम्। शलाकामानं कर्णवेधनीशब्दे वक्ष्यते। अत्र कालादिप्रतिप्रसवः ज्यो॰त॰ मार्कण्डेयचुडामणि(?)खण्डकल्पचिन्तामणिषु "यदापत्यद्वयं तिष्ठेत् सम्भवोऽप्यपरस्य च। षट्कर्णं तं विजानीयात् गर्हितञ्च त्रयस्य च। इत्याशङ्क्य द्वयोर्मध्ये शुद्धिर्यस्याथ वत्सरे। कर्णवेधो हितस्तस्य नात्र कार्य्या विचारणा। षट्कर्णोत्पत्तिमाशङ्क्य भानोः शुद्ध्या समेऽपि च। कर्णौ वेध्यौ न दोषः स्यादन्यथा मरणं भवेत्"

**कर्णवेधनी** स्त्री कर्णौ विध्यते अनया विध–करणे ल्युट् ङीप्। कर्णवेधसाधने शलाकायां तन्मानादि: मदनरत्ने वृ॰प॰। "सौवर्णी राजपुत्रस्य, राजती विप्रवैश्ययोः। शूद्रस्य चायसी सूची मध्यमाष्टाङ्गुलात्मिका"। अस्य त्रिकाण्डप्रमाणतया शब्दकल्पद्रुमे हस्तिकर्णवेधन्यर्थकतोक्तिःनालीकर्णारीतिपर्य्यायोक्तिश्च प्रामादिकी। त्रिकाण्डशेषे हि "न ना गात्रावरे नाली कर्णारीकन्तु वेधनीत्येव पाठस्यैव दर्शनात् कर्णच्छिद्रस्य वेधनीपर्य्यायतायाः नालीशब्दस्य गात्रावरपर्य्यायतायाश्च ततः प्रतीतेः हस्त्यवयवार्थकशब्दकथनप्रकरणे तत्कर्णवेधन्यस्तपर्य्यायकथनानौचित्यात्।

**कर्णवेष्ट** पु॰ कर्णौ वेष्ट्येते अनेन। १कुण्डले। क्रोधवशासुरांशे २द्वापरयुगीयनृपभेदे च। "गणः क्रोधवशो नाम यस्ते राजन्! प्रकीर्त्तितः। ततः संजज्ञिरे वीराः क्षिताविह नराधिपाः। मद्रकः कर्णवेष्टश्च सिद्धार्थः कीचकस्तथा" भा॰ आ॰ ६७अ॰। स्वार्थे क, कर्णवेष्टकोऽप्यत्र। कर्णवेष्टकाय हितम् छ यत् वा। कर्णवेष्टकीय–कर्णवेष्टक्य तद्धिते सुवर्णादौ त्रि॰। भावे ल्युट्। कर्णवेष्टन कर्णभूषणे न॰। करणे ल्युट्। कुण्डले अमरः। ततः ताभ्यां सम्पादी ठक्। कार्णवेष्टकिक कार्णवेष्टनिक कर्णवेष्टन(के)न शोभमाने त्रि॰ "कार्णवेष्टनिकं सुखम्" भट्टिः।

**कर्णव्यधविधि** पु॰ कर्णव्यधस्य कर्णवेधस्य विधिः। सुश्रुतोक्ते कर्णवेधप्रकारभेदे स च प्रकारः सुश्रुते दर्शितो यथा "अथातः कर्णव्यधबन्धविधिमध्यायं व्याख्यास्यामः। रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येते षष्ठे मासि सप्तमे वा शुक्लपक्षे प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु कृतमङ्गलस्वस्तिवाचनं धात्र्यङ्के कुमारमुपवेश्य बालक्रीडनकैः प्रलोभ्याभिसान्त्वयन् भिषग्वामहस्तेनाकृष्य कर्णं दैवकृते छिद्रे आदित्यकरावभासिते शनैः शनैर्दक्षिणहस्तेन ऋजु विध्येत् प्रतनुकं सूच्या बहलमारया पूर्वं दक्षिणं कुमारस्य, वामं कन्यायास्ततः पिचुवर्त्तिं प्रवेशयेत् सम्यक् विद्धमामतैलेन परिषेचयेत्। शोणितबहुत्वेन वेदनया चान्यदेशविद्धमिति जानीयात् निरुपद्रवतया तद्देशविद्धमिति। तत्राज्ञेन यदृच्छया विद्धासु सिरासु कालिकामर्मरिकालोहितिकास्तूपद्रवा भवन्ति। तत्र कालिकायां ज्वरो दाहः श्वयथुर्वेदना च भवति। मर्मरिकायां वेदना ज्वरो ग्रन्थयश्च। लोहितिकायां मन्यास्तम्भापतानकशिरोग्रहकर्णशूलानि भवन्ति। तेषु यथास्वं प्रतिकुर्वीत। क्लिष्टजिह्माप्रशस्तसूचीव्यधाद्गाढतरवर्त्तित्वाद्दोषप्रकोपादप्रशस्तव्यधाद्वा यत्र संरम्भो वेदना वा भवति तत्र वर्त्तिमुपहृत्याशु मधुकैरण्डमूलमञ्जिष्ठायवतिलकल्कैर्मधुघृतप्रगाढैरालेपयेत्तावद्यावत् सुरूढ इति सुरूढं चैनं पुनर्विध्येत् विधानन्तु पूर्वोक्तमेव। तत्र सम्यग्विद्धमाममैलेन सेचयेत् त्र्यहात्त्र्यहाच्च वर्त्तिं स्थूलतरां दद्यात् परिषेकं तमेव। अथ व्यपगतदोषोपद्रवे कर्णे वर्द्धनार्थं लघुवर्द्धनकं कुर्यात्। भवति चात्र। एवं विवर्द्धितः कर्णश्छिद्यते तु द्विधा नृणाम्। दोषतो वाभिघाताद्वा सन्धानं तस्य मे शृणु।

तत्र समासेन पञ्चदशकर्णबन्धनाकृतयः। तद्यथा नेमिसन्धानक उत्पलभेद्यको वल्लूरक आसङ्गिमो गण्डकर्ण आहार्य्यो निर्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्द्धकपाटसन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टिकर्णः काकौष्ठक इति। तेषु पृथुलायतसमोभयपालिर्नेमिसन्धानकः। वृत्तायतसमोभयपालिरुत्पलभेद्यकः। ह्रस्ववृत्तसमोभयपालिर्वल्लूरकः। अभ्यन्तरदीर्घैकपालिरासङ्गिमः। बाह्यदीर्घैकपालिर्गण्डकर्णः। अपालिरुभयतोऽप्याहार्य्यः। पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितो निर्वेधिमः। स्थूलाणुसमविषमपालिर्व्यायोजिमः। अभ्यन्तरदीर्घैकपालिरितराल्पपालिः कपाटसन्धिकः। बाह्यदीर्घैकपालिरितराल्पपालिरर्द्धकपाटसन्धिकः। तत्र दशैते कर्णबन्धविकल्पाः साध्याः, तेषां स्वनामभिरेवाकृतयः प्रायेण व्याख्याताः। संक्षिप्तादयः पञ्चासाध्यास्तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः संक्षिप्तः। अनधिष्ठानपालिः पर्य्यन्तयोः क्षीणमांसो हीनकर्णः। तनुविषमाल्पपालिर्वल्लीकर्णः, ग्रथितमांसस्तब्धसिराततः सूक्ष्मपालिर्यष्टिकर्णः। निर्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठकपालिरिति। बद्धेष्वपि तु शोथदाहरागपाकपिड-

कासवयुक्ता न विद्धिमुपयान्ति । भवन्ति चात्र । यस्य पालिद्वयमपि कर्णस्य न भवेदिह । कर्णपीठं समे मध्ये तस्य विद्धा विवर्द्धयेत् । बाह्यायामिह दीर्घायां सन्धिराभ्यन्तरो भवेत् । आभ्यान्तरायां दीर्घायां बाह्यसन्धिरुदाहृतः । एकैव तु भवेत्पालिः स्थूला पृथ्वी स्थिरा च या । तां द्विधा पाटयित्वा तु छित्त्वा चोपरि सन्धयेत् । गण्डादुत्पाट्य मांसेन सानुबन्धेन जीवता । कर्णपालिमपालेस्तु कुर्य्यान्निर्लिख्य शास्त्रवित् । अतोऽन्यतमं बन्धं चिकीर्षुरग्रोपहरणीयोक्तोपसंभृतसम्भारं विशेषतश्चात्रोपहरेत् सुरां मण्डं क्षीरमुदकं धान्याम्लं कपालचूर्णञ्चेति । ततोऽङ्गनां पुरुषं वा ग्रथितकेशान्तं लघु भुक्तवन्तमाप्तैः सुपरिगृहीतञ्च कृत्वा बन्धमुपधार्य्य छेद्यभेद्यलेख्यव्यधनैरुपपन्नं रुपपाद्य कर्णशोणितमवेक्षेत तद्दुष्टमदुष्टं वेति । तत्र वातदुष्टे धान्याम्लोष्णोदकाभ्यां, पित्तदुष्टे शीतोदकपयोभ्यां, श्लेष्मदुष्टे सुरामण्डोष्णोदकाभ्यां प्रक्षाल्य कर्णौ पुनरवलिख्यानुन्नतमहीनमविषमञ्च कर्णसन्धिं सन्निवेश्य स्थितरक्तं सन्दध्यात् । ततो मधुघृतेनाभ्यज्य पिचुप्लोतयोरन्यतरेणावगुण्ठ्य सूत्रेणानवगाढमशिथिलञ्च बद्ध्वा कपालचूर्णेनावकीर्य्याचारिकमुपदिशेद्द्विव्रणीयोक्तेन विधानेनावचरेत् । भवतश्चात्र । विघट्टनं दिवास्वप्नं व्यायाममतिभोजनम् । व्यवायमग्निसन्तापं वाक्श्रमञ्च विवर्जयेत् । आमतैलपरीषेकं त्रिरात्रमवचारयेत् । ततस्तैलेन संसृष्टं त्र्यहादपनयेत् पिचुम् । न चासंशुद्धरक्तमतिप्रवृत्तरक्तं वा सन्दध्यात् । स हि वातदुष्टे रक्ते रूढोऽपि परिपुटनवान्, पित्तदुष्टे दाहपाकरागवेदनावान्, श्लेष्मदुष्टे स्तब्धः कण्डूमान्, अतिप्रवृत्तरक्ते श्यावशोफवान् । क्षीणोऽल्पमांसो न वृद्धिमुपैति । स यदा सुरूढो निरुपद्रवः सवर्णो भवति तदैनं शनैःशनैरभिवर्द्धयेत् । अतोऽन्यथा संरम्भदाहपाकरागवेदनावान् पुनश्छिद्यते वा । अथास्याप्रदुष्टस्याभिवर्द्धनार्थमभ्यङ्गः । तद्यथा गोधाप्रतुदविष्किरानूपौदकवसामज्जानौ पयःसर्पिस्तैलं गौरसर्षपजञ्च यथालाभं सम्भृत्यार्कालर्कबलातिबलानन्तापामार्गाश्वगन्धाविदारिगन्धाक्षीरशुक्लाजलशूकमधुरवर्गमतिवापं तैलं वा पाचयित्वा स्वनुगुप्तं निदध्यात् । स्वेदितोन्मर्दितं कर्णं स्नेहेनानेन योजयेत् । अथानुपद्रवः सम्यक् बलवांश्च विवर्द्धते । यवाश्वगन्धायष्ट्याह्वैस्तिलैश्चोद्वर्त्तनं हितम् । शतावर्य्यश्वगन्धाभ्यां पयस्यैरण्डजीवनैः । तैलं विपक्वं सक्षीरमभ्यङ्गात् पालिवर्द्धनम् । ये तु कर्णा न वर्द्धन्ते विधिनानेन योजिताः । तेषामपाङ्गदेशे तु कुर्य्यात् प्रच्छानमेव तु । बाह्यच्छेदं न कुर्व्वीत व्यापदस्तु ततो ध्रुवाः । बहुमांसन्तु यः कर्णं सहसैवाभिवर्द्धयेत् । आमकोषीसमाध्मातः क्षिप्रमेव विमुच्यते । जातरोमा सुवर्त्मा च श्लिष्टसन्धिः समः स्थिरः । सुरूढोऽवेदनो यस्तु तं कर्णं वर्द्धयेच्छनैः । अमिताः कर्णबन्धास्तु विज्ञेयाः कुशलैरिह । यो यथा सुनिविष्टः स्यात्तं तथा विनियोजयेत्" । एवं वेधप्रकाराभिज्ञेनैव भिषजा कर्णवेधः कारयितव्यः

**कर्णशष्कुली** स्त्री कर्णस्य शष्कुलीव । १कर्णगोलके, "अवलम्बितकर्णशष्कुलीकलशीकं रचयन्नवोचत" नैष० । "कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्" मुक्ता० २तन्मध्याकाशे च ।

**कर्णशूल** न० ६त० । कर्णरोगभेदे । कर्णगतरोगशब्दे विवृतिः

**कर्णशोभन** त्रि० कर्णं शोभयति शुभ–णिच्–ल्यु । कर्णाभरणे "उत नः कर्णशोभना पुरूणि" ऋ० ८,७८,३,

**कर्णश्रव** त्रि० श्रूयते श्रवः शब्दः कर्णेन श्रवः श्रवणयोग्यः शब्दोयत्र । श्रवणयोग्यशब्दधारे वय्वादौ "कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने" मनुः ।

**कर्णसंस्राव** पु० कर्णरोगभेदे कर्णगतरोगशब्दे विवृतिः ।

**कर्णसू** स्त्री कर्णं सूते सू–क्विप् । पृथायां कुन्त्याम् तत्प्रसवकथा कर्णशब्दे उक्ता । कर्णजनन्यादयोऽप्यत्र ।

**कर्णस्फोटा** स्त्री कर्णौ स्फोटो विदारणं यस्याः । (कानफाटा) लताभेदे राजनि० । "कर्णस्फोटा कटुस्तिक्ता हिमा च परिकीर्त्तिता । सर्व्वभूतविषदोषव्याधिविनाशिनी" राजनि०

**कर्णस्रोतस्** न० कर्णस्य स्रोत इव । कर्णमले

**कर्णस्रोतोभव** पु० कर्णस्रोतसो विष्णुकर्णमलाद्भवति भू–अच्, भवत्यस्मात् अपादाने अप् कर्णस्रोतो भवोयस्य वा । विष्णुकर्णमलोद्भूते मधुनामके कैटभनामके चासुरे । "कर्णस्रोतोभवञ्चापि मधुं नाम महासुरम् । तस्यैव कर्म्मणामुग्रां बुद्धिं समास्थितम् । ब्रह्मणोऽपचितिं कुर्व्वन् जघान पुरुषोत्तमः" भा० अनु० ६६अ० । यथा चास्य विष्णुकर्णादुद्भवः तथा कैटभशब्दे वक्ष्यते ।

**कर्णहीन** त्रि० ३त० । १बधिरे बाधिर्य्यप्राप्तिश्च पापविशेषजन्या यथाह शाता०स० । "काकघाती कर्णहीनो दद्याद्गामसितप्रभाम्"। २सर्पे च पुंस्त्री चक्षुःश्रवस्त्वात्तस्य तथात्वम् । स्त्रियां जातित्वात् ङीष् ।

**कर्णाकर्णि** पु० कर्णे कर्णे गृहीत्वा प्रवृत्तं कथनम् कर्म-व्यतिहारे स०इच् समा० । (काणाकाणि) कर्णपरम्परया श्रवणयोग्येऽन्योन्यकथने "कर्णाकर्णि हि कपयः कथयन्ति च तत्कथाम्" रामा० ।

**कर्णाट** पु० "रामनाथं समारभ्य श्रीरङ्गान्तं शिवेश्वरि ! । कर्णाटदेश इत्युक्तो राज्यसाम्राज्यदायकः" शक्तिसङ्ग० उक्ते देशभेदे अयञ्च देशः कूर्म्मविभागे दृ०स०दक्षिणस्यामुक्तः । "अथ दक्षिणेन लङ्केत्युपक्रम्य "कर्णाटमहाटविचित्रकूटेत्यादि" "कोङ्कवेङ्कटकान् दक्षिणकर्णाटान् देशान् यदृच्छयोपगतः" भाग०५,६,८, 'तेषां मूर्द्ध्नि ददाति वामचरणं कर्णाटराजप्रिया" उद्भटः । कर्णाटजनपदे भवः अण् । कर्णाटभवे त्रि० स्त्रियां ङीप् "कार्णाटीवीनपीनस्तनवसनदशान्दोलनस्पन्दमन्दः" उद्भटः । बहुषु तस्य लुक् । कर्णाटाः तद्देशवासिषु । तस्य राजन्यपि अण् । कार्णाट तद्देशनृपे । तस्य बहुषु लुक् । एकत्वे न । "अरण्ये कार्णाट त्वदरिवनितानां विधिवशात्" उद्भटः । हस्वपाठे कर्णाटशब्दस्य तन्नृपे अण्ण्वेति भेदः । २हंसपदीलतायां स्त्री राजनि० । ३रागिणीभेदे सं-गीतदामो० । सा तु मालवरागस्य भार्य्या । कर्णाटे प्रसिद्धा अण् ङीप् कार्णाटी । अनुप्रासाङ्गवृत्तिभेदे 'कार्णाटी कवर्गेणानुप्रासवतीति सरस्व०तद्वाक्यञ्च अलङ्कारशब्दे ३८८ पृ०दर्शितम् ।

**कर्णाटक** पु० गोत्रप्रवर्त्तके ऋषिभेदे तस्य गोत्रापत्यम् इञ् । कार्णाटकि । यस्कादि० तस्यास्त्रियां बहुषु लुक् । कर्णाटकास्तद्गोत्रापत्येषु । स्त्रियां तु कार्णाटक्य इत्येव

**कर्णाट्ट** न० कर्णः तिर्य्यग्रेखाकारत्वात् इवाट्टम् । गृहभेदे तन्निरुक्तिलक्षणम् "किंमिदुखे मणिस्तम्भान् कर्णाट्टपिसराणि च" भा० व० २६४ अ० २० श्लोकव्याख्यायां नीलकण्ठेनोक्तं यथा । "कर्णस्तिर्य्यग्मानं तेन प्रकारेण यत्पाषाणादिविस्तरेण क्रियते तत्तद्गृहविशेषं कर्णाट्टमिति वदन्ति तद्धि द्विकोणस्य चतुरस्रस्योपरि विदिक्कोणचतुरस्रं तदुपरिदिक्कोणं तदुपरि पुनर्विदिक्कोणमित्येवं क्रमेणोत्तरोत्तरमल्पप्रमाणैश्चतुरस्रैः समाप्यम् इति प्रसिद्धम्" । तत्र कर्णाटेति पाठः प्रामादिकः नीलकण्ठेन कर्णाट्टपदस्यैव व्याख्यानात् ।

**कर्णादि** त्रि० पाणिन्युक्ते जाहच्प्रत्ययनिमित्ते १शब्दगणे स च गणः । कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू शृङ्ग दन्त ओष्ठ पृष्ठ, कर्णजाहम् अक्षिजाहमित्यादि । चतुरर्थ्यां फिञ्प्रत्ययनिमित्ते पाणिन्युक्ते२शब्दगणे च स च गणः "कर्ण वसिष्ठ अर्क अर्कलूष द्रुपद आनडुह्य पाञ्चजन्य स्फिज् कुम्भी कुन्ती जित्वन् जीवन्त कुलिश आण्डीवत जव जैत्र आनक" कर्णस्य सन्निकृष्टदेशादि । कार्णायनि तत्सन्निकृष्टदेशादौ त्रि० ।

**कर्णानुज** पु० ६त० । युधिष्ठिरे त्रिका० । [(कार्णरपाता)

**कर्णान्द (न्दू)** पुंस्त्री कर्णस्यान्दुरिव । कर्णपालौ । हेम०

**कर्णाभरणक** पु० कर्णाभरणमिव कायति पुष्पद्वारा कै–क । आरग्वधे वृक्षे । (सोन्दाल) राजनि०

**कर्णारा** स्त्री हस्तिकर्णवेधन्याम् शब्दकल्पद्रुमे त्रिकाण्डशेषाख्येनोक्तं तच्च मूले न दृश्यते इत्युक्तं कर्णवेधनीशब्दे ।

**कर्णारि** पु०६त० । १अर्ज्जुने कर्णजिच्छब्दे तत्कथा (आजन) २नदीसर्ज्जवृक्षे राजनि० । [रिणां कर्णचालने त्रिका०

**कर्णास्फाल** पु० आ+स्फुर–णिच्–स्फालादेशः ६त० । क-

**कर्णि** पु०कर्ण–इन् । १कर्णाकारफलके शरभेदे शब्दचि० । भावे इन् । २भेदने च

**कर्णिका** स्त्री कर्ण–ण्वुल् कर्णे भवः अलङ्कारः इकन् अत इत्वम् । १कर्णाभरणभेदे (काण्) २करिशुण्डाग्रवर्त्तिन्यङ्गुल्याकारे पदार्थे ३पद्मबीजकोषे च अमरः । "यस्यामवस्थितः सर्व्वतः सौवर्णः कुलगिरिराजोमेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः" भाग० ५,१६, ७, ४मसुकादिदन्तपरम्परायाम् (कड़ा) ५करमध्याङ्गुलौ च मेदि० । ६लेखन्यां हारा० । ७अग्निमन्थवृक्षे ८अजशृङ्गीवृक्षे च राजनि०कर्णौ वृद्धोऽस्यस्य ठन् । ६वृद्धकर्णे त्रि० ।

**कर्णिकाचल** पु० कर्णिकायां स्थितोऽचलः । सुमेरुपर्वते हेमच० । यथा चास्य तथात्वमेव स्थिति तथा कर्णिकाशब्दे" भाग०५,१६,७श्लो०उक्तं तच्च कर्णिकाशब्दे उक्तम् कर्णिकापर्वतादयोऽप्यत्र ।

**कर्णिकार** पु० कर्णिं भेदनं करोति कृ–अण् उप० स० । (गणियारी)१वृक्षभेदे,२आरग्वधवृक्षभेदे च(क्षोट सोन्दाल) शोधनरूपफलभेदकत्वात् तयोः तथात्वम् । "कर्णिकारः परिव्याधः पादपोत्पलः इत्यपि । "कर्णिकारः कटुस्तिक्तस्तुवरः शोधनो लघुः । रञ्जनः सुखदः शोथश्लेष्मास्रव्रणकुष्ठनुत्" भावप्र० गुणादि उक्तम् "वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः" कुमा० । "अनन्तरञ्च कश्चित् कर्णिकरगौरः" दशकु० ।

**कर्णिकिन्** पु० कर्णिका हस्ताग्राङ्गुलिरस्त्यस्य इनि । ह-

स्तिनि जटा॰ स्त्रियां ङीप् ।२वर्षपर्वतभेदे च शब्दचि॰।

**कर्णिन्** त्रि॰कर्ण-अस्त्यर्थे तुन्दा॰इनौ वा इनि । वृद्धकर्णयुक्ते लम्बकर्णे लम्बकर्णमानन्तु विधानपारि॰शङ्खलिखिताभ्यामुक्तः। "हनुमूलादधः कर्णौ लम्बौ तु परिकीर्त्तितौ । कर्णौ तु द्व्यङ्गुलौ यस्याविति शातातपोऽब्रवीत्" । "अर्द्धहारार्द्धकेयूराद्यैः कुण्डलकर्णिने" भा॰ अनु॰१४अ॰ । स्त्रियां ङीप् । सा सुश्रुतोक्ते २योनिरोगभेदे च सा च "विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसङ्ग्रहे" इत्युद्दिश्य "उदावर्त्ता तथा बन्ध्या—अत्यानन्दा तु या योनिः कर्णिनी चरणाद्वयम् । श्लेष्मिका सकफा ज्ञेया" इत्यादिना ता विभज्य "कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां तु जायते" इति लक्षिता । "वर्त्तिं प्रदद्यात् कर्णिन्यां शोधनद्रव्यसंभृताम् । मस्तं शिनीं एतान्यक्तां चीरखिन्नां प्रवेशयेत्" सुश्रु॰। ३ग्रन्थिलावयवयुक्ते बाणभेदे पु॰।"करोति कर्णिनो यस्तु यस्तु खड्गादिकृन्नरः । प्रयान्ति ते विशसने नरके भृशदारुणे" विष्णुपु॰ २अं॰ ६अ॰ । "कर्णिनो बाणविशेषान्" श्रीधरः। अत पक्षे तुन्दा॰इनौ वा इलच् कर्णिलः, पक्षे ठन् कर्णिक, मतुप् मस्य वः, कर्णवत् द्व्यङ्गुलात् दृढकर्णे हनुभागादधोलम्बकर्णे त्रि॰। मतुपि स्त्रियां ङीप् ।

**कर्णी** स्त्री कर्ण—इन् वा ङीप् । कर्णिशब्दार्थे बाणभेदे तच्छ्रितपरे "अतः शर्मिकसङ्कुम्भपात्रकुशाकर्णीषु" पा॰ अतःपर विसर्गस्य नित्यं सः । अयसा निर्मिता कर्णी अयस्कर्णीत्यादि । २भूतदेवमातरि स्त्री कर्णीसुतः ।

**कर्णीमत्** पु॰ कर्णिवाणविशेषाकारः फलेऽस्यास्य मतुप् । संज्ञायां दीर्घः । आरग्वधे (सोदाल) शब्दचि॰ ।

**कर्णीरथ** पु॰ कर्णः सामीप्यमास्यस्य कर्णी स्कन्धः तेन ई शोभा यस्य न समासान्तः कप् स चासौ रथो रथतुल्यं वाहनं कर्म॰ । स्कन्धवाह्ये याने (पालकी) इत्यादौ । शब्दचि॰तु अन्या व्युत्पत्तिर्दर्शिता यथा। कर्णसाध्यक्रिया उपचारात् कर्णःकर्णोऽस्यास्ति इनि । कर्णी चासौ रथश्च । शब्दमात्रेण रथो न वस्तुतो रथः । यद्वा सामीप्यात् कर्णशब्देन स्कन्धो लक्ष्यते सोऽस्यास्ति वाहनत्वेन इति कर्णी चासौ रथश्च । उभयत्र अन्येषामपीति पा॰ दीर्घः इति" । "कर्णीरथस्थां रघुवीरपत्नीम्" रघुः ।

**कर्णीसुत** पु॰ ६त॰ । मूलदेवे त्रिका॰ हारा॰ च । स च कंसासुरः इति शब्दकल्पद्रुमः तन्मूलं मृग्यं कंसस्य कर्णीमातृकत्वाभावात् काद॰ टीकायामुक्तस्तेयशास्त्रप्रवर्त्तकमूलदेवस्यैव तन्नाम न तु उग्रसेनजस्य नाम । अतएव "कर्णीसुतकथेव सन्निहितविपुलाचला" काद॰व्या॰ "कर्णीसुतः करटकः स्तेयशास्त्रप्रवर्त्तकः । तस्य ख्यातौ सहायौ द्वौ विपुलाचलसंज्ञकौ" टी॰ उक्तम् । "कर्णीसुतमच्छिते च पथि मतिमकरस्म्"दशकु॰।

**कर्णेचुरचुरा** स्त्री पात्रेसमिता॰ समासः। (कालफुसलान) कर्णजपने । युक्तारोह्या॰ अस्याद्युदात्तता । एवं कर्णेटिरटिरा अपि तत्रार्थे तथा द्युदात्तता च । [शब्दर॰ ।

**कर्णेन्दु** पु॰ कर्णे इन्दुरिव । अर्द्धचन्द्राकृतिकर्णालङ्कारभेदे

**कर्णोपकर्णिका** स्त्री कर्णादुपकर्णोऽस्त्यस्याः ठन् अत इत्वम् । (काणाकाणि) परम्परश्रवणरूपे प्रवादे "प्रागेव कर्णोपकर्णिकया श्रुतापवादक्षुभितहृदयः" पञ्चत॰ ।

**कर्णोर्ण** पु॰कर्णे ऊर्णाधिकं लोम यस्य। मृगभेदे ।"कर्णोर्णकपदश्वास्यैर्निर्जुष्टं हकनाभिभिः" भाग॰ ४,६,१५,

**कर्ण्य** त्रि॰कर्णे भवः शरीरावयवत्वात् यत् । १कर्णभवे मलादौ । कर्ण—कर्मणि यत् २भेद्ये च ।

**कर्त्त** शैथिल्ये शिथिलीकरणे आरब्धसंयोगशिथिलतापादने अ॰चु॰सक॰सेट् । कर्त्तयति ते मतान्तरे कर्त्तापयति ते अचकर्त्तत्—त कर्त्तयाम्—बभूव आस चकार चक्रे । कर्त्तयिता कर्त्यात् कर्त्तयिषीष्ट कर्त्तयिष्यति ते । कर्त्तनीयः कर्त्तयितव्यः । कर्त्तयिता कर्त्तितः । कर्त्तनं कर्त्तना । कर्त्तयितुम् कर्त्तयित्वा आकर्त्त्य । कर्मणि कर्त्त्यते अकर्त्ति अकर्त्तयिषाताम्—अकर्त्तिषाताम् कर्त्तिता—कर्त्तयिता कर्त्तयिष्यते कर्त्तिष्यते—"एवाहं सर्वं दुर्भूतं कर्तं कृत्वा कृताकृतम्" अथ॰१०,१, ३२ । "अपि कर्त्तमवर्त्तयो ऽयज्यून्" ऋ॰ १,१२१,१३ ।

**कर्त्त** पु॰ कर्त्तयति शिथिलीकरोति कर्त्त—अच् । १कूपे "त्राध्वं कर्त्तादवपदो यजत्राः !"यजु॰३३,५१,कर्त्तात् कूपात्"वेददी॰ । कृत-भावे घञ् ।२भेदे च । "सभ्राड्ननियस्य यतयो यमकर्त्तहेतिम्"भाग॰२,७,४८,कृत—चच् । ३छेदके त्रि॰ । "इकस्य कर्त्तादवपदोयजत्राः" ऋ॰२,२०, ६। "हे यजत्राः अवपदः आपदः कर्त्तात् कर्त्तुः"भा॰ ।

**कर्त्तन** न॰कृत-भावे ल्युट् ।१छेदने । "गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् । पूर्वस्मृतादर्द्धदण्डः स्थानेषूक्तेषु कर्त्तने" "प्रातिलोम्ये वधः पुंसः स्त्रीणां नासादिकर्त्तनम्" याज्ञ॰ कर्त्त—ल्युट । २शिथिलीकरणे करणे ल्युट् । ३कर्त्तनसाधने त्रि॰ । स्त्रियां ङीप् कर्त्तनी । कृत—कर्त्तरि ल्यु । ४भेदकर्त्तरि त्रि॰।

**कर्त्तरी** स्त्री॰ कृत–घञ् कर्त्तं राति रा–क गौरा॰ ङीष्। कृपाण्याम्, पत्रीकृतहिरण्यादेः छेदनसाधने (कातारि) २खड्गभेदे "ददर्श कर्त्तरीयन्त्रमस्तोपरिसंस्थितम्। मनःपवनवेगेन भ्रममाणं महारयम्। अपि स्पृशन्तं मशकं यत् खण्डयति कोटिशः" काशी॰। केशादिकर्त्तनसाधने (काँचि) ३अस्त्रे, "क्रूरमध्यगतश्चन्द्रो लग्नं वा क्रूरमध्यगम्। कर्त्तरी नाम योगोऽयम्" इति ज्योतिषोक्ते ४योगभेदे च। कर्त्तरीयोग उपयमशब्दे १२५९, ६० तत्प्रतिप्रसवविशेषोऽपि उक्तः। कृत–अरि–कर्त्तरिरित्यप्यत्र स्त्री। "नरकर्त्तरिसंदंशैस्तस्य रोमाणि निर्हरेत्" सुश्रु॰। "पापो कर्त्तरिकारकौ" मुहू॰चि॰। अत्र "ङ्यापोरिति" पा॰ ह्रस्वः" पीयू॰। वस्तुतः नरकर्त्तरिसदंशैरित्यत्र ह्रस्वे ह्रस्वाप्रसक्तेः ह्रस्वान्तोऽपि कर्त्तरिशब्दोऽस्तीति गम्यते। स्वार्थे कन्। कर्त्तरिकाप्यत्र स्त्री।

**कर्त्तव्य** त्रि॰ कृ–अवश्यार्थे तव्य। कर्त्तुं योग्ये। "हीनसेवा न कर्त्तव्या कर्त्तव्यो महदाश्रयः" चाणक्यः। "शौचं यथार्हं कर्त्तव्यं चाराम्बोदकवारिभिः" "महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम्" मनुः "मनस्याहितकर्त्तव्याः" कुमा॰। कृत–कर्मणि तव्य। २छेद्ये त्रि॰। "पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः। रिपुस्थानेषु वर्त्तन्तः कर्त्तव्या भूतिमिच्छता" भा॰श्रा॰१४०अ॰ उभयतो तव्य। ३अवश्यकरणे ४अवश्यच्छेदने च न॰।

**कर्त्तृ** त्रि॰ कृ–तृन् तृच् वा। १क्रियानिष्पादके क्रियोत्पादकयत्नयुक्ते तृजन्तयोगकर्मणि न षष्ठीतिभेदः। स च कारकचक्रप्रयोजकत्वात् स्वतन्त्रः यथाह पा॰ "स्वतन्त्रः कर्त्ता"। "क्रियायां स्वातन्त्र्येण विवक्षितो ऽर्थः। कर्त्ता स्यात्" सि॰कौ॰। व्याकृतञ्चैतदस्माभिः सरलायाम् यथा "स्वतन्त्र इति शप्श्यनादिप्रत्ययसमभिव्याहृतधातूपात्तप्रधानीभूतव्यापाराश्रयत्वमितरव्यापारानधीनव्यापारवत्त्वम् वा कर्त्तृत्वं बोध्यम् कर्मबोधकप्रत्ययसमभिव्याहारे फलस्यैव प्रधानतया बोधस्वीकर्त्तृमते कर्मादिव्यावृत्त्यर्थं शप्श्यनादिसभिव्याहृतेति। णिजन्तस्थले प्रयोज्यस्य स्वातन्त्र्यवारणाय प्रधानव्यापारेति। हरिणा तु स्वातन्त्र्ये विशेषो दर्शितो यथा। "धातुपात्तक्रिये नित्यं कारके कर्त्तृतेष्यते" इति सामान्यतोऽभिधाय "प्राधान्यतः शक्तिलाभात् प्रागभावापादनादपि। तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्त्तनात्। अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात्। आरादप्युपकारत्वात् स्वातन्त्र्यं कर्त्तुरिष्यते" इति अस्यायमर्थः इतरव्यापारात् प्रागपि प्राधान्येनात्मशक्तेः कर्त्तृव्यापारस्य सत्त्वात्, तथाच इतरव्यापारानधीनव्यापारवत्त्वादित्यर्थः इतरकारकाणाञ्च कर्त्तुः प्रयोज्यत्वात्, न तथा, दात्रादेः कुठारादिवत् कर्त्तुः प्रतिनिध्यसम्भवात् कारकान्तराप्रयोगेऽपि कर्त्तुः प्रयोगात्, आरात् साक्षाद्धातूपात्तफलजनकव्यापारवत्त्वाच्च स्वातन्त्र्यं कर्त्तुरिति। कौ॰विवक्षितइति कर्मकरणादेरपि तत्तद्व्यापारस्य धातुनाभिधाने कर्त्तृत्वमिति द्योतनाय। "उत्पत्तिमात्रे कर्त्तृत्वं सर्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसम्भवः" इति हरिणा विवक्षावशात् सर्वेषां कर्त्तृत्वस्वीकारात्। भाष्यकृता तु "पर्य्याप्तं करणाधिकरणकर्मणामेव कर्त्तृत्वं निदर्शितमपादानादीनां कर्त्तृत्वानिदर्शनाय" इत्युक्तत्वात् करणाधिकरणकर्मणामेव विवक्षया कर्त्तृत्वमिति नापादानसंप्रदानयोरिति विवेकः"। कारकव्यापारभेदश्च मञ्जूषायां दर्शितः संक्षिप्य ततोऽस्माभिः शब्दार्थरत्ने दर्शितो यथा "कर्त्तुः कारकान्तरप्रवर्त्तनव्यापारः। करणस्य क्रियाजनकाव्यवहितव्यापारः। क्रियाफलेनोद्देश्यकव्यापारश्च कर्म्मणः। कर्त्तृकर्म्मव्यवहितक्रियाधारणव्यापारोऽधिकरणस्य। प्रेरणानुमत्यादिव्यापारः सम्प्रदानस्य, अवधिभावोपगमव्यापारोऽपादानस्येति। तत्र करणाधारकर्मकर्त्तॄणां क्रियाजनकत्वं सुव्यक्तं तैर्विना क्रियानुत्पत्तेः फलरूपक्रियाजनकत्वेन विशिष्टक्रियाजनकत्वाच्च कर्म्मणस्तथात्वं घटं करोति कटं करोतीत्यादौ च बुद्धिस्थघटादेरपि पूर्व्वकालत्वेन करणादिहेतुत्वात्तथात्वमतएव तेषु कर्त्तृत्वविवक्षया काष्ठं पचति स्थाली पचति ओदनः पच्यते इत्यादिप्रयोगः। अपादानस्य अवधिभावोपगमेन हेतुत्वात् सम्प्रदानस्य च दातृबुद्धिस्थतया पूर्व्वकालत्वेन हेतुत्वाच्च क्रियानिर्व्वाहकत्वेऽपि न कर्त्तृत्वविवक्षा अनभिधानात् तदुक्तं भाष्येऽपादानादीनां कर्त्तृत्वानिदर्शनायेत्यन्तमनुपदं सरलाद्यन्यांशे दर्शितम्। स च प्रवृत्तिनिवृत्त्योरुभयोरपि सम्पादकः "प्रवृत्तौ च निवृत्तौ च कारकाणां यईश्वरः। स कर्त्ता नाम विज्ञेयः कारकाणां प्रयोजकः" इत्युक्तेः। स च पञ्चविधः "क्रिया मुख्योभवेत् कर्त्ता हेतुकर्त्ता प्रयोजकः। अनुमन्ता ग्रहीता च कर्त्ता पञ्चविधः स्मृतः" गोपालभट्टा॰ अतएव मनुना "अनुमन्ता विशसिता नियन्ता क्रयविक्रयी। संस्कर्त्ता चोपहर्त्ता च षड़ेते घातकाः स्मृताः" इति षण्णां

घातकर्त्तृत्वमुक्तम् काशीख० "खादकोघातकस्तथेति" चतुर्थचरणे पाठः। तेन अष्टानां कर्त्तृत्वमुक्तम्। स च प्रकारान्तरेण त्रिविधः "त्रिधैव ज्ञायते कर्त्ता विशेषेण क्रियां प्रति। योगत्वप्रतिषिद्धत्वविशेषणपदान्वयैः" भट्टका०। अस्यार्थः क्रियां प्रति प्रकारत्रयेण कर्त्ता विज्ञायते तस्य विवरणम् "स्वाध्यायोऽध्येतव्यः" इत्यत्र योग्यत्वेन लब्धविद्यस्त्रैवर्णिकः, १। "अहरहर्दद्यात् दीक्षितो न ददाति इत्यत्र प्रतिषिद्धत्वेन दीक्षितेतरःपरः २। "स्वर्गकामो यजेत" इत्यत्र विशेषणपदान्वयेन स्वर्गकामः कर्त्ता ज्ञायते३,। स च प्रकारान्तरेण त्रिविधः सात्त्विकादिभेदात् यथाह गीता"मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः। सिद्ध्यसिद्ध्यो र्निर्विकारः कर्त्ता सात्त्विक उच्यते" "रागी कर्मफलप्रेप्सुर्लुब्धोहिंसात्मकोऽशुचिः। हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः" "अयुक्तः प्राकृतः स्तब्धः शठोनैष्कृतिकोऽलसः। विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते"। कर्त्तृपदञ्च क्रियाश्रये कृत्याश्रये वा मतभेदेन रूढं न तु यौगिकमित्येतत् शब्दचि० भट्टमतदर्शनप्रस्तावे दर्शितं यथा

"अथ क्रियाजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वाभ्यां घटाङ्कुरयोः कृताकृतत्वव्यवहारात्तृजन्तलक्षणानुव्युत्पन्नकर्त्तृपदस्य कृत्याश्रयत्वबोधकत्वाच्च कृञोयत्नार्थत्वं, क्रियामात्रार्थत्वे कृञः, क्रियाश्रयः कर्त्तृपदार्थः स्यात्। तथा च कारकमात्रेऽतिप्रसङ्गः एवञ्च कृञो यत्नार्थत्वेन चाख्यातविवरणात् तस्यापि यत्नोऽर्थः। तदुच्यते। "कृताकृतविभागेन कर्त्तृरूपव्यवस्थया। यत्नएव कृतिः पूर्वा परस्मिन् सैव भावना" सैवाख्यातार्थोभावनेति चेत्। वीजेनाङ्कुरः कृतः स्वर्गादिना सुखं कृतं वीजमङ्कुरं करोतीति यत्नं विनापि व्यवहारात्" "कर्त्तृपदञ्च न यौगिकं तथा हि कृञोयत्नार्थत्वे तिङः कृत्यर्थत्वे वा धातुप्रत्ययार्थयोः कृतिकृञोर्वा परस्परमनन्वयः कृतौ कृतिजन्यत्वस्य तद्विषयत्वस्य वाऽभावात् कृतिर्विशिष्टस्य कृतिनिराकाङ्क्षत्वादिति। एवं कृञः क्रियार्थत्वे तृचश्च क्रियाश्रयवाचकत्वे तयोः परस्परमन्वय एवेति उभयदर्शने कर्त्तृपदं कर्म्मादिपदवद्रूढमेव। रूढिश्च कृत्याश्रये क्रियाश्रये वेत्यन्यदेतत् तथा च कृताकृतविभागेन च कर्त्तृरूपव्यवस्थया च न कृञो यत्नार्थत्वमिति किञ्चाख्यातस्य करोतेश्च न यत्नार्थत्वम् पाकाय यतते पाकं करोतीत्यादौ यत्नद्वयस्य यत्नविषयकयत्नस्य वाऽप्रतीतेः प्रकृतिप्रत्ययार्थयोश्च साम्येनान्वयानुपपत्तेः पौनरुक्त्यात् एकत्रैव विध्यनुवाददोषाच्च" इत्यादिकम् भट्टमतम्। स्वमते तु कृञः यत्नार्थत्वमिति भेदः तच्च कृधातुशब्दे दर्शयिष्यते। शब्द०प्र०कर्त्तृपदं यौगिकमिति व्यवस्थाप्य तल्लक्षणमुक्तं यथा

"तिङा विकरणाक्तस्य धातोरर्थस्तु यादृशः। स्वार्थे यादृशि बोध्यस्तत्कर्त्तृत्वं तदिहोच्यते। सविकरणेन यद्धातुनोपस्थाप्योयादृशार्थस्तदुत्तरतिङा स्वोपस्थाप्ययादृशार्थोऽनुभावयितुं शक्यस्तद्धातूपस्थाप्यस्य तस्य तदेव कर्त्तृत्वं कारकमित्यर्थः। कर्म्मत्वादौ धातुनोपस्थाप्योऽर्थस्तिङानुभाव्योऽपि न विकरणाक्तेनेति न तत्र प्रसङ्गः। पचति जानातीत्यादौ स्वोपस्थाप्यकृत्याश्रयत्वादौ धातूपस्थाप्यस्य पाकवुद्ध्यादेरन्वयः पचाद्युत्तरतिङा बोध्यतइति पाकस्य यत्नवत्त्वं, ज्ञानस्याश्रयत्वमेवं नश्यतीत्यत्र नाशस्य प्रतियोगित्वं प्रतिविम्बतइत्यत्र भ्रमात्मनः प्रतिविम्बस्य प्रकारत्वमेव कर्त्तृत्वम्। कर्त्तृशब्दस्तु अवयवशक्तिलभ्ये कृत्याश्रये यौगिकएव न तु शक्यार्थकः प्रकारान्तराणाम्यस्यैव शक्यत्वात् निरूढलक्षणया शक्यैव चाश्रयत्वस्य तृचा प्रत्यायनात्। घटस्य कर्त्तृत्वादौ चानुकूलत्वं षष्ठ्यर्थः फलस्य प्रायशः कृतिविषयत्वात् घटाद्युपभोगानुकूलकृतिश्च न घटाद्यनुकूला प्रमाणाभावात् अतोन घटादिभोक्तुस्तत्कर्त्तृत्वप्रसङ्गः। क्रियाश्रये कर्त्तृशब्दोरूढस्तेन रथादेर्गत्यादिकर्त्तृत्वमपि मुख्यमेवेति तु न युक्तम्। क्रिया हि नात्र स्पन्दस्तेनस्य पाककर्त्तृत्वानुपपत्तेः प्रत्युत तण्डुलादेरेव तथात्वापत्तेः नापि धात्वर्थमात्रम् अतएव,नापि स्पन्दनानुकूलव्यापारः चलनानुकूलव्यापारवतः कारकमात्रस्य चलनकर्त्तृत्वापत्तेः। अपि च जुहोतीत्यादावप्यदादेरुत्तरं लुप्तस्यैव विकरणस्य प्रतिसन्धाने भोजनकर्त्तृत्वादेरवगमइति। तदप्रतिसन्धानेऽपीति मतेनाह। यगन्तभिन्नधात्वर्थवत्तया योऽनुभाव्यते। लटा स्वार्थः स धात्वर्थः कर्त्तृता वा निगद्यते। यगन्तभिन्नधातूपस्थाप्ययादृशार्थप्रकारयदर्थधर्म्मिकान्वयबोधं प्रति लटः सामर्थ्यं स एवार्थो धातूपस्थाप्यतदर्थस्य कर्त्तृत्वम् पच्यत इत्यादौ धातोरर्थवत्तया स्वार्थकर्म्मत्वं लटानुभाव्यमपि न यगन्तभिन्नस्य, पच्यते तण्डुलइत्यादौ तु तादृशस्य धातोरर्थवत्तया तिङैव स्वार्थःकर्म्मत्वमनुभाव्यते न तद्विशेषेण लटेति तद्व्युदासः। अपादानत्वादिभेदेन षड्विधत्वमित्रोक्तानुक्तत्वभेदेन कारकस्य द्वैविध्यमप्यस्तीति तदनुक्त्या न्यूनत्वमत आह। धात्वर्थस्य

धर्मितया तिङाद्यैरनुभाव्यते। यत्तदुक्तं धर्मतया त्वनुक्तं कारकं भवेत्। धात्वर्थस्य विशेषणतया तिङाद्यनुभाव्यत्वमेव कारकस्योक्तत्वं तद्विशेषणतया तदनुभाव्यत्वमेव चानुक्तत्वं न तु धातुसाकाङ्क्षप्रत्ययस्याभिधेयत्वमात्रमुक्तं तथात्वे पचति इत्यादावपि कर्म्मत्वादेरुक्तत्वापत्तेः। पचति पच्यत-इत्यादौ तिङा, पाचकः पच्यमानइत्यादौ च कृता, कर्तृत्वं कर्म्मत्वञ्च धात्वर्थविशेष्यत्वेनानुभाव्यते तथा पचनं काष्ठं, दानीयो द्विजः, भीमो गजः, शयनं गृहमित्यादौ यथाक्रमं करणत्वादि व्युत्पत्तिवैचित्र्येण पदार्थैकदेशेऽपि कर्तृत्वादौ धात्वर्थस्य पाकादेरन्वयात्। सेवितुं साम्प्रतं विसर्गः परुषवागपि" "विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्"इत्यादौ निपातेन क्वचित् कर्म्मत्वकारकस्योक्तत्वम्। धातुभेदेन कर्म्मत्वकारकस्योक्ततायां नियममाह। दुहादिभ्यः प्रत्ययेन मुख्यकर्म्मत्वमुच्यते। णिजन्तेभ्यः कर्तृताख्या तदसत्त्वेऽन्यकर्म्मता। दुहाद्युत्तरप्रत्ययेन मुख्यं साक्षाद्धात्वर्थतावच्छेदकं यत्कर्मत्वं तदेवोच्यते धात्वर्थविशेष्यत्वेनानुभाव्यते तेन गौः पयो दुह्यते दुग्धा वेत्यत्र पयःकर्मकमोचनानुकूलव्यापारजन्यमोचनवती गौरित्येवं बोधः। तत्र मोचनावच्छिन्नव्यापारस्य धातुवाच्यतया मोचनस्यैव साक्षाद्धात्वर्थतावच्छेदकफलत्वात्। वह्निप्रभृतेर्गत्यवच्छिन्नव्यापारः। कर्षेश्च गत्यवच्छिन्नविकर्षणं वाच्यमतः साक्षात् तद्वाच्यतावच्छेदकं गतिमत्त्वमेव फलं न तु तद्घटकसंयोगादि। तथाच 'भारोभवनं नीयते' इत्यादौ शाखा ग्रामं कृष्यते' इत्यादौ च यथाक्रमं भवनकर्मकगत्यनुकूलव्यापारजन्यगतिमान् भारः, ग्रामकर्मकगत्यवच्छिन्नविकर्षणकर्म्मताश्रयः शाखेत्याकारकबोधयोरुत्पत्त्यैव सम्पत्तौ दुहादेर्गौणकर्मत्वं, नीवहादेः प्रधानत्वमित्याद्युक्तिभेदेन विविदन्ते शाब्दिकानामनादेयम्। णिजन्तोत्तरं कर्म्मताथाचिप्रत्ययस्थले तु मूलधातोः कर्तृतायाङ्कर्म्मतातिदेशसम्भवे तादृशमेव कर्मत्वं धात्वर्थस्य विशेष्यतया तिङाद्यैर्बोध्यते यथा चैत्रो ग्रामं गम्यते गमितो वेत्यादौ ग्रामकर्मकव्यापारजन्यगमनस्य कर्त्ता चैत्र इत्यादि। यत्र तु न तदतिदेशस्तत्र मूलधातोः कर्मत्वमेव तदर्थविशेष्यतया तैरुच्यते यथा 'ओदनः पाच्यते खाद्यते वा भृत्येन भर्त्ता' इत्यादौ तत्र भर्तृकर्तृकव्यापारजन्यस्य भृत्यकर्तृकपाकादेः कर्मतयौदनादिरेव बोध्यते 'मैत्रेण पूगं खाद्यमानश्चैत्रो व्रजतीत्यादौ' कर्मणि शानजादिप्रत्ययः प्राक् परिचिन्तितः"।

न्यायादिमते कृतिमानेव कर्त्तृशब्दवाच्यः इत्यतः कर्त्तृत्वमात्मधर्म्मः। सांख्यमते बुद्धेर्योऽयं कर्तृत्वाभिनिवेशस्तदुपरागादकर्त्तुः पुरुषस्यापि तदभिमानः। तदेतत् सां० प्र० सू० भाष्ययोर्दर्शितम् यथा

"उपरागात् कर्त्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात्" सू०। "अत्र यथायोग्यमन्वयः। पुरुषस्य यत् कर्त्तृत्वं तद्बुद्ध्युपरागात्। बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात्। एतदुभयमवास्तवमित्यर्थः। यथाग्न्ययसोः परस्परं संयोगविशेषात् परस्परधर्मव्यवहार औपाधिको यथा वा जलसूर्ययोः संयोगात् परस्परधर्मारोपस्तथैव बुद्धिपुरुषयोरिति भावः" भा०।

पुरुषस्य यथाऽकर्त्तृता तथा सां०कौ० व्यवस्थापितं यथा "तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य। कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च"का०।"तस्माच्चेति चः पुरुषबहुत्वेन सह धर्म्मान्तराणि समुच्चिनोति विपर्यासादित्युक्तौ त्रैगुण्यविपर्ययादित्यनन्तरोक्तं सम्बध्येत अतस्तन्निरासाय तस्मादित्युक्तम् अनन्तरोक्तं हि सन्निधानादिदमो विषयो विप्रकृष्टञ्च तद इति विप्रकृष्टं त्रिगुणमविवेक्यादि सम्बध्यते। तस्मात् त्रिगुणादेः यो विपर्यासः स पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वञ्च। तत्र चेतनत्वेन अविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते चेतनो हि द्रष्टा भवति नाचेतनः साक्षी च दर्शितविषयो भवति यस्मै प्रदर्श्यते विषयः स साक्षी यथा हि लोके अर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी। न चाचेतनो विषयो वा शक्यो विषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी अतएव द्रष्टापि भवति अत्रैगुण्याच्चास्य कैवल्यम् आत्यन्तिको दुःखत्रयाभावः कैवल्यं तच्च तस्य स्वाभाविकादेवात्रैगुण्यात्सुखदुःखमोहरहितत्वात्सिद्धम्। अतएवात्रैगुण्यान्माध्यस्थ्यं सुखी हि सुखेन तृप्यन् दुःखी हि दुःखं द्विषन् मध्यस्थो भवति तदुभयरहितस्तु मध्यस्थ इत्युदासीन इति चाख्यायते। विवेकित्वादप्रसवधर्मित्वाच्चाकर्त्तेति सिद्धम्। स्यादेतत् प्रमाणेन कर्त्तव्यमर्थमवगम्य चेतनोऽहं चिकीर्षन् करोमीति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धं तदेतस्मिन्मते नावकल्पते चेतनस्याकर्तृत्वात्कर्तुश्चाचैतन्यादित्यत आह कौ० "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः"का०।

"यतश्चैतन्यकर्त्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे तस्मा-
द्भ्रान्तिरियमित्यर्थः। लिङ्गं महदादिसूक्ष्मपर्य्यन्तं वक्ष्यति
भ्रान्तिबीजं तत्संयोगस्तन्निदानम् अतिरोहितार्थमन्यत्"
कौ०। तदेतन्मतस्तु न्याय मुक्तावल्यां निराकृतं यथा "एतेन
प्रकृतिः कर्त्री पुरुषः पुष्करपलाशवन्निर्लेपः किन्तु चेतनः
कार्य्यकारणयोरभेदात् कार्य्यनाशे कार्य्यरूपतया नाशः
स्यादित्यकारणत्वं तस्य बुद्धिगतचैतन्याभिमानार्थानुपपत्त्या
तत्कल्पनम्। बुद्धिश्च प्रकृतेः प्रथमः परिणामः। सैव मह-
त्तत्त्वमन्तःकरणमप्युच्यते। तत्सत्त्वासत्त्वाभ्यां पुरुषस्य सं-
सारापवर्गौ। तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा
घटादिना सम्बन्धः। पुरुषे कर्तृत्वाभिमानो बुद्धौ चैत-
न्याभिमानश्च भेदाग्रहात्। ममेदं कर्त्तव्यमिति मदंशः
पुरुषोपरागो बुद्धेः स्वच्छतया चेतनप्रतिविम्बादतात्त्विको
दर्पणस्येव मुखोपरागः। इदमिति विषयोपराग इन्द्रि-
यप्रणालिकया परिणतिभेदस्तात्त्विको निश्वासाभिहतदर्प-
णस्येव मलिनिमा। कर्त्तव्यमिति व्यापारावेशः। ते-
नांशत्रयवतो बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः
सम्बन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते। ज्ञानादि-
वत् सुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्म्मा अपि बुद्धेरेव कृ-
तिसामानाधिकरण्येन प्रतीतेः। न च बुद्धिश्चेतना परि-
णामित्वादिति सांख्यमतमपास्तम् कृत्यदृष्टभोगानामिव
चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावा-
च्चेतनोऽहं करोमीति प्रतीतेः। बुद्धेः परिणामित्वाच्चैतन्यांशे
भ्रम इति चेत् कृत्यंशे किं नेष्यते। अन्यथा बुद्धेर्नित्यत्वे
तत्पूर्व्वमसंसारापत्तिः। अचेतनायाः प्रकृतेः कार्य्यत्वात्
बुद्धेरचैतन्यं कार्य्यकारणयोस्तादात्म्यादिति चेन्न असि-
द्धेः कर्त्तुर्जन्यत्वे मानाभावात् वीतरागजन्मादर्शनाद-
नादित्वम्। अनादेर्नाशसम्भवाच्चित्यत्वम्" मुक्ता०।
वेदान्तिमते आविद्यिकजीवस्यैवौपाधिकं कर्त्तृत्वं शा०सू०
भा० व्यवस्थापितम् यथा।

"कर्त्ता शास्त्रार्थवत्त्वात्"। तद्गुणसारत्वाधिकारेणैवापरो-
ऽपि जीवधर्म्मः प्रपञ्च्यते। कर्त्ता चायं जीवः स्यात् क-
स्मात् शास्त्रार्थवत्त्वात् एवञ्च यजेत जुहुयात् दद्यादि-
त्येवंविधं विधिशास्त्रमर्थवद्भवति अन्यथा तदनर्थकं
स्यात्। तद्धि कर्त्तुः सतः कर्त्तव्यविशेषमुपदिशति न चा
सति कर्त्तृत्वे तदुपपद्यते। तथेदमपि शास्त्रमेवमर्थवद्भ-
वति "एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्त्ता विज्ञानात्मा
पुरुष" इति भा०। "विहारोपदेशात्" सू०। "इतश्च जीवस्य
कर्त्तृत्वं यज्जीवप्रक्रियायां सन्ध्ये स्थाने विहारमुपदिशति
"स ईयतेऽमृतो यत्रकाममिति" "स्वे शरीरे यथाकामं परि-
वर्त्तते" इति च भा०। "उपादानात्" सू०। "इतश्चास्य
कर्त्तृत्वं यज्जीवप्रक्रियायामेव करणानामुपादानं सङ्कीर्त्तयति।
"तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति"।
"प्राणान् गृहीत्वेति च" भा०। "व्यपदेशाच्च क्रियायां
न चेन्निर्द्देशविपर्य्ययः" सू०। "इतश्च जीवस्य कर्त्तृ-
त्वं यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्त्तृत्वं
व्यपदिश्यते "विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि चे-
ति"। ननु विज्ञानशब्दो बुद्धौ समधिगतः कथमनेन
जीवस्य कर्त्तृत्वं सूच्यतेति नेत्युच्यते जीवस्यैवैष
निर्द्देशो न बुद्धेः न चेज्जीवस्य स्यात् निर्द्देशविपर्य्ययः
स्यात् विज्ञानेनेत्येवं निरदेक्ष्यत्। तथा ह्यन्यत्र बुद्धि-
विवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्द्देशो दृश्यते
"तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति"। इह
तु "विज्ञानं यज्ञं तनुत" इति कर्त्तृसमानाधिकरण्य-
निर्द्देशात् बुद्धिव्यतिरिक्तस्यैवात्मनः कर्त्तृत्वं सूच्यत
इत्यदोषः। अत्राह यदि बुद्धिव्यतिरिक्तो जीवः कर्त्ता
स्यात् स स्वतन्त्रः सन् प्रियं हितं चैवात्मनो नियमेन
सम्पादयेत् न विपरीतं, विपरीतमपि तु सम्पादयन्नुपल-
भ्यते। न च स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यते
इति अतउत्तरं पठति" भा०। "उपलब्धिवदनियमः" सू०।
यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टञ्च
उपलभते एवमनियमेनैवेष्टमनिष्टञ्च सम्पादयिष्यति।
उपलब्धावप्यस्वातन्त्र्यमुपलब्धिहेतूपादानोपलम्भादिति चेन्न
विषयविकल्पनमात्रप्रयोजनत्वादुपलब्धिहेतूनाम् उप-
लब्धौ त्वनन्यापेक्षत्वमात्मनः चैतन्ययोगात्। अपि-
च यें क्रियायामपि नात्यन्तमात्मनः स्वातन्त्र्यमस्ति देश-
कालनिमित्तविशेषापेक्षत्वात्। न च सहायापेक्षस्य कर्त्तुः
कर्त्तृत्वं निवर्त्तते। भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः
पक्तृत्वम्। सहकारिवैचित्र्याच्चेष्टानिष्टार्थक्रियाया-
मनियमेन प्रवृत्तिरात्मनो न विरुध्यते" भा०, "शक्तिविपर्य्य-
यात्" सू०। "इतश्च विज्ञानव्यतिरिक्तो जीवः कर्त्ता भवितु
मर्हति। यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्या-
त्ततः शक्तिविपर्य्ययः स्यात् करणशक्तिर्बुद्धेर्हीयेत कर्तृ-
शक्तिश्चापद्येत। सत्याञ्च बुद्धेः कर्तृशक्तौ तस्या एवाहं-
प्रत्ययविषयत्वमभ्युपगन्तव्यम् अहङ्कारपूर्व्विकाया एव
प्रवृत्तेः सर्व्वत्र दर्शनात् अहं गच्छाम्यहं भुञ्जेऽहं

पिबामीति च तस्याश्च कर्तृशक्तियुक्तायाः सर्व्वार्थकारित्वात्; सर्व्वार्थकारि करणमन्यत् कल्पयितव्यं शक्तोऽपि हि सन् कर्त्ता करणमुपादाय क्रियासु प्रवर्त्तमानो दृश्यत इति। ततश्च संज्ञामात्रे विसंवादः स्यात् न च वस्तुभेदः कश्चित् करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात्" भा० "समाध्यभावाच्च" सू०। "योऽप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "ओमित्येवं ध्यायेत आत्मानम्" इत्येवंलक्षणः सोऽप्यसत्यात्मनः कर्तृत्वेनोपपद्येत, तस्मादप्यस्य कर्तृत्वसिद्धिः" भा०। "यथा च तक्षोभयथा" सू० "एवं तावत् शास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्रदर्शितं तत्पुनः स्वाभाविकं वा स्यादुपाधिनिमित्तं वेति चिन्त्यते। तत्र तैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वम् अपवादहेत्वभावादित्येवं प्राप्ते ब्रूमः। न स्वाभाविकं कर्तृत्वमात्मनः सम्भवति अनिर्मोक्षप्रसङ्गात्। कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः सम्भवति अग्नेरिवौष्ण्यात्। न च कर्तृत्वादनिर्मुक्तस्यास्ति पुरुषार्थसिद्धिः कर्तृत्वस्य दुःखरूपत्वात्। ननु-स्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्य्यपरिहारात् पुरुषार्थः सेत्स्यति तत्परिहारश्च निमित्तपरिहारात् यथाग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद्दहनकार्य्याभावस्तद्वत् न, निमित्तानामपि शक्तिलक्षणेन सम्बन्धेन सम्बद्धानामत्यन्तपरिहारासम्भवात्। ननु मोक्षसाधनविधानान्मोक्षः सेत्स्यति न साधनायत्तस्यानित्यत्वात्। अपि च नित्यशुद्धबुद्धमुक्तात्मप्रतिपादनान्मोक्षसिद्धिरभिहिता तादृगात्मप्रतिपादनञ्च न स्वाभाविके कर्तृत्वेऽवकल्पते। तस्मादुपाधिधर्म्माध्यासेनैवात्मनः कर्तृत्वं न स्वाभाविकम्। तथा च श्रुतिः "ध्यायतीव लेलायतीव" इति। "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण" इति चोपाधिसंयुक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति। न हि विवेकिनां परस्मादन्यो जीवोनाम कर्त्ता भोक्ता वा विद्यते "नान्योऽतोऽस्ति द्रष्टेत्यादि" श्रवणात्। पर एव तर्हि संसारी कर्त्ता भोक्ता च प्रसज्येत परस्मादन्यश्चेच्चितिमान् बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात् न अविद्याप्रत्युपस्थापितत्वात् कर्तृत्वभोक्तृत्वयोः। तथा च शास्त्रं "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीति" अविद्यावस्थायां कर्तृ ... त्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति "यत्र त्वस्य सर्व्वमात्मैवाभूत्तत् केन कं पश्येदिति"। तथा स्वप्नजागरितयोरात्मन उपाधिसम्पर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्ते प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति "तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तर"मित्यारभ्य "एषास्य परमा गतिरेषास्य परमा संपत् एषोऽस्य परमोलोक एषोऽस्य परमानन्दः" इत्युपसंहारात्। तदेतदाहाचार्य्यः "यथा च तक्षोभयथेति"। तत्वर्थे चायञ्चः पठितः। नेदं मन्तव्यं स्वाभाविकमेवात्मनः कर्तृत्वम् अग्नेरिवौष्ण्यमिति। यथा च लोके तक्षा वास्यादिकरणहस्तः कर्त्ता दुःखी भवति स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निर्वृत्तो निर्व्यापारः सुखी भवति एवमविद्याप्रत्युपस्थापितद्वैतसंयुक्त आत्मा स्वप्नजागरितावस्थयोः कर्त्ता दुःखी भवति स तच्छ्रमापनुत्तये स्वमात्मानं परं प्रविश्य मुक्तकार्य्यकरणसंघातोऽकर्त्ता सुखी भवति संप्रसादावस्थायां, तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलो निर्वृत्तः सुखी भवति। तक्षदृष्टान्तश्चैतावतांशेन द्रष्टव्यः तक्षा हि विशिष्टेषु तक्षणादिषु व्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्त्ता भवति स्वशरीरेण त्वकर्त्ता, एवमयमात्मा सर्व्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्त्ता भवति स्वात्मना त्वकर्त्तैवेति नत्वात्मनस्तक्ष्ण इवावयवाः सन्ति यैर्हस्तादिभिरिव वास्यादीनि तक्षा मनआदीनिकरणान्यात्मोपाददीत न्यस्येद्वा। यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति तत्र विधिशास्त्रं तावद्यथाप्राप्तं कर्तृत्वमुपादाय कर्त्तव्यविशेषमुपदिशति न कर्तृत्वमात्मनः प्रतिपादयति। न च स्वाभाविकमस्य कर्तृत्वमस्ति ब्रह्मात्मत्वोपदेशादित्यवोचाम। तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्त्तिष्यते। कर्त्ता विज्ञानात्मा पुरुष इत्येवंजातीकमपि शास्त्रमनुवादरूपत्वाद्यथाप्राप्तमेवाविद्याकृतं कर्तृत्वमनुवदिष्यति। एतेन विहारोपादाने परिहृते तयोरप्यनुवादरूपत्वात्। ननु सन्ध्ये स्थाने सुषुप्तेषु करणेषु "स्वे शरीरे यथाकामं परिवर्त्तते" इति विहार उपदिश्यमानः केवलस्यात्मनः कर्तृभाव इति, तथोपादानेऽपि "तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति" करणेषु कर्म्मकरणविभक्ती श्रूयमाणे केवलस्यैवात्मनः कर्तृभावं गमयत इति। अत्रोच्यते न तावत् सन्ध्ये स्थाने

ऽप्यन्तमात्मनः करणविरमणमस्ति "सधीः स्वप्नोभूत्वेमं लोकमतिक्रामतीति" तत्रापि धीसम्बन्धश्रवणात्। तथा च स्मरन्ति "इन्द्रियाणामुपरमे मनोऽनुपरतं यदि। सेवते विषयानेव तद्विद्यात् स्वप्नदर्शनमिति"। कामाद्यश्च मनसोवृत्तय इति श्रुतिः ताश्च स्वप्ने दृश्यन्ते तस्मात् समना एव स्वप्ने विहरति। विहारोऽपि तत्रत्योवासनामय एव न पारमार्थिकोऽस्ति। तथा च श्रुतिरिवकारानुबद्धमेव स्वप्नव्यापारं वर्णयति "उतेव स्त्रीभिः सह मोदमानो यज्ञदुतेवापि भयानि पश्यन्निति"। लौकिका अपि तथैव स्वस्वप्नं कथयन्ति आरुक्षमिव गिरिशृङ्गमद्राक्षमिव वनराजिमिति। तथोपादाने यद्यपि करणेषु कर्म्मकरणविभक्तिनिर्देशस्तथापि तत्संयुक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यं केवलेकर्तृत्वासम्भवस्य दर्शितत्वात्। भवति च लोकेऽनेकप्रकारा विवक्षा 'योधायुध्यन्ते' 'योधै राजायुध्यते' इति च। अपि चास्मिन्नुपादाने करणव्यापारोपरममात्रं विवक्ष्यते न स्वातन्त्र्यं कस्यचित्, अबुद्धिपूर्ब्बकस्यापि स्वापे करणव्यापारोपरमस्य दृष्टत्वात्। यस्त्वयं व्यपदेशो दर्शितः "विज्ञानं यज्ञं तनुते" इति स बुद्धेरेव कर्तृत्वं प्रापयति विज्ञानशब्दस्य तत्र प्रसिद्धत्वात् मनोऽनन्तरपाठाच्च "तस्य श्रद्धैव शिरः" इति विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्वसंकीर्त्तनात् श्रद्धादीनाञ्च बुद्धिधर्म्मत्वप्रसिद्धेः "विज्ञानं देवाः सर्व्वे ब्रह्मज्येष्ठमुपासते" इति च वाक्यशेषात् ज्येष्ठत्वस्य बुद्धौ प्रसिद्धत्वात् "स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञ" इति च श्रुत्यन्तरे यज्ञस्य वागबुद्धिसाध्यत्वावधारणात्। न च बुद्धेः शक्तिविपर्य्ययः करणानां कर्तृत्वाभ्युपगमे भवति सर्व्वकारकाणामेव स्वव्यपारेषु कर्तृत्वस्यावश्यंभावित्वात्। उपलब्ध्यपेक्षं त्वेषां करणत्वं सा चात्मनः। न च तस्यामप्यस्य कर्तृत्वमस्ति नित्योपलब्धिस्वरूपत्वात्। अहङ्कारपूर्व्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति अहङ्कारस्याप्युपलभ्यत्वात्। न चैवं सति करणान्तरकल्पनाप्रसङ्गः बुद्धेः करणत्वाभ्युपगमात्। समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः। यथाप्राप्तमेव कर्तृत्वमुपादाय समाधिविधानात्। तस्मात् कर्तृत्वमप्यात्मन उपाधिनिबन्धनमेवेस्थितम्" भा०। "अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते" इति गीतया कर्तृत्वस्याहङ्काराधीनतयौपाधिकत्वं सूचितमिति द्रष्टव्यम्"।

तथा चान्तःकरणोपहितचैतन्यमेव जीवः स एव वेदान्तिमते कर्त्तेति तत्त्वम्। तस्य च ईश्वराधीनर्यैव क त्वं तदपि "परात्तु तच्छ्रुतेः" इत्यादिशा० सूत्रभाष्ययोर्व्यवस्थापितं तच्च ईश्वरशब्दे दर्शितमिति। स्त्रियां ङीप् कर्त्री। "कर्त्तरि कृत्" "कर्तृकरणयोस्तृतीया" "अकर्त्तरि च कारके" "कर्तुरीप्सिततमं कर्म" "कर्त्तुरुपमानादाचारे क्यङ्" "शेषात् कर्त्तरि परस्मैपदम्" पा० "कर्तृकर्मव्यहितामसाक्षाद्धारयत् क्रियाम्" हरिः २तत्प्रयोजके "तत्प्रयोजकोहेतुश्च" पा० "अकर्त्तर्य्यृणे" पा०। कर्त्तुर्भावः त्व कर्तृत्व न० तल् कर्तृता स्त्री कृत्याश्रयत्वे क्रियाश्रयत्वे च। तत्र नैयायिकमते आख्यातस्य कृतौ शक्तिः वैयाकरणमते कर्त्तरि शक्तिः "कर्त्तरि कृत्" "लः कर्म्मणि भावे चाकर्मकेभ्यः" पा० सूत्राभ्यां तथैव प्रतिपादनात् "कर्त्तरि कृत्" इत्यतः कर्तृपदस्यैव परस्मैऽनुवृत्तेः लकारस्यापि तदर्थकत्वेत्याकरे स्थितम्। अधिकमाख्यातशब्दे उक्तम्। "न कर्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः" गीता। ३परमेश्वरे पु० तस्य सर्वकर्तृत्वात्" "एतेषां पुरुषाणां स कर्त्ता यस्य वैतत् कर्म स वै वेदितव्यः" इति श्रुतेस्तस्य तथात्वम् यथा च तस्य सर्वकर्तृत्वं तथा ईश्वरशब्दे दर्शितम्। "करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" विष्णुस०। कृत—तृच्। ४छेदके त्रि० स्त्रियां ङीप् "क्रोधहा क्रोधकृत्कर्त्ता" विष्णुस०। क्रोधकृतां दैत्यानां कर्त्ता भेदकः इत्येकं नामेति" भा०(कात) ५क्षुद्रखड्गे न०। तस्य कर्त्तनहेतुत्वात् तथात्वम् "चतुर्भुजां कृपाणीं तु दक्षेण कर्तृखर्परौ" ताराध्यानम्। ६शल्लिकायां स्त्री ङीष्। "कर्त्रीञ्च खर्परञ्चैव क्रमाद्वामेन बिभ्रतीम्" ताराध्यानम्। उभयमपि उग्रताराशब्दे दर्शितम्। (कातारी) ७कर्त्तर्य्याम् शब्दरत्ना०। अल्पार्थे क। कर्तृकापि क्षुद्रखड्गे स्त्री "हास्ययुक्तां त्रिनेत्राञ्च कपालकर्तृकाकराम्" तन्त्रसा० श्यामाध्यानम्। किरति विक्षिपति कायम् कॄ—विक्षेपे तृच्। स्वरादिहेतुके ददाहादौ। ततोऽस्त्यर्थे मतुप् कर्तृमत् कर्तृयुक्ते त्रि० स्त्रियां ङीप्। "ह्रस्वनुड्भ्यां मतुप्" पा० अस्य उदात्तत्वम्। कर्तृशब्दे उपपदे दिवाविभेत्यादिना कृञः टः। कर्तृकर कर्तृकारके तत्प्रयोजके। स्त्रियां ङीप्। इष्टे ईयसि च तृणोलोपः करिष्ठः करीयान्। तृचस्तु न लुक्। डिद्भावे कर्त्तिष्ठः कर्त्तीयानिति भेदः।

**कर्त्त** शैथिल्यकरणे अद०चुरा०उभय०सक०शैथिल्ये अक०सेट् कर्त्तयति ते कर्त्तापयतीत्येके अचकर्त्तत् त। कर्त्तयाम्-

बभूव आसचकार चक्रे । कर्त्रयते अकर्त्रि—अकर्त्रियि-षाताम्-अकर्त्रयिषाताम् । प्रनिकर्त्रयति । क्त कर्त्रितः ।

**कर्त्रभिप्राय** पु० कर्त्तारमभिप्रैति संबध्नाति अभि+प्र+इण—अण् उप० स० । १कर्त्तृसम्बन्धिनि । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" पा० । अत्र क्रियाफलस्वरूपञ्चाम्भिः शब्दार्थरत्ने निरूपितं यथा ।

"स्वरितञिद्धातूत्तरतङः कर्तृगामिन्येव सति क्रियाफले कर्तृवाचकत्वं नान्यथा तत्र फलञ्च न धातूपस्थाप्यं जानात्यादीनां ज्ञानरूपफलस्य समवायेन कर्तृनिष्ठतया सर्व्वदैव जानीते इत्येव प्रयोगापत्तेः जानातीत्यादेरप्रयोगापत्तेश्च नेष्यते तु तथा शास्त्रकारैः । नापि क्रियाजन्यचेतनदक्षिणादिरूपलाभादि गौणं फलमिह विवक्षितं तथा सति सूदादेस्तादृशफलसत्त्वेन सूदः पचते ऋत्विजो यजन्ते इत्यादिप्रयोगापत्तेः । किन्तु फलतीतिव्युत्पत्त्या प्रयोजनापरनामकक्रियाजन्यतृप्तिस्वर्गादिरूपमेव मुख्यं फलं ग्राह्यं यथोक्तं हरिणा "यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः । तत् प्रधानं फलं तासां न लाभादि प्रयोजनमिति" । प्रसिद्ध्यर्थं निष्पत्त्यर्थं पचादयः पाकादयः तासां पचादीनां प्रधानं फलं तदित्यर्थः फलस्य प्राधान्यञ्चेतरापेक्षया बोध्यं तेन इतरेच्छानधीनेच्छाविषयत्वस्य तस्य सुखादिष्वेव सत्त्वेऽपि क्वचित् साक्षात्सुखादिरूपप्रयोजनालाभे तत्साधनरूपेतरफलस्यापि ग्रहणमिति द्रष्टव्यम् तेन "अपाद्वदः" पा० इत्यादिसूत्रविहिततङः सुखादिरूपमुख्यप्रयोजनाभावेऽपि कर्तृवाचकत्वम्" ।

कर्त्तुरभिप्रायो यत्र । २कर्त्तुरभिप्रायविषये त्रि० उक्तपाणिनिसूत्रस्य "आत्मनेपदमपि कर्त्रभिप्रेतक्रियाफलमात्रजनकत्वेनेति" शब्दचि० व्याख्यानात्तदर्थता अत एव पा० सूत्रस्योभयार्थता । तदेतत् शब्द० प्र० विवृतं यथा "अत्रोभयपदिधातूनां यत्र क्रियाफलं कर्तृनिष्ठं तत्रात्मनेपदं यत्र च कर्तृभिन्ननिष्ठं तत्र परस्मैपदं साधु "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति सूत्रे च कर्त्तारमभिप्रैति सम्बध्नातीति व्युत्पत्त्या कर्तृसम्बद्धे क्रियाफल एवात्मनेपदस्य विधानात् । अतएव "स्वरिज्ञिण्ण्यन्तधातूनां कर्तृनिष्ठे क्रियाफले । आत्मनेपदमुद्दिष्टं तदनिष्ठे पदान्तरम्" इत्यपिशालीयाः पठन्ति । तदनुसृत्यैव दानादिस्थले स्वगते फले ददे इत्येवं, परगते तु ददानीत्येव वाक्यं प्रयुञ्जते वृद्धाः । "स्वर्गकामोयजेत" इत्यादौ च सामान्यतः श्रुतमपि फलं कर्तृनिष्ठमेव "शास्त्रदेशितं फलमनुष्ठातरीति" मीमांसयोत्सर्गतस्तथा कल्पमादिति प्राहुः । चिन्तामणिकृतस्तु यत्र क्रियाफले कर्त्तुरभिप्राय इच्छा तत्रैवात्मनेपदमिति सूत्रार्थस्तेन याजकाद्यैर्दक्षिणादिलाभेच्छयैव यागादिकरणे यजन्ति याजकाः पठन्ति पाठकाः इति परस्मैपदम् । परगतस्यापि याग दिफलस्येच्छया तत्करणे तु यजन्ते याजका इत्यादिकः साधुरेव प्रयोगोऽतएव "पितृस्वर्गकामः पुत्रकरिष्णुर्यजेत" इत्यादावप्यात्मनेपदम् "धनकामोगणपतिं स्तुतिकामोऽर्च्चयेद्धरिम्" इत्यादौ च परस्मैपदं सङ्गच्छते" इत्याहुः । [अकर्द्दीत् चकर्द्द प्रनिकर्द्दति ।

**कर्द्द** कुत्सितरवे उदरशब्दे च भ्वा० पर० अक० सेट् । कर्द्दति

**कर्द्द** पु० कर्द्द—अच् । कर्द्दमे । शब्दर० ।

**कर्द्दट** पु० कर्द्दं कर्दमं कारणत्वेनाटति प्राप्नोति अट—अच् ईत० शक० । १करहाटे पद्मकन्दे २कर्द्दमगन्तरि त्रि० । मेदि० । कर्द्द—अटन् । ३पङ्के पु० मेदि० ।

**कर्द्दन** न० कर्द्द—भावे ल्युट् । उदरशब्दे हेमच० ।

**कर्द्दम** पु० कर्द्द—अम । (कादा) १पङ्के अमरः । "सरितः कुर्वती गाधाः पथश्चाश्यानकर्द्दमान्" रघुः । करणे अम । २पापे उणादिकोषः । तस्य कुत्सितशब्दहेतुत्वात्तथात्वम् । ३मांसे न० शब्दचि० । तत्सेवने हि उदरशब्दोजायते इति तस्य तथात्वम् । कर्दमच्छाया कारणत्वेनास्त्यस्य अर्श० अच् । ब्राह्मणच्छायाजाते ४प्रजापतिभेदे । "छायायाः कर्द्दमोजज्ञे देवहूत्याः पतिः प्रभुः" भाग० ३,१२,१४, "प्रजाः सृजेति भगवान् कर्द्दमो ब्रह्मणोदितः । सरस्वत्यां तपस्तेपे सहस्राणां समा दश । ततः समाधियोगेन क्रियायोगेन कर्द्दमः । संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम्" भाग० ३,२१, अष्टमश्लोकादौ । ततः कपिलस्य प्रादुर्भावोवर्णितः । तन्नामनिरुक्तिः" ब्रह्मवै० पु० ब्र० ख० दर्शिता यथा । "वेदेषु कर्दमः शब्दश्छायायां वर्त्तते स्फुटम् । बभूव कर्दमाह्वानः कर्दमस्तेन कीर्त्तितः" । तेन ५छायायामपि । ततः ऋश्यादि० चतुरर्थ्यां क । कर्दमक पङ्कसन्निकृष्टदेशादौ त्रि० कर्दमोजातोऽस्य तारका० इतच् । कर्दमित जातकर्दमे त्रि० । अर्श० मत्वर्थे अच् । कर्दम ६कर्दमयुक्ते त्रि० । काश्या० चतुरर्थ्यां ठञ् ञिठौ कार्दमिक कर्दमसन्निकृष्टदेशादौ त्रि० ठञि स्त्रियां ङीप् । मत्वर्थे इनि कर्द्दमिन् पु० तद्युक्ते त्रि० सुहृच्चे पु० वैद्य० तस्य कर्दमसमीपजातत्वात्तथात्वम् । पृषो० कर्द्दमीत्यपि तत्रार्थे ।

**कर्द्दमक** पु० कर्दमे कायति प्रकाशते कै-क । शालिभेदे,

तस्य पङ्के एव हि प्ररोह इति तस्य तथात्वम् । “रक्तशालिमहाशालिकलमशकुनाहृतसुगन्धककर्द्दमकनीवारकोद्रवोद्दालकश्यामाकगोधूमवेणुयवादयः” सुश्रु० ।

**कर्द्दमाटक** पु० कर्द्दमे इव आटीमतिरत्र कप् । विष्ठादिमलोपस्थाने शब्दरत्ना० । [प्रचुरकर्दमयुक्तदेशे ।

**कर्द्दमिनी** स्त्री कर्दमानां देशः पुष्करा० देशे इनि ।

**कर्पट** पुंन० कृ-कर्म्मणि विच्—कर्-पटः कर्म्म० । १लक्तके जीर्णवस्त्रखण्डे (लातावानि), २मलिनवस्त्रे । करस्थः पटः शाक० । घर्म्मादिमार्जनार्थं हस्तन्यस्ते । ३वस्त्रखण्डे । ४कषायरक्ते वस्त्रे च । ‘नीलशैलस्य पूर्व्वस्मिन् स्वरूपं प्रतिपादितम् । नाभिमण्डलपूर्व्वस्यां भस्मकूटस्य दक्षिणे । पूर्व्वस्यां कर्पटो नाम पर्व्वतोयमरूपष्टक”कालिका ८१अ० उक्ते । ५पर्व्वतभेदे पु० । [कादौ शब्दरत्ना० ।

**कर्पटिक** त्रि० कर्पट—अस्त्यर्थे ठन् । कर्पटवस्त्रयुक्ते भिक्षु-

**कर्पण** पु० कृप-ल्युट् कृशा० लत्वाभावः । आयसे शस्त्रभेदे । “चापवक्रकणपकर्पणप्रासपट्टिशमुषलतोमरादिप्रहरणजालसुपयुञ्जानः” दशकु० ।

**कर्पर** पु०कृप्-अरन् लत्वाभावः । १कपाले घटावयवे २शीर्षास्थनि, अमरः (माथार खुली), ३शस्त्रभेदे (कात) ४कटाहे च मेदिनी ५उदुम्बरे वृक्षे शब्दच० ।

**कर्परांश** पु० ६त० । कपालांशे (खापरा) शब्दचि० ।

**कर्पराल** पु० कर्पर इवालति अल-अच् । पर्व्वतपीलुभेदे । (आखरोट) कन्दराले रमानाथः ।

**कर्पराशिन्** पु० कर्परेऽश्नाति अश-भोजने णिनि । वटुकभैरवे । “श्मशानवासी मांसाशी कर्पराशी मखान्तकृत्” वटुकस्तवः । [त्थम् । कर्परोरूपे तुत्थे हेम० ।

**कर्परिकातुत्थ** कर्पर्य्येव स्वार्थे कन् कर्परिका सैव तु-

**कर्परी** स्त्री कृप-अरन्—लत्वाभावः गौ०ङीष् ।१दारुहरिद्राक्षारभवे तुत्थे(तुँते) अम० ।२रसके भावप्र० खर्परीति वाऽत्र पाठः । रसकश्चोपरसभेदः उपरसभेदाश्च उपरसशब्दे उक्ताः भावप्र० तद्गुणाद्युक्तं यथा “कर्परी(खर्परी)तुत्थकं तु यादृग्तद्रसकं स्मृतम् । ये गुणास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृताः” । तुत्थसामान्यं तु नोपरस इति भेदः ।

**कर्पास** पुंन० कृ-पास ।वस्त्रहेतुतूलयोनौ (कापास) वृक्षभेदे अमरः । गौरा०ङीष् । तत्रैव स्त्री भावप्र० । “कर्पासी तुण्डकेरी च समुद्रान्ता च कथ्यते । कर्पासिका लघुः कोष्णा मधुरा वातनाशिनी । तत्पलाशं समीरघ्नं रक्तकृन्मूत्रवर्द्धनम् । वल्कलं पिडकानाशि पूयस्रावविनाशनम् । तद्बीजं स्तन्यदं वृष्यं स्निग्धं कफकरं गुरु” इति तत्रोक्तेः ।

**कर्पासफल** न० ६त० । (माकाटी) कर्पासीवीजे ।

**कर्पूर** पुंन०कृप्—खर्जू०ऊर लत्वाभावः । स्वनामख्याते गन्धद्रव्ये, तद्गुणाः भावप्र० उक्ताः, यथा “कर्पूरः शीतलो वृष्यश्चक्षुष्यो लेखनो लघुः । सुरभिर्मधुरस्तिक्तः कफपित्तविषापहः । दाहतृष्णास्यवैरस्यमेदोदौर्गन्ध्यनाशनः । कर्पूरो द्विविधः प्रोक्तः पक्वापक्वप्रभेदतः । पक्वात् कर्पूरतः प्राहुरपक्वं गुणवत्तरम् । (अथ चिनिआ कर्पूर) “चीनाकसंज्ञः कर्पूरः कफक्षयकरः स्मृतः । कुष्ठकण्डूवमिहरस्तथा तिक्तरसश्च सः । कर्पूरो नूतनस्तिक्तः स्निग्धश्चोष्णस्तु दाहदः । चिरस्थो दाहशोषघ्नः स शीतः शुभकृत् परः” । तस्य च “पोताशः भीमसेनः शितकरः शङ्करावालुकसंज्ञःपांशुःपिञ्जः अब्दसारः हिमवालुकः जूतिका तुषारः हिमशीतलः पत्रिकाख्यभेदात् द्वादश भेदा राजनि० । ततः काश्या० चतुरर्थ्याम् इल । कर्पूरिल तत्सन्निकृष्टदेशादौ त्रि० । शुभ्रादिपाठात् तन्नामके । २नरभेदे तस्यापत्यं शुभ्रा०ढक् । कार्पूरेय तदपत्ये पुंस्त्री । [कर्चूरे शब्दच० ।

**कर्पूरक** पु० कर्पूर इव कायति कै—क । (कचुर) नामद्रव्ये

**कर्पूरतिलका** स्त्री उमासखीभेदे विजयायाम् शब्दमाला ।

**कर्पूरतैल** न० कर्पूरस्य तैलमिव स्नेहः । कर्पूरस्नेहरूपे हिमतैले तैलभेदे राजनि० । “कटूष्णं हिमतैलं स्यात् कफवातामयापहम् । दन्तदार्ढ्यकरं पित्तकारकं परिकीर्त्तितम्” राजनि० ।

**कर्पूरनालिका** स्त्री “घृताढ्यया समितया लम्बं कृत्वा पुटं ततः । लवङ्गोल्वणकर्पूरयुतया सितयाऽन्वितम् । पचेदाज्येन सिद्धैषा ज्ञेया कर्पूरनालिका । संयावसदृशी ज्ञेया गुणैः कर्पूरनालिका” भावप्र० उक्ते पाकभेदसिद्धे भक्ष्यभेदे ।

**कर्पूरमणि** पु० कर्पूरवर्णो मणिः । रत्नभेदे, “कर्पूरमणिनामायं युक्त्या वातादिदोषनुत्” राजनि० । कर्पूराश्मादयोऽप्यत्र पु० ।

**कर्पूररस** पु० कर्पूर इव श्वेतोरसः पारदः । पाकविशेषेण कर्पूरवत्कृते पारदे रसकर्पूरे तत्पाकप्रकारः भावप्र० उक्तो यथा—

“अथ कर्पूररसस्य विधिः तत्र पारदस्य संक्षिप्तं शोधनं कर्त्तव्यम् । शुद्धसूतसमं कुर्य्यात् प्रत्येकं गैरिकं सुधीः । इष्टिकां खटिकां तद्वत्स्फटिकां सिन्धुजन्म च । वल्मीकं क्षारलवणं भाण्डरञ्जकमृत्तिकाम् । सर्व्वाण्येतानि सञ्चूर्ण्य वास-

वा चापि शोधयेत् । खटिका(खरी)(स्फटिका)(फटकिरी) सिन्धुजन्म सैन्धवम् । वल्मीकम् (वइमाटी) चारलवणम् (खारिलोण)भाण्डरञ्जकमृत्तिका(कावित्ता)। एभिश्चूर्णैर्युतं सूतं यावद्याम' विमर्दयेत् । तच्चूर्णसहितं सूतं स्थाली-मध्ये परिक्षिपेत् । तस्याः स्थाल्यामुखे स्थालीमपरां धारयेत् समाम् । सत्वस्थापितमृदा सुद्रयेदनयोर्मुखम् । संयोग्य सुद्रयेद्भूयो भूयः संशोष्य सुद्रयेत् । सम्यग्विशोष्य सुद्रां तां स्थालीं चुल्ल्यां विधारयेत् । अग्निं निरन्तरं दद्याद्यावद्दिनचतुष्टयम् । अङ्गारोपरि तदन्यं रक्षेद्यत्नादहर्निशम् । शनैरुद्घाटयेदन्त्यमूर्ध्वस्थालीगतं रसम् । कर्पूरवत् सुविमलं ग्लानीयात्सुगुणवत्तरम् । तदेव कुसुमचन्दनकस्तूरीकुङ्कुमैर्युक्तम् । खादन् हरति फिरङ्गव्याधिं सोपद्रवं सपदि । विन्दति वह्निदीप्तिं पुष्टिं वीर्यं बलं विपुलम् । रमयति रमणीशतकं रसकर्पूरस्य सेवकः सततम्" ।

**कर्पूरस्तव** पु॰ कर्पूरशब्दघटितः स्तवः । "कर्पूरं मध्यमान्त्यस्वरपरिरहितम्" इत्यादिके तन्त्रोक्ते श्यामास्तवभेदे ।

**कर्पूरा** स्त्री कृप-खर्जू॰ ऊर-लत्वाभावः । हरिद्राभेदे । "दार्वी मेदासगन्धा च सुरभी दारुदारु च । कर्पूरा पद्मपत्रा स्यात् सुरोमत् सुरतावकाः" भावप्र॰ तत्पर्यायः । मदनपाले तु हरिद्रायाः पञ्चधा विभागमुक्त्वा तद्गुणा उक्ताः, यथा "दार्वी दारुहरिद्रा स्यात् पीतदारु च पञ्चधा । कटङ्कटेरी पीतद्रुः स्वर्णवर्णा कटङ्कटी । दार्वी तद्वद्विशेषात्तु मूत्रकर्णास्यरोगनुत्" ।

**कर्पूरिन्** त्रि॰कर्पूरोऽस्त्यस्य इनि । कर्पूरयुक्ते ततः सुवास्त्वा॰ चतुरर्थ्याम् अण् । कार्पूर तस्यादूरभवदेशादौ त्रि॰ ।

**कर्फर** पु॰ कीर्यते विच् फल्यते फलः प्रतिविम्बः कः कीर्यमाणः फलः प्रतिविम्बं यत्र लस्य रः । दर्पणे जटाधरः तत्र हि प्रतिविम्बस्य पतनात् तस्य तथात्वम् ।

**कर्ब** गतौ भ्वा॰पर॰सक॰सेट् । कर्बति अकर्बीत् । चकर्ब ।

**कर्बु** पु॰कर्ब-उ । १चित्रवर्णे २तद्वति त्रि॰"अनन्ता रसयस्तस्य दीपवद्यः स्थितो हृदि । सिताश्शिताः कर्बुनीलाः कपिलाः पीतलोहिताः"याज्ञ॰ । स्वार्थे कन् सत्रार्थे

**कर्बुदार** पु॰कर्बुः सन् दारयति मलं ह-णिच्-अच् कर्म॰ । १कोविदारवृक्षे २श्वेतकाञ्चने च रत्नमा॰३नीलझिण्ट्यां शब्दच॰ । "कोविदारकर्बुदारारिष्टेत्यादि" सुश्रु॰ । तस्य तैलन्तु मधुरम् । "पियालकर्बुदारस्थं बल्लीतपुन्नागैरक-कर्णीकुष्माण्डप्रभृतीनां तैलानि मधुराणि" सुश्रु॰ । "चञ्चूर्यूथिकेत्याद्युपक्रमे कर्बुदारकोविदारप्रभृतीनि "कषायस्वादुतिक्तानि रक्तपित्तहराणि च । कफघ्नान्यनिलं कुर्युः संग्राहीणि लघूनि च" इति सुश्रुतेन कोविदारादस्य भेदस्य निर्देशात् ततोऽस्य भेदः इति बोध्यम् ।

**कर्बुदारक** पु॰कर्बुः सन् दारयति कफं ह-णिच्-ण्वुल् । श्लेष्मान्तकवृक्षे राजनि॰ ।

**कर्बुर** पु॰ कर्ब-गतौ मद्रा॰उरच् । १चित्रवर्णे सवर्णे इतरवर्णेन सह संपर्कादस्य तथात्वम् । २तद्वति त्रि॰"पर्यर्ङ्कभेदकपोत-कर्बुरम्"कुमा॰। कोषमध्योऽप्ययं वयोरभेदात् दन्त्यमध्योऽपीति शब्दचि॰। ३पापे नरकादिगतिहेतुत्वात्तस्य तथात्वम् । ४नादेयशिम्बपावधान्ये राजनि॰ कर्बुरवर्णत्वात्तस्य तथात्वम् । ५जले न॰ मेदि॰ मोचगतित्वात्तस्य तथात्वम् । कर्व-दर्पे, मद्रुरा॰ उरच् दन्त्यमध्यः । ६स्वर्णे न॰ मेदि॰ इतरधातुभ्यस्तस्योत्कर्षेण दर्पयोगात्तथात्वम् । तन्नामनामके ७धुस्तूरे च अम॰ । दन्तठ्याम् अमरटीका ८राक्षसे पु॰अमरे पाठान्तरम् दर्पयुक्तत्वात्तस्य तथात्वम् । १०कृष्णदक्षायां (पावल) स्त्री टाप् मेदि॰ ११वर्बरायां (गावुइ तुलसी) स्त्री जटा॰ गौरा॰ ङीष् कर्बुरी । १२दुर्गायां स्त्री त्रिका॰ ।

**कर्बुरफल** पु॰ कर्बुरं फलमस्य । साकरुण्डवृक्षे राजनि॰

**कर्बु(र्बू)र** पु॰कर्ब-गतौ कर्व-दर्पे वा खर्जूरा॰ऊर । १राक्षसे उणा॰ । २शट्यां च अमरः ३कर्चूरे (कांचा) हरिद्रायाम् शब्दर॰। भावप्र॰कर्चूर इत्येव पाठः । ४सुवर्णे ५हरिताले न॰ शब्दचि॰ वैजयन्त्याम् कर्चूरमिति पाठः कर्चूरशब्दे उदा॰ । ६चित्रवर्णे पु॰७तद्वति त्रि॰ अमरटीका स्वार्थे कः । कर्बूरकस्तत्रार्थेषु ।

**कर्मकर** त्रि॰ कर्म करोति अन्यः कृ-ट । वेतनेन कर्मकारके स्त्रियां ङीप् ।"प्रोचुः प्राञ्जलयः स्त्रियः वयं कर्मकरीस्तुभ्यम्" भाग॰ ३,२३,२६ । अतः स्थाने यस्याणिः । ताच्छील्ये ट । २दासे कर्मकरसंयोगे "चिकित्सकौ कर्मकरौ कामरूपसमन्वितौ । लोके चरन्तौ मर्त्यानां कथं सोममिहार्हतः ?" भा॰ व॰१२४ अ॰ । "नाभुक्तवति नास्नाते नासंविष्टे च भर्त्तरि । न संविशामि नाश्नामि सदा कर्मकरेष्वपि" भा॰व॰२३२ । स्त्रियां ङीप् । कृ-हिंसायां सन् कर्म हिंसां करोति हेत्वादौ ट । ३यमे पु॰ मेदि॰ । सर्वप्राणिहिंसायां तस्याधिकततया च तस्य तथात्वम् । ४मूर्वालतायाम् स्त्री मेदि॰ । कर्मकरस्य दासभेदत्वात् भेदकर्मादिकं मिता॰नारदेनोक्तं यथा । "शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः । चतुर्विधः

कर्मकरास्तेषां दासास्त्रिपञ्चकाः। शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत्। एते कर्मकरा ज्ञेया दासास्तु गृहजादयः। सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः। जातिकर्मकरस्तूक्तो विशेषोवृत्तिरेव च। कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च। अशुभं दासकर्म्मोक्तं शुभं कर्मकृतां स्मृतम्। गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्। गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्। अशुभकर्म विज्ञेयं शुभमन्यदतः परम्” इति—“तत्र शिष्योवेदविद्यार्थी। अन्तेवासी शिल्पादिषु। मूल्येन यः कर्म्म करोति स भृतकः। कर्म्मकुर्वतामधिष्ठाता अधिकर्म्मकृत्। अशुचिस्थानम् उच्छिष्टप्रक्षेपणार्थं गर्तादिकम्। अवस्करः गृहमार्जितपांस्वादिनिचयस्थानम्। उज्झनं त्यागः। भृतकश्चात्र त्रिविधः। तदुक्तम् “उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः। अधमोभारवाही स्यादित्येवन्त्रिविधोभृतः” इति।

**कर्म्मकर्त्तृ** पु० कर्मैव कर्त्ता। व्याकरणोक्ते कर्मणः कर्तृत्वविवक्षया प्राप्तकर्तृत्वभावे कर्मणि।“क्रियमाणन्तु यत् कर्म स्वयमेव प्रसिध्यति। सुकरैः स्वैर्गुणैः कर्त्तुः कर्मकर्त्तेति तद्विदुः” व्या०का०। कर्मकर्त्तरि च कार्यभेदातिदेशमाह “कर्मवत् कर्मणा तुल्यक्रियः” पा०। सि०कौ० विवृतमेतत् यथा

“कर्त्तरि तु कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवत् स्यात्। कार्य्यातिदेशोऽयम्। तेन यगात्मनेपदचिण्चिण्वदिटः स्युः। कर्त्तुरभिहितत्वात्प्रथमा। पच्यते ओदनः। भिद्यते काष्ठम्। अपाचि। अभेदि। ननु भावे लकारे कर्त्तुर्द्वितीया स्यादस्मादतिदेशादिति चेन्न लकारवाच्य एव कर्त्ता कर्मवत्। लिङ्याशिष्यङिति द्विलकारकात् इत्यनुवृत्तेः भावे प्रत्यये च कर्त्तुर्लकारेणानुपस्थितेः। अतएव कृत्यक्तखलर्थाः कर्मकर्त्तरि न भवन्ति किन्तु भाव एव। भेत्तव्यं कुसूलेन। ननु पचिभिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवनञ्च। सैवेदानीङ्कर्त्तृस्था न तु तत्तुल्या? सत्यम्। कर्मत्वकर्त्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रियाया भेदमाश्रित्य व्यवहारः। कर्मणेति किम्? करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साध्वसिरित्यादौ मा भूत्। किञ्च—कर्त्तृस्थक्रियेभ्यो मा भूत्, गच्छति ग्रामः, आरोहति हस्ती, अधिगच्छति शास्त्रार्थः, स्मरति श्रद्दधाति वा। यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते, यथा पक्वेषु तण्डुलेषु, यथा वा छिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया, नेतरत्र। न हि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते। करोतिरुत्पादनार्थः। उत्पत्तिश्च कर्मस्था, तेन कारिष्यते घट इत्यादि। यत्नार्थत्वे तु नैतत्सिध्येत्। ज्ञानेच्छादिवद्यत्नस्य कर्त्तृस्थत्वात् एतेन अनुव्यवसाये ऽथ” इति व्याख्यातम् इदमस्माभिः सरलायां व्याख्यातम् यथा—“तत्प्रवृत्तिमात्रे कर्त्तृत्वं सर्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसम्भवः” इति वाक्यमनुरुन्धानः कर्त्तृत्वकर्मत्वादिकं व्यवस्थाप्य कार्य्यविशेषाय कर्मातिदेशकसूत्रमवतारयति कर्त्तरि त्विति। कर्मस्थया कर्ममात्रस्थया क्रियया फलेन “फलव्यापारयोर्धातुः” इत्युक्तेः “धातोरर्थः क्रियोच्यते” इत्युक्तेश्चेत्यर्थः। तुल्यक्रियः समानाधिकरणक्रिय इत्यर्थः। किञ्च कर्मस्थभावकएव कार्य्यातिदेशार्थं कर्मणेति पदम् “कर्मस्थेऽपि च धात्वर्थे कर्मकर्त्ता च कर्मवत्। कर्त्तृस्थेऽपि च धात्वर्थे कर्मकर्त्ता च कर्त्तृवत्” इत्युक्तेः “कर्मस्थः पचतेर्भावः कर्मस्थाश्च भिदादयः” इत्युक्तेः भिदादयः कर्ममात्रस्थाः। गमनादयस्तु कर्त्तृस्थाः “कर्त्तृस्थो बुध्यतेर्भावः कर्त्तृस्थाश्च गमादयः” इत्युक्तेः। “व्यत्ययो-बहुलं लिङ्याशिष्यङिति” सूत्रयोः सन्धिजातद्विलकारमध्ये एकलकारस्यानुवृत्तेरित्यर्थः। कृत्यक्तखलर्था इत्यत्र क्तग्रहणं प्रायिकं सिनोग्रास इत्यादौ कर्मकर्त्तरि क्तस्य दर्शनादिति बोध्यम्। वास्तविकभेदाभावेऽप्यौपाधिकभेदोऽस्तीत्याह कर्मत्वकर्त्तृत्वावस्थेति तथा चावस्थाभेदेन क्रियाभेदात् कर्त्तुः कर्मस्थक्रियया तुल्यक्रियत्वमिति भावः। नेतरत्रेति। “निर्वर्त्त्ये च विकार्य्ये च कर्मवद्भाव इष्यते। न तु प्राप्ये कर्मणीति सिद्धान्तोऽयं व्यवस्थितः” इतिहर्य्युक्तेः क्रियाकृतविशेषवतोरेव निर्वर्त्त्यविकार्य्ययोः कर्मवद्भावो न तु तद्रहिते प्राप्य इति सिद्धान्तो द्योतित इति भावः” अत्र च यथा वोधाधिक्यं तथा शब्द०प्र० उक्तं यथा

“कैय भिद्यते अभेदि कुसूलः स्वयमित्यादौ भिदाद्यनुकूलव्यापारवत्त्वरूपस्य तत्कर्तृत्वस्य कथं कुसूलादावन्वयः भिदादेः परस्मैपदित्वेन तदर्थधर्म्मितया कर्तृत्वबोधने पदान्तरस्यासामर्थ्यात् यगिण्योर्विगुणत्वाच्चेयत आह। एकक्रियाधर्म्मितया कर्तृता कर्मतोभयोः। बोधने कर्म्मताकाङ्क्षापेक्ष्योत्सर्गतोभवेत्। कर्म्मताकाङ्क्षा कर्म्मतान्वयस्यैवानुकूला आत्मनेपदयगादिसमभिव्याहाररूपाकाङ्क्षा व्युत्पत्तिवैचित्र्यादपेक्षणीया न तु कर्तृत्वान्वयस्य परस्मैपदविकरणादिसन्दंशरूपा यद्येवं तण्डुलश्चैत्रो पच्यते इत्यपि प्रयोगः

स्यात् शामन्योर्मिथोविरोधेन विभिन्नकर्म्मावच्छिन्ने प्रत्ययानां युगपत्कर्त्तृताकर्म्मत्वयोरनुभावकत्वस्याव्युत्पन्नत्वात्। अतएव पचेलिमौ मैत्रतण्डुलावित्यादिकोन प्रयोगः "आत्मने भौव्यधातूनां सनन्तण्यन्तयोः किरः। अन्वियमन्थ्योस्तथा ब्रूञः कर्त्तृकर्मत्वबोधने। यगिणौ न दुहेर्नौ यगजन्तस्य च तस्य च। इण् वा स्यादुक्तधातूनां नित्यं तत्रात्मनेपद"मिति हद्रस्तुतेः। स्वयं विकुरुते युवेत्यादौ, स्वयं चिकीर्षते कट इत्यादौ, स्वयं कटः कारयते गौरुत्पुच्छयते चोरयते इत्यादौ, स्वयमेव किरते करीत्यादौ, स्वयं श्रथ्नीते ग्रथ्नीते वा मालिकेत्यादौ, स्वयं ब्रूते कथेत्यादौ, स्वयं दुग्धे गौरित्यादौ, धात्वर्थकर्त्तृकर्म्मत्वयोर्युगपदन्वये कर्म्मत्वान्वयानुकूलस्य यकोनापेक्षा, तथा स्वयं व्यकृत युवा, स्वयमचिकीर्षत कट इत्यादौ, इणोऽपि एवं स्वयमलावि अलविष्ट वा केदार इत्यादौ, स्वरान्तस्य धातोः स्वयमदुग्ध अदोहि वा गौरित्यादौ, दुहेश्चोभयभानार्थमिणोऽनावश्यकत्वमतउक्तमुत्सर्गतइति। "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः" (कुमा०) इत्यादौ तु यकोगतिश्चिन्त्या। ननु शाकः पचता भुज्यते इत्यादितः कुतः पाकादौ शाकादिकर्मत्वावगमः सुवर्थस्यैव कर्मत्वस्य धात्वर्थे धर्म्मिण्यि साकाङ्क्षत्वादत आह। स्वकर्मकैकधात्वर्थकर्त्तृकापरकर्मता। यत्रान्वेत्यस्य कर्मत्वे प्रथमैवानुशिष्यते। स्वकर्मताकत्वविशिष्टैकधात्वर्थकर्त्तृकर्त्तृकस्यापरस्य धातुनिपातयोरन्यतरार्थस्य कर्मत्वं यत्र धर्म्मिण्यन्वेति तदीयत्वेनानुभाव्ये कर्म्मत्वे प्रथमैवानुशिष्यते नतु द्वितीयादिरपेक्ष्यते तेन शाकः स्वकर्मताकपाककर्त्तृकर्त्तृताकभोजनकर्मतावानित्याद्यन्वयधीस्तत्र स्यात्। अतएव "प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशते" इति पठन्ति। शक्तिः कारकमिति शाब्दिकाः। कर्मतामात्रन्तु ज्यायः, तेन हरेन पचता भुज्यते शाक इत्यादौ नाभिहिताधिकारीयप्रथमा शक्तिः"।

अत्राभिहिताधिकारीयप्रथमाशक्तिरिति तु अनभिहिताधिकारीया न तृतीयाशक्तिरित्येतत् परम् अभिहिते प्रथमा इत्येवमधिकाराभावात् अनभिहिते इत्यस्यैवाधिकारादिति चिन्त्यम्। ६त०। २कर्मकारके त्रि०। स्त्रियां ङीप्। कृ-क्विप् ६त०। कर्मकृदप्यत्र। कर्मकरशब्दे उदा०।

**कर्म्मकाण्ड** न० कर्मणां कर्त्तव्यताप्रतिपादकं काण्डम्। कर्मणां कर्त्तव्यताप्रतिपादके वेदभागे कर्मकाण्डस्यारम्भप्रयोजनञ्च बृह० उ०भाष्ये दर्शितं यथा। "तत्रास्य कर्म्मकाण्डेन सम्बन्धोऽभिधीयते। सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात्। दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वान्नागमान्वेषणा। न चासति जन्मान्तरसम्बन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात् स्वभाववादिदर्शनात्। तस्माज्जन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्त्तते। "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इत्युपक्रम्य "अस्तीत्येवोपलब्धव्यः" इत्येवमादिनिर्णयदर्शनात्। "यथा च मरणं प्राप्य" इत्युपक्रम्य "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म्म यथाश्रुतम्" इति च, स्वयं ज्योतिरित्युपक्रम्य "तं विद्याकर्म्मणी समन्वारभेते पुण्योवै पुण्येन कर्म्मणा भवति"। ज्ञपयिष्यामीत्युपक्रम्य "विज्ञानमयः" इति च व्यतिरिक्तात्मास्तित्वम्। तत्प्रत्यक्षविषयमेवेति चेन्न वादिविप्रतिपत्तिदर्शनात्। न हि देहान्तरसम्बन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युः नास्त्यात्मेति वदन्तः। न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट इति। स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत् न निरूपितेऽभावात्। न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति। वैनाशिकास्त्वहमिति प्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते। तस्मात् प्रत्यक्षविषयवैलक्षण्यात् प्रत्यक्षाद्ध्यात्मास्तित्वसिद्धिः। तथानुमानादपि। श्रुत्यात्मास्तित्वे लिङ्गस्य दर्शितत्वात् लिङ्गस्य च प्रत्यक्षविषयत्वान्नेति चेत् न जन्मान्तरसम्बन्धस्याग्रहणात् आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्चाहम्प्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवानीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चात्मेति। सर्वथाप्यस्त्यात्मा देहान्तरसम्बन्धीत्येवं प्रतिपत्तुर्देहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्म्मकाण्डं समारब्धम्"। अधिकारिभेदेनैव कर्मकाण्डे प्रवृत्तिः "लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ!। ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्" इति गीतायामपि द्वैविध्योक्तेः अतएव "तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन यज्ञेन

तपसा नाशकेन" इति श्रुत्यैव कर्म्मणां विविदिषाहेतुतोक्तेः विविदिषयाऽपि कर्मकाण्डप्रतिपाद्यकर्म्मणामुपयोग इत्याकरे स्थितम् ।

**कर्म्मकार** त्रि॰ कर्म्म करोति अभृत्या अण् उप॰स॰ । विना वेतनेन १कर्म्मकारके (बेगार) (कामार) इति प्रसिद्धे सङ्कीर्णजातिभेदे जातिशब्दे विवृतिः । "हरिणाक्षि ! कटाक्षेण आत्मानमवलोकय । नहि खड्गो विजानाति कर्म्मकारं स्वकारणम्" उद्भटः ।

**कर्म्मकारिन्** त्रि॰ कर्म्म करोति कृ—णिनि स्त्रियां ङीप् । कर्म्मकारके "तान् विदित्वा सुचरितैर्गूढैस्तत्कर्म्मकारिभिः" मनुः

**कर्म्मकीलक** पु॰ कर्म्मणा कीलक इव । रजके जातिभेदे । त्रिका॰ । [कर्म्मक्षम देह चात्तोधर्म्म इवाश्रितः" रघुः ।

**कर्म्मक्षम** त्रि॰ कर्म्मणि क्षमः ७त॰ । कर्मकरणसमर्थे "आत्म-

**कर्म्मक्षेत्र** न॰ कर्म्मणां क्रियानुष्ठानानां क्षेत्रम् । जम्बुद्वीपान्तर्गते नवसु वर्षेषु अनुष्ठानदेशे भारते वर्षे । नववर्षाण्युक्त्वा "अत्रापि भारतमेव वर्षं कर्मक्षेत्रम् । अन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमस्वर्गपदानि व्यपदिशन्ति" भाग॰५,१७,१२, १३,कर्म्मभूमिरप्यत्र स्त्री । "उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः" इत्युपक्रम्य "कर्म्मभूमिरियं स्वर्गमपवर्गञ्च यच्छति" । "अत्र संप्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्ति च । तिर्य्यक्त्वं नारकित्वञ्च मध्यं चातश्च गम्यते । न खल्वन्यत्र मर्त्यानां कर्मभूमौ विधीयते" विष्णु पु॰ पराशरवाक्यम् ।

**कर्म्मग्रन्थि** पु॰ कर्म्मणां ग्रन्थिर्बन्धनमस्मात् । अज्ञानजन्यवासनारूपे दोषे तस्यैव सकलप्रवृत्तिहेतुत्वात्तस्य कर्म्मबन्धनहेतुत्वात्तथात्वम् ।

**कर्म्मचण्डाल** पु॰ कर्म्मणा चण्डाल इव । "असूयकः पिशुनश्च कृतघ्नो दीर्घरोषकः । चत्वारः कर्मचण्डाला जन्मतश्चापि पञ्चमः" वशिष्ठोक्तेषु असूयकादिषु चतुर्षु । २राहौ च । "उत्तिष्ठ गम्यतां राहो ! त्यज्यतां चन्द्रमण्डलम् । कर्म्मचण्डाल ! योगोऽयं मम पापक्षयं कुरु" ग्रहणमुक्तिस्नानमन्त्रः । राहोश्च असूयकत्वाद्दीर्घदोषवत्त्वाच्च तथात्वम् ।

**कर्म्मचित्** त्रि॰ चितवान् चि—भूते क्विप् ६त॰ । १कृतकर्म्मणि । कर्म्मणि क्विप् ६त॰ । २कर्म्मणा चीयमाने च"कर्म्मणयान् कर्म्मचितस्ते कर्म्मणैवाधीयन्ते कर्म्मणा चीयन्ते" शत॰ब्रा॰ । १०.५,३,९ ।

**कर्म्मचित** त्रि॰ कर्म्मणा चितः चि—क्त । कर्म्मनिष्पाद्ये "तद्यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितः" वेदपरि॰ श्रुतिः

**कर्म्मचेष्टा** स्त्री कर्म्मणि क्रियायै चेष्टा । क्रियानुष्ठानार्थे चेष्टायाम् "आत्मजन्या भवेदिच्छा, इच्छाजन्या भवेत् कृतिः । कृतिजन्या भवेच्चेष्टा, चेष्टाजन्या क्रिया भवेत्" इत्युक्तेः चेष्टायाः क्रियाहेतुत्वेन तथात्वम् "कर्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी" मनुः ।

**कर्म्मचोदना** स्त्री कर्म्मणि कर्म्मावबोधने चोदना विधिः । कर्म्मविषये प्रेरणारूपे विधौ "कर्म्मावबोधनं चोदना क्रियायाः प्रवर्त्तकं वचनमिति" मीमा॰ भा॰ ।
चोद्यते प्रवर्त्त्यतेऽनया बा॰करणे ल्युट् ७त॰ । २कर्मप्रवृत्तिहेतौ ज्ञानज्ञेयज्ञातृरूपेऽर्थे च । "ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना" गीता । "ज्ञानमिष्टसाधनमितिबोधः, ज्ञेयमिष्टसाधनं कर्म, परिज्ञाता तज्ज्ञानाश्रयः त्रिविधा कर्मचोदना चोद्यते प्रवर्त्त्यतेऽनयेति चोदना ज्ञानादित्रितयं कर्मप्रवृत्तिहेतुरित्यर्थः । यद्वा चोदनेति विधिरुच्यते तदुक्तं भट्टैः—"चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः" इति ततश्चायमर्थः—उक्तलक्षणं त्रिगुणात्मकं ज्ञानादित्रयमवलम्ब्य कर्मविधिः प्रवर्त्तते इति" श्रीधरः ।

**कर्म्मज** त्रि॰ कर्म्मणो कर्मजन्यादृष्टात् जायते जन—ड । कर्म्महेतुके रोगादौ । रोगादिव्याधयो हि नानाविधाः यथोक्तं भावप्र॰—

"तेषु स्वाभाविकाः केचित्केचिदागन्तवः स्मृताः । मानसाः केचिदाख्याताः कथिताः केऽपि कायिकाः । तत्र स्वाभाविकाः शरीरस्वभावादेव जाताः । क्षुत्पिपासा सुषुप्सा च जरामृत्युप्रवृत्तयः । अथवा स्वस्वभावादुत्पन्ने जाता स्वाभाविकाः सहजा इति यावत् । ते च जन्मान्धत्वादयः । आगन्तवोऽभिघातादिजनिताः । अथवा जन्मोत्तरभाविनः कामक्रोधलोभमोहभयाभिमानदैन्यपैशुन्यशोकविषादेर्ष्यासूयामात्सर्य्यप्रभृतयः । अथ वोन्मादापस्मारमूर्च्छाभ्रममोहतमः संन्यासप्रभृतयः । कायिकाः पाण्डुरोगप्रभृतयः । कर्मजाः कथिताः केचिद्दोषजाः सन्ति चापरे । कर्मदोषोद्भवाश्चान्ये व्याधयस्त्रिविधाः स्मृताः । तत्र कर्मजाः व्याधयः यत्र कारणं न दृश्यते अकर्मभवस्वेनलम्भोगनाश्यः प्रायश्चित्तनाश्यं वा ततो जाताः न तु दुष्टवातादिदोषेण जनितास्तथा । यथाशास्त्रन्तु निर्णीतो यथाव्याधिचिकित्सितः । न शर्म्म

याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः । दोषजाः मिथ्याहारविहारप्रकुपितवातपित्तकफजाः । ननु मिथ्याहारविहारिणामपि प्राक्तनसुकृतेन नैरुज्यं दृश्यत एव । ततो दोषजेष्वपि प्राक्तनं दुष्कर्मैव कारणम् तत् कथं दोषजा इत्युच्यन्ते ? । दोषजेष्वपि वस्तुतः आदिकारणं दुष्कर्म वर्त्तत एव किन्तु तत्र मिथ्याहारविहारदूषिता दोषा हेतवो दृश्यन्त इति दोषजा इत्युच्यन्त इति समाधिः । कर्मदोषोद्भवाः । स्वल्पदोषा गरीयांसस्ते ज्ञेयाः कर्मदोषजाः। अत्र कारणं दुष्कर्म प्रबलं यतो दोषाल्पत्वेऽपि व्याधेर्गरीयस्त्वन्तत्कर्मक्षयादेव क्षीणं भवति। दोषाः स्वल्पा अपि निदानत्वेनोक्ता दृश्यन्त एवेति दोषाणां कारणतां मन्यन्त इति । कर्मक्षयात् कर्मकृता दोषजाः स्वस्वभेषजैः । कर्मदोषोद्भवा यान्ति कर्मदोषक्षयात् क्षयम् । दोषजाः स्वस्वभेषजैरिति दोषजेष्वादिकारणम् दुष्कर्म तद्भेषजाथद्रव्यक्षयादिजनित दुःखभोगेन कटुतिक्तकषायाद्यहृद्यभक्षणादिजनितदुःखभोगेन च क्षयं यान्ति । शेषा दुष्टा हेतवो दोषास्ते स्वस्वभेषजैः क्षयं यान्तीत्यर्थः । २कायिकवाचिकमानसकर्मभवे स्थावरादिजन्मनि“शुभाशुभफलं कर्म मनोवाग्देहसम्भवम् । कर्मजागतयो नृणामुत्तमाधममध्यमाः” ३कर्म्मजातमात्रे पापादिदोषे च“तथा दहति वेदज्ञः कर्म्मजं दोषमात्मनः” मनुः। क्रियाजन्ये४संयोगे ५विभागे च।“अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः। कीर्त्तितस्त्रिविधस्त्वेष आद्यो ऽन्यतरकर्मजः । तथोभयक्रियाजन्यो भवेत् संयोगजोऽपरः । आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः । मेषयोः सन्निपातो यः स द्वितीय उदाहृतः । कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः। तृतीयः स्यात् कर्मजोऽपि द्विधैव परिकीर्त्तितः । अभिघातो नोदनञ्च शब्दहेतुरिहादिमः । शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत् । एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः । विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत्” भाषा० ६वेगाख्यसंस्कारे च“मूर्त्तमात्रे तु वेगः स्यात् कर्मजोवेगजः क्वचित्”भाषा०७वटवृक्षे पु० जटा० । ८कलियुगे पु०शब्दर० । क्रियाजकर्मभवादयोऽप्यत्रार्थे । ९धर्माधर्म्मरूपे गुणभेदे अदृष्टे वेदान्तिमते कर्मणः सूक्ष्मावस्थापन्ने १०संस्कारभेदे ११स्वर्गे १२नरके च अदृष्टद्वारा तयोः कर्मजन्यत्वात्तथात्वम् ।

**कर्म्मजित्** पु० जरासन्धवंश्ये मागधे नृपभेदे “अथ मागधराजानो भाविनो ये वदामि ते भविता सहदेवस्य (जरासन्धपुत्रस्य) मार्ज्जारिर्यच्छ्रुतश्रवाः । ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः । सुनक्षत्रः सुनक्षत्रात् बृहत्सेनोऽथ कर्म्मजित्” भाग० ९,२२,३० ।

**कर्म्मठ** त्रि० कर्मणि घटते कर्म्मन्+अठच् । कर्म्मनिष्पादनार्थं घटमाने ।“स कर्मठः कर्म्म सुतानुबन्ध”भट्टिः ।

**कर्म्मणि** स्त्री कर्म्म नयति समाप्तिम् नी–बा०ड णत्वम् । कर्म्मसमाप्तौ कर्त्तव्यायां प्रायश्चित्तेष्टौ । “कर्म्मणिरेव तत्र प्रायश्चित्तिः” शत० ६,६,४,९ ।

**कर्म्मण्य** त्रि० कर्म्मणा सम्पादि यत् । १कर्म्मणा सम्पन्ने धौर्य्यें सि०कौ०। कर्म्मणि साधु यत् ।२कर्मकुशले सि०कौ०। “यतो वीरः कर्मण्यः सुदक्षः” ऋ० ३,४,९ ।“अकर्मण्यं तिथिमलं विद्यादेकादशीं विना” ति०त० । ३वेतने स्त्री क्षीरस्वामी । वेतनेन हि कर्मसाधनात् तस्य तथात्वम् ।

**कर्मण्यभुज्** त्रि० कर्मण्यां वेतनं भुङ्क्ते भुज–क्विप् ईत० ङ्यापोरिति ह्रस्वः । वेतनेन कर्मकारके भरण्यभुगित्यमरपाठान्तरमिति क्षीर०।

**कर्मदेव** पु० कर्मणा देवः प्राप्तदेवभावः । १त्रयस्त्रिंशद्देवभेदे । “स एकः कर्मदेवानामानन्दः ये कर्मणा देवानपि यन्ति श्रोत्रियस्य चाकामहतस्य ते,ये शतं कर्मदेवानामानन्दाः” तै०उ० । “कर्मदेवा ये वैदिकेनाग्निहोत्रादिना केवलेन देवानपि यन्ति, देवा इति त्रयस्त्रिंशद्धविर्भुजः। इन्द्रस्तेषां स्वामी तस्याचार्य्यो बृहस्पतिः । प्रजापतिर्विराट् त्रैलोक्यशरीरो ब्रह्मा समष्टिव्यष्टिस्वरूपः संसारमण्डलव्यापी” शाङ्कर भा०। त्रयस्त्रिंशच्च देवाः आनन्दगिरिणा दर्शिताः । “अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः इन्द्रः प्रजापतिश्चेति” २कर्म्मणा देवलोकं गते च । “स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्ते अथ ये शतं कर्मदेवानामानन्दाः” शत० ब्रा०१४,७,१,२५ । ये अग्निहोत्रादिश्रौतकर्मणा देवलोकं प्राप्नुवन्ति ते कर्मदेवाः” भा० ।

कर्मदेवताऽप्यत्र स्त्री । “ज्योतिष्टोमादिना स्वर्गं प्राप्ताः स्युः कर्मदेवताः” शब्दचि० । अस्मिन् कल्पेऽश्वमेधादि कर्म कृत्वा महत्पदम् । अवाप्याजानदेवैर्याः पूज्यास्ताः कर्मदेवता” इति शब्दचि० पु० ।

**कर्म्मदोष** पु०कर्मैव दोषः,कर्म्मणि दोषः,कर्महेतुर्दोषो वा । १दुष्टे पापजनके हिंसादौ कर्मणि । “संन्यस्य सर्वकर्माणि कर्मदोषानपानुदन्” शरीरजैःकर्मदोषैर्याति

स्थावरतां नरः” मनुः। २कर्म्मजन्ये पापादौ “मनोवाग्देहजैर्नित्यं कर्मदोषैर्न लिप्यते” मनुः। “कर्मदोषैः पापैः” कुल्लू०। विहिताकरणाविहिताचरणरूपे ३कर्मविषयदोषे च। “अनेनैव गतीर्न्नृणां कर्मदोषसमुद्भवाः” मनुः। “विहिताकरणाविहिताचरणरूपकर्मदोषजन्या गतीः” कुल्लू०। ४सकलकर्म्महेतौ मिथ्याज्ञानजन्यवासनारूपे दोषे च। “दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानाम्” इत्यादि० गौत०सू०मिथ्याज्ञानजन्यवासनारूपदोषस्य सकलप्रवृत्तिरूपकर्म्महेतुत्वोक्तेस्तस्य तथात्वम्।

**कर्म्मधारय** पु० व्याकरणोक्ते समानाधिकरणपदघटिते समासाधीनलक्षणाशून्ये समासभेदे “समानाधिकरणस्तत्पुरुषः कर्मधारयः” पा०। तल्लक्षणादिकं शब्द०प्र०उक्तं यथा

“क्रमिकं यन्नामयुगमेकार्थेऽन्यार्थबोधकम्। तादात्म्येन, भवेदेष समासः कर्मधारयः। क्रमिकं यन्नामद्वयं तयोरेकस्य नाम्नोऽर्थे धर्म्मिणि तादात्म्येनापरनाम्नोऽर्थस्यान्वयबोधं प्रति समर्थं तादृशं नामद्वयं कर्मधारयः नीलोत्पलमित्यादावुत्पलादिपदस्यार्थे नीलादिपदार्थस्य तादात्म्येनान्वयं,तथा पुरुषसिंहइत्यादावपि पुरुषादावुत्तरपदलभ्यस्य सिंहादिसदृशस्य पुरुषः सिंह इवेत्यादिविग्रहे प्रायेणोपमेयस्योपमानैरिति कर्मधारयानुशासनात्। कुम्भस्य समीपमित्याद्यर्थकस्तूपकुम्भादिर्न तादात्म्येनान्वयबोधकः, प्रबलमपद्रव्यमित्यादेः संग्रहाय नामपदस्य धातुभिन्नोपलक्षकत्वात् सार्थकसामान्यपरत्वेऽपि क्षत्यभावाच्च। नीलमुत्पलमित्यादौ तु समानविभक्तिकं नामद्वयं स्वार्थयोरभेदान्वयं बोधयदपि न क्रमिकं विभक्त्या व्यवधानात्। यदि च तादात्म्येन नीलादिनामार्थस्यान्वयबुद्धौ नीलादिनामोत्तरनामोपस्थाप्यत्वं तन्त्रमतोन तत्राभेदसम्बन्धेन नीलादेरन्वयः,परन्तु विशेषणविभक्त्युपस्थापिते तादात्म्यएवाधेयत्वेन,नीलघटपटावित्यादौ च नीलपदाव्यवहितेन घटपटेत्येवंद्वन्द्वात्मकनाम्नैवोपस्थापिते घटे पटे च नीलस्य तादात्म्येनान्वयान्न व्यभिचारः। स्तोकं पचति धान्येन धनं,प्रकृत्या चटरित्यादावपि स्तोकादेर्न धात्वाद्यर्थे तादात्म्येनान्वयः किन्तु द्वितीयाद्यर्थे तादात्म्यएवाधेयत्वेनेत्यादिकं विभाव्यते तदा क्रमिकत्वमनुपादेयमेव। राजपुरुष इत्यादिकस्तु तत्पुरुषोन पूर्वपदलक्षितराजसम्बन्धिनस्तादात्म्येनान्वयबोधकससम्बन्धिशब्दयोस्तुल्यार्थकत्वहान्यापत्तेः, परन्तु राजसम्बन्धस्यैव। अतएव राजपुरुषइत्यादौ पूर्वपदे षष्ठ्यर्थसम्बन्धे लक्षणेति मणिकृदुक्तमपि सङ्गच्छते। यथा च नामार्थयोर्भेदेनान्वयेऽपि न क्षतिस्तथोपरिष्टाद्वक्ष्यते। किञ्चिद्विशिष्टसुबर्थानवच्छिन्नस्यैव वा तादात्म्येनान्वयबोधकत्वमुक्तनिरुक्तौ निवेश्यम्। नचैवमपि पञ्चपुल्यादिद्विगौ द्विगाव्यं गच्छत इत्यादिस्थलीये द्वितयाद्यभिन्नगाव्यादिबोधकाव्ययीभावे चातिव्याप्तिस्तदन्यत्वेनापि विशेषणीयत्वात्। अत्र च मानुषब्राह्मणो ब्राह्मणमानुषइत्याद्यप्रयोगाद्विशेषणविशेष्ययोर्यत्र मिथस्तादात्म्येन व्यभिचारस्तत्रैव कर्मधारयः साधुः प्रमेयधूमइत्यादौ तु नरस्य शरीरं राहोः शिर इत्यादाविव तादात्म्यसम्बन्धार्थकषष्ठ्या तत्पुरुषएवेति वृद्धाः। चन्दनतरुर्विन्ध्यगिरिर्वसन्तसमयइत्यादिप्रयोगस्य प्रामाणिकत्वात् विशेष्यस्यैव विशेषणव्यभिचारित्वं कर्मधारये तन्त्रं न तु विशेषणस्यापि तद्व्यभिचारित्वम्। पुरुषोत्तमइत्यत्र चोत्तमत्वं न नित्यज्ञानादिमत्त्वं किन्तु भ्रमविधुरत्वम्। अतएव तत्र पुरुषस्येव, पुरुषेऽपि तस्य व्यभिचारसत्त्वादुत्तमपुरुषइत्यपि कर्मधारयः साधुरिति तु नव्याः। तदाद्युत्तरपदकः कर्मधारयः प्रायशोनेष्यते नीलतदस्तीत्यादितोजात्वपि नीलोत्पलादेरसित्वाद्यप्रतीतेः। “पक्वयज्ञोजनं रम्यमामतद्भक्षनं वृथा। नीलयद्रसआस्वाद्यः कटुतद्रूपमीक्ष्यते” इत्यादिप्रयोगात् क्वचिदिष्यतेऽपि। प्रयुक्तञ्च जुमरनन्दिना परमः स इत्याद्यर्थे परमसः परमतावित्यादि। तत्पुरुषोऽप्येतेन व्याख्यातः। ननु विशेष्यतया नामार्थप्रकारकान्वयबुद्धिमात्रं प्रत्येव नामोत्तरविभक्त्युपस्थाप्यत्वं तन्त्रं नतु तादात्म्यसम्बन्धानवच्छिन्नतत्प्रकारताकबुद्धिं प्रति गौरवादतोनामार्थयोर्नीलोत्पलयोरन्वयासम्भवात् कर्मधारयादिकः समासोन यौगिकः किन्तु नीलोत्पलत्वादिविशिष्टे रूढएव तदुक्तं भर्त्तृहरिणा “अबुधान् प्रत्युपायाश्च विहिताः प्रतिपत्तये। शब्दान्तरत्वादत्यन्तं भेदोवाक्यसमासयोः” इति वैयाकरणाः,तन्मन्दं नीलोत्पलमित्यादौ समुदाये रूढ्यप्रतिसन्धानेऽपि नीलादिप्रत्येकपदोपस्थित्या तयोस्तादात्म्येनान्वयबोधस्यानुभविकत्वेन गौरवस्य प्रामाणिकत्वादन्यथा नामार्थस्यान्वयबोधसामान्यं प्रत्येव नामोत्तरनामोपस्थाप्यत्वं तन्त्रमुरीकृत्य नीलमानयेत्यादौ नामार्थसुबर्थयोर्नान्वयबोधः,परन्तु सुबन्तभागस्य नीलविशिष्टकर्मत्वादौ रूढिरेवेत्यपि किन्न रोचयेः?। नच समासस्याशक्तत्वे नीलोद्रव्यञ्च घट इत्यादाविव नीलघटोद्रव्यमित्यादावपि घटे धर्मिण्येकत्र द्वयमिति न्यायेन नीलद्रव्ययोस्तादात्म्येनान्वयापत्तिरिति वाच्यम्,

नामार्थस्य मुख्यविशेष्यताक इव तादात्म्यावच्छिन्नविधेयताकेऽपि बोधे नाम्नः प्रथमान्तत्वस्य तन्त्रत्वात्। विधेयत्वन्तु विषयतावच्छेदकतान्यप्रकारत्वं प्रकारताप्रभेदो वेतयान्यदेतत् घटमित्यादौ तु घटादिर्न तादात्म्येन विधेय इति न तत्र व्यभिचारः। ननु नीलं पीतञ्चोत्पलं यत्र इत्यर्थे नीलपीतोत्पलं सरइत्यादिको बहुव्रीहिरिव नीलं पीतञ्चोत्पलमित्यर्थे नीलपीतोत्पलं पुष्पमित्यादिकः कर्मधारयोऽप्येकत्र द्वयमिति न्यायेन नीलपीताभ्यामवच्छिन्नोत्पलनिष्ठधर्मिताकधीजनकः कथं न स्यात्? इति चेन्न "बहुपदे बहुव्रीहिरेव नेतरो द्वन्द्वान्यः समास" इत्यनुशिष्टिबलेन बहुव्रीहेरेव स्वनिविष्टनामद्वयोपस्थाप्यार्थद्वयावच्छिन्नतादृशनामान्तरार्थनिष्ठविषयताकबोधं प्रति हेतुत्वेन समासान्तरस्य तादृशधियं प्रत्यसमर्थत्वात्। नीलपीतोत्पले रम्ये पीतनीलोत्पलान्वितमित्यादौ तु नीलोत्पलं पीतोत्पलञ्च रम्यमित्याकारकएव बोधो न तु नीलं पीतञ्च यदुत्पलं तद्रम्यमित्याकारः। अतएव द्वन्द्वात् परस्य प्रत्येकाभिसम्बन्धसूचनार्थं नीलपीते च ते उत्पले चेत्यादिकमेव तत्र विग्रहं वर्णयन्ति न तु नीलं पीतञ्च तदुत्पलञ्चेत्यादिकम्। घटस्य नाधिकरणमित्यादिविग्रहे घटानधिकरणमित्यादिकस्तु मध्यपदप्रधानस्तत्पुरुषो न बहुनामगर्भो नवैकत्र द्वयमितिन्यायेन स्वार्थस्य बोधक इति सम्प्रदायविदः"।

अत्र समासे विशिष्टार्थे न शक्तिर्न वा लक्षणेति शब्दचि० स्थितौ यथा।

"कर्मधारये तु न शक्तिर्नवा लक्षणा ताभ्यां विनापि विवक्षितार्थान्वयबोधोपपत्तेः ननु नीलघटयोः सामानाधिकरण्यप्रतीतेस्तत्र लक्षणैव अन्वयप्रकारत्वादिना तस्य भाने राजपुरुषादौ षष्ठ्यर्थोपस्थितिरपि तथास्तु अत्र ब्रूमः—कर्मधारये सामानाधिकरण्यं नामार्थयोरभेदो वा गुणगुणिनोः समवायो वानुभूयते सचान्वयएव नत्वन्वयप्रतियोगी अतोऽन्वयप्रतियोगिनोरुपस्थितिर्नामपदाच्छक्त्यैवेति न तदर्थं लक्षणा। राजपुरुष इत्यत्र तु राजसम्बन्धिपुरुषयोरन्वयोऽनुभूयते। राजसम्बन्धिनश्चान्वयप्रतियोगिन उपस्थितिर्न राजपदे षष्ठ्यर्थलक्षणां विना, राज्ञः पुरुषं राजसम्बन्धिनं पुरुषं राजपुरुषमानयेत्यादौ पर्य्यायत्वाद्राजसम्बन्धिनः पुरुषेऽन्वयोभासते राजसम्बन्धी अन्वयप्रतियोगित्वेन। एवञ्च बहुव्रीहौ सर्वत्रान्यपदस्य षष्ठीतत्पुरुषे पूर्व्वपदस्य परपरतया लाक्षणिकत्वात् ताभ्यां कर्मधारयो बलवान् सर्वेषां पदानां स्वार्थपरतया मुख्यत्वात्। अतएव "एतया ऋचा निषादस्थपतिं याजयेत्" इत्यत्र कर्मधारय एव मुख्यत्वे शब्दस्वरसात् षष्ठीतत्पुरुषे च षष्ठ्यर्थे लक्षणापत्तेः"। वैयाकरणास्तु समासमात्रे विशिष्टार्थेऽतिरिक्तां शक्तिं कल्पयन्तस्तदस्वीकारे दोषं वर्णयन्ति यथा वैया०भू०

"अपि च समासे विशिष्टशक्त्यस्वीकारे राजपुरुषश्चित्रगुः नीलोत्पलमित्यादौ सर्व्वत्रानन्वयप्रसङ्गः। राजपदादेः सम्बन्धिनि लक्षणायामपि तण्डुलः पचतीत्यादौ कर्मत्वादिसंसर्गेण तण्डुलादेः पाकादावन्वयवारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुताया आवश्यकत्वात् पुरुषादेस्तथात्वाभावात्। तण्डुलः शुभ्र इत्यादौ च प्रातिपदिकार्थकप्रथमार्थे तण्डुलादेस्तस्य च शुक्ले अभेदेनैवान्वयः। शुभ्रेण तण्डुलेनेत्यादौ च विशेषणविभक्तिरभेदार्था पार्ष्णिकोवान्वय इति नातिप्रसङ्गः। तथा च समासे परस्परमन्वयासम्भवादावश्यिकैव समुदायस्य तादृशे विशिष्टार्थे शक्तिः"। "तन्मतरीत्या सर्वत्र समासे शक्तिरस्तु च तथापि स्वहस्तयापि षष्ठीतत्पुरुषकर्मधारययोः शक्तिमत्त्वाविशेषान्निषादस्थपत्यधिकरणसिद्धान्तसिद्धिर्न स्यात् इत्यत आह। "पर्य्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थिते। शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम्"।

"पर्य्यवस्यन्नासौ शाब्दबोधश्च तस्मादविदूरश्चासौ प्राक्क्षणश्च तदानीन्तनलाघवमादायाधिकरणविरोध इत्यर्थः। अयं भावः—निषादस्थपतिपदं समासशक्तिपक्षे निषादरूपे निषादानाञ्च स्थपतौ निषादस्वामिके पुरुषान्तरे चेत्येवं सर्वत्र शक्तत्वान्नानार्थकम्। तथा च "नानार्थे तात्पर्य्याद्विशेषावगतिः" इति न्यायेन तत्कल्पनायां पदद्वये पूर्वोपस्थितार्थे एवोपस्थित्यादिलाघवात् तत्कल्पनमिति। परेषामपि सति तात्पर्य्ये षष्ठीः प्रवेशयेतिवल्लक्षणायादुर्व्वारत्वात्तात्पर्य्यमेव कल्प्यकोटौ अवशिष्यत इति दिक्"।

"पुंवत्कर्म्मधारयजातीयदेशीयेषु" "तत्पुरुषेऽनञ्कर्म्मधारयः" पा०। "द्वन्द्वोद्विगुरपि चाहं सततमव्ययीभावः। तत्पुरुष! कर्मधारय येन स्यां सदा बहुव्रीहिः" उद्भटः।

**कर्म्मन्** पुंन० कृ—कर्मणि मनिन् अर्द्धर्चादि०पा० अमरे तु न०। व्याकरणपरिभाषिते कर्त्रा क्रियाफलाश्रयतयाभिमतमे पदार्थे "कर्त्तुरीप्सिततमं कर्म" पा०। व्याख्यातञ्चैतत् सि०कौ० यथा—

"कर्त्तुः क्रियया आप्तुमिष्टतमङ्कर्म्मसंज्ञं स्यात्। कर्त्तुः किम्? माषेष्वश्वं बध्नाति। कर्मण ईप्सिता माषा न तु कर्त्तुः। तमब्ग्रहणं किम्? पयसा ओदनं भुङ्क्ते। कर्मेत्यनुवृत्तौ पुनःकर्मग्रहणमाधारनिवृत्त्यर्थम्, अन्यथा गेहं प्रविशतीत्यत्रैव स्यात्"। सि॰ कौ॰। विवृतञ्चैतदस्माभिः सरलायां यथा कर्त्तुरित्यादि। कर्त्राप्तुमिष्यमाणं कर्मेत्यर्थः। "धातूपात्तव्यापाराश्रयः कर्त्ता" इति वक्ष्यते। आप्तिश्च सम्बन्धः, स च कर्तृविशेषणीभूतक्रियारूपव्यापारद्वारक एवानुपस्थितकल्पने मानाभावात्, एवञ्च कर्त्रा स्वनिष्ठक्रियारूपव्यापारप्रयोज्यफलेन सम्बद्धुमिष्यमाणं कर्मेत्यर्थः, तदेतदाह कर्त्तुः क्रियया आप्तुमिति। क्रियया धातूपात्तव्यापारेण, आप्तुं धातूपात्तफलद्वारा सम्बन्धुम्। फलव्यापारयोर्धातूपात्तत्वन्तु "फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः" इत्यनेन सिद्धम्। तच्च कर्म्म सप्तविधम्, यथोक्तं हरिणा "निर्वर्त्यञ्च विकार्यञ्च प्राप्यञ्चेति त्रिधा मतम्। तच्चेप्सिततमं कर्म चतुर्द्धान्यत्तु कल्पितम्। औदासीन्येन यत् प्राप्यं यच्च कर्त्तुरनीप्सितम्। संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्" इति। तत्र निर्वर्त्त्यादीनां लक्षणादिकमपि तेनैवोक्तं यथा—"यदसज्जायते सद्वा जन्मना यत्प्रकाशते। प्रकृतेस्तु विवक्षायां विकार्य्यं कैश्चिदन्यथा। तन्निर्वर्त्त्यं विकार्य्यञ्च कर्म द्वेधा व्यवस्थितम्। प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्। किञ्चित् गुणान्तराधानात् सुवर्णादिविकारवत्। क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते। दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते" इति, "सती वा विद्यमाना वा प्रकृतिः परिणामिनी। यस्य नाश्रीयते तस्य निर्वर्त्त्यत्वं प्रचक्षते" इति च। तदयं लक्षणनिष्कर्षः-प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति क्रियाजन्योत्पत्तिरूपफलवत्त्वं निर्वर्त्त्यत्वम् यथा घटं करोतीत्यादौ घटादेः क्रियाजन्योत्पत्तिमत्त्वान्निर्वर्त्त्यत्वम्। प्रतीयमानप्रकृतिविकृतिभावत्वे सति क्रियानिर्वाह्यविशिष्टासत्त्वोत्पत्तिरूपान्यतरफलवत्त्वं विकार्य्यत्वम्, यथा सुवर्णं कुण्डलं करोतीत्यादौ सुवर्णस्य पूर्वरूपविशिष्टासत्त्वफलवत्त्वात् कुण्डलस्य चोत्पत्तिमत्त्वादुभयोरपि विकार्य्यत्वम्। क्रियाकृतासाधारणधर्मप्रकारकप्रतीतिविषयतानाश्रयत्वे सति क्रियाजन्यफलवत्त्वेनोद्देश्यत्वम्, प्राप्यत्वं यथा ग्रामं गच्छतीत्यादौ ग्रामादेः कर्त्तृसाधारणसंयोगरूपफलवत्त्वेऽपि क्रियाकृतश्रमादिरूपासाधारणविशेषफलस्यानाधारत्वेन तादृशफलप्रकारकबोधाविषयत्वात् प्राप्यत्वम्। निर्वर्त्त्यविकार्य्ययोस्तु क्रियाजन्योत्पत्त्यादिफलस्य कर्ममात्रनिष्ठतया असाधारणत्वेन तद्वत्त्वान्नातिप्रसङ्ग इति बोध्यम्। कर्त्तुरनुद्देश्यत्वे सति क्रियाजन्यफलवत्त्वम्, औदासीन्य प्राप्तं यथा ग्रामं गच्छन् तृणं स्पृशतीत्यादौ तृणादेरनुद्देश्यत्वेऽपि क्रियाजन्यसंयोगरूपफलवत्त्वेनोदासीनकर्मता। द्विष्टसाधनत्वे सति क्रियाफलवत्त्वं, द्वेष्यं यथा अन्नं बुभुक्षुर्विषं भुङ्क्ते इत्यादौ विषस्य तथात्वम्। कारकविशेषसंज्ञान्तरेणाविवक्षितत्वे सति कर्मोपकारकत्वम्, संज्ञान्तरैरनाख्यातत्वम् यथा गां पयो दोग्धीत्यादौ गवादेः कारकान्तरसंज्ञाया अविवक्षया दुग्धोपयोगितया कर्मत्वम्। व्यक्तीभविष्यति चेदमुपरिष्टात्। कारकान्तरसंज्ञापूर्व्वकत्वं यथा 'जलधिमधिशेते' इत्यादौ जलधेराधारसंज्ञकतया प्राप्तत्वेऽपि "अधिशीङ्स्थासां कर्म" पा॰ इत्यादिना कर्मसंज्ञया कर्मत्वम्। पयसेति भुजिक्रियां प्रति पयसः प्रकृष्टोपकारकत्वविवक्षायां तस्यैप्सिततमत्वात् पयः पिबतीति स्यादेव। इह तु तथा विवक्षाविरहेणान्नभोजनं प्रति तस्याङ्गतया करणत्वमात्रं विवक्षितमिति न ओदनस्य कर्मत्वम्। सहार्थे तृतीयेति तु न्याय्यम्, तस्याप्रधानत्वात्तमपा बोधयितुमशक्यत्वात्"।

कर्म्मताबोधनप्रकारलक्षणादिकं शब्द॰प्र॰ अन्ययोक्तं यथा "यगन्तधातोरर्थो यस्तिङा स्वार्थेऽनुभाव्यते। यत्रासौ कर्म्मता नाम कारकं कर्तृतेतरः" यगन्तस्य यद्धातोरुत्तरस्थतिङा यत्र स्वार्थे तदीयो यादृशोऽर्थोऽनुभावयितुं शक्यते, तद्धातूपस्थाप्यतादृशक्रियायां स तिङर्थः कर्तृताभिन्नः कर्मत्वं नाम कारकमित्यर्थः। ग्रामो गम्यत इत्यत्र गमधातूपस्थाप्यायाः संयोगावच्छिन्नक्रियायाः स्वजन्यत्वसम्बन्धेन तिङ्पदोपस्थाप्ये संयोगे एवान्वयो न तु त्यज्यत इत्यादाविव विभागादौ धात्वर्थतावच्छेदकस्यैव फलस्य बोधने कर्मविहितप्रत्ययानां धातुसाकाङ्क्षत्वादतः संयोगस्यैव तत्र गतिक्रियाकर्मत्वं न तु विभागादेः, तेन तरोस्त्यागिनि खगे तरुं गच्छतीत्यादिकोन प्रयोगः। गम्यते रथः स्वयमेवेत्यादौ (गम्यते इति त्वनुशासनविरुद्धं कर्त्तृस्वभावकतया कर्मवत् क्रियाया अप्रसक्तेः)। कर्मत्वभिन्नानुकूलव्यापाररूपलक्षणं कर्त्तृत्वं धात्वर्थस्य धर्म्मोऽपि न तत्कर्तृताभिन्नमिति तद्व्युदासः। ननु चैत्रकर्तृकगमनजन्यसंयोगस्य ग्रामइव चैत्रेऽपि सत्त्वाच्चैत्रेण गम्यते चैत्र इत्यपि प्रयोगः स्यात्, तिङर्थसंयोगस्य जन्यत्वस्वाश्रयप्रतियोगिकत्वोभयसम्बन्धेन धात्वर्थगतेः साकाङ्क्षत्वेन चैत्रकर्तृकगत्याश्रयप्रतियोगिकत्वविशिष्टस्य संयोगस्य चैत्रे बाधितत्वात्। अतएव चैत्रो ग्रामं गच्छति

इतिवत् चैत्रश्चैत्रं गच्छतीत्यपि न प्रयोगः,तत्रापि द्विती-
यार्थसंयोगे प्रकृत्यर्थस्य स्वप्रतियोगिकत्वसम्बन्धेनैव साका-
ङ्क्षतया द्वितीयान्तलभ्यस्य चैत्रीयत्वविशिष्टसंयोगस्य जनक-
त्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव क्रियायामन्वयेन चैत्रप्रति-
योगिकसंयोगाश्रयवृत्तिगतेश्चैत्रे बाधितत्वात्। यत्तु फल-
मिव क्रियायामन्वितं परसमवेतत्वमपि कर्मतावाचिप्रत्यय-
स्यार्थः,परत्वञ्च तिङा स्वार्थफलान्वयिप्रतियोगिकं, द्विती-
यादिसुपा तु प्रकृत्यर्थप्रतियोगिकं प्रत्याय्यते तथा च चैत्र-
कर्तृकस्य चैत्रान्यसमवेतगमनस्याप्रसिद्धत्वेन चैत्रे
तज्जन्यसंयोगस्यासम्भवाच्चैत्रेण गम्यते चैत्र इत्यादिकोन
प्रयोगः। एवं चैत्रान्यसमवेतस्य चैत्रे बाधाच्चैत्रश्चैत्रं
गच्छतीत्यादिरपि। चैत्रेण गम्यते ग्राम इत्यादौ तु चैत्र-
कर्तृकस्य ग्रामभिन्नसमवेतस्य गमनस्य जन्योयः संयोगस्त
द्वान् ग्राम इत्यन्वयबोधनेन किञ्चिद्बाधकमिति प्राच्यै-
रुक्तं तन्न युक्तम्, संख्याकालातिरिक्तस्य तिङर्थस्य धात्वर्थ-
विशेष्यत्वनियमेन तिङर्थस्य परसमवेतत्वादेर्धात्वर्थगत्यादा-
वन्वयायोगात् प्रथमान्तोपस्थाप्यग्रामादेर्भेदान्यसम्बन्धेना-
न्यत्र प्रत्ययार्थे तिङर्थे वान्वयस्यादृष्टचरत्वेनाव्युत्पन्नत्वात्,
चैत्रेण गम्यते द्रव्यं, द्रव्यं गच्छति चैत्र इत्यादौ द्रव्यान्य
समवेतस्य गत्यादेरप्रसिद्धत्वेनायोग्यतापत्तेश्च। नव्यास्तु
फलमिव भेदोऽपि कर्मत्ववाचिप्रत्ययस्यार्थस्तथा च
चैत्रेण गम्यते ग्राम इत्यत्र तिङर्थभेदस्य सामा-
नाधिकरण्यसम्बन्धेन धात्वर्थविशेष्यत्वात् प्रतियोगि-
त्वसम्बन्धेन प्रथमान्तार्थे ग्रामादौ विशेषणत्वाच्च व्युत्प-
त्तिविरोधो नवातिप्रसङ्गः चैत्रकर्तृकगमनाश्रयवृत्ति-
भेदप्रतियोगित्वस्य चैत्रे विरहात् चैत्रं गच्छतीत्यादावपि
प्रतियोगित्वसम्बन्धेन चैत्रान्वितस्य द्वितीयार्थभेदस्य सामा-
नाधिकरण्यसम्बन्धेन धात्वर्थगतावन्वयात्तादृशगतेश्चैत्रे बाधा-
च्चैत्रं गच्छति चैत्र इत्यादिकोन प्रयोगः। प्रतियोगित्वञ्च
उभयावृत्तिधर्मावच्छिन्नं धर्मद्वयानवच्छिन्नं वा ग्राह्यमतोद्रव्यं
गच्छतीत्यादौ गतौ द्रव्यभेदसामानाधिकरण्यविरहेऽपि न
क्षतिरिति प्राहुस्तच्चिन्त्यम्। इत्थं खगस्त्यजतीत्यादौ
विभागावच्छिन्नक्रिया त्यजेरर्थः द्वितीयायास्तु विभागस्तेन
वृक्षावधिकविभागवती या विभागावच्छिन्नक्रिया तद्वान्
खग इत्याकारस्तत्र बोधः। वृक्षावधिकविभागवत्त्वञ्च जनकत्व-
स्वाश्रयवृत्तित्वोभयसम्बन्धेनैव क्रियायां ग्राह्यमतः खगाद्य-
वधिकविभागस्य खगादावसत्त्वात् खगं त्यजति खग इत्या-
दिकोन प्रयोगः। खगेन त्यज्यते खग इत्यापि प्रयोगः
प्रागुक्तरीत्या निरसनीयः। प्राञ्चस्तु ग्रामं गच्छति
त्यजतीत्यादौ सर्वत्र क्रियामात्रं धात्वर्थस्त्यजिगम्योः
पर्यायत्वेऽपि न क्षतिः, गत्यर्थक्रियायां संयोगस्यैव
त्यज्यर्थक्रियायाञ्च विभागस्यैव बोधकतायाः कर्मप्रत्य-
येषु व्युत्पन्नत्वात् तरुं त्यजतीत्यादौ संयोगस्य तरुं
गच्छतीत्यादौ च विभागस्य द्वितीयादितो नावगमः परैरपि
समभिव्याहृतधात्वर्थतावच्छेदकफलस्यैव द्वितीयादिबोध्य-
ताव्युत्पत्तेरभ्युपेतव्यत्वात् अन्यथातिप्रसङ्गात्। नचैवं
स्पन्दोन स्पन्द इत्यादेरिव त्यागोन गतिरित्यादेरपि
वाक्यस्य निराकाङ्क्षतापत्तिस्तत्र त्यजिगम्योर्विभागाद्यवच्छिन्न-
क्रियालक्षकत्वेनैवान्वययोग्यत्वासम्भवात्। द्वितीयासाकाङ्क्ष-
तुमन्तधातुत्वप्रयुक्तएव च धातूनां सकर्मकत्वव्यवहारोनतु
फलावच्छिन्नक्रियावाचित्वप्रयुक्तः ग्रामभृतावव्याप्तत्वात्।
स्मृत्यर्थधातूनां कर्मणि षष्ठ्या इव द्वितीयाया अपि
साधुत्वात्। एवञ्च ग्रामं गच्छति तरुं त्यजतीत्यादौ ग्राम-
संयोगजनकक्रियावांस्तरुविभागजनकक्रियावानित्याकारक
एव बोधो नतु ग्रामसंयोगजनकसंयोगावच्छिन्नक्रियावांस्त-
रुविभागजनकविभागावच्छिन्नक्रियावानित्याकारकः, संयो-
गविभागयोरुभयथाभानस्य नीलघटजनकदण्डवानित्यादौ
घटादेरिव निराकाङ्क्षत्वेनासम्भवादनुभवबाधितत्वाच्चे-
त्याहुः। परे तु संयोगः क्रिया च द्वयमेव प्रत्येकं
गमिशक्यं तयोर्जन्यजनकभावस्तु वाक्यार्थमर्यादया भासते
एवार्थयोरन्ययोगव्यवच्छेदयोरिव, गम्यर्थयोः संयोगक्रिय-
योर्मिथएव साकाङ्क्षत्वाच्च नैकमात्रे गमिप्रयोगः। पुष्प-
वन्तपदे चन्द्रत्वसूर्यत्वाभ्यामिव विभिन्नरूपाभ्यां प्रकृतेऽपि
संयोगत्वक्रियात्वाभ्यां गमधातोरेकशक्तिस्वीकारेऽपि न
क्षतिः। इयांस्तु विशेषो यत्तत्र सूर्यशशिनोर्मिथोनान्वयः
प्रकृते तु संयोगक्रिययोस्तथेति तथाच ग्रामं गच्छतीत्यत्र
द्वितीयाया आधेयत्वं प्रतियोगित्वं वार्थस्तेन तदन्वि-
तस्य संयोगस्य क्रियायामन्वयात् ग्रामवृत्तिस्तत्प्रति-
योगिकोवा यः संयोगस्तद्विशिष्टक्रियावानित्याकारक-
स्तत्र बोधः, तरुं त्यजतीत्यत्राप्याधेयत्वमवधित्वं
वा द्वितीयार्थस्तेन तदन्वितस्य धात्वर्थविभागस्य धात्वर्था-
न्तरे क्रियायामन्वयात्तरुवृत्तिस्तदवधिकोवा योविभाग-
स्तद्विशिष्टक्रियावानित्याकारकोबोधः संयोगादिवैशिष्ट्यञ्च
जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव प्रागिव ग्राह्यमतो-
नातिप्रसङ्गः। सकर्मकत्वमपि धातोः स्वार्थफलावच्छिन्न-
स्वार्थक्रियान्वयबोधकत्वं जानातीत्यादौ सकर्मकत्वव्यवहा-

रोभाक्त इत्याहुः। (फलव्यापारयोर्धातुरित्यनुसारिणः)
तण्डुलं पचतीत्यत्र रूपादिपरावृत्तिफलकतेजःसंयोगावच्छिन्नक्रिया पचेरर्थः, तन्निविष्टे च निरुक्ते तेजःसंयोगे तण्डुलस्याधेयत्वेनान्वयः परमाणुं पचतीत्यपि प्रयुज्यतएव अतएव "स्वतन्त्राः परमाणवः पच्यन्ते" इति किरणावल्यामाचार्य्याः। ओदनं पचतीत्यादौ तु तण्डुलादावोदनादिपदस्य लक्षणा तत्र क्रियायामन्वितमनुकूलत्वं द्वितीयार्थ इत्यपि कश्चित्। तृणं छिनत्तीत्यादावारम्भकसंयोगविरोधिविभागावच्छिन्नक्रिया छिदेरर्थस्तन्निविष्टे च संयोगे विभागे वा स्वावयववृत्तित्वसम्बन्धेन तृणादेरन्वयः। पुष्पेण विष्णुं यजतइत्यत्र प्रीत्यवच्छिन्नसमन्त्रकद्रव्यत्यागोयजेरर्थः, प्रीतौ विष्णोराधेयत्वेन द्रव्ये च पुष्पादेरभेदेनान्वयस्तेन विष्णुनिष्ठप्रीतिहेतुर्यो मन्त्रकरणकः पुष्पाभिन्नद्रव्यत्यागस्तद्वान् इत्याकारस्तत्र बोधः, स्वत्वध्वंसजनकेच्छापर्य्यवसन्नस्य त्यागस्यैकदेशे स्वत्वएव वा पुष्पादेराधेयत्वेन तत्रान्वयस्तेन द्रव्येण विष्णुं यजतइत्यादौ द्रव्यस्य द्रव्याभिन्नत्वेन शाब्दासत्त्वेऽपि न क्षतिः। पितरमाराधयति उपास्ते पूजयतीत्यादौ गौरवप्रयुक्तप्रीत्यवच्छिन्नक्रिया धात्वर्थस्तन्निविष्टयोर्गौरवप्रीत्योः क्रमेण विषयत्वाधेयत्वाभ्यां पित्रादेरन्वयस्तेन पितृगोचरगौरवप्रयुक्ता या पितृनिष्ठप्रीतिहेतुक्रिया तद्वानित्येवं तत्र बुद्धिः। गौरवं पुनराराध्यत्वावगाही ज्ञानप्रभेदोयेयं भक्तिरित्युच्यते। पित्रादिसेवायाश्च मन्त्रकरणकत्वाभावान्न तत्र पितरं यजतइत्यादिकः प्रयोगः। परमात्मानमुपास्ते इत्यादौ तु गौरवप्रयुक्तक्रियामात्रे धातुलक्षणा नातः परमेश्वरः प्रीतिविरहादयोग्यत्वापत्तिः। घृतं जुहोतीत्यादौ वह्न्यादिकरणकपतनावच्छिन्नमन्त्रकरणकक्रिया हुधातोरर्थः, प्रोक्ते च पतने घृतस्याधेयत्वेनान्वयस्तेनाग्न्याधिकरणकस्य घृतवृत्तिपतनस्यानुकूलमन्त्रकरणकक्रियावानित्येवं तत्र बोधस्तादृशी च क्रिया सघृतस्य करादेः प्रसारणन्युब्जीकरणादिरेव। अतएव घृतादेः परित्यागित्वविरहादृत्विगादेर्न यष्टृत्वं किन्तु होतृत्वमेव। वह्नौ जुहोतीत्यत्र सप्तम्यन्तस्यार्थोन धात्वर्थनिविष्टे पतनेऽन्वेति वह्निवृत्तित्वविशिष्टपतने तद्वृत्तितिङर्थस्यान्वये निराकाङ्क्षतापत्तेः परन्तु तदवच्छिन्नक्रियायामेव। प्रतिमादौ घृतादिस्नपनं मन्त्रकरणकमपि नाग्न्यधिकरणकं वह्नौ घृतस्य प्रक्षेपमात्रमग्न्यधिकरणकत्तत्पतनानुकूलमपि न मन्त्रकरणकमतस्तदुभयं न होमः। प्राजापत्येऽपि होमे मानसएव मन्त्रः करणम्। यद्वा वह्निसंयोगावच्छिन्नपतनानुकूलमन्त्रकरणकक्रियैव जुहोत्यर्थस्तेन घृतं जुहोतीत्यत्र वह्निसंयोगजनकं यद् घृतस्य पतनं तदनुकूलमन्त्रकरणकक्रियाविशेषवानित्याकारकोबोधः। न चैवं हुधात्वर्थतावच्छेदकीभूतसंयोगात्मकफलशालित्वेन वह्न्यादेस्तदर्थकर्म्मतया वह्निं जुहोतीत्यादिकप्रयोगापत्तिः साक्षाद्धात्वर्थतावच्छेदकीभूतस्यैव फलस्यान्वयिनः कर्मत्वादन्यथा गगने लोष्टमुत्क्षिपतीत्यादौ गगनादेरुत्क्षेपणादिकर्मतायादुर्व्वारतापत्तेः ऊर्द्धसंयोगफलकक्रियावच्छिन्नव्यापारस्यैवोत्क्षेपणत्वात्। नचोत्क्षेपणत्वादिकं जातिरेव तत्र धात्वर्थतावच्छेदकम्, प्रवेशनत्वादिना सङ्करेण तस्य जातित्वायोगात् लोष्टादेस्तत्कर्मत्वाप्रसङ्गाच्च। अतएव परम्परया दुहाद्यर्थतावच्छेदकीभूतबहिःक्षरणशालित्वेन पयःप्रभृतेस्तत्कर्मत्वसम्पत्त्यर्थम् "अकथितञ्च" इति सूत्रान्तरस्य प्रणयनमपि पाणिनेः सङ्गच्छते। धनं प्रतिगृह्णातीत्यत्र पुण्यार्थकदानजन्यस्वत्वस्य जनकः स्वीकारः प्रतिग्रहइति फलीभूतस्वत्ववत्तया धनस्य कर्मत्वं, विक्रयादेर्दानविशेषत्वेऽपि न तस्य पुण्यजनकत्वमतस्तल्लब्धस्य स्वीकारोन प्रतिग्रहः। ग्रामं क्रीणातीत्यत्र मूल्यदानजन्यस्वत्वस्य जनकः स्वीकारः, स्वत्वजनकं मूल्यदानमेव वा क्रयस्तत्फले च स्वत्वे ग्रामस्याधेयत्वेनान्वयस्तेन ग्रामनिष्ठस्य मूल्यदानजन्यस्वत्वस्यानुकूलस्वीकारवान्, ग्रामनिष्ठं यत्स्वत्वं तदनुकूलमूल्यदाता वेति तत्र बोधः। ग्रामं विक्रीणातीत्यत्र मूल्यग्रहणजन्यस्य परस्वत्वस्य जनकमूल्यग्रहणमेव वा विक्रयस्तेन ग्रामनिष्ठस्य मूल्यग्रहणजन्यपरस्वत्वस्यानुकूलोयोग्रामस्य त्यागस्तद्वान्, ग्रामनिष्ठं यत् परस्वत्वं तदनुकूलमूल्यग्रहणवानिति वा तत्र बोधः। मूल्यञ्च पणपुराणादिकमेव राजनिर्दिष्टं नतु द्रव्यमात्रं तेन तिलादीन् दत्त्वा माषादीनां विनिमये विप्राणां तिलविक्रयादिदोषस्यानवकाश इत्युक्तमेव। नरकं पततीत्यत्र भोगावच्छिन्नं पातित्यमेव पतेरर्थस्तेन नरकभोगानुकूलपातित्यवानित्याकारकस्तत्र बोधः। नरकपतित इति द्वितीयातत्पुरुषोदाहरणमपि वृत्तिकारस्य, एतदभिप्रायकमेव पतनक्रियायास्तथात्वे तु नरके पततीत्यादिरेव युक्तः प्रयोगः। स्वर्गं गच्छतीत्यादौ स्वर्गादिपदस्येव प्रकृते नरकपदस्यापि तद्देशपरत्वात्। धनं लभते प्राप्नोतीत्यादौ स्वत्वावच्छिन्नोव्यापारोधात्वर्थः, तन्निविष्टे च स्वत्वे धनादेराधेयत्वेनान्वयः। ननु यगन्तधात्वर्थविशेष्यतापन्नस्य तङर्थोयदि

कर्मत्वं तदा दुहादेस्त्वकर्मकत्वव्याप्तिः। गोपेन गौः प-
योदुह्यतइत्यादौ गोपकर्तृकव्यापारजन्यं यत् पयःकर्मक-
मोचनं तद्वती गौरित्येवमन्वये मोचनबहिःक्षरणयोर्द्वयो-
रेव दुहधात्वर्थतावच्छेदकफलत्वेऽपि गौणं यन्मोचनरूपं
तस्यैव कर्मणस्तिङाद्यैर्बोधनात् "गौणे कर्म दुहादिभ्यस्ति-
ङाद्यैरभिधीयते" इति व्युत्पत्तेरतः प्रकारान्तरेण कर्मत्वं
निर्व्वक्ति। यस्य धातोर्य्यदर्थे यः प्रकारीभूय भासते।
द्वितीयया स्मारितोऽर्थस्तदा तत्कर्मतोच्यते। यद्धातोर्या-
दृशार्थे द्वितीयया यादृशः स्वार्थोऽनुभाव्यते तद्धात्वर्थक्रि-
यायां तत्कर्मत्वम्। तच्च गां दोग्धि पयइत्यादिप्रयोगात्
पयःप्रभृतेरप्युक्तम्। पाकं कुरुते इत्यादौ यत्ने प्रकारी-
भूतमपि विषयत्वं न यतेरर्थे। भवते ग्राममित्यादौ भूधा-
त्वर्थे प्राप्तौ तथाभूतमपि संयोगत्वादिकं न तदर्थोत्पत्तौ
प्रकारः। चौरं रुजन् पयः परिष्कुर्व्वन्नित्यादावेव
रुजादिधात्वर्थहिंसादेर्द्वितीयार्थकर्मतायां विशेष्यत्वं
सुलभं शब्दशासनजादेर्निष्ठादिगणान्तर्गतत्वेन तदन्तधातोः
कर्मणि षष्ठ्याः प्रतिषिद्धत्वात्। दिवः करणस्य कर्मत्वोप-
देशात् अक्षान् दीव्यतीत्यत्र द्वितीयार्थः करणत्वमपि
गौणकर्मत्वमेव, अतएवाक्षा दीव्यन्ते द्यूतकारैरित्यादौ
क्रीड़ाकरणतायामेव विहितास्तिङादिकर्मप्रत्ययाः। दुहा-
दयस्तु फलावच्छिन्नक्रियाहेतुव्यापारवाचित्वादेव द्विकर्म-
कास्तेन गां पयोदोग्धि गोपइत्यत्र दुहेर्मोचनानुकूल-
व्यापारोऽर्थ इति तत्रत्यमोचने गोराधेयत्वेन पयसः
कर्मत्वेनान्वयात् पयःकर्मताकं यद्गोवृत्तिमोचनं तद-
नुकूलव्यापारवान् इत्याकारकबोधस्तत्र बहिःक्षरणा-
वच्छिन्नव्यापारोमोचनं तदनुकूलव्यापारोदोहनमतोधात्व-
र्थतावच्छेदकीभूतं बहिःक्षरणरूपं फलमादाय पय-
सोमोचनात्मकञ्च तदादाय गोः कर्मत्वमवसेयम्। एवं
शिष्यं धर्मं वदति, वक्ति, ब्रूते, उपदिशत्याचष्टे, इत्यादौ
प्रतिपत्त्यवच्छिन्नव्यापारोवदप्रभृतिधात्वर्थ इति तद्विशिष्टायां
प्रतिपत्तौ शिष्यस्याधेयत्वेन धर्मस्य च विषयत्वेनान्व-
याद्धर्मविषयिणी या शिष्यनिष्ठा प्रतिपत्तिस्तदनुकूल-
व्यापारवान् इत्याकारकोबोधस्तादृशव्यापारश्च धर्मः
सेव्यतामित्यादिकोगुर्व्वाद्यभिलापः। शत्रुं शतानि
जयतीत्यत्र ग्रहणावच्छिन्नपराभवोजयतेरर्थः तथा
च शतस्य ग्रहणानुकूलोयः शत्रुकर्मकपराभवस्तत्क-
र्त्तेत्येवं तत्र बोधः। पराभवश्च तिरस्कारः। प्रजाः
शतं दण्डयतीत्यत्र ग्रहणावच्छिन्नशासनं दण्डार्थस्तथा
च शतग्रहणानुकूलं यत् प्रजानां शासनं तत् कर्त्तेत्येवं
तत्र बोधः। शासनं नियन्त्रणम्। सुधां समुद्रं मथ्ना-
तीत्यत्र उत्थानावच्छिन्नोन्मन्थनं धात्वर्थस्तेन सुधोत्थाना-
नुकूलं यत्समुद्रस्योन्मन्थनं तत्कर्त्तेत्यर्थः। उन्मन्थन-
मालोड़नम्। पान्थं पन्थानं पृच्छतीत्यत्र अभिधाना-
वच्छिन्नव्यापारः पृच्छा, तथाच पान्थनिष्ठं यत्पथोऽभिधा-
नं तदनुकूलव्यापारवानित्येवं तत्र बोधः। अभिधान-
मभिलापस्तदनुकूलव्यापारश्च केन पथा गन्तव्यमित्यादि-
प्रश्नः। नृपमर्थं प्रार्थयते याचते भिक्षते इत्यादौ
दानाय प्रेरणं धात्वर्थस्तथा च नृपनिष्ठं यदर्थस्य
दानं तत्प्रेरणावानित्यर्थः। प्रेरणा प्रवर्त्तना, सा
च दीयतामित्याद्यभिलापरूपा। ग्राममजां वहति
नयतीत्यादौ गत्यवच्छिन्नव्यापारोवहिप्रभृतेरर्थस्तेन
ग्रामकर्मकं यदजादिनिष्ठं गमनं तदनुकूलव्यापारवानित्ये-
वं तत्र बोधस्तादृशव्यापारः प्रकृते गलरज्ज्वाकर्षणादिः।
पुत्रं धर्ममनुशास्तीत्यादावनुशासनं देशनया प्रवर्त्तना, तथा
च पुत्रनिष्ठस्य देशनया प्रवर्त्तनस्यानुकूलव्यापारवानित्यर्थः
तथाविधोव्यापारः सन्ध्यां विधेहि समिधमाधेहीत्याद्युपदे-
शरूपः। शाखां ग्रामाकर्षतीत्यत्र गतिहेतुकर्षणं धात्व-
र्थस्तेन ग्रामकर्मकं यच्छाखागमनं तदनुकूलविकर्षणवा-
नित्यर्थः। विकर्षणं नम्रीकरणम्। गामवरुणद्धि व्रज-
मित्यत्र गतिप्रतिरोधहेत्वावरणमवरुधेरर्थस्तेन गोगति-
प्रतिरोधस्यानुकूलं यद्व्रजस्यावरणं तत्कृतिमानित्यन्वयधीः।
वृक्षं फलान्यवचिनोति इत्यत्र छिदाहेतुर्विघट्टनं चिनो-
तेरर्थस्तथा च फलकर्मकच्छिदानुकूलं यद्वृक्षस्य विघट्टनं
चालनं तद्वानित्येवं तत्र बोधः। उत्क्षिपत्यादिकस्तु
धातुः सफलक्रियाहेतुव्यापारवाच्यपि न दुहादिः।
यदुक्तमभियुक्तैः "दुहिर्वदत्यर्थजिदण्डमन्थिपृच्छार्थनार्थौ
नयनार्थशास्त। कृषीरुधिश्चिञ् च तथार्थवृत्तौ द्विकर्म-
कोऽयं कथितो दुहादिः"। तथार्थवृत्तौ निरुक्ततत्त-
दर्थवृत्तौ। "गतिभोजनधीप्राप्तिशब्दार्थभौव्यधातुषु।
कर्तृत्वं हेतुर्विहितणन्तेष्वेतेषु कर्मतेति" शाब्दिकस्मृतः,
गोपान् गमयति, द्विजान् गमयति, द्विजान् भोजयति,
गुरूननुज्ञापयति, शिष्यान् पाठयति, सुतान् स्नापयती-
त्यादौ मूलधात्वर्थस्य कर्तृत्वलक्षणं गौणमेव कर्मत्वं
द्वितीयार्थः। तथा च गोपकर्तृकगत्यनुकूलव्यापारवा-
नित्याकारस्तत्र बोधः। पुत्रान् प्रीतिम् प्रापयतीत्यादौ
च प्राप्तिर्न गतिः चैत्रोग्रामं भावयते, ग्रामस्य भावक

इत्यादौ प्राप्त्यर्थस्य भवतेः स्वार्थविहितण्यन्तस्य कर्त्तुः कर्मतानिरासाय ण्यन्ताद्धेतुविहितत्वमनुसृतम्। "हिंसायामेव भुज्यर्थभक्षेर्व वहेरपि। ण्यन्तस्य कर्त्तुः कर्मत्वं क्रियया वाहनं यदि" इति स्मरणाद्भक्षयति मूषिकान् मार्जारम्, भक्षयति लतां छागमित्यादेरेव भक्षेः कर्त्तरि कर्मता न तु भक्षयत्योदनं भृत्येनेत्यादौ, भक्षयति प्रजाः परिजनैः कुनृप इत्यादौ तु न भोजनं भक्षेरर्थः। वाहयति रथमश्वान् सारथिः वाहयति गोणीं वृषभान् वाहिक इत्यादाविव वाहयति भारं भृत्येन धनिक इत्यादौ स्वेच्छया वाहकेन धनिकादिः। "हृक्रोस्तु कर्त्तुः कर्मत्वं ण्यन्तत्वे स्याद्विभाषया। अभिवादिदृशोरेवमात्मनेपद इष्यते" इत्यनुशिष्टेर्हारयति कारयति वा पटं कुविन्देनेत्यत्रेव [illegible]कुविन्दमित्यत्रापि कुविन्दस्य गौण कर्मत्वावगमः। तथा अभ्यवहारयत्योदनं तनयं तनयेन वा जननी, विकारयति चित्तं चित्तेन वा वसन्त इत्यपि प्रमाणम्। परन्तु पूर्व्वयोरप्राप्तावेतयोस्तु प्राप्तावेव कर्मत्वस्य वैकल्पिको विधिः। गुरुमभिवादयते सुतं सुतेन वा गृहस्थः, भृत्यं दर्शयते भार्य्यां भार्य्यया वा पतिरित्यादौ तु दृशेः प्राप्तावभिवादयतेस्त्वप्राप्तौ सः। अनात्मनेपदस्थले तु पन्थानं पथिकं दर्शयति, पुत्रेण मित्रमभिवादयतीत्यादौ यथाप्राप्तमेव कर्मत्वादिकम्। छात्रेणार्थं निर्णाययति, चैत्रेणौदनं खादयति, आदयति वा दारैः क्रन्दयति, पुत्रेण मित्रमाह्वाययतीत्यादौ तु नीप्रभृतेर्बुद्ध्याद्यर्थकत्वेन तत्कर्त्तुः कर्मत्वं प्रसक्तमपि "न नीखाद्यादिशब्दायक्रन्दिह्वयतिषु क्वचित्। हेतुण्यन्तेषु कर्त्तृत्वं कर्मता स्याण्णिङादिष्विति" भर्त्तृहरिवचनान्निषिध्यते। अत्र च क्वचित्तिङादिष्वितिकथनाच्छात्रेणार्थं निर्णाय्यमानस्तिष्ठति, भृत्येण पूपं खाद्यमानो ब्रूते इत्यादौ कर्मविहितयक्शानजादेर्नानुपपत्तिरिति वदन्ति। सुखं प्राप्नोतीत्यादौ प्राप्तिरुत्पत्तिः परम्परया तदाश्रयत्वञ्च तिङर्थः। घटं जानातीत्यत्र विषयत्वं विषयिता वा द्वितीयार्थः। दिवाकरस्तु संस्कारावच्छिन्नमेव ज्ञानं जानात्यर्थ इत्युक्तस्थले मुख्यमेव कर्मत्वं घटादेरित्याह तन्मन्दं ज्ञानमित्यादितः संस्काराप्रतीतेर्लाघवेन ज्ञानत्वस्यैव जानात्यर्थतावच्छेदकत्वात् घटस्योपेक्षात्मकज्ञाने निर्विकल्पके वा घटं जानातीतिप्रयोगस्याप्रसङ्गाच्च। अतएव प्राकट्यावच्छिन्नज्ञानमेव तत्र धात्वर्थ इति तत्त्वावच्छेदकीभूतज्ञाततावत्त्वादेव घटादेर्ज्ञानकर्मतेति भट्टमतमप्यनादेयं ज्ञानविषयतातिरिक्तायां ज्ञाततायां मानाभावादन्यथा ज्ञाततायामिव कृततादेरप्यतिरिक्तायाः कल्पनापत्तेः। वह्निमनुमिनोमि आपादयामीत्यादौ विधेयतानामको विषयताप्रभेद एव द्वितीयार्थः पर्व्वतो वह्निमानित्याद्यनुमितावापत्तौ वा पर्व्वतमनुमिनोमीत्याद्यप्रयोगात् विषयतावच्छेदकत्वभिन्नप्रकारत्वमेव तत्र द्वितीयार्थ इत्यपि वदन्ति। घटं पश्यति शब्दं शृणोत्यनुभवतीत्यादौ दर्शनाद्यर्थकधातुयोगे साक्षात्कारत्वनिरूपितमेव विषयत्वं कर्मत्वं घटादेरुपनीतचाक्षुषादौ तादृशाप्रयोगात्। आकाशं न पश्यतीत्यादौ पुनरन्वयो विवक्ष्यते। तण्डुलपाकं करोतीत्यत्र चिकीर्षाजन्यतावच्छेदकः क्रियायामुद्देश्यताख्यो विषयताविशेष एव द्वितीयार्थः कृतौ भासते, तेन तण्डुलपाकत्वप्रकारककृतेस्तण्डुलविषयत्वेऽपि पाकदशायां तण्डुलं करोतीत्यादिको न प्रयोगः पाकदशायामोदनं करोतीत्यादौ च द्वितीयाया अनुकूलत्वे लक्षणा तण्डुलादिकर्मककृतिस्तु नौदनादिजनिका प्रमाणाभावात्। वर्द्धमानस्तूक्तस्थले धातुना उत्पत्त्यनुकूला कृतिरुच्यते इति तत्रौदनस्य मुख्यमेव कर्मत्वमतएव यत्र कृतिमात्रं धात्वर्थस्तत्र न द्वितीया यथा घटाय यतत इत्यादावित्याह तन्न कृत्यादिपदाद्यत्नमात्रप्रतीत्या यत्नत्वावच्छिन्नस्यैव करोत्यर्थत्वात्। मीमांसानयार्णवे तु पाककृतौ तण्डुलादेरुपादानविधयेव फलविधयौदनादेरपि विषयत्वमुक्तं यदाह वत्सेश्वरः "सिद्धं साध्यं फलञ्चेति प्रवृत्तेर्विषयस्त्रिधा। तत्र सिद्धमुपादानं क्रिया साध्यं फलं सुखमिति" तथा च तन्मते तण्डुलपक्तृदशायामोदनं करोतीत्यादिप्रयोगे फलत्वेन विषयतैव द्वितीयार्थः। मासं जीवति, क्रोशं स्वपिति, गोदोहं तिष्ठति, कुरून् क्रीडतीत्यादावधिकरणत्वं गौणमेव कर्मत्वं सुपाऽनुभाव्यते "कालानामध्वमानानां क्रियाणां नीवृतामपि। आधारता ध्रौव्यधातोः कर्मता स्याद्विभाषयेति" स्मृतेः"। 'कर्मणि द्वितीया'"कर्मण्यण्"पा०। सकर्मकः अकर्मक इत्यादि। २ वैशेषिकमतसिद्धे मूर्त्तद्रव्याश्रिते क्रियारूपे पदार्थभेदे। तल्लक्षणादि कणादसूत्रवृत्त्योर्दर्शितं यथा—'एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम्" सू० "गुणानन्तरमुद्दिष्टस्य कर्मणो लक्षणमाह एकमेव द्रव्यम् आश्रयो यस्य तदेकद्रव्यं न विद्यते गुणोऽस्मिन्नित्यगुणं, संयोगविभागेष्वनपेक्षकारणमिति स्रोत्

पत्त्यनन्तरोत्पत्तिकभावभूतानपेक्षमित्यर्थः तेन समवायिकारणापेक्षायां पूर्व्वसंयोगाभावापेक्षायाञ्च नासिद्धत्वम् स्वोत्पत्त्यनन्तरोत्पत्तिकानपेक्षत्वं वा विवक्षितं पूर्व्वसंयोगध्वंसस्य स्वोत्पत्त्यनन्तरानुत्पत्तिकत्वात् अभावत्वेन तस्याद्यक्षणसम्बन्धाभावात् । नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं कर्म्मत्वं, चलतीति प्रत्ययासाधारणकारणतावच्छेदकजातिमत्त्वं वा, गुणान्यनिर्गुणमात्रवृत्ति जातिमत्त्वं स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिविभागकारणतावच्छेदकजातिमत्त्वं वा । स चायं चलतीति प्रत्ययसाक्षिकः पदार्थो नाविरलदेशोत्पादनादिनोपपाद्यः क्षणभङ्गस्यापि निराकरिष्यमाणत्वात् । लक्षणस्य इतरभेदसाधकताप्रकारः पूर्व्वोक्त एव" उपस्कु० "संयोगविभागवेगानां कर्म्म समानम्" सू०। "क्वचिदेकस्य कर्म्मणोऽनेककार्य्यकारित्वमाह, कारणमित्यनुषङ्गः यत्र द्रव्ये कर्म्मोत्पन्नं तेन समं यावद्द्रव्यं संयुक्तमासीत् तावत्सङ्ख्यकान् विभागान् जनयित्वा तावतः संयोगानपि पुनरन्यत्र जनयति वेगं पुनरेकमेव स्वाश्रये करोति वेगपदं स्थितिस्थापकस्याप्युपलक्षयति" उपस्कु० "न द्रव्याणां कर्म्म" सू० । "ननु क्रियावता द्रव्येणारम्भकसंयोगे जनिते तेन च द्रव्यमारब्धं यत्तदपि कर्म्मजन्यमेव कर्म्मणस्तत्पूर्व्ववर्त्तित्वादत आह कर्म्म द्रव्याणां न कारणमित्यर्थः । कुत एवमत आह" उपस्कु० "व्यतिरेकात्" सू० । "व्यतिरेकादिति निवृत्तेरित्यर्थः उत्तरसंयोगेन कर्म्मणि निवृत्ते द्रव्यमुत्पद्यते इति न कर्म्मणो द्रव्यकारणत्वं विनश्यदवस्थञ्च कर्म्म न द्रव्यकारणम् । किञ्च कर्म्म द्रव्यस्यासमवायि कारणं वा भवेन्निमित्तकारणं वा, न तावदाद्यः, द्रव्यस्यासमवायिकारणनाशनाश्यत्वेन अवयवकर्म्मनाशादेव द्रव्यनाशापत्तेः। न द्वितीयः, महापटनाशेऽवस्थितसंयोगेभ्य एव खण्डपटोत्पत्तौ निष्कर्म्मणामेवावयवानां द्रव्यारम्भदर्शनाद्व्यभिचारात्" उपस्कु० । "गुणवैधर्म्यान्न कर्म्मणां कर्म्म" सू० । "ननु यथा द्रव्याणां द्रव्यं कार्य्यं गुणानाञ्च गुणस्तथा किं कर्म्मणामपि कर्म्म कार्य्यम् ? इत्यत आह । कार्य्यमिति शेषः द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यमुक्तं "तत्र कर्म्म कर्म्मसाध्यं न विद्यते" इति सूत्रेण कर्म्मणां कर्म्मजनकत्वं प्रतिषिद्धमेव तदिहानूद्यते इति भावः" उपस्कु० । "असमवायात् सामान्यकार्य्यं कर्म्म न विद्यते" सू० "असमवायादित्यत्र द्रव्ययोर्द्रव्येष्विति योज्यं, तथा च न द्रव्ययोरेकं कर्म्म समवैति न वा द्रव्येष्वेकं कर्म्म समवैति तेन सामान्यस्य समुदायस्य कार्य्यं कर्म्म न विद्यते । अत्रापि विदिर्ज्ञानार्थो न सत्तावचनः यदि कर्म्म व्यासज्यवृत्ति स्यात् ! एकस्मिन् चलति, द्वयोर्द्रव्ययोर्बहुषु च द्रव्येषु चलतीति प्रत्ययः स्यात् ! नचैतत् ,तस्मान्न कर्म्म व्यासज्यवृत्तीत्यर्थः। ननु शरीरतदवयवानां कर्म्म शरीरतदवयवैर्बहुभिरारभ्यत एव कथमन्यथा शरीरे चलति करचरणादावपि चलतीति प्रत्ययः, एवमन्यत्राप्यवयविनीति चेन्न अवयविकर्म्मसामग्र्या अवयवकर्म्मसामग्रीव्याप्तत्वात् तथोपलब्धेः न तु वैपरीत्यम्, नह्यवयवे चलति सर्व्वत्रावयविनि चलतीति प्रत्ययः अन्यथा कारणाकारणसंयोगात् कार्य्याकार्य्यसंयोगोऽपि न स्यात्,कारणकर्म्मणैव कार्य्यस्यापि संयोगोपपत्तेः" उपस्कु० "ननु मूर्त्तगुणानां कार्य्याणां कारणगुणपूर्व्वकत्वं स्वाश्रयगुणपूर्व्वकत्वञ्चोक्तं द्रव्यकर्म्मणोश्च न कर्म्म कारणमित्युक्तं, तथा च कर्म्मणः किमपि न कार्य्यमित्यायातं, तथाचातीन्द्रियाणां सूर्य्यादिगतीनाम् अनुमानमपि दुर्लभं,लिङ्गाभावात् अतः संयोगविभागवेगानां कर्म्मेति सूत्रोक्तमेव स्मारयन्नाह "संयोगविभागाश्च कर्म्मणाम्" सू० "जन्याइति शेषः व्यक्त्यभिप्रायेण बहुवचनं संस्कारोऽप्युपलक्षणीयः । ननु द्रव्यकर्म्मणी न कर्म्मकार्य्ये इति पूर्व्वमुक्तम्, संयोगविभागौ तु संयोगविभागकार्य्यावेव, तथा चेदानीं कर्म्मणः कारणत्वाभिधानं विरुद्धमित्यत आह" उपस्कु० । "कारणसामान्ये द्रव्यकर्म्मणां कर्म्माकारणमुक्तम्" सू० । "कारणसामान्यपदेन तत्प्रकरणमुपलक्ष्यते तेन कारणसामान्याभिधानप्रकरणे द्रव्यकर्म्मणी प्रति कर्म्मणोऽकारणत्वमुक्तं न तु सर्व्वथाप्यकारणमेव कर्म्मेति विवक्षितं येन "संयोगविभागाश्च कर्म्मणामिति" सूत्रं व्याहन्येतेति भावः" उपस्कु० ।

तच्च कर्म्म पञ्चविधम् । "उत्क्षेपणं तथावक्षेपणमाकुञ्चनं तथा । प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च" भाषा० अत्रेदं बोध्यम् । कर्त्रोयत्नार्थकत्ववादिमतेऽस्य यत्नार्थककृधातुनिष्पन्नत्वेऽपि उक्तलक्षणक्रियामात्रे रूढत्वं न तु यौगिकत्वम् । तच्च कर्त्तृशब्दे प्रदर्शिते कर्म्मादिशब्दवत् कर्त्तृपदस्य रूढत्वप्रतिपादनपरे शब्दचि० वाक्ये उक्तम्। कृञ उत्पत्त्यनुकूलव्यापारमात्रार्थकत्ववादिमते तु यौगिकत्वमिति भेदः। व्याकरणमते श्व्यापारमात्ररूपक्रियायाम् "व्यापारोभावना सैवोत्पादना सैव च क्रिया । कृञोऽकर्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते" इति हरिणा

कृञोयत्नार्थकत्वनिरासेन कर्मपर्य्यायक्रियाशब्दस्य व्यापारार्थकत्वस्योक्तेः । क्रिया च धातुपात्तव्यापारभेदः अधिकं क्रियाशब्दे वक्ष्यते ।४शास्त्रविहिते अग्निहोत्रादियागादौ तच्च त्रिविधम् "नित्यं नैमित्तिकं काम्यं कर्म्म चैवं त्रिधा मतम्"इति व्यासोक्तेः। तत्र नित्यमकरणे प्रत्यवायानुबन्धि सन्ध्यावन्दनादि। नैमित्तिकं निमित्तनिश्चयाधीनकर्त्तव्यताकं जातेष्ट्यादि । काम्यं कामनावत्कर्त्तव्यमश्वमेधादि । पुनः प्रकारान्तरेण तत्त्रिविधं सात्विकराजसतामसभेदात् । तल्लक्षणान्युक्तानि गीतायां यथा "नियतं सङ्गरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म्म यत्तत् सात्विकमुच्यते १ । यत्तु कामेप्सुना कर्म्म साहङ्कारेण । वा पुनः । क्रियते बहुलायासं तद्राजसमुदाहृतम् २। अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म्म तत्तामसमुदाहृतम्"३ । "नियतं नित्यतया विहितं, सङ्गरहितमभिनिवेशशून्यम् । अरागद्वेषतः पुत्रादिप्रीत्या वा शत्रुद्वेषेण वा यत् कृतं न भवति फलं प्राप्तुमिच्छतीति फलप्रेप्सुस्तद्विलक्षणेन निष्कामेण कर्त्रा यत् कृतं कर्म्म तत् सात्विकमुच्यते १। यत्तु कर्म कामेप्सुना फलं प्राप्तुमिच्छता साहङ्कारेण वा मत्समः कोऽन्यः श्रोत्रियोऽस्तीत्येवं निरूढाहङ्कारयुक्तेन च क्रियते तच्च पुनर्बहुलायासमतिक्लेशयुक्तम् तद्राजसमुदाहृतम्२ । अनुबध्यत इत्यनुबन्धं पश्चाद्भावि शुभाशुभं क्षयं वित्तक्षयं हिंसां परपीड़ां पौरुषञ्च स्वसामर्थ्यमनपेक्ष्यापर्य्यालोच्य केवलं मोहादेव यत् कर्म्मारभ्यते तत्तामसमुदाहृतम्"३ श्रीधरः। प्रकारान्तरेण तत्त्रिविधं शुक्लकृष्णकृष्णशुक्लभेदात् तत्र शुक्लं हिंसाद्यनपेक्षं पुण्यजनकं स्वाध्यायादि । कृष्णं शास्त्रनिषिद्धं पापजनकं ब्रह्महत्यादि । कृष्णशुक्लम् हिंसादिसहितं वेदविहितं पुण्यापुण्यजनकं पशुयागादि । कर्मविपाकशब्दे उदा० । तच्च प्रकारान्तरेण द्विविधं प्रवृत्तं निवृत्तं च यथाह मनुः "इह चामुत्र वा काम्यं प्रवृत्तं कर्म्म कीर्त्यते । निष्कामं ज्ञानपूर्वन्तु निवृत्तमुपदिश्यते । प्रवृत्तं कर्म्म संसेव्य देवानामेति सार्ष्टिताम् । निवृत्तं सेव्यमानस्तु भूतान्यत्येति पञ्च वै"।"कामनापूर्वकं कर्म्म शरीरप्रवृत्तिहेतुत्वात् प्रवृत्तं, तदेव कर्म कामनारहितं पुनर्ब्रह्मज्ञानाभ्यासपूर्वकं संसार, निवृत्तिहेतुत्वात् निवृत्तमुच्यते" मल०त०रघुन० विहितकर्माचरणप्रकारः कर्मयोगशब्दे दृश्यः । ५कृषौ च "तद्यथेह कर्मचितोलोकः क्षीयते" श्रुतिः "फलस्य कर्मनिष्पत्तेर्लोकवत्" जै०सू० । अत्र कर्मशब्दः कृषिवैदिककर्मोभयपरः । "एष एव साधु कर्म कारयति तं यमेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयतीति" श्रुतिः । "फलं कर्मायत्तम्" मीमांसकाः ।

**कर्म्मनाशा** स्त्री कर्म नाशयति नश–णिच्–अण् । कीकटदेशस्थे नदीभेदे, यस्या जलस्पर्शेन सर्वपुण्यकर्माणि नश्यन्ति । "कर्म्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः" भाषा०।

**कर्म्मनिष्ठ** त्रि० कर्म्मणि निष्ठा यस्य । २यागादिकर्मासक्ते "ज्ञाननिष्ठा द्विजाः केचित्तपोनिष्ठास्तथाऽपरे । तपःस्वाध्यायनिष्ठाश्च कर्मनिष्ठास्तथा परे" मनुः । ७त० ।२कर्म्मासक्तौ स्त्री ।

**कर्म्मन्द** पु० भिक्षुसूत्रकारके ऋषिभेदे कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीयते इनि । कर्मन्दिन् तत्प्रोक्तभिक्षुसूत्राध्यायिषु ब०व० सि०कौ० । इनेर्बहुष्वेव पा० विधानात् अमरे एकवचनप्रयोगश्चिन्त्यमूलः ।

**कर्म्मपथ** पु० कर्मणां कायिकादीनां पन्थाः अच समा० । "कायेन त्रिविधं कर्म वाचा चापि चतुर्विधम् । मनसा त्रिविधम् चैव दश कर्मपथांस्त्यजेत्" भा० अनु० १३ अ० उक्तेषु दशसु शुभाशुभकर्ममार्गेषु ते च दशकर्मपथास्तत्रैवोक्ताः यथा "प्राणातिपातः स्तैन्यञ्च परदारमथापि वा । त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् । असत्प्रलापं पारुष्यं पैशुन्यमनृतन्तथा । चत्वारि वाचा राजेन्द्र! न जल्पेन्नानुचिन्तयेत् । अनभिध्या परस्वेषु सर्वसत्वेषु सौहृदम् । कर्मणां फलमस्तीति त्रिविधं मनसा चरेत् । तस्माद्वाक्कायमनसा नाचरेदशुभं नरः। शुभाशुभान्याचरन् हि तस्य तस्याश्नुते फलम्"।

**कर्म्मप्रवचनीय** पु०कर्म क्रियां प्रोक्तवान् इति कर्मप्रवचनीयः कर्त्तरि भूते चानीयर् ।"कर्म प्रवचनीयाः"इत्यधिकृत्य पाणिन्युक्ते अन्वादिषु शब्देषु । ते हि संप्रति क्रियां न कथयन्ति नापि द्योतयन्ति किन्तु क्रियानिरूपितसम्बन्धविशेषं द्योतयन्तीति तेषां तथात्वं यथोक्तं हरिणा"क्रियाया द्योतकोनायं सम्बन्धस्य न वाचकः। नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः" इति"अधिपरी अनर्थकौ"वित्यादेस्तद्द्योतकत्वाभावेऽपि योग्यतया तथात्वम् । अन्वादयश्चार्थभेदे तत्संज्ञकाः सूत्रे चार्या पा०दर्शिताः यथा"कर्म प्रवचनीयाः" इत्यधिकृत्य "अनुर्लक्षणे" "तृतीयार्थे" "हीने" "उपोऽधिके च" "अपपरी वर्जने" "आङ्मर्यादावचने" "लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः" "अभिरभागे" "प्रतिः प्रतिनि-

धिप्रतिदानयोः” “अधिपरी अनर्थकौ” “सुः पूजायाम्” “अतिरतिक्रमणे च” “अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु” “अधिरीश्वरे” पा० । “कर्मप्रवचनीययुक्ते द्वितीया” पा० ।

**कर्म्मन्यास** पु० कर्मणां विहितकर्मणां विधिना न्यासः त्यागः, कर्मणाम् ईश्वरार्पणबुद्ध्याऽनुष्ठीयमानानां फलस्य न्यासो वा । विहितकर्मणां विधानेन १त्यागरूपप्रव्रज्यायाम् ईश्वरार्पणबुद्ध्याऽनुष्ठानेन २कर्मफलत्यागे च । कर्मसंन्यासोऽप्यत्र ।

**कर्मफल** न० कर्मणां शास्त्रविहितानां निषिद्धानां वा फलम् । शुभाशुभकर्मणां १सुखदुःखादिरूपे । फले तत्र विहितकर्मणां फलाभिसन्धौ तत्तत्फलप्राप्तिः अनभिसन्धाने परम्परया चित्तशुद्ध्या मुक्तिप्राप्तिरिति भेदः । यथाह मल० त० विष्णु पु० “विशिष्टफलदाः काम्या निष्कामाणां विमुक्तिदाः” गीतापि “युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् अयुक्तः कामकारेण फले सक्तो निबध्यते”। युक्तः ईश्वराय कर्माणि न फलायेत्येवं समाहितः, फलं त्यक्त्वा फलमनभिसन्धाय कर्माणि कुर्वन्नपीतिशेषः। शान्तिमाप्नोति सत्वशुद्धिपापक्षयसंन्यासनिष्ठां क्रमेण प्राप्नोतीत्यर्थः। अयुक्तस्तद्बहिर्मुखः कामकारेण कामप्रेरिततया कामतः प्रवृत्तेरिति यावत् । फले सक्तः मम फलायेदं कर्म तत्करोमीत्येवं फले सक्तोनिबध्यते” म० त० रघु० । “विष्णुपुराणे । “कर्माण्यसङ्कल्पिततत्फलानि सन्त्यस्य विष्णौ परमात्मरूपे । अवाप्य तां कर्ममहीमनन्ते तस्मिँल्लयं ते त्वमलाः प्रयान्ति”। तां कर्ममहीं भारतवर्षरूपाम् “पितृन्नमस्ये दिवि ये च मूर्त्ताः काम्यप्रदाः काम्यफलाभिसन्धौ—विमुक्तिदा येऽनभिसंहितेषु” प्रा० त० रुचिस्तवः । अधिकं कर्मयोगशब्दे वक्ष्यते । कर्मफलानामीश्वरस्यैव दातृत्वमिति वेदान्तिनः। मीमांसकमते धर्मादेव फलमिति भेदः । तच्च ईश्वरशब्दे दर्शितं “फलमत उपपत्तेः”इत्यादिके शा० सूत्रभाष्ये दर्शितम् “यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते” “न मे कर्मफले स्पृहा”गीता । कर्मरङ्गस्य फलम् शा० मध्यपदलोपः। (कामराङ्गा) २फले मेदि० ।

अथ कर्मणां फलमस्ति न वेति सन्देहे निरूप्यते, तत्र कर्मणः प्ररोचनार्थतया न फलमस्तीति श्रीभागवतवचनं श्रीधरव्याख्यानञ्चोपजीव्य म० त० निर्णीतं यथा—

“वेदोक्तमेव कुर्वाणोनिःसङ्गोऽर्पितमीश्वरे । नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः” भाग० ११,३,४८ । “वेदोक्तमेव कुर्वाणो न तु निषिद्धम् । ननु कर्मणि क्रियमाणे तस्मिन्नासक्तिस्तत्फलञ्च स्यात्, न तु नैष्कर्म्यरूपा फलसिद्धिः । अतएवाह 'निःसङ्ग इति अनभिनिवेशितवान् ईश्वरेऽर्पितं न फलोद्देशेन । फलस्य श्रुतत्वात् कर्मणि कृते फलं भवत्येवेत्यत आह 'रोचनार्था' इति कर्मणि रुच्युत्पादनार्था । अतएव तत्रैव “फलश्रुतिरियं नृणां न श्रेयोरोचनं परम् । श्रेयोविवक्षया प्रोक्ता यथा भैषज्यरोचनम् । उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च । आसक्तमनसोमर्त्या आत्मनोऽनर्थहेतुषु । न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि । कथं युञ्ज्यात् पुनस्तेषु तांस्तमोविशतोबुधः । एवं व्यवस्थितं केचिदविज्ञाय कुबुद्धयः । फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि”। “इयं फलश्रुतिर्न श्रेयः,परमपुरुषार्थपरा भवति किन्तु बहिर्मुखानां मोक्षविवक्षया अवान्तरकर्मफलैः कर्मसु रुच्युत्पादनमात्रम् । यथा भैषज्ये औषधे रुच्युत्पादनम् । यथा “पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान् । पित्रैवमुक्तः पिबति तिक्तमप्यतिबालकः” । अत्र तिक्तनिम्बादिपानस्य न खलु खण्डादिलाभ एव प्रयोजनम्, किन्त्वारोग्यम् । तथा वेदोऽप्यवान्तरफलैः प्रलोभयन् मोक्षायैव कर्माणि विधत्ते । ननु कर्मकाण्डे मोक्षस्य नामापि न श्रूयते, कुत एवं व्याख्यायते, यथाश्रुतस्यैवाघटनादित्याह उत्पत्त्येति, द्वाभ्याम् । उत्पत्त्या स्वभावत एव कामेषु पश्वादिषु प्राणेषु आयुरिन्द्रियबलवीर्य्यादिषु स्वजनेषु पुत्रदारादिषु परिणामतोदुःखहेतुषु अतस्तान् स्वार्थं परमसुखमविदुषः अजानतः अतो नतान् प्रह्वीभूतान् बुधोवेदोयद्बोधयति तदेव श्रेय इति विश्वसितानित्यर्थः । तानेवंभूतान् वृजिनाध्वनि पापे वर्त्मनि देवादियोनौ वा भ्राम्यतः पुनस्तमोभूतवृक्षादियोनौ विशतः,“पशुकाम”इति चायुरिन्द्रियादिकाम इति च पुत्रादिकाम” इति च कथं पुनस्तेषु स्वयं बुधोवेदोयुञ्ज्यात् । तथासत्यनाप्तः स्यादिति भावः । कथं तर्हि कर्म्ममीमांसकाः कर्म्मफलपरां वदन्ति तत्राह एवमिति व्यवस्थितम् । वेदस्याभिप्रायमविज्ञाय कुसुमिताम् अवान्तरफलरोचनतया रमणीयां परं फलश्रुतिं वदन्ति कुतस्ते कुबुद्धयः ? तदाह—हि यस्मात् वेदज्ञा व्यासादयः तथा न वदन्तीति अतएव निष्कामकर्म्मणात्मज्ञानमित्युक्तम् । यथा—“अयमेव क्रियायोगो ज्ञानयोगस्य साधकः। कर्म्मयोगं विना ज्ञानं कस्यचिन्नैव दृश्यते”। सोऽपि दुरितक्षयद्वारा न साक्षात् । तथा च “ज्ञानमुत्-

पद्यते पुंसां क्षयात् पापस्य कर्मणः। स्रुतिः“तमेतमात्मानं ब्राह्मणा विविदिषन्ति वेदानुवचनेन ब्रह्मचर्य्येण तपसा दानेन श्रद्धया यज्ञेनानशनेन चे”ति“अतएव यज्ञादीनां ज्ञानशेषताञ्चावधार्य्य निष्कामेषु कर्मसु प्रवर्त्तयते। पण्डितेनापि मूर्खः काम्ये कर्मणि न प्रवर्त्तयितव्यः इत्याह षष्ठस्कन्धे—“स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म हि। न राति रोगिणेऽपथ्यं वाञ्छतेऽपि भिषक्तमः”। राति ददाति”। म०त०रघु०।

इदमपि ज्ञाननिष्ठाप्रशंसामात्रम् अन्यथा संसारस्य धर्म्माधर्म्ममूलकतया धर्म्मकार्य्यस्य फलाभावे कथं सुखादिभोगः, कथं वा संसारप्रवृत्तिः। किञ्च ईश्वरशब्दे दर्शिते “फलमत उपपत्तेः” इत्यादिके शा०सूत्रभाष्ये धर्म्मस्य फलदातृत्वमतनिवारणेनेश्वरस्यैव फलदातृत्वं यदुक्तं तद्विरुद्धं स्यात्। एकान्ततोऽसति कर्मणः फले कथमीश्वरस्य तद्दातृत्वोक्तिः सङ्गच्छते।

अतएव तत्रैव भाग० ११,३, ४६। “परोक्षवादो वेदोऽसौ बालानामनुशासनम्। कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा” इति पूर्व्वतरवाक्ये कर्मणां कर्ममोक्षस्यैव मुख्यफलत्वमुक्तं न तु फलाभावः। व्याकृतञ्चैतत् श्रीधरेण यथा—“ननु स्वर्गाद्यर्थं कर्माणि विधत्ते न कर्ममोक्षार्थं तत्राह बालानामनुशासनं यथा भवति तथा तत्र दृष्टान्तः अगदम् औषधं यथा पिता बालमगदं पाययन् खण्डलड्डुकादिभिः प्रलोभयन् पाययति ददाति च तानि, नैतावताऽगदपानस्य तल्लाभः प्रयोजनं अपि चारोग्यं तथा वेदोऽप्यवान्तरफलैः प्रलोभयन् कर्ममोक्षायैव कर्माणि विधत्ते”। तत्र दृष्टान्ते ददाति च तानीति वदता दार्ष्टान्तिकेऽपि खण्डलड्डुकादिदानवत् फलवत्त्वं सूचितं किन्तु तस्य न मुख्योद्देश्यत्वम् तच्चारोग्यस्थानीयमोक्षस्यैवेति सुस्थितं कर्म्मणः फलवत्त्वमिति दिक्।

**कर्मबन्ध** न० कर्मणा बन्धः शरीरसंबन्धः। १कर्मजन्यादृष्टेना पूर्वदेहसंबन्धरूपे संसारे “कर्मबन्धं प्रहास्यसि” गीता कर्मबन्धनमप्यत्र। कर्म बन्धनं बन्धसाधनं यस्य। कर्मरूपबन्धनसाधनयुक्ते त्रि०। “लोकोऽयं कर्मबन्धनः” गीता। [जन्यसुखदुःखादेर्भोगे तत्साक्षात्कारे।

**कर्मभोग** पु० कर्मणः कर्मजन्यसुखदुःखादेर्भोगः। कर्म-

**कर्मभू** स्त्री कर्मणः कृषिकर्मणो भूः। १कृष्टभूमौ (चसाक्षेत) हेमच० २भारतवर्षे च। [दीर्घमूलत्वात्तस्य तथात्वम्।

**कर्म्ममूल** न० कर्मणोमूलमिव मूलमस्य। कुशतृणे शब्दच०।

**कर्म्ममीमांसा** स्त्री ६त०। कर्म्मावेदकवाक्यमवलम्ब्य संशयपूर्वपक्षसिद्धान्तनिर्णयात्मके कर्मविषयके विचारशास्त्रभेदे सा च “अथातोधर्मजिज्ञासा” इत्यादिका जैमिनिप्रणीता

**कर्म्मयुग** न०कृ—हिंसायाम् आधारे मनिन् कर्मधा०। कलियुगे त्रिका० तस्य हिंसाप्रधानकर्माधारत्वात् तथात्वम्।

**कर्मयोग** पु० कर्मसु योगः कौशलम्। फलसाधनस्यापि कर्मणोऽफलसाधनत्वापादानरूपे १कौशलभेदे २फलसिद्ध्यसिद्ध्योः समत्वभावने च। यथा च तत्कौशलं तथा भावनं च कर्त्तव्यं तथा गीतायां नानास्थानेषु दर्शितं यथा

“एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु। बुद्ध्या युक्तोयया पार्थ! कर्मबन्धं प्रहास्यसि। नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते। स्वल्पमप्यस्य धर्मस्य त्रायते महतोभयात्। व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन!। बहुशाखाह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्। यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः। वेदवादरताः पार्थ! नान्यदस्तीतिवादिनः। कामात्मानः स्वर्गपराजन्मकर्म्मफलप्रदाम्। क्रियाविशेषबहुलां भोगैश्वर्य्यगतिं प्रति। भोगैश्वर्य्यप्रसक्तानां तयापहृतचेतसाम्। व्यवसायात्मिका बुद्धिः समाधौ न विधीयते। त्रैगुण्यविषयावेदा निस्त्रैगुण्यो भवार्जुन!। निर्द्वन्द्वोनित्यसत्वस्थो-निर्योगक्षेम आत्मवान्। यावानर्थ उदपाने सर्वतः संप्लुतोदके। तावान् सर्व्वेषु वेदेषु ब्राह्मणस्य विजानतः। कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणि। योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय!। सिद्ध्यसिद्ध्योः समोभूत्वा समत्वं योग उच्यते। दूरेण ह्यवरं कर्म्म बुद्धियोगाद्धनञ्जय:। बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः। बुद्धियुक्तोजहातीह उभे सुकृतदुष्कृते। तस्माद् योगाय युज्यस्व योगः कर्मसु कौशलम्। कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः। जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्”।

अधिकारिभेदेन कर्म्मयोगस्यानुष्ठानप्रकारमाह गीता “लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ!। ज्ञानयोगेन सांख्यानां कर्म्मयोगेन योगिनाम्। न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते। न च सन्न्यसनादेव सिद्धिं समधिगच्छति। न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्। कार्य्यते ह्यवशः कर्म सर्व्वः प्रकृतिजैर्गुणैः। कर्मेन्द्रियाणि संयम्य य आस्ते मनसा

स्मरन्। इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते। यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन!। कर्म्मेन्द्रियैः कर्म्मयोगमसक्तः स विशिष्यते। नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः। शरीरयात्रापि च ते न प्रसिद्ध्येदकर्म्मणः। यज्ञार्थात् कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः। तदर्थं कर्म्म कौन्तेय! मुक्तसङ्गः समाचार। सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्। देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथ। इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः। तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः। यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्व्वकिल्विषैः। भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्। अन्नाद्भवन्ति भूतानि पर्ज्जन्यादन्नसम्भवः। यज्ञाद्भवति पर्ज्जन्यो यज्ञः कर्म्मसमुद्भवः। कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्। तस्मात् सर्व्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्। एवं प्रवर्त्तितं चक्रं नानुवर्त्तयतीह यः। अघायुरिन्द्रियारामो मोघं पार्थ! स जीवति। यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते। नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन। न चास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः। तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर। असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः। कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः। लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसि। यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते। न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन। नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि। यदि ह्यहं न वर्त्तेयं जातु कर्म्मण्यतन्द्रितः। मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ! सर्व्वशः। उत्सीदेयुरिमे लोका न कुर्य्यां कर्म्म चेदहम्। सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः। सक्ताः कर्म्मण्यविद्वांसो यथा कुर्व्वन्ति भारत!। कुर्य्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम्। न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम्। जोषयेत् सर्व्वकर्म्माणि विद्वान् युक्तः समाचरन्। प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः। अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते। तत्त्ववित्तु महाबाहो! गुणकर्म्मविभागयोः। गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते। प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्म्मसु। तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्। मयि सर्व्वाणि कर्म्माणि संन्यस्याध्यात्मचेतसा। निराशीर्निर्म्ममो भूत्वा युध्यस्व विगतज्वरः"। "एवं ज्ञात्वा कृतं कर्म्म पूर्व्वैरपि मुमुक्षुभिः। कुरु कर्म्मैव तस्मात्त्वं पूर्व्वैः पूर्व्वतरैः कृतम्। किं कर्म्म किमकर्म्मेति कवयोऽप्यत्र मोहिताः। तत्ते कर्म्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात्। कर्म्मणो ह्यपि बोद्धव्यं बोद्धव्यञ्च विकर्म्मणः। अकर्म्मणश्च बोद्धव्यं गहना कर्म्मणो गतिः। कर्म्मण्यकर्म्म यः पश्येदकर्म्मणि च कर्म्म यः। स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्म्मकृत्। यस्य सर्व्वे समारम्भाः कामसंकल्पवर्जिताः। ज्ञानाग्निदग्धकर्म्माणं तमाहुः पण्डितं बुधाः। त्यक्त्वा कर्म्मफलासङ्गं नित्यतृप्तो निराश्रयः। कर्म्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः। निराशीर्यतचित्तात्मा त्यक्तसर्व्वपरिग्रहः। शारीरं केवलं कर्म्म कुर्व्वन्नाप्नोति किल्विषम्। यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः। समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते। गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः। यज्ञायाचरतः कर्म्म समग्रं प्रविलीयते। ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना"।

कर्म्मणां त्याज्यकर्त्तव्यतायां विशेषोऽन्यत्राध्याये तत्रोक्तः। "संन्यासः कर्म्मयोगश्च निःश्रेयसकरावुभौ। तयोस्तु कर्म्मसंन्यासात् कर्म्मयोगो विशिष्यते। ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति। निर्द्वन्द्वो हि महाबाहो! सुखं बन्धात् प्रमुच्यते। सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः। एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्। यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते। एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति। संन्यासस्तु महाबाहो! दुःखमाप्तुमयोगतः। योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति। योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः। सर्व्वभूतात्मभूतात्मा कुर्व्वन्नपि न लिप्यते। नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्। पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन्। प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि। इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन्। ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा। कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि। योगिनः कर्म्म कुर्व्वन्ति सङ्गं त्यक्त्वात्मशुद्धये।

युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्। अयुक्तः कामकारेण फले सक्तो निबध्यते। सर्व्वकर्म्माणि मनसा संन्यस्यास्ते सुखं वशी। नवद्वारे पुरे देही नैव कुर्व्वन्न कारयन्। न कर्त्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः। न कर्म्मफलसंयोगं स्वभावस्तु प्रवर्त्तते"। एवं गीतायां नानास्थानेषु फलाभिसन्धित्यागेनैव कर्म्मणां परम्परया मुक्तिसाधनत्वमुक्तमनुपदं वक्ष्यमाण पात० भाष्ये चेश्वरार्पणबुद्ध्यानुष्ठीयमानानां योगसाधनत्वोक्तेश्च मुमुक्षुणा उक्तयाखरीत्यैव कर्म्म करणीयमिति स्थितम्। कर्म्म क्रियैव योगो योगसाधनम्। तपःस्वाध्यायेश्वर-प्रणिधानादिरूपे क्रियात्मके २योगसाधने। यथा च तप आदीनां योगसाधनत्वं तथा साधनपादे पातञ्जल सूत्रभाष्यविवरणेषूक्तं यथा—

"तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" सू०। "उद्दिष्टः समाहितचित्तस्य योगः, कथं व्युत्थितचित्तोऽपि योगयुक्तः स्यादित्येतदारभ्यते। नातपस्विनो योगः सिद्ध्यति अनादिकर्म्मक्लेशवासनाचित्रा प्रत्युपस्थितविषयजाला चाशुद्धिर्नान्तरेण तपःसम्भेदमपोद्यते इति तपस उपादानं तच्च चित्तप्रसादनमबाधमानमनेनासेव्यमिति मन्यते, स्वाध्यायः प्रणवादिपवित्राणां जपो मोक्षशास्त्राध्ययनं वा। ईश्वरप्रणिधानं सर्व्वक्रियाणां परमगुरावर्पणं तत्फलसन्न्यासो वा" भा०। "उद्दिष्ट इति। अभ्यासवैराग्ये हि योगोपायौ प्रथमे पादे उक्तौ, न च तौ व्युत्थितचित्तस्य द्रागित्येव सम्भवत इति द्वितीयपादोपदेश्यानुपायानपेक्षते सत्त्वशुद्ध्यर्थं, ततो हि विशुद्धसत्त्वः क्रतरणसंविधानोऽभ्यासवैराग्ये प्रत्यहं भावयति। समाहितत्वमविक्षिप्तत्वं, कथं व्युत्थानचित्तोऽप्युपदेक्ष्यमाणैरुपायैर्युक्तः सन् योगी स्यादित्यर्थः। तत्र वक्ष्यमाणेषु नियमेषु आत्मन्य प्राथमिकं प्रत्युपयुक्ततरतया प्रथमतः क्रियायोगमुपदिशति सूत्रकारः। तपःस्वाध्यायेत्यादि, क्रियैव योगः क्रियायोगो योगसाधनत्वात्। अतएव विष्णुपुराणे खाण्डिक्यकेशिध्वजसंवादे। 'योगयुक् प्रथमं योगी युञ्जमानोऽभिधीयत" इत्युपक्रम्य तपः "स्वाध्यायादयो" दर्शिताः। व्यतिरेकमुखेन तपस उपायत्वमाह। नातपस्विन इति तपसोऽवान्तरव्यापारमुपायतोपयोगिनं दर्शयति अनादीति। अनादिभ्यां कर्म्मक्लेशवासनाभ्यां चित्रा अतएव प्रत्युपस्थितमुपनतं विषयजालं यस्यां सा तथोक्ता। अशुद्धीरजस्तमःसमुद्रेको नान्तरेण तपःसम्भेदमपोद्यते सान्द्रस्य नितान्तविरलता सम्भेदः, ननूपादीयमानमपि तपो धातुवैषम्यहेतुतया योगप्रतिपक्ष इति कथं तदुपाय इति अत आह—तच्चेति, तावन्मात्रमेव तपश्चरणीयं न यावता धातुवैषम्यमापद्यत इत्यर्थः। प्रणवादयः पुरुषसूक्तरुद्रमण्डलब्राह्मणादयो वैदिकाः, पौराणिकाश्च ब्रह्मपारादयः, परमगुरुर्भगवानीश्वरस्तस्मिन्, यत्रेदमुक्तम्—"कामतोऽकामतो वापि यत् करोमि शुभाशुभम्। तत्सर्वं त्वयि सन्न्यस्तं त्वत्प्रयुक्तः करोम्यहम्" इति "तत्फलसन्न्यासो वा" फलानभिसन्धानेन कार्य्यकरणम्। यत्रेदमुक्तम् "कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणि"(गीता) विव०

"स हि क्रियायोगः" भा० "समाधिभावनार्थः क्लेशतनूकरणार्थश्च" सू० "स हि आसेव्यमानः समाधिं भावयति, क्लेशांश्च प्रतनूकरोति, प्रतनूकृतान् क्लेशान् प्रसंख्यानाग्निना दग्धबीजकल्पानप्रसवधर्म्मिणः करिष्यतीति तेषां तनूकरणात् पुनः क्लेशैरपरामृष्टा सत्त्वपुरुषान्यतामात्रख्यातिः सूक्ष्मा प्रज्ञा समाप्ताधिकारा प्रतिप्रसवाय कल्पिष्यते इति" भा०। "तस्य प्रयोजनाभिधानाय सूत्रमवतारयति स हीति" ननु क्रियायोग एव चेत् क्लेशान् प्रतनूकरोति कृतं तर्हि प्रसङ्ख्यानेनेत्यत आह प्रतनूकृतानिति क्रियायोगस्य प्रतनूकरणमात्रे व्यापारो न तु बन्ध्यत्वे क्लेशानां, प्रसङ्ख्यानस्य तु तद्बन्ध्यत्वे, दग्धबीजकल्पानिति बन्ध्यत्वेन दग्धकलमबीजसारूप्यमुक्तम् स्यादेतत्प्रसङ्ख्यानमेव चेत् क्लेशान् अप्रसवधर्म्मिणः करिष्यति कृतमेषां प्रतनूकरणेनेत्यत आह तेषामिति। क्लेशानामतानवे हि बलवद्भिरोधिप्रस्ता सत्त्वपुरुषान्यताख्यातिरुदेतुमेव नोत्सहते किमु प्रागेव तद्बन्ध्यभावं कर्त्तुम्, प्रतनूकृतेषु तु दुर्ब्बलेषु तद्विरोधिष्वपि वैराग्याभ्यासाभ्यामुपजायते उपजाता च तैरपरामृष्टा अनभिभूता नैव यावत् परामृश्यते सत्त्वपुरुषान्यतामात्रख्यातिसूक्ष्मप्रज्ञायन्वितया सूक्ष्मोऽस्याविषय इति सूक्ष्मा प्रज्ञा प्रतिप्रसवाय प्रविलयाय कल्पिष्यते, कुतः? समाप्तोऽधिकारः कार्य्यारम्भणं गुणानां यया हेतुभूतया सा तथोक्तेति" विव०। क्रियायोगोऽप्यत्र।

**कर्म्मरङ्ग** पुं० कर्म्मणे हिंसायै रज्यते रन्ज—घञ् अश्वघासादिवत् निमित्तार्थे ६त०। (कामराङ्गा) १शिराल-फलके वृक्षे शब्दच० २तत्फले न० तद्गुणा भाव० उक्ता: "कर्म्मरङ्गं हिमं ग्राहि स्वाद्वम्लं कफवातकृत्" कफवात-

हिंसकत्वाच्च तस्य कर्म्मरङ्गनामतेति बोध्यम् ।

**कर्म्मरी** स्त्री कर्म भैषज्योपयोगक्रियां राति–रा गौरा० ङीष् । वंशरोचनायाम् राजनि० ।

**कर्म्मवज्र** पु० कर्म श्रौतकर्म वज्रमिव यस्य । १शूद्रे तस्य श्रौतकर्मानधिकारेण तदाचरणस्य तं प्रति वज्रतुल्यहिंसाहेतुत्वात्तथात्वम् ।

**कर्म्मवाटी** स्त्री कर्मणां विहितकर्मणां चन्द्रकलाक्रियाणां वा वाटीव । तिथौ हेमच० । तिथीनां सर्वकर्मनिमित्तत्वाच्चन्द्रकलाक्रियाक्रियारूपत्वाच्च तथात्वम् ।

**कर्म्मविपाक** पु० कर्मणोः पुण्यापुण्यकारणयोर्विपाकः विशेषेण पच्यमानः फलविशेषः । पात० सू० भाष्याद्युक्ते जात्यायुर्भोगरूपे १कर्मफले यथा च कर्मणां जात्यायुर्भोगात्मको विपाकः तथा पात० सू० भा० विवरणेषु प्रपञ्चितं यथा । "क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः" सू० । "तत्र पुण्यापुण्यकर्माशयः कामलोभमोहक्रोधप्रसवः स दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयश्च तत्र तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निर्वर्त्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशय इति । तथा तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु कृतः पुनः पुनरपकारः, सचापि पापकर्माशयः सद्यएव परिपच्यते । यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः तथा नाहुषोऽपि देवानामिन्द्रः सन् स्वकं परिणामं हित्वा तिर्य्यक्त्वेन परिणत इति । तत्र नारकाणां नास्ति दृष्टजन्मवेदनीयः कर्माशयः क्षीणक्लेशानामपि नास्त्यदृष्टजन्मवेदनीयः कर्माशय इति" भा० ।

"स्यादेतज्जात्यायुर्भोगहेतवः पुरुषं क्लिश्नन्तः क्लेशाः कर्माशयश्च तथा, न त्वविद्यादयस्तत्कथमविद्यादयः क्लेशाः ? इत्यत आह । क्लेशमूलः कर्म्माशय इत्यादि । क्लेशोमूलं यस्योत्पादे च कार्य्यकरणे च स तथोक्तः । एतदुक्तं भवति—अविद्यादिमूलः कर्म्माशयो जात्यायुर्भोगहेतुरिति अविद्यादयोऽपि तद्धेतवोऽतः क्लेशा इति । व्याचष्टे तत्रेति । आशेरते सांसारिकाः पुरुषा अस्मिन्नित्याशयः कर्मणामाशयः धर्माधर्मौ, कामात्काम्यकर्मप्रवृत्तौ स्वर्गादिहेतुर्धर्मो भवति एवं लोभात् परद्रव्यापहारप्रवृत्तौ नरकहेतुरधर्मः मोहादधर्मे हिंसादौ धर्मबुद्धेः प्रवर्त्तमानस्याधर्म एव नत्वस्ति मोहजोधर्मो, ऽस्ति तु क्रोधजोधर्मः तद्यथा ध्रुवस्य जनकापमानजन्मनः क्रोधात्तज्जिगीषयाहितेन कर्माशयेन पुण्येनान्तरीक्षलोकवासिनामुपरिस्थानम्, अधर्मस्तु क्रोधजो ब्रह्मवधादिजन्मा प्रसिद्धएव भूतानाम् । तस्य द्वैविध्यमाह । स दृष्टजन्मेति तत्र दृष्टजन्मवेदनीयमाह । तीव्रसंवेगेनेति । यथासङ्ख्यम दृष्टान्तावाह । यथा नन्दीश्वर इति । तत्र नारकाणामिति । येन कर्माशयेन कुम्भीपाकादयो नरकभेदाः प्राप्यन्ते तत्कारिणो नारकास्तेषां नास्ति दृष्टजन्मवेदनीयः कर्माशयो नहि मनुष्यशरीरेण तत्परिणामभेदेन वा सा तादृशी वत्सरसहस्रादिभिरुपभोग्या वेदना सम्भवतीति शेषं सुगमम्" वि० ।

"सति मूले तद्विपाकोजात्यायुर्भोगाः" सू० ।

"सत्सु क्लेशेषु कर्माशयो विपाकारम्भी भवति नोच्छिन्नक्लेशमूलः । यथा तुषावनद्धाः शालितण्डुलाः अदग्धबीजभावाः प्ररोहणसमर्था भवन्ति नापनीततुषा दग्धबीजभावा वा तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति नापनीतक्लेशो न प्रसंख्यानदग्धक्लेशबीजभावोवेति । स च विपाकस्त्रिविधो जातिरायुर्भोग इति तत्रेदं विचार्य्यते किमेकं कर्म एकस्य जन्मनः कारणम्१ । अथैकं कर्मानेकं जन्माक्षिपतीति २ । द्वितीया विचारणा—किमनेकं कर्मानेकं जन्म निर्वर्त्तयति३ । अथानेकं कर्मैकं जन्म निर्वर्त्तयतीति४ । न तावदेकं कर्मैकस्य जन्मनः कारणम्१ कस्मात् ? अनादिकालप्रचितस्यासङ्ख्येयस्यावशिष्टकर्मणः सांप्रतिकस्य च फलक्रमानियमात् अनाश्वासो लोकस्य प्रसक्तः सचानिष्ट इति । नचैकं कर्मानेकस्य जन्मनः कारणम् २ । कस्मात् ? अनेकेषु जन्मसु एकैकमेव कर्मानेकस्य जन्मनः कारणमित्यवशिष्टस्य विपाककालाभावः प्रसक्तः सचाप्यनिष्ट इति । नचानेकं कर्मानेकस्य जन्मनः कारणम्३ । कस्मात् ? अनेकं जन्म युगपन्न सम्भवतीति क्रमेण वाच्यं तथाच पूर्व्वदोषानुषङ्गः । तस्माज्जन्मप्रायणान्तरे कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रःप्रधानोपसर्ज्जनभावेनावस्थितः प्रायणाभिव्यक्तः एकप्रघट्टके मिलित्वा मरणं प्रसाध्य संमूर्च्छित एकमेव जन्म करोति४ । तच्च जन्म तेनैव कर्मणा लब्धायुष्कं भवति तस्मिन्नायुषि तेनैव कर्मणा भोगः संपद्यते इति असौ कर्माशयो जन्मायुर्भोगहेतुत्वात् त्रिविपाकोऽभिधीयत इति । अतएकभविकः कर्माशयउक्तइति । दृष्टजन्मवेदनीयस्त्वेकविपाकारम्भी भोगहेतुत्वात्, द्विविपाकारम्भी वायुर्भोगहेतुत्वात्—नन्दीश्वरवत् नहुषवद्वेति, क्लेशकर्मविपाकानुभवनिर्म्मिताभिस्तु वासनाभिरनादिकालसंमूर्च्छितमिदं चित्तं

चित्रीकृतमिव सर्वतोमत्स्यजालग्रन्थिभिरिवाततम् इत्येता अनेकभवपूर्व्विका वासनाः । यस्त्वयं कर्म्माशय एष एवैकभविक उक्त इति । ये संस्काराः स्मृतिहेतवस्ता वासनाः ताश्चानादिकालीना इति यस्त्वसावेकभविकः कर्म्माशयः स नियतविपाकश्चानियतविपाकश्च तत्र दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियमो नत्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य, कस्मात् ? योह्यदृष्टजन्मवेदनीयोऽनियतविपाकस्तस्य त्रयी गतिः—कृतस्याविपक्वस्य नाशः१ प्रधानकर्म्मण्यावापगमनं २वा नियतविपाकप्रधानकर्म्मणाभिभूतस्य वा चिरमवस्थानमिति३ । तत्र कृतस्याविपक्वस्य नाशो यथा शुक्लकर्म्मोदयादिहैव नाशः कृष्णस्य, यत्रेदमुक्तम् 'द्वे द्वे ह वै कर्म्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोऽपहन्ति तदिच्छस्व कर्म्माणि सुकृतानि कर्त्तुमिहैव कर्म्म कवयो वेदयन्ते' प्रधानकर्म्मण्यावापगमनं २यत्रेदमुक्तम् "स्यात् स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः कुशलस्य नापकर्षायालम्" कस्मात् ? कुशलं हि मे बह्वन्यदस्ति यत्रायमावापङ्गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यतीति । नियतविपाकप्रधानकर्म्मणाभिभूतस्य वा चिरमवस्थानम् ३कथमिति ? दृष्टजन्मवेदनीयस्यैव नियतविपाकस्य कर्म्मणः समानं मरणमभिव्यक्तिकारणमुक्तं न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य, यत्त्वदृष्टजन्मवेदनीयं कर्म्मानियतविपाकं तन्नश्येत् आवापं वा गच्छेत् अभिभूतं वा चिरमप्युपासीत यावत् समानं कर्म्माभिव्यञ्जकं निमित्तमस्य विपाकाभिमुखं करोतीति तद्विपाकस्यैव देशकालनिमित्तानवधारणादियं कर्म्मगतिश्चित्रा दुर्व्विज्ञाना चेति, नचोत्सर्गस्यापवादात् निवृत्तिरित्येकभविकः कर्म्माशयोऽनुज्ञायत इति" भा० ।

"स्यादेतदविद्यामूलत्वे कर्म्माशयो विद्योत्पादे सत्यविद्याविनाशात् मा नाम तस्य कर्म्माशयान्तरं चैषीत्, प्राक्तनकर्म्माशयानामनादिभवपरम्परासञ्चितानामसंख्यातानामनियतविपाककालानां भोगेन क्षपयितुमशक्यत्वादशक्योच्छेदः संसारः स्यादित्यत आह सतीति । एतदुक्तं भवति सुखदुःखफलो हि कर्म्माशयस्तादर्थ्येन तन्नान्तरीयकतया जन्मायुषी अपि प्रसूते सुखदुःखे च रागद्वेषानुषक्ते तदविनिर्भागवर्त्तिनी तदभावे न भवतः, न चास्ति सम्भवो, न च तत्र यस्तुष्यति वोद्विजते वा, न च तस्य सुखं दुःखं वेति । तदियमात्मभूमिः क्लेशसलिलावसिक्ता कर्म्मफलप्रसवक्षेत्रमित्यस्ति क्लेशानां फलोपजननेऽपि कर्म्माशयसहकारितेति क्लेशसमुच्छेदे सहकारिवैकल्यात् सत्यप्यनन्तोऽप्यनियतविपाककालोऽपि प्रसङ्ख्यानदग्धबीजभावो न फलाय कल्पत इति । उक्तमर्थं भाष्यमेव द्योतयति सत्स्विति । अत्रैव दृष्टान्तमाह—यथा तुषेति । सतुषा अपि दग्धबीजभावाः स्वेदादिभिः । दार्ष्टान्तिके योजयति तथेति । ननु न क्लेशाः शक्या अपनेतुं, न हि सतामपनय इत्यत आह न प्रसङ्ख्यानदग्धक्लेशबीजभाव इति । विपाकस्य त्रैविध्यमाह स चेति । विपच्यते साध्यते कर्म्मभिरिति विपाकः । कर्म्मैकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा प्रथमा विचारणा, द्वितीया तु कर्म्मानेकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा । तदेवं चत्वारो विकल्पाः—तत्र प्रथमं विकल्पमपाकरोति—न तावदेकं कर्म्मैकस्य जन्मनः कारणम्१ । पृच्छति कस्मादिति । उत्तरम् अनादिकाले ऐकैकजन्मप्रचितस्य अत एव असङ्ख्येयस्य एकैकजन्मक्षयितादैकैकस्मात् कर्म्मणोऽवशिष्टस्य कर्म्मणः सांप्रतिकस्य च फलक्रमानियमादनाश्वासो लोकस्य प्रसक्तः सचानिष्ट इति । एतदुक्तं भवति कर्म्मचयस्य निरवत्वात् तदुत्पत्तिबाहुल्याच्चान्योन्यसंपीडिताश्च कर्म्माशया निरन्तरोत्पत्तयो निरुच्छ्वासाः स्वविपाकं प्रतीति न फलक्रमः शक्योऽवधारयितुं प्रेक्षावतेत्यनाश्वासो पुण्यानुष्ठानं प्रति प्रसक्त इति । द्वितीयं विकल्पं निराकरोति न च एकं कर्म्मानेकस्य जन्मनः कारणम्२ । पृच्छति कस्मादिति । उत्तरम् अनेकस्मिन् जन्मन्याहितमेकमेव कर्म्मानेकस्य जन्मलक्षणस्य विपाकस्य निमित्तमित्यवशिष्टस्य विपाककालाभावः प्रसक्तः स चाप्यनिष्ट इति कर्म्मवैफल्येन तदनुष्ठानाप्रसङ्गात् । यदैकजन्मसमुच्छेद्ये कर्म्मण्येकस्मिन् फलक्रमानियमादनाश्वासस्तदा कैव कथा बहुजन्मसमुच्छेद्ये कर्म्मण्येकस्मिन् ? तत्र ह्यवसराभावात् विपाककालाभावएव साम्प्रतिकस्येति भावः । तृतीयं विकल्पं निराकरोति—नचानेकं कर्म्मानेकस्य जन्मनः कारणम्३। अत्र हेतुमाह तदनेकं जन्म युगपन्न सम्भवत्ययोगिन इति क्रमेण वाच्यं यदि हि कर्म्मसहस्रं युगपज्जन्मसहस्रं प्रसुवीत तत एव कर्म्मसहस्रप्रक्षयादवशिष्टस्य विपाककालः फलक्रमे नियमश्च न स्यातां नत्वस्ति जन्मनां यौगपद्यम्, एवमेव प्रथमपक्ष एवोक्तं दूषणमित्यर्थः। तदेवं पक्षत्रये निराकृते पारिशेष्यादनेकं कर्म्मैकस्य जन्मनः कारणमिति४ पक्षोऽवशिष्यते, तस्माज्ज-

न्मेति जन्म च प्रायणञ्च जन्मप्रायणे तयोरन्तरं मध्यं तस्मिन् विचित्रः सुखदुःखफलोपहारेण विचित्रः यदत्रान्तमुद्भूतमनन्तरमेव फलं दास्यति तत् प्रधानं यत्तु किञ्चिद्विलम्बेन, तदुपसर्ज्जनं, प्रायणं मरणं, तेनाभिव्यक्तः स्वकार्य्यारम्भणाभिमुख्यमुपनीतः एकप्रघट्टके युगपत्, संमूर्च्छितः जन्मादिलक्षणे कार्य्ये कर्त्तव्ये एकलोलीभावमापन्नः एकमेव जन्म करोति नानेकं तच्च जन्म मनुष्यादिभावः। तेनैव कर्म्मणा लब्धायुष्कं कालभेदावच्छिन्नजीवनञ्च भवति तस्मिन्नायुषि तेनैव कर्म्मणा भोगः सुखदुःखसाक्षात्कारः स्वसम्बन्धितया सम्पाद्यत इति। तस्मादसौ कर्माशयो जात्यायुर्भोगहेतुत्वात् त्रिविपाकोऽभिधीयते। औत्सर्गिकमुपसंहरति—अत एकभविकः कर्माशय उक्त इति। एकोभवः एकभवः पूर्वकालेत्यादिना समासः, एकभवोऽस्यास्तीति मत्वर्थीय ठन्। क्वचित्पाठः ऐकभविक इति तत्रैकभवशब्दात् भवार्थे ठक्प्रत्ययः एकजन्मावच्छिन्नमस्य भवनमित्यर्थः, तदेवमौत्सर्गिकैकभविकस्य त्रिविपाकत्वमुक्त्वा दृष्टजन्मवेदनीयस्यैहिकस्य कर्मणस्त्रिविपाकत्वं व्यवच्छिनत्तिदृष्टेति। नन्दीश्वरस्य खल्वष्टवर्षावच्छिन्नायुषो मनुष्यजन्मनस्तीव्रसंवेगेनाधिमात्रोपायजन्मा पुण्यभेद आयुर्भोगहेतुत्वात् द्विविपाकः, नहुषस्य तु पार्ष्णिप्रहारविरोधिनागसा स्वेन्द्रपदप्राप्तिहेतुनैव कर्म्मणा आयुषो विहितत्वादपुण्यभेदो भोगमात्रहेतुः। ननु यथैकभविकः कर्माशयस्तथा किं क्लेशवासना भोगानुकूलाश्च कर्मविपाकानुभववासनाः? तथा च मनुष्यस्तिर्य्यग्योनिमापन्नो न तत्तज्जातीयोचितं भुञ्जीतेत्यत आह—क्लेशेति। संमूर्च्छितमेकलोलीभावमापन्नम्। धर्माधर्माभ्यां व्यवच्छेत्तुं वासनायाः स्वरूपमाह ये संस्कारा इति। औत्सर्गिकमेकभविकत्वम्, क्वचिदपवदितुं भूमिकामारचयति—यस्त्वसाविति। तुशब्देन वासनातो व्यवच्छिनत्ति। दृष्टजन्मवेदनीयस्य, नियतविपाकस्यैवायमेकभविकत्वनियमः न त्वदृष्टजन्मवेदनीयस्य, किंभूतस्यानियतविपाकस्येति। हेतुं पृच्छति कस्मादिति। हेतुमाह योहीति। एकान्तावद्गतिमाह कृतस्येति। द्वितीयामाह प्रधानेति। तृतीयामाह नियतेति। तत्र प्रथमां विभजते तत्र कृतस्येति। संन्यासिकर्मभ्योऽशुक्लाकृष्णेभ्योऽन्यानि त्रीण्येव कर्माणि कृष्ण१। शुक्ल२। कृष्णशुक्लानि३। तदिह तपःस्वाध्यायादिसाध्यः शुक्लकर्माशय उदित एवादत्तफलस्य कृष्णस्य नाशकः, अविशेषाच्च शबलस्यापि कृष्णभागयोगादिति मन्तव्यं, तत्रैव भगवान् आम्नायमुदाहरति यत्रेदमिति—द्वे द्वे ह वै कर्मणी कृष्णकृष्णशुक्ले अपहन्तीति सम्बन्धः वीप्सया भूयिष्ठता सूचिता। कस्येत्यत आह पापकस्य पुंसः कोऽसावपहन्तीत्यत आह एकोराशिः पुण्यकृतः समूहस्य समूहसाध्यत्वात्, तदनेन शुक्लकर्म्माशयस्तृतीय उक्तः। एतदुक्तं भवति ईदृशो नामायं परपीड़ादिरहितसाधनसाध्यः शुक्लकर्माशयः यदेकोऽपि सन् कृष्णान् कृष्णशुक्लांश्चात्यन्तविरोधिनः कर्म्माशयान् भूयसोऽप्यपहन्ति। तत् तस्मादिच्छस्वेति छान्दसत्वादात्मनेपदम्। शेषं सुगमम्। अत्र च शुक्लकर्म्मोदयस्यैव स कोऽपि महिमा यत इतरेषामभावः, न तु स्वाध्यायादिजन्मनो दुःखात्मनो विरोध्यधर्म्मः अपि तु स्वकार्यदुःखविरोधी, न च स्वध्यायादिजन्म दुःखं तस्य कार्य्यं, तत्कार्य्यत्वे स्वाध्यायादिविधानानर्थक्यात्तद्बलादेव तदुत्पत्तेः अनुत्पत्तौ वा कुम्भीपाकाद्यपि विधीयेत अविधाने तदनुत्पत्तेरिति सर्व्वं चतुरस्रम्। द्वितीयां गतिं विभजते प्रधाने कर्मणि ज्योतिष्टोमादिके तदङ्गस्य पशुहिंसादेरावापगमनं द्वे खलु हिंसादेः कार्य्ये प्रधानाङ्गत्वेन विधानात्तदुपकारः, "मा हिंस्यात् सर्व्वाभूतानीति" हिंसाया निषिद्धत्वादनर्थश्च, तत्र प्रधानाङ्गत्वेनानुष्ठानादप्रधानतेत्यतो न द्रागित्येव प्रधाननिरपेक्षा सती स्वफलमनर्थं प्रसोतुमर्हति किन्त्वारब्धविपाके प्रधाने साहायकमाचरन्ती व्यवतिष्ठते प्रधानसाहायकमाचरन्त्याश्च स्वकार्य्ये वीजमात्रतयावस्थानं प्रधाने कर्म्मण्यावापगमनं, यत्रेदमुक्तम् पञ्चशिखेन स्वल्पः सङ्करोज्योतिष्टोमादिजन्मनः प्रधानापूर्व्वस्य पशुहिंसादिजन्मनानर्थहेतुनाऽपूर्वेण, सपरिहारः शक्योहि प्रायश्चित्तेन परिहर्त्तुम्, अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये च विपच्येत तथापि यावदसावनर्थं प्रसूते तावत् सप्रत्यवमर्षः—मृष्यन्ते हि पुण्यसम्भारोपनीतसुखसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्, अतः कुशलस्य महतः पुण्यस्य नापकर्षाय प्रक्षयाय पर्य्याप्तः। पृच्छति कस्मात्? उत्तरं कुशलं हि मे बह्वन्यदस्ति प्रधानकर्मतया व्यवस्थितं दीक्षणीयादिदक्षिणान्तं यत्रायं सङ्करः स्वल्पः स्वर्गेऽप्यस्य फले सङ्कीर्णपुण्यलब्धजन्मनः स्वर्गात् सर्व्वथा दुःखेनापरामृष्टादपकर्षमल्पमल्पदुःखसम्भेदं करिष्यतीति। तृतीयां गतिं विभजते नियतेति। अत्री-

यस्त्व नेह प्राधान्यमभिमतं नत्वङ्गितया बलीयस्त्वञ्च नियत विपाकत्वेनान्यदानवकाशत्वात्, अनियतविपाकस्य तु दुर्ब्बलत्वमन्यदा सावकाशत्वात्, चिरमवस्थानं बीजभावमात्रेण, न पुनः प्रधानोपकारितया,तस्य स्वतन्त्रत्वात् । ननु प्रायणेनैकदैव कर्माशयोऽभिव्यज्यत इत्युक्तमिदानीञ्च चिरावस्थानमुच्यते,तत् कथं ? वरं पूर्व्वेण न विरुध्यत इत्याशयवान् पृच्छति कथमिति । उत्तरम् अदृष्टेति । जात्यभिप्रायमेकवचनम् । तदितरस्य गतिमुक्तामवधारयति यत्त्वदृष्टेति । शेषं सुगमम्” विव० ।

“ते ह्लादपरितापफलाः पुण्यापुण्य हेतुत्वात्” सू० ।

“ते जन्मायुर्भोगाः पुण्यहेतुकाः सुखफलाः,अपुण्यहेतुकाः दुःखफला इति यथाचेदं दुःखं प्रतिकूलात्मकम् एवं विषयसुखकालेऽपि दुःखमस्त्येव प्रतिकूलात्मकं योगिनः”भा०। “उक्तम् क्लेशमूलत्वं कर्म्मणः, कर्म्ममूलत्वञ्च विपाकानाम् । अथ विपाकाः कस्य मूलम् ? येनामी त्यक्तव्या इत्याह ते इत्यादि । व्याचष्टे—ते जन्मायुर्भोगा इति । यद्यपि जन्मायुषोरेव ह्लादपरितापपूर्व्वभावितया तत्फलत्वं न तु भोगस्य ह्लादपरितापोदयानन्तरभाविनस्तदनुभवात्मनः,तथाप्यनुभाव्यतया भोग्यतया भोगफलत्वमिति मन्तव्यम् । नन्वपुण्यहेतुका जात्यायुर्भोगाः परितापफला भवन्तु हेयाः प्रतिकूलवेदनीयत्वात्, कस्मात् पुनः पुण्यहेतुकास्त्यज्यन्ते सुखफलाः? अनुकूलवेदनीयत्वात् । नचैषां प्रत्यात्मवेदनीयानुकूलता शक्या सहस्रेणाप्यनुमानागमैरपाकर्त्तुम्, न च ह्लादपरितापौ परस्पराविनाभूतौ यतोह्लादे उपादीयमाने परितापोऽप्यवर्जनोयतयाऽऽपतेत् तयोर्भिन्नहेतुकत्वात् रूपत्वात् इत्यत आह—यथा चेदमिति”विवरणम् मरणस्य यथा सर्व्वकर्म्मानभिव्यञ्जकत्वं तथा शा०भा०

“अपि च प्रायणमनारब्धफलस्य कर्म्मणोऽभिव्यञ्जकं प्राक् प्रायणादारब्धफलेन कर्म्मणा प्रतिबद्धस्य अभिव्यक्त्यनुपपत्तेः । तच्चाविशेषाद्यावत् किञ्चिदनारब्धफलं तस्य सर्व्वस्याभिव्यञ्जकम्, न हि साधारणे निमित्ते नैमित्तिकमसाधारणं भवितुमर्हति, नह्यविशिष्टे प्रदीपसन्निधौ घटोऽभिव्यज्यते न पट इत्युपपद्यते” इत्या शङ्का निराकृतं यथा—

“अपि च केन हेतुना प्रायणमनारब्धफलस्य कर्म्मणोऽभिव्यञ्जकं प्रतिज्ञायत इति वक्तव्यम् । आरब्धफलेन कर्म्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तेस्तदुपशमात् प्रायणकाले वृत्त्युद्भवो भवतीति यदुच्येत ततो वक्तव्यं यथैव हि प्राक्प्रायणादारब्धफलेन कर्म्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तिरेवं प्रायणकालेऽपि विरुद्धफलस्यानेकस्य कर्म्मणोयुगपत्फलारम्भासम्भवाद्बलवता प्रतिबद्धस्य दुर्ब्बलस्य वृत्त्युद्भवानुपपत्तिरिति । नह्यनारब्धफलत्वसामान्ये जात्यन्तरोपभोग्यफलमप्यनेकं कर्म्मैकस्मिन् प्रायणे युगपदभिव्यक्तं सदेकां जातिमारभत इति शक्यं वक्तुम्, प्रतिनियतफलत्वविरोधात् । नापि कस्यचित् कर्म्मणः प्रायणे अभिव्यक्तिः कस्यचिदुच्छेद इति शक्यं वक्तुम्,ऐकान्तिकफलत्वविरोधात् । न हि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्म्मणामुच्छेदः सम्भाव्यते । स्मृतिरपि विरुद्धफलेन कर्म्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमप्यवस्थानं दर्शयति । “कदाचित् सुकृतं कर्म्म कूटस्थमिह तिष्ठति । पच्यमानस्य संसारे यावद्दुःखाद्विमुच्यते” इत्येवंजातीयका । यदि च कृत्स्नमनारब्धफलं कर्म्मैकस्मिन् प्रायणेऽभिव्यक्तं सदेकां जातिमारभेत, ततः स्वर्गनरकतिर्य्यग्योनिष्वधिकारानवगमात् धर्माधर्मानुत्पत्तौ निमित्ताभावान्नोत्तरा जातिरुपपद्येत, ब्रह्महत्यादीनां चैकैकस्य कर्म्मणोऽनेकजन्मनिमित्तत्वं स्मर्य्यमाणमुपरुध्येत । न च धर्माधर्म्मयोः स्वरूपफलसाधनादिसमधिगमे शास्त्रादतिरिक्तं कारणं शक्यं सम्भावयितुम् । न च दृष्टफलस्य कर्म्मणः कारीर्य्यादेः प्रायणमभिव्यञ्जकं सम्भवतीत्यव्यापिकापीयं प्रायणस्याभिव्यञ्जकत्वकल्पना । प्रदीपोपन्यासोऽपि कर्म्मबलाबलप्रदर्शनेनैव प्रतिनीतः । स्थूलसूक्ष्मरूपाभिव्यक्तिवच्चेदं द्रष्टव्यम् । यथा हि—प्रदीप समानेऽपि सन्निधाने स्थूलरूपमभिव्यनक्ति न सूक्ष्मम् एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्म्मजातस्य प्राप्तावसरत्वे बलवतः कर्म्मणोवृत्तिमुद्भावयति न दुर्ब्बलस्येति । तस्मात् श्रुतिस्मृतिन्यायविरोधादश्लिष्टोयमशेषकर्माभिव्यक्तेरभ्युपगमः । शेषकर्म्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने संभ्रमः सम्यग्दर्शनादशेषकर्म्मक्षयश्रुतेः” ।

एवं शुभाशुभकर्म्मविपाकः सामान्यतो निरूपितः । इदानीमशुभकर्म्मविपाकोविशेषतो निरूप्यते स चाधर्म्मशब्दे १२२० पृ० उक्तोऽपि प्रपञ्चार्थमिहोच्यते—

पुराणसर्व्वस्वे विष्णु पु०२ अं ६अ० पराशरमैत्रेयसंवादे । “पराशर उवाच । ततश्च नरकान् विप्र ! भुवोऽधःसलिलस्य च । पापिनो येषु पात्यन्ते तान् शृणुष्व समाहितः। रौरवश्चैव वेधश्च शूकरोविशसस्तथा । महाज्वालस्तप्तकुम्भः शवलोऽथ विमोहनः । रुधिराम्भो वैतरणी

कृमिशः कृमिभोजनः । असिपत्रवनं कृष्णोलाला-भक्षश्च दारुणः । तथा पूयवहः पापो वह्निज्वालो ह्यधःशिराः । सन्दंशः कालसूत्रश्च तमश्चावीचिरेव च । श्वभोजनोऽथाप्रतिष्ठो ह्यर्वाचिश्च तथापरः । इत्याद्या यातना विप्र ! घातका भृशदारुणाः । यमस्य विषये घोराः शस्त्राग्निभयदायिनः । पतन्ति येषु पुरुषाः पापकर्मरताश्च ये । कूटसाक्ष्यं तथा सम्यक्पक्षपातेन यो वदेत् । यश्चान्यदनृतं वक्ति स नरो याति रौरवम् । भ्रूणहा गुरुहन्ता च मित्रहा मुनिसत्तम ! । यान्ति ते रौरवं वेधं यश्चोच्छ्वासनिरोधकः । सुरापो ब्रह्महा हर्त्ता सुवर्णानाञ्च शूकरे । प्रयान्ति नरके यश्च तैः संसर्गमुपैति वै । राजन्यवैश्यहा ज्वाले तथैव गुरुतल्पगः । तप्तकुम्भे स्वसृगामी हन्ति राजभटांश्च यः । साध्वीविक्रयकृद्बध्य (हत्वा) प्राणिनं केशविक्रयी । तप्तलोहे पतन्त्येते यश्च भक्तं परित्यजेत् । स्नुषां सुताञ्चाभिगामी महाज्वाले निपात्यते । अवमन्ता गुरूणां यो यश्चाक्रोष्टा नराधमः । वेददूषयिता यश्च वेदविक्रयिकश्च यः । अगम्यागामी यश्च स्यात्ते यान्ति शवलं द्विज ! । चौरो विमोहे पतति मर्य्यादादूषकस्तथा । देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः । स याति कृमिभक्ष्ये वै कृमिशे च त्वरिष्टकृत् । पितृदेवान् सुरान् यस्तु पर्य्यश्नाति नराधमः । लालाभक्ष्ये पतत्युग्रे शरकर्त्ता च वेधके । करोति कर्णिनो यश्च यश्च खड्गादिकृन्नरः । प्रयान्त्येते विशसने नरके भृशदारुणे । असत्प्रतिग्रहीता तु नरकं यात्यधोमुखम् । अयाज्ययाजकस्तद्वत्तथा नक्षत्रसूचकः । क्रूरः पूयवहश्चैको याति मिष्टान्नभुङ्नरः । लाक्षामांसरसानाञ्च तिलानां लवणस्य च । विक्रेता ब्राह्मणो याति तमेव नरकं द्विज ! । मार्जारकुक्कुटच्छागश्ववराहविहङ्गमान् । पोषयन्नरकं याति तमेव द्विजसत्तम ! । रङ्गोपजीवी कैवर्त्तः कुण्डाशी गरदस्तथा । सूचीमाहिषकश्चैव पर्व्वगामी च यो द्विज ! । अगारदाही मित्रघ्नः शाकुनिर्ग्रामयाजकः । रुधिरान्धे पतन्त्येते सोमं विक्रीणते च ये । मधुहारी ग्रामहन्ता याति वैतरणीं नरः । रेतःपानादिकर्त्तारो मर्य्यादाभेदिनो हि ये । ते कृष्णे यान्त्यशौचाश्च कुहकाजीविनश्च ये । असिपत्रवनं याति वनच्छेदी वृथैव यः । औरभ्रिको मृगव्याधो वह्निज्वाले पतन्ति वै । पात्यते द्विज ! तत्रैव यश्चागारेषु वह्निदः । व्रतेषु लोपको यश्च स्वाश्रमाद्विच्युतश्च यः । सन्दंशयातनामध्ये पततस्तावुभावपि । दिवास्वप्ने रेतःस्कन्दा ये नरा ब्रह्मवादिनः । पुत्त्रैरध्यापिता ये च ते पतन्ति श्वभोजने । एते चान्ये च नरकाः शतशोऽथ सहस्रशः । ये च दुष्कृतकर्म्माणः पच्यन्ते यातनागताः । यथैव पापान्येतानि तथान्यानि सहस्रशः । भुज्यन्ते यानि पुरुषैर्नरकान्तरगोचरैः । वर्णाश्रमविरुद्धञ्च कर्म कुर्व्वन्ति ये नराः । कर्म्मणा मनसा वाचा निरयेषु पतन्ति ते । अधःशिरोभिर्दृश्यन्ते नारकैर्दिवि देवताः । देवाश्चाधोमुखान् सर्व्वानधः पश्यन्ति नारकान् । स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः । धार्म्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् । सहस्रभागः प्रथमा द्वितीयोऽनुक्रमात्ततः । सर्व्वे ह्येते महाभागा यावन्मुक्तिसमाश्रयाः । यावन्तो जन्तवः स्वर्गे तावन्तो नरकौकसः । पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः” । विशेषशुभाशुभकर्म्मविपाकाः तत्रैव शिवधर्म्मोत्तरे स्कन्दोक्ताः “अथ पापैरिमे यान्ति यमलोकं चतुर्व्विधैः । सन्त्रासजननं घोरं विविधाः सर्व्वदेहिनः । गर्भस्थैर्जायमानैश्च बालैस्तरुणमध्यमैः । पुंस्त्रीनपुंसकैर्वृद्धैर्यातव्यं सर्व्वदेहिभिः । शुभाशुभफलं तत्र देहिनां प्रविचार्य्यते । चित्रगुप्तादिभिः सभ्यैर्मध्यस्थैः समदर्शिभिः । न तेऽत्र प्राणिनः सन्ति ये न यान्ति यमक्षयम् । अवश्यं हि कृतं कर्म भोक्तव्यं यद्विचारितम् । तत्र ये शुभकर्म्माणः सौम्यचित्ता दयान्विताः । ते नरा यान्ति सौम्येन पथा यान्ति यमालयम् । यः प्रदद्याद्द्विजेन्द्राणामुपानत्काष्ठपादुके । स नराश्वेन महता सुखं याति यमालयम् । छत्रदानेन गच्छन्ति पथा शुभ्रेण देहिनः । दिव्यवस्त्रपरीधाना यान्ति वस्त्रप्रदायिनः । शिविकायाः प्रदानेन सद्रथेन सुखं व्रजेत् । शय्यासनप्रदानेन स्वपन् याति यमाश्रयम् । आरामकर्त्ता छायासु शीतलासु सुखं व्रजेत् । यान्ति पुष्करयानेन पुष्करारामदायिनः । देवायतनकर्त्ता च यतीनामाश्रमस्य च । अनाथपान्थकानाञ्च क्रीडन् याति रथोत्तमैः । देवाग्निगुरुविप्राणां मातापित्रोश्च पूजकाः । पूज्यमाना नरा यान्ति कामिकेन यथासुखम् । द्योतयन्तो दिशः सर्व्वा यान्ति दीपप्रदायकाः । प्रतिश्रयप्रदानेन सुखं याति गृहे स्वपन् । सर्व्वकामसमृद्धेन पथा गच्छन्ति गोप्रदाः । येऽन्नदानानि कुर्व्वन्ति ते तृप्ता यान्ति सत्पथा । आर्त्तौषधप्रदातारः सुखं यान्ति निरामयाः । विश्राम्यमाणा गच्छन्ति गुरुशुश्रूषणे रताः । पादशौचप्रदानेन शीतलेन पथा व्रजेत् ।

पादाभ्यङ्गञ्च यः कुर्य्यादश्वपृष्ठेन स व्रजेत् । हेमरत्नप्रदानेन याति दुर्गाणि निस्तरन् । वरानडुत्प्रदानेन वरयानेन गच्छति । अन्नपानप्रदानेन पिबन् खादंश्च गच्छति । इत्येवमादिभिर्दानैः सुखं यान्ति यमालयम् । स्वर्गेऽपि विपुलान् भोगान् प्राप्नोति विविधान्नरः । सर्व्वेषामेव दानानामन्नदानं परं स्मृतम् । सद्यः प्रीतिकरं दिव्यं बलबुद्धिविवर्द्धनम् । नान्नदानसमं दानं त्रिषु लोकेषु विद्यते । अन्नाद्भवन्ति भूतानि तदभावे म्रियन्ति च । रक्तं मांसं वसा शुक्रं क्रमादन्नात् प्रवर्त्तते । शुक्राद्भवन्ति भूतानि तस्मादन्नमयं जगत् । हेमरत्नाश्वनागेन्द्रनारीस्रक्चन्दनादिभिः । समस्तैरपि संप्राप्तैर्न रमन्ते बुभुक्षिताः । गर्भस्था जायमानाश्च बालावृद्धाश्च मध्यमाः । आहारमभिकाङ्क्षन्ति देवदानवतापसाः । क्षुधा हि सर्व्वरोगाणां व्याधिः श्रेष्ठतमः स्मृतः । तस्मादौषधिलेपेन (आहारेण) प्रतीकारः प्रकीर्त्तितः । नास्ति क्षुधासमं दुःखं नास्ति रोगः क्षुधा समः । नास्त्याहारसमं सौख्यं नास्ति क्रोधसमो रिपुः । अतएव महापुण्यमन्नदानं प्रधानतः । यतः क्षुधाग्निसन्तप्ता म्रियन्ते सर्व्वदेहिनः । अन्नदः प्राणदः प्रोक्तः प्राणदश्चापि सर्व्वदः । तस्मादन्नप्रदानेन सर्व्वदानफलं लभेत् । त्रैलोक्ये यानि रत्नानि भोगस्त्रीवाहनानि च । अन्नपानप्रदः सर्व्वमिहामुत्र च तल्लभेत् । यस्मादन्नपानपुष्टाङ्गः कुरुते पुण्यसञ्चयम् । अन्नप्रदातुस्तत्वार्द्धं कर्त्तुश्चार्द्धं न संशयः । धर्म्मार्थकाममोक्षाणां देहः परमसाधनम् । स्थितिस्तस्यान्नपानाभ्यामतस्तत् सर्व्वसाधनम् । अन्नं प्रजापतिः साक्षादन्नं विष्णुः शिवः स्वयम् । तस्मादन्नसमं दानं न भूतं न भविष्यति । त्रयाणामपि लोकानामुदकं जीवनं स्मृतम् । पवित्रममृतं दिव्यं शुद्धं सर्व्वरसाश्रयम् । अन्नपानाश्वगोवस्त्रभूषय्याच्छत्रमासनम् । प्रेतलोके प्रशस्तानि दानान्यष्टौ विशेषतः । एवं दानविशेषेण धर्म्मराजपुरं नराः । यस्माद्यान्ति सुखेनैव तस्माद्दानं समाचरेत् । ये पुनः क्रूरकर्म्माणः पापा दानविवर्ज्जिताः । ते घोरेण पथा यान्ति दक्षिणेन यमालयम् । षडशीतिसहस्राणि योजनानामतीत्य वै । वैवस्वतपुरं ज्ञेयं नानारूपव्यवस्थितम् । समीपस्थमिवाभाति नराणां शुभकर्म्मणाम् । पापानामतिदूरस्थं पथा रौद्रेण गच्छताम् । तीव्रकण्टकयुक्तेन शर्कराखिचितेन च । क्षुरधारानिभैस्तीव्रैः पाषाणैर्निचितैस्तथा । क्वचित् पङ्केन महता सुदुस्तारैश्च खातकैः । क्वचित् सूचीनिभैर्दन्तैः संछन्नेन पथा क्वचित् । तटप्रपातविषमैः पर्व्वतैर्वृक्षसङ्कुलैः । प्रतप्ताङ्गारयुक्तेन यान्ति मार्गेण दुःखिताः । क्वचिद्विषमगर्त्तैश्च क्वचिल्लोष्ट्रैः सुपिच्छलैः । प्रतप्तवालुकाभिश्च तथा तीक्ष्णैश्च शङ्कुभिः । अनेकशाखाविततैर्व्याप्तं वंशवनैः क्वचित् । कष्टेन तमसा मार्गमनालम्बेन कुत्रचित् । अयःशृङ्गाटकैस्तप्तैः क्वचिद्दावाग्निना पुनः । क्वचित्तप्तशिलाभिश्च क्वचिद्व्याप्तं हिमेन च । क्वचिद्वालुकया व्याप्तमाकण्ठान्तप्रवेशया । क्वचिदुष्णाम्बुना व्याप्तं क्वचिच्च करीषाग्निना । क्वचित् सिंहैर्वृकैर्व्याप्तं दंशैः कीटैश्च दारुणैः । क्वचिन्महाजलौकाभिः क्वचिच्चाजगरैः पुनः । मक्षिकाभिश्च रौद्राभिः क्वचित् सर्पैर्विषोल्वणैः । मत्तमातङ्गयूथैश्च बलोन्मत्तैः प्रमाथिभिः । पन्थानमुल्लिखद्भिश्च तीक्ष्णशृङ्गैर्महावृषैः । महाविषाणैर्महिषैरुष्ट्रैर्मत्तैश्च रोहकैः । डाकिनीभिश्च रौद्राभिर्विकरालैश्च राक्षसैः । व्याधिभिश्च महाघोरैः पीड्यमाना व्रजन्ति ते । महाधूलिविमिश्रेण महाचण्डेन वायुना । महापाषाणवर्षेण हन्यमाना निराश्रयाः । क्वचिद्विद्युत्प्रपातेन दार्य्यमाणा व्रजन्ति च । महाटङ्कौघवर्षेण भिद्यमानाश्च सर्व्वतः । पतद्भिर्व्वज्रसंघातैरुल्कापातैश्च दारुणैः । प्रतप्ताङ्गारवर्षेण दह्यमाना रुदन्ति च । महता पांशुवर्षेण पूर्य्यमाणा रुदन्ति हि । वज्रमेघरवैर्घोरैर्वित्रास्यन्ते मुहुर्मुहुः । निशितायुधवर्षेण चूर्ण्यमानाश्च सर्व्वतः । महाक्षाराम्बुधाराभिः सिच्यमाना द्रवन्ति च । महाशीतेन महता रूक्षेण परुषेण च । समन्ताद्धूयमानास्ते शुष्यन्ते सङ्कुचन्ति च । इत्थं रौद्रेण मार्गेण पाथेयरहितेन च । निरालम्बेन दुर्गेण निर्ज्जनेन समन्ततः । अविश्रामेण महता निर्गतापाश्रयेण च । तमोरूपेण कष्टेन सर्व्वदुःखाश्रयेण च । नीयन्ते देहिनः सर्व्वे ये मूढाः पापकारिणः । यमदूतैर्महाघोरैस्तदङ्गोत्कारिभिर्बलात् । एकाकिनः पराधीना मित्रबन्धुविवर्ज्जिताः । शोचन्तः स्वानि कर्म्माणि रुदन्तस्ते मुहुर्मुहुः । प्रेतीभूता विवस्त्राश्च शुष्ककण्ठौष्ठतालुकाः । कृशाङ्गाभीतभीताश्च दह्यमानाः क्षुधाग्निना । बद्धाः शृङ्खलया केचिदुत्तानाः पादयोर्नराः । आकृष्यन्ते हन्यमाना यमदूतैर्बलोत्कटैः । उरसाऽधोमुखाश्चान्ये कृष्यमाणाः सुदुःखिताः । केशपाशनिबद्धाश्च समाकृष्यन्ति रज्जुना । ललाटे चाशिना चान्ये भिन्नाः कृष्यन्ति देहिनः । उत्तानाः कण्टकपथा क्वचिद्-

ङ्गारवर्त्मना । पश्चाद्बाहूरुबद्धाश्च जठरे च प्रपीडिताः । पूरिताः शृङ्खलाभिश्च हस्तयोश्चापि कीलिताः । ग्रीवापाशेन क्रष्यन्तः प्रयान्त्यन्ये सुदुःखिताः । जिह्वाशङ्कुप्रबद्धेनाकृष्य नीयन्ति रज्जुना । कृकाट्यामर्द्धचन्द्रेण क्षिप्यमाणा यतस्ततः । शिश्ने सवृषणे बद्धा नीयन्तेऽन्ये च रज्जुना । नासाप्रबद्धरज्ज्वा च समाकृष्यन्ति चापरे । भिन्नाः कपोलयोरज्ज्वाकृष्यन्ते ते तथौष्ठयोः । विभिन्नाश्चोदरे चान्ये तप्तशृङ्खलया नराः । क्रिश्यन्ते कर्णयोश्चान्ये भिन्नाश्च चिकुरे परे । छिन्नाग्रपादहस्ताश्च छिन्नकर्णौष्ठनासिकाः । संछिन्नशिश्नवृषणाश्छिन्नभिन्नाङ्गसन्धयः । प्रतुद्यमानाः कुन्तैश्च भिद्यमानाश्च सायकैः । इतस्ततः प्रधावन्ति क्रन्दमाना निराश्रयाः । मुद्गरैर्लौहदण्डैश्च हन्यमाना मुहुर्मुहुः । कर्षैश्च विविधैर्घोरैर्ज्वलिताग्निसमप्रभैः । भिन्दीपालैर्विभिद्यन्ते स्रवन्तः पूयशोणितम् । कृमिजग्धाश्च नीयन्ते सत्वता विवशा नराः । याचमानाश्च सलिलमन्नञ्चापि बुभुक्षिताः । छायां प्रार्थयमानाश्च शीतार्त्ता अनलं पुनः । दानहीना प्रयान्त्येवं याचन्तो विमुखा नराः । गृहीतदानपाथेयाः सुखं यान्ति यमालयम् । एवं प्रयान्ति कष्टेन प्राप्ताः प्रेतपुरं तदा । प्रज्ञापितास्तदा दूतैर्निवेश्यन्ते यमाग्रतः । तत्र ये शुभकर्म्माणस्तांस्तु सम्मानयेद्यमः । स्वागतासनदानेन पाद्यार्घ्येण प्रियेण च । धन्या यूयं महात्मानः स्वात्मनोहितकारिणः । येन दिव्यसुखार्थाय भवद्भिः सुकृतं कृतम् । इदं विमानमारुह्य दिव्यस्त्रीभोगभूषितम् । स्वर्गं गच्छध्वमतुलं सर्व्वकामसमन्विताः । तत्र भुक्त्वा महाभोगांस्तदन्ते पुण्यसंक्षयात् । यत्किञ्चिदल्पमशुभं पुनस्तदिह भोक्ष्यथ । ते चापि धर्म्मराजानं नराः पुण्यानुभावतः । पश्यन्ति सौम्यवदनं पितृभूतमिवात्मनः । ये पुनः क्रूरकर्म्माणस्ते पश्यन्ति भयानकम् । भ्रापावष्टब्धनयना विपरीतात्मबुद्धयः । दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् । ऊर्द्ध्वकेशं महाश्मश्रुं प्रस्फुरदधरोत्तरम् । अष्टादशभुजं क्रुद्धं नीलाञ्जनचयप्रभम् । सर्व्वायुधोद्यतकरं यमदण्डेन तर्जिनम् । महामहिषमारूढं दीप्ताग्निसमलोचनम् । रक्तमाल्याम्बरधरं महामेरुमिवोच्छ्रितम् । प्रलयाम्बुदनिर्घोषं पिबन्तमिव सागरम् । ग्रसन्तमिव त्रैलोक्यमुद्गिरन्तमिवानलम् । मृत्युश्च तत्समीपस्थः कालानलसमप्रभः । कालश्चाञ्जनसङ्काशः कृतान्तश्च भयानकः । मारी चोग्रा महामारी कालरात्री च दारुणा । विविधा व्याधयः कष्टा नानारूपा भयावहाः । शक्तिशूलाङ्कुशकराः पाशचक्रासिधारिणः । चक्रदण्डधरा रौद्राः क्षुरतूणधनुर्द्धराः । असंख्याता महावीर्य्याः क्रूराञ्जनसमप्रभाः । सर्व्वायुधोद्यतकरा यमदूता भयानकाः । अनेन परिवारेण महाघोरेण संवृतम् । यमं पश्यन्ति पापिष्ठाश्चित्रगुप्तञ्च भीषणम् । निर्भर्त्सयति चात्यर्थं यमस्तान् पापकर्म्मिणः । चित्रगुप्तश्च भगवान् धर्म्मवाक्यैः प्रबोधयेत् । भो भो दुष्कृतकर्म्माणः ! परद्रव्यापहारिणः ! । गर्व्विता रूपवीर्य्येण परदारविमर्द्दकाः ! । यत् स्वयं क्रियते कर्म्म तत् स्वयं भुज्यते जनाः । तत् किमात्मोपघातार्थं भवद्भिर्दुष्कृतं कृतम् ?। इदानीं किं प्रतप्यध्वं ? पीड्यमानाः स्वकर्म्मभिः । भुङ्क्ष्वं स्वानि कर्म्माणि नात्र दोषोऽस्ति कस्यचित् । एते ते पृथिवीपालाः संप्राप्ता मत्समीपतः । स्वकीयैः कर्म्मभिर्घोरैः दुष्प्रज्ञाबलदर्पिताः । भोभो नृपा ! दुराचाराः ! प्रजाविध्वंसकारिणः ! । अल्पकालस्य राज्यस्य कृते किं दुष्कृतं कृतम् ? । राज्यलोभेन मोहेन बलादन्यायतः प्रजाः । विध्वंसिताः फलं तस्य भुङ्क्ष्वमधुना नृपाः ! । क्व तद्राज्यं कलत्रञ्च यदर्थमशुभं कृतम् । तत् सर्व्वं संपरित्यज्य यूयमेकाकिनः स्थिताः । पश्यामस्तद्बलं वीनो येन तद्दण्डिताः प्रजाः । यमदूतैस्ताड्यमाना अधुना कीदृशं भवेत् । एवं बहुविधैर्वाक्यैरुपालभ्यमानेन ते । शोचन्तः स्वानि कर्म्माणि तूष्णीं तिष्ठन्ति पार्थिवाः । इति धर्म्मं समादिश्य नृपाणां धर्म्मराट् पुनः । तत्पापपङ्कशुद्ध्यर्थमिदं वचनमब्रवीत् । भोभोश्चण्डा महाचण्डा गृहीत्वा नृपतीनिमान् । विशोधयध्वं पापेभ्यः क्रमेण नरकाग्निना । ततः शीघ्रं समुत्थाय नृपान् संगृह्य पादयोः । भ्रामयित्वातिवेगेन निक्षिप्योर्द्ध्वं प्रगृह्य च । सर्व्वप्राणेन महता प्रतप्तेऽथ शिलातले । आस्फालयन्ति तरसा वज्रेणेव महाद्रुमम् । ततः स राजदेहान्तःप्रविष्टो जर्ज्जरीकृतः । निःसंज्ञः स तदा देही निश्चेष्टश्च प्रजायते । ततः स वायुना स्पृष्टः शनैरुज्जीवते पुनः । ततः पापविशुद्ध्यर्थं क्षिप्यते नरकार्णवे । अष्टाविंशतिरेवाधः क्षितेर्नरककोटयः सप्तमस्य तलस्यान्ते घोरे तमसि संस्थिताः । घोराऽख्या प्रथमा कोटिः सुघोरा तदधःस्थिता । अतिघोरा तृतीया च घोरघोरा चतुर्थिका । पञ्चमी घोररूपा च कोटिरेका प्रकीर्त्तिताः । षष्ठी तरलभावाख्या सप्तमी

च भयानका” इत्युपक्रम्य “कराला विकराला च वज्रविंशतिमा स्मृता। त्रिकोणा पञ्चकोणा च सुदीर्घा परिवर्त्तुला। सप्तभौमाष्टभौमा च दीप्तमायेति चाष्टमी। एता नाम्ना समुद्दिष्टा घोरा नरककोटयः। अष्टाविंशतिरेवैताः पापानां यातनात्मकाः। आसां क्रमेण विज्ञेयाः पञ्चपञ्चैव नायकाः। प्रत्येकं सर्वकोटीनां नामतस्तन्निबोधत। रौरवः प्रथमस्तेषां रुदन्ति यत्र देहिनः। महारौरवपीडाभिर्महान्तोऽपि रुदन्ति हि। तमः शीतं तथाचोष्णं पञ्चाद्ये नायकाः स्मृताः। सुघोषः सुतलस्तीक्ष्णः पद्मः सञ्जीवनः शठः। महामायी विलोमश्च सुलोमश्च कटङ्कटः। तीव्रवेगः करालश्च विकरालः सुकम्पनः। महापद्मः सुवक्रश्च कालसूत्रः प्रगर्जनः। सूचीमुखः सुनेमिश्च खादकः सुप्रपीडितः। कुम्भीपाकः सुपाकश्च क्रकचश्चातिदारुणः। अङ्गारराशिभवनमसृक्पूयह्रदस्तथा। तीक्ष्णास्यस्तु शकुनिर्महासंवर्त्तकः क्रतुः। तप्तजन्तुः पङ्कलेपः पूतिमांसोद्रवद्वपुः। उच्छ्वासश्च निरुच्छ्वासः सुदीर्घः कूटशाल्मलिः। अरिष्टः सुमहानादः प्रवहोऽसृक्प्रवाहणः। भृशमेषवृकशल्यसिंहव्याघ्रगजाननाः। श्वसूकराश्वमहिषवृषखड्गखराननाः। ग्राहकुम्भीरनक्रास्याः सर्पकूर्माश्च वायसाः। गृध्रोलूकजलौकाश्च शार्दूलकपिकर्कटाः। गण्डकः पूतिवक्त्रश्च रक्ताक्षः पूतिमृत्तिकः। कणधूमस्तथाग्निश्च कृमीणां निचयस्तथा। अभेद्यश्चाप्रतिष्ठश्च रुधिरान्धः श्वभोजनः। लालाभक्ष्यश्चान्त्रभक्ष्यः सर्वभक्षः सुदारुणः। सङ्कटः सुविलश्चैव विषमः कटपूतनः। अम्बरीषः कटाहश्च कष्टा वैतरणी नदी। सुतप्तलोहशयनमेकपादप्रपूरणः। असितालवनं घोरमस्थिभङ्गः प्रपीडनः। तिलातसीसमुद्गौ च कूटपापः प्रमर्द्दनः। महाचूर्णं सुचूर्णञ्च तप्तलोहमयी शिला। पर्व्वतः क्षुरधाराख्यस्तथा यमलपर्व्वतौ। मूत्रविष्ठान्धकूपश्च क्षारकूपश्च शोषणः। मुसलोदूखलं यन्त्रं शिलाशकटलाञ्छनम्। तालपत्रासिगहनं महामसकमण्डलम्। सम्मोहनोऽङ्गभङ्गश्च तप्तशूलमयोगुडः। बहुदुःखं महादुःखं कश्मलं समलं मतम्। हालाहलो विरूपश्च सुरूपश्च यमानुगः। एकपादो द्विपादश्च तीव्रश्चावीचिवर्त्तिनः। अष्टाविंशतिरित्येते क्रमशः परिकीर्त्तिताः। एषां नामानुपूर्व्येण पञ्चपञ्चैव नायकाः। रौरवादि अवीच्यन्तं नरकाणां शतं स्मृतम्। चत्वारिंशत्समधिकं महानरकमण्डलम्। एषु पापाः विपच्यन्ते नराः कर्मानुरूपतः। यातनाभिर्विचित्राभिरा कर्मप्रक्षयाद्भृशम्। आ मलप्रक्षयात् यद्वदग्नौ ध्मास्यन्ति धातवः। तथाऽऽपापक्षयात् पापाः शोध्यन्ते नरकाग्निषु। हस्तयोः पादयोर्बद्धा तप्तशृङ्खलया नराः। महावृक्षाग्रमारोप्य लम्ब्यन्ते यमकिङ्करैः। ततस्ते सर्व्वयत्नेन क्षिप्त्वा दोल्यन्ति किङ्करैः। दोल्यन्तश्चातिवेगेन निःसंज्ञा यान्ति योजनम्। अन्तरीक्षस्थितानाञ्च लोहभारः समन्ततः। पादयोर्बध्यते तेषां यमदूतैर्महाबलैः। तेन भारेण महता भृशमात्रेण दुःखिताः। ध्यायन्तः स्वानि कर्माणि तुष्णीं तिष्ठन्ति निश्चलाः। कशाभिरग्निवर्णाभिर्लौहदण्डैः सकण्टकैः। हन्यन्ते किङ्करैर्घोरैः समन्तात्पापकारिणः। ततः क्षारेण दीप्तेन वह्निनापि विशेषतः। समन्ततः प्रलिप्यन्ते क्षताङ्गा जर्जरीकृताः। पुनर्विदार्य्य चाङ्गेषु शिरसः प्रभृति क्रमात्। वार्त्ताकुवत् प्रभज्यन्ते तप्ततैलकटाहके। विष्ठापूर्णे ततः कूपे कृमीणां निचये तथा। मेदोऽसृक्पूयपूर्णायां वाप्यां क्षिप्यन्ति ते पुनः। भक्ष्यन्ते कृमिभिस्तीक्ष्णैर्लौहतुण्डैश्च वायसैः। श्वभिर्दंशैर्वृकैर्व्याधैर्व्याघ्रैश्च विकृताननैः। पच्यन्ते मांसवच्चापि प्रतप्ताङ्गारराशिषु। भिन्नाः शूलेषु तीक्ष्णेषु नराः पापेन कर्मणा। तैलपीडैरिवाक्रम्य घोरकर्मभिरात्मजैः। तिलवत् संप्रपीड्यन्ते चक्राख्ये नरके नराः। तुद्यन्ते चातितप्तेषु लौहभाण्डेष्वनेकधा। तैलपूर्णकटाहेषु सुतप्तेषु तथा पुनः। बहुशः पाट्यते जिह्वा येऽसत्याप्रियशादिनः। सन्दंशेन सुदीप्तेन प्रपीडोरुश्च पादतः। मिथ्यागमप्रवक्तुश्च जिह्वाङ्कमास्यनिर्गतात्। जिह्वाद्धात् क्रोशविस्तीर्णाच्छल्यैस्तीक्ष्णैश्च पाट्यते। निर्भत्सयन्ति ये क्रूरा मातरं पितरं गुरुम्। तेषां वज्रजलौकाभिर्मुखमापूर्य्य सीव्यते। ततः क्षारेण दीप्तेन ताम्रेण त्रपुणा पुनः। द्रुतेनापूर्य्य तेऽत्यर्थं तप्ततैलैश्च तन्मुखम्। इतस्ततः पुनर्वक्त्रं भृशमापूर्य्य हन्यते। विष्ठाभिः कृमिमिश्राभिः सोपानच्चरणैर्नरैः। परिष्वजन्ति चात्युग्रं प्रदीप्तं लौहशाल्मलिम्। हन्यन्ते पृष्ठदेशे च पुनर्भीमैर्महानखैः। दन्तुरेणाति कृष्णेन क्रकचेन बलीयसा। शिरःप्रभृति पूर्य्यन्ते घोरैः कर्मभिरात्मजैः। खाद्यन्ते च स्वमांसानि पाय्यन्ते शोणितं स्वकम्। अन्नपानं न दत्तं यैर्मूढै-

नानुमोदितम् । इक्षुवत् संप्रपीड्यन्ते जर्ज्जरीकृत्य मुद्गरैः । असितालवनैर्घोरैश्छिद्यन्ते खण्डखण्डशः । सूचीभिर्भिन्नसर्व्वाङ्गास्तप्तशूलाग्रारोपिताः । सञ्चाल्यमानाविवशाः क्लिश्यन्ते न म्रियन्ति च । देहादुत्पाट्यते मांसं भिद्यन्तेऽस्थीनि मुद्गरैः । अतीवाकृष्यते तूर्णं यमदूतैर्बलोत्कटैः । निरुच्छ्वासे निरुच्छ्वासास्तिष्ठन्ति नरके चिरम् । उच्छ्वसन्तः सदोच्छ्वासे वालुकावदनावृताः । रौरवे रोदमानाश्च पीड्यन्ते विविधैर्व्वधैः । महारौरवपीडाभिर्महान्तोऽपि रुदन्ति हि । पश्चात् मासे गुदे चाक्ष्णोः पदे चोरसि मस्तके । निखन्यन्ते घनास्तीक्ष्णाः सुतप्ता लोहशङ्कवः । सुतप्तवालुकायाञ्च प्रपीड्यन्ते मुहुर्मुहुः । जातुपङ्के भृशं तप्ते क्षिप्ताः क्रन्दन्ति विस्वरम् । तेन तेनैव रूपेण हसन्तीं परदारिकाम् । गाढमालिङ्गयते नारीं ज्वलन्तीं लोहनिर्म्मिताम् । पूर्व्वाकाराश्च पुरुषाः प्रज्वलन्तः समन्ततः । दुश्चारिणीं स्त्रियं गाढमालिङ्गन्तो वदन्ति च । किं प्रधावसि वेगेन न ते मोक्षोऽस्ति साम्प्रतम् । लङ्घितस्ते यथा भर्त्ता पापं भुङ्क्ष्व तथाऽधुना । लौहकुम्भे तथा क्षिप्ता सुपिधानैः शनैः शनैः । स्वह्निना प्रपच्यन्ते श्वपाकैरिव मानवाः । क्षोदन्त्यूदूखले साक्षाः प्रकृष्यन्ते शिलासु च । क्षिप्यन्ते चान्धकूपेषु दश्यन्ते कृमिभिर्भृशम् । कृमिभिर्भिन्नसर्व्वाङ्गाः शतशो जर्ज्जरीकृताः । सुतीक्ष्णक्षारकूपेषु क्षिप्यन्ते तदनन्तरम् । महाज्वाले च नरके पापाः फूत्कारयन्ति च । इतस्ततश्च धावन्ति दह्यमानास्तदर्च्चिषा । पृष्ठे चानीय जङ्घे द्वे विन्यस्ते करयोः स्थिते । तयोर्मध्येन चाकृष्य बाहुपृष्ठेन गाढतः । बद्ध्वा परस्परं सर्व्वं सुदृढं गाढरज्जुभिः । पिण्डबन्धं दधन्त्येवं भ्रमरास्तीक्ष्णलोहजाः । मानिनां क्रोधिनाञ्चैव तस्कराणाञ्च दारुणा । पिण्डबन्धसमा याम्या महाज्वाले च यातना । रज्जुभिर्वेष्टिताङ्गाश्च प्रलिप्ताः कर्दमेन च । करीषतुषवह्नौ च पच्यन्ते च म्रियन्ति च । सुतीक्ष्णधारतोयेन कर्कशासु शिलासु च । घृष्टा पापसंचयात् पापा दृष्यन्ते चन्दनं यथा । शरीराभ्यन्तरगतैः प्रभूतैः कृमिभिर्नराः । भक्ष्यन्ते तीक्ष्णदशनैरा देहप्रलयाद्भृशम् । कृमीणां निचये क्षिप्ताः पूतिमांसस्य राशिषु । तिष्ठन्त्युद्भिन्नहृदयाः पर्व्वताभ्याञ्च पीडिताः । सुतप्तवज्रलेपेन शरीरमनुलिप्यते । अधोमुखोर्द्ध्वपादश्च धृताः कृष्यन्ति वह्निना । वदनान्तःप्रविन्यस्तं सुप्रतप्तमयोगुडम् । ते खाद्यन्ते पराधीना हन्यमानास्तु मुद्गरैः । ये शिवायतनारामवापीकूपमठाङ्गणान् । विद्रावयन्ति पापिष्ठा न्यपास्तत्र वसन्ति च । व्यायामोद्वर्त्तनाभ्यङ्गस्नानमापानभोजनम् । क्रीडनं द्यूतमिथुनमाचरन्ति वसन्ति च । ते बधैर्विविधैर्घोरैरिक्षुयन्त्रादिपीडनैः । निरयाग्निषु पच्यन्ते यावदाचन्द्रतारकम् । ये शृण्वन्ति गुरोर्निन्दां तेषां कर्णौ प्रपूर्य्यतः । अग्निवर्णैरयःकालैस्तप्ततात्रादिभिः स्रुतैः । त्रपुसीसारकूटाद्यैः क्षारेण जतुना पुनः । सुतप्ततीक्ष्णतैलेन वज्रलेपेन चान्ततः । क्रमादापूर्य्यतः कर्णौ नरकेषु च यातनाः । अनुक्रमेण सर्व्वेषु भवन्त्येते समन्ततः । सर्व्वेन्द्रियाणामप्येवं क्रमात् पापेन यातनाः । भवन्ति घोराः प्रत्येकं शरीरेण कृतेन च । स्पर्शलोभेन ये मूढाः संस्पृशन्ति परस्त्रियम् । तेषां त्वगग्निवर्णाभिः सूचीभिः पूर्य्यतेभृशम् । ततः क्षारादिभिः सर्व्वैः शरीरमनुलिप्यते । यातनाश्च महाकष्टाः सर्व्वेषु नरकेषु च । गुरौ कुर्व्वन्ति भ्रुकुटीं क्रूरनेत्राश्च ये नराः । परदारांश्च पश्यन्ति लुब्धाः स्निग्धेन चेतसा । सूचीभिरग्निवर्णाभिस्तेषां नेत्रे प्रपूर्य्यतः । क्षाराद्यैश्च क्रमात् सर्व्वैर्देहे सर्व्वाश्च यातनाः । देवाग्निगुरुविप्राणामनिवेद्य च भुञ्जतः । लौहकीलशतैस्तप्तैस्तज्जिह्वास्य प्रपूर्य्यते । ततः क्षारेण दीप्तेन तैलताम्रादिभिः क्रमात् । शरीरेषु महाघोराश्चित्रा नरकयातनाः । ये शिवारामपुष्पाणि लोभात् संगृह्य पाणिना । जिघ्रन्ति मूढमनसः शिरसा धारयन्ति वा । आपूर्य्य च शिरस्तेषां सुतप्तैर्लोहशङ्कुभिः । नासिका चातिबहुशस्ततः क्षारादिभिः पुनः । ये निन्दन्ति महात्मानमाराध्यं धर्म्मदेशकम् । शिवभक्तांश्च ये मूढाः शिवधर्म्मञ्च शाश्वतम् । तेषामुरसि कण्ठे च जिह्वायां दन्तसन्धिषु । तालुन्योष्ठे च नासायां मूर्द्ध्नि सर्व्वाङ्गसन्धिषु । अग्निवर्णाः सुतप्ताश्च त्रिशिखा लोहशङ्कवः । आपोथ्यन्ते सुबहुशः स्थानेष्वेतेषु मुद्गरैः । ततः क्षारेण तप्तेन ताम्रेण त्रपुणा पुनः । तप्ततैलादिभिः सर्व्वैरापूर्य्यन्ते समन्ततः । यातना च महाचित्रा शरीरस्यापि सर्व्वतः । निःशेषं नरकेष्वेवं भवन्ति क्रमशः पुनः । ये गृह्णन्ति परद्रव्यं पद्भ्यां विप्रं स्पृशन्ति च । शिवोपकरणं गाञ्च ज्ञानञ्च लिखितं क्वचित् । हस्तपादौ घनौ तेषामाचूर्ण्यन्ते समन्ततः । क्षारताम्रादिभिस्तप्तैस्तुदन्ते बहुशः पुनः ।

नरकेषु च सर्व्वेषु विचित्रा देहयातनाः । भवन्ति बहुशः कष्टाः पाणिपादसमुद्भवाः । शिवायतनपर्य्यन्ते शिवारामेषु कुत्रचित् । समुत्सृजन्ति ये पापाः पुरीषं मूत्रमेव वा । तेषां शिश्नं सवृषणं चूर्ण्यते लौहमुद्गरैः । सूचीभिरग्निवर्णाभिस्ततश्चापूर्य्यते पुनः । लोहदण्डस्तु सुमहानग्निवर्णः सकण्टकः । आपीड्यते गुदे तेषां यावन्मूर्द्धि विनिर्गतः । ततः क्षारेण महता ताम्रेण त्रपुणा पुनः । इतेनापूर्य्यते गाढं गुदं शिश्नञ्च देहिनाम् । मनः सर्व्वेन्द्रियाणाञ्च यस्मादुक्तं प्रवर्त्तकम् । तस्मादिन्द्रियदुःखेन जायते तत् सुदुःखितम् । धने सत्यपि ये दानं न प्रयच्छन्ति तृष्णया । अतिथिञ्चावमन्यन्ते कालप्राप्तं स्वहाश्रमे । तेनैते वीरणैरज्वा हस्तयोश्चापि ताडिताः । प्रसारिताङ्गाः शुष्यन्तस्तिष्ठन्त्यब्दशतं नराः । हस्तपादललाटेषु कीलिता लौहशङ्कुभिः । निम्नश्च विवृतं वक्त्रं कीलकत्रयताडितम् । कृमिभिः प्राणिभिश्चोग्रैर्लौहतुण्डैश्च वायसैः । उपद्रवैर्बहुविधैस्तु सन्ततः प्रपीड्यते । जिह्वावेधनिबद्धाश्च संपीड्यन्ते भृशं पुनः । तिष्ठन्ति लम्बमानाश्च लौहभाराः सुवर्त्तुलाः । शिश्ने सवृषणे तद्वत् लौहभारद्वयं पुनः । तिष्ठते लम्बमानञ्च बाहुभ्याञ्च चतुर्गुणम् । ततः स्वमांसमुत्कृत्य तिलमात्रप्रमाणतः । खादितुं दीयते तेषां सूच्यग्रेण तु शोणितम् । यदा निर्मांसतां प्राप्ताः कालेन बहुना नराः । ततः क्षारेण दीप्तेन तच्छरीरं विलिप्यते । छिद्यन्ते वर्षधाराभिः छिद्यन्ते वै पुनः पुनः । शुष्काः सिच्यन्ति तैलेन सुतप्तेन समन्ततः । पच्यन्ति भूयो भूयोऽपि दूरस्थेन शनैः शनैः । निःशेषयातनाभिश्च पीड्यन्ते क्रमशः पुनः । भृशं बुभुक्षया पीड्या कष्टा चातिपिपासया । अत्युष्णेनातिशीतेन पापानां स्मरणेन च । एवमाद्या महाघोरा यातनाः पापकर्म्मिणाम् । एकैकनरके ज्ञेयाः शतशोऽथ सहस्रशः । प्रत्येकं यातनाश्चित्राः सर्वेषु नरकेषु च । कष्टा वर्षशतेनापि सर्वा वक्तुं न शक्यते । इति तैर्विविधैर्घोरैः पाच्यमानाः स्वकर्म्मभिः । म्रियन्ते नैव पापिष्ठा यावत् पापस्य न क्षयः । तथान्या यातनाः कष्टा त्रिविधाः पापकारिणाम् । महाघोरातिघोराश्च कल्पाग्निसदृशोपमाः । श्रुत्वैव यातनास्तूर्णं म्रियन्ते मृदुचेतसः । ततस्तेनात्र कथिताः पापा दृश्यन्ति याः स्वयम् । पुत्रमित्रकलत्रार्थं यद्दुष्कृतं त्वया कृतम् । एकाकी दह्यसे तेन नात्र पश्यसि बान्धवान् । आत्मनैव कृतं पापं भोक्तव्यं ध्रुवमात्मना । तत् किमात्मोपघातार्थं मूढ ! पापं कृतं त्वया । एवं दूतैरुपालब्धास्तान् पृच्छन्ति ततः पुनः । कियन्तं केन पापेन कालमत्रास्यते नराः । देवद्रव्यविनाशेन गुरुद्रोहादिकर्म्मभिः । क्रमात् सर्व्वेषु पच्यन्ते नरकेषु महीक्षयात् । महापातकिनश्चापि सर्वेषु नरकेष्विह । आचन्द्रतारकं यावत् पीड्यन्ते विविधैर्वधैः । महापातकिनः सर्वे निरयार्णवकोटिषु । चतुर्द्दशमन्वन्तरकल्पान्तं विविधैर्वधैः । उपपातकिनश्चापि तदर्द्धं यान्ति मानवाः । पापशेषैस्तदर्द्धञ्च कालञ्चापि तथाविधम् । तस्मात् पापं न कुर्व्वीत चञ्चले जीविते सति । पापेन हि ध्रुवं यान्ति नरकेषु नराः स्वयम् । यः करोति नरः पापं तस्यात्मा ध्रुवमप्रियः । पापस्य हि फलं दुःखं तद्भोक्तव्यमिहात्मना । कथं ते पापनिरता नरा रात्रिषु शेरते । मन्वन्तरान्तं तेषां च नरके तीव्रयातनाः । एवं क्लिष्टाः विशुद्धाश्च पापशेषेण कर्म्मणा । ततः क्षितिं समासाद्य पुनर्जायन्ति देहिनः । स्थावरा विविधाकारास्तृणगुल्मादिभेदतः । तत्रानुभूय दुःखानि जायन्ते कीटयोनिषु । निष्क्रान्ताः कीटयोनिभ्यस्ततो जायन्ति पक्षिणः । संक्लिष्टाः पक्षिभावेन भवन्ति मृगजातिषु । मार्गदुःखमतिक्रम्य जायन्ते पशुयोनिषु । क्रमाद्गोयोनिमासाद्य पुनर्जायन्ति मानुषाः । एवं योनिषु सर्व्वासु परिभ्रम्य क्रमेण तु । कालान्तरवशाद् यान्ति मानुष्यमतिदुर्लभम् । व्युत्क्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात् । विचित्रा गतयः प्रोक्ताः कर्म्मणां गुरुलाघवात् । मानुष्यं यः समासाद्य स्वर्गमोक्षप्रसाधकम् । द्वयोर्न साधयेदेकं स मृतस्तप्यते चिरम् । देवासुराणां सर्वेषां मानुष्यमतिदुर्लभम् । तत् संप्राप्य तथा कुर्य्यान्न गच्छेन्नरकं यथा । स्वर्गापवर्गलाभाय यदि नास्ति समुद्यमः । सर्वस्य मूलं मानुष्यं तद्यत्नादनुपालय । धर्म्ममूलेन मानुष्यं लब्ध्वा सर्वार्थसाधकम् । यदि लाभे न यत्नस्ते मूलं रक्षस्व यत्नतः । मानुषत्वे च विप्रत्वं यदि प्राप्नोति दुर्लभम् । न करोत्यात्मनः श्रेयः कोऽन्योऽस्मादस्त्यचेतनः । सर्व्वेषामेव देशानामयं देशः परः स्मृतः । इतः स्वर्गश्च मोक्षश्च यतः संप्राप्यते नरैः । देशेऽस्मिन् भारते पुण्ये प्राप्य मानुष्यमध्रुवम् । यः कुर्य्यादात्मनः श्रेयस्तेनात्मा वञ्चितश्चिरम् । भोगभूमिः स्मृतः स्वर्गः कर्म्मभूमिरयं मता । इह यत् क्रियते कर्म्म स्वर्गे तदुपभुज्यते । यावत् सुस्थशरीरस्त्वं तावद्धर्म्मं समाचर । अवस्थोपोदितोऽ-

ध्यन्यैर्न किञ्चित् कर्त्तुमुत्सहः । अध्रुवेण शरीरेण ध्रुवं यो न प्रसाधयेत् । ध्रुवं तस्य परिभ्रष्टमध्रुवं नष्टमेव हि । आयुषः खण्डखण्डानि निपतन्ति तवाग्रतः । अहोरात्रापदेशेन किमर्थं नावबुध्यसे । यदा न ज्ञायते मृत्युः कदा कस्य भविष्यति । आकस्मिके हि मरणे धृतिं विन्देत कस्तदा । परित्यज्य यदा सर्व्वमेकाकी यास्यसि ध्रुवम् । न ददासि तदा कस्मात् पाथेयार्थमिदं धनम् । गृहीतदानपाथेयाः सुखं यान्ति महाध्वनि । अन्यथा क्लिश्यते जन्तुः पाथेयरहितः पथि । येषां द्विजेन्द्र ! वाहित्री पूर्णा भाण्डस्य गच्छति । स्वर्गदेशस्य पुरतस्तेषां लाभः पदेपदे । इति ज्ञात्वा नरः पुण्यं कुर्य्यात् पापञ्च वर्जयेत् । पुण्येन याति देवत्वमपुण्यान्नरकं व्रजेत् । ये मनागपि देवेशं प्रपन्नाः शरणं शिवम् । तेऽपि घोरं न पश्यन्ति यमस्य वदनं नराः । किन्तु पापैर्महाघोरैः किञ्चित्कालं शिवाज्ञया । भवन्ति प्रेतराजानस्ततोयान्ति शिवं परम् । ते न लिप्यन्ति पापेन पद्मपत्रमिवाम्भसा । तस्माद्दिवस्त्र येन्द्रत्निमीश्वरे सततं बुधः । तन्माहात्म्यविचारेण भवदोषविचारतः” ।

भाग० ५,२६ अ० । नरकभेदतत्स्वरूपोन्यासमुखेन तेषां पापविशेषजन्यत्वमुक्तं तेन तत्तत्कर्म्मणां विपाकास्तामिस्रादयो नरका इति गम्यते । तत्र नरकविशेषस्वरूपनिदानमुक्तं यथा—

“अथ तांस्ते राजन्नामरूपलक्षणतोऽनुक्रमिष्यामः । तामिस्रो१ ऽन्धतामिस्रो२ रौरवो३ महारौरवः४ कुम्भीपाकः५ कालसूत्रम्६ असिपत्रवनं७ सूकरमुखम्८ अन्धकूपः९ क्रिमिभोजनः१० सन्दंशः११ तप्तसूर्म्मिः१२ वज्रकण्टकशाल्मली१३ वैतरणी१४ पूयोदः१५ प्राणरोधः१६ विशसनं१७ लालाभक्षः१८ सारमेयादनम्१९ अवीचिः२० अयःपानम्२१ इति । किञ्च क्षारकर्दमो२२ रक्षोगणभोजनं२३ शूलप्रोतो२४ दन्दशूकः२५ अवटनिरोधनो२६ ऽपर्य्यावर्त्तनं२७ सूचीमुखम्२८ इत्यष्टाविंशतिर्नरका विविधा यातनाभूमयः । यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैस्तामिस्रे १ नरके बलान्निपात्यते । अनशनानिपानदण्डताड़नसन्तर्जनादिभिर्यातनाभिर्यात्यमानो जन्तुर्यत्र कश्मलमासादित एकदैव मूर्च्छामुपयाति तामिस्रप्राये । एवमेवान्धतामिस्रे यस्तु वञ्चयित्वा पुरुषं दारादीनुपयुङ्क्ते यत्र शरीरी निपात्यमानो यातनास्थो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति । यथा वनस्पतिर्वृश्च्यमानमूलस्तस्मादन्धतामिस्रं २ तमुपदिशन्ति । यस्त्विह वा एतदहमिति ममेदमिति भूतद्रोहेण केवलं स्वकुटुम्बमेवानुदिनं पुष्णाति स तदिह विहाय स्वयमेव तदशुभेन रौरवे निपतति । ये त्विह यथैवामुना विहिंसिता जन्तवः परत्र यमयातना उपगतं त एव रुरवो भूत्वा तथा तमेव हिंसन्ति तस्माद्रौरवम् ३इत्याहुः । रुरुरिति सर्पादतिक्रूरसत्वापदेशः । एवमेव महारौरवो४ यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयन्ति यः केवलं देहम्भरः । यस्त्विह वा उग्रः पशून् पक्षिणो वा प्राणत उपरन्धयति । तमपकरुणं पुरुषादैरपि गर्हितममुत्र यमानुचराः कुम्भीपाके५ तप्ततैले उपरन्धयन्ति । यस्त्विह ब्रह्मध्रुक् स कालसूत्रसंज्ञके६नरके अयुतयोजनपरिमण्डले ताम्रमये तप्ते खले उपर्य्यधस्तादग्न्यर्काभ्यामभितप्यमानेऽभिनिवेशितः क्षुत्पिपासाभ्यां दह्यमानान्तर्बहिःशरीर आस्ते शेते चेष्टते अवतिष्ठति परिधावति च यावन्ति पशुरोमाणि तावद्वर्षसहस्राणि । यस्त्विह वै निजवेदपथादनापद्यपगतः पाषण्डञ्चोपगतस्तमसिपत्रवनं ७ प्रवेश्य कशया प्रहरन्ति तत्र हासावितस्ततो धावमान उभयतोधारैस्तालवनासिपत्रैश्छिद्यमानसर्व्वाङ्गो हा हतोऽस्मीति परमया वेदनया मूर्च्छितः पदेपदे निपतति स्वधर्म्महा पाषण्डानुगमनफलं भुङ्क्ते । यस्त्विह वै राजा राजपुरुषो वा अदण्ड्ये दण्डं प्रणयति ब्राह्मणे वा शरीरदण्डं स पापीयान्नरकेऽमुत्र सूकरमुखे ८ निपतति । तत्रातिबलैर्निष्पिष्यमाणावयवो यथैवेहेक्षुखण्ड आर्त्तस्वरेण स्वनयन् क्वचिन्मूर्च्छितः कश्मलमुपगतो यथैवेहादृष्टदोषा उपरुद्धाः । यस्त्विह वै भूतानामीश्वरकल्पितवृत्तीनामविविक्तपरव्यथानां स्वयं पुरुषोपकल्पितवृत्तिर्विविक्तपरव्यथोव्यथामाचरति स परत्रान्धकूपे९तदभिद्रोहेण निपतति । तत्र हासौ तैर्जन्तुभिः पशुमृगपक्षिसरीसृपैर्म्मशकयूकामत्कुणमक्षिकादिभिर्ये केचाभिद्रुग्धास्तैः सर्व्वतोऽभिद्रुह्यमाणस्तमसि विहतनिद्रानिर्वृतिरलब्धावस्थानः परिक्रामति यथा कुशरीरे जीवः । यस्त्विह वा असंविभज्याश्नाति यत् किञ्चनोपनिर्मितमपञ्चयज्ञो वायससंस्तुतः स परत्र क्रिमिभोजने१०नरकाधमे निपतति । तत्र शतसहस्रयोजने क्रिमिकुण्डे क्रिमिभूतः स्वयं क्रिमिभिरेव भक्ष्यमाणः क्रिमिभोजनो यावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानं यातयते । यस्त्विह वै स्तेयेन बलाद्वा हिरण्यरत्ना-

दीनि ब्राह्मणस्य वाऽपहरति अन्यस्य वाऽनापदि पुरुषस्तममुत्र राजन् ! यमपुरुषा अयस्मयैरग्निपिण्डैः सन्दंशै११ स्त्वचि निष्कुषन्ति। यस्त्विह वा अगम्यां स्त्रियं पुरुषोऽगम्यं वा पुरुषं योषिदभिगच्छति। तावमुत्र कशया ताडयन्तस्तिग्मया सूर्म्या१२लोहमय्या पुरुषमालिङ्गयन्ति। स्त्रियं च पुरुषरूपया सूर्म्या। यस्त्विह वै सर्वाभिगमस्तममुत्र निरये वर्त्तमानं वज्रकण्टकशाल्मली१३मारोप्य निष्कुषन्ति। ये त्विह वै राजन्या राजपुरुषा वा पाषण्डा धर्मसेतून् भिन्दन्ति ते संपरेत्य वैतरण्यां १४निपतन्ति भिन्नमर्यादाः तस्यां निरयपरिखाभूतायां नद्यां यादोगणैरितस्ततो भक्ष्यमाणा आत्मना न वियुज्यमानाश्चासुभिरुह्यमानाः स्वाघेन, कर्मपाकमनुस्मरन्तो विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसावाहिन्यामुपतप्यन्ते। ये त्विह वै वृषलीपतयोनष्टशौचाचारनियमास्त्यक्तलज्जाः पशुचर्य्यां चरन्ति। ते चापि प्रेत्य पूयविण्मूत्रश्लेष्मलालापूर्णे १५ निपतन्ति तदेवातिबीभत्सितमश्नन्ति। ये त्विह वै श्वगर्द्दभपतयो ब्राह्मणादयो मृगयाविहारा अतीर्थे च मृगान्निघ्नन्ति। तानपि संपरेताँल्लक्ष्यभूतान् यमपुरुषा इषुभिर्विध्यन्ति १६। ये त्विह वै दाम्भिका दम्भयज्ञेषु पशून् विशसन्ति। तानमुष्मिँल्लोके वैशसे १७ नरके पतितान्निरयपतयो यातयित्वा विशसन्ति। यस्त्विह वै सवर्णां भार्य्यां द्विजोरेतः पाययति काममोहितः तं पापकृत्तमं मूत्ररेतःकुल्यायां पातयित्वा रेतः संपाययन्ति लालाभक्ष्ये १८। ये त्विह वै दस्यवोऽग्निदा गरदा ग्रामान् सार्थान् वा विलुम्पन्ति राजभटा वा तांश्चापि हि परेतान् यमदूतावज्रदंष्ट्राः श्वानः १६ सप्तशतानि विंशतिश्च सरभसं खादन्ति। यस्त्विह वा अनृतं वदति साक्ष्ये द्रव्यविनिमये दाने वा कथञ्चित्, स वै प्रेत्य नरके अवीचिमति२० अधःशिरानिरवकाशे योजनशतोच्छ्रायाद् गिरिमूर्द्ध्नः संपात्यते। यत्र जलमिव स्थलमश्मपृष्ठमवभासते तदवीचिमत् तिलशो विशीर्य्यमाणशरीरो न म्रियमाणः पुनरारोपितो निपतति। यस्त्विह वै विप्रोराजन्यो वैश्योवा सोमपीथस्तत्कलत्रं वा सुराः व्रतस्थोऽपि वा पिबति प्रमादतः तेषां निरयं नीतानामुरसि पदाऽऽक्रम्यास्ये वह्निना द्रवमाणं कार्ष्णायसं २१ निषिञ्चन्ति। अथ च यस्त्विह वा आत्मसंभावनेन स्वयमधमो जन्मतपोविद्याचारवर्णाश्रमवतो वरीयसो न बहु मन्येत स मृतक एव क्षारकर्द्दमे२२ निरयेऽवाक्शिरा निपतितोदुरन्तयातनाह्यश्नुते। ये त्विह वै पुरुषाः पुरुषमेधेन यजन्ते याश्च स्त्रियोन्पशून् खादन्ति तांश्च ताश्च ते पशव इह निहता यमसदने यातयन्तो रक्षोगणाः शौनिका इव सुधितिनाऽवदायाऽसृक्पिबन्ति नृत्यन्ति च हृष्यमाणा यथेह पुरुषादाः २३। ये त्विह वा अनागसोऽरण्ये ग्रामे वाविश्रम्भ्यैरुपश्रितानुपजिजीविषून् शूलादिषूपप्रोतान् क्रीडनकतया घातयन्ति तेऽपि च प्रेत्य यमयातनासु शूलादिप्रोतात्मानः २४क्षुत्तृड्भ्यां चाभिहताः कङ्कवटादिभिश्चेतस्ततस्तिग्मतुण्डै राहन्यमाना आत्मकश्मलं स्मरन्ति। ये त्विह वै भूतान्युद्वेजयन्ति नरा उल्बणस्वभावा यथा दन्दशूकास्तेऽपि प्रेत्य नरके दन्दशूकाख्ये २५ निपतन्ति। यत्र नृप ! दन्दशूकाः पञ्चमुखा वा उपसृत्य ग्रसन्ति यथाबिलेशयान्। ये त्विह वा अन्धावटकुसूलगुहादिषु भूतानि निरुन्धन्ति तथामुत्र तेष्वेवोपवेश्य सगरेण वह्निना धूमेन निरुन्धन्ति २६। यस्त्विह वा अतिथीनभ्यागतान् वा गृहपतिरसकृदुपगतमन्युर्दिधक्षुरिव पापेन चक्षुषा निरीक्षते तस्य चापि निरये पापदृष्टेरक्षिणी वज्रतुण्डागृध्रकङ्कटादयः प्रसह्योरुबलादुत्पाटयन्ति २७। यस्त्विह वा आढ्याभिमतिरहङ्कृतिस्तिर्य्यक्प्रेक्षणः सर्व्वतोऽभिविशङ्की व्ययविनाशचिन्तया प्रविशुष्यमाणहृदयवदनो निर्वृतिमनवगतोग्रह इवार्थमभिरक्षति। स चापि प्रेत्य तदुत्पादनोत्कर्षणसंरक्षणशमलग्रहः सूचीमुखे २८नरके निपतति। यत्र ह विश्वग्रहं पापग्रहं पापपुरुषं धर्मराजपुरुषा वायसा इव सर्व्वतोऽङ्गेषु सूत्रैः परिवयन्ति। एवंविधा नरका यमालये सन्ति शतशः तेषु च सर्व एवाधर्मवर्त्तिनो ये केचिदिहोदिताश्चावनिपते ! पर्य्यायेण विविशन्ति"। तथैव धर्मानुवर्त्तिन इतरत्र। इह तु पुनर्भवे उभयशेषाभ्यां विशन्ति"

भा०आनु०७अ०शुभकर्म्मविशेषविपाक उक्तो यथा-

"युधिष्ठिरोक्तिः। "कर्म्मणाञ्च समस्तानां शुभानां भरतर्षभ !। फलानि भरतश्रेष्ठ ! प्रब्रूहि परिपृच्छतः। भीष्म उवाच। हन्त ते कथयिष्यामि यन्मां पृच्छसि भारत !। रहस्यं यदृषीणान्तु तच्छृणुष्व युधिष्ठिर !। या गतिः प्राप्यते येन प्रेत्यभावे चिरेप्सिता। येन येन शरीरेण यद्यत्कर्म करोति यः। तेन तेन शरीरेण तत्तत्फलमुपाश्नुते। यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम्। तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनिजन्मनि। न नश्यति

कृतं कर्म सदा पञ्चेन्द्रियैरिह । ते ह्यस्य साक्षिणो नित्यं षष्ठ आत्मा तथैव च । चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् । अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः । यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते । श्रान्तायादृष्टपूर्व्वाय तस्य पुण्यफलं महत् । स्थण्डिलेषु शयानानां गृहाणि शयनानि च । चीरवल्कलसंवीते वासांस्याभरणानि च । वाहनानि च यानानि योगात्मनि तपोधने । अग्नीनुपशयानस्य राज्ञः पौरुषमेव च । रसानां प्रतिसंहारे सौभाग्यमनुगच्छति । आमिषप्रतिसंहारे पशून् पुत्रांश्च विन्दति । अवाक्‌शिरास्तु यो लम्बेदुदवासञ्च यो वसेत् । सततञ्चैकशायी यः स लभेतेप्सितां गतिम् । पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयम् । दद्यादतिथिपूजार्थं स यज्ञः पञ्चदक्षिणः । वीरासनं वीरशय्यां वीरस्थानमुपागतः । अक्षयास्तस्य वै लोकाः सर्व्वकामगमास्तथा । धनं लभेत दानेन मौनेनाज्ञां विशाम्पते ! । उपभोगांश्च तपसा ब्रह्मचर्य्येण जीवितम् । रूपमैश्वर्य्यमारोग्यमहिंसाफलमश्नुते । फलमूलाशिनो राज्यं स्वर्गः पर्णाशिनां भवेत् । प्रायोपवेशिनो राजन् ! सर्व्वत्र सुखमश्नुते । गवाढ्यः शाकदीक्षायां स्वर्गकामी तृणाशनः । स्त्रियस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् । स्वर्गं सत्येन लभते दीक्षया कुलमुत्तमम् । सलिलाशी भवेद् यस्तु सदाग्निः संस्कृतो द्विजः । मनुःसाधयते राज्यं नाकपृष्ठमनाशके । उपवासञ्च दीक्षायां अभिषेकञ्च पार्थिव ! । कृत्वा द्वादश वर्षाणि वीरस्थानाद्विशिष्यते । अधीत्य सर्व्ववेदान् वै सद्यो दुःखाद्विमुच्यते । मानसं हि चरन् धर्म्मं स्वर्गलोकमुपाश्नुते । या दुस्त्यजा दुर्म्मतिभिर्या न जीर्य्यति जीर्य्यतः । योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् । यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । एवं पूर्व्वकृतं कर्म्म कर्त्तारमनुगच्छति । अनोद्यमानानि यथा पुष्पाणि च फलानि च । स्वकालं नातिवर्त्तन्ते तथा कर्म्म पुराकृतम् । जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः । चक्षुःश्रोत्रे च जीर्य्येते तृष्णैका न तु जीर्य्यते । येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः । प्रीणाति मातरं येन पृथिवी तेन पूजिता । येन प्रीणात्युपाध्यायं तेन स्यात् ब्रह्म पूजितम् । सर्व्वे तस्यादृता धर्म्मा यस्यैते त्रय आदृताः । अनादृतास्तु यस्यैते सर्व्वास्तस्याफलाः क्रियाः" ।

तत्रैव दानविशेषे गतिभेदो निरूपितः प्रपञ्चभयात् तद्वाक्य नोद्धृतं भा० आनु० दानधर्म्मे द्रष्टव्यम् । भा० आनु० १११अ० संसारचक्रप्रवृत्तिरुक्ता यथा—

"एकः प्रसूयते राजन्नेक एव विनश्यति । एकस्तरति दुर्गाणि गच्छत्येकस्तु दुर्गतिम् । असहायः पिता माता तथा भ्राता सुतो गुरुः । ज्ञातिसम्बन्धिवर्गश्च मित्रवर्गस्तथैव च । मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः । मुहूर्त्तमिव रोदित्वा ततो यान्ति पराङ्मुखाः । तैस्तच्छरीरमुत्सृष्टं धर्म्म एकोऽनुगच्छति । तस्माद्धर्म्मः सहायश्च सेवितव्यः सदा नृभिः । प्राणी धर्म्मसमायुक्तो गच्छेत् स्वर्गगतिं पराम् । तथैवाधर्म्मसंयुक्तो नरकञ्चोपपद्यते । तस्मान्न्यायागतैरर्थैर्धर्म्मं सेवेत पण्डितः । धर्म्म एको मनुष्यस्य सहायः पारलौकिकः । लोभान्मोहादनुक्रोशाद्भयाद्वाप्यबहुश्रुतः । नरः करोत्यकार्य्याणि परार्थे लोभमोहितः । धर्म्मश्चार्थश्च कामश्च त्रितयं जीविते फलम् । एतत्त्रयमवाप्तव्यमधर्म्मपरिवर्जितम् । युधिष्ठिर उवाच । श्रुतं भगवतो वाक्यं धर्म्मयुक्तं परं हितम् । शरीरनिचयं ज्ञातुं बुद्धिस्तु मम जायते । मृतं शरीरं हि नृणां सूक्ष्ममव्यक्ततां गतम् । अचक्षुर्व्विषयं प्राप्तं कथं धर्म्मोऽनुगच्छति । वृहस्पतिरुवाच । पृथिवी वायुराकाशमापो ज्योतिर्मनोऽन्तगः । बुद्धिरात्मा च सहिता धर्म्मं पश्यन्ति नित्यदा । प्राणिनामिह सर्व्वेषां साक्षीभूता निशाऽनिशम् । एतैश्च सह धर्म्मोऽपि तं जीवमनुगच्छति । त्वगस्थिमांसं शुक्रञ्च शोणितञ्च महामते ! । शरीरं वर्ज्जयन्त्येते जीवितेन विवर्ज्जितम् । ततो धर्म्मसमायुक्तः प्राप्नुते जीव एव हि । ततोऽस्य कर्म्म पश्यन्ति शुभं वा यदि वाऽशुभम् । देवताः पञ्चभूतस्थाः किंभूयः श्रोतुमिच्छसि । ततो धर्म्मसमायुक्तः स जीवः सुखमेधते । इह लोके परे चैव किंभूयः कथयामि ते । युधिष्ठिर उवाच । तद्दर्शितं भगवता यथा धर्म्मोऽनुगच्छति । एतत्तु ज्ञातुमिच्छामि कथं रेतः प्रवर्त्तते ? । वृहस्पतिरुवाच । अन्नमश्नन्ति यद्देवाः शरीरस्था नरेश्वर ! । पृथिवी वायुराकाशमापो ज्योतिर्म्मनस्तथा । ततस्तृप्तेषु शुद्धात्मन् ! रेतः सम्पद्यते महत् । ततो गर्भः सम्भवति स्त्रीपुंसयोर्नृप ! । एतत्ते सर्व्वमाख्यातं भूयः किं श्रोतुमिच्छसि ? । युधिष्ठिर उवाच । आख्यातं मे भगवता गर्भः संजायते यथा । यथा जातस्तु पुरुषः प्रपद्यति तदुच्यताम् । वृहस्पतिरुवाच । आसन्नमात्रः पुरुषस्तैर्भूतैरभिभूयते ।

विप्रयुक्तश्च तैर्भूतैः पुनर्यात्यपरां गतिम्। सर्व्वभूतसमायुक्तः प्राप्नुते जीव एव हि। ततोऽस्य कर्म पश्यन्ति शुभं वा यदि वाऽशुभम्। देवताः पञ्चभूतस्था किं भूयः श्रोतुमिच्छसि। युधिष्ठिर उवाच। त्वगस्थिमांसमुत्सृज्य तैश्च भूतैर्व्विवर्जितः। जीवः स भगवन्! कस्थः सुखदुःखे समश्नुते। वृहस्पतिरुवाच। जीवः कर्म्मसमायुक्तः शीघ्रं रेतस्त्वमागतः। स्त्रीणां पुष्पं समासाद्य सूते कालेन भारत!। यमस्य पुरुषैः क्लेशं यमस्य पुरुषैर्व्वधम्। दुःखं संसारचक्रञ्च नरः क्लेशञ्च विन्दति। इह लोके च स प्राणी जन्मप्रभृति पार्थिव!। स्वकृतं कर्म्म वै भुङ्क्ते धर्मस्य फलमाश्रितः। यदि धर्म्मं यथाशक्ति जन्मप्रभृति सेवते। ततः स पुरुषो भूत्वा सेवते नित्यदा सुखम्। अथान्तरा तु धर्म्मस्यापराधर्म्मसुपसेवते। सुखस्यानन्तरं दुःखं स जीवोऽप्यधिगच्छति। अधर्म्मेण समायुक्तो यमस्य विषयं गतः। महद्दुःखं समासाद्य तिर्य्यग्योनौ प्रजायते। कर्म्मणा येन येनेह यस्यां योनौ प्रजायते। जीवो मोहसमायुक्तस्तन्मे निगदतः शृणु। यदेतदुच्यते शास्त्रे सेतिहासे च कृत्स्नशः। इह स्थानानि पुण्यानि देवतुल्यानि भूपते!। तिर्य्यग्योन्यतिरिक्तानि गतिमन्ति च सर्व्वशः। यमस्य सदने दिव्ये ब्रह्मलोकसमे गुणैः"।

इतःपरं कर्मविपाकोऽभिहितः तत्र अधर्मशब्दे १२१,१२२ पृष्ठे "कर्मभिर्नियतैर्बद्ध" इत्यारभ्य "धर्मे कुरु मनःसदा" इत्यन्तं वाक्यं हरिवंशवाक्यत्वेन प्रमादात् लिखितम्। तच्च भा०अनु०१११अ०स्थं बोध्यम्। एवमधर्मशब्दे पृ०१२३ पृष्ठादौ मिता० दर्शितवाक्यादपि कर्मविपाकभेदोऽवधेयः।

भुक्तावशिष्टकर्म्मणां विपाकस्तु शातातपेन दर्शितो यथा "प्रायश्चित्तविहीनानां महापातकिनां नृणाम्। नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम्। प्रतिजन्म भवेत्तेषां चिह्नं तत्पापसूचितम्। प्रायश्चित्ते कृते याति पश्चात्तापवतां पुनः। महापातकजं चिह्नं सप्तजन्मनि जायते। उपपापोद्भवं पञ्च त्रीणि पापसमुद्भवम्। दुष्कर्म्मजा नृणां रोगा यान्ति चोपक्रमैः शमम्। जपैः सुरार्च्चनैर्होमैर्दानैस्तेषां शमोभवेत्। पूर्व्वजन्मकृतं पापं नरकस्य परिक्षये। बाधते व्याधिरूपेण तस्य जप्यादिभिः शमः। कुष्ठञ्च राजयक्ष्मा च प्रमेहोग्रहणी तथा। मूत्रकृच्छ्राश्मरीकासा अतीसारभगन्दरौ। दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम्। इत्येवमादयोरोगा महापापोद्भवाः स्मृताः। जलोदरं यकृत्प्लीहाशूलरोगव्रणानि च।

श्वासाजीर्णज्वरच्छर्द्दिभ्रममोहगलग्रहाः। रक्तार्बुदविसर्पाद्याउपपापोद्भवागदाः। दण्डापतानकश्वित्रवपुः कम्पविचर्च्चिकाः। वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः। अर्शआद्या नृणां रोगा अतिपापाद्भवन्ति हि। अन्ये च बहवोरोगा जायन्ते वर्णसङ्कराः। उच्यन्ते च निदानानि प्रायश्चित्तानि वै क्रमात्। महापापेषु सर्व्वं स्यात्तदर्द्धमुपपातके। दद्यात् पापेषु षष्ठांशं कल्प्यं व्याधिबलाबलम्। अथ साधारणं तेषु गोदानादि च कथ्यते। गोदाने वत्सयुक्ता गौः सुशीला च पयस्विनी। वृषदाने शुभोऽनड्वान् शुक्लाम्बरसकाञ्चनः। निवर्त्तनानि भूदाने दश दद्याद् द्विजातये। दशहस्तेन दण्डेन त्रिंशद्दण्डं निवर्त्तनम्। दश तान्येव गोचर्म्म दत्त्वा स्वर्गे महीयते। सुवर्णशतनिष्कन्तु तदर्द्धार्द्ध प्रमाणतः। अश्वदाने मृदुस्त्वश्वमश्वं सोपस्करं दिशेत्। महिषीं माहिषे दाने दद्यात् स्वर्णायुधान्विताम्। दद्याद्गजं महादाने सुवर्णफलसंयुतम्। लक्षसंख्याहुतं पुष्पं प्रदद्याद्देवतार्च्चने। दद्याद्द्विजसहस्राय मिष्टान्नं द्विजभोजने। रुद्रं जपेल्लक्षपुष्पैः पूजयित्वा च त्र्यम्बकम्। एकादश जपेद्रुद्रान् दशांशं गुग्गुलैर्घृतैः। हुत्वाभिषेचनं कुर्य्यान्मन्त्रैर्वरुणदैवतैः। शान्तिके गणशान्तिश्च ग्रहशान्तिकपूर्व्वकम्। धान्यदाने शुभं धान्यं खारीषष्टिमितं स्मृतम्। वस्त्रदाने पट्टवस्त्रद्वयं कर्पूरसंयुतम्। दशपञ्चाष्ट चतुर उपवेश्य द्विजान् शुभान्। विधाय वैष्णवीं पूजां सङ्कल्प्य निजकाम्यया। धेनुं दद्याद्द्विजातिभ्योदक्षिणाञ्चापि शक्तितः। अलङ्कृत्य यथाशक्ति वस्त्रालङ्करणैर्द्विजान्। याचेद्दण्डप्रणामेन प्रायश्चित्तं यथोदितम्। तेषामनुज्ञया कृत्वा प्रायश्चित्तं यथाविधि। पुनस्तान् परिपूर्णार्थानर्च्चयेद्विधिवद्द्विजान्। सन्तुष्टा ब्राह्मणा दद्युरनुज्ञां व्रतकारिणे। जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्म्मणि। सर्व्वं भवति निश्छिद्रं यस्य चेच्छन्ति ब्राह्मणाः। ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः। सर्व्वदेवमया विप्रा न तद्वचनमन्यथा। उपवासो व्रतञ्चैव स्नानं तीर्थफलं तपः। विप्रैः सम्पादितं सर्व्वं सम्पन्नं तस्य तत्फलम्। सम्पन्नमिति यद्वाक्यं वदन्ति क्षितिदेवताः। प्रणम्य शिरसा धार्य्यमग्निष्टोमफलं लभेत्। ब्राह्मणाजङ्गमं तीर्थं निर्जलं सार्व्वकामिकम्। तेषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः। तेभ्योऽनुज्ञामभिप्राप्य प्रगृह्य च तथाशिषः। पूजयित्वा द्विजान् शक्त्या भुञ्जीत

रुह बन्धुभिः” शातातपीये कर्म्मविपाके १ अध्याये ।
“ब्रह्महा नरकस्यान्ते पाण्डुकुष्ठो प्रजायते । प्रायश्चित्तं प्रकुर्व्वीत स तत्पातकशान्तये । चत्वारः कलसाः कार्य्याः पञ्चरत्नसमन्विताः । पञ्चपल्लवसंयुक्ताः सितवस्त्रेण संयुताः । अश्वस्थानादिमृद्युक्तास्तीर्थोदकसुपूरिताः । कषायपञ्चकोपेता नानाविधफलान्विताः । सर्व्वौषधिसमायुक्ताः स्थाप्याः प्रतिदिशं द्विजैः । रौप्यमष्टदलं पद्मं मध्यकुम्भोपरि न्यसेत् । तस्योपरि न्यसेद्देवं ब्रह्माणञ्च चतुर्मुखम् । पलार्द्धार्द्धप्रमाणेन सुवर्णेन विनिर्म्मितम् । अर्च्चयेत् पुरुषसूक्तेन त्रिकालं प्रतिवासरम् । यजमानः शुभैर्गन्धैः पुष्पैर्धूपैर्यथाविधि । पूर्व्वादिकुम्भेषु ततोब्राह्मणा ब्रह्मचारिणः । पठेयुः स्वस्ववेदांस्ते ऋग्वेदप्रभृतीन् शनैः । दशांशेन ततोहोमोग्रहशान्तिपुरःसरम् । मध्यकुम्भे विधातव्योष्टताक्तैस्तिलहेमभिः । द्वादशाहमिदं कर्म समाप्य द्विजपुङ्गवः । तत्र पीठे यजमानमभिषिञ्चेद्यथाविधि । ततोदद्याद्यथाशक्ति गोभूहेमतिलादिकम् । ब्राह्मणेभ्यस्तथा देयमाचार्य्याय निवेदयेत् । आदित्यावसवोरुद्राविश्वेदेवामरुद्गणाः । प्रीताः सर्वे व्यपोहन्तु मम पापं सुदारुणम् । इत्युदीर्य्य सुभक्त्या तमाचार्य्यं क्षमापयेत् । एवंविधाने विहिते श्वेतकुष्ठी विशुध्यति । कुष्ठी गोवधकारी स्यान्नरकान्तेऽस्य निष्कृतिः । स्थापयेद्घटमेकन्तु पूर्व्वोक्तद्रव्यसंयुतम् । रक्तचन्दनलिप्ताङ्गं रक्तपुष्पाम्बरान्वितम् । रक्तकुम्भन्तु तं कृत्वा स्थापयेद्दक्षिणां दिशम् । ताम्रपात्रं न्यसेत्तत्र तिलचूर्णेन पूरितम् । तस्योपरि न्यसेद्देवं हेमनिष्कमयं यमम् । यजेत् पुरुषसूक्तेन पापं मे शाम्यतामिति । सामपारायणं (साममानम्) कुर्य्यात् कलसे तत्र सामवित् । दशांशं सर्पैर्हुत्वा पावमान्यभिषेचने । विहिते धर्म्मराजानमाचार्य्याय निवेदयेत् । यमोऽपि महिषारूढोदण्डपाणिर्भयावहः । दक्षिणाशापतिर्देवोमम पापं व्यपोहतु । इत्युच्चार्य्य विसृज्यैनं मासं तद्भक्तिमाचरेत् । ब्रह्मगोवधयोरेषा प्रायश्चित्तेन निष्कृतिः । पितृहा चेतनाहीनोमातृहान्धः प्रजायते । नरकान्ते प्रकुर्व्वीत प्रायश्चित्तं यथाविधि । प्राजापत्यानि कुर्व्वीत त्रिंशच्चैव विधानतः । व्रतान्ते कारयेन्नावं सौवर्णपलसम्मिताम् । कुम्भं रौप्यमयञ्चैव ताम्रपात्राणि पूर्व्ववत् । निष्कहेम्ना तु कर्त्तव्योदेवः श्रीवत्सलाञ्छनः । पट्टवस्त्रेण संवेष्ट्य पूजयेत्तं विधानतः । नावं द्विजाय तां दद्यात् सर्व्वोपस्करसंयुताम् । वासुदेव ! जगन्नाथ ! सर्व्वभूताशयस्थित ! । पातकार्णवमग्नं मां तारय प्रणतार्त्तिहृत् ! । इत्युदीर्य्य प्रणम्याथ ब्राह्मणाय विसर्जयेत् । अन्येभ्योऽपि यथाशक्ति विप्रेभ्योदक्षिणां ददेत् । स्वसृघाती तु बधिरोनरकान्ते प्रजायते । मूकोभ्रातृबधे चैव तस्येयं निष्कृतिः स्मृता । सोऽपि पापविशुद्ध्यर्थं चरेच्चान्द्रायणव्रतम् । व्रतान्ते पुस्तकं दद्यात् सुवर्णफलसंयुतम् । इमं मन्त्रं समुच्चार्य्य ब्रह्माणीं तां विसर्जयेत् । सरस्वति ! जगन्मातः ! शब्दब्रह्माधिदेवते ! । दुष्कर्म्मकरणात् पापात् पाहि मां परमेश्वरि ! । बालघाती च पुरुषोमृतवत्सः प्रजायते । ब्राह्मणोद्वाहनञ्चैव कर्त्तव्यं तेन शुद्धये । श्रवणं हरिवंशस्य कर्त्तव्यञ्च यथाविधि । महारुद्रजपञ्चैव कारयेच्च यथाविधि । षड़ङ्गैकादशैरुद्रै रुद्रः समभिधीयते । रुद्रैस्तथैकादशभिर्महारुद्रः प्रकीर्त्तितः । एकादशभिरेतैस्तु अतिरुद्रस्च कथ्यते । जुहुयाच्च दशांशेन दूर्व्वयायुतसंख्यया । एकादश स्वर्णनिष्काः प्रदातव्याः सदक्षिणाः । पलान्येकादश तथा दद्याद्वित्तानुसारतः । अन्येभ्योऽपि यथाशक्ति द्विजेभ्योदक्षिणां दिशेत् । स्नापयेद्दम्पती पश्चान्मन्त्रैर्वरुणदैवतैः । आचार्य्याय प्रदेयानि वस्त्रालङ्करणानि च । गोत्रहा पुरुषः कुष्ठी निर्व्वंशश्चोपजायते । स च पापविशुद्ध्यर्थं प्राजापत्यशतञ्चरेत् । व्रतान्ते मेदिनीं दत्त्वा शृणुयादथ भारतम् । स्त्रीहन्ता चातिसारी स्यादश्वत्थान् रोपयेद्दश । दद्याच्च शर्कराधेनुं भोजयेच्च शतं द्विजान् । राजहा क्षयरोगी स्यादेषा तस्य च निष्कृतिः । गोभूहिरण्यमिष्टान्नजलवस्त्रप्रदानतः । घृतधेनुप्रदानेन तिलधेनुप्रदानतः । इत्यादिना क्रमेणैव क्षयरोगः प्रशाम्यति । रक्तार्बुदी वैश्यहन्ता जायते स च मानवः । प्राजापत्यानि चत्वारि सप्त धान्यानि चोत्सृजेत् । दण्डापतानकयुतः शूद्रहन्ता भवेन्नरः । प्राजापत्यं सकृच्चैवं दद्याद्धेनुं सदक्षिणाम् । कारूणाञ्च बधे चैव रूक्षभावः प्रजायते । तेन तत्पापशुद्ध्यर्थं दातव्योवृषभः सितः । सर्व्वकार्य्येष्वसिद्धार्थोगजघाती भवेन्नरः । प्रासादं कारयित्वा तु गणेशप्रतिमां न्यसेत् । गणनाथस्य मन्त्रन्तु मन्त्री लक्षमितं जपेत् । कुलत्थशाकैः पूपैश्च गणशान्तिपुरःसरम् । उष्ट्रे विनिहते चैव जायते विकृतस्वरः । स तत्पापविशुद्ध्यर्थं दद्यात् कर्पूरकं फलम् । अश्वे विनिहते चैव वक्रतुण्डः प्रजायते । शतं पलानि

दद्याच्च चन्दनान्यघनुत्तये । महिषीघातने चैव कृष्णगुल्मः प्रजायते । खरे विनिहते चैव खररोमा प्रजायते । निष्कत्रयस्य प्रकृतिं स प्रदद्याद्धिरण्मयीम् । तरक्षौ निहते चैव जायते केकरेक्षणः । दद्याद्रत्नमयीं धेनुं स तत्पातकशान्तये । शूकरे निहते चैव दन्तुरोजायते नरः । स दद्यात्तु विशुद्ध्यर्थं घृतकुम्भं सदक्षिणम् । हरिणे निहते खञ्जः शृगाले तु विपादकः । अश्वस्तेन प्रदातव्यः सौवर्णपलनिर्म्मितः । अजाभिघातने चैव अधिकाङ्गः प्रजायते । अजा तेन प्रदातव्या विचित्रवस्त्रसंयुता । उरभ्रे निहते चैव पाण्डुरोगः प्रजायते । कस्तूरिकापलं दद्याद्ब्राह्मणाय विशुद्धये । मार्ज्जारे निहते चैव पीतपाणिः प्रजायते । पारावतं स सौवर्णं प्रदद्यान्निष्कमात्रकम् । शुकशारिकयोर्घाते नरः स्खलितवाग्भवेत् । सच्छास्त्रपुस्तकं दद्यात् स विप्राय सदक्षिणम् । वकघाते दीर्घनसोदद्याद्गां धवलप्रभाम् । काकघाती कर्णहीनोदद्याद्गामसितप्रभाम् । हिंसायां निष्कृतिरियं ब्राह्मणे समुदाहृता । तदर्द्धप्रमाणेन क्षत्रियादिष्वनुक्रमात्” । २ अ०

“सुरापः श्यावदन्तः स्यात् प्राजापत्यन्तु तारकम् । शर्करायास्तुलाः सप्त दद्यात् पापविशुद्धये । जपित्वा तु महारुद्रं दशांशं जुहुयात्तिलैः । ततोऽभिषेकः कर्त्तव्योमन्त्रैर्वरुणदैवतैः । मद्यपोरक्तपित्ती स्यात् स दद्यात् सर्पिषोघटम् । मधुनोऽर्द्धघटञ्चैव सहिरण्यं विशुद्धये । अभक्ष्यभक्षणे चैव जायते कृमिलोदरः । यथावत्तेन शुद्ध्यर्थमुपोष्यं भीष्मपञ्चकम् । उदक्यावीक्षितं भुक्त्वा जायते कृमिलोदरः । गोमूत्रयावकाहारस्त्रिरात्रेणैव शुद्ध्यति । भुक्त्वा चास्पृश्यसंस्पृष्टं जायते कृमिलोदरः । त्रिरात्रं समुपोष्याथ स तत्पापात् प्रमुच्यते । परान्नविघ्नकरणादजीर्णमभिजायते । लक्षहोमं स कुर्व्वीत प्रायश्चित्तं यथाविधि । मन्दोदराग्निर्भवति सति द्रव्ये कदन्नदः । प्राजापत्यत्रयं कुर्य्याद्भोजयेच्च शतं द्विजान् । विषदः स्याच्छर्द्दिरोगी दद्याद्दश पयस्विनीः । मार्गहा पादरोगी स्यात् सोऽश्वदानं समाचरेत् । पिशुनोनरकस्यान्ते जायते श्वासकासवान् । घृतं तेन प्रदातव्यं सहस्रपलसम्मितम् । धूर्त्तोऽपस्माररोगी स्यात् स तत्पापविशुद्धये । ब्रह्मकूर्च्चमयीं धेनुं दद्याद्गाञ्च सदक्षिणाम् । शूली परोपतापेन जायते तत्प्रमोचने । सोऽन्नदानं प्रकुर्व्वीत तथा रुद्रं जपेन्नरः । दावाग्निदायकश्चैव रक्तातिसारवान् भवेत् । तेनोदपानं कर्त्तव्यं रोपणीयस्तथा वटः । सुरालये जले वापि शकृन्मूत्रं करोति यः । गुदरोगोभवेत्तस्य पापरूपः सुदारुणः । मासं सुराच्चनेनैव गोदानद्वितयेन तु । प्राजापत्येन चैकेन शाम्यन्ति गुदजारुजः । गर्भपातनजा रोगा यकृत्प्लीहजलोदराः । तेषां प्रशमनार्थाय प्रायश्चित्तमिदं स्मृतम् । एतेषु दद्याद्विप्राय जलधेनुं विधानतः । सुवर्णरूप्यताम्राणां पलत्रयसमन्विताम् । प्रतिमाभङ्गकारी च अप्रतिष्ठः प्रजायते । संवत्सरत्रयं सिञ्चेदश्वत्थं प्रतिवासरम् । उद्वाहयेत्तमश्वत्थं स्वगृह्योक्तविधानतः । तत्र संस्थापयेद्देवं विघ्नराजं सुपूजितम् । दुष्टवादी खण्डितः स्यात् स वै दद्याद्द्विजातये । रूप्यं पलद्वयं दुग्धं घटद्वयसमन्वितम् । खल्वाटः परनिन्दावान् धेनुं दद्यात् सकाञ्चनाम् । परोपहासकृत् काणः स गां दद्यात् समौक्तिकाम् । सभायां पक्षपाती च जायते पक्षघातवान् । निष्कत्रयमितं हेम स दद्यात् सत्यवर्त्तिनाम्” ३ अ० ।

“कुनखी नरकस्यान्ते जायते विप्रहेमहृत् । स तु स्वर्णशतं दद्यात् कृत्वा चान्द्रायणत्रयम् । औडुम्बरी ताम्रचौरो नरकान्ते प्रजायते । प्राजापत्यं स कृत्वात्र ताम्रं पलशतं दिशेत् । कांस्यहारी च भवति पुण्डरीकसमन्वितः । कांस्यं पलशतं दद्यादलङ्कृत्य द्विजातये । रीतिहृत् पिङ्गलाक्षः स्यादुपोष्य हरिवासरम् । रीतिपलशतं दद्यादलङ्कृत्य द्विजं शुभम् । मुक्ताहारी च पुरुषो जायते पिङ्गमूर्द्धजः । मुक्तापलशतं दद्यादुपोष्य स विधानतः । त्रपुहारी च पुरुषो जायते नेत्ररोगवान् । उपोष्य दिवसं सोऽपि दद्यात् पलशतं त्रपु । सीसहारी च पुरुषो जायते शीर्षरोगवान् । उपोष्य दिवसं दद्याद्घृतधेनुं विधानतः । दुग्धहारी च पुरुषो जायते बहुमूत्रकः । स दद्याद्दुग्धधेनुञ्च ब्राह्मणाय यथाविधि । दधिचौर्य्येण पुरुषो जायते मदवान् यतः । दधिधेनुः प्रदातव्या तेन विप्राय शुद्धये । मधुचौरस्तु पुरुषोजायते नेत्ररोमवान् । स दद्यान्मधुधेनुञ्च समुपोष्य द्विजातये । इक्षोर्विकारहारी च भवेदुदरगुल्मवान् । गुड़धेनुः प्रदातव्या तेन तद्दोषशान्तये । लोहहारी च पुरुषः कर्व्वुराङ्गः प्रजायते । लोहं पलशतं दद्यादुपोष्य स तु वासरम् । तैलचौरस्तु पुरुषो भवेत् कण्ड्वादिपीड़ितः । उपोष्य स तु विप्राय दद्यात्तैलघटद्वयम् । आमान्नहरणाच्चैव दन्त-

हीनः प्रजायते । स दद्यादश्विनौ हेमनिष्कद्वयविनिर्म्मितौ । पक्वान्नहरणाच्चैव जिह्वारोगः प्रजायते । गायत्र्याः स जपेल्लक्षं दशांशं जुहुयात्तिलैः। फलहारी च पुरुषोजायते व्रणिताङ्गुलिः । नानाफलानामयुतं स दद्याच्च द्विजन्मने । ताम्बूलहरणाच्चैव श्वेतौष्ठः संप्रजायते । सदक्षिणं प्रदद्याच्च विद्रुमस्य द्वयं वरम् । शाकहारी च पुरुषोजायते नीललोचनः । ब्राह्मणाय प्रदद्याद्वै महानीलमणिद्वयम् । कन्दमूलस्य हरणाद्ध्रस्वपाणिः प्रजायते । देवतायतनं कार्य्यमुद्यानं तेन शक्तितः । सौगन्धिकस्य हरणाद्दुर्गन्धाङ्गः प्रजायते । स लक्षमेकं पद्मानां जुहुयाज्जातवेदसि । दारुहारी च पुरुषः खिन्नपाणिः प्रजायते । स दद्याद्विदुषे शुद्धं काश्मीरज-पलद्वयम् । विद्यापुस्तकहारी च किल मूकः प्रजायते । न्यायेतिहासं दद्यात् स ब्राह्मणाय सदक्षिणम् । वस्त्रहारी भवेत् कुष्ठी संप्रदद्यात् प्रजापतिम् । हेमनिष्कमितञ्चैव वस्त्रयुग्मं द्विजातये । ऊर्णाहारी लोमशः स्यात् स दद्यात् कम्बलान्वितम् । स्वर्णनिष्कमितं हेमवह्निं दद्याद्द्विजातये । पट्टसूत्रस्य हरणान्निर्लोमा जायते नरः । तेन धेनुः प्रदातव्या विशुद्ध्यर्थं द्विजन्मने । औषधस्यापहरणे सूर्य्यावर्त्तः प्रजायते । सूर्य्यायार्घः प्रदातव्योमासं देयञ्च काञ्चनम् । रक्तवस्त्रप्रवालादिहारी स्याद्रक्तवातवान् । सवत्सां महिषीं दद्यान्मणिरागसमन्विताम् । विप्ररत्नापहारी चाप्यनपत्यः प्रजायते । तेन कार्य्यं विशुद्ध्यर्थं महारुद्रजपादिकम् । स्तवत्सोदितः सर्व्वोविधिरत्र विधीयते । दशांशहोमः कर्त्तव्यः पायसेन यथाविधि । देवस्य हरणाच्चैव जायते विविधोज्वरः । ज्वरोमहाज्वरश्चैव रौद्रोवैष्णव एव च । ज्वरे रौद्रं जपेत् कर्णे महारुद्रं महाज्वरे । अतिरुद्रं जपेद्द्रौद्रे वैष्णवे तद्द्वयं जपेत् । नानाविधद्रव्यचौरोजायते ग्रहणीयुतः । तेनान्नोदकवस्त्राणि हेम देयञ्च शक्तितः'' ४अ०।''मातृगामी भवेद्यस्तु लिङ्गं तस्य विनश्यति । चाण्डालीगमने चैव हीनकोषः प्रजायते । तस्य प्रतिक्रियां कर्त्तुं कुम्भमुत्तरतोन्यसेत् कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यविभूषितम् । तस्योपरि न्यसेद्देवं कांस्यपात्रे धनेश्वरम् । सुवर्णनिष्कषट्केन निर्मितं नरवाहनम् । यजेत् पुरुषसूक्तेन धनदं विश्वरूपिणम् । अथर्ववेदविद्विप्रोन्याथर्व्वाणं समाचरेत् । सुवर्णपुत्तलिकां कृत्वा निष्कविंशतिसङ्ख्यया । दद्याद्विप्राय संपूज्य निष्पापोऽहमिति ब्रुवन् । निधीनामधिपोदेवः शङ्करस्य प्रियः सखा । सौम्याशाधिपतिः श्रीमान् मम पापं व्यपोहतु । इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि । दद्याद्देवं हीनकोषे लिङ्गनाशे विशुद्धये । गुरुजायाभिगमनान्मूत्रकृच्छ्रः प्रजायते । तेनापि निष्कृतिः कार्य्या शास्त्रदृष्टेन कर्मणा । स्थापयेत् कुम्भमेकन्तु पश्चिमायां शुभे दिने । नीलवस्त्रसमाच्छन्नं नीलमाल्यविभूषितम् । तस्योपरि न्यसेद्देवं ताम्रपात्रे प्रचेतसम् । सुवर्णनिष्कषट्केन निर्मितं यादसाम्पतिम् । यजेत् पुरुषसूक्तेन वरुणं विश्वरूपिणम् । सामविद्ब्राह्मणस्तत्र सामवेदं समामनेत् । सुवर्णपुत्तलिकां कृत्वा निष्कविंशतिसंख्यया । दद्याद्विप्राय संपूज्य निष्पापोऽहमिति ब्रुवन् । यादसामधिपोदेवोविश्वेषामपि पावनः । संसाराब्धौ कर्णधारो वरुणः पावनोऽस्तु मे । इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि । दद्याद्देवमबङ्कृत्य मूत्रकृच्छ्रप्रशान्तये । स्वसुतागमने चैव रक्तकुष्ठं प्रजायते । भगिनीगमने चैव पीतकुष्ठं प्रजायते । तस्य प्रतिक्रियां कर्त्तुं पूर्व्वतः कलसं न्यसेत् । पीतवस्त्रसमाच्छन्नं पीतमाल्यविभूषितम् । तस्योपरि न्यसेत् स्वर्णपात्रे देवं सुरेश्वरम् । सुवर्णनिष्कषट्केन निर्मितं वज्रधारिणम् । यजेत् पुरुषसूक्तेन वासवं विश्वरूपिणम् । यजुर्वेदं तत्र साम ऋग्वेदञ्च समाचरेत् । सुवर्णपुत्तलिकां कृत्वा सुवर्णदशकेन तु । दद्याद्विप्राय संपूज्य निष्पापोऽहमिति ब्रुवन् । देवानामधिपोदेवो वज्री विष्णुनिकेतनः । शतयज्ञः सहस्राक्षः पापं मम निकृन्ततु । इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि । दद्याद्देवं सहस्राक्षं स पापस्यापनुत्तये । भ्रातृभार्य्याभिगमनाद्गलत्कुष्ठं प्रजायते । स्वबधूगमने चैव कृष्णकुष्ठं प्रजायते । तेन कार्य्यं विशुद्ध्यर्थं प्रागुक्तस्यार्द्धमेव हि । दशांशहोमः सर्व्वत्र घृताक्तैः क्रियते तिलैः । यदगम्याभिगमनाज्जायते भ्रुवमण्डलम् । कृत्वा लोहमयीं धेनुं तिलषष्टिप्रमाणतः । कार्पासभारसंयुक्तां कांस्यदोहां सवत्सिकाम् । दद्याद्विप्राय विधिवदिमं मन्त्रमुदीरयेत् । सुरभी वैष्णवी माता मम पापं व्यपोहतु । तपस्विनीसङ्गमने जायते चाश्मरीगदी । स तु पापविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत् । दद्याद्विप्राय विदुषे मधुधेनुं यथोदिताम् । तिलद्रोणशतञ्चैव हिरण्येन समन्वितम् । पितृष्वस्रभिगमनाद्दक्षिणांशव्रणी भवेत् । तेनापि निष्कृतिः कार्य्या अजादानेन शक्तितः । मातृ-

स्वान्यान्तु गमने पृष्ठकुब्जः प्रजायते । कृष्णाजिनप्रदानेन प्रायश्चित्तं समाचरेत् । मातृष्वस्रभिगमने वामाङ्गे व्रणवान् भवेत् । तेनापि निष्कृतिः कार्य्या सम्यग्दानप्रदानतः । मृतभार्य्याभिगमने मृतभार्य्यः प्रजायते । तत्पातकविशुद्ध्यर्थं द्विजमेकं विवाहयेत् । सगोत्रस्त्रीप्रसङ्गेन जायते च भगन्दरी । तेनापि निष्कृतिः कार्य्या महिषीदानयत्नतः । तपस्विनीप्रसङ्गेन प्रमेही जायते नरः । मासं रुद्रजपः कार्य्योदद्याच्छक्त्या च काञ्चनम् । दीक्षितस्त्रीप्रसङ्गेन जायते दुष्टरक्तरुक् । स पातकविशुद्ध्यर्थं प्राजापत्यद्वयञ्चरेत् । सजातिजायागमने जायते हृदयव्रणी । तत्पापस्य विशुद्ध्यर्थं प्राजापत्यद्वयञ्चरेत् । पशुयोनौ च गमने मूत्राघातः प्रजायते । तिलपात्रद्वयञ्चैव दद्यादात्मविशुद्धये । अश्वयोनौ च गमनाद्गुदस्तम्भः प्रजायते । सहस्रकमलस्नानं मासं कुर्य्यात् शिवस्य च । एते दोषा नराणां स्युर्नरकान्ते न संशयः । स्त्रीणामपि भवन्त्येते तत्तत्पुरुषसङ्गमात् । अथ शूकरश्वक्रव्यादि कृमिश्वशकटेन च । श्वग्निवान्तसर्पाम्बुविषोद्बन्धनजलैर्मृताः । व्याघ्राहिगजभूपालचौरवैरिहताः । इत्यतस्त्वन्नता ये च शौचसंस्कारवर्जिताः । विसूचिकाग्निकवलदन्तातीसारतो हताः । शाकिन्यादिग्रहैर्ग्रस्ता विद्युत्पातहताश्च ये । अस्पृश्या अपवित्राश्च पतिताः पुत्रवर्जिताः । पञ्चविंशत्प्रकारैश्च नाप्नुवन्ति गतिं मृताः । पित्राद्याः पिण्डभाजः स्युस्त्रयो लेपभुजस्तथा । ततो नान्दीमुखाः प्रोक्तास्त्रयोऽप्यश्रुमुखास्त्रयः । द्वादशैते पितृगणास्तर्पिताः सन्ततिप्रदाः । गतिहीनाः सुतादीनां सन्ततिं नाशयन्ति ते । दशव्याघ्रादिनिहता गर्भं निघ्नन्त्यथो क्रमात् । द्वादशाश्वादिनिहता आकर्षन्ति च बालकम् । विषादिनिहताघ्नन्ति दशसु द्वादशस्वपि । वर्षैकबालकं कुर्य्यादनपत्योऽनपत्यताम् । व्याघ्रेण हन्यते जन्तुः कुमारीगमनेन च । विषदश्चैव सर्पेण गजेन नृपदुष्टकृत् । राज्ञा राजकुमारघ्नश्चौरेण पशुहिंसकः । वैरिणा मित्रभेदी च वकवृत्तिर्वृकेण तु । गुरुघाती च शय्यायां मत्सरी शौचवर्जितः । द्रोही संस्काररहितः शुना निक्षेपहारकः । नरो विहन्यतेऽरण्ये [illegible]ण च पाशिकः । कृमिभिः कृत्तवासाश्च कृमिणा यो निकृन्तनः । शृङ्गिणा शङ्करद्रोही शकटेन च सूचकः । अशुचा मेदिनीचौरो वह्निना यज्ञहानिकृत् । द्रवेण दक्षिणाचौरः शस्त्रेण श्रुतिनिन्दकः । अश्मना द्विजनिन्दाकृद्विषेण कुमतिप्रदः । उद्बन्धनेन हिंस्रः स्यात् सेतुभेदी जलेन तु । द्रुमेण राजदन्तिहृदतीसारेण लौहहृत् । शाकिन्याद्यैश्च म्रियते मदर्पकार्य्यकारकः । अनध्यायेऽप्यधीयानो म्रियते विद्युता तथा । अस्पृश्यस्पर्शसङ्गी च वान्तमग्निश्च शास्त्रहृत् । पतितो मद्यविक्रेतानपत्यो द्विजवस्त्रहृत् । अथ तेषां क्रमेणैव प्रायश्चित्तं विधीयते । कारयेन्निष्कमात्रन्तु पुरुषं प्रेतरूपिणम् । चतुर्भुजं दण्डहस्तं महिषासनसंस्थितम् । पिष्टैः कृष्णतिलैः कुर्य्यात् पिण्डं प्रस्थप्रमाणतः । मध्वाज्यशर्करायुक्तं स्वर्णकुण्डलसंयुतम् । अकालमूलं कलसं पञ्चपल्लवसंयुतम् । कृष्णवस्त्रसमाच्छन्नं सर्व्वौषधिसमन्वितम् । तस्योपरि न्यसेद्देवं पात्रं धान्यफलैर्युतम् । सप्तधान्यन्तु सफलं तत्र तत् सकलं न्यसेत् । कुम्भोपरि च विन्यस्य पूजयेत् प्रेतरूपिणम् । कुर्य्यात् पुरुषसूक्तेन प्रत्यहं दुग्धतर्पणम् । षडङ्गञ्च जपेद्रुद्रं कलसे तत्र वेदवित् । यमसूक्तेन कुर्व्वीत यमपूजादिकं तथा । गायत्र्याश्चैव कर्त्तव्यो जपः स्वात्मविशुद्धये । ग्रहशान्तिकपूर्व्वञ्च दशांशं जुहुयात्तिलैः । अज्ञातनामगोत्राय प्रेताय सतिलोदकम् । प्रदद्यात् पितृतीर्थेन पिण्डं मन्त्रमुदीरयेत् । इमं तिलमयं पिण्डं मधुसर्पिःसमन्वितम् । ददामि तस्मै प्रेताय यः पीड़ां कुरुते मम । सजलान् कृष्णकलसांस्तिलपात्रसमन्वितान् । द्वादश प्रेतमुद्दिश्य दद्यादेकञ्च विष्णवे । ततोऽभिषिञ्चेदाचार्य्यो दम्पती कलसोदकैः । शुचिर्वरायुधधरो मन्त्रैर्वरुणदैवतैः । यजमानस्ततो दद्यादाचार्य्याय स दक्षिणाम् । ततो नारायणबलिः कर्त्तव्यः शास्त्रनिश्चयात् । एष साधारणविधिरगतीनामुदाहृतः । विशेषस्तु पुनस्तेषां व्याघ्रादिनिहतेष्वपि । व्याघ्रेण निहते प्रेते परकन्यां विवाहयेत् । सर्पदंशे नागबलिर्देयः सर्पस्तु काञ्चनः । चतुर्निष्कमितं हेमगजं दद्याद्गजैर्हते । राज्ञा विनिहते दद्यात् पुरुषन्तु हिरण्मयम् । चौरेण निहते धेनुं वैरिणा निहते वृषम् । वृकेण निहते दद्याद् यथाशक्ति च काञ्चनम् । शय्यामृते प्रदातव्या शय्या तूलीसमन्विता । निष्कमात्रसुवर्णस्य विष्णुना समधिष्ठिता । शौचहीने मृते चैव द्विनिष्कस्वर्णजं हरिम् । संस्कारहीने च मृते कुमारञ्च विवाहयेत् । शुना हृते च

निर्व्वपं स्थापयेद्विजशक्तितः । शूकरेण हते दद्यान्महिषं दक्षिणान्वितम् । कृमिभिश्च हते दद्याद्गोधूमान्नं द्विजातये । शृङ्गिणा च हते दद्याद्वृषभं वस्त्रसंयुतम् । शकटेन हते दद्यादश्वं सोपस्करान्वितम् । भृगुपाते हते चैव प्रदद्याद्धान्यपर्व्वतम् । अग्निना निहते दद्यादुपानहं स्वशक्तितः । द्रवेन निहते चैव कर्त्तव्या सदने सभा । शस्त्रेण निहते दद्यान्महिषीं दक्षिणान्विताम् । अश्मना निहते दद्यात् सवत्सां गां पयस्विनीम् । विषेण च हते दद्यान्मेदिनीं क्षेत्रसंयुताम् । उद्बन्धनहते चापि प्रदद्याद्गां पयस्विनीम् । हते जलेन वरुणं हैमं दद्यात्त्रिनिष्ककम् । वृक्षं वृक्षहते दद्यात् सौवर्णं स्वर्णसंयुतम् । अतीसारमृते लक्षं गायत्र्याः संयतो जपेत् । शाकिन्यादिहते चैवं जपेद्रुद्रं यथोचितम् । विद्युता निहते चैव विद्यादानं समाचरेत् । अस्पर्शे च हते कार्य्यं वेदपारायणं तथा । सच्छास्त्रपुस्तकं दद्याद्वान्तमाश्रित्य संस्थिते । पातित्येन हते कुर्य्यात् प्राजापत्यानि षोड़श । हते चापत्यरहिते कृच्छ्राणां नवतिञ्चरेत् । निष्कत्रयमितं स्वर्णं दद्यादश्वं हयाहते । कपिना निहते दद्यात् कपिं कनकनिर्म्मितम् । विसूचिकाहते स्वादु भोजयेच्च शतं द्विजान् । तिलधेनुः प्रदातव्या कण्ठेऽन्नकवले हते । केशरोगहते चापि अष्टौ कृच्छ्रान् समाचरेत् । एवं कृते विधाने तु विद्यात्तदौर्द्ध्वदेहिकम् । ततः प्रेतत्वनिर्म्मुक्ताः पितरस्तर्पितास्तथा । दद्युः पुत्रांश्च पौत्रांश्च आयुरारोग्यसम्पदः ॥" इत्य० ।

भृगुभारतसंवादे रोगादिरूपकर्म्मविशेषविपाक उक्तो यथा— १सर्व्वशेषः "वातपित्तादिभिर्दोषैर्यदुत्पन्नं प्रशाम्यति । अगदेन तु वैद्येन कर्म्मजं नोपशाम्यति । तस्मात् कर्म्म परिज्ञाय प्रायश्चित्तं करोति यः । स तु दोषैर्विनिर्म्मुक्तो भोगीव कञ्चुकोज्झितः । भवतीह पवित्रोऽपि मनुजो निरुपप्लवः । निशम्य तस्य तद्वाक्यं प्रणम्य स महामतिः । कृतकर्म्मोपशमनं विस्तरेण महामते ! । वदस्व मुनिशार्दूल ! नान्यो वक्ता त्वया विना । मुनिरुवाच । धर्म्माधर्म्मसमायुक्ता लोभमोहसमावृताः । भवन्ति मानवाः सर्व्वे विष्णुमायावगुण्ठिताः । स्वकर्म्मवशमासाद्य पतन्ति निरये नराः । ततो जन्म समासाद्य व्याधिं कर्म्मानुरूपतः । अवाप्य परितप्यन्ति पीड्यमानाः समन्ततः । देवद्रव्यविनाशेन गुरुद्रोहादिकर्म्मभिः । क्रमात् सर्व्वेषु पच्यन्ते नरकेष्वा महीक्षयात् । महापातकिनश्चापि सर्व्वेषु नरकेष्विह । आचन्द्रतारकं यावत् पीड्यन्ते विविधैर्गदैः । उपपातकिनश्चापि तदर्द्धमिह मानवाः । शेषैः पापैस्तदर्द्धञ्च कालं प्राप्य विशेषतः । अथाधःपततां पुंसामधर्म्मः परिकीर्त्तितः । नरकाब्धौ महाघोरे पतनात् पापमुच्यते । तस्मात् पापेषु दुःखानि तीव्राणि सुबहून्यपि । तस्मात् पापं न कर्त्तव्यमात्मपीडाकरं यतः । कर्म्मानुसारि नरकं भुक्त्वाशेषं व्रजन्ति वै । भूमौ वृक्षलतागुल्मपशुपक्षिमृगादिभिः । प्रत्यक्षं नरकं भुक्त्वा मानुषत्वं प्रपद्य च । तद्व्याधिलक्षणं सर्व्वं संप्राप्य परितप्यते । पूर्व्वजन्मकृतं पापं व्याधिरूपेण बाधते । तस्योपशमनं कार्य्यं मन्त्रदानार्च्चनादिभिः । प्रायश्चित्तमकृत्वा तु न कुर्य्यात् कर्म्म किञ्चन । अनिस्तीर्णमघं नित्यं वर्द्धते द्विगुणं पुनः । देवद्रव्यं द्विजप्राप्तं ब्रह्मस्वं ब्राह्मणस्त्रियः । द्रोह एषां न कर्त्तव्यस्त्वधोगतिभयात् सदा । स्वर्णस्तेयी गुरोः शय्याशायी मद्यस्य भोजकः । ब्रह्महापि च तेषां वै संसर्गी चापि पञ्चमः । गर्भपातकरः षष्ठः कन्यादूषी च सप्तमः । स्त्रीबालघातकश्चापि नवमो न्यासहृत्तथा । विश्वासघातकश्चैव दशमः परिकीर्त्तितः । एते दशविधा घोरास्तदन्य उपपातकाः । यत् पापं ब्रह्महत्याया द्विगुणं गर्भपातने । प्रायश्चित्तं न तस्यास्ति देहत्यागो विधीयते । कृतदोषसहस्राणां योषिद्द्विजतपस्विनाम् । न बधो नाङ्गविच्छेदो देशत्यागो विधीयते । नैते दण्ड्या महीभर्त्तुर्यस्य विषयकृताः । दण्डयन् दोषमाप्नोति तस्माद्राजा परित्यजेत् । यथापराधतो राजा शास्ता भवति शास्त्रतः । न तस्य कुरुते शान्तिं यसोमर्त्त्येषु शासिता । अज्ञात्वा धर्म्मशास्त्राणि प्रायश्चित्तं वदन्ति ये । प्रायश्चित्तं भवेत्तेषां महापातकिनश्च ते । तस्माद्विमृश्य वक्तव्यं धर्म्मशास्त्रानुसारतः । ये विप्रान्न नमन्ति नैव च गुरुं ये चाथ कर्म्मोज्झिता, ये शास्त्रोक्तविवर्जिता जनपदानां तापकाः पापिनः । ये वैद्यान् गणकान् ग्रहांश्च सुहृदः सन्मार्गगान् ये सदा, निन्दन्त्येव महापदं गदभयं विन्दन्ति ते दुखिताः । ये नमन्ति द्विजतीर्थमादरादौषधञ्च भिषजः प्रति[illegible]म् । इष्टमन्त्रमखदानजं फलं ते भवन्ति निरुजो निरापदः । व्याधेर्य्यदा गदविखण्डनभेषजाद्यैर्दोषो न याति शमनं

सुकृतप्रयोगैः । तं पूर्व्वजन्मजनितं तु विज्ञाय सम्यक् कार्य्या सभा तदुपदिष्टयथोक्तशान्तिः” १ अ० ।

२ नपुंसकता “साध्वी यौवनसम्पन्ना त्यक्ता दोषैर्व्विहिष्कृता । तेन दोषेण राजेन्द्र ! नपुंस्त्वमनुगच्छति । मुष्कच्छेदनकर्त्ता तु सोऽपि षण्डत्वमश्नुते । रजस्वलाम् स्थितां भार्य्यां सन्निधौ यो न गच्छति । षण्डत्वन्तु भवेत् तस्य जन्म चासाद्य भूपते !” ।

३ अल्पायुःप्रजता “शृणु विप्र ! पुरा स्नातुं गतस्त्वं सरितस्तटम् । गावः कतिपयास्तत्र तृषार्त्ता वारितास्त्वया । तस्य विघ्नस्य पाकोऽयं जायन्तेऽल्पायुषः प्रजाः” ।

४ अकिञ्चनता “अदाता निष्ठुरो जातः स च धर्मस्य निन्दकः । महाधनो न देवाग्निं ब्राह्मणं तोषयन् पुरा । आयुःशेषे मृतिं प्राप्य गृहीतो यमकिङ्करैः । बद्ध्वा पाशेन संनीतो यत्रास्ते धर्मराड्विभुः । चित्रगुप्तेन तत्पापं विज्ञातञ्च यमाज्ञया । तेन मर्त्त्ये महाढ्येन हुतं दत्तं न किञ्चन । लोलाख्यस्य नरकस्य विषयेऽयं द्विजो भवेत् । आज्ञप्तः किङ्करैर्नीतो निःक्षिप्तो नरकार्णवे । लोलाख्यनरके घोरे सर्वप्राणिभयङ्करे । लोलाख्यनरकस्येह लक्षणं त्वमतः शृणु । सर्व्वत्र दर्शयेत् सर्वं भक्ष्यपानादि सर्वतः । मृगतृष्णाजलाकारं दृश्यते न तु लभ्यते । नैराश्यं प्राप्य विवशः क्षुत्पिपासासमाकुलः । बहुकालन्तु विविधं भुक्त्वा जन्म प्रपद्य च । अकिञ्चनत्वमासाद्य महाक्लेशञ्च विन्दति । अत्यर्थं कदन्नं भुङ्क्ते कदन्नमति दुर्लभम् । स तु भिक्षाटनेनापि जीर्णाम्बरधरः सदा”

५ वियोगः “अयं दुष्टो दुराचारं दुष्टबुद्ध्या चकार यत् । स्नेहभेदकरो यस्मात्तस्माद्दण्ड्यो यमस्य हि । इत्युक्त्वा शृङ्खलैर्बद्ध्वा ताडयित्वा भृशं बहु । नीत्वा नियोगिनस्तत्र यत्रास्ते दण्डनायकः । दृष्ट्वा तं चित्रगुप्तेन तत्पापं प्रकटीकृतम् । व्यामोहके तु नरके पातितो दुर्मतिर्नृप ! । व्यामोहकस्य यच्चिह्नं मानं वक्ष्याम्यशेषतः । व्यायामः सप्ततिस्तस्य योजनं दुर्वहं परम् । कुम्भाकारं निराकारं धूमौघव्याप्तमन्तरम् । वायोर्गतिर्न तत्रास्ति न च रश्मिर्निभावसोः । मूढस्य पतनं तत्र यस्य मैत्रीविभेदकः । ज्ञात्वा मन्त्रस्य निष्पाद्यं विमन्त्रं यो विधास्यति । सोऽपि मृत्युवशं प्राप्य मोहकाख्यञ्च गच्छति । मिथ्यापवादमन्येषां यः करोति मुधामतिः । तस्य मिथ्याभिशंसेन मोहकाख्ये गतिर्भवेत् । यानि मिथ्याभिशंसेन पतन्त्यश्रूणि रोदनात् । तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम् । मोहकाख्ये महाघोरे पतन्त्य ते दुराशयाः । पूर्व्वापरपरिज्ञानविहीनः परिमुह्य च । एवमेतत् सहस्राणि वर्षाणि च चतुर्दश । भुक्त्वा मृगतनुं प्राप्य मृगीदेहसमाकुलः । व्यापादितोऽन्धशंसेन नवशोकसमाहतः । मृगयूथपरित्यक्तस्त्वेकाकी तिष्ठते पुनः । सोऽपि मृत्युवशं प्राप्य मत्स्ययोनौ प्रजायते । ततो मानुष्यमासाद्य वियोगे परितप्यते” ।

६ नेत्रामयः । “पुरा विप्र ! गृहस्थस्य दीपस्य हरणं कृतम् । तव पुत्रेण भो विप्र ! तेन काणत्वमस्य वै । कोटवीञ्च प्रपश्येद्यः सतीं वापि पराङ्गनाम् । सकामः कामतो मोहाद्रतिमालक्ष्य पश्यति । सोऽपि नेत्रामयं प्राप्य सीदतीह स्वकर्मतः । सभ्यं निरयं घोरं संप्राप्य कदनं बहु । भुक्त्वा जन्म समासाद्य दुष्टकर्मसमुद्भवाम् । मानुषीन्तु तनुं प्राप्य निष्कृतिं न करोति यः । पुनर्जन्म समासाद्य प्राप्तं कर्म न मुञ्चति” ।

७ कुब्जत्वम् । “देवताप्रतिमां दृष्ट्वा यस्तां नैवाभिवादयेत् । ब्राह्मणञ्च गुरुं श्रेष्ठं ब्रह्मचारितपस्विनम् । श्मशाने जायते वृक्षः काकगृध्रोपसेवितः । भुक्त्वा कालमशेषञ्च मानुषत्वमवाप्य सः । कुब्जत्वमश्नुते तस्मात् कर्मणो मानुषो ध्रुवम्” ।

८ खञ्जत्वम् छिन्नपादत्वञ्च “उपानहं हरेद् यस्तु तथैव काष्ठपादुकाम् । तप्तबालुकदुर्भेद्यमङ्के प्राप्य च सीदति । स नीतो यमदूतैश्च ताड्यमानो भृशं मुहुः । प्रवेश्य दक्षिणं द्वारं बद्ध्वा पादद्वये दृढम् । हाहाकारस्तु सर्वत्र श्रूयते यत्र भीषणः । नीत्वा यमाज्ञया दूतैः रौरवे च निवेशितः । रौरवस्य च यन्मानं तन्मे निगदतः शृणु । लक्षयोजनविस्तीर्णं गभीरं स्याद्दिवाहृतम् । दह्यमानस्तु तत्रैव पतितः पुनरुत्थितः । पुनः पतति तत्रैव क्रन्दमानो मुहुर्मुहुः । अनेककालमासाद्य पारं प्राप्य सुदुःखितः । मानुषीं योनिमासाद्य खञ्जपादो भवेन्नरः । गृध्रसी(छिन्नपादता)व्याधिसंयुक्तो भवेज्जन्मनि जन्मनि” ।

९ छिन्नघ्राणता “श्रुतिस्मृतिकथायान्तु यस्तत्र विघ्नमाचरेत् । देवद्विजातिधर्म्मस्य सदा यो देवनिन्दकः । सोऽपि मृत्युवशं प्राप्य यत्र याति च तत् शृणु । नैरृते पश्चिमे भागे पिङ्गला नाम या पुरी । पिशाचा यत्र तिष्ठन्ति सोऽपि तत्र स्वकर्म्मतः । यमाज्ञया तत्र नीतो रक्षितस्तत्र दुर्म्मतिः । तत्र दुःखं महाघोरं भुक्त्वा कर्म्मा-

न्तरे पुनः। मानुषत्वमनुप्राप्य छिन्नप्राणोह्यशोभनः। स निन्द्यः सत्सभामध्ये न प्रवेश्योभवेद्धि सः"।

१० छिन्नहस्तता छिन्नपादता च "अतः परं छिन्नहस्तोयतो भवति मानुषः। शृणुष्व तत् प्रवक्ष्येऽहं स्वकर्म्मवशतश्च सः। पिता माता गुरुर्वृद्धः क्रोधाविष्टेन ताडितः। विनाऽपराधतो जन्तुं योवा हन्याद्विमोहितः। यमलोके वसेत् सोऽपि छिन्नहस्तो भवेदिह। करेण ताडनाच्छिन्नपाणिर्भवति पामरः। पादेन छिन्नपादस्तु मर्त्योवै जायते ध्रुवम्"।

११ छिन्नकर्णता। "मिथ्यापवाददुष्टेन येन तापः परो-भवेत्। मानुषस्य, ततोदुष्टाः श्रावयन्ति महीपतिम्। ते क्रूराश्छिन्नकर्णाश्च जायन्ते पृथिवीतले"।

१२ कराङ्घ्रिहीनता। "सैन्ययोरुभयोर्यत्र संग्रामे घातिदारुणे। स्वामिनं सङ्कटे त्यक्त्वा ये भग्नाः पापबुद्धयः। स मृतो बध्यते दूतैर्भीषणैर्विकटाननैः। पूतिगन्धवृतैः पाशै-र्नीयते यमसादनम्। तर्ज्यमानः शरैः खड्गैः कूटमुद्गर-पाणिभिः। यमाज्ञाकारिभिस्तैस्तु पात्यते नरकं शृणु। असिपत्रवनं घोरं नरकं शतयोजनम्। योज-नायुतगम्भीरं ज्वलत्खड्गसमाकुलम्। पात्यन्ते तत्र तैः खड्गैः शितधारसमाहितैः। ये भग्नाः स्वामिनं त्यक्त्वा मित्रं प्राप्य च मानुषाः। क्रन्दमानाश्च तिष्ठन्ति यावदाभूतसंप्लवम्। कर्म्मावसाने जायन्ते मानुषत्वमतः परम्। कराङ्घ्रिभ्यां विहीनस्तु दुष्टजीवः प्रवर्त्तते। नास्त्यस्य कर्म्म संप्रोक्तं येन मुक्तो भवे-न्नरः। जन्मजन्मनि जायन्ते छिन्नाङ्घ्रिकरवेदनाः।

१२ प्रसङ्गात् युद्धकर्म्मविपाकः "अतःपरन्तु ये शूरास्तेषां माहात्म्यमुत्तमम्। स्तोकमात्रमतस्तात! शृणुष्व गदतोमम। विद्रुतेषु च सैन्येषु सङ्कटेषु समन्ततः। नृपं प्रति यदा गच्छेत् सा यात्रा क्रतुभिः समा। ललाटदेशे रुधिरं स्रवच्च यस्यापि वक्त्रे पततीह किञ्चित्। तत् सोमपानेन हि तस्य तुल्यं संग्रामयज्ञे मघवाऽप्युवाच। शूरत्वे-यस्य गात्राणि शरखड्गादितोमरैः। भिन्दन्ति न यमः शक्तोग्रहीतुं पुण्यभाजनम्। अश्वोपरि च यः शूरः प्राणांस्त्यजति घातितः। तिस्रः कोट्योऽर्द्धकोटी च द्विगुणं कालतस्तु सः। अप्सरोभिः सेव्यमानोदिव्य-लोकमवस्थितः। तमेव पुरुषं प्राप्य हृष्टा सर्व्वाः सुरा-ङ्गनाः। विमानस्थाः समस्ताश्च गायमानाः परस्परम्। परित्यज्य सुरान् यान्ति स्वामिनं प्राप्य हर्षिताः"।

१४ पक्षरोगः "अशस्त्रः पुरुषो येन सशस्त्रेण हतो रणे। तत्कर्म्मणः परिणामं विस्तरेण शृणुष्व वै। ब्रह्माश्व-हत्यादोषेण यमस्य पुरुषैर्भृशम्। आयुःशेषेऽथ संस्पृश्य यमदूतैर्भयानकैः। तस्मिन् मार्गे दुराधर्षे नीत्वाऽऽशा-भिर्यमस्य च। लक्षयाम्ये महाघोरे निरये च वसेद्धि सः। प्रविश्यश्चिरकालन्तु महादुःखेन पच्यते। ततो रासभयोनौ स जायते वै स्वयं नरः। ततो वृकस्ततो व्याघ्रस्ततः शस्त्रेण हन्यते। सारमेयत्वमासाद्य मत्स्य-योनौ प्रजायते। तस्माद्वै मानुषीं प्राप्य पक्षरोगेण मुच्यते"।

१५ वैधव्यम् "विरूपं स्वामिनं दृष्ट्वा यौवनेनातिगर्व्विता। दिवा-निन्दति दुर्व्वाक्यैः शय्यां न भजते निशि। तेन दोषेण भो देवि! वैधव्यं त्वमुपाश्रिता। आसन्ना रमणी या च स्वामिनं भजते न हि। सा वैधव्यमवाप्नोति दरिद्रं याव-मन्यते। तस्य दोषस्य पाकोऽयं देवि! वैधव्यमागता"।

१६ बन्ध्यता "पयःपातुमना वत्सस्त्वया पूर्व्वं निवारितः। पुरुषो बन्ध्यतां याति वीर्य्यविक्रमदोषतः। अदत्त्वेष्टं व्रतं कृत्वा बन्ध्यत्वमनयोर्भवेत्। अदत्त्वैतं मिष्टफलं यो भुङ्क्ते प्राप्य-लोभतः। सोऽपि बन्ध्यत्वमाप्नोति कथयामि ततः शृणु। दृष्ट्वा तु मैथुनीभावं विघ्नं तु कुरुते च यः। सोऽपि बन्ध्य-त्वमाप्नोति सर्व्वजन्मनिजन्मनि।

१७ गर्भस्रावः "त्रेतायुगस्य मध्ये तु सञ्जयोनाम भूपतिः। तस्य भार्य्याद्वयं जातं सुमित्रा नन्दिनी तथा। नन्दिनी सुभगा तस्य सुमित्रा या यशस्विनी। प्रसूता सा स्वपुत्रेण तेन पत्या सुमानिता। सापत्न्यपरुषाविष्टा नन्दिनी नीतिवर्जिता। शून्यालये च सहसा छद्मनाऽऽनीय तं सुतम्। शतधा खण्डकं कृत्वा तैलपाके विचिक्षिपे। सानेन विधिना राजन्! दुष्टमत्या निजेच्छया। चकार दारुणं कर्म्म तत्फलं शृणु भूपते!। सा कालवशमासाद्य बालघाताभि-दोषतः। गृहीत्वा निष्ठुरैर्बद्ध्वा पाशेन यमकिङ्करैः। नीत्वा निरयमध्ये तु सा प्रक्षिप्ता दुराशयाः। कर्म्मान्ते कोकिला नाम वैश्यस्य च सुताऽभवत्। भूयोपि विश्वावसुना परिणीता गृहाश्रमे। सर्व्वद्रव्यसमायुक्ते दासदासी-समाकुले। सा पुनः पञ्चमे मासि तृतीये वा चतुर्थके गर्भस्रावोऽभवत् तस्यास्तेन दुःखेन दुःखिता"।

१८ मृतभार्य्यता "अतिक्रम्य त्वया ज्येष्ठं भ्रातरं चात्मनः कृतः। पुरा परिणयस्तेन मृतभार्य्यत्वमागतः। सप्तस्वां यः स्पृशेत्तैलं ज्येष्ठा भार्य्यास्य नश्यति"।

१९ बहुपुत्रता } अपुत्रता च } "गवीसुखाद्बहिष्कृत्वा यस्तु द्रव्यं हरेत् पुनः शृणु तस्य यथा पापं कथयामि त्वाग्रतः।

निर्ज्जने दुर्व्वहे घोरे शिकताढ्ये मरुस्थले । क्रमिर्भूत्वा वसे-
त्तत्र क्षुत्पिपासासमाकुलः । मन्वन्तरत्रयं तत्र ततोनीहा-
रसंप्लवे । शीर्य्यमाणस्तु निश्चेष्टः शीतवातार्द्दितो भृशम् ।
कल्पमानन्तु दुःखेन मानुषोजायते ततः । बहुपुत्रो-
भवेत् सोऽपि पुत्रं न लभते हि वा ।

२०दौर्भाग्यम् “तृतीयासु च सर्व्वासु तैलस्पर्शस्त्वया कृतः ।
दुर्भगत्वञ्च ते जातं न तापं कुरु सुन्दरि !” ।

२१सापत्न्यम् । “शृणु देवि ! प्रवक्ष्यामि यत्तु सापत्न्यसम्भ-
वम् । दुःखं सुपरमं स्त्रीणां स्वकर्म्मवशतः खलु ।
मिथ्यावाक्यप्रवादेन विवादं कुरुते तु या । अन्योन्य-
स्नेहवैषम्यं कारयित्वा व्रजेदधः । कर्म्मानुयायिनी-
भूत्वा जीवेद्वर्षचतुष्टयम् । ततः पुनरसौ दीना दैवाद्भवति
मानुषी । सापत्न्यं प्राप्य सन्तप्ता चित्तपीड़ासमन्विता ।
भवतीति न सन्देहस्तस्य दानमतः शृणु” ।

२२जात्यन्तरम् “शृणु देव ! प्रवक्ष्यामि येन जात्यन्तरं गतः ।
मनुष्यो दुःखमाप्नोति भवेद्गर्हितो जनः। पुरा राजकुले-
जातो विश्वसेनेति नामतः । एकदा ब्राह्मणी रण्डा
यौवनस्था तपस्विनी । पुष्पार्थिनी पुष्पवनं गता दृष्टाथ
तेन सा । कामवाणार्द्दितेनाथ बलात्कारेण धर्षिता ।
हृद्रोगेणाभिसंतप्ता ततः स्वभवनं गता । अत्रान्तरे गृहं तस्या
भिक्षुरेकः समागतः । धर्षिता सापि तन्वङ्गी भिक्षवेऽन्नं
ददौ मुदा । इदं कृतं तया पापं शृणु तस्य फलं तथा ।
तत्कर्म्मवशमासाद्य यमस्य विषयङ्गता । पुनर्जन्म
समासाद्याऽभवन्म्लेच्छकुलोद्भवा । म्लेच्छयोनिं परित्यज्य
ततः कैवर्त्तयोनिजा । एवं बहुविधां योनिं समासाद्य
द्विजाङ्गना । अमेध्यान्नञ्च यतये दत्त्वा प्राप गतिं नृप ! ।
मनुष्योदुःखमाप्नोति स भवेद्गर्हितोजनः”

२३मूकत्वम् “पुरा देवापतो राजन् ! गायमानो द्विजः कश्चित् ।
नृत्यंश्च प्रणुवन् वाक्यैर्हास्ययुक्तैश्च निन्दितः। तस्य विघ्नस्य
पाकोऽयं न वाक् प्रसरते मुखात् । नृत्यमानन्तु देवाग्रे
गायमानं प्रहस्य च । नोपहासं प्रकुर्व्वीत महादोषो-
भवेद्यतः” ।

२४गद्गदवचनता “अतःपरं महाभाग ! गद्गदत्वेन दूषिताः ।
भवन्ति मानवा मर्त्ये तच्छृणुष्व वदामि ते । जिगीषाकृष्ट-
हृदयोर्विवादं प्रकरोति यः । गुरोर्निन्दाञ्च मूर्खत्वादस्य
पापमतः शृणु । यमलोके तु तस्यैव कुट्यते निशितैः
शरैः । जिह्वापि किङ्करैः क्रुद्धैरजस्रं तस्य दोषतः ।
अशेषकालपर्य्यन्तं दुःखं प्राप्य महत्तरम् । मानुषत्व-
मनुप्राप्य गद्गदो जायते नरः। ततो गद्गदया वाण्या
मर्त्यः सीदति सर्व्वदा” ।

२५मुखरोगः । “पितृदेवगुरोर्निन्दां ये वै मिथ्या वदन्ति च ।
अभक्ष्यभक्ष्यका ये च ते वै मुखगदार्द्दिताः । भवन्ति
नरकस्यान्ते मानुषास्तस्य निष्कृतिम् शृणु वक्ष्यामि
भूपाल !” ।

२६कर्णरोगः । “असम्बद्धन्तु यच्छृणोति पापमन्तर्गतन्तु यत् ।
समाकर्ण्यापि मनुजः कर्णरोगी भवेत् सदा । कर्णमूलं
भवेदेवं पूयशोणितसम्भवम् । कर्णरोगमिति ख्यात-
मवाप्य परितप्यते” ।

२७दुर्गन्धगात्रता । “चोरयित्वा तु गन्धाढ्यं द्रव्यं लोभपरा-
यणः । पच्यते नरके घोरे मूत्रविष्ठासमाकुले । अप्र-
तिष्ठेऽतिदुर्गन्धे दिव्यवर्षायुतत्रयम् । मर्त्ये तु शशको
भूत्वा जीवेद्वर्षचतुष्टयम् । ततोमृगस्तु सौगन्धो भूत्वा
शस्त्रेण हन्यते । दुर्गन्धेन समायुक्तो मानुषत्वमवाप्य सः ।
स्वकर्म्मवशतो राजन् ! दुर्गन्धं गात्रमश्नुते” ।

२८दारिद्र्यं विरूपता च । “पुरा मङ्गलन्दपतेरमात्येना-
मता शृणु । दानविघ्नः कृतस्तेन पाकोऽयं नान्यथाऽभवत् ।
मा ददस्वेति यो ब्रूयाद्देवाग्निब्राह्मणेषु च । स नरस्तस्य
पाकेन दरिद्रत्वेन मृह्यते । दरिद्रः कुरुते पापं पापाद्-
याति यमालयम् । पुनरावृत्य पापेन दारिद्र्येणाभिमृह्यते ।
न क्षयोऽस्ति च पापस्य तस्मात् पापं त्यजेत् सुधीः ।
अदाता च भवेत् सोऽपि विरूपश्चापि दुर्विधः । तस्मात्
कर्म्म परिज्ञाय दानं दद्यात् स्वशक्तितः” ।

२९सस्वेदपाणिपादता “चोरयित्वा तु लवणं मृतः क्षाराब्धि-
संज्ञके । नरके पच्यते पश्चान्मानुषत्वमवाप्य सः । तस्य
कर्म्मभवं चिह्नं जायते हस्तपादयोः । सस्वेदं सर्व्वदा
तस्य निष्कृतिं त्वमतः शृणु ।

३०दाहज्वरः “पुरा येन गृहं पापः क्षेत्रं दग्धन्तु वह्निना ।
स मृतो रौरवं प्राप्य पीड्यमानः स्वकर्म्मणा । खदिरा-
ङ्गारवह्नीप्तज्वालामालावगुण्ठिते । पतितस्तिष्ठते तत्र
वर्षायुतशतत्रयम् । कर्म्मान्ते मानुषीं योनिमवाप्य परि-
दह्यते । ज्वरदाहेन घोरेण येन शाम्यति तच्छृणु” ।

३१अग्निमान्द्यम् “कश्मलं नाम नरकं पूयशोणितसंज्ञुतम् ।
विस्तारलक्षदशकं महामोहसमाकुलम् । तिष्ठन्ति पापिन-
स्तत्र द्विजपाकस्य विप्लवात् । ततो मानुषतां प्राप्य भुक्त्वा
पापं सुदुष्करम् । अग्निमान्द्यं भवेत्तस्य निष्कृतिं
कथयामि ते ।

२२अजीर्णरोगः"त्वया कृतं पुरा कर्म यद्युक्तञ्च तच्छृणु। कृत्वा पाकञ्च पाकाग्निं शमयित्वा जलेन च। भोजनञ्च कृतं तस्मादजीर्णत्वमुपागतः"।

२३अतीसार"अथातीसारी राजेन्द्र! जायते येन कर्म्मणा। देहिनां दोषदुर्वृत्तः प्रशाम्यति यतः शृणु। अत्यन्तगुप्तं पापिष्ठं निरुच्छासकनामकम्। सोपद्रवञ्च नरकं विषमोपद्रवाकुलम्। निर्वातसूक्ष्मया युक्तं दंशकादिपरिप्लुतम्। पच्यन्ते पापिनस्तत्र वर्षलक्षायुतत्रयम्। यज्ञाग्निदूषका ये च ये च दानविलोपकाः। परस्यकार्गं चौर्य्येण यातयन्तीह तेऽधमाः। नरकान्ते मत्स्ययोनौ भूत्वा वर्षत्रयं पुनः। मानुषत्वमनुप्राप्य अतीसारेण पद्यते"।

२४ ग्रहिणी "अत्यर्थं संग्रहं ये च कुर्वन्ति धनलुब्धकाः। न दास्यन्ति न चाश्नन्ति हव्यं कव्यञ्च किञ्चन। तथा गोभूमिहर्त्तारो निष्ठुरा ये च दम्भकाः। अदुष्टाऽपतितां भार्य्यां यौवने यः परित्यजेत्। स कृतः पच्यते राजन्! स्वकर्म्मवशतः शृणु। नरकञ्च पूरीषाख्यं प्रलयानलपीडितम्। कल्पकोटिशतं तत्र दह्यन्ते पापदेहिनः। नरकान्ते गजयोनिं म्रियते प्राप्य बन्धनात्। तस्मात्तु मानुषीं योनिं ततः प्राप्यावसीदति। ग्रहणीरोगवान् भूत्वा पशुद्रव्यधनादिकम्। प्राप्यते विविधैर्दुःखैस्तस्य वक्ष्यामि निष्कृतिम्"।

२५पाण्डुरोगः"शृणु राजन्! प्रवक्ष्यामि पाण्डुरोगोद्भवो यतः। परभार्य्यारतोयश्च नरश्चैवान्यजारतः। स कृतः किङ्करैर्याम्यैर्बद्धः शृङ्खलया दृढम्। निष्ठुरैस्ताड्यमानस्तु क्रन्दमानो मुहुर्मुहुः। शोचमानः स्वकं कर्म प्रचलंश्च पदेपदे। संयमन्यां प्रवेश्यैनं दक्षिणद्वारिभीषणे। शमनाय समानीय परभार्य्याभिमर्दकम्। ततोऽमुं यमदूतोऽपि दृढं बद्ध्वा निरन्तरम्। तं दृष्ट्वा चित्रगुप्तेन पापकर्म्मानुसारतः। प्रत्यक्षञ्चावदत् सर्व्वं दुश्चेष्टादिकमस्य वै। कथितोऽयं दुराचारः परस्त्रीरमणप्रियः। नयस्व नरकं भीमं ज्वलन्तीमायसीं स्त्रियम्। भ्रमयालिङ्गनञ्चास्य कारयन्ति यमाज्ञया। वर्षायुतसहस्रे द्वे परं तापञ्च विन्दति। पुनः स्वकर्म्मपाकेन ज्वलदग्निमये ह्रदे। विक्षिप्तो दह्यते तत्र वेष्ट्यमानः स्वकर्म्मणा। वर्षलक्षसहस्राणि नव सप्तायुतानि च। तस्माद्धूलिपथं गत्वा मानुषत्वमवाप्य च। पाण्डुरोगमनुप्राप्य शोकचेताः प्रपद्यते"।

२६कामला "भक्ष्यादीनान्तु चौरा ये मतिं तेषां ततः शृणु। आयुःशेषे तु ते याम्यैर्बद्धैर्नीता यमाज्ञया। घोरा पुरीति विख्याता पिङ्गला नाम दुस्तरा। पिशाचास्तत्र तिष्ठन्ति स्वकर्म्मवशपीड़िताः। यत्र संवर्द्धते नित्यं क्षुत्पिपासामहोद्भता। भक्ष्यचौरान् जनांस्तत्र प्रवेश्य यमकिङ्करैः। प्रयान्ति सदनं याम्यं चित्रगुप्तोऽस्ति यत्र वै। स तत्र भक्ष्यचौरस्य पिशाचकुलवेष्टितः। भक्ष्यसंख्याप्रमाणेन वसति तत्र कर्म्मतः। कर्म्मान्ते वायसीं योनिं प्राप्य दुःखञ्च विन्दति। काकोऽष्टादश वर्षाणि तस्मात् कङ्कः प्रजायते। सोऽपि द्वादशकं जीवेत्ततोभवति मानुषः। कामलारोगवान् भूत्वा तद्दोषजनितेन च"।

२७कासः"कासः पञ्चविधोराजन्! जायते येन कर्म्मणा। तदहं विस्तराद्वक्ष्ये भूप! कर्मवशाद्यतः। येन दग्धोजनो नित्यं मिथ्यावाक्यैः सुदारुणैः। पित्तप्रबलकं कासं प्राप्य कासेन सीदति। ब्राह्मणस्थानविध्वंसी वातकासार्द्दितोभवेत्। दह्यते श्लेष्मकासेन जलाशयस्य विघ्नतः। ब्रह्मविष्णुशिवं यस्तु भिन्नभावं प्रपश्यति। सन्निपातोत्थकासेन दह्यते त्वमतः शृणु। अयज्ञेन पशुं हत्वा भुङ्क्ते मांसन्तु योनरः। सर्व्वदोषोत्थकासेन दह्यते शृणु भूपते!। इति कासपरिज्ञानं कथितञ्च मया शृणु। पुनस्ते कथयिष्यामि यत्ते मनसि वर्त्तते। राजोवाच। श्रुतं कासपरिज्ञानं कर्मणा येन जायते। नरकं श्रोतुमिच्छामि त्वत्तोब्रह्मविदां वर!। भृगुरुवाच। स तु कर्म समासाद्य पच्यते यत्र तच्छृणु। चिन्तयन् स्वानि कर्म्माणि रोदमानोनिरन्तरम्। करम्भवालुकानामनरकं योजनायुतम्। कूपाकारं भयं दीप्तं वालुकाङ्गारकण्टकैः। दह्यते भिद्यते तत्र वर्षलक्षत्रयावधि। नरकाज्जायते दुर्गं जले कुम्भीरसंज्ञकः। कुम्भीराच्छूकरोभूत्वा जीवेद्वर्षचतुष्टयम्। तस्माद्दुष्टत्वमासाद्य महाभागवहोभवेत्। तदन्ते मानुषीं योनिं संप्राप्य परिदह्यते। असाध्यकासरोगेण तप्यमानोऽवसीदति"।

२८श्वासकासः। "श्वासकासो महारूपो भवेद्देहाभिघातकः। उद्भवेत् कर्म्मणा येन तन्मे निगदतः शृणु। महोर्द्ध्वच्छिन्नतमकक्षुद्रभेदाच्च पञ्चधा। श्वासः संजायते नृणां पृथक्कर्म्मवशानुगः। यस्तु यज्ञमनासाद्य पशुश्वासं निरुध्य च। हन्ति, खादति वा मोहात् महाश्वासेन? दह्यते। पौराणिककथामध्ये यस्तु वाचाऽन्यथा वदेत्। ऊर्द्ध्वश्वासं२समासाद्य दुनोत्यहरहर्ध्रुवम्। निर्विवृदान-

यदृच्छाच्छिन्नश्वासेन स्पृश्यते। मर्त्यः शास्त्रार्थनिर्षिक्तं वाक्यं यो दूषयत्यपि। पीड्यते तमकश्वासैः ४ क्षुद्रैः ५ पाकस्य विघ्नतः। परत्र कर्म्मणा देही नरकेषु विपच्यते। नरकान्ते व्यालयोनिं व्याघ्रीं शौकरवायसीम्। पृथक्कर्मवशाद्योनिं गत्वा स परितप्यते। मानुषत्वमनुप्राप्य पूर्व्वोक्तेनोपस्पृश्यते"।

३९ यक्ष्मरोगः। "यक्ष्मरोगस्य विज्ञानं दुर्वृत्तं सर्व्वरोगतः। सहायांस्तस्य वै राजन्! कथयामि तवाग्रतः। सेनापतिः क्षयगदस्य च पाण्डुरोगोदाहज्वरोऽप्यसरएव बलासमास्यम्। हृल्लासकः कामलकः सहायो यौ श्वासकासावपि मन्त्रिणौ च। स श्रुत्वैवंविधं घोरं यक्ष्मरोगं सुदारुणम्। प्रणम्याह मुनिश्रेष्ठं त्रिकालसर्व्वदर्शिनम्। राजोवाच। कस्य रोगस्य चोत्पत्तिर्जायते केन कर्म्मणा। केन दानेन विप्रेन्द्र! परत्रापि न वर्द्धते। तत्सर्व्वं विस्तराद्ब्रूहि श्रोतुमिच्छामि यत्नतः। भृगुरुवाच। पुरा येन हृतो विप्रोन्यासापहरणं कृतम्। वृत्तिच्छेदः कृतो येन मधुविघ्नकरश्च यः। सर्व्वस्वेन प्रजापीडा कृता येन स्वकर्म्मणा। स हतो दह्यते याम्यैर्दूतैरेव भयङ्करैः। निवेश्यान्धतमे मार्गे दक्षिणद्वारिभीषणे। ततो नीत्वा यमस्याग्रे कम्पमानञ्च पापिनम्। संयमन्यां यमस्याग्रे नीत्वा तं पापकारिणम्। हृष्टपुष्टाश्च ते दूताश्चित्रगुप्तान्तिकं ययुः। चित्रगुप्तश्च तं दृष्ट्वा क्रोधारुणितलोचनः। चित्रगुप्त उवाच। इमं पापं दुराचारं नरकं नय दुर्व्वहम्। योजनानां शतं लक्षं कुम्भीपाकं सुदारुणम्। ताम्रकुम्भमये दीप्ते वालुकाङ्गारसंवृते। एवंविधे तु दुर्वृत्तः क्षिप्तस्तत्र स्वकर्म्मतः। दह्यमानोऽतिदुःखेन यावदाभूतसंप्लवम्। कालान्ते स पुनः पापी क्रमियोनौ च जायताम्। तत्र जीवति वर्षाणि दशपञ्च च भूपते! दुष्कृतस्य क्षयं कृत्वा ततो भवति मानुषः। अल्पपक्षयरोगेण पीड्यमानस्तु दह्यते"।

४० रक्तपित्तम्। "शृणु राजन्! पुरा वृत्तं यस्येदं कदनं महत्। कर्णाटकारण्यसंस्थाने सुव्रतो नाम वै द्विजः। तस्य पुत्रो दुराचारः सर्व्वधर्म्मबहिष्कृतः। परद्रव्याभिलाषी च परभार्य्यारतिप्रियः। एकदा कामतस्तेन पितृव्यस्य वधूर्बलात्। धर्षिता तेन दोषेण यमस्य विषयङ्गतः। नरकान्ते कुले जातस्तस्य कर्म्मसमुद्भवम्। रक्तपित्तगदं भुङ्क्ते स्वकर्म्मार्जितदोषतः"।

४१ गुल्मरोगः "अतःपरं प्रवक्ष्येऽहं गुल्मरोगं सुदारुणम्। यस्मादुत्पद्यते पुंसो मृतो वा याति यत्र वै। कर्म्मतो याति तां योनिं येनोपशमनं भवेत्। काकोलनाम नरकं क्रमिपूयपरिप्लुतम्। क्षिप्यते तत्र दुष्टात्मा एकाकी मिष्टभोजनः। अन्त्यजागमनेनापि नरकं नाम दुर्गमम्। तस्मात् पिपीलिका भूत्वा जीवेद्वर्षचतुष्टयम्। दुष्कृतस्य क्षयं कृत्वा जायते तत्र मानवः। गुल्मरोगं समासाद्य वेदनैः परितप्यते। अगदैर्न शमं याति तदा ज्ञेयं तु कर्म्मजम्"।

४२ शूलरोगः "शृणुष्व कथयिष्येऽहं तव स्नेहान्महीपते!। मूढा निरपराधेन ये लोककदनप्रदाः। घ्नन्ति शूलेन चास्त्रेण वाक्यदोषोद्गमेन च। तानेव निष्ठुरा दूता यमस्योग्राकाराश्च ये। महाप्रेताख्यनिरये दीप्तशूलसमावृते। भेदयन्तीव तत्रैव दम्पत्योर्भेदकानपि। भुक्त्वा तु कदनं घोरं मन्वन्तरचतुष्टयम्। नरकान्ते ततो मर्त्त्यो जायते पक्षियोनिषु। पक्षी भूत्वा वियोगी स्यात् जीवेद्वर्षचतुष्टयम्। मानुषत्वमवाप्यैव शूलरोगातुरो भवेत्"।

४३ अर्शोरोगः। "शृणुष्व तव पुत्रेण पुरा जन्मान्तरे कृतम्। साध्वीमृतुमतीं स्नातां सन्निधिं नामतश्च सः। एतत्कर्म्म कृतं तेन स्पृहीतस्तापसा च सः। आत्महा भ्रूणहा यस्तु कृतो येन च गोवधः। ते चार्शसा च स्पृश्यन्ते भुक्त्वा कष्टं सुदुःसहम्। पञ्चत्रिंशत् समाः कोट्यो लक्षाणामूनविंशतिः। तामिस्राख्यं महाघोरं गाढान्धतमसावृतम्। सर्पपदा समाकीर्णं दुष्प्रेक्ष्यं जीववर्जितम्। स तिष्ठेद्विवशो दीनो येनेदं दुष्कृतं कृतम्। कर्म्मक्षयमनुप्राप्य पश्चाद्भवति मानुषः। शेषेऽर्शोगदवान् भूत्वा दुःखेन पीडितो भवेत्"।

४४ भगन्दररोगः। "गुदस्य द्व्यङ्गुले पार्श्वे पित्तरक्तोदकाकृतिः। प्रभवेद्विकटाकारो दुर्व्वहो मर्म्मभेदकः। स वै भगन्दरो ज्ञेयः कर्म्मजो नोपशाम्यति। आचार्य्यभार्य्यागमनं ये कुर्व्वन्ति नराधमाः। पक्षपातमधर्म्मेण बालवृद्धधनापहाः। ते पतन्ति महाघोरे नरके च सुदारुणे। यः केशमूलहृन्मर्त्त्योवाहनं भद्रपीठकम्। चोरयेद्यस्तु दुर्बुद्धिर्गृहीयात् स्त्रीधनं च यः। स मृतस्तु विण्मलाख्यं नरकं प्राप्य सीदति। स्थावरश्व्याघ्रगोमायुभक्ष्यमाणोऽतिदुःखितः। भुक्त्वायुतसहस्रञ्च नवसंख्यं क्षपेत् पुनः। सोऽप्यनेनैव रोगेण जन्मादावपि स्पृश्यते"।

४५ छर्द्दिः "शृणुष्व नृपशार्दूल! कथयामि तवाग्रतः। गवा

गृहीतं यत्किञ्चित् मुखादाकृष्य योहरेत् । सोऽन्यजन्म समासाद्य वातांशच्छर्द्दिमान् भवेत् । अतर्पयित्वा पितरं जलपानं करोति यः । मृतः पैशाचिकीं योनिं संप्राप्य क्षुत्पिपासया । पीड्यते तप्यते तावद् यावद्व्योमगतो रविः । मानुषत्वमनुप्राप्य पित्तांशच्छर्द्दिपीड़ितः । वातपित्तपरिज्ञानं सद्वैद्यस्योपदेशतः । ज्ञात्वा कर्म्मोद्भवं दानं देयं मुक्तिमभीप्सता” ।

४६हिक्का “हिक्का न शाम्यते यस्य सद्वैद्यस्योपदेशतः । तां विद्यात् कर्म्मजां हिक्कां शृणु भूप ! वदामि ते । उत्सादितं येन तपः प्रवृत्तं यतेश्च गोविप्रगृहासनस्थम् । स याति घोरं नरकं मनुष्यो हिक्काविपन्नः पुनरेति सत्यम्” ।

४७अरोचकम् “पित्रे मात्रे चातिथये नादौ यस्तु च भोजनम् । दत्त्वाश्नाति स पापिष्ठो यां गतिं याति तां शृणु । तस्याश्च कोष्ठदेशे तु क्रिमिर्भूत्वा विपच्यते । मृते विष्ठाक्रिमिर्भूत्वा पच्यते बहुवासरान् । ततो वायसयोनित्वं प्राप्य जीवेच्चिरं दिनम् । तत्र वायसयोनौ तु सर्व्वदुःखमवाप्य वै । मनुष्यत्वमवाप्नोति हीनयोनौ प्रजायते । अरोचकगदेनापि पीड़ितस्तत्र केवलम्” ।

४८स्वरभङ्गः “त्वया कृतं पुरा यच्च तन्मे निगदतः शृणु । सुस्वरं गायमानन्तु स्तुतिमन्तं द्विजोत्तमम् । त्वं निषेधितवान् पूर्व्वं तस्मात्ते गतिरीदृशी । असमाप्तपदं यस्तु गायमानन्तु सुस्वरम् । निवारयति सोऽप्येवं स्वरभङ्गेण गृह्यते” ।

४९अतितृष्णा । “तृषितं गोकुलं प्राप्तं जलपानावलम्बनम् । विघ्नमाचरितं तेन प्रपाध्वंसकृते न च । जलपात्रं तथा हृत्वा मृतो याति यमाज्ञया । अपरे निर्जले देशे दुर्व्वहे सिकतामये । कीटयोनिं समासाद्य तत्र तिष्ठति पापधीः । गोलोमसम्मितं कालं दुःखमाप्नोति निर्भरम् । मानुषत्वमनुप्राप्य तृष्णाव्याधियुतो भवेत्” ।

५०विस्फोटकम् । “सुधन्वा नामतस्तेन चण्डालस्य जलाशये । कृतं स्नानं जलं पीतं तत्कर्म्मवशतः शृणु । आयुःशेषे मृतो दूतैर्गृहीतश्च यमाज्ञया । बहूष्णधूमसंयुक्ते क्षिप्तः कूपे निराश्रये । भुक्त्वा तत्र महद्दुःखं तस्मान्त्वत्कुले नृप ! । जातोदाहयुतो भूत्वा विस्फोटकगदार्द्दितः । स्वकर्म्मार्जितदोषं यो भुङ्क्ते का तस्य वेदना” ।

५१भ्रममूर्च्छा “भ्रममूर्च्छारुजाविष्टो येन संजायते नरः । तच्छृणुष्व मयाख्यातं कथयामि समासतः । भ्रमस्तु जायते तस्य तत्र दुःखकरः परः । सभायां कुटिलोलोकं भ्रामयित्वाऽन्यथा वदेत् । मूर्च्छान्वितो भवेत् सोऽपि यत्र याति शृणुष्व तत् । तमायुषोऽन्ते दुर्द्धर्षाः किङ्करा यमदेशिताः । नीत्वा प्रयान्ति तत्रैव तामेव पिङ्गलां पुरीम् । स्वकर्म्मवशतस्तत्र पिशाचाः सन्ति दुःखिताः । संक्षिप्तस्तत्र दुष्टात्मा पिशाचा यत्र मूर्च्छिताः । भ्रमयुक्तो भवेत्तत्र पूर्णमन्वन्तरं नृप ! । उलूको जायते तस्माद्दिवा वसति कोटरे । उलूकत्वक्षयं प्राप्य वकयोनौ प्रजायते ? वको जीवति वर्षैकं ततो भवति मानुषः । पूर्व्वकर्म्मप्रभावेन भ्रममूर्च्छान्वितो भवेत्” ।

५२हृद्रोगः । “हृद्रोगो जायते येन कर्म्मणा त्वमतः शृणु । सावधानो महीपाल ! कथयामि तवाग्रतः । लोभात् द्वेषाद्भवेद्यस्तु परपीडाप्रदायकः । मर्म्मोद्घाटनकर्त्ताऽपि कदनं तेन विन्दति । मनुष्यस्तेन दोषेण दुर्व्वहम् नरकं व्रजेत् । नरकान्ते पुनर्मर्त्त्यो हृद्रोगैरतिदारुणैः । पीड्यमानो दुनोत्याशु कर्म्मदोषविशेषतः” ।

५३आमवातः । “पुरा येन महीपाल ! कृतो यज्ञस्त्वदक्षिणः । उत्सृज्य ब्राह्मणायैव न दत्तं येन वा पुनः । अधर्म्मार्जितवित्तानां संग्रहो येन वा कृतः । ग्रन्थिग्रन्थिषु तस्यैव भवेदामस्य संग्रहः । तस्मात् प्रवर्त्तते शोथो वेदना चातिदारुणा । आमवातस्तु स ज्ञेयः कर्म्मजस्तस्य निष्कृतिम्” ।

५४सर्व्वाङ्गवातव्याधिः “वातव्याध्युद्गमो येन कर्म्मणा देहिनां नृप ! । उत्पन्नो बहुधाभावैः सम्यग् वक्ष्ये ततः शृणु । सुरापयोषिद्गमणं येन वै वाञ्छता हठात् । कृतं स नरकस्यान्ते शुनीयोनौ प्रविश्य च । जङ्घास्थूलकटीस्थूलयुक्तः केवलखञ्जकः । परस्त्रीवसनं येन हृतं तस्य ततः शृणु । मृतः स पुरुषैर्याम्यैर्नीतश्चैतोयमाज्ञया । आयसीञ्च शिलां तप्तां बन्धद्वारपरिप्लुताम् । तद्गले बन्धयेद् यत्नाद्यावदिन्द्राश्चतुर्द्दश । तस्यान्ते शाकुनीं योनिं प्रयात्यब्दचतुष्टयम् । मानुषत्वमनुप्राप्य गृह्यते तेन संशृणु । सर्व्वथा पन्थयतस्य सर्व्वाङ्गं वातपीडितम् । सोष्णगात्रं यदा तस्य भवतीह स्वकर्म्मतः” ।

५५तुन्दरोगः “घटो हृतः पुरा येन ब्राह्मणस्य महीपते ! । दम्यते स च दुर्वृत्तः संयमन्यां यमाज्ञया । कुम्भीरो जायते तस्माच्चिरकालं जले वसेत् । तस्मान्ते मानुषीं योनिं संप्राप्य तुन्दवान् भवेत् । अशक्तः सर्व्वकार्य्येषु गदोपचयदोषतः । संकल्प्य विप्रे क्रतुदक्षिणादिकं यदा न दद्यात् तदुपाहितं फलम् । समयभेदोप-

चर्यस्य संग्रहं भवत्यतीवोग्रतरेण तौन्दिकः”।

५६अम्लपित्तम् “अथाम्लपित्तोपचयो भवेद्येन वदामि तत्। जिह्वास्वादसमाविष्टो मानवो यो निषेवति। निषिद्धमविकल्पेन स हतः प्राप्य वायसीम्। स्थित्वा सारमेयीञ्च योनिमासाद्य कर्मतः। पश्चात् सञ्जायते देही विदग्धान्नं प्रकुप्य च। हृत्कण्ठञ्चाम्लपित्तेन दह्यमानोऽतिदूषितः”।

५७शोथोदरम् “लोभान्मोहाद्भयाद्द्वेषात् कृत्वाऽधर्मं वदेत्तु यः। स भुङ्क्ते नरकं घोरं पश्चाच्छोथोदरी भवेत्”।

५८जलोदरम् “ब्रह्मविष्णुमहेशेषु भिन्नभावं करोति यः। स्त्रियते स तु दुष्टात्मा जलोदररुजा ततः”।

५९शोथः “पुत्रस्ते शोथवान् जातः स्वकर्मार्जितदोषतः। कर्त्ता भुङ्क्तेऽन्यथा कार्य कर्त्तव्या परिदेवना। विनापराधेन यतो बहवस्ताडिताः पुरा। कषायवेत्रवंशैश्च तेन शोथार्हितश्च सः। उत्पातकसमाविष्टो जातस्तव स्त्रहे शृणु। तेन शोथार्हितः पुत्रो वृथा चिन्तापरः प्रभो!”

६०मूत्रकृच्छ्रम् “मूत्रकृच्छ्रं भवेत् भूप! कर्म्मणा येन दारुणम्। देहिनो देहमाश्रित्यं तन्मे निगदतः शृणु। विधवागमनं येन कृतं वा मद्यभोजनम्। मूत्रकृच्छ्री भवेत् सोऽपि भुङ्क्ते च नरकं शृणु। अकृत्वा विगुणं कर्म जन्मकर्म च वर्त्तते”।

६१मूत्राघातः “मूत्राघातो भवेद्येन तन्मे निगदतः शृणु। दम्पत्योर्मैथुने यस्तु महाविघ्नं समाचरेत्। मूत्राघातो भवेत्तस्य दुर्व्वहं कदनप्रदम्”।

६२अश्मरी “अथाश्मरी भवेद्येन तन्मे निगदतः शृणु। ऋतुस्नातां स्त्रियं यस्तु सन्निधौ नोपगच्छति। अप्रीत्या क्रोधभावाद्वा स याति नरकं नरः। पूयशोणितसंमिश्रे नरके पच्यते भृशम्। मानुषत्वमनुप्राप्य शार्कराश्मरिरोगवान्। भूप! विन्दत्यनुदिनं कदनं मूत्ररोधतः। आर्त्तवस्य विपर्य्यासं यः करोति नराधमः। तस्मात् सर्वप्रयत्नेन नरो नार्य्यामृतावियात्”।

६३मेहः। “मेहाश्च विंशतिः ख्याताः पृथक्कर्मप्रभावजाः। तेषां नामान्यहं वक्ष्ये क्रमादुत्पद्यते यतः। मधुमेहः सान्द्रमेहः सुराशुक्रोदकस्तथा। इक्षुः सिकतशीधुश्च सितमेहस्तथैव च। फेनःक्षीरश्च नीलश्च हारिद्रः कालसंज्ञकः। वसा रक्तश्च माञ्जिष्ठोमज्जा क्षारस्तथा गजः। सद्वैद्यस्योपदेशेन ज्ञात्वा मेहान् पृथक् पृथक्। नामानुसारतः पूर्वं कर्म ज्ञात्वा विधिञ्चरेत्। पूर्वं मैथुनकृद्यस्तु शौकरीं योनिमाव्रजेत्। तस्यान्ते मानुषीं प्राप्य जलमेहार्द्दितो भवेत्। मातृगामी बलान्मोहान्मधुमेही भवेन्नरः। रजकीगमनाच्चैव क्षारमेही प्रजायते। सतीविपर्य्ययं कृत्वा सान्द्रमेहान्वितो भवेत्। रोगिणीगमनान्मर्त्यो भवेन्माञ्जिष्ठमेहवान्। मित्रस्त्री धर्षिता येन स भवेच्छुक्रमेहवान्। चतुष्पदाभिगमने भवेत् सिकतमेहवान्। स्वर्णहर्त्ता क्षीरमेही सितमेही सुरारतः। कालमेही भवेत् सोऽपि पुष्पवत्याश्च धर्षणात्। रजस्वलायां रतिकृद्रक्तमेहार्द्दितो भवेत्। मज्जमेहयुतः सोऽपि योऽन्त्यजागमनञ्चरेत्। इक्षुमेह्यतिदुष्टः स्यात् विधवागतिदोषतः। ब्राह्मणीगमनाद्देही हस्तिमेहेन मेहति। अव्रतागमनासक्तो हरिद्राभञ्च मेहति। मातरं येऽभिगच्छन्ति भगिनीञ्चात्मनः सुताम्। श्वश्रूञ्चैवाव्रताऽरक्तां भ्रातृभार्य्याञ्च मातुलीम्। गुरुस्त्रीं राजपत्नीञ्च मित्रस्त्रीं या कुटुम्बिनीम्। मृता वैवस्वतपुरीं यान्ति भूतैः प्रपीडिताः। तांश्चान्ते तत्र दुर्वृत्ता मत्तः शृणु वदामि ते। अङ्गारराशौ प्रक्षिप्य तान् दहन्ति यमाज्ञया। दूतास्तु महतीं घोरां ज्वलन्तीमायसीं शिलाम्। खादयन्ति च तान् पश्चात् नरके च क्षिपन्ति वै। नरकान्ते पुनस्तेऽपि मृताः स्युः शूकरा भृशम्। शूकराः पञ्चवर्षाणि दश वर्षाणि कुक्कुराः। पिपीलिकास्त्रयोमासा वृश्चिकाश्चाब्दमात्रकम्। भूत्वा प्रयान्ति गोयोनौ सरुजा विफलेन्द्रियाः। तत्राधर्मक्षयं कृत्वा ततो मानुषयोनिषु। प्रमेहगदवन्तः स्युः प्राप्नुवन्ति मनोव्यथाम्”।

६४पुंस्त्वविनाशः “धर्मपत्नीं परित्यज्य योऽन्यस्त्रीमैथुने रतः। स स्त्रीविरक्तो भवति पुंस्त्वं तस्य विनश्यति”।

६५मुष्कवृद्धिः “मत्स्यं कृत्वा लुब्धकेन विप्रो वेदबहिष्कृतः। सदैव गहनं याति मृगं हन्ति निषादवत्। पक्षिपोतान् बहून् सोऽपि नित्यं खादितवांस्तदा। आयुःशेषे स वै दूतैर्यान्यनीतो यमाज्ञया। निःक्षिप्तो नरके घोरे तस्यान्ते त्वत्कुले द्विज!। जातः सर्वगुणोत्पन्नः स्वकर्म्मवशतः शृणु। मुष्करोगेण सन्तप्तः क्षीणरेताः सुदुःखितः”

६६उन्मादः “ब्राह्मणं वैष्णवं तीर्थं पितरं मातरं द्विजम्। नार्चयेन्निन्दयेद्वापि पुरा स नरकं व्रजेत्। पुरीषाख्ये महाघोरे निरये श्लेष्मभोजने। अधःशिरा भवेत् पापी नानादुःखप्रपीड़ितः। कर्म्मान्ते स पुनर्योनिं मानुषीं प्राप्य कर्म्मभिः। उन्मादरोगवान् मर्त्यो जायते नृपनन्दन!। स्मृतिभ्रमकरं द्रव्यं यैर्दत्तं ब्राह्मणे गुरौ। दम्भाचारं

चरेद्यस्तु भवेदुन्मादरोगवान्”उन्मादभेदाः सुश्रुतोक्ता ज्ञेयाः
६७अपस्मारः “ये कोपवुद्धयः पूर्व्वं न जानन्त्युपकारिणम्। ब्राह्मणप्राणरोधञ्च यैः कृतोमानवाधमैः। गोसुखं रश्मिभिर्वद्धं ते सुनिरयगामिनः। नरकान्ते व्याघ्रयोनिं वैयाघ्रीमपि शौकरीम्। ततो मानुषयोनौ स ह्यपस्मार युतो भवेत्”।
६८अस्थिस्रुत्रादिः “अजाञ्च तिलधेनुञ्च लौहचर्म्मतिला- जिनम्। गजोभयमुखीधेनुशालूकञ्चापि संग्रहम्। चौद्रं तैलञ्च लवणं महादानस्य वा ग्रहम्। यः करोत्यन्यथा योनौ मैथुनं काममोहितः। नरेषु गवि यो रेतःसेकं वा कुरुते क्वचित्। ब्रह्मस्वं न्यपतिद्रव्यं योहरेद्दुष्टभावतः। यस्त्यजेच्छरणं प्राप्तं तथा भार्य्यां विवाहिताम्। दन्ति- दंष्ट्रनखिव्याघ्रसिंहगवादिभिर्हतः। स हतः स्वास्थ्यरहिते स्थाने च स विषीदति। अशेषकालं तस्यान्ते मानुषत्व- मवाप्य सः। अस्थिग्रहादिभी रोगैर्गृहीतस्तप्यते सदा”।
६९मूत्रकृमिः “अग्नये प्रक्षिपेदाज्यं मन्त्रहीनं विमोहितः। स मृतः पर्व्वताग्रेतैः पात्यतेऽधः पुनः पुनः। सर्व्वाङ्गव्याधि- दिग्धः स क्रन्दमानो यमाज्ञया। भुक्त्वा कष्टं चिरादुग्रं मानुषत्वमवाप्य सः। मूत्रकृम्यर्द्दितं गात्रं प्राप्य हृष्यति निर्भरम्”।
७०विद्रधिः “फलापहरणं येन कृतं चौर्य्येण वै पुरा। समृतो यमदूतैश्च शास्यमानो यमाज्ञया। संयमन्यां पीड़ितोऽपि दक्षिणद्वारि केवलम्। शोचयित्वा स्वयं कर्म्म क्रन्दमानः पदेपदे। प्रक्षिप्तो नरके घोरे स वै सीदति पापकृत्। ततोवानरयोनौ च जन्मासाद्य स दुष्टधीः। तच्छेषे मानुषत्वेऽपि स वै विद्रधिमान् भवेत्”।
७१अपची वातग्रन्थिश्च “त्वङ्मध्ये बहवो यस्य पर्कटीफल- सन्निभाः। भवन्ति ग्रन्थयस्तस्य नाम स्यादपचीगदम्। बहिर्ह्हत्फलाकारं वर्द्धते च दिनं प्रति। वातग्रन्थीति सा ज्ञेया जायते देहिदेहतः। इदं गदद्वयं भूप! जायते येन तच्छृणु। कथयामि तव स्नेहाद्धर्म्मज्ञोऽसि महीपते! द्रुमञ्च- बहुलच्छायं पर्व्वतञ्च नदीतटम्। वल्मीकाग्रं गवां गोष्ठं गोशालां देवतालयम्। समासाद्य चरेन् मूत्रं तथा निष्ठी- वनादिकम्। सकामं कुरुते यस्तु स प्राप्नोति ततः मृत्युः। याम्यपाशञ्च दुर्भेद्यं पापिष्ठानां भयप्रदम्। कृमिपूय- वसाविष्ठाशोणितेनापि पिच्छिलम्। पापिनस्तत्र गच्छन्ति दूतैर्बद्धाः सुनिष्ठुरैः। शोचन्तः स्वानि कर्म्माणि क्रन्दमानाः पदेपदे। यमाज्ञया च निरये घोरे पूयपरिप्लुते। क्षिप्ता- स्तिष्ठन्ति तत्रैव यैरेवं दुष्कृतं कृतम्। तस्यान्ते मानुषीं योनिं प्राप्य तद्व्याधिमान् भवेत्”।
७२शिरोरोगः “संप्राप्य तीर्थं ये मर्त्त्या नाचरन्तीह चोत्तमम्। ब्राह्मणञ्च गुरुं दृष्ट्वा न नमन्ति कुबुद्धयः। तत्कर्म्मपाश- बद्धास्ते गृहीत्वा यमकिङ्करैः। पुरीं शल्मवतीं नीत्वा पिशाचकुलसेविताम्। ताड्यन्ते विविधैर्यन्त्रैर्घोरैः पापि- भयावहैः। अनेककालं तत्रापि स्थित्वा भल्लूकयोनिषु। जायन्ते तत्र तिष्ठन्ति वर्षाणि दशसंख्यया। मेषयोनिं ततोयान्ति विंशवर्षं तत्र संस्थिताः। भुक्त्वा कर्म्मवशात् कष्टं मानुष्यं यान्ति ते पुनः। मानुषीं योनिमासाद्य शिरोरोगयुतास्तु ते।
७३नेत्रहीनता “पुरा सकामतो येन कौटवी च पराङ्गना। दृष्टा नेत्राभिघातो वा गोः कृतो ब्राह्मणस्य वा। स एव कर्म्मवशगः कुपितैर्यमकिङ्करैः। काकोले नरके क्षिप्तो बद्धस्तिष्ठति शृङ्खलैः। वज्रतुल्यनखैः काकैस्तस्य नेत्रस्य कृन्त- नम्। क्रियतेऽब्दशतं यावत् उत्पत्योत्पत्य नित्यशः। शोचते स्वानि कर्म्माणि क्रन्दमानोऽतिदुःखितः। उत्पन्न- नरकात् पश्चात् उलूकोजायते हि सः। सदा कोटरशायी च दिवान्धः काकशङ्कितः। तिष्ठत्यब्दाष्टकं यावन्मा- नुषत्वमवाप्य सः। नेत्रहीनोभवेद्दुःखी भवेत् कर्म्मवशी- कृतः। यस्मिन् वयसि यत् कर्म सुकृतं वापि दुष्कृतम्। तस्मिन् सहायोभवति तद्वयस्येव जन्मतः। जीवनं तद्वृथा मर्त्त्ये नेत्रहीनस्य देहिनः। विद्यमाने शरीरेऽपि नेत्रहीनो निरर्थकः। प्राणागारमिदं देहं लोष्ट्रवत् प्राण- वर्जितम्। तद्वन्नेत्रबहिर्देहो वृथा स्यान्मरणं वरम्”।
७४रात्र्यन्धता “पुरा परस्त्री खलु कामबुद्ध्या विलोकिता वस्त्र- विवर्जितापि। गोविप्रहिंसासु नितान्तदृष्टिर्व्वीकृता नेत्र- विहीनतायै। नक्तान्ध्यमन्दत्वमथान्धरोगः दिवान्धता चार्वुदजा मे। दैवादुपेता कुरु दूरमाशु तां मेऽद्य- देवेश! हरे! प्रसीद”।
७५नेत्ररोगः “मन्ददृष्टिर्भवेद् येन मनुष्यस्तमतः शृणु। उद- यास्तमवेलायां भानुं मध्यन्दिने नरः। ईक्षते कामतो योऽपि मन्ददृष्टिः स वै भवेत्। यश्चाशुचिशरीरः सन् वीक्षते दिवसेश्वरम्। नक्षत्रं ग्रहतारञ्च द्विजं वह्निञ्च गां दिशम्। सोऽन्यजन्म समासाद्य नेत्रव्याधियुतो भवेत्। अनेन पटलच्छन्नतिमिरार्त्तियुतोभवेत्। दम्पतिभ्यां प्रवृत्तं यो नरः पश्यति मैथुनम्। सोऽन्यजन्म समासाद्य नेत्रपूयगदार्त्तिमान्। दम्पत्योः सुरतासक्तचित्तयोः सुर-

तैलपम् । यः करोति स वै नेत्रपूयरोगयुतो भवेत् । मृत्वा कष्टमवाप्नोति पिचटादिक्षतोद्भवैः । विहायात्मपतिं या स्त्री पुत्रमाप्नोति जारतः । साऽन्यजन्मनि भूपाल ! विरूपाक्षी भवेद् ध्रुवम् । वस्तुदृष्ट्या प्रपश्येद्यः पुरुषो वाथ योषितम् । क्रोधाविष्टेन मनसा या वा श्रेष्ठं पतिं द्विजम् । सान्यजन्म समासाद्य विषमाक्षी भवेद्ध्रुवम्” ।

७६ गलगण्डः गण्डमाला च “पुरा येन कृतं मोहाद्गुरुस्त्रीकण्ठदर्शनम् । स मृतः प्रान्तरे देशे निर्जले च यमाज्ञया । पात्यते किङ्करैर्घोरैर्दिव्यवर्षायुतत्रयम् । पुनर्जन्म समासाद्य स्वकर्मवशतश्च सः । गलगण्डयुतो नित्यं गण्डमालाकुलोऽपि सन् । पापी सीदति दुश्चेष्टः चिरं कर्मक्षयावधि” ।

७७ नासारोगः “ब्राह्मणकर्मपरिभ्रष्टो मन्मथाविष्टचेतनः । सुगन्धिकुसुमादीनि यानि द्रव्याणि तानि च । त्वया सततमाघ्रातं प्राप्तं दत्तं न कस्यचित् । ब्राह्मणेभ्यो न देवेभ्यो दत्तं तेनेदमीदृशम् । नासिकादेशमासाद्य कर्म्म चाश्रित्य तिष्ठति । किञ्च वेश्याङ्गनासङ्गे यौवनं विफलीकृतम् । वेश्याश्च रमिता यैश्च तेनास्पृश्या द्विजातयः” ।

७८ क्षीरहीनस्तनता “याचमानं पयो या स्त्री न ददाति परार्भके । सा मृता सर्पिणी भूत्वा जीवेद्वर्षचतुष्टयम् । तस्मात् कच्छपिकायोनौ प्रविश्याब्दचतुष्टयम् । प्रत्यक्षं नरकं भुक्त्वा मानुषी तु भवेच्च सा । शृणु भूप ! प्रसूता स्त्री क्षीणक्षीरस्तनी भवेत् । क्षीरं न क्षरते यस्याः स्तनात् सन्तप्यते हि सा । चात्मजपालनेऽशक्ता भूत्वा कष्टञ्च विन्दति” ।

७९ स्तनविस्फोटरोगः “स्तनपाकोभवेद्येन कर्म्मणा त्वमतः शृणु । दृष्ट्वाऽन्यपुरुषं या स्त्री स्तनं दर्शयते स्वकम् । सकामाकामतो वा दुष्टयौवनगर्विता । दूतैर्यमाज्ञया सापि शास्यते च निरन्तरम् । भुक्त्वा स्वकर्म्मजं दुःखं पुनर्भूत्वा च मानुषी । स्तनविस्फोटरोगाढ्या विक्षिता सुखवर्जिता” ।

८० वेश्यात्वम् “मृते भर्त्तरि या नारी परस्याप्यभिलाषिणी । सा मृता किङ्करैर्याम्यैर्दण्डपाशासिताडिता । नीत्वा यमाज्ञया सा च विशुद्ध्यर्थं ततः शृणु । आयसं पुरुषं तप्तं स्फुरद्भृकुटीभीषणम् । आलिङ्गनमतिक्रूराः कारयन्ति नरं भृशम् । वर्षायुतसहस्रान्ते ततो मर्त्त्ये च शौकरीम् । सारमेयीञ्च मार्जारीं योनिमाविश्य कर्म्मतः । मृत्वा च मानुषी पश्चाद्दारस्त्रीत्वमवाप्य सा । अशेषपुरुषैः सा च रम्यमाणा यथेच्छया । मर्त्त्ये मोहवशात् सा च सुखं प्राप्य सुहर्षिता । न भवेद्या चान्यनारीयन्त्रपहृतजीविका । यस्याः सा च भवेद्वेश्या जन्मजन्मन्यन्यथा न हि” ।

८१ बाधिर्य्यम् “पुरा यस्तु महीपाल ! धर्म्मचिन्तापराङ्मुखः । निन्दकः पितृमातॄणां द्विजतीर्थमुखस्य च । मृते बाधिर्य्यरोगेण स एव परिस्पृश्यते” ।

८२ श्लेष्मरोगः “नित्यक्रियाबहिर्यस्तु भूत्वा भुङ्क्ते स दुर्म्मतिः । मृतः भूमिपथं प्राप्य शुष्ककाष्ठोपजीवकः । वायसत्वमनुप्राप्य गृध्रकुक्कुटसूकरः । भूत्वा च मानुषत्वे स श्लेष्मरोगी सदा भवेत्” ।

८३ हस्तशूलम् “द्विजः सन्ध्याविहीनो यः स शूद्रादधमः स्मृतः । स मृतः शास्यते याम्यैर्वैवस्वतपुरोगमैः । काक्षीं पारावतीं योनिं गत्वा तिष्ठति वत्सरम् । ततो मानुषतां प्राप्य हस्तशूलार्दितो भवेत्” ।

८४ योनिरोगः “रममाणं पतिं या स्त्री तोषयेन्न यथेच्छया । उष्ट्री सा च मृता वै स्यात् जीवेद्वर्षचतुर्द्दश । तस्माद्वै मानुषीं प्राप्य योनिं व्याध्यादियोगिनीम् । गत्वा सन्तप्यमाना सा योनिरोगेण निर्भरम् । किञ्च चौर्य्यप्रकारेण या हरत्यन्यभोजनम् । सा तद्रोगेण सततं स्पृश्यते नात्र संशयः” ।

८५ असृग्दरम् प्रदरम् “अथासृग्दरमत्युग्रं प्रदरं योनिदोषजम् । कर्म्मणा येन राजेन्द्र ! तन्मे निगदतः शृणु । कृत्वा रन्धनमादौ या योषिद्भुङ्क्ते बुभुक्षया । बुभुक्षितं पतिं त्यक्त्वा वृथा पशुबधेन च । प्रयाति नरकं घोरं यत् प्रोक्तं मद्यभक्षणे । प्रत्यक्षं नरकं भुक्त्वा ततो भवति वायसी । वायसी दश वर्षाणि शुकी भवति सा पुनः । मानुषी तु भवेत् पश्चादसृग्दरगदार्दिता । श्वेतप्रदरयुक्ता सा भवेद्या भक्तचोरिणी” ।

८६ वृषलीसुतोत्पादनम् परकान्तासुतोत्पादनञ्च । “महामना महादाता तीर्थकृत् पुण्यकृच्छुचिः । नगरीं भ्रमता तेन काचिदेका मनोहरा । रण्डा व्यलोकि सौन्दर्य्यलीलारसविलासभूः । तां दृष्ट्वा मोहितो राजा सम्यक्संजातकौतुकः । तामादाय बलाच्छीघ्रं ययौ निजगृहं प्रति । विहाय महिषीरन्या नारीः प्रियवशंवदाः । अत्यानुरागवान् राजा क्षणं ताञ्च न मुञ्चति । तस्या गर्भे सुतं राजा जनयामास सुन्दरम् । दैवादपि महीपाल आयुःशेषे यमाज्ञया । नीतो यमान्तिकं दूतैर्घोरैश्च भयदारुणैः । धर्म्मराजपुरे तस्य चित्रगुप्तेन धीमता । एतत् श्रुत्वा यमः क्रुद्धोऽब्रवीद्दूतान् सुनिष्ठुरान् । एवं क्रूरं दुराचारं परयोषित्प्रियं सदा । रौरवं नरकं नीत्वा ताडयध्वं निरन्तरम् । तस्याः पुरीषमूत्राभ्यासुतृप्तस्य सुतस्य

च। एतस्य पितृलोकानामाहारार्थं प्रदास्यथ। रौरवेऽव्दशतं दुष्टं स्थापयित्वा च योनिगम्। ततः शूकरयोनौ च पातोऽस्य भविता पुनः। यावत्तिष्ठति भूलोके वृषलीगर्भजः सुतः। तावत्कालं पितॄणाञ्च नरकेऽस्य स्थितिर्भवेत्”।

आदर्शग्रन्थे यथा पाठोऽधिगतस्तथैव लिखितः। पुस्तकान्तरसंवादेन न्यूनतात्र याऽस्ति सा परिहरणीया अत्रोक्तरोगादीनामकाराद्यक्षरविन्यासातिक्रमेणोपन्यासस्तु तत्तत्क्रमानुरोधेन। तेन तत्तत्क्रमानुसारेण निर्द्दिष्टरोगादीनामुपशमार्थदानादिकपरिज्ञानं सुकरं भवति। तत्तद्दानादिकं विस्तरभयान्नोक्तम् तत एवावगन्तव्यम्।

शातातपबृहस्पतिभारतसंवादयोरेकत्र विषये विरोधप्रसङ्गे रोगाल्पत्वमहत्त्वाभ्यां व्यवस्थोन्नेया। एवं दानादिभेदोऽपि। मार्कण्डेयपुराणाद्युक्तकर्मविपाकभेदो विस्तरभयान्नोट्टङ्कितः, तत्तद्ग्रन्थेभ्योऽवधेयः।

**कर्म्मव्यतिहार** पु० वि—अति हृ—घञ् कर्मणा व्यतिहारः ३त०। परस्परैकजातीयक्रियाकरणे, क्रियाविनिमये। यथा यः कश्चित् येन कर्मणा इतरं कर्म्मत्वादिना संबध्नाति, इतरोऽपि तज्जातीयेनैव कर्मणा तं कर्मत्वादिना संबध्नाति, तयोः कर्मविनिमयो भवति। यथा अन्योन्यं ताडयत इत्यादौ। अत्र अन्योन्ययोरेकजातीयताडनक्रियायां कर्मत्वेन सम्बन्धात्तथात्वम्। 'कर्त्तरि कर्मव्यतिहारे' 'कर्मव्यतिहारे णच् स्त्रियाम्' "न कर्मव्यतिहारे"पा०। क्रियाव्यतिहारोऽप्यत्र

**कर्म्मशाला** स्त्री कर्म्मणः शिल्पादेः शाला। शिल्पादेः शालायाम्। "गत्वा तु तां भार्गवकर्मशालाम्"। "जगाम भार्गवकर्म्मशालाम्" भा०आ०१८,१०।

**कर्म्मशील** त्रि० कर्म शीलयति शील—अण्। कर्मकरणार्थशीलयुक्ते अमरः। [आफलोदयं २कर्म्मकारिणि च।

**कर्म्मशूर** पु० कर्म्मणि शूरः। प्रयत्नेन १प्रारब्धकर्म्मसमापके,

**कर्म्मश्रेष्ठ** पु०। १पुलहपुत्रभेदे "पुलहस्य गतिर्भार्य्या त्रीनसूत सती सुतान्। कर्म्मश्रेष्ठं वरीयांसं सहिष्णुञ्च महामते!" भाग० ४,१,२१। कर्म्मणा श्रेष्ठः। २कर्मकार्य्यकरणेन वरिष्ठे त्रि०।

**कर्म्मसंन्यास** पु० कर्मणः स्वरूपतः फलतो वा संन्यासस्त्यागः। फलाभिसन्धिराहित्येन १तत्फलत्यागे २स्वरूपतः कर्मत्यागे च। वा परसवर्णे कर्म्मसंन्न्यासोऽप्यत्र। आश्रमशब्दे ४८० पृ० संन्यासविवरणम्।

**कर्म्मसंन्यासिक** पु० कर्मणां संन्यासोऽस्त्यस्य ठन्। प्रव्रज्यान्विते भिक्षुके हलायुधः। वा परसवर्णे कर्मसन्न्यासिकोऽप्यत्र।

**कर्म्मसंन्यासिन्** पु० कर्मसंन्यासोऽस्त्यस्य इनि। विधानेन १कर्म्मत्यागिनि भिक्षुके २कर्मफलत्यागिनि च। "द्विविधः कर्मणस्त्यागः फलसाधनभेदतः। फलाय ज्ञानिनस्त्यागो जिज्ञासोर्ज्ञानसिद्धये" इत्युक्तदिशा ज्ञानार्थं कर्मफलत्यागः, मोक्षार्थं स्वरूपतः कर्मत्यागश्च कर्मसंन्यासः। "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते" इति गीतोक्तेः "अविशुद्धधियः कर्मस्वधिकारो विशुद्धधीः। सत्यां विविदिषोत्पत्तौ तदर्थं कर्म संत्यजेत्" इत्युक्तेश्च विविदिषायामेव कर्मणोहेतुत्वावगमात् तदुत्पत्तौ तत्त्याज्यत्वावगमाच्च तथात्वम्। वा परसवर्णे कर्मसंन्न्यासीत्यप्यत्र।

**कर्म्मसङ्ग** पु० कर्मणि सङ्ग आसक्तिः सन्ज—घञ् ७त०। इदमहं करोमि अनेनैतत्फलं भोक्ष्ये इत्याकारकेऽभिनिवेशे।

**कर्म्मसचिव** पु० कर्मसु सचिवः ७त०। राज्ञां मन्त्रव्यतिरिक्तकर्मसु सहाये अमरः।

**कर्म्मसाक्षिन्** पु० साक्षात् पश्यति नि० साक्षी ६त०। "सूर्य्यः सोमो यमः कालो महाभूतानि पञ्च च। एते शुभाशुभस्येह कर्मणो नव साक्षिणः" इत्युक्तेषु सूर्य्यादिषु नवसु। ६त०। क्रियासाक्षात्कर्त्तृमात्रे त्रि०। "योऽयस्तत्कर्मसाक्षी स्वभुजबलयुतोयस्य यस्य प्रतीपः" वेणी०

**कर्म्मसिद्धि** स्त्री ६त०। इष्टानिष्टफलप्राप्तौ "स्वकर्मसिद्धिं पुनराशंससे" इति कुमा०।

**कर्म्मस्थान** न० कर्मणः व्यापारचिन्तनस्य स्थानम्। ज्योतिषोक्ते लग्नावधिदशमस्थाने। आजीवशब्दे विवृतिः। "लग्नेन्दुभ्यां वीर्य्यभाजः स्वभं स्यात् कर्मस्थानं खेशदृष्टं युतं सत्। सत्खेटैर्वा युक्तदृष्टं सुदृत्त्यै पापैर्दृष्टं वा युतं दुष्टवृत्त्यै। कर्मास्थोऽशुः स्वमृहे चेत् कुजज्ञकविभिर्युतः। दृष्टो वा वृद्धिहानिभ्यां युतोवित्तकरोमतः। कर्मभे शुभखगामिलिताः सूराज्यदा न रिपुनीचगृहे चेत्। धर्मधान्य सुखवृद्धिकराश्च स्वायुषः स्थिरधनस्य च दद्युः। नीचारिसंस्था अपि पापदृष्टाः पापाश्च कर्मण्यशुभप्रदाःस्युः। क्रूरा अपि स्वभवने शुभाः स्युर्विशेषतः सद्ग्रहवीक्षिताश्चेत्। शुभदृष्टाः शुभायोगाः कर्मभे सद्ग्रहोद्भवाः। अशुभाः प्रायशः प्रोक्ताः खलखेटनिरीक्षणात्। चिकित्सकाः शास्त्रविवादकाश्च पुरोहिता वञ्चनतत्परा वा। नरा अथो स्युर्गणकाः खलैस्तु

कर्मस्थितैः षट्‌पञ्चवीचितैश्च । तृतीयषष्ठगाः पापा लग्नेन्दुभ्यां शुभा मताः। निधनान्त्यगता नेष्टा विशेषाल्लग्नसंस्थिताः । एकोनविंशे वियति रविः खे, चन्द्रोधन२, चन्द्रसुतः४, क्रमेण । त्रिवेदनन्दैर्कमितैः१२र्के इज्योऽष्ट भृगुः१ सुखं खे कुरुते१२ऽत्र भीतिम्” जातके तच्चिन्ताप्रकारः ।

**कर्माङ्ग** न० ६त० । विहितस्य यागादिकर्मणोऽङ्गे यथा दर्शादेः प्रयाजादि । देशकालादयोऽपि कर्माङ्गानि । यथाह गर्गः—“तिथिनक्षत्रवारादि साधनं पुण्यपापयोः। प्रधान गुणभावेन स्वातन्त्र्येण न ते क्षमाः”। “प्रधानस्य विधेयस्य कर्मणो गुणभावेनाङ्गत्वेन, तदुक्तं “कर्मास्वविहितं नैव बुद्धौ विपरिवर्त्तते । यस्त्वात्तु तदुपस्थानमुपादेये गुणोभवेत्” भट्टका०“प्रमाणान्तरासंविहितं कर्म बुद्धौ प्रथमं न विषयीभवति प्राथमिकशब्दादेव तस्य कर्मण उपस्थितिरिति उपादेये स्वविधेये कर्माणि पूजादौ चन्द्रादिक्रियात्वेन तदवच्छिन्नकालत्वेन वा शुचितत्कालजीविनः कर्माधिकारात् प्रमाणान्तरलभ्यत्वेनाविधेयत्वात्तिथ्यादिर्गुणः” ति० त० रघु० । “फलवत्सन्निधावफलं तदङ्गमिति” न्यायेन फलवत्प्रकरणे पठितानामफलानां सर्वेषां तदङ्गत्वमवधेयम् ।

**कर्माजीव** पु० कर्मणा आजीवः जीवनम् । १शिल्पादिकर्मद्वारा जीवनसाधने । स च नृणां जन्मलग्नावधिदशमभावे मेषादीनां द्रेक्काणनवांशद्वादशत्रिंशांशैः शिल्पादिकर्मविशेष आजीवे जातके उक्तः, तच्च आजीवशब्दे ६४१,४२पृ० दर्शितम् । कर्म जीवति अण् । २शिल्पादिकर्मजीविकावति त्रि० ।

**कर्मात्मन्** पु० कर्मणा आत्मा आत्मभावो यस्य । संसारिणि स्वादृष्टोपनिबद्धशरीरयुक्ते १जीवे । “तस्मिन् स्वपति तु स्वस्थे कर्मात्मानः शरीरिणः” मनुः । कर्मणि आत्मा-मनो यस्य । २क्रियासक्तचित्ते च ।

**कर्माध्यक्ष** पु० ७त० । क्रियासाक्षिणि कृताकृतावेक्षके ।

**कर्मान्त** पु०कर्मणः कृषिकर्मणोऽन्तो यत्र । सम्पन्नकृषिकर्मणि १कृष्टभूमौ हेमच० । “अहन्यहन्यवेक्षेत कर्मान्तान् वाहनानि च” मनुः । कर्मणः तत्फलस्यान्तो यत्र । २इक्षुधान्यादिसंग्रहस्थाने च ।“शुचीनाकरकर्मान्ते भोक्तृनन्तर्निवेशने” मनुः ।„“कच्चिन्न सर्वे कर्मान्ताः परोक्षास्ते विशङ्किताः”भा०सभा० १६५ श्लो०। ६त०। ३कर्मसमाप्तौ च । “कर्मान्ते दक्षिणां दद्यात्” स्मृतिः” ।

**कर्मार** पु० कर्म ऋच्छति ऋ—अण् ।१कर्मकारके (कामार) जातिभेदे, “नमस्तक्षभ्योरथकारेभ्यश्च वो नमोनमः, नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमोनमः” यजु०१६,२७ । “तपसे कौलालं मायायै कर्मारम्” यजु०३०,७, पुरुषमेधे “मायायै कर्मारं लौहकारम्” वेददी० । “कर्मारस्य निषादस्य रङ्गावतारकस्य च” मनुः । “ये धीवानोरथकाराः कर्मारा ये मनीषिणः” अथ०६,५, २वंशभेदे (वेड़ँवांश), ३कर्मरङ्गवृक्षे च राजनि० । ४कर्म प्राप्नरि त्रि०स्वार्थे कन् । कर्मारक कर्मरङ्गे वृक्षे (कामराङ्गा) पु०राजनि० ।

**कर्मार्ह** पु० कर्मार्हति अर्ह-अण् । १पुरुषे राजनि० । तस्य कर्मकरणसमर्थत्वात्तथात्वम् । २कर्मकरणसमर्थे त्रि० ।

**कर्माशय** पु० आशेरते पुरुषा यस्मिन् आ+शी—आधारे अच् कर्मणामाशयः । कर्मजन्ये धर्माधर्मरूपे गुणभेदे “क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः” पात०सू० । कर्मविपाकशब्दे च अस्य भाष्यविवरणे दर्शिते ।

**कर्मिन्** त्रि० कर्मास्त्यस्य व्रीह्या०इनि । व्यापारयुक्ते स्त्रियां ङीप् “कर्मिभ्यश्चाधिको योगी—तस्माद्योगी भवार्जुन !” गीता ।२फलाभिसन्धानेन कर्मकर्त्तरि च । “यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते” मुण्ड० उ०।“इष्टापूर्त्तादिकर्मिणां धूमादिमार्गेण चन्द्रमण्डलादिप्राप्तिः” शा० भा० “ऋत्विक्कर्मककर्मिणाम्” याज्ञ० ।

**कर्मिष्ठ** त्रि० अतिशयेन कर्मी इष्ठन् इनेर्लुक् । क्रियादक्षे जने

**कर्मेन्द्रिय** न० कर्मणां वचनादीनां निमित्तमिन्द्रियम् अश्वघासादिवत् निमित्तार्थे ६त० । वचनादिकर्मकरेषु वागादिषु इन्द्रियेषु “पञ्चोक्त्यादानगमनविसर्गानन्दकाः क्रियाः । कृषिवाणिज्यसेवाद्यास्तेष्वेवान्तर्भवन्ति हि” । “वाक्पाणिपादपायूपस्थैरक्षैस्तत्क्रियाजनिः । मुखादिगोलकेष्वास्ते तत्कर्मेन्द्रियपञ्चकम्” पञ्चदश्यां तेषां नाम कार्याण्युक्तानि । “वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्याहुः । वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्”, सां०का० । “इन्द्रस्यात्मनश्चिह्नत्वादिन्द्रियमुच्यते”सां०कौ० व्याकृतञ्चैतदस्माभिः तट्टिप्पतौ ।

“तेषामिन्द्रियशब्दार्थत्वे कारणमाह इन्द्रस्यात्मनइति । “इन्द्रोमायाभिः पुरुरूपईयते इत्यादि” श्रुतौ इन्द्रशब्दस्यात्मार्थकत्वदर्शनात्, पाणिनिना“इन्द्रियमिन्द्रलिङ्गम्” इत्यादिना इन्द्रशब्दात् तल्लिङ्गाद्यर्थे घप्रत्ययेन निपा-

र्त्तितत्वात्तस्य तथात्वम् । करणव्यापारः कर्त्तृव्यापाराधीनः करणव्यापारत्वात् कुठारादिव्यापारवदिति करणव्यापारेण कर्त्तुरनुमानात् इन्द्रियादीनां पुरुषलिङ्गत्वम्” ।

अत्र विहरणशब्दस्य गतिपरत्वम् । स्पष्टमुक्तं शा०ति० । “ज्ञानेन्द्रियार्थाः शब्दाद्याः स्मृताः कर्मेन्द्रियाण्यपि । वाक्पाणिपादपायूपस्थसंज्ञान्याकर्मनीषिणः । वचनादानगतयोविसर्गानन्दसंयुताः । कर्मेन्द्रियार्थाःसंप्रोक्ताः” “अम्बुलिङ्गम्” राघवभट्टः ।

तेषां लक्षणनिर्णयार्थं द्वितीया कारिका या दर्शिता सा च कौ०व्याख्याता ।“पञ्चानां कर्मेन्द्रियाणाम्,कण्ठताल्वादिस्थानमिन्द्रियं वाक्,तस्या वृत्तिर्वचनम्”व्याकृतञ्चैतदस्माभिः “एवं वागिन्द्रियस्य स्थानमुक्त्वा लक्षणकथनाय तद्वृत्तिमाह तस्या वृत्तिर्वचनमिति । तथा च वचनसाधनमिन्द्रियं वाक् । एवम् आदानसाधनमिन्द्रियं पाणिरित्यादि लक्षणम् । कारिकायां विहरणपदं चलनपरं तच्च गतिभेद । उत्सर्गः उदरात् मलस्यापसारणेन त्यागः। आनन्दः आनन्दविशेषजनको रमणीसंभोगात्मको व्यापारभेदः” । अत्र ताल्वादिस्थानमित्युक्त्या आदिपदात्‘अष्टौ स्थानानि वर्णानामुरःकण्ठः शिरस्तथा । जिह्वामूलञ्च दन्तौष्ठं नासिका चैव तालु च” इत्युक्तानामुर आदीनां ग्रहणम् । अतएव शङ्खेन “हस्तौ पादावुपस्थञ्च जिह्वा पायुस्तथैव च । कर्मेन्द्रियाणि पञ्चैव” इति जिह्वायाः कर्मेन्द्रियत्वस्योक्तिः सङ्गच्छते । इन्द्रियाणि च आहङ्कारिकाणीति सांख्या मन्यन्ते “प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोड़शकः । सात्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्” इति सां०का० । “प्रकाशलाघवाभ्यामेकादशक इन्द्रियगणः सात्विकः वैकृतादहङ्कारात् प्रवर्त्तते” इति कौ० व्याख्यातञ्चैतदस्माभिः ।

एकादशकगणस्य सात्विकत्वमुपपादयितुमाह प्रकाशलाघवाभ्यामिति“सत्वं लघु प्रकाशकम्”इति कारिकया लाघवस्य प्रकाशस्य च सत्वधर्मत्वस्योक्तेः इन्द्रियाणाञ्च प्रकाशकत्वात् लाघवाच्च सत्वकार्य्यत्वं निश्चितं, तथा च सात्विकादेवाहङ्कारात् तस्योत्पत्तिर्युक्ता । वैकृतात् विकृतमेव वैकृतन्तस्मादित्यर्थः” । इन्द्रियाणाञ्च यथा आहङ्कारिकत्वं तथा सां०सू०भाष्ययोः समर्थितम् ।

“अभिमानोऽहङ्कारः” “एकादश पञ्चतन्मात्रं तत्कार्य्यम्” सू० ।

“अहङ्करोतीत्यहङ्कारः कुम्भकारवत् अन्तःकरणद्रव्यं, स च धर्मधर्म्यभेदादभिमान इत्युक्तोऽसाधारणवृत्तितासूचनाय, बुद्ध्या निश्चित एवार्थेऽहङ्कारममकारौ जायेते । अतो वृत्त्योः कार्यकारणभावानुसारेण वृत्तिमतोरपि कार्यकारणभाव उन्नीयत इति । एकादशेन्द्रियाणि शब्दादिपञ्चतन्मात्रं चाहङ्कारस्य कार्यमित्यर्थः। मयानेनेन्द्रियेणेदं रूपादिकं भोक्तव्यमिदं मे सुखसाधनमित्याद्यभिमानादेवादिसर्गेष्विन्द्रियतद्विषयोत्पत्त्याहङ्कार इन्द्रियादिहेतुः लोके भोगाभिकामिनैव रागद्वारा भोगोपकरणसर्जनदर्शनात् । “रूपरागादभूच्चक्षुरित्यादिना मोक्षधर्मे हिरण्यगर्भस्य रागादेव समष्टिचक्षुरादेरुत्पत्तिस्मरणाच्चेति भावः । अतश्च भूतेन्द्रिययोर्मध्ये रागधर्मकं मन एवादावहङ्कारादुत्पद्यत इति विशेष,स्तन्मात्रादीनां रागकार्य्यत्वादिति तत्रापि विशेषमाह सा०का०।‘सात्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात्” । “एकादशानां पूरणमेकादशकं मनः षोड़शात्मगणमध्ये सात्विकम् । अतस्तद्वैकृतात् सात्विकाहङ्काराज्जायत इत्यर्थः । अतश्च राजसाहङ्काराद्दशेन्द्रियाणि तामसाहङ्काराच्च तन्मात्राणीत्यपि मन्तव्यम् । “वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा । अहन्तत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत् । वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः । तैजसादिन्द्रियाण्येव ज्ञानकर्ममयानि च । तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः” इत्यादिस्मृतिभ्य एव निर्णयात् । अतएव, पुराणाद्यनुसारेण कारिकायामप्येतदुक्तम् । “सात्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् । भूतादेस्तन्मात्रं स तामसस्तैजसादुभयम्” इति । तैजसो राजसः । उभयं ज्ञानकर्मेन्द्रिये । ननु देवतालयश्रुतिरित्यागामिसूत्रे करणानां देवतालयं वक्ष्यति तत्कथं कारिकयापि देवानां सात्विकाहङ्कारकार्यत्वं नोक्तमिति उच्यते समष्टिचक्षुरादिशरीरिणः सूर्यादिदेवता एव चक्षुरादिदेवताः श्रूयन्ते । अतश्च व्यष्टिकरणानां समष्टिकरणानि देवतेत्येव पर्यवस्यति । तथा च व्यष्टिसमष्ट्योरेकताशयेनात्र शास्त्रे देवाः करणेभ्यो न पृथङ्निर्दिश्यन्ते । अतः समष्टीन्द्रियाणि मनोऽपेक्षयाल्पसत्वत्वेन राजसाहङ्कारकार्यत्वेनैव निर्दिष्टानि । स्मृतिषु च व्यष्टीन्द्रियापेक्षयाऽधिकसत्वत्वेन सात्विकाहङ्कारकार्यतयोक्तानीत्यविरोध इति मन्तव्यम् । तदेवमहङ्कारस्य त्रैविध्यान्महतोऽपि तत्कारणस्य त्रैविध्यं मन्तव्यम् । “सात्विको राजसश्चैव

तामसश्च त्रिधा महान्” इति स्मरणात् त्रैविध्यं चानयोर्व्यक्तिभेदाद् ग्रभेदाद्वेत्यन्यदेतत् । एकादशेन्द्रियाणि दर्शयति” भा०।“कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम्” स्रू० “कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च,ज्ञानेन्द्रियाणि च चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानि पञ्च । एतैर्दशभिः सहान्तरं मन एकादशकमेकादशेन्द्रियमित्यर्थः । इन्द्रस्य सङ्घातेश्वरस्य करणमिन्द्रियम् । तथा चाहङ्कारकार्यत्वे सति करणत्वमिन्द्रियत्वमिति”। “इन्द्रियाणां भौतिकत्वमतं निराकरोति”भा० । “आहङ्कारिकत्वश्रुतेर्न भौतिकानि” स्रू० । इन्द्रियाणीति शेषः । आहङ्कारिकत्वे च प्रमाणभूता श्रुतिः कालतुप्राप्याचार्यवाक्यान्मन्वाद्यखिलस्मृतिभ्यश्चानुमीयते । प्रत्यक्षा श्रुतिस्तु “अहं बहु स्याम्”इत्यादि । ननु—“अन्नमयं हि सौम्य मनः” इत्यादिर्भौतिकत्वेऽपि श्रुतिरस्तीति चेन्न प्रकाशकत्वसाम्येनान्तःकरणोपादानत्वस्यैवोचिततयाहङ्कारिकत्वश्रुतेरेव मुख्यत्वात् । भूतानामपि हिरण्यगर्भसङ्कल्पजन्यतयान्नस्य मनोजन्यत्वाच्च । व्यष्टिमनआदीनां भूतसंसृष्टतयैव तिष्ठतां भूतेभ्योऽभिव्यक्तिमात्रेण तु भौतिकत्वश्रुतिर्गौणीति । ननु तथाप्याहङ्कारिकत्वनिर्णयो न घटते ? “अस्य पुरुषस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्”इत्यादिश्रुतौ देवतास्विन्द्रियाणां लयकथनेन देवतोपादानकत्वस्याप्यवगमात् कारण एव हि कार्यस्य लय इत्याशङ्क्याह भा०।“देवतालयश्रुतिर्नारम्भकस्य”स्रू० “देवतासु या लयश्रुतिः सा नारम्भकविषयिणीत्यर्थः, अनारम्भकेऽपि भूतले जलबिन्दोर्लयदर्शनात् । अनारम्भकेष्वपि भूतेष्वात्मनो लयश्रवणाच्च । “स एष विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति” इत्यादिश्रुताविति भावः” भा०।

एतन्मूलतयैव शां०ति० “वैकारिकादहङ्काराद्दे वा वैकारिका दश । दिग्वातार्कप्रचेतोऽश्वि+वह्नीन्द्रोपेन्द्रमित्रकाः। तैजसादिन्द्रियाण्यास्तन्मात्रक्रमयोगतः”। इन्द्रियाणामधिष्ठातृदेवानाञ्च आहङ्कारिकत्वमुक्तम् ।

कर्मेन्द्रियाणामधिष्ठातृदेवास्र वाचः वह्निः,पाणेरिन्द्रः, पादस्य उपेन्द्रः, पायोः मित्रः,उपस्थस्य कः ब्रह्मा ।

वेदान्तिमते च आकाशादीनां रजोंशैः वागादीनां क्रमेणोत्पत्तिः “रजोऽंशैः पञ्चभिस्तेषां क्रमात् कर्मेन्द्रियाणि तु । वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे” पञ्चदश्युक्तेः तेषाञ्चाहङ्कारित्वं प्रमेयविवरणोपन्यासे निराकृतं, तच्च आत्मशब्दे ६६६ पृ०दर्शितम्, तेषामनुमानेन भौतिकत्वसिद्धिरिति शुष्कतार्किकमतमपि तत्र निरासितं तत्रैव पृ०दृश्यम् । “तेषां रजोऽंशैर्जातानि क्रमात् कर्मेन्द्रियाणि च”शब्दचि०भागवतवाक्यम् ।

**कर्व** दर्पे भ्वा०प०अक० सेट् । कर्वति अकर्वीत् चकर्व प्रनिकर्वति । कर्वटः कर्वुरः कर्वूरः ।

**कर्व** पु० किरति विषयेषु चित्तम् कॄ—व । कामे उज्ज्व० । कामस्य चित्तविक्षेपकत्वात् तथात्वम् ।

**कर्वट** पु० कर्व-अट । द्विशतग्राममध्ये सुन्दरस्थाने, यत्र गत्वा क्रयविक्रयादिना सन्निहितजनपदवासिनो जनाजीवन्ति १तादृशे ग्रामे पुरे वा २नगरमात्रे च अमरटीका “कर्वटं द्विशतग्राममध्ये ग्रामोमनोहरः” हारा० उक्तेः न०च ।३प्रचुरकण्टकसन्ताने ग्रामे च । “धनुःशतं परीणाहो ग्रामात् क्षेत्रान्तरं भवेत् । द्वे शते कर्वटस्य स्यात् नगरस्य चतुःशतम्” याज्ञ० “कर्वटस्य प्रचुरकण्टकसन्तानस्य ग्रामस्य” मिता० कूर्मविभागे प्राच्यां दिशि वृ०सं० उक्ते ४देशभेदे “अथ पूर्वस्यामञ्जनवृषभध्वजपद्ममाल्यवद्गिरयः । व्याघ्रमुखसुह्मकर्वटचन्द्रपुराः शूर्पकर्णाश्च” । “ताम्रलिप्तं च राजानं कर्वटाधिपतिं तथा । सुह्मानामधिपं चैव ये च सागरवासिनः” भा० स० २९ भीमप्राचीविजये । त्रिकाण्डशेषे तु “चतुरष्टशतग्रामान्तर्द्रोणमुखकर्कटौ” इत्युक्तेः ५ अष्टशतग्राममध्यस्थग्रामे च पु०।

**कर्वर** न० कॄ-वरच् । १कर्मणि निरु०। “अन्यदद्य कर्वरमन्यदु” ऋ० ६,२४,५ । “कर्वरं कर्म नामैतत्” भा०। कॄ-विक्षेपे ष्वरच् । २व्याघ्रे ३राक्षसे च पुंस्त्री उज्ज्व० जातित्वात् स्त्रियां ङीष् ४निशायां स्त्री विश्वः षित्त्वात् ङीष् । कर्वरीत्येव । सा च ५हिङ्गुपत्र्याम् जटाध० ६शिवायां मेदि०।

**कर्वुदार** पु०कर्व दर्पे उण् तं दारयति दृ-अण् । कोविदारवृक्षे

**कर्वु(वू)र** पु० कर्बु (बू)रशब्दार्थे ।

**कर्श्य** पु० कृश-यत् । कर्चूरे, (कचूर) राजनि० ।

**कर्ष** पुंन० कृष—अच् कर्मणि घञ् वा ।“दशार्द्धगुञ्जं प्रवदन्ति माषं माषाह्वयैः षोड़शभिश्च कर्षम्” लीला० उक्ते अशीतिरक्तिकापरिमाणे षोड़शमाषके मानभेदे २ तन्मिते सुवर्णे च ।३विभीतकवृक्षे पु०शब्दरत्ना०। भ्वा०कृष—भावे घञ् ।४आकर्षणे । तुदा०कृष—भावे घञ् ।५विलेखने च । अत्र प्रसङ्गात् पौराणिकमान्त्रकर्मोचित स्मृत्यादिपरिभाषितवैद्यक परिभाषितमानभेदउच्यते । तत्र पौराणिकादिमा

नमाह हेमा० दा० ख० मनुः “लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि। ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः। जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः। प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते। त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः। ता राजसर्षपास्तिस्रस्ते त्रयो गौरसर्षपः। सर्षपाः षट् यवो मध्यस्त्रियवस्त्वेव कृष्णलः। पञ्च कृष्णलको माषस्ते सुवर्णस्तु षोडश। पलं सुवर्णाश्चत्वारः पलानि धरणं दश। द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः। ते षोडश स्याद्धरणं पुराणश्चैव राजतः। कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः। धरणानि दश ज्ञेयं शतमानस्तु राजतः। चतुःसौवर्णिको निष्कोविज्ञेयस्तु तत्प्रमाणकम्” याज्ञवल्क्यः “जालसूर्य्यमरीचिस्थं त्रसरेणू रजः स्मृतम्। तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते। गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः। कृष्णलः, पञ्च ते माषस्ते सुवर्णस्तु षोडश। पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम्। द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते। शतमानन्तु दशभिर्धरणैः पलमेव च। निष्कः सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः” आह विष्णुः “जालस्थार्कमरीचिगतं रजस्त्रसरेणुसंज्ञं, तदष्टकं लिक्षा, तत्त्रयं राजसर्षपः, तत्त्रयं गौरसर्षपः, ते षट् यवः, तत्त्रयं कृष्णलः, तत्पञ्चकं माषः, तद्द्वादशकमक्षार्द्धं स चतुर्माषकं सुवर्णः, तच्चतुःसौवर्णिको निष्कः। द्वे कृष्णले रूप्यमाषकः ते षोडश धरणम्” “ताम्रिकः कार्षापणः पण” कात्यायनः “माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु। काकिणी तु चतुर्भागो माषस्य परिकीर्त्तिता। पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी। कार्षापणप्रमाणं तु तत् निबद्धमिहैव यत्। ते द्वादश सुवर्णस्तु दीनारस्त्विकः स्मृतः” नारदः “कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते। पणो निबद्धः पूर्व्वस्यां षोडशैव पणाः पलम्। अगस्तिरपि “यवः स्यात् सर्षपैः षड्भिर्गुञ्जा चैका त्रिभिर्यवैः। गुञ्जाभिः पञ्चभिश्चैको माषकः परिकीर्त्तितः। भवेत् षोडशभिर्माषैः सुवर्णस्तैः पुनः स्मृतः। चतुर्भिः पलमेकन्तु दश ते धरणं विदुः”। “अष्टभिर्भवति व्यक्तैस्तण्डुलैः गौरसर्षपैः। स वैष्णवयवः प्रोक्तो गोधूमं चापरे जगुः”। विष्णुगुप्तः “पञ्चगुञ्जोभवेन्माषः शाणस्तैश्च चतुर्गुणैः। कलञ्जं धरणं प्राहुर्मणिमानविशारदाः। मञ्जाटिकाकलञ्जस्तु तौल्ये गुञ्जाद्वयं विदुः। मञ्जाटिका विंशतिस्तु धरणं तद्विदां मतम्। स्थूलमध्यातिसूक्ष्माणां सुसूक्ष्माणामपि स्मृतम्”। “दीनारोरोपकैरष्टाविंशत्या परिकीर्त्तितः। सुवर्णसप्ततिसोभागोरोपक इष्यते” प्रकारान्तरेणाप्याह सुचेत्रे यथावन्मध्यपाककाले निष्पन्नधान्ययवादश सुवर्णमाषः पञ्च वा गुञ्जाः सुवर्णमाषकः ते षोडश सुवर्णः एवं प्रमाणसिद्धस्य द्वितीया संज्ञा कर्ष इति चतुष्कर्षं पलं पलानां शतेन तुला विंशतितौलिको भारः अस्यैव भारस्य उद्‌तौलिक इति द्वितीया संज्ञा” दानखण्डे हेमाद्रिः। एतेषां मानभेदः शक्तितारतम्यापेक्षया शाह्यतावेदनार्थः।

वैद्यकपरिभाषितमानं भावप्र०।

“न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित्। अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया। चरकस्य मतं वैद्यैराद्यैर्यस्मान्मतं ततः। विहाय सर्वमानानि मागधं मानमुच्यते। त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः। त्रसरेणुस्तु पर्य्यायनाम्ना वंशी निगद्यते। जालान्तरगतैः सूर्य्यकरैर्वंशी विलोक्यते। षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका। तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः। यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम्। षड्भिस्तु रक्तिकाभिः स्यान्माषको हेममानके। माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते। टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते। क्षुद्रको वटकश्चैव द्रङ्क्षणः स निगद्यते। कोलद्वयन्तु कर्षः स्यात् स प्रोक्तः पाणिमानिका। अक्षः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम्। विडालपदकं चैव तथा षोडशिका मता। करमध्यो हंसपदं सुवर्णं कवलग्रहः। उदुम्बरञ्च पर्य्यायैः कर्षमेव निगद्यते। स्यात्कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा। शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रञ्चतुर्थिका। प्रकुञ्चः षोडशी विल्वं पलमेवात्र कीर्त्त्यते। पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते। प्रसृतिभ्यामञ्जलिः स्यात्कुडवोऽर्द्धशरावकः। अष्टमानञ्च स ज्ञेयः कुडवाभ्याञ्च मानिका। शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः। शरावाभ्यां भवेत् प्रस्थः चतुःप्रस्थैस्तथाढकः। भाजनं कांस्यपात्रं च चतुःषष्टिपलश्च सः। चतुर्भिराढकैर्द्रोणः कलशोनल्वणोऽर्म्मणः। उन्मानश्च घटोराशिर्द्रोणपर्य्यायसंज्ञितः। द्रोणाभ्यां सूर्य्यकुम्भौ च चतुःषष्टिशरावकः।

शूर्पाभ्याञ्च भवेद्द्रोणी वाहो गोणी च सा स्मृता। द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः। चतुःसहस्रपलिका षण्णवत्यधिका च सा। पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः। तुला पलशतं ज्ञेयं सर्वत्रैव निश्चयः। माषटङ्काक्षबिल्वानि कुडवप्रस्थमाढकम्। राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम्। मागधपरिभाषायां षड्रत्तिको माषश्चतुर्विंशतिरत्तिकष्टङ्कः षण्णवतिरत्तिकः कर्षः। अयञ्चरकसम्मतः। सुश्रुतमते पञ्चरत्तिकोमाषो विंशतिरत्तिकष्टङ्कोऽशीतिरत्तिकः कर्षः। अयमेव कालिङ्गपरिभाषायामपि यतस्तत्राष्टरत्तिकोमाषो द्वात्रिंशद्रत्तिकष्टङ्कः सार्द्धटङ्कद्वयमितः कर्षः। गुञ्जादिमानमारभ्य यावत् स्यात्कुडवस्थितिः। द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम्। प्रस्थादिमानमारभ्य द्विगुणं तद्द्रवार्द्रयोः। मानन्तथा तुलायास्तु द्विगुणं न क्वचित् स्मृतम्। मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम्। विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुडवं वदेत्। इति मागधमानम्। कालिङ्गमानम् "यतो मन्दाग्नयो ह्रस्वा हीनसत्वा नराः कलौ। अतस्तु मात्रा तद्योग्या प्रोच्यते सुज्ञसम्मता। यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः। यवद्वयेन गुञ्जा स्यात् त्रिगुञ्जो वल्ल उच्यते। माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत् क्वचित्। चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च। गद्याणो माषकैः षड्भिःकर्षः स्याद्दशमाषिकः। चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः। चतुःपलैश्च कुडवप्रस्थाद्याः पूर्ववन्मताः। स्थितिर्नास्त्येव मात्रायाः कालमग्निं वयोबलम्। प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत्। नाल्पं हन्त्यौषधं व्याधिं यथाम्भोऽल्पं महानलम्। अतिमात्रं च दोषाय शस्यो यस्ये बहूदकम्"।

कर्षं नित्यमर्हति ठञ्। कार्षिक कर्षपरिमाणार्हे "कार्षिकस्ताम्रिकः पणः इत्यमरः"। नित्यकर्षणार्हे क्षेत्रभेदे च घञन्तकर्षस्य "कर्षात्वतो घञोऽन्त उदात्तः" पा० अन्तोदात्तता अत्र कर्षेतिशपा निर्द्देशात्तुदादेराद्युदात्ततेति सि०कौ०।

**कर्षक** त्रि० कृष–विलेखने। १ क्षेत्रकर्षणकारके (कृषाण) "कच्चिन्न बीजं भक्तञ्च कर्षकस्यावसीदति" भा०स०५अ० "पश्यैनं कृषकं क्षुद्रं दुर्बलं मम पुत्रकम्। प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन च पीड़िनम्" भा० ८ अ० सुरभेर्वाक्यम् "कालप्राप्तमुपासीत शस्यानामिव कर्षकम्" भा०व० २५८ अ०। "त्वं समीरण इव प्रतीक्षितः "कर्षकेण वलजां पुपूषता"माघः२लेखके ३आकर्षके च।

**कर्षण** न०तुदा०कृष–भावे ल्युट्। लाङ्गलादिना भूमेर्विलेखने (चास देओया) हेम०।"मृतं तु याचितं भैक्ष्यं प्रमितं कर्षणं स्मृतम्" मनुः। कृषिशब्दे विवृतिः। भ्वा० कृष–ल्युट्। २आकर्षणे च (टाना) "भज्यमानमतिमात्रकर्षणात्" रघुः"शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा" मनुः। ३क्षीरिणीवृक्षे स्त्री राजनि०गौरा०ङीष्।

**कर्षणि** स्त्री कृष–अनि। असत्यां स्त्रियाम् उणादिकोषः शब्दकल्पद्रुमे उक्तम्। तच्चिन्त्यम् "कृषेरादेश्च धः" उणा० २,१०५सू० धर्षणिरित्यस्यैव सिद्धेः कर्षणिरिति पाठो लिपिकरप्रमादकृतः। अतएव उज्ज्वलदत्तेन"धर्षणिर्बन्धकीत्युक्ता"धृषेरनिप्रत्ययेन सिद्धे वैचित्र्यार्थम्" इत्युक्तम्

**कर्षफल** पु०कर्षः तन्मात्रं फलमस्य। १विभीतकवृक्षे, अमरः २आमलक्याम् स्त्री रत्नमाला टाप्।

**कर्षापण** पु० कर्षेणापणते क्रीयते। षोड़शपणपरिमाण (काहन) कर्षस्य षोडशमाषकमितत्वेन षोडशभिः पणैस्तस्य क्रयणात् तत्संख्यासाम्यात् तथात्वम्।"अशीतिभिर्वराटकैः पण इत्यभिधीयते। ते षोडश पुराणं स्यात् रजतं सप्तभिस्तु तैः"गौतमेन षोडशपणेषु पुराणशब्दस्य परिभाषितत्वात् "द्वात्रिंशत्पणिका वावो वत्सः पौराणिकोमतः" कात्यायनेन द्वात्रिंशत्पणानां गोमूल्यतयाभिधानेन "धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका। कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता" षट्त्रिंशन्मते पुराणकार्षापणयोः पर्य्यायतादर्शनाच्च तथार्थता। ततः प्रज्ञा०स्वार्थे अण्। कार्षापणोऽप्यत्र अर्द्धर्चादि०तेन पुंन०।

**कर्षिन्** त्रि० कृष–आकर्षे णिनि। आकर्षके। "स्तम्बेरमामुखरशृङ्खलकर्षिणस्ते" रघुः। स्त्रियां ङीप्।"प्राणकान्तमधुगन्धकर्षिणीः" रघुः। ङीवन्तः २क्षीरिणीवृक्षे ३अश्वमुखबन्धनरज्ज्वास्थितलौहभेदे कविकायां च स्त्री जटा०

**कर्षू** पु०कृष–ऊ। १करीषानले (घुटेर आगुन)। २कुल्यायां स्त्री अमरः। ३हस्तखाते मेदि०। हस्तखातस्तु "चतुरङ्गुलपृथ्वी तावदन्तरास्तथाधःखाता वितस्त्यायतास्तिस्रः कर्षूः कुर्य्यात्" प्रा० वि० विष्णूक्तप्रमाणकगर्त्तभेदः। "ततः कर्षूः कुर्य्यात् तन्मूले प्रागुदगग्न्युप समाधानं कृत्वा पिण्डनिर्वपणम्" "कर्षूत्रयमूले पुरुषाणां, कर्षूत्रय-

मूले स्त्रीणाम्। पुरुषकर्णूद्वयं साम्रेनोदकेन पूरयेत् स्त्रीकर्णूद्वयं साम्रेन पयसा दध्ना मांसेन, पयसा च प्रत्येकं कर्णूद्वयं पूरयित्वा जपेत्" विष्णु०। ४गर्त्त-माले च। "कर्णूवीरणवति" कात्या० २१,२ २६। "कर्णूः कुहर उच्यते" कर्कः अस्य ह्रस्वान्तमपि। "दक्षिणतः कुटिले कर्णू खात्वा क्षीरोदकाभ्यां पूरयन्ति सप्तोत्तरतः प्राचीरुदक्स्थाः" कात्या० २१,२,२६। "श्मशानत उत्तरतः कुटिले कर्णू गर्त्तौ खात्वा" कर्कः।

**कर्हि** अव्य० कस्मिन् काले किम्+र्हिल् कादेशः। अनद्यतने कस्मिन् काले इत्यर्थे। कर्हि स्वित्तदिन्द्र यन्नृभिः" ऋ० ६,२५,२।

**कर्हिचित्** अव्य० कर्हि+चित् सुग्ध० पा० मते भिन्नं पदद्वयम्। कस्मिंश्चित्काले इत्यर्थे। "अश्विना यद्ध कर्हिचित्"ऋ०५,७४,१०। अतएव पदकाराः कर्हि,चित्। इति भिन्नपदतया पेठुः"यदद्य कर्हि कर्हिचित्"ऋ०८,७३,५।

**कल** संख्यायां सक० शब्दे अक०भ्वा०आत्म०सेट्। कलते अकलिष्ट चकले प्रनिकलते।

**कल** गतौ संख्यायाञ्च अद० चुरा० उभय० सक० सेट्। कलयति ते अचकलत् त। कलयाम्—बभूव आस—चकार चक्रे। गत्यर्थत्वात् ज्ञानार्थत्वमपि। "कल-यन्त्यनुक्षणमनेकलयम्" माघः "व्यालनिलयमिलनेन गरलमिव कलयति मलयजसारम्"जयदे० ग्रहणे "कलय वलयश्रेणीं पाणौ पदे कुरु नूपुरौ"जयदे०। संख्यानञ्चात्र गणनं ज्ञानभेदश्च। "स पश्चात् संपूर्णः कलयति धरित्रीं तृणसमाम्" नीतिः "कलयैदमानमनसं सखि! माम्" माघः। "वाचामाचकलत् रहस्यमखिलं यश्चाक्षपादस्फुराम्" मल्लि०। उच्चारणे च "माद्यन्तः कलयन्तु चूतशिखरे,केलि-पिकाः पञ्चमम्"। पाशे"कालः कलयतामहम्"गीता। "कलनात्सर्वभूतानां स कालः परिकीर्त्तितः"ति०त० विष्णुध०। कलनीयम् कलयितव्यम् कलयिता कलितः। कलयन् कलयमानः कलयितुम् कलयित्वा आकलय्य। "कलितललितवनमालम्" जयदे० "करकलितकपालः कुण्डली दण्डपाणिः" वटुकस्तवः।

अव-अवगमे अवकलयति वि+अव वियोजने "यदि व्यक्तयुक्तिव्यवकलनमार्गेऽसि कुशला"लीला०।

आ+बन्धने"सुवर्णसूत्राकलितधराम्बराम्, माघः ज्ञाने च" "वाचामाचकलत्" मल्लि०। "मकरध्वजद्विरदमाकलयत्" "मुक्तावलीराकलयाञ्चकार"इति च माघः।

प्रति आ+प्रतिबोधे प्रत्याकलितस्वदुर्नयः" दशकु०।

उद्+उत्क्षिप्य ग्रहणे"स तस्य हस्तोत्कलितस्तदासुरो विक्रीडतो यद्वदहिर्गरुत्मतः" भाग०७,८,१६।

सम्+एकसंख्यापादनरूपे योगे। "अथ संकलनव्यवकलनयोः करणसूत्रम्" "सैकपदघ्नपदार्धमथैकाद्यङ्कयुतिः किल सङ्कलिताख्या" लीला०।

**कल** नोदने प्रेरणे चुरा०उभय०सक०सेट्। कालयति ते अचीकलत् त। कालयां बभूव आस चकार चक्रे। काल-यितव्यः कालनीयः। कालयिता कालितः कालयन् कालय-मानः। कालयित्वा आकाल्य। कर्मणि काल्यते अकालि अकालयिषाताम् अकालिषाताम्। "गवां शतसहस्राणि त्रिगर्त्ताः कालयन्ति ते" भा०वि० १००,७। "गावो न काल्यन्त इदं कुतो रजः"भाग०४,५,८। सा मौसल-सकलं सैन्यं कालयामास दूरतः"भा०आ० ६६६०।

**कल** पु० कल—शब्दे घञ् नि० अवृद्धिः। मधुराव्यक्ते ध्वनौ अमरः। "सारसैः कलनिर्ह्रादैः" "कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम्" "निशासु भास्वत् कलनूपुराणाम्" रघुः। "कलपक्षिणोरवमुदासि वधुः"। "कलकाञ्चि काञ्चिदरुणत्तरुणः"माघः। कलप्रधाना काञ्चि-र्यत्र एवं कलहंस इत्यादौ शा०त० समासत्तेन तस्य न तद्गुणार्थता। अतएवामरेण"कलो मन्द्रस्तु गम्भीरस्तारो-ऽत्युच्चैस्त्रयस्त्रिषु" मन्द्रादीनां त्रयाणामेव त्रिलिङ्गत्व-मुक्तम्। "उदकण्ठि कण्ठपरिवर्त्तिकलस्वरशून्यगानपरया परवा" माघः। कड्-मदे अच् डस्य लः। २शुक्रे चरम-धातौ न० मेदि०। ४कोलिवृक्षे पु०शब्दच०।४शालवृक्षे पु० राजनि०। ५अजीर्णे त्रि० मेदि०। कलास्त्यस्य अच्। कलान्वितेऽवयवे च। [स्त्रियां जातित्वात् ङीष्।

**कलक** पुंस्त्री कल-चु० ण्वुल्। शकुलमत्स्ये हेमच०।

**कलकण्ठ** पुंस्त्री कलः कलप्रधानः कण्ठोऽस्य। १कोकिले २हंसे, ३पारावते च। जातित्वेऽपि संयोगोपधत्वात् स्त्रियां न ङीष् किन्तु स्वाङ्गत्वात् ङीप्। कलध्वनियुक्त-कण्ठके त्रि०स्त्रियां ङीप्।

**कलकल** पु० कलप्रकारः गुणवचनत्वात् प्रकारे द्वित्वम्। कोलाहले। "चलितया विदधे कलमेखला-कलकलोऽलकलोलदृशाऽन्यया" माघः। कलस्य शालवृक्षस्य कला यत्र। २शालनिर्यासे मेदि०।

**कलकीट** पु०कलप्रधानः कीटः शा०त०। कीटभेदे। तत्र भवः पलद्या० अण्। कालकीट तद्भवे त्रि०।

**कलकूट** पु० नगरभेदे राजनि० । ततः भवार्थे तद्राजार्थे च "शाल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्"पा०इञ् । कालकूटि तद्भवे त्रि०तन्नृपे च । इञश्चास्त्रियां बहुषु लुक् । कलकूटास्तद्देशवासिषु तन्नृपेषु च स्त्रियां तु न लुक् । कालकूटय इत्येव । [जातित्वात् ङीष्

**कलघोष** पुंस्त्री कलोघोषोऽस्य । कोकिले शब्दर० स्त्रियां

**कलङ्क** पु०कलयति क्विप् कल् चासौ अङ्कश्चेति, कं ब्रह्माणमपि लङ्कयति गच्छति लकि–गतौ अण् वा । १चिह्ने २अपवादे, ताम्रादिधातूनां ३मलभेदे (कलङ्कान), ताम्रादियोगात् ४अस्त्रादेर्विकारे च मेदि० । "शशकपाण्डवेषु कलङ्काः" काद० । "धारानिबद्धेव कलङ्करेखा" "मत्तः सदाचारशुचेः कलङ्कः" रघुः । "ताम्रवर्णश्च प्रहृषो मन्दरश्मिर्दिवाकरः । अदृश्यत कलङ्काङ्कः संसक्तो धूमकेतुना" रामा० । ततः अस्त्यर्थे इनि । कलङ्किन् तद्युक्ते त्रि० स्त्रियां ङीप् । "कलङ्की जायते विल्वे" ति० त० स्मृतिः । ततः तारका० जातार्थे इतच् । कलङ्कित जातकलङ्के त्रि० ।

**कलङ्कष** पुंस्त्री करेण कषति बा० खच् मुम् च रस्य लः । १सिंहे शब्दमा० । जातित्वात् स्त्रियां ङीष् । २करताल्यां स्त्री शब्दरत्ना० टाप् ।

**कलङ्कुर** पु० कं जलं लङ्कयति लकि–गतौ णिच–उरच् । जलानामावर्त्ते स्वतोजलभ्रमे त्रिका० ।

**कलञ्ज** पु० केतिशब्दं लञ्जति भाषते क इत्यव्यक्तानुकरणम् लजि–अण् । विषाक्तास्त्रेण हते १मृगे, २पक्षिणि च । ३तन्मांसे न० "न कलञ्जं भक्षयेदिति" श्रुतिः । ४ताम्रकूटे च (तामाक) "कलञ्जसंवेष्टनधूमपानात् स्याद्दन्तशुद्धिर्मुखरोगहानिरिति" वैद्यके तत्सेवनात् मुखरोगहान्यादि उक्तम् । ५परिमाणभेदे च । कर्षशब्दे भावप्र० तन्मानभेदोदृश्यः ।

**कलञ्जाधिकरण** न० "न कलञ्जं भक्षयेदित्यादिवाक्यमधिकृत्य पञ्चावयवन्यायभेदे स च न्यायः यथा किं यदा कदापि तद्भक्षणनिषेधः । उत सर्व्वदेति संशयः । यदा कदाचिन्निषेध इति पूर्व्वपक्षः सर्व्वदा तन्निषेध इति सिद्धान्तः । तदेतत्भङ्ग्या एका० त० दर्शितं यथा "न कलञ्जंभक्षयेत्" इति श्रुतिः कलञ्जभक्षणाभावविषयकं कार्य्यमित्यर्थः । तत्र कालविशेषानुपादानान्निषिध्यमानक्रियायां प्रवृत्तिमतोनिषेधविधावधिकाराद्यावत्कालमेव तस्यां तस्य निवृत्तिः । न हि कलञ्जभक्षणाद्यतः कुतश्चित् कारणान्निवृत्तस्य निषेधानुपालनं सकृद्वृत्तमिति कलञ्जभक्षणनिषेधो न पुनस्तं निवर्त्तयति किन्तु भक्षणप्रवृत्तिमत्तामात्रमधिकारिविशेषणं यदा यदा भवति तदा तदैव निषेधविधिरपि तं निवर्त्तयति । न हि कलञ्जस्य भक्षणमुपक्रम्य यावत् कालं तद्भक्षयति । अतस्तदितरकाले निवृत्तिः सिद्धैवेति भवति विफलोविधिः । ननु नासौ निवृत्तिरप्रवृत्तस्य निवृत्त्यनुपपत्तेः । सत्यं, प्रवृत्त्युपाधिना विनाशं प्राप्नुवन् प्रागभाव एव प्रवृत्तिनिराकरणात् साध्यमानोनिवृत्तिरुच्यते न तु प्रवृत्तिरपि साध्यतयोपदिश्यते किन्तु रागप्राप्तप्रवृत्तिमतएव निषेधविधावधिकारः । यत्तु "मनसा तु प्रवृत्तस्य भूतचेष्टावतोऽपि वा । यदनागतभावस्य वर्ज्जनं तन्निवर्त्तनम्" इति । अत्रापिशब्देनाप्रवृत्तमात्रसमुच्चयान्न विरोधः । भूतचेष्टावत इति । "भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवं त्रिषूचिते । प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना" इति मेदिन्युक्तेः भूते प्राप्ते निषेध्ये चेष्टावत इत्यर्थः। ततश्च प्रागभाव एव कालान्तरसम्बन्धितया साध्यत्वेनोपदिश्यते । प्रागभावस्यानादिसंसर्गाभावमात्रपरः सचाप्रवृत्तस्य भक्षणकारणमननुतिष्ठतः सिध्यत्येव । तस्मात् सकृत्क्रियापर्य्यवसायित्वे विफलोविधिः । कादाचित्काकरणस्य निषेधमन्तरेणापि प्राप्तेः । न च स्वर्गकामादिवत् साध्यतया प्रवृत्तिमत्कर्त्तृकत्वमप्यङ्गं विषयमात्रानतुष्ठानाधीनसिद्धत्वान्निषेधनियोगानामितिकर्त्तव्यताकाङ्क्षाविरहात् अत एव शुचित्वमपि तत्र नाङ्गम् । तस्मान्निषेधविधिषु काकवन्तोदेवदत्तस्य गृहाइत्यादिवत्तटस्थत्वेनाधिकारिविशेषणीभूतायाः प्रवृत्तेर्यावत्कालमनुवृत्तिस्तावत्कालमेव निवृत्तौ साफल्यं पुनर्निमित्तान्तरवन्न सकृदनुष्ठानेनैव शास्त्रार्थसिद्धिः"।

यथा चात्र निवृत्तेरेव बोध्यता न प्रवृत्त्यभावस्य तथा समर्थितं वृहदारण्यकब्राह्मणभाष्ययोः यथा—

"प्रतिषिद्धानिष्टफलसम्बन्धश्च वेदादेव विज्ञायते न चानुष्ठेयः सः । न च प्रतिषिद्धविषये प्रवृत्तक्रियस्याकरणादन्यदनुष्ठेयमस्ति । अकर्त्तव्यताज्ञाननिष्ठतैव हि परमार्थतः प्रतिषेधविधीनां स्यात् । क्षुधार्त्तस्य प्रतिषेधज्ञानसंस्कृतस्याभक्ष्येऽभोज्ये वा प्रत्युपस्थिते कलञ्जाभिशस्तान्नादाविदं भक्ष्यमदो भोज्यमिति वा ज्ञानमुत्पन्नं तद्विषयया प्रतिषेधज्ञानस्मृत्या बाध्यते मृगतृष्णिकायामिव

षेधज्ञानं, तद्विषययाथार्थ्यविज्ञानेन तस्मिन् बाधिते स्वाभाविकविपरीतज्ञानेऽनर्थकरी तद्भक्षणभोजनप्रवृत्तिर्न भवति। विपरीतज्ञाननिमित्तायाः प्रवृत्तेर्निवृत्तिरेव न पुनर्यत्नः कार्य्यस्तदभावे" शङ्कराचार्य्यकृतभाष्यम्।

"यद्यपि कलञ्जभक्षणादेरधःपातस्य च सम्बन्धो 'न कलञ्जं भक्षयेत्' इत्यादिवाक्यात्प्रतीयते, तथापि तस्यानुष्ठेयत्वात् तद्वाक्यस्यानुष्ठेयनिष्ठत्वसिद्धिरित्याशङ्क्याह न चेति। सम्बन्धस्याभावार्थत्वान्नानुष्ठेयतेत्यर्थः। अभक्षणादि कार्य्यमिति विधिपरत्वमेव निषेधवाक्यस्य किन्न स्यादित्याशङ्क्याह न चेति। तस्यापि कार्य्यार्थत्वे विधिनिषेधभेदभङ्गात् नञश्च स्वसम्बन्ध्यभावबोधने मुख्यस्यार्थान्तरे वृत्तौ लक्षणापातान्निषिद्धविषये रागादिना प्रवृत्तक्रियावतो निषेधशास्त्रार्थधीसंस्कृतस्य निषेधश्रुतेरकरणात् प्रसक्तक्रियानिवृत्त्युपलक्षितादौदासीन्यादन्यदनुष्ठेयं न प्रतिभातीत्यर्थः। भावविषयं कर्त्तव्यत्वं विधीनामर्थोऽभावविषयन्तु निषेधानामिति विशेषमाशङ्क्याह। अकर्त्तव्यतेति। अभावस्य भावत्वाभावात् कर्त्तव्यताविषयत्वासिद्धिरिति हि शब्दार्थः। प्रतिषेधज्ञानवतोऽपि कलञ्जभक्षणादिज्ञानदर्शनात् तन्निवृत्तेर्नियोगाधीनत्वात् तन्निष्ठमेव वाक्यमेष्टव्यमिति चेन्नेत्याह। क्षुधार्त्तस्येति। विषलिप्तबाणहतस्य पशोर्मांसं कलञ्जम्। ब्रह्मबधाद्यभिशापयुक्तस्यान्नपानादि। तस्मिन्नभक्ष्येऽभोज्ये च प्राप्ते यद्भ्रमज्ञानं क्षुत्क्षामस्योत्पन्नं तन्निषेधधीसंस्कृतस्य तद्धीस्तत्या बाध्यमित्यत्र लौकिकदृष्टान्तमाह। मृगतृष्णिकायामिति। तथापि प्रवृत्त्यभावसिद्धये विधिरर्थ्येतामिति चेन्नेत्याह। तस्मिन्निति। तदभावः प्रवृत्त्यभावो न विधिजन्यप्रयत्नसाध्यो निमित्ताभावेनैव सिद्धेरित्यर्थः" आनन्दगिरिः।

नैयायिकमते तत्र बोधप्रकारः शब्दचि० दर्शितो यथा—

"ननु 'न कलञ्जं भक्षयेत्' इत्यत्र विध्यर्थनिषेधानुपपत्तिः तद्भक्षणस्य श्रेयोरूपेष्टसाधनत्वात्, न चाहुराऽविद्यावत् पर्य्युदासलक्षणया विरोध्यनिष्टसाधनबोधनं, नञोऽसमस्तत्वात् क्रियासङ्गतत्वेन प्रतिषेधवाचकत्वव्युत्पत्तेश्चेति चेत् न विशेष्यवति विशिष्टनिषेधस्य "सविशेषणे हीति" न्यायेन विशेषणनिषेधपर्य्यवसायितया कलञ्जभक्षणमिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखसाधनमिति" न कलञ्जं भक्षयेत्" इत्यनेन बोधनात्, इष्टसाधनतावाचकस्य विधेः सामान्ये निषेधानुपपत्तेर्बलवदनिष्टाननुबन्धीष्टसाधनविशेषे तात्पर्य्यं तथा वाचकविशेषणनिषेधपरत्वं नञ इति कश्चित् तन्न यथाह्ययोग्यतया छिद्रं विहाय घटत्वेन तदितरान्वयो न तच्छिद्रेतरत्वेन, युगपद्वृत्तिद्वयविरोधात् तथेहापि बलवदनिष्टाननुबन्धित्वेन नोपस्थितिरिति"

विशेषबोधप्रकारस्तु आख्यातवादे गदाधरेण दर्शितो यथा "'न कलञ्जं भक्षयेत्' इत्यादिनिषेधविधेः प्रामाण्यानुरोधेन बलवदनिष्टाननुबन्धित्वस्य विध्यर्थे प्रवेशः निषेधोऽपि, कलञ्जभक्षणादौ तृप्त्यादिरूपेष्टसाधनतासत्त्वेन तदभावस्य नञा बोधने तत्प्रामाण्यानुपपत्तेः बलवदनिष्टाननुबन्धित्वस्य विधिप्रत्ययवाच्यत्वे तस्यैवाभावो बलवदनिष्टनरकानुबन्धिनि तत्कर्म्मण्यबाधितो बोध्यत इति तत्प्रामाण्योपपत्तिः। बलवदनिष्टाननुबन्धित्वस्येष्टसाधनताविशेषणतया वाच्यत्वे विशिष्टाभावस्यैव शाब्दबोधे भानं सोऽपि विशेषणाभावायत्तोऽबाधितः। कलञ्जभक्षणादौ विशिष्टाभावबोधानन्तरं तल्लिङ्गकानुमानगम्यो बलवदनिष्टाननुबन्धित्वरूपतदननुबन्धित्वाभावः। प्रवर्त्तकमिव निवर्त्तकमपि ज्ञानं श्रुतिवाक्यात् परम्परयैव, न तु साक्षात्। भवन्मते च तादृशाभावस्य शाब्दबोधे न भानं पदार्थैकदेश इतरविशेषणत्वेनोपस्थितत्वेन नञर्थविशेषणतया अनिष्टाननुबन्धित्वान्वयासम्भवात्। वस्तुतो विशिष्टशक्तौ विशेष्यविशेषणभावे विनिगमनाविरहात् पृथगेव बलवदनिष्टाननुबन्धितया वाच्यत्वम्। न च बलवदनिष्टाननुबन्धित्वस्येष्टसाधनताविशेष्यत्वे विधिवाक्यतः क्रियाविशेष्यकेष्टसाधनताज्ञानसम्भवात् क्रियागोचरचिकीर्षाद्यर्थं विधिवाक्यजन्यशाब्दबोधोत्तरमिष्टसाधनत्वप्रकारकक्रियाविशेष्यकज्ञानान्तरं कल्पनीयमिति तदकल्पनप्रयुक्तलाघवमेव बलवदनिष्टाननुबन्धित्वविशेषणत्वे विनिगमकमिति वाच्यं क्रियायां बलवदनिष्टासाधनत्वज्ञानतद्गोचरेच्छयोर्हेतुतया बलवदनिष्टासाधनत्वस्येष्टसाधनताविशेषणत्वमते क्रियाविशेष्यकतत्प्रकारकज्ञानान्तरस्य कल्पनीयतया तन्नये कल्पनासाम्यात्। यदि च बलवदनिष्टानुबन्धित्वज्ञानमेव तद्द्वेषसामग्रीत्वेन इच्छाप्रतिबन्धकं न तु तदसाधनत्वज्ञानमिच्छाहेतुस्तदोक्तविशेष्यविशेषणभावे विनिगमकस्य सम्भवेऽपि विशिष्टस्य वाच्यत्वोपगमे तत्र बाधेन तद्विधायकश्रुतेरप्रामाण्यप्रसङ्ग इति शक्तिभेदस्य श्येनस्थले इष्टसाधनताबोधस्य चोपगम आव-

शक्तः। मलिनतापि तत्र बलवदनिष्टसाधनत्वविनिर्मोकेष्टसाधनत्वस्य भानं लिखितं तदभानश्च विशिष्टशक्तिपक्षे न सम्भवति विशिष्टशक्तेर्विशेषणविनिर्मोकेण विशेष्याभासकत्वात्। तद्धर्मप्रकारेण पदार्थविषयकशाब्दबोधे तत्तद्धर्मांशे शक्यतावच्छेदकतापर्य्याप्त्यवगाहिज्ञानस्य हेतुत्वात् अन्यथा विशिष्टसुखादिवाचकस्वर्गादिपदाद्विना लक्षणां केवलसुखत्वादिशाब्दबोधापत्तेः"। "इदन्तु बोध्यं बलवदनिष्टाजनकत्वमत्र न तीव्रदुःखाजनकत्वं बह्वायाससाध्ययागादौ तस्य बाधात् नापि बलवद्द्वेषविषयदुःखाजनकत्वं दुःखमात्रस्य विरक्तानां बलवद्द्वेषविषयत्वेनाऽव्यावर्त्तकतापत्तेः तज्ज्ञानस्याप्रवर्त्तकतया तस्य विधित्वायोगाच्च यत्र बलवान् द्वेषस्तज्जनकताज्ञानत्वेन बलवद्द्वेषविषयत्वेन वा प्रवृत्तिसामान्यं प्रति प्रतिबन्धकत्वात्, परन्तु नरकाजनकत्वं पापाजनकत्वं वा,तद्विरहस्यैव कलञ्जभक्षणादौ नञा बोधनात्" शब्द०प्र०

**कलट** न० कं जलं लटति आदृणोति लट–अच्–ईर०। च्छादने (चाल) तृणादिमये पदार्थे शब्दर०।

**कलतूलिका** स्त्री कं सुखं लाति विषयत्वेन ला–क कलं सुखविषयं कामं तूलयति निष्कर्षति पूरयति वा तूल पूरणे-निष्कर्षे वा ण्वुल्। इच्छावत्याम् स्त्रियां त्रिका०। इच्छायाः सुखविषयत्वेन सुखाधायकत्वात् तत्पूरकत्वात् तन्निष्कर्षकत्वाद्वा तस्यास्तथात्वम्। कलकूजिका कलतूणिका वा अत्र पाठान्तरमस्ति उभयत्र पृषो०साधु।

**कलत्र** न० गड–सेचने अत्रन् आदेश कः डस्य लः, कलं त्रायते त्रै–क–कड–मासने वा० अत्रन् डस्य लो वा। १भार्य्यायाम् "कलत्रवानहं बाले"। "कलत्रवन्तमात्मानमवरोधे महत्यपि" "वसुमत्या हि नृपाः कलत्रिणः" रघुः। "पत्युस्त्रिषामिह महौषधयः कलत्र-स्थानं परैरनभिभूतममूर्वहन्ति" माघः "नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः" मेघ०। २नितम्बे अमरः "कलत्रभारेण विलोलनीविना" किरा०। ३दुर्गस्थाने हेमच०। [कूप्ये राजनि०।]

**कलधूत** न० कलेनावयवेन धौतः शुद्धत्वात् पृषो०।

**कलधौत** न० कलेनावयवेन धौतं शुद्धम्। १स्वर्णे। "वस्त्रं कपोलैः कलधौतधामसम्पाणु भेजे भर्षितदर्पणश्रीः" माघः "व्योमस्पृशः प्रथयता कलधौतभित्तीः" माघः। २रूप्ये च मेदि० "अनतिचिरोज्झितस्य जलदेन चिरस्थितबहुबुद्बुदस्य पयसोऽनुकृतिम्। विरलविकीर्णवज्रशकलान् सकलामिह विदधाति धौतकलधौतमहीम्" "अधिरात्रि यत्र निपतद्भिरोलिरिहां कलधौतधौतशिलवेश्मनां रुचौ" माघः "अमलकलधौतपट्टायितमष्टमीचन्द्रशकलाकारम्" काद०। कलो ध्वनिभेदो धौतः शुद्धोऽत्र। ३कलध्वनौ विश्वः।

**कलध्वनि** पु० कलोध्वनिरस्य। १पारावते २कोकिले ३मयूरे जातित्वात् स्त्रीत्वमपि। ४मधराव्यक्तध्वनियुक्ते त्रि०। कर्म्म०। ५मधराव्यक्तध्वनौ पु०।

**कलन** न० कलयत्यनेन कल-मतौ गत्यर्थस्य ज्ञानार्थत्वात् ज्ञाने करणे ल्युट्। १चिह्ने २वातपित्तादिदोषे च तैः स्वरूपानुमानात् तथात्वम्। ३ग्रहणे ४ग्रासे। "कलनात् सर्वभूतानां स कालः परिकीर्त्तितः" ति०त०विष्णुध०पु०। ५ज्ञाने च "लोकानामन्तकृत् कालः कालोऽन्यः कलनात्मकः" सू०सि०। "कलनात्मकः ज्ञानविषयस्वरूपः ज्ञातुम् शक्य इत्यर्थः" रङ्ग०। "न सोऽस्ति प्रत्ययो लोके यः कालानुगमादृते" इत्युक्तेः ज्ञानमात्रस्य कालविषयकत्वात् तथात्वम्। कं जलं लाति उत्पत्तिसाधनत्वेन तथा सन् नमति नम–वा०ड। ६वेतसवृक्षे पु०राजनि०। तस्य जलसमीपजातत्वात् तत्स्रोतसा नमनाच्च तथात्वम्। "स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः। कलनं(लं)त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम्" भाग०३,३०,३७उक्ते ७एकरात्रेण पच्यमाने गर्भकारणे रेतोविकारभेदे इति शब्दकल्पद्रुमादयः। तच्चिन्त्यम् "आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि। मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम्। कललं जायते तस्याः इति" सुश्रुते "इष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः" सां०कारिकायाम् "कार्य्यं शरीरं तस्यावस्थाः कललबुद्बुदमांसपेशीकरण्डाङ्गप्रत्यङ्गव्यूहाः" कौ०उक्तेश्च तदेकवाक्यतया लकारद्वययुक्तपाठस्यैव भागवतेऽप्युचितत्वेन नकारयुक्तपाठोलिपिकरप्रमादकृतः इति विवेच्यम्

**कलना** स्त्री चु०कल–भावे युच्। १ज्ञाने २ग्रहणे ३आदाने ४आमोचने ५अवमोचने च "पिच्छावचूडाकलनामिषोरः" माघः "कलनामामोचनमवमोचनं वा" मल्लि०।

**कलनाद** पुंस्त्री कलोनादोऽस्य। १राजहंसे राजनि०। स्त्रियां जातित्वात् ङीष्। २कलध्वनियुक्ते त्रि०। कर्मधा०। ३ कलध्वनौ पु०। [जातिशब्दे विवृतिः।

**कलन्दर** पुंस्त्री वर्णसङ्करजातिभेदे स्त्रियां जातित्वात् ङीष्।

**कलन्दिका** स्त्री कं सुखं लाति विषयतया ला–क कलं कामं ददाति दा–क पृषो० मुम् च टाप् अत इत्वम्।

सर्वविद्यायाम् हेमच० । तस्याः सर्व्वसंशयनिराकरणेन कामदातृत्वात्तथात्वम् । [शाके राजनि० ।

**कलन्धु** पु० कलाया मात्रायाः अन्धुरिव शक० । घोली-

**कलभ** पु० करेण शुण्डेन भाति भा—क रस्य लः । "त्रिंश-द्वर्षस्तु कलभ" इति वैजयन्त्युक्ते १गजभेदे । "मुदा रमन्ते कलभा विकस्वरैः" । "इह मुहुर्मुदितैः कलभै रवः" "सकलकलभकुम्भविभ्रमाभ्याम्" माघः । २ पञ्चवर्षे करिपोते सुभूतिः "द्विपेन्द्रभावं कलभः श्रयन्निव" भोघट्-त्तिकलभस्य चेष्टितम्"। "दृष्टो हि वृण्वन् कलभप्रमाणम्" रघुः । "ननु कलभेन यूथपतेरनुकृतम्" मालवि० । "गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः" मेघ० । शावक-मात्रपरत्वेनकरिकलभकरस्फुटिततमालकिशलया मेदिनी" काद० । वयोवाचित्वात् जातित्वात् स्त्रियां ङीप् । कं वातं लभते साधनत्वेन लभ—अच् । धुस्तूरे मेदि० तस्य मादकद्रव्यत्वेन वाताधायकत्वात्तथात्वम्

**कलभवल्लभ** पु० ६त० । पीलुवृक्षे राजनि० । कलभ-प्रियादयोऽप्यत्र । [ङीष् । चञ्चुवृक्षे राजनि० ।

**कलभी** स्त्री कं जलं लभते आश्रयत्वेन लभ—अच् गौरा०

**कलम** पु० कलते अक्षराणि कल—कमच् । १लेखन्याम् जटा-धरः २धान्यभेदे च राजव० । स च "कलमः कलिविख्यातो जायते स हुहुहने । कश्मीरदेश इत्युक्तो महा-तण्डुलगर्भकः" इति भावप्र० उक्तदेशजः । ३उत्खात-प्रतिरोपितधान्यभेदे च । "आपादपद्मप्रणताः कलमा इव ते रघुम् । फलैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः" रघुः "कलमगोपवधूर्न मृगव्रजम्" माघः "तत्र लोहितकशालिकलमकर्दमकपाण्डुकसुगन्धकशकुनाहृतपु-ष्पाण्डकपुण्डरीकमहाशालिशीतभीरुकलोध्रपुष्पकदीर्घशूक-काञ्चनकमहिषमस्तकहायनकदूषकमहादूषकप्रभृतयः शा-लयः । मधुरा वीर्य्यतः शीता लघुपाका बलावहाः । पित्तघ्नाल्पानिलकफाः स्निग्धा बद्धाल्पवर्चसः । तेषां लोहितकः श्रेष्ठो दोषघ्नः शुक्रमूत्रलः । चक्षुष्यो वर्ण्य-बलकृत् स्वर्यो हृद्यस्तृष्णापहः । व्रण्यो ज्वरहरश्चैव सर्व-दोषविषापहः । तस्मादल्पान्तरगुणाः क्रमशः शालयोऽव-राः" सुश्रुते तस्य गुणा उक्ताः । अस्य च रोपितधान्यत्वेन गुणविशेषःभावप्र० उक्तो यथा "रोपितास्तु नवा वृष्याः पुराणा लघवः स्थिराः । तेभ्यस्तु रोपिता भूयः शीघ्रपाकाः गुणाधिकाः" । अस्य शिखा पिङ्गलवर्णा "कपोलदेशे कल-माग्रपिङ्गलाः" इति कुमारे पिङ्गलोपमानत्वेन वर्णनात् । कलयति परस्वं कल—अमच् । ४चौरे पु० मेदि० ।

**कलमोत्तम** पु० ७त० । गन्धशालौ राजनि० ।

**कलम्ब** पु० कल—क्षेपे अम्बच् कड—मदे अम्बच् डस्य लो वा । शाकनाडिकायां तस्या आहारकाले त्यज्यमानत्वात् तथात्वम् । २शरे अमरः तस्य अरिं प्रति क्षिप्यमाणत्वात् तथात्वम् ३कदम्बवृक्षे विश्वः कामिनां मादहेतुत्वात्तथा-त्वम् । संज्ञायां कन् । कलम्बक—धाराकदम्बे राजनि० ।

**कलम्बिका** स्त्री कलम्बीव कायति कै—क संज्ञायां ह्रस्वः । १ग्रीवापश्चाद्भागस्थनाड्यां तस्याः कलम्बीतुल्यशुषिरमध्यत्वात् तथात्वम् । स्वार्थे कन् ह्रस्वः । (कलमी) २शाकभेदे च ।

**कलम्बी** स्त्री के जले लम्बते लबि—अविस्रंसने अच् गौरा० ङीष् । (कलमी) शाकभेदे तस्या जले लम्ब-मानत्वात्तथात्वम् । भावप्र० तद्गुणाद्युक्तं यथा । "कलम्बी शतवर्षी च कथ्यन्ते तद्गुणा अथ । कलमी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी" । ति०त० स्मृतौ अस्याद्य-स्याभक्ष्यत्वमुक्तम् "लम्बी गोमांसतुल्या स्यात् कलम्बी गोवधात्मिका" हरिशयने चास्या अभक्ष्यत्वमभक्ष्य-शब्दे उक्तम् । डलयोरैक्यात् कडम्बीत्यप्यत्र शब्दरत्ना० ।

**कलम्बु(म्बू)** स्त्री के जले लम्बते लबि—उण् ७त० । (कलमी) शाकभेदे शब्दर० । अप्राणिजातिवाचकत्वात् वा ऊङ् ।

**कलम्बुट** न० के जले लम्बते लबि—बा० उट ३त० । १हैयङ्गवीने राजनि० । २नवनीते हारा० । तयोर्जलोपरिप्लवमानत्वात्तथात्वम् ।

**कलरव** पुंस्त्री कलोरवोऽस्य । १पारावते (पायरा) अमरः २कोकिले राजनि० । स्त्रियां जातित्वादुभयतो ङीष् । ३कलध्वनियुक्ते त्रि० मेदि०कर्म० । ४मधुराव्यक्ते रवे पु०

**कलल** पुंन० कल—वृषा० कलच् । १गर्भवेष्टचर्म्मणि अमरः कलनशब्ददर्शितभागवतोक्ते एकरात्रेण पच्यमानगर्भा-द्यवयवभूते २रेतोविकारभेदे । उदा०तत्रैव शब्दे दृश्यम् ।

**कललज** पु० कललमिव जायते जन—ड कर्म० । १राले राजनि० । २गर्भे च ।

**कललजोद्भव** पु० उद्भवत्यस्मात् उद्—भू—अपादाने अप् ६त० । १शालवृक्षे राजनि० । ततो रालरूप-कललजस्योत्पत्तेः तस्य तथात्वम् ।

**कलविङ्क(ङ्ग)** पुंस्त्री कलं वङ्क(ङ्ग)ते वगि(वकि)—गतौ अच् पृषो० अत इत्त्वम् । १चटके खगे, अमरः जाति-त्वेऽपि संयोगोपधत्वात् स्त्रियां टाप् । "ग्रीष्माय कलविङ्कान् वर्षाभ्यस्तित्तिरान्" यजु० २४,२० । "कल-

विङ्कोलोहितादिः पुष्करसादश्च त्वाष्ट्राः” २४,२०। अश्व-मेधपशुदेवकथने। अभक्ष्यप्रकरणे अस्याभक्ष्यतोक्ता मनुना “कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम्” तन्मांसगुणाः तस्य संज्ञाभेदश्च सुश्रुते उक्तो यथा—

चकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रकतित्तिरकुररबाहुकयरलप्रभृतयस्त्वाह्ना विषकरालघवः शीत-मधुराः कषाया दोषशमनाश्च”। सुश्रुतादैर्हननात्त्राहनाः। भावप्र० विशेषतस्तन्मांसगुणा उक्ता यथा—

चटकः कलविङ्कः स्यात् कुलिङ्गः कालकण्ठकः। कुलिङ्गः शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः सन्निपातहरो वेश्मचटकस्यातिशुक्रलः” २कलिङ्गवृक्षे मेदि०।

**कलश** पु० कलं मधुराव्यक्तं ध्वनिं शवति शु-गतौ बा० ड। १घटे। कर्षशब्दे दर्शितभावप्रकाशोक्ते २मानभेदे च।

**कलशदिर्** स्त्री कलशस्य दीर्दरणम् दृ-भावे क्विप्। यज्ञियकलशविदारणे “अथ कलशदिराम् यदि कलशो दीर्येतानुविस्पन्दमिति ब्रूयात्” “यद्युनीतासु दक्षिणासु कलशो दीर्येत तत्राप्येकामेव गां दद्यादथाबभ्यादेवो देव्य पुनर्दीयेत पुनर्यज्ञोऽज्ञेव तत्र प्रायश्चित्तिरिति कलशदिराम्” शत० ब्रा० ४,५,१०,७।

**कलशपोतक** पु० नागभेदे “आर्य्यकस्त्रीचकश्चैव नागः कलश-पोतकः” भा०आ० ३५ अ०।

**कलशि** स्त्री कं जलं लाति ला—क तथा सती शीर्य्यति बा० शॄ-डि। (चाकुलिया) १पृश्निपर्ण्याम् अमरः २घटे हेमच० “कलशिमुदधिगुर्वीं वल्लवा लोडयन्ति” माघः। अस्य इदिकारान्तत्वात् वा ङीप् कलशीत्यप्यमरः।

**कलशीकण्ठ** त्रि० कलश्याः कण्ठ इव कण्ठोऽस्य। १कलशी कण्ठतुल्यकण्ठान्विते २ऋषिभेदे पु० ततः गोत्रप्रत्ययस्य बहुत्व उपका० वा लुक्। कालशीकण्ठयः कलशीकण्ठाः

**कलशीपदी** स्त्री कलशीव पादावस्याः अन्त्यलोपः समा० कुम्भपद्या० ङीप् पद्भावश्च। कुम्भाकारपादयुतायां स्त्रियाम्। [अगस्त्ये मुनौ कुम्भसम्भवशब्दे तत्कथा।

**कलशी(सी)सुत** पु० कलश्याः(स्याः)सुत इव तत्रोत्पन्नत्वात्।

**कलशोदर** पु० कलश इव उदरमस्य। दानवभेदे “सुनाङ्गः खञ्जबाहुश्च वरुणः कलशोदरः” हरिवं० २४०। २कुम्भाकारोदरयुक्ते त्रि० स्त्रियां वा ङीप्।

**कलस** पु० केन जलेन लसति लस—अच् ३त०। १घटे हेमच०। तन्नामनिरुक्तिः “कलां कलां गृहीत्वा तु देवानां विश्वकर्म्मणा। निर्मितोऽयं स वै यस्मात् कलसस्तेन कथ्यते” निर्वाणत० उक्ता। “सागरे मथ्यमाने तु पीयूषार्थं सुरासुरैः। पीयूषधारणार्थाय निर्मितो विश्वकर्म्मणा। कलाः कलास्तु देवानामपि तास्ताः पृथक् पृथक्। यतः कृतास्तु कलसास्ततस्ते परिकीर्त्तिताः” कालि० पु० ८७अ० पुष्पो० साधनम्। कर्मादौ स्थाप्यकलसमानस्तु ग्रा० ति० यथा—“पञ्चाशदङ्गुलो व्यासं उत्सेधः षोडशाङ्गुलः। कलसानां प्रमाणन्तु मुखमष्टाङ्गुलं मतम्। षट्त्रिंशदङ्गुलं कुम्भं विस्तारोन्नतिशालिनम्। षोडशं द्वादशं वापि ततो न्यूनं न कारयेत्”। पुष्पाभिषेके कालिकापु० ८७। पुष्पाभिषेके स्थाप्यघटनामभेदस्तत्स्थापनप्रकारश्च तत्रै-वाध्याये यथा “नवैव कलसाः प्रोक्ता नामतस्तान्निबोधत। गोह्योपगोह्यौ मरुतो मयूखश्च तथाऽपरः। मनोहा कृषि-भद्रश्च विजयस्तनुबोधकः। इन्द्रियघ्नो ऽथ विजयो नवमः परिकीर्त्तितः। तेषामेव क्रमाद्भूप! नव नामानि यानि तु। शृणु तान्यपराख्येव शान्तिदानि सदैव हि। क्षितीन्द्रः प्रथमः प्रोक्तो द्वितीयो जलसम्भवः। पवनाग्नी ततो द्वौ तु यजमानस्ततः परः। कोषसम्भवनामा तु षष्ठः स परिकीर्त्तितः। सोमस्तु सप्तमः प्रोक्तश्चादित्यस्तु तथाष्टमः। विजयो नाम कलसो यो ऽसौ नवम उच्यते। स तु पञ्चमुखः प्रोक्तो माहादेवस्वरूपधृक्। घटस्य पञ्चवक्त्रेषु पञ्चवक्त्रः स्वयं तथा। यथाकाष्ठं स्थितः सम्यक् वामदेवादिनामतः। मण्डलस्य च मध्यान्तः पञ्चवक्त्रघटं न्यसेत्। क्षितीन्द्रं पूर्व्वतो न्यस्य पश्चिमे जलसम्भवम्। वायव्ये वायवं न्यस्य आग्नेये ह्यग्निसम्भवम्। नैरृत्ये यजमानन्तु ऐशान्यां कोषसम्भवम्। सोममुत्तरतो न्यस्य सौरं दक्षिणतो न्यसेत्। न्यस्यैवं कलसांश्चैव तेषु चैतान् विचिन्तयेत्। कलसानां मुखे ब्रह्मा ग्रीवायां शङ्करः स्थितः। मूले तु संस्थितो विष्णुर्मध्ये मातृगणाः स्थिताः। दिक्पाला देवताः सर्व्वे वेष्टयन्ति दिशो दश। कुक्षौ तु सागराः सप्त सप्त द्वीपाश्च संस्थिताः। नक्षत्राणि ग्रहाः सर्व्वे तथैव कुल-पर्व्वताः। गङ्गाद्याः सरितः सर्व्वा वेदाश्चत्वार एव च। कलसे संस्थिताः सर्व्वे तेषु तानि विचिन्तयेत्। रत्नानि सर्व्ववीजानि पुष्पाणि च फलानि च। वज्र मौक्तिकवैदूर्य्यमहापद्मेन्द्रस्फाटिकैः। सर्व्वधान्यमयं विल्वं नागरोडुम्बरं तथा। वीजपूरकजम्बीरकाम्रा-म्रातकदाडिमान्। यवं शालिञ्च नीवारं गोधूमं

यथा "प्रजापतिः षोड़शकलस्तस्य रात्रय एव पञ्चदश-कला ध्रुवैवास्य षोड़शी कला स रात्रिभिरेवा च पूर्य्यते ऽप च चीयते सोऽमावास्यां रात्रिमेतया षोड़श्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेतां रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्य" "योऽयमन्नात्मा प्रजापतिः प्रकृतः स एष संवत्सरात्मना विशेषतो निर्दिश्यते रात्रयः अहोरात्राणि तिथय एव प्रतिपदाद्याः ध्रुवैव नित्यैव व्यवस्थिता। एतासां वित्तत्वं वक्तुं तत्साधर्म्यमाह स चन्द्रात्मा प्रजापतीरात्रिभिरेव प्रतिपदाद्याभिरुपचीयमानाभिः शुक्लपक्षे वर्धते कृष्णपक्षे ताभिरेवापचीयमानाभिः कलाभिरपक्षीयते अमावास्यायां ध्रुवैका कला व्यवस्थिता। एवं कलानां वित्तत्वे सिद्धे तदुपचयापचयौ कर्मेत्यभिप्रेत्याह स कलात्मा प्रजापतिरमावास्यां रात्रिं रात्रौ या ध्रुवा कलात्मावस्थितोक्ता एतया षोड़श्या कलया सर्वमिदं प्राणिजातं स्थावर-जङ्गमात्मकमनुप्रविश्य यदपः पिबति यच्चौषधीरश्नाति तत् सर्वमेवौषध्यात्मना व्याप्यामावास्यां रात्रिमवस्थाय ततोऽपरेद्युः प्रातर्जायते द्वितीयया संयुक्तो भवति एवमसौ प्रजापतिः पाङ्क्तात्मकः संवृत्तः एवं प्रजापतेः पाङ्क्तकर्मफलत्वमुक्त्वा प्रासङ्गिकमर्थमाह तस्मादिति प्राणिनं न प्रमापयेत् कृकलासस्यापि सरटस्यापि प्राणं न विच्छिन्द्यात्" भा०। चन्द्रकलानां नामभेदादिकमनुपदं वक्ष्यते। "सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते" "ज्योत्स्नान्तराणीव कलान्तराणि"। "कला च सा कान्तिमती कला(व)भृतः" कुमा०। "कलासमग्रेण गृहा-नमुञ्चता" "कलादधानः सकलाः स्वभाभिरुद्भासयन् सौधसिताभिराशाः" "निधिरम्भसामुपचयाय कलाः" इति च माघः कलाधरः कलाभृत् कलानिधिः कलावान्। २अवयवमात्रे च। "सोमसूर्य्याग्निभेदेन मातृकावर्णसम्भवाः। अष्टत्रिंशत्कलास्तत्तन्मण्डलेषु व्यवस्थिताः" शा० ति०। "सोममण्डलस्य षोड़शकलता सूर्य्यमण्डलस्य द्वादशकलता वह्निमण्डलस्य दशकलतोक्ता" तासां नामानि ध्येयरूपाणि च तत्र दर्शितानि यथा—

"अमृता मानदा पूषा तुष्टिःपुष्टीरतिर्धृतिः। शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा। पूर्णा पूर्णामृता कामदायिन्यः स्वरजाः कलाः १६। तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः। सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा। कभाद्या वसुदाः सौराः ठान्ता द्वादशेरिताः १२। "धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी। सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि। डादीनां दशवर्णानां कला धर्मप्रदा इमाः" १०। अभयेष्टकराध्येया श्वेतपीतारुणाः क्रमात्"।

तथा अकारोकारमकारनादविन्द्वात्मकप्रणवस्य पञ्चाशत्-कलात्मकतामुक्त्वा तन्नामधेयरूपाण्यपि तत्रोक्तानि यथा— "तारस्य पञ्चभेदस्य पञ्चाशद्वर्णगाः कलाः। सृष्टिर्ऋद्धिः-स्मृतिर्मेधा कान्तिर्लक्ष्मीर्धृतिः स्थिरा। स्थितिः सिद्धि-रिति प्रोक्ता कचवर्गकलाः १० क्रमात्। अकाराद्-ब्रह्मणोत्पन्नास्तप्तचामीकरप्रभाः। एताः करधृताक्ष-स्रक्पङ्कजद्वयकुण्डिकाः। जरा च पालिनी शान्तिरैश्वरी रतिकामिके। वरदा ह्लादिनी प्रीतिर्दीर्घा स्युष्टतवर्गजाः १०। उकाराद्विष्णुनोत्पन्नास्तमालदलसन्निभाः। अभीतिशङ्ख-चक्रेष्टबाहवः परिकीर्त्तिताः। तीक्ष्णा रौद्री भया निद्रा तन्द्रा क्षुत् क्रोधिनी क्रिया। उत्कारी मृत्युरेताः स्युः कथिताः पबवर्गजाः १०। रुद्रेण मार्णादुत्पन्नाः शरच्चन्द्रसमप्रभाः। उद्वहन्त्योऽभयं शूलं कपालं बाहु-भिर्वरम्। ईश्वरेणोदिता विन्दोःपीताश्वेताऽरुणाऽसिताः ४। अनन्तास्ताःशवर्गस्था जवाकुसुमसन्निभाः। अभयं हरिणं टङ्कं दधाना बाहुभिर्वरम्। निवृत्तिः सुप्रतिष्ठा स्याद्विद्या शान्तिरनन्तरम्। इन्धिका दीपिका चैव रेचिका मोचिका-परा। सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायिनी तथा। व्यापिनी व्योमरूपा स्युरनन्ताः स्वरसंगताः १६। सदाशिवेन संजातानादादेताः सितत्विषः। अक्षस्रक्पुस्तकगुणरूपा खाङ्गकराम्बुजाः। न्यासे तु योजयेदादौ षोड़श स्वरजाः कलाः। इति पञ्चाशदाख्याताः कलाः सर्वसमृद्धिदाः" कल्यते ज्ञायतेऽनेन। अंशतुल्ये ३उपाधिभेदे च। "तस्मै सहोवाच इहैवान्तःशरीरे सौम्य! स पुरुषो यस्मिन्नेताः षोड़श कलाः प्रभवन्तीति" प्रश्नोपनिषत्। "तस्मै स होवाच। इहैवान्तः शरीरे हृदयपुण्डरी-काकाशमध्ये हे सौम्य! स पुरुषो न देशान्तरे विज्ञेयो यस्मिन् एता उच्यमानाः षोड़श कलाः प्राणाद्याः प्रभ-वन्त्युत्पद्यन्त इति षोड़शकलाभिरुपाधिरूपाभिः सकल इव निष्कलः पुरुषो लक्ष्यते ऽविद्ययेति" भाष्यम्। "पुरुषस्य षोड़शकलत्वं न साक्षात्सावयवत्वेन, किन्तु कलाजनकत्वेन तदुपाधिमत्त्वादिति वक्तुं यस्मिन्नेता इति वाक्यतात्पर्य्यमाह षोडशकलाभिरिति" आनन्द०

यथा च पुरुषस्य षोडशकलत्वं तथोक्तं तत्रैव

प्रश्नोपनिषदि शङ्कराचार्य्यकृततद्भाष्ये च यथा—

“स ईक्षाञ्चक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति” उप०। “तदुपाधिकलाध्यारोपापनयनेन विद्यया स पुरुषः केवलो दर्शयितव्य इति कलानां तत्प्रभवत्वमुच्यते । प्राणादीनामत्यन्तनिर्व्विशेषे ह्यद्वये शुद्धे तत्त्वे शक्यतेऽध्यारोपमन्तरेण प्रतिपाद्यप्रतिपादनादिव्यवहारः कर्त्तुमिति कलानां प्रभवस्थित्यप्यया आरोप्यन्ते अविद्याविषयाश्चैतन्याव्यतिरेकेणैव हि कला जायमानास्तिष्ठन्त्यः प्रलीयमानाश्च सर्व्वदा लक्ष्यन्ते । अत एव भ्रान्ताः केचिदग्निसंयोगाद्घृतमिव घटाद्याकारेण चैतन्यमेव प्रतिक्षणं जायते नश्यतीति तन्निरोधे शून्यमिव सर्व्वमिति । अपरे घटादिविषयं चैतन्यं चेतयितुर्नित्यस्यात्मनोऽनित्यं जायते विनश्यतीति । अपरे चैतन्यं भूतधर्म्म इति लौकायतिकाः । अनपायोपजननधर्म्मकचैतन्यमात्मैव नामरूपाद्युपाधिधर्म्मैः प्रत्यवभासते । “सत्यं ज्ञानमानन्दं ब्रह्म” “विज्ञानघन एवेत्यादि”श्रुतिभ्यः । स्वरूपाव्यभिचारात् यथा यथा यो यः पदार्थो विज्ञायते तथा तथा ज्ञायमानत्वादेव तस्य तस्य चैतन्यस्याव्यभिचारित्वं वस्तु च भवति किञ्चिन्न ज्ञायत इति चानुपपन्नम् । रूपञ्च दृश्यते न चास्ति चक्षुरिति वत् । व्यभिचरति तु ज्ञानं, ज्ञेयं न व्यभिचरति कदाचिदपि । ज्ञेयाभावेऽपि ज्ञेयान्तरभावाज्ज्ञानस्य । न हि ज्ञानेऽसति ज्ञेयं नाम भवति कस्यचित् सुषुप्तेऽदर्शनात् ज्ञानस्यापि सुषुप्तेऽभावाज्ज्ञेयाज्ज्ञानस्वरूपस्य व्यभिचार इति चेन्न । ज्ञेयावभासकस्य ज्ञानस्यालोकवज्ज्ञेयाभिव्यञ्जकत्वात् स्वव्यङ्ग्याभावे आलोकाभावानुपपत्तिवत् सुषुप्ते विज्ञानाभावानुपपत्तेः । न ह्यन्धकारे चक्षुषो रूपानुपलब्धौ चक्षुषोऽभावः शक्यः कल्पयितुमवैनाशिकेन । वैनाशिको ज्ञेयाभावे ज्ञानाभावं कल्पयत्येवेति चेत् ? येन तदभावं कल्पयेत्तस्याभावः केन कल्प्यत इति वक्तव्यम् वैनाशिकेन । तदभावस्यापि ज्ञेयत्वाज्ज्ञानाभावे ज्ञानाभाव इति चेत् ? न, अभावस्यापि ज्ञेयत्वाभ्युपगमादभावोऽपि ज्ञेयोऽभ्युपगम्यते वैनाशिकैः, नित्यञ्च तदव्यतिरिक्तञ्चेज्ज्ञानं नित्यं कल्पितं स्यात्तदभावस्य च ज्ञानात्मकत्वादभावत्वं वाङ्मात्रमेव न परमार्थतोऽभावत्वमनित्यत्वं च ज्ञानस्य । न च नित्यस्य ज्ञानस्याभावोनाममात्राध्यारोपे किञ्चिच्छिन्नम् । अथाभावो ज्ञेयोऽपि सन् ज्ञानव्यतिरिक्त इति चेन्न तर्हि ज्ञेयाभावे ज्ञानाभावः ज्ञेयं ज्ञानव्यतिरिक्तं न तु ज्ञानं ज्ञेयव्यतिरिक्तमिति चेन्न । शब्दमात्रत्वाद्विशेषानुपपत्तेः । ज्ञेयज्ञानयोरेकत्वञ्चेदभ्युपगम्यते—ज्ञेयं ज्ञानव्यतिरिक्तं न ज्ञेयव्यतिरिक्तं ज्ञानम् ज्ञेयव्यतिरिक्तं नेति तु शब्दमात्रमेव तद्वह्निरग्निव्यतिरिक्तोऽग्निर्न वह्निव्यतिरिक्त इति यद्वदभ्युपगम्य ज्ञेयव्यतिरेके तु ज्ञानस्य ज्ञेयाभावे ज्ञानाभावानुपपत्तिः सिद्धा । ज्ञेयाभावेऽदर्शनादभावो ज्ञानस्येति चेन्न सुषुप्तेरित्यभ्युपगमात् । वैनाशिकैरभ्युपगम्यते हि सुषुप्तेऽपि विज्ञानास्तित्वं, तत्रापि ज्ञेयसत्त्वमभ्युपगम्यते ज्ञानस्य स्वेनैवेति चेन्न भेदस्य सिद्धत्वात् । सिद्धं ह्यभावज्ञेयविषयस्य ज्ञानस्याभावज्ञेयव्यतिरेकाज्ज्ञेयज्ञानयोरन्यत्वम् । न हि तत्सिद्धं मृतमिवोज्जीवयितुं पुनरन्यथा कर्त्तुं शक्यते वैनाशिकशतैरपि ज्ञानस्य ज्ञेयत्वमेवेति । तदप्यन्येन तदप्यन्येनेति त्वत्पक्षेऽतिप्रसङ्ग इति चेन्न तद्विभागोपपत्तेः । सर्व्वस्य यदा हि सर्व्वं ज्ञेयं कस्यचित्तदा तद्व्यतिरिक्तं ज्ञानं ज्ञानमेवेति द्वितीयो विभाग एवाभ्युपगम्यतेऽवैनाशिकैः । न तृतीयस्तद्विषय इत्यनवस्थानुपपत्तिः ज्ञानस्य स्वेनाविज्ञेयत्वे सर्व्वज्ञत्वहानिरिति चेत् ? सोऽपि दोषस्तस्यैवास्तु किन्तन्निवर्हणेनास्माकमनवस्थादोषश्च ज्ञानस्य ज्ञेयत्वाभ्युपगमादवश्यञ्चैव वैनाशिकानां ज्ञानं ज्ञेयम् स्वात्मना चाविज्ञेयत्वेनानवस्थाऽनिवार्य्या । समान एवायं दोष इति चेन्न ज्ञानस्यैकत्वोपपत्तेः । सर्व्वदेशकालपुरुषाद्यवस्थमेकमेव ज्ञानं नामरूपाद्यनेकोपाधिभेदात् सवित्रादिजलादिप्रतिबिम्बवदनेकतयावभासत इति । नाऽसौ दोषः । तथा चेदिहेदमुच्यते । ननु श्रुतेरिहैवान्तःशरीरे परिच्छिन्नः कुण्डवदरवत्पुरुष इति, न प्राणादिकलाकारणत्वात् । न हि शरीरमात्रपरिच्छिन्नस्य प्राणस्य श्रद्धादीनां कलानां कारणत्वं प्रतिपत्तुं शक्यात् । कलाकार्य्यत्वाच्च शरीरस्य । न हि पुरुषकार्य्याणां कलानां कार्य्यं सच्छरीरं कारणकारणं स्वस्य पुरुषं कुण्डवदरमिवाभ्यन्तरं कुर्य्यात्, वीजवत्स्यादिति चेत् ? यथा वीजकार्य्यो वृक्षस्तत्कार्य्यञ्च फलं स्वकारणकारणं वीजमभ्यन्तरीकरोत्याम्रादि तद्वत्पुरुषमभ्यन्तरीकुर्य्यात् शरीरं स्वकारणकारणमपीति चेन्न अन्यत्वात् सावयवत्वाच्च । दृष्टान्ते कारणवीजाद्वृक्षफलसंवृत्तान्यन्यान्येव

बीजानि दार्ष्टान्तिके तु खकारणकारणभूतः स एव पुरुषः शरीरेऽभ्यन्तरीकृतः श्रूयते। बीजवृक्षादीनां सावयवत्वाच्च स्यादाधाराधेयत्वं निरवयवस्य पुरुषः सावयवाश्च कलाः शरीरञ्च एतेनाकाशस्यापि शरीराधारत्वमनुपपन्नं किमु-ताकाशकारणस्य पुरुषस्य तस्मादसमानो दृष्टान्तः! किन्दृष्टान्तेन वचनात् स्यादिति चेन्न वचनस्याकारक-त्वात्। न हि वचनं वस्तुनोऽन्यथाकरणे व्याप्रियते किन्तर्हि यथाभूतार्थावद्योतने। तस्मादन्तः शरीर इत्येतद्वचनं अण्डस्यान्तर्व्योमेतिवच्च द्रष्टव्यम्। उपलब्धिनिमित्तत्वाच्च। दर्शनश्रवणमननविज्ञानादिलिङ्गैरन्तःशरीरे परिच्छिन्न इव ह्युपलभ्यते चात उच्यते—अन्तःशरीरे सोम्य! स पुरुष इति। न पुनराकाशकारणं सन् कुण्डवदरवच्छ-रीरपरिच्छिन्न इति मनसापीच्छति वक्तुं मूढोऽपि! किमुत प्रमाणभूता श्रुतिः। यस्मिन्नेताः षोडश कलाः प्रभवन्तीत्युक्तं पुरुषविशेषणार्थं कलानां प्रभवः, स चान्यो-ऽर्थोऽपि श्रुतः केन क्रमेण स्यादित्यत इदमुच्यते। चैतन-पूर्विका च सृष्टिरित्येवमर्थं च पुरुषः षोडशकलः पृष्टो यो भारद्वाजेन, स ईक्षाञ्चक्रे ईक्षणं दर्शनं चक्रे कृतवा-नित्यर्थः। सृष्टिफलक्रमादिविषयं कथमित्युच्यते कस्मिन् कर्त्तृविशेषे देहादुत्क्रान्तो भविष्याम्यहमेव वा कस्मिन्वा शरीरे प्रतिष्ठितेऽहं प्रतिष्ठास्यामि प्रतिष्ठितः स्यामित्यर्थः"।

"स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम्। मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म-लोका लोकेषु च नाम च" उपनि०।

"नन्वात्माऽकर्त्ता, प्रधानं कर्तृ, अतः पुरुषार्थं प्रयो-जनमुररीकृत्य प्रधानं प्रवर्त्तते महदाद्याकारेण, तत्रेद-मनुपपन्नं पुरुषस्य स्वातन्त्र्येणेक्षापूर्ब्बकं कर्तृत्ववचनं सत्वादिगुणसाम्ये प्रधाने प्रमाणोपपन्ने सृष्टिकर्त्तरि सति ईश्वरेच्छानुवर्त्तिषु परमाणुषु सत्स्वात्मनोऽप्येकत्वेन कर्तृत्वे साधनाभावादात्मन आत्मन्यनर्थकर्तृत्वानुपपत्तेश्च। न हि चेतनावान् बुद्धिपूर्ब्बकार्य्यात्मनोऽनर्थं कुर्य्यात्, तस्मात्पुरुषार्थेन प्रयोजनेनेक्षापूर्ब्बकमिव नियतक्रमेण प्रवर्त्तमानेऽचेतने प्रधाने चेतनवदुपचारोऽयं—स ईक्षाञ्चक्रे इत्यादिः। यथा राज्ञः सर्वार्थकारिणि भृत्ये राजेति इति चेत्? नात्मनो भोक्तृत्ववत्कर्तृत्वोपपत्तेः। यथा साङ्ख्यस्य चिन्मात्रस्यापरिणामिनोऽप्यात्मनो भोक्तृत्वं तद्वद्वेदवादि नाभीष्टादिपूर्व्वकं जगत्कर्तृत्वमुपपन्नं श्रुतिप्रामाण्यात्। तत्त्वान्तरपरिणामादात्मनोऽनित्यत्वाशुद्धत्वानेकत्वनिमित्त-चिन्मात्रस्वरूपविक्रियातः पुरुषस्यात्मन्येव भोक्तृत्वे चिन्मात्रस्वरूपविक्रिया न दोषाय। भवतां पुनर्वेदवादिनां सृष्टिकर्तृत्वे तत्त्वान्तरपरिणाम एवेत्यात्मनोऽनित्यत्वादि-सर्वदोषप्रसङ्ग इति चेन्न, एकस्याप्यात्मनोऽविद्याविषयनाम-रूपोपाध्यनुपाधिकृतविशेषाभ्युपगमादविद्याकृतनामरूपो-पाधिकृतो हि विशेषोऽभ्युपगम्यते आत्मनोबन्धमोक्षादि-शास्त्रकृतसंव्यवहाराद्युपरमार्थं" परमार्थतोऽनुपाधिकृतञ्च तत्त्वमेकमेवाद्वितीयमुपादेयं सर्वतार्किकबुद्ध्यनवगाह्यमभयं शिवमिष्यते न तत्र कर्तृत्वं भोक्तृत्वं वा क्रियाकारक-फलञ्च स्यादद्वैतत्वात्सर्वभावानाम्। साङ्ख्यास्त्वविद्याध्या-रोपितमेव पुरुषे कर्तृत्वं क्रियाकारकं फलञ्चेति कल्प-यित्वाऽऽगमवाह्यत्वात् सन्त्रस्तस्ततः परमार्थत एव भोक्तृत्वं पुरुषस्येच्छन्ति तत्त्वान्तरञ्च प्रधानं पुरुषात् परमार्थवस्तुभूतमेव कल्पयन्तोऽन्यतार्किकनिराकृतबुद्धिविषयाः सन्तो विहन्यन्ते। तथेतरे तार्किकाः साङ्ख्यैरित्येवं पर-स्परविरुद्धार्थकल्पनात् आमिषार्थिन इव प्राणिनोऽन्योन्यं विरुध्यमाना अर्थदर्शित्वात् परमार्थतत्त्वाद् दूरमेवापकृष्यन्ते-ऽतस्तन्मतमनादृत्य वेदान्तार्थतत्त्वमेकत्वदर्शनं प्रत्यादर-वन्तो मुमुक्षवः स्युरिति तार्किकमते दोषदर्शनं किञ्चिदुच्यते ऽस्माभिः न तु तार्किकतात्पर्य्येण तथैतत् अत्रोक्तम्। "विव-दत्सु खेऽवनिश्चित्य विरोधोद्भवकारणम्। तैः संरक्षित-सद्बुद्धिः सुखं निर्व्वाति वेदवित्"। किञ्च—भोक्तृत्वकर्तृ-त्वयोर्विक्रिययोर्विशेषानुपपत्तिः। का नामासौ कर्तृ-त्वाज्जात्यन्तरभूता भोक्तृत्वविशिष्टा विक्रिया यतो भोक्तैव पुरुषः कल्प्यते न कर्त्ता। प्रधानन्तु कर्त्रेव न भोक्त्रिति ननूक्तं पुरुषश्चिन्मात्र एव स्वात्मस्थो विक्रियते भुञ्जानोऽ-नन्तान्तरपरिणामेन। प्रधानन्तु तत्त्वान्तरपरिणामेन विक्रियतेऽतोऽनेकमशुद्धमचेतनञ्चेत्यादिधर्म्मवत्तद्विपरीतः पुरुषः। नाऽसौ विशेषो वाङ्मात्रत्वात्प्राग्भोगोत्पत्तेः। केवलचिन्मात्रस्य पुरुषस्य भोक्तृत्वं नाम विशेषो भोगो-त्पत्तिकाले चेज्जायते निवृत्ते च भोगे पुनिषक्तद्वादशे-पेतश्चिन्मात्र एव भवतीति चेन्महदाद्याकारेण च परिणम्य प्रधानं ततोऽपेत्य पुनः प्रधानं स्वरूपेणावतिष्ठत इति अस्यां कल्पनायां न कश्चिद्विशेष इति वाङ्मात्रेण प्रधानपुरुषयोर्विशिष्टविक्रिया कल्प्यते। अथ भोगकाले-ऽपि चिन्मात्र एव प्राग्वत्पुरुष इति चेत्? न तर्हि परमार्थतो भोगः पुरुषस्य। भोगकाले चिन्मात्रस्य विक्रिया परमार्थैव, तेन भोगः पुरुषस्येति चेन्न प्रधान-

स्यापि भोगकालेऽविक्रियत्वाद्भोक्तृत्वप्रसङ्गः । चिन्मात्रस्यैव विक्रिया भोक्तृत्वमिति चेदौष्ण्याद्यसाधारणधर्मवतामग्न्यादीनामभोक्तृत्वे हेत्वनुपपत्तिः । प्रधानपुरुषयोर्युगपद्भोक्तृत्वमिति चेन्न प्रधानस्य पारार्थ्यानुपपत्तेः । न हि भोक्त्रोर्द्वयोरितरेतरगुणप्रधानभाव उपपद्यते प्रकाशयोरिवेतरेतरप्रकाशने । भोगधर्मवति सत्त्वाङ्गिनि चेतसि पुरुषस्य चैतन्यप्रतिबिम्बाद्योऽविक्रियस्य पुरुषस्य भोक्तृत्वमिति चेन्न पुरुषस्य कस्यापनयनार्थं मोक्षसाधनं शास्त्रं प्रणीयतेऽविद्याध्यारोपितानर्थापनयनाय शास्त्रप्रणयनमिति चेत् ? परमार्थतः पुरुषो भोक्तैव न कर्त्ता प्रधानं कर्त्रैव न भोक्तृ परमार्थसद्वस्त्वन्तरं पुरुषाच्चेतीयं कल्पना ऽऽगमबाह्या व्यर्था निर्हेतुका च इति नादर्त्तव्या मुमुक्षुभिः । एकत्वेऽपि शास्त्रप्रणयनाद्यानर्थक्यमिति चेन्न अभावात् । न हि शास्त्रप्रणेत्रादिषु तत्फलार्थिषु च शास्त्रस्य प्रणयनमनर्थकं सार्थकञ्चेति कल्पना स्यात् । न ह्यात्मैकत्वे शास्त्रप्रणेत्रादयस्ततोऽभिन्नाः सन्ति तदभावे एवं विकल्पनैवानुपपन्नाः । अभ्युपगते आत्मैकत्वे प्रमाणार्थश्चाभ्युपगतो भवता यदात्मैकत्वमभ्युपगच्छता । तदभ्युपगमे च कल्पनानुपपत्तिमाह शास्त्रम् । "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् ?" इत्यादिशास्त्रप्रणयनाद्युपपत्तिश्चाह । अन्यत्र परमार्थवस्तुस्वरूपादविद्याविषये "यत्र हि द्वैतमिव भवतीत्यादि" । विस्तरतो वाजसनेयके । विभक्ते विद्याऽविद्ये परापरे इत्यादावेव शास्त्रस्यातो न तार्किकवादभटप्रवेशः वेदान्तराजप्रमाणबाहुगुप्ते इहात्मैकत्वविषय इति । एतेनाविद्याकृतनामरूपाद्युपाधिकृतानेकशक्तिसाधनकृतभेदवत्त्वाद्ब्रह्मणः सृष्ट्यादिकर्तृत्वे साधनाद्यभावो दोषः प्रत्युक्तो वेदितव्यः परैरुक्त आत्मानर्थकर्तृत्वादिदोषश्च । यस्तु दृष्टान्तो राज्ञः सर्वार्थकारिणि कर्तृत्वाद्युपचाराद्राजा कर्त्तेति सोऽत्रानुपपन्नः । "स ईक्षाञ्चक्रे" इति श्रुतेर्मुख्यार्थबाधनात्प्रमाणभूतायाः तत्र हि गौणी कल्पना । शब्दस्य, यत्र मुख्यार्थो न सम्भवति । इह त्वचेतनस्य मुक्तबद्धपुरुषविशेषानपेक्षया कर्तृकर्मदेशकालनिमित्तापेक्षया च बन्धमोक्षादिफलार्था नियता पुरुषं प्रति प्रवृत्तिर्नोपपद्यते । यथोक्तसर्वज्ञेश्वरकर्तृत्वपक्षे तूपपन्ना, ईश्वरेणैव सर्वाधिकारी प्राणः पुरुषेण सृज्यते । कथं ? स पुरुष उक्तप्रकारेणेक्षित्वा प्राणं १हिरण्यगर्भाख्यं सर्वप्राणिकरणाधारमन्तरात्मानमसृजत सृष्टवान्, अतः प्राणात् श्रद्धां २सर्वप्राणिनां शुभकर्मप्रवृत्तिहेतुभूताम् । ततः कर्मफलोपभोगसाधनाधिष्ठानानि कारणभूतानि महाभूतान्यसृजत । खं ३शब्दगुणं वायुं ४स्वेन स्पर्शेन कारणगुणेन च विशिष्टं द्विगुणम् । तथा ज्योतिः५ स्वेन रूपेण पूर्वाभ्याञ्च शब्दस्पर्शाभ्याम् विशिष्टं त्रिगुणं तथाऽऽपो६रसेन गुणेनासाधारणेन पूर्वगुणानुप्रवेशेन चतुर्गुणाः । तथा गन्धेन पूर्वगुणानुप्रवेशेन पञ्चगुणा पृथिवी७ । तथा तैरेव भूतैरारब्धमिन्द्रियं ८ द्विप्रकारं बुद्ध्यर्थं कर्मार्थञ्च दशसङ्ख्यम् । तस्य चेश्वरमन्तःस्थं संशयसङ्कल्पादिलक्षणं मनः९ । एवं प्राणिनां कार्यं करणञ्च सृष्ट्वा तत्स्थित्यर्थं व्रीहियवादिलक्षणमन्नम् १० । ततश्चाद्यमानाद्वीर्यं ११ सामर्थ्यं बलं सर्वकर्मप्रवृत्तिसाधनम् । तद्वीर्यवताञ्च प्राणिनां तपः १२विशुद्धिसाधनं सङ्कीर्यमाणानां, मन्त्रा१३स्तपोविशुद्धान्तर्बहिःकरणेभ्यः कर्मसाधनभेता ऋग्यजुःसामाथर्वाङ्गिरसः । ततः कर्म१४ अग्निहोत्रादिलक्षणम् । ततो लोकाः१५ कर्मणां फलम् । तेषु च सृष्टानां प्राणिनां नाम१६च देवदत्तो यज्ञदत्त इत्यादि । एवमेताः कलाः प्राणिनामविद्यादिदोषबीजापेक्षया सृष्टास्तैमिरिकदृष्टिसृष्टा इव द्विचन्द्रमशकमक्षिकाद्याः स्वप्नदृक्सृष्टा इव च सर्वे पदार्थाः पुनस्तस्मिन्नेव पुरुषे प्रलीयन्ते हित्वा नामरूपादिविभागम्" भा० ।

"स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोड़श कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते, स एषोऽकलोऽमृतो भवति, तदेष श्लोकः"

"कथं स दृष्टान्तः ? यथा लोके इमा नद्यः स्यन्दमानाः स्रवन्त्यः समुद्रायणाः समुद्रोऽयनं गतिरात्मभावो यासां ताः समुद्रायणाः समुद्रं प्राप्योपगम्यास्तं नामरूपतिरस्कारं गच्छन्ति । तासाञ्चास्तं गतानां भिद्येते विनश्येते नामरूपे गङ्गायमुनेत्यादिलक्षणे । तद्भेदे समुद्र इत्येवं प्रोच्यते । तद्वस्तूदकलक्षणमेव, यथाऽयं दृष्टान्तः । उक्तलक्षणस्य प्रकृतस्य पुरुषस्य परिद्रष्टुः परि समन्ताद्द्रष्टुर्दर्शनस्य कर्त्तुः स्वरूपभूतस्य । यथार्कः स्वात्मप्रकाशस्य कर्त्ता तद्वद्, इमाः षोड़श कलाः प्राणाद्याः उक्ताः कलाः पुरुषायणा नदीनामिव समुद्रः पुरुषोऽयनमात्मभावगमनं यासां कलानां ताः पुरुषायणाः पुरुषं प्राप्य पुरुषात्मभावमुपगम्य तथैवास्तं गच्छन्ति । भिद्येते तासां नामरूपे कलानां प्राणाद्याख्या रूपञ्च । यथास्तभेदे च

नामरूपयोर्यदनष्टं तत्त्वं पुरुष इत्येव प्रोच्यते ब्रह्म-विद्भिः। य एवं विद्वान् गुरुणा प्रदर्शितकलप्रलय-मार्गः स एष विद्यया प्रविलापिताश्वविद्याकामकर्म-जनितासु प्राणादिकलाखमृतोऽविद्याकृतकलानिमित्तो हि मृत्युस्तदपगमेऽकलत्वादेवामृतो भवति। तदेतदर्थे एष श्लोकः” भा०।

“अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः। तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथ” उप०।

“अरा रथचक्रपरिकरा इव रथनाभौ रथचक्रस्य नाभौ यथा प्रवेशितास्तदाश्रया भवन्ति यथा तथेत्यर्थः। कलाः प्राणाद्या यस्मिन् पुरुषे प्रतिष्ठिता उत्पत्तिस्थितिलय-कालेषु तं पुरुषं कलानामात्मभूतं वेद्यं वेदनीयं पूर्ण-त्वात् पुरुषं पुरि शयनाद्वा वेद जानीयात्। यथा हे शिष्या वो युष्मान्मृत्युर्मा परिव्यथा मा परिव्यथयतु। व्यथामापन्ना दुःखिन एव यूयं स्थ अतस्तन्मा भूद् युष्मा-कमित्यभिप्रायः” भा०।

तथा च प्राणः१ श्रद्धा२ व्योम३ वायुः४ तेजः५ जलं६ पृथिवी७ इन्द्रियं८ मनः९ अन्नम्१० वीर्यम् ११ तपः१२ मन्त्राः१३ कर्म१४ लोकः१५ नाम१६ इत्येता प्राणादिनामान्ताः षोडश कलाः पुरुषस्य उपा-धय इति स्थितम्। “गताः कलाः पञ्चदश प्रतिष्ठाम्” श्रुतिः ३अंशमात्रे च “प्राची दिक् कला दक्षिणा दिक् कलोदीची-दिक्कलैष सौम्य! चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवा-नित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह लोकाञ्जयति य एत मेवंविद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते” “पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सौम्य! चतुष्कलः पादोब्रह्मणोऽ-नन्तवान्नाम। स य एतमेवंविद्वांश्चतुष्कलं पादं ब्रह्मणोऽ-नन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो-ऽनन्तवानित्युपास्ते”। “अग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सौम्य! चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणोज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते”। “प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सौम्य! चतु-ष्कलः पादोब्रह्मण आयतनवान्नाम स य एतमेवं विद्वां-श्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते आय-तनवानस्मिँल्लोके भवत्यायतनवतो लोकाञ्जयति य एतमेवं-विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते”। अवतारग्रन्थे भूरि उदाहरणम् दृश्यम्।

पलद्वयात्मके ४कालांशभेदे स च सि०शि०दर्शितोयथा—
“योऽक्ष्णोर्निमेषस्य खराम३०भागः स तत्परस्तच्छतभाग उक्ता। त्रुटिर्निमेषैर्धृतिभि१८स्य काष्ठा तत्त्रिंशता सद्ग-णकैः कलोक्ता। त्रिंशत्कलाऽऽर्चौ घटिका क्षणः स्यान्नाडी-द्वयं तैः खगुणैः३०दिनं च। गुर्वक्षरैः खेन्दुमितैः१०रसुस्तैः षड्भिः पलं तैर्घटिका खषड्भिः६०। स्याद्वा घटीषष्टिरहः खरामैः३०मीसो दिनैस्तैर्द्विकुभि१२श्च वर्षम्। चोक्ते समा-द्येन समा विभागाः स्युश्चक्रराश्यंशकलाविलिप्ताः” शि०।
“योऽक्ष्णोर्लोचनयोः पक्ष्मपातः स निमेषः। स यावता कालेन निष्पद्यते तावान् कालोऽपि निमेषशब्देनो-च्यते उपचारात्। तस्य त्रिंशद्विभागस्तत्परसंज्ञः तत्परस्य शतांशस्त्रुटिरिति। अथ च निमेषैरष्टादशभिः काष्ठा। क्वचिच्छास्त्रान्तरे तिथिभिरिति पाठः। काष्ठा० त्रिंशता कलोक्ता। कलानां त्रिंशता घटिका। सा-चार्चौ भभ्रमस्य षष्टिभाग इत्यर्थः। घटिकाद्वयेन क्षणो मुहूर्त्तः। क्षणानां त्रिंशता दिनम्। अथ प्रकारान्तरेण दिनमुच्यते। गुर्वक्षरैः खेन्दुमितैः१०असु-रिति। एकमात्रोलघुः द्विमात्रो गुरुः। तथा “सानु-स्वारो विसर्गान्तो दीर्घोयुक्तपरस्तु यः” इति छन्दो-लक्षणे प्रतिपादितम् यदक्षरं सानुस्वारं विसर्गान्तं दीर्घं यस्माक्षरस्य परतः संयोगस्तल्लघ्वपि गुरुसंज्ञं ज्ञेय-म्। गुर्वक्षरस्योच्चार्यमाणस्य यावान् कालस्तद्दशकेनै-कोऽसुः प्राणः। प्रशस्तेन्द्रियपुरुषस्य श्वासोच्छ्वासा-न्तर्वर्त्ती कालइत्यर्थः। षड्भिः प्राणैरेकं पानीयपलम्। पलानां षष्ट्या घटी। घटीनां षष्ट्या दिनम्। त्रिंशद्दि-नैरेकोमासः। मासैर्द्वादशभिर्वर्षमिति कालस्य विभागो दर्शितः” प्रमि०। “अह्नोऽस्तमयवेलायां कलामात्रापि या तिथिः” कालमा०व्यासः। “प्रतिपत्त्रिंशमात्रेण कला-मात्रेण चाष्टमी” पठन्ति। “स च त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन् धातावविष्ठते” इति सुश्रु०। “अष्टादश सहस्राणि संख्या चास्मिन् समुच्चये। कलानां नवतिः प्रोक्ता” सुश्रु०।

“विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते।

तच्चिंशता भवेद्राशिर्भगणोद्वादशैव ते" सू० सि०। उक्ते राशिचक्रस्य २१६००० मिते भागे च "क्षेत्रे समा-द्येन समा विभागा इत्यादि" शि० क्षेत्रे कक्षायां समाद्येन वर्षाद्येन समास्तुल्याः क्षेत्रविभागा ज्ञेयाः। ते के। भक्राशंभकलाविलिप्ताः। यथैकस्य वर्षस्य मासदिनादयो विभागा एवं भगणस्य राश्यंशादयः" प्रमि०। सि० शि० उक्ते दिनमानज्ञानोपयोगिनि दिनज्यागुणिते व्यासार्द्धभक्ते सूत्रात्मके ६ पदार्थे च यथा—

"उक्ता प्रमाभिमतदिङ्नियमेन तावत् तामेव कालनियमेन च वच्मि भूयः। स्यादुन्नतं द्युगतशेषकयोर्यदल्पं तेनोनितं दिनदलं नतसंज्ञकं च। अथोन्नतादून-युताच्चरेण क्रमादुदग्दक्षिणगोलयोर्ज्या। स्यात् सूत्रमेतद्गुणितं द्युमौर्व्या व्यासार्धभक्तं च कलाभिधानम्"शि० "दिवसस्य यद्गतं यच्च शेषं तयोर्यदल्पं तदुन्नतसंज्ञं ज्ञेयं तेनोन्नतेनोनीकृतं दिनदलप्रमाणं नतसंज्ञं भवति। अथोन्नतादुन्नतकालादुत्तरगोले चरेणोनितात् दक्षिणे युताद्या ज्या तत् सूत्रम् सा सूत्रसंज्ञेत्यर्थः। तत् सूत्रं द्युज्यया गुणितं त्रिज्यया भक्तं कलासंज्ञं भवति। अत्रोपपत्तिः। यस्मिन् काले छाया साध्या तस्मिन् काले स्वाहोरात्रवृत्ते यावतीभिर्घटिकाभिः क्षितिजादुन्नतो रविस्तासामुन्नतसंज्ञा। येन कालेन मध्याह्नान्नतस्तस्य नतसंज्ञा। अथ चरेण मध्याह्नान्नतयुतस्योन्नतकालस्य किल ज्या साध्या सा च ज्यामध्यावधिर्भवति। स च मध्यप्रदेशोऽहोरात्रवृत्तस्योन्मण्डलसंपाते भवति। यत उन्मण्डलसंपाताभ्यामूर्ध्वमहोरात्रवृत्तस्यार्धमधोऽर्धम्। अत उन्मण्डलावधिर्ज्या साध्या। क्षितिजोन्मण्डलयोरन्तरं चरार्धम्। अतश्चरार्धेन वर्जितादुन्नतादुत्तरगोले, दक्षिणे तु युतात्। यत उत्तरगोले क्षितिजादुपर्युन्मण्डलम्" दक्षिणेऽधः। तस्मात् कालाद् या ज्या साधिता सा त्रिज्यावृत्तपरिणता। सा च सूत्रसंज्ञा। अथ यदि त्रिज्यावृत्ते एतावती, तदा द्युज्यावृत्ते कियतीत्यनुपातेन द्युज्यावृत्तपरिणता। सा च कलासंज्ञा। इदानीं प्रकारान्तरेण कला तस्याश्चेष्टयष्टिमाह" प्रमि०। "सूत्रं कुजीवागुणितं विभक्तं चरज्यया स्यादथवा कला सा। कला पलक्षेत्रजकोटिनिघ्नी तत्कर्णभक्ता भवतीष्टयष्टिः" शि०। "अथवा तत् सूत्रं कुज्यया गुणितं चरज्यया भक्तं सत् कला भवति। सा कलाऽथवा पलक्षेत्रकोटिभिर्गुणिता स्वस्वकर्णेन भाज्या फलमष्टयष्टिर्भवति। अत्रोपपत्तिः। अत्र चरज्या-कुज्ये त्रिज्याद्युज्यापरिणते। अतस्ताभ्यां चानुपातः। यदि चरज्यया कुज्या लभ्यते तदा सूत्रेण किमिति। फलं कला। सा कलाऽहोरात्रवृत्ते ज्या। सा पलवशादक्षकर्णवत् तिरश्चीनां जाता। अथ तस्याः कोटिसूत्रमात्रमानेयम्। तत्रानुपातः। यदि पलक्षेत्रकर्णेन तत्कोटिर्लभ्यते तदा कलाकर्णेन किमिति। फलसुन्मण्डलमङ्कुपसमस्त्रादुपर्यर्कबिम्बादध ऊर्ध्वं कोटिरूपं भवति। तस्येष्टयष्टिसंज्ञा" प्रमि०।

"स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा। श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः। धात्वाशयान्तरे धातोर्यः क्लेदस्त्वधितिष्ठति। देहोष्मणाभिपक्वश्च सा कलेत्यभिधीयते" भावप्र० उक्ते देहस्थे धात्वाशयान्तरस्थे ७धातुक्लेदभेदे तद्भेदाश्च तत्रैवोक्ताः। "आद्या मांसधरा प्रोक्ता द्वितीया रक्तधारिणी। मेदोधरा तृतीया तु चतुर्थी श्लेष्मधारिणी। पञ्चमी च मलं धत्ते षष्ठी पित्तधरा मता। रेतोधरा सप्तमी स्यादिति सप्त कलाः स्मृताः" ८एकमात्रात्मकलघुवर्णे "षड्विधमेऽष्टौ समे कलास्ताश्च समेऽस्युर्नो निरन्तराः। न समात्र पराश्रिता कला" "सर्वगुर्वन्तमध्यादिगुरवोऽत्र चतुष्कलाः। गणाश्चतुर्लघूपेता पञ्चार्यादिषु संस्थिताः" इति च छन्द०। "ऋणप्रयोगे मूलधनादधिके आयत्वेनाधमर्णेन उत्तमर्णाय दीयमाने १०वृद्धिरूपे (सुद) पदार्थे मेदि०। "मासे शतस्य यदि पञ्च कलान्तरं स्यात्" लीला० ११स्त्रीरजसि १२नौकायां १३कपटे च विश्वः। १४गीतादिविद्याभेदे सा च चतुःषष्टिविधा शैवतन्त्रोक्ता यथा—१गीतम् २वाद्यम् ३नृत्यम् ४नाट्यम्। ५आलेख्यम् ६विशेषकच्छेद्यम् ७तण्डुलकुसुमबलिविकाराः ८पुष्पास्तरणम् ९ दशनवसनाङ्गरागाः १० मणिभूमिकाकर्म ११ शयनरचनम् १२ उदकवाद्यम् १३ उदकघातः १४ चित्रायोगाः १५ माल्यग्रथनविकल्पाः १६ केशशेखरापीडयोजनम् १७ नेपथ्ययोगाः १८ कर्णपत्रभङ्गाः १९ गन्धयुक्तिः २० भूषणयोजनम् २१ इन्द्रजालम् २२ कौचुमारयोगाः २३ हस्तलाघवम् २४ चित्रशाकापूपभक्ष्यविकारक्रिया २५ पानकरसरागासवयोजनम् २६ सूचीवापकर्म २७ वीणाडमरुकसूत्रक्रीडा २८ प्रहेलिका २९ प्रतिमा ३० दुर्वचकयोगाः ३१ पुस्तकवाचनम् ३२ नाटिकाख्यायिकादर्शनम् ३३ काव्यसमस्यापूरणम्

३४ पट्टिकावेत्रबाणविकल्पाः ३५ तर्कूकर्माणि ३६ तक्षणम् ३७वास्तुविद्या ३८ रूप्यरत्नपरीक्षा ३९ धातुवादः ४० मणिरागज्ञानम् ४१ आकरज्ञानम् ४२ वृक्षायुर्वेदयोगाः ४३ मेषकुक्कुटलावकयुद्धविधिः ४४ शुकसारिकाप्रलापनम् ४५ उत्सादनम् ४६ केशमार्जनकौशलम् ४७ अक्षरमुष्टिकाकथनम् ४८ म्लेच्छितक विकल्पाः ४९ देशभाषाज्ञानम् ५० पुष्पशकटिकानिमित्तज्ञानम् ५१ (अत्र निमित्तज्ञानमिति पृथक् केचित् पठन्ति)। यन्त्रमातृका ५२ धारणमातृका ५३ सम्पाट्यम् ५४ मानसी काव्यक्रिया ५५ क्रियाविकल्पाः ५६ छलितकयोगाः ५७ अभिधानकोषच्छन्दोज्ञानम्। ५८ वस्त्रगोपनानि ५९ द्यूतविशेषः ६० आकर्षणक्रीडा ६१ बालकक्रीडनकानि ६२ वैनायिकीनां विद्यानां ज्ञानम् ६३ वैजयिकीनां विद्यानां ज्ञानम् ६४ वैतालिकीनां विद्यानां ज्ञानम् इति भाग० १० ४५ अ० ३८ श्लो० टीकायां श्रीधरलिखिताः। क्वचित् पुस्तके सूचीवापकर्मसूत्रक्रीडेत्येकं पदम् तदुत्तरं वीणाडमरुकवाद्यानीति। वैतालिकीनामित्यत्र वैयासिकीनामिति च पाठो दृश्यते। "अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः" भाग० १०, ४५, ३८। "चतुःषष्ठ्यङ्गमदत् कलाज्ञानं ममाद्भुतम्" भा० अनु० १८ अ०। "अधिगत कलाकलापकम्" काद०। "चतुःषष्टिकलाविद्या ईश्वरीप्रीतिवर्द्धनम्" गायत्रीकवचम्।

**कलाकुल** न० कलया मात्रयापि आकुलयति आकुलि—नामधा० अच्। हलाहलविषे राजनि०।

**कलाकेलि** पु० कलेव केलिरस्य। कामदेवे त्रिका०।

**कलाङ्कुर** पुंस्त्री कलस्याङ्कुरो यत्र। १सारसपक्षिणि त्रिका० जातित्वात् स्त्रियां ङीष्। कलानामङ्कुरो यत्र। २स्तेयशास्त्रप्रवर्त्तके मूलदेवे कर्णीसुते त्रिका०। मूलदेवस्य स्तेयरूपशिल्पप्रवर्त्तकत्वात् कलाङ्कुरत्वम्। कंसासुरे इति शब्दकल्पद्रुमोक्तिश्चिन्त्या कर्णीसुतशब्दे विवृतिः।

**कलाङ्गला** स्त्री "शतोमराङ्कुशा राजन्! शतघ्नीकलाङ्गलेति" भा० व० १५ अ० १६ श्लोके तादृशशब्दं कल्पयन् स्त्रीयलिङ्गबुधो भ्रान्तः। तत्र शतघ्न्या सहितं सशतघ्नीकं "नद्यृतः कप्" पा० कप्। तादृशं लाङ्गलं यत्र सशतघ्नीकलाङ्गला इत्यर्थकतया न तस्य कलाङ्गलशब्दघटितत्वमिति बोध्यम्।

**कलाची** स्त्री कलामचति गच्छति अच—गतौ अण् उप० समा० गौरा० ङीष् पा० मुग्धबो० मण् णित्त्वात् ईप्। इतिभेदः। प्रकोष्ठे कफोणेरधःस्थे मणिबन्धपर्य्यन्तहस्तावयवे। स्वार्थे कन्। कलाचिकाप्यत्र हेमच०।

**कलाटीन** पुंस्त्री कलेनाटनम् आटः कलाटस्तत्र साधुः ख। कर्काङ्के पक्षिभेदे हारा० जातित्वात् स्त्रियां ङीष्।

**कलाजाजी** स्त्री कलायै जायते जन—ड तथा सती आजायते जन—ड गौरा० ङीष्। (कलौञ्जा) (मङ्गरैला) पाश्चात्त्यभाषाप्रसिद्धे वृक्षभेदे शब्दचि०।

**कलाद** पु० कलामंशमादत्ते आ—दा—क। स्वर्णकारे अमरः अलङ्कारगठनार्थं गृहीतधनस्यांशहरणात्तस्य तथात्वम्।

**कलादक** पु० कलामत्ति अद—ण्वुल् ६त०। स्वर्णकारे शब्दच० गठनार्थं दत्तद्रव्यांशस्य भोजित्वात्तस्य तथात्वम्।

**कलाधर** पु० कलाः धरति धृ—अच् ६त०। १चन्द्रे। २चतुःषष्टिकलाधारकमात्रे त्रि०।

**कलानिधि** क० कलानिधीयतेऽस्मिन् नि+धा—आधारे कि उपप० स०। चन्द्रे अमरः। "अहो महत्त्वं महतामपूर्व्वं विपत्तिकालेऽपि परोपकारः। यथाऽऽस्यमध्ये पतितोऽपि राहोः" "कलानिधिः पुण्यचयं ददाति" उद्भटः।

**कलानुनादिन्** पु० कलमनुनदति अनु+नद—णिनि ६त०। १भ्रमरे २चटके ३कपिञ्जले ४चातके च जातित्वात् स्त्रीत्वमपि तत्र नान्तत्वात् ङीप्।

**कलान्तर** पु० अन्या कला अंशः मयू० स०। वृद्धिभेदे "मासे शतस्य यदि पञ्च कलान्तरं स्यादिति" लीलावती, २अन्यस्यां चन्द्र कलायाञ्च, "ज्योत्स्नान्तराणीव कलान्तराणि" कुमा०।

**कलान्यास** पु० कलानां न्यासः। तन्त्रोक्ते न्यासभेदे कलाश्च कलाशब्दे दर्शिताः शारदातिलकोक्तरीत्या तासां पूजाकृतया न्यासः। देहे कलाविशेषस्य न्यासश्च यथा—
तन्त्रसारे "शिष्यशरीरे कलान्यासं कुर्य्यात्। तद्यथा ईशत्रयेण पादतलाज्जानुपर्य्यन्तम् ओं निवृत्त्यै नमः। जानुयनोनाभिपर्य्यन्तम् ओं प्रतिष्ठायै नमः। नाभेराकण्ठम् ओं विद्यायै नमः कण्ठादाललाटम् ओं शान्त्यै नमः ललाटाद्ब्रह्मरन्ध्रपर्य्यन्तम् ओं शान्त्यतीतायै नमः। पुनर्ब्रह्मरन्ध्रादाललाटम् ओं शान्त्यतीतायै नमः ललाटादाकण्ठम् ओं शान्त्यै नमः। कण्ठान्नाभिपर्य्यन्तम् ओं विद्यायै नमः नाभेर्ज्जानुपर्य्यन्तम् ओं प्रतिष्ठायै नमः जानुनः पादपर्य्यन्तम् ओं निवृत्त्यै नमः।

**कलाप** पु० कलां मात्रामाप्नोति आप्-अण्। १समूहे, २मयूरपिच्छे, ३भूषणे, ४काञ्च्याम्, ५चन्द्रे, मेदिनि० तत्र समूहे "मुक्ताकलापीकृतसिन्धुवारम्" कुमा०। "अधिगतकला-

कलापकम्" वर्हे "आलम्बिभिश्चन्द्रकिणः कलापैः"। "दृष्टेव निर्ज्जितकलापभरामधस्तात् व्याकीर्णमाल्यकबरां कबरीं तरुण्याः" माघः। भूषणे "मुक्ताकलापस्य च निस्तलस्य" कुमा० "मुक्ताकलापस्य मुक्ताभूषणस्य" मल्लि०। काञ्च्याम् "रशनाकलापगुणेन बधूः" माघः। ६तूणे तूणस्य शरपूर्णः चर्म्ममयः भस्त्राकृपः यथाह "कलापिनः" कात्या० २२,३,१८, व्या० "कलापशब्देन शरभूर्णा चर्म्ममयी भस्त्रोच्यते" कर्कः। "कलापी चषालः" आश्व० श्रौ०६,७,१८, "सा मेथी अयप्रदेशे धान्यपूलैर्बद्धा तिष्ठति स एव चषालो भवति" नारा० वृत्युक्तेः धान्यपूलानां शरतुल्यत्वारोपेण बहुशरवत्त्वगुणयोगात्तूणवत्त्वम् इति तया च गौण्या चषालस्य कलापित्वम्। ७शरे "कलापिनौ धनुष्पाणी शोभमानौ दिशोदश" रामा०१,२२,७,अत्रार्थे क्लीवत्वमपि "परीप्समान; पार्थानां कलापानि धनूंषि च"भा०व०१६७अ०। ८धनुषि। "हारिद्रवर्णा ये त्वेते हेमपुङ्खाः शिलाशिताः (शराः:)। नकुलस्य कलापोऽयं पञ्चशार्दूलचलक्षणः। "येनाशौ व्यजयत् कृत्स्नां प्रतीचीं दिशमाहवे" भा० वि०६५अ०नकुलास्त्रकथने। ९अर्द्धचन्द्राकारास्त्रभेदे च "खड्गांश्च दीप्तान् दीर्घांश्च कलापांश्च महाधनान्। विपाठान् क्षुरधारांश्च धनुर्भिर्निदधुः सह" भा०वि०५अ०। कलापः कार्त्तिकेयमयूरपिच्छः उत्पत्तिस्थानत्वेनास्त्यस्य अच्। १०व्याकरणभेदे कार्त्तिकेयमयूरपिच्छयोनित्वात्तस्य तथात्वम्। "अधुना स्वल्पतन्त्रत्वात् कातन्त्राख्यं भविष्यति। तद्वाहनकलापस्य नाम्ना कालापकं तथा" बृहत्कथा सारः। ११ग्रामभेदे। "देवापिर्योगमास्थाय कलापग्राममास्थितः। सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति" भाग०६,१२,१३, "सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य मरुः सुतः। योऽसावास्ते योगसिद्धः कलापग्राममास्थितः। कलेरन्ते सूर्य्यवंशं नष्टं भावयिता पुनः" भाग०६,१२,५,"सत्यभामा तथैवान्या देव्यः कृष्णस्य सम्मताः। वनं प्रविविशूराजंस्तपसे कृतनिश्चयाः। फलमूलादिभोजिन्यो हरिध्यानैकतत्पराः। हिमवन्तमतिक्रम्य कलापग्राममाविशन्" भा० मौ०७अ०। तेनास्य हिमवदुत्तरपार्श्वे सन्निवेश इति गम्यते।

चन्द्रे तु कलामाप्नोति आप-अण् कलां पाति पा—क वा व्युत्पत्तिः। तस्य कलापतित्वात् कलाधारत्वाच्च तथात्वम् १४विदग्धे त्रि० मेदि०विविधकलाधरत्वात्तस्य तथात्वम्।

**कलापक** पु० कलाप+स्वार्थे कन्। १कलापार्थे, २हस्तिस्कन्धबन्धे, हेमच० एकवाक्यतापन्ने ३श्लोकचतुष्के न०। "छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकम्। द्वाभ्यां युग्मक्ञ सन्दानितकं त्रिभिरिष्यते। कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्" सा०द०उक्तेः किराते उदा०। "लोकं विधाता विहितस्य गोप्तुं क्षत्त्रस्य मुष्णन् वसु जैत्रमोजः। तेजस्विताया विजयैकवृत्तेर्निघ्नन् प्रियं प्राणमिवाभिमानम् १। व्रीडानतैराप्तजनोपनीतः संशय्य कृच्छ्रेण नृपैः प्रपन्नः। वितानभूतं विततं पृथिव्यां यशः समूहन्निव दिग्विकीर्णम् २। वीर्य्यावदानेषु कृतावमर्षस्तन्वन्नभूतामिव सम्प्रतीतिम्। कुर्वन् प्रयामक्षयमायतीनामर्कत्विषामह्न इवावशेषः ३। प्रसह्य योऽस्मासु परैः प्रयुक्तः स्मर्त्तुं न शक्यः किमुताधिकर्त्तुम्। नवीकरिष्यत्युपशुष्यदार्द्रः स त्वद्विना मे हृदयं निकारः४"। कलापिनो मयूरार्यस्मिन् काले सोऽपि कालः कलापी उपचारात् तस्मिन् काले देयमृणम् "कलाप्यश्वत्थयवबुषाद्वुन्" पा०वुन्। कलापक २तत्काले देये ऋणे न०सि०कौ०।

**कलापद्वीप** पु०कलापो ग्रामो द्वीप इव दुरूहत्वात्। कलापग्रामे स च ग्रामः हिमवन्तमतिक्रम्य उत्तरत्र वर्त्तमानः कलापशब्दे दर्शितः। "अग्निवर्णसुतः शीघ्रः शीघ्रस्य तु मरुः सुतः। मरुस्तु योगमास्थाय कलापद्वीपमास्थितः" हरिवं० १५ अ०। अस्यैव कलापग्रामत्वेन भाग० ६, १२, उक्तिः तत्र वाक्यं कलापशब्दे दर्शितम्।

**कलापिन्** पु०कलापोवर्होऽस्यास्ति इनि।१मयूरे तद्वर्हतुल्यशाखावति२वटवृक्षे मेदि०। ३आप–णिनि कलस्यापी हेम०। ३कोकिले। "ध्वनिरुत्कूजितकलाः कलापिनः" माघः। "कलापिनामुद्धतनृत्यहेतौ"रघुः। ४कलापशब्दार्थवति त्रि० कलापशब्दे रामायणादिवाक्यमुदाहृतम्। स्त्रियां ङीप्। ४वैशम्पायनान्तेवासिभेदे पु० तदन्तेवासिनश्च आलम्बः लङ्गः कमलः ऋचाभरुणि ताण्ड्यः श्यामायनः कठः कलापीति कलापिनोऽन्तेवासिनश्च हरिद्रुम्भिगलो तुम्बुरुरुलपश्चेति चत्वारः" मनो०। "कलापिवैशम्पायनान्तेवासिभ्यः" पा० तेन प्रोक्तमधीयते णिनि। कलापिनस्तत्प्रोक्ताध्येतृषु ब०व०।

**कलापिनी** स्त्री कलापश्चन्द्रोऽस्त्यस्याम् इनि। १रात्रौ राजनि० कलापतुल्याकारवत्त्वात् २नागरमुस्तायां राजनि०।

**कलापूर्ण** पु०कलाभिः पूर्णः। १चन्द्रे शब्दचन्द्रिका। २कलाभिः पूर्णे त्रि०। "सदा भवान् फाल्गुनस्य गुणैरस्मान्

विकथते । न चार्ज्जुनः कलापूर्णः मम दुर्य्योधनस्य च” भा० वि० ३९अ० ।

**कलाभृत्** कलां बिभर्त्ति भृ–क्विप् ६त० । कलाधारके चन्द्रे हेम० “कला च सा कान्तिमती कलाभृ(व)तः”कुमा० । २शिल्पादिधारके त्रि० । “दयावद्दास्य पौरस्य पश्चावद्दास्यं कलाभृताम्” मनुः ।

**कलाय** पु० कलामयते अय–अण् । (मटर) १शमीधान्यभेदे । “कलायोमधुरः स्वादुः पाके रूक्षश्च शीतलः । कषायो वातलोग्राही कफपित्तहरो लघुः” भावप्र० तद्गुणाः । “कलायपरिमण्डलमुभयतोमुकुलायम्” सुश्रु० । “विकसत्कलायकुसुमासितद्युतेः” माघः २गण्डदूर्व्वायां स्त्री ।

**कलायन** पु० कलानामयनं यत्र । नर्त्तकभाले शब्दच०

**कलालाप** पुंस्त्री कलमालपति आ+लप–अण् उप०स० । १भ्रमरे । राजनि० । स्त्रियां जातित्वात् ङीष् । ६त० २कलसालापे पु०

**कलावत्** पु० कला अमृतादिकाः सन्त्यस्य मतुप् मस्य वः । १चन्द्रे “कला च कान्तिमती कलाव(भृ)तः” कुमा० २गीतादिकलायुक्तमात्रे त्रि० स्त्रियां ङीप् ।

**कलावती** स्त्री शा०ति० ४पटलोक्ते दीक्षाभेदे । सा च “अथ दीक्षां प्रवक्ष्यामि मन्त्रिणां हितकाम्यया । विनाऽनया न जायेत सर्व्वमन्त्रफलं ततः । ज्ञानं दिव्यं यतोदद्यात् कुर्य्यात् पापक्षयं यतः । तस्माद्दीक्षेति सा प्रोक्ता देशिकैस्तन्त्रवेदिभिः । चतुर्विधा सा सन्दिष्टा क्रियावत्यादिभेदतः । क्रियावती वर्णमयी कलात्मा वेधवत्यपि । ताः क्रमेणैव कथ्यन्ते तन्त्रेऽस्मिन् सम्प्रदायतः” इत्युपक्रम्य दर्शिता । तत्र कलात्मा कलाशब्ददर्शितशारदातिलकोक्तपद्यायतकलावतीत्यर्थः । कलात्मत्वम् ।

**कलाविक** पुंस्त्री कलेन सम्यक् विकायति विशेषेण शब्दायते आ+वि+कै–क ३त० । कुक्कुटे त्रिका० तस्य रात्रिशेषे विशेषेण शब्दायमानत्वात् तथात्वम् । स्त्रियां जातित्वात् ङीष् ।

**कलाविकल** पुंस्त्री कलेनाविकलः । चटके शब्दर० स्त्रियां जातित्वात् ङीष् । [काहलवाद्ये शब्दरत्ना० ।

**कलाहक** पु० कलमाहन्ति आ+हन् क्विप् संज्ञायां कन् ।

**कलि** पु०कल–शब्दादौ इन् । चतुर्थे युगे तन्मानमाह पुराणसर्व्वस्वे मत्स्यपु० । “दिव्यवर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् । चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे । चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् । दिव्याब्दानां सहस्राणि युगेष्वाहुः पुराविदः । तत्प्रमाणैः शतैः सन्ध्या पूर्व्वा तत्राभिधीयते । सन्ध्यांशकश्च तत्तुल्यो-युगस्यानन्तरोहि सः । सन्ध्यासन्ध्यांशयोरन्तः कालोयः मुनिसत्तम ! । युगाख्यं तत्तु विज्ञेयं कृतत्रेतादिसंज्ञितम्” । सूर्य्यसिद्धान्तेऽप्युक्तं यथा–“सूर्य्याब्दसङ्ख्यया द्वित्रिसागरैरयुताहतैः । सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम् । कृतादीनां व्यवस्थेयं धर्म्मपादव्यवस्थया” सू०सि० । “तेषां दिव्यवर्षाणां द्वादश सहस्राणि चतुर्युगम् । चतुर्णां युगानां कृतत्रेताद्वापरकलियुगानां समाहारो योगस्तदात्मकं महायुगमित्यर्थः । एतद्द्योतनार्थं चतुरित्युक्तिरन्यथा युगमित्युक्तौ तदंशस्यापत्तेः । मानाभिन्नत्वक्रम् । अथ सौरमानेन तत्संख्यां विशेषं चाह । सूर्य्याब्दसङ्ख्ययेति तद्दिव्यासुरमानेनोक्तं चतुर्युगं द्वादशसहस्रात्मकं महायुगं सन्ध्यासन्ध्यांशसहितम् । युगचरणस्याद्यान्तयोः क्रमेण प्रत्येकं सन्ध्यासन्ध्यांशाभ्यां युक्तं सदैव सन्ध्यासन्ध्यांशावन्तर्गतौ न पृथक् यत्तैतादृशम् । सौरवर्षप्रमाणेन द्वित्रिसागरैः । “अङ्कानां वामतो गतिः”इत्यनेन द्वात्रिंशदधिकैशतः शतमितैः । अयुतेन दशसहस्रेण गुणितैः । खचतुष्कद्वात्रिंशच्चतुर्भिः ४३२००००परिमितं ज्ञेयमित्यर्थः । अथ चतुर्युगान्तर्गतयुगाकृपीणां विशेषतो मानाश्रवणात् “समं स्यादश्रुतत्वादिति” न्यायेन प्रत्येकं महायुगचतुर्थांशो मानमिति चतुर्युगमित्यनेन फलितं निषेधति । कृतादीनामिति । कृतत्रेताद्वापरकलियुगानाम् धर्म्मपादव्यवस्थया धर्म्मचरणानां स्थित्या । इयं वक्ष्यमाणा व्यवस्था स्थितिर्ज्ञेया न तु समकालप्रमाणं स्थितिः । अयमर्थः—कृतयुगे चतुश्चरणो धर्म्म इति तस्य मानमधिकम् । ततस्त्रेतायां धर्म्मस्य त्रिपादत्वात् तदनुरोधेन त्रेतामानं न्यूनम् । एवं द्वापरकल्योधर्म्मस्य क्रमेण द्व्येकचरणत्वात् कृतत्रेतामानाभ्यां क्रमेणोक्तानुरोधान्न्यूनमानम् । न तु समं मानमिति । अथ सर्वधर्मचरणयोगेन दशमितेन यदि महायुगं भवति तर्हि स्वस्वधर्मचरणैः किमित्यनुपातेन पूर्वोक्तफलितेन कृतादियुगानां मानज्ञानं सविशेषमाह”। रङ्ग० । तेन ४३२००० वर्षात्मकमानम् । “युगस्य दशमो भागश्चतुस्त्रिद्व्येकसङ्गुणः । क्रमात् कृतयुगादीनां षष्ठांशः सन्ध्ययोः स्वकः” सू०सि० ।

"प्रागुक्तदिव्यवर्षद्वादशसहस्रमितस्य युगस्य दशमो भागो दशांश इत्यर्थः। चतुर्हा क्रमेण चतुस्त्रिद्व्येकैर्गुणित : । गुणक्रमात् कृतयुगादीनां कृतत्रेताद्वापरकलियुगानां मानं स्यादिति शेषः। ननु मनुग्रन्थे कृतादिमानं दिव्यवर्षप्रमाणेन ४०००।३०००।२०००।१००० उक्तम्। अत्र तु तन्मानं तद्वर्षप्रमाणेन ४८००। ३६००। २४००। १२००। इति विरोध इत्यत आह। षष्ठ इति। स्वकः स्वसम्बन्धो षष्ठो विभागः सन्ध्ययोराद्यन्तसन्ध्ययोरैक्यकाल इति शेषः। तथा च मदुक्तमानानि ४८००। ३६००। २४००। १२००। एषां षडंशाः ८००।६००।४००।२००। एते स्वस्वयुगानामाद्यन्तयोः सन्ध्ययोर्योग इत्येषामर्धं सन्धिकालः। प्रत्येकमाद्यन्तयोः सन्धिकालः ४००।३००।२००।१००। अनेन प्रत्येकं मदुक्तमानं न्यूनीकृतं ग्रन्थान्तरोक्तं केवलं मानं भवति न स्वसन्धिभ्यां सहितम्। यथा कृतादिसन्धिः ४००। कृतमानम् ४००० कृतान्तसन्धिः ४००। योगे ४८०० त्रेतादिसन्धिः ३०० त्रेतामानं ३००० त्रेतान्तसन्धिः ३००। ३६००द्वापरादिसन्धिः २००द्वापरमानं २००० द्वापरान्तसन्धिः २००२४००। कल्यादिसन्धिः१००कलिमानम् १००० कल्यन्तसन्धिः १००। १२०० एवं च स्वसन्धिभ्यां सहितं मयोक्तं स्वसम्बन्धात् सन्ध्ययोस्तदन्तर्गतत्वाच्चेति न विरोध इति भावः" रङ्ग०।

कलौ यथा प्राणिनां दुःशीलत्वम् धर्म्मादिहानिश्च तथा वर्णितम् भा०व०१९०अ०"कृते चतुष्पात् सकलो निर्व्याजोपाधिवर्जितः। वृषः प्रतिष्ठितो धर्म्मो मनुष्ये भरतर्षभ !। अधर्म्मपादविद्धस्तु त्रिभिरंशैः प्रतिष्ठितः। त्रेतायां द्वापरेऽर्द्धेन व्यामिश्रो धर्म उच्यते। त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति। तामसं युगमासाद्य तदा भरतसत्तम !। चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति। आयुर्व्वीर्य्यमथो बुद्धिर्बलन्तेजश्च पाण्डव !। मनुष्याणामनुयुगं ह्रसतीति निबोध मे। राजानो ब्राह्मणा वैश्या शूद्राश्चैव युधिष्ठिर !। व्याजैर्धर्म्मञ्चरिष्यन्ति धर्मवैतंसिका नराः। सत्यं संक्षेप्स्यते लोके नरैः पण्डितमानिभिः। सत्यहान्या ततस्तेषामायुरल्पं भविष्यति। आयुषः प्रक्षयाद्विद्यां न शक्ष्यन्त्युपजीवितुम्। विद्याहीनानविज्ञानाल्लोभोऽप्यभिभविष्यति। लोभक्रोधपरा मूढ़ाः कामासक्ताश्च मानवाः। वैरबद्धा भविष्यन्ति परस्परबधेप्सवः। ब्राह्मणाः क्षत्रिया वैश्याः संकीर्य्यन्ते परस्परम्। शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्ज्जिताः। अन्त्या मध्या भविष्यन्ति, मध्याश्चान्त्या न संशयः। ईदृशो भविता लोको युगान्ते पर्य्युपस्थिते। वस्त्राणां प्रवरा शाणी, धान्यानां कोरदूषकाः। भार्य्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये। मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजैड़कम्। गोषु नष्टासु पुरुषा येऽपि नित्यं धृतव्रताः। तेऽपि लोभसमायुक्ता भविष्यन्ति युगक्षये। अन्योऽन्यं परिमुष्णन्तो हिंसयन्तश्च मानवाः। अजपा नास्तिकाः स्तेना भविष्यन्ति युगक्षये। सरित्तीरेषु कुद्दालैर्वापयिष्यन्ति चौषधीः। ताश्चाप्यल्पफलास्तेषां भविष्यन्ति युगक्षये। श्राद्धे दैवेऽपि पुरुषा येऽपि नित्यं धृतव्रताः। तेऽपि लोभसमायुक्ता भोक्ष्यन्तीह परस्परम्। पिता पुत्रस्य भोक्ता च, पितुः पुत्त्रस्तथैव च। अतिक्रान्तानि भोज्यानि भविष्यन्ति युगक्षये। न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः। न यक्ष्यन्ति न होष्यन्ति हेतुवादविमोहिताः। निम्नेप्वीहां करिष्यन्ति हेतुवादविमोहिताः। निम्ने कृषिं करिष्यन्ति योक्ष्यन्ति धुरि धेनुकाः। एकहायनवत्सांश्च योजयिष्यन्ति मानवाः। पुत्रः पितृबधं कृत्वा पिता पुत्त्रबधं तथा। निरुद्वेगो बृहद्वादी न निन्दामुपलप्स्यते। म्लेच्छभूतं जगत्सर्वं निष्क्रियं यज्ञवर्ज्जितम्। भविष्यति निरानन्दमनुत्सवमथो तथा। प्रायशः कृपणानां हि तथा बन्धुमतामपि। विधवानाञ्च वित्तानि हरिष्यन्तीह मानवाः। स्वल्पवीर्य्यबलाः स्तब्धा लोभमोहपरायणाः। तत्कथादानसन्तुष्टा दुष्टानामपि मानवाः। प्रतिग्रहं करिष्यन्ति मायाचारपरिग्रहाः। समाह्वयन्तः कौन्तेय ! राजानः पापबुद्धयः। परस्परबधोद्युक्ता, मूर्खाः पण्डितमानिनः। भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टकाः। अरक्षितारो लुब्धाश्च मानाहङ्कारदर्पिताः। केवलं दण्डरुचयो भविष्यन्ति युगक्षये। आक्रम्याक्रम्य साधूनां दारांश्चापि धनानि च। भोक्ष्यन्ते निरनुक्रोशा रुदतामपि भारत !। न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते। स्वयंग्राहा भविष्यन्ति युगान्ते समुपस्थिते। राजानश्चाप्यसन्तुष्टाः परार्थान् मूढचेतसः। सर्व्वोपायैर्हरिष्यन्ति युगान्ते पर्य्युपस्थिते। म्लेच्छीभूतं जगत्सर्व्वं भविष्यति न संशयः। हस्ताहस्तिं परिमुषेद्युगान्ते समुपस्थिते। सत्यं संक्षिप्यते लोके नरैः पण्डितमानिभिः। स्थविरा बालमतयो बालाः स्थविरबुद्धयः। भीरुस्तथा शूरमानी शूरा

भीरुविवादिनः । न विश्वसन्ति चान्योऽन्यं युगान्ते पर्य्युपस्थिते । एकहार्य्यं युगं सर्व्वं लोभमोहव्यवस्थितम् । अधर्म्मो वर्द्धते तत्र न तु धर्म्मः प्रवर्त्तते । ब्राह्मणाः क्षत्त्रिया वैश्या न शिष्यन्ते जनाधिप ! । एकवर्णस्तदा लोको भविष्यति युगक्षये । न क्षंस्यति पिता पुत्त्रं, पुत्त्रश्च पितरं तथा । भार्य्याश्च पतिशुश्रूषां न करिष्यन्ति संक्षये । ये यवान्ना जनपदा गोधूमान्नास्तथैव च । तान् देशान् संश्रयिष्यन्ति युगान्ते पर्य्युपस्थिते । स्वैराचाराश्च पुरुषा योषितश्च विशाम्पते ! । अन्योऽन्यं न सहिष्यन्ति युगान्ते पर्य्युपस्थिते । म्लेच्छीभूतं जगत्सर्व्वं भविष्यति युधिष्ठिर ! । न श्राद्धैस्तर्पयिष्यन्ति दैवतानीह मानवाः । न कश्चित् कस्य चिच्छ्रोता न कश्चित् कस्यचिद्गुरुः । तमोग्रस्तस्तदा लोको भविष्यति जनाधिप ! । परमायुश्च भविता तदा वर्षाणि षोड़श । ततः प्राणान् विमोक्ष्यन्ति युगान्ते समुपस्थिते । पञ्चमे वाऽथ षष्ठे वा वर्षे कन्या प्रसूयते । सप्तवर्षाऽष्टवर्षाश्च प्रजास्यन्ति नरास्तदा । पत्यौ स्त्री तु तदा राजन् ! पुरुषो वा स्त्रियं प्रति । युगान्ते राजशार्द्दूल ! न तोषमुपयास्यति । अल्पद्रव्या वृथालिङ्गा हिंसा च प्रभविष्यति । न कश्चित् कस्यचिद्दाता भविष्यति युगक्षये । अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः । केशशूलाः स्त्रियश्चापि भविष्यन्ति युगक्षये । म्लेच्छाचाराः सर्व्वभक्षा दारुणाः सर्व्वकर्म्मसु । भाविनः पश्चिमे काले मनुष्या नात्र संशयः । क्रयविक्रयकाले च सर्व्वः सर्व्वस्य वञ्चनम् । युगान्ते भरतश्रेष्ठ ! वित्तलोभात् करिष्यति । ज्ञानानि चाप्यविज्ञाय करिष्यन्ति क्रियान्तथा । आत्मच्छन्देन वर्त्तन्ते युगान्ते समुपस्थिते । स्वभावात् क्रूरकर्म्माणश्चान्योऽन्यमभिशंसिनः । भवितारो जनाः सर्व्वे संप्राप्ते तु युगक्षये । आरामांश्चैव वृक्षांश्च नाशयिष्यन्ति निर्व्यथाः । भविता संशयो लोके जीवितस्य हि देहिनाम् । तथा लोभाभिभूताश्च भविष्यन्ति नरा नृप ! । ब्राह्मणांश्च हनिष्यन्ति ब्राह्मणस्वोपभोगिनः । हाहाकृता द्विजाश्चैव भयार्त्ता वृषलार्द्दिताः । त्रातारमलभन्तो वै भ्रमिष्यन्ति महीमिमाम् । जीवितान्तकराः क्रूरा रौद्राः प्राणिविहिंसकाः । यदा भविष्यन्ति नरास्तदा संक्षेप्स्यते युगम् । आश्रयिष्यन्ति च नदीः पर्व्वतान् विषमाणि च । प्रधावमाना वित्रस्ता द्विजाः कुरुकुलोद्वह ! । दस्युभिः पीडिता राजन् ! काका इव द्विजोत्तमाः । कुराजभिश्च सततं करभारप्रपीडिताः । धैर्य्यं त्यक्त्वा महीपाल ! दारुणे युगसंक्षये । विकर्म्माणि करिष्यन्ति शूद्राणां परिचारकाः । शूद्रा धर्म्मं प्रवक्ष्यन्ति ब्राह्मणाः पर्य्युपासकाः । श्रोतारश्च भविष्यन्ति प्रामाण्येन व्यवस्थिताः । विपरीतश्च लोकोऽयं भविष्यत्यधरोत्तरः । एडूकान् पूजयिष्यन्ति वर्ज्जयिष्यन्ति देवताः । शूद्राः परिचरिष्यन्ति न द्विजान् युगसंक्षये । आश्रमेषु महर्षीणां ब्राह्मणावसथेषु च । देवस्थानेषु चैत्येषु नागानामालयेषु च । एडूकचिह्ना पृथिवी न देवगृहभूषिता । भविष्यति युगे क्षीणे तद्युगान्तस्य लक्षणम् । यदा रौद्रा धर्म्महीना मांसादाः पानपास्तथा । भविष्यन्ति नरा नित्यं तदा संक्षेप्स्यते युगम् । पुष्पं पुष्पे यदा राजन् ! फले वा फलमाश्रितम् । प्रजास्यति महाराज ! तदा संक्षेप्स्यते युगम् । अकालवर्षी पर्ज्जन्यो भविष्यति गते युगे । अक्रमेण मनुष्याणां भविष्यन्ति तदा क्रियाः । विरोधमथ यास्यन्ति वृषला ब्राह्मणैः सह । मही म्लेच्छजनाकीर्णा भविष्यति ततोऽचिरात् । करभारभयाद्विप्रा भजिष्यन्ति दिशो दश । निर्व्विशेषा जनपदास्तदा विष्टिकराहिताः । आश्रमानुपलप्स्यन्ति फलमूलोपजीविनः । एवं पर्य्याकुले लोके मर्य्यादा न भविष्यति । न स्थास्यन्त्युपदेशे च शिष्या विप्रियकारिणः । आचार्य्योऽपनिधिश्चैव भर्त्स्यते तदनन्तरम् । अर्थयुक्त्या प्रवत्स्यन्ति मित्रसम्बन्धिबान्धवाः । अभावः सर्व्वभूतानां युगान्ते सम्भविष्यति । दिशः प्रज्वलिताः सर्व्वा नक्षत्राण्यप्रभाणि च । ज्योतींषि प्रतिकूलानि वाताः पर्य्याकुलास्तथा । उल्कापाताश्च बहवो महाभयनिदर्शकाः । षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति । तुमुलाश्चापि निर्ह्रादा दिग्दाहश्चापि सर्व्वशः । कवन्धान्तर्हितो भानुरुदयास्तमने तदा । अकालवर्षी भगवान् भविष्यति सहस्रदृक् । शस्यानि च न रोक्ष्यन्ति युगान्ते पर्य्युपस्थिते । अभीक्ष्णं क्रूरवादिन्यः परुषा रुदितप्रियाः । भर्त्तृणां वचने चैव न स्थास्यन्ति तदा स्त्रियः । पुत्त्राश्च मातापितरौ हनिष्यन्ति युगक्षये । सूदयिष्यन्ति च पतीन् स्त्रियः पुत्त्रानपाश्रिताः । अपर्व्वणि महाराज ! सूर्य्यं राहुरु-

पेष्यति । युगान्ते हुतभुक् चापि सर्व्वतः प्रज्वलिष्यति । पानीयं भोजनञ्चापि याचमानास्तदाऽध्वगाः । न लप्स्यन्ते निवासञ्च निरस्ताः पथि शेरते । निर्घात-वायसा नागाः शकुनाः सम्मृगद्विजाः । रूक्षा वाचो विमोक्ष्यन्ति युगान्ते पर्य्युपस्थिते । मित्रं सम्बन्धि-नश्चापि सन्त्यक्ष्यन्ति नरास्तदा । जनं परिजनञ्चापि युगान्ते पर्य्युपस्थिते । अथ देशान् दिशश्चापि पत्त-नानि पुराणि च । क्रमशः संश्रयिष्यन्ति युगान्ते पर्य्युपस्थिते । हा तात ! हा सुतेत्येवं तदा वाचः सुदारुणाः। विक्रोशमानश्चान्योऽन्यं जनो गां (पृथ्वीं) पर्य-टिष्यति । ततस्तुमुलसंघाते वर्त्तमाने युगक्षये । द्विजा-तिपूर्व्वको लोकः क्रमेण प्रभविष्यति । ततः काला-न्तरेऽन्यस्मिन् पुनर्लोकविवृद्धये । भविष्यन्ति पुनर्द्दैव-मनुकूलं यदृच्छया । यदा सूर्य्यश्च चन्द्रश्च तथा तिष्यबृहस्पती । एकराशौ समेष्यन्ति प्रवत्स्यति तदा कृतम् । कालवर्षी च पर्ज्जन्यो नक्षत्राणि शुभानि च । प्रदक्षिणा ग्रहाश्चापि भविष्यन्त्यनुलोमगाः । क्षेमं सुभिक्ष-मारोग्यं भविष्यति निरामयम् । कल्की विष्णुयशा नाम द्विजःकालप्रचोदितः । उत्पत्स्यते महावीर्य्यो महाबुद्धि-पराक्रमः। सम्भूतः शम्भलग्रामे ब्राह्मणावसथे शुभे। मनसा तस्य सर्व्वाणि वाहनान्यायुधानि च । उपस्थास्यन्ति योधाश्च शस्त्राणि कवचानि च । स धर्म्मविजयी राजा चक्रवर्त्ती भविष्यति । स चेमं सङ्कुलं लोकं प्रसादमुपने-ष्यति । उत्थितो ब्राह्मणो दीप्तः क्षयान्तकृदुदारधीः । संक्षेपको हि सर्व्वस्य युगस्य परिवर्त्तकः । स सर्व्वत्र गतान् क्षुद्रान् ब्राह्मणैः परिवारितः । उत्सादयि-ष्यति तदा सर्व्वम्लेच्छगणान् द्विजः" ।

कलियुगस्य विशेषप्रवृत्तिरुक्ता भाग० १२,२अ० ।

"सप्तर्षीणान्तु पूर्व्वौ यौ दृश्येते उदितौ दिवि । तयोस्तु मध्ये नक्षत्रं दृश्यते यत् समं निशि । तेनैव ऋषयो-युक्तास्तिष्ठन्त्यब्दशतं नृणाम् । ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः । विष्णोर्भगवतो भानुः कृष्णाख्यो-ऽसौ दिवं गतः। तदाविशत् कलिर्लोकं पापे यद्रमते जनः। यावत् स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः । तावत् कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् । यदा देवर्षयः सप्त मघासु विचरन्ति हि । तदा प्रवृत्तस्तु कलिर्द्वादशा-ब्दशतात्मकः। यदा मघाभ्यो यास्यन्ति पूर्व्वाषाढा महर्षयः । तदा नन्दात् प्रभृत्येष कलिर्वृद्धिं गमिष्यति । यस्मिन् दिने दिवं यातस्तस्मिन्नेव तदाऽहनि । प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः" ।

कलिदोषमुक्त्वा तच्छमनोपायः भाग० १२,३अ०उक्तो यथा "केनोपायेन भगवन् ! कलेर्दोषान् कलौ जनाः। विधमिष्य-न्त्युपचितांस्तन्मे ब्रूहि यथा मुने ! । युगानि युगधर्म्मांश्च मानं प्रलयकल्पयोः । कालस्येश्वररूपस्य गतिं विष्णोर्म्महा-त्मनः । श्रीशुक उवाच । कृते प्रवर्त्तते धर्म्मश्चतुष्पात्तु जनै-र्धृतः । सत्यं दया तपोदानमिति पादा विभो ! नृप ! । सन्तुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः । आत्मारामाः समदृशः प्रायशः श्रमणा जनाः । त्रेता-यां धर्म्मपादानां तुर्य्यांशो हीयते शनैः । अधर्म्मपादैरनृत-हिंसाऽसन्तोषविग्रहैः । तदा क्रियातपोनिष्ठा नाति-हिंस्रा न लम्पटाः । त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मो-त्तरा नृप ! । तपःसत्यदयादानेष्वर्द्धं ह्रसति द्वापरे । हिंसाऽतुष्ट्यनृतद्वेषैर्धर्म्मस्याधर्म्मलक्षणैः । यशस्विनो महा-शीलाः स्वाध्यायाध्ययने रताः । आढ्याः कुटुम्बिनो हृष्टाः वर्णाः क्षत्रद्विजोत्तराः । कलौ तु धर्म्महेतूनां तुर्य्यां-शोऽधर्म्महेतुभिः । एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति । तस्मिँल्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः। दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः । सत्वं रजस्तम-इति दृश्यन्ते पुरुषे गुणाः । कालसंनोदितास्ते वै परिवर्त्तन्त-आत्मनि । प्रभवन्ति यदा सत्वे मनोबुद्धीन्द्रियाणि च । तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः । यदा कर्म्मसु काम्येषु भक्तिर्यशसि देहिनाम् । तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन् ! । यदा लोभस्त्वसन्तोषो मानो दम्भो-ऽथ मत्सरः । कर्म्मणाञ्चापि काम्यानां द्वापरं तद्रजस्तमः । यदा मायाऽनृतं तन्द्रा निद्रा हिंसा विषादनम् । शोकमोहौभयंदैन्यं स कलिस्तामसः स्मृतः । यस्मात् क्षुद्र-दृशो मर्त्याः क्षुद्रभाग्या महाशनाः । कामिनो वित्तहीनाश्च स्वैरिण्यो हि स्त्रियोऽसतीः । दस्यूत्कृष्टा जनपदा वेदाः पाषण्डदूषिताः । राजानश्च प्रजाभक्ष्याः शिश्नोदरपरा द्विजाः । अव्रता वटवोऽशौचा भिक्षवश्च कुटुम्बिनः । तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः । ह्रस्वकाया महाहारा भूर्य्यपत्या गतह्रियः । शश्वत्कटुकभाषिण्य-श्चौर्य्यमायोरुसाहसाः । पणयिष्यन्ति वै क्षुद्राः किराटाः (वणिजः) कूटकारिणः । अनापद्यपि मंस्यन्ते वार्त्तां साधु-जुगुप्सिताम् । पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् । भृत्यं विपन्नं पतयः, कौलं गाश्चापयस्विनीः । पितॄन्

भ्रातॄन् सुहृज्ज्ञातीन् हित्वा सौरतसौहृदाः । ननान्दृश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः । शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः । धर्म्मं वक्ष्यन्त्यधर्म्मज्ञा अधिरुह्योत्तमासनम् । नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्षिताः । निरन्ने भूतले राजन्ननावृष्टिभयातुराः । वासोऽन्नपानशयनव्यवायस्नानभूषणैः । हीनाः पिशाचसन्दर्शा भविष्यन्ति कलौ प्रजाः । कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः । त्यक्ष्यन्तीह प्रियान् प्राणान् हनिष्यन्ति स्वकानपि । न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि । पुत्रान् भार्य्याञ्च कुलजां क्षुद्राः शिश्नोदरम्भराः । कलौ न राजन् ! जगतां परं गुरुं त्रिलोकनाथानतपादपङ्कजम् । प्रायेण मर्त्त्या भगवन्तमच्युतं यक्ष्यन्ति पाषण्डविभिन्नचेतसः । यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन् वा विवशो गृणन् पुमान् । विमुक्तकर्म्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः । पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान् । सर्व्वान् हरति चित्तस्थो भगवान् पुरुषोत्तमः । श्रुतः संकीर्त्तितो ध्यातः पूजितश्चादृतोऽपि वा । नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् । यथा हेम्नि स्थितो वह्निर्दुर्व्वर्णं हन्ति धातुजम् । एवमात्मगतो विष्णुर्योगिनामशुभाशयम् । विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः । नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते । तस्मात् सर्व्वात्मना राजन् ! हृदिस्थं कुरु केशवम् । म्रियमाणो ह्यवहितस्ततो याति परां गतिम् । म्रियमाणैरपि ध्येयो भगवान् परमेश्वरः । आत्मभावं नयत्यङ्ग सर्व्वात्मा सर्व्वसंश्रयः । कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः । कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परिव्रजेत् । कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः । द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात्" ।

विश्वेश्वरसरस्वतीकृते कलिधर्मे नानाप्रमाणात्तद्दोषोपशमनमुक्तं यथा—विष्णुपुराणाग्निपुराणयोः । "धर्म्मोत्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ । स्वल्पायासेन धर्म्मज्ञास्तेन तुष्टोऽस्म्यहं कलेः । धन्ये कलौ भजेद्विप्रोऽल्पक्लेशैर्महाफलम् । अत्यन्तदुष्टस्य कलेरयमेको महान् गुणः" ब्रह्माण्डपुराणे । "त्रेतायामाब्दिको धर्म्मो द्वापरे मासिकः स्मृतः । यथाशक्ति परं प्राज्ञस्तदह्ना प्राप्नुयात् कलौ" । विष्णुपुराणब्रह्मपुराणयोः "यत् कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत् । द्वापरे तच्च मासेन अहोरात्रेण तत् कलौ । तपसो ब्रह्मचर्य्यस्य जपादेश्च फलं द्विजाः ! । प्राप्नोति पुरुषस्तेन कलिः साध्विति भाषितम् । तथाल्पेनैव यत्नेन पुण्यस्कन्धमनुत्तमम् । करोति यः कृतयुगे क्रियते तपसा हि सः । स्कान्दे काशीखण्डे । "कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी । कलौ भागीरथी गङ्गा कलौ दानं विशिष्यते" । अग्निपुराणे "नास्ति श्रेयस्करं नृणां विष्णोराराधनान्मुने ! । युगेऽस्मिंस्तामसे घोरे यज्ञवेदविवर्जिते । कुर्व्वीताराधनं राजन् ! वासुदेवे कलौ युगे । यदभ्यर्च्य हरिं भक्त्या कृते वर्षशतं नृप ! विधानेन कलौ लेभे अहोरात्रात् कलौ हि तत्" नारदीये । "अहोऽतीव सभाग्यास्ते सकृद्ये केशवार्च्चकाः । घोरे कलियुगे प्राप्ते सर्व्वधर्म्मबहिष्कृते । शिवपूजापरा ये तु शिवनामपरायणाः । त एव शिवतुल्याश्च घोरे कलियुगे द्विजाः" । स्कन्दपुराणे "ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः । द्वापरे भगवान् विष्णुः कलौ देवो महेश्वरः" । मत्स्यपुराणस्कन्दपुराणयोः "ज्ञात्वा कलियुगं घोरं हाहाभूतमचेतनम् । अविमुक्तं न मुञ्चन्ति कृतार्थास्ते नरा भुवि । नान्यं पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम् । सर्व्वपापोपशमनं प्रायश्चित्तं कलौ युगे" । भविष्यपुराणे "कृते सर्व्वाणि तीर्थानि त्रेतायां पुष्करं परम् । द्वापरे तु कुरुक्षेत्रं कलौ गङ्गैव केवलम् । ध्यानं कृते मोक्षहेतुस्त्रेतायां तच्च वै तपः । द्वापरे तद्द्वयं यज्ञाः कलौ गङ्गैव केवलम्" । स्कन्दपुराणनारदीयपुराणयोः "भुक्तिमुक्तिफलप्रेप्सुरन्योपायेन चेन्नरः । तीर्थान्येवाश्रयेद्विद्वान् कलौ गङ्गां विशेषतः" । मनुपराशरौ "तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमित्याहुः दानमेकं कलौ युगे" । महाभारते "तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुः कलौ दानं दया दमः । गीता गङ्गा तथा भिक्षुः कपिलाश्वत्थसेवनम् । वासरं पद्मनाभस्य सप्तमं न कलौ युगे" ।

एवमुक्तानां विष्णुमहादेववाराणसीगङ्गादानानां कलौ विशेषतः सेवायां यानि फलानि तान्युत्तरत्र क्रमेण प्रदर्श्यन्ते । तत्रादौ विष्णोराराधनफलं कथ्यते । "कलौ कलिमलध्वंसं सर्वपापहरं परम् । येऽर्चयन्ति हरिं नित्यन्तेऽपि वन्द्या यथा हरिः" नारदीये "तीर्थान्यश्वत्थतरवो गावो विप्रास्तथा भुवि । मद्भक्ताश्चेति विज्ञेयास्तनवो मम पञ्चधा । तेषां पुण्यात्मनां भीतोऽभ्येत्य कलिरघात्मकः । मन्दीभवत्स्वविभवो निःशङ्कं

न प्रवर्त्तते। पूजिता: प्रणता: स्पृष्टा: स्तुता दृष्टाः स्मृता अपि। नृणां सर्व्वार्थहन्तार: सततं ते हि मन्मया:”।

कलौविष्णोर्नामसंकीर्त्तनेन आराधनं कर्त्तव्यम् उक्तञ्च भागवते। “कलिं सभाजयन्त्यार्या गुणज्ञाः सत्(यज्ञ)भागिनः। यत्र संकीर्त्तनेनैव सर्वः स्वार्थोऽपि लभ्यते। नाद्यत: परमोलाभो देहिनां भ्राम्यतामिह, । यतोविन्देत परमां शान्तिं, नश्यति संसृतिः”। कलेर्दोषोपशमनोपाये भागवतवाक्यमनुपदं दर्शितम्।

स्कान्दपुराणे “गोविन्दनामा य: कश्चिन्नरो भवति भूतले। कीर्त्तनादेव तस्यापि पापं याति सहस्रधा” विष्णुधर्मोत्तरे “येऽहर्निशं जगद्धातुर्वासुदेवस्य कीर्त्तनम्। कुर्व्वन्ति तान्नरव्याघ्र! न कलिर्बाधते नरान्। चक्रायुधस्य नामानि सदा सर्व्वत्र कीर्त्तयेत्। नाशौचं कीर्त्तने तस्य स पवित्रकरो यत:। अज्ञानादथ वा ज्ञानादुत्तमश्लोकनाम यत्। संकीर्त्तितमघं पुंसोदहेदेधो यथाऽनल:”। विष्णुरहस्ये “सा हानिस्तन्महच्छिद्रं स मोहः स च विभ्रमः। यन्मुहूर्त्तं क्षणं वापि वासुदेवं न चिन्तयेत्”। मोहोऽविवेकः विभ्रमो विपरीतज्ञानम्। स्कान्दे “अभक्ष्यभक्षणात् पापमगम्यागमनादिजम्। नश्यते नात्र सन्देहो गोविन्दस्य च कीर्त्तनात्। स्वर्णस्तेयं सुरापानं गुरुदाराभिमर्षनम्। गोविन्दकीर्त्तनात् सद्यः पापं याति महामुने!। तावत्तिष्ठति देहेऽस्मिन् कलिकल्मषसंभवम्। गोविन्दकीर्त्तनं यावत् कुरुते मानवो न हि” “गोविन्देत्युक्तिमात्रेण हेलया कलिवर्द्धितम् पापौघो विलयं याति दानमम्भोनिधे यथा। गोविन्देति तथा प्रातर्मध्याह्ने वा निशागमे। कीर्त्तनात् पुण्यमाप्नोति जन्मकोटिशतोद्भवम्। गवामयुतकोटीनां कन्यानामयुतायुतैः। तीर्थकोटिसहस्राणां तुल्यं गोविन्दकीर्त्तनम्। तन्नास्ति कर्मजं लोके वाग्जं मानसमेव वा। यत्तु न क्षीयते पापं कलौ गोविन्दकीर्त्तनात्। प्रमादादपि संस्पृष्टो यथाऽनलकणोदहेत्। तथौष्ठपुटसंस्पृष्टं हरिनाम हरेदघम्”। वामनपुराणे। “अश्वमेधादिभिर्यज्ञैः नरमेधैस्तथैव च। याजितं तेन, येनोक्तं हरिरित्यक्षरद्वयम्। महाभारते “प्राणप्रयाणपाथेयं संसारव्याधिभेषजम्। दुःखशोकपरित्राणं हरिरित्यक्षरद्वयम्”। विष्णुपुराणे “ध्यायन् कृते यजन् यज्ञैः त्रेतायां, द्वापरेऽर्च्चयन्। यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशवम्। अवशेनापि यन्नाम्नि कीर्त्तिते सर्व्वपातकैः। पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव”।

अथ कलिदोषोपशमनाय शिवपूजनादि विहितं यथा—लिङ्गपुराणे “कलौ रुद्रो महादेवः शङ्करो नीललोहितः। प्रकाशते प्रतिष्ठार्थं धर्मस्य विकटाकृतिः। ये तं विप्राश्च सेवन्ते येन केनापि शङ्करम्। कलिदोषं विनिर्जित्य प्रयान्ति परमां गतिम्” बृहन्नारदीये “शिव! शङ्कर! रुद्रेश! नीलकण्ठ! त्रिलोचन!। इतीरयन्ति ये नित्यं न हि तान् बाधते कलिः। महादेव! विरूपाक्ष! गङ्गाधर! मृड़ाव्यय!। इतीरयन्ति ये नित्यं ते कृतार्था न संशयः। हरिस्मरणनिष्ठानां शिवनामरतात्मनाम्। सत्यं समस्तकर्माणि यान्ति संपूर्णतां द्विजा:!। शिवपूजापरा ये तु शिवनामपरायणाः। तएव शिवतुल्याश्च घोरे कलियुगे द्विजाः” महाभारते “यस्त्वां नमः शिवायेति मुच्यते स कलौ नरः। शाठ्येनापि नमस्कारः प्रयुक्तः शूलपाणये। संसाररोगसंघानामुन्मूलनकरः कलौ। यदा कदा तं यजते श्रद्धया मुनिपुङ्गव!। लिङ्गेऽथ स्थण्डिले वापि कौतुके विधिपूर्व्वकम्। पुरा दोषं विनिर्जित्य रुद्रलोके महीयते!”। शिवपुराणे “ध्यानं परं कृतयुगे त्रेतायां यजनं परम्। द्वापरे लिङ्गपूजा च कलौ शङ्करकीर्त्तनम्” स्कान्दपुराणे “ब्रह्मा कृतयुगे देवः त्रेतायां भगवान् रविः। द्वापरे भगवान् विष्णुः कलौ देवो महेश्वरः”।

अथ कलौ काशीवासस्य तथात्वमाह स्म स्कान्दपुराणे व्यासः। “इदं कलियुगं घोरं संप्राप्तं पाण्डुनन्दन!। ततो गच्छामि देवस्य पुरीं वाराणसीं शुभाम्। अस्मिन् कलियुगे घोरे नराः पापानुवर्त्तिनः। भविष्यन्ति महाबाहो! वर्णाश्रमविवर्जिताः। नान्यत् पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम्। सर्वपापप्रशमनम् प्रायश्चित्तं कलौ युगे। ये विप्रास्तां पुरीं प्राप्य न मुञ्चन्ति कदाचन। विजित्य कलिजान् दोषान् यान्ति तत् परमं पदम्” लिङ्गपुराणे “कलौ युगे तु मर्त्त्यानां स्थानं मोक्षप्रदायकम्। भक्त्या चाराधनेनैव स्नानतर्पणपूजनैः। ज्ञात्वा कलियुगं घोरं अल्पायुषमधार्मिकम्। सिद्धक्षेत्रं न सेवन्ते जायन्ते च म्रियन्ति च” मत्स्यपुराणे “ज्ञात्वा कलियुगं घोरं हाहाभूतमचेतनम्। अविमुक्तं न मुञ्चन्ति कृतार्थास्ते नरा भुवि। जपध्यानविहीनानां ज्ञानविज्ञानवर्जिनाम्। तपस्तु तृषाहहीनानां गतिर्वाराणसी नृणाम्” स्कान्दे काशीखण्डे “न सिध्यति कलौ योगो न सिध्यति कलौ तपः। न्यायार्जितधनोत्सर्गैः सद्यः सिध्येत् कलौ परः। न व्रतं न तपो स्नानं न

जपेन सुरार्चनम् । दानमेव कलौ मुक्त्यै, काशी दानेन चाप्यते । कलिस्तानेव बाधेत कालस्तांश्च जिघांसति । एनांसि तांश्च बाधन्ते ये न काशीं समाश्रिताः । कलि-कलकृतं कर्म त्रिकण्टकमितीरितम् । एतत्त्रयं न प्रभवेदानन्दवनवासिनाम्”

अथ गङ्गायास्तथात्वमाह तुः काशीखण्डभविष्य-पुराणे “कृते सर्वत्र तीर्थानि त्रेतायां पुष्करं परम् । द्वापरे तु कुरुक्षेत्रं कलौ गङ्गैव केवलम् । ध्यानं कृते मोक्षहेतुस्त्रेतायां तच्च वै तपः । द्वापरे तद्द्वयं यज्ञाः कलौ गङ्गैव केवलम्” । विष्णुधर्मोत्तरे “पुष्करं तु कृते सेव्यं त्रेतायां नैमिषं तथा । द्वापरे तु कुरुक्षेत्रं, कलौ गङ्गां समाश्रयेत्” । स्कन्दपुराणे “भक्ति-मुक्तिफलप्रेप्सुरल्पोपायेन चेन्नरः । तीर्थान्येवाश्रयेद्विद्वान् कलौ गङ्गां विशेषतः” । नारदीये कलौ तत्परमब्रह्मप्राप्तये सत्वरं नृणाम् । गङ्गाभजनमेवाहुर्महोपायं महर्षयः । लैङ्गे “कृते युगे पुष्कराणि त्रेतायां नैमिषं तथा । द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत्” कामिकसंहितायाम् “न भवेद्वेदमन्त्राणां संशुद्धिः, शुद्धिवर्जितैः । मन्त्रैर्विना न सिध्यन्ति यज्ञाः, शुद्धिः सुदुर्लभा । काले कलौ विशेषेण शुद्धं वस्तु न दृश्यते । कलौ युगे हि तमसा नष्टधर्म्मे भयङ्करे । अनेकच्छिन्नसन्तानो धर्म्मतन्तुर्हि जाह्नवी । विना गङ्गां धर्म्ममयीं कथं स्याच्च गतिः कलौ । शिरसः कर्त्तनं तस्य प्राणत्यागोऽपि वा वरः । समर्थस्तु कलौ काले गङ्गां यो नाभिगच्छति” भविष्यपुराणे “कलौ कलुषचित्तानां पापद्रव्यरतात्मनाम् । विधिहीनक्रियाणाञ्च गतिर्गङ्गां विना नहि । अनाश्रित्य तु गङ्गां हि मुक्तिमिच्छति यः कलौ । सूर्यं द्रष्टुमिहोद्युक्तो जात्यन्धसदृशस्तु सः । वृथा कुलं, वृथा विद्या, वृथा यज्ञा, वृथा तपः । वृथा दानानि तस्येह कलौ गङ्गां न याति यः” कूर्म्मपु० “गङ्गामेव निषेवेत प्रयागे तु विशेषतः । नान्यत् कलियुगोद्भूतं मलं हन्ति सुदुस्तरम्” ।

अथ कलियुगे दानस्य श्रेष्ठत्वम् अतएव मनुः “अन्ये कृतयुगे धर्म्मास्त्रेतायां द्वापरे परे । अन्ये कलियुगे नृणां युगह्रासानुरूपतः” इति युगभेदेन धर्मभेदमाह स्म । मनुपाराशरौ “तपः परं कृतयुगे त्रेतायां ज्ञान-मुच्यते । द्वापरे यज्ञमित्याहुर्दानमेकं कलौ युगे” । महाभारते “तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुः कलौ दानं दया दमः” वृहस्पतिः “त्रयीधर्म्मः कृतयुगे, ज्ञानं त्रेतायुगे स्मृतम् । द्वापरे चाध्वरः प्रोक्तः, कलौ दानं दया दमः” । लिङ्गपुराणे “ध्यानं परं कृतयुगे त्रेतायां ज्ञानमुच्यते । प्रवृत्तं द्वापरे युद्ध, दानमेकं कलौ युगे” । अग्निपुराणे “देवतावेश्म-मूर्त्यादिनगराणि कलौ युगे । कर्त्तव्यानि महीपालैः स्वर्गलोकमभीप्सुभिः”

इत्येवं कलौ विशेषधर्माः सेव्या इति दर्शितम् ।

सामान्यतः कलौ सेव्यधर्मानाह स्म पराशरः । “अस्मिन्मन्वन्तरे धर्म्माः कृतत्रेतादिके युगे । सर्व्वे धर्म्माः कृते जाताः सर्व्वे नष्टाः कलौ युगे । चातु-र्वर्ण्यसमाचारं किञ्चित् साधारणं वद । व्यासवा-क्यावसाने तु मुनिमुख्यः पराशरः । धर्मस्य निर्णयं प्राह सूक्ष्मं स्थूलञ्च विस्तरात् । शृणु पुत्र ! प्रवक्ष्ये-ऽहं शृण्वन्तु ऋषयस्तथा । कल्पे कल्पे क्षयोत्पत्तौ ब्रह्मविष्णुमहेश्वराः । श्रुतिः स्मृतिः सदाचारा निर्णेत-व्याश्च सर्व्वदा । न कश्चिद्वेदकर्त्ता च वेदस्मर्त्ता चतु-र्मुखः । तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे । अन्ये कृतयुगे धर्म्मास्त्रेतायां द्वापरे परे । अन्ये कलि-युगे नृणां युगरूपानुसारतः । तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमित्यूचुर्दानमेकं कलौ युगे । कृते तु मानवोधर्म्मस्त्रेतायां गौतमः स्मृतः । द्वापरे शङ्खलिखितः कलौ पाराशरः स्मृतः । त्यजेद्देशं कृतयुगे, त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकन्तु कर्त्तारञ्च कलौ युगे । कृते सम्भाषणात् पापं, त्रेतायाञ्चैव दर्शनात् । द्वापरे चान्नमादाय, कलौ पतति कर्म्मणा । कृते तु तत्क्षणाच्छापस्त्रेतायां दश-भिर्दिनैः । द्वापरे मासमात्रेण, कलौ संवत्सरेण तु । अभि-गम्य कृते दानं, त्रेतास्वाहूय दीयते । द्वापरे याचमानाय, सेवया दीयते कलौ । अभिगम्योत्तमं दानमाहूतञ्चैव मध्य-मम् । अधमं याच्यमानं स्यात्, सेवादानञ्च निष्फलम् । कृते चास्थिगताः प्राणास्त्रेतायां मांससंस्थिताः । द्वापरे रुधिरं यावत्, कलावन्नादिषु स्थिताः । धर्मोजितोह्यधर्मेण, जितः सत्योऽनृतेन च । जिताश्चौरैस्तु राजानः, स्त्रीभिश्च पुरुषा जिताः । सीदन्ति चाग्निहोत्राणि, गुरुपूजा प्रण-श्यति । कुमार्य्यश्च प्रसूयन्ते तस्मिन् कलियुगे सदा । युगे युगे च ये धर्मास्तत्र तत्र च ये द्विजाः । तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः । युगे युगे च सामर्थ्यं शेषंमुनिभिर्भाषितम् । पराशरेण

चाधिक्कं प्रायश्चित्तं प्रदीयते । अहमद्यैव तद्धर्मम- नुसृत्य ब्रवीमि वः । चातुर्वर्ण्यसमाचारं शृणुध्वं मुनिपुङ्गवाः ।। पराशरमतं पुण्यं पवित्रं पापना- शनम्” इत्यारभ्य कलियुगे कर्त्तव्यास्तद्धर्मास्तत्रोक्तास्ते च तत एवावसेयाः । कलिस्वभाववर्णनेनागमोक्तैवोपा- सना कलौ कार्य्येति महानिर्व्वाणतन्त्रे निरूपितं यथा

“आयाते पापिनि कलौ सर्व्वधर्मविलोपिनि । दुराचारे दुष्प्रपञ्चे दुष्टकर्मप्रवर्त्तके । न वेदाः प्रभव- स्तत्र स्मृतीनां स्मरणं कुतः । नानेतिहासयुक्तानां नाना- मार्गप्रदर्शिनाम् । बहूनाम्पुराणानां विनाशो भविता विभो ! । तदा लोका भविष्यन्ति धर्मकर्मबहिर्मुखाः । उच्छृङ्खला मदोन्मत्ताः पापकर्मरताः सदा । कामुका लो- लुपाः क्रूरा निष्ठुरा दुर्मुखाः शठाः । स्वल्पायुर्मन्दमतयो रोगशोकसमाकुलाः । निःश्रीका निर्बला नीचा नीचाचार- परायणाः । नीचसंसर्गनिरताः परवित्तापहारकाः । पर- निन्दापरद्रोहपरीवादपराः खलाः । परस्त्रीहरणे पापशङ्काभयविवर्जिताः । निर्धना मलिना दीना दरि- द्राश्चिररोगिणः । विप्राः शूद्रसमाचाराः सन्ध्यावन्दन वर्जिताः । अयाज्ययाजकालुब्धा दुर्वृत्ताः पापकारिणः । असत्यभाषिणो मूर्खा दाम्भिकाः दुष्प्रवञ्चकाः । कन्या- विक्रयिणो व्रात्यास्तपोव्रतपराङ्मुखाः । लोकप्रतारणा- र्थाय जपपूजापरायणाः । पाषण्डाः पण्डितम्मन्याः श्रद्धाभक्तिविवर्जिताः । कदाहाराः कदाचारा भृतकाः शूद्रसेवकाः । शूद्रान्नभोजिनः क्रूरा वृषलीरतिकामुकाः । दास्यन्ति धनलोभेन स्वदारान्नीचजातिषु । ब्राह्मणचिह्न- मेतावत् केवलं सूत्रधारणम् । नैव पानादिनियमो भक्ष्या- भक्ष्यविवेचनम् । धर्मशास्त्रे सदा निन्दा साधुद्रोहो निर- न्तरम् । सत्कथालापमात्रञ्च न तेषां मनसि क्वचित् । त्वया कृतानि तन्त्राणि जीवोद्धारणहेतवे । निगमाग- मजातानि भुक्तिमुक्तिकराणि च । देवीनां यत्र देवानां मन्त्रयन्त्रादिसाधनम् । कथिता बहवो न्यासाः सृष्टि- स्थित्यादिलक्षणाः । बद्धपद्मासनादीनि गदितान्यपि भूरिशः । पशुवीरदिव्यभावा देवतामन्त्रसिद्धिदाः । शवासनं चितारोहो मुण्डसाधनमेव च । लता- साधनकर्माणि त्वयोक्तानि सहस्रशः । पशुभावदिव्य- भावौ स्वयमेव निवारितौ । कलौ न पशुभावोऽस्ति दिव्यभावः कुतो भवेत् । पत्रं पुष्पं फलं तोयं स्वयमेवा- हरेत् पशुः । न शूद्रदर्शनं कुर्यान्मनसा न स्त्रियं स्मरेत् । दिव्यश्च देवताप्रायः शुद्धान्तःकरणः सदा । द्वन्द्वातीतो वीतरागः सर्वभूतसमः क्षमी । कलिकल्मष- युक्तानां सर्वदाऽस्थिरचेतसाम् । निद्रालस्यप्रसक्ताना- म्भावशुद्धिः कथम्भवेत् ? । वीरसाधनकर्माणि पञ्च- तत्त्वानि यानि तु । मद्यं मांसं तथा मत्स्यो मुद्रा मैथुनमेव च । एतानि पञ्च तत्त्वानि त्वया प्रोक्तानि शङ्कर ! । कलिजा मानवा लुब्धाः शिश्नोदर- परायणाः । लोभात् तत्र पतिष्यन्ति न करिष्यन्ति साध- नम् । इन्द्रियाणां सुखार्थाय पीत्वा च बहुलं मधु । भविष्यन्ति मदोन्मत्ता हिताहितविवर्जिताः । परस्त्रीधर्षकाः केचिद् दस्यवो बहवो भुवि । न करिष्यन्ति ते मत्ताः पापयोनिविचारणम् । अतिपानादिदोषेण रोगिणो बहवः क्षितौ । शक्तिहीना बुद्धिहीना भूत्वा च विकलेन्द्रियाः । ह्रदे गर्त्ते प्रान्तरे च प्रासादात् पर्वतादपि । पतिष्यन्ति मरिष्यन्ति मनुजा मदविह्वलाः । केचिद् विवादयिष्यन्ति गुरुभिः स्वजनैरपि । केचिन्मौना मृत- प्राया अपरे बहुजल्पकाः । अकार्यकारिणः क्रूरा धर्म- मार्गविलोपकाः । हिताय यानि कर्माणि कथितानि त्वया प्रभो ! । मन्ये तानि महादेव ! विपरीतानि मानवे । के वा योगं करिष्यन्ति न्यासजातानि केऽपि वा । स्तोत्र- पाठं यन्त्रलिपिं पुरश्चर्यां जगत्पते ! । युगधर्मप्रभावेन स्वभावेन कलौ नराः । भविष्यन्त्यतिदुर्वृत्ताः सर्वथा पाप- कारिणः । तेषामपायं दीनेश ! कृपया कथय प्रभो ! । आयुरारोग्यवर्चस्यं बलवीर्यविवर्द्धनम् । विद्याबुद्धिप्रदं नृणामप्रयत्नशुभङ्करम् । येन लोका भविष्यन्ति महाबल- पराक्रमाः । शुद्धचित्ताः परहिताः मातापित्रोः प्रियङ्कराः । स्वदारनिष्ठाः पुरुषाः परस्त्रीषु पराङ्मुखाः । देवतागुरु- भक्ताश्च पुत्रस्वजनपोषकाः । ब्रह्मज्ञा ब्रह्मविद्याश्च ब्रह्मचि- न्तनमानसाः । सिद्ध्यर्थं लोकयात्रायाः कथयस्व हिताय यत् । कर्त्तव्यं यदकर्त्तव्यं वर्णाश्रमविभेदतः । विना त्वां सर्वलोकानां कस्त्राता भुवनत्रये” १उल्ला० देवीप्रश्नः

“इति देव्या वचः श्रुत्वा शङ्करो लोकशङ्करः । कथयामास तत्त्वेन महाकारुण्यवारिधिः । सदाशिव उवाच । साधु पृष्टं महाभागे ! जगतां हितकारिणि ! । एतादृशः शुभः प्रश्नो न केनापि कृतः पुरा । धन्यासि सुकृतज्ञासि हितासि कलिजन्मनाम् । यद् यदुक्तं त्वया भद्रे ! सत्यं सत्यं यथार्थतः । सर्वज्ञा त्वं त्रिकालज्ञा धर्मज्ञा परमे- श्वरि ! । भूतभव्यविषयश्च धर्मसुक्तं त्वया प्रिये ! । यथातत्त्वं

यथान्यायं यथायोग्यं न संशयः । कलिकल्मषदीनानां द्विजादीनां सुरेश्वरि ! । मेध्यामेध्याविचाराणां न शुद्धिः श्रौतकर्मणाम् । न संहिताद्यैः स्मृतिभिरिष्टसिद्धिर्नृणां भवेत् । सत्यं सत्यं पुनः सत्यं सत्यं सत्यं मयोच्यते । विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये ! । श्रुतिस्मृतिपुराणादौ मयैवोक्तं पुरा शिवे ! । आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः । कलावागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्त्तते । न तस्य गतिरस्तीति सत्यं सत्यं न संशयः । सर्व्वैर्वेदैः पुराणैश्च स्मृतिभिः संहितादिभिः । प्रतिपाद्योऽस्मि नान्योऽस्ति प्रभुर्जगति मां विना । आमनन्ति च ते सर्वे मत्पदं लोकपावनम् । मन्मार्गविमुखा लोकाः पाषण्डा ब्रह्मघातिनः । अतो मन्मतमुत्सृज्य यो यत् कर्म समाचरेत् । निष्फलं तद्भवेद्देवि ! कर्त्तापि नारकी भवेत् । मूढो मन्मतमुत्सृज्य योऽन्यमतमुपाश्रयेत् । ब्रह्महा पितृहा स्त्रीघ्नः स भवेन्नात्र संशयः । कलौ तन्त्रोदिता मन्त्राः सिद्धास्तूर्णफलप्रदाः । शस्ताः कर्मसु सर्व्वेषु जपयज्ञक्रियादिषु । निर्वीर्याः श्रौतजातीया विषहीनोरगा इव । सत्यादौ सफला आसन् कलौ ते मृतका इव । पञ्चालिका यथा भित्तौ सर्व्वेन्द्रियसमन्विताः । अमूरशक्ताः कार्य्येषु तथाऽन्ये मन्त्रराशयः । अन्यमन्त्रैः कृतं कर्म बन्ध्यास्त्रीसङ्गमो यथा । न तत्र फलसिद्धिः स्याच्छ्रम एव हि केवलम् । कलावन्योदितैर्मार्गैः सिद्धिमिच्छति यो नरः । तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः । मदुक्तादुदितं धर्मं हित्वान्यधर्ममीहते । अमृतं स्वगृहे त्यक्त्वा क्षीरमार्कं स वाञ्छति । नान्यःपन्था मुक्तिहेतुरिहामुत्र सुखाप्तये । यथा तन्त्रोदितो मार्गो मोक्षाय च सुखाय च । तन्त्राणि बहुधोक्तानि नानाख्यानान्वितानि च । सिद्धानां साधकानाञ्च विधानानि च भूरिशः । अधिकारिविभेदेन पशुबाहुल्यतः प्रिये ! कुलाचारोदितं धर्मं गुप्त्यर्थं कथितं क्वचित् । जीवप्रवृत्तिकारीणि कानिचित् कथितान्यपि । देवा नानाविधाः प्रोक्ता देव्योऽपि बहुधा प्रिये ! । भैरवाश्चैव वेतालावटुका नायिका गणाः । शाक्ताः शैवा वैष्णवाश्च सौरा गाणपतादयः । नानामन्त्राश्च यन्त्राणि सिद्ध्युपायाह्यनेकशः । भूरिप्रयाससाध्यानि यथोक्तफलदानि च । यथा यथा कृताः प्रश्ना येन येन यदा यदा । तदा तस्योपकाराय तथैवोक्तं मया प्रिये ! । सर्व्वलोकोपकाराय सर्व्वप्राणिहिताय च । युगधर्मानुसारेण याथातथ्येन पार्व्वति ! । त्वया यादृक्कृतः प्रश्नो न केनापि पुरा कृतः । तव स्नेहेन वक्ष्यामि सारात् सारं परात् परम् । वेदानामागमानाञ्च तन्त्राणाञ्च विशेषतः । सारमुद्धृत्य देवेशि ! तवाग्रे कथ्यते मया । यथा नरेषु तन्त्रज्ञाः सरितां जाह्नवी यथा । यथाहं त्रिदिवेशानामागमानामिदं तथा । किं वेदैः किं पुराणैश्च किं शास्त्रैर्बहुभिः शिवे ! । विज्ञातेऽस्मिन्महातन्त्रे सर्व्वसिद्धीश्वरो भवेत् । यतो जगन्मङ्गलाय त्वयाहं विनियोजितः । अतस्ते कथयिष्यामि यद्विश्वहितकृद्भवेत्” २ उल्ला० ।

“कलौ पापयुगे घोरे तपोहीनेऽतिदुस्तरे । निस्तारबीजमेतावद्ब्रह्ममन्त्रस्य साधनम् । साधनानि बहूक्तानि नानातन्त्रागमादिषु । कलौ दुर्बलजीवानामसाध्यानि महेश्वरि ! । अल्पायुषः स्वल्पवृत्ता अन्नाधीनासवः प्रिये ! लुब्धा धनार्ज्जने व्यग्राः सदा चञ्चलमानसाः । समाधावस्थिरधियो योगक्लेशासहिष्णवः । तेषां हिताय मोक्षाय ब्रह्ममार्गोऽयमीरितः । कलौ नास्त्येव नास्त्येव सत्यं सत्यं मयोच्यते । ब्रह्मदीक्षां विना देवि ! कैवल्याय सुखाय च । यदा तु वैदिकी दीक्षा दीक्षा पौराणिकी तथा । न स्थास्यति वरारोहे ! तदैव प्रबलः कलिः । यदा तु पुण्यपापानां परीक्षा वेदसम्भवा । न स्थास्यति शिवे ! शान्ते ! तदैव प्रबलः कलिः । क्वचिच्छिन्ना क्वचिद्भिन्ना यदा सुरतरङ्गिणी । भविष्यति कुलेशानि ! तदैव प्रबलः कलिः । यदा तु म्लेच्छजातीया राजानो धनलोलुपाः । भविष्यन्ति महाप्राज्ञे ! तदैव प्रबलः कलिः । यदा स्त्रियोऽतिदुर्दान्ताः कर्कशाः कलहे रताः । गर्हिष्यन्ति स्वभर्त्तॄं तदैव प्रबलः कलिः । यदा तु मानवा भूमौ स्त्रीजिताः कामकिङ्कराः । द्रुह्यन्ति गुरुमित्रादीन् तदैव प्रबलः कलिः । यदा क्षौणी स्वल्पफला तोयदाः स्तोकवर्षिणः । असम्यक्फलिनो वृक्षास्तदैव प्रबलः कलिः । भ्रातरः स्वजनामात्या यदा धनकणेहया । मिथः सम्प्रहरिष्यन्ति तदैव प्रबलः कलिः । प्रकटे मद्यमांसादौ निन्दादण्डविवर्जिते । गूढपानं चरिष्यन्ति तदैव प्रबलः कलिः” ३ उल्ला० ।

इत्युपक्रम्य ब्रह्मसाधनप्रकारस्तत्र दर्शितः स च तत्र एवावसेयः । उपासनायां विशेषः । कुब्जिकातन्त्रे १ पटले ।
“श्रुतिस्मृतिविधानेन पूजा कार्य्या युगत्रये । आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः । न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः” । पुरश्चरणरसोल्लासतन्त्रे ३ पटलेऽपि । “तन्त्रोक्तं ध्यानमन्त्रञ्च प्रशस्तं भारते कलौ । वेदोक्तञ्चैव स्मृत्युक्तं पुराणोक्तं वरानने ! ।

न यस्तं चञ्चलापाङ्गि ! कदाचिद्भारते कलाविति"। "श्रौतोधर्म्मः कृतयुगे त्रेतायां स्मार्त्त एव तु। द्वापरे च पुराणोक्तः कलावागमसम्मतः" पठन्ति। अत्रेदमभिदध्महे। वेदेषु काण्डत्रयमस्ति कर्म्मोपासना ब्रह्मरूपप्रतिपाद्यभेदात्। तत्र कर्म्मकाण्डमधिकृत्य जैमिनिप्रभृतिभिः सम्यक्तया कर्त्तव्यतादि विवेचितम् उपासनाकाण्डमधिकृत्य शाण्डिल्यनारदादिभिः, ब्रह्मकाण्डमधिकृत्य च व्यासादिभिः प्रपञ्चो दर्शितः। तत्र उपासनाकाण्डमधिकृत्यैवागमशास्त्रप्रवृत्तिः तन्मूलञ्च रामतापनीयनृसिंहतापनीयप्रभृति। इत्यागमशास्त्रस्य प्रामाण्यम्। अनुपलभ्यमानमूलकागमस्यापि स्मृतिवत् श्रुतिकल्पकत्वेन प्रामाण्यम्। तत्र कर्म्मकाण्डे सर्व्वेऽप्यधिकारिणः इमुक्षोरपि तत्त्वज्ञानपर्य्यन्तं चित्तशुद्ध्यर्थं प्रत्यवायपरिहारार्थं च कर्म्मकरणविधानात् "तमेतमात्मानं विविदिषन्ति वेदानुवचनेन यज्ञेन तपसा नाशकेनेति" श्रुत्या तथोक्तेः। उपासनाकाण्डेऽपि तथैव सर्व्वेषामधिकारः "तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते" इति स्मृतेः। तत्र सति कामे कर्म्मकाण्डविहितकर्म्माचरणे स्वर्गः फलम्। कामनाऽभावे मोक्ष एव फलम्। एवमुपासनायामपि। तत्रापि सत्यां कामनायां स्वर्गादिनानाफलम् असत्याञ्च तस्यां क्रममुक्तिः फलम्। ब्रह्मकाण्डे तु मुमुक्षोरेवाधिकारः। इत्येवं विषय विभागे स्थिते श्रौतीपौराणिकीस्मार्त्तीतान्त्रिकीषूपासनासु मध्ये कलौ आगमोक्तैवोपासनादर्त्तव्येति प्रदर्शितागमवाक्येभ्यो निर्णीयते। अन्यत्र च "हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्। कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा" "कलौ जागर्त्ति गोपालः कलौ जागर्त्ति कालिका" पठन्ति।

अथ कलियुगे राजविशेषोत्पत्तिः कलेर्द्धिरन्ते कल्किरूपभगवदवतारप्रादुर्भावश्च भाग०१२।१,२ अ०उक्तौ यथा-"योऽन्त्यःपुरञ्जयोनाम भविष्योवारहद्रथः। तस्यामात्यस्तु शुनको हत्वा स्वामिनमात्मजम्। प्रद्योतसंज्ञं राजानं कर्त्ता यत् पालकः सुतः। विशाखयूपस्तत्पुत्त्रोभविता राजकस्ततः। नन्दिवर्द्धनस्तत्पुत्त्रः पञ्च प्रद्योतनाइमे। अष्टत्रिंशोत्तरशतं१३८ भोक्ष्यन्ति पृथिवीं नृपाः! शिशुनागस्ततो भव्यः काकवर्णस्तु तत्सुतः। क्षेमधर्म्मा तस्य पुत्त्रः क्षेत्रज्ञः क्षेत्रधर्म्मजः। विधिसारः सुतस्तस्या जातशत्रुर्भविष्यति। दर्भकस्तत्सुतो भव्यो दर्भकस्याजयः स्मृतः। नन्दिवर्द्धन आजेयो महानन्दिस्तु तत्सुतः।

शैशुनागा दशैवैते षष्ट्युत्तर शतत्रयम् ३६०। समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ! कलौ नृपाः। महानन्दिसुतो राजन्! शूद्रागर्भोद्भवो बली। महापद्मपतिः कश्चित् नन्दः क्षत्रविनाशकृत्। ततोनृपा भविष्यन्ति शूद्रप्रायास्त्वधार्म्मिकाः। स एकच्छत्रां पृथिवीमनुलङ्घित शासनः। शासिष्यति महापद्मो द्वितीय इव भार्गवः। तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः। य इमां भोक्ष्यन्ति महीं राजानश्च शतं समाः१००। नव नन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति। तेषामभावे जगतीं मौर्य्या भोक्ष्यन्ति वै कलौ। स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति। मत्सुतो वारिसारस्तु ततश्चाशोकवर्द्धनः। सुयशा भविता तस्य सङ्गतः सुयशः सुतः। शालिशूकस्ततस्तस्य सोमशर्म्मा भविष्यति। शतधन्वा सुतस्तस्य भविता तद्बृहद्रथः। मौर्य्यास्त्वेते दश नृपाः सप्तत्रिंशच्छतोत्तरम् १३७। समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह!। अग्निमित्रस्ततस्तस्मात् सुज्येष्ठो भविता ततः। वसुमित्रो भद्रकश्च पुलिन्दो भविता सुतः। ततो घोषसुतस्तस्माद्वज्रमित्रो भविष्यति। ततो भागवतस्तस्माद्देवभूतिः कुरूद्वह!। शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् ११२। ततः काण्वानियं भूमिर्य्यास्यत्यल्पगुणान्नृप!। शुङ्गं हत्वा देवभूतिं काण्वोऽमात्यस्तु स्वामिनम्। स्वयं करिष्यते राज्यं वासुदेवो महामतिः। तस्य पुत्त्रस्तु भूमित्रस्ततो नारायणः सुतः। काण्वायना इमे भूमिं चत्वारिंशच्च पञ्च च। शतानि त्रीणि ३४५ भोक्ष्यन्ति वर्षाणाञ्च कलौ युगे। हत्वा काण्वं सुशर्माणं तद्भृत्योवृषलोबली। गां भोक्ष्यत्यन्ध्रजातीयः कञ्चित् कालमसत्तमः। कृष्णनामाथ तद्भ्राता भविता पृथिवीपतिः। श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः। लम्बोदरस्तु तत्पुत्रस्तस्माच्चिविलकोन्टपः। मेघस्वातिः शिविलकात् दृढमानन्तु तत्सुतः। अनिष्टकर्म्मा हालेयस्तलकस्तस्य चात्मजः। पुरीषभेरुस्तत्पुत्रस्ततो राजा सुनन्दनः। चकोरो वटको यत्र शिवस्वातिररिन्दमः। तस्यापि गोमतीपुत्रः पुरीमान् भविता ततः। मेदशिराः शिवस्कन्धो यज्ञश्रीस्तत्सुतस्ततः। विजयस्तत्सुतो भव्यश्चन्द्रवीर्य्यश्च सोमधिः। एते त्रिंशन्नृपतयश्चत्वार्य्यब्दशतानि च। षट् पञ्चाशच्च ४५६ पृथिवीं भोक्ष्यन्ति कुरुनन्दन!। सप्ताभीरा आवभृत्या दश गर्द्दभिनो नृपाः। कङ्काः षोड़श भूपाला भविष्यन्त्य-

तिलोलुपाः। ततोऽष्टौ यवना भाव्याश्चतुर्द्दश तुरुष्ककाः। भूयो दश गुरुण्डाश्च मौला एकादशैव तु। एते भोक्ष्यन्ति पृथिवीं दश वर्षशतानि च। नवाधिकाञ्च नवतिं १०९९ मौला एकादश क्षितिम्। भोक्ष्यन्त्यब्दशतान्यङ्ग! त्रीणि ३००तैः संस्थिते ततः। किलकिलायां नृपतयो भूतनन्दोऽथ वङ्गिरः। शिशुनन्दिस्तु तद्भ्राता यशोनन्दिः प्रवीरकः। भोक्ष्यन्त्येते वर्षशतं भविष्यन्त्यधिकानि षट् १०६। तेषां त्रयोदश सुता भवितारश्च वाह्लिकाः। पुष्पमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च। एककाला इमे भूपा सप्तान्ध्राः सप्त कोशलाः। वैदूरपतयो भाव्या नैषधास्तत एव हि। मागधानाञ्च भविता विश्वस्फूर्जिः पुरञ्जयात्। करिष्यत्यपरान् वर्णान् पुलिन्दयदुमद्रकान्। प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः। वीर्य्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि। अनुगङ्गमाप्रयागं गुप्तां भोक्ष्यति मेदिनीम्। सौराष्ट्रावन्त्याभीराश्च शूरा अर्बुदमालवाः। व्रात्याद्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः। सिन्धोस्तटं चन्द्रभागां कान्तीं काश्मीरमण्डलम्। भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छा अब्रह्मवर्चसः। तुल्यकाला इमे राजन्! म्लेच्छप्रायाश्च भूभृतः। एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः। स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः। उदितास्तमितप्राया अल्पसत्वाल्पकायुषः। असंस्कृताः क्रियाहीना रजसा तमसाऽऽवृताः। प्रजास्ते भक्षयिष्यन्ति म्लेच्छराजन्यरूपिणः। तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः। अन्योऽन्यतो राजभिश्च क्षयं यास्यन्ति पीड़िताः" १अ०।

"ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया। कालेन बलिना राजन्! नङ्क्ष्यन्त्यायुर्बलं स्मृतिः। वित्तमेव कलौ नृणां जन्माचारगुणोदयः। धर्मन्यायव्यवस्थायां कारणं बलमेव हि। दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके। स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि। लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम्। अवृत्त्या न्यायदौर्बल्यं, पाण्डित्ये चापलं वचः। अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव च। स्वीकार एव चोद्वाहे, स्नानमेव प्रसाधनम्। दूरे वार्य्ययनं तीर्थं लावण्ये केशधारणम्। उदरम्भरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि। दाक्ष्ये कुटुम्बभरणं, यशोऽर्थे धर्मसेवनम्। एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले। ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः। प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मिभिः। आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम्। शाकमूलामिषक्षौद्रफलपुष्पाष्टि (आँटि) भोजनाः। अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीड़िताः। शीतवातातपप्रावृड्हिमैरन्योन्यतः प्रजाः। क्षुत्तृड्भ्यां व्याधिभिश्चैव सन्तप्स्यन्ते च चिन्तया। त्रिंशद्विंशति वर्षाणि परमायुः कलौ नृणाम्। क्षीयमाणेषु देहेषु देहिनां कलिदोषतः। वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम्। पाषण्डप्रचुरेऽधर्मे दस्युप्रायेषु राजसु। चौर्यानृतवृथाहिंसा नानावृत्तिषु वै नृषु। शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु। गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु। अणुप्रायेष्वोषधीषु शमीप्रायेषु स्थास्नुषु। विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु। इत्थं कलौ गते प्राये जनेषु खरधर्मिषु। धर्मत्राणाय सत्वेन भगवानवतरिष्यति। चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः। धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये। शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः। भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति। अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः। असिनाऽसाधुदमनमष्टैश्वर्य्यगुणान्वितः। विचरन्नाशुना क्षौण्यां हयेनाप्रतिमद्युतिः। नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति। अथ तेषां भविष्यन्ति मनांसि विशदानि वै। वासुदेवाङ्गरागाभिपुण्यगन्धानिलस्पृशाम्। पौरजानपदानां वै हतेष्वखिलदस्युषु। तेषां प्रजा विसर्गश्च स्थविष्ठः सम्भविष्यति। वासुदेवे भगवति सत्वमूर्त्तौ हृदि स्थिते। यदाऽवतीर्णो भगवान् कल्किर्धर्मपतिर्हरिः। कृतं भविष्यति तदा प्रजासूतिश्च सात्विकी। यदा सूर्य्यश्च चन्द्रश्च तथा तिष्यबृहस्पती। एकराशौ समेष्यन्ति भविष्यति तदा कृतम्। येऽतीता वर्त्तमाना ये भविष्यन्ति च पार्थिवाः। ते ते उद्देशतः प्रोक्ता वंशजाः सोमसूर्य्ययोः। आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम्। एतद्वर्षसहस्रन्तु शतं पञ्चदशोत्तरम्" "यदा यदा सतां हानिर्वेदमार्गानुसारिणाम्। तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः"। अनुपदमधिकमुक्तम्। अधिकं कलिस्वभावादिकं कल्किशब्दे वक्ष्यते।

कलियुगे च शककर्त्तारः षट् यथोक्तं ज्योतिर्विदाभरणे "युधिष्ठिरो विक्रमशालिवाहनौ धराधिनाथौ, विजयाभिनन्दनः। इमेऽनु नागार्ज्जुनमेदिनीपतिर्बलिः क्रमात् षट् शककारकाः कलौ"। तेषां शककालश्च शकशब्दे वक्ष्यते।

कलौ वर्ज्यधर्म्माः निर्णयसिन्धावुक्ता यथा—

“बृहन्नारदीये। “समुद्रयात्रास्वीकारः कमण्डलुविधारणम्। द्विजानामसवर्णासु कन्यासूपयमस्तथा। देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः। मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा। दत्ताऽक्षतायाः कन्यायाः पुनर्दानं परस्य च। दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ। महाप्रस्थानगमनं गोमेधश्च तथा मखः। इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः”। कमण्डलुः “सोदकञ्च कमण्डलुम्”इत्युक्तः स्मृतयो वा। दत्ता ऊढा। “ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा। कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुमिति” हेमाद्रौ वचनात्। “ऊढा पुरुषसंयोगात् क्षते देयेति केचन” इत्यादिभिर्विवाह्यतोक्ता। हेमाद्रौ ब्राह्मे “गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा। नराश्वमेधौ मद्यञ्च कलौ वर्ज्यं द्विजातिभिः”। गोत्रात् गोत्रजायाः पितृष्वसुः, मातुः सपिण्डात् मातुलात्, तत्कन्याया विवाहः कलौ न कार्य्यः। तेन यानि तद्विधायकानि, तानि युगान्तरविषयाणि। तथा च व्यासः। “तृतीयां मातृतः कन्यां, तृतीयां पितृतस्तथा। शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः” इति कलौ निन्दामाह। मातृतस्तृतीयां मातुलकन्यामित्यर्थः। उक्तञ्चैतत् प्राक्। मद्यं “स्त्रोभ्यः सुरामाचामम्” इत्यादिना विहितमपि वर्ज्यम्” हेमाद्रौ आदित्यपुराणे “विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम्। बालायाः क्षतयोन्याश्च वरेणान्येन संस्कृतिः। कन्यानामसवर्णानां विवाहश्च द्विजातिभिः। आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम्। द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः। महाप्रस्थानगमनम्, गोसंज्ञप्तिश्च गोसवे। सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः। अग्निहोत्रहवन्याश्च लेहो लीढ़ापरिग्रहः। इत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा। प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम्। संसर्गदोषस्तेयान्यमहापातकिनिष्कृतिः। वरातिथिपितृभ्यश्च पशूपाकरणक्रिया। दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः। सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि। अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियाः। परोद्देशात्मसंत्याग उद्दिष्टस्यापि वर्ज्जनम्। प्रतिमाभ्यर्चनार्थाय, संकल्पश्च सधर्मकः। अस्थिसञ्चयनादूर्द्ध्वमङ्गस्पर्शनमेव च। शामित्रं चैव विप्राणां सोमविक्रयणं तथा। षड्भक्तानशने चाथ हरणं हीनकर्म्मणः। पृथ्वीचन्द्रोदये “शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम्। भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः। शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलता। आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा। प्रजार्थं तु द्विजाग्र्याणां परजायापरिग्रहः। ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया। बलात्कारादिदुष्टस्त्रीसंग्रहो विधिनोदितः। यतेश्च सर्ववर्णेषु भिक्षाचर्या विधानतः। नवोदके दशाहञ्च दक्षिणा गुरुणोदिता। ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च। भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा। गोतृप्तिशिष्टपयसि शिष्टैराचमनक्रिया। पितापुत्रविरोधेषु साक्षिणां दण्डकल्पनम्। यतेः सायंगृहत्वं च सूरिभिस्तत्त्वदर्शिभिः। एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः। निवर्त्तितानि विद्वद्भिर्व्यवस्थापूर्वकं बुधैः”। सुराग्रहणस्य तत्कर्तुः संग्रहो व्यवहारः। न च मद्यं चेति सामान्येन निषिद्धेनास्योपसंहार इति शङ्क्यम्। निषेधस्य निवृत्तिफलत्वेन विशेषानपेक्षत्वात्, मा हिंस्यादित्यस्य न ब्राह्मणं हन्यादित्यनेनोपसंहारे हिंसान्तरस्या दोषापत्तेश्च। निरूपितं चैतद्धेमाद्रिणान्यत्रेत्युपरम्यते। “एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः” इत्युक्तेः अघस्य अशौचस्य सङ्कोचः “न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते” इत्युक्तस्य प्रायश्चित्तस्य विधानम् उपदेशः। “कलौ कर्त्तैव लिप्यत” इति व्यासोक्तेः पतितसंसर्गदोषे सत्यऽपि पातित्यं नेत्यर्थः-इति केचिदाहुः। ते मूर्खाः मानाभावात्। तेनायमर्थः। तत्संसर्गी तु पञ्चमः स्तेयञ्च इति तदन्यानि महापातकानि ब्रह्मवधसुरापाणगुरुतल्पाभिगमनानि त्रीणि, तेषां कामकृतानां प्रायश्चित्तं कलौ न, तेषु कामतोमरणान्तस्यैवोक्तेः। तत्स्थाने द्वादशाब्दं, द्वैगुण्ये आत्मनो ब्रह्मवधनिमित्ते च चतुर्विंशत्यब्दमिति चतुर्गुणादाद्याब्दापत्तेस्तस्य च“चतुर्थे नास्ति निष्कृतिः” निषेधात् वर्गिणो व्रतस्यैवोक्तेः। “स्तेये च राज्ञो कर्तृत्वान्नात्मब्रह्मवधापत्तिः। अतो द्वैगुण्ये पुनः कारः। न च विधित्वं, निषेधबाधात्। आत्मनः पापवादेऽपि ब्रह्मवधाभावात् युगान्तरदोषसाम्यं कलौ दोषाधिक्यात्। एतद्द्विप्रपरम्। असवर्णान्या क्षत्रियादिस्तया दुष्टैः। अयोनौ शिष्यादौ। “तथा परित्याज्याः शिष्यागा गुरुगाश्च याः” इत्युक्तेः परोद्देशेन ब्राह्मणाद्यर्थं आत्मत्यागः। यद्वा

द्देशात्मा त्यागोदानं मनसा पात्रमुद्दिश्येत्युक्तम् । उद्दिष्टस्य त्यक्तस्य वर्ज्जनम् प्रतिग्रहसमर्थोऽपीत्युक्तम् । वेतनग्रहणेन प्रतिमापूजा । "स्वाशौचकालाद्विज्ञेयं स्पर्शनन्तु त्रिभागतः" इत्युक्तः स्पर्शः । षड्भिति "उपोषितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्"इत्युक्तमन्नचौर्य्यम् । आपदि चत्रादिवृत्तिः, सुखेनैव धर्मदग्निमित्युक्तं धमनम् । "दशाहेनैव शुध्येत भूमिष्ठं च नवोदकम्" इत्युक्तो दशाहः । "गुरवे तु वरं दत्त्वा" इत्युक्ता दक्षिणा । शूद्रेषु दासगोपालेति । "कन्दुपक्वं स्नेहपक्वं यच्च दुग्धेन पाचितम् । एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्" इत्यपरार्कें सुमन्तूक्ता शूद्रस्य पाकक्रिया । "पितापुत्रविवादे तु साक्षिणां त्रिपणोदमः" इत्युक्तः । सायंगृहत्वम् "विधूमे सन्नमुषले"इत्युक्तम् । पृथ्वी चन्द्रेण तु । "अटन्ति वसुधां विप्राः पृथिवीदर्शनाय च । अनिकेता निराहारा ये तु सायंगृहास्तु ते" इति पुराणोक्तो निषिद्धः, तेनाज्ञातशीलपान्यादेः श्राद्धादौ विनियोगो न कार्य्यः । कलौ एतानि वर्ज्यानीत्यर्थः । निगमः । "अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्" । अग्निहोत्रं तदर्थमाधानम् । एतच्च सर्वाधानपरम् । "अर्द्धाधानं स्मृतं श्रौतं स्मार्त्ताग्न्योस्तु पृथक्कृतिः । सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रितेति" लौगाक्षिवचनादिति स्मृतिचन्द्रिकायाम् एतेन "चत्वार्य्यब्दसहस्राणि चत्वार्य्यब्दशतानि च । कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः । संन्यासश्च न कर्त्तव्यो ब्राह्मणेन विजानतेति" व्यासवचनं व्याख्यातम् । सर्वाधानेऽपि विशेषमाह देवलः "यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते । संन्यासञ्चाग्निहोत्रञ्च तावत्कुर्य्यात् कलौ युगे" इति । संन्यासस्त्रिदण्डः केचित्" ।

दत्तौरसेतरेषान्त्विल्यत्र दत्तपदं कृत्रिमस्याप्युपलक्षणम् "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च"कलिधर्म्मे पराशरस्मरणात् इति दत्तकमीमांसादिमतम् । दत्तकशब्दे चन्द्रिकामतं वक्ष्यते । समुद्रयात्रास्वीकारोऽप्यत्र तीर्थयात्रारूपधर्मपरः तथा हि ।

"शोधितस्यापीत्यनेन कृतप्रायश्चित्तस्यैव संग्रहपदवाच्यव्यवहार्य्यतानिषेधेन यत्र विषये समुद्रनौयानं निषिद्धं तत्रैव विषये कृतप्रायश्चित्तस्याप्यसंग्रह इति प्रतिपादितम् । अत्र शोधितत्वोक्त्यैव प्रायश्चित्तनिमित्तीभूतपापनिश्चय आक्षिप्यते तन्निश्चयश्च पापावेदकशास्त्रादेव, समुद्रगमनमात्रे च कुत्रापि शास्त्रे प्रायश्चित्ताद्यदर्शनात् न तस्य निषिद्धता, किन्तु तद्गमनकाले म्लेच्छादिस्पृष्टजलान्नसेवन एव, तत्पापापनोदनाय तु कृतेऽपि प्रायश्चित्ते न तद्यातुः संग्रह इत्येव कल्पयितुमुचितम् शोधितस्यापीति पदस्वारस्यात् । अन्यथा समुद्रनौगमनमात्रे संग्रह इत्येवाभिदध्यात् । न च तथाभिहितम् । न च "समुद्रयात्रास्वीकारः कमण्डलुविधारणम् । इत्युपक्रम्य "इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः" इति वृहन्नारदीयवचने समुद्रयात्रास्वीकारस्य कलौ निषिद्धतयोक्तेः निषिद्धातिक्रमे च "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति"इतियाº स्मृतौ क्रमशस्तथाचरणे पातित्यप्रतिपादनात् तद्विषय एव प्रायश्चित्ताचरणसम्भवेन तत्रैव शोधितस्यापीत्यस्यावकाश इति वाच्यम् वृहन्नारदीयवचने उपसंहारे "इमान् धर्मान्" इत्युक्तेः धर्म्मरूपसमुद्रयात्रास्वीकारस्यैव कलौ निषेधात् वाणिज्यराजाज्ञादिनिमित्तकस्य तस्य निषेधाभावेन तद्विषयकत्वासम्भवात् । कूर्म्मे च ब्रह्महत्यादिपापापनोदनार्थं समुद्रगमनं पराशरेण,—प्रायश्चित्तप्रकरणे"शतयोजनविस्तीर्णं शतयोजनमायतम् । रामचन्द्रस-मादिष्ट-नल-सञ्चय-सञ्चितम् । सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति" इत्यनेन । न चात्र समुद्रसेतुदर्शनस्यैव ब्रह्महत्यानाशकत्वं शङ्क्यं, समुद्रयात्रास्वीकारं विना शतयोजनाय तस्य सेतोर्दर्शनासम्भवेन आक्षेपेणैव तद्गमनलाभात् । अन्यथा सेतोर्यत्किञ्चिदंशमात्रस्य तथात्वे "शतयोजनमायतम्" इति विशेषणमनर्थकं स्यात्, तथा च शतयोजनविस्तारायतसेतुबन्धदर्शनस्यैव प्रकृतब्रह्महत्यापापनाशकत्वं न तु यत्किञ्चिन्मात्रदर्शनस्य, पापप्राबल्येन परिश्रमप्राबल्यस्यापेक्षितत्वात् किन्तु एकादश्यादिव्रतस्येव यत्किञ्चिन्मात्रदर्शनस्यातिदिष्टब्रह्महत्यानाशकत्वम् युक्तम् । अतएव "यो भूय आरभते तस्य फले विशेषः" इति जैमिनिना सम्यगायासे फलबाहुल्यं निर्णीतम्, निर्णीतञ्च ऋग्वेदभाष्ये माधवाचार्य्येण सम्यगायासादिना अनुष्ठिताश्वमेधाद्यपेक्षया तत्तद्यज्ञविद्याबोधकवेदाध्यायिनोऽतिदिष्टब्रह्मवधादिनाशकत्वम् । एवञ्च प्रकृतब्रह्महत्यायाः अपनोदनार्थं शतयोजनदीर्घविस्तारसेतुदर्शनं स्मृतौ विहितम् । तेनैव च समुद्रनौगमनमर्थापत्तिलभ्यम् एवं द्वारवत्यादितीर्थ यात्राङ्गमपि समुद्रयान-

गमनमर्थापत्तिप्रमाणलभ्यम् । एवञ्च ईदृशसमुद्रयानस्यैव धर्म्मरूपतया विहितस्य कलौ निषेधः वृहन्नारदीयवचने कमण्डलुविधारणादिभिः पुण्यापरपर्य्यायधर्म्मसाधनत्वेन धर्म्मरूपैः समभिव्याहारेण पठितत्वात् धर्म्मरूपस्यैव समुद्रयानस्य निषिद्धत्वौचित्यात् "प्रायेण समानरूपाः सहचरा भवन्ति" इति न्यायात् । एतेन वृहन्नारदीये "समुद्रयातुरस्वीकार" इति पाठे रघुनन्दनमाधवाचार्य्यादिबहुनिबन्धकारसम्मते स्थिते निर्णयसिन्धौ समुद्रयातुः स्वीकार इति क्वाचित्कपाठस्तु अनादरणीयोऽनुचितश्च, तथा सति समुद्रयातुर्जनस्य स्वीकाररूपव्यवहारस्य धर्म्मरूपत्वाभावेन "इमान् धर्मान्" इत्यभिधानस्यायुक्तत्वापत्तेः । ततश्च धर्मार्थसमुद्रयात्रा-स्वीकारस्यैव निषिद्धतया वाणिज्यराजाज्ञादिनिमित्तकस्य तस्य कुत्राप्यनिषेधात् तद्गमने म्लेच्छादिगुरुतरसंसर्गे सन्ध्यावन्दनादित्यागे च तत्पापपनोदनार्थं शोधितस्यापि (कृतप्रायश्चित्तस्य) न संग्रह इत्यत्रैव आदित्यपुराणवचनतात्पर्य्यम् । यथा च "कामतोऽव्यवहार्य्यस्तु वचनादिह जायते, इति याज्ञवल्क्येन पातकविशेषे प्रायश्चित्ताचरणेऽपि अव्यवहार्य्यताऽभिहिता, तत्समानन्यायादत्रापि प्रायश्चित्ताचरणेऽपि न व्यवहार्य्यतेति युक्तमुत्पश्यामः । एवञ्च समुद्रनौगमनकाले सन्ध्यादिकर्त्तुः । म्लेच्छादिभिर्गुरुतरं संसर्गमकुर्वतश्च प्रायश्चित्तज्ञापकशास्त्राभावात् न अव्यहार्य्यता, नापि प्रायश्चित्ताचरणम् । ततश्च "उषित्वा यत्र कुत्रापि स्वधर्म्मं प्रतिपालयन् । षट् कर्म्माणि प्रकुर्व्वीरन्निति धर्म्मस्य निश्चयः" इति स्मृतौ यत्र कुत्रापि वासेऽपि स्वधर्म्मानुष्ठाने पापशून्यत्वमुक्तं सूपपन्नम् । अतएव कलौ वाणिज्याद्यर्थसमुद्रयाने शिष्टाचारोऽपि दृश्यते । तथा हि कलियुग नृपवत्सराजामात्ययोर्यौगन्धरायणबाभ्रव्ययोर्युद्धार्थं वत्सराजाज्ञया समुद्रयानं रत्नावलीनाटके वर्णितम्, वर्णितञ्च भाषाचण्डीपुस्तके श्रीमन्ताभिधवणिजस्तत्पितुश्च इतो वङ्गदेशात् सिंहलगमनम् । न च तद्गमनं तदा केनापि विगीतम् । यदि तद्विगीतं स्यात् तदा ते हि शिष्टाः कथं तत् कुर्युः । इदानीन्तनानां विगानन्तु म्लेच्छभूरिसंसर्गाशङ्कयैवेति एतन्मूलकमेव इदानीमपि अन्यैर्दाक्षिणात्य शिष्टैर्वाणिज्याद्यर्थं सिंहलादिगमनमनुष्ठीयते । अतः समुद्रयानगमनमात्रं निषिद्धमिति तु रिक्तं वचः! ततश्च धर्मार्थसमुद्रयानगमनमेव कलौ निषिद्धमित्यायातम् । तद्गमनकाले च यदा म्लेच्छादिभिर्गुरुतरसंसर्गः सन्ध्यादित्यागश्च तदैव प्रायश्चित्ताचरणेऽपि द्विजानामव्यवहार्य्यता शूद्राणान्तु प्रायश्चित्ताचरणे व्यवहार्य्यतैव द्विजपदस्वारस्यात् अन्यथा लोकस्याक्षौ त्वित्यभिदध्यात् । इत्येव द्विजेभ्यः शूद्राणां विशेष इति दिङ्मात्रमुपदर्शितम्" २ कलिकालाधिष्ठातृदेवभेदे च तस्योत्पत्तिर्यथा "प्रलयान्ते जगत्स्रष्टा ब्रह्मा लोकपितामहः ससर्ज घोरं मलिनं पृष्ठदेशात् स पातकम् । सचाधर्म्म इति ख्यातस्तस्य वंशानुकीर्त्तनात् । श्रवणात् स्मरणाल्लोकः सर्व्वपापैः प्रमुच्यते । अधर्मस्य प्रिया रम्या मिथ्या मार्ज्जारलोचना । तस्याः पुत्त्रोऽतितेजस्वी दम्भः परमकोपनः । स मायायां भगिन्यान्तु लोभं पुत्त्रञ्च कन्यकाम् । निकृतिं जनयामास तयोः क्रोधः सुतोऽभवत् । स हिंसायां भगिन्यान्तु जनयामास तं कलिम् । वामहस्तधृतोपस्थं तैलाभ्यक्ताञ्जनप्रभम् । काकोदरं करालास्यं लोलजिह्वं भयानकम् । पूतिगन्धिं द्यूतमद्यस्त्रीसुवर्णकृताश्रयम् । भगिन्यान्तु दुरुक्त्यां स भयं पुत्त्रञ्च कन्यकाम् । मृत्युं संजनयामास तयोस्तु निरयोऽभवत् । यातनायां भगिन्यान्तु लोभपुत्त्रः शतायुतम् । इत्थं कलिकुले जाता बहवो धर्म्मनिन्दकाः" इति कल्किपुराणे १ अ० ।

तस्य नलं प्रति द्वेषभावस्तच्छरीरे प्रवेशश्च भा० व० ५८,५९ अ० वर्णितः । यथा

"ततोऽब्रवीत् कलिः शक्रं दमयन्त्याः स्वयंवरम् । गत्वा हि वरयिष्ये तां मनो हि मम ताङ्गतम् । तमब्रवीत् प्रहस्येन्द्रो निर्व्वृत्तः स स्वयंवरः । वृतस्तया नलो राजा पतिरस्मत्समीपतः । एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः । देवानामन्त्र्य तान् सर्व्वानुवाचेदं वचस्तदा । देवानां मानुषं मध्ये यत् सा पतिमविन्दत । तत्र तस्या भवेन्न्याय्यं विपुलं दण्डधारणम् । एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः । अस्माभिः समनुज्ञाते दमयन्त्या नलो वृतः । का च सर्व्वगुणोपेतं नाश्रयेत नलं नृपम् । यो वेद धर्म्मानखिलान् यथावच्चरितव्रतः । योऽधीते चतुरो वेदान् सर्व्वानाख्यानपञ्चमान् । नित्यं तृप्ता गृहे यस्य देवा यज्ञेषु धर्म्मतः । अहिंसानिरतो यश्च सत्यवादी दृढव्रतः । यस्मिन् सत्यं धृतिर्ज्ञानं तपः शौचं दमः शमः । ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे । एवं रूपं नलं यो वै कामयेच्छपितुं कले ! । आत्मानं स शपेन्मूढो हन्यादात्मानमात्मना । एवंगुणं नलं यो वै कामयेच्छपितुं कले ! । कृच्छ्रे स नरके मज्जेदगाधे विपुले ह्रदे । एवमुक्त्वा कलिं देवा

द्वापरश्च दिवं ययुः। ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत्। संहर्त्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर!। भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते। त्वमप्यक्षान् समाविश्य साहाय्यं कर्त्तुमर्हसि” ५८।

“एवं स समयं कृत्वा द्वापरेण कलिः सह। आजगाम ततस्तत्र यत्र राजा स नैषधः॥ स नित्यमन्तरं प्रेप्सुर्निषधेष्ववसच्चिरम्। अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम्। कृत्वा मूत्रमुपस्पृश्य सन्ध्यामन्वास्त नैषधः। अकृत्वा पादयोः शौचं, तत्रैनं कलिराविशत्। स समाविश्य च नलं समीपं पुष्करस्य च। गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै। अक्षद्यूते नलं जेता भवान् हि सहितो मया। निषधान् प्रतिपद्यस्व जित्वा राज्यं नलं नृपम्। एवमुक्तस्तु कलिना पुष्करो नलमभ्यगात्। कलिश्चैव वृषोभूत्वा गवां पुष्करमभ्यगात्। आसाद्य तु नलं वीरं पुष्करः परवीरहा। दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः। न चक्षमे ततो राजा समाह्वानं महामनाः। वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत। हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससाम्। आविष्टः कलिना द्यूते जीयते स्म नलस्तदा” ५९। अधिकं कर्कोटकशब्दे उक्तम् “कर्कोटकस्य नागस्य दमयन्त्या नलस्य च। ऋतपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम्”। भा०व०। २विभीतकवृक्षे (बयडा) तस्य नलप्रधर्षणार्थं कलिनाश्रितत्वात्तथात्वम्। “विभीतकमधिष्ठाय यथा भूतेन तिष्ठता। तेन भीमभुवो भीरुः सं राजर्षिरधर्षि न। तमालम्बनमासाद्य वैदर्भीनिषेधेशयोः। कलुषं कलिरन्विष्यन्नवात्सीद्वत्सरान् बहून्” नैष०। ४कलहे। “मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम्। वसतिमुपगतेन धाम्नि तस्याः शठ! कलिरेष महांस्त्वयाऽद्य दत्तः” माघः। ५शूरे ६युद्धे च हेमच०। द्यूतविषये ७एकाङ्कयुक्तपार्श्वकपाशके। यस्मिन् अक्षपार्श्वे एकाङ्कचिह्नमस्ति तस्मिन् अक्षभागे। कलिना दृष्टं साम कलेरपत्यादि वा ढक्। कालेय तद्दृष्टे सामनि तदपत्यादौ। ७कोरके स्त्री अमरटीका वा ङीप्।

**कलिक** पुंस्त्री कल+मत्वर्थे ठन्। वकभेदे (कोंचवक्) शब्दर० स्त्रियां जातित्वात् ङीष्।

**कलिका** स्त्री कलिरेव स्वार्थे कन्। १कोरके (कडि) अस्फुटितपुष्पे अमरः। “वितरसि नः कलिकां किमर्थमेनाम्” “असकलकलिकाकुलीकृतानि स्खलनविकीर्णविकाशिकेशराणाम्” माघः। “मुग्धामजातरजसं कलिकामकाले” सा० द०। “चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः” शकु०। “सकलिका कलिकामजितामपि” रघुः। कलोध्वनिभेदः साध्यतयाऽस्त्यस्य ठन्। वीणामूले हेमच० तस्य कलसाधनत्वात् तथात्वम्। कलैव स्वार्थे कन्। २कलाशब्दार्थे। “तन्यन्ते कलिका यस्मात्तस्मात्तिथयः स्मृताः” सि०शि०। कलिकापूर्व्वम्। “प्रथममपरचरणसमुत्थं श्रयति स यदि लक्ष्म। इतरदितरगदितमपि यदि च तुर्य्यम्। चरणयुगलकमविकृतमपरमिति कलिका सा” वृत्तर० उक्ते ४छन्दोभेदे च। ५पदसन्ततियुक्तरचनाभेदे सा च गोविन्दवीरुदावलीतट्टीकयोर्दर्शिता यथा “स्युर्म्महाकलिकारम्भे श्लोकास्तु युगशः स्मृता। अन्यासां कलिकानान्तु भवन्त्येकैकशो हि ते। पूर्व्वौ द्वौ कलिकाभिस्तु वीरुदस्तुल्यसंख्यकाः। कला नाम भवेत्तालनियता पदसन्ततिः। कलाभिः कलिका प्रोक्ता तत्भेदाः षट् समीरिताः। कलिका चण्डवृत्ताख्या द्विगादिगणवृत्तका। तथा त्रिभङ्गी वृत्त्याख्या मध्या मिश्रा च केवलेति”। चण्डवृत्ते दशधा संयुक्तवर्णाः। अत्र संयुक्तवर्णानां नियमो दशधा च ते। मधुरश्लिष्टविश्लिष्टशिथिलह्रादिनस्तमी। भिद्यन्ते ह्रस्वदीर्घाभ्यां ते दर्श्यन्ते स्फुटं यथा। ह्रस्वान्मधुरसंयोगाः शङ्कराङ्कुशकिङ्कराः। तस्मात्तु श्लिष्टसंयुक्तादर्पकर्परसर्पवत्। ततोविश्लिष्टसंयुक्ता भल्लकल्याणवल्गयः। तथा शिथिलसंयुक्ताः पश्यकश्यपवश्यवत्। प्रोक्ता ह्रादियुता मह्नसह्यगुह्या प्रसह्यवत्। गर्हादीन् ह्रादिसंयुक्तभेदान् केचित् समूचिरे। दीर्घात्तुङ्गाङ्ककार्पासं बाल्यं वैश्यस्य बाह्यकमिति”। कलापरिमाणमुक्तम्। “अधिकाश्चेच्चतुःषष्टिर्न्यूना द्वादशतः कलाः। एताभ्यो नाधिकाः कार्य्यान्यूनाश्चापि न पण्डितैरिति”। तत्र तावच्चण्डवृत्तकलिका द्विविधा नस्रो विशिखस्चेति भेदात् तत्र रणादिविंशतिभेदस्य नस्रस्येह वर्द्धितादयोनव भेदा गृहीताः “वर्द्धितं वीरभद्रस्य समपोऽच्युतउत्पलम्। तुरङ्गः श्रीगुणरतिस्तथा मातङ्गखेलितम्। तिलकश्चेति कलिकानस्रस्येहोदिता नव इत्युक्तेः अथ विशिखः पद्मकुन्दचम्पकवञ्जुलबकुलभेदात् पञ्चविधः तेष्वादिमं पद्मं पङ्केरुहसितकञ्जपाण्डूत्पलेन्दीवरारुणाम्भोरुहकह्लारभेदात् षड्विधम् अन्तिमं बकुलन्तु भासुरमङ्गलभेदात् द्विविधमित्येकादशभेदो विशिखः पङ्केरुहं सितकञ्जं तथा पाण्डूत्पलं परम्” इन्दी-

शरारुणाम्भोजे कह्लारञ्चेति षड्विधम्। ईषद्भेदेन कथितं पद्ममेव मनीषिभिः। चम्पकं वञ्जुलं कुन्दं बकुलं द्विविधं तथा। इति पञ्चविधस्यापि विशिखस्येशसंख्यका:” इत्युक्तेः एवं चण्डवृत्तकलिकाविंशतिधा गृहीताः अथ पञ्चधा द्विगादिगणवृत्तका कलिका मञ्जरीत्यभिहिता क्रमात् कोरक गुच्छकसंफुल्लकुसुमगन्धाख्या तस्यास्तत्र कोरकगुच्छकुसुमानि गृहीतानि” कोरकोगुच्छकुसुमे मञ्जरी त्रिविधात्र तु” इत्युक्तेः। त्रिभङ्गी कलिका तु शिखरिण्यादिपूर्व्वा षोढा तस्यास्तत्र दण्डकपूर्व्वा विदग्धपूर्वा च गृहीता “दण्डकाख्या विदग्धाख्या त्रिभङ्गीह द्विधा मता” इत्युक्तेः अथ मिश्रकलिका“कलिका गद्यसंपृक्ता सप्तविभक्तिका वा अक्षरमयी सर्व्वलघ्वी चेति द्विभेदा कोरका चेत्यष्टौ तदेवं षड्भ्योमहाकलिकाभ्यः अष्टाविंशतिरिह कलिका गृहीताः। रणादय एकादश नखभेदाः संफुल्लगन्धौ मञ्जरीभेदौ शिखरिण्यादयः त्रिभङ्गीभेदा मध्यकलिका च त्यक्तास्यारुताधिक्यविरहात्” ।

**कलिकापूर्व** य० कलिकया अंशेन जन्यमपूर्वम्। परमापूर्वजनके अङ्गजन्यापूर्व्वभेदे। तत्साधने युक्तिः शब्दचिन्तामणिमाथुर्य्योर्दर्शिता यथा—

“नन्वेवमाग्नेयादीनां सर्व्वां क्षणिकत्वात् योग्यतानवगतौ परमापूर्वकारणत्वानवगमे कथमपूर्वकल्पनम्? इति चेत् काम्येऽपूर्ववाच्यत्वस्थितावाग्नेयादौ तद्द्वारासाधनत्वस्य योग्यत्वसम्भवात् न तु प्रथमम्” शब्दचि०। व्याकृतं चैतत् मथुरानाथेन यथा—

“ननु फलसाधनतान्वये फलसमयस्थायित्वतादृशव्यापारोपधायकत्वान्यतरत्वस्य योग्यतात्वे आग्नेयाष्टाकपालयागैन्द्रदधियागैन्द्रपयोयागात्मकयागत्रयरूपस्य दर्शस्य, आग्नेयाष्टाकपालोपांशुयागाग्नीषोमीयैकादशकपालयागात्मकयागत्रयरूपस्य पौर्णमासस्य चावान्तरकलिकापूर्व्वत्रयं विना षड्जन्यैकपरमापूर्व्वजनकत्वमनुपपन्नं युगपदाग्नेयादीनां सहानवस्थानादतः “दर्शपौर्णमासाभ्यां यजेत स्वर्गकामः” इत्यादि प्रधानविधिबोधितपरमापूर्व्वसाधनत्वान्यथानुपपत्त्या तत्र परमापूर्व्वनाश्यं कलिकापूर्व्वषट्कं कल्प्यते इति तव सिद्धान्तो व्याहतः योग्यताज्ञानाभावेन प्रधानविधिवाक्यात् प्रथमं परमापूर्व्वसाधनत्वान्वयस्यैवासम्भवादित्याशङ्कते नन्वेवमिति। एवंसाधनत्वान्वये निरुक्तान्यतरत्वस्य योग्यतात्वे। क्षणिकत्वादिति आशुविनाशित्वादित्यर्थः। परम्पराघटकानुपस्थितेश्चेति शेषः। कथमिति। कथं प्रधानविधिबोधितपरमापूर्व्वसाधनतान्यथानुपपत्तेः कलिकापूर्व्वकल्पनम्? इत्यर्थः। यदि च निरुक्तयोग्यताज्ञानं विनापि परमापूर्व्वसाधनत्वावगमस्तदा परमापूर्व्वज्ञानं विना स्वर्गसाधनत्वस्यापि ज्ञानसम्भवात् किं परमापूर्व्वस्यापि वाच्यतया? इति भावः। न च तत्रापि प्रधानविधिबोधितपरमापूर्व्वसाधनत्वान्यथानुपपत्त्या कलिकापूर्व्वाणि न कल्प्यन्ते अपि तु आग्नेयादिबोधकप्रत्येकवाक्यात् कलिकापूर्व्वोपस्थितौ प्रधानविधिवाक्यात् परमापूर्व्वसाधनत्वावगमः प्रथमन्तु प्रधानविधिवाक्यं मूकमेवेति वाच्यम् अपसिद्धान्तात् “आग्नेयाष्टाकपालोभवत्यमावस्यायाम्” इत्यादिप्रत्येकबोधकवाक्यानां दर्शपौर्णमासाबोधकतया कलिकापूर्व्वाबोधकत्वाच्चेति निगर्वः। आशुविनाशित्वेन प्रतिसंहितकर्म्मणि यद्रूपेण फलस्य कालान्तरभावित्वप्रतिसन्धानं तद्रूपावच्छिन्नफलसाधनत्वान्वये तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वं योग्यता प्रकृते च प्रधानविधिना कार्य्यत्वरूपेण परमापूर्व्वं बोध्यते, तथाच कार्य्यत्वरूपेण तज्जनकता दर्शादीनां ग्राह्या, तत्र च परमापूर्वत्वरूपेण कालान्तरभावित्वप्रतिसन्धानेऽपि न कार्य्यत्वरूपेण कालान्तरभावित्वप्रतिसन्धानं, कार्य्यत्वावच्छिन्नस्य दर्शाद्यव्यवहितक्षणेऽपि सम्भवादतःपरमापूर्वसमयस्थायिव्यापारोपधायकत्वज्ञानं विनापि प्रथमं कार्य्यत्वरूपेण सामान्यतस्तत्साधनत्वग्रहः, उत्तरकालञ्च स्वर्गसमयस्थायिकार्य्यान्तराजनकस्य तादृशकार्य्यजनकत्वं परमापूर्वजनकतयैव पर्य्यवस्यति, तच्च साक्षान्न सम्भवति आग्नेयादेराशुविनाशित्वादतः परम्परया जनकत्वं,तच्चावान्तरव्यापारं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानात् कलिकापूर्वाणि कल्प्यन्ते, स्वर्गस्य च देहान्तरभोग्यत्वेन कालान्तरभावित्वप्रतिसन्धानात्तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वज्ञानं विना सामान्यतोऽपि न तत्साधनत्वग्रहसम्भव इति गूढाभिसन्धिना समाधत्ते काम्य इति “दर्शपौर्णमासाभ्यां यजेत स्वर्गकामः” इति काम्यविधावित्यर्थः। अपूर्ववाच्यत्वस्थिताविति कार्य्यत्वरूपेण परमापूर्ववाच्यत्वस्थितावित्यर्थः, तद्द्वारा साधनत्वस्येति परमापूर्वद्वारा साधनत्वस्येत्यर्थः, सामान्यतः स्वर्गसाधनत्वरूपेणान्वये इति शेषः। योग्यतासम्भवात् योग्यताज्ञानसम्भवात्, न तु प्रथममिति। न तु परमापूर्ववाच्यत्वं विनेत्यर्थः। स्वर्गस्य देहान्तरभोग्यत्वेन काला-

न्तरभावित्वप्रतिसन्धानात् तत्साधनत्वान्वये तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वस्य योग्यतात्वात् कार्य्यत्वरूपेण परमापूर्वसाधनत्वान्वये च न तत्पर्य्यन्तस्थायिव्यापारोपधायकत्वज्ञानमपेक्षितं कार्य्यत्वावच्छिन्नस्य देहान्तरभावि-प्रतिसन्धानादित्यभिसन्धिः। एतच्चापाततः स्वर्गस्य कालान्तरभावित्वाप्रतिसन्धाने क्रियायाः क्षणिकत्वाप्रतिसन्धाने वा स्वर्गसाधनत्वान्वयेऽप्यपूर्वोपस्थितिं विना योग्यताज्ञानसम्भवात्। केचित्तु “दर्शपौर्णमासाभ्यां यजेत स्वर्गकामः” इत्यत्र विधिप्रत्ययस्य कार्य्यत्वरूपेणापूर्वसामान्य एव शक्तत्वात् प्रथमं कार्य्यत्वरूपेण कलिकापूर्वसाधनत्वावगमस्ततः कार्य्यत्वरूपेण परमापूर्वसाधनत्वावगमः, न तु प्रथममेव परमापूर्वसाधनत्वावगमः। न च प्रथमं कार्य्यत्वरूपेण कलिकापूर्वसाधनत्वावगमेऽपि तत्र परमापूर्वपर्य्यन्तस्थायित्वं न गृहीतमिति वाच्यं द्वितीयबोधे परमापूर्वस्वर्गपर्य्यन्तस्थायित्ववत् प्रथमबोधे कलिकापूर्वस्य स्वर्गपर्य्यन्तस्थायिव्यापारसमयस्थायित्वभाने बाधकाभावादिति समाधत्ते काव्य इति। “दर्शपौर्णमासाभ्यां यजेत स्वर्गकाम” इति काम्यविधावित्यर्थः। अपूर्ववाच्यत्वस्थितावित्ति कार्य्यत्वरूपेण कलिकापूर्वस्यापि वाच्यत्वस्थितावित्यर्थः, तद्द्वारा साधनत्वस्येति कलिकापूर्वद्वारा परमापूर्वसाधनत्वस्येत्यर्थः, अन्वय इति शेषः। योग्यतासम्भवात् प्रथमं योग्यताज्ञानसम्भवात्, न तु प्रथममिति परमापूर्वसाधनत्वावगम इति शेषः। न चैवं प्रतीतपरमापूर्वसाधनत्वानुपपत्त्या कलिकापूर्वाणां कल्प्यत्वमिति सिद्धान्तव्याघात इति वाच्यं प्रधानविधिवाक्यात् परमापूर्वसाधनत्वान्वयानुपपत्त्या कलिकापूर्वाणामेव प्रथमान्वयबोधविषयत्वम् इत्येव तदर्थात् इति भावः” इत्याहुः। ननु एकस्मिन्नेव परमापूर्वे स्वर्गे च दर्शपौर्णमासयोः केन रूपेण जनकत्वमिति चेदुच्यते दर्शपौर्णमासोभयसाधारणेन दर्शपौर्णमासत्वव्यापकीभूतेन वैजात्यविशेषेण विजातीयापूर्वं विजातीयस्वर्गञ्च प्रति जनकत्वं, विजातीयापूर्वजनकतावच्छेदकतयैव तद्वैजात्यसिद्धिः, न च दण्डचक्रन्यायेन दर्शपौर्णमासत्वाभ्यामेव जनकत्वमस्तु केवलदर्शात् केवलपौर्णमासाद् वा फलानुत्पादस्य परस्परव्यतिरेकादेवोपपत्तेरिति वाच्यं कार्य्यकारणभावद्वयकल्पने गौरवात् दर्शत्वादेर्जनकतावच्छेदकतापर्य्यन्तस्य विध्यर्थत्वाभावात्। न च तथापि दर्शत्वादिप्रत्येकधर्ममादाय विनिगमनाविरहात् कार्य्यकारणभाव-

द्वयमावश्यकमिति वाच्यम्, केवलदर्शात् केवलपौर्णमासाच्च फलोत्पादस्य वारणाय कार्य्यकारणभावद्वयस्यावश्यकत्वेन गौरवस्यैव विनिगमकत्वात्, यदि च पौर्णमासं विना कृते दर्शे दर्शत्वस्य, दर्शं विना कृते च पौर्णमासे पौर्णमासत्वस्य प्रत्यक्षसिद्धत्वं नाभ्युपेयते किन्तु दर्शपूर्वकृते पौर्णमास एव पौर्णमासत्वं, पौर्णमासोत्तरकृत एव दर्शे दर्शत्वमुपेयते, तदा तु प्रत्येकं दर्शत्वपौर्णमासत्वाभ्यामेव जनकत्वं, न व्यापकजात्या, अतिरिक्तकल्पने गौरवात् अतिरिक्तजातिकल्पनेऽपि दर्शत्वादिकमादाय विनिगमनाविरहेण कार्य्यकारणभावद्वयस्यावश्यकत्वात्। अथ यदि पौर्णमासोत्तरकृते दर्श एव दर्शत्वं, तदा दर्शत्वेनैव हेतुतास्तु किं पौर्णमासत्वेन हेतुतया? न च विनिगमनाविरहात् पौर्णमासत्वेनापि हेतुत्वमिति वाच्यं केवलपौर्णमासत्वेन हेतुत्वे पौर्णमासानन्तरं दर्शोत्पादप्राक्काल एव परमापूर्वोत्पत्त्यापत्तेरेव विनिगमकत्वादिति चेन्न “दर्शपौर्णमासाभ्यां यजेत स्वर्गकाम” इति श्रुत्या पौर्णमासस्यापि हेतुत्वबोधनात् पौर्णमासत्वेनापि हेतुत्वस्यावश्यकत्वात् दर्शत्वस्य पौर्णमासावृत्तित्वात्। एतेन पयोयागात्मकदर्शचरमयागस्यैव पयोयागत्वेन हेतुत्वमस्त्वित्यपि निरस्तम्। दर्शपौर्णमासत्वाक्रान्तानामन्येषामपि हेतुत्वस्य वेदबोधितत्वात्। अथोभयसाधारणवैजात्येन हेतुतापक्षे जातेरव्यासज्यवृत्तितया आग्नेयादियागषट्कस्यैव एव आग्नेयादियत्किञ्चिद्यागानन्तरं परमापूर्वोत्पत्त्यापत्तिः कारणतावच्छेदकावच्छिन्नयत्किञ्चित्कारणसत्त्वात् एवं दर्शत्वपौर्णमासत्वादिना प्रत्येकहेतुत्वपक्षेऽपि पौर्णमासानन्तरं दर्शान्तर्गतयत्किञ्चिद्यागे कृत एव परमापूर्वोत्पत्त्यापत्तिरिति चेन्न परमापूर्वव्यापारीभूतानां कलिकापूर्वषट्कानामपि तत्तद्रूपेण दण्डचक्रवत् हेतुतया कलिकापूर्वषट्कानां सम्बन्धतया वा तदभावादेव तत्र परमापूर्वानुत्पादात्। ननु तथापि दर्शपौर्णमासस्थले कियन्त्यपूर्वाणीति चेदत्र प्राञ्चः—प्रथमतः पौर्णमासत्रयेण प्रत्येकं कलिकापूर्वत्रयं जनयित्वा मध्ये एकं परमापूर्वं जन्यते एवं दर्शत्रयेणापि प्रत्येकं कलिकापूर्वत्रयं जनयित्वा मध्ये एकं परमापूर्वं जन्यते, ततस्ताभ्यां परमापूर्वाभ्यां चरमं परमापूर्वान्तरं जन्यते इति नवापूर्वाणीत्याहुः। नव्यास्तु मध्यमपरमापूर्वद्वये मानाभावात्

षड्भिः कलिकापूर्व्वैरेव चरमं परमापूर्व्वं जन्यते इति सप्तापूर्व्वाणि। न च पूर्व्वपूर्व्वक्रियाभिर्जनितैः पञ्चभिः कलिकापूर्व्वैः सह चोत्तरक्रियैव चरमं परमापूर्व्वं जनयतु किं चरमक्रियाजन्यकलिकापूर्व्वेणेति वाच्यं तस्या अपि स्वोत्तराङ्गदक्षिणादानादिसाचिव्येनैव परमापूर्व्वजनकत्वोपगमेन तावत्कालानवस्थित्या चरमकलिकापूर्व्वस्वीकारात्, दक्षिणादानाद्युत्तराङ्गस्य साक्षादेव परमापूर्व्वहेतुर्नतु तत्र द्वारापेक्षेति प्राहुः। उच्छृङ्खलास्तु षड्भ्यः कलिकापूर्व्वेभ्य एव स्वर्गोत्पत्तेः परमापूर्व्वे मानाभावः। न च स्वर्गं प्रति षण्णामपूर्व्वाणां षडपूर्व्वसम्बन्धेन दर्शपौर्णमासयोर्वा हेतुत्वे गौरवमिति वाच्यं, तत्रापि परमापूर्व्वं प्रति षडपूर्व्वाणां षडपूर्व्वसम्बन्धेन दर्शपौर्णमासयोर्वा हेतुत्वेन तुल्यत्वात् षडपूर्व्वाणां सम्बन्धत्वन्तु मतद्वय एव। यदि षडपूर्व्वाणामपि पृथक् हेतुत्वं तदाऽपूर्व्वत्वेनैव। इत्थं षट्कत्वेनेत्यन्यदेतदित्याहुः। (अपूर्व्वशब्दे परमापूर्व्वखण्डनमेतन्मनुसारेणैवोक्तमिति स्मर्त्तव्यम्)तदसत्, परमापूर्व्वानभ्युपगमे दक्षिणादानादेश्चरमाङ्गस्य स्वर्गोपयोगित्वानुपपत्तेः न हि दक्षिणादानं साक्षात् स्वर्गहेतुः, अङ्गत्वात् आशुविनाशित्वाच्च तज्जन्यस्य पृथगपूर्व्वस्य स्वीकारे किमपराद्धं परमापूर्व्वेण?। परमापूर्व्वं प्रति च दक्षिणादानादेश्चरमाङ्गस्य साक्षादेव हेतुत्वम् इत्युक्तमेव। न च परमापूर्व्वाभ्युपगमे तत्र षड्पूर्व्वाणां दक्षिणादानस्य च कारणत्वं कल्पनीयमतोगौरवमिति वाच्यं, तत्रापि षड्पूर्व्वाणां दक्षिणादानादिजन्यादृष्टस्य च स्वर्गं प्रति हेतुत्वेन तुल्यत्वात् मम तु कलिकापूर्व्वषट्कं परमापूर्व्वजननद्वारं नतु स्वर्गहेतुः, मानाभावात् यागस्य हेतुत्वे च श्रुतिरेव मानमिति न किञ्चिदेतत्। ननु तथापि नवावृत्त्यादिस्थले दशपार्थिवशिवपूजादिस्थले च केन रूपेण परमापूर्व्वविशेषे स्वर्गविशेषे च हेतुत्वं, तत्र नवावृत्तित्वादेर्ज्जातित्वाभावात् न च तत्रापि अपेक्षाबुद्धिविशेषविषयत्वरूपनवत्वादिविशिष्टावृत्तित्वादिनैव हेतुत्वम्। अपेक्षाबुद्धिश्च प्रत्येकसङ्कल्पपूर्व्वकनवावृत्त्यादिव्यापृत्ता ग्राह्या इति वाच्यं प्रत्येकनवावृत्त्यादिमात्रवृत्त्यपेक्षाबुद्धेः कारणतावच्छेदकत्वेऽननुगमात् सकलनवावृत्त्यादिवृत्त्यपेक्षाबुद्धेः कारणतावच्छेदकत्वेऽसम्भवात् अथ चण्डीपाठावृत्तितत्तन्नवत्वेतरनवत्वत्वादिना नवत्वादिकमनुगतीकृत्य तद्विशिष्टत्वेन हेतुत्वं वाच्यं "कारणतावच्छेदकसम्बन्धश्च स्वर्गं प्रति परमापूर्व्वत्वमेव परमापूर्व्वं प्रति तु परमापूर्व्वेतरापूर्व्वसामान्यमेव दर्शादिस्थानवदत्रापि प्रत्येकावृत्तिजन्यकलिकापूर्व्वनवकादिद्वारैव परमापूर्व्वजननात् प्रत्येकसङ्कल्पपूर्व्वकप्रत्येकावृत्तिजन्यापूर्व्वतो नवावृत्त्यादिस्थलीयप्रत्येकावृत्तिजन्यकलिकापूर्व्वस्य न वैलक्षण्यमतः कलिकापूर्व्वं प्रति चण्डीपाठत्वादिनैव हेतुत्वं कार्य्यतावच्छेदकञ्च चण्डीपाठसामान्यजन्यतावच्छेदकतया सिद्धो नवावृत्त्यादिजन्यतावच्छेदकजातिव्यापको जातिविशेष एव। धारावाहिकपरमापूर्व्वद्वयादिवारणाय परमापूर्व्वेतरेति। नवत्वादेः प्रत्येकापरिसमाप्तत्वादेकस्मात् परमापूर्व्वोत्पाद इति चेन्न, निखिलापेक्षाबुद्धिसाधारणस्य नवत्वस्य एकस्यानुगतस्याभावेन तेन रूपेणानुगमासम्भवात् इति, मैवं नवावृत्तित्वादेरपि नवपाठादिविषयकमानसज्ञानविशेषवृत्तिमानसत्वव्याप्यजातित्वात् "नवकृत्वः पठेत्" "दश पार्थिवशिवलिङ्गानि पूजयेत्" इत्यादावपि तादृशज्ञानविशेष एव धात्वर्थः तादृशज्ञानविशेषस्य परमापूर्व्वं प्रति साक्षादेव हेतुरिति संक्षेपः"।

**कलिकार** पुंस्त्री कलिं कलहं करोति कृ—अण् कलिकृच्छति ऋ—अण् वा उप० स०। पीतमस्तके १धूम्याटे पक्षिणि (फिङ्गे)। तस्यामस्तके कलिकाकरपीतचिह्नवत्त्वात् तथात्वम्। स्त्रियां जातित्वात् ङीष्। २पूतिकरञ्जे (काँटाकरमचा)पु०मेदि०। ३विषलाङ्गल्याम् राजनि० गौरा० ङीष्। ४कलहकारके ५कलिकाप्राप्तरि च त्रि०। ६नारदे पु०।

**कलिकारक** पु० कलिकामृच्छति ऋ—कलिं करोति कृ—वा ण्वुल्। १पूतिकरञ्जे (काँटाकरमचा)२कलहकारके त्रि०। ३नारदे पु० हेमच०।

**कलिङ्ग** पुंस्त्री के मूर्द्ध्नि लिङ्गमस्य। १धूम्याटे पक्षिणि (फिङ्गे) अमरः तस्य मस्तके पीतचिह्नवत्त्वात्तथात्वम्। स्त्रियां जातित्वेऽपि संयोगोपधत्वात् टाप्। कलिं गच्छति बा० खच् डित् मुम् च। १पूतिकरञ्जे (काँटाकरमचा) हेमच० २कुटजे (कुड़ची) तस्य फलम् अण् तस्य लुप्। ३इन्द्रयवे न०। ४शिरीषवृक्षे ५प्लक्षवृक्षे च मेदि०। "जगन्नाथात् समारभ्य कृष्णातीरान्तगं प्रिये! कलिङ्गदेशः संप्रोक्तो वाममार्गपरायणः" इति तन्त्रोक्ते ६देशभेदे ब०व०मेदि० "उत्कलादर्शितपथः कलिङ्गाभिमुखं ययौ"रघुः। स च देशः वृहत्सं०कूर्मविभागे

आग्नेयास्तु यथा "आग्नेय्यां दिशि कोशलकलिङ्गवङ्गोपवङ्गजठराङ्गाः"। तेषां राजा, ते अभिजनोऽस्य वा अण्। कालिङ्ग तद्देशवासिजने च"कालिङ्गः प्रतिजग्राह तमस्त्रैर्गजसाधनः"रघुः बहुषु अणो लुक्। कलिङ्गाः। "स सागरं समासाद्य गङ्गायाः सङ्गमे नृपः। नदीशतानां पञ्चानां मध्ये चक्रे समाप्लवम्। ततः समुद्रतीरेण जगाम वसुधाधिपः। भ्रातृभिः सहितो वीरः कलिङ्गान् प्रति भारत! लोमश उवाच। एते कलिङ्गाः कौन्तेय! यत्र वैतरणी नदी। यत्रायजत धर्म्मोऽपि देवाञ्छरणमेत्य वै। ऋषिभिः समुपायुक्तं यज्ञियं गिरिशोभितम्। उत्तरं तीरमेतद्धि सततं द्विजसेवितम्। समानं देवयानेन पथा स्वर्गमुपेयुषः"। "त्रिंशतं वै सहस्राणां योजनानां युधिष्ठिर!। यत्र ध्वनिं शृणोष्येतं तूष्णीमास्व विशाम्पते!। एतत् स्वयम्भुवो राजन्! वनं दिव्यं प्रकाशते" "यत्र प्रकाशते राजन्! वेदी संस्थानलक्षणा। आरुह्यात्र महाराज! वीर्य्यवान् वै भविष्यसि। सैषा सागरमासाद्य राजन्! वेदी समाश्रिता। एतामारुह्य भद्रं ते, त्वमेकस्तर सागरम्। अहं च ते स्वस्त्ययनं प्रयोक्ष्ये यथा त्वमेनामधिरोहसेऽद्य। स्पृष्टा हि मर्त्त्येन ततः समुद्रमेषा वेदी प्रविशत्याजमीढ! भा०व०११४अ०। इति तद्देशस्थनद्यादिविवृतिरुक्ता। "स प्रतापं महेन्द्रस्य मूर्द्ध्नि तीक्ष्णं न्यवेशयत्"रघौ कलिङ्गदेशस्थः पर्वतः महेन्द्र इति वर्णितम्। ७उशीनरभ्रातृतितिक्षुवंश्यबलिन्पपुत्रभेदे। "महामनास्तु द्वौ पुत्रौ जनयामास भारत!। उशीनरं च धर्मज्ञं तितिक्षुञ्च महाबलम्" इत्युपक्रम्य। तितिक्षोस्तु प्रजाः शृणु"इति प्रतिज्ञाय।"तैतिक्षवोऽभवद्राजा पूर्वस्यां दिशि भारत!। "उषद्रथो महाराज! फेनस्तस्य सुतोऽभवत्। फेनात्तु सुतपा जज्ञे सुतः सुतपसो बलिः। जातो मनुष्ययोनौ तु स राजा काञ्चनेषुधिः। महायोगी स तु बलिर्बभूव न्टपतिः पुरा। पुत्रानुत्पादयामास पञ्च वंशकरान् भुवि!। अङ्गः प्रथमतो जज्ञे वङ्गः सुह्मस्तथैव च। पुण्ड्रः कलिङ्गश्च तथा बालेयं क्षत्रमुच्यते" इत्युक्ता "तेषां जनपदाः पञ्च अङ्गा वङ्गाः सहुह्मकाः कलिङ्गाः पुण्ड्रकाश्चैव प्रजास्त्वङ्गस्य वै शृणु" हरिवं० ३१ अ० उक्तम्। तेन कलिङ्गनृपाधिष्ठितत्वात् देशस्य तथात्वम्। काय सुखाय लिङ्गमस्याः। ८योषिति स्त्री हेम०। विवृति ८(तेओडि) स्त्री शब्दच०।

**कलिङ्गाद्यगुटिका** स्त्री चक्रद०उक्ते औषधभेदे यथा "कलिङ्गबिल्वजम्ब्वाम्रकपित्थं सरसाञ्जनम्। लाक्षाहरिद्रे ह्रीवेरं कट्फलं शुकनासिकाम्। लोध्रं मोचरसं शङ्खं धातकीवटशुङ्गकम्। पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्। छायाशुष्कान् पिबेच्छीघ्रं ज्वरातीसारशान्तये। रक्तप्रसादनाश्चैते सूलातिसारनाशनाः"।

**कलिञ्ज** पु० कं वातं लञ्जति रोधनेन लजि–भत्सने अण् उप०स०। (दरमा) कटे हेमच०। तस्य स्टहाद्यावरणेन वातरोधनात्तथात्वम्।

**कलित** त्रि०कल–कर्मणि क्त।१विदिते२प्राप्ते,मेदि०३भेदिते ४संख्याते, शब्दरत्ना०। ५गृहीते, ६उक्ते ७विचारिते, ८बद्धे च। भावे क्त 'दत्तानलाभादौ न०।

**कलिद्रुम** पु०कलेराश्रयः द्रुमः। १विभीतकवृक्षे रत्नमाला। तत्र हि नलस्य राजच्छिद्रान्वेषणाय कलिना सुचिरं स्थितमिति कलिशब्ददर्शित नैषधवाक्ये दृश्यम्। कलिवृक्षादयोऽप्यत्र

**कलिन्द** पु० कलिं ददाति द्यति वा खच् मुम् च। अद्रिविशेषे, यतो यमुना नदी निःसृता, "कलिन्दगिरिनन्दिनी तटसुरद्रुमालम्बिनी"रसगङ्गा०। २विभीतकवृक्षे, राजनि०। ३सूर्य्ये भरतः तन्मूलं मृग्यम्।

**कलिन्दकन्या** स्त्री कलिन्दस्य पर्व्वतस्य कन्येव तत्र प्रभवत्वात्। यमुनायाम्। "कलिन्दकन्या मथुरां गतापि गङ्गोर्मिसंसक्तजलेव भाति" रघुः। कलिन्दतनयाकलिन्दजाकालिन्दीगिरिजादयोऽप्यत्र।

**कलिप्रिय** पु० कलिः प्रियोऽस्य। नारदे शब्दर०।

**कलिमारक** पु० कलीनां कलिकानां माला अत्र लस्य रः वा कप् संज्ञायां कन्। १पूतिकरञ्जे स्वामी। वा न लस्य रः। कलिमालकोऽप्यत्रार्थे अमरटीकायां रमानाथः। [राजनि०।

**कलिमाल्य** पु०कलीनां कलिकानां माल्यं यत्र। १पूतिकरञ्जे

**कलियुग** न० कर्म० राजशिरोवत् तत्पुरुषो वा। कलिरूपे युगे कालविशेषे तन्मानादिकं कलिशब्दे उक्तं तदारम्भतिथिर्युगाद्या सा च गौडीयमते माघपौर्णमासी यथाह ति०त०

"अथ युगाद्याः तासु च'युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वती प्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता"। इत्यनेन व्यवस्था। ब्रह्मपुराणे। "वैशाखे शुक्लपक्षे तु तृतीयायां कृतं युगम्। कार्त्तिके शुक्लपक्षे तु त्रेताऽथ नवमेऽहनि। अथ भाद्रपदे कृष्णत्रयोदश्यान्तु

द्वापरम् । माघे च पौर्णमास्यां वै घोरं कलियुगं स्मृतम् । युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः” । अत्र वैशाखादयः पौर्णमास्यन्ताएव १ब्रह्मपुराणे तथैव तिथिकृत्याभिधानात् । शुक्लवाचित्वे कार्त्तिके नवमेऽह्नीत्यनेनैव सिद्धौ शुक्लपक्ष इति व्यर्थं स्यात् तेन भाद्रकृष्णत्रयोदशी अश्वयुक्कृष्णपक्षीयेति मैथिलोक्तं निरस्तम् । आसां प्रशंसामाह विष्णुपुराणम् “वैशाखमासस्य तु या तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे । नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे । एता युगाद्याः कथिताः पुराणैरनन्तपुण्यास्तिथयश्चतस्रः । उपप्लवे चन्द्रमसोरवेश्च तथाष्टकास्वप्ययनद्वये च” । उपप्लवे ग्रहणे “पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतोमनुष्यः । श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत् पितरोवदन्ति” । स्नानमधिकृत्य भविष्ये “संवत्सरफलं तत्र नवम्यां कार्त्तिके तथा । मन्वादौ च युगादौ च मासत्रयफलं लभेत्” ।

तदेतत् कल्पभेदेन व्यवस्थाप्य माघामावस्यैव कलियुगाद्येति दाक्षिणात्याः प्रतिपेदिरे यथाह नि० सि०

“रत्नमालायाम् “माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी । तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः । यत्तु गौड़ाः “माघस्य पूर्णिमायां तु घोरं कलियुगं स्मृतमिति” ब्राह्मोक्तेः “वैशाखमासस्य सिता तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे । नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे” इति विष्णुपुराणे चकारेण तमिस्रपक्षानुषक्तेश्च पूर्वानुरोधात् पूर्णिमास्यैव ज्ञेया । “द्वे शुक्ले” इत्यादिकन्तु निर्मूलमित्याहुः । तन्न “दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम्” इति भविष्यविरोधात् एतेन ब्राह्मानुसारात् पूर्णिमायामेव युगादिश्राद्धं वदन् शूलपाणिः परास्तः । तेन कल्पभेदात् व्यवस्थेति तत्त्वम् । एतेन “कार्त्तिके नवमी शुक्ला माघमासे च पूर्णिमा” इति नारदीयं व्याख्यातम् । निर्मूलत्वोक्तिर्नारदीयाज्ञानकृता” । तत्र श्राद्धादिकरणमुभयदिने तत्प्राप्तौ निर्णयश्च नि० सि० ।

“अत्र श्राद्धमुक्तं मात्स्ये “कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु । हायनानि द्विसाहस्रं पितॄणाम् तृप्तिदं भवेदिति” । भारतेऽपि “या मन्वाद्या युगाद्याश्च तिथयस्तासु मानवः । स्नात्वार्चयित्वा दत्त्वा च [illegible] लभेदिति” श्राद्धेऽपि पूर्वाह्णव्यापिनी ग्राह्या “पूर्वाह्णे तु सदा कार्याः शुक्ला मनुयुगादयः । दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकी” इति पाद्मोक्तेः । “द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः । शुक्ले पूर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके” हेमाद्रौ नारदीयवचनाच्च । दीपिकापि “अथो युगादि, मन्वादिकर्मतिथयः पूर्वाह्णिकाः स्युः सिते । विज्ञेया अपराह्णिकाश्च बहुले” इति । स्मृत्यर्थसारेऽपि “युगादिमन्वादिश्राद्धेषु शुक्लपक्षे उदयव्यापिनी तिथिर्ग्राह्या । कृष्णपक्षे पराह्णव्यापिनीति” । दिवोदासीये गोभिलः “वैशाखस्य तृतीयां तु पूर्वविद्धां करोति वै । हव्यं देवा न गृह्णन्ति कव्यञ्च पितरस्तथेति” । गोविन्दार्णवेऽप्येवम् । तेनेयं पूर्वाह्णव्यापिनी दिनद्वये सती परैवेति धर्मतत्त्वविद्हेमाद्र्यादयः । अनन्तभट्टस्तु “सवैधृतिर्व्यतीपातो युगमन्वादयस्तथा । सम्मुखा उपवासे स्युर्दानादावन्तिमाः स्मृताः” इत्याह । दानादाविति श्राद्धसंग्रहः । उपवासस्त्वपेक्ष्यते । यत्तु मार्कण्डेयः “शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्य्याद्विचक्षणः । कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत्” । रौहिणो नवमोमुहूर्त्तः । अत्र च शुक्लपक्षयुगादिश्राद्धं पूर्वाह्णे कार्यमिति शूलपाणिः । निर्णयामृतादयस्तु “कालादर्शे अमाश्राद्धमापराह्णिकमुक्त्वा एषमन्वादीनां युगादीनां निर्णय इत्युक्त्वात् द्वे शुक्ले इत्यादि वचनं विष्णुपूजाविषयम् । श्राद्धे त्वापराह्णिकैवेति व्यवस्थां जगदुः । सेयं पूर्वोक्तानेकवचोविरोधात् स्वाच्छन्द्यविलसितमित्युपेक्षणीया । “पूर्वाह्णे दैविकं कुर्य्यात्” इत्यादिवचनादेव तत्सिद्धेर्वचनवैयर्थ्याच्च । किञ्च कालादर्शोक्तिर्न्यायमूला वचोमूला वा नाद्यः युगादिश्राद्धस्यामाश्राद्धविकृतित्वेन न्यायतो पराह्णव्याप्तावपि वचनेन तस्य बाधात् । नान्त्यः अतिदेशादेवापराह्णव्याप्तिप्राप्तेर्वचनवैयर्थ्यात् “अप्राप्ते शास्त्रमर्थवदिति” न्यायात् तेन यदि कालादर्शोक्तेः कथञ्चिच्छ्रद्धाजाड्येन समाधित्सा तर्हि न्यायप्राप्तकृष्णपक्षयुगादिविषयत्वेन सा व्यवस्थापनीयेति दिक्” । युगादिकृत्यं मलमासेऽपि कार्य्यम् “दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु । उपाकर्मणि चोत्सर्गे ह्येतद्दिष्टं दृषादितः” हेमाद्रौ ऋष्यशृङ्गवचनात् एतत् दशहरादिकम् । “अब्दोदकुम्भमन्वादिमहालययुगादि च । मलमासे च कर्त्तव्यम्” कालादर्शवाक्याच्च महालयोऽत्र मघात्रयोदशीति बोध्यम् स्मृतिचन्द्रिकायां तु मासद्वयेऽपि कर्त्तव्यमित्युक्तम्

"यौगादिकं मासिकं च श्राद्धं चापरपक्षिकम्। मन्वादिकं तैर्थिकञ्च कुर्य्यान्मासद्वयेऽपि च" तद्वृतवचनात् अपरपक्षोऽत्र कृष्णपक्षः न तु प्रेतपक्षः तस्य तत्र निषेधात् "प्रतिमासं मृताहे च श्राद्धं यत् प्रतिवत्सरम्। मन्वादौ च युगादौ च तन्मासोरुभयोरपीति" मदनरत्ने मरीच्युक्तेः। प्रतिवत्सरं क्रियमाणं कल्पादिश्राद्धमिति मदनरत्नम्" एतेन युगाद्यावर्षवृद्धिश्वेति वचनं श्राद्धातिरिक्तविष्णुपूजादिविषयम् न तत्र तिथियुग्मतेति अन्यथ-रणस्वरसात् तिथियुग्मादरस्य दैवविषयतया तद्विषयकत्व-स्यैवोचितत्वात् एवं निर्णयः" "सर्वासु युगाद्यासु"।

अत्रोभयमासे कर्त्तव्यताविधानमपि संक्रान्तिनिमित्त-पुण्यकालस्योभयत्र लाभे पूर्वदिनाकरणे परदिने कर्त्तव्यतावत् पूर्वमासे दैवादकरणे परमासेऽपि कर्त्तव्यताभ्यनुज्ञानार्थम् नतूभयमासयोः समुच्चयेन। एकेनैवानुष्ठानेन दुरदृष्टानुत्पत्तेः "श्वः कार्य्यमद्य कर्त्तव्यमित्युक्तेश्च प्रथममासएव मुख्यःकाल इति तत्त्वम्।

अत्र श्राद्धाकरणे प्रायश्चित्तमुक्तञ्चविधाने। "न यस्य द्यावामन्त्रं च शतवारं तदा जपेत्। युगादयो यदा न्यूनाः कुरुते नैव चापि यः"यदा न्यूना इत्यनेन अन्यतमा करणं नैव कुरुते इत्यनेन सर्वासामकरणमिति सूचितम्। "युगादौ तु नरः स्नात्वा विधिवल्लवणोदधौ। गोसहस्रप्रदानस्य कृत्स्नस्य फलं हि यत्। तत्फलं लभते मर्त्यो भूमिदानस्य च ध्रुवमिति" पृथ्वी च० सौ० समुद्रस्नानमुक्तम्।

युगादिवत् युगान्तकालोऽप्यत्तय पुण्यदः तन्निरूपणादिकं हेमा०दा० यथा—

"नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतम्। त्रेता सिततृतीयायां वैशाखे समपद्यत। दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम्। कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः। युगादयः स्मृता ह्येते दत्तस्याक्षयकारकाः" ब्रह्मपुराणे "युगारम्भास्तु तिथयो युगाद्यास्तेन कीर्त्तिताः। फलं दत्तहुतानाञ्च तास्वनन्तं प्रकीर्त्तितम्" तथा—"एताश्चतस्रस्तिथयो युगाद्या दत्तं हुतञ्चाक्षयमासु विन्द्यात्। युगे युगे वर्षशतेन यत्तपो युगादिकाले दिवसेन तद्भवेत्"। तथा—"सूर्य्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य च। तथा वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य च। ज्ञेयस्तु वृषसंक्रान्त्यां द्वापरान्तस्तु संख्यया। तथा च कुम्भसंक्रान्त्यामन्तः कलियुगस्य तु"।

पद्मपुराणे "युगादिषु युगान्तेषु स्नान-दान-जपादिषु। यत्किञ्चित् क्रियते तस्य युगान्ताः फलदायिनः"आदित्यपुराणे "दिनर्क्षं रैवती यत्र गमनञ्चैव राशिषु। युगान्तदिवसं विद्धि तत्र दानमनन्तकम्। ग्रहोपरागे विषुवे सौम्ये वा मिहिरोपदिः। सप्तमी शुक्लाकृष्णा वा युगादिदिवसं विदुः"।

**कलिल** त्रि०कल-इलच्।१गहने, अमरः"यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति" गीता।२मिश्रे च उज्ज्व०। "लोकालोको कलोऽकल्ककलिलोऽलिकुलालकः"माघः।

**कलिहारी** स्त्री कलिं हरति हृ-अण् गौरा० ङीष्। (विषलाङ्गलिया)लाङ्गल्याम् भावप्र० "कलिहारी हरा कुष्ठ शोफार्शोव्रणशूलजित्। सक्षारा श्लेष्मजित्तिक्ता कटुकातुवराऽपि च। तीक्ष्णोष्णा क्रिमिहृल्लघ्वी पित्तला गर्भपातिनी" भावप्रकाशे तद्गुणा उक्ताः।

**कलुष** पुंस्त्री कल—उषच्, लुष-हिंसायां क।कस्य जलस्य लुषो घातकः इति वा। १महिषे राजनि० स्त्रियां जातित्वात् ङीष्। २पापे न०।"त्वां प्रत्यकस्मात् कलुषप्रवृत्तौ"रघुः। ३तद्वति त्रि०। ४अनच्छे आविले त्रि० अमरः। "विभिन्नशङ्खः कलुषीभवन्मुहुर्मदेन दन्तीव मनुष्यधर्मणः" माघः। ५गर्हिते त्रि० शब्दचि०। अकलुषः कलुषो भवति कलुषायते। कलुषायितः। कलुषं करोति णिच् कलुषयति कलुषितः। ६असमर्थे। "भावावबोधकलुषा दयितेव रात्रौ"रघुः। [ तर तद्देशभवादौ त्रि०।

**कलूतर** पु० देशभेदे। ततः कच्छादि० भवादौ अण्। कालू-

**कलेवर** न० कले शुक्रे वरं श्रेष्ठम् तदुत्पन्नत्वेऽपि शुचि सप्तम्या अलुक्। देहे। "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्"गीता। "शरीरे जर्ज्जरीभूते व्याधिग्रस्ते कलेवरे। औषधं जाह्नवीतोयं वैद्योनारायणः स्वयम्" पुरा० पठन्ति।

**कल्क** पुंन० कल—क तस्य नेत्त्वम्। १घृततैलादिपाकसंस्कारविशेषे, २दम्भे, ३विभीतकवृक्षे, ४विष्ठायाम् ५किट्टे ६पापे च मेदि०। ७तुरुष्कनामगन्धद्रव्ये राजनि० ८घृततैलादिपाके देये औषधिद्रव्यभेदे च। कल्कप्रकारः भावप्र० उक्तो यथा। "स्वरसश्च तथा कल्कः क्वाथश्च हिमफाण्टकौ। ज्ञेया कषायाः पञ्चैते लघवःस्युर्यथोत्तरम्" इति विभज्य "द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत्। प्रक्षिप्य गालयेद्वस्त्रे तन्मानं कर्षसंमितम्। कल्के मधु घृतं तैलं देयं द्विगुणमात्रया। सितां गुडसमां

दद्यात् द्रवोदेयश्चतुर्गुणः”।“काथ्याच्चतुर्गुणं वारि—पादस्थं स्याच्चतुर्गुणम् । स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः । चतुर्गुणन्त्वष्टगुणं द्रवद्वैगुण्यतो भवेत् । पञ्चप्रभृति यत्र स्युर्द्रव्याणि स्नेहसंविधौ । तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम्” चक्रद० तत्र देयद्रव्यमानपरिभाषोक्ता । “अकल्कको निरारम्भः” प्रा० त० तीर्थयात्राङ्गधर्म्मोक्तौ भाव० । ६ कृत्ततासाधने चूर्णभेदे च । “तां लोध्रकल्केन हृताङ्गतैलाम्” कुमा० । “लोकालकोकालोऽकल्ककलिलोऽलिकुलालक:” माघः । पापाशये त्रि० मेदि० ।

**कल्कन** न० कल्कं शाठ्यं करोति णिच्—भावे—ल्युट् । शाठ्याचरणे “यह कल्कने कल्कनं दम्भः शाठ्यं च” सि० कौ० ।

**कल्कफल** पु० कल्कस्य विभीतकस्य फलमिव फलमस्याकारसाम्यात् । दाड़िमवृक्षे राजनि० ।

**कल्कि** पु० कल्कोऽस्त्यस्य ध्वंस्यतया इन् । भगवतो दशमेऽवतारे तदाविर्भावप्रसङ्गादि कल्किपु० उक्तं यथा “आधिव्याधिजराग्लानिदुःखशोकभयाश्रयाः । कलिराजानुगाश्चेरुर्यूथशोलोलनाशकाः । बभूवुः कालविभ्रष्टाः क्षणिकाः कामुका नराः । दम्भाचारदुराचारास्तातमातृविहिंसकाः । वेदहीना द्विजा दीनाः शूद्रसेवापराः सदा । कुतर्कवादबहुला धर्म्मविक्रयिणोऽधमाः । वेदविक्रयिणो व्रात्या रसविक्रयिणस्तथा । मांसविक्रयिणः क्रूराः शिश्नोदरपरायणाः । परदाररता मत्ता वर्णसङ्करकारकाः । ह्रस्वाकाराः पापचाराः शठा मठनिवासिनः । षोडशाब्दायुषः श्यालबान्धवा नीचसङ्गमाः । विवादकलहक्षुब्धाः केशवेशविभूषणाः । कलौ कुलीना धनिनः, पूज्या वार्द्धुषिका द्विजाः । सन्न्यासिनो गृहासक्ता गृहस्थास्त्वविवेकिनः । गुरुनिन्दापरा धर्म्मध्वजिनः साधुवञ्चकाः । प्रतिग्रहरताः शूद्राः परस्वहरणादराः । द्वयोः स्वीकारउद्वाहः शठे मैत्री, वदान्यता । प्रतिदाने, क्षमाऽशक्तौ, विरक्तिःकरणाक्षमे । वाचालत्वञ्च पाण्डित्ये, यशोऽर्थे धर्म्मसेवनम् । धनाढ्यत्वञ्च साधुत्वे, दूरे नीरे च तीर्थता । सूत्रमात्रेण विप्रत्वं, दण्डमात्रेण मस्करी । अल्पशस्या वसुमती नदीतीरेऽवरोपिता । स्त्रियो वेश्यालापसुखाः स्वपुंसा त्यक्तमानसाः । परान्नलोलुपा विप्राश्चण्डालयाजकाः । स्त्रियो वैधव्यहीनाश्च स्वच्छन्दाचरणप्रियाः । चित्रवृष्टिकरा मेघा, मन्दशस्या च मेदिनी । प्रजाभक्षा नृपा, लोकाः करपीड़ाप्रपीड़िताः । स्कन्धे भारं, करे पुत्रं, कृत्वा क्षुब्धाः प्रजाजनाः । गिरिदुर्गं वनं घोरमाश्रयिष्यन्ति दुर्भगाः । मधुमांसैर्मूलफलैराहारैः प्राणधारिणः । एवं तु प्रथमे पादे कलेः कृष्णविनिन्दकाः । द्वितीये तन्नामहीनास्तृतीये वर्णसङ्कराः । एकवर्णाश्चतुर्थे च विस्मृताच्युतसत्क्रियाः । निः—स्वाध्याय-स्वधा-स्वाहा—वौषड़ोंकार-वर्ज्जिताः । देवाः सर्व्वे निराहाराः ब्रह्माणं शरणं ययुः” । इत्यन्तेन १अ० कलिस्वभावमुपवर्ण्य भगवतः प्रादुर्भावप्रतिज्ञोक्ता “स्तुत्वा प्राह पुरो ब्रह्मा देवानां हृदयेप्सितम् । तत्श्रुत्वा पुण्डरीकाक्षो ब्रह्माणमिदमब्रवीत् । शम्भले विष्णुयशसो गृहे प्रादुर्भवाम्यहम् सुमत्यां मातरि विभोः कन्यायां त्वन्निदेशतः । चतुर्भिर्भ्रातृभिर्देव ! करिष्यामि कलिक्षयम् । भवन्तो बान्धवा देवाः स्वांशेनावतरिष्यथ । इयं मम प्रिया लक्ष्मीः सिंहले संभविष्यति । बृहद्रथस्य भूपस्य कौमुद्यां कमलेक्षणा । भार्य्यायां मम भार्य्यैषा पद्मानाम्ना जनिष्यते । यात यूयं भुवं देवाः स्वांशावतरणे रताः । राजानौ मरुदेवापी स्थापयिष्याम्यहं भुवि । पुनः कृतयुगं कृत्वा धर्मान् संस्थाप्य पूर्ववत् । कलिव्यालं संनिरस्य प्रयास्ये स्वालयं विभो ! । इत्युदीरितमाकर्ण्य ब्रह्मा देवगणैर्वृतः । जगाम ब्रह्मा सदनं देवाश्च त्रिदिवं ययुः । महीमाश्वास्य भगवान् निजजन्मकृतोद्यमः । विप्रर्षे ! शम्भलग्राममाविवेश परात्मकः । सुमत्यां विष्णुयशसा गर्भमाधत्त वैष्णवम् । ग्रहनक्षत्रराश्यादिसेवितश्रीपदाम्बुजम् । सरित्समुद्रागिरयो लोकाःस्थावरजङ्गमाः । सहर्षा ऋषयो देवा जाते विष्णौ जगत्पतौ । बभूव सर्वसत्वानामानन्दोविविधाश्रयः । नृत्यन्ति पितरो हृष्टास्तुष्टा देवा जगुर्यशः । चक्रुर्व्वाद्यादि गन्धर्व्वा ननृतुश्चाप्सरोगणाः । द्वादश्यां शुक्लपक्षस्य माधवे मासि माधवः । जातं ददृशतुः पुत्रं पितरौ हृष्टमानसौ । धात्री माता महाषष्ठी नाड़ीच्छेत्री तदम्बिका । गङ्गोदकक्लेदमोक्षा सावित्री मार्जनोद्यता । तस्य विष्णोरनन्तस्य वसुधाऽदात् पयः सुधाम् । मातृकामङ्गलवचः कृष्णजन्मदिनेऽभवत् । ब्रह्मा तदुपधार्य्याशु स्वाशुगं प्राह सेवकम् । याहीति सूतिकागारं गत्वा विष्णुं प्रबोधय । चतुर्भुजमिदंरूपं देवानामपि दुर्लभम् । त्यक्त्वा मानुषवद्रूपं कुरु नाथ ! विचारितम् । इति ब्रह्मवचः श्रुत्वा पवनः सुरभिः सुखम् । सुशीतः प्राह तरसा ब्रह्मणोवचनादृतः । तच्छ्रुत्वा पुण्डरीकाक्षस्तत्क्षणात् द्विभुजोऽभवत् । [illegible]

शामसौ । ब्रह्मसंस्कारवत् तत्र मेनाते तस्य मायया । ततस्तु शम्भलग्रामे सोत्सवा जीवजातयः । मङ्गलाचारबहुलाः पापतापविवर्ज्जिताः । सुमतिस्तं सुतं लब्ध्वा विष्णुं जिष्णुं जगत्पतिम् । पूर्णकामा विप्रमुख्यानाहूयादाद्गवां शतम् । हरेः कल्याणकृद्विष्णुयशाः शुद्धेन चेतसा । सामर्ग्यजुर्विद्भिरग्र्यैस्तन्नामकरणे रतः । तदा रामः कृपो व्यासो द्रौणिर्भिक्षुशरीरिणः । समायाता हरिं द्रष्टुं बालकत्वमुपागतम् । तानागतान् समालोक्य चतुरः सूर्य्यसन्निभान् । हृष्टरोमा द्विजवरः पूजाञ्चक्रे स ईश्वरान् । पूजितास्ते स्वासनेषु संविष्टाः स्वसुखाश्रयाः । हरिं क्रोडगतं तस्य ददृशुः सत्वमूर्त्तयः । तं बालकं नराकारं विष्णुं नत्वा मुनीश्वराः । कल्किं कल्कविनाशार्थमाविर्भूतं विदुर्बुधाः । नामाकुर्वंस्ततस्तस्य कल्किरित्यभिविश्रुतम् । कृत्वा संस्कारकर्माणि ययुस्ते हृष्टमानसाः । ततः स ववृधे तत्र सुमत्या परिपालितः । कालेनाल्पेन कंसारिः शुक्लपक्षे यथा शशी । कल्केर्ज्येष्ठास्त्रयः शूराः कविप्राज्ञसुमन्त्रकाः । तातमातृप्रियकरा गुरुविप्रप्रतिष्ठिताः । कल्केरंशाः पुरो जाताः साधवो धर्मतत्पराः । गार्ग्य भर्ग्य विशालाद्या ज्ञातयस्तदनुव्रताः । विशाखयूपभूपालपालितास्तापवर्जिताः । ब्राह्मणाः कल्किमालोक्य परां प्रीतिमुपागताः । ततो विष्णुयशाः पुत्रं धीरं सर्वगुणाकरम् । कल्किं कमलपत्राक्षं प्रोवाच पठनादृतम् । तात ! ते ब्रह्मसंस्कारं यज्ञसूत्रमनुत्तमम् । सावित्रीं वाचयिष्यामि ततो वेदान् पठिष्यसि” २अ० । तस्य चरितादिकं कल्किपुराणशब्दे दृश्यम्

**कल्किन्** पु० कल्को नाशकतयाऽस्त्यस्य इनि । भगवतो दशमेऽवतारे कल्किशब्दे विवरणम् । “मत्स्यः कूर्म्मो वराहश्च नरसिंहश्च वामनः । रामोरामश्च रामश्च बुद्धः कल्की च ते दश” पुरा० । “कल्की सतां च भविता प्रहरिष्यतेऽरीन्” मुग्ध० ।

**कल्किपुराण** न० । वेदव्यासप्रणीते अनुभागवते उपपुराणभेदे तत्र प्रतिपाद्यविषयाश्च यथा—

सूतसमीपे शौनकादीनां भविष्यप्रश्नः । शुकस्य कल्किपुराणप्राप्तिविवरणम् । कलेरुत्पत्तिः । कलिविवरणम् । कलौ आचारभ्रंशः । धरित्र्या सह देवानां ब्रह्मलोकगमनम् । ब्रह्मलोकवर्णनम् । ब्रह्मसमीपे कलेर्दोषकीर्त्तनम् । ब्रह्मणा सह देवानां गोलोके गमनम् । विष्णुसमीपे कलिवृत्तनिवेदनम् । विष्णोर्विष्णुयशसो गृहे अवतारतयाविर्भावाङ्गीकारः । विष्णुयशसः पत्न्याः सुमत्या गर्भः । विष्णौ जाते देवानां हर्षः । विष्णोश्चतुर्भुजमूर्त्तिपरिहारपूर्वकं मानुषरूपधारणम् । रामकृपव्यासद्रौणीनां कल्किदर्शनार्थमागमनम् । कल्केर्नामकरणम् । कल्केरुपनयनकाले पितुरुपदेशः । कल्केर्गुरुकुलवासार्थं यात्रा जामदग्न्यप्राप्तिश्च । कल्केर्वेदाध्ययनं धनुर्वेदशिक्षा च । गुरुदक्षिणादानाभिलाषः । कल्केर्विल्वोदकेश्वरशिवदर्शनं तत्स्तुतिश्च । शिवया शिवस्याविर्भावो वरदानञ्च । शङ्करात् कल्केः करवालशुकतुरङ्गप्राप्तिः । कल्केर्गृहप्रत्यागमनम् । कल्केराश्रमधर्म्मोपदेशः । कल्केर्धर्म्मकथनम् । ब्राह्मणलक्षणम् । सिंहलद्वीपवर्णनम् । पद्मायाः राजकन्याया विवरणम् । शिवात् पद्माया वरलाभः । पद्मायाः स्वयंवरोद्योगः । समागतभूपानां स्त्रीत्वप्राप्तिः । पद्मायाः विलापः । कल्केरादेशेन शुकस्य पद्मासमीपे गमनम् । पद्माशुकसंवादः । विष्णुपूजाप्रकरणम् । पद्मासमीपे अच्युतावतारकथनम् । शुकस्य शम्भले प्रतिगमनम् । कल्किशुकसंवादः । कल्केः सिंहलगमनम् । पद्मायाः कल्किसमीपे गमनम् । पद्मायाः कल्किदर्शनम् । कल्किदर्शनेन भूपानां पुरुषत्वप्राप्तिः । राजगणकृतकल्किस्तवः । अनन्तस्यागमनम् । अनन्तोपाख्यानम् । अनन्तेन हंसस्य साक्षात्कारः । कल्केराज्ञया विश्वकर्म्मणः शम्भले पुरीनिर्म्माणम् । कल्केः सस्त्रीकस्य शम्भले प्रत्यागमनम् । कल्केः सुतोत्पत्तिः । बौद्धयुद्धम् । जिनविनाशः । बौद्धजयः । म्लेच्छजयः । म्लेच्छकामिनीभिः कल्केर्युद्धम् । बालखिल्यानामागमनम् । निकुम्भदुहितुराख्यानम् । कुथोदर्य्याः संहारार्थं कल्केर्यात्रा । कुथोदर्य्या वधः । नारदादीनां महर्षीणामागमनम् । मरोरात्मपरिचयार्थं सूर्य्यवंशवर्णनम् । श्रीरामचरितम् । सीतापरित्यागः । सीताया भूतलप्रवेशः । रामस्य स्वर्गारोहणम् । रामस्य वंशावली । मरोरुत्पत्तिविवरणञ्च । चन्द्रवंशे देवापेरुत्पत्तिविवरणम् । देवापेर्मरोश्च दिव्यरथप्राप्तिः । कृतयुगस्यागमनम् । मन्वन्तरवर्णनम् । कलिना संग्रामोद्योगः । कल्केर्दिग्विजययात्रा । धर्म्मस्य कलिना समागमः । कल्किसमीपे धर्म्मस्यात्मनिवेदनम् । कलिना कल्केः संग्रामः । मरुदेवापिप्रभृतीनां शककाम्बोजबर्बरचौलादिभिः संग्रामः कलिसहचराणां पराभवः । कोकविकोकवधः । कल्केर्भल्लाटनगरगमनम् । शशिध्वजस्य समरोद्योगः । मूर्च्छितं कल्किमादाय शशिध्वजस्य गृहागमनम् ।

सुगान्ताया गीतम् । शशिध्वजकन्यया कल्केर्विवाहः । शशिध्वजस्य हरिभक्तिकारणम् । शशिध्वजस्य पूर्वजन्मवृत्तान्तकथनम् । भक्तिलक्षणम् । हरिभक्तस्य संग्रामप्रवृत्तिकारणम् । द्विविदोपाख्यानम् । कृष्णावतारवृत्तान्तः । कल्केः काञ्चनपुर्य्यां प्रवेशः । विषकन्यासंवादः । कल्केरनुचराणां पृथक् पृथक् राज्येऽभिषेकः । कल्केः शम्भले प्रतिगमनम् । सत्ययुगप्रवर्त्तनम् । मायास्तवः । विष्णुयशसो राजसूयवाजपेयारम्भः । नारदस्यागमनम् । मायाजीवयोः कथोपकथनम् । विष्णुयशसो वनगमनम् । परशुरामस्यागमनम् । रुक्मिणीव्रतकथनम् । कल्केः पत्नीभिर्विहारः । शम्भले देवानामागमनम् । कल्केः स्वर्गारोहणम् । गङ्गास्तोत्रम् । कल्किपुराणस्यानुक्रमणिका । कल्किपुराणश्रवणादिफलम्” ।

कल्प पु० कल्पते समर्थो भवति स्वक्रियायै विरुद्धलक्षणया असमर्थो भवति वाऽत्र, क्लृप् सामर्थ्ये विरुद्धलक्षणया असामर्थ्ये वा आधारे घञ् कल्पयति सृष्टिं विनाशं वात्र क्लृप–णिच्–आधारे अच् । ब्रह्मणो रात्रिरूपे जगतां चेष्टाराहित्यसम्पादके १प्रलये २तस्य दिनरूपे जगतां चेष्टासम्पादके च कालभेदे । “यदा स देवो जागर्त्ति तदेदं चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति” मनुना जगच्चेष्टातद्राहित्ययोर्ब्रह्माहोरात्रयोरुक्तेस्तथात्वम् ।

कलिशब्दे दर्शितवाक्येन युगमानमुक्त्वा कल्पमानं प्रदर्श्य ब्रह्मणः आयुःपरिमाणं तस्य गतायुःकालश्च सू० सि० उक्तो यथा—

“युगानां सप्ततिः सैका मन्वन्तरमिहोच्यते । कृताब्दसङ्ख्यस्तस्यान्ते सन्धिः प्रोक्तो जलप्लवः” सू०। “युगानां सैका सप्ततिरेकसप्ततिर्महायुगमित्यर्थः । इह–सूर्त्तकाले । मन्वन्तरं मन्वारम्भतत्समाप्तिकालयोरन्तरकालमानमित्यर्थः । मूर्त्तकालमानभेदाभिज्ञैः कथ्यते । तस्य मनोरन्ते विरामे जाते सति कृताब्दसङ्ख्यः यदुक्तकृतयुगवर्षमितः सन्धिः कालविद्भिः प्रकर्षेण द्वितीयमन्वारम्भपर्य्यन्तं भूतभाविमन्वोरन्तिमादिसन्धिरूपैककालेन कथितः । तत्स्वरूपमाह “जलप्लव इति । जलपूर्णा सकला पृथ्वी तस्मिन् लोकसंहारकाले भवति । अथ कल्पप्रमाणं सविशेषमाह” रङ्ग० । “ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश । कृतप्रमाणः कल्पादौ सन्धिः पञ्चदशः स्मृतः” सू० । “ते एकसप्ततियुगरूपा मनवः स्वायम्भुवाद्याः ससन्धयः स्वस्वसन्धिसहिताश्चतुर्दशसङ्ख्याकाः कल्पकाले ज्ञातव्याः । स्वसन्धियुक्तचतुर्दशमनुभिः कल्पः स्यादित्यर्थः । ननु मन्वन्तरे कल्पमानं युगसहस्रं त्वया तु युगमानमेकसप्ततिगुणं मनुमानं ३०६७२०००० कृताब्द १७२८००० युक्तं ससन्धिमनुमानं ३०८४४८००० इदं चतुर्दशगुणं ४३१८०७२००० कल्पप्रमाणं तच्च कतीनं युगसहस्रमित्यत आह । कृतप्रमाण इति । कल्पादौ प्रथममन्वारम्भे कृतयुगवर्षमितो मनोश्चतुर्दशत्वेऽप्याद्यः पञ्चदशकः सन्धिः कालज्ञैरुक्तः । तथा च कृतवर्षानन्तरं प्रथममन्वारम्भ इति तद्वर्षयोजनेनाविरोध इति भावः। अथ ब्रह्मणो दिनरात्र्योः प्रमाणमाह” रङ्ग०। “इत्थं युगसहस्रेण भूतसंहारकारकः । कल्पो ब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती” सू०।“इत्थं पूर्व्वोक्तप्रकारसिद्धेन युगसहस्रेण भूतसंहारकारको लयात्मकः कल्पकालो ब्राह्मं ब्रह्मणः सम्बन्ध्यहः दिनं कालज्ञैरुक्तम् । तस्य ब्रह्मणस्तावती दिनपरिमिता शर्व्वरी रात्रिः । कल्पद्वयं तदहोरात्रमिति फलितार्थः। अथ ब्रह्मणआयुःप्रमाणमतीतवयःप्रमाणं चाह” रङ्ग० । “परमायुः शतं तस्य तयाहोरात्रसङ्ख्यया । आयुषोऽर्द्धमितं तस्य शेषकल्पोऽयमादिमः”सू०। परमपरं शृणु पूर्व्वोक्तं त्वया श्रुतमपरं च वक्ष्यमाणं शृणु त्वम् । यद्वा परमेति दैत्यवरार्थकं सम्बोधनम् । त्वं तस्य ब्रह्मणस्तया पूर्व्वोक्तयाहोरात्रमित्या कल्पद्वयरूपया शतं शतवर्षपरिमितमायुः शरीरधारणकालं जानीहि । एतदुक्तं भवति । अहोरात्रमानात् पूर्व्वपरिभाषया (३०) माससमानं तस्मात् पूर्व्वोक्तपरिभाषया(१२)ब्राह्मणी वर्षमानमेतच्छतसङ्ख्यया ब्रह्मायुरिति । न तु यथाश्रुतार्थेन कल्पशतद्वयमायुः, कीटादीनामपि दिनसङ्ख्ययायुषोऽनुक्तेः सुतरां ब्रह्मणः शतदिनात्मकायुषोऽसम्भवात् “निजेनैव तु मानेन आयुर्वर्षशतं स्मृतम्” इति विष्णुपुराणोक्तेश्च । एतेन परमा–इत्येकं पदमिति निरस्तम् ब्रह्मणोऽनियतायुर्दायासम्भवात् । तस्य ब्रह्मण आयु शतवर्षरूपमस्यार्द्धं पञ्चाशद्वर्षपरिमितमितं गतम् । अयं वर्त्तमान आदिमः प्रथमः शेषकल्पः शेषायुर्दायस्य ब्रह्मदिवस उत्तरार्द्धस्य प्रथमदिवसो वर्त्तमान इति फलितार्थः । अथ वर्त्तमानेऽस्मिन् दिवसेऽप्येतद्गतमित्याह” रङ्ग० । “कल्पादस्माच्च मनवः षड् व्यतीताः ससन्धयः । वैवस्वतस्य च मनोर्युगानां त्रिघनो गतः” सू०। “अस्माद्वर्तमानात् कल्पाद् ब्रह्मदिवसात् षट्सङ्ख्याका मनव एकसप्ततियुगरूपाः ससन्धयः सप्तभिः सन्धिभिः कृतयुगप्रमाणैः सहिता

व्यतीता गताः। चकारश्चायुषोऽर्द्धमितमिति प्रागुक्तेन समुच्चयार्थकः। वर्त्तमानस्य सप्तमस्य मनोर्वैवस्वताख्यस्य युगानां त्रिघनस्त्रयाणां घनः स्थानत्रयस्थितत्र्यङ्कानां घातः सप्तविंशतिसङ्ख्यात्मको गतः। सप्तविंशतियुगानि गतानीत्यर्थः। चः समुच्चये। अथ वर्त्तमानयुगस्यापि गतमेतदिति यदभिमतकालेऽयतो वर्षगणः कार्य्य इत्याह” रङ्ग०। “अष्टाविंशाद्युगादस्माद्यातमेतत् कृतं युगम्। अतः कालं प्रसङ्ख्याय सङ्ख्यामेकत्र पिण्डयेत्” सू०। “अष्टाविंशतितमाद्वर्त्तमानान्महायुगादेतदल्पकालेन पूर्व्वकाले साम्प्रतं स्थितं कृतं युगं गतम्। अतः कृतयुगान्तानन्तरमभिमतकाले कालं वर्षात्मकं प्रसङ्ख्याय गणयित्वा सङ्ख्यां पञ्चस्थानस्थितां भिन्नामेकत्रैकस्थाने पिण्डयेत् सङ्कलनविषयां कुर्य्यात्। सर्व्वेषां गतानां योगं कुर्य्यादित्यर्थः” रङ्ग०।

मासस्य त्रिंशत्तिथ्यात्मकतया ब्रह्ममासस्य त्रिंशत्कल्पघटितत्वात् तेषां कल्पानां नामानि हेमा० दा० मात्स्ये चाह स्म

“कल्पानुकीर्त्तनं वक्ष्ये सर्व्वपापप्रणाशनम्। यस्यानुकीर्त्तनादेव वेदपुण्येन युज्यते। प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः। वामदेवस्तृतीयस्तु ततो रथन्तरोऽपरः। रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः। सप्तमोऽथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते। सद्योऽथ नवमः प्रोक्त ईशानो दशमः स्मृतः। ध्यान एकादशः प्रोक्तस्तथा सारस्वतोऽपरः। त्रयोदश उदानस्तु गारुडोऽथ चतुर्दशः। कौर्म्मः पञ्चदशो ज्ञेयः पौर्णमासी प्रजापतेः। षोड़शो नारसिंहस्तु समानस्तु ततः परः। आग्नेयोऽष्टादशः प्रोक्तः सोमकल्पस्तथाऽपरः। मानवो विंशतिः प्रोक्तस्तत्पुमानिति चापरः। वैकुण्ठश्चापरस्तद्वल्लक्ष्मीकल्पस्तथा परः। चतुर्विंशस्तथा प्रोक्तः सावित्रीकल्पसंज्ञकः। पञ्चविंशतिमो घोरो वाराहस्तु ततोऽपरः। सप्तविंशोऽथ वैराजो गौरीकल्पस्तथाऽपरः। माहेश्वरस्ततः प्रोक्तस्त्रिपुरो यत्र घातितः। पितृकल्पस्तथान्ते तु या कुहूर्ब्रह्मणः स्मृता। इत्ययं ब्रह्मणो मासः सर्व्वपापप्रणाशनः। आदावेव हि माहात्म्यं यस्मिन् यस्य विधीयते। तस्य कल्पस्य तन्नाम विहितं ब्रह्मणा पुरा”।

तदारम्भकालश्च ब्रह्मसिद्धान्ते उक्तः “चैत्रसितादेर्भानोर्वर्षर्त्तुमासयुगकल्पाः। सृष्ट्यादौ लङ्कायामिह प्रवृत्ता दिनैर्नृप!” चैत्रसितादेः चैत्रशुक्लप्रतिपदमारभ्येत्यर्थः। ब्रह्मपु० “चैत्रे मासि जगत् ब्रह्मा ससर्ज प्रथमेऽहनि। शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति। प्रवर्त्तयामास तदा कालस्य गणनामपि” इति कालसामान्यगणनस्य तत आरम्भोक्तेः” एवं चैत्रशुक्लप्रतिपदि कल्पारम्भेऽपि “माघशुक्लतृतीयायां कृष्णायां फाल्गुनस्य च। पञ्चमी चैत्रमासस्य यथैवाद्या तथा परा। शुक्ला त्रयोदशी माघे कार्त्तिकस्य तु सप्तमी। नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम्। कल्पानामादयो ह्येता दत्तस्याक्षयकारकाः” वाराहवाक्यानि यदि समूलानि तदा कल्पभेदादविरुद्धानि कल्पादित्वेन तत्तत्तिथिषु श्राद्धकर्त्तव्यतोपयोगिपारिभाषिकत्वपरतया वा समर्थनीयानि। अतएव सू० सि० सुरासुराणामन्योन्यमहोरात्रविपर्य्ययात्। यत् प्रोक्तं तद्भवेद्दिव्यं भानोर्भगणपूरणात्। मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम् न तत्र। द्युनिशोर्भेदो ब्राह्मं कल्पः प्रकीर्त्तितः, इत्यादिना युगमन्वन्तरकल्पानां सौरत्वेनोक्तिः। सौरमाने च नियतयुगादिकालेषु अनियततिथिसम्भवेऽपि सर्व्वेषां कल्पानामादौ चैत्रसितादितिथिरेव नियता प्रागुक्तवचनप्रामाण्यात्। किन्तु प्रागुक्तमात्स्ये ब्राह्मकल्पानां चान्द्रत्वोक्तेः चान्द्रत्वमपि तेन तिथिभेदसम्भवः सू० सि० वाक्यं तु पक्षस्पष्टीकरणोपयोगीत्यविरोधः।

अत्र तिथिद्वैधे युगादिवत् व्यवस्था। कृप-विष्-मावे अच्। २रचने ३विकल्पे च इतिकर्त्तव्यतायुक्ते ४विधाने च। “प्रभुः प्रथमकल्पस्य योऽनुकल्पे प्रवर्त्तते” मनुः। कल्पोविधानमन्यत्र कौचित्येन। ५उचिते त्रि० शाश्वतः। कल्प्यतेऽनुष्ठीयतेऽनेन करणे अच्। ६वैदिकविधानज्ञापके शास्त्रभेदे स च आश्वलायनापस्तम्बबौधायनकात्यायनादिसूत्रात्मकः। तस्य यथोपयोगिता तथोक्तं सायणाचार्य्येण ऋग्वेदभाष्योपोद्घाते यथा—

“कल्पश्चाश्वलायनापस्तम्बबौधायनादिसूत्रं, कल्प्यते समर्थ्यते यागप्रयोगोऽनेनेति व्युत्पत्तेः। नन्वाश्वलायनः किंमन्त्रकाण्डमनुसृत्य प्रवृत्तः? किं वा ब्राह्मणमनुसृत्य? नाद्यः “दर्शपूर्णमासौ तु पूर्वं व्याख्यास्याम” इत्येवं तेनोपक्रान्तत्वात् न ह्यग्निमीड़ इत्यादयो मन्त्रा दर्शपूर्णमासयोः क्वचिद्विनियुक्ताः। न द्वितीयः “आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपन्ति दीक्षणीयायाम्” इत्येवं दीक्षणीयेष्टेर्ब्राह्मणे प्रक्रान्तत्वात्। अत्रोच्यते—मन्त्रकाण्डोक्तब्रह्मयज्ञादिजपक्रमेण प्रवृत्तो न तु यागानुष्ठानक्रमेण

ब्रह्मयज्ञश्चैवं विहितः “यत् स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञम्” इति सोऽयं ब्रह्मयज्ञजपोऽग्निमीडे इत्याम्नायक्रमेणैवानुष्ठेयः तथा “सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचः स्तोमे पारिप्लवं शंसतीति” विधीयते तथा “आश्विने शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयादिति” विधीयते तथा “रिच्यत इव वा एष प्रेव रिच्यते यो याजयति यो वा प्रतिगृह्णाति याजयित्वा प्रतिगृह्य वाऽनश्नन् त्रिःस्वाध्यायं वेदमधीयीतेति” प्रायश्चित्तरूपं वेदपारायणं विहितम् इत्यादिषु कृत्स्नमन्त्रकाण्डविनियोगेषु संप्रदायपारम्पर्य्यागत एव क्रम आदरणीयः। विशेषविनियोगस्तु मन्त्रविशेषाणां श्रुतिलिङ्गवाक्यादिप्रमाणान्युपजीव्याश्वलायनोदर्शयति अतोमन्त्रकाण्डक्रमाभावेऽपि न कश्चिद्विरोधः। इषे त्वेत्यादिमन्त्रास्तु क्रत्वनुष्ठानक्रमेणैवाम्नाता इत्यापस्तम्बादयस्तेनैव क्रमेण सूत्रनिर्माणे प्रवृत्ताः। आम्नातत्वादेव जपादिष्वपि स एव क्रमः। यद्यपि ब्राह्मणे दीक्षणीयेष्टिरुपक्रान्ता तथापि तस्या इष्टेर्दर्शपूर्णमासविकृतित्वेन तदपेक्षत्वादाश्वलायनस्यादौ तद्व्याख्यानं युक्तम् अतः कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमुपदिश्योपकरोति तर्हि “प्र वो वाजा” इत्यादीनां सामिधेनीनामृचामेव विनियोगमाश्वलायनोऽब्रवीत् “नमः प्रवक्त्रे” इत्यादयस्त्वनाम्नाताः कुतो विनियुज्यन्ते? इति चेत् नायं दोषः शाखान्तरसमाम्नातानां ब्राह्मणान्तरविहितस्य विनियोगस्य गुणोपसंहारन्यायेनात्र वक्तव्यत्वात् सर्व्वशाखाप्रत्ययमेकं कर्म्मेति न्यायविदः, तस्मात्क्वचित्त्वत्र कल्पोऽप्यपेक्षितः”। कात्या० व्या० कर्कैश्च कल्पशास्त्रप्रयोजनमित्थं दर्शितं यथा— “इह पुण्यो वै पुण्येन कर्म्मणा भवति” “तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्य्येण तपसा श्रद्धया यज्ञेनेति” “अग्निहोत्रं जुहुयात् स्वर्गकाम” इत्यादिभिर्वाक्यैः कर्म्मणां स्वर्गापवर्गादिश्रेयःसाधनत्वं प्रतीयते। तानि चाग्निहोत्रादिकर्म्माणि वेदवाक्यैकवेद्यानि। वेदवाक्यानि चानेकशाखावस्थिततया स्वतश्च प्रतिवाक्यं नानाविधपरस्परविरुद्धार्थस्फुरणेन दुर्बोधार्थानि बहुभिरर्थवादवाक्यैर्मिश्रितानि च तथाहि “अग्निहोत्रं जुहुयात् स्वर्गकामः” इत्यत्र किं स्वर्गो होमाय, उत होमः स्वर्गाय, तथा अग्निहोत्रशब्दो गुणविधानार्थो नामधेयं वेति तथा “स वै संवत्सरं दीक्षाभिरेति” इत्यादौ क्वचित् संवत्सरशब्दस्य मुख्यार्थत्वम् अहःसंवत्सरादौ तस्यैव गौणत्वम्। अर्थवादादिभिश्च पाठात् विध्यर्थवादसंदेहोऽपि भवति किमयं विधिः? उतार्थवादः? इति यद्यपि जैमिनिशबरस्वामिकुमारिलप्रभृतिभिर्मीमांसायां तानि वाक्यानि संदेहनिरासपूर्व्वकं यथार्थं व्याख्यातानि सन्ति। अधीतशाखानां च तदार्थावगमोऽपि सुकर एव, तथापि तेषां नानाशाखाव्यवस्थितत्वेनेदानीन्तनैः सर्वैः पुरुषैरध्येतुं ज्ञातुं वाऽशक्यत्वात्तदधीनं कर्म्मणां ज्ञानं दुःशक्यमिदानीन्तनानामिति मत्वा परमकारुणिको भगवान् कात्यायनाचार्य्यो नानाशाखागतविधिवाक्यसंग्रहरूपं कल्पसूत्रं प्रणीतवान्”। तत्र प्रतिपाद्यविषयाः कात्यायनशब्दे वक्ष्यन्ते

आर्षेयकल्पसूत्रविषयाश्च “अथार्षेयकल्पो व्याख्यातव्यः” इत्युपक्रम्य सर्वक्रतुप्रकृतिभूतस्य त्रिपर्वणो ज्योतिष्टोमस्य सर्वाहर्गणप्रकृतिभूतस्य व्यूढस्य द्वादशाहस्य च ब्राह्मणवाक्येनैव प्रयोगो दर्शितस्तदुपजीवनेन क्रत्वन्तराणि प्रयोक्तव्यानीति दर्शयितुमादौ ऋत्विग्वरणादिकमभिधाय १प्र० “कॢप्तो ज्योतिष्टोमोऽतिरात्रः षोड़शिक:” इत्यादिना सौभरसहृदंशीयमित्यन्तेन सामविशेषयुक्तस्य प्रायणीयस्य प्रयोगो दर्शितः। ततः “उपास्मै गायता नरः” इत्यादिना अभिप्लवस्य प्रथमाहस्य। “पवस्व वाचः” इत्यादिना द्वितीयाहस्य। “दविद्युतत्या रुचा” इत्यादिना तृतीयाहस्य। “पवमानो अजीजनत्” इत्यादिना चतुर्थाहस्य। “पवमानस्य विश्ववित्” इत्यादिना पञ्चमाहस्य। “असृत प्रवाजिनः” इत्यादिना षष्ठाहस्य। “पृष्ठ्यः षड़हः समूढो वा व्यूढो वा” इत्यादिना पृष्ठ्यषड़हस्य त्र्यहाणां प्रयोगः। एवम् चतुर्थस्याह्न इत्यादिना उत्तरत्र्यहकल्पः। २प्र० “पवस्व वाचो अग्रियः” इत्यादिना अभिजितोऽह्नः कल्पः। “उपास्मै गायता नरः” इत्यादिना स्वरसाम्नां प्रथमस्य। “पवस्व वाचोऽग्रियः” इत्यादिना तेषां द्वितीयस्य “दविद्युतत्या रुचा” इत्यादिना तृतीयस्य। “उपास्मै गायता नरः” इत्यादिना विषुवन्नामाहस्तानां स्वरसाम्नाम् कल्पः। “उप त्वा जामयः” इत्यादिना विश्वजितः। “पौरमीढं मानवं जनित्रम्” इत्यादिना आद्ययोः पृष्ठ्याभिप्लवयोः,। ज्योतिष्टोमसाम्नेत्यादिना आयुष्टोमस्य। “पवस्व वाचोऽग्रियः” इत्यादिना गोष्टोमस्य। ‘उपास्मै गायता नरः” इत्यादिना महाव्रतस्य। ३प्र० “कॢप्तो ज्योतिष्टोमः” इत्यादिना गोः, आयुषः, अभिजितः विश्वजितश्च महाव्रतस्य। ‘पवस्व वाचोऽग्रियः” इत्यादिना प्रथम-

साहस्रस्य। "एवैवोत्तरस्य क्लृप्तिः" इत्यादिना द्वितीयतृतीययोः। "उपास्मै गायता नरः" इति चतुर्थस्य। "उपास्मै गायता नरः" इत्यादिना प्रथमसाद्यस्क्रस्य। "एवैवोत्तरस्य क्लृप्तिः" इत्यादिना साद्यस्क्रत्रिकस्य। "पवमानस्य जिन्वते" इत्यादिना श्येनरूपसाद्यस्क्रस्य। "उपास्मै गायता नरः" इत्यादिना एकत्रिकसाद्यस्क्रस्य। ज्योतिष्टोमं बहिष्पवमानमित्यादिना प्रथमव्रात्यस्तोमस्य। "एते असृग्रमिन्दव" इत्यादिना द्वितीयतृतीयव्रात्यस्तोमयोः। "अग्नियवती प्रतिपत्" इदित्यादिना चतुर्थव्रात्यस्तोमस्य। "अग्न ! आयूंषि पवस" इत्यादिना प्रथमस्याग्निष्टुतः। "एवैवोत्तरस्य क्लृप्तिः" इत्यादिना द्वितीयतृतीयचतुर्थानामग्निष्टुताम् प्रजापतेरपूर्व्वस्य बृहस्पतिसवस्य, इषुनामकयज्ञस्य च। "प्र सोमासो अधन्विषुः" इत्यादिना सर्व्वस्वारस्य।

४प्र०। "अग्न ! आयूंषि पवसे" इत्यादिना वैश्वदेववारुणप्रघसिकैकाहस्य। "कया त्वं न ऊत्या पवस्व" इत्यादिना वारुणप्रघासिकद्वितीयाहस्य। "उप त्वा जामयोगिरः" इत्यादिना साकमेधप्रथमाहस्य। "इन्द्रायेन्दो ! मरुत्वते" इत्यादिना तदीयद्वितीयाहस्य। "विश्वकर्मन् हविषा" इत्यादिना तदीयतृतीयाहस्य शुनासीर्यस्य च। "पवस्वेन्दो ! वृषासुतः" इत्यादिना उपहवस्य। "द्वितीयस्य स्वरसाम्न" इत्यादिना ऋतपेयदूणासवैश्यस्तोमतीव्रसुद्वाजपेयेषु प्रत्यवरोहणीयाभ्यारोहणीययोः कल्पः। "वायोः शुक्रो अयामि त" इत्यादिना अभिषेचनीयस्य। "राजा मेधाभिरीयते" इत्यादिना दशपेयस्य। "केशवपनाय व्युष्टिद्विरात्र" इत्यादिना तदीयद्वितीयाहस्य। इत्थं चत्रस्य धृतेश्च। एवमुक्तरूपेण सप्तसुत्यस्य वाजपेयस्य च।

५प्र० "राजा मेधाभिरीयते" इत्यादिना राड्विराडोरुपसदाम्। "रौरवयौधाजये" इत्यादिना पुनस्तोमस्य चतुष्टोमस्य च। "उपोषु जात" इत्यादिना उद्भिद्बलभिदोरपचितेश्च। "साहस्रं वहिष्पवमानम्" इत्यादिना सर्व्वस्तोमोपचितेरग्नेः स्तोमयोश्च। "पुनानः सोम धारया" इत्यादिना ऋषभगोषवमरुत्स्तोमानामिन्द्राग्न्योः कुलायाश्च। "इन्द्रायेन्दो ! मरुत्वत" इत्यादिना इन्द्रस्तोमस्य। "पवस्व वाचो अग्रिय" इत्यादिना इन्द्राग्न्योःस्तोमस्य आद्यविघनस्य च। "पवस्व वाचो अग्रियः" इत्यादिना द्वितीयविघनस्य। "श्येनसाज्यबहिष्पवमानम्" इत्यादिना एकाहसाध्यानां कल्पः। एते एकाहसाध्या इत्युक्तिश्च।

६प्र०। "क्लृप्तो ज्योतिष्टोमोऽतिरात्रोऽषोड़शिक" इत्यादिना ज्योतिष्टोमातिरात्रस्य, आह्नीनिकात्रात्रे, सर्वस्तोमाप्तोर्यामस्य, नवसप्तदशस्य, विषुवतः गोःआयुषः विश्वजिदभिजितोः एकस्तोमानाञ्च प्रथमाहस्य कल्पः। "गोराज्यबहिष्पवमानम्" इत्यादिना, उक्तानां ज्योतिष्टोमातिरात्रादीनां द्वितीयतृतीयचतुर्थाह्नानाम् एकस्तोमानामाङ्गिरसचैत्ररथकापिवनरूपाणां द्विरात्राणां च कल्पः। "अभिप्लवस्य प्रथमस्याह्नः" इत्यादिना गर्गत्रिरात्रे प्रथमाहस्य। "उपोषु जातम्" इत्यादिना तत्र द्वितीयाहस्य। "पवस्व वाचः" इत्यादिना तत्र तृतीयाहस्य कल्पः। "पवस्व वाज सातये" इत्यादिना अश्वमेधत्रिरात्रस्य। "प्रसोमासो विपश्चित" इत्यादिना वैदत्रिरात्रस्य। "सांवत्सरिकस्य विषुवतः" इत्यादिना, छन्दोमपवमानत्रिरात्रस्य। ये गर्गत्रिरात्रस्येत्यादिना अन्तर्वसुपराकत्रिरात्रयोः कल्पः।

७प्र०। "उपास्मै गायता नरः" इत्यादिना चतुरह प्रथमाहस्य। "पवस्व वाचो अग्रियः" इत्यादिना तदीयद्वितीयाहस्य। "दविद्युतत्यारुचा" इत्यादिना तृतीयाहस्य। "पवमानो अजीजनत्" इत्यादिना चतुर्थाहस्य। "उपोषु जातम्" इत्यादिना जामदग्न्यचतुरहस्य। "या जामदग्न्यस्य" इत्यादिना वाशिष्ठचतुरहस्य। प्रसोमासोविपश्चितः" इत्यादिना जाङ्गचतुरहस्य। "वैश्वामित्रोद्व्यहः" इत्यादिना देवपञ्चरात्रस्य त्रयाणामङ्गाम्। "पवमानो अजीजनत्" इत्यादिना तदीयचतुर्थाहस्य। "पवमानस्य विश्ववित्" इत्यादिना पञ्चमाहस्य कल्पः। "एष चतुरहोयोदेवानाम्" इत्यादिना पञ्चशारदीयव्रतमध्योः। "पृष्ठ्यः षड़हः समूढो व्यूढो वा" इत्यादिना ऋतुषडहायुष्कामपृष्ठ्यावलम्बनानां षड़हानाम्। "एष एव षड़हो य. क्रतूनाम्" इत्यादिना सप्तर्षीणां प्रजापतेः छन्दोगानां जमदग्नेरिन्द्रस्य च पञ्चसप्तरात्राणाम्। "या देवानां पञ्चरात्रस्य" इत्यादिना जनकसप्तरात्रस्य। "एष एव षड़होयः क्रतूनाम्" इत्यादिना पृष्ठ्यस्तोमस्य सप्तरात्रस्य अष्टरात्रनवरात्रयोश्च कल्पः।

८प्र०। "अग्न आयूंषि पवस" इत्यादिना त्रिककुब्दशरात्रस्य द्वयोरह्नोः। "दविद्युतत्यारुचा" इत्यादिना तदीयतृतीयाहस्य। "पवमानो अजीजनत्" इत्या-

दिना चतुर्थाहस्य ।"पवमानस्य विश्ववित्" इत्यादिना पञ्चमाहस्य ।"असृग्रन्त प्रवाजिनम्" इत्यादिना षष्ठाहस्य । "ये सोमासः परावति" इत्यादिना सप्तमाहस्य ।"पवमाना असृक्षत" इत्यादिना अष्टमाहस्य ।"उपोषु जातम्" इत्यादिना नवमाहस्य विश्वजिदतिरात्रस्य च कल्पः।"या छन्दस्तिवस्य सा कुसुरुविन्दस्य" इत्यादिना कुसुरुविन्दुदशरात्रस्य ।"पृष्ठ्यालम्भस्य पञ्चाहः" इत्यादिना छन्दोमदशरात्रस्य । "त्रिष्टोमोऽग्निष्टोमोयत्" इत्यादिना देवपूर्दशरात्रस्य पुण्डरीकैकादशरात्रस्य च कल्पः । इत्येते अहर्गणसाध्यत्वात् अहीना इत्युच्यन्ते इत्युक्तिश्च ।

९प्र०।"द्वादशरात्रस्य षोड़शिमन्नावतिरात्रौ" इत्यादिना त्रयोदशरात्रयोर्द्वयोः, तृतीयषड्विंशतिरात्रस्य, चतुर्दशरात्राणां त्रयाणां, पञ्चदशरात्राणां चतुर्णाम्, षोड़शरात्रैकस्य च कल्पः । एते सत्रसंज्ञा इत्युक्तिश्च ।"सप्तदशरात्रे चत्वार्य्यभिप्लवकान्यहानि" इत्यादिना सप्तदशरात्रस्य, अष्टादशरात्रस्य,एकोनविंशरात्रस्य च ।"विंशतिरात्रे सांवत्सरिकौ विश्वजिदभिजितौ" इत्यादिना विंशतिरात्रस्य । एकविंशतिरात्रयोर्द्वयोः, त्रयोविंशतिरात्रस्य, चतुर्विंशतिरात्रसम्बन्धिपृष्ठ्यातिरात्रयोश्च कल्पः । "पवस्वेन्दो ! वृषा सुतः" इत्यादिना त्रयोविंशतिरात्रस्य। "उपास्मै गायता नर" इत्यादिना तदीयप्रथमविंशस्य । "एष उस्यवृषा रथम्" इत्यादिना तदीयद्वितीयप्रभृतिविंशस्य, चतुर्विंशतिरात्रस्य च कल्पः। तत्रैकैकोत्तरवृद्ध्याऽष्टौ इत्युक्तिश्च।"नानाब्रह्मसाम्नामतिरात्रः" इत्यादिना नानाब्रह्मसामादीनां त्रयाणां त्रयस्त्रिंशद्रात्राणाञ्च तत्र च एकोत्तरवृद्धानि सप्तेत्युक्तिश्च । "विधृतीनां ज्योतिष्टोमोऽतिरात्रोऽषोडशिकः" इत्यादिना विधृतीनाम् ।"पृष्ठ्यः षडहः समूढोवा" इत्यादिना, च विधृतीनाम् ।"यमातिरात्राद्य गोष्टोमस्य" इत्यादिना यमातिरात्रप्रभृतीनां षसाम्, एकपञ्चाशद्रात्रस्य, एकषष्टिरात्रस्य, शतरात्रस्य सांवत्सरिकस्य गवामयनस्य च कल्पः ।

१०प्र० "मध्ये पृष्ठ्यस्य क्लृप्तोऽतिरात्रः" इत्यादिना मध्ये पृष्ठ्यस्य, क्लृप्तानां व्यूढाग्निष्टोमेभ्य आद्वितीयादह्नः कल्पः। "द्वितीयस्याह्न" इत्यादिना तत्रैव द्वितीयाहादि पञ्चानामह्नाम्। "सप्तमस्याह्नः" इत्यादिना सप्तमप्रभृतीनां त्रयाणामह्नाम् ।"दशमस्याह्नः पञ्चानाम्" इत्यादिना दशमाहप्रभृतिक्लृप्तस्य छन्दोमदशाहस्य अहर्गणस्य । "अस्य प्रत्नामनुद्युतम्" इत्यादिना छन्दोमदशाहप्रथमाहस्य। "पवस्व वाचो अप्रियः" इत्यादिना छन्दोमद्वितीयाहस्य । "दविद्युतत्या रुचा" इत्यादिना छन्दोमतृतीयाहस्य । "पवमानो अजीजनत्" इत्यादिना छन्दोमचतुर्थाहस्य । "उत शुष्मासः" इत्यादिना तदीयपञ्चमषष्ठयोरह्नोः । "ये सोमासः परावति" इत्यादिना तत्र सप्तमाहस्य । "हिन्वन्ति सूरमुस्रयः" इत्यादिना तत्र अष्टमाहस्य । "उपोषु जातम्" इत्यादिना नवमदशमयोरह्नोः कल्पः।

११प्र०"पुरस्तात् पृष्ठ्यस्य क्लृप्तोऽतिरात्रः" इत्यादिना पुरस्तात् पृष्ठ्यस्य, त्रिरात्राभिप्लवस्य, गोः,आयुषश्च कल्पः।"अस्य प्रत्नामनुद्युतम्" इत्यादिना द्वितीये छन्दोमे प्रथमाहस्य । "पवस्व वाचो अप्रियः" इत्यादिना तत्र द्वितीयाहस्य । "दविद्युतत्या रुचा" इत्यादिना तत्र तृतीयाहस्य। "वधाने तु स्वतवसे" इत्यादिना तत्र चतुर्थपञ्चमयोः षष्ठस्य च । "ये सोमासः परावति" इत्यादिना सप्तमादिदशमान्तानां, महाव्रतस्यातिरात्रस्य च कल्पः । "विधृतिभिः क्लृप्तम्" इत्यादिना दृतिकुण्डपायिनामयनानां, द्वादशसंवत्सरस्य, षड्विंशतिसंवत्सरस्य, शतसंवत्सरस्य, अग्नेः सहस्रसाध्यायनस्य च । "प्रथमस्य सारस्वतस्य षोड़शिमन्नावतिरात्रौ" इत्यादिना त्रयाणां सारस्वतीनां, दार्षद्वतैरयोः, सर्पसत्रातिरात्रयोः दशप्रथमस्य च कल्पः । "पवस्व वाचो अप्रियः" इत्यादिना दश द्वितीयस्य,तत्र उत्तरषण्मासे विपर्य्यासस्य च कल्पः। इत्येवं यागविशेषे दिनभेदे सूक्तपाठादिप्रयोगो दर्शितः। अन्येषु आश्वलायनसूत्रादिरूपेषु तेषु प्रतिपाद्यविषयाश्च तत्तच्छब्दे द्रष्टव्याः । कल्पग्रन्थस्य वेदाङ्गभेदः तन्मूलमङ्गशब्दे ७२पृ० शिक्षादिवाक्यमुक्तम् तत्र "हस्तौ कल्पोऽथ पठ्यते" इत्यत्र वैदिककर्म्मणां विधानज्ञानस्य कल्पग्रन्थाधीनत्वात् कर्म्मसाधनत्वेन हस्तसादृश्याद्धस्तता । पितृकल्पः श्राद्धकल्पः पशुकल्पइत्यादि "कल्पवित् कल्पयामास वन्यामेवास्य संविधाम्" रघुः । अनुष्ठाने । "वैश्यवच्छौचकल्पश्च" मनुः । सपूर्वपदः कल्पप्रत्ययनिष्पन्नस्तु ईषदसमाप्तप्रकृत्यर्थे । "एते प्रदीपकल्पाः परस्परविलक्षणगुणविशेषाः" सां० का० । "कार्य्यं त्वया नः प्रतिपन्नकल्पम्" कुमा० ।

"श्राद्धकल्पात्मकश्च यजुर्वेदपरिशिष्टभागः यजुर्वेदशब्दे विवृतिः । अथर्ववेदस्यांशभेदरूपकल्पस्तु पञ्चविधः । "नक्षत्रकल्पोवेदानां संहितानां तथैव च । चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः" विष्णुपु० । हेमा० दा० देवीपुराणे च "पञ्च कल्पा भवन्ति नक्षत्रकल्पो

वैतानः संहिताविधिराङ्गिरसः शान्तिकल्पश्च आथर्वणः” इति ।

**कल्पक** त्रि॰ कल्पयति रचयति आरोपयति वा क्लृप–णिच्–ण्वुल् । १रचके २आरोपके च । ३कर्चूरे(कचूर)भावप्र॰ ४नापिते पु॰ शब्दमाला तस्य केशवेशरचकत्वात् तच्छेदत्वात् वा तथात्वम् । कल्प+स्वार्थे कन् । ४कल्पशब्दार्थे च

**कल्पकार**: पु॰कल्पं कल्पसूत्रं करोति कृ–ण्वुल् ।१कल्पसूत्रकारकेषु आश्वलायनादिषु कल्पं वेशं करोति अण् । २वेशादिकारके त्रि॰ ३नापिते पु॰ण्वुल् । कल्पक इत्कोऽप्यत्र

**कल्पक्षय** पु॰ कल्पस्य सृष्टेः रचनाविशेषस्य क्षयोऽत्र । प्रलये । “पुरा कल्पक्षये वृत्ते जातं जलमयं जगत्” इहत्कथा । “कल्पक्षये पुनस्ते तु प्रविशन्ति परं पदम्” विष्णुपुरा॰ ।

**कल्पतरु** पु॰ कर्म्म॰ शाकपार्थिववत् त॰ वा । १देवतरुभेदे कल्पपादपशब्दे विवृतिः । “आसीत् कल्पतरुच्छायानाश्रिता सुरभिः पथि” “मेरौ कल्पतरोरिव” रघुः । “निगमकल्पतरोर्गलितं फलम्” भाग॰ १,१,२ । २स्मृतिनिबन्धनभेदे शारीरकसूत्रभाष्यटीकाभामतीव्याख्यानरूपे ३ग्रन्थे च

**कल्पद्रुम** पु॰ कर्म्म॰ शाकपार्थिवत् त॰ वा । देवतरुभेदे । संकल्पविषयफलदातृत्वाच्च तस्य कल्पद्रुमत्वम् “अनुकूलयतोन्द्रोऽपि कल्पद्रुमविभूषणैः” कुमा॰ । “नावुद्ध कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम्” रघुः । “कल्पद्रुमैरिव विचित्रफलैर्विरेजुः” माघः । कल्पद्रुकल्पवृक्षादयोऽप्यत्र ।

**कल्पन** न॰ क्लृप–छेदने भावे ल्युट् । १छेदने त्रिका॰। क्लृप्–सामर्थ्ये णिच्–भावे ल्युट् । २रचनायाम् ३विधाने ४आरोपे च ।

**कल्पना** स्त्री क्लृप–णिच्–भावे युच् । १रचनायाम् “उद्धारेऽनुद्धृते तेषामियं स्यादंशकल्पना” मनुः “प्रबन्धकल्पना कथा” अम॰ २विधाने ३आरोहणाय गजसज्जीकरणे हेम॰ “सकल्पनं द्विरदगणं वरूथिनः”माघः।४व्यतिरेकव्याप्तिज्ञानाधीने अनुमानभेदे नैया॰५अर्थापत्तिरूपे प्रमाणान्तरे मीमांसकावेदान्तिनयाङ्कः । आरोपश्चाविद्यमानपदार्थस्य अन्यत्र स्थितस्य अन्यत्र प्रतिभासरूपः मानसव्यापारः । “कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्” सर्व्वद॰स॰ । यथा रज्जौ सर्पकल्पना । वेदान्तिमते एवं प्रपञ्चस्य ब्रह्मणि कल्पनारूप आरोपः।

“चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां सिद्ध्यर्थं ब्रह्मणोरूपकल्पना” । निराकारस्य साकारतया जगदाकारेणारोपोऽपि कल्पनैव स चाध्यासशब्दे उक्तः । तदेतत् मुक्ताफले तट्टीकायां च निर्णीतं यथा–

“अहमेवासमेवाग्रे नान्यद्यत् सदसत् परम् । पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्” मुक्ताफ॰। “अहमेवेति कर्त्रन्तरस्य व्यावृत्तिः आसमेवेति क्रियान्तरस्य । अग्रे मायासम्बन्धादहमेव त्रिधा विभक्त इत्यर्थः, पश्चान्मायावियोगादनन्तरमप्यहमेव प्रपञ्चसृष्ट्यादिमध्यावसानेष्वहमित्यर्थः । यच्चैतत् प्रपञ्चरूपं तदप्यहं नान्यत् सिद्धं मय्यारोपितं यथाऽन्यत्र सिद्धः सर्पो रज्जौ एवं विवेचनात् भ्रमे निवृत्ते योऽवशिष्येत सोऽहमस्मि इदन्तया स्वरूपस्य निर्देष्टुमशक्यत्वादेवमुच्यते । एतेन यथा कटकादिष्ववस्थात्रयेऽपि सुवर्णत्वमेव सत्यम् । तथा जगदादिमध्यान्तेष्वनुस्यूतं सत्तामात्रं भगवत्स्वरूपमिति लक्षणार्थ इत्युक्तं, न तावदस्यासम्भवः “सदेव सोम्येदम्”इत्यादिश्रुतिसिद्धत्वात् । न च कालाकाशादिष्वतिव्याप्तिः तदुत्पत्तेः श्रुतत्वात् विमतमनित्यं बाध्यत्वात् शुक्तिरूप्यवदित्यनुमानाच्च । नापि साकारेषु चतुर्षु अव्याप्तिः तेषामाकारतिरोहितत्वात् तस्मान्निर्दोषं लक्षणम् । एवं सामान्यलक्षणमुक्त्वा विशेषलक्षणविवक्षुराह” टी॰“स द्वेधा निराकारः साकारश्च अनवच्छिन्नं चैतन्यं निराकारः,सत्वावच्छिन्नं चैतन्यं साकारः। स चतुर्धा रजस्तमोभ्यां युक्ते सत्वे पुरुषः१ रजसा ब्रह्मा२ तमसा रुद्रः३ शुद्धे विष्णुरेव४”मुक्ता॰। “स द्वेधेति द्वेधात्वमेवाह निरेति अनवच्छिन्ने वस्तुन्यवच्छेदक उपाधिराकारः तेन रहितो निराकारः तत्सहितोऽन्यः । तत्राद्यं लक्षयति अनवच्छिन्नमिति । द्वितीयं लक्षयति सत्वेति । अस्यैव भेदानाह स चेति सः साकारः। तदाद्यं भेदमाह रजस्तमोभ्यामिति । तुल्याभ्यां रजस्तमोभ्यां युक्ते सत्वे प्रतिफलितं चैतन्यं पुरुषशब्दार्थ इति पूरणीयम् । एवमुत्तरत्र रजस्तमोभ्यामिति तृतीयया तयोरप्राधान्य“सहयुक्ते चाप्रधाने”(पा॰) इति स्मरणात् तेन पुरुषे सत्वं बहुलं,रजस्तमसी तदपेक्षया न्यूनमित्यर्थः । न तु त्रीणि समान्येव त्रिकाण्यस्य प्रकृतिलक्षणत्वात्, लोकाधिकभावश्चैषां कार्य्यगम्यो न तु माषादिमूर्त्तद्रव्यवत् प्रत्यक्षः । युक्तग्रहणं द्वयोर्वर्त्तते,सत्वग्रहणं त्रिषु । द्वितीयं भेदमाह रजसेति। रजसा युक्ते सत्वे

ब्रह्मा । अत्र च मात्रया विद्यमानमपि तमो रजसः प्राधान्यं वक्तुं नोक्तम् नतु तन्नास्त्येव तत्कार्य्यस्योपलम्भात् तृतीया तु प्रागवत् तेन ब्रह्मणि तमस्तोकं तदपेक्षया रजः प्रभूतमित्यर्थः। रजसः प्रागुक्तिः सत्वापेक्षया हेयत्वात् तुर्य्यप्रकरणानुरोधाच्च तृतीयं भेदमाह तमसेति। अत्र रजोमात्रानुरोधादिकं प्रागवत्। चतुर्थमाह शुद्धे विष्णुरेवेति शुद्धे रजस्तमोभ्यामस्पृष्टे सत्वे विष्णुरेव विष्णुसंज्ञैव क्रियते न तु तत्रावन्तरवत्संज्ञान्तरमित्येवशब्दार्थः। तथाहि "तमेनं विशुद्धोर्जितसत्वाकारं सदाशिव"इत्याचक्षते"शैवाः। पशुपतिरिति पाशुपताः। पुरुषोत्तम इति पाञ्चरात्राः। आदिविद्वान् सिद्ध इति कापिलाः। ईश्वर इति पातञ्जलाः। इह तु तस्य विष्णुसंज्ञैव। यद्वा विष्णुं पञ्चात्मकमित्यत्र पञ्चानामपि विष्णुसंज्ञामुक्त्वा चतुर्णां संज्ञान्तरमप्युक्तम्। शुद्धसत्वोपाधिस्तु विष्णुसंज्ञ एवेत्येवशब्दार्थः। ते च ब्रह्मविष्णुरुद्राः प्रत्येकम् आधिदैविकादिभेदात् त्रेधा विष्णुरेव"टी० "अगोचरस्य गोचरत्वे हेतुः प्रकृतिगुणः सत्वम्, गोचरस्य बहुरूपत्वे रजः, बहुरूपस्य तिरोहितत्वे तमः। तथा परस्परमुदासीनत्वे सत्वम्" सुक्ता०। "एवमुपाधिसंभेदात् पञ्चरूपतामुक्त्वा इदानीमननुसंहितोपाधेरुपहितप्रत्ययायोगादुपाधीन् लक्षयति अगोचरस्येति। अगोचरस्य अविषयभूतस्य वस्तुनो गोचरत्वे विषयीभावे हेतुर्यः प्रकृतिगुणः तत् सत्वमित्यर्थः। हेतुः प्रकृतिगुण इत्युत्तरत्र पञ्चस्वनुवर्त्तते। गोचरस्य सतो यत् सम्बन्धान्नानात्वं तद्रजः। तस्यैव तिरोहितत्वे कारणात्मनावस्थाने हेतुस्तमः इत्यर्थः। विनाशे इत्यनुक्त्वा सत्कार्य्यपक्षाश्रयणात्तिरोहितत्वे इत्युक्तम्। एवमाधिदैविकोपाधिस्वरूपमुक्त्वा आध्यात्मिकोपाधिस्वरूपमाह तथेति। अयमर्थः-परस्परमुदासीनमित्रद्विषतस्तु उदासीनत्वे हेतुः सत्वम् इति" टी० "गोचरत्वे सत्वम्, उपकारित्वे रजः, अपकारित्वे तमः। गोचरत्वादीनि, स्थितिसृष्टिसंहाराः"सुक्ता०। "आधिदैविकाध्यात्मिकोपाधिलक्षणादाधिभूतोपाधिस्वरूपमपि लक्षितं येन हि एकस्मिन् वस्तुनि द्विरूपोविच्छेदः असावाधिभौतिकः तदुक्तम् "योध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः। यस्तत्रोभयविच्छेदः स स्मृतोह्याधिभौतिकः"। उक्तान् गोचरत्वादीन् उपाधीनुन्मीलयितुमाह गोचरत्वादीनीति। गोचरत्वबहुरूपत्वतिरोहितत्वानि क्रमात् स्थित्यादिशब्दैरुच्यन्त इत्यर्थः। न चैवं सृष्ट्यनन्तरं स्थितिरिति विरुद्धत्वं शङ्क्यं स्थितिपूर्वकत्वात् सृष्टेः। स्थिता हि मृदादयो घटाद्यात्मना सृज्यन्ते नास्थिता इति अतएवोक्तं "सत्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मनः। सर्गाय रक्तं रजसोपसंहितं कृष्णं च वर्णं तमसा जनात्यये" इति टी० "उदासीनत्वादीनि च"सुक्ता०। "एवमाध्यात्मिकेष्वपीत्याह उदासीनेति। अयमर्थः यदिदं चैत्रादेरुपकारापकारवैधुर्य्येणावस्थानं सा स्थितिः। उपकारकत्वेन सृष्टिः। अपकारकत्वेन तु संहारः। ततश्च जगत्स्थित्यादिहेतव आधिदैविकाः, अन्ये त्वाध्यात्मिकाः। सुरनराद्यः अवताराश्च सर्वे विना कृष्णम्, स तु पुरुषः त्रिविक्रमावतारत्वात् यथोक्तम् "तयोर्वां पुनरेवाहमदित्यामास कश्यपात्। उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः"(भाग०)इति। अत एव तत्र तत्र विश्वरूपप्रकटनं पूर्वावतारदेशत्वात्सत्यञ्च। दृश्यते चाद्यापि कुशस्थलीमूर्त्तौ त्रैविक्रमचिह्नं कृष्णव्यपदेशश्च। अतएव प्रह्लादसंहितायां द्वारकामाहात्म्ये तृतीये अध्याये वैकुण्ठमलङ्करिष्यता भगवता सकलं निजं तेजस्तस्यां मूर्त्तौ विन्यस्तमिति दर्शितम्। तथा हि "यत्र त्रैविक्रमी मूर्त्तिर्वहते यत्र गोमती। नरा मुक्तिं प्रयास्यन्ति चक्रतीर्थेन संगताः। कलेवरं परित्यक्तं प्रभासे हरिणा तदा। कलाभिः सहितं तेजस्तस्यां मूर्त्तौ निवेशितम्। तस्मात् कलियुगे विप्रा! नान्यत्र प्राप्यते हरिः। यदि कार्यं हि कृष्णेन तत्र गच्छत मा चिरम्" इति। तथा "आदौ त्रिविक्रम इति ख्यातिरासीन्महीतले। कृष्णस्य तु कलान्यासात् कृष्ण इत्यभिधीयत"इति। यत्तु सत्वं विशुद्धमित्यादिना शुद्धसत्वतासंकीर्त्तनं तत् सत्वभूयस्त्वविषयं, न तु यथाश्रुतमेव गुणान्तरकार्य्यस्याप्युपलम्भात् तत्र तदसत्यमन्यत्र तु वास्तवमिति तु भक्तिमात्रं तस्मात् पुरुष एवायमिति सन्तोष्टव्यं निष्क्रष्टव्यं चेदमुपरिष्टात्। यथा चैता ब्रह्मादिमूर्त्तयो गुणमूलाः तथा हासादयोरसाश्च तन्मूला एवेत्युपरिष्टात् प्रवेदयिष्यामः। किं बहुना तच्चितयतारतम्यवैचित्र्याक्रान्तमिदं विश्वं तदुक्तं "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैरिति"टी० "तेषु विष्णुब्रह्मरुद्रा निमित्तं पुरुष उपादानं गोचरत्वे तु चैतन्यम्, एवं पञ्च भेदाः तत्र निराकारः" सुक्ता०। एवमुपाधिस्वरूपं निर्धार्योपहितेषु संख्याविशेषस्योपयोगमाह तेष्विति" तेषु स्थितिसृष्टिसंहारेषु विष्णु-

दयः क्रमात् निमित्तम् कुलाल इव घटस्य, पुरुष उपादानं समवायिकारणं घटस्येव मृत्, दृष्टा च कारणद्वयपूर्व्विका कार्य्यप्रवृत्तिः असमवायिकारणं तु निमित्तान्तर्गतमेवेति पृथङ्नोक्तम्। अतएव “अन्वयादितरतश्चेति” भाग० प्रथमश्लोके द्वयमेवोपात्तम्। गोचरत्वे प्रतीतिविषयत्वे तु निर्विशेषचैतन्यं हेतुः “तस्य भासा सर्व्वमिदं विभातीति” श्रुतेः। तत्र स्थित्यादिनिमित्तार्थं त्रयः, उपादानार्थं चेकः गोचरत्वार्थमन्यश्चेति “विष्णुं पञ्चात्मकम्” इत्यत्र पञ्चैवोक्ता न न्यूनाधिका इत्यभिप्रेत्याह एवमिति। नचैवमेकः सामान्यात्मा विशेषरूपाश्च पञ्चेति षट्कमाशङ्क्य विशेषपरिहारे सामान्यस्यानवस्थानात् एवं तावत् पञ्च वस्तूनि स्वयं वर्णयित्वा तदेव ग्रन्थान्तरानुरूपेण लक्षणेन द्रढयितुमाह तत्रेति। निराकार इति निराकारस्य लक्षणं कथ्यत इत्यर्थः” टी०। “न यत्र कालोऽनिमिषां परः प्रभुः कुतो नु देवा जगतां य ईशिरे। न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान् प्रधानम्। परं पदं वैष्णवमामनन्ति तत् यत्र नेतीत्यतदुत्सिसृक्षवः। विसृज्य दौरात्म्यमनन्यसौहृदाहृदोपगुह्यार्हपदं पदे पदे”(भाग०)मुक्ता०। “तत्रापि न यत्रेति तटस्थस्य परं पदमिति स्वरूपस्य। तत् परं पदं वैष्णवम् आमनन्ति विष्णुनाधिष्ठितं अधिकृताधिष्ठितेन राज्ञाधिष्ठितवत् ब्रह्मादिपदानामपि विष्णुनाऽधिष्ठितत्वात् परमित्युक्तं विष्णुनैवाधिष्ठितमित्यर्थः। यत्र पदे कालोनास्ति यः अनिमिषां ब्रह्मादीनां परः प्रभुः संहर्त्ता महाप्रलयेऽपि नाशोनास्त्येवेत्यर्थः। अतएव कालाभावे किंपुनर्न्यायेन देवा अपि तत्र न सन्तीत्याह कुतोन्विति। तथा देवाभावे जीवा अपि न सन्तीत्याह जगतामिति। ये देवा जगताम् उच्चावचां गतिं गच्छतां जीवानामीशाः तेषां का वार्त्ता? ततुक्तविम्नगम्योऽपि नास्तीत्याह ईशिरे इत्यनित्यत्वद्योतनार्थं लिट्प्रयोगः। यत्र च पदे सत्त्वादिर्नास्ति सत्त्वमिन्द्रियदेवतारूपं, रज इन्द्रियम्,। तम इन्द्रियार्थरूपं, विकारोऽहङ्कारस्तेषां त्रयाणां कारणं महान् बुद्धितत्त्वं तदहङ्कारस्य प्रधानमव्यक्तं तन्महतः। सत्त्वाद्यभावादेतत् प्राप्नवतां पुनर्जन्मादिशङ्काबीजलेशोऽपि नास्तीत्यर्थः। एवं दुःखं नास्तीत्युक्त्वा सुखमस्तीत्याह यत्रेतीति। यत् विष्णुपदं हृदा मनसा उपगुह्य आलिङ्ग्य अनन्यसौहृदाभवन्ति अन्यत्र विषये प्रीतिं परित्यजन्ति तादृक्सुखाभावात् तद्धि पदे पदे क्षणे क्षणे अर्हपदं अर्हणस्य आदरस्य स्थानम् उत्तरोत्तरचमत्कारणीयत्वात् दौरात्म्यं विसृज्य अनादिदुर्व्वासनावासितत्वं त्यक्त्वा विषयान्तरस्फूर्तिरपि नास्तीत्यर्थः नेति नेतीत्युपनिषदुपदेशविश्वासबलात् अतत् विष्णुपदादन्यत् उत्सिसृक्षवः स्वेच्छयैवोत्स्रष्टवन्तः। नित्यनिरतिशयसुखानुभवरूपे विष्णुपदे अनुभविता अनुभवनं अनुभवनीय इति कर्त्तृकरणकर्माणि न तच्छब्देनोच्यन्ते तानि ह्यनुभवार्थमुपादीयन्ते सत्यनुभवे तु त्यज्यन्ते असत्त्वात्दन्तरायत्वाच्च” टी० “इत्थं मुनिस्तूपरमेद्व्यवस्थितो विज्ञानदृग्वीर्य्यसुरन्धिताशयः”। पुरुषः—“भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन्। स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः”(भाग०)मुक्ता०। “एवमस्य द्विविधलक्षणमुक्त्वा अत्राधिकारिणमाह इत्थमिति। इत्थं व्यवस्थितः अनेन प्रकारेण विशिष्टामवस्थामापन्नो मुनिरुपरमेत् न किञ्चित् कुर्य्यात् यतोविज्ञानस्य विशुद्धज्ञानरूपस्य विष्णोर्दृक् दर्शनं साक्षात्कारः तस्य वीर्य्यं बलं तेन सुरन्धितो यथा पुनर्नोदेति तथा हिंसितः आशयोजीवस्योपाधिर्य्येन स तथा। अयमर्थः वक्ष्यमाणभूमिकोपासनाक्रमबलात् सत्त्वपुरुषान्यताख्यातिमापन्नस्तामपि सायुज्यार्थी निरोद्धुकाम इत्येतामवस्थामापन्नो मुनिरत्राधिक्रियते नान्यः। अवश्यञ्चाविकारिनिर्धारार्थं इत्थमित्यादि ज्ञेयम् अन्यथास्योद्धरणं निःप्रयोजनं स्यात्। इति शुकः राजानं प्रति पुरुषलक्षणमाह। भूतैरित्यादि। आत्मसृष्टैः आत्मना प्रकृतिमधिष्ठाय सृष्टैः पुरं देहं विराजं ब्रह्माण्डं विरचय्य निष्पाद्य तस्मिन् स्वांशेन जीवकलया यदा प्रविष्टः तदा पुरुषसंज्ञामवाप पुरि शयनाद्वसनाद्वा पुरुषः अनंशोऽप्यंशोक्तिः कल्पनया। नारायणः जलशायी आदिदेवो निराकारः” टी०। मुक्ताफलस्थाः श्लोकास्तु भागवतीयाः।

**कल्पनाकाल** त्रि० कल्पनायाः कालः कालो यस्य। संकल्पवदाशुविनाशिनि अस्थिरे पदार्थे त्रि०।

**कल्पनी** स्त्री क्लृप—छेदने करणे ल्युट् ङीप्। कर्त्तर्य्याम्। (काञ्चि) हेमच०।

**कल्पपादप** पु० कर्म्म० राजशिरोवत् त०स० वा। १सुरतरुभेदे “स्पृशा न चक्रेऽल्पितकल्पपादपः” नैष०। महादानान्तर्गते स्वर्णनिर्म्मितपादपाकारे देये २द्रव्यभेदे तद्विधानं हेमा० दा० उक्तं यथा—

“मत्स्य उवाच। “कल्पपादपदानाख्यमतः परमनुत्तमम्। महादानं प्रवक्ष्यामि सर्व्वपातकनाशनम्। पुण्यं दिन-

मत्स्यपुराणोक्ततुलापुरुषदानवत्। पुण्याहवाचनं कुर्य्याल्लोकेशावाहनं तथा। ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम्"। आदिशब्देन कालदेशशुद्धिस्वाङ्गशिवादिपूजागुर्व्वृत्विक्चतुष्टयवरण—मधुपर्क—दान—होम—वेदिकोपरिचक्र—लेखनपञ्चवर्ण—वितानपताकातोरणादि, मत्स्यपुराणोक्ततुलापुरुषदानवद्बोद्धव्यम्। "काञ्चनान् कारयेद्‌वृक्षान् नानाफलसमन्वितान्। नानाविहारवस्त्राणि भूषणानि च कारयेत्"। नानाफलेति, पुंस्त्रीगोगज—वाजि—मणि—वज्र—कनक—रजत—मत्स्यफलादीनि। "शक्तितस्त्रिपलादूर्द्ध्वमासहस्रात् प्रकल्पयेत्। अर्द्धेन कृष्णसुवर्णस्य कारयेत् कल्पपादपम्। गुड़प्रस्थोपरिष्टाच्च सितवस्त्रयुगावृतम्। कामदेवमधस्ताच्च सकलत्रं प्रकल्पयेत्"। अर्द्धेन कृष्णसुवर्णस्येति, यथाशक्ति दानार्थकृष्णसुवर्णस्यार्द्धेन ब्रह्मादिप्रतिमासहितं कल्पपादपं कुर्य्यात् द्वितीयमर्द्धं चतुर्द्धा विभज्य एकैकांशेन वक्ष्यमाणस्वदेवतासहितान् सन्तानादीन् विदध्यात्, गुड़प्रस्थोऽत्र "द्वात्रिंशत्पलिकः प्रस्थः पुराणे परिकीर्त्तित" इति। ब्रह्मादिलक्षणमुक्तं ब्रह्माण्डदाने, कामदेवरूपन्तु विष्णुधर्म्मोत्तरात् "कामदेवस्तु कर्त्तव्यो रूपेणाप्रतिमो भुवि। अष्टबाहुः प्रकर्त्तव्यः शङ्खपद्मविभूषणः। चापबाणकरश्चैव समाकुञ्चितलोचनः। रतिः प्रीतिस्तथा शक्तिर्भार्य्याश्चैतास्तथोज्ज्वला। चतस्रस्तस्य कर्त्तव्याः पत्न्यो रूपमनोहराः। चत्वारश्च करास्तस्य कार्य्या भार्य्यास्तनोपगाः। केतुश्च मकरः कार्य्यः पञ्चबाणमुखो महानिति"। अधस्तादिति ब्रह्मादिभिरपि सम्बध्यते। अत्र प्रकृतौ परिमाणाभावात् पुरुषेच्छया प्रतिमादिपरिमाणानियमः। "सन्तानं पूर्व्ववत्तद्वत्तुरीयांशेन कल्पयेत्" तुरीयांशेन, द्वितीयार्द्धचतुर्थांशेनेत्यर्थः। तद्वत्कल्पवृक्षवत्, पञ्चशाखं गुडप्रस्थोपरिगतं ब्रह्मादिप्रतिमान्वितं कुर्य्यादित्यर्थः। केचित्तु कामदेवमधस्तात् प्रकल्पयेदितिसन्तानवृक्षे योजयन्ति, तन्मते तत्प्रतिमैव कर्त्तव्या। "मन्दारं दक्षिणे पार्श्वे श्रिया सार्द्धं घृतोपरि। पश्चिमे पारिभद्रन्तु सावित्र्या सह जीरके। सुरभीसंयुतं तद्वन्निवेश्यं हरिचन्दनम्। तुरीयांशेन कुर्व्वीत सौम्येन फलसंयुतम्"। श्रीलक्षणमुक्तं ब्रह्माण्डदाने, सावित्रीलक्षणमाह नारदः "पद्मासना च सावित्री साक्षसूत्रकमण्डलुः"। सुरभीलक्षणं ब्रह्माण्डपुराणे "सवत्सा सुरभी, धेनुरारक्ता प्रस्नुतस्तनीति, "सौम्येन, उत्तरेण। घृतादीनामपि परिमाणापेक्षायां तद्वदिति वचनात् सन्निधानाच्च प्रस्थपरिमाणत्वमवधेयम्। "कौशेयवस्त्रसंयुक्तानिक्षुमाल्यफलान्वितान्। तथाष्टौ पूर्णकलशान् पादुकासनभाजनम्। दीपकोपानहच्छत्रचामरासनसंयुतम्। फलमाल्ययुतं तद्वदुपरिष्टाद्वितानकम्। तथाष्टादश धान्यानि समन्तात् परिकल्पयेत्"। अशनभाजनं, भोज्यान्वितभाजनं वितानं पञ्चवर्णम्। अथ पूर्व्ववत् पूर्व्वेद्युरधिवासनं विधाय श्वोभूते ब्राह्मणवाचनादिपूर्णाहुतिपर्य्यन्तं कर्म्मशेषं समापयेत्। "होमाधिवासनान्ते च स्नापितो वेदिपुङ्गवैः। त्रिःप्रदक्षिणमावृत्य मन्त्रमेतमुदीरयेत्। नमस्ते कल्पवृक्षाय चिन्तितार्थप्रदायिने। विश्वम्भराय देवाय नमस्ते विश्वमूर्त्तये। यस्मात् त्वमेव विश्वात्मा ब्रह्मा स्थाणुर्दिवाकरः। मूर्त्तामूर्त्तपरं बीजमतः पाहि सनातनः। त्वमेवामृतसर्व्वस्वमनन्तः पुरुषोऽव्ययः। सन्तानाद्यैरुपेतः सन् पाहि संसारसागरात्"। अमृता, देवाः तेषां सर्व्वस्वं, अमृतसर्व्वस्वम्। "एवमामन्त्र्य तं दद्यात् गुरवे कल्पपादपम्। चतुर्भ्यश्चापि ऋत्विग्भ्यः सन्तानादीन् प्रकल्पयेत्"। दानवाक्यमत्र तुलापुरुषोक्तमूहनीयं, चतुर्भ्यः प्रकल्पयेदित्येकैकशो दद्यादित्यर्थः। चतुर्भ्य इतिवचनादत्र चतुर्णामेवर्त्विजां वरणमिति गम्यते ऋत्विगष्टकपक्षे तु ऋत्विग्भ्य इति ऋत्विग्युग्मेभ्य इत्यर्थः। एतस्मिंश्च पक्षे जापकादिभ्योऽन्यैव दक्षिणा दातव्या। वेदचतुष्टयापेक्षया चतुःसंख्यात्वमिदमृत्विजामिति केचित्। इहापि "प्राप्य तेषामनुज्ञाञ्च तथान्येभ्योऽपि दापयेदिति" बोद्धव्यम्। दक्षिणानिर्णयश्च पूर्व्ववत्। "स्वल्पेष्वेकाग्निवत् कुर्य्याद्गुरवे वाभिपूजनम्। न वित्तशाठ्यं कुर्व्वीत न च विस्मयवान् भवेत्"। स्वल्पत्वविवरणमुक्तं ब्रह्माण्डदाने। ततः पुण्याहवाचने कृते वेदिसमीपं गत्वा कृतदेवपूजो यजमानो गुरुश्च पूर्व्ववदेव देवताविसर्जनं कुर्य्यात्। "अनेन विधिना यस्तु महादानं निवेदयेत्। सर्व्वपापविनिर्मुक्तः सोऽश्वमेधफलं लभेत्। अप्सरोभिः परिवृतः सिद्धचारणपन्नगैः। भूतान् भव्यांश्च मनुजांस्तारयेद्रोमसम्मितान्। स्तूयमानो दिवःपृष्ठे पितृपुत्रप्रपौत्रवान्। विमानेनार्कवर्णेन विष्णुलोकं स गच्छति। दिवि कल्पशतं तिष्ठेद्राजराजो भवेत् ततः। नारायणबलोपेतो नारायणपरायणः। नारायणकथासक्तो नारायणपुरं व्रजेत्। यो वा पठेत् सकलकल्पतरुप्रदानं, यो वा शृणोति पुरुषोऽल्पधनः स्मरेद्वा। सोऽपीन्द्रलोकमधिगम्य सहाप्सरोभिर्मन्वन्तरं वसति पापविमुक्तदेहः"।

इति मत्स्यपुराणोक्तकल्पतरुदानविधिः। तत्रैव लिङ्गपुराणे, "सनत्कुमार उवाच। अथान्यत् संप्रवक्ष्यामि कल्पपादपमुत्तमम्। शतनिष्केण कर्त्तव्यं सर्व्वशस्यसमन्वितम्"। सर्व्वशाखाः, सर्व्वदिगन्तशाखाः। "शाखायां विधिना कृत्वा मुक्तादाम प्रलम्बितम्। दिव्यैर्म्मरकतैश्चैव चाङ्कुराणि प्रविन्यसेत्"। दिव्यैः, उत्कृष्टैरित्यर्थः। "प्रवालाङ्कुरशेखीमान् प्रवालेन द्रुमस्य च"। प्रवालेन प्रवालाङ्कुरयेदिति, विद्रुमैर्बालपल्लवान् कारयेत्यर्थः। "फलानि पद्मरागैश्च पारिजातस्य शोभनम्। मूलदण्डञ्च नीलेन वज्रेण स्कन्धमुत्तमम्। वैदूर्य्येण द्रुमाग्रञ्च पुष्परागेण मस्तकम्"। स्कन्धादूर्द्ध्वभागो मस्तकं, तदूर्द्ध्वं, द्रुमाग्रम्। "गोमेदकेन वै स्कन्धं सूर्य्यकान्तेन सुव्रतः। चन्द्रकान्तेन वा वेदिं द्रुमस्य स्फटिकेन वा। वितस्तिमात्र आयामो वृक्षस्य परिकीर्त्तितः। शाखाष्टकसमानञ्च विस्तारश्चोर्द्ध्वतस्तथा"। शाखाव्यतिरिक्तस्य वृक्षस्य वितस्तिमात्र उच्छ्रायः कार्य्यः, ऊर्द्ध्वतश्चेति, स्कन्धादूर्द्ध्वमुखी नवमी या मध्यमशाखा तस्या अपि वितस्तिमात्र उच्छ्रायः, शाखाष्टकसमानं विस्तारमिति, अष्टदिग्मुखीनामष्टशाखानां विस्तारं तिर्य्यग्व्याप्तिं वितस्तिमात्रमेव कुर्य्यादित्यर्थः। "तन्मूले स्थापयेल्लिङ्गं लोकपालसमावृतम्। पूर्व्वोक्तवेदिमध्ये तु मण्डले स्थाप्य पादपम्। पूजयेद्देवमीशानं लोकपालांश्च यत्नतः। पूर्व्ववज्जपहोमाद्यन्तुलाभारवदाचरेत्। निवेदयेद्द्रुमं शम्भोर्ब्राह्मणायाथ वा नृप!। ब्राह्मणेभ्योऽथवा राजा सार्व्वभौमो भविष्यति"। तुलाभारवदाचरेदिति लिङ्गपुराणोक्ततुलापुरुषदानविहितविधिमाचरेदित्यर्थः। कालोत्तरे। "फलानान्तु सहस्रेण कल्पयेत् कल्पपादपम्। समूलदण्डपत्रञ्च फलपुष्पसमन्वितम्। पञ्चस्कन्धन्तु संकल्प्य पञ्चानां स्थापयेत् सुधीः। सद्योजातेन मन्त्रेण देयं प्राह्यं शिवाग्रतः। दिव्यैर्विमानैर्देहान्ते शिवलोके महीयते। पितरस्तस्य मोदन्ते सत्यलोके महीपते!"। इति लिङ्गपुराणोक्तकल्पपादपदानविधिः।

**कल्पपाल** पुं॰ कल्पं सुराविधानकल्पं संकल्पं मद्याभिलाषं वा तत्पायिनां, पालयति पाल–अण्। शौण्डिके सुराजीवे हेमच०। कल्यपाल इत्येव पाठः साधुः।

**कल्पलता** स्त्री क्लृप–णिच्–कर्म्मणि अच् कर्म॰। महादानान्तर्गते स्वर्णकल्पितलताकारे दानीयद्रव्यभेदे तद्विधिः हेमा॰ दा॰ मत्स्य पु॰ उक्तो यथा—

"अथातः सम्प्रवक्ष्यामि महादानमनुत्तमम्। महाकल्पलता नाम महापातकनाशनम्। पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम्। ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्। तुलापुरुषवत् कुर्य्यात् लोकेशावाहनादिकम्"। आदिशब्दव्याख्यानं पूर्व्ववत् (कल्पपादपोक्तवत्)। "चामीकरमयीः कुर्य्यात् दश कल्पलताः शुभाः। नानापुष्पफलोपेता नानांशुकविभूषिताः। विद्याधरसुपर्णानां मिथुनैरुपशोभिताः। हारीनादित्सुभिः सिद्धैः फलानि च विहङ्गमैः"। चामीकरं, सुवर्णं कल्पलतास्तुल्याकारा विधेयाः,। नानाफलानि, पुंस्त्रीगोगजवाजिप्रभृतीनि, स्वरूपपुष्पफलानां तुलनार्थत्वेनैवोपपत्तेः। अंशुकानि, वस्त्राणि। सुपर्णाः पक्षिणः। एवं दश कल्पलता विधाय वेदिकायाम् लिखितचक्रस्योपरि मध्ये द्वयं, पूर्व्वादिदिक्षु चाष्टौ स्थापयेत्। "लोकपालानुसारिण्यः कर्त्तव्यास्तासु देवताः। ब्राह्मीमनन्तशक्तिञ्च लवणस्योपरि न्यसेत्। अधस्ताच्च तयोर्मध्ये पद्मशङ्करे शुभे"। लोकपालानुसारिण्यो देवता, लोकपालशक्तय इत्यर्थः। अधस्ताच्च तयोरिति, मध्यस्थापितयोः कल्पलतयोरधस्तात् पद्मकरां ब्राह्मीं, शङ्खधरामनन्तशक्तिञ्च स्थापयेत्। लवणादिपरिमाणञ्च, परिमाणविशेषानिर्देशात् स्वेच्छया नियस्यते। लवणस्तूपयोर्न्यसेदिति क्वचित् पाठः। तत्र स्तूपो राशिः द्विवचनं राशिद्वयापेक्षयेति। "इभासनस्था तु गुडे पूर्व्वतः कुलिशायुधा। रजन्यजस्थिताऽऽग्नेयी स्रुवपाणिरथानले। याम्या महिषमारूढ़ा गदिनी तण्डुलोपरि। घृतेन नैर्ऋती स्थाप्या सखड्गा दक्षिणापरे। मारुणे वारुणी क्षीरे झषस्था नागपाशिनी। पताकिनी च वायव्ये मृगस्था शर्करोपरि। सौम्या तिलेषु संस्थाप्या शङ्खिनी निधिसंस्थिता। माहेश्वरी वृषगता लीशपाणिः त्रिशूलिनी"। इभो गजः स च चतुर्दन्तो विधेयः, कुलिशं, वज्रं, रजन्यजस्थितेति, रजनी, हरिद्रा, अजः, छागः, हरिद्रोपरिस्थापिता छागवाहनेत्यर्थः अनले, आग्नेयदिग्भागे, दक्षिणापरे नैर्ऋतदिग्भागे नैर्ऋती प्रेतवाहनेत्यवधेयं, झषस्था मकरवाहनेत्यर्थः। निधिसंस्थितेति निधिरूपं कलशानुकारि। "मौलिन्योवरदास्तद्वत् कर्त्तव्या बालकान्विताः। शय्या पञ्चपलादूर्द्ध्वमा सहस्रात् प्रकल्पयेत्। सर्व्वासामुपरिष्टाच्च पञ्चवर्णं वितानकम्। धेनवो दश कुम्भाश्च वस्त्रयुग्मानि चैव हि"। मौलिन्यो

मुकुटधराः, वरदा इति, यथोक्तायुधधारित्वः करादि-
तरेण करेण वरदमुद्रान्वितादल्यर्थः। "बालिका, कण्ठ-
भूषणं (शालि) बालकान्विता इति क्वचित्पाठः तदा वामोत्स-
ङ्गस्थितबालकादूति व्याख्या। एतच्च पञ्चपत्रादिपर्दिमि-
तकल्पलताकरणोपक्रमप्रसुवर्णेनैव विभज्य सर्वं कर्त्तव्यं,
पृथगद्रव्येण कर्त्तव्यानुपदेशात्। "मध्यमे देहि गुरवे
ऋत्विग्भ्योऽन्यास्तथैव च। ततो मङ्गलशब्देन स्नातः
शुक्लाम्बरो बुधः। त्रिः प्रदक्षिणमावृत्य मन्त्रानेतानुदी-
रयेत्"। तत इति होमाधिवासनपुण्याहवाचनादि
पूर्वोक्तकर्मकलापानन्तर्यमुच्यते, स्नात इति कुण्डसमी-
पवर्त्तिकलशस्थितसर्वौषधिजलेन ऋत्विग्भिः स्नापितः,
गृहीतकुसुमाञ्जलिरित्यपि ज्ञेयम्। अत्र मन्त्रः "नमो-
नमः पापविनाशिनीभ्यो ब्रह्माण्डलोकेश्वरपालिनीभ्यः।
आशंसिताधिक्यफलप्रदाभ्यो दिग्भ्यस्तथा कल्पलतावधूभ्यः"।
अथ पूर्ववत् प्रयोगमनुचार्य मध्यमे हे देवतादिदर्शहिते
कल्पलते गुरवे प्रतिपाद्य शेषा ऋत्विग्भ्यः प्रतिपादयेत्।
तदनुज्ञया अन्येभ्योऽपि दानं दीनानाथपूर्वकं, स्वल्पे-
त्वेकाग्निविधानं देति पूर्वोक्तमनुसन्धेयम्। ततः पुण्या-
हवाचनदेवतापूजनविसर्जनानि कुर्यात्। "इति सकलदि-
गङ्गनाप्रदानं भवभयसूदनकारि यः करोति। अभि-
मतफलदे स नाकलोके वसति पितामहवत्सराणि
त्रिंशत्"। अभिमतफलदे, इष्टफलदायिनि। "पितृ-
शतमवतारयेद्भवाब्धेः स च दुरितौघविनाशशुद्धदेहः।
सुरपतिवनितासहस्रसंख्यैः परिवृतमम्बुजसंसदाभिरन्त्याः।
इति विधानमिदं सदिगङ्गनाकनककल्पलताविनिवेदने।
पठति यः स्मरतीह तदीक्षते स पदमेति पुरन्दर-
सेवितम्"। कल्पस्य संकल्पविषयस्य साधनं लता। २सुर-
द्रुमशाखारूपलतायाञ्च।

**कल्पवर्ष** पु० उग्रसेनभ्रातृदेवकस्यात्मजोपदेवस्यात्मजभेदे
"आङ्कात्मजौ"देवकस्योग्रसेनस्य चत्वारो देवकात्मजाः।
देववानुपदेवश्च सुदेवोदेववर्द्धनः" इत्युक्त्वा राजन्यकल्प-
वर्षाद्या उपदेवसुता दश" भाग० ९,२४,२५ उक्तम्।

**कल्पसूत्र** न० कल्पस्य वैदिककर्मानुष्ठानस्य प्रतिपादकं
सूत्रम्। आश्वलायनापस्तम्बप्रणीतेषु वैदिककर्मप्रयोगावे-
दकेषु सूत्रात्मकग्रन्थेषु "त्र्यहोऽश्वमेधः संख्यातः कल्प-
सूत्रेण ब्राह्मणैः। चतुष्टोममहस्तस्य प्रथमं परिकल्पितम्"
रामा०। [परान्वेधितसिन्धवः"भाग०३,११,३।

**कल्पान्त** पु०। कल्पस्यान्तोयत्र। प्रलये अमरः। "कल्-

**कल्पित** त्रि० क्लृप-णिच्-क्त। रचिते"प्रजापतिः कल्पितयज्ञ-
भागम्" कुमा०। "मदीयस्रोमपि घनामनल्पगुणकल्पि-
ताम्" २व्यञ्जिते। "ग्रामभेदकरकल्पितस्वरम्" माघः।
"करेण कल्पितोव्यञ्जितः स्वरोयत्र" मल्लि०। ३आरो-
पिते च। "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः"
सूतसं०। "किं न पश्यसि संसारं तत्रैवाज्ञान-
कल्पितम्" वेदा०प्र०। ४आरोहणार्थं सज्जितगजे हेमच०
५कृत्रिमसंज्ञया परिभाषिते "तच्चेष्टिततमं कर्म चतुर्दा
न्यस्त कल्पितम्" वाक्यप०।

**कल्पिन्** त्रि० कल्पयति क्लृप-णिच्-णिनि। १रचके २आरो-
पके ३वेशकारके च ४नापिते पु०। "त्रेतायै कल्पिनं
द्वापरायाधिकल्पिनम्" यजु० ३०,१८।

**कल्प्य** त्रि० क्लृप-णिच्-यत्। १रचनीये २आरोप्ये ३अनुष्ठेये
४विधेये"काव्योपपन्नातिथिकल्प्यभागम्" रघुः।

**कल्मन्** न० कर्मन्+रस्य लः। कर्मणि।

**कल्मलि** पु० कलयत्यपगमयति मलम् पृषो०। १तेजसि।
"तस्य प्राच्यां दिशि श्रद्धा पुंश्चली मन्त्रो मागधो विज्ञानं
वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्त्तौ कल्मलि-
र्मणिः" अथ०१५,२,१।

**कल्मलीक** न०कलयत्यपगमयति मलम् पृषो०। ज्वलनयुक्ते
तेजसि निरु०। "नमस्या कल्मलीकिनम् नमोभिः"
ऋ० २,३३,८। "कल्मलीकिनं ज्वलतोनामधेयमेतत्
निरु०। १,१७। ज्वलन्तं कलयत्यपगमयति मलमिति
कल्मलीकं तेजः"तद्वन्तं रुद्रम्"भा०ततः अस्त्यर्थे इनि।

**कल्मष** न० कर्म शुभकर्म स्यति सो-क पु० वत्वं रस्य लः।
१पापे"व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते" "व्यपेत-
कल्मषोऽभ्येति""यामीस्तायातनाः प्राप्य स जीवो वीतक-
ल्मषः"मनुः। २तद्वति त्रि०अमरः३हस्तपुच्छे न०त्रिका०
४नरकभेदे पु०मेदि०। ५मलिने त्रि० जटाधरः "जन्म-
न्यृक्षे यदि स्यातां वारौ भौमशनैश्चरौ। स मासः कल्मषो
नाम मनोदुःखप्रदायकः" दीपिकोक्ते हेमासभेदे पु०।

**कल्माष** पु० कलयति कल-क्विप् कल् माषयति हिनस्ति
अन्यवर्णम् स्वभासा चु० मष-हिंसायाम् अच् कर्म०।
१चित्रवर्णे २तद्वति त्रि० अमरः "अश्वांश्चि-
त्तिरिकल्माषान्"भा०आ०९अ०। तित्तिरिवच्चित्रवर्णान्
इत्यर्थः। "कल्माषा आग्निमारुताः" यजु०२४,७।
"कल्माषाः कर्बुराख्याः पशवः आग्निमारुताः पष्ठे
यूपे" वेददी० "कल्माष ऐन्द्राग्नाः" यजु० २९,५८।

"मारुतः कल्माष आग्नेयः कृष्णः" यजु०२९,५९। २कृष्णवर्णे ४कृष्णपाण्डुरवर्णे पु०५तद्वति त्रि०। ६राक्षसे च पुंस्त्री स्त्रियां जातित्वात् ङीष् मेदि०। वर्णवाचित्वे गौरा०पाठात् स्त्रियांङीष्। ७गन्धशालौ पु०राजनि०। ८अग्निभेदे भारतम्। "अग्नीनां वासुदेवेन संसक्तानां महामृधे!। ते जातवेदसः सर्वे कल्माषः कुसुमस्तथा। दहनः शोषणश्चैव तपनश्च महाबलः" हरिवं० १८० अ०। ९नागभेदे "नीलानीलौ तथानागौ कल्माषशबलौ तथा" भा० आ० ३५ नागनामोक्तौ। १०कृष्णविन्दुचिते च। "कल्माषमिल्लेके" आश्व०स्ट०४,९,५। "कल्माषो नाम कृष्णविन्दुचितः" भारा०।

**कल्माषकण्ठ** पु० कल्माषः कृष्णपाण्डुरः कृष्णोवा कण्ठोऽस्य। महादेवे हारा० तस्य स्वतः श्वेतवर्णत्वेऽपि विषपानकाले नीलकण्ठत्वात् तथात्वं कल्माषग्रीवादयोऽप्यत्र। "ध्रुवा दिग्विष्णुरधिपतिः कल्माषग्रीवो रक्षिता" अथ०३,२७,५। "ध्रुवाय त्वा दिशे विष्णवेऽधिपतये कल्माषग्रीवाय रक्षित्रे" अथ०१२,३,५९।

**कल्माषपाद** पु०कल्माषौ पादौ यस्य। सूर्यवंश्ये सुदासपुत्रे नृपभेदे। "द्वे भार्य्ये सगरस्यास्ताम्" इत्युपक्रम्य "अयुताजित्सुतस्त्वासीदृतपर्णो महायशाः। दिव्याक्षहृदयज्ञोऽसौ राजा नलसखो बली। ऋतपर्णसुतस्त्वासीदार्त्तपर्णिर्महीपतिः। सुदासस्तनयस्तस्य राजा इन्द्रसखोऽभवत्। सुदासस्य सुतस्त्वासीत् सौदासो नाम पार्थिव!। ख्यातः कल्माषपादो वै नाम्ना मित्रसहोऽभवत्" हरिवं०१५अ०। तस्य ब्रह्मशापात् राक्षसत्वप्राप्तिर्वसिष्ठेन शापविमोचनस्य च कथा भा०आ०१७७,७८०अ०यथा—"कल्माषपाद इत्येवं लोके राजा बभूव ह। इक्ष्वाकुवंशजः पार्थ! तेजसाऽसदृशो भुवि। स कदाचिद्वनं राजा मृगयां निर्ययौ पुरात्। मृगान् विध्यन् वराहांश्च चचार रिपुमर्द्दनः। तस्मिन् वने महाघोरे खड्गांश्च बहुशोऽहनत्। हत्वा च सुचिरं श्रान्तो राजा निववृते ततः। अकामयत्तं याज्यार्थे विश्वामित्रः प्रतापवान्। स तु राजा महात्मानं वाशिष्ठमृषिसत्तमम्। तृष्णार्त्तश्च क्षुधार्त्तश्च एकायनगतः पथि। अपश्यदजितः सङ्ख्ये मुनिं प्रतिमुखागतम्। शक्तिं नाम महाभागं वशिष्ठकुलवर्द्धनम्। ज्येष्ठं पुत्रं पुत्रशताद्वशिष्ठस्य महात्मनः। अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत्। तथा ऋषिरुवाचैनं सान्त्वयन् श्लक्ष्णया गिरा। मम पन्था महाराज! धर्म एष सनातनः। राज्ञा सर्वेषु धर्मेषु देयः पन्था द्विजातये। एवं परस्परं तौ तु पथोऽर्थं वाक्यमूचतुः। अपसर्पापसर्पेति वागुत्तरमकुर्व्वताम्। ऋषिस्तु नापचक्राम तस्मिन् धर्मपथे स्थितः। नापि राजा मुनेर्मानात् क्रोधाच्चापजगाम ह। असमुञ्चन्तं तु पन्थानं तमृषिं नृपसत्तमः। जघान कशया मोहात्तदा राक्षसवन्मुनिम्। कशाप्रहाराभिहतस्ततः स मुनिसत्तमः। तं शशाप नृपश्रेष्ठं वाशिष्ठः क्रोधमूर्च्छितः। हंसि राक्षसवद्यस्माद्राजापसद! तापसम्। तस्मात्त्वमद्यप्रभृति पुरुषादो भविष्यसि। मनुष्यपिशिते सक्तश्चरिष्यसि महीमिमाम्। गच्छ राजाधमेत्युक्तः शक्तिना वीर्य्यशक्तिना। ततो याज्यनिमित्तन्तु विश्वामित्रवशिष्ठयोः। वैरमासीत्तदा तन्तु विश्वामित्रोऽभ्यपद्यत। तयोर्विवदतोरेवं समीपमुपचक्रमे। ऋषिरुग्रतपाः पार्थ! विश्वामित्रः प्रतापवान्। ततः स बुबुधे पश्चात्तमृषिं नृपसत्तमः। ऋषेः पुत्रं वशिष्ठस्य वशिष्ठमिव तेजसा। अन्तर्द्धाय तदात्मानं विश्वामित्रोऽपि भारत!। तावुभावतिचक्राम चिकीर्षन्नात्मनः प्रियम्। स तु शप्तस्तदा तेन शक्तिना वै नृपोत्तमः। जगाम शरणं शक्तिं प्रसादयितुमर्हयन्। तस्य भावं विदित्वा स नृपतेः कुरुसत्तम। विश्वामित्रस्ततो रक्ष आदिदेश नृपं प्रति। शापात्तस्य तु विप्रर्षेर्विश्वामित्रस्य चाज्ञया। राक्षसः किङ्करो नाम विवेश नृपतिं तदा। रक्षसा तं गृहीतन्तु विदित्वा मुनिसत्तमः। विश्वामित्रोऽप्यपाक्रामत्तस्माद्देशादरिन्दम!। ततः स नृपतिस्तेन रक्षसान्तर्गतेन च। बलवत्पीडितः पार्थ! नान्वबुध्यत किञ्चन। ददर्शाथ द्विजः कश्चिद्राजानं प्रस्थितं वनम्। अयाचत क्षुधापन्नः समांसम्भोजनन्तदा। तमुवाचाथ राजर्षिर्द्विजं मित्रसहस्तदा। आस्स्व ब्रह्मंस्त्वमत्रैव मुहूर्त्तं प्रतिपालयन्। निवृत्तः प्रतिदास्यामि भोजनं ते यथेप्सितम्। इत्युक्त्वा प्रययौ राजा तस्थौ स द्विजसत्तमः। ततो राजा परिक्रम्य यथाकामं यथासुखम्। निवृत्तोऽन्तःपुरं पार्थ! प्रविवेश महामनाः। ततोऽर्द्धरात्र उत्थाय सूदमानाय्य सत्वरम्। उवाच राजा संस्मृत्य ब्राह्मणस्य प्रतिश्रुतम्। गच्छामुष्मिन् वनोद्देशे ब्राह्मणो मां प्रतीक्षते। अन्नार्थी तं त्वमन्नेन समांसेनोपपादय। गन्धर्व्व उवाच। एवमुक्तस्ततः सूदः सोऽनासाद्यामिषं क्वचित्। निवेदयामास तदा तस्मै राज्ञे व्यथान्वितः। राजा तु रक्षसा-

शिष्टः सूदमाह गतव्यथः । अथैनं नरमांसेन भोजयेति पुनः पुनः । तथेत्युक्त्वा ततः सूदः स स्थानं वध्यघातिनाम् । गत्वाऽऽजहार त्वरितो नरमांसमपेतभीः । स तत् संस्कृत्य विधिवदन्नोपहितमाशु वै । तस्मै प्रादाद् ब्राह्मणाय क्षुधिताय तपस्विने । स सिद्धचक्षुषा दृष्ट्वा तदन्नं द्विजसत्तमः । अभोज्यमिदमित्याह क्रोधपर्य्याकुलेक्षणः । ब्राह्मण उवाच । यस्मादभोज्यमन्नं मे ददाति स नृपाधमः । तस्मात्तस्यैव मूढस्य भविष्यत्यत्र लोलुपा । सक्तो मानुषमांसेषु यथोक्तः शक्तिना पुरा । उद्वेजनीयो भूतानां चरिष्यति महीमिमाम् । द्विरनुव्याहृते राज्ञः स शापो बलवानभूत् । रक्षोबलसमाविष्टो विसंज्ञश्चाभवन्नृपः । ततः स नृपतिश्रेष्ठो राक्षसोपहतेन्द्रियः । उवाच शक्तिं तं दृष्ट्वा न चिरादिव भारत ! । यस्मादसदृशः शापः प्रयुक्तोऽयं मयि त्वया । तस्मात्त्वत्तः प्रवर्त्तिष्ये खादितुं मानुषानहम् । एवमुक्त्वा ततः सद्यस्तं प्राणैर्व्विप्रयुज्य च । शक्तिं तं भक्षयामास व्याघ्रः पशुमिवेप्सितम् । शक्तिं तन्तु हतं दृष्ट्वा विश्वामित्रः पुनः पुनः । वशिष्ठस्यैव पुत्त्रेषु तद्रक्षः सन्दिदेश ह । स तान् शक्त्यवरान् पुत्त्रान् वशिष्ठस्य महात्मनः । भक्षयामास संक्रुद्धः सिंहः क्षुद्रान् मृगानिव । वशिष्ठो घातितान् श्रुत्वा विश्वामित्रेण तान् सुतान् । धारयामास तं शोकं महाद्रिरिव मेदिनीम्" । "ततः प्रतिनिवृत्तः स तया बध्वा सहाश्रमः । कल्माषपादमासीनं ददर्श विजने वने । स तु दृष्ट्वैव तं राजा क्रुद्ध उत्थाय भारत ! । आविष्टो रक्षसोग्रेण इयेषात्तुं तदा मुनिम् । अदृश्यन्ती तु तं दृष्ट्वा क्रूरकर्म्माणमग्रतः । भयसंविग्नया वाचा वशिष्ठमिदमब्रवीत् । असौ मृत्युरिवोग्रेण दण्डेन भगवन्नितः । प्रगृहीतेन काष्ठेन राक्षसोऽभ्येति दारुणः । तं निवारयितुं शक्तो नान्योऽस्ति भुवि कश्चन । त्वदृतेऽद्य महाभाग ! सर्व्ववेदविदां वर ! । पाहि मां भगवन् ! पापादस्माद्दारुणदर्शनात् । राक्षसोऽयमिहात्तुं वै नूनमावां समीहते । वशिष्ठ उवाच । मा भैः पुत्त्रि ! न भेतव्यं राक्षसात्तु कथञ्चन । नैतद्रक्षो भयं यस्मात् पश्यसि त्वमुपस्थितम् । राजा कल्माषपादोऽयं वीर्य्यवान् प्रथितो भुवि । स एषोऽस्मिन् वनोद्देशे निवसत्यतिभीषणः । गन्धर्व्व उवाच । तमापतन्तं संप्रेक्ष्य वशिष्ठो भगवानृषिः । वारयामास तेजस्वी हुङ्कारेणैव भारत ! । मन्त्रपूतेन च पुनः स तमभ्युक्ष्य वारिणा । मोक्षयामास वै शापात् तस्माद्घोरान्नराधिपम् । स हि द्वादश वर्षाणि वाशिष्ठस्यैव तेजसा । ग्रस्त आसीद्ग्रहेणेव पर्व्वकाले दिवाकरः । रक्षसा विप्रमुक्तोऽथ स नृपस्तद्वनं महत् । तेजसा रञ्जयामास सन्ध्याभ्रमिव भास्करः । प्रतिलभ्य ततः संज्ञामभिवाद्य कृताञ्जलिः । उवाच नृपतिः काले वशिष्ठमृषिसत्तमम् । सौदासोऽहं महाभाग ! याज्यस्ते मुनिसत्तम ! । अस्मिन् काले यदिष्टन्ते ब्रूहि किं करवाणि ते । वशिष्ठ उवाच । वृत्तमेतद्यथाकालं गच्छ राज्यं प्रशाधि वै । ब्राह्मणांस्तु मनुष्येन्द्र ! मावमंस्थाः कदाचन । राजोवाच । नावमंस्ये महाभाग ! कदाचिद्ब्राह्मणर्षभान् । त्वन्निदेशे स्थितः सम्यक् पूजयिष्याम्यहं द्विजान्" ।

कल्माषाङ्घ्रिरप्यत्र । तस्य कल्माषपादताकथा स्त्रीसंसर्गे मृत्युरूपशापादिकथा च भाग० ९, ९ अ० यथा—

"ऋतपर्णोऽनलसखो योऽश्वविद्यामयान्नलात् । दत्त्वाऽक्षहृदयञ्चास्मै, सर्व्वकामस्तु तत्सुतः । ततः सुदासस्तत्पुत्त्रो मदयन्तीपतिर्नृपः । आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमुत क्वचित् । वशिष्ठशापाद्रक्षोऽभूदनपत्यः स्वकर्म्मणा । श्रीराजोवाच । किंनिमित्तो गुरोः शापः सौदासस्य महात्मनः । एतद्वेदितुमिच्छामि कथ्यतां न रहो यदि । श्रीशुक उवाच । सौदासो मृगयां किञ्चिच्चरन् रक्षो जघान ह । मुमोच भ्रातरं, सोऽथ गतः प्रतिचिकीर्षया । संचिन्तयन्नघं राज्ञः सूदरूपधरो गृहे । गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम् । परिवेक्ष्यमाणं भगवान् विलोक्याभक्ष्यमञ्जसा । राजानमशपत् क्रुद्धो रक्षो ह्येवं भविष्यसि । रक्षःकृतं तद्विदित्वा चक्रे द्वादशवार्षिकम् । सोऽप्यपोऽञ्जलिमादाय गुरुं शप्तुं समुद्यतः । वारितो मदयन्त्याऽपो रुशतीः पादयोर्जहौ । दिशः खमवनीं सर्व्वं पश्यञ्जीवमयं नृपः । राक्षसं भावमापन्नः पादे कल्माषताङ्गतः । व्यवायकाले ददृशे वनौकोदम्पती द्विजौ । क्षुधार्त्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत् । न भवान् राक्षसः साक्षादिक्ष्वाकूणां महारथः । मदयन्त्याः पतिर्व्वीर ! नाधर्म्मं कर्त्तुमर्हसि । देहि मेऽपत्यकामाया अकृतार्थं द्विजं पतिम् । देहोऽयं मानुषो राजन् ! पुरुषस्याखिलार्थदः । तस्मादस्य वधो वीर ! सर्व्वार्थवध उच्यते । एष हि ब्राह्मणो विद्वांस्तपःशीलगुणान्वितः । आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम् । सर्व्वभूतात्मभावेन भूतेष्वन्तर्हितं गुणैः । सोऽयं ब्रह्मर्षिवर्य्यस्ते राजर्षिप्रवराद्विभो ! । कथमर्हति धर्म्मज्ञ ! वधं,

पितुर्विशात्मजः। कर्म्मणा मनसा वाचा सर्व्वभूतेषु सौहृदम्। विद्याविवेकसम्पन्नाः शीलमेतद्विदुर्बुधाः। तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः। कथं बधं यथा बभ्रोर्मन्यते सम्मतोभवान्। यद्ययं क्रियते भक्ष्यस्तर्हि मां खाद पूर्व्वतः। न जीविष्ये विना येन चक्षुस्तु मृतकं तथा। एवं करुणभाषिण्या विलपन्त्या अनाथवत्। व्याघ्रः पशुमिवाखादत् सौदासः शापमोहितः। ब्राह्मणी वीक्ष्य दिधिषुं पुरुषादेन भक्षितम्। शोचन्त्यात्मानमुर्व्वीशमशपत् कुपिता सती। यस्मान्मे भक्षितः पाप! कामतः स्वपतिस्त्वया। तवापि मृत्युराधानादकृतप्रज्ञ! दर्शितः। एवं मित्रसहं शप्त्वा पतिलोकपरायणा। तदस्थीनि समिद्धेऽग्नौ प्राप्य भर्त्तुर्गतिङ्गता। विशापोहादशाब्दान्ते मैथुनाय समुद्यतः। विज्ञाय ब्राह्मणीशापं महिष्या स निवारितः। ततऊर्द्ध्वं स तत्याज स्त्रीसुखं कर्म्मणाऽप्रजः। वशिष्ठस्तदनुज्ञातोमदयन्त्यां प्रजामधात्”।

**कल्माषी** स्त्री कल्माष+“अन्यतो ङीष्” पा० ङीष्। १चित्रवर्णयुक्तायां स्त्रियां २कृष्णवर्णायां यमुनानद्याञ्च “प्रतिकस्त्वपश्चेत्ो यतमानोऽपि भारत!। अभितः सोऽथ कल्माषीं गङ्गाकूले परिभ्रमन्” भा० आ० १६७। “कल्माषीं कृष्णवर्णां यमुनामभितः” नीलक०। “कल्माषीतीरसंस्थस्य गतस्त्वं शिष्यतां भृगोः” भा०स०७६अ०। गङ्गायमुनासङ्गमसमीपे एव भृगोराश्रम इति भारतादौ लोके च प्रसिद्धिरतः कल्माषीशब्देन यमुनोच्यते सितासितयोर्नद्योः मिश्रितत्वेन कृष्णपाण्डुरवर्णत्वात् प्रयागस्थयमुनायस्तथात्वम्

**कल्य** न० कलयति चेष्टामत्र अमरा० यक्, कल्यते कल—गतौ कर्म्मणि यत्, कलासु साधु यत् वा। १प्रत्यूषे अमरः २मधुनि हेमच०। ३निरामये “यावदेव भवेत् कल्यस्तावत् श्रेयः समाचरेत्” भा० स०५५अ०। ४सज्जे समर्थे उद्युक्ते च त्रि०अमरः “कथयस्व कथामेतां कल्याः स्म श्रवणे तव” भा०आ०५अ०। “लब्ध्वा रथं धनुश्चैव तथाऽक्षय्ये महेषुधीः। बभूव कल्यः कौन्तेयः प्रहृष्टः सद्यकर्म्मणि” भा० आ०२२५अ०। “कल्यौ स्वोभगवन् योद्धुमपि सर्व्वैः सुरासुरैः” भा०आ०२२५ अ०। ५वाक्श्रुतिवर्जिते(कालावोवा) ६उपायवचने कल्याणवचने च त्रि०मेदि०। ७सुरायां स्त्री मेदि० ७शुभात्मिकायां वाचि स्त्री अमरः ८हरीतक्यां स्त्री शब्दर०।

**कल्यजग्धि** स्त्री अद—क्तिन् कल्ये प्रातर्ज्जग्धिः। १प्रातर्भोजने उपचारात् २तत्कालभवेऽत्र जटाधरः कल्याशादयोऽप्यत्र [प्रातर्भोजने, त्रिका०

**कल्यपाल** पु० कल्यं मधु मद्यं पालयति पाल—अण् उप०स०। शौण्डिके हेमच०। ण्वुल् कल्यपालकोऽपि तत्रार्थे शब्दमा०।

**कल्यवर्त्त** पु० कल्ये प्रातर्वर्त्यते वृत—णिच् कर्म्मणि अच्।

**कल्याण** न० कल्ये प्रातः अण्यते शब्द्यते अण—घञ्। १हेम्नि, मेदि० २मङ्गले। अभिप्रेतार्थसिद्धिमङ्गलम् “यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्” “पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः” मनुः। “तद्रत्न कल्याणपरम्पराणाम्” “अन्वमीयत कल्याणं तस्या विच्छिन्नसन्ततिः” रघुः तद्धेतुरपि शङ्खादिकं मङ्गलम्। “कल्याणानां त्वमसि महसां भाजनं विश्वमूर्त्ते!” मालतीमा०। ३शुभयुक्ते त्रि० अमरः। “कल्याणपञ्चमा रात्रयः कल्याणपञ्चमीकः पक्षः” सि० कौ०। “उदगयने आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चौलोपनयनगोदानविवाहाः” आश्व०गृ० १,४,१, “प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजेः” मनुः। स्त्रियां बह्वा० वा ङीष्। “उपस्थितेयं कल्याणी नाम्नि कीर्त्तित एव यत्” रघुः। “उपोपविष्टः कल्याणीः कथाश्चक्रे मनोरमाः” भा० व०१२४ “उवाच चैनं कल्याण्या वाचा मधुरयोर्जितम्” भा० आ०१७२अ०। ङीबन्तः २माषपर्ण्याम् ४गवि च राजनि०

**कल्याणकगुड** पु० सुश्रुतोक्ते द्रव्यविशेषसंयुक्ततया पक्वे गुडभेदे। यथा “प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वार्द्धतुलां गुडस्य। चूर्णीकृतैर्ग्रन्थिकचव्यजीरव्योषेभकृष्णाहपुषाऽजमोदैः। विडङ्गसिन्धुत्रिफलायमानीपाठाग्निधान्यैश्च पिचुप्रमाणैः। दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेत् यथावत्। तं भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम्। अनेन सर्व्वे ग्रहणीविकाराः। सश्वासकासस्वरभेदशोथाः। शाम्यन्ति, चायं चिरमन्तरग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः। स्त्रीणां च वन्ध्यामयनाशनः स्यात् कल्याणको नाम गुडः प्रतीतः”।

**कल्याणकघृत** न० सुश्रुतोक्ते ओषधिभेदयुक्तघृतभेदे यथा— “विडङ्गत्रिफलामुस्तामञ्जिष्ठादाडिमोत्पलैः। प्रियङ्ग्वेलैलवालुकचन्दनामरदारुभिः। बृहतीकुष्ठरजनीपर्णिनीसारिवाद्वयैः। हरेणुकात्रिवृद्दन्तीवचातालीशकेसरैः। द्विक्षीरं विपचेत्सर्पिर्मालतीकुसुमैः सह। विषमज्वरकासश्वासगुल्मोन्मादगरापहम्। एतत्कल्याणकं नाम सर्पिर्माङ्गल्यमुत्तमम्। अलक्ष्मीग्रहरक्षोऽग्निमान्द्यापस्मारतापहृत्। शस्यते नष्टशुक्राणां वन्ध्यानां गर्भदं परम्। मेध्यश्चक्षु-

ब्रह्मायुष्यं रेतोमार्गरुजापहम् । एतैरेव यथाद्रव्यैः सर्व्वगन्धैश्च साधितम् । कपिलाया घृतप्रस्थं सुवर्णमणिसंयुतम् । तत्क्षीरेण सहैकध्यं प्रसाध्य कुसुमैरिमैः । सुमनश्चम्पकाशोकशिरीषकुसुमैर्घृतम् । तथा नलदपद्मानां केशरैर्दाडिमस्य च । तिथौ प्रशस्ते नक्षत्रे साधकस्यातुरस्य च । कृतं मनुष्यदेवाय ब्राह्मणैरभिमन्त्रितम् । दत्तं सर्व्वज्वरान् हन्ति महाकल्याणकं घृतम् । दर्शनस्पर्शनाभ्यान्तु सर्व्वरोगहरं शिवम् । अध्रष्यः सर्व्वभूतानां वलीपलितवर्ज्जितः । अस्याभ्यासाद्घृतस्येह जीवेद्वर्षशतत्रयम्” ।

**कल्याणकलवण** न० सुश्रुतोक्ते औषधभेदयुक्ते लवणभेदे यथा “गण्डीरपलाशकुटजविल्वार्कस्नुह्यपामार्गपाटलापारिभद्रकनादेयीकृष्णगन्धानीपनिर्दहन्यटरूषकनक्तमालकपूतिकाट्टहतीकण्टकारिकाभल्लातकेङ्गुदीवैजयन्तीकदलीवर्षाभूह्रीवेरक्षुरकेन्द्रवारुणीश्वेतमोक्षकाशोका इत्येवंवर्गं समूलपत्रशाखमार्द्रमाहृत्य लवणेन सह संसृष्टं पूर्व्ववद्दग्ध्वा क्षारकल्पेन परिस्राव्य विपचेदेतत्प्रतिवापश्चात्र हिङ्ग्वादिभिः पिप्पल्यादिभिर्व्वा । इत्येतत्कल्याणकलवणं वातरोगेषु गुल्मप्लीहाभिषङ्गाजीर्णार्शोऽरोचकार्त्तानां कासादिभिरुपद्रुतानां चोपदिशन्ति पानभोजनेष्विति । भवति चात्र । शिष्यन्दनादुष्णभावाद्दोषाणाञ्च विपाचनात् । संस्कारपाचनाच्चेदं वातरोगेषु शस्यते” ।
“कल्याणकं वा लवणं पिबेत्तु” सुश्रुतः ।

**कल्याणयोग** पु० ज्योतिषोक्ते यात्राङ्गे लग्नावधिस्थानविशेषस्थितग्रहयोगभेदे यथा “गुरौ केन्द्रे १,४,७,१०, त्रिकोणे ५,९, वा रविर्लाभे ११ च कर्म्मणि १० । कल्याणयोगो भूपस्य यातुः कल्याणकृद्भवेत्” । “त्रिकोणगे ५,९, शुभे खेटे सबले वा द्वितीयगे । कल्याणसंज्ञो योगोऽयं यायिनां मङ्गलप्रदः” इति च

**कल्याणकृत्** त्रि० कल्याणं शुभं शास्त्रविहितं करोति कृ—क्विप् ६ त० । १शास्त्रविहितकर्म्मकारके “नहि कल्याणकृत् कश्चिद्दुर्गतिं तात! गच्छति” गीता २कल्याणकरमात्रे च त्रि० ।

**कल्याणवत्** त्रि० कल्याण+अस्त्यर्थे मतुप् मस्य वः । मङ्गलयुक्ते त्रिका० स्त्रियां ङीप् ।

**कल्याणवाचन** न० ६ त० । शास्त्रविहितकर्त्तव्यकर्म्मणः प्राक्कर्त्तव्ये ब्राह्मणादिद्वारा कल्याणयुक्तमन्त्रविशेषवाचने । तत्प्रकारोयथा “ओं स्वः कर्त्तव्येऽस्मिन् कर्म्मणि कल्याणं भवन्तोऽधिब्रुवन्तु” इति प्रार्थिते ब्राह्मणैः “ओं कल्याणम्” इति त्रिरुक्ते “ओं पृथिव्यामुद्धृतायान्तु यत् कल्याणं पुरा कृतम् । ऋषिभिः सिद्धगन्धर्व्वैस्तत् कल्याणं सदास्तु नः” इतियथेमामित्यस्य लौगाक्षिऋषिरनुष्टुप्छन्दो ब्रह्मा देवता कल्याणवाचने विनियोग इति स्मृत्वा “ओं यथेमां वाचं कल्याणीमावदानि जनेभ्यः ब्रह्मराजन्याभ्यां शूद्राय चार्य्याय च स्वाय चारणाय च प्रियोदेवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुपमादो नमतु” यजु० २६,२, इति च पठेत् ।

**कल्याणवीज** पु० कल्याणं वीजं यस्य । मसूरे राजनि० ।

**कल्याणिका** स्त्री कल्याण+संज्ञायां कन् अत इत्त्वम् । मनःशिलायाम् राजनि० ।

**कल्याणिन्** त्रि० कल्याण+अस्त्यर्थे इनि । १कल्याणयुक्ते स्त्रियां ङीप् सा च २बलानामौषधौ राजनि० ।

**कल्याण्यादि** पु० पाणिन्युक्ते ढक्प्रत्ययेनङादेशनिमित्तभूते शब्दगणे स च गणः “कल्याणी सुभगा दुर्भगा बन्धकी अनुदृष्टि अनुसृष्टि जरती बली बदी ज्येष्ठा कनिष्ठा मध्यमा परस्त्री” काल्याणिनेय इत्यादिः ।

**कल्यापाल** पु० कल्यां सुरां पालयति पाल—अण् उप० स० । शौण्डिके त्रिका० । ण्वुल् । कल्यापालकोप्यत्र ।

**कल्ल** कूजने अशब्दे च भ्वा० आत्म० अक० सेट् । कल्लते अकल्लिष्ट चकल्ले प्रनिकल्लति कल्लः । [ तथात्वम् ।

**कल्ल** त्रि० कल्ल–अच् । बधिरे त्रिका० । तस्य शब्दाश्रोतृत्वात्-

**कल्लत्व** न० कल्लस्य भावः त्व । १स्वरस्य भेदने । हेमच० २बाधिर्य्ये च ।

**कल्लोल** पु० कल्ल–बा० ओलच्, कम् जलं लोलं चपलं यस्माद्वा अत्र नित्यं अनुस्वारस्य लत्वम् नि० तस्याननुनासिकत्वं च । १महातरङ्गे, अमरः “कालिन्दीजलकल्लोलकोलाहलकुतूहली” उद्भटः । “कल्लोलाः सलिलनिधेरवाप्यपारम्” माघः २हर्षे च ३वैरिणि त्रि० मेदि० । कल्लोलोऽस्त्यत्र पुष्करा० इनि । कल्लोलिन् कल्लोलयुक्ते देशे नद्यां स्त्री । “कल्लोलिनीवल्लभमुल्लसन्तं” महाना० स जातोऽस्य तार० इतच् । कल्लोलित जातमहातरङ्गे त्रि०

**कव** स्तुतौ वर्णने च भ्वा० आत्म० सक० सेट् । कवते अकविष्ट । चकवे णिच्–कावयति ते अचीकवत् अचकावत् । प्रनिकवते

**कवक** पु० कु–अच् संज्ञायां कन् । १ग्रासे, २भूच्छत्राके, न० हेमच० । “लशुनं गृञ्जनञ्चैव पलाण्डुं कवकानि चेति” अभक्ष्ये मनुः । “देवतार्थं हविः शिग्रुं लोहितान् व्रश्चनांस्तथा । अनुपाकृतमांसानि विड्जानि कवकानि

च"। अभक्ष्ये शाक० "कवकानि कलाकाराणि" मिता०।

**कवच** पु०कं वातं वञ्चति वन्च-मूल०क कृतनीत्वा० उणा० अच वा ।१गर्द्दभाण्डे वृक्षे २पटहवाद्ये च मेदि०। ३सन्नाहे गात्रत्राणे योद्धृभिर्युद्धकाले शस्त्राघातरक्षणार्थमङ्गे धार्य्ये लौहादिनिर्म्मिते वर्म्मणि पु०न०अमरः। कवचस्य लक्षणा-दिकं युक्तिकल्पतरावुक्तं यथा—

"खड्गादीनान्तु गणना पूर्व्वमेव निदर्शिता। अस्त्रात्मनैव निर्द्दिष्टः कवचादिरपीष्यते। तल्लक्षणं संक्षेपेण प्रवक्ष्यामि निबोधत। काष्ठं चर्म्म सवल्कं च त्रयमेतत्तु दुस्तरम्। यथो-त्तरं गुणयुतं यथापूर्व्वन्तु निन्दितम्। शरीरावरकत्वन्तु लघुत्वं दृढता तथा। दुर्भेद्यतेति कथितः कवचे गुणसंग्रहः। अच्छिद्रतातिगुरुता तनुता सुखभेद्यता। कवचानां विनि-र्द्दिष्टः समासाद्दोषसंग्रहः। अत्र वर्णो विनिर्द्दिष्टः क्रमादेवं चतुर्व्विधः। सितो रक्तस्तथा पीतः कृष्णो ब्रह्मादिषु क्रमात्। केचित् कुर्व्वन्ति कुशलाः कवचं धातुसम्भवम्। कनकं रजतं ताम्रं लौहं तेषु यथाक्रमम्"। अधिकं वर्म्मशब्दे वक्ष्यते। "यथा शस्त्रप्रहाराणां कवचं प्रतिवारणम्। तथा दैवोप-घातानां शान्तिर्भवति वारणम्" मत्स्य० त० पु०। "वितत्य शार्ङ्गं कवचं पिनह्य" "सच्छन्नकवचं रथम्" भट्टिः। कवचोजातोऽस्य तार०इतच्। कवचितत तद्धा-रके त्रि०। सः अस्त्यस्य इनि। कवचिन् तद्धारके त्रि० "नमो विल्मिने च कवचिने च" यजु० १६,३५ "यश्च कवचो यश्चाऽकवचोऽमित्रो यश्चाज्मनि ज्या पाशैः कवच पाशैरज्मनाभिहतः शयाम्" अथ०११,१०,२२ स्त्रियां ङीप्। तन्त्रोक्ते मन्त्रसाधनाङ्गे ४वाक्यसंघभेदे। "मन्त्रेण च्रियते योगी रक्ष्यते कवचैर्यतः" इति तन्त्रोक्तेस्तस्य रक्षासाधकत्वेन वर्म्मतुल्यत्वात्तथात्वम्। "श्रीजगन्मङ्गल-स्यास्य कवचस्य ऋषिः शिवः" "इदं कवचमज्ञात्वा योभजेत् कालिदक्षिणाम्" इति च भै०त०। कवचानि च देवताभेदे भिन्नानि तन्त्रोक्तानि तानि च तन्त्रसारे स्तोत्रकवचप्रक-रणे अन्यत्र च द्रष्टव्यानि। तानि च "भूर्ज्जे विलिखितं चैतत् स्वर्णस्थं धारयेद्यदि। कण्ठे वा दक्षिणे बाहौ" इत्यादिना तन्त्रे लिखित्वा कण्ठादौ धार्य्यतया विहितानि।

**कवचपत्र** पु०कवचं तल्लेखनसाधनं पत्रमिव वल्कलं यस्य। भूर्जपत्रवृक्षे शब्दच०। "भूर्जे विलिखितं चैतत्"तन्त्रो-क्तेस्तद्वल्कलस्य कवचलेखनाधारत्वात्तथात्वम्।

**कवचहर** पु० कवचं हरति येन वयसा हृ-उद्यमे अच् उप० स०। कवचहरणोद्यमयोग्यवयस्के कुमारे "कवचहरः कुमारः" सि० कौ०। वर्म्महरादयोऽप्यत्र "वर्म्महरः कुमारः" रघुः।

**कवटी** स्त्री कौति शब्दायते कु-अटन् गौरा० ङीष्। कपाटे द्विरूपकोषः। तस्याः रोधनकाले शब्दायमानत्वात्तथात्वम्

**कवती** स्त्री कशब्दः अस्त्यस्याः मतुप् स्त्रियां ङीप्। "कया नश्चित्र" इत्यादिकासु ऋक्षु। "कवतीषु रथन्तरम् गायतीति" ताण्ड्य०श्रुतिः।"कया नश्चित्र"इत्याद्यास्तिस्र ऋचः कवत्यः" सा०स० भा०माधवः।"अतिदेश्य विनिश्चेतुं कवतीषु रथन्तरम्"अधिकर० मा०। "तास्र ऋचः" ऋ० ४,३१ सूक्ते आद्यास्तिस्रः। तत्रान्त्यायाः कशब्दाभावेऽपि आद्ययोर्द्वयोः कशब्देन बाहुल्यात्तथात्वम्।

**कवयि(यी)** स्त्री काञ्जलात् वयते गच्छति स्थानान्तरं वय-गतौ इन् कृदिकारान्तत्वात् वा ङीप्।(कइ) मत्स्यभेदे। त्रिका०। तस्या जलातिक्रमेण गमनात्तथात्वम्। "कवयी मधुरा स्निग्धा कषाया रुचिकारिणी। किञ्चित् पित्तकरी वातशमनी बलवर्द्धिनी"भावप्र० उक्तगुणा।

**कवर** पु० कौति कु-शब्दे-अरन्। पाठके उज्ज्व०पाठकाले तस्य शब्दायमानत्वात् तथात्वम्। कं जलं वृणोति वृ-अच्। २लवणे३अम्ले च पुंन०मेदि०। लवणस्य जलसंपर्कमात्रेण द्रवीभावेन जलरूपेण परिणामात् अम्लस्य च दर्शनमात्रेण मुखात् जलस्रावणात् तथा-त्वम्। के मूर्द्धनि वरम् वरणीयम्। ४केशभूषायां त्रि०। केशविन्यास एव स्त्रियां ङीष्। अन्यत्र तु टाप्। सा च। ५वरपुष्पायां (बावुइ) शब्दच०। कवरी-स्तोमलयजार्द्रमिव व्याकीर्णमाल्यकवरां कवरीं तरुण्याः" माघः। "व्याकीर्णमाल्येन कर्बुरवर्णाम्"मल्लि० ६कर्बुरवर्णे पु० ७तद्वति त्रि० हला०। कव-स्तुतौ अरन्। ८खचिते ९संपृक्ते त्रि० हलायुधः। गौरा० ङीष्। १०बर्व्वरायाम् (बावुइ)मेदि०। तस्याः कवरीतुल्यत्वात्तत्त्वम्।

**कवरकी** स्त्री कवरं किरति क्षिपति कॄ-बा० ड गौरा० ङीष्। बन्द्याम् तस्याः बन्धनागारे कवरबन्धना-भावेन तथात्वम्।

**कवर्ग** पु० कघटितोवर्गः एकस्थानोत्पत्तिकसमूहः। कखग-घङरूपेषु वर्णेषु तेषां कण्ठस्थानोत्पत्तिकत्वेन तथात्वम्। ततः वर्गान्तात् भवार्थे शब्दत्वात् छ। कवर्गीय तद्भवे त्रि०।

**कवल** पु०केन जलेन वलते वल-चलने अच्।१ग्रासे "मुस्ता-प्ररोहकवलावयवानुकीर्णम्" "आस्वादवद्भिः कवलैस्तृणा-नाम्"रघु०रोगनाशार्थं भावप्र०उक्ते द्रव्यभेदस्य २क्रियाभेदे

च। तत्करणविधिगुणौ भावप्र०उक्तौ यथा। "वातपित्तकफघ्नस्य द्रव्यस्य कवलं मुखे। अर्द्धं निक्षिप्य संचर्व्य निष्ठीवेत् कवले विधिः। कवलः कुरुते काङ्क्षां भक्ष्येषु, हरते कफम्। तृष्णां शौचं च वैरस्यं दन्तवालञ्च नाशयेत्"। के जले वलते अच्।(वेल्यामाच्)२मत्स्यभेदे शब्दच० पुंस्त्री स्त्रियां जातित्वात् ङीष्। लस्य डोवा। कवड़ोऽप्यत्र।

**कवलप्रस्थ** पु० कवलस्य प्रस्थः। कवलयोग्यपरिमाणभेदे तस्य प्रस्थपरत्वेऽपि कर्क्यादि०न आद्युदात्तता।

**कवलिका** स्त्री कवल इव इवार्थे कन्। (पुलटिश) इति ख्याते व्रणचिकित्साङ्गे औषधभेदे "ततः कल्केनाच्छाद्य नातिस्निग्धां नातिरूक्षां कवलिकां दत्त्वा वस्त्रपट्टेन बध्नीयात्" "घनां कवलिकां दत्त्वा मृदु चैवापि पट्टकम्""ततः कवलिकां दत्त्वा वेष्टयेत् सुसमाहितः"सुश्रु०

**कवलित** त्रि०कवलं करोति कवल+णिच्—कर्म्मणि—क्त।१कृतग्रासे २भुक्ते ३व्याप्ते च जटा०।

**कवष** त्रि० कौति कु—शब्दे बा०अषच्।१सच्छिद्रे कवाटादौ तस्य पिधानकाले शब्दायमानत्वात्तथात्वम्। स्त्रियां गौरा० ङीष्। "इन्द्र! दुरः कवष्योधावमानाः" यजु०२,४,"कवष्यः सशुषिरा, सच्छिद्र एव शब्दप्रसरात् कौतेरौणादिकोऽषच् प्रत्ययः" वेददी०। "कवष्योन व्यचस्वतीः" यजु०२०,६०, "होता यक्षद्दुरोदिशः कवष्यः" २१,३४,

**कवष्** त्रि०कु—शब्दे असुन् वेदे षत्वम्। सच्छिद्रे कवाटादौ सच्छिद्रस्य शब्दायमानात्तथात्वम्। "ऋष्वाःसतीः कवषः इन्द्र! शुम्भमानाः"यजु० २९,५,"कवषः कु-शब्दे कवन्ति शब्दं कुर्वन्ति कवषः कुवतेरसुन्प्रत्ययः षत्वमार्षम् कपाट्यः पिधानसमये शब्दं कुर्व्वाणाः सशुषिरा वा"वेददी०

**कवस** पु० कु—ऋतनीत्यादिना अस। १कवचे सन्नाहे २कराटकजातिभेदे च उज्ज्व०।

**कवाट** न० कु—भावे अप् कवं शब्दमटति, कं वातं वटति वट वेष्टने वा अण् उप० स०। द्वाररोधके (कपाट) ख्याते काष्ठादिमये पदार्थे अमरः तस्य द्वारपिधानकाले शब्दायमानत्वात् वातरोधकत्वाच्च तथात्वम् "उरःश्रिया तत्र च गोपुरस्फुरत्कवाटदुर्द्धर्षतिरःप्रसारिता" नैष०। "मोक्षद्वारकवाटपाटनकरी काशीपुराधीश्वरी"अन्नदास्त०। कवाटपरिमाणादिकं वृ०स० उक्तं यथा। "विस्तारार्धं भवेद्गर्भो भित्तयोऽन्याः समन्ततः। गर्भपादेन विस्तीर्णं द्वारं द्विगुणमुच्छ्रितम्। उच्छ्रायात् पादविस्तीर्णा शाखा तद्वदुदुम्बरः। विस्तारपादप्रतिमं बाहुल्यं शाखयोः स्मृतम्। त्रिपञ्चसप्तनवभिः शाखाभिस्तत् प्रशस्यते"। तत्काष्ठनियमश्च ज्यो०त० भारतोक्तः "चौरवृक्षोद्भवं दारु गृहेषु न निवेशयेत्। कृताधिवासं विहगैरनिलानलपीड़ितम्। गजैर्विभग्नञ्च तथा विद्युन्निर्घातपीड़ितम्। चैत्यदेवालयोत्पन्नं वज्रभग्नं श्मशानजम्। देवाद्यधिष्ठितं दारु नीपनिम्बविभीतकान्। कण्टकिनोऽसारतरून् वर्जयेत् गृहकर्मणि। वटाश्वत्थौ च निर्गुण्डीं कोविदारविभीतकौ। पलाशं शाल्मलीञ्चैव पलाशञ्च विवर्जयेत्। विस्तारात् द्विगुणोच्छ्रायं द्वारं कुर्य्यात्तथा गृहम्"। अधिकं गृहशब्दे वक्ष्यते। अल्पार्थे ङीप्। कवाटी स्वल्पकवाटे स्त्री।

**कवाटघ्न** त्रि० कवा(पा)टं हन्ति शक्त्या "शक्तौ हस्तिकवा(पा)टयोः" पा० हन-टक्। कवाटहननशक्ते चौरभेदे।

**कवाटवक्र** न० कवाटं वक्रं यस्मात्।(कवाटवेटु) वृक्षभेदे।

**कवार** न० कं जलं वृणोति आश्रयत्वेन अण् उप०स०। पद्मे त्रिका०।

**कवारि** च०कुत्सितोऽरिः कुगति०स० बा० कोः कवादेशः। कुत्सिते शत्रौ"दैवी पूर्तिर्दक्षिणादेवयाज्या न कवारिभ्यो न ते पृणन्ति" ऋ० १०,१०७,३।

**कवासख** त्रि०कुत्सितस्य सखा टच् पृषो०नि०। कुत्सितसहाये। "अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः" ऋ० ५,३४,३।"कुत्सितपुरुषसहायः"भा० निरुक्ते तु कवासखः यस्य कपूयाः सखायः इत्युक्तं तत्र बहुव्रीहौ टजपि निपात्यः इति भेदः।

**कवि** पु० कव-वर्णने गतौ कु—शब्दे वा इन्। क्रान्तदर्शिनि-सर्वज्ञे—१ब्रह्मणि हेमच०। तस्य सर्वगतत्वात् सर्व्वज्ञत्वात् क्रान्तदर्शित्वाच्च तथात्वम्। "कविर्मनीषी परिभूः स्वयम्भूः"ईशो०"कविः क्रान्तदर्शी सर्व्वदृक् "नान्यतोऽस्ति द्रष्टा"इति श्रुतेः"शाङ्क०भा०।"कविं पुराणमनुशासितारम्" गीता।२स्तुत्ये "होता वा देव्या कवी" यजु०२८,२०।"पृथग्वरजं भेषजं कविम्"यजु०२८,२४। ३वाल्मिके मुनौ तस्य प्रथमं काव्यकर्त्तृत्वात् तथात्वम्। ४कविताकारके "मन्दः कवियशःप्रेप्सुः" रघुः "नैकमोजः प्रसादो वा रसभावविदः कवेः" माघः। "इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे" उत्तर०च० (काव्यम्) "कविः कुर्व्वन् कीर्त्तिं प्रीतिञ्च विन्दति" चन्द्रा०। "एकोऽभून्नलिनात् परश्च पुलिनात् वल्मीकतश्चापरस्ते सर्वे कवयस्त्रिलोकगुरवस्तेभ्यो नमस्कुर्महे",

उद्भटः। "रवेः कवेः किं समरस्य सारम्" विदग्धमु०। ५भृगुसुते ऋषिभेदे ६तत्पुत्रे शुक्राचार्य्ये तस्य कविपुत्रत्वेऽपि जन्यजनकयोरभेदोपचारात्तत्त्वम् "भृगोः पुत्रः कविर्विद्वान् शुक्रः कविसुतो ग्रहः" भा०आ०६६अ०। ७हर्य्ये मेदि०। ८कल्किदेवस्य ज्येष्ठभ्रातरि "कल्केर्ज्येष्ठास्त्रयः शूराः कविप्राज्ञसुमन्त्रकाः" इति कल्किशब्दे उदाहृतम्। ९चौरयोधे "वेधस्थाने रवेः भङ्गो दुर्गे खड्गिः प्रजायते। कविप्रवेशनं तत्र योधाघातश्च तत्र वै" ज्यो० त०। "कविश्चौरयोद्धा" रघु०। १०खलीने स्त्री मेदि०। वा ङीप्। ११क्रान्तदर्शिनि त्रि०। "अ सर्वा स्तुतेण कवयो वयन्ति" यजु० १९,८। "कवयः क्रान्तदर्शिनः" वेददी० १२मेधाविनि त्रि० "अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः" मनुः। "क उ ते शासिता कविः" यजु० २३,२९। "कविर्मेधावी" वेददी०। १३चाक्षुषमनोः वैराजप्रजापतेः कन्याजातसुतभेदे पु०। "कन्यायां भरतश्रेष्ठ! वैराजस्य प्रजापतेः। ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाक् कविः" हरिवं०२अ०। १४स्तोतरि त्रि० "इन्द्रमग्निं कविच्छदा" ऋ०३,१२,३। "कविच्छदा कवीनां स्तोतॄणामुचितफलप्रदानेनोपच्छन्दकौ" भा०।

**कविक** पु० कवि+स्वार्थे कन् क्वचित् स्वार्थिकप्रत्ययस्य प्रकृतिलिङ्गव्यतिक्रम इति। खलीने (लागाम) हलायुधः।

**कविकल्पद्रुम** पु० वोपदेवकृते धातुपाठग्रन्थभेदे "कविकल्पद्रुमो नाम पद्यैर्निष्पाद्यतेऽत्र च" इति तदुपोद्घाते।

**कविकल्पलता** स्त्री काव्यरचनाशिक्षोपयोगिग्रन्थभेदे।

**कविका** स्त्री कवि+स्वार्थे कन्। (लागाम) खलीने अमरः २कविकापुष्पे राजनि०। ३कवयीमत्स्ये (कइ)भावप्र०। कवयीशब्दे तद्गुणाद्युक्तम् तत्र कवयीत्यत्र कविकेति पाठान्तरम्।

**कविज्येष्ठ** पु० कविषु ज्येष्ठः। १वाल्मीकिमुनौ त्रिका०।

**कविता** स्त्री कवेः वर्णयितुर्भावः तल्। कविकर्मणि काव्ये काव्यशब्दे विवृतिः। "केषां नैषा भवति कविताकामिनी कौतुकाय" प्रस० रा०। त्व। कवित्वमप्यत्र न०। "कवित्वं दुर्लभं लोके शक्तिस्तत्र सुदुर्लभा" सा० द० अग्निपुरा०। "स भवति कवितामृतनदीनदीनः पर्य्यन्ते परमपदलीनः प्रभवति" कर्पूरस्तवः। "ता उ कवित्वना कवी" ऋ०८,४२, "कवित्वना कवित्वेन" भा० पृषो० साधु।

**कविपुत्र** पु० कवेः भृगुसुतस्य पुत्रः ६ त०। १भार्गवे २शुक्राचार्य्ये "भृगोः पुत्रः कविर्विद्वान् शुक्रः कविसुतो ग्रहः" भारते आदिपर्व्वणि ६६अध्याये। कविसुतादयोऽप्यत्र।

**कविय** न० कं सुखमजति अज—क वीभावः। १खलीने त्रिका०। "कवियं कविकोच्यते" त्रिकाण्डे क्लीवतया पाठात् शब्दकल्पद्रुमे पुंक्लीवतोक्तिः चिन्त्यमूला।

**कविरहस्य** न० हलायुधकृते श्लोकात्मके अर्थभेदेन एकाकारधातुभेदप्रदर्शके ग्रन्थभेदे।

**कविराज** पु० कवीनां राजा कविः राजेव वा टच् समा०। कविश्रेष्ठे। "श्रीहर्षं कविराजराजमुकुटालङ्कार हीरः सुतम्" नैषधम्। "श्रीविश्वनाथकविराजकृतिप्रणीतं साहित्यदर्पणमसुं स्थगितप्रमेयम्" सा० द० टी० रामचरण। लोके कविराजशब्दस्य तदर्थतैव चिकित्सके प्रसिद्धेस्तु मूलं न दृश्यतेऽतो न तदर्थकता।

**कविरामायण** पु० कविना कवित्वेन रामः अयनं यस्य सत्वम्। वाल्मीकिमुनौ। शब्दरत्ना०।

**कविल** त्रि० कु—कव वर्णने वा बा० इलच्। १स्तोतरि २शब्दकारके च। ततः प्रगद्या० चतुरर्थ्याम् ञ्य। काविल्य तत्सन्निकृष्टदेशादौ त्रि०।

**कविवेदिन्** त्रि० कविं कवित्वं वेत्ति विद—णिनि। काव्यवेत्तरि कवौ जटा०। स्त्रियां ङीप्।

**कवीय** न० कवि+स्वार्थे छ क्वचित् स्वार्थिकस्यापि प्रकृतिलिङ्गातिक्रमः। खलीने (लागाम) जटाधरः।

**कवीयत्** त्रि० कविरिवाचरति कविं स्तोतारम् इच्छति वा कवीय—नाम० शतृ। १कविसदृशे २आत्मनः स्तोतुरिच्छौ च। "अपो वसान पवते कवीयन् व्रजम्" ऋ० ९, ५१४,१। २कवीयन् कविरिवाचरन् कवयः स्तोतारः तानिच्छन् वा" भा०। एतेन अस्याः श्रुतेः कवीयःशब्दोदाहरणतयोपन्यासः प्रामादिकः। स्त्रियां ङीप्।

**कवीयस्** त्रि० अतिशयेन कविः ईयसु। कवितरे स्त्रियां ङीप् कवीयसी। तरप्। कवितर तत्रार्थे। तमप्। कवितम बहूनां मध्ये अतिशयस्तोतरि काव्यकारकेन च त्रि०

**कवूल** न० नीलकण्ठताजकोक्ते कंबूलयोगे कंबूलशब्दे लक्षणादि। "इत्थमाशिकवूलं तदुत्तरोत्तममुच्यते" नील०ता०

**कवेल** न० कं जलं विलति स्तृणाति विल—स्तृतौ अण् उप० स०। कुवलये शब्दच०।

**कवोष्ण** न० कुत्सितमुष्णं कुगतिसमासः कोः कवादेशः। १ईषदुष्णे स्पर्शे २तद्वति त्रि० अमरः। "पयः पूर्वैः सनिश्वासैः कवोष्णमुपभुज्यते" रघुः।

**कव्य** न० कवयः क्रान्तदर्शिनः पितरस्तेषामिदं यत्, कुत्सते पितृभ्यः

कु शब्दे कर्म्मणि सत्या । पितॄनुद्दिश्य दीयमानेऽन्नादौ अमरः । हव्यकव्यदानपात्रापात्रब्राह्मणानाह स मनुः “श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः । अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् । एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् । पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि । दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् । तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः । सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते । एकस्तान् मन्त्रवित् प्रीतः सर्व्वानर्हति धर्म्मतः । ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च । न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः । यावतो ग्रसते ग्रासान् हव्यकव्येष्वमन्त्रवित् । तावतो ग्रसते प्रेत्य दीप्तशूलर्ष्ट्ययोगुडान् । ज्ञाननिष्ठा द्विजाः केचित् तपोनिष्ठास्तथाऽपरे । तपःस्वाध्यायनिष्ठाश्च कर्म्मनिष्ठास्तथाऽपरे । ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः । हव्यानि तु यथान्यायं सर्व्वेष्वेव चतुर्ष्वपि । अश्रोत्रियः पिता यस्य पुत्त्रः स्याद्वेदपारगः । अश्रोत्रियो वा पुत्त्रः स्यात् पिता स्याद्वेदपारगः । ज्यायांसमनयोर्विद्यात् यस्य स्याच्छ्रोत्रियः पिता । मन्त्रसम्पूजनार्थन्तु सत्कारमितरोऽर्हति । न श्राद्धे भोजयेन्मित्रं धनैः कार्य्योऽस्य संग्रहः । नारिं न मित्रं यं विद्यात् तं श्राद्धे भोजयेद्द्विजम् । यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च । तस्य प्रेत्य फलं नास्ति श्राद्धेषु च हविःषु च । यः सङ्गतानि कुरुते मोहाच्छ्राद्धेन मानवः । स स्वर्गाच्च्यवते लोकाच्छ्राद्धमित्रो द्विजाधमः । सम्भोजनी साभिहिता पैशाची दक्षिणा द्विजैः । इहैवास्ते तु सा लोके गौरन्धेवैकवेश्मनि । यथेरिणे वीजमुप्त्वा न वप्ता लभते फलम् । तथाऽनृचे हविर्द्दत्त्वा न दाता लभते फलम् । दातॄन् प्रतिग्रहीतॄंश्च कुरुते फलभागिनः । विदुषे दक्षिणां दत्त्वा विधिवत् प्रेत्य चेह च । कामं श्राद्धेऽर्च्चयेन्मित्रं नाभिरूपमपि त्वरिम् । द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् । यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् । शाखान्तगमथाध्वर्य्युं छन्दोगन्तु समाप्तिकम् । एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्च्चितः । पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी । एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः । अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः । मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् । दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् । न ब्राह्मणं परीक्षेत दैवे कर्म्मणि धर्म्मवित् । पित्र्ये कर्म्मणि तु प्राप्ते परीक्षेत प्रयत्नतः । ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः । तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् । जटिलञ्चानधीयानं दुर्व्बलं कितवन्तथा । याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत् । चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा । विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः । प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः । प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्व्वार्द्धुषिस्तथा । यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः । ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च । कुशीलवोऽवकीर्णी च वृषलीपतिरेव च । पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे । भृतकाध्यापको यश्च भृतकाध्यापितस्तथा । शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ । अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा । ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः । अगारदाही गरदः कुण्डाशी सोमविक्रयी । समुद्रयायी वन्दी च तैलिकः कूटकारकः । पित्रा विवदमानश्च कितवो मद्यपस्तथा । पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी । धनुःशराणां कर्त्ता च यश्चाग्रेदिधिषूपतिः । मित्रध्रुक् द्यूतवृत्तिश्च पुत्त्राचार्य्यस्तथैव च । भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा । उन्मत्तोऽन्धश्च वर्ज्याः स्युर्व्वेदनिन्दक एव च । हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति । पक्षिणां पोषको यश्च युद्धाचार्य्यस्तथैव च । स्रोतसां भेदको यश्च तेषाञ्चावरणे रतः । गृहसंवेशको दूतो वृक्षारोपक एव च । श्वक्रीडी श्येनजीवी च कन्यादूषक एव च । हिंस्रो वृषलवृत्तिश्च गणानाञ्चैव याजकः । आचारहीनः क्लीवश्च नित्यं याचनकस्तथा । कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च । औरभ्रिको माहिषिकः परपूर्व्वापतिस्तथा । प्रेतनिर्हारकश्चैव वर्जनीयाः प्रयत्नतः । एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान् । द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत् । ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति । तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते । अपाङ्क्तदाने यो दातुर्भवत्यूर्द्ध्वं फलोदयः । दैवे हविषि पित्र्ये वा तं प्रवक्ष्याम्यशेषतः । अव्रतैर्यद्द्विजैर्भुक्तं परिवेत्त्रादिभिस्तथा । अपाङ्क्तेयैर्यदन्यैश्च तद्वै रक्षांसि भुञ्जते । दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवि-

त्तिस्तु पूर्व्वजः । परिवित्तिः परीवेत्ता यया च परिविद्यते । सर्व्वे ते नरकं यान्ति दातृयाजकपञ्चमाः । भ्रातुर्मृतस्य भार्य्यायां योऽनुरज्येत कामतः । धर्म्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः । परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ । पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः । तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च । दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम् । अपाङ्क्तो यावतः पाङ्क्त्यान् भुञ्जानाननुपश्यति । तावतां न फलं तत्र दाता प्राप्नोति बालिशः । वीक्ष्यान्धो नवतेः, काणः षष्टेः, श्वित्री शतस्य तु । पापरोगी सहस्रस्य, दातुर्नाशयते फलम् । यावतः संस्पृशेदङ्गैर्ब्राह्मणान् शूद्रयाजकः । तावतां न भवेद्दातुः फलं दानस्य पौर्त्तिकम् । वेदविद्चापि विप्रोऽस्य लोभात् कृत्वा प्रतिग्रहम् । विनाशं व्रजति क्षिप्रमामपात्रमिवाम्भसि । सोमविक्रयिणे विष्ठा, भिषजे पूयशोणितम् । नष्टं देवलोके दत्तम्, अप्रतिष्ठन्तु वार्द्धुषौ । यत्तु वाणिजके दत्तं, नेह नामुत्र तद्भवेत् । भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे । इतरेषु त्वपाङ्क्त्येषु यथोद्दिष्टेष्वसाधुषु । मेदोऽसृङ्मांसमज्जास्थि वदन्त्यन्नं मनीषिणः । अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः । तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान् पङ्क्तिपावनान् । अग्र्याः सर्वेषु वेदेषु सर्व्वप्रवचनेषु च । श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः । त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् । ब्राह्मदेयात्मसन्तानो ज्येष्ठसामग एव च । वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहस्रदः । शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः" भाग० ४,१८,१८ । "वत्सेन पितरोऽर्यम्णा कव्यं क्षीरमधुक्षतेति" पृथिव्याः पितृभिः कव्यरूपक्षीरदोहनात् तस्य तदन्नत्वम् । कु—शब्दे कर्मणि यत् । २स्तुत्ये "कव्योऽसि कव्यवाहनः"ताण्ड्य०ब्रा०। 'कव्यः स्तुत्यः' भा० । कवनं कवः कु—भावे अप् कवे साधु यत् । ३स्तवसाधकेस्तोतरि । "वीता जनस्य दिव्यस्य कव्यैरधि" ऋ० ६, ८१.० । "कव्यैः कवनसाधुभिः स्तोतृभिः" भा० ।

**कव्यबाल** पु० कव्यं बलते ददाति अत्र बल—दाने आधारे घञ् । १वह्नौ तत्र दाने हि पितॄणां दाननिष्पत्तेस्तथात्वम् । कव्यं बल्यते दीयते बल—दाने सम्प्रदाने घञ् । २पितृदेवभेदे त्रिका० "कव्यबालोऽनलः सोमः यमश्चैवार्यमा तथा । अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः" वायु० पु० लस्य वा डः कव्यवाडोऽप्यत्र ।

**कव्यवाह** पु० कव्यं वहति प्रापयति पितॄन् वह—अण् उप० स० । अग्नौ । कव्यवाहनशब्दे विवृतिः ।

**कव्यवाह्** पु० कव्यं वहति वह—ण्वि । पितृभ्यः कव्यप्रापके वह्नौ ।

**कव्यवाहन** पु०कव्यं वह—वहति"कव्यपुरीषपूरीष्येषु ञ्युट्"पा० वह—ञ्युट् । पितृभ्यः कव्यप्रापके वह्नौ "त्रयो वा अग्नयो, हव्यवाहनो देवानां, कव्यवाहनः पितॄणां, सहरक्षा असुराणाम्"तैत्ति० २,५,८,६ । "अग्नये कव्यवाहनाय स्वाहा" यजु० २,२६ । "अग्नये कव्यवाहनायानुब्रूहीति तत्स्विष्टकृते हव्यवाहनो देवानां, कव्यवाहनः पितॄणामिति" शत० ब्रा० २,६,१,३० ।

**कश** शब्दे अक०वोप०गतौ शासने च सक० पा०भ्वा०पर० सेट् । कशति अकशीत्—अकाशीत् चकाश । प्रनिकशति । "अन्योऽनश्नन्नभिचाकशीति" श्रुतिः । यङ्लुकि लटोरूपम् । उभयपदीत्येके ।

**कश** पु० कशति शब्दायते शास्ति ताडयति वा करणस्य कर्तृविवक्षया कर्त्तरि कश—अच् । अश्वादेस्ताडनसाधने चर्म्मवस्त्रादिनिर्मिते पदार्थभेदे (चाबुक) "स राजा तं कशेनाताड़यत्" भा०व०१९६ अ० । अमरे अस्य स्त्रीत्वमाह । "जघान कशया मोहात्तदा राक्षसवत्मुनिम्" भा० आ० १७७अ० । "सम्यक्कशात्रयविचारवता नियुक्तः" माघः ५,१०श्लो० व्या० मल्लि० । "अत्र कशाः कशाघातास्तासां त्रयमुत्तममध्यमाधमेषु यथासङ्ख्यं मृदुसमनिष्ठुरादित्रिरूपं त्रितयन्तस्य विचारः 'एतेषु निमित्तेषु अङ्गेष्वेवन्ताड्यः' इति विमर्शः तद्वता तज्ज्ञेन । यथाह भोजः "मृदुनैकेन घातेन दण्डकालेऽश्वं ताड़येत् । तीक्ष्णं मध्यं पुनर्द्वाभ्याङ्कुर्वन्यत्रिष्ठुरैस्त्रिभिः । उपवेशेऽथ निद्रायां स्खलिते दुष्टचेष्टिते । वडवालोकनौत्सुक्ये बहुगर्व्वितहेषिते । सन्त्रासे च दुरुत्थाने विमार्गगमने भये । शिक्षात्यागस्य समये सञ्जाते चित्तविभ्रमे । दण्डः प्रयोज्यो वाहानां कालेषु द्वादशस्वपि । ग्रीवायाम्भीतमाहन्यात् वक्त्रञ्चैव च वाजिनम् । विभ्रान्तचित्तमधरे त्यक्तशिक्षञ्च ताड़येत् । प्रहेषितं स्कन्धबाह्वोर्बाड़वालोकिनं तथा । उपवेशे च निद्रायां कटिदेशे च ताड़येत् । दुश्चेष्टितं मुखे हन्यादुन्मार्गप्रस्थितं तथा । जघने स्खलितं हन्यात्मेत्रमार्गे

दुरुत्थितम् । यः कुशाठप्रकृतिर्वाजी तं सर्व्वत्रैव ताड़येत्” इति । अधिकमश्वशब्दे उक्तम् । मांसरोहिण्यां स्त्री भावप्र०

**कशकृत्स्न** पु० ऋषिभेदे तस्यापत्यम् शिवा० अण् । काशकृत्स्न-व्याकरणशास्त्रकारके ऋषिभेदे “इन्द्रश्चन्द्रः काशकृत्स्ना-पिशली शाकटायनः । पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः” वोपदेवः । ततः उपका० गोत्रप्रत्ययस्य बहुषु लुक् । कशकृत्स्नेन निर्वृत्तम् चतुरर्थ्याम् अरीहणादि० वुञ् । काशकृत्स्नक तन्निर्वृत्तादौ त्रि० ।

**कशस्** न० कशति नीचं कश— गतौ असुन् । जले निरु० ।

**कशार्ह** त्रि० कशामर्हति अर्ह—अण् उप० स० । कशाताड़नयोग्ये दुष्टे अश्वादौ अमरः ।

**कशिक** पु० कशति हिनस्ति सर्पम् कश-शासने बा० इक । नकुले तस्य पादाविव पादावस्य उपमानपूर्वकत्वेऽपि हस्त्या० पाठात् नान्त्यलोपः । कशिकपादः ।

**कशिपु** पु० कशति दुःखम् कश्यते वा कश—गतिशासनयोः मृगय्वा० नि० । १अन्ने आच्छादने च २अमरः । एकशत्या ३भक्ताच्छादनयोश्च विश्वः । पुष्पवन्तावित्यत्रेव अयं द्विवचनान्तः इति मेदि० । ४शय्यायाम् । “क्लृप्तैः कशिपुभिः कान्तं पर्य्यङ्कव्यजनाशनैः” भाग० ३, २३,१६ । “चेदस्ति भूः किं कशिपोः प्रयासैः” भा० २,२, ५ । “कशिपोः शय्यायाः” श्रीधरः । ५आसनभेदे च “क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु । क्वचित् प्रासादपर्य्यङ्के कशिपौ वा यथेच्छया” भाग० ७,१३,३७। वेदे अस्य क्लीवत्वमपि “प्रसुच्याश्वं दक्षिणेन वेदिम् हिरण्मयं कशिपूपस्तृणाति तस्मिन् होतोपविशति” “हिरण्मययोः कशिपुनोः पुरस्तात् प्रत्यङ्ङध्वर्युः” शत० ब्रा० १३,४, ३,१ । “कशिपु आसनभेदः । “होत्रध्वर्यू हिरण्मययोः कशिपुनोरुपविष्टौ” कात्या० १५,६,१ । कशिपुशब्देन मसूरक उच्यते । “फलकमिति पितृभूतिः” सं० व्या० । “अध्वर्युयजमानौ कूर्चयोः” “फलकयोर्वा, होतृब्रह्मोद्गातारः कशिपुषु” कात्या० २०,२,२,१८,२०,२१ । “सपादमासनं कूर्चः (कुरसीचौकी) “पादरहितं फलकं कशिपुशब्देन क्षुद्रासनं मसूरक उच्यते” संप० व्या० । तेन क्षुद्रासनं पादरहितं फलकं च कशिपुशब्दार्थः ।

**कशीका** स्त्री कश+बा० ईकन् । सृतवत्सायां नकुल्याम् ।“आगधिता परिगधिता या कशीकेव जङ्गहे” ऋ० १,१२६,६ । “कशीका सृतवत्सा नकुली सा यथा पत्या सह चिरं क्रीड़ति न कदाचिदपि विमुञ्चति” भा०

**कशु** पु० चेदिपुत्रे राजभेदे । “यथा चिच्चैद्यः कशुः शतमुष्ट्राणाम्” ऋ० ८,५,३७ ।

**कशेरक** पु० यक्षभेदे । “मणिभद्रोऽथ धनदः श्वेतभद्रश्च गुह्यकः । कशेरकोगण्डकण्डुः” इत्युपक्रम्य “एते चान्ये च बहवो यक्षाः शतसहस्रशः” इति भा० स०१०अ० कुबेरसभावर्णने उक्तम् ।

**कशेरु(रू)** स्त्री कं जलं वातं वा शृणाति शॄ—“के श्र एरक् चास्य” उणा० ऊ उ वा । तृणकन्दभेदे (केशुर) उज्ज्व० । दीर्घान्तः त्वष्टुश्चतुर्दश्यां २कन्यायां सा च नरकासुरेण गजरूपेण हृता तत्कथा हरिवं० १२१अ० यथा “त्वष्टुर्दुहितरं भौमः (नरकासुरः) कशेरुमगमत्तदा । गजरूपेण जग्राह रुचिराङ्गीं चतुर्दशीम् । प्रमथ्य तां वरारोहां नरकोवाक्यमब्रवीत्” उप्रत्ययान्तः पुंसि च । “किं कुर्व्वता वराहेण खाद्यन्ते हि कशेरवः” । उज्ज्व० चन्द्रः । ह्रस्वान्तं क्लीवमाह अमरः । “शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं सिता” सुश्रु० । स्वार्थे कन् । तत्रार्थे न० । तद्भेदगुणा भावप्र० उक्ता यथा । “कशेरु द्विविधं तत्तु महद्राजकशेरुकम् । मुस्ताकृति लघु स्याद्यत्तच्चिचोटमिति स्मृतम् । कशेरुकद्वयम् शीतं मधुरं तुवरं गुरु । पित्तशोणितदाहघ्नं नयनामयनाशनम् । ग्राहि शुक्रानिलश्लेष्मरुचिस्तन्यकरम्परम् । भारतवर्षस्य नवखण्डान्तर्गते ३खण्डभेदे पु० “ऐन्द्रं कशेरुशकलं किल ताम्रपर्णमन्यद्गभस्तिमदतश्च कुमारिकाख्यम् । नागं च सौम्यमिह वारुणमन्यखण्डं गान्धर्वसंज्ञमिति भारतवर्षमध्ये” सि० शि० । पुराणसर्वस्वे विष्णुपुराणे च “भारतस्यास्य वर्षस्य नव भेदान्निशामय । इन्द्रद्वीपः कशेरुश्च ताम्रवर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः । अयन्तु (कुमारिकाख्यः) नवमस्तेषां द्वीपः सागरसंवृतः । योजनानां सहस्रन्तु द्वीपोऽयं दक्षिणोत्तरात् । पूर्व्वे किराता यस्यान्ते पश्चिमे यवनाः स्थिताः । ब्राह्मणाः क्षत्रियावैश्या मध्ये शूद्राश्च भागशः । इज्यायुद्धवणिज्याद्यैर्वर्त्तयन्तो व्यवस्थिताः । वेदस्मृतिमुखाश्चान्याः पारिपात्रोद्भवा मुने ! । नर्मदासुरसाद्याश्च नद्योविन्ध्यविनिर्गताः । तापीपयोष्णीनिर्व्विन्ध्याकावेरीप्रमुखा नदी । गोदावरीभीमरथीकृष्णवेन्यादिकास्तथा । सह्यपादोद्भवानद्यः स्मृताः पापभयापहाः । कृतमालाताम्रपर्णीप्रमुखामलयोद्भवाः । त्रिसामा ऋषिकुल्याद्या महेन्द्रप्रभवाः स्मृताः । ऋषिकुल्याकुमाराद्याः शुक्तिमत्पादसम्भवाः । शतद्रु-

चन्द्रभागाद्या हिमवत्पादनिःसृताः। आसां नद्युपनद्यश्च सन्त्यन्याश्च सहस्रशः। पश्चिमे कुरुपञ्चालमध्यदेशादयो जनाः। पूर्वदेशादिकाश्चैव कामरूपनिवासिनः। ओड्राः कलिङ्गमगधा दाक्षिणात्याश्च सर्व्वशः। तथाऽपरान्ताः सौराष्ट्राः शूद्राभीरास्तथार्बुदाः। मारुका मालवाश्चैव पारिपात्रनिवासिनः। सौवीराः सैन्धवा हूणाः शाल्वाः शाकलवासिनः। मद्रा भागास्तथाम्बष्ठाः पारसीकादयस्तथा। आसां पिबन्तः सलिलं वसन्ति सहिताः सदा। चत्वारि भारते वर्षे युगान्यत्र महामुने!। कृतं त्रेता द्वापरञ्च कलिश्चान्यत्र न क्वचित्। तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्विनः। दानानि चात्र दीयन्ते परलोकार्थमादरात्। पुरुषैर्यज्ञपुरुषो जम्बुद्वीपे सदेज्यते। तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने!। यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः। अत्र जन्मसहस्राणां सहस्रैरपि सत्तम। कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात्। गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात्। कर्माण्यसंकल्पिततत्फलानि संन्यस्य विष्णौ परमात्मरूपे। अवाप्य तां कर्ममहीमनन्ते तस्मिँल्लयं ये त्वमलाः प्रयान्ति। जानीम नैतत् क्व वयं विलीने स्वर्गप्रदे कर्म्मणि देहबन्धम्। प्राप्याथ धन्याः खलु ते मनुष्या ये भारते चेन्द्रियसङ्गहीनाः। नववर्षन्तु मैत्रेय! जम्बुद्वीपमिदं मया। लक्षयोजनविस्तारं संक्षेपात् कथितं मया” ४पृष्ठदण्डस्थ्नि पुंन० हला० स्वार्थे कन्। पृष्ठास्थिभेदे स्त्री अमरः। तृणकन्देऽपि स्त्री रत्नमाला “कशेरुकञ्चातियुक्तं श्लेष्मकोपकं यथाह सुश्रुतः। दिवास्वप्नेत्याद्युपक्रमे “कशेरुकशृङ्गाटकमधुरवल्लीफलसमशनाध्यशनप्रभृतिभिः श्लेष्मा कोपमापद्यते”। एतद्रसस्य कूलचरमांसभोजनेऽनुपानम् यथाह अनुपानवर्गे सुश्रुतः “कूलचराणां शृङ्गाटककशेरुकासवः”। इदञ्च सुश्रुते मधुरवर्गे उक्तम्। तद्वाक्यं मधुरवर्गे दृश्यम्। एतस्य श्लेष्मपित्तप्रकोपकत्वेन कृमिकारित्वमुक्तम् सुश्रु० “माषपिष्टान्नद्विदलबिसशालूककशेरुकैरित्युपक्रमे “श्लेष्मा पित्तं च कुप्यति। कृमीन् बहुविधाकारान् करोति विविधाश्रयान्”।

**कशेरुमत्** पु० यवनराजभेदे। “इन्द्रद्युम्नो हतः कोपाद् यवनश्च कशेरुमान्” हरिवं० १६अ०। भा० व० १२अ०।

**कशोक** त्रि० कश–ताडने बा० ओक। हिंसके राक्षसादौ “मा त्वा दभन् दूरे वासः कशोकाः” अथ० ५,२,४।

**कश्चन** अव्य० कः+विभक्त्यन्तात् चन इति मुग्ध० पाणिन्यमरमते पृथक् पदमिति भेदः। (केओ) इत्यर्थे “दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ” माघः। चित्। कश्चिद्‌प्यत्र अव्य०एकपदं द्विपदं वेति भेदः। “कश्चित् कान्ताविरहगुरुणा स्वाधिकारे प्रमत्तः” मेघ०।

**कश्मल** न० कश–कल मुट् च। १मूर्च्छायां, २मोहे, “कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्” गीता। “मा राजन्! कश्मलं घोरं प्राविशो बुद्धिनाशनम्” भा० स० ४४ अ०। वेदे पृषो० लस्य शः। कश्मश तत्रार्थे “विड्ढेष कश्मशं भयममित्रेषु निदध्मसि” अथ० ३पापे च शब्दमा० ४मलिने त्रि० हेम०।

**कश्मीर** पु० कश-ईरन् मुट् च। स्वनामख्याते देशभेदे। ततो भवादौ कच्छा० अण्। काश्मीर तद्देशभवे त्रि०। कश्मीरोऽभिजनोऽस्य तक्षशिला० अञ्। काश्मीर पित्रादिक्रमेण तद्देशवासिनि त्रि०स्त्रियामुभयत्र ङीप्। तस्य राजन्यपि तथा। बहुषु तु तस्य लुक्। कश्मीराः। स्त्रियां भर्गादि० न लुक्। काश्मीरी। “अत ऊर्द्ध्वं जनपदान् निबोध गदतो मम” इत्युपक्रमे “कश्मीराः सिन्धुसौवीराः गान्धारा दर्शकास्तथा” भा० भी०६अ०। जम्बुखण्डविभागे देशकीर्त्तने। तद्देशसीमादि शक्तिसङ्गमतन्त्रे ७पटले उक्तं यथा—“शारदामठमारभ्य कुङ्कुमाद्रितटान्तकः। तावत् कश्मीरदेशः स्यात् पञ्चाशद्‌योजनात्मकः”।

**कश्मीरजन्मन्** न०कश्मीरदेशे जन्म यस्य। कुङ्कुमभेदे। कश्मीरजादयोऽप्यत्र। तद्भेदगुणादि भावप्र० उक्तं यथा—“कुङ्कुमं मसृणं रक्तं काश्मीरं पीतकं वरम्। सङ्कोचं पिशुनं धीरं वाह्लीकं शोणिताभिधम्। कश्मीरदेशजे क्षेत्रे कुङ्कुमं यद्भवेद्धि तत्। सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम्। वाह्लीकदेशसञ्जातं कुङ्कुमं पाण्डुरम्मतम्। केतकीगन्धयुक्तन्तत् मध्यमं सूक्ष्मकेशरम्। कुङ्कुमम्पारसीके यत् मधुगन्धि तदीरितम्। ईषत्पाण्डुरवर्णं तदधमं खलु केशरम्। कुङ्कुमं कटुकं स्निग्धं शिरोरुग्व्रणजन्तुजित्। तिक्तं वमिहरं वर्ण्यं व्यङ्गदोषत्रयापहम्”

**कश्य** न० कशामर्हति कश–शब्दे बा० करणे यत्। १मद्ये वैज०। मद्यपानेन यथेष्टशब्दकरणात् तथात्वम्। कशामर्हति दण्डा० यत्। २कशाघातयोग्ये अश्वमध्यभागे त्रि० अमरः।

**कश्यप** पु० कश्यं पिबति पा–क उप० स०। ब्रह्मणो मानसपुत्रस्य मरीचेः पुत्रे ऋषिभेदे तस्य तन्नामनिरुक्ति-

यथा—"ब्रह्मणस्तनयो योऽभूत् मरीचिरिति विश्रुतः। कश्यपस्तस्य पुत्रोऽभूत् कश्यपानात् स कश्यपः"मार्कण्डे० पु०। तस्य वंशादिकथा"ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः। मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। मरीचेः कश्यपः पुत्रः कश्यपात्तु इमाः प्रजाः। प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश। अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा। क्रोधा प्रधा च विश्वा च विनता कपिला मुनिः। कद्रूश्च मनुजव्याघ्र! दक्षकन्यैव भारत!। एतासां वीर्यसम्पन्नं पुत्रपौत्रप्रपौत्रकम्" भा०आ०६५अ० एतासामपत्यभेदास्तत्तच्छब्दे दृश्याः। "कश्यपाय त्रयोदश:" मनुः।

तस्य च वंशादिकथा भाग०अन्यथैवोक्ता यथा—"पत्नी मरीचेस्तु कलासुषुवे कर्दमात्मजा। कश्यपं पौर्णमासं च यापूरितं जगत्" भाग० ४,१,१९ श्लो० इत्युक्ता तत्पत्नीनां दक्षप्रजापतिकन्यानां नामभेदः नामान्तरेण तार्क्ष्यनामकस्य तस्य च अन्या अपि चतस्रः दक्षकन्याः पत्न्य आसन्"इतिदर्श०उक्तं यथा-"ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयम्भुवा। षष्टिं संजनयामास दुहितॄः पितृवत्सलाः। दश धर्माय कायेन्दोर्द्विषट् त्रिनव दत्तवान्। भूताङ्गिराकृशाश्वेभ्यो द्वे द्वे तार्क्ष्याय चापराः"नामाधेयान्यमूषां त्वं सापत्यानाञ्च मे शृणु" इत्युपक्रमे (काय कश्यपाय द्विषट् षट्द्विगुणाः द्वादश त्रयोदशेत्यर्थः श्रीधरः) उत्तरत्रादित्यादीनां त्रयोदशानां वंशकीर्त्तनत्तथार्थः। "तार्क्ष्याय नामान्तरं प्राप्ताय कश्यपायैव अपरा अवशिष्टाश्चतस्रः इति"श्रीधरः) "तार्क्ष्यस्य विनता कद्रूः पतङ्गी यामिनीत्यपि। पतङ्ग्यसूत पतगान् यामिनी शलभानथ। सुपर्णाऽ (विनता) सूत गरुडं साक्षाद्यज्ञेशवाहनम्। सूर्यसूतमनूरुञ्च कद्रूर्नागाननेकशः" इति। तार्क्ष्यनामककश्यपस्य पत्नीपुत्रानुक्त्वा प्रसिद्धनामककश्यपस्य पत्नीपुत्रनामादिकमुक्तं यथा तत्रैव

"अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत्। अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला। मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः। तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः। सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप!। ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः। दन्दशूकादयः सर्पा राजन्!। क्रोधवशात्मजाः। इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः। अरिष्टायास्तु गन्धर्वाः काष्ठाया द्विशफेतराः। सुता दनोरेकषष्टिस्तेषां प्राधानिकान् शृणु। द्विमूर्द्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः। अयोमुखः शङ्कुशिराः स्वर्भानुः कपिलोऽरुणः। पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः। धूम्रकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः। स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल। वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली। वैश्वानरसुतायाश्च चतस्रश्चारुदर्शनाः। उपदानवी हयशिरा पुलोमा कालका तथा। उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप। पुलोमां कालकां च द्वे वैश्वानरसुते तु कः। उपयेमेऽथ भगवान् कश्यपो ब्रह्मनोदितः। पौलमाः कालकेयाश्च दानवा युद्धशालिनः। तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता (अर्जुनः)। जघान स्वर्गतो राजन्नेक इन्द्रप्रियङ्करः। विप्रचित्तिः सिंहिकायां शतञ्चैकमजीजनत्। राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागताः। अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः। यत्र नारायणो देवः स्वांशेनावतरद्विभुः। विवस्वानर्य्यमा पूषा त्वष्टाऽथ सविता भगः। धाता विधाता वरुणो मित्रः शक्र उरुक्रमः। विवस्वतः श्राद्धदेवं संज्ञाऽसूयत वै मनुम्। मिथुनञ्च महाभागा यमं च यमुनां तथा। सैव भूत्वाथ बड़वा नासत्यौ सुषुवे भुवि। छाया शनैश्चरं लेभे सावर्णिञ्च मनुं ततः। कन्यां च तपतीं या वै वव्रे संवरणं पतिम्। अर्य्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः। यत्र वै मानुषो जातिर्ब्रह्मणा चोपकल्पिता। पूषानपत्यः पिष्टादो भग्नदन्तोऽभवत् पुरा। योऽसौ दक्षाय कुपितं जहास विवृतद्विजः। त्वष्टुर्दैत्यानुजा भार्य्या रचना नाम कन्यका। सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्य्यवान्। तं वव्रिरे सुरगणाः स्वस्रीयं द्विषतामपि। विमतेन परित्यक्ता गुरुणाङ्गिरसेन यत्" भाग० ६,६ अ०। कश्यपस्यैव तत्पत्नीनामपि नामान्तरकल्पनया विरोधः परिहरणीयः।

तस्य पृथिव्याः प्रतिग्रहरूपेण प्राप्तिकथादि भा०हरिवं० ५२। यथा"भार्गवेण पितुः श्राद्धे कश्यपाय निवेदिता। मांसमेदोऽस्थिदुर्गन्धा दिग्धा क्षत्रियशोणितैः। रजस्वलेव युवतिः कश्यपं समुपस्थिता। स मां ब्रह्मर्षिरप्याह किमुर्वि! त्वमवाङ्मुखी। वीरपत्नीव्रतमिदं धारयन्ती विषीदसि। साहं विज्ञापितवती कश्यपं लोकभावनम्। पतयो मे हता ब्रह्मन्! भार्गवेण महात्मना। साहं विहीना

विक्रान्तैः क्षत्रियैः शस्त्रवृत्तिभिः। विधवा शून्यनगरा न धारयितुमुत्सहे। तन्मह्यं दीयतां भर्त्ता भगवंस्तत्समो नृपः। रक्षेत् सग्रामनगरां यो मां सागरमालिनीम्। स श्रुत्वा भगवान् वाक्यं वाढमित्यब्रवीत् प्रभुः। ततो मां मानवेन्द्राय मनवे संप्रदत्तवान्। सा मनुप्रभवं पुण्यं प्राप्येक्ष्वाकुकुलं महत्। विपुले नास्मि कालेन पार्थिवात् पार्थिवं गता। एवं दत्तास्मि मनवे मानवेन्द्राय धीमते। भुक्ता राजसहस्रैस्तु महर्षिकुलसम्भवैः। बहवः क्षत्रियाः शूरा मां जित्वा दिवमाश्रिताः"। अयं च गोत्रप्रवर्त्तकः। आर्षशब्दे गोत्रशब्दे च विवृतिः। "त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्" यजु० ३, ६२। "कश्यपस्यैतन्नामकस्य प्रजापतेः" वेददी०। तस्यापत्यानि विदा० अञ् बहुषु लुक्। कश्यपास्तद्गोत्रापत्येषु "कश्यपानां काश्यपावत्सारासितेति"। "कश्यपासितदेवलेति वा"८। "शाण्डिलानां कश्यपशाण्डिलयोः" आ० श्रौ० १२, १४, ७। "एते कश्यपाः। एतेषां परस्परमविवाहः" नारा०।

काश्यपिर्गरुड़ाग्रजः इत्यत्र तु भवार्थे इञ्।

१मृगभेदे २मत्स्यभेदे च मेदि०। स्त्रियां जातित्वात् ङीष्। ३कच्छपे "अपासुद्रो मासां कश्यपः" यजु० २४, २७। "कश्यपः कच्छपः" वेददी०। ४श्यावदन्ते त्रि०। "प्रसृप्रेभ्यश्चान्यत् कस्वकश्यपयाचमानवर्ज्जम्" कात्या० १०, २, ३५। "कस्वशब्दं बधिरं मन्यन्ते कश्यपञ्च श्यावदन्तमिति केचित्" कर्कः।

**कश्यपनन्दन** पु० ६त०। गरुडे हला्यु०। कश्यपसुतादयोऽप्यत्र

**कष** वधे भ्वा० पर० सक० सेट्। वधोऽत्र निष्पीड़नं घर्षणञ्च। कषति अकषीत्–अकाषीत्। चकाष प्रनिकषति। "कदहेम कषच्छिवालसत् कषपाषाणनिभे नभस्तले" नैष०। अस्य परस्मैपदिषु पा०ग०पाठात् शब्दकल्पद्रुमे च तथा पाठात् आ० उक्तिर्भ्रान्तिमूला। 'पामानं कषमाणम्' इत्यादिप्रयोगस्तु ताच्छीलिकचानशैवोपपत्तेः। "निमूलसमूलयोः कषः" "कषादिषु यथाविध्यनुप्रयोगः" पा० णमुल् अनुप्रयोगश्च। निमूलकाषं कषति समूलकाषं कषति समूलं निमूलं वा कषतीत्यर्थः सि० कौ०। "समूलकाषं चकषुरदन्तः" भट्टिः। "सर्वकूलाभ्रकरीषेषु कषः" पा० कर्मरूपेषूपपदेषु खच्। सर्वङ्कषः कूलङ्कषः अभ्रङ्कषः करीषङ्कषः"

**कष** पु० कष–अच्। स्वर्णवर्णरूपज्ञानार्थे (कषटी) पाषाणभेदे इतरप्रस्तरस्य स्वर्णेन घर्षणात्तस्यैव तथात्वम्। अस्त्रादेस्तीक्ष्णीकरणसाधने शाणाख्ये पदार्थे अमरः। "कषपाषाणनिभे नभस्तले" नैष०। "सुवर्णरेखेव कषे निवेशिता" मृच्छ०।

**कषण** त्रि० कष्यते कष–कर्मणि ल्युट्। १अपक्वे शलाटौ शब्दच०। भावे ल्युट्। २घर्षणे ३चालने न०। "कषणकम्पनिरस्तमहाहिभिः" माघः। "कषणेन कम्पनेन" मल्लि०

**कषा** स्त्री कष्यते ताड्यतेऽनया कष–बा० करणे–अच्। अश्वादेस्ताड़नसाधने चर्मादिनिर्मिते पदार्थे (चावुक) रमानाथः। "लक्ष्णेण पृष्ठे कषया च ताडितः" भाग० ३, ३०, २२।

**कषाकु** पु० कष–आकु। अग्नौ सूर्ये च उणादिको०।

**कषाय** पुंन० कषति कण्ठम्, कष–आय–अर्शआदि। (कषा) १रसभेदे २तद्वति त्रि०। तस्य कारणगुणादि सुश्रुते उक्तं यथा—"तत्र शैत्यरौक्ष्यलाघववैशद्यवैष्टम्भ्यगुणलक्षणोवायुस्तस्य समानयोनिः कषायो रसः सोऽस्य शैत्यात् शैत्यं वर्द्धयति, रौक्ष्यात् रौक्ष्यं, लाघवात् लाघवं, वैशद्यात् वैशद्यं, वैष्टम्भ्यात् वैष्टम्भ्यमिति" "योवक्त्रं परिशोषयति जिह्वां स्तम्भयति कण्ठं बध्नाति हृदयं कषति पीडयति च स कषायः"। "कषायः संधाहकोरोपणः स्तम्भनः शोधनालेखनः शोषणः पीडनः क्लेदोपशोषणश्चेति। स एवं गुणोऽप्येकएवात्यर्थमुपसेव्यमानः पीड़ास्यशोषोदराध्मानवाक्यग्रहमन्यास्तम्भगात्रस्फुरणचुमुचुमायनाकुञ्चनक्षेपणप्रभृतीन् जनयति" इति च। कषायवर्गश्च। "न्यग्रोधादिरम्बष्ठादिः प्रियङ्ग्वादीरोध्रादिस्त्रिफलाशल्लकीजम्ब्वाम्रबकुलतिन्दुकफलिनीकतकशाकपाषाणभेदकवनस्पतिफलानि शालसारादिश्च प्रायशः कुरवककोविदारकजीवन्तीचिल्लीपालङ्क्यसुनिषण्णकप्रभृतीनि नीवारकादयोमुद्गादयश्च समासेन कषायोवर्गः" सुश्रु०। अस्योत्पत्तिकारणमपि तत्रोक्तं यथा—"तस्मादाप्योरसः परस्परसंसर्गात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्वेषु सर्वेषां सान्निध्यमस्त्युत्कर्षापकर्षात्तु ग्रहणम्। स खल्वाप्योरसः शेषभूतसंसर्गाद्विदग्धः षोढा विभज्यते" इत्युपक्रम्य। पृथिव्यनिलगुणबाहुल्यात् कषायः इति। तत्र तस्य च पित्तकफघ्नत्वमपि तत्रैवोक्तम् "मधुरतिक्तकषायाः पित्तघ्नाः कटुतिक्तकषायाः श्लेष्मघ्नाः" इति। "केचिदाहुरग्नीषोमीयत्वाज्जगतो रसाः द्विविधाः सौम्या आग्नेयाश्च, तत्र मधुरतिक्तकषायाः सौम्याः, कट्वम्ललवणा आग्नेयाः मधुराम्ललवणाः स्निग्धाः गुरु-

वश्च कटुतिक्तकषाया रूक्षा लघवश्च । सौम्याः शीता आग्नेयाश्चोष्णाः” इति सुश्रुते अन्यमतेनोक्त्वा तच्च दूषयित्वा पूर्वदर्शितमतमादृतम् भावप्र० तद्देतद्विष्टतम् यथा—
“कषायो रोपणो ग्राही स्तम्भनः शोधनस्तथा । लेखनः पीड़नः सौम्यः शोषणो वातकोपनः । कफशोणितपित्तघ्नो रूक्षः शीतो लघुर्मतः । त्वक्प्रसादनमालस्य स्तम्भनो विषदो मतः । जिह्वाया जाड्यकृत् कण्ठस्रोतसाञ्च विबन्धकृत्” । रोपणः व्रणस्य, स्तम्भनो गात्राणां, शोधनो व्रणस्य, लेखनो व्रणाद्युत्सन्नमांसस्य, शोषणोव्रणमज्जादीनाम् । पीड़नो हृदयस्य वातकारित्वात्, सौम्यः सोमादुत्पन्नः” । अथातियुक्तस्य कषायस्य गुणास्तत्रोक्ताः “सोऽतिशयुक्तो गुदाध्मानहृत्पीडाक्षेपणादिकृत्” । अभयायामत्र विशेषः । “प्रायशः स्तम्भनं प्रोक्तं कषायमभयां विना” । २रागद्वेषादिदोषे । “आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति” छा० उ० । “तस्मै मृदितकषायाय वार्क्षारादिरिव कषायो रागद्वेषादिदोषः, सत्वस्य रञ्जनरूपत्वात् ज्ञानवैराग्याभ्यासरूपक्षारेण क्षालितोमृदितो विनाशितो यस्य नारदस्य तस्मै” भा० । “कषाये कर्मभिः पक्के ततो ज्ञानं प्रजायते” वेदा० प० कर्मणां रागद्वेषादिदोषरूपकषायनाशकत्वमुक्तम् । “लयविक्षेपाभावेऽपि चित्तवृत्तेः रागादिवासनया स्तब्धीभावात् अखण्डवस्त्वनवलम्बनं कषायः” इति वेदान्तसारोक्तलक्षणे ४निर्विकल्पकसमाधिविघ्नभेदे “सकषायं विजानीयात् शमप्राप्तं न चालयेत्” । “सकषायं कलुषितं मे चित्तमिति, विज्ञाय शमेऽद्वितीयात्मनि निवेशयेत्” विद्वन्म० । ५रक्ते अनुरागान्विते ६सुरभौ ७अपटौ च केशवः । “चूताङ्कुरास्वादकषायकण्ठः” कुमा० । “कषायः रक्तः” मल्लि० । “निद्राकषायितविपाटललोचनेषु” माघः “कषायितान्यपटूकृतानि” मल्लि० । ८रागे ९क्काथभेदे १० निर्यासे च “रागे क्काथे कषायोऽस्त्री निर्यासे सौरभे रसे” वैज० । कषायः जातोऽस्य तार० इतच्, तत्करोतीति णिच्—कर्मणि क्तवा । कषायित जातकषाये कषायीकृते च त्रि० “अमुनैव कषायितस्तनी” कुमा० “कषायितः रञ्जितः मल्लि० । ११विलेपने १२अङ्गरागे च विश्वः । “कर्णार्पितोलोध्रकषायरूक्षे” कुमा० “कषायेण विलेपनेन” मल्लि० ।

कषायश्च सरसादिकः पञ्चविधः भावप्र०दर्शितो यथा । “सरसश्च तथा कल्कः क्काथश्च हिमफाण्टकौ । ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम्” तेषां पञ्चानां लक्षणानि तु तत्तच्छब्दे दृश्यानि । १३श्योनाकवृक्षे पु० जटाधरः । १४कलियुगे अमरटीका रागदोषहेतुत्वात्तस्य तथात्वम् १५लोहितवर्णयुक्ते त्रि० मेदि० १६रक्तपीतमिश्रितवर्णे अमरटीका । १७धववृक्षे पु० राजनि० १८क्षुद्रदुरालभायां स्त्री राजनि० । देशे गम्ये अस्मात् पानशब्दस्य णत्वम् । कषायपाणोदेशभेदः ।

**कषायपाक** पु० सुश्रुतोक्ते द्रव्यविशेषाणां क्काथभेदे । तत्प्रकारो यथा “केचिदाहुस्त्वक्पत्रमूलादीनां भागन्तु चतुर्गुणजलमावाप्य, चतुर्भागावशेषं निःक्वाथ्यापहरेदित्येषः कषायपाककल्पः” इति परमतमुक्त्वा “एतत्तु न सम्यक्” इति तन्मतं दूषयित्वा द्रव्यपरिमाणभेदं दर्शयित्वा च “तत्रान्यतमपरिमाणसम्मितानां यथायोगं त्वक्पत्रमूलादीनामातपपरिशोषितानां छेद्यानि खण्डशश्छेदयित्वा, भेद्यानि अणुशोभेदयित्वाऽवकुश्याष्टगुणेन षोडशगुणेन वा जलेनाभिषिच्य स्थाल्यां चतुर्भागावशिष्टं क्काथयित्वाऽपहरेदित्येष कषायपाककल्पः” इति स्वमतेनोक्त्वा पक्षान्तरमप्युक्तम् “अथ वा तत्रोदकद्रोणे त्वक्पत्रमूलादीनां तुलामावाप्य चतुर्भागावशिष्टं निःक्वाथ्यापहरेदित्येष कषायपाककल्पः” इति, । अयञ्च कल्पो विशेषानुक्तविषये विशेषनिर्देशे तु तथैव ग्राह्यः” यथाह तत्रैव “स्नेहभेषजतोयानां प्रमाणं यत्र नेरितम् । तत्रायं विधिराख्येयो निर्दिष्टे तत्तदेव तु । अनुक्तद्रव्यकार्य्ये तु सर्वत्र सलिलं मतम् । कल्कक्काथावनिर्देशे गणात्तस्मात् विनिर्दिशेत्” ।

**कषाययावनाल** पु० नित्यकर्म० । तुवरयावनाले धान्यभेदे राजनि० ।

**कषायवासिक** पु० सुश्रुतोक्ते कीटभेदे । “सूचीमुखः कृष्णगोधा यश्च कषायवासिकः” इत्युपक्रमे “त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः इति विभज्य—तेषां सौम्यत्वं श्लेष्मप्रकोपकत्वञ्चोक्तम् “तस्य मन्दविषत्वञ्च तत्रैवोक्तं यथा “चिपिटपिच्छटककषायवासिकसर्षपवासिकतोटकवर्च्चःकीटकौण्डिल्यकाः मन्दविषाः” ।

**कषायित** त्रि० कषायो रक्तपीतवर्णादिर्जातोऽस्य तार० इतच् । जातकषाये तत्करोतीति णिच्— कर्मणि क्त । कषायीकृते च “अमुनैव कषायितस्तनी” इति कुमा० ।

**कषायिन्** पु० कषायोनिर्यासोऽस्त्यस्य इनि । १शालवृक्षे जटा० २खर्जूरवृक्षे ३लकुचवृक्षे च राजनि० । ४कषाययुक्ते त्रि०

**कषि** त्रि० कष–हिंसायां इन्। हिंसाकारके उणादिकोषः।

**कषीका** स्त्री कष–हिंसने "कषिदुषिभ्यामीकन्" उणा० कर्मणि ईकन्। १पक्षिजातौ उज्ज्वल०। शब्दकल्पद्रुमे ह्रस्वमध्यपाठः प्रामादिकः उणादिसूत्रे ईकनो दीर्घतया निर्देशात्। इत उत्तरत्र फर्फरीकादयश्चेत्यादौ सर्वत्र दीर्घादेरेवानुवृत्तेः दीर्घादेरेवोचितत्वात्। कषत्यनया करणे ईकन्। २खनित्रे स्त्री शब्दचि०।

**कषेरुका** स्त्री कशेरुकावत्। (केशुर) इत्यकन्दे रायमुकुटः।

**कष्कष** पु० कषित्यव्यक्तं शब्दमव्याप्य कषति कष–हिंसने अच्। कृमिभेदे। "येवाषास: कष्कषास एजत्काः शिपवित्नुकाः। दृष्टश्च हन्यतां कृमिरुतादृष्टश्च हन्यताम्" अथ० ५,२३,७।

**कष्ट** न० कष–क्त "कृच्छ्रगहनयोः कषः" पा० नेट्। १पीड़ायाम् व्यायाम, "कष्टं युद्धे दश शेषाः श्रुता मे" भा०आ०३अ०। "एकस्य कष्टस्य न यावदन्तम्" पञ्चत०। २पीड़ायुक्ते ३गहने ४पीड़ाकारके च त्रि० "बन्धनानि च कष्टानि परप्रेष्यत्वमेव च" मनुः। "मोहादभूत् कष्टतमः प्रबोधः" रघु०। "शीतातपादिकष्टानि सहतेऽन्यानि सेवकः" पञ्चत०। "ततः कष्टतरं नु किम्" गीता। "एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे"। "क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं बुधाः" मनुः। ५कष्टसाध्ये बहूपायेन साध्ये रिपुरोगादौ। "स हि कष्टतमो रिपुः" "क्षतञ्च क्षतिमन्तं च कष्टमाहुररिं बुधाः" मनुः। रोगाणां कष्टता च बह्वायाससाध्यता यथोक्तं सुश्रुते "केवलः समदेहाग्नेः सुखसाध्यतमोगदः। अतोऽन्यथा त्वसाध्यः स्यात् कृच्छ्रोव्याधिश्चलक्षणः। क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्। पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः। गुणालाभेऽपि सपदि यदि सैव क्रिया हिता। कर्त्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि"। तथा च रोगः त्रिविधः साध्यः असाध्यः याप्यश्च। तत्र साध्योऽपि द्विविधः अल्पायाससाध्योबह्वायाससाध्यश्च बह्वायाससाध्यस्यैव कष्टता। कष्टसाध्याश्च रोगाः सुश्रुते तत्तत्स्थाने उक्तास्तत एवावसेयाः। कष्टसाधने दैपापे च। "कष्टाय क्रमणे" पा० क्यङ् "कष्टायते कष्टं पापं कर्त्तुमुत्सहते इत्यर्थः" सि० कौ०। अलङ्कारोक्ते ७दोषभेदे यत्र सन्ध्यादिना अर्थस्य दुर्बोधत्वं तत्र कष्टत्वम् "कष्टं तदर्थांशगमोदुरायत्तोभवेद्यदि" इत्युक्तलक्षणात् तच्च सन्धिकृतम् अतएव सा० दर्पणे "सम्यौ विस्तेमोक्षीलकष्टता:" इत्युक्त्वोदाहृतम् "उर्व्यसावत्र चार्वङ्गि! सर्वत्र चार्वतस्थितिः" इदन्तु वाक्यगतम्। क्लिष्टत्वमप्यस्यैव नामान्तरं "अवाचकत्वं क्लिष्टत्वमिति" सा० द० पदगतदोषे उक्त्वा "क्षीरोदजावसति जन्मभवः प्रसन्नाः" इति अत्र अर्थप्रतीतेर्व्यवहितत्वमिति तत् लक्षयित्वा क्षीरोदजालक्ष्मीस्तस्या वसतिः पद्मं तस्य जन्मभवो जलानि" अर्थावबोधे व्यवधानं दर्शितम्। [त्रिका०। २पीडाकारके त्रि०।

**कष्टकार** पु० कष्टं करोति कृ–अण् उप०स०। १संसारे

**कष्टरिपु** पु० कर्म०। कष्टसाध्ये रिपौ स च मनुनोक्तलक्षणो यथा "प्राज्ञं कुलीनं शूरञ्च दक्षं दातारमेव च। क्षतज्ञं क्षतिमन्तञ्च कष्टमाहुररिं बुधाः" इति।

**कष्टस्थान** न० कष्टस्य स्थानम्। दुःखदस्थाने हारा०।

**कस** गतौ भ्वा० पर० सक० सेट्। कसति अकसीत्–अकासीत्। चकास–ज्वलादित्वात् कर्त्तरि वा ण। कासः। यङ् चनीकस्यते यङ्लुक् चनीकसीति–कस्ति। प्रनिकसति

उद्+उर्द्ध गतौ "उत्कसन्तु हृदयान्यूर्द्धं प्राण उदीषतु" अथ० ११,६,२१।

निस्+निर्+अपगतौ निष्कसति। णिचि निष्कासयति "निरकासयद्रविमपेतवसुम्" माघः।

वि+प्रकाशे। विकसति पङ्कजकलिका "फुल्लश्चैते विकसिते" अमरः "स प्रीतियोगात् विकसन्मुखश्री:" कुमा०। "क्षणदृष्टिपातविकसद्वदनाम्" माघः। "विकसद्भिरास्यकमलैः कमलैः प्रमदाः" माघः "मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितम्" मालतीमा०। णिचि विकासयति व्यचीकसत्। "वचनेन चोपकुसुमं व्यचीकसत्" माघः। "वौ कषल सेत्या०" पा० इनि विकासी। वरच्। विकस्वरः "हृदा रमन्ते बलभा विकस्वरैः" माघः।

अनु+वि+अनुरूपविकाशे "अन्तर्जलेऽनुविकसन्मधुमाधवीनाम्" भाग० ३,१५,१७।

प्रवि+प्रकर्षविकाशे प्रविकसति चिरायद्योतिताशेषलोके" माघः।

सम्+सम्यग्गतौ सङ्कसुकः।

**कस** शातने गतौ च अदा० इदित् आत्म० सक० सेट् शातनमिह नाशनम्। कंस्ते अकंसिष्ट। चकंसे। प्रनिकंस्ते। कर्मणि कंस्यते। अकंसि।

**कस** शातने गतौ च सक० अदा० आत्म० सेट्। शातनमत्र नाशनम्। कस्ते अकसिष्ट। चकसे प्रनिकस्ते।

**कस** पु० कष–अच्। (कष्टीपाथर) कषपाषाणे भरतः।

**कसन** पु० कसति हिनस्ति कस–ल्यु । १कासरोगे २लूताभेदे स्त्री ।“आलमूत्रविषा कृष्णा कसना चाष्टमो स्मृता” सुश्रु० लूताभेदकथने । “पिच्छिला कसनादंशात् रुधिरं शीतलं स्रवेत्” सुश्रु० ।

**कसनोत्पाटन** पु० कसनं कासरोगम् उत्पाटयति उत्+पाटि–ल्यु । वासकवृक्षे, शब्दच० । “येन तेन प्रकारेण वासकः कासनाशकः” इति वैद्योक्तेस्तस्य तथात्वम् ।

**कसर्णीर** पु० सर्पभेदे । “एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत्” तैत्ति० सं० १,५,४,१ । रस्य लत्वमपि “पैद्वो हन्ति कसर्णीलम् पेद्वः श्वित्रमुतासितम्” अथ० १०,४,५ । विषनाशकल्पे ।

**कसाम्बु** न० पितृभ्यः कव्यदानकाले देये जले । “उपासते पितरः स्वधाभिः” इत्युपक्रमे “इदं कसाम्बु चयनेन चितं तत्सजाता अवपश्यतेवत” अथ० १८,४,३७ ।

**कसिपु** पु० कशिपुवत् । अन्ने जटाधरः ।

**कसेरु** पु० कस–उ एरुगागमः । १कशेरौ, (केशुर) शूकरस्य प्रिये २जलकन्दभेदे च ।३कशेरुशब्दार्थे च राजनि० ।

**कसेरुका** स्त्री कशेरुकावत् । १पृष्ठास्थ्नि राजनि० ।

**कस्कादि** पु० पाणिन्युक्ते विसर्जनीयस्य सत्वनिमित्ते शब्दगणे स च गणः “कस्कः कौतस्कुतः भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः सद्यस्क्रीः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालं बर्हिष्पलं यजुष्पात्रं अयस्कान्तः तमस्काण्डः अयस्काण्डः मेदस्पिण्डः भास्करः अहस्करः कास्कतिगणः”

**कस्तम्भी** स्त्री कं शिरोऽग्रभागं स्तभ्नाति स्तन्भ–अण् गौरा० ङीष् मुग्ध० मण्डूप् । शकटस्याधःपतनवारणार्थं मोषादण्डायोत्तम्भनार्थायां मेथौ “अथ यज्जघने कस्तम्भीम्” शत० ब्रा० १,१, २,६ । “शकटस्याधःपतनं वारयितुमीषादण्डायोत्तम्भनार्था मेथिः कस्तम्भी” भा० ।

**क(का)स्तीर** न० ईषत्तीरमत्र कुगति० समा० कोः कादेशः “कास्तीराजस्तुन्दे नगरे” पा० सूट् ।१नगरविशेषे २तज्जाते रङ्गे हेम० । हेमचन्द्रे कस्तीरमिति ह्रस्वपाठः प्रामादिकः पा० सूत्रे कास्तीरे दीर्घपाठदर्शनात् ।

**कस्तूरी** स्त्री कसति गन्धोऽस्याः दूरतः कस–ऊर–बा० तुट् च । मृगमदे मृगनाभिजाते गन्धद्रव्यभेदे स्वार्थे कन् । कस्तूरिका तत्रैव “तद्गुणपर्य्यायादि भावप्र० उक्तं यथा— “मृगनाभिर्मृगमदः कथितस्तु सहस्रभित् । कस्तूरिका च कस्तूरी वेधमुख्या तु सा स्मृता । काश्मीरी कपिलच्छाया कस्तूरी त्रिविधा स्मृता । कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत् । कामरूपोद्भवा कृष्णा नैपाली नीलवर्णयुक् । काश्मीरदेशसम्भूता कस्तूरी त्वधमा मता । कस्तूरिका कटुस्तिक्ता क्षारोष्णा शुक्रला गुरुः । कफवातविषच्छर्दिशीतदौर्गन्ध्यशोषहृत्” । “प्रस्थं हिमाद्रेर्मृगनाभिगन्धि” कुमा० श्लोकव्या० मल्लिनाथेन “मृगनाभिःकस्तूरी तद्गन्धि कस्तूरीमृगाधिष्ठानादित्युक्तं तेन हिमाद्रावपि तन्मृगस्य सञ्चारोऽस्तीति गम्यते । “कस्तूरीतिलकं ललाटपटले” विष्णुमूर्त्तिवर्णने ।“कस्तूरिकाजननशक्तिभृता मृगेण किं सेव्यते सुमनसां मनसापि गन्धः” रसग० । “कस्तूरिकामृगविमर्दसुगन्धिरेति” माघः । कस्तूरिकाहेतुर्मृगः कस्तूरिकामृगः ।

**कस्तूरी(म)वल्लिका** स्त्री कस्तूरीगन्धयुक्ता म(व)ल्लिका । (मुसकदाना) लताभेदे राजनि० वमध्यपाठः भावप्र० सम्मतः । तद्गुणा भावप्र० उक्ता यथा । “लता कस्तूरिका तिक्ता स्वाद्वी वृष्या हिमा लघुः । चक्षुष्या भेदिनी श्लेष्मतृष्णा वस्त्यास्यरोगहृत्” अत्र लतेति विशेष्यपदोक्तेः कस्तूरिकावल्लिकेत्येवेत्युचितम् ।

**कस्मल** न० कश्मलवत् । पापाद्यर्थे रायमुकुटः ।

**कस्वर** त्रि० कस–गतौ शातने च वरच् ।१गन्तरि २हिंसके च

**कहय** पु० कस्य सूर्य्यस्य हयः । सूर्य्याश्वे तस्यापत्यम् शिवा० अण् । काहय तदपत्ये पुंस्त्री । पाणिनिगणे कहूति पाठः साधुः ।

**कहूय** पु० ह्वे–क्यप् हूयः कः सूर्य्यो हूयो यस्य । सूर्य्यह्वायके ऋषिभेदे । तस्यापत्यं शिवा० अण् । काहूय तदपत्ये पुंस्त्री ।

**कहोड** पु० ऋषिभेदे स च उद्दालकर्षिशिष्यः अष्टावक्रस्य पिता । “उद्दालकस्य नियतः शिष्य एको नाम्ना कहोड इति विश्रुतोऽभूत्” भा० व० १३२ अ० । अधिकमष्टावक्रशब्दे दृश्यम् । वा डस्य लः कहोलोऽप्यत्र । ततः अनुकम्पायां नीतौ च वा ठक् द्वितीयाजादेः सन्ध्यक्षरस्य च लुक् । कहिक अनुकम्पितकहोडे । वा इल । कहिल । घ । कहिय इत्यादिरपि तत्रार्थे ।

**कह्लार** न० के जले ह्लादते ह्लाद–अच् पृषो० दस्य रः । श्वेतोत्पले । “आह्लादिकह्लारसमीरणाहिते” माघः । “नलवञ्जुलकह्लारचन्दनोत्पलपद्मकैः” सुश्रु० । तस्य गुणादि उत्पलशब्दे उक्तम् ।

**काह्व** पु० कं जलं ह्वयति स्पर्द्धते शुक्लरूपत्वात् ह्वे–क । बके अमरः । अस्यैव शिवादिगणे पाठमते अपत्ये अण् । काह्व तदपत्ये पुंस्त्री ।

**कांशि** पु० कंस भयार्थे बा०इञ् वेदे पृषो० सस्य शः। कंस-निर्मिते पात्रे "त्रींस्त्रीन् कंशीस्त्रिरात्रं, द्वौ द्वौ त्रिरात्रं चैकैकं षड्रात्रम्" कौषी०सू०।

**कांस** त्रि० कंसोदेशभेदोऽभिजनोऽस्य तक्षशिला० अञ्। कंसाधिष्ठितभोजदेशाभिजने नरादौ।

**कांस्य** न०कंसाय पानपात्राय हितं कंसीयं तस्य विकारः यञ् छलोपः। ताम्ररङ्गजधातुभेदे कंसशब्दे विवृतिः। "न पादौ धावयेत् कांस्ये कदाचिदपि भाजने" मनुः। अस्य शोधनविधिर्भावप्र० उक्तो यथा—"पत्तलीकृत्य पत्राणि कांस्यस्याग्नौ प्रतापयेत्। निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके। गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा। एवं कांस्यस्य रीतेश्च विशुद्धिः सम्प्रजायते"। मारणविधिस्तत्रैव "अर्कक्षीरेण सम्पिष्टो गन्धकस्तेन लेपयेत्। समेन कांस्यपत्राणि शुद्धान्यम्लद्रवैर्मुहुः। ततो-मूषापुटे धृत्वा पचेद् गजपुटेन च। एवं पुटद्वयात् कांस्यं रीतिश्च म्रियते ध्रुवम्" तस्य गुणाः यथा—"कांस्यं कषायं तीक्ष्णोष्णं लेखनं विशदं सरम्। गुरु नेत्रहितं रूक्षं कफपित्तहरं परम्" भावप्र०। "कांस्यसम्पुटितसरोजसायतत्" माघः।

**कांस्यकार** पु०स्त्री कांस्यं तत्पात्रं करोति कृ-अण् उप०स०। (काँसारि)। जातिभेदे जातित्वाद् स्त्रियां ङीष्। कंसकारशब्दे विवृतिः। [भेदे हेमच०।

**कांस्यनील** पु०। कांस्येन कृतः नीलः। (कोमकाजल) अञ्जन-

**काक** पुंस्त्री कै-शब्दे कन्। स्वनामख्याते विहगभेदे स्त्रियां जातित्वात् ङीष् अण्डशावकयोः परतः ईत० पुंवत् काकाण्डः काकशावकः। "काकात्मौत्त्र्यं यमात् क्रौर्यम्" स्मृतिः "काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्लभम्" उद्भटः "काकः काकः पिकः पिकः" नीतिमा०। "काकालो कामसमधुरा काशीतलवाहिनी गङ्गा। कंसं जघान कृष्णः कम्बलवन्नं न बाधते शीतम्" विदग्धमु०। तन्मांसगुणा मदनपालेनोक्ता यथा—"काकभासभवं मांसं चक्षुष्यं दीपनं लघु। आयुष्यं बृंहणं बल्यं वातदोषक्षयापहम्" काकजङ्घायां काकतिक्तत्वोक्तेः तन्मांसस्य तिक्तत्वमपि बोध्यम्। राजनि०काकाह्वेति काकजङ्घापर्य्यायोक्तेः २काकजङ्घायां पु०"काकजङ्घातुल्याकारत्वात्तथात्वम्। कुत्सितमकति अक-अच् कोः कादेशः। ३पीठमर्पिणि(खोड़े)४काकप्रधाने द्वीपभेदे। कस्य शिरसः आक सेधनम् अक-घञ् ईत०। ५शिरोऽवक्षालने ६काकपदतुल्याकारे ७तिलकभेदे काकवच्चञ्चलत्वात् ८अतिधृष्टे च शब्दरत्ना०। काकानाम् संघः अण्। ९काकसमूहे काकपदकमे १०सुरतबन्धभेदे च न०मेदि०। काकपदशब्दे तल्लक्षणं दृश्यम्। ईषत् कं कोः। कादेशः। ११ईषज्जले। बहु०१२ईषज्जलयुक्ते त्रि०। काकसुद्गा।

**काककङ्गु** पु० काकप्रियः कङ्गुः ईषज्जलयुक्तो वा कङ्गुः। (चीना) धान्यभेदे हेमच०। [काकजङ्घादच्चे जटाध०।

**काककला** स्त्री काकस्य कला अवयवो जङ्घेवावयवो यस्याः।

**काकघ्नी** स्त्री काकं हन्ति ट टित्त्वात् ङीप्। १महाकरञ्जे राजनि०। तत्फलसेवने हि काकस्य नाशः।

**काकचिञ्चा** स्त्री काकवर्णा चञ्चा प्रान्तभागः फले यस्याः। पृषो०। गुञ्जायाम् अमरः। पृषो०काकचिञ्चिः, काकचिञ्ची, काकचञ्चाप्यत्र शब्दरत्ना०।

**काकच्छद** पुंस्त्री काकस्य च्छदः पक्ष इव छदः कृष्णत्वात् यस्य। खञ्जनविशेषे स्त्रियां जातित्वात् ङीष्। बा० इच् समा०। काकच्छदिरप्यत्र त्रिका०।

**काकजङ्घा** स्त्री काकस्य जङ्घेवावयवो यस्याः। (केओयाटेङ्गा) ख्याते वृक्षभेदे। "काकजङ्घा नदीकान्ता काकतिक्ता सुलोमशा। पारावतपदी दासी काकाह्वापि प्रकीर्त्तिता। काकजङ्घा हिमा तिक्ता कषाया कफपित्तजित्। निहन्ति ज्वरपित्तास्रज्वरकण्डूविषक्रमीन्" भावप्र०तत्पर्य्यायगुणाद्युक्तम्। [(वडजाम) स्वार्थे कन् तत्रार्थे।

**काकजम्बु** स्त्री काकवर्णा जम्बुः। भूमिजम्ब्वाम् शब्दमा०।

**काकजम्बू** स्त्री कं जलमकति उत्पत्तिस्थानत्वेन अक-अण् उप०स० काका काकवर्णा वा जम्बूः कर्म० ऊङ्। जलजातजम्बूभेदे राजनि०। तस्याः काकनीलेति जलजम्बुकेति पर्य्यायतोक्तेः तस्याः कृष्णवर्णफलकत्वाज्जलजातत्वाच्च तथात्वम् "क्षुद्रजम्बूः सूक्ष्मपत्रा नादेयी जलजम्बुका। जम्बूः संग्राहिणी रूक्षा कफपित्तास्रदाहजित्"। भावप्र०तत्पर्य्यायगुणाद्युक्तम्।

**काकण** न० सुश्रुतोक्ते महाकुष्ठभेदे। "महाकुष्ठान्यौडुम्बरर्ष्य-जिह्वकपालकाकणकपुण्डरीकदद्रुकुष्ठानीति" विभज्य। "काकणन्तिकाफलसदृशान्यतीव रक्तकृष्णानि काकणकम्" इति,लक्षितम्। अत्र स्वार्थे कन्। "सर्वैरेवोल्वणैर्दोषैः प्राहुः काकणकं बुधाः" भावप्र० तन्निदानमुक्त्वा "यत् काकणन्तिकावर्णमपाकं तीव्रवेदनम्। त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिध्यति" काकणन्तिका गुञ्जा गुञ्जावर्णत्वेन मध्ये कृष्णम्,अन्ते रक्तम् अथवा मध्ये रक्तम् अन्ते

श्वम् । अपाकं स्वभावात्, त्रिदोषलिङ्गम् सर्वेषां कुशानां त्रिदोषजत्वेऽपि उल्बणदोषत्रयलिङ्गम्" भावप्र० लक्षितम् । अतएव पूर्ववाक्ये उल्बणैर्दोषैरित्युक्तम् ।

**काकणन्ती** स्त्री ईषत् कणन्ती निमोलन्ती कण–निमीलने शतृ ङीप कुगतिस० कोः कादेशः । गुञ्जायाम् सुश्रु० । तस्याः फलकोणस्येषन्निमीलनात्तथात्वम् । "कोष्ठं मत्वा चोभयन् यस्य रक्तं, तच्चाधस्तात् काकणन्तीप्रकाशम्" सुश्रु० स्वार्थे कन् । काकणन्तिकाप्यत्र रत्नमा० । काकणशब्दे उदा०। "रक्तजानि न्यग्रोधप्ररोहविद्रुमका-कणन्तिकाफलसदृशानि" सुश्रु०।

**काकतालीय** न० अवितर्कितसम्भवतुल्ये याद्दच्छिकन्याये तद्युत्पत्त्यादिर्यथा "समासाच्च तद्विषयादिति" पा०छ । अत्रादेव्यापकादित्यर्थे, सह सुपेति वा समासः, द्वाविवार्थौ काकागमनमिव तालपतनमिव काकतालम् काकतालमिव काकतालीयम् छत्तिविषये काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ तत्र काकागमनं देवदत्तागमनस्योपमानम् तालपतनं दस्युनिपातस्य, तालेन तु यः काकस्य बधः स देवदत्तस्य दस्युना बधस्योपमानम् इति बधादिः काकतालीयादिशब्दवाच्यः सम्पद्यते । काकतालसमागमसदृशश्चोरसमागम इति समासार्थः तत्प्रयुक्तकाकमरणसदृशस्तु देवदत्तबधादिः छप्रत्ययार्थः । "यत्तया मेलनं तत्र लाभो मे यश्च तद्रते । तदेतत् काकतालीयमवितर्कितसम्भवम्" चन्द्रालोकः । "फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति" वेणी० ।

**काकतिक्ता** स्त्री काकमांसवत् तिक्ता । काकजङ्घायां भावप्र० काकजङ्घाशब्दे विवृतिः । (कुंच) २गुञ्जायां रत्नमा० । तयोः काकमांसतुल्यतिक्तत्वात्तथात्वम् ।

**काकतिन्दुक** पु०काकईषज्जलकस्तिन्दुतिकोन्दुकः, काकवर्णो वा तिन्दुकः काकप्रियो वा तिन्दुकः । (कुँचिलिया) (माकड़ातेंडु) इति च प्रसिद्धे कुपोलौ भावप्र० । तत्पर्य्यायगुणादि तत्रोक्तं यथा "तिन्दुको यस्तु कथितो जलजो दीर्घपत्रकः । कुपोलुः कुलयः काकतिन्दुकः काकपीलुकः। कुपोलु शीतलं तिक्तं वातलं मदकृल्लघु । पादव्यथाहरं ग्राहि कफपित्तास्रनाशनम्" अत्र फलपरत्वात् न०। [ हेमच० ।

**काकतुण्ड** पु० काकतुण्डस्य वर्णोऽस्त्यस्य अच् । कालागुरुणि

**काकतुण्डफला** स्त्री काकतुण्डमिव फलमस्याः । काकनासायाम्" भावप्र० । काकनासाशब्दे विवृतिः ।

**काकतुण्डिका** स्त्री काकतुण्डस्य वर्णः अर्द्धफलेऽस्याः ठन् । गुञ्जायाम् हेमा० ।

**काकतुण्डी** स्त्री काकम् ईषदर्कं ईषद्दुःखं तुण्डते तुड़ि ङ–बधे अण् उप०स०पा० गौरा०ङीष्, मुग्ध० पण् ईप् इति भेदः। १राजरीतौ न्वपयोग्ये पित्तले (गिलटीकारापितल) तस्य स्वर्णरूपतया दर्शनात् दुःखनाशकत्वात् तथात्वम् । काकतुण्ड इवाकारोऽस्याः अच् गौरा०ङीष् । (कैओयाठोटा) २काकनासावृक्षे च ।

**काकदन्तगवेषण** पु० काकस्य दन्ताः सन्ति न वेति संशये तत्र वर्णभेदस्य संख्याविशेषस्य च गवेषणमिव अनर्थकः प्रयत्नो यत्र । निष्प्रयोजनान्वेषणयुक्ते न्यायभेदे ।

**काकध्वज** पु०काकमोषज्जलं बाष्पं ध्वज इवास्य । बाड़वाग्नौ त्रिका० । तस्य समुद्रादुद्गच्छन्त्या ज्वालया जातशाष्पस्य तत्केतनतुल्यत्वात् तस्य तथात्वम् ।

**काकनामन्** पु० काकेनापि नाम्यतेऽसौ नम–णिच्–कर्मणि क्विप्। वकवृक्षे रत्नमाला तस्य वृद्धशाखत्वेन काकारोहणेनापि नामित्वात् तथात्वम् ।

**काकनास** पु० काकस्य नासा तदर्णः फलेऽस्य । विकङ्कतवृक्षे (वँइचि) राजनि० । तस्य फलस्य काकनासातुल्यकृष्णत्वात्तथात्वम् ।

**काकनासा** स्त्री काकस्य नासेव फलमस्याः । काकजङ्घायाम् (कैओठेङ्गा)। भावप्र० तत्पर्य्यायगुणाद्युक्तं यथा—"काकनासा कषायोष्णा कटुका रसपाकयोः । कफघ्नी वमनी तिक्ता शोथार्शःश्वित्रकण्डुनुत्"।स्वार्थे कन् । काकनासिका तत्रार्थे अमरः। सा च त्रिवृति राजनि०।

**काकनीला** स्त्री काक इव नोला । जम्बुभेदे । राजनि० ।

**काकन्दि(न्दी)** स्त्री देशभेदे । वा ङीप् । तत्र भवाद्यर्थे दीर्घान्तात् वुञ् । कादन्दक तत्र भवे त्रि०।२अदेशवासिरूपचारात् तेचायुधजाविनः। संघपरत्वे ततः दामन्यादि० स्वार्थे छ । काकन्दीय तद्देशवासिनि आयुधजीविसंघे ।

**काकपक्ष** पु०काकस्य पक्षः तदाकारोऽस्त्यस्य अच् ।(काणपाटा) काणजुलपी) प्रसिद्धे शिरोऽधःकर्णपार्श्वस्थे केशभेदे ।"स इस्तचूलसलकाकपक्षकैः" "काकपक्षधरमेत्य याचितः" "तौ प्रणामचलकाकपक्षकौ" "काकपक्षधरेऽपि राघवे" इति च रघुः "काकपक्षधरो युवा" पद्मपु० रामकवचम् ।

**काकपद** पु० "पादौ द्वौ स्कन्धयुगमस्यौ क्षिप्ता लिङ्गं भगे लघु । कामयेत् काडुकां कामी बन्धः काकवदो मतः"

रतिमञ्जर्य्युक्ते १रतिबन्धभेदे। काकस्य पदं पदमानम्। २काकपदतुल्यपरिमाणे न०। तत्परिमाणेन शिरसि शिखास्थापनं स्मृतौ विहितम्। काकस्य पदाकारो ऽस्त्यस्य अच्। ३काकपदतुल्याकारे ग्रन्थलेखनकाले ऊर्द्ध्वमधोभागाभिन्नपङ्क्तिलेखने प्रकृतग्रन्थत्रुटिसूचके रेखाविशेषे। लेखकसंप्रदायप्रसिद्धिः।

**काकपर्णी** स्त्री काक इव कृष्णं पर्णमस्याः काकमीषज्जलं पर्णेऽस्या वा गौरा० ङीष्। मुद्गपर्ण्यां भावप्र० तस्याः काककृष्णपर्णत्वात् ईषज्जलयुक्तपत्रत्वाच्च तथात्वम्।

**काकपीलु** पु० काकप्रियः पीलुः। (कुचिला) कुपीलौ। राजनि० संज्ञायां कन्। तत्रार्थे भावप्रकाशोक्ततद्गुणादि काकतिन्दुकशब्दे उक्तम्।

**काकपुच्छ** पुंस्त्री काकस्येव पुच्छो यस्य। कोकिले शब्दरत्ना०। स्त्रियां जातित्वेऽपि संयोगोपधत्वान्न ङीष्। किन्तु "पुच्छाच्चेति" वार्त्ति० वा ङीष्।

**काकपुष्ट** पु० काकेन पुष्टः। कोकिले त्रिका०। कोकिलया हि स्वाण्डस्फोटनाशक्ततया काकाण्डं तन्नीडात् निष्कास्य स्वाण्डं तत्र स्थापयित्वा काकद्वारा स्वाण्डजपोषणात् कोकिलस्य तथात्वम्।

**काकपुष्प** न० काकवर्णं पुष्पमस्य। गन्धपर्णे राजनि०।

**काकपेय** त्रि० काकैरनतकन्धरैः पीयते पा—यत् "कृत्यैरधिकार्थवचने" पा० ३त०। पूर्णोदकत्वेन प्रशस्ते काकैः पेये नद्यादौ। "काकपेया नदी" सि०कौ०।

**काकफल** पु० काकप्रियं फलमस्य। निम्बवृक्षे राजनि०। तस्य तिक्तत्वेऽपि काकस्य तत्फलप्रियत्वात्तथात्वम्।

**काकबन्ध्या** स्त्री काकीव बन्ध्या पुंवत्। काकीवत् एकमात्रपुत्रजननेन बन्ध्यात्वप्राप्तायां स्त्रियाम् काकस्य सकृत्प्रजत्वञ्च काकरुतशब्दोक्तप्रमाणादवसेयम्। "काकबन्ध्या च या नारी मृतापत्या च या भवेत्। बह्वपत्या जीववत्सा सा भवेन्नात्र संशयः" पद्मपु० रामकवचम्।

**काकबलि** पु० ४त०। काकेभ्योदेयेबलौ काकरुतशब्दे विवृतिः

**काकभाण्डी** स्त्री काकस्य ईषज्जलस्य सुखनिस्रावहेतुकस्य भाण्डी क्षुद्रभाण्डमिव। महाकरञ्जे राजनि०। तत्फलसेवनात् सुखात् ईषज्जलस्रावात्तस्यास्तथात्वम्।

**काकभीरु** पु० ५त०। पेचके त्रिका०।

**काकमद्गु** पु० काक इव कृष्णो मद्गुः दात्यूहे खगे त्रिका० "घृतं हृत्वा तु दुर्बुद्धिः काकमद्गुः प्रजायते" भा०अनु० ५५२० श्लो०।

**काकमर्द** पु० काकं मृद्नाति मृद-अण् उप० स०। (माखालशशा) इति ख्याते महाकालवृक्षे राजनि०। स्वुल्। काकमर्दकोऽप्यत्र रत्नमाला।

**काकमाची** स्त्री काकान् मञ्चते मचि—अण् पृषो० नलोपः पा० गौरा०ङीष्, मुग्ध०मते ईप्। कटफललतायाम्। (कठेया गुड्कामाइ) इति ख्याते वृक्षे भावप्र०। तत्पर्य्यायगुणाद्युक्तं तत्रैव यथा—"काकमाची ध्वाङ्क्षमाची काकाह्वा चैव वायसी। काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रदा। तिक्ता रसायनी शोथकुष्ठार्शोज्वररोगजित्। कटुर्नेत्रहिता हिक्काच्छर्दिहृद्रोगनाशिनी" "काकमाचिजनितं मृदुशाकं वेशवारमिलितं शुभवासम्। तप्ततैलतलनेन सुपाकं कैरवाक्ष न कृतं सुखवासम्" इत्यत्र वैद्यके ध्वसंज्ञायामपि "ङ्यापोरिति" पा०ह्रस्वः इति बोध्यम्। स्वार्थे कन् काकमाचिकाऽप्यत्र।

**काकमातृ** स्त्री काकस्य मातेव पोषिका तस्य तत्फलप्रियत्वात्। काकमाच्याम्। राजनि०।

**काकमुद्गा** स्त्री काकेन ईषज्जलेन मुदं गच्छति गम—ड। मुद्गपर्ण्याम् अमरः।

**काकयव** पु० काकमीषज्जलमत्र तादृशो यव इव नीरसत्वात्। (आगडा) इति ख्याते पदार्थे "यथाऽफलाः षण्ढतिलाः यथा चर्ममया मृगाः। तथैव पाण्डवाः सर्वे यथा काकयवा इव" भा० १७५ अ०। "काकयवा निष्फलतृणधान्यानि" नीलकण्ठः।

**काकरुत** न०काकस्य रुतम्। काकशब्दे। काकादिरवादेः भाविशुभाशुभसूचकतया शकुनत्वं यथाह वृह०सं० ९५अ०। "प्राच्यानां दक्षिणतः शुभदः काकः करालको वामे। विपरीतमन्यदेशेष्ववधिर्लोकप्रसिद्धैव। वैशाखे निरुपहते वृक्षे नीडः सुभिक्षशिवदाता। निन्दितकण्टकिशुष्केष्वसुभिक्षभयानि तद्देशे। नीडः प्राक्शाखायां शरदि भवेत्प्रथमवृष्टिरपरस्याम्। याम्योत्तरयोर्मध्या प्रधानवृष्टिस्तरोरुपरि। शिखिदिशि मण्डलवृष्टिर्नैरृत्यां शारदस्य निष्पत्तिः। परिशेषयोः सुभिक्षं मूषकसम्पत्तु वायव्ये। शरदर्भगुल्मवल्लीधान्यप्रासादगेहनिम्नेषु। शून्यो भवति स देशश्चौराऽनावृष्टिरोगार्त्तः। द्वित्रिचतुःशावत्वं सुभिक्षदं पञ्चभिर्नृपान्यत्वम्। अण्डावकिरणमेकाण्डताप्रसूतिश्च न शिवाय। चौरकवर्णैश्चौराश्चित्रैर्मृत्युः सितैश्च वह्निभयम्। विकलैर्दुर्भिक्षभयं काकानां निर्दिशेच्छिशुभिः। अनिमित्तसंहतैर्ग्रामभयं क्षु-

ध्रुवं प्रवासयद्भिः। रोषश्च काकैरभिघातो वर्णवर्गस्थैः। अभयाश्च तुण्डपक्षैश्चरणविघातैर्जनानभिभवन्तः। कुर्वन्ति शत्रुवृद्धिं निशि विचरन्तो जनविनाशम्। सव्येन खे भ्रमद्भिः स्वभयं, विपरीतमण्डलैश्च परात्। अत्याकुलं भ्रमद्भिर्वातोद्भ्रामो भवति काकैः। ऊर्ध्वमुखाश्चलपक्षाः पथि भयदाः क्षुद्भयाय धान्यमुषः। सेनाङ्गस्था युद्धं परिमोषं चान्यभृतपक्षाः। भस्मास्थिकेशपत्राणि विन्यसन् पतिवधाय शय्यायाम्। मणिकुसुमाद्यवहनेन सुतस्य जन्माङ्गनायाश्च। पूर्णाननेऽर्थलाभः सिकताधान्यार्द्रमृत्कुसुमपूर्वैः। भयदो जनसंवासाद् यदि भाण्डान्यपनयेत्काकः। वाहनशस्त्रोपानच्छत्रच्छायाङ्गकुट्टने मरणम्। तत्पूजायां पूजा विष्ठाकरणेऽन्नसम्प्राप्तिः। यद्द्रव्यमुपनयेत्तस्य लब्धिरपहरति चेत्प्रणाशः स्यात्। पीतद्रव्ये कनकं, वस्त्रं कार्पासिके, सिते रूप्यम्। सक्षीरार्जुनवञ्जुलकूलद्वयपुलिनगा रुवन्तश्च। प्रावृषि वृष्टिं दुर्दिनमन्यतो स्नाताश्च पांशुजालैः। दारुणनादस्तरुकोटरोपगो वायसो महाभयदः। सलिलमवलोक्य विरुवन् वृष्टिकरोऽब्दानुरावी वा। दीप्तोद्विग्नो विटपे विकुट्टयन् वह्निकृद्विधुतपक्षः। रक्तद्रव्यं दग्धं तृणकाष्ठं वा गृहे विदधत्। ऐन्द्रादिदिगवलोकी सूर्याभिमुखो रुवन् गृहे गृहिणः। राजभयचोरबन्धनकलहाः स्युः पशुभयं चेति। शान्तामैन्द्रीमवलोकयन् रुयाद्राजपुरुषमित्राप्तिः। भवति च सुवर्णलब्धिः शाल्यन्नगुडाशनाप्तिश्च। आग्नेय्यामनलाजीविकयुवतिप्रवरधातुलाभश्च। याम्ये माषकुलत्थाभोज्यं गान्धर्विकैर्योगः। नैरृत्यां दूताश्वोपकरणदधितैलपललभोज्याप्तिः। वारुण्यां मांससुरासवधान्यसमुद्ररत्नाप्तिः। मारुत्यां शस्त्रायुधसरोजवल्लीफलाशनाप्तिश्च। सौम्यायां परमान्नाशनतुरङ्गाम्बरप्राप्तिः। ऐशान्यां सम्प्राप्तिर्घृतपूर्णानां भवेदनडुहश्च। एवं फलं गृहपतेर्गृहपृष्ठसमाश्रिते भवति। गमने कर्णसमक्षे तु क्षेमाय न कार्यसिद्धये भवति। अभिमुखमुपैति यातुर्विरुवन्विनिवर्त्तयेद्यात्राम्। वामे वाशित्वादौ दक्षिणपार्श्वेऽनुवाशते यातुः। अर्थापहारकारी तद्विपरीतोऽर्थसिद्धिकरः। यदि वाम एव विरुयान् मुहुर्मुहुर्ज्ञयायिनोऽनुलोमगतिः। अर्थस्य भवति सिद्धिः प्राच्यानां दक्षिणश्चैवम्। वामः प्रतिलोमगतिर्वाशन् गमनस्य विघ्नकृद्भवति। तत्रस्थस्यैव फलं कथयति यद्वाञ्छितं गमने। दक्षिणविरुतं कृत्वा वामे विरुयाद्यथेप्सितावाप्तिः। प्रतिवाश्य पुरो यायाद् द्रुतमयेऽर्थागमोऽतिमहान्। प्रतिवाश्य पृष्ठतो दक्षिणेन यायाद् द्रुतं क्षतजकर्त्ता। एकचरणोऽर्कमीक्षन् विरुवंश्च पुरो रुधिरहेतुः। दृष्ट्वार्कमेकपादस्तुण्डेन लिखेद्यदा स्वपिच्छानि। परतो जनस्य महतो वधमभिधत्ते तदा बलिभुक्। सस्योपेते क्षेत्रे विरुवति शान्ते सशस्यभूलब्धिः। व्याकुलचेष्टो विरुवन् सीमान्ते क्लेशकृद्यातुः। सुस्निग्धपत्रपल्लवकुसुमफलानम्रसुरभिमधुरेषु। सक्षीराव्रणसुस्थितमनोज्ञवृक्षेषु चार्थकरः। निष्पन्नसस्यशाद्वलभवनप्रासादहर्म्यहरितेषु। धान्योच्छ्रयमङ्गल्येषु चैव विरुवन् धनागमदः। गोपुच्छस्थे वल्मीकगेऽथवा दर्शनं भुजङ्गस्य। सद्यो ज्वरो महिषगे विरुवति गुल्मे फलं स्वल्पम्। कार्यस्य व्याघातस्तृणकूटे वामगेऽस्थिसंस्थे वा। ऊर्ध्वाग्निप्लुष्टेऽशनिहते च काके वधो भवति। कण्टकिमिश्रे सौम्ये सिद्धिः कार्यस्य भवति कलहश्च। कण्टकिनि भवति कलहो वल्लीपरिवेष्टिते बन्धः। छिन्नाग्रेऽङ्गच्छेदः कलहः शुष्कद्रुमस्थिते ध्वाङ्क्षे। पुरतश्च पृष्ठतो वा गोमयसंस्थे धनप्राप्तिः। मृतपुरुषाङ्गावस्थितोऽभिवाशन् करोति मृत्युभयम्। भग्नास्थि च चञ्च्वा यदि वाशत्यस्थिभङ्गाय। रज्ज्वस्थिकाष्ठकण्टकिनिःसारशिरोरुहानने रुवति। भुजगदंष्ट्रितस्करशस्त्राग्निभयान्यनुक्रमशः। सितकुसुमाशुचिमांसाननेऽर्थसिद्धिर्यथेप्सिता यातुः। रुवन् पक्षावूर्ध्वानने च विघ्नं मुहुः कथयति। यदि स्फुलां वरत्रां वल्लीं वादाय वाशते बन्धः। पाषाणस्थे च भयं क्लिष्टापूर्वाधिकयुतिश्च। अन्योऽन्यभक्ष्यसङ्क्रामिताननेऽतुष्टिरक्षमा भवति। विज्ञेयः स्त्रीलाभो दम्पत्योर्वाशतोर्युगपत्। प्रमदाशिरउपगतपूर्णकुम्भसंस्थेऽङ्गनार्थसम्प्राप्तिः। घटकुट्टने सुतविपद् घटोपहनेऽन्नसम्प्राप्तिः। स्कन्धावारादीनां निवेशसमये रुवंश्चलत्पक्षः। सूचयतेऽन्यस्थानं निश्चलपक्षस्तु भयमात्रम्। प्रविशद्भिः सैन्यादीन् सम्प्रकर्कशैर्विनामिषं ध्वाङ्क्षैः। अविरुद्धैस्तैः प्रीतिर्द्विषतां युद्धं विरुद्धैश्च बन्धः। शूकरसंस्थे पङ्कान्ते शूकरे द्विकेऽर्थाप्तिः। क्षेमं खरोष्ट्रसंस्थे केचित्प्राहुर्वधं तु खरे। वाहनलाभोऽश्वगते,विरुवत्यनुयायिनि क्षतजपातः। अन्येऽप्यनुव्रजन्तो यातारं काकवद्विहगाः। द्वात्रिंशत्प्रविभक्ते दिक्चक्रे यद्यथा समुद्दिष्टम्। तत्तत्तथाऽभिधेयं गुणदोषफलं शिवाद्यानाम्। का इति काकस्य रुतं स्वनिलयसंस्थस्य निष्फलं प्रोक्तम्। कव इति चात्मप्रीत्यै

क इति रुते स्निग्धमित्राप्तिः। कट इति कलहं कुरुकुरु, हर्षमथ कटकटेति दधिभक्तम्। केके विरुतं कुकु वा धनलाभं यायिनः प्राह। खरे खरे पथिका-गममाह कखाखेति यायिनो मृत्युम्। गमनप्रतिषेधक-माखलखल सद्योऽभिवर्षाय। काकेति विघातं काक-टोति चाहारदूषणं प्राह। प्रीत्यास्पदं कवकवेति बन्धमेवं कगाकुरिति। करकौ विरुते वर्षं गुड़यच्छाभाय, वडिति वस्त्राप्तिः। कलयेति च स योगः शूद्रस्य ब्राह्मणैः साकम्। फडिति फलाप्तिः फलवाहिदर्शनं टडिति प्रहाराः स्युः। स्त्रीलाभः स्त्रीति रुते गडि-ति गवां, पुडिति पुष्पाणाम्। युद्धाय टाकुटाकिति गुडु वह्निभयं कटेकटे कलहः। टाकुलि चिमिटचि केकेकेति घुरघुरिति दोषाय। काकद्वयस्यापि समा-नमेतत् फलं यदुक्तं रुतचेष्टिताद्यम्। पतत्त्रिणोऽन्ये ऽपि यथैव काको वन्याः श्ववच्चोपरिदंष्ट्रिणो ये। स्थल सलिलचराणां व्यत्ययो मेघकाले प्रचुरसलिलदृष्ट्यै शेषकाले भयाय। मधु भवननिलीनं तत्करोत्याशु शून्यं मरणमपि निलीनाम क्षिका मूर्ध्नि नीला। विनिक्षिपन्त्यः सलिले ऽण्डकानि पिपीलिका दृष्टिनिरोधमाहुः। तरुस्थलं वापि नयन्ति निम्नाद्द यदा तदा ताः कथ-यन्ति दृष्टिम्। कार्य्यं तु मूलशकुने ऽन्तरजे तदह्नि विन्द्यात् फलं नियतमेवमिमे विचिन्त्याः। प्रारम्भयान-समयेषु तथा प्रवेशे ग्राह्यं क्षुतं न शुभदं क्वचिदप्यु-शन्ति। शुभं दयापाकमविघ्नसिद्धिं मूलाभिरक्षामथ वा सहायान्। दृष्टस्य संसिद्धिमनामयत्वं वदन्ति ते मानयितुर्नृपस्य। क्रोशादूर्द्ध्वं शकुनिविरुतं निष्फलं प्राहुरेके तत्रानिष्टे प्रथमशकुने मानयेत्पञ्च षट् च। प्राणायामान्नृपतिरशुभे षोडशैव द्वितीये प्रत्यागच्छेत् स्वभवनमतो यद्यनिष्टस्तृतीयः"।

काकस्य वर्णादिभेदेन विप्रादिभेदकथनपूर्ब्बकं कालभेदेन तद्रुतादिफलमुक्तं वसन्तराजशाकुने यथा

"अथोच्यते काकरुतं रुतानां मूर्द्ध्नि स्थितं शाकुन-भाषितानाम्। अचिन्तितावेदितकार्य्यसिद्धिः पूर्वा-दिकाष्ठाप्रहरक्रमेण। ये ब्राह्मणक्षत्रियवैश्यशूद्राः काका भवन्त्यन्त्यजपञ्चमास्ते। वर्णाकृतिभ्यां ऋषिभा-षिताभ्यां सदाभियुक्तैरुपलक्षणीयाः। बृहत्प्रमाणो गुरुदीर्घतुण्डो दृढस्वरः कृष्णवपुः स विप्रः। पिङ्गाक्ष-नीलाक्षविमिश्रवर्णः स्यात् क्षत्रियस्तीक्ष्णरवोऽतिशूरः। यः पाण्डुनीलः सितनीलचञ्चुर्नात्यर्थरूढो रटितश्च वैश्यः। भस्मच्छविर्भूरिककारशब्दः शूद्रः कृशाङ्गश्चपलो निकृष्टः। विकृष्णसूक्ष्मास्ततनुर्विशङ्को यः कष्ट-रादीप्तरवं बिभर्त्ति। स्थिरारवः स्थैर्य्यसमेतबुद्धिः काकोऽन्त्यजातिः खलु पञ्चमोऽत्र। द्रोणाभिधः कृष्ण-वपुर्द्विजो यो ग्राह्यः स काकः खलु मुख्यवृत्त्या। तस्मा-द्रुते श्यामगलो निरीक्ष्यः श्वेतश्च निन्द्योऽङ्गतदर्शने ऽसौ। विप्रः स्फुटं जल्पति पृच्छ्यमानो न्यूनं ततः क्षत्रि-यजातिराह। आख्याति वैश्यस्त्वधिवासनेन ब्रवीति शूद्रो बलिदानलोभात्। प्रश्नं कृतं जल्पति कृष्णवर्णः सदा समस्तं विहगोऽन्त्यजातिः। सद्यस्त्रिसप्ताहदशाह-पक्षैः पञ्चापि काकाः फलदाः क्रमेण। शान्ते प्रदीप्ते च रटन् विहङ्गः शुभप्रदो दीप्तपराङ्मुखः सन्। न क्वापि रौद्रो रटितः प्रशस्तः सर्वत्र शस्तो मधुरश्च रक्तः। दीप्तस्थितो यः परुषस्वरेण विरौति दीप्ताभिमुखः स का-र्य्यम्। निष्पाद्य निर्नाशयते च सम्यग्दीप्तोन्मुखः शान्त-रवो हि सिद्ध्यै। शान्तप्रदीप्ताभिमुखो विधाय शब्दं प्रविश्याथ पुनः प्रदीप्ताम्। यो रौति काको मधुरस्वरेण कृत्वा विरुद्धं स ददाति सिद्धिम्। विधाय दीप्ताभिमुखो विरावं ततः प्रशान्ताभिमुखो विरौति। यो वायसोऽसौ विनिहन्त्यसम्यक्कार्य्याणि सर्वाणि पुनः करोति"। विप्रादिश०

सूर्य्योदये पूर्वदिशि प्रशस्तस्थाने स्थितो योऽभिमुखं विरौति। नाशं रिपोश्चिन्तितकार्य्यसिद्धिं स्त्रीरत्नलाभं स करोति काकः। ध्वाङ्क्षः प्रभाते यदि वह्निभागे विरौति तिष्ठन् रमणीयदेशे। शत्रून् प्रणाश्यत्यचिराद्विशङ्कः प्रयाति योषित् समवाप्यते तत्। रुवन् प्रभाते दिशि दक्षिणस्यां काकः समावेदयतेऽतिदुःखम्। रोगार्त्तिमृत्युं परुष-स्वरेण रम्येण चेष्टागमयोषिदाप्तिम्। नैर्ऋत्यभागे यदि च प्रभाते करोति काकः सहसा विरावम्। क्रूरं ततः कर्म्म समभ्युपैति दूतागमो मध्यमिका च सिद्धिः। प्रातः प्रतीच्यां यदि रौति काको ध्रुवं तदा वर्षति वारिवाहः। स्त्रीवस्त्रभूम्युत्पुरुषागमश्च कलिः कलत्रेण समं तदा स्यात्। ध्वाङ्क्षस्य शब्दे पवनालयस्थे वस्त्राद्ययानाभि-मतागमाः स्युः। पान्थागमः प्राक्तनवृत्तिनाशः स्यादन्यदेशे गमनं स्वदेशात्। दिश्युत्तरस्यां सुरवः प्रभाते निरीक्ष-माणो बलिभुग् नराणाम्। ददाति दुःखं भुजगाच्च भीतिं दरिद्रतां नष्टधनेष्टलाभम्। दिशीशवत्यां यदि रौति काक आगच्छतस्तद्वनितान्त्यजातौ। व्याधेर्निमित्तं

प्रियवस्त्रलाभो भवेत्तदा रोगवलेऽवसानम्। ब्रह्मप्रदेशे स्थितवायसस्य प्रभातकाले मधुरस्वरेण। अभीप्सितार्थागमनं ध्रुवं स्यात् स्वामिप्रसादो द्रविणस्य लाभः”। इति सूर्य्योदये काकशकुनम्। “पूर्वत्र यामे प्रथमे सशब्दः काको भवेच्चिन्तितकार्य्यसिद्धैय। अभीष्टलोकागमनं तथा स्यान्नष्टार्थलाभो नियतं नराणाम्। आग्नेयभागे यदि चाद्ययामे स्त्रीलाभविद्वेषिवधौ भवेताम्। कृतान्तभागे बलिभुग्विरावः स्त्रीलाभसौख्यप्रियसङ्गकारी। नैरृत्यकोणे प्रिययोषिदाप्तिर्मिष्टाशनं सिद्ध्यति चिन्तितोऽर्थः। दिशि प्रतीच्यां विरुते भवेतामभ्यर्थनीयागमनाम्बुवृष्टी। वायव्यकोणे करटः शुभः स्यात् नृपप्रसादोऽध्वगदर्शनं च। सौम्ये च भीतस्करशोकवार्त्ता सौम्या च वार्त्ता धनलाभवार्त्ता। ईशानदेशेऽभिमतेन सङ्गस्त्रासो हुताशाद्वहुलोकसङ्गः। ब्रह्मप्रदेशे सुखकामभोगः सम्मानसम्पद्द्रविणेष्टसिद्धिः”। इति प्रथमप्रहरे शकु०। “प्राच्यां द्वितीये प्रहरे विरावैः काकस्य कश्चित् पथिकोऽभ्युपैति। चौराद्भयं व्याकुलता च वह्नौ जायेत काचिन्महती च शङ्का। हुताशदेशे नियतं कलिः स्यात् प्रियागमाकर्णनयोषिदाप्तिः। याम्ये तु वृष्टिर्महती च भीतिः प्रियस्य चेष्टस्य समागमः स्यात्। रक्षोदिशि प्राणभयं तदा स्युः स्त्रीभोज्यलाभाखिलरुक्प्रणाशाः। भवेत् प्रतीच्यां प्रबला बलाप्तिर्योषागमो वृद्धिसुवर्णं च। समीरभागे ध्वजचौरसङ्गो दूतागमस्त्रीपिशिताल्नलाभः। सौम्ये गणेशागमनं जयं च रम्ये रवे चौरभयं त्वरण्ये। महेश्वराशाविरुतश्च काकश्चौराग्निसंत्रासविरुद्धवार्त्ताः। ब्रवीति रुक्षै रटनैररुक्षैः सदार्य्यगुर्वागमनं जयं च। ब्रह्मप्रदेशे प्रहरे द्वितीये काकः सुशब्दो नृपतिप्रसादम्। मिष्टान्नभोज्यं च ददाति पुंसां करोत्यसौ चौरभयं कुशब्दः”। इति द्वितीयप्रहरश०। “ऐन्द्र्यां विरुक्षः प्रहरे तृतीये वृद्धिं तथा चौरभयं ब्रवीति। कृष्णस्तु राजागमनं जयं च करोति यात्रां शुभकार्य्यसिद्धिम्। अग्नेर्विभागेऽग्निभयं कलिश्च विरुद्धवार्त्ता विफला च यात्रा। भवेद्विरुद्धैर्बलिभुग्विरावैर्जयादिवार्त्ता च भवेद्विशुद्धैः। ककुभ्यवाच्यां कुरुतेऽतितूर्णं रोगं तथाप्तागमनं विहङ्गः। क्षुद्राणि कार्य्याणि च यान्ति सिद्धिं सर्वाणि तन्मुख्यतया नराणाम्। क्रव्याद्देशे जलदागमः स्यान्मिष्टान्नलाभो रिपवो न सन्ति। शूद्रागमः स्वामिविरुद्धवार्त्ता भवन्ति यात्रासु च कार्य्यनाशः। स्यात् पश्चिमे नष्टधनस्य लाभो दूराध्वयानं सुहृदागमश्च। योषागमोऽभीष्टजयादिवार्त्ता यात्रासु रम्ये रटितेऽर्थसिद्धिः। वातालये दुर्दिनमेव वार्त्ता चौराभिनष्टार्थसमागमश्च। सन्तोषवार्त्ता वरयोषिदाप्तिर्यात्रा रवे स्यान्मधुरे प्रशस्ता। यामे तृतीये विरुवन्त्युदीच्यां कार्य्यार्थलाभो नृपसेवकानाम्। भोज्यप्रवृत्तिः शुभदा च वार्त्ता प्रयाणकं वैश्यसमागमश्च। दिश्यन्धकारेः कुरुते सुशब्दो भोज्यं जयं हानिकली कुशब्दः। ब्रह्मप्रदेशे तिलतण्डुलाभ्यां भोज्यं च ताम्बूलयुतं ददाति”। इति तृतीयप्रहरशकु०। “ऐन्द्र्यां तुरीयप्रहरेऽर्थलाभो भूमीशपूजा भयवृद्धिरोगाः। वह्नेर्विभागे भयरोगमृत्युः शिष्टागमो वायसवाशितेन। याम्ये रवे तस्करवैरिभीती स्यातां विशिष्टागमरोगमृत्युः। स्यात् यातुधान्यां महती प्रवृद्धिरभीष्टसिद्धिः पथि चौरयुद्धम्। दिशि प्रतीच्यां प्रहरे चतुर्थे द्विजातिरभ्येति ततोऽर्थलाभः। आयाति योषिद्विजयाम्बुवृष्टिः सिद्धिः प्रयाणे नृपतेर्वरश्च। वायव्यभागे करटस्य शब्दैरायाति योषित् प्रियमानिनी या। ध्रुवं प्रवासो दिनसप्तकेन शीघ्रागमः स्यात् गमने कृते च। कुवेरभागे पथिकोऽभ्युपैति ताम्बूललाभः कुशलस्य वार्त्ता। वैश्याङ्गनाप्तिस्तुरगादिरूढा यात्रा विरुद्धे म्रियते च रोगी। स्थाणौ स्थितः स्याद्बलिभुग्विरावैः सुवर्णवार्त्ता सरुजो विनाशः। ब्रह्मप्रदेशे प्रहरे चतुर्थे वार्त्ता भवेन्मध्यमिका च सिद्धिः”। इति चतुर्थप्रहरशकु०। “यद्भाषितं शाकुनिकैर्विमिश्रं शुभाशुभं दिक्प्रहरक्रमेण। तत्राशुभं यच्छति दीप्तशब्दः श्रेयस्करः शान्तरवश्च काकः। रम्यं रवं दीप्तदिशि प्रसर्पन् शान्तां दिशं भूरि फलं ददाति। तदैव तुच्छं वितरत्यसौ वै दीप्ता स्थितः पश्यति दीप्तकाष्ठाम्। यथोपदिष्टं फलमत्र दुष्टं तथैव तद्दीप्तदिशि स्थितः सन्। ध्वाङ्क्षोऽधिरूढो विरुवन् करोति निरीक्षमाणः ककुभं प्रदीप्ताम्। काकः प्रशान्ताभिमुखोऽतितुच्छं दीप्ताश्रितो दुष्टफलं ददाति। श्यामाश्रितः शान्तदिगीक्षणेन रुक्षारवोऽल्पं कथयत्यनिष्टम्। शान्तस्वरः शान्तककुप्प्रदेशे तिष्ठन् प्रदीप्तां ककुभञ्च पश्यन्। ददात्यभीष्टं फलमेवमल्पं दीप्तां स पश्यंस्तु तदेव तूर्णम्। आकारचेष्टारवभागविज्ञाश्चत्वारि काष्ठादिनयोः क्रमेण। सदाभियुक्ताश्च निरूपयन्ति यस्माच्च ते काकरुतं मनुष्याः”। इति काकरुते दिक्चक्रभेद शकु०। “वर्षकालमधिकृत्य किञ्चन प्रोच्यते बलिभजो

यथाक्रमम्। आलयाण्डकविचारसुन्दरं शाकुनं सकल-
शाकुनोत्तमम्। वैशाखमासे निरुपद्रवेषु द्रुमेषु काकस्य
शुभाय नीड़म्। निन्द्येषु शुष्केषु सकण्टकेषु द्रुमेषु दु-
र्भिक्षमलाभहेतुः। प्रशस्तवृक्षे यदि पूर्वशाखामाश्रित्य
काकेन कृतः कुलायः। तद्वृष्टिरिष्टा शकुनप्रमोदो नीरो-
गता स्याद्विजयश्च राज्ञः। आग्नेयशाखारचिते च नीडे
स्याद्वृष्टिरिष्टार्त्तिभयं कलिश्च। दुर्भिक्षशत्रुद्रवदेश-
भङ्गो भवन्ति रोगाश्च चतुष्पदानाम्। याम्यासु शाखासु
च वायसेन नीड़े कृतेऽल्पं जलपातमाहुः। व्याधि-
प्रकोपं मरणं समन्तादन्नक्षयं शत्रुविरोधितां च। नै-
र्ऋत्यशाखारचिते च नीडे तस्माच्छनैर्वर्षति वर्षकाले।
पीड़ा नृणां विप्लवचौरभीतिदुर्भिक्षयुद्धानि भवन्त्य-
वश्यम्। नीडे कृते पश्चिमवृक्षशाखामाश्रित्य काकैः
कथिता च वृष्टिः। नीरोगता क्षेमसुभिक्षवृद्धिः सम्पत्-
प्रमोदाश्च भवन्ति लोके। वायव्यशाखासु कृते च नीड़े
प्रभूतवातात्पजलाश्च मेघाः। स्युर्मूषिकोपद्रवशस्यनाश
पक्षद्वयोद्वेगमहारिरोधाः। कौवेरशाखामधिकृत्य
नीड़े कृते भवेत् प्रावृषि वृष्टिरिष्टा। भवन्ति च क्षेमसुभि-
क्षसौख्यनीरोगतावृद्धिसमृद्धयोऽस्मिन्। ईशानशाखासु
च वृष्टिरल्पा वैरं प्रजानामुपसर्गदोषः। स्याद्बान्धवानां
कलहप्रवृत्तिर्मर्य्यादया हीयत एष लोकः। वृक्षाग्र-
नीड़े त्वतिवर्षकाले मध्ये पुनर्मध्यमतोयपातः। वृक्षापि
वृष्टिर्न भवत्यधस्तात् स्फुटं दिशोक्तं न दिशः स्फुटत्वम्।
अवृष्टिरोगादिभयादिवृद्धिं विद्याच्च भूमौ बलिभुक्
कुलाये। शुष्के च वृक्षे डमराग्निनाशौ प्राकाररन्ध्रे च
भयं प्रभूतम्। निम्नप्रदेशे तरुकोटरे वा वल्मीकरन्ध्रे व्रत-
तिष्वपीह। काकस्य नीडे रुगवृष्टिदोषैर्भवन्ति शून्या
नियमेन देशाः”। इति काकनीड़शकुनम्। अथ
काकाण्डशकुनम्। “एकं भवेद्वारुणमग्निसंज्ञं द्वि-
तीयकं मारुतकं तृतीयम्। ऐन्द्रं तथा नाम चतुर्थमेव
मण्डानि काक्याः परिकीर्त्तितानि। काक्या भवेद्वारुण-
मण्डकं चेत् पृथ्वी तदा नन्दति सर्वशस्यैः। मन्दप्रवर्षो
ऽनलसंज्ञके ऽण्डे नोप्तस्य वीजस्य भवेत् प्ररोहः। जा-
तानि शस्यानि समीरणेऽण्डे खादन्ति कीटाः शलभाः
शुकाद्याः। क्षेमं सुभिक्षं सुखिता धरित्री स्यादैन्द्रके
ऽण्डेऽभिमता च सिद्धिः”। इति काकाण्डश०। “यात्रा-
निमित्तानि च कीर्त्तयामः सकृत्प्रजानां शकुनानि यानि।
विज्ञाय तानि प्रजहात्यनर्थानर्थांश्च सर्वान् कुरुतेऽध्वनीनः।
भुङ्क्ते बलिं पक्षिषु मन्त्रपूतं त्वं प्राणिषु प्राणिषि वर्णलक्षम्।
शुभ्रेन च स्त्रीं भजसे नमोऽस्तु तुभ्यं खगेन्द्राय सकृत्-
प्रजाय। विलोक्य काकं विनिवेद्य तस्मै मन्त्रेण पूजां
दधिभक्तयुक्ताम्। उदीर्य्य कार्य्यं निजमध्वगेन विलोक-
नीयं शकुनं तदर्थम्। वामेन शब्दं मधुरं विमुञ्चन् व्रजं
स्ववामेन करोति काकः। सर्वार्थसिद्धिं पुनरागमञ्चा-
शुभप्रदेशे तु तदन्यरूपम्। प्रदक्षिणं संप्रविधाय मार्गे
वामेन काको विनिवर्त्ततेऽसौ। यातुः करोतीप्सितकार्य्य-
सिद्धिं क्षेमञ्च शीघ्रं पुनरागमञ्च। वामे कलं रौत्यनु-
लोमयायी यो वायसो ऽसौ सकलार्थसिद्ध्यै। स्यातां
क्रमाद्दक्षिणवामशब्दौ सिद्ध्यै, विरुद्धौ विपरीतभूतौ। पृष्ठे
विरावं मधुरं विमुञ्चन्ननुव्रजंश्चापि मतो हिताय।
प्रायेण यातारमनुव्रजन्तः सर्वेऽपि काकैः कथिता वि-
हङ्गाः। कृत्वा रवं यः पुरतः प्रयाति उपस्थितो यो
मुदमादधाति। कण्डूयते यः स्वशिरोऽङ्घ्रिणाऽसौ
पुंसां तदाभीष्टफलं ददाति। स्तम्भे गजानां नियतं
गजाप्तिं गजेऽधिरूढः पृथिवीपतित्वम्। तुरङ्गमे वाहन-
भूमिलाभं करोति काको विजयं ध्वजे च। प्रनष्टलाभं
विजयं च कूपे, क्षिप्रं नदीरोधसि कार्य्यसिद्धिम्। पूर्णे
घटेऽङ्गिश्च धनाप्तिवृद्धिं ध्वाङ्क्षोऽधिरूढः कुरुते स-
शब्दः। प्रासादधान्योच्चयहर्म्यपृष्ठनिष्पन्नशस्यावनि
शाद्वलादौ। ध्वाङ्क्षो ऽधिरूढो धनसाधनाय रौति श्रियं
यच्छति गुम्फरावः। पृष्ठे पुरो वा यदि गोमयस्थो तथा
वटाद्येषु तरुष्वपीह। स्थितो रुवन् भोजनपानमिष्टं
विश्रां च कुर्वन् वितरत्यवश्यम्। अन्नाद्यविष्ठाफलमूल-
पुष्पमत्स्यादिभिः पूर्णमुखः सदैव। संदृष्टमात्रो ऽभि-
मतार्थसिद्ध्यै मिष्टान्नभोज्याय सदैव काकः। नारीशिरः-
पूर्णघटस्थितस्य काकस्य शब्दैर्वनिताधनाप्तिः। शय्याधि-
रूढस्य च तस्य शब्दैः समागमः स्यात् स्वजनेन सार्द्धम्।
गोपृष्ठदूर्वातरुगोमयेषु तृणानि सर्पन्नवलोकिताग्रः।
आहारमन्यस्य तथा ददानो ददाति भोज्यं बलिभु-
ग्विचित्रम्। धान्यं यवं वा दधि वापि चाज्यं विरौति
पश्यन्निधिलाभकारी। करोति लाभं पुरतः स दृष्टो
यस्यास्ति वक्त्रे तृणमप्यशुष्कम्। वृक्षेषु रम्याङ्कुरपत्र-
पुष्पच्छायाफलाद्येषु सकृत्प्रजस्य। शब्देन सिध्यन्त्य-
सकृन्नराणां सदैव सर्वाणि समीहितानि। प्रशान्तनादः
शिखरे तरूणां स्त्रीसङ्गसौख्यं करटोऽभिधत्ते। धा-
न्यादिकूटेषु तथान्नलाभो गोपृष्ठगो गोवनिताधनाप्तिम्।

क्षेमं विधत्ते करभस्य पृष्ठे खरस्य पृष्ठेऽरिभयं बधञ्च । क्रोड़स्य पृष्ठे बधमर्थलाभं तस्यैव पृष्ठे घनलग्नपङ्के । सद्योज्वरं सैरिभपृष्ठसंस्थो मृताङ्गसंस्थो मरणं करोति । कार्य्यक्षतिं रिक्तघटस्य संस्थः काकः कलिं काष्ठमधिष्ठितश्च । यो दक्षिणं कूजति दक्षिणेन प्रयाति यश्चाभिमुखोऽभ्युपैति । यो याति पृष्ठे प्रतिलोमगत्या क्षतारवः पातयते स रक्तम् । वामे रवो दक्षिणतस्ततो यः सोऽनर्थहेतुर्बलिभोजनस्य । वामप्रदेशे प्रतिलोमयानं विज्ञाय लाभो गृह एव तेन । प्रयाति पृष्ठे यदि दक्षिणेन क्षतारवस्तद्रुधिरं पुरः स्यात् । वल्लीवरत्वादि च यो गृहीत्वा प्रदक्षिणं याति स सर्पभीत्यै । गोपुच्छवल्मीकलतास्वदश्च रुवन् भवेत् सर्पविलोकनाय । स्नात्मत्वेऽङ्गारचितास्थिसंस्थः काकः प्रकुर्वन् करचर्वणं च । रुवन् पुरो हानिरुजौ करोति मृत्युं पुनर्निष्ठुरपृष्ठशब्दः । प्रसार्य रिक्तं वदनं य आस्ते सर्वत्र निन्द्यो बलिभोजनोऽसौ । वामोऽप्यसृक्पातभयं क्षतिं वा सन्ताड़यन् वा रदचर्म्मखण्डम् । चञ्च्वाऽस्थिभङ्गं प्रवमस्थिभङ्गबन्धौ बधं जल्पति युध्यमानः । वामोऽपि रोगं कुरुते विशुष्के तिक्तेऽपि वृक्षे कलिकार्य्यनाशौ । पक्षौ विधुन्वन् विरुवंश्च वृक्षं सकण्टके मृत्युमुपादधाति । बधो भवेद्वृक्षभग्नशाखे बन्धो लताभिः परिवेष्टिते स्यात् । रम्ये तरौ कण्टकयुक्तवृक्षे सदा भवेतां कलिकार्य्यसिद्धी । वृक्षाधिरूढो न रवेण यायात् प्रयाति चेत् स्यात् खलु रक्तपातः । अवस्कराम्भस्तृणकाष्ठकूपभस्मादिसंस्थो विनिहन्ति कार्य्यम् । वल्लीवरत्वाकच शुष्ककाष्ठचर्म्मास्थिजीर्णाम्बरवल्कलानि । अङ्गाररक्तोत्पलकर्पराणि दृष्टानि चेत् काकमुखे तदानीम् । पुण्यत्रय: पापसमागमश्च महद्भयं रोगसमुद्भवश्च । बन्धो बधः सर्वधनापहार इत्यादिकं स्यात् पथि मन्दिरे च । ऊर्द्ध्वाननश्चञ्चलपक्षयुग्मः काकः कुनादी विदधाति मृत्युम् । छायायुधच्छत्रघटास्थियानवादित्रकाष्ठादिककुट्टनानि । सङ्कोचितैकाङ्घ्रिरुपेतचिन्तो दीप्तस्वरो भास्करमीक्षते च । काष्ठादिकं कुट्टयतेऽथ वा यो युद्धाधिकानर्थकरः खगोऽसौ । तुण्डेन पिच्छं विलिखन् रवेण यो रौति तूर्णञ्च निरीक्षते कम् । एकेन पादेन तथोपविष्टो ब्रूते स बन्धं पुरतो जनस्य । विड्गोमयौ न्यस्यति यस्य मूर्द्ध्नि तस्याऽनलत्रासरुजौ भवेताम् । यस्यास्थिखण्डं विसृजत्यसौ तु प्रयाति तूर्णं नगरीं यमस्य । प्रस्थानप्रदेशे विरुवन् यियासोः कलत्रदोषं जनयत्यवश्यम् । मनुष्यमातङ्गतुरङ्गमाणां शिरोधिरूढो निधनाय तेषाम् । नदीतटे वाऽथ रटन्नटव्यां खरस्वरो व्याघ्रभयाय गन्तुः । नैवातुरः क्वापि मतो हिताय न दुष्टचेष्टो वितनोति शान्तिम् । यात्रोद्यमे सैन्यबधाय काको दृष्टो रथे सायुधमस्तकेषु । आयाति यस्याभिमुखो बलस्य युद्धोद्यमे तस्य पराजयः स्यात् । सगृध्रकङ्कैः कटके नृपस्य काकैः प्रविष्टैः पिशितं विनापि । संयुध्यमानै ररिभिः समं स्यान्महाहवे सन्निरयुध्यमानैः । चिह्नध्वजच्छत्रक्षताधिरोहः समुद्यतं शत्रुबलं प्रपश्यन् । आजौ जयं जल्पति भूमिपानां क्षतध्वनिः क्षीरतरौ च काकः । गतिस्वरौ वायससंप्रयुक्तौ प्राच्यां फलायोदितवैपरीत्यात् । एवं जनोऽप्याचरति प्रभूतो यथोदितं तत्र यथागमार्थम् । दिग्ग्रामचक्रेऽपि शुभाशुभानि फलानि यानि प्रतिपादितानि । प्रतिष्ठमानस्य भवन्ति तानि तथाविधानीति वदन्ति तज्ज्ञाः” । इति यात्राङ्ककाकश० ।

“स्थानस्थितिभ्यां कथयन्ति काकाश्चेष्टाविशेषेण शुभाशुभानि । प्रबोधिताः प्राक्तनकर्म्मभिर्ये तल्लक्षणाय क्रियते प्रयत्नः । निष्कारणं संवलिता रुवन्तो ग्रामेऽन्ननाशाय भवन्ति काकाः । रोधञ्च चक्राकृतयो वदन्ति सव्यापसव्यभ्रमणाद्भयञ्च । विघातमाहुर्बहुवर्गसंस्था रात्रौ रुवन्तो जनताविनाशम् । लोकञ्च चञ्चुचरणप्रहारैरुद्वेजयन्तः परचक्रवृद्धिम् । यः स्नाति धूल्यान्तु विलोक्य रौति वृष्टिं समाशंसति वायसोऽसौ । जलस्थलप्राणिविपर्य्ययेण वर्षासु वृष्टिं भयमन्यदा तु । मध्यंदिने वेश्मनि यस्य काको विरौति रौद्रं विधुनोति वाङ्गम् । हरन्ति चौरा द्रविणानि तस्य ध्रुवं तथान्यो भवति प्रमादः । रुवन्नदृष्टस्तृणपूर्णवक्त्रो हुताशभीतिं करटः करोति । स्यात् प्रस्थितस्याप्यथ वा स्थितस्य दुःखं प्रभूतं दिवसत्रयेण । छायासु लाभं, भुवि भूमिलाभं, विघ्नं जले, ग्रावणि कार्य्यनाशम् । करोति काको विरुवन्नरस्य प्रस्थायिनः स्थानगतस्य वापि । द्वारप्रदेशे रुधिरानुलिप्तो विरौति काकः शिशुनाशनाय । पक्षौ विधुन्वन् विरुवंश्च वृक्षं शान्ते च दीप्ते भवने न शस्तः । भूयस्तथोर्द्ध्वं प्रविधाय पक्षौ काकः कुनादं प्रलयं करोति । क्रुद्धोऽधिरूढः करटान्तरञ्च रोगेण मृत्युं कुरुते नराणाम् । द्रव्ये हृते वाऽपहृते खगेन विनाशलाभावपि तादृशस्य ।

रुक्मस्य पीते, रजतस्य शुक्ले, चेलस्य कार्पासमये भवेताम्। प्रश्ने कृते रोगविनाशबुद्ध्या हन्त्याशु रोगं मुरवः प्रदीप्ते। शान्ते प्रदेशे करटस्विरेण स्वल्पारवो रोगमपाकरोति। प्रश्ने शुभे शान्तदिगाश्रयस्थः शान्तस्वरो यः शुभमादधाति। यो वायसस्तं शुभदं वदन्ति तद्व्यत्यये व्यत्ययहेतुरुक्तः। विरौति कुम्भे मणिकेऽथ वा यः स गर्भवत्याः सुतजन्महेतुः। उड्डीयते कण्टकिनीञ्च शाखामादाय राजागमनाय काकः। अन्नादिविष्ठापिशितादिभि र्यः पूर्णाननो ऽभीष्टफलप्रदोऽसौ। मन्त्रादिसिद्धौ वणिजादिलाभे शस्तो विवाहादिविधौ च काकः। दृष्टार्थदोऽश्वादिकवाहनस्थश्छत्रादिसंस्थस्तदवाप्तकारी। बध्वागमं जल्पति तोरणस्थो हृद्यार्थदो हृद्यतरुस्थितश्च। वायसः कुलकुलध्वनिं यदा व्याहरेद्भवनसंमुखं तदा। अभ्युपैति पथिकस्तदा ध्वनिं सर्व्वकार्य्यशुभदं वदत्यसौ। इदं त्विहोत्पातयुगं पृथिव्यां महाभयं शाकुनिका वदन्ति। यद्वायसो मैथुनसन्निविष्टो दृश्येत १यद्वा धवलः२ कदाचित्। उद्वेगविद्वेषभयप्रवासधनक्षयव्याधिभयप्रहाराः। बुद्धिप्रणाशाकुलताप्रवादा नृणां भवन्त्यङ्ग तदर्शनेन। शमाय तत् सूचितदुःखराशेः स्नानं बहिस्तत्क्षणमेव कुर्य्यात्। आत्मीयशक्त्या च सदक्षिणानि द्विजाय दद्यात् वसनानि तानि। नयेदहःशेषमपुण्यहान्या शयीत भूमावकृताचभक्षः। हविष्यभोजी न भजेच्च नारीं दिनानि सप्त त्रिगुणानि यावत्। अकाकघातव्रतमादधीत बलिं च दद्याद्बलिभोजनेभ्यः। स्नात्वा प्रभाते विदधीत शान्तिं दद्यात् स्वशक्त्या द्रविणं गुणिभ्यः। देशे तु यत्राद्भुतमेतदुग्रमालोक्यते तत्र समापतन्ति। अवृष्टिदुर्भिक्षभयोपसर्गचौराग्निशस्त्रद्रवधर्म्मनाशाः। कर्म्माणि तस्योपशमाय राजा प्रवर्त्तयेत् शान्तिकपौष्टिकानि। अन्नाद्यगोभूमिवसूनि दद्यात् युद्धं विदध्याच्च च यावदब्दम्"। इति स्थानविशेषस्थितकाकचेष्टा शकु०। अथ काकध्वनिभेदश०। "ककामिति क्षेमविधौ विरावः केकामितीष्टाशनपानहेतुः। करोति कुंकुमिति चार्थलाभं, कं कं ध्वनिः काञ्चनलाभमाह। कें केमिति स्त्रीवरयोषिदाप्त्यै भोगाय कांकामिति शब्दतः स्यात्। अपत्यलाभः कुत्र इत्यनेन गन्तुः फलं कोकव इत्यनेन। कौं कोमितीदं शुभलाभकारि कुंकुंनिनादः प्रियसङ्गमाय। क्रां क्रुमिति क्रामिति च त्रयोऽमी क्रां क्रामिति द्वौ च रवौ रणाय। क्रां क्रामिति क्रौमिति च द्विरुक्तं क्रूं क्रूमिति क्रौ कुकु कू इतीदम्। रुतं प्रदिष्टं मरणाय नृणां गन्तुः प्रणाशं कुरुते खगाख्यः। क्रीं क्रीमितीष्टार्थविनाशनाय ज्वलज्ज्वलेत्यग्निभयाय शब्दः। कोकीति कोकाविति यः कथञ्चिन्मुहुर्मुहुः स्यात् स मतो बधाय। स्यात् का इतीदं विफलं सदैव भिक्षाप्तये स्यात् क इतीष्टशञ्च। काका इतीदं तु विघातकारि करोति काको वदति स्वतुच्चैः। आहारदोषाय च काकटीति स्यादाकुलं कुकुनिभं रणाय। केके ध्वनिः काकुटि किंटिकीति त्रयं त्विदं स्यात् पुरदूषणाय। यत् का इति त्रिस्तदनुस्वरेण शब्दद्वयं स्यान्महते रणाय। कामित्ययं वाहननाशनञ्च ददाति हर्षं कुकुकुर्व्वितीदम्। यत्का इतीदं विरुतं सुदीर्घक्षतस्वरेणोच्चरितम् प्रमादात्। उत्साहहीनः श्रमदैन्ययुक्तः स वायसः कार्य्यविनाशनाय। सामिषं वकवकेति भोजयेद्वारयेत् कलिकलीति वाशनम्। अभ्युपैति स्वरकृच्चभाषिते प्रोषितः शवशवारवे शवः। स्यात् कलिः कवकवध्वनौ नृणां जायते कणकणाध्वनौ रणः। आव्रजेत् कुलकुलध्वनौ प्रियः सौदनं कटकटध्वनौ दधि। एवंप्रकारा बहवो ऽपरेऽपि प्रशान्तदीप्ता बलिभोजनानाम्। भवन्ति शब्दाः खलु तेषु केचिदस्माभिरुक्ताः खलु लक्षणीयाः। इति काकध्वनिभेदशकुनम्। "हितं नरेभ्यो मुनिभिः पुराणैर्यन्नं यदुक्तं बलिपिण्डयुक्त्या। तदुच्यते संप्रति येन काका वदन्ति नित्यं बलिलाभतुष्टाः। अदक्षिणस्यां दिशि यत्र काकैर्युतो भवेत् क्षीरतरुः प्रभूतः। गत्वा निवृत्ते ऽहनि तत्र काका निमन्त्रणीया बलिपिण्डभोज्ये। प्रातस्ततः क्षीरतरोरधस्ताद्विशोध्य लिप्येत च गोमयेन। भूमिप्रदेशे चतुरस्रमस्य मध्ये ऽर्च्चयेत् ब्रह्ममुरारिभानून्। इन्द्राग्निवैवस्वतयातुधानजलेशवायुद्रविणेशशम्भून्। अभ्यर्च्चयेदष्टसु दिक्षु भक्त्या क्रमेण चाष्टावपि लोकपालान्। नमोयुतैः सप्रणवैश्च सर्व्वान्निजाभिधानैः प्रयतो मनुष्यः। अर्घासनालेपनपुष्पधूपनैवेद्यदीपाक्षतदक्षिणाभिः। आब्रह्म काकांस्तरुसन्निविष्टानाध्याय तत्प्राक्तनमन्त्रयुक्त्या। तत स्तदर्थं बलिमाज्यसिक्तं मन्त्रेण दद्यात् दधिपिण्डयुक्तम्। "उदीर्य्य कार्य्यं स्वमथावसृत्य ततः प्रदेशे करटस्य चेष्टाः।

स्तम्भीकृताङ्गश्च शुभाशुभार्थं संलक्षयेन्निश्चलपाणिपादः। पूर्व्वेण खादन् सुखवित्तवृद्धिं करोति वह्ने र्दिशि वह्निभीतिम्। काकोऽथ नाशं दिशि दक्षिणस्यां नैर्ऋत्यदिग्गोचरकृत्यदिष्टः। जलेशदेशेऽभिमतार्थसिद्धिर्वायोर्दिशीतिप्रभवाल्पवृष्टिः। सौम्ये सुखारोग्यसमीहितार्थमीशानदेशे वितरत्यभीष्टम्। बलौ विलुप्ते करटैः समन्तात् कार्य्यं विमिश्रं परिभावनीयम्। बलिं विकीर्य्यापि न भक्षयन्ति काकास्तदानीं भयदा भवन्ति। क्षीरद्रुमारामचतुष्पथेषु सरित्समीपे त्रिदशालयेषु। देयो बलिर्भूतदिनाष्टमीषु कुल्माषदध्योदनतण्डुलाद्यैः”। इति काकबलिदानशकु०। “पिण्डत्रयस्याथ विधानमेतदाख्यायते यत् किल नारदाद्यैः। दृष्टं मुनीन्द्रैरशुभं शुभञ्च यथावदस्मिन् कथयन्ति काकाः। गत्वा शुभेऽह्नि प्रहरे चतुर्थे देशेषु पूर्व्वप्रतिपादितेषु। नरेण पिण्डत्रयभोजनार्थं काकाः प्रयत्नेन निमन्त्रणीयाः। ततः प्रभाते ह्युपलिप्य भूमिं तस्याञ्च पूर्व्वोदितमन्त्रयुक्त्या। ब्रह्माच्युतेशाप्पतिलोकपालाः काकाश्च पुंसां क्रमतोऽर्च्चनीयाः। दध्योदनाद्यैर्विहितं निवेश्य पिण्डत्रये मण्डलकस्य मध्ये। अभ्यर्च्चयेदक्षतपुष्पधूपैर्मनोहरैर्यत्नपरो मनुष्यः। तेषु क्षिपेत् प्राग्दिगनुक्रमेण पिण्डेषु हेम प्रथमे, द्वितीये। रूप्यं, तथा लौहलवं तृतीये, शेषं च कुर्य्याद्बलिपिण्डतुल्यम्। त्रिःसप्तकृत्वो विनिवेश्य पिण्डे पिण्डा निवेश्या बलिभोजनेभ्यः। मन्त्रोक्तमावाहनतोषितेभ्यः कार्य्यं विचार्य्याऽपसरेत्ततश्च। काकेन भुक्ते वसुवर्णपिण्डे ज्ञेयं नरेणोत्तमम्त्रकार्य्यम्। भुक्ते सरूप्ये खलु मध्यमं स्याद्भुक्ते स लौहे त्वधमं प्रदिष्टम्। विवादवाणिज्यविवाहवृष्टिक्षेमाश्वचिन्ताकृषिभोगरोगाः। संग्रामसेवान्यपकार्य्यदेशाः इत्यादयोऽस्मिन् परिभावनीयाः। चेष्टाः सुरामा विदधाति याति प्रदक्षिणं दक्षिणपक्षसञ्ज्ञैः। येषां तयोश्चां कुरुते सशब्दः स्थानं मनोज्ञं श्रयति द्रुमञ्च। एवंविधां यो विदधाति चेष्टां पिण्डं समादाय शुभं खगोऽसौ। अभीष्टकार्य्यादधिकं करोति चेष्टाविपर्य्यासतयान्यथात्वम्। पिण्डं समादाय यदि प्रधानं शान्तां दिशं गच्छति काकपक्षी। पूर्णं फलं तत् कुरुते नराणां चिकीर्षिते वस्तुनि यत्र तत्र। काको गृहीत्वा यदि मुख्यपिण्डं प्रयाति दीप्तां ककुभं तदानीम्। अत्युत्तमं कार्य्यफलं प्रदर्श्य ततः समस्तं विनिहन्त्यवश्यम्। द्वितीयकं यद्यपहृत्य पिण्डम् प्रडीयते शान्तदिगाश्रयेण। फलं तदानीं शुभदं नराणां याश्यं खगो जल्पति कार्य्यजातम्। काके समादाय जघन्यपिण्डं याते प्रदीप्तां ककुभं वदन्ति। कार्य्यं जघन्यादधिकं जघन्यं स्यान्मध्यमं मध्यमपिण्डभागे”। इति बलिदाने पिण्डत्रयशकुनम्। “महर्षयो वायसशाकुनस्य वदन्ति सारादपि सारभूतम्। पिण्डाष्टकं यत्तदशेषमेतदाख्यायते कार्य्यविनिश्चयार्थम्। शुभेऽह्नि काकानधिवास्य सायं पिण्डाष्टकं भोक्तुमथ प्रभाते। यत्काकभोग्यानि समस्तवस्तून्यादाय यायाद्बहिरप्रमत्तः। एकान्तदेशे तरुपार्श्वभूमौ मृद्गोमयाभ्यामुपलेपितायाम्। सत्पञ्चगव्येन समुक्षितायां सौम्योपहारैरुपशोभितायाम्। विधाय पूजां कुलदेवतानां मध्ये ततोऽष्टास्वपि दिक्षु देयम्। भक्तेन सर्पिर्दधिमिश्रितेन पिण्डाष्टकं प्राग्दिगनुक्रमेण। पक्षीन्द्रवह्न्यन्तकराक्षसेन्द्रान् विष्णुं विरिञ्चिं धनदं महेशम्। पूर्व्वादिकाष्ठाक्रमयोजितेषु न्यस्येत् क्रमादष्टसु पिण्डकेषु। नमोयुतैस्तान् प्रणवैश्च सर्व्वांस्ततोऽर्च्चयेत्तन्निजनाममन्त्रैः। अर्घासनालेपनपुष्पधूपैर्नैवेद्यदीपाक्षतदक्षिणाभिः। अभ्यर्च्चितेभ्यो विधिनोदितेन पिण्डाष्टकं तत् वितरेत् द्विजेभ्यः। मन्त्रेण संमन्त्र्य निवेदनार्थं कार्य्यं विचिन्त्यापसरेच्च किञ्चित्। काकेन पिण्डे प्रथमे गृहीते तिष्ठन् व्रजन् वापि भवेत् कृतार्थः। उद्वेगशोकौ विफलं प्रयाणे, हानिः कलिर्वा भवति द्वितीये। याम्ये रुगापद्भयवृत्त्यवः स्युः पिण्डे चतुर्थे विजयो रणेषु। स्याद्वैष्णवेऽभीष्टमकष्टसाध्यं भवेत् प्रवासो विफलश्च षष्ठे। नास्तीह तन्निश्चयमेव कार्य्यं भुक्ते न यत् सिद्ध्यति सौम्यपिण्डे। सन्तापशोकौ विफला च यात्रा पिण्डेऽष्टमे वायसभक्षिते च। पिण्डं न गृह्णात्यथ वा न भुङ्क्ते चञ्चूनखैर्विक्षिपति द्विजो यः। कार्य्येषु सर्व्वेषु स न प्रशस्तो ब्रवीति घोरं समरं स पुंसाम्”।

**काकरुहा** स्त्री काकवत् रोहति अन्तरीक्षे मूलशून्यतया जायते। (परगाछा) वन्दाकवृक्षे त्रिका०।

**काकरुक** पु० कुत्सितं करोति कृ—उक कोः कादेशः। १स्त्रीजिते स्त्रीजितस्य स्त्रीमतानुसारेण कुत्सितकरणात्तथात्वम्। २निर्द्धने ३दिगम्बरे ४भीरौ च त्रि०। तेषां कुत्सिताचरणात् तथात्वम्। करणे उक। ५दम्भे पु०। दम्भेन धर्म्माचरणस्य कुत्सितत्वात् तस्य तथात्वम्।

काकेन लूयते लू-छिदि कर्मणि क्विप् लस्य रः संज्ञायां कन्। ६मेचके पुंस्त्री हेमच०। तस्य काकच्छेद्यत्वा-त्तथात्वम्। स्त्रियां जातित्वात् ङीष्।

**काकल** न०ईषत् कलो यस्मात् कोः कादेशः।१ग्रीवास्थे उन्नतप्रदेशे (टुँटि)त्रिका०। ततो वा कप्। तत्रार्थे पु०हेमच०।"एकः काकलके नासायाञ्च" इति शरीरस्थसन्धिकथने "एकैका काकलकगलयोः" इति मेर्गीसंख्यानोक्तौ च सुश्रु० केति कलो यस्य। २द्रोणकाके पुंस्त्री शब्दर०स्त्रियां ङीष्। ईषत् कं जलं लाति ला—क संज्ञायां कन्। षष्टिक-धान्यभेदे तस्य पङ्कजलनिमग्नत्वात्तथात्वम्। "षष्टि-ककङ्गुकमुकुन्दकपीतकप्रमोदककाकलकासनपुष्पकमहाष-ष्टिकचूर्णककुरवककेदारकप्रभृतयः षष्टिकाः" सुश्रु०। "गर्भस्था एव ये पाकं यान्ति ते षष्टिका मताः"। भाव-प्रका० षष्टिकलक्षणमुक्त्वा तद्गुणा दर्शिता यथा— "षष्टिकाः मधुराः शीताः लघवो बद्धवर्चसः। वातपित्त-प्रशमनाः शालिभिः सदृशा गुणैः" इति एवं सुश्रुतेऽपि।

**काकलि(ली)** स्त्री कल-इन् ईषत् कलिः कोः कादेशः। कृदिकारान्तत्वात् वा ङीप्। सूक्ष्ममधुरास्फुटध्वनौ अमरः "सहकारकिसलयमकरन्दास्वादनरक्तकण्ठानां मधुकरक-लकण्ठानां काकलीकलकलेन" दशकु०। "उन्मीलन् मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकल-कलैरुद्गीर्णकर्णज्वराः" सा० द०। काकलं गलस्थोन्न-तप्रदेशाकारः अस्त्यस्य अच् गौरा०ङीष्। काकलाकारे-२स्तेयसाधने पदार्थे "फणिमुखकाकलीसंदंशकपुरुष-शीर्षकयोगचूर्णयोगवर्त्तिकामानसूत्रकर्कटकरज्जुदीपभाज-नभ्रमरकरभकप्रभृत्यनेकोपकरणयुक्तोगत्वा कस्यचिल्लु-ब्धेश्वरस्य गृहे सन्धिं छित्त्वा" दशकु०। काकं काक-वर्णमधःफले लाति ला—क गौरा० ङीष्। ३गुञ्जायाम्। "काकलीमूलं गुञ्जामूलम्" ज्यो०त० रघु०।

**काकलीद्राक्षा** स्त्री काकलीव सूक्ष्मा द्राक्षा। अबीजायाम् क्षुद्रद्राक्षायाम्(किस्मिस)राजनि०।"अबीजान्या स्वल्पतरा गोस्तनीसदृशैर्गुणैः" भावप्र०।गोस्तनीशब्दे तद्गुणा दृश्याः

**काकलीरव** पुंस्त्री काकलो मधुराव्यक्तो रवो यस्य। १कोकिले राजनि० स्त्रियां जातित्वात् ङीष्।कर्म०। २काकलीरूपे रवे पु०। काकलीकलादयोऽप्यत्र।

**काकवल्लभा** स्त्री ६त०। काकजम्बुके राजनि०। [राजनि०

**काकवल्लरी** स्त्री काकप्रिया वल्लरी शाक०त०। स्वर्णवल्लाम्

**काकशिम्बी** स्त्री काकप्रिया शिम्बी। काकतुण्ड्याम् राजनि०

**काकशीर्ष** पु० काकः शीर्षेऽस्याः। वकवृक्षे जटाधरः। काकस्य तदग्रे वासयोग्यत्वात्तस्य तथात्वम्।

**काकस्ती** च० काकस्य स्त्रीव नास्यत्वात्। वकवृक्षे शब्दचि०।

**काकस्फूर्ज** पु० काकः स्फूर्जत्यत्र स्फूर्ज—आधारे घञ्। काकतिन्दुके राजनि०।

**काका** स्त्री ईषत् कं जलमत्र, काकः काकाकारोऽस्त्यस्य अच् वा। १काकनासावृक्षे २काकोल्यां ३काकजङ्घा-याम् ४गुञ्जायां ५मलपूाम् (काकोडुम्बरिकायाम्) ६काक-माच्याञ्च मेदि०।

**काकाक्षिगोलकन्याय** पु० काकस्याक्षिगोलकमिव न्यायः। काकस्य एकं चक्षुर्यथा उभयगोलके पर्यायेण चक्षुः-कार्यकारकमेवमेकस्योभयसंबन्धज्ञापके न्याये।

**काकाङ्गी** स्त्री काकस्याङ्गं जङ्घेवाकारोऽस्याः वा ङीष्। काकजङ्घावृक्षे अमरः। पक्षे टाप् काकाङ्गा तत्रार्थे रमानाथः।

**काकाञ्ची** स्त्री काकं तज्जङ्घाकारमञ्चति गच्छति अनुच-गतौ अण् गौरा०ङीष्, पा०, मुग्ध०मते ईप्। काक-जङ्घावृक्षे शब्दरत्ना०।

**काकाण्ड** पु० काक्या अण्ड इव फलं यस्याः पुंवत्। १महा-निम्बे तस्य गुणादि सुश्रुतेनोक्तं यथा"माषैः समानं फलमाकमुदितञ्च काकाण्डफलं तथैव"। २कोलशिम्ब्याम् स्त्री गौरा०ङीष् तदन्तः ३महाज्योतिष्मत्यां राजनि०। ६त०। ४काक्याअण्डे पुं न०।

**काकाण्डोला** स्त्री काकाण्डस्य तुला उपमा फले यत्र पृषो० तलोपः। कोलशिम्ब्याम् राजनि०।

**काकादनी** स्त्री काकैरद्यतेऽसौ अद—कर्मणि ल्युट् ६त० ङीप् १गुञ्जायाम् शब्दर०। २श्वेतगुञ्जायाम् राजनि० ३कुलिकवृक्षे (कुलियाखाड़ा) वृक्षे रत्नमा०।"मद्येनाश्व-मारकगुञ्जाकाकादनीमूलकल्कं पाययेत्" सुश्रु० इयञ्च सुश्रुते"कालेयकागुरुतिलपर्ण्यादयुपक्रमे""सुमनः काका-दनीलाङ्गलीत्यादिना" "समासेन श्लेष्मसंशमनो वर्गः" इति श्लेष्मशमनतयोक्ता।

**काकायु** पु० काकस्यायुर्यस्मात्। स्वर्णवल्लीवृक्षे शब्दचि०।

**काकार** त्रि०कं जलमाकिरति आ+कॄ—अण्। जलस्राविणि। स्त्रियां टाप् मुग्ध० मते ईप् इति भेदः।

**काकारि** पु० काकोऽरिरस्य। पेचके। हेमच०।

**काकाल** पुंस्त्री केति शब्दं कलते रौति कल-अण्। द्रोणकाके शब्दरत्नमा० स्त्रियां जातित्वात् ङीष्।

**काकि** पुंस्त्री काकस्यापत्यम् वा इञ्। काकापत्ये स्त्रियां ङीप्। पक्षे वाकिना॰ फिञ् कुक् च। काककायनि तदर्थे पुंस्त्री। स्त्रियां ङीप्।

**काकिणी** स्त्री "काकिणी च चतुर्भागो माषकस्य पणस्य च" शु॰त॰ नारदोक्ते १माषकचतुर्थभागे २पणचतुर्थभागे च। "वराटकानां दशकद्वयं यत् सा काकिनी(णी) ताश्च पणश्चतस्रः" इति लीला॰। "तस्मात् पणं काकिणीं वा फलं पुष्पमथापि वा। प्रदद्यात् दक्षिणां यज्ञे यया स सफलो भवेत्" शु॰त॰ वृह॰। स्वार्थे कन्। काकिणिका तत्रार्थे "क्वचिच्छिल्पिव्यवहारेण यत्किञ्चिद्धनमन्येभ्यो वा काकिणिकामात्रम्" भाग॰१,१४,२।

**काकिनी** स्त्री १पणपादे २मानपादे ३वराटके च मेदि॰। मानपादः निवर्त्तनपाद इति केचित् (चारिकाठा) माषपाद इत्येवः पाठो न्याय्यः काकिणीशब्ददर्शितनारदवाक्यैकवाक्यत्वात्

**काकिल** पु॰ ईषत् किरति कॄ—क कोः कादेशः रस्य लः। गलस्योन्नतदेशे (टुंटि) शब्दमा॰।

**काकी** स्त्री काक+जातित्वात् स्त्रियां ङीष्। १काकयोषिति काकवर्णत्वात् २वायसीलतायाम् ३काकोल्याञ्च शब्दचि॰

**काकु** स्त्री कक—उण्। १शोकभीत्यादिभिर्ध्वनेर्विकारे, अलङ्कारप्रसिद्धे २विरुद्धार्थकल्पके नञादौ शब्दे च। "कामेकान्ते सा रसिका काकुरुतेन" सा॰द॰। "प्रणिजगदुरकाकुश्रावकाःस्निग्धकण्ठाः" माघः। सा॰ द॰ "वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः। प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च। वैशिष्ट्यादन्यमर्थं या बोधयेत् साऽर्थसम्भवा" इति व्यञ्जनाहेतून् निर्दिश्य "भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" काकुं लक्षयित्वा उदा॰ "गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्। अलिकुलकोकिलललिते नैष्यति सखि! सुरभिसमयेऽसौ" नैष्यति अपि तर्हि ऐष्यत्येवेति काका व्यज्यते" इत्युक्तम्।

**काकुत्स्थ** पुंस्त्री ककुत्स्थस्यान्तपस्यापत्यं शिवा॰अण्। ककुत्स्थवंश्ये स्त्रियां ङीप्। ककुत्स्थशब्दे विवृतिः "काकुत्स्थमालोकयतां नृपाणाम्" "तं विनिष्पिष्य काकुत्स्थो पुरा दूषयति स्थलीम्" "असज्जनेन काकुत्स्थःप्रयुक्तमथ दूषणम्" रघुः। "काकुत्स्थ ईषत्स्मयमान आस्त" भट्टिः

**काकुद** न॰ काकुं ददाति दा—क उप॰स॰। तालुनि अमरः तालुना काकूच्चारणात् तस्य तथात्वम् "उद्विग्यां काकुदस्य" पा॰ बहु॰ अस्यान्त्यलोपः "उत्काकुत्, विकाकुत्" सि॰ कौ॰ "पूर्णाद्विभाषा" पा॰ बहुव्रीहौ वाऽन्त्यलोपः। पूर्णकाकुत् पूर्णकाकुदः।

**काकुभ** त्रि॰ ककुभ इदं उत्सा॰ अञ्। १ककुप्छन्दस्के प्रगाथादौ। २दिक्सम्बन्धिनि च स्त्रियां ङीप्। ककुभोऽपत्यम् शिवा॰ अण्। तदपत्ये पुंस्त्री स्त्रियां ङीप्।

**काकेक्षु** पु॰ काकमीषज्जलमत्र कोः कादेशः कर्म्मधा॰। (नलखागड़ा) १तृणभेदे त्रिका॰ २काशभेदे राजनि॰।

**काकेन्दु** पु॰ काकस्य इन्दुरिवाह्लादकत्वात् काकस्य प्रियस्तिन्दुः पृषो॰वा। (माकड़ाकेन्दु) कुलिकवृक्षे अमरः।

**काकेष्ट** पु॰ ६त॰। निम्बवृक्षे राजनि॰।

**काकोचिक** पु॰ ईषत् कोची सङ्कोची कुच—णिनि स्वार्थे कन् (कुँचे) मत्स्यभेदे कनभावे काकोचिन् इत्यपि तत्र हारा॰ पु॰। हारावल्यां "काकोचिकस्तु काकोचीत्यत्र पुंसाहचर्य्यात् पुंस्त्वमेव न्याय्यम्। ईकारान्तत्वभ्रमेण शब्दकल्पद्रुमे स्त्रीत्वोक्तिः प्रामादिकी।

**काकोडु(दु)म्बर** पु॰काकमीषज्जलमत्र कर्म्म॰काकस्य प्रियउदु(डु)म्बरो वा। (कोटाडुमर) ६उ(दु)डुम्बरभेदे शब्दरत्ना॰। स्वार्थे कन् अत इत्त्वम् स्वार्थिकप्रत्ययस्य प्रकृतिलिङ्गव्यतिक्रमः। काकोड़(दु)म्बरिकाप्यत्र स्त्री अमरः। "तत्र दद्यात् प्रतीवापं काकोडु(दु)म्बरिकारसम्" "काकोडु(दु)म्बरिकागोजीपत्रैर्विस्रावयेदसृक्" सुश्रु॰। काकोदु(डु)म्बरिका फल्गुर्मलपूर्जघनेफला" मलपूस्तम्भकृत् तिक्ता शीतला तुवरा जयेत्। कफपित्तव्रणश्वित्रकुष्ठपाण्डुर्शःकामलाः" इति भावप्र॰ तद्गुणपर्य्यायोक्तिः।

**काकोदर** पुंस्त्री कुत्सितं कुटिलमकति अक–वक्रगतौ अच् कोः कादेशः काकमुदरं यस्य। १सर्पे अमरः स्त्रियां जातित्वात् ङीष् तस्य उरसा कुटिलगामित्वात्तथात्वम् "काकोदरोयेन विनीतदर्पः" राघवपाण्डवीयम्।

**काकोल** पु॰ काकयति लोलयति कक—लौल्ये णिच् बा॰ ओल काकेन उल्लाय अद्यतेऽत्र उद्+ला—घञर्थे आधारे क पृषो॰वा। १नरकभेदे "महानरककाकोलम् संजीवनमहापथम्" नरकभेदकीर्त्तने मनुः, काकोलं यत्र काकैर्भक्ष्यते" प्रा॰ वि॰। कं जलमाकोलति आ+कुल—संस्त्याने अण् उप॰ स॰। २कुम्भकारे तस्य घटनिर्म्माणेन जलसंस्त्यानकरणात्तथात्वम्। कक-लौल्ये स्वार्थे णिच् बा॰ ओल। ३द्रोणकाके पुंस्त्री मेदि॰ स्त्रियां जातित्वात्

ङीप्। "चक्राञ्चैव बलाकाञ्च काकोलं खञ्जरीटकम्" अभक्ष्यमांसोक्तौ मनुः। "कलविङ्कं सकाकोलं कुररं रज्जुदालकम्" अभक्ष्यमांसोक्तौ याज्ञ०। ईषत् कोलति कुल-स्त्याने कर्त्तरि अच्। कोः कादेशः। "काकोलस्त्यतेजःस्यात् कृष्णच्छवि महाविषम्" वैद्यकोक्तलक्षणे ४विषभेदे अमरः ५सर्पे ६शूकरभेदे पुंस्त्री शब्दरत्ना० स्त्रियां जातित्वात् ङीष्। काकोलीनामौषधौ पु० धरणी।

**काकोली** स्त्री काकोल+गौरा० ङीष्। "जीवकर्षभकौ मेदे काकोल्यौ ऋद्धिवृद्धिके। अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः" इति भावप्रकाशोक्ताष्टवर्गान्तर्गते लताभेदे तद्भेदलक्षणगुणादिकं भावप्र० उक्तं यथा "जायते क्षीरकाकोली महामेदोद्भवस्थले। यत्र स्यात् क्षीरकाकोली काकोली तत्र जायते। पीवरीसदृशः कन्दः क्षीरं स्रवति गन्धवान्। सा प्रोक्ता क्षीरकाकोली काकोल्यपि तथा भवेत्। एषा किञ्चिद्भवेत् कृष्णा भेदोऽयमुभयोरपि। काकोली वायसोली च वीरा कायस्थिका तथा। सा शुक्ला क्षीरकाकोली वयस्था क्षीरवल्लिका। कथिता क्षीरिणी धारा क्षीरशुक्ला पयस्विनी। काकोलीयुगलं शीतं शुक्रलं मधुरं गुरु बृंहणं वातदाहास्रपित्तशोषज्वरापहम्"। "सोमामृताश्वगन्धासु काकोल्यादौ गणे तथा। क्षीरिप्ररोहेष्वपि च वर्त्तयोरोपणाः स्मृताः"। "समङ्गा सोमसरला सोमवल्का सचन्दना। काकोल्यादिश्च कल्कःस्यात् प्रशस्तोव्रणरोपणे"। "पृश्निपर्ण्यात्मगुप्ता च हरिद्रे मालती सिता। काकोल्यादिश्च योज्यःस्यात् प्रशस्तोरोपणे घृते" इति च सुश्रु०।

**काकोलूक** न० काकस्य उलूकस्य शाश्वतिकविरोधित्वात् समाहारद्वन्द्वः। काकोलूकसमाहारे ततः वैरे वुञ्। काकोलूकिका तयोर्वैरे स्त्री। काकोलूकमधिकृत्य कृतोग्रन्थः "द्वन्द्वाच्छः" पा० काकोलूकीय तयोराख्याने तच्च भा० सौ० १अ० स्थितं यथा—

"सुप्तेषु तेषु काकेषु विस्रब्धेषु समन्ततः। सोऽपश्यत् सहसायान्तमुलूकं घोरदर्शनम्। महास्वनं महाकायं हर्य्यक्षं बभ्रुपिङ्गलम्। सुदीर्घघोणानखरं सुपर्णमिव वेगितम्। सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः। न्यग्रोधस्य ततः शाखां प्रार्थयामास भारत! संनिपत्य तु शाखायां न्यग्रोधस्य विहङ्गमः। सुप्तान् जघान सुबहून् वायसान् वायमान्तकः। केषाञ्चिदच्छिनत् पक्षाञ्छिरांसि च चकर्त्त ह। चरणांश्चैव केषाञ्चिद्बभञ्ज चरणायुधः। क्षणेनाहन्त बलवान् येऽस्य दृष्टिपथे स्थिताः। तेषां शरीरावयवैः शरीरैश्च विशाम्पते!। न्यग्रोधमण्डलं सर्वं सञ्छन्नं सर्वतोऽभवत्। तांस्तु हत्वा ततः काकान् कौशिकोमुदितोऽभवत्। प्रतिकृत्य यथाकामं शत्रूणां शत्रुसूदन!"।

**काकोल्यादि** पु० सुश्रुतोक्ते काकोलीप्रभृतौ ओषधिगणे स च गणः "काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाछिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकञ्चेति" "काकोल्यादिरयं पित्तशोणितानिलनाशनः जीवनो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा"।

**काकोष्ठक** पु० काकस्योष्ठ इव कायति कै-क। सुश्रुतोक्ते कर्णबन्धाकृतिभेदे "तत्र समासेन पञ्चदश कर्णबन्धाकृतयः" इत्युपक्रमे। नेमिसन्धानक इत्यादिना "यष्टिकर्णः काकोष्ठक" इत्यन्तेन विभज्य "निर्मांसः संक्षिप्तात्पशोषितपालिः काकोष्ठकपालिरिति" सुश्रु० लक्षितम्।

**काङ्क्ष** काङ्क्षणे इदित् भ्वा० सक० सेट्। काङ्क्षति अकाङ्क्षीत् चकाङ्क्ष काङ्क्षा प्रनिकाङ्क्षति। "न शोचति न काङ्क्षति" गीता "काङ्क्षन् गतिमुत्तमाम्" मनुः। अस्यात्मनेपदित्वमिच्छन्ति। "न काङ्क्षे विजयं कृष्ण!" गीता "काङ्क्षावहे द्वारपतेस्त्वयाज्ञाम्" भा० व० १०६ २२। "नाहं भूयो वरं काङ्क्षे" भा० अनु० ७६८ भा० स० २१३५।

अनु+आनुलोम्येन प्रार्थने। "अतः प्रियं चेदनुकाङ्क्षसे त्वम्" अभि+आभिमुख्येन प्रार्थने "अत्यर्थमभिकाङ्क्षामि मृगयां सरयूवने" रामा०।

आ+सम्यक्प्रार्थने रामाभिषेकमाकाङ्क्षन्नाकाङ्क्षदुदयं रवेः" रामा०। "धीरेव कन्या पितराचकाङ्क्ष" रघुः। "आकाङ्क्षेयं तनुगुरुतया नैव गन्तुं समर्था" पदाङ्कदूतम्।

प्रति+आ प्रत्याशायाम्। "इहैव फलमासीनः प्रत्याकाङ्क्षत सर्वशः" भा० शा० ४८७।

प्रति+प्रतिरूपतयाभिलाषे। "त्वामेव प्रतिकाङ्क्षन्ते पर्जन्यमिव कर्षकाः" रामा०।

**काच** पु० कुत्सितमच्यमल "का पथ्यक्षयोः" पा० कोः कादेशः। कटाक्षे त्रिका०। "आस्रालाभोन्मुखोदूरात् कालेयानादरेक्षितः" भट्टिः।

**का(च्छी)ची** स्त्री कच्छे(च्छे) भवः अण् ङीप्। १तुवरिकायाम् (अरहर) २सौराष्ट्रदक्षिकायाञ्च मेदि०। ३कच्छ(च्छ) भवमात्रे त्रि०।

**काक्षीव** पु० ईषत् क्षीवयति क्षीव—णिच्—अच् कोः कादेशः । १शोभाञ्जनवृक्षे अमरः २गौतमात् शूद्रायामौशीनर्य्यां जाते पुत्रभेदे । "शूद्रायां गौतमो यत्र महात्मा संशितव्रतः। औशीनर्य्यामजनयत् काक्षीवाद्यान् सुतान् मुनिः" भा०स०२०अ०मगधदेशवर्णने । स्वुल् । काक्षीवकोऽपि शोभाञ्जनवृक्षे पु० शब्दच०।

**काक्षीवत्** पु० दीर्घतमस ऋषेः शूद्रायामुत्पन्ने पुत्रभेदे तदुत्पत्तिकथा "गोतमादिभिः पुत्रैर्बद्धा उडुपेन गङ्गाम्भसि निःक्षिप्तं दीर्घतमसमपक्रम्य" भा० आ०१०४ अ० उक्ता यथा "तन्तु राजा बलिर्नाम सर्व्वधर्म्मविशारदः। अपश्यन्मज्जनगतः स्रोतसाभ्यासमागतम् । जग्राह चैनं धर्म्मात्मा बलिः सत्यपराक्रमः । ज्ञात्वा चैनं स वव्रेऽथ पुत्रार्थे भरतर्षभ ! । सन्तानार्थं महाभाग ! भार्य्यासु मम मानद !। पुत्त्रान् धर्म्मार्थकुशलानुत्पादयितुमर्हसि । एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः । तस्मै स राजा स्वां भार्य्यां सुदेष्णां प्राहिणोत्तदा । अन्धं वृद्धञ्च तं मत्वा न सा देवी जगाम ह । स्वान्तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा । तस्यां काक्षीवदादीन् स शूद्रयोनावृषिर्व्वशी । जनयामास धर्म्मात्मा पुत्त्रानेकादशैव तु । काक्षीवदादीन् पुत्रांस्तान् दृष्ट्वा सर्व्वानधीयतः। उवाच तमृषिं राजा ममेम इति भारत । नेत्युवाच महर्षिस्तं ममेम इति चाब्रवीत् । शूद्रयोनौ मया ह्येमे जाताः काक्षीवदादयः । अन्धं वृद्धञ्च मां दृष्ट्वा सुदेष्णा महिषी तव । अवमन्य ददौ मूढा शूद्रां धात्रेयिकां मम"। २चण्डकौशिकपितरि गौतमे मुनिभेदे । "अथ काक्षीवतः पुत्रं गौतमस्य महात्मनः । शुश्राव तपसि श्रान्तमुदारं चण्डकौशिकम्" भा० स०१६अ० ।"काक्षीवानौशिजश्चैव नाचिकेतोऽथ गौतमः" ४अ०। अत्र पृथग्निर्द्देशात् काक्षीवतोऽन्य एव गौतमः "ततो राजगृहं गच्छेत्तीर्थसेवी नराधिप ! । उपस्पृश्य ततस्तत्र काक्षीवानिव मोदते" भा० व०८४अ० । "काक्षीवान् गौतमोऽत्रिश्च" भाग० १,६,५ । ४राजभेदे च ।"सुहोत्रं रन्तिदेवञ्च काक्षीवन्तं महाद्युतिम्" भा० आ० १अ० चतुर्विंशतिविख्यातनृपकथने ।

**काक्षीवत** पुंस्त्री कक्षीवतोमुनेरपत्यम् अण् तस्येदमित्यण् वा १कक्षीवदपत्ये २तत्सम्बन्धिनि च स्त्रियां ङीप् । सा च व्युषिताश्वस्य भद्राख्यायां भार्य्यायां तदितिवृत्तं भा० आ० १२१ अ०यथा—

"आसीत् काक्षीवती चास्य भार्य्या परमसम्मता । भद्रा नाम मनुष्येन्द्र ! रूपेणासदृशी भुवि । कामयामासतुस्तौ च परस्परमिति श्रुतम् । स तस्यां कामसम्मत्तो यक्ष्मणा समपद्यत । तेनाचिरेण कालेन जगामास्तमिवांशुमान् । तस्मिन् प्रेते मनुष्येन्द्रे भार्य्यास्य भृशदुःखिता । अपुत्रा पुरुषव्याघ्र ! विललापेति नः श्रुतम् । भद्रा परमदुःखार्त्ता तन्निबोध जनाधिप! । भद्रोवाच । नारी परमधर्म्मज्ञ ! सर्व्वा भर्त्तृविनाकृता । पतिं विना जीवति या न सा जीवति दुःखिता । पतिं विना मृतं श्रेयो नार्य्याः क्षत्रियपुङ्गव ! । त्वद्गतिं गन्तुमिच्छामि प्रसीदस्व नयस्व माम् । त्वया हीना क्षणमपि नाहं जीवितुमुत्सहे । प्रसादं कुरु मे राजन्नितस्तूर्णं नयस्व माम् । पृष्ठतोऽनुगमिष्यामि समेषु विषमेषु च । त्वामहं नरशार्द्दूल ! गच्छन्तमनिवर्त्तिनम् । छायेवानुगता राजन् ! सततं वशवर्त्तिनी । भविष्यामि नरव्याघ्र ! नित्यं प्रियहिते रता । अद्यप्रभृति मां राजन् ! कष्टा हृदयशोषणाः । आधयोऽभिभविष्यन्ति त्वामृते पुष्करेक्षण ! । अभाग्यया मया नूनं वियुक्ताः सहचारिणः । तेन मे विप्रयोगोऽयमुपपन्नस्त्वया सह । विप्रयुक्ता तु या पत्या मुहूर्त्तमपि जीवति । दुःखं जीवति सा पापा नरकस्थेव पार्थिव ! । संयुक्ता विप्रयुक्ताश्च पूर्व्वदेहे कृता मया । तदिदं कर्म्मभिः पापैः पूर्व्वदेहेषु सञ्चितम् । दुःखं मामनुसम्प्राप्तं राजंस्त्वद्विप्रयोगजम् । अद्यप्रभृत्यहं राजन् ! कुशसंस्तरशायिनी । भविष्याम्यसुखाविष्टा त्वद्दर्शनपरायणा । दर्शयस्व नरव्याघ्र ! शाधि मामसुखान्विताम् । कृपणां नाथ ! कृपणं विलपन्तीं नरेश्वर ! । कुन्त्युवाच । एवं बहुविधं तस्यां विलपन्त्यां पुनः पुनः । तं शवं संपरिष्वज्य वाक्किलान्तर्हिताऽब्रवीत् । उत्तिष्ठ भद्रे ! गच्छ त्वं ददानीह वरं तव । जनयिष्याम्यपत्यानि त्वय्यहं चारुहासिनि ! । आत्मकीये वरारोहे ! शयनीये चतुर्द्दशीम् । अष्टमीं वाप्यृतौ स्नाता संविशेथा मया सह । एवमुक्ता तु सा देवी तथा चक्रे पतिव्रता । यथोक्तमेव तद्वाक्यं भद्रा पुत्रार्थिनी तदा । सा तेन सुषुवे देवी शवेन भरतर्षभ ! । त्रीन् शाल्वांश्चतुरो मद्रान् सुतान् भरतसत्तम !" [स्त्रियां जातित्वात् ङीप् ।

**काग** पुंस्त्री केति शब्दं गायति गै—क । काके जटा० ।

**कागद** न० कागःकाकवर्णोमस्यादिर्दीयतेऽत्र दा—घञर्थे क कागेन कागवर्णेन मस्यादिना दायति शुध्यति वा दै—शोधे

वा वा । लेखनाधारे पत्रभेदे तस्य कृष्णवर्णमस्यादिदाना-धारत्वात् तेन शुद्धत्वाच्च तथात्वम् ।“भूर्जे वा वसने रक्ते क्षौमे वा तालपत्रके । कागदे वाऽष्टगन्धेन पञ्चगन्धेन वा पुनः । त्रिगन्धेनैकगन्धेन विलिख्य धारयेन्नरः” मन्त्रकल्पद्रुमे हनुमत्कवचम् ।

**कारिन** पु० ईषदग्निः कोः कादेशः । ईषदग्नौ मुग्ध० ।

**काङ्क्षा** स्त्री काक्षि–भावे अ । अभिलाषे “उद्गारशुद्धावपि भक्तकाङ्क्षा” सुश्रु० ।

**काङ्क्षिन्** त्रि० काक्षि–णिनि । अभिलाषिणि “देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः”गीता स्त्रियां ङीप् । तदाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी” रामा० ।

**काङ्गा** स्त्री कुत्सितमङ्गमस्याः । वराटिकायाम् शब्दच० ।

**काच** दीप्तौ अक० बन्धने सक० इदित् भ्वा० आत्म० सेट् । काञ्चते अकाञ्चिष्ट चकाञ्चे प्रनिकाञ्चते ।

**काच** न० कच्यतेऽनेन कच बन्धने करणे घञ् न कुत्वम् । (मोम) सिक्थे तस्य बन्धहेतुत्वात्तथात्वम् । काचः क्षारमृत्तिकाऽस्त्यस्याकरत्वेन अच् । क्षारमृत्तिकोद्भवे २लवणभेदे (कालालोन) । राजनि० । ३तत्साधने मृत्तिकाभेदे पु० । (क्षारीमाटी) अमरः । ४शिक्ये (शिका) ५मणिभेदे (काँच) मेदि० । “आकरे पद्मरागाणां जन्म काचमणेः कुतः” काचः काचः मणिर्मणिः” उद्भटः । काचस्य सुश्रुते अनुशस्त्रतयोक्तो यथा–

“अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकाग्निक्षारनखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुलयः” इति । ‘शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत् । त्वक्सारादिचतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान्” इति तदुपयोगविषयस्तत्रैवोक्तः । “पानीयं पानकं मद्यं मृण्मयेषु प्रदापयेत् । काचस्फटिकपात्रेषु शीतलेषु शुभेषु च” ‘काचास्त्वकोयान् पटलांश्च घोरान् पुष्पञ्च हन्त्यञ्जननस्ययोगैः” सुश्रु० । ६नेत्ररोगभेदे तल्लक्षणादि सुश्रुते उक्तं यथा–

“तिमिराख्यः स यो दोषश्चतुर्थं पटलं गतः । रुणद्धि सर्वतो दृष्टिं लिङ्गनाश इति क्वचित् । अस्मिन्नपि तमोभूते नातिरूढे महागदे । चन्द्रादित्यौ सनक्षत्रौ अन्तरिक्षे च विद्युतः। निर्मलानि च तेजांसि भ्राजिष्णूनीव पश्यति । स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः” व्याकृतमेतत् भावप्र०यथा“यो दोषोनेत्ररोगः चतुर्थं पटलं बाह्यं पटलं गतः स तिमिराख्यः तिमिरदर्शनेन तिमिरमस्यास्तीति तिमिरः अर्शआदित्वात् अच् । तस्य लक्षणमाह रुणद्धीत्यादि सर्वतः सर्वत्र । लिङ्गनाश इति क्वचित् तन्त्रान्तरे लिङ्गनाशसंज्ञः । तस्य निरुक्तिश्च । लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गं दृष्टितेजः तस्य नाशोऽस्मिन्निति लिङ्गनाशः । अस्मिन्नपि तिमिरेऽपि तमोभूते तमस्तुल्ये अत्र भूतशब्दस्तुल्यार्थः “भूतं प्राप्ततीते समे” इत्यमरात् नातिरूढे अप्रौढे नवे, चन्द्रादित्यौ नक्षत्राणि च पश्यति अन्तरिक्षे अन्तरिक्षस्य प्रकाशमयत्वेन तमोऽभिभवात् तेजांसि अग्न्यादेः भ्राजिष्णूनि रत्नसुवर्णादीनि । अस्मिन् प्रौढे चिरजे चन्द्रादीन्यपि न पश्यतीत्याशयः । नीलिकाकाचसंज्ञितः नीलिका काचेति नामान्तराभ्यां युक्तः” । तन्निदानादि दृष्टिरोगशब्दे वक्ष्यते । स्वार्थे कन् काचकोऽप्युक्तार्थे ।

**काचन** न० कच–बन्धने स्वार्थे णिच्–भावे ल्युट् । १पुस्तकादिबन्धने त्रिका० । स्वार्थे कन् । काचनक तत्रार्थे हारा० । का+चन मुग्ध० । २असाकल्यान्वितायां किमशब्दार्थस्त्रियाम् अव्य० । “व्यूढा काचन कन्यका खलु मया तेनास्मि ताताधिकः” प्रबोधच०

**काचनकिन्** पु० काचनकमस्त्यस्य इनि । लेखपत्रे जटा० तस्य काचनकरूपबन्धनवत्त्वात् तथात्वम् । [पात्रे त्रिका०।

**काचभाजन** न०काचमयं भाजनम् । (काचेरवासन) काच-

**काचमल** न० काचस्य क्षारमृत्तिकायाः मल इव । काचभवे सौवर्चले लवणभेदे राजनि० ।

**काचलवण** न० काचः काचहेतुकं लवणम् । (कालालोन) सौवर्चले लवणभेदे राजनि० तस्य क्षारमृत्तिकोद्भवत्वात्तथात्वम् । तद्गुणाद्युक्तं सुश्रु० । ‘‘लघु सौवर्चलं पाके वीर्य्योष्णं विशदं कटु । गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम्” ।

**काचसम्भव** न० सम्भवत्यस्मात् सम्+भू–अपादाने अप् काचः क्षारमृत्तिका सम्भवोऽस्य । काचलवणे सौवर्चले राजनि० । काचोद्भवमप्यत्र न० ।

**काचसौवर्चल** न० काचस्थानिकं सौवर्चलम् शा०त० । (कालालोन) लवणभेदे । राजनि० ।

**काचस्थाली** स्त्री काचस्य क्षारस्य स्थालीव । (पारुलगाछ) १फलेरुहावृक्षे अमरः । ईत० । २काचपात्रे च ।

**काचाक्ष** पुंस्त्री काच इवाक्षि अस्य षच् समा० । वकभेदे स्त्रियां जातित्वेऽपि संयोगोपधत्वात् न ङीष् किन्तु षित्त्वात् ङीष् इति भेदः । अयञ्च जलः संचारी च

सुश्रुतेनोक्तः यथा "हंससारसेत्याद्युपक्रमे काचाक्ष-मल्लिकाक्षेत्यादीनुक्त्वा "प्लवाः संघचारिणश्च"।

**काचिघ** पु० कच–दीप्तौ बा० इण् काचिं कान्तिं हन्ति गच्छति हन–गतौ बा० ड पृषो० ह्रस्व घः। १काञ्चने। २क्षेमखण्डे (क्षेमडा) ३सूचके च मेदि०। [रोपिते अमरः।

**काचित** त्रि० कच–बन्धने णिच् कर्मणि क्त। शिक्या-

**काचित्** अव्य० का+चित् मुग्ध० पाणिन्यादिमते द्विपदम्। असाकल्यान्विते कापीत्यर्थे। "गोपीभर्त्तुर्विरहविधुरा काचिदिन्दीवराक्षी" पदाङ्कदूतम्। चयनं चित् चि-संप०क्विप्–ईषत् चित् कोः कादेशः। ईषच्चयने। "प्रियं काचित्करं हविः" ऋ०१०८६,१२। "काचित्करम् ईषच्चयनकरम्"। [भञ्जकवृत्ते त्रिका०।

**काचिम** पु० कच–बन्धे णिच्–इमन्। देवकुलोद्भवे

**काचूक** पुंस्त्री कच–दीप्तौ बा०ऊकञ्। १कृकवाकौ ताम्रचूडे पीतमस्तके खगे २कोके चक्रवाके च मेदि० स्त्रियां जातित्वात् ङीष्।

**काजल** न०कुत्सितं जलम् कोः कादेशः। कुत्सितजले मुग्ध०

**काञ्चन** न०काचि–दीप्तौ भावे ल्युट्। १दीप्तौ। काचि–दीप्तौ ल्यु। २स्वर्णे अमरः। "अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम्" "वार्य्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम्" "गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः"मनुः। ३पद्म-केशरे मेदि०। ४नागकेशरपुष्पे ५धने राजनि०। ६चम्पके ७नागकेशरवृक्षे ८उडुम्बरे ९धुस्तूरे १०स्वनाम-ख्याते वृक्षे च पु०मेदि०। स्वार्थे कन्। काञ्चनवृक्षे। काञ्चनवृक्षश्च सुश्रुते वातशमनतयोक्तः। भद्रदारुकुष्ठेत्या-द्युपक्रमे "काञ्चनकभार्गीत्यादिना "समासेन वातसंशमनो-वर्ग" इति। "काञ्चनारः काञ्चनको गण्डारिः शोण-पुष्पकः। कोविदारश्च मरिचः कुद्दालो युग्मपत्रकः। कुण्डली ताम्रपुष्पश्चाश्मन्तकः स्वल्पकोरकः। काञ्चनारो हिमग्राही तुवरः श्लेष्मपित्तनुत्। क्रमिकुष्ठगुदभ्रंश गण्डमालाव्रणापहः। कोविदारोऽपि तद्वत् स्यात् तयोः पुष्पं लघु स्मृतम्। रूक्षं संग्राहि पित्तास्रप्रदर-क्षयकासनुत्" भावप्र० तत्पर्य्यायभेदगुणाद्युक्तम्। काञ्चनमिव कायति कै–क। हरिताले न० राजनि० शालिभेदे सुश्रु० "लोहितकशालिकलमेत्याद्युपक्रमे" दीर्घ-शूककाञ्चनकेत्यादि "महाद्रूषकप्रभृतयः शालयः" इत्य-न्तम्। काञ्चनस्य विकारः अण्।११काञ्चनविकारे त्रि०। "स काञ्चने यत्र मुनेरनुज्ञया" माघः। "निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति" मनुः। स्त्रियां ङीप्। "तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टिः" मेघ०। किमः द्वितीयान्तात् स्त्रियां चन मुग्ध०। १२काञ्चिदि-त्यर्थे अव्य०। "न च काञ्चन काञ्चनसञ्चितिम्" भट्टिः। "न काञ्चन परिहरेत्" छा०उ०। द्विपदमिति बहवः। काचि बन्धने भावे ल्युट्। १२बन्धने न०।

**काञ्चनकदली** स्त्री काञ्चनवर्णा कदली। स्वर्णकदल्याम् (चाँपाकला) राजनि०।

**काञ्चनकारिणी** स्त्री काञ्चनं बन्धनं करोति कृ–णिनि ङीत०। शतमूल्यां शब्दच०। तस्या बहुमूलत्वेन बन्धन-कारित्वात् तथात्वम्। [चोरिणीलतायाम् राजनि०।

**काञ्चनचोरी** स्त्री काञ्चनमिव चोरमस्याः गौरा० ङीष्।

**काञ्चनगिरि** पु० काञ्चनमयस्तत्प्रधानो वा गिरिः शाक० त०। १सुमेरुपर्वते हेमच०। २दानार्थकल्पितस्वर्णाचले च। काञ्चनाचलस्वर्णाचलादयोऽप्यत्र।

**काञ्चनपुष्पक** न० काञ्चनमिव पीतं पुष्पमस्य कप्। आडल्य-वृक्षे राजनि० आडल्यशब्दे ८०५पृ० दृश्यम्।

**काञ्चनपुष्पी** स्त्री काञ्चनमिव पुष्पमस्य ङीप्। गणिकारी वृक्षे राजनि०।

**काञ्चनप्रभ** पु० ऐलवंश्ये नृपभेदे। ऐलपुत्रवंशोपक्रमे "अमावसोस्तु दायादो भीमोराजाथ जन्मजित्। श्रीमान् भीमस्य दायादो राजासीत् काञ्चनप्रभः" हरिवं०२७अ०

**काञ्चनाक्ष** पु० दानवभेदे। "काञ्चनाक्षः कपिस्कन्धो व्याघ्राक्षः क्षितिकम्पनः" हरिवं० २४० अ०।

**काञ्चनार** पु०काञ्चनं तद्वर्णमृच्छति पुष्पेण, ऋ–अण् उप० स०। पीतपुष्पे कोविदारे काञ्चनवृक्षभेदे भावप्र०।

**काञ्चनाल** पु० काञ्चनं तद्वर्णमलति अल–अण् उप० स०। पीतपुष्पे कोविदारे काञ्चनवृक्षभेदे शब्दर०।

**काञ्चनी** स्त्री काञ्चते दीप्यतेऽनया काचि–दीप्तौ करणे ल्युट् ङीप्। १हरिद्रायाम् मेदि० २गोरोचनायाम्। काञ्चनं तद्वर्णः चोरेऽस्याः ङीष्। ३स्वर्णचोरिणीवृक्षे च राजनि०।

**काञ्चनीया** स्त्री काञ्चनाय दीप्तौ हिता छ। १गोरोचनायाम् राजनि० काञ्चनस्येदम् वृद्धत्वात् छ। २काञ्चनसम्बन्धिनि त्रि०। "काञ्चनीयाऽपि माला या न सा दुष्यति कर्हि-चित्" भा० अनु० १०४ अ०।

**काञ्चि(ञ्ची)** स्त्री काचि–बन्धने कर्मणि इन्। रशनायाम् (चन्द्रहार गोट) इत्यादौ कटिबन्धदामभेदे। "स्वकराव-बन्धनविसक्तगलत्कलकाञ्चि काञ्चिदरुणत्तरुणः" माघः।

काचि—दीप्तौ कर्त्तरि इन् ।२मोक्षदसप्तपुर्य्यन्तर्गतपुरीभेदे च "अयोध्या मथुरा माया काशी काञ्चिरवन्तिका। पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः"काञ्चिरभिजनोऽस्य अण् तस्य बहुषु लुक् । ३पितादिक्रमेण तत्र वासिषु जनेषु पु० ब० व० ।"मूलतस्त्वासृजत् काञ्चीं कृष्णांश्चैव पार्श्वतः" भा०आ०१७५अ०। कृदिकारान्तत्वात् वा ङीप् उक्तार्थे। "शरीचोभारत्तरितविहगश्रेणिकाञ्चीगुणायाः" मेघ० । "पुनः पुनः केशरदामकाञ्चीम्" "काञ्चीगुणस्थानमनिन्दितायाः"कुमा०। "माहिष्मतीवप्रनितम्बकाञ्चीम्"रघुः । मुक्तिस्थानानान्यक्षेत्रेत्युपक्रमे"काञ्ची च त्र्यम्बकं चापि सप्तगोदावरीतटम्" काशी०६अ० "जगाम नगरीं काञ्चीं कान्तां त्रिभुवनादपि । लक्ष्मीकान्तः स्वयं साक्षाज्जन्तूंस्तत्र निवासिनः । श्रीकान्तानेव कुरुते परलोके च निश्चितम्। दृष्ट्वा काञ्चीं कान्तिमतीं कान्तिमद्भिर्निषेविताम्। कान्तिमान-भवत् सोऽपि नाकान्तिस्तत्र कस्यचित्"काशीख०। इयञ्च द्विविधा शिवकाञ्ची विष्णुकाञ्ची च पु०प्रसिद्धा। काञ्चीपुरी च दक्षिणस्यां इ०स०कूर्म्मविभागे उक्ता। अथ दक्षिणेन लङ्केत्युपक्रमे काञ्ची "मरुचीपट्टन चेर्य्यार्य्यकसिंहला ऋषभाः" इति । काञ्चीशब्दस्य प्रस्थशब्दे परे आद्युदात्तता। मेखलाभेदश्च "एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका। रशना षोड़श ज्ञेया कलापः पञ्चविंशकः" इत्युक्तलक्षणः। अभेदोपचारादन्ययष्टिकायामपि वृत्तिरिति बोध्यम्। [हेमच०।

**काञ्चिक** न० काचि-बन्धने इन् संज्ञायां कन् । काञ्जिके

**काञ्चि(ञ्ची)पद** न० ६त०। जघने। हेमच०।

**काञ्जिक** न० अन्ज—धात्वर्थनिर्देशे ण्वुल् कुत्सिता अञ्जिका व्यक्तिर्यस्य। आरनाले (काँजि) हेमच०।

तस्य गुणादि भाव०प्र०उक्तं यथा "काञ्जिकं रोचनं रुच्यं पाचनं वह्निदीपनम्। शूलाजीर्णविबन्धघ्नं कोष्ठशुद्धिकरं परम्" अन्यत्र वैद्यके च "संहितं धान्यमण्डादि काञ्जिकं कथ्यते जनैः। काञ्जिकम्भेदि तीक्ष्णोष्णं रोचनं पाचनं लघु, दाहज्वरहरं स्पर्शात् पानाद्वातकफापहम्। माषादिवटकैर्यत्तु क्रियते तद्गुणाधिकम्। लघु वातहरं तत्तु रोचनं पाचनम्परम्। शूलाजीर्णविबन्धानां नाशनं वस्तिशोधनम्। धान्याम्लमच्छतरमामनिवारि हारि शुण्ठीरजोलवणजीरकसंस्कृतं यत्। आवासितं सुरभि हिङ्गुकणेन यत्नात् तेनाशुशुक्षणिकणोऽधिकतां प्रयाति। एवामहौषधविभावितमाषिमन्थं संसिद्धमामलकभेदककाञ्जिकं यत्। मन्दं विवर्द्धयति जाठरवीतिहोत्रं निर्वाणदीपमिव गन्धकचूर्णयोगः। काञ्जिकं रुचिदं हृद्यं स्वच्छमग्निकरं परम्। वातघ्नं श्लेष्म गुर्वाहारस्य पाचकम्"। अन्यत्र च "काञ्जिकं दधितैलन्तु वलीपलितनाशनम्। गात्रशैथिल्यदानाय मर्दनाच्च च भक्षणात्"। भावप्र० तद्भेदतद्विधाना-द्युक्तं यथा—"कुल्माषधान्यमण्डेन संहितं काञ्जिकं भवेत्। यन्मस्त्वादि शुचौ भाण्डे सगुड़ं चौद्रकाञ्जिकम्। धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते। तुषाम्बु संहितम् ज्ञेयमामैर्विदलितैर्यवैः। यवैस्तु निस्तुषैः पक्वैः सौवीरं साधितं भवेत्। आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः। पक्वैर्वा संहितैस्तत्तु सौवीरसदृशं गुणैः। कल्माषधान्यमण्डादि संहितं काञ्जिकं विदुः। शिण्डिका संहिता ज्ञेया मूलकैः सर्षपादिभिः"।

**काञ्जिकवटक** पु०(काँजिवडा) प्रसिद्धे भावप्रकाशोक्ते वटकभेदे तद्विधानगुणादि तत्रोक्तं यथा"मन्थनी नूतना धार्य्या कटुतैलेन लेपिता। निर्म्मलेनाम्बुनापूर्य्य तस्यां चूर्णं विनिःक्षिपेत्। राजिकाजीरलवणहिङ्गुशुण्ठीनिशाकृतान्। निःक्षिपेद्वटकांस्तत्र भाण्डस्यास्यञ्च मुद्रयेत्। ततोदिनत्रयादूर्द्ध मम्लाः स्युर्वटका ध्रुवम्। काञ्जिकी वटकोरुच्यो वातघ्नः श्लेष्मकारकः"। शीतोदाहं शूलमजीर्णं हरते दृगामयेष्वहितः"।

**काञ्जिका** स्त्री ईषदञ्जिका अन्ज-ण्वुल् अत इत्त्वम् कोः कादेशः। १जीवन्तीलतायां २पलाशीलतायां राजनि०। वैद्यकोक्ते सार्षपकन्देन कृते व्यञ्जनभेदे तल्लक्षणं यथा"सार्षपीकन्दली सूक्ष्मा खण्डिता स्निग्धभाजने। स्थापिता मण्डसहिता तथ वा तण्डुलोदके। सप्तरात्रात् परं चुक्रं ततः सम्यक् प्रजायते। तस्मादेव समाकृष्य तत्रयेद्वाप्रलेहयेत्। काञ्जिकेति समाख्याता सूदधर्म्मोपजीवकैः। सार्षपस्य गुणा ये हि ते चास्या अपि कीर्त्तिताः"।

**काञ्जी** स्त्री कं जलमनक्ति अन्ज—अण् उप०स० गौरा० ङीष् पा०, मुग्ध० षण् ईप्। महाद्रोणीवृक्षे राजनि०

**काट** पु० कं जलमच्यते प्राप्यतेऽत्र अट—आधारे घञ्। १कूपे निरु०। "इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निवाह्लः"ऋ०१,१०६,६, "कूटयास्य संशीर्य्यन्ते स्त्रैणया काटमर्द्दति" अथ०१२,४,३, २विषममार्गे वेददी०।

**काटुक** न० कटुकस्य भावः युवा० अण्। कटुकत्वे।

**काट्य** त्रि० काटे विषममार्गे कूपे वा भवः यत् । १विषममार्गभवे २कूपभवे च ३रुद्रभेदे पु० । "नमः काट्याय च नीप्याय च" यजु० १६,३७, नमः काट्याय च गह्वरेष्ठाय च"। "काटे कूपे विषममार्गे वा भवः" वेददी० ।

**काठ** पु० कठ्यते तड्यते कठ–तड्ने कर्म्मणि घञ् । १पाषाणे त्रिका० । कठस्येदम् अण् । २कठसम्बन्धिनि त्रि० स्त्रियां ङीप् ।

**काठक** न० कठानां धर्म्म आम्नायः समूहो वा वुञ् । १कठशाखाध्यायिधर्म्मे २तदाम्नाये ३तत्समूहे च "देवसुम्नयोर्यजुषि काठके" पा० कठशब्दे व्याकृतमेतत् । "यद्रोदीत्तद्रुद्रस्य रुद्रत्वमिति काठकम्" निरु० ।

**काठिन्यफल** पु० काठिन्यं फलेऽस्य । कपित्थे राजनि० ।

**काठेरणि** पु० ऋषिभेदे । तस्येदं तत्रभवो वा गहा० छ । काठेरणीय तत्सम्बन्धिनि तत्रभवे वा त्रि० ।

**काण** पुंस्त्री कण–निमीलने संज्ञायां कर्त्तरि घञ् । १काके मेदि० स्त्रियां जातित्वात् ङीष् । २एकचक्षुर्युक्ते त्रि० । काणत्वञ्च चक्षुरिन्द्रियशून्यैकगोलकवत्त्वम् । "पौनर्भवश्च काणश्च यस्योपपतिर्गृहे" "वीक्ष्यान्धो नवतेः काणः षष्टेः श्वित्री शतस्य तु" अपाङ्क्तेयकथने मनुः । "खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत्" "काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम् । तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणं वरम्" मनुः । अस्य निरुक्तं ६अ० "अदायिकाणे विकटे" इत्यृचमधिकृत्य अन्याऽपि निरुक्तिर्दर्शिता यथा—"अदायिनि काणे विकटे विक्रान्तदर्शने इत्यौपमन्यवः । कणतेर्वा स्यादणूभावकर्मणः । कणतिः शब्दाणूभावे भाष्यतेऽनुकणतीति मात्राणूभावात् कणादर्शनाणूभावात् काणः" इति "परोपहासकृत् काणो गां दद्यात् स समौक्तिकाम्" शाता० परोपहासकर्मविपाकः काणत्वमुक्तम् । मनुना तु दीपनिर्वापककर्म्मविपाकत्वमुक्तम् । "दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत्" ।

**काणभूति** पु० वररुचिनामकात्यायनेन बृहत्कथाश्रावणोद्देश्ये पिशाचत्वप्राप्ते यक्षभेदे । "विन्ध्याटव्यां कुवेरस्य शापात् प्राप्तः पिशाचताम् । सुप्रतीकाभिधोयक्षः काणभूत्याख्यया स्थितः" "इत्याख्याय कथामध्ये विन्ध्यान्तः काणभूतये । पुनर्वररुचिस्तस्मै प्रकृतार्थमवर्णयत्" इति च बृहत्क० तद्वितिवृत्तं तत्रैव दृश्यम् ।

**काणुक** त्रि० कण–दीप्तौ बा० उकञ् । १कान्ते २क्रान्ते ३पूर्णीकृते च । "इन्द्रः सोमस्य काणुका" ऋ० ८,७७,४ । "काणुका कान्तानि क्रान्तानि सोमेन, कृतानि वा सोमपूर्णानि" भा० । निरुक्ते तु इमामृचमधिकृत्य ५,११, उक्तं यथा—"काणुका कान्तकानीति वा क्रान्तकानीति वा कृतकानीति वा इन्द्रः सोमस्य कान्त इति वा कणेघात इति वा कणेहतः कान्तिहत इति" । तत्र पृषो० सर्व्वत्र साधु ।

**काणूक** पुंस्त्री कणति कण–ऊकण् । वायसे उज्ज्व० । स्त्रियां जातित्वात् ङीष् ।

**काणेय** पुंस्त्री काणायाः अपत्यम् "स्त्रीभ्यो ढक्" पा० ढक् । काणाया अपत्ये पक्षे "क्षुद्राभ्यो वा" पा० ढ्रक् । काणेरस्तत्रार्थे पुंस्त्री "क्षुद्राश्च अङ्गहीनाः शीलहीनाश्च" सि० कौ० । काणेयानां विषयो देशः भैरिका० विधल् । काणेयविध तद्विषये देशे ।

**काणेली** स्त्री १अनूढायां कन्यायाम् २असत्यां स्त्रियाञ्च । "काणेलीमातः ! वामतस्तस्य सार्थवाहस्य गृहम्" मृच्छ० ।

**काण्टकमर्द्दनिक** त्रि० कण्टकमर्द्दनेन निर्वृत्तम् अक्षद्यूता० ठक् । कण्टकमर्द्दनेन निर्वृत्ते स्वास्थ्यादौ ।

**काण्ठेविद्धि** पुंस्त्री कण्ठे विद्धः ७त० सप्तम्याः अलुक् कण्ठेविद्धऋषिभेदस्तस्यापत्यम् इञ् । कण्ठेविद्धस्यापत्ये स्त्रियां तु गोत्रप्रत्ययान्तत्वात् वा ष्यञ् पक्षे ङीप् । काण्ठेविद्धा काण्ठेविद्धी वा ।

**काण्ड** पुंन० कनी–दीप्तौ ड तस्य नेत्त्वं किच्च दीर्घः । १दण्डे २वाणे ३पर्वणि कुत्सिते ४वर्गे ५अवसरे ६जले च अम० । ७नाले (डाँटा) ८वृक्षस्कन्धे (गुँडि) ९स्तम्बे (गुल्मभेदे) १०निर्जने धरणिः ११नाडीवृन्दे १२वृक्षभेदे (शरवृक्ष) मेदि० । १३श्लाघायां हेमच० । दण्डश्चात्र षोड़शहस्तमितः वंशः वंशादिदण्डस्य "काण्डान्तात् क्षेत्रे" पा० क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि सति द्वे काण्डे प्रमाणमस्याः सा द्विकाण्डा क्षेत्रभक्तिः । "प्रमाणे द्वयसजिति" पा० विहितस्य मात्रचः "प्रमाणे लो द्विगोर्नित्यमिति" वार्त्ति० लुक् । क्षेत्रे किं द्विकाण्डी रज्जुः" सि०कौ० । "पृषता वरत्राकाण्डेनाहन्ति" कात्या० ८,७,२७ । वरत्राकाण्डेन वंशदण्डेन" कर्कः । वाणे "सविषं काण्डमादाय मृगयामास वै मृगम्" भा०अनु०२६५श्लो० । वर्गे "अपातमस्काण्डमलीमसं नभः" माघः । "वृक्षकाण्डमितो भाति" रामा० । "दूर्व्वाकाण्डमिव

श्यामा” भट्टिः। वर्गे च एकजातीयसमुदायः “क्रिया-काण्डेषु निष्णातोयोगेषु च कुरूद्वह!” भाग०४,२४,६। “अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्त-जन्मा” भाग०८,४,२३। उपचारात् १४तत्प्रतिपादक-ग्रन्थे च ब्रह्मकाण्डं कर्म्मकाण्डम् अवसरस्यात योग्य-कालः प्रस्तावश्च तत्र योग्यकाले अकाण्डशब्दे ५१८उदा०। प्रस्तावे अयोध्याकाण्डं लङ्काकाण्डमित्यादि। नालमत्र लतादीनां पत्राधारदण्डः (डाँटा)नालाहृपञ्च। तत्र नाले “काण्डमूलपत्रपुष्पफलप्ररोहरसगन्धानां साहश्येन प्रति-निधिं कुर्यात् सर्वाभावे यत्र प्रतिनिधिः” श्रा०त०पैठी०। “काण्डं नालम्” रघु०। “पुच्छकाण्डादूर्जितोऽस्मनि” कात्या० २५,६,५। पुच्छं काण्डमिव नालाहृपत्वात्। स्तम्बे “काण्डात् काण्डात् प्ररोहन्ती:” यजु० १३,१४। “महतः पञ्चमूलस्य काण्डमष्टाद्याङ्गुलम्” सुश्रु०। स्कन्धे “इक्षुकाण्डानि वा क्षणसर्पेण दंशयित्वा भक्ष-येत्” “दूर्वेन्दीवरनिस्त्रिंशार्द्रारिष्टशरकाण्डानामन्यतम-वर्णः” सुश्रु० “उद्भिज्जाः स्थावराः सर्वे बीजका-ण्डप्ररोहिणः” “बीजकाण्डरुहाण्येव प्रतानावल्ल्य एव च” मनुः।१५ग्रन्थपरिच्छेदे। मधुकाण्डं श्राद्धकाण्डम् १६सन्धिविच्छिन्नैकखण्डास्थि न०। “भग्नं समासात् द्विविधं हुताशकाण्डे च सन्धौ च हि तत्र सन्धौ। उत्पिष्टवि-श्लिष्टविवर्त्तितञ्च तिर्य्यग्गतं क्षिप्तमधश्च षट् च”। रोग-निश्चयः। “सन्धिविच्छिन्नमेकखण्डमस्थि काण्डम्” तट्टीका-काण्डस्यावयवो विकारो वा बिल्वा० अण्। १७काण्डा-वयवे १८तद्विकारे च त्रि० १९अङ्कोठवृक्षे पु० शब्दचि०।

**काण्डकटुक** पु० काण्डे स्कन्धेऽपि कटुकस्तिक्तः। कारवेल्ले, (करेला) राजनि०। [मस्य कप्। काण्डशब्दे राजनि०।

**काण्डकाण्डक** पु० काण्डस्य शरद्वस्य काण्डमिव काण्ड-

**काण्डकार** पु० काण्डं किरति विस्तीर्णतया कॄ—ण्वुल्। १गुवाकवृक्षे शब्दमा०। कृ—ण्वुल्। २वाणकारके त्रि०।

**काण्डकीलक** पु० काण्डे कीलमिव यस्य कप् समा०। लोध्रवृक्षे राजनि०। तस्मिन् हि कीटसम्बन्धात् कीलमिव स्कन्धे जायते। [दीर्घकाण्डे गुण्डनामतृणे राजनि०।

**काण्डगुण्ड** पु० काण्डेन गुण्डयति गुडि—वेष्टने अण्।

**काण्डगोचर** पु० काण्डस्य बाणस्य गोचर इव गोचरोऽस्य। लौहनाले नाराचाख्ये अस्त्रभेदे त्रिका०।

**काण्डतिक्त** पु० काण्डे तिक्तः। भूनिम्बे (चिराता) राजनि०। स्वार्थे कन्। काण्डतिक्तक तत्रैव।

**काण्डधार** पु० काण्डं धारयत्यत्र धृ—णिच् आधारे अच्। १देशभेदे। स अभिजनोऽस्य तक्षशिला० अञ्। २काण्ड-धार पित्रादिक्रमेण तत्रवासिनि त्रि०। [राजनि०।

**काण्डनील** च० काण्डे नीलः कीटाक्रान्तत्वात्। लोध्रवृक्षे

**काण्डपट** पु० काण्ड इव पटः। (कानात) पटभेदे, हेमच०। तस्य हि संकोचे काण्डरूपता भवति। “ततः स्वमेवागार-मानीय काण्डपटपरिच्छिन्ने विविक्तोद्देशे” दशकु० स्वार्थे कन्। काण्डपटक तत्रैव। “उत्क्षिप्तकाण्डपटकान्तरलीय-मानः” माघः। [शरपुङ्खावृक्षे राजनि०।

**काण्डपुङ्खा** स्त्री काण्डस्य शरस्य पुङ्खो यस्याः ५त०।

**काण्डपुष्पा** स्त्री काण्डात् पुष्पमस्याः “काण्डप्रान्तशतैकेभ्यः पुष्पात्” पा० टाप्। द्रोणवृक्षे शब्दच० पुष्पे न०।

**काण्डपृष्ठ** न० काण्डं इष्टस्वास्थ्यदव स्थूलं पृष्ठमस्य। १स्थूलपृष्ठे धनुरादौ। काण्डः पृष्ठेऽस्य। २शस्त्राजीविनि पु०। “स्त्रीपूर्व्वाः काण्डपृष्ठाश्च यावन्तो भरतर्षभ! अजपा ब्राह्मणाश्चैव श्राद्धे नार्हन्ति केतनम्” भा० अनु० २३अ०। “अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च” भा०अनु०९०अ० अपाङ्क्तेयकथने। “चिकित्सकः काण्डपृष्ठः पुराध्यक्षः पुरोहितः” भा०अनु०१३५अ० अभोज्यान्नकथने। पापिनां तिर्य्यग्योनितः काण्डपृष्ठता-प्राप्तिश्च क्रमशो यथा भवति तथा भा० अनु० २८अ० निरूपितं यथा “तिर्य्यग्योनिगतः सर्व्वोमानुष्यं यदि गच्छति। स जायते पुक्कशो वा चण्डालो वाऽप्य-संशयः। पुक्कशः पापयोनिर्वा यः कश्चिदिह लक्ष्यते। स तस्यामेव सुचिरं मातङ्गः परिवर्त्तते। ततोदशशते काले लभते शूद्रयोनिताम्। शूद्रयोनावपि ततो बहुशः परिवर्त्तते। ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि। वैश्यतायां चिरं कालं तत्रैव परिवर्त्तते। ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम्। ब्रह्मबन्धुश्चिरं कालं तत्रैव परिवर्त्तते। ततस्तु द्विशते काले लभते काण्डपृष्ठताम्। काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्त्तते। ततस्तु त्रिशते काले लभते जडतामपि। तां च प्राप्य चिरं कालं तत्रैव परिवर्त्तते। ततश्चतुःशते काले श्रोत्रियो नाम जायते”। “स्वकुलं पृष्ठतः कृत्वा योवै परकुलं व्रजेत्। तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः” स्मृत्यन्तरोक्तकर्म्मविपाकः काण्डपृष्ठता। ३वेश्यापतौ शब्दकल्पद्रुमः तन्मूलं मृग्यम्।

**काण्डरुहा** स्त्री काण्डात् रोहति रुह—क। (कटकी)

१कटुक्याम् रत्नमाला । २स्कन्धरुहमात्रे त्रि० । “वीज-काण्डरुहाण्येव” मनुः ।

**काण्डर्षि** पु० काण्डस्य वेदभागभेदस्य ऋषिः तदधिकारेण विचारकः । वेदभागभेदमीमांसके जैमिन्यादौ त्रिका० । तत्र कर्म्मकाण्ड मीमांसको जैमिनिः तेन हि‘अथातो धर्म्म-जिज्ञासा’ इत्यादिसूत्रजातेन कर्म्मकाण्डस्य विचारः कृतः । ब्रह्मकाण्डस्य विचारको वेदव्यासः तेन हि “अथातो ब्रह्मजिज्ञासा” इत्यादिसूत्रजाते ब्रह्मकाण्डस्य विचारः कृतः । एवं भक्तिकाण्डस्य विचारकः शाण्डिल्य इति बोध्यम्

**काण्डवत्** पु० काण्डोऽस्त्यस्य प्रहरणत्वेन मतुप् मस्य वः । शरधारिणि (तीरन्दाज) अमरः ।

**काण्डवारिणी** स्त्री काण्डान् रिपुवाणान् वारयति स्मरणेन वृ-णिच्-णिनि । दुर्गायाम् “महागजघटाटोपसंयुगे नरवाजिनाम् । स्मरणात् वारयेत् वाणान् तेन सा काण्डवारिणी” देवीपु० ४५अ० देवीनामभेदनिरुक्तौ ।

**काण्डलाव** त्रि० काण्डं लुनाति लू-अण् उप० स० । १वृक्षस्कन्धच्छेदके काण्डं लवितुम् “अण् कर्मणि च” पा० । क्रियार्थायां क्रियायां कर्मण्युपपदेऽण् । २काण्डं छेत्तुमित्यर्थे । काण्डलावो व्रजति” सि०कौ० काण्डं छेत्तं व्रजतीत्यर्थः ।

**काण्डवीणा** स्त्री काण्ड इव स्थूला वीणा । १स्थूलवीणायां चाण्डालवीणायाम् । काण्डस्य शरस्य विकारः बिल्वा० अण् काण्डी वीणा कर्म० । २शरमय्यां वीणायाम् २‘गोधावी-णाः काण्डवीणाश्च पत्नीवादयन्त्युपगायन्ति” कात्या० १२, २,१७ । ‘शरकाण्डमय्योवीणाः काण्डवीणाः” कर्कः ।

**काण्डसन्धि** पु० ६त० । ग्रन्थौ पर्वणि (पाब्)(गाँट) राजनि०

**काण्डस्पृष्ट** पु० स्पृष्टं गृहीतं काण्डं येन निष्ठान्तत्वात् परनि० । शस्त्राजीवे अमरः ।

**काण्डहीन** न० काण्डेन हीनम् ३त० । भद्रमुस्तके शब्द च० ।

**काण्डिका** स्त्री काण्डोऽस्त्यस्याः प्राशस्त्येन ठन् । १लङ्कानामकधान्यभेदे २वालुकानामकर्कटीभेदे च राजनि० ।

**काण्डिन्** त्रि० काण्डः गुल्मोऽस्त्यस्य प्राशस्त्येन इनि । प्रशस्तगुल्मयुक्ते स्त्रियां ङीप् । “अंशुमतीः काण्डिनीर्या विशाखा ह्वयामि ते वीरुधः” अथ० ८,७,४ ।

**काण्डीर** पु० काण्डोवाणोऽस्त्यस्य इत्यर्थे “काण्डाण्डादीरन्नी-रचौ पा०” इत्यत्र ईरन् ईरच् वा । १वाणास्त्रधारिणि (तीरन्दाज) अमरः “काण्डीरः खाड्गिकः शार्ङ्गी” भट्टिः वाणाकारशिखावत्त्वात् २अपामार्गे काण्डवेल इति ख्याते ३लताभेदे च राजनि० ४मञ्जिष्ठायां स्त्री रत्नमाला अत्रार्थे गौरादित्वात् ङीष् । [तृणभेदे राजनि० ।

**काण्डेक्षु** पु० काण्डे इक्षुरिव (तालमाखना) इति ख्याते काश-

**काण्डेरी** स्त्री काण्डं वाणाकारं हस्तिदन्तमिव पुष्पम् ईर्त्ते ईरङ्-गतौ अण् गौरादेराकृतिगणत्वात् ङीष् पा०, मुग्ध० षत् ईप् । नागदन्तीवृक्षे रत्नमाला ।

**काण्डेरुहा** स्त्री काण्डे रोहति रुह–क ७त० अलुक्स० । (कट्की) कटुकीवृक्षे रत्नमा० । [अमरे पाठान्तरम् ।

**काण्डोल** पु० कण्डोल+प्रज्ञा० स्वार्थे अण् । कण्डोलशब्दार्थे

**काण्व** पु० काण्व्यस्य कण्वगोत्रापत्यस्य छात्रः कण्वादि० अण् यलोपः । १कण्वगोत्रापत्यस्य छात्रे ‘यजुर्भिरकरोच्छाखा दशपञ्च शतैर्विभुः । जगृहुर्वाजसंन्यस्ताः काण्वमाध्यन्दिना-दयः’ भाग० १२,६,७७ । २तदधीतशाखायां स्त्री ङीप् । कण्वस्यापत्यं शिवा० अण् । ३कण्वापत्ये पुंस्त्री “याभिः काण्वस्योप बर्हिः” ऋ० ८,१,८ । “इथा धीमन्तमद्रिवः काण्वं मेध्यातिथिम्” ८,२,४० । “काण्वं कण्वस्य पुत्रम्” भा० । गोत्रापत्ये तु गर्गा० यञ् । काण्व्य तद्गोत्रापत्ये बहुषु तस्य लुक् । स्त्रियां गोत्रान्तत्वात् ङीप् यलोपश्च । काण्वी तद्गोत्रापत्यस्त्रियाम् । “काण्वीपुत्रात् काण्वीपुत्र” वृ० उ० वेदवंशवर्णने । ततः स्त्रियां लोहिता० फक् । काण्वा-यनी । ततोयून्यपत्ये तु “यञिञोश्च ४।१।१०१” पा० फक् । काण्व्यायन तदीययुवापत्ये पुंस्त्री । कण्वेन दृष्टं साम अण् । ४कण्वदृष्टे सामभेदे । “कौत्सं भवति काण्वं भवति” श्रुतिः । तच्च साम गेय(वे)गाने १६ प्रपाठके दृश्यम् ।

**कात्** अव्य० कुत्सितमतत्यनेन अत–आधारे क्विप् कोः कादेशः । तिरस्कारे तिरस्कारस्य कुत्सितप्राप्तिहेतुत्वा-त्तथात्वम् । “यन्मयैश्वर्य्यमत्तेन गुरुः सदसि कात्कृतः” भाग० ६,७,६ । “कात्कृतस्तिरस्कृत” श्रीधरः ।

**कातन्त्र** न० ईषत्तन्त्रमस्य कोः कादेशः । कालापकव्याकरणे तच्च कार्त्तिकेयप्रसादेन सर्ववर्मणा कृतं यथोक्तं वृहत्-कथासारे सर्ववर्माभ्यभाषतेत्युपक्रमे “ततोऽन्तःप्रभृणा तेन स्कन्देन मम दर्शनम् । दत्तं तत्र प्रविष्टा मे मुखे मूर्त्ता सरस्वती । अथासौ भगवान् साक्षात् षड्भि-राननपङ्कजैः । “सिद्धोवर्णसमाम्नायः” इति सूत्रमु-दैरयत् । तच्छ्रुत्वैव मनुष्यत्वसुलभाच्चापलात् परम् । उत्तरं सूत्रमभ्यूह्य स्वयमेव मयोदितम् । अथा-ब्रवीत् स देवो मां नावदिष्यः स्वयं यदि । अभविष्य-दिदं शास्त्रं पाणिनीयोपमर्दकम् । अधुना स्वल्पतन्त्रत्वात्

कातन्त्राख्यं भविष्यति । महाहनकलापस्य नाम्ना कालापकं तथा । इत्युक्त्वा शब्दशास्त्रं तत्प्रकाश्याभिनवं लघु । साक्षाद्देव स मां देवः पुनरेवमभाषत”

**कातर** त्रि० ईषत्तरति स्वकार्य्यसमाप्तिं गच्छति तॄ—अच् कोः कादेशः । १अधीरे, व्यसनाकुले अमरः २भीते, ३विवशे, ४चञ्चले च । “धेन्वा तदध्यासितकातराक्ष्या” रघुः । “तयोः समापत्तिषु कातराणि” कुमा० । “कातरोऽपि यदि चोद्गतार्चिषा” रघुः । “मद्गेहिन्याः प्रिय इति सखे ! चेतसा कातरेण” मेघ० । “विद्धा मृगी व्याधशिलीमुखेन मृगोऽपि तत्कातरवीक्षणेन” उद्भटः । के जले आतरति प्लवते न तु विशेषतो मज्जति । ५उडुपे । (कातला) ६मत्स्यभेदे पुंस्त्री स्त्रियां जातित्वात् ङीष् । ७ऋषिभेदे पु० ततः गोत्रे नड़ा० फक् । कातरायण तद्गोत्रापत्ये पुंस्त्री । भावे ष्यञ् । कातर्य्य व्याकुलतायां न० “कातर्य्यं केवला नीतिः शौर्य्यं श्वापदचेष्टितम्” रघुः । तल् कातरता स्त्री, त्व कातरत्व न० तदर्थे ।

**कातल** पु० कस्य जलस्य न तलमस्ति स्पृश्यत्वेनास्य अच् । (कातला) १मत्स्यभेदे राजनि० । स्त्रियां जातित्वात् ङीष् । “कातलो मधुरस्नोष्णोगुरुपाकी त्रिदोषकृत्” वैद्य० । २ऋषिभेदे च ततः गोत्रापत्ये नडा० फक् । कातलायन तदपत्ये पुंस्त्री स्त्रियां गोत्रत्वात् ङीष् ।

**काति** स्त्री कै—शब्दे क्तिन् । स्तवे ऋणकातिशब्दे उदा० ।

**कातीय** त्रि० कात्यायनस्य छात्रः तस्येदं वा “वृद्धाच्छः” पा० छ तत्र फको वा लुक् । १कात्यायनच्छात्रे २तत्सम्बन्धिनि च त्रि० । कातीयं श्रौतसूत्रं गृह्यसूत्रमित्यादि पक्षे न लुक् । कात्यायनीय तदर्थे त्रि० । कातीयश्रौतसूत्रप्रतिपाद्यविषयाश्च कात्यायनशब्दे दृश्याः ।

**कातु** पु० कं जलमतति सातत्येन गच्छति अत—उन् इत० । कूपे निरु० तस्य ग्रीष्मे निःशेषेण शोषणाभावात् तथात्वम्

**कात्थक्य** पु० कत्थ-श्लाघायाम् ण्वुल् कत्थकः स्वार्थे ष्यञ् अग्निभेदे निरु० । “यज्ञेध्म इति कात्थक्योऽग्निरिति” शाकपूणिः । “नाराशंसो यज्ञ इति कात्थक्यः नरा अस्मिन्नासीनाः शंसन्ति अग्निरिति शाकपूणिः । इति च निरु० ८,५,६, [ पत्ये ।

**कात्य** पुंस्त्री कतस्यर्षेःगोत्रापत्यम् गर्गा०यञ् । कतर्षिगोत्रा-

**कात्यायन** पु० कतस्य गोत्रापत्यं युवा गर्गा०यञ् यञन्तत्वात् यनि फक् । कतस्य युवगोत्रापत्ये ऋषिभेदे । स च त्रिविधः विश्वामित्रवंश्यः, गोभिलपुत्रः, कतवंश्यसोमदत्त द्विजपुत्रः वसुदत्तागर्भजः वररुचिनाम्ना ख्यातश्च । तत्र विश्वामित्रगोत्रोत्पन्नः हरिवं २८३० उक्तो यथा । “विश्वामित्रस्य च सुता देवरातादयः स्मृताः। विख्यातास्त्रिषु लोकेषु तेषां शीलानि वै शृणु । देवश्रवाः कतश्चैव यतः कात्यायनाः स्मृताः” इति ।

अयञ्च गोभिलपुत्रकात्यायनात् भिन्नः । गोभिलपुत्रकात्यायनेन च कर्मप्रदीपाख्यं छन्दोगपरिशिष्टरूपं शास्त्रं प्रणीतं तस्येदमादिमं वचनम् । “अथातो गोभिलोक्तानामन्येषाञ्चैव कर्म्मणाम् । असपष्टानां तथा सम्यग्दर्शयिष्ये प्रदीपवत्” । तत्र१प्रपाठके १०खण्डाः तत्र १ख० यज्ञोपवीतादिपरिभाषा । २ख०श्राद्धव्यादि परिभाषा । ३ख०अक्रियादित्रैविध्यादिकथनपूर्वकं श्राद्धविधिनिरूपणम् । ४ख० पिण्डदानविधानम् । ५ख० नान्दीमुखश्राद्धादिकर्त्तव्यताविधानानि । ६ख० अग्न्याधानादिकालाधिकारिधर्मविधानम् । ७ख०अरणीनिर्माणप्रकारादि । ८ख० अग्न्युद्धारप्रकारादि । ९ख० अग्निहोत्रकालादितद्विधानादि । १०ख० दन्तधावनस्नानादिविधानम् उपाकर्म्मोत्सर्गादिस्नानादिविधानञ्च ।

२प्रपाठके नव खण्डाः । तत्र१ख० सन्ध्योपासनकालादितद्विधानानि । २ख० तर्पणप्रकारादि । ३ख० पञ्चयज्ञविधानप्रकारादि । ४ख० वैश्वदेवविधानप्रकारः । ५ख० दक्षिणादानादिप्रकारः । ६ख० अमावास्यादिश्राद्धकालव्यवस्था तद्विधानप्रकारश्च । ७ख० कर्षूनिर्माणप्रकारः श्राद्धविधानप्रकारश्च । ८ख०दर्शपौर्णमासविधानप्रकारः ।९ख०प्रवासगमनकाले साग्निकस्य कर्त्तव्यविशेषकथनम् ।

तृतीयप्रपाठके ।१खण्डाः। तत्र १ख० साग्निकस्य पत्नीमरणे कर्त्तव्यविशेषविधानम् । २ख०साग्नेर्दाहप्रकारः । ३ख०शवस्पर्शिकर्त्तव्यभेदविधानम् साग्निकस्य विदेशमरणे दाहविधानञ्च । ४ख० सूतके सन्ध्यादित्यागेऽपि श्रौतकर्मणामनुष्ठानविधानम् । ५ख० पुंसवनादिक्रियाङ्गहोमाहुतिसंख्याविशेषकथनं शुङ्गापतिव्रताब्रह्मबन्धुशलाटुग्रन्थकपुष्पिकाकुच्छलक्षपरादिशब्दपरिभाषा ब्रह्मचारिकर्त्तव्यविधानञ्च । ६ख० समशनीयचरुकर्त्तव्यताविषयोपदर्शनम् नवयज्ञकालकथनञ्च । ७ख० विहितकर्मातिक्रमे प्रायश्चित्तविशेषविधानम्, अन्वैष्टरूपशंवरशब्दपरिभाषा ।८ख० वर्णभेदेन दण्डप्रमाणकथनम्, माह्यदर्भनिरूपणञ्च । दक्षिणायां गोः प्रवर-

तोक्तिः उपाकर्मप्रकारश्च । ९ख० यत्रधानादिशब्दानां पारिभाषिकार्थकथनम् । वेदोत्सर्गकथनं तत्र बलिप्रकारः स्रुतकादिना तदकरणे आपच्छायश्चित्तकर्त्तव्यताविधानम् तत्र बलिदाननवर्जनञ्च । तं यम्बकमण्डकगोलकचीवरशब्द-परिभाषा । अनुमन्त्रणप्रकारः । १०ख० । पशुसं-स्कारस्थानविशेषकथनम् । पशुदाने एकादशस्थान-कथनम् । पश्वभावे पायसपिण्डैः होमविधानम् श्राद्धे पिण्डदानप्राधान्यं गयादौ पिण्डमात्रदानदर्शनादिति परमतमुक्त्वा अन्नदानस्य प्राधान्यमिति स्वमतकथनम् । आमश्राद्धविधाने पिण्डाभाव इत्युक्तिः । दीपार्घ्यमधु-पर्कादिशब्दपरिभाषा" ।

अनेनैव धर्मसंहिता कृता । "मन्वत्रिविष्णुहारीत-याज्ञवल्क्योशनोऽङ्गिराः । यमापस्तम्बसंवर्त्ताः कात्यायन-बृहस्पती" इत्युपक्रमे "धर्मशास्त्रप्रयोजकाः" याज्ञ० । तत्र च प्रायेणाष्टादशविवादनिर्णयः । कातीयश्रौत-सूत्रसूत्रसर्वानुक्रमणिकादिकमनेनैव कृतम् । वररुचि-नामकात्यायनस्य पुष्पदन्तावतारस्तत्कथा च बृहत्-कथायाम् । सुप्रतीकयक्षावतारकाणभूतये स्वजन्मादि श्रावणरूपशापान्तमुपवर्ण्य स्वजन्मकथादि तत्रोक्तं यथा । "ततः स मर्त्यवपुषा पुष्पदन्तः परिभ्रमन् । नाम्ना वररुचिः किञ्च कात्यायन इति श्रुतः । पारं संप्राप्य विद्यानां कृत्वा नन्दस्य मन्त्रिताम् । खिन्नः समाययौ द्रष्टुं कदाचित् विन्ध्यवासिनीम्" इत्युपक्रम्य तस्य काणभूतिना सह मेलने जाते काणभूतिना निजशापा-दिवृत्तान्ते उक्ते । "इत्थं मे शापदोषोऽयं पुष्पदन्तागमा-वधिः । इत्युक्त्वा विरते तस्मिन् काणभूतौ च तत्-क्षणम् । स्मृत्वा वररुचिर्जातिं सुप्तोत्थित इवावदत् । सएव पुष्पदन्तोऽहं मत्तस्ताञ्च कथां शृणु । इत्युक्त्वा ग्रन्थ-लक्षेण सप्त सप्त महाकथाः । कात्यायनेन कथिताः काणभूतिस्ततोऽब्रवीत्" इत्युपक्रम्य "तद्ब्रूहि निजवृत्तान्तं जन्मनः प्रभृति प्रभो !" इति काणभूतिप्रश्ने "ततो वररुचिस्तस्य प्रणतस्यानुरोधतः । सर्वमाजन्मवृत्तान्तं विस्तरादब्रवीदिदम् । कौशाम्ब्यां सोमदत्ताख्यो नाम्ना ग्निशिख इत्यपि । द्विजोऽभूत् तस्य भार्या च वसुदत्ताभि धाऽभवत् । तस्यां तस्मात् द्विजवरात् एष जातोऽस्मि-शापतः" इति स्वजन्मभूम्यादिकमुक्तम् । पश्चाच्च व्याडि-समीपे तन्मात्रा तस्य जन्मवृत्तान्तो यथा वर्णितस्तदप्यु-क्तं तत्रैव "तथा हि पूर्वं जातेऽस्मिन्नेकपुत्रे मम स्फुटा । गगनादेवमुद्भूद्वशरीरा सरस्वती । एकश्रुतिधरो जातो विद्यां वर्षादवाप्स्यति । किञ्च व्याकरणं लोके प्रतिष्ठां प्रापयिष्यति । नाम्ना वररुचिश्चायं तत्तदस्मै हि रोचते । यद्‌ यद्‌ वरं भवेत् किञ्चिदित्युक्त्वा वागुपारमत्" इत्थं तज्जन्मकथान्ते व्याडीन्द्रदत्ताभ्यां तन्मातुः सकाशादभ्यर्थ्य तं गृहीत्वा तेन सह वर्षसमीपं गतमित्युक्तं तत्रैव यथा "व्याडीन्द्रदत्तौ तरसा निर्गतौ नगरात्ततः । अथ क्रमेण वर्षस्य गृहं प्राप्ता वयं गुरोः" इत्युपक्रमे "अध्यापयितुमस्मांश्च प्रवृत्तोऽभूदसौ ततः । सकृच्छ्रुतं मया तत्र, द्विःश्रुतं व्याडिना तथा । त्रिःश्रुतञ्चेन्द्र-दत्तेन गुरुणोक्तमगृह्यत" इति स्वस्य वर्षसमीपेऽध्ययनं वर्णितम् । "अथ कालेन वर्षस्य शिष्यवर्गो महा नभूत् । तत्रैकः पाणिनिर्नाम जडबुद्धितरोऽभवत् । स शुश्रूषापरिक्लिष्टः प्रेषितोवर्षभार्यया । अगच्छत् तपसे खिन्नो विद्याकामो हिमालयम् । तत्र तीव्रेण तपसा तोषितादिन्दुशेखरात् । सर्वविद्यामुखं तेन प्राप्तं व्याकरणं नवम् । ततस्तत्रावयोर्वादे प्रयाताः सप्त वासराः । अष्ट-मेऽह्नि मया तस्मिन् जिते तत् समनन्तरम् । नभःस्थेन महाघोरो हुङ्कारः शम्भुना कृतः । तेन प्रनष्टमैन्द्रं तदस्मद्व्याकरणं भुवि । जिताः पाणिनिना सर्वे मूर्खी-भूता वयं पुनः" । "अत्रान्तरे तुषाराद्रौ कृत्वा तीव्रतरं तपः । आराधितो मया देवो वरदः पार्वतीपतिः । तदेव तेन शास्त्रं मे पाणिनीयं प्रकाशितम् । तदिच्छानु-ग्रहादेव मया पूर्णीकृतं च तत्" ।

अनेनैव पाणिनिव्याकरणतात्पर्यप्रकाशकः परिशिष्टरूपो वार्त्तिकपाठोनिरमायि स च "सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शब्देन धर्मनियमः" इत्या-दिकः अष्टाध्यायात्मकः । बृहत्कथायाम् "तदैवानीय दत्ता मे योगनन्देन मन्त्रिता" इत्यनेन वररुचेस्तन्मन्त्रि-ताकरणं वर्णितम् । तेन पाणिनेर्वररुचिनामकात्यायनस्य च योगनन्दसमकालता प्रतीयते । बृहत्कथाया इदा-नीमप्राप्यत्वेऽपि तत्कथासारस्याधुनोपलम्भात् तत्र च यथावर्णितकालताऽवगम्यते बृहत्कथासारस्य चाप्रामाण्यं नाशङ्कनीयं तत्कथासारे "यथामूलं तथैवैतन्न मनाग-प्यतिक्रमः । ग्रन्थविस्तरसंक्षेपमात्रभाषा च भिद्यते" इत्युक्त्या बृहत्कथामूलकतायास्तत्कथासारस्योक्तेः । स च कतगोत्रापत्यत्वात् कात्यायनः । अतएव हरिवं० "ततः कात्यायनाः स्मृताः" इति बहुत्वनिर्देशात् अन्य-

स्यापि तद्गोत्रभवयुवापत्यस्य कात्यायनत्वमिति भूतस्य भविष्यतो वा स्यादिति सूचितम्” इति । ततः प्राचीनेन कात्यायनेन शुक्लयजुर्वेदविहितकर्म्मणामनुष्ठानज्ञापकं षड्त्रिंशदध्यायात्मकं कातीयं श्रौतसूत्रं गृह्याख्यं सूत्रञ्च प्रणीतम् । तत्र श्रौतसूत्रे १अध्याये १कण्डिकायां २१सूत्राणि । तत्र अग्न्याधानादिषु अधीतसार्थवेदानां द्विजानां सपत्नीकानाम् रथकारस्य चाधिकारः । अङ्गहीनक्लीवपतितशूद्राणामनधिकारः । निषादस्थपतेर्गावेधुके चरावधिकारः । अवकीर्णिनश्च प्रायश्चित्तरूपगर्द्दभेज्यायाम् । तत्र गावेधुकचरुरवकीर्णिगर्द्दभेज्या च लौकिकेऽग्नौ कार्य्या । गर्द्दभेज्यायां पुरोडाशश्रपणं भूमावेव न कपाले कार्य्यम् । तत्र अवदानहोम उदके एव नाग्नौ, अन्यदाघारादि अग्नावेव । प्राशित्रं गर्द्दभस्य शिश्नादवदेयम् । श्रौतं कर्म्म वैतानिकेषु विहारार्थेषु गार्हपत्याहवनीयदक्षिणाग्निषु कर्त्तव्यम् । स्मार्त्तन्तु आवसथ्येऽग्नौ कर्त्तव्यम् । गृहारम्भे मांसपाकनिषेधः ।

२क० २३सू० । तत्र देवतोद्देशेन द्रव्यत्यागो याम इति यागलक्षणम् दर्शपौर्णमासादिशब्दवाच्यार्थस्यागविशेषः । तस्य च प्राधान्यं, तत्प्रकरणपठिताग्न्यन्वाधानादिब्राह्मणदक्षिणान्तस्य कर्म्मजातस्याङ्गत्वम् । एवं प्रयाजादयः पूर्व्वाघारादिहोमाश्च तदङ्गानि । तिष्ठता होमः वषट्कारप्रदानः यजतिशब्दार्थः तत्र याज्यापुरोऽनुवाक्ये च । उपविष्टेन स्वाहाकारप्रदानो होमः जुहोतिशब्दार्थः । सर्व्वकर्म्मसु ब्राह्मणा एव ऋत्विजः, न क्षत्रियवैश्याः तेषां हविःशेषभक्षणनिषेधात् । फलेच्छासत्त्वे काम्यकर्म्माणि कर्त्तव्यानि नावश्यम् । नित्यानि तु अग्निहोत्रादीन्यवश्यं कर्त्तव्यानि अकरणे दोषश्रवणात् । दीक्षितेन सत्यवचनाधःशयनब्रह्मचर्य्यादिनियमाः अवश्यं कार्य्याः । गृहदाहादिनिमित्तं धनहानिनिमित्तं च प्रायश्चित्तमवश्यं कार्य्यं न तस्य इच्छयानुष्ठानम् । नित्यानि यथाशक्त्यङ्गयुक्तान्यपि कार्य्याणि । काम्यानि तु सर्व्वाङ्गोपेतान्येव । कामनासत्त्वेऽपि यदा यथाश्रुताङ्गानि कर्त्तुं शक्यन्ते तदैव काम्यं कार्य्यं नान्यदा ।

१क० ४२सू० । तत्र ऋग्यजुःसामप्रैषभेदेन मन्त्राश्चतुर्विधाः । ऋगादिलक्षणम् (ऋग्वेदशब्दे उक्तम्) । यजुषां यावति पदसमूहे उच्चरिते पदसमूहो निराकाङ्क्षो भवति । तावत्परिमितमेकं वाक्यं कर्म्मकाले प्रयोक्तव्यम् । यत्र तु मध्ये पठितैः पदैर्यजुर्निराकाङ्क्षं न भवति तत्र पदान्तरं योग्यमध्याहृत्य पूर्व्वपठितं वानुषज्य निराकाङ्क्षीकृत्य प्रयोज्यम् । प्रयोगे मन्त्राः कर्म्मारम्भे प्रयोज्याः । यजुर्व्वेदमन्त्राश्च उपांशु प्रयोज्याः ऋग्वेदसामवेदयोस्तु मन्त्रा उच्चैःप्रयोज्याः । याजुषा अपि प्रैषा उच्चैःप्रयोज्याः । कुशजातिमात्रं बर्हिःशब्दार्थः । अग्न्यगारादौ वसोर्धाराहोमादौ च विशेषसंख्यानुक्तौ यावता कार्य्यसिद्धिस्तावत्संख्या ग्राह्या । इध्मबर्हिर्व्वन्धार्थानि संनहनानि विषमसंख्यत्रणमुष्टिबद्धानीति । संनहने भेदस्तु प्रागग्रे संहनने उदग्रं बर्हिर्निधाय संनहनेन दृढं बद्ध्वा बर्हिर्मूलभागे ग्रन्थिमुपगूहेत्, उदगग्रे संनहने तु प्रागग्रमिध्मभागं निधायेध्ममूले ग्रन्थिमुपगूहेत् इति । अष्टादशसंख्यारत्निमात्रकाष्ठकः तथाभूतैकविंशतिकाष्ठको वा पालाशस्तदभावे वैकङ्कतः इध्मः कार्य्यः । तदभावे श्रीपर्णवृक्षभवः वैल्वः औदुम्बरःखादिरो वा तत्तदभावे इध्मस्तथाभूतः कार्य्यः । इध्मादेव त्रीणि काष्ठान्यादाय परिधिपरिधानं कुर्य्यात् । सामिधेनीवृद्धौ चेध्मकाष्ठवृद्धिः पित्र्यादौ सामिधेनीह्रासेऽपि नेध्मसंख्याह्रासः । अग्निप्रणयनार्थ इध्म उक्तसंख्याधिककाष्ठकोऽपि भवति । इष्टकापशौ अष्टाविंशतिप्रभृतिभिस्तथाभूतकाष्ठैः इध्मः कार्य्यः । स च त्रिभिः संहननैर्मूलभागे बद्धः कल्प्यः । दर्शपौर्णमास एव वेदकरणम् । सूत्रे आङ्शब्दार्थोऽभिविधिरिति प्रतिज्ञा । सर्व्वकर्म्मस्वनुक्तमपि गार्हपत्यात् आहवनीयदक्षिणाग्न्योरुद्धरणं कार्य्यम् । अन्यकर्मार्थमुद्धृतयोस्तयोरागन्तुकान्यकार्य्यापाते तत्करणं नोद्धरणान्तरम् । यथा दर्शाद्यर्थमुद्धृतयोस्तयोः प्राप्तकालाग्निहोत्रहोमः । यत्कर्म्मार्थमुद्धृतौ तौ तत्समाप्तौ लौकिकावेव भवतः । तत ऊर्द्ध्वं तत्राहवनीयादिविहितं कर्म्म न कार्य्यं तयोः लौकिकत्वोपदेशात् । तेन यत्र पौर्णमासादौ पृथक्तन्त्रा बह्व्य इष्टयः सन्ति तत्र प्रतीष्टि पृथगग्न्युद्धरणेन ताः कार्य्याः । तथा च न सकृदुद्धृतयोः सर्व्वत्रोपयोगः । खादिरस्रुवादीनां क्वचिदनुक्तौ प्रकृतिवत् विकृतावपि कार्य्यता । स्रुवस्फास्रुग्जुहूप्रभृतिहोमसाधनपदार्थानां लक्षणम् । तानि च तद्भाष्ये विवृतानि यथा ( खादिरः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करो नासिकावत्पर्व्वार्द्धखातो भवति । स्फ्यश्च खादिरः खड्गाकृतिररत्निमात्रः स्रुचो बाहुमात्र्यो मूलदण्डास्त्वग्बिला हंसमुखसदृशैकप्रणालिकायुक्ताः पा-

णिमात्रपुष्कराखावत्खातयुक्ताश्च कार्य्याः । पालाशी जुहूः । उपभृदाश्वत्थी, वैकङ्कती ध्रुवा, एतेषां इत्याद्यामेकस्य वा सर्व्वाः स्रुचः कारयेत् । अग्निहोत्रहवणी वैकङ्कती, अग्निहोत्रस्रुवो वैकङ्कतः । यैः पात्रैर्होमो न क्रियते तानि सर्वाणि वारणानि भवन्ति तानि चोलूखलमूसलकूर्चेडापात्रीपिष्टपात्रीपुरोडाशपात्रीशम्याष्टावदानाभ्र्यपवेषान्तर्धानकटप्राशित्रहरणषड़वत्तब्रह्मासनादीनि । तत्रोलूखलमूसलौ लोकप्रसिद्धौ । कूर्चो बाहुमात्रः पीठाकारः । इडापात्री पिष्टपात्र्यौ अरत्निमात्र्यौ मध्यसंगृहीते । पुरोडाशपात्री प्रादेशमात्री समचतुरस्रा षड़ङ्गुलवृत्तखातवती । शम्या प्रादेश द्वादशाङ्गुला । प्राशित्रहरणं हस्तमादर्शाकारं चतुरस्रं चमसाकारं वा तथैव द्वितीयमपिधानपात्रम् । षड़वत्तं चोभयत्र खातवत् । आसनानि चारत्निमात्रदीर्घाणि प्रादेशमात्रविपुलानि । सर्वेषु पात्रेषु मूलाभिज्ञानार्थं वृन्तानि कार्याणि । अनादेशे सोमसाधनपात्राणि वैकङ्कतानि कार्य्याणि । षोड़शिनः पात्रं खादिरं चतुरस्रम् । अंश्वदाभ्यपात्रमौदुम्बरम् । वाजपेये सप्तदशग्रहपात्राणि वरणवृक्षभवानि । सुराग्रहपात्राण्यपि । मृण्मयानि वा"। इष्टिषु प्रणीतोत्करावन्तरेण सर्वेषां गमनागमनार्थो मार्गः, सोत्तरवेदिकेषु कर्मसु चात्वालोत्करयोरन्तरालेन मार्गः ।

४क० १८सू० । तत्र विहितद्रव्याभावे काम्यं कर्म नारब्धव्यम् । नित्यन्तु मुख्यद्रव्याभावे प्रतिनिधिनाप्यारभ्यम् । काम्येऽङ्गसद्भावं ज्ञात्वाऽऽरम्भोत्तरम् मुख्यद्रव्यापचारे प्रतिनिधिद्रव्येण समापनम् । न तु असमाप्तस्य त्यागः । नित्ये तु आरब्धे ऽनारब्धे वा प्रतिनिध्युपादानमिति भेदः । काम्यस्यावश्यकार्य्यत्वाभावात् प्रतिनिधिना नारम्भः । आरब्धे चावश्यसमापनीयत्वात् समाप्त्यर्थं प्रतिनिधिर्भवति । दीक्षितस्य पयआदिके व्रतेऽपि प्रतिनिधिरस्ति । प्रतिनिधिना करणपक्षे मुख्यद्रव्यवाचकपदघटितमन्त्रे ऊहो न कार्यः । यत्र जात्यन्तरं विहितं तत्र ऊहः । विकल्पस्थले अन्यतरद्रव्यारब्धे कर्मणि दैवात्तस्य दोषे विनाशे वा तत्प्रतिनिधिद्रव्यान्तरेणैव समाप्यं न तु वैकल्पिकद्रव्येण यथा व्रीह्यारब्धे कर्मणि व्रीहिनाशदोषयोः व्रीहिसदृशनीवारादिना समापनं न तु यवेन, एवमन्यत्र । व्रीह्यभावे नीवारैः प्रयोगे आरब्धे नीवारेषु विनष्टेषु कथञ्चिद् व्रीहिप्राप्तौ व्रीहिभिरेव, अप्राप्तौ व्रीहिसदृशैरेव कर्मसमापनम् न नीवारसदृशैः नापि वैकल्पिकैर्यवैः । मुख्यद्रव्येण सर्वप्रयोजनासिद्धौ तत्समर्थप्रतिनिधिनैव कर्म कार्य्यम् । यत्र कृष्णाः व्रीहयोविहितास्तत्र कृष्णव्रीह्यलाभे शुक्लव्रीहिभिः कर्म कार्य्यं न तु कृष्णनीवारैः गुणस्य द्रव्यापेक्षया दुर्ब्बलत्वात् । पुंवत्सत्वलक्षणं गुणं हित्वा स्त्रीवत्सायाअपि गोः पयसा होमो न तु पुंवत्सायाः मेष्याः पयसा । एवमार्द्रत्वगुणालाभे शुष्कपलाशैरपि कर्म कार्य्यं न तु आर्द्रसमिदन्तरेण एवं सर्वत्र । एवं प्राशित्रादिसर्वकर्मसु पर्य्याप्तव्रीह्यलाभेऽपि अवदानद्वयपर्याप्तपुरोडाशनिष्पत्तिसमर्था व्रीहय एव ग्राह्या न तु प्राशित्रादिसर्वकार्य्यपर्याप्ता नीवारा इति

५क० १७सू० । तत्र श्रुतिपाठमन्त्रपाठार्थसिद्धिक्रमेण पदार्थानुष्ठानम् । यत्र च पाठक्रमार्थसिद्धिक्रमयोर्विरोधः तत्र पाठक्रममनादृत्यार्थसिद्धिक्रमोग्राह्यः । यथा "स वै पर्ण शाखया वत्सानपाकरोति तामाच्छिनत्ति" इत्यत्र पाठक्रममनादृत्य पूर्व्वं छेदनं ततोऽपाकरणम् । यत्र तु श्रुतिपाठक्रमयोर्विरोधः "संस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयादिति" श्रुतिः संस्थिते यज्ञे ब्रह्मतर्पणं विदधाति पाठक्रमस्तु प्राशित्रावदानात् पूर्व्वम् । तत्र श्रुतिक्रमेण संस्थितएव कार्यम् न पाठक्रमेण । यत्र च श्रुतिपाठमन्त्रपाठयोर्विरोधः तत्र श्रुतिपाठक्रममनादृत्य मन्त्रपाठक्रमेण कार्य्यम् । यथा सोऽसावाज्यमधिश्रयतीत्यधिश्रयणं विधाय, तदनन्तरमेवोद्वासनं विहितम् मन्त्रक्रमस्तु पत्नीसंहननान्ते इति विरोधः तत्र मन्त्रपाठक्रमेणैवाज्योद्वासनम् । यत्र बहूनां प्रधानानां सह प्रयोगस्तदा सन्निपत्योपकारकाः पदार्थाः सर्व्वेषां प्रधानानां पृथक् पृथक् सदृशपदार्थानुसमये कार्य्याः; यथा सप्तदशसु प्राजापत्येषु पशुषु सर्व्वेषां प्रथममुपाकरणं ततः सर्व्वेषां नियोजनम् ततः सर्व्वेषां प्रोक्षणमित्यादि । आरादुपकारकास्तु तन्त्रेण कार्य्या न तेषु क्रमचिन्ता । यथा दर्शादौ प्रयाजादय आरादुपकारकास्तन्त्रेण कार्य्याः । चतुर्मुष्टिकनिर्वापः एकादशादिकपालोपधानञ्च एकैकस्य कार्य्यम् । सोमे चैकैकस्य ग्रहस्यासादनान्तं ग्रहणं कार्य्यम् । सर्व्वत्र हविषोऽवदानं प्रदानान्तं कार्य्यम् । देवताऽभेदे हविर्मात्रभेदे देवतागुणे वा उपांश्वादिकेऽभिन्ने प्रदानान्तमवदानं न भवति किन्तु क्रमेण सर्वाणि हवींष्यवदाय पश्चा-

त्तेभ्यः प्रदानं कार्य्यम्। सप्तदशसु प्राजापत्यपशुषु उपाकरणरूपे प्रथमपदार्थे कृते द्वितीयपदार्थादौ उपाकरणक्रम आदर्त्तव्यः न क्रमान्तरम्। अयं प्रावृत्तिकः क्रमः। प्रधानानामाग्नेयादीनां पाठक्रमेण तदङ्गानां निर्वापादिक्रमः। यथा प्रथमपठितस्याग्नेयस्य प्रथमं निर्वापादि। पश्चात् पठितस्याग्नीषोमीयस्य पश्चात् इत्ययं क्रमो मुख्यः। अनेकाहसाध्यदर्शादौ क्रियमाणे मध्ये नित्यस्याग्निहोत्रादेः काले प्राप्ते काम्यमध्येऽपि तत् कार्यमेव न तु दर्शाद्यनुरोधेन नित्याग्निहोत्रादिकालातिक्रमः कार्यः। सौत्रामण्यादिविकृतिमध्यएवामावास्यायां दक्षिणाग्नौ पिण्डपितृयज्ञः कार्यः। षोड़श्यतिरात्रादौ च षोडशिनोनियतकालत्वेऽपि दैवादुकथ्योत्कर्षे तदनन्तरमेव षोडशियागः कार्यः न तु कालानुरोधात् ततः पूर्वम्। अग्निष्टोमादिसत्रपर्यन्तानां प्रधानानामनुष्ठाने क्रमाभावः। यदा यत्र यस्येच्छा तदा तदनुष्ठेयम्। अध्ययनार्थ एवैषां पाठक्रमः नानुष्ठानार्थः।

६क० २६सूत्राणि। तत्र अवत्तहविर्नाशेऽन्यद्धविः कार्य्यं न स्विष्टकृदादिप्रतिपत्तिसहितः यागः कार्यः। नवा पुनः शेषादवदेयम्। अग्न्यादिदेवतानां, मन्त्राणां, प्रयाजानुयाजादिक्रियाणाञ्च न प्रतिनिधिरस्ति। दृष्टार्थानां तु क्रियाणामवघातादीनां प्रतिनिधिरस्ति। प्रतिषिद्धं वस्तु श्रुतद्रव्यसदृशमपि न प्रतिनिधेयम्। यथा मौद्गे चरौ माषादि। त्यागादौ वपनादौ संस्कारकर्म्मणि च यजमानस्य प्रतिनिधिर्नास्ति। गुणकर्म्मसु पात्रासादनाज्यावेक्षणाग्न्याधानव्यूहनवेदवस्तनादिषु यजमानस्यापि प्रतिनिधिरस्ति। पत्न्यभावेऽप्याज्यावेक्षणान्वारम्भोपाञ्जनादौ गुणकर्म्मणि प्रतिनिधिरस्ति। सत्रेषु यजमानस्य प्रतिनिधिरस्ति। यजमानकर्म्मणा सम्बन्धात् यजमानधर्म्मा अपि दीक्षणादयः प्रतिनिहितस्य भवन्ति सत्रेषु यजमानानामृत्विक्पदार्थकर्तृत्वविधानात्। ब्राह्मणस्यैव सत्रेषु अधिकारो न क्षत्रवैश्यानाम्। ब्राह्मणानामप्येककल्पानां न भिन्नकल्पानाम्। वैश्यक्षत्रिययोर्गृहपतित्वेऽपि सत्रेषु नाधिकारः। सहस्रसंवत्सरसत्रं मनुष्याणामपि भवति तत्र संवत्सरशब्दस्य अहःसु लक्षणा यतस्तत्र सहस्रसंवत्सरे सहस्रं सौत्यान्यहानि तानि च दिनसहस्रे सम्भवन्तीति।

७क०२८सूत्राणि। यत्र एकफलार्थं बहूनि प्रधानानि एकवाक्येन विधीयन्ते। तत्र तेषां सह प्रयोगः। देशकालफलकर्म्मादिसाम्ये सति प्रधानानामारादुपकारीणि आघारप्रयाजाज्यभागादीनि सकृदेव कार्य्याणि। न प्रतिप्रधानं पृथक् पृथक् कार्य्याणि। देशभेदे कालभेदे च तन्त्रभेदएव भवति न सहक्रिया। यथा दर्शपौर्णमासयोः कालभेदे। वरुणप्रघासेषु च मारुत्या देशभेदे। अहर्गणे सुब्रह्मण्यानिगदे द्वादशाहे सुत्यामुपगच्छेदित्यत्र कालसंयुक्तं कर्म्म तन्त्रेणैव सकृत् प्रयोज्यम्। एकद्रव्ये कर्म्मावृत्तौ सत्यां मन्त्रवचनं सकृदेव कार्य्यम् न प्रतिक्रियम्। यथा स्फ्येन पदं त्रिः परिलिखेदस्मे रमस्वेत्यत्र एकवारं मन्त्रेण, द्विस्तूष्णीमिति। हविर्ग्रहणे बर्हिर्षोलवने तस्य स्तरणे आज्यग्रहणे च प्रतिक्रियं मन्त्रावृत्तिः न सकृत्। आज्यग्रहणे तु वचनात् त्रिधा मन्त्रेण ग्रहणम् शेषं तूष्णीं हविर्ग्रहणे चतुर्थं तूष्णीम्। वचनादुत्तमे सुचौ मन्त्रनिवृत्तिः। दीक्षितस्यानेकदुःस्वप्नदर्शने सकृदेव मन्त्रपाठः। एकनद्या अनेकप्रवाहतरणेऽनुमन्त्रणं सकृदेव। अववर्षणे अनेकवृष्टिधारासंयोगेऽपि अनुमन्त्रणं सकृदेव। युगपदनेकामेध्यदर्शने सूर्य्योपस्थापनं सकृदेव। वनीवाहने (विश्रम्य विश्रम्य पुनः पुनः प्रयाणे) अमेध्यदर्शने मन्त्रपाठः सकृदेव। एकरात्रिमध्ये पुनपुनःस्वापादौ अमेध्यदर्शनादिषु च कालभेदे भेदेनैवानुमन्त्रणं न सकृत्। अप्रधानकालीनमङ्गं सकृदेव, न प्रतिधानमावर्त्तते। यथाऽग्निषोमीयसवनीयानूबन्ध्यापशूनां साधारण एव स्वरुरपि यूपवत् सर्व्वपशुसाधारण एव। आधानादिकर्म्मसु पुरुषाएव कर्त्तारोन स्वयं केवलं यजमानः। तत्रायं भेदः देवतोद्देशेन द्रव्यत्यागात्मककर्म्माणि यजमानः स्वयं कुर्य्यात्। पुरुषयोगिमन्त्रान् यजमानः स्वयं जपेत् वपनाभ्यञ्जनादयो यजमानस्यैव संस्काराः। सति विशेषवचने ऋत्विजामपि ते संस्काराः यथा "हिरण्यमालिनोवाजपेयेन चरन्ति"। सति वचने उक्तादन्यदपि यजमानस्य भवति। यथा यजमानोवसोर्धारां जुहोति। यजमानः पात्राण्यासादयतीत्यादि। शेषं कर्म्म यथासमाख्यमृत्विगादयः कुर्युः। यथा अध्वर्युराध्वर्य्यवं, होता हौत्रम्, उद्गाता औद्गात्रमित्यादि। सर्व्वाणि कर्म्माणि यज्ञोपवीतिनः कुर्य्युः तानि च प्राक्संस्थानि उदक्संस्थानि वा कुर्युः। परिस्तरणपर्य्युक्षणादौ प्रदक्षिणं कार्य्यम्। पित्र्येऽपसव्यम्। दैवे यत्रावृत्तिः पैत्रे तत्र सकृत्। दक्षिणा च दिक् पित्र्ये। यद्दैवे प्राक्संस्थादि पैत्रे तद्दक्षिणसंस्थं कार्य्यम्। प्रधान-

द्रव्यविनाशे सन्निपत्योपकारकाङ्गसहितस्यैव तस्यावृत्तिः नारादुपकारकसहितस्य ।

८क० ४७सू० । विकल्पस्थले एकेनैव कार्यकरणम् । अदृष्टार्थेषु बहुषु विहितेषु समुच्चयः यथा होतृमन्त्राणामग्निमन्थनीयादीनाम् अग्निस्थापनमन्त्राणाञ्च । होतृमन्त्रत्वेऽपि याज्यानुवाक्ययोर्न समुच्चयः । तथा च याज्या पुरोनुवाक्या च एकैकस्मिन् यागे एकैकैव । एकनिमित्तकप्रायश्चित्तानां समुच्चयः । यज्ञकाले मन्त्राणामेकश्रुत्या प्रयोगः, न संहितास्वरेण, नापि ब्राह्मणस्वरेण । सुब्रह्मण्यासामजपन्यूङ्खयाजमानानां मन्त्राणां संहितावदेव स्वरेण प्रयोगेन त्वेकश्रुतिस्वरेण । आधाने विहितदक्षिणाभेदस्य विकल्पः, न समुच्चयः । अनेकसाधनके कर्मणि जवध्यादीनां समुच्चयः । सर्व्वपश्वूनां तानि कार्याणि । सोमक्रये विहितगवादिद्रव्यदशकस्य दृष्टार्थत्वात् न समुच्चयः । सर्व्वत्र गार्हपत्याहवनीययोः प्रदक्षिणोक्त्यापसव्यावृत्तिः अपसव्योक्त्य च प्रदक्षिणावृत्तिः कार्या । विहारोत्तरतः सर्व्वकर्म्म कार्यम् । विहारस्य दक्षिणतः ब्रह्मयजमानयोरासने कार्ये । तयोर्मध्ये यजमानस्य वेदिं स्पृष्ट्वा (वेदिमध्ये पादाग्रं निधाय) उपवेशनम् । पश्चात् ब्रह्मोपवेशनम् । अनादेशेऽध्वर्युः यजुर्विहितं कर्म्म कुर्यात् आदेशे तु अन्योऽपि । विरोधे तु अन्योऽपि कर्त्ता यथा मेषणेऽध्वर्य्योर्व्यापृतत्वेन विरोधात् कपालोपधानमग्नीत् कुर्य्यात् । हविष्पात्रस्थाक्रान्तिजामेकत्र समावेशे यद्द्रव्यं पूर्व्वं तत्तदन्तरं, यद्युत्तरं तद्बहिर्भवति । हविषामपि मध्ये पूर्व्वं पूर्व्वं हविरन्तरं कार्यं उत्तरमुत्तरं बहिः । प्रतापनाद्यग्निसाध्यसंस्कारा गार्हपत्याग्नौ कार्य्याः । सर्व्वकर्मसु हविःश्रपणं गार्हपत्ये आहवनीये वा कार्य्यम् । संस्काररहितं घृतमात्रमाज्यशब्दार्थोपाह्यः । घृतं च गव्यमेव ग्राह्यम् । द्रव्यविशेषानुक्तौ सर्व्वत्र घृतेन होमः कार्य्यः विशेषवचने तेनैव । चात्वालात् बहिस्थं पुरीषं निवपेत् । आहवनीये यजतयः, आज्यभागोपांशुयाजादयः आज्यहविष्का प्रुतातः आज्यं गृहीत्वा चतुरवदाय कार्य्याः । इडामाशित्वाघारानप्येके प्रुतातः कुर्व्वन्ति । आघारौ प्राञ्चौ विदिशौ वा होतव्यौ उभयपक्षेऽपि ऋजू दीर्घौ सन्ततौ च तौ कार्य्यौ । अनादेशेसर्वे होमा आहवनीये एव कार्य्याः । आदेशे तु यथादेश मन्यत्राग्नौ । आदेशाभावे सर्व्वत्र सकृद्गृहीतमेव होतव्यम् आदेशविशेषेऽन्यथा ।

८क० २१सू० । सर्व्वत्र व्रीहियोयवा वा हवींषि भवन्ति । व्रीह्याग्रयणानन्तरं यवाग्रयणादर्वाक् व्रीहिभिरेव दर्शपौर्णमासौ कार्य्यौ यवाग्रयणानन्तरं च प्राग्व्रीह्याग्रयणात् यवैरेव तौ कार्य्यौ । आपस्तम्बमते सर्व्वदा व्रीहिभिरेवेति भेदः । दर्शपौर्णमासयोरेवायं द्रव्यनियमः न विकृतौ । हविरवदानविधाने पुरोडाशचर्वादेर्मध्यदेशादेकमङ्गुष्ठपर्व्वमात्रं तिरश्चीनम् आद्यमवदानम् । द्वितीयं तु हविःपूर्व्वभागात् तथावदानम् । तच्चावदानयोर्मर्यादाभङ्गाभावेनैव कार्य्यम् । पञ्चार्षेयाणां जमदग्नीनां जमदग्निप्रवराणाञ्च हविषस्त्रिरवदानम् । तत्राद्यं मध्यात्, द्वितीयं पूर्व्वभागात्, तृतीयम् पश्चाद्भागात् । यत्र आज्यभागपत्नीसंयाजोपांशुयाजाग्निहोत्रहोमादौ चतुरवदानं विहितं तत्र जमदग्नीनां पञ्चधोऽवदानम् । दधिपयसोरपि स्रुवेणावदानग्रहणम् । तदप्यङ्गुष्ठपर्व्वमात्रमेव कार्य्यम् ।

पुरोडाशादिहविषोऽवदानात् प्रथममाज्यं सकृदवदाय ततोऽन्यद्धविरवदेयम् । पुनरप्यन्ते आज्यं सकृदवदेयम् । स्विष्टकृद्धोमे तु प्रधानावदानादेकोनं हविषोऽवदानम् । तथा च येषां प्रधानयागेऽवदानद्वयं विहितं तेषां स्विष्टकृद्धोमे सकृदवदानं, येषां प्रधानेऽवदानत्रयं तेषां हविष उत्तरार्द्धादेव स्विष्टकृति अवदानद्वयम् । एवं चतुःपञ्चधोऽवदाने त्रिः चतुर्वाऽवदानम् । उपस्तारः सकृत् । उपर्य्यभिघारणं तु द्विवारं भवति । हविषोऽवदेयावदानयोः प्रत्यभिघारणम् । स्विष्टकृदवदानानन्तरम् हविषो न प्रत्यभिघारणम् । एककपालः पुरोडाशः सर्वहुतः कार्यः । चतुर्थ्यन्तेन देवतापदेनानुवचनप्रैषा कार्य्या यथा अग्नयेऽनुब्रूहीत्येवंरूपा । आश्रावणानन्तरं यत्र मैत्रावरुणः प्रैष्यते तत्रापि चतुर्थ्यन्तं देवतापदं प्रयोज्यम् । अग्नये प्रेष्य, सोमाय प्रेष्येत्येवम् । आश्रावणानन्तरं यत्र मैत्रावरुणस्य प्रैषाभावस्तत्र द्वितीयान्तं देवतापदं प्रयोज्यम् । अग्निं यज सोमं यजेत्येवम् । प्रैषसम्बन्धिन्यनुवाचने द्रव्यात् षष्ठी भवति यथा इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति । वपायै धाना सोमेभ्यः इति प्रैषद्वये तु न षष्ठी । यत्रासौ यजेति विहितं यथा नामग्राहं यजेति प्रशास्त्रादीन् प्रति । तत्र देवतापदं न प्रयोज्यम् । प्रशास्तर्यज पोतर्यजेत्येवं प्रयोज्यम् । यत्र यत्र मन्त्रे असाविति पदं श्रूयते तत्र तत्र असाविति पदमपनीय तस्य स्थाने तत्पदवाच्यस्य मैत्रादेर्नामो-

च्चार्य्य यथा इममसुष्य पुत्रमित्यादौ देवदत्तस्य पुत्रमित्यादि। सवषट्काराखाहुतिषु वेदेर्दक्षिणभागे उदक्प्राङ् ईतीशानाभिमुखस्तिष्ठन् वषट्कारानन्तरं वषट्कारेण सह वा जुहुयात्। यत्राज्यमिश्रं हविर्विहितं, तत्र पूर्व्वमाज्यं हुत्वा ततो मध्ये हविर्हुत्वा पुनरुपर्य्याज्यं जुहुयात्। अथ वा सहैव सर्वमाज्यं हविश्च जुहुयादिति पक्षद्वयम्।

१०क० १४सू०। तत्र आग्नेयोऽष्टाकपालो भवतीत्यादौ लटः लिङर्थत्वकल्पनया विधिपरत्वम्। कर्मसु कर्त्तव्येषु तदुपकरणद्रव्यसमुदायानामादौ उपकल्पनं तानि चानीय कर्मदेशस्थाने स्थापयेत्। चर्माण्युत्तरलोमानि प्रागग्रीवाणि सर्व्वत्रास्तरणीयानि। हविषां मध्ये यत् पश्चात् पठितं तद्देशतः कालतश्चोत्तरं कार्य्यम्। ग्रहणादिकं पूर्व्वपठितस्य पूर्वम् उत्तरपठितस्योत्तरम् कार्यम्। एवम् अधिश्रयणाद्यपि पूर्व्वपठितस्य दक्षिणतः पश्चात्पठितस्योत्तरत इति। एकद्रव्ये स्थालीस्रुवादौ साज्ये दक्षहस्तेन गृहीते सति वामेन वेदस्योपग्रहणं कार्य्यम्। एकद्रव्यश्रुतेः उपभृदादौ द्वितीयद्रव्ये सति वेदोपग्रहणाभावः। आज्यादन्यद्रव्येण द्रव्यवति यागे उपस्थानादौ च स्फ्योनोपग्रहणं कार्यम्। असत्सु वेदवर्ज्जद्वितीयद्रव्येषु कुशैरुपग्रहणम्। यथा स्फ्ये अन्यकर्मव्यापृते सौमे ग्रहहोमादौ द्वितीयद्रव्याभावे च कुशोपग्रहणम्। स्रुचोरादानकाले आसादितां स्रुचं जुहूञ्च पाणिभ्यां परिगृह्य उपभृतउपरि निदध्यात्। तत्र च परस्परसंस्पर्शजशब्दो न कार्य्यः। विश्वजिन्न्यायेन सर्व्वत्र स्वर्गः फलत्वेन कल्प्यते। एकस्मिन् कर्मणि वैकल्पिकानामङ्गानां यथाश्रुतञ्च विहितानां मध्ये अधिकाङ्गानुष्ठानपक्षे सर्व्वत्र फलाधिक्यम्। यथा पौर्णमासादौ वैकल्पिकवैस्थधाद्यधिकाङ्गानुष्ठाने। एवमन्वाहार्य्यादिदक्षिणादाने षड्दक्षिणापक्षतोद्वादशचतुर्विंशतिदक्षिणापक्षयोः फलतारतम्यम्। दानान्वारम्भणवरणव्रतप्रमाणानि यजमानसम्बन्धीनि ग्राह्याणि। तथाच यानि दानादीनि प्रमाणानि विहितानि च तानि याजमानान्येव व्रतञ्च सत्यवदनाधःशयनपयोव्रतादिकं यजमानस्यैव, प्रमाणं चाग्निखरवेदिशालासदोगृहादिमानं यजमानहस्तमानेनैव कार्य्यम्। यूपावटोपरवादौ खाते, लूने बर्हिषि, छिन्ने यूपे, अवहतेषु व्रीहिषु पिष्टेषु तण्डुलधानादिषु, दुग्धे पयसि, दग्धेषु महावीरेष्टकादिषु तद्व-

यवलक्षणया क्रियादिसम्भवः। रौद्रमन्त्रं रक्षोदैवतम् असुरदैवतं शैव्यं मन्त्रमुच्चार्य तत्तद्देवताकं कर्म्म च कृत्वा आत्मानमुपस्पृश्यापां स्पर्शनं हस्तेन कुर्य्यात्। इति सर्व्वकार्य्योपयोगिविधानानि प्रथमाध्याये उक्तानि। एतेषां सर्व्वकर्म्मोपयोगित्वात् विस्तरेणोक्तिः। अन्यान्याध्यायार्थाः संक्षेपणोच्यन्ते।

२ अध्याये अष्टौ कण्डिकाः। तत्र १क० पौर्णमासेष्टिकालः तत्राग्न्यन्वाधानेऽध्वर्य्युयजमानयोरधिकारः। तद्विधानप्रकारः। दीक्षाग्रहणे दीक्षितधर्माः। दिवामैथुनमांसवर्जनम् अशिखकेशादिवापनम्। अपराह्ने पत्नीयजमानयोरतृप्त्या हविषा सह व्रतकालयोग्यं माषमांसलवणवर्ज्जं हविष्यं भोज्यम्। तत्र व्रतयोग्यं भोज्यं भाष्ये दर्शितं यथा पुलस्त्यः "सकृत् पर्व्वणि सर्पिष्मत् हविष्यं लघु भोजनम्। न सायं नोपवासः स्यात् तैलामिषविवर्जितम्" बौधा० "सर्वमेवैतदहः, कोशीधान्यं विवर्जयेदन्यत्र तिलेभ्यः"। परिशिष्टे च "शाकं मांसं मसूरं च चणकं कोरदूषकम्। माषान् मधु परान्नञ्च वर्जयेदौपवस्तके"। कर्म्मप्रदीपे "लवणं मधु मांसञ्च क्षारान् श्वोयेन हूयते। उपवासे न भुञ्जीत नोहरात्रौ न किञ्चन"। "तिलमुद्गादृते शैव्यं शस्यं गोधूमकोद्रवौ। चणकं देवधान्यञ्च सर्व्वशाकं तथैक्षवम् (गुडम्)। सर्ज्जीक्षारं यवक्षारं टङ्कणक्षारमेव च। व्रतस्थो वर्ज्जयेन्नित्यं सामुद्रं लवणं तथा"। सामुद्रविशेषणात् सैन्धवमानसयोर्निषेधः। "सैन्धवं लवणं यच्च यच्च मानससम्भवम्। पवित्रं लवणं ह्येते प्रत्यक्षे अपि सर्वतः इति स्मृतेः"। सत्यवदनञ्चात्र कर्म्मार्थम् उपनयनोत्तरविहितं तु पुरुषार्थः अतः प्रायश्चित्तभेदः। रात्रौ तस्मिन्नेव विहारेऽग्निहोत्रहोमः। सायमशनेच्छायां होमानन्तरमारण्यौषधीनां नीवारादीनामन्नम् आरण्यवृक्षादीनां च फलमनतिरात्रौ भुञ्जीत। आहवनीयगृहे गार्हपत्यगृहे वाऽधः शयनं तत्राप्यास्तरणनिषेधः, ब्रह्मचर्यञ्च। एष नियमः सपत्नीकयजमानस्यैव। पौर्णमासे अन्वाधानादिकर्मापवर्गान्ते द्व्यहे एकाहे वा कार्यभेदोक्तिः तच्च प्रातरेव कार्यम्। २क०। अग्निहोत्रानन्तरं ब्रह्मवरणं तत्प्रकारः। ३क० ८क०पर्य्यन्ते ब्रह्मसदनादेः आत्मस्पर्शपर्यन्तस्य कर्मकलापस्यानुष्ठानप्रकारमन्त्रादिकीर्त्तनम्।

३अध्याये अष्टौ कण्डिकाः। तत्र होतृसदनादिपौर्णमाससमाप्तिपर्यन्तकर्त्तव्यकार्यकलापस्यानुष्ठानप्रकारमन्त्रादि।

४अ०१५क०। तत्र १।२।३क०दर्शयागात् प्राक्कर्त्तव्यं पिण्डपितृयज्ञानुष्ठानप्रकारमन्त्रादिकथनम्। तत्र द्रव्यदेवतायुक्तः आख्यातप्रत्ययान्तकर्म्मशब्दोवेदबोधितो यागशब्दार्थः द्रव्यक्तिः। सर्व्वासु इष्टिषु अग्नीषोमीये पशौ च दर्शपौर्णमास यागधर्म्मातिदेशः। वैश्वदेववरुणप्राघाससाकमेधशुनासीरीयरूपचतुःपर्व्वात्मकचातुर्मास्यस्याद्ये वैश्वदेवे पर्व्वणि दर्शपौर्णधर्म्माः। ततोऽतिरिक्तत्रयेषु औपदेशिकाः प्राचीनप्रवणे त्रिधावर्हिःप्रस्तारादयोधर्म्मा भवन्ति। चातुर्मास्ये वरुणप्रघासादिषु त्रिषु तु वैश्वदेवपर्व्वधर्म्माः किन्तु मारुत्यादिषु न भवन्ति। सौमिकादवभृथात् वारुणप्राघासिकावभृथे धर्म्माभवन्ति। क? कुर्यादिति मन्त्रे लौकिकाग्निरेव ग्राह्यः। दर्शपौर्णमासयोराग्नेयादयः षट् प्रधानयागाः। वैकृते कर्मण्येकदैवत्ये सर्व्वत्राग्नेयधर्माः। अनेकदैवत्ये तु अग्नीषोमीयैन्द्राग्नादेः। तत्रापि आग्नावैष्णवादौ अग्नीषोमीयस्यैव धर्मा वैन्द्राग्नास्येति निर्द्धार्यम्। मारुतेषु ऐन्द्राग्नस्येति निर्द्धार्यम्। द्रव्यसामान्येनापि धर्मप्रवृत्तिर्भवति यथा पुरोडाशचरुधानासक्त्वादौ पुरोडाशस्य, सान्नाय्ये सान्नाय्यस्य, आज्ये आज्यस्येति। देवतागुणस्योपांशुत्वादेः साम्ये धर्म्मप्रवृत्तिर्भवति। यथोपांशुयाजे उपांशुयागः। द्रव्यदेवतासामान्यविरोधे द्रव्यसामान्यादेव धर्माभवन्ति न देवतासामान्यात् यथा ऐन्द्रपुरोडाशादौ देवता सामान्यात् पुरोडाशस्यैव। पयस्यायां पयस एव धर्माभवन्ति न दध्नः। अतश्चातुर्मास्यादौ परिवासितया शाखया पवित्रवन्धनानन्तरं वत्सापाकरणं दोहनचतुष्टयासादनञ्च भवति। पश्चावपि पयस एव धर्माभवन्ति न दध्नः। अतःसान्नाय्योखास्थानापन्नायां वशाश्वपर्णीस्थूलोखाना आसादनप्रोक्षणे भवतः। द्रव्येषु स्थानापत्तेर्धर्माभवन्ति यथा श्यामाकानां व्रीहियवस्थानापत्तेस्तद्धर्म्मा ग्रहणासादनप्रोक्षणकण्डनादयो गृह्यन्ते। प्राकृतस्थानापन्नस्यापि द्रव्यस्य ये स्थानिनो धर्माविरुध्यन्ते स्थानापन्ने द्रव्ये न ते भवन्ति यथा परिधौ पशुनियोजने यूपस्थानापन्नस्यापि परिधेः तक्षणाष्टाश्रीकरणादयोधर्मा न भवन्ति विरुद्धत्वात्। विकृतौ यत् प्राकृतद्रव्यदेवतास्थानेऽन्यद्रव्यदेवतादिर्विहितस्तत्र प्राकृतमन्त्रस्य यथार्थमूहोभवति। यथा अग्नये त्वा जुष्टमित्यस्य प्रकृतौ मन्त्रस्य इन्द्राग्निभ्यां वां जुष्टमित्यूहः। प्रकृतौ मन्त्राणामूहो न भवति प्रकृतेरपूर्व्वत्वात्। यथा पत्नीं संनह्येत्येकवचनान्तमन्त्रस्य बहुपत्नीकयागेऽपि नोहः। किन्तु एकवचनान्त एव प्रयोज्यः। तथा पवित्रे स्थ इति मन्त्रस्य पवित्रद्वयपक्षेऽपि नोहः। अत्रापवादः। विकृतौ वचनविशेषे प्राकृतधर्म्मा न भवन्ति। अर्थलोपात् (प्रयोजनलोपादपि) प्राकृतधर्म्मा न भवन्ति। यथा मौद्गे चरौ कण्डनस्य प्रकृततः प्राप्तस्यापि प्रयोजनाभावात् नानुष्ठानम्। तथा विरोधादपि प्राकृतधर्म्माणां विकृतावप्रवृत्तिः। यथा चरौ पेषणस्य दध्युपसर्जनानामधिश्रयणस्य च। यच्च प्रकृतौ परार्थतया विहितं विकृतौ परार्थाभावेन तस्याप्रवृत्तिः यथा प्रकृतौ प्रतिपत्तिकर्म्मणां परार्था (प्रतिपाद्यद्रव्यार्था) उत्पत्तिरस्ति अतो विकृतौ प्रतिपाद्यद्रव्याभावे द्रव्यकर्मणामप्यभावो भवति। यत्र तु परार्थोत्पन्नं द्रव्यं क्वचित् कर्म्मान्तरसाधनत्वेन विहितं तत्र परस्याभावेऽपि परार्थोत्पन्नस्य भावो भवति (परार्थोत्पन्नेन द्रव्येण यत्कार्य्यं तदन्येनापि येन केनचित् कार्यम्) यथा यूपशकलेन शुक्रं संमार्ष्टीत्यत्र यूपार्थं तक्ष्यमाणे यूपे यत् शकलमुत्पन्नं यूपाभावेन तत्सम्बन्धिशकलाभावेऽपि ग्रहसंमार्गसाधनत्वेन विहितत्वाद्येन केनचिच्छकलेन शुक्रसंमार्जनं कार्यम्। सर्व्वासामिष्टीनां सद्यस्कालत्वम्। [प्रकारादि।

४क०। प्रजापश्वन्नयशस्कामकार्य्यं दाक्षायणयज्ञमन्त्रदर्शपौर्णमासयोर्दैवद्रव्यभेदकथनपूर्व्वकतद्विधानप्रकारः।

५क०। उपांशुशब्दार्थकथनम्। (व्यक्तत्वे चोदनैकत्वे तन्त्रैक्ये यत्र कामना। तादर्थ्येनैव चोत्पत्तिस्तत्रैव स्यादुपांशुता" कर्कः। तत्रद्रव्यदेवतादिकथनम्।

६क० व्रीहीणां यवानां वा पाके आग्रयणसंज्ञं कर्म्म कार्य्यम् तत्र शरद्वसन्तादिकालद्रव्यदेवतादिमन्त्रविधानप्रकाराश्च। दर्शपौर्णमासेष्ट्यनन्तरमेवाग्रयणाद्या प्रकृतिवत् कार्य्याः न पूर्व्वम्। दर्शपौर्णमासोत्सर्गे कृते अग्निहोत्रमेव जुह्वत आग्रयणविधानप्रकारः। दीक्षिते विशेषः। संवत्सरोपसत्कादौ यज्ञे आग्रयणविशेषः। संवत्सरसत्यादौ द्रव्यविशेषाः। श्यामाकाग्रयणविधान प्रकारः।

७क०। अग्न्याधेयकर्मकालदेवतामन्त्रविधानप्रकारादि अग्न्याधेयशब्दे ऋग्वेदविधिरुक्तो माध्यन्दिनानां विशेषस्तु विस्तरभयान्नोक्तः पद्धतौ दृश्यः। [दिकथनम्।

८।९।१०क०। आधानस्याङ्गकर्मणां विधानम्। [मन्त्रा-

११क०। पुनराधाने निमित्तं वित्तहान्यादि। तद्विधान-

१२क० । अग्निहोत्राङ्गस्य वात्सप्रस्योपस्थानप्रकारः ।

१३।१४।१५क०। अग्निहोत्रकालद्रव्यदेवताविधानमन्त्रादि। तत्र कामनाभेदेनावस्थाभेदयुक्ते वह्नौ होमः कार्यः यथा प्रजाभ्योऽन्नलेनान्नादिकं जिहीर्षुणा समिद्धे धूममिश्रेऽग्नौ होमः कार्यः। प्रजाउपरुध्य ताभ्योऽन्नं जिहीर्षुणा अतिबहुलज्वालायुक्ते, श्रीकामैः यशस्कामैर्ब्राह्मणादिभिः प्रदीप्ते, मित्रभावेन प्रजाभ्योऽन्नं जिहृक्षुणा राज्ञा ज्वालापसरणे जाते, ब्रह्मवर्चसकामेन देदीप्यमानेष्वङ्गारेषु सत्सु वह्नौ होमः। कामनाभेदे होम्यद्रव्यभेदाः। यथा स्वर्गकामः पशुकामो वा पयसाऽग्निहोत्रं जुहुयात्। एवं ग्रामकामो यवाग्वा, बलकामः व्रीहिश्यामाकनीवारयवगोधूमशालीनां तण्डुलैः, यावनालैः प्रियङ्गुभिश्च। इन्द्रियकामो दध्ना, तेजस्कामो घृतेन। एतदुक्तद्रव्याणां प्रत्यहं संवत्सरहोमे तत्तत्फलसिद्धिः। अग्निहोत्रहोमे सर्वास्विष्टिषु च गार्हपत्यागारस्य दक्षिणद्वारेण प्रवेशनम्। सर्वदा यजमानः स्वयं होमः कार्यः, कार्यवशात् तन्नियुक्तेन अध्वर्युणा वा। किन्तु दर्शे पौर्णमास्याञ्च सदा स्वयं होमः कार्यः। प्रवासे सूतकादौ च विशेषः।

५अध्याये। १२कण्डिकाः तत्र। १।२क०। चातुर्मास्ययज्ञ वैश्वदेवपर्व्वकालद्रव्यदेवताप्रयोगादि।

३, ४, ५, क० वरुणप्राघासरूपतदीयपर्व्वकालद्रव्यदेवतामन्त्रविधानादि। [मन्त्रादि।

६क०। साकमेधरूपतदीयपर्व्वकालविधानद्रव्यदेवता-

७क० तत्र द्विहविष्कक्रौडिनीयेष्टिकालविधानद्रव्यदेवतामन्त्रादिकथनम्।

८,९,क० तत्र पित्रेष्टिकालद्रव्यदेवतामन्त्रादिकथनम्।

१०क० तत्र त्रैयम्बकहोमकालविधानद्रव्यदेवतामन्त्रादि

११ क० चातुर्मास्यपर्व्वभेदशुनासीरीयकालद्रव्यदेवतामन्त्रादिकथनम्। तत्रायं विशेषः। कृतवैश्वदेवपर्व्वण एव वरुणप्राघाससाकमेधादिपर्व्वत्रयस्य नियतकालत्वात् वरुणप्राघासादि कर्त्तव्यमेव। कृते पौर्णमासे दर्शेष्टिवत्। चातुर्मास्यानां पुनःप्रारम्भः सूतकादावपि कार्य एव। चातुर्मास्यानि त्रिविधानि ऐष्टिकानि, पाशुकानि सौमिकानि चेति तेषां द्रव्यदेवतामन्त्रविधानादि।

१२,१३,क० मित्रविन्देष्टिद्रव्यदेवता मन्त्रविधानकथनम्।

६अ० दशभिः कण्डिकाभिः निरूढपशुबन्धयागकालद्रव्यदेवतामन्त्रविधानादिकथनम्।

७अ० ९क०। तत्र ज्योतिष्टोमकालद्रव्यदेवतामन्त्रादि विधानादि। तत्र सोमयागरूपस्याद्यसंस्थस्य द्रव्यदेवतादि विधानादि। [कथनम्।

८अ०९क०। तत्र १,२,क०आतिथ्यकर्मद्रव्यदेवतामन्त्रादि

३क० औपवसथ्यकालद्रव्यदेवतामन्त्रादिकथनम्।

४,५,६,७,८,९,क०। आसु—

९अ०१४ कण्डिकात्मके १कण्डिकायाञ्च सौत्यकर्म्मकालद्रव्यदेवतामन्त्रविधानादिकथनम्। अध्यायशेषे समाप्तिपर्य्यन्ते प्रातःसवनद्रव्यदेवतामन्त्रविधानोक्तिः।

१०अ० ९क०। तत्र किञ्चिदूनाध्यायसमाप्तिपर्य्यन्ते मध्यन्दिनसवनतृतीयसवनयोर्द्रव्यदेवतामन्त्रविधानकथनम्। अन्ते ज्योतिष्टोमे सोमोत्तरकर्त्तव्यानाम् ‘अत्यग्निष्टोमः उक्थ्यः षोडशी वाजपेयोऽतिरात्रः आप्तोर्याम इत्येवं रूपाणां षसां सोमसहितानां सप्तानां यागानां ज्योतिष्टोमत्वमुक्तं तत्र च ज्योतिष्टोमस्याध्वर्य्यवविधानप्रकारः।

११अ०१कण्डिका। तत्रज्योतिष्टोमाङ्गब्रह्मत्वविधानादि।

१२अ० ६क०। तत्र द्वादशाहयागविधानम्। तत्र एकादशाहादियागे च ज्योतिष्टोमधर्मातिदेशः। तत्राग्निष्टुतो धर्मातिदेशः इत्येकस्य मतम्। द्वादशाहो द्विविधः सत्ररूपः अहीनरूपश्च। तत्रोभयरूपयोर्लिङ्गप्रदर्शनम्। यथा यस्याद्यन्तयोः अतिरात्रयागस्तत्सत्रं, यत्र तु अन्तएव अतिरात्रोयागः सः अहीन इति तयोर्लिङ्गतोक्तिः। सत्रेषु यजमानसहितानां षोडशर्त्त्विजां कर्त्तृत्वात् सर्व्वेषां यजमानत्वम् तेन तत्र दक्षिणाभावः सर्व्वेषां स्वामित्वयोगात् फलवत्त्वाच्च यजमानत्वातिदेशेन सप्तदशानामेव यजमानधर्म्मदीक्षणादि। अन्वारम्भस्तु गृहपतेरेव। क्रतुनिष्पत्त्यर्थं पात्रासादनादौ कर्म्मणि एकस्यैककर्तृत्वं तेनैव कृते सर्व्वकृतत्वम्। गृहपत्याहवनीयीय एव अङ्गारप्राशनम्। अध्यायसमाप्तिपर्य्यन्ते तदीयद्रव्यदेवतामन्त्रदीक्षाकालविधानादि।

१३अ०४क०। तत्र १क०गवामयनसत्रप्रकारः तत्र द्वादशाहधर्मातिदेशः। २,३,४क०तत्रद्रव्यदेवतामन्त्रविधानादि

१४अ० ३क०। तासु ज्योतिष्टोमसंस्थाभेदवाजपेयकालद्रव्यदेवतामन्त्रविधानादि।

१५अ० १०क०। तासु राजसूययाग उक्तः तत्र क्षत्रियजातेरेवाधिकारः वाजपेयेनेष्ट्वा न राजसूयः कार्यः। तत्र द्रव्यदेवतामन्त्रविधानादि

१६अ० ८क०। तत्र १क०पञ्चचितिकस्थलविशेषस्याग्निविधानप्रकारः चयनरूपाङ्गकाग्नेः सोमाङ्गत्वोक्तिः

तत्र च इच्छयाऽधिकारः तत्रायं भेदः महाव्रतसंज्ञक-स्तोत्रसाध्यसोमयागे एव पञ्चचितिकस्यतस्य नियमः अन्यत्र इच्छया विकल्पः । ४क० पर्यन्ते उखानिर्माण-प्रकारादि । उखाशब्दे तद्विधिरुक्तः [मन्त्रादिकथनम् । ४कण्डिकान्ते ५क० च अग्निचयनप्रकारस्तत्रत्यदेवता-६क० अग्निविशेषपञ्चकचयनप्रकारः

७क० तत्रत्यप्रायश्चित्तिहोमविधानम् [तामन्त्रादि । ८क० अग्निचयनस्य पूर्व्वमुक्तस्य प्रकारभेदतत्कालद्रव्यदेव-१७अ०१२क० । तत्र प्रायश्चित्तान्तकर्मोत्तरकर्त्तव्यविधान-भेदद्रव्यदेवतामन्त्रादिकथनम् ।

१८अ० ६क० तासु शतरुद्रियहोमः तदङ्गकर्मद्रव्य-देवतामन्त्रादिकथनम् । ६क० शेषे अग्निचितोनियमा उक्ता यथा अग्निचिद्वर्षति न पठेत् । पक्षिमांसा-भोजनम् । प्रथमचयने द्विजातिभार्यामेव गच्छेत् न शूद्राम् । द्वितीयचयने सवर्णामेवोपगच्छेत् नान्यवर्णां क्षत्रियां वैश्यां वा । तृतीये न काञ्चन स्त्रियं गच्छेत् । ब्रह्मचार्येव भूयात् । यावज्जीवमित्थं व्रतं कुर्यात् । संवत्सरं वेति पक्षान्तरम् । चित्याग्नौ सोमेज्यायां स्वय मातृणाविश्वज्योतिःष्टतव्यानामन्यतमानामिष्टकानामुपधा-नम् । पुनश्चयनमचयनं वेति पक्षान्तरोक्तिः ।

१९अ० । ७क० । तत्र सौत्रामणीयागोविहितः । तत्र ऋद्धिकामस्य ब्राह्मणस्यैवाधिकारः । स च अग्निमता सोम-याजिना सोमयागान्ते कार्य्यः । सोमातिपूतस्य(यस्य मुखा-तिरिक्तनासाकर्णगुह्याादिच्छिद्रेभ्यः पीतः सोमः स्रवति स सोमातिपूतः) सोमवामिनश्च (मुखेन यः पीतसोमं वमति स सोमवामी) तस्याऽत्राधिकारः । स्वराज्यात् रिपुभिः प्रच्यावितस्य राज्ञोऽपि स्वराज्यप्राप्त्यर्थमधिकारः । पशु-प्राप्तियोग्यस्यापि अप्राप्तपशोः पशुकामनया वैश्यस्याऽ-प्यत्राधिकारः । अयं चतूरात्रसाध्यः । तदङ्गसुरासन्धान प्रकारादि । तत् द्रव्यदेवतामन्त्रादि ।

२०अ० ८क० । तत्राश्वमेधयागोविहितः तत्र अभि-षेकवतः क्षत्रियजातेः राज्ञोऽधिकारः न विप्रवैश्ययोः । स च त्रिरात्रसाध्यः सर्व्वकामाप्तिफलकः । तत्र काल-द्रव्यदेवतामन्त्रादि । अश्वमेधशब्देऽस्य विवृतिः ।

२१अ० ४क० । तत्र १क० पुरुषमेधयज्ञोविहितः सर्व्व-भूतेभ्योऽतिष्ठोत्कर्षकामस्यात्राधिकारः । स च पञ्चरात्र-साध्यः एकविंशतिदीक्षः ब्राह्मणक्षत्रिययोस्तत्राधिकारः न वैश्यस्य । तदीयद्रव्यदेवतामन्त्रादि । २क० सर्व्वकामस्य सर्व्वमेधयागोविहितः स च दशरात्रसाध्यः । ३ । ४क० । तत्र पुरुषः अश्वः गौः मेषः छागः इति पञ्चपश्वालम्भनं तद्विधानादि प्रोषितस्य मृतस्य वा संवत्सरान्तरे पितृ-मेधो यज्ञो विहितः तत्र नक्षत्रादिकालद्रव्यदेवतामन्त्र-विधानादिकथनम् ।

२२अ०११क० । तत्र १क०यजुर्वेदोक्ताधानादिपितृमेधान्त-कर्म्माण्युक्त्वा सामवेदविहिता एकाहसाध्ययागा विहिताः । तत्र परिभाषा । संस्थान्तरानुक्तौ अग्निष्टोमसंस्थएव क्रतुर्भवति । भूर्नामैकाहः १ धेनुमात्रदक्षिणः । ज्योति-र्नामैकाहः २ । तौ च विशेषानुक्तौ अग्निष्टोमसंस्थौ । गो-संज्ञकः ३ आयुःसंज्ञकश्च ४ एतावेकाहौ उक्थ्यसंस्थौ अभिजिद्विश्वजितौ५ ६ एतौ अग्निष्टोमकल्पौ । तत्राभि-जिति गोसहस्रं शताश्वं वा सर्व्वदितं वा दक्षिणा । विश्वजिति सहस्रं सर्व्वस्वं वा सर्व्वदितं वा दक्षिणा । तत्र ज्येष्ठपुत्रस्य विभागयोग्यद्रव्यभिन्नं भूमिदासवर्ज्जं सर्व्वस्वपदार्थः । यतो भूमेः धारणचङ्क्रमणद्वारेण उपयोगात् दासस्य शुश्रूषार्थमुपयोगात् तद्वर्ज्जं हिर-ण्यादिकं सर्व्वस्वपदार्थः इत्येकमतम् । स्मृते पुरुषमेधे गर्भदासदानदर्शनात् भूम्येकदेशपरित्यागे धारणसम्भ-वात् तद्व्यतिरिक्तं सर्व्वस्वं देयमिति । अवभृथस्नाने वत्सच्छवि परिदधातीतिश्रुतेः, तद्व्यतिरिक्तविषयं सर्व्व-स्वम् । एवं दीक्षोपयोगिद्रव्यव्यतिरिक्तविषयमपि । सह-स्रादधिकं सर्व्वस्वं दक्षिणा देयेति फलितम् । विश्वजिति द्वादशरात्रादिनियमभेदः । अभिजिति कृते विश्वजितोऽनुष्ठानम् अभिजिद्विश्वजितोर्युगपदनुष्ठानं वा । तयोर्युगपत्करणे देवयजनस्थानविशेषोक्तिः तत्र द्वत्षोड-शर्त्विजां बाहुल्यात् अन्यतमेनान्यत्र कर्म सम्पाद्यम् । तत्र बहिर्वेदिकानि कर्म्माणि समानानि । अन्तर्वेदिकान्येव विशिष्टानि । युगपत्करणपक्षेऽपि अभिजित एव पूर्व्वं पूर्व्व मङ्गं कृत्वा विश्वजितः उत्तरमुत्तरं कार्यम् । सर्व्वजिन्नामा ७ एकाहः स च महाव्रतसंज्ञसामस्तवसाध्यः तद्विधा-नादि तत्र संवत्सरं दीक्षा सप्ताहाभिषवः । तत्र तिस्रः षट् वा उपसदः । तथा च संवत्सरं दीक्षां कृत्वा तदूर्द्ध्वं सप्तमाहे अभिषवं कृत्वा सप्ताहे व्यतीते सुत्या भवति तत्र च तिस्रः षड् वा उपसदः कार्य्याः । तत्र संवत्सरं दीक्षा-अग्निचयनवद्बा दीक्षा कार्य्या । स च अग्निष्टोमसंस्थ एव । २क० सर्व्वजिति दक्षिणाभेदतद्विधानादि । अयञ्च उक्थ्यकल्पः । उक्तानामभिजिदादीनां संज्ञान्तरम् ।

तत्र अभिजितो ज्योतिःसंज्ञा विश्वजितः विश्वज्योतिःसंज्ञा। सर्वजितः सर्वज्योतिःसंज्ञा। तद्दक्षिणाभेदविधानादि। उक्थ्यसंस्थश्चतुर्थस्त्रिरात्रसम्मितसंज्ञः। साद्यस्क्रसंज्ञाः ८,९,१०,११,१२,१३ षट् क्रतवोविहिताः। ते च क्रमेणोत्तरत्र दर्शिताः। तत्राद्ये ८ स्वर्गकामपशुकामभ्रातृव्यवतामेवाधिकारः। द्वितीये साद्यस्क्रे९ दीर्घव्याधिशमप्रतिष्ठान्नाद्यकामानामधिकारः। अनुक्रीनाम साद्यस्क्रः तृतीयः१० तत्र कर्मादिना हीनस्य तन्निवृत्तिकामस्याधिकारः। विश्वजिच्छिल्पाख्यः ११ चतुर्थः। तस्मिन् दक्षिणाभेदः तत्र सर्वस्वप्रतिनिधिवेति दक्षिणोक्ता सर्वस्वप्रतिनिधिद्रव्याण्येवमुक्तानि यथा धेन्वनडुत्सीरधान्यपल्वादिमानार्हस्वर्णरूप्यादिदासदासीमिथुनसोपकरणमहानसहयाद्यारोहणगृहशय्या। तेन सर्वस्वपदेनैषामेव ग्रहणम्। वैरनिर्यातनकामस्य श्येनोनाम १२ पञ्चमः साद्यस्क्रः। तत्र दक्षिणाऽनुष्ठानमन्त्रदेवतादि। एकत्रिकनामा षष्ठः १३ साद्यस्क्रः। सर्वेषामेषां दीक्षायाः सद्यःक्रियमाणत्वात् साद्यस्क्रसंज्ञा। व्रात्यस्तोमाश्चत्वार एकाहाः १४।१५।१६।१७विहिताः। इह त्रिपुरुषं पतितसावित्रीका व्रात्यास्तद्दोषशान्त्यै एते कार्य्यास्तत्र लौकिकेऽग्नौ होमः। तेषां प्रथमे १४ व्रात्यस्तोमे गाननर्त्तनकारिणां व्रात्यानामधिकारः। नृशंसत्वेन निन्दितस्य द्वितीये उक्थ्यसंस्थे १५ अधिकारः। कनिष्ठस्य तृतीये १६। तथा च कनिष्ठं गृहपतिं कृत्वा स कार्य्यः। ज्येष्ठस्य अल्पप्रजनस्य स्थविरस्य चतुर्थे १७ अधिकारः तादृशं गृहपतिं कृत्वा गार्हपत्ये स कार्य्यः। तद्दीक्षाविधानादि। कृतव्रात्यस्तोमस्य व्यवहार्यता भवति। अन्ते ब्रह्मवर्चसवीर्य्यान्नाद्यप्रतिष्ठाकामस्य आत्मनोऽपूतत्वनिवृत्तिकामस्य च कर्त्तव्यः अग्निष्टोमसंस्थः अग्निष्टुन्नामैकाहः १८।

५क०। तत्र द्रव्यदेवतामन्त्रविधानाद्युक्तम्। त्रिवृत्स्तोमका अग्निष्टोमसंस्थाः चत्वारः क्रतवोविहिताः। तत्र अनिरुक्तप्रातःसवनः प्रथमः १९। तस्य देवसुवस्त्र इति संज्ञा। हिरण्यादिकामस्य ग्रामकामस्य चात्राधिकारः। तत्र द्रव्यदेवतामन्त्रविधानादि। बृहस्पतिसवः द्वितीयः २०। राज्ञा सहिता ब्राह्मणाः यं ब्राह्मणं धर्म्मस्थापकत्वेनाङ्गीकुर्वीरन् तस्यात्राधिकारः। इषुसंज्ञ२१ स्तृतीयः। स च श्येनवत्कार्य्यः किन्तु न सद्य इति भेदः। स च मरणकामकर्त्तव्यः। ६क० सर्वस्वारश्चतुर्थः२२ एकाहः क्रतुः जीवितकामस्य मर्त्तुकामस्य वात्राधिकारः। तत्र सिद्धान्नदक्षिणा। तस्य द्रव्यदेवताविधानादि। ऋत्विगपोहनीयास्त्रयः २३,२४२५ क्रतवोविहिताः। तेषु आद्यः सर्वस्तोमः २३। द्वादशाहिकच्छन्दोमत्रयमध्ये उक्थ्यसंस्थे उत्तमे अहनी पृथक् कृत्वा द्वितीयतृतीयौ २४,२५, ऋत्विगपोहनीयौ कार्यौ। वाचस्तोमाश्चत्वारः २६,२७,२८,२९। छान्दोग्ये चैषां विशेषः। अन्ते त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिनवत्रयस्त्रिंशाख्याः षट् ३०,३१,३२,३३,३४,३५, पृष्ठ्यस्तोमाः एकाहविशेषाविहिताः।

७क०। तेषां विधानप्रकारमन्त्रदेवतादिकथनम्। अग्न्याधेयपुनराधेयाग्निहोत्रदर्शपौर्णमासदाक्षायणायण संज्ञाः ३६,३७,३८,३९,४०,४१, षट् प्रतिकर्म्मसोमाः क्रतवोविहिताः। तद्विधानादि।

८क०। सप्तदशस्तोमकाः ४२,४३,४४,४५,४६, पञ्च क्रतवोविहिताः तत्र ग्रामकामस्य उपहव्यनामा४२ अनिरुक्तः। मिथ्याभिशस्तस्यापि तत्राधिकारः। तद्दक्षिणाविधानादि। स्वर्गकामस्य ऋतपेयः४३। तद्विधानप्रकारदेवतामन्त्रकथनम्।

९क० पशुवैश्यकामयोर्वैश्यस्तोमः ४४। तद्विधानादि। तीव्रसुन्नामकः ४५ उक्थ्यसंस्थः क्रतुः। तीव्रसुति सोमातिरेकेऽपि विशेषविधानम्। तत्र सोमातिपूतस्य स्वराज्यात् प्रच्यावितस्य राज्ञः, दीर्घव्याधिशान्तिग्रामप्रजापशुकामानाञ्चाधिकारः। तद्विधानादि।

१०क० राज्यकामस्य राजन्यस्य राट्संज्ञकः क्रतुः ४६ तद्विधानादि। सचाग्निष्टोमसंस्थः। सऐन्द्रपरियज्ञः ऋषभवत्कार्य्यः। विराडाख्यः ४७ क्रतुः अन्नाद्यकामस्य कर्त्तव्यः सऐन्द्रपरियज्ञवत् आद्यन्तयोः आग्नेयपशुकः कार्य्यः। औपशदनामा ४८ एकाहः प्रजातिकामस्य विहितः। तद्विधानादि। पुनस्तोमनामा ४९ एकाह उक्थ्यसंस्थः। तत्र प्रतिग्रहदोषशान्तिकामस्याधिकारः तद्दक्षिणादि। पशुकामस्य चतुष्टोमनामकौ ५०, ५१ उद्भिद्बलभिदौ च एकाहौ ५२,५३ दर्शपौर्णमासवत् संहतावेव तौ फलसाधकौ। इषुरिष्टिः ५४ तद्विधानादि। उद्भिदा इष्ट्वा ततएव दिनादारभ्यार्द्धमासं मासं संवत्सरं वा प्रत्यहं इषुरिष्टिर्विधेया। तद्विधानादि। पूजाकामस्य अपचितिनामकौ ५५,५६, द्वौ यज्ञौ विहितौ। तत्र राज्ञस्त्रैवर्णिकस्य वाधिकारः। तद्वि-

धानादि। तत्र पूर्व्वस्य पञ्चीतिसंज्ञा ५५ उत्तरस्य ज्योतिःसंज्ञा५६। तौ च साग्निचित्यौ सर्व्वजिद्वद्दीक्षायुक्तौ च ६१क० तयोर्दक्षिणा। ऋषभगोषवौ ५७, ५८, द्वौ क्रतू विहितौ तत्र अग्निष्टोमसंस्थे ऋषभे राज्ञोऽधिकारः तद्दक्षिणाभेदश्च। गोषव उक्थ्यसंस्थः गवायुतदक्षिणः तत्र वैश्यस्यान्येषां वा अधिकार इति मतद्वयम्। तद्विधानादि। मरुत्स्तोमनामा५९यज्ञः तत्र भ्रातॄणां सखीनां वा गणभूतानामधिकारः। वैश्यस्तोमोक्तदक्षिणा। ऐन्द्राग्नकुलायोनाम ६० क्रतुः प्रजाकामपशुकामयोस्तत्राधिकारः। गोकुलदक्षिणा। तत्र च द्वयोर्भ्रात्रोः सख्योर्वाऽधिकारः न गणानाम्। राजकर्त्तव्यः उक्थ्यसंस्थ इन्द्रस्तोमो ६१ विहितः। पुरोधाकामस्य इन्द्राग्नोस्तोमः६२ क्रतुः विहितः। सायुज्यकामयोः राजपुरोहितयोरप्यत्राधिकारः। तयोः पृथक् वा सह वाधिकार इति विकल्पः। पशुकामस्य अग्निष्टोमसंस्थौ विघनौ ६३,६४ नाम यज्ञौ विहितौ। अभिचारकामस्य पशुकामस्य वा तयोरधिकारः तत्र पशुकामस्य सम्पन्ना दक्षिणा, अभिचारकामस्य त्रिंशद्वावोदक्षिणेति भेदः। अभिचारकामस्य संदंशवज्रौ ६५,६६ द्वौ यज्ञौ विहितौ, तौ च इन्द्रसोमौ कर्त्तव्यौ, तत्र वज्रः षोडशिसंस्थः कर्त्तव्यः तत्र विशेषोक्तिः। संदंशेन राजानमेवाभिचरेत् न जनपदम्। वज्रेण जनपदमेवाभिचरेत् न राजानम्। वैपरीत्येन वेति मतान्तरम्। अभिचारेण राजाद्युपशमं कृत्वा मारयित्वा वा आत्मशुद्ध्यर्थं ज्योतिष्टोमेन यजेतेति। इति सामवेदविहिता एकाहाः दर्शिताः।

२३अ० ५क०। तत्र १क०। अहीनसंज्ञकयागानां द्वादश उपसदः, माससमाप्यत्वञ्च। सुत्योपसद्विशेषोपदेशः दीक्षाभेदश्च विहितः। तथा च सौत्यानि उपसदाञ्च दिनानि परिगणय्य दीक्षा। द्विरात्रावधिद्वादशाहपर्य्यन्तसाध्या यागाः अहीना इत्युच्यते। तत्र पाठात् अतिरात्रस्याप्यहीनसंज्ञत्वम् इत्येकीयमतम्। द्व्यहादिषु दशरात्रादिकादिप्रवृत्तिर्गौणत्वा इत्युक्तिः। द्वादशाहकर्त्तव्यदशरात्रस्य द्व्यहादिषु कर्त्तव्यतोक्तिः। द्विरात्रादिषु सहस्रदक्षिणा चतूरात्रादिष्वधिका दक्षिणा। तत्र दक्षिणादाने प्रत्यहं समभागेन देयतोक्तिः। अन्त्येऽवशिष्टदानम्। १२त्रयोदश अतिरात्राः विहिताः। यथा तत्र षोडशिग्रहरहिताश्चत्वारः प्रथमा अतिरात्राः। तत्र प्रजातिकामस्य नवसप्तदशसंज्ञः १ ज्येष्ठभ्रातृमत्याः स्त्रियाः ज्येष्ठपुत्रस्य कर्त्तव्यः विषुवन्नामातिरात्रः २। भ्रातृव्यवतः गौर्नामातिरात्रः३। स्वर्गकामस्यारोग्यकामस्य वा आयुर्नामातिरात्रः ४। इति प्रथमाः चत्वारः। ऋद्धिकामस्य ज्योतिष्टोमनामा ५। पशुकामस्य विश्वजिन्नामा ६। ब्रह्मवर्चसकामस्य त्रिवृन्नामा ७। वीर्य्यकामस्य पञ्चदशनामा ८। अन्नाद्यकामस्य सप्तदशनामा ९। प्रतिष्ठाकामस्य एकविंशनामा १० इति षट् अतिरात्रा विहिताः। प्राप्तस्याप्राप्तस्यपशोर्भ्रंशे तल्लाभकामस्य आप्तोर्यामोऽतिरात्रः ११। भ्रातृव्यवतोऽभिजिन्नामातिरात्रः१२। भूतिमिच्छोः सर्व्वस्तोमोऽतिरात्रः १३। इति त्रयोदश अतिरात्राः। २क०। द्विसुत्यास्त्रयः अहीनाः। तत्र द्वितीयतृतीययोः षोडशिग्रहरहितौ द्वौ अतिरात्रौ। आङ्गिरसचैत्ररथकापिवना इति तेषां संज्ञाः। द्वितीयं द्विरात्रमुक्थ्यपूर्वकमेके इच्छन्ति। पार्ष्ठिकस्याग्निष्टोमस्य स्थाने उक्थ्यं कुर्व्वन्ति। संस्थान्यत्वमात्रं धर्म्मास्तु तदीया एव। पुण्याहोऽपि यः पुण्यहीन इव स्यात् तस्य आङ्गिरसद्विरात्रेऽधिकारः। १। प्रजाकामस्य चैत्ररथे २। स्वर्गकामस्य पशुकामस्य वा कापिवनेऽधिकारः ३। त्रिसुत्या अहीनाः गर्गवैदच्छन्दोमान्तर्वसुपराकाख्याः पञ्च क्रतवः। तत्र वैदे त्रिरात्रे १ त्रिवृत्स्तोमयुक्ताः सर्व्वे अतिरात्राः तत्संस्थान्यत्वमात्रम्। तत्र राज्यकामस्याधिकारः। पशुकामस्य अन्तर्वसौ २। स्वर्गकामस्य पराके ३ इति भेदः। अत्रिचतुर्वीरजामदग्न्यवशिष्ठसंसर्पविश्वामित्राख्याश्चत्वारः चतुरहसाध्याःक्रतवो विहिताः। तत्र जामदग्न्ये, चतुरहे पुष्टिकामोऽधिकारी। तत्र विंशतिर्दीक्षाः। सर्वेषु उपसदः पुरोडाशवत्यः स्युः। ३क० तेषां विधानादि।

४क०। पञ्चाहसाध्याः त्रयः अहीनाः। तत्र प्रथमः देवपञ्चाहसंज्ञकः पञ्चशारदीयः द्वितीयः तद्विधानादि व्रतवत्संज्ञकस्तृतीयः पञ्चाहः। तत्र ज्योतिर्गौर्म्महाव्रतं गौरायुः इत्येतन्नामका पञ्च एकाहाः। सर्व्वजितद्वत्र दीक्षा भवति। तद्विधानादि। ५क०। षडहा अहीनास्त्रयः। ऋतुषडहः १ पृष्ठ्यावलम्बाख्यः २ त्रिकद्रुकः ३ इति तेषां नाम। तेषु स्तोमविधानादि। सप्त सप्ताहा अहीना विहिताः। तत्र चतुर्थो महाव्रतमुत्तमं भवति। चतुर्णां मध्ये तृतीयः पशुकामस्य भवति। इन्द्रसप्ताहसंज्ञः पञ्चमः। तत्र पञ्चमे सप्ताहे द्वितीयादेकाहादारभ्य षडेकाहाः सुत्याहानि भवन्ति। तत्र ज्योतिर्गौः आयुः अभिजिद्विश्वजित् सर्व्वजित् इत्येते षट् प्रत्येकं समहाव्रताः

कार्य्याः। एवञ्च महाव्रतं सर्वाहेषु भवति। सर्वस्तोमउत्तमः शेषाहे ज्योतिर्गौरायुरभिजित् विश्वजित् सर्व्वजित् महाव्रतं सर्व्वस्तोमोऽतिरात्रः। जनकसप्तरात्रः षष्ठः सप्ताहः। तद्विधानादि। उत्तमे सप्तमे सप्ताहे बृहद्रथन्तरसामयुक्तपृष्ठ्यः ते च पृष्ठ्यस्तोमाख्याः इत्येवं सप्त सप्ताहा अहीना उक्ताः। तत्र विधानादि। अष्टस्वेव अहीने पार्ष्ठिकात् षड़हादवसितात् महाव्रतम् भवति। नवरात्रे त्रिकद्रुका ज्योतिः गौः आयुः इत्येतन्नामकाः। नवरात्रे षडहादूर्द्ध्वं ज्योतिः गौः आयुरित्येते एकाहा भवन्ति। तस्यैव प्रकारान्तरम्। तद्विधानादि। दशरात्राश्चत्वारः। त्रिककुप् प्रथमः प्रतिष्ठाकामस्य। तद्विधानादि। कोसुरुविन्दो नाम द्वितीयः अभिचर्य्यमाणस्य। पूर्दशरात्रनामा तृतीयो दशरात्रः। तद्विधानादि। पशुकामस्य छन्दोमनामा चतुर्थो दशरात्रः। पौण्डरीकनामा एकादशरात्रः तद्विधानादि। २४अ० ७कण्डिकाः। तत्र १क०। द्वादशरात्रादीनि एकैकाहवृद्ध्या चत्वारिंशद्रात्रान्तानि सत्राणि उक्तानि। तत्र च येन क्रमेण यान्यहानि उपदिष्टानि तानि तथैवावगन्तव्यानि। तत्र आवापिकानामन्यः क्रमः औपदेशिकानान्तु उपदेशक्रमएव ग्राह्यः। तत्रोपदिष्टाहव्यतिरिक्तानामह्ना मावापक्रमोक्तिः। यथा अपूर्य्यमाणे सत्रे दशरात्रावापो भवति स च भवन् पर एव भवति न पूर्व्वः। षट् पार्ष्ठिकानि अहानि, चत्वारि छन्दोमानि अहानीति दशरात्रः। पृष्ठ्यः षडहः त्रयश्छन्दोमा अविवाक्योदशम इत्ययं वा दशरात्रो भवति। अयञ्च सर्व्वेषामह्नामन्ते परोभवति। प्रकृतिविहितेषु महाव्रतं दशरात्रादुत्तरमेकाहार्थे भवति। एकाहं विना सत्रसंख्यापूरणे दशरात्रात् परं महाव्रतं भवतीत्यर्थः। महाव्रतादन्यत् आवापानन्तरं दशरात्रात् पूर्व्वं भवति। यत्र षड्भिरहोभिर्विना न पूर्यते सत्रसंख्या तत्राभिप्लवः षडहार्थे पूरणोभवति। अभिप्लवस्यादितः पञ्चाहानि। पञ्चाहार्थे, (पञ्चाहेन विना संख्याऽपूरणे)। त्र्यहार्थे (त्र्यहेन विना सत्रसंख्याऽपूरणे) ज्योतिर्गौरायुः। ज्योतिरादीनां त्रिकद्रुका इति संज्ञा। चतुरहार्थे (चतुरहं विना सत्रसंख्याऽपूरणे)। ज्योतिरादित्रिकम् महाव्रतञ्च। एतच्चतुष्कं पूरणं भवति। द्व्यहार्थे (द्व्यहं विना सत्रसंख्याऽपूरणे) गौरायुश्च पूरणं भवति। सत्रस्याद्यन्तयोरतिरात्रः कार्य्यः प्रायणीयोदयनीययोरन्तराले आवापस्थानम्। यथावापः क्रियते तस्य तयोरतिरात्रयोर्मध्ये करणं विहितम्। आवापानां समवायेन यत्र सत्रं पूर्य्यते तत्र यद्यदल्पं तत्तत्पूर्व्वं भवति। यथा एकोऽभिप्लवः षडहः अपरस्तस्यैव पञ्चाहः चतुरहस्त्र्यहोद्व्यहो वा तत्र पञ्चाहादेः पूर्व्वमावापः। इति सत्रावापोपयोगिनो परिभाषा। हे त्रयोदशरात्रसत्रे। तत्र पृष्ठ्यादवसितात् सर्व्वस्तोमसंज्ञोऽतिरात्रो भवति। अयं भावः-सर्व्वेषु सत्रेषु द्वादशाहधर्माविहिता अतस्त्रयोदशरात्रे सत्रे सकलोऽपि द्वादशाहो भवति, एकमहरवशिष्यते। तत्र पृष्ठ्यात् परः सर्व्वस्तोमोऽतिरात्रः कार्य्यः। तथाच १ प्रथमदिने प्रायणीयातिरात्रः, ततो द्वितीयादिषु षट्सु दिनेषु सप्तमाहान्तेषु पृष्ठ्यः षड़हः, अष्टमे सर्वस्तोमोऽतिरात्रः, नवमादिषु चतुर्षु छन्दोमाश्चत्वारः, त्रयोदशे उदयनीयातिरात्र इत्येवं क्रमः, एवमन्यत्रापि। द्वितीये त्रयोदशरात्रे तु दशरात्रादुत्तरं महाव्रतमिति भेदः। सम्भार्यतृतीयत्रयोदशरात्रस्य गवामयनवत् सम्भरणप्रकारः। चतुर्द्दशरात्राणि त्रीणि सत्राणि। तेषां विधानादि। तत्रान्तिमे विवाह्योढकतल्पसंशयितानामधिकारः। पञ्चदशरात्राणि चत्वारि। तद्विधानादि सप्तदशरात्रे अष्टादशरात्रे एकोनविंशरात्रे विंशतिरात्रे च एवमेवावपनपूर्त्तिः। २क० षोड़शरात्रादिषु चतुर्षु आवापप्रकारः। तत्र षोडशरात्रे प्रायणीयात् त्रिकद्रुकाः दशरात्रोत्तरं व्रतञ्च। सप्तदशरात्रे प्रायणीयात् पञ्चाहः। अष्टादशरात्रे प्रायणीयात् षडहः, एकोनविंशरात्रे प्रायणीयात् षडहोदशरात्रोत्तरं व्रतञ्च। इत्येवमावापोक्त्या विधानप्रकारः। एकविंशतिरात्रो अग्नेष्टोमिको द्वौ अतिरात्रौ। तत्रावापप्रकारः। तद्विधानादि। अन्नाद्यकामस्य द्वाविंशतिरात्रो विहितः। तद्विधानादि। प्रतिष्ठाकामस्य त्रयोविंशतिरात्रोविहितः। प्रजाकामस्य पशुकामस्य च चतुर्विंशतिरात्रोविहितः। तच्च द्विविधं तत्र प्रथमस्य विधानादि। द्वितीयस्य संसदसंज्ञा। तत्र विधानादि। अन्नाद्यकामस्य पञ्चविंशतिरात्रं, प्रतिष्ठाकामस्य षड्विंशतिरात्रम्, ऋद्धिकामस्य सप्तविंशतिरात्रम्, प्रजाकामस्य पशुकामस्य वा अष्टाविंशतिरात्रम्, द्वात्रिंशद्रात्रञ्च विहितम्। तेषां क्रमशो विधानानि। एकोनत्रिंशद्रात्रस्य त्रिंशद्रात्रस्य एकत्रिंशद्रात्रस्य द्वात्रिंशद्रात्रस्य च विधानादि। त्रयस्त्रिंशद्रात्रस्य त्रयो भेदास्तेषां विधानादि। चतुस्त्रिंशद्रात्रमारभ्य आ चत्वारिंशद्रात्रात् सप्तानि सत्राणि आवापक्रमेण पूर्य्याणि। तत्र च विशेषः

अन्नाद्यकामस्य चतुस्त्रिंशद्रात्रम् प्रतिष्ठाकामस्य षट्त्रिंशद्रात्रम् समृद्धिकामस्य सप्तत्रिंशद्रात्रं प्रजाकामस्य पशुकामस्य वा अष्टात्रिंशद्रात्रं चत्वारिंशद्रात्रञ्च सत्रं विहितम्। एकान्नपञ्चाशद्रात्राणि सप्त सत्राणि विहितानि। तत्र प्रथमस्य विष्टुतिसंज्ञा। तद्विधानादि। द्वितीयस्य यमातिरात्रसंज्ञा तद्विधानादि। अञ्जनाभ्यञ्जनीयम् तृतीयं, विद्वत्सु मध्ये आत्मानं विख्यापयितुकामस्यात्राधिकारः। तद्विधानादि। संवत्सरमितं नाम चतुर्थं तद्विधानादि।
३क०। प्रजातिकामस्य विहितस्य एकषष्टिरात्रस्य एतत् समानतया विधानादिप्रसङ्गादुक्तम्। सवितुः ककुभः पञ्चमः तद्विधानादि। तत्र प्रजातिकामस्याधिकारः। षष्ठसप्तमयोः सामान्यतोविधानादि। शतरात्रस्य विधानादि। तत्र विधाने विकल्पः।
४क०। तत्र सवनसन्त्यादिहोमविधानादि। संवत्सरप्रभृतिसत्रे गवामयनधर्मातिदेशः। आदित्यानामयनसंज्ञकसत्रस्य विधानादि। आदित्यानामयनवत् अङ्गिरसामयनं कार्य्यं तत्र विशेषः। दृतिवातवतोरयनसंज्ञसत्रस्य विधानादि। कुण्डपायिनामयनसंज्ञसत्रस्य कालविधानादि। तत्र सुत्यास्थानेषु सोमोपनहनादिविशेषः। सर्पसत्रसंज्ञस्य सत्रस्य भेदविधानादि तत्र गवामयनधर्मातिदेशः।
५क०। तापश्चितनामसत्रस्य विधानादि। महतापश्चितनामसत्रस्य विधानादि। क्षुल्लकतापश्चितनामसत्रस्य, सहस्रसाव्याग्निसत्रस्य च विधानादि। त्रिसंवत्सरसत्रस्य विधानादि। महासत्रसंज्ञसत्रस्य विधानादि। प्रजापतिसत्रसंज्ञस्य द्वादशसंवत्सरसाध्यस्य विधानादि। षट्त्रिंशद्वत्सरसाध्यस्य शाक्त्यानामयनासंज्ञसत्रस्य विधानादि। शतसंवत्सरसाध्यस्य साध्यानामयनसंज्ञसत्रस्य विधानादि। सहस्रसंवत्सरसाध्यस्य विश्वसृजामयननामसत्रस्य विधानादि। तस्य च गौण्या वृत्त्या सहस्रदिनसाध्यता तेन सहस्रतुल्यमेतत् सत्रमित्युन्नेयम्। सारस्वतसत्राणां विधानादि। यात्सत्रनाम सत्रम्। ऋषभेनाधिकं गर्भिणीनां वत्सतरीणां प्रथमगर्भाणां शतं सहस्रपूरणायारण्ये उत्सृजेत् तासां सहस्रपूरणे इदं सत्रं समाप्यते स्त्रीवत्सानां दोहनाभावे क्षिप्रं वर्द्धमानानां तासां सहस्रपूरणं सम्पद्यते इत्युक्तिः। सारस्वतस्य दीक्षाकालदेशादि यथा चैत्रशुक्लसप्तम्याम् सरस्वतीविनशने स्थाने दीक्षा। सरस्वती नाम प्रत्यक्स्रोता नदी प्रवहति। तस्याः प्राक्पश्चाद्भागौ सर्वलोकप्रत्यक्षौ मध्यमस्तु भागः भूम्यन्तर्निमग्नः प्रवहति नासौ केनचिद्दृश्यते तत्स्थानं विनशनमुच्यते तच्च प्रभासस्थानमिति माधवाचार्य्यः। तत्र दीक्षाविधानादिप्रकारः।
६क०। तदीयाङ्गविधानादि। सरस्वतीदृषद्वत्योः सङ्गमे तद्विधानादि। प्लक्षस्रवणे (सरस्वत्या उत्पत्तिस्थाने) अग्नये कामायेष्टिर्विहिता तत्र कारपचदेशभेदे यजमानावभृथस्नानम्। उदवसनीया इष्टिस्तान्ते कार्य्या। एतद्गमनीयरहितानि स्वारस्वतानि त्रीणि सत्राणीत्युक्तिः। पूर्व्वोक्तसहस्रापूरणे गृहपतिमरणे सर्वासां गवां हानौ वा एतत् सत्रं समाप्यते इत्युक्तिः। तत्र वक्ष्यमाणैरतिरात्रैरिष्ट्वा सत्रं समाप्यमित्युक्तिः। तत्र सहस्रपूरणे तदेव दत्त्वा सत्रसमाप्तिः। गृहपतिमरणे आयुःसंज्ञातिरात्रं कृत्वा, सर्वहानौ तु विश्वजित्सत्रं कृत्वा समापयेत् इति भेदः। उभयथाऽपि ज्योतिष्टोमं कृत्वा वेति पक्षान्तरम्। इति प्रथमसारस्वतम्। द्वितीयं दृतिवातवतोरयनवत् कार्यं तद्विधानादि। तत्र लिखितयष्टक्रोरष्यविशेषविधानम्। शुक्लकृष्णयोर्विशेषविधानादि। तृतीये सारस्वते विश्वजिदभिजितोर्विधानादि। ऋत्विजाऽऽचार्य्येण वा तत्र दार्षद्वतं नाम सत्रं कार्य्यम्। तत्र अरण्ये उत्सृष्टा गावः संवत्सरं, द्वितीयसंवत्सरं विगलोदके स्थाने रक्षणीयाः। सरस्वतीतीरे नेतन्वनाम पुराणा ग्रामाः सन्ति, तत्राग्न्याधानमारम्भणीयं, कुरुक्षेत्रे परीणत्स्थले अन्वारम्भणीयम्। ततस्तृतीयवत्सरे परीणन्नामस्थले दर्शपौर्णमासान्तं कुर्य्यात्। अवशिष्टविधानादि। दृषद्वतीतीरेणागत्य यमुनायामवभृथस्नानम् तत्र स्थाने मन्त्रपाठे विशेषः।
७क०। चैत्रस्य वैशाखस्य वा शुक्लपञ्चम्यां तुरायणनाम सारस्वतं सत्रं कार्य्यम्। तस्य दीक्षाविधानादि। तच्चैकवर्षसाध्यं तत्र वर्षपर्य्यन्तकर्त्तव्योपदेशः। दार्षद्वतवदनियतोऽवभृथस्नानम्। भरतद्वादशाहादिः द्वादशाहभेदः तद्विधानादि। उत्सर्गिणां गवामयनविकल्पाभिधानम्।
२५अ०१४क०। तत्र अङ्गवैगुण्यदोषोपशमार्थं प्रायश्चित्तविधानम्। तत्र प्रायश्चित्तशब्दार्थस्तु सपूर्व्वकायतेर्भावे घञ् प्रायोविनाशः स च विध्यतिक्रमदोषः तस्य चित्तं सन्धानं चितधातोर्भावे क्तः चित्तं धातूनामनेकार्थत्वात् सन्धानमित्युच्यते। प्रायस्य विध्यतिक्रमदोषस्य चित्तं सन्धानम् "प्रायस्य चित्तिचित्तयोः" इति "पारस्करप्रभृतीनीति" पा० वा० सुट्। तच्च विनाशकालएव कार्य्यमिति पूर्व्वपक्षे "आगन्तुकानामन्ते निवेशः" इति न्यायेन सर्व्वकार्य्यान्ते कार्य्यमिति सिद्धान्तो

गौणः। निमित्तकाले एव कर्त्तव्यतेति मुख्यसिद्धान्तः तत्-कालाकरणेऽन्ते करणमिति,तस्य गौणकालताव्यवस्थापनम्। अनादेशे सर्व्वत्र प्रायश्चित्तं महाव्याहृतिहोमः। आदेशविशेषे तु यथादिष्टं करणीयम्। यथा "प्रणीताः स्कन्ना अभिमृशेदिति" यजु०५,२८, प्रणीताभिमर्शनमेव प्रायश्चित्तम्। महाव्याहृतिहोमेऽयं विशेषः। हौत्रिके (ऋग्वेदोदिते) कर्म्मणि उपघाते गार्हपत्येऽग्नौ भूःस्वाहेति प्रा० होमः अयमग्निदैवतः। स च अनादिष्टकर्त्तृकत्वात् ब्रह्मणा कार्य्यः। ब्रह्मवरणात् प्राक् निमित्ते जाते ब्रह्मवरणात् प्राक् व्याहृतिहोमाय ब्रह्मान्तरं वृत्वा तेन कारयितव्यम्। अब्रह्मवरणकेऽग्निहोत्रादौ तु स्वयं कार्य्यः। सोमे तु कालाहुतिभिरस्य समुच्चयः। यजुर्व्वेदोक्तकर्म्मोपघाते दक्षिणाग्नौ भुवःस्वाहेति प्रा० होमः कार्य्यः स च प्राग्वत् ब्रह्मणैव कार्य्यः। सोमे तु तत्रापि आग्नीध्रीये भुवः स्वाहेति होम इति भेदः। तस्य वायुर्देवता। सामवेदविहितकर्म्मोपघाते आहवनीयेऽग्नौ स्वःस्वाहेति प्रा० होमः स च सूर्य्यदैवतः। चतुर्होतानि सर्व्वत्र। सर्ववेदोक्तकर्म्मोपघाते व्यस्तैस्त्रिभिः समस्तेन भूर्भुवः स्वःस्वाहेत्येकेनेति चतुर्वारहोमः कार्य्यः। अयाश्चाग्ने इत्याद्याभिः पञ्चभिः प्रत्यृचमाहवनीये पञ्चाहुतिरूपः सर्व्वप्रायश्चित्तसंज्ञको होमः। अविज्ञाते स्मार्त्तादौ कर्म्मणि व्यस्तसमस्तमहाव्याहृतिहोमाश्चत्वारः कार्य्याः। तथा हि यत्र ऋग्वेदोक्तत्वादिना विशेषप्रहोमास्ति अथ च स्मृतिरुपलभ्यते। यथा यज्ञोपवीतिना बद्धशिखेन दक्षिणपाणिना पवित्रपाणिना कर्म कर्त्तव्यमित्यादि स्मृतिविहितं यज्ञोपवीतधारणादि। तस्य कथञ्चिदुपघाते व्यस्तसमस्तमहाव्याहृतिहोमचतुष्टयं प्रायश्चित्तं कार्य्यम्। तदन्ते च याजुषैः प्रागुक्तं सर्वप्रायश्चित्तसंज्ञकं पञ्चर्चाहुतिरूपं सर्व्वत्र ज्ञातेऽविज्ञाते निमित्ते वा करणीयम्। अत्रायं सम्प्रदायभेदः। भूरिति गार्हपत्ये, भुव इति दक्षिणाग्नौ, स्वरिति आहवानीये भूर्भुवः स्वरिति, सर्व्वप्रायश्चित्तसंज्ञकपञ्चार्चाहुतिहोमश्च आहवनीये इति याज्ञिक वासुदेव भट्टाः। भूरित्याद्याहुतिनवकमाहवनीय एवेति सम्प्रदायकारिकाकारौ। महापितृयज्ञे, दक्षिणाग्नौ अवभृथेऽप्स्वेव, शतरुद्रिये परिश्रितसु। त्र्यम्बकास्तु च चतुष्पथाग्नौ"इति कर्कः। अथ कर्मविशेषेषु प्रायश्चित्तभेदाः ७क० ८सू० पर्य्यन्तेषु उक्ताः। ७क० ६सूत्रादौ कर्मसमाप्तितः पूर्व्वं यजमाने मृते तदैव कर्मसमाप्तिर्भवत्येकः पक्षः ऋत्विगादिभिः शेषं समाप्यमित्यपरः पक्षः। तत् कर्मसमाप्तावपि उत्तरक्रियाविशेषोविहितः। ८क० उपकृतपशुपलायनादौ प्रायश्चित्तभेदः। ततोऽन्त्येष्टिपद्धतिः। ६क०। अस्थिचयनप्रकारादि। १०क०। सत्रविशेषकरणार्थं कृते उद्यमे दैवात्तदकरणे विश्वजिन्नामकेनातिरात्रेण यजेत्। सत्राद्यर्थं कृतदीक्षाणां यदि दैवान्मानुषाद्वा निमित्तात् शामिकृते दीक्षामात्र कृते वा सत्रे स्वामिनः सत्रं न समापयामीति बुद्धिर्जायते तदा सोमेनोपलक्षितं साधारणं धान्यघृतादिकं पुत्रादिभ्यः पृथगात्मीयं कृत्वा सर्व्वस्वदक्षिणेन विश्वजिताऽतिरात्रेण यजेत्। स च सोमे क्रीतएव भवति नाक्रते इति ताण्ड्ये स्थितम्। क्रीतेऽक्रीते वा सोमे विश्वजिद्भवतीति स्वमतम्। अध्वर्य्युप्रभृतीनां दैवात् स्वस्वकार्य्याकरणे अदक्षिणं कर्म समाप्य पुनरन्यवरणपूर्व्वकं यागारम्भः। तत्र दिनभेदे विशेषः। दीक्षितस्य पत्नी चेत् रजस्वला तदा दीक्षारूपाणि शङ्क्वादीनि निधाय सिकतासु आ रक्तस्रवणात् आसीत। कुल्यासु वर्त्तमानासु सिकतासूपविशेत्। प्रातःसायञ्च वेदिसमीपे सिकतास्वेव तिष्ठेत्। चतुर्थेऽहनि गोमूत्रमिश्रोदकेन आर्त्तं स्नानं विधाय वासो धृत्वा साक्षिपातिकं कुर्यात् नारादुपकारकम्। आरादुपकारकं च दीक्षणीयभूम्युल्लेखनादि। प्रसूतायास्तु दशरात्रादूर्द्ध्वं स्नानादि। गर्भिणीं न दीक्षयेदिति तद्दीक्षानिषेधः इति मतान्तरम्। "अयज्ञियाः गर्भा" इति श्रुतेः अनुबन्ध्याप्रकरणीयत्वात् निषेधस्य तद्विषयत्वेन गर्भवत्या अपि दीक्षाधिकारः इति स्वमतमुक्तम्। दीक्षितस्य दुःस्वप्नादिदर्शनादिप्रायश्चित्तविशेषः। चमसस्य पीतापीतत्वविषये प्रायश्चित्तम्। सोमस्योपरि मेघवर्षणे भक्षाभक्षनिर्णयपूर्व्वकं तत्र प्रायश्चित्तम्। चमसदोषे द्रोणकलसशोषे च प्रायश्चित्तम्। अग्निभेदने होमभेदः प्रायश्चित्तम्।

सोमापहरणे,अव्यक्तरागपुष्पाणि तृणानि सोमकार्यें निधाय अभिषवं कुर्य्यात्। बहुकालीनखादिरवृक्षस्य वल्लीरूपा अङ्कुरा जायमाना श्येनहृतमित्युच्यते तत्, श्यामकान्, सोमसदृशान् लताविशेषान् पूतीकान्,अरुणदूर्व्वा अव्यक्तरागा दूर्व्वा हरितकुशान् अशुष्कान् दर्भान् वा पूर्वपूर्व्वाभावे उत्तरोत्तरान् प्रतिनिधायाभिषुणुयात्। तत्र गोदानं प्रायश्चित्तं कृत्वा उक्तद्रव्येण यागसमापनम्। तत्र च अवभृथान्ते पुनः यज्ञः करणीयः, सोमकलसभेदे ब्रह्मसाम

पाठः प्रायश्चित्तम् इति विकल्पः। अभिषवणचर्म्मणि प्रस्थादिमात्रसोमरसलाभे जलादिना तस्य वर्द्धनेन कलसमापूर्व्व द्रोणकलसपूरणं सम्पाद्यम्। सोमेऽनुलभ्यमाने यत्किञ्चिद्धिगतमानीय पुनः यज्ञः। तत्र गोदानं प्रायश्चित्तम्।

१२क०। सोमातिरेके आद्यादिसवनभेदे प्रायश्चित्तभेदः। दीक्षितस्य रोगे द्रोणकलसे उष्णानां शुण्ठीपिप्पल्यादीनां मध्ये येने च्छेत् तेन भिषक् विचिकित्सेत् नान्येन। तस्य विधानादि। ज्वरितस्यापि रोगशान्तिं यावत् प्राग्विहितदेश एव वासोनान्यत्र। प्रातःसवने च तस्य मन्त्रविशेषेणाभिषेकप्रकारः। एवं दीक्षितं सर्व्वे ऋत्विजः सवनान्तेषु स्पृशेयुः। तत्र यजमानस्य मन्त्रभेदेन स्वर्गः। तत्र मरणे तस्य दाहविशेषं कृत्वा दीक्षितस्यास्थीनि कृष्णाजिने बद्ध्वा मृतस्यैव पत्न्यपि स्वकर्म पतिकर्म च कुर्य्यात्। पत्नीमरणेऽप्येवम् इति पक्षान्तरम्। तस्य भ्रात्रादिकं नेदिष्ठिनं दीक्षयित्वा सत्रस्य समापनम् इति मतान्तरम्। स्वमते मरणे इव कर्मसमाप्तिः। उभयपक्षेऽपि। तत्र प्रायश्चित्तविधानादि।

१४क०। उखाभरणादिने यजमानमरणे विशेषविधानप्रायश्चित्तानि। सत्रदीक्षामध्ये मरणेऽपि उक्तसोमादिकर्मान्तकरणाय दीक्षितस्य तत्कर्मफलं भवति दीक्षितस्य भ्रात्रादेरेव प्रकृतक्रतुफलप्राप्तिरिति मतान्तरम्। साग्निना नेदिष्ठिना पुत्रादिना स्वकीयेष्वग्निषु स्वकीयेन द्रव्येणानुष्ठितस्य साग्निचित्यादिकक्रतोः नेदिष्ठिनएव फलं प्रकृतक्रतुफलं तु मृतयजमानस्येति स्वमतम्। तत्र उपदीक्षी स्वेष्वग्निषु नखनिकृन्तनावधि द्वादशान्तं सान्निपातिकं कुर्य्यात्। यद्यनाहिताग्निर्नेदिष्ठी तदा सतृणामेवाग्निषु करणं तत्र च वैश्वानरनिर्वापः प्रायश्चित्तम्।

एकराजकयोरपर्व्वतान्तरेऽनद्यन्तरे समानदेशे यजमानयोः यज्ञकरणे सोमसवो भवति। तथाच द्वौ यजमानौ चेत् मिथो वैरिणौ समकाले एकस्मिन् देशे, गिरिनद्यादिव्यवधानं विना यागार्थं सोममेककालं सुनुतः तदा समेत्य सवनात् संसव इत्युच्यते। तत्र सर्व्वं कर्म सत्वरं कार्य्यम्। परयज्ञापेक्षया स्वयज्ञे संस्थाधिक्यमिच्छन् सत्वरं सर्वं कार्य्यं कुर्य्यात्। तद्विधानादि। भिन्नदेशकालादौ पर्व्वताद्यन्तरे प्रीतौ च न संसव इति भेदः। संसवविषयएव होत्रादिभिस्सदस्यमरणकामैः कर्त्तव्यकर्मविशेषविधानम्। यथा होत्रा होतुः अध्वर्युणाऽध्वर्य्योः यजमानेन यजमानस्येत्यादिरूपेण मरणमिच्छता तत्कर्म कार्य्यम्। अयञ्च यज्ञः एकदिनरथगम्यदेशे परस्परद्वेषे भवति अन्यतरस्य द्वेषाभावे उक्तदेशतोदूरत्वेच न सम्भवति। उक्तानामेकतरेण तथानुष्ठिते एकतरस्य मरणे। स्वस्वयज्ञान्तर्गता अध्वर्य्वादयः तदीयकर्म्मशेषं स्मरणपूर्व्वकं कुर्युः न वरणान्तरमपेक्षते। सोमादिदाहे प्रतिनिधिना कर्म समापयेयुः। पञ्चगोदानं दत्त्वा यज्ञसमापनम्। द्वादश्या रात्रेः प्राक् तथाभूते दोषे पुनर्यज्ञारम्भः उत्तरन्तु पञ्चगोदानमात्रदक्षिणा प्रायश्चित्तमिति मतान्तरम्। ब्रह्मणएव विहितकर्माधिकारात् अनादेशे सर्व्वत्र प्रायश्चित्तहोमे तस्यैवाधिकारः। अब्रह्मके तु अग्निहोत्रादौ यजमानाधिकारः इत्युक्तं प्राक्।

२६अ० ६क० कण्डिकाः प्रवर्ग्योपयोगिमहावीरसम्भरणकर्मप्रतिपादिकाः। यथा मृत्पिण्डसञ्चयं वल्मीकलोष्टं स्मूकरोत्खातां मृत्तिकां पूतिकालताविशेषं गवेधुकाः (जलसञ्चिहितमहाटणजानि शुक्लानि फलानि) इत्येतान् सम्भारान् प्राक्संस्थान् उदक्संस्थान् वा कृत्वा कृष्णाजिनम् वक्ष्यमाणलक्षणम्, अभ्रिम् (कुद्दालम्) उत्तरतोनिदध्यात्। तेषामादाननिधानादिमन्त्राः। मृज्ञात्र अतिचिक्कणा भाण्डादिनिर्माणयोग्या कुम्भकारसंस्कृतैव गृह्यते। तथाभूतमृदः कृष्णाजिने उत्तरतोनिधानम्। दक्षिणतस्च कृष्णाजिने वल्मीकलोष्टस्य। कृष्णाजिनं परिस्तृह्य पञ्चारत्निप्रमाणं समचतुरस्रं भूभागं प्राग्द्वारं कृत्वा सम्भूषंस्कारान् कृत्वा सिकतोपकिरणे परिवृते उक्तस्थाने कृष्णाजिनस्थान् सम्भारान् निदध्यात्। उक्तेस्थने जलैरभ्युक्षणे सम्भारैः संसर्गे च मन्त्राः। ततोऽध्वर्युः गवेधुका अजापयस्च पृथक् निधाय वल्मीकलोष्टादिभिः सह मृत्पिण्डं मिश्रयेत्। ततो महावीरं कार्य्यम्। तत्स्वरूपं प्रादेशमात्रमूर्द्धमासेचनवन्तं (गर्त्तवन्तम्) मध्यदेशे सङ्कुचितमेखलम् (उलूखलवत् मुष्टिग्रहणयोग्यम्)। मेखलाया ऊर्द्धं त्र्यङ्गुलम् (प्रादेशमात्रस्योपरिभागे त्र्यङ्गुलम्) परिशेष्य ततोऽधस्तात् मेखला कार्य्या। "मखस्य शिर" इति मन्त्रेण निष्पन्नमहावीरस्पर्शनम्। अनेनैव मन्त्रेण तदादानमपीत्येके। एवमितरौ महावीरौ कुर्य्यात्। अभिमर्शनानन्तरं सर्वेषां भूमौ निधानम्। सुङ्मुखाकृतौ पिन्वने (दोहनपात्रे) रौहिणकपाले वक्ष्यमाणपुरोडाशकपाले वर्त्तुले सर्व्वसमीपे भूमौ निधाय। उपशायाम् (तदवशिष्टां मृदम्) प्रायश्चित्तार्थं निदध्यात्। "मखाय त्वेति मन्त्रेण"

गवेधुकाभिः श्लक्ष्णीकुर्य्यात् । दक्षिणाग्निनादीप्तेन अश्व पुरीषेण "अश्वस्य त्वेति" तस्याः स्वदोधूपनम् । उखावत् प्रदाहनादि । चतुरस्रमवटं खात्वा तत्र श्रपणम् (पाकसाधनमिन्धनादि) आस्तीर्य्य तत्र तीन् महावीरान् न्युब्जीकृतान् निधाय पिन्वने (दोहनपात्रे) रौहिणकपाले च न्युब्जे निधाय पुनः श्रपेणावच्छाद्य दक्षिणाग्निना दीपयेत् । "ऋजवे त्वेति" मन्त्रेण पक्कां स्वदमुद्वरेत् दिवैव प्रदाहनोद्धारौ कार्य्यौ । ततस्तानि अजापयसावसिञ्चेत् । तूष्णीं पिन्वनादीनां करणाभिमर्शनश्लक्ष्णधूपनप्रदहनोद्धरणावसेचनादि कुर्यात् ।

२क० महावीरसत्त्वा प्रवर्ग्यचरणप्रकारः । यथा प्रत्यहं सायंप्रातः प्रागुपसदः प्रवर्ग्यचरणं कार्यम् । अपिहितद्वारे प्रवर्ग्यचरणम् । पत्नीसन्निधावपि तया तस्य दर्शनं न कार्यम् । वैदिकशब्दानुक्तिस्तत्र कार्या । प्रकृत्यन्तराभावात् यावदुक्तं तावदेवात्र भवति नाधिकम् । अत्र घर्मसम्भिपात्रमौदुम्बरम् मानसूत्रं मौञ्जं त्रिवृत् । तत्र विशेषः यजमानस्कन्धप्रमाणपादाया औदुम्बर्या आसन्द्या वाल्वजं वल्वजत्रयं बन्धनरज्जुर्भवति ।

गार्हपत्यं पूर्व्वेण प्रागग्रकुशानास्तीर्य तेषु पात्रासादनं द्वन्द्वशः कार्यम् ] पात्राणि तु उपसंयमनीं महावीरं, परीशासौ, पिन्वने, रौहिणकपाले, रौहिणहवन्यौ । अनुत्कीर्णे स्रुचौ, स्थूणामयूखम्, धृष्टी, शतमाने, विंशतिं मुञ्जप्रलवान्, प्रादेशमात्रान् विकङ्कतशकलान्, स्रुवं मुञ्जवेदम्, धवित्राणि, परिधीन्, रज्जुसन्दानमासन्दीम् कृष्णाजिनमभ्रिम्, खरार्थाः सिकता अश्वञ्च, पाठक्रमेणैवासादयेत् । तत्र बाहुप्रमाणा औदुम्बरी उपसंयमनी । महामुखा प्रचरणीया स्रुक् । परीशासौ संदंशाकारौ, स्थूणा गोर्बन्धनार्थः स्तम्भभेदः । मयूखः अजाबन्धनार्थः शङ्कुरूपः कीलकः । धृष्टी उपवेषौ औदुम्बरौ । एकं रजतरक्तिकाशतमानं, द्वितीयं स्वर्णरक्तिकाशतमानम् इति द्वे शतमाने । औदुम्बरएवारत्निमात्रः स्रुवः । वेदोमुञ्जमयः । धुनोत्येभिरिति धवित्राणि कृष्णाजिनखण्डनिर्म्मितानि दण्डवन्ति त्रीणि व्यजनानि । सन्दानं दोहनकाले गोपादबन्धनार्था अजबन्धनार्था च रज्जुः । अथैवत् प्रयोजनोपयोगि अन्यदपि द्वन्द्वश आसादयेत् । प्रयोजनवद्द्रव्यञ्च स्रुचः पवित्रे, अग्निहोत्रहवनी आज्यस्थाली प्रभूतमाज्यं, शूर्पं, पात्रीपिष्टम्, उपसर्ज्जनीपात्रम्, उपयमा, इतरौ महावीरौ, च । होतृषदनं मौञ्जं कार्यम् औदुम्बरी समिदित्यादि द्वन्द्वश आसादयेत् । प्रोक्षणीः संस्कृत्य उत्थाय ब्रह्मणोऽनुज्ञाकरणम् । होत्रादिप्रेषणञ्च "यमाय त्वेति, मन्त्रेण प्रतिमन्त्रम् उक्तद्रव्याणां प्रत्येकं प्रोक्षणं राशीकृत्य च तूष्णीं प्रोक्षणञ्च कार्यम् । शालायाः पूर्व्वद्वारेण स्थूणां मयूख च निष्कास्य, शालाया दक्षिणस्यां होतुः सन्दर्शने निखननम्, ( गार्हपत्यसमीपे उपविष्टो होता यत्र निखातां स्थूणां मयूखं च पश्यति तादृशं स्थानं होतृसन्दर्शनम् ) । गार्हपत्याहवनीययोरुत्तरतः खरनिवापः । दक्षिणतश्च भित्तिलग्नसुश्लिष्टखरनिवापः कार्य्यः । आहवनीयं पूर्व्वेण सम्राडासन्दीं पर्य्याहृत्य दक्षिणतः प्राचीमासादयेत् । राजासन्द्या उत्तरतः कृष्णाजिनमथास्तृणाति तस्मिन्नभ्रुपशये निदध्यात् महावीरौ चाच्छादयेदुवेति । स्थूणादिनिर्हरणानि अध्वर्युरन्यो वा कुर्य्यात् । "देवस्य त्वेति मन्त्रेण एतेषामञ्जनं होता कुर्यात् । महावीरमाज्यं च संस्कृत्य "पृथिव्याः संस्पृश" इति मन्त्रेण रजतशतरक्तिकामानं सिकतामध्ये प्रवेशयेत् । ३क० शुक्रं गायेति प्रस्तोतुः प्रेषणम् । पत्नीशिर आच्छादनम् । संसीदस्वेति यदाऽऽज्यं संस्कृत्य होता वक्ति तदा मुञ्जप्रलवान् शरेषीकापरितोभवानि शरत्वणानि मध्यमोटनेन द्विगुणीकृतानादीप्य प्रतिदिशं सिकतासु निदध्यात् । तेषु मुञ्जप्रलवेषु संस्कृतं प्रचरणीयं महावीरं घृतपूर्णम् "अर्चिरसीति" मन्त्रेण निदध्यात् । महावीरस्योपरि प्रादेशधारकं यजमानम् "अनाधृष्टेति" मन्त्रं वाचयेत् । प्रतिदिशं वा तथा वाचनमिति विकल्पः । दक्षिणत उत्तानं पाणिं यजमानोनिदध्यात् ।"मनोरश्वेति" मन्त्रेण महावीरस्योत्तरतः प्रादेशनिधानम् । महावीरं परितः भस्मलेपं कृत्वा गार्हपत्याङ्गारैः उपवेषाभ्यां महावीरं "मरुद्भिरिति" परिकीर्य्य ( महावीरस्य सर्व्वतो निरन्तरानङ्गारान् निधाय ) । अङ्गारैः विकङ्कतशकलैश्च प्रागुदग्रभिः त्रयोदशभिः "स्वाहामरुद्भिरिति" मन्त्रेण परिश्रपयेत् । तेषां त्रयोदशानां मध्ये प्रतिदिशं त्रीन् त्रीन् स्थापयेत् तत्र द्वौ द्वौ समन्त्रकमेकं तूष्णीं तयोरुपरि इत्येवं प्रागादिषु चतसृषु दिक्षु स्थापितानां द्वादशानामधिकमेकं दक्षिणतः स्थापयेत् स्थापनक्रमेणैव श्रपणञ्च । सुवर्णशतरक्तिकामानेन "दिवः संस्पृश" इति मन्त्रेण महावीरं पिदध्यात् ।

४क० तत्रपिधानकाले "चन्द्रं गायेति" प्रस्तोतुः प्रेष-

णम्। कृष्णाजिनखण्डनिर्म्मितैर्व्यजनैर्दण्डवद्भिस्त्रिभिः महावीरं परितः प्रकीर्णानङ्गारान् दीपनाय उपवीजयेयुः। तेषु व्यजनेषु एकं प्रतिप्रस्थाता, अपरमग्नीधा, शिष्टमध्वर्युणा गृहीत्वा धूनयद्भिः सव्यापसव्यैस्त्रिः प्रदक्षिणं कार्यम्। तत्र सव्यावृत्तौ व्यजनधूननम् दक्षिणावृत्तौ व्यजनान्यन्त: कृत्वेति भेदः। धूननेन प्रदीप्तत्वात् जाते अर्चिषि सुवर्णशतमानं निधायाज्येन स्रुवेण महावीरं सिञ्चेत्। एतच्च सुवर्णशतमानं महावीरादन्यत्र सुगुप्ते देशे स्थापयित्वा कार्यम्। अध्वर्यौ महावीरसेके व्यापृततया प्रतिप्रस्थाता लौकिकपिष्टानां व्रीहीणां यवानां रौहिणौ पुरोडाशौ पचेत्। रौहिणपुरोडाशयोरन्यपुरोडाशधर्म्मत्वं तेन कपालयोः संस्कारादि कार्यम्। "ईड़े द्यावापृथिवी" इति मन्त्रेण परिधीन् परिधाय रौहिणौ पुरोडाशौ पात्रीस्थानीययोरुपस्तीर्णयोः रौहिणहवन्योः स्रुचोरुद्वास्य तत्स्थावेव आहवनीयदक्षिणोत्तरयोः एकं दक्षिणतोऽपरमुत्तरतश्च स्थापयेत्। 'घर्म्मस्य तन्वौ गायेति" प्रस्तोतृप्रेषणम्। यजमानसहितानामृत्विजां परिक्रमणम्। प्रस्तोतृव्यतिरिक्ताः पञ्चर्त्विजः उपतिष्ठेयुः। छन्दोगानां मते तत्सहिताः षट् परिक्रमेयुः। "गर्भो देवानामिति" सकृत्, द्विस्तूष्णीं परिक्रमेयुः। पत्नीशिरोऽपगताच्छादनं कृत्वा महीवारमोक्षमाणां पत्नीं "त्वष्टमन्त" इत्येतं मन्त्रं वाचयेयुः। प्रातः "अहः केतुनेति" मन्त्रेण दक्षिणं रौहिणं, सायं"रात्रिरिति" मन्त्रेण उत्तरं रौहिणं जुहुयात्। ५क०। घर्म्मधुग्बन्धनार्था पाशवती रज्जुः तस्याएव पश्चात्पादबन्धनार्थं सन्दानं तद्द्वयमादाय "इडएहीति" मन्त्रेण उपांशु, नाम्ना च त्रिरुच्चैः गार्हपत्यं गच्छन् तामाह्वयेत्। 'धेनुं गायेति" प्रस्तोतृप्रेषणम्।"अदित्यै रास्नासीति" मन्त्रेण समागतां गां पाशेन प्रतिमुच्य (तस्याः रज्जुपाशं शृङ्गयोः प्रोतं कृत्वा स्थूणायां बद्ध्वा) "पूषासीति" मन्त्रेण धेनुं पश्चात्पादयो: सन्दानेन (नियमनेन) बद्ध्वा "घर्म्माय दीष्वेति" वत्सं ततोऽपाकुर्य्यात्। (स्तनपानात् निवर्त्तयेत्) "अश्विभ्यां पिन्वस्वेति"मन्त्रेण पिन्वने (पात्रभेदे) दुहेत्। "स्वाहेन्द्रवदिति" मन्त्रेण पिन्वने पतितानिप्रुषोऽभिमन्त्रयेत्।"यस्ते स्तन" इति स्तनालम्भनम्। प्रतिप्रस्थाता अजामेवं मयूखे तूष्णीं बद्ध्वा दुहेत्। "पयोगायेति प्रतिप्रस्थातृप्रेषणम्। "उत्तिष्ठ ब्रह्मणस्पते" इति मन्त्रे होत्रोच्यमाने अध्वर्युः गोः समीपादुत्तिष्ठेत्। "उपद्रव पयसेति" मन्त्रे होत्रोच्चार्यमाणे गार्हपत्यं प्रति अध्वर्युगतिः। "गायत्रं छन्दोऽसीति" प्रतिमन्त्रं परीशासावादद्यात्। "वसिष्ठशफौ गायेति" प्रस्तोतृप्रेषणम्। "द्यावापृथिवीभ्यां त्वा परिगृह्णामीति" मन्त्रेण परीशासाभ्यां महावीरग्रहणम् परीशासाभ्यां महावीरमुत्क्षिप्य मुञ्जवेदेनोपमृज्य उपयमन्या अन्तरिक्षेणोपयच्छामीति गृह्णीयात्। उपयमनीं च दुग्धरूपघर्म्मस्य अधस्तात् स्थापयेत्। उपयमन्या गृहीतं महावीरमजपयःसेकेन शान्ते महावीरे "प्रैतु ब्रह्मणस्पते इति" वाक्ये होत्रोच्यमाने "इन्द्राश्विनेति" गोः पयोऽपनयेत्।

६क० आहवनीयं गच्छन् "समुद्राय त्वेति" मन्त्रेण वातनाम जपेत्। उपयमन्यां पतितं पयोघृतं वा घर्म्मे (दुग्धे) "स्वाहा घर्म्मायेति" आसिञ्चेत्। 'स्वाहा घर्म्मः पित्रे" इति जपित्वाऽतिक्रम्याश्राव्य प्रस्तोतारं घर्म्मस्य यजेतिप्रेषयेत्। वषट्कारेण "विश्वाआशा इति" मन्त्रेण होमः। "दिवि धा इति" मन्त्रेण महावीरं त्रिरुत्कम्पयेत्। "स्वाहाऽग्नये इति" मन्त्रेण वषट्कारयोजितेन होमः। हुतावशिष्टद्रव्यस्य"अश्विनो घर्ममिति" ब्रह्मानुमन्त्रणम्।"अपातामिति" मन्त्रेण घर्मस्य यजमानानुमन्त्रणम्। अतितप्तत्वात् पात्रमध्ये सर्वतः इतस्तत उच्छलन्तो ये घर्मलेशास्तेषाम् "इषे पिन्वस्वेति" मन्त्रेणानुमन्त्रणम्। "धर्मादिति' मन्त्रेण ऐशान्यामध्वर्युरुद्गच्छन् "अमेन्यस्मे" इति मन्त्रेण महावीरं सिकतासु निदध्यात्। तच्च परीशासगृहीतमेव स्थापयेत्। नीचैर्घर्म्ममध्ये शकलं प्रवेश्य तत्स्थेनाज्येन विकङ्कतशकलम् अक्त्वा अक्त्वा "स्वाहा पूष्णे शरस" इति मन्त्रेण तदेव जुहुयात् हुत्वा हुत्वा च प्रथमपरिधौ विकङ्कतशकलान् निदध्यात्। एवं त्रिधा हुत्वा चतुर्थमहुतं तच्छकलमीक्षमाणो दक्षिणतो बर्हिषि उपगूहेत् (प्रवेशयेत्)। अहुतं सप्तमं च विकङ्कतशकलम् दक्षिणेक्षमाणः सर्वलेपाक्तं (महावीरस्थघृतलेपेनाक्तम्) मूलाग्रपर्यन्तं प्रतिप्रस्थात्रे दद्यात्। प्रतिस्थाता तं शकलमुदङ्ङ्नियच्छेत्। घर्मसम्बन्धि नवनीतादि "स्वाहा सं ज्योतिषा" इति मन्त्रेण परीशासाभ्यामुत्पाद्य उपयमन्यां स्रुच्यासिञ्चति (स्रुग्मुखस्योपरि अधोमुखं करोतीत्यर्थः) ततोद्वितीयरौहिणहोमः। मध्यमपरिधौ निहितानि पञ्च वैकङ्कतशकलानि आहवनीये जुहुयात्। उपयमन्यां

स्थितं घर्म्माज्यमग्निहोत्रविधानेन हुत्वा "मधु हुतमिति"
मन्त्रेण सर्वे ऋत्विगादयो वाजिनवत् भक्षयेयुः । उच्छिष्ट-
खरे प्रक्षाल्य उपयमनीं निदध्यात् । अत्र काले उप-
स्थितानां पञ्चशकलानामाहवनीये प्रहरणम् । अध्वर्युर्होत्रा
संसाद्यमानाय महावीरायानुब्रूहीति अनुवाचयेत् ।
ततो धेनवे तृणोदके दद्यात् । सर्वं पात्रजातमना-
शाय आसन्द्यां कुर्य्यात् । "अभीममिति" मन्त्रेण महा-
वीरमासन्द्यां स्थापयेत् । इतराणि तु पात्राणि तूष्णी-
मिति भेदः । ततः शान्तिपाठः द्वारोद्घाटनञ्च । खर-
स्थूणामयूखकृष्णाजिनाभ्रुपशयासन्दीनां सकृदासादन
प्रोक्षणे । आरादुपकारकत्वात् प्रथमे प्रवर्ग्यचरणे एव
आसादनप्रोक्षणे इत्येकपक्षः । असकृत्, "प्रतिप्रधानं गुणा
वृत्तिरिति" न्यायात् इति पक्षान्तरम् । ७क० । उपसदन्ते
प्रवर्ग्योत्सादनप्रकारः । यथा शालामध्यात् दक्षिणेन
द्वारेण घर्मसम्बन्धि द्रव्यं निष्क्रास्य अन्तःपात्यसमीपे
सादितपात्रेभ्यो दक्षिणतएव निदध्यात् । आहवनीये
त्रीन् शालाकान् प्रदीप्य प्रदीप्य अग्नीध्रो धारयेत् यजमान
सक्थेषु मुखमात्रनाभिमात्रजानुमात्रप्रमाणेषु तान् प्रदी-
प्तान् शालाकान् निदध्यात् । अध्वर्युराज्यं संस्कृत्य चतु-
र्गृहीतं गृहीत्वा तेषां प्रदीप्तानां शालाकानामुपरि "याते
घर्म ! दिव्या शुगिति" प्रतिमन्त्रं जुहुयात् । एकमेव चतु-
र्गृहीतं गृहीत्वा त्रिष्वपि शालाकेषु जुहुयात् । तथाच
शलाकानां समूहः शालाकः तेन त्रिभिः शलाकाभिः
एकः शालाकः । तादृशान् त्रीन् शालाकान् हस्ते गृहीत्वा
तेषामेकं शालाकं शालाद्वार्य्ये प्रदीप्याग्नीध्रोयजमानमुख-
मात्रे आहवनीयस्योपरि धारयेत् । अध्वर्युश्चतुर्गृहीतं
तृतीयांशं तस्मिन्शालाके प्रदीप्ते जुहुयात् । ततस्तं
शालाकमाहवनीयमध्यएव क्षिपेत् । ततोद्वितीयं शालाकं
प्रदीप्याग्नीध्रो यजमानस्य नाभिदघ्ने आहवनीयस्योपरि
धारयेत् अध्वर्युस्तथैव जुहुयात् । तृतीयन्तु अग्नीधा प्रदीप्य
यजमानजानुमात्रे धृतमध्वर्युराहवनीये निक्षिप्य तत
उपविश्य सर्वं चतुर्गृहीतं शेषं जुहुयात् । अत्र उपविश्ये
त्युक्तेः पूर्वयोः तिष्ठता होमौ कार्य्यौ । ततोऽध्वर्युः पुरस्तात्
पत्नीमपि कृत्वा "ऋतस्य त्वेति" मन्त्रेण शालाया निष्क्र-
मेत् । अवभृथवत् अध्वर्युणा प्रस्तोतुः सामगानार्थं प्रैष-
णम् । अवभृथवत् देशगतिः निधनञ्च । सामगानात् परं
सर्वे उत्सादनदेशं गच्छेयुः । (उत्सादनदेशश्च महावीरादि
पात्रादीनां परित्यागदेशः "परिष्यन्दोवा अन्योवा देशः"
इति शत० ब्रा० १४,२,१,१४, विहितदेशः) । तत्र
अग्निचित्यारहिते यज्ञे उत्तरवेदिं प्रति सर्वे गच्छेयुः ।
अग्निचित्यायुक्ते यज्ञे तु परिष्यन्दं (जलपरिवृतं द्वीपम्)
(निर्जनस्थलं वा) प्रत्येव गमनम् । तमुत्सादनदेशम्
उत्तरवेदिं वा "अचिक्रद"दिति" त्रिः परिषिच्य उत्तरकार्य्यं
कार्य्यम् । अध्वर्युरुत्तरवेदौ उत्सादनपक्षे प्रथमं महा-
वीरं नाभिसृष्टं "चतुःस्रक्तिरिति" निदध्यात् । इतरौ
महावीरौ प्राक्संस्थौ प्राच्यां मन्त्रावृत्त्या निदध्यात् ।
उपशयाम् (महावीरघटनावसरे परिशेषितां मृदम्) तथैव
तूष्णीं निदध्यात् । महावीरादिकमभितः परीशासौ
निदध्यात् । अवकृष्टे (नीचे वाहेर) रौहिणहवन्यौ स्रुचौ
निदध्यात् । रौहिणहवन्योरुत्तरतः अभ्रिनिधानम् ।
तयोरेव दक्षिणतः आसन्दीम्, अभ्रेरुत्तरतः सर्व्वधवित्राणि
च निदध्यात् । तथा च दक्षिणतः, पश्चात्, उत्तरतश्चैकैकं
धवित्रं निदध्यात् । परिधीनपि निहितद्रव्याण्यभितो
निदध्यात् । निहितपात्रगणस्य पश्चात् उपयमनीं स्रुचं
प्रागग्रां निधाय रज्जुसंदानं वेदञ्च तन्मध्ये निद-
ध्यात् । पिन्वने (दोहनपात्रे) उपयमनीमुखस्य पश्चात्
अभितोदण्डं निदध्यात् । पिन्वनयोः पश्चात् दक्षिणतः
स्थूणाम्, उत्तरतो मयूखं, निदध्यात् स्थूणामयूखयोः
पश्चात् रौहिणकपाले निदध्यात् । तयोरेव पश्चात्
धृष्टी ( उपवेषौ ) निदध्यात् । घर्मोपयुक्तं स्रुवमौञ्ज-
कूर्चादि आसादितपात्राणां मध्ये निदध्यात् । सर्व-
पात्राणामुत्तरतः प्रचरणीयौ खरौ निदध्यात् । मार्ज्जा-
लीयस्थानस्य दक्षिणतो वेदेर्बहिर्भागे उच्छिष्टखरं निद-
ध्यात् । सगर्त्तानि सप्त पात्राणि (महावीरत्रयं द्वे पिन्वने
उपयमनीं स्रुवञ्च) एतानि "घर्मैतत्ते" इति प्रतिमन्त्रं पयसा
पूरयेत् । व्रतमिश्रं पयःशेषं पूर्व्वमदत्तं चेत् साग्निके सोमे
प्रागेव सकलं देयमिति विधानात् । वर्षाहारेष्टाहोत्रीय
सामगानार्थं प्रस्तोतुरध्वर्युणा प्रेषणम् । सपत्नीकाः सर्वे
"सुमित्रिया न इति" मन्त्रेण चात्वालं मार्ज्जयेयुः ।
ऐशानीं प्रति "उद्वयमिति" मन्त्रेण यजमान उद्गच्छेत् ।
प्रादेशमात्रामेकां समिधं हस्तेन "अनपेक्षमेत्य धोऽसीति"
मन्त्रेणादाय "समिदसीति" मन्त्रेण आहवनीये दद्यात् ।
गार्हपत्ये तु तादृशीं समिधं तूष्णीं दद्यात् । यजमानः रजत-
सुवर्णशतमाने ब्रह्मणे दद्यात् । यजमानव्रतदुघां रूपां
घर्मदुघां यजमानः अध्वर्यवे दद्यात् । पत्नीव्रतदुघां
गामुद्गात्रे दद्यात् । अजामग्नीधे दद्यात् । घर्मस्य महा

वीरस्य भेदने यथाकालं प्रायश्चित्तं कुर्य्यात् । तत्प्रायश्चित्त प्रकारादि । अभग्नेन द्वितीयतृतीययोर्मध्ये द्वयेनान्यतरेण वा प्रवर्ग्यं चरेत् । तत्र पूर्णाहुतिहोमप्रकारः । संस्थित-मात्रो महावीरो यदि भिद्यते तदा प्रायश्चित्तहोमे प्रजा-पतिर्देवता । निष्ठिताभिमर्शनादारभ्य अजापयोऽवसेच-नान्तकाले महावीरभेदने प्रायश्चित्तभेदः । तत्र प्रथमदिने भेदने प्रा० सविता देवता । द्वितीयेऽह्नि भेदे अग्नि-र्देवता तृतीयदिने भेदने वायुर्देवता ।

अथ प्रवर्ग्याधिकारिणः । अग्निष्टोमस्याग्रसंस्थाति-रात्रस्य प्रथमे प्रयोगे न प्रवर्ग्यचरणम् इत्येकः पक्षः । विकल्पेन तत्रापि प्रवर्ग्यचरणमिति शाखान्तरम् । सप्रवर्ग्ये यज्ञे दधिघर्मसम्बन्धिनीतिकर्त्तव्यता । सपवित्राया-मग्निहोत्रहवन्यां दधिघर्मग्रहणं कुर्य्यात् । तच्च यथा-कथञ्चित् स्थालीमुखेनैव स्रुचि निनयेत् । प्रस्तरस्याभि-घारणे अपत्र न । हुतशेषस्य "मयि त्यदिति" मन्त्रेण भक्षणम् । तच्च महाव्रतीयेऽह्नि कर्त्तव्यम् । दधिभक्षणान-न्तरं चात्वाले मार्ज्जनम् । प्रवर्ग्यचरणस्यादौ अन्ते च शान्तिकाध्यायपाठः । (शान्तिकाध्यायस्य ऋचं वाच-मित्याद्यध्यायः) । शान्तिकरणद्वयमध्ये द्वारपिधानोत्तर-काले आदिमम् । पात्राणामासन्द्यां निधानानन्तर-मन्तिमम् इति भेदः ।

कातीयगृह्यसूत्रप्रतिपाद्यविषयाश्च विस्तरभयान्नात्रोक्तास्तत एवासेयाः । कात्यायनसर्वानुक्रमणिकाप्रतिपाद्यविषयाश्च सर्वानुक्रमणिकाशब्दे वक्ष्यन्ते ।

**कात्यायनी** स्त्री कतस्य गोत्रापत्यं स्त्री गर्गा० यञ् लोहित-कतन्ता० ष्फः षित्त्वात् ङीष् । १ कतगोत्रापत्यस्त्रियाम् । पत्न्यां ङीष् । २ कात्यायनर्षेः पत्न्याम् ३ तत्तुल्य कषा-यादिवस्त्रधारिण्यामर्द्धवृद्धायां विधवायां स्त्रियां ४कल्पभेदे कतगोत्रोत्पन्नायां दुर्गायां ५ याज्ञवल्क्यर्षिपत्नीभेदे च । "याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुः मैत्रेयी कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायनी" छ० उ० । [ यके शिवप्रणीते तन्त्रभेदे ।

**कात्यायनीतन्त्र** न० ६त० । कात्यायनीपूजामन्त्रादिविधा-

**कात्यायनीपुत्र** पु० ६त० । कार्त्तिकेये ।

**काथक्य** पु० स्त्री कथकस्य गोत्रापत्यं गर्गा० यञ् । कथकर्षे-र्गोत्रापत्ये यूनि तु यञन्तत्वात् फक् । काथक्यायन तदीय युवगोत्रापत्ये । स्त्रियां लोहितकतान्तादि० ष्फः षित्त्वात् ङीष् । काथक्यायनी तद्गोत्रापत्यस्त्रियाम् ।

**काथञ्चित्क** न० कथञ्चित्+विनयादि० स्वार्थे ठक् तान्तत्वात् ठस्य कः । कथञ्चिदित्यर्थे ।

**काथिक** त्रि० कथायां साधु कथादि० ठक् । कथारचनासमर्थे

**कादम्ब** पु० स्त्री सौ०कदि–णिच्–अम्बच् । (बालिहाँस) १हंस-भेदे स्त्रियां जातित्वेऽपि संयोगोपधत्वान्न ङीष् किन्तु टाप् । तस्य च नीलवर्णत्वम् "क्वचित् खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः" सितासितगङ्गायमुनासंगम-वर्णने रघुः । तद्व्या० "कादम्बसंसर्गवती नीलहंससंसृष्टा" मल्लि० । सुश्रुते हंससारसेत्युपक्रमे कादम्बस्य प्लवत्वं संघ-चारित्वञ्चोक्त्वा "रक्तपित्तहराः शीताः स्निग्धा वृष्या मरु-ज्जितः । सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः" इति तेषां मांसगुणा उक्ताः । २इषौ पु० विश्वः । ३वाणे मेदि० । "कादम्बानामेकपातैरसीव्यत्" माघः । कदम्बे समूहे भवः अण् । ५ समूहभवे त्रि० । कदम्बस्येदम् अण् । ६कदम्बसम्बन्धिनि त्रि० "कादम्बमर्द्धोद्गतकेसरञ्च" रघुः । "कादम्बं नीपकुसुम"मिति मल्लि० । वस्तुतः कदम्बशब्दस्य पुष्पपरत्वे कदम्बमित्येव ह्रस्वपाठः स्यात् दीर्घपाठे तु कदम्बानां कुसुमानां समूह इत्यर्थेऽण् । इति तस्य कदम्बसमूहपरतेति बोध्यम् । कदम्ब एव स्वार्थेऽण् । ७ कदम्बवृक्षे पु० "वेत्रकादम्बवल्लजकरम्भमहाकरम्भाः पञ्च पुष्पविषाणि" स्थावरविषकीर्त्तने सुश्रु० । स्वार्थे कन् वाणे हारा० ।

**कादम्बर** न० कादम्बं जाति प्रकृतित्वेन ला–क लस्य रः । १ऐक्षवे गुडादौ, तस्य २विकारे मद्ये च । "निषेव्य मधु माधवाः सरसमत्र कादम्बरम्" माघः । तद्व्याख्यायां मल्लिनाथे-नोक्ता व्युत्पत्तिरुक्ता । कादम्बं कदम्बोद्भवं रसं राति रा–क । तत्तुल्यरसयुक्ते ३दधिसरे पु० मेदि० ।

**कादम्बरी** स्त्री कुत्सितं मलिनमम्बरं यस्य कोः कदादेशः कदम्बरो लोलाम्बरो बलभद्रस्तस्य प्रिया अण् । हलि-प्रियायाम्, मदिरायाम् । अस्यानिरुक्तिर्बलभद्रप्रि-यता च हरि० ९८ अ० दर्शिता यथा "अथ सङ्क-र्षणः श्रीमान् विना कृष्णेन वीर्य्यवान् । चचार तस्य शिखरे नगस्य नगसन्निभः । प्रफुल्लस्य कदम्बस्य प्रच्छाये निषसाद ह । वायुना मदगन्धेन वीज्यमानः सुखेन वै । तस्य तेनानिलौघेन सेव्यमानस्य तत्र वै । मद संस्पर्शजो गन्धः संस्पृशन् घ्राणमागतः । तृष्णा चैनं विवेशाशु वारुणीप्रभवा तदा । शुशोच च मुखं तस्य मत्तस्येवापरेऽह्नि । स्मारितः स पुराहृत्तमस्तृतप्राशनं

स्थानं कान्तं मनोज्ञं वा रसम् ऋच्छति ऋ-अण् उप० स०। (काजलिया) १दुःखभेदे भावप्र०। तत्र तद्गुणाद्युक्तम् "कान्तारेक्षुर्गुरुर्दृष्यः स्नेग्धलोद्दंपृणःमरः। २कोविदारवृक्षे ३वंशे च राजनि०। कस्य सुखस्यान्तम् ऋच्छत्यत्र ऋ—आधारे घञ्। ईत०। दुर्गमे पथि ४महारण्ये च पु० न० अम० ६छिद्रे मेदि०। स्वार्थे कन् दुःखभेदे अमरः।

**कान्तारपथिक** त्रि० कान्तारपथेनाहृतम् ठञ्। कान्तारपथेनाहृते।

**कान्तारी** स्त्री कान्तार+गौ० ङीष्। कान्तारेक्षौ राजव०।

**कान्ति** स्त्री कम–कामे कन–दीप्तौ वा भावे क्तिन्। १दीप्तौ २शोभायाम् ३इच्छायाम् ४स्त्रीणां शृङ्गारजे सौन्दर्य्य गुणभेदे च। कान्तौ कारणं च सुश्रुते दर्शितं यथा "तेजोऽप्याग्नेयं क्रमशः पच्यमानानां धातूनामभिनिर्वृत्तमन्तरस्थं स्नेहजातं रसाख्यं स्त्रीणां विशेषतो भवति तेन मार्द्दवसौकुमार्य्य स्वल्परोमतोत्साहदृष्टिस्थितिपङ्क्तिकान्ति दीप्तयो भवन्ति"। घृतस्य तैजसत्वेन कान्तिदत्वम् यथोक्तं तत्रैव "घृतन्तु" इत्युपक्रम्य "स्मृतिमतिमेधाकान्ति स्वरलावण्यसौकुमार्य्यौजस्तेजोबलकरम्"। शोभाकान्ति दीप्तिद्युतीनां भेदस्तु सा०द० उक्तः "रूपयौवनलालित्यं भोगाद्यैरङ्गभूषणम्। शोभा प्रोक्ता, सैव कान्तिर्मन्मथाप्यायिता द्युतिः। कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते"। इति भेदेन लक्षयित्वा मन्मथोन्मेषेणातिविस्तीर्णा शोभैव कान्तिरुच्यते इति व्याख्यातम्। तेषां च नायिकागततेव नायकगतताऽपि। चन्द्रादौ तु शोभादीप्तिकान्तिद्युतीनामभेद एव। "कला च सा कान्तिमती कलावतः" कुमा०। "बध्वा इवाध्वंसितवर्णकान्तेः" माघः। चन्द्रकलासु मध्ये ७कलाभेदे। "शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना"शा०ति०। कलाशब्दे विवृतिः। ८लक्ष्म्या अनुचरदेवीभेदे "एवमुक्ता तु सा देवी लक्ष्मीर्दैत्येश्वरं बलिम्। प्रविष्टा" इत्युपक्रमे "शिष्टाश्च देव्यः प्रवरा ह्रीः कीर्त्तिर्द्युतिरेव च" इत्याद्युक्त्वा "श्रुतिः प्रीतिरिड़ा कान्तिः" इत्यादिकमभिधाय "उपतस्थुर्महासत्त्वं बलिमिन्द्रं महारथम्" इत्युक्तम् हरि०२५६अ०। ९ शशिनः प्रियाभेदे च "तिस्रस्तिद्दशनार्थस्तम्" इत्युपक्रमे "मदिरा रूपिणी भूत्वा कान्तिश्च शशिनः प्रिया" हरि० ९८ अ०। १०दुर्गायां "स्तुतिः सिद्धिरिति ख्याता श्रिया संश्रयणाच्च या। लक्ष्मीर्वा ललना वापि कामात् सा कान्तिरुच्यते" देवीपु० ४५अ०। ११कामशक्तिभेदे। "तथा कान्तिः कलकण्ठी हकोदरा" शा० ति० राघवभट्टः। कामशक्तिशब्दे विवृतिः।

**कान्तिद** न० कान्तिं ददाति दा–क। १पित्ते धातौ शब्द च० तस्य तैजसत्वात् तथात्वम्। तेजसश्च यथा कान्तिकरत्वं तथा कान्तिशब्दे उदाहृतसुश्रुतवाक्ये दर्शितम्। २घृते च। ३शोभादायकमात्रे त्रि० कान्तिकरादयोऽप्यत्र। ४सोमराज्यां स्त्री राजनि०।

**कान्तिदायक** न० कान्तिं ददाति दा-ण्वुल्। कालीयके गन्धद्रव्यभेदे जटाधरः। तस्य सेवनेन कान्तिपोषणात् तस्य तथात्वम्। २कान्तिदातरि त्रि०।

**कान्तिनगरी** स्त्री काञ्चिनगर्य्यां काशी० मोक्षपुरीभेदकाञ्ची नगरीवर्णने कान्तिपुरीति पाठान्तरम् काञ्चीशब्दे च तद्वाक्यमुक्तम्।

**कान्तिभृत्** त्रि० कान्तिं बिभर्त्ति भृ-क्विप्। १कान्तिधारके २चन्द्रे पु० तस्य कान्तिनामकलाधारित्वात् विशिष्टकान्ति धारित्वात् कान्तिनामदेवीभेदपतित्वाच्च तथात्वम्। कान्ति शब्दे च कान्तिशब्दस्य कलाचन्द्रपत्नीवाचकत्वं दर्शितम्।

**कान्तिमत्** कान्तिरस्त्यस्य मतुप्। १कान्तियुक्ते। "उपमानमभूत् विलासिनां करणं यत्तव कान्तिमत्तया" कुमा०। "शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत् खण्डमेकम्"मेघदू० स्त्रियां ङीप् "कला च सा कान्तिमतो कलावतः"कुमा०। २ अप्सरोभेदे स्त्री "वपुष्मती कान्तिमती लीलावत्युत्पलावती" काशी० अप्सरोनामकथने। ३चन्द्रे पु० कान्तिनामकलावत्त्वात् तस्य तथात्वम्। ४कामदेवभेदे राघवभ०।

**कान्यक** त्रि० "वर्णुसमीपस्था कन्या ततो जातादौ वर्णौ वुक्" पा० वुक्। वर्णुनदसमीपस्थकन्याजातादौ। "यथाहि जातं हिमवत्सु कान्यकम्" सि०कौ०

**कान्यक्य** पु० स्त्री कन्यकर्षिभेदस्य गोत्रापत्यं गर्गा० यञ्। कन्यकर्षिगोत्रापत्ये। यूनपत्ये यञन्तत्वात् फक्। कान्यक्यायनः बहुषु तस्य लुक्। कन्यकाः। स्त्रियान्तु लोहिता० ष्फः षित्त्वात् ङीष्। कान्यक्यायनी।

**कान्यिक** त्रि० कन्यायां जातादि ठक्। कन्याभवे।

**कान्द** त्रि० कन्दस्येदं तत्र भवो वा अण्। १ तत्सम्बन्धिनि २कन्दभवे विषादौ च। ततः अश्मादि० चतुरर्थ्यां र। कान्दर तन्निर्वृत्तादौ त्रि०।

**कान्दर्प** पुंस्त्री कन्दर्पस्यापत्यं विदादौ किन्दर्भेत्यत्र कन्दर्पेति पाठान्तरे अञ्। कन्दर्पापत्ये तस्येदमण्। २ कन्दर्पसम्बन्धिनि त्रि०।

**कान्दर्पिक** न० कन्दर्पस्तद्विवृद्धिः प्रयोजनमस्य ठक् । कन्दर्पवृद्धिसाधने इ०स० उक्ते विधानभेदे । तद्विधानं च तत्र कान्दर्पिकनामकषट्सप्ततितमेऽध्याये उक्तं यथा ।
"रक्तेऽधिके स्त्री, पुरुषस्तु शुक्रे, नपुंसकं शोणितशुक्रसाम्ये । यस्मादतः शुक्रविवृद्धिदानि निषेवितव्यानि रसायनानि । इत्यं पृष्ठसुडुनाथरश्मयः सोत्पलं मधु मदालसा प्रिया । वल्लकी स्मरकथा रहः स्रजो वर्ग एष मदनस्य वागुरा । माचीकधातुमधुपारदलोहचूर्णपथ्याशिलाजतुविडङ्गघृतानि योऽद्यात् । सैकानि विंशतिरहानि जरान्वितोऽपि सो ऽशीतिकोऽपि रमयत्यबलां युवेव । चीरं घृतं यः कपिकच्छुमूलैः पिबेत् चयं स्त्रीषु न सोऽभ्युपैति । माषान् पयःसर्पिषि वा विपक्वान् षड्यासमात्रांश्च पयोऽनुपानान् । विदारिकायाः स्वरसेन चूर्णं सुहुसुहुर्भावितशोषितं च । घृतेन दुग्धेन सशर्करेण पिबेत्स यस्य प्रमदाः प्रभूताः । धात्रीफलानां स्वरसेन चूर्णं सुभावितं चौद्रसिताज्ययुक्तम् । लीढ्वानुपायाथ पयो ऽग्निशक्त्या कामं निकामं पुरुषो निषेवेत् । चीरेण वस्ताण्डयुजा घृतेन समृप्लाव्य कामी बहुशस्तिलान् यः । सुशोषितानत्ति पिबेत्पयश्च तस्यातः किं चटकः करोति । माषसूपसहितेन सर्पिषा षष्टिकौदनमदन्ति ये नराः । चीरमप्यनुपिबन्ति तासु ते शर्वरीषु मदनेन शेरते । तिलाश्वगन्धाकपिकच्छुमूलैर्विदारिकाषष्टिकपिष्टयोगः । आजेन पिष्टा पयसा घृतेन पक्वा भवेच्छष्कुलिकाऽतिवृष्या । चीरेण वा गोक्षुरकोपयोगं विदारिकाकन्दकभक्षणं वा । कुर्वन् सोद्वेद्यदि जीर्यते ऽस्य मन्दाग्निता चेदिदमत्र चूर्णम् । साजमोदलवणा हरीतकी शृङ्गवेरसहिता च पिप्पली । मद्यतक्रतरलोष्णवारिभिस्तु पीतानमुदराग्निदीपनम् । अत्यम्लतिक्तलवणानि कटूनि यानि सक्षारशाकबहुलानि च भोजनानि । दृक्च्छुक्रवीर्यरहितः स करोत्यनेकान् व्याजान् जरन्निव युवाप्यबलामवाप्य" । भावप्र० तदुपायविधानाद्युक्तं यथा ।
"अथ वाजीकरणाधिकारः । तत्र वाजीकरणस्य लक्षणमाह । यद्द्रव्यं पुरुषं कुर्याद्वाजीव सुरतक्षमम् । तद्वाजीकरमाख्यातं मुनिभिर्भिषजां वरैः । अत्र प्रसङ्गात् क्लैव्यस्य लक्षणं संख्यां निदानं चाह । क्लीवः स्यात् सुरताशक्तस्तद्भावः क्लैव्यमुच्यते । तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते । तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते । ध्वजः पतत्यतो नृणां क्लैव्यं समुपजायते । द्वेष्यस्त्रीसंप्रयोगाच्च क्लैव्यं तन्मानसं स्मृतम् । तैस्तैर्भावैः—भयशोकक्रोधादिभिः,—अहृद्यैः—हृदयाहितैः—दुःखत्वात् क्षते पीडिते अस्वस्थीकृते इति यावत् । ध्वजः—शिश्नः । पतति नम्रमति संप्रयोगो मैथुनम् । "कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः । पित्ताच्छुक्रक्षयो दृष्टः क्लैव्यं तस्मात्प्रजायते । कटुकादिनातिमात्रेण प्रवृद्धेन पित्तेन शुक्रस्य दग्धत्वात् क्लैव्यं भवति पित्तजमिति द्वितीयम् । अतिव्यवायशीलो यो न च वाजीक्रियारतः । ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकः । शुक्रक्षयेण तृतीयम् । "महता मेढ्ररोगेण चतुर्थी क्लीवता भवेत् । वीर्यवाहिशिराच्छेदान्मेहनादुन्नतिर्भवेत् । बलिनः क्षुब्धमनसो निरोधाद् ब्रह्मचर्यतः । षष्ठं क्लैव्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तकम् । बलिनः पुष्टस्य क्षुब्धमनसः कामात् चलतः मनसो, ब्रह्मचर्यम् अमैथुनं तस्मान्निरोधात् शुक्रस्य, क्लैव्यं भवति । जन्मप्रभृति यत्क्लैव्यं सहजं तद्धि सप्तमम् । असाध्यं क्लैव्यमाह । असाध्यं सहजं क्लैव्यं मर्मच्छेदाच्च यद्भवेत् । मन्मर्मच्छेदाद्वीर्यवाहिशिराच्छेदात् अथ क्लैव्यस्य चिकित्सा । क्लैव्यानामिह साध्यानां कार्यो हेतुविपर्ययः । सुख्यं चिकित्सितं यस्मान्निदानपरिवर्ज्जनम् । अथ क्लैव्यस्य चिकित्सायां वाजीकरणविधिमाह । नरो वाजीकरान् योगान् सम्यक् शुद्धो निरामयः । सप्तत्यन्तं प्रकुर्वीत वर्षादूर्ध्वन्तु षोडशात् । नच वै षोडशादर्वाक् सप्तत्याः परतो न च । आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति । चयवृद्ध्युपदंशाद्या रोगाश्चातीव दुर्ज्जयाः । अकालमरणञ्च स्यात् भजते स्त्रियमन्यथा । विलासिनामर्थवतां रूपयौवनशालिनाम् । नराणां बहुभार्य्याणां विधिर्वाजीकरो हितः । स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छताम् । योषित्प्रसङ्गात् चीणानां क्लीवानामल्परेतसाम् । हिता वाजीकरा योगाः प्रीणयन्त्यबलाः सदा । एतेऽपि पुष्टदेहानां सेव्याः कालाद्यपेक्षया । वाजीकरणान्याह । भोजनानि विचित्राणि पानानि विविधानि च । गीतं श्रोत्राभिरामाश्च वाचः स्पर्शसुखास्तथा । यामिनी सान्द्रतिलका कामिनी नवयौवना । गीतं श्रोत्रमनोहारि ताम्बूलं मदिराः स्रजः । गन्धा मनोज्ञा रूपाणि चित्राण्युपवनानि च । मनसश्चाप्रतीघातं वाजीकुर्व्वन्ति मानवम् । माक्षीकधातुमधुपारदलोहचूर्णम् पथ्याशिलाजतुविडङ्गघृतानि विद्यात् । एकाप्रविंश-

तिदिनानि गदार्दितोऽपि साशीतिकोऽपि रमयेत्प्रमदां युवेव"। तत्रौषधभेदास्तु तत एवावसेयाः।

**कान्दव** न० कन्दो संस्कृतं भक्ष्यम् अण्। कन्दुसंस्कृते भक्ष्ये

**कान्दविक** त्रि० कान्दवं पण्यमस्य ठक्। कन्दुसंस्कृतभक्ष्यद्रव्यविक्रेतरि मिष्टान्नपण्यके।

**कान्दिगभूत** त्रि० कां दिशं यामीत्याकुलतां भूतः प्राप्तः भू—प्राप्तौ कर्त्तरि क्त २त० पृषो०। कां दिशं यामीत्याकुलतं प्राप्ते। "स कथञ्चिद्भयात्तस्माद्विमुक्तो ब्राह्मणस्तदा। कांदिगभूतो जीवितार्थी प्रदुद्रावोत्तरां दिशम्" भा०शा०प० १६८अ०। "कां दिशं यामीत्याकुलः कान्दिगभूतः" नीलक०। "कान्दिगभूतं छिन्नगात्रं विसंज्ञं दुर्य्योधनो द्रक्ष्यति सर्व्वसैन्यम्" भा० उद्यो० ४७अ०।

**कान्दिशीक** त्रि० कां दिशं यामीत्याह "तदाहेति माशब्दादिभ्यः" उपसंख्यानात् ठक् पृषो० मयू० आकृतिगणत्वात् समासः। कदि-वैक्लव्ये भावे इन् कन्दिः वैक्लव्यम्। शीक-सेचने चरणार्थत्वादश्रुपातार्थकता भावे घञ् कन्दिश्च शीकः अश्रुपातश्च विद्येते अस्य बा० अण् रायमुकुटः। भयद्रुते पलायिते अमरः। "बहूनां प्रलयोजातः कान्दिशीकमभूज्जगत्" काशी०।

**कान्यकुब्ज** पु० देशभेदे कन्यकुब्जशब्दे विवरणम्। "कान्यकुब्जे महानासीत् पार्थिवोभरतर्षभ!। गाधीति विश्रुतो लोके कुशिकस्यात्मसम्भवः" भा०व० १७४अ०।

**कान्यजा** स्त्री कात् जलादन्यस्मिन् जायते जन—ड। नली नामगन्धद्रव्ये शब्दच०।

**कापटव** पुंस्त्री कापटोर्गोत्रापत्यम् अण्। कापटुगोत्रापत्ये स्त्रियां तु गोत्रप्रत्ययान्तत्वेन जातित्वेऽपि न ङीष्। किन्तु शार्ङ्गरवादि० ङीन् स्वरे भेदः। कापटवी। गोत्रान्तत्वात् तत आगतेऽर्थे वुञ्। कापटवक ततआगते। कुत्सित पटुः कापटुस्तस्य भावः कर्म्म वा अण्। कापटव २ निन्दितपटुतायां न०।

**कापटिक** त्रि० कपटेन चरति ठक्। १कपटव्यवहारिणि "कृत्स्नं चाष्टविधं कर्म पञ्चवर्गञ्च तत्त्वतः" इति ७।१५४ श्लोकव्या० कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मकं पञ्चविधं चारवर्गं पञ्चवर्गशब्दवाच्यं तत्त्वतश्चिन्तयेत् तत्र परमर्म्मज्ञः प्रगल्भश्छात्रः कपटव्यवहारित्वात् कापटिकस्तं वृत्त्यर्थिनमर्थमानाभ्यामुपगृह्य राजा ब्रूयात् यस्य दुर्वृत्तं पश्यसि तत्तदानीमेव मयि वक्तव्यमिति" कुल्लू० उक्ते राज्ञः पञ्चवर्गान्तर्गते २छात्ररूपे चारभेदे पु०।

**कापथ** पु० कुत्सितः पन्थाः अच् समा० कादेशः। १ निन्द्येवर्त्मनि अमरः। "आस्थाय कापथं दुष्टं विषमं बहुकण्टकम्" रामा०। दुष्टपथवर्त्तिनि २ दानवभेदे च पु०। "शरभः शलभश्चैव कुपथः कापथः क्रथः" इति हरि० २६३अ० दानवनामकथने। ३ उशीरे न० मेदि०। कापथजातत्वात्तस्य तथात्वम्।

**कापा** स्त्री कम् सुखमाप्यतेऽनया आप—करणे घञ् ६त०। प्रातःप्रबोधकवन्दिवाण्याम्। "प्रातर्जरेथे जरणेव कापया" ऋ० १०।४०।३। प्रातःप्रबोधकस्य वन्दिनो वाणी कापा तया" भा०।

**कापाटिक** न० कपाटिकैव शर्करा० स्वार्थे अण् स्वार्थिकस्यापि क्वचिल्लिङ्गातिक्रमोक्तेः क्लीवता। क्षुद्रकपाटे।

**कापाल** न० कपालमेव तस्येदं वा अण्। १ कपालरूपाकारे कुष्ठभेदे कपालशब्दे उदा०। २ कपालसम्बन्धिनि तन्निर्मिते भूषणादौ च। "त्रिशूलमस्त्रं घोरञ्च कापालमथ कङ्कणम्" विक्रमो०। (कालियाखड़ा) ३ कर्कटाख्ये पु० रत्नमा०। गौरा० ङीष्। ४ विड़ङ्गायां स्त्री राजनि०।

**कापालिक** त्रि० कपालेन नृकपालेन चरति अभ्यवहारादिकं करोति ठक्। १ शैवाचारभेदयुक्ते सिद्धान्तिभेदे तेषामाचारश्च। "नरास्थिमालाकृतभूरिभूषणः श्मशानवासी नृकपालभोजनः"। "पश्यामि योगाञ्जनशुद्धदर्शनो जगन्मिथोभिन्नमभिन्नमीश्वरात्"। तस्य धर्मभेदः प्रबोधच० वर्णितो यथा। "मस्तिष्कान्त्रवसाभिघारितमहामांसाहुतीर्जुह्वतां वह्नौ ब्रह्मकपालकल्पितसुरापानेन नः पारणा। सद्यःकृत्तकठोरकण्ठविगलत्कीलालधारोज्ज्वलैरर्च्यो नः पुरुषोपहारबलिभिर्देवो महाभैरवः" इति। "अथ तीर्थकराग्रणीः प्रतस्थे बहुकापालिकजालकं विजेतुम्" शङ्करदिग्विजयः। २ अन्त्यजजातिभेदे (कपालि) पु० स्त्री०। स्त्रियां ङीष्। अन्त्यजशब्दे कपालिन्शब्दे च विवृतिः। कपालिकैव शर्करा० अण्। ३ क्षुद्रकपाले न०।

**कापालिन्** पु० कापालं कपालं ब्रह्मकपालं व्रते धार्य्यत्वेनास्त्यस्य इनि। ब्रह्मशिरोहरणजपापापनुत्तये व्रतार्थं ब्रह्मकपालधारिणि १शिवे। "अजैकपाच्च कापाली त्रिशङ्कुरजितः शिवः" भा०अनु० १७अ० शिवसहस्रनामकथने। वासुदेवस्य २पुत्रभेदे। "कौशिक्यां सुतसोमायां यौधिष्ठिर्य्यां युधिष्ठिर!। कापाली गरुडश्चैव जज्ञाते चित्रयोधिनौ" हरि० १६२अ०। (कपालि) ३जातिसङ्करे अन्त्यजभेदे पुंस्त्री। स्त्रियां ङीप्। "नटी कापालिनी वेश्या कुलटा नापि-

ताङ्गना" तन्त्रसारे सप्तकुलनायिकाकीर्त्तने ।

**कापिक** पु० कपिरेव अङ्गुल्यादि० ठक् । कपिशब्दार्थे

**कापिञ्जल** पुंस्त्री कपिञ्जलस्यापत्यं शिवा० अण् । कपिञ्जलस्यापत्ये स्त्रियां ङीप् ।

**कापिञ्जलादि** पुंस्त्री कपिञ्जलान् तन्मांसान्यत्ति अद-अण् उप०स० कपिञ्जलादस्तस्यापत्यम् "अत इञ्" पा० इञ् । कपिञ्जलपक्षिमांसभक्षकस्यापत्ये स्त्रियां ङीप् । तस्यापत्यम् कुर्वादि० ण्य । कापिञ्जलाद्य तदपत्ये पुंस्त्री ।

**कापित्थ** न० कपित्थस्य विकारः अनुदात्तादित्वात् "अनुदात्तादेश्च" पा० अञ् । कपित्थविकारे

**कापिल** त्रि० कापिलं तदुक्तशास्त्रं वेत्त्यधीते वाऽण् । १कपिलशास्त्रज्ञे २ तदध्येतरि च हेम० । कपिलेन प्रोक्तम् अण् तस्येदं वा अण् । ३कपिलप्रोक्ते ४तत्सम्बन्धिनि शास्त्रे न० कपिलशब्दे तत्प्रोक्तविषया दर्शिताः । "मार्गज्ञाः कापिलाः सांख्याः" भा० शा० २०२ । "बुद्धिश्च परमा यत्र कापिलानां महात्मनाम्" "पितुर्नियोगाज्जग्राह शुको धर्मभृतां वरः । योगशास्त्रं च निखिलं कापिलञ्चैव भारत !" भा० शा० ३२७ अ० । स्वार्थेऽण् । ५पिङ्गवर्णे पु० ६तद्वति त्रि० भरतः कपिलमधिकृत्य कृतोग्रन्थः अण् । ६कपिलाधिकारेण कृते उपपुराणभेदे "अन्यान्युपपुराणानि मुनिभिः कथितानि तु" इत्युपक्रम्य "कापिलं मानवञ्चैव तथैवोशनसेरितम्" । हेमा० दा० ख० कूर्म्मपु० उपपुराणगणने उक्तम्

**कापिलिक** पुंस्त्री कपिलिकायाः कपिलवर्णायाः अपत्यम् शिवा०अण् । कपिलिकाया अपत्ये स्त्रियां ङीप् ।

**कापिलेय** पु०कपिलायाः तन्नाम्न्या ब्राह्मण्या अपत्यम् ढक् । कपिलानाम्न्याः स्तनपायित्वेन तदपत्ये ब्राह्मणाः कपिलशिष्ये मुनिभेदे । तस्य सम्भवादिकं भा०शा० २१८अ० वर्णितं यथा "तत्र पञ्चशिखो नाम कापिलेयो महामुनिः । परिधावन् महीं कृत्स्नां जगाम मिथिलामथ । सर्वसंन्यासधर्माणां तत्त्वज्ञानविनिश्चये । सुपर्य्यवसितार्थश्च निर्द्वन्द्वोनष्टसंशयः । ऋषीणामाहुरेकं तु यं कामानावृतं नृषु । शाश्वतं सुखमत्यन्तमन्विच्छन्तं सुदुर्लभम् । यमाहुः कपिलं सांख्याः परमर्षिं प्रजापतिम् । समन्ये तेन रूपेण विस्मापयति हि स्वयम् । आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम् । पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकम् । यत्र चासीनमागम्य कापिलं मण्डलं महत् । पञ्चस्रोतसि निष्णातः पञ्चरात्रविशारदः । पञ्चज्ञः पञ्चकृत् पञ्चगुणः पञ्चशिखः स्मृतः । पुरुषावस्थमव्यक्तं परमार्थं न्यवेदयत् । इष्टसत्रेण संसृष्टो भूयश्च तपसाऽऽसुरिः । क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देवदर्शनः । यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते । आसुरिर्मण्डले तस्मिन् प्रतिपेदे तदव्ययम् । तस्य पञ्चशिखः शिष्यो मानुष्या पयसा भृतः । ब्राह्मणी कपिला नाम काचिदासीत् कुटुम्बिनी । तस्याः पुत्रत्वमागम्य स्त्रियाः स पिबति स्तनौ । ततः स कापिलेयत्वं लेभे बुद्धिं च नैष्ठिकीम् । एतन्मे भगवानाह कापिलेयस्य संभवम् । तस्य तत् कापिलेयत्वं सर्ववित्त्वमनुत्तमम्" ।

व्याख्यातञ्चैतत् नीलकण्ठेन यथा "कापिलेयः कपिलायाः पुत्रः परिधावन् एकत्र वासमकुर्वन् । सुपर्य्यवसितार्थः सम्यग्निश्चितप्रयोजनः । कामैरनावृतं कामादवसितमिति पाठे यदृच्छया स्थितं नृषु सुखम् अन्विच्छन्तं स्थापयितुमिति शेषः । सः कपिलः, तेन पञ्चशिखसंज्ञेन तत्प्रशिष्यत्वात्तत्तुल्यत्वम् । पञ्च स्रोतांसि विषयकेदारप्रणाडिकाः यस्य तस्मिन् मनसि मानसं सत्रमित्यर्थः । यत्र यत्समीपे, कापिलं कपिलमतानुसारि मण्डलं मुनिसमूहं प्रति परमार्थं यो न्यवेदयदित्युत्तरेण सम्बन्धः । पञ्चस्रोतसि मनसि निष्णातः ऊहापोहकौशलवान् । पञ्चरात्रो नाम विष्णुत्वप्रापकः क्रतुः "पुरुषोह वै नारायणो ऽकामयतात्यतिष्ठेयं सर्वाणि भूतान्यहमेवेदं सर्वं स्यामिति स एतं पञ्चरात्रं पुरुषमेधं यज्ञक्रतुमपश्यदिति" शतपथोक्तस्तत्र विशारदः अनुष्ठिताखिलकर्मेत्यर्थः । पञ्च अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयान् कोषान् मिथ आत्मनश्च विविक्तान् जानातीति पञ्चज्ञः अतएव पञ्चकृत् पञ्च तद्विषयाण्युपासनानि "भृगुर्वै वारुणिरित्यस्यामुपनिषदि "सतपस्तप्त्वाऽन्नं ब्रह्मेति व्यजानादित्यादि" विहितानि करोति पञ्चकृत्, पञ्च "शान्तो-दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यतीति श्रुताः शान्तादयो गुणाः यस्मिन् स पञ्चगुणः ततश्च "ब्रह्मविद्ब्रह्मैव भवतीति" श्रुतेः पञ्चभ्योऽतिरिच्यमानत्वात् शिखेवेति पञ्चशिखं पुच्छं ब्रह्म तज्ज्ञत्वात् मुनिरपि पञ्चशिखः । ननु पञ्चकृत् कथं षष्ठज्ञः स्यादिति चेत् ? शृणु—यथान्नमयं विकारमुपासीनस्तत्प्रकृतिमन्नं विराडाख्यमेति एवं मायया विकृतमानन्दं तत्प्रतिमेतीति न षष्ठोपास्तिः पृथग्वक्तव्या । षष्ठज्ञानाय तस्य पञ्चमोपास्तिफलत्वात् तदेतदाह पुरुषेति । पुरुषा अन्नमयादयः

पञ्च अवसन्नतया बाधिततया तिष्ठन्तीत्यस्मिन्निति पुरुषावस्थम् अतएव शिरआद्यवयवरहितत्वादव्ययम् अबाध्यत्वाच्च परमार्थम् अबोधयत्। तस्यापि गुरुमाह इष्टेत्यादिना। इष्टसत्रेण आत्मयज्ञेन हेतौ तृतीया, अध्ययनेन वसतीतिवत्, सम्यक् पृष्टं प्रश्नो यस्य स संपृष्टः, आत्मज्ञानार्थं कृतप्रश्न इत्यर्थः। व्यक्तिं बाध्यत्वाबाध्यत्वेन स्पष्टताम् देवदर्शनः दिव्यदृष्टिरित्यर्थः। सांख्यसम्मतं गुणपुरुषान्तरज्ञानात् कैवल्यं प्रधानं चोपादानमिति पक्षं निरस्यति यस्मादिति, अक्षरमेव जगदुपादानतया नानारूपं न तु क्षरं प्रधानम्,अव्ययं ब्रह्मैव प्रतिपेदे ज्ञातवान्, न तु गुण पुरुषान्तरम्। भगवान् मार्कण्डेयः सनत्कुमारो वा"।

**कापिल्य** त्रि॰ कपिलेन निर्वृत्तादि कपिल+चतुरर्थ्यां सङ्काशा॰ ण्यः। कपिलेन निर्वृत्तादौ।

**कापिवन** न॰ द्व्यहसाध्ये अहीने यागभेदे "द्व्यहास्तय"इत्युपक्रमे "आङ्गिरसचैत्ररथकापिवनाः" कात्या॰२३।२।३। "चैत्ररथमन्नाद्यकामः कापिवनं स्वर्गकाम इति द्व्यहाः" आश्व॰श्रौ॰ १०।२।३।

**कापिश** न॰ कपिशा माधवी तत्पुष्पम् साधनत्वेनास्त्यस्य अण्। माधवीलताकुसुमजाते मद्यभेदे हेमच॰।

**कापिशायन** त्रि॰कपिशेव स्वार्थेऽण् तत्र जातं "कापिश्याः ष्फक्" पा॰ष्फक्। माधवीपुष्पलताजाते मद्ये जटा॰। 'कापिशायन सुगन्धि विघूर्णन्" माघः। देवतायां पु॰ धर॰। द्राक्षायां स्त्री सि॰कौ॰ षित्त्वात् ङीष्। [पिशाचे त्रिका॰।

**कापिशेय** पु॰ स्त्री कपिशाया अपत्यम् ढक्। कपिशापत्ये

**कापिष्ठल** पु॰ कपिष्ठलस्येदम् अण्। मध्यदेशभेदे वृह॰ स॰। कूर्मविभागे "औदुम्बरकापिष्ठलगजाह्वयाश्चेति मध्यमिदम्" इत्युक्तेस्तस्य मध्यदेशत्वम्।

**कापिष्ठलि** पु॰ स्त्री कपिष्ठलस्य गोत्रापत्यम् इञ्। कपिष्ठलगोत्रापत्ये स्त्रियान्तु क्रौड्या॰ ष्यञ्। कापिष्ठल्या इति भेदः। यून्यपत्ये तु "यञिञोश्च" पा॰ फक्। कापिष्ठलायन तद्गोत्रयुवापत्ये पु॰।

**कापुरुष** पु॰ कुत्सितः पुरुषः कोः का। १कुत्सिते पुरुषे "शत्रोर्विख्यातवीर्य्यस्य व्यञ्जनीयस्य विक्रमैः। पश्यतोयुद्धलुब्धोऽहं कृतः कापुरुषस्त्वया" रामा॰ कापुरुषस्येदमण्। २कुत्सितपुरुषसम्बन्धिनि त्रि॰। "स्त्रीषु शौर्य्यमनथासु परदारप्रधर्षक!। कृत्वा कापुरुषं कर्म्म शूरोऽहमिति मन्यसे" रामा॰। स्त्रियां ङीप्। ब्राह्मणादि॰ भावे कर्म्मणि च ष्यञ्। कापुरुष्य तद्भावे तत्कर्म्मणि च न॰।

**कापेय** न॰ कपेर्भावः कर्म्म वा "कपिज्ञात्योर्ढक्" पा॰ ढक्। १कपेर्भावे कर्म्मणि च। अपत्ये इदन्तत्वात् ढक्। २कपिगोत्रापत्ये अनाङ्गिरसे पुंस्त्री ३शौनकर्षौ पु॰शब्दचि॰। स्त्रियां गोत्रप्रत्ययान्तत्वात् ङीष्। तस्येदं ढक्। कपिसम्बन्धिनि त्रि॰ स्त्रियान्तु ङीप्। "कच्चिन्न खलु कापेयी सेव ते चलचित्तता" रामा॰।

**कापोत** न॰ कपोतानां समूहः अण्। १कपोतसमूहे कपोतस्येदम्। "अनुदात्तादेः" पा॰अञ्। २कपोतसम्बन्धिनि त्रि॰ स्त्रियां ङीप्। "अतिथिव्रती क्रियावांश्च कापोतीं वृत्तिमास्थितः" भा॰व॰ २५९अ॰। "कापोतीं वृत्तिं-स्वल्पसंग्रहरूपाम्" नीलकण्ठः" "सुवन् वृत्तिं स कापोती दुहिता स ययौ पुरात्" भाग॰ ६,१८,१५, "कापोती मुञ्छवृत्तिम्" श्रीधरः। कपोतस्य यथा उञ्छवृत्तित्वमल्पसंग्रहत्वञ्च तथा कपोतलुब्धकीयशब्दे १६७०पृ॰दर्शितम्। कापोतवर्णोऽस्त्यस्य अर्श॰ अच्। ३सौवीराञ्जने ४रुचके (सर्ज्जिकाक्षारे) न॰ मेदि॰। ५कपोताभवर्णे पु॰ ६तद्वति त्रि॰ हेम॰। ७ओषधिभेदे स्त्री गौ॰ङीष्। तल्लक्षणस्थानमुक्तं सुश्रुते "कौशिकीं सरितं तीर्त्वा सञ्जयन्त्यास्तु पूर्वतः। क्षितिप्रदेशोवल्मीकैराचितोयोजनत्रयम्। विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु" सुश्रु॰। ओषधिलक्षणादिकथने।

**कापोतक** त्रि॰ कपोताः सन्त्यस्याम् नडा॰ छः कुक् च कापोतकीयः तत्रभवः अण् विल्वका॰ छस्य लुक्। कपोतकीयभवे। [ कपोतडिम्बसमुदाये।

**कापोतपाक्य** पु॰कपोतानां पाकः डिम्बः तेषां पूगः ण्यः।

**कापोताञ्जन** न॰ कापोतं च तदञ्जनं चेति कर्म॰। सौवीराञ्जने अमरः।

**काप्य** पुंस्त्री कपेर्गोत्रापत्यम् आङ्गिरसः "कपिबोधादाङ्गिरसे" पा॰ यञ्। १कपिगोत्रापत्ये आङ्गिरसे। स्त्रियान्तु शार्ङ्गरवादौ काप्येत्यत्र काप्य इति पाठान्तरे ङीन् यलोपः कापी। यञन्तत्वात् यून्यपत्ये फक्। काप्यायनः कपिगोत्रयुवापत्ये,स्त्रियान्तु लौहिता॰ष्फः षित्त्वात् ङीष्। काप्यायनी। अनाङ्गिरसे तु "इतश्चानिञः" पा॰ढक्। कापेय इति भेदः। कुत्सितमाप्यम् कोः का। २पापादौ त्रि॰

**काप्यकर** त्रि॰ कुत्सितमाप्यं काप्यं पापं करोति धातूनामनेकार्थत्वात् कथयति कृ—ताच्छील्यादौ—ट। पापं कृत्वा परस्य कथके स्वपापप्रकाशि शब्दर॰। कर्म्मणि अण्। काप्यकारोऽप्यत्र त्रि॰त्रिका॰।

**काफल** पु॰ कुत्सितं फलमस्य। (कट्फल) वृक्षभेदे। शब्दरत्ना॰

**काबर** पु॰ कुत्सितो बन्धः कोः का वेदे पृषो॰। कुत्सितबन्धे। "अवस्तु शुष्मं काबरं बध्रिं कश्वन्तु बन्धुरः"। "शुनां कपिरिव दूषणो बन्धुरा काबरस्य च" दुष्टौ हित्वा भत्स्यामि दूषयिष्यामि काबरम्" अथ॰ २।९।२।४।५।

**काम** अव्य॰कम-घञ्। १अनुज्ञायां विश्वः। २निकामे ३अत्यर्थे ४काम्ये न॰मेदि॰कामाय हितम् अण्। ५रेतसि न॰मेदि॰ ६वाढमित्यर्थे, ७अनुमतौ "काममामरणात् तिष्ठेत् गृहे कन्यर्त्तुमत्यपि" यममनूः। "मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी"माघः। ८इच्छायाम्"कामः सङ्कल्पोविचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मनएव" श्रुतेः तस्य मनोधर्मत्वमिति वेदान्तिनः सांख्याश्च मन्यन्ते मनोहेतुकत्वोक्तावेव श्रुतेस्तात्पर्यं मन्यमाना आत्मधर्मत्वमिति नैयायिका आहुः। अभिलाषशब्दे इच्छाशब्दे चास्य विवृतिः। "सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः" इत्युपक्रम्य "अकामस्य क्रिया काचित् दृश्यते नेह कर्हिचित्। यद्यद्धि कुरुते किञ्चित् तत्तत् कामस्य चेष्टितम्" इति मनुना सर्व्वक्रियां प्रति कामस्य हेतुत्वमुक्तम्। "सङ्कल्पः अनेन कर्म्मणा इदमिष्टं फलं साध्यताम्" इति बुद्धिः। तथाच इष्टसाधनताज्ञानरूपात् सङ्कल्पात् काम इच्छा भवति, ततः क्रियानिष्पत्तिः। सचाप्राप्तविषयस्य प्राप्तिसाधने चित्तवृत्तिभेदः कामस्तु रजोगुणहेतुकः। यथोक्तं गीतायाम् "कामएष क्रोधएष रजोगुणसमुद्भवः" कामश्च इष्टविषयाभिलाषः। "पुंसो या विषयापेक्षा स काम इति भण्यते"। पुमानादौ काममय एव भूत्वार्थकर्म्म कुरुते। यतोऽयं कर्म्मणोहेतुः कामोऽतोऽस्य प्रधानता" "सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते" गीता। कर्म्मणि घञ्। ९कामनाविषये, कामनाविषयश्च त्रिविधः वाह्याभ्यन्तरवासनामयभेदात् तत्र गृहक्षेत्रादिकं शब्दादिविषयाश्च वाह्यविषयाः शारीरमानसिककर्म्मजातम् आभ्यन्तरः संघः स्वप्नहेतुकः वासनामयः "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूयएवाभिवर्द्धते" मनुः। धर्म्मार्थकाममोक्षमध्ये कामशब्देन काम्यस्यैव ग्रहणं तस्यैव पुरुषार्थत्वात् पुरुषेण इष्यमाणत्वात् इच्छायास्तथात्वाभावात्। "अप्यर्थकामौ तस्याश्तां धर्म्मएव मनीषिणः" रघुः। "सन्तानकामस्य तथेति कामम्" रघुः। काम्यमानत्वात् कामं वरमित्यर्थः। "तथेति कामं प्रतिशुश्रुवान् रघोः" रघुः। "इति स्वप्नोपमान् मत्वा कामान् मा गास्तदङ्गताम्" रघुः। कामनाविषयस्य सुखस्वरूपमात्मैवेति वेदान्तिनः, तदेव मुख्यं प्रयोजनम् "नवा अरे पत्युः कामाय पतिः प्रियोभवति आत्मनस्तु कामाय पतिः प्रियोभवति" वृ॰ उप॰ सुखस्वरूपात्मन एव परप्रेमास्पदत्वोक्तेः। तत्साधनानान्तु गौणप्रयोजनत्वम्। सुखमिव दुःखाभावोऽपि मुख्यं काम्यमिति नैयायिकादयः, "मोक्षकाङ्क्षिभिः काम्यमाने १०परमेश्वरे च। "कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः" विष्णुस॰। स्त्रीपुरुषयोः उपस्थसाध्यानन्दसाधने तयोः परस्पराऽऽलिङ्गनादिप्रवर्त्तके ११ अनुरागभेदे तत्रैव लोके कामशब्दस्य रूढिर्दृश्यते। स च तिथिविशेषे स्त्रीपुरुषयोः स्थानविशेषएव चुम्बनादिना व्यज्यते, यथोक्तं स्मरदीपिकायाम् "पादे गुल्फे तथोरौ च भगे नाभौ कुचे हृदि। कक्षे कण्ठे तथौष्ठे च गण्डे नेत्रे श्रुतावपि। ललाटे शीर्षकेशेषु कामस्थानं तिथिक्रमात्। दक्षे पुंसां स्त्रिया वामे शुक्ले कृष्णे विपर्य्ययः। पादाङ्गुष्ठे प्रतिपदि द्वितीयायाञ्च गुल्फके। ऊरुदेशे तृतीयायां चतुर्थ्यां भगदेशतः। नाभिस्थाने च पञ्चम्यां षष्ठ्यान्तु कुचमण्डले। सप्तम्यां हृदये चैव अष्टम्यां कक्षदेशतः। नवम्यां कण्ठदेशे च दशम्यां चोष्ठदेशतः। एकादश्यां गण्डदेशे द्वादश्यां नयने तथा। श्रवणे च त्रयोदश्यां चतुर्द्दश्यां ललाटके। पौर्णमास्यां शिखायाञ्च ज्ञातव्यञ्च इति क्रमात्। यत्र स्थाने वसेत् कामस्तत्रैव नखचुम्बनम्। "हृदि कामः भ्रुवोः क्रोधो लोभश्चाधोरदच्छदात्" भाग॰। तस्य समष्टिरूपस्य विराजो ब्रह्मणः हृदयजातत्वेन व्यष्टीनामप्यस्मदादीनामपि मनसिजन्यत्वम्। प्राणिनां जन्मावधि सर्वकालेष्वस्य वर्त्तमानत्वेऽपि यौवने एवास्य यथा प्रादुर्भावस्तथा कालिका॰ पु॰ १९। २२ अ॰ वर्णितं यथा

"ब्रह्मापि तनयां सन्ध्यां दृष्ट्वा पूर्व्वमथात्मनः। कामायाशु मनश्चक्रे त्यक्त्वा बुद्धिं सुतेति वै। तस्याश्च चलितं चित्तं कामवाणविलोड़ितम्। ऋषीणां प्रेक्षतां तेषां मानसानां महात्मनाम्। भर्गस्य वचनं श्रुत्वा सोपहासं विधिं प्रति। आत्मनश्चलचित्तत्वममर्य्यादमृषीन् प्रति। कामस्य तादृशं भावं मुनिमोहकरं तदा। दृष्ट्वा सन्ध्या स्वयं तत्र त्रपामापातिदुःखिता। ततस्तु ब्रह्मणा शप्ते मदने तदनन्तरम्। अन्तर्भूते विधौ शम्भौ गते चापि

निजास्पदे। अनर्थग्रमापन्ना सन्ध्या ध्यानपराऽभवत्”।

ततस्तस्यास्तपसा तोषितेन विष्णुना तत्प्रार्थनया कामप्रवृत्तिकालनियमनरूपोवरोदत्तो यथा “सन्ध्योवाच। यदि देव! प्रसन्नोऽसि तपसा मम संप्रति। वृतस्तदायं प्रथमं वरो मम विधीयताम्। उत्पन्नमात्रा देवेश! प्राणिनोऽस्मिन् भुवस्तले। न भवन्तु क्रमेणैव सकामाः सम्भवन्तु वै। श्रीभगवानुवाच। प्रथमं शैशवो भावः कौमाराख्यो द्वितीयकः। तृतीयो यौवनो भावश्चतुर्थं वार्द्धकं तथा। तृतीये त्वथ संप्राप्ते वयोभागे शरीरिणः। सकामाः स्युर्द्वितीयान्ते भविष्यन्ति क्वचित् क्वचित्। तपसा तव मर्य्यादा जगति स्थापिता मया। उत्पन्नमात्रा न यथा सकामाः स्युः शरीरिणः”। तथा च कामप्रवृत्तिहेतुर्हि शुक्रवृद्धिः बाल्ये च शुक्रवृद्धेरसम्भवात् न कामप्रवृत्तिः। बालानामपि अन्नरसपाकेन चरमधातोः शुक्रस्योद्भवसम्भवेऽपि तस्य सूक्ष्मत्वात् न प्रसरणम् यथाह भावप्र०। “बालानां शुक्रमस्त्येव किन्तु सौक्ष्म्यान्न दृश्यते। पुष्पाणां मुकुले गन्धो यथा सन्नपि नाप्यते। तेषां तदेव तारुण्ये पुष्टत्वाद्व्यक्तिमेति हि। कुसुमानां प्रफुल्लानां गन्धः प्रादुर्भवेद्यथा”। तत्र कारणञ्च अनुपदोक्तविष्णुवर एव इति न बाल्ये तस्य प्रादुर्भावः। १२तादृशानुरागाधिष्ठातृदेवभेदे स च पञ्चाशद्विधः। यथोक्तं शा० ति० टी० राघवभट्टेन यथा “काम १ कामद २ कान्ता ३ श्च कान्तिमान् ४ कामग ५ स्तथा। कामचारश्च ६ कामी ७ च कामुकः ८ कामवर्द्धनः ९। रामो १० रमश्च ११ रमणो १२ रतिनाथो १३ रतिप्रियः १४। रात्रिनाथो १५ रमाकान्तो १६ रममाणो १७ निशाचरः १८। नन्दको १९ नन्दन श्चैव २० नन्दी २१ नन्दयिता २२ पुनः। पञ्चबाणो २३ रतिसखः २४ पुष्पधन्वा २५ महाधनुः २६। भ्रामणो २७ भ्रमण २८ श्चैव भ्रममाणो २९ भ्रमोत्तरः ३०। भ्रान्तश्च ३१ भ्रमको ३२ भृङ्गो ३३ भ्रान्तचारो ३४ भ्रमावहः ३५। मोहनो ३६ मोहको ३७ मोहो ३८ मोहवर्द्धन ३९ एव च। मदनो ४० मन्मथ ४१ श्चैव मातङ्गो ४२ भृङ्गनायकः ४३। गायनो ४४ गीतिज्ञ ४५ श्चैव नर्त्तनः ४६ खेलक ४७ स्तथा। उन्मत्तोन्मत्तक ४८ श्चैव विलासी ४९ लोभवर्द्धनः ५०”।

तेन च कार्त्तिकेयोत्पत्तये शिवध्यानभङ्गार्थमिन्द्रनियुक्तेन शिवध्यानभङ्गार्थमुद्युक्तेन ध्यानभङ्गजनितहरकोपात् भस्मीभावमासाद्याङ्गहीनत्वमाप्तम् यथाह शिवपु० १४ अ०। “कामो धनुषि संयोज्य पुष्पबाणं तदा मुने!। पार्व्वतीसन्मुखे स्थाणौ मोक्तुकामो व्यवस्थितः। हरस्तु धैर्य्यमालम्ब्य किमेतदिति चिन्तयन्। ददर्श पृष्ठतः कामं पुष्पबाणधनुर्धरम्। विदृष्टमन्योस्तस्याथ तृतीयनयनान्मुने! स्फुरत्तदर्च्चिरग्निस्तु पपात मदनोपरि। क्रोधं संहर हे देव! इति यावत् वदन्ति खे। इन्द्रादिसकलादेवास्तावद्भस्मीचकार तम्” स च पश्चात् वासुदेवात् रुक्मिण्यां प्रादुर्भूय मायावतीरूपां रतिं शम्बरभार्य्यात्वेन प्रथित मुपयेमे। तदेतत् हरि० वर्णितम्। “रुक्मिण्यां वासुदेवस्य लक्ष्म्यां कामोधृतव्रतः। शम्बरान्तकरोजज्ञे प्रद्युम्नः कामदर्शनः। तं सप्तरात्रे सम्पूर्णे निशीथे सूतिकागृहात्। जहार कृष्णस्य सुतं शिशुं वै शम्बरो नृप!। स स्वत्वना परीतायुर्म्मायया प्रजहार तम्। दोर्भ्यामुत्क्षिप्य नगरं स्वं निनाय महासुरः। अनपत्या तु तस्यासीद्भार्य्या रूपगुणान्विता। नाम्ना मायावती नाम मायेव शुभदर्शना। ददौ तं वासुदेवस्य पुत्त्रं पुत्त्रमिवात्मजम्। तस्या महिष्या नायिन्या दानवः कालचोदितः। मायावती तु तं दृष्ट्वा सम्प्रहृष्टतनूरुहा। हर्षेण महता युक्ता पुनःपुनरुदैक्षत। अथ तस्या निरीक्षन्त्याः स्मृतिः प्रादुर्बभूव ह। अयं स मम कान्तोऽभूत् स्वत्वेवं चान्वचिन्तयत्। अयं स नाथो भर्त्ता मे यस्यार्थे हि दिवानिशम्। चिन्ताशोकह्रदे मग्ना न विन्दामि रतिं क्वचित्। अयं भगवता पूर्व्वं देवदेवेन शूलिना। खेदितेन कृतोऽनङ्गो दृष्टोजात्वन्तरे मया। कथमस्य स्तनं दास्ये मातृभावेन जानती। भर्त्तुर्भार्य्या त्वहं भूत्वा वक्ष्ये वा पुत्र इत्युत। एवं सञ्चिन्त्य मनसा धात्र्यास्तं सा समर्पयत्। रसायनप्रयोगैश्च शीघ्रमेवान्ववर्द्धयत्। धात्र्याः सकाशात् स च तां शुश्रुवान् रुक्मिणिनन्दनः। मायावतीमविज्ञानान्मेने स्वामेव मातरम्। सा च तं वर्द्धयामास कार्ष्णिं कमललोचनम्। माया सास्मै ददौ सर्व्वा दानवीः काममोहिता। स यदा यौवनस्थस्तु प्रद्युम्नः कामदर्शनः। चिकीर्षितज्ञो नारीणां सर्व्वास्त्रविधिपारगः। तं सा मायावती कान्तं कामयामास कामिनी” हरि० १६३ अ०। “कुमार! पश्य मां प्राप्तं देवगन्धर्व्वनारदम्। प्रेषितं देवराजेन तव सम्बोधनाय वै। स्मर त्वं पूर्व्वकं भावं कामदेवोऽसि मानद!। हरकोपानलाद्दग्धस्तेनानङ्गस्त्वमुच्यसे। त्वं वृष्णिवंशे जातोऽसि रुक्मिण्या गर्भसम्भवः। जातोऽसि केशवेन त्वं प्रद्युम्न इति

कोऽर्थ से। आहूय शम्बरेण त्वमिहानीतोऽसि मानद !। सम्प्राप्ते त्वसम्पूर्णे सूतिकागारमध्यतः। बधार्थं शम्बरस्य त्वं ह्रियमाणो ह्युपेक्षितः। केशवेन महाबाहो ! देवकार्यार्थसिद्धये। येषा मायावती नाम भार्या वै शम्बरस्य तु। रतिं तां विद्धि कल्याणीं तव भार्यां पुरातनीम्। तव सा रक्षणार्थाय शम्बरस्य गृहेऽवसत्। मायां शरीरजां न्यस्य मोहनार्थं दुरात्मनः। रतेरुत्पादनार्थाय प्रेषयत्यनिशं तदा। एवं प्रद्युम्न! बुद्धा वै तव भार्यां प्रतिष्ठिताम्। हत्वा तं शम्बरं वीर! वैष्णवास्त्रेण संयुगे। गृह्य मायावती भार्यां द्वारकां गन्तुमर्हसि" हरि० १६५ अ०। "कामं प्रति नारदवाक्यम्। "सोऽब्रवीत् सहसा देवीं रुक्मिणीं देवतामिव। अयं स देवि ! सम्प्राप्तः पुत्रस्तापधरस्तव। अनेन शम्बरं हत्वा मायायाश्च विशारदम्। हता मायाश्च ताः सर्वा याभिर्देवानबाधत। सती चेयं शुभा साध्वी भार्याऽपि तनयस्य ते। मायावतीति विख्याता शम्बरस्य गृहोषिता। मा च ते शम्बरस्येयं पत्नीति भवतु व्यथा। मन्मथेऽथ गते नाशं गते चानङ्गतां पुरा। कामपत्नी, न कान्तैषा शम्बरस्य रतिः प्रिया। मायारूपेण तं दैत्यं मोहयन्त्यसकृच्छुभा। न चैषा तस्य कौमारे वशे तिष्ठति शोभना। आत्ममायामयं कृत्वा रूपं शम्बरमाविशत्। पत्न्येषा मम पुत्रस्य स्नुषा तव वराङ्गना" हरि० १६७ अ०। रुक्मिणीं प्रति कृष्णवाक्यम्। तेन १३ रौक्मिणेये पु० १४ बलदेवे शब्दर० तस्य कामपालत्वात्तथात्वम्। १५ महाराज चूते राजनि०। कमपूर्वकात् कामयते कर्त्तरि अण्। तत्तत्पदार्थकामनायुक्ते यथा स्वर्गकामोऽश्वमेधेन यजेत पशुकामः प्रजाकाम इत्यादि। अजन्तकामशब्दे परे तुमुन्नन्तस्यान्तलोपः। यथा गन्तुकामः रन्तुकामः इत्यादि दृष्टादि०तस्याद्युदात्तता। कामनायुक्तवाचककामादिशब्दसमभिव्याहारे यागे तन्नियोज्यकत्वं तत्कृतिसाध्यत्वञ्च मतभेदेन प्रतीयते यथा स्वर्गकामो यजेतेत्यत्र स्वर्गकामनियोज्यकस्तत्कृतिसाध्योवा याग इति बोधः। लिङादिना यागादेः कर्त्तव्यत्वबोधनात् यागादेस्तथात्वम्। यागजन्यफलं च कामनावतीव तत्तत्फलकामनोद्देश्येऽपि भवति अतः पितृस्वर्गकामनया कृतपत्त्रादेः फलं पितरीति मणिकृत्। अर्थशब्देन द्वन्द्वेऽस्य वा पूर्वं निपातः। अर्थकामौ कामार्थौ। तन्त्रोक्ते १६वीजभेदे। तदुद्धारो यथा तन्त्रसा० कुलार्णवे "देवीं दक्षिणबाहुशक्रनयनं कामं कलालाञ्छितम्" दक्षिणबाहुः ककारस्तस्य वर्णस्य मातृकान्यासे दक्षबाहुमूले न्यस्तत्वात् तथात्वम् शक्रोलकारः नयनं वामनेत्रं तेन ईकारः कलालाञ्छितं विन्दुभूषितम् तेन क्लीम् इत्येवं रूपं कामम् इत्यर्थः। प्रकारान्तरेण तदुद्धारः तन्त्रसा०श्रीक्रमे। "तां विद्यां शृणु देवेशि! कामसिन्दुसमन्वितम्। नादविन्दुकलाभेदात् तुरीयस्वरसंयुतम्। महाश्रीसुन्दरी विद्या महात्रिपुरसुन्दरी। ककारे सर्वसुतपद्मं कामेकैवल्यदायकम्। लकारे सकलैश्वर्यमीकारे सर्वसौख्यदम्" कुब्जिकात०। "परा च कमला कामो वाग्भवं शक्तिरेव च"। १७ककाराक्षरे च। शिववीजं (ह)। तथा कामं (क) इन्द्रम्(ल) देवीं (स) नियोजयेत्। षोडशीविद्यायां शक्तिकूटोद्धारे।

**कामकला** स्त्री० कामस्य कला प्रिया। तत्कलाहेतुत्वात् कामपत्न्याम् १रतौ शब्दरत्ना०। २त० २कामहेतुकलायाश्च।

**कामकाति** त्रि०कै—शब्दे क्तिन् कामपरा कातिर्यस्य। कामशब्दयुक्ते। "त्वे सुपुत्र ! शवसोऽवृत्रन् कामकातयः"। ऋ० ८।८१।१४।

**कामकाम** त्रि० कामं काम्यं कामयते कम—णिङ्—अण् उप०स०। अभीष्टकामे "एवं त्रयीधर्ममनुप्रपन्नाः गतागतं कामकामा लभन्ते" गीता। णिनिः कामकामीत्यप्यत्र। "आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्। तद्वत् कामा यं प्रविशन्ति सर्वे, स शान्तिमाप्नोति न कामकामी" गीता। स्त्रियां ङीप्।

**कामकार** त्रि० कामं काम्यं करोति कृ—अण् उप० स०। १काम्यनिष्पादके। कारः करणं ६त०। २कामेन इच्छया फलाभिसन्धिना करणे पु०। "अयुक्तः कामकारेण फले सक्तो निबध्यते" गीता "अग्निहोत्रपविध्याग्नीन् ब्राह्मणः कामकारतः"। "कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्" मनुः। "यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः, गीता। कामचारत इति पाठान्तरम्।

**कामकूट** पु० कामएव कूटं शृङ्गं प्रधानमस्य। १वेश्याप्रिये (विट्गे) (नाङ)। ६त०। २वेश्याविभ्रमे च मेदि० तन्त्रोक्ते ३कामराजाख्ये श्रीविद्यायाः मन्त्रभेदे। "वियच्चन्द्रस्ततः पश्चात् कलौ नकुलिवह्नि च। मायास्वरेण संयुक्तं नादविन्दुकलान्वितम्। प्रथमं कामराजस्य कूटं परमदुर्लभम्" (हसकलह्रीम्) "वियद्विष्णुयुतं कामोहंसः शक्रस्ततःपरम्। महामाया ततः पश्चात् स्वप्रवर्तीति कथ्यते" हकसलह्रीं) द्वितीयम् कामकूटम्। "मदनं शिववीजं च

वायुवीजं ततःपरम् । इन्द्रबीजं ततः पश्चात् महामायां समुद्धरेत् । (क्लहललह्रीँ) तृतीयं कामकूटम् इयं मधुमती ।

**कामकृत्** त्रि० कामेन करोति कृ–क्विप् ३त० । १यथेच्छं कारिणि । कामं काम्यं करोति । २अभीष्टदायके त्रि० । ३परमेश्वरे पु० "कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः" विष्णुसह० । [कर्म० । २सुरते हेमच० ।

**कामकेलि** पु०कामे तद्धेतुकरतौ केलिर्यस्य । १जारे त्रिका० ।

**कामक्रीड़ा** स्त्री कामेन क्रीड़ा । १कामहेतुकक्रीड़ायाम् । "मः पञ्च स्युर्यस्यां सा कामक्रीडासंज्ञा ज्ञेया" इत्युक्त-लक्षणे पञ्चदशाक्षरपादके २छन्दोभेदे च ।

**कामखड्गदला** स्त्री कामोद्दीपकं खड्गइव दलमस्याः । स्वर्णकेतक्याम् राजनि० ।

**कामग** त्रि०कामेन वाह्यस्य इच्छया यथेष्टदेशं गच्छति गम-ड । वाह्यस्य इच्छया यथेष्टदेशगामिनि यानादौ । "एवमादि महाराज ! विलप्य दिवमास्थितः । कामगेन स सौभेन" भा०व० १४अ० । कामगेन स सौभेन शाल्वः पुनरुपागमत् । व०१६अ० । कामगत्यादयोऽप्यत्र । कामेन अनुरागभेदेन गच्छति । यथेच्छं पुरुषगामिन्यां कुलटायाम् स्त्री "पाषण्डमनाश्रितास्तेनाः भर्त्तृघ्नः कामगादिकाः । सुरापा आत्मत्यागिन्यो नाशौचोदकभाजनाः" याज्ञ० । "कामगा कुलटा" मिता० । ३यथेष्टं स्त्रीगामिनि पुंसि पु० । ४कन्दर्पभेदे पु० कामशब्दे उदा० ।

**कामगामिन्** त्रि० कामं यथेष्टं योनिविचारमकृत्वा गच्छति गम-णिनि । अनुकामीने यथेष्टस्त्रीगामिनि पुरुषे यथेष्ट पुरुषगामिन्यां स्त्रियां स्त्री ङीप् । काममित्यव्ययगमकः कामङ्गामोत्यप्यत्र अमरः ।

**कामगिरि** पु० कामप्रधानोगिरिः । भारतवर्षस्थे कामरूपस्थे पर्व्वतभेदे । "मलयो मङ्गलप्रस्थ इत्युपक्रमे" "इन्द्रकीलः कामगिरिरिति चान्ये च शतसहस्रशः शैलाः" इति भाग० ५,१८,१७ । कामरूपशब्दे तत्स्थानं वक्ष्यते ।

**कामगुण:** पु० ६त० कामकृतो वा गुणः । १ अनुरागे २ विषये ३आभोगे च मेदि० ।

**कामचर** त्रि० कामेन चरति चर–ट ३त० । यथाकामं चारिणि "तां नारदः कामचरः कदाचित्" कुमा० । "इहाहमिच्छामि तवानघान्तिके वस्तुं यथाकामचरस्तथा विभो !" भा०वि०२२२श्लो० ।

**कामचार** त्रि० पु० कामेन स्वेच्छया चारः चर+घञ् । यथेच्छाचरणे "न कामचारोमयि शङ्कनीयः" रघुः । "तस्मिंदभ्युदयात् सूर्य्यः शयानं कामचारतः" मनुः । चर णिच्–अच् ३त० । कामेन गवादेश्चारणे "पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते । अकामतः, कामचारे चौरवद्दण्डमर्हति" याज्ञ० ।

**कामचारिन्** त्रि०कामेन चरति चर–णिनि । १कामुके २यथेष्टाचारवति च "न त्वं दृष्टा न पुनरलकां ज्ञास्यसे कामचारिन् !" मेघ० । स्त्रियां ङीप् । ३चटके मेदि० । तस्यातिकामित्वात् तथात्वम् । स्त्रियां ङीप् ४गरुडे पु०शब्दरत्ना० ।

**कामज** त्रि० कामाज्जायते जन–ड ५त० । कामजाते १व्यसनादौ कामजव्यसनानि च दशविधानि मनुनोक्तानि यथा "मृगयाक्षोदिवास्वप्नः परीवादः स्त्रियोमदः । तौर्य्यत्रिकं वृथाट्या च कामजोदशकोगणः" । तन्मध्ये चतुर्णाम् अत्यन्त-कष्टतोक्ता तेनैव यथा "पानमक्षास्त्रियश्चैव मृगया च यथा-क्रमम् । एतत् कष्टतमं विद्यात् चतुष्कं कामजे गणे" । "कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थ धर्म्माभ्यां ततोवर्ज्याः सदैव ते" इति तद्दोषस्तेनैवोक्तः । २कामजातमात्रे पुत्रादौ । ज्येष्ठपुत्रस्यैव पितॄणांपाकरणसाधनत्वोक्त्या इतरेषां कामजत्वमुक्तं मनुना यथा "ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः । पितॄणामनृणश्चैव स तस्मात् सर्व्वमर्हति" । यस्मिन्नृणं सन्नयति येनानन्त्यं समश्नुते । स एव धर्म्मजः पुत्रः, कामजानितरान् विदुः" । "अयुक्तायान्यतश्चैव पुत्रिण्याश्च देवरात् । उभौ तौ नार्हतो भागं जारजातककामजौ" मनुः "याऽनियुक्तान्यतः पुत्रं देवराद्वाप्यवाप्नुयात् । तं कामजमरिक्थीयं वृथोत्-पन्नं प्रचक्षते" मनुः ।

**कामजान** पु स्त्री कामजमानयति प्रापयति उद्दीपयति ध्वनिना आ+नी–ड । कोकिले शब्दर० । "चन्द्रचन्दन-रोलम्बरताद्युद्दीपनं मतम्" सा० द० कोकिलशब्दादीनां कामोद्दीपकत्वोक्तेस्तस्य तथात्वं स्त्रियां जातित्वात् ङीष् । कामजनिरिति वा पाठः । तत्र कामस्य उद्दीपकध्वनि-हेतुत्वात्तदुत्पत्तिस्थानात् इति वाक्यम् ।

**कामजित** पु० कामं जयति धर्षणेन जि–क्विप् । १महादेवे तस्य कामधर्षणात् तथात्वम् । कामं कामदेवं रूपेण जयति क्विप् । २ कार्त्तिकेये । "कामजित् कामदः कान्तः" भा० व० २३१ अ० कार्त्तिकेयनामकथने । कामं कामव्यापारं जयति । ३जिनदेवे अर्हति तस्य स्त्रीसङ्ग-वर्ज्जनात् तथात्वम् ।

**कामठक** पु० धृतराष्ट्रनागकुलजाते सर्पसत्रे नष्टे सर्पभेदे

"अमाठकः कामठकः सुषेणोमलयोऽव्ययः" इति सर्पसत्र-नष्टधृतराष्ट्रकुलजनागनामकथने भा० आ०५०अ० ।

**कामताल** पुंस्त्री कामं तालयति प्रतिष्ठापयति तल+प्रतिष्ठायां णिच्–अण् उप०स० । कोकिले त्रिका० । तस्य ध्वनिना कामोद्दीपकत्वात् तथात्वम् । स्त्रियां जातित्वात् ङीष् ।

**कामतिथि** पु० स्त्री कामपूजार्थां तत्स्वामिका वा तिथिः त्रयोदश्यां तस्याः कामपूजाङ्गता काममहशब्दे दर्शयिष्यते ।

**कामद** त्रि०कामान् ददाति दा–क । १अभीष्टदायके, २काम-धेनौ स्त्री मेदि० भक्तानां कामपूरके ३ परमेश्वरे पु० । कामं कामरूपं सौन्दर्य्येण द्यति दो-अवखण्डने-क । ४ कार्त्तिकेये । "कामजित् कामदः कान्तः" भा० व० २३१अ० । कार्त्तिकेयनामकथने ।

**कामदुघ** त्रि०कामं दोग्धि दुह–क घादेशः । १अभीष्टसम्पाद-के "इन्द्रस्य कामदुघाःस्थ कामान् धुग्ध्वम्" आश्व० श्रौ०६,१२,४ । "आराधय सपत्नीकः प्रीता कामदुघा हि सा" "अवेहि मां कामदुघां प्रसन्नाम्" रघुः । २सुरभौ गवि स्त्री ।

**कामदुह्** त्रि० कामं दोग्धि दुह–क्विप् ६त० । काम्यनिष्पा-दके । "एष (यज्ञः) वस्त्विष्टकामधुक्" गीता । "तस्या श्च कामधुग्धेनुर्वसिष्ठस्य महात्मनः" भा० आ०१७५ । "श्रद्धयार्चितसत्पात्रे न्यस्तं (सुन्यस्तम्) कामधुगक्षयम्"। भाग० ७,१५,५ । "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके कामधुग्भवति" श्रुतिः । क (कामदुहो-ऽप्यत्रार्थे) त्रि० "तैस्तैर्गुणैः कामदुहाथ भूत्वा नरं प्रदा-तारमुपैति सा गौः" भा०व०१८६अ० ।

**कामदूती** स्त्री कामस्य दूतीव उद्दीपकत्वात् । १नागदन्तीवृक्षे रत्नमा० । २पाटलावृक्षे शब्दर० । स्वार्थे कन् । तत्रार्थे ।

**कामदेव** पु० काम एव देवः । कन्दर्पे तस्य ध्येयरूपम् हेमा० दा० विष्णुधर्मो०उक्तं यथा । "कामदेवस्तु कर्त्तव्यः शङ्ख-पद्मविभूषणः । चापबाणकरश्चैव मदाकुञ्चितलोचनः । रतिः प्रीतिस्तथा शक्तिर्भार्य्या स्यैतास्तथोज्ज्वला । चतस्रस्तस्य कर्त्तव्याः पत्न्यो रूपमनोहराः । चत्वारश्च करास्तस्य कार्य्या भार्य्यास्तनोपगाः । केतुश्च मकरः कार्य्यः पञ्चबाणमुखो-महानिति" । काम्यते मोक्षकाङ्क्षिभिः काम्यस्तथाभूतः सन् दीव्यति द्योतते । २ परमेश्वरे । "कामदेवः कामपालः कामी कान्तः कृतागमः" विष्णुस० । चक्रदत्तोक्ते ३ घृतभेदे तत्पाकादिप्रकारो यथा तत्रैव "शणस्य कोविदारस्य वृषस्य ककुभस्य च । कल्काढ्यत्वक्-पुष्पफलप्रस्थे पलचतुष्टयम् । अश्वगन्धा पलमिता तदर्द्धं गोक्षुरस्य च । शतावरी विदारी च शालपर्णी बला तथा । अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा । काश्मरी-फलमेतत् तु माषबीजं तथैव च । पृथग्दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् । चतुर्भागावशेषन्तु कषाय मवतारयेत् । मृद्वीकां पद्मकं कुष्ठं पिप्पलीं रक्तचन्दनम् । बालकं नागपुष्पञ्च आत्मगुप्ताफलं तथा । नीलोत्पलं शारिवे द्वे जीवनीयं विशेषतः । पृथक्कर्षसमञ्चैव शर्क-रायाः पलद्वयम् । रसस्य पौण्ड्रकेक्षूणामाढ़कं तत्र दापयेत् । चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत् । रक्तपित्तं क्षतक्षीणं कामलां वातशोणितम् । हलीमकं तथा शोथं वर्णभेदं स्वरक्षयम् । अरोचकं मूत्रकृच्छ्रं पार्श्वशूलञ्च नाशयेत् । एतद्राज्ञां प्रयोक्तव्यं बह्वन्तः-पुरचारिणाम् । स्त्रीणाञ्चैवानपत्यानां दुर्बलानाञ्च देहि-नाम् । क्लीबानामल्पशुक्राणां जीर्णानामल्परेतसाम् । श्रेष्ठं बलकरं हृद्यं वृष्यं पेयं रसायनम् । ओजस्तेज स्करञ्चैव आयुःप्राणविवर्द्धनम् । संवर्द्धयति शुक्रञ्च पुरुषं दुर्बलेन्द्रियम् । सर्व्वरोगविनिर्मुक्तस्तोयसिक्तो यथा द्रुमः । कामदेव इति ख्यातः सर्व्वरोगेषु शस्यते" ।

**कामधर** पु० कामरूपस्थमत्स्यध्वजपर्व्वतस्थिते सरोवरभेदे कालि० ८१ अ० । तत्स्थानस्नानमाहात्म्याद्युक्तम् । "मणिकूटाचलात् पूर्व्वं मत्स्यध्वजकुलाचलः । निर्दग्धो यत्र मदनो हरनेत्राग्निना पुनः । शरीरं प्राप्य तपसा समाराध्य वृषध्वजम् । तत्र प्राप्य स्वरूपन्तु काम-देवेन संस्थितम् । अधित्यकायां तस्थौ स वीक्षमाणः सम-न्ततः । तदा तु शाश्वती नाम तत्रास्ते दक्षिणस्तथा । सरः कामधरो नाम तस्मिन् शैले व्यवस्थितः । आश्वि-न्यां विधिवत् स्नात्वा पीत्वा कामधराम्भसि । विमुक्त-पापः शुद्धात्मा शिवलोके महीयते" ।

**कामधेनु** स्त्री कामप्रतिपादिका धेनुः । १अभीष्टप्रतिपादि-कायां स्वर्गधेन्वाम् सुरभिकन्यायाः रोहिण्याः २कन्यायां गवि च तस्या उत्पत्त्यादिकमुक्तं कालिकापु०९१अ० । "दक्षस्य तनया याऽभूत् सुरभिर्नाम नामतः । गवां माता महाभागा सर्व्वलोकोपकारिणी । तस्यान्तु तनया जज्ञे कश्यपात्तु प्रजापतेः । नाम्ना सा रोहिणी शुभ्रा सर्व्वकाम दुघा नृणाम् । तस्या जज्ञे शूरसेनाद्वसोरतितमोज्ज्वलात् । ( तस्यां जज्ञे शुनःशेफात् मुनेरतितमोज्ज्वलात् वा पाठः) कामधेनुरिति ख्याता सर्व्वलक्षणसंयुता । सा पिताम्ब-

प्रतीकाशा चतुर्वेदचतुष्पदा । स्तनैश्चतुर्भिर्धर्म्मार्थकामप्रसव-कारिणी" ।

कामधेनुकुलजातायां २ नन्दिन्याम् शबलानाम्न्यां वशिष्ठ-धेनौ च तस्याश्च काम्यपदार्थसम्पादकत्वात्तथात्वम् यथा च तस्याः कामनिष्पादकत्वं तथा रामा॰ आदि॰ ५१ स॰ वर्णितं यथा "एवमुक्ता वशिष्ठेन शबला शत्रुसूदन ! । विदधे कामधुक्कामान् यस्य यस्येप्सितं यथा । इक्षून्मधूंस्तथा लाजान् मैरेयांश्च सुरासवम् । पानानि च महार्हाणि भक्ष्यांश्चोच्चावचानपि । उष्णाढ्यस्यौदनस्यात्र राशयः पर्व्वतोपमाः । मृष्टान्यन्नानि सूपाश्च दधिकुल्यास्तथैव च । नानास्वादुरसानाञ्च खाण्डवानां तथैव च । भोजनानि सुपूर्णानि गौड़ानि च सहस्रशः । सर्व्वमासीत् सुसन्तुष्टं हृष्टपुष्टजनायुतम् । विश्वामित्रबलं राम ! वशिष्ठेन सुतर्पितम् । विश्वामित्रो हि राजर्षिर्हृष्टपुष्टस्तदाभवत् । सान्तःपुरचरो राजा सब्राह्मणपुरोहितः । सामात्यो मन्त्रिसहितः सभृत्यः पूजितस्तदा । युक्तः परमहर्षेण वशिष्ठमिदमब्रवीत् । पूजितोऽहं त्वया ब्रह्मन् ! पूजार्हेण सुसत्कृतः । श्रूयतामभिधास्यामि वाक्यं वाक्यविशारद ! । गवां शतसहस्रेण दीयतां शबला मम । रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः । तस्मान्मे शबलां देहि ममैषा धर्म्मतो द्विज ! । एवमुक्तस्तु भगवान्वशिष्ठो मुनिपुङ्गवः । विश्वामित्रेण धर्म्मात्मा प्रत्युवाच महीपतिम् । नाहं शतसहस्रेण नापि कोटिशतैर्गवाम् । राजन् ! दास्यामि शबलां राशिभीरजतस्य वा । न परित्यागमर्हेयं मत्सकाशादरिन्दम ! । शाश्वती शबला मह्यं कीर्त्तिरात्मवतो यथा । अस्यां हव्यं च कव्यञ्च प्राणयात्रा तथैव च । आयत्तमग्निहोत्रञ्च बलिर्होमस्तथैव च । स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा । आयत्तमत्र राजर्षे ! सर्व्वमेतन्न संशयः । सर्व्वस्वमेतत् सत्येन मम तुष्टिकरी तथा । कारणैर्बहुभीराजन्न दास्ये शबलां तव" । तेनास्या अत्यागे च बलात् विश्वामित्रेण हरणोद्योगे कृते धेन्वा उत्पादितैर्नानाविधैसैन्यैर्विश्वामित्रः पराजितः, इत्यपि तत्रैव वर्णितं ५३ स॰ यथा

'कामधेनुं वशिष्ठोऽपि यदा न त्यजते मुनिः । तदास्य शबलां राम ! विश्वामित्रोऽन्वकर्षत । नीयमाना तु शबला राम ! राज्ञा महात्मना । दुःखिता चिन्तयामास रुदन्ती शोककर्षिता । परित्यक्ता वशिष्ठेन किमहं सुमहात्मना । याहं राजभृतैर्दीना ह्रियेय भृशदुःखिता । किं मयापकृतं तस्य महर्षेर्भावितात्मनः । यन्मामनागसं दृष्ट्वा भक्तां त्यजति धार्म्मिकः । इति सञ्चिन्तयित्वा तु निश्वस्य च पुनः पुनः । जगाम वेगेन तदा वशिष्ठं परमौजसम् । निर्धूय तांस्तदा भृत्यान् शतशः शत्रुसूदन ! । जगामानिलवेगेन पादमूलं महात्मनः । शबला सा रुदन्ती च क्रोशन्ती चेदमब्रवीत् । वशिष्ठस्याग्रतः स्थित्वा रुदन्ती मेघनिःस्वना । भगवन् ! किं परित्यक्ता त्वयाहं ब्रह्मणःसुत ! । यस्माद्राजभटा मां हि नयन्ते त्वत्सकाशतः । एवमुक्तस्तु ब्रह्मर्षिरिदं वचनमब्रवीत् । शोकसन्तप्तहृदयां स्वसारमिव दुःखिताम् । न त्वां त्यजामि शबले ! नापि मेऽपकृतं त्वया । एष त्वां नयते राजा बलान्मत्तो महाबलः । न हि तुल्यं बलं मह्यं राजा त्वद्य विशेषतः । बली राजा क्षत्रियश्च पृथिव्याः पतिरेव च । इयमक्षौहिणी पूर्णा गजवाजिरथाकुला । हस्तिध्वजसमाकीर्णा तेनासौ बलवत्तमः । एवमुक्ता वशिष्ठेन प्रत्युवाच विनीतवत् । वचनं वचनज्ञा सा ब्रह्मर्षिमतुलप्रभम् । न बलं क्षत्रियस्याहुर्ब्राह्मणा बलवत्तराः । ब्रह्मन् ! ब्रह्मबलं दिव्यं क्षत्राच्च बलवत्तरम् । अप्रमेयबलं तुभ्यं न त्वया बलवत्तरः । विश्वामित्रो महावीर्य्यस्तेजस्तव दुरासदम् । नियुङ्क्ष्व मां महातेजस्त्वद्ब्रह्मबलसम्भृताम् । तस्य दर्पं बलं यत्तन्नाशयामि दुरात्मनः । इत्युक्तस्तु तया राम । वशिष्ठस्तु महायशाः । सृजस्वेति तदोवाच बलं परबलार्द्दनम् । तस्य तद्वचनं श्रुत्वा सुरभिः साऽसृजत्तदा । तस्या हम्भारवोत्सृष्टाः पह्लवाः शतशो नृप ! । नाशयन्ति बलं सर्व्वं विश्वामित्रस्य पश्यतः । स राजा परमक्रुद्धः क्रोधविस्फारितेक्षणः । पह्लवान्नाशयामास शस्त्रैरुच्चावचैरपि । विश्वामित्रार्द्दितान् दृष्ट्वा पह्लवान् शतशस्तदा । भूय एवासृजद्घोरांच्छकान् यवनमिश्रितान् । तैरासीत् संवृता भूमिः शकैर्यवनमिश्रितैः । प्रभावद्भिर्महावीर्य्यैर्हेमकिञ्जल्कसन्निभैः । तीक्ष्णासिपट्टिशधरैर्हेमवर्म्मभिरावृतैः । निर्दग्धं तद्बलं सर्व्वं प्रदीप्तैरिव पावकैः । ततोऽस्त्राणि महातेजा विश्वामित्रो मुमोच ह । तैस्ते यवनकाम्बोजा वर्व्वराश्चाकुलीकृताः ५४ स॰ ।

"ततस्तानाकुलान् दृष्ट्वा विश्वामित्रास्त्रमोहितान् । वशिष्ठो नोदयामास कामधुक् सृज योगतः । तस्या हुङ्कारतो जाताः काम्बोजा रविसन्निभाः । ऊधसश्चाथ सम्भूता

बर्ब्बरा शस्त्रपाणयः। योनिदेशाच्च यवनाः शकृद्देशाच्छकाः स्मृताः। रोमकूपेषु म्लेच्छाश्च हारीताः सकिरातकाः। तैस्तन्निषूदितं सर्व्वं विश्वामित्रस्य तत्क्षणात्। सपदातिगजं साश्वं सरथं रघुनन्दन!। दृष्ट्वा निषूदितं सैन्यं वशिष्ठेन महात्मना। विश्वामित्रसुतानान्तु शतं नानाविधायुधम्। अभ्यधावत् सुसंक्रुद्धं वशिष्ठं जपतां वरम्। हूङ्कारेणैव तान् सर्व्वान् निर्ददाह महानृषिः'' ५५स०।

दानार्थकल्पिते स्वर्णादिनिर्म्मिते षोडशमहादानान्तर्गते दानीये ४धेनुभेदे तत्प्रकारो यथा हेमा०दा०मत्स्य०पु०। ''अथातः सम्प्रवक्ष्यामि कामधेनुविधिं परम्। सर्वकामप्रदं नृणां महापातकनाशनम्। लोकेशावाहनं तद्वद्धोमः कार्य्योऽधिवासनम्। तुलापुरुषवत् कुर्य्यात् कुण्डमण्डपवेदिकाः। स्वल्पेऽप्येकाग्निमत् कुर्य्यात् गुरुरेव समाहितः'' । कुण्डमण्डपवेदिका इत्युपलक्षणम्। इह हि देशकाल-वृद्धिश्राद्ध-शिवादिपूजा-ब्राह्मणवाचनाचार्य्यर्त्विग्वरण-मधुपर्कदान-वेदिकोपरिचक्रलेखन-पञ्चवर्णवितानतोरण-पताकादि सर्व्वं मत्स्यपुराणोक्त-तुलापुरुषदानविहितं वेदितव्यम्।

"काञ्चनस्यातिशुद्धस्य धेनुं वत्सञ्च कारयेत्। उत्तमा पलसाहस्रैस्तदर्द्धेन तु मध्यमा। कनीयसी तदर्द्धेन कामधेनुः प्रकीर्त्तिता। शक्तितस्त्रिपलादूर्द्धमशक्तोऽपीह कारयेत्"। अत्र यद्यपि वत्सपरिमाणमनुक्तं तथापि कामधेनुविधान स्कृप्रकाञ्चनचतुर्थांशेन वत्सः कल्पनीयः, समस्तधेनुषु परिमितद्रव्यनिष्कृष्टवत्सनिर्माणकृप्रदर्शनादिहापि धेनुदानत्वाविशेषात् तथैव निश्चीयते। तथा च गुड़धेन्वादिषु "चतुर्थांशेन वत्सः स्यादिति" तत्र तत्र वक्ष्यते।

"वेद्यां कृष्णाजिनं तस्य गुड़प्रस्थसमन्वितम्। न्यसेदुपरि तां धेनुं महारत्नैरलङ्कृताम्। कुम्भाष्टकसमोपेतां नाना फलसमन्विताम्"।

कल्पतरुदाने, प्रस्थो व्याख्यातः। 'महारत्नानि, पद्मरागप्रभृतीनि, वत्सान्दत्ते तु विन्यसेदिति क्वचित्पाठः, 'नाना फलानि, गोगजवाजिस्त्रीपुरुषप्रभृतीनि, सौवर्णानि, कल्पतरुदानोक्तानि।

'तथाष्टादशधान्यानि समन्तात् परिकल्पयेत्। इक्षुमयष्टकं तद्वन्नानाफलसमन्वितम्। भाजनं चासनं तद्वत् ताम्रदोहनकं तथा"।

"कौशेयवस्त्रद्वयसम्प्रयुक्तां दीपातपत्राभरणाभिरामाम्। सचामरां कुण्डलिनीं सघण्टागणत्रिकापादुकरौप्यपादाम्। रसैश्च सर्वैः परितोऽभिजुष्टां हरिद्रया पुष्पफलैरनेकैः। अजाजिकुस्तुम्बुरुशर्कराभिः वितानकं चोपरि पञ्चवर्णम्। स्नातस्ततो मङ्गलवेदघोषैः प्रदक्षिणीकृत्य सपुष्पहस्तः। आवाहयेत्ताङ्गुड़धेनुमन्त्रैः द्विजाय दद्यादथ दर्भपाणिः"।

घण्टागणत्रिकापादुकाभिः सह वर्त्तत इति सघण्टागणत्रिकापादुका सा चासौ रौप्यपादा चेति विग्रहः। गणनासाधनत्वाद्गणत्रिका,अक्षमाला गलन्तिकेति क्वचित्पाठः। तत्र गलन्तिका कण्ठभूषणमिति केचित्, केचित्तु गलन्तिकेति पठित्वा जलपूर्णा कर्करीति व्याचक्षते। रसाः परिभाषायामुक्ताः। अजाजि जीरकं, कुस्तुम्बुरुः धान्यकम्। एवमुपकल्पितसम्भारः पूर्व्ववदधिवासनं विधाय तदन्यदिवसे प्रातः कृतपुण्याहवाचनोऽग्निकुण्डेषु ऋत्विगुपवेशनादिपूर्णाहुतिपर्य्यन्तकर्म्मशेषसमाप्तिं कृत्वा सर्व्वौषधिजलस्नातः शुक्लमाल्याम्बरो गृहीतकुसुमाञ्जलिर्यजमानस्त्रिःप्रदक्षिणमावृत्य गुड़धेनुमन्त्रैस्तामावाहयेत्। गुड़धेनुमन्त्राः। "या लक्ष्मीः सर्व्वभूतानाम्" इत्यादयः, तत्प्रकरणे द्रष्टव्याः। आवाहनानन्तरं वक्ष्यमाणमन्त्रेणामन्त्रयेत्। "त्वं सर्व्वदेवगणमन्दिरमङ्गभूता विश्वेश्वरत्रिपथगोदधिपर्व्वतानाम्। त्वद्दानशस्त्रशकलीकृतपातकौघः प्राप्तोऽस्मि निर्वृतिमतीव परां नमामि। लोके यथेप्सितफलार्थविधायिनीं त्वामासाद्य कोहि भवदुःखमुपैति मर्त्त्यः। संसारदुःखशमनाय यतस्व कामं, त्वां कामधेनुरिति विप्रगणा वदन्ति"। "आमन्त्र्य शीलकुलरूपगुणान्विताय विप्राय यः कनकधेनुमिमां प्रदद्यात्, प्राप्नोति धाम स पुरन्दरदेवजुष्टं, कन्यागणैः परिवृतं पदमिन्दुमौलेः।" दानवाक्यमत्र तुलापुरुषोक्तमूहनीयम्। विप्रायेत्येकवचनमेकाग्निविधानपक्षे, अनेकाग्निविधानपक्षे तु प्रकृतीभूततुलापुरुषदानवदाचार्य्यादीनां विभागव्यवस्था तदनन्तरं पुण्याहवाचनवेदिस्थितदेवतापूजनविसर्जनानि कुर्य्यात्। दक्षिणाविचारश्च पूर्व्ववत्। मत्स्य पु० उक्तविधिः। "व्यास उवाच। राजन्निहैकामपि कामधेनुं दद्यात् समुद्दिश्य तु केशवं वा। विप्राय वै सर्व्वगुणोपपन्नां कृत्वा व्रतं कृच्छ्रमनोयमैस्तु। सम्यक् प्रदत्तैस्तु गवां सहस्रैः सवत्सवस्त्रैः सहितैश्च हेम्ना। काले फलं यल्लभते मनुष्यो न कामधेनोश्च समं द्विजेभ्यः। शतैः सहस्रैश्च तथा हयानां सम्यक्प्रदत्तैश्च महाद्विपानाम्। कन्या रथैर्वा करिवाजियुक्तैः शतैः सहस्रैः सततं द्विजेभ्यः। दत्तैः फलैर्यल्लभते मनुष्यः, समं तथा स्यान्नतु कामधेनोः।

यो जाह्नवीतीरगतो हिमाद्रौ तप्यतेऽतीव तपः सदा वै। ब्राह्मं पदं गन्तुमना द्विजेन्द्रो नैतत् फलं तच्च हि कामधेनोः। चान्द्रायणैः कृच्छ्रमहापराकैः संशुद्ध्यते पापयुतो मनुष्यः। कार्त्तिके कृष्णपक्षे तु नरः प्रयतमानसः। एकादश्यामुपोष्याथ नरो दिनचतुष्टयम्। घृतेन स्नापयेद्विष्णुं गव्येन पयसापि वा। नक्ताशी गोरसैर्हव्यैः पूजयेन्मधुसूदनम्। गन्धपुष्पैः सुनैवेद्यैर्वस्त्राभरणकुण्डलैः। शङ्खासिचक्रोद्यतबाहुविष्णोर्गदाजहस्तस्य तु शार्ङ्गपाणेः। अर्घं प्रयच्छामि जनार्दनस्य श्रिया युतस्यापि धराधरस्य। श्रियः पतिं श्रीधरमेककान्तं श्रियः सखायं हि श्रियोऽनुकूलम्। नमाम्यहं श्रीधरसन्निवासं समर्च्चितो मे प्रददातु कामान्। एवं पूज्य विधानेन श्रिया युक्तं स्तु नामभिः। पृथग्जागरणं कुर्य्यात्, श्रिया सार्द्धं जगत्पतेः। या देवी भार्गवं भेजे कुलं सर्व्वत्र पूजिता। आयातु सा गृहे नन्दा, सुप्रीता वरदा मम। याऽङ्गिरसं सदा देवी सुनन्दा प्रत्युपस्थिता। आयातु मे गृहे सा तु सुप्रीता वरदा सती। सुरभी या भरद्वाजं कामधेनुः सुकामदा। सदा भेजे गृहं सात्र समायातु सुरार्च्चिता। सुशीला कश्यपं या तु भेजे सर्व्वत्र कामदा। सा मे भवतु सुप्रीता कामधेनुर्गृहे सदा। शबलाया वशिष्ठन्तु सम्प्राप्य मुमुदे शुभा। सा मे गृहं सदायातु कामदा वरपूजिता। एवं पूज्य विधानेन प्रभाते विमले शुभे। शुक्लाम्बरधरः स्नातः शुक्लमाल्यानुलेपनः। कृतनित्यक्रियो हृष्टः कुण्डलाङ्गदभूषितः। अनुलिप्ते महीपृष्ठे कृष्णाजिनसुसंस्तृते। तिलप्रस्थेन वाकीर्णे चतुर्वर्णविभूषिते। क्षौमवस्त्रान्विते शुभ्रे मध्वाज्यपात्रसंयुते। शुभवस्त्रैः समावृत्य सर्व्वरत्नैरलङ्कृताम् सुवर्णशृङ्गनखराञ्चतुष्कर्णां मनोरमाम्। क्षीराब्धिपयोपेतां धेनुमन्त्रैस्तु पूजयेत्। या धनुः सर्व्वदेवानाञ्च षीणां भावितात्मनाम्। क्षीराब्धिनिर्गता या च सा मे भवतु सुस्थिरा। घृतक्षीराभिषेकं च कृत्वा विष्णोः प्रयत्नतः। समभ्यर्च्च यथायोगं गन्धपुष्पादिभिः क्रमात्। गावो ममाग्रतः सन्तु गावः पार्श्वे तु पृष्ठतः। गावो मे हृदये नित्यं गवां मध्ये वसाम्यहम्। प्राङ्मुखोदङ्मुखो वापि सितयज्ञोपवीतिनीम्। इमां त्वं प्रतिगृह्णीष्व देवदेव! जगत्पते!। सवत्सालङ्कृतां धेनुं गोविन्द! भजतामिति। एवं विप्राय तान्दद्यात्, कृत्वा चैव प्रदक्षिणम्। अनुव्रजेच्च गच्छन्तं पदान्यष्टौ नराधिप!। अनेन विधिना यस्तु कामधेनुं प्रयच्छति। सर्व्वकामसमृद्ध्यर्थं स्वर्गलोके स गच्छति। यद्दत्त्वा सकलां पृथ्वीं राहुग्रस्ते दिवाकरे। तत् फलं प्राप्यते राजन्! कामधेन्वा न संशयः। चिन्तामणिः कामधेनुस्तथा भद्रघटो नृप!। त्रीणि समफलान्याहुर्दानानि मुनिसत्तमाः। सप्तावरान् सप्त परान् आत्मानं चैव मानवः। शतजन्मकृतात्पापान्मोचयत्यवनीपते!। पदेपदेऽश्वमेधस्य फलं प्राप्नोति मानवः दानानामेव सर्व्वेषामुत्तमं परिकीर्त्तितम्। सर्व्वकामप्रदं धन्यं, पापघ्नं सर्व्वदं शुभम्। सर्व्वेषामेव पापानां जातानां महतामपि। प्रायश्चित्तमिदं शस्तं कथितं ब्रह्मणा नृप!। ब्रह्मविट्-क्षत्र-शूद्राणां कर्त्तव्या यत्नतो नृप!। सर्व्वकामफलार्थाय कामधेनुरियं सताम्। मध्वाज्यतिल-होमेन कामधेनुं-प्रयत्नतः। सकल्पं प्रतिपाद्येह सर्व्वपृथ्वीप्रदो भवेत्"। वह्निपुराणोक्तकामधेनुदानविधिः। अवशिष्टेतिकर्त्तव्यता च मत्कृततुलादानादिपद्धत्युक्तदिशा ज्ञेया। अथ लिङ्गपुराणोक्तस्तद्विधिः। "सनत्कुमार उवाच। अथातः संप्रवक्ष्यामि हेमधेनुविधिं क्रमात्। सर्व्वपापप्रशमनं देशदुर्भिक्षनाशनम्। उपसर्गविनाशञ्च सर्व्वव्याधिनिवारणम्। निष्काणान्तु सहस्रेण सुवर्णेन तु कारयेत्। तदर्द्धेनापि वा सम्यक् तदर्द्धार्द्धेन वा पुनः। शतेन वा प्रकर्त्तव्यं सर्व्वकार्य्येषु सुव्रत!"। सर्व्वकार्य्येष्विति अव्यक्तेषु अनुक्तमानेषु सौवर्णेषु देयेषु सहस्रादिशतावरमानत्वमवधेयमिति इयं चोक्तिः प्रासङ्गिकी वातुले मानान्तरमुक्तम्। "त्रिपलादिसहस्रान्तं हेम्ना धेनुं प्रकल्पयेदिति"। "शिवाग्रे कामधेनुन्तु पलानां पञ्चभिः शतैः। यो ददाति महासेन! राहुग्रस्ते दिवाकरे। तेन दत्तं भवेत्सर्व्वमाब्रह्मभवनान्तिकम्" इति कालोत्तरमतम्। "गोरूपं सखुरन्दिव्यं सर्व्वलक्षणसंयुतम्। खराग्रे विन्यसेद्वज्रं शृङ्गे वै पद्मरागकम्। भ्रुवोर्मध्ये न्यसेद्दिव्यं मौक्तिकं मुनिसत्तम!। वैदूर्य्येण स्तनान् कुर्य्याल्लाङ्गूलं नीलनिर्म्मितम्। दन्तस्थाने प्रकर्त्तव्यं सर्व्वरत्नविभूषितम्। पशुवत् कारयित्वा तु वत्सं कुर्य्यात् सुशोभनम्। दशांशकेन कर्त्तव्यं सर्व्वरत्नविभूषितम्"। कामिके तु, "तुरीयांशेन वत्सकः" इत्युक्तम्।

"पूर्व्वोक्तवेदिकामध्ये मण्डलञ्च प्रकल्पयेत्। तन्मध्ये सुरभिं स्थाप्य सर्व्वतः सर्व्वरत्नकाम्। सवत्सां सुरभिं तत्र वस्त्रयुग्मेन वेष्टयेत्। संपूजयेत्तु गायत्र्या सवत्सां सुरभिं पुनः। अथैकाग्निविधानेन होमं

कुर्य्यात् यथाविधि। समिधन्त्वाज्यभागेन पूर्व्ववच्छेषमाचरेत्। शिवपूजा प्रकर्त्तव्या लिङ्गं स्नाप्य घृतादिभिः। गामालभ्य च गायत्र्या विप्रेभ्यो दापयेच्च ताम्। दक्षिणा च प्रदातव्या त्रिंशन्निष्कं महामते!"। गायत्र्या गोसावित्र्याख्यस्तोत्रमन्त्रेणेत्यर्थः, "गोसावित्रीतिमन्त्रेण मन्त्रयीत विचक्षणः" इति वाहलोक्तेः, कामिके तु "घृताद्यैः पूजयद्देवं सहस्रकलशादिभिः। गामाराध्य तु गायत्र्या विप्रेभ्यो दापयेच्च ताम्। आचार्य्यं पूजयेत् पूर्व्वं केयूरकटकादिभिः। वस्त्रयुग्मञ्च दत्त्वा तु विज्ञाप्य विधिपूर्व्वकम्। दक्षिणा तु प्रदातव्या त्रिंशन्निष्का महातपः!। त्रिंशन्निष्कदक्षिणादानन्तु एकाग्निपक्षविषयम्, अनेकाग्निपक्षे तुलापुरुषवद्दक्षिणा। तदुक्तं शैवे। "अथैकाग्निविधानं वा समिदाज्यं हविष्ययुक्। त्रिंशन्निष्कावरा देया गुरोरेकाग्निकल्पतः" इति। एकाग्निपक्षस्य स्वल्पवित्तविषयः। पूर्व्ववच्छेषमिति, शेषमनुक्तं किञ्चित् तदखिलं लिङ्गपुराणोक्ततुलापुरुषविहितमाचरेदित्यर्थः। कालोत्तरे "एतस्यास्तु प्रदाता यस्तेन दत्तं चराचरम्। त्रिःसप्तकुलसंयुक्तो विमानैर्दिव्यवर्च्चसैः। शिवलोकमवाप्नोति यावदिन्द्राश्चतुर्द्दश। तदन्ते चक्रवर्त्ती स्यात्, ज्ञानवांस्तु शिवं व्रजेत्"। इति नानाशास्त्रीयकामधेनुदानम्। वोपदेवधातुपाठव्याख्याने ५ग्रन्थभेदे।

**कामधेनुतन्त्र** न० शिवनिर्मिते तन्त्रभेदे। [महादेवे हला०।

**कामध्वंसिन्** पु० कामं ध्वंसयति ध्वन्स–णिच्–णिनि।

**कामन** त्रि० कम–णिङ्–ल्यु। १कामुके अम० भावे ल्युट्। २अभिलाषे न०। युच् अभिलाषे स्त्री हला०। "सञ्चितफलकस्यापि तत्तत्कामनासहकारेण प्रत्येकफलदातृत्वम्" इति विधिस्वरूपे गदाधरेणोक्तम्।

**कामन्दकि** न० कमन्दकस्यापत्यम्। विदङ्गदे तेनैव नीतिशास्त्रं प्रणीतम्। तस्येदम् "वृद्धाच्छः" पा०छ०। कामन्दकीय तत्प्रणीतनीतिशास्त्रे न०।

**कामन्धमिन्** पु०स्त्री कामं यथेष्टं धमति ध्मा–णिनि बा० धमादेशः। कांस्यकारे (कांसारि) सङ्कीर्णजातिभेदे जटा० स्त्रियां ङीप्।

**कामनीयक** न० कमनीयस्य भावः "योपधाद्गुरूपोत्तमाद्वुञ्" पा० वुञ्। रमणीयतायाम् "व्यलोकयत् काननकामनीयकम्" नैष० पाठान्तरम्।

**कामप(त्नी)ति** स्त्री कामः पतिर्यस्याः सपूर्व्वकत्वात् नान्तादेशः ङीप् च वा। कामदेवभार्य्यायां रत्यां शब्दरत्ना०।

**कामपाल** पु० कामान् पालयति पाल–अण् उप० स० १बलदेवे अमरः। भक्तानां कामस्याभीष्टस्य पालके स्वपुत्रस्य कामस्य वा पालके च २वासुदेवे। "कामहा कामपालश्च कामी कान्तः कृतागमः" विष्णु स०।

**कामपूर** त्रि० कामं पूरयति पूर–णिच्–अण् उप० स०। १अभीष्टपूरके २परमेश्वरे पु०। "कामपूरोऽस्म्यहं नृणाम्" भाग० ७।२।२५।

**कामप्र** त्रि० कामं पिपर्त्ति पृ–मूलविभुजा० क उप०स०। १अभीष्टपूरके। "कामप्रेण मनसा चरन्ता" ऋ० १।१०८।२। बि० कि। कामप्रि तत्रार्थे "मरुतः परिवेष्टारोमरुत्तस्यावसनुगृहे। आविक्षितस्य कामप्रेर्विश्वे देवाः सभासदः" ऐतरेयब्राह्मणम्।

**कामप्रद** त्रि० कामं प्रददाति प्र+दा+क उप०स० १अभीष्टस्य प्रकर्षेण दातरि। २परमेश्वरे पु०। "कान्तः कामप्रदः प्रभुः" विष्णु स०। कामं कामजरतिभेदं प्रददाति। "द्वौ पादौ स्कन्धसंलग्नौ क्षिप्त्वा लिङ्गं भगे तथा। कामयेत् कामुकः प्रीत्या बन्धः कामप्रदो हि सः" स्मरदीपिकोक्ते ३रतिबन्धभेदे पु०।

**कामप्रवेदन** न० कामस्याभिलाषस्य प्रवेदनम् आविष्करणम्। स्वाभिप्रायप्रकाशने "कच्चित् कामप्रवेदने" अमरः। "कामप्रवेदनेऽकच्चिति" पा०

**कामप्रश्न** पु० कामं यथेष्टम् प्रश्नः। यथेष्टप्रश्ने "तस्मै ह याज्ञवल्क्यो वरं ददौ सहोवाच कामप्रश्नएव"। शत०ब्रा० ११।६।२।१०। "कामप्रश्नः यथाकामं प्रश्नः" भा० "याज्ञवल्क्यो वरं ददौ सह कामप्रश्नमेव" शत०ब्रा०१४,७,१,१,

**कामप्रस्थ** पु०न० कामस्य कामगिरेः प्रस्थः। कामगिरिसानौ तत्र "मालादीनाञ्च" पा० वहुपूर्वस्यापि प्रस्थशब्दे परे आद्युदात्तता। गहा० भवाद्यर्थे छ। कामप्रस्थीय तद्भवे त्रि०

**कामफल** पु० कामं यथेष्टं फलमस्य। महाराजाम्रवृक्षे। राजनि०।

**कामम्** अव्य० कम–णिङ्–बा०अमु। १अनुमतौ, २प्रकामे, ३पर्य्याप्ते, ४असूयायाम्, ५अकामानुमतौ, ६स्वच्छन्दार्थे, ७अनिष्टस्यागत्या स्वीकारे च। अमरमेदिन्यादयः।

**काममह** पु० ६त०। चैत्रमासे कर्त्तव्ये कामस्य १महोत्सवे तदाधारत्वात् २चैत्रपौर्णमास्यां त्रिका०।

काममहस्य चैत्रपौर्णमास्यांकर्त्तव्यतोक्तिः प्रायिकी शचीदेवताभिप्राया वा, तिथितत्त्वे भविपु० "चैत्रशुक्लत्रयये श्यद्दमनं मदनात्मकम्। कृत्वा संपूजयेत् कामं वीजयेद्व्यजनेन

तु । तत्र सम्पूजितः कामः पुत्रपौत्रप्रवर्द्धनः। कामदेवस्त्रयोदश्यां पूजनीयो यथाविधि”। इति चैत्रत्रयोदश्यां तत्पूजनविधानात्” नि० सि०रामार्चनच० “द्वादश्यां चैत्रमासस्य शुक्लायां मदनोत्सवः। बौधायनादिभिः प्रोक्तः कर्त्तव्यः प्रतिवत्सरम्” तदीयद्वादश्यां विधानात् “तत्र स्यात् स्वीयतिथिषु वह्न्यादेर्दमनार्पणमिति” पाद्मोक्तेः वह्न्यादिभक्तानां स्वस्वतिथिष्वपि विधानात्। तत्र तिथिदेवताश्च “वह्नि १विरिञ्चि २गिरिजा ३गणेशः ४फणी ५विशाखो ६दिनकृत् ७महेशः। ८दुर्गा ९ऽन्तको १०विश्व ११हरी १२स्मरश्च १३शर्वः १४शशी १५चेति तिथीशपूज्याः” इत्युक्ता वेद्याः। एतदनुसारेण “शिवभक्तादिभिस्तु चतुर्दश्यां कार्य्यमिति नि० सि० व्यवस्थापितम्। रघुनन्दनेन त्रयोदश्यां कार्य्यतोक्तिः त्रयोदश्याः स्मरतिथित्वादन्यदेवतानुपासकाभिप्रायेणेति न विरोधः। तस्य नित्यतोक्ता नि०सि०पाद्मे “ऊर्ज्जे व्रतं मधौ दोलाम् श्रावणे तन्तुपूजनम्। चैत्रे च दमनारोपमकुर्व्वाणो व्रजत्यधः” प्रागुक्तरामार्चनच० वाक्ये च प्रतिसंवत्सरमित्युक्तेरपि नित्यता। सा च त्रयोदशीकरणपक्षे द्वादशीयुक्ता ग्राह्या “त्रयोदशी प्रकर्त्तव्या द्वादशी संयुता विभो!। ति० त० ब्रह्मवैवर्त्तात्। द्वादशीकरणपक्षे विशेषः” नि० सि० रामार्चनच० उक्तो यथा। “पारणाहे न लभ्येत द्वादशी घटिकाऽपि चेत्। तदा त्रयोदशी ग्राह्या पवित्रदमनार्पणे”। चतुर्द्दशीकरणपक्षे पूर्व्वविद्धैव ग्राह्या। “मधोः श्रावणमासस्य या च शुक्ला चतुर्द्दशी। सा रात्रिव्यापिनी ग्राह्या नान्या शुक्ला कदाचनेति” हेमाद्रौ बौधायनोक्तेः। अन्यदिवसकरणे तु तन्तुदामनपर्व्वणोत्युक्तवाक्यात् पूर्व्वविद्धैव तिथिर्ग्राह्या। दैवात् चैत्रे तदकरणे गौणः काल उक्तः” नि० सि० रामार्चनच०। “हरौ (द्वादश्यां) न दमनारोपः स्यान्मधौ विघ्नतोयदि। वैशाखे श्रावणे वापि तत्तिथौ स्यात्तदर्पणम्” श्रावणे वापि शुक्लास्ते कर्त्तव्यमिति इति वा तत्र पाठः। इदञ्च मलमासे न कार्य्यम्” “उपाकर्म्मोत्सर्ज्जनञ्च पवित्रदमनार्पणमिति” कालादर्शे मलमासवर्ज्ज्येषु परिगणनात्। उपाकर्म्म च हव्यञ्च कार्य्यं पर्व्वोत्सवं तथा। उत्तरे नियतं कुर्य्यात् पूर्व्वे तन्निष्फलं भवेत्” कालमा० प्रजापतिवचनाच्च। शुक्रास्तादौ तु कार्य्यएव। रामार्चनच० पूर्व्वोक्तवचनात्” “उपाकर्म्मोत्सर्जनञ्च पवित्रदमनार्पणम्। ईशानस्य बलिं विष्णोः शयनं परिवर्त्तनम्। कुर्य्याच्छुक्रस्य च गुरोर्मौढ्येऽपीति विनिश्चयः” वृद्धगर्गवचनाच्च। इति दमनारोपरूपकाममहोत्सवस्तिथिभेदेन दर्शितः। अनङ्गव्रतरूपस्तन्महोत्सवस्तु चैत्रशुक्लत्रयोदश्यामेव। हेमाद्रौ कालखण्डे भविष्ये “चैत्रोत्सवे सकललोकमनोविलासे कामं त्रयोदशतिथौ च वसन्तयुक्तम्। पत्न्या सहार्च्य पुरुषप्रवरोऽथ योषित् सौभाग्यरूपसुतसौख्ययुतः सदा स्यात्” सा च पूर्व्वयुता ग्राह्या “त्रयोदशतिथिः सिते” इति पूर्व्वविद्धा ग्रहणे दीपिकोक्तेः। एवं च काममहशब्देन लक्षणया तदाधारपरत्वे चैत्रशुक्लत्रयोदश्येव ग्राह्येति तु न्याय्यम्।

**काममुद्रा** स्त्री तन्त्रसा० “हस्तौ तु संपुटौ कृत्वा प्रसृताङ्गुलिकौ तथा। तर्ज्जन्यौ मध्यमापृष्ठे अङ्गुष्ठौ मध्यमाश्रितौ। काममुद्रेयमुदिता सर्व्वदेवप्रियङ्करी” ज्ञानार्णवोक्ते मुद्राभेदे।

**काममूत** त्रि०कामेन मूतः मूर्च्छितः मव—क्त वेदे नि० ऊडभावः ऊठ् काममूर्च्छिते। “काममूता बहु तद्रपामि” ऋ०१०,१०,११, “काममूता काममूर्च्छिता” भा०।

**कामयमान** त्रि० काम—णिङ् शानच्। कामुके।

**कामयान** त्रि० कम—णिङ् शानच् आगमशास्त्रमनित्यमिति मुगभावः। कामुके। “कामयानसमवस्थया तुलाम्” रघुः। “कामयानशब्दः सिद्धोऽनादिश्च” वामनः। “आने मुक्”पा०। आदौ मुक्शून्यतयाऽनादित्वेन सिद्धः।

**कामयितृ** त्रि० कम—णिङ् तृच्। कामुके अमरः। स्त्रियां ङीप्।

**कामरूप** पु० “कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्व्वतम्। (यावदतिशेषः) कामरूपाभिधोदेशो गणेशगिरिमूर्द्धनि” इत्युक्तकालेश्वरादिगिरिचतुष्टयमध्यवर्त्तिनि गणेशगिरिमूर्द्धस्थे प्रागज्योतिषाख्ये देशभेदे। “योनिपीठे कामगिरौ कामाख्या तत्र देवता” इत्युपक्रमे “सर्व्वत्र विरला चाहं कामरूपे गृहे गृहे” तन्त्रचूड़ा०। कामेन रूपमस्य। २यथेष्टरूपधारिणि त्रि० “जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः” मेघ०। “स्वेच्छाधीनविग्रहं दुर्गसञ्चारत्वमम्” मल्लि०। कामं काम्यं सुन्दरं रूपमस्य ३अतिशोभने त्रि०।

**कामरूपिन्** त्रि० कामं काम्यरूपमस्त्यस्य प्राशस्त्येन इनि। १प्रशस्तरूपवति। कामेन स्वेच्छया रूपं धार्य्यत्वेनास्त्यस्य इनि। स्वेच्छया २यथेष्टरूपधारिणि त्रि०। “सर्व्वमाशु निचेतव्यं हरिभिः कामरूपिभिः” रामा०। २ विद्याधरे

**कामरेखा** स्त्री कामानां कामव्यापाराणां लेखा पङ्क्तिर्यत्र लस्य रः। कामव्यापाररीतियुक्तायां वेश्यायाम् शब्दमा०

**कामल** त्रि० कम–कलच्। १ कामुके। आधारे कलच्। २ वसन्तकाले पु० कस्य जलस्यामलोऽसम्बन्धो यत्र। ३ मरुदेशे च मेदिनी। ४ रोगभेदे पुंस्त्री मेदि०। तन्निदानादि। "पाण्डुरोगी च योऽत्यर्थं पित्तलानि निषेवते। तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते" निदानम्। "हारिद्रनेत्रः सुभृशं हारिद्रत्वङ्नखाननः। रक्तपित्तशकृन्मूत्रो भेकवर्णो हतेन्द्रियः। दाहाविपाक दौर्बल्यसदनारुचिकर्षितः। कामला बहुपित्तैषा कोष्ठशाखाश्रया मता। कालान्तरात् खरीभूता कृच्छ्रा स्यात् कुम्भकामला। तस्य सम्प्रि०। तस्यारिष्टलक्षणं यथा। कृष्णपीतशकृन्मूत्रो भृशं स्तूनश्च मानवः। स रक्ताक्षिमुखच्छर्द्दिविण्मूत्रो यस्य ताम्यति। दाहारुचितृषानाहतन्द्रामोहसमन्वितः। नष्टाति श्वासकासार्त्तो विड्भेदी कुम्भकामली। छर्द्यरोचकहृल्लासज्वरक्लोमनिपीडितः। नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान् विपद्यते" माधवनिदानम्। [ लिङ्गे हेम०।

**कामलता** स्त्री कामस्य लतेव तद्गुणभूयिष्ठत्वात्। पुंचिह्ने

**कामलायन** पु० कमलस्यापत्यं नडादि० फक्। कमलापत्ये उपकोलाख्ये मुनौ। "उपकोसलोह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास" छा० उ०।

**कामलाक्षी** स्त्री कामं यथेष्टं लाति आकर्षति ला–क तादृशमक्षि यस्याः षच् समा० षित्त्वात् ङीष्। आकर्षणकारके देवीमूर्त्तिभेदे" तन्त्रसा० आकर्षणप्रकरणे। "अनामारक्तमिश्रेण कामलाक्षीमनु जपेत्" तन्मन्त्रस्तु तत्रैव दृश्यः।

**कामलिका** स्त्री कस्य जलस्यामलोऽसम्बन्धोऽस्त्यस्य ठन्। कङ्कुधान्ये शब्दचि०।

**कामलिन्** पु० ब० व०। कमलेन वैशम्पायनान्तेवासिभेदेन प्रोक्तमधीयते णिनि। वैशम्पायनान्तेवासिभेदकमलर्षिप्रोक्ताध्यायिषु।

**कामवत्** त्रि० कामोऽस्त्यस्य मतुप् मस्य वः। १ अभिलाषयुक्ते २ मैथुनानुरागयुक्ते च स्त्रियां ङीप् "त्यागः कामवतीनां हि स्त्रीणां सद्भिर्विगर्हितः" भा० आ० ३८६ श्लो०। ङीवन्तः ३ दारुहरिद्रायां राजनि०।

**कामवल्लभ** पु० ६ त०। १ आम्रवृक्षे तन्मुकुलं हि कन्दर्पप्रियम्। २ ज्योत्स्नायां स्त्री राजनि०।

**कामवृक्ष** पु० कामं वीजाङ्कुरनिरपेक्षतया यथेच्छं वृक्षः। वन्दाके (परगाछा)। राजनिघण्टुः।

**कामवृत्त** त्रि० कामं यथेष्टं निरङ्कुशं वृत्तमस्य। यथेष्टाचारिणि। "यस्तु स्यात् क्षत्रियः कश्चित् कामवृत्तः परन्तप!" "यस्तु स्यात् कामवृत्तोऽपि पार्थ ब्रह्मपुरस्कृतः" भा० आ० १७० अ०।

**कामवृत्ति** स्त्री ६ त०। १ कामस्य चेष्टिते। कामेन स्वेच्छया वृत्तिः। २ स्वेच्छाचारे। "न कामवृत्तिर्वचनीयमीक्षते" कुमा० कामतोवृत्तिरस्य। ३ यथेष्टाचारयुक्ते त्रि०।

**कामवृद्धि** पु० कामस्य वृद्धिर्यस्मात्। कर्णाटदेशप्रसिद्धे (कामज) इतिख्याते क्षुपभेदे राजनि०। ६ त०। २ कामस्य वृद्धौ स्त्री

**कामवृन्ता** स्त्री कामतो वृन्तं यस्याः। पाटलायाम् शब्दमा०।

**कामशक्ति** स्त्री। कामस्य शक्तिर्नायिकाभेदः। पदार्थादर्शे राघवभट्टोक्ते १ कामदेवपत्नीभेदे। सा च पञ्चाशद्विधा यथा "रतिः १ प्रीतिः २ कामिनी च ३, मोहिनी ४ कमलप्रिया ५। विलासिनी ६ कल्पलता ७, श्यामला च ८ शुचिस्मिता ९। विस्मिताक्षी १० विशालाक्षी ११, लेलिहाना १२ दिगम्बरा १३। वामा १४ कुब्जा १५ धरा १६ नित्या १७, कल्याणी १८ मोहिनी १९ तथा। सुलोचना २० सुलावण्या २१, तथैव च विमर्द्दिनी २२। कलहप्रिया २३ चक्राक्षी २४, हृसुखी २५ नलिनी २६ तथा। जटिला २७ पालिनी २८ चैव, शिवा २९ सुधा ३० रसा ३१ भ्रमा ३२। चारुलोला ३३ चञ्चला ३४ च, दीर्घजिह्वा ३५ रतिप्रिया ३६। लोलाक्षी ३७ भृङ्गिणी ३८ चैव, पाटला ३९ मादिनी ४० तथा। माला ४१ च हंसिनी ४२ विश्वतोमुखी ४३ नन्दिनी ४४ तथा। रङ्गिणी च तथा कान्तिः ४६। कलकण्ठी ४७ दृकोदरा ४८। मेघश्यामा ४९ मदोन्मत्ता ५०, एवं पञ्चाशदीरिताः। शक्तयः कुङ्कुमनिभाः सर्व्वाभरणभूषिताः। नीलोत्पलकरा ध्येयास्त्रैलोक्याकर्षलक्षमाः" इति। तन्त्रसारे कामरतिन्यासे पञ्चाशद्वर्णात्मकमातृकाया एकैकवर्णयोगेन कामशब्ददर्शितानां पञ्चाशतः कामानां योगेन च एतासां न्यासोऽभिहितः। तत्र-नाममात्रे कश्चिद्भेदोऽस्ति। "पञ्चाशद्वर्णगुणिता पञ्चाशद्वर्णमालिकाम्। सूते तद्वर्णतोभिन्नां तथा रुद्रादिकाम् क्रमादिति" शा० ति० पद्व्या० राघवभट्टेन आदिपदेन पञ्चाशत्कामास्तच्छक्तयश्च आहृता इति कीर्त्तनात् पञ्चाशदेव कामशक्तयः। अतः शब्दकल्पद्रुमे कामशब्दे रतिभेदस्यैकपञ्चाशत्त्वं यत् प्रतिज्ञातं तत्-

प्रामादिकमेव। किञ्च एकपञ्चाशत्कामशक्त्यो रतिशब्दे द्रष्टव्या इत्युक्तिरपि प्रतिज्ञामात्रं रतिशब्दे तत्र तन्नामानुल्लेखनात् पञ्चाशत्कामानामेकपञ्चाशत् शक्त्योऽनुपपन्ना एवेति बोध्यम्।

**कामशर** पु॰ कामस्य शर इव। १आम्रवृक्षे राजनि॰। तन्मुकुलस्य कामशराकारत्वात्तस्य तथात्वम्।

**कामशास्त्र** न॰ कामस्य काम्यस्य स्वर्गादेः प्रतिपादकं शास्त्रम्। १काम्यप्रतिपादकशास्त्रे। "अर्थशास्त्रमिदम् प्रोक्तं धर्म्मशास्त्रमिदं महत्। कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना" भा॰ आ॰ १अ॰ भारतप्रशंसायाम्। कामस्य तच्चेष्टितस्य प्रतिपादकं शास्त्रम्। २रतिशास्त्रे च।

**कामसख** पु॰ ६त॰ टच् समा॰। वसन्तकाले राजनि॰। अतएव कुमारे "सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः" इति "स माधवेनाभिमतेन सख्या" इति "सहायमेकं मधुमेव लब्ध्वा" इति च वसन्तस्य तत्सहायत्वं वर्णितम्।

**कामसुत** पु॰६त॰। अनिरुद्धे हेम॰।

**कामसू** त्रि॰ काममभीष्टं सूते सू—क्विप् ६त॰। अभीष्टसम्पादके। "किमत्र चित्रं यदि कामसूर्भूः" रघुः। कामं कामावतारं कन्दर्पं सूते। २रुक्मिण्यां स्त्री। गर्भाधानस्य सूतेरर्थत्वे। ३वासुदेवे पु॰।

**कामसूत्र** न॰ कामस्य तद्व्यापारस्य प्रतिपादकं सूत्रम्। वात्स्यायनादिप्रणीते कामव्यापारबोधके शास्त्रभेदे।

**कामस्तुति** स्त्री ६त॰। प्रतिग्रहदोषापनुत्तये प्रतिग्रहीत्रा पाठ्ये कामस्य स्तुतिरूपे मन्त्रभेदे स च मन्त्रः "कोऽदात्? कस्मा अदात्? कामोऽदात् कामायादात् कामो दाता कामः प्रतिग्रहीता कामैतत्ते" यजु॰ ७।४८। यथाचास्य प्रतिग्रहदोषाभावज्ञापकत्वम् तथाऽस्य मन्त्रस्य व्याख्यानेन वेददीपे दर्शितम्। यथा "दातुर्दानाभिमानाभावाय स्वस्य प्रतिग्रहदोषाभावाय च देहेन्द्रियसंघात् कामं विविनक्ति कोऽदादिति। कोनरोऽदात्? दत्तवान् कस्मै नरायादात्?। प्रश्नद्वयस्योत्तरमाह। कामोऽदात् कामायैवादात् न त्वं दाता नाहं प्रतिग्रहीता। त्वत्कामाभिमानी देवो मत्कामाभिमानिनेऽदात्। एवञ्च काम एव दाता काम एव प्रतिग्रहीता नान्यः। हे काम! एतद् द्रव्यं ते तव दातृप्रतिग्रहीतृत्वात्"। अयं भावः तत्तत्फलकामनयैव दाता तत्तद्द्रव्याणां दानात् स्वाभीष्टसिद्धये च प्रतिग्रहीता तेषां ग्रहणात् कामाभिमानिनो देवस्यैव दानप्रतिग्रहयोः प्रयोजकत्वात् द्रव्यस्वामित्वं कामदेवस्यैवेति न प्रतिग्रहीतुरिति उक्तमन्त्रपाठे न प्रतिग्रहदोषः इति। अतएव "प्रतिग्रहजदोषस्य शान्त्यै कामस्तुतिं पठेत्" स्मृतौ तत्पाठोविहितः।

**कामहन्** त्रि॰ कामं हतवान् हन् क्विप्—६त॰। परमेश्वरे। "कामहा कामकृत् कामो" विष्णुस॰। तस्य च स्वात्मज्ञानेन सर्व्वकामहन्तृत्वात् तथात्वम् "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि दृष्टे तस्मिन् परावरे" इति श्रुत्या तस्य दर्शनेनाविद्याग्रन्थिरूपकामादिविभेदकत्वमुक्तम्। तथाच तत्त्वज्ञानेन मिथ्याज्ञानस्य नाशे तत्कार्य्याणां रागद्वेषादिदोषाणां नाशात् तस्य तथात्वम् तदेतदुक्तम् गौ॰ सू॰ तत्त्वज्ञानादित्यनुवृत्तौ "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापायादनन्तरापायादपवर्गः" इति। २महादेवे च।

**कामाक्षी** स्त्री कामं शोभनमक्षि यस्याः षच् समा॰ षित्त्वात् ङीष्। १देवीमूर्त्तिभेदे तन्त्रोक्ते २वीजभेदे च।

**कामाख्या** स्त्री सतीदेव्या १योनिपीठरूपे स्थाने २तदधिष्ठात्र्यां देव्याञ्च। तन्नामनिरुक्तिप्रादुर्भावादि कालि॰पु॰६१अ॰ दर्शितं यथा

"श्रीभगवानुवाच। कामार्थमागता यस्मान्मया सार्द्धं महागिरौ। कामाख्या प्रोच्यते देवी नीलकूटे रहोगता। कामदा कामिनी कामा कान्ता कामाङ्गदायिनी। कामाङ्गनाशिनी यस्मात् कामाख्या तेन चोच्यते। तत्पीठकारणमुक्तं तत्रैव। "अथ काले बहुतिथे व्यतीते प्राणिसर्ज्जने। अरुन्धतीं दक्षतनयां, भार्य्यार्थेऽहं वधूवराम्। सा मेऽभूत् प्रेयसी भार्य्या, प्रदाय समयं पितुः। अनिष्टकारी त्वञ्चेत् स्याः, प्राणांस्त्यक्ष्ये तदा त्वहं। ततो यज्ञे समस्तन्तु स च वव्रे चराचरम्। न मां चापि सतीं वव्रे तदनिष्टात् मृता तु सा। ततो मोहसमापन्नस्तामादाय मृतामहम्। प्राप्तपीठवरं तन्तु भ्रममाण इतस्ततः। तस्यास्तदङ्गानि पर्य्यायात् पतितानि यतो यतः। तत्तत् पुण्यतमं जातं योगनिन्द्राप्रभावतः। तस्मिंस्तु कुब्जिकापीठे सत्यास्तद्योनिमण्डलम्। पतितं, तत्र सा देवी महामाया व्यलीयत। लीनायां योगनिद्रायां मयि पर्व्वतरूपिणि। स नीलवर्णः शैलोऽभूत् पतिते योनिमण्डले। स तु शैलो महातुङ्गः पातालतलमाविशत्। तस्या आक्रमणाद्गाढं ततस्तं द्रुहिणोऽभ्ययात्। स तु पूर्व्वं ब्रह्मशक्तिशिलां धर्त्तुं चतुर्मुखः। शैलरूपोऽभवत्तेन शैलरूपेण मामधात्। ब्रह्मा पर्व्वतरूपेण मयि पर्व्वतरूपिणि। संसक्तोऽभो-

ऽसमङ्गाढमाक्रान्तो मायया विधिः। ततो वराहः संसक्तो मयि मां स तु माधवः। शैलरूपः शैलरूपं धर्त्तुं समुपचक्रमे। सोऽप्यधोऽगान्मया सार्द्धं तदा पर्व्वतरूपिणा। आक्रम्य देवीं पृथिवीं स्थितो भुवि निखातकः। शतं शतं योजनानां तुङ्गमासीद्गिरित्रयम्। तदाक्रान्तं महादेव्या सर्व्वमेव ह्यधोगतम्। क्रोशमात्रे स्थितं तुङ्गं शेषं तन्त्रियस्य तु। एका समस्तजगतां प्रकृतिः सा यतस्ततः। ब्रह्मविष्णुशिवैर्देवैर्धृता सा जगतां प्रसूः। तत्र पूर्व्वो ब्रह्मशैलः श्वेत इत्युच्यते बुधैः। मद्रूपधारी शैलस्तु नील इत्युच्यते तथा। स तु मध्यगतः शैलस्त्रिकोणो-दूखलाकृतिः। विभ्राजमानः सततं मध्ये ब्रह्मवराहयोः। वराहः शैलरूपो यः स चित्र इति कथ्यते। स सर्व्वेषां स्थितः पश्चात् दीर्घः सर्व्वेभ्य एव तु। ऐशान्यां योऽभवत् कूर्म्मः शैलरूपो महाद्युतिः। मणिकर्णः स नाम्ना तु ख्यातो देवौघसेवितः। योऽनन्तरूपः शैलस्तु वायव्यां समवस्थितः। मणिपर्व्वतसंज्ञोऽसौ पर्वतो माधवप्रियः। महामायागिरिर्यस्तु नैरृत्यां समवस्थितः। स गन्धमादनो नाम्ना सर्वदा शङ्करप्रियः। वराहश्चाभवमे यत्र छिन्नौ महासुरौ (मधुकैटभौ)। हरिणा तत्र संजातः पाण्डुनाथ इति स्मृतः। ब्रह्मशक्तिशिलायास्तु पूर्व्वभागे तु मध्यतः। यस्तु पर्वतरूपोऽहं स तु भस्माचलाह्वयः। पुण्यकूटे मया सार्द्धं देवी रहसि संस्थिता। सत्यास्तु पतितं तत्र विशीर्णं योनिमण्डलम्। शिलात्वमगमत् शैले कामाख्या तत्र संस्थिता। संस्पृश्य तां शिलां मर्त्त्यो ह्यमर्त्त्यत्वमवाप्नुयात्। तस्याः शिलाया माहात्म्यात् यत्र कामेश्वरी स्थिता। अद्भुतं यस्य गुह्येत्र तु लोहं भस्म भवेद्गतम्। सा चापि प्रत्यहं पुत्र! पञ्चमूर्त्तिधरा भवेत्। मोहार्थं सर्व्वलोकानां ममापि प्रीतये शिवा। अहं पञ्चमुखेनाशु पञ्चभागे व्यवस्थितः। ईशानः पूर्व्वभागस्थः कामेश्वर्य्याः प्रधानतः। ऐशान्यां वै तत्पुरुषो ह्यघोरस्तस्य सन्निधौ। सद्योजातोऽथ वायव्यां वामदेवस्तु सङ्गतः। देव्याश्चापि सुरश्रेष्ठ! पञ्चरूपाणि भैरव!। शृणु वेताल! गुह्यानि देवैरपि सदैव हि। कामाख्या त्रिपुरा चैव तथा कामेश्वरी शिवा। सारदाऽथ महोत्साहा कामरूपगुणैर्युता। मयि लिङ्गत्वमापन्ने शिलायां योनिमण्डले। सर्व्वे शिलात्वमगमन् शैलरूपाश्च निर्ज्जराः। यथाहं निजरूपेण रेमे वै सह मायया। शिलारूपप्रतिच्छन्नास्तदा सर्वास्तु देवताः।

शिलारूपप्रतिच्छन्नाः शैले शैले व्यवस्थिताः। रमन्ते च स्वरूपेण नित्यं रहसि सङ्गताः। ब्रह्मा विष्णुरहञ्चात्र दिक्पालाः सर्व एव ते। अन्येऽप्यत्र स्थिता देवाः सानुकूलाः सदा मयि। उपासितुं तदा देवीं कामाख्यां कामरूपिणीम्। नीलशैलस्त्रिकोणस्तु मध्ये निम्नः सदाशिवः। तन्मध्ये मण्डलं चारु षट्शक्तिसमन्वितम्। गुहा मनोभवा तत्र मनोभवविनिर्म्मिता। योनिस्तस्यां शिलायान्तु शिलारूपा मनोहरा। वितस्तिमात्रविस्तीर्णा एकविंशाङ्गुलायता। क्रमसूक्ष्मविनिर्म्माणभस्मशैलानुगामिनी। सिन्दूरकुङ्कुमारक्ता सर्वकामप्रदायिनी। तस्यां योनौ पञ्चरूपा नित्यं तिष्ठति कामिनी। महामाया जगद्धात्री मूलभूता सनातनी। तत्राष्टौ योगिनीर्नित्यं मूलभूताः सनातनीः। पूर्व्वोक्ताः शैलपुत्राद्याः स्थिता देव्याः समन्ततः। तासान्तु पीठनामानि शृणु चैकत्र भैरव!। गुप्तकामा १ च श्रीकामा २ तथा च विन्ध्यवासिनी ३। कोटीश्वरी४ वनस्था ५ तु पाददुर्गा६ तथापरा। दीर्घेश्वरी७ क्रमादेव प्रकटा भुवनेश्वरी८। खयोगिन्यः पीठनाम्ना ख्याता अष्टौ च देवताः। सर्वतीर्थानि चैकत्र जलरूपाणि भैरव!। स्थितानि नाम्ना सौभाग्या वरेण्या प्राणिपुण्यदा। विष्णुस्तु तीरे तस्याः स नाम्ना कमल इत्युत। कामुकाख्यस्तु वटुकः कामाख्याभ्यर्णसंस्थितः। लक्ष्मीः सरस्वती देव्यौ देव्या अङ्के व्यवस्थिते। ललिताख्याऽभवल्लक्ष्मीर्म्मातङ्गी तु सरस्वती। गणाध्यक्षः पूर्वभागे तस्य शैलस्य संस्थितः। सिद्धः स नाम्ना विख्यातो द्वारि देव्याः प्रियः सुतः। कल्पवृक्षः कल्पवल्ली तिन्तिड़ी चापराजिता। भूतास्तस्मिन्महाशैले स्थिते देव्या धृतप्रिये। वराहः पाण्डुनाथाख्यः स्थितस्तत्र हरिर्यतः। जघने शिरसी कृत्वा जघान मधुकैटभौ। तस्यासन्ने ब्रह्मकुण्डं ब्रह्मणा निर्म्मितं पुरा। ईशानाख्यं शिरोरत्नं तत् सिद्धेश्वरसंज्ञकम्। शिलाकुलं सिद्धकुण्डं मध्यस्थं विद्धि भैरव!। तस्यासन्ने गयाक्षेत्रं क्षेत्रं वाराणसी तथा"। "योनिमण्डलसङ्काशं कुण्डं भूत्वा व्यवस्थितम्। तत्रैवामृतकुण्डन्तु सुधासंघप्रपूरितम्। मम प्रियार्थमिन्द्रेण स्थापितं सह निर्ज्जरैः। वामदेवाह्वयं शीर्षं श्रीकामेश्वरसंज्ञकम्। कामकुण्डं महापुण्यं तस्यासन्ने व्यवस्थितम्। केदारसंज्ञकं क्षेत्रं मध्यस्थं सिद्धकामयोः। दीर्घं चतुर्द्दशव्यामं छायाच्छत्राह्वयं तु तत्। तस्यासन्ने शैलपुत्री गुप्तकामाह्वया तु सा। गुप्तकुण्डस्य मध्यस्था

कामेशप्रावृषि सङ्गता। कामेश्वरशिलासक्ता कामाख्यासंज्ञिता सदा। पूर्व्वभागेण संसक्ता योनेस्तु परभागतः। कामककामाख्ययोर्म्मध्ये कालरात्रिर्व्यवस्थिता। पीठे दीर्घेश्वरी नाम्ना सीमाभागे प्रचण्डिका। कामाख्याप्रस्तरप्रान्ते कुष्माण्डी नाम योगिनी। पीठे कोटीश्वरी नाम्ना योनिरूपेण संस्थिता। यच्चाघोराह्वयं शीर्षं तत् कामायास्तु दक्षिणे। पीठे भैरवनामा तु गीयते परमर्षिभिः। चामुण्डाभैरवी नाम्ना भैरवासन्नसंस्थिता। नायिका कामदा भक्ते, चण्डमुण्डविनाशिनी। कामाभैरवयोर्म्मध्ये स्वयं देवी सुरापगा। हिताय सर्व्वजगतां देव्यास्तु प्रीतये स्थिता। सद्योजाताह्वयं शीर्षं पीठे त्वाम्रातकेश्वरम्। भैरवाख्ये गह्वरे तु स्थितं देवर्षिसेवितम्। विद्धि तत्रैव दुर्गाख्यां नायिकां योगरूपिणाम्। सिद्धकामेश्वरीं नाम्ना ख्यातां देवेषु नित्यशः। अजीर्णपत्रः सुच्छायो वृक्षस्तत्र तु संस्थितः। आम्रातकः कल्पवृक्षः कल्पवल्लीसमन्वितः। पीठे तु सिद्धगङ्गाख्या स्वयं गङ्गा समुत्थिता। आम्रातकस्य निकटे मम प्रीतिविवृद्धये। पुष्कराख्यन्तु तत् क्षेत्रं पीठे त्वाम्रातकाह्वयम्। ऐशान्यां तत्पुरुषाख्यं मम शीर्षं व्यवस्थितम्। भुवनेश्वरनाम्ना तु पीठे ख्यातञ्च भैरव!। गह्वरं भुवनेशस्य भुवनानन्दसंज्ञकम्। तस्याग्रे तु सुरभिः शिलारूपेण संस्थिता। कामधेनुरिति ख्याता पीठे कामप्रदायिनी। योऽसौ सरभमूर्त्तिस्तु मध्यखण्डप्रचण्डकः। चण्डभैरवनामाऽभूत् कोटिलिङ्गाह्वयस्तु सः। मूर्त्तिभिः पञ्चभिः पञ्चभागेषु समवस्थितः। अहं पश्चादतिप्रीत्या भैरवाख्यः स्थितोऽम्बरे। महागौरी तु यद्देशे योगिनी सिद्धरूपिणी। सा ब्रह्मपर्वते चास्ते शिलारूपेण चोद्धृतः। अतीवरूपसम्पन्ना नाम्ना सा त्वपराजिता। कामधेनोरदूरस्था पूर्व्वभागे महेश्वरी। श्रीकामाख्या योनिरूपा चण्डिका सा तु योगिनी। आग्नेय्यां विद्धि तां संस्थां सर्व्वकामप्रदां शुभाम्। योगिनी चण्डघण्टाख्या पीठेऽभूत् विन्ध्यवासिनी। योगिनी स्कन्दमाता तत्पीठेऽभूद्वनवासिनी। कात्यायनीपीठनाम्ना पाददुर्गेति गद्यते। नैरृत्यां नीलशैलस्य प्रान्ते सा संस्थिता शिवा। योऽसौ नन्दी मम तनुः स तु पाषाणरूपधृक्। संस्थितः पश्चिमद्वारि हनूमान् पीठनामतः"।

क्षेत्रपरत्वमप्युक्तं देवीगीतायाम् यथा "श्रीमत् त्रिपुरभैरव्याः कामाख्या योनिमण्डलम्। भूमण्डले क्षेत्ररत्नं महामायाधिवासितम्। नातःपरतरं स्थानं क्वचिदस्ति धरातले। प्रतिमासं भवेद्देवी यत्र साक्षाद्रजस्वला। तत्रत्याः देवताः सर्व्वाः पर्व्वतात्मकतां गताः। पर्व्वतेषु वसन्त्येव महत्यो देवता अपि। तत्रत्या पृथिवी सर्व्वा देवीरूपा स्मृता बुधैः। नातःपरतरं स्थानं कामाख्यायोनिमण्डलात्"।

**कामाग्निसन्दीपन** न० भैषज्यरत्नावलीदर्शिते मोदकभेदे "कर्षौरसैगन्धकमभ्रकञ्च द्विक्षारचित्रे लवणानि पञ्च। शठीयमानीद्वयकीटहारितालीशपत्राण्यपरं द्विकर्षम्। जीरं चतुर्जातलवङ्गजातिफलञ्च कर्षत्रयमेवमन्यत्। सद्वृद्धदारं कटुकत्रयञ्च तथा चतुष्कर्षमितं निबोध। धन्याकयष्टीमधुकं कशेरु, कर्षाः पृथक् पञ्च वरी विदारी। वीरेभकाणभवलात्मगुप्तावीजं तथा गोक्षुरवीजयुक्तम्। सवीजपत्रेन्द्ररजःसमानं समा सिता क्षौद्रघृतञ्च तुल्यम्। कर्षैकमिन्दोरथ मोदकं तत् कामाग्निसन्दीपनमेतदुक्तम्"। तद्गुणाश्च कामस्याग्नेश्च दीपकतादयस्तत्रोक्ता द्रष्टव्याः।

**कामाङ्कुश** पु० कामे कामोद्दीपने अङ्कुशइव। १ नखे त्रिका० तस्याघातेन कामोद्दीपनात् तस्य तथात्वम्। कामस्य च तिथिभेदे स्थानविशेषे नखाघातेन यथोद्दीपनं भवति तथा स्मरदीपिकायामुक्तं तच्च वाक्यं कामशब्दे दर्शितम्। २ पुंसोलिङ्गे जटाधरः। कामस्याङ्कुशइव। ३ कामप्रतिरोधके च। [वृक्षे जटाधरः।

**कामाङ्ग** पु० कामं कामोद्दीपनम् अङ्गं मुकुलमस्य। आम्र-

**कामात्मज** पु० ६त०। अनिरुद्धे।

**कामात्मन्** पु० कामप्रधानः रागप्रधान आत्मा मनोयस्य। रागप्रधानचित्ते। "कामात्मता न प्रशस्ता न चैवेहास्त्यकामता" मनुः। कामः तदायत्तः आत्मा स्वरूपं यस्य। २ कामायत्तस्वरूपे कामप्रसक्ते ३कामभये च। "कामात्मानं तदात्मानं न शशाक नियच्छितुम्" भा० आ० १८४ श्लो०। कामात्मानं काममयमात्मानमन्तःकरणम् नियच्छितुमित्यार्षः नियन्तुमित्यर्थे।

**कामाधिष्ठान** न० ६त०। इन्द्रियमनोबुद्धिषु "इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते" गीतायामिन्द्रियादीनां अस्य—कामस्याधिष्ठानत्वोक्तेस्तेषां तथात्वम्।

**कामानशन** न० काममनशनम्। यथेष्टभोजनरहिते तपोभेदे। रागद्वेषादिरहितैरिन्द्रियैः विषयसेवनेऽपि यथेष्टानशनं भवत्येवेति बोध्यम्।

**कामान्ध** पुंस्त्री कामेन कामोद्दीपनेन अन्धयति अन्ध—णिच्-अच्। १कोकिले राजनि०। तद्ध्वनिना हि कामस्योद्दीपनात्तस्य तथात्वम्। स्त्रियां जातित्वात् ङीष्। कामेनान्धः ६त०। २स्मरान्धे स्मरवेगेन कर्त्तव्यताज्ञानशून्ये त्रि०।

**कामान्धा** स्त्री कामं यथेष्टमन्धयति अन्ध—अच्। कस्तूर्य्यां राजनि०। तस्याः कामोद्दीपनत्वेन यथेष्टान्धकारतुल्यत्वात् तथात्वम्।

**कामायुध** पु० कामस्यायुधमिव सुकुले आकारोऽस्त्यस्य अच्। आम्रवृक्षे राजनि०। ६त०। कामस्यास्त्रे न०।

**कामायुस्** पु० कामं यथेष्टमायुर्यस्य। गरुड़े त्रिका०।

**कामारण्य** न० कामं शोभनमरण्यम्। मनोहरवने शब्दर०।

**कामारि** पु०६त०। १महादेवे। २मान्तिकोपधातुभेदे च हेमच०।

**कामार्त्त** त्रि० कामेन ऋतः ३त० वृद्धिः। कामेन पीडिते "कामार्त्ता हि प्रकृतिचपलाश्चेतनाचेतनेषु" मेघ०

**कामालिका** स्त्री काममलति भूषयति अल—भूषणे ण्वुल् टापि अत इत्त्वम्। सुरायां हारा०।

**कामालु** पु० कामं यथेष्टमलति पुष्पविकाशेन अल—पर्य्याप्तौ उण्। रक्तकाञ्चने शब्दच०। तस्य पुष्पेण सर्व्वावयवव्यापनात् तथात्वम्।

**कामावतार** पु० ६त०। रौक्मिणेये वासुदेवात्मजे।

**कामवशायिता** स्त्री कामेन इच्छया अवशाययति पदार्थान् स्वचित्ते अव+शी-णिच्-णिनि तस्य भावः तल्। सत्यसङ्कल्पत्वे योगिनामैश्वर्य्यभेदे शब्दचि०यथेच्छं पदार्थानां स्वचित्ते समावेशनात् योगिनस्तथात्वम्। अन्येषां निश्चेतव्यानुसारेण पदार्थनिश्चयाच्च तथात्वम्।

**कामावसायिता** स्त्री कामेन स्वेच्छयाऽवस्यति पदार्थान् अव+सो—णिनि तस्य भावः तल्। सत्यसङ्कल्पत्वरूपे योगिनामैश्वर्य्यभेदे। "अणिमा लघिमा प्राप्तिः प्राकाम्यञ्च तथेशिता। व्यापित्वञ्च वशित्वञ्च तथा कामावसायिता"। "यथास्य सङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति अन्येषां निश्चया निश्चेतव्यमनुविधीयन्ते" इति सां०कौ०।

**कामासन** न० कामस्यति निपत्यनेन अस—करणे ल्युट् ६त०। रुद्रयामलोक्ते आसनभेदे। तल्लक्षणं यथा "अथ कामासनं वक्ष्ये काममर्द्दनहेतुना। गरुडासनमाकृत्य कनिष्ठाग्रं स्पृशेद्भुवि"। गरुडासनञ्च गरुडासनशब्दे वक्ष्यते

**कामि** त्रि० कम—णिङ्—इण्। कामुके। कामपत्न्यां रत्यां स्त्री मेदि०।

**कामिक** पुंस्त्री कामोऽस्त्यस्य ठन्। १कारण्डवपक्षिणि शब्दर० स्त्रियां जातित्वात् ङीष्। कामेन निर्वृत्तम् ठञ्। २कामेन निर्वृत्ते काम्ये। "देवतास्तस्य तुष्यन्ति कामिकं तस्य सिध्यति" भा०अनु०६०२५श्लो०। स्त्रियां ङीप्। "ततदृष्टिं चकारर्षिस्तस्य वै पुत्रकामिकीम्" भा० अनु० १८६६श्लो०। कामिकं काम्यमधिकृत्य कृतोग्रन्थः अण्। ३काम्याधिकारेण कृते ग्रन्थे हेमाद्रौ तत्प्रमाणानि भूरीणि सन्ति कामधेनुशब्दे दिङ्मात्रं दृश्यम्।

**कामिन्** त्रि० कम—णिङ्—णिनि। १कामनायुक्ते २ अतिशयस्मरवेगयुक्ते च। "स बभूव ततः कामी तया सार्द्धमकामया" भा०आ०४१८४श्लो०। स्त्रियां ङीप् ङीबन्तः ३स्त्रीसामान्ये। काम+भूम्नि प्राशस्त्ये वा इनि ङीप्। ४अतिस्मरवेगयुक्तायां स्त्रियां ५सुन्दर्य्यां च स्त्री अमरः। "केषां नैषा भवति कविता कामिनी कौतुकाय" प्रसन्नरा०। "मधूनि वक्त्राणि च कामिनीनामामोदकर्म्म व्यतिहारमीयुः" माघः। ६भीरुस्त्रियां ७वन्दायां (परगाछा) मेदि०। ८दारुहरिद्रायां सुन्दरवर्णत्वात् तस्या तथात्वम् ९सुरायाञ्च स्त्री राजनि०। तस्याः कामाधिक्यसम्पादकत्वात्तथात्वम्। प्रशस्तः कामोऽस्त्यस्य इनि। १०सत्यसङ्कल्पे परमेश्वरे पु०। "कामी कान्तः कृतागमः" विष्णुस०। ११चक्रवाके १२पारावते च पुंस्त्री मेदि०। १३चटके पुंस्त्री शब्दर०एतेषां कामातिशयवत्त्वात्तथात्वम्। १४चन्द्रे पु०त्रिका०कामोद्दीपकत्वात्तस्य तथात्वम्। १५ऋषभौषधौ पु० सेवनेन कामपोषणात्तस्य तथात्वम्। १६सारसपक्षिणि च पुंस्त्री राजनि० कामुकत्वात्तस्य तथात्त्वम्। सर्व्वत्र स्त्रियां ङीप् १७कामशक्तिभेदे स्त्री। कामिनीविरागानुरागविकृतत्सेवप्रकारादिः वृ०स०दर्शितो यथा "शस्त्रेण वेणीविनिगूहितेन विदूरथं (राजभेदम्) स्वा महिषी जघान। विषप्रदिग्धेन च नूपुरेण देवी विरक्ता किल काशिराजम्। एवं विरक्ता जनयन्ति दोषान् प्राणच्छिदोऽन्यैरनुकीर्त्तितैः किम्?। रक्ता विरक्ताः पुरुषैरतोऽर्थात् परीक्षितव्याः प्रमदाः प्रयत्नात्। स्नेहं मनोभवकृतं कथयन्ति भावानाभीभुजस्तनविभूषणदर्शनानि। वस्त्राभिसंयमनकेशविमोक्षणानि भ्रूक्षेपकम्पितकटाक्षनिरीक्षणानि। उच्चैःष्ठीवनमुत्कटप्रहसितं शय्यासनोत्सर्पणं गात्रास्फोटनजृम्भणानि सुलभद्रव्याल्पसम्प्रार्थना। बालालिङ्गनचुम्बनान्यभिमुखे सख्याः समालोकनं दृक्पातश्च पराङ्मुखे गुणकथा कर्णस्य कण्डूयनम्। इमां च विन्द्याद्दुरतश्चेष्टां प्रियाणि वक्ति

स्वधनं ददाति। विलोक्य संहृष्यति वीतरोषा प्रमार्ष्टि दोषान् गुणकीर्त्तनेन। तन्मित्रपूजा तदरिद्विषत्वं कृतस्मृतिः प्रोषितदौर्मनस्यम्। स्तनौष्ठदानान्युपगूहनं च स्वेदोऽथ चुम्बाप्रथमाभियोगः। विरक्तचेष्टा भ्रुकुटीमुखत्वं पराङ्मुखत्वं कृतविस्मृतिश्च। असंभ्रमोदुष्परितोषता च तद्विष्टमैत्री परुषं च वाक्यम्। स्पृष्ट्वाथवालोक्य धुनोति गात्रं करोति गर्वं न रुणद्धि यान्तम्। चुम्बाविरामे वदनं प्रमार्ष्टि पश्चात्समुत्तिष्ठति पूर्वसुप्ता। भिक्षाणिका प्रव्रजिता दासी धात्री कुमारिका रजिका। मालाकारी दुष्टाङ्गना सखी नापिती दूत्यः। कुलजनविनाशहेतुर्दूत्यो यस्मादतः प्रयत्नेन। ताभ्यः स्त्रियोऽभिरक्ष्या वंशयशोमानवृद्ध्यर्थम्। रात्रीविहारजागररोगव्यपदेशपरगृहेक्षणिकाः। व्यसनोत्सवाश्च संकेतहेतवस्तेषु रक्ष्याश्च। आदौ नेच्छति नोज्झति स्मरकथां व्रीडाविमिश्रालसा मध्ये ह्रीपरिवर्ज्जिताभ्युपरमे लज्जाविनम्राननाः। भावैर्नैकविधैः करोत्यभिनयं भूयश्च या सादरा बुद्ध्वा पुम्प्रकृतिं द यानुचरति ग्लानेतरैश्चेष्टितैः। स्त्रीणां गुणा यौवनरूपवेषदाक्षिण्यविज्ञानविलासपूर्वाः। स्त्रीरत्नसञ्ज्ञा च गुणान्वितासु स्त्रीव्याधयोऽन्याश्चतुरस्य पुंसः। न पाश्यवर्णैर्मलदिग्धकाया निन्द्याङ्गसम्बन्धिकथां च कुर्यात्। न चान्यकार्य्यस्मरणं रहःस्था मनो हि मूलं हरदग्धमूर्त्तेः। श्वासं प्रकम्पेण समं त्यजन्ती बाहूपधानस्तनदानदक्षा। सुगन्धकेशा प्रसभोपरागा सुप्तेऽनुसुप्ता प्रथमं विबुद्धा। दुष्टस्वभावाः परिवर्ज्जनीया विमर्दकालेषु च न क्षमा याः। यासामसृग्वा सितनीलपीतमाताम्रवर्णं च न ताः प्रशस्ताः। या स्वप्नशीला बहुरक्तपित्ता प्रवाहिनी वातकफातिरिक्ता। महाशना स्वेदयुताङ्गदुष्टा या ह्रस्वकेशी पलितान्विता च। मांसानि यस्याश्च चलन्ति नार्य्या महोदरा खिक्खिमिनी च या स्यात्। स्त्रीलक्षणे याः कथिताश्च पापास्ताभिर्न कुर्यात्सह कामधर्म्मम्। शशशोणितसङ्काशं लाक्षारससन्निकाशमथवा यत्। प्रक्षालितं विरज्यति यच्चासृक् तद्भवेच्छुद्धम्। यच्छब्दवेदनावर्जितं त्र्यहात्सन्निवर्तते रक्तम्। तत् पुरुषसम्प्रयोगादविचारं गर्भतां याति। न दिनत्रयं निषेवेत् स्नानं माल्यानुलेपनं च स्त्री। स्नायाच्चतुर्थदिवसे शास्त्रोक्तेनोपदेशेन। पुष्पस्नानौषधयो याः कथितास्ताभिरम्बुमिश्राभिः। स्नायाच्चयात्र मन्त्रः स एव यस्तत्र निर्दिष्टः। युग्मासु किल मनुष्या निशासु नार्य्यो भवन्ति विषमासु। दीर्घायुषः सुरूपाः सुखिनश्च विशिष्ट (प्रशस्त) युग्मासु। दक्षिणपार्श्वे पुरुषो, वामे नारी, यमावुभयसंस्थौ। यदुदरमध्योपगतं नपुंसकं तच्चिबोद्धव्यम्। केन्द्रत्रिकोणेषु शुभस्थितेषु लग्ने शशाङ्के च शुभैः समेते। पापैस्त्रिलाभारिगतैश्च यायात् पुञ्जन्मयोगेषु च सम्प्रयोगम्। न नखदशनविक्षतानि कुर्याद् ऋतुसमये पुरुषः स्त्रियाः कथञ्चित्। ऋतुरपि दश षट् च वासराणि प्रथमनिशात्रितयं न तत्र गम्यम्”।

“आयुःक्षयभयाद्विद्वान्नाङ्गि सेवेत कामिनीम्। अवशो यदि सेवेत तदा ग्रीष्मवसन्तयोः” इति सामान्यत उक्त्वा बालाद्यवस्थापन्नकामिनीनां सेवने फलम्, कामिनीसेवनप्रकारश्च भावप्र० दर्शितो यथा

“बालेति गीयते नारी यावद्वर्षाणि षोडश। ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि। तदूर्द्ध्वमधिरूढ़ा स्यात् पञ्चाशद्वत्सरावधि। वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्जिता। अधिरूढा प्रौढ़ा। निदाघशरदोर्बाला हिता विषयिणी (भोगार्हा) मता। तरुणी शीतसमये प्रौढ़ा वर्षावसन्तयोः। नित्यम्बाला सेव्यमाना नित्यं वर्द्धयते बलम्। तरुणी ह्रासयेच्छक्तिं प्रौढोद्भावयते जराम्। सद्यो मांसनवञ्चान्नं बाला स्त्री क्षीरभोजनम्। घृतमुष्णोदके स्नानं सद्यः प्राणकराणि षट्। पूति मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि। प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट्। प्राणशब्दोऽत्र बलवाचकः। बालार्कः कन्यार्कः। वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात्। वयोऽधिकां स्त्रियङ्गत्वा तरुणः स्थविरायते। आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विताः। स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संमताः। सेवेत कामतः कामं बलाद्वाजीकृतो हिमे। प्रकामन्तु निषेवेत मैथुनं शिशिरागमे। त्र्यहाद्वसन्तशरदोः पक्षात् वृष्टिनिदाघयोः। सुश्रुतस्तु “त्रिभिस्त्रिभिरहोभिर्हि समेयात्प्रमदां नरः। सर्व्वेष्वृतुषु घर्म्मेषु पक्षात्पक्षाद्व्रजेद्बुधः”। समेयात् सङ्गच्छेत घर्म्मेषु ग्रीष्मेषु। “शीते रात्रौ दिवा ग्रीष्मे वसन्ते तु दिवानिशि। वर्षासु वारिदध्वाने शरत्सु सरसः स्मरः। उपेयात् पुरुषो नारीं सन्ध्ययोर्नच पर्व्वसु। गोसर्गे चार्द्धरात्रे च तथा मध्यदिनेऽपि च। विहारम्भार्य्यया कुर्य्याद्देशेऽतिशयसंवृते। रम्ये स्रव्याङ्गनागाने सुगन्धे सुखमारुते। देशे गुरुजनासन्ने विवृतेऽतित्रपाकरे। श्रूयमाणे व्यथाहेतुवचने न रमेत ना। स्नातश्चन्दनलि-

प्राङ्गः सुगन्धः सुमनोऽन्वितः। भुक्तदृष्यः सुवसनः सुवेशः समलङ्कृतः। ताम्बूलवदनः पत्न्यामनुरक्तोऽधिकस्मरः। पुत्रार्थी पुरुषो नारीमुपेयाच्छयने शुभे। अत्याशितोऽधृतिः क्षुद्वान् सव्यथाङ्गः पिपासितः। बालो वृद्धोऽन्यवेगार्त्तस्त्यजेद्रोगी च मैथुनम्। रोगी मैथुनसंवर्द्धनीयरोगयुक्तः। भार्य्यां रूपगुणोपेतां तुल्यशीलां कुलोद्भवाम्। अभिकामोऽभिकामान्तु हृष्टो हृष्टामलङ्कृताम्। सेवेत प्रमदां युक्त्या वाजीकरणबृंहितः। रजस्वलामकामाञ्च मलिनामप्रियान्तथा। वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीडिताम्। हीनाङ्गीं गर्भिणीं द्वेष्यां योनिरोगसमन्विताम्। सगोत्रां गुरुपत्नीञ्च तथा प्रव्रजितामपि। नाभिगच्छेत् पुमान्नारीं भूरिवैगुण्यशङ्कया। रजस्वलाङ्गतवतो नरस्यासंयतात्मनः। दृष्ट्यायुस्तेजसां हानिरधर्मश्च ततो भवेत्। लिङ्गिनीं गुरुपत्नीञ्च सगोत्रामथ पर्व्वसु। वृद्धाञ्च सन्ध्ययोश्चापि गच्छतो जीवनक्षयः। लिङ्गिनीं प्रव्रजिताम्। गर्भिण्यां गर्भपीड़ा स्याद्व्याधितायां बलक्षयः। हीनाङ्गीं मलिनां द्वेष्यां क्षामामवन्ध्यामसं वृते। देशेऽभिगच्छतो रेतः क्षीणं म्लानं मनो भवेत्। गर्भिणीं गर्भवासदिवसात् द्वितीये मासि, गर्भस्थितेरनिश्चये यथोक्तलक्षणादिलाभाभावे वा तृतीये मासि पुंसवने कृते नाभिगच्छेत्। यतः पुंसवनानन्तरमाह व्यासः "ततस्त्यजेन्नदीतीरं देवखातोदकं तथा। भर्त्तुः शय्यां मृतापत्यां तथैवामिषभोजनम्"। अन्यच्च "आमिषस्याशनं यत्नात्प्रमदा परिवर्ज्जयेत्। देवारामनदीयानं प्रयोगं पुरुषस्य चेति"। क्षुधितः क्षुब्धचित्तश्च मध्याह्ने तृषितोऽबलः। स्थितस्य हानिं शुक्रस्य वायोः कोपञ्च विन्दति। व्याधितस्य रुजा क्लीबा मूर्च्छा मृत्युश्च जायते। प्रत्यूषे चार्द्धरात्रे च वातपित्ते प्रकुप्यतः। तिर्य्यग्योनावयोनौ वा दुष्टयोनौ तथैव च। उपदंशस्तथा वायोः कोपः शुक्रसुखक्षयः। उच्चारिते मूत्रिते च रेतसश्च विधारणे। उत्ताने च भवेत् शीघ्रं शुक्राश्मर्यास्तु सम्भवः। सर्व्वमेतत्त्यजेत्तस्माद्दृयतो लोकद्वयाऽहितम्। शुक्रन्तूपस्थितम्मोहान्न सन्धार्य्यं कदाचन। स्नानं सशर्करं क्षीरं भक्ष्यमैक्षवसंयुतम्। वातोमांसरसः स्वप्नो सुरतान्ते हिता अमी। स्थूलकासज्वरश्वासकार्श्यपाण्ड्वामयक्षयाः। अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः"।

**कामिनीश** पु० कामिन्याः कामिनीप्रियाञ्जनस्य ईशः तत्-साधनत्वात्। शोभाञ्जनवृक्षे शब्दच०। तस्य कामिनीप्रियाञ्जनहेतुत्वात् तथात्वम्।

**कामीन** पु० काममनुगच्छति ख। १रामपूगे त्रिका०। कामानुगते त्रि०। कामील इति त्रिका० पाठान्तरं पृषो०। रामपूगे।

**कामुक** त्रि० कमः उकञ्। १अशोकवृक्षे २माधवीलतायाम् मेदि०। ३चटके पुंस्त्री राजनि०। मैथुनेच्छावति त्रि० अम०। स्त्रियां ङीप्। इच्छामात्रयुक्ते त्रि० अम० तत्र स्त्रियां न ङीप् किन्तु टाप् इति भेदः "बोधयित्वा शुभैर्वाक्यैः कामिनीमिव कामुकः" रामा०।

**कामुककान्ता** स्त्री ६त०। माधवीलतायाम् राजनि०।

**कामुकायन** पु०स्त्री कामुकस्यापत्यं नड़ादि० फक्। कामुकापत्ये स्त्रियां ङीप्।

**कामेश्वर** पु० कामानामीश्वरः। १परमेश्वरे २भैरवीभेदे स्त्री "कामेश्वरी च रुद्राणां पूर्व्वसिंहासने स्थिता" तन्त्रसा० कामाख्यापञ्चमूर्त्त्यन्तर्गते ३ मूर्त्तिभेदे च स्त्री "देव्याश्चापि नरश्रेष्ठ! पञ्च रूपाणि भैरव!। शृणु वेताल! गुह्यानि देवैरपि सदैव हि। कामाख्या १त्रिपुरा २चैव तथा कामेश्वरी ३ शिवा ४। सारदा ५ऽथ महोत्साहा कामरूपगुणैर्युता" कालिका पु०६१अ०।

**कामोदक** न० कामेन स्वेच्छता प्रेतोद्देशेन दीयमानम् उदकम्। प्रेतोद्देशेन स्वेच्छया दीयमाने उदके। स्वेच्छया तद्दानञ्च प्रेतविशेषायैव यथाह मनुः "नाद्विवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया। जातदन्तस्य वा कुर्य्युर्नाम्नि वाऽपि कृते सति" अत्र वाशब्देन इच्छया तद्दानम्। व्यक्तमाह लौगाक्षिः "तूष्णीमेवोदकं कार्यं तूष्णीं संस्कारमेव च। सर्वेषां कृतचूड़ानामन्यत्रापीच्छया द्वयम्" चौलकर्मानन्तरकाले नियमेनाग्न्युदकं कार्य्यम् अन्यत्रापि नामकरणादूर्द्ध्वमकृतचूडेऽपि इच्छया प्रेताभ्युदयकामनया द्वयमग्न्युदकदानाख्यं तूष्णीं कार्य्यं न नियमेनेति विकल्पः" मिता०

**कामोदा** स्त्री कुत्सितो मोदो यस्याः। रागिणीभेदे हला०।

**काम्पिल्य** पु० १देशभेदे शब्दरत्ना० २पुरभेदे च। "माकन्दीमथ गङ्गायास्तीरे जनपदायुताम्। सोऽध्यवात्सीत् दीनमनाः काम्पिल्यञ्च पुरोत्तमम्"। दक्षिणांश्चापि पाञ्चालान् यावत् चर्म्मण्वतीं नदीम्। द्रोणेन चैवं द्रुपदः परिभूयाऽथ पालितः" भा० आ० १८०। "काम्पिल्ये ब्रह्मदत्तस्य त्वन्तःपुरनिवासिनी" भा० शा० १३९ अ०। तत्र जातादि "धन्वयोपधाद्वुञ्" पा० वुञ्। काम्पिल्यक

तद्भवादौ। काम्पिल्यदेशः उत्पत्तिस्थानत्वेनास्त्यस्य अच्। (गुड़ारोचना) २नामगन्धद्रव्ये अस्यैव चूर्णम् (कमला गुडि) काम्पिल्ल काम्पिल्यक एतावप्यत्र पृषो०साधु।

**काम्पिल्लका** स्त्री देशभेदे हारावली।

**काम्पील** पु० पृषो० काम्पिल्यशब्दार्थे "देवीं काम्पील वासिनीम्" यजु० २३।१८। स्वार्थे कन् तथार्थे।

**काम्बल** पु० कम्बलेन परिवृतो रथः अण्। कम्बलपरिवृते रथे अमरः।

**काम्बविक** पु० स्त्री कम्बुः शङ्खभूषणं शिल्पमस्य ठक्। "येषाञ्च विरोधः शाश्वतिकः" पा० निर्देशात् "इसुसुक्तान्तात् कः" पा० इत्यस्यानित्यत्वेन न कादेशः किन्तु ठस्येकः। शङ्खकारे (शाँखारी) अमरः स्त्रियां जातित्वात् ङीष्। [गन्धायाम् रत्नमाला।

**काम्बुका** स्त्री० कुत्सितमम्बु यस्य कोः कादेशः कप्। अश्व-

**काम्बोज** त्रि०कम्बोजोऽभिजनो यस्य सिन्ध्वा०अण्। पित्रादिक्रमेण कम्बोजदेशवासिनि स्त्रियां ङीप्। कम्बोजदेशे भवः कच्छा०अण्। कम्बोजभवेऽमनुष्ये त्रि० "शतं" यस्तु काम्बोजान् ब्राह्मणेभ्यः प्रयच्छति" भा०शा०३५अ०। २सोमवल्के ३पुन्नागवृक्षे च पु० मेदि०। कम्बोजानां जनपदानां राजा अण्। ४कम्बोजदेशनृपे "शकायवनकाम्बोजास्तास्ताः क्षत्रियजातयः। वृषलत्वं परिगता ब्राह्मणानामदर्शनात्" भा०अनु०३३अ०। न केवलं तेषां शूद्रत्वं किन्तु सगरेण वेशान्यत्वं धर्म्महीनत्वं च कृतं तच्च हरिवं १४अ०वर्णितं यथा। "ततः शकान् सयवनान् काम्बोजान् पारदांस्तथा। पह्लवांश्चाथ निःशेषान् कर्त्तुं व्यवसितः किल। ते बध्यमाना वीरेण सगरेण महात्मना। वशिष्ठं शरणं गत्वा प्रणिपेतुर्मनीषिणम्। वशिष्ठस्त्वथ तान् दृष्ट्वा समयेन महाद्युतिः। सगरं वारयामास तेषां दत्त्वाऽभयं तदा। सगरस्तु प्रतिज्ञाय गुरोर्वाक्यं निशम्य च। धर्मं जघान तेषां वै वेशान्यत्वं चकार ह। अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत्। यवनानां शिरः सर्व्वं काम्बोजानां तथैव च। पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः। निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना। शका यवनकाम्बोजाः पारदाः पह्लवास्तथा। कोलिसर्पाः समहिषाः दार्व्वाश्चोलाः सकेरलाः। सर्वे ते क्षत्रियास्तात! धर्मस्तेषां निराकृतः। वशिष्ठवचनाद्राजन्! सगरेण महात्मना"। तेन तेषां प्राक्क्षत्रियत्वेऽपि पश्चात् सगरेण स्वधर्मनिराकरणेन निःस्वाध्यायतादिकरणेन च म्लेच्छत्वं कृतम्। कम्बोजेषु भवा अमनुष्यतत्स्थत्वात् कच्छा० अण् ङीप्। ५माषपर्ण्याम् (माषाणी) अम०। ६श्वेतखदिरे (पापड़ीखएर) मेदि०। ७गुञ्जायां (कुँच) ८वाकुच्याम् (हाकुच) च स्त्री राजनि०।

**काम्बोजक** न० कम्बोजे भवो मनुष्यस्तत्स्थो वा "मनुष्यतत्स्थयोर्वुञ्" पा०वुञ्। कम्बोजदेशभवे १मनुष्ये २तत्स्थे हास्यादौ च।

**काम्य** त्रि० कम–णिङ् कर्मणि यत्। १कामनाविषये "काम्योहि वेदाधिगमः कर्मयोगश्च वैदिकः" मनुः। "काम्यानां स्वफलार्थञ्च दोषघातार्थमेव च। अतः काम्यं नैमित्तिकं प्रायश्चित्तमिति स्थितिः" प्रा० त० जाबालः। काम्यत्वञ्च तत्तत्फलकामनावदधिकारिकर्त्तव्यत्वम्। काम्यकर्मणामपि फलाभिसन्धानाभावेनानुष्ठाने मोक्षदत्वम् तदेतत् मल० त० निर्णीतम्। मनुः "इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्त्यते। निष्कामं ज्ञानपूर्व्वन्तु निवृत्तमुपदिश्यते। प्रवृत्तं कर्म संसेव्य देवानामेति सार्ष्टिताम्। निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै"। "कामनापूर्व्वकं कर्म शरीरप्रवृत्तिहेतुत्वात् प्रवृत्तं तदेव कर्म कामनारहितम् पुनर्ब्रह्मज्ञानाभ्यासपूर्व्वकं संसारनिवृत्तिहेतुत्वात् निवृत्तमुच्यते। सार्ष्टितां समानगतिताम् ऋषेर्गत्यर्थत्वात्। पञ्च भूतान्यत्येति अतिक्रामति मोक्षं प्राप्नोतीत्यर्थः" विष्णुपुराणम्। "विशिष्टफलदाः काम्या निष्कामाणां विमुक्तिदाः"। भगवद्गीतापि "युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्। अयुक्तः कामकारेण फले सक्तो निबध्यते"। युक्त ईश्वराय कर्म्माणि, न फलाय इत्येवं समाहितः, फलं त्यक्त्वा कर्म्माणि कुर्व्वन्निति शेषः शान्तिं मोक्षाख्यां नैष्ठिकीं निष्ठायां भवाम्। सत्त्वशुद्धिज्ञानप्राप्तिसर्व्वकर्मसन्न्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः। अयुक्तस्तद्बहिर्मुखः कामकारेण कामप्रेरिततया कामतः प्रवृत्तेरिति यावत्। फले सक्तः मम फलाय इदं, कर्म करोमीत्येवं फले सक्तो नितरां बन्धं प्राप्नोति तथाचार्ज्जुनं प्रति भगवद्वाक्यम्। "मयि सर्व्वाणि कर्म्माणि सन्न्यस्याध्यात्मचेतसा। निराशीर्निर्म्ममो भूत्वा युध्यस्व विगतज्वरः"। सन्न्यस्य निःक्षिप्य समर्प्य इति यावत्। अध्यात्मचेतसा विवेकबुद्ध्या अहं कर्त्ता ईश्वराय भृत्यवत् करोमीत्यनया बुद्ध्या। निराशीस्त्यक्तकामसङ्कल्पः। अतएव निर्म्ममो ममतारहितः विगत-

ज्वरः विगतसन्तापः। व्यक्तमाह सएव "यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत् तपस्यसि कौन्तेय! तत् कुरुष्व मदर्पणम्"। विष्णुपुराणे। 'कर्म्माण्यसङ्कल्पिततत्फलानि सन्न्यस्य विष्णौ परमात्मरूपे। अवाप्य तां कर्ममहीमनन्ते तस्मिँल्लयं ते त्वमलाः प्रयान्ति"। तां कर्ममहीं भारतवर्षरूपाम्। भाग०एकादशस्कन्धे "वेदोक्तमेव कुर्वाणोनिःसङ्गोऽर्पितमीश्वरे। नैष्कर्म्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः"। वेदोक्तमेव कुर्वाणो न तु निषिद्धम्। ननु कर्मणि क्रियमाणे तस्मिन्नासक्तिस्तत् फलञ्च स्यात् नतु नैष्कर्म्म्यरूपा फलसिद्धिः? अतआह निःसङ्ग इति अनभिनिवेशितवान्, ईश्वरेऽर्पितं न फलोद्देशेन। अथ फलस्य श्रुतत्वात् कर्मणि कृते फलं भवत्येव इत्यत आह रोचनार्था इति। कर्मणि रुच्युत्पादनार्था। अतएव तत्रैव "फलश्रुतिरियं नृणां न श्रेयो रोचनं परम्। श्रेयोविवक्षया प्रोक्ता यथा भैषज्यरोचनम्। उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च। आसक्तमनसोमर्त्या आत्मनोऽनर्थहेतुषु। न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि। कथं युञ्ज्यात् पुनस्तेषु तांस्तमोविशतोबुधः। एवं व्यवस्थितं केचिदविज्ञाय कुबुद्धयः। फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि"। इयं फलश्रुतिर्न श्रेयः- परमपुरुषार्थपरा न भवति किन्तु बहिर्मुखानां मोक्षविवक्षया अवान्तरकर्मफलैः कर्मसु रुच्युत्पादनमात्रम्। यथा भैषज्ये औषधे रुच्युत्पादनम्। यथा 'पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान्। पित्रैवमुक्तः पिबति तिक्तमप्यतिबालकः"। अत्र यथा तिक्तनिम्बादिपानस्य न खलु खण्डलड्डुकादिलाभ एव प्रयोजनम् किन्त्वारोग्यम्। तथा वेदोऽप्यवान्तरफलैः प्रलोभयन् मोक्षायैव कर्म्माणि विधत्ते। ननु कर्मकाण्डे मोक्षस्य नामापि न श्रूयते कुत एवं व्याख्यायते यथाश्रुतस्यैवाघटनादित्यतआह उत्पत्त्येति द्वाभ्याम्। उत्पत्त्या स्वभावतएव कामेषु पश्वादिषु प्राणेषु आयुरिन्द्रियबलवीर्य्यादिषु पुत्रदारादिषु परिपाकतोदुःखहेतुषु अतस्तान् स्वार्थं परमसुखमविदुषः अजानतो अतो नतान् प्रह्वीभूतान् बुधोवेदोयद्बोधयति तदेव श्रेय इति विश्वसितानित्यर्थः तानेवम्भूतान् वृजिनाध्वनि पापे वर्त्मनि देवादियोनौ भ्राम्यतः। पुनस्तमोभूतवृक्षादियोनौ विशतः पशुकाम इति चायुरिन्द्रियादिकाम इति च पुत्रादिकाम इति च कथं पुनस्तेषु स्वयं बुधोवेदोयुञ्ज्यात्। तथासत्यनाप्तः स्यादिति भावः। कथं तर्हि कर्ममीमांसकाः कर्मफलपरतां वदन्ति तत्राह एवमिति व्यवस्थितम्। वेदस्याभिप्रायमविज्ञाय कुसुमिताम् अवान्तरफलरोचनतया रमणीयां परमफलश्रुतिं वदन्ति यतस्ते कुबुद्धयः तदाह हि यस्मात् वेदज्ञा व्यासादयः तथा न वदन्तीति। अतएव निष्कामकर्मणात्मज्ञानमित्युक्तम्। यथा "अयमेव क्रियायोगोज्ञानयोगस्य साधकः। कर्मयोगं विना ज्ञानं कस्यचिन्नैव दृश्यते'। सोऽपि दुरितक्षयद्वारा न साक्षात्। तथाच 'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः। श्रुतिः "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्य्येण तपसा दानेन श्रद्धया यज्ञेनानशनेन चेति" तमात्मानम्। अतएव यज्ञादीनां ज्ञानशेषताश्रवधार्य्य निष्कामेषु कर्मसु प्रवर्त्तते। पण्डितेनापि मूर्खः काम्ये कर्मणि न प्रवर्त्तयितव्यः इत्याह भाग०षष्ठस्कन्धे "स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म हि। न राति रोगिणेऽपथ्यं वाञ्छतेऽपि भिषक्तमः'। राति ददाति। फलकामनानिन्द्यत्वमुक्तं तत्रैव "अकामः सात्त्विकोलोको यत्किञ्चिद्विनिवेदयेत्। तेनैव स्थानमाप्नोति यत्र गत्वा न शोचते। धर्मवाणिजिकामूढाः फलकामा नराधमाः। अर्च्चयन्ति जगन्नाथं ते कामानाप्नुवन्त्यथ। अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्। पङ्क्त्यां प्रतीच्छते देवः सकामेन निवेदितम्। मूर्द्धा प्रतीच्छते दत्तमकामेन द्विजोत्तमाः"। इति वामनपुरा० काम्यमपि दानं विष्णुप्रीतये सार्व्वकालिकम् यथा म०त० "पुरुषोत्तमस्य तुष्ट्यर्थं प्रदेयं सार्व्वकालिकम् श्रीदत्तः "सार्व्वकालिकं मलमासादावपि विष्णुप्रीत्यर्थं देयम्"मल०त०रघु०। "सम्यक् संसाधनं कर्म कर्त्तव्यमधिकारिणा। निष्कामेण सदा पार्थ! काम्यं कामान्वितेन च" प्रा०त०भविष्यपु०। काम्यञ्च "यत्किञ्चित् कुरुते कर्म यज्ञदानजपादिकम्। क्रियते कायिकं यच्च तत्काम्यमिति कीर्त्तितम्" इत्युक्तलक्षणम्। काम्याच्च सर्वाङ्गोपेतात् फलनिष्पत्तिः इति कात्या० श्रौ० प्रतिपादितम् तच्च कात्यायनशब्दे १८६५ पृ० प्रदर्शितम्। २अभिरूपे सुन्दरे च "नासौ न काम्यो नच वेद सम्यक्" रघुः। कामाय हितं यत्। ३कामोद्दीपके त्रि०।

काम्यक न० १वनभेदे। तस्य स्थानादि भा०व०५अ० दर्शितं यथा "सरस्वतीदृषद्वत्यौ यमुनां च निषेव्य ते। ययुर्वनेनैव वनं सततं पश्चिमां दिशम्" इत्युपक्रमे "ततः सरस्वतीकूले समेषु मरुधन्वसु। काम्यकं नाम ददृशुर्वनं मुनिजन-

प्रियम्”। २सरोवरभेदे च। “शैलाभान्नित्यमत्तांश्चाप्यमितः काम्यकं सरः” भा० प्र० ५१अ०।

**काम्यकर्म्मन्** न० कर्मधा०। स्वर्गादीष्टकामनावदधिकारिकर्त्तव्ये ज्योतिष्टोमादौ “तथैव काम्यं यत्कर्म वत्सरात् प्रथमादृते” लघुबौधा०।

**काम्यदान** न० कर्मधा०। स्वर्गादिफलकामनया कर्त्तव्ये दाने “अपत्यविजयैश्वर्य्यस्वर्गार्थं यत्प्रदीयते। दानं तत्काम्यमाख्यातमृषिभिर्धर्मचिन्तकैः” गरुड़पु०। तस्य बन्धहेतुत्वे नामरे प्रावरणसंज्ञा कृता।

**काम्यफल** न० काम्यस्य फलम्। काम्यकर्म्मणः अभिसन्धीयमाने फले। “पितॄन्नमस्ये दिवि ये च मूर्त्ताः स्वधाभुजः काम्यफलाभिसन्धौ। प्रदानशक्ताः सकलेप्सितानां विमुक्तिदा येऽनभिसंहितेषु” प्रा०त० रुचिस्तवः। काम्यानामपि फलाभिसन्धानाभावे मुक्तिफलकत्वमुक्तं काम्यशब्दे। कृत्रिमदेवानां पितॄणां तथात्वोक्त्या स्वतःसिद्धानामाजानदेवानामिन्द्रादीनां तथात्वस्यौचित्यमेव।

**काम्या** स्त्री कम–णिङ् भावे बा० क्यप् स्त्रीत्वम्। कामनायाम् “अष्टैतान्यव्रतघ्नानि आपोमूलं फलं पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्” प्रा०त० बौधा०। “प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया” मनुः। “पुंसः कथं स्यादिह पुत्रकाम्या” इत्यादौ तु “काम्यच्च” पा० सुबन्तात् कर्म्मण इच्छायां काम्यच् ततोभावे अ। स्वपुत्रेच्छा इत्यर्थः। [त्रि०।

**काम्ल** न० कुगतिस० कोः कादेशः। ईषदम्ले १रसे २तद्वति

**काय** त्रि० कः प्रजापतिः, कं सुखं वा ततः देवताद्यर्थे तस्येदं वा अण् “कस्येत्” पा० इदन्तादेशे वृद्धिः। प्रजापतिदेवताके हविरादौ “अथ काय एककपालः पुरोडाशोभवति कं वै प्रजापतिः प्रजाभ्यः,कायेनैकादशकपालेन पुरोडाशेन कुरुते तस्मात्काय एककपालः पुरोडाशोभवति” शत०ब्रा० २,५,२,१२। स्त्रियां ङीप् कायी वशा। “कायं कनिष्ठिकामूले तीर्थमुक्तं करस्य तु” शङ्खोक्ते २कनिष्ठाङ्गुलिमूलस्थानरूपे प्रजापतितीर्थे न०। “ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्। कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन। अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते। कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः” मनुना पवित्रतासाधनतया तत्तत्स्थानस्य तीर्थत्वमुक्तम्। याज्ञ० कनिष्ठदेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च। प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्”। तेन कनिष्ठाङ्गुलिमूलस्य प्रजापतितीर्थत्वात् कायत्वं सुव्यक्तमुक्तम्। एतेन शब्दकल्पद्रुमे मेदिनिस्थकदैवतशब्दस्य ब्राह्मतीर्थपरताव्याख्यानं निर्मूलं ब्राह्मप्राजापत्यतीर्थयोः उक्तस्मृतिषु भेदेन निर्देशात्। कायसम्बन्धिकार्य्योपयोगित्वात् ३मनुष्यतीर्थे न० मेदि०। ४प्रजापतिदेवताके विवाहभेदे पु०। “इत्युक्त्वाऽऽचरतां धर्म्ममिति वाचानुभाष्य च। कन्याप्रदानमभ्यर्च्य प्राजापत्योविधिः स्मृतः” इति प्राजापत्यं परिभाष्य प्राजापत्यकाययोः पर्य्यायत्वाशयेन मनुना तारयन्तीत्यनुवृत्तौ “आर्षोढाजः सुतस्त्रीं स्त्रीन् षट् षट् कायोढजः सुतः” इत्युक्तम्। “कायोढज इत्यत्र वह भावे क्त ऊढं विवाहः कायादूढात् विवाहाज्जायते इत्यर्थः। चीयतेऽदः चि–कर्म्मणि घञ् चेः कत्वम्। ५मूलधने पु०। मूलधनस्य वृद्ध्या उपचीयमानत्वात् तथात्वम् “कायाविरोधिनी शश्वत् पणवृद्ध्या तु कायिका” नारदस्मृतिः। करणे घञ्। स्वभावे ६वस्तुस्वभावेन पदार्थानां चीयमानत्वात् तथात्वम्। चिधातोर्निश्चयपरत्वे कर्म्मणि घञ्। ७लक्ष्ये मेदि० लक्षणेन लक्ष्यस्य निश्चीयमानत्वात्तथात्वम्। भावे घञ्। ८संघे पु० मेदि० चीयते भक्षिताचादिरसैः कर्म्मणि, चीयतेऽस्थ्यादिकमत्र आधारे वा घञ्। ९देहे तस्य विशेषस्वरूपं याज्ञ० मिताक्षरयोर्दर्शितं यथा “कायस्वरूपं विवृण्वन्नाह “तस्य षोढा शरीराणि षट् त्वचो धारयन्ति च। षडङ्गानि तथास्थ्नाञ्च सह षष्ट्या शतत्रयम्” याज्ञ०। तस्यात्मनोयानि जरायुजाण्डजशरीराणि तानि प्रत्येकं षट्प्रकाराणि रक्तादिषड्धातुपरिपाकहेतुभूतषडग्निस्थानयोगित्वेन। तथाह्यन्नरसो जाठराग्निना पच्यमानो रक्ततांप्रतिपद्यते रक्तञ्च स्वकोशस्याग्निना पच्यमानं मांसत्वम्, मांसञ्च स्वकोशानलपरिपक्वं मेदस्त्वम्, मेदोऽपि स्वकोशवह्निना पक्वमस्थिताम्, अस्थ्यपि स्वकोशशिखिपरिपक्वं मज्जात्वम्, मज्जापि स्वकोशपावकपरिपच्यमानश्चरमधातुतया परिणमते। चरमधातोस्तु परिणतिर्नास्तीति सएवात्मनः प्रथमः कोश इत्येवं षट्कोशाग्नियोगित्वात्षट्प्रकारत्वं शरीराणाम्। अन्नरसरूपस्य तु प्रथमधातोरनियतत्वान्न तेन प्रकारान्तरत्वम्। तानि च शरीराणि षट् त्वचोधारयन्ति रक्तमांसमेदोस्थिमज्जाशुक्राख्याः षट् धातव एव रम्भास्तम्भत्वगिव बाह्याभ्यन्तररूपेण स्थिताः। त्वगिवाच्छादकत्वाच्च षट् त्वचोधारयन्ति। तदिदमायुर्वेदे प्रसिद्धम्। तथाङ्गानि च षडेव। करयुग्मं चरण-

युगलमुत्तमाङ्गजालमिति । अस्मात्तु षष्टिसहितं शत-त्रयमुपरितनषट्श्लोक्या वक्ष्यमाणमवगस्यम् । किञ्च "स्थालैः सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः । पाणिपाद-शलाकाश्च तासां स्थानचतुष्टयम्" या० । स्थालानि दन्तमूलप्रदेशस्थान्यस्थीनि द्वात्रिंशत् तैः सह द्वात्रिंश-द्दन्तास्तत्तुःषष्टिर्भवन्ति । नखाः करहहा विंशतिर्हस्त पादस्थानि शलाकाकाराण्यस्थीनि मणिबन्धस्योपरि-वर्त्तीन्यङ्गुलिमूलस्थानि विंशतिरेव । तेषां नखानां शला-कास्थाञ्च स्थानचतुष्टयं, द्वौ चरणौ द्वौ करौ चेत्येवमस्था-चतुरुत्तरं शतम् । किञ्च । "षष्ठ्यङ्गुलीनां द्वे पार्ष्ण्योर्गु-ल्फेषु च चतुष्टयम् । चत्वार्य्यरत्निकास्थीनि जङ्घयोस्तावदेव तु" या० । विंशतिरङ्गुलयस्तासामेकैकस्य त्रीणि त्रीणीत्येव मङ्गुलिसम्बन्धान्यस्थीनि षष्टिर्भवन्ति । पादयोः पश्चिमौ भागौ पार्ष्णी तयोरस्थिनी द्वे एकैकस्मिन् पादे गुल्फौ द्वावित्येवञ्चतुर्षु गुल्फेषु चत्वार्य्यस्थीनि । बाह्वोररत्नि-प्रमाणानि चत्वार्य्यस्थीनि । जङ्घयोश्च तावदेव चत्वार्य्ये वेत्येवञ्चतुःसप्ततिः । किञ्च "द्वे द्वे जानुकपोलोरुफल-कांससमुद्भवे । अक्षतालूषके श्रोणिफलके च विनिर्दि-शेत्" या० । जङ्घोरुसन्धिर्जानुः । कपोलोगल्लः । ऊरुः सक्थि तत्फलकम् । अंसोभुजशिरः । अक्षः कर्ण-नेत्रयोर्मध्ये शङ्खादधोभागः । तालूषकङ्काकुदम् । श्रोणी ककुद्मती तत्फलकम् । तेषामेकैकत्वास्थिनी द्वे द्वे विनिर्दिशेदित्येवं चतुर्दशास्थीनि भवन्ति । किञ्च "भगा-स्थ्येकन्तथा पृष्ठे चत्वारिंशच्च पञ्च च । ग्रीवा पञ्चदशा-स्थिः स्याज्जत्र्वेकैकन्तथा हनुः" या० । गुह्यास्थ्येकं, पृष्ठे पश्चिमभागे पञ्चचत्वारिंशदस्थीनि भवन्ति । ग्रीवा कन्धरा सा पञ्चदशास्थिःस्यात् भवेत् । वक्षोंऽसयोः सन्धि-र्जत्रु प्रतिजत्र्वेकैकम् । हनुश्चिबुकम् । तत्राप्येक-मस्थि इत्येवञ्चतुःषष्टिः । किञ्च "तन्मूले द्वे ललाटाक्षि-गण्डे नासाघनास्थिका । पार्श्वकाः स्थालकैः सार्द्धमर्बु-दैश्च द्विसप्ततिः"या० । तस्य हनोर्मूलेऽस्थिनी द्वे । ललाट-मलिकम् । अक्षि चक्षुः । गण्डः कपोलात्वयोर्मध्यप्रदेशः तेषां समाहारोललाटाक्षिगण्डम् । तत्र प्रत्येकमस्थि-युगलम् । नासाघनसंज्ञकाऽस्थिमती । पार्श्वकाः कक्षाधः-प्रदेशसम्बद्धान्यस्थीनि । तदाधारभूतानि स्थालकानि तैः स्थालकैः अर्बुदैश्चास्थिविशेषैः सह पार्श्वका द्विसप्ततिः । पर्व्वोक्तैश्च नवभिः सार्द्धमेकाशीतिर्भवन्ति । किञ्च "द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा । उरःसप्तदशा-

स्थि स्यात् पुरुषस्यास्थिसंग्रहः" या० । भ्रूकर्णयोर्मध्यप्रदे-शावस्थिविशेषौ शङ्खकौ । शिरसः सम्बन्धीनि चत्वारि क-पालानि । उरोवक्षः तत्सप्तदशास्थिकं इत्येवं त्रयोविंश-तिः । पूर्वोक्तैश्च सह षष्ट्यधिकं शतत्रयमित्येवं पुरुषस्या-स्थिसंग्रहः कथितः । सविषयाणि ज्ञानेन्द्रियाण्याह । "गन्धरूपरसस्पर्शशब्दाश्च विषयाः स्मृताः । नासिकालो-चने जिह्वात्वक्श्रोत्रञ्चेन्द्रियाणि च" या० । एते गन्धादयो विषयाः पुरुषस्य बन्धनहेतवः विषयशब्दस्य षिञ् बन्धन इत्यस्य धातोर्व्युत्पन्नत्वात् । एतैश्च गन्धादिभिर्बोध्यत्वेन व्यवस्थितैः । स्वस्वगोचरसंवित्साधनतयाऽनुमेयानि घ्राणा-दीनि पञ्चेन्द्रियाणि भवन्ति । कर्मेन्द्रियाणि दर्शयितु-माह । "हस्तौ पायुरुपस्थञ्च जिह्वा पादौ च पञ्च वै । कर्मेन्द्रियाणि जानीयान्मनश्चैवोभयात्मकम्" या० । हस्तौ प्रसिद्धौ । पायुर्गुदम् । उपस्थं रतिसम्पाद्यसुखसाधनम् । जिह्वा प्रसिद्धा, पादौ च एतानि हस्तादीनि पञ्च-कर्मेन्द्रियाणि । आदाननिर्हारानन्दाहारविहारादि-कर्मसाधनानि जानीयात् । मनोऽन्तःकरणं युगपज्ज्ञाना-नुत्पत्तिगम्यं तच्च बुद्धिकर्मेन्द्रियसहकारितयोभयात्मकम् । प्राणायतनानि दर्शयितुमाह "नाभिरोजो गुदं शुक्रं शोणितं शङ्खकौ तथा । मूर्द्धांसकण्ठहृदयं प्राणस्यायतनानि तु" या० । नाभिप्रभृतीनि दश प्राणस्य स्थानानि । समाननाम्नः पवनस्य सकलाङ्गचारित्वेऽपि नाभ्यादिस्थान-विशेषवायोर्युक्तिप्राचुर्य्याभिप्रायेण । प्राणायतनानि प्रप-ञ्चयितुमाह । "वपावसावहननं नाभिः क्लोम यकृत् प्लिहा । क्षुद्रान्त्रं बुक्कौ बस्तिः पुरीषाधानमेव च । आमाशयोऽथ हृदयं स्थूलान्त्रं गुदएव च । उदरञ्च गुदौ कोष्ठौ विस्ता-रोऽयमुदाहृतः" या० । वपा प्रसिद्धा । वसा मांसस्नेहः । नाभिः प्रसिद्धा । अवहननं पुप्पुसः । प्लीहा आयु-र्वेदप्रसिद्धः । तौ च मांसपिण्डाकारौ सव्यकुक्षिगतौ । यकृत्कालिका । क्लोम मांसपिण्डस्तौ च दक्षिणकुक्षिगतौ । क्षुद्रान्त्रं हृत्स्थान्त्रम् । बुक्कौ हृदयसमीपस्थौ मांस पिण्डौ । वस्तिर्मूत्राशयः । पुरीषाधानं पुरीषाशयः । आमाशयोऽपक्वान्नस्थानम् । हृदयं हृत्पुण्डरीकम् । स्थूलान्त्रगुदोदराणि प्रसिद्धानि । बाह्यात् गुदवलयाद-न्तर्गुदवलये द्वे । तौ च गुदौ कोष्ठौ कोष्ठे नाभेरधः-प्रदेशे भवौ । अयञ्च प्राणायतनस्य विस्तार उक्तः पूर्व-श्लोके तु संक्षेपः । अतएव पूर्वश्लोकोक्तानां केषाञ्चिदिह पाठः । पुनः प्राणायतनप्रपञ्चार्थमाह । कनीनिके

चाक्षिकूटे शष्कुली कर्णपत्रकौ । कर्णौ शङ्खौ भ्रुवौ दन्तवेष्टावोष्ठौ ककुन्दरे । वङ्क्षणौ वृषणौ वृक्कौ श्लेष्मसङ्घातजौ स्तनौ । उपजिह्वास्फिजौ बाहू जङ्घोरुषु च पिण्डिका । तालूदरवस्तिशीर्षं चिबुके गलशुण्डिके । अवटश्चैवमेतानि स्थानान्यत्र शरीरके । अक्षिकर्णचतुष्कञ्च षड्वस्तहृदयानि च । नवच्छिद्राणि तान्येव प्राणस्यायतनानि तु” या० । कनीनिके अक्षितारके । अक्षिकूटे अक्षिनासयोःसन्धी, शष्कुली कर्णशष्कुली । कर्णपत्रकौ कर्णपाल्यौ । कर्णौ प्रसिद्धौ । दन्तवेष्टौ दन्तपाल्यौ । ओष्ठौ प्रसिद्धौ । ककुन्दरे जघनकूपकौ । वङ्क्षणौ जघनोरुसन्धी । वृक्कौ पर्वोक्तौ । स्तनौ च श्लेष्मसंघातजौ । उपजिह्वा घण्टिका । स्फिचौ कटिप्रोथौ । बाहू प्रसिद्धौ । जङ्घोरुषु च तथा पिण्डिका । जङ्घयोरुर्वोश्च पिण्डिका मांसलप्रदेशः । गलशुण्डिके हनुमूलगलयोः सन्धी । शीर्षं शिरः । अवटः शरीरे व; कश्चिन्निम्नोदेशः कण्ठमूलकलादिः । अवटुरिति पाठे कृकाटिका । तथाक्ष्णोः कनीनिकयोः प्रत्येकं श्वेतपार्श्वद्वयमिति वर्त्मचतुष्टयम् । यद्वाक्षिपुटचतुष्टयम् । शेषं प्रसिद्धम् । एवमेतानि कुत्सिते शरीरे स्थानानि । तथाक्षियुगलं कर्णयुग्मं नासाविवरद्वयमास्यं पायुरुपस्थमित्येतानि पर्वोक्तानि नव छिद्राणि च प्राणस्यायतनान्येव । किञ्च “सिराशतानि सप्तैव नव स्नायुशतानि च” या० । सिरा नाभिसम्बद्धाः चत्वारिंशत्संख्याः वातपित्तश्लेष्मवाहिन्यः सकलकलेवरव्यापिन्यो नानाशाखाः सत्यः सप्तशतसंख्या भवन्ति । तथाङ्गप्रत्यङ्गसन्धिबन्धनाःस्नायवो नव शतानि । धमन्यो नाम नाभेरुद्भूताश्चतुर्विंशतिसंख्याः प्राणादिवायुवाहिन्यः शाखाभेदेन द्विशतं भवन्ति । पेश्यः पुनर्मांसखण्डाकारा ऊरुपिण्डकाद्यङ्गप्रत्यङ्गसम्बन्धिन्यः पञ्च शतानि भवन्ति । पुनश्चासामेव शिरादीनां शाखाप्राचुर्य्येण संख्यान्तरमाह । “एकोनत्रिंशल्लक्षाणि तथा नव शतानि च । षट्पञ्चाशच्च जानीत शिराधमनिसंज्ञिताः” या० । शिराधमन्यो मिलिताः शाखोपशाखाभेदेन एकोनत्रिंशल्लक्षाणि नव शतानि षट्पञ्चाशच्च भवन्तीत्येवं हे सोमश्रवःप्रभृतयो मुनयः ! जानीत । किञ्च “त्रयोलक्षास्तु विज्ञेयाः श्मश्रुकेशाः शरीरिणाम् । सप्तोत्तरं मर्मशतं द्वे च सन्धिशते तथा” या० । शरीरिणां श्मश्रूणि केशाश्च मिलिताः सन्तस्त्रयो लक्षाविज्ञेयाः । मर्माणि मरणकराणि क्लेशकराणि च स्थानानि तेषां सप्तोत्तरं शतं विज्ञेयम् । अस्थ्नान्तु द्वे सन्धिशते स्नायुशिरादिसन्धयः पुनरनन्ताः । सकलशरीरसुषिरादिसंख्यामाह । “रोम्णां कोट्यस्तु पञ्चाशच्चतस्रः कोट्य एव च । सप्तषष्टिस्तथा लक्षाः सार्द्धाः स्वेदायनैः सह । वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः । यद्यप्येकोऽनुवेदैषां भावानाञ्चैव संस्थितिम्” या० । पूर्वोदितशिराकेशादिरहितानां रोम्णां परमाणवः सूक्ष्मसूक्ष्मतररूपाभागाः स्वेदस्रवणसुषिरैः सह चतुःपञ्चाशत्कोट्यः तथा सप्तोत्तरषष्टिलक्षाः सार्द्धाः पञ्चाशत्सहस्रसहिताः वायवीयैर्विभक्ताः पवनपरमाणुभिः पृथक् कृताविगण्यन्ते । एतच्च शास्त्रदृष्ट्या अभिहितम् चक्षुरादिकरणपथगोचरत्वाभावादस्यार्थस्य । इममतिगहनमर्थं शिरादिभावसंस्थानरूपं हे मुनयः ! भवतां मध्ये यदि कश्चिदनुवेद वेत्ति सोऽपि एकोमहान् अग्र्यो बुद्धिमताम् । अतो यत्नतो बुद्धिमता बोद्धव्या भावसंस्थितिः । शारीररसादिपरिमाणमाह “रसस्य नव विज्ञेया जलस्याञ्जलयो दश । सप्तैव तु पुरीषस्य रक्तस्याष्टौ प्रकीर्त्तिताः । षट्श्लेष्मा पञ्च पित्तन्तु चत्वारो मूत्रमेव च । वसात्रयो द्वौ तु मेदो मज्जैकोऽर्द्धन्तु मस्तके । श्लेष्मौजसस्तावदेव रेतसस्तावदेव तु । इत्येतदस्थिरं वर्ष्म यस्य मोक्षाय कृत्यसौ” याज्ञ० सम्यक्परिणताहारस्य साररसस्तस्य परिमाणं नवाञ्जलयः । पार्थिवपरमाणुसंश्लेषनिमित्तस्य जलस्याञ्जलयो दश विज्ञेयाः । पुरीषस्य वर्चस्कस्य सप्तैव । रक्तस्य जाठरानलपरिपाकापादितलौहित्यस्यान्नरसस्याष्टावञ्जलयः प्रकीर्त्तिताः । श्लेष्मणः कफस्य षडञ्जलयः । पित्तस्य तेजसः पञ्च । मूत्रस्योच्चारस्य चत्वारः । वसायामांसस्नेहस्य त्रयः । मेदसो मांसरसस्य द्वावञ्जली । मज्जा त्वस्थिगतसुषिरगतस्तस्यैकोऽञ्जलिः । मस्तके पुनरर्द्धाञ्जलिः । श्लेष्मौजसः श्लेष्मसारस्य । तथा रेतसश्चरमधातोस्तावदेवार्द्धाञ्जलिरेव । एतच्च समधातुपुरुषाभिप्रायेणोक्तम् । विषमधातोस्तु न नियमः । “वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च । दोषधातुमलानां च परिमाणं न विद्यते” इत्यायुर्वेदस्मरणात् । इतोऽशर्मस्थिस्नाय्वाद्यारब्धमेतदशुचिनिधानं वर्ष्मास्थिरमिति यस्य बुद्धिरसौ कृतो पण्डितोमोक्षाय समर्थो भवति वैराग्यनित्यानित्यविवेकयोर्मोक्षोपायत्वात्” मिता० ।

सुश्रुते कायोत्पत्तिकारणोक्तिपूर्व्वकं तत्स्वरूपविभागादिकं दर्शितं यथा ।

“अग्निःसोमो वायुः सत्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः तस्य खल्वेवम्भूतस्य शुक्रशोणितस्याभिपद्यमानस्य

क्षीरस्येव सान्तानिकाः सप्त त्वचो भवन्ति। तासां प्रथमाऽवभासिनी नाम, या सर्व्ववर्णानवभासयति पञ्चविधाञ्च छायां प्रकाशयति सा व्रीहेरष्टादशभागप्रमाणा सिध्मपद्मकण्टकाधिष्ठाना, द्वितीया लोहिता नाम षोडशभागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठाना, तृतीया श्वेता नाम द्वादशभागप्रमाणा चर्म्मदलाजगल्लीमशकाधिष्ठाना, चतुर्थी ताम्रा नामाऽष्टभागप्रमाणा विविधकिलासकुष्ठाधिष्ठाना, पञ्चमी वेदिनी नाम व्रीहिपञ्चभागप्रमाणा, कुष्ठविसर्पाधिष्ठाना, षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्ब्बुदश्लीपदगलगण्डाधिष्ठाना, सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यर्शोऽधिष्ठाना, यदेतत्प्रमाणम् निर्द्दिष्टं तन्मांसलेष्ववकाशेषु न ललाटे सूक्ष्माङ्गुल्यादिषु। यतो वक्ष्यत्युदरेषु व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढम् विध्येदिति।

कलाः खल्वपि सप्त सम्भवन्ति धात्वाशयान्तरमर्य्यादाः। भवतश्चात्र। यथाहि सारः काष्ठेषु छिद्यमानेषु दृश्यते। तथा धातुर्हि मांसेषु छिद्यमानेषु दृश्यते। स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा। श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः। तासां प्रथमा मांसधरा नाम यस्यां मांसे शिरास्नायुधमनीस्रोतसां प्रताना भवन्ति भवति चात्र। यथा बिसमृणालानि विवर्द्धन्ते समन्ततः। भूमौ पङ्कोदकस्थानि तथा मांसे शिरादयः। द्वितीया रक्तधरा नाम मांसस्याभ्यन्तरतस्तस्यां शोणितं विशेषतश्च शिरासु यकृत्प्लीह्नोश्च भवति। भवति चात्र वृक्षाद्यथाभिप्रहतात् क्षीरिणः क्षीरमावहेत्। मांसादेवं क्षतात् क्षिप्रं शोणितं सम्प्रसिच्यते। तृतीया मेदोधरा नाम, मेदो हि सर्व्वभूतानामुदरस्थमण्वस्थिषु च महत्सु च मज्जा भवति। भवति चात्र। स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तराश्रितः। अथेतरेषु सर्व्वेषु सरक्तं मेद उच्यते। शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता। चतुर्थी श्लेष्मधरा नाम सर्व्वसन्धिषु प्राणभृतां भवति। भवति चात्र। स्नेहाभ्यक्ते यथा ह्यक्षे चक्रं साधु प्रवर्त्तते। सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा। पञ्चमी पुरीषधरा नाम, याऽन्तःकोष्ठे मलमभिविभजते पक्वाशयस्था। भवति चात्र। यकृत्समन्तात् कोष्ठञ्च तथान्त्राणि समाश्रिता। उण्डुकस्थं विभजते मलं मलधरा कला। षष्ठी पित्तधरा नाम या चतुर्व्विधमन्नपानमुपयुक्तमामाशयात् प्रच्युतं पक्वाशयोपरिस्थितं धारयति। भवति चात्र। अशितं खादितं पीतं लीढं कोष्ठगतं नृणाम्। तज्जीर्य्यति यथाकालं शोषितं पित्ततेजसा। सप्तमी शुक्रधरा नाम, या सर्व्वप्राणिनां सर्व्वशरीरव्यापिनी। भवन्ति चात्र यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा। शरीरेषु तथा शुक्रं नृणां विद्याद्भिषग्वरः। द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः। मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्त्तते। कृत्स्नदेहाश्रितं शुक्रं प्रसन्नमनसस्तथा। स्त्रीषु व्यायच्छतश्चापि हर्षात्तत् सम्प्रवर्त्तते।

गृहीतगर्भाणामार्त्तववहानां स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण, तस्माद्गृहीतगर्भाणामार्त्तवं न दृश्यते। ततस्तदधः प्रतिहतः मूर्द्ध्वमागतमपरञ्चोपचीयमानमपरेत्यभिधीयते। शेषञ्चोर्द्ध्वतरमागतं पयोधरावभिप्रतिपद्यते तस्माद्गर्भिण्यः पीनोन्नतपयोधरा भवन्ति।

गर्भस्य यकृत्प्लीहानौ शोणितजौ, शोणितफेनप्रभवः फुप्फुसः शोणितकिट्टप्रभव उण्डुकः।

असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः। तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति। ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः। उदरे पच्यमानानामाध्मानाद्रुक्मसारवत्। कफशोणितमांसानां सारो जिह्वा प्रजायते। यथार्थमूष्मणा युक्तो वायुः स्रोतांसि दारयेत्। अनुप्रविश्य पिशितं पेशीर्विभजते तथा।

मेदसः स्नेहमादाय शिरा स्नायुत्वमाप्नुयात्। शिराणां च मृदुः पाकः स्नायूनाञ्च ततः खरः। आशयाऽभ्यासयोगेन करोत्याशयसम्भवम्। रक्तमेदःप्रसादाद्वृक्कौ मांसासृक्कफमेदःप्रसादाद्वृषणौ, शोणितकफप्रसादजं हृदयं यदाश्रया हि धमन्यः प्राणवहाः। तस्याधो वामतः प्लीहा फुप्फुसश्च दक्षिणतो यकृत् क्लोम च। तद्धृदयं विशेषेण चेतनास्थानमतस्तस्मिंस्तमसाऽऽवृते सर्व्वप्राणिनः स्वपन्ति। भवति चात्र। पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम्। जाग्रतस्तद्विकसति स्वपतश्च निमीलति। निद्रान्तु वैष्णवीं पाप्मानमुपदिशन्ति सा स्वभावत एव सर्व्वप्राणिनोऽभिस्पृशति"। इतः परं निद्राविशेषकारणादिकमुक्तं तच्च निद्राशब्दे वक्ष्यते।

"शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसंमूर्च्छितं गर्भ इत्युच्यते। तञ्च चेतनावस्थितं वायुर्व्विभजते तेज एनं पचति, आपः क्लेदयन्ति, पृथिवी संहन्ति, आकाशं विवर्द्धयति। एवंविवर्द्धितः स यदा हस्तपादजिह्वाघ्राणकर्णनितम्बादिभिरङ्गैरुपेतस्तदा शरीरमिति संज्ञां लभते तच्च षडङ्गं शाखाश्चतस्रो मध्यं पञ्चमं षष्ठं शिर इति।"

ततः प्रत्यङ्गविभाग उक्तः तच्च अङ्गशब्दे ७२पृ० दर्शितम्। एवं समासत उक्ता विस्तारत उक्तं यथा

"विस्तारोऽत ऊर्द्ध्वम्। त्वचोऽभिहिताः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयं वृक्कौ च। आशयास्तु वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशय आमाशयः पक्वाशयो मूत्राशयः स्त्रीणां गर्भाशयोऽष्टम इति। सार्द्धत्रिव्यामान्यन्त्राणि पुंसां, स्त्रीणामर्द्धव्यामहीनानि। श्रवणनयनवदनघ्राणगुदमेढ्राणि नव स्रोतांसि नराणां बहिर्मुखान्येतान्येव, स्त्रीणामपराणि च त्रीणि द्वे स्तनयोरधस्ताद्रक्तवहञ्च।

षोडश कण्डराः। तासाञ्चतस्रः पादयोस्तावत्यो हस्तग्रीवापृष्ठेषु। तत्र हस्तपादगतानां कण्डराणां नखाः प्ररोहाः। ग्रीवाहृदयनिबन्धिनीनामधोभागगतानां मेढ्रः श्रोणिपृष्ठनिबन्धिनीनामधोभागगतानां बिम्बः मूर्द्धोरुवक्षोऽक्षपिण्डादीनाञ्च।

मांसशिरास्नाय्वस्थिजालानि प्रत्येकं चत्वारि चत्वारि। तानि मणिबन्धगुल्फसंश्रितानि परस्परनिबद्धानि परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति यैर्गवाक्षितमिदं शरीरम्।

षट् कूर्च्चास्ते हस्तपादग्रीवामेढ्रेषु। हस्तयोर्द्वौ पादयोर्द्वौ ग्रीवामेढ्रयोरेकैकः।

महत्यो मांसरज्जवश्चतस्रः पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये आभ्यन्तरे च द्वे।

सप्त सेवन्यः। शिरसि विभक्ताः पञ्च, जिह्वाशेफसोरेकैका। ताः परिहर्त्तव्याः शस्त्रेण

चतुर्दशास्थ्नां संघाताः। तेषां त्रयो गुल्फजानुवङ्क्षणेषु एतेनेतरसक्थि ३ बाहू च ६ व्याख्यातौ त्रिकशिरसोरेकैकः २।

चतुर्द्दशैव सीमन्ताः। ते चास्थिसंघातवद्गणनीया यतस्तैर्युक्ता अस्थिसङ्घाताः। ये ह्युक्ताः। सङ्घातास्तु खल्वष्टादशैकेषाम्। त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो भाषन्ते। शल्यतन्त्रे तु त्रीण्येव शतानि। तेषां सविंशमस्थिशतं शाखासु। सप्तदशोत्तरं शतं श्रोणिपार्श्वपृष्ठोदरोरस्सु। ग्रीवां प्रत्यूर्द्ध्वं त्रिषष्टिः। एवमस्थ्नां त्रीणि शतानि पूर्य्यन्ते" अस्थिशब्दे ५६८पृ० विवृतिः।

'एकैकस्यान्तु पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश। तलकूर्च्चगुल्फसंश्रितानि दश। पार्ष्ण्यामेकम्। जङ्घायां द्वे। जानुन्येकम्। एकमूराविति। त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थि ३० बाहू ६० च व्याख्यातौ। श्रोण्यां पञ्च तेषां गुदभगनितम्बेषु चत्वारि। त्रिकसंश्रितमेकम्। पार्श्वे षट्त्रिंशदेवमेकस्मिन्, द्वितीयेऽप्येवम् ३६। पृष्ठे त्रिंशत्। अष्टावुरसि। द्वे अक्षकसंज्ञे। ग्रीवायां नवकम्। कण्ठनाड्यां चत्वारि। द्वे हन्वोः। दन्ता द्वात्रिंशत्। नासायां त्रीणि। एकं तालुनि। गण्डकर्णशङ्खेष्वेकैकम्। षट् शिरसि।

एतानि पञ्चविधानि भवन्ति। तद्यथा कपालरुचकतरुणवलयनलकसंज्ञानि। तेषां जानुनितम्बांसगण्डतालुशङ्खशिरस्सु कपालानि। दशनास्तु रुचकानि। घ्राणकर्णग्रीवाक्षिकोशेषु तरुणानि। पाणिपादपार्श्वपृष्ठोदरोरस्सु वलयानि, शेषाणि नलकसंज्ञानि। भवन्ति चात्र।
अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः। अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम्। तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम्। अस्थीनि न विनश्यन्ति साराण्येतानि देहिनाम्। मांसान्यत्र निबद्धानि शिराभिः स्नायुभिस्तथा। अस्थीन्यालम्बनं कृत्वा न शीर्य्यन्ते पतन्ति वा।

सन्धयस्तु द्विविधाश्चेष्टावन्तः स्थिराश्च। शाखासु हन्वोः कट्याञ्च चेष्टावन्तस्तु सन्धयः। शेषास्तु सन्धयः सर्वे विज्ञेया हि स्थिरा बुधैः। सङ्ख्यातस्तु दशोत्तरे द्वे शते तेषां शाखास्वष्टषष्टिरेकोनषष्टिः कोष्ठे ग्रीवां प्रत्यूर्द्ध्वं त्र्यशीतिः। एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयो द्वावङ्गुष्ठे ते चतुर्दश। जानुगुल्फवङ्क्षणेष्वेकैकः ३। एवं सप्तदशैकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थि १७ बाहू ३४ च व्याख्यातौ। त्रयः कटीकपालेषु। चतुर्विंशतिः पृष्ठवंशे तावन्त एव पार्श्वयोः। उरस्यष्टौ तावन्त एव ग्रीवायाम्। त्रयः कण्ठे। नाडीषु हृदयक्लोमनिबद्धास्वष्टादश। दन्तपरिमाणा ३२ दन्तमूलेषु। एकः काकलके नासायाञ्च। द्वौ वर्त्ममण्डलजौ नेत्राश्रयौ। गण्डकर्णशङ्खेष्वेकैकः। द्वौ हनुसन्धी। द्वावुपरिष्टाद्भ्रुवोः शङ्खयोश्च। पञ्च शिरःकपालेषु। एको मूर्द्ध्नि। त एते सन्धयोऽष्टविधाः। कोरोदूखलसामुद्गप्रतरतुन्नसेवनीवायसतुण्डमण्डलशङ्खावर्त्ताः। तेषामङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः सन्धयः। कक्षावङ्क्षणदशनेषूदूखलाः। अंसपीठगुदभगनितम्बेषु सामुद्गाः। ग्रीवापृष्ठवंशयोः प्रतराः। शिरःकटीकपालेषु तुन्नसेवनी। हन्वोरुभयतस्तु वायसतुण्डाः। कण्ठहृदयनेत्रक्लोमनाडीषु मण्डलाः। श्रोत्रशृङ्गाटकेषु शङ्खावर्त्ताः। तेषां नाम-

शिरोयाशतवः प्रायेण व्याख्याताः । अस्थ्नान्तु सन्धयो ह्येते केवलाः परिकीर्त्तिताः । पेशीस्नायुशिराणान्तु सन्धिसङ्ख्या न विद्यते ।

नव स्नायुशतानि तासां शाखासु षट् शतानि । द्वे शते त्रिंशच्च कोष्ठे । ग्रीवां प्रत्यूर्द्ध्वं सप्ततिः । एकैकस्यान्तु पादाङ्गुल्यां षट् निचितास्ताश्च त्रिंशत् । तावत्य २० एव तलकूर्च्चगुल्फेषु । तावत्य २० एव जङ्घायाम् । दश जानुनि । चत्वारिंशदूरौ । दश वङ्क्षणे । शतमध्यर्द्धमेवमेकस्मिन् १५० सक्थ्नि भवन्ति । एतेनेतरसक्थि १५० बाहू च २०० व्याख्यातौ । षष्टिः कट्याम् । अशीतिः पृष्ठे । पार्श्वयोः षष्टिः । उरसि त्रिंशत् । षट्त्रिंशद्ग्रीवायाम् । मूर्द्ध्नि चतुस्त्रिंशत् । एवं नव स्नायुशतानि व्याख्यातानि ।
भवन्ति चात्र । स्नायुश्चतुर्व्विधा विद्यात्तास्तु सर्व्वा निबोध मे । प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा । प्रतानवत्यः शाखासु सर्व्वसन्धिषु चाप्यथ । वृत्तास्तु कण्डराः सर्व्वा विज्ञेयाः कुशलैरिह । आमपक्वाशयान्तेषु वस्तौ च शुषिराः खलु । पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ । नौर्यथा फलकास्तीर्णा बन्धनैर्ब्बहुभिर्युता । भारक्षमा भवेदप्सु न्वयुक्ता सुसमाहिता । एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः । स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः । नह्यस्थीनि न वा पेश्यो न शिरा नच सन्धयः । व्यापादितास्तथा हन्युर्यथा स्नायुः शरीरिणम् । यः स्नायुः प्रविजानाति बाह्याश्चाभ्यन्तरास्तथा । स गूढं शल्यमाहर्त्तुं देहाच्छक्नोति देहिनाम् ।

पञ्च पेशीशतानि भवन्ति । तासां चत्वारि शतानि शाखासु । कोष्ठे षट्षष्टिः । ग्रीवां प्रत्यूर्द्ध्वं चतुस्त्रिंशत् । एकैकस्यान्तु पादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश । दश प्रपदे । पादोपरि कूर्च्चसन्निविष्टास्तावत्य एव । दश गुल्फतलयोः । गुल्फजान्वन्तरे विंशतिः । पञ्च जानुनि । विंशतिरूरौ । दश वङ्क्षणे । शतमेवमेकस्मिन् सक्थ्नि भवन्ति । एतेनेतरसक्थि १०० बाहू च २०० व्याख्यातौ । तिस्रः पायौ । एका मेढ्रे । सेवन्यां चापरा । द्वे वृषणयोः । स्फिचोः पञ्च पञ्च । द्वे वस्तिशिरसि । पञ्चोदरे । नाभ्यामेका । पृष्ठोर्द्ध्वसन्निविष्टाः पञ्च पञ्च दीर्घाः । षट् पार्श्वयोः । दश वक्षसि । अक्षकांसौ प्रति समन्तात् सप्त । द्वे हृदयामाशययोः । षट् यकृत्प्लीहोण्डुकेषु । ग्रीवायाञ्चतस्रः । अष्टौ हन्वोः । एकैका काकलकगलयोः । द्वे तालुनि । एका जिह्वायाम् । ओष्ठयोर्द्वे । घोणायां द्वे । द्वे नेत्रयोः । गण्डयोश्चतस्रः कर्णयोर्द्वे । चतस्रो ललाटे । एका शिरसीत्येवमेतानि पञ्च पेशीशतानि ।
शिरास्नाय्वस्थिपर्व्वाणि सन्धयश्च शरीरिणाम् । पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः । स्त्रीणान्तु विंशतिरधिका । दश तासां स्तनयोरेकैकस्मिन् पञ्च पञ्च यौवने तासां परिवृद्धिः । अपत्यपथे चतस्रस्तासां प्रसृते अभ्यन्तरतो द्वे मुखाश्रिते बाह्ये च प्रवृत्ते द्वे । गर्भच्छिद्रसंश्रितास्तिस्रः । शुक्रार्त्तवप्रवेशिन्यस्तिस्र एव । पित्तपक्वाशयमध्ये गर्भाशयो यत्र गर्भस्तिष्ठति । तासां बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावाः सन्ध्यस्थिशिरास्नायुप्रच्छादका यथादेशं स्वभावत एव भवन्ति ।
भवन्ति चात्र । पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता लक्षणमुष्कजाः । स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः । मर्म्मशिराधमनीस्रोतसामन्यत्र प्रविभागः ।
शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा प्रकीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता । यथा रोहितमत्स्यस्य मुखं भवति रूपतः । तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः । आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः । स योनिं शिरसा याति स्वभावात् प्रसवं प्रति । त्वक्पर्य्यन्तस्य देहस्य योऽयमङ्गविनिश्चयः । शल्यज्ञानादृते नैष वर्ण्यतेऽङ्गेषु केषुचित् । तस्मान्निःसंशयं ज्ञानं हर्त्रा शल्यस्य वाञ्छता । शोधयित्वा मृतं सम्यग्द्रष्टव्योऽङ्गविनिश्चयः । प्रत्यक्षतो हि यद्दृष्टं शास्त्रदृष्टञ्च यद्भवेत् । समासतस्तदुभयं भूयो ज्ञानविवर्द्धनम् ।
तस्मात्समस्तगात्रमविषोपहतमदीर्घव्याधिपीडितमवर्षशतिकनिःसृष्टान्त्रपुरीषं पुरुषमवहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कलकुशशणादीनामन्यतमेनावेष्टिताङ्गप्रत्यङ्गमप्रकाशे देशे कोथयेत् सम्यक्प्रकुथितञ्चोद्धृत्य ततो देहं सप्तरात्रादुशीरबालवेणुवल्कलकूर्चानामन्यतमेन शनैः शनैरवघर्षयंस्त्वगादीन् सर्व्वानेव बाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा । श्लोकौ चात्र भवतः । न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः । दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च । शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः । दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रियाः" ।
"अथातः प्रत्येकमर्म्मनिर्देशं शारीरं व्याख्यास्यामः । सप्तोत्तरं मर्म्मशतम् । तानि मर्म्माणि पञ्चात्मकानि । तद्यथा मांसमर्म्माणि, शिरामर्म्माणि, स्नायुमर्म्माणि, अस्थिमर्म्माणि सन्धिमर्म्माणि चेति । न खलु मांसशिरा-

स्नाय्वस्थिसन्धिव्यतिरेकेणान्यानि मर्म्माणि भवन्ति यस्मान्नोपलभ्यन्ते। तत्रैकादश मांसमर्म्माणि। एकचत्वारिंशत् शिरामर्म्माणि। सप्तविंशतिः स्नायुमर्म्माणि। अष्टावस्थिमर्म्माणि। विंशतिः सन्धिमर्म्माणि। तदेतत् सप्तोत्तरं मर्म्मशतम्।

तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थि ११ बाहू २२ च व्याख्यातौ। उदरोरसोर्द्वादश चतुर्द्दश वा पृष्ठे। ग्रीवां प्रत्यूर्द्ध्वं सप्तत्रिंशत्। तत्र सक्थिमर्म्माणि क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरोगुल्फेन्द्रवस्तिजान्वाण्युर्व्वीलोहिताक्षाणि विटपञ्चेति। एतेनेतरं सक्थि व्याख्यातम्। उदरोरसोस्तु गुदवस्तिनाभिहृदयस्तनमूलस्तनरोहितापलापान्यपस्तम्भौ चेति। पृष्ठमर्म्माणि तु कटीकतरुणकुकुन्दरनितम्बपार्श्वसन्धिवृहत्यंसफलकान्यंसौ चेति। बाहुमर्म्माणि तु क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरोमणिबन्धेन्द्रवस्तिकूर्परावाण्युर्व्वीलोहिताक्षाणि कक्षधरञ्चेति। एतेनेतरो बाहुर्व्याख्यातः।

जत्रूर्द्ध्वमर्म्माणि, चतस्रो धमन्यो,ऽष्टौ मातृका, द्वे कृकाटिके, द्वे विधुरे, द्वौ फणौ, द्वावपाङ्गौ द्वावावर्त्तौ द्वावुत्क्षेपौ द्वौ शङ्खावेका स्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटकान्येकोऽधिपतिरिति।

तत्र तलहृदयेन्द्रवस्तिगुदस्तनरोहितानि मांसमर्म्माणि। नीलधमनीमातृकाशृङ्गाटकापाङ्गस्थपनीफणस्तनमूलापलापापस्तम्भहृदयनाभिपार्श्वसन्धिवृहतीलोहिताक्षोर्व्व्यः शिरामर्म्माणि। आणिविटपकक्षधरकूर्च्चकूर्च्चशिरोवस्तिक्षिप्रांसविधुरोत्क्षेपाः स्नायुमर्म्माणि। कटीकतरुणनितम्बांसफलकशङ्खास्त्वस्थिमर्म्माणि। जानुकूर्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्दरावर्त्तकृकाटिकाश्चेति सन्धिमर्म्माणि।

तान्येतानि पञ्चविकल्पानि मर्म्माणि भवन्ति तद्यथा, सद्यःप्राणहराणि, कालान्तरप्राणहराणि, विशल्यघ्नानि, वैकल्यकराणि, रुजाकराणीति। तत्र सद्यः प्राणहराण्येकोनविंशतिः। कालान्तरप्राणहराणि त्रयस्त्रिंशत्। त्रीणि विशल्यघ्नानि। चतुश्चत्वारिंशद्वैकल्यकराणि। अष्टौ रुजाकराणीति।

भवन्ति चात्र। शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरा गुदम्। हृदयं वस्तिनाभी च घ्नन्ति सद्यो हतानि तु। वक्षोमर्म्माणि सीमन्ततलक्षिप्रेन्द्रवस्तयः। कटीकतरुणे सन्धी पार्श्वजौ वृहती च या। नितम्बाविति चैतानि कालान्तरहराणि तु। उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्दिशेत्। लोहिताक्षाणि जान्वूर्व्वीकूर्च्चविटपकूर्पराः। कुकुन्दरे कक्षधरे विधुरे सकृकाटिके। अंसांसफलकापाङ्गनीले मन्ये फणौ तथा। वैकल्यकरणान्याहुरावर्त्तौ द्वौ तथैव च। गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्च्चशिरांसि च। रुजाकराणि जानीयादष्टावेतानि बुद्धिमान्। क्षिप्राणि विद्धमात्राणि घ्नन्ति कालान्तरेण च।

मर्म्माणि नाम मांसशिरास्नाय्वस्थिसन्धिसन्निपातास्तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति तस्मान्मर्म्मस्वभिहतास्तांस्तान् भावानापद्यन्ते।

तत्र सद्यःप्राणहराण्याग्नेयान्यग्निगुणेष्वाशु क्षीणेषु क्षपयन्ति। कालान्तरप्राणहराणि सौम्याग्नेयान्यग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति। विशल्यप्राणहराणि वायव्यानि शल्यमुखनिरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवत्युद्धृतमात्रे तु शल्ये मर्म्मस्थानाश्रितो वायुर्निष्क्रामति तस्मात्सशल्यो जीवत्युद्धृतशल्यो म्रियते। वैकल्यकराणि सौम्यानि सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति। रुजाकराण्यग्निवायुगुणभूयिष्ठानि विशेषतश्च तौ रुजाकरौ। पाञ्चभौतिकीञ्च रुजामाहुरेके। केचिदाहुर्मांसादीनां पञ्चानामपि समस्तानां वृद्धानाञ्च समवायात्सद्यःप्राणहराणि। एकहीनानामल्पानां वा कालान्तरप्राणहराणि। द्विहीनानां विशल्यप्राणहराणि। त्रिहीनानां वैकल्यकराणि। एकस्मिन्नेव रुजाकराणीति। यतश्चैवमतोऽस्थिमर्म्मस्वप्यभिहतेषु शोणितागमनं भवति।

चतुर्व्विधा यास्तु शिराः शरीरे प्रायेण ता मर्म्मसु सन्निविष्टाः। स्नाय्वस्थिमांसानि तथैव सन्धीन् सन्तर्प्य देहं प्रतिपालयन्ति। ततः क्षते मर्म्मणि ताः प्रवृद्धः समन्ततो वायुरभिस्तृणोति। विवर्द्धमानस्तु स मातरिश्वा रुजः सुतीव्राः प्रतनोति काये। रुजाभिभूतन्तु पुनः शरीरं प्रलीयते नश्यति चास्य संज्ञा। अतो हि शल्यं विनिहर्त्तुमिच्छन्मर्म्माणि यत्नेन परीक्ष्य कर्षेत्। एतेन शेषं व्याख्यातम्।

तत्र सद्यः प्राणहरमन्तेविद्धं कालान्तरेण मारयति। कालान्तरप्राणहरमन्तेविद्धं वैकल्यमापादयति। विशल्यप्राणहरमन्तविद्धं कालान्तरेण क्लेशयति रुजाञ्च करोति। रुजाकरमतीव्रवेदनं भवति।

कालान्तरप्राणहराणि पक्षान्मासाद्वा। तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति। विशल्यप्राणहराणि वैकल्यकराणि च कदाचिदत्यभिहतानि मारयन्ति। अतऊर्द्ध्वं प्रत्येकशो

मर्म्मस्थानान्यनुव्याख्यास्यामः। तत्र पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म्म, तत्र विद्धस्याक्षेपकेण मरणम्। मध्यमाङ्गुलीमनुपूर्व्वेण मध्ये पादतलस्य तलहृदयं नाम, तत्रापि रुजाभिर्मरणं। क्षिप्रस्योपरिष्टादुभयतः कूर्च्चो नाम, तत्र पादस्य भ्रमणवेपने भवतः। गुल्फसन्धेरध उभयतः कूर्च्चशिरो नाम, तत्र रुजाशोफौ। पदजङ्घयोः सन्धाने गुल्फो नाम, तत्र रुजः स्तब्धपादता खञ्जता वा। पार्ष्णिं प्रति जङ्घामध्ये इन्द्रवस्तिर्नाम, तत्र शोणितक्षये मरणम्। जङ्घोर्व्वोः सन्धाने जानु नाम, तत्र खञ्जता। जानुन ऊर्द्ध्वमुभयतस्त्र्यङ्गुलमाणिर्नाम, तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च। ऊरुमध्ये ऊर्व्वी नाम, तत्र शोणितक्षयात् सक्थिशोषः। ऊर्व्वा ऊर्द्ध्वमधोवङ्क्षणसन्धेरूरुमूले लोहिताक्षं नाम, तत्र लोहितक्षयेण पक्षाघातः। वङ्क्षणवृषणयोरन्तरे विटपं नाम, तत्र षाण्ड्यमल्पशुक्रता वा भवति। एवमेतान्येकादश सक्थिमर्म्माणि व्याख्यातानि। एतेनेतरसक्थि॥११बाहू२२च व्याख्यातौ। विशेषतस्तु यानि सक्थि गुल्फजानुविटपानि तानि बाहौ मणिबन्धकूर्पूरकक्षधराणि यथा वङ्क्षणवृषणयोरन्तरे विटपमेव, वक्षःकक्षयोर्मध्ये कक्षधरं, तस्मिन्विद्धे तएवोपद्रवाः। विशेषतस्तु मणिबन्धे कुण्ठता। कूर्प्पराख्ये कुणिः। कक्षाधरे पक्षाघातः। एवमेतानि चतुश्चत्वारिंशच्छाखासु मर्म्माणि व्याख्यातानि।

अत ऊर्द्ध्वमुदरोरसोर्मर्म्मस्थानान्यनुव्याख्यास्यामः। तत्र वातवर्च्चोनिरसनं स्थूलान्त्रप्रतिबद्धं गुदं नाम मर्म्म, तत्र सद्योमरणम्। अल्पमांसशोणितोऽभ्यन्तरतः कट्यां मूत्राशयो वस्तिर्नाम, तत्रापि सद्योमरणमश्मरीव्रणादृते तत्राप्युभयतो भिन्ने न जीवत्येकतोभिन्ने मूत्रस्रावी व्रणो भवति स तु यत्नेनोपक्रान्तो रोहति। पक्वामाशययोर्मध्ये सिराप्रभवा नाभिर्नाम, तत्रापि सद्य एव मरणम्। स्तनयोर्मध्यमधिष्ठायोरस्यामाशयद्वारं सत्त्वरजस्तमसामधिष्ठानं हृदयं नाम, तत्र सद्यएव मरणम् स्तनयोरधस्तात् द्व्यङ्गुलमुभयतः स्तनमूले नाम मर्म्मणी, तत्र कफपूर्णकोष्ठतया कासश्वासाभ्यां म्रियते। स्तनचूचुकयोरूर्द्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहितौ नाम, तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्यां च म्रियते। अंसकूटयोरधस्तात् पार्श्वोपरिभागयोरपलापौ नाम, तत्र रक्तेन पूयभावं गतेन मरणम्। उभयत्रोरसो नाड्यौ वातवहे अपस्तम्भौ नाम, तत्र वातपूर्णकोष्ठतया कासश्वासाभ्यां च मरणम्। एवमेतान्युदरोरसोर्द्वादश मर्म्माणि व्याख्यातानि।

अत ऊर्द्ध्वं पृष्ठमर्म्माण्यनुव्याख्यास्यामः। तत्र पृष्ठवंशमुभयतः प्रतिश्रोणीकाण्डमस्थिनी कटीकतरुणे नाम मर्म्मणी, तत्र शोणितक्षयात् पाण्डुर्व्विवर्णो हीनरूपश्च म्रियते। पार्श्वजघनबहिर्भागे पृष्ठवंशमुभयतो नातिनिम्ने कुकुन्दरे नाम मर्म्मणी, तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च। श्रोणीकाण्डयोरुपर्य्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ नाम, तत्राधःकायशोषो दौर्ब्बल्याच्च मरणम्। अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्य्यगूर्द्ध्वं च जघनात् पार्श्वसन्धी नाम, तत्र लोहितपूर्णकोष्ठतया म्रियते। स्तनमूलादुभयतः पृष्ठवंशस्य बृहती नाम, तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते। पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम, तत्र बाह्वोः स्वापः शोषो वा। बाहुमूर्द्धग्रीवामध्येऽसंपीठस्कन्धनिबन्धनावंसौ नाम, तत्र स्तब्धबाहुता। एवमेतानि चतुर्द्दश पृष्ठमर्म्माणि व्याख्यातानि।

अत ऊर्द्ध्वं जत्रुगतानि व्याख्यास्यामः। तत्र कण्ठनाडीमुभयतश्चतस्रो धमन्यो द्वे नीले, द्वे च मन्ये, व्यत्यासेन तत्र मूकता स्वरवैकृतमरसग्राहिता च। ग्रीवायामुभयतश्चतस्रः सिरामातृकाः, तत्र सद्योमरणम्। शिरोग्रीवयोः सन्धाने कृकाटिके नाम, तत्र चलमूर्द्धता। कर्णपृष्ठतोऽधः संश्रिते विधुरे नाम, तत्र बाधिर्य्यम्। घ्राणमार्गमुभयतः स्रोतोमार्गं प्रतिबद्धे अभ्यन्तरतः फणे नाम, तत्र गन्धाज्ञानम्। भ्रूपुच्छान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ नाम, तत्रान्ध्यं दृष्ट्युपघातो वा। भ्रुवोरुपरि निम्नयोरावर्त्तौ नाम, तत्रान्ध्यं दृष्ट्युपघातश्च। भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये शङ्खौ नाम, तत्र सद्योमरणम्। शङ्खयोरुपरि केशान्त उत्क्षेपौ नाम, तत्र सशल्यो जीवति पाकात् पतितशल्यो वा नोद्धृतशल्यः। भ्रुवोर्मध्ये स्थपनी नाम, तत्रोत्क्षेपवत्। पञ्च सन्धयः शिरसि विभक्ताः सीमन्ता नाम, तत्रोन्मादभयचित्तनाशैर्मरणम्। घ्राणश्रोत्राक्षिजिह्वासन्तर्पणीनां सिराणां मध्ये सिरासन्निपातः शृङ्गाटकानि, तानि चत्वारि मर्म्माणि तत्रापि सद्योमरणम्। मस्तकाभ्यन्तरोपरिष्टात् सिरासन्धिसन्निपातो रोमावर्त्तोऽधिपतिः, तत्रापि सद्योमरणम्। एवमेतानि सप्तत्रिंशदूर्द्ध्वजत्रुगतानि मर्म्माणि व्याख्यातानि।

भवन्ति चात्र। ऊर्व्व्यः शिरांसि विटपे च सकक्षपार्श्वे

एकैकमङ्गुलमिताः स्तनपूर्व्वमूलम्। विद्ध्यङ्गुलद्वयमितं मणिबन्धगुल्फं त्रीण्येव जानु सपरं सह कूर्पराभ्याम्। हृद्वस्तिकूर्च्चगुदनाभि वदन्ति मूर्द्ध्नि चत्वारि पञ्च च गले दश यानि च द्वे। तानि स्वपाणितलकुञ्चितसंमितानि शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्द्धम्। एतत्प्रमाणमभिवीक्ष्य वदन्ति तज्ज्ञाः शस्त्रेण कर्म करणं परिहृत्य मर्म। पार्श्वाभिघातितमपीह निहन्ति मर्म तस्माद्धि मर्मसदनं परिवर्जनीयम्। छिन्नेषु पाणिचरणेषु सिरा नराणां सङ्कोचमीयुरसृगल्पमतो निरेति। प्राप्यामितव्यसनमुग्रमतो मनुष्याः संछिन्नशाखतरुवन्निधनं न यान्ति। क्षिप्रेषु तत्र सतलेषु हतेषु रक्तं गच्छत्यतीव पवनश्च रुजं करोति। एवं विनाशमुपयान्ति हि तत्र विद्धा वृक्षा इवायुधविघातनिकृत्तमूलाः। तस्मात्तयोरभिहतस्य तु पाणिपादं छेत्तव्यमाशु मणिबन्धनगुल्फदेशे। मर्माणि शल्यविषयार्द्धमुदाहरन्ति यस्माच्च मर्मसु हता न भवन्ति सद्यः। जीवन्ति तत्र यदि वैद्यगुणेन केचित्ते प्राप्नुवन्ति विकलत्वमसंशयं हि। सम्भिन्नजर्ज्जरितकोष्ठशिरःकपाला जीवन्ति शस्त्रनिहतैश्च शरीरदेशैः। छिन्नैश्च सक्थिभुजपादकरैरशेषैर्येषां न मर्म्मपतिता विविधाः प्रहाराः। सोममारुततेजांसि रजःसत्वतमांसि च मर्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते। मर्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिणः। इन्द्रियार्थेष्वसम्प्राप्तिर्मनोबुद्धिविपर्य्ययः। रुजश्च विविधास्तीव्रा भवन्त्याशुहरे हते। हते कालान्तरघ्ने तु ध्रुवो धातुक्षयो नृणाम्। ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च नश्यति। हते वैकल्यजनने केवलं वैद्यनैपुणात्। शरीरं क्रियया युक्तं विकलत्वमवाप्नुयात्। विशल्यघ्नेषु विज्ञेयं पूर्व्वोक्तं यच्च कारणम्। रुजाकराणि मर्माणि क्षतानि विविधा रुजः। कुर्व्वन्त्यन्ते च वैकल्यं कुवैद्यवशगो यदि। छेदभेदाभिघातेभ्यो दहनाद्दारणादपि। उपघातं विजानीयान्मर्मणान्तुल्यलक्षणम्। मर्माभिघातस्तु न कश्चिदस्ति योऽल्पात्ययो वापि निरत्ययो वा। प्रायेण मर्मस्वभिताडितास्तु वैकल्यमृच्छन्त्यथ वा म्रियन्ते। मर्माण्यधिष्ठाय हि ये विकारा मूर्च्छन्ति काये विविधा नराणाम्। प्रायेण ते कृच्छ्रतमा भवन्ति नरस्य यत्नैरपि साध्यमानाः"।

अथातः सिरावर्णनविभक्ति नाम शारीरं व्याख्यास्यामः। सप्त सिराशतानि भवन्ति। याभिरिदं शरीरमाराम इव जलप्रवारिणीभिः केदार इव च कुल्याभिरुपस्निह्यतेऽनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः। द्रुमपत्रसेवनीनामिव च तासां प्रतानास्तासां नाभिर्मूलं ततश्च प्रसरन्त्यूर्द्ध्वमधस्तिर्य्यक् च। भवतश्चात्र यावत्यस्तु सिराः काये सम्भवन्ति शरीरिणाम्। नाभ्यां सर्व्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः। नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता। सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः। तासां मूलसिराश्चत्वारिंशत्तासां वातवाहिन्यो दश, पित्तवाहिन्यो दश, कफवाहिन्यो दश, दश रक्तवाहिन्यः। तासान्तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिशतं भवति तावत्य १७५ एव पित्तवाहिन्यः पित्तस्थाने। कफवाहिन्यश्च १७५ कफस्थाने रक्तवाहिन्यश्च १७५ यकृत्प्लीह्नोः, एवमेतानि सप्त सिराशतानि। तत्र वातवाहिन्यः सिरा एकस्मिन् सक्थ्नि पञ्चविंशतिः। एतेनेतरसक्थि २५ बाहू ५० च व्याख्यातौ। विशेषतस्तु कोष्ठे चतुस्त्रिंशत्तासां गुदमेढ्राश्रिताः श्रोण्यामष्टौ द्वे द्वे पार्श्वयोः, षट् पृष्ठे, तावत्य ६ एव चोदरे, दशवक्षसि एकचत्वारिंशज्जत्रुण ऊर्द्ध्वं, तासां चतुर्दश ग्रीवायाम्। कर्णयोश्चतस्रः। नव जिह्वायाम्। षड् नासिकायाम्। अष्टौ नेत्रयोः। एवमेतत् पञ्चसप्तत्यधिकशतं वातवहानां सिराणां व्याख्यातम्! एष एव विभागः शेषाणामपि। विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश, कर्णयोर्द्वे, एवं रक्तवहाः कफवहाश्च। एवमेतानि सप्त शिराशतानि सविभागानि व्याख्यातानि"।

"अथातो धमनीव्याकरणं शारीरं व्याख्यास्यामः। चतुर्व्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः। तत्र केचिदाहुः सिराधमनीस्रोतसामविभागः सिराविकारा एव धमन्यः स्रोतांसि चेति। तत्तु न सम्यक्। अन्या एव हि धमन्यः स्रोतांसि च सिराभ्यः, कस्मात्? व्यञ्जनान्यत्वान्मूलसन्नियमात् कर्मवैशेष्यादागमाच्च केवलन्तु परस्परसन्निकर्षात् सदृशागमकर्मत्वात् सौक्ष्म्याच्च विभक्तकर्मणामप्यविभाग इव कर्मसु भवति।

तासान्तु नाभिप्रभवाणां धमनीनामूर्द्ध्वगा दश, दश चाधोगामिन्यः, चतस्रस्तिर्य्यग्गाः। ऊर्द्ध्वगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्धसितकथितरुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति। तास्तु हृदयमभिप्रपन्नास्त्रिधा जायन्ते तास्त्रिंशत्। तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश, शब्दरूपरसगन्धानष्टाभिर्गृह्णीते। द्वाभ्यां भाषते च, द्वाभ्यां घोषं करोति, द्वाभ्यां

स्वपिति, द्वाभ्यां प्रतिबुध्यते। द्वे चाश्रुवाहिन्यौ। द्वे स्तन्यं स्त्रिया वहतः स्तनसंश्रिते। ते एव शुक्रं नरस्य स्तनाभ्यामभिवहतः। तास्त्वेतास्त्रिंशत्सविभागा व्याख्याता एताभिरूर्द्ध्वं नाभेरुदरपार्श्वपृष्ठोरःस्कन्धग्रीवाबाहवो धार्य्यन्ते याप्यन्ते च।

भवति चात्र। ऊर्द्ध्वं गतास्तु कुर्व्वन्ति कर्म्माण्येतानि सर्व्वशः। अधोगमास्तु वक्ष्यामि कर्म्म तासां यथायथम्।

अधोगमास्तु वातमूत्रपुरीषशुक्रार्त्तवादीन्यधो वहन्ति। तास्तु पित्ताशयमभिप्रपन्नास्तत्रस्थमेवान्नपानरसं विपक्वमौष्ण्याद्विवेचयन्त्योऽभिवहन्त्यः शरीरं तर्पयन्त्यर्पयन्ति चोर्द्ध्वगतानां तिर्य्यग्गतानां रसस्थानञ्चाभिपूरयन्ति मूत्रपुरीषस्वेदांश्च विवेचयन्त्यामपक्वाशयान्तरे च त्रिधा जायन्ते तास्त्रिंशत्। तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश, द्वे अन्नवाहिन्यावन्त्राश्रिते, तोयवहे द्वे, द्वे मूत्रवस्तिमभिप्रपन्ने मूत्रवहे, द्वे शुक्रवहे, द्वे शुक्रप्रादुर्भावाय, द्वे विसर्गाय, ते एव रक्तमभिवहतो नारीणामार्त्तवसंज्ञम्। द्वे वर्चोनिरसन्यौ स्थूलान्त्रप्रतिबद्धे। अष्टावन्यास्तिर्य्यग्गानां धमनीनां स्वेदमर्पयन्ति। तास्त्वेतास्त्रिंशत् सविभागा व्याख्याताः एताभिरधोनाभेः पक्वाशयकटीमूत्रपुरीषगुदवस्तिमेढ्रसक्थीनि धार्य्यन्ते याप्यन्ते च।

भवति चात्र। अधोगमास्तु कुर्व्वन्ति कर्म्माण्येतानि सर्व्वशः। तिर्य्यग्गाः संप्रवक्ष्यामि कर्म्म तासां यथायथम्।

तिर्य्यग्गानान्तु चतसृणां धमनीनामेकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते तास्त्वसंख्येयास्ताभिरिदं शरीरं गवाक्षितं विबद्धमाततञ्च। तासां मुखानि रोमकूपप्रतिबद्धानि यैः स्वेदमभिवहन्ति रसञ्चापि सन्तर्पयन्त्यन्तर्बहिश्च, तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्य्याण्यन्तःशरीरमभिप्रतिपद्यन्ते त्वचि विपक्वानि, तैरेव स्पर्शसुखमसुखं वा गृह्णाति। तास्त्वेतास्तस्रो धमन्यः सर्व्वाङ्गगताः सविभागा व्याख्याताः।

भवतश्चात्र। यथा स्वभावतः खानि मृणालेषु बिसेषु च। धमनीनां तथा खानि रसो यैरुपचीयते। पञ्चाभिभूतास्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भावयन्ति। पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले।

अत ऊर्द्ध्वं स्रोतसां मूलविद्धलक्षणमुपदेक्ष्यामः। तानि तु प्राणान्नोदकरसरक्तमांसमेदोमूत्रपुरीषशुक्रार्त्तववहानि, येष्वधिकार एकेषां बहूनि। एतेषां विशेषा बहवः। तत्र प्राणवहे द्वे, तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यः। तत्र विद्धस्य क्रोशनविनमनमोहनभ्रमणवेपनानि मरणं वा भवति। अन्नवहे द्वे, तयोर्मूलमामाशयः अन्नवाहिन्यश्च धमन्यस्तत्र विद्धस्याध्मानं शूलान्नद्वेषौ छर्द्दिः पिपासान्ध्यं मरणं वा। उदकवहे द्वे, तयोर्मूलं तालु क्लोम च। तत्र विद्धस्य पिपासा सद्योमरणं च। रसवहे द्वे, तयोर्मूलं हृदयं, रसवाहिन्यश्च धमन्यस्तत्र विद्धस्य शोषः प्राणवहविद्धवच्च मरणं तल्लिङ्गानि च। रक्तवहे द्वे, तयोर्मूलं यकृत्प्लीहानौ रक्तवाहिन्यश्च धमन्यस्तत्र विद्धस्य श्यावाङ्गता ज्वरो दाहः पाण्डुता शोणितातिगमनं रक्तनेत्रता चेति। मांसवहे द्वे, तयोर्मूलं स्नायुत्वचं, रक्तवहाश्च धमन्यस्तत्र विद्धस्य श्वयथुर्मांसशोषः सिराग्रन्थयो मरणम्। मेदोवहे द्वे तयोर्मूलं कटीवृक्कौ च तत्र विद्धस्य स्वेदागमनं स्निग्धाङ्गता तालुशोषः स्थूलशोफता पिपासा च। मूत्रवहे द्वे, तयोर्मूलं वस्तिर्मेढ्रञ्च तत्र विद्धस्याऽऽनद्धवस्तिता मूत्रनिरोधः स्तब्धमेढ्रता च। पुरीषवहे द्वे, तयोर्मूलं पक्वाशयो गुदञ्च तत्र विद्धस्याऽऽनाहो दुर्गन्धता ग्रथितान्त्रता च। शुक्रवहे द्वे, तयोर्मूलं स्तनौ वृषणौ च तत्र विद्धस्य क्लीवता चिरात् प्रसेको रक्तशुक्रता च। आर्त्तववहे द्वे, तयोर्मूलं गर्भाशयः आर्त्तववाहिन्यश्च धमन्यस्तत्र विद्धायां वन्ध्यात्वं मैथुनासहिष्णुत्वमार्त्तवनाशश्च। सेवनीच्छेदाद्रुजाप्रादुर्भावः। वस्तिगुदविद्धलक्षणं प्रागुक्तमिति। स्रोतोविद्धन्तु प्रत्याख्यायोपचरेदुद्धृतशल्यन्तु क्षतविधानेनोपचरेत्। मूलात् खादन्तरं देहे प्रसृतन्त्वभिवाहि यत्। स्रोतस्तदिति विज्ञेयं सिराधमनिवर्ज्जितम्।" शारीरस्थाने

एतच्च मनुष्यकायविषयं तुल्यप्रकरणे शा० ति० "पञ्चभूतात्मकं सर्व्वं चराचरमिदं जगत्। अचरा बहुधा भिन्ना गिरिवृक्षादिभेदतः। चरास्तु त्रिविधाः प्रोक्ताः स्वेदाण्डजजरायुजाः। स्वेदजाः कृमिकीटाद्याः अण्डजाः पन्नगादयः। जरायुजा मनुष्याद्यास्तेषु मूर्त्ता निगद्यते। उद्भवः पुंस्त्रियोर्योगे शुक्राच्छोणितसंयुतात्। विन्दुरेको विशेद्गर्भमुभयात्मा क्रमादसौ। रजोधिको भवेन्नारी भवेद्रेतोऽधिकः पुमान्। पूर्व्वकर्म्मानुरूपेण मोहपाशेन यन्त्रितः। कश्चिदात्मा तत्र तस्मिन् जीवभावं प्रपद्यते। अथ मातान्नहृतैरन्नपानाद्यैःपोषितः क्रमात्। दिनात् पश्चात् ततो मासाद्वर्द्धते तत्त्वदेहवान्। दोषदूष्यैः सुखं प्राप्नोव्यक्तिं याति निजेन्द्रियैः। वातपित्तकफाः दोषाः दूष्याः स्युः सप्त धातवः। त्वगसृङ्मांसमेदोऽस्थिमज्जशुक्राणि तान् विदुः"

इत्यत्नेन मनुष्याणामेव विशेष्योक्तिः। एतद्या० पदा० "द्वाविंशती रजोभागाः शुक्रमात्राश्चतुर्दश। गर्भसंजनने काले पुंस्त्रियोः सम्भवन्ति हि। नारी रजोऽधिकांशे स्यान्नरः शुक्राधिकेऽंशके। उभयोस्तुल्यसंख्यायां स्याच्च पुंसकसम्भवः" इति। किन्तु पशुपक्ष्यादीनामपि यथा सम्भवमस्थ्यादिसङ्घयोज्ञेयः। षट्त्वग्धारित्वन्तु अण्डजादीनामप्यस्ति "तस्य षोढा शरीराणि षट् त्वचोधारयन्ति च" या० व्या० "तस्यात्मनोयानि जरायुजाण्डजशरीराणि तानि प्रत्येकं षट्प्रकाराणि रक्तादिषड्धातुपरिपाकहेतुभूतषडग्निस्थानयोगित्वेनेति" मिता० उक्तेः। चीयते कर्मभिः कर्मणि घञ्। १० स्वस्वादृष्टसञ्चितभोगायतनमात्रे च। वक्ष्यमाणचतुर्विधकायानां कर्मजत्वेन तथात्वम्।

ततश्च कायो द्विविधः चरोऽचरश्च। तत्र चरास्त्रिविधाः स्वेदजाण्डजजरायुजभेदात् अचरा गिरिवृक्षभेदात् नानाविधाः प्रागुक्त या० ति० वाक्यात्। एषाञ्चोत्पत्तिभेदात् चतुर्विधत्वम् यथोक्तं पदार्थादर्शे "देहश्चतुर्विधोज्ञेयो जन्तोरुत्पत्तिभेदतः। उद्भिज्जः स्वेदजोऽण्डोत्थश्चतुर्थस्तु जरायुजः" इति। उद्भिज्जशब्दे ११८० पृ० उद्भिज्जोत्पत्तिप्रकारो दर्शितः। चरेषु स्वेदजाः "कृमिकीटपतङ्गाद्याः स्वेदजा नाम देहिनः" पदार्थादर्शोक्ता बोध्याः। तदुत्पत्तिप्रकारस्तत्रैवोक्तो यथा "स्वेदजं स्विद्यमानेभ्यो भूभागेभ्यः प्रजायते" इति। एषां स्थिराणां चायोनित्वं प्रयोगसारे उक्तं यथा "किन्त्वत्र स्वेदजा ये तु ज्ञेयास्ते चाप्ययोनिजाः। स्थिरा इव बायुभिन्नाश्चत्वारिंशत्सहस्रधा"। अण्डजास्तु "अण्डजाः पक्षिणः सर्पा नक्रमत्स्याश्च कच्छपा, इति तत्रोक्ताः बोध्याः। तेषादुत्पत्तिप्रकारो यथा। "अण्डजो वर्त्तुलीभूतात् शुक्रशोणितसंयुतात्। कालेन भिन्नात् पूर्णात्मा निगच्छन् प्रक्रमिष्यति"। जरायुजास्तु मनुष्याद्याः गर्भाशयरूपचर्म्मवेष्टनजातत्वात् तेषां तथात्वम्। ते च योनिजाः "योनिजाः प्राणिनोभिन्नाश्चतुःषष्टिसहस्रधा" इति तत्रोक्तेः। तथाऽन्येऽपि अयोनिजाः देहाः सन्ति ते च अयोनिजशब्दे २४७ पृ० उक्ताः। तत्र मनुष्याणां कायस्य पाञ्चभौतिकत्वं तदुत्पत्तिप्रकारश्च याज्ञ० मिता० दर्शितो यथा "सर्गादौ स यथाऽऽकाशं वायुं ज्योतिर्जलम्महीम्। सृजत्येकोत्तरगुणांस्तथाऽऽदत्ते भवन्नपि" या०। सृष्टिसमये स परमात्मा यथाऽऽकाशादीन्, शब्दैकगुणं गगनम्, शब्दस्पर्शगुणं पवनम्, शब्दस्पर्शरूपगुणन्तेजः, शब्दस्पर्शरूपरसगुणमुदकम्, शब्दस्पर्शरूपरसगन्धगुणां, जगतीमित्येवमेकोत्तरगुणान् सृजति। तथात्मा जीवभावमापन्नो भवन्नुत्पद्यमानोऽपि स्वशरीरस्यारम्भकत्वेनापि तानुपादत्ते गृह्णाति। कथं शरीरारम्भकत्वं पृथिव्यादीनाम्? इत्यत आह। "आहुत्याऽऽप्यायते सूर्य्यः सूर्य्याद्वृष्टिरथौषधिः। तदन्नं रसरूपेण शुक्रत्वमधिगच्छति" या०। यजमानैः प्रक्षिप्तयाऽऽहुत्या पुरोडाशादिरसेनाप्यायते सूर्य्यः, सूर्य्याच्च कालवशेन परिपक्वाज्यादिहवीरसाद्वृष्टिर्भवति। ततो व्रीह्याद्योषधिरूपमन्नम्। तच्चान्नं सेवितं सत् रसरुधिरादिक्रमेण शुक्रशोणितभावमापद्यते। ततः किम्? इत्याह "स्त्रीपुंसयोश्च संयोगे विशुद्धे शुक्रशोणिते। पञ्च धातून् स्वयं षष्ठआदत्ते युगपत्प्रभुः" या०। ऋतुवेलायां स्त्रीपुंसयोः संयोगे शुक्रञ्च शोणितञ्च शुक्रशोणितम् तस्मिन् परस्परसंयुक्ते विशुद्धे "वातपित्तश्लेष्मदुष्टग्रन्थिपूयक्षीणमूत्रपुरीषगन्धिरेतांसि बीजानीति" स्मृत्यन्तरोक्तदोषरहिते स्थित्वा पञ्च धातून् पृथिव्यादिपञ्चभूतानि शरीरारम्भकतया स्वयं षष्ठश्चिद्धातुरात्मा प्रभुः शरीरारम्भकारणादृष्टकर्म्मयोगितया समर्थो युगपदादत्ते भोगायतनत्वेन स्वीकरोति। तथा च शारीरके "स्त्रीपुंसयोः संयोगे योनौ रजसाभिसंसृष्टं शुक्रन्तत्क्षणमेव सह भूतात्मना गुणैश्च सत्वरजस्तमोभिः सह वायुना प्रेर्य्यमाणं गर्भाशये तिष्ठतीति"। किञ्च "इन्द्रियाणि मनः प्राणोज्ञानमायुः सुखन्धृतिः। धारणा प्रेरणं दुःखमिच्छाहङ्कार एव च। प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भवाभवौ। तस्यैतदात्मजं सर्वमनादेरादिमिच्छतः" या०। इन्द्रियाणि ज्ञानकर्म्मेन्द्रियाणि वक्ष्यमाणानि। मनश्चोभयसाधारणम्। प्राणोऽपानो व्यान उदानः समान इत्येवम्पञ्चवृत्तिभेदभिन्नः शारीरोवायुः प्राणः, ज्ञानमवगमः, आयुः कालविशेषावच्छिन्नजीवनम्, सुखं निर्वृतिः, धृतिश्चित्तस्य स्थैर्य्यम्, धारणा प्रज्ञा मेधा च, प्रेरणं ज्ञानकर्म्मेन्द्रियाणामधिष्ठातृत्वम्, दुःखमुद्वेगः, इच्छा-स्पृहा, अहङ्कारोऽहङ्कृतिः, प्रयत्नः कृतिः, आकृतिराकारः, वर्णोगौरिमादिः, स्वरः षड्जगान्धारादिः, द्वेषोवैरम्, भवः पुत्रपश्वादिविभवः, अभवस्तद्विपर्ययः, तस्यानादेरात्मनोनित्यस्यादिमिच्छतः शरीरग्रहणमाचस्य सर्वमेतदिन्द्रियादिकमात्मजनितं प्रागभवीयकर्मबीजजन्यमित्यर्थः। संयुक्तशुक्रशोणितस्य कायरूपपरिणतौ क्रम-

माह "प्रथमे मासि संक्लेदभूतो धातुविमूर्च्छितः। मास्यर्बुदं द्वितीये च तृतीयेऽङ्गेन्द्रियैर्युतः। असौ च चेतनः षष्ठो धातुर्धातुविमूर्च्छितः" या०। धातुषु पृथिव्यादिषु मूर्च्छितो लोलीभूतः क्षीरनीरवदेकीभूतइति यावत्। प्रथमे गर्भमासे संक्लेदभूतो द्रवरूपतां प्राप्तएवावतिष्ठते न काठिनतया परिणमते। द्वितीये तु मास्यर्बुदमीषत्कठिनं मांसपिण्डरूपम्भवति। अयमभिप्रायः—कोष्ठपवनजठरदहनाभ्यां प्रतिदिनमीषदीषच्छोष्यमाणं शुक्रसम्पर्कसम्पादितद्रवीभावं भूतजातं त्रिंशद्भिर्दिनैः काठिन्यमापद्यत इति। तथाच सुश्रुते—"द्वितीये मासि शीतोष्णानिलैरभिपच्यमानो भूतसंघातो घनोजायत" इति। तृतीये तु मास्यङ्गैरिन्द्रियैश्च संयुक्तो भवति। किञ्च "आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रं बलादिकम्। वायोश्च स्पर्शनं चेष्टां व्यूहनं रौक्ष्यमेव च। पित्तात्तु दर्शनम्पक्तिमौष्ण्यं रूपं प्रकाशिताम्। रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्दवम्। भूमेर्गन्धं तथा घ्राणं गौरवं मूर्त्तिमेव च। आत्मा गृह्णात्यजः सर्वं तृतीये स्पन्दते ततः" या०। आत्मा गृह्णातीति सर्वत्र सम्बध्यते। गगनाल्लघिमानं लङ्घनक्रियोपयोगिताम्, सौक्ष्म्यं सूक्ष्मेक्षित्वम्, शब्दं विषयम्, श्रोत्रं श्रवणेन्द्रियम्, बलं दार्ढ्यम्, आदिग्रहणात् शुषिरत्वं विविक्ततां च। "आकाशाच्छब्दं श्रोत्रं विविक्ततां सर्वच्छिद्रसमूहांश्चेति" गर्भोपनिषद्दर्शनात्। पवनात् स्पर्शनेन्द्रियम्, चेष्टाङ्गनागमनादिकाम्, व्यूहनम् अङ्गानां विविधं प्रसारणम्, रौक्ष्यं कर्कशत्वम्, चशब्दात् स्पर्शं च। पित्तात्तेजसो दर्शनं चक्षुरिन्द्रियम्, पक्तिं भुक्तस्यान्नस्य पचनम्, औष्ण्यम् उष्णस्पर्शत्वम्, अङ्गानां रूपं श्यामिकादि प्रकाशितां भ्राजिष्णुताम्। तथा सन्तापामर्षादि च, "शौर्यामर्षतैक्ष्ण्यं पक्त्यौष्ण्यं भ्राजिष्णुतां सन्तापवर्णप्रकर्षरूपेन्द्रियाणि तैजसानीति" गर्भोपनिषद्दर्शनात्। एवं रसादुदकाद्रसनेन्द्रियम् शैत्यमङ्गानां, स्नेहं स्निग्धताम्, मृदुत्वसहितं क्लेदमार्द्रताम्, तथा भूमेर्गन्धं घ्राणेन्द्रियं गरिमाणं मूर्त्तिं च। सर्वमेतत् परमार्थतो जन्ममरणरहितोऽप्यात्मा तृतीये मासि गृह्णाति ततश्चतुर्थे मासि स्पन्दते चलति। तथाच शारीरके "तस्माच्चतुर्थे मासि चलनादावभिप्रायङ्करोतीति"। किंच "दोहदस्याप्रदानेन गर्भोदोषमवाप्नुयात्। वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः"। गर्भस्यैकं हृदयं गर्भिण्याश्चापरमित्येवं द्विहृदयायाः स्त्रिया यदभिलषितन्तद्दोहदम्। तस्याप्रदानेन गर्भोविरूपतां मरणरूपं वा दोषं प्राप्नोति तस्मात् तद्दोषपरिहारार्थं गर्भपुष्ट्यर्थं च गर्भिण्याः स्त्रिया यत्प्रियमभिलषितं तत्सम्पादनीयम्"।

किं च "स्थैर्यं चतुर्थे त्वङ्गानाम्पञ्चमे शोणितोद्भवः। षष्ठे बलस्य वर्णस्य नखरोम्णां च सम्भवः" या०। तृतीये मासि प्रादुर्भूतस्याङ्गसंघस्य चतुर्थे मासि स्थैर्यं स्थेमा भवति। पञ्चमे लोहितस्योद्भव उत्पत्तिः। तथा षष्ठे बलवर्णकररुहरोम्णां सम्भवः। किं च "मनश्चैतन्ययुक्तोऽसौ नाडीस्नायुसिरायुतः। सप्तमे चाष्टमे चैव त्वग्मांसस्मृतिमानपि" या०। असौ पूर्वोक्तो गर्भः सप्तमे मासि मनसा चेतनया च युक्तो नाडीभिर्वायुवाहिनीभिः, स्नायुभिरस्थिबन्धनैः सिराभिर्वातपित्तश्लेष्मवाहिनीभिश्च संयुतः। तथाऽष्टमे मासि त्वचा मांसेन स्मृत्या च युक्तो भवति। किं च "पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति। अष्टमे मास्यतोगर्भोजातः प्राणैर्वियुज्यते" या० तथाष्टममासिकस्य गर्भस्यौजः कश्चन गुणविशेषोधात्रीं गर्भं च प्रति पुनः पुनरतितरां चञ्चलतया शीघ्रं गच्छति। अतोऽष्टमे मासि जातो गर्भः प्राणैर्वियुज्यते। अनेनौजःस्थितिरेव जीवनहेतुरिति दर्शयति। ओजःस्वरूपं च स्मृत्यन्तरे दर्शितम् "हृदि तिष्ठति यत् शुद्धमीषदुष्णं सपीतकम्। ओजः शरीरे संख्यातन्तन्नाशान्नाशमृच्छतीति"। किं च "नवमे दशमे वापि प्रबलैः सूतिमारुतैः। निःसार्यते बाणइव यन्त्रच्छिद्रेण सज्वरः" या० एवं प्रकारेण चक्षुरादिपरिपूर्णाङ्गेन्द्रियो नवमे दशमे वापि मासेऽपिशब्दात् प्रागपि सप्तमे वाष्टमे वा अयायासादिदोषवशात्, प्रबलसूतिहेतुप्रभञ्जनप्रेरितः स्नाय्वस्थिचर्मादिनिर्मितवपुर्यन्त्रस्य छिद्रेण सूक्ष्मशुषिरेण सज्वरो दुःसहदुःखैरभिभूयमानोनिःसार्यते धनुर्यन्त्रेण सुधन्वप्रेरितवाणइवातिवेगेन। निर्गमसमनन्तरञ्च बाह्यपवनस्पृष्टो नष्टप्राचीनस्मृतिर्भवति "जातःस वायुना स्पृष्टो न स्मरति पूर्वं जन्ममरणं कर्म च शुभाशुभमिति" निरुक्तस्याष्टादशेऽभिधानात्"।

पदार्थादर्शे योगार्णवे त्वत्र विशेषउक्तो यथा "कललं चैकरात्रेण पञ्चरात्रेण बुद्बुदम्। शोणितं दशरात्रे च मांसपेशी चतुर्दशे। घनमांसं च विंशाहे पिण्डीभावोपलक्षितम्। पञ्चविंशतिपूर्णाहे कललमङ्कुरायते। एकमासे तु सम्पूर्णे पञ्च भूतानि धारयेत्। मासद्वये तु संप्राप्ते शिरा मेदश्च जायते। मज्जास्थि च त्रिभिर्मासैः केशाङ्गुल्यश्चतुर्थके। कर्णाक्षिनासिकानां च रन्ध्रं मासे तु पञ्चमे। आस्य-

रन्ध्रोदरं षष्ठे वायुरन्ध्रं तु सप्तमे। सर्व्वाङ्गं सन्धिसम्पूर्णं मासैरष्टभिरिष्यते"।

तत्रैव अध्यात्मविवेके विशेषः। "द्रवत्वात् प्रथमे मासि, कललाख्यं प्रजायते। द्वितीये तु घनः पिण्डः, पेश्यात्मा घनमर्व्वुदम्। पुंस्त्रीनपुंसकानान्तु प्रागवस्थाः क्रमादिमाः। तृतीये त्वङ्कुराः पञ्च कराङ्घ्रिशिरसां मताः। अङ्गप्रत्यङ्गभागाश्च सूक्ष्माः स्युर्युगपत्तदा। विहाय श्मश्रुदन्तादीन् जन्मानन्तरसम्भवान्। एषा प्रकृतिरन्या तु विकृतिः सम्मता सताम्। चतुर्थे व्यक्तता तेषां भावानामपि जायते"।

सुश्रुते तु कायोत्पत्तिप्रकारश्चेत्यमुक्तं यथा "आयुर्वेदशास्त्रेषु सर्व्वगताः क्षेत्रज्ञा नित्याश्च तिर्य्यग्योनिमानुषदेवेषु सञ्चरन्ति धर्म्माधर्म्मनिमित्तं, त एतेऽनुमानग्राह्याः परमसूक्ष्माश्चेतनावन्तः शाश्वता लोहितरेतसोः सन्निपातेष्वभिव्यज्यन्ते यतोऽभिहितं पञ्चमहाभूतशरीरसमवायः पुरुष इति। स एव कर्म्मपुरुषश्चिकित्साधिकृतः"। इत्युपक्रम्य सात्त्विकराजसतामसगुणान् कर्म्मपुरुषस्योक्त्वा पञ्चभूतकार्य्याणि शरीरे दर्शितानि यथा "आन्तरीक्षास्तु शब्दः शब्देन्द्रियं सर्व्वच्छिद्रसमूहो विविक्तता च। वायव्यास्तु स्पर्शः स्पर्शेन्द्रियं सर्व्वचेष्टासमूहः सर्व्वशरीरस्पन्दनं लघुता च। तैजसास्तु रूपं रूपेन्द्रियं वर्णः सन्तापो भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्यं शौर्य्यञ्च। आप्यास्तु रसो रसनेन्द्रियं सर्व्वद्रवसमूहो गुरुता शैत्यं स्नेहो रेतश्च। पार्थिवास्तु गन्धो गन्धेन्द्रियं सर्व्वमूर्त्तिसमूहो गुरुता चेति। तत्र सत्त्वतमोबहुला आपः। तमोबहुला पृथिवीति। श्लोकौ चात्र भवतः। अन्योन्यानुप्रविष्टानि सर्व्वाण्येतानि निर्दिशेत्। स्वे स्वे द्रव्ये तु सर्व्वेषां व्यक्तं लक्षणमिष्यते"

ततः शुक्रशोणितयोर्दोषगुणप्रदर्शनेन शुद्धयोस्तयोर्गर्भहेतुत्वमुक्तं यथा—

"अथातः शुक्रशोणितशुद्धिनाम शारीरं व्याख्यास्यामः। वातपित्तश्लेष्मकुणपगन्धिग्रन्थिभूतपूतिपूयक्षीणमूत्रपुरीषगन्धिरेतसः प्रजोत्पादने न समर्था भवन्ति। तेषु वातवर्णवेदनं वातेन। पित्तवर्णवेदनं पित्तेन। श्लेष्मवर्णवेदनं श्लेष्मणा। शोणितवर्णवेदनं कुणपगन्ध्यनल्पं रक्तेन। ग्रन्थिभूतं श्लेष्मवाताभ्याम्। पूतिपूयनिभं पित्तश्लेष्मभ्याम्। क्षीणं प्रागुक्तं पित्तमारुताभ्याम्। मूत्रपुरीषगन्धि सन्निपातेनेति। तेषु कुणपगन्धि-ग्रन्थिभूत-पूतिपूय-क्षीण-रेतसः कृच्छ्रसाध्याः। मूत्रपुरीषगन्धिरेतसस्त्वसाध्याः साध्यमन्यच्चेति"

तत्र आर्त्तवदोषगुणादिकमुक्तं तच्च आर्त्तवशब्दे पृ० ८०८ दर्शितम्। "लब्धगर्भायाश्चैतेष्वहःसु लक्ष्मणावटशुङ्गासहदेवाविश्वानामन्यतमं क्षीरेणाभिषुत्य त्रींश्चतुरो वा बिन्दून् दद्याद्दक्षिणे नासापुटे पुत्रकामायै न च तान्निष्ठीवेत्"। "ध्रुवञ्चतुर्णां सान्निध्याद्गर्भः स्याद्विधिपूर्व्वकः। ऋतुक्षेत्राम्बुबीजानां सामग्र्यादङ्कुरो यथा। एवं जातरूपवन्तो महासत्त्वाश्चिरायुषः। भवन्त्यृणस्य मोक्तारः सुपुत्राः पुत्रिणे हिताः। तत्र तेजोधातुः सर्व्ववर्णानां प्रभवः स यदा गर्भोत्पत्तावब्धातुप्रायो भवति तदा गर्भं गौरं करोति, पृथिवीधातुप्रायः कृष्णं, पृथिव्याकाशधातुप्रायः कृष्णश्यामं, तोयाकाशधातुप्रायो गौरश्यामम्। यादृग्वर्णमाहारमुपसेवते गर्भिणी, तादृग्वर्णप्रसवा भवतीत्येके भाषन्ते। तत्र दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धं करोति। तदेव रक्तानुगतं रक्ताक्षं, पित्तानुगतं शुक्लाक्षं, वातानुगतं विकृताक्षमिति। भवन्ति चात्र। घृतपिण्डो यथैवाग्निमाश्रितः प्रविलीयते। विसर्पत्यार्त्तवं नार्य्यास्तथा पुंसां समागमे। बीजेऽन्तर्व्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ। यमावित्यभिधीयेते धर्म्मेतरपुरःसरौ। पित्रोरत्यल्पबीजत्वादासेक्यः पुरुषो भवेत्। सशुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम्। यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः। स योनिशेफसोर्गन्धमाघ्राय लभते बलम्। स्वे गुदेऽब्रह्मचर्य्याद्यः स्त्रीषु पुंवत् प्रवर्त्तते। कुम्भीकः स च विज्ञेयईर्ष्यकं शृणु चापरम्। दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते। ईर्ष्यकः स च विज्ञेयः षण्डकं शृणु पञ्चमम्। यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते। ततः स्त्रीचेष्टिताकारो जायते षण्डसंज्ञितः। ऋतौ पुरुषवद्वापि प्रवर्त्तेताङ्गना यदि। तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता। आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा। सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसंज्ञितः।

अनया विप्रकृत्या तु तेषां शुक्रवहाः सिराः। हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत्। आहाराचारचेष्टाभिर्य्यादृशीभिः समन्वितौ। स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः। यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन। मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते। ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत्। आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि। मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम्। कललं जायते तस्या वर्ज्जितं

पैत्तिकैर्गुणैः। सर्पवृश्चिककूष्माण्डविकृताकृतयश्च ये। गर्भास्त्वेते स्त्रियाश्चैव ज्ञेयाः पापकृता भृशम्। गर्भो वातप्रकोपेण दोहृदे चावमानिते। भवेत् कुब्जः कुणिःपङ्गुर्मूको मिन्मिण एव च। मातापित्रोस्तु नास्तिक्यादशुभैश्च पुराकृतैः। वातादीनाञ्च कोपेन गर्भो विकृतिमाप्नुयात्। मलाल्पत्वादयोगाच्च वायोः पक्वाशयस्य च। वातमूत्रपुरीषाणि न गर्भस्थः करोति हि। जरायुणा मुखे च्छन्ने कण्ठे च कफवेष्टिते। वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति। निश्वासोच्छ्वाससङ्क्षोभस्वप्नान् गर्भोऽधिगच्छति। मातुर्निश्वसितोच्छ्वाससङ्क्षोभस्वप्नसम्भवान्। सन्निवेशः शरीराणां दन्तानां पतनोद्भवौ। तलेष्वसम्भवो यश्च रोम्णामेतत् स्वभावतः। भाविताः पूर्व्वदेहेषु सततं शास्त्रबुद्धयः। भवन्ति सत्वभूयिष्ठाः पूर्व्वजातिस्मरा नराः। कर्म्मणा चोदितो येन तदाप्नोति पुनर्भवे। अभ्यस्ताः पूर्व्वदेहे ये तानेव भजते गुणान्"।

अथातो गर्भावक्रान्तिशारीरं व्याख्यास्यामः। सौम्यं शुक्रमार्त्तवमाग्नेयमितरेषामप्यत्र भूतानां सान्निध्यमस्त्यणुना विशेषेण परस्परोपकारात्परस्परानुग्रहात्परस्परानुप्रवेशाच्च।

तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायुरुदीरयति। ततस्तेजोऽनिलसन्निपाताच्छुक्रं च्युतं योनिमभिप्रतिपद्यते संसृज्यते चार्त्तवेन। ततोऽग्निसोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते। क्षेत्रज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषः स्रष्टा गन्ता साक्षी धाता वक्ता योऽसावित्येवमादिभिः पर्य्यायवाचकैर्नामभिरभिधीयते दैवसंयोगादक्षयोऽव्ययोऽचिन्त्यो भूतात्मना सहान्वक्षं सत्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाभिप्रेर्य्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते तत्र शुक्रबाहुल्यात् पुमान्, आर्त्तवबाहुल्यात् स्त्री, साम्यादुभयोर्नपुंसकमिति। ऋतुस्तु द्वादशरात्रं भवति दृष्टार्त्तवः। अदृष्टार्त्तवाप्यस्तीत्येके भाषन्ते।

भवन्ति चात्र। पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजाम्। नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम्। स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचम्। हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति। नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा। ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा। मासेनोपचितं काले धमनीभ्यान्तदार्त्तवम्। ईषत् कृष्णं विगन्धञ्च वायुर्योनिमुखं नयेत्। तद्वर्षाद्द्वादशात्काले वर्त्तमानमसृक् पुनः। जरापक्वशरीराणां याति पञ्चाशतः क्षयम्। युग्मेषु तु पुमान् प्रोक्तो दिवसेष्वन्यथाऽबला। पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रियं व्रजेत्। तत्र सद्योगृहीतगर्भाया लिङ्गानि श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरनुबन्धः स्फुरणञ्च योनेः। स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा। अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः। अकामतश्छर्दयति गन्धादुद्विजते शुभात्। प्रसेकः सदनञ्चापि गर्भिण्या लिङ्गमुच्यते। तदा प्रभृत्येव व्यायामं व्यवायमपतर्पणमतिकर्षणम् दिवास्वप्नं रात्रिजागरणम् शोकं यानारोहणं भयमुत्कुटासनं चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणं चाकाले वेगविधारणं च न सेवेत। दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते। स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते। तत्र प्रथमे मासि कललं जायते। द्वितीये शीतोष्मानिलैरभिप्रपच्यमानानां महाभूतानां सङ्घातो घनः सञ्जायते यदि पिण्डः पुमान्, स्त्री चेत्पेशी, नपुंसकं चेदर्व्वुदमिति। तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्वर्त्तन्तेऽङ्गप्रत्यङ्गविभागाश्च सूक्ष्मा भवन्ति। चतुर्थे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति गर्भहृदयप्रव्यक्तभावाच्चेतनाधातुरभिव्यक्तो भवति, कस्मात्? तत्स्थानत्वात्तस्माद्गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति द्विहृदयां च नारीं दौहृदिनीमाचक्षते। दौहृदविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति। तस्मात् सा यद्यदिच्छेत्तत्तस्यै दापयेत्। लब्धदौहृदा हि वीर्य्यवन्तम् चिरायुषं च पुत्रं जनयति। भवन्ति चात्र। इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी। गर्भाबाधभयात्तांस्तान् भिषगाहृत्य दापयेत्। सा प्राप्तदौहृदा पुत्रं जनयेच्च गुणान्वितम्। अलब्धदौहृदा गर्भे लभेतात्मनि वा भयम्। येषु येष्विन्द्रियार्थेषु दौहृदे वै विमानना। प्रजायेत सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये। राजसन्दर्शने यस्या दौहृदं जायते स्त्रियाः। अर्थवन्तं महाभागं कुमारं सा प्रसूयते। दुकूलपट्टकौशेयभूषणादिषु दौहृदात्। अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते। आश्रमे, संयतात्मानं धर्म्मशीलं प्रसूयते। देवताप्रतिमायान्तु, प्रसूते पार्षदोपमम्। दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते। गोधामांसाऽशने पुत्रं सुषुप्सुं धारणात्मकम्। गवां मांसे च बलिनं सर्व्वक्लेशसहन्तथा। माहिषे दौहृदाच्छूरं रक्ताक्षं लोम-

संयुतम्। वराहमांसात् स्वप्नालुं शूरं सञ्जनयेत् सुतम्। मार्गाद्विक्रान्तजङ्घालं सदा वनचरं सुतम्। सृमराद्विग्नमनसं नित्यभीतं च तैत्तिरात्। अतोऽनुक्तेषु या नारी समाध्यायति दौहृदम्। शरीराचारशीलैः सा समानं जनयिष्यति। कर्म्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत्। यथा तथा दैवयोगाद्दौहृदं जनयेद्धृदि।

पञ्चमे मनः प्रतिबुद्धतरं भवति। षष्ठे बुद्धिः। सप्तमे सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरः। अष्टमेऽस्थिरीभवत्योजस्तत्र जातश्चेन्न जीवेन्नैर्ऋतभागत्वाच्च ततो बलिं मांसौदनमस्मै दापयेत्। नवमदशमैकादशानामन्यतमे जायते अतो,ऽन्यथा विकारी भवति।

मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाडी प्रतिबद्धा साऽस्य मातुराहाररसवीर्य्यमभिवहति। तेनोपस्नेहेनास्याभिवृद्धिर्भवति। असञ्जाताङ्गप्रत्यङ्गप्रविभागमानिषेकात् प्रभृति सर्व्वशरीरावयवानुसारिणीनां रसवहानां तिर्य्यग्गतानां धमनीनामुपस्नेहो जीवयति।

गर्भस्य हि सम्भवतः पूर्व्वं शिरः सम्भवतीत्याह शौनकः शिरोमूलत्वाद्देहेन्द्रियाणाम्। हृदयमिति, कृतवीर्य्यो बुद्धेर्मनसश्च स्थानत्वात्। नाभिरिति पाराशर्य्यस्ततो हि वर्द्धते देहो देहिनः। पाणिपादमिति मार्कण्डेयस्तन्मूलत्वाच्चेष्टाया गर्भस्य। मध्यशरीरमिति सुभूतिगौतमस्तन्निबद्धत्वात् सर्व्वगात्रसम्भवस्य। तत्तु न सम्यक् सर्व्वाङ्गप्रत्यङ्गानि युगपत् सम्भवन्तीत्याह धन्वन्तरिर्गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवच्चूतफलवच्च। तद्यथा चूतफले परिपक्वे केशरमांसास्थिमज्जानः पृथग्दृश्यन्ते कालप्रकर्षात्, तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात्तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति। एतेनैव वंशाङ्कुरोऽपि व्याख्यातः। एवं गर्भस्य तारुण्ये सर्व्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुपलब्धिः। तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति।

तत्र गर्भस्य पितृजमातृजरसजात्मजसत्वजसात्म्यजानि शरीरलक्षणानि व्याख्यास्यामः। गर्भस्य केशश्मश्रुलोमास्थिनखदन्तशिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि। मांसशोणितमेदोमज्जहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि। शरीरोपचयो बलं वर्णः स्थितिर्हानिश्च रसजानि। इन्द्रियाणि ज्ञानं विज्ञानमायुः सुखदुःखादिकान्यात्मजानि। सत्वजान्युत्तरं वक्ष्यामः। वीर्य्यमारोग्यं बलवर्णौ मेधा च सात्म्यजानि।

तत्र यस्या दक्षिणे स्तने प्राक् पयोदर्शनं भवति दक्षिणाक्षिमहत्त्वं च पूर्वं च दक्षिणं सक्थ्युत्कर्षति बाहुल्याच्च पुन्नामधेयेषु द्रव्येषु दौहृदमभिध्यायति स्वप्नेषु चोपलभते पद्मोत्पलकुमुदाम्रातकादीनि पुन्नामान्येव, प्रसन्नमुखवर्णा च भवति तां ब्रूयात् पुत्रमियं जनयिष्यतीति। तद्विपर्य्यये कन्याम्। यस्याः पार्श्वद्वयमुन्नतमुरस्तान्निर्गतमुदरं प्रागभिहितलक्षणं च तस्या नपुंसकमिति विद्यात्। यस्य मध्ये निम्नं द्रोणीप्रभूतमुदरं सा युग्मं प्रसूते इति। भवन्ति चात्र- देवताब्राह्मणपराः शौचाचारहिते रताः। महागुणान् प्रसूयन्ते विपरीतास्तु निर्गुणान्। अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते। अङ्गप्रत्यङ्गनिर्वृत्तौ ये भवन्ति गुणागुणाः। ते ते गर्भस्य विज्ञेया धर्माधर्मनिमित्तजाः"।

एवं याज्ञवल्क्यसुश्रुतादिवाक्यैः कायस्य पाञ्चभौतिकत्वे स्थितेऽन्येऽपि भूतविशेषगुणादिभेदाः पदार्थादर्शे उक्ता यथा। "अस्थि मांसं त्वचा स्नायूरोम चैव तु पञ्चमम्। एते पञ्चविधा प्रोक्ता पृथिवी कठिनात्मिका। लाला मूत्रं तथा शुक्रं शोणितं मज्जपञ्चमम्। अपां पञ्च गुणा एते द्रवरूपाः प्रकीर्त्तिताः। क्षुधातृष्णाऽऽमयं निद्रा आलस्यं चान्तिरेव च। उष्णात्मका गुणा एते तेजसः परिकीर्त्तिताः। धावनं गमनं भुक्तिराकुञ्चनप्रसारणे। एते पञ्च गुणा वायोः क्रियारूपा व्यवस्थिताः। रागद्वेषौ तथा लज्जा भयं मोहस्तथैव च। व्योम्नः पञ्च गुणा एते शून्यात्मके शुषिरात्मनि"। तत्रायं विशेषः मनुष्यकायस्य पार्थिवत्वं, चन्द्रलोकस्थकायस्याप्यत्वं, सूर्य्यादिलोकस्थकायस्य तैजसत्वं वायुलोककायस्य वायव्यत्वम्, बाहुल्येन तत्तत्कायेषु पृथिव्यादिगुणाधिक्योपलब्धेः। इतरभूतानान्तु उपष्टम्भकतामात्रं तदेतत् गौत० सू० भाष्ययोर्निर्णीतं यथा।

"पार्थिवं गुणान्तरोपलब्धेः" ३अ० २८सू०

तत्र मानुषं शरीरं पार्थिवम्। कस्मात्? गुणान्तरोपलब्धेः। गन्धवती पृथिवी, गन्धवच्छरीरम्, अबादीनामगन्धत्वात् तत्प्रकृत्यगन्धं स्यात् न त्विदमबादिभिरसंपृक्तया पृथिव्यारब्धं चेष्टेन्द्रियार्थाश्रयभावेन कल्प्यत इत्यतः पञ्चानां संयोगे सति शरीरं भवति भूतसंयोगोहि मिथः पञ्चानां न निषिद्ध इति, आप्यतैजसवायव्यानि लोकान्तरे शरीराणि, तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र इति स्थाल्यादिद्रव्यनिष्पत्तावपि निःसंशयं, नाबादिसंयोगमन्तरेण निष्पत्तिरिति। पार्थिवाप्यतैजसं तद्गुणोपलब्धेः, निश्वासो-

स्पर्शोपलब्धेश्चातुर्भौतिकम्, गन्धक्लेदनव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्, त इमे सन्दिग्धा हेतव इत्युपेक्षितवान् सूत्रकारः। कथं सन्दिग्धाः? सति च प्रकृतिभावे भूतानां धर्मोपलब्धिः, असति च संयोगाप्रतिषेधात् सन्निहितानामिति यथा स्थाल्यामुदकतेजोवाय्वाकाशानामिति, तदिदमेकभूतप्रकृति शरीरमगन्धमरसमरूपमस्पर्शं च प्रकृत्यनुविधानात् स्यात् नत्विदमित्थंभूतम् तस्मात् पार्थिवं गुणान्तरोपलब्धेः भा०।

"श्रुतिप्रामाण्याच्च" ३अ०२८सू०

"सूर्यं ते चक्षुर्गच्छतात्"इत्यत्र मन्त्रे "पृथिवीं ते शरीरमिति" श्रूयते तदिदं प्रकृतौ विकारस्य प्रलयाभिधानमिति "सूर्यं ते चक्षुः स्पृणोमि"इत्यत्र मन्त्रान्तरे"पृथिवीं ते शरीरमिति" श्रूयते, सेयं कारणाद्विकारस्य सृतिरभिधीयत इति, स्थाल्यादिषु च तुल्यजातीयानामेककार्य्यारम्भदर्शनाद्भिन्नजातीयानामेककार्य्यारम्भानुपपत्तिः" वात्स्या०भा०

सां०सूत्रेषु च "पाञ्चभौतिकोदेहः" सू० पञ्चानां भूतानां मिलितानां परिणामोदेह इत्येकीयमतम्। "चातुर्भौतिकमित्येके" सू०। आकाशस्यानारम्भकत्वमभिप्रेत्येदम्। एतच्च चार्वाकादिमते तन्मते भूतचतुष्टयस्यैव स्वीकारात् चार्वाकशब्दे विवृतिः। "ऐकभौतिकमित्यपरे" सू०। "पार्थिवमेव शरीरमन्यानि भूतान्युपष्टम्भकमात्राणि। अथवा ऐकभौतिकमैकैकभौतिकमित्यर्थः ततश्च मनुष्यदेहे पार्थिवांशाधिक्येन पार्थिवता। चन्द्रादिलोकेषु अबाद्यंशाधिक्येन आप्यत्वादि। हिमकरकसुवर्णादीनामिव भूतान्तरसंसर्गमात्रम्"भा०। जन्मजादिदेहानुक्त्वा "सर्वेषु पृथिव्येवोपादानम् असाधारण्यात् तद्व्यपदेशः पूर्ववत्"सू०। सर्वेष स्थावरास्थावरदेहेषु पृथिव्येवोपादानम् असाधारण्यात् आधिक्यादिभिरुत्कर्षात् अत्रापि काये पञ्चचतुरादिभूतजत्वव्यपदेशः पूर्ववत् इन्द्रियाणां भौतिकत्ववदुपष्टम्भमात्रेणेत्यर्थः" भा०।

शा०सू०भाष्ययोश्च छा०उ०मांसादीनां पृथिव्यादिकार्य्यत्वोक्त्याकायस्य त्रैभौतिकत्वं व्यवस्थापितं यथा

"मांसादि भौमं यथाशब्दमितरयोश्च"सू०। "भूमेस्त्रिवृत्कृतायाः पुरुषेणोपयुज्यमानायाः मांसादि कार्य्यं यथाशब्दं निष्पद्यते। तथाहि (छा०)श्रुतिः"अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठोधातुस्तत्पुरीषं भवति,यो मध्यमस्तन्मांसं, योऽणिष्ठस्तन्मनः" इति। त्रिवृत्कृता भूमिरेवैषा व्रीहियवाद्यन्नरूपेणाद्यते इत्यभिप्रायः। तस्याश्च स्थविष्ठं रूपं पुरीषभावेन बहिर्निर्गच्छति मध्यममध्यात्मं मांसं वर्द्धयति अणिष्ठन्तु मनः। एवमितरयोरप्तेजसोर्यथाशब्दं कार्य्यमवगन्तव्यम्। मूत्रं लोहितं प्राणश्चापां कार्य्यम्। अस्थि मज्जा वाक् च तेजस इति। अत्राह यदि सर्वमेव त्रिवृत्कृतं भूतभौतिकम् अविशेषश्रुतेः"तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति" किंकृतस्तर्ह्ययं विशेषव्यपदेशः इदं तेजः इमा आप इदमन्नमिति तथाध्यात्ममिदमन्नस्याशितस्य कार्य्यं मांसादि, इदमपां पीतानां कार्य्यं लोहितादि, इदं तेजसोऽशितस्य कार्य्यं मज्जादि। अत्रोच्यते–

"वैशेष्यात्तु तद्वादस्तद्वादः" सू०। तुशब्देन नोदितं दोषमपनुदति। विशेषस्य भावो वैशेष्यं भूयस्त्वमित्येतत्। सत्यपि त्रिवृत्करणे क्वचित् कस्यचिद्भूतधातोर्भूयस्त्वमुपलभ्यते। अग्नेस्तेजोभूयस्त्वम्, उदकस्याब्भूयस्त्वं, पृथिव्या अन्नभूयस्त्वमिति व्यवहारप्रसिद्ध्यर्थं चैवं त्रिवृत्करणम्। व्यवहारस्य त्रिवृत्कृतरज्जुवदेकत्वापत्तौ सत्यां न भेदेन भूतत्रयगोचरो लोकस्य प्रसिध्येत्। तस्मात् सत्यपि त्रिवृत्करणे वैशेष्यादेव तेजोबन्नविशेषवादो भूतभौतिकविषय उपपद्यते" भा०।

उत्तरपादे च बाहुल्यात् देहस्य त्रैभौतिकत्वमुक्तं यथा।

"तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्" सू०। तदन्तर प्रतिपत्तौ देहाद्देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः संपरिष्वक्तो गच्छतीत्यवगन्तव्यं कुतः? प्रश्ननिरूपणाभ्याम्। तथाहि प्रश्नः "वेत्थ यथा सौम्य! पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति"। निरूपणं च प्रतिवचनं द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति" तस्मादद्भिः परिवेष्टितो जीवोरंहतीति गम्यते। नन्वन्या श्रुतिर्जलूकावत् पूर्वं देहं न मुञ्चति यावद्देहान्तरं न क्रामतीति दर्शयति "तद्यथा तृणजलायुकेति"। तत्राप्यप्परिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनया दीर्घीभावमात्रं जलूकयोपमीयते इत्यविरोधः एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति याः पुरुषमतिप्रभवाः कल्पनाः व्यापिनां करणानामात्मनश्च देहान्तरप्रतिपत्तौ कर्मवशाद्वृत्तिलाभस्तत्र भवति, केवलस्यैव वात्मनो वृत्तिलाभस्तत्र भवति, इन्द्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थान उत्पद्यन्ते, मनएव वा केवलं भोगस्थानमभिप्रतिष्ठते, जीवएव वा उत्प्लुत्य देहाद्देहान्तरं

प्रतिपद्यते शुकइव वृक्षाद्वृक्षान्तरमित्येवमाद्याः ताः सर्वा एवानादर्त्तव्याः श्रुतिविरोधात्। ननूदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः संपरिष्वक्तो रंहति इति प्राप्नोति अप्शब्दश्रवणसामर्थ्यात् तत्र कथं सामान्येन प्रतिज्ञायते ? सर्वैरेव भूतसूक्ष्मैः संपरिष्वक्तो रंहतीत्यत उत्तरं पठति।

"त्र्यात्मकत्वात्तु भूयस्त्वात् तद्व्यपदेशः" सू०। तुशब्देन चोदितामाशङ्कामुच्छिनत्ति त्र्यात्मिका ह्यापः त्रिवृत्करणश्रुतेः तास्वारम्भिकास्वप्स्वभ्युपगतास्वितरदपि भूतद्वयमवश्यमभ्युपगन्तव्यं भवति त्र्यात्मकश्च देहः त्रयाणामपि तेजोबन्नानां तस्मिन् कार्य्योपलब्धेः पुनश्च त्र्यात्मकः त्रिधातुकत्वात् त्रिभिर्वातपित्तश्लेष्मभिः। न स भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते। तस्माद्भूयस्त्वापेक्षोऽयमापः पुरुषवचस इति प्रश्नप्रतिवचनयोरप्शब्दो न कैवल्यापेक्षः। सर्वदेहेषु हि रसलोहितादिद्रवभूयस्त्वं दृश्यते। ननु पार्थिवो धातुर्भूयिष्ठो देहेषूपलभ्यते! नैष दोषः, इतरापेक्षया अपां बाहुल्यं भविष्यति, दृश्यते च शुक्रशोणितलक्षणेऽपि देहवीजे द्रवद्रव्यबाहुल्यम्। कर्म च निमित्तं कारणं देहान्तरारम्भे, कर्माणि चाग्निहोत्रादीनि सोमाज्यपयःप्रभृति द्रवद्रव्यव्यपाश्रयाणि, कर्मसमवायिन्यश्चापः श्रद्धाशब्दोदिताः सह कर्मभिर्द्युलोकाख्येऽग्नौ हूयन्त इति वक्ष्यति तस्मादप्यपां बाहुल्यप्रसिद्धिः। बाहुल्याच्चाप्शब्देन सर्वेषामेव देहवीजानां भूतसूक्ष्माणामुपादानमिति निरवद्यम्"। तथा च त्रैभौतिकत्वं बाहुल्याभिप्रायेण ऐतरेयोपनिषदि पाञ्चभौतिकत्वोक्तेः। यथा

"एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि—पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव वीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो-यत् किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरम्, सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म" उप० ३अ०।

"स एष प्रज्ञानरूप आत्मा ब्रह्म। अपरं सर्व्वशरीरस्थप्राणप्रज्ञात्मान्तःकरणोपाधिष्वनुप्रविष्टो जलभेदगतसूर्यप्रतिबिम्बवद्धिरण्यगर्भः प्राणः प्रज्ञात्मा। एष एवेन्द्र इन्द्रगुणवान् देवराजो वा। एषः प्रजापतिर्यः प्रथमजः शरीरी, यतो मुखादिनिर्भेदद्वारेणाग्न्यादयो लोकपाला जाताः। स प्रजापतिरेव एष येऽप्येते अग्न्यादयः सर्वे देवा एष एव। इमानि च सर्वशरीरोपादानभूतानि—पञ्च पृथिव्यादीनि महाभूतान्यन्नान्नादत्वादि लक्षणान्येतानि। किञ्चेमानि च क्षुद्रैरल्पकैर्मिश्राणि सर्पादीनि। इवशब्दोऽनर्थकः। वीजानि कारणानि चेतराणि चेतराणि च द्वैराश्येन चलाचलतया निर्दिश्यमानानि। कानि तानि? इत्युच्यन्ते—अण्डजानि पक्ष्यादीनि। जारुजानि जरायुजानि मनुष्यादीनि। स्वेदजानि यूकादीनि उद्भिज्जानि च वृक्षादीनि। अश्वाः, गावः, मनुष्याः, हस्तिनः। अन्यच्च यत्किञ्चिदिदं प्राणिजातम्। किं तत्? जङ्गमं यच्चलति पद्भ्यां गच्छति। यच्च पतत्रि आकाशेन पतनशीलम्। यच्च स्थावरमचलं सर्व्वं, तदशेषतः प्रज्ञानेत्रम्-प्रज्ञप्तिः प्रज्ञा, तच्च ब्रह्मैव, नीयते सत्ता प्राप्यते अनेनेति नेत्रं, प्रज्ञा नेत्रं यस्य तदिदं प्रज्ञानेत्रम्। प्रज्ञाने ब्रह्मण्युत्पत्तिस्थितिलयकालेषु प्रतिष्ठितं प्रज्ञाश्रयमित्यर्थः। प्रज्ञानेत्रो लोकः पूर्ववत्। प्रज्ञाचक्षुर्वा सर्व एव लोकः। प्रज्ञा प्रतिष्ठा सर्व्वस्य जगतः। तस्मात् प्रज्ञानं ब्रह्म। तदेतत् प्रत्यस्तमितसर्व्वोपाधिविशेषं सन्निरञ्जनं निर्मलं निष्क्रियं शान्तमेकमद्वयं, नेति सर्व्वविशेषापोहसंवेद्यं सर्व्वशब्दप्रत्ययागोचरं तदत्यन्तविशुद्धप्रज्ञोपाधिसम्बन्धेन सर्व्वज्ञमीश्वरसंज्ञं भवति। सर्व्वसाधारणाव्याकृतजगद्वीजप्रवर्त्तकं नियन्तृत्वादन्तर्यामिसंज्ञं भवति। तदेव जगद्वीजभूतबुद्ध्यात्माभिमानलक्षणहिरण्यगर्भसंज्ञं भवति। तदेवान्तरण्डोद्भूतप्रथमशरीरोपाधिमद्विराट्प्रजापतिसंज्ञं भवति। तदुद्भूताग्न्याद्युपाधिमद्देवतादिसंज्ञं भवति। तथा विशेषशरीरोपाधिष्वपि ब्रह्मादिस्तम्बपर्य्यन्तेषु तत्तन्नामरूपलाभो ब्रह्म। तदेवैकं सर्व्वोपाधिभेदभिन्नं सर्वैः प्राणिभिस्तार्किकैश्च सर्व्वप्रकारेण ज्ञायते विकल्प्यते चानेकधा। एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्। इन्द्रमेकेऽपरे प्राणमपरे ब्रह्म शाश्वतमित्याद्या स्मृतिः" शाङ्करभाष्यम्।

कणादसूत्रवृत्त्योस्तु कायस्य पाञ्चादिभौतिकत्व निराकरणेन एकैकभूतारब्धत्वं व्यवस्थापितं यथा "पृथिव्यादि कार्य्यद्रव्यं त्रिविधं—शरीरेन्द्रियविषयसंज्ञकम्" क०सू०। तत्र शरीरत्वं प्रयत्नवदात्मसंयोगासमवायिकारणवत्क्रियावदन्त्यावयवित्वम् उपाधिभेदः न तु शरीरत्वं जातिः पृथिव्यादिना परापरभावानुपपत्तेः" उपस्कारवृत्तिः। तथा च शरीरत्वम् अन्त्यावय-

विभावहत्तित्वे सति चेष्टावदुवृत्तिजातिमत्त्वं । इस्तत्व-पृथिवीत्वद्रव्यत्वसत्तादिवारणाय सत्यन्तम्। घटत्वादिवारणाय चेष्टावद्वृत्तीति। घटशरीरसंयोगादिवारणाय जातीति। मनुष्यत्वचैत्रत्वादिजातिमादाय मानुषादिशरीरे लक्षणसमन्वयः। वृक्षादावपि चेष्टा अस्त्येव आध्यात्मिकवायुसम्बन्धात् अन्यथा भग्नक्षतसंरोहणादिकं न स्यात्। कल्पभेदेन नृसिंहशरीरस्य नानात्वात् नृसिंहत्वजातिमादाय तत्र लक्षणसमन्वयः नतु शरीरत्वं जातिः पृथिवीत्वादिना सङ्करात् नापि चेष्टाश्रयत्वम् निश्चेष्टशरीरेऽव्याप्तेः।

"इदानीं शरीरस्य त्रैभौतिकत्वचातुर्भौतिकत्वप्रवादं निराकर्त्तुमाह" उपस्कारवृत्तिः।

"प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते„ सू०

"यदि गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकं शरीरं भवेत् तदाऽप्रत्यक्षं भवेत् यथा प्रत्यक्षाप्रत्यक्षाणां वायुवनस्पतीनां संयोगोऽप्रत्यक्षस्तथा शरीरमप्यप्रत्यक्षं स्यादिति दृष्टान्तद्वारकं सूत्रं, पञ्चात्मकं न विद्यत इति शरीरमिति शेषः। क्लेदपाकादयस्तु उपष्टम्भकजलानलगता एव, चातुर्भौतिकमप्येवम्। नन्वस्तु त्रैभौतिकम्, त्रयाणां भूतानां प्रत्यक्षत्वादिति चेन्न विजातीयारम्भस्य प्रतिषेधात्। एकस्य गुणस्यावयविनि गुणानारम्भकत्वात्। तथा च यदि पृथिवीजलाभ्यामारम्भः स्यात्! तदा तदारब्धमगन्धमरसञ्च स्यात्! एवं पृथिव्यनलाभ्यामगन्धमरूपमरसञ्च स्यात्! पृथिव्यनिलाभ्यामगन्धमरसमरूपमस्पर्शञ्च स्यादित्याद्यूह्यम्" उ०वृत्तिः "गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम्" सू०।

"पृथिव्यप्तेजसां प्रत्यक्षाणामेवारब्धं शरीरं प्रत्यक्षं स्यादपि यदि तत्र गुणान्तरं कारणगुणपूर्व्वकं प्रादुर्भवेत्, न त्वेतदस्ति एकस्य गन्धादेरनारम्भकत्वस्योक्तत्वात् तथाच न त्र्यात्मकमपि शरीरं न द्व्यवङ्गूतत्वयारब्धमपीत्यर्थः।

कथं तर्ह्येकस्मिन्नेव शरीरे पाकादीनामुपलम्भः? इत्यत आह" वृत्तिः। "अणुसंयोगस्त्वप्रतिषिद्धः" सू० "मिथः पञ्चानां भूतानां परस्परमुपष्टम्भकतया संयोगो न निषिध्यते, किन्तु विजातीययोरवयोर्द्रव्यं प्रत्यसमवायिकारणं संयोगो नेष्यते। तथाच तदुपष्टम्भात् पाकादीनां शरीरे भवत्युपलम्भ इति तर्हि किंप्रकृतिकमिदं मानुषशरीरम्? इत्यत्र गोतमीयं सूत्रमुपतिष्ठते "पार्थिवं तद्विशेषगुणोपलब्धेः" (पाठान्तरम्) पृथिवीविशेषगुणो गन्धो मानुषशरीरे आनाशमनपायी दृश्यते, पाकादयस्तु शुष्कशरीरे नोपलभ्यन्ते इति तेषामौपाधिकत्वं गन्धस्य स्वाभाविकत्वमिति पार्थिवत्वव्यवस्थितेः" उपस्कारवृत्तिः।

वेदान्तिनस्तु मनुष्यादिकायस्य पाञ्चभौतिकत्वमेव प्रतिपेदिरे। तच्च प्रमेयविवरणोपन्यासे उक्तं तच्च ६६४पृ० दर्शितम्। चार्वाकास्तु कायस्यैव भोक्तृत्वं मन्यन्ते तन्मतं तत्रैव निराकृतं तच्च ६६४पृ० दर्शितम्।

अत्रेदमभिधीयते। प्राधान्येन यद्येकैकभूतारब्धत्वं तथापि कस्य मानवदेहारम्भकत्वम् तद्विवेचनीयम्। प्रागुक्तश्रुतवाक्येन या० वाक्येन प्रत्यक्षेण अवरोहशब्दे ४४०पृ० दर्शितया० सूत्रभाष्येण वक्ष्यमाणैतरेयश्रुत्या च शुक्रशोणितयोरेव योनिनिषेकेण चेतनाधिष्ठाने देहारम्भस्योक्तत्वात् शुक्रशोणितयोरुपादानत्वं युक्तं ताभ्यामेव देहारम्भणात् शुक्रशोणितोपादानत्वात् देहस्याप्यत्वं शुक्रस्य तैजसत्वात् तैजसत्वञ्च युक्तं, श्रुतौ "वेत्थ यथा सौम्य! पञ्चम्यामाहुतावापः पुरुषवचसोभवन्तीति" प्रश्ने "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति" प्रतिवचने च छा० उ० पुरुषशब्दवाच्यदेहेन्द्रियसंघातस्य अम्मयत्वमुक्तम् शुक्रस्य च ब्रीह्याद्युपादनकत्वेन पार्थिवत्वमपि "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति मनुना प्रागदर्शितेन याज्ञ०वचनेन च अन्नोपादानकत्वस्योक्त्या च पार्थिवत्वसिद्धेः। तथा च भूयस्त्वेन त्र्यात्मकत्वमेव मानवदेहानां युक्तम् अतएव "त्र्यात्मकत्वात्तु भूयस्त्वात्तद्व्यपदेशः" शा० सू० त्र्यात्मकत्वमेवोक्तं तेन पाञ्चभौतिकत्वोक्तिरितरभूतोपष्टम्भकतामात्राभिप्राया। श्रुत्या बलवदागमेन विरोधात् कायस्य एकभूतारब्धत्वानुमानं नराशिरःकपालशुचित्वानुमानवत् न प्रसरति। ६६४पृ० दर्शितविवरणोपन्यासोक्तदिशा पाञ्चभौतिकत्ववत् त्रैभौतिकत्वस्याप्युपपत्तेरिति।

गर्भत उत्पत्तिप्रकारः ऐतरयोपनिषदि तद्भाष्ये च दर्शितो यथा–

"पुरुषे ह वा अयमादितो गर्भो भवति। यदेतद्रेतस्तदेतत् सर्व्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्त्ति। तद्यदा स्त्रियां सिञ्चत्यथैतज्जनयति तदस्य प्रथमं जन्म।

तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा। तस्मादेनां न हिनस्ति सास्यैतमात्मानमत्र गतं भावयति।

सा भावयित्री भावयितव्या भवति तं स्त्रीगर्भं बिभर्त्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति। स यत् कुमार,

जन्मनोऽग्रेऽधिभावयति आत्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म।”उप०

“वैराग्यहेतोरयमेवाविद्याकामकर्मवान् यज्ञादिकर्म कृत्वा अस्मल्लोकाद्धूमादिक्रमेण चन्द्रमसम्प्राप्य क्षीणकर्मा वृष्ट्यादिक्रमेणेमं लोकं प्राप्यान्नभूतः पुरुषेऽग्नौ हुतः। तस्मिन् पुरुषे ह वै अयं संसारी रसादिक्रमेणादितः प्रथमं रेतोरूपेण गर्भो भवतीति तदाह तदेतत् पुरुषे रेतस्तेन रूपेणेति। तच्चैतद्रेतोऽन्नमयस्य पिण्डस्य सर्वेभ्यः अङ्गेभ्यो रसादिलक्षणेभ्यस्तेजः साररूपं शरीरस्य, सम्भूतं परिनिष्पन्नं तत् पुरुषस्याऽऽत्मभूतत्वादात्मा। तमात्मानं रेतोरूपेण गर्भीभूतमात्मानमात्मन्येव स्वशरीरे एव बिभर्त्ति धारयति। तद्रेतो यदा यस्मिन् काले भार्य्या ऋतुमती तस्यां योषाऽग्नौ स्त्रियां सिञ्चति। उपगच्छन्नथ तदेतद्रेत आत्मनो गर्भभूतं जनयति पिता। तस्य पुरुषस्य स्थानान्निर्गमनं रेतःसेककाले रेतोरूपेणास्य संसारिणः प्रथमं जन्म प्रथमावस्थाभिव्यक्तिः।

तदेतदुक्तं पुरस्तादसावात्माऽमुमात्मानमित्यादिना। तद्रेतो यस्यां स्त्रियां सिक्तं सत् तस्या आत्मभूयमात्माव्यतिरेकतां यथा पितुरेवं गच्छति प्राप्नोति यथा स्वमङ्गं स्तनादि तथा तद्वदेव। तस्माद्धेतोरेनां मातरं स गर्भो न हिनस्ति पिटकादिवत्। यस्मात् स्तनादि स्वाङ्गवदात्मभूयं गतं तस्मान्न हिनस्ति न बाधते इत्यर्थः। साऽन्तर्वत्नी एवमस्य भर्त्तुरात्मानमत्रात्मन उदरे प्रविष्टं गतं बुद्ध्वा भावयति वर्द्धयति परिपालयति गर्भविरुद्धाशनादिपरिहारमनुकूलाशनाद्युपयोगञ्च कुर्वती। सा भावयित्री वर्द्धयित्री भर्त्तुरात्मनो गर्भभूतस्य भावयितव्या रक्षयितव्या च भर्त्रा भवति। न ह्युपकारप्रत्युपकारमन्तरेण लोके कस्यचित् केनचित् सम्बन्ध उपपद्यते। तं गर्भं स्त्री यथोक्तेन गर्भधारणविधानेन बिभर्त्ति धारयति प्राग्जन्मनः। स पिता अग्र एव पूर्वमेव कुमारं जातमात्रं जन्मनोऽध्यूर्द्ध्वं जन्मनो जातं कुमारं जातकर्म्मादिना यद्भावयति तदात्मानमेव भावयति पितुरात्मैव पुत्ररूपेण जायते। तथा ह्युक्तं “पतिर्जायां प्रविशत इत्यादि” तत् किमर्थमात्मानं पुत्ररूपेण जनयित्वा भावयति? उच्यते—एषां लोकानां सन्तत्यै अविच्छेदायेत्यर्थः। विच्छिद्येरन् हीमे लोकाः पुत्रोत्पादनादि यदि न कुर्युः ते च पुत्रोत्पादनादिकर्म्माऽविच्छेदेनैव सन्तता हि प्रबन्धरूपेण वर्त्तन्ते यस्मादिमे लोकास्तस्मात्तदविच्छेदाय तत्कर्त्तव्यं न मोक्षायेत्यर्थः। तदस्य संसारिणः पुंसः कुमाररूपेण मातुरुदराद्यन्निर्गमनं तद्रेतोरूपापेक्षया द्वितीयं जन्म द्वितीयावस्थाभिव्यक्तिः अस्य पितुः” शाङ्करभाष्यम्।

स्थावराणामपि भोगायतनदेहवत्त्वमस्ति। तदेतदुद्भिज्जशब्दे ८०८पृ० उक्तप्रायमपि सां० सू० प्र०भाष्ययोर्व्यक्तं दर्शितं यथा। “न बाह्यबुद्धिनियमो वृक्षगुल्मलतौषधिवनस्पतितृणवीरुदादीनामपि भोक्तृभोगायतनत्वं पूर्ववत्” सू०। “न बाह्यज्ञानं यत्रास्ति तदेव शरीरमिति नियमः किन्तु वृक्षादीनामन्तःसंज्ञानामपि भोक्तृभोगायतनं शरीरं मन्तव्यम्। यतः पूर्ववत् पूर्वोक्तो यो भोक्त्रधिष्ठानं विना मनुष्यादिशरीरस्य पूतिभावस्तद्वदेव वृक्षादिशरीरेष्वपि शुष्कतादिकमित्यर्थः। तथा च श्रुतिः “अथ यदेकां शाखां जीवो जहात्यथ सा शुष्यतीत्यादिरिति”। न बाह्यबुद्धिनियम इत्यंशस्य पृथक्सूत्रत्वेऽपि सूत्रद्वयमेकोक्त्यैवमेव व्याख्येयम्। सूत्रभेदस्तु दैर्घ्यभयादिति बोध्यम्”भा०। “स्मृतेश्च”सू०। “शरीरजैः कर्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्” इत्यादिस्मृतेरपि वृक्षादिषु भोक्तृभोगायतनत्वमित्यर्थः। ननु वृक्षादिष्वप्येवं चेतनत्वेन धर्माधर्मोत्पत्तिप्रसङ्गस्तत्राह।

“न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः” सू० “न देहमात्रेण धर्माधर्मोत्पत्तियोग्यत्वं जीवस्य, कुतः? वैशिष्ट्यश्रुतेः, ब्राह्मणादिदेहविशिष्टत्वे नैवाधिकारश्रवणादित्यर्थः” भा०।

तस्य कायस्य षाड्विध्यं सां०सू० भा० उक्तं यथा। “स्थूलशरीरगतं विशेषं प्रसङ्गादवधारयति”भा०। “ऊष्मजाण्डजजरायुजोद्भिज्जसाङ्कल्पिकसांसिद्धिकं चेति न नियमः”सू०। “तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति अण्डजं जीवजमुद्भिज्जमिति” श्रुतावण्डजादिरूपं शरीरत्रैविध्यं प्रायिकाभिप्रायेणोक्तं न तु नियमः। यत ऊष्मजादिषड्विधमेव शरीरं भवतीत्यर्थः। तत्रोष्मजा दन्दंशूकादयः। अण्डजाः पक्षिसर्पादयः। जरायुजा मनुष्यादयः। उद्भिज्जा वृक्षादयः। सङ्कल्पजाः सनकादयः। सांसिद्धिका मन्त्रतपआदिसिद्धिजाः। यथा रक्तवीजशरीरोत्पन्नशरीरादयः इति” भा०।

कणादेन संक्षेपेण कायस्य योनिजायोनिजत्वभेदेन द्वैविध्यमुक्तम् तच्च अयोनिजशब्दे ३४७पृ० दर्शितम्। प्रकारान्तरेण कायस्य चातुर्विध्यमुक्तं सां०सू०भा० यथा। “त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः”

सू० त्रयाणामुत्तमाधममध्यमानां सर्वप्राणिनां त्रिप्रकारो देहविभागः, कर्मदेहभोगदेहोभयदेहा इत्यर्थः। तत्र कर्मदेहः परमर्षीणाम्, भोगदेह इन्द्रादीनाम्, उभयदेहश्च राजर्षीणामिति। अत्र प्राधान्येन त्रिधा विभागः। अन्यथा सर्वस्यैव भोगदेहत्वापत्तेः। चतुर्थमपि शरीरमाह" भा०।

"न किञ्चिदप्यनुशयिनः" सू०। "विद्यादनुशयं द्वेष्यं पश्चात्तापानुतापयोः" इतिवाक्यादनुशयो वैराग्यम् विरक्तानां शरीरमेतत्त्रयविलक्षणमित्यर्थः। यथा दत्तात्रेयजडभरतादीनामिति" भा०।

सर्व्वेषु च कायेषु भोक्तुरधिष्ठानमेव तदारम्भे प्रयोजकं तदेतत् सां०सू०भाष्ययोर्दर्शितं यथा

"भोक्तुरधिष्ठानाद्भोगायतननिर्माणमन्यथा पूतिभावप्रसङ्गात्" सू०।

"भोक्तुः प्राणिनोऽधिष्ठानाद्व्यापारादेव भोगायतनस्य शरीरस्य निर्माणं भवति। अन्यथा प्राणव्यापाराभावे शुक्रशोणितयोः पूतिभावप्रसङ्गात् मृतदेहवदित्यर्थः। तथा च रससञ्चारादिव्यापारविशेषैः प्राणो देहस्य निमित्तकारणं धारकत्वादिति भावः। ननु प्राणस्यैवाधिष्ठानत्वं सम्भवति व्यापारवत्त्वात्, न प्राणिनः, कूटस्थत्वात् निर्व्यापारस्याधिष्ठाने प्रयोजनाभावाच्चेति तत्राह" भा०।

"भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्तात्"सू०। "देहनिर्माणे व्यापाररूपमधिष्ठानं स्वामिनश्चेतनस्यैकान्तात् साक्षान्नास्ति, किन्तु प्राणरूपभृत्यद्वारा, यथा राज्ञः पुरनिर्माण इत्यर्थः। तथा च प्राणस्याधिष्ठातृत्वं साक्षात्, पुरुषस्याधिष्ठातृत्वं प्राणसंयोगमात्रेणेति सिद्धम्। कुलालादीनां घटादिनिर्माणेष्वेवम्। विशेषस्त्वयं तत्र चेतनस्य बुद्ध्यादेश्चाप्युपयोगोऽस्ति बुद्धिपूर्वकसृष्टित्वादिति। यद्यपि प्राणाधिष्ठानादेव देहनिर्माणं तथापि प्राणद्वारा प्राणिसंयोगोऽप्यपेक्ष्यते पुरुषार्थमेव प्राणेन देहनिर्माणादित्याशयेन भोक्तुरधिष्ठानादित्युक्तम्" भा०।

स च प्रकारान्तरेण द्विविधः स्थूलसूक्ष्मभेदात् तत्र स्थूलकायोऽपि व्यष्टिसमष्टिभेदात् द्विविधः। तत्र व्यष्टिकायोऽस्मदादीनां, तदुत्पत्तिप्रकारो विस्तरेण दर्शितः। समष्टिकायस्तु विराट्शब्दवाच्यः। तस्योत्पत्तिप्रकारः संक्षेपेण ऐतरेयोपनिषदि तद्भाष्ये च दर्शितो यथा।

"स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्" उपनि०।

"सर्व्वप्राणिकर्मफलोपादानाधिष्ठानभूतान् चतुरो लोकान् सृष्ट्वा स ईश्वरः पुनरेवैक्षत—इमे त्वम्भःप्रभृतयो मया सृष्टा लोकाः परिपालयितृवर्जिता विनश्येयुः, तस्मादेषां रक्षणार्थं लोकपालान् लोकानां पालयितॄन् सृजेऽहमिति। एवमीक्षित्वा सोऽद्भ्य एवाप्प्रधानेभ्यः पञ्चभूतेभ्यो येभ्योऽम्भःप्रभृतीन् सृष्टवान् तेभ्य एवेत्यर्थः। पुरुषं पुरुषप्रकारं शिरःपाण्यादिमन्तं समुद्धृत्याद्भ्यः समुपादाय मृत्पिण्डमिव कुलालः पृथिव्या अमूर्च्छयत् संमूर्च्छितवान् सम्पिण्डितवान् स्वावयवसंयोजनेनेत्यर्थः" शाङ्क०भा०

"तमभ्यतपत्तस्याऽभितप्तस्य मुखं निरभिद्यत यथाण्डम्, मुखाद्वाग्वाचोऽग्निः, नासिके निरभिद्येतां, नासिकाभ्यां प्राणः, प्राणाद्वायुः, अक्षिणी निरभिद्येताम्, अक्षिभ्याञ्चक्षुश्चक्षुष आदित्यः, कर्णौ निरभिद्येतां, कर्णाभ्यां श्रोत्रं, श्रोत्राद्दिशः, त्वङ्निरभिद्यत, त्वचो लोमानि, लोमभ्य ओषधिवनस्पतयो, हृदयं निरभिद्यत, नाभ्या अपानः, अपानान्मृत्युः, शिश्नं निरभिद्यत, शिश्नाद्रेतो, रेतस आपः" उप०।

"तं पिण्डं पुरुषविधमुद्दिश्याभ्यतपत् तदभिध्यानं सङ्कल्पं कृतवानित्यर्थः। "यस्य ज्ञानमयं तपः"इति श्रुतेः तस्याभितप्तस्येश्वरसङ्कल्पेन तपसाभितप्तस्य पिण्डस्य मुखं निरभिद्यत मुखाकारं सुषिरमजायत। यथा पक्षिणोऽण्डं निर्भिद्यते एवम्। तस्माच्च निर्भिन्नान्मुखाद्वाक्करणमिन्द्रियं निरवर्त्तत ततोवाचस्तदधिष्ठाताग्निर्लोकपालः। तथा नासिके निरभिद्येताम्, नासिकाभ्यां प्राणः, प्राणाद्वायुरिति सर्व्वत्राधिष्ठानं करणं देवता च त्रयं क्रमेण निर्भिन्नमिति। अक्षिणी कर्णौ त्वक्। हृदयमन्तःकरणाधिष्ठानम्। मनोऽन्तःकरणम्। नाभिः सर्वप्राणनिबन्धनस्थानम्। तस्मादपानसंयुक्तत्वादपान इति पाय्विन्द्रियमुच्यते। तस्याधिष्ठात्री देवता मृत्युर्यथान्यत्र तथा, शिश्नं निरभिद्यत प्रजनेन्द्रियस्थानमिन्द्रियं, रेतोविसर्गार्थत्वात्सह रेतसा उच्यते रेतस आपः इति" भा०।

एवं साधिदैवतेन्द्रियादिसृष्टिमुक्त्वा सृष्टदेवतानां यथायतनं प्रवेशोऽपि तत्रोक्तो यथा

"ता अब्रवीद्यथायतनं प्रविशतेति" उप०।

"ता देवता ईश्वरोऽब्रवीत्-इदमासामिदमधिष्ठानमिति मत्वा, सर्व्वे हि स्वयोनिषु रमन्ते, अतो यथाऽऽयतनं यस्य यद्वदनादिक्रियायोग्यमायतनं तत्प्रविशेति" भा०।

"अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणोभूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं

भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्, चन्द्रमा मनो भूत्वा हृदय प्राविशत् मृत्युरपानो भूत्वा नाभिं प्राविशत् आपो रेतो भूत्वा शिश्नं प्राविशत्" उपनि० ।

"तथास्त्वित्यनुज्ञां प्रतिलभ्य ईश्वरस्य नगर्य्यामिव बलाधिकृताः । अग्निर्वागभिमानी वागेव भूत्वा स्वां योनिं मुखं प्राविशत्तथोक्तार्थमन्यत् । वायुर्नासिके । आदित्योऽक्षिणी । दिशः कर्णौ । औषधिवनस्पतयस्त्वचम् । चन्द्रमा हृदयम् । मृत्युर्नाभिम् । आपः शिश्नं प्राविशन्" भा० ।

विस्तरस्तु भाग० २स्क० १०अ० उक्तोयथा

"पुरुषोऽण्डं विनिर्भिद्य यदासौ स विनिर्गतः । आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः" ११ ।

"उक्तमेवाध्यात्मादिविभागं प्रपञ्चयन् "यदुताहं त्वया पृष्टो वैराजात् पुरुषादिदम् । यथासीत्तदुपाख्यास्ये" इति प्रतिज्ञातं तदुत्पत्तिप्रकारमाह पुरुष इत्यादिना पुरुषो वैराजः अण्डं विनिर्भिद्य पृथक्कृत्य विनिर्गतः पृथक् स्थित इत्यर्थः अयनं स्थानमन्विच्छन् यतः शुचिः स्वयं अतः शुचीः शुद्धाः अपः गर्भोदकसंज्ञाः असाक्षीत् ससर्ज" ११ श्रीधरः ।

"तास्ववात्सीत् स्वसृष्टासु सहस्रं परिवत्सरान् । तेन नारायणो नाम यदापः पुरुषोद्भवाः" १२ ।

"अप्सु निवासं नारायणनामनिरुक्त्या स्पष्टयति तेन अप्सुवासेन, यत् यस्मात् पुरुषो नरः तस्म उद्भवो यासां ता नारा आपोऽयनमस्य इति नारायण इत्यर्थः । तदुक्तं "आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः इति" १२ श्रीधरः

"द्रव्यं कर्म च कालश्च स्वभावो जीवएव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया" १३ ।

"तस्य प्रभावमाह द्रव्यमुपादानं, कर्मादीनि निमित्तानि, जीवो भोक्ता यस्याऽनुग्रहात् सन्ति कार्य्यक्षमा भवन्तीत्यर्थः" १३ श्रीधरः ।

"एको नानात्वमन्विच्छन् योगतल्पात् समुत्थितः । वीर्य्यं हिरण्मयं रेतो मायया व्यसृजत् त्रिधा" १४ ।

"योगएव तल्पं शय्या तस्मात् । वीर्य्यं गर्भरूपं देहं हिरण्मयमिव प्रकाशबहुलम्" १४ श्रीधरः ।

"अधिदैवमथाध्यात्ममधिभूतमिति प्रभुः । अथैकं पौरुषं वीर्य्यं त्रिधाऽभिद्यत तच्छृणु" १५ ।

"तस्यैव प्रपञ्चः अथेत्यादिना" १५ श्रीधरः ।

"अन्तःशरीर आकाशात् पुरुषस्य विचेष्टतः । ओजः सहोबलं जज्ञे ततः प्राणो महानसुः" १६ ।

"अन्तःशरीर यआकाशः तस्मात्, क्रियाशक्त्या तत्र विविधं चेष्टमानस्य सतः, ओजः-इन्द्रियशक्तिः, सहो-मनः शक्तिः, बलं-देहशक्तिः, ततः शक्त्यात्मकात् सूक्ष्माद्रूपात् प्राणः सूत्राख्यः महान् मुख्यः असुः प्राणः सर्वेषाम्" १६ श्रीधर ।

"अनुप्राणन्ति यं प्राणाः प्राणन्तं सर्व्वजन्तुषु । अपानन्तमपानन्ति नरदेवमिवाऽनुगाः" १७ ।

"महत्त्वं दर्शयति अन्विति यं प्राणन्तं चेष्टां कुर्व्वन्तं प्राणा इन्द्रियाणि अनु पश्चात् प्राणन्ति चेष्टां कुर्व्वन्ति अपानन्तं चेष्टां त्यजन्तं अनु अपानन्ति चेष्टां त्यजन्ति, राजानमनु भृत्या इव" १७ श्रीधरः ।

"प्राणेन क्षिपता क्षुत्तृडन्तराजायते विभोः । पिपासतोजक्षतश्च प्राङ्मुखं निरभिद्यत" १८ ।

"क्षिपता चालयता निमित्तेन क्षुत्तृडादिकन्तु विराड्जीवाभेदेनोपासनार्थमुक्तम् आजायते स्म ततः जक्षतो भक्षयितुमिच्छत इत्यर्थः प्राक् प्रथमं निरभिद्यत विभक्तमभूत्" १८ श्रीधरः ।

"मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते । ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते" १९ ।

"तालु अधिष्ठानं, जिह्वा इन्द्रियं नानारसो विषयः वरुणश्च देवता ज्ञातव्या एवं सर्व्वत्र अधिष्ठानमिन्द्रियं देवता विषय इत्येतच्चतुष्टयमनुक्तमप्यूह्यम्" १९ श्रीधरः ।

"विवक्षोर्मुखतो भूम्नो वह्निर्वाग्व्याहृतं तयोः । जले वै तस्य सुचिरनिरोधः समजायत" २० ।

"विवक्षोर्वक्तुमिच्छोर्मुखतएव वह्निर्देवता वाक् इन्द्रियं व्याहृतं भाषणं तयोरिति इन्द्रियदेवताधीनत्वं कर्मणो दर्शयति" २० श्री० ।

"नासिके निरभिद्येतां दोधूयति नभस्वति । तत्र वायुर्गन्धवहो घ्राणोनसि जिघृक्षतः" २१ ।

"नभस्वति प्राणवायौ दोधूयति दोधूयमाने अत्यन्तं प्रचलति सति । तत्र नसि नासिकायां वायुर्देवता गन्धं वहतीति तथा, अनेन गन्धो विषयो दर्शितः घ्राण इन्द्रियं जिघृक्षतः गन्धं ग्रहीतुमिच्छतः" २१ श्रीधरः ।

"यदात्मनि निरालोकमात्मानञ्च दिदृक्षतः । निर्भिन्ने अक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः" २२ ।

"निरालोकं प्रकाशशून्यम् आसीदिति शेषः निर्म-क्षिकमितिवदव्ययीभावः । तदा आत्मानं देहं चकारा-दन्यच्च वस्तु दिदृक्षतः अक्षिणी स्थानं ज्योतिरादित्यो देवता, चक्षुरिन्द्रियं, ततो गुणस्य रूपस्य ग्रहोग्रहणम् अनेन रूपं विषयो दर्शितः" २२ श्रीधरः ।

"बोध्यमानस्य ऋषिभिरात्मनस्तज्जिघृक्षतः । कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः" २३ ।

"ऋषिभिर्वेदैर्बोध्यमानस्य तदात्मनः प्रबोधनं ग्रहीतु-मिच्छतः ततो गुणग्रहः शब्दग्रहणम्" २३ । श्रीधरः

"वस्तुनो मृदुकाठिन्यलघुगुर्व्वोष्णशीतताम् । जिघृक्षत-स्त्वङ् निर्भिन्ना तस्यां रोम महीरुहाः" २४ ।

"मृदुत्वञ्च काठिन्यञ्च लघुत्वञ्च गुरुत्वञ्च आउष्णत्वञ्च ईषदुष्णत्वं शीतताञ्चेत्यर्थः । यद्यप्यलुष्णत्वमपत्वगीन्द्रिय-विषयमेव तथापि तस्य जिघृक्षाभावात् औष्णत्वमित्युक्तं गुर्व्वोष्णेति पाठे वक्तादेशश्छान्दसः । वस्तुन एतान् धर्मान् जिघृक्षतस्त्वङ्निर्भिन्ना त्वगिन्द्रियाधिष्ठानं चर्म जातमित्यर्थः । तस्यां रोमाणि, इन्द्रियं, महीरुहाश्च देवता जाता वस्तुनि हस्तेनोत्तोलिते लघुत्वगुरुत्वयोर्ज्ञानात्तयोरपि त्वगि-न्द्रियविषयत्वमिति पौराणिकाः" २४ । श्रीधरः

"तत्र चान्तर्बहिर्वातस्त्वचालब्धगुणोवृतः" २५ । तत्र त्वचि अन्तर्बहिश्च वातो वायुर्वृतः आहत्यस्थितः कर्त्तरि निष्ठा । कथम्भूतः? त्वचा लब्धो गुणस्पर्शो येन । अयमर्थः त्वगिन्द्रियमेव बहिः कण्डूतिग्रहितं स्पर्शं गृह्णत् रोमशब्दे-नोच्यते । तत्र महीरुहाणां देवतात्वम् । अन्तर्बहिश्च स्पर्शं गृह्णत् तदेव त्वक्शब्देनोच्यते तत्र वातो देवता । तथाच तृतीये वक्ष्यति "त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमो-षधीः । अंशेन लोमभिः कण्डूं यैरसौ प्रतिपद्यते । निर्भिन्नान्यस्य चर्माणि लोकपालोऽनिलोऽविशत् । प्राणि-नांशेन संस्पर्शं येनासौ प्रतिपद्यते" इति । तत्र चर्मा-णीति चर्मोपलक्षिता त्वगित्यर्थः प्राणेनांशेनेति प्राण-वायुना व्याप्तेन त्वगिन्द्रियेणेत्यर्थः । बह्वृचश्रुतौ त्वेक एवां-शोनिर्दिष्टः "त्वङ्निरभिद्यत त्वचोलोमानि लोमभ्य ओषधिवनस्पतय इति" २५ । श्रीधरः

"हस्तौ रुरुहतुस्तस्य नानाकर्मचिकीर्षया । तयोस्तु बलवानिन्द्र आदानमुभयाश्रयम्" २६ ।

"रुरुहतुः निर्भिन्नौ बलमिन्द्रियम् इन्द्रो देवता तदुभ-याश्रयम् आदानं कर्म" २६ । श्रीधरः

"गतिं जिगीषतः पादौ रुरुहातेऽभिकामिकाम् । यज्ञार्थं यत्र: स्वयं हव्यं कर्मभिः क्रियते नृभिः" । २७

"अभिकामिकाम् अभीष्टां विहितामित्यर्थः । यज्ञार्थं यज्ञ-यज्ञो विष्णुरेव स्वयं तदधिष्ठातृरूपेण स्थितः । कर्मभिरिति गत्याख्यकर्मयज्ञैरिन्द्रियसक्तं हव्यं क्रियते इति गति-प्राप्यं यज्ञार्थं द्रव्यं विषय इत्युक्तं नृभिरिति व्यष्टि-जीवेष्वपीयमेव रीतिरिति दर्शयन्नराधिकारित्वं यज्ञादीनां दर्शयति" २७ श्रीधरः ।

"निरभिद्यत शिश्नोवै प्रजानन्दामृतार्थिनः । उप-स्थ आसीत् कामानां प्रियं तदुभयाश्रयम्" २८ ।

"प्रजा अपत्यम् आनन्दोरतिः अमृतं स्वर्गादि तदर्थिनः शिश्नोऽधिष्ठानम् उपस्थ इन्द्रियं प्रजापतिश्चासीदिति शेषम् । तदुभयाश्रयम् इन्द्रियदेवताश्रयम् । कामानां स्त्रीसम्भोगानां सम्बन्धि प्रियं सुखम्" २८ श्रीधरः

"उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम् । ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः" २९ ।

"धातुमलं भुक्तान्नादीनाम् असारांशं त्यक्तुमिच्छोः गुदपायुमित्रोत्सर्गा अधिष्ठानेन्द्रियदेवताविषयाः" २९श्री०

"आसिसृप्सोः पुरःपुर्या नाभिद्वारमपानतः । तत्रा-पानस्ततो मृत्युः, पृथक्त्वमुभयाश्रयम्" ३० ।

"पुर्या देहात् पुरा देहान्तराणि आसिसृप्सोः सर्वतो गन्तुमिच्छोः, निरभिद्यत इत्यनुषङ्गः । अपानतः अपग-च्छतः पृथक्त्वं मरणं । नाभ्यादीन्यधिष्ठानादीनि नाभ्यां हि प्राणापानयोर्वन्धविश्लेषे मृत्युरिति प्रसिद्धम्" ३० । श्री०

"आदित्सोरन्नपानानामासन् कुक्ष्यन्त्रनाडयः । नद्यः समुद्राश्च तयोस्तुष्टिः पुष्टिस्तदाश्रये" ३१ ।

"अन्नपानमादित्सोः संग्रहेच्छोः कुक्षिश्च अन्त्राणि च नाड्यश्चासन् । तत्र कुक्षिरधिष्ठानम् । अन्त्राणि अन्नसंग्रहे-करणम् इन्द्रियस्थानीयं, नाड्यस्तु पानसंग्रहे तयोर्नाड्यन्त्र-वर्गयोः क्रमेण नद्यः समुद्राश्च देवते तुष्टिरुदरभरणं पुष्टिस्तु रसपरिणामतः स्थौल्यं, तदाश्रये तदुभयनिमित्ते तत्राद्य संग्रहेच्छोः कुक्ष्यन्त्रसमुद्रतुष्टय इति चतुष्टयं, पेयसंग्र-हेच्छोः कुक्षिनाडीनदीपुष्टय इति विवेकः" ३१ श्री०

"निदिध्यासोरात्ममायां हृदयं निरभिद्यत । ततो-मनश्चन्द्र इति सङ्कल्पः कामएव च" ३२ ।

"निदिध्यासोर्नितरां चिन्तयितुमिच्छोः कामोऽभिलाषः हृदयमनश्चन्द्रसङ्कल्पा अधिष्ठानादयः" ३२ श्रीधरः ।

"त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः । भूम्यप्-तेजोमयाः सप्त, प्राणोव्योमाम्बुवायुभिः" ३३ ।

"तदेवम् अधिदैवादिभेदं विभज्य उक्त्वा तदंशभूतानां धात्वादीनां स्वरूपमाह त्वगिति द्वाभ्यां, त्वक् स्थूलं चर्म्म, तदुपरिस्थितं सूक्ष्मं, त्वगादयोऽस्थ्यन्ताष्टौ कवञ्चत्वेन निर्दिष्टाः सप्त ये धातवस्ते भूम्यप्तेजोमयाः तेषां पाञ्चभौतिकत्वेऽपि वाय्वाकाशयोराहाररूपत्वेन संवर्द्धकत्वाभावादेवमुक्तम्" ३३ श्रीधरः।

"गुणात्मकानीन्द्रियाणि भूतादिप्रभवा गुणाः। मनः सर्व्वविकारात्मा बुद्धिर्विज्ञानरूपिणी" ३४।

"गुणात्मकानि गुणेषु शब्दादिषु आत्मा येषां विषयाभिमुखस्वभावानीत्यर्थः। गुणाः शब्दादयः भूतादिरहङ्कारः ततः प्रकर्षेण भवन्तीति तथा, अहङ्कारकल्पितशोभनस्वभावा न वस्तुतस्तथेत्यर्थः। अत्र हेतुः यतो मनएव सर्व्वविकाराणाम् आत्मा स्वरूपं, बुद्धिस्तु तथा भूतार्थविज्ञानरूपिणी। न तु परमार्थग्राहिणीति वैराग्यार्थमुक्तम् अनेनैव बुद्धिमनसोः स्वरूपञ्चोक्तम्"।

"एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया। मह्यादिभिश्चावरणैरष्टभिर्बहिरावृतम्" ३५।

"उपसंहरति एतदिति प्रकृत्या सह अष्टभिः" ३५ श्री०। विस्तरस्तु विराट्शब्दे दृश्यः।

सूक्ष्मोऽपि द्विविधः आधाराधेयभेदात्। तत्राधारभूतस्य आतिवाहिकत्वं तत्स्वरूपादिकं च ६६६ ३ पृ० दर्शितम्। "तत्क्षणादेव गृह्णाति शरीरमातिवाहिकमिति" विष्णु ध०। "आतिवाहिकसंज्ञोऽसौ देहो भवति भार्गव!। केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित्" विष्णु ध०। "आतिवाहिक एकोऽस्ति देहोऽन्यस्त्वाधिभौतिकः। सर्व्वासां भूतजातीनां ब्रह्मणस्त्वेक एव हि" सां०प्र०भा० धृतवाक्यम्। आधेयकायस्तु तदाश्रितं सप्तदशावयवं सूक्ष्मशरीरम् तच्च आतिवाहिकशब्दे ६६३पृ० दर्शितम्। तच्च वेदान्तिमते "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" इत्युक्तलक्षणम्। साङ्ख्यमते पञ्चप्राणस्थले पञ्चभूतानीति भेदः आतिवाहिकशब्दे ६६३पृ०विवृतिः। स च प्रथमतः हिरण्यगर्भस्यैवोत्पद्यते तत एव कर्म्मविशेषात् उच्चावचकायोत्पत्तिस्तयोक्ता सां०सू०भा० "ननु लिङ्गं चेदेकं तर्हि कथं पुरुषभेदेन विलक्षणा भोगाः स्युः? तत्राह। "व्यक्तिभेदः कर्म्मविशेषात्" सू०। "यद्यपि सर्गादौ हिरण्यगर्भोपाधिरूपमेकमेव लिङ्गं तथापि तस्य पश्चाद्व्यक्तिभेदो व्यक्तिरूपेणांशतो नानात्वमपि भवति यथेदानीमेकस्य पितृलिङ्गदेहस्य नानात्वमंशतो भवति पुत्रकन्यादिलिङ्गदेहरूपेण। तत्र कारणमाह कर्म्मविशेषादिति। जीवान्तराणां भोगहेतुकर्म्मादेरित्यर्थः। अत्र विशेषवचनात् समष्टिसृष्टिजीवानां साधारणैः कर्म्मभिर्भवतीत्यायातम्। अयं च व्यक्तिभेदो मन्वादिभिरप्युक्तः। यथा मनौ पुरुषस्य षडिन्द्रियोत्पत्त्यनन्तरम्

"तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्। सन्निवेश्यात्ममात्रासु सर्व्वभूतानि निर्ममे" इति षण्णामिति समस्तलिङ्गशरीरोपलक्षणम्। आत्ममात्रासु चिदंशेषु संयोज्येत्यर्थः। तथा च तत्रैव वाक्यान्तरम्

"तच्छरीरसमुत्पन्नैः कार्य्यैस्तैः करणैः सह। क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः"।

तस्य च सर्व्वकायव्यापित्वेऽपि शास्त्रेऽङ्गुष्ठमात्रतया कल्पनं यथा साङ्ख्यप्रवचनभाष्ये—

"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः"। "अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः" इति श्रुतिस्मृती न हि लिङ्गशरीरस्य सकलशरीरव्यापिनः स्वतोऽङ्गुष्ठमात्रत्वं सम्भवति। अत आधाराङ्गुष्ठमात्रत्वमर्थात् सिद्ध्यति। यथा दीपस्य सर्व्वगृहव्यापित्वेऽपि कलिकाकारत्वं तैलवर्त्त्यादिसूक्ष्मांशस्य दशोपरि सम्पिण्डितस्य पार्थिवभागस्य कलिकाकारता तथैव लिङ्गदेहस्य देहव्यापित्वेऽप्यङ्गुष्ठपरिमाणत्वं स्वाश्रयभूतस्याङ्गुष्ठपरिमाणत्वेनानुमेयमिति"।

तथा च भोगसाधनत्वेन भोगायतनत्वं लिङ्गशरीरस्यैव तदाश्रयत्वात् स्थूलशरीरस्य तथा व्यवहार उपचारात्, तदेतत् सां०प्र० भाष्ययोर्दर्शितं यथा

"तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः" सू०। "तस्य लिङ्गस्य यदधिष्ठानमाश्रयो वक्ष्यमाणभूतपञ्चकं तदाश्रये षाट्कौशिकदेहे तद्वादो देहवादस्तद्वादात् तस्याधिष्ठानशब्दोक्तस्य देहवादादित्यर्थः लिङ्गसम्बन्धादधिष्ठानस्य देहत्वम्, अधिष्ठानाश्रयत्वाच्च स्थूलस्य देहत्वमिति पर्य्यवसितोऽर्थः। अधिष्ठानशरीरं च सूक्ष्मं पञ्चभूतात्मकं वक्ष्यते तथा च शरीरत्रयं सिद्धम्" भा०।

वेदान्तिमते कारणशरीरमप्येकमस्ति तच्चाविद्यारूपं वेदान्तसारे तच्चोक्तम्। चीयते सञ्चीयते संघातरूपेण चि—कर्म्मणि घञ्। आर्हतमतसिद्धे जीवधर्म्माधर्म्माकाशपुद्गलोपाधिके विद्यमाने १३ संघातभेदे जीवास्तिकायः धर्म्मास्तिकायः अधर्म्मास्तिकायः आकाशास्तिकायः

पुद्गलास्तिकायः इति हि तेषां मते पञ्च पदार्थाः। अर्हच्छब्दे ३८४पृ० विवृतिः।

"कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि। योगिनः कर्म्म कुर्व्वन्ति" गीता। "पश्चार्द्धेन प्रविष्टः शरपतनभयात् भूयसा पूर्व्वकायम्" शकु०। "पर्य्यङ्कबन्धस्थिरपूर्व्वकायम्" कुमा०।

**कायचिकित्सा** स्त्री ६त० अष्टविधेषु आयुर्वेदाङ्गेषु मध्ये सुश्रुतोक्ते चिकित्साङ्गभेदे। "ततोऽल्पायुष्ट्वमल्पमेधस्त्वञ्चावलोक्य नराणां भूयोऽष्टधा प्रणीतवान्—तद्यथा शल्यं शालक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति" विभज्य सुश्रुते लक्षितं यथा "कायचिकित्सा नाम सर्व्वाङ्गसंसृतानां व्याधीनां ज्वरातिसाररक्तपित्तशोषोन्मादापस्मारकुष्ठादीनामुपशमनार्थम्"।

**कायबन्धन** न० कायं बध्नाति बन्ध—ल्यु। चेतनाधिष्ठिते शुक्रशोणितयोः संयोगभेदे। "भोक्तुरधिष्ठानात् भोगायतननिर्म्माणमन्यथा पूतिभावप्रसङ्गात्" सां०सू० चेतनाधिष्ठानेनैव शुक्रशोणितसंयोगस्य देहारम्भहेतुत्वोक्तेस्तस्य तथात्वम्।

**कायमान** न० कायस्य मानमिव मानमस्य। १पर्णकुटीरे त्रिका०। तस्य विशालत्वाभावेन काममात्रपरिच्छेदकत्वात्तन्मानत्वम्। ६त०। २देहपरिमाणे न०।

**कायरूपसंयम** पु० पात० सूत्रोक्ते ध्यानविशेषरूपे संयमभेदे स च तत्र सविस्तरं फलसहितो दर्शितो यथा।

"कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासंयोगेऽन्तर्द्धानम्" सू०।

"कायरूपे संयमाद्रूपस्य या ग्राह्या शक्तिस्तां प्रतिबध्नाति ग्राह्यशक्तिस्तम्भे सति चक्षुःप्रकाशासंयोगेऽन्तर्धानमुत्पद्यते योगिनः। एतेन शब्दाद्यन्तर्द्धानमुक्तं वेदितव्यम्" व्यासभाष्य०।

"पञ्चात्मकः कायः स च रूपवत्तया चाक्षुषो भवति रूपेण हि कायस्य तद्रूपञ्च चक्षुर्ग्रहणकर्मशक्तिमनुभवति तत्र यदा रूपे संयमविशेषो योगिना क्रियते तदा रूपस्य ग्राह्यशक्तौ रूपवत्कायप्रत्यक्षताहेतुः स्तभ्यते तस्मात् ग्राह्यशक्तिस्तम्भे सत्यन्तर्द्धानयोगिनस्ततः परकीयचक्षुर्जनितेन प्रकाशेन ज्ञानेनासम्प्रयोगः चक्षुर्ज्ञानाविषयत्वं योगिनः कायस्यैवेति यावत् तस्मिन् कर्त्तव्येऽन्तर्द्धानं कारणमित्यर्थः। एतेनेति कायशब्दस्पर्शरसगन्धसंयमात्तद्ग्राह्यशक्तिस्तम्भे श्रोत्रत्वग्रसनघ्राणप्रकाशासम्प्रयोगे ऽन्तर्द्धानमिति" विव०।

**कायवलन** न० कायोवल्यते आच्छाद्यतेऽनेन वल—वृतौ करणे ल्युट्। कवचे वर्म्मणि हारा०।

**कायव्य** पु० भारतोक्ते दस्युप्रभुभेदे तदुत्पत्तिकथादि भा० शा० १२५अ० यथा।

"निषाद्यां क्षत्रियाज्जातः क्षत्रधर्म्मानुपालकः। कायव्यो नाम नैषादिर्दस्युत्वात् सिद्धिमाप्तवान्। अरण्ये सायं पूर्व्वाह्णे मृगयूथप्रकोपिता। विधिज्ञो मृगजातीनां नैषादानाञ्च कोविदः। सर्व्वकालप्रदेशज्ञः पारियात्रचरः सदा। धर्मज्ञः सर्व्वभूतानाममोघेषुर्दृढायुधः। अप्यनेकशता सेना एक एव जिगाय सः। स वृद्धावन्धबधिरौ महारण्येऽभ्यपूजयत्। मधुमांसैर्मूलफलैरन्नैरुच्चावचैरपि। सत्कृत्य भोजयामास मान्यान् परिचचार च। आरण्यकान् प्रव्रजितान् ब्राह्मणान् परिपूजयन्। अपि तेभ्यो मृगान् हत्वा निनाय सततं वने। येऽस्मान्न प्रतिगृह्णन्ति दस्युतो जनशङ्कया। तेषामासज्य गेहेषु कल्य एव स गच्छति। बहूनि च सहस्राणि ग्रामणीत्वेऽभिवव्रिरे। निर्म्मर्य्यादानि दस्यूनां निरनुक्रोशवर्त्तिनाम्। दस्यवः ऊचुः। मुहूर्त्तदेशकालज्ञः प्राज्ञः शूरो दृढव्रतः। ग्रामणीर्भव नो मुख्यः सर्वेषामेव सम्मतः। यथा यथा वक्ष्यसि नः करिष्यामस्तथा तथा। पालयास्मान् यथान्याय यथा माता यथा पिता। कायव्य उवाच। मा वधीस्त्वं स्त्रियं भीरुं मा शिशुं मा तपस्विनम्। नायुध्यमानो हन्तव्यो न च ग्राह्या बलात् स्त्रियः। सर्व्वथा स्त्री न हन्तव्या सर्व्वसत्त्वेषु केनचित्। नित्यन्तु ब्राह्मणे स्वस्ति योद्धव्यञ्च तदर्थतः। सत्यञ्च नाभिहन्तव्यं सारविघ्नञ्च मा कृथाः। पूज्यते यत्र देवाश्च पितरोऽतिथयस्तथा। सर्व्वभूतेष्वपि च वै ब्राह्मणो मोक्षमर्हति। कार्य्या चोपचितिस्तेषां सर्व्वस्वेनापि या भवेत्। यस्य ह्येते सम्प्रदुष्टा मन्त्रयन्ति पराभवम्। न तस्य त्रिषु लोकेषु त्राता भवति कश्चन। यो ब्राह्मणान् परिवदेद्विनाशञ्चापि रोचयेत्। सूर्य्योदय इव ध्वान्ते ध्रुवं तस्य पराभवः। इहैव फलमासीनः प्रत्य काङ्क्षेत सर्वशः। ये ये नो न प्रदास्यन्ति तांस्तांस्तेनाभियास्यति। शिष्ट्यर्थं विहितो दण्डो न वृद्ध्यर्थं विनिश्चयः। ये च शिष्टान् प्रबाधन्ते दण्डस्तेषां बधः स्मृतः। ये च राष्ट्रोपरोधेन वृद्धिं कुर्वन्ति केचन। तदैव तेऽनुमीयन्ते कुणपे कृमयो यथा। ये पुनर्धर्म्मशास्त्रेण वर्त्तेरन्निह दस्यवः। अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः"।

**कायव्यूह** काये वातादीनां धातूनां सप्तानां त्वगादीनाञ्च व्यूहो व्यूहनम्। कायस्थवातादीनां विन्यासे "नाभिचक्रे कायव्यूहज्ञानम्" पात० सू० "नाभिचक्रे संयमं कृत्वा कायव्यूहं विजानीयात्। वातपित्तश्लेष्माणस्त्रयो दोषाः सप्त सन्ति धातवः-त्वग्लोहितमांसस्नाय्वस्थिमज्जाशुक्राणि पूर्व्वं पूर्व्वमेषां बाह्यमित्येवंविन्यासज्ञानम्" भा०।इत०। योगिभिः कर्मभोगार्थं कल्पिते २कायसमुदाये च यथा च भोगार्थं कायव्यूहरचना तथा चिन्तामणौ मुक्तिवादे उक्तं यथा "यत्तु माऽभुक्तमिति स्मृतिविरोधेन चीयन्तइत्यादिश्रुतेरन्यथार्थवर्णनं, तन्न स्मृतेः प्रत्यक्षवेदबाधितत्वेन तद्विरुद्धार्थकवेदाननुमापकत्वात्। वामदेवसौभरिप्रभृतीनां कायव्यूहश्रवणात्तत्त्वज्ञानेन कायव्यूहमुत्पाद्य भोगद्वारा कर्मक्षय इति चेन्न तपःप्रभावादेव तत्त्वज्ञानानुत्पादे वा कायव्यूहसम्भवात्। भोगजननार्थञ्च कर्मभिरवश्यं तत्तत्कायनिष्पादनमिति न तत्र तत्त्वज्ञानोपयोगः। यौगपद्यञ्च कायानां तज्जनकधर्मस्वभावात् तपःप्रभावाद्वा"।

एकस्यैव जीवस्य चित्तान्तराणि कायेन्द्रियाणि च निर्म्माय तत्तत्कर्म्मभोगार्थरचितकायव्यूहेन योग इत्येतत् शा० भा० समर्थितं यथा। "सङ्कल्पादेव तु तच्छ्रुतेः" शा० सू०। "हार्दविद्यायां श्रूयते—"स यदि पितृलोककामोभवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादि"। तत्र संशयः—किं सङ्कल्प एव केवलः पित्रादिसमुत्थानहेतुः उत निमित्तान्तरसहितः? इति। तत्र सत्यपि सङ्कल्पादेवेति श्रवणे लोकवन्निमित्तान्तरापेक्षा युक्ता यथा लोकेऽस्मदादीनां सङ्कल्पाद् गत्यादिभ्यश्च हेतुभ्यः पित्रादिसम्पत्तिर्भवत्येवं मुक्तस्यापि स्यात् एवं दृष्टविपरीतं न कल्पितं भविष्यति। सङ्कल्पादेवेति तु राज्ञइव सङ्कल्पितार्थसिद्धिकरीं साधनान्तरसामग्रीं सुलभामपेक्ष्योच्यते। न च सङ्कल्पमात्रसमुत्थानाः पित्रादयोमनोरथविजृम्भितवच्चञ्चलत्वात् पुष्कलं भोगं समर्पयितुं पर्य्याप्नुयुरित्येवं प्राप्ते ब्रूमः—सङ्कल्पादेव तु केवलात् पित्रादिसमुत्थानमिति। कुतः? तच्छ्रुतेः "सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादिका" हि श्रुतिर्निमित्तान्तरापेक्षायां पीड्येत। निमित्तान्तरमपि यदि सङ्कल्पानुविधाय्येव स्याद्भवतु न तु प्रयत्नान्तरसम्पाद्यं निमित्तान्तरमिष्यते प्राक् तत्सम्पत्तेर्बन्ध्यसङ्कल्पत्वप्रसङ्गात्। न च श्रुतिगम्येऽर्थे लोकवदिति सामान्यतो दृष्टं क्रमते। सङ्कल्पबलादेव चैषां यावत्प्रयोजनं स्थैर्य्योपपत्तिः, प्राकृतसङ्कल्पविलक्षणत्वान्मुक्तसङ्कल्पस्य" भा०। "अतएव चानन्याधिपतिः" सू० "अतएव चावन्ध्यसङ्कल्पत्वादनन्याधिपतिर्विद्वान् भवति नास्यान्योऽधिपतिर्भवतीत्यर्थः। न हि प्राकृतोऽपि सङ्कल्पयन्नन्यस्वामिकस्त्वमात्मनः सत्यां गतौ सङ्कल्पयति। श्रुतिश्चैतद्दर्शयति "अथ य इहात्मानमनुविद्य प्रव्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारोभवतीति" भा०। "अभावं वादरिराह ह्येवम्" सू० "सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यतः श्रुतेर्मनस्तावत्सङ्कल्पसाधनं सिद्धं शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्य्यस्य विदुषः सन्ति न सन्तीति समीक्ष्यते तत्र वादरिस्तावदाचार्य्यः शरीरस्येन्द्रियाणाञ्चाभावं महीयमानस्य विदुषो मन्यते। कस्मात्? एवं ह्याहाम्नायः "मनसैतान् कामान् पश्यन् रमते यत्र ते ब्रह्मलोकः" इति। यदि मनसा शरीरेन्द्रियैश्च विहरेत् मनसेति विशेषणं न स्यात्। तस्मादभावः शरीरेन्द्रियाणां मोक्षे" भा० "भावं जैमिनिर्विकल्पामननात्" सू० "जैमिनिराचार्य्योमनोवच्छरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति मन्यते, यतः "स एकधा भवति त्रिधा भवति" इत्यादिनाऽनेकधाभावकल्पमामनन्ति नह्यनेकविधता विना शरीरभेदेनाञ्जसी स्यात्। यद्यपि निर्गुणायां भूमविद्यायामयमनेकधाभावे विकल्पः पठ्यते, तथापि विद्यमानमेवेदं सगुणावस्थायामैश्वर्य्यं भूमविद्यास्तुतये सङ्कीर्त्यत इत्यतः सगुणविद्याफलभावेनोपतिष्ठत इत्युच्यते" भा० "द्वादशाहवदुभयविधं वादरायणोऽतः" सू० "वादरायणः पुनराचार्य्योऽतएवोभयलिङ्गश्रुतिदर्शनादुभयविधत्वं साधु मन्यते, यदा सशरीरतां सङ्कल्पयति तदा सशरीरो भवति, यदा त्वशरीरतां तदा अशरीर इति सत्यसङ्कल्पत्वात् सङ्कल्पवैचित्र्याच्च, द्वादशाहवत्-यथा द्वादशाहः सत्रमहीनश्च भवति उभयलिङ्गश्रुतिदर्शनात् एवमिदमपीति" भा० "तदभावे सन्ध्यवदुपपद्यते" सू० "यदा तु सेन्द्रियस्य शरीरस्याभावस्तदा यथा सन्ध्ये स्थाने शरीरेन्द्रियविषयेष्वविद्यमानेष्वप्युपलब्धिमात्रा एव पित्रादिकामाभवन्त्येवं मोक्षेऽपि स्युः एवं तदुपपद्यते" भा० "भावे जाग्रद्वत्" सू० "भावे पुनस्तनोर्यथा जागरिते विद्यमाना एव पित्रादिकामाभवन्त्येवं मुक्तस्याप्युपपद्यन्ते" भा० "प्रदीपवदावेशस्तथाहि दर्शयति" सू० "भावं जैमिनिर्विकल्पामननादित्यत्र सशरीरत्वं मुक्तस्योक्तं तत्र त्रिधा भावादिष्वनेकशरीरसर्गे किं निरात्मकानि शरीराणि दारुयन्त्रवत् सृज्यन्ते? किं वा सात्मकानि? अस्मदादिशरीरवदिति भवति वीक्षा। तत्रात्ममनसोर्भेदानुपपत्तेरेकेन

शरीरेण योगादितराणि निरात्मकानीत्येवं प्राप्ते प्रतिपद्यते प्रदीपवदावेश इति । यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते विकारशक्तियोगात्, एवमेकोऽपि सन् विद्वानैश्वर्य्ययोगादनेकभावमापद्य सर्व्वाणि शरीराण्याविशति । कुतः! तथाहि दर्शयति शास्त्रमेकस्यानेकभावम् "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधेत्यादि" । नैतद्दारुयन्त्रोपमाभ्युपगमेऽवकल्पते नापि जीवान्तरावेशे । न च निरात्मकानां शरीराणां प्रवृत्तिः सम्भवति । यत्त्वात्ममनसोर्भेदानुपपत्तेरनेकशरीरयोगासम्भव इति नैष दोषः एकमनोऽनुवर्त्तीनि समनस्कान्येवापराणि शरीराणि सत्यसङ्कल्पत्वात् स्रक्ष्यति । सृष्टेषु च तेषूपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्वं योक्ष्यते । एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया" भा० ।

यथा च परशरीरे चित्तस्यावेशस्तथा पात० सू० भाष्ययोः दर्शितं यथा

"बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः" पात० सू०

"लोलीभूतस्य मनसोऽप्रतिष्ठस्य शरीरे कर्माशयवशाद्बन्धः प्रतिष्ठेत्यर्थः तस्य कर्मणो बन्धकारणस्य शैथिल्यं समाधिबलाद्भवति प्रचारसंवेदनञ्च चित्तस्य समाधिजमेव, कर्मबन्धक्षयात् स्वचित्तस्य प्रचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निःक्षिपति निःक्षिप्तं चित्तञ्चेन्द्रियाण्यनुपतन्ति यथा मधुकरराजानं मक्षिका उत्पतन्तमनुत्पतन्ति, निविशमानमनुनिविशन्ते तथेन्द्रियाणि परशरीरावेशे चित्तमनुविधीयन्त" इति व्यासभा० ।

**कायसम्पद्** स्त्री ६त० । "रूपलावण्यबलवज्रसंहननत्वानि कायसम्पदः" पात० सूत्रोक्ते रूपलावण्यादौ । "ततोऽणिमादिप्रादुर्भावः कायसम्पद्धर्मानभिघातश्च" पात० सू० । व्याख्यातमिदमैश्वर्य्यशब्दे तच्च १५५१ पृ० दृश्यम् ।

**कायस्थ** पु० कायेषु सर्वभूतरूपदेहेषु तिष्ठति अन्तर्यामितया स्था—क ७त० । १परमात्मनि मेदि० । यथा च सर्व्वशरीरेषु अधिष्ठातृतयास्य स्थितिस्तथा अन्तर्यामिब्राह्मणे दर्शितं तच्च वाक्यं १३०पृ० दर्शितम् । २जातिभेदे करणरूपे व्रात्यक्षत्रिये करणशब्दे तस्य विवृतिः ।

अथ कायस्थानां शूद्रत्वाशूद्रत्वविषये बहुधा विप्रतिपत्तिरस्ति अतस्तन्निरूपणाय प्रमाणान्युद्धृत्य मीमांस्यते । "एवं हत्वाऽर्ज्जुनं रामः सन्धाय निशितान् शरान् । एक एव ययौ हन्तुं सर्व्वानेवाहरान् नृपान् । केचित् गह्वनमाश्रित्य केचित् पातालमाविशन् । सगर्भा चन्द्रसेनस्य भार्य्या दाल्भ्याश्रमं ययौ । ततो रामः समायातो दाल्भ्याश्रममनुत्तमम् । पूजितो मुनिना सद्यः पाद्यार्घ्याचमनादिभिः । ददौ मध्याह्नसमये तस्मै भोजनमादरात् । रामस्तु याचयामास हृदिस्थं स्वं मनोरथम् । याचयामास रामाच्च कामं दाल्भ्यो महामुनिः । ततस्तौ परमप्रीतौ भोजनं चक्रतुर्मुदा । भोजनानन्तरं दाल्भ्यः पप्रच्छ भार्गवं प्रति । यत्त्वया प्रार्थितं देव ! तत् त्वं शंसितुमर्हसि । राम उवाच । तवाश्रमे महाभाग ! सगर्भा स्त्री समागता । चन्द्रसेनस्य राजर्षेः क्षत्रियस्य महात्मनः । तन्मे त्वं प्रार्थितं देहि हिंसेयं तां महामुने! । ततो दाल्भ्यः प्रत्युवाच, ददामि तव वाञ्छितम् । दाल्भ्य उवाच । स्त्रियं गर्भमस्तु बालं तन्मे त्वं दातुमर्हसि । ततो रामोऽब्रवीद्दाल्भ्यं यदर्थमहमागतः । क्षत्रियान्तकरश्चाहं तत् त्वं याचितवानसि । प्रार्थितश्च त्वया विप्र ! कायस्थो गर्भ उत्तमः । तस्मात् कायस्थ इत्याख्या भविष्यति शिशोः शुभा । एवं रामो महाबाहुर्हित्वा तं गर्भमुत्तमम् । निर्जगामाश्रमात् तस्मात् क्षत्रियान्तकरः प्रभुः । कायस्थ एष उत्पन्नः क्षत्रायां क्षत्रियात्ततः । रामाज्ञया स दाल्भ्येन क्षत्रधर्मात् बहिष्कृतः । कायस्थधर्मोऽदत्तोऽस्मै चित्रगुप्तस्य यः स्मृतः । तद्गोत्रजाश्च कायस्था दाल्भ्यगोत्रास्ततोऽभवन् । दाल्भ्योपदेशतस्ते वै धर्म्मिष्ठाः सत्यवादिनः । सदाचारपरा नित्यं रता हरिहरार्च्चने । देवविप्रपितॄणाञ्च अतिथीनाञ्च पूजकाः" इति स्कान्दे रेणुकामाहात्म्यम् । अत्र क्षात्रधर्म्माद्बहिष्कृतः इत्यनेन सगरेण काम्बोजादीनामिव तस्य तद्वंशस्य च क्षत्रियधर्म्मयुद्धोपनयनादिराहित्यप्रतीतावपि चित्रगुप्तधर्म्मत्वदानकथनेनोपनयनादिमत्त्वं वेदाधिकारित्वं च सूचितं तेन केवलयुद्धादिराहित्यमात्रं चित्रगुप्तधर्म्मत्वदानेन लेखनाधिकारः सूचितः । चित्रगुप्तधर्म्मश्च तदुत्पत्तिसहितः पद्मपुराणे सृष्टिखण्डे उक्तो यथा—

"क्षणं ध्यानस्थितस्यास्य सर्व्वकायाद्विनिर्गतः । दिव्यरूपः पुमान् बिभ्रत् मसीपात्रञ्च लेखनीम् । चित्रगुप्त इति ख्यातो धर्म्मराजसमीपतः । प्राणिनां सदसत्कर्म्मलेखाय स निरूपितः । ब्रह्मणाऽतीन्द्रियज्ञानी देवाग्न्योर्यज्ञभुक् स वै । भोजनाच्च सदा तस्मादाहुतिर्दीयते द्विजैः । ब्रह्मकायोद्भवो यस्मात् कायस्थो वर्ण उच्यते । नाना-

गोत्राश्च तद्वंश्याः कायस्था भुवि सन्ति वै"। भविष्य पुराणे च। दत्तात्रेय उवाच। त्रिकालज्ञं महाप्राज्ञं पुलस्त्यमुनिपुङ्गवम्। उपसंगम्य पप्रच्छ भीष्मः शास्त्रभृतां वरः। चतुर्णामपि वर्णानामाश्रमाणां तथैव च। सम्भवः सङ्करादीनां श्रुतो विस्तरतो मया। कायस्थोत्पत्तयो लोके ख्याताश्चैव महामुने!। भूय एव महाप्राज्ञ श्रोतुमिच्छामि तत्त्वतः। वैष्णवा दानशीलाश्च पितृयज्ञपरायणाः। सुधियः सर्वशास्त्रेषु काव्यालङ्कारबोधकाः। पोष्टारो निजवर्णानां ब्राह्मणानां विशेषतः। तानहं श्रोतुमिच्छामि कथयस्व महामुने एतन्मे संशयं विप्र! वक्तुमर्हस्यशेषतः। इति पृष्टो मुनिप्राज्ञः गाङ्गेयं! प्राह तत्त्वतः। पुलस्त्य उवाच। शृणु गाङ्गेय! वक्ष्यामि कायस्थोत्पत्तिकारणम्। न श्रुतं यत् त्वया पूर्वं तन्मे कथयतः शृणु। येनेदं सकलं विश्वं स्थावरं जङ्गमं तथा। उत्पाद्य पाल्यते भूयो निधनाय प्रकल्प्यते। अव्यक्तः पुरुषः शान्तो ब्रह्मा लोकपितामहः। यथाऽसृजत् पुरा विश्वं कथयामि तव प्रभो!। मुखतोऽस्य द्विजा जाताः बाहुभ्यां क्षत्रियास्तथा। ऊरुभ्याञ्च तथा वैश्याः पद्भ्यां शूद्राः समुद्भवाः। द्विपदःषट्पदादींश्च तुरङ्गमसरीसृपान्। एककालेऽसृजत् सर्वं चन्द्रसूर्य्यग्रहांस्तथा। एवं बहुविधानेन विश्वमुत्पाद्य भारत!। उवाच तं सुतं ज्येष्ठं कश्यपं चातितेजसम्। प्रतियत्नेन भोः पुत्र! जगत्पालय सुव्रत!। इत्याज्ञाप्य सुतं ज्येष्ठं ऋषिसम्भवहेतुकम्। ततस्तु ब्रह्मणा तेन यत् कृतं तन्निबोध मे" 'दश वर्षसहस्राणि दश वर्षशतानि च। समाधिस्थोऽभवत् प्राणान् संयम्य शान्तमानसः। ततः समाहितमतेर्यद्भूतं तद्वदामि ते। तच्छरीरान्महाबाहुः श्यामः कमललोचनः। कम्बुग्रीवो गूढशिराः पूर्णचन्द्रनिभाननः। लेखनीच्छेदनीहस्तो मसीभाजनसंयुतः। निःसृत्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः। उत्तमः सुविचित्राङ्गः ध्यानस्तिमितलोचनः। त्यक्त्वा समाधिं गाङ्गेय! तं ददर्श पितामहः। अथ ऊर्द्ध्वं निरीक्ष्याथ पुरुषस्याग्रतः स्थितः। नामधेयं हि मे तात! वक्तुमर्हस्यतःपरम्। यथोचितञ्च यत् कार्य्यं तत् त्वं मामनुशासय। पुलस्त्य उवाच। इत्याकर्ण्य ततो ब्रह्मा पुरुषं स्वशरीरजम्। प्रहृष्य प्रत्युवाचेदमानन्दितमतिः पुनः। स्थिरचित्तं समाधाय ध्यानस्थमतिसुन्दरः। मच्छरीरात् समुद्भूतस्तस्मात् कायस्थसंज्ञकः। चित्रगुप्तेति नाम्ना वै ख्यातो भुवि भविष्यसि। धर्म्माधर्म्मविवेकार्थं धर्म्मराजपुरे सदा। स्थितिर्भवतु ते वत्स! ममाज्ञां प्राप्य निश्चलाम्। क्षत्रवर्णोचितो धर्म्मः पालनीयो यथाविधि। प्रजाः सृजस्व भो पुत्र! भुवि भावसमन्विताः। तस्मै दत्त्वा वरं ब्रह्मा तत्रैवान्तरधीयत"। "पुलस्त्य उवाच। चित्रगुप्तान्वये जाताः शृणु तान् कथयामि ते। श्रीमन्तो नागरा गौराः श्रीवत्साश्चैव माथुराः। अहिफणाः सौरसेनाः शैवसेनास्तथैव च। वर्णौ वर्णद्वयञ्चैव अम्बष्ठाद्याश्च सत्तम!। शृणु तेषाञ्च कर्म्माणि कुरुवंशविवर्द्धन!। सुतान् वै स्थापयामास चित्रगुप्तो महीतले। धर्म्माधर्म्मविवेकज्ञश्चित्रगुप्तो महामतिः। भूस्थानं बोधयामास सर्वसाधनमुत्तमम्। पूजनं देवतानाञ्च पितॄणां यज्ञसाधनम्। वर्णानां ब्राह्मणानाञ्च सर्व्वदातिथिसेवनम्। प्रजाभ्यः करमादाय धर्म्माधर्म्मविलोकनम्। कर्त्तव्यं हि प्रयत्नेन पुत्राः स्वर्गस्य काम्यया। या माया प्रकृतिः शक्तिश्चण्डी चण्डप्रमर्द्दिनी। तस्यास्तु पूजनं कार्य्यं सिद्धिं प्राप्य दिवं गताः। स्वर्गाधिकारमासाद्य यतो यज्ञभुजः सदा। भवद्भिः सा सदा पूज्या ध्यातव्या सफलादिभिः। भवन्तं सिद्धिदा नित्यं पुत्रदा सा तु चण्डिका। तन्मोक्ता न सुरा पेया या न पेया द्विजातिभिः। वैष्णवं धर्म्ममाश्रित्य महाक्यं प्रतिपालय। कर्त्तव्यं हि प्रयत्नेन लोलकहर्षहिताय वै। अनुशास्य सुतानेवं चित्रगुप्तो दिवं ययौ। धर्म्मराजस्याधिकारी चित्रगुप्तो बभूव ह। स्वयं भीष्म! समुत्पन्नाः कायस्था ये प्रकीर्त्तिताः। ये पृष्टास्ते मयाख्याताः संवादं शृणु चापरम्"।

पद्मपु० पातालखण्डे सूतं प्रति शौनकाद्युक्तिः।
"श्रोतुमिच्छामहे त्वत्तः श्रेयांसि प्रेमसङ्गिनः। पुराणसंहितामेतां कायस्थस्थितिलक्षणाम्। को हेतुस्तस्य चोत्पत्तौ, किंविधः, कर्म्म कीदृशम्। किं वर्णः कास्ति कश्चैचित् कार्य्यमादाय को हि सः। किंकुलीनः किमाचारः किंगोत्रः कस्य चान्वयः। एतद्विस्तरतो ब्रूहि कायस्थकृतशासनम्। सूत उवाच। इदमद्भुतमाख्यान कायस्थस्थितिलक्षणम्। कथयामि महाभागा भगवद्गुणकीर्त्तये। विचित्रो जगतां हेतुर्भगवच्छब्दाश्रयः। तस्योद्भवोऽपि वैचित्रो जगतः कृतवान् विधिः। चित्रोविचित्र इति तत् विज्ञप्तौ तावुभावपि। धर्म्मराजस्य सचिवौ दत्तावस्य तु वेधसा। असतां दण्डनेतारौ न्यपनीतिविचक्षणौ। यथार्थवादिनौ ख्यातौ शान्तिकर्म्माणि तावुभौ। कायस्थसंज्ञया ख्यातौ सर्व-

कायस्थपूर्वजौ । लेखनज्ञानविधिना मुख्यकार्यपरायणौ । अस्मिन् संसारपाथोधौ षड्विधाः कायवर्त्तिनः । तत्रस्थ कायविज्ञानात् कायस्थत्वमिहैतयोः । धर्म्मराजस्य साचिव्यं कुर्वतोः शान्तिकर्म्मणि । हरेरनुग्रहोऽप्यास्ते तयोश्चित्र विचित्रयोः । एकविंशतिभेदेन याभ्यां कायस्थजातयः । इत्युदार्य्य विधिस्तत्र वचश्चित्रविचित्रयोः । तूष्णीमास ततस्ताभ्यां पृष्टं स्वात्मविचेष्टितम् । अस्माकं के च संस्कारा किंवर्णजा ? वयं विभो ! । तत्सर्वं कथयस्वाद्य भवत्सेवापरायणौ । सूत उवाच । इति श्रुत्वा तयोर्वाक्यमनुमोद्य पितामहः । भक्त्योत्तरमुत्कृष्टमुवाच प्रहसन्निव । ब्रह्मोवाच । भवन्तावादिकल्पस्य प्रथमे युगनायके । परमायाञ्च शुद्रायामभूतां द्विजवेश्मनि । दासतां दिष्टतः प्राप्तौ परिदास्यवर्त्तिनौ । स्वामिसेवापरायत्तौ मिथः स्नेहानुवर्त्तिनौ । द्विजन्मकिङ्करौ तेषां गृहकर्म्मणि सन्ततम् । चक्रतुः प्रभुभावेन तदुच्छिष्टभुजौ युवाम् । त्रैदिवं सुखमासाद्य यावद्युगचतुष्टयम् । मर्त्यतामाप्य देवत्वं ततएवं क्रमेण तु । तन्महाप्रलये जाते सर्वप्राणिहितेरतौ । दासीसुतौ भवन्तौ, वां भगवद्वपुषि स्थितिः । अधुना सृष्टिसमये मत्तोजन्मापि वामिदम् । धर्माधिकार वपुषौ स्वामिवाग्भवजीवनात् । यत्र वर्णेष्व उत्कृष्टो ब्राह्मणः सर्वसम्मतः । तस्यानन्तरजो यस्मात् क्षत्रियः परिरक्षकः । विज्ञानजीवनोपायी व्यवहारनयान्वितः । वैश्यो वर्णस्तृतीयः स्याद् वर्णद्वितयसेवकः । मन्त्रवर्ज्जितसंस्कारो नमस्कारक्रियापरः । चतुर्थः शूद्रवर्णः स्याद् वर्णत्रितयसेवकः । अनेकव्यवहारज्ञः क्षत्रियश्च यजश्च सः । तेषामुत्तमतां यायात् कायस्थोऽक्षरजीवकः । भवन्तौ क्षत्रवर्णस्थौ द्विजन्मानौ महाशयौ । कृतोपवीतिनौ स्यातां वेदशास्त्राधिकारिणौ । पूर्व्वपुण्यबलोत्कर्षसाध्यसाधनभाविनौ । सर्ङ्कल्पौ भूयातां भगवद्गतमानसौ । एवमाख्याय भगवान् सर्व्वामरगणान्वितः । अन्तर्दधे तयोरन्तः स्थितः प्रत्यक्षलक्षितः” ।

“सूत उवाच । अस्मिन् जगति दुःखानि दुर्दान्ताएव भुञ्जते । तस्माद्दुर्नयकर्त्तारो निरयेषूधिवासिनः । दुर्नयं सुनयं वापि सर्वेषां नयवर्त्तिनाम् । अन्यायिनामपि तथा लिखतः कर्मसूत्रिणाम् । एतल्लिखनमध्यस्थं कर्मसूत्रं यथातथम् । न न्यूनमधिकं वापि देहारम्भस्य कर्म यत् । जन्मानन्त्यभवं कर्म जीवानां भाविताशुभौ । उपयोगं चिन्तयन्तौ लेखयामासतुः स्वतः । विलोक्य प्राणिनामायुः संपूर्णं कर्म वा यथा । समानपतितानेव नापरानिति निर्णयः । धर्म्मराजानुवचनमेकवाक्यमिव प्रियम् । सम्मानयित्वा सुतरां चेत्रभूताविव स्थितौ । षट्कायमतविज्ञानं जानीतः कर्मयोगि यत् । कायस्थसंज्ञया चित्रविचित्रौ विष्णुवल्लभौ” । “सूत उवाच । एवमाभाष्य मनसा प्रमाणपदसिद्धये । वचसा छन्दयामास मैत्रस्तौ प्रीतिहेतवे । अनेके भुवि सत्कीर्त्तिसम्भवाय स्थितिं स्वकाम् । निरूपयन्ति नितरां सुनयो देवमानवाः । परिवारविभूत्यैव स्वसन्तानप्रसिद्धये । भवन्तावपि तस्मात्तु कुरुतां सुतसंस्थितिम् । इत्युक्त्वा कल्पयामास कन्ये द्वे परमोत्तमे । सरूप्रभोः समाधेश्च तनये क्षत्रजन्मनः । सम्पन्नकुलशीले ते कर्त्तव्ये गृहमेधसे । कर्त्तव्ये वंशविस्तारहेतवे तु पृथक् पृथक् । एवमादिष्टधर्माणौ प्रणम्य स्वामिनं प्रति । देवादेशप्रमाणं स्यात् इत्युक्त्वास्थिति चक्रतुः । विधिना परिनेतारौ समये भवमोचिते । ततएव समाम्नायहेतवे कृतनिश्चयौ । समाधिमानसौ धर्म्मराजस्य वचनेरितौ । कालिकामादिजननीं प्रार्थयामासतुस्ततः । चित्रोऽथच विचित्रोऽपि मिथो निश्चित्य साम्प्रतम् । विचित्र ! जगतः कार्य्यं त्वया तत्तद्विधीयताम् । कार्यद्वयन्तु कर्त्तव्यमस्माभिः स्वामिवाक्यजम् । व्यापारोऽपि प्रकर्त्तव्यः कालिकापि हि सेव्यते” इत्युपक्रमे पद्म वै०पु० पातालखण्डे “सुभामा चित्रगुप्तस्य गृहस्वामित्वयोगिनी । भामिनी तु विचित्रस्य सुन्दरी सुन्दरस्थितिः । उभे अपि समाम्नाते पातिव्रत्यशिरोमणी । देवदत्तां पुरं प्राप्य सुखेनैवानुतिष्ठताम् । परेरिता प्रवृत्तैषा पुरी साऽऽयतनी कृता । चित्रगुप्तेन भामायां त्रयउत्पादिताः सुताः । उदारशीलाचरिता धर्म्मराजस्य वल्लभाः । शरीरवेगाः सुदृढाः पितृवत्कार्य्यहेतवः । विचित्रस्य सुताः पञ्च समभूवन् महाशयाः । कलीरः सुसमः सूक्ष्मः सङ्गवान् कर्म्मवास्तवी । भामिनी कुक्षिजाज्ञावक्षाद्दूलगुणशालिनः । तेषान्तु कल्पयामास कश्यपो जातकर्म वै । तदाचरति तत्पूर्वं नाम गर्भादि वैदिकम् । तयोः कुलपतिस्तस्मात् तावत् कश्यपसम्मतः । व्यातेने सकलाभीष्टसाशीःशत समुद्वयैः । एतावेते च सर्वे स्युर्गोत्रिणः कश्यपाभिधाः” ।

एवं चित्रगुप्तवंश्यानां चन्द्रसेनवंश्यानाञ्च क्षत्रियवदुपनयनवेदाधिकारे स्थिते कालवशात् तदन्वयजातानामुपनयनादिलोपात् व्रात्यक्षत्रियत्वम् । व्रात्यानाञ्चाकृतप्रायश्चित्तानाम् उपनयनादिराहित्यात् शूद्रधर्मत्वम्

इदानीन्तनानाम् यद्यपि व्रात्यक्षत्रियाणां क्षत्रियतुल्याशौचभागित्वमुचितं तथापि मनुना “शनकैस्तु क्रियालोपादिमाः स्युः क्षत्रियजातयः। वृषलत्वं गता लोके ब्राह्मणादर्शनेन च” इति शूद्रत्वप्राप्तिं प्रति क्रियालोपस्य वेदानध्ययनस्य च हेतुतया उक्तेः इदानीन्तनानामुभयासद्भावेन वृषलधर्म्मत्वप्राप्त्या अकृतप्रायश्चित्तक्षत्रियाणामुपनयादिराहित्येन शूद्रधर्म्मप्राप्त्या मासाशौचव्यवहारो नानुपपन्नः। रघुनन्दनेन महानन्दिप्रभृतिक्षत्रियाणामपि कलौ शूद्रत्वस्योक्तेः शूद्रतुल्यतया मासाशौचव्यवहारस्य युक्तत्वात् गतानुगतिकन्यायादेव तथा चार इत्यनुमीयते। व्रात्यप्रायश्चित्तञ्च मिता० आपस्तम्बेनोक्तं यथा “यस्य प्रपितामहादेर्नानुस्मर्य्यते उपयनं तस्य द्वादश वर्षाणि त्रैविद्यकं ब्रह्मचर्य्यम्”। एतेषाञ्च बहुकालावधिव्रात्यत्वं, यतो मनुना “झल्लोमल्लश्च राजन्यात् व्रात्यात् निच्छिविरेव च। नटश्च करणश्चैव खसो द्रविड़ एव च” इति व्रात्यक्षत्रादेव तेषामुत्पत्तेरुक्तेः बहुकालपतितसावित्रीकस्यापि प्रागुक्तापस्तम्बवचनेन प्रायश्चित्तस्य विधानात् तथा प्रायश्चित्ताचरणे च उपनयनाद्यधिकारिता भवितुमर्हत्येव किन्तु वर्णसङ्करजातिभेदरूपकरणस्य न तथात्वं तन्निर्णयश्च वंशपरम्परास्मृत्यभावे दुर्घटएव “शूद्रवद्वर्णसङ्कराः” इति स्मृतेः तेषां शूद्रधर्मातिदेशात्, तेषां मासाशौचाद्याचारदर्शनात् तदन्येषामपि व्रात्यक्षत्रियरूपकरणानां तथैवाचार इति गम्यते।

करणशब्दे उदा०। तज्जातिस्त्रियां संयोगोपधत्वात् टाप् पुंयोगे तु ङीष्। कायस्तिष्ठत्यनया स्था—करणे घञर्थे क ईत० टाप्। ३हरीतक्यां मेदि० ४धात्रीवृक्षे जटा० ५काकोल्यां भरतः ६एलाद्वये ७तुलस्याञ्च राजनि०।

**कायस्थैर्य्य** न० ६त०। रसायनादिना देहपिण्डस्य स्थिरतायाम् कायस्य बहुकालस्थायितायाम् साधनञ्च सर्व्व० सं०। “अपरे माहेश्वराः परमेश्वरतादात्म्यवादिनोऽपि पिण्डस्थैर्य्ये सर्व्वाभिमता जीवन्मुक्तिः सेत्स्यतीत्यास्थाय पिण्डस्थैर्य्योपायं पारदादिपदवेदनीयं रसमेव सङ्गिरन्ते” इत्युपक्रम्य दर्शितं रसेश्वरशब्दे विस्तरेण वक्ष्यते।

**कायाकाशसम्बन्धसंयम** पु० पात० सूत्राद्युक्ते संयमभेदे। स च पात० सूत्रादौ फलसहितोदर्शितो यथा “कायाकाशयोः सम्बन्धसंयमात् लघुतूलसमापत्तेराकाशगमनम्” पात० सू० ऐश्वर्य्यशब्दे १५४९पृ० विवृतमिदम्।

**कायिक** त्रि० कायेन निर्वृत्तं ठक्। देहनिर्वृत्ते पुण्यपापादौ कर्म्मणि। “अदत्तानामुपादानं हिंसा चैवाऽविधानतः। परदारोपसेवा च कायिकं त्रिविधं स्मृतम्” ति० त० दशविधपापकीर्त्तने वाक्यो०। “मनसा तु कृतं कर्म मनसैवोपभुङ्क्ते। वाचा वाचा कृतं कर्म कायेनैव तु कायिकम्” भा० भा० धृता स्मृतिः।

**कायिका** स्त्री कायेन तद्व्यापारेण निर्वृत्ता ठक्। १ बलीवर्द्दादिकायपरिश्रमसाध्ये वृद्धिभेदे। “दोहवाह्यकर्मयुता कायिका समुदा हृता” व्यासः। मूलधनाविरोधेन प्रत्यहमधमर्णदेयपणपादादिरूपायां २वृद्धौ च। “कायाविरोधिनी शश्वत् पणपादाद्या तु कायिका” नारदः। ऋणादानशब्दे विवृतिः।

**कार** पु० कृ—कृतौ घञ्। १क्रियायाम् २यत्ने “सकारनानारकासा”इत्यादि माघः।“सकाराः सयत्नाः सोत्साहाः”मल्लि० करणे घञ्। ३बले। कस्य सुखस्यारः प्राप्तिर्यत्र। ४रतौ विश्वः कृ—हिंसायां भावे घञ्। ५वधे धातूनामनेकार्थत्वात् ६निश्चये। कर्मणि घञ्। ७ पूजोपहारे बलौ। कं सुखमृच्छत्यनेन ऋ—करणे घञ् ६त०। ८ पत्यौ कं सुखं निर्वृतिमृच्छति कर्त्तरि अण्। १०यतिरूपे प्रव्रज्यान्विते चतुर्थाश्रमे च शब्दरत्ना० कं जलं निष्यन्दजमृच्छति अण्। ११हिमाचले मेदि०। करकायां भवम् अण् पृषो० कलोपः। १२करकाजे जले न० सुश्रुतः। “तत्र त्वन्तरीक्षं चतुर्विधं तद्यथा धारं कारं तौषारं हैमञ्चेति” सुश्रुते कारमित्यत्र कारकमित्येव पाठः समुचितः ककारलोपः लिपिकरप्रमादात् इति बोध्यम्। कर्मण्युपपदे कृ—अण्। स्वर्णकार कुम्भकार इत्यादौ तत्तत्कर्मकारके त्रि०। स्त्रियां टाप्, वोपदेवमते कर्मणि षण् षित्त्वात् ङीप् इति भेदः।

**कारक** न० करोति कर्त्तृत्वादिव्यपदेशान् कृ—ण्वुल्। १कर्त्तृत्वादिसंज्ञाप्रयोजके कर्म्मणि—क्रियायाम्। “कारके” पा०। कर्त्तृत्वादिव्यवदेशकारिण्यां क्रियायामित्यर्थः। करोति क्रियां निष्पादयति कृ—ण्वुल्। २क्रियानिष्पादकेषु कर्त्तृकर्मादिषु कारकसंज्ञान्वितेषु न० तेषाञ्च क्रियायामेवान्वयः“सम्बोधनान्तं कृत्वोर्थाः कारकं प्रथमोवतिः। धातुसम्बन्धाधिकारविहितमसमस्तनञ्। तथा यस्य च भावेन, षष्ठी चेत्युदितं द्वयम्। सम्बन्धस्याष्टकस्यास्य क्रिययैवावधार्य्यताम्” इति हर्युक्तेः। वैयाकरणभूषणकार० मते कारकलक्षणादिकं शब्दार्थरत्नेऽस्माभिर्दर्शितं यथा “तत्र कारकत्वं नाम क्रियाजनकशक्तिमत्त्वं करोति क्रियां

निवर्त्तयतीति महाभाष्ये व्युत्पादनात् साधकं क्रियानिष्पादकं कारकसंज्ञं भवतीति वार्त्तिकोक्तेश्च। द्रव्यस्य स्वतस्तथात्वाभावेऽपि शक्त्याऽऽविष्टस्यैव तस्य तथात्वम्। ततश्चान्वयव्यतिरेकस्वात् शक्तिरेव कारकमिति मतान्तरं तदुक्तं हरिणा "स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे। क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुरिति"। शक्तिशक्तिमतोरभेदाच्च द्रव्यं कारकमिति व्यवहारइत्यवधेयम्, एवञ्च क्रियाजनकत्वेन सर्व्वेषां कर्त्तृत्वेऽपि स्वस्वावान्तरव्यापारविवक्षयैव करणत्वादिकं यथोक्तं हरिणा" "निष्पत्तिमात्रे कर्त्तृत्वं सर्व्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसम्भवः"इति। तद्भेदश्च मञ्जूषायां दर्शितोयथा–"कर्त्तुः कारकान्तरप्रवर्त्तनव्यापारः, करणस्य क्रियाजनकाव्यवहितव्यापारः, क्रियाफलेनोद्देश्यत्वरूपव्यापारश्च कर्म्मणः, कर्त्तृकर्म्मव्यवहितक्रियाधारणव्यापारोऽधिकरणस्य, प्रेरणानुमत्यादिव्यापारः सम्प्रदानस्य, अवधिभावोपगमव्यापारोऽपादानस्येति" तत्र करणाधारकर्म्मकर्त्तॄणां क्रियाजनकत्वंसुव्यक्तं तैर्व्विना क्रियानुत्पत्तेः फलरूपक्रियाजनकत्वेन विशिष्टक्रियाजनकत्वाच्च कर्म्मणस्तथात्वं घटं स्मरति कटं करोतीत्यादौ च बुद्धिस्थघटादेरपि पूर्व्वकालत्वेन स्मरणादिहेतुत्वात्तथात्वम् अतएव तेषु कर्त्तृत्वविवक्षया काष्ठं पचति, स्थाली पचति, ओदनः पच्यते इत्यादि प्रयोगः। अपादानस्य अवधिभावोपगमेन हेतुत्वात् सम्प्रदानस्य च दातृबुद्धिस्थतया पूर्व्वकालत्वेन हेतुत्वाच्च क्रियानिर्वाहकत्वेऽपि न कर्त्तृत्वविवक्षा अनभिधानात् तदुक्तं महाभाष्ये "पर्य्याप्तं करणाधिकरणकर्म्मणामेव कर्त्तृत्वं निदर्शितमपादानादीनां कर्त्तृत्वानिदर्शनायेति"।

तच्च कारकं षड्विधम् अपादानसम्प्रदानकरणाधिकरणकर्म्मकर्त्तृभेदात्। एतेषाञ्च एकस्यां क्रियायामुभयप्राप्तौ "विप्रतिषेधे परं कार्य्यम्" इत्युक्तेरुत्तरोत्तरप्राबल्यं तदुक्तं हरिणा –-" अपानानसम्प्रदानकरणाधारकर्म्मणाम्। कर्त्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्त्तते" इति। गुणप्रधानक्रिययोरेकस्मिन् द्रव्ये उभयशक्तिप्रसङ्गे तु "प्रधानेन व्यपदेशा भवन्तीति" न्यायात् कार्य्यस्य प्रधानानुरोधित्वात् प्रधानशक्तिबोधिकैव विभक्तिर्ज्जायते गुणक्रियाशक्तिस्तु तात्पर्य्यवशादेव तत्र प्रतीयते तदुक्तं हरिणा "प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्। शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यति। प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते। यथा गुणे तया तद्वदनुक्तापि प्रतीयते" इति अतः स्थित्वाश्वेन गच्छतीत्येव प्रयोगः।

न्यायमते धात्वर्थे प्रकारतया भासमाने ३सुबर्थे तन्मते हि सुबर्थस्यैव कारकत्वं मुख्यम्। तदर्थान्वयित्वाच्च पदार्थस्य तत्त्वंगौणम्। तथाच विभक्त्यर्थद्वारा क्रियान्वयित्वं कारकत्वम् इति तेनापादानादेः क्रियानिष्पादकत्वाऽभावेऽपि न क्षतिः स्वान्वयिविभक्त्यर्थद्वारा क्रियान्वयित्वात्। यथा च तस्यान्वयः तथा शब्द०प्रका० तथा दर्शितं यथा

"कारकार्थेतरार्थे च सुप् द्विधा च विभज्यते। धात्वर्थांशे प्रकारो यः सुबर्थः सोऽत्र कारकम्। इत्त्या कारकस्य बोधिका तदन्यस्य चेत्येवं द्विविधोऽपि सुपो विभागस्तत्र यच्छब्दात्उपस्थाप्ययादृशार्थेऽन्वये प्रकारीभूय भासते यः सुबर्थः स तच्छब्दात्उपस्थाप्यतादृशक्रियायां कारकम्। वृक्षात् पतति, व्याघ्राद्बिभेति इत्यादौ, ब्राह्मणाय ददाति, पुत्राय क्रुध्यतीत्यादौ, दात्रेण छिनत्ति घटत्वेन जानातीत्यादौ स्थाल्यां पचति, शुक्तौ भासत इत्यादौ, ग्रामं गच्छति घटं पश्यतीत्यादौ, चैत्रेण पच्यते घटेन भूयत इत्यादौ च पतप्रभृतिधात्वर्थे पतनादौ पञ्चम्याद्युपस्थितो विभागादिः प्रकारीभूय भासते इति तत्तच्छब्दात्उपस्थापिततत्तत्क्रियायां विभागादिकं प्रकृते कारकमतो धात्वर्थे स्वार्थबोधकतया तत्रत्यपञ्चम्यादिः कारकविभक्तिरुच्यते। यादृशेन नामार्थेनावच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेऽन्वयः स एव तादृशधात्वर्थे कारकतया व्यपदिश्यते, तेन वृक्षात् पततीत्यादौ वृक्षादेरपि पतनादिक्रियायामपादानादिकारकत्वव्यवहारः। स्तोकं पचतीत्यादौ क्रियायां प्रकारीभूतोऽपि स्तोकादिर्न कारकं सुपानुपस्थापनात्, द्वितीया तु तत्र क्लीवलिङ्गत्ववदानुशासनिक्येव स्तोकपाचकइत्यादिकस्तु तत्पुरुषो गिरिकाण इत्यादिवद्विशेषविधेरेव। षष्ठ्यर्थस्तु सम्बन्धो न धात्वर्थे प्रकारीभूय भासते, तण्डुलस्य पचतीत्यप्रयोगात् इत्यतः सम्बन्धो न कारकं, न वा तदर्थिकापि षष्ठ्यादिः कारकविभक्तिः। अतएव "क्रियाप्रकारीभूतोऽर्थः कारकं तच्च षड्विधम्। कर्तृकर्मादिभेदेन, शेषः सम्बन्ध इष्यत" इति शाब्दिकाः स्मरन्ति"। "कारकव्यपदिष्टे च श्रूयमाणक्रिये पुनः""कारकं प्रथमोक्तिः" इति च भर्त्तृहरिः। ४कर्त्तृमात्रे त्रि० मेदि०। "दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः" गीता। जगतां कारकः कृष्णः" वोपदेवः तुमर्थे ण्वुल्। ५कर्त्तुमित्यर्थे। तद्योगे कर्म्मणि न षष्ठी अतोघटं कारको व्रजत्येव प्रयोगः। "धातुसम्बन्धे प्रत्ययाः" पा० इत्यधिकारे तस्य विधानेनतदर्थस्य क्रियायामेवान्वयः प्रागुक्तहरिवाक्यात्।

करकायाइदं तत्र भवं वा अण्। ६करकासम्बन्धिनि त्रि०। ७तन्निष्यन्दजले न० राजनि० ८अप्सु स्त्री ङीप्। तल्लक्षणगुणादि भावप्र० उक्तं यथा "दिव्यवाय्वग्नि-संयोगात् संहताः खात् पतन्ति याः। पाषाणखण्ड-वच्चापस्ताः कारक्योऽमृतोपमाः। करकाजं जलं रूक्षं विशदं गुरु च स्थिरम्। दारुणं शीतलम् सान्द्रं पित्तहृत् कफवातकृत्"। [२९९पृ०विवृतिः

**कारकदीपक** न० दीपकभेदरूपार्थालङ्कारभेदे अलङ्कारशब्दे

**कारकविभक्ति:** स्त्री कारकशक्तिबोधिका विभक्तिः। व्याकरणोक्ते कर्म्मादिबोधके विभक्तिभेदे कारकशब्दे विवृतिः। "उपपदविभक्तेः कारकविभक्तिर्गरीयसीति" व्या०प०।

**कारकर** त्रि० कारं करोति कृ—ट। क्रियाकारके दासादौ।

**कारकुक्षीय** पु० शाल्वदेशे हेम० तत्र भवः अण् बहुषु तस्य लुक्। तद्देशवासिजनेषु बहु०।

**कारज** त्रि०। कारात् क्रियातो जायते जन—ड। १क्रियाजन्ये करजे नखे भवं तस्येदं वा अण्। २नखभवे ३नखसम्बन्धिनि च त्रि०।

**कारञ्ज** त्रि०करञ्जस्य तत्फलस्येदम् अण्। करञ्जोत्थफलतैलादौ तत्तैलगुणादि सुश्रुते उक्तं यथा। निम्बातस्यौत्युपक्रमे "करञ्जेङ्गुदीशिग्रुसर्षपसुवर्च्चलाविडङ्गज्योतिष्मतीफलतैलानि तीक्ष्णानि लघून्युष्णवीर्य्याणि कटूनि कटुविपाकानि सराण्यनिलकफक्रिमिकुष्ठप्रमेहशिरोरोगहराणि चेति"।

**कारण** न० कारयति क्रियानिवर्त्तनाय प्रवर्त्तयति कृ—णिच्—ल्यु। १क्रियानिष्पादके हेतौ २उद्देश्ये ३देहे ४इन्द्रिये। कृ—वधे स्वार्थे णिच्—भावे ल्युट्। ५वधे मेदि०। ६करवाद्यभेदे। करणएव कारणः। ७कायस्थे पु०। करणमेव स्वार्थे अण्। ८साधने ९कर्म्मणि। १०गीतभेदे रत्नकोषः। न्यायमते कारणत्वलक्षणभेदादिकं भाषा० मुक्तावल्योर्दर्शितं यथा।

"पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्" भाषा०।

पारिमाण्डल्येति पारिमाण्डल्यम् अणुपरिमाणं, कारणत्वं तद्भिन्नानामित्यर्थः। अणुपरिमाणं तु न कस्यापि कारणं तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत् तच्च न सम्भवति परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात् महदारब्धस्य महत्तरत्ववत् अणुजन्यस्याणुतरत्वप्रसङ्गात् एवं परममहत्परिमाणम् अतीन्द्रियसामान्यं विशेषश्चेति बोध्यम्। इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वं, ज्ञायमानसामान्यं न प्रत्यासत्तिः, ज्ञायमानं लिङ्गं नानुमितिकारणम् इत्यभिप्रायेण। मानसप्रत्यक्षे आत्मसुखादेः कारणत्वात् महत्परिमाणं कारणं बोध्यं तस्यापि न कारणत्वमित्याचार्य्याणामाशय इत्यन्ये तन्न ज्ञानातिरिक्तं प्रति कारणताया एव आचार्य्यैरुक्तत्वात्" मुक्ता०।

"अन्यथासिद्धिशून्यस्य नियता पूर्व्ववर्त्तिता। कारणत्वं भवेत् तस्य त्रैविध्यं परिकीर्त्तितम्। समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम्। एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम्"। यत्समवेतं कार्य्यं भवति ज्ञेयन्तु समवायिजनकं तत्। तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात्" भाषा०।

ननु कारणत्वं किम्? अत आह अन्यथेति। तस्य-कारणत्वस्य। तत्र-समवायिकारणे, आसन्नं कारणं द्वितीयमसमवायिकारणमित्यर्थः। अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात्, एवं वेगादीनामपि अभिघाताद्यसमवायिकारणत्वं स्यात् एवं ज्ञानादिकमिच्छाद्यसमवायिकारणं स्यात्, तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयं, तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव, एवं वेगादिकं वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति तत्तत्कार्य्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं न देयम् आत्मविशेषगुणानान्तु कुत्राप्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव। तत्र समवायिकारणे प्रत्यासन्नं द्विविधं कार्य्यैकार्थप्रत्यासत्त्या,कारणैकार्थप्रत्यासत्त्या च। आद्यं यथा घटादिकं प्रति कपालसंयोगादिकं, तत्र कार्य्येण घटेन सह कारणस्य कपालसंयोगस्य एकस्मिन् कपाले प्रत्यासत्तिरस्ति, द्वितीयं यथा घटरूपं प्रति कपालरूपमसमवायिकारणं तत्र घटरूपं प्रति कारणं घटः तेन सह कपालरूपस्य एकस्मिन् कपाले प्रत्यासत्तिरस्ति, तथाच क्वचित् समवायसम्बन्धेन, क्वचित् स्वसमवायिसमवायसम्बन्धेनेति फलितार्थः। इत्थञ्च कार्य्यकारणैकार्थान्यतरप्रत्यासत्त्या कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्य्यवसन्नम् आभ्यां समवायिकारणासमवायिकारणाभ्यां भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः" मुक्ता०।

कारणताग्राहकं प्रमाणं च सर्व्वदर्शनसंग्रहे दर्शितं यथा "अन्वयव्यतिरेकाववितथाववनिश्चायकाविति ननु पक्षे साध्यसाधनयोरव्यभिचारो दुरवधारणो भवेत् भूते, भविष्यति, वर्त्तमाने—अनुपलभ्यमाने च व्यभिचारशङ्काया अनिवारणात्। ननु तथाविधस्थले तावकेऽपि मते

व्यभिचारशङ्का दुष्परिहरेति चेत् मैवं वोचः, विनापि कारणं कार्य्यमुत्पद्यतामित्येवं विधायाः शङ्काया व्याघातावधिकतया निवृत्तत्वात्। तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने व्याघातादयो नावतरेयुः तदुक्तम् "व्याघातावधिराशङ्केति" तस्मात्तदुत्पत्तिनिश्चयेन अविनाभावो निश्चीयते तदुत्पत्तिनिश्चयश्च कार्य्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भपञ्चकनिबन्धनः। कार्य्यस्योत्पत्तेः प्रागनुपलम्भः१ कारणोपलम्भे२ सति उपलम्भः ३उपलब्धस्य पश्चात् कारणानुपलम्भात्४ अनुपलम्भः५ इति पञ्चकारण्या धूमधूमध्वजयोः कार्य्यकारणभावो निश्चीयते"।

कारणत्वञ्च नियतपूर्व्वसत्त्वं तच्च कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वमिति नैयायिका मन्यन्ते। तच्च सत्त्वगर्भं न वेति सन्देहे सत्त्वगर्भं श्रीहर्षखण्डने निराकृतं यथा

"ननु तदसत्ताविशेषात्तत्कार्य्यस्यान्यदापि प्रसङ्गः, नकार्य्यस्याद्यसत्ताक्षणवदन्यदापि सामग्रीसत्ताऽविशेषात्तवापि किं नान्यदा कार्य्यजन्म?। अथ न मम तदानीन्तनं सामग्रीसत्त्वं तदातनस्य कार्य्यजन्मनो नियामकं किन्तु ततः प्राक् सामग्रीसत्त्वं, तथादर्शनात्। तर्हि ममापि कालान्तरस्थमपि तदसत्त्वं तदातनकार्य्यजन्मनोनियामकं, तथादर्शनादेव। मम तदव्यवहितोत्तरत्वं तदा कार्य्यजन्मनियामकमिति चेत् न असमसमयत्वादागन्तुकत्वाच्चाविशेषेण नियम्यनियामकव्यवस्थानुपपत्तेः तस्मादन्यदास्थाया एव सामग्र्यास्तदा कार्य्यनियमोऽभ्युपेयः तथादर्शनादित्येव मन्तव्यम्। तथा च समः समाधिः। तथापि कार्यजन्मकालस्य कोविशेषः। अन्यथा यद्विशेषान्तरं तदपि विशेषान्तरवतः कालस्य स्यादिति अपर्य्यवसानमेव पर्य्यवस्येत्, तत्काल इत्याकलय। तथापि तत्कालस्यानुगतं किं रूपम्? इति चेन्न रूपान्तरवतोऽपि किं रूपम्? इत्यपि पर्य्यनुयोगस्यानुवृत्तेः। किञ्च "अन्तर्भावितसत्त्वञ्चेत्कारणं तदसत्ततः। नान्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः"। तथाह्यन्तर्भूतसत्त्वं यदि कारणत्वं तदा स्वविशिष्टे स्ववृत्तिरसतः स्वाश्रयत्वमापादयति। विशिष्टस्यार्थान्तरत्वेऽपि च स्वस्मिन् स्ववृत्तिव्यतिरेकवत् स्वविशिष्टे स्ववृत्तिव्यतिरेकनियमदर्शनात् न सैव सत्ता तस्मिन्निति अन्यस्यास्तस्याविशिष्टवृत्त्यभ्युपगमे तामसन्निवेश्य कारणत्वमभ्युपगन्तुः सर्व्वथैव कारणमसत्पर्य्यवस्यति। अपरापरसत्तानिवेशने चापर्य्यवसानमेव। न च सत्ताभेदानन्त्यमस्त्येवेत्यपि पादप्रसारिका निस्ताराय, सत्ताभेदे हि सद्बुद्धिव्यवहारानुगमननिबन्धनलाञ्छनः प्रथमापि सत्ता न स्यादिति सत्त्ववृद्धिमिष्टवतो मूलमपि ते नष्टमिति कष्टतरम्। न च स्वरूपसत्तोपगमाय स्वस्ति, भिन्नामप्यनुगतबुद्ध्याद्याधानपदेऽभिषिञ्चता त्वया जातिमालाय जलाञ्जलिर्वितीर्य्येत। मा भूदनुगतिः स्वरूपसत्त्वस्येति च वदन् तद्गर्भिणीं कारणतां कथमनुगमयितासि?। किञ्च स्वरूपसत्त्वं स्वरूपात् घटाद्यात्मनो नाधिकमसतोऽपि स्वरूपं स्वरूपमेव न ह्यसन् घटादिर्न घटादिः तथा सति घटादिर्नेत्यपि न स्यात् असतोऽघटादित्वात्। अथ सदपि सत्तामनन्तर्भाव्य कारणं, तदानीमसदपि तत्तथास्तु सत्तासत्त्वयोः कारणकोट्यप्रवेशाविशेषात्। अथ न सत्ताकारणकोटिनिविष्टा किन्तु कारणत्वं सत्त्वं नियतपूर्व्वसत्तां हि कारणतामन्ये इति मन्यसे तर्हि मत्पक्षे सैव कारणताऽस्तु तर्हि कारणसत्तामभ्युपगतवानसीति घट्टकुट्यां प्रभातमिति चेन्न भावानवबोधात् सत्तामसतीमभ्युपगच्छताऽपि सत्ता किं मयाभ्युपगतैव? अन्यथा कासावसतीति त्वमपि किं सत्तान्तरसत्तामन्तर्भाव्य कारणत्वमिच्छसि? नत्वेवं, पूर्ववत् क्वापि सत्तात्यागो वा अनवस्थायां पर्य्यवसानं स्यात् असत्ताऽविशेषात्। असत्त्वाविशेषे कारणनियमः कथं स्यात् इति चेन्न सत्ताविशेषेऽपि तुल्यत्वात्। सत्त्वेऽस्त्यन्वयाद्यनुविधानं तस्य तज्जातीयस्य वा त्वत्पक्षे त्वसत्त्वाविशेषात् व्यतिरेकः परं, सोऽप्यनियतो यदा कारणाभावस्तदा कार्य्याभावावश्यम्भावाभ्युपगमात् नित्यासतः कारणस्यासत्त्वएव कदाचित्कार्य्योत्पादात् अन्वयस्तु न कदाचिदपीति चेन्न तुल्यत्वात्। अन्वयोनास्तीत्यभ्युपगच्छतापि अन्वयोपगमात्। अन्वयस्यापि सत्तान्तर्भावे कथितदोषापत्तेः, एतेन "आशामोदकतृप्ता ये ये चोपार्ज्जितमोदकाः। रसवीर्य्यविपाकादि तेषां तुल्यं प्रसज्यते" इत्यस्यापि बाधकत्वमाशामोदकायते। सत्तान्तर्भावानन्तर्भावाभ्यां प्रत्यादेशात् आशामोदकादिनापि च रसवीर्य्यविपाकादिजननात् तदसत्कथं कार्य्यं स्यात्? इति चेन्न सत्तामन्तर्भाव्यकार्य्यत्वोपगमे कारणवत्कार्य्येऽपि उक्तदोषस्यानन्तर्भावे वाऽविशेषस्य पूर्व्ववदावृत्तेः तस्मात् "पूर्व्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ। हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा"। आस्तां प्रतिबन्दिपङ्कपङ्कः कथं पुनरसतः कारणत्वमवसेयम्? प्राक्सत्त्वनियमस्य विशेषस्यानभ्युपगमादिति चेन्न इदमनुगतनियतं प्राक् सदिति बुद्ध्या विशेषात्। आस्त्वेवं-

बुद्धिगोचरेऽतिप्रसङ्ग इति चेन्न यादृश्या हि धिया नि-
चक्षुरादिकरणानुधावनविश्रान्तया वस्तुसत्त्वनिश्चयस्ते, तादृ-
श्येव नियोक्तृतस्य ममापि कारणतानिश्चयः, केवलं ततः
परास्वपि कक्षासु बाधात् पूर्वपूर्वभ्रान्तित्वसम्भवेन न
तत एव सत्त्वावधारणं वयं मन्यामहे इति विशेषः”।

तत्र हेतौ “पञ्चैमानि महाबाहो! कारणानि निबोध
मे” गीता। “न लिङ्गं धर्मकारणम्” मनुः। उद्देश्ये
“तस्यागमनकारणम्” रघुः। फलस्य कारणत्वञ्च
इच्छाद्वारा, उपायेच्छां प्रति फलेच्छायाः कारणत्वात्
सर्वोहि लोकः फलमिच्छन्नेव तदुपाये प्रवर्त्तमानो दृश्यते
इति तस्य तथात्वम्। कारणमस्त्यस्य अर्श० अच्।
१० उत्तरभेदे उत्तरशब्दे विवृतिः। “मिथ्योत्तरे पूर्व्व-
वादे कारणे प्रतिवादिनि” मिता० स्मृतिः। भावे तल्
कारणता स्त्री। त्व कारणत्व न० कारणभावे “एकः कार-
णतां गतः” कुमा०। “कारणत्वं भवेत्तस्य” भाषा०।

**कारणकारण** न० ६त०। अन्यथासिद्धपदार्थभेदे यथा
कुलालः घटादीनां कारणं, तत्कारणं तज्जनकः घटं
प्रत्यन्यथासिद्धः। व्यापारद्वारा तु न कारणकारणस्यान्य-
थासिद्धिः। यथा कुठारादीनां, ते हि छेदनक्रियाकारण-
च्छेद्यसंयोगजनका अपि नान्यथासिद्धाः एवं व्याप्तिज्ञानस्य
अनुमितिजनकपरामर्शरूपस्य, चक्षुरादीनां प्रत्यक्षजनक-
विषयसंयोगरूपस्य च कारणस्य कारणत्वेऽपि नान्यथा-
सिद्धिः। “नहि व्यापारेण व्यापारिणोऽन्यथासिद्धिः”
इत्युक्तेः २परमेश्वरे च सहि सर्वेषां निमित्तोपादान-
कारणानामधिष्ठातृत्वेन प्रयोजकत्वात् तथा, ३प्रयोजके-
कारणकारणस्याकारणत्वेऽपि प्रयोजकत्वमस्त्येवेति नैया-
यिकादयः।

**कारणगुण** पु० ६त०। उपादानकारणस्य गुणे “कारणगुणाः
कार्य्यगुणानारभन्ते” इति न्यायम०। यथा तन्त्वादिरूपो
पादानगुणाः शुक्लादयः, कार्य्यस्य पटस्य शुक्लगुणारम्भका
भवन्ति न वैपरीत्येनेति आकरे स्थितम्।

**कारणगुणोद्भव** पु० कारणगुण उद्भवोऽस्य। उपादान कारण-
गुणेनोपपन्ने गुणभेदे। ते च गुणा भाषायां दर्शिता यथा।
“अपाकजास्तु स्पर्शान्ताद्रवत्वञ्च तथाविधम्। स्नेह-
वेगगुरुत्वैकपृथक्त्वपरिमाणकम्। स्थितिस्थापक इत्येते
स्युः कारणगुणोद्भवाः”। स्पर्शान्ताः। रूपरसगन्धस्पर्शाः-
घटादौ पाकजरूपादीनां कारणगुणपूर्व्वकत्वाभावात्
अपाकजा इत्युक्तम्। तथाविधं अपाकजमिति। “स्पर्शो-
न्तानुयायीतो ग्राह्यः। एकपृथक्त्वेत्यत्र त्वप्रत्ययस्य
प्रत्येकमन्वयात् एकत्वं पृथक्त्वञ्च ग्राह्यम् पृथक्त्वपदेन
चैकपृथक्त्वं ग्राह्यम्” मुक्ता०। [विवृतिः।

**कारणमाला** स्त्री अर्थालङ्कारभेदे अलङ्कारशब्दे ३९८पृ०

**कारणशरीर** न० कारणरूपं शरीरम्। वेदान्तिमते अज्ञान-
रूपे शरीरे। वेदान्तसारे तद्विवृतिः दृश्या।

**कारणा** स्त्री कृ–हिंसायां स्वार्थे णिच्–भावे युच्। १तीव्र-
वेदनायाम् अमरः। कृ–णिच्–युच्। २प्रेरणायाम्

**कारणिक** त्रि० कारणेचरति ठक्। कारणेन विचारके १परी-
क्षके अमरः। करणस्येदम् काश्या० ठञ् ञिठ् वा।
२करणसम्बन्धिनि त्रि० स्त्रियां ठञि ञित्त्वात् ङीप्
ञिठ इदुच्चारणार्थः स्त्रियां टाप् इति भेदः।

**कारणोत्तर** न० कारणेन उत्तरम्। व्यवहारेषु वाद्युपन्यस्तं
वस्तु सत्यत्वेनाङ्गीकृत्य तत्प्रतिकूलतासाधनकारणकथन-
रूपे उत्तरभेदे, यथा अयं शतं मे धारयतीत्यभियोगे सत्यं
गृहीतं किन्तु शोधितम्, इयं भूमिर्मदीयानेन भुज्यते
इत्यभियोगे सत्यमेतस्य भूमिः किन्तु दानेन क्रयादिना वा
इदानीं ममेत्युत्तरम्। उत्तरशब्दे १०८०पृ० विवृतिः।

**कारण्डव** पुंस्त्री रम–ड तस्य नेत्त्वम् रण्डः ईषत् रण्डः का-
रण्डः तं वाति वा–क करण्डस्येदं कारण्डं तदा-
कारं वाति वा–क वा। हंसभेदे “हंसकारण्डवोद्गीतः
सारसाभिरुताश्च या” भा० व० ३८अ०। स्त्रियां जाति-
त्वात् ङीष्। अस्य अजिरादि० पाठात् मतौ संज्ञायामपि
न दीर्घः कारण्डववती नदीविशेषः। “हंससारसक्रौञ्च-
चक्रवाककुररकादम्बकारण्डवेत्युपक्रमे “प्लवाः सघचारिणश्च”
इति सुश्रुते तस्य प्लवत्वं सघचारित्वञ्चोक्तम्।

**कारण्डव्यूह** पु० बौद्धभेदे त्रिका० २ बौद्धशास्त्रविशेषे च।

**कारन्धम** पु० करन्धमस्यापत्यं शिवा० अण्। १करन्धमनृपस्या-
पत्ये अविक्षिन्नाम्नि नृपे तदुत्पत्त्यादि “एतस्मात् कार-
णाद्राजन्! विश्रुतः स करन्धमः। तस्य कारन्धमः पुत्र-
स्त्रेतायुगमुखेऽभवत्। इन्द्रादनवरः श्रीमान् देवैरपि सुदु-
र्जयः। तस्य सर्व्वे महीपालाः वर्त्तन्ते स्म वशे तदा।
स हि सम्राड़भूत्तेषां वृत्तेन च बलेन च। अविक्षिन्नाम
धर्म्मात्मा वीर्य्येणेन्द्रसमोऽभवत्” इत्युपक्रमे “तस्य पुत्रोऽति-
चक्राम पितरं गुणवत्तया। मरुत्तोनाम धर्म्मज्ञश्चक्रवर्त्ती
महायशाः” भा० आश्व० ४अ० उक्तम्। २गोत्रापत्ये अण्।
करन्धमपौत्रे अविक्षित्नृपपुत्रे २मरुत्ते नृपे च। “कथं
यज्ञे मरुत्तस्य” इत्युपक्रमे “यदि शुश्रूषसे पार्थ! शृणु

कारन्धमं नृपम्” तत्रैव २अ० मरुत्तस्य कारन्धममिति विशेषणात्। तस्येदमण्। २नारोतीर्थभेदे न० तत्तीर्थप्रादुर्भावादि भा० आ० २१७,१८अ०। यथा

“ततः समुद्रे तीर्थानि दक्षिणे भरतर्षभः। अभ्यगच्छत् सुपुण्यानि शोभनानि तपस्विभिः। वर्ज्जयन्ति स्म तीर्थानि पञ्च तत्र तु तापसाः। अवकीर्णानि यान्यासन् पुरस्तात्तु तपस्विभिः। अगस्त्यतीर्थं सौभद्रं पौलोमञ्च सुपावनम्। कारन्धमं प्रसन्नञ्च हयमेधफलञ्च तत्। भारद्वाजस्य तीर्थन्तु पापप्रशमनं महत्। एतानि पञ्च तीर्थानि ददर्श कुरुसत्तमः। विविक्तान्युपलक्ष्याथ तानि तीर्थानि पाण्डवः। दृष्ट्वा च वर्ज्ज्यमानानि मुनिभिर्द्धर्म्मबुद्धिभिः। तपस्विनस्ततोऽपृच्छत् प्राञ्जलिः कुरुनन्दनः। तीर्थानीमानि वर्ज्ज्यन्ते किमर्थं ब्रह्मवादिभिः। तापसा ऊचुः। ग्राहाः पञ्च वसन्त्येषु हरन्ति च तपोधनान्। तत एतानि वर्ज्ज्यन्ते तीर्थानि कुरुनन्दन!। वैशम्पायन उवाच। तेषां श्रुत्वा महाबाहुर्व्वार्य्यमाणस्तपोधनैः। जगाम तानि तीर्थानि द्रष्टुं पुरुषसत्तमः। ततः सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमम्। विगाह्य सहसा शूरः स्नानं चक्रे परन्तपः। अथ तं पुरुषव्याघ्रमन्तर्जलचरो महान्। जग्राह चरणे ग्राहः कुन्तीपुत्रं धनञ्जयम्। स तमादाय कौन्तेयो विस्फुरन्तं जलेचरम्। उदतिष्ठन्महाबाहुर्ब्बलेन बलिनां वरः। उत्कृष्ट एव ग्राहस्तु सोऽर्ज्जुनेन यशस्विना। बभूव नारी कल्याणी सर्व्वाभरणभूषिता। दीप्यमाना श्रिया राजन्! दिव्यरूपा मनोरमा। तदद्भुतं महद्दृष्ट्वा कुन्तीपुत्रो धनञ्जयः। तां स्त्रियं परमप्रीत इदं वचनमब्रवीत्। का वै त्वमसि कल्याणि! कुतो वासि जलेचरी। किमर्थञ्च महत् पापमिदं कृतवती पुरा?। वर्गोवाच। अप्सरास्मि महाबाहो! देवारण्यविहारिणी। इष्टा धनपतेर्नित्यं वर्गा नाम महाबल!। मम सख्यश्चतस्रोऽन्याः सर्व्वाः कामगमाः शुभाः। ताभिः सार्द्धं प्रयातास्मि लोकपालनिवेशनम्। ततः पश्यामहे सर्व्वा ब्राह्मणं संशितव्रतम्। रूपवन्तमधीयानमेकमेकान्तचारिणम्। तस्य वै तपसा राजंस्तद्वनं तेजसा युतम्। आदित्य इव तं देशं कृत्स्नं सर्वं व्यकाशयत्। तस्य दृष्ट्वा तपस्तादृग्रूपञ्चाद्भुतमुत्तमम्। अवतीर्णाः स्म तं देशं तपोविघ्नचिकीर्षया। अहञ्च सौरभेयी च समीची बुद्बुदा लता। यौगपद्येन तं विप्रमभ्यगच्छाम भारत!। गायन्त्योऽथ हसन्त्यश्च लोभयन्त्यश्च तं द्विजम्। स च नास्मासु कृतवान् मनो वीर! कथञ्चन। नाकम्पत महातेजाः स्थितस्तपसि निर्म्मले। सोऽशपत् कुपितोऽस्मांस्तु ब्राह्मणः क्षत्रियर्षभ!। ग्राहभूता जले यूयं चरिष्यथ शतं समाः!। वर्गोवाच। ततो वयं प्रव्यथिताः सर्व्वा भारतसत्तम!। अयाम शरणं विप्रं तं तपोधनमच्युतम्। रूपेण वयसा चैव कन्दर्पेण च दर्पिताः। अयुक्तं कृतवत्यः स्म क्षन्तुमर्हसि नो द्विज!। एषएव वधोऽस्माकं सुपर्य्याप्तस्तपोधन!। यद्वय संशितात्मानं प्रलोब्धुं त्वामिहागताः। अवध्यास्तु स्त्रियः सृष्टा मन्यन्ते धर्म्मचारिणः। तस्माद्धर्म्मेण वर्द्धस्व नास्मान् हिंसितुमर्हसि। सर्व्वभूतेषु धर्मज्ञ! मैत्रो ब्राह्मण उच्यते। सत्यो भवतु कल्याण एष वादो मनीषिणाम्। शरणञ्च प्रपन्नानां शिष्टाः कुर्व्वन्ति पालनम्। शरणं त्वां प्रपन्नाः स्मस्तस्मात्त्वं क्षन्तुमर्हसि। वैशम्पायन उवाच। एवमुक्तः स धर्म्मात्मा ब्राह्मणः शुभकर्म्मकृत्। प्रसादं कृतवान् वीर! रविसोमसमप्रभः। ब्राह्मण उवाच। शतं शतसहस्रन्तु सर्वमक्षय्यवाचकम्। परिमाणं शतं त्वेतन्नेदमक्षय्यवाचकम्। यदा च वो ग्राहभूता गृह्णतीः पुरुषान् जले। उत्कर्षति जलात्तस्मात् स्थलं पुरुषसत्तमः। तदा यूयं पुनः सर्व्वाः स्वं रूपं प्रतिपत्स्यथ। अनृतं नोक्तपूर्व्वं मे हसतापि कदाचन। तानि सर्व्वाणि तीर्थानि ततः प्रभृति चैव ह। नारीतीर्थानि नाम्नेह ख्यातिं यास्यन्ति सर्व्वशः। पुण्यानि च भविष्यन्ति पावनानि मनीषिणाम्। वर्गोवाच। ततोऽभिवाद्य तं विप्रं कृत्वा चापि प्रदक्षिणम्। अचिन्तयामापसृत्य तस्माद्देशात् सुदुःखिताः। क्व नु नाम? वयं सर्व्वाः कालेनाल्पेन तं नरम्। समागच्छेम यो नस्तद्रूपमासादयेत् पुनः। ता वयं चिन्तयित्वैव मुहूर्त्तादिव भारत!। दृष्टवत्यो महाभागं देवर्षिमुत नारदम्। संप्रहृष्टाः स्म तं दृष्ट्वा देवर्षिममितद्युतिम्। अभिवाद्य च तं पार्थ! स्थिताः स्मो व्रीडिताननाः। स नोऽपृच्छद्दुःखमूलमुक्तवत्यो वयञ्च तत्। श्रुत्वा तत्र यथावृत्तमिदं वचनमब्रवीत्। दक्षिणे सागरानूपे पञ्च तीर्थानि सन्ति वै। पुण्यानि रमणीयानि तानि गच्छत मा चिरम्। तत्राशु पुरुषव्याघ्रः पाण्डवेयो धनञ्जयः। मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः। तस्य सर्व्वा वयं वीर! श्रुत्वा वाक्यमिहागताः। तदिदं सत्यमेवाद्य मोक्षितास्मि त्वया कृतम्। एतास्तु मम ताः सख्यश्चतस्रोऽन्या जले स्थिताः। कुरु कर्म्म शुभं वीर! एताः शापाद्विमोक्षय!। वैशम्पायन उवाच। ततस्ताः पाण्डवश्रेष्ठः सर्व्वा एव विशाम्पते!। तस्माच्छापाददीनात्मा मोक्षयामास वीर्य्यवान्।

उत्थाय च जलात्तस्मात् प्रतिलभ्य वपुः स्वकम्। तास्तदाप्सरसो राजन्नदृश्यन्त यथा पुरा। तीर्थानि शोधयित्वा तु तथानुज्ञाय ताः प्रभुम्। चित्राङ्गदां पुनर्द्रष्टुं तदा मणिपुरं ययौ"।

**कारन्धमिन्** पु० स्त्री करएव कारस्तं धमति ध्मा-इनि पृषो०। १कांस्यकारे स्त्रियां ङीप्। २धातुवादरते च मेदि०

**कारपचव** पु०देशभेदे। "अवभृथमलभ्यवयन्ति यमुनां कारपचवं प्रति" कात्या०श्रौ०२४।६।१०कारपचवो देशभेदस्तन्मध्ये यमुना वर्त्तते तां कारपचवदेशस्थां यमुनां प्राप्य तत्रावभृथमभ्यवयन्ति" सं प० व्या०।

**कारभ** त्रि० करभस्येदम् अण्। करभसम्बन्धिनि मूत्रादौ "अर्शोघ्नं कारभं मूत्रं मानुषन्तु विषापहम्" सुश्रुतः।

**कारभू** स्त्री करएवकारः तस्य भूः। राजग्राह्यकरग्रहणभूमौ।

**कारमिहिका** स्त्री कारं जलसम्बन्धं मेहति मिह-सेके क ततः स्वार्थे क अत इत्त्वम्। कर्पूरे राजनि०।

**कारम्भा** स्त्री० ईषत् रम्भा कोः कादेशः। प्रियङ्गुवृक्षे अम०

**कारयिष्णु** त्रि० कृ-णिच्-इष्णुच्। कारयितरि।

**कारव** पु०स्त्री कैति रवोऽस्य। काके त्रिका०स्त्रियां ङीष्।

**कारवल्ली** स्त्री कुत्सितआरो गतिर्यस्याः कर्म०। कारवेल्ले (करेला)। कारवान् कर्मयुक्तः सन् लीयते ली-क्विप्। २काण्डीरे काण्डधरे राजनि०।

**कारवी** स्त्री कारं वाति वा कके जलोपलक्षितवर्षाकाले रवोऽस्य कारवोमयूरस्तस्य पुच्छमिवाकारोऽस्त्यस्य अच्, कृ हिंसायां स्वार्थे णिच्-क्विप् काः तमवति अण् वा गौरा० ङीष्। १शतपुष्पायाम्, (मौर) २रुद्रजटायाम्, ३मयूरशिखालतायाम्। ४कारवेल्ले, (करेला) ५त्वक्पत्राम् (तेजपात) ६कृष्णजीरके च। ७क्षुद्रकारवेल्ले अमरः राजनि० ८काकयोषिति च।

**कारवीरेय** त्रि० करवीरेण निर्वृत्तादि करवीर+चतुरर्थ्यां सख्या० ढञ्। करवीरनिर्वृत्तादौ।

**कारवेल्ल** पु० कारेण वातगत्या वेल्लति वेल्ल-चालने अच्। १लताभेदे (करेला) २तत्फले न०। "कारवेल्लं हिमं भेदि लघु तिक्तमवातलम्। ज्वरपित्तकफास्रघ्नं पाण्डुमेहकृमीन् हरेत्" भावप्र०। स्वार्थे क कारवेल्लकोऽपि तत्रैव कल्पार्थे ङीष्। २क्षुद्रकारवेल्ले (उच्छा)। अमरः। कारवेल्लगुणा "तद्गुणा कारवेल्ली स्याद्विशेषाद्दीपनी लघुः। कारवेल्लीफलं तक्रे स्वेदितं हिङ्गुमर्द्दितम्। भर्ज्जितं नवनीतेन सैन्धवेन समन्वितम्" भावप्र०। "विदलितमुखमीषत् कारवेल्लीकठोरं पुलकितमिव तैलैः साधितं रामठेन। रचितमरिचचूर्णं सैन्धवेनातिपूर्णं सुललितरसनायं लोलतामातनोति"पाकशा०। कारवेल्लीफलं भेदि लघु तिक्तं सुशीतलम्। पित्तास्रकामलापाण्डुकफमेदकृमीन् हरेत्" वैद्यकम्। स्वार्थे क कारवेल्लिकाप्यत्र स्त्री।

**कारस्कर** कारं वधं करोति कृ-हेत्वादौ ट वृक्षे नि० सुट्। विषतिन्दौ किम्पाके वृक्षे राजनि० दासादौ न सुट्।

**कारस्कराटिका** स्त्री कारस्कर इवाटति अट-ण्वुल्। कर्णजलौकायाम्। त्रिका०।

**कारा** स्त्री कृ-हिंसायां भिदा०भावे अङ् "ऋदृशोऽङि"पा० गुणः "कारावन्धने" पा०ग० दीर्घनिर्द्देशात् दीर्घः। १बन्धने मेदि० २पीडायां त्रिका० पा०ग० बन्धनशब्दस्य बन्धनाधारपरत्वे ३बन्धनागारे अमरः। कुत्सितमृच्छति ऋ-अच् कोः का। ४दूत्याम् ५प्रसेवके। ६स्वर्णकारिकायाञ्च मेदि०। ७शब्दे च। काराधुनी।

**कारागार** न० कारायाबन्धनस्यागारं गृहम् बन्धनागारे (जेलखाना) "रिपुः कारागारं कलयति च तं केलिकलया" कर्पूरस्तवः। कारागृहादयोऽप्यत्र।

**कारागुप्त** त्रि० कारायां बन्धनागारे गुप्तः। (कयदी) बन्धनाकाररुद्धे हेमच०।

**कारापथ** पु० देशभेदे। तत्र च लक्ष्मणात्मजाङ्गदचन्द्रकेतु राज्यमासीत् "अङ्गदं चन्द्रकेतुञ्च लक्ष्मणोऽप्यात्मसम्भवम्। शासनात् रघुनाथस्य चक्रे कारापथेश्वरौ" रघुः।

**कारायिका** स्त्री कं जलमाराति प्रचरणस्थानत्वेन आ+रा-ण्वुल्। बलाकायां जटाधरः।

**काराधुनी** स्त्री कारा शब्दः तस्याधुनी उत्पादयित्री। शब्दनिष्पादके शङ्खादौ। "अगस्त्योनरां नृषु प्रशस्तः काराधुनीव" ऋ० १,१८०,४। "कारा शब्दः" भा०

**कारि** स्त्री कृ- भावे प्रश्नाख्यानविषये इञ्। प्रश्नाख्यानविषये १क्रियायाम्। "कां कारिमकार्षीः? सर्वां कारिमकार्षम्" इत्यादि। कृ-कर्त्तरि शिल्पिनि इञ्। २शिल्पिनि त्रि०।

**कारिका** स्त्री कृ-भावे ण्वुल्। १क्रियायाम्। "कारिकाशब्दस्योपसंख्यानम्"वार्त्ति० क्रियायोगेऽस्य गतित्वम् तत्र कारिका क्रिया, कारिकाकृत्य" सि०कौ०। तत्र दासीश्लोकवाचकस्य क्रियाशब्दस्य न ग्रहणं तथाव्याख्यनात्। कारः रोगवधः साध्यतयाऽस्त्यस्य ठन्, कृ-हिंसायां ण्वुल् वा। रोगनाशिकायां २कण्टकार्य्यां राजनि०। ३नटयोषि

४ चित्ररचनाश्लोके अल्पाक्षरेण बह्वर्थज्ञापकश्लोकभेदे । ५ शिल्परचनायाम् मेदि० । ६वृद्धिभेदे (सुद) रमानाथः ।

**कारित** त्रि० कृ–णिच–कर्म्मणि क्तः । १करणाय प्रेरिते । "विष्णुः शरीरग्रहणमहमीशानएव च । कारितास्ते यतोऽतस्त्वाम्" देवीमा० । २अधमर्णेन स्वकार्य्यसिद्धये नियतवृद्धेरङ्गीकृताधिकवृद्धौ स्त्री "वृद्धिः सा कारिता नाम यर्ण्णिकेन स्वयं कृता" मिता० ना० स्मृतिः । "ऋणिकेन तु या वृद्धिरधिका संप्रकीर्त्तिता । आपत्काले कृता नित्यं सा तु स्यात् कारिता मता" कात्या० ।

**कारी** स्त्री कृ–हिंसायाम् इञ् स्त्रियां ङीष् । कण्टकारिवृक्षे राजनि० । तस्याः कण्टकाचितत्वेन हिंसासाधनत्वात् रोगहिंसाकारकत्वाद्वा तथात्वम् ।

**कारीर** न० करीरस्यावयवः काण्डं भस्म वा पलाशा० अञ् । १वंशस्य काण्डे २वंशभस्मनि च ।

**कारीरी** स्त्री कं जलमृच्छति ऋ–णिच् कारं सजलमेघमीरयति ईर–अण् उप० स० गौ० ङीष् । वर्षहेतौ इष्टिभेदे । "वर्षकामेष्टिः कारीरी" "तस्यां प्रति त्वं चारुमध्वरमीडे अग्निं स्वरसं नमोभिरिति धाय्ये" आश्व० श्रौ० २।१३।१।२। "वर्षकामस्य कारीरी नाम इष्टिः कार्य्या । तस्यां–कारीर्य्याम् । अत्र बहुदैवत्याया आम्नानात् अन्यदा इयमेव कारीरी एकदैवत्या भवति तस्यामपि प्रापणार्थं तस्यां ग्रहणमिति" नारा० । आरब्धायां कारीर्य्यां कृतार्द्धायां वर्षणे सति सा समापनीया न वेति सन्देहे कात्या० श्रौ० १।२।२२ सू० निर्णीतं यथा "दृष्टे तत्परिमाणम्" कृतार्द्धायामिष्टौ वर्षणे दृष्टे सति तत्परिमाणमेव कर्म्म कर्त्तव्यं यत्परिमाणमदृष्टे वर्षणे क्रियते । न तु दृष्टौ दृष्टायां किमप्यन्यूनं कृतार्द्धं परित्याज्यमिति । न च वर्षणं तत्र तस्या इष्टेः फलं, किन्तु कालस्वभावात् प्रतिबन्धकापगमाच्च स्वयं प्रवृत्तम् इत्याशयः" सं० व्या० । अतएव जैमिनिना ६,२,१३,कर्मणि आरब्धे फलेच्छाराहित्ये, कथञ्चित् फलप्राप्तौ च आरब्धस्य काम्यकर्मणः समाप्यत्वमुक्तं यथा "प्रक्रमात्तु नियुज्येतारम्भस्य निमित्तत्वादिति" व्याख्यातं चेदं शवरस्वामिना यथा "प्रजाकामो यजेत, ग्रामकामो यजेत"–इत्येवमादि कर्म समाम्नायते । तत्र सन्देहः–किं प्रक्रान्तं नियोगतः समापनीयम्, उतेच्छया कार्य्यं हेयं वा ?–इति कुतः ? एवं प्राप्तं?–नियोगतः परिसमापयितव्यम्–इति । कुत:? एवं हि श्रूयते,–इदंकामो यजेत–इति, एवं तस्य आख्यातस्य अर्थम् उपदिशन्ति, 'उपक्रमप्रभृति अपवर्गपर्यन्तम् आह–इति, उपक्रमादारभ्य यावत् परिसमाप्तिः –इत्येतावान् व्यापारविशेषः तस्य अर्थः, न यथा पाकः त्यागः–इति । तत्र हि पाकसत्तामात्रं निर्द्दिश्यते न आरभ्य परिसमापयितव्यम् । एवं च आख्यातार्थं लौकिका अपि प्रतिपद्यन्ते, तत्र न आरम्भे पुरुषप्रयत्नः नोद्यते–इति मन्यते । यतो नोदितं न नियोगत आरभन्ते, नियोगतः पुनः परिसमापयन्ति, तेन नोभे आरम्भपरिसमाप्ती शब्दार्थः किन्तर्हि ?–परिसमाप्तिः शब्दार्थः परिसमाप्त्याऽर्थप्राप्तत्वात् आरम्भस्य । तस्मात् परिसमाप्तिः शब्दार्थ: –इति गम्यते । सा चेत् शब्दार्थः, सा कर्त्तव्यतया नोद्यते, आरम्भे नास्ति कर्त्तव्यतावचनं' तेन न नियोगत आरम्भः, नियोगतस्तु परिसमाप्ति: । तेन उपक्रान्ते कर्मणि यदि वीयात् फलेच्छा, अवाप्नोति वा फलं, तस्यामप्यवस्थायां, कर्त्तव्यमेव उपक्रान्तस्य परिसमापनम् । ननु अर्थिनो योऽर्थः सोऽत्र कर्त्तव्यतयोच्यते' । नैतदेवं, वाक्यार्थो हि स भवति, यागस्य तु कर्त्तव्यता श्रुत्या गम्यते । तस्मात् ग्रामकामेण याग आरब्धः परिसमापनीयः ग्रामादिकामनावचनं निमित्तत्वेन तदा भवति निमित्ते, च उत्पन्ने यत् कर्त्तव्यम्–इत्युच्यते, तद्विनष्टेऽपि निमित्ते कर्त्तव्यम्, न हि तद्विनष्टम् अनुत्पन्नं भवति, उत्पत्तिश्च निमित्तं न भाव: तस्मात् वीतायामपि फलेच्छायाम् उपक्रान्तं परिसमापयितव्यम् । क्रियाया हि निमित्तम् आरम्भ: सोऽपि परिसमाप्तेः" इति ।

कारीरीष्टिं प्रकृत्य श्रूयते च । "यदि वर्षेत्तावत्येव जुहुयात्" "कारीरीमनुवृष्टिः" सि०कौ० ।

**कारीष** न० करीषाणां समूहः अण् । शुष्कगोमयसमूहे ।

**कारीषगन्धि** त्रि० कारीषस्येव गन्धोऽस्य इत्समा० । शुष्कगोमयसंघगन्धयुक्ते स्त्रियां ष्यङ् चाप् । कारीषगन्ध्या तस्याः तत्पुरुषे पुत्रपत्योः परयोः संप्रसा० दीर्घश्च । कारीषगन्धीपुत्रः कारीषगन्धीपतिः । एवं परमकारीषगन्धीपुत्रः । उपसर्ज्जने तु न, अतिकारीषगन्ध्यापतिः । बन्धुशब्दे परे तु बहुव्रीहौ तथा वा, कारीषगन्ध्याबन्धुः कारीषगन्धीबन्धुः । एवं कौमुदगन्ध्याशब्दस्यापि संप्रसारणदीर्घौ ।

**कारु** त्रि० कृ–उण् । १शिल्पिनि । "इति स्म सा कारुतरेण लेखितं नलस्य च स्वस्य च सख्यमीक्षते" नैष० । "कारयित्वा तु कर्म्माणि कारुं पश्चान्न वञ्चयेत्" कूर्म्मपु०

"उपस्तुतिं भरमाणस्य कारोः" ऋ० १, १४८, २, । "नित्यं शुद्धः कारुहस्तः पण्ये यच्च प्रसारितम्" मनुः । "कारुहस्तः शुचिः पण्यं भैक्ष्यं योषिन्मुखं तथा" याज्ञ० "गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् । प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्" मनुः । २सूपकारादौ "धान्येऽष्टमं विशां शुल्कं विंशं कार्षापणावरम् । कर्म्मोपकरणाः शूद्राः कारवः शिल्पिनस्तथा" मनुना कारुशिल्पिनोर्भेदेन निर्द्देशात् "कारवः सूपकारादयः" कुल्लू० । एतेषां च कर्म्मकरणरूप एव करो न धनरूपादिर्मनुना कर्म्मोपकरणत्वेन तेषां निर्द्देशात् । तत्र करप्रतिरूपकर्म्मकरणप्रकारो मनुना-दर्शितो यथा "कारुकान् शिल्पिनश्चैव शूद्रांश्चात्मोपजीविनः । एकैकं कारयेत् कर्म्म मासिमासि महीपतिः" मासि मासि कर्म्म एकैकं दिनं कारयेदित्यर्थः । "सम्भूय कुर्व्वतामर्घं सबाधं कारुशिल्पिनाम् । अर्घस्य ह्रासं वृद्धिं वा जानतां दम उत्तमः" याज्ञ० । ३कारके तत्तत्क्रियानिष्पादके त्रि०मेदि० । "राघवस्य ततः कार्य्यं कारुर्वानरपुङ्गवः" भट्टिः । भावे उण् । ४कर्म्मणि मेदि० ५शिल्पे हेमच० ६स्तोतविनिरु० । अत्रेदं बोध्यम् उणादीनामव्युत्पत्तिपक्षे समुदायशक्त्या शिल्पिप्रभृतितत्तदर्थवाचकता, व्युत्पत्तिपक्षे अवयवशक्त्या अवयवार्थस्याप्युपस्थापनेन योगेन विशिष्टार्थपरतया यौगिकत्वं तेन कार्य्यं कारुरित्यादौ कर्म्मादेरन्वयः उदन्तकयोगाच्च तत्र कर्म्मणि न षष्ठी असत्ययवार्थे कर्म्मणोऽन्वयासम्भवात् न द्वितीयादिप्रसक्तिः । स्वार्थे क । कारुकोऽपि सूपकारादौ । "न साक्षी नृपतिः कार्य्यौ न कारुककुशीलवौ" मनुः । "अशक्नुवंस्तु शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनाम् । पुत्रदारात्ययं प्राप्तो जीवेत् कारुककर्म्मभिः । यैः कर्म्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः । तानि कारुककर्म्माणि शिल्पानि विविधानि च" मनुः । स्त्रियामूङ् । कारू शिल्पिन्यां रजकादिस्त्रियाम् । [चौरे शब्दचि० ।

**कारुचौर** पु० कारुणा शिल्पेन चोरयति चुर-अच् । सन्धि-

**कारुज** पु०कं जलमारुजति, ईषत् रुजति वा आ+रुज-क । १करभे, २वल्मीके, ३नागकेशरे, ४गैरिके, ५स्वयंजाते देहस्थे तिलादिचिह्ने च हेमच० । कारुतोजायते जन-ड ५स० । तक्षणचित्रलेखनादौ न० ।

**कारुणिक** त्रि० करुणा शीलमस्य ठक् । दयालौ दयाशीले अमरः । "सम्यक् कारुणिकस्येदं वत्स ! ते विचिकित्सितम्" भाग०२,५,१० । "आचार्य्या वै कारुणिकाश्च" भा० वि०४७अ० । [स्वार्थे क । कारुणिका तत्रार्थे ।

**कारुण्डी** स्त्री ईषत् रुण्डी मूर्द्धहीना । जलौकायां शब्दच० ।

**कारुण्य** न० करुणः करुणायुक्तः करुणाविषयो वा तस्य भावः, करुणैव वा ष्यञ् । करुणायां परदुःखप्रहरणेच्छायाम् अमरः । २करुणाविषयत्वे च "दयासमुद्रे स तदाशयेऽतिथीचकार कारुण्यरसापगा गिरः" नैष० "कारुण्यवारांनिधे !" नीलतन्त्रम् ।

**कारु(रू)ष** पु० करु(रू)षस्य राजा अण् । करु(रू)षदेशाधिपे दन्तवक्रे "कारु(रू)षान्मानवादासन् कारु(रू)षाः क्षत्रजातयः भाग०९,२१"करु(रू)षोऽभिजन एषाम् अण् भर्गा० बहुषु न तस्य लुक् । पित्रादिक्रमेण तद्देशवासिषु ब०व० ।

**कारेणव** त्रि० करेणोरिदमण् । करेणुसम्बन्धिदुग्धादौ । "कषायं बहुविण्मूत्रं तिक्तमग्निकरं परम् । सर्पिः कारेणवं हन्ति कफकुष्ठविषक्रिमीन्" सुश्रु० ।

**कारेणुपालि** पुंस्त्री करेणुपालस्यापत्यम् इञ् । करेणुपालकापत्ये । युवापत्ये तु इञन्तत्वात् फक् तस्य तौल्वला० न लुक् । कारेणुपालायन तदीययुवापत्ये पुंस्त्री ।

**कारोत्तर** पु० कारेण सुरागालनक्रियया उत्तरति उद्+तॄ-अच् । १सुरामण्डे अमरः स्वामी तु कारोत्तम इति पठित्वा तत्रार्थे इत्याह सुरागालन क्रियायां मण्डस्योत्तमत्वात्तथात्वम् । कारेण ईषद्गत्या उत्तीर्यतेऽसौ उद्+तॄ-कर्मणि अप् । २कूपे हला० तद्धेतुत्वात् चालनीरूपे वंशादिजे ३पात्रभेदे । "अन्तर उत्तरवेद्या रूपं कारोत्तरोभिषक्" यजु० १९, १६ । कारोत्तरः सुरापावनचालनी" वेददी० "अस्थि मज्जानं मासरैः कारोत्तरेण" यजु० १९,८२ । सुरागालनी चालनी च वंशमयी तया अश्वियसुरागालनप्रकारः कात्या० श्रौ० १९.२.७, सू० दर्शितोयथा । "श्वभ्रं खात्वा खरमपरेण चर्मावधाय परिस्रुतमासिच्य कारोत्तरमवदधाति, कारोत्तराद्वा चर्म्मणि मन्त्रलिङ्गात् पूतामादत्ते सिञ्चन्ति परिषिञ्चन्तीति" । "ततो दक्षिणवेदिखरमपरेण बहिर्वेदि श्वभ्रं गर्त्तं खात्वा तत्र गर्त्ते गोचर्म्मावधाय परिस्रुतं सुरां चर्म्मणि आसिच्य सुराया उपरि कारोत्तरं वंशमयं पात्रं (करोत्तरचालनिका) सुरागालनसमर्थं निदधाति एवं सते मलस्तले तिष्ठति गलिता सुरा कारोत्तरस्योपर्य्यायाति एकोऽयं गालनो पायः । अथवा पूर्व्वं चर्म्मणि कारोत्तरमवधाय तत्र

सुरामाविशुति तथा च सति कारोत्तरात् चर्म्मणि सुरा पतति" सं०व्या० । "तस्य लोमान्येव पुष्पाणि, त्वक् तोक्मानि, मांसं लाजा अस्थि कारोत्तरो मज्जा मासरं रसः परिस्रुद्गन्धलोहितं, रेतः पयः, मूत्रं सुरोवध्यम् वल्कसम्" शत० ब्रा० १२,९,१,२ । एवं कारोत्तरशब्दस्य चालनीपरत्वे स्थिते सुरामण्डस्य तत्-साध्यत्वात् तथात्वं बोध्यम् ।

**कार्कश्य** न० कर्कशस्य भावः ष्यञ् । कठोरस्पर्शे "आश्लेष लोलुपवधूस्तनकार्कश्यसाक्षिणी" माघः ।

**कार्कषि** पुंस्त्री कर्कं स्यति सो क—पृषो० षत्वम् कर्कषः काठिन्यनाशकः तस्यापत्यम् पक्षे इञ् तदपत्ये पक्षे वाकिन्या । वा फिञ् कुक् च । कार्कषकायनि तत्रार्थे पुंस्त्री ।

**कार्कीक** त्रि० कर्कः शुक्लोऽश्वः स इव ईकक् । श्वेताश्वतुल्ये ।

**कार्ण** पुंस्त्री कर्णस्यापत्यं शिवा० अण् । १कर्णापत्ये वृषकेतौ कर्णस्येदम् अण् । २अवयवसम्बन्धिमलादौ त्रि० ।

**कार्णायनि** त्रि० कर्णेन निर्वृत्तादि कर्ण+कर्णा० चतुरर्थ्यां फिञ् । कर्णेन निर्वृत्तादौ । सुतङ्गमादिपाठात् पक्षे इञ् । कार्णिरप्यत्र त्रि० ।

**कार्त्त** त्रि० कृतः कृत्प्रत्ययस्य व्याख्यानोग्रन्थः अण् । १ कृत् प्रत्ययव्याख्याने ग्रन्थे । कृतस्येदम् अण् । २कृतसम्बन्धिनि अस्य कौजपेन सहद्वन्द्वे कार्त्तकौजपा० पूर्वपदे प्रकृतिस्वरः । कृतमेव स्वार्थे अण् । ३कृतयुगे "किन्नारवं कार्त्तयुगप्रधानः" भा०आ०९०अ० ।

**कार्त्तकौजपादि** पु० पाणिन्युक्ते द्वन्द्वे पूर्वपदे प्रकृतिस्वरनिमित्ते शब्दगणभेदे स च गणः "कार्त्तकौजपौ सावर्णिमाण्डूकेयौ अवन्त्यश्मकाः पैलश्यापर्णेयाः कपिश्यापर्णेयाः शैतिकाक्षपाञ्चालेयाः कटुकवाधूलेयाः शाकलशुनकाः शाकलशणकाः शणकबाभ्रवाः आर्चाभिमौद्गलाः कुन्तिसुराष्ट्राः चिन्तिसुराष्ट्राः तण्डवतण्डाः अविमत्तकामविद्धाः बाभ्रवशालङ्कायनाः बाभ्रवदानच्युताः कठकालापाः कठकौथुमाः कौथुमलौकाक्षाः स्त्रीकुमारम् मौदपैप्पलादाः वत्सजरन्तः सौश्रुतपार्थिवाः जराम्रृत्यू याज्यानुवाक्ये" ।

**कार्त्तवीर्य्य** पु० कृतवीर्य्यस्यापत्यम् अण् । कृतवीर्य्यनृपापत्ये सहस्रबाहौ अर्जुने ।"अर्जुनःकृतवीर्य्यस्य सप्तद्वीपेश्वरोऽभवत् । दत्तात्रेयाद्धरेरंशात् प्राप्तयोगमहागुणः । न नूनं कार्त्तवीर्य्यस्य गतिं यास्यन्ति पार्थिवाः । यज्ञदानतपोयोगैः श्रुतवीर्य्यजयादिभिः" भाग०९,२३,२७ । तत्कथादि अर्जुनशब्दे ३९६पृ० उक्तप्रायमधिकं भा०आनु०१५२अ० उक्तं यथा । "सहस्रभुजभृत् श्रीमान् कार्त्तवीर्य्योऽभवत् प्रभुः । अस्य लोकस्य सर्व्वस्य माहिष्मत्यां महाबलः । स तु रत्नाकरवतीं सद्वीपां सागराम्बराम् । शशास पृथिवीं सर्व्वां हैहयः सत्यविक्रमः । स्ववित्तं येन दत्तन्तु दत्तात्रेयाय कारणे । क्षत्रधर्म्मं पुरस्कृत्य विनयं श्रुतमेव च । आराधयामास च तं कृतवीर्य्यात्मजो मुनिम् । न्यमन्त्रयत सन्तुष्टो द्विजश्चैनं वरैस्त्रिभिः । स वरैश्छन्दितस्तेन नृपो वचनमब्रवीत् । सहस्रबाहुर्भूयासं चमूमध्ये गृहेऽन्यथा । मम बाहुसहस्रन्तु पश्यन्तां सैनिका रणे । विक्रमेण महीं कृत्स्नां जयेयं संशितव्रत ! । ताञ्च धर्म्मेण सम्प्राप्य पालयेयमतन्द्रितः । चतुर्थं च वरं याचे त्वामहं द्विजसत्तम ! तं ममानुग्रहकृते दातुमर्हस्यनिन्दित ! । अनुशासन्तु मां सन्तो मिथ्योद्वृत्तं त्वदाश्रयम् । इत्युक्तः स द्विजः प्राह तथास्त्विति नराधिपम् । एवं समभवंस्तस्य वरास्ते दीप्ततेजसः । ततः स रथमास्थाय ज्वलनार्कसमद्युतिम् । अब्रवीद्वीर्य्यसम्मोहात् कोऽन्वस्ति सदृशो मम । धैर्य्ये वीर्य्ये यशःशौर्य्ये विक्रमेणौजसाऽपि वा । तद्वाक्यान्तेऽन्तरीक्षे वै वागुवाचाशरीरिणी । न त्वं मूढ ! विजानीषे ब्राह्मणं क्षत्रियाद्वरम् । सहितो ब्राह्मणेनेह क्षत्रियः शास्ति वै प्रजाः । अर्ज्जुन उवाच । कुर्य्यां भूतानि तुष्टोऽहं क्रुद्धो नाशन्तथा नये । कर्म्मणा मनसा वाचा न मत्तोऽस्ति वरो द्विजः । पूर्व्वो ब्रह्मोत्तरो वादो द्वितीयः क्षत्रियोत्तरः । त्वयोक्तौ हेतुयुक्तौ तौ कथं तु ब्राह्मणो वरः । सर्व्वभूतप्रधानांस्तान् भैक्षवृत्तीनहं सदा । आत्मसम्भावितान् विप्रान् स्थापयाम्यात्मनो वशे । कथितं ह्यनया सत्यं गायत्र्या कन्यया दिवि । विजेष्याम्यवशान् सर्व्वान् ब्राह्मणांश्चर्म्मवाससः । न च मां च्यावयेद्राष्ट्रात्त्रिषु लोकेषु कश्चन । देवो वा मानुषो वापि तस्माज्ज्येष्ठो द्विजादहम् । अथ ब्रह्मोत्तरं लोकं करिष्ये क्षत्रियोत्तरम् । न हि मे संयुगे कश्चित्सोढुमुत्सहते बलम् । अर्जुनस्य वचः श्रुत्वा वित्रस्ताऽभूत्निशाचरी । अथैनमन्तरिक्षस्थस्ततो वायुरभाषत । त्यजैनं कलुषं भावं ब्राह्मणेभ्यो नमस्कुरु । एतेषां कुर्व्वतः पापं राष्ट्रक्षोभो भविष्यति । अथ वा त्वां महीपाल ! शमयिष्यन्ति ये द्विजाः । निरसिष्यन्ति ते राष्ट्राद्धतोत्साहं महाबलाः । तं राजा कस्त्वमित्याह ततस्तं प्राह मारुतः । वायुर्व्वै देवदूतोऽस्मि हितं त्वां प्रब्रवीम्यहम् । अर्ज्जुन उवाच । अहो त्वयाऽद्य विप्रेषु भक्तिरागः प्रदर्शितः । यादृशं पृथिवीभूतं तादृशं ब्रूहि वै द्विजम् । वायोर्व्वा सदृशं किञ्चित् ब्रूहि त्वं ब्राह्मणोत्त-

मम् । अपां वै सदृशो वह्निः सूर्य्यस्य नभसोऽपि वा” ।
ततः पवनार्ज्जुनयोः संवादे बहुकथा तत्र द्रष्टव्या ।
“भवन्तं कार्त्तवीर्य्यार्योऽहीनसन्निमचीकरत्” भट्टिः ।
“अनन्यसाधारणराजशब्दोबभूव योगी किल कार्त्त-
वीर्य्यः” रघुः ।

**कार्त्तवीर्य्यदीप** पु० ६त० । कार्त्तवीर्य्यार्ज्जुनोद्देशेन दीय-
माने दीपे । तद्दानविधानादि विधानपारिजाते उड्डा-
मेश्वरतन्त्रे उक्तं यथा

“गोमयेनोपलिप्तायां शुद्धभूमौ समाहितः । तन्मध्ये
मण्डलं कार्य्यं त्रिकोणं विन्दुसंयुतम् । षट्कोणं तद्बहिः
कार्यं मध्ये मूलं समालिखेत् । तण्डुलैः कुङ्कुमाक्तैर्वा
रक्तचन्दनमिश्रितैः । तस्योपरि न्यसेद्दीपं घृतपूरितवर्त्ति-
कम् । तं दीपं विधिनायुज्य पश्चात्सङ्कल्पयेत्ततः । कार्त्त-
वीर्य ! महाबाहो ! भक्तानामभयप्रद ! । गृहाण दीपं
मद्दत्तं कल्याणं कुरु सर्वदा । अनेन दीपदानेन कार्त-
वीर्यस्तु प्रीयताम् । पश्चिमाभिमुखं दीपं कारयेत् शुभ-
कर्मणि । अभिचारे तु त्रितयं दक्षिणोत्तरपश्चिमे ।
नष्टप्राप्तौ च कुर्वीत पञ्चादिविषमान् पुनः । वश्या-
भिकाङ्क्षी कुर्वीत गुर्वाज्ञां प्राप्य साधकः । चतुर्वर्गफला-
येव शतदीपावलिं ततः । मारणे तु सहस्रं स्याद्द-
शसाहस्रमेव च । दीपावलिं प्रकुर्वीत गुर्वाज्ञां प्राप्य
साधकः । चतुर्वर्गफलावाप्त्यै कुर्वीत प्रतिवासरम् ।
अनेन दीपदानेन कार्त्तवीर्यः प्रसीदति । एवं दीपं
सुरेशानि ! कुर्वीत गुरुशासनात् ! । महाभये समुत्पन्ने
चिन्ताव्याकुलितेक्षणे । लवणं स्वर्णसंयुक्तं देयं रात्रौ
विचक्षणैः । पूर्णमासीदिने कुर्यान्नगरैका प्रदक्षिणा । ग्रामे
पुरे गोव्रजे वा साधकः सर्वकालतः । एतत् सारतरं
देवि ! न देयं यस्य कस्यचित् । गुरुभक्ताय शान्ताय साध-
काय प्रकाशयेत् । नास्तिकाय न दातव्यं परशिष्याय नो
वदेदिति” । तद्दीपपात्रादिविवृतिः तत्रैव

“राजचोरादिपीड़ासु ग्रहरोगभयेषु च । नाना-
दुःखेषु देवेशि ! सुखप्राप्त्यै तथैव च । दीपं कुर्वीत विधिव-
द्गुरुदर्शितमार्गतः । दीपपात्रं नवं कार्यं महाकार्ये विशे-
षतः । सौवर्णं राजतं ताम्रं कांस्यं लौहं च मृण्मयम् ।
गोधूममाषमुद्गानां चूर्णेन घटितेऽथवा । सौवर्णे कार्य-
सिद्धिः स्यात् रौप्ये वश्यं जगत् भवेत् । ताम्रे रिपोर्भयाभावः
कांस्ये विद्वेषणं भवेत् । मारणे लौहपात्रं च उच्चाटे
मृण्मयं तथा । गोधूमचूर्णघटिते विवादे विजयो ध्रुवम् ।
माषे शत्रुमुखस्तम्भो मुद्गे स्याच्छान्तिरुत्तमा । सन्धिकार्ये
नदीकूलद्वयोर्मृत्स्नां तु कारयेत् । अलाभे सर्वपात्राणां
ताम्रे कुर्याद्विचक्षणः । सप्त पञ्च तथा तिस्र एका वा
वर्तिका भवेत् । अयुग्मा वर्त्तिका ग्राह्या एकोत्तरशता-
वधिः । गुरुकार्येऽधिका कार्या स्वल्पे स्वल्पतमा प्रिये ! ।
सूत्रं श्वेतं तथा पीतं माञ्जिष्ठञ्च कुसुम्भजम् । कृष्णञ्च
कर्बुरञ्चैव क्रमतो विनियोजयेत् । सर्वाभावे सितेनैव
कुर्याद्वर्त्तीः पृथक् भवेत् । दशपञ्चाधिकाश्चैव त्रिंशद्विंशा
स्तथैव च । चत्वारिंशत्तथा कार्याः पञ्चाशदपि वा भवेत् ।
अष्टोत्तरसहस्रं वा शतं पञ्चाशदेव च । तत्तत्कार्यवशाद्
देवि ! कुर्यात्तन्तून् समाहितः । षट्कर्माणि तथा कुर्यात्
साधकस्य सुबुद्धिमान् । चत्वारिंशदधिकांश्च नित्यदीपे तु
कारयेत् । तदर्द्धमपि च प्रोक्तं देवि ! विश्वार्तिहारिणि ! ।
गोघृतेन प्रकर्त्तव्यो दीपः सर्वार्थसिद्धये । गोमयेनोपलि-
प्तायां भूमौ यन्त्रं समालिखेत् । कपिलागोमयेनैव षट्कोणञ्च
लिखेत्ततः । मारबीजं (क्लीँ) कर्णिकायां षट्पात्रे बीज-
षट्ककम् । दिक्षु बीजचतुष्कञ्च शेषैः संवेष्टयेद्धि तत् । तत्र
प्रत्यङ्मुखो दीपः स्थाप्यः सर्वाङ्गसुन्दरि ! । प्राणानायम्य
विधिवन्मूलेनाङ्गं समाचरेत् । मन्त्रराजं लिखित्वा तु
ताम्रपात्रेऽष्टगन्धकैः । स्थापयेत्पूर्वतस्तस्य कुर्यात्सङ्कल्पमाद-
रात्” । “अनेन विधिना देवि ! कार्त्तवीर्यस्य गोपतेः ।
दीपो देयः प्रयत्नेन सर्वकार्यमभीप्सुना । गुरोराज्ञां पुरस्कृत्य
कुर्याद्देवि ! प्रयत्नतः । अन्यथा तु कृतं लोके विपरीतफलं
भवेत् । विधानं दीपदानस्य कृतघ्नपिशुनाय च । ब्रह्म-
कर्मविहीनाय न वक्तव्यं कदाचन । सुभक्ताय सुशिष्याय
साधकाय विशेषतः । वक्तव्यं देवि ! विधिना मम प्रीतिकरं
शिवम् । किं बहूक्तेन भो देवि ! कल्पोऽयमखिलार्थदः ।
अथाभिधीयते मानमाज्यस्य वरवर्णिनि ! । साधकानां
हितार्थाय सर्वार्थस्य च सिद्धये । पलानां पञ्चविंशस्तु दीपो
देयोऽर्थसिद्धये । पञ्चाशता घोरशान्त्यै शत्रुवश्याय चेष्यते ।
पञ्चसप्ततिर्देवेशि ! शत्रूणां स्यात् पराजये । एतेन
रोगनाशः स्यात् सहस्रेणाखिलाः क्रियाः । सिध्यन्ति
साधकानां हि प्रयोगा येऽतिदुष्कराः । नित्यदीपे न
मानं हि कार्यः सोऽत्र स्वशक्तितः । यथाकथञ्चिद्देवेशि !
नित्यं दीपं प्रकल्पयेत् । कार्त्तवीर्याय देवेशि ! सर्वकल्याण
सिद्धये । गुरुकार्य्येऽधिकं मानं कर्त्तव्यं देवि ! सर्व्वदा ।
लघुद्रव्यैः प्रकर्त्तव्यः लघुकार्ये वरानने ! । विना मानं
न कुर्वीत कार्तवीर्यस्य गोपतेः” ।

अधिकं तत्र द्रष्टव्यम् । मन्त्रमहोदधौ १७तरङ्गे । कार्त्तवीर्य्यमन्त्रादिकमुक्त्वा विशेषो दर्शितो यथा "अथ दीपविधिं वक्ष्ये कार्त्तवीर्य्यप्रियङ्करम् । वैशाखे श्रावणे मार्गे कार्त्तिकाश्विनपौषतः । माघफाल्गुनयोर्मासोर्दीपारम्भं समाचरेत् । तिथौ रिक्ताविहीनायां वारे शनिकुजौ विना । हस्तोत्तराश्विरौद्रेषु६ पुष्यवैष्णव२२ वायुभे१५ । द्विदैवते १६च रोहिण्यां दीपारम्भो हितार्थिनाम् । चरमे २७च, व्यतीपाते धृतौ वृद्धौ सुकर्म्मणि । प्रीतौ हर्षे च सौभाग्ये शोभनायुष्मतोरपि । करणे विष्टिरहिते ग्रहणेऽर्द्धोदयादिषु । योगेषु रात्रौ पूर्व्वाह्णे दीपारम्भः कृतः शुभः । कार्त्तिके शुक्लसप्तम्यां निशीथेऽतीव शोभनः । यदि तत्र रवेर्व्वारः श्रवणं तत्र दुर्लभम् । अत्यावश्यककार्य्येषु मासादीनां न शोधनम् । आद्येऽह्न्युपोष्य नियतो ब्रह्मचारी शयीत कौ । प्रातः स्नात्वा शुचिभूमौ लिप्तायां गोमयोदकैः । प्राणानायम्य सङ्कल्प्य न्यासान् पूर्व्वोदितांश्चरेत् । षट्कोणं रचयेद्भूमौ रक्तचन्दनतण्डुलैः । अन्तःस्मरं (क्लीं) समालिख्य षट्कोणेषु समालिखेत् । मन्त्रराजस्य षड्वर्णान् कामबीजविवर्ज्जितान् । ह्रूंयिं पञ्च वर्म्म चास्त्रं पूर्व्वाद्याशासु संलिखेत् । नवार्णैर्वेष्टयेत्तच्च त्रिकोणं तद्बहिः पुनः । एवं विलिखिते यन्त्रे निदध्याद्दीपभाजनम् । स्वर्णजं रजतोत्थं वा ताम्रजं तदभावतः । कांस्यपात्रं मृण्मयञ्च कनिष्ठं लौहजं स्मृतौ । शान्तये मुद्गचूर्णोत्थं सन्धौ गोधूमचूर्णजम् । वुभ्रैर्ष्ट्वं समानं तु पात्रं कुर्य्यात् प्रयत्नतः । अर्कदिग्वसुषट्पञ्चचतुरामाङ्गुलैर्मितम् । आज्ये पलसहस्रे तु पात्रं शतपलैः कृतम् । आज्येऽयुतपले पात्रं पलपञ्चशतीकृतम् । पञ्चसप्रतिसंख्ये तु पात्रं षष्टिपलं मतम् । त्रिसहस्रीकृतपले शरार्कं १२५ पलभाजनम् । द्विसहस्र्यां शरशिवं ११५ शतार्द्धं त्रिंशता मितम् । शतेऽक्षिशर ५५ संख्यातमेवमन्यत्र कल्पयेत् । नित्यदीपे वह्निपलं पात्रमाज्ये स्मृतं पलम् । एवं पात्रं प्रतिष्ठाप्य वर्त्तीः सूत्रोत्थिताः क्षिपेत् । एका तिस्रोऽथ वा पञ्च सप्ताद्या विषमा अपि । तिथि१५माद्या ऽऽसहस्रन्तु तन्तुसंख्या विनिर्म्मिता । गोघृतं प्रक्षिपेत्तत्र शुद्धवस्त्रविशोधितम् । सहस्रपलसंख्यादि दद्यान्तं कार्य्यगौरवात् । सुवर्णादिकृतां रम्यां शलाकां षोडशाङ्गुलाम् । तदर्द्धां वा तदर्द्धां वा सूक्ष्माग्रां स्थूलमूलिकाम् । विसृज्य दक्षिणे भागे पात्रमध्ये कृताग्रकाम् । पात्राद्दक्षिणदिग्भागे मुक्त्वाऽङ्गुलचतुष्टयम् । अधोऽग्रां दक्षिणाधारां निखनेच्च छुरिकां शुभाम् । दीपं प्रज्वालयेत्तत्र गणेशस्मृतिपूर्व्वकम् । दीपात् पूर्व्वत्र दिग्भागे सर्व्वतो भद्रमण्डले । तण्डुलाष्टदले वापि विधिवत् स्थापयेद्घटम् । तत्रावाह्य न्टपाधीशं पूर्व्ववत् पूजयेत् सुधीः । लाजाक्षतान् समादाय दीपं सङ्कल्पयेत्ततः । दीपसङ्कल्पमन्त्रोऽयं कथ्यते द्वीषु ५२ भूमितः" । ततस्तन्मन्त्रादिकमुक्त्वा शेषविधिर्दर्शितो यथा "एवं दीपप्रदानस्य कर्त्ताप्रोक्तोऽखिलेप्सितम् । दीपप्रबोधकाले तु वर्ज्जयेदशुभागिरम् । विप्रस्य दर्शनं तत्र शुभदं परिकीर्त्तितम् । शूद्राणां मध्यमं प्रोक्तं म्लेच्छस्य वधबन्धनम् । आखोत्वोर्दर्शनं दुष्टं गवाश्वस्य सुखावहम् । दीपज्वाला समा स्निग्धा, वक्रा नाशविधायिनी । कृते दीपे यदा पात्रं भग्नं दृश्येत दैवतः । पक्षादर्व्वाक् तदा गच्छेद्यजमानोयमालयम् । वर्त्त्यन्तरं यदा कुर्य्यात् कार्य्यं सिध्येद्विलम्बतः । नेत्रहीनो भवेत् कर्त्ता तस्मिन् दीपान्तरे कृते । अशुचिस्पर्शने व्याधिर्दीपनाशे तु चौरभीः । श्वमार्जाराखुसंस्पर्शे भवेद्भूपतितोभयम् । यात्रारम्भे वसुपलैः कृतोदीपोऽखिलेष्टदः । तस्माद्दीपः प्रयत्नेन रक्षणीयोऽन्तरायतः । आ समाप्तेः प्रकुर्व्वीत ब्रह्मचर्यञ्च भूशयः । स्त्रीशूद्रपतितादीनां सम्भाषामपि वर्जयेत् । जपेत् सहस्रं प्रत्यह्नि मन्त्रराजं नवाक्षरम् । स्तोत्रपाठं प्रतिदिनं निशीथिन्यां विशेषतः । एकपादेन दीपाग्रे स्थित्वा यो मन्त्रनायकम् । सहस्रं प्रजपेद्रात्रौ सोऽभीष्टं क्षिप्रमाप्नुयात् । समाप्य शोभने घस्रे संभोज्य द्विजनायकान् । कुम्भोदकेन कर्त्तारमभिषिञ्चेन्मनुं स्मरन् । कर्त्ता तु दक्षिणां दद्यात् पुष्कलां तोषहेतवे । गुरौ तुष्टे ददातीष्टं कृतवीर्य्यसुतोन्टपः । गुर्व्वाज्ञया स्वयं कुर्य्याद्यदि वा कारयेद्गुरुम् । कृत्वा रत्नादिदानेन दीपदानं धरापतेः । गुर्व्वाज्ञामन्तरा कुर्य्याद्यो दीपं स्वेष्टसिद्धये । प्रत्युतानुभवत्येष हानिमेव पदे पदे । दीपदानविधिं ब्रूयात् कृतघ्नादिषु नो गुरुः । दुष्टेभ्यः कथितोमन्त्रो वक्तुर्दुःखावहो भवेत् । उत्तमं गोघृतं, प्रोक्तं मध्यमं महिषीभवम् । तिलतैलन्तु तादृक् स्यात् कनीयोऽजादिजं घृतम् । आस्यरोगे सुगन्धेन दद्यात्तैलेन दीपकम् । सिद्धार्थसम्भवेनाथ द्विषतां नाशसिद्धये । सहस्रेण पलैर्दीपे विहिते चेन्न दृश्यते । कार्य्यसिद्धिस्तदा कुर्य्याद्द्विवारं दीपजं विधिम् । तदा सुदुर्लभं कार्य्यं सिध्यत्येव न

संशयः । यथा कश्चिद्यः कुर्य्याद्दीपदानं स्ववेश्मनि । विघ्नाः सर्व्वेऽरिभिः साकं तस्य नश्यन्ति दूरतः । सर्व्वदा जयमाप्नोति पुत्रान् पौत्रान् धनं यशः । यथा कश्चिद्यो गेहे नित्यं दीपं समाचरेत् । कार्त्तवीर्य्यार्जुनप्रीत्यै सोऽभीष्टं लभते नरः । दीपप्रियः कार्त्तवीर्य्यो मार्त्तण्डो नतिवल्लभः । स्तुतिप्रियो महाविष्णुर्गणेशस्तर्पणप्रियः । दुर्गाऽर्चनप्रिया नूनमभिषेकप्रियः शिवः" ।

कार्त्तवीर्य्यस्य च दत्तात्रेयलब्धयोगप्रभावात् हरेश्चक्रावताराच्च उपास्यत्वम् । यथा चास्य हरेश्चक्रावतारत्वं तथा तस्य ध्याने वर्णितं यथा "उद्यत्सूर्य्यसहस्रकान्तिरखिलक्षौणी-धवैर्वन्दितो हस्तानां शतपञ्चकेन च दधच्चापानिषूंस्तावता । कण्ठे हाटकमालया परिवृतश्चक्रावतारो हरेः पायात् स्यन्दनगोऽरुणाभवसनः श्रीकार्त्तवीर्य्यो नृपः" । २ सुभूमाख्ये जैनराजचक्रवर्त्तिभेदे हेमच० ।

**कार्त्तवीर्य्यारि** पु० ६त० । परशुरामे यथा च तस्य तदरित्वं तथा वर्णितम् भा०व० ११६अ० यथा

"अथानूपपतिर्वीरः कार्त्तवीर्य्योऽभ्यवर्त्तत । तमाश्रमपदं प्राप्तमृषेर्भार्य्या समार्च्चयत् । स युद्धमदसम्मत्तो नाभ्यनन्दत्तथार्च्चनम् । प्रमथ्य चाश्रमात्तस्माद्धोमधेनोस्ततो बलात् । जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् । आगताय च रामाय तदाचष्ट पिता स्वयम् । गाञ्च रोरुदतीं दृष्ट्वा कोपो रामं समाविशत् । स मृत्युवशमापन्नं कार्त्तवीर्य्यमुपाद्रवत् । तस्याथ युधि विक्रम्य भार्गवः परवीरहा । चिच्छेद निशितैर्भल्लैर्बाहून् परिघसन्निभान् । सहस्रसम्मितान् राजन् ! प्रगृह्य रुचिरं धनुः । अभिभूतः स रामेण संयुक्तः कालधर्म्मणा" । कार्त्तवीर्य्यविजेत्रादयोऽत्र ।

**कार्त्तस्वर** न० कृतस्वरे आकरभेदे भवम् अण् कृताः पठिताः स्वरा येन कृतस्वरः सामगानकर्तृभेदस्तस्मै दक्षिणात्वेन देयम् शैषिकोऽण् वा । १स्वर्णे तन्नामनामके २धूस्तुरे च अमरः "स तप्तकार्त्तस्वरभास्वराम्बरः" माघः । "पृथुकार्त्तस्वरपात्रम्" मा०द० । [ज्योतिर्विद्यावेत्तरि अमरः ।

**कार्त्तान्तिक** त्रि० कृतान्तं वेत्ति उक्थादेराकृतिगणत्वात् ठक् ।

**कार्त्तिक** पु० कृत्तिकानक्षत्रेण युक्ता पौर्णमासी कृत्तिका+अण् ङीप् कार्त्तिकी साऽस्मिन् मासे अण् पक्षे ठक् । वैशाखाद्यवधिके सप्तमे १चान्द्रमासे यन्मासीयपौर्णमास्यां कृत्तिकानक्षत्रसम्बन्धः सम्भवति तादृशे मासे तस्य च यथा तथात्वं तथा सू०सि०रङ्गनाथाभ्यां दर्शितं यथा

"नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्व्वान्तयोगतः" सू०सि० । "माससञ्ज्ञा सदा नक्षत्रनाम्नेति । पर्व्वान्तयोगतः पर्व्वान्तः पूर्णिमान्तः तस्य योगात्तत्सम्बन्धात् । नक्षत्रसंज्ञया मासाः । शुक्लादाच्चान्द्रामासा ज्ञेया इति तात्पर्य्यार्थः । तथा हि यद्दर्शान्तावधिकश्चान्द्रो मासस्तदभ्यन्तरस्थितपूर्णिमान्तस्थितचन्द्रनक्षत्रसञ्ज्ञः । यथा चित्रासम्बन्धाच्चैत्रः । विशाखासम्बन्धाद्वैशाखः । ज्येष्ठासम्बन्धाज्ज्यैष्ठः । आषाढासम्बन्धादाषाढः । श्रवणसम्बन्धाच्छ्रावणः । भाद्रपदासम्बन्धाद्भाद्रपदः । अश्विनीसम्बन्धादाश्विनः । कृत्तिकासम्बन्धात् कार्तिकः । मृगशीर्षसम्बन्धान्मार्गशीर्षः । पुष्यसम्बन्धात् पौषः मघासम्बन्धान्माघः । फाल्गुनीसम्बन्धात् फाल्गुन इति । ननु पूर्णिमान्ते तत्तन्नक्षत्राभावे कथं तत्सञ्ज्ञा मासानामुचितेत्यत आह" रङ्ग० ।

"कार्तिक्यादिषु संयोगे कृत्तिकादि द्वयं द्वयम् । अन्त्योपान्त्यौ पञ्चमश्च त्रिधा मासत्रयं स्मृतम्" सू०सि० । "नक्षत्रसंयोगार्थमिति निमित्तसप्तमी । कार्तिक्यादिषु कार्तिकमासादीनां पौर्णमासीष्वित्यर्थः । कृत्तिकादि द्वयं द्वयं नक्षत्रं कथितं कृत्तिकारोहिणीभ्यां कार्तिकः । मृगाद्रीभ्यां मार्गशीर्षः । पुनर्वसुपुष्याभ्यां पौषः । अश्लेषामघाभ्यां माघः । चित्रास्वातीभ्यां चैत्रः । विशाखानुराधाभ्यां वैशाखः । ज्येष्ठामूलाभ्यां ज्यैष्ठः । पूर्वोत्तराषाढाभ्यामाषाढः । श्रवणधनिष्ठाभ्यां श्रावण इति फलितम् । अवशिष्टमासानामाह । अन्त्योपान्त्याविति । अत्र कार्तिकस्यादित्वेन पश्चादन्त्य आश्विनः । उपान्त्यो भाद्रपदः । एतौ मासौ पञ्चमः फाल्गुनः । चकारः समुच्चयः इति मासत्रयं त्रिधा स्थानत्रय उक्तम् । रेवत्यश्विनीभरणीति नक्षत्रत्रयसम्बन्धादाश्विनः । शततारापूर्वोत्तराभाद्रपदेति नक्षत्रत्रयसम्बन्धाद्भाद्रपदः । पूर्वोत्तराफाल्गुनीहस्तेति नक्षत्रत्रयसम्बन्धात् फाल्गुन इति सिद्धम्" रङ्गनाथ ।

चान्द्रकार्त्तिकत्वञ्च तुलाराशिस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तत्वम् "मीनादिस्थो रविर्य्येषामारम्भप्रथमक्षणे । भवेत्तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृताः" व्यासवचनात् । २तुलास्थरविके तादृशे सौरमासे । तल्लक्षणन्तु तुलास्थरविकत्रिंशद्दिनत्वं सौरकार्त्तिकत्वम् । "चन्द्रमाः कृष्णपक्षान्ते सूर्य्येण सह युज्यते । सन्निकर्षाद्यथारभ्य सन्निकर्षमथापरम् । चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते । आदित्यराशिभोगेन सौरोमासः प्रकीर्त्तितः" इति विष्णुध० वचनात् । "चाण्डालो जायते राजन् !

कार्त्तिके मांसभक्षणात्” पद्म पु० “शेते विष्णुः सदाषाढे भाद्रे च परिवर्त्तते। कार्त्तिके परिबुध्येत शुक्लपक्षे हरेर्दिने” मत्स्यपु०। तत्र नानार्थशब्दानामेकत्र शक्तिरन्यत्र लक्षणेति सिद्धान्तात् चान्द्रे मुख्यत्वम्, सौरे गौणत्वमिति रघु०। उभयत्र शक्तिरिति कालमाधवीये स्थितम्। मासशब्दे विवृतिः। एवं मार्गादीनां चान्द्रसौरलक्षणमूह्यम्। २कृत्तिकानक्षत्रयुक्तपौर्णमासीघटिते अर्द्धमासात्मके तत्पक्षे च। “नक्षत्रेण युक्तः कालः” “साऽस्मिन् पौर्णमासीति संज्ञायाम्” पा० व्या० जयादित्येन अस्मिन्निति दशरात्रादिव्यावृत्त्यर्थं मासार्द्धमाससंवत्सराणामिव संज्ञेति व्याख्याय उदाहृतं पौषो-मासः पौषोऽर्द्धमासः पौषः संवत्सर इति”। गुरोः कृत्तिकारोहिण्योरन्यतरनक्षत्रेण पर्वान्तयोगे गुरोरस्तोदयोपलक्षिते ४वर्षे च यथोक्तं सू०सि०रङ्गनाथाभ्याम् “अथ प्रसङ्गात् कार्तिकादिवृहस्पतिवर्षाण्याह” रङ्ग०। “वैशाखादिषु कृष्णे च योगः पञ्चदशे तिथौ। कार्तिकादीनि वर्षाणि गुरोरस्तोदयात् तथा” सू०सि०।

“यथा पौर्णमास्यां नक्षत्रसम्बन्धेन तत्संज्ञो मासो भवति। तथेति समुच्चयार्थकम्। वृहस्पतेः सूर्यसान्निध्यदूरत्वाभ्यामस्तादुदयाद्वा वैशाखादिषु द्वादशसु मासेषु कृष्णपक्षे पञ्चदशे तिथौ अमायामित्यर्थः। चकारः पौर्णमासीसम्बन्धसमुच्चयार्थकः। योगे उक्तनक्षत्रसम्बन्धे-कार्तिकादीनि द्वादश वर्षाणि भवन्ति। वैशाखकृष्णपक्षीयामायां वृहस्पतेरस्त उदये वा जाते सति तदादि वृहस्पतिवर्षं कृत्तिकादिनक्षत्रसम्बन्धात् कार्तिकसंज्ञम्। एवं ज्यैष्ठाषाढश्रावणभाद्रपदाश्विनमार्गशीर्षपौषमाघफाल्गुनचैत्रामादिषु मृगपुष्यमघापूफाचित्राविशाखाज्येष्ठापूर्वाषाढश्रवणपूभाश्विनीदिननक्षत्रसम्बन्धान्मार्गशीर्षादीनि भवन्ति। अत्रापि प्रोक्तनक्षत्रद्वयत्रयसम्बन्धः प्रागुक्तो बोध्यः। अमेत्याद्युपलक्षणम्। तेन यद्दिने वृहस्पतेरुदयोऽस्तो वा तद्दिने यच्चन्द्राधिष्ठितनक्षत्रं तत्संज्ञं बार्हस्पत्यं वर्षं भवतीति तात्पर्यम्। संहिताग्रन्थेऽस्तोदयवशाद्वर्षोक्तिः परमिदानीमुदयवशव्यवहारो गणकैर्गण्यते “येनोदितेज्य” इत्युक्तेरिति” रङ्ग०।

तस्य च विवृतिः मलमासतत्त्वे यथा

“यथा मासानां पौर्णमास्यां कृत्तिकादिसम्बन्धात् कार्त्तिकादित्वं तथा वर्षाणां वृहस्पतेरस्तोदयसम्बन्धात् कार्त्तिकादित्वम् तेन कृत्तिकारोहिण्योरेकतरस्मिन् वृहस्पतेरस्तोदयैकतरलाभे कार्त्तिकवर्षम् एवं मार्गशीर्षादि। यत्र वर्षद्वयघटकयोर्नक्षत्रयोरेकतरस्मिन्नस्तङ्गतो गुरुरन्यस्मिन्नुदेति तत्र का गतिरेति चेत् कार्त्तिकोत्तरं मार्गशीर्षं मार्गशीर्षोत्तरं पौषमित्यादिक्रमाद्गतिः”

बार्हस्पत्यवर्षप्रयोजनमुक्तं सू०सि० “बार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यशः”। षष्ट्यब्दं प्रभवादिवर्षाणि।

यथा च कार्त्तिकशब्दस्य कार्त्तिकीयुक्तार्द्धमासपरत्वं वर्षभेदपरत्वं च जयादित्येन दर्शितं तथा आग्रहायणाश्विनाषाढ शब्दानामपि तादृशपौर्णमासीघटितपक्षवत्सरपरत्वं पूर्वमनुक्तमपि ज्ञेयम्।

कृत्तिकाणामयं पोष्यत्वेन अण्। अग्नौ निषिक्तरुद्रतेजोजाते ५स्कन्दे देवे। तस्य कृत्तिकापोष्यत्वकथा च भा०आनु० ८४अ० यथा।

“शूलपाणेर्भगवतो रुद्रस्य च महात्मनः। गिरौ हिमवति श्रेष्ठे तदा भृगुकुलोद्वह!। देव्या विवाहे निर्वृत्ते रुद्राण्या भृगुनन्दन!। समागमे भगवतो देव्या सह महात्मनः। ततः सर्वे समुद्विग्ना देवं रुद्रमुपागमन्। ते महादेवमासीनं देवीञ्च वरदामुमाम्। प्रसाद्य शिरसा सर्वे रुद्रमूचुर्भृगूद्वह!। अयं समागमो देव! देव्या सह तवानघ!। तपस्विनस्तपस्विन्या तेजस्विन्याऽतितेजसः। अमोघतेजास्त्वं देव! देवी चेयमुमा तथा। अपत्यं युवयोर्देव! बलवद्भविता विभो!। तन्नूनं त्रिषु लोकेषु न किञ्चिच्छेषयिष्यति। तदेभ्यः प्रणतेभ्यस्त्वं देवेभ्यः पृथुलोचन!। वरं प्रयच्छ लोकेश! त्रैलोक्यहितकाम्यया। अपत्यार्थं निगृह्णीष्व तेजः परमकं विभो!। त्रैलोक्यसारौ हि युवां, लोकं सन्तापयिष्यथः। तदपत्यं हि युवयोर्देवानभिभवेद्ध्रुवम्। न हि ते पृथिवी देवी नच द्यौस्त्रिदिवं विभो!। नेदं धारयितुं शक्ताः समस्ता इति नो मतिः। तेजःप्रभावनिर्द्दग्धं तस्मात् सर्वमिदं जगत्। तस्मात् प्रसादं भगवन्! कर्त्तुमर्हसि नः प्रभो!। न देव्यां सम्भवेत् पुत्रो भवतः सुरसत्तम!। धैर्यादेव निगृह्णीष्व तेजो ज्वलितमुत्तमम्। इति तेषां कथयतां भगवान् गोवृषध्वजः। एवमस्त्विति देवांस्तान् विप्रर्षे! प्रत्यभाषत। इत्युक्त्वा चोर्द्ध्वमनयद्रेतो वृषभवाहनः। ऊर्द्ध्वरेताः समभवत्ततः प्रभृति चापि सः। रुद्राणी तु ततः क्रुद्धा प्रजोच्छेदे तथा कृते। देवानथाब्रवीत्तत्र स्त्रीभावात् परुषं वचः। यस्मादपत्यकामो वै भर्त्ता मे विनिवर्त्तितः। तस्मात् सर्वे सुरा यूयमनपत्या भविष्यथ। प्रजोच्छेदो मम कृतो यस्माद्यु-

स्वाभिरद्य वै। तस्मात् प्रजा वः खगमाः सर्व्वेषां न भविष्यति। पावकस्तु न तत्रासीच्छापकाले भृगूद्वह!। हे देवाव्यास्तथा शापादनपत्यास्तथाऽभवन्। रुद्रस्तु तेजोऽप्रतिमं धारयामास वै तदा। प्रस्कन्नन्तु ततस्तस्मात् किञ्चित्तत्रापतद्भुवि। उत्पपात तदा वह्नौ ववृधे चाद्भुतोपमम्। तेजस्तेजसि संपृक्तमात्मयोनित्वमागतम्”। इत्युपक्रम्य तारकासुरेण बाधितानां देवानां ब्रह्मसमीपे वरप्रार्थनादिकमुक्तं यथा

“देवा ऊचुः। असुरस्तारको नाम त्वया दत्तवरः प्रभो!। सुरान्बाधते क्लिश्नाति बधस्तस्य विधीयताम्। तस्माद्भयं समुत्पन्नमस्माकं वै पितामह!। परित्रायस्व नो देव! न ह्यन्या गतिरस्ति नः। ब्रह्मोवाच। समोऽहं सर्व्वभूतानामधर्म्मं नेह रोचये। हन्यतां तारकः क्षिप्रं सुरर्षिगणबाधिता। वेदा धर्म्माश्च नोच्छेदं गच्छेयुः सुरसत्तमाः!। विहितं पूर्व्वमेवात्र मया वै व्येतु वो ज्वरः। देवा ऊचुः। वरदानाद्भगवतो दैतेयो बलगर्व्वितः। देवैर्न शक्यते हन्तुं स कथं प्रशमं व्रजेत्। स हि नैव स्म देवानां न सुराणां न रक्षसाम्। बध्यः स्यामिति जग्राह वरं त्वत्तः पितामह!। देवाश्च शप्ता रुद्राण्या प्रजोच्छेदे पुरा कृते। न भविष्यति वोऽपत्यमिति सर्व्वे जगत्पते!। ब्रह्मोवाच। हुताशनो न तत्रासीच्छापकाले सुरोत्तमाः!। स उत्पादयिताऽपत्यं बधाय त्रिदशद्विषाम्। तद्वै सर्व्वानतिक्रम्य देवदानवराक्षसान्। मनुष्यानथ गन्धर्व्वान्नागानथ च पक्षिणः। अस्त्रेणामोघपातेन शक्त्या तं घातयिष्यति। यतो वो भयमुत्पन्नं ये चान्ये सुरशत्रवः। सनातनो हि संकल्पः काम इत्यभिधीयते। रुद्रस्य रेतः प्रस्कन्नमग्नौ निपतितञ्च यत्। तत्तेजोऽग्निर्म्महद्भूतं द्वितीयमिव पावकम्। बधार्थं देवशत्रूणां गङ्गायां जनयिष्यति। स तु नावाप तं शापं नष्टः स हुतभुक् तदा। तस्माद्वो भयहृद्देवाः! समुत्पत्स्यति पावकिः। अन्विष्यतां वै ज्वलनस्तथा चाद्य नियुज्यताम्। तारकस्य बधोपायः कथितो वै मयाऽनघाः!। न हि तेजस्विनां शापास्तेजःसु प्रभवन्ति वै। बलान्यतिबलं प्राप्य दुर्व्वलानि भवन्ति वै। हन्यादवध्यान् वरदानपि चैव तपस्विनः। सङ्कल्पाभिरुचिः कामः सनातनतमोऽभवत्। जगत्पतिरनिर्द्देश्यः सर्व्वगः सर्व्वभावनः। हृच्छयः सर्व्वभूतानां ज्येष्ठो रुद्रादपि प्रभुः। अन्विष्यतां स तु क्षिप्रं तेजोराशिर्हुताशनः। स वो मनोगतं कामं देवः सम्पादयिष्यति। एतद्वाक्यमुपश्रुत्य ततो देवा महात्मनः। जग्मुः संसिद्धसङ्कल्पाः पर्य्येषन्तो विभावसुम्। ततस्त्रैलोक्यमृषयो विचिन्वन्तः सुरैः सह। काङ्क्षन्तो दर्शनं वह्नेः सर्व्वे तद्गतमानसाः। परेण तपसा युक्ताः श्रीमन्तो लोकविश्रुताः। लोकानन्वचरन् सिद्धाः सर्व्व एव भृगूत्तम!। नष्टमात्मनि संलीनं नाधिजग्मुर्हुताशनम्। ततः सञ्जातसन्त्रासानग्नेर्द्दर्शनलालसान्। जलेचरः क्लान्तमनास्तेजसाऽग्नेः प्रदीपितः। उवाच देवान्मण्डूको रसातलतलोत्थितः” इत्युपक्रम्य ८५ अ० देवैरग्निसमागमे ततो देवैः प्रार्थितवरादिमुक्तं यथा।

“अग्निरुवाच। ब्रूत यद्भवतां कार्य्यं कर्त्ताऽस्मि तदहं सुराः!। भवतान्तु नियोज्योऽस्मि मा वोऽत्रास्तु विचारणा। देवा ऊचुः। असुरस्तारको नाम ब्रह्मणो वरदर्पितः। अस्मान् प्रबाधते वीर्य्याद्बधस्तस्य विधीयताम्। इमान् देवगणांस्तात! प्रजापतिगणांस्तथा। ऋषींश्चापि महाभाग! परित्रायस्व पावक!। अपत्यं तेजसा युक्तं प्रवीरं जनय प्रभो!। यद्भयं नोऽसुरात्तस्मान्नाशयेद्धव्यवाहन!। शप्तानां नो महादेव्या नान्यदस्ति परायणम्। अन्यत्र भवतो वीर्य्यात्तस्मात्त्रायस्व नः प्रभो!। इत्युक्तः स तथेत्युक्त्वा भगवान् हव्यवाहनः। जगामाथ दुराधर्षो गङ्गां भागीरथीं प्रति। तया चाप्यभवन्मिश्रो गर्भश्चास्या दधे तदा। ववृधे स तदा गर्भः कक्षे कृष्णगतिर्यथा। तेजसा तस्य देवस्य गङ्गा विह्वलचेतना। सन्तापमगमत्तीव्रं सा सोढुं न शशाक ह। आहिते ज्वलनेनाथ गर्भे तेजःसमन्विते। गङ्गायामसुरः कश्चिद्भैरवं नादमानदत्। अबुद्धिपतितेनाथ नादेन विपुलेन सा। वित्रस्तोद्भ्रान्तनयना गङ्गा विह्वललोचना। विसंज्ञा नाशकद्गर्भं वोढुमात्मानमेव च। सा तु तेजःपरीताङ्गी कम्पयन्तीव जाह्नवी। उवाच ज्वलनं विप्र! तदा गर्भबलोद्धृता। न ते शक्ताऽस्मि भगवंस्तेजसोऽस्य विधारणे। विमूढाऽस्मि कृताऽनेन न मे स्वास्थ्यं यथा पुरा। विह्वला चास्मि भगवंश्चेतो नष्टञ्च मेऽनघ!। धारणे नास्य शक्ताऽहं गर्भस्य तपतां वर!। उत्स्रक्ष्येऽहमिमं दुःखान्न तु कामात् कथञ्चन। न तेजसोऽस्ति संस्पर्शो मम देव! विभावसो!। आपदर्थे हि सम्बन्धः सुसूक्ष्मोऽपि महाद्युते!। तदत्र गुणसम्पन्नमितरद्वा हुताशन!। त्वय्येव तदहं मन्ये धर्म्माधर्म्मौ च केवलौ। तामुवाच ततो वह्निर्धार्य्यतां धार्य्यतामिति। गर्भो मत्तेजसा युक्तो महागुणफलोदयः।

शक्ता ह्यसि मद्वीर्य्यं कृत्स्नं वोढुं धारयितुं तथा । न हि ते किञ्चिदप्राप्यमन्यतो धारणादृते । सा वह्निना वार्य्यमाणा देवैरपि सरिद्वरा । समुत्ससर्ज्ज तं गर्भं मेरौ गिरिवरे तदा । समर्था धारणे चापि रुद्रतेजःप्रधर्षिता । नाशकत्तं तदा गर्भं संधारयितुमोजसा । सा समुत्सृज्य तं दुःखाद्दीप्तवैश्वानरप्रभम् । दर्शयामास चाग्निस्तां तदा गङ्गां भृगूद्वह ! । पप्रच्छ सरितां श्रेष्ठां कच्चिद्गर्भः सुखोदयः । कीदृग्वर्णोऽपि वा देवि कीदृग्रूपश्च दृश्यते । तेजसा केन वा युक्तः सर्व्वमेतद्ब्रवीतु मे" ।

"गङ्गोवाच । जातरूपः स गर्भो वै तेजसा त्वमिवानघ ! । सुवर्णो विमलो दीप्तः पर्व्वतञ्चावभासयत् । पद्मोत्पलविमिश्राणां ह्रदानामिव शीतलः । गन्धोऽस्य सकदम्बानां तुल्यो वै तपतांवर ! । तेजसा तस्य गर्भस्य भास्करस्येव रश्मिभिः । यद्द्रव्यं परिसंसृष्टं पृथिव्यां पर्व्वतेषु च । तत् सर्व्वं काञ्चनीभूतं समन्तात् प्रत्यदृश्यत । पर्य्यधावत शैलांश्च नदीः प्रस्रवणानि च । व्यादीपयंस्तेजसा च त्रैलोक्यं सचराचरम् । एवंरूपः स भगवन् ! पुत्रस्ते हव्यवाहन ! । सूर्य्यवैश्वानरसमः कान्त्या सोम इवापरः । एवमुक्त्वा तु सा देवी तत्रैवान्तरधीयत । पावकश्चापि तेजस्वी कृत्वा कार्य्यं दिवौकसाम् । जगामेष्टं ततो देशं तदा भार्गवनन्दन ! । एतैः कर्म्मगुणैर्लोके नामाग्नेः परिगीयते । हिरण्यरेता इति वै ऋषिभिर्विबुधैस्तथा । पृथिवी च तदा देवी ख्याता वसुमतीति वै । स तु गर्भो महातेजा गाङ्गेयः पावकोद्भवः । दिव्यं शरवणं प्राप्य ववृधेऽद्भुतदर्शनः । ददृशुः कृत्तिकास्तन्तु बालार्कसदृशद्युतिम् । पुत्रत्वे ताश्च तं बालं पुपुषुस्तन्यविस्रवैः । ततः स कार्त्तिकेयत्वमवाप परमद्युतिः । स्कन्नत्वात् स्कन्दताञ्चापि गुहावासाद्गुहोऽभवत्"। अधिकं कार्त्तिकेयशब्दे वक्ष्यते । कार्त्तिकस्येयम् अण् ङीप् । कार्त्तिकी ६ देवीशक्तिभेदे कौमार्य्याम् नवपत्रिकान्तर्गते जयन्त्याम् ७ देवीभेदे च कृत्तिकानक्षत्रेण युक्ता पौर्णमासी अण् ङाप् । चान्द्रकार्त्तिकमासस्य ८ पौर्णमास्याम् स्त्री । "कार्त्तिक्याः आग्रहायण्यो मासे" महाभा० ।

**कार्त्तिकव्रत** न० कार्त्तिके कर्त्तव्यं व्रतम् । कार्त्तिकमासे कर्त्तव्ये नियमभेदे । तन्माहात्म्यव्रतादि पाद्मस्कान्दयो र्दर्शितं तत्रादौ तस्य नित्यत्वमुक्तम् स्कान्दे

"दुष्प्रापं प्राप्य मानुष्यं कार्त्तिकोक्तं चरेन्न हि । धर्म्मं धर्म्मभृतां श्रेष्ठ ! स मातृपितृघातकः । अव्रतेन क्षिपेद् यस्तु मासं दामोदरप्रियम् । तिर्य्यग्योनिमवाप्नोति सर्व्वधर्म्मबहिष्कृतः । स ब्रह्महा स गोघ्नश्च स्वर्णस्तेयी सदाऽनृती । न करोति मुनिश्रेष्ठ ! यो नरः कार्त्तिकव्रतम् । विधवा च विशेषेण व्रतं यदि न कार्त्तिके । करोति मुनिशार्द्दूल ! नरकं याति सा ध्रुवम् । व्रतन्तु कार्त्तिके मासि यदा न कुरुते गृही । इष्टापूर्त्तं वृथा तस्य यावदाहूतनारकी । संप्राप्ते कार्त्तिके मासे द्विजो व्रतपराङ्मुखः । भवन्ति विमुखाः सर्व्वे तस्य देवाः सवासवाः । इष्ट्वा च बहुभिर्यज्ञैः कृत्वा श्राद्धशतानि च । स्वर्गं नाप्नोति विप्रेन्द्र ! अकृत्वा कार्त्तिके व्रतम् । यतिश्च विधवा चैव विशेषेण वनाश्रमी । कार्त्तिके नरकं याति अकृत्वा वैष्णवं व्रतम् । वेदैरधीतैः किं तस्य ? पुराणपठनैश्च किम् ? । कृतं यदि न विप्रेन्द्र ! कार्त्तिके वैष्णवं व्रतम् । जन्मप्रभृति यत् पुण्यं विधिवत् समुपार्ज्जितम् । भस्मीभवति तत् सर्व्वमकृत्वा कार्त्तिके व्रतम् । यद्दत्तञ्च परं जप्तं कृतञ्च सुमहत्तपः । सर्व्वं विफलतामेति अकृत्वा कार्त्तिके व्रतम् । सप्तजन्मार्ज्जितं पुण्यं वृथा भवति नारद ! । अकृत्वा कार्त्तिके मासि वैष्णवं व्रतमुत्तमम् । पापभूतास्तु ते ज्ञेया लोके मर्त्त्या महामुने ! । वैष्णवाख्यं व्रतं यैस्तु न कृतं कार्त्तिके शुभम्" । किञ्च "अकृत्वा नियमं विष्णोः कार्त्तिकं यः क्षिपेन्नरः । जन्मार्ज्जितस्य पुण्यस्य फलं नाप्नोति नारद !" । किञ्च "नियमेन विना चैव यो नयेत् कार्त्तिकं मुने ! । चातुर्म्मास्यं तथा चैव ब्रह्महा स कुलाधमः" । किञ्च "पिण्डदानं पितॄणाञ्च पितृपक्षे न वै कृतम् । व्रतं ना कार्त्तिके मासि श्रावण्यामभितर्पणम् । चैत्रे नान्दोलितो विष्णुर्माघस्नानं न मज्जने । न कृतां मज्जनं पुष्ये, श्रावणे रोहिण्याष्टमी । सङ्क्रमे न कृता येन द्वादशी श्रवणान्विता । कुत्र वासयन्ति ते मूढा नाहं वेद्मि कलिप्रिय !" । पाद्मे च "शौनकादिमुनिगणसंवादे "मानुषः कर्म्मभूमौ यः कार्त्तिकं नयते वृथा । चिन्तामणिं करे प्राप्य क्षिपते कर्द्दमाम्बुनि । नियमेन विना विप्राः ! कार्त्तिकं यः क्षिपेन्नरः । कृष्णः पराङ्मुखस्तस्य यस्मादूर्ज्जोऽस्य वल्लभः । यैश्च दत्तं हुतं जप्तं न स्नानं न हरेर्व्रतम् । न कृतं कार्त्तिके पुत्र ! द्विजास्ते वै नराधमाः" । किञ्च "यैर्न दत्तं हुतं जप्तं कार्त्तिके न व्रतं कृतम् । तेनात्मा हारितो नूनं न प्राप्तं प्रार्थितं फलम्" । अन्यत्र च "संप्राप्ते कार्त्तिके मासि ये रता न

जनार्द्दने । तेषां सौरिपुरे वासः पितृभिः सह नारद !"। किञ्च "कार्त्तिके नार्च्चितो यैस्तु भक्तिभावेन केशवः । नरकं ते गमिष्यन्ति यमदूतैस्तु यन्त्रिताः । जन्मकोटिसहस्रैस्तु मानुष्यं प्राप्य दुर्ल्लभम् । कार्त्तिके नार्च्चितो विष्णुर्हारितं ८४ जन्म वै । विष्णोः पूजा कथा विष्णोर्वैष्णवानाञ्च दर्शनम् । न भवेत् कार्त्तिके यस्य हन्ति पुण्यं दशाब्दिकम्" । कार्त्तिकमाहात्म्यं स्कान्दे "कार्त्तिकस्य तु माहात्म्यं प्राक् सामान्येन लिख्यते । ततो विशेषतस्तत्र कर्म्म देशादिभेदतः" इत्युपक्रम्य "कार्त्तिकस्य तु मासस्य कोट्यंशेनापि नार्हति। सर्व्वतीर्थेषु यत् स्नानं सर्व्वदानेषु यत् फलम् । एकतः सर्व्वतीर्थानि सर्व्वे यज्ञाः सदक्षिणाः। एकतः पुष्करे वासः कुरुक्षेत्रे हिमाचले । मेरुतुल्यसुवर्णानि सर्व्वदानानि चैकतः । एकतः कार्त्तिको वत्स ! सर्व्वदः केशवप्रियः । यत् किञ्चित् क्रियते पुण्यं विष्णुमुद्दिश्य कार्त्तिके । तदक्षयं भवेत् सर्व्वं सत्योक्तं तव नारद !। कार्तिकः खलु वै मासः सर्व्वमासेषु चोत्तमः । पुण्यानां परमं पुण्यं पावनानाञ्च पावनः । यथा नदीनां विप्रेन्द्र ! शैलानाञ्चैव नारद ! । उदधीनाञ्च विप्रर्षे ! क्षयो नैवोपपद्यते । पुण्यं कार्त्तिकमासे तु यत्किञ्चित् क्रियते मुने ! । न तस्यास्ति क्षयो ब्रह्मन् ! पापस्याप्येवमेव च । न कार्तिकसमो मासो न कृतेन समं युगम् । न वेदसदृशं शास्त्रं न तीर्थं गङ्गया समम् । कार्त्तिकः प्रवरो मासो वैष्णवानां प्रियः सदा । कार्त्तिकं सकलं यस्तु भक्त्या सेवेत वैष्णवः । पितॄनुद्धरते सर्व्वान् नरकस्थान् महामुने !"। पाद्मे "द्वादशस्वपि मासेषु कार्त्तिकः कृष्णवल्लभः । । तस्मिन् संपूजितो विष्णुरल्पकैरप्युपायनैः । ददाति वैष्णवं लोकमित्येवं निश्चितं मया। यथा दामोदरो भक्तवत्सलो विदितो जनैः । तस्यायन्तादृशो मासः स्वल्पमप्युरुकारकः । दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः । तत्रापि दुर्लभः कालः कार्त्तिको हरिवल्लभः । दीपेनापि हि तत्रासौ प्रीयते हरिरीश्वरः । सुगतिञ्च ददात्येव परदीपप्रबोधनात् ।"

"अथ तद्व्रतमाहात्म्यं स्कान्दे" "व्रतानामिह सर्व्वेषामेकजन्मानुगं फलम् । कार्त्तिके तु व्रतस्योक्तं फलं जन्मशतानुगम् । अक्रूरतीर्थे विप्रेन्द्र ! कार्त्तिक्यां समुपोष्य च। स्नात्वा यत् फलमाप्नोति तत् स्मृत्वा वैष्णवं व्रतम् । वाराणस्यां कुरुक्षेत्रे नैमिषे पुष्करेऽर्व्वुदे । गत्वा यत् फलमाप्नोति व्रतं कृत्वा तु कार्त्तिके । अग्निहोत्रञ्च सदा यज्ञैर्न कृत्वा पितृषु स्वधाम् । व्रतेन कार्त्तिके मासि वैष्णवन्तु पदं व्रजेत् । प्रवृत्तानाञ्च भक्ष्याणां कार्त्तिके नियमे कृते । अवश्यं कृष्णरूपत्वं प्राप्यते मुक्तिदं शुभम्"। किञ्च "ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा मुनिसत्तम ! वियोनिं न व्रजत्येव व्रतं कृत्वा तु कार्त्तिके"। किञ्च "कार्त्तिके मुनिशार्दूल ! स्वशक्त्या वैष्णवं व्रतम् । यः करोति यथोक्तन्तु मुक्तिस्तस्य करे स्थिता । सुपुण्ये कार्त्तिके मासि देवर्षिपितृसेविते । क्रियमाणे व्रते नृणां स्वल्पेऽपि स्यान्महाफलम्"। तत्र कर्म्मविशेषमाहात्म्यं स्कान्दे "दानं दत्तं हुतं जप्तं तपश्चैव तथा कृतम् । तदक्षयफलं प्रोक्तं कार्त्तिके च द्विजसत्तम !"। किञ्च "यत्किञ्चित् कार्त्तिके दत्तं विष्णुमुद्दिश्य मानवैः । तदक्षयं लभ्यते वै अन्नदानं विशेषतः"। किञ्च "ये तु संवत्सरं पूर्णमग्निहोत्रमुपासते । कार्त्तिके स्वस्तिकं कृत्वा सममेतन्न संशयः । कार्त्तिके या करोत्येवं केशवालयमण्डनम् । स्वर्गस्था शोभते सा तु कपोती पक्षिणी यथा । यः करोति नरो नित्यं कार्त्तिके पत्रभोजनम् । न स दुर्गतिमाप्नोति यावदिन्द्राश्चतुर्दश । जन्मप्रभृति यत् पापं मानवैश्च कृतं भवेत् । तत् सर्व्वं नाशमाप्नोति ब्रह्म(पलाश)पत्रेषु भोजनात् । सर्व्वकामफलं तस्य सर्व्वतीर्थफलं भवेत् । न चापि नरकं पश्येद्ब्रह्मपत्रेषु भोजनात्। ब्रह्म चैष स्मृतः साक्षात् पलाशः सर्व्वकामदः । मध्यमं वर्ज्जितं पत्रं शूद्रस्य मुनिसत्तम ! । भुङ्क्ते नरकमाप्नोति यावदिन्द्राश्चतुर्दश । तिलदानं नदीस्नानं सत्कथा साधुसेवनम् । भोजनं ब्रह्मपत्रेषु कार्त्तिके मुक्तिदायकम् । जागरं कार्त्तिके मासि यः करोत्यरुणोदये। दामोदराग्रे विप्रेन्द्र! गोसहस्रफलं लभेत्। जागरं पश्चिमे यामे यः करोति महामुने ! । कार्त्तिके सन्निधौ विष्णोस्तत्पदं करसंस्थितम् । साधुसेवा गवां ग्रासः कथा विष्णोरथार्च्चनम् । जागरः पश्चिमे यामे दुर्ल्लभः कार्त्तिके कलौ"। किञ्च "जलधेनुसहस्रञ्च वृषसंस्थे दिवाकरे । तोयं दत्त्वा यदाप्नोति स्नानं कृत्वा तु कार्त्तिके । सन्निहत्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे । सूर्य्यवारेण यत् स्नानं तदेकाहेन कार्त्तिके । पितॄनुद्दिश्य यद्दत्तं कार्त्तिके कृष्णवल्लभे ! अन्नोदकं मुनिश्रेष्ठ । अक्षयं जायते नृणाम्" किञ्च "गीतशास्त्रविनोदेन कार्त्तिकं यो नयेन्नरः । न तस्य पुनरावृत्तिर्मया दृष्टा कलिप्रिय !"। किञ्च "प्रदक्षिणञ्च यः कुर्य्यात् कार्त्तिके विष्णुसद्मनि । पदेपदेऽश्वमेधस्य फलभागी भवेन्नरः । गीतं वाद्यञ्च

न्टत्यञ्च कार्त्तिके पुरतो हरेः । यः करोति नरो भक्त्या लभते चाक्षयं फलम् । हरेर्नाम सहस्राख्यं गजेन्द्रस्य च मोक्षणम् । कार्त्तिके पठते यस्तु पुनर्जन्म न विद्यते । कार्त्तिके पश्चिमे यामे स्तवं गानं करोति यः । वसते श्वेतद्वीपे तु पितृभिः सह नारद ! । नैवेद्यदानेन हरेः कार्त्तिके यत्संख्यया । युगानि वसते स्वर्गे तावन्ति मुनिसत्तम ! अगुरुन्तु सकर्पूरं यो देहत् केशवाग्रतः । कार्त्तिके तु मुनिश्रेष्ठ ! युगान्ते न पुनर्भवः” किञ्च “नियमेन कथां विष्णोर्ये शृण्वन्ति च भाविताः । श्लोकार्द्धं श्लोकपादं वा कार्त्तिके गोशतं फलम् । सर्व्वधर्म्मान् परित्यज्य कार्त्तिके केशवाग्रतः । शास्त्रस्योच्चारणं पुण्यं श्रोतव्यञ्च महामुने ! । श्रेयसा लोभबुद्ध्या वा यः करोति हरेः कथाम् । कार्त्तिके मुनिशार्द्दूल ! कुलानां तारयेच्छतम् । नित्यं शास्त्रविनोदेन कार्त्तिकं यः क्षिपेन्नरः । निर्द्दहेत् सर्वपापानि यज्ञायुतफलं लभेत् । न तथा तुष्यते दानैर्न यज्ञैर्गोगजादिकैः । यथा शास्त्रकथालापैः कार्त्तिके मधुसूदनः । कार्त्तिके मुनिशार्द्दूल ! यः शृणोति हरेः कथाम् । स निस्तरति दुर्गाणि जन्मकोटिगतानि च । यः पठेत् प्रयतो नित्यं श्लोकं भागवतं मुने ! । अष्टादशपुराणानां कार्त्तिके फलमाप्नुयात्” किञ्च “सर्व्वान् धर्म्मान् परित्यज्य इष्टापूर्त्तादिकान्नरः । कार्त्तिके परया भक्त्या वैष्णवैःसह संवसेत्” । पाद्मे “कार्त्तिके भूमिशायी यो ब्रह्मचारी हविष्यभुक् । पलाशपत्रे भुञ्जानो दामोदरमथार्च्चयेत् । स सर्व्वपातकं हित्वा वैकुण्ठे हरिसन्निधौ । मोदते विष्णुसदृशो भजनानन्दनिर्वृतः” किञ्च “कार्त्तिकं सकलं मासं प्रातःस्नायी जितेन्द्रियः । जपन् हविष्यभुक् दान्तः सर्व्वपापैः प्रमुच्यते । कार्त्तिकन्तु नरोः मासं यः कुर्य्यादेकभोजनम् । शूरश्च बहुवीर्य्यश्च कीर्त्तिमांश्च स जायते” । किञ्च “पलाशपत्रभोजी च कार्त्तिके पुरुषो नरः । निष्पापः स्यात्तु नैवेद्यं हरेर्भुक्त्वा विमुच्यते । मध्यस्थमैश्वरं पत्रं वर्जयेद्ब्राह्मणेतरः” । किञ्च “अपराधसहस्राणि पातकानि महान्त्यपि । क्षमतेऽस्य हरिर्देवः पूजितः कार्त्तिके प्रभुः । नैवेद्यं पायसो विष्णोः प्रियं खण्डं घृतान्वितम् । विभज्य तच्च भुञ्जानो यज्ञसाम्यं दिने दिने” । तत्रैव श्रीकृष्णसत्यासंवादे “स्नानं जागरणं दीपं तुलसीवनपालनम् । कार्त्तिके ये प्रकुर्व्वन्ति ते नरा विष्णुमूर्त्तयः । इत्थं दिनत्रयमपि कार्त्तिके ये प्रकुर्व्वते । देवानामपि ते वन्द्याः किं यैराजन्म तत् कृतम्” । स्कान्देकार्त्तिकव्रताङ्गानि “हरिजागरणं प्रातःस्नानं तुलसिसेवनम् । उद्यापनं दीपदानं व्रतान्येतानि कार्त्तिके” । किञ्च “पञ्चभिर्व्रतकैरेभिः सम्पूर्णं कार्त्तिके व्रती । फलमाप्नोति तत्प्रोक्तं भुक्तिमुक्तिफलप्रदम् । विष्णोः शिवस्य वा कुर्य्यादालये हरिजागरम् । कुर्य्यादश्वत्थमूले वा तुलसीनां वनेषु च । आपद्गतो यदाप्यम्भो न लभेत् सवनाय सः । व्याधितो वा पुनः कुर्य्याद्विष्णोर्नाम्नाऽघमार्ज्जनम् । उद्यापनविधिं कर्त्तुमशक्तो यो व्रते स्थितः । ब्राह्मणान् भोजयेच्छक्त्या व्रतसम्पूर्णहेतवे । अशक्तो दीपदानस्य परदीपान् प्रबोधयेत् । तेषां वा रक्षणं कुर्य्याद्वातादिभ्यः प्रयत्नतः । अभावे तुलसीनाञ्च पूजयेद्वैष्णवं द्विजम् । सर्व्वाभावे व्रती कुर्य्याद्ब्राह्मणानां गवामपि । सेवां वा बोधिवटयोर्व्रतसम्पूर्णहेतवे” । तत्र दीपदानमाहात्म्यम्” स्कान्दे

“कृत्वा कोटिसहस्राणि पातकानि बहून्यपि । निमेषार्द्धेन दीपस्य विलयं यान्ति कार्त्तिके” किञ्च “शृणु दीपस्य माहात्म्यं कार्त्तिके केशवप्रियम् । दीपदानेन विप्रेन्द्र ! न पुनर्जायते भुवि । रविग्रहे कुरुक्षेत्रे नर्म्मदायां शशिग्रहे । तत् फलं कोटिगुणितं दीपदानेन कार्त्तिके । घृतेन दीपको यस्य तिलतैलेन वा पुनः । ज्वाल्यते मुनिशार्द्दूल ! अश्वमेधेन तस्य किम् ?। मन्त्रहीनं क्रियाहीनं शौचहीनं जनार्द्दने । सर्व्वं संपूर्णतां याति कार्त्तिके दीपदानतः । तेनेष्टं क्रतुभिः सर्व्वैः कृतं तीर्थावगाहनम् । दीपदानं कृतं येन कार्त्तिके केशवाग्रतः । तावद्गर्ज्जन्ति पुण्यानि स्वर्गे मर्त्ये रसातले । यावन्न ज्वलते ज्योतिः कार्त्तिके केशवाग्रतः । श्रूयते चापि पितृभिर्गाथा गीता पुरा द्विज ! । भविष्यति कुले ऽस्माकं पितृभक्तः सुतो भुवि । कार्त्तिके दीपदानेन यस्तोषयति केशवम् । मुक्तिं प्राप्स्यामहे नूनं प्रसादाच्चक्रपाणिनः” किञ्च “मेरुमन्दरमात्राणि कृत्वा पापान्यशेषतः । दहते नात्र सन्देहो दीपदानात्तु कार्त्तिके । गृहे वाऽऽयतने वापि दीपं दद्याच्च कार्त्तिके । पुरतो वासुदेवस्य महाफलविधायिनः । स जातो मानुषो लोके स धन्यः स च कीर्त्तिमान् । प्रदत्तः कार्त्तिके मासि दीपो वै मधुहाग्रतः । निमेषार्द्धार्द्धमात्रेण दीपदानेन कार्त्तिके । न तत् क्रतुशतैः प्राप्यं फलं तीर्थशतैरपि । सर्वानुष्ठानहीनोऽपि सर्वपापरतोऽपि सन् । पूयते नात्र सन्देहो दीपं

दत्त्वा तु कार्त्तिके। नास्ति पातकं किञ्चित् त्रिषु लोकेषु नारद! यत्र शोचयते दीपः कार्त्तिके केशवाग्रतः। पुरतो वासुदेवस्य दीपं दत्त्वा तु कार्त्तिके। प्राप्नोति शाश्वतं स्थानं सर्व्वबाधाविवर्ज्जितम्। यः कुर्य्यात् कार्त्तिके मासि कर्पूरेण तु दीपकम्। द्वादश्याञ्च विशेषेण तस्य पुण्यं वदामि ते। कुले तस्य प्रसूता ये ये भविष्यन्ति नारद!। समतीताश्च ये केचिद्येषां सङ्ख्या न विद्यते। क्रीडित्वा सुचिरं कालं देवलोके यदृच्छया। ते सर्व्वे मुक्तिमायान्ति प्रसादाच्चक्रपाणिनः।" किञ्च "द्यूतव्याजेन विप्रेन्द्र! कार्त्तिके केशवालयम्। द्योतयेद्वा महाभागाः! पुनात्यासप्तमं कुलम्। कार्त्तिके दीपदानन्तु कुर्य्याद्यो वैष्णवालये। धनं पुत्त्रो यशः कीर्त्तिर्भवेत्तस्य च सर्व्वदा। यथा च मथनाद्वह्निः सर्व्वकाष्ठेषु दृश्यते। तथा च दृश्यते धर्म्मो दीपदाने न संशयः।" किञ्च "निर्द्धनेनापि विप्रेन्द्र! कृत्वा चैवात्मविक्रयम्। कर्त्तव्यं दीपदानन्तु यावत् कार्त्तिकपूर्णिमा। वैष्णवो न स मन्तव्यः संप्राप्ते कार्त्तिके मुने!। यो न यच्छति मूढात्मा दीपं केशवसद्मनि"। नारदीये श्रीरुक्माङ्गदमोहिनीसंवादे "एकतः सर्व्वदानानि दीपदानानि चैकतः। कार्त्तिके न समं प्रोक्तं दीपदो ह्यधिकः स्मृतः"। कार्त्तिके "कार्त्तिके खण्डदीपं यो ददाति हरिसन्निधौ। दिव्यकान्तिविमानाग्रे रमते स हरेः पुरे"। तत्र परदीपप्रबोधनमाहात्म्यं स्कान्दे "पित्तपक्षेऽन्नदानेन ज्यैष्ठाषाढे च वारिणा। कार्त्तिके तत्फलं पुंसां परदीपप्रबोधनात्। बोधनात् परदीपस्य वैष्णवानाञ्च सेवनात्। कार्त्तिके फलमाप्नोति राजसूयाश्वमेधयोः। दीयमानन्तु ये दीपं बोधयन्ति हरेर्गृहे। परेण न्टपशार्दूल! निःक्षीणा यमयातना। न तद्भवति विप्रेन्द्र! इष्टैरपि महामखैः। कार्त्तिके यत् फलं प्रोक्तं परदीपप्रबोधनात्। एकादश्यां परैर्द्दत्तं दीपं प्रज्वाल्य मूषिका। मानुष्यं दुर्लभं प्राप्य परां गतिमवाप सा"। तत्र शिखरदीपमाहात्म्यं स्कान्दे। "यदा यदा भासयते दीपकः कलसोपरि। तदा तदा मुनिश्रेष्ठ! द्रवते पापसञ्चयः। यो ददाति द्विजातिभ्यो महीमुदधिमेखलाम्। हरेः शिखरदीपस्य कलां नार्हति षोडशीम्। यो ददाति गवां कोटिं सवत्सां क्षीरसंयुताम्। हरेः शिखरदीपस्य कलां नार्हति षोडशीम्। सर्व्वस्वदानं कुरुते वैष्णवानां महामुने! शिखरोपरि दीपस्य कलां नार्हति षोडशीम्" किञ्च "यः करोति परं दीपं मूल्येनापि महामुने!। शिखरोपरि मध्ये च कुलानां तारयेच्छतम्। विमानं ज्योतिषा दीप्तं ये निरीक्षन्ति कार्त्तिके। केशवस्य महात्मानः कुले तेषां न नारकी। दिवि देवा निरीक्षन्ते विष्णुदीपप्रदं नरम्। कदा भविष्यत्यस्माकं सङ्गमः पुण्यकर्म्मणा। कार्त्तिके कार्त्तिकीं यावत् प्रासादोपरि दीपकम्। यो ददाति मुनिश्रेष्ठ! तस्येन्द्रत्वं न दुर्लभम्"। तत्र दीपमालामाहात्म्यं स्कान्दे "दीपपङ्क्तेश्च रचना सबाह्याभ्यन्तरे हरेः। विष्णोर्विमाने कुरुते स नरः शङ्खचक्रधृक्। दीपपङ्क्तेश्च रचनां कुरुते केशवालये। तस्यालये प्रसूतानां लक्षाणां नरकं न हि। विष्णोर्विमानं दीपाढ्यं सबाह्याभ्यन्तरे मुने!। दीपोद्द्योतकरे मार्गे तेन प्राप्तं परं पदम्"। भविष्ये च "यः कुर्य्यात् कार्त्तिके मासि शोभनां दीपमालिकाम्। प्रबोधे चैव द्वादश्यामेकादश्यां विशेषतः। सूर्य्यायतप्रकाशस्तु तेजसा भासयन् दिशः। तेजोराशिविमानस्थो जगदुद्द्योतयंस्त्विषा। यावत् प्रदीपसंख्या तु घृतेनापूर्य्य बोधिता। तावद्वर्षसहस्राणि विष्णुलोके महीयते"।

तत्र आकाशादिदीपमाहात्म्यं पाद्मे "उच्चैः प्रदीपमाकाशे यो दद्यात् कार्त्तिके नरः। सर्व्वं कुलं समुद्धृत्य विष्णुलोकमवाप्नुयात्। विष्णुकेशवमुद्दिश्य दीपं दद्यात् तु कार्त्तिके। आकाशस्थं जलस्थञ्च शृणु तस्यापि यत् फलम्। धनं धान्यं समृद्धिश्च पुत्त्रवानीश्वरो गृहे! लोचने च शुभे तस्य विद्वानपि च जायते" किंच "विप्रवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकम्। अग्निष्टोमफलं तस्य प्रवदन्ति मनीषिणः। चतुष्पथेषु रथ्यासु ब्राह्मणावसथेषु च। वृक्षमूलेषु गोष्ठेषु कान्तारे गहनेषु च। दीपदानाद्धि सर्व्वत्र महाफलमवाप्नुयात्"।

देशविशेषे कार्त्तिकमाहात्म्यविशेषः पाद्मे। "यत्र कुत्रापि देशेऽयं कार्त्तिकः स्नानदानतः। अग्निहोत्रसमफलः पूजायाञ्च विशेषतः। कुरुक्षेत्रे कोटिगुणो गङ्गायां चापि तत्समः। ततोऽधिकः पुष्करे स्याद् द्वारकायाञ्च भार्गव!। कृष्णसालोक्यदो मासः पूजास्नानैश्च कार्त्तिकः। अन्याः पुर्य्यस्तत्समाना मुनयो मथुरां विना। दामोदरत्वं हि हरेस्तत्रैवासीद्युतः किल। मथुरायां ततस्त्वोर्ज्जो वैकुण्ठप्रीतिवर्द्धनः। कार्त्तिको मथुरायां वै परमावधिरिष्यते। यथा माघे प्रयागः स्याद्वैशाखे जाह्नवी यथा। कार्त्तिके मथुरा सेव्या तत्रोत्कर्षः परो नहि। मथु-

रायां नरैरूर्जे स्नात्वा दामोदरोऽर्चितः । कृष्णरूपा हि ते ज्ञेया नात्र कार्य्या विचारणा । दुर्लभः कार्त्तिको विप्र ! मथुरायां नृणामिह । यत्रार्चितः स्वकं रूपं भक्तेभ्यः संप्रयच्छति । भक्तिं मुक्तिं हरिर्दद्यादर्चितोऽन्यत्र सेविनाम् । भक्तिञ्च न ददात्येष यतो वश्यकरी हरेः । सा त्वञ्जसा हरे भक्तिर्लभ्यते कार्त्तिके नरैः । मथुरायां सकृदपि श्रीदामोदरपूजनात् । मन्त्रद्रव्यविहीनञ्च विधिहीनञ्च पूजनम् । मन्यते कार्त्तिके देवो मथुरायां सदर्च्चनम् । यस्य पापस्य युञ्ज्येन मरणान्ता हि निष्कृतिः । तच्छुद्ध्यर्थमिदं प्रोक्तं प्रायश्चित्तं सुनिश्चितम् । कार्त्तिके मथुरायां वै श्रीदामोदरपूजनम् । कार्त्तिके मथुरायां वै पूजनाद्दर्शनं ध्रुवः । शीघ्रं संप्राप्नवान् बालो दुर्लभं योगतत्परैः । सुलभा मथुरा भूमौ प्रत्यब्दं कार्त्तिकस्तथा । तथापि संसरन्तीह नरा मूढा भवाम्बुधौ । किं यज्ञैः किं तपोभिश्च तीर्थैरन्यैश्च सेवितैः । कार्त्तिके मथुरायाञ्चेदर्च्च्यते राधिकाप्रियः । यानि सर्व्वाणि तीर्थानि नदा नद्यः सरांसि च । कार्त्तिके निवसन्त्यत्र माथुरे सर्व्वमण्डले । कार्त्तिके जन्मसदने केशवस्य च ये नराः । सकृत्प्रविष्टाः श्रीकृष्णं ते यान्ति परमव्ययम् । परोपहाससुद्दिश्य कार्त्तिके हरिपूजया । मथुरायां लभेद्भक्तिं किं पुनःश्रद्धया नरः” इति ।

अथ कार्त्तिकव्रतारम्भकालक्रमौ । पाद्मे “आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् । कार्त्तिकस्य व्रतानीह तस्यां कुर्य्यादतन्द्रितः । नित्यं जागरणायान्त्ये यामे रात्रेः समुत्थितः । शुचिर्भूत्वा प्रबोध्याथ स्तोत्रैर्नीराजयेत् प्रभुम् । निशम्य वैष्णवान् धर्म्मान् वैष्णवैः सह हर्षितः । कृत्वा गीतादिकं प्रातर्देवं नीराजयेत् पुनः । नद्यादौ च ततो गत्वाचम्य सङ्कल्पमाचरेत् “प्रभुं प्रार्थ्याथ तस्मै च दद्यादर्घ्यं यथाविधि । तत्र सङ्कल्पमन्त्रः । कार्त्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन ! । प्रीत्यर्थं तव देवेश ! दामोदर ! मया (लक्ष्म्या) सह” इति । “प्रार्थनामन्त्रस्तु—तव ध्यानेन देवेश ! जलेऽस्मिन् स्नातुमुद्यतः । त्वत्प्रसादाच्च मे पापं दामोदर ! विनश्यतु” । अर्घ्यमन्त्रः—“व्रतिनः कार्त्तिके मासि स्नातस्य विधिवन्मम । अर्घ्यं गृहाण देवेश ! त्वां नमामि सुरेश्वर !” । काशीखण्डे “व्रतिनः कार्त्तिके मासि स्नातस्य विधिवन्मम । दामोदर ! गृहाणार्घ्यं दनुजेन्द्रनिसूदन ! । नित्ये नैमित्तिके कृत्स्ने कार्त्तिके पापशोषणे । गृहाणार्घ्यं मया दत्तं राधया सहितो हरे !” । इति । पाद्मे तिलैरालिप्य देहं स्वं नामोच्चारणपूर्व्वकम् । स्नात्वा तु विधिना सन्ध्यामुपास्य गृहमाव्रजेत् । उपलिप्याय देवाग्रे निर्माय स्वस्तिकं प्रभुम् । तुलसीमालतीपद्मागस्त्यपुष्पादिनार्चयेत् । नित्यं वैष्णवसङ्गत्या सेवेत भगवत्कथाम् । सर्पिषाहर्निशं दीपं तिलतैलेन चार्च्चयेत् । विशेषतश्च नैवेद्यान्यर्पयेदाचरेत्तथा । प्रणामांश्च यथाशक्ति एकभक्तादिकं व्रतम्” । पाद्मेऽन्यत्र

“प्रातरुत्थाय शौचादि कृत्वा गत्वा जलाशयम् । कृत्वा च विधिवत् स्नानं ततो दामोदरार्च्चनम्” । किञ्च “मौनेन भोजनं कार्य्यं कार्त्तिके व्रतधारिणा । घृतेन दीपदानं स्यात् तिलतैलेन वा पुनः । दिनञ्च कृष्णकथया वैष्णवानां च सङ्गमैः । नीयतां कार्त्तिके मासि सङ्कल्पव्रतपालनम् । आश्विने शुक्लपक्षस्य प्रारम्भो हरिवासरे । अथ वा पौर्णमासीतः संक्रान्तौ वा तुलागमे । दीपदानमखण्डञ्च दद्याद्वै विष्णुसन्निधौ । देवालये तुलस्यां वा आकाशे वा तदुत्तमम्” । किञ्च “रजतं कनकं दीपान् मणिमुक्ताफलादिकम् । दामोदरस्य प्रीत्यर्थं प्रदद्यात् कार्त्तिके नरः” । स्कान्दे च “न गृहे कार्त्तिके कुर्य्याद्विशेषेण तु कार्त्तिकीम् । तीर्थे तु कार्त्तिकीं कुर्य्यात् सर्व्वयत्नेन भाविनि !” । कार्त्तिके वर्ज्यानि स्कान्दे ब्रह्मनारदसंवादे “कार्त्तिके तु विशेषेण राजमाषांश्च भक्षयन् । निष्पावान् मुनिशार्दूल ! यावदाहूतनारकी । कलिङ्गानि पटोलानि वृन्ताकं सन्धितानि च । न त्यजेत् कार्त्तिके मासि यावदाहूतनारकी । कार्त्तिके मासि धर्म्मात्मा मत्स्यमांसं न भक्षयेत् । तत्रैव यत्नतस्त्याज्यं शशकं शौकरं तथा” । किञ्च—“परान्नं परशय्याञ्च परीवादं पराङ्गनाम् । सर्व्वदा वर्ज्जयेत् प्राज्ञो विशेषेण तु कार्त्तिके । तैलाभ्यङ्गं तथा शय्यां परान्नं कांस्यभोजनम् । कार्त्तिके वर्ज्जयेद्यस्तु परिपूर्णव्रती भवेत् । संप्राप्तं कार्त्तिकं दृष्ट्वा परान्नं यस्तु वर्ज्जयेत् । दिने दिने तु कृच्छ्रस्य फलं प्राप्नोति मानवः” । तत्रैव श्रीरुक्माङ्गदमोहिनीसंवादे “कार्त्तिके वर्ज्जयेत्तैलं । कार्त्तिके वर्ज्जयेत् कांस्यं कार्त्तिके शुक्तसन्धितम् । न मत्स्यं भक्षयेन्मांसं न कौर्म्मं नान्यदेव हि । चाण्डालः स भवेत् सुभ्रु ! कार्त्तिके मांसभक्षणात् ।”

**कार्त्तिकिक** पुं० कार्त्तिकी पौर्णमासी अस्मिन् मासे ठक् । १चान्द्रकार्त्तिकमासे एवं २कार्त्तिकीयुक्त वर्षे ३कार्त्तिकाख्ये जीववर्षे च ।

कार्त्तिकेय पु० कृत्तिकानामपत्यं पाल्यत्वेन ढक्। अग्निनिषिक्तरुद्रतेजस उत्पन्ने कृत्तिकाभिः पालिते स्कन्दे देवे कार्त्तिकशब्दे तत्कथादि उक्तम्। रामायणे तु संक्षेपेणोक्तं यथा "कुमारश्चाभवत् तत्र तरुणार्कसमद्युतिः। वह्नितेजोभवः श्रीमान् गङ्गाकुक्षिपरिच्युतः। तं कुमारं ततो जातं दृष्ट्वा सेन्द्रा मरुद्गणाः। तदा क्षीरप्रदानार्थं कृत्तिकाः संन्ययोजयन्। ताः क्षीरं तस्य देवस्य समयेन ददुस्तदा। स्मादस्माकमयं पुत्रः ख्यातो नाम्नेति राघव!! अन्योन्यं पिबतस्तासां तनयस्य स्तनानि षट्। समभूवन् महाबाहो! षण्मुखस्तेन विश्रुतः। ततस्तादेवता जचुः कार्त्तिकेय इति प्रभुः। पुत्रोऽयं जगति ख्यातो भविष्यति न संशयः"।

कार्त्तिकेयप्रसू स्त्री कार्त्तिकेयं प्रसूते प्र+सू-क्विप्। पार्वत्यां शब्दरत्ना०। पार्वत्यां शिववीर्यनिषेककाले देवैर्विघ्ने कृते तद्रेतसो भूमिवह्न्यादिनिषेकेण तस्योत्पत्तेस्तस्यास्तदीयमूलकारणत्वात् तत्प्रसूत्वं यथा ब्रह्मवै०पु०गणेशख०"सम्भूरहः क्रीड़ा पार्वतीशिवयोः पुरा। दृष्टस्य च सुरैः शम्भो वीर्यं भूमौ पपात ह। भूमिस्तदक्षिपत् वह्नौ वह्निश्च शरकानने। तत्त्वं पुष्टः कृत्तिकाभिः"। मदस्तु ऋषिपत्नीषु वह्नौ रेतसो निषेके ताभिश्च शरवणे क्षेपात्तज्जन्मे तस्यमूलमग्निकुमारशब्दे ५४पृ० भारतवाक्यं दर्शितम् तेन गङ्गायां निषेकाज्जन्मकथनन्तु कल्पभेदादित्यविरोधः।

कार्त्तायणि पुंस्त्री कर्त्तुरपत्यम् कुर्वा०ण्यः कार्त्त्यः तस्यापत्यम् "अणोद्व्यचः" पा० फिञ् यलोपः। कर्त्तुरपत्यस्यापत्ये।

कार्त्तिकोत्सव पु० ७त०। १कार्त्तिककर्त्तव्ये उत्सवे उपचारात् तदाधारे कार्त्तिकपौर्णमासीरूपे २काले त्रिका०।

कार्त्स्न्य न० कृत्स्नस्य भावः ६त० ष्यञ्। साकल्ये "विभाषा सातिः कार्त्स्न्ये" पा० "तन्निबोधत कार्त्स्न्येन द्विजाग्र्यान् पङ्क्तिपावनान्" मनुः। [वा। कर्दमेन रक्ते वस्त्रादौ।

कार्दम(मिक) त्रि० कर्दमेन रक्तं अण्, द्वितीयपक्षे ठक्

कार्पट पु० कर्पटएव स्वार्थेऽण्, कार्पटः, स इवाकारोऽस्यास्ति, अच् वा। १जीर्णवस्त्रखण्डे (लाता कानि)। तादृशवस्त्रयुक्ते २कार्यार्थिनि (उमेदार) त्रि० हेमच०। नटाकारयुक्ते जतुनि (जौ) हेमच०।

कार्पटगुप्तिका स्त्री कार्पटेन खण्डवस्त्रेण गुप्तैव स्वार्थे क। (भ्लो) (वटुया) इति ख्याते पदार्थे शब्दचि०।

कार्पटिक त्रि० कर्पटेन चरति ठक् कार्पटोऽस्त्यस्य वा ठन्। कषायखण्डवस्त्रेण चारिणि १तीर्थयात्राप्रसक्ते। "विस्मान्तकार्पटिकप्रस्फुटितचरणधूलिधूसरकिसलयलाञ्छितोपकण्ठैः" काद०। "नित्यं कार्पटिकान् सर्व्वान् समं पुत्रेण पश्यति" काशी०ख०१२अ०। २कर्मठे त्रिका०।

कार्पण्य न० कृपणस्य भावः ष्यञ्। १कृपणत्वे २दीनत्वे च "कार्पण्यदोषोपहतस्वभावः" गीता। "कार्पण्यं केवला नीतिः क्रौर्य्यं श्वापदचेष्टितम्" हितो०।

कार्पास त्रि० कर्पास्या अवयवः बिल्वा० अण्। कर्पासीविकारे सूत्रादौ। तस्य फले लुक्। कर्पासी स्वार्थेऽण् ङीप् कर्पासी (कापास) २ वृक्षे स्त्री। स्वार्थे क। कार्पासिकाऽप्यत्र। स्वार्थिकस्यापि प्रकृतिलिङ्गातिक्रमस्य क्वाचित्कत्वात् कार्पासकोऽप्यत्र पु०। "कार्पासको लघुः कोष्णो मधुरो वातनाशकः। तत्पलाशं समीरघ्नं रक्तकृन्मूत्रवर्द्धनम्। तत्फलं पिपिड़काघ्नं पूयस्रावविनाशकृत्। तद्बीजं स्तन्यदं वृष्यं स्निग्धं कफकरं गुरु" भावप्र०। अधिकं कर्पासशब्दे १७२२पृ० दृश्यम्।

कार्पासधेनु स्त्री स्त्री कार्पासरचिता धेनुः। दानार्थं कल्पितायां कार्पासवस्त्रादिनिर्म्मितायां धेनौ। तद्विधानं हेमा० दा०ख० वराहपुराणे यथा

"अतःपरं प्रवक्ष्यामि धेनुं कार्पासिकीं शुभाम्। विश्वस्य गुह्यगुप्त्यर्थं ब्रह्मणा चांशुकं कृतम्। कार्पाससूत्रन्तच्चापि तेनासावुत्तमा स्मृता। सा च कार्पासभारेण धेनुः श्रेष्ठा प्रकीर्त्तिता। मध्यमा च तदर्द्धेन कन्यसी (कनिष्ठा) च तदर्द्धतः। पूर्ववद्वत्सधान्यञ्च हिरण्यञ्च तथैव च। वत्सकन्तु चतुर्थांशैर्दानमन्त्रोऽभिधीयते"। पूर्ववदिति वराहपुराणोक्ततिलधेनुवदित्यर्थः। "हेमकुन्देन्दुदेवेशि! क्षीरार्णवसमुद्भवे! । सोमप्रिये! सुधेन्वाख्ये! सौरभेयि! नमोऽस्तु ते। दत्तेयमिन्दुनाथाय शशाङ्कायामृताय च। अत्रिनेत्रप्रजाताय सोमराजाय वै नमः"। "यस्त्वेवं परया भक्त्या ब्राह्मणाय प्रयच्छति। स याति सोमलोकन्तु सोमेन सह मोदते। न रोगी न ज्वरी कुष्ठी कुले तस्य प्रजायते। पुत्रदारसमोपेतो जीवेच्च शरदां शतम्"। वस्त्रधेन्वादयोऽप्यत्र

कार्पासनासिका स्त्री कार्पासस्य तत्पूरणार्था नासिकेव। (टेको) तर्कौ शब्दरत्ना०। कर्पासनासिकाप्यत्र।

कार्पासपर्व्वत पु० दानार्थं कल्पिते धान्यशैलादिषु दशसु अचलेषु कर्पासवस्त्रनिर्म्मिते पर्व्वतभेदे तद्विधानादि हेमा०दानख० ब्रह्माण्डपुराणे यथा

"भगवानुवाच। अतःपरं प्रवक्ष्यामि कार्पासाचलमुत्तमम्।

परमं सर्व्वदानानां प्रियं सर्वदिवौकसाम् । देशकालौ समासाद्य धनं श्रद्धाञ्च यत्नतः । देयमेतन्महादानं तारणार्थं कुलस्य च । पर्वतं कल्पयेत्तत्र कार्पासेन विधानतः । पूर्वोक्तेन विधानेन कृत्वा सर्व्वं विधानतः । विंशद्भारस्तु कर्त्तव्य उत्तमः पर्वतो बुधैः । मध्यमो दशभिः कुर्य्याज्जघन्यः पञ्चभिस्तथा । सर्व्वधान्यसमूहस्य मध्ये ह्योषधिभिर्वृतः । रसैरत्नैश्च संयुक्तो लोकपालावृतस्तथा । ब्रह्मादयस्तथा शृङ्गे काञ्चनेन विनिर्मिताः । कुलाचलांश्च चतुरस्रतर्भागेन कल्पयेत् । सौवर्णशिखरान् सर्व्वान् सर्व्वरत्नोपशोभितान् । नानाधातुविचित्राङ्गान् भक्ष्यभोज्यसमावृतान् । कुण्डे वा स्थण्डिले वापि तत्र होमो विधीयते । ऋत्विजश्च तथा चाष्टौ कारयेद्वेदवित्तमान् । होमोव्याहृतिभिश्चैव अग्नौ तद्दैवतैरपि । गव्येन सर्पिषा तत्र तथा कृष्णतिलैरपि । अयुतं होमसंख्या च पालाशसमिधस्तथा । शङ्खतूर्य्यनिनादैश्च तथा मङ्गलपाठकैः । उत्सवं कारयेत्तत्र दिनमेकमतन्द्रितः । पर्व्वकाले ततो दद्यात् पूजयित्वा विधानतः । “नमः सर्वामरावासा भूतसङ्घैरभिष्टुताः । ब्रह्मादयो मे वरदा भवन्तु विबुधाः सदा” । इत्युच्चार्य्य नरो दद्यान्नारी वा विधिपूर्व्वकम् । पूजयित्वा द्विजान् सम्यक् वासोभिर्भूषणैस्तथा । अनेन विधिना यस्तु दानमेतत् प्रयच्छति । स गच्छेत्त्रिदशावासं विमानोपरि संस्थितः । अप्सरोगणसंवीतो गन्धर्व्वैरभिसंस्तुतः । तत्र मन्वन्तरं यावदुषित्वा विबुधालये । पुण्यक्षयादिहाभ्येत्य मही भुङ्क्ते ससागराम् । रूपवान् सुभगोवाग्मी श्रीमानतुलविक्रमः । पञ्च जन्मानि नारी वा जायते नात्र संशयः । भूयश्च शृणु राजेन्द्र ! दिव्यं कार्पासपर्व्वतम् । तच्च भारशतेनैव कुर्य्यादर्द्धेन वा पुनः । शेषं पूर्व्वविधानेन सर्व्वं कुर्य्याद्यथाक्रमम् । फलं पूर्वोदितञ्चैव जायते नृपसत्तम !” । कार्पासाचलकार्पासशैलादयोऽप्यत्र ।

**कार्पाससौत्रिक** त्रि० कर्पाससूत्रेण निर्वृत्तः ठक् अनुशतिकादेराकृतिगणत्वेन द्विपदवृद्धिः । कर्पाससूत्रनिर्म्मिते वस्त्रादौ । “शते दशपला वृद्धिरौर्णे कार्पाससौत्रिके” याज्ञ० ।

**कार्पासिक** त्रि कर्पासेन निर्वृत्तः ठक् । कर्पाससूत्रनिर्म्मिते पटादौ “शतं दासीसहस्राणां कार्पासिकनिवासिनाम्” भा०स०५०अ० । कार्पासवस्त्राच्छादिनाम् ।

**कार्म्म** त्रि० कर्म्म शीलमस्य कृता० णः । “कार्म्मस्ताच्छील्ये” पा०नि० टिलोपः । फलमनपेक्ष्य कर्म्मसु प्रवृत्ते कर्म्मशीले स्त्रियां टाप् ।

**कार्म्मण** न० कर्म्मैव कर्म्मन्+“तद्युक्तात् कर्म्मणोऽण्” पा०स्वार्थे अण् । १वाचिकं श्रुत्वा क्रियमाणे कर्म्मणि सि०कौ० । कर्म्मणे हितम् अण् । २मूलकर्म्मणि मन्त्रौषध्यादिभि र्वश्यादिकरणे अमरः (याडुकरा) । “कार्म्मणत्वमगमन् रमणेषु” माघः । ततः स्वार्थेऽण् स्वार्थिकप्रत्ययस्य क्वचित् प्रकृतिलिङ्गाति क्रम विधानात् कार्म्मणी वृत्तार्थे स्त्री० । “धौतं नद्या किमिदमथवा कार्म्मणी माथुरीणाम्” उद्भवदू० कार्म्मणमिति तु ज्यायः । ३मन्त्रादियोगविद्यायाम् न० कर्म्म साध्यत्वेन अस्त्यस्य अण् । ४कर्म्मदक्षे त्रि मेदि० । प्रपञ्चसारोक्तमललयान्तर्गते ५मलभेदे च । “मायिकं नाम योमोत्थं पौरुषं कार्म्मणं मलम् । आणव्यं तद्गृहयं प्रोक्तं निषिद्धं तन्मललयम्” “ज्योतिर्मन्त्रेण विधिवद्धुत्वेन्मललयं यती” तन्त्रसा० ।

**कार्म्मार** पु० कार्म्मार एव स्वार्थेऽण् । १कर्म्मकारे (कामार) “कार्म्मारो अश्मभिर्द्युभिः” ऋ०९,११२,२ । “कार्म्मारः अयस्कारः” भा० । कर्म्मारस्यापत्यम् शिवा० अण् । २कर्म्मकारापत्ये पुंस्त्री स्त्रियां ङीप् ।

**कार्म्मारक** त्रि०कर्म्मारेण कृतं कुलाला०वुञ् । कर्म्मकारकृते ।

**कार्म्मार्य्यायणि** पुंस्त्री कर्मारस्यापत्यं फिञ् नि० । कर्मकारापत्ये स्त्रियां वा ङीप् ।

**कार्म्मिक** त्रि० कर्म्मणा चित्रकर्म्मणा निर्वृत्तः ठक् । निष्पत्त्युत्तरं चित्रसूत्रैः चक्रस्वस्तिकादिचिह्नयुक्ततया क्रियमाणे पटादौ । “कार्म्मिके रोमबद्धे च त्रिंशद्भागःक्षयोमतः” याज्ञ० । ‘कार्म्मिकं कर्म्मणा चित्रेण निर्म्मितम् । यत्र निष्पन्ने पटे चक्रस्वस्तिकादिकं चित्रसूत्रैः क्रियते तत्कार्मिक मित्युच्यते” मिता० । तस्य भावः पुरोहि० यक् । कार्मिक्य तद्भावे न० ।

**कार्म्मुक** न० कर्म्मणे प्रभवति उकञ् । १धनुषि अमरः । “कार्म्मुकेणेव गुणिना बाणः सन्धानमेष्यति” माघः । “विहाय लक्ष्मीपतिलक्ष्म कार्मुकम्” किरा० । २कर्म्मक्षमे त्रि० मेदि० । कार्मुकं साध्यत्वेनास्त्यस्य अच् । । ३वंशे मेदि० । ४श्वेतखदिरे ५हिज्जलवृक्षे ६महानिम्बे च पु० राजनि० । मेषादिषु नवमे ७राशौ “कार्मुकं तु परित्यज्य कर्षं (मकरम्”) संक्रमते रविः । प्रभाते चाङ्गराले च स्नानं कुर्य्यात् परेऽहनि” कालमा० भविष्यपु० । कृमुकस्येदम् अण् । ८कृमुकसंबन्धिनि

त्रि० स्त्रियां ङीप्। "अग्नावाहृढे त्रयोदशास्यां प्रादेशमात्राः समिध आदधाति" "इतोद्रां कार्मुकीं वृक्षः" इति कात्या० श्रौ० ६,४,२२,२५,। अत्र कर्म्मकः धमनवृक्ष" कर्कः। स च श्वेतखदिरः। अतएव स्वार्थे अणन्ततया श्वेतखदिरार्थेत्युक्तं राजनि०। तूलस्फोटने तदाकारे (आचड़ा) (धुनारा) इतिख्याते ६यन्त्रभेदे। अग्निपुराणे धनुर्वेदप्रकरणे धन्विनां वैशाखादिस्थानपञ्चकमुक्त्वा धनुः शिक्षाप्रकारलक्षणादिकमुक्तं यथा

"कार्मुकं गृह्य वामेन वाणं दक्षिणकेन तु। वैशाखे यदि वा स्थाने सुस्थितोऽप्यथ वाऽऽयते। गुणाढ्यं तु ततः कृत्वा कार्मुकं प्रियकार्मुकः। अधः कोटिन्तु धनुषः फलदेशन्तु पत्रिणः। धरण्यां स्थापयित्वा तु तोलयित्वा तथैव च। भुजाभ्यां मन्दकुब्जाभ्यां प्रकोष्ठाभ्यां दृढव्रतः। न्यसेत्वाणं धनुःश्रेष्ठे पुङ्खदेशञ्च पत्रिणः। विन्यासो धनुषश्चैव द्वादशाङ्गुलमन्तरम्। ज्यया विशिष्टः कर्त्तव्यो नातिहीनो नचाधिकः। निवेश्य कार्मुकं नाभ्यां (धनुर्मध्ये) नितान्तं सशरं करम्। उत्क्षिपेदुन्नतं हस्तमन्तरेणाक्षिकर्णयोः। पूर्व्वेण मुष्टिना ग्राह्यं तलाग्रे दक्षिणे शरम्। हरणन्तु ततः कृत्वा शीघ्रं पूर्व्वं प्रसारयेत्। नाभ्यन्तरा नैव बाह्या नोर्द्धका नावरा तथा। न च कुब्जा न चोत्ताना न चला नातिवेष्टिता। समास्थैर्य्यं गुणोपेता मौर्वी दण्डइव स्थिता। छादयित्वा ततोलक्ष्यं पूर्व्वेणानेन मुष्टिना (वाममुष्टिना)। उरसा तूत्थितो यन्ता त्रिकोणावनतस्थितः। स्तब्धाङ्गो निश्चलग्रीवो मयूराञ्चितमस्तकः। ललाटनासावक्त्रांसाः कूर्परोऽस्य समोभवेत्। अन्तरे द्व्यङ्गुलं ज्ञेयं चिबुकस्यास्य कस्य च। प्रथमं त्र्यङ्गुलं प्रोक्तं द्वितीये द्व्यङ्गुलं तथा। तृतीयेऽङ्गुलमुद्दिष्टमायतं चिबुकांसयोः। गृहीत्वा सायकं तूणात् मयूराञ्चितमस्तकः। तर्ज्जन्याङ्गुष्ठकेनाथ पूरयेत् सायकं पुनः। अनामया पुनर्गृह्य तथा मध्यमयाऽपि च। तावदाकर्षयेद्वेगात् यावद्बाणः प्रपूरितः। एवंविधमुपक्रम्य मोक्तव्योविधिवत् खगः। दृष्टिमुष्टिगतं लक्ष्यं भिन्द्याद्बाणेन सुव्रतः। त्यक्त्वा तु पश्चिमं हस्तं क्षिपेद्वेगेन पृष्ठतः। एतदुच्छेदमिच्छन्ति ज्ञातव्यं हि त्वया द्विज!। कूर्परं तदधः कुर्य्यादाकृष्य तु धनुष्मता। ऊर्द्ध्वं वै त्रस्तके (धनुर्मध्ये) कुर्य्यादङ्कुश्लिष्टन्तु मध्यमम्। ज्येष्ठं प्रकृष्टं विज्ञेयं धनुः शास्त्रविशारदैः। ज्येष्ठस्तु सायको ज्ञेयोभवेद्द्वादशमुष्टिकः। एकादशस्तथा मध्यः कनीयान् दशमुष्टिकः। चतुर्हस्तं धनुः श्रेष्ठं त्रयं सार्द्धन्तु मध्यमम्। कनीयस्तु त्रयं प्रोक्तं नित्यमेव पदातिनः। अश्वे रथे गजे ज्येष्ठः सदैव परिकीर्त्तितः"

"पर्णायतं द्विजः कृत्वा ततो मार्गैर्गतायुषाम्। सुनिर्धौतं ततः कृत्वा यज्ञभूमौ विधानवत्। ततो वाणं समागृह्य दंशितः सुसमाहितः। तूणमासाद्य बध्नीयात् दृढां कक्ष्याञ्च दक्षिणाम्। विलक्ष्यमपि लब्ध्वा यस्तत्र चैव सुसंस्थितः। ततः समुद्धरेद्वाणं तूणाद्दक्षिणपाणिना। तेनैव सहितं मध्ये शरं संगृह्य धारयेत्। आकृष्य ताड़येत्तत्र चन्द्रकं (चन्द्राकारलक्ष्यम्) षोड़शाङ्गुलम्। युक्त्वा वाणं ततः पश्चाद्धनुः शिक्षा ततःस्मृता। निगृह्णीयान्मध्यमया ततोऽङ्गुल्या पुनः पुनः। अक्षिलक्ष्यात् क्षिपेत्तूणाच्चतुरस्रं तु दक्षिणम्। चतुरस्रगतं वेध्यमभ्यसेच्चादितः स्थितम्। तस्मादनन्तरं तीक्ष्णं पराष्टत्तगतं च यत्। निम्नमुन्नतवेध्यञ्च अभ्यसेत् क्षिप्रकं ततः। वेध्यस्थानेष्वथैतेषु सत्वरस्य पुटकं धनुः। हस्तावापशतैश्चित्रैस्तर्जयेद्दुर्जरैरपि। तस्मिन् मध्यगते विप्र! द्वे वेध्ये दृढ़सङ्करे। द्वे वेध्ये द्वे तथा चित्रदुष्करे दृढ़दुष्करे। न तु निम्नञ्च तीक्ष्णञ्च दृढ़वेध्ये प्रकीर्त्तिते। निम्नं दुष्करमुद्दिष्टं वेध्यं मुर्द्धि शतञ्चरेत्। त्रस्तकायनमध्ये तु चित्रदुष्करसंज्ञके। एवं वेध्यगणं कृत्वा दक्षिणेनेतरेण च। आरोहेत् प्रथमं वीरोजितलक्ष्यस्ततो नरः। एष एव विधिः प्रोक्तस्तत्र दृष्टः प्रयोक्तृभिः। अधिकं भ्रमणं तस्य तस्माद्द्विष्वक् प्रकीर्त्तितम्। लक्ष्यं संयोजयेत्तत्र पत्रिपत्रगतं दृढम्। भ्रान्तं प्रचलितं चैव स्थिरं यच्च भवेदिति। समन्तात्ताड़येद्भिन्द्याच्छेदयेद् व्यथयेदपि। कर्म्मणां संविधानज्ञो ज्ञात्वैव विधिमाचरेत्। मनसा चक्षुषा दृष्ट्वा योगसिद्धिं ध्रुवं व्रजेत्"।

१०वृत्तक्षेत्रस्य परिध्यर्द्धात्मके रेखाभेदे ११तदीयांशभेदे च तयोर्धनुराकारत्वात्तथात्वम्। तदानयनप्रकारः जीवानयनप्रकारमुक्त्वा लीला० दर्शितोयथा।

"अथ चापानयनाय करणसूत्रं वृत्तम्। व्यासाब्धिघातयुतमौर्व्विकया विभक्तो जीवाब्धिपञ्चगुणितः परिधेस्तु वर्गः। लब्धोचितात्परिधिवर्गचतुर्थभागादाप्ते पदे वृतिदलात्पतिते धनुः स्यात्"।

"उदाहरणम्। विदिताइह ये गुणास्ततोवद तेषामधुना धनुर्मितिम्। यदि तेऽस्ति धनुर्गुणक्रियागमिते गाणितिकातिनैपुणम्"

न्यासः । ४२ । ८२ । १२० । ५४ । २०८ । २२६ । २३६ । २४० । [एता जीवासंख्या यथा भवन्ति तथा जीवाशब्दे वक्ष्यते ] सएवापवर्त्तितः परिधिः १८ । ४२ जीवार्द्धगुणा २१/२ पञ्चभि ५ स परिधेः १८ वर्ग्गो ३२४ गुणितः । १७०१० । व्यासार्द्धि २४० । ४ घात ६६० युत ४२ मौर्व्विकयानया १००२ विभक्तोलब्धो १७ ऽत्राङ्कलाघवाय चतुर्विंशतेहर्य्यधिकसहस्रांशयुतोऽस्त्वतो-ऽनेनोनितात्परिधि १८ । ३२४ वर्ग्ग चतुर्थभागात् ८१ (१७ ऊनितात्) ६४पदे प्राप्ते ८ इति १८ दलात् ६ । पतिते १ जातं धनुः एवं जातानि धनूंषि । १ । २ । ३ । ४ । ५ ।६। । ७ । ८ । ६ । एतानि परिधिखण्डा-द्यांशेन गुणितानि स्युः"। एवं ८२ संख्यादौ कल्प्यम् । "टङ्कीकृतं चक्रमुशन्ति चापम्" इति शि०शि०उक्ते १२ राशिचक्रस्यार्द्धरूपे खण्डे च तस्य च जीवाभेदेनान्यविधा मितिः यथोक्तं तत्रैव "ज्यां प्रोज्भ्य तत्त्वाश्वि२२५हृता-वशेषं यातैष्यजीवाविवरेण भक्तम् । जीवा विशुद्धा यतमा च तज्घ्नैस्तत्त्वाश्विभिस्तत् सहितं धनुःस्यात्" "यस्य धनुः साध्यं तस्माद्या जीवा विशुध्यति सा शोध्या शेषात्तत्त्वा-श्वि २२५ गुणाद्गतागामिज्यान्तरहृताद्यल्लभ्यते तत्स्थाप्यं ततोयतमा जीवा विशुद्धा तद्गुणितैस्तत्त्वाश्विभिः २२५ सहितं धनुःस्यात्" प्रमि०

सू०सि० रङ्गनाथाभ्याञ्च तथैवोक्तं यथा ।

"ज्यां प्रोज्भ्य शेषं तत्त्वाश्विहतं तद्विवरोद्धृतम् । सङ्ख्या-तत्त्वाश्विसंवर्गे संयोज्य धनुरुच्यते" सू०सि० ।

"यस्य धनुः कर्त्तुमिष्टं तस्मिन्नशुद्धपूर्वं ज्यापिण्डं न्यूनी-कृत्य शेषं पञ्चाकृति २२५ गुणं तद्विवरोद्धृतं तयोः शुद्धाऽ-शुद्धपिण्डयोरन्तरेण भक्तं फलं शुद्धा ज्या यतमा यतमसङ्ख्या तत्त्वाश्विनोः संवर्गे घाते संयोज्य सिद्धं धनुः कथ्यते । अत्रोपपत्तिः । ज्या यतमा शुद्ध्यति ततमा याश्चाप-कलास्ततमसङ्ख्यागुणिततत्त्वाश्विनः । यदि ज्यान्तरेण तत्त्वाश्विकलास्तदा शेषज्यया का ? इत्यनुपातागतफलयुता इति वैपरीत्येन सुगमतरा"। अधिकं जीवाशब्दे वच्यते ।

**कार्म्मुकासन** न० । रुद्रयामलोक्ते आसनभेदे तल्लक्षणं यथा "कार्म्मुकासनमाकुर्य्यादुदरे पूरयेन्मुखम् । तदा वायुरधोयाति कालेन स्वच्छवायुना । कृत्वा पद्मासनं मन्त्री वेष्टयित्वा च धारयेत् । करेण दक्षिणेनैव वाम-पादाङ्गुली तथा । सव्यापसव्यद्विगुणं कार्म्मुकासनमेव च । कार्म्मुकद्वययोगेन शवबद्वायुमानयेत्" रुद्रयामले ।

**कार्य्य** त्रि० कृ-कर्म्मणि ण्यत् । १कृतिसाध्ये २कर्त्तव्ये । "तस्मात् शास्त्रं प्रमाणन्ते कार्य्याकार्य्यव्यवस्थितौ" गीता । "नास्य कार्य्योऽग्निसंस्कारो न च कार्य्योदक-क्रिया" मनुः । "शब्दानां कार्य्ये कार्य्यान्विते वा शक्तिरिति" मीमांसकाः । ३उत्पाद्ये जन्ये "व्यापारो-भावना सैवोत्पादना सैव च क्रिया । कृञोऽकर्मतापत्तेर्न हि यत्नोऽर्थे दृश्यते" इत्युक्तेः कृञोभावनारूपव्यापारा-र्थकत्वात् तत्साध्ये "यदि रस कार्य्यः स्यात् विभावादि-कारणकः स्यात्" सा० द० । गुरुमते यागादिकृति-साध्ये ४अपूर्व्वे । यथा चापूर्व्वस्यैव कार्य्यत्वं तथाऽपूर्व्व शब्दे २४८पृ० दर्शितम् । ५प्रयोजने ६उद्देश्ये तदि-च्छयैव कर्म्मसु प्रवृत्तेस्तस्य तथात्वम् "उपसर्पति कार्य्यार्थी कृतार्थी नोपसर्पति" हितो० । अष्टादशानां विवाद-पदानाञ्च उद्देश्यत्वादेव तथात्वम् । "यस्मात्कार्य्यं समारम्भश्चिरात्तेन विनिश्चितः" व्य० त० कात्या० स्मृतिः । उपचारात् ७ हेतौ च मेदि० । व्याकरणमते ८आदिश्यमाने वर्णादौ । "कार्य्यमनुभवन् हि कार्य्यी नि-मित्ततया नाश्रीयते" महाभा० "भिषक् कर्त्ताथ करणं रसा, दोषास्तु कारणम् । कार्य्यमारोग्यमेवैकम्" सुश्रुतोक्ते ६आरोग्ये च तत्र कर्त्तृत्वकरणत्वकारणत्व-कार्य्यत्वार्थेषु भिषगादिशब्दानां परिभाषितत्वात् । भावे ण्यत् । १० कर्म्मणि व्यापारे । ज्योतिषोक्ते ११ जन्मल-ग्नावधि दशमस्थाने । "कार्य्याधीशः स्वगेहे बुधगुरुक-विभिः संयुतो वीचितो वा" जातकम् कार्य्यस्य व्यापार-रूपत्वात्तथात्वम् ।

कार्य्योत्पत्तिप्रकारोमतभेदेन चतुर्द्धा "तत्र असतः सज्जा-यते इति सौगताः तैरभावादेव कार्य्यार्थासुत्पत्तेः स्वी-कारात् । सतोऽसज्जायते इति नैयायिकाः तैः प्रागुत्-पत्तेः घटादीनामसत्त्वस्य, मृदादिकारणस्य च तदा-सत्त्वस्य च स्वीकारेण असत उत्पत्तेः स्वीकारात् । सतो-विवर्त्तः कार्य्यं जगत् न वस्तु सदिति अद्वैतवादिनः । सतः सज्जायते इति साङ्ख्याः । विवृतञ्चैतदुत्पत्तिशब्दे ११०८पृ० ।

यथा च लिङादेः कार्य्यत्वेनापूर्व्ववाचकता तथा गुरुमत प्रदर्शने शब्दचि० उक्तं यथा

"अथ स्वर्गकामोयजेतेत्यादौ इष्टसाधनत्वं कार्य्यत्वं वा यद्विधिः समभिव्याहृतक्रियान्वयी तदन्यान्वयी वा । तत्र गुरवः नाहत्य क्रिया कार्य्यतया लिङा बोधयितुं

शक्यते स्वर्गकामनियोज्यान्वययोग्यताज्ञानविरहात् कामनाविशिष्टस्य हि ममेदं कार्य्यमितिबोद्धृत्वं नियोज्यत्वं तत्कामनायास्तद्बोधोपयोगे सति भवति। स च कामनानन्तरं काम्यसाधनताबोधात् कार्य्यताबोधे सति स्यात् एवञ्च स्वर्गसाधनताबोधे सति स्वर्गकामनियोज्यानुययोग्यता। न च कालान्तरभाविस्वर्गे क्रिया साक्षात् परम्परया वा साधनमिति शब्दोबोधयितुमर्हति आशुविनाशित्वात् परम्पराघटकानुपस्थितेस्तृतीयप्रकाराभावात् अन्यथा तमादाय साधनत्वसम्भवात् कल्प्यमप्यपूर्व्वं न स्यात् इष्टसाधनताविधिपक्षे स्फुटैवानुपपत्तिः कार्य्यताविधिपक्षेऽपि अन्वयप्रकारतया साधनत्वं शाब्दमिति फलतो न विशेषः। अतः क्रियातोऽन्यत् स्वर्गसाधनतार्हं क्रियाकार्य्यतानिर्वाहकं लिङाद्यर्थः"।

व्याकृतञ्चैतत् मथुरानाथेन—

"प्रसङ्गादपूर्व्वस्य विधिप्रत्ययवाच्यतां प्रभाकराभिमतां निराकर्त्तुं विचाराङ्गसंशयप्रयोजिकां विप्रतिपत्तिमादर्शयति अथेत्यादिना यद्विधिः यद्विधिपदोपस्थापितार्थः। समभिव्याहृतक्रियान्वयीति एतद्विधिसमभिव्याहृतधातूपस्थापितार्थान्वयी तदन्यान्वयी वेत्यर्थः तदन्वयित्वञ्च तद्विशेष्यकत्वावच्छिन्नशाब्दबोधप्रकारताश्रयत्वम्। अत्र विधिकोटिः, विधेः कार्य्यत्वे शक्तिवादिनां नैयायिकानां, तन्नये स्वर्गकामकृतिसाध्यो यागइत्यन्वयात्, निषेधकोटिस्तु कार्यत्वरूपेणापूर्व्वे शक्तिवादिनां प्राभाकराणां, तन्नये स्वर्गकामस्य यागविषयकं कार्य्यमिति यागविषयककार्य्यवान् स्वर्गकाम इत्येव शान्वयबोधात् अत्र विषयकत्वं जन्यत्वं तच्च यागकार्य्ययोः संसर्गः। कार्यत्वं कृतिसाध्यत्वम् अपूर्व्वस्यापि कञ्चिल्लक्षणादिना धातूपस्थापितत्वाच्च विधिकोटौ सिद्धसाधनं निषेधकोटौ बाध इति तद्वारणाय एतद्विधिसमभिव्याहृतेति धातुविशेषणम्। तदन्यान्वयित्वञ्च तदन्वयिभिन्नत्वं यथाश्रुतस्य विरोधिकोटित्वाभावात्। इष्टसाधनत्वादिना प्रत्येकरूपेण पक्षत्वे द्वयोरसंग्रहः। इष्टसाधनताविधिपक्षे इष्टसाधनत्वस्यापि विध्यर्थकार्य्येऽन्वयादतः पक्षे यद्विधिरिति। इत्थञ्च यद्विध्यर्थत्वेन द्वयोरनुगमाद्योक्तदोषः इष्टसाधनत्वं कार्यत्वं वेति तु स्वरूपकथनं न तु तद्रूपेण पक्षे प्रवेशः इष्टसाधनत्वमिति प्राभाकरैकदेशिमते। कार्य्यत्वं कृतिसाध्यत्वम्। न च गुरुनये कार्यस्य धर्मिणो विध्यर्थतया कृतिसाध्यत्वरूपस्य कार्यत्वस्य विधिप्रत्ययप्रवृत्तिनिमित्तत्वमेव कुतो विध्यर्थत्वमिति वाच्यं कार्यस्य विध्यर्थत्वेऽपि अवच्छेदकविधया कार्यत्वस्यापि विध्यर्थत्वात्। वस्तुतस्तु तन्मते कृतिसाध्यत्वरूपं कार्य्यत्वं न शक्यतावच्छेदकम् अपि तु प्रागभावप्रतियोगित्वरूपं ध्वंसप्रतियोगित्वरूपं धर्मत्वरूपं वा लाघवात्। कृतिसाध्यत्वन्तु पृथगेव शक्यं लिङ्सामान्यशक्यं वा पचेतेत्यादिलौकिकस्थलानुरोधात्। अन्वयबोधोऽपि यागविषयकं कार्यं स्वर्गकामकृतिसाध्यमित्याकारकः, कृतिसाध्ययागविषयककार्य्यवान् स्वर्गकाम इत्याकारकोवेति यथाश्रुतएव साधुः। पक्षतावच्छेदकावच्छेदेन विधिकोटिसिद्धेरुद्देश्यतया बलवदनिष्टाननुबन्धित्वस्य प्रकृत्यर्थेऽन्वयमादाय नांशतः सिद्धसाधनं न वा कृतिसाध्यत्वेष्टसाधनत्वयोरन्यतरत्वांशतः साध्यसिद्धिमादायार्थान्तरत्वम्। प्रवर्त्तकज्ञानप्रकारीभूतत्वेन विध्यर्थो विशेषणीयः, तेन वर्त्तमानत्वादेः कालस्य संख्यायाश्च तादृशविधिप्रतिपाद्यत्वेऽपि न तत्र विधिकोटावंशतो बाधः। न चेष्टसाधनत्वत्वादौ विध्यर्थतावच्छेदकेंऽशतो बाधः, प्रवर्त्तकज्ञानप्रकारीभूतत्वस्य प्रवृत्तिविशेष्यांशे प्रवर्त्तकज्ञानप्रकारत्वरूपत्वात्। यद्वा संख्याकालातिरिक्तत्वेन विध्यर्थोऽपि विशेषणीयः। विधिशक्यत्वरूपस्य विध्यर्थत्वस्य पक्षतावच्छेदकत्वादिष्टसाधनत्वत्वादौ नांशतोबाधः। कृतिसाध्यत्वस्य पृथक् शक्यतया नैतदसंग्रहः निषेधसिद्धिस्तु पक्षतावच्छेदकसामानाधिकरण्येन उद्देश्या नातोबलवदनिष्टाननुबन्धित्वेऽंशतो बाधः। प्रवर्त्तकज्ञानप्रकारीभूतत्वमात्रेण पक्षतायाम् ओदनकामः पचेदित्यादिविध्यर्थे ओदनसाधनत्वपाकमात्रविषयककृतिसाध्यत्वादौ विधिकोटावंशतो बाध इति। स्वर्गकामो यजेतेत्यादिस्थलीय तत्तद्विध्यर्थत्वेन पक्षतालाभाय स्वर्गकामो यजेतेत्यादाविति विधिविशेषणमिति भावः। नव्यास्तु विज्ञातविधितत्त्वार्थस्तु तदन्वयिनं पृच्छति अथेति न तु विप्रतिपत्तिपरोऽयं ग्रन्थः गुरुणा समं विवादे तु कार्य्यत्वं विधिप्रत्ययशक्यतावच्छेदकं नवेति विप्रतिपत्तिरूहनीया विधिकोटिः परेषाम्। नच कार्यस्य विधिप्रत्ययशक्यत्वेऽपि तस्य प्रकृत्यर्थयागादावभेदान्वयेऽपि नैयायिकानां विवक्षितार्थसिद्ध्याऽर्थान्तरप्रसङ्ग इति वाच्यं धात्वर्थप्रत्ययार्थयोरभेदान्वयबोधस्याव्युत्पन्नतया तादृशबोधासम्भवात्। अन्यथा विप्रतिपत्तावपि यागनिष्ठकृतिसाध्यत्वस्य निरूपकतासम्बन्धेन विध्यर्थे कृतावन्वयादपि नैयायिकानां विवक्षितार्थसिद्ध्याऽर्थान्तरप्रसङ्गस्य दुर्वारत्वादिति प्राहुरिति दिक्। अत्र गुरव इति अत्र विप्रतिपत्तौ प्रश्ने वा। नाहत्येति आहत्य—साक्षात् अपूर्व्वकार्य्यत्वानुपपत्तिज्ञानद्वारा पश्चात्

बोध्यतएवेति भावः। क्रिया—यागादिः, कार्य्यतया स्वर्गकाम कृतिसाध्यतया। नचैवम् अनुपपत्तिज्ञानोत्तरकालिकबोधमादाय विधौ सिद्धसाधनं निषेधे च बाध इति वाच्यं तदन्वयित्वस्य शाब्दत्वघटितत्वादेव सिद्धसाधनादिनिरासात् अनुपपत्तिज्ञानोत्तरकालिकबोधस्यैव औपादानिकबोधत्वेन शाब्दत्वविरहात्। औपादानिकत्वञ्च प्रत्यक्षत्वादिवदनुभवत्वव्याप्योधर्मविशेषः तदवच्छिन्नं प्रति च श्रौतानुपपत्तिज्ञानसचिवः शब्दएव पुनरनुसन्धीयमानोहेतुः। अतएवानुपपत्तिज्ञानसचिवः शब्दएव पञ्चमं प्रमाणमिति परसिद्धान्त इति भावः। स्वर्गकामनियोज्येति स्वर्गकामोयोविधिवाक्यनियोज्यस्तदीयकृतिसाध्यत्वान्वयबोधप्रयोजकीभूतस्य ज्ञानस्य विरहादित्यर्थः। वक्ष्यमाणयुक्त्या यागे स्वर्गकामकृतिसाध्यत्वान्वयबोधे यागनिष्ठेष्टसाधनताज्ञानस्य हेतुत्वेन प्रथमं तद्विरहादिति भाव। प्रयोजकज्ञानविरहमेवोपपादयति कामनाविशिष्टस्य हीति ममेदं कार्य्यमिति यागविशेष्यकस्वर्गकामकृतिसाध्यत्वप्रकारकमित्यर्थः बोद्धृत्वं शाब्दबोधोपयोगित्वं तच्च कारणतावच्छेदकसाधारणं तेन वक्ष्यमाणक्रमेण कामनाया अपि तादृशशाब्दबोधोपयोगित्वं सङ्गच्छते कामनाविशिष्टस्य तादृशबोधोपयोगित्वं समवायिकारणतया नियोज्यत्वं सकलप्रामाणिकसिद्धनियोज्यव्यवहारविषयतावच्छेदकं तदिति स्वर्गकामनाविशिष्टस्य तादृशबोधोपयोगित्वमित्यर्थः।—तद्बोधोपयोगे तद्बोधोपयोगित्वे सतीत्यर्थः। विशेष्यान्वयिनाऽन्वयिन एव विशेषणतया विशेषणस्य तदुपयोगित्वं विना विशिष्टस्य तदुपयोगित्वासम्भवात्। न च रूपवति रस इत्यादिवत् कामना चोपलक्षणमिति वाच्यं विशेषणत्वसम्भवे उपलक्षणत्वस्यान्याय्यत्वादिति भावः। स चेति कामनायास्तादृशबोधोपयोगश्चेत्यर्थः। कामनानन्तरं कामनाप्रकारकज्ञानानन्तरं यः काम्यसाधनताबोधः। कामनाघटितकाम्यसाधनताबोध इति यावत् तस्मात् कार्य्यताबोधे सति तज्जन्यो यदि कार्य्यताबोधस्तदैव स्यात् कामनायाः कारणतावच्छेदकत्वात् न हि कामनैव साक्षात् कार्य्यताबोधजनिकाऽसम्भवात् इत्यर्थः। अतः काम्यसाधनताज्ञानं स्वर्गकामकृतिसाध्यत्वान्वयप्रयोजकम् इति बोधः। स्वर्गकामेति स्वर्गकामोयो नियोज्यस्तदीयकृतिसाध्यत्वान्वयबोधप्रयोजकं ज्ञानमित्यर्थः। नन्वेवं प्रथमं वेदाद्यागे स्वर्गसाधनताज्ञाने सति तदनन्तरं तत्र स्वर्गकामकृतिसाध्यताबोधो भविष्यति किं कार्य्यत्वरूपेण विधेर्पूर्व्वभक्ष्येत्यत आह नचेति क्रिया—यागादिः। साक्षादिति अव्यवहितपूर्व्वत्वसम्बन्धेन कार्य्याधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकधर्म्मवत्त्वं साक्षात् साधनत्वं, तादृशधर्मावच्छिन्नजनकत्वे सति कार्य्यनियतपूर्ववर्त्तितावच्छेदकान्यथासिद्ध्यनिरूपकधर्म्मवत्त्वञ्च परम्परासाधनत्वमिति भावः। साक्षात्साधनत्वस्याबोधने हेतुमाहाश्विति यागादेरिच्छाविशेषरूपतया तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वात् इत्यर्थः। परम्परासाधनत्वस्याबोधने हेतुमाह परम्परेति अव्यवहितपूर्व्वत्वसम्बन्धेन स्वर्गविशेषाधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकधर्मावच्छिन्नजनकत्वे सति स्वर्गविशेषनियतपूर्ववर्त्तितावच्छेदकान्यथासिद्ध्यनिरूपकधर्मवत्त्वरूपपरम्परासाधनत्वघटकस्यानुपस्थितेरित्यर्थः। नचापूर्वघटितविशिष्टपरम्परासाधनत्वस्यैव विध्यर्थतया तत एव विशिष्टोपस्थितिसम्भवात् किमपूर्वस्य पृथगुपस्थित्या इति वाच्यं परम्परासाधनत्वान्वयबोधे परम्पराघटकफलपर्य्यन्तस्थायिव्यापारोपधायकत्वस्यान्वयप्रयोजकरूपत्वेन योग्यतात्वात् प्रथमन्तज्ज्ञानं विना तदन्वयबोधासम्भवादिति भावः। नन्वेतदुभयविलक्षणमेव साधनत्वं बोधयिष्यतीत्यत आह तृतीयेति अन्यथा—तृतीयप्रकारसत्त्वे। साधनत्वसम्भवादिति अपूर्व्वं विनापि यागस्य स्वर्गसाधनत्वसम्भवादिति भावः। कल्प्यमिति तव नयेऽप्यपूर्व्वकल्पना न स्यादित्यर्थः आशुविनाशिनो यागस्य कालान्तरभाविस्वर्गसाधनत्वान्यथानुपपत्त्यैव त्वयाप्यऽपूर्वकल्पनादिति भावः। नन्वेवं प्रथमं परम्परासाधनत्वरूपेण परम्परासाधनत्वान्वयासम्भवेऽपि सामान्यतः स्वर्गसाधनत्वरूपेणान्वयः स्यादित्यतआह इष्टसाधनताविधिपक्ष इति। सामान्यत इष्टसाधनत्वस्य विध्यर्थत्वपक्षे इत्यर्थः। अनुपपत्तेः साक्षात्परम्परौदासीन्येन फलसाधनत्वान्वयेऽपि फलपर्य्यन्तस्थायित्वतादृशव्यापारोपधायकत्वान्यतरत्वस्य योग्यतात्वेन तज्ज्ञानं विना सामान्यतोऽपि साधनत्वान्वयासम्भवात् इति भावः। अत्रैवानुपदं ननु सजातीय इति न च साक्षात् परम्परासाधनत्वोभयसाधारणं स्वर्गसाधनत्वमनुगतमेव दुर्वचमिति वाच्यं स्वर्गत्वावच्छिन्नविजातीयस्वर्गनियतपूर्ववर्त्तितावच्छेदकान्यथासिद्ध्यनिरूपकधर्म्मवत्त्वस्यैव तत्त्वात्। नचैवमव्यवधानस्याप्रवेशात् स्वर्गोव्यापारतो वा स्वर्गाव्यवहितपूर्व्वक्षणमसतोऽपि नियतपूर्व्वकारणत्वापत्तिरिति वाच्यं अन्यथासिद्ध्यनिरूपकत्वविशेषणेनैव तद्वारणात् विजातीयस्वर्गनियतपूर्व्ववर्त्तिता

वच्छेदकत्वन्तु यावन्त्यो विजातीयस्वर्गव्यक्तयः प्रत्येकं तत्-पूर्व्वक्षणवृत्तिनियतत्वं विजातीयस्वर्गोत्पत्त्यधिकरणानि-ष्ठत्वावच्छिन्नोत्तरत्वसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छे-दकान्यत्वमिति यावत् एवमग्रेऽपि सर्व्वत्र बोध्यम्। कार्य्यत्वं कारणत्वञ्चातिरिक्तपदार्थ इत्यभिप्रायेणेदमित्यपि कश्चित्। ननु भवन्मतेऽपि विधिप्रत्ययात् कार्य्यत्व रूपेणापूर्व्वावगमेऽपि तस्य स्वर्गसाधनत्वं नावगतं तथा च तावन्मात्रज्ञानात् कथं प्रवृत्त्यर्थमुत्तरकालं परम्प-रया स्वर्गसाधनत्वावगमः परम्परासाधनत्वस्यापूर्व्व-निष्ठसाधनताघटितत्वात्। न च कार्य्यवत् साक्षात् साध-नत्वस्यापि विध्यर्थतया तस्य च समानपदोपात्ततया कार्य्य एवान्वयादपूर्व्वस्य स्वर्गसाधनत्वावगम इति वाच्यं तथापि कार्य्यमात्रस्य विध्यर्थत्वपक्षेऽप्रतीकारादित्यत आह कार्य्यताविधिपक्ष इति। कार्य्यत्वमात्रस्य विधिप्रवृत्ति निमित्तत्वपक्ष इत्यर्थः मात्रपदादिष्टसाधनत्वमात्रस्य व्यव-च्छेदः तेन संख्यादेर्विध्यर्थत्वेऽपि न क्षतिः। कृतिसाध्यत्वस्य पृथक्शक्यत्वपक्षे कार्य्यमात्रस्य विधिशक्यत्वपक्षेऽपीत्यर्थः। मात्रपदादिष्टसाधनत्वव्यवच्छेदः। अन्वयप्रकारतयेति कृतिसाध्यत्वान्वयप्रयोजकरूपतयेत्यर्थः। साधनत्वं पदानु-पस्थितमपि स्वर्गसाधनत्वं घटेन जलमाहरेत्यादौ अप-दार्थस्यापि छिद्रेतरत्वस्य भानवदिति भावः। यद्यपि अपूर्व्वे कृतिसाध्यत्वान्वयबोधे स्वर्गसाधनत्वस्यान्वयप्रयो-जकरूपतया योग्यतात्वे शाब्दबोधात् पूर्व्वमपूर्व्वे तज्ज्ञा-नमसम्भवि अपूर्व्वस्य शाब्दबोधात् पूर्व्वमज्ञानात्, तथापि परनये बोधनीयपदार्थे बोध्यताज्ञानं न कारणं बोध-नीयपदार्थस्यापूर्व्वत्वात् किन्तु पदार्थतावच्छेदकाव-च्छिन्ने क्वचित्तस्य ज्ञानं तच्च प्रकृतेऽपि सम्भवति कार्य्यत्व रूपेण घटादावेव जलाहरणरूपकार्य्यसाधनताज्ञान सत्त्वादिति निगर्वः। स्वयमुपसंहरति अत इति स्वर्ग-साधनतार्हमिति साक्षात्स्वर्गसाधनत्वस्यान्वययोग्य-मित्यर्थः। क्रियाकार्य्यतानिर्व्वाहकमिति कार्य्योपस्थिति रिष्टसाधनताज्ञानं ततः कृतिरिति प्रणाल्या क्रियायाः कृति साध्यतानिर्वाहकत्वमित्यर्थः लिङाद्यर्थ इति आदिपदात्त-व्यादिपरिग्रहः”।

शब्दचिन्तामणौ स्थानान्तरे गुरुमते वैदिकलिङादेः कार्य्यत्वेनापूर्व्ववाचकता शङ्कापूर्व्वकं दर्शिता यथा।

“नन्वपूर्व्वे व्युत्पत्तिविरहः तथा हि प्रसिद्धार्थे स्वर्ग-पदसमभिव्याहारान्यथानुपपत्त्योपस्थिते शक्तिर्गृहीतव्या न च शाब्दानुभवात् पूर्व्वमपूर्व्वमुपस्थितं मानाभावात् अपूर्व्वत्वव्याघातादवाच्यत्वापाताच्च। न च लिङादिना तदुपस्थितिः व्युत्पत्त्यनन्तरं तत्प्रवृत्तावन्योन्याश्रयात्। न च कार्य्यत्वेनोपलक्षिते तत्र शक्तिग्रहः उपलक्षणं हि स्मा-रणमनुमापनं वा अगृहीते सम्बन्धाग्रहात् अशक्यमिति? मैवम् कार्य्ये धर्म्मिणि कार्य्यत्वेन शक्तिग्रहात् कार्य्यत्वविशिष्ट-ञ्चोपस्थितमेव ततोऽन्विताभिधानदशायां यागविषयकं कार्य्य-मित्यनुभवः स्वर्गकामायोग्यतया घटादिकं तिरस्कृत्य क्रिया भिन्ने योग्यतावशाद्यागविषयकापूर्व्वे पर्य्यवस्यति, नत्वपूर्व्व-त्वेन शक्तिग्रहो न वाऽपूर्व्वं कार्य्यमित्यनुभवः भवति च सामान्यतः सम्बन्धबुद्धिः सहकारिवशाद्विशेषबुद्ध्युपायः यथा तत्रैव कर्त्तृमात्रसम्बन्धग्रहात् कर्त्तृविशेषसिद्धिः। ननु कार्य्यत्वेनापि किं घटादौ शक्तिग्रहः उतापूर्व्वे उभयत्र वा? नाद्यः, अन्यप्रतिपत्तावन्यशक्तिग्रहानुपयोगात्। नान्त्यौ, प्रागनुपस्थितेरिति चेत्? न येन हि रूपेण शब्देनानुभवो जन्यते तेन रूपेण शक्तिग्रहः पदार्थस्मरणञ्च शब्दानुभव-हेतुः। नहि प्रमेयत्वेन शक्तिग्रहः पदार्थस्मरणञ्च घट-त्वेन शाब्दानुभवहेतुः। एवञ्च घटादावेव कार्य्ये शक्तो लिङिति शक्तिग्रहः ततः कार्य्यमिति स्मरणं ततो योग्य-तादिवशात् प्रचरद्द्रव्यगुणकर्म्माणि कार्य्याणि विहाय याग विषयकं कार्य्यमित्यनुभवो भवन्नपूर्व्वमालम्बते योग्यत्वाच्च तस्य स्थायित्वलाभः। अतएव वाक्यार्थानुभवमात्रविषयत्वा-त्तदपूर्व्वम्। न च स्मृतानामाकाङ्क्षादिवशादन्वयबोधः पदेन क्रियते, न चापूर्व्वं स्मृतिगोचर इति वाच्यं? शक्ति-ग्रहपदार्थस्मरणशाब्दानुभवानां समानप्रकारकतामात्रेण हेतुहेतुमद्भावावधारणात् लाघवादावश्यकत्वाच्च। न च क्वचित् सहचारमात्रेणान्वयप्रतियोगिन एवोपस्थितिस्तथा, गौरवात् गोपदादपूर्व्वगवाननुभवप्रसङ्गाच्च, विशिष्टवैशिष्ट्य बोधे सर्व्वत्र तथैव, अन्यथा पर्व्वतीयवह्निर्व्यापकतया नावगत इति कथ तदन्वयोऽनुमितौ। ननु सामान्यलक्षणया प्रत्या-सत्त्या सर्व्वा एव व्यक्तयो व्याप्तिग्रहे शक्तिग्रहे च विषयी भवन्ति कथमन्यथा पर्व्वतीयधूमव्याप्तिग्रहे तस्य दनुमितः? इति चेत् न, येन रूपेण व्याप्तिग्रहस्तेन रूपेण व्याप्यत्वेन वा पक्षधर्मताग्रहोऽनुमितौ कारणमस्तु किन्तया। अपि च सा यद्यस्ति ममापि, नास्ति चेत्तवापि। किञ्च तव दर्शने नास्तीति सुतरामपूर्व्ववाच्यता कार्य्यत्वेन हि रूपेणा-पूर्व्वस्यापि शक्तिग्रहविषयत्वं पदार्थस्मृतिविषयत्वञ्च। नचैव मपूर्व्वत्वक्षतिः यागविषयकत्वादेर्विशेषस्य कार्य्ये लिङं विनानु-

पस्थितेः यथा पर्व्वतीयत्वभानं वह्नौ, नानुमितिं विना । ननु यदि कार्ये क्रियासाधारणे लिङ्‌शक्तिः क्रिया चायोग्येति योग्यापूर्व्वलाभः तदा नित्यनिषेधापूर्व्वयोरलाभः न हि तत्रायोग्यतया क्रिया त्यक्तुं शक्यते फलाश्रवणात् कल्पनायाश्च वीजाभावात् सर्व्वत्र निर्णीतः शास्त्रार्थः परत्रापि तथैवेति न्यायात्तत्राप्यपूर्व्वमेव लिङाद्यर्थ इति युक्तं नत्वपूर्व्वत्वेन शक्तिपक्षः किन्तु कार्यत्वविशिष्टे धर्म्मिणि, क्रिया च तथा भवत्येव, न च कार्येण समं क्रियान्वयानुपपत्त्याऽपूर्व्वे पर्यवसानमभेदस्याप्यन्वयत्वादिति सैवम् न हि लोके पचेतेत्यादौ कार्ये धर्म्मिणि शक्तिः कल्पिता किन्त्वनन्यलभ्यत्वातिरूपे कार्यत्वमात्रे, धर्म्मिणः पाकादेर्धातोरेवोपस्थितिसम्भवात् क्रियाकार्यतान्वयस्यान्विताभिधानलभ्यत्वात् तथाच धर्म्मिणि शक्तिर्वेदे कल्पनीया सा च क्रियानिरासेनैव, न हि क्रियायाः कार्यतान्वययोग्यत्वेन धर्म्मिणि शक्तिः कल्पयितुं शक्यते तस्मादयोग्यतया क्रियानिरासानन्तरं तदतिरिक्त एव शक्तिकल्पनं न हि क्रियातिरिक्तकार्यात् कार्यमात्रं लघु ततः क्रियापि शक्यैवेति वाच्यं यतो न ब्रूमः क्रियातिरिक्तकार्यत्वेन शक्तिः किन्त्वयोग्यतया निरस्तायां क्रियायां धर्म्मिणि शक्तिकल्पनसमये यत्क्रियातिरिक्तं तत्र शक्तिः न तु शक्तिपक्षे क्रियातिरिक्तत्वप्रवेशः न हि यत्र युक्तानुपपत्त्या यत् कल्पनं तदेव तस्य विषयः एवञ्च कार्यत्वेनापि तदतिरिक्त एव शक्तिकल्पना। नित्यनिषेधयोरपि तदेवोपासनाद्यन्वययोग्यं लिङाऽभिधीयते न तु कार्यत्वमात्रे धर्म्मिणि बाधकाभावात् लक्षणाप्रसङ्गाच्च। घटादिस्तु लिङ्‌शक्तिपक्षेण तिरस्क्रियते न वा पुरस्क्रियते उभयथापि गौरवात् अन्विताभिधानदशायां त्वयोग्यतया तस्याप्रवेशः। विधिप्रत्ययस्य च तत्राप्रयोगः केवलस्य तस्यासाधुत्वात् धातुसमभिव्याहारे च तदर्थेनान्वयबोधजननियमेन घटाद्यप्रतिपादकत्वात् अत एवाप्रयोगादेवाप्रयोगोऽपूर्व्वत्वं वा प्रयोगोपाधिरिति वदन्ति। अथाप्रतिपाद्यमेव घटादिवृत्तितया न कार्यत्वं प्रवृत्तिनिमित्तं प्रतिपाद्यमात्रवृत्तेरेव तथात्वात् अन्यथा प्रमेयत्वमेव तथास्त्विति चेत् न, यत्प्रकारिका हि प्रतिपत्तिः पदजन्या तदेव तत्र प्रवृत्तिनिमित्तं फलबलकल्प्यत्वाच्छक्तेः न तु प्रतिपाद्यमात्रवृत्तिः सास्नात्वादौ व्यभिचारात् न च प्रमेयत्वं तथा, तद्बोधस्याप्रवर्त्तकत्वात् अतएव लोके लिङ् लाक्षणिका, क्रियाभिन्ने धर्म्मिणि वेदे, शक्तिकल्पनात्। न च लौकिकानामपूर्व्वे तात्पर्य्यं सम्भवति पूर्व्वं प्रमाणान्तरेणाप्रतीतेः। क्रियासाधारणशक्तावपि लोके लक्षणैव पचेतेत्यत्र हि पाककार्यतावगम्यते तत्र कार्यत्वे लिङस्तात्पर्यं लाघवात् न धर्म्मिणि, क्रियाया धातुलभ्यत्वात् तदाहुः "तात्पर्यार्थं हि वृत्तिर्न वृत्तेस्तात्पर्यमिति"। तृतीयायाः करणत्वैकत्ववत् कार्यं कार्यत्वञ्च न स्वतन्त्रं शक्यं किन्तु विशिष्टं विशेष्याश्च विशेषणमन्यदेवेति कार्यत्वे लक्षणा न च कार्यत्वविशिष्टधर्म्म्युपस्थितावपि धर्म्मिंशमपहाय क्रियया कार्य्यतान्वयोऽस्तु किं लक्षणयेति वाच्यं गृहीतधर्म्मिगतत्वेनोपस्थितस्य धर्म्म्यन्तराकाङ्क्षास्ति अतः स्वतन्त्रकार्योपस्थितये लक्षणा यथा "पुरोडाशकपालेन तुषानुपवपति" इत्यत्र पुरोडाशार्थतया तदन्वितत्वेनोपस्थितस्य कपालस्य नोपवापाकाङ्क्षेति स्वतन्त्रकपालोपस्थितयेऽधिष्ठाने लक्षणा। न च व्युत्पत्तिविरोधः न हि लोके क्रियाकार्यत्वेन शक्तिरवधारिता येन विरोधो भवेत् किन्तु कार्यत्वमात्रे, क्रियाया धातुलभ्यत्वात्, न च धर्म्म्यन्तरे शक्तावपि तद्भङ्गः। तस्मात् प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानां गृहीतप्रत्ययार्थाऽपूर्व्वमपीति न विरोधः। अस्तु वा लोके लिङः क्रियाकार्यत्वे शक्तिः तथापि तद्भङ्गं विनैव नामार्थन्यायेन वेदे धर्म्म्यन्तरे शक्तिः तां विना स्वर्गकामान्वयासम्भवात्।"

व्याकृतञ्चेदं मथुरानाथेन यथा—

"व्युत्पत्तिविरह इति विधेः शक्तिपक्षासम्भव इत्यर्थः समभिव्याहारानुपपत्त्येति तदुपस्थापितस्य स्वर्गकामनावतो यागे कृतिसाध्यत्वान्वयानुपपत्त्येत्यर्थः। गृहीतव्येत्यपेक्षान्वयः। नन्वन्यथानुपपत्त्या जन्मान्तरीयसंस्कारादेव तदुपस्थितिः कल्पनीयेत्यत आह अपूर्व्वत्वव्याघातादिति शाब्दबोधात् पूर्व्वं प्रमाणान्तराविषयत्वस्यैवापूर्व्वरूपत्वादिति भावः। ननु सत्यपि योगार्थोऽत्र त्यज्यते मण्डपपदवदित्यस्वरसादाह अवाच्यत्वेति। प्रकारान्तरेणापूर्व्वस्योपस्थितौ तद्वाच्यत्वं विनापि तद्द्वारा जनकत्वनिश्चयसम्भवादिति भावः। तत्प्रवृत्तौ—लिङादिनाऽपूर्व्वोपस्थितौ। अपूर्व्वत्वेनोपस्थितिः प्राक् नास्तीत्याशयेनाशङ्कते न चेति।—उपलक्षिते उपस्थिते। स्मारणं लिङादिना स्मारणम्। गूढाभिसन्धिः समाधत्ते मैवमिति। कार्य्ये धर्म्मिणीति कार्य्यताश्रये धर्म्मिणीत्यर्थः। कार्य्यत्वविशिष्टञ्चेति घटादौ विशेषः यागविषयकं कार्य्यमिति स्वर्गसाधनमिति शेषः। स्वर्गकामेति स्वर्गसाधनत्वान्वयायोग्यतयेत्यर्थः। विशेषबुद्धापाय इति सामान्यरूपेण विशेषबुद्ध्यपाय इत्यर्थः। सम्बन्धपक्षात् तत्सम्बन्धपक्षात् कर्तृविशेषेति पचेत्यादौ पाककर्तृत्वादिना

विशेषसिद्धिरित्यर्थः। अभिसन्धिमद्घाटयितुं शङ्कते नन्विति। अनुपस्थितेरिति अपूर्व्वस्य प्रागनुपस्थितेरित्यर्थः। येन हीति शक्तिग्रहपदार्थस्मरणशाब्दानुभवानां समानप्रकारत्वेनैव कार्य्यकारणभावः न तु समानविषयकत्वेनापि गौरवादित्यर्थः। ननु समानविषयकत्वेनैव कार्य्यकारणभावो न तु समानप्रकारकत्वेनेत्यत आह नहीति। पदार्थस्मरणञ्च-प्रमेयत्वेन पदार्थस्मरणञ्च तथाच समान प्रकारकत्वस्यावश्यकत्वात्तेनैव रूपेण हेतुत्वमिति भावः। स्मरणं-घटादेः स्मरणम्। ननु कार्य्यमात्रशक्त्या कथं स्वर्गपर्य्यन्तस्थायि कार्य्यलाभः? इत्यत आह योग्यत्वाच्चेति यागविषयककार्य्ये स्वर्गसाधनत्वान्वये स्वर्गपर्य्यन्तस्थायित्वस्य योग्यतारूपत्वाच्चेत्यर्थः। अतएवेति यतएव प्रथमं न तज्ज्ञानमित्यर्थः अपूर्व्वम् अपूर्व्वत्वव्यवहारः। पदेन क्रियत इति नियम इति शेषः। शक्तिग्रहेति तथा च तादृशनियमोऽसिद्ध इति भावः। नन्वाकाशादिपदस्थले याच्यपदार्थोपस्थितेर्हेतुत्वस्य दृष्टत्वादत्रापि तथेत्यत आह नचेति। क्वचित्-आकाशादिपदे। तथा-शाब्दधीहेतुः। अपूर्व्वेति शक्तिग्रहाविषयीभूतेत्यर्थः। ननु विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्य हेतुतया यागविषयककार्य्यवान् स्वर्गकाम इति विशिष्टवैशिष्ट्यबोधानुरोधादपूर्व्वज्ञानमावश्यकमित्यत आह विशिष्टेति विशिष्टवैशिष्ट्यबोधेऽपि विशेषणतावच्छेदकप्रकारकज्ञानमेव हेतुर्नतु विशेषणविषयत्वस्यापि तत्र प्रवेश इत्यर्थः। अन्यथा-विशेषणविषयत्वस्यापि तत्र प्रवेशे। व्यापकतयेति। ज्ञानेन न भात इत्यर्थः। तदन्वयः तद्विषयत्वम्। तस्मात्-तदीयपक्षधर्मताज्ञानात्। तेन रूपेणेति स्वमते, तन्मते व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्यैवानुमितिहेतुत्वात्। व्याप्यत्वेन वेति महानसीयधूमे गृहीतेन धूमव्यापकवह्निसमानाधिकरणधूमत्वरूपेण वह्निमदन्यावृत्तित्वरूपेण वा व्याप्यत्वेनेत्यर्थः। एतच्च न्यायनये परनये वह्निव्याप्योधूमः धूमवान् पर्व्वत इति ज्ञानादप्यनुमित्यनुपपत्तेः वह्निव्याप्यवान् पर्व्वत इति ज्ञानादप्यनुमित्युत्पत्तेश्चेति ध्येयम्। सा-सामान्यप्रत्यासत्तिः। सुतरामिति विद्रणोति कार्य्यत्वेन हीति। क्रियासाधारणेन-क्रियासाधारणधर्मप्रकारेण। अयोग्या-साक्षात्फलजननायोग्या। योग्येति साक्षात्फलजननयोग्येत्यर्थः। नित्यनिषेधेति सन्ध्यामुपासीतेत्यत्र सन्ध्यावन्दनापूर्व्वस्य, न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणाभावजन्यापूर्व्वस्य वेत्यर्थः। तथा च तत्रापसिद्धान्त इति भावः। अयोग्यतया-साक्षात्फलजननायोग्यतया। फलाश्रवणात् इति नित्ये निषेधस्थले च फलाश्रवणादित्यर्थः। कल्पनायाञ्चेति फलकल्पनायाञ्चेत्यर्थः। बीजाभावात् प्रमाणाभावात्। कार्य्येण समं-क्रियारूपकार्य्येण समम्। अभेदस्यापीति यद्यपि निषेधस्थले कलञ्जभक्षणाभावस्य कार्य्यत्वाभावेन कार्य्यत्वरूपेण लिङा न तद्बोधसम्भवस्तथापि अभावस्योत्पादविनाशशालित्वनयेऽभावस्यापि कार्य्यत्वसम्भव इत्यभिप्रायेणेदं धर्म्मत्वरूपकार्य्यत्वाभिप्रायेण वा। केचित्तु कार्य्यत्वं कृतिसाध्यत्वं तच्च योगक्षेमसाधारणमित्यभावस्यापि कार्य्यत्वसम्भव इत्याहुः। कृतिरूप इति साध्यत्वसंसर्ग इति भावः। अन्विताभिधानेति शाब्दबोधेत्यर्थः। धर्म्मिणि-कार्य्ये। कार्य्यत्वान्वयेति स्वर्गकामकृतिसाध्यत्वान्वयेत्यर्थः अयोग्यतया स्वर्गकामकृति साध्यत्वान्वयायोग्यतया। एवमग्रेऽपि। तत्र शक्तिरिति तत्र शक्तिग्रह इत्यर्थः। यत्प्रयुक्तेति यन्निष्ठस्वर्गकामकृतिसाध्यत्वान्वयानुपपत्त्येत्यर्थः। शक्तिकल्पनादिति वैदिकलिङ्मात्रशक्तिकल्पनादित्यर्थः। उपासनादीति सन्ध्योपासनादीत्यर्थः आदिपदान्निषेधविधिस्थले कलञ्जभक्षणाद्यभावपरिग्रहः। लक्षणेति वैदिकलिङः कार्य्ये धर्म्मिणयेव शक्तिकल्पनादिति भावः। एतच्च लोकस्थले लौकिकलिङ्त्वं कार्य्यत्वशक्ततावच्छेदकमित्यभिप्रायेणान्यथा तत्र लिङ्त्वस्य शक्ततावच्छेदकत्वे लक्षणाया असङ्गतेरिति ध्येयम्। एतच्चापाततः तन्नयेऽपूर्व्वस्य शक्तिग्रहाविषयत्वेऽपि शाब्दबोधविषयत्ववत् क्रियाया अपि कार्य्यत्वरूपेण वैदिकलिङः शक्तिग्रहाविषयत्वेऽपि शाब्दबोधविषयत्वसम्भवात् न हि न्यायनयइव तन्मते शाब्दपदार्थशक्तिधीरपेक्षिता किन्तु पदार्थतावच्छेदकरूपेण यत्र कुत्रचिद्धर्म्मिणि शक्तिग्रहादेव शाब्दबोधे योग्यव्यक्तेर्भानम्। किञ्चैवमपि निषेधस्थलेऽपूर्व्वालाभः तत्र कलञ्जभक्षणाभावस्यापि क्रियातिरिक्ततया कार्य्यत्वरूपेण लिङा तस्यैव बोधसम्भवात्। वस्तुतस्तु प्रकृतिप्रत्ययार्थयोरभेदान्वयस्याव्युत्पन्नतया लिङा क्रियादेर्न बोधसम्भव इत्येव तत्त्वम्। ननु घटादिलक्षणकार्य्यत्वस्य शक्यतावच्छेदकत्वे यजेतेत्यादौ कथमपूर्व्वलाभः घटादिभिन्नकार्य्यत्वस्य शक्यतावच्छेदकत्वेऽपूर्व्वस्यानुपस्थितत्वात् कुत्र कार्य्ये शक्तिग्रह इत्यत आह घटादिष्विति। उभयथापीति घटादिभिन्नकार्य्यत्वस्य घटादिकार्य्यत्वस्य च शक्यतावच्छेदकत्वे इत्यर्थः। किन्तु कार्य्यत्वमेव शक्यतावच्छेदकमिति भावः। ननु

सामान्यतः कार्यत्वस्य शक्यतावच्छेदकत्वे यजेतेत्यादौ घटादेरपि शाब्दबोधे भानापत्तिरित्यत आह अन्वितेति अयोग्यतया—धात्वर्थान्वयायोग्यतया। नन्वेवं कार्यत्वेन घटादेरपि शक्यत्वात्तत्रापि लिङः कदाचित् प्रयोगः स्यादित्यत आह विधेति केवलस्य—धात्वसमभिव्याहृतस्य, तस्य—विधिप्रत्ययस्य, अप्रयोगादेवेति असाधुत्वादेवेत्यर्थः। अप्रयोगः विधिप्रत्ययाद्घटादेरप्रयोगः। प्रयोगोपाधीति शक्तिप्रमाजन्यशाब्दबोधेऽभावसम्बन्धेन प्रतिबन्धकमित्यर्थः। तादृशबोधेऽपूर्व्वत्वं कारणमिति पर्य्यवसितोऽर्थः। प्रतिपत्तिः शक्यप्रतिपत्तिः। तदेव तत्रेति तद्वृत्ति तदेवेति योजना शक्यवृत्ति तदेवेत्यर्थः तथा च तत्पदशक्यवृत्तित्वे सति तत्पदजन्योपस्थितिप्रकारत्वं तत्पदप्रवृत्तिनिमित्तत्वमिति लक्षणं फलितम्। आकृतेरपि गोपदादिजन्यप्रतीतौ गवाद्यंशे स्वसमवायिसमवेतत्वसम्बन्धेन प्रकारत्वात्तत्रातिव्याप्तिवारणाय सत्यन्तम्। आकृतिस्तु अवयवसंयोगविशेषरूपा न गोपदशक्यवृत्तिः स्वसमवायिसमवेतत्वलक्षणपरम्परासम्बन्धस्य वृत्त्यनियामकत्वात्। वृत्त्यनियामकसम्बन्धेन तु न कोपि धर्म्मः कुत्रापि शक्यतावच्छेदकः पशुपदादेरपि लोमवल्लाङ्गूलादिसमवेतत्वादिकमेव शक्यतावच्छेदकं न तु समवेतत्वसम्बन्धेन लोमवल्लाङ्गूलादिकम्। तदादिपदात् कदाचित् परम्परासम्बन्धेन कपालत्वादिप्रकारेण घटादिबोधस्तु लक्षणयैव, आकृतेरपि द्रव्यादिपदशक्यवृत्तित्वात्। तत्पदेति न चाकृतेरपि कालिकादिसम्बन्धेन शाक्यगवादिवृत्तित्वादतिव्याप्तिस्तदवस्थेति वाच्यं तत्पदशक्तिविशेष्यतावच्छेदकतानियामकसम्बन्धेन तत्पदशक्तिमुख्यविशेष्यवृत्तित्वस्य विवक्षितत्वात् मुख्येत्युपादानात् मूर्त्तादिपदे परिमाणत्वादेः, घटादिपदे आकृतिव्याप्यान्तरजातेः शक्यतावच्छेदकत्वव्युदासः। ज्ञानविषयशक्तवस्त्वादिपदे ज्ञानस्यापि शक्तिमुख्यविशेष्यतया ज्ञानत्वस्य शक्यमुख्यवृत्तित्वेऽपि न यथोक्तसम्बन्धेन तद्वृत्तित्वम्। नचाकाशादेरपि आकाशादिपदशक्यतावच्छेदकत्वापत्तिरिति वाच्यं नव्यमते घटत्वादेर्घटादिपदशक्यतावच्छेदकत्ववदाकाशादेरप्याकाशादिपदशक्यतावच्छेदकत्वे इष्टापत्तेः। सम्प्रदायमते चाकाशादिपदशक्तेर्विशेष्यांशे निर्विकल्पकरूपतया विशेष्यतावच्छेदकतानियामकसम्बन्धाप्रसिद्धेरेवातिव्याप्तिविरहात्, अवयवावयविशाचिदध्यादिपदे दध्यादेः शक्यतावच्छेदकत्ववारणाय विशेष्यदलम्। उपस्थितिर्हि लक्षणाशक्तिप्रमाजन्यत्वेन विशेषणीया तेन लक्ष्यतावच्छेदके नातिप्रसङ्गः। न च समूहालम्बनमादायातिप्रसङ्ग इति वाच्यं यत्प्रकारताघटितधर्म्मावच्छेदेन तत्पदजन्यत्वं तत्त्वस्य विवक्षितत्वादिति निगर्वः। तत्पदशक्तिविशेष्यतावच्छेदकत्वं तत्पदप्रवृत्तिनिमित्तत्वं संस्थानञ्च गुरुनये, नव्यनैयायिकनये च समर्मिति न तत्रातिव्याप्तिरिति तु ज्यायः। सास्नादौ सास्नासमवेतत्वादौ तथा—यथोक्तलक्षणाश्रयः। तद्बोधस्य तत्प्रकारकज्ञानस्य अप्रवर्त्तकत्वात् शक्याऽजनकत्वात् घटादिपदस्येति शेषः। ननु लौकिकलिङः कार्यत्वे शक्तिः वैदिकलिङः कार्ये धर्मिणि शक्तिरित्यभ्युपगमे लौकिकलिङ्त्ववैदिकलिङ्त्वयोः शक्ततावच्छेदकत्वे शक्ततावच्छेदकगौरवमित्यत आह अतएवेति शक्ततावच्छेदकगौरवादेवेत्यर्थः। लाक्षणिकी-कार्यत्वे लाक्षणिकी वेदे—वेदस्थले। शक्तिकल्पनादिति लिङ्सामान्यस्यैव शक्तिकल्पनादित्यर्थः। न च लिङ्मात्रस्य कार्यत्वे शक्तिः वेदे च कार्ये धर्मिणि लक्षणा इत्येव किं न स्यात् कार्यत्वत्वापेक्षया कार्यत्वत्वविशिष्टस्य कार्यत्वस्य गुरुत्वात् विनिगमकाभावाच्चेति वाच्यं कृतिसाध्यत्वत्वरूपकार्यत्वत्वापेक्षया प्रागभावप्रतियोगित्वादिरूपस्य धर्मत्वरूपस्य वा कार्यत्वस्य लघुत्वादित्यभिप्रायः। वस्तुतस्तु लाघवाल्लिङ्मात्रस्य कृतावेव शक्तिः साध्यत्वं संसर्गः। वेदे च प्रागभाववत्त्वादिरूपकार्य्यत्वाश्रये धर्मिणि लक्षणाऽस्त्वेवेत्याशयः। ननु लोकस्थले कार्य्यत्वरूपेणापूर्व्वमेवाऽर्थोऽस्तु किं लक्षणयेत्यत आह नचेति पूर्व्वमिति वेदे तु अनादिलिङ्प्रवाद देवाध्यापकानामपूर्व्वावगमात्तत्र तात्पर्य्यसम्भव इति भावः। वस्तुतोऽपूर्व्वं लोके बाधितं मानाभावादित्येव द्रष्टव्यम्। ननु लिङः शक्तिपक्षे क्रियाभिन्नधर्मिणोविषयत्वेऽपि कार्य्यत्वस्य शक्यतावच्छेदकतया क्रियायां शक्तिरस्त्येव तथा च लोकेऽपि पाकः कार्य्याभिन्न इत्यभेदान्वयबोधस्य शक्त्यैवोपपत्तौ किं लक्षणया इत्यत आह क्रियासाधारणेति। लक्षणैव कार्यत्वे लक्षणैव। पाककार्यतावगम्यते इत्याधाराधेयभावसम्बन्धेन पाकविशेष्यककृतिसाध्यत्वप्रकारकान्वयबोधोजायते इत्यर्थः। अन्यथा प्रवृत्त्यनुपपत्तेस्तथा च प्रवर्त्तकज्ञानानुरोधाल्लक्षणेति भावः। इदञ्चाभ्युपगमवादेनोक्तं वस्तुतोधात्वर्थप्रत्ययार्थयोरभेदान्वयबोधस्याव्युत्पन्नतया क्रियासाधारणशक्तावपि शक्त्यानोपपत्तिरन्यथा नित्यनिषेधस्थलेऽपि तथान्वयबोधसम्भवादपूर्वलोपापत्तेरिति ध्येयम्। ननु लोके पचेतेत्यादौ लिङोलक्षणायां लिङ-

पदात् कार्य्यत्वरूपेण पाकोपस्थितिद्वारा पाकविशेष्यककार्य्यत्वप्रकारकान्वयबोधो जायतामिति वक्तुस्तात्पर्य्यमनुपपन्नं लिङो लक्षणया कार्य्यत्वमात्रोपस्थापकत्वादित्यत आह तत्रेति कार्य्यत्वे कार्य्यत्वोपस्थितौ । तात्पर्य्याद्वेति लोके लाघवात् केवलकार्य्यत्वोपस्थितौ लिङस्तात्पर्य्यात् केवलकार्य्यत्व एव वृत्तिरित्यर्थः नतु वृत्तेरिति अन्यत्रेति शेषः इदमापाततः लौकिकतात्पर्य्यस्य पुमिच्छानियन्त्रितत्वात्तत्र लाघवस्याकिञ्चित्करत्वात् । वस्तुतस्तु तात्पर्य्यस्याप्याकाङ्क्षानुरोधेन लक्षणाया अभ्युपगम इत्येव तत्त्वम् । ननु तथापि यन्मते वेदस्थले कृतिसाध्यत्वरूपकार्य्यत्वाश्रये लिङः शक्तिस्तन्मते कृतिसाध्यत्वरूपकार्य्यत्वस्यापि विशेषणविधया शक्यतया लोके शक्त्यैव कार्य्यत्वोपस्थितिसम्भवात् किं लक्षणया इत्यत आह तृतीयाया इति । न स्वतन्त्रं शक्यमिति धर्म्यंशे निर्विकल्पकशक्त्यापत्तेरिति भावः । कार्य्यत्वे लक्षणेति कृतिसाध्यत्वरूपकार्य्यत्वविशिष्टशक्तादीनामपि तादृशकार्य्यत्वे लक्षणैव इत्यर्थः । गतत्वेन—विशेषणत्वेन । स्वतन्त्रेति इतराविशेषणतयेत्यर्थः । तुषानुपवपतीति पुरोडाशाय कपालं पुरोडाशकपालमिति चतुर्थीसमासे सतीति शेषः पुरोडाशार्थतयेति पुरोडाशप्रयोजनकत्वरूपेणेत्यर्थः तदन्वितत्वेनेति पुरोडाशप्रयोजनकरूपपुरोडाशपदार्थान्वितत्वेन, शाब्दानुभवविषयस्य कपालस्येत्यर्थः, नोपवापाकाङ्क्षा इति एतच्च जिज्ञासायोग्यताकाङ्क्षेति मते एकप्रयोजनकत्वेनावगतस्य प्रयोजनान्तरे जिज्ञासाया असम्भवात् कपालस्य किं प्रयोजनमिति जिज्ञासा सम्भवतीति भावः । स्वतन्त्रकपालोपस्थितये इति पुरोडाशप्रयोजनकानन्वितत्वेन कपालशाब्दबुद्धये इत्यर्थः अधिष्ठानलक्षणेति पुरोडाशपदस्य पुरोडाशाधिष्ठाने मृण्मयपात्रे लक्षणेत्यर्थः । एवञ्च पुरोडाशाधिष्ठानाभिन्नकपालेन तुषानुपवपतीत्यन्वयबोधः पुरोडाशस्य कपालमिति षष्ठीतत्पुरुषः, पुरोडाशश्च तत्कपालञ्चेति कर्म्मधारयो वेति भावः । उपवापः स्फोटनं यद्यप्यत्र इतरविशेषणतया उपस्थितिनिबन्धनं न निराकाङ्क्षत्वमपि तु प्रयोजनान्तरवत्त्वोपस्थितिनिबन्धनमेवेति दृष्टान्तदार्ष्टान्तिकयोर्महद्वैषम्यमेव तथापि निराकाङ्क्षत्वनिबन्धनलक्षणामात्रे दृष्टान्तः । एतच्चापाततः जिज्ञासायोग्यताया आकाङ्क्षात्वाभावात् घटजनकेन दण्डेन गामभ्याजेत्यत्राप्येवंरूपेण निराकाङ्क्षतयाऽन्वयबोधानुपपत्तेः किञ्चावान्तरवाक्यार्थबोधपूर्व्वकमहावाक्यार्थबोधेऽस्त्वेवंरूपेण निराकाङ्क्षत्वं तथापि खलेकपोतन्यायेन युगपत्तथान्वयबोधे न काप्यनुपपत्तिः । वस्तुतस्तु वेदस्थले एकप्रयोजनकत्वविशिष्टस्य प्रयोजनान्तरे नान्वयः आनुपूर्व्वीभेदेन व्युत्पत्तिभेदात् वेदानुपूर्व्वीस्थले तथैव व्युत्पत्तेः सकलवैदिकैकवाक्यतया तथा निर्णीतत्वादित्यधिष्ठानलक्षणेत्येव तत्त्वम् । व्युत्पत्तिविरोध इति लोके लिङ्त्वावच्छेदेन क्रियानिष्ठकार्य्यताबोधकत्वमवधारितं वेदे च कार्य्ये धर्म्मिणि लिङ्शक्तौ तद्भङ्ग इत्यर्थः । लोके इति लिङ्त्वावच्छेदेनेति शेषः । क्रियाकार्य्यत्वे शक्तिः क्रियाविशेष्यककार्य्यत्वानुभवजनकता । कार्य्यत्वमात्रे इति शक्तिरवधारितेत्यनुषज्यते शक्तिरनुभवजनकता । न चेति वेदस्थले इति शेषः । धर्म्यन्तरे कार्य्ये धर्म्मिणि तद्भङ्ग इति क्रियानिष्ठकार्य्यत्वस्यैव लिङा बोधनादिति भावः । ननु तथापि लोकस्थले लिङः क्रियानिष्ठकार्य्यताबोधकतया प्रकृत्यर्थान्वितस्वार्थबोधकत्वं लिङ्त्वावच्छेदेन सिद्धं कार्य्ये धर्म्मिणि शक्तौ च तद्भङ्गः कार्य्ये धर्म्मिण्येव लिङर्थकार्य्यत्वान्वयादित्यत आह तस्मादिति लोकस्थले लिङः क्रियान्वितकार्य्यताबोधकत्वात् इत्यर्थः । प्रत्ययानां गृहीतमिति लिङ्प्रत्ययत्वावच्छेदेन गृहीतमित्यर्थः । न तु प्रकृत्यर्थान्विततया यावत् स्वार्थबोधकत्वमिति भावः । प्रत्ययार्थस्य—लिङ्प्रत्ययार्थस्य । न विरोध इति अपूर्व्वरूपस्वार्थस्यैव प्रकृत्यर्थान्वितत्वादिति भावः । तुष्यतु दुर्ज्जन इति न्यायेनाह अस्तु वेति । क्रियाकार्य्यत्व इति क्रियाकृतिस्तस्याः कार्य्यत्वं तत्साध्यत्वं इत्यर्थः शक्ततावच्छेदकञ्च लिङ्त्वमेव वेदेऽपि अपूर्व्वनिष्ठकृतिसाध्यत्वावगमादिति भावः । नानार्थन्यायेनेति हर्य्यादिपदन्यायेनेत्यर्थः । यथाश्रुतेऽस्यापि नानार्थतया नानार्थतुल्यत्वाभिधानस्यासङ्गतत्वापत्तेः । वेदे—वेदस्थले धर्म्यन्तरे कार्य्ये धर्म्मिणि शक्ततावच्छेदकन्तु अत्रापि लिङ्त्वमेवेति भावः । तथाच यथा हर्य्यादिपदस्थले एकमेव हरिपदत्वादिकं शक्ततावच्छेदकं विष्णुत्वचन्द्रत्वादिभेदेन शक्यतावच्छेदकञ्च नाना तथैवैकमेव लिङ्त्वं शक्ततावच्छेदकं शक्यतावच्छेदकञ्च कार्य्यत्वत्वं कार्य्यत्वञ्च द्वयमिति फलितोऽर्थः । न च लिङ्त्वावच्छेदेन कार्य्ये शक्तौ, लोकेऽप्यपूर्व्वलाभापत्तिरिति वाच्यं प्रागेव समाहितत्वात् तत्रापूर्व्वस्य बाधितत्वाच्चेति भावः ।"

मणिकृता तु एतन्मतं पूर्व्वपक्षीकृत्य दूषितम् । तच्च तत एवावसेयम् । विस्तरभयान्नोक्तम् ।

**कार्य्यकारणभाव** पुं० कार्य्यञ्च कारणञ्च तयोर्भावः । एकस्य स्वकारणापेक्षया कार्य्यत्वे तदपेक्षया चान्यस्य कारणत्वे

हेतुहेतुमद्भावे यथा घटदण्डयोः कार्य्यकारणभावः। "कार्य्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमो दर्शनान्तरदर्शनात्" सर्व्वद० बौद्धदर्शने। तत्र कार्य्यभेदेन कारणभेदे कारणशब्दे १९२८पृ०उक्तप्रायेऽपि किञ्चिदाधिक्यमुच्यते। कारणं तावत् द्विविधं मुख्यममुख्यञ्च तत्र घटादिकं प्रति मृदादिकं मुख्यं, तथा प्रत्यक्षे इन्द्रियमित्यादि। तद्भिन्नममुख्यं तच्च सहकारि कारणम्। मुख्यमपि त्रिविधं न्यायमते समवायि असमायि निमित्तमिति भेदात् तत्र घटादिकं प्रति मृदादिकं समवायिकारणं, कपालसंयोगादि असमवायिकारणं, दण्डादयो निमित्तकारणानि। तत्राद्ये असाधारणे एव कारणे। असाधारणकारणमपि कार्य्यभेदाच्चानाविधम्। निमित्तकारणमपि द्विविधं साधारणासाधारणभेदात् तत्र साधारणनिमित्तकारणानि चाष्टविधानि ईश्वरस्तज्ज्ञानेच्छाकृतयः दिक्कालौ अदृष्टं प्रागभावश्चेति भेदात्। असाधारणनिमित्तकारणानि चानेकविधानि। प्रतिबन्धकाभावस्य कारणत्वं नैयायिका मन्यन्ते। स च निमित्तकारणमेव। वेदान्तिनस्तु अभावस्य न कारणत्वम् इच्छन्ति "कथमसतः सज्जायेतेति" श्रुतेः नासतोविद्यते भावः" इति गीतोक्तेश्च। तदेतन्निर्णीतं तैत्तिरीयोपनिषद्भाष्ये यथा

"नित्यानाञ्चाकरणमभावस्ततः प्रत्यवायानुपपत्तिरिति। अतः पूर्व्वोपचितदुरितेभ्यः प्राप्यमाणायाः प्रत्यवायक्रियाया नित्याकरणं लक्षणमिति "अकुर्व्वन् विहितं कर्मेति" हि शतुर्नानुपपत्तिः। अन्यथा अभावाद्भावोत्पत्तिरिति सर्व्वप्रमाणव्याकोपः" भा०।

व्याकृतञ्चैतत् आनन्दगिरिणा यथा

"यच्चोक्तमकरणनिमित्तप्रत्यवायपरिहारार्थानि नित्यानीति तत्राह नित्यानाञ्चेति। आगामि दुःखं प्रत्यवाय उच्यते तस्य भावरूपस्य नाभावो निमित्तम् "पापः पापेनेति" श्रुतेः। निषिद्धाचरणनिमित्तत्वाद्दुःखस्येत्यर्थः। "अकुर्व्वन् विहितं कर्म निन्दितञ्च समाचरन्। प्रसजंश्चेन्द्रियार्थेषु नरः पतनमृच्छतीति" शतृप्रत्ययादकरणस्यापि प्रत्यवायनिमित्तत्वमवगतमित्याशङ्क्याह अतः पूर्व्वेति। यदि यथावन्नित्यनैमित्तिकानुष्ठानमभविष्यत्तदा सञ्चितदुरितक्षयोऽभविष्यत्। न चायं विहितमकार्षीदित्यतः प्रत्यवायो भविष्यतीति शिष्टैर्लक्ष्यते। यथा "विचिकित्सन् श्रोत्रिय" इति। ततः शतृप्रत्ययस्यान्यथाव्युत्पन्नत्वाच्च तद्बलादकरणे हेतुत्वमवगन्तुं शक्यत इत्यर्थः। "लक्षणहेत्वोः क्रियायाः" इति (पा०) शतृप्रत्ययस्योभयत्र विधाने सति किमिति हेतुत्वमेव न गृह्यते? तत्राह अन्यथेति। अभावरूपस्य कार्य्यस्य भावरूपमेव कारणमिति प्रत्यक्षादिभिरवगतं शतृप्रत्ययादभावस्य हेतुत्वाभिधाने सर्व्वप्रमाणविरोधः स्यादित्यर्थः।

ननु त्वयाप्यकरणस्य प्रत्यवायलक्षणत्वमिष्टम्। भाट्टैश्चानुपलब्धस्याभावप्रमितिहेतुत्वमिष्यते। तार्किकैश्च प्रतिबन्धकाभावस्य तत्तत्प्रागभावस्य च तत्तत्कार्य्यव्यवस्थापकत्वमिष्यते तत्कथं भावस्यैव कारणत्वम् तदुक्तम्। 'भावो यथा तथाऽभावः कारणं कार्य्यवन्मतम्" इति उच्यते। "अस्माभिस्तावदभावस्य स्वरूपेण कारणत्वं नेष्टं किन्तु तज्ज्ञानस्य प्रत्यवायगमकत्वमिष्टम्। तेन च रूपेण न प्रत्यवायजनकत्वमिष्यते। नित्याकरणाज्ञाने प्रत्यवायाभावप्रसङ्गात्। भाट्टानामपि च केषाञ्चिज्ज्ञातस्य योग्यानुपलम्भस्याभावप्रमितिहेतुत्वमिष्टं ज्ञानध्वंसतया तु प्रमितिहेतुत्वेऽभावप्रमायाः प्रत्यक्षत्वापातः। मार्किकाणामपि प्रतिबन्धकाभावस्य कारणत्वेऽन्योन्याश्रयत्वप्रसङ्गाच्च प्रामाणिकत्वम्। प्रागभावस्यापि ज्ञातरूपेण जन्यज्ञापकत्वमेव। यस्मादिदं प्राङ्नासीत्तस्मादिदानीं जातमिति। न तु जनकत्वं प्रागभावस्य, नियतप्रागभावित्वेन कारणत्वे प्राक्कालस्य स्वष्टत्तितापातः। प्रागभावित्वमपि चान्यथासिद्धमित्युक्तं तत्त्वालोके"।

कार्य्यविवृतिश्च कार्य्यशब्दे उक्ता। तत्र समवायिकारणोत्पाद्यं समवेताख्यमुपादेयमित्युच्यते तद्भिन्नं कार्य्यं कार्य्योत्पाद्यादिशब्देन व्यवह्रियते इति भेदः।

**कार्य्यकुशल** त्रि० ७त०। कार्य्यक्षे क्रियादक्षे।

**कार्य्यचिन्तक** त्रि० कार्य्यं चिन्तयति चिन्ति–ण्वुल् उप० स०। कर्त्तव्यविषये कृताकृतचिन्तके। "धर्म्मज्ञाः शुचयोऽलुब्धाभवेयुः कार्य्यचिन्तकाः" याज्ञ०।

**कार्य्यता** स्त्री कार्य्यस्य भावः तल्। १कर्त्तव्यतायां २कृतिसाध्यतायाम्। त्व कार्य्यत्व तत्रार्थे न०। गुरुमते यथा च तज्ज्ञानस्यैव प्रवर्त्तकत्वं तथा शब्दचि० गुरुमतप्रदर्शने दर्शितं यथा। "कार्य्यत्वज्ञानं प्रवर्त्तकमिति गुरवः तथाहि ज्ञानस्य कृतौ जनयितव्यायां चिकीर्षातिरिक्तं न कर्त्तव्यमस्ति तत्सत्त्वे कृतिविलम्बहेत्वन्तराभावात्। चिकीर्षा च कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयेच्छा पाकं कृत्या साधयामीति तदनुभवात्। सा च स्वकृतिसाध्यताज्ञानसाध्या इच्छायाः स्वप्रकारकधीसाध्यत्वनियमात् अतएव स्वकृति-

साध्ये पाके प्रवर्त्तते न त्विष्टसाधनताज्ञानसाध्या, स्वकृत्य-साध्ये चिकीर्षापत्तेः। स्वकृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेत् न तदभावस्य कारणत्वे गौरवात् अथाभाव उभयसिद्धः कृतिसाध्यताधारसिद्धेत्यतो न लाघवावसर इति चेत् न यत्र शब्दादनुमानाद्वा दैवात् सा, तत्र लाघवावतारात् इच्छायाः स्वप्रकाशकज्ञानसाध्यत्वनियमेन कृतिसाध्यत्वज्ञानस्यावश्यकत्वात् जनकज्ञानं विघटयदेव ज्ञानस्य प्रतिबन्धकत्वाच्च व्याप्तिधीविघटनद्वारानुमितिप्रतिबन्धकानैकान्तज्ञानवत् अन्यथा स्वकृत्यसाध्यत्वानिष्टसाधनत्वोपेक्षणीयत्वनिष्फलत्वज्ञानं प्रतिबन्धकं क्रियाज्ञानमेव प्रवर्त्तकं कल्प्येत। ननु सनोधात्वर्थगोचरेच्छावाचित्वाल्लाघवाच्च कृताविच्छा चिकीर्षा सा च दृष्टाविवेष्टसाधनताज्ञानादिति चेत् न वह्निना साधयामीतिवत् कृत्या-साधयामीतीच्छायाः कृतिपूर्व्वमनुभूयमानायाः सनन्तवाच्यत्वेन गौरवेण च प्रत्याख्यातुमशक्यत्वात्। किञ्च पाकं चिकीर्षतीत्यत्र प्राधान्येन पाकस्येच्छाविषयत्वमनुभूयते न तु कृतेः, धातोश्च सनप्रत्ययाभिधेयेच्छाप्रकारवाचित्वम् ओदनं बुभुक्षत इत्यत्र भोजनविषयतयौदनस्येच्छाविषयत्वानुभवात् इष्टसाधनत्वेन दृष्टाविव कृताविच्छासम्भवेऽपि कृतीच्छा न प्रवर्त्तिका किन्तु कृतिसाध्येच्छैव। घटं जनाति चिकीर्षति करोतीति ज्ञानचिकीर्षाप्रवृत्तीनामेकविषयत्वानुभवात्। अथ यदि कृत्या साधयितुमिच्छा सा तदा चिकीर्षितस्य पाकस्यान्यतः सिद्धौ सा नापगच्छेत् नह्युपाय विशेषसाध्यत्वेनेच्छोपायान्तराधीनफललाभेन निवार्यते प्रीत्या धनलाभेऽपि प्रतिग्रहेण तल्लिप्साया अनिवृत्तेरिति चेत् न स्वविषयसिद्धत्वस्य फलेच्छाविच्छेदस्य चोपायेच्छाविरोधित्वात् अस्ति च तत्र पाकौदनयोः सिद्धता। अन्यौदनेच्छायां पाकचिकीर्षा भवत्येव प्रत्युत असिद्धत्वात् कृतावेवेच्छा न विच्छिद्येत यदि कृतिविषयसिद्धत्वफलेच्छाविच्छेदौ न विरोधिनौ प्रीत्या धनलाभेऽपि तदधिकधनेच्छा न विच्छिद्यते तस्य असिद्धत्वात् तत्फलेच्छायाश्च सत्त्वात् धनमात्रार्थिनश्च प्रीत्या तल्लाभे प्रतिग्रहेण तल्लिप्सा नास्त्येव धनमात्रस्य सिद्धत्वात् किञ्चिद्विशेषस्य सिद्धैव हि सामान्येच्छाविच्छेदः। अन्यथा सकलस्वविषयसिद्धेरसम्भवेन तद्विच्छेदो न स्यादेव। वस्तुतस्तु क्रियानुकूला कृतिरिष्टोपाय इति ज्ञाने क्रियायाः कृतिसाध्यत्वम् इष्टोपायत्वञ्च भातं क्रियाद्वारैव कृतेरिष्टसाधनत्वादिति तद्बोधात् कृताविव कृतिसाध्यत्वेन क्रियायामपि सैवेच्छेति चिकीर्षायां कृतिसाध्यताप्रकारनैयत्यम्। अतः कृतिसमानविषयचिकीर्षात्वेन चिकीर्षायाः कृतिकारणत्वं न तु कृतीच्छात्वेन भिन्नविषयतया गौरवात् तथापि येन रूपेण यस्येष्टसाधनत्वं तेन प्रकारेण तत्रेच्छा यथा स्वकेदारवृष्टित्वेनेष्टसाधनत्वात्तथैवेच्छा तथा कृतिसाध्यत्वेन पाकस्येष्टसाधनत्वम् अतः कृतिसाध्यत्वेन तत्रेच्छा भवतीति कृतौ कृतिविषये वा चिकीर्षायां न दृष्टीच्छाविलक्षणसामग्र्यन्तरकल्पनमिति चेत् भवेदेवं यदि कृतिसाध्यत्वेन पाकस्यौदनसाधनता स्यात् न चैवं, गौरवात् किन्तु पाकत्वेन, सा तु कृतिं विना नेत्यन्यदेतत्। वह्निना साधयामीतिवत् कृत्या साधयामीतीच्छा इष्टसाधनताज्ञानादेवेति चेत् तर्हि तत्र वह्निसाध्यताज्ञानवदत्रापि कृतिसाध्यताज्ञानं कारणमावश्यकं कृतौ चानुभवसिद्धं चिकीर्षाधीनत्वं विशेषः, तेन प्राणपञ्चकसञ्चारे जीवनयोनिकृतिसाध्ये न प्रवृत्तिः। अन्यथा कृतिसाध्येष्टसाधनतापत्तेऽपि तत्र प्रवर्त्तेत ननु चिकीर्षाधीनत्वस्य उपलक्षणत्वे उपलक्ष्यमात्रगतानतिप्रसक्तधर्माभावात् कृतिमात्रस्य चातिप्रसङ्गात् तत्तत्कृतिविशेषा उपलक्ष्याः तथा च तदननुगमात् प्रवृत्तेरननुगमः विशेषणत्वे चिकीर्षायां प्रवृत्तौ च चिकीर्षाज्ञानकारणत्वे गौरवं प्रमाणाभावश्च। किञ्च चिकीर्षासाध्यावस्थायाः कृतेः सिद्धावस्थसाधनस्य विरोधेन कृतिसाध्यता पाकादौ न ज्ञायेतेति चेत् न, अस्ति हि कृतिविशेषो मानसप्रत्यक्षसिद्धो जीवनयोनियत्नव्यावृत्तः स्वचिकीर्षोपलक्ष्यः यत्र चिकीर्षाकारणत्वग्रहः स च तव जातिरूपो मम त्वनुगतकारणोपाधिरूपः। एवञ्च चिकीर्षाधीनत्वेनानुगतेन कृतिविशेषाणामुपलक्ष्यमाणानामनुगतत्वमपि यथा गोत्वेन तटस्थेनोपलक्षिता महिष्यादिव्यावृत्ता धान कर्मव्यक्तिविशेषा धेनुपदेनोच्यन्ते न तु गोत्वमपि, तथा चिकीर्षापि, एवं जीवनयोनिव्यावृत्तकृतिविशेषाणां कृतित्वेन ज्ञानं कारणमिति नाननुगमः। ननु कृतिसाध्ये न कृतिर्विशेषणम् असत्त्वात् सत्त्वे वा कृतौ सत्यां ज्ञानं ज्ञाने च कृतिरित्यन्योन्याश्रयः नोपलक्षणम् अतिप्रसङ्गादिति चेत् न कृतिर्हि ज्ञाने विषयतया विशेषणमेव साध्ये च परिचायकतयोपलक्षणम् अन्यथेष्टसाधनेऽपीष्टं न विशेषणम् असत्त्वान्नोपलक्षणम् अतिप्रसङ्गात् लिङ्गज्ञानादौ वा का गतिः। नन्वेवं श्रमेऽपि चिकीर्षा स्यात् तस्यापि चिकीर्षाधीनकृतिसाध्यत्वात्। श्रमस्तु भोजनादिक्रियासाध्यो न

असिद्धावस्थावतः कार्य्यानुत्पत्तेः । तथा च पाकादेरसिद्धत्वसिद्धत्वज्ञाने साध्यत्वसाधनत्वग्रहः नचैकमेकेनैकदा सिद्धमसिद्धञ्चेति ज्ञायते । न च स्वरूपगतता साध्यत्वसाधनत्वयोरतो न विरोध इति वाच्यं यदि हि स्वरूपनिबन्धनं तदुभयं तत्स्वरूपं सदैव सिद्धमसिद्धञ्च स्यात् । भिन्ननिरूपितत्वेऽपि तयोः सिद्धत्वासिद्धत्वेऽनवगम्याज्ञानात् । तस्मात् समयभेदोपाधिकएव तदुभयसम्बन्धः । पाके इदानीं साध्यत्वम् अग्रे च साधनत्वं ज्ञायत इति चेत् ? न, इदानीमग्रिमपदार्थयोर्नानात्वादननुगमेन व्याप्त्यग्रहात्, शब्देन तथा प्रतिपादयितुमशक्यत्वात् गौरवाच्च । स्वकृतिनः सिद्धमिष्टसाधनमिति ज्ञानाच्चिकीर्षा, न हि सिद्धं कश्चिच्चिकीर्षति, कृतेः पूर्व्वं कृतितः सिद्धमिति ज्ञानाभावाच्च । न च कृतिसाध्यत्वेन पाकादेरिष्टसाधनत्वात् साधनत्वमपि साध्यं न हि कृतिसाध्यत्वेन पाकस्यौदनसाधनतेत्युक्तम् । तस्मात् कृतिक्रियमाणविलक्षणं कृत्यनन्तरभविष्यत्तारूपं कृतिसाध्यत्वं चिकीर्षाप्रयोजकं, तादृशञ्च साधनत्वविरोध्येव किञ्च साधनत्वस्य सिद्धमात्रधर्म्मत्वात् साधनत्वज्ञानमिच्छाविरोधि । न हि कश्चित् सिद्धमिच्छतीत्युक्तम् । एतेन इष्टाद्यविष्टसाधनताज्ञानमुपायेच्छाकारणत्वेन क्लृप्तमिति निरस्तम् कथं तर्हि स्वतोऽसुन्दरे दुष्टादाविच्छा ? तत्साध्येष्टज्ञानादिति द्रष्टव्यम् । अन्ये तु सुखदुःखाभावतत्साधनेष्विच्छाप्रयोजकमनुगतमुद्देश्यत्वं पुरुषार्थपदवेद्यं धर्म्मान्तरमस्ति अनुगतकार्य्यस्यानुगतकारणनियम्यत्वात् तदेव दुःखसाधनव्यावृत्तसुखतत्साधनादौ चिकीर्षाप्रयोजकमिति । न च दुःखविरोधित्वमेव तथाऽस्त्विति वाच्यं सहानवस्थाननियमविरोधस्यासम्भवात् । बध्यघातकभावस्यैकसमये सामानाधिकरण्याभावस्य च यत्नादिसाधारण्यादिति तन्न तदज्ञानेऽपि सुखत्वज्ञानादिच्छोत्पत्तेः न हि सुखे ज्ञाते धर्म्मान्तरज्ञानं विना नेच्छा । तथात्वे स्वतः प्रयोजनत्वहान्यापत्तेः तदेव हि स्वतः प्रयोजन-यदन्यगतं सत् स्ववृत्तितयेष्यते । किञ्चानुगतधर्म्मकल्पनापि कारणैः, न च सुखादाविच्छाकारणत्वमनागतत्वात् किन्तु तदवगमः । तर्हि सुखादिज्ञाने तत्स्वरूपसदेवेच्छाप्रयोजकमस्त्विति चेत् ? न, यथाह्युद्देश्यत्वं सुखज्ञानादिषूत्पद्यते अन्यतरत्वात् तृणारणिमणिन्याययाद्वा तथेच्छैव जायताम् । कृतिसाध्यत्वञ्च कृतौ सत्यामपि सत्वे स्वरूपं न कृतिं विना । क्षेमसाधारणञ्चैतत् कृतिसाध्यत्वं न तु कृतेः पूर्व्वम् । ननु कृतौ नष्टायां सन्नपि धर्म्मो न कार्य्यं, तथा च कथं कार्य्येऽपूर्व्वे कामिनोऽन्वयः क्षणिकत्वेन क्रियातुल्यत्वादितिचेत् ? न, यद्वृत्ति काम्यसाधनत्वं तत्र कार्य्यताबुद्धेः प्रयोजकत्वात् न तु कार्य्यताविशिष्टस्य काम्यसाधनतेति व्याप्तिः । ननु पाकादौ कृतिसाध्यताज्ञानं न प्रत्यक्षेण, कृत्यनन्तरं पाके सति कृतिसाध्यताज्ञानं तस्मिन् सति कृतिरित्यन्योन्याश्रयात् । कृतिसाध्यतोत्तीर्ण्णे चिकीर्षाकृत्योरसम्भवाच्चेति चेत् न पाकोमत्कृतिसाध्योमत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वात् दैवाद्यनधीनत्वे सति मदिष्टसाधनत्वाद्वा मद्भोजनवत् इत्यनुमानात् स्वकृतिसाध्यत्वज्ञानं, यस्य यदिष्टसाधनं यत्कृतिं विना यदा न सम्भवति तत्तदा तत्कृतिसाध्यमिति व्याप्तेः असिद्धस्येष्टसाधनत्वाभावात् । बलवदनिष्टाजनकत्वञ्च लिङ्गविशेषणं तेन मधुविषसम्पृक्तान्नभोजने न व्यभिचारः अतीतपाके कृतिसाध्यतोत्तीर्ण्णे च न व्यभिचारः सामान्यतस्तस्याऽपि कृतिसाध्यत्वात् । अतीततादृशायाञ्चातीतोदने इच्छाविरहे स्वेष्टसाधनत्वाभावात् अतएव निदाघदूनदेहोवर्षति वारिदे तोयदात्तोयलाभसम्भावनायां वा सरोवगाहने न प्रवर्त्तते इष्टसन्तापशान्तिसाधनस्य तोयसम्बन्धस्य स्वकृतिं विनाऽपि सिद्धिप्रतिसन्धाने लिङ्गाभावेन स्वकृतिसाध्यत्वज्ञानाभावात् । यदा च मत्कृतिं विना स न सम्भवतीति प्रतिसन्धत्ते, तदा प्रवर्त्तते । यस्य सन्तापशान्तिमात्रमिष्टं स सरोवगाहनस्येष्टसाधनत्वमेव न प्रतिसन्धत्ते । उपस्थितवृष्टितोऽपि तत्सम्भवादिति कश्चित् । तन्न तोयसम्बन्धत्वेन न सन्तापशान्तिसाधनत्वं तस्य सरोऽवगाहनेऽपि सत्त्वात् अन्यथा वृष्टिरपि तत्साधनं न स्यात् सरोऽवगाहनादपि तत्सिद्धेः किन्तु कार्य्यभेदसाधनत्वं कृतिसाध्यत्वेन लिङ्गं पाकादिवदोदनादेरपि प्रवृत्तेः पूर्व्वं कृतिसाध्यत्वज्ञाने हेत्वभावात् । नन्वेवं लिङ्गज्ञानमेव प्रवर्त्तकमस्तु प्राथमिकत्वादावश्यकत्वाच्च । न च लाघवात् कृतिसाध्यताज्ञानं तथा, कृतिसाध्यतानुमितौ तदा मानाभावेन युगपदुपस्थित्यभावात् प्रवृत्तिसामग्र्या अनुमितिप्रतिबन्धाच्चेति चेत् न लिङ्गज्ञाने कृतिसाध्यताप्रकाशे तत्प्रकारकचिकीर्षायां तस्याहेतुत्वात् । अतएव लिङ्गान्तरज्ञानमपि न प्रवर्त्तकम् । ननु पाकादिः कृतः क्रियमाणोवा न पक्षः तस्य कृतिसाध्यत्वे बाधात् नाप्यनागतः भाविपाके मानाभावेनाश्रयासिद्धेः । पाकत्वं भविष्यद्वृत्ति सामान्यत्वात् गोत्ववदिति मानमिति चेत् ?

तत्कृतिसाध्योऽचिकीर्षितत्वात् कृतेः स्वध्वंससाक्षात्-कारातिरिक्ते चिकीर्षाविषयमात्रे जनकत्वात् नहि भोजनादिचिकीर्षाधीनकृत्या गमनं साध्यत इति केचित् तन्न गुरुतरभारोत्तोलने कृत्यसाध्ये श्रमात् पुरुषस्य निगडनिश्चलबद्धदेहस्य वा कृतौ सत्यामुद्वेलनचलनक्रियानुत्पादेऽपि श्रमानुभवात् कृतेरेव कारणत्वात्। न तु तज्जन्यक्रियायाः, सुखे व्यभिचाराच्च न हि सुखं कृतिसाधनचिकीर्षाविषयः उपायचिकीर्षाजन्या हि कृतिः न तु सुखचिकीर्षाजन्या। चिकीर्षाजन्यकृतिसाध्यत्वं न श्रमे, द्वेषयोनियत्नादपि तदुत्पत्तेरित्यपरे तन्न यत्नबधस्येष्टसाधनत्वेन चिकीर्षाजन्यकृतिसाध्यत्वात् द्वेषस्य यत्नाजनकत्वात् द्वेषसिद्धिस्तु यत्नं द्वेष्मीत्यबाधितानुभवबलात्। यत्तु श्रमः कृतित्वेन कृतिसाध्यो न चिकीर्षाधीनकृतित्वेन, यद्यचिकीर्षितेऽपि श्रमे चिकीर्षाधीनकृतित्वेन कारणता स्यात्तदा चिकीर्षितमेव भोजनं कृत्या साध्यते नाचिकीर्षितं गमनादीति न स्यात् श्रमवद्गमनेऽपि तज्जन्यत्वप्रसङ्गात् भोजनादिश्च चिकीर्षाधीनकृतिविशेषात् सहि कृतिमात्रं व्यभिचरति जीवयोनिकृतेस्तदनुत्पादात्। यद्वा श्रमो न भोजनकृतिसाध्यः किन्तु तदनन्तरोत्पन्नाज्जीवनयोनियत्नादेवेति तन्न नहि कृतित्वेन श्रमजनकत्वं नापि कृत्यन्तरादेव श्रमोत्पत्तिः जीवनयोनियत्नेन चापि भारोद्वहनादि कर्म कुर्व्वतस्तादृशश्रमानुभवेन तस्य श्रमाजनकत्वात्। तस्माद्भोजनादिवत् श्रमविशेषाणामपि भोजनादिकृतिसाध्यत्व मनन्यगतिकत्वात्। सुप्तस्य स्वेदाद्यनुमितः श्रमस्तज्जन्य इति चेत् न स्वेदादेः श्रमान्यहेतुकत्वात् अन्यथा जागरेऽपि तदनुवृत्तौ श्रमानुवृत्तिप्रसङ्गादिति मैवं स्वेच्छाधीनत्वस्य कृतिविशेषणत्वात्। श्रमश्च नियमतोऽन्येच्छाधीनकृतिसाध्यः श्रमे दुःखत्वेन इच्छाविरहात्। अतएवान्येच्छाजन्यकृतिसाध्यत्वेन श्रमोनान्तरीयक इत्युच्यते। स्वचिकीर्षाधीनत्वन्तु न कृतौ विशेषणं, गौरवात्। अन्ये तु कृतिगतधर्मान्तरमेवोद्देश्यत्वं तद्विशिष्टकृतिसाध्यश्च न श्रमः अचिकीर्षितत्वात् किन्तु कृतिमात्रसाध्यः अतएव कष्टं कर्मेत्यनुभवो लोकानाम्। एवं चिकीर्षायां ममैकं कृतिसाध्यत्वं प्रयोजकं तत्र तु कृतिसाध्यत्वे सतीष्टसाधनत्वं सुखत्वं दुःखाभावत्वञ्चेति चतुष्टयम् इच्छाप्रयोजकन्तु मम सुखत्वं दुःखाभावत्वञ्चेति द्वयं इष्टसाध्ये सुखे हीच्छा वृत्तिमपि विषयीकरोति। नत्विष्टसाधनत्वेन तत्रेच्छासाधनत्वस्य इच्छाविरोधित्वात् तत्र तु वयम् विषभक्षणे कृतिसाध्यत्वेऽपि बलवदनिष्टसाधनत्वेन चिकीर्षा नास्तीति कृतौ चिकीर्षाजन्यत्वं विशेषणमिति कश्चित् तत्तुच्छं विषभक्षणे कृतिसाध्यत्वमेव न स्यात् जीवनयोनिकृतेस्तस्यानुत्पत्तेरिति व्यर्थविशेषणम्। स्यादेतत् इष्टसाधनताभ्रमाद्विषभक्षणे चैत्यवन्दने च चिकीर्षाजन्यकृतिसाध्यत्वमस्ति ज्ञानप्रयुक्तत्वात् कार्य्यत्वस्य, तथाच सञ्जातबाधोऽपि तत्र कार्य्यज्ञानात् प्रवर्त्तेत तथा तृप्तोऽपि भोजने नतु कृतिसाध्यत्वानुभवस्तथा, अन्यथेष्टसाधनताभ्रमे विषभक्षणेऽपि प्रवर्त्तेत। नचेष्टसाधनताज्ञानं वेदोवानुभावकोऽस्त्विति चेत् न वस्तुतस्तत्र कृतिसाध्यत्वे लिङ्गान्तरेणाप्तवाक्येन वा तदनुभवासम्भवात् लिङ्गाभासाच्छब्दाभासाद्वा प्रवृत्तिप्रसङ्गाच्च भेदाग्रहवादिनस्तत्र तदनुभवाभावात् मैवं स्वविशेषणवत्ताप्रतिसन्धानजन्यं हि कार्य्यताज्ञानं प्रवर्त्तकं तथाहि काम्ये पुरुषविशेषणं कामना, ततः काम्यसाधनाज्ञानेन यागपाकादौ कार्य्यताज्ञान नित्ये च कालशौचादि स्वविशेषणं तथाचैतत्सन्ध्यायामहं कृतिसाध्यसन्ध्यावन्दनः सन्ध्यासमये शौचादिमत्त्वात् पूर्व्वसन्ध्यायामहमिवेति, कार्य्यताज्ञानं शौचादिस्वविशेषणज्ञानजन्यम्। तदुक्तं "स कार्य्यविशेषः पुरुषविशेषभावगतः प्रवृत्तिहेतुरिति"। संजातबाधस्य च विषभक्षणे चैत्यवन्दने च भ्रमदशायामिव नेष्टसाधनताज्ञानमस्ति येन तज्जन्यकार्य्यताज्ञानात् प्रवर्त्तेत। तृप्तस्य च तृप्तौ कामनाविरहेणेष्टसाधनताज्ञानाभावान्न तथा बोधः। अन्ये त्वात्मनो जीवत्वप्रतिसन्धानजन्यं श्रमे कृतिसाध्यताज्ञानं न सम्भवतीति जीवनव्यतिरिक्तत्वं स्वविशेषणे विशेषणमिति, तन्न श्रमे स्वेच्छाधीनकृतिसाध्यत्वज्ञानाभावेन साध्यत्वाभावात्। इष्टसाधनतालिङ्गं कार्य्यताज्ञानं प्रवर्त्तकमित्यपरे तन्न नित्ये तदभावात्। ननु विषभक्षणव्यावृत्तमिष्टसाधनत्वमेव कृतिसाध्यताज्ञाने विषयतया विशेषणमस्तु स्वविशेषणवत्ताज्ञानजन्यत्वापेक्षया लघुत्वात्। किञ्चोपायविषया चिकीर्षा इष्टसाधनताज्ञानसाध्या उपायेच्छावत् वृष्टीच्छावत्। भोगचिकीर्षायां तदभावादप्रयोजकमिष्टसाधनत्वमिति चेत् न तथापि स्वविशेषणधीजन्यत्वाभावेन तत्र तस्याप्रयोजकत्वात् कृतिहेतुचिकीर्षायां तत्प्रयोजकं न भोगचिकीर्षायां तथा, उपायचिकीर्षात एव कृतिसम्भवादिति चेत् तुल्यमिति मैवं साध्यत्वसाधनत्वयोर्विरोधेनैकत्र ज्ञातुमशक्यत्वात् असिद्धावस्थस्य हि साध्यत्वं, सिद्धतादशायां तदभावात् सिद्धतादशायाञ्च साधनत्वम्

न मानाभावेन गोत्वेऽपि तस्याप्रसिद्धेः। पाकमात्रं पक्षः इति चेत् न मात्रार्थो यदि पाकत्वं तदा बाधो लङ्गासिद्धिश्च। सर्व्वपाकपरत्वे च तस्य सिद्धपाकभागे बाधः, अनागतभागे चाश्रयासिद्धिः। वर्त्तमानाद्युदासीनः पाकः पक्षः पाकसामान्ये च कृतिसाध्यत्वं बाधितमित्यनेन सिद्धस्य पक्षत्वं नासिद्धस्येत्यनुमितेश्च सिद्धविषयत्वे बाधात् भिन्नविषयत्वे चासिद्धविषयेच्छाप्रवृत्त्यनुत्पादकत्वात्। क्रियमाणसाधारणकृतिसाध्यताज्ञानादेवासिद्धविषया चिकीर्षा कृतिश्चोत्पद्यते अनन्यगतिकत्वेन तथा कारणत्वभावकल्पनादिति चेत् तर्हि यादृशं कृतिसाध्यत्वं चिकीर्षायां प्रकारः तादृशं ज्ञाने नास्तीत्यन्यप्रकारकज्ञानादेव चिकीर्षा स्यात्। तथा च लिङ्गज्ञानमेव प्रवृत्तिहेतुरस्तु प्राथमिकत्वात्। यत्तु स्वतपाके कृतसाध्यत्वासंसर्गाग्रहात् प्रवृत्तिः, स्वत्वासंसर्गाग्रह इष्टसाधनताज्ञानादिति, तन्न स्वतपाकस्य सिद्धत्वेन तत्र कार्यत्वासंसर्गाग्रहानुमानबाधात्। स्वतपाकस्य सिद्धत्वं तदा न गृह्यते इति चेत् तर्हि स्वतपाकस्य सिद्धत्वग्रहे ओदनार्थी पाके न प्रवर्त्तेत सिद्धौदनोऽपि पाके तृप्तोऽपि भोजने प्रवर्त्तेत। ननु तत्र पाकादौ सिद्धत्वग्रहात् तदसंसर्गाग्रह इति चेन् तुल्यम्। अपि च स्वतपाके कार्यत्वासंसर्गाग्रहाद्वियमानासंसर्गाग्रहाद्विसंवादिनी प्रवृत्तिः स्यात्। किञ्चैवं सिद्धपाकज्ञानादज्ञानेऽसिद्धे पाक इच्छाप्रवृत्ती स्यातामिति। अत्र ब्रूमः। पाके कृतिसाध्यत्वं सिद्ध्यत् सिद्धे बाधादनागतं पाकमादाय सिद्ध्यति। पक्षतावच्छेदकधर्म्मसामानाधिकरण्यं साध्यमानस्य सिद्धे न सिद्ध्यतीत्यनुमाने क्लृप्तत्वात् यथा प्रसिद्धवह्निबाधेऽपि वह्निमात्रं न बाधितमित्यप्रसिद्धोऽपि वह्निः सिध्यति। अप्रसिद्धयोः पक्षसाध्ययोः सिद्धावविशेषात् तस्मात् "असिद्धस्य क्वचित् सिद्धेः सिद्धे सिद्धस्य च क्वचित्। अप्रसिद्धस्य चासिद्धे सिद्धिस्तेनानुमा त्रिधा"। अन्यथा कृतिसाध्येष्टसाधनतापक्षेऽपि पाकादौ कृतिसाध्यत्वं कथमवगम्यते?। किञ्च तवापीष्टसाधनताज्ञानात् कथं दृष्टादाविच्छा? सिद्धत्वस्येच्छाविरोधित्वादनागतस्य ज्ञातुमशक्यत्वात्। अतएव सिद्धासिद्धविषयनिरासेन सुखादिज्ञानात् फलेऽपि नेच्छेति न दृष्टादाविष्टसाधनतापि। न च वृष्ट्यादिसाध्येष्टज्ञानाद्वृष्ट्यादाविच्छा इच्छायाः सिद्धासिद्धवृष्ट्यादितत्फलविषयकत्वविकल्पग्रासात्। अथ सामान्यलक्षणाप्रत्यासत्त्या वृष्ट्यादित्वेन सुखादित्वेन च सिद्धासिद्धवृष्ट्यादितत्फलविषयकज्ञानसुपन्नं तेन सिद्धं विरोधिनं त्यक्त्वाऽसिद्धविषयेच्छोत्पद्यते। यदि च सामान्यलक्षणा नास्ति तदा येन रूपेण इष्टसाधनताग्रहस्तेन रूपेण ज्ञातेऽसिद्धे चेच्छोत्पद्यते अन्वयव्यतिरेकाभ्यां तादृशज्ञानस्य तादृशेच्छाजनकत्वावधारणात्। सुखेच्छायामप्येवमिति चेत् तर्हि ममापि पाकत्वावच्छेदेन कृतिसाध्यताज्ञानादनागते चिकीर्षा। तच्च ज्ञानं सकलपाकविषयं सन्निकृष्टपाकविषयं वेत्यन्यदेतत्। बालस्य व्याप्त्याग्रहेऽप्याद्या प्रवृत्तिर्जीवनादृष्टोद्बोधितजन्मान्तरीयसंस्कारजन्यात् स्तनपानं कार्यमिति स्मरणात् तत्रापीष्टसाधनतास्मरणात्तत्र प्रवृत्तिरनन्यगतिकत्वात्। न च जन्मान्तरेऽपि पर्यनुयोगः, जन्मधाराया अनादित्वात्। प्रत्यक्षानुमानमूलत्वाच्च नान्धपरम्परा। वस्तुतस्तु शुष्ककण्ठतया बालो दुःखमनुभवन् विरोधितया सुखं स्मरति ततः सुखवृत्ति कार्यत्वं सुखवृत्तितया अन्तरङ्गत्वात् मातुःस्तनपानमिष्टसाधनमिति स्मरणं सुखावृत्तित्वेन बहिरङ्गत्वात्। सुखकार्यत्वञ्च स्तनपानद्वारा जन्मान्तरानुभूतमिति कार्यत्वस्मरणे स्तनपानमपि विषयः तेन स्तनपाने कार्यत्वज्ञानादेव प्रवृत्तिः इष्टसाधनताज्ञानस्य तदानीं सामग्र्यभावात्। एवञ्चाद्यप्रवृत्तौ कार्यताज्ञानं प्रयोजकं क्लृप्तमित्यग्रेऽपि तदेव प्रवर्त्तकं क्लृप्तत्वात्"।

अत्र दिङ्मात्रं मथुरानाथव्याख्या प्रदर्श्यते।

"कार्य्यताज्ञानमिति कृतिसाध्यताज्ञानमित्यर्थः, न च कृतिसाध्यताज्ञानं विनापि घटयागपाकादिकर्त्तुस्तदुपायकपालहविस्तण्डुलादिसिद्धविशेष्यकप्रवृत्तिदर्शनाद्व्यभिचार इति वाच्यं प्रवृत्तेर्हि विषयता त्रयी एका साध्यत्वाख्यविषयता सा च यन्निष्ठकृतिसाध्यताज्ञानचिकीर्षादिना प्रवृत्तिस्तन्निष्ठा, तच्च घटयागपाकाद्येव न तु तज्जनकीभूतकपालहविस्तण्डुलादिसिद्धनिष्ठा अतएव घटं करोमि यागं करोमीत्याद्येवानुव्यवसायो। न तु कपालहविरादेः सिद्धतादशायां कपालं करोमि हविः करोमीत्याद्यनुव्यवसायः व्यवहारो वा कृतिवाचिधातुयोगिद्वितीयायाः साध्यताख्यविषयतार्थकत्वनियमात्। न च साध्यताख्याया एव विषयतायाः कृतिवाचिधातुयोगिद्वितीयार्थत्वनियमे कपालतन्त्वादेः सिद्धतादशायां कपालं करोति तन्तुं करोतीत्यादि व्यवहाराभाववत् कपालं घटवत् करोति तन्तुं पटवन्तं करोतीत्यादि व्यवहारोऽपि न स्यादिति वाच्यं साध्यत्वैशिष्ट्यबोधकपदासमभिव्याहृतकृतिवाचिधातुयोगिद्वितीयाया एव तथानियमात् तत्र कपालादि-

पटोत्तरद्वितीयाया आधेयत्वमर्थः घटादिपदञ्च घटत्वादिपरं धात्वाख्यातयोर्व्यापारप्रयत्नौ यथायोग्यमर्थः तथा च कपालवृत्तिघटत्वाश्रयानुकूलव्यापारजनकयत्नवानित्याद्यन्वयधीः। कपालं घटवत् करोमीत्यादिवत् कपाले घटं करोमीत्यादिप्रयोगोऽप्यत एवेत्यपि वदन्ति।

अपरा च उपादानतापरनाम्नी सिद्धत्वाख्यविषयता सा च सिद्धकपालहविस्तण्डुलाद्युपायनिष्ठा। कपालेन घटं करोमि हविषा यागं करोमीत्याद्यनुव्यवसायात् तत्र उपादानत्वाख्यविषयताया एव तृतीयार्थत्वात् तस्य च धात्वर्थकृतावन्वयात्। न च तत्र जन्यत्वं विषयत्वं वा तृतीयार्थस्तस्य च घटयागादावेवान्वय इति वाच्यम् सर्व्वत्र तृतीयार्थस्य धात्वर्थ एवान्वयस्य व्युत्पन्नत्वात् अन्यथा तण्डुलावयवेन तण्डुलं पचतीत्यपि व्यवहारापत्तेः।

अन्या च उद्देश्यताख्यविषयता सा च यत्साधनताज्ञानाधीना चिकीर्षा तन्निष्ठा तच्च जलाहरणस्वर्गादिरूपं जलाहरणार्थितया घटं करोमि स्वर्गार्थितया यागं करोमीत्यनुव्यवसायात्। जलाहरणमुद्दिश्य घटं करोमि स्वर्गमुद्दिश्य यागं करोमीत्यनुव्यवसायाच्च एवञ्च तत्तत्साध्यतावच्छेदकतत्तत्साधारणप्रवृत्तित्वावच्छिन्नं प्रति तत्तत्साधारणतावच्छेदकविशेष्यतावच्छेदककतत्साधारणविशेष्यककृतिसाधारणताज्ञानं हेतुरिति न व्यभिचारः एवं चिकीर्षाया अपि हेतुत्वमवसेयं तेन तस्या अपि कपालहविस्तण्डुलादौ न व्यभिचारः। अन्यथा नैयायिकमतेऽपि व्यभिचारस्य दुर्वारत्वात् तैरपि कृतिसाधारणताज्ञानचिकीर्षयोर्हेतुत्वोपगमादिति भावः। यत्तु प्रवृत्तेर्विषयतात्रैविध्ये मानाभावः किन्तु कपालहविस्तण्डुलाद्युपाय एव प्रवृत्तिविषयः प्रवृत्तिविशेष्यत्वमेव चोपादानत्वम्। नचैवं घटं करोति यागं करोतीत्यादिव्यवहारानुपपत्तिः कृतिवाचिधात्वोर्योगे द्वितीयाया विशेष्यत्वार्थकत्वादन्यथा कपालं करोतीत्यादिव्यवहारापत्तिरिति वाच्यम् तत्र घटयागपाकादिपदस्य कपालहविस्तण्डुलादौ लाक्षणिकत्वात् कृतिवाचिधात्वोर्योगे द्वितीयाया विशेष्यतानुकूलत्वान्यतरार्थकत्वनियमेनानुकूलत्वं विशेष्यता वा तत्र द्वितीयार्थः इति प्राञ्चो नैयायिका वदन्ति। तदसत् लक्षणया शब्दप्रयोगरूपव्यवहारसमर्थनेऽपि घटादिविशेष्यकत्वावगाहित्वेनानुभूयमानाया घटं करोमीत्यादिप्रात्यक्षिकप्रतीतेरनुपपादनात् लक्षणायां मानाभावाच्च। किञ्च जलाहरणस्वर्गादिरूपफलस्य उद्देश्यताख्यविषयताया घटयागपाकादेश्च साधनताख्यविषयताया अनभ्युपगमे इष्टसाधनताज्ञानकृतिसाधनताचिकीर्षयोः कार्य्यकारणभावोऽपि दुर्व्वच इत्युक्तप्रायं वक्ष्यमाणञ्चोपरिष्टात् इति दिक्। अत्र च तत्प्रकारकतद्विशेष्यकतत्साधनताज्ञानत्वं तत्साधनतावच्छेदकतत्साधारणतद्विशेष्यकप्रकारतावच्छेदकं न वा, ज्ञानतद्विषयवृत्तित्वं तत्साधनताज्ञानजन्यवृत्ति नवेत्यादि विप्रतिपत्त्या तेन नैयायिकैरपि कृतिसाधनताज्ञानस्य प्रवर्त्तकत्वाभ्युपगमेऽपि न क्षतिः। तदर्थित्वञ्च तदुद्देश्यकत्वं न तु इष्टसाधनताज्ञानं प्रवर्त्तकं न वा तत्साधनताज्ञानं तदर्थिप्रवृत्तिकारणं नवेत्यादिविप्रतिपत्तिः परैरपि हविराद्युपादानिष्टयागादिरूपचिकीर्षाविषयसाधनताज्ञानस्य यागादिगोचरप्रवृत्तौ हेतुत्वस्याभ्युपगमात् इष्टसाधनत्वकृतिसाध्यत्वोभयविषयकसमूहालम्बनस्य प्रवृत्तिहेतुत्वाभ्युपगमाच्चेति ध्येयम्। चिकीर्षातिरिक्तं न कर्त्तव्यमस्तीति कर्त्तव्यं द्वारं चिकीर्षा अवश्यं द्वारमिति समुदितार्थः तथैव प्रकृतोपयोगात्। नचैवं प्रवर्त्तकज्ञानत्वव्यापकं चिकीर्षाव्यापारकत्वमिति फलितार्थः तच्चायुक्तं उपादानप्रत्यक्षे व्यभिचारात् तस्य साक्षादेव प्रवृत्तिहेतुत्वात् उपादानेच्छयोस्तस्य द्वारत्वमतेऽपि चिकीर्षाया अद्वारत्वाच्च इति वाच्यं ज्ञानस्येत्यस्य प्रवृत्तिं प्रति साक्षादसाधनीभूतस्य ज्ञानस्येत्यर्थात् उपादानप्रत्यक्षञ्च न साक्षात् साधनं उपादानप्रत्यक्षविरहे प्रवृत्त्यनुदयात् उपादानेच्छाया सहद्वारत्वमतेऽपि तस्य साक्षात्साधनत्वावश्यकत्वात्। न च तथापि फलज्ञाने व्यभिचारः फलचिकीर्षायाः प्रवृत्त्यहेतुत्वात् इति वाच्यं फलज्ञानस्य फलेच्छाद्वारा उपायेच्छामात्रसम्पादकतयान्यथासिद्धतया प्रवृत्तिजनकत्वस्यैव तत्रासिद्धेः। यदि च फलज्ञानमपि प्रवृत्तिजनकं तदा उपायचिकीर्षाया एव तद्व्यापारत्वेन चिकीर्षाव्यापारकत्वरूपसाध्यस्यापि तत्र सुतरां सत्त्वाच्च न हि स्वसमानविशेष्यकचिकीर्षाव्यापारकत्वपर्य्यन्तं साध्यमनुपयोगादिति धेयम्। ननु चिकीर्षारूपव्यापारसत्त्वेऽपि कुतो न क्वचित् कृत्युत्पाद इत्यत आह तत्सत्त्वे इति। हेत्वन्तरेति हेत्वन्तरं दण्डकपालाद्युपादानलौकिकप्रत्यक्षं, प्रतिबन्धकाभावश्चेति भावः। ननु तत्तदुपादानतावच्छेदककतत्तदुपादानकप्रवृत्तित्वेन तत्तदुपादानतावच्छेदकप्रकारक तत्तदुपादानविशेष्यकलौकिकसाक्षात्कारत्वेनोपादानप्रत्यक्षस्य हेतुहेतुमद्भावात् दण्डकपालाद्युपादानप्रत्यक्षाभावे तदुपादानकप्रवृत्तिर्मास्तु घटादिसाध्यकप्रवृत्तिं विनापि

संयोगादिसाध्यकप्रवृत्तौ दण्डाद्युपादानकप्रवृत्तिसत्त्वेन तदुपादानकप्रवृत्तिसामग्र्याः घटादिसाध्यकप्रवृत्तिसामग्र्यपेक्षया विशेषसामग्रीत्वविरहात् दण्डोपादानकप्रवृत्तिं विनापि कपालोपादानकघटसाध्यकप्रवृत्तौ घटसाध्यकप्रवृत्तिसत्त्वेन तदुपादानकप्रवृत्तिसामग्र्या घटादिसाध्यकप्रवृत्तिसामग्र्यपेक्षया सामान्यसामग्रीत्वविरहाच्चेति चेन्न सामग्र्याः सामान्यविशेषभावानापन्नत्वेऽपि दण्डचक्रकपालाद्यन्यतमोपादानकप्रवृत्त्यतिरिक्ताया घटादिसाध्यकप्रवृत्तेरलीकतया तादृशान्यतमोपादानकप्रवृत्तिसामग्रीविरहादेव तादृशान्यतमोपादानप्रत्यक्षाभावदशायां तदनुत्पत्तेस्तद्धर्म्मावच्छिन्नयत्किञ्चिद्व्यक्तिसामग्रीसहिताया एव तद्धर्म्मावच्छिन्नसामग्र्यास्तद्धर्म्मावच्छिन्नकार्य्योपधायकत्वात् इदमेव च कारणसमाजाधीना कार्य्योत्पत्तिरिति गीयते। एतेन घटादिचिकीर्षाविरहेऽपि दण्डगोचरप्रत्यक्षात् दण्डोपादानकप्रवृत्त्यापत्तिस्तदवच्छिन्नस्य सत्त्वादित्यपि निरस्तं संयोगभङ्ग्याद्यन्यतमसाध्यकप्रवृत्त्यतिरिक्ताया दण्डोपादानकप्रवृत्तेरलीकतया तादृशान्यतमसाध्यकप्रवृत्तिसामग्रीविरहादेव तदनुत्पादात् कार्य्योत्पत्तेः कारणसमाजाधीनत्वात्। नव्यास्तु उपादानप्रत्यक्षस्य हि स्वातन्त्र्येण न हेतुता, किन्तु घटादिनिष्ठचिकीर्षाया दण्डाद्युपादानकलौकिकसाक्षात्कारस्य च सत्त्वेऽपि दण्डादौ घटसाधनत्वज्ञानाभावदशायां घटसाध्यकदण्डोपादानकप्रवृत्तिवारणाय दण्डोपादाननिष्ठचिकीर्षाविषयघटादिसाधनताज्ञानस्यापि घटादिसाध्यकदण्डाद्युपादानकप्रवृत्तित्वावच्छिन्नं प्रति न्यायनये परनये च विशेषकारणत्वावश्यकत्वात्तदेव चिकीर्षाविषयसाधनताज्ञानमुपादानांशे लौकिकप्रत्यक्षात्मकं हेतुरूपेयते कार्य्यकारणभावद्वयकल्पनामपेक्ष्य लाघवात्। न च घटसाध्यककपालोपादानकघटध्वंससाध्यकदण्डोपादानकसमूहालम्बनप्रवृत्तौ दण्डनिष्ठघटसाधनताज्ञानस्य हेतुत्वात् तत्र व्यभिचारवारणाय घटत्वावच्छिन्नसाध्यतानिरूपितदण्डत्वावच्छिन्नोपादानताशालिप्रवृत्तित्वमेव कार्य्यतावच्छेदकमुपेयं तथाच दण्डत्वावच्छिन्नोपादानतानिरूपितघटत्वावच्छिन्नसाध्यताशालिप्रवृत्तित्वमादाय विनिगमनाविरहात्तथापि गुरुतरकार्य्यकारणभावद्वयमावश्यकमिति वाच्यं दण्डाद्युपादाननिष्ठचिकीर्षाविषयघटसाधनताज्ञानस्य घटादिसाध्यकदण्डाद्युपादानकप्रवृत्तिं प्रति विशेषकारणत्वावश्यकतया विनिगमनाविरहात् साधककार्य्यकारणभावद्वयस्य सर्वसम्मतत्वात्। इयञ्च विशेषसामग्रीविरहादेव उपादानप्रत्यक्षाभावदशायां न घटादिसाध्यकप्रवृत्त्युत्पत्तिप्रसङ्गः। एतेन घटादिनिष्ठचिकीर्षाविरहेऽपि दण्डगोचरप्रत्यक्षात् दण्डनिष्ठघटसाधनताज्ञानात्मकविशेषसामग्रीसहकृतात् दण्डोपादानकप्रवृत्त्युत्पत्तिस्तदवच्छिन्नसामग्रीसत्त्वादिति द्वितीयातिप्रसङ्गोऽपि निरस्तः, केवलदण्डोपादानकप्रवृत्तित्वस्य कार्य्यतानवच्छेदकत्वात् घटादिसाध्यकदण्डाद्युपादानकप्रवृत्तेश्च घटादिनिष्ठचिकीर्षाजन्यघटादिसाध्यकप्रवृत्तिसामान्यसामग्रीविरहादेवासम्भवादिति प्राहुः। अथ प्रत्यक्षविषयकपालव्यक्तौ इदं न कपालमित्यसंसर्गाग्रहसत्त्वेऽपि कपालत्वप्रकारेण कपालं घटसाधनमिति कपालत्वांशे निर्द्धर्म्मितावच्छेदककतत्कपालविषयकलौकिकप्रत्यक्षात् कपालत्वप्रकारेण तत्कपालोपादानकप्रवृत्त्यापत्तिः। न च कपालत्वप्रकारेण तद्व्यक्तौ वृत्ताविष्टापत्तिरिति वाच्यम् अनुभवविरोधादिति चेन्न तदुपादानतावच्छेदकांशे इदन्त्वधर्म्मितावच्छेदककतदुपादानविशेष्यकप्रत्यक्षस्येदं घटसाधनमित्याकारस्य वा तत्तदुपादानतावच्छेदककतदुपादानकप्रवृत्तिं प्रति हेतुत्वेन निर्द्धर्म्मितावच्छेदककज्ञानस्याहेतुत्वात्। नचैवमिदं घटसाधनमिति लौकिकप्रत्यक्षादिदन्त्वप्रकारेणैतद्व्यक्त्युपादानकप्रवृत्तिर्न स्यात् तस्य इदन्त्वांशे निर्द्धर्म्मितावच्छेदककत्वादिति वाच्यम् उपादानतावच्छेदकभेदेन कार्य्यकारणभावभेदादिदन्त्वस्थले निर्द्धर्म्मितावच्छेदककज्ञानस्यापि प्रवर्त्तकत्वात् इदमिदं नेत्यसंसर्गाग्रहासम्भवेन तत्रापि प्रसङ्गविरहादित्याहुस्तत्र विस्तरः। चिकीर्षेति व्यापारीभूतचिकीर्षा चेत्यर्थः। अन्यथा—चिकीर्षासामान्यस्य लक्ष्यत्वे। लक्षणे फलचिकीर्षायामतिव्याप्तिवारकं कृतिसाध्यक्रियाविषयत्वं विशेषणं व्यर्थं स्यादित्यनुपदमेव स्फुटीभविष्यति। कृतिसाध्यत्वप्रकारिकेति। अत्र फलचिकीर्षाया व्यापारत्वाभावेन लक्ष्यत्वाभावात्तत्रातिव्याप्तिवारणाय कृतिसाध्यक्रियेति क्रियापदं धर्म्मिमात्रपरम् कृतिसाध्यत्वञ्च साध्यत्वाख्यफलीभूतविषयताशालिनिष्ठत्वं तथा च साध्यत्वाख्यफलीभूतकृतिविषयताशालिधर्म्मिविषयिकेत्यर्थः फलञ्च न तादृशविषयताशालीति भावः। केचित्तु क्रियापदमेव साध्यत्वाख्यफलीभूतकृतिविषयताशालिपरम् न चैवं पृथक् कृतिसाध्यत्वं क्रियाविशेषणं व्यर्थमिति वाच्यं कृतिसाध्यत्वप्रकारकज्ञानस्य व्यापारीभूता या चिकीर्षा सैव प्रकृते लक्ष्या सा च संवादिनी चिकीर्षैव, विसं-

वादिचिकीर्षायां तत्प्रकारकज्ञानस्य हेतुत्वेऽन्यथाख्यात्यापत्तेः। तथा च इच्छादिविसंवादिचिकीर्षायामतिव्याप्तिवारणाय तद्विशेषणस्यावश्यकत्वात् इत्याहुः। पाकमिति पाकं कृत्या साधयामीत्याकारिकायां तस्यां तदनुभवात् कृतिसाध्यत्वप्रकारकत्वस्यानुभवसिद्धत्वादित्यर्थः कृतिसाध्यत्वेन पाकमिच्छामीति तदनुव्यवसायसत्त्वादिति भावः। इच्छाया इत्यादि। इच्छायाः स्वप्रकारकसंवादीच्छायाः तत्प्रकारकसंवादीच्छायास्तत्प्रकारकधीसाध्यत्वनियमादिति फलितार्थः। गुरुनये रजतादिप्रकारकविसंवादीच्छायां रजतादिप्रकारकज्ञानाजन्यायां व्यभिचारवारणाय संवादित्वोपादानं कूटलिङ्गस्थलेऽप्यनायत्त्या तदिच्छाया विषयान्तरविषयकत्वकल्पनेन विसंवादः कल्प्यते। न चैवं संवादिचिकीर्षायां तज्जन्यप्रवृत्तौ च कृतिसाध्यत्वप्रकारकज्ञानस्य हेतुत्वेऽपि चिकीर्षासामान्ये च कृतिसाध्यत्वज्ञानस्य न हेतुत्वसिद्धिरिति वाच्यं संवादिचिकीर्षादौ कृतिसाध्यताप्रकारकज्ञानस्य हेतुत्वे सिद्धे यद्विशेषयोरिति (यद्विशेषयोः कार्य्यकारणभावस्तत्सामान्ययोरपीति) न्यायात् चिकीर्षादिमात्रं प्रत्येव कृतिसाध्यताविषयकज्ञानस्य हेतुत्वसिद्धेरिति भावः एवमग्रेऽपि। केचित्तु या यत्प्रकारिकेच्छा सा तद्विषयकज्ञानसाध्येति नियमः न तु प्रकारतापर्य्यन्तप्रवेशः मूलेऽपि स्वप्रकारकेत्यस्य स्वविषयकेत्यर्थः एवञ्च रजतादिविसंवादीच्छायां न व्यभिचारः तत्र तन्नये इच्छाविशेष्यविशेष्यकरजतप्रकारकज्ञानस्याहेतुत्वेऽपि स्वातन्त्र्येण रजतोपस्थितेरवश्यं हेतुत्वात्। न च तन्नये विसंवादीच्छायामुपस्थितेष्टतावच्छेदकासंसर्गाग्रहस्यैव हेतुतया रजतज्ञानं तत्र कारकतावच्छेदकमेव न तु कारणमिति व्यभिचारो दुर्वार एवेति वाच्यं कारणकारणतावच्छेदकसाधारणप्रयोज्यत्वरूपस्य साध्यत्वस्य नियमघटकत्वात्। नचैवं प्रकृतेऽपि कृतिसाध्यताज्ञानस्यैककालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन इष्टसाधनताज्ञाननिष्ठकारणतावच्छेदकत्वमेवायातु कुतः कारणत्वम्? इति वाच्यं वक्ष्यमाणक्रमेण तन्नये इष्टसाधनत्वज्ञानस्येच्छाविरोधितया इष्टसाधनताज्ञानस्य चिकीर्षाहेतुत्वासम्भवात् परिशेषेण जन्यतारूपस्यैव कृतिसाध्यताज्ञानप्रयोज्यत्वस्य चिकीर्षायां सिद्धेः। नचेष्टसाधनताज्ञानस्याजनकत्वेऽपि बलवदनिष्टाननुबन्धित्वज्ञाननिष्ठजनकतावच्छेदकत्वमेवायात्विति वाच्यं बलवद्द्वेषस्येच्छाविरोधितया तज्ज्ञानस्यापि चिकीर्षाहेतुत्वासिद्धेः।

वस्तुतस्तु विशेष्यविशेषणभावे विनिगमकाभावादुपस्थितेष्टतावच्छेदकासंसर्गाग्रहवदुपस्थितेष्टतासंसर्गकेष्टतावच्छेदकोपस्थितेरपि विसंवादीच्छाजनकतया जन्यत्वरूपसाध्यत्वमेव नियमघटकमिति न कोऽपि दोष इति प्राहुः। अत एवेति चिकीर्षायाः स्वकृतिसाध्यताज्ञानसाध्यत्वादेवेत्यर्थः। स्वकृतिसाध्ये—स्वकृतिसाध्यत्वेन ज्ञाते इदञ्चापाततः वस्तुतो लाघवात्पाको मत्कृतिमान् भवत्वित्याकारिका साध्यतासंसर्गेण कृतिप्रकारिका इच्छैव व्यापारो न तु कृतिसाध्यत्वप्रकारिका गौरवादतएव ज्ञानमपि साध्यतासंसर्गेण कृतिप्रकारकमेव हेतुरिति तत्त्वम्। यद्यप्युक्तनियमबलेन कृतिसाध्यताज्ञानस्य हेतुत्वं साधितमेव तथापि युक्त्यन्तरदानाय पुनरनुवदति न हीष्टेति इष्टसाधनताज्ञानसाध्या कृतिसाध्यताज्ञानं विनापि इष्टसाधनताज्ञानसाध्या यथाश्रुतेऽपिमहेत्वसङ्गतेः। स्वकृत्यसाध्ये—स्वकृत्यसाध्यत्वेन निश्चिते स्वकृत्यसाध्यताज्ञानमिति स्वकृत्यसाध्यतानिश्चय इत्यर्थः कृतिसाध्यतासंशयेऽपि प्रवृत्तेरनुभवाद्यथाश्रुतासङ्गतेः। न च कृतिसाध्यतासंशये पुष्करस्वीकारे बहुविक्रव्ययायाससाध्येऽपि प्रवृत्त्यापत्तिरिति वाच्यं बलवदनिष्टानुबन्धित्वज्ञानस्य विरोधित्वादेव तत्रेच्छाप्रवृत्त्योरभावादिति ध्येयम्। तदभावकारणत्व इति कृतिसाध्यताज्ञानत्वेन कारणत्वमपेक्ष्य कृत्यसाध्यतानिश्चयाभावत्वेन कारणत्वे गौरवात् इत्यर्थः। नचाप्रामाण्यनिश्चयानास्कन्दितकृतिसाध्यताज्ञानत्वापेक्षयाऽप्रामाण्यज्ञानानास्कन्दितकृत्यसाध्यतानिश्चयाभावत्वमेव लघ्विति वाच्यं कृतिसाध्यताज्ञानस्याप्रामाण्यनिश्चये बलवदनिष्टानुबन्धिताज्ञानोदयादेव प्रवृत्त्यभावसम्भवात्तत्र तदनास्कन्दितत्वस्याप्रवेशात् स्वकृत्यसाध्यतानिश्चयवत्तदभावव्याप्यादिनिश्चयस्यापि प्रतिबन्धकत्वावश्यकतया बहुतरकार्य्यकारणभावकल्पनागौरवाच्चेति भावः। केचित्तु ननूक्तनियमबलादस्तु कृतिसाध्यताज्ञानं हेतुस्तथापि कृतिसाध्यताज्ञानत्वेन तस्य न हेतुता किन्तु इष्टसाधनताज्ञानत्वेन सर्वत्रेष्टसाधनताकृतिसाध्यतोभयविषयकसमूहालम्बनादेव चिकीर्षेत्यत आह न हीष्टसाधनताज्ञानसाध्येति न हीष्टसाधनताज्ञानत्वावच्छिन्नकृतिसाध्यताज्ञानकारणताकेत्यर्थः। स्वकृत्यसाध्ये स्वकृत्यसाध्यत्वेन निश्चिते। चिकीर्षापत्तेः—केवलेष्टसाधनताज्ञानाच्चिकीर्षापत्तेः कारणतावच्छिन्नसत्त्वादिष्टापत्तौ चोक्तनियमभङ्गादिति भावः। तदभावकारणत्वे गौरवादिति। इदमुपलक्षणं कृत्य-

साध्यतानिश्चयस्य प्रतिबन्धकत्वेऽपि यत्र कारणान्तराभावादिष्टसाधनताज्ञाने कृतिसाध्यत्वस्य न भानं तत्र केवलेष्टसाधनताज्ञानाच्चिकीर्षापत्तेर्दुर्व्वारत्वाच्च इत्यपि बोध्यम्। उक्तनियममस्त्वेव तटस्थः शङ्कते अथेतीति। अभावः-कृत्यसाध्यतानिश्चयाभावः। उभयसिद्धः-चिकीर्षापूर्व्वमुभयसिद्धः, असिद्धा-चिकीर्षापूर्व्वमुभयासिद्धा। न लाघवावसरः इति कृतिसाध्यताज्ञानत्वस्य यद्यपि लाघवं न कारणतावच्छेदकतायां विनिगमकम् इत्यर्थः लघु गुरुधर्म्मद्वयावच्छिन्नं यदि फलपूर्व्वमुभयवादिसिद्धं तदेव लाघवस्य कारणतावच्छेदकतायां विनिगमकत्वादिति भावः। द्वैतात्प्रतिबन्धकविरहात्। सा-चिकीर्षापूर्व्वं कृतिसाध्यताधीः। लाघवावतारादिति कृतिसाध्यताज्ञानत्वरूपलघुधर्म्मावच्छिन्नस्य चिकीर्षापूर्व्वमुभयमते सत्त्वादित्यर्थः। इच्छाया इति तत्प्रकारकसंवादीच्छायास्तत्प्रकारकज्ञानजन्यतानियमेनेत्यर्थः। आवश्यकत्वात्-चिकीर्षाहेतुतावश्यकत्वात् अपि च कृत्यसाध्यताज्ञानप्रतिबन्धकतान्यथानुपपत्त्या कृतिसाध्यताज्ञानस्य चिकीर्षाहेतुतासिद्धिरित्याह जनकज्ञानमिति। तज्जनकीभूतज्ञानविघटकस्यैव ज्ञानस्य विधिप्रतिबन्धकत्वाच्चेत्यर्थः। अत्र व्याप्तौ दृष्टान्तमाह व्याप्तिज्ञानविघटनद्वारेति अनुमितिजनकव्याप्तिज्ञानविघटनेनेत्यर्थः। तथा च यत् यत्प्रतिबन्धकं ज्ञानं भवति तत्तज्जनकज्ञानविघटकं यथा व्यभिचारज्ञानमनुमितिप्रतिबन्धकं ज्ञानं भवत् अनुमितिजनकव्याप्तिज्ञानविघटकमपि भवति इति सामान्यतोव्याप्त्या कृत्यसाध्यतानिश्चयस्य चिकीर्षाप्रतिबन्धकज्ञानत्वेन हेतुना चिकीर्षाजनकज्ञानविघटकत्वसाधने पक्षधर्म्मताबलात्कृतिसाध्यताज्ञानस्यैव चिकीर्षाजनकत्वसिद्धिरिति भावः। न च जनकज्ञानविघटकत्वेनाऽन्यथासिद्धतया तदभावस्याहेतुत्वात् स्वरूपासिद्धिर्दृष्टान्तासिद्धिश्च इति वाच्यं प्रतिबन्धकत्वं हि न कारणीभूताभावप्रतियोगित्वम् किन्तु प्रयोजकीभूताभावप्रतियोगित्वम्। प्रयोजकत्वं च कारणकारणव्यावृत्तान्यथासिद्धिचतुष्टयराहित्ये सति नियतपूर्ववर्त्तित्वम्-कारणतत्कारणसाधारणम्। हेतौ ज्ञानपदोपादानादेव च विषयान्तरसञ्चारादौ न व्यभिचारः। साध्ये च ज्ञानपदं स्वरूपकथनम्। विघटकत्वञ्च प्रतिबन्धकत्वमेव नत्वेककालावच्छेदेन तदधिकरणावृत्तित्वरूपविरोधित्वं गुरुनयेऽधिकरणज्ञानरूपतया कृतिसाध्यताज्ञानस्यापि कृत्यसाध्यताज्ञानाभावस्य ज्ञानात्मकस्य विरोधितया सिद्धसाधनापत्तेः। नचासाधुत्वज्ञाने साधुत्वज्ञानाजन्यशाब्दधीप्रतिबन्धके व्यभिचार इति वाच्यम् निराकाङ्क्षत्वरूपासाधुत्वज्ञाने आकाङ्क्षाज्ञानमादाय साध्यस्यापि सत्त्वात् असाधुत्वज्ञानस्य च प्रतिबन्धकत्वे मानाभावात्। न च तथापि सिद्धौ व्यभिचार इति वाच्यम् गुरुनये सिद्धेरप्रतिबन्धकत्वात् तद्ग्राह्यवृत्तप्रतिबन्धकताया वा हेतौ निवेशात्। अतएवासिद्धत्वज्ञानाजन्येच्छाप्रतिबन्धकसिद्धत्वज्ञानेऽपि न व्यभिचारः तद्ग्राह्यवृत्तप्रतिबन्धकताया एव हेतौ निवेशात् असिद्धत्वनिश्चयस्यापि इच्छाहेतुत्वाद्वा। अथ तथापि बाधसत्प्रतिपक्षादौ व्यभिचारः। न च तद्ग्राह्यवृत्ताऽपि प्रतिबन्धकता हेतौ निवेशनीयेति वाच्यम् कृत्यसाध्यताज्ञानाभावव्यभिचारज्ञानाभावयोरपि बाधाभावतयैव चिकीर्षानुमित्योः प्रयोजकतया स्वरूपासिद्धिदृष्टान्तासिद्ध्योरापत्तेः। न च साक्षादविरोधित्वे सतीत्यनेन हेतुर्विशेषणीय इति वाच्यम् साक्षादविरोधित्वं हि न ग्राह्याभावतद्व्याप्याद्यनवगाहित्वं, प्रकृतेऽपि तदसिद्धेः कृत्यसाध्यताज्ञानस्य चिकीर्षाप्रकारीभूतकृतिसाध्यत्वाभावावगाहित्वात् अतएव न कारणीभूताभावप्रतियोगित्वमपि, प्रकृतेऽपि तदसिद्धेः पूर्वपक्षिणा कृत्यसाध्यताधियः साक्षादेव प्रतिबन्धकत्वाभ्युपगमात् न च हेतौ प्रतिबन्धकज्ञानत्वपदेन ज्ञानत्वावच्छिन्नप्रतिबन्धकताशालित्वं विवक्षितं बाधसत्प्रतिपक्षादेश्च निश्चयत्वेन प्रतिबन्धकत्वमिति वाच्यम् प्रकृते तदसिद्धेः उक्तयुक्त्या कृत्यसाध्यतानिश्चयस्यैव पूर्वपक्षिमते प्रतिबन्धकत्वादिति चेन्न हेतौ स्वग्राह्यविरोधावगाहिज्ञानभिन्नत्वेन यत्पदार्थविशेषणात्। स्वपदं प्रतिबन्धकज्ञानपरं चिकीर्षायाश्च ज्ञानभिन्नत्वादेव संग्रहः स्वग्राह्यविरोधावगाहित्वन्तु स्वं यत्र यदभावतद्व्याप्य तदवच्छेदकाद्यन्यतममवगाहते तत्र तदवगाहित्वं संवादित्वेनापि हेतौ यत्पदार्थो विशेषणीयः तेन इष्टभेदग्रहे प्रवृत्त्यादिप्रतिबन्धके तन्नये न व्यभिचारः। संवादिप्रवृत्तौ विशिष्टज्ञानमेव हेतुरिति साध्यसत्त्वादेव न तमादाय व्यभिचारः। न च तथापि कूटभ्रमपरामर्शलिङ्गस्थले लिङ्गासंसर्गाग्रहेण लैङ्गिकासंसर्गाग्रहाधीनसंवादीच्छाप्रवृत्तिप्रतिबन्धकेष्टभेदग्रहे जनकीभूतविशिष्टज्ञानविघटकत्वाभावाद्व्यभिचार इति वाच्यम् विशिष्टज्ञानस्य संवादीच्छाप्रवृत्तिहेतुत्वेनानायत्या तत्रापीच्छाप्रवृत्त्योर्विषयान्तरविषयकत्वकल्पनेन विसंवादित्वस्य तैः स्वीकारादिति दिक्। अन्यथा-एतादृशव्याप्त्यनङ्गीकारे। उपेक्षणीयत्वम्-

इष्टसाधनतावच्छेदकरूपशून्यत्वम्। निष्फलत्वम् इष्टफलोपधानशून्यत्वम्, प्रतिबन्धकं—चिकीर्षाप्रतिबन्धकम्। क्रियाज्ञानमेवेत्येवकारेण इष्टसाधनत्वादिज्ञानव्यवच्छेदः। सोऽन्दुः शङ्कते नन्विति। मन इति। वाचिचात बोधकत्वान्ततश्च चिकीर्षापदस्य यौगिकत्वपक्षे चिकीर्षापदस्याखण्डरूढत्वपक्षे त्वाह लघवादिति। कृतिसाध्यत्वप्रकारकेच्छात्वापेक्षया कृतीच्छात्वस्य प्रवृत्तिनिमित्तस्य लघुत्वादित्यर्थः। चिकीर्षा-चिकीर्षापदप्रतिपाद्या। वृष्ट्यादिवेति वृष्टिर्भवत्विच्छैवेत्यर्थः। इष्टसाधनताज्ञानात्-इष्टसाधनताज्ञानमात्रात् कृतिसाध्यताज्ञानं विनापीष्टसाधनतज्ञानादिति यावत्। तत्र कृतिसाध्यत्वस्याप्रकारतया कृतिसाध्यत निश्चयस्याप्रतिबन्धकतया च कृतिसाध्यताज्ञानस्य हेतुत्वे मानाभावादिति भावः। अत्र वृष्टिर्भवत्वितीच्छेवेति प्रकृतसाधाङ्कको दृष्टान्तः गुरुनये वृष्टिसाध्यं सुखं भवत्वितीच्छैव विशेषणतया सुखत्वमिव वृष्टिमपि विषयं करोति न तु वृष्टिर्भवत्विति स्वातन्त्र्येणेच्छा कृतिसाध्यत्वप्रकारकेच्छां प्रति सुखत्वदुःखाभावत्वप्रकारकज्ञानयोर्हेतुत्वेन कृतिसाध्यत्वप्रकारकोपायेच्छाया अनङ्गीकारात् वृष्टिसाध्यं सुखं भवत्वितीच्छायान्तु सुखे वृष्टिसाध्यत्वज्ञानमेव हेतुरिति मन्तव्यम्। वह्निना साधयामीत्यादिरिति साध्यत्वप्रकारिकाया इति शेषः। अनुभूयमानायाः—नियमतोऽनुभूयमानायाः। मनन्तावाच्यत्वेन-मनन्ताप्रतिपाद्यत्वेन। गौरवेण-प्रवृत्तिनिमित्तगौरवेण। मन्याख्यातुमशक्यत्वान् इति कारणतायाः मन्याख्यातुमशक्यत्वादित्यर्थः तथाच चिकीर्षापदाप्रतिपाद्यापि सा प्रवृत्तिहेतुरिति भावः। प्राधान्येनेति विशेष्यतयेत्यर्थः। अप्राधान्येन विषयत्वस्य तत्र द्वितीयार्थत्वे पाकत्वं चिकीर्षति इत्यपि प्रयोगापत्तेरिति भावः। न तु कृतेरिति अतो न कृतीच्छा चिकीर्षापदप्रतिपाद्येति भावः। ननु चिकीर्षतीत्यत्र पाकस्य विशेष्यतया इच्छाविषयत्वमनुभूयते इत्युक्तं सन्प्रत्ययसमभिव्याहृतधातोरिच्छाविशेषणार्थतया धात्वर्थस्यैव विशेष्यत्वात् इत्यतआह धातोरेवेति। इच्छाप्रकारवाचित्वमिति न तु विशेष्यवाचित्वमिति शेषः। प्रकारस्य कृतिसाध्यत्वं साध्यतासंसर्गेण कृतिर्वा। आद्ये तु लक्षणादिकं शरणमित्यन्यदेतत्। भोजनविशेष्यतयेति भोजनप्रकारकेच्छाविशेष्यतयेत्यर्थः। ओदनविशेष्यकभोजनप्रकारकेच्छाश्रय इत्यन्वयबोधादिति भावः। ननु कृतिसाध्यत्वप्रकारकेच्छाया नियमतः कृतिपूर्व्वमनुभवसिद्धत्वेऽपि न सा प्रवृत्तेर्हेतुरवच्छेदकगौरवात्, किन्तु कृतीच्छैव इष्टसाधनताज्ञानेन, तस्या अपि पूर्व्वं सम्भवात्। नचैवं क्रियाया इष्टसाधनतादिज्ञानेऽपि कृतेरिष्टोपायत्वादज्ञानात् प्रवृत्त्यापत्तिरिति वाच्यम् इष्टत्वात्। अन्यथा तत्रापि कृतेरिष्टाजनकत्वादिज्ञानदशायामपि क्रियाया इष्टजनकत्वादिज्ञानात् प्रवृत्त्यापत्तेस्तुल्यत्वादतआह इष्टसाधनत्वेनेति इष्टसाधनत्वज्ञानेनेत्यर्थः। वृष्ट्यादिवेति प्रवृत्तिपूर्व्वमिति शेषः। करोतीति तादृशाध्यवसायेनेत्यर्थः। ज्ञानचिकीर्षा-प्रवृत्तीनामिति प्रवृत्त्या सह प्रवृत्तिकारणज्ञानचिकीर्षायाः समानविशेष्यकत्वस्य विषयीकरणात इत्यर्थः। इदमुपलक्षणम् अतिप्रसङ्गभङ्गाय तद्विशेष्यककृतौ तदनुकूलकृतीच्छाया एव हेतुताया वक्तव्यत्वात् पाकानुकूलकृतीच्छात्वस्य कृतिसाध्यत्वप्रकारकेच्छात्वयोः समशरीरत्वेन लाघवगौरवमपि नास्तीत्यवधेयम्। कृत्या साधयितुमिति कृतिसाध्यत्वप्रकारिकेत्यर्थः। सा—चिकीर्षा। चिकीर्षितस्य पाकस्येति चिकीर्षाविषयतावच्छेदकपाकत्वावच्छिन्नस्येत्यर्थः। अन्यतः सिद्धौ अन्यतः सिद्धत्वग्रहे, सा-पाकत्वप्रकारिका नापगच्छेत न न जायेत जायेतेति यावत्। उपायविशेषसाध्यत्वेनेति एकोपायसाध्यत्वप्रकारिकेत्यर्थः। उपायान्तराधीनेति उपायान्तराधीनसिद्धत्वज्ञानेनेत्यर्थः। प्रत्येति प्रत्यासन्नलाभस्य प्रीत्या सिद्धत्वज्ञानेऽपीत्यर्थः। प्रतिग्रहेणेति प्रतिग्रहसाध्यत्वप्रकारकधनलाभेच्छाया इत्यर्थः। अनिष्टानुत्पत्त्यनिष्टत्तेरनुत्पत्तेरिति यावत्। तथा च तदुपायसाध्यत्वप्रकारकेच्छां प्रति तदुपायतः सिद्धत्वज्ञानस्यैव प्रतिबन्धकतया उपायान्तराधीनसिद्धत्वज्ञानेऽपि कृतिसाध्यत्वप्रकारकेच्छोत्पत्तौ न बाधकमिति भावः। स्वविषयसिद्धत्वस्येति स्वविषयतावच्छेदकावच्छिन्नविशेष्यताकसिद्धत्वज्ञानस्येत्यर्थः यथा श्रुते पाकं कृत्या साधयामीतीच्छाया अन्यतः सिद्धपाकाविषयतया तत्सिद्धौ तन्निवृत्तेरनुपपादनात्। न च तस्या अन्यतः सिद्धपाकोऽपि विषयः व्यधिकरणप्रकारकेच्छाया अभ्युपगमात् इति वाच्यं तथापि पाकत्वरूपेणान्यतः सिद्धपाके सिद्धत्वज्ञाने तेन रूपेण सिद्धपाकमात्रे तदापत्तेस्तादवस्थ्यात् भिन्नप्रकारकस्यापि सिद्धत्वज्ञानस्य प्रतिबन्धकत्वापाताच्च। सिद्धत्वञ्च कचिदुत्पन्नत्वं, कचिद्विद्यमानत्वं, कचिच्च स्वेष्टसाध्यताविरोधित्वरूपं, यथा दुःखप्रागभावादौ प्रतिबन्धकाभावकूटस्य हेतुत्वाच्च नाननुगमोदोषाय। नचैवं सिद्धे ग्रामादौ कथमिच्छेति वाच्यं तत्र ग्रामादिलाभस्यासिद्धस्यैव इच्छाविषयत्वात् न तु ग्रामादेरिति भावः। उपायेच्छाविरोधित्वात् उपायेच्छादिरूपा

प्रयोजकत्वात्, फलेच्छाविच्छेदस्य प्रतिबन्धकत्वाभावेन यथा श्रुतासङ्गतेः। तत्र-चिकीर्षितस्य पाकस्यान्यतः सिद्धत्वज्ञानस्थले। "सिद्धत्वात्-सिद्धत्वग्रहः पाकस्य सिद्धत्वज्ञानात् स्वविषयसिद्धत्वज्ञानम् ओदनस्य सिद्धत्वज्ञानात् फलेच्छाविच्छेद इति भावः। न च स्वविषयतावच्छेदकावच्छिन्नविशेष्यताकसिद्धत्वज्ञानत्वेन प्रतिबन्धकत्वे स्वत्वान्तर्भावात् अननुगमः, न च तद्धर्म्मावच्छिन्नविशेष्यकेच्छां प्रति तादृशसिद्धत्वज्ञानं विरोधीति वाच्यं विसंवादीच्छाया असंग्रहात्। अथ तद्धर्म्मावच्छिन्नविशेष्यताकसिद्धत्वज्ञानं विरोधि नचैवं शूद्रादिपाके सिद्धत्वज्ञानेऽपि ब्राह्मणस्य पाके चिकीर्षा न स्यादिति वाच्यं तदानीं स्वीयपाकत्वादिरूपेणेव" ब्राह्मणस्य चिकीर्षोत्पादेन पाकत्वरूपेण तदनुत्पादात् इति चेन्न ग्रामे स्वत्वं मे भवत्विति सिद्धग्रामादिगोचरेच्छायां ग्रामत्वादिरूपेण सिद्धत्वज्ञानेऽपि जायमानायां व्यभिचारात् कपालकृतिरादिरूपेण सिद्धत्वज्ञानेऽपि कपालकृतिरादुपादानेच्छायां व्यभिचारात् सिद्धत्वज्ञानदशायां तदनभ्युपगमे तदानीं प्रवृत्तेरप्युत्पत्तिप्रसङ्गात् उपादानेच्छायाः प्रवृत्तौ हेतुत्वात्। तद्धर्म्मप्रकारकत्वावच्छिन्नस्य विशेष्यताकेच्छां प्रति तद्धर्म्मावच्छिन्नविशेष्यताकसिद्धत्वज्ञानं विरोधि मातो ग्रामे स्वत्वं मे भवत्विति सिद्धग्रामादिगोचरेच्छायां व्यभिचार इति कस्यचित् प्रलपितमपास्तं, कपालकृतिरादुपादानेच्छायां व्यभिचारात् पाकत्वादिरूपेण सिद्धत्वज्ञानदशायां मम कृतिसाध्यपाको भवत्विति चिकीर्षाया अनुत्पादवत् घटत्वादिरूपेण सिद्धत्वज्ञानदशायामपि नीलोघटो भवत्वितीच्छाया अनुत्पत्तिप्रसङ्गाच्च इति चेत्? नैवं तद्धर्म्मोद्देश्यतावच्छेदककेच्छां प्रति तद्धर्म्मप्रकारकसिद्धत्वज्ञानस्य प्रतिबन्धकत्वात्। उद्देश्यत्वञ्च भवत्वित्यादिपदाभिलप्यमानो विषयताविशेषः ग्रामे स्वत्वं मे भवत्वित्यादौ ग्रामादिर्नोद्देश्यः किन्तु स्वत्वमेव एवं कपालाद्युपादानगोचरेच्छायामपि कपालादिर्नोद्देश्यः। उद्देश्यतावच्छेदकत्वञ्च तत्पर्य्याप्त्यधिकरणत्वं तेन घटत्वादिरूपेण सिद्धत्वज्ञानदशायां नीलोघटो भवत्वितीच्छोत्पत्तिः। अतएव यस्यां पाकादिविशेष्यकचिकीर्षायां, पाकत्वादिमात्रेणोद्देश्यता पाकत्वादिरूपेण सिद्धत्वज्ञानादेव सापैति, यस्यान्तु स्वकृतिसाध्यपाकत्वादिरूपेण, सा तु स्वकृतिसाध्यपाकत्वादिरूपेण सिद्धत्वज्ञानादेवापैति इति विभागः। तादृशनिरूपणविषयतानङ्गीकारे तु तत्तद्व्यक्तित्वेनैव प्रतिबध्यता, प्रतिबन्धकता तु सामान्यतस्तद्धर्म्मावच्छिन्नविशेष्यताकसिद्धत्वज्ञानत्वेन तत्तद्व्यक्तित्वेन वेत्यन्यदेतत्। केचित्तु यद्धर्म्मावच्छेदेनेष्टसाधनताज्ञानाधीना इच्छा तद्धर्म्मप्रकारकसिद्धत्वज्ञानस्याः विरोधः। इष्टसाधनविषयत्वञ्च यत्र पाकत्वरूपेण गृहीतं तत्र पाकत्वप्रकारकसिद्धत्वधियैव सापगच्छति यत्र मत्कृतिसाध्यपाकत्वादिना तदवगतं, तत्र तदवच्छिन्नसिद्धत्वधियैवेति विभागः। तेन प्रतिग्रहसाध्यधनलाभत्वस्येष्टसाधनत्वावच्छेदकत्वात् प्रकारान्तरेण तल्लाभेऽपि न तदपगमः। न च सिद्धत्वज्ञानदशायां घटयागादिसाध्यकप्रवृत्तिजनककपालहविराद्युपादानेच्छायां व्यभिचार इति वाच्यम् गुरुनये उपादानविशेषचिकीर्षाविषयसाधनताज्ञानस्य साक्षादेव प्रवृत्तिहेतुत्वेन तादृशेच्छायां मानाभावात्। तच्चाग्रे स्फुटं भविष्यति एवं न्यायनयेऽपि। न च तथापि यथा पाकत्वरूपेण इष्टसाधनताज्ञानात् कृतिसाध्यत्वप्रकारकज्ञानसहकृतात् पाकः कृतिसाध्यो भवतु इतीच्छाया ग्रामत्वादिरूपेण सिद्धग्रामादाविष्टसाधनताज्ञानात् स्वीयस्वत्वप्रकारकज्ञानसहकृतात् ग्रामो मे स्ववान् भवतु इति सिद्धग्रामविशेष्यकेच्छायाश्चोत्पत्तौ बाधकाभावात् तत्र व्यभिचारः ग्रामत्वादिरूपेण सिद्धत्वज्ञानेऽपि तदुत्पत्तेरिति वाच्यम् स्वकृतिसाध्यतातिरिक्तस्थले तत्प्रकारकफलार्थीच्छायां तत्प्रकारकफलसाधनताज्ञानस्य फलबलेन हेतुतया ग्रामत्वरूपेणेष्टसाधनताज्ञाने तादृशेच्छाया एवासिद्धेरित्याहुः, तदसत् गुरुनये निरुक्तविषयकेच्छाया असंग्रहात्। घटादिसाध्यकप्रवृत्तौ घटादिचिकीर्षावत् कपालाद्युपादानकप्रवृत्तौ घटादिचिकीर्षावत्कपालाद्युपादानकप्रवृत्तौ कपालादीच्छाया अपि हेतुत्वेन कपालाद्युपादानकेच्छाया व्यभिचारस्य दुर्व्वारत्वाच्च, अन्यथा चिकीर्षाविषयसाधनताज्ञानस्य लौकिकप्रत्यक्षस्य चाविशिष्टत्वेऽपि यत्रेच्छा तत्रैवोपादानतया प्रवृत्तिर्यत्र नेच्छा तत्र नेति नियमानुपपत्तेः। न्यायमीमांसासिद्धान्तस्य च युक्तिविरुद्धत्वेनानुपादेयत्वादिति संक्षेपः"। अधिकं तद्ग्रन्थे दृश्यम्।

न्यायमते तु कार्य्यत्वज्ञानमिष्टसाधनत्वज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानं चेति यथायथम् प्रवर्त्तकमिति भेदः विस्तरस्तु आकरे दृश्यः।

**कार्य्यपुट** पु॰ कार्य्ये कर्त्तव्ये कर्म्मणि न पुटति पुट-संश्लेषे क ७त॰। १क्षपणके २उन्मत्ते ३अनर्थकरे त्रि॰ मेदि॰।

**कार्य्यप्रद्वेष** पु॰ कार्य्यं प्रद्विषत्यनेन प्र+द्विष-करणे घञ् ६त॰। आलस्ये राजनि॰ आलस्येन हि कार्य्यद्वेषात्तस्य तथात्वम्।

**कार्य्यशब्दिक** त्रि० कार्य्यः शब्द इत्याह ठक्। कार्य्यः शब्द इति कथके नैयायिके तेन शब्दस्यानित्यत्वस्य स्वीकारात्तस्य तथात्वम्।

**कार्य्यसिद्धि** स्त्री कार्य्यस्याभीष्टस्य सिद्धिः। १अभीष्टसिद्धौ "वित्तं ब्रह्मणि कार्य्यसिद्धिरतुला शक्रे हुताशे भयम्"ति० त० खञ्जनशकुने। २कर्त्तव्यकर्म्मनिष्पत्तौ नील० ताजकोक्ते ३सहमभेदे च तत्र हि "पुण्यं गुरुज्ञानयशोऽथ मित्रम्" इत्युपक्रमे "स्यादन्यकर्मसवणिक् त्वथ कार्य्यसिद्धिः" इत्यादिना पञ्चाशत् सहमानि विभज्य "स्यात् कर्म्मसिद्धिः सततं (दिवानिशोः) विशोध्य मन्दं सितात् स्यात्त, विवाहसद्म" इत्यनेन तदानयनप्रकारोदर्शितः तथा च वर्षलग्नकालिकस्फुट शनिं शुक्रस्फुटात् त्यक्त्वा लग्नयोगे तत्सहमस्फुटं भवति इयांस्तु भेदः शोध्यमन्दशुद्धाश्रय शुक्रयोर्मध्ये यदि लग्नस्फुटं न भवेत्तदा राशौ एकाङ्कयोगः कार्य्य इति। तत्फलं च तत्रैवोक्तं यथा "कार्य्यसिद्धिसहमं युतं शुभैर्दृष्टमूर्थपिलगम् जयप्रदम्। सङ्गरेऽथ शुभपापदृष्टियुक् क्लेशतोजय उदीरितो बुधैः"

**कार्य्या** स्त्री कृ-ण्यत्। कारोहल्ले राजनि०।

**कार्य्याधिप** पु० ६त०। ज्योतिषोक्ते १व्यापाररूपकार्य्यस्थानाधिपे लग्नावधिकदशमस्थानाधीश्वरे। २कार्य्याध्यक्षे च। कार्य्याधीशादयोऽप्यत्र।

**कार्य्यान्वित** त्रि० कार्य्येण कर्त्तव्येनान्वितः। १कार्य्ययुक्ते २कार्य्यताबोधकपदप्रतिपाद्यार्थान्विते च। मीमांसकनये कार्य्यान्विते एव शब्दस्य यथा शक्तिस्तथा पूर्व्वपक्षविधया शब्दचि० निर्णीतं यथा

"नन्वर्थवादानां सिद्धार्थतया न प्रामाण्यं कार्य्यान्वित एव पदानां शक्त्यवधारणात् वृद्धव्यवहारादेव हि सर्वेषामाद्या व्युत्पत्तिः उपायान्तरस्य शब्दव्युत्पत्त्यधीनत्वात्। तथाहि प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यस्य वृद्धस्य प्रवृत्तिमुपलभमानोबालः प्रेक्षावद्वाक्योच्चारणस्य प्रयोजनजिज्ञासायां तदन्वयव्यतिरेकानुविधायित्वादुपस्थितत्वाच्च प्रयोज्यवृद्धप्रवृत्तिमेव प्रयोजनमवधारयति नचाकिञ्चित्कुर्वतस्तादर्थ्यं सम्भवतीति च तज्जन्यं प्रवृत्त्यनुकूलं कार्य्यताज्ञानमेव कल्पयति स्वप्रवृत्तौ तेन कार्य्यताज्ञानस्य हेतुत्वावधारणात् नान्यतः प्रवृत्तेः कार्य्यताज्ञानावरुद्धत्वात्, नचैवं शब्दस्य स्वार्थज्ञानद्वारा प्रवृत्तिहेतुत्वम्। स्वप्रवृत्तौ बालेन शब्दाहितविशेषस्य कार्य्यताज्ञानस्य हेतुत्वेनानधारणात्। ज्ञाने च प्रत्यक्षादिनानेपायकत्वदर्शनात् शब्दोऽपि कार्य्यताज्ञानहेतुरित्यवधार्य तत्रैव शक्तिं कल्पयति उपस्थितत्वात्। पश्चादावापोद्धारेण क्रियाकारकपदानां कार्य्यान्विततत्तदर्थेषु शक्तिं गृह्णाति प्रथमगृहीतसामान्यशक्त्यनुरोधात्। अथ यद्यपि वृद्धव्यवहारादौ कार्य्यान्वितधीरनुमिता तथाप्यन्वितमात्रशक्त्यैव कार्य्यवाचकपदसमभिव्याहारादाकाङ्क्षादिमहिम्ना कार्य्यत्वधीसम्भवाच्च कार्य्यांशेऽपि शक्तिः परम्परयापि शब्दस्य कार्य्यान्वितज्ञानानुकूलत्वादर्थापत्तावन्यथोपपत्तिरपि। अवश्यक्लृप्ताकाङ्क्षादेः कारणत्वं कार्य्यांशशक्तावपि। तद्व्यतिरेकादन्विताभिधानव्यतिरेकनियमात् सति चाकाङ्क्षादौ कार्य्यत्वव्यतिरेकदर्शनादन्विताभिधानव्यतिरेको नाप्यस्ति। अन्यथा गवादिपदानां व्यक्तावपि शक्तिः स्यात्। संस्कारादेव व्यक्तिलाभदर्शनाच्च तथेति यदि, तदा कार्य्यवाचकपदादेव कार्य्यान्वितलाभ इति किं शक्त्या वृद्धव्यवहारे नियमतः कार्य्यान्वितज्ञानं दृष्टमिति तत्र शक्तिकल्पने वृद्धव्यवहारे शब्दोपस्थापितेनैवान्वयबोधदर्शनाच्छाब्दसन्निधेरप्यन्वयहेतुत्वकल्पने द्वारमित्यादौ शब्द एवाध्याह्रियेत। क्वचिदसंपूर्णवाक्ये वृद्धव्यवहाराद्व्युत्पत्तेः शब्दसन्निधिं व्यभिचरतीति चेत् तर्हि सिद्धार्थेऽप्यन्वयप्रतीतिदर्शनात् कार्य्यत्वमपि व्यभिचारि। न च तत्र लक्षणा, बाधकाभावात्। शक्तिकल्पनभियाह्यन्यत्र लक्षणा मता। इह तु लघीयस्या उभयसाधारणपदार्थमात्रशक्त्या हुव्यसैवोचितत्वात्। किञ्च कार्य्यवाचिलिङादीनामाकाङ्क्षाद्युपेतपदार्थान्वितस्वार्थबोधकत्वमवश्यं वाच्यम् अतोऽविशेषात् पदान्तराणामपि तथात्वमस्तु लाघवादिति? मैवं, व्यवहारहेतुतयानुमिते हि कार्य्येऽन्वितज्ञानेऽन्वयव्यतिरेकाभ्यां शब्दस्य साक्षात्कारणत्वमवधारयति न परम्परया, साक्षात्त्वस्यौत्सर्गिकत्वेन तत्सम्भवे परम्पराया अन्याय्यत्वादिति तत्रैव शक्तिं कल्पयति नान्वितज्ञाने, पदार्थज्ञाने वाऽप्रवर्त्तकतया प्रवृत्त्या स्वकारणत्वेन तयोरनुपस्थापनात्। न चान्वितज्ञानशक्तावपि परम्परया कार्य्यत्वधीः सम्भवतीत्यर्थापत्त्या सैव कल्प्यतां, लाघवात्, न तु विशिष्टज्ञाने शक्तिरन्यलभ्यत्वादिति वाच्यम्। अर्थापत्तेः साक्षादुपपादकमात्रविषयकत्वेन न्यूनाधिकाग्राहकत्वात्। साक्षादुपपादककार्य्यान्वितज्ञाने शक्तिः कल्प्यते लिङादीनां शक्तेरकल्पनादन्यलभ्यत्वस्याप्यभावात्। आद्यव्युत्पत्तेर्विचार्य्यत्वात्। किञ्च प्रवृत्तिकारणतयोपस्थितं कार्य्यान्वितज्ञानमपहायानुपस्थितान्वितज्ञानमात्रे

शक्तिकल्पनमयुक्तं हेत्वभावात् उपस्थित्यन्तरे गौरवात्। अथ कार्य्यान्वितज्ञानोपस्थितावाप्यन्वितज्ञानमप्युपस्थितमिति लाघवात् कार्य्यांशमपहायान्विते शक्तिर्गृह्यतामिति चेत् न ज्ञाने हि पदानां शक्तिः शक्यत्वात्, नार्थे। अन्यच्च कार्य्यान्विते ज्ञानमन्यदन्वितज्ञानं विषयभेदेन ज्ञानभेदात्। तदुक्तमभाववादे, "अन्यद्भूतलज्ञानं अन्यच्च घटवद्भूतलज्ञानमिति" अन्वितज्ञानमुपस्थाप्य तत्र शक्तिग्रह इति गौरवमेव लघुनि शक्ये सम्भवत्यन्यलभ्यं गुरु न, युगपदुपस्थितौ तथात्वात्। न च तस्याप्यनुपस्थितिः पुरुषविशेषदोषात् सर्व्वैरेवाद्यप्रवृत्तौ तथानवगमात्। तथापि न कार्य्यान्विते शक्तिः कार्य्यवाचिलिङादीनां व्यभिचारादिति चेत् न सर्व्वपदानां कार्य्यत्वविशिष्टधीजनकत्वात् तच्च कार्य्यान्वितस्वार्थप्रतिपादकतयेतरान्वितस्वार्थकार्य्यप्रतिपादकतया वेति। एवं कार्य्यान्वितव्युत्पत्तौ सत्यामनाकाङ्क्षादौ व्यभिचारादाकाङ्क्षादेरुपाधित्वम्। तयोश्चोपजीव्यप्रथमभाविकार्य्यान्वितव्युत्पत्त्यनुरोधेन विध्यश्रुतावपि कार्य्याध्याहारः। क्वचित्तथा क्वचिदसंसर्गग्रह इति सिद्धार्थेऽन्वयप्रतीतिदर्शनादुत्तरकालमन्वितमात्रे शक्तिरेव कल्प्यतां प्राचीनकार्य्यान्वितज्ञानं बाध्यतामित्यप्यतएव निरस्तं पूर्व्वकल्पनातः कल्पनान्तरप्रसङ्गाच्च। उत्तरकालभाविसिद्धार्थप्रयोगस्य लक्षणादिभिरप्युपपत्तेरनन्यथासिद्धत्वाभावेन प्राचीनज्ञानाबाधकत्वात् उपजीव्यव्याघाताच्च। अथ सिद्धार्थेऽपि व्युत्पत्तिः सम्भवति तथाहि उपलब्धचैत्रपुत्रजन्मा बालस्यादृशेनैव वार्त्ताहारेण चैत्रसमीपं गतः-चैत्र! पुत्रस्ते जात, इति वार्त्ताहारवाक्यं शृण्वन् चैत्रस्य मुखप्रसादं पश्यन् श्रोतुर्हर्षमनुमिनोति। हर्षाच्च तत्कारणं पुत्रजन्मज्ञानं कल्पयति उपस्थितत्वात् उपपादकत्वात् अयोपस्थितौ गौरवाच्च तत्र वाक्यस्य कारणतां कल्पयति लाघवादिति चेत् न हर्षहेतूनां बहूनां सम्भवात् हर्षेण लिङ्गेन पुत्रजन्मज्ञानस्य बालेनानुमातुमशक्यत्वात् प्रियान्तरज्ञानस्य परिशेषयितुमशक्यत्वात्। अथ पुत्रजन्मज्ञानाव्यभिचारि वृद्धिश्राद्धादिक्रियाविशेषदर्शनात् पुत्रजन्मज्ञानानुमानमिति चेत् तर्हि पुत्रस्ते जात इति वाक्यं तत्तत्क्रियाकर्त्तव्यतापरमेवेति कार्य्यान्वितज्ञानजनकत्वमेव तस्य प्रथमतो गृह्यते तदुत्तरकालं पुत्रजन्मज्ञानानुमानमिति न व्युत्पत्तिः कार्य्यं जहाति। यत्रापीह सहकारतरौ पिकोरौतीति प्रसिद्धार्थकपदसामानाधिकरण्यादिभिर्व्युत्पत्तिस्तत्रापि व्यवहाराधीनव्युत्पत्तिपूर्व्विका कार्य्यान्वित एव युक्ता पिकपदशक्तिः। पूर्व्वं नावष्टेति चेत् तत्रापि पिकमानयेत्यादौ कस्यचित् कार्य्यान्वित एव व्युत्पत्तेः उपजीव्यजातीयतया च तस्याबलवत्त्वम्। किञ्चेदमपि पदं कार्य्यान्वितज्ञानशक्तम् पदत्वादिति सामान्यतोऽवगतः विशेषः स्वार्थः परं नाधिगतः स इदानीं सुहृदुपदेशादिभिरवगम्यते। अतः सिद्धप्रवृत्तिपराणां शब्दानां प्रवर्त्तकज्ञानजनकता तच्च क्वचित् साक्षात् क्वचित् परम्परया, कार्यान्वयात् कार्य्यान्वितस्वार्थबोधकमिति। यत्र पुराणभारतादिपाठे फलश्रुतिरस्ति तत्रार्थवादकल्पितविधिशेषीभूतत्वेन प्रवृत्तिपरत्वेन तेषामिति परम्परया कार्यान्वयात् कार्यान्वितस्वार्थबोधकत्वं स्वरूपाख्यानपराणान्तु काव्यनाटकादीनां पदार्थासंसर्गाग्रहेण संसर्गव्यवहारो न संसर्गग्रह इति"।

तदेतन्मतं पूर्व्वपक्षत्वेनोक्त्वा मणिकृता निराकृतं यथा-"अत्रोच्यते घटमानयेति वाक्यश्रवणानन्तरं प्रयोज्यस्य घटानयनगोचरप्रवृत्त्या घटानयनकार्य्यताज्ञानमनुमितं बालेन, न तु कार्यान्वितज्ञानं प्रवृत्तिविशेषे तस्याऽहेतुत्वात् विषयादिपदशक्तिग्रहे तस्यानुपयोगाच्च तत्र च ज्ञानविशेषे घटमानयेति वाक्यविशेषस्यानाकलितपदविभागस्य हेतुत्वमवधार्य्य घटपदद्वितीयाधातुविधिप्रत्ययानां प्रत्येकावापोद्वारेण घटकर्मत्वानयनकार्य्यत्वज्ञानेषु प्रत्येकं कारणत्वमवगम्य शक्तिं कल्पयति। पश्चात्प्रवृत्तिसामान्येनानुमितकार्य्यतान्वितज्ञाने वाक्यमात्रस्यानन्यलभ्यत्वेन कार्य्यांशमपहायान्वितज्ञानमात्रे शक्तिं कल्पयति न तु प्रथमं वाक्यमात्रस्य कार्यान्वितज्ञानमात्रहेतुत्वकल्पनम्।

अथ घटानयनक्रियायाः प्रथमं क्रियात्वज्ञानात्प्रवृत्तिमात्रानुमानं न तु कार्यान्वितज्ञानमनुमाय तत्र वाक्यमात्रस्य हेतुत्वं कल्पयित्वा शक्तिं कल्पयति तदुत्तरं विशेषयोः कार्य्यकारणभाव इति चेत् न प्रथमं प्रवृत्तिमात्रकार्यान्वितज्ञानमात्रयोरनुमानं बालस्य क्रमशो भवतीत्यत्र मानाभावात् घटादिपदशक्तिग्रहस्य तेन विनापि सम्भवात्, न च तदनुमानसामग्री तदा वृत्तेति वाच्यम् तदा व्याप्त्यादिस्मृतौ मानाभावात् सामान्ययोः कार्य्यकारणभावग्रहो विशेषयोस्तथात्वग्रहे हेतुरिति चेत् न विशेषयोरन्वयव्यतिरेकाभ्यामेव तद्ग्रहात् यथा धूमवह्निविशेषयोः कार्य्यकारणभावग्रहे तत्सामान्ययोरपि हेतुहेतुमद्भावो भासते अन्यथा न सकृद्दर्शनगम्यः व्या प्तः

स्यात् तथात्वापि । विशेषयोः कार्यकारणभावतुल्यवित्ति-वेद्य एव सामान्ययोस्तथाभाव इति चेत् न प्रत्यक्षेण विशेषग्रहे योग्यत्वात् सामान्यमपि भासते । प्रकृते च कार्यविशेषेण कारणविशेषोऽनुमितो न सामान्यमिति न युगपदुपस्थितिः । अथ विशेषयोः कार्यकारणभावात् सामान्ययोरपि तथात्वमवधारयतीति चेत् तर्हि विशेषयोः कार्यकारणभावावगमः प्राथमिक इति तन्मूलकः प्रथमं कार्यान्वितपदविशेषशक्तिग्रह एव स्यात् निष्प्रयोजन-कत्वेनानन्तरानुमितौ मानाभावात्। यच्चोक्तं प्रवृत्तिकारण-तयोपस्थितं कार्यान्वितज्ञानमपहायान्वितज्ञानं कल्पयित्वा तत्र शक्तिकल्पनमयुक्तम् उभयथा गौरवादिति तन्न कार्यान्वितज्ञानेऽन्वितज्ञानत्वस्य सत्त्वात् तद्बाधकत्वाच्च तस्य । अतस्तत्रैव शक्तिग्रहो न कार्यत्वांशेऽपि । अतएव घटवद्भूतलज्ञाने भूतलज्ञानत्वमप्यस्ति तद्भिन्नं तज्ज्ञानसभाव व्यवहारकारणं त्वया स्वीकृतम् । अस्त्वेवं किन्तु तदुपस्थिता-वप्यन्वितज्ञानत्वं न विषय इति तस्योपस्थित्यन्तरं कल्प्य-मिति चेत् न कार्यान्वितज्ञानेऽन्वितज्ञानत्वं विशेष्यमिति तदुपस्थितौ तस्यापि विषयत्वात् विशिष्टज्ञानसामग्रीतो विशेष्यभानावश्यम्भावात् । अथ शान्यज्जातिज्ञानमन्यच्च जातिविशिष्टज्ञानमिति व्यक्तिज्ञानमपहाय जातिज्ञानं क्वापि नोपस्थितमिति न तत्र जातिरेव पदार्थः स्यात् । जातेः केवलोपस्थितौ च न व्यक्तिसमानसंवित्वेद्यत्वम् । अथ जातिविशिष्टज्ञानोपस्थितेर्व्यक्तिज्ञानविषयत्वेऽपि गौरवात्, व्यक्तेरनन्यलभ्यत्वाच्च जातिविशिष्टज्ञानत्वं न शक्य-तावच्छेदकं किन्तु जातिज्ञानत्वं लाघवादिति चेत् तर्हि तुल्यम् । न च युगपदुपस्थितौ लाघवावतारः। नचात्र युग-पदुपस्थितिरिति वाच्यम् विशिष्टज्ञानस्य विशेष्यविषयकत्व-नियमात् । किञ्च ममेदं कार्यमिति ज्ञानं साक्षादुपपादकं प्रवृत्त्या स्वकारणत्वं नानुमितमतस्तत्र शक्तिं गृह्णीयात् । साक्षादुपपादकविषयत्वात् कल्पनायाः, ममेदं कार्यमिति ज्ञाने तस्य साक्षादुपपादकत्वात् । अथेदं कार्यमिति ज्ञानशक्त्यैव परम्परयानुमानद्वारा ममेदं कार्यमिति ज्ञानसम्भवादन्यलभ्यत्वेन न तत्र शक्तिकल्पनमिति तर्ही-तरान्वितज्ञानशक्त्यैव कार्यवाचकपदसमभिव्याहारेण कार्यान्वितज्ञानसम्भवादन्यलभ्यत्वेन न तत्र शक्तिकल्पनमिति तुल्यम् । नन्विदं कार्यमिति ज्ञानं साक्षादेव प्रवर्त्तकं कर्त्तव्यताप्रयोजकशब्दशेषविशेषणस्य स्वगतत्वप्रतिसन्धानं सहकारि तेन नातिप्रसङ्गः न च सहकारिविलम्बेन कार्यानुत्पादे साक्षात्साधनत्वं निवर्त्तेत इति चेत् न लाघवेन ममेदं कार्यमिति ज्ञानादेव प्रवृत्तेः । यथा च भविष्यद्विषया कर्त्तव्यतानुमितिस्तथोक्तमधस्तात् । अपि च यादृशस्य पुरुषस्याविगीतकृतिसाध्यमिदं तादृशोऽहमिति धीर्न प्रवृत्तिहेतुः कृतक्रियमाणविषयकृतिसाध्यताज्ञानस्य सिद्धविषयस्यासिद्धविषयेच्छानुत्पादकत्वात् इच्छायाः स्वप्रकारकधीसाध्यत्वेन कृत्या साधयामीतीच्छायाः स्व कृत्यनन्तरभविष्यत्ताकृपकृतिसाध्यताधीजन्यत्वाच्च । अपि चास्तु प्रथमं कार्यान्वितज्ञाने वाक्यस्य साक्षात्कारण-ताबोधात् तत्र शक्तिग्रहः तथापि पश्चादावापोद्वारेण पदविशेषस्येतरान्वितस्वार्थज्ञाने शक्तिं कल्पयति लाघवात् न तु कार्यत्वांशेऽपि गौरवात् अन्यलभ्यत्वाच्च । नचैवं प्रथमं प्रवृत्तस्य साक्षात्कारणताबोधकस्य तन्मूलककार्यान्वि-तशक्तिग्रहस्य च बाधः स्यादिति वाच्यम् इष्टत्वात् अन्यथा सिद्धिमपहरतो हि बालस्य स (बाधः) भूत इति तस्यावल-वत्त्वात् गौरवान्यलभ्यत्वतर्कसहकृतप्रमाणजन्यत्वेनोत्तरस्य बल-वत्त्वात् नचोपजीव्यबाधान्न तथा प्रत्येतीति वाच्यम् उप-जीव्यत्वे मानाभावात् दैवाद्धि प्रथमं तद्वृत्तं न तु पद-विशेषशक्तिग्रहे तस्य हेतुत्वम् तेन विनापि तत्सम्भवात् । न च प्राथमिकत्वेन बलवत्त्वं, व्यभिचारात् । नापि सर्व्वैः प्रथमं प्रतीयमानत्वेन बलवत्त्वम् । सर्व्वेषां शरीराहं-प्रत्यये, चन्द्रतारकादिपरिमाणस्य सर्वैरल्पत्वग्रहे च व्यभि-चारात् । अतएव पूर्वकल्पनातः कल्पनान्तरप्रसङ्गः स्यादिति निरस्तम् । यत्रानन्यथासिद्धतयोपजीव्यतया वा बलवत्त्वं पूर्व्वकल्पनायास्तत्र तथात्वात् । किन्तु प्रथमं कार्यान्वितज्ञाने वाक्यस्य साक्षात्परम्परोदासीनं कारण-त्वमात्रं गृह्यते न तु विशेषोऽपि उपायस्यान्वयव्यति-रेकादेरुभयविशेषसाधारणत्वेन तत्सांशयिकत्वात् । उत्स-र्गोऽपि बाधकाभावनिश्चयसहकृतो निश्चायकः । नचाऽ-न्यलभ्यत्वस्य बाधकस्याभावमापाततः स्वतो दर्शनमात्रेण बालो निश्चेतुमर्हति अतएव प्रामाण्यस्यौत्सर्गिकत्वेऽपि बाधकाभावनिश्चयादेव निश्चयः । अन्यथा प्रमाऽप्रमा वा साक्षात्परम्परासाधनं वेति संशयः क्वापि न स्यात् । यच्च हर्षहेतूनां बहूनां सम्भवादित्यादि तन्न स्वतो गृहीत हर्षहेतुस्तनपानादेर्बाधावतारादन्यस्य हर्षहेतोरग्रहात् । उपस्थितत्वादुपपादकत्वाच्च पुत्रजन्मज्ञानस्यैव हर्षहेतुत्वेन कल्पनात् । अन्यप्रियज्ञानं हर्षकारणं भविष्यतीति शङ्कायां कथमेवमिति चेत् एवन्तर्हि कार्यान्वितज्ञानेऽपि

शक्तिर्न रद्योत प्रयोज्यज्ञानहेतूनां बहुत्वात्। अनन्यथासिद्धशब्दानुविधानस्य च तुल्यत्वात् अन्यथियज्ञानस्याज्ञानाच्च ज्ञानेऽपि वा तदुपस्थितिनियमे मानाभावात् सन्देहाभावोपपत्तेः लिङ्गाभासजन्यकाकतालीयसम्पन्नसंवादानुमितिवद्धर्षेण लिङ्गेन पुत्रजन्मज्ञानानुमानसम्भवाच्च। नचाभासत्वेनानुमितेर्भ्रमत्वे तद्धेतुशक्तिग्रहो भ्रमः, विषयस्य तथाभावेन तयोर्यथार्थत्वात्। यथा कश्चित् सूत्रसञ्चाराधिष्ठितं दारुपुत्रकं घटमानयेति निर्दुङ्क्ते स च तमानयति तदा चेतनव्यवहारादिवत् तद्दर्शीबालो व्युत्पद्यते—इयं क्रिया, कृतिजन्या, सा ज्ञानजन्या, ज्ञानं तद्वाक्यजन्यमित्यनुमितिपरम्परायाः भ्रमत्वेऽपि तद्धेतु शक्तिग्रहः तज्जन्यशाब्दबोधश्च यथार्थ एव विषयस्य तथाभावादिति सिद्धः सिद्धार्थे शक्तिग्रह इति। अतएव "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपपन्नञ्च तत् सुखं स्वःपदास्पदम्" इत्यर्थवादोपस्थिते सुखे वेदादेव स्वर्गपदस्य शक्तिग्रहः"।

**कार्य्यिन्** त्रि० कार्य्यमस्त्यस्य इनि १कार्य्ययुक्ते २कार्य्यार्थिनि (उमेदार) व्याकरणोक्ते ३आदेशस्थानिनि च "कार्य्यमनुभवन् हि कार्य्यी निमित्ततया नाश्रीयते" परिभा०। अत्र कार्य्यीति निर्द्देशात् "एकाक्षरात् कृतोजातेः सप्तम्याश्च न तौ (इनिठनौ) स्मृतौ" इत्युक्तिरप्यनित्या। ततः मतुप् मस्य वः। कार्य्यवत्। ठन् कार्य्यिकतत्रार्थे त्रि०। तत्र इनौ मतुपि च स्त्रियां ङीप्।

**कार्शकेय** पुंस्त्री कशकस्यर्षेरपत्यं बा० ढञ्। कशकर्षेरपत्ये ऋषिभेदे स्त्रियां ङीप् "कार्शकेयीपुत्रात् कार्शकेयीपुत्रः" शत० ब्रा० १४,६,४,३२, वेद वंशवर्णने।

**कार्शाश्वीय** त्रि० कशाश्वेन निर्वृत्तादि कशाश्वा० चतुरर्थ्यां छण्। कशाश्वनिर्वृत्तादौ।

**कार्श्मरी** स्त्री कश—स्वार्थे णिच्-भावे मनिन् कार्श्म तत् राति रा-क गौरा० ङीष्। श्रीपर्णीवृक्षे कर्कः २गाम्भारीवृक्षे भरतः।

**कार्श्य** न० कृशस्य भावः ष्यञ्। १कृशत्वे "निर्बन्धसञ्जातरुषार्थकार्श्यम्" रघुः। स्वार्थे ष्यञ्। २कशे ३शालवृक्षे, ४लकुचे (डेओ) वृक्षे ५कर्चुरे च पु० राजनि०।

**कार्ष** त्रि०कृषिः शीलनस्य छत्रा० णः। कृषिशीले कृषीवले भरतः।

**कार्षापण** पुंन० कर्षस्येदम् स्वार्थे वा अण्। तेन आपण्यते आ+पण—कर्म्मणि घ। १अशीतिरत्तिके ताम्रिके कर्षे "कार्षापणस्तु विज्ञेयः कार्षिकस्ताम्रिकः पणः" मनुः। २षोडशपणात्मके पुराणे (काहन) इति ख्याते मानभेदे। "माषः षोड़शभागस्तु ज्ञेयः कार्षापणस्य तु। काकिनी (बुड़ि) तु चतुर्भागो माषस्य परिकीर्त्तिता। पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी। कार्षापणप्रमाणन्तु तन्निबद्धम् (परिभाषितम्) इहैव तत्"कात्या०स्मृ०षोडशेत्यत्र हेमाद्रौ विंशतीति पाठः। अतएव "द्वात्रिंशत्पणिका गावो वत्स: पौराणिकोभवेत्" कात्या० स्मृतौ पुराणद्वयवाच्यद्वात्रिंशत्पणानां गोमूल्यत्वेनाभिधानम्। "अशीतिभिर्वराटकैः पण इत्यभिधीयते। ते षोडशः पुराणं स्यात् रजतं सप्तभिस्तु तैः" भविष्यपु०। "कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता" प्रा०त०। "कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतोजनः। तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा।" "समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि। स द्वौ कार्षापणौ दद्यात्"मनुः। "कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते। पणोनिबद्धः पूर्व्वस्यां षोडशैव पणाः पलम्। इति नारदोक्ते ३दक्षिणदेशप्रसिद्धे पूर्व्वदेशप्रसिद्धपण परिमाणे च। कार्षापणेन क्रीतः टिठन् वा प्रतिरादेशश्च इदुच्चारणार्थः कार्षापणिक पक्षे प्रतिक तत्क्रीते त्रि० स्त्रियांङीप्। कार्षापणिकी प्रतिकी अध्यर्द्धपूर्वात् द्विगोश्च तस्य वा लुक्। अध्यर्द्धकार्षापण अध्यर्द्धकार्षापणिकं सार्द्धकार्षापणक्रीते एवं द्विकार्षापण द्विकार्षापणिकं कार्षापणद्वयक्रीते त्रि०। पर्श्वादिपाठात् स्वार्थेऽण्। कार्षापण कार्षापणसंघजीविषु त्रि० ब०व०।

**कार्षि** त्रि० कर्षतीति कर्षः ततः स्वार्थे बा० इञ्। १कर्षणशीले २अन्तर्गतमलापनेतरि। "कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि" यजु०६,२८। कर्षतीत्येवंशीलः कार्षिः अन्तर्गतशमलापनेतासि" वेददी० "कार्षिरसो त्याह शमलमेवासायपप्लावयति" तैत्ति०।

**कार्षिक** त्रि० कर्षं नित्यमर्हति छेदा० ठञ्। १नित्यकर्षणार्हे कर्षेण क्रीतः ठञ्। १कर्षेण क्रीते। तत्परिमाणमस्य ठक्। ३कर्षपरिमाणयुक्ते। कर्षः कर्षणं शीलमस्य ठक्। ४कृषके हेमच०। स्वार्थे ठक्। ५कर्षपरिमाणे। "ताम्रिकः कार्षिकः पणः" मनुः।

**कार्ष्ट्य** न० कृष्टस्य भावः दृढा०ष्यञ्। कृष्टत्वे पक्षे इमनिच् कृष्टिमन् तत्रार्थे पु०। षित्त्वात् स्त्रियां ङीप्यलोपौ।

**कार्ष्ण** त्रि०कृष्णस्येदम् अण्। १कृष्णमृगसम्बन्धिनि। "कार्ष्णरौरववास्तानि चर्म्माणि ब्रह्मचारिणः" मनुः। २कृष्णद्वैपायनसम्बन्धिनि च। "कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते" भा०आ०प०१अ०। कृष्णोदेवतास्य अण्। ३कृष्णास्य-

विष्णु देवताके हविरादौ त्रि०। "कार्ष्णेन पत्रिणा शत्रुः स भिन्नहृदयः पतन्" रघुः। ४शतावर्य्यां स्त्री राजनि०

**कार्ष्णाजिनि** पु० कृष्णाजिनस्यर्षेरपत्यम् इञ्। कृष्णाजिनर्षेरपत्ये "कृलमविनिर्मित कार्ष्णाजिनिः" कात्या०श्रौ०१,६ २२

**कार्ष्णायन** पु० कृष्णस्य व्यासस्य गोत्रापत्यम् नडा० ब्राह्मणे वासिष्ठे च विशेष्ये फक्। कृष्णस्य व्यासस्य गोत्रापत्ये १ब्राह्मणे २वासिष्ठे च।

**कार्ष्णायस** न० कृष्णस्यायसो विकारः अण्। कृष्णायसस्य विकारे "कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः" मनुः। स्त्रियां ङीप्। "अश्विं कार्ष्णायसीं दद्यात्" मनुः।

**कार्ष्णि** पुंस्त्री कृष्णस्यापत्यं बाह्वा०इञ्। कृष्णस्य व्यासस्यापत्ये शुकदेवे। "द्युगपस्तपः कार्ष्णिर्नन्दिषिलरथस्तथा" भा० आ० १२२अ० ऋषिकीर्त्तने। २रौक्मिणेये कामदेवे च। "सा च तं वर्द्धयामास कार्ष्णिं कमललोचनम्" हरि० १६२ अ०। अस्योत्पत्तिकथा कामशब्दे उक्ता।

**कार्ष्ण्य** न० कृष्णस्य भावः दृढादि० ष्यञ् वा। १कृष्णत्वे कृष्णस्य गोत्रापत्यम् गर्गा० यञ्। ब्राह्मणवासिष्ठे कृष्णस्य व्यासस्य गोत्रापत्ये पुंस्त्री स्त्रियां ङीप् तस्य छात्रः कण्वा०अण्। कार्ष्ण कृष्णगोत्रापत्यच्छात्रे स्त्रियां ङीप्।

**कार्ष्मन्** न० कर्षन्त्यत्र कृष-स्वार्थे णिच्–आधारे मनिन्। १युद्धे तत्र हीतरेतरं योधाः कर्षन्तीति तस्य तथात्वम्। "कार्ष्मन् वाजी न्यक्रमीत्" ऋ०९।३६।१ "कार्ष्मन् कार्ष्म युद्धम्" भा०। ततः भावे मनिन्। २कर्षणे च।

**कार्ष्मरी** स्त्री कृष-णिच्–मनिन् कार्ष्म कर्षणं राति ददाति रा-क गौरा० ङीष्। श्रीपर्णीवृक्षे तस्याः विकारः यत्। कार्ष्मर्य्य श्रीपर्णीवृक्षावयवे। "पालाशवैकङ्कतकार्ष्मर्य्यवैल्वान्" कात्या० श्रौ० २,८,१। कर्कभाष्ये कार्ष्मर्य्येति पाठस्यापि दृष्टत्वात् तालव्यमध्योऽपि तत्रार्थे।

**कार्ष्य** पु०कृष्यतेऽसौ कृष–घञ् स्वार्थे ष्यञ्। शालवृक्षे अमरः।

**काल** कालोपदेशे (इयत्तया कालनिश्चयार्थोपदेशे) अद० चु० उभ० सक० सेट्। कालयति ते अचकालत्-त, कालयाम्–बभूव-आस-चकार–चक्रे। कालयिष्यति-ते

**काल** पु० ईषदलति अल–अच् कोः का। १कृष्णवर्णे तस्य वर्णेषु ईषद्भूषकत्वात् तथात्वम्। अर्श्आद्यच्। २तद्वर्णयुक्ते त्रि०। ३लौहे न० वाचस्पतिः। धातुषु तस्य कृष्णत्वात् तथात्वम्। ४कक्कोले न० राजनि०। ५कालीयके गन्धद्रव्यभेदे न०शब्दच०। तयोर्गन्धद्रव्येषु कृष्णत्वात्तथात्वम्। ६कोकिले पुंस्त्री० राजनि०। तस्य पक्षिषु कृष्णत्वात्तथात्वम् स्त्रियां ङीष्। ७रालेदरक्तचित्रके ८कासमर्दे (कालकसेन्दा) वृक्षे च पु०राजनि०। १०शनिग्रहे मेदि०कृष्णत्वात्तस्य तथात्वम्। कलयति सर्वं चु०कल–अच् "कालसमयवेलास्विति" पा० निर्देशात् नि० उपधादीर्घः। ११यमराजे १२महाकाले शिवे मेदि०। १३परमेश्वरे "कालोऽस्मि लोकक्षयकृत् प्रवृद्धः" "कालः कलयतामहम्" इति च गीता "कृतः सुदर्शनः कालः परमेष्ठी परिग्रहः विष्णुस०। "त्वयोमयोऽयं भगवान् कालात्मा कालकृद्विभुः" सू०सि०। स्वनामख्याते परत्वापरत्वधीहेतौ न्यायादिमतसिद्धे १४द्रव्यभेदे। तन्निरूपणं कणादसूत्रे उपस्कारवृत्तौ च यथा

"अपरस्मिन्नपरं युगपत् चिरं क्षिप्रमिति काललिङ्गानि" क०सू०।

"इतिशब्दो ज्ञानप्रकारपरः प्रत्येकमभिसम्बध्यते तथाचापरमिति प्रत्ययो युगपदितिप्रत्ययः चिरमितिप्रत्ययः क्षिप्रमितिप्रत्ययः काललिङ्गानीत्यर्थः। अपरस्मिन्नपरमित्यनेन परस्मिन् परमित्यपि द्रष्टव्यं, तेनायमर्थः-बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधिं कृत्वाऽपरत्वमुत्पद्यते तच्चापरत्वमसमवायिकारणसापेक्षम्, न च रूपाद्यसमवायिकारणं व्यभिचारात् त्रयाणां गन्धादीनां वायौ परत्वाद्यनुत्पादकत्वात् स्पर्शस्याप्युष्णादिभेदेन भिन्नस्य प्रत्येकं व्यभिचारात् न चावच्छिन्नपरिमाणं तथा तस्य विजातीयानारम्भकत्वात् तपनपरिस्पन्दानाञ्च व्यधिकरणत्वात् तदवच्छिन्नद्रव्यसंयोग एवासमवायिकारणं परिशिष्यते तच्च द्रव्यं पिण्डमार्त्तण्डोभयसंयुक्तं विभु स्यात् आकाशस्य तत्स्वाभाव्यकल्पने क्वचिदपि भेर्य्यभिघातात् सर्व्वभेरीषु शब्दोत्पत्तिप्रसङ्गः। तथाच कालस्यैव मार्त्तण्डसंयुक्तस्य पिण्डेन संयोगोऽपरत्वासमवायिकारणं काल एव मार्त्तण्डक्रियोपनायकः आत्मनस्तु द्रव्यान्तरधर्म्मेषु द्रव्यान्तरावच्छेदाय स्वप्रत्यासत्त्यतिरिक्तसन्निकर्षापेक्षत्वात् अन्यथा वाराणसीस्थेन महारजनारुणिम्ना पाटलिपुत्रेऽपि स्फटिकमणेरारुण्यप्रसङ्गात्। कालस्य तु तत्स्वभावतयैव कल्पनादयमदोषः। कालेनापि रागसंक्रमः कथं न इति चेत् नियतक्रियोपनायकत्वेनैव तत्सिद्धेः एवं स्थविरमवधिं कृत्वा यूनि परत्वोत्पत्तिर्निरूपणीया। युगपदिति युगपज्जायन्ते युगपत्तिष्ठन्ति युगपत् कुर्व्वन्ति इत्यादि–प्रत्ययानाञ्च एकस्मिन् काले एकस्यां सूर्य्यगतौ एकस्मिन् सूर्य्यगत्यवच्छिन्नकाले इत्यर्थः, न चाप्रामा एव

सूर्य्यगतयो विशेषणतामनुभवन्ति । न च स्वरूपप्रत्ययास्तथा एव ताः तस्मादेतादृशविशिष्टप्रत्ययान्यथानुपपत्त्या विशेषणज्ञापकं यद् द्रव्यं स कालः” उपस्कारवृत्तिः ।

“ननु सिध्यतु कालः, स तु नित्यो द्रव्यं वेति न प्रमाणमत आह” ।

“द्रव्यत्वनित्यत्वे वायुना व्याख्याते” क० सू० ।

“यथा वायुपरमाणोर्गुणवत्त्वाद्द्रव्यत्वम् अद्रव्यद्रव्यत्वाच्च नित्यत्वं तथा कालस्यापीत्यर्थः” उप० ।

“तथापि सन्तु बहवः काला इत्यत आह” ।

“तत्त्वम्भावेन” क० सू० ।

व्याख्यातमिति विपरिणतेनान्वयः । चिरादिप्रत्ययानां काललिङ्गानां सर्व्वत्राविशेषादनेकत्वेऽप्यात्मनामिव विशेषलिङ्गाभावात् सत्तावदेकत्व कालस्येत्यर्थः । नन्वेवं क्षणलवमुहूर्त्तयामदिवसाहोरात्रपक्षमासर्त्त्वयनसंवत्सरादिभेदेन भूयांसः कालास्तत् कथमेकः इति चेन्न भेदभानस्य उपाधिनिबन्धनत्वात् यथा एक एव स्फटिकमणिर्ज्जवातापिञ्छाद्युपाध्युपरागेण भिन्न इव भासते तथैक एव कालः सूर्य्यस्पन्दाद्यवच्छेदभेदेन तत्तत्कार्य्यावच्छेदकभेदेन च भिन्न इव भासते इत्यभ्युपगमात् तथाच कालोपाध्यव्यापकः कालोपाधिः, स्वाधेयकादाचित्काभावप्रतियोग्यनाधारः कालो वा क्षणः प्रतिक्षणं कस्यचिदुत्पत्तेः कस्यचिद्विनाशादेतदध्यवसेयम् । क्षणद्वयञ्च लव इत्याद्यागमप्रसिद्धम् । ननु तथाप्यतीतानागतवर्त्तमानभेदेन कालत्रयस्तु, श्रूयते हि “त्रैकाल्यमुपावर्त्तते” “त्रैकाल्य सिद्धिः” इत्यादीति चेन्न त्रैकाल्यव्यवहारात् येन हि वस्तुना यः कालोऽवच्छिद्यते स तस्य वर्त्तमानः यत्प्रागभावेन यः कालोऽवच्छिद्यते स तस्य भविष्यत्कालः यत्प्रध्वंसेन यः कालोऽवच्छिद्यते स तस्यातीतकालः तथाचावच्छेदकत्रित्वाधीनः कालत्रित्वव्यवहारः” उपस्कारवृत्तिः ।

“इदानीं सर्व्वोत्पत्तिमतां कालः कारणमित्याह” ।

“नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति” क० सू० ।

इतिशब्दो हेतौ इतिहेतोः कारणे—सर्व्वोत्पत्तिमत्कारणे कालः इत्याख्या । हेतुमाह नित्येष्वभावात् अनित्येषु भावादिति नित्येषु आकाशादिषु युगपज्जातः चिरजातः क्षिप्रं जातः इदानीं जातः दिवा जातः रात्रौ जात इत्यादिप्रत्ययस्याभावात् अनित्येषु घटपटादिषु यौगपद्यादिप्रत्ययानां भावात् अन्वयव्यतिरेकाभ्यां कारणं काल इत्यर्थः । न केवलं यौगपद्यादिप्रत्ययबलात् कालस्य सर्व्वोत्पत्तिमन्निमित्तकारणत्वम् अपि तु पुष्पफलादीनां हैमन्तिकवासन्तिकप्रावृषेण्यादिसंज्ञाबलादेव तदध्यवसेयम् उप० । भाषापरिच्छेदे तल्लक्षणादि कारिकारूपेण दर्शितं यथा

“जन्यानां जनकः कालो जगतामाश्रयो मतः ।”

“परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः” भाषा ।

“कालं निरूपयति जन्यानामिति तत्र प्रमाणं दर्शयितुमाह जगतामिति तथाहि इदानीं घट इत्यादिप्रतीतिः सूर्य्यपरिस्पन्दादिकं यदि विषयीकरोति तदा सूर्य्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः स च संयोगादिर्न सम्भवतीति काल एव तत्सम्बन्धघटकः कल्प्यते इत्थञ्च तस्याश्रयत्वमपि सम्यक् । प्रमाणान्तरं दर्शयति परापरत्वेति परत्वापरत्वबुद्धेरसाधारणं निमित्तं काल एव परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः कल्प्यत इति भावः । नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह क्षणादिरिति कालस्त्वेकोऽपि उपाधिभेदात् क्षणादिव्यवहारविषयः । उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म्म, पूर्व्वसंयोगावच्छिन्नविभागो वा पूर्व्वसंयोगावच्छिन्नोत्तरसंयोगप्रागभावो वा उत्तरसंयोगावच्छिन्नं कर्म्म वा । न चोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यं कर्म्मान्तरसत्त्वादिति । महाप्रलये क्षणादिव्यवहारो यद्यपि, तदाऽनायत्त्या ध्वंसेनोपपादनीयः । दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति” मुक्तावली ।

तार्किकशिरोमणिना रघुनाथशिरोमणिना च पदार्थनिरूपणप्रकरणे “तत्र दिक्कालौ नेश्वरादतिरिच्येते” इति वदता विभुरूपस्यैकस्य कालस्य खण्डनं कृतम् । रघुदेवरामभद्राभ्यां तद्विवृतं ततः संक्षिप्य पदार्थतत्त्वसारे च जयनारायणतर्कपञ्चाननेन दर्शितं यथा

“दिक्कालौ नेश्वरादतिरिक्तौ, प्राच्यां घट इदानीं घटः इत्यादिव्यवहारस्य ईश्वरात्मकविभुविषयकत्वेनैवोपपत्तेः, न च तयोर्भिन्नविषयकत्वमनुभवसिद्धमिति वाच्यं तथा सति प्राच्यां घटः प्रतीच्यां घटः इदानीं घटः तदानीं घट इत्यादेरपि भिन्नभिन्नविषयकत्वानुभवात् कालादीनामपि बहुत्वाङ्गीकारप्रसङ्गात्, तथा च उपाधिभेदादेकया दिशा एकेन कालेन च यथा भवतां बहूनां व्यवहाराणामुपपत्तिस्तथाऽस्माकमपि एकेनेश्वरेणागमानुमानाभ्यां सिद्धेन सर्व्वेषामेव तादृशव्यवहाराणामुपाधिभेदादुपपत्तिः सम्भवति,

सूर्यक्रियादौ स्वसंयुक्तेश्वरसंयोगितपनाश्रितत्वादिसम्बन्धेन घटादेः सत्त्वसम्भवेन तत्सम्बन्धघटकतयाऽप्यतिरिक्तकाला-द्यसिद्धेः। अथवा क्षणा एवातिरिक्ताः इदानीमित्यादि-व्यवहारविषयाः, विभागप्रागभावावच्छिन्नकर्म्मणः क्षण-त्वासम्भवात् भाविकर्म्मान्तरजन्यविभागान्तरप्रागभावावच्छि-न्नस्य कर्म्मणः क्षणचतुष्टयादिस्थायित्वेन तादृशस्योपा-धित्वासम्भवात् नच विभागे स्वजन्यत्वं विशेषणीयम्, स्वत्वाननुगमादननुगमापत्तेः, विभागजननादिदशायाश्चोपा-ध्यन्तरस्य वाच्यतया तावताप्यननुगमाच्च, एवञ्चोपाधीना-मतिरिक्तानां क्षणिकपदार्थस्वरूपाणां क्षणानामवश्याभ्युपेय-तया तैरेव तादृशाः सर्व्वे व्यवहारा उपपादनीयाः किम-तिरिक्तेन कालेनेति”।

सांख्यमते तस्याकाशेऽन्तर्भावः न पृथक्तत्त्वान्तरत्वं तदे-तत्सांख्यसूत्रभाष्ययोर्दर्शितम्

“खण्डदिक्कालयोः सृष्टिमाह” भा०।

“दिक्कालावाकाशादिभ्यः” सां०सू०।

“नित्यौ यौ दिक्कालौ तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशे-षावेव। अतो दिक्कालयोर्विभुत्वोपपत्तिः। “आकाशवत् सर्वगतश्च नित्य” इत्यादिश्रुत्युक्तं विभुत्वं चाकाशस्योपपन्नम्। यौ तु खण्डदिक्कालौ तौ तु तत्तदुपाधिसंयोगादाकाशादु-त्पद्येते इत्यर्थः आदिशब्देनोपाधिग्रहणादिति। यद्यपि तत्तदुपाधिविशिष्टाकाशमेव खण्डदिक्कालौ तथापि विशि-ष्टस्यातिरिक्तताभ्युपगमवादेन वैशेषिकनये प्रोक्तस्य कार्य्य-तावत् तत्कार्य्यत्वमत्रोक्तम्” प्र०भा०।

“अनुपदं दर्शयिष्यमाणमाधवग्रन्थे च वाचस्पतिमतेन कालखण्डनं तु नित्यविभुकालखण्डनपरं तथाहि “उपाधिर्भिद्यते न तु तद्वानिति” सा०सू० उपाधिभेदेन धर्म्मिभेदासम्भवस्य व्यवस्थापनात् धर्म्मिणः कालस्य एक-त्वेन उपाधिना भेदासम्भवात् उपाधिना नाऽनागतादि-भेदव्यवहारसम्भवः तथा च क्रियादेरेव उपाधिभूतस्या-नागतादिव्यवहारोपपादकतया तस्यैव कालत्वम्। अत-एव क्रियैव काल इत्यभियुक्तोक्तिः।

कालमाधवीये च माधवेन शङ्कापूर्व्वकं कालस्येत्थं न्यरूपि

“ननु नायमुद्यमः सफलः कालस्य गगनकुसुमायमान-त्वात् तदेतत्परमरहस्यमभिजानानः कपिलमहामुनि-स्तत्त्वानि निर्विवेक्तुकामः कालमुपेक्ष्यान्यान्येव पञ्चविं-शतितत्त्वानि विवेच “मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृ-तिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः” इति। न चैतेष्वेव तत्त्वेषु कालस्यान्तर्भावो मुनिना विवक्षित इति शङ्कनीयम्, त्वदभिमतस्य कालस्य पञ्च-विंशतितत्त्वानां चान्यादृशानि लक्षणानि। सत्त्वरजस्त-मोगुणानां साम्यावस्था मूलप्रकृतिर्महदहङ्कारपञ्चतन्मात्रा-ख्यानां सप्तानां प्रकृतिविकृतीनां मध्येऽध्यवसायहेतुर्म-हत्तत्त्वम् अभिमानहेतुरहङ्कारः। शब्दस्पर्शरूपरसगन्धात्म-कानि पञ्चतन्मात्राणि पृथिव्यादिपञ्चमहाभूतानामेकादशे-न्द्रियाणाञ्च षोडशविकाराणां लक्षणानि प्रसिद्धानि। अप्र-कृतिरविकृतिः पुरुषश्चिदात्मकः। न ह्येवंलक्षणकेषु तत्त्वेषु कालस्यान्तर्भावः सम्भाव्यते नापि षड्विंशं तत्त्वान्तरं मुनि-रनुमन्यते। कथं तर्हि मुनिप्रणीतानि तत्त्वानि आर्य्याभिः संगृह्णन् ईश्वरकृष्णो बहिःकरणान्तःकरणे विविञ्चन् कालं व्याजहार? “सांप्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणमिति”। परप्रसिद्ध्या परो बोधनीय इति न्यायेनायं व्यवहारो न तु स्वसिद्धान्ताभिप्रायेणेति वदामः। अत एवैतद्वचो व्याचक्षाणा वाचस्पतिमिश्रास्तत्त्वकौमुद्यामेव-माहुः “कालस्तु वैशेषिकाभिमत एको नानागतातीतादि भेदं प्रवर्त्तयितुमर्हति। तस्मादयं यैरुपाधिभेदैरतीताना-गतादिभेदभावं प्रतिपद्यते सन्तु त एवोपाधयो व्यवहार-हेतवः कृतमन्तर्गडुना कालेनेति सांख्याचार्य्याः”। तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति। अथोच्येत–भूतकालो वर्त्तमानकालो भविष्यत्काल इति एवं त्रिष्वपि भूतादि-ष्वनुगतः कालप्रत्यय एकमनुगतं कालत्वमन्तरेणानुप-पन्न इति तन्न पदार्थप्रत्ययवदुपपत्तेः यथा भवन्मते द्रव्यपदार्थो गुणपदार्थ इति षट्सु भावेषु चतुर्षु भावेष्वनु-गतः पदार्थप्रत्यय एकमनुगतं पदार्थशब्दवाच्यं तत्त्वा-न्तरमन्तरेणाप्युपपन्नः। तथा कालप्रयोगोऽपि कुतो नोपपद्येत!। तस्मादितस्तत्त्वं कालं निर्णेतुं महानयमु-द्यमः पिच्छावच्छिरोमणेर्भवताचार्य्यस्य न कथञ्चिदप्युपपन्न इत्येवं प्राप्ते ब्रूमः, आयुष्मतश्च तस्यैवं निरूढकालतत्त्वे यः प्रद्वेषः स कस्य हेतोः? इति वक्तव्यम्। किं कपिलमहामुनि-ना निराकृतत्वात् ?१ किंवा सांख्यशास्त्रप्रणीतेषु तत्त्वेषु असं-गृहीतत्वात् ?२ उत लक्षणाभावात् ?३ आहोस्वित्प्रमाणा-भावात् ?४ अथवा प्रयोजनाभावात् ?५, अथवा तत्त्वगतपञ्च-विंशतिसंख्याभ्यासपाटवेनाभ्यस्तात् अज्ञानात् ?६, न प्रथमः कालनिराकरणसूत्रस्य मुनिना प्रणीतस्यानुप-लम्भात्। न द्वितीयः अतिप्रसङ्गात् ऋग्वेदप्रोक्तानां ज्योतिष्टोमादीनामायुर्वेदधनुर्वेदमात्रवेदप्रोक्तानामौषध-

मन्वन्तरादीनां चासंगृहीतत्वेन तेष्वपि भवतः प्रद्वेषः केन वार्य्येत?। अथ तेषां त्रिविधस्य संग्रहेऽपि सुखदुःखमोहात्मकत्वेन गुणत्रयान्तर्गतत्वादन्येषामर्थात् संग्रह इष्यते तर्हि कालस्याप्यसौ न दण्डवारित इति बुद्धिं समाधत्स्व। कालस्य गुणत्रयपरिणामत्वे सावयवत्वमनित्यता च घटादेरिव प्रसज्येतेति चेत्? नित्यनिरवयवकालतत्त्वाभिनिवेशवतो वैशेषिकादेः पतत्वयं वज्रप्रहारः शिरसि। वेदवादिनां तु न कापि क्षतिः। कालस्योत्पत्तिसावयवत्वयोः प्रत्यक्षश्रुतावुपलभ्यमानत्वात्। तैत्तिरीयशाखायां नारायणीये कालोत्पत्तिराम्नायते "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि कला मुहूर्त्ताः काष्ठाश्चाहोरात्राश्च सर्वशः। अर्द्धमासा मासा ऋतवः संवत्सरश्च कल्पन्तामिति" तस्यामेव शाखायामारुणकेतुकचयनब्राह्मणे सावयवत्वं श्रूयते "उक्तो वेषो वासांसि च कालावयवानामितः प्रतीच्येषु इति"। इतोऽस्मादनुवाकात् प्रतीच्येषु अधस्तनेषु अनुवाकेषु कालावयवानामृतूनां ध्यातव्यो वेष उक्तः वस्त्राणि चोक्तानीत्यर्थः। नित्यत्वनिरवयवत्वाभिधायिनो वैशेषिकादिशास्त्रस्य "अमृता देवता" इति वदापेक्षिकनित्यतायामन्तर्धानशक्त्युपेतयक्षराक्षसादिवत् संश्लेषयोग्यावयवशून्यतायां च तात्पर्यं वर्णनीयम्।

"अथ मन्यसे महता तपसा शिवमाराध्य तत्प्रसादलब्धसर्वज्ञत्वपदः कणादमुनिर्वेदतात्पर्यं सम्यग्वेत्तीति वेदस्यैव मन्दमतिप्रतीतादर्थादर्थान्तरं नेतव्यमिति। एवमपि यस्य प्रसादादयं सर्वज्ञतामलभत स एव शिवो मुख्यः सर्वज्ञ इति तन्मतानुसारेण कणादमतस्यैवान्यथानयनमत्यन्तमुचितम्। शिवो हि शैवेषु आगमेषु षट्त्रिंशत्तत्त्वानि निरूपयन् कालतत्त्वस्योत्पत्तिमङ्गीचकार। निखिलशैवागमसारभाष्याभिः संगृह्णानो भोजराजः शुद्धानि पञ्च तत्त्वानि शिवशक्तिसदाशिवेश्वरविद्याख्यानि निर्दिश्येतराणि निर्दिशन्मायाकार्यत्वोक्तिपूर्वकमेव कालं निरदिक्षत् "पुंसो जगतः सृतये मायातस्तत्त्वपञ्चकं भवति। कालो नियतिश्च तथा कला च विद्या च रागश्च" इति तानि मायासहितान्येकादश तत्त्वानि सांख्यप्रसिद्धपञ्चविंशतितत्त्वानि चोद्दिश्य विवृण्वन्निदमाह "नानाविधशक्तिमयी सा जनयति कालतत्त्वमेवादौ। भावि भवद्भूतमयं कलयति जगदेष कालोऽतः" इति। तट्टीकाकार इत्थं व्याचख्यौ। "नन्वेष कालो नैयायिकादिभिर्नित्योऽभ्युपगतः अत आह भाविभवद्भूतमयमिति। भूतादिरूपेण त्रिविधत्वात् अचेतनत्वेनास्यानित्यत्वं सिद्धमिति भावः। केन कार्य्येणास्य सिद्धिरनयाह "कलयति जगदेष कालोऽतः" इति। चिरक्षिप्रादिप्रत्ययोपाधिद्वारेण कलयत्याक्षिपत्यर्थः" इति। इत्थं प्रत्यक्षश्रुतिसहकृतशैवागमैः कणादशास्त्रस्य बाधे सति उत्तरमीमांसाद्वितीयाध्यायप्रथमाधिकरणन्यायोऽनुसृत्यते तस्य च न्यायस्य संग्राहकौ श्लोकौ "सांख्यस्मृत्यास्ति सङ्कोचो न वा वेदसमन्वये। धर्म्मे वेदः सावकाशः सङ्कोच्योऽनवकाशया। प्रत्यक्षश्रुतिमूलाभिर्मन्वादिस्मृतिभिः स्मृतिः। अमूला कापिली बाध्या न सङ्कोचोऽनया ततः" इति। अयमर्थः। ऋग्वेदादिभिरग्निहोत्रादिधर्म्मो ब्रह्मणो जगत्कर्त्तृत्वं च प्रतिपाद्यते। सांख्यस्मृत्यादिस्तु प्रधानस्य जगत्कारणत्वं प्रतिपादयति तत्र तया स्मृत्या वेदस्य सङ्कोचोऽस्ति न वेति संशये स्मृतेर्जगत्कारणत्वमन्तरेणानवकाशत्वात् प्राबल्यं वेदस्य तु धर्म्मेऽपि चरितार्थत्वाद्दौर्बल्यम्। ततः स्मृत्यनुसारेण वेदः संकुचित इति पूर्व्वः पक्षः। प्रत्यक्षश्रुतिभिर्बह्वीभिरनुगृहीता बह्व्यो मन्वादिस्मृतयो ब्रह्मकारणतामाचक्षते सांख्यस्मृतिस्त्वेका मूलहीना चेति दुर्बलत्वात् सैव बाध्या अतो नास्ति वेदस्य सङ्कोच इति सिद्धान्त इति। अथ तार्किकत्वाभिमानग्रहगृहीतः सन् परवश एवं ब्रूषे भूतादीनामौपाधिकानां कालविशेषाणामेवोत्पत्तिर्न तु निरुपाधिकस्य मुख्यस्य कालस्येति तर्हि कपर्दिकान्वेषणाय प्रवृत्तश्चिन्तामणिमलभथा इत्येवं वासिष्ठरामायणप्रोक्तस्याभाणकस्य त्वमेव विषयोऽभूः। यतः साधर्म्यवैधर्म्यज्ञानाय द्रव्यादीन्यन्विष्यन् परब्रह्मतत्त्वमवागमः। व्यवहारहेतूनां भूतादिकालविशेषाणामाधारः स्वयं व्यवहारातीतो नित्यो निरवयवो मुख्यः कालः स परमात्मैव। तथाच श्वेताश्वतरा आमनन्ति। "यः कालकालो गुणी सर्वविद्य" इति। आस्तां नित्यत्वानित्यत्वसावयवत्वचिन्ता। सर्वथाप्यस्ति सांख्यतत्त्वेषु आर्थिकः कालसंग्रहः साक्षात्संग्रहाभावस्तु ज्योतिष्टोमादिवत् प्रकृतिपुरुषविवेकानुपयोगादित्यवगन्तव्यम्। तृतीयचतुर्थपक्षौ तु भवतो वैशेषिकपरिचयगन्धोऽपि नास्तीति प्रकटयतः। वैशेषिकग्रन्थेषु सर्वेष्वपि कालप्रकरणेषु तल्लक्षणस्य तत्साधकानुमानस्य च पर्याप्तत्वात्। प्रमाणान्तराणि तु कालसाधकानि सूत्रैवोपन्यस्तानि तथा च तैत्तिरीया आरुणकेतुके मन्त्रमामनन्ति "स्मृतिः प्रत्यक्षमैतिह्यम् अनुमानश्चतुष्टयम्। एतैरादित्यमण्डलं सर्व्वैरेव विधास्यते" इति। तत्र स्मृति

अनुमेयश्रुतिमूलं मन्वादिशास्त्रं, प्रत्यक्षं श्रोत्रग्राह्यो ऽकृत्रिमो वेदाख्योऽक्षरराशिः, योगप्रत्यक्षं वैदिकमतादभिमतं साक्षिप्रत्यक्षं वा। ऐतिह्यमितिहासपुराणादिके ज्योतिःशास्त्रस्याप्यन्तर्भावो द्रष्टव्यः। अनुमीयते स्व-मूलभूतं स्मृतिवाक्यमनेनेत्यनुमानः शिष्टाचारस्तस्य च स्मृत्यनुमापकत्वं भट्टाचार्यैः स्पष्टमभिहितम्। "आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनमिति, तदेवं स्मृत्यादीनां चतुष्टयं सफलम्, एतैश्चतुर्भिः सर्वैरप्यादित्यमण्डलं प्रमीयत इति मन्त्रस्यार्थः। ननु स्मृत्यादीनि मण्डलसाधकत्वेनात्रोपन्यस्तानि न तु कालसाधकत्वेनेति चेत् मैवं, मण्डलस्य सार्वजनीनप्रत्यक्षसिद्धत्वेन तत्र स्मृत्याद्यनुपयोगात्, कालविवक्षयैवात्र कालनिर्वाहकमण्डले तान्युपन्यस्तानि, तथा च मण्डलद्वारा कालः प्रमीयते। कालविवक्षा चोत्तरमन्त्रे स्फुटा तस्यानन्तरो मन्त्र एवमाम्नायते, "सूर्यो मरीचिमादत्ते सर्वस्माद्भुवनादधि, तस्याः पाकविशेषेण स्मृतं कालविशेषणमिति" तस्यायमर्थः। भुवनगतं सर्वभूतजातमधिकृत्य रसवीर्यपाकादिभिस्तत्तदनुग्रहसमर्थं मरीचिं सूर्यः स्वकरोति तत्कृतेन भूतपाकभेदेन निमेषादिः पराङ्ग-पर्य्यन्तः कालविभेदोऽस्माभिरवगतो भवतीति। कालप्रतिपादकानि च स्मृत्यादीन्युदाहरामः। तत्र मनुः "कालं कालविभक्तिश्चेति" सृष्टिप्रकरणे कालं व्यवजहार। याज्ञवल्क्योऽपि, "श्राद्धकालः प्रकीर्त्तितः" इति। एवमन्यास्वपि स्मृतिषूदाहार्य्यम्। श्रुतिष्वपि "ऋतं सत्ये विचिनोति कालः" इति बह्वृचाः। "अहमेव कालोनाहं कालस्येति" तैत्तिरीयाः। "का च सन्ध्या कश्च सन्ध्यायाः काल" इति सामगाः। योगशास्त्रेऽपि संयमविशेषाद्धारणाध्यानसमाधित्रयरूपाद्योगिनोऽतीतादिकालं प्रत्यक्षतः पश्यन्तीत्यभिहितम् तथा च पातञ्जलसूत्रम् "परिणामत्रयसंयमादतीतानागतादिज्ञानमिति"। साक्षिप्रत्यक्षमपि, अहमस्मिन्काले निवसामि, इत्यनुभवस्तावत्सार्वजनीनः। न चासौ बाह्येन्द्रियकृतः कालस्य रूपादिहीनत्वात्। नापि मानसस्तार्किकैस्तदनङ्गीकारात्। नाप्यनुमानादिजन्यः अपरोक्षप्रत्ययत्वात्। अतः सामग्र्यभावेऽप्यपरोक्षदर्शनात्साक्षिप्रत्यक्षमेतदित्यौपनिषदा मन्यन्ते। इतिहासेऽपि महाभारते "प्रहरौ घटिकान्यूनौ प्रहरौ घटिकाधिकौ। स कालः कुतपो ज्ञेयः पितृणां दत्तमक्षयमिति"। पुराणेऽपि "अनादिरेष भगवान्कालोऽनन्तोऽजरः परः" इति विष्णुपौर्णमास्यष्टकाले स्वस्वोचितान् देवविशेषेभ्यः क्षीरदध्यादिसमर्पणादिकानुष्ठानविशेषानभानुवारादिकालविशेषे च समाचरन्ति। तदेवमनेकप्रमाणप्रमिते काले प्रमाणाभावरूपश्चतुर्थः पक्षः कथमाशङ्क्यत ?। नापि प्रयोजनाभावादिति पञ्चमः पक्षो युज्यते। तार्किकैस्तावत् सर्वोत्पत्तिनिमित्तकारणत्वमुद्घोषितम्। लोके कृष्याद्युपयोगः कालविशेषस्य सर्वबलादभ्युपह्रियते। ग्रहप्रवेशप्रयाणाद्युपयोगो ज्योतिःशास्त्रप्रसिद्धः। श्रौतस्मार्त्तकर्मोपयोगस्तु प्रदर्शयिष्यते। तत्र न सांख्यवृद्धाजातम-तस्य षष्ठ इत्ययं षष्ठः पक्षः परिशिष्यते। तथाच पापात्मनः स्वस्य बद्ध्यपराधं पुण्यात्मनि माधवाचार्य्ये समारोपयन् कया वा शिक्षया न दण्ड्योऽसि। तदेवं कालस्य प्रत्याख्यातुमशक्यत्वान्निर्णयोद्यमः सफल इति स्थितम्। ननु कतरकालोऽत्र निर्णीयते। किं केवलः कालः किं वा कालकालः। ननु किमित्यप्रसिद्धभाषया भीषयसि, न भीषयाम्यहं किन्त्वाकलयितव्यभेदात्कालद्वैविध्यम्। येन प्राणिदेहादयोऽतीतवर्त्तमानादिरूपेण कलयितव्याः स केवलः कालः। स च तत्त्वप्रकाशवचनेन पूर्व्वमुदाहृतः "कलयति जगदेष कालोऽतः" इति। तादृशोऽपि कार्य्योत्पत्तिस्थितिविनाशकारिणा येन कलयितव्यः स कालकाल इति। स च वाशिष्ठरामायणे दर्शितः "कालोऽपि कल्यते येनेति, श्रुतिश्च भवति "स विश्वकृद्विश्वविदात्मयोनिः कालकालो गुणी सर्वविद्यः प्रधानक्षेत्रज्ञः इति। "गुणी संसारमोक्षस्थितिबन्धहेतुरिति" च कूर्मपुराणेऽपि "अनादिरेष भगवान् कालोऽनन्तोऽजरः परः। सर्वगत्वात् स्वतन्त्रत्वात् सर्वात्मत्वान्महेश्वरः। ब्रह्माणो बहवो रुद्रा अन्ये नारायणादयः। एकोहि भगवानीशः कालः कविरिति स्मृतः। ब्रह्मनारायणेशानां त्रयाणां प्राकृतो लयः। प्रोच्यते कालयोगेन पुनरेव च सम्भवः। परं ब्रह्म च भूतानि वासुदेवोऽपि शङ्करः। कालेनैव च सृज्यन्ते सएव ग्रसते पुनः। तस्मात् कालात्मकं विश्वं स एव परमेश्वरः" इति। विष्णुधर्मोत्तरेऽपि। "अनादिनिधनः कालो रुद्रः सङ्कर्षणः स्मृतः। कलनात्सर्वभूतानां स कालः परिकीर्त्तितः। कर्षणात् सर्व्वभूतानां स तु सङ्कर्षणः स्मृतः। सर्वभूतशमित्वाच्च स रुद्रः परिकीर्त्तितः। अनादिनिधनत्वेन स महान् परमेश्वर" इति ज्योतिःशास्त्रेऽपि "भूतानामन्तकृत्कालः कालोऽन्यः कलनात्मकः" इति। तत्रैवं सति द्वयोर्मध्ये कालकालोऽत्र न निर्णेतव्यः

नस्य धर्मानुष्ठानेष्वहेतुत्वेन हेयत्वादनुपादेयत्वाच्च । यस्त्वितरो मासपक्षतिथ्यादिरूपः सोऽपि ज्योतिःशास्त्रे सम्यङ्निर्णीत इति कृतमनया कालनिर्णयप्रवृत्त्येति प्राप्ते ब्रूमः उभयमप्यत्र निर्णेतव्यं कालकालस्य जगदीश्वरस्य सर्व्वेषु कर्म्मारम्भेषु अनुस्मर्त्तव्यत्वात् अतएव शिष्टाः पुण्याहवाचनादावीश्वरमनुस्मरन्ति । "सर्व्वेषु कालेषु समस्तदेशेष्वशेषकार्य्येषु तथेश्वरेश्वरः । सर्व्वैः स्वरूपैर्भगवाननादिमान्ममास्तु माङ्गल्यविवृद्धये हरिः । यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतमिति" । मासादिरूपभेदस्य तु स्वरूपेण ज्योतिषे निर्णीतत्वेऽपि श्रौतस्मार्त्तकर्म्मविशेषेण सह कालस्याङ्गाङ्गिभावो निर्णेतव्यः । यद्यप्यसौ हेमाद्रिप्रभृतिषु ग्रन्थेषु निर्णीतस्तथाप्यनेकत्र विप्रकीर्णस्यैकत्र संग्रहार्थमत्र यत्नः क्रियते । तदेवं चिकीर्षितस्य ग्रन्थस्य कालरूपो विषयः संग्रहरूपं प्रयोजनं चास्तीति अयं ग्रन्थ आरभ्यते" । "नित्यो जन्यश्च कालो द्वौ तयोराद्यः परेश्वरः । सोऽवाङ्मनसगम्योऽपि देही भक्तानुकम्पया" नित्यकालस्य परमेश्वरत्वे प्रमाणं पूर्व्वमेवोपन्यस्तम् । परमेश्वरस्य चावाङ्मनसगोचरत्वे सर्व्वे वेदान्तास्तदनुसारिस्मृतिपुराणानि तत्त्वविदनुभवश्च प्रमाणम् । भक्तानुग्राहिमूर्त्तिस्वीकारश्च तलवकाराख्ये सामवेदशाखाविशेषे कस्यां चिदाख्यायिकायामाम्नायते तस्यां ह्याख्यायिकायामेवमुक्तम्—अग्निवाय्विन्द्रादयो देवा ईश्वरानुगृहीताः सर्व्वत्र विजयमानाः स्वकीयमेव तत्सामर्थ्यमित्यभिमन्यन्ते स्म । तान् बोधयितुमवाङ्मनसगम्यं परमेव ब्रह्म पूज्यां चक्षुर्गम्यां काञ्चिन्मूर्त्तिं धारयित्वा प्रादुर्बभूव । तया सह वादं कृत्वापि राजसचित्तावग्निवायू तद्ब्रह्मतत्त्वं नैव बुबुधाते इन्द्रस्तु सात्त्विकचित्तोऽबबुध इति । वाशिष्ठरामायणेऽपि शुक्रोपाख्याने शुक्रं मृतमवलोक्य तत्पिता भृगुः क्रुद्धो मारयितारं कालं शप्तुमुद्यतः तदानीं कालोऽनुग्रहीतुमीदृशेन रूपेणाविर्भूवेति पठ्यते "अथाकलितरूपोऽसौ कालः कवलितप्रजः । आधिभौतिकमास्थाय वपुर्मुनिमुपाययौ । बद्धपाशधरः श्रीमान् कुण्डली कवचान्वितः । ऋतुषट्कमयोदारवक्त्रषट्कसमन्वितः । मासद्वादशकोद्दामभुजद्वादशकोद्भटः । स्वाकारसमया बह्व्या वृतः किङ्करसेनया । स उपेत्य प्रणयादौ कुपितं तं महामुनिम् । कल्पक्षुब्धाब्धिगम्भीरं सान्त्वपूर्व्वमुवाच ह । त्वमत्यन्ततपा विप्र ! वयं नियतिपालकाः ! तेन संपूज्यसे पूज्य ! साधो ! नेतरदीच्छया । मा तपः क्षपयाऽबुद्धे ! कल्पकालमहानलैः । यो न दग्धोऽस्मि मे तस्य किं त्वं शापेन धक्ष्यसि ? । संसारावलयो ग्रस्ता निगीर्णा रुद्रकोटयः । भुक्तानि विष्णुवृन्दानि केन शक्ता वयं मुने ! । भोक्तारो हि वयं ब्रह्मन् भोजनं युष्मदादयः । स्वयं नियतिरेषा हि नावयोरेतदोचितमिति" । न च भक्तानुजिघृक्षया स्वीकृता मूर्त्तिरीश्वरस्य वेति कश्चिन्नियमोऽस्ति सर्वात्मकस्य परमेश्वरस्य भक्तचित्तप्रियायाः सर्व्वस्या अपि मूर्त्तेः स्वकीयत्वात् अतएव भगवद्गीतायाम् "यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हितानिति" । विष्णुरुद्रादिवत् अचेतनमूर्त्तयोऽपि तत्तत्फलविशेषाधिभिरीश्वरत्वेनोपास्याः । तदेतद्वेदे समाम्नायते । "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्य्यव, एतं महाव्रते छन्दोगा, एतमस्याम् (पृथिव्याम्) एतं दिव्येतं वायावेतमाकाश एतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रस्येतं नक्षत्रेष्वेतं सर्व्वेषु भूतेष्विति" वाजसनेयिनोऽपि मण्डलब्राह्मणे "तमेतमग्निमध्वर्य्यव उपासत इत्यारभ्य पठन्ति "विषमिति सर्पाः, सर्प इति सर्पविदः, ऊर्गिति देवाः, रयिरिति मनुष्याः, मायेत्यसुराः, स्वधेति पितरो, देवजन इति देवजनविदो रूपमिति गन्धर्वा, गन्ध इत्यप्सरसस्तं यथायथोपासते तदेव भवतीति" । तैत्तिरीयाश्च पठन्ति "क्षेम इति वाचि, योगक्षेमम् इति प्राणापानयोरित्यादि" । परब्रह्मण्यारोपितं यद्यावज्जगद्रूपम् अस्ति तेन सर्व्वेण ह्युपासनया परमेश्वरो रूपवान् भवतीति हिरण्मयाधिकरणतेजोमयाधिकरणयोः प्रपञ्चितम् । एवं च सति यो यदा यत्कर्म्मारभते स तदा तत्कर्म्मोपयुक्तां कालात्मकस्येश्वरस्य मूर्त्तिमिष्टदेवतारूपेणानुस्मरेत् । अत एव मन्त्रशास्त्रेषु नानाविधानि ध्यानान्युपदिष्टानि । लोकेऽप्याविद्वद्गोपालाङ्गनं सर्व्वोऽपि जन एकैकां देवतां स्वेच्छया पूजयति तदेतद्भगवानाह "यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः" इति तस्मादारभ्यमाणकर्म्मफलप्रदो निजेष्टदेवतारूपो नित्यः कालः कर्म्मारम्भेषु अनुस्मर्त्तव्य इति सिद्धम् ।

अथ जन्यं कालं निरूपयामः । ननु कालस्य जन्यत्वे सति कथं प्रलये कालव्यवहारः । प्रलयत्वस्य जन्याऽनधिकरणत्वरूपत्वात् । प्रलयोऽतीतः प्रलयो भावीति कालनित्यत्ववादिनस्तत्रापि समो दोषः । नित्यस्य कालस्य

तपनपरिस्पन्दाद्युपाधिभिः परिच्छेदे सत्येतावान् काल इति कालेयत्ता वर्णयितव्या। न च प्रलये तदुपाधयः सन्ति। अतस्तत्र कथं प्रलयकाले इयत्तानिर्णयः। अथ सत्कार्य्यवादाभ्युपगमेनोपाधयोऽपि वासनारूपेण सन्ति तर्हि कालेऽपि तत्समानं, न चैतावता नित्यताप्राप्तिः उपाधिषु तदनङ्गीकरात्। अथ मन्यसे इयत्तारहितेऽपि प्रलयकाले सृष्टिकालेयत्तावासनावशादियत्ता व्यवह्रियते। तत्रोपाध्यायत्वादिर्दृष्टान्तः। यथा कश्चिन्माणवकः त्रिंशद्वर्षवयस्कादध्येतुरुपक्रम्य संवत्सरमधीत्यास्मदुपाध्याय एकत्रिंशद्वर्षवयस्क इत्यध्ययनरहितेऽप्यतीते वयस्युपाध्यायत्वं व्यवहरति। तद्वदियत्ताव्यवहारः। एवं तर्ह्यनेन न्यायेन कालरहितप्रलये कालव्यवहारः किं न स्यात्?। कालरहितं च प्रलयादिकं वस्त्वस्तीति माण्डूक्यादिश्रुतयोऽभ्युपगच्छन्ति। तथा च श्रूयते, “यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एवेति”। प्राभाकराश्चापूर्व्वस्य कालत्रयासंस्पृष्टाङ्काश्चिदवस्थामाहुः। तस्मात्कालः सुखेन जन्यतां स च सामान्यविशेषाभ्यां द्विविधः। तस्य चोभयविधस्येश्वराख्यान्नित्यात्कालादुत्पत्तिं मनुराह “कालं कालविभक्तिश्च नक्षत्राणि ग्रहांस्तथा। सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः” इति। तत्र यः सामान्यकालः स विशेषानुगतत्वात्तदपेक्षया नित्यो ग्रहगत्यादिभिरनुमेयो भूतोत्पत्तिनिमित्तकारणमिति तार्किकज्यौतिषिकादयः प्रतिपेदिरे। तत्र ज्यौतिषिका एवमाहुः “प्रभवविरतिमध्यज्ञानवन्ध्या नितान्तं विदितपरमतत्त्वा यत्र ते योगिनोऽपि। तमहमिह निमित्तं विश्वजन्मात्ययानामनुमितमभिवन्दे भग्रहैः कालमीशम्। युगवर्षमासदिवसाः समं प्रवृत्तास्तु चैत्रशुक्लादेः। कालोऽयमनाद्यन्तो ग्रहभैरनुमीयते क्षेत्र” इति कालविशेषेषु च संवत्सरः प्राधानभूतः। अन्ये सर्व्वे गुणभूताः। तथाचारुणकेतुके समाम्नायते “नदे व प्रभवा काचिदक्षय्या स्यन्दते यथा। तां नद्योभिसमायन्ति सह, सा न निवर्त्तते। एवं नानासमुत्थानाः कालाः संवत्सरं श्रिताः। अणुशश्च महान्तश्च सर्व्वे समवयन्ति तम्। स तैः सर्व्वैः समाविष्ट ऊहः सन्न निवर्त्तते’ इति। अयमर्थः। भागीरथीगोदावर्य्यादिका नदीव कालः कुतश्चिदुत्पत्तिस्थानादुत्पद्यते। तच्चोत्पत्तिस्थानं सांख्योक्तं प्रकृतिः शैवागमोक्तमाया वा श्रुतिस्मृत्युदिता नित्यकालात्मक ईश्वरो वा भविष्यति। यथा तां गङ्गादिकां महानदीमन्यां स्वल्पनद्योऽभितः प्रविशन्ति सा च प्रविष्टैर्नद्यन्तरैः सह विस्तीर्णा प्रवहत्प्रवाहा सती न कदाचित् शुष्यति। एवं नानाविधरूपैः समुत्पन्नाः कालभेदाः संवत्सराख्यं प्रधानं कालमाश्रिताः। तत्र निमेषाद्या अयनपर्य्यन्ताः कालभेदाः संवत्सरादर्व्वाचो, युगाद्याः परार्द्धपर्य्यन्ताः संवत्सरान्महान्तस्ते सर्व्वे तं संवत्सरं सम्यक् प्रविशन्ति। अणूनामवयवत्वेन प्रवेशः। महतान्तु संवत्सरावृत्तिनिष्पाद्यानामध्यन्तः संवत्सरइति तत्र प्रवेशोऽभिधीयते। तथाच वेदाङ्गज्योतिषग्रन्थे पठ्यते “पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम्। दिनर्त्त्वयनमासाङ्गं प्रणम्य शिरसा स्थित इति। स च संवत्सरस्तैरणुभिर्महद्भिश्च सर्व्वैः समाविष्टोऽतिदीर्घः सन्नस्मिन् जगति न च्छिद्यत इति। नन्वणुत्वं निमेषे पर्य्यवसितं महत्त्वं तु परार्द्धे तथा च तयोरन्यतरस्य प्राधान्यमुचितम्। तत्र कथं संवत्सरस्य प्राधान्यम्? इति चेत् ईश्वरेण प्रथमं सृष्टत्वादिति ब्रूमः। तथा च वाजसनेयिनः समामनन्ति “सोऽकामयत द्वितीयोम आत्माजायेतेति स मनसा वाचा मिथुनं समभवद्यत्तद्रेत आसीत् स संवत्सरोऽभवदिति”। तस्मात्संवत्सरः प्रधानम्, अतएव वयं संवत्सरमारभ्य कालविशेषं निर्णयामः। तत्र संवत्सरोऽयनमृतुर्मासः पक्षः तिथिर्नक्षत्रं योग इत्येवं विधाः कर्म्मकालाः। यद्यपि पुराणेषु सूर्य्यमार्कण्डेयादीनां युगादिकल्पादिपरिमितं तपः श्रूयते तथापि शतसंवत्सरायुषो मनुष्यानधिकृत्य धर्म्मशास्त्रप्रवृत्तेः युगादिनिर्णयो नोपयुक्तः। शास्त्राणां मनुष्याधिकारत्वं चास्माभिः पाराशरस्मृतिव्याख्याने “मनुष्याणां हितं धर्म्मम्” इत्यस्मिन्वचने प्रपञ्चितम्। येतु “कलौ पञ्च विवर्जयेत्” इत्यादयोमनुष्यधर्म्मास्तेष्वपि न युगादिकं निर्णेतव्यं संदेहाभावात्। न च शतायुषामधिकारे कथं सहस्रसंवत्सरसत्रश्रुतिरिति शङ्कनीयम् तत्र संवत्सरशब्दो दिवसपर इति षष्ठाध्याये सप्तमपादे निर्णीतत्वात्। येऽपि चतुर्दशसंवत्सरावृत्तिसाध्या अनन्तव्रतादयस्तेष्वपि न संवत्सराधिकः कश्चित्कालो निर्णेतव्योऽस्ति। अतः संवत्सरमारभ्यार्व्वाञ्च एव निर्णेतव्याः कर्म्माङ्गकालाः। न च कालस्य कर्म्माङ्गत्वे विवदितव्यम् “सायं जुहोति प्रातर्जुहोतीति” श्रुतेः तत्तत्कर्म्मणस्तावदपूर्व्वविषयत्वात् (अपूर्व्वजनकत्वात्) प्राधान्यमभ्युगम्यं तथा च कालस्य गुणत्वेनान्वयः परिशिष्यते अतएव गर्गः “तिथिनक्षत्रवारादि साधनं पुण्यपापयोः। प्रधानगुणभावेन स्वातन्त्र्येण न ते क्षमाः” इति। तस्मादङ्गभूतेषु निर्णयेषु

कालेष्वयवित्वेन संवत्सरस्याभ्यर्हितत्वादल्पाच्तरत्वतया सूचीकटाहन्यायानुसारेण च सएव आदौ निर्णीयत-इतिस्थितम्”।

सू० सि० रङ्ग० कालविभागश्चेत्थं प्रदर्शितः

“लोकानामन्तकृत्कालः कालोऽन्यः कलनात्मकः। स द्विधा स्थूलसूक्ष्मत्वान्मूर्तश्चामूर्त उच्यते” सू० सि०।

“कालो द्विधा तत्रैकः कालोऽखण्डदण्डायमानः शास्त्रान्तरप्रमाणसिद्धः। लोकानां जीवानामुपलक्षणाद्चेतनानामपि। अन्तकृद्विनाशकः। यद्यपि कालस्तेषामुत्पत्तिस्थितिकारकस्तथापि विनाशस्यानन्तत्वात् कालत्वप्रतिपादनाय चान्तकृदित्युक्तम्। अन्तकृदित्यनेनैवोत्पत्तिस्थितिकृदित्युक्तमन्यथा नाशकत्वासम्भवात्। अतएव “कालः सृजति भूतानि कालः संहरति प्रजाः इत्याद्युक्तं ग्रन्थान्तरे। अन्यो द्वितीयः कालः खण्डकालः। कलनात्मको ज्ञानविषयस्वरूपः। ज्ञातुं शक्यइत्यर्थः। स द्वितीयः कलनात्मकः कालोऽपि द्विधा भेदद्वयात्मकः। तदाह स्थूलसूक्ष्मत्वादिति महत्त्वाणुत्वाभ्याम्। मूर्त्तः—इयत्तावच्छिन्नपरिमाणः। अमूर्त्तस्तद्भिन्नः कालतत्त्वविद्भिः कथ्यते। चकारो हेतुक्रमेण मूर्त्तामूर्त्तक्रमार्थकः। तेन महान् मूर्त्तकालोऽणुरमूर्त्तः काल इत्यर्थः। अथोक्तं भेदद्वयं स्वरूपेण प्रदर्शयन् प्रथमभेदं प्रतिपिपादयिषुस्तदवान्तरभेदेषु भेदद्वयमाह” रङ्गनाथः।

“प्राणादिः कथितो मूर्तस्त्रुट्याद्योऽमूर्त्तसञ्ज्ञकः। षड्भिः प्राणैर्विनाडी स्यात् तत्षष्ट्या नाड़िका स्मृता” सू० सि०।

“प्राणः स्वस्थसुखासीनस्य श्वासोच्छ्वासान्तर्वर्त्ती कालो दशगुर्वक्षरोच्चार्य्यमाण स्वादिर्यस्यैतादृशः प्राणनान्तर्गतो मूर्त्तः काल उक्तः। त्रुटिराद्या यस्यैतादृशः काल एव प्राणान्तर्गतस्त्रुटितत्परादिकोऽमूर्त्तसञ्ज्ञः। अथामूर्त्तस्य मूर्त्तादिभूतस्य व्यवहारायोग्यत्वेनाप्रधानतयानन्तरोद्दिष्टस्य भेदप्रतिपादनमुपेक्ष्य मूर्त्तकालस्य व्यवहारयोग्यत्वेन प्रधानतया प्रथमोद्दिष्टभेदान् विवक्षुः प्रथमं पलषष्ट्यावाह। षड्भिरिति। षड्भिःप्राणैरसुभिः पानीयपलं भवति पलानां षष्ट्या घटिकोक्ता कालतत्त्वज्ञैः। अथ दिनमासादिकमाह” रङ्ग०।

“नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रकीर्तितम्। तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा”।

“ऐन्दवस्तिथिभिस्तद्वत् सङ्क्रान्त्या सौर उच्यते। मासैर्द्वादशभिर्वर्षं दिव्यं तदहरुच्यते”।

“सुरासुराणामन्योऽन्यमहोरात्रं विपर्ययात्। तत्षष्टिः षड्गुणा ३६० दिव्यं वर्षमासुरमेव च”।

“तद्द्वादश सहस्राणि चतुर्युगमुदाहृतम्। सूर्याब्दसङ्ख्या द्वित्रिसागरैरयुताहतैः ४३२०००० ”।

“सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम्। कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया”।

“युगस्य दशमो भागश्चतुस्त्रिद्व्येकसङ्गुणः। क्रमात् कृतयुगादीनां, षष्ठांशः सन्ध्ययः स्वकाः”।

“युगानां सप्ततिः सैका मन्वन्तरमिहोच्यते। कृताब्दसङ्ख्या १७२८००० स्तस्यान्ते सन्धिः प्रोक्तोजलप्लवः”।

“ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश। कृतप्रमाणः कल्पादौ सन्धिः पञ्चदशः स्मृतः”।

“इत्थं युगसहस्रेण भूतसंहारकारकः। कल्पो ब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती”।

“परमायुः शतं तस्य तयाऽहोरात्रसङ्ख्यया। आयुषोर्द्धमितं तस्य शेषे कल्पोयमादिमः” सू० सि०। अहरादिकालभेदाः (अहन्) शब्दे उक्ताः।

सि० शि० तु निमेषतत्परत्रुटिरूपाः सूक्ष्माः कालावयवाः दर्शिताः तस्य वाक्यं १७८८पृ० दर्शितम्। स च कालस्त्रिविधः वर्त्तमानभूतभविष्यद्भेदात् तत्र भूतभविष्यत् कालावपि प्रत्येकं द्विधा अद्यतनानद्यतनभेदात् तद्भेदेनैव लकारविशेषं पाणिनिरनुशशास।

सोऽयं कालः षडिन्द्रियवेद्यः इति मीमांसका मन्यन्ते “न सोऽस्ति प्रत्ययोलोके यत्र कालो न भासते”इति तेषामुक्तेः। वेदान्तिनस्तु तस्य साक्षिप्रत्ययभास्यत्वमङ्गीचक्रुः तत्र प्रमाणं कालमा० अनुपदमेव दर्शितम्। सोऽयं कालः देशवृत्तेरव्याप्यवृत्तितानियामकः। तथाहि यः पदार्थः स्वाधिकरणवृत्त्यभावप्रतियोगी सोऽव्याप्यवृत्तिरिति भण्यते तत्तानिर्वाहकस्य कालोदेशश्च। क्वचिद्देशे स्थितस्य तादृशपदार्थस्य कालभेदेन तत्रैवाधिकरणेऽभावस्तिष्ठति यथा ज्ञानाश्रये आत्मनि सुषुप्तिकाले इच्छादिविशेषगुणान्तरकाले च ज्ञानाभावः। यथा वा गुणवति जन्यद्रव्ये उत्पत्तिकाले गुणाभावः श्यामले अपक्वे घटे रक्तत्वाभावः रक्तत्वस्य पाकोत्तरं जायमानत्वात्। कालसत्त्वे च देशोऽपि तथा। यथा आत्मनि ज्ञानकाले शरीरावच्छेदेन ज्ञानं, घटाद्यवच्छेदेन तदभावः। तथा वृक्षे कपिसंयोगकालेऽपि मूले तदभावः। कालेन कृतसम्बन्धश्च कालिकसम्बन्धः तेन सम्बन्धेन सर्व्वेषु जन्यभावेषु जन्यभावानां वृत्तिमत्ता

नित्येषु कालिकसम्बन्धेन न कस्यापि दृत्त्वम् नित्यानुयोगिककालिकसम्बन्धानुपगमात् इति नैयायिकाः। तस्य च "पौरुषं दैवसम्पत्त्या काले फलति पार्थिव!। त्रयमेतन्मनुष्यस्य पिण्डितं स्यात् फलावहम्" इत्युक्तेः कार्य्यमात्रे निमित्तकारणता। यद्यपि "कृषेर्वृष्टिसमायोगे दृश्यन्ते फलसिद्धयः। तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चनेति" शास्त्रान्तरेण तत्तत्कालानामेव तत्तत्कार्य्योत्पत्तौ हेतुता ऽधिगता तथापि "य द्विशेषयोः कार्य्यकारणभावस्तत्सामान्ययोरपीति" न्यायात् सामान्यतः कार्य्यमात्रं प्रति कालसामान्यस्य हेतुत्वम्। "कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः" मोहमु०। काले भवः ठञ्। कालिक कालभवे त्रि० "समासप्रत्ययविधौ प्रतिषेधो वक्तव्यः" वा० उक्तेः तदन्तविधिपरिभाषायाः अप्रवृत्तेः कालान्तशब्दाच्चास्य प्रवृत्तिः तेन तदन्तशब्दात् खएव साधुः समानकालीनः प्राक्कालीन इत्यादि भूरिप्रयोगात्। सि० कौ० समानकालीनप्राक्कालीनशब्दयोरप्रामाणिकतोक्तिः प्रौढोक्तिरेव उदाहृतवार्त्तिकस्य जागरूकत्वात् इति गौडाश्चाहुः। प्रतीच्यास्तु कौमुदीकारश्रद्धावशात् ठञ्विधायकसूत्रे कालसामान्यतद्विशेषपर्य्यायाणां ग्रहणात् समानकालप्राक्कालयोरपि कालविशेषत्वेन ततः ठञएव प्रवृत्तिर्न खस्येति भाष्यादिप्रयोगस्तु आर्षत्वात् समाधेयः इति मन्यन्ते। कालेन निर्वृत्तः ठञ् कालिक कालसाध्ये त्रि० स्त्रियां ङीप्। कर्त्तुस्तात्कालिकी शुद्धिरिति" स्मृतिः तत्र तत्कालशब्दस्यैव ठञः प्रकृतित्वात् तेन न पूर्वोक्तवार्त्तिकसङ्कोचः अतएव तत्र तच्छब्दस्यैवाद्यचोवृद्धिः तेन निवृत्तमित्यधिकारात् प्रकृतिमात्रस्यैव ग्रहणात् न कालत्वेन तत्र प्रकृतिता। काले साधुः पुष्यन् पच्यमानो वा अण्। काल—काले साधौ काले विकशमाने काले पच्यमाने च त्रि०। अत्र सूत्रे कालविशेषस्यैव ग्रहणं न स्वरूपस्य तेन न ततोऽण् इत्यन्ये। कालः प्राप्तोऽस्य यत्। काल्य प्राप्तकाले शीतादौ त्रि० कालोदेवताऽस्य "कालेभ्योभववत्" पा० ठञ्। कालिक कालदेवताके हविरादौ स्त्रियां ङीप्। १५ तत्तत्कर्म्मोचितकाले "वरमेकाहुतिः काले नाकाले लक्षकोटयः" ति० त०। "अकालेऽप्यथ वा काले गङ्गां प्राप्य सरिद्वराम्" प्रा० त०। "काले कलकृतो नश्येत् फलभोग्यो न नश्यति" या० स्मृ०। अर्द्धयामशब्दे २७६ पृ० दर्शिते रव्यादिवारेषु कालवेलाख्ये १६ दिवानिशोरर्द्धयामभेदे "यात्रायां मरणं काले वैधव्यं पाणिपीडने। व्रते ब्रह्मवधः प्रोक्तः सर्व्वं कर्म्म तदुत्सृजेत्" ज्यो० त०। तस्य सर्व्वकर्म्मसु वर्ज्यतामाह १७ सांख्योक्ते मेघाख्ये विवेकसाक्षात्कारान्तराये तुष्टिभेदे "यथा आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः। बाह्याविषयोपरमात् पञ्च, नव तुष्टयो भवन्ति" सा० का०

"या तु प्रव्रज्यापि न सद्योनिर्व्वाणदेति सैव कालपरिपाकमपेक्ष्य सिद्धिन्ते विधास्यति अलमुत्तप्ततया तवेत्युपदेशे या तुष्टिः सा कालाख्या मेघ (?) उच्यते" कौ०। विवृतञ्चैतदस्माभिः। "प्रव्रज्यामात्रस्य विवेकख्यातिहेतुत्वे प्रव्रज्याग्रहणमात्रेण विवेकख्यात्यापत्तिरूपम् उपदेशे असत्त्वप्रयोजकं दूषणम् सहकार्य्यन्तरापेक्षाकल्पनात् परिहरन्नुपदेशान्तरं दर्शयति न सद्यो निर्वाणदेति। सद्यः, ग्रहणमात्रात् न तु कालरूपसहकार्य्यन्तरापेक्षणात न निर्व्वाणदा विवेकख्यातिजननद्वारा न मुक्तिदेत्यर्थः। तथा च "कृषेर्वृष्टिसमायोगे दृश्यन्ते फलसिद्धयः। तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन" इति शास्त्रेण कार्य्यमात्रं प्रति कालस्य सहकारितायाः अन्वयव्यतिरेकाभ्यां च प्रसिद्धत्वात् कालस्यैव तद्धेतुत्वमस्तु कृतं ध्यानाभ्यासादिनेति समुदितार्थः। कालस्यसाधनतासाधकशास्त्रेण कृष्यादेः प्रधान फलहेतुत्वं तत्र कालस्य सहकारितामात्रं प्रतिपादितं न तु तन्मात्रस्य हेतुत्वमेवञ्च कालस्य साधारणकारणत्वम् असाधारणकारणत्वन्तु कृष्यादेरेव एवञ्च प्रकृतेऽपि विवेकख्यातिं प्रति ध्यानाभ्यासादेरेवारादुपकारकत्वात् असाधारणहेतुत्वं, कालस्य साधारणहेतुत्वमित्यस्यासदुपदेशत्वमिति बोध्यम् इति।

वर्णवाचिकालशब्दस्य स्त्रियां जनपदा० नि० ङीष्। काली "काकली कामधुरा काशीतलवाहिनी गङ्गा।" विदग्धमु० समानप्रश्नोत्तरम्।

१८ हिंसके त्रि० ततः स्त्रियां न ङीष्। कालात् दर्शयेत्" वार्त्तिकोक्तेः। "कालान्या" सि० कौ०। कालस्येयम् अण् ङीप् कालस्य पत्नी ङीप् वा। काली कालशक्तौ शिवकान्तायाञ्च स्त्री। अधिकं कालीशब्दे वक्ष्यते। १९ मृत्यौ मेदि० सर्व्वस्यापहरणात्तस्य तथात्वम्। "अंशुमांश्च तपस्तेपे गङ्गानयनकाम्यया। कालं महान्तं नाशक्नोत् ततः कालेन संस्थितः। दिलीपस्तत्सुतस्तद्वदशक्तः कालमेयिवान्" भाग० ९ ९ २ २। "कालं मृत्युम्" श्रीधरः।

वर्णवाचकात् तस्य भाव इत्यर्थे इमनिच् कालिमन् पु० तल् कालता स्त्री, त्व कालत्व न० । कृष्णवर्णे ।
तत्र "यमे उपेत्य मुनिवेशोऽथ कालः प्रोवाच राघवम्" रघुः । यमपरत्वे २०द्वित्वसंख्यायां २१तत्संख्यान्विते च भरण्यायमदैवतत्वात् तस्याश्च अश्विन्यादिनक्षत्रचक्रे द्वितीयत्वात् लक्षितलक्षणया तत्परत्वम् । शिवपरत्वे २२षट्संख्यायां २३तदन्विते च शिवदैवताद्रीया अश्विन्यादिषु षष्ठत्वादुक्तरीत्या तथात्वम्। ऋणिधनिचक्रशब्दे १४२८पृ० दर्शितं षट्कालकालेत्यादि वाक्यम् उदा० "कालस्य वेला रवितः शराक्षिकालानलागाम्बुधयो गजेन्द्र" ज्यो०त० ।

चन्द्रादिग्रहाणां दृष्टियोग्यताप्रापककालात्मके २४ अंशभेदे च । स च सि० शि० दर्शितो यथा

"दस्रेन्दवः १२ शैलभुवश्च १७ शक्रा १४ रुद्राः ११ खचन्द्रा १० स्तिथयः १५ क्रमेण । चन्द्रादितः काललवा निरुक्ताः ज्ञशुक्रयोर्वक्रगयोर्द्विहीनाः" सि०शि० ।

चन्द्रादीनामेते १२ । १७ । १४ । ११ १० । १५ । कालांशा ज्ञेयाः । बुधशुक्रयोस्तु वक्रगतयोर्द्विहीना १२।८ द्विवर्जिता ज्ञेयाः ।

अत्रोपपत्तिः । कालांशा इति कालात्मका अंशाः षड्भिरंशैरेका घटिका। एकस्यांशस्य दश पानीयपलानि । अत्रैतदुक्तं भवति । चन्द्रस्य किल द्वादश १२ कालांशाः । अर्कस्यास्तमयादुदयाद्वा घटिकाद्वयाधिकेऽन्तरे चन्द्रो दृष्टियोग्यो भवति । तदूने तत्प्रभाच्छादितत्वाददृश्यः । अतस्तस्य द्वादश कालांशाः । एवं भौमस्य सप्तदश १७ षडंशोनास्तिस्रो घटिकाः २ । ५० इत्यर्थः । एवमन्येषां यथापठितास्तेषां विम्बस्य स्थूलसूक्ष्मतावशात् न्यूनाधिकता । अत एव बुधशुक्रयोर्वक्रगतयोर्विम्बस्य स्थूलत्वाद्द्विहीनाः । अत्रोपलब्धिरेव वासना" प्रमि०

"यत्रोदयो वास्तमयोऽवगम्यस्तद्दिग्भवो दृक्खचरो रविश्च । अस्तोदयासन्नदिने कदाचित् साध्यस्तु पश्चात् तरणिः सषड्भः" सि०शि० ।

"इह केन्द्रभागैर्ग्रहस्योदयोऽस्तमयो वा यस्मिन् दिन आयातस्तस्यासन्ने कस्मिंश्चिद्दिने तं ग्रहं रविं च स्फुटं कृत्वा यस्यां दिशि ग्रहोदयोऽस्तमयो वा तद्दिग्भवो दृग्ग्रहः कार्यः । यदि प्राच्यां तदौदयिकं ग्रहं कृत्वोदयलग्नं साध्यम् । यदि च प्रतीच्यां तदास्तमयिकं ग्रहं कृत्वास्तलग्नं साध्यमित्यर्थः । यदा प्रतीच्यां, तदारविः सषड्भश्च कार्यः । इदानीमिष्टकालांशानयनमाह" प्रमि० ।

"दृक्खेचरार्कान्तरजातनाड्यो रसाहताः काललवाः स्युरिष्टाः" सि०शि० ।

"दृग्ग्रहार्कयोरन्तरघटिकाः साध्यास्ता रस ६ हता इष्टाः कालांशा भवन्ति । अथ तैरुदयास्तयोर्गतैष्याः नाड्यः" प्रमि० ।

"उक्तेभ्य ऊनाभ्यधिका यदीष्टाः खेटोदयो गम्यगतस्तदा स्यात् । अतोऽन्यथा वाऽस्तमयोऽवगम्यः प्रोक्तेष्टकालांशवियोगलिप्ताः । खाभ्राष्टभू १८०० घ्नाद्युचरोदयाप्ताः खेटार्कभुक्त्यन्तरभाजिताश्च । वक्रे तु भुक्त्यैक्यहृता अवाप्तास्तदन्तराले दिवसा गतैष्याः । तात्कालिकाभ्यां रविदृग्ग्रहाभ्यां मुहुः कृतास्ते स्फुटतां प्रयान्ति" सि०शि० ।

"एवं य इष्टकालांशा आनीतास्ते प्रोक्तेभ्यो यदि स्वल्पा भवन्ति तदा ग्रहस्योदयो गम्यः । यद्यधिकास्तदा गत इति वेदितव्यम् । अतोऽन्यथास्तमय इति । अथ प्रोक्ताउक्तेभ्योयदीष्टाः स्वल्पास्तदा ग्रहस्यास्तमयोगतोयद्यधिकस्तदा गम्य इति । अथ प्रोक्तानामिष्टकालांशानां च या अन्तरे कलास्ता अष्टादशशतै १८००र्गुण्या दृग्ग्रहाक्रान्तस्य राशेः स्वदेशोदयासुभिर्भाज्याः । फलकलानां ग्रहार्कभुक्त्यन्तरेण वक्रगे ग्रहे भुक्तियोगेन भागे गृहीते यल्लब्धं ते गता एष्या वा दिवसा भवन्त्युदये वास्तमये वा । तैर्दिवसैस्तात्कालिकौ दृग्ग्रहार्कौ कृत्वैवमसकृत्कर्मणा सम्यक् तत्कालज्ञानं भवति ।

अत्रोपपत्तिः । इष्टकालांशसाधने लग्नवासनैव । प्रोक्तानां कालांशानामनन्तर्वर्त्ती ग्रहो दृश्यो भवति । अतो यावदिष्टा न्यूनास्तावददृश्यः । उदये विलोक्यमाने उदेष्यति । अस्ते विलोक्यमानेऽस्तं गत इत्यर्थाज्ज्ञायते । इष्टा यद्यधिकास्तदा प्रोक्तेभ्यो विलोक्यमानेऽस्तंगते बहिर्भूताद्ग्रहोऽदृश्य उदये विलोक्यमान उदितः अस्तं यास्यतीत्यर्थाज्ज्ञायते । अथ तेषां प्रोक्तेष्टानां कालांशानां च या अन्तरे कलास्तासां क्षेत्रलिप्तीनां करणायानुपातः । यावत्यः कालकलास्तावन्त एवासवो भवन्ति । अथ यदि दृग्ग्रहोदयासुभिरष्टादशशतानि १८०० क्षेत्रलिप्ता लभ्यन्ते तदा तदन्तरकलासुभिः किमिति । फलं क्षेत्रलिप्ताः । ता ग्रहार्कभुक्त्यन्तरेण भाज्याः । भुक्त्यन्तरं हि क्षेत्रलिप्तान्तरात्मकमतः सजातीयकरणाय क्षेत्रलिप्तीकरणम् । भुक्त्यन्तरेणैको दिवसो लभ्यत इति युक्तमुक्तम् । वक्रे तु भुक्तियोग एव भुक्त्यन्तरम् । दूरान्तरे स्थूलकालो भवतीत्यसकृत्कर्म सूक्ष्मार्थम् । अत्र विशेषमाह" । प्रमि०

"प्राग्दृग्ग्रहश्चेदधिको रवेः स्यादूनोऽथ वा पश्चिमदृग्ग्रहश्च । प्रोक्तेष्टकालांशयुतेः कलाभिः साध्यस्तदानीं दिवसागतैष्याः । तथा यदीष्टकालांशाः प्रोक्तेभ्योऽभ्यधिकास्तदा । व्यत्ययश्चगतैष्यत्वे ज्ञेयोऽज्ञां सुधिया खलु" सि॰शि॰ "यदि प्राग्दृग्ग्रहो रवेरधिको भवति । अथ वा पश्चिमदृग्ग्रहो न्यूनो भवति तदा ये दृष्टकालांशा आनीतास्तेषां प्रोक्तानां च योगकलाभिर्दिवसाः साध्याः । नान्तरकलाभिः तथा प्रागदृग्ग्रहेऽर्कादधिके सति पश्चाद्दृग्ग्रहे वा न्यूने ये दृष्टकालांशा आगतास्ते च यदि प्रोक्तेभ्योऽधिकान्तराः तदा प्रोक्तेष्टकालांशयुतेः कलाभिर्ये दिवसाः साधितास्तेषां दिवसानां गतैष्यत्वे विपर्ययो ज्ञेयः ।

अत्रोपपत्तिः । यो ग्रहः प्राच्यामुदेति प्रतितिष्ठति वा असौ रवेरूनः सन् पश्चिमायाम् अधिकः सन् प्राच्यां दिशि प्रोक्तकालांशैरूनः सन् दृश्यतामेति । तावद्भिरेव पश्चिमायामधिकः सन् । अतो रवेः पृष्ठतः प्राच्यां प्रोक्तकालांशाः प्रतीच्यामग्रतः । प्राच्यामूने ग्रहे ये दृष्टकालांशाः साध्यन्ते ते रवेः पृष्ठतः । अतः पृष्ठगतैरेव प्रोक्तकालांशैस्तेषामन्तरं कर्तुं युज्यते । अथ प्राच्यां रवेरधिके दृग्ग्रहे ये दृष्टकालांशाः साध्यन्ते ते रवेरग्रतो भवन्ति । अतोऽग्रगतानां पृष्ठगतानाञ्च कालांशानां योगे कृतेऽन्तरं कृतं भवति तथा उक्तेभ्य ऊनाभ्यधिका यदीष्टा इति यद्गतगम्यलक्षणमुक्तं तत् सजातीयानामेव । यदा पुनरेके पृष्ठगता एकेऽग्रगतास्तदा तद्गतगम्यलक्षणं व्यत्ययेन भवति । अत उक्तं व्यत्ययश्च गतैष्यत्व इत्यादि । अत सुधियेति विशेषणाद्बुद्धिमतैतदनुक्तमपि ज्ञायते" प्रमि॰ । व्यवहारे वादिप्रतिवादिनोः प्रतिज्ञातार्थसाधनाय राज्ञादेये २५ अवसररूपे समयभेदे च तत्कालविशेषः स्मृतौ दर्शितो यथा "प्रत्यर्थी लभते कालं त्र्यहं सप्ताहमेव च । अर्थी तु प्रार्थयन् कालं तत्क्षणादेव हीयते" । प्रत्यर्थिनोऽपि क्वचिद्विषये न कालो देयः क्वचिदर्थिप्रत्यर्थिनोरिच्छया कालो देयः यथाह याज्ञ॰ "साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् । विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः" ।

समयरूपकालस्य वैशेषिकमते संयोगविभागपृथक्त्वसंख्यापरिमाणरूपा पञ्च गुणाः । भीमो भीमसेनवत् उत्तरपदलोपः । कालदण्डरूपे २६ योगे कालदण्डशब्दे उदा॰ । वारविशेषे दिग्भेदेन ज्योतिषोक्ते यात्रादौ निषिद्धे २७ योगभेदे । स च योगः मु॰ चि॰ उक्तः । "कौबेरीतो वैपरीत्येन कालोऽर्कादौ वारे सम्मुखे तस्य पाशः । रात्रावेतौ वैपरीत्येन गम्यौ यात्रा युद्धे संमुखौ वर्जनीयौ" । अयमर्थः । रवावुत्तरस्यां कालः, सोमे वायव्यां, भौमे पश्चिमायाम्, बुधे नैर्ऋत्याम्, गुरौ दक्षिणस्याम्, शुक्रे आग्नेय्यां, शनौ पूर्वस्याम् । "रवावुत्तरतः कालः सोमे वायव्यभागके । भौमे तु पश्चिमे भागे बुधे नैर्ऋतभागके । जीवे च याम्यदिग्भागे शुक्रे चाग्नेयकोणके । शनौ तु पूर्वदिग्भागे कालचक्रं प्रकीर्त्तितम् । स्वरोदये "यत्रस्थस्तत्र कालः स्यात् पाशस्तस्य तु सम्मुखः । दक्षिणस्थः शुभः कालः पाशो वामदिगाश्रयः । यात्रायां समरे श्रेष्ठस्ततोऽन्यत्र न शोभनः । रात्रौ च वैपरीत्येन यथा रवौ रात्रौ दक्षिणस्यां कालः उत्तरस्यां पाश इत्यादिक्रमेणोह्यम् । २८कलाये (मटर) शिम्बीभेदे, वैज॰ । "विकसत्कलायकुसुमम्" माघव्या॰कालकुसुममिति मल्लि॰ ध्रुवनामकवसोः २९ पुत्रभेदे पु॰ । "ध्रुवस्य पुत्रो भगवान् कालो लोकप्रकालनः" हरिवं॰ ३अ॰ ।

**कालक** न॰ काल-स्वार्थे क कलयति रक्तं कल-णोदने ण्वुल् वा । १कालखण्डे भावप्र॰ तस्य कृष्णवर्णत्वात् तथात्वम् । २यकृति हेमच॰ । निखिलदेहरक्तप्रेरकत्वात् तस्य तथात्वम् । यथोक्तं भावप्र॰ । "यदा रसो यकृत् याति तत्र रञ्जकपित्ततः । रागं पाकं च संप्राप्य स भवेद्रक्तसंज्ञकः" । "यकृत् प्लीहा च रक्तस्य मुख्यस्थानं तयोः स्थितम् । अन्यत्र संस्थितवतां रक्तानां पोषकं भवेत्" इति च । देहस्थे कृष्णवर्णे (जडुल) ३चिह्नभेदे जतुके पु॰अमरः ४अलगर्द्दे जलव्याले (कालढोड़ा) सर्पे पु॰स्त्री शब्दर॰ । अनित्ये वर्णे तेन रक्ते चार्थे "कालाच्च" प॰ कन् । कालक कालवर्णेन रक्ते ५पटादौ त्रि॰ तस्य वर्णस्यानित्यत्वात् रागेण रक्ततयाऽनित्यत्वाच्च तथात्वम् । स्त्रियां टाप् । "कालिका शाटी" सि॰कौ॰ । बीजगणितोक्ते ६ अव्यक्तराशिसंज्ञाभेदे पु॰अव्यक्तशब्दे ४९७पृ॰ विवृतिः ।

**कालकच्** स्त्री नि॰ कर्म्म॰ । कृष्णवर्णे कचभेदे शब्दचि॰ ।

**कालकञ्ज** न॰ नि॰ कर्म॰ । १नीलपद्मे । २दानवभेदे पु॰ । "पौलोमैः कालकञ्जैश्च स्पष्टपुष्टैरधिष्ठितम्" भा॰व॰१७३अ॰

**कालकटङ्कट** पु॰ कालरूपः कटङ्कटः । शिवे । "वैष्णवी पटवी तालो खली कालकटङ्कटः" भा॰ आनु॰१७अ॰ शिवस्तवे ।

**कालकण्टक** पु॰ स्त्री कालः कृष्णः कण्टकोऽस्य । २कृष्णकण्टकयुक्ते त्रि॰ दात्यूहे (डाक) पक्षिभेदे अमरः स्त्रियां जातित्वात् ङीष् । ३पीतसारे वृक्षे मेदि॰ ।

**कालकण्ठ** पु॰ कालः कण्ठोऽस्य विषपानात् । १शिवे स हि

सुखरात्रौ मया दत्तां गृह्ण पूजाञ्च शाश्वतीम्। दारिद्र्यकलहप्रिये देवि! त्वं धननाशिनी। याहि शत्रोर्गृहं नित्यं स्थिरा तत्र भविष्यसि। यदि त्वं मे महाभागे! प्रीता भवसि सर्व्वदा। पुत्रबन्धुकलत्रेषु कदाचिन्ना गमिष्यसि। गच्छ त्वं मन्दिरं शत्रोर्गृहीत्वा चाशुभं मम। मदाश्रयं परित्यज्य स्थिता तत्र भविष्यसि"। किञ्च। "एवं गते निशीथे तु नारीभिः स्वगृहाङ्गनात्। अलक्ष्मीश्च वहिष्कार्य्या अमन्त्रञ्च यथाविधि" इति कृत्यतत्त्वार्णवधृत ब्रह्मपुराणम्। "एवं गते निशीथे तु जने निद्रार्द्धलोचने। तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः। निष्काश्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गनात्" इति मदनरत्नधृतञ्च। "महकुष्माण्डखेटाद्याः कालकर्णीशिशुग्रहाः" काशी०

**कालकवृक्षीय** पु० कालकोवृक्षो यत्र देशे तत्र भवः "वृद्धाच्छः" पा० छ। वायसविद्याभिज्ञे ऋषिभेदे। तत्कथा च भा०शा० ८२अ० "कोशलानामाधिपत्यं सम्प्राप्ते क्षेमदर्शिनम्। मुनिः कालकवृक्षीय आजगामेति नः श्रुतम्। स काकं पञ्जरे बद्ध्वा विषयं क्षेमदर्शिनः। सर्व्वं पर्य्यचरद्युक्तः प्रवृत्त्यर्थी पुनःपुनः। अधीध्वं वायसीं विद्यां शंसन्ति मम वायसाः। अनागतमतीतञ्च यच्च सम्प्रति वर्त्तते" इत्युपक्रम्य दर्शिता। "क्षेमदर्शी नृपसुतो यत्र क्षीणबलः पुरा। मुनिं कालकवृक्षीयमाजगामेति नः श्रुतम्" तत्रैव १०४अ०। "मुनिः कालकवृक्षीय आम्राव्योऽथ हिरण्मय" भा०स०७अ०

**कालकस्तूरी** स्त्री नि०स०। कस्तूरीभेदे शब्दचि०।

**कालका** स्त्री कालेव क वा० नेत्त्वम्। दक्षकन्याभेदे जटा०। तस्या अपत्यं ढक्। कालकेय असुरभेदे कालकेयशब्दे उदा०।

**कालकाल** पु० कालमपि कालयति प्रेरयति स्वकर्म्मणि कल–नोदने अण्। परमेश्वरे कालशब्दे दर्शितकालमाधवीयग्रन्थे उदा०।

**कालकीट** पु० कालः कीटोऽत्र। १देशभेदे तत्र भवः पलद्या० अण्। कालकीट २तद्देशभवे त्रि०।

**कालकीर्त्ति** पु० चन्द्रहन्त्रसुरांशसम्भूते भारतप्रसिद्धे नृपभेदे। "कालकीर्त्तिरिति ख्यातः पृथिव्यां सोऽभवन्नृपः। चन्द्रहन्तेति यस्त्वेष कीर्त्तितः प्रवरोऽसुरः" भा०आ०६७अ०

**कालकील** पु० कालं तज्ज्ञानं कीलयति कील–अण् उप० स०। कोलाहले शब्दरत्ना०। कोलाहलस्य कालरूपपरमेश्वरज्ञानविरोधित्वात्तथात्वम्।

**कालकुण्ठ** पु० कालेन कुण्ठते कुण्ठ–कर्म्मणि घञ्। यमराजे शब्दमा०। "भीषास्माद्वातः पवते–मृत्युर्धावति पञ्चमः" इति श्रुत्युक्तेः ईश्वरभियैव यमादिभिः स्वस्वकार्य्याणां करणात्तस्य तत्कुण्ठितत्वात् तस्य तथात्वम्।

**कालकुष्ठ** न०नि०कर्म०। कङ्कुष्ठे पर्व्वतीयमृत्तिकाभेदे राजनि०।

**कालकूट** न०। कालं शिवमपि कूटयति कूट–उपतापे अण् उप०स०, कालस्य मृत्योः कूटइव वा कालवर्णस्य कूटइव वा। १विषभेदे पु०न०। विषभेदकालकूटलक्षणगुणाद्युक्तं भावप्रकाशे यथा "विषं तु गरलः क्ष्वेडस्तस्य भेदानुदाहरे। वत्सनाभः सहारिद्रः सक्तुकश्च प्रदीपनः। सौराष्ट्रिकः शृङ्गिकश्च कालकूटस्तथैव च। हालाहलो ब्रह्मपुत्रो विषभेदा अमी नव" इति विभज्य "देवासुररणे देवैर्हतस्य पृथुमालिनः। दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभः। निर्यासः कालकूटोऽस्य मुनिभिः परिकीर्त्तितः। सहि क्षेत्रे शृङ्गवेरे कोङ्कणे–मलये भवेत्" इति लक्षितम्।

विषशोधनस्य विधानादिकं तत्रैवोक्तं यथा—"गोमूत्रे त्रिदिनं स्थाप्य विषं तेन विशुध्यति। रक्तसर्षपतैलाक्ते तथा धार्य्यञ्च वाससि। ये गुणा गरले प्रोक्तास्ते स्युर्हीनविशोधनात्। तस्माद्विषं प्रयोगे तु शोधयित्वा प्रयोजयेत्"। शोधितविषगुणाः तत्रैव।

"विषं प्राणहरं प्रोक्तं व्यवायि च विकाशि च। आग्नेयं वातकफहृत् योगवाहि तमोवहम्। व्यवायि सकलकायगुणव्यापनपूर्व्वकपाकस्थानगमनशीलम्। विकाशि ओजःशोषणपूर्व्वकसन्धिबन्धशिथिलीकरणशीलम्। आग्नेयम् अधिकाग्नेयम्। योगवाहि सङ्गिगुणग्राहकम्। तमोवहं तमोगुणप्राधान्येन बुद्धिविध्वंसकम्। "तदेव युक्तियुक्तन्तु प्राणदायि रसायनम्। योगवाहि परं वातश्लेष्मजित्सन्निपातहृत्"। २काके पु०स्त्री राज०। अतिकृष्णत्वात्मृत्योर्दूतरूपत्वाद्वा तस्य तथात्वम् स्त्रियां जातित्वात् ङीष्।

३विषमात्रे च। "कालिमा कालकूटस्य नापैति हरसङ्गमात्"। "ततोदुर्य्योधनः पापः तद्भक्ष्ये कालकूटकम्। क्षिप्तं प्रक्षेपयामास भीमसेनजिघांसया" भा० आ० ५००८ श्लोकः।

**कालकूटि** त्रि० कालकूटे भवः इञ्। कालकूटभवे।

**कालकृत्** पु० कालं कालमानं करोति स्वगत्या कृ–क्विप् ६त०। सूर्य्ये तद्गत्या हि क्षणदण्डादिव्यवहारस्य कृतत्वात्तस्य तथात्वम् २परमेश्वरे च "कालात्मा कालकृद्विभुः" हृ०सि०

अमृतमन्थनकाले उत्थितविषपानात् कालकण्ठो जातः तत्कथा भाग०८।७अ० यथा। "ततः स करवलीकृत्य व्यापि हालाहलं विषम्। अभक्षयन्महादेवः कृपया भूतभावनः। तस्यापि दर्शयामास स्वाभाव्यं जलकल्मषः। यच्चकार गले नीलं तच्च साधोर्विभूषणम्।"२मयूरे ३दात्यूहे ४खञ्जने च पक्षिभेदे त्रिका० स्त्रियां जातित्वात् ङीष्। तेषां कृष्णवर्णत्वात् तथात्वम्। वा कप्। दात्यूहे पु०स्त्री

**कालकन्दक** पुंस्त्री कालः कन्द इव कायति कै—क। (काल-ढोड़ा) जलसर्पे। स्त्रियां जातित्वात् ङीष्।

**कालकर्णी** स्त्री कालः कर्णोऽस्याः ङीप्। अलक्ष्मीभेदे "अलक्ष्मीः कालकर्णी च" पुरा०। स्वार्थे क ह्रस्वः। कालकर्णिका तत्रार्थे हेम०। अलक्ष्मीशब्देऽनुक्तस्तदुत्पत्त्यादिरत्राभिधीयते पाद्मे उत्तरखण्डे देवीं प्रति शिववाक्यम्।

"मां प्रणम्य पुनर्देवा ममन्थुः क्षीरसागरम्। तस्मिन् प्रमथ्यमाने तु मया देवैश्च भाविनि!। ज्येष्ठा देवी समुत्पन्ना रक्तस्रग्वाससावृता। उत्पन्ना साऽब्रवीद्देवान् किं कर्त्तव्यं ? मयेति वै। तामब्रुवंस्तदा देवीं सर्व्वे देवगणास्तदा। येषां गृहान्तरे नित्यं कलहं संप्रवर्त्तते। तत्ते स्थानं प्रयच्छामो वासस्तत्र शुभानने!। यस्य गेहं कपालास्थिभस्मकेशादिचिह्नितम्। परुषं भाषते नित्यं वसन्त्यनृतवादिनः। सन्ध्याकाले च ये पापाः स्वपन्ति मलचेतसः। तेषां वेश्मनि संतिष्ठ दुःखदारिद्र्यदायिनी। कपालकेशभस्मास्थितुषाङ्गाराणि यत्र तु। तत्र ते सततं स्थानं भविष्यति न संशयः। अकृत्वा पादयोःशौचं यस्त्वाचामति दुर्म्मतिः। तं भजस्व सदा देवि! कलुषेणावृता गृहम्। तृणाङ्गारकपालाश्मबालुकायसचर्म्मभिः। दन्तधावनकर्त्तारो भविष्यन्ति नराधमाः। रमस्व कलिना देवि! तेषां वेश्मसु नित्यशः। तिलपिष्टञ्च नक्तञ्च कालिङ्गशिग्रुगृञ्जनम्। छत्राकं विड्वराहञ्च विल्वकोषातकीफलम्। अलाबूं (वर्त्तुलाम्) श्रीफलं ये वै खादयन्ति नराधमाः। तेषां गृहे तव स्थानं देवि! दारिद्र्यदे! सदा। इत्यादिश्य सुराः सर्वे ते ज्येष्ठां कलिवल्लभाम्"। तस्या उद्दालकमुनिना सह विवाहादिकथा च पाद्मे १६१अ०।

"समुद्रमथनाद्यानि रत्नान्यापुः सुरोत्तमाः। श्रेष्ठञ्च कौस्तुभं तेषु विष्णवे प्रददुः सुराः। यावदङ्गीचकारासौ लक्ष्मीं भार्य्यार्थमात्मनः। तावद्विज्ञापयामास लक्ष्मीस्तं चक्रपाणिनम्। लक्ष्मीरुवाच। असंस्कृत्य कथं ज्येष्ठां कनिष्ठा परिणीयते। तस्मान्ममाग्रजामेतामलक्ष्मीं मधुसूदन!। विवाह्योद्वह मां पश्चादेष धर्म्मः सनातनः। तस्मात् धर्म्मव्यतिक्रामं न कुर्य्याः मधुसूदन!। इति तद्वचनं श्रुत्वा स विष्णुर्लोकभावनः। उद्दालकाय मुनये सुदीर्घतपसे तदा। आप्तवाक्यानुरोधेन तामलक्ष्मीं ददौ किल। स्थूलोष्ठीं शुष्कवदनां विरूपां बिभ्रतीं तनुम्। खरदारक्तनयनां रूक्षपक्वशिरोरुहाम्। स मुनिर्विष्णुवाक्यात्तामङ्गीकृत्य स्वमाश्रमम्। वेदध्वनिसमायुक्तमानयामास धर्म्मवित्। होमधूपसुगन्धाढ्यं वेदघोषेण नादितम्। आश्रमं तं विलोक्याथ व्यथिता साऽब्रवीदिदम्। ज्येष्ठोवाच। न हि वासोनुरूपोऽयं वेदध्वनियुतो मम। नात्रागमिष्ये भो ब्रह्मन्! नयस्वान्यत्र मां ध्रुवम्। उद्दालक उवाच। कथं नायासि किन्त्वत्र? वर्त्तते स्वमतं तव। तव योग्या च वसतिः का भवेत्तद्वदस्व माम्। ज्येष्ठोवाच। वेदध्वनिर्भवेद् यस्मिन्नतिथीनाञ्च पूजनम्। यज्ञदानादिकं यत्र नैव, तत्र वसाम्यहम्। परस्परानुरागेण दाम्पत्यं यत्र विद्यते। पितृदेवार्च्चनं यत्र तत्र नैव वसाम्यहम्। दानशौचे न विद्येते परद्रव्यापहारिणः। परदाररता यत्र तत्र स्थाने रतिर्मम। वृद्धसज्जनविप्राणां यत्र स्यादवमाननम्। निष्ठुरं भाषणं यत्र तत्र सम्यग्वसाम्यहम्। सूत उवाच। इति तद्वचनं श्रुत्वा विषण्णवदनोऽभवत्। उद्दालकस्ततोवाक्यं तामलक्ष्मीमुवाच ह। उद्दालक उवाच। अश्वत्थवृक्षमूलेऽस्मिन् अलक्ष्मि! स्थीयतां क्षणम्। आश्रमस्थानमालोक्य यावदायाम्यहं पुनः। सूत उवाच। इति तां तत्र संस्थाप्य जगामोद्दालको मुनिः। प्रतीक्षन्ती चिरं तत्र यदा न तं ददर्श सा। तदा रुरोद करुणं भर्त्तुस्त्यागेन दुःखिता। तत्तस्याः क्रन्दितं लक्ष्मीर्वैकुण्ठभवनेऽशृणोत्। तदा विज्ञापयामास विष्णुमुद्विग्नमानसा। लक्ष्मीरुवाच। स्वामिन्! मद्भगिनी ज्येष्ठा स्वामित्यागेन दुःखिता। तामाश्वासयितुं याहि कृपालो! यद्यहं प्रिया। सूत उवाच। लक्ष्म्या सहततो विष्णुस्तत्रागात् कृपयान्वितः। आश्वासयन् लक्ष्मीं तामिदं वाक्यमथाब्रवीत्। विष्णुरुवाच। अश्वत्थवृक्षमासाद्य सदाऽलक्ष्मि! स्थिरा भव। ममांशसम्भवो ह्येष आवासस्ते मया कृतः। मन्दवारे सदा नूनं लक्ष्मीरत्रागमिष्यति। अस्पृश्योऽसौ भवेत्तस्मात् मन्दवारं विना किल"।

दीपान्वितामावस्यायां तत्पूजाविधानं मन्त्रलिङ्गात् यथा "अलक्ष्मीस्त्वं कुरूपासि कुत्सितस्थानवासिनि!।

**कालकृत** पु० कालं करोतीति । १ सूर्य्ये शब्दरत्ना० कालो-ऽवधित्वेन कृतो यस्य । कृतावधिके २ आधिभेदे । "काले कालकृतोनश्येत् फलभोग्यो न नश्यति" याज्ञ०। ३त०। ३कालेन कृते 'सर्व्वं कालकृतं मन्ये कालो हि बलवत्तरः" पुरा० ।

**कालकेय** पु० कालकायाः अपत्यम् ढक् । दानवभेदे तत्कथा यथा "पुरा कृतयुगे घोरा दानवा युद्धदुर्मदाः । कालकेया इति ख्याता गणाः परमदारुणाः" इति भा०व०१०१अ० इत्युपक्रम्य प्रधानभूतस्य वृत्तस्य बधे तेषां समुद्रदुर्गाश्रयणं रात्रौ च नानामुन्याश्रमहिंसा दिवा पुनः समुद्रप्रवेशो वर्णितः पश्चात् विष्णोरादेशेनागस्त्यमुनिना तेषां समुद्ररूपस्य दुर्गस्य शोषणे कृते देवैस्ते नाशितास्तदवशिष्टाश्च "कालेकेयाये केचित् हिरण्यपुरवासिनस्ते अर्ज्जुनेन निहताः इत्युक्तम् हरिवं०१०३अ० यथा "चतुर्दश शतान्यत्यान् हिरण्यपुर-वासिनः" इत्युपक्रम्य १०५अ० तत्रैव "मरीचिर्जनयामास महता तपसान्वितः । पौलोमान् कालकेयांश्च दानवांस्ते महाबलाः । अवध्यादेवतानाञ्च हिरण्यपुरवासिनः । कृताः पितामहेनाजौ निहताः सव्यसाचिना" । कालाया अपत्यम् ढक् । कालेयोऽप्यत्र उदा०तत्रैव ।

**कालकेशी** स्त्री कालः केश इव पत्रादिर्यस्याः गौरा०ङीष् । नील्यामोषधौ शब्दचि० २कृष्णकेशयुक्तस्त्रियाञ्च ।

**कालक्षेप** पु० कालस्य क्षेपः क्षेपणम् । १कर्त्तव्यकर्म्मकाललङ्घने २कालयापने च ।

**कालखञ्ज** पु० दानवभेदे "संह्लादो विप्रचित्तिश्च कालखञ्जाश्च दानवाः" भा०स०९अ०वरुणसभ्यकीर्त्तने ।

**कालखञ्जन** न०कालेन खञ्जति खजि-ल्यु । यकृति हृदयस्थे रक्ताधारस्थाने हेमच० ।

**कालखण्ड** न०कालं कृष्णं खण्डम् । दक्षिणकुक्षिस्थे मांस-खण्डे अमरः। हेमाद्रिधृते कालप्रतिपादके ग्रन्थभेदे च।

**कालगङ्गा** स्त्री काली गङ्गा नदी । यमुनायां शब्दचि० तस्या नदीषु श्रेष्ठत्वात्तथात्वम् ।

**कालगन्ध** पु० कालः कृष्णोगन्धो गन्धवद्द्रव्यम् । १काला-गुरुणि शब्दचि० । कालस्य गन्धोलेशः । २काललेशे कालकलायां च । ३कालचन्दने शब्दचि० ।

**कालग्रन्थि** पु० कालस्य ग्रन्थिरिव । संवत्सरे हारा० ।

**कालघट** पु० जनमेजयसर्पसत्रे आर्त्विज्यकारके ब्राह्मण-विशेषे "आत्रेयः कुण्डजठरोद्विजः कालघटस्तथा" भा० आ० ५३अ० । [भेदे रत्नमा० ।

**कालङ्कृत** पु० ईषदलङ्कृतः कोः का । (कालकासेँदा) वृक्ष-

**कालचक्र** न०कालस्य कालगतेश्चक्रमिव । हेमच०उक्ते द्वादशारे १कालचक्रभेदे । (उत्सर्पिन्) शब्दे ११२पृ० विवृतिः । कालश्चक्रं सदानिशं परिवर्त्तमानत्वात् । विष्णुपुराणादृक्ते ज्योतिश्चक्राधिष्ठिते चक्रवत्परिवर्त्तमाने २ काले । "यथा कुलालचक्रेण भ्रमता सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरन्यैव प्रदेशान्तरे उपलभ्यमानत्वात् एवं नक्षत्रराशिभिरुपलक्षितेन कालचक्रेण ध्रुवं मेरुञ्च दक्षिणत परिधावता सह परिधावमानानां तदाश्रयाणां सूर्य्यादीनां ग्रहाणां गतिरन्यैव नक्षत्रान्तरे राश्यन्तरे चोपलभ्यमानत्वात्' । भाग० ५ २२ द्लो०। भा०व० १६३अ०कलाकाष्ठादिविभागमुक्त्वा "एवमेष चरन् पार्थ ! कालचक्रमतन्द्रितः । वर्द्धयन् सुमहातेजाः सविता परि-वर्त्तते" प्रपञ्चस्तु विष्णुपुराणे यथा

"पराशर उवाच । व्याख्यातमेतद्ब्रह्माण्डसंस्थानं तव सुव्रत ! । ततः प्रमाणसंस्थाने सूर्य्यादीनां शृणुष्व मे । योजनानां सहस्राणि द्वितीयोऽर्को विस्तृतः । ईशादण्डस्तथैवास्य द्विगुणो मुनिसत्तम ! । सार्द्धकोटि-स्तथा सप्तनियुतान्यधिकानि वै । योजनानान्तु तस्याक्ष-स्तत्र चक्रं प्रतिष्ठितम् । त्रिनाभिमति पञ्चारे षण्णेमि-न्यक्षयात्मके । संवत्सरमये कृत्स्नं कालचक्रं प्रतिष्ठितम् । चत्वारिंशत् सहस्राणि द्वितीयोऽक्षो विस्तृतः । पञ्चा-न्यानि सार्द्धानि स्यन्दनस्य महामते ! । अक्षप्रमाण-मुभयोः प्रमाणं तद्युगार्द्धयोः । ह्रस्वोऽक्षस्तद्युगार्द्धञ्च ध्रुवाधाररथस्य वै । द्वितीयेऽक्षे तु तच्चक्रं स्थितं वै मान-साचले । हयाश्च सप्त छन्दांसि तेषां नामानि मे शृणु । गायत्री च बृहत्युष्णिग्जगती त्रिष्टुबेव च । अनुष्टुप् पङ्क्तिरित्युक्ताश्छन्दांसि हरयो रवेः । मानसोत्तरशैले तु पूर्व्वतो वासवी पुरी । दक्षिणेन यमस्यान्या प्रतीच्यां वरुणस्य वै । उत्तरेण तु सोमस्य तासां नामानि मे शृणु । वस्वौकसारा शक्रस्य, याम्या संयमनी स्मृता । पुरी सुखा जलेशस्य, सोमस्य तु विभावरी । काष्ठाङ्गतो दक्षिणतः क्षिप्तेषुरिव गच्छति । मैत्रेय ! भगवान् भानुर्ज्योतिषां चक्रसंयुतः । अहोरात्रव्यवस्थानकारणं भगवान् रविः । देवयानपरः पन्थायोगिनां क्लेशसंक्षये । दिवसस्य रविर्मध्ये सर्व्वकालं व्यवस्थितः । सर्व्वद्वीपेषु मैत्रेय ! निशार्द्धस्य च सम्मुखः । उदयास्तमनञ्चैव सर्व्व-कालञ्च सम्मुखे । दिशास्वशेषासु तथा मैत्रेय ! विदि-शासु च । यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः ।

तिरोभावश्च वर्त्तते यत्र च स्तमनं रवेः। नैवास्तमनम-र्कस्य नोदयः सर्व्वदा मतः। उदयास्तमनाख्यं हि दर्शनादर्शनं रवेः। शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम्। विकर्णौ द्वौ विकर्णस्थस्त्रीन्कोणान् द्वे पुरे तथा। उदितोवर्द्धमानाभिरामध्याह्नात्तपन्रविः। ततःपरं ह्रसन्तीभिर्गोभिरस्तं नियच्छति। उदयास्तमनाभ्याञ्च स्मृते पूर्व्वापरे दिशौ। यावत् पुरस्तात्तपति तावत् पृष्ठे च पार्श्वतः। ऋतेऽमराद्रेर्मेरोरुपरि ब्रह्मणः सभा। ये ये मरीचयोऽर्कस्य प्रयान्ति ब्रह्मणः सभाम्। ते ते निरस्तास्तद्भासा प्रतीपमुपयान्ति वै। तस्मां दिश्युत्तरस्यां वै दिवारात्रिः सदैव हि। सर्व्वेषां द्वीपवर्षाणां मेरुरुत्तरतो यतः। प्रभा विवस्वतो रात्रावस्तङ्गच्छति भास्करे। विशत्यग्निमतोरात्रौ वह्निर्दूरैः प्रकाशते। वह्निपादस्तथा भानुं दिनेष्वाविशति द्विज!। अतीव वह्निसंयोगादतः सूर्य्यः प्रकाशते। तेजसी भास्कराग्नेये प्रकाशोष्णस्वरूपिणी। परस्परानुप्रवेशादाप्यायेते दिवानिशम्। दक्षिणोत्तरभूम्यर्द्धे समुत्तिष्ठति भास्करे। आतात्म्याहि भवन्त्यापोनक्तमह्नः प्रवेशनात्। दिनं विशति चैवाम्भो भास्करेऽस्तमुपागते। तस्माच्छुक्लीभवन्त्यापो नक्तमह्नः प्रवेशनात्। एवं पुष्करमध्येन यदा याति दिवाकरः। त्रिंशद्भागास्तु मेदिन्यास्तदा मौहूर्त्तिकी गतिः। कुलालचक्रपर्य्यन्तो भ्रमन्नेव दिवाकरः। करोत्यत्तस्तदा रात्रिं विमुञ्चन्मेदिनीं द्विज!। अयनस्योत्तरस्यादौ मकरं याति भास्करः। ततः कुम्भञ्च मीनञ्च राशे राश्यन्तरं द्विज!। तेषु तेष्वथ भुक्तेषु ततो वैषुवतीं गतिम्। प्रयाति सविता कुर्व्वन्नहोरात्रं ततः समम्। ततोरात्रिक्षयं याति वर्द्धते च दिनं दिनम्। ततश्च मिथुनस्यान्ते परं काष्ठामुपागतः। राशिं कर्कटकं प्राप्य कुरुते दक्षिणायनम्। कुलालचक्रपर्य्यन्तो यथा शीघ्रं प्रवर्त्तते। दक्षिणे प्रक्रमे सूर्य्यस्तथा शीघ्रं प्रवर्त्तते। अतिवेगित या कालं वायुमार्गवशाक्रमन्। तस्मात् प्रकृष्टां भूमिञ्च कालेनाल्पेन गच्छति। सूर्य्योद्वादशभिःशैघ्र्यान्मुहूर्त्तैर्दक्षिणायने। त्रयोदशार्द्धमृक्षाणामह्नाचरति वै द्विज!। मुहूर्त्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन्। कुलालचक्रमध्यस्थो यथा मन्दं प्रसर्पति। तथोदगयने सूर्य्यः सर्पते मन्दविक्रमः। तस्माद्दीर्घेण कालेन भूमिमल्पन्तु गच्छति। अष्टादशमुहूर्त्तं यदुत्तरायणपश्चिमम्। अहर्भवति तच्चाभिचरते मन्दविक्रमः। त्रयोदशार्द्धमह्ना तु ऋक्षाणां चरते रविः। मुहूर्त्तैस्तावदृक्षाणि रात्रौ द्वादशभिश्चरन्। अधोमन्दतरं नाभ्यां चक्रं भ्रमति वै यथा, मृत्पिण्डवच्चक्रमध्ये ध्रुवो भवति वै तथा। कुलालचक्रनाभिस्तु यथा तत्रैव वर्त्तते। ध्रुवस्तथाहि मैत्रेय! तत्रैव परिवर्त्तते। उभयोः काष्ठयोर्मध्ये भ्रमतोर्मण्डलानि तु। दिवा नक्तञ्च सूर्य्यस्य मन्दा शीघ्रा च वै गतिः। मन्दाह्नि यस्मिन्नयने शीघ्रा नक्तं तदा गतिः। शीघ्रा निशि यदा स्या च तदा मन्दा दिवा गतिः। एवं प्रमाणेनैवैष मार्गं याति दिवाकरः। अहोरात्रेण योभुङ्क्ते समस्ता राशयो द्विज। षडेव राशीन्यो भुङ्क्ते रात्रावन्यांश्च षड्दिवा। राशिप्रमाणजनिता ह्रस्वदीर्घान्विता द्विज!। तथा निशायां राशीनां प्रमाणैर्लघुदीर्घता। दिनादेर्दीर्घह्रस्वत्वं तद्भोगेनैव जायते। उत्तमे प्रक्रमे शीघ्रा निशि मन्दा गतिर्दिवा। दक्षिणे त्वयने चैव विपरीता विवस्वतः।”

नरपतिजयचर्य्योक्ते चतुरशीतिचक्रमध्ये २चक्रभेदे तत्स्वरूपं चक्रशब्दे वक्ष्यते। दानार्थकल्पिते हेमा०दा० उक्ते ३रजतमये ४चक्रभेदे यथा

“चक्रं रौप्यमयं कृत्वा सुक्षारम्रिसमयात्मकम्। कृत्वा मूर्त्तिं शरच्चन्द्ररश्मिसमध्यान्तरस्थितम्। त्वङ्मांसानि तु रौप्याणि गात्रेषु च समन्ततः। एवं ध्यानवतस्तस्य स चन्द्रः कृष्णतां व्रजेत्। ततोऽप्यनन्तरं पश्चात् स्थित्वा विप्रप्रदक्षिणम्। तं गृहीत्वा व्रजेद्दूरमदृष्टत्वमपि व्रजेत्। स्वयञ्चाहतसंघातपूर्णकायस्थितिस्थितः। कालचक्रमिदं नाम्ना दानं मृत्युविनाशनम्। दूदन्ते राजतं चक्रं रश्मिजालसमाकुलम्। अपमृत्युविनाशाय ददामीति समुच्चरन्। सुवर्णं दक्षिणायुक्तं ब्राह्मणाय निवेदयेत्। एवं कृते विनश्येत अपमृत्युर्न संशयः। ततस्तस्मात्तदा देयमपमृत्युभयान्वितैः। ज्वरादिरोगग्रस्तैर्वा महापत्पतितैरपि। ततो गृह्योक्तविधिना स्थापयेज्जातवेदसम्। जुहुयात् कालनाम्ना तु शतमष्टोत्तरन्तिलैः। ततस्तु भोजयेद्भक्त्या विप्रान् द्वादशसंख्यया। स्वयमक्षारलवणं भुञ्जीत सकृदेव हि। एवं कृते नरोनूनं चिरं जीवेन्न संशयः” ५रव्यादिवारे नक्षत्रयोगभेदात् ५दण्डभेदे कालदण्डशब्दे विवृतिः। [ज्योतिर्विद्दैवज्ञे।

**कालचिन्तक** पु० कालं चिन्तयति विचारयति चिन्ति–ण्वुल्।

**कालचिह्न** न० कालस्य मृत्योर्ज्ञापकं चिह्नम्। मृत्युज्ञापके लक्षणभेदे। तल्लक्षणमुक्तं काशीख० ४१अ० यथा

“वदामि कालचिह्नानि जायन्ते यानि देहिनाम्। मृत्यौ निकटमापन्ने मुने! तानि निशामय। दक्षनासा

पुटे यस्य वायुर्वाति दिवानिशम्। अखण्डमेकं तस्यायुः क्षयत्यब्दत्रयेण हि। द्व्यहोरात्रं त्र्यहोरात्रं रविर्वहति सन्ततम्। साद्धैकवर्षान्तस्येह जीवितावधिरुच्यते। वहेन्नासापुटयुगे दशाहानि निरन्तरम्। वातश्चेत् सहसंक्रान्तिस्तथा जीवेद्दिनत्रयम्। नासारन्ध्रद्वयं हित्वा मातरिश्वा मुखाद्वहेत्। संशेद्दिनत्रयादर्व्वाक् प्रयाणं तस्य चाध्वने। सूर्ये सप्तमराशिस्थे जन्मर्क्षस्थे निशाचरे। पौष्णः स कालो द्रष्टव्यो यदा याम्ये रविर्वहेत्। अकस्मादेव तत्काले मृत्युः सन्निहितो भवेत्। वञ्चनीयः प्रयत्नेन स कालो मृत्युभीरुणा। अकस्माद्वीक्षते यस्तु पुरुषं कृष्णपिङ्गलम्। तस्मिन्नेव क्षणे शुभ्रं सञ्जीवेद्वत्सरद्वयम्। यस्य वीजं मलं मूत्रं, क्षुतं मूत्रं मलन्तथा। इष्टैकदा पतेद्यस्य अब्दन्तस्यायुरिष्यते। इन्द्रनीलनिभं व्योम्नि नागवृन्दं यदीक्षते। इतस्ततः प्रसृमरं षण्मासं न स जीवति। व्यभ्रेऽह्नि वारिपूर्णास्यः पृश्नीव्र दिवाकरम्। फत्कृत्यापश्चिन्द्रचापञ्च पश्येत् षण्मासजीवनः। अरुन्धतीं ध्रुवञ्चैव विष्णोस्त्रीणि पदानि च। आसन्नमृत्युर्नो पश्येच्चतुर्थं मातृमण्डलम्। अरुन्धती भवेज्जिह्वा ध्रुवो नासाग्रमुच्यते। विष्णोः पदानि भ्रूमध्ये नेत्राग्नौ मातृमण्डलम्। वेत्ति नीलादिवर्णस्य कट्वम्लादिरसस्य हि। अकस्मादन्यथाभावं षण्मासेन स मृत्युभाक्। षण्मासमृत्योर्व्यस्य कण्ठोष्ठरसनारदाः। शुष्यन्ति सततं तद्वद्धि च्छायास्तालुपञ्चमाः। दन्तःकरजनेत्रान्ता नीलिमानं भजन्ति चेत्। स हि कीनाशनगरीं षष्ठे मासि व्रजेन्नरः। संप्रवृत्ते निधुवने मध्यान्ते क्षौति चेन्नरः। निश्चितं पञ्चमे मासि धर्म्मराजातिथिर्भवेत्। द्रुतमारुह्य सरटस्त्रिवर्णो यस्य मस्तकम्। प्रयाति, याति तस्यायुः षण्मासे सम्मितिक्षयम्। सुस्नातस्यापि यस्याशु हृदयं परिशुष्यति। चरणौ च करौ वापि त्रिमासन्तस्य जीवितम्। प्रतिविम्बे भवेद्यस्य पदङ्खण्डपदाकृति। पांशौ वा कर्दमे वापि पञ्चमासान् स जीवति। छाया प्रकम्पते यस्य देहवन्ध्येऽपि निश्चले। कृतान्तदूता बध्नन्ति चतुर्थे मासि तन्नरम्। निजस्य प्रतिविम्बस्य नीराजसुकूटादिषु। उत्तमाङ्गन्न यः पश्येत् स मासेन विनश्यति। मतिभ्रांस्ये त्स्खलेद्वाणी धनुरैन्द्रं निरीक्षते। रात्रौ, चन्द्रद्वयं वापि दिवा द्वौ वा दिवाकरौ। दिवा च तारकाचक्रं रात्रौ व्योम वितारकम्। युगपच्च चतुर्दिक्षु शाक्रं कोदण्डमण्डलम्। भूरुहे भूधराग्रे वा गन्धर्व्वनगरोदयम्। दिवा पिशाचनृत्यञ्च एते पञ्चत्वहेतवः। सर्व्वेष्वेतेषु चिह्नेषु यद्येकमपि वीक्षते। तदा मासावधिर्मृत्युः प्रतीक्षेत नचाधिकम्। करावरुद्धश्रवणः शृणोति न यदा ध्वनिम्। स्थूलः कृशः कृशः स्थूलस्तदा मासान्निवर्त्तते। यः पश्येदात्मनश्छायां दक्षिणाशासमाश्रिताम्। दिनानि पञ्च जीवित्वा पञ्चत्वमुपयाति सः। प्रोह्यते भक्ष्यते वापि पिशाचासुरवायसैः। भूतैः प्रेतैः श्वभिर्गृध्रैर्गोमायुखरस्मूकरैः। सरभैः करभैः कौशैः श्येनैरश्वतरैर्वकैः। स्वप्ने स जीवितं त्यक्त्वा वर्षान्ते यमसीक्षते। गन्धपुष्पांशुकैः शोणैः स्वाङ्गन्तु भूषिताद्दरः। यः पश्येत् स्वप्नसमये सोऽष्टौ मासाननित्यहो। पांशुराशिञ्च वल्मीकं यूपं दण्डमथापि वा। योऽधिरोहति वै स्वप्ने षष्ठे मासि स नश्यति। रासभारूढ़मात्मानं तैलाभ्यक्तञ्च मुण्डितम्। नीयमानं यमाशां यः स्वप्ने पश्येत् स्वपूर्व्वजान्। स्वमौलौ स्वतनौ वापि यः पश्येत् स्वप्नतोनरः। तृणानि शुष्ककाष्ठानि षष्ठे मासि न तिष्ठति। लौहदण्डधरं कृष्णं पुरुषं कृष्णवाससम्। स्वयं योऽग्रे स्थितं पश्येत् स त्रीन्मासान्न लङ्घयेत्। काली कुमारी यं स्वप्ने बध्नीयाद्बाहुपाशकैः। स मासेन समीक्षेत नगरीं शमनोषिताम्। नरो यो वानरारूढ़ः प्रयान् प्राचीं दिशं स्वपन्। दिनैः स पञ्चभिरेव पश्येत् संयमनीं पुरीम्। कृपणोऽपि वदान्यः स्यात् वदान्यः कृपणोयदि। प्रकृतिर्विकृतिश्चेत्स्यात्तदा पञ्चत्वमृच्छति। एतानि कालचिह्नानि सन्त्यन्यानि बहून्यपि। ज्ञात्वाभ्यसेद्वरोयोगमथवा काशिकां श्रयेत्। न कालवञ्चनोपायं मुनेऽन्यमवयाम्यहम्”।

**कालजोषक** त्रि० काले यथायोग्यकाले जुषते भोजनादि जुष–ण्वुल्। यथायोग्यकालेऽल्पाहारादिना हृष्टे गोपभेदे “वाह्लीका वाटधानाश्च आभीराः कालजोषकाः” भा०भी०९अ०।

**कालज्ञ** त्रि० कालं योग्यकालं ज्योतिषोक्तकालायत्तं वा जानाति—ज्ञा—क। उचितसमयाभिज्ञे “अत्यारूढो हि नारीणामकालज्ञो मनोभवः” रघुः। “तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः” माघः। २कालकलाज्ञानयुक्ते ज्योतिषिके च।

**कालज्ञान** न०। कालो ज्ञायतेऽनेन ज्ञा–करणे ल्युट् ६त०। १सौरागमादि ज्योतिःशास्त्रे “विदितस्ते मया भावस्तोषितस्तपसा ह्यहम्। दद्यां कालाश्रयं ज्ञानं ग्रहाणां चरितं तथा” इत्युपक्रम्य सू०सि०मयनामासुराय सांशपुरुषद्वारा कालज्ञानमुक्तम्। भावे ल्युट् २योग्यसमयज्ञाने च।

कालो मृत्युर्ज्ञायतेऽनेन करणे ल्युट् । २मृत्युज्ञापके चिह्नभेदे कालचिह्नशब्दे तच्चोक्तम् । “कालज्ञानं ततः प्रोक्तं दिवोदासस्य वर्णनम्” काशीख० अनुक्रमणिकाध्याये ।

**कालञ्जर** पु० कालं जरयति जॄ–णिच्–अच् बा० मुम् । पर्वतभेदे “सप्त व्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ” भार० पितृकल्पगाथा । तन्माहात्म्यं भा० व० ८५ अ० “तत्र कालञ्जरो नाम पर्व्वतो लोकविश्रुतः । तत्र देवह्रदे स्नात्वा गोसहस्रफलं लभेत् । यः स्नातस्तापयेत्तत्र गिरौ कालञ्जरे नृप ! । स्वर्गलोके महीयेत नरो नास्त्यत्र संशयः । ततो गिरिवरश्रेष्ठे चित्रकूटे विशाम्पते !” । तेनास्य चित्रकूटपर्व्वतसान्निध्यं गम्यते । तत्र मासं कृतस्नाने दशाश्वमेधफलं यथोक्तम् भा० अनु० २५ अ० “गङ्गायमुनयोस्तीर्थे तथा कालञ्जरे गिरौ । दशाश्वमेधानाप्नोति तत्र मासं कृतोदकः” ।

अयञ्च भूमिमध्यस्थरेखातः प्राच्यां दिशि वर्त्तते यथा भा० व० ८७ अ० । “पूर्व्वं प्राचीं दिशं राजन् ! राजर्षिगणसेविताम्” इत्युपक्रम्य पूर्व्वदिक्स्थतीर्थकथने “प्रयागमिति विख्यातं तस्माद्भरतसत्तम ! । अगस्त्यस्य तु राजेन्द्र ! तत्राश्रमवरो नृप ! । तत्तथा तापसारण्यं तापसैरुपशोभितम् । हिरण्यविन्दुः कथितो गिरौ कालञ्जरे महान्” । इत्युक्तेः । तीर्थपरत्वे अस्य क्लीवत्वमपि । “कालञ्जरं प्रभासञ्च तथा वदरिकाश्रमः” इति काशी० कौमतीर्थकथने ६ अ० तथाप्रयोगात् । २योगिचक्रमेलके । ३भैरवभेदे मेदि० । ४ देशभेदे धर० । स च कालञ्जरगिरिरूपजनपदावधिभूतः । ततो भवादौ रोपधत्वात् प्राग्वर्त्तित्वाच्च वुञ् । कालरञ्जक तद्भवे त्रि० । कालं मृत्युं जरयति जॄ–वा० खच् । ५कालस्य मृत्योर्जारके त्रि० । “इन्द्रियाणां हि सर्व्वेषां वश्यात्मा चलितस्मृतिः । आत्मनः सम्प्रदानेन मर्त्त्यो मृत्युमुपाश्नुते । आहृत्य सर्वसङ्कल्पान् सत्त्वे चित्तं निवेशयेत् । सत्त्वे चित्तं समावेश्य ततः कालञ्जरो भवेत्” भा० शा० २४ अ० । कालं मृत्युं जरयति । मृत्युञ्जये ६शिवे तस्य पत्नी ङीप् कालञ्जरी ९चण्डिकायां स्त्री धर० । स्वयं तज्जारकत्वे तु टाबेवेति भेदः ।

**कालतम(र)** त्रि० अतिशयेन कालः कृष्णः तमप् (तरप्) वा । अतिशयकृष्णे । स्त्रीत्वे तु अतिशयेन काली इतिविग्रहे पुंवत् कालतमा(रा) इति भेदः । [तमालवृक्षे राजनि० ।

**कालताल** पु० कालतायै अलति पर्य्याप्नोति अल–अच् ४त० ।

**कालतिन्दुक** पु० नि० कर्म्म० । कुपीलौ राजनि० ।

**कालतीर्थ** न० कोशलाख्ये तीर्थभेदे । “कोशलान्तु समासाद्य कालतीर्थमुपस्पृशेत् । वृषभैकादशफलं लभते नात्र संशयः” भा० व० ८५ अ० ।

**कालदण्ड** पु० कालज्ञापकोदण्डः । ज्योतिषोक्ते वारादियोगभेदे स च वारविशेषनक्षत्रभेदयोगरूपः यथोक्तं नारदेन “आनन्दः कालदण्डोऽथ धूम्रो धाता शुभावहः । ध्वाङ्क्षो ध्वजाख्यं श्रीवत्सवज्रमुद्गरछत्रकाः । मित्रमानसपद्माख्यलुम्बकोत्पातमृत्यवः । काणः सिद्धिः शुभामृतमुसलातङ्ककुञ्जराः । राक्षसाख्यचरस्थैर्य्यवर्द्धमानाः क्रमादमी । योगाः स्वसंज्ञाफलदा स्त्वष्टाविंशतिसंख्यकाः । रविवारे क्रमादेते दास्रभादिन्दुभाद्विधौ । सार्पाद्भौमे, बुधे हस्तान्मैत्रभाद्देवमन्त्रिणि । वैश्वदेवाद्भृगुसुते वारुणाद्भास्करात्मजे” । अयमर्थः आनन्दादयः अष्टाविंशतियोगा अतः साभिजितकानामश्विन्यादीनामष्टाविंशतेरिह ग्रहणम् । तथा च रविवारे अश्विनीनक्षत्रात् यावत्संख्यकं नक्षत्रमिष्टदिने भवति आनन्दादिषु मध्ये तावत्संख्यको योगो भवति एवं सोमवारे मृगात्५ यावत्संख्यकं नक्षत्रमिष्टदिने तावत्संख्यको योगः । तथा भौमे अश्लेषातः९ इत्यादि । बुधे हस्तात्१३, गुरौ अनुराधातः१७, शुक्रे उत्तराषाढ़ातः२१, शनौ शतभिषातः२४ । एषु वर्ज्यदण्डादिकनुक्तं मुहू० चि० “ध्वाङ्क्षे वज्रे मुद्गरे चेषु५ नाड्यो वर्ज्या वेदाः ४पद्मलुम्बे गदेऽश्वाः७ । धूम्रे १काणे २मौसले ३भूद्वयं द्वे रक्षोमृत्यूत्पातकालाश्च सर्वे” । तस्यापवादो वसिष्ठेनोक्तः “सूर्य्याच्चतुर्थे दशमे च षष्ठे त्रिस्थे च विंशतिगे च चन्द्रे । भवन्ति षड्भानुगतश्च योगाः कुयोगविध्वंसकराः शुभेषु” ।

**कालदन्तक** पु० कालो दन्तोऽस्य कप् । वासुकिकुलजे सर्पसत्रनष्टे १नागभेदे । “हिरण्यबाहुः शरणः तक्षकः कालदन्तकः । एते वासुकिजा नागाः प्रविष्टा हव्यवाहनम्” भा० आ० ५७ अ० । २कृष्णदन्तयुक्ते त्रि० ।

**कालधर्म्म** पु० ६ त० । १मृत्यौ अमरः । अप्राप्नवति तस्मिंस्तु यौवनं पुरुषर्षभे । स राजा शान्तनुर्धीमान् कालधर्म्ममुपेयिवान्” भा० आ० १०२ अ० । कालस्य ऋतुविशेषस्य धर्म्मः ६ त० । २समयस्य स्वभावे ऋत्वादिकालस्य२ धर्म्मे च ।

**कालधर्म्मन्** पु० कालस्येव हिंसाशीलतया धर्म्मोऽस्य अनिच् समा० । मृत्यौ । “स पाण्डुः कालधर्म्मणा” भा० आ० १२४ अ० । एतास्ताः१ प्रजाः सर्व्वाः दक्षकन्यासु जज्ञिरे । कश्यपेनाव्ययेनेह, संयुक्ताः कालधर्म्मणा” हरि० २१२ अ० ।

**कालनर** पु० अनुवंश्ये नृपभेदे । १ "अनोः सभानरश्चक्षुः परेक्षुश्च त्रयः सुताः" सभानरात् कालनरः सृञ्जयस्तत्सुतः शुभः" भाग० ९,२३,२स्लो० । कालः कालचक्रं राशिचक्रं नरइव । मेषादिद्वादशराशिरूपमस्तकादङ्गयुक्ते २ कालपुरुषे तच्छब्दे विवृतिः । "इति कालनरस्याङ्गे सदसद्ग्रहयोगतः" वृहज्जातकम् ।

**कालनाथ** पु० कालस्य कालभैरवस्य नाथः । महादेवे "कालनाथाय कल्पाय क्षयायोपक्षयाय च" भा०शा० २८६अ० दक्षप्रोक्तशिवसहस्रनामकीर्त्तने ।

**कालनाभ** पु० कालःकृष्णः नाभिरस्य संज्ञायाम् अच्समा० । हिरण्याक्षासुरपुत्रभेदे "हिरण्याक्षसुताःपञ्च विद्वांसः सुमहाबलाः । भर्भरः शकुनिश्चैव भूतसन्तापनस्तथा । महानाभश्च विक्रान्तः कालनाभस्तथैव च" हरि०३अ० । १ दानवभेदे "महानाभश्च विक्रान्तः कालनाभस्तथैव च" हरि० ३अ० । अयञ्च सैंहिकेयः यथोक्तं तत्रैव "सैंहिकेया इति ख्यातास्त्रयोदश महाबलाः। व्यंशः शल्यश्च बलिनौ नभश्चैव महाबलः । वातापिर्नमुचिश्चैव इल्वलः खसृमस्तथा । आञ्जिको नरकश्चैव कालनाभस्तथैव च । राहुर्ज्येष्ठस्तु तेषां वै सूर्य्यचन्द्रप्रमर्द्दनः ।

**कालनियोग** पु० कालेन कृतो नियोगः कालस्य वा नियोगः आज्ञा नि+युज—घञ् । १ दैवाज्ञायां २ कालकृतनियमे च

**कालनिर्यास** पु० नि०क० । गुग्गुलौ रत्नमा० तस्य निर्यासेषु कृष्णत्वात्तथात्वम् ।

**कालनेमि** पु० कालस्य मृत्योर्नेमिः स्तम्भ इव । दानवभेदे तदुत्पत्त्यादिकथा हरि० ४७अ० यथा—

"पूर्व्वं देवभयं श्रुत्वा मारुताऽग्निकृतं महत् । कालनेमिरिति ख्यातो दानवः प्रत्यदृश्यत । भास्कराकारमुकुटः शिञ्जिताङ्गदभूषणः । मन्दराचलसङ्काशो महाराजतसंवृतः । शतप्रहरणोदग्रः शतबाहुः शताननः । शतशीर्षः स्थितः श्रीमान् शतशृङ्ग इवाचलः । कक्षे महति संवृद्धो निदाघ इव पावकः । धूम्रकेशो हरिच्छ्मश्रुर्दंष्ट्रालौष्ठपुटाननः । त्रैलोक्यान्तरविस्तारी नामयन् वपुषा क्षितिम् । बाहुभिस्तुलयन् व्योम क्षिपन् पद्भ्यां महीधरान् । ईरयन् मुखनिःश्वासैर्वृष्टिमाजीवलाहकान् । तिर्य्यगायतरक्ताक्षं मन्दरोदग्रवर्चसम् । दिधक्षन्तमिवायान्तं सर्व्वान् देवगणान्मृधे । तर्जयन्तं सुरगणान् छादयन्तं दिशोदश । संवर्त्तकाले तृषितं दृप्तं मृत्युमिवोत्थितम् । सुतलेनोच्छ्रायवता विपुलाङ्गुलिपर्व्वणा । माल्याभरणपूर्णेन किञ्चिच्चलितवर्म्मणा । उच्छ्रितेनाग्रहस्तेन दक्षिणेन वपुष्मता । दानवान् देवनिहतानुत्तिष्ठध्वमिति ब्रुवन् । समरे कालनेमिं तं द्विषतां कालनेमिनम् । वीक्षन्ते स्म सुराः सर्व्वे भयविक्लवलोचनाः । तं वीक्षन्ति स्म भूतानि क्रमन्तं कालनेमिनम् । त्रिविक्रमं विक्रमन्तं नारायणमिवापरम् । सोच्छ्रयन् प्रथमं पादं मारुताघूर्णिताम्बरः । प्राक्रामदसुरोयुद्धे त्रासयन् सर्व्वदेवताः । स मयेनासुरेन्द्रेण परिष्वक्तः क्रमन् रणे । कालनेमिर्बभौ दैत्यः सविष्णुरिव मन्दरः । अथ विव्यथिरे देवाः सर्व्वे सेन्द्रपुरोगमाः । दृष्ट्वा कालमिवायान्तं कालनेमिं भयावहम् ।"

तदनन्तरं तत्पराक्रमसङ्कथा ४९ अ० "तमप्रतिमकर्म्माणं समानं सूर्य्यवर्चसा । चक्रमुद्यम्य समरे क्रोधदीप्तो गदाधरः । स धुन्वन् दानवं तेजः समरे स्वेन तेजसा । चिच्छेद बाहुं चक्रेण श्रीधरः कालनेमिनः । तच्च वक्त्रशतं घोरं साग्निचूर्णाट्टहासि वै । तस्य दैत्यस्य चक्रेण प्रममाथ बलाद्धरिः" इत्यनेन हरिणा तस्य बधकथोक्ता । "कालनेमिबधात्प्रीतस्तुराषाडिव शार्ङ्गिणम्" रघुः कालनेमिबधे युद्धे युद्धे त्रिपुरघातने" दुर्गाचार्यधृतिः ।

**कालनेमिन्** पु० कालस्येव नेमिरस्यास्य क्रीडादेराकृतिगणत्वात् इनि । कालनेमिदानवे तच्छब्दे उदा० ।

**कालनेमिहन्** पु० कालनेमिं हतवान् हन—भूते क्विप् ६त० । विष्णौ त्रिका० तेन तस्य बधकथा कालनेमिशब्दे उक्ता कालनेमिरिपुतच्छत्रुप्रभृतयोऽप्यत्र ।

**कालपथ** पु० विश्वामित्रपुत्रभेदे । "मधुच्छन्दश्च भगवान् देवरातश्च वीर्य्यवान् । अजीकश्च शकुन्तश्च बभ्रुः कालपथस्तथा"भा० आनु० ४अ० विश्वामित्रपुत्रकीर्त्तने ।

**कालपर्ण** पु० कालं कृष्णं पर्णमस्य । तगरवृक्षे शब्दरत्ना० ।

**कालपर्य्यय** पु० कालस्य पर्य्ययः वैपरीत्येन गमनम् ६त० । १ शुभदायककालस्य अशुभदायकत्वे अशुभदायकस्य २शुभदायकत्वे च । "स(कर्णः) हि तेषां महावीर्यो द्वीपोऽभूत् सुमहाबलः । भिन्ननौका यथा राजन्! द्वीपमासाद्य निर्वृताः । भवन्ति पुरुषव्याघ्र! नाविकाः कालपर्य्यये । तथा कर्णं समासाद्य तारकं पुरुषर्षभम्" भा० वि० ७७अ० । ३कालक्रमे च ।

**कालपर्व्वत** पु० नि० क० । त्रिकूटपर्वतनिकटस्थपर्व्वतभेदे "स(रावणः) निक्षिप्य ततः क्रव्यं खसारम् (शूर्पनखाम्) उपसान्त्व्य च । जग्मायक्रमे राजन्! विधाय नगरे

(लङ्कायाम्) विविधम्। त्रिकूटं समतिक्रम्य कालपर्व्वत मेव च। ददर्श मकरावासं गम्भीरोदं महोदधिम्” भा०व० २७६ अ०।

**कालपालक** न० कालं कृष्णवर्णं समयं वा पालयति पाल-ण्वुल्। १कङ्कुष्ठमृत्तिकायाम् राजनि०तस्याः कृष्णवर्णत्वात् तथात्वम्। २समयप्रतीक्षके त्रि० स्त्रियां टाप् अतइत्त्वम्।

**कालपीलु** पु० नि० कर्म्म०। पीलुभेदे कुपीलौ भावप्र०।

**कालपुच्छ** पुंस्त्री० कालः पुच्छोऽस्य। “गुणैरेषसमयः काल-पुच्छोमुनिभिरीरितः” कात्या० सूत्रक्ते मृगभेदे स्त्रियां जातित्वात् ङीष्। स च कूलचरत्वेन सुश्रुते उक्तः कूलचरशब्दे विवृतिः।

**कालपुरुष** पु० कालः कालचक्रं पुरुष इव। मेषादिद्वादश राशिस्वरूपे कालव्यवहारकारके पुरुषाकारे गगनस्थे १वायुचक्रभेदे। तस्य च जन्मादौ शुभाशुभज्ञानाय यथाङ्गादिविभागः, तथा बृहज्जातके उक्तं यथा “शीर्षं मुखबाहू हृदयोदराणि कटिवस्तिगुह्यसंज्ञकानि। जानु-जङ्घे च ऊरू चरणाविति राशयोऽजाद्याः” तस्यार्थः। “मेषः शिरोवृषोवक्त्रं मिथुनं बाहुयुग्मकम्। कर्कटो-हृदयञ्चैव सिंहस्तूदरमेव च। कन्या कटिस्तुला वस्ति-र्वृश्चिको गुह्यमेव च। धनुरूरू मृगो जानु कुम्भोजङ्घे प्रकीर्त्तिते। मीनः पादद्वयञ्चैवाङ्गानि कालनरस्य तु”। ततश्च यदङ्गराशिराशीशौ दीर्घौ तदङ्गं दीर्घं, तयोर्लघुत्वे लघु, राशिराशीशयोर्भिन्नरूपत्वे मध्यमम् इति कल्प्यम्। लग्नद्रेक्काणभेदेनाङ्गविशेषः तत्तद्द्रेक्काणे सदसद्ग्रह-योगेन फलविशेषश्च बृहज्जा० उक्तः यथा। “कं दृक्-श्रोत्रनसाकपोलहनवो वक्त्रञ्च होरादयस्ते कण्ठांसक-बाहुपार्श्वहृदयक्रोडानि नाभिस्ततः। वस्तिः शिश्नगुदे ततश्च वृषणावूरू ततो जानुनी—जङ्घाङ्घ्री इत्युभयत्र वाममुदितैर्द्रेक्काणभागैस्त्रिधा” वचनस्यायमर्थः त्रिभि-र्द्रेक्काणभागैस्त्रिधा देहविभाग इति शेषः। तत्र प्रथ-मेन द्रेक्काणेन मूर्द्धाद्यङ्गं, द्वितीयेन कण्ठादि, तृतीयेन वस्त्यादि। तत्राप्युदितैर्दृश्यभागस्थैर्वाममङ्गमनुदितैर-दृश्यभागस्थैर्दक्षिणाङ्गमित्यर्थः। तथाच लग्नात् द्वाद-शैकादशदशमनवमाष्टमसप्तमाः उदितभागस्था दृश्याः। अनुदितभागस्थोऽदृश्यः स च लग्नात् द्वितीयतृतीयचतुर्थ-पञ्चमषष्ठसप्तमांशमेदभागस्थः। तथाचायमर्थः प्रथमे द्रेक्-काणे लग्नं शिरः, द्वितीये द्वादशे च क्रमेण दक्षवामे दृशौ, तृतीयैकादशयोः दक्षवामश्रोत्रे, चतुर्थपञ्चमयोः, दक्षवामे नासे, पञ्चमनवमयोः, दक्षवामकपोलौ, षष्ठा-ष्टमयोः दक्षवामे हनू, सप्तमं मुखम्। लग्नगे द्वितीये द्रेक्काणे लग्नं कण्ठः, द्वितीयद्वादशयोः दक्षवामस्कन्धौ, तृतीयैकादशयोः दक्षवामौ बाहू, चतुर्थदशमयोः दक्षवामे पार्श्वे पञ्चमनवमयोः दक्षवामौ हृद्भागौ, षष्ठाष्टमयोः दक्षवामौ उदरभागौ, सप्तमं नाभिः। लग्नस्थ तृतीये द्रेक्काणे लग्नं वस्तिः (नाभिलिङ्गमध्यभागः) द्वितीय-द्वादशयोः दक्षवामौ शिश्नगुह्यभागौ, तृतीयैकादशयोः दक्षवामौ ऊरू। पञ्चमनवमयोः दक्षवामे जानुनी। षष्ठाष्टमयोः दक्षवामे जङ्घे, सप्तमं पादाविति। इति महीधरकृतव्याख्यानुसारि। तत्फलमाह तत्रैव “तस्मिन् पापयुते व्रणं, शुभयुते लक्ष्म, हि लक्ष्मादिशेत्। स्वर्क्षांशे स्थिर २,५,८,११, संयुते च सहजः, स्यादन्य-थाऽऽगन्तुकः। मन्दे खानिलजोऽग्निशस्त्रविषजो भौमे, बुधे (पापयुते) भूभवः, सूर्ये काष्ठचतुष्पदाश्च, हिमगौ (हीनचन्द्रे) शृङ्ग्यब्जजोऽन्ये शुभाः”। कालपुरुषः प्रतिपाद्यतयास्त्यस्य अच्। २ज्योतिःशास्त्रे “किम्बस्य कालपुरुषस्य महार्णवस्य गच्छेत् कदाचिदनघिर्मनसाऽपि पारम्” भट्टोत्पलः। कर्म्म०। ३कृष्णवर्णपुरुषे। कालः पुरुष इव। दानार्थं कल्पिते पुरुषाकारे ४कालरूपेश्वर-मूर्त्तिभेदे पु० तत्प्रकारो हेमा० दा० ख० उक्तो-भविष्यो० पु० यथा

“काल्योदानविधिः पार्थ! क्रियमाणो यथातथम्। फलाय मुनिभिः प्रोक्तो विपरीतो भयाय च। श्रेयं निष्क्रयतं पार्थ! दानेषु विधिरुत्तमः। मध्यमस्तु तदर्द्धेन तदर्द्धे-नाधमः स्मृतः। मेष्याश्च कालपुरुषे तथान्येषु महत्सु च। एवं वृषे रथेऽश्वे च धेनोः कृष्णाजिनस्य च। अशक्तस्यापि क्लिष्टोऽयं पञ्चसौवर्णिकोविधिः। अतोऽप्यल्पेन योदद्यात् महादानं नराधिप!। प्रतिगृह्णाति वा तस्य दुःखशोकावहं भवेत्। पुण्यऽन्हिन्मथासाद्य भूमिभागे समे शुभे। चतुर्दश्यां चतुर्थ्यां वा विष्ट्यां वा पाण्डु-नन्दन!। पुमान् कृष्णतिलैः कार्य्योरौद्रदन्तः सुवर्णदृक्”। सुवर्णादिपरीमाणमत्र यथाशक्ति सम्पादनीयम्। खड्गोद्यतकरोदीर्घोजवाकुसुमकुण्डलः। रक्ताम्बरधरः स्रग्वी शङ्खमालाविभूषितः। तीक्ष्णासिपुत्रीबन्धेन विबद्ध-गदारिकटीतटः। उपानद्युगयुक्ताङ्घ्रिः कृष्णकम्बल-पार्श्वगः। स्थगीतमांसपिण्डश्च वामे करतले तथा। एवंविधं नरं कृत्वा गृहीतकुसुमाञ्जलिः। यजमानः

प्रसन्नात्मा इमं मन्त्रमुदीरयेत्। सम्पूज्य गन्धकुसुमैर्नैवेद्यं विनिवेद्य च। सर्व्वं कलयसे यस्मात् कालस्त्वं तेन चोच्यसे। ब्रह्मविष्णुशिवादीनां त्वमाराध्योऽसि सुव्रत!। पूजितस्त्वं मया भक्त्या पार्थिवस्य तथासुखम्। यदुच्यते तव विभो! तत्कुरुष्व नमोनमः। एवं संपूजयित्वा तं ब्राह्मणाय निवेदयेत्। ब्राह्मणं प्रथमं पूज्य वासोभिर्भूषणैस्तथा। दक्षिणां शक्तितो दद्यात् प्रणिपत्य विसर्ज्जयेत्"। दक्षिणां पूर्व्वोक्तां निष्कादिकाम् "अनेन विधिना यस्तु दानमेतत् प्रयच्छति। न च मृत्युभयं तस्य न च व्याधिकृतं भवेत्। भयत्यव्याहतैश्वर्य्यः सर्वबाधाविवर्ज्जितः। देहान्ते सूर्य्यभवनं भित्त्वा याति परं पदम्। पुण्यक्षयादिहागत्य राजा भवति धार्म्मिकः। सप्तयाजी श्रिया युक्तः पुत्रपौत्रसमन्वितः। संपूज्य कालपुरुषं विधिवद्द्विजाय दत्त्वा शुभाशुभफलोदयहेतुभूतम्। रोगातुरे सकलदोषमयेऽत्र देहे देही न मोहमुपगच्छति तत्प्रभावात्"।

**कालपृष्ठ** पु० कालं पृष्ठं यस्य। १कर्णधनुषि २ धनुर्मात्रे हेमच०। [गौरा० ङीष्। श्यामालतायां रत्नमा०।

**कालपेषी** स्त्री पिष्यतेऽसौ पिष–कर्म्मणि वञ् कर्म्म०

**कालप्रभात** न०कालं कृष्णं प्रभातं यत्र। शरदृतौ त्रिका०।

**कालप्रवृत्ति** स्त्री ६त०। खण्डकालस्य व्यवहारारम्भे। सत्प्रवृत्तिकालश्च सि०शि० उक्तोयथा

"लङ्कानगर्य्यामुदयाच्च भानोस्तस्यैव वारे प्रथमं बभूव। मधोः सितादेर्द्दिनमासवर्षयुगादिकानां युगपत् प्रवृत्तिः" "कालस्य व्यक्तीनामपि दिनमासवर्षयुगादीनां युगपदेकहेलया प्रवृत्तिर्बभूव। एतदुक्तं भवति। चन्द्रार्कयोर्मेषादिस्थयोर्यैस्य शुक्लपक्षादिः प्रतिपत्। अतो मधोः सितादेर्द्दिनानां सौरादिमासानां वर्षाणां युगानां मन्वन्तराणां कल्पस्य च तदैव प्रवृत्तिः। अथोदयाच्च भानोः। स चोदयः कस्मिन् देशे। लङ्कानगर्य्याम्। तथा तस्यैव वारे चादित्यवार इत्यर्थः।

**कालभाण्डिका** स्त्री कालभायै कृष्णप्रभायै अण्डति अडिउद्यमे ण्वुल्। मञ्जिष्ठायां राजनि० तस्या रक्तान्यैसवत्त्वेऽपि क्वाथनात् पूर्व्वं कृष्णकाण्डत्वात्तथात्वम्।

**कालभैरव** पु० भीरोर्भावः स्वार्थे भैरवं भीरुत्वं कालस्य भैरवं भयं यस्मात्। काशीस्थे शिवांशजे भैरवभेदे सच शिवतत्त्वज्ञानविधुरब्रह्मणःपञ्चमशिरश्छेदनाय शिवेन प्रादुर्भावितः। तत्कथादि काशीख० ३२अ०। तद्वाक्यञ्च कपालमोचनशब्दे १६५५पृ०दर्शितम्। तन्नामनिरुक्तिस्तत्रैव दर्शिता यथा "त्वत्तो भेष्यति कालोऽपि ततस्तु कालभैरवः"। कालराजोऽप्यत्र तत्रैव तन्नामनिरुक्ति र्दर्शिता यथा "कालवद्राजसे यस्मात् कालराजस्ततो भवान्। तस्य च काश्यामाधिपत्यं तत्रैवोक्तं यथा "आधिपत्यञ्च तस्यां ते कालराज! सदैव हि। तत्र ये पापकर्त्तारस्तेषां शास्ता त्वमेव हि। शुभाशुभं न तत्कर्म्म चित्रगुप्तो लिखिष्यति॥ एतान् वरान् प्रगृह्याथ तत्क्षणात् कालभैरवः। वामाङ्गुलिनखाग्रेण चकर्त्त च शिरोविधेः"

**कालमयूख** पु०कालस्य प्रकाशकत्वेन मयूखइव। कालस्वरूप कर्म्माङ्गभावादिज्ञापके स्मृतिनिबन्धभेदे।

**कालमसी** स्त्री काली मसीव पुंवत्। नदीभेदे। "मही कालमसी चैव तमसा पुष्पवाहिनी" हरि० २३६अ०।

**कालमाधवीय** पु० माधवस्य माधवाचार्य्यस्यायं छ काल प्रतिपादकोमाधवीयः माधवकृतः ग्रन्थः। माधवाचार्य्य प्रणीते कालभेदकर्म्माङ्गभावनिरूपके स्मृतिनिबन्धभेदे।

**कालमान** पु० कालोमन्यतेऽसौ मन–कर्म्मणि घञ् सुप्०स०। कृष्णार्ज्जके (कालतुलसी) रत्नमाला। ६त०। २कालपरिमाणे न०। मल–मावे घञ् कालेन कृष्णवर्णेन मालः सम्बन्धोऽस्य। कालमालोऽपि कृष्णार्जके पु० राजनि०।

**कालमुख** पुंस्त्री० कालं मुखं यस्य। १ कृष्णमुखे वानरभेदे स्त्रियां ङीष्। "यस्य शाखामृगा सिंतायत्राः कालमुखास्तथा" भा०व०२८१अ०। "ये च कालमुखानाम नरराक्षसयोनयः" भा०स०३०अ०।

**कालमुष्कक** पु० कालोमुष्क इव कायति कै–क। घण्टापारुलिवृक्षे रत्नमा०।

**कालमूल** पु० कालं मूलमस्य। रक्तचित्रकवृक्षे राजनि०।

**कालमेषी** स्त्री कालं वर्णं मिषति स्पर्द्धते काण्डेन मिष-अण् उ०स०। १मञ्जिष्ठायाम्, २सोमराजयाम्, त्रिवृति (तेओड़ि) च अमरः। स्वार्थे क। कालमेषिका तत्रार्थे भरतस्तु बालव्यमध्यं पठित्वा तदर्थतामाह।

**कालयवन** पु० कर्म्म०। यवनाधिपे नृपभेदे।

"मिथ्याभिशस्तो गार्ग्यस्तु मन्युनाभिसमीरितः। गोपकन्यामुपादाय मैथुनायोपचक्रमे। गोपाली त्वप्सरास्तस्य गोपस्त्रीवेशधारिणी। धारयामास गार्ग्यस्य गर्भं दुर्द्धरमच्युत!। मानुष्यां गार्ग्यभार्य्यायां नियोगाच्छूलपाणिनः। स कालयवनोनाम जज्ञे राजा-

महाबलः । वृषपूर्व्वाद्दिकायास्तमवद्दन् वाजिनो रणे । अपुत्रस्य स राज्ञस्तु ववृधेऽन्तःपुरे शिशुः । यवनस्य महाराज ! स कालयवनोऽभवत् । स योद्धुकामो न्टपतिः पर्य्यपृच्छद्द्विजोत्तमम् । वृष्ण्यन्धककुलं तस्य नारदोऽकथयद्विभुः । अक्षौहिण्या तु सैन्यस्य मथुरामभ्ययात्तदा । दूतं सम्प्रेषयामास वृष्ण्यन्धकनिवेशनम् । ततो वृष्ण्यन्धकाः कृष्णं पुरस्कृत्य महामतिम् । समेता मन्त्रयामासुर्यवनस्य भयात्तदा । कृत्वा च निश्चयं सर्व्वे पलायनमरोचयन् । विहाय मथुरां रम्यां मानयन्तः पिनाकिनम् । कुशस्थलीं द्वारवतीं निवेशयितुमीप्सवः” हरि० ३६अ० । “अस्ति तस्य रणे जेता यवनाधिपतिर्न्टपः । स कालयवनो नाम अवध्यः केशवस्य ह । तस्य सुदारुणं घोरं तपः परमदुश्चरम् । रुद्रमाराधयामास द्वादशाब्दान् यशोधनः । पुत्रकामेण मुनिनातोष्य रुद्रं सुतो वृतः । माथुराणाममवध्योऽसौ भवेदिति च शङ्करात् । एवमस्त्विति रुद्रोऽपि प्रददौ मुनये सुतम् । एवं गार्ग्यस्य तनयः श्रीमान् रुद्रवरोद्धतः । माथुराणामवध्योऽसौ मथुरायां विशेषतः । कृष्णोऽपि बलवानेष माथुरो जातयानयम्” हरिवं १११अ० । “वासुदेवस्तु तं दृष्ट्वा निहन्तं योगमात्मनः । उत्सृज्य मथुरामाशु द्वारकामभिजग्मिवान् ! वैरस्यान्तं विधित्संस्तु वासुदेवो महायशाः । निवेश्य द्वारकां राजन् ! वृष्णीनाश्वास्य चैव ह । पदातिः पुरुषव्याघ्रो बाहुप्रहरणस्तदा । आजगाम महायोगी मथुरां मधुसूदनः । तं दृष्ट्वा निर्य्ययौ हृष्टः स कालयवनो रुषा । प्रेक्षापूर्व्वञ्च कृष्णोऽपि निश्चक्राम महाबलः । अथान्वगच्छद्गोविन्दं जिघृक्षुर्यवनेश्वरः । न चैनमशकद्राजा ग्रहीतुं योगधर्म्मिणम् । मान्धातुस्तु सुतो राजा मुचुकुन्दो महायशाः । पुरा देवासुरे युद्धे कृतकर्म्मा महाबलः । वरेण च्छन्दितो देवैर्निद्रामेव न्टहीतवान् । श्रान्तस्य तस्य वागेवं तदा प्रादुरभूत् किल । प्रसुप्तं बोधयेद्यो मां तं दहेयमहं सुराः ! । चक्षुषा क्रोधदीप्तेनेत्येवमाह पुनः पुनः । एवमस्त्विति तं शक्र उवाच त्रिदशैः सह । स सुरैरभ्यनुज्ञातस्त्वद्रिराजमुपागमत् । स पर्व्वतगुहां काञ्चित् प्रविश्य श्रमकर्षितः । सुष्वाप कालमेतं वै यावत् कृष्णस्य दर्शनम् । तत् सर्व्वं वासुदेवस्य नारदेन निवेदितम् । वरदानञ्च देवेभ्यस्तेजस्तस्य च भूपतेः । कृष्णोऽनुगम्यमानस्तेन म्लेच्छेन शत्रुणा । तां गुहां मुचुकुन्दस्य प्रविवेश विनीतवत् । शिरःस्थाने तु राजर्षेर्मुचुकुन्दस्य केशवः । सन्दर्शनपथं त्यक्त्वा तस्थौ बुद्धिमतां वरः । अनुप्रविश्य यवनो ददर्श पृथिवीपतिम् । स तं सुप्तं दुरात्मा भमासाद सुदुर्म्मतिः । वासुदेवन्तु तं मत्वा घट्टयामास पार्थिवम् । पादेन पादमाक्रम्य पादस्पर्श-प्रबोधितः । चुकोप निद्राच्छेदेन पादस्पर्शेन तेन च । स संस्मृत्य वरं शक्रादवैक्षत तमग्रतः । स दृष्टमात्रः क्रुद्धेन स प्रजज्वाल सर्व्वतः । ददाह पावकस्तन्तु शुष्कं वृक्षमिवाशनिः । क्षणेन कालयवनं नेत्रतेजोविनिर्गतः” हरि० ११५ अ० । तद्वधकथा

**कालयापन** न० कालस्य यापनमतिवाहनम् । कालक्षेपणे

**कालयुक्त** पु० प्रभवादिषष्टिसंवत्सरान्तर्गते १द्वापञ्चाशत्तमे वत्सरभेदे प्रभवादिवर्षानयनं ज्यो० त० उक्तं यथा “शकेन्द्रकालः पृथगाकृति २२ घ्नः शशाङ्कनन्दाश्वियुगैः ४२९१ समेतः । शराद्रिवस्विन्दु १८७५ हृतः स लब्धः षष्ट्यावशिष्टाः प्रभवादयोऽब्दाः । वर्षवर्ज्जन्तु यच्छेषं सूर्य्यैः १२ संपूर्य्य खोर्म्मिभिः ६० । हृतो व्युत्क्रमतः खाग्नि३० हृतेऽंशे मासकादयः” अस्यार्थः । शाकेन्द्रकालः शकराजाब्दकालः पृथक् आकृतिघ्नः द्वाविंशत्या पूरितः शशाङ्कनन्दाश्वियुगैरेकनवत्यधिकश्रतद्वयाधिकचतुःसहस्रैः समेतोऽङ्कः शराद्रिवस्विन्दुहृतः पञ्चसप्तत्यधिकाष्टादशशतैर्वत्सरैर्व्वा हर्त्तुं शक्यते तावता हृतः कर्त्तव्यः स लब्धः पूर्व्वशकाब्दः शरेत्यादिना लब्धसंख्यया युतः कार्य्यः षष्ट्याप्तावशेषे पूर्व्ववत् षष्ट्याहृतलब्धस्यावशिष्टे प्रभवादयः एकावशेषे प्रभवः द्व्याद्यवशिष्टे विभवादिः । वर्षवर्ज्जन्तु यच्छेषं वर्षातिरिक्तं शराद्रिवस्विन्दुहृतावशिष्टं तत् सूर्य्यैः द्वादशभिः संपूर्य्य खोर्म्मिभिः षष्ट्या हृते व्युत्क्रमत इत्यनेन षष्टिहृतावशिष्टः ष्ठद्वादशघ्नाः षष्टिहृत लब्धांशके खाग्निहृते त्रिंशता हृतावशिष्टा अंशकालब्धा मासाः स्युरिति । प्रभवादिवर्षोत्यफलम् “आद्या तु विंशतिर्ब्राह्मी द्वितीया वैष्णवी स्मृता । तृतीया रुद्रदैवत्या दृष्टा मध्याधमा भवेत्” इत्युक्ता तत्फलमुक्तं भविष्य पु० यथा “गोमहिष्यो विनश्यन्ति ये चान्ये नटनर्त्तकाः । वासवो वर्षते देवि ! शस्यञ्च न हि जायते । तिलसर्षपमाषादिकार्पासानां महार्घता । गोमहिष्यः सुवर्णानि कास्यताम्राद्यरेवतः । तत् सर्व्वं देवि ! विक्रीय कर्त्तव्योधान्यसञ्चयः । तेन धान्येन लोकोऽयं निस्तरिष्यति दुर्दिनम् । पार्थिवा नोप-

का दीनाः कालयुक्ते प्रपीड़िताः ५२ वर्षफलकथने। ३ तं०। २कालेन कालधर्म्मेण मृत्युना युक्ते च त्रि०

**कालयोग** पु० ६५०। कालसम्बन्धे। "महता कालयोगेन प्रकृतिं यास्यतेऽर्णवः" भा० व० १०अ०। कर्म्म० जग्रो०उक्ते कालरूपे योगभेदे च कालशब्दे विवृतिः।

**कालयोगिन्** पु० त्रि० कालएव योगोऽस्त्यस्य इनि ११ शिवे। "कालयोगी महानादः सर्व्वकामश्चतुष्पथः" भा०आनु० १७अ०। शिवसहस्रनामोक्तौ। २ कालसम्बन्धे त्रि०।

**कालरात्रि** स्त्री कालो रात्रिरिव कालस्य खण्डकालस्य रात्रिरिव अप्रकाशकत्वात्। १ प्रलयरात्रौ २प्रलयकाले तत्र सर्व्वचेष्टाराहित्यात् तथात्वम्। "यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते" इति मनुना प्रलयकाले सर्व्वचेष्टाराहित्योक्तेस्तत्कालस्य रात्रिरूपत्वम्। ३दुर्गामूर्त्तिभेदे सा च "कालरात्रिमयोवक्ष्ये सपत्नगणसूदनीम्" इत्युपक्रम्य मन्त्रमहोदधौ१८तरङ्गे उक्ता, तत्रैव तस्या मन्त्रपूजादिकं दृश्यम्। "शक्तिभिःसहिता दुर्गा काशीं रक्षति सर्व्वतः। ताः प्रयत्नेन संपूज्याः कालरात्रिमुखा नरैः" काशीख० "कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा" देवीमा० व्याकृतश्चैतद् गुप्तवत्यां यथा "कालरात्रिः सर्व्वजन्तुमरणोपलक्षिता कल्परात्रिः। महारात्रिः ब्रह्मलयोपलक्षिता महाप्रलयरात्रिः, मोहरात्रिः मोहावर्त्तगर्त्तपातिनी महामायाख्या संहृतिकर्त्री, यद्वा दैनन्दिनप्रलयब्रह्मप्रलयमोक्षरूपमहाप्रलयरूपरात्रय इति पदत्रयस्यार्थः। ४तत्प्रतिपादकमन्त्रभेदे च अभेदोपचारात् स च मन्त्रः बह्वृचपन्ये रात्रिसूक्तत्वेन प्रसिद्धः। सामभेदे च "रात्रिं प्रपद्ये" इत्यादिः।

५ भीमरथ्याम् (अतिवृद्धवयस्के) हारा०। सर्वप्राणिनाशिकायां ६ यमभगिन्यां भावप्र०। ७ दीपान्वितामावस्यायाम् "दीपावली तु या प्रोक्ता कालरात्रिश्च सा मता" इत्यागमोक्तेः।

**कालरुद्र** पु० कालरूपो रुद्रः। कालरूपप्रलयाग्निरूपे रुद्रभेदे "याः पुरः कालरुद्रस्य नानास्त्रीशतसङ्कुलाः। विचित्रहर्म्यविन्यासाः कृतस्ता मेरुपृष्ठतः। ताएव कालरुद्रस्य तनुरूपेण संस्थिताः। या परा शिवरूपेण परमा पददायिका। तस्या यद्दुःसहं तेजो ब्रह्मादीनां क्षयङ्करम्। तं विद्धि कालरुद्रेति सौम्यरूपं सदाशिवम्। कालाग्निव्यसनं (व्यासः) लक्षं योजनानां प्रमाणतः। अर्द्धेनोच्छ्रयतस्तस्य पादः पादेन भासते। सिंहरूपा महाघोरा महानक्रमहाबलाः। कालाग्निरुद्ररूपो योबहुरूपसमावृतः। अनन्तपद्मरूपश्च धातुश्च कारणेश्वरः। दारुणाग्निश्च रुद्रश्च यमहन्ता क्षयान्तकः" देवीपु०। कालाग्निरुद्रोऽप्यत्र

**कालल** त्रि० कालः कालकं चिह्नभेदः अस्त्यस्य सिध्मा० लच्। कालकचिह्नयुक्ते त्रिका०।

**काललवण** न० नि० कर्म्म०। विड्लवणे रत्नमा०। "रोचनं तीक्ष्णमुष्णञ्च विडं वातानुलोमनम्" सुश्रुते तद्गुणा उक्ताः। "विड् पाकञ्च कतकं तथा द्राविड़माहुरम्। विड् सक्षारमुष्णञ्च कफवातानुलोमनम्"। ऊर्द्ध्वं कफमधो वातं सञ्चारयनीत्यर्थः। "दीपनं लघु तीक्ष्णोष्णं रूक्षं रुच्यं व्यवायि च। विबन्धानाहविष्टम्भिहृद्गुगौरवशूलनुत्" भावप्र० तत्पर्य्यायगुणाः

**काललोचन** पु० १ दानवभेदे। "प्रलम्बो नरको बाली रुक्मः काललोचनः" हरिवं० २४०अ० दानवोक्तौ। कर्म्म०। २ कृष्णे लोचने न० ब० व०। ३ तद्युक्ते त्रि०

**काललोह** न० नि० कर्म्म०। कृष्णायसे रत्नमा० लोहस्योत्पत्तिलक्षणगुणा भावप्र० उक्ता यथा "पुरा लोमिनदैत्यानां निहतानां सुरैर्युधि। उत्पन्नानि शरीरेभ्यो लोहानि विविधानि च। लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी। गुरुता दृढतोत्क्लेदः कश्मलं दाहकारिता। अश्मदोषः सुदुर्गन्धो दोषाः सप्तायसस्य वै। लोहं तिक्तं सरं शीतं मधुरं तुवरं गुरु। रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं जयेत्। कफं पित्तं गरं शूलं शोथार्शःप्लीहपाण्डुताः। मेदोमेहौ कृमीन् कुष्ठं, तत्किट्टं तद्वदेव हि। पाण्डुत्वकुष्ठामयमृत्युदं भवेत् हृद्रोगशूलौ कुरुतेऽश्मरीञ्च। नानारुजानाञ्च तथा प्रकोपं करोति हृल्लासमशुद्धलोहम्। जीवहारि मदकारि चायसं देहशुद्धिमदसंस्कृतं ध्रुवम्। पाटवं न तनुते शरीरके दारुणां हृदि रुजाञ्च यच्छति। कुष्माण्डं तिलतैलञ्च माषान्नं राजिकां तथा। मद्यमम्लरसञ्चापि त्यजेल्लोहस्य सेवकः"।

**कालवृन्त** पु० कालं कृष्णं वृन्तमस्य। कुलत्थवृक्षे रत्नमा०गौरा० ङीप्। कालवृन्ती पाटलावृक्षे स्त्री राजनि०।

**कालवेला** स्त्री कालस्य शनेः वेला कालभेदः। रव्यादिवारेषु दिवानिशोरर्द्धयामभेदे सच अर्द्धयामशब्दे ३७६पृ० उक्तः तत्फलमाह वशिष्ठः "निधनं प्रहरार्द्धे तु

निःस्वत्वं यमघण्टके। कुलिके सर्व्वनाशः स्यात् रात्रावेते न दोषदाः"। ततश्चार्द्धयामरूपकालवेलायाः रात्रावपि सम्भवेन तस्य रात्रौ दोषाभावोक्तिः वारविशेषविषया तदुक्तं ज्योतिर्निबन्धे "न वारदोषाः प्रभवन्ति रात्रौ देवेज्यदैत्येन्द्रदिवाकराणाम्। दिवा शशाङ्कार्कजभूसुतानां सर्वत्र निन्द्यो बुधवारदोषः"। तस्याः सर्वदेशे वर्जनीयतामाह गर्गः "विन्ध्यस्योत्तरकूले तु यावदातुहिनाचलम्। यमघण्टकदोषोऽस्ति नान्यदेशे तु विद्यते। मत्स्याङ्गमागधाख्येषु यमघण्टस्तु दोषकृत्। काश्मीरे कुलिकं दुष्टमर्द्धयामस्तु सर्व्वतः"। विन्ध्योत्तरकूलाद्यन्तर्गतत्वात् मत्स्यादीनां पृथगुक्तिः।

**कालशाक** न० नि० कर्म०। स्वनामख्याते (नरिचा) हिन्दी भाषाप्रसिद्धे श्राद्धशाके भावप्र०। "नाडिकं कालशाकञ्च श्राद्धशाकञ्च कालकमिति" तत्पर्य्यायमुक्त्वा "कालशाकं सरं रुच्यं वातकृत् कफशोथहृत्। बल्यं रुचिकरं मेध्यं रक्तपित्तहरं हिमम्" तद्गुणा उक्ताः। रुच्यं रुचये दीप्तये हितमित्यर्थः। मेध्यं श्राद्धदेयत्वेन पवित्रम् यथाह हारीतः "कालशाकञ्च वास्तूकं मूलकं कृष्णनालिकाम्। वेत्राङ्कुरं कलायञ्च (मटर) पटोलं सर्षपं तथा। सूर्य्यावर्त्तं सुनिषण्णं शाकान्याहुर्मनीषिणः"।

**कालशालि** पु० नि० कर्म०। कृष्णव्रीहौ धान्यभेदे राजनि० कृष्णव्रीहि-शालामुख-जतुमुख-नन्दीमुख-लावाक्षक-त्वरितक-कुक्कुटाण्डक-पारावतकपाटप्रभृतयो व्रीहयः। कषायमधुराः पाके मधुरा वीर्य्यतो हिमाः। अल्पाभिष्यन्दिनस्तुल्याः षष्टिकैर्बद्धवर्च्चसः। कृष्णव्रीहिर्वरस्तेषां कषायानुरसो लघुः। तस्मादल्पान्तरगुणाः क्रमशो व्रीहयोऽपरे। दग्धायामवनौ जाताः शालयो लघुपाकिनः। कषाया बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षणाः" सुश्रुतः। तल्लक्षणमुक्तं भावप्र० "कृष्णव्रीहिः स विज्ञेयो यः कृष्णतुषतण्डुलः"।

**कालशे(से)य** न० कलश्याम्(स्याम्) भवः ढक्। तक्रे अम०

**कालशैल** पु० नि० कर्म०। पर्वतभेदे तत्स्थानादि भा० व० १३९अ० "उक्तं यथा "उशीरबीजं मैनाकं गिरिं श्वेतञ्च भारत!। समतीतोऽसि कौन्तेय। कालशैलञ्च पार्थिव!। एषा गङ्गा सप्तविधा राजते भरतर्षभ!। स्थानं विरजसं पुण्यं यत्राग्निर्नित्यमिध्यते। एतद्वै मानुषेणाद्य न शक्यं द्रष्टुमद्भुतम्। समाधिं कुरुताव्यग्रास्तीर्थान्येतानि द्रक्ष्यथ। एतद्द्रक्ष्यति देवानामाक्रीडञ्चरणाङ्कितम्। अतिक्रान्तोऽसि कौन्तेय! कालशैलञ्च पर्वतम्"।

**कालसंरोध** पु० ६ त०। १ चिरकालावस्थाने। "न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः" मनुः। "कालसंरोधः चिरावस्थानम्" कुल्लू०। ३त०। २ कालेन रोधे च

**कालसङ्कर्षा** न० कालेन सङ्कृष्यतेऽसौ सम्-कृष-कर्मणि-घञ्। नववर्षीयां कुमार्य्याम्। "एकवर्षा भवेत् सन्ध्या द्विवर्षा च सरस्वती। त्रिवर्षा तु त्रिमूर्त्तिश्च चतुर्वर्षा तु कालिका। सुभगा पञ्चवर्षा च षड्वर्षा च उमा भवेत्। सप्तभिर्मालिनी साक्षादष्टवर्षा च कुब्जिका। नवभिः कालसङ्कर्षा दशभिश्चापराजिता। एकादशे तु रुद्राणी द्वादशाब्दे तु भैरवी। त्रयोदशे महालक्ष्मीर्द्विसप्ता पीठनायिका। क्षेत्रज्ञा पञ्चदशभिः षोडशे चान्नदा मता। एवं क्रमेण संपूज्या यावत् पुष्पं न जायते। पुष्पितापि च संपूज्या तत्पुष्पादानकर्म्मणि" अन्नदाकल्पः।

**कालसर्प** पुं स्त्री नि० क०। कृष्णसर्पे त्रिका० स्त्रियां संयोगोपधत्वात् टाप्। पुंयोगे तु ङीष्।

**कालसार** पुंस्त्री० कालः कृष्णवर्णः सारः प्रधानमस्य। कृष्णसारे मृगे शब्दर० स्त्रियां जातित्वात् ङीष्। तल्लक्षणं कृष्णसारशब्दे दृश्यम्। २ पीतचन्दने कालानुसार्य्ये न० भावप्र०। तस्य गुणादि कालानुसार्य्यशब्दे दृश्यम्। "कालसाराजकर्णखदिरकदरकालस्कन्धेत्यादि" सुश्रु०।

**कालसाह्वय** न० कालेन समानः आह्वयो यस्य। कालसूत्राख्ये नरकभेदे "यो मनुष्यः स्वकं पुत्रं विक्रीय धनमिच्छति। कन्यां वा जीवितार्थाय यः शुल्केन प्रयच्छति। सप्तावरे महाघोरे निरये कालसाह्वये। स्वेदं मूत्रं पुरीषञ्च तस्मिन् मूढः समश्नुते" भा० आनु० ४५अ०।

**कालसूत्र** न० कालस्य यमस्य सूत्रमिव बन्धनहेतुत्वात्। १ नरकभेदे भाग० ५, २६अ० "तामिस्रोऽन्धतामिस्रः" इत्यादिनरकभेदोक्तौ "रौरवः कुम्भीपाकः कालसूत्रम्" इत्यादिना तद्भेदानुक्त्वा "यस्त्विह ब्रह्मध्रुक् स कालसूत्रसंज्ञके नरके अयुतयोजनपरिमण्डले ताम्रमये तप्तस्थले उपर्यधस्तादग्न्यर्काभ्यामभितप्यमानोऽभिनिवेशितः क्षुत्पिपासाभ्यां दह्यमानान्तर्बहिःशरीर आस्ते चेष्टते अवतिष्ठते परिधावति च यावन्ति पशुरोमाणि तावद्वर्षसहस्राणि" इति लक्षितम्। "कालसाह्वयशब्ददर्शितभारतवाक्ये ऽन्योऽपि तद्धेतुरुक्तो मनुना तु "श्राद्धं भुक्त्वा य उच्छिष्टं वृषलाय प्रयच्छति। स मूढो नरकं याति कालसूत्रमवाक्शिराः" इत्यन्योऽपि तद्धेतुर्विशिष्योक्तः सामान्यतस्तु एकविंशतिनरकहेतु-

रन्यायवर्त्तिराजप्रतिग्रह एव मनुना "यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः। स पर्य्यायेण यातीमान्नरकानेकविंशतिम्। तामिस्रमन्धतामिस्रम्" इत्युपक्रम्य "नरकं कालसूत्रञ्च महानरकमेव च" इत्यादिना एकविंशतिनरकहेतुत्वोक्तेः। कालस्य मृत्योः सूत्रमिव। २मृत्युहेतुसूत्रे "वड़िशोऽयं त्वया यस्तः कालसूत्रेण लम्बितः" भा० व०११४८०श्लो०।

**कालस्कन्ध** पु० कालः कृष्णः स्कन्धोऽस्य। १तमालवृक्षे २तिन्दुकवृक्षे (तेँद) ३जीवकवृक्षे (जिओल) मेदि०। ४दुष्खदिरे ५ उदुम्बरे च राजनि०। ६त०। ६कालावयवभेदे

**कालहर** पु० कालं मृत्युं हरति हृ–टच्। १शिवे २कामरूपान्तर्गते तल्लिङ्गभेदे च। "तस्मात् पूर्व्वं भद्रकामः पर्व्वतस्तु त्रिकोणकः। यत्र कालहरोनाम शिवलिङ्गं व्यवस्थितम्" कालि०पु०७८अ०।२समयहरे त्रि०स्त्रियांङीप्

**कालहानि** स्त्री ६ त०। विलम्बे शब्दचि०

**कालहीन** पु०कालेन कृष्णवर्णेन हीनः। लोध्रे शब्दचि०।

**कालहोरा** स्त्री कालाख्ये कालभेदे होरा। १अहोरात्रोदितद्वादशलग्नार्द्धरूपहोरायां २समयभेदे च तत्तदीशितुरानयनम् मुहूर्त्तचि० यथा

"वारादेर्घटिका द्विघ्नाः स्वाक्षह्रच्छेषवर्जिताः। सैकास्तष्टा नगैः कालहोरेशा दिनपात्क्रमात्" मु० चि०।

"वारादेरिति वारप्रवृत्तिप्रकारेण यस्मिन् क्षणे वारप्रवृत्तिर्जाता तत इष्टघटिकाद्विगुणाः कार्य्यास्ता द्विस्थाने स्थाप्याः तत्र पञ्चभिर्भक्ते यल्लब्धं तत्त्याज्यं यच्छेषं तत् द्विगुणघटीमध्ये वर्जितं कार्य्यम्। एवं विधावध्यः सैका एकयुक्ताः कार्य्यास्ततोनगैः सप्तभिस्तष्टाभक्ता अवशिष्टाः कालहोराः स्युस्तादिनपाद्वारात् क्रमाद्गणनीयाः। यथा रविवारे इष्टघटिकाः षट् ६ द्विगुणाः १२ पृथगक्षाप्तशेष २ वर्जिताः १० नगैस्तष्टाः शेषं ३ सैकं ४ रविवार क्रमगणनया चतुर्थो बुधस्तस्य होरा यथाह वसिष्ठः "वारप्रवृत्तेर्गदितादिनेशात्कालाख्यहोरापतयः क्रमेण। सार्द्धेन नाडीद्वितयेन षष्ठः षष्ठस्य षष्ठस्य पुनःपुनः स्यात्" तथा सतेऽहोरात्रे चतुर्विंशतिः कालहोरा भवन्ति अत्रानुपातः यदि घटिकानां षष्ट्या ६० चतुर्विंशतिर्होरा २४ लभ्यन्ते तदा एकया किमिति अत्रैकेन गुणे विशेषाभावाच्चतुर्विंशतिः छेदः षष्टिर्जातः उभयोर्द्वादशापवर्त्ते इष्टघटिकाद्विगुणाः पञ्चभक्ताः कालहोराः स्युरिति। तथाचोक्तं रत्नमालायाम् "वारप्रवृत्तेर्घटिकाद्विनिघ्नाः कालाख्यहोरापतयः शराप्ताः। दिनाधिपाद्या रविशुक्रसौम्यशशाङ्कसौरेज्यकुजाः क्रमेण" अथ ग्रन्थकृतोक्तौ वासना सार्द्धघटीद्वयेनैका होरा द्विगुणिताः सार्द्धद्विघट्यः पञ्च भवन्ति। अतएवोक्तं "वारादेर्घटिका द्विघ्ना" इति एकयोगे षट् जाता एवं रविवारक्रमेण गणनया द्वितीया शुक्रस्य कालहोरा प्रवृत्ता अतउक्तं सैका इति। भवन्मतेऽपि सूर्य्यात् षष्ठः शुक्रस्तस्यैव होरा इयञ्च शुक्रहोरा पञ्चघटीपर्य्यन्तं लभते इष्टघटिकाः ४द्विगुणाः ८अत्र पञ्चस्य आधिक्यमनुचितमिति द्वितीयस्थाने स्थापयित्वा पञ्चभक्तावशिष्टत्रयेणोनाः पञ्च जाताः अत उक्तं स्वाक्षह्रच्छेषवर्ज्जिता इति। एकयोगे षट् एवं सति पुनः सैव होरा एवमिष्टघटीभिः कालहोराऽऽनयनं सुगमम्। वाराणां सप्तसंख्यात्वात्तदाधिक्यमनुचितमिति नगैस्तष्टा इत्युक्तम्। क्रमगणनायान्त्वियं युक्तिः द्वयोर्होरास्वामिनोरन्तरं पञ्च सम्भवति। एकयोगस्तु वर्त्तमानकालहोराज्ञानार्थमतो रविक्रमगणनया भवद्विवक्षिता सैव होरा भवति। विवाहवृन्दावने तु कालहोरा उदयमारभ्योक्ताः यथा "तत्कालार्कन्यूनलग्नांशपिण्डोभक्ताः पञ्चत्रौणिभिर्भुक्तहोराः। भास्वच्छुक्रज्ञेन्दुसौरेज्यभौमा संख्यायैरन्वारतास्ते तदीशाः" अनयोर्विषयविभागो वसिष्ठसंहितायाम् "वारप्रवृत्तेर्विधानं क्षणवारार्थमेव हि। अखिलेष्वन्यकार्येषु दिनादिरुदयाद्भवेत्"। क्षणवारः कालहोरारूपः तदर्थं वारप्रवृत्तिः, अन्यकार्येषु दिक्शूलादिषु तिथिवारप्रयुक्तेषु नक्षत्रवारप्रयुक्तेषु चायोगेषु सुयोगेषु च सूर्योदयादेव वारा ग्राह्याः" पी०धा०। "वारे प्रोक्तं कालहोरासु तस्य धिष्ण्ये प्रोक्तं स्वामितिथ्यंशकेऽस्य" मु०।

"अथ कालहोराप्रयोजनमन्यच्च शालिन्याह। वारे प्रोक्तमिति। यत्कर्म यस्मिन् वारे प्रोक्तं तद्दिनस्य सदोषत्वेऽत्यावश्यकत्वे तस्य कालहोरायां कर्त्तव्यं यदाह नारदः "यस्य खेटस्य यत्कर्म वारे प्रोक्तं विधीयते। ग्रहस्य क्षणवारेऽपि तस्य तत्कर्म सर्वदा"। अत्र केचित् यस्य वारे यत्कर्म प्रोक्तं तस्य बलिनो नवांशे सूर्यश्चन्द्रोवा चेत्तिष्ठेत् तदा तत्कर्म कार्यमित्याहुः उक्तञ्च "यस्य ग्रहद्दिने कर्म यत्किञ्चिदभिधीयते। तस्यांशसंस्थिते सूर्ये चन्द्रे वा तद्विधीयते" इति। कैश्चित् प्रत्येकं होराफलान्युक्तानि "भानुहोरा मृतिं कुर्याच्चन्द्रहोरा स्थिरासनम्। काराबन्धं भौमहोरा बुधहोरा च पुत्रदा। वस्त्रालङ्कारदा जीवहोरा

शौक्री विवाहदा। जडत्वं शनिहोरायां समहोराफलन्त्विदम्” उदयकाले यदा होरा तदा उदयादारभ्यहोरानयनप्रयोजनन्तु “पादः स्ववर्गे चदलं स्वभाषे दिने स्वक्रीशे चरणोनरूपम्। रूपं स्वहोराखिति कालवीर्यमुक्तं हि होरानिपुणैः पुराणैरिति”। युक्तं चैतत् वर्षेशादीना मुदयादितः प्रवृत्तानां साहचर्याद्धारेशा अभ्युदयादेव गणनीयाः” पी०धा०।

**काला** स्त्री कालोवर्णोऽस्त्यस्य-अर्श०अच्। “कालात् वर्णे त्वे त्”वार्त्ति० कालशब्दस्यैव वर्णवाचित्वे ङीप् इह तु अर्श आद्यजन्तत्वात् न ङीप्। १नीलिन्याम् २ कृष्णत्रिवृतायां (कालतेओड़ी) ३कृष्णजीरके च अमरः फर परत्वेऽपि हरी० स्त्री। कल—विक्षेपे णिच्—पचाद्यच्। ४मञ्जिष्ठायां मेदि० कुलिकवृक्षे (कुलियाखाड़ां) रत्नमा०। ६अश्वगन्धावृक्षे राजनि०७पाटलावृक्षे भावप्र०। ८ दक्षप्रजापतिकन्यारूपे कश्यपपत्नीभेदे। “प्रजाश्चिरे महाभाग! दक्षकन्यास्त्रयोदश॥ अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा” इत्यादिना भा० आ० ६५अ० ताः उक्ताः “कालायाः प्रथिताः पुत्राः कालकल्पाः प्रहारिणः। प्रविख्याता महावीर्या दानवेषु परन्तपाः। विनाशनश्च क्रोधश्च क्रोधहन्ता तथैव च। क्रोधशत्रु स्तथैवान्ये कालकेया इति स्तुताः” कालाया अपत्यम् ढक्। कालेय तदपत्ये [ लवभेदे कालशब्दे विवृतिः

**कालांश** पु० कालरूपोऽंशः। ग्रहाणां दृश्यतायोग्ये काल-

**कालाक्षरिक** स्त्री काले यथायोग्यकाले अक्षरं वेत्ति ठक्। शिक्षिताक्षरे त्रिका०।

**कालागुरु** न० कर्म०। कृष्णागुरुणि अमरः तद्गुणादि भावप्र० उक्तं यथा “अगुरु प्रवरं लोहं राजार्हं योगजं तथा। वंशिकं कृमिजं चापि कृमिजग्धमनार्थकम्। अगुरूष्णं कटु त्वच्यं तिक्तं तीक्ष्णञ्च पित्तलम्। लघु कर्णाक्षिरोगघ्नं शीतवातकफप्रणुत्। कृष्णं गुणाधिकं तत्तु लौहवद्वारि मज्जति। अगुरुप्रभवः स्नेहः कृष्णागुरुसमः स्मृतः”। तदुत्पत्तिदेशश्च प्रागज्योतिषदेशः यथाह रघौ “चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वरः। तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः”।

**कालाग्नि** पु० कालः सर्वेहि संक्षेप्ऽग्निः। १ प्रलयाग्नौ। कालानलप्रभृतयोऽप्यत्र २तदधिष्ठातरि रुद्रे ३ तत्प्रिये पञ्च मुखे रुद्राक्षे। “पञ्चवक्त्रः स्वयं रुद्रः कालाग्निनाम नामतः। अगम्यागमनाच्चैव अभक्ष्यस्य च भक्षणात्। मुच्यते सर्वपापेभ्यः पञ्चवक्त्रस्य धारणात्” ति०त० स्कन्दपु० रुद्रपरत्वे कालरुद्रशब्दे उदा० दृश्यम्।

**कालाग्निरुद्र** पु० कालाग्निरिव रुद्रः। सर्वंहारके प्रलयाग्नितुल्ये रुद्रे तमधिकृत्यैव कालाग्निरुद्रोपनिषत् प्रवृत्ता। अभेदोपचारात् तदुपासके २ ऋषिभेदे वैदिक मन्त्राणां बहूनां तद्दृष्टत्वात् तदार्षत्वम् कात्या० सर्वानुक्रमिकायामुक्तम्।

**कालाङ्ग** न० ६त०। १कालपुरुषस्याङ्गे। कालपुरुषशब्दे प्रमाणादि। कर्म०। २कृष्णवर्णदेहे न० कालमङ्गं यस्य। ३कृष्णवर्णाङ्गयुक्ते त्रि० “असिश्च कालाङ्गमकोषमव्रणम्” भा० वि०७अ०।

**कालाजिन** न० कालस्य कृष्णमृगस्याजिनम्। १कृष्णसारमृगचर्मणि “कालमजिनं यत्र। २कालाजिनप्रधाने देशभेदे स च देशो वृह०सं०कूर्मविभागे दक्षिणस्यामुक्तः यथा “अथ दक्षिणेन लङ्काकालाजिनसौरिकीर्णतालिकटाः”।

**कालाञ्जन** न० कालमञ्जनम्। कृष्णवर्णाधिक्ययुक्ते अञ्जनभेदे (काजल) “न चक्षुषोः कान्तिविशेषबुद्धा कालाञ्जनं मङ्गलमित्युपात्तम्” कुमा०।

**कालाञ्जनी** स्त्री अज्यते अनया अनज—करणे—ल्युट् ङीप् काली अञ्जनी पुंवद्भावः। रेचन्यां क्षुपभेदे राजनि०

**कालाण्डज** पुं स्त्री० नि० कर्म०। कोकिले तस्याण्डजेषु (पक्षिषु) अतिकृष्णत्वात् तथात्वम्। “कालाण्डजकराटरागरक्तरक्ताधरारतिरणाग्रमन्द्राहृशालिनि” दश०क०स्त्रियां जातित्वात् ङीप्।

**कालातिरेक** पु०६त०। उचितसमयातिक्रमे संवत्सरातिरेके च। “कालातिरेके द्विगुणम् प्रायश्चित्तं समाचरेत्” प्रा०त० देवलः। कालातिरेके संवत्सरातिक्रमे-“संवत्सराभिशस्तस्य दुष्टस्य द्विगुणोदमः” इति मनुवचनैक वाक्यत्वात् दण्डवत्प्रायश्चित्तानि भवन्तीति न्यायाच्च कालातिक्रमकालात्ययादिकमप्यत्र “कालात्यये च कन्यायाः कालदोषो न विद्यते” उद्वा० त० भुजबलः।

**कालातीत** न० कालस्यातीतमत्ययः अति + इण—भावे क्त ६त०। १ कालातिक्रमे। “कालातीते वृथा सन्ध्या वन्ध्यास्त्रीमैथुनं यथा” म०त० काशी०। अतीतः कालोऽस्य निष्ठान्तत्वात् परनिपातः २अतिक्रान्तकाले त्रि०। गौतमोक्ते कालात्ययापदिष्टाख्ये बाधरूपे ३हेत्वाभासभेदे कालात्ययापदिष्टशब्दे विवृतिः।

**कालात्मन्** पु० कालआत्माऽस्य । कालस्वरूपे परमेश्वरे । "कालात्मा कालकृद्विभुः" ॥ सू० सि०। वा कप् । कालात्मकोऽप्यत्र । कालेन तत्कृत आत्मा स्वरूपं यस्य वा कप् । २ कालकृतस्वभावके स्थावरजङ्गमादौ त्रि० "सात्त्विका राजसाश्चैव तामसा ये च केचन । भावा कालात्मकाः सर्व्वे प्रवर्त्तन्ते हि जन्तुषु । जङ्गमाः स्थावराश्चैव दिवि वा यदि वा भुवि । सर्व्वे कालात्मकाः सर्प ! कालात्मकमिदं जगत् । प्रवृत्तयश्च लोकेऽस्मिंस्तथैव च निवृत्तयः । तासां विकृततायाश्च सर्व्वं कालात्मकं स्मृतम् । भा०आनु० १अ०

**कालात्ययापदिष्ट** पु० कालात्ययेनापदिष्टः ३ त० गौतमोक्ते हेत्वाभासभेदरूपे हेतुदोषे तल्लक्षणादिकं गौ० सू० भाष्यादौ दर्शितम् यथा

"कालात्ययापदिष्टः कालातीतः" सू०

"कालात्ययेन युक्तो यस्यार्थस्यैकदेशोऽपदिश्यमानः स कालात्ययापदिष्टः कालातीत इत्युच्यते। निदर्शनम् । नित्यःशब्दः संयोगव्यङ्ग्यत्वात् रूपवत्, प्रागूर्द्ध्वञ्च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते तथा च शब्दोऽप्यवस्थितो भेरीदण्डसंयोगेन व्यज्यते दारुपरशुसंयोगेन वा । तस्मात् संयोगव्यङ्ग्यत्वात् नित्यःशब्द इत्ययमहेतुः कालात्ययापदेशात् व्यञ्जकस्य संयोगस्य कालं न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति सति प्रदीपघटसंयोगे रूपस्य ग्रहणं भवति न निवृत्ते संयोगे रूपं गृह्यते, निवृत्ते दारुपरशुसंयोगे दूरस्थेन शब्दःश्रूयते । विभागकाले सेयं शब्दव्यक्तिः संयोगकालमत्येतीति न संयोगनिर्मिता भवति । कस्मात् ? कारणाभावाद्धि कार्य्याभाव इति । एवमुदाहरणसाधर्म्यस्याभावादसाधनमयं हेतुर्हेत्वाभास इति" । भा० । उक्तसूत्रं वृत्तौ त्वेवं व्याख्यातं यथा ।

"क्रमप्राप्तमतीतकालं लक्षयति । अतीतकालस्य समानार्थकत्वात् कालातीतशब्देनोक्तकालस्य साधनकालस्यात्ययेऽभावेऽपदिष्टः प्रयुक्तो हेतुः एतेन साध्याभावप्रमालक्षणार्थ इति सूचितं साध्याभावनिर्णये साधनासम्भवादयत्नेव बाधितसाध्यक इति गीयते। तथा वह्निरनुष्णः कृतकत्वादित्यादौ । न च बाधे आवश्यकस्य व्यभिचारस्य इवासिद्ध्यन्तरस्यैव दोषत्वमुचितमिति वाच्यं तत्प्रतिसन्धानेन बाधस्य दोषत्वावश्यकत्वात् उपाधेयसङ्करेऽप्युपाधेरसङ्करात् । उत्पत्तिकालावच्छिन्नो घटो गन्धवान्, शिखरावच्छिन्नः पर्व्वतो वह्निमानित्यादावसङ्कराच्च साध्याभाववत्पक्षकतावच्छेदकावच्छिन्नकत्वस्य तत्र सत्त्वात् । परे तु घटः सकर्तृकः कार्य्यत्वादित्यादौ यत्र लाघवोपनीतमेकमात्रकर्तृकत्वं भासते तत्र तदभावोऽसङ्कीर्णोदाहरणमिति वदन्ति" ।

मणिकृता तु बाधत्वेनायं व्यवहृतः तल्लक्षणादिकं तत्रोक्तं यथा

"बाधो न साध्याभाववत्पक्षकत्वं पक्षस्त्वभावप्रतियोगिसाध्यकत्वं वा पक्षे साध्याभावज्ञानमात्रस्य प्रमात्वज्ञानं विना अधिकबलत्वाज्ञानेन बाधाभावादिति वक्ष्यते अतएव साध्याभाववत्पक्षवृत्तित्वमपि न, असिद्धिसङ्कीर्णबाधाव्याप्तेश्च। किन्तु साध्याभाववत्त्वप्रमाविषयपक्षकत्वं, प्रमितसाध्याभाववत्पक्षकत्वं, पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं वेति विवक्षितविवेकेन साध्याभावप्रमैव दोषः सा च प्रमात्वेन ज्ञाता न स्वरूपसती हेत्वाभासत्वात् प्रमात्वज्ञानं विना अधिकबलत्वाभावेनादोषत्वात् अप्रमायामपि प्रमात्वज्ञानेऽनुमितिप्रतिबन्धाच्च" ।

"कालात्ययापदिष्टश्च हेत्वाभासाश्च पञ्चधा" भाषा०।

**कालादर्श** पु० कालः कालस्वरूपकर्म्माङ्गत्वादि आदर्श्यतेऽत्र आ+दृश–णिच्–आधारे अच् । स्मृतिनिबन्धभेदे

**कालाध्यक्ष** पु० कालानां खण्डकालानामध्यक्षः स्वगत्या प्रवर्त्तनात् । १ सूर्य्ये "कालाध्यक्षः प्रजाध्यक्षो विश्वकर्म्मा तमोनुदः" भा०व० ३० । सूर्य्यस्याष्टाधिकशतनामकथने । सर्व्वकालप्रवर्त्तके २ परमेश्वरे च ।

**कालानल** पु० कालःसर्व्वसंहारकः अनलः । १ प्रलयाग्नौ "दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि" गीता । २ नृपभेदे "सभानरस्यानुग्रस्य परमेषुस्तथैव च। सभानरस्य पुत्रस्तु विद्वान् कालानलो नृपः । कालानलस्य धर्म्मज्ञः सृञ्जयोनाम विश्रुतः । सृञ्जयस्याभवत् पुत्रो वीरोराजा पुरञ्जयः" । हरिवं० ३१ अ०

**कालानलचक्र** न० कालानल इव हिंसकं चक्रम् । नरपतिजयचर्य्योक्ते ऽनिष्टादिज्ञापके चक्रभेदे तद्भेदादिकञ्च चक्रशब्दे वक्ष्यते ।

**कालानुनादिन्** म० कलएव कालः तं, काले वर्षाकाले वा अनुनदति अनु+नद–णिनि। १ भ्रमरे २ चटके ३ कपिञ्जले ४ चातके पक्षिणि च मेदि०। स्त्रियां जातित्वात् ङीप्

**कालानुसारिवा** स्त्री कालेन वर्णेन अनुकृता सारिवा अनुसारिवा । २ तगरमूले ३ शीतलीनटायाञ्च (शिउलीछोप) रत्नमा० तयोः कालवर्णतया सारिवातुल्यत्वात्तथात्वम् ।

**कालानुसारक** न० कालं कृष्णवर्णं मृगमदमनुसरति गन्धेन अनु+सृ—ण्वुल्। २ पीतचन्दने कालानुसार्य्यके कालीयके(कलम्बक) भावप्र० २ समयानुसारिणि त्रि०

**कालानुसारिन्** न० कालः मृगमदइवानुसरति गन्धेन दूरतो गच्छति अनु+सृ—णिनि। १ शैलजे गन्धद्रव्यभेदे शब्दरत्न० २ समयानुसारके त्रि० स्त्रियां ङीप्।

**कालानुसार्य्य** न० कालोमृगमदोगन्धेनानुसार्य्यो यस्य। तगरभेदे भावप्र० (तगरबक)"कालानुसार्य्यं तगरं कुटिलं नहुषं तथा। अपरं पिण्डतगरं दण्डहस्ती च बार्हिणम्। तगरद्वयमुष्णं स्यात् स्वादु स्निग्धं लघु स्मृतम्। विषापस्मारशूलाक्षिरोगदोषत्रयापहम्" तत्रैव तद्गुणादिकमुक्तम्। स्वार्थे वा कप्। कालानुसार्य्यक २ कालीयके शैलजे राजनि० ३ शिंशपावृक्षे (शिशु) मेदि०।

**कालान्तर** न० अन्यः कालः मयू० नि०स०। १अन्यस्मिन् काले २उत्पत्त्युत्तरकाले "कालान्तरक्षमा" शकु०। ३समयान्तरस्थायिनि च।

**कालान्तरविष** पुंस्त्री० कालान्तरे दंशनकालात् दीर्घकाले विषं विकारकारि यस्य। मूषिके हेम० तस्य दंशनाद्दीर्घकाले विषस्य विकारकारित्वात्तथात्वम् स्त्रियां ङीष्।

**कालाप** पु०कालो मृत्युराप्यते यस्मात् आप—अपादाने घञ् ६त०। १ सर्पभोगे २ राक्षसे पुंस्त्री० धरणिः स्त्रियां ङीप्। कलापं व्याकरणभेदं वेत्त्यधीते वा अण्। ३ कलापव्याकरणाभिज्ञे ४तदध्येतरि च त्रि०। कलापिना वैशम्पायनान्तेवासिभेदेन प्रोक्तमधीयते "कलापिनोऽण्" पा० अण् इनोलोपः। ५ कलापिना प्रोक्ताध्येतृषु भूम्नि "उदगुः कठकालापा" सि०कौ०।६ तत्प्रोक्तवेदशाखाभेदे च

**कालापक** न० कालापस्य कलापिना प्रोक्तस्य शाखाभेदस्य धर्म्म आम्नायो वा "चरणाद्धर्म्माम्नाययोः" पा० वुञ्। १कलापिप्रोक्तशाखाभेदस्य २ धर्म्मे आम्नाये च

**कालाभ्र** पु० कर्म्म०। सजले कृष्णवर्णे मेघे सजलस्यैव मेघस्य कालत्वात् तथात्वम् "कालाभ्राभैः कटाक्षैररिकुलभयदाम्" तन्त्रसा०। कालमेघादयोऽप्यत्र। ते नर्दमाना इवकालमेघाः" भा०आ०१६३अ०।

**कालाम्र** पु०काल आम्रोयत्र। द्वीपभेदे "कुरून् यात्युत्तरान् वीर! कालाम्रद्वीपमेव च" हरि० १५१अ०।

**कालायन** त्रि० कालेन निर्वृत्तादि पक्षा०चतुरर्थ्यां फक्। कालनिर्वृत्तादौ।

**कालायस** न० कर्म्म० अच् समा०। कृष्णवर्णे लोहभेदे। काललौहशब्दे दृश्यम्। २लौहमात्रे हेम०। "वह्निना द्राव्यमाणं कालायसं निषिञ्चन्ति" भाग० ५,२६,२७,

**कालाशुद्धि** स्त्री कालस्य कर्म्मयोग्यसमयस्याशुद्धिः। समयाशुद्धौ कालस्य कर्म्मविशेषानर्हत्वप्रयोजके धर्म्मभेदे सा च गुरुशुक्रास्तत्वादिकृता भवति। "वक्रातिचार वृद्धास्तबालत्वे गुरुशुक्रयोः। गुरौ मकरसिंहस्थे चव मासद्विमासयोः। त्रयोदशदिने पक्षे गुर्व्वादित्ये तथैव च। लुप्ताब्दे त्रिविधोत्पाते कालाशुद्धिरुदाहृता"। ज्यो०प्र०। एतदुपलक्षणम् अन्यान्यपि तन्निमित्तानि तत्तद्ग्रन्थे उक्तानि तत्र कालस्य शास्त्रादेव तत्तत्कर्म्मसाधनत्वेऽवगते शास्त्रेण च कालविशेषस्य पर्य्युदस्तत्वादशुद्धत्वम्। "द्रव्यक्रियागुणादीनां धर्म्मत्वं स्थापयिष्यते। तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्म्मता। श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रमीयते" भट्टवार्त्तिकोक्तेः तस्य पुण्यत्वं तच्च रिक्तादिदोषराहित्ये अष्टमचन्द्रादिदोषराहित्ये मलमासादिराहित्ये च भवति अतस्तेषां पर्य्युदासात् कर्म्मविशेषे कालाशुद्धिः। तन्निमित्तज्ञापकञ्च रत्नाकरादिधृतं न्यायरत्नवाक्यम् म०तत्त्वे यथा "तत्र मलिम्लुच—गुरुशुक्रबाल्यवृद्धास्तमय—सिंहमकरान्यतरगुरुस्थिति—पूर्वराश्यनागतातिचारिगुरुवत्सर—पूर्वराशिगमिष्यमाणातिचारिगुरुकपक्षत्रय—वक्रगुरुकाष्टाविंशतिवासर—कम्पाद्यद्भुतोत्तरसप्ताह—सिंहादित्य—गुर्व्वादित्य—पौषादिमासचतुष्टयान्यतमैकद्वित्रितदधिकान्यतमदिनवृत्तत्रैकालिकवृष्ट्युत्तरैकत्रिसप्ताहान्यतमदिन—निषिद्धरूपसमयान्यत्वमिति"। म०त०"एषु प्रमाणं वक्ष्यामः। अत्र नव्यवर्द्धमानः "एकद्वित्रितदधिकान्यतमदिनवृत्तत्रैकालिकवृष्ट्युत्तरैकत्रिसप्ताहेत्यत्र उत्तरदिनत्वस्य पूर्वदिननिरूप्यत्वात् उत्तरत्वपूर्वत्वयोर्विरुद्धतया नानात्वात्। अतोऽग्रिमदिनादित्वप्राप्तिरिति" जीवमिश्रेणाभिहितम्। नचैकमेकदिनं वृष्ट्यवच्छेदानवच्छेदाभ्यां भिन्नमिति वाच्यं विशेष्यीभूतदिनस्यैकत्वेन प्रत्यभिज्ञानविरोधेन उपाधिमात्रभेदात् अन्यथा अग्रावच्छिन्नवृक्षान्मूलावच्छिन्नवृक्षस्याभेदेनान्योन्याभावस्याव्याप्यवृत्तित्वप्रसङ्गादित्याह" तच्च वृष्टिदिनोत्तरदिनस्य निषेधविषयत्वे वृष्टिदिनस्य कर्म्मार्हिता स्यात्। तस्मात् विशेष्याया वृष्टेरेवोत्तरत्वम्, न तु तदवच्छेदकदिनस्यापीति। तेनैकस्मिन् दिने वृष्ट्या तद्दिनमात्रत्यागः द्वितीयदिनादौ तु अन्तिम दिनमारभ्य त्र्यहसप्ताहयोस्त्यागः। तथा च व्यासः

'नो सन्ध्यागर्जिते प्राज्ञव्रतोपनयनं बुधाः। न च वृष्टावथाकाले वृष्टावाऽऽसप्तवासरान्"। आसप्तवासरानित्यत्र उपस्थितत्वाद्वृष्टिकालमादाय सप्ताहगणना आसप्तवासरानिति अधिकसंख्याव्यवच्छेदार्थम्। एतेन विध्यनुवादभिया अधिकसंख्या निरस्ता। अत्र वृष्ट्यनन्तरमेव सप्ताहत्यागः एतद्वचनन्तु तृतीयादिदिवसीयाकालवृष्ट्यभिप्रायेण। "अतोदिनेनैकदिनं त्याज्यं द्वितीयेन दिनत्रयम्। तृतीयेन च सप्ताहं त्यजेदकालवर्षणे' न्यायरत्नपरिगृहीतवाक्येऽपि दिनेन दिनवृत्तिवर्षणेन एवं द्वितीयेनेत्यादौ ज्ञेयम्। अतएव न्यायरत्नेऽपि वृष्ट्युत्तरत्वमुक्तं नतु वृष्टियुक्तदिनोत्तरत्वमिति। एकादिदिनवृत्तित्वविशेषणं दिनाल्पत्वबहुत्वज्ञापनार्थमिति। श्रीपतिव्यवहारनिर्णये 'आकालिकीं वृष्टिमवेक्ष्य गन्तापदं न गच्छेच्छुभमात्मनीच्छन्। चौरं व्रतञ्चापि शुभाभिलाषी कदापि नैव मनसापि कुर्य्यात्"। अत्र नो-सन्ध्या गर्जित इति आकालिकीवृष्टिमवेक्ष्य इत्यादि श्रवणात्। "व्रतेऽह्नि पूर्वसन्ध्यायां वारिदोयदि गर्जति। प्रतन्तत्र तु नैव स्यादिति धर्म्मो व्यवस्थितः" इति वचने पूर्वपदमपि कारणतायाहकत्वेन परसन्ध्याव्यावर्त्तकम्। अन्यथा संक्रान्तिवज्जार्यिनिमित्तत्वेन परसन्ध्यायां गर्जितेऽपि व्रतवैगुण्यं स्यात्। एतेन पूर्वदिने सायं सन्ध्यागर्जनेऽपि परदिने व्रतनिषेध इति मैथिलमतं चिन्त्यमिति। सप्तम्यर्थानुपपत्तेः गीतायां "मयैवैते निहताःपूर्वमेव निमित्तमात्रं भव सव्यसाचिन्!" इतिवत् स्वरूपाख्यानपरं वा पूर्वपदम्। कामरूपीयनिबन्धेऽप्येवम्। योगीश्वरः "चतुर्मासे निवृत्ते तु चक्रपाणौ समुत्थिते। अकालवृष्टिं जानीयात् यावन्न सुप्यते हरिः"। अत्र यावद्विष्णुमहोत्सव इति जीमूतवाहनः पठति महोत्सवः फाल्गुनी पूर्णिमा इति व्याख्याति च। कृत्यचिन्तामणिभोजराजव्यवहारसमुच्चयश्रीधरसमुच्चयेषु "पौषादि चतुरो मासान् ज्ञेया वृष्टिरकालजा। व्रतयज्ञादिकं तत्र वर्जयेत् सप्त वासरान्। मार्गान्मासात् प्रभृति मुनयो व्यासवाल्मीकिगर्गास्तत्र यावत् प्रवर्षणविधौ नेति कालं वदन्ति। नाड़ीजङ्घः सुरगुरुमुनिर्वक्ति वृष्टेरकालौ मासावेतौ न शुभफलदौ पौषमाघौ न शेषाः। मार्गादित्यवधौ पञ्चमी नाभिविधौ। व्यासवाल्मीकिगर्गा इत्यत्र व्यासवाल्मीकिशिष्या इति जीमूतवाहनः पठति। प्रवर्षणेत्यत्र छन्दोभङ्ग आर्षत्वात् सोढव्यः। एवं पक्षत्रये व्यवस्थिते येन सर्वपरिग्रहः स्यात् तस्यैव ग्रहणमिति न्यायेनाद्यः पक्षः श्रेयान्, तदुत्तरन्तु पक्षद्वयमापदत्यन्तापद्विषयमेवमन्यत्रापि। अतएव राजमार्त्तण्डे "उक्तानि प्रतिषिद्धानि पुनः सम्भावितानि च। सापेक्षनिरपेक्षाणि श्रुतिवाक्यानि कोविदैः"। इति शेषचरणे मीमांसानीह कोविदैरिति कृत्यचिन्तामणौ पाठः। यद्वा "सृष्टस्य तु विधेर्निग्रहरुपसंहार इष्यते" इति न्यायेन दोषातिशयार्थ एव सामान्यनिषेधे विशेषनिषेधः। तत्रापि विशेषउक्तो वृहस्पतिना "वृष्टिः करोति दोषं तावन्नाकालसम्भवा राज्ञः। यावन्न भवति याने नरपशुचरणाङ्किता वसुधा"। काश्यपः "कर्कैकमन्दिरगतौ यदि जीवभानू शुक्रोऽस्तगः सुरवरैकगुरुश्च सिंहे। नारभ्यते व्रतविवाहगृहप्रतिष्ठा चौरादिकर्म्म गमनागमनञ्च धीरैः"। कर्कैकमन्दिरगताविति विशिष्टं न पृथक् तथा च "एकराशिगतौ स्यातामेकर्क्षविषये यदि। गुर्वादित्यौ तदा त्याज्या यज्ञोद्वाहादिकाः क्रियाः'। चातुर्मास्यव्रते तु प्रतिप्रसवमाह महाभारते 'चातुर्मास्यव्रतारम्भमस्तगेऽपि गुरौ भृगौ। खण्डेऽवापि तिथौ कुर्य्यात् एवमेव समापनम्"।

गार्ग्यः "जीवादित्ये बाले शुक्रे जह्यं दशाहान्माङ्गल्यं प्रतिष्ठां खातञ्च कुर्य्यात्'। माङ्गल्यं विवाहादि। खातं पुष्करिण्यादि। राजमार्त्तण्डे हारीतः 'यात्रां चूड़ां विवाहं श्रुतिविवरविधिं ग्रामसद्मप्रवेशं प्रासादोद्यानहर्म्यान् सुरनरभवनारम्भविद्याप्रदानम्। मौञ्जीबन्धं प्रतिष्ठां मणिवरकनकाधारणं कुर्वते ये मृत्युर्न्ने षाञ्च सिंहे गुरुदिनकरयोरेकराशिस्थयोश्च"। सिंहे गुरुदिनकरयोः—सिंहस्थे गुरौ रवौ च एकराशिस्थयोर्युगपत्तयोरेव "तेषाञ्च सिंह" इत्यत्र "तेषां हरीज्य" इति पाठान्तरम्। हरीज्ये—सिंहे वृहस्पतौ। सोमशेखराख्यनिबन्धे "वापीकूपतड़ागयागगमनचौरप्रतिष्ठाव्रतं विद्यामन्दिरकर्णवेधनमहादानं वनं सेवनम्। तीर्थस्नानविवाहदेवभवनस्नानादिदेवेक्षणं दूरेणैव जिजीविषुः परिहरेदस्तं गते भार्गवे"। दीपिकायाम् 'गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे। याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत्'। सर्वकर्म्माणीति वचनान्तरोक्तप्रातिस्विकनिषिद्धकर्मपरं लाघवात् अन्यथा अतिप्रसङ्गापत्तेः। वृहद्राजमार्त्तण्डः 'यात्राविवाहव्रतबन्धवेश्मप्रासादचूड़ाकरणं हितैषी। नष्टे भृगौ

नोपदिशेन्नराणां देवप्रतिष्ठामपि कर्णवेधम्। हित्वाद्य शुभकर्माणि कुर्य्यान्न मासि सिंहे। विवाहं मेखलाबन्धं यात्राञ्च परिवर्जयेत्"। अत्र यात्राञ्चेति चकारः पूर्ववचनोपात्तसुन्यन्तरोक्तप्रतिस्वरूपनिषिद्धकर्म्माणि स मुच्चिनोति। "बाले शुक्रे, वृद्धे शुक्रे, नष्टे शुक्रे, जीवे नष्टे। बाले जीवे, जीवे सिंहे, सिंहादित्ये जीवादित्ये। तथा मलिम्लुचे मासि सुराचार्य्येऽतिचारगे। वापीकूपतडागादिक्रियाः प्रागुदितास्त्यजेत्"। एवञ्च कालाशुद्धौ विद्यारम्भं न कुर्य्यात् तद्विधानञ्च विष्णुधर्म्मोत्तरे। 'संप्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्द्दने। षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम्। रिक्तां पञ्चदशीञ्चैव सौरिभौमदिनन्तथा। एवं सुनिश्चिते काले विद्यारम्भः प्रशस्यते" देवलः "बाले वृद्धे तथैवास्ते कुरुते दैत्यमन्त्रिणि। उद्वाहितायां कन्यायां दम्पत्योरेकनाशनम्"। अत्रक इति शेषः। राजमार्त्तण्डे "सिंहे गुरौ परिणीता पतिमात्मानमात्मजान् हन्ति। क्रमशस्त्रिषु पितादिषु वशिष्ठगर्गादयः प्राहुः"। पितादिषु—सिंहघटकमघा पूर्वफाल्गुन्युत्तरफाल्गुनीप्रथमपादेषु। प्रतिप्रसवमाह शातातपः "माघ्यां यदि मघा नास्ति सिंहे गुरुरकारणम्"। तत्रैव हेमाद्रिधृतमाण्डव्यवचनम् "श्रुतिवेधजातकान्नप्राशनचूडादिकः सर्वः। रविभवनस्थे जीवे कार्य्योऽजय्योविवाहस्तु"। माघ्यां मघायोगे तु सिंहकमन्दिरगतावित्यादिना सर्वकर्मनिषेधात्। अथैवं विवाहोऽपि श्रूयते तथाच राजमार्त्तण्डे दक्षः "गुरौ हरिस्थे न विवाहमाहुर्हारीतगर्गप्रमुखामुनीन्द्राः। यदा न माघी मघसंयुता स्यात् तदा च कन्योद्वहनं वदन्ति"। इत्यञ्च माघ्यां मघायोगाभावेऽपि श्रुतिवेधादि, मघास्थेऽपि गुरौ भवति विवाहस्तु गुरोर्मघापरित्यागादेव तथाच माण्डव्यः "मघाक्षत्रं परित्यज्य यदा सिंहे गुरुर्भवेत्। तत्राब्दे कन्यका चोढ़ा सुभगा सुप्रिया भवेत्"। वात्स्यायनः "यात्रोद्वाहप्रतिष्ठादिग्टहचूड़ाव्रतादिकम्। यत्नतो वर्जयेच्चैव जीवे वक्रातिचारगे। कीर्त्तिभङ्गः प्रतिष्ठायां, भयं चौरात्तथाऽध्वनि। चूड़ोद्वाहे भवेन्मृत्युर्व्रते हानि,र्भयं ग्टहे। अतिचारे त्रिपक्षः स्यात् वक्रे पक्षचतुष्टयम्। न कुर्य्यात्तत्र यात्रादि गुरोर्वक्रातिचारयोः" गर्गः "गुरोर्वक्रातिचारे च वर्जयेत्तदनन्तरम्। यज्ञव्रतविवाहादावष्टाविंशतिवासरान्"। माण्डव्यः "यदा वक्रातिचाराभ्यां राशिं गच्छति वाक्पतिः। दिनानि सप्तविंशानि त्यक्त्वा कर्म्म समाचरेत्"। अत्रापि पूर्वः पूर्वः पक्षः श्रेयान्। राशिं—राश्यन्तरम् अन्यथा व्यर्थं स्यात्। अतएव न्यायरत्नेनापि पूर्वराशिगमिष्यमाणातिचारिगुरुकेत्युक्तम्। वृहद्राजमार्त्तण्डे "वक्रातिचारोपगताः कुजाद्या यद्यन्यराशौ,परिवर्जनीयाः। यथाक्रमस्थाः स्वग्टहस्थिता वा न वर्जनीया यवना वदन्ति"। व्यवहारसमुच्चये कृत्यचिन्तामणौ च हारीतः "कृत्वाऽतिचारं यदि पूर्वराशिं नायाति मन्त्री विबुधाधिपानाम्। यानं विवाहं व्रतबन्धगेहं सर्वं तदा हन्ति मतं मुनीनाम्। अतिचारं गते जीवे वृषे वृश्चिककुम्भयोः। यज्ञोद्वाहादिकं कुर्य्यात्तत्र कालो न लुप्यते"। कृत्यकल्पलतायां वाचस्पतिमिश्रैः 'पूर्वराशिं यदा त्यक्त्वा अपूर्णे वत्सरे गुरुः। लुप्तःकालः स विज्ञेयः परगेहं गतो यदा। मीने मेषे वृषे चैव तथा मिथुनकन्ययोः। अतिचाराच्च दोषः स्यान्नियतं काललोपजः"। द्वैतनिर्णये 'कन्यावृश्चिकमेषेषु मन्यथे च झषे वृषे। अतिचारेषु कर्त्तव्यं विवाहादि बुधैः सदा"इति अमूनकमित्युक्तम्। वराहसंहितायाम् "अतिचारं गतोजीवस्तत्रैव कुरुते स्थितिम्। तदा महातिचारः स्यात् लुप्तसंवत्सरक्रियः। अतिचारेण योराशिर्लङ्घितोदेवमन्त्रिणा। तदाद्यो वत्सरोलुप्तोयोऽनर्हः सर्वकर्मसु"। तत्र वर्षे कर्म्मणोलुप्तत्वात् वत्सरोलुप्त इति तदाह योऽनर्ह इति। भुजबलभीमादिनिबन्धेषु 'शुभं भवनमासाद्य यदातिक्रमते गुरुः। अत्र संवर्द्धिता कन्या सुखं भर्त्तुः प्रमोदते" दीपिकायाम् 'त्रिकोणजायाधनलाभराशौ वक्रातिचारेण गुरुः प्रयाति। यदा,तदा प्राह शुभे विलग्ने हिताय पाणिग्रहणं वशिष्ठः"। त्रिकोणं नवपञ्चमम्। जाया-सप्तमं, धनं-द्वितीयं, लाभ-एकादशग्टहम्। रत्नकोषे "पञ्चोदशाहानि तथा त्रिपक्षी मासत्रिभागः खलु षट् च मासाः। एषोऽतिचारः कथितोग्रहाणां भौमादिकानां परतस्तु चारः"। प्रतिष्ठाकाण्डे कल्पतरौ देवीपुराणम् "यथा जीवे स्थिते सिंहे तथैव मकरस्थिते। देवारामतड़ागादिपुरोद्यानग्टहाणि च। विवाहादि महाभाग! भयदानि विनिर्द्दिशेत्। यदा द्वादशगे जीवे अष्टमे वाथ भास्करे। प्रतिष्ठा कारिता विप्रोर्महाभयकरी मता"। कृत्यचिन्तामणौ देवीपुराणम् "सिंहसंस्थं गुरुं शुक्रं सर्वारम्भेषु वर्ज्जयेत्। आरब्धञ्च न सिद्ध्येत महा-

भयकरं भवेत् । कूपारामतड़ागेषु पुरोद्यानगृहेषु च । सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत् । कारको-व्रजते नाशं सन्तानः क्षीयतेऽचिरात्” । गुणिसर्वस्वे मकरस्थगुरौ प्रवर्त्तकं नरसिंहपुराणम् “विवाहोनैव कर्त्तव्यः सिंहसंस्थे गुरौ सदा । मकरस्थे च तत्कार्य्यं कल्याणं सर्व्वतोबुधैः । तथा देवीपुराणम् “मकरस्थो यदा जीवो वर्जयेत् पञ्चमांशकम् । शेषेष्वपि च भागेषु विवाहः शोभनो मतः” । एतद्वाक्यं व्यवहारापरिगृहीत-मिति कृत्यचिन्तामणिः । एतेनैतदनाकरं न भवति किन्तु मैथिलानामनाचारः इति स्वरसोऽवगम्यते । अतएव रत्ना-वल्यादिषु नीचस्थगुरावेव दोष उक्तः । गुरोर्नीच-स्थत्वमपि त्रिंशांशमकरराशेः पञ्चमांशं यावदिति ज्योतिस्तत्त्वे ज्ञेयम् । रत्नावल्याम् ‘नीचस्थः सिंह-गोवा यदि भवति गुरुः सूर्य्यरश्मौ च लीनः संयुक्तो वा यदि स्यात् दशमदशमिना क्षीणरूपोऽथ बालः । यात्रागेहं विवाहोव्रतममरगृहं यज्ञचूड़ादि सर्वं वापी चोद्यानकूपम् न भवति शुभदं यद्यदिष्टञ्च लोके” । श्रीपतिरत्नमालायां कृत्यचिन्तामणौ च वात्स्यः “शा-खाधिपे बलिनि केन्द्रगतेऽथ वास्मिन् वारेऽस्य चोपन-यनं कथितं द्विजानाम् । नीचस्थितेऽरिगृहगेऽथ परा-जिते वा जीवे भृगौ व्रतविधौ स्मृतिकर्म्महीनः” । अस्य-शाखाधिपस्य । तेन सामगानां कुजवारेऽप्युपनयनम् “सामवेदाधिपो भौमः” इत्युक्तत्वात् । कामरूपीयनिबन्धे स्मृतिसागरे देवीपुराणम् ‘मकरस्थो यदा जीवस्तदा त्रिंशद्दिनं त्यजेत् । त्यक्त्वा तु षष्टिदिवसं कुर्य्यात् कर्माणि मानवः” । रायमुकुटज्योतिःकालकौमुद्याम् यत्तु ‘मकरस्थं गुरुं यत्नात् सिंहवत् परिवर्जयेत् । देवारा-मतड़ागेषु पुरोद्यानगृहेषु च” इत्यादि देवलवचनं तदपि सिंहवत् परिवर्जयेदित्यनेन यथा सिंहस्थस्य गुरोस्त्याज्यता तथा मकरस्थस्यापीति गम्यते । सिंहस्य गुरोर्मघायुक्तमात्र्यां सत्यामेव त्याज्यता अतो मकरस्थ-स्यापि गुरोस्तस्यामेव त्याज्यता इत्यवगम्यते । अतएव देवीपुराणम् ‘यथा जीवस्थिते सिंहे तथैव मकर-स्थिते” इत्यत्र यथातथोपादानम् । तदपि देशविशेष एव दूषणम् तथाहि “गण्डक्या उत्तरे तीरे गिरिराजस्य दक्षिणे । सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत्” । अतएवान्यदेशाभिप्रायेण भीमपराक्रमे ‘वापीकूप-तड़ागादि निषिद्धं सिंहगे गुरौ । मकरस्थे तु तत्-कार्य्यं न दोषः काललोपजः । कार्य्यं मकरगे जीवे विवाहाद्यखिलं बुधैः । न तु सिंहगते जीवे कुर्य्या-द्विप्रः कथञ्चन” । अत्र पूर्वोक्तनरसिंहपुराणवचने मकरस्थमात्रे विवाह उक्तः । अतएव तत्सारभूतं व्यवहारमात्रं विवक्षितं श्रीपतिनाप्यनुद्वेगेति प्रतिज्ञाय-समयाशुद्धौ मकरस्थवृहस्पतिदोषमनभिधाय केवलमुप-नयने नीचस्थवृहस्पतिर्निषिद्धः । एतेन द्वैतनिर्णये श्रीपतिसंहितायां व्यवहारोपवृंहितमेव वचनं नच व्यवहारविरुद्धमिति । एतेन यत् मकरस्थगुर्व्वादौ विवाहा-दिविधायकं वचनं तदाचारविरहादनादरणीयम् इति वाचस्पतिमिश्रोक्तं हेयम् मकरस्थगुरौ प्रति-ष्ठाव्यतिरिक्तकर्म्मनिषेधकश्रीपतिग्रन्थविरहात् । अथ तन्निषेधकमुनिवचनानि प्रामाणिकान्तरधृतत्वादुपादेया-नीति चेत् तर्हि प्रतिप्रसववचनान्यपि तथा । एवञ्चाति-चारे विवाहादिनिषेधकवचनानि श्रीपतिना लिखितानि नतु तदपवादकानीति तेन तान्यप्रामाणिकानीति यदुक्तं तदपि हेयम् प्रकृते पूर्वोक्तयुक्तेस्तौल्यात् भुजबलभीमे ‘जीवोऽर्केण युतः करोति मरणं बालां-शुकोभागुरिः नक्षत्रैकगतो वदन्ति यवनाः पार्श्वस्थितो देवलः । प्रायोगर्गपराशरादिमुनयो नेच्छन्ति चास्तंगते तस्मादस्तमिते सुरेन्द्रसचिवे नेष्टं विवाहादिकम्’ श्रीपति-रत्नमालायाम् ‘प्रागुद्गतः शिशुरहस्त्रितयम् सितः स्यात् पश्चाद्दशाहमितपञ्चदिनानि वृद्धः । प्राक् पक्षमेव कथितो-ऽतिवशिष्ठगर्गैर्जीवस्तु पक्षमपि वृद्धशिशुर्विवर्ज्यः’ । वृद्धशिशुत्वगन्तेति क्वचित्पाठः । सितः शुक्रः । इह—पश्चा-द्दिशि । राजमार्त्तण्डे ‘भवेत् सन्ध्यागतः पश्चात् अस्तमेष्यन् दिनत्रयम् । दिनानि पञ्च पूर्वेण, तत्कृते कर्म वर्ज्जयेत् । बाले वृद्धे च सन्ध्यांशे चतुःपञ्चत्रिवासरान् । जीवे च भार्गवे चैव विवाहादिषु वर्ज्जयेत् । बाले वृद्धे च सन्ध्यायां नष्टे च भृगुनन्दने । दुर्भगा चासती बन्ध्या मृत्युयुक्ता फलं क्रमात् । बाले च दुर्भगा नारी वृद्धे नष्टप्रजा भवेत् । नष्टे च मृत्युमाप्नोति सर्व्वमेवं गुरावपि” । वृद्धे पञ्चदिनत्वकीर्त्तनमप्यापद्विषयं ज्योतिः-पराशरेण भृगोः पादास्तेऽपि दशाहविधानात् । एवं गुरावपि । रत्नमालादौ पक्षविधानात् तयोर्मते न सन्ध्यायाः पृथङ्निर्देशोऽपि वृद्धत्वेनैव तद्ग्रहणात् । दीपिकायाम् “गुर्व्वादित्ये, गुरौ सिंहे, नष्टे शुक्रे मलिम्लुचे । याम्यायने हरौ सुप्ते सर्व्वकर्म्माणि वर्जयेत् ।

तत्रैव "नो शुक्रास्ते ऽष्टमेऽर्के गुरुसहितरवौ जन्ममासेऽष्टमेन्दौ, विष्टौ, मासेमलाख्ये, कुजशशिदिवसे, जन्मताराशु चाथ। नाड़ीनक्षत्रहीने, गुरुरविरजनीनाथताराविशुद्धौ, प्रातः कार्य्या परीक्षा द्वितनुचरगृहांशोदये शस्तलग्ने"। ज्योतिषे 'सिंहस्थे मकरस्थे च जीवे चास्तमिते तथा। सिंहस्थे तु रवौ नैव परीक्षा शस्यते बुधैः'। गर्गः 'दाहे दिशाश्चैव धराप्रकम्पे, वज्रप्रपाते ऽथ विदारणे वा। धूमे, तथा पांशुकरप्रपाते न कारयेन्माङ्गलिकादि कार्य्यम्। उल्कापाते च निर्घाते तथैवाकालवर्षणे। छिद्रे सूर्य्ये विनिर्द्दिष्टे न कुर्य्यान्मङ्गलक्रियाम्। धूमकेतौ समुत्पन्ने, ग्रहणे चन्द्रसूर्य्ययोः। ग्रहाणां सङ्गरे चैव न कुर्य्यान्मङ्गलक्रियाम्। द्विसूर्य्यं वा त्रिसूर्य्यं वा दृष्ट्वा गगनमण्डलम्। रात्रौ शक्रधनुश्चैव मङ्गलानि विवर्जयेत्। दिग्दाहे दिनमेकञ्च ग्रहे सप्त दिनानि च। भूमिकम्पे च सम्भूते त्र्यहाणि परिवर्जयेत्। उल्कापाते च त्रितयं, धूमे पञ्च दिनानि च। वज्रपाते दिनमेकं वर्जयेत् सर्वकर्म्मसु"। भोजराजः "ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे। व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित्"। ग्रहणकाले भूकम्पोल्कापातवज्रपातादिदोषसमाहारे त्रयोदशाहमशुद्धम् किञ्चिदूनतत्समाहारे दशाहम्। ग्रहणाद्येकैकदोषे त्र्यहमिति वाचस्पतिमिश्राः। अत्र स्मृतिसागरधृतसारसंग्रहे "राज्यादिकमहासिद्धौ वस्त्रदानतपःसु च। होमस्वाध्याययोश्चैव वर्जयेद्दशरात्रकम्। लक्षहोमे महादाने वर्जयेत् सोमके मखे। तपःस्वाध्याययोश्चैव चिरारम्भे त्रयोदश" इति व्यवस्था अन्यत्र "उल्कापाते भुवः कम्पे अकालवर्षगर्जिते। वज्रकेतूद्गमोत्पाते ग्रहणे चन्द्रसूर्य्ययोः। प्रधानन्तु त्यजेत् क्षत्त्रः सप्तरात्रमतः परम्। ब्राह्मणः क्षत्त्रियो वैश्यस्त्यजेत् कर्म्म त्रिरात्रकम्। शूद्रस्त्यक्त्वा चैकरात्रं सर्वकर्म्म समाचरेत्'। पराशरः 'प्रयाणे सप्तरात्रं स्यात् त्रिरात्रं व्रतबन्धने। एकरात्रं परित्यज्य कुर्य्यात् पाणिग्रहं ग्रहे"। भृगुः 'कम्पे राजनि सप्ताहं ब्राह्मणानां त्र्यहन्तथा। शूद्रस्यार्द्धदिनं प्रोक्तं सर्वकार्य्येषु वै भृगुः'। शूद्रस्यापद्विषयम्। कम्पइत्युपलक्षणम्। ग्रहणादावप्येवमेषामत्रैकत्र पठितत्वात्। भोजदेवव्यवहारसमुच्चये "सर्वं कार्य्यं न कुर्वीत गुरौ सिंहे ऽस्तगेऽपि च। व्रतदीक्षे न कुर्वीत तमोयुक्ते बृहस्पतौ"। तमोयुक्ते राहुयुक्ते। व्रतदीक्षे इति नित्येतरकर्म्मोपलक्षणम्। तथाच स्मृतिसागरसारे ज्योतिषम् 'एकराशौ स्थितौ स्यातां यदि राहुबृहस्पती। विवाहव्रतयज्ञादि सर्वन्तत्र विवर्जयेत्'। मलमासाद्युपक्रमे भविष्ये 'नक्षत्रभेदेऽप्येकराशौ सम्पर्कौ यदि वाऽनयोः। गुरोराहोरपि तथा त्यजेद्विद्वान्न संशयः'। अत्र गुरोर्वर्ज्जनत्वं हेतुः। तद्यथा "यत्र तत्र स्थितो जीवस्तमोयोगेन लज्जते। उपहासाय किं न स्यादसत्सङ्गो मनीषिणाम्" इति। "अनिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने। सप्तरात्रं न कुर्वीत यात्रोद्वाहादिमङ्गलम्"। इति दीपिकायामनिष्टइत्यभिधानात् अनिष्टजनकोत्पात एव सर्वकर्म्मानधिकारः। पूर्वलिखितभोजराजवचनेऽपि "केतूल्कापतनादिदोषे, इति दोषजनक एव तथोपरागे मण्डलतः शुभेऽपि यात्रानिषेधाय सिंहिकासुत इति पृथगुपादानम्। अत्र विवाहादावपि सप्तरात्रनिषेधात् पराशरोक्तस्वल्पकालनिषेध आपद्विषयः। तेनानिष्टाजनके भूमिकम्पादौ न दोषः। अतएव बृहत्संहितायां वराहेण उत्पातप्रकरणे प्रायःपदमभिहितम् तथा च" यः प्रकृतिविपर्य्यासः प्रायः संक्षेपतः स उत्पातः। क्षितिव्योमदिव्यजातोयथोत्तरं गुरुतरो भवति" प्रायइति कृत्स्नादिप्रयुक्तविपर्य्यासव्यावृत्त्यर्थं यदाह तत्रैव "ये च न दोषं जनयन्त्युत्पातास्तान् ऋतुस्वभावकृतान्। ऋषिपुत्रैः कृतैः श्लोकैर्विद्यादेतैः समासोक्तैः" मनुनापि "निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्पणे। एतानाकालिकान् विद्यादनध्यायानृतावपि"। अत्रानध्ययनार्थमृतावपीत्युक्तम्। उत्पाते दोषभङ्गमाह श्रीपतिव्यवहारनिबन्धे "अथ दिवसत्रयमध्ये मृदुजलपतनं यदा स्यात्। तदोत्पातदोषं शमयेदित्याङ्गिराचार्य्याः" बार्हस्पत्ये "शमयन्त्याशु माहात् कम्पादिकृतं निमित्तमाश्वेव। अतिवर्षणोपवासव्रतदीक्षाजप्यहवनानि"। विष्णुधर्म्मोत्तरे 'सुप्तेऽत्र चतुरो मासान् यावद्भवति कार्त्तिकः। विशिष्टा न प्रवर्त्तन्ते तदा यज्ञादिकाः क्रियाः। नाभिषेच्यो नृपस्तत्र नाधिमासे कदाचन। न शुभे च तथा कृष्णे विधेयात् प्रावृषि द्विज!"। भविष्योत्तरे "सुप्ते मयि जगन्नाथे केशवे गरुड़ध्वजे। निवर्त्तन्ते क्रियाः सर्वाश्चातुर्वर्ण्यस्य भारत!। विवाहव्रतबन्धादिचूड़ासंस्कारदीक्षणम्। यज्ञगृहप्रवेशादिदानाञ्चनप्रतिष्ठनम्। पुण्यानि यानि कर्म्माणि वर्जयेद्दक्षिणायने"। सर्वाक्तत्तद्वाक्यगर्भिताः

पूर्वप्रातिस्विकोक्ताः एवं पुण्यानीति अन्यथा विशेषवचनवैयर्थ्यादिति वदन्ति। भोजराजः 'वापीतडागगृहगोपुरदेवसद्मप्रासादशारिमठकूपविवाहचैत्यान्। कर्तुं यथागमविधानविधिर्विधाता प्रोक्तस्तथैव कथयामि समासतोऽहम्। शुभे हरौ प्रकटशेषफणोपधाने लक्ष्मीकराब्जपरिमार्जितपादपद्मे। मीने रवौ धनुषि चास्तमिते तथेज्ये वास्तुक्रियाविधिरसौ सुनिभिर्निषिद्धः"। इत्योगुरुः। नारदः 'वापीकूपतडागादिप्रतिष्ठायज्ञकर्म च। न कुर्य्यान्मलमासे च महादानव्रतानि च"। दानपदं सामान्यदानपरमिति वदन्ति। तथाच स्मृतिः 'अस्ते सप्ताग्रागते बाले भृगौ मासि मलिम्लुचे। देवतादर्शनं दानं महादानं विवर्जयेत्'। वृद्धहारीतः "भृगावस्ते गुरौ सिंहे गुर्वादित्ये मलिम्लुचे। त्यजेत् दानं महादानं व्रतं देवविलोकनम्"। एतद्वचनद्वयं कालविवेकेऽपि। अत्र दानमहादानयोरुपादानात्" म० त०। मुहूर्त्तचिन्तामणिपीयूषधारादौ विशेष उक्तो विस्तरभयान्नोक्त स्ततएवावसेयः।

**कालिक** पुंस्त्री काले वर्षाकाले चरति ठञ्, के जले अलति अल—बा० इकन् ७त० वा। १ क्रौञ्चे वके शब्दरत्ना० स्त्रियां ङीष्। कालोवर्णोऽस्त्यस्य ठन् कालात् वर्णवाचित्वे जानपदा० नि० ङीष् ततः स्वार्थे क ह्रस्वः इति वा। कालिका २ देवीमूर्त्तिभेदे "तस्यां विनिर्गतायां तु कृष्णाऽभूत् साऽपि पार्व्वती" देवीमा० तस्याः कृष्णवर्णतयाविर्भावात्तथात्वम् विवृतिः कालिकापुराणे ६०अ०यथा "सर्व्वे सुरगणाः सेन्द्रास्ततो गत्वा हिमाचलम्। गङ्गावतारनिकटे महामायां प्रतुष्टुवुः। अनेकसंस्तुता देवी तदा सर्व्वामरोत्करैः। मातङ्गवनितामूर्त्तिर्भूत्वा देवानपृच्छत। युष्माभिरमरैरत्र स्तूयते का च भाविनी। किमर्थमागता यूयं मातङ्गस्याश्रमं प्रति। एवं ब्रुवत्या मातङ्ग्यास्तस्यास्तु कायकोषतः। समुद्भूताऽवोद्देवी मां स्तुवन्ति सुरा इति। शुम्भो निशुम्भो असुरौ बाधेते सकलान् सुरान्। तस्मात्तयोर्बधार्थं स्तूयेऽद्य सकलैः सुरैः। विनिःसृतायां देव्यान्तु मातङ्ग्याः कायतस्तदा। भिन्नाञ्जननिभा कृष्णा साऽभूत् गौरी क्षणादपि। कालिकाख्याऽभवत् सापि हिमाचलकृताश्रया"। ३ वृश्चिकपत्रवृक्षे ४ क्रमदेयवस्तुमूल्ये ५ मृषर्थ्याम् ६ जटामांस्यां ७ काक्यां ८ पटोलशाखायां ९ रोमावल्यां १० शिवायाम् ११ मेघावल्यां स्त्री मेदि०। १२चीरकोटि हारा० १३ मस्यां शब्दरत्ना० १४ काकोल्यां १५श्यामापक्षिणि स्त्री राजनि०। १६ हिमाचलभवायां त्रिशिरायां हरीतक्याम् स्त्री मेदि०। १७चतुर्वर्षकुमारीभेदे अद्भुदाकल्पः कालसङ्कर्षाशब्दे विवृतिः। कालस्य भावः वा० बा वुण्। १८ कृष्णवर्णे स्त्री। १९ स्वर्णदोषे जटाधरः बह्निना दाहे यद्दोषात् स्वर्णस्य कृष्णता भवति सा च ताम्रादिधातुयोगैः। "हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा" रत्नौ अग्नावेव कालिकाख्यानस्योक्तेस्तस्यैव तथात्वम्। काय जलाय अलति पर्य्याप्नोति अल—पर्य्याप्तौ ण्वुल् टाप् अतइत्त्वम्। २०कुज्झटिकायां भरतः २१ नवमेघे स्त्री मेदि०। काले दीयते ठक्। २२ प्रतिमासदेयवृद्धौ (६८)"प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता" नारदः। कं जलमलति भूषयति अल—भूषणे ण्वुल् टाप् अतइत्त्वम्। २३ सुरायां स्त्री हेमच०। कालोवर्णोऽस्त्यस्य ठन्। २४कालीयके कृष्णचन्दने न०शब्दच०। प्रकृष्टः दीर्घःकालोऽस्य प्रकृष्टे ठञ्। २५ वैरे न० तस्य दीर्घकालस्थायित्वात्तथात्वम्। "वर्णे चानित्ये" इत्यधिकारे "कालाच्च" पा० कन्। कालक स्त्रियां टाप् अत इत्त्वम्। २६ कालिका अनित्यकृष्णवर्णयुक्तशाट्यादौ स्त्री "कालिका शाटी"सि० कौ०। कालेन निर्वृत्तः ठञ्। कालिक २७ कालनिर्वृत्ते कालकृते त्रि०। "विशेषः कालिकोऽवस्था"अमरः। काले भवः ठञ्। २८ कालभवे त्रि०। उभयत्र स्त्रियां ङीप् इति भेदः।

**कालिकापुराण** न० कालिकाया माहात्म्यादिप्रतिपादकं पुराणम्। उपपुराणभेदे उपपुराणशब्दे दृ० तस्य तथात्वमुक्तं तत्प्रतिपाद्यविषयाश्च

१अ० ब्रह्मणोनारदादिक्रमेण तत्पुराणवंशदर्शनम्। ऋषिप्रश्ने मार्कण्डेयोक्तिः। प्रजासृष्टिः—ब्रह्ममनसः सन्ध्यासृष्टिः कन्दर्पसृष्टिः। तस्य ब्रह्मणा स्त्रीपुरुषयोर्मेलनाय निदेशः। २अ०तस्य मन्मथनामादिनिरुक्तिः। तस्य हर्षणरोचनद्रावणशोषणमारणाख्यपञ्चवाणोक्तिः। सन्ध्यां दृष्ट्वा ब्रह्मणो मनोविकारः सन्ध्यादर्शनेन जातसात्त्विकधर्म्मात् अग्निष्वात्तादीनामुत्पत्तिः। तां दृष्ट्वा विकारान्वितदक्षधर्म्मतः रतिनामककन्योत्पत्तिः।

३अ० ब्रह्मणः कामदेवशापः। रत्याः कामेन विवाहः। ४अ० शिवमोहनाय ब्रह्मणा कामस्य नियोगः। शिवमोहनाय ब्रह्मणा विष्णुमायायाः स्तुतिः। दक्षकन्यासतीत्वेन तस्याः प्रादुर्भावप्रार्थनः दक्षेण महामायायाः स्तुतिः। ५अ०

विष्णुमायाया दक्षाय वरदानम्। ६अ० शम्भोर्दारग्रहणाय ब्रह्मणा कामस्य नियोजनम्। तेन सह मारादिगणस्य प्रेरणम्। ७अ० कामेन हरमोहनप्रकारोक्तिः। ८अ० दक्षकृतमहामायास्तवः। सतीजन्मतत्पालनप्रकारः तन्नामनिरुक्तिः। नारदेन सत्या हररूपवरप्राप्त्युक्तिः। ९अ० सतीकृतशिवव्रतम्। ब्रह्मणः शिवसमीपे दारग्रहणप्रार्थनम्। तदङ्गीकारे तत्परिणययोग्यतया दक्षकन्यायाः कथनम्। १०अ० सत्या नन्दाव्रतसमाप्तौ शिवेन तस्यै स्वस्य भार्य्याभवनरूपवरदानम्। दक्षसमीपे स्वेन सतीविवाहार्थं शिवेन ब्रह्मणः प्रेरणम्। ब्रह्मणो दक्षं प्रति तत्प्रार्थने तेन तदङ्गीकारः। सतीविवाहार्थं ब्रह्मादिभिः सह शिवस्य दक्षपुरगतिः। ११अ० विवाहकाले सतीरूपं दृष्ट्वा ब्रह्मणोमनोविकारः। ततः संवर्त्तादिमेघादीनामुत्पत्तिः। ततोदक्षवाक्येन ब्रह्माणं प्रति शिवस्य कोपः। विष्णुना सान्त्वनम्। १२अ० ऋषिप्रश्ने ब्रह्मविष्णुशिवानामभेदोक्तिः। १३अ० शिवाय विष्णुना ब्रह्माण्डसंस्थानस्य दर्शनम्। तथा रूपदर्शनेन तेषामेकत्वोक्त्या ब्रह्माणं प्रति तस्य कोपनिवृत्तिः। १४अ० शिवसतीविहारवर्णनम्। १६अ० दक्षयज्ञप्रारम्भः; तत्र शिवसतीनिमन्त्रणाभावे सत्याः पितरं प्रति कोपः। तत्र दक्षकोपेन सत्या देहत्यागः। १७नेन क्रुद्धशिवेन वीरभद्रं सृष्ट्वा तं प्रति दक्षयज्ञनाशनायादेशः। तेन तद्यज्ञस्य नाशनम्। सतीविरहे शिवविलापः। १८अ० शिवस्य सतीविरहवर्णनम्। शिवरोदनाम्बुनो भूमौ पतने तन्नाशाशङ्कया देवानां शनिं प्रति तच्छोषणप्रार्थने तेन तस्याङ्गीकारः। तद्बाष्पेण वैतरणीनदीप्रादुर्भावः। सतीमृतदेहग्रहणपूर्ब्बकं शिवस्य भ्रमणम्। शनिना सतीशवदेहावयवानां क्रमशःखण्डने अङ्गभेदेन तत्तत्स्थानानां पीठत्वप्राप्तिः। क्रमशः सर्व्वसतीदेहपतने शिवस्य लिङ्गत्वप्राप्तिः। ब्रह्मणा तस्य सान्त्वनम्। १९ चन्द्रभागान्तिके शिप्रसरः शिप्रानदीसमुत्पत्तिः। चन्द्रभागानद्युत्पत्तिः। चन्द्रभागा नामनिरुक्तिः। सप्तविंशतौ अश्विन्यादिषु स्त्रीषु रोहिण्यामिन्दोरत्यनुरागे अश्विन्यादीनां चन्द्रेण विवादः। तत्र २ ३ ९ १० १२ १६ २१ २६ भरण्यादिभिर्नवभिश्चन्द्रस्य भर्त्सने कृते चन्द्रस्य ताः प्रति यात्वायां वर्ज्जनीयताकृतशापदानम्। सर्व्वासां दक्षसमीपे गतिः ताभिः चन्द्रदौरात्म्यस्य कथने दक्षेण चन्द्रं प्रति सर्व्वासु तुल्यवर्त्तनोपदेशेऽपि चन्द्रेण तथानाचरणे दक्षेण राजयक्ष्माणं गदमुत्पाद्य चन्द्राभिभवाय तस्य नियोगः। तस्य प्रवेशेन चन्द्रस्य क्षयः। चन्द्रक्षये ओषधीनामपुष्टौ यज्ञाभावात् वृष्ट्यभावेन प्रजाक्षयोक्तिः। २१ तदालोक्य दक्षसमीपे देवानां गमने तदुपदेशेन राजयक्ष्मणा शीर्णकलानां ज्योत्स्नादीनाञ्च निष्कासनम्। बृहल्लोहितानदीस्नानात् चन्द्रयक्ष्ममोक्षः। राजयक्ष्मस्थितिस्थानकथनम्। तत्पत्नीकथनम्। दक्षवाक्यानुसारेण चन्द्रमसो मासार्द्धं ह्रासवृद्धिप्रकारकथनम्। सूर्य्यविम्बेन चन्द्रवृद्धिकथनम्। शिवेन चन्द्रस्यैककलाधारणं ततएव ज्योत्स्नायाः क्षीणचन्द्रे प्रवेशेन चन्द्रवृद्धिकथनम्। सीतानदीप्रादुर्भावः। चन्द्रभागानामप्राप्तिसमर्थनम् निर्विण्णां सन्ध्यां प्रति विष्णूपासनार्थं वशिष्ठोपदेशः। सन्ध्यां प्रति विष्णोः प्रसादे तया तस्य स्तुतिः। तस्यै तेन वरस्य दानम्। विष्णोरुपदेशान्मेधातिथियज्ञाग्नौ तस्या देहत्यागः तच्छरीरस्य विष्णोराज्ञया सूर्य्यमण्डले नयनम्; सूर्य्येण तस्य त्रिधाकरणेन सन्ध्यात्रयकल्पनम्। मेधातिथियज्ञाग्नेः अरुन्धतीसमुत्थानं तन्नामनिरुक्तिः। २३अ० चन्द्रभागानदीमाहात्म्यम् अरुन्धत्या वशिष्ठेन सह विवाहः। २४अ० ब्रह्मादिभिः शिववैकल्यवारणार्थं योगनिद्रायाः स्तुतिः। विष्णुना शिवस्य सान्त्वनम्। निमेषादिपरार्द्धपर्य्यन्तकालमानोक्तिः। मन्वन्तरोक्तिः; प्रलयप्रकारः। सृष्टिप्रकारः। २५अ० सृष्टेर्विवृतिः। ब्रह्माण्डादिसंस्थानम्। २६अ० वराहकल्पे प्रतिसर्गः। २७अ० यज्ञवराहेण पृथ्वीधारणप्रकारः। २८अ० जगतोनिःसारत्वोक्त्या तत्त्वज्ञानेन मोक्षोपदेशः। २९ शिवमखाना मुत्पत्त्यादि। ३० यज्ञवराहस्य धरारूपया दाराद्या सह क्रीड़नेन तदनुरागात् तद्देहत्यागेऽनिच्छा। तद्देहत्यागार्थं देवैर्विष्णोः स्तवः। वराहदेहनाशार्थं शिवस्य शरभमूर्त्तिधारणम् तेन तस्य युद्धे पृथिव्या नष्टप्रायताशङ्कया रोहितमत्स्यरूपेण विष्णोराविर्भावः। तेन पृथिवीवेदमुन्यादीनां धारणम्। शिवेन नानाविधमखानां सृष्टिः। वराहमूर्त्तेः शरभेण सह युद्धे तस्यांशतोनरनारायणयोरुत्पत्तिः। शिवेन वराहस्य बधः। शिवगणानां स्वरूपगुणादि। ३१अ० मृतवराहदेहावयवेभ्यो ज्योतिष्टोमादियज्ञकल्पनम्। वराहपुत्त्रत्रयस्य त्रेताग्निरूपेणोत्पत्तिः। ३२अ० स्वायम्भुवमनुं प्रति कपिलशापः। मनोर्विष्णूपासनम्। तत्समीपे विष्णोर्मत्स्यरूपेणागत्य वासस्थानप्रार्थने, क्षुद्रपात्रादिवृहत्सरोवरपर्य्यन्ते क्रमशो वर्द्धमानस्य मत्स्यदेहस्याधारत्वाभावोक्तिः। ३३अ० मनुनाङ्गुतदंशेन

तं प्रति तस्य स्वरूपज्ञानाय प्रश्ने तस्मै तेन आत्मस्वरूपस्य कथनम् । कपिलवाक्यानुसारेणाचिरेण भाविखण्डप्रलयापद्धारणार्थं मत्स्येन वृहन्नौकानिर्म्माणस्य तत्रवीजसञ्चयस्थापनस्योपदेशः। स्वश्टङ्गेण च तन्नौकायाः समाकर्षणं कर्त्तव्यमित्युक्तिः। प्रलयान्ते जगतां शेषरूपेण धार्य्यतोक्तिः। २४अ० कूर्म्मरूपेण वराहशरभयुद्धेन नष्टप्रायायाभूमेः समीकरणम् । नरनारायणाभ्यां तपसा सूर्य्यादिस्थितिकरणम् । पूर्व्वसञ्चितवीजैः मनुना पुनः शस्यप्रवर्द्धनम् । ३५अ० शिवस्य पूर्व्वगृहीतशरभमूर्त्तित्यागकाले अष्टाभिः पादैः सूर्य्याद्यष्टमूर्त्तिग्रहणम् तेन तस्याष्टमूर्त्तिनामता ; शारभकायात् कपालिभैरवप्रादुर्भावः ; तद्यजनप्रकारः । ३६अ० रजस्वलायाः पृथिवीरूपवराहपत्न्याः वराहेण सङ्गमात् नरकासुरोत्पत्तिः। ३७अ० जनकन्यपात् सीताद्युत्पत्तिः । धरोपदेशेन जनकेन नरकस्य प्रतिपालनादि; ३८ अ० तस्य प्रागज्योतिषदेशे राजत्वकरणम् तद्देशसीमादि । ३९ अ० द्वापरयुगे उत्पन्नवाणासुरसंसर्गात् नरकस्यात्याचारः । नीलकूटे स्थितदेवीदर्शनार्थमागतवशिष्ठदर्शननिवृत्तये नरकेण तद्देवीद्वाराच्छादाने कृते तं प्रति "येन जनितस्त्वं मानुषरूपेण तेनैव तव बधो भविष्यतीति, वशिष्ठस्य शापदानम् । ४०अ० तस्य भगदत्तादिपुत्रोत्पत्तिः। वशिष्ठशापानुसारेण कृष्णेन द्वापरयुगे नरकस्य बधः। ४१अ० मेनकायाः मैनकादिपुत्रशतस्य कालीनामककन्यायाश्चोत्पत्तिः। नारदेन तस्याः शिवविवाहयोग्यत्वस्य तद्देहार्द्धहरत्वस्य च हिमाचलसमीपे कथनम् । ४२अ० शिप्रसरस्त्यागेन हिमवत्प्रस्थे शिवगतिः । शिवशुश्रूषार्थं हिमाद्रिणा स्वसुताकालीनियोजनम्। देवानां तारकासुरपीडनकथा । तद्बधाय देवप्रार्थितब्रह्मणा शिवस्य पार्व्वतीसङ्गमाच्च्युत तेजोजात् कुमारात् तस्य बधो भविष्यतीत्युक्तौ तया सह शिवस्य मेलनार्थं शक्रेण कामस्य प्रेषणे कृते तेन कालीसन्निधाने हरस्य मनसोविकारे जनिते शिवेन ललाटनेत्रोत्थापितेन वह्निना तस्य दाहः तद्भस्मधारणञ्च। हरनेत्रोत्थिताग्नेः वाड़वाग्निरूपेण सिन्धुप्रवेशः।४३त०नारदोपदेशेन काल्याः शिवाराधनार्थं पित्रोः समीपे वनगमनप्रार्थना। तस्याउमानामप्राप्तिकारणोक्तिः। तदाराधनेन तुष्टस्य हरस्य ब्रह्मचारिवेशेन तदन्तिके आगतस्य तत्सखीं प्रति कालीतपस्याप्रयोजनप्रश्नः । तच्छ्रुत्वा ब्रह्मचारिणा हरस्य निन्दनेन अन्यपतिवरणीयतोपदेशः। तच्छ्रवणे तं प्रति क्रोधात् काल्या शिवस्वरूपादेः कथनम् । शिवस्य निन्दाश्रवणापराधमार्ज्जनाय काल्या तस्य स्तुतिः,अन्यत्र गमनोद्द्योगस्य स्वरूपग्रहणेन शिवेन तस्याः निवारणम् वरदानञ्च।४४अ०काल्या शिवं प्रति कन्यायाः पितृदेयत्वोक्त्या पितृसमीपे प्रार्थनकर्त्तव्यतोक्तिः। काल्यास्तपःफललाभे स्वगृहगतिः । शिवेन सारुन्धतीकसप्तर्षीणां तत्कृत्ये नियोजनम् तैर्हिमाचलं प्रति काल्याः शिवेन विवाहदानार्थप्रार्थना तेन तथाङ्गीकारे शिवेन कालीविवाहः । भिन्नाञ्जननिभायाः काल्याः गौराङ्गत्वप्राप्तिकथा ।४५अ०अर्द्धनारीश्वरमूर्त्तिप्रादुर्भावः तन्मूर्त्तिवर्णनम् । अ०४६कालीशिवयोर्महामैथुनानिवृत्तौ देवप्रार्थितेन हरेण अनले तेजस उत्सर्गः ; तदुत्सर्गकाले अणुद्वयस्य हिमप्रस्थे पतनात् ततोभृङ्गिमहाकालभैरवयोरुत्पत्तिः ; देवैर्महामैथुनविघ्ने कृते कुपितया काल्या देवानां स्वस्वभार्य्यासु अपत्याभावरूपशापदानम् । हरोपदेशेन कालीज्येष्ठाभगिन्यां गङ्गायां वह्निना हरोत्सृष्टतेजोनिषेकः । गङ्गया स्कन्दविशाखयोर्द्वयोः पुत्रयोःप्रसवः ततस्तयोरेकत्वोक्तिः । जातमात्रस्य तस्य शरवणे तया त्यागः; कृत्तिकाभिः स्तनदानेन तस्य पोषणम्। ततः काल्यै तत्पुत्रदानम् । मैथुनात् निवृत्तया गलितवस्त्रया पूर्वं द्वारिनियुक्तयोर्भृङ्गिमहाकालयोः स्वपुत्रयोर्दर्शनेन लज्जितया काल्या तयोर्मर्त्यजन्मप्राप्तिरूपे शापे दत्ते निरागोभ्यां ताभ्यामपि शिवाशिवयोर्मानुष्यप्राप्तिशापस्य दानम्। पौष्यपुत्रत्वेन चन्द्रशेखरनाम्ना शिवजन्म। ४८अ० काल्याः ककुत्स्थभार्य्यायां जन्म तस्यास्तारावतीति नाम । पौष्यतारावत्योर्विवाहः । ४९अ० तारावत्यां कामुकस्य कापोतमुनेर्वञ्चनार्थं चित्राङ्गदानामस्वभगिन्याः स्ववेशेन प्रेरणे तेन तस्यां सुतद्वयस्योत्पादनम् चित्राङ्गदोत्पत्तिकथा ।

५०अ० पश्चात् तस्याः स्ववञ्चनं ज्ञात्वा क्रुद्धकापोतमुनिना कपालिना ते पुत्रौ जनयिष्येते इति तारावतीं प्रति शापे दत्ते तदनुसारेण कपालिवेशधारिणा शिवेन तारावतीदेहे कालीं प्रवेश्य तया सह सङ्गम्य वेतालभैरवयोरुत्पादनकथा ; नारदात् श्रुतवृत्तान्तेन चन्द्रशेखरनृपेण तयोः ज्येष्ठस्य भैरवेति कनिष्ठस्य वेतालेति नामकरणम् । तयोःपर्व्वतः उपरिचरः दमनः अलर्क इति त्रयः पुत्रास्तारावत्यां चन्द्रशेखरस्य बभूवुः । ५१अ० चन्द्रशेखरस्य औरसपुत्रेष्विव शिवपुत्रयोर्वेतालभैरवयोः स्नेहाभावेन तयोर्निर्वेदः । कापोतमुनेरुपदेशात् तयोः शिवाराधनाय प्रवृत्तयोस्तदाराधनस्थानप्रश्ने कापोतेन

तदुपासनास्थानकथनम्। तत्रादौ वाराणस्याः मुख्यत्वमुक्का अन्यानि कामरूपादीनि तीर्थानि तत्स्थानत्वेन कथितानि शिवोपासनाप्रकारः तदुपदेशानुसारेण ताभ्यां स्वजनकस्य शिवस्याराधनम्। ताभ्यां तथाचरणे शिवेन तद्देहेन गाणपत्यपदलाभवरदानम्। ५२अ० कालीपूजनायै शिवेन तयोर्नियोगः। ५३, ५४, ५५, ५६, ५७,अ० कालीपूजा तत्पूजास्थानविशेषोक्तिः।५८अ०कामाख्यादेः विशेषफलोक्तिः। ५९अ०तस्याअङ्गमन्त्रादि। महिषमर्द्दिनीध्यानपूजादि। तस्याः पूजाविधिः। महिषासुरवृत्तान्तकथनम्।६०अ०देव्याः समीपे हननकाले महिषासुरवरप्रार्थना। महिषस्य पूर्व्व-सृष्टौ उग्रचण्डामूर्त्त्या, पश्चात् कालीमूर्त्त्या, एतत्कल्पे दुर्गामूर्त्त्या च विनाशनोक्तिः। शिववरात् रम्भासुरात् महिष्यां महिषासुरोत्पत्तिः। पित्राराधितशिववरेण तस्यै-श्वर्य्यप्राप्तिः। ६१अ० अष्टादशभुजोग्रचण्डायाः प्रादुर्भावः। तस्या एव उग्रतारारूपत्वम्। तस्याध्यानपूजापीठशक्त्यादि। कौशिकीप्रादुर्भावः तद्रूपमन्त्रादि। शिवदूतीप्रादुर्भावः तद्रूपमन्त्रपूजादि। ६२अ०कामाख्यानामनिरुक्तिः। मधु-कैटभोत्पत्तितन्नामनिरुक्ती। विष्णुना तयोर्वधप्रकारः। तन्मेदसोलेपनेन पृथिव्याः दृढ़ताकरणात्मेदिनीति नाम प्राप्तिः। कामाख्यातीर्थोत्पत्तिः। नीलादिपर्व्वतोत्पत्तिः। शिलारूपेण ब्रह्मादीनां तत्र स्थितिः। तत्रत्यकालकुण्डा-दिनानातीर्थकथनम्। ६३अ० कामाख्यामन्त्रपूजाविधिः। तत्र जयन्त्याद्येकादशमूर्त्तिपूजा-उग्रचण्डादिनवशक्तिपूजा-विधा। त्रिपुराध्यानपूजाप्रकारः। ६४अ० कामेश्वरीमू-र्त्तिध्यानपूजाविधा। ६५अ०शारदीयापूजाविशेषविधिः।६६ अ०कामाख्याङ्गन्यासादिविधा।६७अ०बलिच्छेदनप्रकारनि-रूपणम्। देव्यै दत्तबलेस्तद्गणत्वप्राप्तिः। काणव्यङ्गादीनां बलिदाने निषेधः। ६८अ० षोडशोपचाराः। तत्रासनादिषु वर्ज्यावर्ज्य गन्धपुष्पादौ विशेषः। ७०अ०नैवेद्यद्रव्यादि। ७१अ०प्रदक्षिणप्रणामप्रकारः। ७२अ०कामाख्याकवचम्। ७३अ०मातृकान्यासविधा।७४अ०अष्टधा योनिमुद्रास्वरूपा-णि तद्दर्शनफलञ्च। मन्त्ररहस्यम्। तद्यन्त्रधारणविधा। शान्तात्रिपुरामन्त्ररूपपूजाविधा। त्रिपुरभैरव्याः पूजादि। ७५अ० त्रिपुरभैरव्याः पुरश्चरणहोमादिविधा। ७६अ० मन्त्रशोधनप्रकारः। तत्र सिद्धसाध्यादिचक्रचतुष्टयचक्रादि-कथनम्। एवं शिवोपदेशं प्राप्तयोर्वेतालभैरवयोर्वसिष्ठोप-देशेन कामाख्यातीर्थमतिस्तत्र पुरश्चरणादिसमाप्तौ देव्याः प्रसादे तयोर्मानुषत्वत्यागेन देवत्वप्राप्तिः। शिवा

शिवयोः सेवकत्वप्राप्तिश्च।७७अ०कामरूपस्थनन्दिकुण्डादि-नानातीर्थमाहात्म्यम्। तत्रत्यजटोदकानदीनामनिरुक्तिः। नवतोयानदीनामनिरुक्तिः''अगदनदमाहात्म्यादि। जल्पी-शनामनिरुक्तिमाहात्म्यादि। ७८अ० तत्रत्यवस्तुरोकानदी माहात्म्यादि। कृत्तिवासगिरिचन्द्रिकानदीफेनिला-स्वमदनानदीमाहात्म्यादि। भद्रानदीसुभद्रानदीमानस भैरवगिरिभैरवीनदी वर्म्मानदीमाहात्म्यादि। त्रिस्रोतः कपोतकुण्डवारुणकुण्डतत्त्वाचलमाहात्म्यादि। सुरनदी-क्षीरोदानीलानदीचण्डिकाचान्द्रिकानदीमाहात्म्यादि। अन्तरालककुण्डशृङ्गेशकुब्जपीठमणिकूटगिरिलौहित्यब्र-ह्मपुत्रादिमाहात्म्यादि। भद्रकामाचलकालहर-लिङ्गपुनर्भवकुण्डहयग्रीवशिलागोकर्णशिवलिङ्गकेदारलि-ङ्गकमललिङ्गमाहात्म्यादि। हयग्रीवमन्त्रादि। ७९अ० तत्र यदर्पणरोहणदर्पटनदाग्निमानगिरिवरुणकुण्डकंसक-रवायुकूटाचलचन्द्रकूटाचलसोमकुण्डनन्दनाचलभस्मकूटा-चलोर्वशीकुण्डसदामृतकुण्डमणिकूटमणिकर्णलिङ्गसुमङ्ग-लानदीमत्स्यध्वजकुलाचलस्वम्बतानदीकामधरसरःसुका-न्ताचलरत्नःकूटाचलपाण्डुनाथभैरवपाण्डुनाथाचलब्रह्म-कुण्डनीलकूटाचलोग्रतारास्थानमाहात्म्यपूजादि। कर्प-टाचलचित्राचलकज्जलाचलशक्राचलकपिलभङ्गिकानदी-दमनानदीदृढ़ाचलाकाशगङ्गास्थावरसरोदुर्जयाचलक्षोभ-काचलकान्तानदीदिव्यकुण्डपुष्करिणीहेरुकलिङ्गसन्ध्याच-ललिलितानदीमाहात्म्यादि ८० अ० दीपवतीनदी-शृङ्गाटगिरिसिद्धत्रिस्रोतोनदीरत्नवेदिकाभट्टारिकानदी-नाटकाचलस्थसरःसरिच्चर्यादिककरिकानदीवृद्धगङ्गास्वर्ण-नदीश्रीनदीविश्वनाथलिङ्गविश्वदेवीमूर्त्तिमाहात्म्यादि। सोमाशनानदी सितगङ्गाललितकान्तलिङ्गतीक्ष्णकान्ता-ख्योग्रतारामूर्त्तिपूजामाहात्म्यादि। ललितकान्तलिङ्ग-मङ्गलचण्डिकापूजाविधा तत्र स्यविष्णुमूर्त्तिभेद-तत्पूजाप्रकारादि। ८१अ० कामरूपस्थतत्तीर्थसे-वनेन सर्व्वेषां निर्वाणादिप्राप्तौ यमेन स्वकार्य्याभावाकलने ब्रह्मादिसमीपगमनेन तन्निवारणोपायचिन्तनम्। ब्रह्मप्रा-र्थितेन शिवेन कामरूपस्थतीर्थेभ्यः सर्व्वलोकोत्सारणार्थं गणैः सह उग्रतारायानियोजनम्। उग्रतारया च तत्र-स्थवसिष्ठस्योत्सारणे कृते वसिष्ठेन तां प्रति म्लेच्छाद्युपास्य-तावाममार्गोपास्यतादिरूपशापदानम्; कामरूपस्य म्लेच्छा-क्रान्तत्वशापदानम् कामाख्यातारागमयोश्च विरलत्वादि-शापदानम्। तेन शापेन उग्रतारा सहितागतागणाय

म्लेच्छतां प्राप्ता उग्रतारापि तदवधि वाममार्गरता शिवस्य म्लेच्छरतिस्तदवधि जाता वशिष्ठशापाच्च तत्प्रसन्नतीर्थगुप्तिः लौहित्यमानस्य तत्माहात्म्यस्थितिः। ८२अ० लौहित्योत्पत्तितन्माहात्म्यादि। जामदग्न्योपाख्यानम्। ८३अ० तत्स्नानमात्रेण पापनिर्मोचनेन लौहित्यप्रशंसा। पूर्व्वकल्पे ऽनुजकवाणासुरयोर्भृङ्गिमहाकालरूपगणत्वप्राप्तिकथा। ८४अ० राजनीतिकथनम् दुर्गादिकरणप्रकारः८५अ०। प्रजासु राजवृत्तिप्रकारः। नृपकर्त्तव्यदुर्गापूजाविशेषकालाः। तत्पूजाप्रकारः नीराजनप्रकारः।८६ अ०पुष्याभिषेकप्रकारः ८७अ०शक्रध्वजोत्थानविधिः। ८८ दशहरायां विष्णोरिष्टिप्रकारः। श्रीपञ्चम्यां लक्ष्मीपूजाविधिः वृद्ध्यर्थकाचारविशेषाः। द्वादशविधपुत्रविधिः। दत्तकादीनां पञ्चहीना संस्कारकरणे पुत्रत्वप्राप्तिः। पितृगोत्रेण संस्कारे स्वहीतुः पुत्रत्वाभावः। ग्रहीतृगोत्रेण चूडादिसंस्काराभावे दासत्वम्, पञ्चमवर्षादूर्द्धग्रहणे न पुत्रत्वसिद्धिः। पञ्चमवर्षीयग्रहणे तत्र पुत्रेष्टिविधानम्। दासीपुत्रे विशेषः। शूद्राणां पुराणादिवाचनेऽनधिकारः। वर्ज्यपुरोहितलक्षणम्। विशिष्य नृपकर्त्तव्याचारभेदः। आयुष्कामस्य कर्त्तव्याचारः ८९अ०। अपुत्रस्य गतिर्नास्तीति नन्दिनउपदेशात् वेतालभैरवयोः पुत्रोत्पादनाभिलाषे जाते भैरवस्य उर्व्वश्याः सङ्गमे सुरेशनामपुत्रोत्पत्तिः। तपसा तस्य विद्याधराध्यक्षताप्राप्तिः। तस्य धृतराष्ट्रकन्यायां देवसेनना-मपुत्रोत्पत्तिः। ततः देवसेनादिवंशवर्णनम्। तद्वंश्यविजयेन खाण्डवनस्य निर्म्माणम्। अर्ज्जुनेन वह्निप्रीत्यर्थं तस्य दाहनम्। ९०अ० वेतालस्य कामधेनौ वृषभरूपपुत्रोत्पादनम्। तस्य भृङ्गनाम्ना भृङ्गित्वेन शिववाहनताप्राप्तिः। तस्य वंशवर्णनम्। वेतालवंशोद्भवा यत्र सर्वे गावइत्युक्तिः ततउपसंहारः"। इत्येते प्रधानभूताः पदार्थास्तत्रत्याः प्रसङ्गागतास्त्वन्येऽपि पदार्था अभिधेयाः सन्ति विस्तरभयान्नोक्ताः

अत्रेदं चिन्त्यते ८६,९०अ०वेतालभैरवयोर्विभिन्नवंशकथने स्थिते दत्तकचन्द्रिकादौ भैरवपुत्रस्यैव वेतालेन द्व्यामुष्यायणपुत्रकरणप्रतिपादकवाक्यानि यान्युद्धृतानि तानि निर्म्मूलानीत्यवगम्यते। पितृगोत्रेणेत्यादिवचनानां तत्र या निर्म्मूलत्वाशङ्का कृता सापि कालिकापुराणादर्शनमूलिकैव ८६अ० तद्वचनानां प्रत्यक्षत उपलभ्यमानत्वात् इति। कालीपुराणमप्यत्र न०।

**कालिकाव्रत** न० कालिकायाः प्रीत्यर्थं व्रतम्। पुराणोक्ते व्रतभेदे "शच्युवाच। "विधानं चास्य मे ब्रूहि कालिकाया व्रतस्य च। ममोपदिश्यतामेव तद्व्रतञ्च करोम्यहम्। तस्यास्तद्वचनं श्रुत्वा प्रत्युवाचाथ सा तदा। शुक्लाख्ये समारभ्य कृष्णपक्षे चतुर्द्दशीम्। संकल्प्य विधिना पूर्व्वं ममावास्यां व्रतं चरेत्। समारभ्य शुक्लेन द्विगुणं परिशोधयेत्। न रात्रौ भोजनं कार्य्यं वामहस्ते भुजिक्रिया। सिद्धमन्नं रात्रिकाले दग्धमीनञ्च सर्व्वदा। वर्ज्जयेत् पिष्टकं किञ्चित् रक्तशाकञ्च चाम्लकम्। द्विष्टकां विप्रजायाञ्च सधवां भोजयेत्ततः। एवं क्रमेण कृत्वा तु कतिकालं नयेद्व्रतम्। ततः शुक्लदिने प्राप्ते भौमाह्ने मन्दवासरे। यथाशक्त्युपचारैश्च पूजां कुर्य्याद्विधानतः। तथापराह्णकाले तु सन्ध्योपसमये तथा। रात्रौ तु कदलीकाण्डे स्वच्छं निर्म्माय प्राङ्गणे। तस्य मध्ये समारोप्य कालिकां पूजयेत् सदा। पाद्यार्घाचमनीयैश्च गन्धपुष्पादिभिस्तथा। धूपैर्दव्यप्रदीपैश्च नैवेद्यैर्विविधैस्तथा। पिष्टकं चैव सिद्धान्नं व्यञ्जनं दग्धमीनकम्। निवेद्य सकलं देव्यै बलिं दत्त्वा प्रणम्य च। तदन्नं व्यञ्जनं सर्व्वं नैवेद्यादि बलिं तथा। महारण्ये प्रदातव्यं कुर्व्वीत व्रतमुत्तमम्। वैशाखे कदलीमूले या कुर्यात् कालिकाव्रतम्। कार्य्यसिद्धिर्भवेत् तस्या भविता गतिरुत्तमा"।

**कालिकाश्रम** न० ६त०। भारतप्रसिद्धे विपाशानदीतीरस्थे तीर्थभेदे "कालिकाश्रममासाद्य विपाशायां कृतोदकः। ब्रह्मचारी जितक्रोधस्त्रिरात्रं मुच्यते भवात्" भा०आनु० २५अ०।

**कालिङ्ग** न० केन जलेनालिङ्ग्यते आ+लिगि—कर्म्मणि घञ् ३त०। (तरमुज) मध्यस्थजलके फलभेदे। "कालिन्दं कृष्णबीजं स्यात् कालिङ्गं च सुवर्त्तुलम्। कालिङ्गं ग्राहि हृत्पित्तशुक्रघ्नं शीतलं गुरु। पक्वं तु सोष्णं सक्षारं पित्तलं कफवातजित्" भावप्र० तत्पर्य्यायस्वरूपगुणादिकमुक्तम्। "कलिङ्गे भवः अण्।२कलिङ्गदेशोद्भवे त्रि० स्त्रियां ङीप्। तद्देशानां राजा अण्। ३कलिङ्गदेशनृपे।"प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः" रघुः। "वर्गैरास्नेयाद्यैः क्रूरग्रहपीडितैः क्रमेण नृपाः, पाकलोमागधिकः कालिङ्गाश्च क्षयं यान्ति" वृहत्सं०, "निर्वृतयत् कालिङ्गं गान्धाराधिपतिं तथा" हरि०

१११७अ०; बहुषु तु अणो लुक् । कलिङ्गा इत्येव तद्राजेषु तद्वासिषु च भूम्नि । क्वचिन्न लुक् । "कारस्करान् माहिषकान् कालिङ्गान् केरलांस्तथा" भा० क० ४४अ० । "कोशलाः काशपौण्ड्राश्च कालिङ्गा मगधास्तथा" ४५अ०। "कलिङ्गदेशमारभ्य पञ्चाष्टयोजनं शिवे ! । दक्षिणस्यां महेशानि ! । कालिङ्गः परिकीर्त्तितः" इति३उक्तदेशभेदे एतत्परतयैव प्रागुक्तभारतवाक्ये लुगभावो न कल्पनीयः । कां जलमालिङ्गति आ+लिगि—अण् उप०स० । ४हस्तिनि ५सर्पे च पुंस्त्री स्त्रियां जातित्वात् ङीष् । ६भूमिकर्कारौ पु०मेदि० । "कालिङ्गो लिङ्गवान् यः स्याद्-घनः सूक्ष्माङ्ककोमतः" इति सुखबोधोक्ते ७लौहभेदे पु० । ८ राजकर्कट्यां स्त्री गौरा०ङीष् मेदि० । स्वार्थे क अत इत्त्वम् । कालिङ्गिका त्रिवृति(तेओडी) राजनि० ।

**कालिदास** पु० ६त० संज्ञायां ह्रस्वः । रघुवंशादिकाव्यकारके महाकविभेदे तद्वृत्तान्तकालादिकमुच्यते "इतः पूर्वं संवत्सरनामकशाकाब्दप्रवर्त्तको भारतवर्षे मालवदेशे उज्जयिनीनामराजधान्यामसीमगुणधाम विक्रमादित्यनामा नृपतिरासीत् । तस्य धन्वन्तरिप्रभृतयो नव कविवराः सभासदो बभूवुः । तेषु कालिदास एव प्रथितयशा महाकविरासीत् । तेन च रघुवंश-कुमारसम्भव-मेघदूताभिधं काव्यत्रयं, स्मृतिचन्द्रिकाभिध उत्कलदेशप्रचलितो वेदोक्तकर्म्मप्रतिपादकप्रबन्धो ज्योतिर्विदाभरणनामकं कालज्ञानशास्त्रं च क्रमेण निरमायि । अनन्तरञ्च मालविकाग्निमित्र-विक्रमोर्वशी-शाकुन्तलाभिधानि दृश्यकाव्यानि प्रणीतानि । एतच्च तत्कृतज्योतिर्विदाभरणग्रन्थे शेषाध्याये स्पष्टमुपलभ्यते यथा—

"मत्तोऽधुना कृतिरियं सति मालवेन्द्रे श्रीविक्रमार्कनृपराजवरे समासीत्" इति। "धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कुवेतालभट्टघटखर्[क]र्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य" । "यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी" ।

"शङ्कादिपण्डितवराः कवयस्त्वनेके ज्योतिर्विदः समभवंश्च वराहपूर्वाः । श्रीविक्रमस्य बुधसंसदि प्राज्यबुद्धेस्तैरप्यहं नृपसखः किल कालिदासः"। "काव्यत्रयं सुमतिकृद् रघुवंशपूर्वं जातं यतो ननु कियच्छ्रुतिकर्म्मवादः । ज्योतिर्विदाभरणकालविधानशास्त्रं श्रीकालिदासकवितो हि ततो बभूव" इति"वर्षे सिन्धुरदर्शनाम्बरगुणैर्याते कलेः संमिते मासे माधवसंज्ञितेऽत्र विहितो ग्रन्थक्रियोपक्रमः।" इति च अनेन ३०६८ अष्टषष्ट्युत्तरत्रिसहस्रसंख्यके कलेरब्दवृन्दे याते तद्ग्रन्थकरणं स्फुटमुक्तम् । इदानीञ्च कलेर्गताब्दाः ४९७५ तेषु निर्दिष्ट ३०६८ संख्यया हीनेषु १९०७ वर्षाः समायान्ति । तेन इतः १९०७ वर्षगणात् पूर्वं कालिदासकवितो ज्योतिर्विदाभरणं जातं ततः पूर्वं रघुवंशादिकमभूदिति प्रतिभाति । एतत् सन्दर्भैर्यद्यपि दृश्यकाव्यत्रयकरणं न प्रतीयते तथापि दृश्यकाव्यानां प्रागुक्तानां ज्योतिर्विदाभरणग्रन्थात् पश्चात् काले कालिदासकृतत्वेन न तेषां तत्र समुल्लेखः किन्तु तत्तद्ग्रन्थेष्वेव तत्कृतत्वं स्फुटमुक्तमेव । ऋतुसंहारनलोदययोर्यदि तत्कालिदासकृतत्वं तदा ततः पराचीनतया न तदुल्लेखः। कालिदासश्च कतममन्वयं कतमञ्च जनपदमलञ्चकार तन्नाकलयामः । किन्तु तस्य चरितविषयेऽस्मद्देशे सूर्य्यप्रचारमेवमैतिह्यमस्ति । तदत्र सर्वत्र विज्ञापनाय प्रदर्श्यते । काचित् विदुत्तमा कन्या विवाहार्थं पित्रानीतान् बहून् पात्रभूतान् द्विजान् वादविचारेण पराजिग्ये । एवम् आगत्यागत्य तस्याः सकाशात् विचारे पराजयमाप्य प्रतिनिवृत्तेषु वरेषु तदुत्तरं पराजयभयेनेतरे वरा यदा नैवागन्तुमैच्छन् तदा तत्पित्रा विचाराभावेनैव आगतमात्राय पात्राय कन्या देयेति प्रतिज्ञाते पूर्वपूर्ववरानयने निष्फलप्रयत्नतया बहुधा खिन्ना जातेर्ष्या दूताः पुनर्वरानयनार्थं तत्पित्रा नोदिताः स्वावलम्बितशाखाच्छेदितया कालिदासमल्पबुद्धिमवेत्य तत्कन्याया वरत्वेनावधार्य्यानिन्युः । आनीताय च तस्मै अविचार्य्य तद्दोषगुणौ तत्पिता तां कन्यां प्रायच्छत् । एवं तस्य विवाहे संवृत्ते दम्पत्योः परस्परालापकाले कालिदासेनापभ्रंशशब्दमात्राभिज्ञेनापभ्रंशशब्दः प्रायोजि । तत् श्रुत्वा च तद्भार्य्या तमत्यन्तं तिरस्कृत्य गृहात् निष्कासयामास । एवं पत्न्या निष्कासितः कालिदासोऽतीव निर्वेदमापद्यारण्यं गत्वा सरस्वतीमाराध्य तत्प्रसादात् लब्धविद्यः गृहं प्रति निववृते । आगत्य च रात्रौ गृहद्वारं रुद्धं विलोक्य तेन स्वपत्नीं प्रति (अनावृतकपाटं द्वारं देहि) इत्यभिहितम् तत् श्रुत्वा च स्वरविशेषेण तं स्वपतिमवगत्य कालिदासपत्न्याऽभ्युक्तम् (अस्ति कश्चित् वाग्विशेषः)इति इत्येवं पत्न्या कृते वाग्विशेषाविष्कारप्रश्ने तद्वाक्यं पदत्रयघटितमिति ज्ञात्वा तत्रस्यैकैकं पदमधिकृत्य तेन एकैकं काव्यं विरचितम् । तत्र तद्वाक्यस्थम् अस्तीति प्रथमं

पदमधिकृत्य "अस्त्युत्तरस्याम्" इत्यादि सप्तदशसर्गात्मकं कुमारसम्भवाख्यं महाकाव्यम्, कश्चिदिति द्वितीयं पदमधिकृत्य "कश्चित् कान्ताविरहगुरुणा" इत्यादिकं मेघदूताख्यं खण्डकाव्यम्, "वाग्विशेषः" इति तृतीये पदे तदेकदेशं वागिति पदमधिकृत्य "वागर्थाविव संपृक्तौ" इत्यादिकमूनविंशतिसर्गात्मकं रघुवंशाख्यं महाकाव्यञ्च तेन क्रमशो रचितम्। तद्रचनया च कालिदासः सर्वत्र प्रथितसुकवितया प्रख्यातिमुपलभ्य क्रमेण विक्रमादित्यस्य सभासदतामाससादेति।

मालविकाग्निमित्रस्य तत्कृतत्वविषये केचित् सन्दिहाना एवमाहुः। कालिदासाख्यास्त्रयः कवय आसन् तत्र एको विक्रमादित्यसभ्यः, अपरो भोजदेवसभ्यः अपरो भामिनीविलासकर्त्ता जगन्नाथमिश्रः अभिनवकालिदासाख्यः। तेषां मध्ये प्राचीनकालिदासस्य नैषा कृतिः शाकुन्तलस्येव तत्र वागवैदर्भी विरहादित्यन्यस्यैवैषा कृतिरिति। तत्र मालविकाग्निमित्रस्य प्राचीनकालिदासकृतित्वाभावे तदीयसन्दर्भस्य भोजदेवपितृव्यसभासदधनिकेन दशरूपके कथनार्थं मालवाग्निमित्रनामत्वेन समुद्धारः सङ्गच्छते। भोजदेवात्तस्य प्राचीनत्वे एव तदुद्धारः सङ्गच्छते नान्यथा भोजदेवेन च सरस्वतीकण्ठाभरणे ग्रन्थनामादत्त्वैव मालवाग्निमित्रनाटकपद्यस्य समुद्धाराच्च तद्ग्रन्थस्य ततः प्राचीनकालिदासकृतित्वम् नान्यकृततेति निश्चेतव्यम्। किञ्च श्रीहर्षदेवन्पतेः सभ्यस्य रत्नावल्यादिकारकस्य धावकस्यैव ततः प्राचीननाटककर्त्तृत्वेन तद्ग्रन्थोपोद्घाते तस्य नामोल्लेखात् प्राचीनस्यैव कालिदासस्य तत्कर्त्तृत्वं सुव्यक्तम्। भोजदेवसभ्यकालिदासस्य तत्कर्त्तृत्वे ततः प्राचीनाभिज्ञानशकुन्तलादिकर्त्तृनामकीर्त्तनस्यैवौचितत्वेन किमिति तदुपेक्षातिविप्रकृष्टधावकादिनामोत्कीर्त्तनम्? सन्निकृष्टं परित्यज्य विप्रकृष्टग्रहणस्यान्याय्यत्वात्। प्राचीनकालिदासस्य मालविकाग्निग्रन्थकर्तृत्वपेक्षया प्राचीनत्वेन प्रथितयशस्कत्वेन च तन्नामोल्लेखस्यैवोचितत्वात्। भोजदेवसभ्यकालिदासश्च भोजदेवकालिकः तदेतत् भोजप्रबन्धे वर्णितं यथा "भवन्नाम्ना कान्त्रचाराणि सौभाग्यावलम्बितानि कस्य वा देशस्य भवद्विरहः सुजनान् बाधत इति। ततः कविर्लिखति राज्ञीहस्ते कालिदास इति राजा वाचयित्वा पादयोः पतति ततस्तत्रासीनयोः कालिदासभोजराजयोरासीत् सख्या"। "यस्याश्चौरश्चिकुरनिकरः कालिदासोविलासः" प्रसन्नरा०।

"उपमा कालिदासस्य भारवेरर्थगौरवम्। नैषधे पदलालित्यं माघे सन्ति त्रयोगुणाः"। "कालिदासकविता नवं वयः" इति च उद्भटः। स्वार्थे क तत्रैव।

**कालिन्** पु॰ कालः कालरूपः खड्गोऽस्त्यस्य इनि। ३परमानन्दमतसिद्धे परमेश्वरे "कालिन्! कलिमलध्वंसिन्! ध्वंसयाशु मदापदः" इति तन्मते ईश्वरप्रार्थनम्। कालयति कल–नोदने णिनि। २ प्रेरके त्रि॰ स्त्रियां ङीप्।

**कालिनी** स्त्री कालः शिवः अधिष्ठातृत्वे नास्त्यस्याः कालः पुरुषाकारः गगनस्थः लुब्धकः अस्त्यस्याः सन्निकृष्टत्वेन वा, इनि ङीप्। आर्द्रानक्षत्रे हेमच॰ तस्याः तद्दैवतत्वं च अश्लेषाशब्दे ४६८पृ॰ दर्शितम् इल्वलरूपस्य मृगशिरो मूर्द्धदेशस्थितनक्षत्रस्यासन्नत्वात्तस्यास्तथात्वम्

**कालिन्द** न॰ कालिं जलराशिं ददाति दा–क पृषो॰ मुम्। (तरमुज) ख्याते जलप्रधानफलके वृक्षे भावप्र॰कालिङ्गशब्दे विवृतिः। स्वार्थे क। कालिन्दक तत्रार्थे न॰राजनि॰। कलिन्दे भवः अण्। कलिन्दपर्व्वतभवे त्रि॰ स्त्रियां ङीप्

**कालिन्दी** स्त्री कलिन्दे पर्व्वते तत्सन्निकृष्टदेशे वा भवः अण् ङीप्। यमुनानद्याम् अमरः। "कलिन्दगिरिनन्दिनी तटसुरद्रुमालम्बिनी" रसरङ्गाधरे तस्याः कलिन्दपर्व्वतसुतत्वोक्तेस्तथात्वम्। "कालिन्दीजलजनितश्रियं श्रयन्ते" माघः। २रक्तत्रिवृति (लालतेओडी) वृक्षे राजनि॰।

**कालिन्दीकर्षण** न॰ कालिन्दीं यमुनां कर्षति कृष–ल्यु ६त॰। बलदेवे तत्कर्षणकथा च हरि॰।१२अ॰ यथा

"स मत्तो बलिनां श्रेष्ठो रराजाघूर्णिताननः। शीकरीषु नियामासु यथा स्वेदालयः शशी। रामस्तु यमुनामाह स्नातमिच्छे महानदि!। एहि मामभिगच्छ त्वं रूपिणी सागराङ्गने। सङ्कर्षणस्य मत्प्रोक्तां भारतीं परिभूय सा। नाभ्यवर्त्तत तं देशं स्त्रीस्वभावेन मोहिता। ततः क्रोधहलभृद्रामो मदसमीरितः। चकार स हलं हस्ते कर्षणाधोमुखं बली। तस्यासुपरि मेदिन्यां पेतुस्तामरसस्रजः। मुमुचुः पुष्पकोषैश्च पुष्करे स्वरसं जलम्। स हलेनानताग्रेण कूले गृह्य महानदीम्। चकर्ष यमुनां रामो व्युत्थितां वनितामिव। सा विह्वलजलस्रोता ह्रदप्रस्थितसञ्चया। व्यावर्त्तत नदी भीता हलमार्गानुसारिणी। लाङ्गलादिष्टमार्गा सा वेगगा वक्रगामिणी। सङ्कर्षणभयत्रस्ता योषेवाकुलताङ्गतः। पुलिनश्रोणिविम्बोष्ठी मृदितैस्तोयताडितैः। फेनमेखलसूत्रैश्च छिन्नैस्तीरान्तगामिनी। तरङ्गविषमापीडा चक्रवाकोन्नतस्तनी।

वेगगम्भीरवक्राङ्गी त्रस्तमीनविभूषणा। सितहंसेक्षणापाङ्गी काशक्षौमोज्झिताम्बरा। तीरजोद्धृतकेशान्ता जलस्खलितगामिनी। लाङ्गलोल्लिखितापाङ्गी क्षुभिता सागराङ्गना। मत्तेव कुटिलापाङ्गी राजमार्गेण गच्छति। कृष्यते सा स्म वेगेन स्रोतस्खलितगामिनी। उन्मार्गानीतमार्गा सा येन वृन्दावनं वनम्। वृन्दावनस्य मध्येन सा नीता यमुना नदी। रोहृयमाणेव खरैरन्विता तोयवासिभिः। सा यदा समनुक्रान्ता नदी वृन्दावनं वनम्। तदा स्त्रीरूपिणी भूत्वा यमुना राममब्रवीत्। प्रसीद नाथ! भीताऽस्मि प्रतिलोमेन कर्म्मणा। विपरीतमिदं रूपं तोयस्य मम जायते। असत्यहं नदीमध्ये रौहिणेय! त्वया कृता। कर्षणेन महावाहो! स्वमार्गव्यभिचारिणी। प्राप्तां मां सागरे नूनं सपत्न्यो वेगगर्व्विताः। फेनहासैर्हसिष्यन्ति तोयव्यावृत्तगामिनीम्। प्रसादं कुरु मे वीर! याचे त्वां कृष्णपूर्वज!। सुप्रसन्नमना नित्यं भवस्व त्वं सुरोत्तम!। कर्षणायुधकृष्टाऽस्मि रोषोऽयं विनिवर्त्त्यताम्। गच्छामि चरणौ मूर्द्ध्ना तवाहं लाङ्गलायुध!। मार्गमादिष्टमिच्छामि क्व गच्छामि महाभुज!"। "प्रणामायनतां दृष्ट्वा यमुनां लाङ्गलायुधः। प्रत्युवाचार्णववधूं मदक्लान्तमिदं वचः। लाङ्गलादिष्टमार्गा त्वमिमं मे प्रियदर्शने!। देशमम्बुप्रदानेन प्लावयस्वाखिलं शुभे!। एष ते सुभ्रु! सन्देशः कथितः सागराङ्गने!। शान्तिं व्रज महाभागे! गम्यतां च यथासुखम्। लोका हि यावत् स्थास्यन्ति तावत् तिष्ठतु मे यशः। यमुनाकर्षणं दृष्ट्वा सर्व्वे ते व्रजवासिनः"। कालिन्दीं भिनत्ति भिद—ल्यु ६त०। कालिन्दीभेदनोऽप्यत्र अमरः। [सूर्य्यपत्न्यां संज्ञायाम्।

**कालिन्दीसू** स्त्री कालिन्दीं यमुनां सूते सू—क्विप् ६त०।

**कालिन्दीसोदर** ६त०। यमे हेमच० तत्कथा अरुणात्मजशब्दे ३५८पृ० दृश्या

**कालिमन्** पु० कालस्य भावः इमनिच्। कृष्णवर्णे "स्नानमानमतिकालिमालया" माघः।

**कालिम्मन्या** स्त्री आत्मानं कालीं मन्यते मन्—खश्—मुम् ह्रस्वः। आत्मानं कृष्णतया मन्यमानायाम् स्त्रियाम्।

**कालिय** पु० के जले आलीयते आ+ली—मूलविभुजा० क। नागभेदे कालियदमनशब्दे विवृतिः। "त्रस्तेन तार्क्ष्यात् किल कालियेन मणिं विसृष्टं यमुनौकसा यः" रघुः। "बोधापि कालियकुलं यमस्येव स्वसा स्वयम्" माघः "कालियं तक्षकञ्चैव पिङ्गलं मणिभद्रकम्" ति० त०गरु० पु०; गरुड़भिया यमुनाह्रदजले निलीनत्वात्तस्य तथात्वम्।

**कालियदमन** पु० कालियं दमयति दम—णिच्—ल्यु। वासुदेवे कृष्णे तत्कथा भाग० १०,१६अ० यथा "कालिन्द्यां कालियस्यासीद्ध्रदः कश्चिद्विषाग्निना। श्रप्यमाणपया, यस्मिन् पतन्त्युपरिगाः खगाः। विप्रुष्मता विषोदोर्म्मिमारुतेनाभिमर्शिताः। म्रियन्ते तीरगा यस्य प्राणिनः स्थिरजङ्गमाः। तं चण्डवेगविषवीर्य्यमवेक्ष्य तेन कृष्णां नदीञ्च खलसंयमनावतारः। कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गादास्फोट्य गाढरसनोऽन्यपतद्विषोदे। सर्पह्रदः पुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसिताम्बुराशिः। पर्य्यक् प्लुतोविषकषायितभीषणोर्म्मिर्धीमन्! धनुःशतमनन्तबलस्य किन्तत्। तस्मिन् ह्रदे विहरतो भुजदण्डघूर्णवार्घोषमङ्ग! वरवारणविक्रमस्य। आश्रुत्य तत्स्वसदनाभिभवं निरीक्ष्य चक्षुःश्रवा समसरत्तदमृष्यमाणः। तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुन्दरास्यम्। क्रीडन्तमप्रतिभयं कमलोदराङ्घ्रिं संदश्य मर्म्मसु रुषा भुजगश्चखाद। तं नागभोगपरिपीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्त्ताः। कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा दुःखानुशोकभयमूढधियो निपेतुः। गावो वृषा वत्सतर्य्यः क्रन्दमानाः सुदुःखिताः। कृष्णे न्यस्तेक्षणा भीता रुदन्त्य इव तस्थिरे" इत्थं गोपादीनामाकुलतामुपवर्ण्य

"इत्थं स्वगोकुलमनन्यगतिं निरीक्ष्य सस्त्रीकुमारमतिदुःखितमात्महेतोः। आज्ञाय मर्त्यपदवीमनुवर्त्तमानः स्थित्वा मुहूर्त्तमुदतिष्ठदुरङ्गबन्धात्। तं प्रथ्यमानवपुषा व्यथितात्मभोगस्त्यक्त्वोन्नमय्य कुपितः स्वफणान् भुजङ्गः। तस्थौ श्वसन् श्वसनरन्ध्रविषाम्बरीषस्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः। तं जिह्वया द्विशिखया परिलेलिहानं द्वे सृक्कणी ह्यतिविषालकरालदृष्टिम्। क्रीड़न्नमुं परिससार यथा खगेन्द्रो बभ्राम सोऽप्यवसरं प्रसमीक्षमाणः। एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथुशिरःस्वधिरूढ़ आद्यः। तन्मूर्द्धरत्ननिकरस्फुरणातिताम्रपादाम्बुजोऽखिलकलादिगुरुर्ननर्त्त। तन्नर्त्तुमुद्यतमवेक्ष्य तदा तदीयगन्धर्व्वसिद्धमुनिचारणदेववध्वः। प्रीत्या मृदङ्गपणवानकवाद्यगीतपुष्पोपहारनुतिभिः सहसोपसेदुः। यद्यच्छिरो न नमतेऽङ्ग शतैकशीर्ष्णस्तत्तन्ममर्द्द खरदण्डधरोऽङ्घ्रिपातैः।

णीयायुषोऽभ्रमत उल्वणमाप्ततोऽचक्षुस्तोवमन् परमक-श्मलमाप नागः। तस्याक्षिभिर्गरलमुद्वमतः शिरःसु यद्यत् समुन्नमति निश्वसतो रुषोच्चैः। नृत्यन् पदा ल नम-यन् दमयाम्बभूव पुष्पैः प्रपूजित इवेह पुमान् पुर षः" कालिमयनादयोऽप्यत्र भावे ल्युट् ६त०। कालियस्य २मर्द्दने न०

कालियह्रद पु० ६त०। कालियनागाधिष्ठिते वृन्दावनस्य यमुनान्तर्गते ह्रदभेदे कालियदमनशब्दे विवृतिः। तस्य कालियस्य तत्रदाश्रयणकथाभाग० १०, १७ अ० यथा "नागालयं रमणकं कथं तत्याज कालियः। कृतं वा किं सुपर्णस्य तेनैकेनासमञ्जसम्। बादरायणिरुवाच। उप-हार्य्यैः सर्पजनैर्मासिमासीह यो बलिः। वानस्पत्यो म-हाबाहो! नागानां प्राङ्निरूपितः। स्वं स्वं भागं प्रय-च्छन्ति नागाः पर्वणि पर्वणि। गोपीथायात्मनः सर्वे सुपर्णाय महात्मने। विषवीर्य्यमदाविष्टः काद्रवेयस्तु का-लियः। कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिम्। तत् श्रुत्वा कुपितो राजन्! भगवान् भगवत्प्रियः। विजिघांसु-र्महावेगः कालियं समुपाद्रवत्। तमापतन्तं तरसा विषा-युधः प्रत्यभ्ययादुच्छ्रितनैकमस्तकः! दद्भिः सुपर्णं व्यदशद्-दायुधः करालजिह्वोच्छ्वसितोग्रलोचनः। तं तार्क्ष्यपुत्रः स निरस्य मन्युमान् प्रचण्डवेगो मधुसूदनासनम्। पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रुाः सुतमुग्रविक्रमः। सुपर्णपक्षाभिहतः कालियोऽतीवविह्वलः। ह्रदं विवेश का-लिन्द्यास्तदगम्यं दुरासदम्। तत्रैकदा जलचरं गरुडो भ-क्ष्यमीप्सितम्। निवारितः सौभरिणा प्रसह्य क्षुधितोऽ-हरत्। मीनान् सुदुःखितान् दृष्ट्वा दीनान् मीनपतौ-हृते। कृपया सौभरिः प्राह तत्रत्यक्षेममाचरन्। अत्र प्रविश्य गरुडो यदि मत्स्यान् स खादति। सद्यः प्राणैर्वियुज्येत सत्यमेतद्ब्रवीम्यहम्। तत् कालियः परं वेद नान्यः कश्चन लेलिहः। अवात्सीद्गरुडाद्भीतः कृष्णेन च विवासितः"।

काली स्त्री कालस्य शिवस्य पत्नी ङीष्। १ शिवपत्न्याम्। "ऊर्द्ध्वरेता भवःकालः इति" भाग० ३, ६, २ शिवस्य कालनामतोक्तेस्तस्यास्तथात्वम्। कालवर्णो स्त्री "काला-द्वर्णश्चेत्" वार्त्ति० ङीष्। २कृष्णवर्णायां स्त्रियाम् "का काली का मधुरा" विदग्धमु०। ३हिमाचलदुहितरि उमायां तस्याश्च जन्मतः नीलाञ्जननिभवर्णतया तथात्वम्। "सुतामनुज-गामाशु गतां काली हराश्रमम्"। "तां तत्र काली तनयाम् भवशोकाकुलाशुभाम्" कालि० पु० ४० अ०। "कालि! भिन्नाञ्जनश्यामे! उर्वश्याद्यप्सरोगणैः"। "गौरत्वासादनञ्चैव कालिकायास्तथा श्रुतम्" इति च तत्र तस्यागौरत्वप्राप्तिकथनम्। ४दुर्गामूर्त्तिभेदे "काली करालवदना विनिष्क्रान्तासिपाशिनी। विचित्र खट्वाङ्गधरा नरमालाविभूषणा। द्वीपिचर्म्मपरीधाना शुष्कमांसातिभैरवा" इत्यादि देवीमा० तदाविर्भावउक्तः। सा च बहुविधा सिद्धकाली महाकाली गुह्यकाली दक्षिणाकाली भद्रकाली श्मशानकाली रक्षाकाली तिभेदात् तथा अन्येऽपि तद्भेदा भैरवत० दर्शिता यथा "काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी। वि-प्रचित्ता तथोग्रोग्रप्रभा नीलघनत्विषः। नीला घना बलाका च मात्रा मुद्रा मिता तथा। एताः सर्व्वा अ-सिधरा मुण्डमालाविभूषिताः"। "कालि! कालि महाकालि! शीधुमांसपशुप्रिये" भा० वि० ४, अ०। ५ मातृभेदे "काली कपालाभरणा चकासे" कुमा० ६ भीमसेनस्य पत्नीभेदे। "युधिष्ठिरात्तु पौरव्यां देवको-ऽथ घटोत्कचः। भीमसेनाद्धिडिम्बायां काल्यां सर्व्वगतस्ततः भाग० ९, २२, २४। भा०आ०९५अ० तु "भीमसेनोऽपि काश्यां बलन्धरां नामोपयेमे वीर्य्यशुल्कां, तस्यां पुत्रं सर्व्वगमुत्पादयामास" इत्युक्तं तदैकवाक्यात् काश्यामित्येव पाठः समुचितः गन्धकालीत्यस्य पूर्व्व-पदलोपः। काली७ दासकन्यायां गन्धकाल्यां सत्यवत्याम् शान्तनुपत्न्याम्। "भीष्मः खलु पितुः प्रियचिकीर्षया सत्य-वतीं मातरमुदवाहयत् गन्धकालीमितियामाहुः" भा०आ० ९५अ०। ८कल-नोदने अच् गौरा० ङीष्। ९हव्यवाहमुखे विवृति १०रात्रौ ११कालाञ्जन्याम् राजनि०। १२नवोः कृष्णत्वात्तथा-त्वम् अग्निशिखाभेदे जटाधरः। अग्निजिह्वशब्दे दर्शित-शारदातिलकवाक्ये एतस्याः तच्छिखासु मान्तर्भावः इति चिन्त्यम्। १३वृश्चिकाली (विछाति) रत्नमाला। १४काल-रात्रौ यमभगिन्याम् तन्त्रोक्तासु दशमहाविद्यासु आद्यायां १५ महाविद्यायाम् तास्य "काली तारा महाविद्या षोडशी भुवनेश्वरी, भैरवी छिन्नमस्ता च विद्या धूमावती तथा। वगला सिद्धविद्या च मातङ्गी कमलात्मिका। एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः" तन्त्रसा० "कालीपूजा श्रुता नाथ! भावाश्च विविधाः प्रभो!" भैरवत० "तारायाश्चैव काल्याश्च त्रिपुराया विशेषतः। शयने भरणे चैव न त्यजेयुर्जपार्चने" तन्त्र०

कालीक पुंस्त्री० के जलेऽलीकइव मत्स्यघाताय निश्चेष्ट-

त्वात्। क्रौञ्चे वके शब्दरत्ना० स्त्रियां ङीप्।

**कालोची** स्त्री काल्या यमभगिन्या चीयते उव—ची—बा० आधारे ड गौरा० ङीप्। यमविचारभूमौ त्रिका०।

**कालीतनय** पुंस्त्री० कालीमितः प्राप्तोनयः प्रापणं यस्य। महिषे हेमच० स्त्रियां ङीप्। महिषस्य काल्यै बलिदानार्थं नीयमानत्वात्तथात्वम्। [चन्दने शब्दच०।

**कालीय** न० कालस्थाने भवम् "वृद्धाच्छः" पा० छ। कृष्ण-

**कालीयक** न० कालीयमिव कायति—कै—क। कालानुसार्य्ये सुगन्धिकाष्ठे (कलम्बक) अमरः।

**कालेय** पु०कालयाअपत्यम् ढक्। १दैत्यभेदे, कालकेये, कलायै १७८६पृ०दर्शितरक्तधारिण्यै हितं ढक्। २यकृति कं सुखमालेयमादेयं यस्मात्। ३कालचन्दने न०"आश्यानकालेयकृताङ्गरागाम्" कुमा०। कलिना दृष्टं साम ढक्। ४कलिदृष्टे सामभेदे तच्च माध्यन्दिनसवने सप्तमं सूक्तमधिकृत्य गेयम्। तत्प्रकार ऊहगाने दृश्यः

**कालेयक** पुंस्त्री० कलये विरोधाय साधु कलि+ढक् संज्ञायां क। १कुक्कुरे तस्यान्योन्यविरोधित्वात् तथात्वम् स्त्रियां ङीप्। कालेय+स्वार्थे संज्ञायां वा क। २कालीयचन्दने "मधुकरकुलकलङ्ककालीकृतकालेयककुसुमकुड्मलेषु" काद०। ३हरिद्रायां पु० ४दारुहरिद्रायां न०राजनि०। तत्रार्थे पु० शब्दर०।

**कालेश** पु० ६त०। १सूर्य्ये तस्य स्वगत्या कालप्रवर्त्तकत्वात् तथात्वम्। २शिवे च। ३मकारवर्णे। "विष्णुरीशस्ततोहान्तः कालेशः पृथिवी ततः" श्रीविद्यामन्त्रोद्धारे "कालेशोमकारः" तन्त्रसा०। कालेश्वरादयोऽप्यत्र।

**कालोदक** न० भारतप्रसिद्धे तीर्थभेदे। "कालोदकं नन्दिकुण्डं तथा चोत्तरमानसम्" भा० आनु०२८अ०।

**काल्प** पु० कल्पे विधौ भवः अण्। (काँचाहलुद्) कर्चुरे शब्दर०। स्वार्थे क। तत्रार्थे अमरः।

**काल्पनिक** त्रि०कल्पनायाः आगतः ठञ्। कल्पनाभवे १कल्पिते, २ आरोपिते, च। स्त्रियां ङीप्। "इति व्युत्पत्तिस्तु काल्पनिकी" त्रि०त०।

**काल्पसूत्र** त्रि० कल्पसूत्रं वेत्त्यधीते वा सूत्रान्तत्वात् ठकि प्राप्ते "अकल्पादेः" इत्युक्तेः अण्। १कल्पसूत्राभिज्ञे २तदध्येतरि च स्त्रियां ङीप्। [विधानादौ।

**काल्पिक** त्रि० कल्पग्रन्थे उक्तः ठञ्। वेदाङ्गकल्पग्रन्थोक्ते

**काल्य** न० कल्यमेव स्वार्थे अण्। १प्रत्यूषे हेमच०। कालः-प्राप्तोऽस्य यत्। २प्राप्तकाले शीतादौ त्रि०। काले भवः दिगा० यत्। ३कालभवे त्रि० तदन्तसमासे अकर्मधारये उत्तरपदस्य आद्युदात्तता। ततोनडा० पाठान्तरे गोत्रे फक्। काल्यायन काल्यगोत्रापत्ये पु० स्त्री। [शब्दर०।

**काल्यक** न० काले साधु यत् स्वार्थे क। कर्चुरे(काँचाहलुद्)

**काल्या** स्त्री कालः गर्भग्रहणकालः प्राप्तोऽस्याः यत्। प्राप्तगर्भग्रहणयोग्यकालायाम् ऋतुमत्याम् अमरः "उपसर्य्या काल्याप्रजने" पा०। [भावे।

**काल्याणक** न० कल्याणस्य भावः मनोज्ञा० वुञ्। कल्याण-

**काव** न० कविर्देवताऽस्य अण्। कविदेवताके सामभेदे। तच्च तृतीयसवने गेयार्भवपवमानान्तर्गतम्। "आभीप्रियाणीति" सूक्ते गेयम्। तत्प्रकारश्च ऊहगाने दर्शितः।

**कावचिक** न० कवचिनां समूहः "ठञ् कवचिनश्च" पा० ठञ् इनोलोपः। वर्म्मधारिणां समूहे।

**कावट** पु० कर्वट+पृषो०। कर्वटे हला०।

**कावषेय** पु० यजुर्वेदवंशान्तर्गते तुराख्ये ऋषिभेदे। "कावषेयात्तु कावषेयः" शत० १०,६,५,९, तुरोह कावषेयः कारोत्यां देवेभ्योऽग्निं चिकीर्ष" तत्रैव ९,५,२,१५.

**कावाद** पु० कुत्सितईषद्वा वादः कोः का। वाक्कलहे शब्दचि०। [शैवाले तृणादिच्छन्ने त्रिका०।

**कावार** न० कं जलमावृणोति आ+वृ—अण् उप०स०।

**कावी** स्त्री कवेरियं ष्यञ् ततः शार्ङ्गर० स्त्रियां ङीन् यलोपः। कविसम्बन्धिन्याम् स्त्रियाम्।

**कावृक** पुंस्त्री कुत्सितः ईषद्वा वृक इव। १ कुक्कुटे २चक्रवाके ३पीतवर्णमस्तकपक्षिभेदे च मेदि०तेषां वृकतुल्यैषच्चिह्नयुक्तत्वात् तथात्वम्। स्त्रियां जातित्वात् ङीष्।

**कावेर** न० कस्य सूर्य्यस्येव ईषत्वेरमङ्गमस्य। १ कुङ्कुमे जटा०। तस्य शिखाभिः सूर्य्यतुल्यरक्तत्वात् तथात्वम्।

**कावेरी** स्त्री कस्य जलस्य वेरं शरीरं तस्येदमित्यण् ङीप्। १सरिद्भेदे। कुत्सितमपवित्रं वेरं यस्याः स्वाङ्गत्वात् ङीष्। २वेश्यायाम् ५व०। ३ हरिद्रायाम्। "दृषद्वती च कावेरी वङ्क्षुर्मन्दाकिनी तथा" भा०आनु०१६५अ०। "भारतीगुप्ततोया च कावेरी सुर्म्मुरा तथा" भा०व०२२१। "चन्द्रवशा ताम्रपर्णी अवटोदा कृतमाला-वेहा मसी कावेरी वेन्नेत्यादि भाग० ५,१९,१८, भारतवर्षनदीकथने। सा च सह्याद्रेः मलयाद्रेश्च सानुसन्निकृष्टस्था तदेतत् रघौ वर्णितम् यथा "गृहीतप्रतिमुक्तस्य स धर्म्मविजयी नृपः। श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम्। ततो वेलातटेनैव फल-

वत्प्रगमालिना। अगस्त्याचरितामाशाम् अनाशास्य-जयो ययौ। स सैन्यपरिभोगेण गजदानसुगन्धिना। कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत्। बलै-रध्युषितास्तस्य विजिगीषोर्गताध्वनः। मारीचोद्भ्रा-न्तहारीताः मलयाद्रेरुपत्यकाः"। "कावेरीतीर-भूमीरुहभुजगवधूभुक्तमुक्तावशिष्टः" मलयजवातवर्णने "ततो गच्छेत कावेरीं वृतामप्सरसां गणैः। तत्र स्नात्वा नरो राजन्! गोसहस्रफलं लभेत्" भा० व० ८५। गङ्गे! च यमुने! चैव गोदावरि! सरस्वति! नर्म्मदे! सिन्धु! कावेरि! जलेऽस्मिन् सन्निधिं कुरु, तीर्थवाहन मन्त्र

काव्य पु० कवेः भृगुपुत्रस्यापत्यम् यञ्। शुक्रे अमरः "भृगोः पुत्रः कविर्विद्वान् शुक्रः कविसुतग्रहः" भा०आ०६०। "जिगीषया ततो देवाववव्रिरेऽङ्गिरसं मुनिम्। पौरोहित्ये न याज्यार्थे काव्यं तूशनसं परे" भा०आ०७५अ०। कवे-रिदम् यञ्। २कविसम्बन्धिनि। कव—वर्णने स्तुतौ च कर्म्मणि ण्यत्। ३वर्णनीये ४स्तुत्ये च त्रि० स्त्रियां टाप् "दुर्य्योधनस्य रूपेण शृणु काव्यां गिरं मम" भा०स० ६०अ०। "भार्याणि तर्कयुक्तानि देहवन्ति विशांपते!। नाटका विविधाः काव्याः कथाख्यायिककारिकाः" भा०स०११अ०। शार्ङ्गरवादौ तु काव्यशब्दस्य यञ लक्ष्यैव ग्रहणात् ततः स्त्रियां ङीन्। कवेः कर्म्म ष्यञ्। कविकृतगद्यपद्यात्मके ५ वाक्यविशेषे न। काव्यप्र०तत् करणप्रयोजनमुक्तं यथा—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे" मू०

"कालिदासादीनामिव यशः, श्रीहर्षादेर्धावकादीनामिव धनं, राजादिगतोचिताचारपरिज्ञानम्, आदित्यादेर्म्मयू-रादीनामिवानर्थनिवारणं, सकलप्रयोजनमौलिभूतं सम-नन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमा-नन्दं, प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्सम्मि-तार्थतात्पर्य्यवत्पुराणादीतिहासेभ्यश्च शब्दार्थयोर्गुण-भावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणकविकर्म्म, तत् कान्तेव सरसतापा-दनेनाभिमुखीकृत्य रामादिवत् वर्त्तितव्यं न रावणादिव-दित्युपदेशञ्च, यथायोगं कवेः सहृदयस्य च करोतीति सर्व्वथा तत्र यतनीयम्। अस्य कारणमाह" वृत्तिः शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्। काव्य-ज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे" मू०

"शक्तिः कवित्वबीजरूपः संस्कारविशेषः,यां विना काव्यं न प्रसरेत् प्रसृतं वा उपहसनीयं स्यात्, लोकस्य स्थावरजङ्गमात्मकलोकवृत्तस्य, शास्त्राणां छन्दोव्याकर-णाभिधानकोषकलाचतुर्वर्गगजतुरगखड्गादिलक्षणग्र-न्थानां, काव्यानाञ्च महाकविसम्बन्धिनाम्, आदिग्रह-णादितिहासादीनाञ्च विमर्शनाद्व्युत्पत्तिः, काव्यं कर्त्तुं विचारयितुञ्च ये जानन्ति तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिरिति त्रयः समुदिताः न तु व्यस्ता-स्तस्य काव्यस्योद्भवे निर्म्माणे समुल्लासे च हेतुर्नतु हेतवः" वृत्तिः

सा०द० अन्यप्रकारं काव्यस्य प्रयोजनं मुक्तं यथा

"चतुर्व्वर्गफलप्राप्तिः सुखादल्पधियामपि। काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते" मू०।

"चतुर्वर्गफलप्राप्तिर्हि काव्यतो रामादिवत् प्रवर्त्तितव्यं न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशद्वारेण सुप्रतीतैव। उक्तञ्च "धर्म्मार्थकाममोक्षेषु वैचक्षण्यं क-लासु च। करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिषेवण-मिति"। किञ्च काव्याद्धर्म्मप्राप्तिर्भगवन्नारायणचरणा-रविन्दस्तवादिना "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग्भवति" इत्यादिवेदवाक्येभ्यश्च सुप्रसिद्धैव। अर्थप्राप्तिश्च प्रत्यक्षसिद्धा। कामप्राप्तिश्चार्थद्वारैव। मोक्ष-प्राप्तिश्चैतज्जन्यधर्म्मफलाननुसन्धानात् मोक्षोपयोगि-वाक्ये व्युत्पत्त्याधायकत्वाच्च। चतुर्वर्गप्राप्तिर्हि वेदशा-स्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते। परमानन्दसन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव। ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु काव्येषु किमिति यत्नः करणीय इत्यपि न वक्तव्यम् कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोप-शमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधी-यसी न स्यात्। किञ्च। काव्यस्योपादेयत्वमाग्नेयपुराणे-ऽप्युक्तम्। "नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा। कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभेति" "त्रिवर्गसाधनं नाट्यमिति" च। विष्णुपुराणे "काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च। शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः" इति वृत्तिः। तस्य लक्षणं तत्रैव "वाक्यं रसात्मकं काव्यं दोषास्तस्यापकर्षकाः। उत्कर्ष-हेतवः प्रोक्ता गुणालङ्काररीतयः" मू०।

अन्येतु गुणालङ्काररीतियुक्तं दोषरहितं वाक्यं का-

व्यमिति वदन्ति। आनन्दविशेषजनकवाक्यं काव्यमिति रसगङ्गाधरः।

तद्भेदाः प्रथमं त्रिविधाः उत्तममध्यमाधमभेदात्। यथाह काव्यप्र०

"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः। अतादृशि गुणीभूतव्यङ्ग्यं काव्यं तु मध्यमम्। शब्दचित्रं वाच्यचित्रमव्यङ्ग्यन्त्ववरं स्मृतम्"।

रसगङ्गाधरे तु अर्थचित्रापेक्षया शब्दचित्रस्याल्पचमत्कारकारित्वात्तस्याधमाधमत्वोक्त्या काव्यभेदचातुर्विध्यमुक्तम्। सा० द० मते अव्यङ्ग्यस्य काव्यत्वाभावात् ध्वनिगुणीभूतव्यङ्ग्यभेदेन द्वैविध्यमिति भेदः। तद्भेदाः सोदाहरणं दर्शिता तत्र यथा।

"काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यञ्चेति द्विधा मतम्"। मू०

तत्र।"वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम्"मू० "वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम्" इत्तिः

"भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ। "अविवक्षितवाच्योऽन्योविवक्षितान्यपरवाच्यश्च"। मू०

"तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः। लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं बाधितस्वरूपम्। विवक्षितान्यपरवाच्यस्त्वभिधामूलः। अत एवात्र वाच्यं विवक्षितम् अन्यपरं व्यङ्ग्यनिष्ठम् अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः। यथा प्रदीपो घटस्य। अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः। अविवक्षितवाच्यस्य भेदावाह" इत्तिः

"अर्थान्तरं सङ्क्रमिते वाच्येऽत्यन्तं तिरस्कृते। अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति" मू०।

"अविवक्षितवाच्यो नाम ध्वनिरर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसङ्क्रमितत्वादर्थान्तरसङ्क्रमितवाच्यत्वम् यथा। "कदली कदली करभः करभः करिराजकरः करिराजकरः। भुवनत्रितयेऽपि विभर्त्ति तुलामिदमूरुयुगं न चमूरुदृशः"। अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे बाधिता जाड्यादि गुणविशिष्टस्वार्थपरा" जाड्याद्यतिशयश्च व्यङ्ग्यः। यत्र पुनः स्वार्थं सर्व्वथा परित्यजन्नर्थान्तरे, परिणमति तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम्। यथा "निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते"। अत्रान्धशब्दो मुख्यार्थे बाधितोऽप्रकाशरूपमर्थं बोधयति अप्रकाशातिशयश्च व्यङ्ग्यः। अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावान्नार्थान्तरसङ्क्रमितवाच्यत्वम्। यथा "भम धम्मिअ! वीसत्थो सो सुणहो अज्ज मारिओ देन। गोलाणईकच्छकुडङ्गवासिना दरीअसीहेन"। अत्र भ्रम धार्म्मिकेत्यतो भ्रमणस्य विधिः प्रकृतेऽनुपयुज्यमानतया भ्रमणनिषेधे पर्य्यवस्यतीति विपरीतलक्षणाशङ्का न कार्य्या। यत्र खलु विधिनिषेधावुत्पद्यमानावेव निषेधविध्योः पर्य्यवस्यतस्तत्रैव तदवसरः। यत्र पुनः प्रकरणादिपर्य्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्येते तत्र ध्वनित्वमेव। तदुक्तम् "क्वचिद्बाध्यतया ख्यातिः क्वचित्ख्यातस्य बाधनम्। पूर्व्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु"। अत्राद्ये मुख्यार्थस्यार्थान्तरे सङ्क्रमणं (प्रवेशः) न तु तिरोभावः अत एवात्राजहत्स्वार्थलक्षणा। द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था" इत्तिः॥

"विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं ततः। असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा"मू०

"विवक्षितान्यपरवाच्योऽपि ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः" इत्तिः।

"तत्राद्यो रसभावादिरेक एवात्र गण्यते। एकोऽपि भेदोऽनन्तत्वात् सङ्ख्येयस्तस्य नैव यत्"मू०

"उक्तस्वरूपो रसभावादिरसंलक्ष्यक्रमव्यङ्ग्यः। अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात् क्रमोऽवश्यमस्ति किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते। एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात् सङ्ख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तम्। तथाहि एकस्यैव शृङ्गारस्य एकोऽपि सम्भोगरूपो भेदः परस्परालिङ्गनाधरपानचुम्बनादिभेदात् प्रत्येकञ्च विभावादिवैचित्र्यात् सङ्ख्यातुमशक्यः का गणनात्र सर्व्वेषाम्" इत्तिः॥

"शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येऽनुस्वानसन्निभे। ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः" मू०

"क्रमलक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन अर्थशक्त्युद्भवत्वेन शब्दार्थशक्त्युद्भवत्वेन च त्रैविध्यात् संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यम्" इत्तिः। तत्र

"वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा" मू० । "अलङ्कारशब्दस्य पृथगुपादानादनलङ्कारो" वस्तुमात्रं स्त्हाते । तत्र वस्तुरूपशब्दशक्त्युद्भवो व्यङ्ग्यो यथा । "पन्थिअ ! ण एत्थ सत्तरमत्थि मणं पत्थरत्थले गामे। उस्स- अपओहरं पेक्खिअ उण जइ वससि ता वसस्सु"। अत्र स्रस्तरादिशब्दशक्त्या यद्युपभोगक्षमोऽसि तदास्स्वेति वस्तु व्यज्यते । अलङ्काररूपो तथा "दुर्गालङ्घितविग्रहोमनसिजं संमीलयंस्तेजसा प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतोभोगिभिः । नक्षत्रेशकृतेक्षणो गिरि गुरौ गाढां रुचिं धारयन् गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः" अत्र प्राकरणिकस्य उमा नाममहादेवीवल्लभभानुदेवनृपतेर्वर्णने द्वितोयार्थसूचितमप्राकरणिकस्य पार्व्वतीवल्लभस्य वर्णनमसम्बद्धं मा प्रसाङ्क्षीदितीश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते । तदत्र उमावल्लभ उमावल्लभ इवेत्युपमालङ्कारो व्यङ्ग्यः । यथा वा "अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद: प्रभो ! । अहितः सहितः साधुयशोभिरसतामसि" । अत्रामित इत्यादावपिशब्दाभावाद्विरोधाभासो व्यङ्ग्यः व्यङ्ग्यस्यालङ्कार्य्यत्वेऽपि ब्राह्मणश्रमणन्यायादलङ्कारत्वमुपचर्य्यते" वृत्तिः ।

"वस्तु वालङ्कृतिर्व्वापि द्विधार्थः सम्भवी स्वतः । कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य चेति षट् ॥ षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः । अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम्"मू० ॥

"स्वतः सम्भवी औचित्याद्बहिरपि सम्भाव्यमानः । प्रौढोक्त्या सिद्धो न त्वौचित्येन । तत्र क्रमेण यथा । "दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति । एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः"। अनेन स्वतःसम्भविना वस्तुमात्रेण एतत्प्रतिपादिकाया भाविपरपुरुषोपभोगजनखक्षतादिगोपनरूपं वस्तुमात्रं व्यज्यते । "दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि । तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे" । अनेन स्वतः सम्भविना वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालङ्कारो व्यज्यते । "आपतन्तममुं दूरादूरीकृतपराक्रमः । बलोऽवलोकयामास मातङ्गमिव केसरी" । अत्रोपमालङ्काररूपेण स्वतःसम्भविना व्यञ्जकार्थेन बलदेवः क्षणेनैव वेणुदारिणः क्षयं करिष्यतीति वस्तु व्यज्यते । "गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः, । ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम्" । अत्र स्वतः सम्भविना विरोधालङ्कारेणाधरो निर्द्दष्टः शत्रवो व्यापादिताश्चेति समुच्चयालङ्कारो व्यङ्ग्यः । "सज्जेइ सुरहिमासो ण आपणेइ जुवइजणलक्खसहे । अहिणअसहआरमुहे णअअल्लवपत्तले अणङ्गस्स सरे"। अत्र वसन्तः शरकारः कामो धन्वी युवतयो लक्ष्यं पुष्पाणि शरा इति कविप्रौढोक्तिसिद्धं वस्तु प्रकाशीभवन्मदनविजृम्भणरूपं वस्तु व्यनक्ति ।

"रजनीषु विमलभानोः करजालेन प्रकाशितं वीर ! । धवलयति भुवनमण्डलमखिलं तव कीर्त्तिसन्ततिः सततम्"। अत्र कविप्रौढोक्तिसिद्धेन वस्तुना कीर्त्तिसन्ततेश्चन्द्रकरजालादधिककालप्रकाशकत्वेन व्यतिरेकालङ्कारो व्यङ्ग्यः "दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः । मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुविन्दवः" । अत्र कविप्रौढोक्तिसिद्धेनापह्नुत्यलङ्कारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते । ',धम्मिल्ले नवमल्लिकासमुदयो, हस्ते सिताम्भोरुहं,हारः कण्ठतटे, पयोधरयुगे श्रीखण्डलेपो घनः। एकोऽपि त्रिकलिङ्गभूमितिलक ! त्वत्कीर्त्तिराशिर्ययौ नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे" । अत्र कविप्रौढोक्तिसिद्धेन रूपकालङ्कारेण भूमिष्ठोऽपि स्वर्गस्थानामुपकारं करोषीति विभावनालङ्कारो व्यज्यते "शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः । सुमुखि ! येन तवाधरपाटलं दशति विम्बफलं शुकशावकः" । अत्रानेन कविनिबद्धस्य कस्यचित् कामिनः प्रौढोक्तिसिद्धेन वस्तुना तवाधरः पुण्यातिशयलभ्य इति वस्तु प्रतीयते । "सुभगे कोटिसङ्ख्यत्वमुपेत्य मदनाशुगैः । वसन्ते पञ्चता त्यक्ता पञ्चतासीद्वियोगिनाम्" । अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन कामशराणां कोटिसङ्ख्यत्वप्राप्त्या निखिलवियोगिमरणेन वस्तुना शराणां पञ्चता शरान् विमुच्य वियोगिनः श्रितेत्युत्प्रेक्षालङ्कारो व्यज्यते "मल्लिकामुकुले चण्डि ! भाति गुञ्जन्मधुव्रतः । प्रयाणे पञ्चवाणस्य शङ्खमापूरयन्निव" । अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन उत्प्रेक्षालङ्कारेण कामस्यायमुन्मादकः कालः प्राप्तस्तत्कथं 'मानिनि ! मानं न मुञ्चसीतिवस्तु व्यज्यते ।"महिलासहस्सभरिए तुह हिअअ

सुहअ! सा अमाअन्ती। अणुदिणमणण्मा अङ्गं तणुअं पि तणु एइ"। (अत्रामायन्तीति) कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्त्तत इति विशेषोक्त्यलङ्कारो व्यज्यते। न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता। अतः कविनिबद्धवक्तृप्रौढोक्तिः कविप्रौढोक्तेरधिकं सहृदयचमत्कारिणीति पृथक्प्रतिपादिता। एषु च अलङ्कृतिव्यञ्जनस्थलेषु रूपणोत्प्रेक्षणव्यतिरेचनादिमात्रस्य प्राधान्यं सहृदयसंवेद्यं न तु रूपयादीनामित्यलङ्कृतेरेव मुख्यत्वम्"। वृत्तिः "एकः शब्दार्थशक्त्युत्थे"सू० उभयशक्त्युद्भवे व्यङ्ग्ये एकोध्वनेर्भेदः। यथा "हिममुक्तचन्द्ररुचिरः सपद्मको मदयन् द्विजान् जनितमीनकेतनः'। अभवत् प्रसादितसुरो महोत्सवः प्रमदाजनस्य स चिराय माधवः"॥ अत्र माधवः कृष्णो माधवो वसन्त इवेत्युपमालङ्कारो व्यङ्ग्यः। एवञ्च व्यङ्ग्यभेदादेव व्यञ्जकानां काव्यानां भेदः"। वृत्तिः "तदष्टादशधा ध्वनिः"सू०। अविवक्षितवाच्योऽर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्येति त्रिविधः। विवक्षितान्यपरवाच्यस्तु असंलक्ष्यक्रमव्यङ्ग्यत्वेनैकः। संलक्ष्यक्रमव्यङ्ग्यवाच्यत्वेन च शब्दार्थोभयशक्तिमूलतया पञ्चदशेति अष्टादशभेदो ध्वनिः" वृत्तिः एषु च।

"वाक्ये शब्दार्थशक्त्युत्थस्तदन्ये पदवाक्ययोः" सू०।

"तत्र अर्थान्तरसङ्क्रमितवाच्यो ध्वनिः पदगतो यथा। धन्यः स एव तरुणो नयने तस्यैव नयने च। युवजनमोहनविद्या भवितेयं यस्य सम्मुखे सुमुखी"। अत्र द्वितीयनयनशब्दो भाग्यवत्तादिगुणविशिष्टनयनपरः। वाक्यगतो यथा। "त्वामस्मि वच्मि विदुषां समुदायोऽत्र तिष्ठति। आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत्" अत्र प्रतिपाद्यस्य सम्मुखीनत्वादेव लब्धे प्रतिपाद्यत्वे 'त्वामिति' पुनर्वचनमन्यव्यावृत्तिविशिष्टं त्वदर्थं लक्षयति। एवं वच्मीत्यनेनैव कर्त्तरि लब्धे 'अस्मीति' पुनर्व्वचनमन्यव्यावृत्तिविशिष्टं मदर्थं लक्षयति। तथा 'विदुषां समुदाय' इत्यादिवचनेनैव वक्तुः प्रतिपादने सिद्धे पुनः 'वच्मीति' वचनं 'उपदिशामि' इति वचनविशेषरूपमर्थं लक्षयति। एतानि च लक्षितानि स्वातिशयं व्यञ्जयन्ति। एतेन मम वचनं तवात्यन्तं हितं तदवश्यमेतत् कर्त्तव्यमित्यभिप्रायः। तदेवमयं वाक्यगतोऽर्थान्तरसङ्क्रमितवाच्यो ध्वनिः। अत्यन्ततिरस्कृतवाच्यः पदगतो यथा 'निश्वासान्ध इवेत्यादि'। वाक्यगतो यथा। "उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्। विदधदीदृशमेव सदा सखे! सुखितमास्स्व ततः शरदां शतम्" अन्येषां वाक्यगतत्वे उदाहृतम्। पदगतत्वे यथा। "लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः। तदा सुधास्पदमभूदधुना तु ज्वरो महान्" अत्र लावण्यादीनां तादृगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यम्। अन्येषान्तु तदुपकारित्वमेवेति तन्मूल एव ध्वनिव्यपदेशः। तदुक्तं ध्वनिकृता "एकावयवसंस्थेन भूषणेनेव कामिनी। पदद्योत्येन सुकवेर्ध्वनिना भाति भारती"। एवं भावादिष्वप्यूहम्। "भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः। कस्य नानन्दनिष्यन्दं विदधाति सदागमः"। अत्र सदागमशब्दः सन्निहितमुपनायकं प्रति सच्छास्त्रार्थमभिधाय 'सतः पुरुषस्यागमः' इति वस्तु व्यनक्ति। ननु 'सदागमः सदागम इवेति' न कथमुपमाध्वनिः, सदागमशब्दार्थयोरुपमानोपमेयभावाविवक्षणादुरहस्यसंगोपनार्थमेव हि द्व्यर्थपदप्रतिपादनं प्रकरणादिपर्य्यालोचनेन च सच्छास्त्राभिधानस्यासम्बद्धत्वात्। "अनन्यसाधारणधीर्धृताखिलवसुन्धरः। राजते कोऽपि जगति स राजा पुरुषोत्तमः"। अत्र पुरुषश्रेष्ठः पुरुषोत्तम इवेत्युपमाध्वनिः। अनयोः शब्दशक्तिमूलौ संलक्ष्यक्रमभेदौ। "सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः। आश्चर्यं तव सौकुमार्य्यमभितः क्लान्ताऽसि येनाधुना नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति तेनासितुम्"। अत्र स्वतःसम्भविना वस्तुना कृतपरपुरुषपरिचया क्लान्ताऽसीति वस्तु व्यज्यते। तस्याधुना क्लान्ताऽसि न तु पूर्वं कदाचिदपि तवैवंविधः क्लमो दृष्टः इति बोधयतोऽधुनापदस्यैवेतरपदार्थोत्कर्षादधुनापदस्यैव पदान्तरापेक्षया वैशिष्ट्यम्। "तदप्राप्तिमहादुःखविलीनाशेषपातका। तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा। चिन्तयन्ती जगत्सूतिं परं ब्रह्मस्वरूपिणम्। निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका"। अत्राशेषचयपदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसिततया भगवद्विरहदुःखचिन्ताह्लादयोः प्रत्यायनमित्यतिशयोक्तिद्वयप्रतीतिरशेषचयपदद्वयद्योत्या। अत्र च व्यञ्जकस्य प्रौढोक्तिमन्तरेणापि सम्भवात् स्वतःसम्भविता। "पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम्। देव! त्रि-

पथगात्मानं गोपयत्युपमूर्द्धनि"। अत्र 'पश्यन्तीति' कविप्रौढ़ोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण न केऽप्यन्ये दातारस्तत्र सदृशा इति व्यतिरेकालङ्कारोऽसंलक्ष्यपदद्योत्यः। एवमन्येष्वर्थशक्तिमूलसंलक्ष्यक्रमभेदेषूदाहार्य्यम्। तदेवं ध्वनेः पूर्व्वोक्तेष्वष्टादशसु भेदेषु मध्ये शब्दार्थशक्त्युत्थो व्यङ्ग्यो वाक्यमात्रे भवन्नेकः। अन्ये पुनः सप्तदश वाक्ये पदे चेति चतुस्त्रिंशदिति पञ्चत्रिंशद्भेदाः" वृत्तिः।

"प्रबन्धेऽपि मतो धीरैरर्थशक्त्युद्भवो ध्वनिः" सू०।

"प्रबन्धो महावाक्यम्। अनन्तरोक्तद्वादशभेदोऽर्थशक्त्युत्थः। यथा महाभारते गृध्रगोमायुसंवादे "अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले। कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे। न चेह जीवितः कश्चित् कालधर्म्ममुपागतः। प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी"। इति दिवसे शक्तस्य गृध्रस्य श्मशाने मृतं बालमुपादाय तिष्ठतां दिवसे तं परित्यज्य गमनमिष्टम्। "आदित्योऽयं स्थितो मूढाः! स्नेहं कुरुत साम्प्रतम्। बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन। अमुं कनकवर्णाभं बालमप्राप्तयौवनम्। गृध्रवाक्यात् कथं बालास्त्यजध्वमविशङ्किताः"। इति निशि समर्थस्य गोमायोर्दिवसे परित्यागोऽनभिलषित इति वाक्यसमूहेन द्योत्यते। अत्र स्वतःसम्भवी व्यञ्जकः। एवमन्येष्वेकादशभेदेषूदाहार्य्यम्। एवं वाच्यार्थस्य व्यञ्जकत्वे उदाहृतम्। लक्ष्यार्थस्य यथा "निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः। मिथ्यावादिनि! दूति! बान्धवजनस्याज्ञातपीडागमे! वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्"। व्यङ्ग्यार्थस्य यथा "उअ णिच्चल णिप्पन्दा भिसिणीपत्तम्मि रेहइ बलाआ। णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्तिव्व"। अनयोः स्वतःसम्भविनौ लक्ष्यव्यङ्ग्यार्थौ व्यञ्जकौ। एवमन्येष्वेकादशभेदेषूदाहार्य्यम्" वृत्तिः।

"पदांशवर्णरचनाप्रबन्धेष्वस्फुटक्रमः। असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिस्तत्र पदांशगः" सू०।

"प्रकृतिप्रत्ययोपसर्गनिपातादिभेदादनेकविधः। यथा "चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः। करं व्याधुन्वत्याः पिबसि रतिसर्व्वस्वमधरं वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती"। अत्र 'हताः' इति न पुनर्दुःखं प्राप्तवन्त इति हन्प्रकृतेः। "इङ्करङ्कुलिसंवृताधरौष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्। मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितन्तु"। अत्र 'तु' इति निपातस्यानुतापव्यञ्जकत्वम्। "न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः, सोऽप्यत्रैव निहन्ति राक्षसकुलं, जीवत्यहो रावणः। धिग्धिक् शक्रजितं, प्रबोधितवता किं कुम्भकर्णेन वा? स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः" 'अरयः' इति बहुवचनस्य, 'तापसः' इत्येकवचनस्य, 'अत्रैवेति' सर्व्वनाम्नः, 'निहन्तीति' 'जीवतीति' च तिङः 'अहो' इत्यव्ययस्य, 'ग्रामटिकेति कृत्तद्धितस्य, 'विलुण्ठनेति' व्युपसर्गस्य, 'भुजैरिति' बहुवचनस्य व्यञ्जकत्वम्। "आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा, नासाग्रे नयनं, तदेतदपरं यच्चैकतानं मनः। मौनञ्चेदमिदञ्च शून्यमधुना यद्विश्वमाभाति ते तद्ब्रूयाः सखि! योगिनी किमसि भोः! किं वा वियोगिन्यसि"। अत्र तु 'आहार इति' विषयसप्तम्याः, 'समस्तेति' 'परेति' च विशेषणद्वयस्य, 'मौनं चेदमिति' प्रत्यक्षपरामर्शिनः सर्वनाम्नः, 'आभातीति' उपसर्गस्य, 'सखीति' प्रणयस्मारणस्य, 'असि भोः' इति सोपहासोत्प्रासस्य, 'किं वा' इत्युत्तरपक्षदार्ढ्यसूचकस्य वाशब्दस्य, 'असीति' वर्त्तमानोपदेशस्य, तत्तद्विशेषव्यञ्जकत्वं सहृदयसंवेद्यम्। वर्णरचनयोरुदाहरिष्यते। प्रबन्धे महाभारते शान्तः। रामायणे करुणः मालतीमाधवरत्नावल्यादौ शृङ्गारः। एवमन्यत्र"। वृत्तिः।

"तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः। सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया। वेदखाग्निशराः ५३०४ शुद्धैरिषुबाणाग्निसायकाः" ५३५५ सू०

"शुद्धैः शुद्धभेदैरेकपञ्चाशता योजने इत्यर्थः। दिङ्मात्रन्तूदाह्रियते। "अत्युन्नतस्तनयुगा तरलायताक्षी द्वारि स्थिता तदुपयानमहोत्सवाय। सा पूर्णकुम्भनवनीरजतोरणस्रक्सम्भारमङ्गलमयत्नकृतं विधत्ते"। अत्र 'स्तनावेव पूर्णकुम्भौ, दृष्टय एव नवनीरजस्रज इति' रूपकध्वनिरसध्वन्योरेकाश्रयानुप्रवेशः सङ्करः। "धिन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि धूताध्वनीनहृदयानि मधोर्दिनानि। निस्तन्द्रचन्द्रवदनावदनारविन्दसौरभ्यसौहृदसगर्व्वसमीरणानि"। अत्र निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां संसृष्टिः। अथ गुणीभूतव्यङ्ग्यम्"। वृत्तिः

"अपरन्तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये" सू०।

"अपरं काव्यम्। अनुत्तमत्वं न्यूनतया साम्येन च सम्भवति" वृत्तिः।

"तत्र स्यादितराङ्गं काक्वाक्षिप्तञ्च वाच्यसिद्ध्यङ्गम्। सन्दिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढम्। व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ" मू०।

"इतरस्य रसादेरङ्गं रसादि व्यङ्ग्यं यथा "अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः। नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः"। अत्र शृङ्गारः करुणस्याङ्गम्। "मानोन्नतां प्रणयिनीमनुनेतुकामस्त्वत्सैन्यसागररवोद्गतकर्णतापः। हा! हा! कथं नु भवतो रिपुराजधानी–प्रासादसन्ततिषु तिष्ठति कामिलोकः"। अत्रौत्सुक्यत्राससन्धिसंसृष्टस्य करुणस्य राजविषयरताविङ्गभावः। "जनस्थाने भ्रान्तं कनकमृगतृष्णान्वितधिया वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्। कृता लङ्काभर्त्तुर्व्वदनपरिपाटीषु घटना मयाप्तं रामत्वं कुशलवसुता न त्वधिगता"। अत्र रामत्वं प्राप्तमित्यवचनेऽपि शब्दशक्तेरेव रामत्वमवगम्यते। वचनेन तु सादृश्यहेतुकतादात्म्यारोपणमाविष्कुर्व्वता तद्गोपनमपाकृतम् तेन वाच्यं सादृश्यं वाक्यार्थान्वयोपपादकतयाऽङ्गतां नीतम्। काक्वाक्षिप्तं यथा "मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबाम्युरस्तः। संचूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन"। अत्र 'मथ्नाम्येवेत्यादि' व्यङ्ग्यं वाच्यस्य निषेधस्य सह भावेनैव स्थितम्। "दीपयन् रोदसीरन्ध्रमेष ज्वलति सर्व्वतः। प्रतापस्तव राजेन्द्र! वैरिवंशदवानलः"। अत्रान्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः प्रतापस्य दवानलत्वारोपसिद्ध्यङ्गम्। "हरस्तु किञ्चित् परिवृत्तधैर्य्यश्चन्द्रोदयारम्भइवाम्बुराशिः। उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि"।

अत्र विलोचनव्यापारचुम्बनाभिलाषयोः प्राधान्ये सन्देहः। "ब्राह्मणातिक्रमत्यागो भवतामेव भूतये। जामदग्न्यश्च वो मित्रमन्यथा दुर्म्मनायते"। अत्र परशुरामो रक्षःकुलक्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्। "सन्धौ सर्व्वस्वहरणं विग्रहे प्राणनिग्रहः। अल्लावदीननृपतौ न सन्धिर्न च विग्रहः"। अत्र अल्लावदीनाख्ये नृपतौ दानसामादि मन्तरेण नान्यः प्रशमोपायः व्यङ्ग्यं युत्पन्नानामपि झटित्यस्फुटम्। "अनेन लोकगुरुणा सतां धर्म्मोपदेशिना। अहं व्रतवती स्वैरमुक्तेन किमतः परम्"

अत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्य्यक्योषिति बलात्कारोपभोगः स्फुटतया वाच्यायमान इत्यगूढम्। "वाणीरकुडुङ्गुड्डीणसउणिकोलाहलं सुणन्तीए। घरकम्मवावडाए बहूए सीअन्ति अङ्गाइम्"। अत्र दत्तसङ्केतः कश्चिल्लतागृहं प्रविष्ट इति व्यङ्ग्यात् "सीदन्त्यङ्गानि" इति वाच्यस्य चमत्कारः सहृदयसंवेद्य इत्यसुन्दरम्। किञ्च यो दीपकतुल्ययोगितादिषु उपमाद्यलङ्कारो व्यङ्ग्यः स गुणीभूतव्यङ्ग्य एव काव्यस्य दीपकादिमुखेनैव चमत्कारविधायित्वात् तदुक्तं ध्वनिकृता "अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते। तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः"। यत्र च शब्दान्तरादिना गोपनकृतचारुत्वस्य विपर्य्यासः यथा "दृष्ट्या केशव! गोपरागहृतया किञ्चिन्न दृष्टं मया तेनात्र स्खलितास्मि नाथ! पतितां किं नाम नालम्बसे। एकस्त्वं विषमेषु खिन्नमनसां सर्व्वाबलानां गतिर्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम्"। अत्र गोपरागादिशब्दानां गोपे राग इत्यादिव्यङ्ग्यार्थानां 'सलेशमिति' पदेन स्फुटतयावभासः। सलेशमितिपदस्य परित्यागे ध्वनिरेव। किञ्च यत्र वस्त्वलङ्काररसादिरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावः तत्र प्रधानकृत एव काव्यव्यवहारः तदुक्तं तेनैव "प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्। धत्ते रसादितात्पर्य्यपर्य्यालोचनया पुनरिति"। यत्र च "यत्रोन्मदानां प्रमदाजनानामभ्रंलिहः शोणमणीमयूखः। सन्ध्याभ्रमं प्राप्नुवतामकाण्डेऽप्यनङ्गनेपथ्यविधिं व्यधत्त" इत्यादौ रसादीनां नगरीवृत्तादिवस्तुमात्रेऽङ्गत्वं तत्र तेषामतात्पर्य्यविषयत्वेऽपि तैरेव गुणीभूतैः काव्यव्यवहारः। तदुक्तमस्मत्सगोत्रकविपण्डितमुख्यश्रीचण्डिदासपादैः "काव्यार्थस्याखण्डबुद्धिवेद्यस्य तन्मयीभावेनास्वाददशायां गुणप्रधानभावावभासस्तावन्नानुभूयते कालान्तरे तु प्रकरणादिपर्य्यालोचनया भवन्नप्यसौ न काव्यव्यपदेशं व्याहन्तुमीशस्तस्यास्वादमात्रायत्तत्वादिति"। केचित् चित्राख्यं तृतीयं काव्यभेदमिच्छन्ति तदाहुः "शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्" इति तन्न यदि हि अव्यङ्ग्यत्वेन व्यङ्ग्याभावस्तदा तस्य काव्यत्वमपि नास्तीति प्रागेवोक्तम्। ईषद्व्यङ्ग्यत्वमिति चेत् किं नाम ईषद्व्यङ्ग्यत्वम् आस्वाद्यव्यङ्ग्यत्वम् अना-

स्वादाव्यङ्ग्यत्वं वा। आद्ये प्राचीनभेदयोरन्तःपातः। द्वितीये त्वकाव्यत्वम्। यदि चानास्वाद्यत्वं तदा क्षुद्रत्वमेव। क्षुद्रतायामनास्वाद्यत्वात्। तदुक्तं ध्वनिकृता "प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थितेः। उभे काव्ये ततोऽन्यद्यत्तच्चित्रमभिधीयते इति" इत्तिः।

तच्च काव्यं प्रकारान्तरेण द्विविधं महाकाव्यखण्डकाव्यभेदात्। तल्लक्षणादिकं सा० द० ६परि० उक्तं यथा "सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः। सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः। एकवंशभवा भूपाः कुलजा बहवोऽपि वा। शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते। अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः। इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम्। चत्वारस्तस्य वर्गाः स्युस्तेष्वेकञ्च फलं भवेत्। आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा। क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्त्तनम्। एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः। नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह। नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते। सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्। सन्ध्यासूर्य्येन्दुरजनीप्रदोषध्वान्तवासराः। प्रातर्मध्याह्नमृगयाशैलर्त्तुवनसागराः। सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः। रणप्रयाणोपयममन्त्रपुत्रोदयादयः। वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह। कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा। नामास्य सर्गोपादेयकथया सर्गनाम तु। अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसञ्ज्ञकाः। प्राकृतैर्निर्म्मिते तस्मिन् सर्गा आश्वाससञ्ज्ञकाः। छन्दसा स्कन्दकेनैतत् क्वचिद्गलितकैरपि। अपभ्रंशनिबन्धेऽस्मिन् सर्गाः कडवकाभिधाः। तथापभ्रंशयोग्यानि छन्दांसि विविधान्यपि।

भाषाविभाषानियमात् काव्यं सर्गसमुज्झितम्। एकार्थप्रवणैः पद्यैः सन्धिसामग्र्यवर्ज्जितम्। खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च"।

तच्च काव्यं प्रकारान्तरेण द्विविधं "दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्। दृश्यं तत्राभिनेयं तत् रूपारोपात्तु रूपकम्" इति सा०द० उक्तेः

**काव्यचन्द्रिका** स्त्री काव्ये काव्यलक्षणादिप्रकाशने चन्द्रिकेव। अलङ्कारग्रन्थभेदे

**काव्यप्रकाश** पु० काव्यस्य स्वरूपादिप्रकाशो यत्र। काव्यस्य स्वरूपादिज्ञापके मम्मटभट्टप्रणीते अलङ्कारग्रन्थभेदे।

**काव्यप्रदीप** पु० काव्यस्वरूपादिप्रकाशने प्रदीप इव। गोविन्दठक्कुरनिर्म्मिते भङ्ग्या काव्यप्रकाशार्थप्रकाशके अलङ्कारग्रन्थभेदे [ प्रख्यापके चन्द्ररेखौ चौरभेदे त्रिका०

**काव्यचौर** पु० काव्यस्य चौर इव। परकीयकाव्यस्य स्वकीयत्वेन

**काव्यरसिक** त्रि० काव्यस्य रसं वेत्ति ठक्। काव्यप्रतिपाद्यरसाभिज्ञे

**काव्यलिङ्ग** न० अर्थालङ्कारभेदे अलङ्कारशब्दे ३८८पृ० विवृतिः

**काव्यशास्त्र** न० काव्यं शास्त्रमिव उपदेशकत्वात्। काव्यरूपे शास्त्रे "कान्तासम्मिततयोपदेशयुजे" इति काव्यप्रकाशे तस्य उपदेशयोगित्वोक्तेः हितशासकशास्त्रतुल्यत्वम्। "काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्"

**काव्या** स्त्री कव–वर्ण्णने करणे बा० ण्यत्। बुद्धौ तया हि नानाविधवर्ण्णनात् तथात्वम्। २पूतनायां च मेदि०।

**काव्यार्थापत्ति** स्त्री अर्थालङ्कारभेदे अलङ्कारशब्दे ३८८पृ० विवृतिः।

**काश** दीप्तौ भ्वा०आत्म०अक०सेट्। काशते अकाशिष्ट, काशाम्बभूव काशामास काशाञ्चक्रे चकाशे। णिच् अचकाशत्–त। ऋदित्त्वात् चङि नोपधाह्रस्वः। "काली कपालाभरणा चकाशे" "तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकाशे" कुमा० "नंनम्यमानाः फलदित्सयेव चकाशिरे तत्र लता विलोलाः" भट्टिः। काशी काशकः काशितः काशमानः काशः काशनं काशितुम् काशित्वा प्रकाश्य। यङ् लुक् चाकाशीति। वेदे ह्रस्वः चाकशीति

अनु+अनुरूपदीप्तौ अनुकाशते

अभि+ सर्व्वतः प्रकाशे अभिकाशते "अन्योऽनमन्नभिचाकशीति" शत०ब्रा० १४,७,१,१२, आभिमुख्येन दर्शने सक०। "घृतस्य धारा अभिचाकशीमि" ऋ०४,५८,५,८, "व्यञ्जमानाभिचाकशीमि"६,"अभिचाकशीमि अभिपश्यामि" भा०

अव+अवकाशे स्वावासयोग्यतादाप्तौ "उभयतो मांसैः संछन्नं नावकाशते" शत०८,७,४,२०, यदसत्वाये ऽधिश्रयति पत्नीं ह्यवकाशयिष्यन् भवति" "अथ यत्पत्नीं नावकाशयेत्" शत०१,३,१,२०, अवकाशः "क्लृप्तावकाशे रुचिसंप्रकृप्तम्" भट्टिः अवेक्षणे सक०। "ज्ञातप्रियानूचानानवकाशयेत्" का० श्रौ० ६,७,१६, "अवकाशयेत् अवेक्षयेत्" कर्कः।

आ+समन्तात्स्थितौ आकाशः। अभिज्ञापने सक०। "संप्रत्युरः पुरुषमाकाश्य" शत०ब्रा० ७,४,१,४३, "आकाश्य अभिज्ञाप्य" भा०।

उद्+ऊर्द्ध गतौ ऊर्द्ध प्रकाशे च। उत्काशते उत्काशः।

नि+तुल्यत्वे नीकाशः घञि पूर्वस्वरदीर्घः। [४६अ०।

सम्+नि+निष्काशने। "न सन्निकाशयेद्धर्म्मम्" भा०आश्व०

निर्+निःसारणे। "मात्रा निष्काशयेद्देषा पुनः सम्भान-काङ्क्षया" सा०द०। अत्र निःकसोहरूपत्वेन निष्कासयेदि-त्येव पाठोयुक्तः

प्र०+ प्रकृष्टदीप्तौ "एषु सर्व्वेषु भूतेषु गूढोत्मा न प्रका-शते" कठो०। "उभावपि प्रकाशेते प्रवृद्धौ वृषभाविव" भा०वि० ७५५श्लो०।

प्रति+प्रतिरूपप्रकाशे सारूप्ये च प्रतीकाशः। "यमस्य त्वा गृहेऽरसं प्रतिचाकशान" अथ० ६,२६,२,

वि+ मुकुलीभावापनोदनेन प्रकाशे। पुष्पं विकाशते। प्रकाशे च। "आदित्य इव तं देशं कृत्स्नं सर्व्वं व्यकाशयत्" भा० आ० ७४५६श्लो० वीकाशः।

सम्+ सम्यक्प्रकाशे सादृश्येन प्रकाशे च सङ्काशः "प्रतिस्रोत-स्तृणाग्राणां सहस्रं सङ्काशिरे" रामा०

**काश**—दीप्तौ दिवा०आ०अक०सेट्। काश्यते अकाशिष्ट काशाम्-बभूव आस चक्रे चकाशे ऋदित् णिच् अचकाशत् त

**काश** पु० कैन जलेन कफात्मकेन अश्यते व्याप्यतेऽत्र अश—व्याप्तौ आधारे घञ्। १काशरोगे, भरतः। कासशब्दे विवृतिः "काशाम्बुलालाविलः" शान्तिश०२स्तुते (काँचि) शब्दर०। तयोः जलेनाकीर्णत्वात्तथात्वम्। काश दीप्तौ अच्। (केशिया) २तृणभेदे "केशः काशस्तवकविकाशः" सा०द० "आकर्णमुल्लसितमम्बु विकाशिकाशनीकाशमाप समतां सितचामरस्य" माघः "कैलासकाशनीकाशमूर्त्त्यां" दशकु० "काशः स्यान्मधुरस्तिक्तः स्वादुपाकोहिमः सरः। मूत्रकृच्छ्राश्मदाहास्रक्षयपित्तजरोगहृत्" भावप्र० तद्-गुणाद्युक्तम् तत्पुष्पे न०। ३ईषदश्नाति अश—अच् कोः का। ४मूषिकभेदे पुंस्त्री स्त्रियां ङीष्। "भूम्या आखू-नालभेत" इत्युपक्रमे "काशान् दिग्भ्यः" यजु०२४,२५, "काशान् मूषिकभेदान्" वेददी०। ५ऋषिभेदे पु० काशस्य गोत्रापत्यम् अश्वा० फञ्। काशायन तद्गोत्रापत्ये पुंस्त्री

**काशक** पु० काश—ण्वुल्। १काशतृणे शब्दरत्ना०२सुहोत्रस्य पुत्रभेदे "सुहोत्रस्य सुतद्वयम्। काशकश्च महासत्त्वस्तथा-शुभमतिर्नृपः" हरिव०२२अ०। अस्यैव काशिरित्यपि नाम तत्रैव "काशेस्तु काशयोराजन्!" इति तदनन्तरोक्तेः काशेन निर्वृत्तादि काशा० चतुरर्थ्याम् इल। काशिल काशनिर्वृत्तादौ त्रि० काशे भवः उत्करा० छ। काशीय काशभवादौ त्रि०। ३प्रकाशान्विते त्रि०

**काशकृत्स्न** पु० आदिशाब्दिके ऋषिभेदे "इन्द्रश्चन्द्रः काश कृत्स्नापिशलिशाकटायनाः पाणिन्यमरजैनेन्द्रा जय-न्त्यष्टादिशाब्दिकाः" वोपदेवः। "अवस्थितेरिति काश-कृत्स्नः" शा०सू०। काशकृत्स्नेन निर्वृत्तादि अरीहणा० चतुरर्थ्यां वुञ्। काशकृत्स्नक तन्निर्वृत्तादौ त्रि०

**काशज** त्रि० काशे जायते जन०ड ७त०। काशजाते "दीर्घ काशतुषभ्राष्ट्रवटं जे" पा०तस्य आद्युदात्तता

**काशपरी** स्त्री काशः परोयस्याःगौरा०ङीष्। काशाष्टतन-द्याम् तत्र भवः नद्या० ढक्। काशपरेय तन्नदीभवे त्रि० पृषो० पस्य फः। काशफरीत्यपि तत्रैव नद्यादि गणे तस्य पाठात् भवार्थे ढक्। काशफरेय तद्भवे त्रि०

**काशपौण्ड्** पु० काशप्रधानः पौण्ड्ः। देशभेदे "कोशलाः काशपौण्ड्राश्च कालिङ्गा मागधास्तथा" भा० क० ४५अ०

**काशमय** त्रि० काशेन प्रचुरः तद्विकारोवा प्राचुर्य्ये तद्विकारे वा मयट्। १काशप्रचुरे २तन्निर्मिते च "कुशकाशमयं बर्हि रास्तीर्य्य भगवान्क्रतुः" भाग०३,२,२, श्लो०। स्त्रियां ङीप्।

**काशमर्द** पु० काशं मृद्नाति मृद—अण् उप०स०। (काल-कासेन्दा) वृक्षे रायमुकुटः [२२अ०।

**काशय** पु० काशिन्टपपुत्रे "काशेस्तु काशयोराज्न्" हरिवं०

**काशादि** पु० पाणिन्युक्ते चतुरर्थ्यामिलप्रत्ययनिमित्ते शब्दगणे स च गणः "काश पाश, अश्वत्थ पलाश, पीयू-क्षा चरण वास नड़, वन, कर्द्दम, कच्छूल, कङ्कट-गुहा, विस, तृण, कर्पूर, वर्व्वर, मधुर, ग्रह, कपित्थ. जतु, सीपाल" [ न्मलिवृक्षे जटाधरः

**काशाल्मलि** स्त्री कुत्सिता शाल्मलिः कोः का। कूटशा-

**काशि** स्त्री काश—इन्। १काशग्राम् वा ङीप् काशीत्यपि तत्र काशीशब्दे विवृतिः "आःकाशिवासिजनता ननु वञ्चिताऽभूत्" काशीख०। २काशीनगरोपलक्षिते देशभेदे पु० भूम्नि। "अतः काशयोऽग्नीनादत्त" "यत्तं काशीनां भरतः सात्वतामिव" शत०ब्रा० ३,५,४,१८, २१। "काशिष्वपि नृपो राजन् दिवोदासपितामहः" हर्य्यश्व इति विख्यातः" भा० आनु० ३०अ० "सौभा मद्रभुजिङ्गाश्च काशयोऽपरकाशयः" भा०स० ६अ०। ३सूर्य्ये पु० उज्ज्वल०। ४मुष्टौ निरु०३।"१आपइव काशिना संगृ-भीताः" ऋ० ७,१०४,८, "काशिना मुष्टिना" भा०। भावे इन् ५प्रकाशे च "अपारे यत् संगृभ्णा मघवन्! काशिरित्ते" ऋ० ३,३०,५ "काशिरिन् लोके प्रसिद्धएव यद्वा काशिर्मुष्टिः" भा०

६प्रकाशान्विते त्रि०" काशेरिदम् तस्यां भवं वा काश्या० ष्ठञ् ञिठ वा। काशिक काशिसम्बन्धिनि तत्रभवे च त्रि० ञिठ्इत् उच्चारणार्थः स्त्रियां ष्ठञि ङीप् ञिठि टाप्। साच वा मनन्ततायां पाणिनिहृत्तौ स्वार्थे क। काशिका काशीपुर्य्यां स्त्री।

**काशिन्** त्रि०काशते काश+णिनि। १प्रकाशशीले। जयकाशी स्त्रियां ङीप् मत्तकाशिनी काश+इनि।२काशरोगयुक्ते त्रि०

**काशिप** पु० काशीन् देशान् तत्स्थपुरीं वा पाति पा—क १ काशिदेशाधिपे दिवोदासादौ काशीनाथे २ महादेवे च काशिनाथादयोऽप्यत्र। "सुवर्णवर्णाणसुमेत्य काशिपं वपुष्टमार्थं वरयांप्रचक्रिरे"

**काशिपुरी** स्त्री काशीदेशे पुरी कर्म्म० या। काश्याम् स्वनामख्यातपुरीभेदे। "समेतं पार्थिवं चत्र काशिपुर्य्यां स्वयंवरे" भा०आनु० १६८अ०। काशिनगर्य्यादयोऽप्यत्र स्त्री

**काशिराज** पु० काशीनां जनपदानां राजा टच्समा०। काशिदेशाधिपे। तद्देशाधिपास्च कालभेदेन यद्यपि बहवस्तथापि काशिनामकन्टपेण तदन्वयेन तत्र काशीपुरीकरणात् तदन्वयजस्यैव तदधिपत्यं प्रथितं तदेतत् हरिवं ३२अ० वर्णितं यथा

"काशेस्तु काशयोराजन् पुत्रो दीर्घतपास्तथा। बभूव दीर्घतपसो विद्वान् धन्वन्तरिः सुतः। धन्वन्तरेस्तु तनयः केतुमानिति विश्रुतः। अथ केतुमतः पुत्रो विद्वान् भीमरथः स्मृतः। दिवोदास इति ख्यातः सर्वरक्षः प्रणाशनः। एतस्मिन्नेव काले तु पुरीं वाराणसीं न्टपः। शून्यां निवेशयामास क्षेमको नाम राक्षसः। शप्ताहि सा मतिमता निकुम्भेन महात्मना। शून्या वर्षसहस्रं वै भवत्विति नराधिप!। तस्यान्तु शप्तमात्रायां दिवोदासः प्रजेश्वरः। विषयान्ते पुरीं रम्यां गोमत्यां संन्यवेशयत्। भद्रश्रेण्यस्य पुत्राणां शतमुत्तमधन्विनाम्। हत्वा निवेशयामास दिवोदासः प्रजेश्वरः। दिवोदासस्य पुत्रस्तु वीरो राजा प्रतर्द्दनः। प्रतर्द्दनस्य पुत्रौ द्वौ वत्सो भार्गव एव च। अलर्को राजपुत्रस्तु राजा सन्नतिमान् भुवि। हैहयस्य तु दायाद्यं हृतवान् वै महीपतिः। आजह्रे पितृदायाद्यं दिवोदासहृतं बलात्। भद्रश्रेण्यस्य पुत्रेण दुर्द्दमेन महात्मना। दिवोदासेन बालेति घृणया स विसर्ज्जितः। अष्टारथो नाम न्टपः सुतो भीमरथस्य वै। तेन पुत्रेषु बालेषु प्रहृतं तस्य भारत। वैरस्यान्तं महाराज! क्षत्रियेण विधित्सता। अलर्कः काशिराजस्तु ब्रह्मण्यः सत्यसङ्गरः। षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च। तस्यासीत्सुमहद्राज्यं रूपयौवनशालिनः। युवा रूपेण सम्पन्न आसीत् काशिकुलोद्वहः। लोपामुद्राप्रसादेन परमायुरवाप सः। वयसोऽन्ते महाबाहुर्हत्वा क्षेमकराक्षसम्। रम्यां निवेशयामास पुरीं वाराणसीं न्टपः"।

तत्रापि दिवोदासस्यैव तथात्वम् सर्वत्र प्रथितं सहि देवान् पृथिव्या निष्कास्य वाराणस्यां राज्यं चकारेति काशीख०४३अ० वर्णितं यथा "गतेषु देवसंघेषु पृथिव्याः पृथिवीपतिः। चकार राज्यं निर्द्वन्द्वं दिवोदासः प्रतापवान्। विधाय राजधानीं स वाराणस्यां सुनिश्चलाम्"। इत्युपक्रम्य तद्राज्यं वर्णितम् "दिवोदासस्य तस्यैवं काश्यां राज्यं प्रशासतः। यातमेकदिनप्रायं शरदामयुताष्टकमिति" तत्र तस्य बहुकालराज्यकरणात् तथात्वम् "काशिराजं दिवोदासम्" सुश्रु०। "द्वापरे तु दीर्घजिह्वासुरांश न्टपभेद स्तन्नाम्ना प्रसिद्धः "दीर्घजिह्वस्तु कौरव्य! य उक्तो दानवर्षभः। काशिराजः स विख्यातः पृथिव्यां पृथिवीपतिः" भा०आ०६७अ०। तस्यासुरांशभवत्वात् विष्णुं प्रति द्वेषो यथा हरिवं०६१अ०। "कौशल्यः काशिराजश्च दशार्णाधिपतिस्तथा" इत्युपक्रम्य "तमन्वयुर्जरासन्धं विद्विषन्तो जनार्द्दनम्" इत्युक्तम्। स च अम्बिकादीनां पिता। "विचित्रवीर्य्योऽथोवाह काशिराजसुते क्रमात्। स्वयंवरादुपानीते ह्यम्बिकाम्बालिके उभे" भाग० ६,२२, १८। स च नाम्ना काशिराजत्वेऽपि काशिपतिरासीत्। "अथ काशिपतेर्भीष्मः कन्यास्तिस्रोऽप्सरोपमाः। शुश्राव सहिता राजन् वृण्वाना वै स्वयंवरम्" भा० आ० १०२अ०। "एवमुक्त्वा महीपालान् काशिराजश्च वीर्य्यवान्" तत्रैवोक्तेः "धृष्टकेतुश्चेकितानः काशिराजश्च वीर्य्यवान्" गीता। काशिपत्यादयोऽप्यत्र।

**काशिष्णु** त्रि० काश—बा० इष्णुच्। प्रकाशशीले। "काशिष्णुना कनकवर्णविभूषणेन" भाग० ४,३०,६,

**काशी** स्त्री काशते काश—इन् स्त्रियां ङीप्। काश—णिच्—अच् गौरा० ङीष्। असिवरणयोर्मध्यवर्त्तिन्यां स्वनामख्यातायां शिवपुर्य्याम्। तन्निरुक्त्यादि काशीख०। "निर्व्वाणकाशनाद्यत्र काशीति प्रथिता पुरी। अविमुक्तो महाक्षेत्रे न मुक्तो शम्भुना क्वचित्। प्रागेव हि सुमेरुनर्घ्यं जातं जाम्बुनदं स्वयम्। पुनः स्वर्ङ्निर्नितोयेन हीरेण यदि सङ्गतम्। चक्रपुष्करिणीतीर्थं प्रागेव श्रेयसांपदम्। ततः श्रेष्ठतरं शम्भोर्मणिश्रवणभूषणात्। आनन्दकानने तस्मिन्नविमुक्ते शिवा-

लवे। प्रागेव मुक्तिः संसिद्धा गङ्गा-सङ्गात्ततोऽधिका। यदाप्रभृति सा गङ्गा मणिकर्णीं समागता। तदाप्रभृति तत् क्षेत्रं दुष्प्रापं त्रिदशैरपि। कृत्वा कर्माण्यनेकानि कल्याणानीतराणि च। तानि क्षणात् समुत्क्षिप्य काशीसंस्थोऽमृतो भवेत्। तस्य वेदान्तवेद्यस्य निदिध्यासनतो विना। विना साङ्ख्येन योगेन काश्यां संस्थोऽमृतो भवेत्। कर्म्मनिर्मूलनकृता विना ज्ञानेन कुम्भज!। शशिमौलिप्रसादेन काश्यां संस्थोऽमृतोभवेत्। यत्नतोऽयत्नतो वापि कालात् त्यक्त्वा कलेवरम्। तारकस्योपदेशेन काशीसंस्थोऽमृतो भवेत्। अनेकजन्मसंसिद्धैर्बद्धोऽपि प्राकृतैर्गुणैः। असिसंभेदयोगेन काशीसंस्थोऽमृतो भवेत्। देहत्यागोऽत्र वै दानं देहत्यागोऽत्र वै तपः। देहत्यागोऽत्र वै योगः काश्यां निर्व्वाणसौख्यकृत्। प्राच्योत्तरवहां काश्यामपि दुष्कृतवानपि। यायात् स्वं हेलया त्यक्त्वा तद्विष्णोः परमं पदम्। महेन्द्राग्निमुखा देवा दृष्ट्वा मुक्तिपथोन्मुखान्। सर्व्वान् सर्वेशमालोक्य रक्षाङ्कमुः पुरा सुरः। असिन्महासिरूपाञ्च पापिसङ्गतिखण्डिनीम्। दुष्टप्रवेशं धन्वानां धुनीं देवा विनिर्म्ममुः। वरणाञ्च व्यधुस्तत्र क्षेत्रविघ्ननिवारिणीम्। दुर्द्दत्तस्य प्रवृत्तेश्च निवृत्तिकरणीं सुराः। दक्षिणोत्तरदिग्भागे कृत्वासिं वरणां सुराः। क्षेत्रस्य मोक्षनिःक्षेपरक्षां निर्वृतिमाययुः। क्षेत्रस्य पश्चाद्दिग्भागे तं देहलिविनायकम्। स्वयं न्यापारयामास रक्षार्थं शशिशेखरः। अनुज्ञातप्रवेशानां विश्वेशेन कृपावताम्। ते प्रवेशं प्रयच्छन्ति नान्येषां हि कदाचन"। अत्रार्थे प्राचीनेतिहासमुक्त्वा माहात्म्यादिकमुक्तं यथा— "एवं काश्यां प्रविश्यापि पापी धर्म्मानुषङ्गतः। न क्षेत्रफलमाप्नोति वहिर्भवति तत्क्षणात्। तस्माद्विश्वेश्वरानैव काशीवासेऽत्र कारणम्। असिश्च वरणा यत्र क्षेत्ररक्षाकृतौ कृते। वाराणसीति विख्याता तदारभ्य महामुने!। असेश्च वरणायास्र सङ्गमं प्राप्य काशिका। वाराणसीह करुणामयदिव्यमूर्त्तिरुत्सृज्य यत्र तु तनुं तनुभृत् सुखेन। विश्वेशहृन्महसि यत् सहसा प्रविश्य रूपेण तां सितनुतामदवीन्दधाति। जातो मृतो बहुषु तीर्थवरेषु रे त्वं जन्तो! न जातु तव शान्तिरभूच्चिमञ्च। वाराणसीति गदतीह मृतोऽमृतत्वं प्राप्याधुना मम बलात् स्मरशासनः स्याः। अन्यत्र तीर्थसलिले पतितो द्विजन्मा देवादिभावमयते न तथा तु काश्याम्। चित्रं यदत्र पतितःपुनरुत्थितं न प्राप्नोति पुक्कशजनोऽपि क्रिमप्रजन्मा। सैषा पुरी संसृतिरूपपारावारस्य पारं पुरुषः पुरारिः। यद्वां परं पौरुषमर्थमिच्छन् सिद्धिं नयेत् पौरपरम्परासः। तीर्थान्तराणि मनुजः परितोऽपगाह्य हित्वा तनुं कलुषितां, दिवि दैवतं स्यात्। वाराणसीपरिसरे तु विसृज्य देहं सन्देहभाग्भवति देहलवाप्ययेऽपि। वाराणसी शमवशीकरणादृतेऽपि योगादयोगिजनताञ्जनतापहन्त्री। तत्तारकं श्रवणगोचरतां नयन्ती तद्ब्रह्म दर्शयति येन पुनर्भवो न। वाराणसीपरिसरे तनुमिष्टदात्रीं धर्म्मार्थसौख्यनिलयामहहा विसृजन्। दृष्टं पदं किमपि हृष्टतरोऽभिलाष्यलाभोऽस्तु मूलमपि नो यदवाप शून्यम्। आः काशिरासिजनता ननु वञ्चिताभूद्भालेविलोचनवता वनिताङ्गभाजा। आदाय यत् सुकृतभाजनमिष्टदेहं निर्वाणमात्रमपवर्जयताऽपुनर्भुः। वाराणसी स्फुरदसीमगुणैकभूमिर्यत्र स्थितास्तनुभृतः शशिभृत्प्रभावात् सर्वे गलेगरलिणोऽक्षियुजो ललाटे, वामाङ्ग,वामतनवोऽतनवस्ततोऽन्ते। आनन्दकाननमिदं सुखदं पुरैव तत्रापि चक्रसरसी मणिकर्णिकाऽथ। स्वःसिन्धुसङ्गतिरथोपरमास्पदञ्च विश्वेशितुः किमिह तन्न विमुक्तये यत्। वाराणसीह वरणासिसरिद्वरिष्ठासंभेदखेददमनी द्युनदीलसन्त्योः। विश्रामभूमिरचलामलमोक्षलक्ष्म्या ह्येनां विहाय किमु सीदति मूढजन्तुः। किं विस्मृतं त्वहह गर्भजमाननस्य कार्त्तान्तदूतकृतबन्धनताडनं वा। शम्भोरनुग्रहपरिग्रहलभ्यकाशीं मूढो विहाय किमु याति करस्थमुक्तिम्। तीर्थान्तराणि कलुषाणि वहन्ति सद्यः श्रेयोद्रवन्त्यपि बहु त्रिदिवं नयन्ति। पानावगाहनविधानतनुप्रहाणैर्वाराणसी तु कुरुते वत मूलनाशम्। काशीपुरीपरिसरे मणिकर्णिकादौ त्यक्त्वा तनुं तनुभृतस्तनुमाप्नुवन्ति। भालेविलोचनवतीं गलनीललक्ष्मीं वामाङ्गबन्धुरवधूं विबुधैकराध्याम्। ज्ञात्वा प्रभावमतुलं मणिकर्णिकाया यत् पुद्गलन्त्यजति चाशुचि पूयगन्धि। स्वात्मावबोधमहसा सहसा मिलित्वा कल्पान्तरेष्वपि स नैव पृथक्त्वमेति। रागादिदोषपरिभूतमनोहृषीकाः काशीपुरीमतुलदिव्यमहाप्रभावाम्। ये कल्पयन्ति परतीर्थसमां समन्तात्ते पापिनो न सह तैः परिभाषणीयम्। वाराणसीं स्मरहरप्रियराजधानीं त्यक्त्वा कुतो व्रजसि मूढ! दिगन्तरेषु। प्राप्याप्यजाड्यसु-

स्वभां स्थिरमोक्षलक्ष्मीं लक्ष्मीं स्वभावचपलां किमु कामयेथाः?। विद्याधनानि सदनानि गजाश्वभूत्या स्रक्चन्दनानि वनिताश्च नितान्तरम्याः। स्वर्गोऽप्यगम्यदिह नोद्यमभाजि पुंसि वाराणसी त्वसुलभाऽसुलभा विमुक्तिः। धात्रा धृतानि तुलया तुलनामवैतुं वैकुण्ठमुख्यभुवनानि च काशिका च। तान्युद्ययुर्लघुतया न्यगिर्यं गुरुत्वात् तस्थौ पुरीह पुरुषार्थचतुष्टयस्य। काशीपुरीमधिवसन् हि नरोऽनरोऽपि ह्यारोप्यमाण इह मानवदेहकरुद्रः। नानोपसर्गजनिसर्गजदुःखभारे कर्म्मापनुत्य स विशेत् परमेशधाम्नि। स्थिरापायं कायं जननमरणक्लेशनिलयं विहायास्यां काश्यामिह परिग्रहीत न कुतः। वपुस्तेजोरूपं स्थिरतरपदानन्दसदनं विमूढोऽसौ जन्तुः स्फुटितमिव काश्यां विनिमयन्। अहो लोकः शोकं किमिह सहते हन्त हतधीर्विपद्भारैः सारैर्नियतनिधनैर्ध्वंसितधनैः। क्षितौ सत्यां काश्यां कथयति शिवो यत्र निधने श्रुतौ किञ्चिद्भूयः प्रविशति न येनोदरदरीम्। काशिवासिनि जने वनेचरे द्विजभुज्यपि समीरभोजने। स्वैरचारिणि जितेन्द्रियेऽप्यहो काशिवासिपुरुषे विशिष्टता नास्तीह दुष्कृतकृतां सुकृतात्मनां वा काचिद्विशेषगतिरन्तकृता। हि काश्याम्। वीजानि कर्म्मजनितानि यदूषरायां नाङ्कूरयन्ति हरदृग्ज्वलितानि तेषाम्। शशका मशका वकाः शुकाः कलविङ्काश्च वृकाः सजम्बुकाः। तुरगोरगयानरा नरा गिरिजे! काशिमृताः गतासृताः। अरुद्ररुद्राक्षफणीन्द्रभूषणा त्रिपुण्ड्रचन्द्रार्द्धधरा धराकृताः। निरन्तरं काशिनिवासिनो जना गिरीन्द्रजे! पारिषदा मता मम। यावन्त एव निवसन्ति च जन्तवोऽत्र काश्यां जलस्थलचराण्डजजम्बुकाद्याः। तावन्त एव मदनुग्रहरुद्रदेहाद्देहावसानमधिगम्य मयि प्रविष्टाः। ये तु वर्षेषवो रुद्रा दिवि! देवि! प्रकीर्त्तिताः। वातेषवोऽन्तरीक्षे ये ये भुव्यन्नेषवः प्रिये!। रुद्रा दश दश प्राच्यवाचीप्रत्यगुदक्स्थिताः। ऊर्द्धदिक्स्थाश्च ये रुद्राः पठ्यन्ते वेदवादिभिः। असंख्याताः सहस्राणि ये रुद्रा अधिभूतले। तत्सर्वेभ्योऽधिकाः काश्यां जन्तवो रुद्ररूपिणः। रुद्रावासस्ततः प्रोक्तमविमुक्तं घटोद्भव!। तस्मादभ्यर्च्य काशीस्थान् वर्णान् वर्णेतराश्रमान्। अद्वयेश्वरबुद्ध्या च रुद्रार्च्चाफलभाक् नरः। श्मशब्देन शवः प्रोक्तः शानं शयनमुच्यते। निर्वचन्ति श्मशानार्थं मुने! शब्दार्थकोविदाः। महान्त्यपि च भूतानि प्रलये समुपस्थिते। शेरतेऽत्र शवा भूत्वा श्मशानन्तु ततो महत्। अप्सु भूरिह लये लयं व्रजेदापश्चौर्वैवदनोग्रकन्दरे। मातरिश्वनि महातनूनपाद्व्योम्नि संचरति वै सदागतिः। व्योम चापि लयमेत्यहङ्कृतौ सापि षोड़शविकारसंयुता। लीयते महति बुद्धिसंज्ञके हा महान् प्रकृतिमध्यगो भवेत्। सा गुणत्रयमयी च निर्गुणं तं पुमांसमवगुह्य तिष्ठति। पञ्चविंशतितमः परः पुमान् देहगेहपतिरेष जीवकः। प्राकृतः प्रलय एष उच्यते हंसयानहरिरुद्रवर्जितः। कालमूर्त्तिरथ तञ्च पुरुषं हेलया कलयतीश्वरः परः। स वै महाविष्णुरितीज्यते बुधैस्तं वै महादेवमुदाहरन्ति। सोऽन्तादिमध्यैः परिवर्जितः शिवः स श्रीपतिः सोऽपि हि पार्वतीपतिः। दैनन्दिनेऽथ प्रलये त्रिशूलकोटौ समुत्क्षिप्य पुरीं हरः स्वाम्। बिभर्त्ति संवर्त्तमहास्थिभूषणस्ततो हि काशी कलिकालवर्जिता। स्कन्द उवाच। वाराणसीति काशीति रुद्रावास इति द्विज!। महाश्मशानमित्येवं प्रोक्तमानन्दकाननम्। इति देवीपुरः प्रोक्तं देवदेवेन शम्भुना। यथा विष्णौ पुराख्यातं तथैवच मया श्रुतम्”।

सा च सप्तमोक्षपुर्य्यन्तर्गता; “अयोध्या मथुरा माया काशी काञ्चिरवन्तिका। पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः। काशी०। “अन्यानि यानि तीर्थानि काशीप्राप्तिकराणि च। काशीं प्राप्यैव मोक्षन्ते नान्यथा कल्पकोटिभिः” भा०टी०नीलकण्ठधृतम् “तत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूय मोक्षीभवति” श्रुतिः। तेन काशीमृतानां जन्तूनां शिवसकाशात्तत्त्वज्ञानलाभेन तत्क्षणात् मुक्तिः तत्त्वज्ञानस्य प्रारब्धेतरसर्व्वकर्म्मनाशकत्वात् तेनैव सर्वकर्म्मनाशः। सञ्चितकर्म्मणां कायव्यूहेन भोगात् परिक्षपणमित्यन्ये। इतरतीर्थमृतानां तु ब्रह्मादिलोकप्राप्तौ तत्र श्रवणमननाद्यपेक्षेति भेदः।

“सा काशी त्रिपुरारिराजनगरी पायादपायाज्जगत्”। काशी० “कदा काश्यां गमिष्यामि कदा द्रक्ष्यामि शङ्करम्। इति ब्रुवाणः सततं काशीवासफलं लभेत्।

२ काशीस्थदेवीमूर्त्तिभेदे च “विश्वेशं माधवं ढुण्ढिं दण्डपाणिञ्च भैरवम्। वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम्। स्वल्पार्थे ङीप्। ३ स्वल्पकाशतृणे भरतः

**काशीखण्ड** न० काशीमाहात्म्यप्रतिपादकं खण्डम् । स्कन्दपुराणान्तर्गते काशीमाहात्म्यादिप्रतिपादके व्यासप्रणीते खण्डभेदे तत्प्रतिपाद्यविषयाश्च तत्रानुक्रमणिकाध्याये दर्शिता यथा

"विन्ध्यनारदसंवादः प्रथमं परिकीर्त्तितः । सत्यलोकप्रभावश्च द्वितीयः समुदाहृतः । अगस्त्याश्रमपदे देवानामागमस्ततः । पतिव्रताचरित्रं च प्रस्थानं कुम्भसम्भुवः । तीर्थप्रशंसा च ततः सप्तपुर्य्यस्ततः स्मृताः । संयमिन्याः स्वरूपञ्च ब्रह्मलोकस्ततः परम् । इन्द्राग्न्योर्लोकसंप्राप्तिस्ततश्च शिवशर्म्मणः । अग्नेः समुद्भवस्तस्मात् क्रव्यादवरुणसम्भवः । गन्धवत्यलकापुर्य्यौरीशयोस्तु समुद्भवः । चन्द्रलोकपरिप्राप्तिः शिवशर्म्मद्विजन्मनः । उडुलोककथा तस्मात्ततः शुक्रसमुद्भवः । महेशगुरुशौरीणां लोकानां वर्णनं ततः । सप्तर्षीणां ततोलोका ध्रुवस्य च ततस्तपः । ततोध्रुवपदप्राप्तिर्भुवर्लोकस्थितिस्ततः । दर्शनं सत्यलोकस्य तस्य वै शिवशर्म्मणः । चतुर्भुजाभिषेकश्च निर्व्वाणं शिवशर्म्मणः । स्कन्दागस्त्योश्च संवादो मणिकर्ण्याः समुद्भवः । ततस्तु गङ्गामाहात्म्यं ततोदशहरास्तवः । प्रभावश्चापि गङ्गाया गङ्गानामसहस्रकम् । वाराणस्याः प्रशंसा च भैरवाविर्भवस्ततः । दण्डपाणेः समुद्भूतिर्ज्ञानवाप्युद्भवस्ततः । आख्यानञ्च कलावत्याः सदाचारस्ततः परम् । ब्रह्मचारिप्रकरणं ततः स्त्रीलक्षणानि च । कृत्याकृत्यप्रकरणमविमुक्तेशवर्णनम् । ततोगृहस्थधर्म्माश्च ततोयोगनिरूपणम् । कालज्ञानं ततः प्रोक्तं दिवोदासस्य वर्णनम् । काश्याश्च वर्णनं तस्माद्योगिनीवर्णनं ततः । लोलार्कस्य समाख्यानमुत्तरार्ककथा ततः । शाम्बादित्यस्य महिमा द्रुपदादित्यशंसनम् । ततस्तु गरुडाख्यानमरुणार्कोदयस्ततः । दशाश्वमेधिकं तीर्थं मन्दराच्च गणागमः । पिशाचमोचनाख्यानं गणेशप्रेषणं ततः । माया गणपतेश्चाथ ढुण्टिप्रादुर्भवस्ततः । विष्णुमायाप्रपञ्चोऽथ दिवोदासविसर्ज्जनम् । ततः पञ्चनदोत्पत्तिर्विन्दुमाधवसम्भवः । ततोवैष्णवतीर्थानां माहात्म्यपरिवर्णनम् । प्रयाणं मन्दरात्काश्यां वृषभध्वजशूलिनः । जैगीषव्येण संवादो ज्येष्ठस्थाने महेशितुः । ततः क्षेत्ररहस्यस्य कथनं पापनाशनम् । अथातः कन्दुकेशस्य व्याघ्रेशस्य समुद्भवः । ततः शैलेश्वरकथा रत्नेशस्य च दर्शनम् । कृत्तिवासःसमुत्पत्तिस्ततश्चायतनागमः । देवतानामधिष्ठानं दुर्गासुरपराक्रमः । दुर्गाया विजयश्चाथ तत ओङ्कारवर्णनम् । पुनरोङ्कारमाहात्म्यं त्रिलोचनसमुद्भवः । त्रिलोचनप्रभावोऽथ केदाराख्यानमेव च । ततो धर्म्मेशमहिमा ततः पक्षिकथा शुभाः । ततो विश्वभुजाख्यानं दुर्द्दमस्य कथा ततः । ततोवीरेश्वराख्यानं वीरेशमहिमा पुनः । गङ्गा तीर्थैश्च संयुक्ता कामेशमहिमा ततः । विश्वकर्म्मेशमहिमा दक्षयज्ञसमुद्भवः । सत्या देहविसर्गश्च ततोदक्षेश्वरोद्भवः । ततो वै पार्व्वतीशस्य महिम्नः परिकीर्त्तनम् । गङ्गेशस्याथ महिमा नर्मदेशसमुद्भवः । सतीश्वरसमुत्पत्तिरमृतेशादिवर्णनम् । व्यासस्य हि भुजस्तम्भो व्यासशापविमोक्षणम् । क्षेत्रतीर्थकदम्बं च मुक्तिमण्डपसङ्कथा । विश्वेशाविर्भवश्चाथ ततोयात्रापरिक्रमः । एतदाख्यानशतकं क्रमेण परिकीर्त्तितम्" ।

**काशीनाथ** पु० ६ त० । महादेवे काशीपत्यादयोऽप्यत्र" कालं निकटतो ज्ञात्वा काशीनाथं समाश्रयेत्" । काशीनाथं समाश्रित्य कुतःकालभयं न्टणाम्" काशीख० ।

**काशीयात्रा** स्त्री७त०; काशीस्थतीर्थेषु यात्रायाम् तत्प्रकारः काशीख० दर्शितोयथा ।

"श्रीवेदव्यास उवाच । निशामय महाप्राज्ञ ! लोमहर्षण ! वच्मि ते । यथा प्रथमतो यात्रा कर्त्तव्या यात्रिकैर्मुदा । सचेलमादौ संस्नाय चक्रपुष्करिणीजले । संतर्प्य देवान् सपितॄन् ब्राह्मणांश्च तथार्थिनः । आदित्यं द्रौपदीं विष्णुं दण्डपाणिं महेश्वरम् । नमस्कृत्य ततोगच्छेद्द्रष्टुं ढुण्ढिविनायकम् । ज्ञानवापीमुपस्पृश्य नन्दिकेशं ततोऽर्च्चयेत् । तारकेशं ततोऽभ्यर्च्च्य महाकालेश्वरं ततः । ततः पुनर्द्दण्डपाणिरित्येषा पञ्चतीर्थिका । दैनन्दिनी विधातव्या महाफलमभीप्सुभिः । ततो वैश्वेश्वरी यात्रा कार्य्या सर्व्वार्थसिद्धिदा । द्विसप्तायतनानाञ्च१४कार्य्या यात्रा प्रयत्नतः । कृष्णां प्रतिपदं प्राप्य भूतावधि यथाविधि । अथ वा प्रतिभूतञ्च क्षेत्रसिद्धिमभीप्सुभिः । तत्तत्तीर्थकृतस्नानस्तत्तल्लिङ्गकृतार्च्चनः । मौनेन यात्रां कुर्वाणः फलं प्राप्नोति यात्रिकः । ओङ्कारं प्रथमं पश्येन्मत्स्योदर्य्यां कृतोदकः । त्रिविष्टपं महादेवं ततोवै कृत्तिवाससम् । रत्नेशं चाथ चन्द्रेशं केदारं च ततोव्रजेत् । धर्म्मेश्वरं च वीरेशं गच्छेत् कामेश्वरं ततः । विश्वकर्म्मेश्वरं चाथ मणिकर्णीश्वरं ततः । अविमुक्तेश्वरं दृष्ट्वा ततोविश्वेशमर्च्चयेत् । एषा यात्रा प्रयत्नेन कर्त्तव्या क्षेत्रवासिना । यस्तु क्षेत्रमुपित्वा तु नैतां यात्रां समाचरेत् । विघ्नास्तस्योपतिष्ठन्ते क्षेत्रोच्चाटनसूचकाः । अष्टायतनया-

ऽऽन्या कर्त्तव्या विघ्नशान्तये । दक्षेशः पार्व्वतीशश्च तथा पशुपतीश्वरः । गङ्गेशो नर्म्मदेशश्च गभस्तीशः सतीश्वरः । अष्टमस्तारकेशश्च प्रत्यष्टमि विशेषतः । दृश्यान्येतानि लिङ्गानि महापापोपशान्तये । अपरापि शुभा यात्रा योगक्षेमकरी सदा । सर्व्वविघ्नोपहन्त्री च कर्त्तव्या क्षेत्रवासिभिः । शैलेशं प्रथमं वीक्ष्य वरणास्नानपूर्वकम् । स्नानं तु सङ्गमे कृत्वा द्रष्टव्यः सङ्गमेश्वरः । स्वर्लीनं तीर्थे सुस्नातः पश्येत् स्वर्लीनमीश्वरम् । स्नात्वा मन्दाकिनीतीर्थे द्रष्टव्यो मध्यमेश्वरः । पश्येद्धिरण्यगर्भेशं तत्र तीर्थे कृतोदकः । मणिकर्ण्यां ततः स्नात्वा पश्येदीशानमीश्वरम् । उपशान्तशिवं पश्येत् तत्कूपविहितोदकः । पञ्चचूड़ाह्रदे स्नात्वा ज्येष्ठस्थानं ततोऽर्च्चयेत् । चतुःसमुद्रकूपे तु स्नात्वा देवं समर्च्चयेत् । देवस्याग्रे तु या वापी तत्रोपस्पर्शने कृते । शुक्रेश्वरं ततः पश्येत् तत्कूपविहितोदकः । दण्डखाते ततः स्नात्वा व्याघ्रेशम्पूजयेत्ततः । शौनकेश्वरकुण्डे तु स्नानं कृत्वा ततोऽर्च्चयेत् । जम्बुकेशं महालिङ्गं कृत्वा यात्रामिमां नरः । क्वचिन्न जायते भूयः संसारे दुःखसागरे । समारभ्य प्रतिपदं यावत् कृष्णचतुर्दशीम् । एतत् क्रमेण कर्त्तव्यान्येतदायतनानि वै । इमां यात्रां नरः कृत्वा न भूयोऽप्यभिजायते । अन्या यात्रा प्रकर्त्तव्यैकादशायतनोद्भवा । अग्नीध्रकुण्डे सुस्नातः पश्येदग्नीध्रमीश्वरम् । उर्व्वशीशं ततो गच्छेत्ततस्तु नकुलीश्वरम् । आषाढीशं ततो दृष्ट्वा भारभूतेश्वरं ततः । लाङ्गलीशमथालोक्य ततस्तु त्रिपुरान्तकम् । ततो मनःप्रकाशेशं प्रतीकेशमथो व्रजेत् । मदालसेश्वरं तस्मात्तिलपर्णेश्वरं ततः । तत्रैकादशलिङ्गानामेषा कार्य्या प्रयत्नतः । इमां यात्रां प्रकुर्व्वाणो रुद्रत्वं प्राप्नुयान्नरः । अतःपरं प्रवक्ष्यामि गौरीयात्रामनुत्तमाम् । शुक्लपक्षे तृतीयायां सा यात्रा विश्वगृद्धिदा । गोप्रेक्षतीर्थे सुस्नाय सुखनिर्मालिकां व्रजेत् । ज्येष्ठवाप्यां नरः स्नात्वा ज्येष्ठां गौरीं समर्चयेत् । सौभाग्यगौरी संपूज्या ज्ञानवाप्यां कृतोदकैः । ततः शृङ्गारगौरीञ्च तत्रैव च कृतोदकः । स्नात्वा विशालगङ्गायां विशालाक्षीं ततो व्रजेत् । सुस्नातो ललितातीर्थे ललितामर्चयेत्ततः । स्नात्वा भवानीतीर्थेऽथ भवानीं परिपूजयेत् । मङ्गला च ततोऽभ्यर्च्या विन्दुतीर्थकृतोदकैः । ततो गच्छेन्महालक्ष्मीं स्थिरलक्ष्मीसमृद्धये । इमां यात्रां नरः कृत्वा क्षेत्रेऽस्मिन् मुक्तिजन्मनि । न दुःखैरभिभूयेत इहामुत्रापि कुत्रचित् । कुर्य्यात् प्रतिचतुर्थीह यात्रां विघ्नेशितुः सदा । ब्राह्मणेभ्यस्तदुद्देशाद्देया वै मोदका मुदे । भौमे भैरवयात्रा च कार्य्या पातकहारिणी । रविवारे रवेर्यात्रा षष्ठ्यां वा रविसंयुजि । तत्रैव रविसप्तम्यां सर्वविघ्नोपशान्तये । नवम्यामथ वाष्टम्यां चण्डीयात्रा शुभावहा । अन्तर्गृहस्य वै यात्रा कर्त्तव्या प्रतिवत्सरम् । प्रातः स्नानं विधायादौ नत्वा पञ्च विनायकान् । नमस्कृत्याथ विश्वेशं स्थित्वा निर्व्वाणमण्डपे । अन्तर्गृहस्य यात्रां वै करिष्येऽघौघशान्तये । गृहीत्वा नियमं चेति गत्वाथ मणिकर्णिकाम् । स्नात्वा मौनेन चागत्य मणिकर्णीशमर्चयेत् । कम्बलाश्वतरौ नत्वा वासुकीशमथाप्यथ च । पर्वतेशं ततो दृष्ट्वा गङ्गाकेशवमप्यथ । ततस्तु ललितां दृष्ट्वा जरासन्धेश्वरं ततः । ततोवै सोमनाथञ्च वाराहञ्च ततो व्रजेत् । ब्रह्मेश्वरं ततो नत्वा नत्वागस्तीश्वरं ततः । कश्यपेशं नमस्कृत्य हरिकेशवनं ततः । वैद्यनाथं ततो दृष्ट्वा ध्रुवेशमथ वीक्ष्य च । गोकर्णेश्वरमभ्यर्च्य हाटकेशमथो व्रजेत् । अस्थिक्षेपतड़ागेऽथ दृष्ट्वा वै कीकसेश्वरम् । भारभूतं ततोनत्वा चित्रगुप्तेश्वरं ततः । चित्रघण्टां प्रणम्याथ ततः पशुपतीश्वरम् । चन्द्रेशश्चाथ वीरेशो विद्येशोऽग्नीश एव च । दिवामहेश्वरं नत्वा ततस्तु कलसेश्वरम् । नागेश्वरो हरिश्चन्द्रश्चिन्तामणिविनायकः । सेनाविनायकश्चाथ द्रष्टव्यः सर्वविघ्नहृत् । वशिष्ठवामदेवौ च मूर्त्तिरूपवरावुभौ । द्रष्टव्यौ यत्नतः काश्यां महाविघ्नविनाशकौ । सीमाविनायकं चाथ करुणेशं ततो व्रजेत् । त्रिसन्ध्येशो विशालाक्षी धर्म्मेशो विश्वबाहुका । आशाविनायकश्चाथ दृष्टादित्यस्ततः पुनः । चतुर्वक्त्रेश्वरं लिङ्गं ब्राह्मीशश्च ततः परम् । ततो मनःप्रकाशेशं मुमशानेशस्ततः परम् । चण्डीचण्डीश्वरौ दृश्यौ भवानीशङ्करौ ततः । ढुण्ढिं प्रणम्य च ततो राजराजेशमर्चयेत् । लाङ्गलीशस्ततोऽभ्यर्च्यस्ततस्तु नकुलीश्वरः । परान्नेशमथो नत्वा परद्रव्येश्वरं ततः । प्रतिग्रहेश्वरं चापि निष्कलङ्केशमेव च । मार्कण्डेयेशमभ्यर्च्य तत आप्सरसेश्वरम् । गङ्गेशोऽर्च्यस्ततो ज्ञानवाप्यां स्नानं समाचरेत् । नन्दिकेशं तारकेशं महाकालेश्वरं ततः । दण्डपाणिं महेशञ्च मोक्षेशं प्रणमेत् ततः । वीरभद्रेश्वरं नत्वा अविमुक्तेश्वरं ततः । विना-

यक्रांस्ततः पञ्च विश्वनाथं ततोव्रजेत्। ततो मौनं विसृज्याथ मन्त्रमेतमुदीरयेत्। अन्तर्गृहस्य यात्रेयं यथावद्या कृता मया। न्यूनातिरिक्तया शम्भुः प्रीयतामनया विभुः। इमं मन्त्रं समुच्चार्य्य क्षणं वै मुक्तिमण्डपे। विश्रम्य यायाद्भवनं निष्पापः पुण्यवान्नरः। संप्राप्य वासरं विष्णोर्विष्णुतीर्थेषु सर्व्वतः। काश्यां यात्रा प्रयत्नेन महापुण्यसमृद्धये। नवम्यां पञ्चदश्यां च कुलस्तम्भं समर्चयेत्। दुःखरुद्रपिशाचत्वं न लभेद्यस्य पूजनात्। श्रद्धापूर्व्वमियं यात्रा कर्त्तव्या तीर्थवासिभिः। सर्व्वस्यापि विशेषेण काश्यां यात्राश्च सर्व्वतः। न वन्ध्यं दिवसं कुर्य्याद्विना यात्रां कचित् कृती। यात्राद्वयं प्रयत्नेन कर्त्तव्यं प्रतिवासरम्। आदौ स्वर्गतरङ्गिण्यास्ततो विश्वेशितुःस्तवम्। यस्य वन्ध्यं दिनं यातं काश्यां निवसतः सतः। निराशाः पितरस्तस्य तस्मिन्नेव दिनेऽभवन्। स दष्टः कालसर्पेण स हतो मृत्युनास्फुटम्। स मुष्टस्तत्र दिवसे विश्वेशो यत्र नेक्षितः। सर्व्वतीर्थेषु सस्नौ स सर्वयात्रां व्यधात् स च। मणिकर्ण्यां तु यः स्नातो यो विश्वेशं निरैक्षत। सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः। दृश्योविश्वेश्वरो नित्यं स्नातव्या मणिकर्णिका”।

**काशीरहस्य** न० काश्यारहस्यम्। १काशीस्थैः कर्त्तव्याचारभेदे २तन्माहात्म्यप्रकाशने तच्च काशीख०दर्शितं यथा “येषां हृदि सदैवास्ते काशी त्वाशीविषाङ्गदः (शिवः) संसाराशीविषविषं न तेषां प्रभवेत् कचित्। गर्भरक्षामणिर्मन्त्रः काशीवर्णद्वयात्मकः। यस्य कण्ठे सदा तिष्ठेत्तस्याकुशलभीः कुतः। सुधां पिबति योनित्यं काशीवर्णद्वयात्मिकाम्। स नैर्ज्जरीं दशां हित्वा सुधैव परिजायते। श्रुतं कर्णामृतं येन काशीत्यक्षरयुग्मकम्। न समाकर्णयत्येव स पुनर्गर्भजां कथाम्। काशीरजोऽपि यन्मूर्द्ध्नि पतेदध्यनिलाहृतम्। चन्द्रशेखरतम्मूर्द्धा भवेच्चन्द्रकलाङ्कितः। प्रसङ्गतोऽपि यच्चेत्पश्यमानन्दकाननम्। यातं, तेऽत्र न जायन्ते नेक्षेरन् पितृकाननम्। गच्छता तिष्ठता वापि स्वपता जाग्रताथ वा। काशीत्येष महामन्त्रो येन जप्तः स निर्भयः। येन वीजाक्षरयुगं काशीति हृदि धारितम्। अवीजानि भवन्त्येव कर्म्मवीजानि तस्य वै। काशी काशीति काशीति जपतोयस्य संस्थितिः। अन्यत्रापि सतस्तस्य पुरो मुक्तिः प्रकाशते। क्षेममूर्त्तिरियं काशी क्षेममूर्त्तिमयो भवः। क्षेममूर्त्तिस्त्रिपथगा नान्यत् क्षेमत्रयं कचित्। ब्राह्मणानामिति वचः क्षेत्रभक्तिविबृंहितम्। निशम्य गिरिजाकान्तस्तुतोष नितरां हरः। प्रोवाच च प्रसन्नात्मा धन्या यूयं द्विजर्षभाः!। येषामिहेदृशी भक्तिर्मम क्षेत्रेऽतिपावने। जाने सत्वमया जाताः क्षेत्रस्यास्य निषेवणात्। नीरजस्का वितमसः संसारार्णवपारगाः। वाराणस्यास्तु वै भक्तास्ते भक्ता मम निश्चितम्। जीवन्मुक्ता हि ते नूनं मोक्षलक्ष्म्या कटाक्षिताः। यैश्च काशीस्थितो जन्तुरल्पकोऽपि विरोधितः। तैश्च विश्वम्भरा सर्वा मया सह विरोधिता। वाराणस्यास्तु नामापि यो निशम्यानुमोदते। अपि ब्रह्माण्डमखिलं भुवन्तेनानुमोदितम्। निवसन्ति हि ये मर्त्या अविमुक्तानन्दकानने। ममान्तःकरणे ते वै निवसेयुरकल्मषाः। निवसन्ति मम क्षेत्रे मम भक्तिं न कुर्वते। मम लिङ्गधरा ये नो,न तानुपदिशाम्यहम्। काशी निर्वाणनगरी येषां चित्ते प्रकाशते। ते मत्पुरः प्रकाशन्ते नैःश्रेयस्या श्रिया वृताः। मोक्षलक्ष्मीरियं काशी न येभ्यः परिरोचते। स्वर्लक्ष्मीं काङ्क्षमाणेभ्यः पतितास्ते न संशयः। काशीं संकाङ्क्षमाणानां पुरुषार्थचतुष्टयम्। पुरः किङ्करवत्तिष्ठेन्ममानुग्रहतो द्विजाः!। आनन्दकानने ह्यत्र ज्वलन्दावानलोऽस्म्यहम्। कर्म्मवीजानि जन्तूनां ज्वालये, न प्ररोहये। वस्तव्यं सततं काश्यां यष्टव्योऽहं प्रयत्नतः। जेतव्यौ कलिकालौ च लब्धव्या मुक्तिरङ्गना। प्राप्यापि काशीं दुर्बुद्धियो न मां परिषेवते। तस्य हस्तगताप्याशु कैवल्यश्रीः प्रणश्यति। धन्या मद्भक्तिलक्ष्माणो ब्राह्मणाः काशिवासिनः। यूयं,यच्चेतसो वृत्तौ न दूरेऽहं न काशिका। दातव्यो वो वरः कोऽत्र व्रियतां स यथारुचि। प्रेयांसो मे यतो यूयं क्षेत्रसन्न्यासकारिणः। इति पीत्वा महेशाननमुखक्षीराब्धिजां सुधाम्। परितृप्ता द्विजाः सर्व्वे वव्रुर्वरमनुत्तमम्। ब्राह्मणा ऊचुः। उमापते महेशान! सर्वज्ञ! वर एष नः। काशी कदापि न त्याज्या भवता भवतापहृत्!। वचनाद्ब्राह्मणानान्तु शापो मा प्रभवत्विह। कदाचिदपि केषांचित् काश्यां मोक्षेऽन्तरायकः। तव पादाम्बुजद्वन्द्वे निर्द्वन्द्वा भक्तिरस्तु नः। आकलेवरपातञ्च काशीवासोऽस्तु नोऽनिशम्। किमन्येन वरेणेश देय एष वरो हि नः। अवधेहन्धकध्वंसिन्! वरमन्यं वृणीमहे। तव प्रतिनिधीकृत्यास्माभिस्त्वद्भक्तिभावितैः। प्रतिष्ठितेषु लिङ्गेषु सान्निध्यं भवतोऽस्त्विह। श्रुत्वेति तेषां वाक्यानि तथास्त्विति पिनाकिना। प्रोचेऽन्योऽपि-

शरो दत्तो ज्ञानं वश्च भविष्यति । पुनः प्रोवाच देवेशो निशामयत भो द्विजाः ! । हितं वः कथयाम्यत्र तदनुष्ठीयतां ध्रुवम् । सेव्योत्तरवहा नित्यं लिङ्गमर्च्यं प्रयत्नतः । दमोदानं दया नित्यं कर्त्तव्यं मुक्तिकाङ्क्षिभिः। इदमेव रहस्यञ्च कथितं, क्षेत्रवासिना । मतिः परहिते कार्य्या वाच्यं नोद्वेगकृद्वचः । मनसाऽपि न कर्त्तव्यमेनोऽत्र विजीगीषुणा । अत्यर्थमक्षयं यस्मात् सुकृतं सुकृतेतरत् । अन्यत्र यत् कृतं पापं तत् काश्यां परिनश्यति । वाराणस्यां कृतं पापमन्तर्गेहे विनश्यति । अन्तर्गेहे कृतं पापं पैशाच्यनरकावहम् । पिशाचनरकप्राप्तिर्गच्छत्येव बहिर्यदि । न कल्पकोटिभिः काश्यां कृतं कर्म्म प्रभुज्यते । किन्तु रुद्रपिशाचत्वं जायतेऽत्रायुतत्रयम् । वाराणस्यां स्थितो यो वै पातकेष्वारतः सदा । योनिं प्राप्यापि पैशाचीं वर्षाणामयुतत्रयम् । पुनरत्रैव निवसन् ज्ञानं प्राप्स्यत्यनुत्तमम् । तेन ज्ञानेन संप्राप्ते मोक्षमाप्स्यत्यनुत्तमम् । दुष्कृतानि विधायेह बहिः पञ्चत्वमागताः । तेषां गतिं प्रवक्ष्यामि शृणुत द्विजसत्तमाः ! । याम्याख्या मे गणाः सन्ति घोरा विकृतमूर्त्तयः । मूषायां ते धमन्त्यादौ चेतदुष्कृतकारिणः । नयन्त्यनूपप्रायांश्च ततः प्राचीं दुरासदाम् । वर्षाकाले दुराचारान् पातयन्ति महाजले । जलौकाभिः सपङ्काभिर्दन्दशूकैर्जलोद्भवैः । दुर्निवारैश्च मशकैर्दंश्यन्ते ते दिवानिशम् । ततो याम्यैर्हिमर्त्तौ ते नीयन्तेऽद्रौ हिमालये । अशनावरणैर्हीनाः क्लिश्यन्ते ते दिवानिशम् । मरुस्थले ततो ग्रीष्मे वारिच्छायविवर्जिते । दिवाकरकरैस्तीव्रैः स्थाप्यन्ते ते पिपासिताः । क्लेशितास्ते गणैरुग्रैर्यातनाभिः समन्ततः । इत्थं कालमसङ्ख्यातमानीयन्ते ततस्त्विह । निवेदयन्ति ते याम्याः कालराजान्तिकं ततः । कालराजोऽपि तान् दृष्ट्वा कर्म्मसंस्कार्य्य दुष्कृतम् । विवस्त्रान् क्षुत्तृषार्त्तांश्च लम्बपृष्ठोदरत्वचः । अन्यैरुद्रपिशाचैश्च सह संयोजयत्यपि । ततो रुद्रपिशाचास्ते भैरवानुचराः सदा । सहन्ते क्लममत्यर्थं क्षुत्तृडुल्बणसम्भवम् । आहारं रुधिरोन्मिश्रं ते लभन्ते कदाचन । एवं त्र्ययुतसंख्यातं कालं तत्रापि दुःखिताः । श्मशानस्तम्भमभितो नीयन्ते कण्ठपाशिताः । पिपासिता अपि न तेऽम्बुस्पर्शमपि चाप्नुयुः । अथ संक्षीणपापास्ते कालभैरवदर्शनात् । इहैव देहिनो भूत्वा मुच्यन्ते ते ममाज्ञया । तस्माच्च कामयेदत्र वाङ्मनःकर्म्मणाप्यघम् । शुचौ पथि सदा स्थेयं महालाभमपीप्सुभिः । नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी । ममानुग्रहमासाद्य गच्छत्येव परां गतिम् । अनशनं यः कुरुते मद्भक्त इह सुव्रतः । न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि । अशाश्वतमिदं ज्ञात्वा मानुष्यं बहुकिल्बिषम् । अविमुक्तं सदा सेव्यं संसारभयमोचकम् । नान्यत् पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम् । सर्व्वपापप्रशमनीं प्रायश्चित्तं कलौ युगे । जन्मान्तरसहस्रेषु यत्पापं समुपार्जितम् । अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयम् । जन्मान्तरसहस्रेषु युञ्जन् योगं यदाप्नुयात् । तदिहैव परो मोक्षो मरणादधिगम्यते । तिर्य्यग्योनिगताः सत्त्वा येऽविमुक्ते कृतालयाः । कालेन निधनं प्राप्तास्ते यान्ति परमां गतिम् । अविमुक्तं न सेवन्ते ये मूढास्तमसा वृताः । विण्मूत्ररेतसां मध्ये ते वसन्ति पुनः पुनः । अविमुक्तं समासाद्य यो लिङ्गं स्थापयेत् सुधीः । कल्पकोटिशतैर्वापि नास्ति तस्य पुनर्भवः । ग्रहनक्षत्रताराणां कालेन पतनं ध्रुवम् । अविमुक्तमृतानान्तु पतनं नैव विद्यते । ब्रह्महत्यां नरः कृत्वा पश्चात् संयतमानसः । प्राणांस्त्यजति यः काश्यां स मुक्तो नात्र संशयः । स्त्रियः पतिव्रता याश्च मम भक्तिसमाहिताः । अविमुक्ते मृता विप्रा ! यान्ति ताः परमां गतिम् । अत्रोत्क्रमणकालेऽहं स्वयमेव द्विजोत्तमाः ! । दिशामि तारकं ब्रह्म, देही स्याद्येन तन्मयः । मन्मना मम भक्तश्च मयि सर्व्वार्पितक्रियः । यथा मोक्षमिहाप्नोति न तथाऽन्यत्र कुत्रचित् । मरणं निश्चितं ज्ञात्वा गतिञ्चासुखदायिनीम् । चलमागन्तुकं सर्वं, ततः काशीं समाश्रयेत् । काशी समाश्रिता यैस्तु मनोवाक्कायकर्म्मभिः । तानत्र निर्म्मलधियो निर्वाणश्रीः । समाश्रयेत् काशीस्थितैकमपि यः प्रीणयेन्न्यायजैर्धनैः । तेन त्रैलोक्यमखिलं प्रीणितं तु मया सह । यः प्रीणयति पुण्यात्मा निर्वाणनगरीश्वरम् । प्रणयेन स्थितो नित्यं ब्राह्मणाः ! प्रीणयामि तम् । दिवोदासोऽपि राजर्षिः काशीं धर्मेण पालयन् । सदेहो मत्पदं प्राप्तो यतो न पुनरागतिः । अत्र योगस्तथा ज्ञानं मुक्तिरेकेन जन्मना । अतो विमुक्तमासाद्य नान्यद्गच्छेत्तपोवनम् । मोक्षं सुदुर्लभं ज्ञात्वा संसारञ्चातिभीषणम् । अश्मना चरणौ हत्वा कालमत्र प्रतीक्षयेत् । अविमुक्तं परित्यज्य यदा यास्यन्ति दुर्धियः । हसिष्यन्ति तदा भूतान्यन्योन्यकरता-

ङ्गैः। प्राप्य वाराणसीं पुण्यां सिद्धिक्षेत्रमनुत्तमम्। परिनिष्क्रान्तुमन्यत्र कस्य जन्तोर्मतिर्भवेत्। महादानेन चान्यत्र यत् फलं लभ्यते नरैः। अविमुक्ते तु काकिन्यां दत्तायां तदवाप्यते। एकः समर्चयेल्लिङ्गं तपस्तप्येत चापरः। तयोर्मध्ये तु स श्रेष्ठो यो लिङ्गं पूजयेदिह। तीर्थान्तरे गवां कोटिं विधिवद्यः प्रयच्छति। एकाहं यो वसेत् काश्यां काशीवासी तयोर्वरः। अन्यत्र ब्राह्मणानां तु कोटिं संभोज्य यत् फलम्। वाराणस्यां तदेकेन भोजितेन तदाप्यते। सन्निहित्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे। तुलापुरुषदानेन काश्यां भिक्षा समा भवेत्। यदिह परमं ज्योतिरापातालाद्व्यवस्थितम्। अतीत्य सत्यलोकादीननन्तलिङ्गरूपधृक्। पृथिव्यन्तःस्थितं लिङ्गमविमुक्तं स्मरन्ति ये। कलुषैस्ते विमुच्यन्ते महद्भिरिति निश्चितम्। अस्मिन् क्षेत्रे तु येनाहं दृष्टः स्पृष्टः समर्चितः। सम्प्राप्य तारकं ज्ञानं न स भूयोऽभिजायते। यो मामिह समभ्यर्च्य म्रियतेऽन्यत्र कुत्रचित्। जन्मान्तरेऽपि मां प्राप्य स विमुक्तो भविष्यति। इत्युक्त्वा क्षेत्रमाहात्म्यं द्विजानामग्रतो हरः। पश्यतामेव तेषान्तु तत्रैवान्तर्हितोऽभवत्”।

**काशीसेतु** पु० त्रिस्थलीसेत्वन्तर्गते काशीमाहात्म्ययात्रादिविधायके ग्रन्थभेदे।

**काशेय** पु० काश्यां भवः ढक् काशेर्नृपस्यापत्यं वा ढक्। काश्यां भवे स्त्रियां ङीप्। “भरतः खलु काशेयीमुपयेमे सार्व्वसेनीं सुनन्दां नाम तस्यां जज्ञे भुमन्युर्नाम”। भा० आ० ९५।

**काशीश(स)** न० काशिं प्रकाशमीष्टे ईश—क। (हीराकस) ख्याते उपधातुभेदे “काशीशं(सं) धातुकाशीशं (सं)पांशुकाशीश(स)मित्यपि। तदेव किञ्चित्पीतं तु पुष्पकाशीश(स)मुच्यते। काशीश(स)मम्लमुष्णञ्च तिक्तञ्च तुवरं तथा। वातश्लेष्महरं केश्यं नेत्रकण्डूविषप्रणुत्। मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकीर्तितम्” भावप्र० काशीं दीप्तिं स्यति सो—क। दन्त्यान्तोऽप्यत्र भावप्र०।

**काशू(सू)** स्त्री कश(स) ज णिच्च उज्ज्वलदत्तोक्ते तालव्यमध्यपाठः पा० सूत्रे दन्त्यमध्यपाठः १शक्तिरूपास्त्रे २विकलवाचि च मेदि० ३बुद्धौ रोगे शब्दचि०।

**काशू(सू)कार** पु० काशूं(सूं) विकलवाचं करोति कृ—अण् उप—स०। गुवाकेश बृचि० तत्फलसेवने हि जिह्वाजाड्यात् वाचो वैकल्यं जायते इति तस्य तथात्वम्।

**काशू(सू)तरी** स्त्री० ह्रस्वा काशूः (सूः) ह्रस्वार्थे ष्टरच् ङीप्। ह्रस्वे कासूनामास्त्रभेदे।

**काश्म(श्व)री** स्त्री काश—वनिप् वनोरच नस्यान्तादेशः पृषो० वा वस्य मः। गाम्भार्य्याम् अमरः, फलेऽपि हरीत० अणोलुपि स्त्री। “विल्वान् कपित्थान् जम्बूश्च काश्मरीर्बदरीस्तथा” भा० व० १५८ अ०।

**काश्मर्य्य** पु० काश्मरी+स्वार्थे ष्यञ्। गाम्भार्य्याम् अमरः “बदरेङ्गुदकाश्मर्य्यभल्लातकफलानि च” भा० आनु० ५३०। अयञ्च मधुरवर्गे पियालबीजकाश्मर्य्येत्याद्युपक्रमे “समासेन मधुरोवर्गः” सुश्रुते उक्तः।

**काश्मीर** न० काश्मीरे भवः कच्छा० अण्। १पुष्करमूले अम०। २टङ्के ३कुङ्कुमभेदे मेदि० “काश्मीरदेशजे क्षेत्रे कुङ्कुमं यत् भवेद्धि तत्। सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम्” भावप्र० तत्स्वरूपाद्युक्तम्। काश्मीरद्रवसान्द्रदिग्धवपुषः” भर्त्तृ०। “काश्मीरागुरुकस्तरीतिलहरीकाशीपुराधीश्वरी” अन्नदास्त०। ४काश्मीरदेशभवे त्रि० स्त्रियां ङीप्। “तेन तेनैवमापन्ना काश्मीरीव तरङ्गिणी” भा० वि० ९ अ०। सा च ५गाम्भीर्य्यां भावप्र०। काश्मीरदेशानां राजा अण्। ६तद्देशराजे। “काश्मीराश्च कुमाराश्च घोरका हंसकायनाः। शिविस्त्रिगर्त्तयौधेयाः राजन्या मद्रकैकयाः” भा० स० ५२। काश्मीरोऽभिजनोऽस्य सिन्ध्वा० अण्। पित्रादिक्रमेण ७तद्देशवासिनि त्रि० “काश्मीराः सिन्धुसौवीरा गान्धारादर्शकास्तथा” भा० भी० ९ अ०। “शूद्राभीराश्च दरदाः काश्मीराः पत्तिभिः सह” तत्रैव। “शारदामठमारभ्य कुङ्कुमाद्रितटान्तकः। तावत्काश्मीरदेशः स्यात् पञ्चाशद्योजनात्मकः” इत्युक्ते ८देशभेदे च। “काश्मीरेषु सरो दिव्यं नाम्ना तुद्रकमानसम्” सुश्रु०। काश्मीरमण्डलतीर्थादिकथा भा० व० १३० अ० यथा “एषा रम्या विपाशा च नदी परमपावनी। अत्र वै पुत्त्रशोकेन वशिष्ठो भगवानृषिः। बद्ध्वात्मानं निपतितो विपाशः पुनरुत्थितः। काश्मीरमण्डलञ्चैतत् सर्व्वपुण्यमरिन्दम!। महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह। यत्रोत्तराणां सर्व्वेषामृषीणां नाहुषस्य च। अग्नेश्चैवात्र संवादः काश्यपस्य च भारत!। एतद्द्वारं महाराज। मानसस्य प्रकाशते। वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतम्। एष वातिकखण्डो वै प्रख्यातः सत्यविक्रम!। नात्यवर्त्तत यद्द्वारं विदेहादुत्तरञ्च यः। इदमाश्चर्य्यमपरं देशेऽस्मिन् पुरुषर्षभ!। क्षीणे युगे तु कौन्तेय! शर्व्वस्य

सह पार्षदैः। सहोनया च भवति दर्शनं कामरूपिणः। अस्मिन् सरसि सत्रैर्वै चैत्रे मासि पिनाकिनम्। यजन्ते याजकाः सम्यक् परिवारशुभार्थिनः। अत्रोपस्पृश्य सरसि श्रद्दधानो जितेन्द्रियः। क्षीणपापः शुभान् लोकान् प्राप्नुते नात्र संशयः"।

"काश्मीरमण्डले नद्यो याः पतन्ति महानदम्। ताः नदीः सिन्धुमासाद्य शीलवान् स्वर्गमाप्नुयात्" भा० आनु०२५अ०। काश्मीरदेशउत्पत्तिस्थानत्वे नास्त्यस्याः अच् टाप्। ८कपिलद्राक्षायां स्त्री राजनि०। ९ अतिविषायां स्त्री मेदि०।

**काश्मीरक** त्रि० काश्मीरे भवः मनुष्यस्तत्स्थो वा वुञ्। काश्मीरदेशोद्भवे १मनुष्ये २तत्स्थे च। "ततः काश्मीरकान् वीरान् क्षत्रियान् क्षत्रियर्षभः" भा०स० २६अ०।

**काश्मीरज** न० काश्मीरे जायते जन—ड ७त०। १कुष्ठे (कुड़)२कुङ्कुमभेदे च मेदि०। ३पुष्करमूले विश्वः।

**काश्मीरजन्मन्** न० काश्मीरे जन्म अस्य। कुङ्कुमभेदे अमरः।

**काश्मीर्य्य** त्रि० काश्मीरेण निर्वृत्तादि सङ्काशा०चतुरर्थ्यां ण्य। १काश्मीरनिर्वृत्तादौ २कुङ्कुमभेदे न०

**काश्य** न० कं जलमाश्यं यत्र कुत्सितं वा आश्यं अश—ण्यत् कश्य+स्वार्थे ऽण् वा। १मद्ये हेमच०। काश्यां भवः यत्। २काशिराजे पु०। स्वार्थे क। तत्रैव। "शलात्मजश्चार्ष्टिषेण स्तनयस्तस्य काश्यकः। काश्यस्य काश्यपः पुत्रो राजा दीर्घतपास्तथा" हरिवं० २९अ०।

**काश्यप** न०काश्यं मद्यं पिबत्यत्र पा—बअर्थे क।१मांसे हेमच०। मांसस्य मद्यपानाव्यभिचारात्तथात्वम्। काश्यं राजभेदं पाति नरकात् पा—क। काश्यस्य न्टपस्य २पुत्रभेदे काश्यशब्दे उदा०। कश्यपस्य गोत्रापत्यम् विदा० अञ्। ३कश्यपगोत्रापत्ये पुंस्त्री। ४कणादे मुनौ पु० त्रिका०। ५मृगभेदे पुंस्त्री मेदि०। स्त्रियां जातित्वात् ङीष्। कश्यपस्येदम् अण्। ६कश्यपसम्बन्धिनि त्रि० "एष एव दितेर्गर्भ ओजः काश्यपमर्पितम्"भाग०२,१५, ११श्लो०। स्त्रियां ङीप्। सा च ७पृथिव्याम् स्त्री तस्याः तत्सम्बन्धितया तत्सुतत्वकथा भा० आनु०१५४अ०उक्ता यथा "इमां भूमिं द्विजातिभ्यो दित्सुर्वै दक्षिणां पुरा। अङ्गो नाम नृपो राजंस्ततश्चिन्तां मही ययौ। धारिणीं सर्वभूतानामयं प्राप्य वरो न्टपः। कथमिच्छति मां दातुं द्विजेभ्यो ब्रह्मणः सुताम्। साऽहं त्यक्त्वा गमिष्यामि भूमित्वं ब्रह्मणः पदम्। अयं सराष्ट्रो न्टपतिर्मा भूदिति ततोऽगमत्। ततस्तां कश्यपो दृष्ट्वा व्रजन्तीं पृथिवीं तथा। प्रविवेश महीं सद्यो मुक्त्वात्मानं समाहितः। ऋद्धा सा सर्वतो जज्ञे तृणौषधिसमन्विता। धर्मोत्तरा नष्टभया भूमिरासीत्ततो न्टप!। एवं वर्षसहस्राणि दिव्यानि सततं न्टप!। त्रिंशतः काश्यपो राजन्! भूमिरासीदतन्द्रिता। अथागम्य महाराज! नमस्कृत्य च कश्यपम्। पृथिवी काश्यपी जज्ञे सुता तस्य महात्मनः"। ८तद्गोत्रापत्यस्त्रियां स्त्री ङीप् "काश्यपीबालाक्यमाठरी पुत्रात् काश्यपीबालाक्यमाठरीपुत्रः" शत०ब्रा०१४,९,४,३१० ९कश्यपपत्न्यां स्त्री काश्यपेयः। कश्यपगोत्रोत्पन्ने विषचिकित्साभिज्ञे १०ऋषिभेदे पु० तत्कथा भा०आ० ४२अ० यथा

"काश्यपोऽभ्यागमद्विद्वांस्तं राजानं चिकित्सितुम्। श्रुतं हि तेन तदभूद्यथा तं राजसत्तमम्। तक्षकः पन्नगश्रेष्ठो नेष्यते यमसादनम्। तं दष्टं पन्नगेन्द्रेण करिष्येऽहमपज्वरम्। तत्र मेऽर्थश्च धर्मश्च भवितेति विचिन्तयन्। तं ददर्श च नागेन्द्रस्तक्षकः काश्यपं पथि। गच्छन्तमेकमनसं द्विजो भूत्वा वयोऽतिगः। तमब्रवीत् पन्नगेन्द्रः काश्यपं मुनिपुङ्गवम्। क भवांस्त्वरितो याति किञ्च कार्यं चिकीर्षति। काश्यप उवाच! न्टपं कुरुकुलोत्पन्नं परीक्षितमरिन्दमम्! तक्षकः पन्नगश्रेष्ठस्तेजसाद्य प्रधक्ष्यति। तं दष्टं पन्नगेन्द्रेण तेनाग्निसमतेजसा। पाण्डवानां कुलकरं राजानममितौजसम्। गच्छामि त्वरितं सौम्य! सद्यः कर्तुमपज्वरम्। तक्षक उवाच। अहं स तक्षको ब्रह्मंस्तं धक्ष्यामि महीपतिम्। निवर्त्तस्व न शक्तस्त्वं मया दष्टं चिकित्सितुम्। काश्यप उवाच। अहं तं न्टपतिं गत्वा त्वया दष्टमपज्वरम्। करिष्यामीति मे बुद्धिर्विद्याबलसमन्वितः।
तक्षक उवाच। यदि दष्टं मयेह त्वं शक्तः किञ्चिच्चिकित्सितुम्। ततो वृक्षं मया दष्टमिमं जीवय काश्यप!। परं मन्त्रबलं यत्ते तद्दर्शय यतस्व च। न्यग्रोधमेनं धक्ष्यामि पश्यतस्ते द्विजोत्तम!। काश्यप उवाच। दश नागेन्द्र! वृक्षं त्वं यद्येतदभिमन्यसे। अहमेनं त्वया दष्टं जीवयिष्ये भुजङ्गम!। सौतिरुवाच। एवमुक्तः स नागेन्द्रः काश्यपेन महात्मना। अदशद्वृक्षमभ्येत्य न्यग्रोधं पन्नगोत्तमः। स वृक्षस्तेन दष्टस्तु पन्नगेन महात्मना। आशीविषविषोपेतः प्रजज्वाल समन्ततः। तं दग्ध्वा स नगं नागः काश्यपं पुनरब्रवीत्। कुरु यत्नं द्विजश्रेष्ठ!

जीवयैनं वनस्पतिम्। सौतिरुवाच। भस्मीभूतं ततो वृक्षं पन्नगेन्द्रस्य तेजसा। सर्वं भस्म समाहृत्य काश्यपो वाक्यमब्रवीत्। विद्याबलं पन्नगेन्द्र! पश्य मेऽद्य वनस्पतौ। अहं सञ्जीवयाम्येनं पश्यतस्ते भुजङ्गम!। ततः स भगवान् विद्वान् काश्यपो द्विजसत्तमः। भस्मराशीकृतं वृक्षं विद्यया समजीवयत्। अङ्कुरं कृतवांस्तत्र ततः पर्णद्वयान्वितम्। पलाशिनं शाखिनञ्च तथा विटपिनं पुनः। तं दृष्ट्वा जीवितं वृक्षं काश्यपेन महात्मना। उवाच तक्षको ब्रह्मन्नैतदत्यद्भुतं त्वयि। द्विजेन्द्र! यद्विषं हन्या मम वा मद्विधस्य वा। कं त्वमर्थमभिप्रेप्सुर्यासि तत्र तपोधन!। यत्तेऽभिलषितं प्राप्तुं फलं तस्मान्नृपोत्तमात्। अहमेव प्रदास्यामि तत्ते यद्यपि दुर्लभम्। विप्रशापाभिभूते च क्षीणायुषि नराधिपे। घटमानस्य ते विप्र! सिद्धिः संशयिता भवेत्। ततो यशः प्रदीप्तन्ते त्रिषु लोकेषु विश्रुतम्। निरंशुरिव घर्म्मांशुरन्तर्द्धानमितो व्रजेत्। काश्यप उवाच। धनार्थी याम्यहं तत्र तन्मे देहि भुजङ्गम!। ततोऽहं विनिवर्त्तिष्ये स्वापतेयं प्रगृह्य वै। तक्षक उवाच। यावद्धनं प्रार्थयसे तस्माद्राज्ञस्ततोऽधिकम्। अहमेव प्रदास्यामि निवर्त्तस्व द्विजोत्तम!। सौतिरुवाच। तक्षकस्य वचः श्रुत्वा काश्यपो द्विजसत्तमः। प्रदध्यौ सुमहातेजा राजानं प्रति बुद्धिमान्। दिव्यज्ञानात् स तेजस्वी ज्ञात्वा तं नृपतिं तदा। क्षीणायुषं पाण्डवेयमपावर्त्तत काश्यपः"।

**काश्यपनन्दन** पु॰ कश्यपस्यायम् अण् कर्म्म॰। १गरुडे २अरुणे ३देवमात्रे च। "ददानि मेदिनीभागं भवद्भ्योऽहं सुरर्षभाः!। यस्मिन् देशे करिष्यध्वं यज्ञान् काश्यपनन्दनाः" भा॰आनु॰६६अ॰। "मरीचेः कश्यपः पुत्रः कश्यपात् इमाः प्रजाः। प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश" इत्युपक्रम्य "अदित्या द्वादशादित्याः सम्भूता भुवनेश्वराः" इत्युक्त्वा सर्व्वेषां सुरासुरादीनां ततउत्पत्त्युक्तेः ४असुरादिषु च। कश्यपशब्दे १८२७पृ॰ विवृतिः [कश्यपगोत्रापत्ये

**काश्यपायन** पुंस्त्री॰ कश्यपस्य गोत्रापत्यं नडा॰ फक्।

**काश्यपि** पु॰कश्यपे भवः इञ्। १अरुणे २गरुडे च। तयोः कश्यपेन विनतायामुत्पत्तिकथा च भा॰ आ॰ ३१अ॰यथा "एतस्मिन्नेव काले तु देवी दाक्षायणी शुभा। विनता नाम कल्याणी पुत्रकामा यशस्विनी। तपस्तप्त्वा व्रतपरा स्नाता पुंसवने शुचिः। उपचक्राम भर्त्तारं, तामुवाचाथ कश्यपः। आरम्भः सफलो देवि! भविता यस्त्वयेप्सितः। जनयिष्यसि पुत्रौ द्वौ वीरौ त्रिभुवनेश्वरौ। तपसा वालखिल्यानां मम सङ्कल्पजौ तथा। भविष्यतो महाभागौ पुत्रौ त्रैलोक्यपूजितौ। उवाच चैनां भगवान् कश्यपः पुनरेव ह। धार्य्यतामप्रमादेन गर्भोऽयं सुमहोदयः। एतौ सर्व्वपतत्रिणामिन्द्रत्वं कारयिष्यतः। लोकसम्भावितौ वीरौ कामरूपविहङ्गमौ। शतक्रतुमथोवाच प्रीयमाणः प्रजापतिः। त्वत्सहायौ महावीर्य्यौ भ्रातरौ ते भविष्यतः। नैताभ्यां भविता दोषः सकाशात्ते पुरन्दरः। व्येतु ते शक्र! सन्तापस्त्वमेवेन्द्रो भविष्यसि। न चाप्येवं त्वया भूयः क्षेप्तव्या ब्रह्मवादिनः। न चावमान्या दर्पात्ते वाग्वज्रा भृशकोपनाः। एवमुक्तो जगामेन्द्रो निर्विशङ्कस्त्रिविष्टपम्। विनता चापि सिद्धार्था बभूव मुदिता तथा। जनयामास पुत्रौ द्वावरुणं गरुडं तथा। विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः। पतत्त्रिणाञ्च गरुड इन्द्रत्वेनाभ्यषिच्यत"।

**काश्यपिन्** पु॰ भूम्नि। काश्यपेन प्रोक्तमधीयते णिनि। काश्यपप्रोक्तशाखाध्येतृषु।

**काश्यपेय** पु॰ कश्यपस्येयम् अण् काश्यपी कश्यपभार्य्या तत्र भवः ढक्। १कश्यपपत्नीजाते सुरासुरादौ। "इत्येते द्वादशादित्याः काश्यपेयाः प्रकीर्त्तिताः" भा॰आनु॰ १५०अ॰ २गरुडे च "नागक्षयकरश्चैव काश्यपेयो महाबलः" भा॰आ॰२३अ॰। "काश्यपेयोऽस्तताक्षर्यः" ध्वजपूजामन्त्रः।

**काश्यादि** पु॰ ठञ्ञिठोः प्रत्यययोः प्रकृतिभूते पाणिन्युक्ते शब्दगणे स च गणः काशि वेदि (चेदि इति वा) संयाति संवाह अच्युत मोदमान शकुलाद हस्तिकर्षू कुनामन् हिरण्य करण गोवासन भारङ्गी अरिन्दम अरित्र देवदत्त दशग्राम शौवावतान युवराज उपराज देवराज मोदन सिन्धुमित्र दासमित्र सुधामित्र सोममित्र छागमित्र सधमित्र (आपदादिपूर्वपदात्कालान्तात्) आपदूर्द्ध तत्"। तात्कालिकः।

**काश्यायन** पुंस्त्री काश्यस्य काशिराजस्य गोत्रापत्यम् नडा॰ फक्। काशिराजगोत्रापत्ये

**काष** पु॰ कष्यतेऽनेन कष–करणे घञ्। १कषणपाषाणे (कष्टीपाथर) ख्याते प्रस्तरभेदे शब्दच॰। २ऋषिभेदे च

**काषाय** त्रि॰ कषायेण रक्तः अण्। कषायेण रक्ते १वस्त्रादौ "यदि वासांसि वसीरन् रक्तानि वसीरन् काषायं ब्राह्म-

णो, माञ्जिष्ठं क्षत्रियो, हारिद्रं वैश्यः" आश्व०श्रौ० १,१६,६। "कात्यायन्यर्द्धवृद्धा या काषायवसनाऽथवा" अमरः। स्त्रियां ङीप्। तदन्तस्य रक्तार्थकान्तत्वात् एकार्थविशेष्यस्त्रीलिङ्गे शब्दे परे पुंवत्। काषा वी कन्या यस्य काषायकन्यः

**काषायण** पु० अश्वा० गणे काषेत्यत्र कापेति पाठे गोत्रापत्ये फञ्। १कापगोत्रापत्ये शुक्लयजुर्वेदवंशान्तर्गते ऋषिभेदे। "काषायणात् काषायणः" शत ब्रा०१२,७,३,२७।

**काषायवासिक** पुंस्त्री काषाये वस्त्रे वासोऽस्यस्य ठन्। कीटभेदे स्त्रियां ङीष्। "सूचीमुखः कृष्णगोधा यश्च काषायवासिकः" सुश्रु०। कीटशब्दे विवृतिः।

**काषायिन्** पु० भूम्नि। कषायेण प्रोक्तमधीयते णिनि। कषायर्षिप्रोक्तशाखाध्यायिषु।

**काष्ठ** न० काशत्यनेन काश–क्थन् नेट् शस्य ष १अनलादेरिन्धनार्थे दारुणि "ससारमतिशुष्कं यत् सुष्टिमध्ये समेष्यति। तत् काष्ठं काष्ठमित्याहुः खदिरादिसमुद्भवम्" इत्युक्तलक्षणयुक्ते २दारुभेदे च। "काष्ठेन वा नखेन वा कण्डूयेत" शत०,ब्रा०,२,२,१, "यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ। समेत्य च व्यपेयातां तद्वद्भूतसमागमः" भा०,शा०,८६४ श्लो०"तथाश्मानस्तृणकाष्ठञ्च सर्वं दिष्टक्षये स्वां प्रकृतिं भजन्ति" भा०,आ०,८९अ०।

**काष्ठक** त्रि० काष्ठं विद्यतेऽस्य नड़ादि० छ कुक् च बिल्वादि० छमात्रस्य लुक्। काष्ठयुक्ते। २अगुरुचन्दने न शब्दमा० तस्य प्रशस्तकाष्ठवत्त्वात् तथात्वम्।

**काष्ठकदली** स्त्री काष्ठमिव कठिना कदली। (काठकला कदलीभेदे राजनि०। [ङीप्।

**काष्ठकीट** पुं स्त्री काष्ठे कीटः। घुणाख्ये कीटे हेम०स्त्रियां

**काष्ठकुट्ट** पुं स्त्री० काष्ठं कुट्टति कुट्ट–अण् उप० स०। (काठठोकरा)पक्षिभेदे त्रिका० स्त्रियां जातित्वेऽपि संयोगोपधत्वात् टाप्। [काष्ठमये कुद्दाले अवध्यौ अमरः।

**काष्ठकुद्दाल** पु० काष्ठमयः कुद्दालः। नौकास्थमलघर्षणार्थे

**काष्ठजम्बू** स्त्री काष्ठप्रधाना जम्बूः। भूमिजम्बूवृक्षे राजनि०

**काष्ठतक्ष** पु० काष्ठं तक्षति तक्ष–क्विप्। (छुतार)इतिप्रसिद्धे जातिभेदे। स्वुष्। काष्ठतक्षकोऽप्यत्र स्त्रियां जातित्वात् ङीष्। काष्ठतक्षणकर्म्म, माले लि०। स्त्रियां टाप् इति भेदः। [कृमिभेदे हारा०।

**काष्ठतन्तु** पु०काष्ठे तन्तुरिव दीर्घत्वेनावस्थितत्वात्। काष्ठस्थे

**काष्ठदारु** पु० काष्ठप्रधानो दारुः। देवदारुवृक्षे राजनि०। तस्य शाखाबाहुल्ययोगेन काष्ठप्रधानत्वात् तथात्वम्।

**काष्ठद्रु** पु० काष्ठप्रधानोद्रुर्वृक्षः। पलाशवृक्षे राजनि० तस्य काष्ठतोऽपि पुष्पोद्गमात्तस्यप्राधान्यात्तथात्वम्।

**काष्ठधात्रीफल** न० काष्ठमिव शुष्कं धात्रीफलम्। आमलके राजनि०तत्फलाभ्यन्तरे अष्टेः काष्ठस्येव शुष्कत्वात्तस्य तथात्वम्। [लायाम् राजनि०।

**काष्ठपाटला** स्त्री काष्ठमिव कठिना पाटला। सितपाट-

**काष्ठमठी** स्त्री क्षुद्रोमठः मठी काष्ठेन निर्म्मिता मठीव। चितायाम् त्रिका०। तस्याः काष्ठनिर्म्मितक्षुद्रमठाकारत्वात् तथात्वम्।

**काष्ठमय** त्रि०काष्ठात्मकं मयट्। १काष्ठात्मके २काष्ठतुल्यकठिनहृदये निर्दये च। "दुर्हृशाः केचिदात्मानि नराः काष्ठमया इव"। भा०,रा०,३४४,। [हारा०

**काष्ठमल्ल** पुं काष्ठं मल्ल इव यत्र। शवनिर्हारणे यानभेदे

**काष्ठमौन** न० काष्ठमिव मौनम्। इङ्गितेनापि स्वाभिप्रायाप्रकाशनरूपे मौने शब्दचि०

**काष्ठलेखक** पु० काष्ठं लिखति ण्वुल्। घुणाख्ये कीटे।

**काष्ठलौहिन्** पु० काष्ठञ्च लौहञ्च सोऽस्य। लौहयुक्ते काष्ठमये मुद्गरे त्रिका०

**काष्ठवल्लिका** स्त्री काष्ठमिव शुष्का वल्लिका। कटुकायां (कट्की) ख्याते वल्लीभेदे वैद्यकम् [सारिवाभेदे राजनि०

**काष्ठशारिवा** स्त्री काष्ठमिव शुष्का शारिवा। (अनन्तमूल)

**काष्ठा** स्त्री काश–क्थन् नेट् शस्य षः। १दिशि। "स राजपत्नीवदध आशु शुक्ल इवोडुपः। आप्यायमाना पिष्टभिः काष्ठाभिरिव सोऽन्वहम्"। २अष्टादशनिमेषात्मके २काले "त्वं मुहूर्त्तस्थितिस्त्वं च लवस्त्वं पुनः क्षणः"शुक्लस्त्वं बहुलस्त्वं च कला काष्ठा त्रुटिस्तथा"भा० आ०२५अ०।"कलाकाष्ठादिरूपेण परिणाम प्रदायिनि!" देवीमा०। ३सीमायाम् "परा हि काष्ठा तपसस्तथा पुनः" कुमा०। ४स्थितौ "काष्ठां भगवतोध्यायेत् स्वनासाग्रावलोकनः" भाग० ३,१,२३, श्लो०। ५उत्कर्षे च अमरः "काष्ठागतस्नेहरसानुविद्धम्" कुमारः। काष्ठं प्राधान्येनास्त्यस्याम् अच्। ६दारुहरिद्रायां मेदि०। ७कश्यपपत्नीभेदे। "अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत्। अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला। मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः" इत्युपक्रम्य "अरिष्टायास्तु गन्धर्वाः काष्ठाया द्विशफेतराः" भाग० ६,६,२३ उक्तम्

**काष्ठागार** न० काष्ठनिर्म्मितमागारम् । (काठेरघर) काष्ठ-निर्म्मिते गृहे त्रिका० ।

**काष्ठाम्बुवाहिनी** स्त्री काष्ठनिर्म्मिताऽम्बुवाहिनी । (सेँउति) ख्याते द्रोणीरूपे नौकाजलसेचनपात्रभेदे अमरः

**काष्ठालुक** न० काष्ठमिव कठिनमालुकम् । कन्दभेदे । "कन्दातन ऊर्द्ध्वं वक्ष्यामः विदारिकन्द-शता-वरी-विस-मृणाल-शृङ्गाटक-कशेरुक-पिण्डालुक-मध्वालुक-हस्त्यालुक काष्ठालुक-शङ्खालुक-रक्तालुकेन्दीवरोत्पल-कन्दप्रभृतीनि । रक्तपित्तहराण्याहुः शीतानि मधुराणि च । गुरूणि बहुशुक्राणि स्तन्यवृद्धिकराणि च" सुश्रुतः ।

**काष्ठिक** त्रि० काष्ठमस्त्यस्य ठन् । बहुकाष्ठयुक्ते अनले देशादौ 'क्षुद्रं काष्ठं ङीप् काष्ठी स्वार्थे क ह्रस्वः टाप् । काष्ठिका क्षुद्रकाष्ठखण्डे स्त्री । "विंशति काष्ठिकाः" भवदेवः

**काष्ठिन्** त्रि० काष्ठमस्त्यस्य इनि । बहुकाष्ठयुक्ते स्त्रियां ङीप्

**काष्ठील** पु० काष्ठिना ईल्यते ईल–क्षेपणे कर्म्मणि घञ् । १राजार्के राजनि० ईषदष्ठीलेव । २कदलीभेदे (काठकला) शब्दचि०

**काष्ठेक्षु** पु० काष्ठमिव कठिनकाण्ड इक्षुः । इक्षुभेदे सुश्रु० इक्षुशब्दे ९०९पृ०विवृतिः । भावप्र० काण्डेक्षुरिति पाठः ।

**काष्ठोदुम्बरिका** स्त्री काष्ठप्रधाना उदुम्बरिका । काको-दुम्बरिकायाम् शब्दचि० ।

**कास** कुत्सित शब्दे (रोगहेतुकशब्दभेदे) भ्वा० आत्म० अक० सेट् । कासते अकासिष्ट कासाम्-बभूव-आस-चक्रे चकासे "असीतोरावणः कासाञ्चक्रे शस्त्रैर्निराकुलः" भट्टिः । "कासाञ्चक्रे कुत्सितशब्दमभिहितवान्" जयम० । "अतऊर्द्ध्वं प्रवक्ष्यामि धूमोपहतलक्षणम् । क्षिति चौति चात्यर्थमत्याधमति कासते" "स पूर्व्वं कासते शुष्कम्" सुश्रु० । "कासमानश्च तृष्णाभिभूतः" सुश्रु० । अस्य कोचित् परस्मैपदित्वमिच्छन्ति । "प्रसक्तवेगस्य समीरणेन कासेत् शुष्कं स्वरभेदयुक्तः" सुश्रु०कासशब्दे उदा०। क्विप् काः । "यच्च शीतोऽघोरुरः सह कासा वेपयः" अथ० ५,२२,१०, भावे घञ् । कासः कुत्सितशब्दः "सुञ्च शीर्षक्त्या उत कासएनम्" अथ० १,१२,३ ।

**कास** त्रि० कस हिंसने कर्त्तरि ण । १हिंसके । कासतेऽनेन कास–करणे घञ् । २रोगभेदे पु० "कुरुथा बलासं कासमुद्युगम्" अथ० ५,२२,११ । तल्लक्षणनिदानादि सुश्रुते उक्तं यथा

"अथातः कासप्रतिषेधमध्यायं व्याख्यास्यामः । उक्ता ये हेतवो नृणां रोगयोः श्वासहिक्कयोः । कासस्यापि च ते ज्ञेयास्त एवोत्पत्तिहेतवः । धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च । विमार्गगत्वादपि भोजनस्य वेगावरोधात् क्षवथोस्तथैव । प्राणोह्युदानानुगतः प्रदुष्टः संभिन्नकांस्यस्वनतुल्यघोषः । निरेति वक्त्रात् सहसा सदोषः कासः स विद्वद्भिरुदाहृतस्तु । स वातपित्तप्रभवः कफाच्च क्षतात्तथान्यः क्षयजोऽपरश्च । पञ्चप्रकारः कथितो भिषग्भिर्विवर्द्धितो यक्ष्मविकारहेतुः स्यात् । भविष्यतस्तस्य तु कण्ठकण्ड्वोर्भोज्योपरोधो गलतालुलेपः । स्वशब्दवैषम्य-मरोचकोऽग्निसादश्च लिङ्गानि भवन्त्यमूनि । हृच्छङ्ख-मूर्द्धोदरपार्श्वशूली क्षामाननः क्षीणबलस्वरौजाः । प्रसक्तवेगस्य समीरणेन कासेत्तु शुष्कं स्वरभेदयुक्तः । उरोविदाहज्वरवक्त्रशोषैरभ्यर्द्दितस्तिक्तमुखस्तृषार्त्तः । पित्तेन पीतानि वमेत्कटूनि कासेत् पाण्डुः परिदह्यमानः । विलिप्यमानेन मुखेन सीदन् शिरोरुगार्त्तः कफपूर्णदेहः । अभक्तरुग् गौरवसादयुक्तः कासेद्भृशं सान्द्रकफः कफेन । वक्षोऽतिमात्रं विहतञ्च यस्य व्यायामभाराध्ययनाभिघातैः । विश्लिष्टवक्षाः स नरः सरक्तं ष्ठीवत्यभीक्ष्णं क्षतजःस उक्तः । अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः । रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत् । स पूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम् । कण्ठेन रुजताऽत्यर्थं विभिन्नेनैव चोरसा । सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना । दुःखस्पर्शेन शूलेन भेदपीडाभितापिना । पर्व्वभेदज्वरश्वासतृष्णावैस्वर्य्यपीडितः । पारावतइवाकूजन् कासवेगात् क्षतोद्भवात् । विषमाऽसात्म्य-भोज्यातिव्यवायाद्वेगनिग्रहात् । घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः । कुपिताः क्षयजं कासं कुर्य्युर्देहक्षयप्रदम् । स गात्रशूलज्वरदाहमोहान् प्राणक्षयञ्चोपलभेत कासी । शुष्यन् विनिष्ठीवति दुर्ब्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम् । तं सर्व्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति । इत्यत्वमासाद्य भवत्यथो वै याप्यन्तमाहुर्भिषजस्तु कासम्"। भावप्र० एतद्विवृतं यथा

पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः । क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् । क्षयाय राजयक्ष्मणे । अथ पूर्व्वरूपमाह । पूर्व्वरूपं भवेत्तेषां शूकपूर्णगलास्यता । कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते । भोज्यानामवरोधः कवलगिलने कण्ठव्यथा । अथ

वातिकस्य रूपमाह हृच्छङ्खपार्श्वोदरमूर्द्धशूली चामानन: क्षीणबलस्वरौजाः। प्रसक्तवेगस्तु समीरणेन भिन्नस्वरः कासति शुष्कमेव। शङ्खौ ललाटैकदेशः, शुष्कं श्लेष्मादिरहितम्। पैत्तिकस्य रूपमाह तनोर्विदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्त्तः। पित्तेन पीतानि वमेत्कटूनि कासेत् सपाण्डुः परिदह्यमानः। सपाण्डुः, पाण्डुरोगयुक्तः। श्लैष्मिकस्य रूपमाह प्रलिप्यमानेन मुखेन सीदेत् शिरोरुजार्त्तः कफपूर्णदेहः। अभक्तरुङ्नीरवकण्डुयुक्तः कासेद्भृशं सान्द्रकफः कफेन। प्रलिप्यमानेन मुखेन श्लेष्मलिप्तेन मुखेनोपलक्षितः। अभक्तरुक् न भक्ते रुक् रुचिर्यस्य सः कण्डूः कण्ठ एव। क्षतकासस्य निदानपूर्व्विकां सम्प्राप्तिमाह अतिव्यवायभाराध्वयुद्धाश्वगजनिग्रहैः। रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत्। अश्वगजयोर्निग्रहो दमनम्। लक्षणमाह स पूर्व्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम्। कण्ठेन कूजत्यथर्थं विभग्नेनेव चोरसा। सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना। दुःखस्पर्शेन शूलेन भेदपीड़ाभितापिना। पर्वभेदज्वरश्वासतृष्णावैस्वर्य्यपीड़ितः। पारावत इवाकूजन् कासवेगात् क्षतोद्भवात्। कण्ठेनेत्युपलक्षणे तृतीया एवमुरसेति। क्षयकासस्य निदानपूर्व्विकां सम्प्राप्तिमाह विषमाऽसात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात्। घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः। कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम्। घृणिनां विचिकित्सायुक्तानाम्। लक्षणमाह सगात्रशूलज्वरमोहदाहप्राणक्षयञ्चोपलभेत् स कासी। शुष्कं विनिष्ठीवति निर्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम्। तं सर्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति। असाध्यसाध्यव्याख्यानाह इत्येष क्षयजः कासः क्षीणानां देहनाशनः। साध्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोत्थितः। एवं क्षतोत्थितः क्षीणानामसाध्यः। बलवतां साध्यो याप्यो वा स्यात्; न वा कदाचित् सिध्येतामपि पादगुणान्वितौ सिध्येतां क्षतजक्षयजौ सद्वैद्यः सद्भेषजः सत्परिचारकयुक्तस्य सदातुरस्य जातौ। स्थविराणां जराकासः सर्वो याप्यः प्रकीर्त्तितः। स्थविराणां जराकासः वृद्धानां यः कासो भवति स जराकाससंज्ञः स सर्व एव वातजादिरपि याप्यः। त्रीन् पूर्वान् साधयेत् साध्यान् पथ्यैर्याप्यांस्तु यापयेत्। स्वल्पोऽपि कास उपेक्षणीयो न भवति। किन्तु शीघ्रं प्रतिकरणीय इत्याह ज्वरारोचकहृल्लासस्वरभेदक्षयादयः; भवन्त्युपेक्षया यस्मात्तस्मात्तं त्वरया जयेत्”।

कासरोगभेदस्य हेतुपापादि कर्म्मविपाकशब्दे १७६४, पृ० उक्तम् कं जलमस्यतेऽनेन अस—क्षेपणे करणे घञ् ६त०। २शोभाञ्जनवृक्षे पु० शब्दच०। तदञ्जनसेवने नेत्राज्जलनिःसारणात्तस्य तथात्वम्।

**कासकन्द** पु० कासहेतुः कन्दः। कासालौ राजनि०

**कासघ्न** त्रि० कासं हन्ति हन—हेत्वादौ टक। कासहरे सुश्रुतोक्ते १विधानभेदे। “प्रायोगिकः स्नेहनोवैरेचनः कासघ्नः वामनीयश्च” इत्युपक्रमे “वृहतीकण्टकारिकात्रिकटुककासमर्द्दनेङ्गुदीत्वङ्मनःशिलाच्छिन्नरुहाकर्कटशृङ्गीप्रभृतिभिः कासहरैश्च कासघ्ने” (धूमे)। स्त्रियां ङीप्। सा च २कण्टकार्य्यां स्त्री शब्दच०। “हरीतकी कणा शुण्ठी मरिचं क्षौद्रसंयुतम्। कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः” भावप्र०उक्ते ३मोदकभेदे पु०। कासनाशककासहरादयोऽपि। कासरोगनिवारके त्रि० “येन तेन प्रकारेण वासकः कासनाशकः” वैद्यकम् कासहरश्चेति सुश्रुतः

**कासजित्** स्त्री कासं जयति जि—क्विप्। १भार्ग्याम् (वामनहाटी) राजनि०। २कासनाशके त्रि०।

**कासनाशिनी** स्त्री कासं नाशयति नश—णिच्—णिनि ङीप्। कर्कटशृङ्ग्यां रत्नमा०।

**कासन्दीवटिका** स्त्री वेशवारभेदे राजवल्लभः।

**कासमर्द्द** पु० कासं मृद्नाति मृद—अण् उप०स०। (कालकासिन्दा) वृक्षे तद्गुणाद्युक्तं भावप्र० यथा “कासमर्द्दोऽरिमर्द्दश्च कासारिः कर्कशस्तथा। कासमर्द्ददलं रुच्यं वृष्यं कासविषास्रनुत्। मधुरं कफवातघ्नं पाचनं कण्ठशोधनम्। विशेषतः कासहरं पित्तघ्नं ग्राहकं लघु”। सुश्रुतेऽयं सुरसादिगणे पठितः सुरसादिशब्दे विवृतिः। कस्य जनस्यासेन क्षेपेण मृद्यतेऽसौ मृद—कर्म्मणि घञ्। वेशवारभेदे स च पिष्टजलमिश्रितवस्त्रगालितवेसवारः इति पाकराजेश्वरः।

**कासमर्द्दन** पु० कासं मृद्नाति मृद—ल्यु ६त०। पटोले हारा०

**कासर** पुंस्त्री० के जले आसरति आ+सृ—अच् ७त०। महिषे अमरः तस्य कले सर्वदासरणात्तथात्वं स्त्रियां ङीष्।

**कासहन्** पु० कासं हन्ति हन—क्विप्। “कण्टकारीकृतः क्वाथः सकणः सर्वकासहा” इत्युक्ते कासनाशके १क्वाथभेदे

तस्य कासनाशकत्वात् तथात्वम् २कासनाशकमात्रे त्रि०

**कासार** पु० कस्य जलस्यासारोऽत्र । १सरोवरे विंशत्या रगणै-रचिते २दण्डकच्छन्दोभेदे च वृत्त० टी० । ३पक्वान्नभेदे न० भावप्र०

"घृते तप्ते विनिःक्षिप्य कटाहे पाचयेन्मनाक् । ततस्तत्र विनिःक्षिप्य खण्डं भागसमं पचेत् । ततश्चाक्षिप्य तत् पात्रे क्षिप्त्वा सम्यक् सुचिक्कणे । चतुरस्त्रीकृतं ह्येतत् भवेत् कासारसंज्ञकम् । कासारं रुचिदं श्रेष्ठं नातिरुच्यं नपिच्छिलम् । वृष्यासकफपित्तघ्नं विरुचौ रुचिकारकम् । प्रक्षिप्य माषाश्टङ्गाटकशेरुकाणां पृथक् पृथक् । शालूकस्य च कर्त्तव्यं कासारं खण्डसर्पिषा" । [ विवृतिः ।

**कासारि** पु० ६त० । कासमर्द्दवृक्षे भावप्र० कासमर्द्द शब्दे

**कासालु** पु० कासकारी आलुः । कोङ्कणदेशप्रसिद्धे आलुक-भेदे राजनि०

**कासीस** न० कासीं क्षुद्रकासं स्यति सो—क । (हिराकस) उपधातुभेदे तल्लक्षणवानयमित्येके कासीसशब्दे विवृतिः । "कासीसं त्रिवृता दन्ती हरितालं सुराष्ट्रजा" सुश्रु० ।

**कासृति** स्त्री० कुत्सिता सृतिः सरणम् । कुत्सितगतौ "न कासृत्या ग्रामं प्रविशेत्" गोभि०

**कास्तीर** न० ईषत्तीरमस्यास्ति कोःका नि० सुट् । ईषत्तीर-युक्ते नगरभेदे सि०कौ० ।

**कास्मर्य्य** पु० कास्मर्य्य+पृषो० शस्य सः । गाम्भार्य्याम्

**काहका** स्त्री काहला+पृषो० लस्य कः । काहलावाद्ये हि-रूपकोषः ।

**काहल** पुंस्त्री कुत्सितं हलति लिखति हल—अच्, कोः का। १विड़ाले २कुक्कुटे, स्त्रियां ङीष् ३शब्दमात्रे पु०४महाढ-क्कायाम्, स्त्री टाप्मेदि० ५धुस्तूराकारे वाद्यशब्दभेदे ६अप्सरोभेदे स्त्री शब्दच० ७अव्यक्तवाक्ये न० हेमच० । ८शुष्के ९भृशे, १०खले च त्रि० मेदि० ।

**काहलापुष्प** पु० काहलेव पुष्पमस्य । धुस्तूरे शब्दमा०

**काहलि** पु० कं सुखमाहलति ददाति आ+हल+इन् ६त० । १शिवे "कुक्ष्योऽग्रस्यश्च देहश्च काहलिः सर्वकामदः भा० आनु०१७अ० २तरुण्यां युवत्यां स्त्री ङीप् मेदि० ।

**काही** स्त्री ईषदाहन्ति आ+हन—ड गौरा० ङीष् । कुटज-वृक्षे राजनि०

**कि** ज्ञाने जुहो० पर० सक० अनिट् । चिकेति अकैषीत् । चिकाय । वैदिकोऽयं धातुः

**किंयु** त्रि० किमिच्छति मान्तत्वेन निषेधेऽपि वेदे क्यच् ततः छन्दसि उ । किमिच्छौ "किंयुर्विप्रोनद्योजोह्वीति" ऋ० १,२१,४, "किंयुः किमिच्छुः" भा०

**किंराजन्** पु० कःकुत्सितो राजा क्षेपार्थत्वात् न टच्समा०। कुत्सिते राजनि । किमः प्रश्नार्थकत्वे तु टच् । किं राज-इत्येव ब०व० । किंराजन् निन्दितन्पयुक्ते देशादौ त्रि०

**किंवत्** त्रि० किं विद्यतेऽस्य मतुप् मान्तत्वात् मस्य वः । किं-विशिष्टे स्त्रियां ङीप् । कस्येव कस्मिन्निव वा वति । किंतत्यार्थे षष्ठ्यन्तार्थे सप्तम्यन्तार्थे च अव्य० ।

**किंवदन्ति(न्ती)** स्त्री किम्+वद—झिच् वा ङीप् । जनश्रुतौ सत्ये असत्ये वा लोकप्रवादे अमरः । "इति व्याधानां सुखात् किंवदन्ती श्रूयते" हितो० । "अस्ति किलैषा किंवदन्ती—अस्माकं कुले कालरात्रिकल्पा विद्या नाम राक्षसी समुत्पत्स्यते" प्रबोधच०

**किंवा** अव्य० किञ्च वा च द्वन्द्वः । १वितर्के २सम्भावनायां ३पक्षान्तरद्योतने च मेदि० पदद्वयमित्यन्ये

**किंशारु** पु० कुत्सितं शृणाति किम्+शॄ—उण् । १धान्या-द्यग्रभागे, अम० "शूर्पशोधितकणकिंशारुकांस्तण्डुलान-मकदद्भिः प्रक्षाल्य" दश०कु०२वाये, २कङ्कपक्षिणि च मेदि० "किञ्जरयोः श्रिणः" उणा० सू० "शॄहिंसायाम् इत्यु-ज्ज्वलदत्तोक्तेः शान्तमध्योऽयं शब्दः० दन्त्यमध्यपाठः प्रामादिक एव । गतिकारकोपदत्वेन तत्पु० प्रकृतिस्वरः ।

**किंशुक** पु० किञ्चित् शुकइव शुकतुण्डाभपुष्पत्वात् । १पलाशे अमरः "फलस्तनस्थानविदीर्णरागिहृद्विश-च्छुकास्यस्मरकिंशुकाशुगाम्" नैष० "किंशुकाम्भोजबकु-लचूताशोकादिपुष्पितैः" सुश्रुतः "ते (दैत्या) हेमनिष्का-भरणाः कुण्डलाङ्गदधारिणः । निहता बह्वशोभन्त पुष्पिता इव किंशुकाः" भा०व०१०५अ०" । अस्य च निर्ग-न्धत्वम् "विद्याहीना न शोभन्ते निर्गन्धाइव किंशुकाः" चाणक्यः । फलहीनत्वञ्च "अविज्ञाय फलं योहि कर्म्म-त्वेवानुधावति । स शोचेत् फलवेलायां यथा किंशुकसे-चकः" रामा० २नन्दिवृक्षे राजनि०

**किंशुलक** पु० किंशुक+किंशुलुकादीनाम्" पा०नि०लुमध्यता । पलाशवृक्षे शब्दर० । अस्य गिरिशब्दे परे दीर्घः । किं-शुलुकागिरिः (पलाशप्रधानपर्व्वतः)

**किंशुलुकादि** पु० गिरौ परे दीर्घनिमित्ते पा०उक्ते शब्दगणे स च गणः किंशुलक शाव नड़ अञ्जन भञ्जन लोहित कुक्कुट ।

**किंस** त्रि० किं स्यति सो—क षत्वनादि० पूर्व्वपदस्थनिमित्ताद्

न यत्वम् । कुत्सितच्छेदके तद्वचे किसेति पाठान्तरम् पृषो० मनुस्वारलोपः । तदर्थे

**किंसखि** पु० कुत्सितः सखा किमःक्षेपार्थत्वात् न टच्समा०। कुत्सिते सख्यौ "स किंसखा साधु न शास्ति योऽधिपम्" किरा०प्रश्नार्थे किमः टच्समा०। किंसखइत्येव।

**किंस्वित्** अव्य० द्वन्द्वः। वितर्के गणर० स्थाणुरयं किंस्वित् पुरुषः। स्थाणुत्वपुरुषत्वाभ्यां वितर्कोऽत्र गम्यते।

**किकि** पु० कक इन् पृषो० इत्वम्। १नारिकेले राजनि०। किकीतिशब्दकारके २चाषपक्षिणि (स्वर्ण चातक) शब्दमा०।

**किकिदिव** पु० किकीत्यव्यक्तशब्देन दीव्यति दिव—क। चाषपक्षिणि। इन्। किकिदिविरप्यत्र शब्दमा०।

**किकिन्** पु०किकीतिशब्दोऽस्त्यस्य वीह्या० इनि। काषपक्षिणि किकीदिविरिति पदद्वयम् अमरव्याख्याने चीरस्वामी।

**किकिर** त्रि० कृ—घञर्थे कर्म्मणि क वेदे पृषो० आदौ क्यागमः। कीर्णे "आविश्य किकिरा कृणु पत्नीनाम्" ऋ०६'५३'७' "किकिरा कीर्णानि"भा०सुपां सुलुगित्यादिना आच्। एतेन किकिराशब्दकल्पनं चिन्त्यम्।

**किकीदि(दी)वि** पु० किकीतिशब्देन दीव्यति दिव—इन् उणा०सू०किकीदिवीति निर्द्देशात् नि०दीर्घः। चाषे सि० कौ० अत्र पूर्वोत्तरपदयोर्ह्रस्वदीर्घविनिमये किकिदीविरित्यपि तत्रैव सि० कौ०। "साकं यक्ष्म प्रपत चाषेण किकिदीविना" ऋ०१०,९७,१३।

**किक्किट** त्रि० कुत्सिते। "किक्किटाकारेण यास्याः पशवो भवन्ति "तैत्ति० स०

**किक्किश** पु०सुश्रुतोक्ते दैहिके कृमिभेदे।"केशरोमनखादाश्च दन्तादाः किक्किशास्तथा" कृमिशब्दे विवृतिः

**किक्किसाद** पु० "राजिमन्तस्तु" इत्युपक्रमे "गोधूमकः किक्किसाद इति सुश्रुतोक्ते सर्पभेदे। सर्पशब्दे विवृतिः

**किखि** पु०स्त्री० (खेँक शेयालि) शृगालभेदे त्रिका०

**किङ्कणी** स्त्री किञ्चित्कणति कण—शब्दे इन् ङीप्। क्षुद्रघण्टिकायां हेमच०

**किङ्कर** त्रि० किञ्चित् करोति अच्। १दासे सेवके स्त्रियान्तु टाप्। किङ्करस्य पत्नी ङीष्। २किङ्करी दासपत्न्याम् स्त्री "अवेहि मां किङ्करमष्टमूर्त्तेः" रघुः। "विप्रस्य किङ्करो भूपो वैश्योभूपस्य भूमिप!। सर्वेषां किङ्करः शूद्रो ब्राह्मणस्य विशेषतः" पुरा०। किङ्करस्य गोत्रापत्यं नडा० फक्। कैङ्करायण तद्गोत्रापत्ये पुंस्त्री।

**किङ्कल** पु०सात्वतवंश्ये न्वपभेदे।"भजमानस्य निम्लोचिः किङ्कलो-

सुषिरेव च"भाग०९,२४,५, नडादौ किङ्कलेति वा पाठः ततो गोत्रापत्ये फक्। काङ्कलायन तद्गोत्रापत्ये पुंस्त्री०

**किङ्किणी** स्त्री किङ्किणी+पृषो०इत्वम्। १क्षुद्रघण्टिकायाम् अम०। तदाकारफले २विकङ्कततरौ राजनि०"रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि। शैव्यसुग्रीवयुक्तेन किङ्किणीजालमालिना:" भा०आ०२२०अ०"सौभाग्यं महदाप्नोति किङ्किणीं प्रददद्धरेः" विष्णु ध०पु०"भग्नं भीमेन मरुता भवतोरथकेतनम्। पातितं किङ्किणीजालम्" वेणी०। ३अम्लरसायां द्राक्षायां "क्षुद्रधरः जलजम्बू वृक्षे हलायुधः "कट्फलं किङ्किणी द्राक्षा लकुचं मोचमेव च" हारीत०। किंशब्दः किम इव यस्यां स्तुतौ गौरा०ङीष्। तन्त्रसारोक्ते ५देवीस्तुतिभेदे सा च "किं किं दुःखं सकलजननि! क्षीयते न स्मृतायाम्" इत्यादिस्तुतिः।

**किङ्किणीका** स्त्री कण—शब्दे ईकन् प्रकृतेः किङ्किणादेशः। क्षुद्रघण्टिकायाम्। "तमुवाह वाहः सशब्दचामीरकिङ्किणीकः" कुमा०। अभूमिपालान् भोजान् स्वानातिष्ठत् किङ्किणीकिनः हरिव० ३८। अस्य पुंस्त्वमपि "किङ्किणीकविभूषितान्"

**किङ्किणीकाश्रम** पुंन० भा० प्रसिद्धे तीर्थभेदे। "वैमानिक उस्तृणन् किङ्किणीकाश्रमे तथा निवासेऽप्सरसां दिव्ये कामचारी महीयते" भा०अनु०२५अ०।

**किङ्किर** पुंस्त्री किञ्चित् किरति वियोगिनं रागाय वा कृ—क। १भ्रमरे २कोकिले ३अश्वे च सारस्वतः स्त्रियां जातित्वात् ङीष्। ४कामे पु०४गजकुम्भे न०५रक्तवर्णे पु०६तद्वति त्रि०

**किङ्किरात** पुं० किङ्किरं रक्तवर्णमतति अत—अण्। अशोकवृक्षे जटा०भरनमितशिरः"शेखरैः किङ्किरातैः" रत्ना०।

**किङ्किराल** पु० किङ्किराय रक्ततायै अलति कार्य्यायेति अल—अच् २त०। वर्बूरे वैद्य० तस्य निर्यासयोगेन रक्तवर्णस्थिरत्वकरणात् तस्य तथात्वम्।

**किङ्किरिन्** पु० किङ्कर+इनि। (वइचि)विकङ्कततरौ जटा०

**किङ्किल** अव्य० किम्+किल+द्वन्द्वः। "किङ्किलेति कोपाश्रद्धयोः"गणरत्नोक्ते १कोपे २अश्रद्धायाञ्च। "न मर्षये न श्रद्दधे किङ्किल भवान् वृषलं याजयेत्" भवत्कर्त्तृकं शूद्रयाजनं कोपविषयः अश्रद्धाविषयश्च। तदर्थक किङ्किलशब्दयोगे लिङ्।

**किञ्च** अव्य० किञ्च च द्व०। १आरम्भे,२समुच्चये,३साकल्ये, ४सम्भावनायाञ्च मेदि० ५अवान्तरे जटा०

**किञ्चन** अव्य० किम्+चन सुप्सु० पदद्वयमित्यन्ये। १अवाकल्ये,

२अल्पे च किम्+चन-अच्। ३हस्तिनख्यपत्राभे पु० शब्दरत्ना० "असाकल्ये तु चिच्चन" इत्यम-रोक्तेः चनेति भिन्नं पदम् अतएव मयू० अकिञ्चनशब्दो-निपातितः।

**किञ्चित्** अव्य०किम्+चित् द्वि० चिच्च समा० वा।१असाकल्ये, २अल्पे च राजनि०। अस्य पदद्वयत्वमते १अ किञ्चित्कर इत्यादौ सह सुपेति समास इति बोध्यम्। इदन्तया नि-र्द्देष्टुमशक्यत्वमेव किञ्चित्त्वम्। "कम्पेन किञ्चित् प्रति-गृह्य मूर्द्धः" रघुः "किञ्चित् प्रकाशस्तिमितोग्रतारैः"। "आवर्ज्जिता किञ्चिदिव स्तनाभ्याम्" कुमा०।

**किञ्जलुक** पु० किञ्चित् चुलुम्पति सीतः चुलुम्प-डु संज्ञायां कन्। (केंचो) महीलताख्ये कीटभेदे अम० टीका० किञ्चिलिकोऽप्यत्र अमरटी०। [किन्दानशब्दे दृश्यम्।

**किञ्जप्य** न० किञ्चिज्जप्यं यत्र। सा० प्रसिद्धे तीर्थभेदे

**किञ्जल** न० किञ्चित् जलमत्र। पद्मादेः केशरे शब्दर० टीका० ललोपे" किञ्जलमव्दल राजनि०।

**किञ्जल्क** पु०किञ्चित् जलति जल-अपवारणे क तस्य नेत्त्वम्। पुष्पादेः १केशरे,२पुष्परेणौ,३नागकेशरे च मेदि० पद्मगन्ध-स्थे केशाकारे पदार्थे।"केचित् किञ्जल्कसङ्काशाः केचित् पीताः पयोधराः"भा०व०१८८अ०। "पद्मोदरच्युतरजः किञ्जल्कारुणतां गतैः" भा०व०१५८अ० "किञ्जल्किनीं ददौ चार्क्किमालामम्लानपङ्कजाम्" देवीमा० अमरे पुंस्त्वं जटाधरे क्लीबत्वेनुभयलिङ्गता। तद्गुणादिकं भावप्र० उक्तं "किञ्जल्कः शीतलोरूक्षः कषायो ग्राह-कोऽपि सः। कफपित्ततृषादाहरक्तार्शोविषशोषजित्" तत्र पुष्पकेशरे "हिरण्यस्रजोधाजपेयुः वज्रकिञ्जल्काः शतपुष्करा होतुः"आ०श्रौ० ६,४,५"वज्रैः कृतकिञ्जल्काः कृतकेशरा" होतुः स्रजःकार्य्याः नारा०

**किट** गतौ सक० भये अक० भ्वा०पर० सेट्। केटति अकेटीत् किकेट प्रतिकटति।

**किटकिटाय** किटकिटे शब्द्य शब्दकरणे डाच्-क्यङ्-नामधातुः किटकिटायते अकिटकिटायीत् "दन्तान् किटकिटायते उद्वताच्चोजिह्वां खादति" सुश्रुतः

**किटि** पु० किट-गतौ इन् किच्च। सूकरे अमरः स्त्रियां भिदन्तत्वात् वा ङीप्

**किटिभ** पु० किटिरिव भाति क्षणत्वात् भा-क। १केशकीटे (उकुण) हेम०। २सर्पदंशनोपद्रवभेदे न० सुश्रु०। "दद्रवः कर्णिकाश्चैव विसर्पाः किटिभानि च। तैर्भवन्तीह द-ष्टानां यथास्वञ्चाप्युपद्रवाः"।"पिडकोपचयश्चोग्राः विसर्पाः किटिभानि च। पर्व्वभेदोरुजस्तीव्रोज्वरोमूर्च्छा च दा-रुणाः। दौर्बल्यमरुचिश्वासोवमथुर्लोमहर्षणम्। "दृष्ट-रूपं समासोक्तमेतच्च व्यासतः शृणु" सुश्रु०। तल्लक्षणं तत्रोक्तं यथा। "यत् स्त्रावि वृत्तं घनमुग्रकण्डु तत् स्निग्धकृष्णं किटिभं वदन्ति"

**किट्ट** न० किट-क्त नि० इडभावः। १धातूनां मले, २तैलाद्य-धोभागस्थे मले च"पृथक् किट्टं पृथङ्मलम्" योगार्णवः। "आहारस्य रसः सारः सारहीनो मलद्रवः। सिराभि स्तत्जलं नीतं वस्तिं मूत्रत्वमाप्नुयात्। शेषं किञ्चित्, च यत्तस्य तत्पुरीषं निगद्यते" भावप्र०।

**किट्टवर्ज्जित** न० ३त०। शुक्रे चरमधातौ यथा च तस्य पाके किञ्चित् मलमून्यत्वं तथोक्तं भावप्र० तच्च धातुकरशब्दे ५६०पृ०उक्तम्।

**किट्टाल** पु० किट्टमालाति आ+ला-क। १ताम्रकलसे किट्ट-रूपेण अलति पर्य्याप्नोति अल-अच्। २लौहमले मेदि०

**किण** पु० कण गतौ अच् पृषो० अत इत्त्वम्। (घेटा)। (कड़ा)१शुष्कव्रणे, २मांसग्रन्थौ, ३घर्षणजे चिह्ने च। "ज्याघातरेखाकिणलाञ्छनेन" रघुः "कराभ्यां किणजा-ताभ्यां शनकैः संवयाहतुः" भा०व० १४४अ०। [शब्दर०

**किणि** स्त्री किणाय तच्चिह्नत्तये प्रभवति वा० इन्। अपामार्गे

**किणिही** स्त्री किण-अस्त्यर्थे इनि किणिनो व्रणान् हन्ति हन-ड गौ० ङीप्। अपामार्गे अमरः। "इङ्गुदी-कि-णिही-दन्ती-सरला-देवदारुभिः" सुश्रु०

**किरव** न० उल्वादि० नि०। १सुराबीजे २ पापे च मेदि० सुराबीजद्रव्यभेदश्च नानाविधः सौत्रामणीशब्दे वक्ष्यते, भावप्र० "सुराबीजन्तु किण्वकम्"इति परिभाष्य"सुराबीजं यवगोधूमतण्डुलादि" इति व्याख्यातं सुश्रुते तु कल्कस्य तण्डुलादितो भिन्नत्वेन निर्द्देशः कृतः यथा "वैदेहिककृलानां काथे माषान् सुभावितान्। सुधौतां-स्तत्कप्रायेण शालीनाञ्चापि तण्डुलान्। अवक्षुद्यैकतः पिण्डान् कृत्वा शुष्कान् सुचूर्णितान्। शालितण्डुल चूर्णञ्च तत्कषायोपसाधितम्। तस्य पिष्टस्य भागांस्त्रीन् किण्वभागविमिश्रितान्। मण्डोदकार्थे काथञ्च दद्यात्तत्-र्व्वमेकतः। निदध्यात्कलसे तान्तु सुरां जातरसां पिबेत्" "किण्वादिभ्योमदशक्तिवत्" सां०सू०। अयं शब्द पु० न० इति भरतः। तस्मै हितम् अपूपा० यत् छ वा किण्व्य किण्वीय तत्साधने द्रव्ये त्रि०

**कित** संशये रोगापनयने च भ्वा०पर०सक० सेट् एतदर्थे स्वार्थे सन्। चिकित्सति अचिकित्सीत् चिकित्सा चिकित्सितुम् चिकित्सितः। वासे अक० न सन् इच्छायां सक० न सन्। केतति अकेतीत्। केतनं केतुः

**कित** ज्ञाने जुहो०पर०सक० सेट् वैदिकोऽयम्। चिकित्ति अकेतीत्। "यं नो अचिकेत् चित्रभानो" ऋ०१०.५१,२,

**कित** पु० कित–क। १ ऋषिभेदे तस्य गोत्रापत्यम् अश्वादि० फञ्। कैतायन तद्गोत्रापत्ये पुं स्त्री०

**कितव** पु० कि–भावे–क्त कितेन वाति वा–क। १द्यूतकारके २धुस्तूरवृक्षे अमरः ३वञ्चके, ४खले,च त्रि० मेदि० ५चौरनामकगन्धद्रव्ये, पु० शब्दरत्ना०। "यन्मा पितेव कितवं शशास" ऋ० २,२९,५। इतकारके "कितवासच्चैर्दिध्यासमप्रति" अथ० ७,५,१, "स्तेनाः साहसिकाधूर्त्ताः कितवा यौथकाश्च ये। असाक्षिणश्च ते दृष्टास्तेषु सत्यं न विद्यते" नारदः। "कितवाद्यूतकराः" रघु०। द्यूते विशेषः या०मिता० दर्शितोयथा "द्रष्टारोव्यवहाराणां साक्षिणश्च त एवहि" या० "द्यूतव्यवहाराणां द्रष्टारस्त एव कितवा एव राज्ञा नियोक्तव्याः न पुनःश्रुताध्ययनसम्पन्ना इत्यादि नियमोऽस्ति। साक्षिणश्च द्यूते द्यूतकारा एव कार्य्याः न तत्र स्त्रीबालकितवेत्यादिनिषेधोऽस्ति। क्वचित् द्यूतनिषेदुन्दण्डमाह" मि० "राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः" या० "कूटैरक्षादिभिरुपधिना च मतिवञ्चनहेतुना मणिमन्त्रौषधादिना ये दीव्यन्ति तान् श्वपदादिनाऽङ्कयित्वा राजा स्वराष्ट्रान्निर्वासयेत्। नारदेन निर्वासने विशेष उक्तः "कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत्। कण्ठेऽक्षमालामासज्य सह्येषां विनयः स्मृत" इति। यानि च मनुवचनानि द्यूतनिषेधपराणि "द्यूतं समाह्वयञ्चैव यः कुर्य्यात्कारयेत वा। तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः" इत्यादीनि तान्यपि कूटाक्षदेवनविषयतया राजाध्यक्षसभिकरहितद्यूतविषयतया च योज्यानि" मि० किञ्च "द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणात्" या०। "यत्पूर्वोक्तं द्यूतं तदेकं मुखं प्रधानं यस्य द्यूतस्य तत्तथोक्तं कार्य्यम्। राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः तस्करज्ञानकारणात् तस्करज्ञानरूपप्रयोजनार्थ्यालोचय प्रायशः चौर्यार्जितधना एव कितवा भवन्त्यतश्चौरविज्ञानार्थमेकमुखं कार्य्यम्" मिता०। "ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम्। गृह्णीयाद्धूर्त्तकितवात् इतराद्दशकं शत" या०। "यदात्मीयं वाससां तत्र राशिं समाक्षिपन् कितवो मन्दबुद्धिः" भा० आ०१अ०। कितवस्य गोत्रापत्यम् अश्वा०फञ्। कैतवायन तद्गोत्रापत्ये पुंस्त्री। उत्करा० चतुरर्थ्यां छ। कितवीय तन्निकृत्तादौ अनन्तरापत्ये तिका० फिञ्। कैतवायनि तदपत्ये पुंस्त्री० तैकायनिश्चन्द्रेन द्वन्द्वे फिञो लुक्, बहुत्वे। तैकायनयश्च कैतवायनयश्च तिककितवाः,। अस्य व्याघ्रादि० उपमितसमासः। कितवधूर्त्तः। शौण्डा० ७त०; अक्षकितवः। वञ्चके "तव कितव! किमाहितैर्वृथा नः" माघः ६रोचननामगन्धद्रव्ये राजनि०। [कीटभेदे त्रिका०

**किन्तनु** पु० का कुत्सिता तनुरस्य। (माकडसा) ख्याते

**किन्तमाम्** अव्य० कुत्सितार्थे किम्+बहूनां मध्ये एकस्यातिशये तमप् आमु। बहुषु मध्ये प्रकृष्टे कुत्सिते

**किन्तराम्** अव्य० कुत्सितार्थे किम्+द्वयोर्मध्ये एकस्यातिशये तरप् आमु। द्वयोर्मध्ये प्रकृष्टे कुत्सिते।

**किन्तु** अव्य० किञ्च तु च द्व०। १पूर्ववाक्यसङ्कोचज्ञापने, २प्रागुक्तविरुद्धार्थे, ३किंपुनरित्यर्थे च मेदि०।

**किन्तुघ्न** पु० तिथ्यर्द्धरूपकरणभेदे करणशब्दे विवृतिः

**किन्दत** पु० भारतप्रसिद्धे कूपभेदरूपे तीर्थे "किन्दतं कूपमासाद्य तिलप्रस्थं प्रदाय च। गच्छेत परमां सिद्धिमृणैर्मुक्तः कुरूद्वह!" भा०व०८३०अ०।

**किन्दम** पु० ऋषिभेदे सहि मृगरूपेण मृगीरूपधारिण्या स्त्रिया सह सङ्गमकाले पाण्डुना मृगबुद्ध्या हतः। तत्कथा भा० आ० ११८अ० यथा "राजा पाण्डुर्महारण्ये मृगव्यालनिषेविते। चरन् मैथुनधर्मस्थं ददर्श मृगयुग्मकम्। ततस्तांश्च मृगीं तञ्च रुक्मपुङ्खैः स पत्रिभिः। निर्बिभेद शरैस्तीक्ष्णैः पाण्डुः पञ्चभिराशुगैः। स च राजन्! महातेजा ऋषिपुत्रस्तपोधनः। भार्य्यया सह तेजस्वी मृगरूपेण सङ्गतः" इत्युपक्रम्य पाण्डुं प्रति तच्छरविद्धस्य तस्य शापदानमुक्तं तत्रैव यथा "मृग उवाच। नाहं घ्नन्तं मृगान् राजन्! विगर्हे चात्मकारणात्। मैथुनन्तु प्रतीक्ष्यं मे त्वयेहाद्यानृशंस्यतः। सर्व्वभूतहिते काले सर्व्वभूतेप्सिते तथा। को हि विद्वान् मृगं हन्याच्चरन्तं मैथुनं वने। अस्यां मृग्यां च राजेन्द्र! हर्षान्मैथुनमाचरम्। पुरुषार्थफलं कर्त्तुं तत्त्वया विफलीकृतम्। पौरवाणां महाराज! तेषामक्लिष्टकर्म्मणाम्। वंशे जातस्य कौरव्य! नानुरूपमिदन्तव। नृशंसं कर्म्म सुमहत् सर्व्वलोकविगर्हितम्। अस्वर्ग्यमयशस्यञ्चाप्यधर्म्मिष्ठञ्च

भारत! । स्त्रीभोगानां विशेषज्ञः शास्त्रधर्म्मार्थतत्त्ववित्। नार्हस्त्वं सुरसङ्काश! कर्त्तुमस्वर्ग्यमीदृशम् । त्वया नृशंसकर्त्तारः पापाचाराश्च मानवाः । नियन्तव्याः पार्थिवश्रेष्ठ! त्रिवर्गपरिवर्ज्जिताः। किं कृतं ते नरश्रेष्ठ! मामिहानागसं घ्नता । मुनिं मूलफलाहारं मृगवेशधरं नृप!। वसमानमरण्येषु नित्यं शमपरायणम्। त्वयाहं हिंसितो यस्मात्तस्मात्त्वामप्यहं शपे। द्वयोर्न्नृशंसकर्त्तारमवशं काममोहितम् । जीवितान्तकरो भाव एवमेवागमिष्यति । अहं किमिन्दमो नाम तपसा भावितो मुनिः । व्यपत्रपन्मनुष्याणां मृग्यां मैथुनमाचरम् । मृगो भूत्वा मृगैः सार्द्धं चरामि गहने वने। न तु ते ब्रह्महत्येयं भविष्यत्यविजानतः । मृगरूपधरं हत्वा मामेवं काममोहितम् । अस्य तु त्वं फलं मूढ़! प्राप्स्यसीदृशमेव हि। प्रियया सह संवासं प्राप्य कामविमोहितः । त्वमप्यस्यामवस्थायां प्रेतलोकं गमिष्यसि । अन्तकाले हि संवासं यया गन्तासि कान्तया। प्रेतराजपुरं प्राप्तं सर्व्वभूतदुरत्ययम्। भक्त्या मतिमतां श्रेष्ठ! सैव त्वामनुगमिष्यति । वर्त्तमानः सुखे दुःखं यथाहं प्रापितस्त्वया। तथा त्वाञ्च सुखं प्राप्तं दुःखमभ्यागमिष्यति" । [तदपत्ये पुंस्त्री॰

**किन्दर्भ** पु॰ ऋषिभेदे तस्यापत्यम् विदा॰ अञ्। कैन्दर्भ

**किन्दान** न॰ किञ्चिदपि दानमावश्यकं यत्र । भारतप्रसिद्धे सरकतीर्थस्थे तीर्थभेदे सरकमुपक्रम्य "किन्दाने च नरः स्नात्वा किञ्जप्ये च महीपते! । अप्रमेयमवाप्नोति दानं जप्यञ्च भारत!" भा॰,व॰,८३अ॰।

**किन्दास** पुं॰ कः कुत्सितोदासः । निन्दिते दासे ततः अनार्षत्वात् अपत्ये विदा॰ अञ्। कैन्दास तदपत्ये पुंस्त्री॰।

**किन्धिन्** पुं॰ कुत्सिता धीरस्यस्य व्रीह्या॰इनि। अश्वे त्रिका॰ स्त्रियां ङीप्।

**किन्नर** पुंस्त्री॰ कः कुत्सितो नरः तुरङ्गवदनत्वात् । देवयोनिभेदे स च पुलस्त्यर्षिपुत्रभेदः । "राक्षसाश्च पुलस्त्यस्य वानराः किन्नरास्तथा । यक्षाश्च मनुजव्याघ्र! पुत्रास्तस्य च धीमतः" भा॰ आ॰ ६६अ॰। "किन्नरान् वानरान् मत्स्यान् विविधांश्च विहङ्गमान्" मनुः स्त्रियां ङीप् । "ऋक्षीषु च तथा जाता वानराः किन्नरीषु च" रामा॰। किंस्वित्कणत्किन्नरमध्युवास" "उद्गास्यतामिच्छति किन्नराणाम्" कुमा॰। "किमिदं किन्नरकण्ठि! सुप्यते" रघुः । २वर्षभेदे च किम्पुरुषशब्दे विवृतिः ३अर्हदुपासकभेदे हेम॰।

**किन्नरेश** पुं॰ ६त॰। कुवेरे तस्य तदधिपत्वकथा काशी॰ ख॰ १३अ॰यथा "वरं ददामि ते वत्स! तपसाऽनेन तोषितः। निधीनामधिनाथस्त्वं गुह्यकानामपीश्वरः । यक्षाणां किन्नराणाञ्च राजा राज्ञाञ्च सुव्रत!। पतिः पुण्यजनानाञ्च सर्व्वेषां धनदोभव" किन्नरेश्वरादयोऽप्यत्र

**किन्नु** अव्य॰ किञ्च नु च द्व॰। १प्रश्ने, २वितर्के ३सादृश्ये ४स्थाने च जटाधरः पदद्वयमित्येके ।

**किप्य** पु॰ सुश्रुतोक्ते पुरीषजे कृमिभेदे । "अयवा विपवाः किपप्राश्चिप्या गण्डूपदास्तथा। चुरवो द्विमुखाश्चैव सप्तैवैते पुरीषजाः" सुश्रु॰।

**किम्** त्रि॰कु-डिमु बा॰डिच्च । १कुत्सिते २जिज्ञासिते ३वितर्कविषये। ४कुत्सायां ५गर्हणे ६वितर्के ७प्रश्ने ८सादृश्ये, (प्रकारे) ९करणे च अव्य॰जटा॰ १०ईषदर्थे ११अतिशये गणरत्नम् । तत्र त्रिलिङ्गस्य सर्व्वनामता के कस्मै इत्यादि "के यूयं स्थल एव संप्रति वयं प्रश्नोविशेषाश्रयः" सा॰द॰। "कस्मै नाथ! समर्थ कैरवकुलं व्योमान्तमालम्बसे" उद्भटः। "केषां नैषा भवति कविता कामिनी कौतुकाय" प्रसन्नरा॰। "कस्मिंश्चिद्वनोद्देशे भासुरकोनाम सिंहः प्रतिवसति" पञ्चतन्त्रम्। "कस्मिन्नु खलु विज्ञाते सर्वं विज्ञातं भवति" मुण्डकश्रुतिः । निन्दितार्थे किंराजा किङ्गौः इत्यादि। "किंराजा यो न रक्षति" "स किंसखा साधु न शास्ति योऽधिपम्" किरा॰ इत्यादि तत्र ईषदर्थे न किमप्यस्यास्ति । किञ्चिदपि नास्तीत्यर्थः अतिशये किमप्येष प्रगल्भसे अतिशयितं प्रगल्भसे इत्यर्थः अव्ययस्य प्रश्ने "किमिदं किन्नरकण्ठि सुप्यते" रघुः
तत्र किंशब्दशक्तिबोधादिप्रकारो गदाधरेण शक्तिवादे दर्शितो यथा ।

"किंपदस्य जिज्ञासिते शक्तिः एतदेव स्वीयजिज्ञासाज्ञापनाय किंपदघटितप्रश्नवाक्यं प्रयुज्यते । तत्रोद्देश्यवाचककिंपदस्य समभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो धर्मः प्रवृत्तिनिमित्तं उपस्थाप्यतावच्छेदकत्वान्तमुपलक्षणतयानुगमकं शाब्दबोधे तदभानात् । एवञ्च कः पचतीत्यतः पाककृतित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन जिज्ञासितो यो धर्म्मस्तद्वान्पचतीत्याकारोऽन्वयबोधः प्रतिपाद्यते किञ्चिद्धर्म्मावच्छिन्नोद्देश्यतानिरूपितपाककृतित्वावच्छिन्नविधेयताशालिज्ञानं भवत्वित्याकारिकाया जिज्ञासायास्तादृशबोधविषयकतया

ताद्दशेच्छाविषयीभूतज्ञानजनकाद्ब्राह्मणः पचतीत्युत्तरवाक्यात्तन्निवृत्तिरिति ताद्दशप्रश्नानन्तरं तथैवोत्तरं प्रयुज्यते। न चैवं प्रमेयः पचतीत्युत्तरवाक्यमेव कथं ताद्दशप्रश्नानन्तरं न प्रयुज्यते तज्जन्यज्ञानस्यापि ताद्दशेच्छाविषयत्वादिति वाच्यं जिज्ञासाविषयीभूतस्वसमभिव्याहृतपदोपस्थाप्यविधेयन्यूनवृत्तिधर्मावच्छिन्नएव ताद्दशकिंपदस्य शक्त्यभ्युपगमात्। अभेदेन स्वार्थान्वितोद्देश्यवाचकपदान्तरसमभिव्याहृतकिंपदस्य शक्यतावच्छेदकगर्भे च स्वार्थाभेदान्वयितावच्छेदकत्वोपलक्षितधर्मन्यूनवृत्तित्वमपि धर्मांशे विशेषणं देयमतः को ब्राह्मणः पचतीत्यादिप्रश्नानन्तरञ्चैत्रः पचतीत्यादिकमुत्तरवाक्यं प्रयुज्यते नतु मनुष्यः पचतीत्यादिकं मनुष्यत्वादेर्ब्राह्मणत्वाद्यन्यूनवृत्तित्वात्तदवच्छिन्नोद्देश्यकत्वेन ज्ञानविषयेच्छायास्तत्राप्रतीतेः एवं यत्रोद्देश्यतावच्छेदके किंपदार्थस्याभेदेनान्वयस्तत्र तदन्वयितावच्छेदकधर्मावच्छिन्नविशेषणतापन्नतदन्वयितावच्छेदकधर्मन्यूनवृत्तिधर्मावच्छिन्नोद्देश्यतावच्छेदकताकप्रकृतज्ञानगोचरेच्छा किंपदेन बोध्यतेऽतः कति घटाः सन्तीत्यादौ डतिप्रत्ययार्थे संख्यादौ किंपदार्थस्य जिज्ञासितधर्मावच्छिन्नस्याभेदेनान्वयात् संख्यात्वन्यूनवृत्तिदशत्वत्वाद्यवच्छिन्नोद्देश्यतावच्छेदकताकबोधजनकं दशसंख्यका घटाः सन्तीत्युत्तरं तत्र प्रयुज्यते। यत्रोद्देश्यतावच्छेदकीभूतविभक्त्याद्यर्थे भेदेन किंपदार्थान्वयः कस्य पुत्रः सुन्दर इत्यादौ तत्र याद्दशसम्बन्धेन यदवच्छिन्ने यदन्वयस्तत्र ताद्दशसम्बन्धेन विशेषधर्मावच्छिन्नविशेषिततदवच्छिन्ननिष्ठोद्देश्यतावच्छेदकतावच्छेदकताकप्रकृतविधेयज्ञानगोचरेच्छा प्रतीयते एवं विधेयवाचककिंपदस्य स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासितो विशेषधर्मस्तदवच्छिन्ने शक्तिरित्ययं क इत्यादौ इदन्त्वावच्छिन्नांशे विधेयतावच्छेदकत्वेन जिज्ञासितधर्मवानित्याकारकोऽन्वयबोधः। तेन तद्विषयकजिज्ञासाजनकज्ञानजनकं चायं ब्राह्मण इत्याद्युत्तरवाक्यं ताद्दशप्रश्नानन्तरं प्रयुज्यते। एवं यत्र वेधेये विधेयतावच्छेदके वा किंपदार्थस्य तदवच्छेदकधर्मस्याभेदेन वान्वयः इदं किम् इदं किंधनं भवतः कति पुत्राः भवान् कस्य पुत्र इत्यादौ रीतिः पूर्ववदूहनीया "किमिन्दुः किं पद्मं किमु मुकुरविम्बं किमु मुखं किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ। कटौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ तडिद्वा तारा वा कनकलतिका वा किमवला" इत्यादावव्ययकिमो वाशब्दस्येव वितर्कोऽर्थः। वितर्कश्च प्रयोक्तुः सम्भावनात्मकं ज्ञानं तदर्थस्य च विशेष्यतासम्बन्धेन प्रथमान्तपदोपस्थाप्यविशेष्ये प्रकारितासम्बन्धेन तत्र च विशेषणस्य चन्द्रादेरन्वयः नामार्थेनाव्ययार्थस्य भेदान्वयेऽविरोधात्। यत्र विशेषणवाचकमपि प्रथमान्तं तत्राभेदसम्बन्धावच्छिन्नप्रकारितासंसर्गः यत्र तु प्रकृत्यर्थस्य विशेष्यतया स्वार्थबोधकं विभक्त्यन्तं, यत्र किंपदासत्त्वे ताद्दशविभक्त्यन्तसमुदायार्थस्य विशेष्ये याद्दशसम्बन्धेनान्वयस्ताद्दशसम्बन्धावच्छिन्नप्रकारितैव ताद्दशार्थस्य किंपदार्थे संसर्गोऽतः किमिन्दुरित्यादावभेदेन चन्द्रादिप्रकारिका धनमिदं किं चैत्रस्येत्यादावाश्रयत्वादिसम्बन्धेन चैत्रस्वत्वादिप्रकारिका सम्भावना निरमतः प्रतीयते किमिन्दुरित्यादौ सम्भावनाबोधोत्तरं तत्प्रयोजकाह्लादकत्वादिप्रतीतिस्त्वार्थी। कुत्सार्थकमपि क्वचित्किंपदं यथा किङ्गौरित्यादौ।"

**किमिच्छक** त्रि० किमिच्छसि किमिच्छसीति पृच्छति पृषो०। किमिच्छसि किमिच्छसीति प्रश्नकारके भोजनाद्यर्थमाह्वानाय नियुक्ते १भृत्यादौ। "सुमनोमोदकै रत्नैर्हिरण्येन च भूरिणा। गोभिर्वस्त्रैश्च राजेन्द्र! विविधैश्च किमिच्छकैः" भा० शा० ३८ "किमिच्छसि किमिच्छसीतिप्रश्नकारकैर्भृत्यैः विविधैर्गोवस्त्रादिभिर्निमन्त्रयद्भिः" नीलक०। किमिच्छसीति प्रश्नेन दानार्थं कायति शब्दायतेऽत्र पृषो०। २मार्कण्डेयपुराणोक्ते व्रतभेदे पु० तद्व्रते हि "पुरोहितस्य वीरायाः (तन्नामराजमहिष्याः) वदतोऽर्थिजनं प्रति। कः किमिच्छति दुःसाध्यम् कार्य्यं किंसाध्यतामिति। करन्धमस्य महिषी किमिच्छकमुपोषिता। राजपुत्रोऽप्यविक्षित्तु श्रुत्वा पौरोहितं वचः। प्रत्युवाचार्थिनः सर्व्वान् राजद्वारमुपागतान्। मया साध्यं शरीरेण कार्य्यं किञ्चित् ब्रवीतु मे। मम माता महाभागा किमिच्छकमुपोषिता। श्रुतवन्तु मेऽर्थिनः सर्व्वे प्रतिज्ञातं मयात्र वै। किमिच्छथ ददाम्येवं क्रियमाणे किमिच्छके" अर्थिनोऽभिलाषानुरूपदानार्थकेच्छाप्रश्नपूर्व्वकं तद्दानं विहितमिति तस्य तथात्वम्। ३इच्छाविषयप्रश्नपूर्व्वकेष्टेच्छानुरूपदेयमात्रेऽपि "प्रतिश्रयान् सभाः कूपान् प्रपाः पुष्करिणीस्तथा। नैत्यकानि च सर्व्वाणि किमिच्छकमतीव च" भा०शा०६६८५ श्लो०

**किमीदिन्** त्रि० किमिदानीमिति चरति किम्+इदानी-

स्+इनि पृषो०। किमिदानीमित्येवं चरणशीले पिशुने-खले "द्विषे धत्तमनवायं किमीदिने" ऋ०७,१०४,२, "किमीदिने किमिदानीमितिचरते पिशुनाय" भा० "वि-लुपन्तु यातुधाना अत्रिणो ये किमीदिनः" अथ०१,७,३,

**किमु** अव्य० कै–डिमु। १प्रश्ने, २निषेधे, ३वितर्के, ४निन्दा-यां च मेदि० "किमु भीरुररार्य्यसे" भट्टिः

**किमुत** अव्य० किञ्च उत च द्व०। १प्रश्ने, २वितर्के ३विकल्पे, ४अतिशये च। कैमुतिकन्यायः तस्य शब्दद्वयात्मकत्वे तद्ध स्यादिति बोध्यम् "आहो उताहो किमुत वितर्के किं किमुत च" हेम० किमु–उत इति छेदः तेन किमू-तेत्येकशब्दकल्पनं चिन्त्यम्

**किम्पच** त्रि० किं पचति पच–अच्। कृपणे रायमु०। स हि आत्मोदरपूर्त्तिसमर्थमात्रं पचति नागन्तुकातिथिभ्योदा-नपर्य्याप्तम्। इति तस्य तथात्वम्।

**किम्पचान** त्रि० किम्+पच–आनच्। आत्मोदरपूर्त्तिमात्रप-र्य्याप्तपाककर्त्तरि कृपणे अमरः। [लतायां रत्नमा०

**किम्पाक** पु० कुत्सितः पाकोयस्य। (माखाल) महाकाल

**किम्पुना** स्त्री भा०प्रसिद्धे नदीभेदे "किम्पुना च विशल्या च तथा वैतरणी नदी" भा०स०६ वरुणसभावर्णने। "वित-स्ताञ्च महाभाग! कावेरीञ्च महानदीम्। शोणञ्च पुरुष-व्याघ्र! विशल्यां किम्पुनामपि" भा०व०१८८अ०

**किम्पु(म्पू)रुष** पु० कुत्सितः पु(पू)रुषः। देवयोनिभेदे देवगायके अमरः। स च अश्वाकारजघनः नराकारमुखः। किन्नरस्तु अश्वाकारवदनः नराकारजघन इति तयोर्भेदः। अतएव "राक्षसाश्च पुलस्त्यस्य वानराः किन्नरास्तथा" इति पुलस्त्यस्य वंशसञ्ज्ञा "पुलहस्य सुताः राजन्! शलभाश्च प्रकीर्त्तिताः। सिंहाः किम्पुरुषा व्याघ्रा यक्षा-ईहामृगास्तथा" भा० आ०६६अ० पुलहवंशे किम्पुरुषस्य कीर्त्तनम्। अतएव भाग० ८,२०,१३, "नेदुर्मुकुन्द-न्दभयः सहस्रशोगन्धर्व्व किम्पूरुषकिन्नराजगुः"। तयोर्भेदेन निर्द्देशः। "स यं पुरुषमालभत स किम्पुरुषोऽभवत्" शत०ब्रा० १,२,३,६, किंपुरुषावासे २वर्षभेदे। कुत्सितपुरुषत्वसाम्यात् परस्परमभेदाभिप्रायेण उभयोरप्युभयपरता तेन क्वचित् किन्नरवर्षमित्युच्यते क्वचिच्च किम्पुरुषवर्षम् इति। तदधिष्ठानदेशभेदश्च वर्षभेदः स च "किंनरवर्षमतो हरिवर्षमिति विभज्य" "माल्य-वज्जलधिमध्यवर्त्ति यत् तत्तु भद्रतुरगं (सुखेन तुरगल-भ्यम्) जगुर्बुधाः" सि०शि०उक्तः भाग०५,१६, "किम्पुरुषे वर्षे इत्युक्तम्। "देशं किम्पुरुषावासं द्रुमपुत्रेण रक्षि-तम्" भा०स०२७अ०। "द्रुमः किंपुरुषेशश्च उपास्ते धनदेश्वरम्" भा० स०१०अ०। "काश्मीरराजो गोनर्द्दः कहर्षाधिपतिस्तथा। द्रुमः किम्पुरुषश्चैव पर्व्वतीयोह्य-नामयः" हरिवं०८२अ०।

"प्रियासुखं किम्पुरुषाश्चुचुम्बे" "यदृच्छया" किम्पुरुषा-ङ्गनानाम्" कुमा०। [राजनि च।

**किम्पुरुषेश्वर** पु० ६त० १कुवेरे किम्पुरुषवर्षेश्वरे २द्रुमाभिधे-

**किम्भरा** स्त्री किञ्चित् बिभर्त्ति भृ–अच्। नलीनामगन्धद्रव्ये शब्दच०

**कियत्** त्रि० किम्+परिमाणे,वतुप् किमः क्यादेशः वस्य यः। किंपरिमाणे "गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा,, मा०, द०, "मदर्थसन्देशमृणालमन्थरः प्रियःकियद्दूरमिति त्वयोदिते" "भवेदमीभिः कमलोदयः कियान्" नैष०, स्त्रियां ङीप् "निविशते यदि शूकशिखा पदे सृजति सा कियतीमिव न व्यथाम्" नैष०।

**कियदेतिका** स्त्री कियत् एतत् आरभ्यमाणं करोति णिचि डिङ्गत्वे टिलोपे ण्वुल्। उद्योगे उत्साहे हेम०। त्रिका० कियेतदकेति पाठः प्रामादिकः।

**कियाम्बु** त्रि० कियदम्बु यत्र वेदे पृषो०तलोपः। किंप्रमाणा-म्बुयुक्ते "कियाम्ब्वत्र रोहतु पाकदूर्वा व्यल्कशा,, ऋ० १०,१६,१३,।

**कियाह** पुं रक्तवर्णे अश्वे हेमच०।

**कियेधास्** अव्य०कियत्प्रकारे इत्यर्थे निरु६ २०"हनाय व-ज्रमीशानः कियेधाः,,ऋ०,१,६१,१२,"कियेधाः कियद्धा-इति" भा०।

**किर** पुंस्त्री कॄ–क। १शूकरे अमरः स्त्रियां जातित्वात् ङीष् २विक्षेपकमात्रे त्रि०। कीर्य्यतेऽत्र आधारे कॄ–घञर्थे क। ३अवस्करविक्षेपदेशे पर्य्यन्तभूमौ। किरातः

**किरक** पुं खल्वः किरः अल्पे कन्।१वालशूकरे२लेखके च त्रिका०

**किरण** पुं कीर्य्यते परितः कॄ–कर्म्मणि क्यु। सूर्य्यादेः रश्मौ "स्वकिरणपरिवेशोन्मेषशून्यः प्रदीपः" रघुः "एकोहि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणे-ष्विवाङ्कः" कुमा०। ततः अरीहणा० चतुरर्थ्यां वुञ्। कैरणक तन्निर्वृत्तादौ त्रि० [हारा०।

**किरणमालिन्** पुं किरणानां मालाऽस्त्यस्य इनि। सूर्य्ये

**किराटिका** स्त्री० किरे पर्य्यन्त भूमौ अटति अट–ण्वुल्। पर्य्यन्त भूमिचारिण्यां शारिकायां पक्षिणाम् शब्दचि०

**किरात** पुंस्त्री किरमवस्करादेर्निःक्षेपस्थानं पर्य्यन्तभूमिमतति अत+अण् उप०स०। १नीचजातिभेदे स च अवस्करनिःक्षेपस्थानपर्य्यन्तदेशाश्रयः व्याधादिः। जातिशब्दे विवृतिः। “तप्तकुण्डं समारभ्य रामक्षेत्रान्तकं शिवे!। किरातदेशो विज्ञेयो विन्ध्यशैलेऽवतिष्ठते” इति शक्तिसंगमोक्ते २देशभेदे पु० भूम्नि। वृहत् सं०कूर्म्मविभागे ३ऐशान्युक्ते ३देशभेदे च “ऐशान्यां मेरुकनष्टराज्येत्युपक्रमे “वनराज्यकिरातचीनकौलिन्दाः इत्युक्तम् तद्देशानां राजा अण्। कैरात तद्देशनृपे बहुषु अणोलुक्। किराताः। ते च क्रमशो वेदानध्ययनादिना वृषलत्वमाप्ता यथाह मनुः “शनकैस्तु क्रियालोपादिमाः क्षत्रजातयः। वृषलत्वं गता लोके ब्राह्मणादर्शनेन च”। पौण्ड्रकाश्चौड्रद्रविड़ाः काम्बोजा यवनाः शकाः। पारदापह्लवाश्चीना किराताःदरदाः खसाः”इति। जातौ स्त्रियां ङीष्। ४मत्स्यभेदे पुंस्त्री० “किरातस्तथा स्त्रियां चामरवाहिन्यां मत्स्यजात्यन्तरे द्वयोः” केशवोक्तेः ५चामरवाहिन्यां स्त्री। “नौसंश्रयां पार्श्वगतां किरातीम्” रघुः “किरातीं—चामरग्राहिणीं दासीम्” मल्लि०। तपस्यदर्ज्जुनप्रसादार्थं किरातरूपेण गतत्वात् ६शिवे तस्य पत्न्यां तथारूपायां ७दुर्गायां स्त्री ङीष् “किराती क्षौरवसनां चौरसेनानमस्कृताम्। आज्यदां सोमपां सौम्यां सर्व्वपर्व्वतवासिनीम्” हरिवं०१७८अ०दुर्गास्तवे। तत्र व्याधे “मुक्ताफलैः केशरिणां किराताः” “यद्वायुरन्विष्टमृगैःकिरातैः,कुमा०। ८भूमिनिम्बे पु० राजनि० ९घोटकरक्षके सारस्वतः। १०अल्पतनौ त्रि० मेदि०। “पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतम्” रत्ना०। अत्र स्वनामसदृशत्वञ्च वानरभिया सङ्कोचितदेहत्वेनाल्पतनुत्वात् स्वनामसमानुपूर्व्वीकपदबोध्याल्पतनुत्वकरणात् पर्य्यन्ताश्रयित्वविशेषणाद्वा तथात्वम् तत्र भूनिम्बगुणाद्युक्तं भावप्र० यथा “किरातः सारको रूक्षः शीतलस्तिक्तको लघुः। सन्निपातज्वरश्वासकफपित्तास्रदाहनुत्। कासशोथतृषाकुष्ठ ज्वरव्रणक्रिमिप्रणुत्। स्वार्थे क। किरातक भूमिनिम्बे राजनि०। किरातं शिवमधिकृत्य कृतोग्रन्थः अण्। कैरात भारतवनपर्व्वान्तर्गतेऽवान्तर पर्व्वभेदे तत्रत्यकथा भा०व०३८अ० यथा

“गतेषु तेषु सर्व्वेषु तपस्विषु महात्मसु। पिनाकपाणिर्भगवान् सर्व्वपापहरो हरः। कैरातं वेशमास्थाय काञ्चनद्रुमसन्निभम्। विभ्राजमानो विपुलो गिरिर्मेरुरिवापरः। श्रीमद्धनुरुपादाय शरांश्चाशीविषोपमान्। निष्पपात महावेगो दहनो देहवानिव। देव्या सहोमया श्रीमान् समानव्रतवेशया। नानावेशधरैर्हृष्टैर्भूतैरनुगतस्तदा। किरातवेशसंछन्नः स्त्रीभिश्चापि सहस्रशः। अशोभत तदा राजन्! स देशोऽतीव भारत!। क्षणेन तद्वनं सर्वं निःशब्दमभवत्तदा। नादः प्रस्रवणानाञ्च पक्षिणाञ्चाप्युपारमत्। स सन्निकर्षमागत्य पार्थस्याक्लिष्टकर्म्मणः। मूकं नाम दनोः पुत्रं ददर्शाद्भुतदर्शनम्। वाराहं रूपमास्थाय तर्जयन्तमिवार्ज्जुनम्। हन्तुं परमदुष्टात्मा तमुवाचाथ फाल्गुनः। गाण्डीवं धनुरादाय शरांश्चाशीविषोपमान्। सज्यं धनुर्वरं कृत्वा ज्याघोषेण निनादयन्। यन्मां प्रार्थयसे हन्तुमनागसमिहागतम्। तस्मात्त्वां पूर्वमेवाहं नेताऽद्य यमसादनम्। दृष्ट्वा तं प्रहरिष्यन्तं फाल्गुनं दृढधन्विनम्। किरातरूपी सहसा वारयामास शङ्करः। मयैष प्रार्थितः पूर्वमिन्द्रकीलसमप्रभः। अनादृत्य च तद्वाक्यं प्रजहाराथ फाल्गुनः। किरातश्च समं तस्मिन्नेकलक्ष्ये महाद्युतिः। प्रमुमोचाशनिप्रख्यं शरमग्निशिखोपमम्। तौ मुक्तौ सायकौ ताभ्यां समं तत्र निपेततुः। मूकस्य गात्रे विस्तीर्णे शैलसंहनने तदा। यथाऽशनेर्विनिर्घोषो वज्रस्येव च पर्व्वते। तथा तयोः सन्निपातः शरयोरभवत्तदा। स विद्धो बहुभिर्बाणैर्दीप्तास्यैः पन्नगैरिव। ममार राक्षसं रूपं भूयः कृत्वा विभीषणम्। स ददर्श ततो जिष्णुः पुरुषं काञ्चनप्रभम्। किरातवेशसंछन्नं स्त्रीसहायममित्रहा। तमब्रवीत् प्रीतमनाः कौन्तेयः प्रहसन्निव। को भवानटते शून्ये वने स्त्रीगणसंवृतः। न त्वमस्मिन् वने घोरे बिभेषि कनकप्रभ!। किमर्थञ्च त्वया विद्धो वराहो मत्परिग्रहः। मयाऽभिपन्नः पूर्वं हि राक्षसोऽयमिहागतः। कामात् परिभवाद्वाऽपि न मे जीवन् विमोक्ष्यसे। न ह्येष मृगयाधर्म्मो यस्त्वयाऽद्य कृतो मयि। तेन त्वां भ्रंशयिष्यामि जीवितात् पर्वताश्रयम्। इत्युक्तः पाण्डवेन किरातः प्रहसन्निव। उवाच श्लक्ष्णया वाचा पाण्डवं सव्यसाचिनम्। न मत्कृते त्वया वीर! भीः कार्य्या वनमन्तिकात्। इयं भूमिः सदाऽस्माकमुचिता वसतां वने। त्वया तु दुष्करः कस्मादिह वासः प्ररोचितः?। वयन्तु बहुसत्त्वेऽस्मिन्निवसामस्तपोधन!। भवांस्तु कृष्णवर्णाभः सुकुमारः सुखोचितः। कथं शून्यमिमं देशमेकाकी

विचरिष्यति । अर्ज्जुन उवाच । गाण्डीवमाश्रयं कृत्वा नाराचांश्चाग्निसन्निभान् । निवसामि महारण्ये द्वितीय इव पावकः । एष चापि महाजन्तुर्म्मृगरूपं समाश्रितः । राक्षसो निहतो घोरो हन्तुं मामिह चागतः । किरात उवाच । मयैष धनुर्निर्म्मुक्तैस्ताडितः पूर्व्वमेव हि । वाणैरभिहतः शेते नीतश्च यमसादनम् । ममैष लक्ष्यभूतो हि मम पूर्व्वपरिग्रहः । ममैव च प्रहारेण जीविताद्व्यपरोपितः । दोषान् स्वान्नार्हसेऽन्यस्मै वक्तुं स्वबलदर्पितः । अवलिप्तोऽसि मन्दात्मन् ! न मे जीवन् विमोक्ष्यसे । स्थिरो भवस्व मोक्ष्यामि सायकानशनीरिव । घटस्व परया शक्त्या मुञ्च त्वमपि सायकान् । तस्य तद्वचनं श्रुत्वा किरातस्याज्र्जुनस्तदा । रोषमाहारयामास ताड़यामास चेषुभिः । ततो हृष्टेन मनसा प्रतिजग्राह सायकान् । भूयोभूय इति प्राह मन्दमन्देत्युवाच ह । प्रहरस्व शरानेतान्नाराचान्मर्म्मभेदिनः । इत्युक्तो वाणवर्षं स मुमोच सहसाऽर्ज्जुनः । ततस्तौ तत्र संरब्धौ राजमानौ मुहुर्म्मुहुः । शरैराशीविषाकारैस्ततक्षाते परस्परम् । ततोऽर्ज्जुनः शरवर्षं किराते समवासृजत् । तत्प्रसन्नेन मनसा प्रतिजग्राह शङ्करः । मुहूर्त्तं शरवर्षं तत् प्रतिगृह्य पिनाकधृक् । अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः । स दृष्ट्वा वाणवर्षन्तु मोघीभूतं धनञ्जयः । परमं विस्मयञ्चक्रे साधु साध्विति चाब्रवीत् । अहोऽयं सुकुमाराङ्गो हिमवच्छिखराश्रयः । गाण्डीवमुक्तान्नाराचान् प्रतिगृह्णात्यविह्वलः । कोऽयं देवो भवेत् साक्षात् रुद्रो यक्षः सुरोऽसुरः । विद्यते हि गिरिश्रेष्ठे त्रिदशानां समागमः । नहि मद्वाणजालानामुत्सृष्टानां सहस्रशः । शक्तोऽन्यः सहितुं वेगमृते देवं पिनाकिनम् । देवो वा यदि वा यक्षो रुद्रादन्यो व्यवस्थितः । अहमेनं शरैस्तीक्ष्णैर्नयामि यमसादनम् । ततो हृष्टमना जिष्णुर्नाराचान्मर्म्मभेदिनः । व्यसृजच्छतधा राजन् ! मयूखानिव भास्करः । तान् प्रसन्नेन मनसा भगवान् लोकभावनः । शूलपाणिः प्रत्यगृह्णाच्छिलावर्षमिवाचलः । क्षणेन क्षीणवाणोऽथ संवृत्तः फाल्गुनस्तदा । भीश्चैनमाविशत्तीव्रा तं दृष्ट्वा शरसंक्षयम् । चिन्तयामास जिष्णुः स भगवन्तं हुताशनम् । पुरस्तादक्षयौ दत्तौ तूणौ येनास्य खाण्डवे । किं नु मोक्ष्यामि धनुषा यन्मे वाणाः क्षयं गताः । अयञ्च पुरुषः कोऽपि वाणान् ग्रसति सर्व्वशः । हत्वा चैनं धनुष्कोट्या शूलाग्रेणेव कुञ्जरम् । नयामि दण्डधारस्य यमस्य सदनं प्रति । प्रगृह्याथ धनुष्कोट्या ज्यापाशेनावकृष्य च । मुष्टिभिश्चापि हतवान् वज्रकल्पैर्महाद्युतिः । संप्रयुद्धो धनुष्कोट्या कौन्तेयः परवीरहा । तदप्यस्य धनुर्द्दिव्यं जग्राह गिरिगोचरः । ततोऽर्ज्जुनो ग्रस्तधनुः खड्गपाणिरतिष्ठत । युद्धस्यान्तमभीप्सन् वै वेगेनाभिजगाम तम् । तस्य मूर्द्ध्नि शितं खड्गमसक्तं पर्व्वतेष्वपि । मुमोच भुजवीर्य्येण विक्रम्य कुरुनन्दनः । तस्य मूर्द्धानमासाद्य पफालासिवरो हि सः । ततो वृक्षैः शिलाभिश्च योधयामास फाल्गुनः । तदा वृक्षान्महाकायः प्रत्यगृह्णादथो शिलाः । किरातरूपी भगवांस्ततः पार्थो महाबलः । मुष्टिभिर्व्वज्रसङ्काशैर्धूममुत्पादयन् मुखे । प्रजहार दुराधर्षे किरातसमरूपिणि । ततः शक्राशनिसमैर्म्मुष्टिभिर्भृशदारुणैः । किरातरूपी भगवानर्द्दयामास पाण्डवम् । ततश्चटचटाशब्दः सुघोरः समपद्यत । पाण्डवस्य च मुष्टीनां किरातस्य च युध्यतः । सुमुहूर्त्तन्तु तद्युद्धमभवल्लोमहर्षणम् । भुजप्रहारसंयुक्तं वृत्रवासवयोरिव । जघानाथ ततो जिष्णुः किरातमुरसा बली । पाण्डवञ्च विचेष्टन्तं किरातोऽप्यहनद्बली । तयोर्भुजविनिष्पेषात् सङ्घर्षेणोरसोस्तथा । समजायत गात्रेषु पावकोऽङ्गारधूमवान् । तत एनं महादेवः पीड्य गात्रैः सुपीड़ितम् । तेजसा व्यक्रमद्रोषाच्चेतस्तस्य विमोहयन् । ततोऽभिपीड़ितैर्गात्रैः पिण्डीकृत इवाबभौ । फाल्गुनो गात्रसंरुद्धो देवदेवेन भारत ! । निरुच्छ्वासोऽभवच्चैव सन्निरुद्धो महात्मना । पपात भूम्यां निश्चेष्टो गतसत्त्व इवाभवत् । स मुहूर्त्तन्तथा भूत्वा सचेताः पुनरुत्थितः । रुधिरेणाप्लुताङ्गस्तु पाण्डवो भृशदुःखितः । शरण्यं शरणं गत्वा भगवन्तं पिनाकिनम् । मृण्मयं स्थण्डिलं कृत्वा माल्येनापूजयद्भवम् । तच्च माल्यं तदा पार्थः किरातशिरसि स्थितम् । अपश्यत् पाण्डवश्रेष्ठो हर्षेण प्रकृतिङ्गतः । पपात पादयोस्तस्य ततः प्रीतोऽभवद्भवः । उवाच चैनं वचसा मेघगम्भीरगीर्हरः । जातविस्मयमालोक्य तपःक्षीणाङ्गसंहतिम् । भव उवाच । भो भो फाल्गुन ! तुष्टोऽस्मि कर्म्मणाऽप्रतिमेन ते । शौर्य्येणानेन धृत्या च क्षत्रियो नास्ति ते समः । समं तेजसि वीर्य्यञ्च ममाद्य तव चानघ । प्रीतस्तेऽहं महाबाहो ! पश्य मां भरतर्षभ ! । ददामि ते विशालाक्ष !

चक्षुः पर्व्वक्रमभयात् । विजेष्यसि रणे शत्रूनपि सर्व्वान् दिवौकसः । प्रीत्या च तेऽहं दास्यामि यदस्त्रमनिवारितम् । त्वं हि शक्तो मदीयं तदस्त्रं धारयितुं चणात् । वैशम्पायन उवाच । ततो देवं महादेवं गिरिशं शूलपाणिनम् । ददर्श फाल्गुनस्तत्र सह देव्या महाद्युतम् । स जानुभ्यां महीं गत्वा शिरसा प्रणिपत्य च । प्रसादयामास हरं पार्थः परपुरञ्जयः" ।

**किराततिक्त** पु० किरातो भूनिम्बइव तिक्तः (चिराता) वृक्षे अमरः "किराततिक्तस्तु हिमस्तिक्तः पित्तकफापहः" भावप्र०

**किराताऽर्ज्जुनीय** न० किरातश्चार्ज्जुनश्चाधिकृत्य कृतोग्रन्थः "द्वन्द्वाच्छः" पा०छ । भारविकविप्रणीते अष्टादशसर्गात्मके महाकाव्यभेदे

**किराताशिन्** पु किरातानश्नाति अश—णिनि ६त० । गरुडे शब्दर० तस्य किराताशनकथा भा०आ०२८अ० यथा "इत्युक्तो गरुडः सर्पैस्ततो मातरमब्रवीत् । गच्छाम्यमृतमाहर्त्तुं भक्ष्यमिच्छामि वेदितुम् । विनतोवाच । समुद्रकुक्षावेकान्ते निषादालयमुत्तमम् । निषादानां सहस्राणि तान् भुक्त्वाऽमृतमानय । न च ते ब्राह्मणं हन्तुं कार्य्या बुद्धिः कथञ्चन । अवध्यः सर्व्वभूतानां ब्राह्मणो ह्यनलोपमः । अग्निरर्को विषं शस्त्रं विप्रो भवति कोपितः । गुरुर्हि सर्व्वभूतानां ब्राह्मणः परिकीर्त्तितः । एवमादिभीरूपैस्तु सतां वै ब्राह्मणो मतः । स ते तात ! न हन्तव्यः संक्रुद्धेनापि सर्व्वथा । ब्राह्मणानामभिद्रोहो न कर्त्तव्यः कथञ्चन । न ह्येवमग्निर्नादित्यो भस्म कुर्य्यात्तथानघ ! । यथा कुर्य्यादभिक्रुद्धो ब्राह्मणः संशितव्रतः । तदेतैर्विविधैर्लिङ्गैस्त्वं विद्यास्तं द्विजोत्तमम् । भूतानामग्रभूर्व्विप्रो वर्णश्रेष्ठः पिता गुरुः । गरुड़ उवाच । किंरूपो ब्राह्मणो मातः किंशीलः किंपराक्रमः । किंस्विदग्निनिभो भाति किंस्वित् सौम्यप्रदर्शनः । यथाहमभिजानीयां ब्राह्मणं लक्षणैः शुभैः । तन्मे कारणतो मातः! पृच्छतो वक्तुमर्हसि । विनतोवाच । यस्ते कण्ठमनुप्राप्तो निगीर्णं वड़िशं यथा । दहेदङ्गारवत् पुत्र ! तं विद्याब्राह्मणर्षभम् । विप्रस्त्वया न हन्तव्यः संक्रुद्धेनापि सर्व्वदा । प्रोवाच चैनं विनता पुत्रहार्द्दादिदं वचः । जठरे न च जीर्य्येद्यस्तं जानीहि द्विजोत्तमम् । पुनः प्रोवाच विनता पुत्रहार्द्दादिदं वचः । जानात्यप्रतुलं वीर्य्यमाशीर्व्वादपरायणा । प्रीता परमदुःखार्त्ता नागैर्व्विप्रकृता सती" । "सौतिरुवाच । ततः स मातुर्व्वचनं निशम्य वितत्य पक्षौ नभ उत्पपात । ततो निषादान् बलवानुपागतो बुभुक्षितः काल इवान्तकोऽपरः । स तान्निषादानुपसंहरंस्तदा रजः समुद्धूय नभः स्पृशन्महत् । समुद्रकुक्षौ च विशोषयन् पयः समीपजान् भूधरजान् विचालयन् । ततः स चक्रे महदाननं तदा निषादमार्गं प्रतिरुध्य पक्षिराट् । ततो निषादास्त्वरिताः प्रवव्रजुर्यतो मुखं तस्य भुजङ्गभोजिनः । तदाननं विवृतमतिप्रमाणवत् समभ्ययुर्गगनमिवार्द्दिताः खगाः । सहस्रशः पवनरजोविमोहिता यथाऽनिलः प्रचलितपादपे वने । ततः खगो वदनममित्रतापनः समाहरत् परिचपलो महाबलः । निषूदयन् बहुविधमत्स्यजीविनो बुभुक्षितो गगनचरेश्वरस्तदा" ।

**किराति** स्त्री किरेण समन्तात् जलक्षेपेण अतति गच्छति अत इन् ३त० । १गङ्गायां जटा० तस्या योजनपर्य्यन्तजलक्षेपेण हिमाचलात् समुद्रपर्य्यन्तगमनात्तथात्वम् । वा ङीप् । तत्रैव । २किरातवेशधारिण्यां दुर्गायाञ्च तस्याः किरातवेशधारणं यथा तथा, किरातशब्दे दर्शितम् ।

**किरातिनी** स्त्री किरातदेशे उत्पत्तिस्थानत्वेनाऽस्त्यस्या इनि ङीप् । जटामांस्यां शब्दर० ।

**किरि** पुंस्त्री किरति भूमिम् कृ—कम्प्रादि० इक् । भूविदारे १शूकरे अमरटी० भरतः स्त्रियां ङीप् । २मेघे च तस्य जलक्षेपकत्वात् तथात्वं किरिकः

**किरिक** पु० किरिर्मेघ इव कायति कै—क । सजलमेघतुल्ये रुद्रभेदे । "नमो वः किरिकेभ्यो देवानां हृदयेभ्यः" यजु०१६,४६ । [ङि । हिन्ताले अमरः २फले त्रिका० ।

**किरिटि** न० किरिणा शूकरेण टल्यते विक्लव्यते टल विक्लवे

**किरीट** पुंन०कॄ—ईटन् किच्च । १मुकुटे २शिरोवेष्टने (पागड़ि) च शब्दचि० दशाननकिरीटभ्यः मा०द० । किरीटबद्धाञ्जलयोनिपेतुः" रघुः [ शब्दचि० ।

**किरीटमालिन्** पु० मल—सम्बन्धे णिनि ६त० । अर्ज्जुने

**किरीटिन्** पु० किरीटोऽस्त्यस्य इनि । अर्ज्जुने भा०वि० ४४अ० । "पुरा शक्रेण मे बद्धं युध्यतो दानवर्षभैः । किरीटं मूर्द्ध्नि सूर्य्याभं तेनाहुर्मां किरीटिनम्" उत्तरसमीपेऽर्ज्जुनेन स्वनामभेदनिरुक्तिकथनात्तस्य तथात्वम् । शक्रेण तस्य मूर्द्धनि किरीटयोजनकथा च "ततो-मातलिसंयुक्तं मयूरसमरोमभिः । हयैरुपेतं प्रादान्मे रथं दिव्यं महाप्रभम् । बबन्ध चैव मे मूर्द्ध्नि किरीटमिदमुत्तमम् । स्वरूपसदृशं चैव प्रादादङ्गविभूषणम् ।

अभेद्यं कवचं चेदं स्वर्णरूपवदुत्तमम्। नागराजमिवासिं च गाण्डीवे समयोजयत्" इति भा० व०१६१अ०। २किरीटयुक्तमात्रे त्रि०। "किरीटिनं गदिनं चक्रहस्तम्" गीता स्त्रियां ङीप्

**किरोडाट** धौर्त्ये आकृतिगणत्वात् कण्ड्वा० यक् प० सेट् अक०। किरोडाय्यति अकिरोडाटीत्।

**किर्म्मि** स्त्री कॄ—कि नि०मुट्। १पलाले (पोयाल) २गृहे ३स्वर्णपुत्तलिकायाञ्च मेदि०। वा ङीप् किर्म्मीत्यपि तत्रार्थे

**किर्म्मिर** त्रि० किर्म्मीर+पृषो० वेदे ह्रस्वः। चित्रवर्णयुक्ते। "नक्षत्रेभ्यः किर्म्मिरं च नूमसे किलासम्" यजु० ३०, २१। पुरुषमेधे

**किर्म्मीर** पु० कॄ—गम्भीरा० ईरन् नि०। नागरङ्गे (नारेङ्गी) १जम्बीरभेदे। २राक्षसभेदे। ३चित्रवर्णे च मेदि० ४तद्वति त्रि०।

**किर्म्मीरजित्** पु० किर्म्मीरं राक्षसभेदं जितवान् जि—भूते-क्विप्। भीमसेने तद्वधकथा भा०व०११अ० यथा "प्रत्युवाचाथ तद्रक्षो धर्म्मराजं युधिष्ठिरम्। अहं वकस्य भ्राता वै किर्म्मीर इति विश्रुतः" इत्युपक्रम्य "ततो भीमो महाबाहुरारुह्य तरसा द्रुमम्। दशव्याममथोद्विद्धं निष्पत्रमकरोत्तदा। चकार सज्यं गाण्डीवं वज्रनिष्पेषगौरवम्। निमेषान्तरमात्रेण तथैव विजयोऽर्ज्जुनः। निवार्य भीमो जिष्णुं तं तद्रक्षो मेघनिस्वनम्। अभिद्रुत्याब्रवीद्वाक्यं तिष्ठ तिष्ठेति भारत!। इत्युक्त्वैनमभिक्रुद्धः कक्ष्यामुत्पीड्य पाण्डवः। निष्पिष्य पाणिना पाणिं संदष्टौष्ठपुटो बली। तमभ्यधावद्वेगेन भीमो वृक्षायुधस्तदा। यमदण्डप्रतीकाशं ततस्तं तस्य मूर्द्धनि। पातयामास वेगेन कुलिशं मघवानिव। असंभ्रान्तन्तु तद्रक्षः समरे प्रत्यदृश्यत। चिक्षेप चोल्मुकं दीप्तमशनिं ज्वलितामिव। तदुदस्तमलातन्तु भीमः प्रहरतां वरः। पदा सव्येन चिक्षेप तद्रक्षः पुनराव्रजत्। किर्म्मीरश्चापि सहसा वृक्षमुत्पाट्य पाण्डवम्। दण्डपाणिरिव क्रुद्धः समरे प्रत्यधावत"। इत्युपक्रम्य तयोर्युद्धमुपवर्ण्य "अथैनमाक्षिप्य बलाद्गृह्य मध्ये वृकोदरः। भ्रामयामास वेगेन वायुश्चण्ड इव द्रुमम्। स भीमेन परामृष्टो दुर्ब्बलो बलिना रणे। व्यस्पन्दत यथाप्राणं विचकर्ष च पाण्डवम्। तत एनं परिश्रान्तमुपलभ्य वृकोदरः। योक्त्रयामास बाहुभ्यां पशुं रशनया यथा। विनदन्तं महानादं भिन्नभेरीसमं बली। भ्रामयामास सुचिरं विष्फुरन्तमचेतनम्। तं विषीदन्तमाज्ञाय राक्षसं पाण्डुनन्दनः। प्रगृह्य तरसा दोर्भ्यां पशुमारममारयत्। आक्रम्य च कटीदेशे जानुना राक्षसाधमम्। पीड़यामास पाणिभ्यां तस्य कण्ठं वृकोदरः। अथ जर्ज्जरसर्व्वाङ्गं व्यावृत्तनयनाम्बरम्। भूतले भ्रामयामास वाक्यञ्चेदमुवाच ह। हिड़िम्बवकयोः पाप! न त्वमश्रुप्रमार्ज्जनम्। करिष्यसि गतश्चापि यमस्य सदनं प्रति। इत्येवमुक्त्वा पुरुषप्रवीरस्तं राक्षसं क्रोधपरीतचेताः। विस्रस्तवस्त्राभरणं स्फुरन्तमुद्भ्रान्तचित्तं व्यसुमुत्ससर्ज्ज"। किर्म्मीरहादयोऽप्यत्र। [ङ्गे जम्बीरभेदे त्रिका०

**किर्म्मीरत्वच्** पु० किर्म्मीरा चित्रा त्वग्यस्य। नागर-

**किल** शौक्ल्ये क्रीडायाञ्च तुदा०पर०अक०सेट्। किलति अकेलीत् चिकेल मनिकिलति [याम् बभूव आस चकार चक्रे केलिः

**किल** प्रेरणे चुरा०सक सेट्। केलयति ते अचीकिलत्" केल-

**किल** अव्य० किल—क। १वार्त्तायाम् २अनुनयार्थे, ३निश्चये, ४संभाव्ये ५प्रसिद्धार्थद्योतने ६हेतौ ७अरुचौ ८अलीके ९तिरस्कारे च। "दमयन्ती किलकिञ्चितं किल" नैष०। "अमूं किल त्वं त्रिदिवादवातरः,, माघः। "तद्गुणं तद्वयती" किलात्मनोऽपि "तदपि न किल बाल पल्लवाग्रेति" माघः, "ध्रुवं किलाव्याजमनोहरं वपुः,, शकु०। १किलेत्याप्तमाद्यचिन्त्यककरणसंभाव्यहेत्वलीकेषु" गणरत्ने उक्ता तत्तद्विषये उदाहृतं यथा आगमे, "कंसं जघान किल वासुदेवः" आप्तकर्त्तृकं कंसहननमागमसिद्धमित्यर्थः। अरुचौ "एवं किल केचिद्वदन्ति" केषाञ्चिदेवं कथनं वक्तुररुचिविषय इत्यर्थः न्यक्कारे "स किल योत्स्यते" तस्य यौवनशक्त्याद्यभावद्योतनात् तिरस्कारोगम्यते सम्भावनायाम् "पार्थः किल विजेष्यते कुरून्" पार्थकर्त्तृककुरुविजयः सम्भवनाविषयइत्यर्थः। हेतौ "स किलैवमुक्तवान्" तत्कथनस्यान्यत्र हेतुता द्योत्यते। अलीके "प्रसह्य सिंहः किल तां चकर्ष" रघु०। सिंहकर्त्तृकं नन्दिनीकर्षणं वस्तुतोऽलीकं काल्पनिकत्वात्। कव्ययविशेषस्य अस्य शब्दान्तरसहकारेण प्रयोगविशेषो निरुक्तकारेण निरणायि यथा "किलेति विद्याप्रकर्षे एवं किलेत्यथापि न ननु इत्येताभ्यां संप्रयुज्यतेऽनुपृष्टे न किलैवम्। ननु किलैवम्"। इति प्रश्नानन्तरं तस्यानभ्युपगमे न किलैवमिति, अभ्युपगमे तु ननु किलैवमिति प्रयोज्यमित्यर्थः तथाच तस्य एवंशब्दोत्तरता न—ननु इत्येतत्पूर्व्वकता च।

**किलकिञ्चित** न० किल अलीकेन ईषत् चितं रचितम्। "स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम्। साङ्कर्य्यं किलकिञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात्" सा० दर्पणोक्ते स्त्रीणां भावभेदे यथा "पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः। कामिनश्च कुरुते करभोरूर्हारि शुष्करुदितञ्च सुखेऽपि" माघः "त्वयि वीर! विराजते परं दमयन्तीकिलकिञ्चितं किल" नैष०।

**किलकिला** स्त्री किल–क प्रकारे द्वित्वम् टाप्। १हर्षध्वनौ त्रिका०। "ततः किलकिलाशब्दस्तस्मिन् वदति पार्थिवे" भा०आ०६१अ। "जितशात्रवदर्पस्य प्रतिज्ञापूरणीकृतः। वीरस्य गर्जितं सिंहनादः किलकिला तथा" इत्युक्ते वीरस्य २सिंहनादे च विश्वः

**किलाट** पु० "नष्टदुग्धस्य पक्वस्य पिण्डं प्रोक्तः किलाटकः" इति भावप्र० परिभाषिते विमथितदुग्धस्य पाकेन घनीभूते पिण्डाकारे पदार्थे। तद्गुणाद्युक्तं तत्रैव यथा "पेयूषश्च किलाटश्च क्षीरशाकं तथैव च। तक्रपिण्ड इमे वृष्या वृंहणा बलवर्द्धनाः। गुरवः श्लेष्मला हृद्या वातपित्तविनाशनाः। दीप्ताग्नौ च विनिद्राणां विदग्धे चातिपूजिताम्। गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृतः"। ततः स्वार्थे क। किलाटक तत्रार्थे। कूर्चिकायां क्षीरविकारभेदे स्त्री हेमच० गौरा० ङीष्। [इत्येकहारा०।

**किलाटिन्** पुं किलति किल–क, अट–णिनि कर्म्म०। वंश

**किलात** पुं किल–शौक्ल्ये क किलमतति अत–अण्। ऋषिभेदे तस्य गोत्रापत्यम् विदा० अञ्। कैलात तद्गोत्रापत्ये पुंस्त्री० "किलाताकुली इति हासुरब्रह्मावासतः"। शत० ब्रा० १,१,४,१४,

**किलास** न० किल वर्णे कस्तिलमस्यति अस+अण्। १सिध्मरोगे (छुली) तदस्यास्ति अच्। २तद्विशिष्टे त्रि० "चन्द्रमसे किलासिम्" यजु० ३०,२१। "किलासं सिध्मरोगवत्तम्" वेददी०। सिध्म च क्षुद्रकुष्ठभेदः यथाह सुश्रुतः "क्षुद्रकुष्ठमत ऊर्द्ध्वं वक्ष्याम इत्युपक्रमे "कण्डुन्वितं श्वेतमपाकि सिध्म विद्यात्तनु प्रायश ऊर्द्ध्वकाये" इति तस्य लक्षणादिकमुक्त्वा "किलासमपि कुष्ठविकल्पएव। तत्त्रिविधं वातेन पित्तेन श्लेष्मणा चेति। कुष्ठकिलासयोरन्तरन्त्वगतमेव किलासमपरिस्रावि च। तद्वातेन मण्डलमरुणं परुषं परिध्वंसि च; पित्तेन पद्मपत्रप्रतीकाशं सपरिदाहञ्च। श्लेष्मणापि श्वेतं स्निग्धं बहुलं कण्डूमच्च। तेषु सम्बद्धमण्डलमन्तेजातं रक्तरोम चासाध्यमग्निदग्धञ्च। कुष्ठेषु दुष्टत्वक्सङ्कोचस्वापस्वेदशोफभेदकौण्यस्वरोपघाता वातेन। पाकावदरणाङ्गुलिपतनकर्णनासाभङ्गाक्षिरोगसत्त्वोत्पत्तयः पित्तेन। कण्डूवर्णभेदशोफास्रावगौरवाणि श्लेष्मणा"।

**किलासघ्न** पु० किलासं हन्ति हन्–टक्। (काँकरोल) ख्याते वृक्षे हेमच०।

**किलासनाशन** त्रि० किलासं नाशयति नश–णिच्–ल्यु। सिध्मरोगनाशके औषधादौ "आसुरी चक्रे प्रथमेदं किलासभेषजमिदं किलासनाशनम्" अथ० १,२४,२।

**किलासिन्** त्रि० किलासमस्त्यर्थे इनि।(छुली) रोगयुक्ते स्त्रियां ङीप्।

**किलिञ्ज** न० किल्यतेऽनेन किलि–इन् ततोजायते जन–ड पृषो०कुम्। १वीरणादिजाते कटे२सूक्ष्मदारुणि च जटा०। त्रिका०पु०। तेन उभयलिङ्गता। स्वार्थे क। कटे काष्ठादिरज्जौ च अमरः। "तुषान् यवान् निम्नू ताज् रात्रौ गोमूत्रपर्य्युषितान्" "महति किलिञ्जे शोषयेत्। आस्तीर्य्य किलिञ्जेऽन्यस्मिन् वा तत्प्रतिरूपके शयानं प्राछाद्य स्वेदयेत्" सुश्रुतः

**किलिम** न० किल–इमन्। देवदारुवृक्षे राजनि०।

**किल्विन्** पु० स्त्री किल–शौक्ल्ये भावे क्विप् ततोऽस्त्यर्थे बा० विनि। घोटके त्रिका० स्त्रियां नान्तत्वात् ङीप्।

**किल्विष** न० किल–टिषच्–वुक् च। १पापे २अपराधे च अमरः ३रोगे मेदि० तस्य पापहेतुत्वात् तथात्वम्। "न किल्विषादीषत्ते बस्य आकरः" ऋ०५,३५,४, "यीरं यदस्याः पीयते तद्वै पितृषु किल्विषम्, अथ०५,१८५। "अपराधे; "कोमे लुब्धक! दोषोऽत्र विद्यते यदि बालिश!। अस्वतन्त्रं च मां मृत्युर्विवशं यदचूचुदत्। तस्यैव वचनाद्दृष्टो न कोपेन न काम्यया। तस्य तत् किल्विषं लुब्ध! विद्यते यदि किल्विषम्" इति लुब्धकं प्रति सर्पोक्तिः। पापे "यद्यन्यवशगेनेदं कृतं तु पन्नगाशुभम्। कारणं वै त्वमप्यत्र तस्मात्त्वमपि किल्विषी" सर्पं प्रति लुब्धकोक्तिः भा० आनु०१अ०। तत्र पूर्ववाक्ये दोषत्वेन कीर्त्तनात् अपकारपरत्वम्। उत्तरत्र अशुभत्वेन कीर्त्तनात् पापपरत्वम्। "एवं सति न दोषो मे नास्ति वध्यो न किल्विषी। किल्विषं समवाये स्यात् मन्यसे यदि किल्विषम्" तत्रैव। कीर्त्तिभेदके कायिके ४पापे च। "अपाघमप किल्विषम्" यजु० ३५,११, "किल्विषं कीर्त्तिभेदकं कायिकं पापम्" वेददी०। ततः अस्त्यर्थे इनि। किल्विषिन् तद्युक्ते त्रि०।

**किश(स)र** पुं न० किम्+श्व–(शृ)–अच् पृषो०। सुगन्धद्रव्यभेदे।

तत् पण्यमस्य किश(स)रा० ठन्। किश(स)रिक किश(स)रविक्रयकर्त्तरि स्त्रियां षित्त्वात् ङीष्। शब्देन्दुशेखरे तालव्यमध्यतया पठितः अन्यत्र दन्त्यमध्यतयेत्युभयरूपता

**किशरा** स्त्री० किञ्चित् शृणाति शॄ—अच्। शर्करासु। ततो-मध्वा० चतुरर्थ्यां मतुप् मस्य वः। किशरावत् तद्वति देशे

**किश(स)रादि** पुं पाणिन्युक्ते ठन्प्रत्ययप्रकृतिभूते शब्द गणे सच गणः "किश(स)र नरद नलद स्थासक तगर गुग्गुलु उशीर हरिद्रा हरिद्रुपर्णी"।

**किशल** पुं न० किञ्चित्शलति शल—गतौ अच् पृषो० मलोपः। नवपल्लवे शब्दरत्ना०।

**किशलय** पुं न०किञ्चित्शलति शल—चलने बा कयन् पृषो०। नवपल्लवे शब्दरत्ना०।

**किशोर** पुं कश—शब्दे किशोरा० निपा०। १अश्वशिशौ २तैलपर्ण्यौषधौ ३सूर्य्ये च मेदि०"किञ्चिच्छूरः किशोरः स्यात् यतो हि दशमात् परम्। शूरत्वं दृश्यते किञ्चिदनुरुद्ध दिने दिने" ४इत्युक्तावस्थापन्ने त्रि०। स्त्रियां वयो-वाचित्वात् ङीप् किशोरी। "कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि। कैशोरमापञ्चदशात् यौवनञ्च ततः परम्" भाग०टीकाधृतश्रीधरधृतवचनात् दशवर्षोत्तरं पञ्चदशाब्दपर्य्यन्तवयस्कःकिशोर इति बोध्यम्।

**किष्क** वधे चुरा० आत्म० सक० सेट्। किष्कयते अचिकिष्कत

**किष्किन्ध** पु० किं किं दधाति धा—क पारस्करा० सुट् षत्वं मलोपः। वृह०सं० कूर्मविभागे आग्नेय्यामुक्ते १देशभेदे "आग्नेय्यां दिशि कोशलकलिङ्गवङ्गोपवङ्गजठराङ्गाः" इत्युपक्रमे "किष्किन्धकण्टकस्थलनिषादराष्ट्राणि पुरिक-दाशार्णाः" इति। तत्रत्ये २पर्वतभेदे च। ३तत्रत्यवालि-राजधान्यां ४तत्रत्यगुहायाञ्च स्त्री शब्दर०। "त्वया सह महाबाहो! किष्किन्धोपवने तदा"। "गच्छ लक्ष्मण! जानीहि किष्किन्धायां कपीश्वरम्"। "किष्किन्धाद्वा-रमासाद्य प्रविवेशानिवारितः" भा०व०२८१अ०। "गुहामासादयामास किष्किन्धां लोकविश्रुताम्। तत्र वानरराजाभ्यामैन्देन द्विपदेन च। युयुधे दिवसान् सप्त" भा०स०३०अ०। दक्षिणदिग्विजये। किष्किन्धा अभिजनोऽस्य सिन्ध्वा० अण्। कैष्किन्ध पित्रादिक्रमेण किष्किन्धागु-हातत्पुरीवासिनि त्रि० स्त्रियां ङीप्।

**किष्किन्धा(न्ध्या)काण्ड** न० वाल्मीकिरामायणान्तर्गते किष्किन्धाधिकारेण वालिसुग्रीवादीनामितिवृत्तप्रतिपादके काण्डभेदे।

**किष्किन्धी** स्त्री किष्किन्ध+गौरा० ङीष्। किष्किन्धपर्व्वत-गुहायाम् "अभ्येत्य सर्व्वे किष्किन्ध्याम्" भा०व०२७६अ०।

**किष्किन्ध्य** पु० किष्किन्ध+स्वार्थे यत्। १किष्किन्धशब्दार्थे २तत्रत्यपर्वतगुहायां ३वालिराजधान्यां च स्त्री।

**किष्किन्धा(न्ध्या)धिप** पु० ६त०। वालिनामके वानरराजे जटा० शब्दर०

**किष्कु** पु०स्त्री० किष्क—उन्,किम्+कै—कु पृषो० मलोपः पार-स्क० सुट्षत्वम् वा।१वितस्तौ द्वादशाङ्गुलपरिमाणे चतुर्विंश-त्यङ्गुल परिमाणे२हस्तमाने मेदि०२प्रकोष्ठे ३कफोणेरधो-मणिबन्धपर्य्यन्ते च४कुत्सिते त्रि० विश्वः"दशकिष्कुसहस्रां तां मापयामास सर्वतः" भा०स०१३०अ० "दशकिष्कुसह-स्राणि समन्तादायताऽभवत्" भा० स० ३अ०। "अवर्द्धत महातेजाः किष्कून्राजंस्त्रयोदश" भा०व० १२६अ०।

**किष्कुपर्व्वन्** न० किष्कुमितं वितस्तिमितं हस्तमितं वा पर्वास्य। १वंशे (वाँश) २इक्षौ ३पोटगले(नडा)च मेदि०

**किसल** पुंन० किमीषत् सलति सल—गतौ अच् पृषो० मलोपः। नवपल्लवे त्रिका०।

**किसलय** पुंन० किम् ईषत् सलति—सल गतौ बा० कयन् पृषो०। नवपल्लवे अमरः।"किसलयैः सलयैरिव पाणिभिः" रघुः। तारका०जातार्थे इतच्। किसलयित नवपल्लविते। किसलयश्च नवपत्रादियुक्तशाखाग्रस्थितः पल्लवः।

**की** अव्य० कुत्सायाम्।

**कीकट** पु० की+कट—अच्। "चरणाद्रिं समारभ्य गृध्रकूटा-न्तकं शिवे!। तावत् कीकटदेशःस्यात् तदन्तर्मगधोभवेत् शक्तिसङ्गमोक्ते १देशभेदे। तद्देशवासिजनवाचित्वेऽस्य भूम्नि "साधवः समुदाचारास्ते पूयन्तेऽपि कीकटाः" भाग० ७,१०,२०। उपचारात् देशेऽपि भूम्नि"ततः कलौ संप्रवृत्ते सम्मोहाय सुरद्विषाम्। बुद्धोनाम्ना जिनसुतः कीकटेषु भविष्यति" भाग० १,३,२५। ४निर्द्धने ५कृपणे च त्रि० मेदि०। ६घोटके पुं स्त्री विश्वः स्त्रियां जातित्वात् ङीष् [ शब्दचि०।

**कीकश** पु० कीति कशति कश—शब्दे अच्। चण्डाले।

**कीकस** पु० कीति कसति कस—गतौ अच्। १कृमिजन्तुभेदे २अस्थ्नि न० अमरः ३कठिने त्रि० मेदि०। "यदन्तर्य्य-स्तकीकसम्" अमरः। शब्दरत्ना०स्त्रीत्वमपि "तस्मादिमा उभयत्र पर्शवोबद्धाः कीकसासु च जत्रुषु च" शत०ब्रा० ८,६,२,१०। कीकसेश्वरः काशीखण्डशब्दे उदा०

**कीकसास्य** पुंस्त्री० कीकसमास्ये ऽस्य। पक्षिणि हारा०

स्त्रियां जातित्वे ऽपि संयोगोपधत्वात् टाप्। तस्य च सुखस्यास्यो दृष्टिगोचरत्वात् तथात्वम्। कीकस-सुखादयोऽप्यत्र [ अमरटीका स्त्रियां ङीप्।

**कीकि** पुंस्त्री० कीतिशब्दं कायति कै वा०डि। चापपक्षिणि

**कीचक** पु०कीत्यव्यक्तं चकति चक–तृप्त्यादौ अच्। १दैत्यभेदे "कीचका नाम ते वंशा ये स्वनन्त्यनिलाहताः" इत्युक्ते २वेणुभेदे (नलतावांश)अमरः। "यः पूरयन् कीचकरन्ध्रभागान् दरीमुखोत्थेन समीरणेन" कुमा० "सङ्कीर्णकीचकवनस्खलितैकबालेत्यादि" माघः विराटराजश्याले ३केकयात्मजे विराटसेनाधिपभेदे च कीचकस्य द्रौपद्यामनुरागादिकथा भा०वि०अ० यथा—

"तस्मिन् वर्षे गतप्राये कीचकस्तु महाबलः। सेनापतिर्विराटस्य ददर्श द्रुपदात्मजाम्। तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव। कीचकः कामयामास कामबाणप्रपीड़ितः"। इत्युपक्रम्य सैरिन्ध्रीरूपां द्रौपदीं प्रति तत्प्रार्थने तया तस्य प्रत्याख्यानमुपवर्णितं यथा—

"सैरिन्ध्र्युवाच। मा सूतपुत्र! मुह्यस्व माऽद्य त्यक्षीः स्वजीवितम्। जानीहि पञ्चभिर्देवैर्नित्यं मामभिरक्षिताम्। न चाप्यहं त्वया लभ्या गन्धर्वाः पतयो मम। ते त्वां निहन्युः कुपिताः साध्वसून् मा व्यनीनशः। अशक्यरूपं पुरुषैरध्वानं गन्तुमिच्छसि। यथा निश्चेतनो बालः कूलस्थः कूलमुत्तरम्। तर्त्तुमिच्छति मन्दात्मा तथा त्वं तर्त्तुमिच्छसि। अन्तर्महीं वा यदि वोर्द्ध्वमुत्पतेः समुद्रपारं यदि वा प्रधावसि। तथाऽपि तेभ्यो न विमोक्षमर्हसि प्रमाथिनो देवसुता हि खेचराः। त्वं कालरात्रीमिव कश्चिदातुरः किं मां दृढ़ं प्रार्थयसेऽद्य कीचक!। किं मातुरङ्के शयितो यथा शिशुश्चन्द्रं जिघृक्षुरिव मन्यसे हि माम्" १३अ०। तथैवं निरस्तेन तेन स्वभगिनीं सुदेष्णां प्रति तस्यावश्यतासम्पादनप्रार्थने तया तत्रोपायविधानं वर्णितं यथा—

"प्रत्याख्यातो राजपुत्त्र्या सुदेष्णां कीचकोऽब्रवीत्। अमर्य्यादेन कामेन घोरेणाभिपरिप्लुतः। कीचकउवाच। यथा कैकेयि! सैरिन्ध्री समेयात्तद्विधीयताम्। येनोपायेन सैरिन्ध्री भजेन्मां गजगामिनी। तं सुदेष्णे! परीप्सस्व मो चेत् प्राणान् प्रहासिषम्। वैशम्पायनउवाच। तस्य सा बहुशः श्रुत्वा वाचं विलपतस्तदा। विराटमहिषी देवी कृपाञ्चक्रे मनस्विनी। स्वातन्त्र्यमभिसन्धाय तस्यार्थमनुचिन्त्य च। उद्योगञ्चैव कृष्णायाः सुदेष्णा सूतमब्रवीत्। सुदेष्णोवाच। पर्व्वणि त्वं समुद्दिश्य सुरामन्नञ्च कारय। तत्रैनां प्रेषयिष्यामि सुराहारीं तवान्तिकम्। तत्र सम्प्रेषितामेनां विजने निरवग्रहे। सान्त्वयेथा यथाकामं सान्त्व्यमाना रमेद्यदि। वैशम्पायनउवाच। इत्युक्तः स विनिष्क्रम्य भगिन्या वचनात्तदा। सुरामाहारयामास राजार्हां सुपरिस्कृताम्। मद्यांश्च विविधाकारान् बहूंश्चोच्चावचांस्तदा। कारयामास कुशलैरन्नपानं सुशोभनम्। तस्मिन् कृते तदा देवी कीचकेनोपमन्त्रिता। सुदेष्णा प्रेषयामास सैरिन्ध्रीं कीचकालयम्"। तत्प्रेषिताया द्रौपद्याः कीचकेन कथादि "द्रौपद्युवाच। संप्रैषीद्राजपुत्त्री मां सुराहारीं तवान्तिकम्। पानमाहर मे क्षिप्रं पिपासा मयि चाब्रवीत्। कीचकउवाच। अन्या भद्रे! नयिष्यन्ति राजपुत्त्र्याः प्रतिश्रुतम्। इत्येनां दक्षिणे पाणौ सूतपुत्त्रः परामृशत्। द्रौपद्युवाच। यथैवाहं नाभिचरे कदाचित् पतीन्मदाद्वै मनसाऽपि जातु। तेनैव सत्येन वशीकृतं त्वां द्रक्ष्यामि पापं परिकृष्यमाणम्। वैशम्पायन उवाच। स तामभिप्रेक्ष्य विशालनेत्रां जिघृक्षमाणः परिभर्त्सयन्तीम्। जग्राह तामुत्तरवस्त्रदेशे स कीचकस्तां सहसाऽऽक्षिपन्तीम्। प्रगृह्यमाणा तु महाजवेन मुहुर्विनिश्वस्य च राजपुत्त्री। चिक्षेप तं गाढ़माकृष्यमाणा प्रवेपमानाऽतिहृषा शुभाङ्गी। तया समाक्षिप्ततनुः स पापः पपात शाखीव निकृत्तमूलः। सा गृहीता विधुन्वाना भूमावाक्षिप्य कीचकम्। सभां शरणमागच्छद्यत्र राजा युधिष्ठिरः। तां कीचकः प्रधावन्तीं केशपाशे परामृशत्। अथैनां पश्यतो राज्ञः पातयित्वा पदाऽबधीत्। तस्या योऽसौ तदाऽर्केण राक्षसः सन्नियोजितः। स कीचकमपोवाह वातवेगेन भारत!। स पपात तदा भूमौ रक्षोबलसमाहतः। विघूर्णमानो निश्चेष्टश्छिन्नमूल इव द्रुमः"। भा० वि० १५अ०

**कीचकजित्** पु० कीचकं जितवान् जि–भूते क्विप्। भीमसेने कीचकभिदादयोऽप्यत्र भीमेन तस्य बधकथा च भा० वि०२२अ०। तत्रायं संक्षेपः कीचकधर्षितया द्रौपद्या तद्बधार्थं प्रार्थितेन भीमेन एकाकिना नाट्यशालायां त्वया रात्रौ आगतेन सह मम मेलनं भविष्यतीति कीचकं प्रति सङ्केतदानाय भीमेन नोदितया द्रौपद्या तथाऽनुष्ठिते भीमस्य नाट्यशालायां रात्रौ द्रौपदीस्थानीकृतयाग्रे प्रवेशे तत्र कीचकगतौ तयोर्युद्धादिकमुपवर्ण्य भीमेन कीच-

कस्य वत्र छेद्दैदि करपाद-प्रवेशनञ्चेति वर्णितं यथा "भीमोऽथ प्रथमं गत्वा रात्रौ छन्न उपाविशत् । मृगं हरिरिवादृश्यः समाकाङ्क्षत कीचकम् । कीचकश्चाप्यलङ्कृत्य यथाकाममुपागमत् । तां वेलां नर्त्तनागारं पाञ्चालीसङ्गमाशया । मन्यमानः स सङ्केतमागारं प्राविशत्ततः । प्रविश्य च स तद्वेश्म तमसा संवृतं महत् । पूर्व्वागतं ततस्तत्र भीममप्रतिमौजसम् । एकान्तावस्थितं चैनमाससाद सुदुर्म्मतिः । शयानं शयने तत्र मृत्युं सूतः परामृशत् । पतङ्गः पावकं दीप्तं सिंहं क्षुद्रपशुर्यथा । जाज्वल्यमानं कोपेन कृष्णाधर्षणजेन ह । उपसंगम्य चैवेनं कीचकः काममोहितः । हर्षोन्मथितचित्तात्मा स्मयमानोऽभ्यभाषत । प्रापितं ते मया वित्तं बहुरूपमनन्तकम् । तत्कृते धनरत्नाढ्यं दासीशतपरिच्छदम् । रूपलावण्ययुक्ताभिर्युवतीभिरलङ्कृतम् । गृहं चान्तःपुरं सुभ्रु ! क्रीडारतिविराजितम् । तत् सर्व्वं त्वां समुद्दिश्य सहसा समुपागतः । आकस्मान्मां प्रशंसन्ति सर्व्वा गृहगताः स्त्रियः । सुवासा दर्शनीयश्च नान्योऽस्ति त्वादृशः पुमान् । भीम उवाच । दिष्ट्या त्वं दर्शनीयोऽसि दिष्ट्यात्मानं प्रशंससि । ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्व्वो न कर्हिचित् । स्पर्शं वेत्सि विदग्धस्त्वं कामधर्म्मविचक्षणः । स्त्रीणां प्रीतिकरो नान्यस्त्वत्समः पुरुषस्त्विह । वैशम्पायन उवाच ।

इत्युक्त्वा तं महाबाहुर्भीमो भीमपराक्रमः । सहसोत्पत्य कौन्तेयः प्रहस्येदमुवाच ह । अद्य त्वां भगिनी पापं कृष्यमाणं मया भुवि । द्रक्ष्यत्यद्रिप्रतीकाशं सिंहेनेव महाद्विपम् । निराबाधा त्वयि हते सैरिन्ध्री विचरिष्यति । सुखमेवं चरिष्यन्ति सैरिन्ध्र्याः पतयस्तथा । ततो जग्राह केशेषु माल्यवत्सु महाबलः । स केशेषु परामृष्टो बलेन बलिनां वरः । आक्षिप्य केशान् वेगेन बाह्वोर्जग्राह पाण्डवम् । बाहुयुद्धं तयोरासीत् क्रुद्धयोर्नरसिंहयोः । वसन्ते वासिताहेतोर्ब्बलवद्गजयोरिव । कीचकानान्तु मुख्यस्य नराणामुत्तमस्य च । वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः" ।

ततस्तयोर्युद्धमुपवर्णितम् "मुहूर्त्तन्तु स तं वेगं सहित्वा भूरि दुःसहम् । बलादहीयत तदा सूतो भीमबलार्द्दितः । तं हीयमानं विज्ञाय भीमसेनो महाबलः । वक्षस्यानीय वेगेन ममर्द्दैनं विचेतसम् । क्रोधाविष्टो विनिश्वस्य पुनश्चैनं वृकोदरः । जग्राह जयतां श्रेष्ठः केशेष्वेव तदा भृशम् । गृहीत्वा कीचकं भीमो विरराज महाबलः । शार्दूलः पिशिताकाङ्क्षी गृहीत्वेव महामृगम् । तत एनं परिश्रान्तमुपलभ्य वृकोदरः । योक्त्रयामास बाहुभ्यां पशुं रशनया यथा । नदन्तञ्च महानादं भिन्नभेरीसमस्वनम् । भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् । प्रगृह्य तरसा दोर्भ्यां कण्ठं तस्य वृकोदरः । अपीडयत कृष्णायास्तदा कोपोपशान्तये । अथ तं भग्नसर्व्वाङ्गं व्याविद्धनयनाम्बरम् । आक्रम्य च कटीदेशे जानुना कीचकाधमम् । अपीडयत बाहुभ्यां पशुमारममारयत् । तं विषीदन्तमाज्ञाय कीचकं पाण्डुनन्दनः । भूतले भ्रामयामास वाक्यञ्चेदमुवाच ह । अद्याहमनृणो भूत्वा भ्रातुर्भार्य्यापहारिणम् । शान्तिं लब्धास्मि परमां हत्वा सैरिन्ध्रिकण्टकम् । इत्येवमुक्त्वा पुरुषप्रवीरस्तं कीचकं क्रोधसरागनेत्रः । आस्रस्तवस्त्राभरणं स्फुरन्तमुद्भ्रान्तनेत्रं व्यसुमुत्ससर्ज । निष्पिष्य पाणिना पाणिं सन्दष्टोष्ठपुटो बली । समाक्रम्य च संक्रुद्धो बलेन बलिनां वरः । तस्य पाणी च पादौ च शिरो ग्रीवाञ्च सर्व्वशः । काये प्रवेशयामास पशोरिव पिनाकधृक् । तं सम्मथितसर्व्वाङ्गं मांसपिण्डोपमं कृतम् । कृष्णायै दर्शयामास भीमसेनो महाबलः" ।

**कीज** लिं० किमस्य कथंजात इति वा पृषो० । अद्भुते "यः शक्रो मृक्षो अश्व्यो यो वा कीजो हिरण्मयः" ऋ० ८ । ६६ । २० । कीज इत्यद्भुतमाह" भा०

**कीट** बन्धे वर्णे च चुरा० उभ० सक० सेट् । कीटयति ते अचीकिटत्—त । कीटयाम् बभूव आस चकार चक्रे कीटः ।

**कीट** पु० कीट—अच् । कृमिभेदः स्थूले क्षुद्रजन्तुभेदे । स्वार्थे क । तत्रार्थे २मागधजातौ च धरणिः । ३कठिने त्रि० मेदिनिः । कीटभेदलक्षणादिकं सुश्रुते दर्शितं यथा- "अथातः कीटकल्पं व्याख्यास्यामः । सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसम्भवाः । वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः स्मृताः । सर्व्वदोषप्रकृतिभिर्युक्तास्त्वपरिणामतः । कीटास्त्वेऽपि सुघोरास्ते सर्व्व एव चतुर्व्विधाः । कुम्भीनसस्तुण्डिकेरी शृङ्गी शतकुलीरकः । उच्चिटिङ्गोऽग्निनामा च विच्चिटिङ्गो मयूरिका । आवर्त्तकस्तथोरभ्रसारिकामुखवैदलौ । शरावकुर्द्दोऽभीराजी परुषश्चित्रशीर्षकः । शतबाहुश्च यश्चापि रक्तराजिः प्रकीर्त्तितः । अष्टादशेति वायव्याः कीटाः पवनकोपनाः ; तैर्भवन्तीह दष्टानां रोगा वातनिमित्तजाः । कौण्डिल्यकः कणभको वरटी

पतङ्गश्चिकः। विनासिका ब्रह्मणिका विन्दुलो भ्रमरस्तथा। वाह्यकी पिच्चिटः कुम्भी वर्च्चःकीटोऽरिमेदकः। पद्मकीटो दुन्दुभिको मकरः शतपादकः। पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्द्दभी। क्लीतः कृमिसरारी च यश्चाप्युत्क्लेशकः स्मृतः। एते ह्यग्निप्रकृतयश्चतुर्विंशाः प्रकीर्त्तिताः। तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः। विश्वम्भरः पञ्चशुक्लः पञ्चकृष्णोऽथ कोकिलः। सैरेयकः प्रचलको वलभः किटिभस्तथा। सूचीमुखः कृष्णगोधा यश्च काषायवासिकः। कीटगर्द्दभकश्चैव तथा त्रोटक एव च। त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः। तैर्भवन्तीह दष्टानां रोगाः कफनिमित्तजाः। तुङ्गीनासो विचिलकस्तालको वाहकस्तथा। कोष्ठागारी क्रिमिकरो यश्च मण्डलपुच्छकः। तुङ्गनाभः सर्षपिकोऽवल्गुली शम्बुकस्तथा। अग्निकीटश्च घोराः स्युर्द्वादश प्राणनाशनाः। तैर्भवन्तीह दष्टानां वेगस्थानानि सर्पवत्। नानास्ताश्च वेदनास्तीव्रारोगा वै सान्निपातिकाः। क्षाराग्निदग्धवद्दंशो रक्तपीतसितारुणः। ज्वराङ्गमर्द्दरोमाञ्चवेदनाभिः समन्वितः। छर्द्यतीसारतृष्णा च दाहो मोहोविजृम्भिका। वेपथुश्वासहिक्काश्च दाहः शीतञ्च दारुणम्। पिडकोपचयः शोफो ग्रन्थयो मण्डलानि च। दद्रवः कर्णिकाश्चैव विसर्पाः किटिभानि च। तैर्भवन्तीह दष्टानां यथास्वञ्चाप्युपद्रवाः। येऽन्ये तेषां विशेषास्तु रूपं तेषां समादिशेत्। दूषीविषप्रकोपाच्च तथैव विषलेपनात्। लिङ्गं तीक्ष्णविषेष्वेतच्छृणु मन्दविषेष्वतः। प्रसेकोऽरोचकश्छर्द्दिःशिरोगौरवशीतता। पिडकाकोठकण्डूनां जन्म दोषविभागतः। योगैर्नानाविधैरेषां चूर्णानि गरमादिशेत्। दूषीविषप्रकाराणां तथैवाप्यनुलेपनात्। एकजातीनतस्तूर्द्ध्वं कीटान् वक्ष्यामि भेदतः। सामान्यतो दष्टलिङ्गैः साध्यासाध्यक्रमेण च। त्रिकण्टकः कुणी चापि हस्तिकक्षोऽपराजितः। चत्वार एते कणभा व्याख्यातास्तीव्रवेदनाः। तैर्दष्टस्य श्वयथुरङ्गमर्दो गुरुता गात्राणां दंशःकृष्णश्च भवति। प्रतिसूर्य्यं पिङ्गभासो बहुवर्णो महाशिराः। तथा निरुपमश्चापि पञ्च गौधेरकाः स्मृताः। तैर्भवन्तीह दष्टानां वेगस्थानानि सर्पवत्। रुजश्च विविधाकारा ग्रन्थयश्च सुदारुणाः। गलगोली श्वेतकृष्णा रक्तराजी रक्तमण्डला सर्व्वश्वेता सर्षपिका इत्येवं षट् ताभिर्दष्टे सर्षपिकावर्ज्जं दाहशोफक्लेदा भवन्ति। सर्षपिकया हृदयपीडातिसारश्च। शतपदस्तु परुषा कृष्णा चित्रा कपिलिका पीतिका रक्ता श्वेता अग्निप्रभा इत्यष्टौ ताभिर्दष्टे शोफो वेदना दाहश्च हृदये श्वेताग्निप्रभाभ्यामेतदेव दाहो मूर्च्छा चातिमात्रं श्वेतपिडकोत्पत्तिश्च। मण्डूकाः कृष्णः सारः कुहको हरितो रक्तो यववर्णाभो भृकुटी कोटिकश्चेत्यष्टौ तैर्दष्टस्य दंशकण्डूर्भवति पीतफेनागमश्च वक्त्रात्। भृकुटीकोटिकाभ्यामेतदेव दाहश्छर्दिर्मूर्च्छा चातितिमात्रम्। विश्वम्भराभिर्दष्टे दंशः सर्षपाकाराभिः पिडकाभिश्चीयते शीतज्वरार्त्तश्च पुरुषो भवति। अहिण्डुकाभिर्दष्टे तोददाहकण्डूश्वयथवो मोहश्च। कण्डूमकाभिर्दष्टे पीताङ्गश्छर्द्यतीसारज्वरादिभिरभिहन्यते। शूकवृन्तादिभिर्दष्टे कण्डूकोठाः प्रवर्द्धन्ते शूकञ्चात्र लक्ष्यते। पिपीलिकाः स्थूलशीर्षा संवाहिका ब्राह्मणिकाङ्गुलिका कपिलिका चित्रवर्णेति षट् ताभिर्दष्टे दंशे श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः। मक्षिकाः कान्तारिका कृष्णा पिङ्गलिका मधूलिका काषायी स्थालिकेत्येवं षट् ताभिर्दष्टस्य दाहशोफौ भवतः। स्थालिका काषायीभ्यामेतदेव पिडकाश्च सोपद्रवा भवन्ति। मशकाः सामुद्रः परिमण्डलो हस्तिमशकः कृष्णः पार्वतीय इति पञ्च तैर्दष्टस्य तीव्रकण्डूर्दंशशोफश्च पार्वतीयस्तु कीटैः प्राणहरैस्तुल्यलक्षणः। नखावकृष्टेऽत्यर्थं पिडकाः सदाहपाकाभवन्ति। जलौकसां दष्टलक्षणमुक्तं चिकित्सितञ्च। भवन्ति चात्र। गोधेरकःस्थालिका च ये च श्वेताग्निसंप्रभे। भृकुटीकोटिकश्चैव न सिध्यन्त्येवजातिषु। शवमूत्रपुरीषैस्तु सविषैरवमर्षणात्। स्युः कण्टदाहकोठाः पिडकातोदवेदनाः। प्रक्लेदवांस्तथास्रावो भृशं समाचयेस्त्वचम्। दिग्धविद्धक्रियास्तत्र यथावदवचारयेत्। नावसन्नं नचोत्सन्नमतिसंरम्भवेदनम्। दंशादौ विपरीतार्त्ति कीटदष्टं सुबाधकम्। कीटैर्दष्टानुग्रविषैः सर्पवत् समुपाचरेत्। त्रिविधानान्तु सर्पाणां त्रैविध्येन क्रिया हिता। स्वेदमालेपनं सेकं चोष्णमत्रावचारयेत्। अन्यत्र मूर्च्छितादंशात् पाककोथप्रपीडितात्। विषघ्नञ्च विधिं सर्वं कुर्य्यात् संशोधनानि च"। २कीटाख्येषु राशिषु

**कीटगर्द्दभक** पु० कीटभेदे कीटशब्दे विवृतिः।

**कीटघ्न** पु० कीटं हन्ति हन—टक्। गन्धके राजनि०।

**कीटजा** स्त्री० कीटेभ्यो जायते जन—ड। १जतुनि लाक्षायाम् रत्नमाला० २कीटजातमात्रे त्रि०। [हंसपदीलते राजनि०।

**कीटपादिका** स्त्री कीटाःपादे मूलेऽस्याः कप् अतइत्त्वम्।

**कीटमणि** पु० कीटेषु मणिरिव । खद्योते शब्दचि० ।

**कीटमाता** स्त्री कीटस्य मातेव मूले बहुलकीटप्रसवात् । हंसपदीवृक्षे भावप्र० ।

**कीटमारी** स्त्री कीटान् मारयति सेवनेन मृ–णिच्–अण् उप०स०गौरा०ङीष् मुग्ध०मते घण् ईप् । हंसपदीवृक्षे राजनि० [(उच्चिडिङ्गा) इतिख्याते कीटभेदे शब्दचि० ।

**कीटमेष** पु० कीटोमेष इव । नदीतीरे सिकतामध्ये स्थायिनि

**कीटसंज्ञ** पु० कीटः संज्ञा यस्य । "कर्कटवृश्चिकमीना मकरान्त्यार्द्धञ्च कीटसंज्ञाः स्युः" ज्यो० उक्तेषु कर्कटादिषु राशिषु कीटाख्यादयोऽप्यत्र । यद्यप्येषां सर्वेषां कीटसंज्ञा तथापि क्वचित् कीटशब्दस्य वृश्चिकराशिमात्रपरता यथा "हरिः कीटघटेन च" पताकीवेधे वृश्चिकस्यैव सिंहकुम्भाभ्यां वेधात्तस्यैव ग्रहणम् ।

**कीडेर** पु० कील–एरच् लस्य डः । तण्डुलीयशाके–भावप्र० ।

**कीदृश** त्रि०कस्येव दर्शनमस्य किम्+दृश–क्स क्यादेशे दीर्घः । किम्प्रकारे । क्विन् । कीदृश् । कञ् । कीदृश तत्रार्थे त्रि० तत्र कञि स्त्रियां ङीप्, क्से टाप् इति भेदः । "प्रिये ! स कीदृक् भविता तव क्षणः" नैष० । "यद्येतानि जयन्ति हन्त परितः शस्त्राण्यमोघानि मे तन्नोः कीदृगसौ विवेकविभवः कीदृक् प्रबोधोदयः" प्रबोधच० ।

**कीनाश** पु० कुत्सितं नाशयति, कीचनाशि अच् क्लिश्नाति नि०वा । १यमे "विशेहि कीनाशनिकेतनातिथिम्" माघः । २वानरे पुंस्त्री अमरः स्त्रियां जातित्वात् ङीष् । ३परघ्ने ४क्षुद्रे ५कर्षके च त्रि० मेदि० । "कीनाशो गोवृषो यानमलङ्कारश्च वेश्म च । विप्रस्यौद्धारिकं देयमेकांशश्च प्रधानतः" मनुः "कीनाशः कर्षकः" कुल्लू० । "शुनं न फाला वि कृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः" ऋ०४,५७,८, "कीनाशाः बलीवर्द्दरक्षकाः" भा० । "नाद्रियन्ते यथापूर्व्वं कीनाशाइव गोजरम्" भाग०३,३०,११ । क्षुद्रे "य उद्यतमनादृत्य कीनाशमभियाचते । क्षीयते तद्यशः स्फीतं मानश्चावज्ञया हतः" भाग०३२२,१२

**कीर** पुंस्त्री कीति ईरयति ईर–णिच्–अच् । १शुके पक्षिभेदे अमरः । "खगवागियमित्यतोऽपि किं न मुदं धास्यति ? कीरगीरिव" नैष० जातित्वात् स्त्रियां ङीष् । २काश्मीरदेशे पु० भूम्नि मेदि० अल्पार्थे कन् । कीरक शुकशावे संज्ञायां कन् । वृक्षभेदे चपणके च धरणिः

**कीरवर्णक** न० कीरस्येव वर्णोऽस्य कप् । (स्थौणेयक) नाम सुगन्धिद्रव्ये राजनि० ।

**कीरि** पु० कीर्य्यते विक्षिप्यते कॄ–बा०कि । १स्तोतरि "कीरिणा देवान्नमसोपशिक्षन्" ऋ०५,४०,८, "कीरिणा स्तोत्रेण" भा० २स्तुत्यादिषु विक्षिप्ते त्रि० । "यस्या हृदा कीरिणा मन्यमानः" ऋ०५,४,१०, "कीरिणा स्तुत्यादिषु विक्षिप्तेन हृदा" भा० ३स्तोतरि त्रि० निरु० "वसु स्तुवते कीरये" ऋ० ६,२३,३, "कीरिरितिस्तोतृनाम" भा० "सखाय कीरिचोदनम्" ऋ० ६,४५,१९, "कीरीणां स्तोतॄणां चोदनं प्रेरयितारम्" भा० ।

**कीरेष्ट** पु० कीरस्य इष्टः । १आम्रवृक्षे २आखोटवृक्षे (आखरोट) ३जलमधूकवृक्षे च राजनि० ।

**कीर्ण** त्रि० कॄ–क्त । १आच्छन्ने २निहिते ३विक्षिप्ते ४हिंसिते च मेदि० । "श्रमविहतसुखभ्रंशिभिः कीर्णवर्णाः" शकु० । "कीर्णं घनैरनुकपोलमनेकपानाम्" माघः ।

**कीर्णि** स्त्री० कॄ–भावे क्तिन् नि० निभावः । १विक्षेपे २हिंसने ३आच्छादने च । [ कथने ।

**कीर्त्तन** न० चु०कृत–कीर्त्तादेशः चौर–कीर्त्त–वा भावे ल्युट् ।

**कीर्त्तना** स्त्री चु० कृत कीर्त्तादेशे भावे युच् । १कथने । कर्म्मणि युच् । २यशसि शब्दरत्ना० ।

**कीर्त्ति** स्त्री चौ०कीर्त्त –क्तिन् । १प्रसादे मेदि०२शब्दे ३दीप्तौ ४मातृकाविशेषे च शब्दरत्ना०५विस्तारे ६कर्द्दमे च विश्वः । ७ख्यातिभेदे अमरः । ख्यातिभेदश्च धार्म्मिकत्वादि प्रशस्तधर्म्मवत्त्वेन नानादेशीयकथन ज्ञानविषयता । कीर्त्तेश्च जीवतोमृतस्य वेत्यत्र विशेषोनास्ति । "यस्य कीर्त्तिः स्तुता लोके धन्यं तस्य सुजीवितम्" नीतिसारे "सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते" गीतायाञ्च जीवतोऽपि कीर्त्तिसत्त्वस्योक्तेः । तत्र दानादिप्रभावा ख्यातिः कीर्त्तिः शौर्य्यादिप्रभवा ख्यातिर्यश इति केचिद्यशःकीर्त्त्योर्भेदमाहुः "कीर्त्तिं स्वर्गफलामाहुरासंसारं नृणां किल" इत्यनेन कीर्त्तेः स्वर्गफलतोक्तेः । जीवतःख्यातिर्यशः मृतस्य ख्यातिः कीर्त्तिरिति विभागस्तु न सम्यक् "इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्" इति मनुना इहलोकेऽपि कीर्त्तिप्राप्तेरुक्तेः । एतेन

"प्रज्ञां यशश्च कीर्त्तिञ्च ब्रह्मवर्चसमेव च" मनुवाक्यस्य "जीवन् यशः मृतस्य कीर्त्तिमिति" कुल्लू०व्याख्या चिन्त्या प्रागदर्शितमनुवाक्यान्तरविरोधात् किन्तु स्वर्गादिफलकदानादिधर्म्मस्यैव कीर्त्तिः, शौर्य्यादिना यश इत्युभयोर्भेदसम्भवेन मनुवाक्यस्य तदर्थपरत्वमेवोचितम् "स्वकान्तिकीर्त्तिव्रजमौक्तिकस्रजम्" नैष० ।

**कीर्त्तित** त्रि० चु० क्त—कीर्त्तादेशे क्त। १कथिते—२ख्याते च।

**कीर्त्तिभाज्** पु० कीर्त्तिं भजते भज—ण्वि १द्रोणाचार्य्ये शब्दरत्ना०। २कीर्त्तियुक्ते त्रि०

**कीर्त्तिमत्** त्रि० कीर्त्तिरस्त्यस्य मतुप्। १कीर्त्तियुक्ते स्त्रियां ङीप्। विश्वदेवान्तर्गते श्राद्धदेवभेदे पु० २विश्वे देवाश्च भा० आनु० १५२ अ० दर्शिता यथा

"विश्वे चाग्निमुखा देवाः सङ्ख्याताः पूर्व्वमेव ते। तेषां नामानि वक्ष्यामि भागार्हाणां महात्मनाम्। बलं धृतिर्विधाता च पुण्यकृत् पावनस्तथा। पार्ष्णिक्षेमी समूहश्च दिव्यसानुस्तथैव च। विवस्वान् वीर्य्यवान् ह्रीमान् कीर्त्तिमान् कृत एव च। जितात्मा मुनिवर्य्यश्च दीप्तरोमा भयङ्करः। अनुकर्म्मा प्रतीतश्च प्रदाताऽथांशुमांस्तथा। शैलाभः परमक्रोधी धीरोष्णी भूपतिस्तथा। अजो वज्री वरी चैव विश्वेदेवाः सनातनाः। विद्युद्वर्च्चाः सोमवर्च्चाः सूर्य्यश्रीश्चेति नामतः। सोमपः सूर्य्यसावित्रो दत्तात्मा पुण्डरीयकः। उष्णीनाभो नभोदश्च विश्वायुर्दीप्तिरेव च। चमूहरः सुरेशश्च व्योमारिः शङ्करो भवः। ईशः कर्त्ता कृतिर्द्दक्षो भुवनो दिव्यकर्म्मकृत्। गणितः पञ्चवीर्य्यश्च आदित्यो रश्मिमांस्तथा। सप्तकृत् सोमवर्च्चाश्च विश्वकृत् कविरेव च। अनुगोप्ता सुगोप्ता च नप्ता चेश्वर एव च। कीर्त्तितास्ते महाभागाः कालस्यागतिगोचराः"।

३वसुदेवज्येष्ठपुत्रे "वसुदेवस्तु देवक्यामष्टौ पुत्रानजीजनत्। कीर्त्तिमन्तमित्यादि" भाग० ६,२१,२५।

**कीर्त्तिशेष** त्रि० कीर्त्तिःशेषोयस्य। नामशेषे मृते शब्दचि०

**कील** बन्धे भ्वादि०पर० सक० सेट्। कीलति अकीलीत्। चिकील कीलः। कीलितः कीलनम्। प्रनिकीलति

**कील** पु० कील—बन्धे यथायथं भावकरणादौ घञ्। १वह्निशिखायां २शङ्कौ (गोंज) अमरः। ३स्तम्भे (खोंटा) ३लेशे ४कफोणौ मेदि०। ५कफोणिनिम्नदेशे विश्वः। "परिखाश्चापि कौरव्य! कीलैः सुनिचिताः कृताः" भा० ३, ६५० श्लो० ६रतिप्रहारभेदे स्त्री "कीला उरसि, कर्त्तरी शिरसि, विद्धा कपोलयोः" वात्स्या० भावे अ, ७बन्धे स्त्री

**कीलक** पु० कीलति बध्नात्यनेन करणे वुञ् स्वार्थे क। १स्तम्भभेदे (खोंटा) गवादेर्दोहनकाले रोधनार्थे २काष्ठमयस्तम्भे सुभूतिः। तन्त्रोक्ते देवताभेदे३मन्त्रविशेषे न०। प्रभवादिषष्टिवर्षमध्ये ४ वर्षभेदे तत्फलञ्च "जायन्ते सर्वशस्यानि सुभिक्षं निरुपद्रवम्। सौस्थ्यंहृष्टि र्भवेद्राजन्! कीचके च शुभं भवेत्" ज्यो० त० सप्तशतीजपाङ्गतया पाठ्ये ५स्तवभेदे न० स च "सर्वमेतद्विना यस्तु मन्त्राणामपि कीलकम्" इत्यादि। तस्य च कीलकत्वम् तज्ज्ञानं विना फलाजनकत्वात् तदुक्तं तत्रैव "कृष्णायां च चतुर्दश्यामष्टम्यां वा समाहितः ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति" इत्यं रूपेण कीलेन महादेवेन कीलितम्। यो निष्कीलां विधायैनां नित्यं जपति सम्पुटाम्"। तत्रैव तज्ज्ञानस्या भावे निष्फलत्वोक्तेश्च तच्च गुरुलघुभेदेन द्विविधं गुप्तवत्यां विवृतिः"। तेन कृष्णाष्टमीचतुर्दश्योः नूतनार्जितधनस्य देवातिथ्यादिभ्यो यथोचितांशदानं तदवशिष्टस्य स्वायत्तीकरणमावश्यकं तद्विना सप्तशतीजपस्य न फलजनकत्वमिति गम्यते "अर्गलं कीलकं चादौ पठित्वा कवचम् पठेत्" तत्रैव

**कीलसम्पर्श** पु० कीलं तदुपकारं संस्पृशति सम्+स्पृश—अण् उप०स०। (गाव) वृक्षभेदे शब्दच०

**कीलाल** पु० कीलाय बन्धाय अलति पर्य्याप्नोति अल—अच् ४त०। १पशौ २बन्धनयोग्ये त्रि० मेदि०। "कीलां वह्निशिखां कीलं स्तम्भबन्धं वाऽलति वारयति अल—अण् उप०स०। ३जले कीलां तद्वर्णमलति याति। ४रुधिरे न० अमरः ५अमृते ६मधुनि च शब्दर०। मधुनः शीघ्रसंग्राहकत्वेन बन्धहेतुत्वात् तथात्वम्। "ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्" यजु० २,४,७। ७रसे पु०। "अधोअद्याय कीलालः उपहूतो रसेषु" यजु० २,१२, तत्र रुधिरे "सद्यःकृत्तकठोरकण्ठविगलत्कीलालधारोज्ज्वलैः"। जले "कीलालजं न खादेयं करिष्ये चासुरव्रतम्"। भा० व० अ० "कीलालजं जलजम्"।

**कीलालधि** पु० कीलालं धीयतेऽस्मिन् धा—आधारे कि ६त०। समुद्रे शब्दच०

**कीलालप** पुंस्त्री कीलालं रुधिरं पिवति पा—क। रुधिरपे राक्षसे रत्नमा० स्त्रियां ङीप् "स च कीलालोपयस्तु पराद्यं भोक्तुमिच्छति" भा० व० १२२४१। [२वत्से न०।

**कीलित** त्रि० कील—क्त। १बद्धे २जातकीले च भावे—क्त।

**कीयत्** त्रि० कियत् +पृषो० वेदे नि० दीर्घः। कियदित्यर्थे "आः कीयतः ललूकं चकर्थ" ऋ० ३,३०,१७,

**कीश** पुंस्त्री कस्य वायोरपत्यम् अत—इञ् किः हनुमान् ईशो यस्य कुत्सितं शेते शी—ड वा। वानरे अमरः स्त्रियां जातित्वात् ङीप्। २सूर्य्ये कपिकपोलतुल्यवर्णत्वात् तत्त्वं ३पक्षिणि च शब्दर० कुत्सितशयनात्तस्य तथात्वम्। ४नग्ने मेदि०। कीशवद्वस्त्ररहित्यात्तस्य तथात्वम्।

**कोशपर्णी** पु० कोशः तल्लोमेव पर्णमस्य । अपामार्गे शब्दर० । जातित्वेन ङीप् । कोशपर्णीत्यप्यत्र अमरः

**कु** शब्दे वर्णे च भ्वा० आत्म० अक० अनिट् कवते अकोष्ट चुकुवे प्रनिकवते [अकोष्ट चुकाव

**कु** आर्त्तस्वरे तुदा० आत्म० अ० क० अनिट् । कुटादि । कुवते

**कु** शब्दे अदा०पर०अक०अनिट् । कौति अकौषीत् चुकाव

**कु** अव्य० कु+डु । १पापे, २निन्दायाम्, ३ईषदर्थे, ४निवारणे च । ५भूमिभागे ६धरायाञ्च स्त्री । कुत्सितार्थत्वे ईषदर्थत्वे चास्य "कुगतिप्रादयः" "पा० समर्थेन नित्यसमासः कुरूपम् कुदेशः तत्रायं भेदः तत्पुरुषे अजादौ शब्दे परे कोः कत् । कुत्सितोऽश्वः कदश्वः कदन्नम्कदध्वः कदग्निः ।"रथवदयोश्च"पा०कद्रथः कद्वदः"तृणे च जातौ"पा० कत्तृणम् पथिशब्दे कृतसमासान्ताक्षशब्दे परे च कादेशः कापथः काक्षः । ईषदर्थस्य कोः का, ईषज्जलं काजलम् पुरुषे परे का वा ईषत् पुरुषः कुपुरुष कापुरुषः । उष्णे उक्तत्वयादेशः कोष्णं कवोष्णं कदुष्णम्" गतिप्रादिसाहचर्यात् अव्ययस्यैवेह ग्रहणात् न भूमिवाचस्य नित्यसमासः नवा कदादेशः अव्ययपूर्व्वकत्वात् प्रकृतिस्वरः, "राहुः कुभामण्डलगः शशाङ्कं ग्रस्ते" "ज्यो०ब्राह्मण इव कुशासनसङ्हितः" काद० । कुदिनम् कुजः अव्ययस्य वेदे दीर्घः "कूष्ठोदेवावश्विनाद्याद्दिवोमनावसू" ऋ०५,७४,१ ।

**कुंसा** स्त्री कुसि—भावे अ । १भाषणे २द्यपने च

**कुक** आदाने भ्वा० आत्म०सक० सेट् । कोकते । अकोकिष्ट । चुकुके कोकः' प्रनिकोकते

**कुक** त्रि० कुक—क । १समर्थे २आदायिनि च ।

**कुकाभ** न० कुकस्य भा यत्र । मद्ये शब्दच० । तत्पानस्य सामर्थ्याधायकत्वात् तथात्वम्

**कुकार** पु० कुत्सितःआदानादिसान्ध्ययुक्तः करोयस्मात् । करस्य क्रियामान्द्यसम्पादके कुणिरोगे अमरः । ब०ब० २तद्रोगयुक्ते त्रि० । कु+कृ—ट । ३कुकर्म्मकारके त्रि० ।

**कुकर्म्मन्** न० कुत्सितं कर्म्म नित्यस० । १लोकशास्त्रनिन्दिते कर्म्मणि ब०व० । २तद्युक्ते त्रि० स्त्रियां वा डाप्

**कुकील** पु० कोः पृथिव्या । कीलइव । पर्व्वते त्रिका० तस्य भूमौ कीलकमेणावस्थानात् तथात्वम्

**कुकुट** पु०कौ कुटति कुट—क, कोः कुटइव वा । (सुर्पणि) इतिख्याते शाकभेदे राजनि० तस्य पृथिव्याः कुटतुल्यत्वात् तथात्वम्

**कुकु(कू)द** पु० कोः पृथिव्याः कुद ईषद्दः । सत्कृतालङ्कृतायाः कन्याया दातरि पृथ्वी० दीर्घपाठः इत्यन्ये । कन्यादस्य ईषद्भूमिदानसमत्वात्तस्य तथात्वम् । सत्कृतालङ्कृतां कन्यां ददानः ककुदः स्मृतः" अमरे पाठान्तरम् अत्र प्रसिद्धपदसान्निध्यात् कुकुदपदस्य उक्तार्थे शक्तिग्रह इति शब्द० प्र० । प्रसिद्धपदसान्निध्यञ्च प्रसिद्धार्थपदसामानाधिकरण्यम् सामानाधिकरण्यञ्च अभेदेनान्वयबोधकत्वम् । न्यायमते तिङर्थस्याभेदेन प्रथमान्तार्थे अन्वयासम्भवेन "यो ददाति स कुकु(कू)दः इत्यमर पाठे स्थिते ददातीतिस्थाने ददान इति पाठः कल्पितः । व्याकरणमते तु तिङन्तार्थस्य प्रथमान्तार्थेऽभेदेनान्वयस्वीकारान्न यथाश्रुतपाठेऽपि क्षतिः । विवेचितं चैतदस्माभिः शब्दार्थरत्ने तत एव तदवसेयम् ।

**कुकुन्दर** पु० कुं भूमिं दारयति अन्तर्भूतण्यर्थे दृ—अच् नि० कुत्सितं कुन्दरमत्र, स्कुन्दते कामिनाऽत्र स्कुट् नि० वा । स्त्रीणां १नितम्बस्थे आवर्त्ताकारे पृष्ठवंशादधोवर्त्तिगर्त्तद्वये । अमरः । (कुकुरसोङ्गा) २तृत्ते भावप्र० ।

**कुकुभा** स्त्री रागिणीभेदे हलायुधः ।

**कुकुर** पु ०कुं पृथिवी० कुरति त्यजति स्वामित्वेन कुर—क । यदुवंशीयनृपभेदे तेषां ययातिशापात् राज्यं नास्तीति पुराणकथा यदुशब्दे दृश्या । "विधुरि ता धुरिताः"कुकुरस्त्रिय" माघः । २दशार्हे देशभेदे पु० ब०व० । कुक—उरच् किच्च । ३कुकुरे हड्डचन्द्रः । ४ग्रन्थिपर्णौषधौ त्रिका० । कुकुरान्धप्रयान्धकालभेदः । "कुकुरः भजमानशुचिकम्बलवर्हिषास्तथान्धकस्य पुत्राः" इति विष्णुपु० "कुकुरो भजमानश्च शुचिः कम्बलबर्हिषः । "अन्धकात् काश्यदुहिता चतुरोलभतात्मजान् कुकुरं भजमानं च शमं कम्बलबर्हिषम्" हरिवं० ३८अ० तदधिष्ठानदेशभेदश्च दशार्हः ।

**कुकूटी** स्त्री कोः पृथिव्याः कूटोऽस्त्यस्याः अच् गौरा०ङीष् । शाल्मलीवृक्षे राजनि० तस्या दीर्घतया भूमिकूटतुल्यत्वात्तथात्वम् ।

**कुकूल** पु० कोः भूमेः कूलं, कुत्सितं वा कूलम् कु—ऊलच् धातोः कुगागमश्च वा । १तुषानले २शङ्कुभिः सङ्कीर्णे ३गर्त्ते ३वर्म्मणि च अमरः । "शिरीषादपि मृद्वङ्गी केयमायतलोचना । अयं क्व च कुकूलाग्निः कर्कशो मदनानलः" ।

**कुकोल** न० कुत्सितं कोलति कुल—अच् । कोलिवृक्षे । शब्दच० ।

**कुक्कुट** पु०स्त्री०कुक—सम्प०क्विप् कुका आदानेन कुटति कुट—

क। पक्षिभेदे चरणायुधे १ताम्रचूडे स्त्रियां जातित्वात् ङीष्। तस्य शुभाशुभलक्षणमुक्तम् वृह०सं० यथा— "कुक्कुटस्त्वृजुतनूरुहाङ्गुलिस्ताम्रवक्त्रनखचूलिकः सितः। रौति सुस्वरमुषात्यये च यो वृद्धिदः स नृपराष्ट्रवाजिनाम्। यवग्रीवो यो वा बदरसदृशो वापि विहगो वृहन्मूर्द्धा वर्णैर्भवति बहुभिर्यश्च रुचिरः। स शस्तः सङ्ग्रामे मधुमधुपवर्णश्च जयकृन्न शस्तो योऽतोऽन्यः कृशतनुरवः खञ्जचरणः। कुक्कुटी च मृदुचारुभाषिणी स्निग्धमूर्त्तिरुचिराननेक्षणा। सा ददाति सुचिरं महीक्षितां श्रीयशोविजयवीर्यसम्पदः"।

तन्मांसगुणा भावप्र० उक्ता यथा "कुक्कुटो वृंहणः स्निग्धो वीर्य्योष्णोऽनिलहृद्गुरुः। चक्षुष्यः शुक्रकफकृत् बल्यो वृष्यः कषायकः। वातपित्तक्षयवमिविषमज्वरनाशनः"। अभक्ष्यप्रकरणे ग्राम्यकुक्कुटस्याभक्ष्यत्वमाह मनुः "छत्राकं विड्वराहं च लसुनं ग्राम्यकुक्कुटम्" २दृष्टोल्कायां (उल्को) ३कुक्कुभखगे च ४वह्निकणे स्फुलिङ्गे हेम०। स्वार्थे क तत्रार्थेषु मेदि०। "शूद्रजातोनिषादात्तु स वै कुक्कुटकः स्मृतः" मनूक्ते निषादीजाते शूद्रकृते च

**कुक्कुट(टी)व्रत** न० भाद्रशुक्लसप्तम्यां कर्त्तव्यव्रतभेदे "भाद्रे मासि सिते पक्षे सप्तम्यां नियमेन या। स्नात्वा शिवं लेखयित्वा मण्डले च सहाम्बिकम्। पूजयेच्च तदा तस्या दुष्प्रापं नैव विद्यते" ति०त० भवि०पु०। इदं कुक्कुटीव्रतमिति ति० त० रघुनन्दनः

**कुक्कुटमण्डप** काशीस्थे मुक्तिमण्डपे स्थाने। तस्य तन्नाम कारणकथा च काशी० ६८ अ० दर्शिता यथा— "कैवल्यमण्डपस्यास्य भविष्यद्द्वापरे हरे!। लोके ख्यातिर्भवित्रीयमेष कुक्कुटमण्डपः" इति शिवेनोक्ते तद्विषये हरिप्रश्ने यथा तस्य कुक्कुटमण्डपनामप्राप्तिस्तथेतिहासो वर्णितः। तत्र चण्डालतः प्रतिग्राहकविप्रस्य सुतद्वयपत्नीभ्यां सहितस्य कीकटे कुक्कुटयोनित्वप्राप्तिरुपवर्ण्य तस्य मरणकाले काशीस्मरणजात् पुण्यात् कुक्कुटयोनिगतावपि काशीप्राप्त्या मुक्तिरित्युक्तम् यथा "न काश्यां मरणं प्राप्तं तस्माद्दुष्टप्रतिग्रहात्। प्रान्ते कुटुम्बस्मरणात्तथा काशीस्मृतेरपि। चौरैर्हतोऽपि स तदा कीकटे कुक्कुटोऽभवत्। सा कुक्कुटी सुतौ तौ तु ताम्रचूडत्वमापतुः। प्रान्ते काशीस्मरणतोजाता जातिस्मृतिः पुरा। इत्थं बहुतिथे काले गते कार्पटिकोत्तमाः। तस्मिन्नेवाध्वनि प्राप्ताश्चत्वारो यत्र कुक्कुटाः। वाराणस्याः कथां प्रोच्चैः कुर्वन्तोऽन्योन्यमेव हि। काशीकथां समाकर्ण्य तदा ते चरणायुधाः। जातिस्मृतिप्रभावेन तत्सङ्गेन तु निर्गताः। तैश्च कार्पटिकश्रेष्ठैः पथि दृष्टाः कृपालुभिः। तण्डुलादिपरिक्षेपैः प्रापिताः क्षेत्रमुत्तमम्। ते तु क्षेत्रं समासाद्य चत्वारश्चरणायुधाः। चरिष्यन्तोऽत्र परितो मुक्तिमण्डपमुत्तमम्। जिताहारान् सनियमान् कामक्रोधपराङ्मुखान्। मृष्टवतः सत्कथालापान् लोभमोहविवर्ज्जितान्। स्वर्धुनीस्नानसंक्लिन्नसुनिर्मलशिरोरुहान्। मन्नामोच्चारणपरान् मत्कथार्पितसुश्रुतीन्। मद्गतचित्तसद्वृत्तीन् दृष्ट्वा क्षेत्रनिवासिनः। मानयामासुरथ तान् कुक्कुटान् साधुवर्त्मनः। प्राक्तनाद्वासनायोगात् संप्रधार्य्य परस्परम्। क्रमेणाहारमाकुञ्च्य प्राणांस्त्यक्ष्यन्ति चात्र ते। पश्यतां सर्व्वलोकानां विष्णो! ते मदनुग्रहात्। विमानमधिरुह्याशु कैलासं प्राप्य मत्पदम्। निर्विश्य सुचिरं कालं दिव्यान् भोगाननुत्तमान्। ततोऽत्र ज्ञानिनोभूत्वा मुक्तिं प्राप्स्यन्ति शाश्वतीम्। ततो लोकास्तदारभ्य कथयिष्यन्ति सर्व्वतः। मुक्तिमण्डपनामैतदेष कुक्कुटमण्डपः"। [(चढ़)। राजनि०

**कुक्कुटमस्तक** पु० कुक्कुटस्येव मस्तकं शिखा यस्य। चव्ये

**कुक्कुटशिख** पु० कुक्कुटस्य शिखेव शिखा यस्य। कुसुम्भवृक्षे शब्दच०। तस्य हि पुष्पाणि कुक्कुटशिखातुल्यानीति तस्य कुक्कुटतुल्यरक्तशिखपुष्पत्वात्तथात्वम्

**कुक्कुटागिरि** पु० कुक्कुटप्रधानोगिरिः किंशुलुका० दीर्घः। कुक्कुटप्रधाने पर्वते।

**कुक्कुटाण्ड** पु० कुक्कुट्या अण्डः पुंवद्भावः। कुक्कुट्याअण्डे

**कुक्कुटाभ** पुंस्त्री कुक्कुट इवाभाति आ+भा—क। कुक्कुटचरणतुल्ये सर्पभेदे हेमच०। स्त्रियां जातित्वात् ङीष्।

**कुक्कुटासन** न० "कुक्कुटासनमावक्ष्ये नाड़ीनिर्म्मलहेतुना। सत्कुलागममार्गेण कुर्य्यात् वायुनिरोधनम्। निजहस्तद्वयं भूमौ पातयित्वा जितेन्द्रियः। पद्भ्यां बद्धं यत् करोति कूर्परद्वयमध्यगम्। सव्यापसव्ययुगलं तत्कुक्कुटासनमुच्यते" इति रुद्रयामलोक्ते आसनभेदे [हेमच०।

**कुक्कुटाहि** पु० कुक्कुट इव तच्चरणइवाहिः। सर्पभेदे

**कुक्कुटि** स्त्री कुक्कुट इवाचरति कुक्कुट+आचारार्थे क्विप् ततः इन्। दम्भचर्य्यायाम् हेमच०। वा ङीप्। तत्रैव। सा च २कुक्कुटजातिस्त्रियाम् ३ज्येष्ठाम् (टिकटिकी) कीटभेदे शब्दरत्ना०। ४शाल्मलीवृक्षे जटा०

**कुक्कुभ** पु० कुक् इत्यव्यक्तं शब्दं कौति कु—भक्। वन

कुक्कुटे। कुक्कुशब्दं भाषते भाष—बा० ड। २कुक्कुटे पक्षिणि। (पातकुका) इति ख्याते ३पक्षिभेदे अमरः।

**कुक्कुर** पुंस्त्री कोकते क्विप् कुरति शब्दायते कुर—शब्दे क कर्म्म०। १स्वनामख्याते पशौ। तच्छुभाशुभलक्षणमुक्तं वृ०सं० यथा "पादाः पञ्चनखास्त्रयोऽग्रचरणः षड्भिर्नखैर्दक्षिण-स्तान्नोष्ठाग्रनसो मृगेश्वरगतिर्जिघ्रन् भुवं याति च। लाङ्गूलं ससटं दृगृक्षसदृशी कर्णौ च लम्बौ मृदू यस्य स्यात् स करोति पोष्टुरचिरात् पुष्टां श्रियं श्वा गृहे। पादेपादे पञ्च पञ्चाग्रपादे वामे यस्याः षण्नखा मल्लिकाक्ष्याः। वक्रं पुच्छं पिङ्गलालम्बकर्णा या सा राष्ट्रं कुक्कुरी पाति पोष्टुः"। स्त्रियां जातित्वात् ङीष्।

कुक्कुरगुणाश्चाण्यक्येनोक्ताः यथा "बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः। प्रभुभक्तश्च शूरश्च षडेते च शुनो-गुणाः"। २ग्रन्थिपर्णोवृक्षे न० शब्दचि०।

**कुक्कुरद्रु** पु० कुक्कुरस्तद्गन्धयुक्तोद्रुर्वृक्षः। (कुकुरसोङ्गा) वृक्षभेदे "कुक्कुरद्रुः कटुस्तिक्तो ज्वररक्तकफापहः। तन्मूलमार्द्रं निक्षिप्तं वदने मुखशोषहृत्" भावप्र०।

**कुक्कुरवाच्** पु०कुक्कुरस्येव वागस्य। सारङ्गमृगे राजनि०

**कुक्ष** पु० कुष—क्स। जठरे उज्ज्वलदत्तः।

**कुक्षि** पु० कुष—क्सि।१उदरे"विपुलेन सागरशयस्य कुक्षिणा" माघः "कुम्भीनस्याश्च कुक्षिजः" रघुः। "तव कुक्षौ म-हाभागे!। अचिरात् संजनिष्यते" रामा० २उदरस्य वामदक्षिणपार्श्वयोः(कोँक) अमरः। ३मध्यभागे "ततः सागरमासाद्य कुक्षौ तस्य महोर्म्मिणः" भा०व०७८अ०। कुक्षौ भवः अण्। कौक्ष उदरभवे मध्यभवे च त्रि०स्त्रियां ङीप्। कुक्षौ बद्धोऽसिः ढकञ्। कौक्षेयकोऽसिः। कुक्षिदेशे भवः धूमा० वुञ्। कौक्षक मध्यदेशभवे त्रि०।

**कुक्षिम्भरि** त्रि० कुक्षिं बिभर्त्ति भृ—खि—मुम् च। देवातिथि-वञ्चनेनात्मोदरमात्रपूरके कृपणे।

**कुक्षिरन्ध्र** पु० कुक्षौ मध्यभागे रन्ध्रं छिद्रं यस्य नले रायमु०।

**कुक्षिशूल** न० कुक्षौ शूलः। सुश्रुतोक्ते शूलरोगभेदे "प्रकु-प्यति यदा कुक्षौ वह्निमाक्रम्य मारुतः। तदास्य भोजनं भुक्तं सोपष्टम्भं न पच्यते। उच्छ्वसित्यामशक्तता शूले-नाहन्यते मुहुः। नैवासने न शयने तिष्ठन् लभते सुखम्। कुक्षिशूल इति ख्यातोवातादामसमुद्भवः" सुश्रु०। तस्य क्लीवत्वमपि "हृत्कुक्षिशूलं मुखकण्ठशोषः" सुश्रुतः

**कुङ्कुम** न० कुकयते आदीयते कुक—आदाने—उमक् नि० मुम्। काश्मीरादिदेशजे स्वनामख्याते १गन्धद्रव्यभेदे। देशभेद-विशेषजातस्य तस्य लक्षणादि भावप्रकाशे दर्शितं यथा—"काश्मीरदेशजे क्षेत्रे कुङ्कुमं यद्भवेद्धि तत्। सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम्। वाह्लीकदे-शसंजातं कुङ्कुमं पाण्डुरम्मतम्। केतकीगन्धयुक्त-न्तन्मध्यमं सूक्ष्मकेशरम्। कुङ्कुमं पारसीके यन्मधुगन्धि तदीरितम्। ईषत्पाण्डुरवर्णं यदधमं स्थूलकेशरम्। कुङ्कुमं कटुकं स्निग्धं शिरोरुग्व्रणजन्तुजित्। तिक्तं वमिहरं वर्ण्यं व्यङ्गदोषत्रयापहम्" [तभेदे

**कुङ्कुमाद्रि** पु० कुङ्कुमस्याकरोऽद्रिः। काश्मीरदेशस्थे पर्व्व-

**कुङ्कुमी** स्त्री कुङ्कुमवर्णोऽस्त्यस्याः अच् गौरा०ङीष्। महाज्योति-ष्मतीलतायाम् राजनि०। पृषो०कुङ्कुनीति पाठान्तरम् तत्रैवार्थे

**कुच** रोधे, सम्पर्के लेखने च सक० कौटिल्ये अक० तु०पर०सेट् कुटादि। कुचति अकुचीत् चुकोच कुचः। प्रनिकुचति

**कुच** पु० कुच—कर्त्तरि क। स्तने। स्त्रीणां कुचवृद्धिर्यौवने यथाह सुश्रुतः"स्त्रीणां तु विंशतिरधिका दश तासां स्त-नयोरेकैकस्मिन् पञ्च पञ्च, यौवने तासां परिवृद्धिः" इति विवृतञ्चैतत् भावप्र० यथा—

"पुष्पाणां मुकुले गन्धो यथा सन्नपि नाप्यते। तेषां तदेव तारुण्ये पुष्टत्वाद्यक्तिमेति हि। कुसुमानां प्रफुल्लानां गन्धः प्रादुर्भवेद्यथा। रोमराज्यादयः पुंसां नारीणामपि यौवने। जायतेऽत्र च यो भेदो ज्ञेयो व्याख्यानतः स च। व्याख्यानं यथा पुंसां रोमराजीश्मश्रुप्रभृतयः नारीणान्तु रोमराजीस्तनार्त्तवप्रभृतयः"।

"यावन्नोतङ्गिद्योते स्तनौ तावद्देया"इति स्मृतौ कुचोद्भे-दकालात् पूर्व्वं दानं विहितम्। स च कालः द्वादशव-र्षादिः, "स तदुच्चकुचौ भवन् प्रभाभरचक्रभ्रममातनो-ति यत्" नैष० "सकठिनकुचचूचुकप्रणोदम्" "नत्युन्नतत्वात् कुचमण्डलेन" "कौसुम्भं पृथुकुचकुम्भ-सङ्गिवासः" माघः "तन्वि! तव कुचावेतौ नियतं चक्र-वर्त्तिनौ" उद्भटः "पितुर्गृहे चेत् कुचपुष्पसम्भवः" ज्यो० २सङ्कुचिते त्रि०

**कुचण्डी** स्त्री कुत्सिता चण्डी विकारकारित्वात् कोपनेव। मू-र्वालतायाम् शब्दचि०। स्वार्थे क। कुचण्डिका तत्रैव।

**कुचतट** त्रि० कुचस्तटमिव विशालत्वात्। विशाले१कुचे हेत०। २कुचैकदेशे च।

**कुचन्दन** न० कुत्सितं गन्धहीनत्वात् चन्दनम्। (बकमकाठ) १काष्ठभेदे मेदि० २रक्तचन्दने अमरः। इदं सुश्रुते पटो-लादिगणे सालसारादिगणे चोक्तम् तत्तच्छब्दे विवृतिः

३कुङ्कुमे शब्दचि० । रक्तचन्दनतुल्यत्वात्तस्य तथात्वम्
**कुचफल** पु० कुचइव फलमस्य । दाडिम्बवृक्षे राजनि० ।
**कुचर** त्रि० कुत्सितं चरति चर—अच् । १परदोषकथनशीले ।
हेमच० कुत्सिते स्थाने चरति चर—अच् । २दुर्गमदेशगन्तरि "न भीमः कुचरोगरिष्ठाः" ऋ १, १५४,२, "कुचरः कुत्सितहिंसाकर्त्ता दुर्गमदेशगन्ता वा" भा० कौ चरति चर—ट । ३भूमिचरे त्रि० । स्त्रियां ङीप्
**कुचाग्र** पु० ६त० । चूचुके कुचयोरग्रभागे अमरः ।
**कुचाङ्गेरी** स्त्री—कुत्सिता चाङ्गेरी । (चुकपालङ्) चुक्रे शाकभेदे रत्नमा० चुक्रशब्दे गुणादि
**कुचिक** पुंस्त्री० कुच—वा० इकन् । (कुँचिया) मत्स्यभेदे स्त्रियां जातित्वात् ङीष् । वृह०सं०कूर्म्मविभागे ऐशान्यामुक्ते देशभेदे "भल्लापलोलजटासुरकुनठखसघोषकुचिकाख्याः" ।
**कुचित** त्रि० कुच—क्तिच् । परिमिते उज्ज्वलदत्तः ।
**कुचेल** त्रि० कुत्सितं चेलं वस्त्रमस्य । कुत्सितवस्त्रधरे । कुचा सङ्कुचा इला यस्याः ५त० । २विड्ङ्कयाम् ३पाठायाम् स्त्री मेदि० गौरा० ङीष् । (आकनादी) ४वृक्षे स्त्री रत्नमा० ।
**कुच्छ** न कु+छो—क । कुमुदे शब्दच० ।
**कुज** स्तेये भ्वा० पर० सक० सेट् । कोजति अकोजीत् चुकोज उदित् कुजित्वा कुक्त्वा । प्रनिकुजति
**कुज** पु० कोः पृथिव्या जायते जन—ड । मङ्गलग्रहे यथा च तस्य तज्जातत्वं तथा आग्नेयशब्दे काशीखण्डवाक्येन दर्शितम् २नरकासुरे तस्य वाराहीरूपायाः पृथिव्याउत्पन्नत्वात् तथात्वम् तत्कथा कालिकापुराणे ३६अ० यथा "यथा स नरकोजातो धरागर्भे महासुरः । रजस्वलाया गोत्रायागर्गे वीर्य्येण पोत्रिणः (वराहस्य) । यतोजातस्ततोभूतो देवपुत्रोऽपि सोऽसुरः" इत्युपक्रम्य "गर्भसंस्थं महावीर्य्यं ज्ञात्वा ब्रह्मादयः सुराः । गर्भएव तदा देवशक्त्या दध्रुश्चिरं दृढ़म् । यथाकालेऽपि संप्राप्ते नो गर्भाज्जायते स च । ततस्त्यक्तशरीरस्तु वराहस्तनयैः सह । अतीव शोकसन्तप्ता जगद्धात्र्यभवत् क्षितिः । शोकाकुला सा व्यलपच्चिरकालं मुहुर्मुहुः । प्रकृतिस्था क्षितिर्भूता माधवेन प्रबोधिता । ततः कालेऽपि संप्राप्ते देवशक्त्या यदा धृतः। न गर्भः प्रसवं याति तदाऽभूत् पीड़िता मही । कठोरगर्भा सा देवी गर्भभारं न चाशकत्। यदा वोढुं, तदा देवं माधवं शरणं गता । शरण्यं शरणं गत्वा माधवं जगतां पतिम् । प्रणम्य शिरसा देवी वाक्यमेतदुवाच ह" । स्तवप्रसन्नमाधवोक्तिधराप्रत्युक्तिभ्यां त्रेतायुगाद्ये तदुत्पत्तिकथा— "इति स्तुता हृषीकेशोजगद्धात्र्या तदा हरिः । प्रादुर्भूतस्तदा प्राह धरित्रीं दीनमानसाम्। श्रीभगवानुवाच । कथं दीनमना देवि ! धरित्रि ! परिदेवसे। तव वा किङ्कृता पीडा वेत्तुमिच्छामि तदहम्। मुखन्ते परिशुष्कन्तु शरीरं कान्तिवर्जितम् । आकुलं नयनद्वन्द्वं भ्रूविभ्रमविवर्जितम् । ईदृशन्तव रूपन्तु दृष्टपूर्व्वं कदा च न । रूपस्य तु विपर्य्यासे दुःखे वीजञ्च भाषय। एतच्छ्रुत्वा वचस्तस्य माधवस्य जगत्पतेः। विनयावनता देवी पृथ्वी प्राहसगद्गदम्। पृथिव्युवाच । गर्भभारं न संवोढुं माधवाहं क्षमाऽधुना । भृशं नित्यं विषीदामि तस्मात्त्वं त्रातुमर्हसि । त्वया वराहरूपेण मलिनी (ऋतुमती)कामिता पुरा । तेन कामेन कुक्षौ मे स्वयं गर्भोऽयमास्थितः । काले प्राप्ते स गर्भोऽयं न प्रच्यवति माधव ! । कठोरगर्भा तेनाहं पीडितास्मि दिनेदिने । यदि न त्रासि मां देव ! गर्भदुःखाज्जगतपते ! । न चिरादेव यास्यामि त्वल्लोकेशमसंशयम् । कदापि नेदृशोगर्भो धृतोमाधव ! वै पुरा । योऽचलां चालयति मां सरसीमिव कुञ्जरः । एतच्छ्रुत्वा वचस्तस्याः पृथिव्याः पृथिवीपतिः । आह्लादयन् प्रत्युवाच हरिस्तप्तां लतामिव । श्रीभगवानुवाच । न धरे ते महादुःखं चिरस्थायि भविष्यति। शृणु येन प्रकारेण चानुभूतमिदं त्वया। मलिन्या सह सङ्गेन यो गर्भः संभृतस्त्वया । सोऽभूदसुरसत्वस्तु दृष्टेः (वराहस्य) पुत्रस्तु दारुणः । ज्ञात्वा तस्य च वृत्तान्तं गर्भस्य द्रुहिणादयः । देवीभिः शक्तिभिः शुभ्रू स्तव कुक्षौ धृतं खरम् । सर्गादौ यदि जायेत भवत्यास्तादृशः सुतः। भ्रंशयेत् सकलाल्लोकांस्त्रीनिमान् ससुरासुरान् । अतस्तस्य बलं वीर्य्यं ज्ञात्वा ब्रह्मादयः सुराः । प्राक्सृष्टिकाले ते गर्भं तदाऽधुर्जगतां कृते । अष्टाविंशतिमे प्राप्ते आदिसर्गाच्चतुर्युगे । त्रेतायुगस्य मध्ये तु सुतं त्वंजनयिष्यसि । यावत् सत्ययुगं याति त्रेताद्यञ्च वरानने ! । तावदह महागर्भं इतः कालोमया तव । न यावज्जायते धात्रि ! गर्भस्ते ह्यतिदारुणः । तावद्गर्भवती दुःखं न त्वं प्राप्स्यसि भाविनि !" "ये च प्रलम्बखरदर्दुररिष्टनुमिमल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः" भाग० २,७,३६ । "तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्त्तबन्धुम्" भाग०३,३,८श्लो० । "कुजशुक्रबुधेन्दर्कसौम्यशुक्रावनीभुवाम् "ज्यो०" मङ्गलग्रहस्य चारादिकमङ्गारकशब्दे ७६पृ० उक्तम् । कल्पे

तदीयभगणादिकमुच्यते "युगमयुगमशरनागलोचनव्यालषसुवयमाश्विनोऽसृजः"६६८२८५२२ सि॰शि॰। कल्पे एतावन्तः कुजस्य भगणाः अस्योपपत्त्यादिकं ग्रहभगणशब्दे दर्शयिष्यते। तस्य चलोच्चभगणमानञ्च तत्रैवोक्तम् "अर्कशुक्रबुधपर्य्यया विधेरह्नि कोटिगुणिता रदाब्धयः ४३२००००००० एत एव शनिजीवभूभुवां कीर्त्तिताश्च गणकैश्चलोच्चकाः" तत्पातस्य भगणास्तत्रैवोक्ताः "कुभद्रसाश्विनः" २६७, तस्य मन्दकेन्द्रभगणमानं निबन्धे "खरामाभ्रच्छिद्रशष्टषड्गोद्विदस्राः" २२९६८२८२३०। "शीघ्रकेन्द्रभगणाः" "गजाद्रिमनुसप्तेन्दुत्र्यश्विखाश्विमिताः" २०२३१७१४७८,। तस्य कक्षामानम् श्रीपतिनोक्तं यथा "अब्धिङ्कषण्मनुगजाः क्षितिनन्दनस्य" ८१४६९१५ योजनानि-मध्यमकुजस्फुटीकरणम् सि॰शि॰प्रमि॰दर्शितं यथा "दिनगणार्धमथो गुणसंगुणं द्युगणसप्तदशांशविवर्जितम्। लवकलादिफलद्वयसंयुतः क्षितिसुतध्रुवकः क्षितिजो भवेत्" सि॰शि॰। "अत्रोपपत्तिः। दिनगणार्द्धं भागा इति प्रत्यहं त्रिंशत् कला गृहीताः। तत् पृथक् त्रिगुणं जातम् एताः कलाः पूर्वकलाभिर्योकृता जाताः। एतत् कुजगतेरधिकमतोऽतः कुजगतिं विशोध्य शेषम्। अनेन सप्तदशगुणेनैका कला भवति। अत उक्तं द्युगणसप्तदशांशविवर्जितमिति। पूर्वफलेन भागादिनाऽनेन च कलादिना भौमध्रुवक२३७०युक्तः कुजो भवति। यतोऽयमहर्गणोऽर्कोदयाल्लाङ्कोद्ध्वमतस्तदुत्थं फलं रविमण्डलान्तिके योज्यमित्युपपन्नम्" प्रमि॰

कुजस्य ध्रुवकमानं "तत्रैवस्वाद्रिरामाग्नय":२३७०। तथाच कलेरारम्भे राशिचक्रस्थविकलाब्धो ध्रुवकेण हीननायां तत्काले ११। २९। ३। ५०। राश्यादि कुजध्रुवकः तस्य मन्दशीघ्रपरिधी तत्रैव उक्तौ यथा

"मन्दोच्चनीचपरिधिस्त्रिलवोनशक्र १४भागा रवेर्जिन २४कलोन२२रदा हिमांशोः। खाश्वा७० भुजङ्गदहना ३८अमरा३३भवाश्च११ पूर्णेषवो५० निगदिताः क्षितिजा-दिकानाम् सि॰शि॰" इह ग्रहफलोपपत्त्यर्थं मन्दोच्चनीचवृत्तानि पूर्वैः कल्पितानि तेषां प्रमाणान्येतावन्तो भागाः। अत्रोपपत्तिः ग्रहस्य यन्त्रवेधविधिना यत् परमं फलमुत्पद्यते तस्य ज्या परमा फलज्या परमफलज्याऽन्त्यफलज्या चोच्यते। अन्त्यफलज्यातुल्यव्यासार्द्धेन यद्वृत्तमुत्पद्यते तन्नीचोच्चवृत्तम्। तत्परिधिस्त्रैराशिकेन। यदि त्रिज्यव्यासार्द्धे भांशाः परिधिस्तदान्त्यफलव्यासार्धे किमिति लब्धं परिधिभागाः। एवमर्कादीनां त्रिलवोनशक्रा इत्यादय उत्पद्यन्ते। अथ भौमादीनां चलपरिधीनाह" प्रमि॰। "एषां चलाः कृतजिना२४४स्त्रिलवेन हीना दन्तेषवो ५२२वसुरसा६८वसुवाणदस्राः २५८। पूर्णाश्रयो ४०ऽथ भृगुजस्य तु मन्दकेन्द्र--दोःशिञ्जिनी द्विगुणिता त्रिगुणेन भक्ता। लब्धेन मन्दपरिधीरहितः स्फुटः स्यात् तच्छीघ्रकेन्द्रभुजमौर्व्यथ बाणनिघ्नी। त्रिज्योद्धृताशुपरिधिः फलयुक् स्फुटः स्याद्भौमाशुकेन्द्रपदगम्यगताल्पजीवा। त्र्यंशोनशैल ७गुणितार्क ७युतस्य राशेर्मौर्व्योद्धृताप्तलवहीनयुतं स्फुटं स्यात्। भौमस्य कर्किमकरादिगते स्वकेन्द्रे लब्धांशकैर्विरहितः परिधिस्तु शैघ्र्यः"।

भौमस्य भूमध्यादुच्छ्रितियोजनानि सि॰शि॰"गोकुरसञ्च षट्सुवसूर्य्यसंख्याः"१२९६६१९। तस्य कालांशाः शैलभुवः १७। अस्य क्षेत्रं मेषवृश्चिकौ, उच्चं मकरः परमोच्चं मकरस्याष्टाविंशोऽंशः। नीचः कर्कटः तदीयाष्टाविंशोऽंशः सुनीचः। मूलत्रिकोणं मेषस्य दशमोंऽशः। रविचन्द्रजीवा मित्राणि बुधोऽरिपुः, शुक्रशनी समौ। चतुर्थे अष्टमे चास्य पूर्णदृष्टिः। विषमराशिषु मेषमिथुनादिषु प्रथमपञ्चांशा अस्य त्रिंशांशाः समराशिषु वृषकर्कटादिषु शेषपञ्चांशा अस्य त्रिंशांशाः। अष्टोत्तरीयनाक्षत्रिकदशायां तस्य अष्टौ वर्षा दशाभोगकालः। विंशोत्तरीयनाक्षत्रिकदशायां तु सप्त वर्षाः। नक्षत्रकक्षायास् अयं शनेरधस्तृतीयकक्षायां वर्त्तते, अयं रवितस्तृतीयवारेशः। अयं दक्षिणाशाधिपतिः अतस्तद्वारे दक्षिणदिग्गतिः प्रशस्ता। अयं पापग्रहः क्षत्रियवर्णः भारद्वाजगोत्रः अवन्तिदेशभवः मेषवाहनः चतुर्भुजः रक्तवर्णः। तस्य स्कन्दोऽधिदेवता पृथिवी प्रत्यधिदेवता। पूजने रक्तचन्दनं रक्तवस्त्रम् जवादिरक्तपुष्पं सर्ज्जरसयुक्तसिह्लकं धूपः, यावकं नैवेद्यं पूगं फलम् प्रवालं रत्नं रक्तवृषभो दक्षिणा। तस्य दौस्थ्योपशमनाय विप्राय रक्तवृषभं रक्तवस्त्रं प्रवालं दद्यात् स्वयं वा प्रवालं धारयेत्। अनन्तमूलं वा धारयेत्। होमे धूमकेतुरग्निः खादिरी समित्। कुजवारे दिवा२यामार्द्धे वारवेला६षष्ठे कालवेला रात्रौ ३तृतीये कालवेला। अयं पुंग्रहः दक्षिणदिग्बली। अयं रजोगुणप्रकृतिः, तिक्तरसप्रधानः सामवेदाधिपः तरुणमूर्त्तिः पैत्तिकः कृशमध्यः। अस्य राशिभोगकालः ४५दिनानि जन्मराशितः षष्ठे तृतीये

एकादशे चायं शुभः, "विक्रमायरिपुगः कुजःशुभः स्यात्तदान्यसुतधर्म्मगैः खगैः। चेन्न विद्ध इनसूनुरध्यगौ" ज्यो°त° उक्तस्थानेषु अन्यग्रहासत्त्वे शुभदः अन्त्यसुतधर्म्मस्थितोऽयं क्रमेण तृतीयैकादशषष्ठेषु अन्यग्रहैः स्थितैर्भिवेधेन शुद्धः "रक्तस्वार्वविषास्त्रकर्म्मकृततुककार्य्यं विवादं रणं कुर्य्याद्वन्द्वविधिं सुदुष्टदमनम् सेतुप्रभेदं तथा। इच्चच्छेदनभेदनानि मृगयां चौर्य्यं तथा साहसं सेनान्यं कृषिकर्म्म धातुकरणं भौमस्य लग्ने ऽह्नि वा" ज्यो°त°। उक्तकर्म्म तद्वारे तल्लग्ने च शुभदम्। कर्कटराशौ रात्रौ वर्षप्रवेशेऽयं त्रिराशिपतिः, वृश्चिकलग्ने दिने वर्षप्रवेशे अयं त्रिराशिपतिः, मकरराशौ वर्षप्रवेशे दिवानिशोरयं त्रिराशिपतिः वर्षलग्नात् षष्ठस्थानमस्य हर्षपदम् मूलं नी°ता° दृश्यम्। अन्यद्ग्रहशब्दे वक्ष्यते

**कुजप** पुंत्रि° कुत्सितं जपति—जप—अच्। कुत्सितजपकारके तस्येदम् अण्। कौजप तत्सम्बन्धिनि त्रि° कार्त्तेन सह द्वन्द्वे तस्य प्रकृतिस्वरः पा°

**कुजम्भ** त्रि° कुत्सितो जम्भोदन्तोऽस्य। १कुत्सितदन्तयुक्ते २असुरभेदे पु° "प्रह्लादस्य त्रयःपुत्रा विक्रान्ताश्च महाबलाः। विरोचनश्च जम्भश्च कुजम्भश्चेति विश्रुताः" हरिव° २२६अ° "विरोचनानुजश्चैव कुजम्भोनाम वीर्य्यवान्" हरिव° २४२अ°।

**कुजम्भन** पु° कोः पृथिव्या जम्भनमिवात्र। सन्धिचौरे हारा° तस्य पृथिव्यां सन्धिखननकाले मैथुनवदाचरणात् तथात्वम्। कुजम्भोऽस्त्यस्य इलच्। कुजम्भिलोऽप्यत्र शब्दरत्ना°।

**कुजा** स्त्री कोः पृथिव्याः जायते जन—ड। सीतादेव्यां तस्याः पृथिवीतोजन्मकथा कालि° ३७अ°

"तच्छ्रुत्वा जनको राजा प्रविश्यान्तःपुरं स्वकम्। भार्य्याभिर्मन्त्रयामास यज्ञार्थं पुत्रजन्मने। मन्त्रयित्वा तदा राजा महिषीप्रमुखैः स्वयम्। चतसृभिस्तु भार्य्याभिर्यज्ञार्थं दीक्षितोऽभवत्। ततः पुरोधसं राजा गौतमं मुनिसत्तमम्। तत्पुत्रञ्च शतानन्दं पुरोधायाकरोन्मखम्। द्वौ पुत्रौ तस्य सञ्जातौ यज्ञभूमौ परौ मृतौ। एका च दुहिता साध्वी भूम्यन्तरगता शुभा। नारदस्योपदेशेन यज्ञभूमिं ततो नृपः। हलेन दारयामास यज्ञवाटावधि स्वयम्। तद्भूमौ जातसीतायां शुभां कन्यां समुत्थिताम्। लेभे राजा मुदा युक्तः सर्वलक्षणसंयुताम्। तस्मान्तु जातमात्राऽथ पृथिव्यन्तर्हिता स्वयम्। जगाद वचनञ्चेदं गौतमं जनकं नृपम्। पृथिव्युवाच। एषा सुता मया दत्ता तव राजन्मनोहरा। एनां गृहाण सुभगां लोकद्वयशुभावहाम्। अनया मे महाभार उद्धृतौ हेतुभूतया। क्षयं यास्यति भारार्त्तिं मोचयिष्यामि दारुणाम्। रावणाद्या महावीराः कुम्भकर्णादयोऽपरे। नाशं यास्यन्ति दुर्द्धर्षाः कृतेऽस्या राक्षसाः परे। त्वञ्च मोदं दुराधर्षं यद्धित कृतं नृप!। अवाप्स्यसि सुराणाञ्च पितॄणामृणशोधनम्"। कुजाः वृक्षा आश्रयत्वेन सन्त्यस्याः अच्। २कात्यायनीदेव्यां मेदि° "कदली दाड़िमी धान्यं हरिद्रा मानकं कचुः। विल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिका" इत्युक्तनवपत्रिकाणाम् "तव स्थानमिदं मत्यें" इति मन्त्रलिङ्गेन आश्रयणीयत्वोक्तेस्तस्यास्तथात्वम्।

**कुजाष्टम** पु° कुजो मङ्गलग्रहोऽष्टमोयत्र। ज्यो° उक्ते जन्मलग्नावध्यष्टमस्थानस्थितमङ्गलग्रहरूपयोगभेदे "सर्व्वगुणान्निहन्त्याशु विलग्नादष्टमः कुजः। अस्तगे नीचगे भौमे शत्रुक्षेत्रगते ऽपि वा। कुजाष्टमोद्भवो दोषो न किञ्चिदपि विद्यते" ज्यो°।

**कुज्जिश** पुंस्त्री° मत्स्यभेदे "कुज्जिशोमधुरोहृद्यः कषायोदीपनस्तथा। "बल्यः स्निग्धोगुरुर्ग्राही वातहृत् रोचनोमतः" राजनि°। स्त्रियां जातित्वात् ङीष्।

**कुज्या** स्त्री सि°शि°उक्ते वृत्ताकाराक्षक्षेत्राद्यैकदेशधनुः साधनाङ्गज्यापञ्चकान्तर्गते जीवाभेदे। ज्यापञ्चकं च तत्र दर्शितम् यथा इदानीं पञ्चज्यासाधनमाह। "युक्तायनांशादपमः प्रसाध्यः कालौ च खेटात् खलु भुक्तभोग्यौ। जिनांशमौर्व्या१३९७गुणितार्कदोर्ज्या त्रिज्योद्धृता३४३८ क्रान्तिगुणोऽस्य वर्गम्। त्रिज्याकृतेः ११८१९८४४ प्रोह्य पदं द्युजीवा क्रान्तिर्भवेत् क्रान्तिगुणस्य चापम्। अक्षप्रभासंगुणितापमज्या तद्द्वादशांशो भवति क्षितिज्या। सा त्रिज्यकाघ्नी विहृता द्युमौर्व्या चरज्यकास्याश्च धनुश्चरं स्यात्" सि°शि°। "अत्र खेटादित्युपलक्षणम्। यस्मात् खेटाल्लग्नाद्वाऽपमः साध्यस्तस्मात् सायनांशादेव। तथा यस्मादुदयसम्बन्धिनौ भुक्तभोग्यकालौ साध्यौ तस्मादपि सायनांशादेव। सायनार्कस्य दोर्ज्या जिनभागज्यया गुणिता त्रिज्यया भक्ता क्रान्तिज्या स्यादित्यादि स्पष्टार्थम्। अस्योपपत्तिः। विषुवत्क्रान्तिवृत्तयोर्याम्योत्तरमन्तरं क्रान्तिः। तयोर्हि संपाते क्रान्त्यभावः। ततस्त्रिभेऽन्तरे परमा जिनतुल्यभागाः। अतस्तत्-

संपातादारभ्य क्रान्तिः साध्या। उदयाश्च तत एव। स तु संपातो मेषादेः प्रागयनांशतुल्येऽन्तरे। अतः सायनांशात् खेटात् क्रान्तिर्भुक्तभोग्यकालौ चेत्युक्तम्। यदि त्रिज्यातुल्यया भुजज्यया जिनांशज्यातुल्या क्रान्तिज्या लभ्यते तदेष्टज्यया किमिति। फलं क्रान्तिज्या विषुवद्वृत्तात् तिर्य्यग्रूपा भवति। क्रान्तिज्या भुजस्त्रिज्या कर्णस्तद्वर्गान्तरपदमहोरात्रवृत्तव्यासार्द्धम्। सैव द्युज्या। अथ कुज्योच्यते। यदि द्वादशकोटेः पलभा भुजस्तदा क्रान्तिज्याकोटेः किमिति। फलं क्षितिजोन्मण्डलयोर्मध्येऽहोरात्रवृत्ते ज्यारूपं स्यात्। सैव कुज्या। सा चतुःकरणार्थं त्रिज्यावृत्ते परिणाम्यते। यदि द्युज्याव्यासार्द्धे एतावती तदा त्रिज्याव्यासार्द्धे किमिति। फलं चरज्या। तद्धनुश्चरमित्युपपन्नम्।" प्रमि० अक्षक्षेत्रशब्दे ४२पृ० दर्शिते सि० शि० वाक्ये दृश्यम्

**कुज्झटि** स्त्री कु–क्विप् झट–इन् कर्म्म०। नीहारे (कोयासा) त्रिका० वा ङीप् कुज्झटीत्यप्यत्र। स्वार्थे क। कुज्झटिकापि तत्रार्थे शब्दरत्ना०। "ज्ञेया कुज्झटिका रूक्षा तमःप्राया च सा तथा। कफपित्तकरी लोके भिषग्भिः परिकीर्त्तिता" वैद्यके तद्गुणा उक्ताः।

**कुञ्चन** न० कुन्च–करणे ल्युट्। "वाताद्या वर्त्म सङ्कोच्य जनयन्ति यदा मलम्। तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः" इति निदानोक्ते १नेत्ररोगभेदे। भावे ल्युट्। २सङ्कोचे। "कुर्य्यात् सिरागतं मूर्ज्ञसिराकुञ्चनपूरणम्" सुश्रुतः। [फलान्तत्वात् टाप्। कुष्माण्ड्याम् राजनि०।

**कुञ्चफला** स्त्री कुञ्चं सङ्कुचितं फलमस्याः जातित्वेऽपि

**कुञ्चि** पु० कुन्च–इन्। "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्" इत्युक्ते अष्टमुष्टिमाने स्मृतिः

**कुञ्चिका** स्त्री० कुन्च ण्वुल्–टाप्। १गुञ्जायाम् (कुँच) शब्दर० (कनुची) २वंशशाखायाम् जटा० ३कूर्चिकायां (चाविकाटि) हेमच०। "उद्घाटिनी कुञ्चिका" प्रसन्नरा० ४महोलतायाम् (केँचो) "कुञ्चिकयैनं भाययति विस्माययति वा" सुश्रु०

**कुञ्चित** त्रि० कुन्च–क्त। १वक्रे २तगरपुष्पे न० राजनि०

**कुञ्ज** पु० न० अर्द्धर्चा० कौ–जायते जन–ड पृषो० मुम्। पर्वतादौ लतादिभिराच्छादिते मध्यशून्ये १स्थाने निकुञ्जे अमरः। "लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्" सा०द० "वत्र सखि! कुञ्जं सतिमिरपुञ्जम्" "कूजितकुञ्जकुटीरे" जयदे० "त्यक्त्वा गेहं झटिति यमुनामञ्जुकुञ्जं जगाम" पदा० २हस्तिदन्ते ३हस्तिहनौ ४मेदि० ऋषिभेदे ततः गोत्रापत्ये कुञ्जा० चफञ्। कौञ्जायन तद्गोत्रापत्ये पुंस्त्री०

**कुञ्जर** पुंस्त्री० कुञ्जः दन्तो हनुर्वा प्राशस्त्येनास्त्यस्य। १हस्तिनि स्त्रियां जातित्वात् ङीष् "कुञ्जरस्येव संग्रामे परिष्टस्याङ्कुशग्रहम्" भा०व०२६अ० "अद्रीन्द्रकुञ्जचरकुञ्जरगण्डकाष–संक्रान्तदानपयसोवनपादपस्य" माघः। अस्य समर्थेन व्याघ्रा० उपमितसमासः राजा कुञ्जर इव राजकुञ्जरः। "एवमुक्त्वा परिष्वज्य दैत्यास्तं राजकुञ्जरम्" भा० व० २५१अ०। अत्र कुञ्जरसादृश्येन राज्ञः श्रेष्ठत्वम् गम्यते। तदभिप्रायेणैव "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्द्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" इत्यमरोक्तिः। ५देशभेदे च मेदि०। मात्राप्रस्तारे पञ्चमात्रस्य प्रथमे ६प्रस्तारे ऽऽ। छन्दोग्रन्थः। "क्षितेर्दक्षिणदिग्स्थिते गजाकृतौ ७पर्व्वतभेदे। "कृत्वा प्राचीविभागन्तु दक्षिणायामथोदिशि" इत्युपक्रमे "चकार कुञ्जरञ्चैव कुञ्जरप्रतिमाकृतिम्। पर्व्वतं काञ्चनशृङ्गं बहुयोजनविस्तृतम्" हरिवं० २२५अ०। "ऋषभः पर्वतश्चैव श्रीमदृषभसंस्थितः। कुञ्जरः पर्वतश्चैव यत्रागस्त्यगृहं शुभम्" हरिवं० २२६ अ०। ८हस्तनक्षत्रे च तस्य हस्तिकराकारत्वात्तथात्वम्। कुञ्जरपिप्पली शब्दस्यान्त्यलोपे ९पिप्पल्याञ्च शब्दचि०। [मूलमस्य। मूलके राजनि०।

**कुञ्जरक्षारमूल** पु० कुञ्जरस्य गजपिप्पल्या इव क्षारयुक्तं

**कुञ्जरच्छाय** न० कुञ्जरस्यच्छायायत्र। "योगोमघात्रयोदश्यां कुञ्जरच्छायसंज्ञितः। भवेन्मघायां संस्थे च शशिन्यर्के करस्थिते" इत्युक्ते योगभेदे। विवृतमेतत् ति०त० यथा "करे हस्तायां तत्स्थे सूर्य्ये। मघासंस्थे चन्द्रे चेति मघात्रयोदश्यां कुञ्जरच्छायसंज्ञितो योगो भवति। हस्तावस्थानञ्च सूर्य्यस्य कन्यादशमांशोत्तरकिञ्चिदधिकसपादत्रयोदशांशं १३,२० यावत्। नचानेन कुञ्जरच्छाययोगः सङ्केतितो न तु गजच्छायेति वाच्यं कुञ्जरच्छायस्य गजच्छायादिका संज्ञा जाता अस्येतीतच्प्रत्ययेन गजच्छायायामपि सङ्केतितत्वात् (धुस्तूरः कनकाह्वयः) इतिवत्। व्यक्तं कृत्यचिन्तामणौ। "कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः। यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते।" "एवञ्च श्राद्धे निमित्तान्तरत्वेनानङ्गीकाराद्गौडीयमैथिलाभ्यां कुञ्जरच्छाययोगः फलातिशयार्थ इत्युक्तम्। ततश्च मघात्रयोदशीश्राद्धं कृत्वा परदिने कुञ्जरच्छाययोगे श्राद्धं कर्त्तव्यमिति वाचस्पतिमिश्रोक्तं हेयम्।" मनुव्या० कुल्लूकभट्टेन एतस्य तिथ्यन्तरे ऽपि सम्भव उक्तः

यथा "अपि नः स कुले जायात् यो नो दद्यात् त्रयोदशीम्। पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च" मनुव्याख्यायाम् "प्रक्रतायां त्रयोदश्यां तथा तिथ्यन्तरेऽपि हस्तिनः पूर्वां दिशं गतायां छायायां मधुघृतसंयुक्तं पायसं दद्यात्। न तु त्रयोदशीहस्तिच्छाययोः समुच्चयः यथाह विष्णुः "अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः। प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः। मधूत्कटेन यः श्राद्धं पायसेन समाचरेत्। कार्त्तिकं सकलं वापि प्राक्छाये कुञ्जरस्य च"। इत्युक्तम् तेनास्य पृथङ्निमित्तता। ये तु "राहुर्वै हस्ती भूत्वा चन्द्रमसं गृह्णातीति" श्रुतेः कुञ्जररूपस्य राहोश्छायायत इति व्युत्पत्त्याग्रहणपरतामाहुः। गजच्छायादयोऽप्यत्र

**कुञ्जरदरी** स्त्री॰ कूर्म्मविभागे वृहत्सं॰ दक्षिणस्यासुक्ते देशभेदे "अथ दक्षिणे लङ्कोत्पक्रमे "कच्छोऽथ कुञ्जरदरी सताम्रपर्णीति विज्ञेयाः"।

**कुञ्जरपिप्पली** स्त्री कुञ्ज रोपपदा पिप्पली शा॰ त॰। गजपिप्पल्याम् राजनि॰। गजपिप्पल्यादयोऽप्यत्र स्त्री

**कुञ्जरा** स्त्री कुञ्जः हस्तिदन्त इव पुष्पमस्त्यस्या अच्। १धातकीद्रुमे (धाइफुल) तस्या हस्तिदन्तशुभ्रपुष्पत्वात्तथात्वम् २पाटलावृक्षे च मेदि॰। अजादि॰ टाप्। ३हस्तिन्याम् शब्दचि॰। जातित्वात् ङीष्। कुञ्जरीत्येव त्रिका॰

**कुञ्जराराति** पु॰ ६त॰। शरभे अष्टापदे पशुभेदे हेमच॰। २सिंहे च

**कुञ्जरालुक** न॰ हस्त्यालुके आलुकभेदे शब्दच॰। [अमरः

**कुञ्जराशन** पु॰ कुञ्जरैरश्यते अश—भक्षे कर्म्मणि ल्युट्। अश्वत्थवृक्षे

**कुञ्जरासन** न॰ कुञ्जरस्येवासनमत्र। "अथ वक्ष्ये महाकाल! कुञ्जरासनमुत्तमम्। करद्वयेन पादाभ्यां भूमौ तिष्ठेत् शिरःकरः" इति रुद्रयामलोक्ते आसनभेदे

**कुञ्जल** न॰ कुत्सितं जलं यत्र पृषो॰। काञ्जिके। (आमानि) अमरः [राजनि॰।

**कुञ्जवल्लरी** स्त्री कुञ्जाकारा वल्लरी। निकुञ्जिकाम्लावृक्षे

**कुञ्जादि** पु॰ गोत्रे चफञ्प्रत्ययप्रकृतिभूते शब्दगणे स च गणः कुञ्ज ब्रध्न शङ्ख भस्मन् गण लोमन् शठ शाक शुण्डा शुभविपाश स्कन्द स्कम्भ"।

**कुट** कौटिल्ये तुदा॰ पर॰ सक॰ सेट् कुटादि कुटति अकुटीत् चुकोट। कुटिता कुटितं कुटितव्यम्। कुटिलः प्रतिकुटति उद्+क्षिप्तौ अक॰ वि+कुत्सने सक॰। विकुटितः कुत्सितः।

**कुट** प्रतापने चुरा॰ आत्म॰ सक॰ सेट्। कोटयते अचूकुटत।

**कुट** वैकल्ये भ्वा॰ इदित् प॰ अक॰ सेट्। कुण्टति अकुण्टीत्।

**कुट** कुट्टने (कोटा) दिवा॰ अक॰ सेट्। कुट्यति अकोटीत् "जीवनं कुट्यतीव"। "भक्षयन्ति स्वमांसानि प्रकुट्य विधिवत्तथा" भा॰ आ॰ २६४२ श्लो॰

**कुट** पु॰ कुट—क। १कोटे (गड) मेदि॰ २शिलाकुट्टे (पाथर भाङ्गाहातुडी) ३वृक्षे च हेम॰ ४पर्व्वते हारा॰ ५कलशे पु॰ न॰ अम॰ ६ऋषिभेदे पु॰ ततः गोत्रापत्ये अश्वा॰ फञ्। कौटायन तद्गोत्रापत्ये पुंस्त्री अनन्तरापत्ये तु कुर्व्वा॰ ण्य। कौट्य तदपत्ये पुंस्त्री॰ "हविषा जारो अपांसि पर्त्ति पपुरिर्नरा पिता कुटस्य चर्षणिः" ऋ॰ १,४६,४

**कुटक** पु॰ दक्षिणस्थदेशभेदे, "चङ्क्रममाणः कोङ्कवेङ्कटकुटकान् दक्षिणकर्णाटान् यदृच्छयोपगतः कुटकाचलोपवने" भाग॰ ५,६,८, "यस्य (ऋषभदेवस्य) किलानुचरितमुपाकर्ण्य कोङ्कवेङ्ककुटकानां राजार्हन्नामोपशिक्ष्य कलावधर्म्म उत्कृष्यमाणे भवितव्येन विमोहितः स्वधर्म्मपथमकुतोभयमपहाय कुपथपाषण्डमसमञ्जसं निजमनीषया मन्दः संप्रवर्त्तयिष्यति" तत्रैव १०श्लो॰,। तद्देशाधिपतिर्जिनाचार्य्यः। कुटकदेशस्थोऽचलः कुटकाचलः तत्पर्य्यन्त भेदः। २फाले न॰ शब्दचि॰

**कुटङ्ग** पु॰ कुगृहभूमिः टङ्ग्यते आच्छाद्यतेऽनेन टकि—आच्छादने करणे घञ् ६त॰। गृहाच्छादके तृणादौ (चाल) शब्दमा॰

**कुटङ्गक** पु॰ कुटस्याङ्गमिव शक॰ इवार्थे क। १छदिषि पटले (चाल) हेमच॰ पत्रादिच्छादिते २गृहभेदे (कुंडे) राय॰

**कुटच** पु॰ कुट इव ठीयते चि—ड। कुटजवृक्षे (कुरची) शब्दचान्द्र॰

**कुटज** पु॰ कुटे पर्व्वते जायते जन—ड। (कुरची) १वृक्षभेदे अमरः। "कुटजः कटुको रूक्षो दीपनस्तुवरो हिमः। अर्शोऽतीसारपित्तास्रकफतृष्णामकुष्ठनुत्" भावप्र॰ तत्पर्य्यायाद्युक्तम्। "कुटजः कूटजः कौटो वत्सको गिरिमल्लिका। कालिङ्गः शक्रशाखा च मल्लिकापुष्प इत्यपि। इन्द्रयवफलः प्रोक्तो वत्सकः पाण्डुरद्रुमः" इति भावप्र॰ तत्पर्य्याये इन्द्रयवफलत्वोक्तेः तत्फलस्य इन्द्रयवनामता "कुटजपुष्पपरागकणाः स्फुटम्" माघः "अलिरसौ नलिनीवनवल्लभः कुमुदिनीकुलकेलिकलालसः। विधिवशेन विदेशमुपागतः कुटजपुष्परसं बहु मन्यते" कुटे घटे जायते। २अगस्त्यमुनौ ३द्रोणाचार्य्ये च मेदि॰ तयोस्तदुत्पत्तिकथा कुम्भजशब्दे वक्ष्यते।

**कुटजगति** स्त्री "कुटजगतिर्नजौस्तस्ततस्तौ गुरुः" वृ०र०टी० उक्ते छन्दोभेदे

**कुटजपुटपाक** पु० चक्रदत्तोक्ते अतिसाररोगनाशके औषधभेदे यथा "स्निग्धं घनं कुटजवल्कमजन्तुजग्धमादाय तत्क्षणमतीव च पाचयित्वा। जम्बूपलाशपुटतण्डुलतोयसिक्तं बद्धं कुशेन च बहिर्घनपङ्कलिप्तम्। सुस्विन्नमेतदवपीड्य रसं गृहीत्वा क्षौद्रेण युक्तमतिसारवते प्रदद्यात्। कृष्णात्रिपुत्रमतपूजित एष योगः सर्वातिसारहरणेष्वयमेव राजा"।

**कुटजरस** पु० चक्र० उक्ते अर्शोनाशके रसभेदे यथा— "कुटजत्वचो विपाच्य शतपलमार्द्रं महेन्द्रसलिलेन। यावत् स्यादरसं तद्द्रव्यं स्वरसस्ततो ग्राह्यः। मोचरसः समङ्गा फलिनी पलांशिभिस्त्रिभिस्तैश्च। वत्सकबीजं तुल्यं चूर्णीकृतमत्र दातव्यम्। पूतोत्क्वथितः सान्द्रः स रसो दर्वीप्रलेपनो ग्राह्यः। मात्राकालोपहिता रसक्रियैषा जयत्यसृक्स्रावम्। छागलीपयसा युक्ता पेया मण्डेनाथवा यथाग्निबलम्। जीर्णौषधश्च शालीन् पयसा छागेन भुञ्जीत। रक्तं गुदजातीसारं शूलं सासृग्रुजो निहन्त्याशु। बलवच्च रक्तपित्तं रसक्रियैषा ह्युभयभागम्"।

**कुटजलेह** पु० चक्रदत्तोक्ते अतिसारनाशके लेहभेदे यथा "शतं कुटजमूलस्य क्षुण्णं तोयार्मणैः पचेत्। क्वाथे पादावशेषेऽस्मिन् लेहं पूते पुनः पचेत्। सौवर्चलयवक्षारविडसैन्धवपिप्पलीम्। धातकीन्द्रयवाजाजीचूर्णं दत्त्वा पलद्वयम्। लिह्याद्बदरमात्रं तत् शीतं क्षौद्रेण संयुतम्। पक्वापक्वमतीसारं नानावर्णं सवेदनम्। दुर्वारं ग्रहणीरोगं जयेच्चैव प्रवाहिकाम्"।

अर्शोरोगनाशके तत्रोक्ते २लेहभेदे च यथा— "कुटजत्वक्पलशतं जलद्रोणे विपाचयेत्। अष्टभागावशिष्टन्तु कषायमवतारयेत्। वस्त्रपूतं पुनः क्वाथं पचेल्लेहत्वमागतम्। भल्लातकविडङ्गानि त्रिकटु त्रिफलान्तथा। रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च। वचामतिविषां बिल्वं प्रत्येकञ्च पलं पलम्। त्रिंशत्पलानि गुडस्य चूर्णीकृत्य निधापयेत्। मधुनः कुडवं दद्यात् घृतस्य कुडवन्तथा। एष लेहः शमयति चार्शोरक्तसमुद्भवम्। वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्। ये च दुर्नामजा रोगास्तान् सर्वान् नाशयत्यपि। अम्लपित्तमतीसारं पाण्डुरोगमरोचकम्। ग्रहणीमार्द्दवं कार्श्यं श्वयथुं कामलामपि। अनुपानं घृतं दद्यात् मधु तक्रं जलं पयः। रोगानीकविनाशाय कौटजो लेह उच्यते"।

**कुटजबीज** न० ६तत्। इन्द्रयवे भावप्र०।

**कुटजा** स्त्री "सजसा भवेदिह सगौ कुटजाख्यम्" वृ०र०उक्तलक्षणे छन्दोभेदे

**कुटजाद्यघृत** न० चक्रदत्तोक्ते मूत्राद्रिरोगनाशके घृतभेदे यथा "कुटजफलवल्ककलकेशरनीलोत्पललोध्रधातकीकल्कैः। सिद्धं घृतं विधेयं शूलरक्तार्शसां भिषजा"।

**कुटजाष्टक** पु० चक्रदत्तोक्ते अतिसारादिरोगनाशके औषधभेदे यथा "तुलामथार्द्रां गिरिमल्लिकायाः संक्षुद्य पक्त्वा रसमाददीत। तस्मिन् सुपूते पलसम्मितानि श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन। पाठां समङ्गातिविषां समुस्तां बिल्वं च पुष्पाणि च धातकीनाम्। प्रक्षिप्य भूयो विपचेत्तु तावत् दर्वीप्रलेपः स्वरसस्तु यावत्। पीतस्त्वसौ कालविदा जलेन मण्डेन वा छागपयसाऽथवाऽपि। निहन्ति सर्वं त्वतिसारमुग्रम् कृष्णं सितं लोहितपीतकं वा। दोषं ग्रहण्या विविधं च रक्तं शूलं तथार्शांसि सशोणितानि। असृग्दरञ्चैवमसाध्यरूपं निहन्त्यवश्यं कुटजाष्टकोऽयम्।

**कुटन्नट** पु० कुटन् सन् नटति नट—अच्। १श्योनाकवृक्षे (शोना) अमरः २कैवर्त्तीमुस्तके (केशुर) न०अमरः अत्र कुटन्नक इति पाठान्तरम्

**कुटप** पु० कुट—कपन्। १मुनौ २गृहसमीपस्थोपवने, ३कुडवरूपमानभेदे च। ४पद्मे न०हेम० [अमरटीका

**कुटर** पु० कुट—करन्। मन्थानदण्डस्यरज्जुबन्धनस्तम्भे

**कुटरु** पु० कुट—अरु। वस्त्रगृहे (कानात्) उज्ज्वल० तस्य कौटिल्यकरणयोगत्वात्तथात्वम्। [(तेओडि) रत्नमा०

**कुटरुणा** स्त्री कुटे गृहे अरुणा शक०। त्रिवितायाम्

**कुटल** न० कुट—कलच्। (चाल) छदिषि पटले हारा०।

**कुटहारिका** स्त्री कुटं घटं हरति हृ—ण्वुल् अत इत्वम्। दास्यां हेम०। १घटस्य हारकमात्रे त्रि०। कुटहारकः

**कुटि** स्त्री कुट—इन्। गृहे "अब्राह्मो द्वादश समाः कुटिं कृत्वा वने वसेत्" मनुः वा ङीप्। "वट्टकुट्यां प्रभातहस्तान्तमनुहरति" खण्ड० कुटीचकः कुटीचरः। भावे इन्। २कौटिल्ये स्त्री वा ङीप् "भ्रुकुटीकुटिलास्तस्याः" देवीमा०। ३वृक्षे पु०शब्दरत्ना०४देहे पु०सि०कौ०। स्वल्पार्थे क कुटिका क्षुद्रगृहे(कुँडे) स्त्री "शिरसोमुण्डनाद्वापि न स्थानकुटिकासनात्। भा०, व०,१२४५४, ५कर्त्तरि इन्। ५कौटिल्यान्विते त्रि०।

**कुटिचर** पुंस्त्री० कुटि कुटिलं जले चरति चर–अच्। जलशूकरे (शुशुक)शब्दरत्ना० स्त्रियां जातित्वात् ङीष्।

**कुटित** त्रि० कुट–इतच्। कुटिले उज्ज्वलदत्तः।

**कुटिर** न० कुट–इरन् किच्च। (कुँडे) स्वल्पगृहे भरतः

**कुटिल** त्रि० कुट–इलच्। १वक्रे अमरः "भ्रुकुटीकुटिलात्तस्याः" देवीमा०। २तगरपुष्पे न० राजनि० "सुगदिगभिः कुटिलमिति मतं स्मौ न्यौ गौ" वृ०र०टी०उक्ते ३छन्दोभेदे न० ४नदीभेदे (बाँका) ५सरस्वत्यां स्त्री मेदि० ६स्पृक्कानाम गन्धद्रव्ये स्त्री राजनि०।

**कुटी** स्त्री कुट–इन् ङीप्। १गृहे २कुटिन्यां ३मुरानामगन्धद्रव्ये च मेदि०।

**कुटीकुट** न० कुटी च कुटश्च गवा० नि० समा० द्व०। कुटीकुटयोः समाहारे।

**कुटीकृत** न० कुटि+च्वि–कृ–क्त। गृहीकृते वस्त्रे "और्णञ्च राङ्कवञ्चैव कीटजं पट्टजं तथा। कुटीकृतं तथैवात्र कमलाभं सहस्रशः" भा०स० १८४७श्लो०।

**कुटीचक** पु० कुट्यां चकते तृप्नोति चक–तृप्तौ अच्। संन्यासिभेदे "चतुर्विधा भिक्षवस्ते कुटीचकबहूदकौ। हंसः परमहंसश्च योऽत्र पश्चात् स उत्तमः" भा० आनु० १४अ०। कुटीचकलक्षणादिकम् आश्रमशब्दे ८४१पृ०दर्शितम् "न्यासे कुटीचकः पूर्व्वं बह्वोदो हंसनिष्क्रियौ" भाग०३,१२,२७

**कुटीमय** त्रि० कुट्या विकारो ऽवयवो वा शरा० मयट्। १कुट्यवयवे तद्विकारे च स्त्रियां ङीप्।

**कुटीमुख** पु० कुटीव मुखमस्य। शिवपारिषदभेदे। "शङ्कुकर्णमुखाः सर्वे शैवाः पारिषदास्तथा। काष्ठः कुटीमुखो दन्ती विजया च तपोऽधिका" भा०स०१०अ०,।

**कुटीय** कुट्यामिवाचरति क्यच् नामधा० पर० अक० सेट् कुटीयति प्रासादे सि० कौ०।

**कुटीर** पु० ह्रस्वा कुटी ह्रस्वार्थे रः स्वार्थिकप्रत्ययस्य क्वचित् प्रकृतिलिङ्गातिक्रमस्योक्तेः पुंस्त्वम्। १ह्रस्वायां कुट्याम् "कूजितकुञ्जकुटीरे" जयदे० तस्यावयव· विल्वा० अण्। कौटीर कुटीरावयवे तद्विकारे वा त्रि०। स्त्रियां ङीप् २केवले ३रते च हेम०। [स्वार्थे क। तत्रैव।

**कुटीचर** पु० कुट्यां चरति चर–ट। कुटीचके भिक्षुभेदे

**कुटुङ्गक** पु० कुटङ्ग–पृषो०। १पटले छदिषि भरतः २गृहभेदे ३पिटे (डोल) वंशादिनिर्म्मिते धान्याद्याधारे पात्रे

**कुटुनी** स्त्री कुट–उन गौरा०ङीष्। कुट्टन्याम् अमरटीका।

**कुटुम्ब** धृतौ चुरा० आत्म० अक० सेट्। कुटुम्बयते अचुकुटुम्बत। कुटुम्बः प्रनिकुटुम्बयते।

**कुटुम्ब** पु० न० कुटुम्ब–अच्। १पोष्यवर्गे अमरः २बान्धवे ३सन्ततौ ४नामनि शब्दरत्ना०। "कुटुम्बं बिभृयात् भ्रातुर्यो विद्यामधिगच्छतः। भागोयवीयसां तत्र यदि विद्यानुपालिनः" दा० भा० स्मृतिः "तस्य भृत्यजनं ज्ञात्वा कुटुम्बांश्च महीपतिः। श्रुतशीले च विज्ञाय वृत्तिं धर्म्म्यां प्रकल्पयेत्" "न निर्हारं स्त्रियः कुर्य्युः कुटुम्बाद्बहुमध्यगात्" "वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्म्मिणौ" मनुः स्वार्थे क। तत्रैव पुंन० "अयं निजः परोवेति गणना लघुचेतसाम्। उदारचरितानां तु वसुधैव कुटुम्बकम्" हितो०। [व्यासक्ते।

**कुटुम्बव्यापृत** त्रि० कुटुम्बे तद्भरणे व्यापृतः। कुटुम्बभर-

**कुटुम्बिक** त्रि०कुटुम्बोऽस्त्यस्य ठन्। कुटुम्बयुक्ते गृहस्थाश्रमे "मुनिश्च स्यात् सदा विप्रो वेदांश्चैव सदा जपेत्। कुटुम्बिकोधर्म्मकामः सदाऽस्वप्नश्च मानवः" भा० आनु० ६३अ०। इनि। कुटुम्बिन् अपि तत्रार्थे। "आशासते कुटुम्बिभ्यस्तेभ्यः कार्य्यं विजनता" "प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः" कुमा०। २कर्षके त्रि० शब्दच०।

**कुटुम्बिनी** कुटुम्बोऽस्त्यास्या इनि ङीप्। १भार्य्यायां पतिपुत्रवत्यां २स्त्रियां "शौचं तु च यावत् कुरुते भाजने तु कुटम्बिनी" भा० व० २०५अ०। कुटुम्बानां समूहः खला० इनि। ३कुटुम्बसमूहे स्त्री। ४क्षीरिण्यां क्षुपभेदे राजनि०।

**कुट्ट** छेदने, निन्दने च अद० चुरा०उभ०सक०सेट्। कुट्टयति ते अचुकुट्टत् त। प्रनिकुट्टयति काष्ठकुट्टः शिलाकुट्टः

**कुट्ट** प्रतापने अद०चुरा०आत्म०सक०सेट्। कुट्टयते अचुकुट्टत।

**कुट्टक** त्रि० कुट्ट–ण्वुल्। छेदके "दन्तोलूखलिकः काष्ठपकाशी वाश्मकुट्टकः। १लीलावत्यादौ प्रसिद्धे २गणितोपयोगिक्रियाभेदे कुट्टकविधिश्च लीलावत्यां संक्षेपेणोक्तः वीजगणिते कुट्टकाध्याये विशेषेणोक्तो यथा "भाज्योहारः क्षेपकश्चापवर्त्यः केनाप्यादौ सम्भवे कुट्टकार्थम्। येन च्छिन्नौ भाज्यहारौ न तेन क्षेपश्चैतद्दुष्टमुद्दिष्टमेव। परस्परं भाजितयोर्ययोर्यः शेषस्तयोः स्यादपवर्त्तनं सः। तेनापवर्त्तेन विभाजितौ यौ तौ भाज्यहारौ दृढसंज्ञितौ स्तः। मिथोभजेत्तौ दृढभाज्यहारौ यावद्विभाज्ये भवतीह रूपम्। फलान्यधोऽधस्तदधोनिवेश्यः क्षेपस्तथान्ते खमुपान्तिमेन। स्वो-

द्धे हृतेऽन्त्येन युते तदन्त्यं त्यजेन्मुहुः स्यादिति राशियुग्मम् । ऊर्द्ध्वो विभाज्येन दृढेन तष्टः फलं गुणः स्यादपरो हरेण । एवं तदैवात्र यदा समस्ताः स्युर्लब्धयश्चेद्विषमास्तदा नीम् । यदागतौ लब्धिगुणौ विशोध्यौ स्वतक्षणाच्छेषमितौ तु तौ स्तः । भवति कुट्टविधेर्युतिभाज्ययोः समपवर्त्तितयोरथ वा गुणः । भवति यो युतिभाजकयोः पुनः स च भवेदपवर्त्तनसङ्गुणः । गुणलब्ध्योः समं ग्राह्यं धीमता तक्षणे फलम् । हरतष्टे धनक्षेपे गुणलब्धी तु पूर्ववत् । योगजे तक्षणाच्छुद्धे गुणाप्ती स्तो वियोगजे । धनभाज्योद्भवे तद्वद्भवेतामृणभाज्यजे । क्षेपतक्षणलाभाढ्या लब्धिः शुद्धौ तु वर्ज्जिता । अथ वा भागहारेण तष्टयोः क्षेपभाज्ययोः । गुणः प्राग्वत्ततो लब्धिर्भाज्याद्धतयुतोद्धृतात् । क्षेपाभावोऽथ वा यत्र क्षेपः शुध्येद्धरोद्धृतः । ज्ञेयः शून्यं गुणस्तत्र क्षेपो हारहृतः फलम् । इष्टाहतस्वस्वहरेण युक्ते ते वा भवेतां बहुधा गुणाप्ती । उदाहरणम् । एकविंशतियुतं शतद्वयं यद्गुणं गणक ! पञ्चषष्टियुक् । पञ्चवर्ज्जितशतद्वयोद्धृतं शुद्धिमेति गुणकं वदाशु तम् । न्यासः भा२२१ हा १९५ क्षेपः ६५ अत्र परस्परं भाजितयोर्भाज्यभाजकयोःशेषम् १३ अनेन भाज्यहारक्षेपाअपवर्त्तिताजाता दृढाः भा१७हा१५ क्षेपः ५ अनयोर्दृढभाज्यहारयोः परस्परं भक्तयोर्लब्धमधोधस्तदधः क्षेपस्तदधः शून्यं निवेश्यमिति न्यस्ते जाता वल्ली १ । ७ । ५ । ० उपान्तिमेन स्वोर्द्ध्वे हतइत्यादिकरणेन जातं राशिद्वयम् । ४० । ३५ एतौ दृढभाज्यहाराभ्यामाभ्यां १७ । १५ तष्टौ शेषमितौ लब्धिगुणौ अनयोःस्वतक्षणमिष्टगुणं क्षेपइति । अथ वा लब्धिगुणौ २३ । २० वा४० । ३५ इत्यादीनि उदाहरणम् । शतं हृतं येन युतं नवत्या विवर्ज्जितं वा विहृतं त्रिषष्ट्या । निरग्रकं स्याद्वद मे गुणं तं स्पष्टं पटीयान्यदि कुट्टकेऽसि । न्यासः भा १००हा ६३क्षेपः ९० अत्र वल्ली १ । १ । १ । २ । २ । १ । ९ ।० उपान्तिमेनेत्यादिना जातं राशिद्वयं २४३० । १५३० पूर्ववल्लब्धिगुणौ ३० । १८ अथ वा भाज्यक्षेपौ दशभिरपवर्त्तितौ भा१० हा६३ क्षेपः ९ एभ्योऽपि पूर्ववद्वल्ली ० । ६ । २ ९ । ० उपान्तिमेनेत्यादिना राशिद्वयम् २७ । १७१ पूर्ववज्जातौ लब्धिगुणौ ७ । ४५ । अत्र लब्धयोविषमा इति स्वतक्षणाभ्यामाभ्यां १० । ६३ शोधितौ जातौ लब्धिगुणौ ३ । १८ अत्र लब्धिर्न ग्राह्या गुणघ्नभाज्ये क्षेपयुते हर

भक्ते लब्धिश्च ३० । अथ वा भाज्यक्षेपापवर्त्तनेन १० पूर्व्वानीता लब्धि ३र्गुणिता जाता सैव लब्धिः३० । अथ वा हारक्षेपौ नवभिरपवर्तितौ भा१०० हा७ क्षे१० पूर्व्ववद्वल्ली १४ । २ । १० । ० जातं राशिद्वयम् ४२० । ३० तक्षणे जातं ३० । २ हारक्षेपापवर्त्तनेन ९ गुणं सङ्गुण्य जातौ लब्धि गुणौ तावेव ३० । १८ । अथ वा भाज्यक्षेपौ हारक्षेपौ चापवर्त्त्य न्यासः भा१० हा७ क्षे १ अत्र जाता वल्ली १ २ । १ । ० पूर्व्ववज्जातं राशिद्वयम् ३, २ तक्षणाज्जातं तदेव ३ । २ भाज्यक्षेपहारक्षेपापवर्त्तनेन क्रमेण लब्धिगुणौ गुणितौ जातौ तावेव३० । १८ गुणलब्ध्योः स्वहारौ क्षेपाविति अथ वा लब्धिगुणौ १३० १८ वा २३०१४४ इत्यादि । योगजे गुणाप्ती १८ । ३० स्वतक्षणाभ्यामाभ्यां ६३ । १०० शुद्धे जाते नवतिशुद्धौ गुणाप्ती ४५ । ७० वा १०८ । १७० वा । १७१ । २७० । इत्यादि । उदाहरणम् । यद्गुणा क्षयगषष्टिरन्विता वर्जिता च यदि वा त्रिभिस्ततः । स्यात्त्रयोदशहृता निरग्रका तं गुणं गणक ! मे पृथग्वद । न्यासः भा ६० हा१३ क्षे ३ । प्राग्वज्जाते धनभाज्ये धनक्षेमे गुणाप्ती११ । ५१ एते स्वस्वतक्षणाभ्यामाभ्यां १३ । ६० शुद्धे जाते ऋणभाज्ये धनक्षेपे २ । ९ । अत्र भाज्यभाजकयोर्विजातीययो र्भागहारेऽपि चैवं निरुक्तमित्युक्तत्वाल्लब्धेः ऋणत्वं ज्ञेयम् २ ९ पुनरेते स्वतक्षणाभ्यामाभ्यां १३ । ६० शुद्धे जाते ऋणभाज्ये ऋणक्षेमे गुणाप्ती ११ । ५१ । ऋणभाज्ये ऋणक्षेपे धनभाज्यविधिर्भवेत् । तद्वत्क्षेपे ऋणगते व्यस्तं स्याद्दृणभाज्यके । धनभाज्योद्भवे तद्भवेतामृणभाज्यजे । मन्दावबोधार्थं मयोक्तम् । अन्यथा योगजे तक्षणाच्छुद्धे इत्यादिनैव सिद्धं यतः ऋणधनयोगो वियोगएव । अतएव भाज्यभाजकक्षेपाणां धनत्वमेव प्रकल्प्य गुणाप्ती साध्ये । ये योगजे भवतः ते स्वतक्षणाभ्यां शुद्धे वियोगजे कार्य्ये । भाज्ये भाजके वा ऋणगते परस्परभजनाल्लब्धयः ऋणगताः स्युरित्याद्यमिति किं तेन प्रयासेन तथाकृते सति भाज्यभाजकयोरेकस्मिन् ऋणगते गुणाप्ती द्वौ राशी क्षिपेत्तत्रेत्यादिना परोक्तसूत्रेण लब्धौ व्यभिचारः स्यात् । उदाहरणम् । अष्टादश हताः केन दशाढ्या वा दशोनिताः । शुद्धं भागं प्रयच्छन्ति क्षयगैकादशोद्धृताः । न्यासः भा१८हा११ क्षे १० अत्र भाजकस्य धनत्वं प्रकल्प्य साधितौ लब्धिगुणौ १४ । ८ एतावेव ऋणभाजके । किं तु लब्धेः पूर्व्व

धनत्वमृणत्वं ज्ञेयं तथाकृते जातौ लब्धिगुणौ १४ । ८ ऋणक्षेपे तु योगजे तत्तक्षणाच्छुद्धे इत्यादिना लब्धिगुणौ ४ । ३ भाजकस्य धनत्वे ऋणत्वे वा लब्धिगुणावेतावेव । परन्तु भाजके भाज्ये वा ऋणगते लब्धेः ऋणत्वं सर्वत्र ज्ञेयम् । उदाहरणम् । येन सङ्गुणिताः पञ्च त्रयोविंशतिसंयुताः । वर्जिता वा त्रिभिर्भक्ता निरग्राःस्युः स को-गुणः । न्यासः भा ५ हा ३ क्षे २३ अत्र वल्ली १ । १ । २३ । ० । पूर्ववज्जातं राशिद्वयम् ४६ । २३ अत्र तत्क्षणेऽधोराशौ सप्त लभ्यन्ते, ऊर्द्ध्वराशौ तु नव लभ्यन्ते ते नव न ग्राह्याः'गुणलब्ध्योः समं ग्राह्यं धीमता तक्षणे फलमित्यतः सप्तैव ग्राह्याइति जातौ लब्धिगुणौ ११ २ वियोगजे एतौ स्वस्वतक्षणाभ्यां शोधितौ जातौ ऋणक्षेपे६ । १इष्टाहतस्वस्वहरेण युक्तावितिद्विगुणितौ स्वस्वहारौ क्षेप्यौ यथा धनलब्धिः स्यादिति कृते जातौ लब्धिगुणौ ४ । ७ एवं सर्वत्र ज्ञेयम् । अथ वा हरतष्टे धनक्षेपइति न्यासः भा ५ हा ३ क्षे २ पूर्ववज्जातौ लब्धिगुणौ योगजौ ४ । २ एतौ स्वतक्षणाभ्यां शुद्धौ १ । १ जातौ वियोगजौ । क्षेपतक्षणलाभाढ्या लब्धिरिति क्षेपतक्षणलाभेन ७ योगजलब्धिर्युता ११ जाता योगजा लब्धिः शुद्धौ तु वर्ज्जितेति तक्षणलाभेन ७ लब्धिरियं१ वर्ज्जिता६ धनलब्ध्यर्थं द्विगुणे हरे क्षिप्ते जातौ तावेव लब्धिगुणौ ४ । ७ । अथवा भागहारेण तष्टयोरिति न्यासः भा२ हा ३ क्षे २ अत्रापि जातं राशिद्वयं २ । २ तक्षणाज्जातं २ । २ । अत्रापि जातः पूर्व एव गुणः २ लब्धिस्तु भाज्याद्गतयुतोद्धृतादिति गुण २ गुणितोभाज्यः १० क्षेप २३ युतो ३३ हरभक्तोलब्धिःसैव ११ । उदाहरणम् येन पञ्च गुणिताः खसंयुताः पञ्चषष्टिसहिता श्च तेऽथ वा । स्युस्त्रयोदशहृतानिरग्रकास्तं गुणं गणक ! कीर्त्तयाशु मे । न्यासः भा ५ हा १३ क्षे ० क्षेपाभावे गुणाप्ती ०।० । एवं पञ्चषष्टिक्षेपे ० । ५ वा१३ । १०इत्यादि । अथ स्थिर-कुट्टके सूत्रं वृत्तम् । क्षेपं विशुद्धिं परिकल्प्य रूपं पृथक् तयोर्ये गुणकारलब्धी । अभीप्सितक्षेपविशुद्धि-निघ्ने स्वहारतष्टे भवतस्तयोस्ते । प्रथमोदाहरणे दृढभाज्यहारयोः रूपक्षेपस्य च न्यासः भा १७ हा १५ क्षे १ अत्रोक्तवद्गुणाप्ती ७ । ८ एते अभोष्टपञ्चगुणे स्वहारतष्टे जाते ५ । ६ ते एव । अथ रूपशुद्धौ गुणाप्ती ८ । ९ एते पञ्चकगुणे स्वहारतष्टे जाते १० । ११ ते ण्व एवं सर्वत्र । अस्य गणितस्य ग्रहगणिते महानुपयोगः । तदर्थं किञ्चिदुच्यते । कल्पग्रहविशुद्धिर्विकला-वशेषं षष्टिश्च भाज्यः कुदिनानि हारः । तज्जं फलं स्युर्विकला गुणस्तु लिप्ताग्रमस्माच्च कला लवाग्रम् । एवं तदूर्द्ध्वं च तथाऽधिमासावमाग्रकाभ्यां दिवसा रवीन्द्वोः । ग्रहस्य विकलावशेषाद्ग्रहाहर्गणयोरा-नयनम् । तद्यथा । षष्टिर्भाज्यः । कुदिनानि हारः । विकलावशेषं शुद्धिरिति प्रकल्प्य साध्ये गुणाप्ती । तत्र लब्धिर्विकलाः स्युर्गुणस्तु कलावशेषम् । एवं कलावशेषं शुद्धिः । षष्टिर्भाज्यः । कुदिनानि हारः फलं कलाः गुणोऽंशशेषम् । एवमंशशेषं शुद्धिस्त्रिंशद्भाज्यः । कुदिनानि हारः । फलं भागाः गुणोराशिशेषम् । एवं राशिशेषं शुद्धिर्द्वादश भाज्यः । कुदिनानि हारः । फलं गतराशयोगुणोभगणशेषम् । एवं कल्पभगणा-भाज्यः । कुदिनानि हारः । भगणशेषं शुद्धिः फलं गतभगणाः गुणोऽहर्गणः स्यादिति । अस्योदाहरणानि त्रिप्रश्नाध्याये । एवं कल्पाधिमासाभाज्यो, रविदिनानि हारो, ऽधिमासशेषं शुद्धिः । फलं गताधिमासाः, गुणो गतरविदिवसाः । एवं युगावमानि भाज्यश्चन्द्रदिवसा-हारोऽवमशेषं शुद्धिः । फलं गतावमानि । गुणोगत-चन्द्रदिवसाइति ।

अथ संश्लिष्टकुट्टके करणसूत्रं वृत्तम् । एकोहरश्चेद्गुणकौ विभिन्नौ तदा गुणैक्यं परिकल्प्य भाज्यम् । अग्रैक्यमग्रं कृतउक्तवद्यः संश्लिष्टसंज्ञः स्फुटकुट्टकोऽसौ । उदाहरणम् । कः पञ्चनिघ्नोविहृतस्त्रिषष्ट्या सप्तावशेषोऽथ सएव राशिः । दशाहतः स्याद्विहृतस्त्रिषष्ट्या चतुर्द्दशाग्रोवद राशिमेनम् । अत्र गुणैक्यं भाज्यः अग्रमेव राशिः अग्रैक्यं शुद्धिरिति न्यासः भा१५ हा६३ क्षेपः २१ पूर्ववज्जातोगुणः १ लब्धिः२" ।

**कुट्टनी** स्त्री कुट्ट—ल्युट् ङीप् । (कुटनी) परपुरुषेण सह परस्त्रियाः समागमकारयित्र्यां स्त्रियाम् । "तदालिङ्गनमवलोक्य समीपवर्त्तिनी कुट्टन्यचिन्तयत् अकस्मादयमेनमुपगूढवतीति ततस्तया कुट्टन्या तत्कारणं परिज्ञाय सा लीलावती शुष्ट्रेन दण्डिता" हितो० । णिनि कुट्टिन्यप्यत्र

**कुट्टमित** न० "केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात् । प्राहुः कुट्टमितं नाम शिरःकरविधूननम्" इति सा०द० उक्ते स्त्रीणां विलासभेदे । उदा० यथा

"पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरविम्बमभीष्टे ।

पश्यं कूजि सहजेव तरुण्यान्नारलोलवलयेन करेण" ।

**कुट्टाक** त्रि॰ कुट्ट—षाकन् । छेदके स्त्रियां ङीष् ।

**कुट्टापरान्त** पु॰ भूम्नि । जनपदभेदे "अत ऊर्द्धं जनपदान्निबोध गदतोमम" इत्युपक्रमे "कुट्टापरान्ता-माहेया कच्छाः सामुद्रनिष्कुटाः" भा॰भी॰ ९अ॰ ।

**कुट्टार** पु॰ कुट्ट—कर्म्मणादौ बा॰ आरन् । १पर्व्वते २केवले ३रमणे न॰ मेदि॰ ४कम्बले न॰ विश्वः ।

**कुट्टित** त्रि॰ कुट्ट—क्त । १छेदिते खण्डीकृते । तादृशे २पक्वमांसभेदे न॰ । "मांसमस्नायु संगृह्य सूक्ष्मं कृत्वा सुकुट्टितम् । वेशवारगुणाढ्यम् स्वेदितं पाचितं भवेत् । कुट्टितं पाचितं मांसं सुस्वादु लघु दीपनम् । तत्रापि जाङ्गलं श्रेष्ठं जाङ्गलेष्वपि पक्षिणाम्" भावप्र॰ ।

**कुट्टिम** पुंन॰ अर्द्धर्चादि कुट्ट—भावे घञ् तेन निर्वृत्तः इमप् । १रत्नमयभूमौ भरतः २सुधालिप्तभूतले सुभूतिः ३कुटीरे स्वल्पगृहे मथुरानाथः । ४दाडिम्बवृक्षे राजनि॰ (छात) इति ख्याते बद्धभूमिभागे ५सौधप्रदेशभेदे हला॰ । "कान्तेन्दुकान्तोपलकुट्टिमेषु प्रतिक्षणं हर्म्यतलेषु यत्र" माघः "शाद्वलोपचितां भूमिं यथाकाञ्चनकुट्टिमाम्" भा॰आनु॰५४अ॰ । "प्रासादजातसम्बाधं मणिप्रवरकुट्टिमम्" भा॰आश्व॰ ८५अ॰ ।

**कुट्टिमित** न॰कुट्ट—भावे घञ् तेन निर्वृत्तः इमप् ततः तार॰ इतच् । कुट्टमितशब्दार्थे शब्दचि॰ तन्मते सा॰द॰ कुट्टिमितमिति पाठः "केशाधरादिग्रहणे मोदमानेऽपि मानसे । दुःखितेव बहिः कुर्य्याद्यत्र कुट्टिमितं मतम् । तत्र स्त्रीणामेष स्वभावः यदिष्टमप्यनिष्टतया निवारयन्त्य एव सुरतसुखमुपभुञ्जते इति तेन गाढपरिपीडने केशस्तनादिग्रहणे च हर्षात् सुखेऽपि दुःखाविष्करणं दुःखेऽपि सुखाविष्करणम्" इति

**कुट्टिहारिका** स्त्री॰ कुट्ट—इन् कुट्टिं कुट्टितद्रव्यं मांसादि हरति हृ—ण्वुल् टाप् अतइत्त्वम् । दास्यां हलायुधः ।

**कुट्टीर** पु॰ कुट्ट—ईरन् । १क्षुद्रपर्व्वते हारा॰ । २छेदके त्रि॰ ।

**कुट्टीरक** त्रि॰ कुट्टीरःक्षुद्रपर्व्वत इव कायति कै—क । क्षुद्रपर्व्वतसत्स्तूपीकृते "द्वितीयेन तस्यास्थीनि तद्गृह्य च श्मशाने कुट्टीरकं कृत्वा रक्षितानि" वेतालः ।

**कुट्मल** पुंन॰ कुट—कमलच् । १मुकुले विकाशोन्मुखपुष्पकलिकायाम् । "द्योतितान्तःसभैः कुन्द-कुड्मलाग्रदतः स्मितैः" माघः । अन्यान्तत्वात् दन्त्यस्य वा दन्त्यादेशः । २नरकभेदे न॰ यत्र रज्जुभिर्यन्त्रणा नारकिभ्यो दीयते तत्र । "तामिस्रमन्धतामिस्रमित्येकविंशतिनरककथने "संघातं सकाकोलं कुड्मलं पूतिमृत्तिकम्" मनुः "कुट्मलं यत्र बहुभिः पीडनम्" प्रा॰वि॰ । मुद्रितपु॰कुड्मलमिति पाठः । कुड्मलमपि नरकभेदे । ३कुड्मलाकारे वाणाग्रभागे फलके च "विष्णुं सोमं हुताशं च तस्येषुं समकल्पयन् । शृङ्गमग्निर्बभूवास्य भल्लः सोमोविशाम्पते ! । कुड्मलश्चाभवद्विष्णुस्त्रिष्विषुवरे तदा" भा॰ क॰ ३६अ॰,

**कुठ** छेदने सौत्रः पर॰ सक॰ सेट् । कोठति अकोठीत् । प्रनिकोठति ।

**कुठ** वैकल्ये (गतिप्रतिघाते) आलस्ये अक॰ मोचने सक॰ इदित् भ्वा॰ प॰ सेट् । कुण्ठति अकुण्ठीत् । प्रनिकुण्ठति कुण्ठनम् कुण्ठा ।

**कुठ** पु॰ कुठ—छेदने वज्रर्थे कर्म्मणि क । वृक्षे अमरः ।

**कुठर** पु॰ कुठ—बा॰ करन् । मन्थानदण्डाकर्षणरज्जुयुक्तस्तम्भे अमरः । [उज्ज्वलदत्तः

**कुठाकु** पु॰ कुठ—आकुन् किच्च । (काठ ठोकरा) पक्षिभेदे

**कुठाटङ्क** पुंस्त्री कुठाररूपःटङ्कः पृषो॰ । कुठारे अस्त्रे जटा॰

**कुठार** पुंस्त्री॰कुठ—करणे आरन् । स्वनामख्याते काष्ठच्छेदनसाधने अस्त्रभेदे स्त्रीत्वे गौरा॰ ङीष् । "राजन्योत्सांसकूटक्रथनपटुरटद्घोरधारः कुठारः" प्रबोध॰ । "मातुः केवलमेव यौवनवनच्छेदे कुठारावयम्" भर्त्तृ॰ । "तं त्वा गताहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम्" भाग॰ ३,२५,१२, तल्लक्षणं हेमा॰ परि॰ ख॰ लक्षणसमुच्चये यथा—

"जमदग्निं प्रति शुक्रः प्रोवाच यथोपदेशं शुश्रूषो ! निबोध परशोरुत्पत्तिं द्रव्यक्रमयोगं प्रमाणं चोत्तममध्यमाधमानां नराणां सर्वाणिः पाणिसङ्गादिति द्विकर्म्मा परशुर्भवति । तत्र पञ्चाशत्पलिकः श्रेष्ठश्चत्वारिंशत्पलिकोमध्यमस्त्रिंशत्पलिकः कनिष्ठ इति । जातमात्रस्य पुरुषस्य सर्वोऽसमयस्त्रिविधः परशुर्भवति सार्द्धपञ्चाङ्गुलं श्रेष्ठस्य, सार्द्धचतुरङ्गुलं मध्यमस्य, सार्द्धत्र्यङ्गुलं निकृष्टस्य, मूलं विस्तृतम्भवति । तथा मध्ये सार्द्धपञ्चाङ्गुलं विस्तृतं चोत्तममध्यमकनिष्ठानां भवति । तथाङ्गमपि पञ्चदशाङ्गुलमुत्तमस्य, सार्द्धत्रयोदशाङ्गुलं मध्यमस्य, द्वादशाङ्गुलं निकृष्टस्येति परशोःफलम् । तथोत्तमं द्वादशाङ्गुलायामं, मध्यमं दशाङ्गुलायाममधमम ष्टाङ्गुलायामभित्येवमपि त्रिविधं भवति । कुणपेष्विव दण्डप्रमाणमुत्तममध्यमकनिष्ठभेदात्त्रिविधं शालकधवधन्वनयाका-

र्जुनशिरीषशिंशपासनराजवृक्षेन्द्रवृक्षतिन्दुकसोमवल्कवश्वेतकार्जुनप्रभृतीनां मुखप्रमाणो दण्डग्रन्थिर्भवेत्। यस्तु सपाणिः परशुः स यथाकामं प्रयोज्यः।

कुठारलक्षणं तु कुठारशब्दे दृश्यं। २वृक्षे पु० शब्दरत्ना०। तस्येदम् शिवा० अण्। कौठार तत्सम्बन्धिनि त्रि० स्त्रियां ङीप्। अल्पार्थे क। कुठारक क्षुद्रकुठारे पुंस्त्री० स्त्रियां कुठारिका। [ कारे पु० शब्दरत्ना०।

**कुठारु** पु० कुठ—आरु। १वृक्षे २वानरे पुंस्त्री०मेदि०। ३शस्त्र-

**कुठि** पु०कुठि—इन् किच्च। १पर्व्वते २वृक्षे च उणा० को०।

**कुठिक** पु० कुठ—इकन् किच्च। (कुड़) कुष्ठे हारा०।

**कुठेर** पु०कुठि—एरन् बा०लुमभावः। १पर्णासे उज्ज्व०। २वह्नौ शब्दमा०। ३श्वेततुलस्याम् (वावुइतुलसी) राजनि०।

**कुठेरक** पु०कुठेर इव कायति कै—क। नान्दीवृक्षे राजनि०। स्वार्थे क। २श्वेततुलस्यां (वावुइतुलसी) शब्दच०।

**कुठेरज** पु० कुठेरइव जायते जन—ड "सप्त म्युपा" पा०सू०। श्वेततुलस्याम् शब्दरत्ना०।

**कुठेरु** पु० कुठ—एरुक्। चामरवाते त्रिका०।

**कुड** वैकल्ये भ्वा० इदित् पर० अक० सेट्। कुण्डति अकुण्डीत् प्रनिकुण्डति कुण्डः। [ प्रनिकुण्डते। कुण्डम्।

**कुड** दाहे भ्वा० इदित् आत्म० सक० सेट्। कुण्डते अकुण्डिष्ट

**कुड** रक्षणे चुरा० इदित् उभ० सक० सेट्। कुण्डयति ते अचुकुण्डत् त। प्रनिकुण्डयति ते।

**कुड** अदने सक० बाल्ये अक० तुदा० पर० सेट् कुटादि। कुडति अकुडीत् चुकोड़। प्रनिकुडति कुडपः कुडवः

**कुडप** (व) पु० कुड—कपन् (कवन्)वा। प्रस्थचतुर्थांशरूपे परिमाणभेदे अमरः अर्द्धर्चादि। कर्षशब्दे विवृतिः चौरस्वामिमते पाल्नः। "द्रोणस्तु खार्य्याः खलु षोडशोऽंशः स्यादाढकोद्रोणचतुर्थभागः। प्रस्थस्तुर्य्यांश इहाढकस्य प्रस्थाङ्घ्रिराद्यैः कुडवः प्रदिष्टः" "लीला० तेन षोड़शकर्षमितः कुडवः आर्द्रद्रवाणां तु द्वात्रिंशत्कर्षमित इत्याह सुश्रुतः

"पलकुडवादीनामतो मानन्तु व्याख्यास्यामः। तत्र द्वादशधान्यमाषा मध्यमाः सुवर्णमाषकः। ते षोडश सुवर्णम्। अथ मध्यमनिष्पावा वा एकोनविंशतिर्द्धरणम्। तान्यर्द्धतृतीयानि कर्षः। ततश्चोर्द्धं चतुर्गुणमभिवर्द्धयन्तः पलकुडवप्रस्थाढकद्रोणा इत्यभिनिष्पद्यन्ते तुला पलशतं तानि विंशतिर्भारः शुष्काणामिदं मानमार्द्रद्रवाणाञ्च द्विगुणमिति"।

"अथ षष्ठे गते काले यवप्रस्थमुपार्ज्जयन्। यवप्रस्थं तु तं सक्तून्कुर्व्वन्त तपस्विनः। कृतजप्याह्निकास्ते तु हुत्वा चाग्निं यथाविधि। कुडवं कुडवं सर्व्वे(चत्वारः) व्यभजन्त तपस्विनः" "इत्युक्तः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः" भा० आश्व० ९०।

**कुडि** पु० कुण्ड्यते दह्यते कुडि—दाहे इन् नलोपश्च। देहे सि० कौ० "कुठिकम्प्योर्नलोपश्चेति" उणा० उज्ज्वलदत्तेन कुठि गतिप्रतिघाते इति व्याख्यानम् कौमुदीकृता तु कुडि—दाहे इति व्याख्यातम्। अतः मतभेदेन उणादिसूत्रे पाठद्वयम्।

**कुडिश** पुंस्त्री० कुड्यते कुड—अदने बा० श इट्। (कुडची) ख्याते मत्स्यभेदे राजनि०। "कुडिशो मधुरोवल्यः कषायो वह्निदीपनः। लघुः स्निग्धो वातरोगे पथ्यश्च रोचनस्तथा। बलकारी कोष्ठबन्धकारी च भिषजां मतः" राजनि०।

**कुडिहुञ्ची** स्त्री० क्षुद्रकाण्डावेल्लवृक्षे(छोट उच्छिया) राजनि०।

**कुड्मल** कुड—बाल्ये बा० क्मलच्। १मुकुले विकाशोन्मुखे कुसुमे सि०कौ०। २नरकभेदे न० कुट्मलशब्दे उदाहृत मनुवचने कुड्मलमिति वा पाठः "दलितकोमलपाटलकुड्मले" माघः तारका०इतच्। कुड्मलित जातमुकुले त्रि०।

**कुड्य** न० कुट्ड कार्कश्ये ण्यत् कौतेरप्रत्रा० यक् डुगागमश्च इत्युज्ज्वलदत्तः। १भित्तौ(भित) अमरः २विलेपने मेदि० ३कौतूहले शब्दरत्ना०। "वेद्यां सभाप्रमाणोऽङ्गं कुड्यमास्तरणानि वा। "चन्दनरसैरुपलिप्तकुड्ये" सुश्रु०। "वैदूर्य्यकुड्येषु शशिद्युतिभ्यः" माघः। स्वार्थे क। भित्तौ शब्दर०।

**कुड्यच्छेदिन्** पु० छिद—णिनि ६त०। चौरभेदे येन गृहभित्तिं विदार्य्य चौर्य्यं क्रियते तत्र शब्दरत्ना०।

**कुड्यच्छेद्य** पु० कुड्यं छेद्यं यस्य। १खनके। कुड्यस्य तन्निर्म्माणाय तदर्थे छेद्यम् चतुर्थ्यर्थे ६त०। भित्तिनिर्म्माणाय खाते २गर्त्ते त्रिका०।

**कुड्यमत्स्य** पुंस्त्री०कुड्ये मत्स्य इव। गृहगोधिकायां हेम० जातित्वात् स्त्रियां ङीष् यलोपः। कुड्यमत्सी तत्रैव शब्दर०। [कुणयति ते अचुकुणत् त। प्रनिकुणयति

**कुण** आभाषणे, मन्त्रणे च अद० चु० उभ० सक० सेट्।

**कुण** उपकरणे शब्दे च तुदा०पर०सक० सेट्। कुणति अकोणीत्। प्रनिकुणति उपकरणं दानादिना पोषणम्।

**कुणक** पु० कुण्यते उपक्रियते कुण—कर्म्मणि घञर्थे क ततः

अनुकम्पायां कन्। बालके शिशौ। "तं त्वेणकुणकं कृपणं स्रोतसानुवाह्यमानमभीक्ष्य" "तस्य ह वा एष कुणके उच्चैस्तरामेतस्मिन् कृतनिजाभिमानस्याहरहस्तत्पोषणपालनप्रीणनलालनानुध्यानेन" "अहो बतायं हरिणकुणकः कृपणः" इति च भाग० ५,८, ७,८,६, "एणकुणकं हरिणबालकम्" श्रीधरः।

**कुणञ्ज** पुंस्त्री० कुणं शब्दकारकं स्वरभेदं जरयति अलर्भूतणत्वार्थे जॄ बा०ड पृषो०मुम्। वनवास्तूके शाकभेदे (वनवेथुया) "कुणञ्जो मधुरोरुच्यो दीपनः पाचनोहितः। तच्छाकं तु त्रिदोषघ्नं मधुरं रुचिकारकम्। ईषत्कषायं संग्राहि पित्तश्लेष्महरं लघु" राजनि०। स्त्रीत्वमप्यत्र।

**कुणञ्जर** पुं०कुणं जरयति जॄ–बा०खच्। वनवास्तूके राजनि०

**कुणप** पु० कण–कपन् सं'प्र०। त्यक्तप्राणे स्तनदेहे शवे अमरः "वाराणस्यां महाराज! दर्शनेप्सुर्महेश्वरम्। तस्या द्वारं समासाद्य न्यसेथाः कुणपं क्वचित्। तं दृष्ट्वा यो निवर्त्तेत स संवर्त्तो महीपते!"। नारदोक्तौ "कुणपं स्थापयामास नारदस्य वचः स्मरन्। यौगपद्येन विप्रश्च पुरीद्वारमथाविशत्" "ततः स कुणपं दृष्ट्वा सहसा संन्यवर्त्तत" भा० आश्व०६अ०। "शोणितगन्धवेदनं कुणपगन्ध्यनल्पं रक्तेन" सुश्रु० अर्द्धाणी०पा०। २पूतिगन्धे पु० ३तद्वति त्रि०मेदि०। "कुणपं मस्तुलाङ्गाभं सुगन्धं कथितं बुधैः" माधवनि० "तस्य देवा यावन्मात्रमिव गन्धस्यापजघ्नुस्तं पशुष्वदधुः स एष पशुषु कुणपगन्धस्तस्मात् कुणपगन्धाद्वापिस्ट्क्लीत" शत० ब्रा० ४, १, ३, ८, । (बड़शा) ४अस्त्रभेदे। "शक्तिभिः कवचैश्चित्रैः कुणपै रङ्कुशरपि" भा० भी० ५७अ०। कुणपलक्षणन्तु हेमा० प० ख० लक्षणसमुच्चये दर्शितं यथा

"जमदग्निं प्रति उशनाः प्रोवाच साधु पृष्टं कुणपानां विधानं यथाप्टं कथयामि शृणु विंशत्यङ्गुलोऽष्टादशाङ्गुलः षोडशांङ्गुलश्चेति श्रेष्ठमध्याधमत्वेन कुणपोऽङ्गुलमाने त्रिविधोभवेदेवं पलप्रमाणे विंशतिपलः षोडशपलोद्वादशपलश्चेति। बालयोग्यानामेतत् प्रमाणमुक्तमबालानां तु कुणपस्त्रिंशत्पलः श्रेष्ठः पञ्चविंशतिपलोमध्यमः विंशतिपलस्तु निकृष्टः, श्रेष्ठस्तुविंशत्यङ्गुलो द्वात्रिंशत्यङ्गुलोमध्यमः कनिष्ठस्तु विंशत्यङ्गुलो भवेत्" कथयेति पाठान्तरम्। ५शवतुल्ये निश्चैतन्ये जड़े देहादौ "आश्चर्य्यमेतत् यदसत्सु सर्व्वदा महद्विनिन्दा कुणपात्मवादिषु" भाग० ४, ४, १३, "कुणपं जडं शरीरं तदेवात्मेति वदन्ति ये तेषु" श्रीधरः। गौरा० ङीष्। ६विट्शारिकायां (गुदयाशालिक) स्त्री०मेदि०

**कुणारु** त्रि० कण–शब्दे बा० आरु संप्र०। कणनशीले "यद्दानुं पुरुहूत क्षियन्तमहस्तमिन्द्र! संपिनक्कुणारुम्" ऋ० ३,३०, ८, "कुणारुं क्वणनशीलम्" भा०।

**कुणाल** पु० कण–कालन् स'प्र०। देशभेदे सि० कौ०।

**कुणि** पु० कुण–इन्। १तुन्दवृक्षे मेदि०। २आदानादिक्रियामन्दकरान्विते त्रि० अम०। "दौहृदविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति, सुश्रु०"गर्भो वातप्रकोपेण दौहृदे चावमानिते। भवेत्कुब्जः कुणिः पङ्गुः मूको मिन्मिण एव च" सुश्रु० कुणेर्भावः ष्यञ्। कौण्य हस्तस्यादानादिविघातरूपे दोषे "एकादशेन्द्रियवधाः" सां०का० व्याख्यायां कौमुद्यां "बाधिर्य्यं कुष्ठितान्धत्वम् जडताऽजिघ्रता तथा। मूकता कौण्यपङ्गुत्वक्लैब्योदावर्त्तमन्दताः" इन्द्रियभेदेन क्रियाविघातभेदो दर्शितः।

**कुणिन्द** पु० कण–भावे किन्दच् सं'प्र०। शब्दे उज्ज्वलद०

**कुणिपदी** स्त्री कुणिरिव कुण्ठितशक्तिः पादोऽस्याः कुम्भपद्या० ङीष् पद्भावश्च। क्रियामन्दपादयुक्तस्त्रियाम्।

**कुण्टक** त्रि० कुटि–ण्वुल्। स्थूले शब्दरत्ना०।

**कुण्ठ** त्रि० कुठि–वैकल्ये अच्।१क्रियासु मन्दे अकर्म्मण्ये अमरः "पूर्वं तपोवीर्य्यमहस्य कुण्ठम्" कुमा० "विभावसोस्तुल्यमकुण्ठमण्डलम्" (सुदर्शनम्) भा०आ०३६अ०। २मूर्खे मेदि०। कर्त्तरि क्त कुण्ठित तत्रार्थे। "हतस्य हन्तुः कुलिशं कुण्ठितारीव लक्ष्यते"कुमा०।

**कुण्ठक** त्रि० कुठि–ण्वुल्। १सङ्कुचिते क्रियामन्दे। २मूर्खे पु० शब्दमा० ३तत्प्रधानदेशभेदे पु० भूम्नि। "मालवा वल्लवा श्चैव तथैवापरवल्लवाः। कुलिन्दाः कालकाश्चैव कुण्ठकाः करटास्तथा" भा०भी० ६ जनपदकथने।

**कुण्ड** न०कुण्ड्यते रच्यते जलं वह्निर्वाऽत्र कुडि–रक्षणे आधारे–अच् णिलोपः। जलाधारे वृत्ताकारे १पात्रभेदे(कुण्डा) "भुवं कोष्णेन कुण्डोध्नी" रघुः "अतूसरका कुण्डप्रतिरूपाश्मसाः" कात्या० श्रौ०२४,४,४, "अतूसरकाः अप्रत्नकाः कुण्डप्रतिरूपा वृत्ताकाराः"कर्कः। २देवादिखातजलाशये अगस्त्यकुण्डं सप्तर्षिकुण्डं सोमकुण्डम् ३कमण्डलौ स्त्री गौरा० ङीष् मेदि०। होमार्थमग्न्याधारे ४स्थानभेदे। तल्लक्षणादिकं हेमा० दा० ख० दर्शितं तथा।

"भविष्यत्पुराणे "वेदिपादान्तरं त्यक्त्वा कुण्डानि नव पञ्च

वा ; वेदास्राण्येव तानि स्युर्व्वर्त्तुलान्यथ वा क्वचित् । वेदास्राणि, चतुरस्राणि । आम्नायरहस्ये "कुण्डानि चतुरस्राणि वृत्तनालाकृतीनि वा । नव पञ्चाथ वा चैकं कर्त्तव्यं लक्षणान्वितम् । नवकुण्डविधाने तु दिक्षु कुण्डाष्टके स्थिते । नवमं कारयेत् कुण्डं पूर्व्वैशानदिगन्तरे । विधाने पञ्च कुण्डानामीशाने पञ्चमं भवेत्" । ज्ञानरत्नावल्याम् "दिक्षु वेदास्रवृत्तानि पञ्चमं त्वीशगोचरे" । नारदीयेऽपि "यत्रोपदिश्यते कुण्डचतुष्कन्तत्र कर्म्मणि । वेदास्रमर्द्धचन्द्रञ्च वृत्तं पद्मनिभं तथा । कुर्य्यात् कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः । कुण्डवेद्यन्तरञ्चैव सपादकरसम्मितम् । पीठवद्वन्तु यत्कुण्डं सुप्रमाणं सुगर्त्तकम्" । बह्वृचपरिशिष्टे "भुक्तौ मुक्तौ तथा पुष्टौ जीर्णोद्धारे विशेषतः । सदा होमे तथा शान्तौ वृत्तं वरुणदिग्गतम्" । कामिके तु तत्तद्दिक्षु तत्तत्फलार्थं कुण्डोक्तिर्यथा "ऐन्द्र्यां—स्तम्भे चतुष्कोणमग्नौ भागे भगाकृति । चन्द्रार्द्धं मारणे याम्ये, नैरृते हि त्रिकोणकम् । वारुण्यां शान्तिके वृत्तं, षडस्रमुच्चाटनेऽनिले । उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्रमुक्तिदम्" । सर्व्वेषु चैतेषु होमानुसारेण हस्तादिमानं क्षेत्रफलसुपकल्पनीयम् । तदुक्तं भविष्यपुराणे "मुष्टिमानं शतार्द्धे तु शते चारत्निमात्रिकम् । सहस्रे त्वथ होतव्ये कुर्य्यात्कुण्डं करात्मकम् । द्विहस्तमयुते तच्च लक्षहोमे चतुःकरम् । अष्टहस्तात्मकं कुण्डं कोटिहोमेषु नाधिकम्" । मुष्टिमानमिति, बद्धमुष्टिहस्तमात्रमित्यर्थः । इदानीं चतुरस्रादिकुण्डानामुद्धारक्रमोऽभिधीयते । चतुरस्रं तावदाह विश्वकर्म्मा "कृत्वा प्राक् सूत्रमर्द्धाङ्क्‌दक्षिणोत्तरमत्स्ययोः । न्यस्य सूत्रं ततः कोणैरङ्कितैश्चतुरस्रकम्" । पूर्व्वं शङ्कुनाप्युपायेन प्राचीं निश्चित्य प्राक्पश्चिमायातां रेखामालिख्य तामर्द्धभागे लाञ्छयित्वा दक्षिणोत्तरदिशोर्मत्स्यद्वयं कुर्य्यात् सूत्रोपरि सूत्रान्तरनिपातनात् स्वस्तिकमध्याकृतिः शिल्पशास्त्रेषु मत्स्य इत्युच्यते । मत्स्यद्वयनिष्पत्तिश्चात्रैवं कार्य्या । पूर्व्वोक्तरेखापरिमितस्य सूत्रस्यादिं तस्या एव रेखाया मूले निधाय तत्सूत्रान्तरं परिभ्राम्य वृत्तं रचयेत् तस्या एव रेखाया अपरप्रान्ते तस्यैव सूत्रस्यादिं निधाय तत्सूत्रान्तं परिभ्राम्य द्वितीयान्तं कुर्य्यात् एवं वृत्तद्वये कृते दक्षिणोत्तरदिशोर्मत्स्यद्वयं निष्पद्यते अथ मत्स्यद्वये पूर्व्वोक्तरेखालाञ्छने चैकं सूत्रं निधाय दक्षिणोत्तरायतां रेखां लिखेत् । एवं दिक्षु साधितासु विदिक्साधनार्थं कोणान् लाञ्छयेत् । तत्रायं प्रकारः—पूर्व्वनिष्पन्नरेखाप्रान्तचतुष्टयस्य प्रत्येकं पार्श्वद्वये चिकीर्षितपरिमाणस्यार्द्धमर्द्धं निधाय तत्सन्धौ कोणलाञ्छनानि कुर्य्यात् ततः कोणलाञ्छनेषु सूत्रचतुष्टयनिपातनात् पूर्व्वदिक्षु दङ्मुखयोनिकं चतुरस्रं कुण्डं कुर्य्यात् । योन्याकारादीनामुद्धारश्चतुरस्रप्रकृतिकस्तु कामिकशास्त्रात् "पञ्चमांशं पुरोन्यस्य मध्ये वेदांशमानतः । भ्रमादश्वत्थपत्राभं कुण्डमाग्नेयमुच्यते" । क्षेत्रस्य पञ्चमभागं पुरःप्राच्यां दिशि विन्यस्य मध्ये कोणसूत्रस्येति शेषः । वेदांशः, तुरीयांशः । भ्रमात्, सूत्रान्तपरिभ्रमणेन अश्वत्थपत्राकारं कुण्डमाग्नेयदिशि कुर्य्यादिति । तत्रायं निर्म्माणप्रकारः पूर्व्वोक्तन्यायेन समचतुरस्रीकृतस्य क्षेत्रस्य पश्चिमरेखामध्यात् पूर्व्वरेखामध्यभेदिनीं क्षेत्रसूत्रपञ्चमांशाधिकां गर्भरेखामालिख्य नैरृत्यदेशे कोणसूत्रतुरीयांशे लाञ्छयित्वा तल्लाञ्छनोपरि विन्यस्तादेः सूत्रस्य पूर्व्वोक्तगर्भरेखामूलविन्यस्तं प्रान्तं परिभ्राम्य बहिर्वृत्तार्द्धं निष्पाद्य वायव्यकोणेऽप्येवमेव वृत्तार्द्धं रचयेत् । ततो गर्भरेखाप्रान्तात् वृत्तद्वयप्रान्तस्पर्शि सूत्रद्वयं निपात्य पिप्पलपत्राकारमाग्नेयदिश्युदङ्मुखयोनिकं योनिकुण्डं विदध्यात् । "चतुरस्रे यष्टभक्ते त्यक्त्वाद्यन्तौ तदंशकौ । मध्यसप्तांशमाने तु कुण्डं खण्डेन्दुवत् क्रमात्" । चतुरस्रे क्षेत्रे यष्टैर्नवभिर्विभक्ते आद्यन्तौ त्यक्त्वा अवशिष्टसप्तमांशमानेन सूत्रभ्रामणात् खण्डेन्दुसदृशं कुण्डं कुर्य्यात् । अत्रैवं कृतिः—चतुरस्रं क्षेत्रं नवधा विभज्य तत्र प्रथमोऽन्तिमश्चेति भागद्वयं परित्यज्य अवशिष्टसप्तभागादिमरेखाभेददेशे सूत्रादिं निधाय तत्रैव भागसप्तकस्यान्तिमरेखाभेददेशे सूत्रान्तं निवेश्य तत्सूत्रपरिभ्रामणेन प्रथमरेखातुल्यं विश्रान्तप्रान्तवृत्तार्द्धं विरचयेत् । अथ प्रथमरेखाप्रान्तद्वयमपि वृत्तार्द्धे संयोज्य दक्षिणदिगवस्थितसुत्तराशाभिमुखयोनिकं कुण्डं चन्द्रखण्डं विदध्यात् । "त्रिभागवर्द्धितो मत्स्यैस्त्रिभिर्नैशाचरं भवेत्" । स्थानत्रये तृतीयांशत्रयं वृद्ध्या मत्स्यत्रयेण नैशाचरं नैरृत्यदिक्सम्बन्धि कुण्डं कुर्य्यात् । इहायं सम्प्रदायः । पूर्व्ववत्समचतुरस्रं क्षेत्रं निर्म्माय तत्तिरश्चीनपश्चिमरेखामध्यात् तिर्य्यगवस्थितपूर्व्वरेखामध्यभेदिनीं क्षेत्रसूत्रतृतीयभागाधिकां गर्भरेखामालिख्य पूर्व्वोक्तपश्चिमरेखाप्रान्तद्वयमपि क्षेत्रसूत्रतृतीयभागाधिकं कुर्य्यात् ततो गर्भरेखाप्रान्तात् पूर्व्वोक्तपश्चिमरेखाप्रान्तद्वयमपि क्षेत्रसूत्रतृतीयभागाधिकं कुर्य्यात् ।

ततो गर्भरेखाप्रान्तात् पूर्वोक्तपश्चिमरेखाप्रान्तद्वयस्पर्शिसूत्रद्वयं निपात्य नैर्ऋत्यदिशि पूर्वाभिमुखयोनिकं त्रिकोणं कुण्डमुत्पादयेत्। एवञ्च विधीयमाने स्थानत्रये तृतीयांशत्रयवृद्धिस्तत्रैव मत्स्यत्रयमपि निष्पद्यत इति। "कर्म्मार्द्धाष्टांशसंन्यासाद्वृत्तं कुण्डमिहोदितम्। कर्म्मसूत्रार्द्धस्य योऽष्टमांशस्तस्य संन्यासात् सम्यक् न्यासात् वृत्तं कुण्डं स्यादिति। अत्रैवं रचनाप्रकारः चतुरस्रे क्षेत्रे कोणात् कोणान्तरगामिनः सूत्रस्यार्द्धं कोणार्द्धशब्दवाच्यमष्टधा विभज्य यावानष्टमो भागस्तावन्तं भागं चतुर्द्दिक्षु बहिर्विन्यसेत्। ततः क्षेत्रगर्भदेशे सूत्रादिं निधाय वहिःस्थिताष्टमभागविन्यस्तं तस्यैव सूत्रस्य प्रान्तं सर्व्वतः परिभ्राम्य पश्चिमदिशि पूर्वाभिमुखयोनिकं वृत्तकुण्डं कुर्य्यात्।"षड्भागवृद्धितो मत्स्यैश्चतुर्भिः स्यात् षडस्रकम्" क्षेत्रपार्श्वयोः प्रत्येकं षष्ठभागवृद्धिं कृत्वा अवशिष्टदिशोर्मत्स्यचतुष्टयमुत्पाद्य सूत्रषट्कपातात् षडस्रकुण्डनिष्पत्तिरिति। अत्रैवं सम्प्रदायः—समचतुरस्रं क्षेत्रं षोढ़ा विभज्य यावान् षष्ठोभागस्तावता मानेन क्षेत्रस्य दक्षिणोत्तरपार्श्वे समन्ताद्वर्द्धयित्वा तदेव क्षेत्रमायतचतुरस्रं सम्पादयेत्। अथानन्तरोक्तपार्श्वद्वयरेखास्पर्शिनीं दक्षिणोत्तरायतां गर्भरेखां रचयेत्। ततः क्षेत्रमध्यादुत्तरपार्श्वरेखामध्याच्च पूर्वोक्तगर्भरेखार्द्धपरिमितमेकैकं सूत्रं निपात्य पूर्वेशानदिशोरन्तराले मत्स्यमुत्पाद्य तेनैव प्रकारेण पश्चिमवायव्ययोरन्तराले मत्स्यं कुर्य्यात्। अथ भूयोऽपि क्षेत्रमध्याद्दक्षिणपार्श्वरेखामध्याच्च प्रागुक्तगर्भरेखाप्रान्तद्वयात् लाञ्छनचतुष्टयस्पर्शिसूत्रचतुष्टयं निपातयेत्। एवं लाञ्छनानन्तरालस्थितसूत्रद्वयेन सह सूत्रषट्कयोगाद्वायव्यदिशि प्राङ्मुखयोनिकं षट्कोणकुण्डं कुर्य्यात्।"चतुरस्राष्टभागेन कर्णिका स्याद्विभागशः। तद्बहिस्त्वेकभागेन केशराणि प्रकल्पयेत्। तृतीये दलमध्यानि तुरीये दलकोटयः। भ्रामणात् पद्मदलं स्याद्दलाग्रं दर्शयेद्बहिः"। चतुरस्रस्य अष्टधा विभक्तस्य मध्ये अष्टमभागेन कर्णिका स्यात् कर्णिकाया बहिः परिधिस्थे द्वितीये अष्टमभागे विन्यासे केशराणि स्युः। केशराद्बहिः परिधिस्थिते तृतीये अष्टमभागे विन्यासे दलमध्यानि कल्पयित्वा चतुर्थे दलकोटीं विधाय चतुरस्राद्बहिर्द्दलाग्राणि दर्शयेत्। अत्राप्यष्टमभागेनेति सम्बध्यते। विभागशः विभागे विभागे सर्व्वदिग्भागेष्वित्यर्थः। भ्रामणात्,-सूत्रस्येति शेषः एतच्च पद्मदलं सर्व्वत्र योजनीयम्।

अयमर्थः—चतुरस्रं क्षेत्रं प्रागग्राभिरुदगग्राभिश्च रेखाभिरष्टधा विभज्य मध्यदेशे लाञ्छयित्वा क्षेत्राद्बहिश्चतुर्द्दिक्षु समन्तादपरमष्टभागं विन्यसेत् सत्येवं लाञ्छनात् परितः प्रतिदिशं पञ्चपञ्चाष्टमभागावधिरेखा भवन्ति। ततः पूर्वोक्तलाञ्छनोपरि विन्यस्तादेस्तत्तद्रेखाविन्यस्तप्रान्तस्य च सूत्रस्य परिभ्रामणात् पञ्च वृत्तानि सम्पाद्य वृत्तातिरिक्तरेखाः परिमार्ज्जयेत्। ततः प्रथमे वृत्ते कर्णिका द्वितीये केशराणि तृतीये दलमध्यानि चतुर्थे दलकोटयः पञ्चमे दलाग्राणीति कृत्वा अष्टदलं पूर्वाभिमुखयोनिकं पद्मकुण्डमुत्तरदिशि कुर्य्यात्। इदानीमेतदेव कुण्डं प्रकारान्तरेणोच्यते "वृत्तकुण्डं समं चान्यदथवान्यप्रकारतः। वृत्तकुण्डं पुरा कृत्वा चतुर्द्धाऽमेखलं भजेत्। उत्सेधञ्च तथा कृत्वा कर्णिका सार्द्धका भवेत्। अवशिष्टं दलं वेददलमष्टदलन्तु वा" यथा प्रतीच्यां दिशि वृत्तकुण्डमभिहितमिहापि तथैव कृत्वा तन्मध्ये यथाविभागं पद्मकुण्डं कुर्य्यादिति। अथवेत्यादिना तृतीयः प्रकार उच्यते पूर्वं वृत्तकुण्डमेव आमेखलं मेखलमवधीकृत्य अन्तश्चतुर्द्धा भजेत्। वृत्तकुण्डमध्ये अन्यस्यापि समभागस्य वृत्तत्रयस्य करणाच्चतुर्थक्षेत्रविभागः कार्य्य इत्यर्थः। ततः क्षेत्रमध्ये सार्द्धभागेन विस्तृता कर्णिका विधेया। उत्सेधञ्च तथा कृत्येति, कर्णिकाया उच्छ्रयमपि सार्द्धभागेन कृत्वेत्यर्थः। अवशिष्टेन सार्द्धभागद्वयेन केसरव्यतिरिक्तानि दलान्येव कुर्य्यात्। एवञ्चतुर्द्दलमष्टदलं वा पद्मकुण्डं कुर्य्यात्। "क्षेत्रात् द्वादशमं भागं चतुर्द्दिक्षु तदन्तरे। विन्यस्य तत्प्रमाणेन तुर्य्यांशमपरं नयेत्। तस्य कर्णप्रमाणेन तद्भुजास्वपि लाञ्छयेत्। तत्राष्टसूत्रसंयोगादष्टास्रं कुण्डमुच्यते"। द्वादशधा विभक्तस्य क्षेत्रस्य यावान् द्वादशो भागस्तावन्तं भागं चतुर्द्दिक्षु विन्यस्य, तदन्तरे, तस्य क्षेत्रस्य अन्तरे बहिःप्रदेशे "अन्तरं बहिर्योगोपसंव्यानयोरिति" ज्ञापकादन्तरशब्दोऽत्र बहिर्वचनः। तत्प्रमाणेनेति तस्य वहिर्विन्यस्तद्वादशभागस्य परिमाणेन अपरं द्वितीयं तुर्य्यांशं चतुरस्रं नयेत् प्रणयेत् कुर्य्यात् इति यावत्। तुर्य्यांशमिति, स्वार्थिकोऽत्र पूरणप्रत्ययः। तस्य कर्णप्रमाणेनेति। कोणात् कोणान्तरस्पर्शिसूत्रं शिल्पशास्त्रेषु कर्ण इति प्रसिद्धम्। इह तु क्षेत्रगर्भादारभ्य चतुष्कोणगामिनः पृथगेव चत्वारः कर्णा इत्यभिप्रायेण कर्णार्द्धमपि कर्णशब्देनोक्तम्। तेनायमर्थः। बाह्यस्थितचतुर-

स्य गर्भदेशावधियोगान् कर्णस्तावता मानेन तद्भुजासु तस्य कर्णस्य भुजासु लाञ्छयेत् । अत्र बाह्यचतुरस्र सूत्राण्येव कर्णोभयपार्श्ववर्त्तीनि निजभुजाकारतया भुजाशब्देनोच्यन्ते । अयमाशयः—बाह्यचतुरस्रसम्बन्धिन्येकस्मिन् कोणे कर्णार्द्धपरिमितस्य सूत्रस्यादिं विधाय तत्सूत्रं चतुरस्ररेखोपरि प्रसार्य्य सूत्रप्रान्ते लाञ्छयेत् । एवं प्रतिकोणं सूत्रादिं निधाय प्रातिलोम्यानुलोम्येन सूत्र प्रसारणात् तत्तत्प्रान्ते लाञ्छयन् प्रतिदिशं लाञ्छनद्वयकरणाद्दिक्चतुष्टयेन लाञ्छनेषु सूत्राष्टकनिपातनादष्टास्रकुण्डं कुर्य्यादिति । अयमिह निर्म्माणप्रकारः—पूर्ववच्चतुरस्रीकृतस्य क्षेत्रस्य बहिश्चतुर्द्दिक्षु द्वादशमं भागं विन्यस्य तत्परिमाणेन अपरं चतुरस्रं कुर्य्यात् । अथ तदीयकर्णार्द्धपरिमितस्य सूत्रस्य प्रतिकोणमादिं विधाय चतुरस्ररेखोपरि प्रसारणात् तत्तत्प्रान्तेषु लाञ्छयन् दिक्चतुष्टयेन लाञ्छनाष्टकं कृत्वा तल्लाञ्छनोपरि सूत्राष्टकनिपातनादैशानदिशि पूर्व्वाभिमुखयोनिकमष्टास्रकुण्डं कुर्य्यात् । इदानीं दिङ्नियममन्तरेणैव तत्तत्कर्म्मोपयोगितया विद्यानललितोपदिष्टं कुण्डमुच्यते । "सप्तमांशंबहिर्न्यस्य कृत्वा वृत्तमिह भ्रमात् । चतुर्थभागन्यूनेन पूर्व्वक्षेत्रेण सम्मितैः । धनुर्ज्याकृतिभिः पञ्चसूत्रैः पञ्चास्रकुण्डकम् । होमे प्रशस्यते भूतशाकिनीग्रहनिग्रहे" । चतुरस्रस्य क्षेत्रस्य बहिःप्रदेशे चतुर्द्दिक्षु क्षेत्रसप्तमांशं विन्यसेत् । ततः क्षेत्रगर्भविन्यस्तादेः बाह्यस्थितसप्तमांशोपरि विन्यस्तप्रान्तस्य सूत्रस्य सर्व्वतः परिभ्रमणात् वृत्तं निष्पादयेत् । पूर्व्वक्षेत्रेणेति, बहिःस्थितवृत्तापेक्षया, पूर्व्वक्षेत्रशब्देन आन्तरश्चतुरस्रक्षेत्रमेवोच्यते । ततश्चायमर्थः आन्तरचतुरस्रस्य यद्दैर्घ्यं ततः स्वकीयचतुर्थभागन्यूनं कृत्वा यन्मानं भवति तावता मानेन परिमितं सूत्रं निधाय तादृशानि पञ्च सूत्राणि बाह्यवृत्तस्यान्तर्विन्यस्य सूत्रसन्धौ कोणं कुर्य्यात् । तानि च पञ्च सूत्राणि प्रत्येकं प्रान्तद्वयसंस्पृष्टवत्त्वात् धनुर्ज्याकृतीनि धनुरारूढ़मौर्वीसदृशानि स्युः । ततः पञ्चसूत्रातिरिक्तं सर्व्वं परित्यज्य पञ्चास्रकुण्डं रचयेत् । तच्च ग्रहनिग्रहादिहोमे प्रयोज्यम् । "दशमांशं बहिर्न्यस्य कृत्वा वृत्तमिह भ्रमात् । भक्त्वा क्षेत्रं चतुःषष्ठ्या तद्भागैः त्रिंशता त्रिभिः । समानसूत्रं तद्वृत्तात् सप्तास्रं सूत्रसङ्गात् । अभिचारोपशान्त्यर्थं होमकुण्डमिति स्मृतम्" । इहापि चतुरस्रस्य क्षेत्रस्य दशमभागं चतुर्द्दिक्षु बहिर्विन्यस्य पूर्व्ववत् वृत्तं कुर्य्यात् । अथ पूर्व्वक्षेत्रं चतुःषष्ट्या विभज्य तेषां चतुःषष्टिसंख्यानां भागानां मध्ये त्रयस्त्रिंशत्संख्यैर्भागैः परिमितं सूत्रं कृत्वा तादृशानि सप्त सूत्राणि वृत्तस्यान्ते विन्यस्य सप्तास्रं कुण्डं कुर्य्यात् । अत्रापि सूत्राणां धनुर्ज्याकारत्वं सूत्रसन्धौ कोणनिर्म्माणं सप्तसूत्रातिरिक्तपरिमार्ज्जनं चेति पूर्व्ववदेव वेदितव्यम् । एतच्च कुण्डमभिचारदोषोपशमनहोमेषु प्रयोज्यम् । आह विश्वकर्म्मा "यावन्मात्रः कुण्डविस्तार उक्तस्तावत् खातस्यापि मानं प्रदिष्टम् । यादृक् कुण्डस्याकृतिः संप्रदिष्टा तादृग्रूपं मेखलाया विदध्यात् । स्थापने सर्व्वकुण्डानां ध्वजायः सर्व्वसिद्धिदः" । सर्व्वेषु चैतेषु प्रोक्तमानाद्द्व्यङ्गुलत्र्यादि न्यूनमतिरिक्तं वा विधाय ध्वजायः साधनीयः । विस्तारे दैर्घ्यगुणिते अष्टभिर्विभक्ते यद्येकः परिशिष्यते तदा ध्वजाय इति । "खातेऽधिके भवेद्रोगो हीने धेनुधनक्षयः । वक्रकुण्डे तु सन्तापो मरणं भिन्नमेखले । मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः । भार्य्याविनाशनं प्रोक्तं कुण्डे योन्या विना कृते । अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्ज्जितम्" । खातहीने भवेद्रोग इत्यादिना खातादिलक्षणरहितस्य कुण्डस्यानिष्टफलत्वदर्शनादिदानीं खातादीनामेव लक्षणमभिधीयते ; तद्यथा मोहचूडोत्तरशास्त्रे "चतुर्व्विंशतिमं भागमङ्गुलं परिकल्प्य तु । चतुर्व्विंशाङ्गुलं हस्तं कुण्डानां परिकल्पयेत् । हस्तमात्रं खनेत्तिर्य्यगूर्द्ध्वं मेखलया सह" । मुष्टिमानं शताद्धे त्वित्यादिना प्रसिद्धेनैव हस्ताङ्गुलव्यवहारेण होमानुसारात् कुण्डमानमुक्तम् । इयन्तु खातादिमानकथनार्थं परिभाषा क्रियते । चिकीर्षितकुण्डक्षेत्रं चतुर्व्विंशतिधा विभज्य यावान् चतुर्व्विंशतिमो भागस्तावत्परिमाणमङ्गुलं परिकल्प्य चतुर्व्विंशत्या अङ्गुलैर्हस्तं परिकल्पयेत् । ततस्तेन हस्तेन परिमितं सर्व्वकुण्डानां तिर्य्यक्खातमानं विधाय मेखलासहितस्य खातस्य तेनैव हस्तेन परिमितमूर्द्ध्वमानं विदध्यात् । प्रथमे उक्तस्य "कुण्डं जिनाङ्गुलम् । तिर्य्यगूर्द्ध्वं मेखलया सह" जिनाङ्गुलं चतुर्व्विंशत्यङ्गुलम् । प्रतिष्ठासारसंग्रहेऽपि "पञ्च—द्विमेखलोच्छ्रायां ज्ञात्वा शेषमधः खनेत्" । विश्वकर्म्माप्युक्तम् "व्यासात् खातः करः प्रोक्तो निम्नस्त्रिव्यङ्गुलेन तु" । त्र्यङ्गुलानि—षड्विंशत्यङ्गुलानि खातस्य निम्नत्वम् । "उन्नता सा नवाङ्गुलैरिति,तत्र मध्यस्थान्मेखलान्तवर्त्ते नवाङ्गुलं प्रथममेखलयोत्सेध इत्युभयोस्तुल्यवि-

श्वयङ्गुलत्वम्। कण्ठमानमुक्तं कालोत्तरे “खाताद्वाह्योऽङ्गुलः कण्ठः सर्व्वकुण्डेष्वयं विधिः”। खातमेखलयोरन्तराले अङ्गुलमानेन कण्ठमोष्ठापरपर्य्यायं कुर्य्यात्। सारसङ्ग्रहे “खाताद्वाह्याङ्गुलः कण्ठस्तद्बाह्ये मेखला क्रमात्। मेखलालक्षणमुक्तं कामिके” “क्षेत्रार्कांशेन तस्यौष्ठः स्यात्तद्वेदर्त्तुभागतः। मेखलापृथुतोच्छ्रायः कुण्डाकारा तु मेखला। सर्व्वेषान्तु प्रकर्त्तव्या मेखलैकात्र लाघवात्”। क्षेत्रस्य अर्कांशेन—द्वादशांशेन कुण्डस्यौष्ठः कण्ठशब्दवाच्यः स्यात् तद्वेदभागतः कुण्डचतुर्थांशतो मेखलायाः पृथुता विस्तारः। तथा ऋतुभागतः षष्ठभागेन मेखलोच्छ्रायः कार्य्यः। पिङ्गलामतेऽपि “खातादेकाङ्गुलं त्यक्त्वा मेखलानां स्थितिर्भवेत्। मेखलैकाथवा तिस्रो भूतसंख्याथवा प्रिये”। भूतसंख्याः—पञ्चसंख्याः। उक्तञ्च प्रथमे “कण्ठाङ्गुलाद्बहिः कार्य्या मेखलैका षडङ्गुला। चतुस्त्र्यङ्गुला यद्वा तिस्रः सर्व्वत्र शोभनाः”। यदा एका मेखला तदा सा विस्तारोत्सेधाभ्यां षड़ङ्गुला विधेया “एका षड़ङ्गुलोत्सेधविस्तारा मेखला मतेति” पिङ्गलोक्तेः। यदा तु मेखलात्रयपक्षस्तदा क्रमेण चतुस्त्रिद्व्यङ्गुलमानाः कर्त्तव्याः। मोहचूड़ोत्तरे “मेखलात्रितयं कार्य्यं कोणरामयमाङ्गुलैः। कोणाः—चत्वारः। रामाः—त्रयः। यमौ—द्वौ। तत्र सर्व्वान्तिमा, द्व्यङ्गुला। मध्यस्था त्र्यङ्गुलाः। कुण्डकण्ठसन्निहिता चतुरङ्गुला इति। सत्येवं प्रथममेखलायाः कुण्डकण्ठादारभ्य नवाङ्गुल उत्सेधः स्यात्। लक्षणसंग्रहेऽपि “प्रथमाष्टाङ्गुला व्यासादुन्नता सा नवाङ्गुलैः। मध्या तु त्र्यङ्गुला बाह्ये तृतीया तु यमाङ्गुला। मेखलाः पञ्च वा कार्य्याः षट्पञ्चाब्धित्रिपक्षकैः” प्रथमा कुण्डसन्निहिता आन्तरोत्सेधनवाङ्गुला बाह्ये तु चतुरङ्गुलैव। अभ्राङ्गुला—चतुरङ्गुला। अब्धयः—चत्वारः। पक्षौ—द्वौ। योनिलक्षणमुक्तं स्वायम्भुवे “मेखलामध्यतो योनिः कुण्डार्द्धा त्र्यंशविस्तृता। अङ्गुष्ठमानोष्ठकण्ठा कार्य्याश्वत्थदलाकृतिः। प्रागग्नियाम्यकुण्डानां प्रोक्ता योनिरुदङ्मुखा। पूर्व्वमुखाः स्मृताः-शेषा यथाशोभं समन्विताः। मेखलाया गर्भदेशे कुण्डार्द्धदीर्घा कुण्डतृतीयांशविस्तृता योनिःकार्य्या। अत्रौष्ठशब्देन योन्यग्रमुच्यते। कण्ठशब्देन च योनिमेखला अङ्गुष्ठशब्दः, अङ्गुलपर्य्यायः। एकाङ्गुलपरिमाणेन योनेरग्रं मेखलाञ्च कुर्य्यादित्यर्थः “विस्तारोऽष्टाङ्गुलो योनेरग्रमङ्गुलसंमितमिति” पिङ्गलोक्तेः। नारदीये कुण्डत्र्यंशप्रविस्तारा योनिरुच्छ्रयताङ्गुलम्। कुण्डार्द्धेन तु दीर्घा स्यात् कुण्डोष्ठी बोधिपत्रवत्”। कुण्डोष्ठीति यथा कुण्डे द्वादशांशेन ओष्ठो विहित एवं योनेरपि द्वादशभागेन ओष्ठः कार्य्य इत्यर्थः; तथा कुण्डे प्रविष्टओष्ठो यस्या इति। बोधिपत्रम्. अश्वत्थपत्रम्। त्रैलोक्यसारे “दीर्घात् सूर्य्याङ्गुला नाभिस्त्र्यंशोना विस्तरेण तु। एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाभ्यन्तरे तथा। कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता। अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यधृतिस्तथा। दक्षस्था पूर्व्वयाम्येषु तु वामस्था पश्चिमोत्तरे। नवमस्यापि कुण्डस्य योनिर्द्दक्षदलस्थिता”। सूर्य्याङ्गुला—द्वादशाङ्गुला। त्र्यंशोनेति—दैर्घ्यतृतीयांशन्यूनविस्तारा। एकेनाङ्गुलेनोच्छ्रिता तथा, एकेनाङ्गुलेन कुण्डमध्ये प्रविष्टा। कुम्भद्वयसमायुक्तेति—पूर्व्वोक्ताग्नेयकुण्डस्य तुल्याकृतेर्योनेर्मूलदेशस्थितं वृत्तद्वयमेव गजकुम्भाकृतित्वात् कुम्भशब्देनोक्तम्। तेनात्र कुण्डस्थलाकृतिर्घटद्वयं मृत्पिण्डद्वयं वा स्थाप्यमिति तद्व्याख्या। अङ्गुष्ठमेखलेति, एकाङ्गुलमानया मेखलया परिवेष्टितेत्यर्थः! मध्ये त्विति, यथा स्रुचि घृतधारणया बिलं क्रियते तथा योनिमध्येऽपि बिलं कर्त्तव्यमित्यभिप्रायः। दक्षस्थेति, पूर्व्वाग्नेययाम्यकुण्डेषु दक्षिणभागे उत्तराभिमुखा योनिः कार्य्या नैर्ऋत्यादिकुण्डेषु तु पश्चिमभागे प्राङ्मुखा विधेया। नवम इति, अष्टदिक्षु कुण्डाष्टकं विधाय पूर्व्वेशानदिशोरन्तराले यन्नवमं कुण्डं चतुर्द्दिक्षु वा कुण्डचतुष्टयं कृत्वा ईशानदिशि यत् पञ्चमं कुण्डं तयोरपि दक्षिणभागेऽपि योनिः कार्य्येत्यर्थः”।

तत्र विशेषक्षेत्रफलादिकं कुण्डोद्द्योते उक्तं यथा “शारदातिलके “अष्टास्वाशासु रम्याणि कुण्डान्येतान्यनुक्रमात्। चतुरस्रं योनिरर्द्धचन्द्रं त्र्यस्रञ्च वर्त्तुलम्। षडस्रं पङ्कजाकारमष्टास्रन्तानि नामतः। आचार्य्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयोरिति” सिद्धान्तशेखरे “पुरन्दरेशयोर्मध्ये वृत्तं वा चतुरस्रकम्। तदाचार्य्यं विनिर्द्दिष्टमिति” अयमुत्तमः पक्षः। अथ पञ्चकुण्डेकैककुण्ड—निवेशनं यथा “आशेशकुण्डैरिह पञ्चकुण्डी चैकं यदा पश्चिमसोमशैवे। वेद्याः सपादेन करेण यद्वा पादान्तरेणाखिलकुण्डसंस्था” आशा—दिक् तत्र कुण्डानि चतुरस्रवृत्तार्द्धवृत्तपद्मानि ईशदिशि कुण्डं चतुरस्रं वृत्तं वा तैः पञ्चकुण्डीनिवेशनं स्यात् यदा चैकमेव कुण्डं

तदा पश्चिमे उत्तरे वा ऐशान्यां वा स्यात् परन्तु चतुरस्रं, वेद्याः सकाशात्तानि सर्व्वाणि कुण्डानि सपादेन करेण त्रिंशदङ्गुलान्तरेण वा पादान्तरेण द्वादशाङ्गुलान्तरेण वा वेदीपादान्तरेण वेद्याश्चतुर्थांशेन वा मण्डपे नवकोष्ठे कृतेऽष्टसु भागेषु मध्ये भवन्तीति व्याख्या” नारदीये “यत्नोपदिश्यते कुण्डचतुष्कं तत्र कर्म्मणि। वेदास्रमर्द्धचन्द्रं च वृत्तं पद्मनिभं तथा”। चतुःकुण्डपक्षे खातोनास्तीत्युक्तं नारदीये “पीठवृत्ते येन्तु कुण्डं सुप्रमाणमगर्त्तकम् कुर्यात् कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः। पञ्चमं कारयेत् कुण्डमीशदिग्गोचरं द्विजेति” अयं मध्यमः पक्षः। कैश्चित्पूर्व्वेशयोरिति लिखितन्तदसत् सोमशम्भौ “एवं वा शिवकाष्ठायां प्रतीच्यां कारयेद्ध्रुवः “आचार्य्यो ऽपि “अथवा दिशि कुण्डमुत्तरस्यां प्रविदध्याच्चतुरस्रमेकमेव” इयं कनिष्टः पक्षः। नवग्रहाधिकारे वशिष्ठसंहितायाम् “कुण्डान्तमध्यभागे तु कारयेच्चतुरस्रकम्। वितस्तिद्वयखातं तत् कुण्डं तु चतुरङ्गुलमिति। वेदीपादान्तरन्त्यक्ता कुण्डानि नव पञ्च वेति”। नारदीये “कुण्डयोरन्तरञ्चैव सपादकरसंमितमिति” कैश्चित्त्रयोदशाङ्गुलमप्यन्तरमुक्तं तत्र मण्डपानुसारेण व्यवस्था। अथ वर्णविशेषस्य स्त्रीणाञ्च कुण्डविशेषमाह “विप्राच्चतुरस्रं च वृत्तं च वृत्तार्द्धं त्र्यस्रं स्यादेकोणानि वापि। सर्व्वासाञ्च सदृपाणि चान्ये योन्याकाराण्यङ्गनानां मतानि “विप्रादारभ्य विप्रक्षत्रियविट्शूद्राणां चतुःकोणवृत्तवृत्तार्द्धत्रिकोणानि भवन्ति। अथवा विप्रादिवर्णेषु चतुःकोणानि वर्त्तुलानि वा सर्व्वाणि कुण्डानि भवन्ति यदा स्त्री यजमाना तदा योन्याकाराण्येव कुण्डानि भवन्तीति व्याख्या। शारदायाम् “विप्राणां चतुरस्रं स्याद्राज्ञां वर्त्तुलमिष्यते। वैश्यानामर्द्धचन्द्राभं शूद्राणां त्र्यस्रमीरितम् चतुरस्रन्तु सर्व्वेषां केचिदिच्छन्ति तान्त्रिकाः”। पञ्चरात्रे “सर्व्वाणि तानि वृत्तानि चतुरस्राणि वा सदा” सनत्कुमारः “स्त्रीणां कुण्डानि विप्रेन्द्र! योन्याकाराणि कारयेदिति”। अथ प्राच्यादिकुण्डेषु फलविशेषमाह “सिद्धिः पुत्राः शुभं शत्रुनाशः शान्तिर्मृतिच्छिदे वृष्टिमारोग्यमुक्तं हि फलं प्राच्यादिकुण्डके” प्राच्यादिकुण्डेष्वष्टस्वष्टौ फलानि स्युः। शारदायाम् “सर्व्वसिद्धिकरं कुण्डं चतुरस्रमुदाहृतम्। पुत्रप्रदं योनिकुण्डमर्द्धचन्द्राभं शुभप्रदम्। शत्रुक्षयकरन्त्र्यस्रं वर्त्तुलं शान्तिकर्म्मणि छेदमारणयोः षट्‌षडस्रं पद्मसन्निभम्। वृष्टिदं रोगशमनं कुण्डमष्टास्रमीरितम्”। कामिके तु फलान्तरम् “ऐन्द्र्यां स्तम्भे चतुःकोणमग्नौ भोगे भगाकृति। चन्द्रार्द्धं मारणे याम्ये, द्वेषे त्र्यस्रन्तु नैरृते। वारुण्यां शान्तिके वृत्तं, षडस्रन्त्र्युच्चाटनेऽनिले। उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्रि भुक्तिदमिति” अथ होमसंख्यया कुण्डमानम्। “शतार्द्धे रत्निः स्याच्छतपरिमितेऽरत्निविततः सहस्रे हस्तःस्यादयुतहवने हस्तयुगलम्। चतुर्हस्तं लक्षे प्रयुतहवने षट्‌करमितैः ८ ककुब्भिर्वा १०कोणैर्नृपकरमपि प्राहुरपरे” शतार्द्धमिते पञ्चाशन्मिते होमे रत्निमितं कुण्डं, शतमिते अरत्निमितं, सहस्रमिते होमे हस्तमितं, दशसहस्रमिते द्विहस्तं, लक्षहोमे चतुर्हस्तमितं दशलक्षहोमे षड्ढस्तमितं, कोटिहोमेऽष्टहस्तमितं दशहस्तमितं वा। केचित् षोडशकरमपि प्राहुरितिव्याख्या भविष्यपुराणे “मुष्टिमात्रं शतार्द्धे तु शते चारत्निमात्रकम्। सहस्रे त्वथ होतव्ये कुण्डं त्व्यात्करात्मकम्। द्विहस्तमयुते तच्च लक्षमाने चतुःकरम्। दशलक्षमिते होमे षट्‌करं सम्प्रचक्षते। अष्टहस्तात्मकं कुण्डं कोटिहोमेषु शाधिकम्” शारदायाम् “दशहस्तमितं कुण्डं कोटिहोमेऽपि शस्यते” स्कान्दे “कोटिहोमे चतुर्हस्तं चतुर्हस्तं समन्ततः। योनिवक्त्रद्वयोपेतन्तदप्याङुस्त्रिमेखलमिति” इदं प्रायःस्थूलद्रव्यविषयम् “अथ केषांचिन्मते कुण्डमानम् “लक्षैकवृद्ध्यादशलक्षकान्तङ्करैकवृद्ध्यादशहस्तकञ्च। कोट्यर्द्धदिग्विंशतिलक्षलक्षदले तु मौष्ठं लशानुहस्तम्”। लक्षस्यैकवृद्ध्या दशलक्षकाणामन्तं समाप्तिकृत्यादशलक्षकान्तम् एकलक्षमारभ्य लक्षवृद्ध्या दशलक्षपर्यन्तमित्यर्थः करस्य एकवृद्ध्यादशहस्तकम्पर्यादीत्यन्येत्यादशहस्तकम् एककरमारभ्य एककरवृद्ध्या दशहस्तं यावत्कुण्डं प्राहुरिति पूर्वेणान्वयः कोटेरर्द्धे पञ्चाशल्लक्षे दशविंशतिलक्षे लक्षदले पञ्चाशत्सहस्रे क्रमात् सप्तपञ्चषट्‌त्रिकरं कुण्डमिति व्याख्याः शारदायाम् “एकहस्तमितं कुण्डं लक्षहोमे विधीयते। लक्षाणां दशकं यावत्तावद्धस्तेन वर्द्धयेत्” सिद्धान्तशेखरे “लक्षार्द्धे त्रिकरं कुण्डं लक्षहोमे चतुःकरम्। कुण्डं पञ्चकरम्प्रोक्तं दशलक्षाहुतौ क्रमात्। षड्ढस्तं लक्षविंशत्यां, कोट्यर्द्धे सप्तहस्तकमिति”। इदमेव कुण्डमानङ्कामिकादिमतं सिद्धान्तशेखरशारदाहेमाद्रिप्रमुखैः प्राचीनैः राघवभट्टरामवाजपेयिकुण्डरत्नाकरकुण्डकौमुदीकारादिभिर्नवीनैश्च लिखितं कुत्रचिदन्यथापि कुण्डमानान्युक्तानि तानि तत्तत्प्रकरण-

यथात्तत्कर्मविशेषे द्रष्टव्यानि । अथैकहस्तादृशहस्तान्तं यावत्कुण्डेषु भुजकोटिमानम् "वेदाक्षीणि युगाग्नयःशशियुमान्यष्टाश्चयस्तोषवोऽष्टाक्षायङ्गिरसारसाङ्कमिता नेत्रषयोऽत्तखराः। अङ्गुल्यो,ऽथ यवाः खमभ्रमिषवः खं पञ्च-षट् सागराः सप्ताभ्रं मुनयस्त्रमी निगदिता वेदान्द्रो वाहवः" । एकहस्ते कुण्डे चतुर्विंशत्यङ्गुलान्यायामविस्तारौ, द्विहस्ते चतुस्त्रिंशदङ्गुलानि । इमानि पादोनत्रिचाचतुष्टयन्यूनानि अल्पान्तरत्वात् पूर्णान्येव धृतानि। त्रिहस्ते एकचत्वारिंशदङ्गुलानि । चतुर्हस्ते अष्टचत्वारिंशदङ्गुलानि । पञ्चहस्ते पञ्चयवाधिकानि त्रिपञ्चाशदङ्गुलानि । षड्ढस्ते त्रिपदोनैकोनषष्टिः, सप्तहस्ते सार्द्धत्रिषष्टिः। अष्टहस्ते यवोना सप्तषष्टिः । नवहस्ते द्विसप्ततिः दशहस्ते यवोना १षट्सप्ततिरिति षोडशहस्ते षण्णवतिः चतुर्भुजे कुण्डे भुजाउक्ता इति व्याख्या । अत्रोपपत्तिः एकहस्तस्य चतुर्विंशत्यङ्गुलात्मकस्य भुजकोटिघातः क्षेत्रफलं तच्च षट्सप्तत्यधिकपञ्चशती५७६ । एतत्पदमेकहस्तक्षेत्राङ्गुलानि चतुर्विंशतिः। एवं क्षेत्रफलस्य द्व्यादिगुणस्य मूलं चतुस्त्रिंशदाद्यङ्गुलानि भवन्ति । अथयोनिनिवेशनम् "कुण्डत्रयी दक्षिणयोनिरैन्द्र्याः सौम्याग्रका स्यादितराणि पञ्च । पश्चाद्गगानीन्द्रदिगग्रकाणि योनिर्न कोणे न च योनिकुण्डे" ऐन्द्र्याः प्राच्या आरभ्य कुण्डत्रयी चतुरस्रयोनिवृत्तार्द्धरूपा दक्षिणयोनिः स्यात् उत्तराग्रा अर्था होता उदङ्मुखः। इतराणि पञ्च कुण्डानि त्र्यस्रवृत्तषडस्रपद्माष्टास्राणि प्रत्यग्योनीनि प्रागग्राणि अर्था होता प्राङ्मुखः । नवममपि कुण्डं दक्षिणयोन्युदगग्रम् । योनिः कोणे योनिकुण्डे च न कार्येति व्याख्या। स्वायम्भुवे "प्रागग्नियाम्यकुण्डानां प्रोक्ता योनिरुदङ्मुखी । पूर्व्वमुखा स्थिताः शेषाः यथाशोभं व्यवस्थिताः"इति । त्रैलोक्यसागरे "नवमस्यापि कुण्डस्य योनिर्दक्षदले स्थितेति" अन्यत्र "नार्पयेत् कुण्डकोणेषु योनिं तान्तन्त्रवित्तमः" इति "योनिकुण्डे तथा योनिं,पद्मे नाभिं विवर्जयेदिति"। अथ सर्वेषां कुण्डानां प्रकृतिभूतं चतुरस्रमाह "दिग्व्यासतुर्य्यचिह्नं सपाशं सूत्रं शङ्कौ पश्चिमे पूर्व्वगेऽपि; दत्त्वाकर्षेत् कोणयोः पाशतुर्य्यं स्यादेवं वा वेदकोणे समानम्" । इष्टव्यासाद् द्विगुणितं व्यासं चतुर्थांशकृतचिह्नं सपाशं सूत्रं पूर्व्वपश्चिमस्थयोः शङ्क्वोर्दत्त्वा दक्षिणोत्तरसूत्रमध्ये यथामध्यचिह्नं भवति तथा कोणयोः पाशाच्चतुर्थांशे आकर्षेत् एवमन्यतोऽपि। एवंकृते समचतुरस्रं स्यात् इदमेव सर्वेषां कुण्डानां मूलमिति व्याख्या। उक्तं च "चतुरस्रमिदं प्रोक्तं सर्वकुण्डेषु कारणमिति" अत्र "समस्रुतौ तुल्यचतुर्भुजे च तथाऽऽयते तद्भुजकोटिघातः" क्षेत्रफलं षट्सप्तत्यधिकपञ्चशती ५७६ एतावदेव योन्यादिकुण्डेषु एकहस्तेषु यथा क्षेत्रफलं सम्पद्यते तथा यतितव्यमिति। अथ योनिकुण्डमाह "क्षेत्रे जिनांशे तु पुरःशरांशान् संवर्ध्य च स्वीयरदांश३२ युक्तान्। कर्णार्द्धमानेन लिखेन्दुखण्डे प्रत्यक्पुरोऽङ्काद्गुणतोभमाभम्" । चतुरस्रक्षेत्रे चतुर्विंशतिधा भक्ते सति पञ्चांशान् स्वीयद्वात्रिंशदंशयुक्तान् अग्रे संवर्द्ध्य ततश्चतुर्धा विभक्तस्य क्षेत्रस्य पश्चिमचतुरस्रद्वयमध्याङ्कात् कर्णसूत्रस्य चतुर्थांशेन प्रत्यक्पश्चिमभागे इन्दुखण्डे वृत्तार्द्धद्वयं विदन् । लिख । ततः पूर्वाङ्काद्दक्षिणोत्तरसंलग्नं वृत्तार्द्धं यावद्वीयमानगुणद्वयतो भगाकारं योनिकुण्डं स्यादिति व्याख्या । अथ क्षेत्रफलानयनम् अत्र क्षेत्रत्रयं पूर्व्वाङ्काद्दक्षिणोत्तरसूत्राग्रं यावद्वीयमानसूत्रद्वयं त्रिकोणमेकं, तथा दक्षिणोत्तरसूत्राग्रात्पूर्वापरसूत्रान्तं यावद्वीयमानसूत्रद्वयादपरं त्रिकोणम् उभयवृत्तार्द्धे मिलित्वा एकं वृत्तमिति तृतीयं, क्षेत्रत्रयफलयोगे पूर्णफलम् तत्र प्रथमस्य क्षेत्रफलं यथा अत्र लम्बः अङ्गुलानि १७ यवः१यूका२ । भूः२४ "लम्बेन निघ्नं कुमुखैक्यखण्डमिति" । अत्र मुखाभावाद्भूमध्यमेव लम्बेन गुणितं सञ्जातं प्रथमं क्षेत्रफलम् अङ्गुलानि२०५ यवाः ७ । अथापरस्य लम्बः १२ भूःसैव अत्रापि तयैव रीत्या क्षेत्रफलं १४४। अथ वृत्तार्द्धयोरेकं वृत्तं तत्फलं यथा तत्र वृत्तव्यासः१६,७,४,१"व्यासस्य वर्गे भनवाग्निनिघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते" इति व्यासवर्गः २८८ ०।०।२ । अयम्भनवाग्नि ३९२७ निघ्नः पञ्चसहस्र ५०००भक्तोजातं क्षेत्रफलं वृत्तस्य २२६।१ । ४ । ५। त्रयाणां योगे क्षेत्रफलं पूर्णं५७६।०। ४ । ५ । अत्र लिक्षा पञ्चकं यूकाचतुष्टयञ्चाधिकम् अल्पान्तरत्वाददोषः। ध्वजायसिद्धिश्चाप्यत्रोक्ता। "स्थापने सर्व्वकुण्डानां ध्वजायः सर्वसिद्धिदः। स्वांशोनाधिकं हीनं ह्रासवृद्धी न दूषयेत् । आयदोषविशुद्ध्यर्थं क्रियते शास्त्रकोविदैरिति" । एतत्क्षेत्रस्योत्तराग्रत्वात् उदीचीप्राचीवद्व्यवहर्त्तव्या एवमन्ययोरपि । पदार्थादर्शे "चतुर्विंशतिधा मध्यसूत्रं भक्त्वा पुरोन्यसेत्। पञ्चांशान् वैककस्य त्रीन्विंशांशान् कोणपादतः। वृत्तार्द्धे स्तो मध्यतिर्यक्सूत्रान्तश्च ततोऽर्पयेत् । पुरो वर्द्धितसूत्रान्तं, सूत्रे द्वे स्याद्भगाकृतिरिति"

"इमानि कुण्डानि कादिमञ्चविद्वांसीमनादरणीयानि। तानि वचनानि तु तदाकारत्वमात्रसम्पादकानि न क्षेत्रफलपूर्त्तिकराणि तत्र शिथिलीभूता भूरिति स्थूलमार्गेण योन्याद्याकारमात्रं प्रतिपाद्यते। योगस्थानाभिज्ञस्तेन चतुरस्रकुण्डं तण्डुलादिना पूरयित्वा तानेव तण्डुलान् योन्यादिकुण्डे धृत्वा तत्पूर्त्तौ तोष्टव्यमिति। अङ्गुलयवयूकालिक्षाः कृत्वा गोमूत्रिकारीत्या गणयित्वा अष्टभिर्भागे गृहीते फले उपर्य्युपरि च योज्यमाने फलाद्युत्पद्यते अंशसवर्णनादि कुण्डमात्रेष्विति ज्ञेयम्। वृत्तार्द्धकुण्डमाह "स्वयतांशयुतेषुभागहीन स्वधरित्रीमितकर्कटेन मध्यात्। कृतवृत्तदलेऽपतस्य जीवां विदधातीन्दुदलस्य साधु सिद्धौ"। स्वीयशतांशेन युतोय इषुभागः पञ्चमांशः अर्थात् क्षेत्रस्यैव, तेन हीना याशौ स्वभूमिः क्षेत्रलम्बितेन कर्कटेन सूत्रेण वा मध्याङ्कात् कृतं यद्वृत्तार्द्धं तस्मिन् पूर्वापरां रेखाञ्जीवारूपां वृत्तार्द्धस्य सिद्धौ साधु स्याद्यथा, तथा करोत विद्वानिति व्याख्या। अत्र क्षेत्रफलम् क्षेत्रस्य पञ्चांशोऽङ्गुलाद्यः ४। ६। ३। १। ५। तस्य शतांशोऽङ्गुलाद्यः ०।०। २। ०। ४। अनेनान्वितः पञ्चांशः ४। ६। ६। २। १ अनेनोना क्षेत्रभूमिः १९। १। १। ५। ७ एतद्व्यासार्द्धं द्विगुणं व्यासः २८। २।२।२।६। अत्रापि व्यासस्य वर्गः १४४४। ५। २। ५। ४। भनगाग्निनिघ्ने २९२७। पञ्चसहस्रभक्ते इत्यादि रीत्या क्षेत्रफलम् ११५२। २। २। ६। २। एतद्वृत्तस्य फलम् अस्यार्द्धं वृत्तार्द्धक्षेत्रफलम् ५७६। १।२। १ अत्रापि ध्वजायसिद्धिः। अथ त्र्यस्रवृत्तकुण्डमाह "वक्त्राग्रं पुरतो निधाय च पुनः श्रोण्योश्चतुर्थांशकश्चिह्नेषु त्रिषु सूत्रदानतइदं स्यात्त्र्यस्रि कष्टोज्झितम्। विश्वांशैः स्वजिनांशकेन सहितैः क्षेत्रे जिनांशे कृते व्यासार्द्धेन मितेन मण्डलमिदं स्याद्वृत्तसंज्ञं शुभम्" अत्र पश्चार्द्धं कुण्डं व्याख्यायते क्षेत्रस्य तृतीयांशमग्रतो निधाय ततउभयश्रोण्योश्चतुर्थांशं निधाय दक्षिणत उत्तरतश्च दत्त्वा त्रिचिह्नेषु सूत्रदानात् कष्टरहितं त्र्यस्रि जायते इति तृतीयांशोऽष्टाङ्गुलानि मध्यसूत्रे योजितानि जातोलम्बः पश्चिमभुज उभतश्चतुर्थांशः षडङ्गुलानि योजितानि जातानि भूः ३६ अत्र मुखाभावात् भूमेरर्द्धं कृतम् १८ इदं लम्बेनानेन निघ्नञ्जातं अत्र क्षेत्रफलम् ५७६ समभुजे क्षेत्रफलञ्च सिद्ध्यतीति कष्टोज्झितमित्युक्तम् किञ्चिद्भुजवैषम्यं न दोषाय अत्रापि ध्वजाय एवेति। अथोत्तरार्द्धेन वृत्तमाह क्षेत्रे चतुर्विंशतिभक्ते सति त्रयोदशांशैः सह चतुर्विंशत्यंशयुतैः मितेन व्यासार्द्धेन मण्डलं यद्वृत्तं तत् वृत्तसंज्ञं कुण्डं सुन्दरं स्यात्। अथ क्षेत्रफलानयनम् अत्र त्रयोदशानाञ्चतुर्विंशांशोऽङ्गुलाद्यः०४। २। ५। २। अनेन युतास्त्रयोदश १२। ४।२। ५। २। इदं व्यासार्द्धमेतद्द्विगुणं व्यासः २७। ०। ५। २। ४ अत्र०व्यासस्य वर्गेऽस्मिन् ७२९। ०।२। १। २ भनवाग्निनिघ्ने० पञ्चसहस्रभक्ते इत्यादिना क्षेत्रफलम् ५७६।०।६।०। अत्रापि ध्वजाय एवेति। अथ षडस्रमाह "भक्ते क्षेत्रे जिनांशैर्धृतिमितलवकैः स्वाग्निशैलांशयुक्तैर्व्यासार्द्धं मण्डले तन्मितधृतगुणके कर्कटे सेन्दुदिक्ते। षट्चिह्नेषु प्रदद्यात्समितगुणकानेकमेकन्तु हित्वा नाशे सर्व्वं शदोषामपि च धृतिकृते नेत्ररम्यं षडस्रम्"। क्षेत्रे चतुर्विंशतिधा विभक्ते सति अष्टादशांशैः स्वद्वासप्ततिमांशयुक्तैस्तावता व्यासार्द्धेन वृत्ते कृते सति तेनैव व्यासार्द्धेन मिते गुणके सूत्रे सति कर्कटे वा उत्तरदिक्तो धृते सति परावर्त्तनेन षट्चिह्नानि भवन्ति तेषु षट्सु चिह्नेषु षट् सूत्राणि एकान्तरेण परस्परलग्नानि दद्यात् ततः सन्धौ ये अङ्गदोषाः षड्भुजास्तेषां नाशे धृतिकृते मण्डलस्य विनाशे षडस्रं रमणीयञ्जायत इति व्याख्या अस्मिन् षडस्रे व्यासः २६। ४। ० अत्रोत्तराग्रं त्रिकोणमेकं महत् तद्भुजमानं त्रिदशाङ्गागुनभश्चन्द्रैर्वृत्तव्यासे समाहते। खखखाभ्राक्षि२००००संभक्ते लभ्यन्ते क्रमशोभुजाः" इति त्रयाणां भुजानां मानं २१। ४।२।० उत्तराग्रात् पूर्व्वापरभुजमध्यं यावन्नीयमानं सूत्रं, लब्धश्चतुर्थांशोव्यासएव २७।६।० भुजाः, एवं भूः मुखाभावङ्गूम्यर्द्धं १५।६।२।४ लम्बेन निघ्नमित्यादिना जातं क्षेत्रफलं ४२२।५।२ अथास्य महतस्त्रिभुजस्य त्रिष्वपि भुजेषु त्रीणि त्र्यस्राणि समान्येव लग्नानि भवन्ति तत्रैकस्य फलमानीय त्रिगुणं कृत्वा पूर्व्वफले योजितं स्यात् पूर्ण क्षेत्रफलं स्यात्। तत्र दक्षिणकोणाग्रात् पूर्वापरभुजमध्यंनीयमानं सूत्रं लम्बः ८।१।० अयं व्यासचतुर्थांशः भुजत्र्यंशोभूमिः १०।४।२।२ सर्वत्र त्र्यंश एव भुजसम्पातात् अत्र मुखाभावाद्भूमेरर्द्धं ५।२।१।१। इदं लम्बेन गुणितं क्षेत्रफलं ४८।०।४।२।१। जातं इदं त्रिगुणं त्र्यस्राणामपि फलं १४४।१।४।६।३। इदं पूर्व्वक्षेत्रफलेऽस्मिन् ४२२।५।२ योजितं ५७६।७।१।४।३। इदमकिञ्चिदधिकैकयूकाधिकं

सप्तयवाधिकं अल्पान्तरत्वाद्दोषः । अथ वा व्यासोयूकया न्यूनः कार्य्यः । ध्वजायसिद्धिश्च । अथ वा किमेतावता प्रयासेन लघुत्रिकोणं कुण्डं क्षेत्रं द्वादशांशः तत्क्षेत्रफलं स्यात् द्वादशगुणितं पूर्णं क्षेत्रफलम् । अथेदङ्कुण्डं स्वबुद्धिविलासमात्ररचितमिति नोपेक्षणीयं यतः षट्कोणता समभुजताफलं च सम्पद्यते एव "मानाधिक्ये भवेद्रोगोमानहीने दरिद्रता" इत्यादिदोषापत्तिरपि नास्ति । अथ वक्तव्यं प्राचीनकृतकुण्डविरुद्धत्वं किं दृश्यते च प्राचीनकृतकुण्डेषु परस्परविरुद्धता इदमेव कुण्डं रामवाजपेयिभिर्विषमभुजं स्वदृक्काकारं कृतं राघवभट्टादिभिः समभुजमेव कारितं लक्षणाचार्यादयोऽप्यन्यथैवोचुः तस्मादस्मदुक्ते नेत्ररमणीये समभुजे क्षेत्रफलसंवादिनि षट्-कोणे विद्वद्भिर्नादरो भाव्यमिति । अथ ये प्राचीनकृतावेवापक्षिपास्ते षान्तोषायापि समभुजमाह "अथ वा जिनभक्तकुण्डमानान्तिविभागैः खखभूपभागहीनैः । मितकर्कटकोद्भवे तु वृत्ते विधुदिक्षु समषड्भुजैः षडस्रम्" अथ वा चतुर्विंशतिभक्ते कुण्डमाने सति स्वीयषष्ट्यधिकशतभागेन हीनैः पञ्चदशभागैर्मितोयः कर्कटस्तदुद्भवे वृत्ते उत्तरदिक्तः सव्यागात् समैः षड्भिर्भुजैर्दत्तैः परस्परलग्नैः षडस्रं वृत्तमार्जनेन भवतीति व्याख्या । अथ क्षेत्रफलानयनं तत्र 'वृत्तव्यासे द्विसंभागे षडस्रे स्युर्भुजाः स्फुटा' इति भुजमानम् १४। ७ । २ । २ क्षेत्रमध्ये दक्षिणोत्तरां रेखान्दत्त्वा ऊर्ध्वं भुजसंपाततः पूर्व्वापरं रेखाद्वयम् अधोभुजसंपातावधि दद्यात् एवं कृते चतुरस्रद्वयं परस्परलग्नं भवति पूर्व्वापररेखयोर्दक्षिणोत्तररेखया सहसम्पातश्चतुर्थांशे एव भवति सैवाबाधा तन्मानं ७।३।५ भुजः १४।७।२ "स्वाबाधाभुजकृत्योरन्तरमूलं प्रजायते लम्बः" इति साधितोलम्बः १२।७।१। अयमेव मध्यलम्बः "लम्बेन निघ्नं कु २८।६।४ मुखै १४।७।५।२क्य ४४।५।६ खण्डम्" २२।२।७। इति जातं क्षेत्रफलं २८८।१।१।६ एवमपरस्यापि खण्डस्य । उभययोगे ध्वजायसिद्धिश्चेति । अथ पद्मकुण्डमाह "अष्टांशाढ्य युतस्य वृत्तशरके तत्रादिमे कर्णिकायुग्मे षोडश केशराणि चरमे स्वाष्टत्रिभागोनिते । भक्ते षोडश केशराणि च धृते स्युः कर्कटेऽष्टौ छदाः सर्व्वांस्तान् खन कर्णिकां त्यज निजायामौच्चकं स्यात् कजम्" । क्षेत्रस्याष्टमांशादष्टांशवृद्ध्या च वृत्तपञ्चके कृते सति तत्र पञ्चकमध्ये प्रथमं तत्कर्णिका, द्वितीये षोडश केशराणि, द्वितीयं केशरस्थानमित्यर्थः । अन्तिमे पञ्चमे वृत्ते स्वस्य चतुर्थांशेनाष्टमांशेन... श्रोणितस्य षोडशसु स्थानेषु दिक्षु विदिक्षु तदन्तराले च समतया भाजिते तस्मिन्वृत्ते पञ्चचिह्नान्तरे दिक्षु विदिक्षु च कर्कटके धृते सति परावर्त्तनेनाष्टौ पत्राणि जायन्ते सर्व्वांस्तान् केशरादीन् केशरवृत्ततृतीयचतुर्थवृत्तानि पत्राणि च हे विद्वन् ! खन कर्णिकां त्यज मा खन । कीदृशीभिजः स्वकीयश्चायामो विस्तारस्तत्तुल्यमौच्च्यं यस्यास्तां, कजं पद्मकुण्डम् बहिर्वृत्तमार्जनेन स्यादिति व्याख्या । अथ क्षेत्रफलानयनम् अत्रोपान्तिमस्य चतुर्विंशत्यङ्गुलस्य पूर्व्ववत् क्षेत्रं ४५।२।२।१ अन्तिमवृत्तस्यास्य २८।३।४। क्षेत्रफलं ६८८।४।५।०। अनयोरन्तरार्द्धम् १२३।४।६।० इदं पूर्व्वक्षेत्रफले योजितं वा अन्तिमवृत्तक्षेत्रफलम् । प्रवर्त्तितं सञ्जातं पूर्णं फलं ५७६।०।१ यूकोनं फलमायाततोऽदोषः । अन्तिमवृत्ते त्रिधामात्रवर्द्धनेन ध्वजायसिद्धिश्चेति । अत्रान्तिमवृत्ते पत्रान्तरार्द्धभूसंयुक्तोर्द्ध भूस्वाक बुद्धिमता प्रत्यक्षतएवोपलब्धव्यः । अथाष्टास्रिकुण्डमाह "क्षेत्रे जिनांशे गजचन्द्रभागैः स्वाष्टाब्धि—२८ भागेन युतैस्तु वृत्ते । विदिग्दयोरन्तरतोऽष्टसूत्रैस्तु तीव्रकुक्षैरिदमष्टकोणम्" । क्षेत्रचतुर्विंशतिभागे कृते सत्यष्टादशभागैः स्वीयाष्टाविंशेन युतैः कर्कटकेन वृत्ते कृते सति विदिग्दयोर्मध्ये कृताष्टचिह्नेभ्यः अष्टभुजेभ्यस्तु तीयांशमिलितैः चिह्नद्वयं विधाय तृतीयचिह्नेन योजितैरष्टकोणं वृत्तमार्जनान्मध्यस्थाष्टदोःखण्डमार्जनाच्च भवतीति व्याख्या । अथ "क्षेत्रफलानयनं व्यासार्द्धं १८।५।१।० । व्यासः २७।२।२। अथ "द्विद्विनन्देषुसागरैर्व्यासे समाहते । खखखाभ्राकसंभक्ते लभ्यन्ते क्रमशो भुजाः" इति १४।२ एतद्भुजमानं दक्षिणोत्तररेखा कोटिः कल्प्यते क्षेत्रे भुजकोटिघातः क्षेत्रफलम् । भुजकोटिमानं तु तद्भुजतुल्यं मध्येऽन्तरम् १४।२।२ याम्योत्तररेखोभयप्रान्तवर्त्ति रेखा खण्डमाने योजितं सत्कोटिः स्यात् यथा दक्षिणोत्तरपूर्व्वापररेखा खण्डयोगादूर्ध्वरेखातिर्य्यग्रेखे भुजकोटिरूपे तदग्राद्दीयमानो महाभुजएव कर्णः १४।२।२।५।० अस्य वर्गार्द्धमूलं तिर्य्यग्रूपभुजकोटिमानं लघुः १०।०।६।२। यतोऽत्र भुजकोटिवर्गयोगः कर्णवर्गो भवति इदं कोटिमानं द्विघ्नं सत् पूर्व्वभुजे योजितं जाता कोटिः दक्षिणोत्तररेखारूपा ३४।३।५।४। एतद्भुजघातफले ४८२ ।१।१।२। अथ कोणक्षेत्रयोः फलं लघुभुजवर्गेण तुल्यमेवतत् १०१।७।६। पूर्व्वफलादस्मा ४८२।

१।१।२। शोधितं सञ्जातं फलम् २९०।१।२।२। अस्मिन् पूर्व्वापरकोणानां चतुर्णां फलं योजितं सत्पूर्णं फलं स्यात्। तत्र पूर्व्वकोणयोः फलं यथा दृढ़ज्याभुजः १४।२२। पूर्व्वापररेखाखण्डं कोटिः१०।०।६।२। अनयोर्घातः १४४।१।५।६२ अस्मात्कोणक्षेत्रफलमेतत्५०।७।७ शोधितं सञ्जातं पूर्व्वकोणयोः फलम्९३।१।६।एतदेवापरकोणयोः, अतोद्विघ्नमेतत् १८६।२।४। पूर्व्वक्षेत्रफलेऽस्मिन्२९०।१।२।२। योजितं सञ्जातं क्षेत्रफलं ५७६।५।०।० अत्यान्तरत्वादेषः ध्वजायसिद्धिश्च। इदं सर्व्वथा नेतरमणीयमित्यङ्गीकर्त्तव्यम्। अथ प्रकारान्तरेण समाष्टभुजाष्टास्रकुण्डमाह "साध्ये गुणे वेदशरैर्व्विभक्ते शरैर्निजाङ्ग्रस्थितवेन युक्तैः। वृत्ते कृते दिग्विदिशोऽन्तराले गजैर्भुजैः स्यादथवाष्टकोणम्"। साध्ये गुणे—सूत्रे चतुर्व्विंशतिभक्ते सप्तचत्वारिंशदंशसहितैश्चतुर्दशभिर्व्यासार्द्धेन मण्डले कृते तत्र दिग्विदिशोर्मध्ये कृताष्टसूत्रैः परस्परसंलग्नैरष्टकोणम् प्रकारान्तरेण प्राचीनकृतिरस्थिकाभिमतं कुण्डं वृत्तमार्जनाद्भवतीति व्याख्या। अथ क्षेत्रफलानयनम् "चन्द्रर्त्तुनन्दाक्षतिभि २२९६१ र्व्यासार्द्धे तु समाहते। खखखाभ्राग्निसंभक्ते ३०००० लभ्यन्ते क्रमशोभुजाः" इति भुजमानं १०। ७।४।२।४। "ततःज्याव्यासयोगान्तरघातमूलं व्यासस्तद्गूनो दलितः शरः स्यादिति"। जातः शरः १।०।७।२।६। अथ याम्यभुजस्योभयान्तात् सम्मुखापरभुजप्रान्तद्वयं यावत् सूत्रद्वयं कुर्य्यात्। एवङ्कृते तिर्य्यग्दीर्घचतुरस्रं पार्श्वयोर्व्विषमभुजचतुरस्रद्वयञ्च स्यात् तत्र व्यासादस्मात्२८।४।६। शकायाद्द्विगुणं शरं विहाय शेषोदीर्घचतुरस्रस्य भुजः। अथ वा ज्याव्यासवर्गान्तरमूलं भुजः किं शरकरणप्रयासेन२६।२।०। अष्टास्रिभुजएव कोटिः आयते भुजकोटिघातः क्षेत्रफलम् २८८।४।४। अथ विषमभुजचतुर्भुजक्षेत्रफलम् जीवार्द्धशरोनव्यासार्द्धविषमचतुर्भुजे लम्बः ७।५।५।०। ज्यैव मुखं दीर्घचतुरस्रभुज एव भूः लम्बेन निघ्नं कु२६।२।०मुखे १०।७।४।२। क्य२७खण्डम् १८।५।२।१ क्षेत्रफलम् १४४ । २ । ६ । ४ एवमपरस्यापि तयोर्योगः ५७६ । १ । ४ ध्वजायसिद्धिश्च। अथवाष्टभुजां फलमानीय वृत्तफलात् संशोध्यापि क्षेत्रफलं स्यादिति अस्मिन्समाष्टभुजे राघवभट्टादिभिरुक्ते शारदातिलकादिवाक्यैः सह महान्विरोधस्तस्मादस्मदुक्तमष्टास्रि नेतरस्यं क्षेत्रफलसंवादिसमभुजमेवादरणीयमिति"। अथखातलक्षणं कण्ठलक्षणञ्चाह। "खातं क्षेत्रसमं प्राक्तरन्ये तु मेखलां विना। कण्ठोजिनांशमानः स्यादर्क्कोऽश इति चापरे"। कुण्डखननं क्षेत्रसमं कुण्डस्य यावान्विस्तार आयामश्च तावत्खननमाद्यमेखलया सहितं कुण्डे कार्य्यम् योन्यादिकुण्डेषु विस्तारायामयोर्नानात्वाच्चतुरस्रस्यैवायामविस्तारौ ग्राह्यौ। अन्ये तु मेखलां वर्जयित्वा भूमावेव तावत् खननं कार्य्यमित्याहुः। कण्ठोऽपि क्षेत्रचतुर्व्विंशत्यंशमानः खातात्बहिः कार्य्यः समन्तादेकाङ्गुलमितः। अन्ये क्षेत्रद्वादशांशपरिमित इति प्राहुरिति व्याख्या। सिद्धान्तशेखरे "खातं कुण्डप्रमाणं स्यादूर्द्धं मेखलया सह" प्रतिष्ठासारसंग्रहे "पञ्चत्रिमेखलोच्छ्रायं ज्ञात्वाऽशेषमधः खनेत्" मोहमूलोत्तरे "हस्तमात्रं खनेत्तिर्य्यगूर्द्धं मेखलया सहेति"। अथ पक्षान्तरे शारदातिलके "यावान् कुण्डस्य विस्तारः खननं तावदीरितमिति"। प्रयोगसारे "चतुरस्रञ्चतुःकोष्ठे सूत्रैः कृत्वा यथा पुरा। हस्तमात्रेण तन्मध्ये तावन्निम्नायतं खनेत्"। गणेशविमर्षिण्याम् "चतुर्व्विंशाङ्गुलायामं तावत्खातसमन्वितमिति" पक्षद्वैधे वयन्तु "स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथगिति" वचनात् होमाल्पत्वबहुत्वयोरन्यतरपक्षावाश्रयणीयाविति युक्तमुत्पश्यामः। "औचित्यादर्थात् परिमाणमिति" कात्यायनोक्तिः; लोकान्तरे "खाताद्बाह्येऽङ्गुलः कण्ठः सर्व्वकुण्डेष्वयं विधिः। चतुर्व्विंशतमोभागः कुण्डानामङ्गुलं स्मृतमिति"। एतत्पारिभाषिकमङ्गुलं सर्व्वत्र बोद्धव्यम्। सोमशम्भौ "वहिरेकाङ्गुलः कण्ठो-द्व्यङ्गुलः क्वचिदागमः" इति तेनाद्यः पक्षएव श्रेयान् बहुसंमतत्वात्। अथ मेखलानामधमतादिपक्षमाह "अधमा मेखलैका स्यान्मध्यमं मेखलाद्वयम्। श्रेष्ठास्तिस्रोऽथवा द्वित्रिपञ्चस्वधमतादिकम्"। एकमेखलापक्षोऽधमो द्विमेखलो मध्यः, त्रिमेखलः श्रेष्ठः। अथ पक्षान्तरे द्विमेखलोऽधमः त्रिमेखलोमध्यः पञ्चमेखलः श्रेयान् एकमेखलोऽधमाधम इति व्याख्या। क्रियासारे "नाभियोनिसमायुक्तं कुण्डं श्रेष्ठं त्रिमेखलम्। कुण्डं द्विमेखलं मध्यमीचं स्यादेकमेखलमिति" लक्षणसंग्रहे "मुख्यास्तु पञ्च-ताः प्रोक्तामध्यमास्तिस्र एव च। द्वे स्यातामधमे पक्षे-एका सा त्वधमाधमेति" सोमशम्भुना तु विशेष उक्तः "त्रिमेखलं द्विजे कुण्डं क्षत्रियस्य द्विमेखलम्। मेखलैका तु वैश्यस्येति" अथ खातं समेखलं क्षेत्रसममिति सन्दंवदन्मेखलालक्षणमाह "अष्टधा विहितकुण्डशरांशैः सङ्खनेद्भुवमुपर्य्यमलांशैः। मेखलाविरचयेदपि तिस्रःसह्-

गजार्कलवविस्तृतिपिण्डाः "अष्टधा भक्तस्य क्षेत्रस्य यः स्याङ्गुलात्मको भागस्तादृशैः पञ्चभिर्भागैर्भुवं खनेत् उपरि-त्रिमितादृशैर्भागैस्तत्रो मेखला रचयेत् कीदृशीः षड्-ष्टद्वादशांशाः चतुस्त्र्यङ्गुलमितास्तैस्तुल्यविस्तारौ-च्चं यासां ता इति व्याख्या । विश्वकर्मा "व्यासात्-खातः करः प्रोक्तो निम्नस्त्र्यङ्गुलेन तु । कण्ठात् परं मेखला तु उन्नता सा नवाङ्गुलैरिति" । क्रियासारे "प्रधानमेखलोत्सेधउन्नमत्र नवाङ्गुलम्। तद्बाह्यमेखलोत्-सेधमङ्गुलद्वितयं क्रमात । चतुस्त्र्यङ्गुलव्यासो मेख-लात्रितयस्य तु" योगिनीहृदयेऽपि "मेखलाः शृणु मे दे-वि ! हस्तादिषु विशेषतः । रसागार्कांशसम्भागैर्मिताः स्युर्गोपिताः शुभाः" इति । अथ प्रकारान्तरेण मेखलालक्षणं नाभिलक्षणं चाह "रसांशकाद्युन्नतविस्तृताश्च तिस्रोऽथवैका युगभागतुल्या । पञ्चाथवा षट्शरवेदरामद्व्यंशैस्तताः स्युर्न-वभागपिण्डाः। आद्यापरास्तत्स्वरभागहीना जिनांशकण्ठा-द्बहिरेव सर्वाः । कुण्डानुसारा अपि मेखलाः स्यूरर्काङ्ग-भागौच्च्यतस्तु नाभिः । कुण्डाकारो नाभिरम्भोजसास्यो-वाब्जेऽयं नेनांशहार्नदलाग्रे । शेषक्षेत्रे वह्निवृत्तैः समे ते स्युर्वै कर्णैः केशराः पत्रकाणि" अथवा क्षेत्रषड्-शादुन्नताः षडंशेनैव विस्तृतास्तिस्रो मेखला भवन्ति अथैकमेखलापक्षमाह एकैव मेखला क्षेत्रचतुर्थांशोच्चा तत्तृतीयांशविस्तृता च स्यात् । पञ्चमेखलापक्षमाह । अथ पञ्च मेखलाः कार्याः षट्पञ्चचतुस्त्रिद्व्यङ्गुलैः पारिभाषिकैर्विस्तृताः । अथपञ्चमेखलानामुच्चता माह तत्रादिमा नवभागः पिण्डः औच्चं यस्याः सा पा-रिभाषिकनवाङ्गुलोच्चा स्यात् अपरा मेखलास्तस्या आ-द्याया यः शरांशः पञ्चांशस्तेन हीना भवन्ति यथा एक-हस्ते कुण्डे प्रथममेखला नवाङ्गुलोच्चा अस्याः पञ्च-मांशः १ । ६ । २ । १ । ५ एष एकद्वित्रिचतुर्गुणः प्रथममेखलामाने न्यूनः कृतः सन् तदधःस्थानां मेखला-नामौच्चं स्यात् यथेदं द्वितीयमेखलौच्च्यम् ७ । १ । ४ ६।२ एवमपरासामपि द्रष्टव्यम् । ताः मेखलाः सर्वाःक्षेत्र चतुर्विंशतिभागमितात् कण्ठाद्बहिरेव भवन्ति कीदृश्यः कुण्डानुकाराः योन्यादिकुण्डेषु योन्याद्याकारा एव स्युः अपिरेवार्थे । अथ नाभिलक्षणमाह नाभिर्द्वादशांशेनोच्चः षडंशेन विस्तृतः कुण्डानुकारः यादृशकुण्डस्याकारं कुण्डं तादृशो नाभिः । अथवा नाभिरम्भोजसमः कमलाकारः कार्यः अयं नाभिरब्जे पद्मकुण्डे सम्भवति तत्र नाभि-रूपायाः कर्णिकायाः समन्तात् । अथ पद्माकारकरणं नाभेरुच्यते दलाग्रे दलाग्रनिमित्तं शङ्कुलोत्रे चतु-रङ्गुलविस्तारायामे नाभौ इनांशहानिद्वादशांशत्यागः कार्यः शेषमवशिष्टं क्षेत्रं तस्मिन् वृत्तत्रयं समभागेन कार्यम् । तत्र मध्यचिह्नात् प्रथमं वृत्तं कर्णिका द्वि-तीयं वृत्तं केशरस्थानं तृतीयं पत्राणि तद्बहिरवशिष्ट द्वादशांशेन दलाग्राणि रचयेदिति व्याख्या । वाशिष्ठ्याम् "प्रथमं मेखला तत्र द्वादशाङ्गुलविस्तृतिः । चतुर्भिरङ्गु-लैस्तस्याश्चोन्नतिश्च समन्ततः । ततश्चोपरिगः स्याच्चतु-रङ्गुलसमुन्नतः । अष्टाभिरङ्गुलैः सम्यग्विस्तीर्णश्चोन्नतस्त-था"। पिङ्गलामते "एका षडङ्गुलोत्सेधविस्तारा मेख-ला मतेति" लक्षणसंग्रहे तु विशेष उक्तः । "चतु-रङ्गुलविस्तारोत्सेधा चैकैव मेखलेति" तन्त्रान्तरे "षष्ठां-शेनाष्टमांशेन मेखलाद्वितयं विदुरिति अयं पक्षोऽ-बहुसंमतत्वादुपेक्षित एव । सिद्धान्तशेखरे "षड्-वाणाब्धिवह्निनेत्रमिताः स्युः पञ्च मेखलाः" इति लक्षण संग्रहे "पञ्च वा मेखलाः कार्याः षट्पञ्चाब्धित्रिपक्षकैः । प्रथमा कुण्डबहितोत्तरोत्सेधनवाङ्गुलेति" पिङ्गला-मते "खातादेकाङ्गुलत्यक्त्वा मेखलानां स्थितिर्भवेदिति" शारदायाम् "कुण्डानां यादृशं रूपं मेखलानाञ्च ता-दृशम्" इति तत्रैव "कुण्डानां कल्पयेन्नाभिमम्बुज-सन्निभम् । तत्तत्कुण्डानुरूपं वा मानमस्य निगद्यते" सुष्यरत्निरत्निहस्ता नाभेरुत्सेधता मता । नेत्रवेदाङ्गुलोमे-तेति" पद्मे नाभिं विवर्जयेदिति प्रागेव लिखितम् । अम्बुजा-कारकरणं तत्रैव "पद्मकुण्डे तु क्षेत्रस्य द्वादशांशं बहिः सुधीः। तन्मध्ये विभजेद्वृत्तैस्त्रिभिः समविभागतः । आद्यं स्यात् कर्णिकास्थानं केशराणां द्वितीयकम् । तृतीयन्तत्र पत्राणां मुक्तांशेन दलाग्रकमिति" अथ योनिलक्षणमाह "योनिर्व्यासार्द्धदीर्घा विततगुणलवादायताग्निद्विभागा-त्तुङ्गातावत् समन्तात् परिधिरुपरिगस्तावदग्रेच रम्यम् । निम्नं कुण्डं विशन्ती वलयदलयुगेनान्विताधो विशाला, मूलात् सच्छिद्रनालान्तरवटरुचिराश्वत्थ पत्राकृतिः स्यात्" योनिर्व्यासार्द्धेन दीर्घा विस्तारतृतीयां-शेन विस्तीर्णा चतुर्थांशेनोच्चा चतुर्विंशांशेन परिधि मेखला यस्याः सा तावतैवाग्रेण चतुर्विंशांशे-न निम्नं यथा तथा कुण्डं प्रति विशन्ती वलयदल युगेन वृत्तार्द्धद्वयेन युता अधो विशाला अर्थादुपरिस्थ-लसंकोचनवती मूलात् स्थूलात् सकाशात् मध्ये सच्छिद्रं नाल

यस्याःसा पद्मनालाकारत्वान्नालोक्तिः। अन्तर्मध्ये अश्वटोगर्त्तः स्रुचि घृतधारणार्थं यद्वत्तेन रुचिरा सुन्दरा सा अश्वत्थपत्राकृतिः स्यादिति व्याख्या। वायवीये "मेखलां मध्यतः कुर्यात् पश्चिमे दक्षिणेऽपि वा। शोभनां मध्यतः किञ्चिन्निम्नामुन्मीलितां शनैरिति" योनिमिति शेषः। त्रैलोक्यसारे "दीर्घा सूर्याङ्गुला योनिस्त्र्यंशोना विस्तरेण तु। एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाऽभ्यन्तरे तथा। कुम्भद्वयार्द्धसंयुक्ता साश्वत्थदलवन्मता। अङ्गुष्ठमेखलायुक्ता मध्ये चाज्यधृतिस्तथेति" पञ्चरात्रे "अर्काङ्गुलोच्छ्रितां योनिं विदध्यात्तावदायताम्" तावद्दीर्घाम् एकाङ्गुलोच्छ्रिता इत्यस्य विवरणम् अङ्गुष्ठमेखलायुक्तेत्यत्र अङ्गुलद्वयमुच्छ्रायः कुत्रचिदुक्तः अङ्गुलं परिधिरिति द्वादशाङ्गुलोच्छ्रायः अयं न प्रायोवहुसम्मतपक्षः अतोऽस्मदुक्त एकाङ्गुलोच्छ्रायपक्षो बहुसम्मतः कार्यः। शारदायाम्" "मूलादारभ्य नालं स्याद्योन्या मध्ये सरन्ध्रकमिति" द्वादशाङ्गुलमेखलापक्षे योनिलक्षणमाह "अथार्काङ्गुलपक्षे तु मेखलानान्द्वयाङ्गुलैः। विस्तृता तिथिभिर्दीर्घाङ्गुलिभिर्निरिष्यते" मेखलानां दशाङ्गुलैर्विस्तृता तिथ्यङ्गुलैर्दीर्घा योनिः स्यादिति व्याख्या। प्रयोगसारे "स्थिता प्रतीच्यामायामे सम्यक् पञ्चदशाङ्गुलाम्। द्विपञ्चाङ्गुलविस्तारां षट् चतुर्द्व्यङ्गुलाः क्रमात्। त्रयोदशाङ्गुलेतरेषां योनिं कुण्डस्य कारयेत्"। केचित् योनिक्षेत्रस्य दीर्घचतुरस्रस्वरूपस्य यत्फलं तस्य मूलमानीय तावत्समचतुरस्रं संशोध्य योनिकुण्डवद्योनिं साधयेदित्याहुः"। अधिकं कुण्डार्कादौ दृश्यम्।

"रसं पिबेत् कुमारोऽयं त्वत्प्रसादात् महावलः। बलं नागसहस्रस्य यस्मिन् कुण्डे प्रतिष्ठितम्। यावत् पिबति बालोऽयं तावदस्मै प्रदीयताम्"। "एकोच्छ्वासात्तत कुण्डं पिबति स्म महाबलः। एवमष्टौ स कुण्डानि ह्यपिबत् पाण्डुनन्दनः" भा०आ० १२८अ०। "साधुभिर्गर्हितं कर्म्म चण्डालस्य विधीयते। तस्मात् गोरजसा ध्वस्तमपां कुण्डे निषिञ्चति" भा० आनु० १०१अ०। कण्ड्यते कुलमनेन कुडि—दाहे करणे घञ्। अमृते भर्तरि ५जारजाते स्त्रियां टाप्। "परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ। पत्यौ जीवति कुण्डःस्यात् मृते भर्त्तरि गोलकः। तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च। दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम्" मनुः। "ब्राह्मणा एव संपूज्या पुण्यस्वर्गमभीप्सता। श्राद्धकाले तु यत्नेन भोक्तव्याश्चाजुगुप्सता। दुर्वचाः कुनखी कुष्ठी मायावी कुण्डगोलकौ। वर्ज्जनीयाः प्रयत्नेन काण्डपृष्ठाश्च देहिनः" भा० द० १९९अ०। "द्विजात् द्विजातिभार्य्यायां सवर्णायामुत्पन्नकुण्डगोलकयोः संस्कारार्हता यथाह "प्रयोगपारिजाते ब्राह्मे "ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः। तस्माच्च षण्डवधिरकुब्जवामनपङ्गुषु। जडगद्गदरोगार्त्तशुष्काङ्गविकलाङ्गिषु। मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये। ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम्। मत्तोन्मत्तौ न संस्कार्याविति केचित् प्रचक्षते। कर्म्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः। तदपत्यञ्च संस्कार्य्यमपरे प्राहुरन्यथा। संस्कारमन्त्रहोमादीन् करोत्याचार्य्य एव तु। उपनेयाश्च विधिवदाचार्य्यस्य समीपतः। आनीयाग्निसमीपं वा सावित्रीं स्पृष्ट्वा वाचयेत्। कन्याखीकरणादन्यत् सर्वं विप्रेण कारयेत्। एवमेव द्विजैर्जातौ संस्कार्य्यौ कुण्डगोलकौ" अतस्तस्य ब्राह्मणत्वेऽपि श्राद्धेऽन्नदाननिषेध इति विशेषः। अत्रेदं बोध्यम्। "अशुल्कोपहृतायां तु पिण्डदा वोढुरेव ते" स्मृत्युक्तेः शुल्कदानं विना उपगतपरस्त्रियां जातस्य वोढुरेव पुत्रत्वं शुल्कदाने तु उत्पादयितुरेवेति। अतएव "यन्मे माता प्रलुलोभ रेतः" इत्यादि श्रुत्या चेत्रिण एव पिण्डदत्वं भङ्ग्योक्तम्। अस्य प्रस्थेन सह समासे आद्युदात्तता। तेन निर्वृत्ताद्यर्थे चतुरर्थ्यां अश्मा० र। कुण्डर तन्निर्वृत्तादौ त्रि० कुडि—दाहे भावे अ। ६दाहे स्त्री।

**कुण्डक** पु० धृतराष्ट्रपुत्रभेदे। "कुण्डकश्चित्रसेनश्च सुवर्च्चाः कनकध्वजः" भा०आ०१८६अ०, कुण्ड+स्वार्थे क। २कुण्डार्थे।

**कुण्डकीट** पु० कुण्डे योनिकुण्डे कीटइव विचारशून्यत्वात्। १पतितब्राह्मणपुत्रे २जारजातब्राह्मणपुत्रे ३दासीकामुके ४चार्व्वाकवचनाभिज्ञे पुरुषे च मेदि०।

**कुण्डगोलक** न० कुण्डे गोलं गोलाकारं कं जलमत्र। १काञ्जिके हेमच०। स०द्वन्द्वः। २कुण्डगोलकयोः समाहारे च।

**कुण्डङ्ग** पु० कुण्डं तटाकारं गच्छति गम—बा०ख डिच्च। निकुञ्जिकावृक्षे हेम०। तस्य लतादिनाऽपिधानेन कुण्डाकारत्वात्तथात्वम्। [च शताधिका" भा० आ० ६७अ०।

**कुण्डज** पु० धृतराष्ट्रपुत्रभेदे "कुण्डजश्चित्रकश्चैव दुःशला

**कुण्डजठर** पु० कुण्डइव जठरमस्य। १कुण्डाकारोदरे २ऋ-

षिभेदे पु० "आत्रेयः कुण्डजठरोद्विजः कालघटस्तथा" भा०आ० ५३अ०,

**कुण्डधार** त्रि० कुण्डं कुण्डाकारं धारयति धारि–अण् उप० स०। नागभेदे, "मणिमान् कुण्डधारश्च कर्कोटकधनञ्जयौ" भा० स० ६अ०,

**कुण्डपायिन्** पु० भूम्नि कुण्डेन कुण्डाकारचमसेन पिबन्ति सोमम् पा–णिनि। कुण्डेन सोमपायिषु सयजमान षोडशर्त्विक्साध्यसत्रभेदकारिषु

**कुण्डपायिनामयन** न० ६त०अलुक् स०। सत्रभेदे तदितिकर्त्तव्यतादिकम् आश्व०श्रौ०१२।२।१–सूत्रादौ उक्तं यथा "कुण्डपायिनामयनम्" सू०। "एतन्नामकमिदं सत्रमधिकृतं वेदितव्यम्" वृ०। "मासन्दीक्षिता भवन्ति" सू०। "अयं मासशब्द एकान्नविंशतिरात्रे उपचरितः, एकान्नविंशतिरात्रादिकं सावनवद्भवतीत्यर्थः" वृ०। "ते मासि सोमं क्रीणन्ति" सू०। "अयमप्युपचार एव दीक्षाकाले। मासातीते दीक्षिताः सोमं क्रीणन्तीत्यर्थः" वृ०। "तेषां द्वादशोपसदो भवन्ति" सू०। "सात्त्विकाणान्दीक्षाणामपवादो दीक्षाविधिः, तथा सात्त्विकाणामुपसदामपवादोऽयमुपसद्विधिः" वृ०। "सोममुपनह्य प्रवर्ग्यपात्राण्युत्साद्योपनह्य वा मासमग्निहोत्रं जुह्वति" सू०। "उपत्समस्तीतासु प्रवर्ग्यपात्राण्युत्साद्योपनह्य वा तानि तानि, ते एकं मासम् अग्निहोत्रं जुह्वति सायं प्रातः" वृ०। "प्रातरुपक्रमः सायमपवर्गः" सू० "प्रातःकालस्य प्रथमप्राप्तत्वात् उपसत्काले द्वादशाहेऽतीतेऽग्निहोत्रस्य प्रातरारम्भान्नैमित्तिकादग्निहोत्रात् कर्म्मान्तरमेतदिति न्यायविदां प्रसिद्धम्" वृ०। "मासं दर्शपूर्णमासाभ्यां यजन्ते" सू०। "अग्निहोत्रमासेऽतीते ततः अनन्तरमेकं मासं दर्शपूर्णमासाभ्यां यजन्ते" वृ०। "कथमन्येऽहरहः पौर्णमास्या, शुक्लपक्षेऽहरहरमावास्यया, मित्रावरुणयोरयने तथा दृष्टत्वात्" सू०। "एवमत्र सम्पादनीयम्—यथा कृष्णपक्षादौ पौर्णमास्याऽहः सम्भवति, तत्र दीक्षारम्भः कर्त्तव्य इति" वृ०। "मासं वैश्वदेवेन" सू०। "अहरहरनेन यष्टव्यम्। वैश्वानरपार्जन्या तु न भवति आरम्भार्थत्वात्तस्याः, स चारम्भःसत्रे न प्रसक्त इति" वृ०। "मासं वरुणप्रघासैः मासं साकमेधैः एतैरहरहर्यजेरन्" सू० "एकाहेनापत्यस्य प्रकृतेर्द्व्यहसमापनीयत्वाद्द्व्यहेन वा कुर्य्यात्। आध्वर्युप्रत्ययात्समापनमिति स्थितिः" वृ०। "मासं शुनासीरीयेण" सू०। "अनेनाप्यहरहरेव" वृ०। "यदहर्मासः पूर्यते तदहरिष्टिं समाप्याग्निप्रणयनादिधर्मोत्सादनादि चौपवसथिकं कर्म०कृत्वा श्वोभूते प्रसुनुयुः" सू०। "यस्मिन्नहनि मासः पूर्यते तस्मिन्नहनि शुनासीरीयेष्टिं समाप्य तदनन्तरं यदि पूर्वमेव प्रवर्ग्यपात्राण्युत्सादितानि तदाग्निप्रणयनाद्यौपवसथिकं कर्म कृत्वा सुत्यारम्भः" वृ०। "तत्रैक उपसङ्ग्र एवानन्तरं कुर्वन्ति तथादृष्टत्वात् सौत्यान्मासानग्निहोत्रादीन् वदन्तः" सू०। "तदिदमग्निप्रणयनाद्यौपवसथिकं कर्म कुण्डपायिनामयने अग्निहोत्रादिमासेभ्यः कर्त्तव्यमित्युक्तम् तत्रैक आहुः तत्कर्माग्निहोत्रादिमासेभ्यः प्रागुपसङ्ग्रोऽनन्तरं कर्त्तव्यमिति। तत्र हेतुमाहुः प्रकृतौ तथादृष्टत्वादिति। न त्वग्निहोत्रादिमासेभ्य उपरिष्टात्, क्रियमाणे वा औपवसथिके सुत्यानन्तरस्य विद्यमानत्वादिति। तथादृष्टत्वात्साधारणमिति, तत्परिहारार्थमग्निहोत्रादिमासान् सौत्यानिति। कथम्? अस्य सत्रस्य गवामयनप्रकृतिकत्वात्तस्य सांवत्सरिकत्वात् कुण्डपायिनामयने त्रिवृदादयः षण्मासा एकः पक्षः, अग्निहोत्रादयः षण्मासा अपरः पक्ष इति मन्यमानाः। एवं च उपसदाञ्च सुत्याञ्च सुत्ये औपवसथिकस्य कृतत्वान्न कश्चित्तु दोष इति वदन्तोऽग्निहोत्रादिमासेभ्यः प्रागुपसङ्ग्रः ऊर्ध्वमौपवसथिकं कुर्वन्ति। एतदुक्तम् भवति। अग्निहोत्रादिमासान् सुत्यानिति मन्यमानाः तेभ्यः पुरस्तादुपसङ्ग्र ऊर्ध्वं औपवसथिकं कर्म केचित् कुर्वन्ति प्रकृतौ तथादृष्टत्वादिति। यदेतदग्निहोत्रादिमासान् सौत्यानिति वदन्ति तदनुपपन्नम्। कुतः? सोमयागस्वरूपत्वात् सुत्यानाम् अग्निहोत्रादीनां तु हविर्यज्ञस्वरूपत्वादसुत्यत्वमिति। यत्पुनरिदमुक्तं गवामयनप्रकृतिकत्वादग्निहोत्रादिमासैः पूर्वपक्षसिद्धिरिति। तदयुक्तम् सोमयागानामेव गवामयनप्रकृतिकत्वं पूर्वपक्षस्योत्तरपक्षस्येति। अग्निहोत्रादयोऽस्मिन् सत्रे अप्राकृता आगन्तवः कर्मविशेषाः अतस्तेषान्तत्स्थानापन्नत्वमपि न सम्भवति। अतस्तेषां सुत्यत्वञ्च सम्भवति। सुत्यत्वासम्भवे तथादृष्टत्वादित्यस्य हेतोः साधारण्यादसाधकत्वादित्यनेनाभिप्रायेणोक्तं भगवताचार्येण 'तदनुपपन्नम् इति" वृ० "पश्वर्थं ह्यग्निप्रणयनन्तस्य च श्वःसुत्यानिमित्तम्" सू०। "परोक्तस्य हेतोरसाधकत्वमुक्त्वा स्वपक्षं समर्थयति। औपवसथ्येषु कर्मसु यः पशुभागः सः श्वःसुत्यानिमित्तमिति प्रत्यक्षं श्रूयते 'अग्नीषोमाभ्यामिन्द्रो वृत्रमहन्स्तावेनमभ्युताम्' इत्यादिना। अतो वचनात् पशोः सुत्यानन्तर्यमेव स-

स्मादनीयम् । तत्र यदग्निप्रणयनन्तत् सोमयागार्थमेव पशोरप्युपकरोति प्रसङ्गादिति पश्वर्थमित्युक्तम् । अतोऽग्निप्रणयनस्य पशोः श्वःसुत्यानन्तर्यमेव कर्त्तुं युक्तम्” इ० । “अतिप्रणीतचर्यायां च वैगुण्यं दर्शपूर्णमासयोः तथाग्निहोत्रस्य” सू० “एवं तावदौपवसथिकस्य अग्निप्रणयनादेरग्निहोत्रादिमासेभ्य ऊर्द्ध्वमेव कर्त्तव्यतां प्रतिपाद्येदानीमग्निप्रणयनस्याग्निहोत्रादिमासेभ्यः पुरस्तात् क्रियायां दर्शपूर्णमासयोरग्निहोत्रस्य च वैगुण्यं भवतीति प्रतिपादयति। कुतः? इति चेत्, प्रकृतौ नैयमिकेऽतिप्रणीते उत्तरवेद्यान्तयोर्होमादिदर्शनात् । अतो वैगुण्यकरत्वादग्निप्रणयनन्तावत् पुरस्तान्न कर्त्तव्यमित्यस्य विशेषोऽन्येभ्य इत्युक्तम्” इ० । “सदो हविर्धानाग्नीध्रीयाग्नीषोमप्रणयनवसतीवरीग्रहणानि पश्वर्थानि भवन्ति सुत्यार्थान्येके” सू० । “एवं तावदौपवसथिकेषु श्वः, श्वः श्वःसुत्यानिमित्तत्वादग्निहोत्रादिमासेभ्य ऊर्द्ध्वं कर्त्तव्यमित्युक्तम् । अग्निप्रणयनस्य सुत्यार्थत्वात् पशोरप्युपकारकत्वाच्च पुरस्तात् क्रियायाश्चाग्निहोत्रादीनां वैगुण्यकरत्वात्तद्दित्युक्तम् । इदानीं येषां श्वःसुत्यावचनं नास्ति सुत्यादिभिस्तु सुत्याङ्गभावोऽस्त्येव अङ्गभावस्य सन्निपत्योपकारद्वारेण, तेषां सुत्याकर्मणोऽदृष्टादिसाधन इत्यकल्पकरूपाणां सदआदीनामग्निहोत्रादिमासेभ्यः पुरस्तात् करणे किञ्चिददृष्टं दृष्टं वा प्रयोजनं नास्ति। तेषां पुरस्तात् करणे प्रमाणं च नास्ति, कुतः?” इ० । “तत्कालास्त्वेव तद्गुणाः” सू० । “यस्य प्रधानस्य यः कालः स एव कालस्तद्गुणानां प्रधानकाल एव अङ्गानां मुख्यकाल इत्यर्थः । तदेतन्न्यायविदां प्रसिद्धम् । अत एव प्रसिद्धवदुपदिष्टवानाचार्यः ‘तत्कालास्त्वेव तद्गुणाः’ इति । एतदुक्तं भवति यस्मात् प्रधानकाला एव प्रधानगुणाः तस्मात् सदआदीनामग्निहोत्रादिमासेभ्यः पुरस्तादक्रियैव । तत्कालास्त्वेव तद्गुणा इति चशब्दोऽत्र पठितः प्रधानकाले च गुणाः कर्त्तव्या इत्यर्थः । सदआदीनाम्पश्वर्थतावचनम् अभ्युपगम्य सदआदीनि पश्वर्थानि या भवन्तु, सुत्यार्थानि वा, सर्वथा तावदग्निहोत्रादिभ्यः पुरस्तात् क्रिया न स्यादित्ययमभिप्रायः । अङ्गानां प्रधानकालत्वमुक्तं ‘तत्कालास्त्वेव तद्गुणाः’ इति । यानि पुनरङ्गानि प्रधानकालाद्विप्रकृष्टानि, यथा ‘अग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति’ इति तेषां पश्वर्थता नास्ति लौकिकैः पदार्थैर्व्यवधानादिति । अतोऽनुयाजप्रभृतीनि कर्मान्तराणि सोमाङ्गत्वेनैव विधीयन्त इति प्राप्ते उच्यते” वृ० । “सिद्धस्वभावानां न व्यवधानादन्यत्वं यथा पृष्ठ्याभिप्लवयोः” सू० । “प्रकृतौ सिद्धस्वभावानां पदार्थानां विकृतौ पदार्थान्तरव्यवधानमात्रेण तेषामन्यत्वं न स्यात् । अनन्यत्वे च प्राकृतोपकारत्वे नाङ्गत्वमपि स्यात् । प्राकृतानां विकृतावुपकारद्वारेण हि पदार्थानां प्राधानानामनुपकारकत्वमित्ययुक्तं यदि परं व्यवधानादन्यत्वं भवति । अतो विप्रकृष्टकाला अपि पदार्थास्तद्गुणा एव भवन्ति, तद्गुणत्वानपगमादिति कर्मान्तरत्वपक्षे वाक्यभेदादिति प्रसज्येत । यथा पृष्ठ्याभिप्लवयोरिति व्यवधानादन्यत्वाभावे दृष्टान्तः । यथा पृष्ठ्यस्य वाभिप्लवस्य वान्यस्य या सङ्घाते रूपविशेषस्य मध्ये यजमानमरणस्य निमित्तेन नैमित्तिकमहरन्तरमुपजायते तत्र तेन व्यवधानमस्ति, तथा पृष्ठ्यादिसङ्घातविशेषबुद्धिर्नापैति तद्वदत्रापीति । यस्माद्व्यवधानात् पदार्थान्यत्वं नास्ति, अत एवौपवसथिकस्याग्निहोत्रादिमासेभ्यः पुरस्तात् क्रियाशङ्कानिराकरणार्थमिदं प्रकरणमारब्धम् । कानिचिदङ्गानि तत्कालानि कानिचिद्विप्रकृष्टकालानीत्येवमुभयथा व्यवहारोऽस्ति । सर्वथा तावदग्निहोत्रादिमासेभ्यः पुरस्तादौपवसथिकं न कर्त्तव्यमिति प्रकरणार्थः” वृ० । “सगुणानां ह्येव कर्मणामुद्धार उपजनो वा” सू० “अयमप्यग्निहोत्रादिमासेभ्यः उपरिष्टादौपवसथिकक्रियायां हेतुः । यस्मात् प्रधानकर्मणामुद्धारे उपजने-उत्कर्षे च सगुणानामेव सर्वलोकाचारादिदृष्टः यथा स्नानभोजनविहाराणामहरहः कार्याणाङ्कस्यचिदुद्धारे सगुणस्यैवोद्धारो दृष्टः, उत्कर्षे च सगुण एवोत्कृष्यते, एतेषां नित्यकार्याणामन्तराले अन्यन्नैमित्तिकमुपजायमानं सगुणमेवोपजायते, एवमत्रापि वैशेषिकैरग्निहोत्रादिभिरुत्कृष्यमाणं सौत्यं कर्म आत्मनो गुणभूतेन औपवसथिकेन सहोत्कृष्यते । हिशब्दः प्रसिद्धौ । यस्मात् सर्वत्र उद्धारोपजनोत्कर्षाः सगुणानामेव दृष्टाः तस्मादत्रापि सगुणस्य सौत्यस्य उत्कर्षो युक्त इति सूत्रार्थः” वृ० । “सुब्रह्मण्या त्वत्यन्तम्” सू० । “प्रासङ्गिकोऽयं सुब्रह्मण्याविचारः प्रकृतावुपसत्सु त्याकालत्वात् । सुब्रह्मण्यायाः अग्निहोत्रादिमासानाञ्च सुत्योपसदभावात् सुब्रह्मण्याया अभावशङ्का स्यात्, तत इदमुच्यते । सुब्रह्मण्याया अयं विशेषः । अत्यन्तं-नित्यं कर्त्तव्या, अग्निहोत्रादिमासेष्वपि अप्राकृतोऽयङ्काल इति नोत्स्रष्टव्या । अनपहृतेष्टकालत्वमयत्वात् । प्रकृतावुपसत्सुत्याकाला सती सुब्रह्मण्या

तस्मात् विशेषविशिष्टाऽऽहूयते । इह पुनरप्राकृतत्वात्कालस्य तेनोपलक्षणं प्रकृत्या सुब्रह्मण्याया अयुक्तमिति मन्यमानेनात्रष्टता कालसङ्ख्याविशेषणाऽऽह्लातव्या । सुत्यामागच्छेति कालस्य ग्रयत्वादित्यस्यायमर्थः । प्रकृतौ द्वादशाहे सुत्यानीत्यादयःसङ्ख्याविशेषाः किमुपसद्दहःसङ्ख्याविशेषप्रयुक्ताः आहोस्वित् सुत्यानन्त्यहानि । तत्र तदहःसङ्ख्याप्रयुक्ता इत्येवङ्कालस्य ग्रयत्वादित्यर्थः" इ० । "उत्सर्गमेके सुत्योपसद्युत्वात्" सू० । "सुब्रह्मण्याया उत्सर्गमेके इच्छन्ति सुत्योपसद्युत्वात् । किमिदं सुत्योपसद्युत्वमिति ? सुत्यानामेवायङ्गो नोपसदां क्रमात्लिङ्गं बलीय इति । अतोऽयमुपसदाङ्गुण उपसत्कालवर्त्तित्वात् उपसद्युत्वोपचारः अग्निहोत्रादिमासानामसुत्यत्वात् उपसत्कालत्वात् सुब्रह्मण्योत्सर्गमेक आकुरित्यर्थः" इ० । "क्रिया त्वेव प्रवृत्ते ह्यन्तमगत्वाऽवस्थाने दोषः" सू० । "अस्याः क्रियैव निश्चीयते सोमयागसाधनसंस्कारत्वात् मन्त्रस्य, प्रकृतौ सोमयागादूर्ध्वं यावत्सुत्याकालस्तावदाहूयते । तद्वदत्राप्याह्लातव्या । तावतःकालस्योपसत्त्वेवैतत्सम्बन्धादस्या उपसत्सम्बन्धः तदभावात्तस्यास्त्यागो युक्तः । अत्रायमपि विशेषोऽस्ति । औचित्यादपि न त्याज्या । आदितआरभ्य सर्वेष्वेवाहःस्वाह्वयन्ति कथमिदानीं नाह्वयन्ति । ननु नयं सोमोऽभ्यागच्छ दासत इति देवतायाः शङ्का स्यात् तन्निवृत्त्यर्थमाह्लातव्या । प्रारब्धस्य मध्ये त्यागस्य कारणाभावात् त्यागे दोष एव स्यादित्यभिप्रायः । परवदर्थविचारोऽत्र स्वपदार्थपरित्यागार्थ एव । अतिप्रैषः सःसुत्यहयोरत इति" इ० । "त्रिवृता मासं पञ्चदशेन मासम् सप्तदशेन मासम् एकविंशेन मासम् त्रिणवेन मासम् अष्टादशत्रयस्त्रिंशानि द्वादशाहस्य दशाहानि । महाव्रतञ्चातिरात्रश्च" सू० । "अत्र पृथक्स्य पञ्चभिरस्तोमैः पञ्च मासाः कर्त्तव्याः । षष्ठेनाष्टादशाहानि दशरात्रो महाव्रतमुदयनीयः । क्रतुत्नोक्तत्वात्रात्र प्रायणीयः" इ० । "सर्वेण यज्ञेन यजन्ते य एतदुपयन्ति" सू० । "स्तुतिवादोऽयं बहूनामत्र सम्भवाद्वार्त्तिक समासोऽनेन सूत्रकारेण न सूत्रितः । स कर्त्तव्यश्चेत् परप्रत्ययादेव कर्त्तव्यः" नारायणवृत्तिः कात्या०श्रौ० २४,४,२, सत्रादौ विशेष उक्तो यथा "कुण्डपायिनामयनं पौर्णमासीदीक्षम्" सू० । कुण्डपायिनामयनमिति सत्रस्य संज्ञा तस्य पौर्णमास्यां दीक्षा भवति" कर्कः । "चतुर्थ्यां वाऽपरपक्षस्य" सू० । इति विकल्पः फाल्गुनापरपक्षस्य वा चैत्र्यां पौर्णमास्यामिति" कर्कः "मासं दीक्षाः" सू० । "तस्य भवन्ति" कर्कः । "सोमसुपनह्य सुत्यास्थानेषु मासमग्निहोत्रं जुह्वति" सू० । सोमोपनहनं कृत्वा यानि सुत्यास्थानानि तेष्वग्निहोत्रहोमः । अग्निहोत्रं च सायारम्भं प्रातरपवर्गम् तत्र द्वावपि होमौ कालैक्यात्तन्त्रेणोपक्रमितव्यौ । प्रधानस्य तु भेदः चतुर्गृहीतेनाग्नेयीं सायमाहुतिं हुत्वा पुनश्चतुर्गृहीतेन सौरीमाहुतिं जुहोति तन्त्रेणोत्तरां जुहोति । गार्हपत्यकार्य्यं तत्र प्रागभिहितेएव न शालाद्वार्य्ये, ज्योतिष्टोमे हि तच्छुनम् न चाग्निहोत्रं ज्योतिष्टोमः न च तदङ्गत्वमिति आहवनीयस्तत्रिप्रणीत एव" कर्कः "सोमबन्धनपूर्वकम् अत्राग्निहोत्रशब्दोनित्याग्निहोत्रधर्मातिदेशार्थः ततश्च तद्धर्मकं कर्मान्तरं मासपूर्तिपर्यन्तं प्रत्यहं भवति" संव्या० । "दर्शपूर्णमासाभ्यां मासम्" सू० । "नयेयुः" कर्कः । "पक्षादौ यद्यद्विकृत्वर्वस्मिन्" सू० । "पक्षस्यादौ प्रतिपदि यद्यद्विस्तदेव सर्वस्मिन् पक्षे भवति सकले शुक्ले दर्शेष्टिः, सकले कृष्णे पौर्णमासेष्टिः" संव्या० । "सारस्वते च प्रयोगे" सू० । "एवमेव" कर्कः "तन्त्रेण वा समस्तचोदितत्वात्" सू० । "वाशब्दः पक्षव्यावृत्तौ तन्त्रेणैव दर्शपूर्णमासौ कर्त्तव्यौ समस्तयोर्हि चोदना "दर्शपौर्णमासाभ्यां मासमिति" नह्यत्र कालभेदकः तस्मादग्निहोत्रवदत्रापि तन्त्रमेव" कर्कः "न दर्शपौर्णमासस्य पक्षभेदेनानुष्ठानम् किं तर्हि तन्त्रेण कर्तव्यौ" कुतः ? समस्तचोदितत्वात् समस्तयोरेव दर्शपौर्णमासयोः प्रत्यहं मासपर्यन्तं विहितत्वात् सारस्वते तु पक्षभेदेनैव, तत्र तथैव विधानात्" संव्या० । "अग्निहोत्रं च" सू० । "अस्य सत्रस्य पूर्वमेवाभिहितो न्यायः" कर्कः तन्त्रेण न तु नित्याग्निहोत्रवत्सायम्प्रातः पृथक्पृथगिति अतो दिवसे एव सायम्प्रातस्तनमग्निहोत्रं तन्त्रेणैव होतव्यम् एककालत्वाद्ङ्गानि तन्त्रेण प्रधानाङ्गतयस्तु भिन्नाः" संव्या० । "पृथङ्मासाश्चातुर्मास्यपर्वभिः" सू० "नीयन्ते वैश्वदेवेन मासम्" "वरुणप्रघासैर्मासम् साकमेधैर्मासम् शुनासीरीयेण मासमिति ताण्ड्य० श्रुतेः" कर्कः । "पृथक् पृथक्-चत्वारो मासा नेयाः" संव्या० । "साकमेधा दर्शपूर्णमासवत्" सू० । "तन्त्रेणेत्युक्तो न्यायः" कर्कः । "सोमा या सामान्यात्" सू० । "एते अग्निहोत्रादयः सोमा वा भवन्ति कुतः सामान्यात् सत्रं हि सोमयागैः प्रख्यातम्" संव्या० "न जुहोतिशब्दात्" सू० 'नैतदेवम् सोमा इति कुतः?

एतत्? जुहोतिशब्दात् "मासमग्निहोत्रं जुहोतीति" जुहोतिशब्दोऽत्र भवति न चासौ सोमयागेषु प्रसिद्धः तस्माच्च सोमा इति" संव्या०। "काममितरे" सू०। "इतरे तर्हि दर्शपूर्णमासादयो भवन्तु सोमाः न हि तत्र जुहोतिशब्द इति नेत्युच्यते दर्शपूर्णमासादयः शब्दा निरुपपदा एव दर्शपौर्णमासादीन् सोमान् प्रत्याययन्ति सोमोपपदाः निरुपपदाश्चैते मासं दर्शपौर्णमासाभ्यामिति तस्माद्दर्शपौर्णमासादयोऽपि न सोमा एते" संव्या०। दर्शपौर्णमासादयः कामं सोमा भवन्तु यतस्तत्र जुहोतिशब्दो नास्ति परमार्थतस्तु तेऽप्यत्र सोमा न भवन्ति यतो दर्शपूर्णमासादयः शब्दा निरुपपदा अत्र श्रूयन्ते न चातुर्मास्यसोमा दर्शपूर्णमाससोमा इत्येवं सोमोपपदाः अतस्तेऽपि न सोमा इति सिद्धान्तः। एवं षण्मासाः परिपूर्णाः मासश्चात्र सर्वत्र सावनस्त्रिंशदहात्मकः अथोत्तरेषु षट्सु मासेष्वहान्याह" कर्कः।"इतिगातयतोरयनपूर्वपक्षेण षण्मासान्"सू०। "इतिवातवतोरयनस्य पूर्व्वपूर्व्वपक्षेण षण्मासान् नयेयुः। तत्र विशेषमाह" कर्कः "उत्तमे त्र्योऽभिप्लवा दशरात्रो महाव्रतम् "सू०।"उत्तमे द्वादशे मासे एतान्यहानि भवन्ति"संव्या०। "उपरिष्टादतिरात्रं भवति"सू०। "अनुप्रहस्तुतेः यदन्यतरतोऽतिरात्रस्तेनाहीन इति"देव०"अन्ते एक उदयनीयातिरात्र एव भवति न प्रायणीय इत्यर्थः"कर्कः;"उभयतो वा"सू० "अतिरात्रो भवति सत्रत्वात् अनुप्रहस्तुतिस्तु अहीनत्वेन संस्तौति तत्कथम्? हविर्यज्ञैर्व्यवहितत्वात्"देव० "अथवोभयतोऽतिरात्रं भवति प्रायणीयश्चोदयनीयश्चात्र द्वावपि भवत इत्यर्थः"संव्या०। "हविर्यज्ञेभ्योऽतिरात्रमेके सोमानन्तर्यात्"सू०हविर्यज्ञेभ्योऽवसितेभ्यः एके प्रायणीयमतिरात्रमिच्छन्ति एवं सोमानन्तर्यं भवतिए के तन्नेच्छन्ति अग्नीषोमीयोत्तरकालता हि तस्य प्रकृतौ दृष्टा इहापि तद्वदेव तस्मात् प्रागेव हविर्यज्ञेभ्यः प्रायणीयः"कर्कः उभयतोऽतिरात्रपक्षे प्रायणीयमतिरात्रमेके आचार्याः"हविर्यज्ञेभ्योऽग्निहोत्रदर्शपूर्णमासचातुर्मास्यपर्वभ्यः परं कुर्वन्ति एवं हि सर्व्वेषां सोमयागानामानन्तर्यमव्यवधानं कृतं भवति इतरथा हविर्यज्ञैर्व्यवधानं स्यात् एके एतन्न वाञ्छन्ति यतः प्रकृतौ प्रायणीयस्याग्नीषोमीयोत्तरकालता दृष्टा इहापि च तद्देवानुष्ठानं युक्तम् तस्माद्धविर्यज्ञेभ्यः पूर्व एव प्रायणीयो भवति; अन्येभ्यः सत्रेभ्योऽत्र विशेषमाह"संव्या०।"अत्सरुकाः कुण्डप्रतिरूपाश्चमसाः"सू०। अत्सरुकाः अदण्डका कुण्डप्रतिरूपाः वृत्ताकाराः कर्कः। "अत्र अत्सरुका अदण्डा मूलग्राहकचिह्नदण्डरहिताः कुण्डप्रतिरूपाः कुण्डाकारा वृत्ताश्च भवन्ति"संव्या०।"पञ्चर्त्विजस्त्रीणि त्रीणि कर्माणि कुर्युः"सू०। "अत्र कुण्डपायिनामयने वक्ष्यमाणाः पञ्चर्त्विजस्त्रीणित्रीणि कर्म्माणि कुर्वन्ति त्रयाणांत्रयाणामृत्विजां कर्माणि एकैकः करोति" संव्या०"होताध्वर्य्यवपोत्रीये च"सू०। "चशब्दाद्धौत्रं च" कर्कः। "उद्गाता नेष्ट्राच्छावाकीये"सू०,"मैत्रावरुणो ब्रह्मत्वप्रातिहर्त्रे"। "प्रस्तोता ब्राह्मणाच्छंसिग्रावस्तोत्रीये" सू०। "सर्वत्र प्रथमान्तः कर्ता"संव्या० "प्रतिप्रस्थाताग्नीध्रौन्नेत्रे"सू०। "चकारः स र्वत्रानुवर्त्तते" कर्कः। "सुब्रह्मण्यासनेभ्योऽनुसंसर्पमितराणि" सू०। "आसनशब्दः स्थानवाची मुख्यस्थानेभ्यः अनु सृप्त्वा-सृप्त्वा परकीयाणि कर्माणि कुर्युः स्वकर्मकर्त्तृकस्य चरितार्थत्वात्" कर्कः।

**कुण्डपायिनामयनन्याय** पु० जैमिन्युक्ते कुण्डपायिनामयननामकसत्रे ऽग्निहोत्रपदस्य प्रकृताग्निहोत्रात् कर्म्मान्तरत्वप्रतिपादके न्यायभेदे स च न्यायो जै०सू० दर्शितोयथा "प्रकरणान्तरे प्रयोजनान्यत्वम्"जै०सू०;"कुण्डपायिनामयने श्रूयते—सायम् अग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजते"इत्येवमादि। तत्र सन्दिह्यते,—किं नियते अग्निहोत्रे नियतयोश्च दर्शपूर्णमासयोर्मासो विधीयते कालः? अथ किं नियताग्निहोत्रात् नियताभ्याञ्च दर्शपूर्णमासाभ्यां कर्मान्तरविधानम्?—इति। किं तावत् प्राप्तं?—नियतेषु कालविधिः इति कुतः? कालविधिस्वरूप एष शब्दोमासमिति। कथं कालविधिस्वरूपता?। यत् अग्निहोत्रं जुहोति—इति विदितं, मासमित्यविदितम्। एवं च अग्निहोत्रशब्दो दर्शपूर्णमासशब्दश्च न अर्थान्तरवृत्ती भविष्यतः तस्मात् कालविधिः। ननु कुण्डपायिनामयनप्रकरणं बाध्येतैवम्। कामं बाध्यतां, वाक्यं हि बलवत्तरम्। एवं प्राप्ते ब्रूमः,—प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे तस्य वाचकं भवितुमर्हति। ननु प्रत्यक्षोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च गुणविधिः। न,—इत्युच्यते। कथम्?। उपसद्भिश्चरित्वेति हुत्वा इदमभिधीयते, न च, उपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च सन्ति। तस्मात् अशक्यः तत्र मासविधिः 'अथ उच्येत,—उपसदोऽपि विधीयन्ते'—इति। तथा गुणविधानार्थेऽस्मिन् वाक्ये अनेकगुणविधानात् वाक्यं भिद्येत! अस्मिन् पक्षे पुनरनन्यम् अग्निहोत्रशब्दे न

कर्म्म विशेक्ष्यति तेन वाक्यभेदो न भविष्यति। तस्मात् कर्म्मान्तरम् इति सिद्धम्" भाष्यम्।

तत्त्वबोधिन्यां विवृतमेतत् यथा "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति दर्शपौर्णमासाभ्यां मासं यजेतेति" श्रूयते। उपसदश्च ज्योतिष्टोमयागे दीक्षादिवसादूर्द्धं सोमाभिषवदिवसात् पूर्व्वं कर्त्तव्या होमविशेषा इति माधवाचार्य्यप्रभृतियाज्ञिकमीमांसकाः तत्परिपाटी च(डावका) इत्यस्मद्देशप्रसिद्धजलपात्रसदृशाकारकम्बुग्रीवादिवदनेकरेखाविशिष्टाग्रभागमहावीराख्यपात्रविशेषः तत्संस्थानं यथा तस्मिन् पात्रे यवागूसहितं दधि कृत्वा संदंशाकारकाष्ठद्वयेन तस्य ग्रीवां धृत्वा दक्षिणावर्त्तेन परावृत्य एकवारं तत्र स्थितं प्रतप्तं यवागूदधि जुहोति वामावर्त्तेनापरवारमिति वारद्वयहोमेनैकोपसद्भवतीति याज्ञिकप्रसिद्धिः। उपसद्भिरित्यभेदे तृतीयाश्वमेधेनेत्यादिवत् तथाच उपसद्यागाचरणं कृत्वेत्यर्थः एतेन "उपसत्कथ्यते तत्र सतितैर्व्रीहिभिश्चरुरिति मीमांसानभिज्ञस्य कल्पनं निरस्तं मीमांसासन्निबन्धा केनापि तथानभिधानात्। अत्र "यावज्जीवमग्निहोत्रं जुहोतीति" श्रुतिप्राप्ताग्निहोत्रमनूद्य उपसदानन्तर्य्यं माससाध्यत्वञ्चेति गुणद्वयं विधीयते किं वा विशिष्टकर्म्मान्तरमिति संशये नायं कर्म्मान्तरविधिगौरवात् किन्तु कृप्ताग्निहोत्रे गुणद्वयविधिर्लाघवात् नच प्रकरणान्तरपठितत्वेनाग्निहोत्रपदानुक्तप्रत्युपस्थितिरिति वाच्यम् अग्निहोत्रशब्दस्य तत्रैव शक्तेर्नानार्थत्वाभावाच्च प्रकरणान्तरेऽप्युपस्थितिसम्भवात् न च कथं तर्ह्यग्निहोत्रपदशक्तिः कौण्डपायिनामयनेऽपि तच्छक्तिसम्भवादिति वाच्यं "यावज्जीवमग्निहोत्रं जुहोतीति" श्रुत्युक्ताग्निहोत्रस्य "यदग्नये च प्रजापतये च सायं प्रातर्जुहोतीति" श्रुत्या देवताकाङ्क्षानिरासेनाग्निहोत्रपदस्य यागनामपरत्वेन तत्र रूढ्यात् इह तु देवताकाङ्क्षानिरासार्थम् अग्नेर्होत्रमिति व्युत्पत्तिकल्पनेनाग्निदेवताकत्वरूपोपाधिहोत्रगुणयोगाद्गौणत्वस्यापि ज्ञापितत्वात् नानाशक्तिकल्पने गौरवादिति प्राप्ते उच्यते प्राप्ते कर्म्मणि गुणद्वयविधाने वाक्यभेदापत्तेः तथाहि किं मास एव विधीयते उत उपसद्भिश्चरित्वेति उपसदपि, नाद्यः नित्याग्निहोत्रे उपसदोऽसत्त्वेन तस्यापि विधातव्यत्वादित्युभयगुणविधौ वाक्यभेदापत्तेः प्रधानानुवादेन गुणद्वयविधाने प्रधानापूर्व्वस्य प्राप्तत्वेन गुणानां फलोपकारकाङ्क्षतया एकगुणविधानेनाकाङ्क्षानिवृत्तौ विधेयान्तरं प्रति आकाङ्क्षामुत्थाप्य वाक्यान्तरकल्पनेनाग्निहोत्रं मासं कुर्य्यात् अग्निहोत्रमुपसदनन्तरं कुर्य्यादिति विधिद्वये पर्य्यवसानात् अपूर्व्वद्वयं विधेयं स्यात् तत्र प्रत्येकगुणानुष्ठाने प्रत्येकमपूर्व्वमित्यपूर्व्वद्वयं मिलितानुष्ठाने च प्रत्येकजन्यापूर्व्वद्वयम् उभाभ्यां विलक्षणमपूर्व्वं वा जन्यत इति गौरवं विशिष्टैककर्म्मविधाने गुणानां प्रधानस्वरूपनिर्व्वाहकाङ्क्षतया साङ्गप्रधानजन्यमेकमेवापूर्व्वं विधेयं स्यादित्यपूर्व्वैक्यादेकोविधिः। अतएवोक्तं "प्राप्ते कर्म्मणि नानेकोविधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः"। विध्यन्तरप्राप्ते प्रधाने अनेकगुणोविधातुं न शक्यते वाक्यभेदापत्तेरिति शेषः अप्राप्ते तु प्रधाने बहवोऽपि गुणा एकयत्नत एकवाक्यात् विधीयन्ते नानागुणविशिष्टैकप्रधानविधिसम्भवेनापूर्व्वैक्यादित्यर्थः। नचैकगुणविशिष्टापरगुणोविधेयः यथाग्निहोत्रमुपसदनन्तरं मासं कुर्य्यादिति न वाक्यभेद इति वाच्यम् गुणानां परस्परं विशेषणविशिष्यभावेनान्वयबोधे निराकाङ्क्षत्वात् तथाच जैमिनिसूत्रं "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्"। गुणानां विशेषणानां अङ्गानाञ्च परस्परमसम्बन्धः विशेष्यविशेषणभावेन नान्वयः परार्थत्वात् द्वयोरपि विशेष्यान्वयित्वात् तथासत्येव कथं नान्वयस्तत्राह समत्वात् द्वयोरेव परसाकाङ्क्षतया तुल्यरूपत्वात् न परस्परं गुणप्रधानभावः। यत्तु परस्परवैशिष्ट्येन गुणद्वयैकविधित्वे विनिगमकाभावादुभयोरपि विशेष्यत्वेन विशेषणत्वेन च विधेयत्वेन वाक्यभेद इति, तन्न विनिगमकाभावेन वाक्यस्य द्वैविध्येऽपि नापूर्व्वभेदकल्पना किन्तु कारणतावच्छेदकभेदेन कारणभेदमात्रम् अन्यथा ईदृशवाक्यभेदस्य विशिष्टैकप्रधानविधिपक्षेऽपि सम्भवात्। किमुपसदानन्तर्य्यविशिष्टे माससाध्यत्ववैशिष्ट्यं माससाध्यत्वविशिष्टे वा उपसदानन्तर्य्यवैशिष्ट्यमिति विनिगमकाभावात्। नचैकत्र द्वयमिति न्यायेन विशेष्ये युगपद्विशेषणद्वयमिति वाच्यं वेदे विशिष्टवैशिष्ट्यबोधस्यौत्सर्गिकत्वात्। किञ्च विशेष्यविशेषणभावस्य द्वैविध्येऽपि विशिष्टस्यानतिरिक्ततया कारणैक्यात् कार्य्यैक्याच्च न कार्य्यकारणभावभेदोऽपि एकापूर्व्वं प्रत्येव परस्परसापेक्षतया उभयोर्हेतुत्वादिति वाक्यार्थैक्याच्चोक्तभेदरूपवाक्यभेदोदोषाय कारणतावच्छेदकगौरवञ्च। विशिष्टविधिपक्षेऽपि तुल्यमित्यास्तां विस्तरः"।

तथाचैतादृशलाववद्वहितकौण्डपायिनामयनप्रकरणपाठ एव कर्म्मान्तरत्वे प्रमाणं तथाच सिद्धान्तसूत्रम् "प्रकरणान्यत्वे प्रयोजनान्यत्वमिति" अतएव प्रकरणाद्वाक्यस्य बलीयस्त्वात् यज्ञाग्निहोत्रगौणाग्निहोत्रस्योपस्थित्या गुणविधिरित्यपि निरस्तं तस्योक्तगौरवपराहतत्वात्। एवञ्च गौण्याग्निहोत्रपदप्रयोगस्तद्धर्म्मातिदेशार्थः अतएव "देवश्राद्धादौ श्राद्धशब्दो गौणस्तद्धर्म्मप्राप्त्यर्थः कौण्डपायिनामयने इवाग्निहोत्रशब्द इति" श्राद्धविवेकः।

**कुण्डपाय्य** पु० कुण्डेन कुण्डाकारेण चमसेन पीयते सोमोऽत्र आधारे यत्—पा० युगागमश्च। कुण्डपायिनामयनामके सत्रभेदे "यस्ते शृङ्गवृषो नपात् प्रणपात् कुण्डपाय्यः" ऋ० ८,१७,१३

**कुण्डभेदिन्** पु० धृतराष्ट्रपुत्रभेदे, "अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः" भा०आ० ६७अ०

**कुण्डल** पुंन० अर्द्धर्चा०। कुण्डते कुण्डयते कुडि—दाहे कुडि—रक्षायां वा कर्त्तरि कर्म्मणि वा वृषा०कलच्, कुण्डं कुण्डाकारं लाति ला—क कुण्डस्तदाकारोऽस्त्यस्य सिध्मादित्वाल्लच् वा। १कर्णभूषणभेदे "कनककुण्डलवान् किरिटी" विष्णुध्या० २वलये ३वेष्टने मेदि० "मण्डलानि पताकाश्च मरीचीः कुण्डलानि च" सुश्रु० "अथैतान्युपकल्पयीत समावर्त्त्यमाने मणिकुण्डले वस्त्रयुगमित्यादि" आश्व० गृ० कुण्डले आबध्नीत" तत्रैव" ते च सौवर्णे एव यथाह मनुः "यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले" "ताडकाचलकपालकुण्डला" रघुः

**कुण्डलना** स्त्री कुण्डलं वेष्टनं करोति कुण्डल+णिच्—भावे युच्। वेष्टनकरणे (वेडा देओया) "फणिभाषितभाष्यफक्किका विषमां कुण्डलनामवापिता" नैष०।

**कुण्डलिका** स्त्री मात्रावृत्तभेदे तल्लक्षणं यथा "कुण्डलिका सा कथ्यते प्रथमं दोहा यत्र। वोलाचरणचतुष्टयं प्रभवति विमलं तत्र। प्रभवति विमलं तत्र पदमतिसुललितयमकम्। अष्टपदी सा भवति विमलकविकौशलगमकम्। अष्टपदी सा भवति सुखितपलितमण्डलिका कुण्डलिनायकभणिता विबुधकर्णे कुण्डलिकेति"

**कुण्डलिन्** पुंस्त्री कुण्डलं पाशाकारं वेष्टनं वा अस्त्यस्य इनि। १सर्पे स्त्रियां ङीप् २वरुणे तस्य पाशास्त्रवत्त्वात् तथात्वम्। ३मयूरे पुंस्त्री मेदि० ४चित्रमृगे ५वेष्टनयुक्ते त्रि० स्त्रियां ङीप्। सा च (जिलेपी) इतिख्याते पक्वान्नभेदे भावप्र० तत्पाकप्रकारो दर्शितो यथा

"नूतनं घटमानीय तस्यान्तः कुशलोजनः। प्रस्थार्द्धपरिमाणेन दध्नाऽम्लेन प्रलेपयेत्। द्विप्रस्थां समितां तत्र दध्यम्लं प्रस्थसम्मितम्। घृतमर्द्धशरावञ्च घोलयित्वा घटे क्षिपेत्। आतपे स्थापयेत्तावद्यावद्याति तदम्लताम्। ततस्तत् क्षिपेत्पात्रे सच्छिद्रे भाजने तु तत्। परिभ्राम्य परिभ्राम्य तत् सन्तप्ते घृते क्षिपेत्। पुनः पुनस्तदावृत्त्या विदध्यान्मण्डलाकृतिम्। तां सुपक्वां घृतान्नीत्वा सितापाके तनुद्रवे। कर्पूरादिसुगन्धेन स्नपयित्वोद्धरेत्ततः। एषा कुण्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा। धातुवृद्धिकरी वृष्या रुच्या च क्षिप्रतर्पणी"।

तन्त्रसारप्रसिद्धे मूलाधारस्थिते षट्चक्रमध्यवर्त्तिस्थे देवीभेदे यथा "ध्यायेत् कुण्डलिनीं सूक्ष्मां मूलाधारनिवासिनीम्। तामिष्टदेवतारूपां सार्द्धत्रिवलयान्विताम्। कोटिसौदामनीभासां स्वयम्भूलिङ्गवेष्टिनीम्। तामुत्थाप्य महादेवीं प्राणमन्त्रेण साधकः। उद्यद्दिनकरोद्द्योतां यावच्छ्वासं दृढासनः। अशेषाशुभशान्त्यर्थं समाहितमनाश्चिरम्। तत्प्रभापटलव्याप्तं शरीरमपि चिन्तयेत्" इति

**कुण्डशायिन्** पु० धृतराष्ट्रस्यपुत्रभेदे "अपराजितः कुण्डशायी विशालाक्षो दृढाधरः" भा० आ०१७अ०

**कुण्डाशिन्** पु० धृतराष्ट्रस्यपुत्रभेदे। "कुण्डाशी विरजाश्चैव दुःशला च शताधिका" भा० आ० ११७अ०। "अमृते जारजः कुण्डोमृते भर्त्तरि गोलकः। यस्तयो रन्नमश्नाति स कुण्डाशीति कथ्यते"देवलोक्ते २कुण्डगोलकयोरन्नभक्षके त्रि० स्त्रियां ङीप् "अगारदाही गरदः कुण्डाशी सोमविक्रयी" मनुः "अव्रती वृषलीभर्त्ता कुण्डाशी सोमविक्रयी" भा० आनु०१४३अ०

**कुण्डिक** पु० कौरवे राजभेदे। "धृतराष्ट्रोऽथ राजासीत् तस्य पुत्रोऽथ कुण्डिकः। हस्ती वितर्कः क्राथश्च कुण्डिनश्चापि पञ्चमः" भा० आ० ९४" अयञ्च धृतराष्ट्रः दुर्य्योधनपितुर्भिन्नः कुरुवंश्यः तत्रैव विस्तरः।

**कुण्डिका** स्त्री कुडि—ण्वुल्। १ कमण्डलौ हेमच०। २ पिठरे (कुँडि) शब्दच०।

**कुण्डिन्** त्रि० कुडि—णिनि—कुण्ड+अस्त्यर्थे इनिर्वा। १कुण्डयुक्ते स्त्रियां ङीप् "रावणस्तु यतिर्भूत्वा मुण्डः-कुण्डी त्रिदण्डधृक्" भा० व० २७७अ० "दण्डी छत्री च कुण्डी च द्विजानां धारणस्तथा"भा०व०१४अ० इत्युक्ते २शिवे पु० "रत्नभाण्डभेदे स्त्री "सन्ति निष्कसह-

स्नानि कुण्डिन्यो भरिताः शुभाः” भा०स०५९अ०”कुण्डिन्यः पात्रभेदाः “भाण्डिन्य इति वा पाठः” नीलक० । कुण्डिन इति पाठस्तु प्रामादिकः

**कुण्डिन** पु० कुरुवंश्ये नृपभेदे । १कुण्डिकशब्दे उदा० २भोजदेशस्थे पुरभेदे न०“कुण्डिने पुण्डरीकाक्ष! भोजपुत्रस्य शासनात्” हरिवं० १०४ अ० तच्च दक्षिणदेशस्थम् । “राजर्षेर्यदिवस्यासीद्विदर्भो नाम वै सुतः । विन्ध्यस्य दक्षिणे पार्श्वे विदर्भा यो न्यवेशयत् । क्रथकौशिकमुख्याश्च पुत्रास्तस्य महात्मनः । बभूवुर्वीर्य्यसम्पन्नाः पृथग्वंशकरा नृपाः । तस्यान्ववाये भीमस्य जज्ञिरे वृष्णयो नृप! । क्रथस्य त्वंशुमान् वंशे कैशिकस्य तु भीष्मकः । हिरण्यरोमेत्याहुर्यं दाक्षिणात्येश्वरं जनाः । अगस्त्यगुप्तामाशां यः कुण्डिनस्थोऽन्वशान्नृपः” । “विलासिनः कुण्डिनमण्डनायितम्” नैष० । “तस्मात् पावर्तत कुण्डिनेश्वरः” रघुः ३ऋषिभेदे पु०। तस्य गोत्रापत्यम् गर्गा० यञ् । कौण्डिन्य तद्गोत्रापत्ये पुंस्त्री “ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्याय तक्रम् । बहुषु तस्य लुक् । कुण्डिनास्तद्गोत्रापत्येषु भूम्नि । “कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति” आश्व० श्रौ०१२, १५,२,

**कुण्डीर** पुं कुड़ि-ईरन् । १मनुष्ये २बलवति त्रि० धरणी ।

**कुण्डृणाची** स्त्री कुटिलगतौ । “पताति कुण्डृणाच्या” ऋ०१।२९।६० “कुण्डृणाच्या—वक्रया गत्या” भा०।

**कुण्डोद्** पु० भारतप्रसिद्धे पर्व्वतभेदे “कुण्डोदःपर्व्वतोरम्यो बहुमूलफलोदकः नैषधस्तृषितोयत्र जलं शर्म्म च लब्धवान्” भा०व० ८७अ० ।

**कुण्डोदर** पु० कुण्ड इव उदरमस्य । १नागभेदे । कर्क्करा-कर्क्करो नागौ कुण्डोदरमहोदरौ” भा०आ० ३५अ० । २अप्रशस्तोदरयुक्ते त्रि० । ततःक्षेपे “उदराश्वेषु” पा० परेषु पूर्व्वमन्तोदात्तम् ।

**कुत** आस्तरणे सौ०प०सक०सेट् । कोतति अकोतीत् । चुकोत ।

**कुतनु** पुं कुत्सिता तनुरस्य । १कुवेरे त्रिका० कुवेरशब्दे व्युत्पत्तिः २कुत्सितदेहान्विते त्रि० । कुगतिस० । ३कुत्सितदेहे स्त्री ।

**कुतन्त्री** स्त्री कुगतिस० । कुत्सितायां वीणायाम् । सेव । १क्षुद्रदण्डे स्त्री । “स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः” (विश्वामित्रः) भा०शा०१४अ०“कुतन्त्रीं दण्डिकाम्” नीलकण्ठः ।

**कुतप** पु०कुत्सितं पापं तपति कुं भूमिं तपति—तप—अच् कुतकपन् वा । १सूर्य्ये २वह्नौ ३अतिथौ ४गवि ५भागिनेये ६द्विजातौ च ७दौहित्रे ८वाद्यभेदे ९नेपालकम्बले १०कुशतृणे च न०मेदि० । पञ्चदशधा विभक्तदिनस्याष्टमे ११भागे अमरः अर्द्धरा०दि “मध्याह्नः खड्गपात्रञ्च तथा नेपालकम्बलम् । रौप्यं दर्भास्तिलाः शाकं दौहित्रश्चाष्टमः स्मृतः” इति स्मृत्युक्तेषु अष्टसु पदार्थेषु । “कुत्सितं पापमित्याहुस्तस्य सन्तापकारिणः । अष्टावेतेयस्तस्मात् कुतपा इति विश्रुताः” इति स्मृत्युक्तेस्तेषां तथात्वम् । अह्नो-मुहूर्त्ता विख्याता दश पञ्च च सर्व्वदा । तत्राष्टमो मुहूर्त्तोयः स कालः कुतपःस्मृतः” स्मृतिः । स च एकोद्दिष्टश्राद्धारम्भकालः “कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् । आवर्त्तनसमीपे वा तत्रैव नियतात्मवान्” कालमा० व्यासोक्तेः । “आवर्त्तनं पश्चिमदिगवस्थितच्छायायाः पूर्व्वपदिग्गतिकालः कुतपशेषपदखण्ड इत्यर्थः” रघु० । “आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः । विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत्” गौतमः । “दिवसस्याष्टमे भागे मन्दीभवति भास्करः । स कालः कुतपोज्ञेयः पितॄणां दत्तमक्षयम्” मत्०पु०“त्रीणि श्राद्धे प्रशंसन्ते दौहित्रः कुतपस्तिलाः” मनूक्तौ दौहित्रतिलानां पृथङ्निर्द्देशात्उक्तकालपरता । तथाच तत्रैव मुख्यत्वम् दौहित्रादौ परिभाषिकत्वमिति विवेकः । ज्योत्स्नादि० चतुरर्थ्याम् अण् । कौतप तन्निर्वृत्तादौ त्रि० ।

**कुतस्** अव्य० कस्मात् किम्+तसिल् किमः कुः । १कस्मादितिहेतुविषये १प्रश्ने २निह्नवे च विश्वः। ३आक्षेपविषये हेतौ “मदमूढबुद्धिषु विवेकिता कुतः ?” माघः “कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्” गीता । “कुतस्तु खलु सोम्यैवं स्यात् कथमसतः सज्जायेत” श्रुतिः । ततः आक्षेपातिशयार्थे तरप् तमप् वा आमु०च० कुतस्तराम् कुतस्तमाम् आक्षेपविषयहेत्वतिशये अव्य० ततोभवार्थे त्यप् । कुतस्त्य कुतोभवे त्रि०। “कुतस्त्यं भीरु ! यत्तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे” भट्टिः ।

**कुतुक** न० कुत बा० उकङ् । १कौतूहले फलनिरपेक्षतया कर्त्तुमौत्सुक्ये अमरः । “क्रमविगलितपुच्छैरभिमतमास्तां बधेन किं शिखिनः। कुतुकिनि ! पुनर्न लाभो विषधरविषमं वनं भविता” उद्भटः । ततो युवा० स्वार्थे अण् । कौतुक कौतूहले न० ।

**कुतुप** पुं न० कुतप्र+ष्ट्रो०। १पञ्चदशधा विभक्तदिवसस्याष्टमांशे शब्दरत्ना०। हृस्वा कुतूः डुपच्। (कोटकुपा) चर्म्ममये हृस्वे २स्नेहपात्रे पु० अमरः।

**कुतुम्बुक** न० कुगतिस०। कुत्सिततिन्दुकीफले शब्दचि०

**कुतू** स्त्री कुत—बा०कू। चर्म्ममये स्नेहपात्रे (कुपा) अमरः

**कुतू(कू)णक** पु० "कुठ(कू)णकः क्षीरदोषाक्षिस्यूनामेव वर्त्मनि। जायते तेन तन्नेत्रं कण्डूरं च स्रवेन्मुहुः। शिशुः कुर्य्याल्ललाटाक्षिकूटनासावघर्षणम्। शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः" इति माधवनिदानोक्ते बालानां नेत्रवर्त्मरोगभेदे (कुतुया)

**कुतूहल** न०कुतं चर्म्ममयं स्नेहपात्रमिव हृदयं हलति हल—अच्। अपूर्व्ववस्तुदिदृक्षातिशयजन्ये चेष्टाभेदे फलनिरपेक्षतया चिकीर्षिते १कौतुके अमरः "प्रियावियोगाद्विधुरोऽपि निर्भरं कुतूहलाक्रान्तमना मनागभूत्" नैष०। "कुतूहलाच्चारुशिलोपवेशम्" भट्टिः। "अथास्ति मे शकुन्तलादर्शनं प्रति कुतूहलम्" शकु० २प्रशस्ते ३अद्भुते च त्रि०हेमच०। "रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम्" सा० द० उक्ते ४नायकयोर्भावभेदे न०। तारका० इतच्। कुतूहलित जातकौतुके त्रि०। स्वार्थे युवा० अण्। कौतूहल कौतुके न० अमरः।

**कुतृण** न०। कुगतिस०। (पाना) कुम्भग्राम् शब्दर०।

**कुतोनिमित्त** त्रि० कुतः किं निमित्तं यस्य किम्+प्रथमार्थे तसिल् ब०व०। किन्निमित्ते किंहेतुके। "कुतोनिमित्तः शोकस्ते" रामा०।

**कुत्र** अव्य०किम्+सप्तम्याः त्रल् किमः कुः। कस्मिन्नित्यर्थे प्रश्नविषये आक्षेपविषये च अधिकरणे "हा सीता केन नीता मम हृदयगता केन वा कुत्र दृष्टा" महानाट० "कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः" भाग०७।८।२५। ततो भवार्थे त्यप्। कुत्रत्य कस्मिन्भवे त्रि०"कस्यापि कुत्रत्य इवापि कस्मात्" भाग० ५।१०।२०।

**कुत्रचित्** अव्य० कुत्र+चित् सुप्सु०। क्वचिदित्यर्थे अस्माकत्वेन कस्मिन् देशे काले वेत्यर्थे। "असुरेभ्योभयं नास्ति युष्माकं कुत्रचित् क्वचित्"भा० व०१४२अ०। कुत्रचित् देशे क्वचित् काले इत्यर्थः। पा० अमरमते पदद्वयमिति भेदः। "विशिष्टं कुत्रचिद्बीजं स्त्रीयोनिस्त्वेव तु कुत्रचित्" मनुः। चन। कुत्रचन तत्रार्थे अव्य०।

**कुत्स** निन्दने चुरा० आत्म० सक० सेट्। कुत्सयते अचुकुत्सत कुत्सयाम् बभूव आस चक्रे। कुत्सयमानः कुत्सयित्वा सं कुत्स्य। कुत्स्यः कुत्सितः कुत्सनं कुत्सा कुत्सः। कुत्सना। कर्म्मणि कुत्स्यते अकुत्सि अकुत्सिषाताम् अकुत्सयिषाताम् "वहत्कुत्समार्ज्जुनेन शतक्रतुः" ऋ० १।६३।३। कुत्सायशुष्णमशूषम्" ऋ० ४।१६।१२ "कुत्सितानि कुत्सनैः" पा०। कुत्सकः। "परिवित्तिः परीवेत्ता ब्रह्महत्यश्च कुत्सकः" भा०शा०३४०अ०। "यदाऽऽत्रेयं कर्म्म मासाद्य शक्तं नावधीत्भीमं कुत्सयित्वा वचोभिः" भा० आ० अ० "नास्तिक्यम् वेदनिन्दाञ्च देवतानाञ्च कुत्सनम्" मनुः। "नैतच्छ्रुतच्छक्यं त्वया वेत्तुं लक्ष्यमित्येव कुत्सयन्" भा०आ० ५८८६श्लो०। अत्र परस्मैपदमार्षम्

**कुत्स** प० कुत्सयते संसारं कुत्स—अच्। १ऋषिभेदे तस्यापत्यम् ऋष्यण्। कौत्स तदपत्ये पुंस्त्री "कौत्सः प्रपेदे वरतन्तुशिष्यः" रघुः। वहुषु तस्य "अत्रिभृगु कुत्सेति" पा० लुक्। कुत्साः तदपत्येषु। क्त—बा० स ष्ट्रो०। २कुर्वति त्रि०। "कुत्साएते हर्य्यश्वाय" ऋ० ७।२५।५। "कुत्साः कुर्व्वाणाः। करोतेः कुत्सशब्दनिष्पत्तिः" भा०। ततः पश्वा०चतुरर्थ्यां फक्। कौत्सायन तन्निर्वृत्तादौ त्रि०।

**कुत्सकुशिकिका** स्त्री कुत्सानां कुशिकानां च मैथुनम् "द्वन्द्वाद्वुन्वैरमैथुनयोः" पा० मैथुने वुन्। कुत्सगोत्राणां कुशिकगोत्राणाञ्च स्त्रीपुंसां मैथुने।

**कुत्सन** न० कुत्स—भावे ल्युट्। १निन्दने "देवतानाञ्च कुत्सनम्"मनुः। कुत्स्यते ऽनेन करणे ल्युट्। २निन्दासाधनधर्म्मे उपचारात् ३तद्युक्ते त्रि०। "कुत्सितानि कुत्सनैः"पा०। वैयाकरणखसूचिः। प्रश्नविस्मरणार्थखसूचित्वेन धर्म्मेण वैयाकरणस्य निन्दनात् तादृशधर्म्मस्य कुत्सनत्वम् तद्वत्त्वाच्च खसूचकस्य तथात्वम्।

**कुत्सला** स्त्री कुत्स—कर्म्मणि बा० कलच् कुत्सं निन्दां लाति ला—क वा। नीलीवृक्षे शब्दच०। तस्य क्रयविक्रययोः निन्दितत्वात् तथात्वम् नीलीशब्दे विवृतिः।

**कुत्सा** स्त्री कुत्स—भावे अ। निन्दायाम् अमरः। "गुरुकुत्सामतिश्च या" भा०अनु०६५८८ श्लोकः।

**कुत्सित** न० कुत्स—कर्म्मणि क्त। १कुष्ठनामौषधौ (कुड़) राजनि० २निन्दिते त्रि० "कुत्सितानि कुत्सनैः" पा०। भावे क्त ३निन्दायाम् न०। [ अकुन्थीत् चुकुन्थ कुन्थ्यात्

**कुथ** क्लेशे (काँथपाड़ा)इदित् भ्वादि०अक०सेट्। कुन्थति

**कुथ** पूतिगन्धे दिवा० पर० अक०प०सेट्। कुथ्यति अकोथीत्। प्रतिकुथ्यति णिचि कोथयति (पोंया) निखनने। तस्य

पूतिभावसाधनत्वात्तथात्वम्। “अप्रकाशे देशे कोथयेत्” सुश्रुतः।

**कुथ** पुंस्त्री० कुथ—पूतीभावे क कुन्थ—निष्कर्षे—क नलोपोवा। “कुथा १कन्था समाख्याता कुथः स्यात् २करिकम्बलम्। कुथः ३कुशः कुथः ४कीटः ५प्रातःस्नायी द्विजः कुथः, इत्युक्ते ष्वर्थभेदेषु लिङ्गभेदस्तु रूपभेदादुदीरितः। “कुथेन नागेन्द्र-मिवेन्द्रवाहनम्”।“आक्षिप्तकेतुकुथसैन्यगजच्छलेन” माघः। “शतशश्च कुथांस्तत्र सिंहलाः समुपाहरन्” भा० स० ५१अ०। हस्तिकम्बले पुंस्त्री अमरः। “महत्या कुथ-यास्तीर्णां पृथिवीलक्षणाङ्कया” रामा०। “तत्र कुशे “शाद्वलेषु यदाशिश्ये वनान्ते वनगोचरा। कुथास्तरण-तल्पेषु किं स्यात् सुखतरं ततः” रामा०।

**कुथुम** पु०सामवेदशाखाभेदे। तं वेत्ति इनि। कुथुमिन् अण् वा। कौथुम तच्छाखाध्यायिनि। सामवेदशब्दे विवृतिः। कुथुमिना प्रोक्तमधीयते अण् नान्तस्य टिलोपे सब्रह्म-चारिपीठसर्पिसमापिकुथुमीत्यादि” वा०टिलोपः। कौथुम तत्प्रोक्ताध्यायिषु भूम्नि लि०।

**कुथोदरी** स्त्री कुम्भकर्णपौत्र्यां निकुम्भदुहितरि। सा च कल्किना हता यथाह कल्किपु० १६अ०

“मुनय ऊचुः। शृणु विष्णुयशःपुत्र! कुम्भकर्णात्म-जात्मजा। कुथोदरीति विख्याता गगनार्द्धसमुत्थिता॥ कौलकञ्जस्य महिषी निकञ्जजननी च सा। हिमाल-ये शिरः कृत्वा पादौ च निषधाचले॥ शेते स्तनं पाय-यन्ती निकञ्जं प्रस्नुतस्तनी। तस्या निश्वासवातेन विवशा वयमागताः॥ दैवेनैव समानीताः प्राप्तास्तव पदा-म्बुजम्। मुनयो रक्षणीयास्ते रक्षःसु च विपत्सु च॥ इति तेषां वचः श्रुत्वा कल्किः परपुरञ्जयः। सेनागणैः परिवृतो जगाम हिमवद्गिरिम्”। इत्युपक्रम्य तया सह युद्धे ससैन्यकल्केस्तदुदरवेशमुप-वर्ण्य “कल्किः कमलपत्राक्षः सुरारातिनिसूदनः। वा-णाग्निचेलचर्माभ्यां कम्बलैर्यानदारुभिः। प्रज्वाल्योदर-मध्येन करवालं समाददे॥ तेन खड्गेन महता कुक्षिं निर्भिद्य बन्धुभिः। बलिभिर्भ्रातृभि र्वीरैर्वृतः शस्त्रास्त्रपाणिभिः। वहिर्बभूव सर्व्वेशः कल्किः कल्कविनाशनः। सहस्राक्षो यथा वृत्रकुक्षिं दम्भोलि-नेमिना॥ योनिरन्ध्राद्गजरथास्तुरगाश्चाभवन् बहिः। नासिकाकर्णविवरात् केऽपि तस्या विनिर्गताः। ते निर्गता सततस्तस्याः सैनिका रुधिरोक्षिताः। तां विव्यधुर्नि:-क्षिपन्तीं तरसा चरणौ करौ॥ ममार सा भिन्नदेहा भिन्नकुक्षिशिरोधरा”। [कुदत्। धातुपाठः।

**कुद** मिथ्योक्तौ चु० सक० उभ० सेट्। कोदयति ते। अचू-

**कुदाल** पु० कुं भूमिं दलति दल—भेदने अण् उप०स०। कुद्दाले (कोदाल) रमानाथः।

**कुदिन** न० कोः पृथिव्याः भ्रमणेन दिनम्। १सावनदिने। तदुक्तं सू० सि०। “ओदयादोदयं भानोः सावनं तत् प्रकीर्त्तितम्। सावनानि स्युरेतेन यज्ञकालविधिस्तु तैः” ‘सूर्यस्योदयादुदयकालमारभ्याव्यवहितोदयकालपर्यन्तं यत् कालात्मकं तत् सावनं मानञ्चैकम्। एतेनोदयद्वया-न्तरात्मककालस्य गणनया सावनानि वसुद्व्यष्टाद्रीत्या-दिना मध्यमाधिकारोक्तानि भवन्ति। तद्व्यवहारमाह। यज्ञकालविधिरिति यज्ञस्य यः कालस्तस्य गणना तैः सावनैः। तुकारोऽन्यमाननिरासार्थकैवकारपरः” रङ्गना०। निरुपपदसावनदिनस्य सूर्यसंबन्धिसावनदिनपरत्वं युगे तत्संख्या च तत्रैव दर्शिता यथा “ओदयादोदयं भानोर्भूमिसावनवासराः” ॥ “ननु भोदया भगणैरित्यादिना पूर्वं सर्वेषां सावनदि-वसा उक्ता इत्यत कस्य ग्राह्या इत्यतः सूर्यसावनस्व-रूपकथनच्छलेनोत्तरमाह। ओदयादिति। सूर्यस्योदय-कालमारभ्याव्यवहिततदुदयकालपर्यन्तं यः कालः स एको दिवसः। इति ये दिवसास्ते भूमिसावनवासराः। भूदिवसा उदयस्य भूसम्बन्धेनावगमात् सावनदिवसा-स्त्वित्यर्थः। तथा च निरुपपदसावनभूमिशब्दाभ्यां सूर्यस्य वासरा एव नान्येषां सोपपदत्वाभावादिति भावः” रङ्गना०। ते कियन्त इत्यतस्तन्मानमाह “वसुद्व्यष्टाद्रिरूपाङ्क सप्ताद्रितिथयोयुगे” सू०सि०। “अष्टाश्विगजसप्तभूगोनगसप्तपञ्चभूमिता १५७७९१७८२८ युगे सूर्यसावनदिवसाः” रङ्गना०। सि०शि०अन्यथोक्तं यथा “भूदिनानि शरवेदभूपगोसप्तसप्ततिथयोऽयुताहताः १५-७७९१६४५०००० । भभ्रमास्तु भगणैर्विवर्जिता यस्य तस्य कुदिनानि तानि वा” सि०शि०। “एषामुपपत्तिः प्रागेवोक्ता। एकस्मिन् रविवर्षे यावन्तो भभ्रमाः स्युस्तावन्त एवैकोना रविसावनदिवसा भवन्ति। यतो रविः प्राग्गत्या एकं पर्यायं गतः। अतो भगणसं-ख्ययोना भभ्रमाः कहा भवन्ति। एवमन्येषामपि ग्र-हाणां कुदिनानि स्युरित्युपपन्नम्” प्रमि०। “इनोदयद्वयान्तरं तदर्कसावनं दिनम्। तदेव मेदिनी-

दिनं भवासरस्तु मध्यमः” इति सिद्धान्तशिरोमणिः। “द्युनोदयद्वयान्तरमिति। अर्कोदययोरन्तरं यत् तदर्कसावनं दिनम्। तदेव कुदिनसंज्ञं ज्ञेयम्। अतोऽपि पूर्वतन्मासवर्षादिकल्पना। अत्रार्कग्रहणमुपलक्षणं तेनान्येषामपि ग्रहाणां तदुदयद्वयान्तरं तत्सावनमिति” प्रमि०।

तद्दिवसस्य कार्यविशेषे आदर्त्तव्यतामाह सू०सि०— “सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमा ग्रहभुक्तिस्तु सावनेनैव गृह्यते”।

“सूतकं जन्ममरणसम्बन्धि। आदिपदग्राह्यं चिकित्सितचान्द्रायणादि तस्य परिच्छेदो निर्णयः। दिनाधिपमासेश्वरवर्षेश्वराः। तथा—समुच्चये। ग्रहाणां गतिर्मध्यमा। तुकारात् स्फुटगतेर्निरासः तस्याः प्रतिक्षणं वैलक्षण्याद्दिनसम्बन्धस्याभावात्। एतेन स्पष्टगत्या स्पष्टग्रहस्य चालनं निरस्तं स्थूलत्वादिति सूचितम्। सावनमानेन। एवकारादन्यमाननिरासः” प्रमि०। “प्रायश्चित्तं सूतकाद्यं चिकित्सा यज्ञाद्येवं कर्म वारादिकं च। शास्त्रे तस्मिन् खेचराणां च चारा विज्ञातव्याः सावनात् भास्करीयात्” श्रीपतिः॥

कुवासरभूमिदिनादयोऽप्यत्र। २ज्योतिषनिषिद्धे दिने च

**कुदृष्टि** स्त्री कुत्सिता दृष्टिः ज्ञानम्। वेदवाह्यतार्किककल्पनायाम्। “या वेदवाह्याः स्मृतयो याश्च काश्च कुदृष्टयः” मनुः।

**कुदेह** पु० कुत्सितोदेहोऽस्य। १कुवेरे २कुत्सितदेहयुक्ते त्रि०। कुगतिस०३कुत्सिते देहे पु०। कुदेहमानाहिविदृष्टदृष्टेः” भाग०५।१२।३।

**कुद्दार** पु० कुं पृथ्वीं दारयति दृ—विदारे अण् उपस०। १कुद्दाले भूमिविदारणाज्जाते २कोविदारवृक्षे अमरटीका।

**कुद्दाल** पु० कुं भूमिं दलति दल—अण् उप०स०। १कोविदारे वृक्षे अमरटी०२भूमिदारणास्त्रे (कोदाल) मेदि०। “समासाद्य बिलं तच्चाप्यखनन् सागरात्मजाः। कुद्दालैर्हषुकैश्चैव समुद्रं यत्नमास्थिताः” भा०व० १०७अ०। “कुद्दालं दात्रपिटकं प्रकोष्ठं कांस्यभाजनम्” भा०शा० २२८अ०। हस्त्यादि० बहुव्रीहौ एतत्पूर्वस्य पादस्य नान्त्यलोपः कुद्दालपादः। स्वार्थे क। कुद्दालक तत्रार्थे।

**कुद्मल** न०कुड्मल+पृषो०। विकाशोन्मुखे पुष्पमुकुले अमरटी०

**कुद्य** न कुद—क्यप्। भित्तौ अमरटीका।

**कुद्र** मिथ्योक्तौ इदित् चु०उभ०सक०सेट्। कुन्द्रयति अचुकुन्द्रत्। प्रनिकुन्द्रयति नोपधकरणेनैव दृष्टिसिद्धौ इदित्करणं स्वरार्थम्।

**कुद्रङ्क** पु०कुत्सितः रङ्कश्चिह्नमस्य पृषो०। मञ्चोपरिस्थे मण्डपे त्रिका०।

**कुद्रङ्ग** पु०कुत्सितोरङ्गोऽत्र पृषो०। मञ्चकोपरिस्थे मण्डपे हारा०

**कुद्रव** पु०कुं भूमिं द्रवति द्रावयति द्रु—अन्तर्भूतण्यर्थे—अच्। कोद्रवे धान्यभेदे (कोदो) भरतः। [पुंस्त्री०।

**कुद्रि** पु० ऋषिभेदे तस्यापत्यं गृष्ट्या० ढञ्। कौद्रेय तदपत्ये

**कुधान्य** न० कुत्सितं धान्यं कुगतिस०। कुत्सिते धान्यभेदे स च सुश्रुते गुणसहितोदर्शितोयथा

“कोरदूषकश्यामाकनीवारशान्तनुतुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखकुरुविन्दगवेधुकावरुकतोनपर्णीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः॥ उष्णाः कषायमधुरा रूक्षाः कटुविपाकिनः। श्लेष्मघ्ना बद्धनिष्यन्दा वातपित्तप्रकोपणाः। कषायमधुरास्तेषां शीतपित्तापहाः स्मृताः। कोद्रवश्च सनीवारःश्यामाकश्च सशान्तनुः। कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियङ्गवः। यथोत्तरं प्रधानाः स्यू रूक्षाः कफहराः स्मृताः। मधूली मधुरा शीता स्निग्धा नान्दीमुखी तथा। विशोषी तत्र भूयिष्ठं वरकः समुकुन्दकः। रूक्षा वेणुयवा ज्ञेया वीर्योष्णाः कटुपाकिनः। बद्धमूत्राः कफहराः कषाया वातकोपनाः”

**कुध्र** पु० कुं पृथिवीं धारयति धृ—मूलविभुजादि० क ह्रत०। महीध्रे पर्वते हला०।

**कुनक** पुंस्त्री करटे स्त्रियां जातित्वात् ङीष्।

**कुनख** पु० कुत्सितो नखोऽत्र। सुश्रुतोक्ते रोगभेदे (कुनि) तल्लक्षणं तत्रैवोक्तं यथा। “अभिघातात् प्रदुष्टो येनखो रूक्षोऽसितः खरः। भवेत्तं कुनखं विद्यात् कुलीनमिति संज्ञितम्”। कुनखे विधिरप्येष” सुश्रु०। द्व०। कुत्सितनखयुक्ते त्रि०स्त्रियां स्वाङ्गत्वात् वा ङीष्।

**कुनखिन्** त्रि० कुनखो रोगोऽस्त्यस्य इनि। कुनखरोगयुक्ते सच रोगो भुक्तावशिष्टसुवर्णस्तेयरूपजन्मान्तरीय महापातकचिह्नं यथाह विष्णुः

“अथ नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुष्ये लक्षणानि भवन्ति कुष्ठ्यतिपातकी, ब्रह्महा यक्ष्मी, सुरापः श्यावदन्तकः, सुवर्णहारी कुनखी गुरुतल्पगोदुश्चर्म्मा”। “कुनखी श्यावदन्तश्च द्वादशरात्रं चरित्वा तद्दन्तनखावुद्धरेयाताम्” विष्णुः। स्त्रियां ङीप्। सच रोगः गर्भावस्थायां मातृदोषभेदाज्जायते तदुक्तं सुश्रुते “दिवास्वपन्त्याः स्वापशीलोऽञ्जनादन्धो रोदनात् विकृतदृष्टिः स्नानानुलेपनात् दुःखशीलस्तैलाभ्यङ्गात् कुष्ठी नखा-

वक्रत्तनात् कुनखीत्यादि। कुनखी च श्राद्धकाले वर्ज्जनीयः यथाह मनुः "वर्ज्याःस्युर्हव्यकव्ययोः। प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः"। "दुर्वर्णः कुनखी कुष्ठी मायावी कुण्डगोलकौ, वर्ज्जनीयाः प्रयत्नेन" भा०अ० १६६। श्राद्धे वर्जनीयोक्तौ।

**कुनट** पु० कुत्सितं नटति–नट–अच्। १श्योनाकभेदे राजनि० गौरा०ङीष्। कुनटी २मनःशिलायाम् अमरः ३धन्याके राजनि०। कुत्सितोनटः कुग०स०। ४कुत्सिते नटे पु०।

**कुनलिन्** पु० ईषत् नलोऽस्त्यस्य इनि। वकवृक्षे त्रिका०। तस्य फलेषु ईषन्नलाकारत्वात्तथात्वम्।

**कुनह(ट)** पु० कूर्म्मविभागे वृह०सं० ऐशान्यामुक्ते १देशभेदे "ऐशान्यां मेरुकनष्टराज्येत्युपक्रमे "भल्लोपनीलजटासुरकुनह(ट)खसकुचिकाख्याः" इति तत्रोक्तत्वात्। कु+नह–अच्। २कुत्सितबन्धके त्रि०।

**कुनाथ** पु० कुत्सितोनाथः। १कुत्सितपालके। "कुनाथस्याजितात्मनो यथा सार्थस्य" भाग०५।१४।४। "हृतास्म्यहं कुनाथेन नपुंसा वीरमानिना" भाग० ६। १४।४। कुपालककुपत्यादयोऽप्यत्र। कोर्नाथः। २महीनाथे राजनि पु०।

**कुनाभि** पु० ईषत् नाभिरिव आवर्त्तवत्त्वात्। १वातमण्डल्याम् (घुर्णीवातास) त्रिका०। २निधिभेदे हेमच०।

**कुनामन्** त्रि० कुत्सितं प्रातरस्मरणीयं नामास्य। अतिलक्षणे स्त्रियां वा डाप् ङीप्। तस्यापत्यं बाह्वा० इञ्। कौनामि तदपत्ये पुंस्त्री०। तस्येदम् काश्या० ठञ्ञिठौ। कौनामिक तत्सम्बन्धिनि त्रि० ठञि स्त्रियां ङीप् ञिठि टाप् इदुच्चारणार्थः इति भेदः।

**कुनाशक** पु० ईषत् नाशयति स्पर्शनात् नश–णिच्–ण्वुल्। दुरालभायाम् यवासे (आलकुशी) अमरः।

**कुनिषञ्ज** पु० दशममनोः पुत्रभेदे। "दशमे त्वथ पर्य्याये द्वितीयस्यान्तरे मनोः" इत्युपक्रमे "मनोः सुतौत्तमाजाश्च कुनिषञ्जश्च वीर्य्यवान्" हरिवं० ७अ०।

**कुन्च** वक्रणे अनादरे च भ्वा० पर० सक० सेट्। कुञ्चति अकुञ्चीत् चुकुञ्च चुकुच(ञ्च)तुः। कुञ्चनम् आ+सङ्कोचने आकुञ्चति संकोचयति। वि प्रसारणे। विकुञ्चति प्रसारयति सङ्कुचितः णिच् आकुञ्चितः "आकुञ्चितसव्यपादम्" भट्टिः।

**कुन्त** पु० कुं भूमिमत्तिमुनत्ति उन्द–बा० न शकन्ध्वा०। गवेधुकायां (गड़गड़े) १धान्यभेदे। २प्रासास्त्रे च मेदि०। ३क्षुद्रकीटभेदे (उकुन्) कुन्तलः। ४चण्डभावे विश्वः। कुन्तास्त्रलक्षणं हेमा० परिख० लक्षणसमुच्चये उक्तं यथा "उक्ता कुन्तोत्पत्तिरनन्तरं कुन्तद्रव्यं वक्ष्यते वेणुर्वेत्रं विल्वचन्दनो वर्द्धनं शिंशपा खदिरोदेवदारुघण्टारोहश्चेति कुन्तस्य दण्डद्रव्याणि तत्र सप्तहस्तप्रमाणः श्रेष्ठः। षड्भिर्हस्तैर्मध्यमः। पञ्चहस्तश्च निकृष्टो भवति लोहस्याकारौ द्वौ भवतः एकं पुष्कलावर्त्तकं द्वितीयं चीनोत्थितं तत्तु तीक्ष्णं, यत्तु पुष्कलावर्तकं तल्लोहं मृदु। तयोस्त्वियं परीक्षा यत्ताडितं नदति तत्तीक्ष्णं यन्निःशब्दं तन्मृदु, निपाते यच्छिद्यते तत्तीक्ष्णं, यन्नमति तत्पुष्कलावर्त्तं मृदु। तत्र चीनोद्भवं भवत्यप्रशस्तं पुष्कलावर्त्तकमेव प्रशस्यते। कुन्तस्य फलं च मृदुना लोहेन कर्त्तव्यं तीक्ष्णेन लोहेन धारा कार्या तयोरलाभे शेषाणि लोहानि शोधयित्वा कुन्तफलं तैः कारयेत्। तत्र सप्तपर्णशाकखर्जूरीबिल्वकरवीरवेणूनां तालफलकयोः केतक्याः स्तुह्या वा पत्राकारः कुशाग्रस्य सन्निभश्च। तथा कर्णसंस्थानं वा कर्त्तव्यं तच्च निर्व्रणं मनोदृष्टिहरन्तीक्ष्णं शुभञ्च श्रेष्ठं षोड़शाङ्गुलायामं, मध्यमं चतुर्द्दशाङ्गुलायाममधमं द्वादशाङ्गुलं भवति। अङ्गुलविस्तारं सार्द्धाङ्गुलविस्तारं द्व्यङ्गुलविस्तारञ्च क्रमाद्भवति। द्वियववैपुल्यं सार्द्धैकयववैपुल्यमेकयववैपुल्यञ्च। तत्र श्लोकाः। वेणवादिद्रुमजातीनां कार्य्यो दण्डः सच त्रिधा। सप्तषट्पञ्चहस्तश्च उत्तमो मध्यमोऽधमः। तस्याकारौ च द्वौ स्यातां सचीनं पुष्कलं तथा। तत्रैकं तीक्ष्णं लोहस्य द्वितीयं मृदुनस्तथा। तत् फलं मृदुलोहेन धारा तीक्ष्णेन कारयेत्। सप्तपर्णादिपत्राणां समाकारं फलं भवेत्। षोड़शाङ्गुलमायामोद्व्यङ्गुलञ्चापि विस्तृतम्। यवद्वितयवैपुल्यं श्रेष्ठं कुन्तफलं भवेत्। मध्यमाधमयोर्हानिर्द्व्यङ्गुलार्द्धाङ्गुलं क्रमात्। आयामे विस्तृते तस्य। वैपुल्ये च यथाक्रमम्। सुशब्दत्वं मृदुगन्धत्वं सुपीनत्वं दर्शपूजितत्वञ्चेति फलगुणाः। चम्पकोत्पलचन्दनागुरुपद्मोशीरपत्ररसानां सुगन्धिदानाम् भवति फलस्य गन्धसंपत्। तथा युक्तं फलमतिक्रम्यापि रूपं पूजितं भवति वसागन्धि मत्स्यगन्धि गोमूत्रगन्धि दुर्गन्धि च निन्दितं भवति। मधुरं यद्यथयाम्लं यत्कषायं भवति तल्लक्ष्मीप्रवर्द्धनं, यल्लवणं कटुकं तिक्तं वापि रूक्षं क्षयावहं तद्विर्द्दिशेत्। शब्दस्तु हिरण्यस्यालोमशब्दवत् घण्टाशब्दवच्च प्रशस्तो, भर्झरीभिन्नपात्रशब्दवञ्झरी

मन्त्रवश्च मन्त्रो निन्दितो भवति। वैदूर्य्यनिभं चन्द्रसमानवर्णं कमलोत्पलसदृशवर्णं निर्मलाकाशसवर्णमतसीपुष्पनिभं वा कुन्तफलं श्रियं भर्त्तुर्ददाति, मधुकोशसमानवर्णं श्यामलोहवर्णं मक्षिकासवर्णं निन्दितं भवति। हंसशुकमयूरताम्रचूडघटनन्द्यावर्त्तकूर्म्ममत्स्यसरित्प्रभा अन्ये च मङ्गलशंसिनः पदार्थाः कुन्तव्रणेषु यदि दृश्यन्ते तदा ते धर्मकामार्थसाधकाविनिर्द्दिष्टाः। पांशुकोलूकपादपवायसखरटभ्रजम्बूकनिगलक्रकलासास्त्वेवं निन्दिताः पदार्था दृश्यन्ते व्रणेषु ते दृष्टाः श्रियमपहरन्ति वत्सेति व्रणलक्षणम्। छाया वक्ष्यते ध्वजपताकाचामरच्छत्रतोरणशिविकावेश्माङ्कुशवर्द्धमानभृङ्गारगजतुरङ्गायस्मिन् कुन्तफले दृश्यन्ते धौतच्छायामरगतास्तं कुन्तमपुण्यकृतोन लभन्ते नकुलवृकच्छूकरमहिषवायसोलूकवल्मीकादयो ये निन्दितायदि कुन्ते स्युर्धौतव्यक्ते तदा स कुन्तः श्रियं भुज्यमानामपि विनाशयेद्यस्तादृशङ्कुन्तं बिभृयात्। स बधं बन्धं सद्योलभेत तस्य महिषी वा। चूलिकयोर्व्याघ्रनखस्य शुक्लानि चूर्णानि समभागानि कारयेत्। तत् चूर्णितं कृत्वा तेन चूर्णेन फले घर्षोपघर्षितं कुन्तफलं निर्मलं भवति दुर्गन्धं न भवेत्तथा मलेन न लिप्यते। तत्र चर्मकोषसमन्वितं समाहितं कारयेन्नालिकावक्त्रिव्रणं सुदृढायामेन अनुबन्धेन सुश्लिष्टैश्चार्द्रैर्वलक्षकैः सुवर्णमये रजतमये वा चर्मणि रत्नालङ्कृतैर्नलिका श्लिष्टा कर्त्तव्या। स्कन्धे दृढपरिग्रहस्य तथाचोक्तं कुन्तस्य कर्त्तव्यं नलिकासहजं वा। नलिका चात्र प्रमाणतः श्लिष्टा कार्या हरीतकीसदृशन्तालफलसमानं विल्वफलाकारं ककुभकपित्थफलसदृशं वा वृत्तमष्टास्रं वा कलशामलकाकारं वा भवति सर्वोपस्करान्वितं कुन्तायुधं षष्टिपलं श्रेष्ठं पञ्चाशत्पलं मध्यमं चत्वारिंशत्पलं निकृष्टमिति प्रबलरिपुविनाशकं क्रियान्वितञ्च कुन्तं कारयेन्नतु स्वप्रमाणादधिगौरवं, यो हि कायसारस्य बलमविदित्वा कुन्तमायुधमावहेत् सादिकस्तस्याजीर्णमजानतः पुरुषस्येवातिभुक्तमशनं कुन्तायुधं विषीभवति। इत्यौशनसे कुन्तलक्षणम्" कुन्ताः प्रविशन्तीत्यत्र कुन्तधारिषु लक्षणेत्यालङ्कारिकाः। "शक्तिकुन्तध्वजरथावाजिवारणगोदयाः" सुश्रु०। "शक्तिकुन्ताद्यायुधानीति" सुश्रुतः।

**कुन्तल** पु० कुन्तं सूक्ष्मकीटं (उकुण) लाति ला–क। १केशे "क्वापि कुन्तलव्यानवयमव्यपदेशतः। बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम्" सा० द०। तदाकारत्वात् २ह्रीवेरे च अमरः। कुन्तलाकारं केशाग्राकारं लाति ला–क। ३यवे ४चषके पानपात्रे ५लाङ्गले च विश्वः। ६ध्रुवकभेदे "वर्णैः षोड़शभिः कार्य्यः कुन्तलो लघुशेखरैः। शृङ्गारे च रसे प्रोक्त आनन्दफलदायकः" इति संगीतदामो०। "कामगिरिं समारभ्य द्वारकान्तं महेश्वरि!। श्रीकुन्तलाभिधो देशः कथितः पूर्व्वसूरिभिः" शक्तिसङ्गमतन्त्रोक्ते ७देशभेदे पु० भूम्नि। "स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुः" सा०द०। "अथापरे जनपदा दक्षिणा भरतर्षभ" इत्युपक्रमे "जिल्लिकाः कुन्तलाश्चैव सौहृदा नलकाननाः" भा०भी०९अ० दक्षिणाख्यजनपदोक्तौ। तेषां राजा अण्। कौन्तल तद्देशन्टपे। बहुषु तस्य लुक्। क्वचित् एकत्वेऽपि लुक्। "आकर्षः कुन्तलश्चैव मालवाश्चान्ध्रकास्तथा। द्राविड़ाः सिंहलाश्चैव राजा काश्मीरकस्तथा" भा०स०१अ०। ते अभिजनोऽस्य अण्। कौन्तल पित्रादिक्रमेण तद्देशवासिनि। बहुषु तस्य लुक्।

**कुन्तलवर्द्धन** पु० कुन्तलान् वर्द्धयति वृध–णिच्–ल्यु। भृङ्गराजे (भीमराज) राजनि०। तद्रसदेवनेन हि केशवृद्धिरिति वैद्यकप्रसिद्धिः।

**कुन्तलिका** स्त्री कुन्तलस्याकारो विद्यतेऽस्याः ठन् अत इत्त्वम्। दध्यादिच्छेदन्यां १क्षुरिकाभेदे पालिकायाम् हारा०। २बालानामौषधौ (बाला) स्त्री सुश्रुतः। यथा "कुन्तलिकाकुरण्टिकाप्रभृतानीत्युपक्रमे "स्वादुपाकरसाःशीताः कफघ्नाश्चातिपित्तलाः। लवणार्द्ररसाद्यक्षाः सक्षाराः वातलाः सराः। स्वादुतिक्ता कुन्तलिका" [राजनि०।

**कुन्तलोशीर** न० कुन्तल इवोशीरम्। (बाला) नामौषधौ

**कुन्ताप** पु०। १वैदिके ऋचां पाठप्रकारभेदे तत्प्रकारः आश्व० श्रौ० ८।३।७।८।९। सू० दर्शितोयथा
"तस्मादूर्ध्वं कुन्तापम्" सू०
"तस्माद् पाकपेरूर्ध्वं कुन्तापं शंसेत्। तस्मादूर्ध्वमिति वचनात् माध्यन्दिने वृषाकपौ प्रविष्टे तदनन्तरं कुन्तापः स्यादसति प्रवेशे तृतीयसवनेऽपि तस्य प्रवेशो नास्तीति गम्यते" नारा०वृ०। "तस्यादितश्चतुर्दशविध्याहं निनर्दं शंसेत" सू०। "तस्य कुन्तापस्यादितश्चतुर्दश ऋचो विग्रह्य निनर्दोऽयमपूर्व इति तस्याः स्वरूपनिदर्शनमाह" वृ०। "तृतीयेषु पादेषूदात्तमनुदात्तपरं यत् प्रथमं तन्निनर्द्दं" सू०

"तृतीयेषु पादेष्वादितो यदक्षरं तदनुदात्तीकृत्य ब्रूयात् । एतदुक्तं भवति तृतीयेषु प्रथममादित इत्यर्थः । आदितो ये द्वे अक्षरे तयोः पूर्व्वमनुदात्तं, तस्मात् परं द्वितीयम् उदात्तं यथा भवेत् तथा निनर्दैत्, नितरां ब्रूयादित्यर्थः । तदेवमुच्चारणं निनर्दशब्देनोच्यत इत्यर्थः" नारायणवृत्तिः ।
उदराभ्यन्तरस्थिते २अन्त्रभेदे न० । "उदरमेकविंशं विंशतिर्वा अन्तरुदरे कुन्तापान्युदरमेकविंशं तस्मादुदरमेकविंशः" शत०ब्रा० १२।२।४।१२। "अथ यत्कुन्तापमासीत् यो मज्जा स साकं समभवत्" तत्रैव १३।४।४।८।

**कुन्ति** पु० भूम्नि कम–क्तिच् पृषो० । १देशभेदे "कुन्तयोऽवन्तयश्चैव तथैवापरकुन्तयः" भा० भी० ६अ० जनपदोक्तौ तेषां राजा अण् । कौन्त तद्देशन्टपे पु० बहुषु तस्य लुक् । कुन्तयः तन्नृपेषु भूम्नि । "सुस्थलाश्च सुकुट्टाश्च कुलिन्दाः कुन्तिभिः सह । साल्वायनाश्च राजानः" भा०स०१२अ० । विदर्भवंशजे क्रथस्य पुत्रे २न्टपभेदे "तस्यां विदर्भोऽजनयत् पुत्रौ नाम्ना कुशक्रथौ" इत्युपक्रमे "क्रथस्य कुन्तिः पुत्रोऽभूद्वृष्णिस्तस्याथ निर्वृतिः" भाग०६।२।२ । "कुन्तेः सख्युः पिता शूरोह्यपुत्रस्य पृथामदात्" तत्रैव २४अ० १६श्लो० । कार्त्तकौ० हुरादित्वेण सहद० प्रकृतिस्वरः

**कुन्तिभोज** पु० कुन्तिसंज्ञको भोजः भोजदेशाधिपः । पृथापितरि कुन्तिसंज्ञके भोजराजे न्टपभेदे "पृथां दुहितरं वव्रे कुन्तिस्तां कुरुनन्दन ! । शूरः पूज्याय वृद्धाय कुन्तिभोजाय तां ददौ" हरिवं०३५अ० ।

**कुन्तिसुता** स्त्री ६त० । वसुदेवभगिन्यां कुन्तिभोजाय पित्रा शूरेण दत्तकत्वेन दत्तायां पृथायाम् । कुन्तीशब्दे विवृतिः कुन्तितनयादयोऽप्यत्र स्त्री ।

**कुन्ती** स्त्री वसुदेवभगिन्यां कुन्तिभोजदत्तकसुतायां पृथायाम् युधिष्ठिरादिमातरि तत्कथा यथा "महिष्यां जज्ञिरे शूराद्भोज्यायां पुरुषा दश" इत्युपक्रमे वसुदेवाद्युत्पत्तिमुक्त्वा "पञ्च चास्य वराङ्गनाः । पृथुकीर्त्तिः पृथा चैव श्रुतदेवी श्रुतश्रवाः । राजाधिदेवी च तथा पञ्चैता वीरमातरः । पृथां दुहितरं वव्रे कुन्तिस्तां कुरुनन्दन ! । शूरः पूज्याय वृद्धाय कुन्तिभोजाय तां ददौ । तस्मात् कुन्तीति विख्याता कुन्तिभोजात्मजा पृथा" हरिवं०३५ । इत्युक्त्वा "पृथां दुहितरं चक्रे कुन्तिस्तां पाण्डुरावहत्" हरिवं० ३५अ० उक्तम् ।

**कुन्तीतनय** पु० ६त० । कुन्त्यां धर्मादितो जातेषु ३युधिष्ठिरादिषु त्रिषु सूर्य्यात् जाते ४कर्णे च । तत्कथा यथा "यस्यां (कुन्त्याम्) स धर्म्मविद्राजा धर्म्माज्जज्ञे युधिष्ठिरः । भीमसेनस्तथा वातादिन्द्राच्चापि धनञ्जयः" हरिवं० ३५अ० । कर्णोत्पत्तिकथा भा०आ० १११अ० यथा "शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत् । तस्य कन्या पृथा नाम रूपेणाप्रतिमा भुवि । पितृस्वस्रीयाय सुतामनपत्याय भारत ! । अग्र्यमग्रे प्रतिज्ञाय स्वस्यापत्यं स सत्यवाक् । अग्रजामथ तां कन्यां शूरोऽनुग्रहकाङ्क्षिणे । प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने । नियुक्ता सा पितुर्गेहे ब्राह्मणातिथिपूजने । उग्रं पर्य्यचरत्तत्र ब्राह्मणं संशितव्रतम् । निगूढनिश्चयं धर्म्मे यं तं दुर्व्वाससं विदुः । तमुग्रं संशितात्मानं सर्व्वयत्नैरतोषयत् । तस्मै स प्रददौ मन्त्रमापद्धर्म्मान्ववेक्षया । अभिचारादिभिर्युक्तमब्रवीच्चैव तां मुनिः । यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि । तस्य तस्य प्रसादेन तव पुत्रो भविष्यति । तथोक्ता सा तु विप्रेण कुन्ती कौतूहलान्विता । कन्या सती देवमर्कमाजुहाव यशस्विनी । सा ददर्श तमायान्तं भास्करं लोकभावनम् । विस्मिता चानवद्याङ्गी दृष्ट्वा तन्महदद्भुतम् । तां समासाद्य देवस्तु विवस्वानिदमब्रवीत् । अयमस्म्यसितापाङ्गि ! ब्रूहि किं करवाणि ते । कुन्त्युवाच । कश्चिन्मे ब्राह्मणः प्रादाद्वरं विद्याञ्च शत्रुहन् ! । तद्विजिज्ञासयाह्वानं कृतवत्यस्मि ते विभो ! । एतस्मिन्नपराधे त्वां शिरसाहं प्रसादये । योषितो हि सदा रक्ष्याः स्वपराधेऽपि नित्यशः । सूर्य्य उवाच । वेदाहं सर्वमेवैतत् यद्दुर्वासा वरं ददौ । संत्यज्य भयमेवेह क्रियतां सङ्गमो मम । अमोघं दर्शनं मह्यमाहूतश्चास्मि ते शुभे ! । वृथाह्वानेऽपि ते भीरु ! दोषः स्यान्नात्र संशयः । वैशम्पायन उवाच । एवमुक्ता बहुविधं सान्त्वपूर्व्वं विवस्वता । सा तु नैच्छद्वरारोहा कन्याहमिति भारत ! । बन्धुपक्षभयाद्भीता लज्जया च यशस्विनी । तामर्कः पुनरेवेदमब्रवीद्भरतर्षभ ! । मत्प्रसादान्न ते राज्ञि ! भविता दोष इत्युत । एवमुक्त्वा स भगवान् कुन्तिराजसुतां तदा । प्रकाशकर्त्ता तपनः सम्बभूव तया सह । तत्र वीरः समभवत् सर्वशस्त्रभृतांवरः । आमुक्तकवचः श्रीमान् देवगर्भः श्रियान्वितः । सहजं कवचं बिभ्रत् कुण्डलोद्योतिताननः । अजायत सुतः कर्णः सर्व्वलोकेषु विश्रुतः । प्रादाच्च तस्य कन्यात्वं

पुनः स परमद्युतिः। दत्त्वा च तपतां श्रेष्ठो दिवमाचक्रमे ततः। दृष्ट्वा कुमारं जातं सा वार्ष्णेयी दीनमानसा। एकाग्रं चिन्तयामास किं कृत्वा सुकृतं भवेत्। गूहमानापचारं सा बन्धुपक्षभयात्तदा। उत्ससर्ज्ज कुमारं तं जले कुन्ती महाबलम्”।

युधिष्ठिरादुत्पत्तिस्तत्रैव १२२।१२३ अ० यथा

“एवमुक्ता ततः कुन्ती पाण्डुं परपुरञ्जयम्। प्रत्युवाच वरारोहा भर्त्तुः प्रियहिते रता। पितृवेश्मन्यहं बाला नियुक्ताऽतिथिपूजने। उग्रं पर्य्यचरन्तत्र ब्राह्मणं शंसितव्रतम्। निगूढनिश्चयं धर्म्मे यन्तं दुर्वाससं विदुः। तमहं शंसितात्मानं सर्वयत्नैरतोषयम्। स मेऽभिचारसंयुक्तमाचष्ट भगवान् वरम्। मन्त्रन्त्विमञ्च मे प्रादादब्रवीच्चैव मामिदम्। यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि। अकामो वा सकामो वा वशं ते समुपैष्यति। तस्य तस्य प्रसादात्ते राज्ञि! पुत्रो भविष्यति। इत्युक्ताहं तदा तेन पितृवेश्मनि भारत!। ब्राह्मणस्य वचस्तथ्यं तस्य कालोऽयमागतः। अनुज्ञाता त्वया देवमाह्वयेयमहं नृप!। तेन मन्त्रेण राजर्षे! यथा स्यान्नौ प्रजा हिता। आवाहयामि कं देवं ब्रूहि सत्यवतांवर!। त्वत्तोऽनुज्ञाप्रतीक्षां मां विद्ध्यस्मिन् कर्म्मणि स्थिताम्। पाण्डुरुवाच। अद्यैव त्वं वरारोहे! प्रयतस्व यथाविधि। धर्म्ममावाहय शुभे! स हि देवेषु पुण्यभाक्। अधर्म्मेण न नो धर्म्मः संयुज्येत कथञ्चन। लोकश्चायं वरारोहे! धर्म्मोऽयमिति मन्यते। धार्म्मिकश्च कुरूणां स भविष्यति न संशयः। धर्म्मेण चापि दत्तस्य नाधर्म्मे रंस्यते मनः। तस्माद्धर्म्मं पुरस्कृत्य नियता त्वं शुचिस्मिते!। उपचाराभिचाराभ्यां धर्म्ममावाहयस्व वै। वैशम्पायन उवाच। सा तथोक्ता तथेत्युक्त्वा तेन भर्त्रा वराङ्गना। अभिवाद्याभ्यनुज्ञाता प्रदक्षिणमवर्त्तत”। “संवत्सरधृते गर्भे गान्धार्य्या जनमेजय। आह्वयामास वै कुन्ती गर्भार्थं धर्म्ममच्युतम्। सा बलिं त्वरिता देवी धर्म्मायोपजहार ह। जजाप विधिवज्जप्यं दत्तं दुर्व्वाससा पुरा। आजगाम ततो देवो धर्म्मो मन्त्रबलात्ततः। विमाने सूर्य्यसङ्काशे कुन्ती यत्र जपस्थिता। विहस्य तां ततो ब्रूयाः कुन्ति! किन्ते ददाम्यहम्। सा तं विहस्यमानापि पुत्रं देह्यब्रवीदिदम्। संयुक्ता सा हि धर्म्मेण योगमूर्त्तिधरेण ह। लेभे पुत्रं वरारोहा सर्व्वप्राणभृतां हितम्। ऐन्द्रे (ज्येष्ठाभे) चन्द्रसमायुक्ते मुहूर्त्तेऽभिजितेऽष्टमे। दिवामध्यगते सूर्य्ये तिथौ पूर्णेऽतिपूजिते। समृद्धयशसं कुन्ती सुषाव प्रवरं सुतम्। जातमात्रे सुते तस्मिन् वागुवाचाशरीरिणी। एष धर्म्मभृतां श्रेष्ठो भविष्यति नरोत्तमः। विक्रान्तः सत्यवाक् चैव राजा पृथ्व्यां भविष्यति। युधिष्ठिर इति ख्यातः पाण्डोः प्रथमजः सुतः। भविता प्रथितो राजा त्रिषु लोकेषु विश्रुतः। यशसा तेजसा चैव वृत्तेन च समन्वितः। धार्म्मिकं तं सुतं लब्ध्वा पाण्डुस्तां पुनरब्रवीत्। प्राहुः क्षत्रं बलज्येष्ठं बलश्रेष्ठं सुतं वृणु। ततस्तथोक्ता भर्त्रा तु वायुमेवाजुहाव सा। ततस्तामागतो वायुर्मृगारूढो महाबलः। किन्ते कुन्ति! ददाम्यद्य ब्रूहि यत्ते हृदि स्थितम्। सा सलज्जा विहस्याह पुत्रं देहि सुरोत्तम!। बलवन्तं महाकायं सर्व्वदर्पप्रभञ्जनम्। तस्माज्जज्ञे महाबाहुर्भीमो भीमपराक्रमः। तमप्यतिबलं जातं वागुवाचाशरीरिणी। सर्व्वेषां बलिनां श्रेष्ठो जातोऽयमिति भारत। इदमत्यद्भुतं चासीज्जातमात्रे वृकोदरे। यदङ्कात् पतितो मातुः शिलां गात्रैरचूर्णयत्। कुन्ती व्याघ्रभयोद्विग्ना सहसोत्पतिता किल। नान्वबुध्यत संसुप्तमुत्सङ्गे स्वे वृकोदरम्। ततः स वज्रसङ्घातः कुमारो न्यपतद्गिरौ। पतता तेन शतधा शिला गात्रैर्विचूर्णिता। तां शिलां चूर्णितां दृष्ट्वा पाण्डुर्विस्मयमागतः। यस्मिन्नहनि भीमस्तु जज्ञे भरतसत्तम!। दुर्य्योधनोऽपि तत्रैव प्रजज्ञे वसुधाधिप!। जाते वृकोदरे पाण्डुरिदं भूयोऽन्वचिन्तयत्। कथं नु मे वरः पुत्रो लोकश्रेष्ठो भवेदिति। दैवे पुरुषकारे च लोकोऽयं सम्प्रतिष्ठितः। तत्र दैवन्तु विधिना कालयुक्तेन लभ्यते। इन्द्रो हि राजा देवानां प्रधान इति नः श्रुतम्। अप्रमेयबलोत्साहो वीर्य्यवानमितद्युतिः। सन्तोषयित्वा तपसा पुत्रं लप्स्ये महाबलम्। यं दास्यति स मे पुत्रं स वरीयान् भविष्यति। अमानुषान्मानुषांश्च संग्रामे स हनिष्यति। कर्म्मणा मनसा वाचा तस्मात्तप्स्ये महत्तपः। ततः पाण्डुर्महाराजो मन्त्रयित्वा महर्षिभिः। दिदेश कुन्त्याः कौरव्यो व्रतं संवत्सरं शुभम्। आत्मना च महाबाहुरेकपादस्थितोऽभवत्। उग्रं स तप आस्थाय परमेण समाधिना। आरिराधयिषुर्द्देवं त्रिदशानां तमीश्वरम्। भार्य्यया सह धर्म्मात्मा पर्य्यतप्यत भारत!। तन्तु कालेन

महता वासवः प्रत्यपद्यत। शक्र उवाच। पुत्रं तव प्रदास्यामि त्रिषु लोकेषु विश्रुतम्। ब्राह्मणानां गवाञ्चैव सुहृदाञ्चार्थसाधकम्। दुर्हृदां शोकजननं सर्व्वबान्धवनन्दनम्। सुतं तेऽग्र्यं प्रदास्यामि सर्व्वामित्रविनाशनम्। इत्युक्तः कौरवो राजा वासवेन महात्मना। उवाच कुन्तीं धर्म्मात्मा देवराजवचः स्मरन्। उदर्कस्तव कल्याणि! तुष्टो देवगणेश्वरः। दातुमिच्छति ते पुत्रं यथा सङ्कल्पितं त्वया। अतिमानुषकर्म्माणं यशस्विनमरिन्दमम्। नीतिमन्तं महात्मानमादित्यसमतेजसम्। दुराधर्षं क्रियावन्तमतीवाद्भुतदर्शनम्। पुत्रं जनय सुश्रोणि! धाम क्षत्रियतेजसाम्। लब्धः प्रसादो देवेन्द्रात् तमाह्वय शुचिस्मिते!। वैशम्पायन उवाच। एवमुक्ता ततः शक्रमाजुहाव यशस्विनी। अथाजगाम देवेन्द्रो जनयामास चार्ज्जुनम्"। कुन्त्या अपत्यं ढक्। कौन्तेय तदपत्ये "कौन्तेय प्रतिजानीहि" गीता।

**कुन्थ** क्लेशे संक्लेशे च क्य्रादि० प०सक०सेट्। कुथ्नाति अकुन्थीत् चुकुन्थ प्रनिकुथ्यात्। [न्तरम्।

**कुन्थु** पु० कुन्थ–उन्। बौद्धभेदे हेमच० कुन्थुरवेति पाठा-

**कुन्द** पु० कुन्द इव श्वेतत्वात्, कुं पृथिवीं कश्यपाय ददाति दा–क या। १विष्णौ तस्य कुन्दोपमाङ्गत्वात् स्वच्छतया स्फटिकवन्निर्मलत्वात् "श्वेतो रक्तस्तथा पीत इदानीं कृष्णतां गतः" इत्युक्तेः युगावतारे सत्ययुगे श्वेतत्वाद्वा, परशुरामावतारे कश्यपाय भूमिदानाद्वा तथात्वम्। यथाह हरिवंशे "सर्व्वपापविशुद्ध्यर्थं वाजिमेधेन चेष्टवान्। तस्मिन् यज्ञे महादाने दक्षिणां भृगुनन्दनः। मारीचाय ददौ प्रीतः कश्यपाय वसुन्धराम्"। कुं भूमिमुनत्ति उन्द–अण् शक०, कौतेः अवदा० दन् मुमच् वा। २कुन्दुरुनामगन्धद्रव्ये ३भ्रमियन्त्रभेदे (कुँद) ४कुवेरस्य निधिभेदे च पु० मेदि० ५करवीरवृक्षे पु० राजनि० स्वनामख्याते ख्याते ६पुष्पप्रधानवृक्षे पुंन० पुष्पे न०अमरः। "कुन्दं शीतं लघु श्लेष्मशिरोरुग्वातपित्तहृत्" भावप्र०। "कुन्दकुड्मला यदतः स्मितैः" माघः। "कुन्देन्दुसुन्दररुचिः" सा० द०। "शङ्कराय न दातव्याः कुन्दशेफालिकाजवाः" पुरा०। ७पद्मे च कुन्दिनी त्रिका०। शाल्मलद्वीपस्थे ८वर्षपर्व्वतभेदे। शाल्मलद्वीपवर्णने भाग० ५, २०अ०। "तेषु वर्षाद्रयो मद्यश्च सप्तैवाभिज्ञाताः सुरसः शतशृङ्गो वामदेवः कुन्दः कुमुदः पुष्पवर्षः सहस्रश्रुतिरिति"। विष्णुपु० तु एषां नामान्तराणि दृश्यन्ते "कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः। द्रोणोयत्र महौषध्यः स चतुर्थो महीधरः। कुन्दस्तु पञ्चमः षष्ठो महिषः सप्तमस्तथा। कुमुद्वान् पर्व्वतवरः" अनयोः कल्पभेदादविरोधः।

**कुन्दक** पु० कुन्द+संज्ञायां कन्। १कुन्दवृक्षे राजनि० स्वार्थे क। २कुन्दशब्दार्थे

**कुन्दम** पुंस्त्री० कुन्देन मीयते शुभ्रवर्णत्वात् मा–घञर्थे क। बिडाले त्रिका० स्त्रियां जातित्वात् ङीष्। तस्य च प्राणिभिन्नषष्ठ्यन्तात् परस्य चूर्णा०तत्पुरुषे आद्युदात्तता-तत्र गणे सुकुन्द इति पाठान्तरम्। तेन सह श्वेताद्यादित्वात् तत्पुरुषः।

**कुन्दमाला** स्त्री ग्रन्थभेदे सा०द०।

**कुन्दर** पु० कुन्दवत् शुभ्राणि धर्म्मानुबन्धीनि फलानि राति ददाति रा–क, कुं धरां दारयति हिरण्याक्षजिघांसया वराहरूपावतारे दृ–अच् पृषो० मुम्। १विष्णौ। "कुमुदः कुन्दरः कुन्दः" विष्णुस०। कुं भूमिं दारयति अन्तर्भूतण्यर्थे दृ–अच् पृषो०। कलिङ्गेषु (कुन्दरा) विख्याते २तृणभेदे पु०राजनि०। तस्य पर्य्यायोक्तिद्वारा लक्षणं राजनि० दर्शितम्। "कण्डुरो दीर्घपत्रः खरच्छदः रसालक्षेत्रसंभूतः मृगवल्लभः"। "ज्ञेयं कुन्दरमूलन्तु स्थौल्यशैत्योपकारकम्। पित्तातिसारनाशि स्यात् गोधनानां प्रशस्यते। बलपुष्टिकरञ्चैव" राजनि० तद्गुणा उक्ताः। [समूहे त्रिका०।

**कुन्दिनी** स्त्री कुन्दानां पद्मानां समूहः खला० इनि। पद्म-

**कुन्दु** पु० कुं भूमिं द्रणाति दृ बा०डु। १मूषिके शब्दरत्ना०। २कुन्दुरुनाम गन्धद्रव्ये स्त्री।

**कुन्दुर** पु० कुं भूमिं दारयति दृ–विदारे उरन् पृषो०। कुन्दुरुनामगन्धद्रव्ये भरतः।

**कुन्दुरु** पुंस्त्री कुं भूमिमुनत्ति उन्द–उणा० नि०। स्वनामख्याते गन्धद्रव्यभेदे अमरः। "कुन्दुरुर्मधुरस्तीक्ष्णस्त्वच्यः कटुर्हरेत्। ज्वरस्वेदग्रहालक्ष्मीमुखरोगकफानिलान्" भावप्र०। स्वार्थे क। तत्रैव पुंस्त्री राजनि०। स च सुश्रुते एलादिगणे पठितः। स च गणो यथा

"एलातगरकुष्ठमांसीध्यामकत्वक्पत्रनागपुष्पप्रियङ्गुहरेणुका व्याघ्रनखशुक्तिचण्डास्थौणेयकश्रीवेष्टकचोचचोरकबालकगुग्गुलुसर्जरसतुरुष्ककुन्दुरुकाऽगुरुस्पृक्कोशीरभद्रदारुकुङ्कुमानि पुन्नागकेशरञ्चेति। एलादिको वातकफौ निहन्याद्विषमेव च। वर्णप्रसादनः कण्डूपिटकाकोठनाशनः"।

**कुप** आच्छादने इदित् वा चुरा० उभ० पक्षे भ्वादि० पर० सक० सेट्। कुम्पयति ते कुम्पति अचुकुम्पत् त अकुम्पीत्। कुम्पयाम् बभूव आस चकार—चक्रे। चुकुम्प। प्रनि कुम्प्यात्

**कुप** द्युतौ चुरा० उभ० अक० सेट्। कोपयति ते अचूकुपत् त। कोपयाम् बभूव आस चकार चक्रे। कुपितः कोपः कोपनम् कुपित्वा प्रकुप्य। "प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः कुपितत्वचः" भाग० ३,१६,

**कुप** रोषे दिवा० सक० प० सेट्। कुप्यति इरित् अकुपत् अकोपीत् चुकोप। "यस्मिन् यस्मिन् ऋतौ ये ये दोषाः कुप्यन्ति देहिनाम्" सुश्रु०। "तस्य तद्वचनं श्रुत्वा हर्षं रुत्वाक्षरं बहु। चुकोप बलिनां श्रेष्ठः" भा० स० ४१ अ०। "कुपितकपिकपोलक्रोड़ताम्रस्तमांसि। उद्भटः "द्रुह्य कुप्यसि याचके" भा० आ० ७८ अ०" अस्य आर्षे पदव्यत्ययोऽपि दृश्यते। "नन्दते कुप्यते चापि तथा हुङ्कारयत्यपि" भा० आनु० १४ अ०। "न च कुप्ये महासर्प! न चात्मानं विगर्हये" भा० व० १७६ अ०। उपसर्गपूर्ब्बकस्य तत्तदुपसर्गद्योत्यार्थपरत्वम् यथा प्रकोपः संकोपः अतिकोपः इत्यादि। "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" पा० कर्म्मणः सम्प्रदानता।

**कुपथ** पु० कुत्सितः पन्थाः कुगतिसमा० अच् समा०। १कुत्सिते पथि शब्दरत्ना०। "स्वधर्म्मपथमकुतोभयम् विहाय कुपथपाखण्डमसमञ्जसं संप्रवर्त्तयिष्यति" भाग० ५, ६, १० श्लो०। स सेव्यत्वेनास्त्यस्य अर्श० अच्। २असुरभेदे "प्रमदो मयश्च कुपथो हयग्रीवश्च वीर्यवान्" हरि० ३ अ० "तथा निकुम्भः कुपथश्च दानवः" हरि० २४१ अ०। सएव सुपार्श्वनृपरूपेण द्वापरे आविर्भूतः "कुपथस्तु महावीर्य्यः श्रीमान् राजन्! महासुरः। सुपार्श्व इति विख्यातः क्षितौ जज्ञे महीपतिः" भा० आ० ६७ अ०।

**कुपन** पु० कुप—क्यु। हिरण्याक्षसैन्यस्थे असुरभेदे "शरभः शलभश्चैव कुपनः कोपनः क्रथः" हरि० ४२ अ०।

**कुपय** त्रि० गुप—क्यप् पृषो०। गोपनीये। "आ काव्यं कुपयं वर्द्धनं पितुः" ऋ० १, १४०, ३, "कुपयं गोपनीयम्" भा०

**कुपाणि** त्रि० कुत्सितः पाणिरस्य। वक्रहस्ते श्लाङ्कुण्ठे (कोपा)। जटा०

**कुपिञ्जल** पुंस्त्री कुत्सितः पिञ्जल इव पुच्छोऽस्य। पक्षिभेदे स्त्रियां ङीष् ततः शिवा० अण्। कौपिञ्जल तदपत्ये पुंस्त्री०।

**कुपिनिन्** पु० कुपिनी मत्स्यधानी अस्त्यस्य व्रीह्या० इनि। मत्स्यधारके कैवर्त्ते त्रिका०।

**कुपिनी** स्त्री गुप्यते मत्स्योऽत्र गुप—बा० इनि कित् ङीप् पृषो०। (माछेरखालुइ) मत्स्याधारे पात्रभेदे शब्दरत्ना०।

**कुपिन्द** पुंस्त्री कुप—किन्दच्। तन्तुवाये उणादिको०।

**कुपीलु** पु० कुत्सितः पीलुः कुगतिस०। (माकड़ातेन्दु) काकेन्दुवृक्षे भावप्र०। यस्य फलं (कुचिला) इतिख्यातम्। तत्पर्य्यायगुणादि भावप्र० उक्तं यथा "तिन्दुको यस्तु कथितो जलदो दीर्घपत्रकः। कुपीलुः कुलकः कालस्तिन्दुकः कालपीलुकः। काकेन्दुर्विषतिन्दुश्च तथा मर्कटतिन्दुकः। कुपीलु शीतलं तिक्तं वातलं मदकृल्लघु। पादव्यथाहरं ग्राहि कफपित्तास्रनाशनम्"।

**कुपुत्र** पु० कुत्सितः पुत्रः कुगतिस०। कुत्सिते पुत्रे १ "तादृशं फलमाप्नोति कुपुत्रैः सन्तरंस्तमः" मनुः। ब० व्री०। २कुत्सितपुत्रयुक्ते त्रि०। भावे कर्म्मणि च ततो मनोज्ञा० वुञ्। कौपुत्रिका तद्भावे स्त्री। कोः पृथिव्याः पुत्रः। ३मङ्गलग्रहे ४नरकासुरे च। [ दिनिन्दिते अमरः

**कुपूय** त्रि० कुत्सितं पयते पय—विसरणे अच्। जाल्माचारा-

**कुप्य** न० गुप—क्यप् नि०। स्वर्णरूप्याभ्यामन्यस्मिन् तैजसादौ धातौ, अमरः (दस्ता) इति ख्याते २धातौ च

**कुप्यशाला** स्त्री कुप्यस्य तत्पात्रादिनिर्म्माणस्य शाला। (कांसारिर दोकान) कांस्यादिपात्रनिर्म्माणगृहे हेमच०।

**कुप्रिय** त्रि० कु+प्री—क। जघन्ये हला०।

**कुप्लव** पु० कुगतिस०। तृणादिनिर्म्मिते उडपे शब्दचि०। "यादृशं फलमाप्नोति कुप्लवैः सन्तरन् जलम्" मनुः

**कुब** स्तृतौ (आच्छादने) इदित् वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट्। कुम्बयति ते कुम्बति अचुकुम्बत् त अकुम्बीत्। कुम्बयाम्—बभूव आस चकार चक्रे चुकुम्ब। कुम्बा

**कुबल** त्रि० कुत्सितं बलमस्य। निन्दितबलयुक्ते।

**कुबलाश्व** त्रि० कुबलोऽश्वोऽस्य। १दुर्बलाश्वयुक्ते सूर्य्यवंश्ये २नृपभेदे तस्यधुन्धुमारसंज्ञाप्राप्तिः भा० व० २०१ अ० उक्ता यथा "मार्कण्डेय उवाच। इक्ष्वाकौ संस्थिते राजन्! शशादः पृथिवीमिमाम्। प्राप्तः परमधर्म्मात्मा सोऽयोध्यायां नृपोऽभवत्। शशादस्य तु दायादः ककुत्स्थो नाम वीर्य्यवान्। अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसः कृतः। विष्वगश्वः पृथोः पुत्रस्तस्मादद्रिश्च जज्ञिवान्। अद्रेश्च युवनाश्वस्तु श्रावस्तस्यात्मजोऽभवत्। तस्य श्रावस्तकोज्ञेयः श्रावस्ती येन निर्म्मिता। श्रावस्तस्य तु दायादो बृहदश्वो महाबलः। बृहदश्वस्य दायादः कुबलाश्व इति

स्तुतः। कुवलाश्वस्य पुत्राणां सहस्राण्येकविंशतिः। सर्वे विद्यासु निष्णाता बलवन्तः सुदारुणाः। कुवलाश्वश्च पितृतो गुणैरभ्यधिकोऽभवत्। समये तं पिता राज्ये बृहदश्वोऽभ्यषेचयत्। कुवलाश्वं महाराज। शूरमुत्तमधार्म्मिकम्। पुत्रसंक्रामितश्रीस्तु बृहदश्वो महीपतिः। जगाम तपसे धीमांस्तपोवनममित्रहा"। इत्युपक्रम्य मधुकैटभयोःसमुत्पत्तिवधकथान्ते २०३अ०

"मार्कण्डेयउवाच। धुन्धुर्नाम महाराज! तयोः पुत्रोमहाद्युतिः। स तपोऽतप्यत महत् महावीर्य्यपराक्रमः। अतिष्ठदेकपादेन कृशो धमनिसन्ततः। तस्मै ब्रह्मा ददौ प्रीतो वरं वव्रे स च प्रभुम्। देवदानवयक्षाणां सर्पगन्धर्वरक्षसाम्। अवध्योऽहं भवेयं वै वर एष वृतो मया। एवं भवतु गच्छेति तमुवाच पितामहः। स एवमुक्तस्तत्पादौ मूर्द्ध्नाऽऽस्पृश्य जगाम ह। स तु धुन्धुर्वरं लब्ध्वा महावीर्य्यपराक्रमः। अनुस्मरन् पितृवधं द्रुतं विष्णुमुपागमत्। स तु देवान् सगन्धर्वान् जित्वा धुन्धुरमर्षणः। बबाधे सर्वानसकृद्विष्णुं देवांश्च वै भृशम्। समुद्रे बालुकापूर्णे उज्जालक इति स्मृते। आगम्य च स दुष्टात्मा तं देशं भरतर्षभ!। वाधते स्म परं शक्त्या तमुतङ्काश्रमं विभो!। अन्तर्भूमिगतस्तत्र बालुकान्तर्हितस्तथा। मधुकैटभयोः पुत्रो धुन्धुर्भीमपराक्रमः। शेते लोकविनाशाय तपोबलमुपाश्रितः। उतङ्कस्याश्रमाभ्याशे निःश्वसन् पावकार्च्चिषः। एतस्मिन्नेव काले तु राजा सबलवाहनः। उतङ्कविप्रसहितः कुवलाश्वो महीपतिः। पुत्रैः सह महीपालः। प्रययौ भरतर्षभ!। सहस्रैरेकविंशत्या पुत्राणामरिमर्द्दनः। कुवलाश्वो नरपतिरन्वितो बलशालिनाम्। तमाविशत्ततो विष्णुर्भगवांस्तेजसा प्रभुः। उतङ्कस्य नियोगेन लोकानां हितकाम्यया। तस्मिन् प्रयाते दुर्द्धर्षे दिवि शब्दो महानभूत्। एष श्रीमानवध्योऽद्य धुन्धुमारो भविष्यति। दिव्यैश्च पुष्पैस्तं देवाः समन्तात् पर्य्यवाकिरन्। देवदुन्दुभयश्चापि नेदुः स्वयमनीरिताः। शीतश्च वायुः प्रववौ प्रयाणे तस्य धीमतः। विपांशुलां महीं कुर्वन् ववर्ष च सुरेश्वरः। अन्तरीक्षे विमानानि देवतानां युधिष्ठिर!। तत्रैव समदृश्यन्त धुन्धुर्यत्र महासुरः। कुवलाश्वस्य धुन्धोश्च युद्धं कौतूहलान्विताः। देवगन्धर्वसहिताः समवैक्षन्महर्षयः। नारायणेन कौरव्य! तेजसाप्यायितस्तदा। स गतो नृपतिः क्षिप्रं पुत्रैस्तैः सर्वतो दिशम्। अर्णवं खानयामास कुवलाश्वोमहीपतिः। कुवलाश्वस्य पुत्रैश्च तस्मिन् वै बालुकार्णवे। सप्तभिर्द्दिवसैः खात्वा दृष्टो धुन्धुर्म्महाबलः। आसीद्घोरं वपुस्तस्य बालुकान्तर्हितं महत्। दीप्यमानो यथा सूर्य्यस्तेजसा भरतर्षभ!। ततो धुन्धुर्म्महाराज! दिशमावृत्य पश्चिमाम्। सुप्तोऽभूद्राजशार्द्दूल! कालानलसमद्युतिः। कुवलाश्वस्य पुत्रैस्तु सर्वतः परिवारितः। अभिद्रुतः शरैस्तीक्ष्णैर्गदाभिर्म्मुसलैरपि। पट्टिशैः परिघैः प्रासैः खड्गैश्च विमलैः शितैः। स वध्यमानः संक्रुद्धः समुत्तस्थौ महाबलः। क्रुद्धश्चाभक्षयत्तेषां शस्त्राणि विविधानि च। आस्याद्वमन् पावकं स संवर्त्तकसमं तदा। तान् सर्वान्नृपतेः पुत्रानदहत् स्वेन तेजसा। मुखजेनाग्निना क्रुद्धो लोकानुद्वर्त्तयन्निव। क्षणेन राजशार्द्दूल! पुरेव कपिलः प्रभुः। सगरस्यात्मजान् क्रुद्धस्तदद्भुतमिवाभवत्। तेषु क्रोधाग्निदग्धेषु तदा भरतसत्तम!। तं प्रबुद्धं महात्मानं कुम्भकर्णमिवापरम्। आससाद महातेजाः कुवलाश्वो महीपतिः। तस्य वारि महाराज! सुस्राव बहु देहतः। तदापीयत तत्तेजो राजा वारिमयं नृप!। योगी योगेन वह्निञ्च शमयामास वारिणा। ब्रह्मास्त्रेण च राजेन्द्र! दैत्यं क्रूरपराक्रमम्। ददाह भरतश्रेष्ठ! सर्वलोकाभयाय वै। सोऽस्त्रेण दग्ध्वा राजर्षिः कुवलाश्वो महासुरम्। सुरशत्रुममित्रघ्नं त्रैलोक्येश इवापरः। धुन्धोर्वधात्तदा राजा कुवलाश्वो महामनाः। धुन्धुमार इति ख्यातो नाम्नाऽप्रतिरथोऽभवत्"।

**कुवे(बे)र** पु० कुम्बति धनम् कुबि–एरक् नि० नलोपश्च कुत्सितं वेरमस्य इति वा। १धनदे यक्षराजे अमरः "कुत्सायां क्वितिशब्दोऽयं शरीरं वेरमुच्यते। कुवेरः कुशरीरत्वात् नाम्ना तेनैव सोऽङ्कितः" वायुपु०। "कुवेरोभव नाम्ना त्वं मम रूपेर्ष्यया सुत!" काशीख० देवीशापोक्तेस्तस्य तथात्वम्। "कुवेरस्य मनःशल्यं शंसतीव पराभवम्"कुमा०। तस्येदमण्। तत्सम्बन्धिनि त्रि० स्त्रियां ङीप् "कौवेरीदिगभगमपास्य मार्गम्" माघः। क्षुभ्ना० पाठात् कुवेरवनमित्यादौ न णत्वम् वाकप्। कुवेरकोऽप्यत्रार्थे कुर्गातस०। २निन्दितदेहे न०।

**कुबेराक्षी** स्त्री कुवेरस्याक्षीव पिङ्गलं पुष्पमस्याः षच् समा० ङीष्। १पाटलावृक्षे २लताकरञ्जे च राजनि०।

**कुवे(बे)राचल** पु० ६त०। कैलासपर्वते जटा० तस्य कुवे-

राधासत्वात्तथात्वम् । कुवे (वे) रादिप्रभृतयोऽप्यत्र ।

**कुब्ज** पु० ईषत् उब्जमार्ज्जवं यत्र शक० । १अपामार्गे राजनि० २खड्गे शब्दमा० । (कुज) ३हृदयपृष्ठरोगे पु० "हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् । क्रुद्धो वायुर्यदा कुर्य्यात् तदा तं कुब्जमादिशेत्" माधवोक्तं तल्लक्षणम् । ४तद्युक्ते (कुब्जो) त्रि० । "कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः" रत्ना० । सच राज्ञामन्तःपुरसहायभेदो यथाह सा०द० तद्दवरोधे इत्युपक्रमे "वामनषण्डकिरातम्लेच्छाभीराः शकारकुब्जाद्याः" अवरोधाधिकारिकुब्जलक्षणमुक्तं बृह०सं० ६८ अ० "पञ्चापरे वामनको जघन्यः कुब्जोऽपरो मण्डलकोऽथ सामी । पूर्वोक्तभूपालचरा भवन्ति सङ्कीर्णसंज्ञाः शृणु लक्षणैस्तान्" । "कुब्जो नाम्ना यः स शुद्धो ह्यधस्तात् क्षीणः किञ्चित् पूर्व्वकाये नतश्च । हंसासेवी नास्तिकोऽर्थैरुपेतो विद्वान् शूरः सूचकः स्यात् कृतज्ञः । कलास्वभिज्ञः कलहप्रियश्च प्रभूतभृत्यः प्रमदाजितश्च । सम्पूज्य लोकं प्रजहात्यकस्मात् कुब्जो ऽयमुक्तः सततोद्यतश्च" ।

**कुब्जक** पु० कौ उब्जति उब्ज—ण्वुल् शक० । अतिसुरभिपुष्पे वृक्षभेदे "चम्पकात् पुष्पशतकादशोकं पुष्पमुत्तमम् । अशोकपुष्पसाहस्रात् सेवतीपुष्पमुत्तमम् । सेवतीपुष्पसाहस्रात् कुब्जकं पुष्पमुत्तमम्" शब्दचि० । नरसि० पुरा० "कुब्जकः सुरभिः स्वादुः कषायानुरसः सरः । त्रिदोषशमनो वृष्यः शीतहर्त्ता च स स्मृतः" इति भावप्र० ।

**कुब्जकण्टक** पु० कुब्जः कण्टकोऽस्य । श्वेतखदिरे राजनि०

**कुब्जा** स्त्री कंसभवनस्थे सैरिन्ध्रीभेदे यां पद्भ्यामाक्रम्य कृष्णः सुरूपां चकार तत्कथा भाग०१०स्क०४१अ० यथा "अथ व्रजन् राजपथेन माधवः स्त्रियं गृहीताङ्गविलेपभाजनाम् । विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यान्तीं प्रहसन् रसप्रदः । का त्वं वरोर्वे! तदुहानुलेपनं कस्याङ्गने! वा कथयस्व साधु नः । देह्यावयोरङ्गविलेपमुत्तमं श्रेयस्ततस्ते नचिराद्भविष्यति । सैरिन्ध्र्युवाच । दास्यस्म्यहं सुन्दर! कंससम्मता त्रिवक्रनाम्ना ह्यनुलेपकर्म्मणि । मद्भावितं भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति । रूपपेशलमाधुर्य्यहसितालापवीक्षिता । धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम् । ततस्तावङ्गरागेण सुवर्णेतरशोभिना । संप्राप्तपरभागेन शुशुभाते अनुरञ्जितैः । प्रसन्नोभगवान् कुब्जां त्रिवक्रां रुचिराननाम् । ऋज्वीं कर्त्तुं मनश्चक्रे दर्शयन् दर्शने फलम् । पद्भ्यामाक्रम्य प्रपदे द्व्यङ्गुल्युत्तानपाणिना । प्रगृह्य चिबुकेऽध्यात्ममुदनीनमदच्युतः । सा तदर्ज्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा । मुकुन्दस्पर्शनात् सद्योबभूव प्रमदोत्तमा" ।

**कुब्जाम्रक** न० भारतप्रसिद्धे तीर्थभेदे "ततः कुब्जाम्रके गच्छेत् तीर्थसेवी नराधिप! । गोसहस्रमवाप्नोति स्वर्गलोकं च गच्छति" भा० व० ८४ अ० । तच्च तीर्थं ब्रह्मावर्त्तसमीपस्थं तत्रैव विवृतिः ।

**कुब्जिका** स्त्री १अष्टवर्षायां कन्यायाम् । "अष्टवर्षा च कुब्जिका" अब्ददाकल्पः कालसङ्कर्षीशब्दे २००४पृ० विवृतिः । २देवीमूर्त्तिभेदे तस्याः पूजादिविधायकं तन्त्रं कुब्जिका तन्त्रत्वेन प्रसिद्धम् तन्त्रसारे तत्प्रमाणं दृश्यम् ।

**कुब्र** न० कुबि—आच्छादने रन् ऋज्रेन्द्रेत्यादिना नि० । अरण्ये उज्ज्वलदत्तः । २कुण्डे ३कुण्डले ४तन्तौ ५शरवे ६शकटे च संक्षिप्तसारवृत्तिः ।

**कुब्र(व्र)ह्म** पु० कुत्सितो ब्र(व्र)ह्मा वा टच् । कुत्सिते ब्र(व्र)ह्मणि टजभावपक्षे कुब्र(ब्र)ह्मन्शब्दोऽप्यत्र ।

**कुभ** उन्दने भ्वा०पर०सक०सेट् । कोभति अकोभीत् चुकोभ । क्ष०भा०माधवसंमतोऽयम् ।

**कुभ** न० कुभ—क । उदके क्ष०भा० माधवः । कुभन्युशब्दे [ विवृतिः ।

**कुभन्यु** त्रि०कुभ—कर्म्मणि घञर्थे क कुभमुदकमिच्छति क्यच् बा० असुङ् छन्दसि उ । आत्मनः सेकमिच्छति उदकस्य सेक्तरि "छन्दस्युभः कुभन्यवः ऋ० ५, ५२, १२, कुभन्यवः कुभिरुन्दनकर्म्मा" भा० ।

**कुभा** स्त्री कोः पृथिव्याः भा । पृथिवीच्छायायाम् "राहुः कुभामण्डलगः शशाङ्कम्" ज्योति० । उपरागशब्दे १२८५पृ० विवृतिः । कुगतिस० । २कुत्सितदीप्तौ । "मा वोरसानितभा कुभा" ऋ० ५,५३,९, "कुभा कुत्सितदीप्तिः" भा० । ३तद्युक्ते त्रि० ।

**कुभृत्** पु० कुं पृथिवीं बिभर्त्ति भृ—क्विप् । १भूधरे शैले २सप्तसंख्यायाम् । एकादिशब्दे १५०८पृ० विवृतिः कुभृद्रेखिकं सप्तशालाकचक्रम् ज्योति० ।

**कुमार** केलौ अद० चुरा० उभ० अक० सेट् । कुमारयति ते अचुकुमारत् त । कुमरयाम् बभूव आस चकार चक्रे ।

**कुमार** पु०कुमारयति क्रीडति, कुत्सितो मारो यस्मात्, कौमारयति दुष्टान् मृ—णिच्—अच् वा । १कार्त्तिकेये, नाम्नोक्तौ २युवराजे, अम० ३शुके पक्षिणि ४अश्ववारके, ५वरुणवृक्षे ६पञ्चवर्षीये, बालके च मेदि० । "कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि" भाग० १०श्रीधर-

छृतवचनम् । स्त्रियां वयोवाचित्वात् ङीष् । "त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती" मनुः । ७सिन्धुनदे शब्दर० । ८अर्हदुपासकभेदे हेमच० । ९शाकद्वीपेश्वरपुत्रभेदे १०तदीयवर्षभेदे च विष्णु पु० "शाकद्वीपेश्वरस्यापि भवस्य सुमहात्मनः । सप्तैव तनयास्तेषां ददौ वर्षाणि सप्त च । जलदश्च कुमारश्च सुकुमारो मणीवकः । कुसुदोदः, समोदाकिः सप्तमश्च महाद्रुमः । तत्संज्ञान्यपि तान्येव सप्त वर्षाण्यनुक्रमात्"। ११शुक्तिमत्पर्व्वतोद्भवे ऋषिकुल्याभेदे "ऋषिकुल्याः कुमाराद्याः शुक्तिमत्पादसम्भवाः" विष्णुपु० । १२सुन्दरे त्रि० । १३अविवाहितावस्थायामुपचारात् । "कौमारापूर्व्ववचने,, पा० । "अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्" मनुः । अतएव अन्नदाकल्पे "एकवर्षा भवेत्सन्ध्या इत्यादिना षोड़शवर्षान्ताया अपि कुमारीत्वमुक्तम् । तत्र बालके "कुमारं माता बिभर्त्ति" ऋ० ५,२,१, कुमारस्य रेतः सिक्तं न सम्भवति" "शत०ब्रा० १,४,५,७, "कन्यानां संप्रदानञ्च कुमाराणाञ्च रक्षणम्" मनुः नाट्योक्तिं विनापि काव्ये राजदारके कुमारशब्दः प्रयुज्यते । "आप्तः कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्टः" । "कुमारसैन्यं सपदि स्थितं च तत्"रघुः "तदानुजग्मतुः स्थाणुं कुमाराविव पावकौ" रामा० । विश्वसारोक्ते १५मन्त्रभेदे पु० १६विद्यायां स्त्री ङीप् । मन्त्रविशेषाणां संज्ञाभेदाश्च तन्त्रसारे दर्शिता यथा

विश्वसारे निबन्धे च । "छिन्नोरुद्धः शक्तिहीनः पराङ्मुख उदीरितः । बधिरोनेत्रहीनश्च कीलितः स्तम्भितस्तथा । दग्धःस्रस्तश्च भीतश्च मलिनश्च तिरस्कृतः । भेदितश्च सुषुप्तश्च मदोन्मत्तश्च मूर्च्छितः । हृतवीर्य्यश्च भीमश्च प्रध्वस्तोबालकः पुनः । कुमारश्च युवा प्रौढोवृद्धो निस्त्रिंशकस्तथा । निर्व्वीजः सिद्धिहीनश्च मन्दः कूटस्तथा पुनः । निरंशकः सत्वहीनः केकरोजीवहीनकः । धूमितालिङ्गितौ स्यातां मोहितश्च क्षुधार्त्तकः । अतिदीप्तोऽङ्गहीनः स्यादतिक्रुद्धः समीरितः । अतिक्रूरश्च सुव्रीडः शान्तमानस एव च । स्थानभ्रष्टश्च विकलोनिःस्नेहः परिकीर्त्तितः । अतिवृद्धः पीडितश्च वक्ष्याम्येषान्तु लक्षणम् । मनोर्यस्यादिमध्यान्तेष्वानिलं वीजमुच्यते । संयुक्तं वा वियुक्तं वा पुराक्रान्तस्त्रिधा पुनः । चतुर्द्धा पञ्चधा वापि स मन्त्रश्छिन्नसंज्ञकः । आदिमध्यावसानेषु भूवीजद्वयलाञ्छितः । रुद्धमन्त्रः स विज्ञेयोभुक्तिमुक्तिविवर्जितः । मायात्रितयश्रीवीजराकाहीनस्तु योमनुः । शक्तिहीनः स कथितो यस्य मध्ये न विद्यते । कामवीजं मुखे माया शिरस्यङ्कुशमेव च । असौ पराङ्मुखः प्रोक्तोहकारो विन्दुलाञ्छितः । आद्यन्तमध्ये विन्दुर्वा न भवेद्वधिरः स्मृतः । पञ्चवर्णोमनुर्यःस्याद्रेफार्केन्दुविवर्ज्जितः । नेत्रहीनः स विज्ञेयो दुःखशोकामयप्रदः । आदिमध्यावसानेषु हंसप्रासादवाग्भवौ । हकारोविन्दुमान् जीवो वावश्चापि चतुःकलः । माया नमामि च पदं नास्ति यस्मिन् स कीलितः । एकं मध्ये द्वयं मूर्द्ध्नि यस्मिन्नस्त्रपुरन्दरौ । न विद्येते स मन्त्रस्तु स्तम्भितः सिद्धिवर्ज्जितः । वह्निर्वायुसमायुक्तो यस्य मन्त्रस्य मूर्द्धनि । सप्तधा दृश्यते तन्तु दग्धमन्त्रं प्रचक्षते । अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टभिर्दृश्यतेऽक्षरैः । स्रस्तः सोऽभिहितो यस्य मुखे न प्रणव स्मृतः । शिवो वा शक्तिरथ वा भीताख्यः स प्रकीर्त्तितः । आदौ मध्ये तथा चान्ते यस्य मार्ण चतुष्टयम् । सएव मलिनो मन्त्रः सर्वविघ्नसमन्वितः । यस्य मध्ये दकारोऽस्ति कवचं मूर्द्धनि द्विधा । अस्त्रं तिष्ठति मन्त्रः स तिरस्कृत उदाहृतः । द्योद्वयं हृदये शीर्षे वषट्वौषट् तु मध्यमे । सएव भेदितोमन्त्रः सर्वशास्त्रविवर्ज्जितः । त्रिवर्णो हंसहीनोयः स सुषुप्तउदाहृतः । मन्त्रोवाप्यथ वा विद्या सप्ताधिकदशाक्षरा । फट्कारपञ्चकादिर्योमदोन्मत्त उदाहृतः । तद्वदस्त्रं स्थितं मध्ये यस्य मन्त्रः स मूर्च्छितः । विरामेऽङ्गस्य यो मन्त्रो हृतवीर्य्यः स उच्यते । आदौ मध्ये तथा चान्ते चतुरस्त्रयुतोमनुः । ज्ञातव्योभीम इत्येष यःस्यादष्टादशाक्षरः । एकोनविंशत्यर्णो वा योमन्त्रस्तारसंयुतः । हृल्लेखाङ्कुशवीजाढ्यं प्रध्वस्तं तं प्रचक्षते । सप्तवर्णो भवेद्बालः कुमारोऽष्टाक्षरःस्मृतः । षोडशार्णो युवा प्रौढ़श्चत्वारिंशल्लिपिर्म्मनुः । त्रिंशदर्णश्चतुःषष्टिवर्णोमन्त्रः शताक्षरः । चतुःशताक्षरश्चापि वृद्धः स परिकीर्त्तितः । नवाक्षरो ध्रुवयुतो मनुर्निस्त्रिंश ईरितः । यस्यावसाने हृदयं शिरोमन्त्रौ च मध्यतः । शिखा वर्म्म च न स्यातां वौषट् फट्कार एव वा । शिवशक्त्यर्णहीनो वा स निर्वीजः उदाहृतः । षट्सु स्थानेषु फट्कारः षोढा यस्मिन् प्रदृश्यते । स मन्त्रः सिद्धिहीनःस्यान्मन्दःपङ्क्त्यक्षरोमनुः । कूट एकाक्षरो मन्त्रः स एवोक्तोनिरंशकः । द्विवर्णःसत्वहीनःस्याच्चतुर्व्वर्णस्तु केकरः । षडक्षरोजीवहीनः सार्द्धसप्ता-

चरोमनुः। सार्द्धद्वादशवर्णो वा भूमितः स तु निन्दितः। सार्द्धबीजत्रयस्तद्वदेकविंशतिवर्णकः। विंशदर्णस्त्रिशदर्णो गःखादालिङ्गितः स्मृतः। द्वाविंशत्यक्षरो मन्त्रो मोहितः परिकीर्त्तितः। द्वात्रिंशदर्णो मन्त्रोयः सप्तविंशतिवर्णकः। क्षुधार्त्तः स तु विज्ञेयश्चतुर्विंशतिवर्णकः। एकादशाक्षरोवाऽपि पञ्चविंशतिसंख्यकः। त्रयोविंशतिवर्णो वा मन्त्रोऽतिदीप्तईरितः। षड्विंशत्यक्षरोमन्त्रः षट्त्रिंशदर्णकस्तथा। त्रिंशदेकोनवर्णो वा त्वङ्गहीनः स एव हि। अष्टाविंशत्यक्षरोय एकत्रिंशदथापि वा। अतिक्रुद्धः स विज्ञेयो निन्दितः सर्वकर्मसु। त्रिंशदक्षरकोमन्त्रस्त्रयस्त्रिंशदथापि वा। अतिक्रूरः स विज्ञेयो निन्दितः सर्वकर्मसु। चत्वारिंशत्तमा विद्या त्रिषष्टिर्यावता भवेत्। तावत्संख्या निगदिता मन्त्राः सव्रीडसंज्ञकाः। पञ्चषड्क्षरा ये स्युर्मन्त्रास्ते शान्तमानसाः। एकोनशतपर्य्यन्तं पञ्चषष्ट्यक्षरादिति। ते सर्वे कथितामन्त्राः स्थानभ्रष्टा न शोभनाः। त्रयोदशाक्षरा ये स्युर्मन्त्राः पञ्चदशाक्षराः। विकलास्तेऽभिधीयन्ते शतं सार्द्धशतं तथा। शतद्वयं द्विनयतिरेकहीना तथापि वा। यावच्छतत्रयं संख्या निःस्नेहास्ते प्रकीर्त्तिताः। चतुःशतमथारभ्य यावद्वर्णसहस्रकम्। अतिवृद्धः स मन्त्रस्तु सर्वशास्त्रविवर्ज्जितः। सहस्रार्णाधिका मन्त्राः दण्डकाः पीड़िताह्वयाः। द्विसहस्राक्षरामन्त्राः खण्डशःसप्तधा कृताः। ज्ञातव्यास्तोत्ररूपास्ते मन्त्राएते यथास्थिताः। तथा विद्याश्च बोद्धव्या मन्त्रिभिः सर्वकर्मसु। दोषानिमानविज्ञाय योमन्त्रं भजते बुधः। सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि" अथ मन्त्राणां दोषशान्तिः तदुक्तं तत्रैव "छिन्नादिदुष्टाश्चे मन्त्रास्तान्तन्त्रे निरूपिताः। ते सर्वे सिद्धिमायान्ति मातृकार्णप्रभावतः। मातृकार्णैः पुटीकृत्य मन्त्रं विद्यां विशेषतः। शतमष्टोत्तरं पूर्वं प्रजपेत् फलसिद्धये। तदा मन्त्रोमहाविद्या यथोक्तफलदा भवेत्। मातृकापुटितं कृत्वा मध्ये वर्णान्निधायच। मन्त्रवर्णास्ततः कुर्य्यात्शोधनन्तत्र सम्मतम्। बद्ध्वा तु योनिमुद्रां तां सङ्कोचप्रावारपङ्कजम्। तदुत्पन्नान् मन्त्रवर्णान् कुर्वतश्च गतागतान्। ब्रह्मरन्ध्रावधि ध्यात्वा वायुमापूर्य्य कुम्भयेत्। सहस्रं प्रजपेन्मन्त्रं मन्त्रदोषोपशान्तये"। तथा। "एतु दोषेषु प्राप्तेषु मायां काममथापि वा। त्रियु वादौ श्रियं चैव तद्रूपणविमुक्तये"। तथा। "तारसंपुटितोवापि दुष्टमन्त्रोऽपि सिध्यति। यस्य यत्र भवेद्भक्तिः सोऽपि मन्त्रोऽस्य सिध्यति" तथा। "प्रणवोमातृका देवी हृल्लेखेत्यमृतत्रयम्। अमृतत्रयसंयोगाद् दुष्टमन्त्रोऽपि सिध्यति" तत्र विद्यायां "कुमारी या च विद्येयं त्वया शम्भुपतिव्रते!। केवलं शिवरूपेण शक्तिरूपेण केवलम्" मुण्डमा०। १७स्वरोदयोक्ते बालादिचक्रस्थे स्वरभेदे पु०चक्रशब्दस्यबालादिचक्रे विवृतिः। तत्र स्कन्दे "अग्नेः पुत्रः कुमारस्तु श्रीमान् शरवणालयः" भा० आ० ६६अ०। "कुमारमभिगम्याथ वीराश्रमनिवासिनम्। अश्वमेधमवाप्नोति नरो नास्त्यत्र संशयः" भा० व० ८४अ०। तस्य कन्दर्पापेक्षयाधिकसौकुमार्य्यात्तथात्वम्। १८बालोपद्रावकग्रहभेदे "स्कन्दः सृष्टो भगवता देवेन त्रिपुरारिणा। बिभर्त्ति चापरां संज्ञां कुमारः इति स ग्रहः" सुश्रुतः। १९शुद्धसुवर्णे न॰मेदि०। संज्ञायां कन्। वरुणवृक्षे त्रिकाण्डशेषे। स्वार्थे क। बालके हेमच०। तस्येदं तस्य भावो वा अण्। कौमार शिशुत्वे बाल्यावस्थायां "देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा" गीता।

**कुमारकल्याण** न०। चक्रदत्तोक्ते घृतभेदे तल्लक्षणं यथा "शङ्खपुष्पी वचा ब्राह्मी कुष्ठं त्रिफलया सह। द्राक्षा सशर्करा शुण्ठी जीवन्ती जीरकं बला। शठी दुरालभा विल्वं दाडिमं सुरसः स्थिरा। मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली। एषां कर्षसमैर्भागैर्घृतप्रस्थं विपाचयेत्। कषाये कण्टकार्य्याश्च क्षीरे तस्मिंश्चतुर्गुणे। एतत् कुमारकल्याणं घृतरत्नं सुखप्रदम्। बलवर्णकरं धन्यं पुष्ट्यग्निबलवर्द्धनम्। छायासर्वग्रहालक्ष्मीक्रिमिदन्तगदापहम्। सर्वबालामयहरं दन्तोद्भेदं विशेषतः"।

**कुमारघातिन्** त्रि०कुमारं हन्ति हन—णिनि। शिशुमारके।

**कुमारजीव** पु० कुमारं जीवयति जीव—णिच् अण् उप० स०। (जयापोता) जीवपुत्रवृक्षे रत्नमा०।

**कुमारदेष्ण** पु० कुमाराणां दाता दा—बा० दृष्णच्। कुमारदातरि "कुमारदेष्णाः जयतः पुनर्हणः" "ऋ० १०,३४, ७,कुमारदेष्णाः कुमाराणां दातारः, भा०

**कुमारधारा** स्त्री भारतोक्ते तीर्थभेदे। "पितामहसरो गत्वा शैलराजसमीपतः। तत्राभिषेकं कुर्वाणोह्यग्निष्टोममवाप्नुयात्। पितामहस्य सरसः प्रसुता लोकपावनी। कुमारधारा तत्रैव त्रिषु लोकेषु विश्रुता। यत्र स्नात्वा कृतार्थोऽस्मीत्यात्मानमवगच्छति। षष्ठकालो-

पशमेन मुच्यते भ्रूणहत्यया” भा०व०८१अध्याये स्थितम्

**कुमारपालन** पु० कुमारेण पाल्यते कर्म्मणि पालि—ल्युट्। शालिवाहने १नृपे हेमच०। कुमारं पालयति पालि+ल्यु उप०स०। २बालकपालके त्रि०।

**कुमारभृत्या** स्त्री भृ—क्यप् भृत्या भरणम् ६त०। कुमाररक्षणोपायभूते सुश्रुतोक्ते कौमारभृत्याख्ये कौमारतन्त्रे। कुमारभृत्या अधिकृत्य प्रवृत्तं तन्त्रम् अण्। कौमारभृत्य कुमाररक्षणोपायज्ञापके तच्छास्त्रांशे। “शल्यं शालक्यं कायचिकित्सा भूतविद्या कौमारभृत्येत्यादिना अष्टधा शास्त्रं विभज्य तल्लक्षणमुक्तं तत्रैव यथा

“कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानाञ्च व्याधीनामुपशमनार्थम्।

विवृतमुत्तरत्र तत्रैव यथा

“नवग्रहाकृतिज्ञानं स्कन्दस्य च निषेधनम्। अपस्मारशकुन्योश्च रेवत्याश्च पुनःपृथक्। पूतनायास्तथान्याया मण्डिका शीतपूतना। नैगमेयचिकित्सा च ग्रहोत्पत्तिः सयोनिजा। कौमारतन्त्रमित्येतच्छारीरेषु च कीर्त्तितम्”।

तत्प्रकारस्तत्रैव उत्तरतन्त्रे दर्शितो यथा

“अथातो नवग्रहाकृतिविज्ञानीयमध्यायं व्याख्यास्यामः। बालग्रहाणां विज्ञानं साधनञ्चाप्यनन्तरम्। उत्पत्तिं कारणञ्चैव सुश्रुतैकमनाः शृणु। १स्कन्दग्रहस्तु प्रथमः २स्कन्दापस्मार एवच। ३शकुनी ४रेवती चैव ५पूतना चान्यपूतना ६। पूतना ७शीतनामा च तथैव ८मुखमण्डिका। नवमो ९नैगमेयश्च यः पितृग्रहसंज्ञितः। धात्रीमात्रोःप्राक् प्रदिष्टापचाराच्छौचभ्रष्टान्मङ्गलाचारहीनान्। त्रस्तान् हृष्टांस्तर्ज्जितान् क्रन्दितान्वा पूजाहेतोर्हिंस्युरेते कुमारान्। ऐश्वर्य्यस्थास्ते न शक्या विशन्तो देहं दुष्टं मानुषैर्विश्वरूपाः। आप्तं वाक्यं तत्समीक्ष्याभिधास्ये लिङ्गान्येषां यानि देहे भवन्ति। शूनाक्षः क्षतजसगन्धिकः स्तनद्विड्वक्रास्यो हतचलितैकपक्ष्मनेत्रः। उद्विग्नः सुलुलितचक्षुरल्परोदी स्कन्दार्त्तो भवति च गाढमुष्टिवर्च्चाः १। निःसंज्ञो भवति पुनर्भवेद्विसंज्ञः संरब्धः करचरणैश्च नृत्यतीव। विण्मूत्रे सृजति विनद्य जृम्भमाणः फेनञ्च प्रसृजति तत्सखाभिपन्नः २। स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः संस्राविव्रणपरिपीडितः समन्तात्। स्फोटैश्च प्रततनुः सदाहपाकैर्विज्ञेयो भवति शिशुः क्षतः शकुन्या ३। रक्तास्यो हरितमलोऽतिपाण्डुदेहः श्यावो वा ज्वररुजपाकवेदनार्त्तः। रेवत्या४ व्यथिततनुश्च कर्णनासं मृद्नाति ध्रुवमभिपीडितः कुमारः। स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ विड्भिन्नं सृजति च काकतुल्यगन्धिः। छर्द्यार्त्तो हृषिततनूरुहः कुमारस्तृष्णालुर्भवति च पूतनागृहीतः ५। यो द्वेष्टि स्तनमतिसारकासहिक्काच्छर्दीभिर्ज्वरसहिताभिरर्द्द्यमानः। दुर्वर्णः सततमधःशयोऽम्लगन्धिस्तं ब्रूयुर्भिषजोऽन्यपूतनार्त्तम् ६। उद्विग्नो भृशमतिवेपते प्ररुद्यात् संलीनः स्वपिति च यस्य चान्त्रकूजः। विस्राङ्गो भृशमतिसार्य्यते च यस्तं जानीयाद्भिषगिह शीतपूतनार्त्तम् ७। म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो बह्वाशी कलुषसिरावृतोदरो यः। सोद्वेगो भवति च मूत्रतुल्यगन्धिः स ज्ञेयः शिशुरथ वक्त्रमण्डिकार्त्तः ८। यः फेनं वमति विनम्यते च मध्ये सोद्वेगं विलपति चोर्द्ध्वमीक्षमाणः। ज्वर्य्येत प्रततमथो वसासगन्धिर्निःसंज्ञो भवति हि नैगमेयजुष्टः ९। प्रस्तब्धो यः स्तनद्वेषी मुह्यते चाविशन्मुहुः। तं बालं न चिराद्धन्ति ग्रहः सम्पूर्णलक्षणः। विपरीतमतःसाध्यं चिकित्सेदचिरार्दितम्। गृहे पुराणहविषाभ्यज्य बालं शुचौ शुचिः। सर्षपान् प्रकिरेत्तेषां तैलैर्दीपञ्च कारयेत्। सदा सन्निहितश्चापि जुहुयाद्धव्यवाहनम्। सर्वगन्धौषधीबीजैर्गन्धमाल्यैरलङ्कृतम्। अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति संततम्। नमः स्कन्दाय देवाय ग्रहाधिपतये नमः। शिरसा त्वाभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम्। नीरुजो निर्विकारश्च शिशुर्मे जायतां ध्रुवम्।

अथातः स्कन्दग्रहप्रतिषेधं व्याख्यास्यामः। स्कन्दग्रहोपसृष्टानां कुमाराणाञ्च शस्यते। वातघ्नद्रुमपत्राणां निःक्वाथः परिषेचने। तेषां मूलेषु सिद्धञ्च तैलमभ्यञ्जने हितम्। सर्वगन्धसुरामण्डकैटर्य्यश्चापमिष्यते। देवदारुणि रास्नायां मधुरेषु द्रुमेषु च। सिद्धं सर्पिश्च सक्षीरं पानमस्मै प्रयोजयेत्। सर्षपाः सर्पनिर्म्मोको वचा काकादनी घृतम्। उष्ट्राजाविगवाञ्चैव रोमाण्युद्धूपनं शिशोः। सोमवल्लीमिन्द्रवल्लीं शमीं विल्वस्य कण्टकान्। मृगादन्याश्च मूलानि ग्रथितान्येव धारयेत्। रक्तानि माल्यानि तथा पताका रक्ताश्च गन्धा विविधाश्च भक्ष्याः। घण्टा च देवाय बलिर्निवेद्यः सकुक्कुटः स्कन्दगृहे हिताय। स्नानं त्रिरात्रं निशि चत्वरेषु कुर्य्यात्पुनः शालियवैर्नवैस्तु। अङ्गश्च गायत्र्यभिमन्त्रिताभिः प्रक्षालनं चाद्भिरभिश्च वक्ष्ये। रक्षामतः प्रवक्ष्यामि बालानां पाप-

शायिनीम्। अहन्यहनि कर्त्तव्या या भिषग्भिरतन्द्रितैः। तपसां तेजसां चैव यशसां वपुषां तथा। निधानं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु। ग्रह सेनापतिर्देवो देवसेनापतिर्विभुः। देवसेनारिपुहरः पातु त्वां भगवान् गुहः। देव देवस्य महतः पावकस्य च यः सुतः। गङ्गोमाकृत्तिकानाञ्च स ते शर्म्म प्रयच्छतु। रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः। रक्तदिव्यवपुर्द्देवः पातु त्वां क्रौञ्चसूदनः" १।

"अथातः स्कन्दापस्मारप्रतिषेधं व्याख्यास्यामः। विल्वः शिरीषो गोलोमी सुरसादिश्च यो गणः। परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये। सर्वगन्धविपक्वन्तु तैलमभ्यञ्जने हितम्। क्षीरवृक्षकषाये च काकोल्यादौ गणे तथा। विपक्वव्यं घृते वापि पानीयं पयसान्वितम्। उत्सादनं वचाहिङ्गुयुक्तं स्कन्दग्रहे हितम्। गृध्रोलूकपुरीषाणि केशा हस्तिनखा घृतम्। वृषभस्य च रोमाणि योज्यान्युद्धूपनेऽपि च। अनन्तां कुक्कुटीं विम्बीं मर्कटीञ्चापि धारयेत्। पक्वापक्वानि मांसानि प्रसन्नं रुधिरं पयः। घृतोदनो निवेद्यस्य स्कन्दापस्मारिणोऽवटे। चतुःपथे च कर्त्तव्यं स्नानमस्य यतात्मना। स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा। विशाखसंज्ञश्च शिशोः शिवोऽस्तु विकृताननः" २।

"अथातः शकुनीप्रतिषेधं व्याख्यास्यामः। शकुन्यभिपरीतस्य कार्य्यो वैद्येन जानता। वेतसाम्रकपित्थानां निःक्वाथः परिषेचने। कषायमधुरैस्तैलं कार्य्यमभ्यञ्जने शिशोः। मधुकोशीरह्रीवेरशारिवोत्पलपद्मकैः। रोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिहेच्छिशुम्। व्रणोक्तानि चूर्णानि पथ्यानि विविधानि च। स्कन्दग्रहे धूपनानि तानीहापि प्रयोजयेत्। शतावरीमृगैर्वारुनागदन्तीनिदिग्धिकाः। लक्ष्मणां सहदेवीञ्च वृहतीञ्चापि धारयेत्। तिलतण्डुलकं माल्यं हरितालं मनःशिला। बलिरेष करञ्जेषु निवेद्यो नियतात्मना। निकुञ्जे च प्रयोक्तव्यं स्नानमस्य यथाविधि। स्कन्दग्रहोपशमनं घृतं तच्चेह पूजितम्। कुर्य्याच्च विविधां पूजां शकुन्याः कुसुमैः शुभैः। अन्तरिक्षचरा देवी सर्व्वालङ्कारभूषिता। अयोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीदतु। दुर्द्दर्शना महाकाया पिङ्गाक्षी भैरवस्वना। लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु" ३।

"अथातो रेवतीप्रतिषेधं व्याख्यास्यामः। अश्वगन्धाजशृङ्गी च शारिवा सपुनर्नवा। सहे विदारी च तथा कषायाः सेचने हिताः। तैलमभ्यञ्जने कार्य्यं कुष्ठे सर्ज्जरसेऽपि वा। धवाश्वकर्णककुभधातकीतिन्दुकीषु च। काकोल्यादिगणे चैव पानीयं सर्पिरिष्यते। कुलत्थाः शङ्खचूर्णञ्च प्रदेहाः सर्वगन्धिकाः। गृध्रोलूकपुरीषाणि यवा यवफसी घृतम्। सन्ध्ययोरुभयोः कार्य्यमेतदुद्धूपनं शिशोः। वरुणारिष्टकमयं कृचकं सैन्दुकं तथा। सततं धारयेच्चापि कृतं वा पौत्रजीविकम्। शुक्लाः सुमनसो लाजाः पयः शाल्योदनं तथा। बलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना। सङ्गमे च भिषक्स्नानं कुर्य्याद्धात्रीकुमारयोः। नानावस्त्रधरा देवी चित्रमाल्यानुलेपना। चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु। लम्बा कराला विनता तथैव बहुपुत्रिका। रेवती सततं माता सा ते देवी प्रसीदतु" ४।

"अथातः पूतनाप्रतिषेधं व्याख्यास्यामः। कपोतवङ्काऽरलुको वरुणः पारिभद्रकः। आस्फोता चैव योज्याः स्युर्बालानां परिषेचने। वचा वयस्था गोलोमी हरितालं मनःशिला। कुष्ठं सर्ज्जरसश्चैव तैलार्थे वर्ग इष्यते। हितं घृतं तुगाक्षीर्य्यां सिद्धं मधुरकेषु च। कुष्ठतालीशखदिरं चन्दनस्यन्दने तथा। देवदारुवचाहिङ्गुकुष्ठं गिरिकदम्बकः। एलाहरेणवश्चापि योज्या उद्धूपने सदा। गन्धनाकुलिकुम्भीकामज्जानो वदरस्य। कर्कटास्थि घृतञ्चैव धूपनं सर्षपैः सह। काकादनीं चित्रफलां विम्बीं गुञ्जाञ्च धारयेत्। मत्स्यौदनञ्च कुर्व्वीत कृशरं पललं तथा। शरावसम्पुटे कृत्वा बलिं शून्यगृहे हरेत्। उच्छिष्टेनाभिषेकेण शिरसि स्नानमिष्यते। पूज्या च पूतना देवी बलिभिः सोपहारकैः। मलिनाम्बरसंवीता मलिना रूक्षमूर्द्धजा। शून्यागाराश्रिता देवी दारकं पातु पूतना। दुर्द्दर्शना सुदुर्गन्धा कराला मेघकालिका। भिन्नागाराश्रया देवी दारकं पातु पूतना" ५।

"अथातोऽन्धपूतनाप्रतिषेधं व्याख्यास्यामः। तिक्तकद्रुमपत्राणां कार्य्यः क्वाथोऽवसेचने। सुरासौवीरकं कुष्ठं हरितालं मनःशिला। तथा सर्ज्जरसश्चैव तैलार्थमुपदिश्यते। पिप्पलः पिप्पलीमूलं वर्गो मधुरको मधु। शालपर्णी वृहत्यौ च घृतार्थमुपदिश्यते। सर्व्वगन्धैः प्रदेहश्च गात्रेष्वक्ष्णोश्च शीतलैः। पुरीषं कौक्कुटं केशांश्चर्म्म सर्पत्वचन्तथा। जीर्णाञ्च भिक्षुसङ्घाटीं धूपनायोपकल्पयेत्। कुक्कुटीं मर्कटीं शिम्बीमनन्ताञ्चापि धारयेत्। मांसमामं तथा पक्वं शोणितञ्च चतुःपथे। निवेद्यमन्तश्च गृहे

शिशोरक्षानिमित्ततः। शिशोश्च स्नपनं कुर्य्यात् सर्व्वगन्धा-
दिकैः शुभैः। कराला पिङ्गला मुण्डा कषायाम्बरवा-
सिनी। देवी बालमिमं प्रीता संरक्षत्वन्धपूतना” ६।
“अथातः शीतपूतनाप्रतिषेधं व्याख्यास्यामः। कपित्थं सु-
वहां बिम्बीन्तथा विल्वं प्रचीबलम्। नन्दीं भल्लात-
कीञ्चापि परिषेके प्रयोजयेत्। वस्तमूत्रं गवां मूत्रं मुस्तञ्च
सुरदारु च। कुष्ठञ्च सर्व्वगन्धञ्च तैलार्थमवचारयेत्।
रोहिणीसर्ज्जखदिरपलाशककुभत्वचः। निःक्वाथ्य
तस्मिन्निःक्वाथे सक्षीरं विपचेत्ततः। गृध्रोलूकपुरीषाणि
वस्तगन्धामहेस्त्वचः। निम्बपत्राणि मधुकं धूपनार्थं
प्रयोजयेत्। धारयेदपि लम्बाञ्च गुञ्जां काकादनीं तथा।
नद्यां मुद्गकृतैश्चान्नैस्तर्पयेच्छीतपूतनाम्। देव्यै देयश्चोप-
हारो वारुणीरुधिरं तथा। जलाशयान्ते बालस्य स्नपनं
चोपदिश्यते। मुद्गौदनाशना देवी सुराशोणितपायिनी।
जलाशयालया देवी पातु त्वां शीतपूतना” ७।

“अथातोमुखमण्डिकाप्रतिषेधं व्याख्यास्यामः। कपित्थ-
विल्वतर्क्कारीमांसीगन्धर्व्वहस्तकाः। कुवेराक्षी च योज्याः
स्युर्बालानां परिषेचने। सुरसैर्भृङ्गवृक्षाणां तथा-
जर्हरिगन्धयोः। तैलं वसाञ्च संयोज्य पचेदभ्यञ्जने
शिशोः। मधूलिकायां पयसि तुगाक्षीर्य्याङ्गणे तथा।
मधुरे पञ्चमूले च कनीयसि घृतं पचेत्। वचासर्ज्जरसः
कुष्ठं सर्पिश्चोद्धूपने हितम्। धारयेदपि जिह्वाश्च चाष-
चीरल्लिसर्पजाः। वर्णकं चूर्णकं माल्यमञ्जनं पारदं
तथा। मनःशिलाञ्चोपहरेद्गोष्ठमध्ये बलिं तथा। पायसं
सपुरोडाशं बल्यर्थमुपहारयेत्। मन्त्रपूताभिरद्भिश्च तत्रैव
स्नपनं हितम्। अलङ्कृता रूपवती सुभगा कामरूपिणी।
गोष्ठमध्यालयरता पातु त्वां मुखमण्डिका” ८।
“अथातो नैगमेयप्रतिषेधं व्याख्यास्यामः। विल्वाग्नि-
मन्थपूतीकाः कार्य्याः स्युः परिषेचने। सुरासौवीरधा-
न्याम्लैः परिषेकश्च शस्यते। प्रियङ्गुसरलानन्ताशत-
पुष्पाकुटन्नटैः। पचेत्तैलं समेमूत्रैर्दधिमस्त्वम्लका-
ञ्जिकैः। पञ्चमूलद्वयक्वाथे क्षीरे मधुरकेषु च। पचेद्-
घृतञ्च मेधावी खर्ज्जूरीमस्तकेऽपि च। वचां वयस्थां
गोलोमीं जटिलां चापि धारयेत्। उत्सादनं हितं
चात्र स्कन्दापस्मारनाशनम्। सिद्धार्थकवचाहिङ्गु-
कुष्ठञ्चैवाक्षतैः सह। भल्लातकाजमोदाश्च हितमुद्धूपनं
शिशोः। मर्कटोलूकगृध्राणां पुरीषाणि नवग्रहे। धूपः
सुप्ते जने कार्य्यो बालस्य हितमिच्छता। तिलतण्डुलकं
माल्यं भक्ष्यांश्च विविधानपि। कुमारपितृमे-
षाय वृक्षमूले निवेदयेत्। अधस्ताद्वटवृक्षस्य स्नपनं
चोपदिश्यते। बलिं न्यग्रोधवृक्षेषु तिथौ षष्ठ्यां निवे-
दयेत्। अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः।
बालं पालयिता देवो नैगमेयोऽभिरक्षतु” ९।
“अथातोग्रहोत्पत्तिमध्यायं व्याख्यास्यामः। नव स्क-
न्दादयः प्रोक्ता बालानां य इमे ग्रहाः। श्रीमन्तो
दिव्यवपुषो नारीपुरुषविग्रहाः। एते गुहस्य रक्षार्थं
कृत्तिकोमाग्निशूलिभिः। सृष्टाः शरवणस्थस्य रक्षि-
तस्यात्मतेजसा। स्त्रीविग्रहा ग्रहा ये तु नाना-
रूपा मयेरिताः। गङ्गोमाकृत्तिकानाञ्च ते भागा
राजसा मताः। नैगमेयस्तु पार्व्वत्या सृष्टो मेषान-
नो ग्रहः। कुमारधारी देवस्य गुहस्यात्मसमः सखा।
स्कन्दापस्मारसंज्ञो यः सोऽग्निनाग्निसमद्युतिः। स
च स्कन्दसखो नाम विशाख इति चोच्यते। स्कन्दः-
सृष्टो भगवता देवेन त्रिपुरारिणा। बिभर्त्ति चापरां
संज्ञां कुमार इति स ग्रहः। बाललीलाधरो योऽयं देवो
रुद्राग्निसम्भवः। मिथ्याचारेषु भगवान् स्वयं नैष
प्रवर्त्तते। कुमारः स्कन्दसामान्यादत्र केचिदपण्डिताः।
गृह्णन्तीत्यल्पविज्ञाना ब्रुवते देहचिन्तकाः। ततो भगवति
स्कन्दे सुरसेनापतौ कृते। उपतस्थुर्ग्रहाः सर्व्वे दीप्त-
शक्तिधरं गुहम्। ऊचुः प्राञ्जलयश्चैनं वृत्तिं नः संवि-
धत्स्व वै। तेषामर्थे ततः स्कन्दः शिवं देवमचोद-
यत्। ततो ग्रहांस्तानुवाच भगवान् भगनेत्रहृत्।
तिर्य्यग्योनिं मानुषञ्च दैवञ्च त्रितयं जगत्। परस्प-
रोपकारेण वर्त्तते धार्य्यतेऽपि च। देवा मनुष्यान् प्रीणन्ति
तैर्य्यग्योनींस्तथैव च। वर्त्तमानैर्य्यथाकालं शीतवर्षोष्ण-
मारुतैः। इज्याञ्जलिनमस्कारजपहोमव्रतादिभिः।
नराः सम्यक् प्रयुक्तैश्च प्रीणन्ति त्रिदिवेश्वरान्। भागधेयं
विभक्तञ्च शेषं किञ्चिन्न विद्यते। तद्युष्माकं शुभा वृत्ति-
र्बालेष्वेव भविष्यति। कुलेषु येषु नेज्यन्ते देवाः पितर
एव च। ब्राह्मणाः साधवश्चैव गुरवोऽतिथयस्तथा।
निवृत्ताचारशौचेषु परपाकोपभोजिषु। उत्सन्नबलिभिक्षेषु
भिन्नकांस्योपभोजिषु। गृहेषु तेषु ये बालास्तान् गृ-
ह्णीध्वमशङ्किताः। तत्र वो विपुला वृत्तिः पूजा चैव
भविष्यति। एवं ग्रहाः समुत्पन्ना बालान् गृह्णन्ति चा-
प्यतः। ग्रहोपसृष्टा बालास्तु दुश्चिकित्स्यतमा मताः।
वैकल्यं मरणं चाशु ध्रुवं स्कन्दग्रहे मतम्। स्कन्द-

षहोत्थ यतमः सर्वेष्वेव यतःस्मृतः। अन्योवा सर्वरूपस्तु न साध्यो षड् उच्यते"। "कुमारभृत्याकुशलैरनुष्ठिते भिषग्वराप्तैरथ गर्भभर्मणि" रघुः।

**कुमारयु** पु० कुमारं कौमारं याति या—कु मितय्वादि० नि०। युवराजे उज्ज्वलदत्तः

**कुमारललिता** स्त्री "कुमारललिता ज्सगाः" वृत्त०र० उक्ते १सप्ताक्षरपादके छन्दोभेदे। कुमारं सुन्दरं ललितं चेष्टितं, तादृशं ललितं, वा यस्य। २सुकुमारचेष्टायां न०। ३तद्युक्ते त्रि०।

**कुमारवाहिन्** पु० कुमारं स्कन्दं वहति वह—णिनि। मयूरे शब्दरत्ना०। कुमारवाहनत्वात्तस्य तथात्वम्। वह—स्वार्थे णिच् ल्युट् ६त०। कुमारवाहनमप्यत्र न०।

**कुमारसम्भव** न० कुमारस्य कार्त्तिकेयस्य सम्भवमधिकृत्य कृतोग्रन्थः अण् आख्यायिकायां तस्य लुक्। कालिदास प्रणीते महाकाव्यभेदे।

**कुमारसू** स्त्री कुमारं स्कन्दं सूते सू—क्विप् ६त०। १गङ्गायाम् २हैमवत्याञ्च हेमच०। तयोस्तदुत्पत्तिस्थानत्वात् तथात्वम् कुमारजनन्यादयोऽप्यत्र

**कुमारहारित** पु० यजुर्वेदसम्प्रायप्रवर्त्तके ऋषिभेदे "कुमारहारितात् कुमारहारितः" शत०ब्रा० १४.५,५,२२,

**कुमारिका** स्त्री कुमारी—स्वार्थे क संज्ञायां कन्, कुमार—ण्वुल् वा। १अनूढकन्यायाम् २नवमल्लिकायां ३स्थूलैलायां रत्नमा०। ४घृतकुमार्य्यां ५कुमारीशब्दार्थे। भारतवर्षस्य नवसु खण्डेषु ६खण्डभेदे यथाह सि०शि०। "ऐन्द्रं कशेरुशकलं किल ताम्रपर्णमन्यद्गभस्तिमदनञ्च कुमारिकाख्यम्। नागञ्च सौम्यमिह वारुणमन्यखण्डं गान्धर्व्वसंज्ञमिति भारतवर्षमध्ये। वर्ण्यव्यवस्थितिरिहैव कुमारिकाख्ये शेषेषु चान्त्यजजनाः निवसन्ति सर्वे" कशेरुशब्दे १८३५पृ० विवृतिः

**कुमारिन्** त्रि० कुमारोविद्यतेऽस्य इनि। कुमारयुक्ते "पुत्रिणा ता कुमारिणाः" ऋ०८,३१,८ कुमारिणौ दम्पती इत्यर्थः सुपां सुलित्यादिना पा० औस्थाने आच्।

**कुमारिल** पु० मीमांसकभेदे "साधु कुमारिल स्वामिन्! साधु" प्रबोधच०

**कुमारी** स्त्री कुमार+प्रथमवयोवचनत्वात् स्त्रियां ङीप्। १अनूढकन्यायां वर्षभेदेन तन्नामभेदाः कालसङ्कर्षाशब्दे उक्ताः तन्त्रसारे तत्पूजाफलसहितानामभेदा अन्यथा उक्ता यथा"होमादिकन्तु सकलं कुमारीपूजनं विना। परिपूर्णफलं न स्यात् पूजया तद्भवेद्ध्रुवम्। कुमारीपूजया देवि! फलं कोटिगुणं भवेत्। पुष्पं कुमार्य्यै यद्दत्तं तन्मेरुसदृशं भवेत्। कुमारी भोजिता येन त्रैलोक्यं तेन भोजितम्"। तत्र कुमारीनिर्णयः जामले "एकवर्षा भवेत् सन्ध्या द्विवर्षा च सरस्वती। त्रिवर्षा त्रिविधा मूर्त्तिश्चतुर्वर्षा च कालिका। सुभगा पञ्चवर्षा तु। षड्वर्षा च उमा भवेत्। सप्तभिर्म्मालिनी साक्षादष्टवर्षा च कुब्जिका। नवभिः कालसङ्कर्षा दशभिश्चापराजिता। एकादशे च रुद्राणी द्वादशाब्दे तु भैरवी। त्रयोदशे महालक्ष्मीः द्विसप्ता पीठनायिकाः। क्षेत्रज्ञा पञ्चदशभिः षोडशे चाम्बिका स्मृता। एवं क्रमेण संपूज्या यावत्पुष्पं न दृश्यते। प्रतिपदादिपूर्णिमान्तं वृद्धिभेदेन पूजयेत्। महापर्व्वसु सर्वेषु विशेषाच्च पवित्रके। महानवम्यां देवेशि! कुमारीञ्च प्रपूजयेत्। "कुमारिका त्वहं नाथ! सदा त्वं हि कुमारिका। अष्टोत्तरशतं वापि एकां वापि प्रपूजयेत्। पूजिताः प्रतिपूज्यन्ते निर्दहन्त्यवमानिताः। कुमारी योगिनी साक्षात् कुमारी परदेवता। असुरा दुष्टनागाश्च ये च दुष्टग्रहा अपि। भूतवेतालगन्धर्व डाकिनीयक्षराक्षसाः। याश्चान्याः देवताः सर्वा भूर्भुवःस्वःस्थभैरवाः। पृथिव्यादीनि सर्वाणि ब्रह्माण्डं सचराचरम्। ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। ते तुष्टा सर्वदेवाश्च यस्तु कन्यां प्रपूजयेत्। विधियुक्तं कुमारीश्च भोजयेच्चैव भैरवीम्। पाद्यमर्घ्यन्तथा धूपं कुङ्कुमञ्चन्दनं शुभम्। भक्तिभावेन संपूज्य कुमारीभ्योनिवेदयेत्। प्रदक्षिणत्रयं कुर्य्यादादौ मध्ये तथान्ततः। पश्चाच्च दक्षिणा देया रजतं स्वर्णमौक्तिकैः। दक्षिणाञ्च कुमारीभ्योदद्यात् प्रक्रमतस्ततः। विवाहयेद्यस्तु कन्यां ब्रह्महत्यां विनश्यति। गोहत्या च स्त्रीहत्या च सर्वपापं प्रणश्यति। यो यञ्च पुण्यकाले च कन्यादानं प्रकल्पयेत्। वालुकासागरं ज्ञेयं तावद्वत्सहस्रकम्। एकैकं कुलमुद्दिश्य रुद्रलोके महीयते" कन्यादानन्तु तत्तद्देवताप्रीतये इति सम्प्रदायः। वस्तुतस्तु तत्तद्वर्षायाः कन्यायास्तत्तद्देवतात्वबुद्ध्या शिवरूपत्वं सम्प्रदानीये विभाव्य दद्यादिति रहस्यार्थः" कृष्णानन्दः। "सं प्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयते इति स्मृत्युक्तायां २द्वादशवर्षीयकन्यायाम् ३पार्वत्याम् ४नवमल्लिकायां ५नदीभेदे ६घृतकुमार्य्याम् तत्पर्य्यायगुणादि भावप्रकाशे उक्तं यथा "कुमारी गृहकन्या च कन्या घृतकुमारिका

कुमारी भेदिनी शीता तिक्ता नेत्र्या रसायनी। मधुरा बृंहणी बल्या वृष्या वातविषप्रणुत्। गुल्मप्लीहयकृद्वृद्धिकफज्वरहरी, हरेत्। ग्रन्थ्यग्निदग्धविस्फोटपलितत्वत्वगामयान्”।

७अपराजितायां ८जम्बुद्वीपांशभेदे कुमारिकाखण्डे ९सहायां मेदि०। १०सीतायां हेमच०११वन्ध्याकर्कोट्याम् १२स्थूलैलायां १३मोदिनीपुष्पे। १४तरुणीपुष्पे १५श्यामापक्षिणि राजनि०।

**कुमारीक्रीडनक** न० कुमारीभिः क्रीड्यतेऽनेन क्रीड–करणे ल्युट् ततः यावादि०स्वार्थे क। कुमारीक्रीडासाधने द्रव्ये

**कुमारीपुत्र** पु०। १कानीने कन्याकालोत्पन्ने पुत्रे स च मातामहपुत्रः कानीनशब्दे विवृतिः। ततः प्रकारवचने स्थूलादि० कन्। कुमारीपुत्रक तत्सदृशे त्रि०

**कुमारीश्वशुर** पु० ६त०। विवाहात् पूर्व्वं धर्षितकन्यायाः भर्त्तुः पितरि। ततः प्रकारे स्थूला० कन्। तत्सदृशे त्रि०

**कुमाल** केलौ अद० चुरा० उभ० अक० सेट्। कुमालयति ते अचुकुमालत् त। कुमालयां बभूव आस चकार चक्रे

**कुमालक** पु० कुमाल–ण्वुल्। सौवीरदेशे हेमच०।

**कुमुद्** न० कौ मोदते मुद–क्विप् ७त०। १कैरवे मेदि०२रक्तोत्पले त्रिका०। कुत्सिता मुदस्य। ३कृपणे त्रि० मेदि०। ४अप्रीते च त्रि०शब्दर०। कुगतिस०। ५कुत्सितमोदे स्त्री

**कुमुद** न०कौ मोदते मुद–क ७त०। (सुँदि) कैरवे अमरः। “कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव” पञ्चत०। “कुमुदं पिच्छिलं स्निग्धं मधुरं ह्लादि शीतलम्” भाव० प्र० तद्गुणा उक्ताः। २रक्तपद्मे मेदि० ३रूप्ये हेमच०। ४कर्पूरे पु० राजनि० अयमर्द्धर्चादि ५शाल्मलिद्वीपस्थे वर्षपर्वतभेदे। कुन्दशब्दे उदा०। ६दक्षिणदिग्गजे अमरः तस्य श्वेतोत्पलनिभत्वात्तथात्वम्। कुं भूमिं मोदयति मुद–अन्तर्भूतण्यर्थे–क। ७विष्णौ “कुमुदः कुन्दरः कुन्दः पर्जन्यः पावकोऽनिलः” विष्णुस०। ८पद्मे न० त्रिका०। “यस्य वाला बहुव्यामा दीर्घलाङ्गूलमाश्रिताः। ताम्राः पीता शीताश्चैव प्रकीर्णा घोरकर्म्मणः” रामा० उक्तलक्षणे ९वानरभेदे। “सुषेणमैन्दद्विविदैः कुमुदेनाङ्गदेन च” भा०व०२८८अ०। १०विष्णुपारिषदभेदे। “प्रहस्तानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः” इत्युपक्रमे कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्त्रिराट्” भाग० ८,२१,१०। ११मेरोरुपष्टम्भगिरिभेदे पु०। “मन्दरोमेरुमन्दरः सुपार्श्वः कुमुद इत्ययुतयोजनविस्तारोन्नतामेरोश्चतुर्द्दिशमवष्टम्भगिरय उपक्लृप्ताः” भा०५,१६,१ “एवं कुमुदनिरूढोयः शतवल्शोनाम वटस्तस्य स्कन्धेभ्योनीचीनाः पयोदधिमधुगुडान्नाद्यम्बरसदासनाभरणादयः सर्व्व एव कामदुघा नदाः कुमुदाग्रात् पतन्तस्तदुत्तरेणेलावृतमुपयोजयन्ति” तत्रैव १२सर्पभेदे कुमुद्वतीशब्दे रघुवाक्यम्। “कुमुदः कुमुदाक्षश्च तित्तिरः हलिकस्तथा”भा०आ३५अ०१३दैत्यभेदे च। ततः कुमुदा० चतुरर्थ्यां ठक्। कौमुदिक तत्सन्निकृष्टादौ त्रि०। तत्रार्थे ठच्। कुमुदिक तत्रार्थे त्रि०

**कुमुदखण्ड** न० कुमुदानां समूहः कमला० खण्डच्। १कैरवसमूहे। ६त०। २कुमुदस्य भागे

**कुमुदगन्ध्या** स्त्री कुमुदस्येव गन्धमर्हति ष्यङ्। कुमुदगन्धयुक्तायां स्त्रियां ततः करीषगन्ध्याशब्ददर्शितं कार्य्यम्।

**कुमुदघ्नी** स्त्री सुश्रुतोक्ते चीरविषवृक्षभेदे। यथा “कुमुदघ्नी स्नुही जालचीर्य्याणि त्रीणि चीरविषाणि”।

**कुमुदनाथ** पु० ६त०। चन्द्रे तस्य प्रकाशेन कुमुदस्य प्रकाशात्तस्य तथात्वम्। कुमुदपत्यादयोऽप्यत्र

**कुमुदबन्धु** पु० ६त०। चन्द्रे तत्प्रकाशकत्वात्तस्य तथात्वम् कुमुदसुहृत्कुमुदबान्धवादयोऽप्यत्र। [न्याम् भरतः।

**कुमुद्वती** स्त्री कुमुदानि सन्त्यस्यां मतुप् मस्य वः। कुमुदि-

**कुमुदा** स्त्री कुत्सितं मोदते मुद–क टाप्। १कुम्भिकायां (पाना) २गाम्भारीवृक्षे मेदि०। ३शालपर्णीवृक्षे ४कट्फले राजनि०। संज्ञायां कन्। कट्फले अमरः। गौरा० ङीष्। कुमुदी कट्फले स्त्री शब्दरत्ना०।

**कुमुदाकर** पु० ६त०। कुमुदस्थाने ह्रदादौ “कुमुद्वतीनां कुमुदाकरैरिव” माघः

**कुमुदाक्ष** पु० १नागभेदे२विष्णुपारिषदभेदे च कुमुदशब्दे उदा०

**कुमुदादि** पु० पाणिन्युक्ते चतुरर्थ्यां ठच्प्रत्ययनिमित्ते शब्दगणभेदे स च गणः “कुमुद शर्करा न्यग्रोध इक्कट सङ्कट कङ्कट गर्त्त वीज परिवाप निर्यास शकट कच मधु शिरीष अश्व अश्वत्थ वल्वज यवास कूप विकङ्कट दशग्राम”। कुमुदिक कुमुदसन्निकृष्टदेशादौ त्रि० स्त्रियां षित्त्वात् ङीष्। तत्रैवोक्ते तदर्थे ठक्प्रत्ययनिमित्ते २शब्दगणभेदे स च गणः। “कुमुद गोमय रथकार दशग्राम अश्वत्थ शाल्मलि शिरीष मुनिस्थल कुण्डल कूट मधुकर्ण घास कुन्द शुचिकर्ण”। कौमुदिक तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां षित्त्वात् ङीष्।

**कुमुदाभिख्य** न० कुमुदस्येवाभिख्या शोभा यस्य ब॰तत्वात्। रौप्ये रजते धातौ शब्दचि० [ २कुमुदाधारस्थाने च

**कुमुदावास** पु० कुमुदानामावासः। १कुमुदप्राये देशे हेमच०

**कुमुदिका** स्त्री कौ मोदते मुद–हर्षे क ७त०। कट्फले अमरः

**कुमुदिनी** स्त्री कुमुदानि सन्त्यत्र देशे पुष्क० इनि। १कुमुदयुक्तदेशे पुष्करिण्यादौ २कुमुदलतायां भरतः। "कुमुदिनीकुलकेलिकलालसः" भ्रमराष्टकम्। "पद्मिन्यां ये गुणाः प्रोक्ताः कुमुदिन्याश्च ते स्मृताः। सा तु मूलादिसर्व्वाङ्गैः रक्ता समुदिता बुधैः" भावप्र०तद्गुणा उक्ताः। कुमुदानां समूहः खलादेराकृतिगणत्वात् इनि। ३कुमुदसमूहे च। "वीचलोऽन्यमितः स्फुटत्कुमुदिनीफुल्लोल्लसल्लोचनाः" पञ्चत०

**कुमुदिनीनायक** पु० ६त०। चन्द्रे तदुदये कुमुदसंघप्रकाशात्तस्य तथात्वं कुमुदिनीपत्यादयोऽप्यत्र पु०

**कुमुदेश** पु० ६त०। चन्द्रे कुमुदेश्वरादयोऽप्यत्र पु०

**कुमुद्वत्** त्रि० कुमुद+चतुरर्थ्यां ड्मतुप् मस्य वः। १कुमुदयुक्तदेशादौ "हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु" रघुः स्त्रियां ङीप्। सा च २कुमुदलतायाम्। "ग्लपयति यथा शशाङ्कं कुमुद्वतीं न तथाहि दिवसः" शकु० "कुमुद्वती भानुमतीव भावम्" रघुः "वाप्यो वैदूर्य्यसोपानपद्मोत्पलकुमुद्वतीः" भा० ४।८।६४ कुमुदस्यास्ति मतुप्। ३कुप्रीतियुक्ते त्रि० स्त्रियां ङीप्। "प्रभातवाताहतिकम्पिताकृतिः कुमुद्वतीरेणुपिशङ्गविग्रहम्। निरास भृङ्गं कुपितेव पद्मिनी न मानिनीसंसहतेऽन्यसङ्गमम्" भट्टिः मानिनीपक्षे कुमुदुक्तस्योपरत्वम्। ४कुमुदनागस्य भगिन्यां "इमां स्वसारञ्च यवीयसीं मे कुमुद्वतीं नार्हसि नानुमन्तुम्। इत्युपक्रमे "संयोजयां विधिवदास समेतबन्धुःकन्यामयेन कुमुदः कुलभूषणेन"। "अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती" रघुः

**कुमुद्वतीश** पु०६त०। चन्द्रे कुमुद्वतीनायतदीशादयोऽप्यत्र पु०

**कुमुद्वतीवीज** न० ६त०। (वेरा) इतिख्याते कुमुदिनीवीजे "भवेत् कुमुद्वतीवीजं स्वादु रूक्षहिमं गुरु" भावप्र०

**कुमोदक** पु० मोदयति मुद–णिच्–ण्वुल् ६त०। १विष्णौ हेमच० सहि लालनेन भारावतारणेन च पृथिव्या मोदक इति तस्य तथात्वम्। तस्येदमण् ङीप्। कौमोदकी तद्गदायाम् स्त्री

**कुम्ब** त्रि० कुबि–अच्। वाहुकुण्डे (कोपा) जटा० "करीरमस्य शीर्षणि कुम्बं चाभिनिदध्मसि" अथ० ६,१३८,३

**कुम्बा** स्त्री कुबि–भावे अङ्। १सुगहनायामावृतौ दृढ़वेष्टने अमेध्यादिदृष्टिवारणाय वैदिके २वेष्टनभेदे च "तस्मिन्नुदीचीनकुम्बां शम्यां निदधाति" तैत्ति०। कुम्बयति आच्छादयति अच्। ३स्थूलशाटके स्त्री त्रिका०

**कुम्ब्या** स्त्री कुबि–यत्। एकार्थप्रतिपादके विध्यर्थवादात्मके वेदैकदेशब्राह्मणवाक्य भेदे माधवः। "तस्मादृचं वा यजुर्वा साम वा गाथां वा कुम्ब्यां वाऽभिव्याहरेद् व्रतस्याध्यायाव्यवच्छेदाय" शत० ब्रा० ११।५।७।१०।

**कुम्भ** पु०कुं भूमिं कुत्सितं वा उम्भति उनुभ–पूरणे अच् शक०। १घटे, २हृद्रोगभेदे, ३हस्तिशिरःस्थमांसपिण्डद्वये, 'तैः किं मत्तकरीन्द्रकुम्भकुहरे नारोपणीयाः कराः' प्रसन्नराघवम्। ४कुम्भकर्णस्य पुत्रे, ५वेश्यापतौ, मेदि० ६प्राणायामाङ्गे श्वासरोधके चेष्टाभेदे, 'दशद्रोणा भवेत् खारी कुम्भस्तु द्रोणविंशतिरित्युक्ते ७परिमाणभेदे "धान्यं दशभ्यः कुम्भेभ्योहरतोऽभ्यधिकं बधः" मनुः। ज्योतिषप्रसिद्धे मेषावधिके ८एकादशराशौ च। ९गुग्गुलौ, १०त्रिवृति च न०।

तत्र घटार्थककुम्भलक्षणमुक्तं हेमा० दा० परिभाषाप्र०" "विष्णुधर्मोत्तरे "हैमराजतताम्रा वा मृण्मया लक्षणान्विताः। वालोद्यानप्रतिष्ठादौ कुम्भाः सुरभिषेचने। पञ्चाशाङ्गुलवैपुल्या उत्सेधषोडशाङ्गुलाः। द्वादशाङ्गुलकं मूलं मुखमष्टाङ्गुलं भवेत्"। "पञ्चाशाङ्गुलेति आशा दिशः, ताश्च, दशसंख्यावाचकत्वेन ज्योतिःशास्त्रादौ प्रसिद्धाः पञ्च च आशाश्च पञ्चाशाः तावन्ति अङ्गुलानि वैपुल्यं येषां ते तथाभूताः। मध्यप्रदेशे तिर्य्यग्मानेन पञ्चदशाङ्गुला इत्यर्थः। अथवा बाह्यप्रदेशे बलयाकृतिना सूत्रेण नीयमाना मध्यस्थाने पञ्चाशदङ्गुला इत्यर्थः। अस्मिन् पक्षे पञ्चाशाङ्गुलेति छान्दसः प्रयोगः" हेमा०।

तान्त्रिकमानन्तु तन्त्रसा० गौतमीये 'हैमं रौप्यं तथा ताम्रं मार्त्तिकं वा स्वशक्तितः। वित्तशाठ्यं न कुर्वीत कृते निष्फलमाप्नुयात्। षट्त्रिंशदङ्गुलं कुम्भं विस्तारो ऽतिशालिनम्। षोड़शं द्वादशं वापि ततोन्यूनं न कारयेत्"।

प्राणायामाङ्गकुम्भकपरकुम्भप्रकारः विष्णु० पा० उक्तो यथा "कुम्भकः पूरकोरेचः प्राणायामस्त्रिलक्षणः।

पूरकं पूरणं वायोः, कुम्भकः स्थापनं क्वचित्। बहिर्निःसारणं तस्य रेचकः परिकीर्त्तितः। दक्षिणे रेचयेद्वायुं वामेन पूरितोदरः। कुम्भेन धारयेन्नित्यं प्राणायामं विदुर्बुधाः। अङ्गुष्ठेन पुटं ग्राह्यं नासाया दक्षिणं पुनः। कनिष्ठानामिकाभ्याञ्च वामं प्राणस्य संग्रहे। अङ्गुष्ठतर्ज्जनीभ्यान्तु ऋग्वेदी सामगायनः। अङ्गुष्ठानामिकाभ्यां तु ग्राहरं सर्व्वैरथर्वभिः" याज्ञ० "दक्षिणे रेचकं कुर्य्यात् वामेनापूर्य्य चोदरम्। कुम्भकेन जपं कुर्य्यात् प्राणायामस्य लक्षणम्" यज्ञः। विवृतमेतत् पात० सू० भाष्यविवरणेषु यथा

"तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" सू० "सत्यासनजये बाह्यस्य वायोराचमनं श्वासः। कोष्ठस्य वायोर्निःसारणं प्रश्वासः तयोर्गतिविच्छेद उभयाभावः प्राणायामः" भाष्यम्

"आसनानन्तरं तत्पूर्व्वकतां प्राणायामस्य दर्शयन् तल्लक्षणमाह रेचकपूरककुम्भकेष्वस्ति श्वासप्रश्वासयोर्गतिविच्छेद इति प्राणायामसामान्यलक्षणमेतदिति तथाहि यत्र बाह्यवायुराचम्यान्तर्धार्य्यते पूरके। तत्रापि श्वासप्रश्वासयोर्गतिविच्छेदः यत्रापि कोष्ठोवायुर्विरेच्य बहिर्धार्य्यते रेचके तत्रास्ति श्वासप्रश्वासयोर्गतिविच्छेदः एवं कुम्भकेऽपि इति तदेतद्भाष्येणोच्यते। सत्यासनेति" वाचस्पतिविवरणम्।

"बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टोदीर्घसूक्ष्मः" सू०

"यत्र प्रश्वासपूर्व्वको गत्यभावः स आभ्यन्तरः तृतीयस्तम्भवृत्तिर्यत्रोभयाभावः सकृत्प्रयत्नाद् भवति यथा तप्ते न्यस्तमुपले जलं सर्वतः सङ्कोचमापद्यते। तथा द्वयोर्युगपद्गत्यभावइति त्रयोऽप्येते देशेन परिदृष्टाः, इयानस्य विषयो देश इति कालेन परिदृष्टाः क्षणानामियत्तावधारणेनावच्छिन्ना इत्यर्थः। सङ्ख्याभिः परिदृष्टाः एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घात स्तद्वन्निगृहीतस्यैतावद्भिः द्वितीय उद्घातः" एवं तृतीय एवं मृदुरेवं मध्य एवं तीव्र इति सङ्ख्यापरिदृष्टः स खल्वयमेवमभ्यस्तो दीर्घसूक्ष्मः" भाष्यम्

"प्राणायामविशेषत्रयलक्षणपरं सूत्रमवतारयति यत्रेति। वृत्तिशब्दः प्रत्येकं संबध्यते। रेचकमाह यत्र प्रश्वासेति। पूरकमाह यत्र श्वासेति। कुम्भकमाह तृतीय इति। तदेव स्फुटयति यत्रोभयोः श्वासप्रश्वासयोः सकृदेव विधारकात् प्रयत्नादभावो भवति न पुनः पूर्व्ववदापूरणप्रयत्नौघप्रविधारकप्रयत्नो नापि रेचकप्रयत्नौघविधारणप्रयत्नोऽपेक्ष्यते किन्तु यथा तप्ते उपले निहितं जलं परिशुष्यत् सर्वतः संकोचमापद्यते एवमयमपि मारुतो वहनशीलो बलवद्विधारकप्रयत्ननिरुद्धक्रियः शरीरएव सूक्ष्मीभूतोऽवतिष्ठते न तु पूरयति येन पूरकः, न तु रेचयति येन रेचक इति। इयानस्य देशो विषयः प्रदेशः। वितस्तिहस्तादिपरिमितो निवाते प्रदेशे ईशीकातूलादिक्रियानुमितो बाह्य एव नान्तरोऽप्यापादतलमामस्तकं पिपीलिकास्पर्शसदृशेनानुमितः स्पर्शननिमेषक्रियावच्छिन्नस्य कालस्य चतुर्थो भागः क्षणस्तेषामियत्तावधारणेनावच्छिन्ना स्वजानुमण्डलं पाणिना त्रिः परामृश्य छोटिकावच्छिन्नः कालोमात्रा। ताभिः षट्त्रिंशन्मात्राभिः परिमितः प्रथम उद्घातो मन्दः। स एव द्विगुणीकृतो द्वितीयोमध्यमः स एव त्रिगुणीकृतस्तृतीय स्तीव्रः तममिमं सङ्ख्यापरिदृष्टं प्राणायाममाह सङ्ख्याभिरिति। स्वस्थस्य हि पुंसः श्वासप्रश्वासक्रियावच्छिन्नेन कालेन यथोक्तं छोटिकाकालसमानः प्रथमोद्घातकर्म्मतां नीतः उद्घातो विजितो वशीकृतो निगृहीतः क्षणानामियत्ताकालो विवक्षितः श्वासप्रश्वासेयत्तास्वेति कथञ्चिद्भेदः। स खल्वयं प्रत्यहमभ्यस्तो दिवसपक्षमासादिक्रमेण देशकालप्रचयव्यापितया दीर्घः परमनैपुण्यं समधिगमनीयः तया च सूक्ष्मो नतु मन्दतया" विव०

"बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः" सूत्रम्

"देशकालसङ्ख्याभिर्बाह्यविषयः परिदृष्ट आक्षिप्तः। तथाभ्यन्तरविषयः परिदृष्ट आक्षिप्तः। उभयथा दीर्घसूक्ष्मः तत्पूर्व्वको भूमिजयात्। क्रमेणोभयोर्गत्यभावश्चतुर्थः प्राणायामः। तृतीयस्तु विषयानालोचितो गत्यभावः सकृदारब्धएव देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मश्चतुर्थस्तु श्वासप्रश्वासयोर्विषयावधारणात् क्रमेण भूमिजयादुभयाक्षेपपूर्वको गत्यभावश्चतुर्थः प्राणायामः इत्ययं विशेषइति" भाष्यम्

"एवं त्रयोविशेषा लक्षिताः चतुर्थं लक्षयति बाह्येति व्याचष्टे देशकालसङ्ख्याभिरिति आक्षिप्तोऽभ्यासवशीकृताद्रूपादवरोपितः सोऽपि दीर्घसूक्ष्म एवं तत्पूर्वको बाह्याभ्यन्तरविषयः प्राणायामो देशकालसंख्यादर्शनपूर्व्वकः, न चासौ चतुर्थः तृतीयइव सकृत्प्रयत्नादह्नाय जायते किन्त्वभ्यस्यमानस्तां तामवस्थामापन्नः तत्तदवस्था

विजयानुक्रमेण भवतीत्याह भूमिजयादिति"।
"ननूभयोर्गत्यभावस्तम्भवृत्तावप्यस्तीति कोऽस्मादस्य विशेष इत्यत आह। तृतीय इति अनालोचनपूर्व्वं सकृत्प्रयत्ननिर्वर्त्तितस्तृतीयश्चतुर्थस्त्वालोचनपूर्व्वो बहुप्रयत्ननिर्वर्त्तनीय इति विशेषः। तयोः पूरकरेचकयोर्विषयो नालोचितोऽयं तु देशकालसङ्ख्याभिरालोचित इत्यर्थः" विवरणम्
"ततः क्षीयते प्रकाशावरणम्" सू०
"प्राणायाममभ्यस्यतोऽस्य योगिनः क्षीयते विवेकज्ञानावरणीयं कर्म्म यत्तदाचक्षते। महामोहमयेन इन्द्रजालेन प्रकाशशीलं सत्वमावृत्य तदेवाकार्य्ये नियुङ्क्ते इति तदस्य प्रकाशावरणं कर्म्म संसारनिबन्धनं प्राणायामाभ्यासात् दुर्बलं भवति प्रतिक्षणं च क्षीयते। तथा-चोक्तम् "तपो न परं प्राणायामात्ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्येति" किञ्च धारणासु च योग्यता मनसः प्राणायामाभ्यासादेव। "प्रच्छर्द्दनविधारणाभ्यां वा प्राणस्येति" वचनात्" भाष्यम्
"प्राणायामस्यावान्तरप्रयोजनमाह ततइति। आव्रियतेऽनेन बुद्धिसत्वप्रकाशइत्यावरणं क्लेशः पाप्मा च। व्याचष्टे प्राणायाममिति। ज्ञायतेऽनेनेति ज्ञानं बुद्धिसत्वप्रकाशः विवेकस्य ज्ञानं विवेकज्ञानमावृणोतीति विवेकज्ञानावरणीयं भव्यगेयप्रवचनीयादीनां कर्त्तरि निपातनस्य प्रदर्शनार्थत्वात् कोपनीयरञ्जनीयवत् अत्रापि कर्त्तरि कृत्यप्रत्ययः। कर्मशब्देन तज्जन्मपुण्यं तत्कारणं क्लेशं लक्षयति अत्रैवागमिनामनुमतिमाह यत्तदाचक्षत इति। महामोहोरागः तदविनिर्भागवर्त्तिन्यविद्याऽपि तद्ग्रहणेन गृह्यते। अकार्य्यमधर्म्मः। ननु प्राणायामश्चेत् पाप्मानं क्षिणोति कृतं तर्हि तपसेत्यत आह दुर्बलं भवतीति न तु सर्वथा क्षीयते अतस्तत्प्रक्षयाय तपोऽपेक्ष्यते इति अत्राप्यागमिनामनुमतिमाह तथा चोक्तमिति। मनुरप्याह "प्राणायामैर्द्दहेद्दोषानिति" प्राणायामस्य योगाङ्गता विष्णुपुराणोक्ता "प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यः। प्राणायामः स विज्ञेयः सवीजोऽवीजएव च। परस्परेणाभिभवं प्राणापानौ यदाऽनिलौ। कुरुतस्तद्विधानेन तृतीयं संयमात्तयोः" इति किञ्च व्यासः "प्राणायामोहि मनः स्थिरीकुर्व्वन् धारणासु योग्यं करोति" विवरणम्" प्राणायामशब्दे विवृतिः
कुम्भमानमुक्तं हेमा० दा० ख० परिभाषाप्रकरणे

भविष्यपुराणे "पलद्वयं तु प्रसृतं द्विगुणं कुडवो मतः। चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः। आढकैस्तैश्चतुर्भिश्च द्रोणस्तु कथितोबुधैः। कुम्भो द्रोणद्वयं शूर्पः खारी द्रोणास्तु षोडश"। विष्णुधर्म्मोत्तरे "पलञ्च कुडवः प्रस्थ आढको द्रोण एव च। धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः। द्रोणैः षोडशभिः खारी विंशत्या कुम्भउच्यते। कुम्भैस्तु दशभिर्वाहो धान्यसंख्याः प्रकीर्तिताः"।
वैद्यकपरिभाषायां कर्षशब्दे दर्शितं "चतुर्भिराढकैर्द्रोणः कलसोनल्वणोऽर्म्मणः। उन्मानञ्च घटोराशिर्द्रोणपर्य्यायसंज्ञितः। द्रोणाभ्यां शूर्पकुम्भौ च चतुःषष्टिशरावकः" भाव० प्र० वाक्यम्। कुम्भराशिस्तु धनिष्ठाशेषार्द्धशतभिषापूर्व्वभाद्रपदात्रिपादात्मकः स च३६० अंशैर्विभक्तस्य राशिचक्रस्य ३००त्रिशतोत्तरत्रिंशदंशात्मकः। तस्य स्वरूपादिकमुक्तं नील०ता० "कुम्भोऽपदो ना दिनमध्यसङ्गप्रसूः स्थिरः कर्व्वूरवर्ण्णवायुः। सिग्धोष्णखण्ड स्वरतुल्यघातः शूद्रः प्रतीची विषमोदयश्च"। तस्य स्वामी शनिः। स च स्थिरराशिः "चरस्थिरद्व्यात्मकनामधेया मेषादयोऽमी क्रमशः प्रदिष्टा" इत्युक्तेः। स च पुष्कराख्यः "पुराणस्य पुष्करस्यैव आधानाख्यस्तथैव च। मुख्याष्टव्या भवन्त्येते नित्यं द्वादश राशयः" ज्यो०त०। स च द्विपदराशिः। "मिथुनतुलाघटकन्या द्विपदाख्याश्चापपर्व्वभागश्च" तत्रोक्तेः "द्विपदवशगाः सर्वे सिंहं विहाय चतुष्पदाः, सलिलनिलया वश्या भक्ष्याः सरीसृपजातयः" तत्रैवोक्तेः तद्राशेः सिंहं विना सर्वे राशयोवश्या जलजरा भक्ष्याः। स च राहोर्मूलत्रिकोणम्। "उच्चं न्युग्मं घटभं त्रिकोणम्" इत्युक्तेः। तत्र तुलादितो नवांशा ग्राह्याः "चराणां सत्रिकोणानां तच्चराद्या नवांशका" इत्युक्तेः कुम्भापेक्षया तुलाराशेर्नवमत्वात्तस्य चरत्वाच्च तथात्वम् तस्य लङ्कायामुदयमानं उदयशब्दे ११२०पृ० दर्शितम्। देशभेदे तु भिन्नकालेनेति लग्नकालशब्दे विवृतिः।
११प्रह्लादपुत्रभेदे "प्रह्लादस्य त्रयः पुत्राः ख्याताः सर्व्वत्र भारत!। विशेषतश्च कुम्भश्च निकुम्भइति नामतः" भा० आ० ६५अ० "प्रह्लादोऽर्द्धशिराः कुम्भः संह्लादोगगनप्रियः" हरिवं० ४२अ०

कुम्भक पु० कुम्भ+स्वार्थे क, कुम्भ इव कायति प्रकाशते निश्चलत्वात् कै—क वा। प्राणायामाङ्गे वायुरोधन व्यापारभेदे कुम्भशब्दे विवृतिः। "कुम्भकोनिश्चल श्वासः" या०स्मृ०।

**कुम्भकर्ण** पु० कुम्भ इव कर्णोऽस्य। रावणानुजे राक्षसभेदे स च विश्रवसः केकस्यां जातः तदुत्पत्तिकथा रामा० उत्त०का० सुमालिकन्यया केकस्या अग्निहोत्रकाले सन्ध्यासमये पुत्रमभिलषन्त्या प्रार्थितेन विश्रवसा राक्षसयोनिपुत्रप्राप्तिरूपो वरोदत्तः। यथा "दारुणायां तु वेलायां यस्मात्त्वं मामुपस्थिता। शृणु तस्मात् सुतान् भद्रे! यादृशान् जनयिष्यसि। दारुणान् दारुणाकारान् दारुणाभिजनप्रियान्। प्रसविष्यसि सुश्रोणि! राक्षसान् क्रूरकर्म्मणः" इत्युपक्रमे "एवमुक्ता तु सा कन्या राम! कालेन केनचित्। जनयामास बीभत्सं रक्षोरूपं सुदारुणम्। दशग्रीवं महादंष्ट्रम् नीलाञ्जनचयोपमम्। ताम्रोष्ठं विंशतिभुजं महास्यं दीप्तमूर्द्धजम्" इति रावणोत्पत्तिमुक्त्वा "तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः। प्रमाणात् यस्य विपुलं प्रमाणं नेह विद्यते। ततः शूर्पनखा नाम संजज्ञे विकृतानना। विभीषणस्तु धर्म्मात्मा कैकस्याः पश्चिमः सुतः" इति। भा०व०२७४ अ० तु पुष्पोत्कटातस्तस्योत्पत्तिरुक्ता" यथा

"पुलस्त्यस्य तु यः क्रोधादर्द्धदेहोऽभवन्मुनिः। विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत। बुबुधे तन्तु सक्रोधं पितरं राक्षसेश्वरः। कुबेरस्तत्प्रसादार्थं यतते स्म सदा नृप!। स राजराजो लङ्कायां निवसन्नरवाहनः। राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः। ताः सदा तं महात्मानं सन्तोषयितुमुद्यताः। ऋषिं भरतशार्दूल! नृत्यगीतविशारदाः। पुष्पोत्कटा च राका च मालिनी च विशाम्पते!। अन्योन्यस्पर्द्धया राजन्! श्रेयस्कामाः सुमध्यमाः। तासां स भगवांस्तुष्टो महात्मा प्रददौ वरान्। लोकपालोपमान् पुत्रानेकैकस्या यथेप्सितान्। पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ। कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि। मालिनी जनयामास पुत्रमेकं विभीषणम्। राकायां मिथुनं जज्ञे खरः शूर्पणखा तथा। विभीषणस्तु रूपेण सर्वेभ्योऽभ्यधिकोऽभवत्। स बभूव महाभागो धर्म्मगोप्ता क्रियारतिः। दशग्रीवस्तु सर्वेषां श्रेष्ठो राक्षसपुङ्गवः। महोत्साहो महावीर्य्यो महासत्वपराक्रमः। कुम्भकर्णो बलेनासीत् सर्वेभ्योऽभ्यधिको युधि। मायावी रणशौण्डश्च रौद्रश्च रजनीचरः"। तस्य ब्रह्मतोवरप्राप्तिरुक्ता रामा०उ० का०१० सर्गे यथा "इत्युक्त्वा कुम्भकर्णाय वरं दातुमवस्थितम्। प्रजापतिं सुराःसर्वे वाक्यं प्राञ्जलयोऽब्रुवन्। न तावत् कुम्भकर्णाय प्रदातव्योवरस्त्वया। जानीषे हि यथा लोकांस्त्रासयत्येष दुर्म्मनाः। नन्दनेऽप्सरसः सप्त महेन्द्रानुचरा दश। अनेन भक्षिता ब्रह्मन्! ऋषयो मानुषास्तथा। अलब्धवरपूर्व्वेण यत् कृतं राक्षसेन तु। यद्येष वरलब्धःस्याद्भक्षयेद्भुवनत्रयम्। वरव्याजेन मोहोऽस्मै दीयताममितप्रभ!। लोकानां स्वस्ति चैवं स्यादभवेदस्य च संमतिः। एवमुक्तः सुरैर्ब्रह्माऽचिन्तयत्पद्मसम्भवः। चिन्तिता चोपतस्थेऽस्य पार्श्वं देवी सरस्वती। प्राञ्जलिः सा तु पार्श्वस्था प्राह वाक्यं सरस्वती। इयमस्म्यागता देव! किं कार्यं करवाण्यहम्। प्रजापतिस्तु तां प्राप्तां प्राह वाक्यं सरस्वतीम्। वाणि! त्वं राक्षसेन्द्रस्य भव वाग्देवतेप्सिता। तथेत्युक्त्वा प्रविष्टा सा प्रजापतिरथाब्रवीत्। कुम्भकर्ण! महाबाहो! वरं वरय योमतः। कुम्भकर्णस्तु तद्वाक्यं श्रुत्वा वचनमब्रवीत्। स्वप्तुं वर्षाण्यनेकानि देवदेव! ममेप्सितम्। एवमस्त्विति तच्चोक्त्वा प्रायात् ब्रह्मा सुरैः समम्। देवी सरस्वती चैव राक्षसं तं जहौ पुनः। ब्रह्मणा सह देवेषु गतेषु च नभस्तलम्। विमुक्तोऽसौ सरस्वत्या स्वां संज्ञां च ततोगतः। कुम्भकर्णस्तु दुष्टात्मा चिन्तयामास दुःखितः। ईदृशं किमिदं वाक्यं ममाद्य वदनाच्च्युतम्। अहं व्यामोहितो देवैरिति मन्ये तदागतैः"

स च रामेण हत इति रामा० स्थितम् भारते तु लक्ष्मणेन निहत इति स्थितम् यथा भा० वन० २८६अ० "कुम्भकर्णो महेष्वासः प्रगृहीतशिलायुधः। अभिदुद्राव सौमित्रिमुद्यम्य महतीं शिलाम्। तस्यापि पततस्तूर्णं क्षुराभ्यामुच्छ्रितौ करौ। चिच्छेद निशिताग्राभ्यां स बभूव चतुर्भुजः। तानप्यस्य भुजान् सर्वान् प्रगृहीतशिलायुधान्। क्षुरैश्चिच्छेद लघ्वस्त्रं सौमित्रिः प्रतिदर्शयन्। स बभूवातिकायश्च बहुपादशिरोभुजः। तं ब्रह्मास्त्रेण सौमित्रिर्ददाराद्रिचयोपमम्। स पपात महावीर्य्यो दिव्यास्त्राभिहतो रणे। महाशनिविनिर्दग्धः पादपोऽङ्कुरवानिव। तं दृष्ट्वा वृत्रसङ्काशं कुम्भकर्णं तरस्विनम्। गतासुं पतितं भूमौ राक्षसाः प्राद्रवन् भयात्"। उत्पत्तौ वधे च विरोधस्तु कल्पभेदात् समाधेयः। स च विष्णुपारिषदविजयावतारः सनत्कुमारादिमुनिशापात् आसुरभावमापेदे तत्कथा भाग० अनुसन्धेया।

**कुम्भकामला** स्त्री कुम्भाख्या कामला। भावप्र० उक्ते कामलारोगभेदे। "कामला बहुपित्तैषा कोष्ठशाखा

अया मता" तत्र कोष्ठाश्रयां कामलामाह "कालान्तरात् खरीभूता कृच्छ्रा स्यात् कुम्भकामला" अधिकं कामलाशब्दे १८८८पृ० उक्तम्। सुश्रुते तु कुम्भाह्वयमित्युक्तं यथा "सकामलापानकिपाण्डुरोगकुम्भाह्वयो लाघरकोऽलसाख्यः" इत्युपक्रम्य "वक्ष्यामि लिङ्गान्यथ कामलायाः" इत्युक्त्वा कामलालक्षणादिकमुक्त्वा च "भेदांस्तु तस्याः शृणु कुम्भसाह्वं शोको महांस्तत्र च पर्वभेदः" तेन कुम्भइत्येव तस्या नामान्तरम्।

**कुम्भकार** पुंस्त्री कुम्भं करोति कृ–अण् उप० स०। (कुमार)१जातिभेदे अमरः। सा च जातिः "वैश्यायां विप्रतश्चौरात् कुम्भकारः स उच्यते" उशनसोक्ता ब्रह्मवैवर्त्ते तु "मालाकारात् चर्मकार्य्यां कुम्भकारोव्यजायत" इति "पट्टिकाराच्च तैलिक्यां कुम्भकारो बभूव ह" इति पुराणान्तरं तेन उत्तमाधमवर्णसङ्करत्वात् जातिभेदस्तु देशभेदेन व्यवस्थाप्यः। जातित्वात् स्त्रियां ङीष्। २कुम्भकारके त्रि० स्त्रियां टाप् सि० कौ० मुग्धबोधमते ततोऽपि ईप् तन्मते षण्प्रत्ययविधानात्। "यत् कुम्भकारपयनोपरिपङ्कलेपस्तापाय केवलमहो न च तापशान्त्यै" उद्भटः ३कुक्कुभविहगे पुंस्त्री०हेम० स्त्रियां ङीष्।

**कुम्भकारिका** स्त्री कुम्भस्येव कार आकारोयस्याः कप् अत इत्त्वम्। १कुलत्थायाम् (कुर्त्थि कलाइ) राजनि० तस्यास्तदाकारत्वात् तथात्वम्। कुम्भं करोति कृ–ण्वुल्। कुम्भकारक कुम्भकर्त्तरि त्रि० स्त्रियां टाप् अतइत्त्वम्।

**कुम्भकारी** स्त्री कुम्भस्येव कार आकारोऽस्याः गौरा० ङीष्। १कुलत्थायाम् राजनि० २मनःशिलायां जटाध० कुम्भकारस्य कुलालस्य पत्नी ङीष् ३कुलालभार्य्यायाञ्च।

**कुम्भकेतु** पु० कुम्भः केतौ ध्वजे यस्य। शम्बरासुरसेनापतिभेदे "कुम्भकेतुः सुदंष्ट्रश्च केशिरित्येवमादयः" हरि० १६३अ०

**कुम्भचक्र** न० नर० ज० उक्ते चक्रभेदे। चक्रशब्दे विवृतिः।

**कुम्भज** पु० कुम्भाज्जायते जन–ड ५त०। १अगस्त्ये मुनौ कुम्भयोनिशब्दे विवृतिः। २वशिष्ठे मुनौ ३द्रोणाचार्य्ये च ४घटजाते त्रि० कुम्भजन्मकुम्भजातादयोऽप्यत्र।

**कुम्भतुम्बी** स्त्री कुम्भ इव तुम्बी। अलाबूभेदे राजनि० तद्गुणास्तत्रैवोक्तायथा "मधुरा कुम्भतुम्बी तु शीता पित्तहरा मता। रुच्या ज्वरापहा प्रोक्ता श्वासकासकफासकृत्"

**कुम्भदासी** स्त्री कुम्भिकायां (पाना) शब्दरत्ना०

**कुम्भनाभ** पु० कुम्भइव नाभिरस्य अच्समा०। बलिदैत्यपुत्रभेदे "बलेः पुत्रशतं त्वासीत् बाणज्येष्ठं नराधिप!। धृतराष्ट्रश्च सूर्य्यश्च चन्द्रमाश्चेन्द्रतापनः। कुम्भनाभो गर्द्दभाच्चः कुक्षिरित्येवमादयः" हरिवं० २अ०

**कुम्भपद्यादि** बहुव्रीहौ पादशब्दान्त्यलोपङीप्निपातननिमित्ते शब्दगणभेदे स च गणः "कुम्भपदी एकपदी जलपदी शूलपदी मुनिपदी गुणपदी शतपदी सूत्रपदी गोधापदी कलशीपदी विपदी तृणपदी द्विपदी त्रिपदी षट्पदी दासीपदी शितपदी विष्णुपदी सुपदी निष्पदी आर्द्रपदी कुनिपदी कृष्णपदी शुचिपदी द्रुपदी सूकरपदी शकृत्पदी अष्टपदी स्थूणपदी अपदी सूचीपदी"।

**कुम्भपाद्** त्रि०कुम्भ इव स्फीतः पादोऽस्य कुम्भपद्या० स्त्रीत्वेन विशेषोक्तेर्नान्त्यलोपः। वटतुल्यपादयुक्ते श्लीपदरोगयुते स्त्रियां कुम्भपद्या० अन्त्यलोपः ङीष् च। कुम्भपदी इतिभेदः।

**कुम्भमण्डूक** पु० कुम्भे मण्डूक इव। कुम्भमात्रगम्यदेशतया निन्द्ये। पात्रेसमितादित्वात् क्षेपेऽस्य समासः तेन नास्य समासान्तरघटकता। युक्तारोह्यादित्वात् आद्युदात्तोऽयम्

**कुम्भमुद्रा** स्त्री "दक्षाङ्गुष्ठं पराङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन तु। सावकाशामेकमुष्टिं कुर्य्यात्" कुम्भमुद्रिका सा तन्त्रसारोक्ते मुद्राभेदे कलसमुद्रादयोऽप्यत्र स्त्री

**कुम्भयोनि** पु०कुम्भः योनिरुत्पत्तिस्थानमस्य। १अगस्त्ये मुनौ "प्रससादोदयादम्भः कुम्भयोनेर्महौजसः" रघुः। २वशिष्ठे मुनौ। तयोः यथा च तदुत्पत्तिस्तथाह रामा०उ०का० ८३अ० "अशरीरः शरीरस्य कृते न्यस्य महामुनिः। वसिष्ठस्तु महातेजा जगाम पितुरन्तिकम्। सोऽभिवाद्य ततः पादौ देवदेवस्य धर्मवित्। पितामहमथोवाच वायुभूतइदं वचः। भगवन्निमिशापेन विदेहत्वमुपागमम्। देवदेव! महादेव! वायुभूतोऽहमण्डज!। सर्वेषां देहहीनानां महद्दुःखं भविष्यति। लुप्यन्ते सर्वकार्य्याणि हीनदेहस्य वै प्रभो!। देहस्यान्यस्य सद्भावे प्रसादं कर्तुमर्हसि। तमुवाच ततोब्रह्मा स्वयंभूरमितप्रभः। मित्रावरुणजन्तेज आविश त्वं महायशः!। अयोनिजस्त्वं भविता तत्रापि द्विजसत्तम!। धर्मेण महता युक्तः पुनरेष्यसि मे वशम्। एवमुक्तस्तु देवेन अभिवाद्य प्रदक्षिणम्। कृत्वा पितामहं तूर्णं प्रययौ वरुणालयम्। तमेव कालं मित्रोऽपि वरुणत्वमकारयत्। क्षीरोदेन सहोपेतः पूज्यमानः सुरेश्वरैः। एतस्मिन्नेव काले तु उर्वशी परमाप्सराः। यदृ-

च्छया तद्देशमागता सखीभिर्वृता । तां दृष्ट्वा रूपसम्पन्नां क्रीड़न्तीं वरुणालये । तदाऽऽविशन्मुदो हर्षो वरुणं चोर्वशीकृते । स तां पद्मपलाशाक्षीं पूर्णचन्द्रनिभाननाम् । वरुणोवरयामास मैथुनायाप्सरोवराम् । प्रत्युवाच ततः सा तु वरुणं प्राञ्जलिः स्थिता । मित्रेणाहं वृता साक्षात्पूर्वमेव सुरेश्वर!। वरुणस्त्वब्रवीद्वाक्यं कन्दर्पशरपीड़ितः । इदं तेजः समुत्स्रक्ष्ये कुम्भेऽस्मिन्देवनिर्मिते । एवमुत्सृज्य सुश्रोणि! त्वय्यहं वरवर्णिनि! । कृतकामो भविष्यामि यदि नेच्छसि सङ्गमम् । तस्य तल्लोकनाथस्य वरुणस्य सुभाषितम् । उर्वशी परमप्रीता श्रुत्वा वाक्यमुवाच ह । काममेतद्भवत्वेवं हृदयं मे त्वयि स्थितम् । भावश्चाप्यधिकं तुभ्यं देहो मित्रस्य तु प्रभो! । उर्वश्या एवमुक्तस्तु रेतस्तन्महदद्भुतम् । ज्वलदग्निसमप्रख्यं तस्मिन् कुम्भे न्यवासृजत् । उर्वशी त्वगमत् तत्र मित्रो वै यत्र देवता । तान्तु मित्रः सुसंक्रुद्ध उर्वशीमिदमब्रवीत् । मयाऽभिमन्त्रिता पूर्वं कस्मात्त्वमवसर्जिता । पतिमन्यं वृतवती किमर्थं दुष्टचारिणि! । अनेन दुष्कृतेन त्वं मत्क्रोधकलुषीकृता । मनुष्यलोकमास्थाय कञ्चित्कालं निवत्स्यसि" इति तस्य तस्यां शापमुक्त्वा

"यः स कुम्भो रघुश्रेष्ठ! तेजःपूर्णो महात्मनोः । तस्मिंस्तेजोमयौ विप्रौ सम्भूतावृषिसत्तमौ । पूर्वं समभवत्तत्र अगस्त्यो भगवानृषिः । नाहं सुतस्तवेत्युक्त्वा मित्रं तस्मादपाक्रमत् । तद्धि तेजस्तु मित्रस्य उर्वश्याः पूर्वमाहितम् । तस्मिन् समभवत्कुम्भे तत्तेजोयत्र वारुणम् । कस्यचित्त्वथ कालस्य मित्रावरुणसम्भवः । वशिष्ठस्तेजसा युक्तो जज्ञे इक्ष्वाकुदैवतम्" ।

अत्रैवमाख्यायिका प्रथममुर्वशीं मित्रो दृष्ट्वा तामामन्त्रितवान् तयाच त्वन्निवासमागमिष्यामीत्युक्तस्तदा वरुणलोकस्य एव मित्रस्तद्दर्शनाद्धटस्खलितं निजतेजः कुम्भे उत्सृज्य स्वनिवासं जगाम पश्चाद्वरुणोऽपि तां दृष्ट्वा स्खलितं तेजः कुम्भे व्यसृजत् ततोमित्रनिवासं गता मित्रेण शप्ता चेति । रामा॰ श्लोकस्यायमर्थः नाहं सुतस्तवेति यद्यपि मित्रेणापि कुम्भे रेत उत्सृष्टं तथापि तदैकस्य सुतो न भवामीत्युक्त्वाऽपाक्रामत् । एवमुक्तौ वीजमाह तद्धि तेजइति अगस्त्योत्पत्तिहेतुभूतं मित्रस्य तेजः पूर्वमुर्वशीनिमित्तवरुणवीर्यविसर्गात्पूर्वं माहितं यस्मिन् कुम्भे तस्मिन्नेव कुम्भे वारुणं तेजः समभवत् सङ्गतमभवत् यत्र कुम्भे मित्रस्य तेज आसीत् अतस्तेजोन्तरसङ्गमादुत्-

केनैकस्य तव हत इत्युक्त्वागस्त्येन मित्रं प्रति ।

"अगस्त्यश्च वशिष्ठश्च मित्रावरुणयोर्ऋषी । रेतः सुषिचतोः कुम्भे उर्वश्याः सन्निधौ तथा" भाग॰ ६।१८।५। ३अप्सरोभेदेस्त्री "गोपाली सहजन्या च कुम्भयोनिः प्रजागरा" भा॰व॰४३अ॰ । ४द्रोणाचार्ये पु॰ तदुपत्तिकथा द्रोणशब्दे वक्ष्यते ५द्रोणपुष्पीवृक्षे पु॰राजनि॰

**कुम्भरेतस्** पु॰ अग्निभेदे । "हविषा यो द्वितीयेन सोमेन सह युज्यते । रथप्रभूरथाध्वा च कुम्भरेताः सउच्यते" भा॰ व॰ २१८अ॰ अग्निवंशवर्णने । कुम्भस्थितं रेतः कारणमस्य । २अगस्त्ये ३वशिष्ठे मुनौ तयोर्यथा तथात्वं तथा कुम्भयोनिशब्दे उक्तम्

**कुम्भला** स्त्री कुम्भं कुम्भाकारं लाति ला—क । (मुण्डिरी) मुण्डीरिकालतायाम् रत्नमा॰

**कुम्भवि(ब)ल** न॰ ६त॰ । कुम्भस्य गर्त्ते अन्तोदात्तोऽयम्

**कुम्भवीज** पु॰कुम्भ इव वीजमस्य (रोठा) करञ्जभेदे राजनि॰

**कुम्भशाला** स्त्री कुम्भपाकार्थं शाला । (पोयान)(कुमारशाला) कलसपाकार्थे गृहे हेमच॰

**कुम्भसन्धि** पु॰ कुम्भयोर्हस्तिशीर्षस्थमांसपिण्डयोः सन्धिः । आरवाख्ये हस्तिकुम्भमध्यस्थाने त्रिका॰

**कुम्भसम्भव** पु॰ संभवत्यस्मात् सम्+भू—अपादानेऽप् कुम्भः सम्भवोऽस्य । १अगस्त्ये २वशिष्ठे ३द्रोणाचार्य्ये च तत्रागस्त्यवशिष्ठयोस्ततउत्पत्तिकथा कुम्भयोनिशब्दे उक्ता

**कुम्भसर्पिस्** न॰ सुश्रुतोक्ते कलसे एकादशशतवर्षस्थिते घृतभेदे "पुराणं तिमिरश्वासपीनसज्वरकासनुत् । मूर्च्छाकुष्ठविषोन्मादग्रहापस्माररनाशनम् । एकादशशतञ्चैव वत्सरानुषितं घृतम् । रक्षोघ्नं कुम्भसर्पिः स्यात् परतस्तु महाघृतम्" । [ शब्दमा॰

**कुम्भा** स्त्री कुत्सित इत्वा उम्भा पूर्त्तिरस्याः शक॰ । वेश्यायां

**कुम्भाण्ड** पु॰ कुम्भइवाण्डोऽस्य । वाणासुरस्य मन्त्रिभेदे "इत्येवमुक्तः प्रहसन् कुम्भाण्डमिदमब्रवीत्" हरिव॰ १७५अ॰ "एतस्मिन्नन्तरे तत्र कुम्भाण्डाय महात्मने कुम्भाण्ड! मन्त्रिणां श्रेष्ठ! प्रीतोऽस्मि तव सुव्रत! । एतद्दत्त्वाऽभयं तस्मै कुम्भाण्डाय महात्मने । विवाहमकरोत् तत्र सोऽनिरुद्धस्य वीर्य्यवान्" हरिव॰ १८८अ॰ । स्वार्थे क । तत्रैव । सच कुष्माण्डे न॰ गौरकुष्माण्ड्याम् स्त्री राजनि॰

**कुम्भाधिप** पु॰ ६त॰ । शनिग्रहे तस्य तदधिपत्वात् कुम्भाधीशादयोऽप्यत्र पु॰

**कुम्भिका** स्त्री कुम्भस्तदाकारोऽस्त्यस्याः ठन् । (पाना)जलो

ारिजाते लताभेदे अमरः। तत्पर्य्यायादि भावप्र० उक्तं यथा "वारिपर्णी कुम्भिका स्याच्छैवालं शैवलञ्च तत्। वारिपर्णी हिमा तिक्ता लघ्वी स्वाद्वी सरा कटुः। दोषत्रयहरी रूक्षा शोणितं ज्वरशोषहृत्"। २पाटलावृक्षे ३द्रोणपुष्प्याञ्च राजनि०। "वर्त्मान्ते पिडका ध्माता भिद्यन्ते च स्रवन्ति च। कुम्भिकावीजसदृशा कुम्भिकाः सन्निपातजाः" माधवोक्ते ४नेत्रवर्त्मस्थरोगभेदे सुश्रुते दीर्घमध्यत्वेनायं पठितः यथा "पृथग्दोषाः समस्ताश्च यदा वर्त्मव्यपाश्रयाः। सिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिताः। विवर्द्ध्य मांसं रक्तञ्च तदा वर्त्मव्यपाश्रयान्। विकारान् जयन्त्याशु नामतस्तान्निबोधत। उत्सङ्गिन्यथ कुम्भीका पोथक्यो वर्त्मशर्करा" इत्युपक्रम्य कुम्भीकवीजप्रतिमाः पिडकाः पक्ष्मवर्त्मनोः। आध्मायन्ते तु भिन्ना याः कुम्भीकपिडकास्तु ताः"। तेन माधवग्रन्थे दीर्घमध्यपाठः सूचितः। कुम्भीक पिडकेत्यत्र पुंवद्भावश्चार्षः। कुम्भा—स्वार्थे क। ५वेश्यायाम् शब्दमाला६कट्फले भावप्र० कट्फलशब्दे तद्वाक्यादि

**कुम्भिन्** पुंस्त्री० कुम्भोऽस्त्यस्य इनि। १हस्तिनि २कुम्भीरे हेमच० स्त्रियां ङीप्। ३गुग्गुलौ जटा०। ४कलसधारिणि त्रि० स्त्रियां ङीप् "उदकं कुम्भिनीरिव" ऋ० १। १९१। १४। ङीवनः। ५जयपालवृक्षे राजनि० कुम्भिबीजं जयपालबीजमित्युक्तेः ६पृथिव्यां "गौरिला कुम्भिनी चर्मेति" मा० २०,५४ स्लो० व्या० मल्लिनाथधृतकोषात्।

**कुम्भिपाकी** स्त्री कुम्भिना पाकोयस्याः गौरा०ङीप्। कट्फले भावप्र० शब्दकल्पद्रुमः भावप्र० कट्फलपर्य्याये कट्फलशब्दे दर्शिते तद्वाक्ये कुम्भिकाऽपिचेत्येव पाठः क्वचित् कुम्भिपाक्यपीति पाठः तन्मूलं मृग्यम्। [राजनि०

**कुम्भिमद** कुम्भिनः गजस्य मदः। हस्तिमदे गन्धद्रव्यभेदे

**कुम्भिल** पु० कु—उम्भ—इलच् शक०। १चौरे २स्तोकार्थचौरे ३शालमत्स्ये ५स्याले च हेमच०

**कुम्भी** स्त्री कुम्भ+अल्पार्थे ङीप्। १क्षुद्रे कुम्भे तदाकृतित्वात् २उखायां ३पाटलावृक्षे ४कुम्भिकायां वरिपर्ण्याम् (पाना) ५कट्फले च हेमच० कोङ्कणे प्रसिद्धे कुम्भीपुष्पे ६पर्पटवृक्षे। अस्य गुणाः "कुम्भी वातकफहरी" राजनि० ७दन्तीवृक्षे राजनि०; तत्र जातादि कन्त्र्या०ढकञ्। कौम्भेयक तत्र जातादौ त्रि०। कर्ष्या॰दि० चतुरर्थ्यां फिञ्। ५कौम्भायनि तत्सन्निकृष्टदेशादौ त्रि०।

**कुम्भीक** पु० कुम्भीव कायति कै—क। १पुन्नागवृक्षे। रत्नमा० २कुम्भिकायां (पाना) कुम्भीकवीजप्रतिमाः" सुश्रुतः सुश्रुते अयं प्रियङ्ग्वादिगणे उक्तः यथा "प्रियङ्गुसमङ्गाधातकीपुन्नागरक्तचन्दनचन्दनमोचरसरसाञ्जनकुम्भीकस्रोतोऽञ्जनपद्मकेसरयोजनवल्ल्यो दीर्घमूला चेति"। तत्र पुन्नागस्य पृथक्कीर्त्तनात् कुम्भिकापरत्वम्। सुश्रुते नेत्रवर्त्मस्थे ३रोगभेदे कुम्भिकाशब्दे तद्वाक्यमुदाहृतम् तत्रोक्ते ४मूकरोगोपद्रवभेदे च यथा "अथातः मूकदोषनिदानं व्याख्यास्यामः। लिङ्गवृद्धिमिच्छतामक्रमप्रवृत्तानां मूकदोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते। तद्यथा सर्षपिका, अष्ठीलिका, ग्रथितम्, कुम्भीका, अलजी, मृदितम्, सम्मूढपिडका, अवमन्थः, पुष्करीका, स्पर्शहानिः, उत्तमा, शतपोनकः, त्वक्पाकः, शोणितार्वुदम्, मांसार्बुदम्, मांसपाकः, विद्रधिः, तिलकालकश्चेति,, इति विभज्य तल्लक्षणमुक्तं यथा "कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाऽशुभा"
"कुम्भिका रक्तपित्ताभ्यामिति भावप्र० ह्रस्वमध्यपाठस्तु लिपिकरप्रमादात्। ततः सपूर्व्वे खलादि० इनि। तद्रोगसमूहे स्त्री "कुम्भीकिनीं शर्कराञ्च तथैवोत्सङ्गिनीमपि" "कुम्भीकिनी सह शर्करया लेख्या" सुश्रुतः सुश्रुतोक्ते क्लीवभेदे पु० "स्वे गुदे ब्रह्मचर्य्याद्यः स्त्रीषु पुंवत् प्रवर्त्तते कुम्भीकः स च विज्ञेयः। इत्युक्त्वा" "आसेक्यश्च सुगन्धी च कुम्भीकः सेर्ष्यकस्तथा। अरेतसस्त्वमे ज्ञेया अशुक्रः षण्डसंज्ञितः" तल्लक्षणं तत्रोक्तम्।

**कुम्भीधान्य**(क) कुम्भीमितं धान्यमस्य वा कप्। वर्षभोग्यसञ्चितधान्ये गृहस्थभेदे "कुसूलधान्यको वा स्यात् कुम्भीधान्यक एव वा।" मनुः "वर्षनिर्व्वाहोचितधान्यादिधनः कुम्भीधान्यः" "प्राक्सौमिकीः क्रियाः कुर्य्यात् यस्यान्नं वार्षिकं भवेदिति" याज्ञवल्क्येन गृहस्थस्य वार्षिकसञ्चयाभ्यनुज्ञानात्। मनुरपि यदा वानप्रस्थस्यैव "समानिचयएव वा" इत्यनेन समासञ्चयं वक्ष्यति तदपेक्षया बहुपोष्यवर्गस्य गृहिणः सूचितः संवत्सरसञ्चयः" कुल्लू०। मेधातिथिस्तु यावता धान्यादिधनेन बहुभृत्यदारादिमतः त्रिसंवत्सरस्थितिर्भवति तावत् सुवर्णादिधनवानपि कुसूलधान्यक इत्यभिधाय कुम्भी उष्ट्रिका षाण्मासिकधान्यादिनिचयः कुम्भीधान्यक इति व्याख्यातवान्। गोविन्दराजस्तु कुसूलधान्यक

इत्येतद्व्याचक्षाणः "धान्यकोष्ठसञ्चयो वा स्यात् द्वादशाहमात्रपर्य्याप्तधनः इति कुम्भीधान्यक इत्येतद्व्याचष्टे। उष्ट्रिकाप्रमाणधान्यादिसञ्चयो वा षडहमात्रपर्य्याप्तधनः इति"। तेन २तदर्थयोरपि

**कुम्भीनस** पु० कुम्भीव नसा नासा यस्य। १ क्रूरसर्पे मेदि० २रावणमातृष्वस्रेय्यां लवणासुरजनन्यां स्त्री ङीष्। तदुत्पत्तेः तस्या मधुदैत्येन हरणस्य च कथा रामा०उत्तर०का०२५अ० "विभीषणस्तु संक्रुद्धो भ्रातरं वाक्यमब्रवीत्। श्रूयतामस्य पापस्य कर्म्मणः फलमागतम्। मातामहस्य योऽस्माकं ज्येष्ठो भ्राता सुमालिनः। माल्यवानिति विख्यातो वृद्धः प्राज्ञो निशाचरः। पितृज्येष्ठो जनन्या नोऽह्यस्माकं चार्य्यकोऽभवत्। तस्य कुम्भीनसी नाम दुहितुर्दुहिताऽभवत्। मातृष्वसुरथास्माकं सा च कन्याऽनलोद्भवा। भवत्यस्माकमेवैषा भ्रातॄणां धर्मतः स्वसा। सा हृता मधुना राजन्नसुरेण बलीयसा। यज्ञप्रवृत्ते पुत्रे तु मयि चान्तर्जलोषिते। कुम्भकर्णे महाराज! निद्रामनुभवत्यथ। निहत्य राक्षसश्रेष्ठानमात्यानिह संमतान्। धर्षयित्वा हृता राजन्! गुप्ताप्यन्तःपुरे तव। श्रुत्वापि तन्महाराज! क्षान्तमेव हतो न सः। यस्मादवश्यं दातव्या कन्या भर्त्रे हि भ्रातृभिः। तदेतत्कर्मणो ह्यस्य फलं पापस्य दुर्मतेः। अस्मिन्नेवाभिसंप्राप्तं लोके विदितमस्तु ते। विभीषणवचः श्रुत्वा राक्षसेन्द्रः स रावणः। दौरात्म्येनात्मनोद्भूतस्तप्ताम्भा इव सागरः। ततोऽब्रवीद्दशग्रीवः क्रुद्धः संरक्तलोचनः। कल्प्यतां मे रथः शीघ्रं शूराः सज्जीभवन्तु नः। भ्राता मे कुम्भकर्णश्च ये च मुख्या निशाचराः। वाहनान्यधिरोहन्तु नानाप्रहरणायुधाः। अद्य तं समरे हत्वा मधुं रावणनिर्भयम्। सुरलोकं गमिष्यामि युद्धाकाङ्क्षी सुहृद्वृतः। अक्षौहिणीसहस्राणि चत्वार्य्यग्र्याणि रक्षसाम्। नानाप्रहरणान्याशु निर्ययुर्युद्धकाङ्क्षिणाम्। इन्द्रजित्त्वग्रतः सैन्यात् सैनिकान् परिगृह्य च। जगाम रावणो मध्ये कुम्भकर्णश्च पृष्ठतः। विभीषणश्च धर्म्मात्मा लङ्कायां धर्म्ममाचरत्। शेषाः सर्वे महाभागा ययुर्मधुपुरं प्रति। खरैरुष्ट्रैर्हयैर्दीप्तैः शिशुमारैर्महोरगैः। राक्षसाः प्रययुः सर्वे कृत्वाऽऽकाशं निरन्तरम्। दैत्याश्च शतशस्तत्र कृतवैराश्च दैवतैः। रावणं प्रेक्ष्य गच्छन्तमन्वगच्छन् हि पृष्ठतः। स तु गत्वा मधुपुरं प्रविश्य च दशाननः। न ददर्श मधुं तत्र भगिनीं तत्र दृष्टवान्। सा च प्रह्वाञ्जलिर्भूत्वा शिरसा चरणौ गता। तस्य राक्षसराजस्य त्रस्ता कुम्भीनसी तदा। तां समुत्थापयामास न भेतव्यमिति ब्रुवन्। रावणो राक्षसश्रेष्ठः किं चापि करवाणि ते। साऽब्रवीद्यदि मे राजन्! प्रसन्नस्त्वं महाभुज!। भर्त्तारं न ममेहाद्य हन्तुमर्हसि मानद!। नहीदृशं भयं किञ्चित् कुलस्त्रीणामिहोच्यते। भयानामपि सर्वेषां वैधव्यं व्यसनं महत्। सत्यवाग्भव राजेन्द्र! मामवेक्षस्व याचतीम्। त्वयाप्युक्तं महाराज! न भेतव्यमिति स्वयम्। रावणस्त्वब्रवीद्धृष्टः स्वसारं तत्र संस्थिताम्। क्व चासौ तव भर्त्ता वै मम शीघ्रं निवेद्यताम्। सह तेन गमिष्यामि सुरलोकं जयाय हि। तव कारुण्यसौहार्दान्निवृत्तोऽस्मि मधोर्वधात्"

तस्याः पतिपुत्रयोश्चरितवर्णनं रामा० उत्त० ६१अ० यथा "पूर्वं कृतयुगे राजन्दैतेयः सुमहामतिः। लोलापुत्रोऽभवज्ज्येष्ठो मधुर्नाम महासुरः। ब्रह्मण्यश्च शरण्यश्च बुद्ध्या च परिनिष्ठितः। सुरैश्च परमोदारैः प्रीतिस्तस्याऽतुलाऽभवत्। स मधुर्वीर्य्यसम्पन्नो धर्मे च सुसमाहितः। बहुमानाच्च रुद्रेण दत्तस्तस्याद्भुतो वरः। शूलं शूलाद्विनिष्कृष्य महावीर्य्यं महाप्रभम्। ददौ महात्मा सुप्रीतो वाक्यं चैतदुवाच ह। त्वयाऽयमतुलो धर्मो मत्प्रसादकरः शुभः। प्रीत्या परमया युक्तो ददाम्यायुधमुत्तमम्। यावत् सुरैश्च विप्रैश्च न विरुध्येर्महासुर!। तावच्छूलं तवेदं स्यादन्यथा नाशमेष्यति। यश्च त्वामभियुञ्जीत युद्धाय विगतज्वरः। तं शूलो भस्मसात्कृत्वा पुनरेष्यति ते करम्। एवं रुद्राद्वरं लब्ध्वा भूय एव महासुरः। प्रणिपत्य महादेवं वाक्यमेतदुवाच ह। भगवन्! मम वंशस्य शूलमेतदनुत्तमम्। भवेत्तु सततं देव। सुराणामीश्वरो ह्यसि। तं ब्रुवाणं मधुं देवः सर्वभूतपतिः शिवः। प्रत्युवाच महादेवो नैतदेवं भविष्यति। मा भूत्ते विफला वाणी मत्प्रसादकृता शुभा। भवतः पुत्रमेकं तु शूलमेतद् गमिष्यति। यावत् करस्थः शूलोऽयं भविष्यति सुतस्य ते। अवध्यः सर्वभूतानां शूलहस्तो भविष्यति। एवं मधुर्वरं लब्ध्वा देवात् सुमहदद्भुतम्। भवनं सोऽसुरश्रेष्ठः कारयामास सुप्रभम्। तस्य पत्नी महाभागा प्रिया कुम्भीनसीति या। विश्वावसोरपत्यं साप्यनलायां महाप्रभा। तस्याः पुत्रो महावीर्य्यो लवणो नाम दारुणः। बाल्यात् प्रभृति दुष्टात्मा पापान्येव समाचरत्। तं पुत्रं दुर्विनीतं तु दृष्ट्वा क्रोधसमन्वितः। मधुः स शोकमापेदे न चैनं किञ्चिदब्रवीत्। स विहाय इमं लोकं प्रवि-

ष्टोवरुणालयम्। शूलं निवेश्य लवणे वरं तस्मै न्यवेदयत्। स प्रभावेण शूलस्य दौरात्म्येनात्मनस्तथा। सन्तापयति लोकांस्त्रीन्विशेषेण च तापसान्"। सचासुरः शत्रुघ्नेन हतः तत्कथा रामा०उत्त०। ६३अ०। स (शत्रुघ्नः) सुमोच महाबाणं लवणस्य महोरसि। उरस्तस्य विदार्याशु प्रविवेश रसातलम्"।

**कुम्भीनसि** पु० बलिदानवे "शम्बरस्य च या माया या माया नमुचेरपि। बलेः कुम्भीनसेश्चैव सर्वास्ता-योषितोविदुः" भा० आ० २२३८अ

**कुम्भीपाक** पु० नरकभेदे कारणसहितं तत्स्वरूपमुक्तं भाग० ५ २६ १६ "महारौरवः कुम्भीपाकः कालसूत्र श्चेत्यादिना नरकान् विभज्य "यस्त्विह वा उग्रः पशून् पक्षिणो वा प्राणे उपरन्धयति तमपकरुणं पुरुषादैरपि गर्हितमत्र यमानुचराः कुम्भीपाके तप्त-तैले उपरन्धयन्ति" "करम्भवालुकातापान् कुम्भी पाकांश्च दारुणान्" मनुः। "स्तुतिवादमिमं मत्वा कु-म्भीपाके महीयते" प्रा०त०।

**कुम्भीर** पुंस्त्री० कुम्भिनं हस्तिनमपीरयति ईर-अण्। जलजन्तुभेदे नक्रे अमरः स्त्रियां ङीष्। "संवत्सरन्तु कुम्भी रस्ततोजायेत मानवः"भा०अनु० १११अ०। कर्म्मविपाक-शब्दे विवृतिः। [(कुमीरे पोका) कीटभेदे हारा०।

**कुम्भीरमक्षिका** स्त्री कुम्भीरोपपदा मक्षिका शाक० त०।

**कुम्भीरासन** न० "अथ वक्ष्ये महादेव! कुम्भीरासनमुत्त-मम्। पादोपरि पदं दत्त्वा शीर्षोपरि करद्वयम्। तिष्ठे-द्दण्डाकृतिर्भूमौ कुम्भीरासनमुच्यते" रुद्रया० उक्ते आसनभेदे

**कुम्भील** पुंस्त्री कुम्भीर+रस्य लः। कुम्भीरे अमरमाला स्त्रियां ङीष्। संज्ञायां क। चौरभेदे कुम्भिलशब्दार्थे

**कुम्भीबीज** न० ६त०। जयपालहक्षबीजे राजनि०।

**कुम्भोदर** पु० शिवपारिषदभेदे। "कुम्भोदरं नाम निकुम्भमि-त्रम्" रघुः। कुम्भतुल्यमुदरमस्य। तथोदरे त्रि०स्त्रियां ङीष्

**कुयव** पु० कुत्सितेन यौति यु-अच्।" असुरभेदे "कुत्साय शुष्णं नि बर्हीः प्रपित्वे अह्नः कुयवं सहस्रा" ऋ०४।१६।१२। "कुयवं कुयवनामासुरम्" भा० "शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र। यदावधीः" ऋ० १,१०३,८। कुगतिस०। २ कुत्सिते धान्ये "क्षीरेण स्नातः कुयवस्य योषे" ऋ० १। १०४।३। "पूर्व्वतरञ्च मे कुयवञ्च मे" "यजु० १८। ११ "कुयवं कुधान्यम्" वेददी प०

**कुयवाच्** पु० असुरभेदे "नि दुर्योणे कुयवाचम्मृधि श्रेत्" ऋ० १। १७४।७। "कुयवागित्येतन्नामानमसुरम्" भा०

**कुर** शब्दे तुदा०पर०अक०सेट्। कुरति अकोरीत्। चकोर कुरटः। [राजनि०।

**कुरका** स्त्री कुर-क सद्व कायति कै-क। सल्लकीवृक्षे

**कुरङ्कर** पुंस्त्री कुरं शब्दं करोति कृ-अच् मुम्। सारस-पक्षिणि हेमच० स्त्रियां ङीष्

**कुरङ्कुर** पुंस्त्री० कुरमित्यव्यक्तं शब्दं कुरति कुर-क। सारसखगे हारा० स्त्रियां ङीष्।

**कुरङ्ग** पुंस्त्री० कौ रङ्गति-अच्। "कुरङ्ग ईषत्ताम्रः स्याद्ध-रिणाकृतिको महान्" इत्युक्तचिह्ने १मृगभेदे २मृगमात्रे अमरः स्त्रियां ङीष्। "कुरङ्गमातङ्गपतङ्गभृङ्ग-मीना हताः पञ्चभिरेव पञ्च। एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च" भाग० व्या० श्रीधरः तन्मांसगुणा भावप्र० यथा "कुरङ्गो वृंहणोबल्यः शीतलः पित्तहृद्गुरुः। मधुरोवातहृत् ग्राही किञ्चित् कफकरोमतः। हरिणस्य गुणैस्तुल्याः कुरङ्गः कथितोबुधैः" ३तारलोहे ३तीर्थभेदे न० "करतोयां कुरङ्गे च त्रिरात्रो पोषितोनरः। अश्वमेधमवाप्नोति विगाह्य प्रयतः शुचिः" भा० आनु० २५अ०। स्वार्थे क। कुरङ्गक तत्रार्थे

**कुरङ्गनयना** स्त्री कुरङ्गस्येव नयनमस्याः। सुन्दरनेत्रायां स्त्रियां "किन्त्वेका यमुना कुरङ्गनयनानेत्राम्बुभिर्वर्द्धते" उद्भटः। कुरङ्गाक्ष्यादयोप्यत्र "कुरङ्गाक्षीवृन्दं तमनु-सरति प्रेम तरलम्" कर्पूरस्तवः।

**कुरङ्गनाभि** पु०६त०। मृगमदे गन्धद्रव्ये राजनि०तस्य तन्नाभे-र्जातत्वादभेदोपचारात्तथात्वम् कस्तूरीशब्दे गुणाद्युक्तम्।

**कुरङ्गम** पुंस्त्री० कौ रङ्गं मिमीते मा-ड। हरिणभेदे कुरङ्गे मृगे त्रिका० स्त्रियां ङीष्। [ राजनि०

**कुरङ्गिका** स्त्री कौ-रङ्गोऽस्त्यस्य ठन्। मुद्गपर्ण्याम्

**कुरचिल्ल** पुंस्त्री० कुरे शब्दे चिल्लति चिल्ल-शैथिल्ये अच्। कर्कटे हेमच० स्त्रियां टाप्। [ जातित्वात् ङीष्

**कुरट** पुंस्त्री०कुर-अटन् किच्च। चर्म्मकारे त्रिका० स्त्रियां

**कुरण्ट(क)** पु० कुर्य्यते शब्द्यते कुर-कर्म्मणि अण्टक्। पीतझिण्टाम् स्वार्थे क। तत्रार्थे अमरः।

**कुरण्ड** पु० कुर-अण्डक्। १शाकवण्डवृक्षे राजनि०। २अण्डवृद्धिरोगे हेमच० तन्निदानादि माधवनिदा-नोक्तं यथा–

"क्रुद्धोऽनूर्द्धगतिर्वायुः शोथशूलकरश्चरन्। मुष्कौ

वङ्क्षणतः प्राप्य फलकोषाभिवाहिनीः। प्रपीड्य धमनी र्वृद्धिं करोति फलकोषयोः। दोषास्रमेदोमूत्रान्त्रैर्वृद्धिः सप्तधा गदः। मूत्रान्त्रजातावनिलाद्धेतुभेदस्तु केवलम्। वातपूर्णाङ्गतस्पर्शो रूक्षोवातादहेतुरुक्। पक्वोडुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान्। कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक्। कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः। कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः। मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः। अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ्मृदुः। मूत्रकृच्छ्रमधः स्याच्च चालयन् फलकोषयोः। वातकोपिभिराहारैः शीततोयावगाहनैः। धारणे रण भाराध्वविषमाङ्गप्रवर्त्तनैः। क्षोभणैः क्षुभितश्चान्यैः क्षुद्रान्त्रावयवं यदा। पवनो विगुणीकृत्य स्वनिवेशादधो नयेत्। कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तथा। उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मानरुक् स्तम्भवतीं स वायुः। प्रपीडितोऽन्तःस्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तः। अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः"

**कुरण्टक** पु॰ कुरण्टक+स्वार्थे॰। कुरण्टकवृक्षे रायमुकुटः

**कुरर** पुंस्त्री॰ कुङ् शब्दे करन्। (कुरल) विहगे अमरः स्त्रियां जातित्वात् ङीष्। "तत्र मामनयद्दृष्टः क्रोशन्तीं कुररीमिव" भा॰व॰ अ॰६१०८ "देवीं रोरूयमाणां कुररीमियार्त्ताम्" भा॰ स॰२३५। ङीषन्तः २मेष्यां हेमच॰।

**कुराङ्घ्रि** पु॰ कुररस्याङ्घ्रिरिव। देवसर्षपे राजनि॰

**कुररीरुता** स्त्री॰ "कुररीरुता नजभजैर्लगयुक्" इत्युक्त लक्षणे चतुर्द्दशाक्षरपादके वर्णवृत्तभेदे। "स्तनितैचिरोज्झितस्य जलदेन चिर स्थितबहुबुद्बुदस्य पयसोऽनुकृतिम्" माघः।

**कुरल** पुंस्त्री॰ कुरर+रस्य लः। स्वनामख्याते पक्षिभेदे स्त्रियां जातित्वात् ङीष्। २चूर्णकुन्तले पु॰ धरणिः।

**कुरव** पु॰ अल्पमकरन्दवत्त्वादलीनामीषद् रवो यत्र। १रक्तझिण्टयाम्, २ कुरवके, शब्दर॰ ३सितमन्दारे च। कुगतिस॰। ४कुत्सितशब्दे। बहु॰। ५तथाशब्दयुक्ते त्रि॰। ततः स्वार्थे क। तेषु वार्थेषु(कुडचि) इति ख्याते ६पुष्पवृक्षे। "कुरवकस्तवकव्यतिषङ्गिणीति" माघः।

**कुरस** पु॰कुत्सितोरसोऽत्र। १मद्यभेदे बहु॰। २कुत्सितरसयुक्ते त्रि॰। ३गोजिह्वालतायां स्त्री टाप्। कुगतिस॰। ४कुत्सिते रसे पु॰।

**कुराह** पुंस्त्री॰ कुलाह+लस्य रः। ईषत्पाण्डुवर्णे कृष्णजङ्घे अश्वभेदे हेमच॰। [भेदे राजनि॰।

**कुरी** स्त्री कुं भूमिं राति रा—क गौरा॰ ङीष्। तृणधान्य-

**कुरीर** न॰ "कुञ्ज उच्च" उणा॰ कीरन् उच्च। १मैथुने उज्ज्वलदत्तः। २शीर्षावयवभेदे च। "कुरीरमस्य शीर्षणि" अथ॰ ६,१३८,२, "स्तोमा आसन् प्रतिधयः कुरीरं छन्द ओपशः" ऋ॰ १०,८५,८,

**कुरु** पु॰कृ—कु उच्च। १चन्द्रवंश्ये आजमीढन्पप्रपौत्रे १राजभेदे "योऽजमीढसुतस्तस्य ऋक्षः संवरणस्ततः। तपत्यां सूर्य्यकन्यायां कुरुक्षेत्रपतिः कुरुः। परीक्षित् सुधनुर्जह्नुर्निषधश्च कुरोः सुताः" भाग॰ ९,२२,३, यथा च तस्य तपत्यासुद्भवः तथोक्तं भा॰ आ॰ १३४अ॰ "एवमासीन् महाभागा तपती नाम पौर्व्विकी। तव वैवस्वती पार्थ! तापत्यस्त्वं यया मतः। तस्यां सञ्जनयामास कुरुं संवरणो न्टपः। तपत्यां तपतां श्रेष्ठ! तापत्यस्त्वं ततोऽर्ज्जुन!"। कुरोर्निवासः जनपदे अणोलुप् लुपि व्यक्तिवद्वचनता। २तदीयनिवासदेशभेदे पु॰ भूम्नि। "कुरून् स्वपिति" सि॰ कौ॰। स च देशः वृह॰स॰ १४ अ॰ कूर्म्मविभागे "साकेतकुरुकालकोटिकुकुराश्च पारियात्रनगः। औदुम्बरकापिष्ठलगजाह्वयाश्चेति मध्यमिदम्" मध्यस्थतयोक्तं तत्सीमादि च "हस्तिनापुरमारभ्य कुरुक्षेत्रस्य दक्षिणे। पञ्चालपूर्व्वभागे तु कुरुदेशः प्रकीर्त्तितः, इति शक्तिसङ्गमतन्त्रे उक्तम्। 'आ मत्स्येभ्यः कुरुपाञ्चालदेशग्राः' भा॰क॰२०८श्लोकः। तेषां राजनि अण् बहुषु तस्य लुक्। ३तद्देशराजे पु॰ भूम्नि "कुरूणां स्वञ्जयानाञ्च पुरोहित आस" शत॰ब्रा॰ २,५, "उवाच पार्थ। पश्यैतान् समवेतान् कुरूनिति" गीता। "श्रियः कुरूणामधिपस्य पालनीम्" किरा॰ तस्येदम् अण्। कौरव तदपत्ये पुंस्त्री "कृषात् संवरणो जज्ञे कुरुः संवरणात्तथा। यः प्रयागमतिक्रम्य कुरुक्षेत्रञ्चकार ह। पुण्यञ्च रमणीयञ्च पुण्यकृद्भिर्निषेवितम्। तस्यान्ववायः सुमहान् यस्य नाम्ना स्म कौरवाः" हरिवं॰३२अ॰कुर्वा॰अपत्ये ण्य। कौरव्य तदपत्ये पुंस्त्री बहुषु तस्य लुक्। कश्चिन्न "कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलम्" वेणीसं॰। कौरव्ये साधवः यण्। कौरव्या इति तु माधवः। "स्त्रियामवन्तिकुन्तिकुरुभ्यः" इति स्त्रियां लुकि न्टजातित्वादूङ् कुरूः। ४ओदने मेदि॰। ५करडकारिकादौ शब्दच॰ प्रियव्रतराजपौत्रे ६आग्नीध्रराजसुतभेदे "तस्माच्च वा आक-

जाम् स राजवर आग्नीध्रोनाभिकिंपुरुषहरिवर्षेलावृत-रम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान्नव पुत्रानजनयत्” भाग० ५स्क० २८अ० १६ श्लो० तत्पुत्रकुरुराज्यत्वेन ७उत्तरकुरुनामके तद्वर्षे च। तत्प्रमाणञ्च उत्तरकुरुशब्दे १०६४पृ०दर्शितम्। पुराणसर्व्वस्वे विष्णुपु०“नाभिश्च प्रथमं वर्षं ततः किंपुरुषं स्थितम्। हरिवर्षं तथैवान्यत् मेरोर्दक्षिणतः स्थितम्। रम्यकञ्चोत्तरं वर्षं तथैवानु हिरण्मयम्। उत्तराः कुरवश्चैव यथा वै भारतं तथा। इलावृतञ्च तन्मध्ये सौवर्णोमेरुत्तमः”इति। अतस्तत्पुत्रभवकनाम्ना नवानां वर्षाणां ख्यातिरिति। तत्सन्निवेशादिकं तत्रैवोक्तं यथा

“भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून्। अतीत्योत्तरमम्भोधिं समभ्येति महामुने!। वङ्क्षुश्च पश्चिमगिरीनतीत्य सकलांस्ततः। पश्चिमं केतुमालाख्यं वर्षमभ्येति सार्णवम्। तथा चालकनन्दापि दक्षिणेनेत्य भारतम्। प्रयाति सागरं भित्त्वा सप्तभेदा महामुने। आनील निषधायामौ माल्यवद्गन्धमादनौ। तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः। भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा। पत्राणि लोकपद्मस्य मर्य्यादाश्चैव बाह्यतः। जठरोदेवकूटश्च मर्य्यादापर्व्वतावुभौ। तौ दक्षिणोत्तरायामावानीलनिषधायतौ। मेरोः पश्चिमदिग्भागे यथापूर्व्वौ तथा स्थितौ। त्रिशृङ्गोजारुधिश्चैव उत्तरे वर्षपर्व्वतौ। पूर्व्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ। इत्येते मुनिवर्य्योक्ता मर्य्यादापर्व्वतास्तव। जठराद्याः स्थिता मेरोर्येषां द्वौ द्वौ चतुर्द्दिशम्। मेरोश्चतुर्द्दिशं ये तु प्रोक्ताः केशरपर्वताः। शीतान्ताद्या मुने! तेषामतीवेह मनोरमाः। शैलानामन्तरद्रोण्यः सिद्धचारणसेविताः। सुरम्याणि तथा तेषु काननानि पुराणि च। लक्ष्मीविष्ण्वग्निसूर्य्यादिदेवानां मुनिसत्तम!। तान्यायतनरम्याणि जुष्टानि वरकिन्नरैः। गन्धर्व्वयक्षरक्षांसि तथा दैतेयदानवाः। क्रीडन्ति तासु रम्यासु शैलद्रोणीष्वहर्निशम्। भौमाह्येते स्मृताः स्वर्गा धर्मिणामालया मुने!। नैतेषु पापकर्माणो यान्ति जन्मशतैरपि। भद्राश्वे भगवान् विष्णुरास्ते हयशिरा द्विज!। वराहः केतुमाले तु भारते कूर्मरूपधृक्। मत्स्यरूपश्च गोविन्दः कुरुष्वास्ते सनातनः। विश्वरूपेण सर्वत्र सर्व्वः सर्व्वेश्वरोहरिः। सर्वस्याधारभूतोऽसौ मैत्रेयास्तेऽखिलात्मकः। यानि किंपुरुषाद्यानि वर्षाण्यष्टौ महामुने!। न तेषु शोकोनोमाहो नोद्वेगः क्षुद्भयादिकम्। सुस्थाःप्रजा निरातङ्काः सर्व्वदुःखविवर्जिताः। दशद्वादशवर्षाणां सहस्राणि स्थिरायुषः। न तेषु वर्षवर्य्येषु भौमान्यम्भांसि तेषु वै। कृतत्रेतादिका नैव तेषु स्थानेषु कल्पना। सर्वष्वेतेषु वर्षेषु सप्त सप्त कुलाचलाः। नद्यश्च शतशस्तेभ्यः प्रसूता या द्विजोत्तम!”। विजित्य यः प्राज्यमयच्छदुत्तरान् कुरूनकुप्यं वसु वासवोपमः” किरा० ८यज्ञादिकर्त्तरि त्रि० कुरुश्रवणशब्दे उदा०। [मूलके (मूलो) शब्दमाला।

**कुरुकान्दक** पुंन० कुरव इव विस्तीर्णः कन्दोऽस्य कप्।

**कुरुकुल्ला** स्त्री श्यामाशक्तिभेदे “काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी” श्यामाकवचम्

**कुरुक्षेत्र** न० कुरुणा चन्द्रवंश्यन्दपभेदेन कृष्टं क्षेत्रम्, कुरुदेशान्तरगतं वा क्षेत्रम् शाक० मध्यपदलोपः। तीर्थभेदे तद्विवृतिः भा० शल्य० ५३अ०

“ऋषय ऊचुः। प्रजापतेरुत्तरवेदिरुच्यते सनातनी राम! समन्तपञ्चकम्। समीजिरे तत्र पुरा दिवौकसो वरेण सत्रेण महावरप्रदाः। पुरा च राजर्षिवरेण धीमता बहूनि वर्षाण्यमितेन तेजसा। प्रकृष्टमेतत् कुरुणा महात्मना ततः कुरुक्षेत्रमितीह पप्रथे। राम उवाच। किमर्थं कुरुणा कृष्टं क्षेत्रमेतन्महात्मना। एतदिच्छाम्यहं श्रोतुं कथ्यमानं तपोधनाः!। ऋषय ऊचुः। पुरा किल कुरुं नाम कर्षन्तं सततोत्थितम्। अभ्येत्य शक्रस्त्रिदिवात् पर्य्यपृच्छत कारणम्। इन्द्र उवाच। किमिदं वर्त्तसे राजन्! प्रयत्नेन परेण च। राजर्षे! किमभिप्रेतं येनेयं कृष्यते क्षितिः। कुरुरुवाच। इह ये पुरुषाः क्षेत्रे मरिष्यन्ति शतक्रतो!। ते गमिष्यन्ति सुकृतान् लोकान् पापविवर्ज्जितान्। अवहस्य ततः शक्रो जगाम त्रिदिवं पुनः। राजर्षिरप्यनिर्विण्णः कर्षत्येव वसुन्धराम्। आगम्यागम्य चैवैनं भूयो भूयोऽवहस्य च। शतक्रतुरनिर्विण्णः पृष्ट्वा पृष्ट्वा जगाम ह। यदा तु तपसोग्रेण चकर्ष वसुधां न्टपः। ततः शक्रोऽब्रवीद्देवान्राजर्षेर्यच्चिकीर्षितम्। एतच्छ्रुत्वाब्रुवन्देवाः सहस्राक्षमिदं वचः। वरेण च्छन्द्यतां शक्र! राजर्षिर्यदि शक्यते। यदि ह्यत्र प्रमीता वै स्वर्गं गच्छन्ति मानवाः। अस्मानन्निष्ट्वा क्रतुभिर्भागो नो न भविष्यति। आगम्य च ततः शक्रस्तदा राजर्षिमब्रवीत्। अलं खेदेन भवतः क्रियतां वचनं मम। मानवा ये निराहारा देहं त्यक्ष्यन्त्यतन्द्रिताः। युधि वा निहताः सम्यगपि तिर्य्यग्गता न्टप!। ते स्वर्गभाजो

राजेन्द्र ! भविष्यन्ति महामते ! । तथाऽस्त्विति ततो राजा कुरुः शक्रमुवाच ह । ततस्तमभ्यनुज्ञाप्य प्रहृष्टेनान्तरात्मना । जगाम त्रिदिवं भूयः क्षिप्रं बलनिसूदनः । एवमेतद्यदुश्रेष्ठ ! कृष्टं राजर्षिणा पुरा । शक्रेण चाभ्यनुज्ञातं ब्रह्माद्यैश्च सुरैस्तथा । नातः परतरं पुण्यं भूमेः स्थानं भविष्यति । इह तपस्यन्ति ये केचित् तपः परमकं नराः । देहत्यागेन ते सर्वे यास्यन्ति ब्रह्मणः क्षयम् । ये पुनः पुण्यभाजो वै दानं दास्यन्ति मानवाः । तेषां सहस्रगुणितं भविष्यत्यचिरेण वै । ये चेह नित्यं मनुजा निवत्स्यन्ति शुभैषिणः । यमस्य विषयं ते तु न द्रक्ष्यन्ति कदाचन । यक्ष्यन्ति ये च क्रतुभिर्महद्भिर्मनुजेश्वराः । तेषां त्रिविष्टपे वासो यावद्भूमिर्धरिष्यति । अपि चात्र स्वयं शक्रो जगौ गाथां सुराधिपः । कुरुक्षेत्रनिबद्धां वै तां शृणुष्व हलायुध ! । पांशवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः । अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् । सुरर्षभा ब्राह्मणसत्तमाश्च तथा नृगाद्या नरदेवमुख्याः । इष्ट्वा महार्हैः क्रतुभिर्नृसिंह ! संत्यज्य देहान् सुगतिं प्रपन्नाः । तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानान्तु मचक्रकस्य । एतत् कुरुक्षेत्रसमन्तपञ्चकं प्रजापतेरुत्तरवेदिरुच्यते । शिवं महापुण्यमिदं दिवौकसां सुसंमतं सर्वगुणैः समन्वितम् । अतश्च सर्वे निहता नृपा रणे यास्यन्ति पुण्यां गतिमक्षयां सदा । इत्युवाच स्वयं शक्रः सह ब्रह्मादिभिस्तथा ! तच्चानुमोदितं सर्वं ब्रह्मविष्णुमहेश्वरैः ।

"कुरुक्षेत्रे परीणहि स्थलेऽप्यग्न्याधेयमन्वारम्भणीयान्तं भवति" कात्या० २४।६।३४।

कुरुक्षेत्रं च ब्रह्मर्षिदेशः।"कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः । एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः" मनूक्तेः । इदं संवरसुतकुरुनृपराज्यान्तर्गतमत स्तन्नाम्ना प्रथितम् अतएव कुरुशब्ददर्शिते भाग०वाक्ये "कुरुक्षेत्रपतिं कुरुमित्युक्तम् । भा० आ०९४अ० । "ततः संवरणाद्देवी तपती सुषुवे कुरुम् । राजत्वे तं प्रजाः सर्वा धर्मज्ञ इति मेनिरे । तस्य नाम्नाऽभि विख्यातं पृथिव्यां कुरुजाङ्गलम् । कुरुक्षेत्रं च तपसा पुण्यं चक्रे महातपाः" इति ।

कुरुक्षेत्रस्थतीर्थमहात्म्यं भा०व०८३अ० उक्तं यथा "ततो गच्छेत राजेन्द्र ! कुरुक्षेत्रमभिष्टुतम् । पापेभ्यो यत्र मुच्यन्ते दर्शनात् सर्वजन्तवः । कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् । य एवं सततं ब्रूयात् सोऽपि पापैः प्रमुच्यते । पांशवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः । अपि दुष्कृतकर्म्माणं नयन्ति परमां गतिम् । दक्षिणेन सरस्वत्या दृषद्वत्युत्तरेण च । ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिपिष्टपे । तत्र मासं वसेद्वीर ! सरस्वत्यां युधिष्ठिर ! । यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः । गन्धर्व्वाप्सरसो यक्षाः पन्नगाश्च महीपते ! । ब्रह्मक्षेत्रं महापुण्यमभिगच्छन्ति भारत ! । मनसाप्यभिकामस्य कुरुक्षेत्रं युधिष्ठिर ! । पापानि विप्रणश्यन्ति ब्रह्मलोकञ्च गच्छति । गत्वा हि श्रद्धया युक्तः कुरुक्षेत्रं कुरूद्वह ! । फलं प्राप्नोति च तदा राजसूयाश्वमेधयोः । ततो मङ्कणकं नाम द्वारपालं महाबलम् । यक्षं समभिवाद्यैव गोसहस्रफलं लभेत् । ततो गच्छेत धर्म्मज्ञो विष्णोः स्थानमनुत्तमम् । सततं नाम राजेन्द्र ! यत्र सन्निहितो हरिः । तत्र स्नात्वा च नत्वा च त्रिलोकप्रभवं हरिम् । अश्वमेधमवाप्नोति विष्णुलोकञ्च गच्छति । ततः परिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् । अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति भारत ! । पृथिवीतीर्थमासाद्य गोसहस्रफलं लभेत् । ततः शालूकिनीं गत्वा तीर्थसेवी नराधिप ! । दशाश्वमेधे स्नात्वा च तदेव फलमाप्नुयात् । सर्पदेवीं समासाद्य नागानां तीर्थमुत्तमम् । अग्निष्टोममवाप्नोति नागलोकञ्च विन्दति । ततो गच्छेत धर्म्मज्ञो द्वारपालं तरन्तुकम् । तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् । ततः पञ्चनदं गत्वा नियतो नियताशनः । कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् । अश्विनोस्तीर्थमासाद्य रूपवानभिजायते । ततो गच्छेत धर्म्मज्ञो वाराहं तीर्थमुत्तमम् । विष्णुर्वराहरूपेण पूर्वं यत्र स्थितोऽभवत् । तत्र स्नात्वा नरश्रेष्ठ ! अग्निष्टोमफलं लभेत् । ततो जयन्त्यां राजेन्द्र सोमतीर्थं समाविशेत् । स्नात्वा फलमवाप्नोति राजसूयस्य मानवः । एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत् । कृतशौचं समासाद्य तीर्थसेवी नराधिप । पुण्डरीकमवाप्नोति कृतशौचो भवेच्च सः । ततो मुञ्जवटं नाम स्थाणोः स्थानं महात्मनः । उपोष्य रजनीमेकां गाणपत्यमवाप्नुयात् । तत्रैव च महाराज ! यक्षिणीं लोकविश्रुताम् । स्नात्वाभिगम्य राजेन्द्र ! सर्व्वान् कामानवाप्नुयात् । कुरुक्षेत्रस्य तद्द्वारं विश्रुतं भरतर्षभ ! । प्रदक्षिणमुपावृत्य तीर्थसेवी समाहितः । सम्मितं पुष्कराणाञ्च स्नात्वार्च्य पितृदेवताः । जामदग्न्येन रा-

नेण क्षतन्तत् सुमहात्मना । क्रतुत्रयो भवेद्राजन्नश्वमेधञ्च विन्दति । ततो रामह्रदान् गच्छेत् तीर्थसेवी समाहितः । तत्र रामेण राजेन्द्र ! तरसा दीप्ततेजसा । क्षत्त्रमुत्साद्य वीरेण ह्रदाः पञ्च निवेशिताः । पूरयित्वा नरव्याघ्र ! रुधिरेणेति विश्रुतम् । पितरस्तर्पितास्तेन तथैव प्रपितामहाः । ततस्ते पितरः प्रीता राममूचुर्नराधिप ! । पितर ऊचुः राम ! राम ! महाभाग ! प्रीताः स्म तव भार्गव ! । अनया पितृभक्त्या च विक्रमेण च ते प्रभो ! । वरं वृणीष्व भद्रं ते किमिच्छसि महाद्युते । एवमुक्तः स राजेन्द्र ! रामः प्रहरतां वरः । अब्रवीत् प्राञ्जलिर्वाक्यं पितॄन् स गगनेस्थितान् । भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि । पितृप्रसादमिच्छेयं तप आप्यायनं पुनः । यच्च रोषाभिभूतेन क्षत्त्रमुत्सादितं मया । ततश्च पापान्मुच्येयं युष्माकं तेजसाप्यहम् । ह्रदाश्च तीर्थीभूता मे भवेयुर्भुवि विश्रुताः । एतच्छ्रुत्वा शुभं वाक्यं रामस्य पितरस्तदा । प्रत्यूचुः परमप्रीता रामं हर्षसमन्विताः । तपस्ते वर्द्धतां भूयः पितृभक्त्या विशेषतः । यच्च रोषाभिभूतेन क्षत्त्रमुत्सादितं त्वया । ततश्च पापान्मुक्तस्त्वं निहतास्ते स्वकर्मभिः । ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः । ह्रदेष्वेतेषु यः स्नात्वा पितॄन् सन्तर्पयिष्यति । पितरस्तस्य वै प्रीता दास्यन्ति भुवि दुर्लभम् । ईप्सितञ्च मनःकामं स्वर्गलोकञ्च शाश्वतम् । एवं दत्त्वा वरान् राजन् ! रामस्य पितरस्तदा । आमन्त्र्य भार्गवं प्रीत्या तत्रैवान्तर्हितास्ततः । एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः । स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुभव्रतः । राममभ्यर्च्य राजेन्द्र ! लभेद्बहु सुवर्णकम् । वंशमूलकमासाद्य तीर्थसेवी कुरूद्वह ! । स्ववंशमुद्धरेद्राजन् ! स्नात्वा वै वंशमूलके । कायशोधनमासाद्य तीर्थं भरतसत्तम ! । शरीरशुद्धिः स्नातस्य तस्मिंस्तीर्थे न संशयः । शुद्धदेहश्च संयाति शुभाँल्लोकाननुत्तमान् । ततो गच्छेत धर्म्मज्ञ ! तीर्थं त्रैलोक्यविश्रुतम् । लोका यत्रोद्धृताः पूर्वं विष्णुना प्रभविष्णुना । लोकोद्धारं समासाद्य तीर्थं त्रैलोक्यपूजितम् । स्नात्वा तीर्थवरे राजन् ! लोकानुद्धरते स्वकान् । श्रीतीर्थञ्च समासाद्य स्नात्वा नियतमानसः । अर्च्चयित्वा पितॄन् देवान् विन्दते श्रियमुत्तमाम् । कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः । तत्र स्नात्वार्च्चयित्वा च पितॄन् स्वान् दैवतान्यपि । कपिलानां सहस्रस्य फलं विन्दति मानवः । सूर्य्यतीर्थं समासाद्य स्नात्वा नियतमानसः । अर्च्चयित्वा पितॄन् देवानुपवासपरायणः । अग्निष्टोममवाप्नोति सूर्य्यलोकञ्च गच्छति । गवां भवनमासाद्य तीर्थसेवी यथाक्रमम् । तत्राभिषेकं कुर्व्वाणो गोसहस्रफलं लभेत् । शङ्खिनीतीर्थमासाद्य तीर्थसेवी कुरूद्वह ! । देव्यास्तीर्थे नरः स्नात्वा लभते वीर्य्यमुत्तमम् । ततो गच्छेत राजेन्द्र ! द्वारपालं करन्तुकम् । तच्च तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः । तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ॥" "धर्म्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधि" हारा० २देवयजनस्थाने "कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते" शत०ब्रा० ४।१।५।१३ । "तेषां कुरुक्षेत्रं देवयजनं यस्मादाहुः कुरुक्षेत्रं देवानां देवयजनं तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति तदेव मन्यते इदं देवयजनमिति तद्धि देवानां देवयजनम्" शत० ब्रा० १४।१।१।२ अस्मिन् पक्षे च कुरु देवयज्ञाधारभूतं क्षेत्रम् आधारे कर्त्तृत्वोपचारात् कर्त्तरि कुप्रत्यय इति मन्तव्यम् । ३अविमुक्ते क्षेत्रे च । देवयजनपरताऽविमुक्तपरता चास्य "धर्म्मक्षेत्रे कुरुक्षेत्रे" इति गीताव्या० नीलकण्ठेन समर्थिता यथा "तत्र वेदे तेषां कुरुक्षेत्रं देवयजनमासेति" कर्मकाण्डप्रसिद्धं कुरुक्षेत्रमन्यत् "अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्म सदनम्" इत्यविमुक्ताख्यं ब्रह्मप्राप्तिस्थानभूतं कुरुक्षेत्रमन्यत् ब्रह्मसदनत्वं चास्य "अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवतीति" वाक्यशेषेण व्युत्पादितम् एतद्व्यावृत्त्यर्थं धर्मक्षेत्रे इति विशेषणं कुरुदेशान्तरगतं हि कुरुक्षेत्रं धर्मक्षेत्रमेव न तु तत् ब्रह्मसदनं प्रवर्ग्यकाण्डे तस्य धर्मक्षेत्रत्वमात्रश्रवणात्"

**कुरुक्षेत्रीयोग** पु० एकस्मिन् सावने तिथिनक्षत्रयोगानां क्षयरूपे ज्यो० उक्ते १योगभेदे । २कुरुक्षेत्रे मृत्युसूचके ग्रहयोगभेदे च । "पञ्चग्रहयुते मृत्यौ लग्नसंस्थे बृहस्पतौ । सौम्यक्षेत्रगते लग्ने कुरुक्षेत्रे मृतिर्भवेत्" जातकामृते योगाध्यायः ।

**कुरुजाङ्गल** न० जङ्गलमेव जाङ्गलं कुरुषु जाङ्गलम् । १कुरुक्षेत्रे "तस्य नाम्नाऽभिविख्यातं पृथिव्यां कुरुजाङ्गलम् । कुरुक्षेत्रं स(कुरुः) तपसा पुण्यं चक्रे महातपाः" भा०आ०९४ अ० "यदा परीक्षित् कुरुजाङ्गले वसन्" भाग०१,१६,११, कुरवश्च जाङ्गलाश्च द्व० । "कुरुदेशे जाङ्गलदेशे च पुं भूम्नि "कथमालक्षितः पौरैः

संप्राप्तः कुरुजाङ्गलान्” भाग० १,४,७, कुरवो जाङ्गलाश्च देशभेदाः”श्रीधरः” । कुरवश्च जाङ्गलश्च “विशिष्टलिङ्गो नदीदेशोऽग्रामतः” पा०समा० एकवद्भावे कुरुजाङ्गलम् । २तत्समाहारे न० [ वरकशाके राजनि० ।

**कुरुट** पु० कुत्सितं रोटति रुट—दीप्तिप्रतिघाते क । सिता-

**कुरुण्ट** पु० कुत्सितं रुण्टति रुटि—स्तेये अच् । पीतझि-ण्ट्याम् पीताम्लाने मेदि० । स्वार्थे क । तत्रार्थे अमरः

**कुरुण्टी** स्त्री कु+रुटि—स्तेये अच् गौरा० ङीष् । १दारु पुत्तलिकायां मेदि० । २ब्राह्मण्यां जटा०

**कुरुत** पु० कुर—बा०उतक् । वंशनिर्मिते ह्रदाकारे पात्रभेदे सद्रव पादोऽस्य हस्त्या० नान्त्यलोपः । कुरुतपादइत्येव ।

**कुरुतीर्थ** न० भारतप्रसिद्धे तीर्थभेदे तच्च तीर्थं “यत्र ब्रह्मादिभिर्देवैर्ऋषिभिश्च तपोधनैः । सैनापत्येन देवानामभिषिक्तो गुहस्तदा । तैजसस्य च पूर्वेण कुरुतीर्थं कुरूद्वह! कुरुतीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः । सर्व्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते” भा० व०८३अ० उक्तम् । [ क्वायामल्पायां नद्याम् ।

**कुरुनदिका** स्त्री यथ.ल्पिका नदी कुरुनदिकेत्युच्यते इत्यु-

**कुरुपिशङ्गिला** स्त्री कुरु इत्यनुकरणशब्दकरणेन मूलावयवभक्षिकायां गोधायाम् “कईमरे पिशङ्गिला कई कुरु-पिशङ्गिला” इति प्रश्ने “अजारे पिशङ्गिला श्वावित् कुरुपिशङ्गिला” यजु० २३।५५।५६। उत्तरम् “श्वावित् गोधा कुरुपिशङ्गिला । कुरुशब्दोऽनुकरणे पिश—अवयवे इति धातोरिगुपधेति कप्रत्ययः कुरु इति शब्दानुकुर्व्वाणा पिशान् मूलाद्यवयवान् गिलति । पिशङ्गिला मूलानि शतं कृत्वौ स्थापयति शतञ्च भक्षयतीति गोधायाः स्वभावः” वेददीपः ।

**कुरुम्ब** न० कुर—बा० उम्बच् । (कमलालेबु) १कुलपालके जम्बीरभेदे शब्दच० । २द्रोणपुष्प्यां स्त्री० टाप् राजनि० गौरा० ङीष् । सैंहलीदृक्षे राजनि०। स्वार्थे क तत्रार्थे

**कुरुराज्** पु० कुरुषु राजते राज—क्विप् । दुर्य्योधने त्रिका० कुरूणां राजा टच्समा० । कुरुराजोऽप्यत्र

**कुरुल** पु० कुर+उलक् । ललाटस्थे चूर्णकुन्तले हेमच०

**कुरुवक** पु० कु+रु—क्त—कुत्सितं रवोभ्रमरो यत्र कप् । १रक्तझिण्ट्याम् अमरः २पीतझिण्ट्यां हेम०

**कुरुवर्ष** न० कुरुसंज्ञकं वर्षम् । जम्बुद्वीपस्थे उत्तरकुरु-संज्ञके वर्षभेदे उत्तरकुरुशब्दे १०८४पृ० विवृतिः

**कुरुविन्द** पु० कुरून् मूलकारणत्वेन विन्दति विद—श मुचा० दिमुम्। १मुस्तायाम् अमरः २माषे राजनि० ३ काचलवणे ४माणिक्यरत्ने न० राजनि० । ५कुरुविल्वरत्ने ६कुल्माषे व्रीहिभेदे मेदि० ७दर्पणे ८हिङ्गुले च न० शब्दचि०

**कुरुविल्व** पु० कुरुषु विल्वइव; १पद्मरागमणौ त्रिका० संज्ञायां क । कुरुविल्वक कुल्माषे (वनकुरथि) रत्नमा०

**कुरुविस्त** पु० कुरुषु विख्यातः विस्तः । स्वर्णपले अमरः

**कुरुवृद्ध** पु० कुरूणां जनपदानां राजानः तद्राजस्य तद्धितस्य बहुषु लुक् तेषु कुरुषु वृद्धः । भीष्मे । “तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः” गीता ।

**कुरुश्रवण** त्रि० कुरवः यज्ञकर्त्तारः तेषां श्रवणः स्तोतृणां श्रोता श्रु—नन्द्या ल्यु । ऋत्विजां स्तुतिश्रोतरि “कुरुश्रवण मावृणि राजानं त्रासदस्यवम् ऋ०१०,३३अ० “कुरुश्रवण ! ददतोमघानि” ऋ० १०।३३।८ । हे कुरुश्रवण ! कुरवः ऋत्विजः तेषां स्तुतीनां श्रोतः !” भा०

**कुरूटिनी** स्त्री किरीटिनी+वेदे पृषो० । किरीटयुक्तायां सेनायाम् “वाहिनी विश्वरूपा कुरूटिनी अथ० १०,१,१५

**कुरूप्य** न० ईषत् रूप्यं शुभ्रत्वेन सादृश्यात् । १रङ्गनामके धातौ राजनि० कोः पृथिव्याः कुस्थानात् वा आगत रूप्यप् । पृथिव्याः कुस्थानाद्वा २आगते त्रि०

**कुर्कुट** पुंस्त्री०कुरित्यव्यक्तं शब्दं कुटति कुट—क । कुक्कुटे हारा० “श्वानः कुर्कुटचण्डालाः समस्पर्शाः प्रकीर्त्तिताः । रासभोष्ट्रौ विशेषेण तस्मात्तान्नैव संस्पृशेत्” पद्धत० स्त्रियां जातित्वात् ङीष् [ भे खगे स्त्रियां ङीष्

**कुर्कुटाहि** पु० कुर्कुटतुल्यमहिः अह—इन् । कुर्कुटा

**कुर्कुर** पुंस्त्री० कुरित्यव्यक्तं शब्दं कोरति कुर—क । कुक्कुरे शायकुक्कुटः “कुर्कुराविव कूजन्तौ” अथ०७,९५,२, “उपकर्त्तुमपि प्राप्तं निःस्वं मन्यन्ति कुर्कुरम्” पद्धत० ।

**कुर्चिका** स्त्री कूर्चिका पृषो० । कूर्चिकाशब्दार्थे अमरटीका

**कुर्सेज** पु० कुलञ्जनवृक्षे गन्धमूले राजनि० ।

**कु(कू)र्द** क्रीडायां भ्वा० आत्म० अक० सेट् । कु(कू)र्द्दते अकु(कू)र्द्दिष्ट चुकु(कू)र्द्दे । अर्थवत्परिभाषया नकुरच्छुरामिति निषेधाप्रवृत्तावपि दीर्घमध्यान्तरपाठसामर्थ्यात् रेफे परे न दीर्घः इति सूचितम् । तेन कुर्द्दनमित्यादौ न दीर्घः । [ अमरः ।

**कु(कू)र्दन** न० कु(कू)र्द—भावे ल्युट् । क्रीडायां (कोदा)

**कु(कू)र्पर** पु०कुर—क्विप् कुः पिपर्त्ति अच् परः कर्म्म०। १जानुनि, २कफोणौ च । मेदि० दीर्घमध्यपाठान्तरे नि०दीर्घः

**कु(कू)र्पास** पुन० कुर्परे असते आस्ते वा अस् घ०। स्त्रीणां

कञ्चुलिकायां (कांचुली) स्वार्थे क । तत्रैवार्थे । "प्रस्वे-
दवारिसविशेषविषक्तमङ्गे कु(कू)र्पासकं क्षतनखक्षतमुत्-
क्षिपन्ती" माघः । "मनोज्ञकु(कू)र्पासकपीडितस्तना"
रत्ना० [ २कर्त्तरि त्रि० । स्त्रियां ङीप् ।

**कुर्वत्** पुंस्त्री कृ–शतृ । १चर्मकारे २भृत्ये त्रि० त्रिका०

**कुर्व्वद्रूप** पु० कुर्वन् फलोन्मुखं रूपं यस्य । बौद्धमतसिद्धे
फलजननाय योग्ये धान्यादौ बीजे । स च बौद्धमते
अतिशयात्मा सहकारिभिराधीयते इति स्थितम् यथा
"अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयते इत्यु-
भ्युपगम्यते तर्हि प्राचीनभावोऽनतिशयात्मा निवृत्तः अ-
न्यश्चातिशयात्मा कुर्व्वद्रूपादिपदवेदनीयो जायत इति"
सर्व्वदर्शनसं० । क्षणिकशब्दे बौद्धशब्दे च विवृतिः ।

**कुर्व्वाण** त्रि० कृ–शानच् । १भृत्ये २कारके च शब्दचि० ।

**कुर्व्वादि** पु०अपत्ये ण्यप्रत्ययनिमित्ते पाणिन्युक्ते शब्दगणभेदे
"सच गणः कुरु गर्गर मङ्गुष अजमार रथकार वावदूक
(सम्राजः क्षत्रिये) कवि विमति कापिञ्जलादि वाक् वाम-
रथ पितृमत् इन्द्रलाजी एजि वातकि दामोष्णीषि गण-
कारि कैशोरि कुट शलाका मुर पुर एरका शुभ्र अभ्र
दर्भ केशिनी (वेणा छन्दसि) शूर्पणाय श्यावनाय
श्यावरथ श्यावपुत्र सत्यङ्कार वड़भीकार पथिकार मूढ
शकन्धु शङ्कु शाकम् शाकिन् शालीन कर्त्तृ हर्त्तृ इन
पिण्डी (वामरथस्य कण्वादिवत् स्वरवर्जम्) कौरव्य

**कुल** बन्धे संहतौ च भ्वा०पर०अक० सेट् । कोलति अको-
लीत् चकोल । कुलम् । वंशएवास्य प्रयोग इति वदन्
दुर्गादासः आकुलः सङ्कुलइत्यादिप्रयोगमपश्यन् परास्तः ।
आ+व्यग्रतायाम् चञ्चलतायाम् । आकोलति "किमे-
तदित्याकुलमीक्षितं जनैः" माघः "उदपतद्विरमाकुल
लोचनैः" भट्टिः ।
सम्+सङ्कीर्णतायाम् सङ्कुल युद्धम् भा०द्रो०प० । "अलि-
कुलसंकुलकुसुमनिराकुलेत्यादि" जयदेवः । "शङ्खकुला-
कुलेन" माघः ।

**कुल** न० कुल–क, कुङ् शब्दे कर्म्मणि बा० लक्, कुं भूमिं
लाति ला–क, कौ भूमौ लीयते "अन्येष्वपि" पा०ड०
यथायथम् व्युत्पत्तिः । १जनपदे देशे । मध्यमहलद्वयेन
यावती भूमिः कृष्यते तावत्यां २भूमौ "दशी कुलन्तु
भुञ्जीत" मनुः । "अष्टागवं धर्म्महलं षड्गवं जीवि-
तार्थिनाम् । चतुर्गवं गृहस्थानां द्विगवं ब्रह्मघातिनाम्"
हारीतस्मरणात् "षड्गवं मध्यमं हलमिति तथाविध-
हलद्वयेन यावती भूमिः कृष्यते तावद्भूमिः कुल-
मित्युच्यते कुल्लू० । ३गोत्रे ४वंशे । ५सजातिगणे विप्र-
कुलम् पक्षिकुलम् । खगकुलाय कुलायनिलायिताम् माघः
तत्र सत्कुलधर्म्माश्च "आचारो विनयो विद्या प्रतिष्ठा-
तीर्थदर्शनम् । निष्ठा वृत्तिस्तपोदानं नवधा कुललक्षणम्" ।
अभियुक्तोक्ताः तस्य नाशकधर्म्माश्च कूर्म्मपु०१५अ०उक्ता यथा
"गोभिश्च घोटकैर्विप्र ! कृष्या राजोपसेवया । कुलान्य-
कुलतां यान्ति यानि हीनानि वृत्ततः । कुविवाहैः क्रिया
लोपैर्वेदानध्ययनेन च । कुलान्यकुलतां यान्ति ब्राह्मणा
तिक्रमेण वै । अनृतात् पारदार्य्याच्च तथाऽभक्ष्यस्य भक्ष-
णात् । अश्रौतधर्म्माचरणात् क्षिप्रं नश्यति वै कुलम् ।
अश्रोत्रियेषु वेदानां वृषलेषु तथैव च । विहिताचार-
हीनेषु क्षिप्रं नश्यति वै कुलम्" ।

मनुना तु कुलनाशवृद्ध्योः कारणमुक्तं यथा
"शोचन्ति जामयो यत्र विनश्यत्याशु तत् कुलम् । न
शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा । जामयो यानि
गेहानि शपन्त्यप्रतिपूजिताः । तानि कृत्याहतानीव
विनश्यन्ति समन्ततः । तस्मादेताः सदा पूज्या भूषणा-
च्छादनाशनैः । भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ।
सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च । यस्मि-
न्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् । यदि हि
स्त्री न रोचेत पुमांसं न प्रमोदयेत् । अप्रमोदात् पुनः
पुंसः प्रजनं न प्रवर्त्तते । स्त्रियान्तु रोचमानायां सर्वं
तद्रोचते कुलम् । तस्यान्त्वरोचमानायां सर्व्वमेव न
रोचते । कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च । शिल्पेन
व्यवहारेण शूद्रापत्यैश्च केवलैः । गोभिरश्वैश्च यानैश्च
कृष्या राजोपसेवया । अयाज्ययाजनैश्चैव नास्तिक्येन
च कर्म्मणाम् । कुलान्याशु विनश्यन्ति यानि हीनानि
मन्त्रतः । मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ।
कुलसङ्ख्याञ्च गच्छन्ति कर्षन्ति च महद् यशः" ।
कुलरक्षार्थविवाहविषये त्याज्यकुलानि मनुनोक्तानि यथा
"महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः । स्त्रीसम्ब-
न्धे दशैतानि कुलानि परिवर्ज्जयेत् । हीनक्रियं निष्पु-
रुषं निश्छन्दोरोमशार्शसम् । क्षयामयाव्यपस्मारिश्वित्रि
कुष्ठिकुलानि च" । ६श्रेष्ठे ७देहे च दम्भे त्रि० मेदि० ।
"जीवप्रकृतितत्त्वञ्च दिक्कालाकाशमेव च । क्षित्यप्तेजो
वायवश्च कुलमित्यभिधीयते" तन्त्रोक्तेषु ८जीवादिषु ९कु-

लिके शिल्पिकुलप्रधाने पु० भरतः । कुले भवः यत् कुल्य ख । कुलीन, ढकञ् । कौलेयक कुलोद्भवे त्रि० अश्वादि० चतुरर्थ्यां यः । कुल्य कुलसन्निकृष्टदेशादौ त्रि० बलादि० देशे मतुप् मस्य वः । कुलवत् कुलयुक्ते त्रि० स्त्रियां ङीप् कुलवती तत्र सजातीयसंघे "यस्यास्खलद्वारिविहारिवीचिच्छटोच्छ्रुतच्छ्रुतकुलाकुलेन" माघः अलिकुलसङ्कुलेत्यादि जयदेवः पृथिव्याधारे मूलाधारे लीयते—ली+ड । ११कुलकुण्डल्यां स्त्री उपचारात् तदुपासके तन्त्रोक्ते १२आचारविशेषयुक्ते कुलाचाराधिकारेणैव कुलचन्द्रिका कुलक्रमदीपिका कुलचूडामणिकुलार्णवादयस्तन्त्रग्रन्थाः १३भूमिलग्ने च त्रि० । १४तन्त्रोक्ते तिथिनक्षत्रवारभेदे त्रि० कुलतिथिकुलनक्षत्रकुलवारशब्दे कुलाचारशब्दे च विवृतिः ।

**कुलक** न० कुल—क कौ लीयते ली—ड वा ततः संज्ञायां कन् । १पटोललतायां २परस्परसंबद्धश्लोकपञ्चके च मेदि० "कलापकं चतुर्भिस्च पञ्चभिः कुलकं मतम्" सा०द० । ३काकेन्दौ पु०अमरः ४वल्मीके पु०५कुलश्रेष्ठे त्रि०मेदि० ६मरुवकवृक्षे पु०रत्नमा०। ७हरितसर्पे पुंस्त्री० राजनि०। ८कुपीलौ पु० भावप्र० । ९शिल्पिकुलप्रधाने त्रि० भरतः ।

**कुलकर्कटी** स्त्री नित्यकर्म्म० । चीनकर्कट्यां राजनि० ।

**कुलकुण्डलिनी** स्त्री कौ पृथिवीतत्त्वाधारे मूलाधारे लीयते ली—ड कर्म्म० । तन्त्रोक्ते मूलाधारे सर्पवद्वस्थिते शिवशक्तिभेदे कुलकुण्डलीत्यप्यत्र स्त्री । तत्स्वरूपादिकं शारदायामुक्तम् यथा "ततश्चैतन्यरूपा सा सर्व्वगा विश्वरूपिणी । शिवसन्निधिमासाद्य नित्यानन्दगुणोदया । दिक्कालाद्यनवच्छिन्ना सर्व्ववेदार्थगा शुभा । परापरविभागेन परशक्तिरियं स्मृता । योगिनां हृदयाम्भोजे नृत्यन्ती नित्यमञ्जसा । आधारे सर्व्वभूतानां स्फुरन्ती विद्युदाकृतिः । शङ्खावर्त्तक्रमाद्देवी सर्व्वमावृत्य तिष्ठति । कुण्डलीभूतसर्पाणामङ्गश्रियमुपेयुषी । गुणिता सर्व्वगात्रेषु कुण्डली परदेवता । विश्वात्मना प्रबुद्धा सा सूते मन्त्रमयं जगत् । सर्व्वदेवमयी देवी सर्वमन्त्रमयी शिवा । सर्वतत्त्वमयी साक्षात् सूक्ष्मा सूक्ष्मतरा विभुः । त्रिधामजननी देवी शोमसूर्य्याग्निरूपिणी । त्रिभेदतेजसां कर्त्री शब्दब्रह्मस्वरूपिणी । द्विचत्वारिंशद्वर्णा सा पञ्चाशद्वर्णरूपिणी" । विवृतञ्चैतत् पदार्थादर्शे राघवभट्टेन यथा "कुण्डलिनीतत्त्वोत्पत्तिमाह ततश्चैतन्येति । तदुक्तं "मूलाधारात् प्रथममुदितोयस्तु शब्दः पराख्यः पश्चात् पश्यन्त्यथ हृदयगोबुद्धियुग् मध्यमाख्यः । वक्त्रे वैखर्य्यथ रुरुदिषोरस्य जन्तोः सुषुम्णाबद्धस्तस्माद्भवति पवनप्रेरितोवर्णसंघः" । ततः शरीरोत्पत्त्यनन्तरं चैतन्यरूपा अतएव शब्दब्रह्ममयी सा देवी कुण्डली परदेवता सर्वगात्रेण गुणिता अतएव विश्वात्मना सर्वात्मना प्रबुद्धा जातप्रबोधा मन्त्रमयं जगत् सूत इति दूरेण सम्बन्धः । तत्र मूलाधारे कुण्डलीभूतसर्पवन्नाडीवर्त्तते तन्मध्ये वायुवशादस्याः सञ्चरणमेव गुणनम् । चैतन्यरूपेति स्वरूपाख्यानं सा प्रसिद्धा सर्वमावृत्य तिष्ठतीत्यनेन कर्त्तृव्याप्तिर्दर्शिता विश्वरूपिणीत्यनेन विषयव्याप्तिः । शिवसन्निधिमासाद्य स्थितेति शेषः अनेन शैवसिद्धान्ते शक्तिशब्दवाच्येयमित्युक्तं सन्निधिशब्दोऽप्यौपचारिकः तन्मते शिवशक्त्योरभेदात् तदुक्तमभिनवगुप्तपादाचार्य्यैः "शक्तेश्च शक्तिमद्रूपाद्व्यतिरेकं न वाञ्छति । तादात्म्यमनयोर्नित्यं वह्निदहनयोरिव" । यद्वा सम्यक्सङ्गनिधिस्वरूपं शिवस्वरूपं प्राप्येत्यर्थः वक्ष्यति च "पिण्डम्भवेत् कुण्डलिनी शिवात्मेति" गुणानां सत्वरजस्तमसामुदयोयस्याः सा नित्यानन्दा चासौ गुणोदया च सा नित्यानन्दगुणोदया तेन कुण्डलिनीस्वरूपमुक्तं गुणोदयेत्यनेन साङ्ख्यमते प्रकृतिवाच्येयमित्युक्तं यदाहुः "प्रधानमिति यामाहुर्या शक्तिरिति कथ्यते" इति इदानीमध्यात्माधिभूताधिदैवादिविषयादिज्योतिषक्रमेण तस्या व्याप्तिमाह दिक्कालेति सर्व्वदेहानुगेति देहव्याप्तिः परापरविभागेन काचन परा शक्तिः काचनापरा तद्विभागेनापीयं परशक्तिरेव यदाहुः "भूमिरापोऽनलोवायुः खं मनोबुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् जीवभूतां महाबाहो । ययेदं धार्य्यते जगत्" (गीता) । यद्वा परः स्थूलः अपरः महास्थूलः महदादिः तद्विभागेन परशक्तिः स्थूला शक्तिः स्थूलात्स्थूलेत्युक्तेः । अनेन महदादिव्याप्तिः यद्वा सर्व्वदेहानुगेत्यनेन प्राकृतशब्दतोर्थतश्च पुंस्त्रीनपुंसकलिङ्गव्याप्तिर्दर्शिता शब्दतो यथा शिव इत्युच्यते कुण्डलिनीत्युच्यते प्रधानमिति एवंभूतापि सा स्त्रीत्वेनैव निर्द्दिश्यत इत्याह परापरेति परा पुंप्रकृतिः अपरं नपुंसकप्रकृतिस्तद्विभागेन इयं परशक्तिःस्मृता अयमर्थः यद्यपि लिङ्गत्रयवाच्या तथापि तूर्णमेव चलभक्तिभारपरिम्लानमनः जनसमस्ताकाङ्क्षाकल्पवल्ली परशक्तिपदवाच्येति । अत एव शुभा रमणीया यदाहुराचार्य्याः" पुंनपुंसकयोस्तुल्याप्यङ्गनायां वि-

शिवन" इति नित्याह्निकाम्नायेऽपि "सर्व्वत्रावच्छिताप्येषा कामिनीषु विशेषतः। प्रकाशते ततस्तासाम् तद्वक्तिं न कारयेदिति" अञ्जसा तत्त्वेन योगिनां हृदयाम्भोजे नृत्यन्ती यस्य तैरेव गुरूपदेशेन ज्ञायते इत्यर्थः। "देशग्राः तैरेव सा देवी सदा देशकदेशितैरित्युक्तेः सर्वभूतानाम् आधारे मूलाधारचक्रे स्फुरन्ती अनेन स्थाननिर्देशः विद्युदाकृतिरित्यनेन ध्यानमुक्तं यदाहुः"तडित्कोटिप्रख्यां स्वरुचिर्जितकालानलरुचिमिति" अथ वानेन अनेकशब्दोत्पत्तिहेतुत्वेनानेकधा भवतीत्युक्तं शङ्खमध्ये य आवर्त्तः स यथा शङ्खमध्यमाहत्य तिष्ठति तद्वदियमपि देवीत्यर्थः। इदमवान्तरवाक्यं भिन्नमेव शङ्खेति कुण्डलीत्यनयोर्हेतुहेतुमद्भावेन योजना। कुण्डलीभूता कुण्डलाकारतां प्राप्ता ये सर्पा तथाभूता। केचन कुण्डलीति भिन्नं पदं वर्णयन्ति भूतानि सर्पाश्च ते यथा कुटिलगतयस्तद्वदियमपीत्यर्थः इति तत्र कुण्डली परदेवतेत्यनेन पुनरुक्तिः। सर्व्वदेवमयीति देवव्याप्तिः दीव्यतीति देवी तेजोरूपेत्यर्थः अनेन तेजोव्याप्तिः। सर्वमन्त्रमयीति मन्त्रव्याप्तिः। शिवा शिवरूपेत्यर्थः यद्वा शिवा कल्याणरूपा। साक्षात् सर्वतत्त्वमयीति तत्त्वव्याप्तिः। सूक्ष्मा सूक्ष्मतरा विभुरिति विरोधः परिहारस्तु सूक्ष्मा स्वरूपतः सूक्ष्मतरा दुर्ज्ञाना यद्वा सूक्ष्मात् त्रसरेणोरपि सूक्ष्मतरा अणुतरा अनेना खादिव्याप्तिर्द्दर्शिता तदुक्तं "बालाग्रस्य सहस्रधा विदलितस्यैकेन भागेन या सूक्ष्मत्वात् सदृशी त्रिलोकजननीति"विभुः इयत्तया ज्ञातुमशक्या। त्रिधामेति सूर्यसोमाग्निरूपा। यद्वा त्रिधामेति स्थानत्रयं पातालभूस्वर्गरूपा अनेन स्थानव्याप्तिर्दर्शिता द्विचत्वारिंशद्वर्णात्मा भूतलिपिमन्त्रमयी पञ्चाशद्वर्णरूपिणीति मातृकामयी"।

तस्या ध्यानादिकमुक्तं प्रयोगसारे यथा

"मूलाधारे कुण्डलिनीं ध्यात्वा संपूजयेन्नरः। ध्यानं तस्याः प्रवक्ष्यामि येन योगी प्रजायते। प्रसुप्तभुजगाकारां स्वयम्भूलिङ्गमाश्रिताम्। विद्युत्कोटिप्रभां देवीं विचित्रवसनान्विताम्। शृङ्गारादिरसोल्लासां सर्व्वदा कारणप्रियाम्। एवं ध्यात्वा कुण्डलिनीं ततोयजेत् समाहितः। मनसा गन्धपुष्पाद्यैः संपूज्य वाग्भवं जपेत्। ततोवै तोषयेत्ताञ्च स्तवेनानेन साधकः।"रुद्रजामले" अथ प्रातः समुत्थाय पशुरुत्तमपण्डितः। गुरूणां चरणाम्भोजं मङ्गलं शीर्षपङ्कजे। विभाव्य पुनरेवं हि श्रीपदं भावयेद्धृदि। पूजयित्वा च विविधैरुपचारैर्नमेत् स्तवैः। त्रैलोक्यं तेजसा व्याप्तां मण्डलस्थां म...म्। तडित्कोटिप्रभादीप्तिं चन्द्रकोटिसुशीतलाम्। सार्द्धत्रिवलयाकारां स्वयम्भूलिङ्गवेष्टिताम्। उत्थापयेन्महादेवीं महावक्त्रां मनोन्मनीम्। श्वासोच्छ्वासादुद्गच्छन्तीं द्वादशाङ्गुलरूपिणीम्। योगिनीं खेचरीं वायुरूपां मूलाम्बुजस्थिताम्। चतुर्व्वर्णस्वरूपां तां वकारादिकसान्तकाम्। कोटिकोटिसहस्रार्ककिरणोज्ज्वलमोहिनीम्। महासूक्ष्मपथप्रान्तरन्तरान्तरगामिनीम्। त्रैलोक्यरचितां वाक्यदेवतां शब्दरूपिणीम्। महाबुद्धिप्रदां देवीं सहस्रदलगामिनीम्। महासूक्ष्मपथे तेजोमयीं स्त्युस्वरूपिणीम्। कालरूपां ब्रह्मरूपां सर्वत्र सर्वचिन्मयीम्। ध्यात्वा पुनःपुनः शीर्षे सुधाब्धौ विनिवेशिताम्। सुधापानं कारयित्वा पुनःस्थाने समानयेत्। समानयनकाले तु सुषुम्णामध्यमध्यके। अमृताभिप्लुतां कृत्वा पुनःस्थानेषु पूजयेत्। ऊर्द्धोद्गमनकाले तु महातेजोमयीं स्मरेत्। प्रतिप्रयाणकाले तु सुधाधाराभिराप्लुताम्। कुलकुण्डलिनीं देवीममृतानन्दविग्रहाम्। ध्यात्वा ध्यात्वा पुनर्ध्यात्वा सर्वसिद्धीश्वरोभवेत्। तस्मिन् स्थाने महादेवीं विभाव्य किरणोज्ज्वलाम्। अमृतानन्दमूर्त्तिं तां पूजयित्वा शुभां मुदा। मानसोच्चारवीजेन मायां वा कामवीजकम्। पञ्चाशद्वर्णमालाभिर्जप्त्वानुलोमतस्तथा। विलोमेन पुनर्जप्त्वेति"

**कुलक्क** पु० कु+लक्क—आप्तौ भावे घञ्। करताल्याम् हारा०।

**कुलक्षया** स्त्री कुलस्य क्षयोयस्याः। १स्पृक्काशिम्ब्यां शब्दचि० ६त०। २कुलनाशे पु०। "कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्"। "कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः" गीता।

**कुलघ्न** त्रि० कुलं हन्ति हन—टक्। वंशघातके। "सङ्करो नरकायैव कुलघ्नानां कुलस्य च। पतन्ति पितरोह्येषां लुप्तपिण्डोदकक्रियाः। दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः। उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः। उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन!। नरके नियतं वासोभवतीत्यनुशुश्रुमः" गीता। तत्र यथोत्तरं कार्य्यमुक्तं तत्रैव "कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः। धर्म्मे नष्टे कुलं कृत्स्नमधर्म्मोऽभिभवत्युत। अधर्म्माभिभवात् कृष्ण! प्रदुष्यन्ति कुलस्त्रियः। स्त्रीषु दुष्टासु वार्ष्णेय! जायते वर्णसङ्करः। सङ्करोनरकायैव कुलघ्नानां कुलस्य च" एतदुत्तरं कुलघ्नशब्दे दर्शितम्

**कुलज** त्रि० कुले सत्कुले जायते जन–ड। १सत्कुलोद्भवे। २कुलपालिकायां स्त्री टाप् शब्दरत्ना०

**कुलञ्ज** पु० कुं पृथिवीं रञ्जयति रञ्ज–णिच् अण् रस्य लः। कुलञ्जनवृक्षे राजनि०नन्द्या०व्यु। कुलञ्जनोऽप्यत्र "कुलञ्जनः कटुस्तिक्तः उष्णश्च दीपनस्तथा। मूलदोषविनाशी च" राजनि० तद्गुणा उक्ताः

**कुलटा** स्त्री० कुलात् कुलान्तरं व्यभिचारार्थमटति अट–अच् शक०। व्यभिचारिण्यां स्त्रियाम्। या तु भिक्षार्थं कुलमटति सा कुलाटा इति तत्र न शक०। इति भेदः

**कुलटी** स्त्री कुत्सितं रट्यते रट–भाषणे घञर्थे क गौरा० ङीप् रस्य लः। मनःशिलायां रत्नमा०

**कुलतन्तु** पु० कुलस्य तन्तुरिव। कुलावलम्बने "मया च सत्यवत्या च कृष्णेन च महात्मना। समवस्थापितं भूयो युष्माकं कुलतन्तुषु" भा०आ० ११०अ०

**कुलतिथि** स्त्री द्वितीयाषष्ठीदशमीभिन्नासु समतिथिषु चतुर्थ्यष्टमीद्वादशीचतुर्दशीषु यथोक्तं तन्त्रसा० "द्वितीया दशमी षष्ठी कलाकुलमुदाहृतम्। विषमाश्चाकुलाः सर्व्वाः शेषाश्च तिथयः कलाः"

**कुलत्थ** पु०कुलं भूलग्नं सत् तिष्ठति स्था–क पृषो०। १कलायभेदे (कुलत्थकलाइ) २वनकुलत्थे स्त्री टाप् रत्नमा०। तत्पर्य्यायादि भावप्र० उक्तं

"कुलत्थिका कुलत्थश्च कथ्यन्ते तद्गुणा अथ। कुलत्थः कटुकः पाके कषायः रक्तपित्तकृत्। लघुर्विदाही वीर्य्योष्णः श्वासकासकफानिलान्। हन्ति हिक्काश्मरीशुक्रदाहानाहान् सपीनसान्। स्वेदसंग्राहको मेदोज्वरकृमिहरः परः।" भावप्र० कुलत्थिकेति निर्द्देशात् स्त्रीत्वमपि सा च उपचारात् ३तत्तुल्याञ्जने ४वनकुलत्थायां च स्त्री राजनि० "कुलाली लोचनहिता चक्षुष्या कुम्भकारिका लुलत्थिकेति" राजनि० वनकुलत्थापर्य्याये उक्तेः। स्वार्थे क। तत्रैवार्थे राजनि० कुलत्थे भावप्र० संज्ञायां कन्। कुलत्थाञ्जनाकारप्रस्तरभेदे अमरः।

**कुलत्थाञ्जन** न० कुलत्थया कृतमञ्जनम्। अञ्जनभेदे "मलापहारि चक्षुष्यं कषायं कटुकं हिमम्। विषविस्फोटकगण्डूनां नाशकं व्रणदोषहृत्" राजनि० तद्गुणा उक्ताः

**कुलदीप** पु० कुले कुलाचारे विहितोदीपः तन्त्रसारोक्ते कुलाचाराङ्गे १दीपभेदे "अर्केन्दुसितवाट्यालतूलनिर्म्मितवर्त्तिकम्। प्रदीपं तत्र संस्थाप्य अस्त्रैस्तत्रमपूजयेत्। हते तस्मिन् कुलदीपे विघ्नैश्च परिभूयते। तदस्त्रास्त्रमन्त्रेण निखनेत् कुलदीपकम्" कुलं दीपयति अण् उप०स०। २कुलप्रकाशके कुलश्रेष्ठे त्रि०

**कुलदेवता** स्त्री० कुले पूज्या देवता। १कुलक्रमेणोपास्य देवतायाम् गौर्य्यादिषु षोडशसु मातृषु मध्ये २मातृभेदे च। ताश्च छन्दःपरिशिष्टे उक्तायथा "गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः। शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह। आदौ विनायकः पूज्यो अन्ते च कुलदेवता"

**कुलदेवी** स्त्री कुलैः कुलाचारैरुपास्या देवी। १तन्त्रोक्ते देवीभेदे कुलदेवताश्च तन्त्रराज० उक्तायथा

"त्रिपुरा त्रिपुरेशी च सुन्दरी पुरसुन्दरी। श्रीमालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी। प्रकटाख्या तथा गुप्ता तथा गुप्ततरा परा। सम्प्रदायाकुला कौला रहस्यातिरहस्यगा। परस्पररहस्या च तथा कामेश्वरी शुभा। भगमाली नित्यक्लिन्ना भैरवी वह्निसुन्दरी। महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी। नित्या नीलपताका च विजया सर्वमङ्गला। ज्वालांशुमालिनी चित्रा वशिनी शुभगाकुला। पूर्णाख्या च तथा वत्सा कामेशी मोहिनी तथा। विमला वरुणा देवी जयिनी कुलभैरवी। सर्वेश्वरी तथा कौली वागीशी सर्वकामिनी। सिद्धेश्वरी तथा चोग्रा दुर्गा महिषमर्द्दिनी। स्वप्नावती शूलिनी च मातङ्गी सुरसुन्दरी। महाकाली महोग्रा च चित्ररूपा महोदरी। प्राणविद्या तथैकाक्षी चैकपादा महाङ्कुशा। वामा शिवा तथा ज्येष्ठा सुरूपा चारुहासिनी। त्रिखण्डा त्रिशिरा गौरी विन्ध्याचलनिवासिनी। क्षोभिणी मोदिनी भद्रा ललिता बहुरूपिका। सर्व्वसम्पत्करी तारा भवानी विश्वहारिणी। कुलेश्वरी महाविद्या कथिता तव भैरव!"। कुलैः कुलजैरुपास्या देवी २वंशपरम्परया उपास्ये देवीभेदे च

**कुलद्रुम** पु० "श्लेष्मान्तकः करञ्जश्च विल्वाश्वत्थकदम्बकाः। निम्बो वटोडुम्बरौ च धात्री चिञ्चा दश स्मृताः" इत्युक्तेषु श्लेष्मान्तकादिषु दशसु [ वंशरत्नके पत्रे त्रिका०

**कुलधारक** पु०कुलं धारयति स्थिरीकरोति धृ–णिच्–ण्वुल्।

**कुलधुर्य्य** त्रि० कुलेषु धुर्य्यः अग्र्यः। कुलश्रेष्ठे

**कुलनक्षत्र** न० "वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम्। कुलानि समधिष्ण्यानि शेषाणि चाकुलानि वै" तन्त्रसा० उक्तेषु साभिजित्काष्टाविंशतिनक्षत्रमध्ये आर्द्राभिन्नसमसंख्यकेषु नक्षत्रेषु तत्फलमुक्तं तत्रैव "तिथिवारे च

नचाले अकुले स्थायिनोभयम्। कुलाख्ये जयिनो नित्यम् साम्यञ्चैव कुलाकुले"

**कुलनायिका** स्त्री॰तन्त्रोक्ते कुलैः सेव्ये नायिकाभेदे। शक्तिसाधनतन्त्रे १पटले तद्भेदादिकमुक्तं यथा "नटी कापालकी वेश्या रजकी नापिताङ्गना। ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका। मालाकारस्य कन्या-च नव कन्याः प्रकीर्त्तिताः। विशेषवैदग्ध्ययुताः सर्वाएव कुलाङ्गनाः। रूपयौवनसम्पन्ना शीलसौभाग्यशालिनी। पूजनीया प्रयत्नेन ततः सिद्धिर्भवेद्‌ध्रुवा"। अत्र विशेषयति निरुत्तरतन्त्रे १४पटले। "नटी कापालिकी वेश्या रजकी नापिताङ्गना। योगिनी श्वपची शुण्डी भूमीन्द्रतनया तथा। गोपिनी माल्यकारस्य कन्या कार्यविभेदतः। चतुर्वर्णोद्भवा रम्या कापाली सा प्रकीर्त्तिता। पूजाद्रव्यं समालोक्य वेशाचरणमिच्छति। चतुर्वर्णोद्भवा रम्या सा वेश्या परिकीर्त्तिता। पूजाद्रव्यं समालोक्य रजोऽवस्थां प्रकाशयेत्। सर्ववर्णोद्भवा रम्या रजकी सा प्रकीर्त्तिता। पूजाद्रव्यं समालोक्य कुलजा वीरमाश्रयेत्। संत्यज्य पशुभर्त्तारं कर्म्म चाण्डालिनी स्मृता। विपरीतरता पत्यौ पात्रं या परिष्टच्छति। सर्ववर्णोद्भवा रम्या सा शौण्डी परिकीर्त्तिता। सर्वदा यन्त्रसंस्कारो यस्यास्त्र परिजायते। भूमीन्द्रजा तु रम्याऽसौ सर्ववर्णोद्भवा प्रिये!। आत्मानं गोपयेद्या च सर्वदा पशुसङ्कटे। सर्ववर्णोद्भवा रम्या गोपिनी सा प्रकीर्त्तिता। पूजाद्रव्यं समालोक्य या मालां परिकीर्त्तयेत्। सर्ववर्णोद्भवा रम्या मालिनी सा प्रकीर्त्तिता"। वेश्याया विशेषस्तु तत्रैवोक्तः। "गुप्तवेश्या महावेश्या कुलवेश्या महोदया। राजवेश्या देववेश्या ब्रह्मवेश्या च सप्तधा। कुलजा गुप्तवेश्या स्यात् निर्लज्जा मदनातुरा। पशुभर्त्त्राश्रिता लोके गुप्तवेश्या प्रकीर्त्तिता। कुलजा कुलवेश्या स्यात् महावेश्या प्रकीर्त्तिता। भगलिङ्गकलाभिश्च चुम्बयेच्च पुनः पुनः। एवंविधा कुलीना चेत् ब्रह्मवेश्या प्रकीर्त्तिता। दिव्यशक्तिर्वीरशक्तिस्तासां सङ्गे प्रकीर्त्तिता। चतुर्वर्णोद्भवानाञ्च सञ्ज्ञिताः परिभाषिताः। वेश्यावद्‌भ्रमते यस्मात् तस्माद्वेश्या प्रकीर्त्तिता। वर्णसङ्करतो जाता सर्ववेश्या प्रकीर्त्तिता"। कुलकामिन्यादयोऽप्यत्र

**कुलनाश** पु॰ ६त॰। १कुलध्वंसे तत्कारणं कुलशब्दे उक्तम् तदभावकारणञ्च "यावच्च वेदधर्म्माः स्युर्यावत् स्याच्छङ्करार्च्चनम्। यावत् स्याच्छुचि तत्यञ्च तावन्न कुलनाशनम्। कुलं मूलमन्नं नाश्नाति न+अश+अच् लुप् कुमेति समासः। २उष्ट्रे पुंस्त्री॰ हेमच॰ तस्योन्नतकन्धरतया उन्नतप्रदेशस्थकण्टकादेर्भक्षणाङ्गुल्मादेरभक्षणेन तथात्वम् स्त्रियां जातित्वात् ङीष्।

**कुलनाशन** न॰ कुलं नाशयत्यनेन नश-णिच्-करणे ल्युट्। वंशध्वंससाधने। "मुसलं कुलनाशनम्। यथा च मुसलेन वृष्णिप्रभृतिकुलनाशनं तथा भा॰मौ॰१अ॰उक्तं यथा "विश्वामित्रञ्च कण्वञ्च नारदञ्च तपोधनम्। सारणप्रमुखा वीरा ददृशुर्द्वारकां गतान्। ते तान् शाम्बं पुरस्कृत्य भूषयित्वा स्त्रियं यथा। अब्रुवन्नुपसङ्गम्य दैवदण्डनिपीडिताः। इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः। ऋषयः साधु जानीत किमयं जनयिष्यति। इत्युक्तास्ते तदा राजन् विप्रलम्भप्रधर्षिताः। प्रत्यब्रुवंस्तान्मुनयो यत्तच्छृणु नराधिप!। वृष्ण्यन्धकविनाशाय मुसलं घोरमायसम्। वासुदेवस्य दायादः शाम्बोऽयं जनयिष्यति। येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः। उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्द्दनौ। समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः। जरा कृष्णं महात्मानं शयानं भुवि भेत्स्यति। इत्यब्रुवंस्ततो राजन्! प्रलब्धास्तैर्दुरात्मभिः। मुनयः क्रोधरक्ताक्षाः समीक्ष्याथ परस्परम्। तथोक्त्वा मुनयस्ते तु ततः केशवमभ्ययुः। अथाब्रवीत्तदा वृष्णीन् श्रुत्वैवं मधुसूदनः। अन्तज्ञो मतिमांस्तस्य भवितव्यं तथेति तान्। एवमुक्त्वा हृषीकेशः प्रविवेश पुरन्तदा। कृतान्तमन्यथा नैच्छत् कर्त्तुं स जगतः प्रभुः। श्वोभूतेऽथ ततः शाम्बो मुसलं तदसूत वै। येन वृष्ण्यन्धककुले पुरुषा भस्मसात्कृताः। वृष्ण्यन्धकविनाशाय किङ्करप्रतिमं महत्। असूत शापजं घोरं तच्च राज्ञे न्यवेदयन्। विषस्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत्। तच्चूर्णं सागरे चापि प्राक्षिपन् पुरुषा नृप!"

चूर्णीकृतस्य तस्य समुद्रे एरकाभावमुक्त्वा एरकाभूतेन मुसलेन ३अ॰ परस्परनाशोवर्णितः यथा "ते तु पानमदाविष्टाश्चोदिताः कालधर्म्मणा। युयुधानमथाभ्यघ्नंश्च्छिष्टैर्भाजनैस्तदा। हन्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः। तदनन्तरमागच्छन्मोचयिष्यन् शिनेः सुतम्। स भोजैः सह संयुक्तः सात्यकिश्चान्धकैः सह। व्यायच्छमानौ तौ वीरौ बाहुद्रविणशालिनौ। बहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः। हतं दृष्ट्वा तु शैनेयं पुत्रञ्च यदुनन्दनः। एरकाणान्तदा मुष्टिं

कोपाज्जग्राह केशवः। तदभून्मुषलं घोरं वज्रकल्पम-योमयम्। जघान कृष्णस्तांस्तेन ये ये प्रमुखतोऽभवन्। ततोऽन्धकाश्च भोजाश्च शैनेया वृष्णयस्तथा। जघ्नुरन्यो-न्यमाक्रन्दे मुषलैः कालचोदिताः। यस्तेषामेरकां कश्चि-ज्जग्राह कुपितो नृप!। वज्रभूतेव सा राजन्नदृश्यत तदा विभो। तृणञ्च मुषलीभूतमपि तत्र व्यदृश्यत। ब्रह्मदण्ड-कृतं सर्वमिति तद्विद्धि पार्थिव!। अविध्यन् विध्यते रा-जन्! प्रक्षिपन्ति स्म यत्तृणम्। तद्वज्रभूतं मुषलं व्यदृश्यत तदा दृढम्। अवधीत् पितरं पुत्रः पिता पुत्रञ्च भारत!। मत्ताः परिपतन्ति स्म योधयन्तः परस्परम्। पतङ्गा इव चाग्नौ ते निपेतुः कुकुरान्धकाः। नासीत् पलायने बुद्धि-र्बध्यमानस्य कस्यचित्। तत्रापश्यन्महाबाहुर्जानन् का-लस्य पर्य्ययम्। मुषलं समवष्टभ्य तस्थौ स मधुसूदनः। शाम्बञ्च निहतं दृष्ट्वा चारुदेष्णञ्च सान्वयम्। प्रद्युम्नञ्चा-निरुद्धञ्च ततश्चुक्रोध माधवः। गदं वीक्ष्य शयानञ्च भृशं कोपसमन्वितः। स निःशेषं तदा चक्रे शार्ङ्गचक्रगदा-धरः। तं निघ्नन्तं महातेजा बभ्रुः परपुरञ्जयः। दारुकश्चैव दाशार्हमूचतुर्यन्निबोध तत्। भगवन्निहताः सर्वे त्वया भूयिष्ठशो नराः। रामस्य पदमन्विच्छ तत्र गच्छाम यत्र सः।” भावे ल्युट्। २वंशनाशने च।

**कुलन्धर** पु० कुलं वंशं धारयति धृ—बा० खच् मुम् च। वंश धरे “युधिष्ठिरोलब्धराज्योदृष्ट्वा पौत्रं कुलन्धरम्” भा० १,१२,१४,

**कुलपति** पु० “मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्। अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः” पुराणोक्त लक्षणे १मुनिभेदे। “लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये। शौनकस्य कुलपतेर्द्वादश-वार्षिके सत्रे” भा०आ०१अ०१श्लो०। “ततोऽब्रवीत् कुल-पतिं पादौ संगृह्य भारत!”भा०आनु०६अ०२२०। २वंश-श्रेष्ठे च कुलनायकादयोऽप्यत्र। अश्वपत्या० अपत्यादिषु प्राग्दीव्यतीयेषु अर्थेषु अण्। कौलपत तदपत्याद्यर्थेषु।

**कुलपत्र(क)** पु० कुलं भूमिलग्नं पत्रमस्य। दमनकवृक्षे राजनि०। वा कप्। तत्रार्थे। भावप्र० कुलपुत्रक इति क्वचित्पाठे दृष्टो०।

**कुलपर्व्वत** “पु० माहेन्द्रोमलयः सह्यः शक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्व्वताः” विष्णुपु० उक्ते-षु जम्बुद्वीपस्थवर्षसीमाकारकेषु माहेन्द्रादिषु सप्तसु व-र्षाचलेषु पर्वतेषु। एतेषां यथा वर्षमर्य्यादाकारित्वं तथा इलावृतशब्दे ९८४पृ०शि० सि० वाक्येनोक्तम्। प्लक्षादि-द्वीपेषु कुलाचलाश्च विष्णुपु० दर्शिता यथा तत्र २प्लक्षद्वीपे “मर्य्यादाकारकास्तेषां तथान्ये वर्षपर्वताः। सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम!। गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा। सोमकः सुमनाः शैलो वैभ्राजश्चैव सप्तमः” शाल्मले। ३“वर्षाचलेषु रम्येषु सर्वेष्वेतेषु चान-घ!। तत्रापि पर्वताःसप्त विज्ञेया रत्नयोनयः। रसाभि-व्यञ्जकास्तेषु तथा सप्तैव निम्नगाः। कुमुदश्चोन्नतश्चैव तृतीयश्च वलाहकः। द्रोणोयत्र महौषध्यः स चतुर्थो महीधरः। कङ्कश्च पञ्चमः षष्ठो महिषः सप्तमस्तथा। कुमुद्वान् पर्वतवरः”। ४कुशद्वीपे“विद्रुमाह्वयशैलश्च द्युतिमान् पुष्पवांस्तथा। कुशेशयो हरिश्चैव सप्तमो मन्दराचलः। वर्षाचलास्तु सप्तैव तत्र द्वीपे महामुने”! ५क्रौञ्चद्वीपे “तत्रापि देवगन्धर्वसेविताः सुमनोहराः। वर्षाचला महा बुद्धे! तेषां नामानि मे शृणु। क्रौञ्चश्च वामनश्चैव तृ-तीयश्चान्धकारकः। चतुर्थो हरशैलश्च स्वभाभिर्भासव न्नभः। देवावृत् पञ्चमश्चैव तथान्यः पुण्डरीकभाङ्। ६शाकद्वीपे। “तत्रापि पर्वताः सप्त वर्षविच्छेदकारकाः। पूर्व्वस्तत्रोदयगिरिर्जलाधारस्तस्तथाऽपरः। तथा रैवतकः श्यामस्तथैवास्तगिरिर्द्विजः!। आम्बिकेयस्तथा रम्यः के-शरी पर्वतोत्तमः”। तत्तद्द्वीपस्थेषु उक्तेष्वपि सप्तसु वर्षा-चलेषु७पुष्करद्वीपे तु एकएव मानसोत्तरशैलस्तादृक् यथोक्तं भा० ५०,२०,२१, तद्द्वीपमध्ये एक एवार्वा-चीनवर्षयोर्मर्य्यादाकारकोऽयुतयोजनोच्छ्रायायामः”। विष्णुपु० भागवतयोस्तेषां नामभेदः कल्पभेदादविरुद्धः। कुलगिरिकुलाचलवर्षाचलादयोऽप्यत्र। “माहेन्द्रशुक्तिम-लयर्क्षकपारियात्राः। सह्यः सविन्ध्य इह सप्त कुलाच-लाख्याः शि०सि० इह जम्बुद्वीपे।

**कुलपालक** त्रि० कुलं पालयति पालि—ण्वुल् (कमला नेबु) १कुरम्बे पु०शब्दच० २वंशपालके त्रि०स्त्रियां टाप् अतइत्त्वम्। सा च कुलपालिकायाञ्च [स्त्रियां वा ङीप्।

**कुलपालि** स्त्री कुलं पालयति पालि—इन्। कुलवत्यां-

**कुलपुत्र** पु० कुलरक्षकः पुत्रः। वंशधरे पुत्रे ततः भावे कर्म्मणि च मनोज्ञा० वुञ्। कौलपुत्रक तद्भावे तत्-कर्म्मणि च न०

**कुलप्रसूत** त्रि० कुले सत्कुले प्रसूतः। सत्कुलजाते

**कुलवधू** स्त्री कुले गेहे एव स्थिता बधूः। गृहमात्रस्थिता-यां योषिति। “ब्रूते ब्रूतां व्रजकुलवधूः कापि साध्वी

समाये" उज्ज्वटः कुलयोषिदादयोऽप्यत्र" असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्" मनुः

**कुलभृत्या** स्त्री कुलैः वंशभवैः भृत्या भरणम् भृ—भावे क्यप् ६त०। गर्भिण्या दोहदादिदानरूपायां परिचर्य्यायाम् जटा०। कुलस्य भृत्या। २वंशभरणे च।

**कुलम्पुन** न०कुलं पुनाति पू—बा०खश् मुम् च। भारतोक्ते तीर्थभेदे "कुलम्पुने नरः स्नात्वा पुनाति स्वकुलानि च भा०व० ८३ अ०

**कुलम्भर(ल)** पु० कौ भूमौ रन्ध्रे सन्धिकरणादिव्यापारे लीयते आसक्तः ली—बा० ड लस्य रः अन्तस्थस्य तु वा रः। चौरे हारा०। [ देशादौ।

**कुलर** त्रि० कुल+अश्मादि० चतुरर्थ्यां र। कुलसन्निकृष्ट

**कुलवत्** त्रि० कुलं प्रशस्तकुलमस्त्यस्य बला० वा मतुप् मस्य वः। प्रशस्तकुलजे स्त्रियां ङीप्। सा च कुलस्त्रियां स्वकुलाचारस्थितायां स्त्रियाम्।

**कुलवर्णा** स्त्री० कुलैः वैद्यकुलैः वर्ण्णो गुणोत्कीर्त्तनं यस्याः वर्ण—भावे घञ् ३त०। रक्तत्रिवृति (लालतेओडि) राजनि०।

**कुलवार** पु० "रविश्चन्द्रो गुरुः सौरिश्चत्वारश्चाकुला इमे। "भौमशुक्रौ कुलाख्यौ तु बुधवारः कुलाकुलः" तन्त्रसा० उक्तयोः कुजशुक्रवारयोः।

**कुलविद्या** स्त्री कुलक्रमागता विद्या। १वंशक्रमागतविद्यायाम्। कुलैः स्वकुलैः शिक्षणीया विद्या। "२आन्वीक्षिकीत्रयीप्रभृतिविद्यायाम् "तमादौ कुलविद्यानामर्थमर्थविदां वरः" रघुः [ क्षीरस्वामो कुलपुरोहितादयोऽप्यत्र

**कुलविप्र** पु० कुलक्रमागतः विप्रः। वंशक्रमागते पुरोहिते

**कुलव्रत** न० कुले चर्यं व्रतम्। कुलक्रमेण कर्त्तव्ये व्रते "गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्" रघुः।

**कुलश्रेष्ठिन्** त्रि० कुलेषु श्रेष्ठी। शिल्पकुलप्रधाने अमरः

**कुलसंख्या** स्त्री कुले संख्या कीर्त्तिः। वंशमध्ये गणनायाम् वंशश्रेष्ठतायाम् "अन्ततस्तु सस्तुद्रानि कुलान्यल्पधनानि च। कुलसंख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः" मनुः

**कुलसत्व** न० कुलैः कुलजैरनुष्ठेयं सत्वम्। पित्रादिक्रमेणानुष्ठेये सहस्रवर्षसाध्ये कार्ष्णाजिनिमतसिद्धे सत्वभेदे तच्च कात्या०श्रौ० १,६,२२, दर्शितं यथा "कुलसत्वमिति कार्ष्णाजिनिः" सू०। "कार्ष्णाजिनि र्मुनिरित्याह एवं कथयति यत् कुलसत्वमेतत् सहस्रसंवत्सरं भवति कुलस्य पितृपुत्रपौत्रप्रपौत्रतत्पुत्रादिरूपस्य वंशस्यैतत्भवति न त्वेकस्य कस्यचित् असम्भवात्। मनुष्याधिकारं चैतत् प्रारब्धं चावश्यं समापनीयं नचैकः शक्नोति समापयितुमिति यथा शक्यते तथा समापनीयमिति गम्यमाने ये बहवस्ते शक्नुवन्ति तेन तत्कुलोनाः क्रमेण कैश्चिदारब्धं कैश्चिन्मध्येऽनुष्ठितं केचित् समापयिष्यन्तीत्येवं कुलसत्वं कार्ष्णाजिनिर्मन्यते" कर्कः वर्षशब्दस्य दिनपरत्व कल्पनेन कात्यायनेनेदं दूषितम्।

**कुलसम्भवः** कुलं सम्भवोऽस्य। वीज्ये कुलजाते अमरः।

**कुलसाधक** त्रि० कुलेन कुलाचारेण साधकः। तन्त्रोक्ते कुलाचारेण साधकभेदेषु तेच तन्त्रसारे दर्शिताः यथा "उपासकान्महादेव! शृणु चैकमनाः स्वयम्। मनुश्चन्द्रः कुबेरश्च मन्मथस्तदनन्तरम्। लोपामुद्रामुनिर्नन्दी शक्रः स्कन्दः शिवस्तथा। क्रोधभट्टो रुरुश्चैव पञ्चमश्च प्रकीर्त्तितः। दुर्व्वासा व्यासम्यौ च वशिष्ठश्च पराशरः। कौर्व्वौर्वकृपिर्यमश्चैव निर्ऋतौर्वरुणस्तथा। वायुर्विष्णुः स्वयम्भूश्च भैरवो दानवस्तथा। अनिरुद्धो भरद्वाजो दक्षिणामूर्त्तिरेव च। गणपाः कुलपाश्चैव लक्ष्मीर्गङ्गा सरस्वती। रात्रीदेवः प्रमत्तश्च उन्मत्तः कुलभैरवः। क्षेत्रपालो हनूमांश्च दक्षो गरुड़ एव च। काश्यपः कौशकुत्सौ च जमदग्निर्भृगुस्तथा। बृहस्पतिर्यदुश्रेष्ठो दत्तात्रेयो युधिष्ठिरः। अर्जुनो भीमसेनश्च द्रोणाचार्य्यौ वृषाकपिः। दुर्य्योधनस्तथा कुन्ती सीता च रुक्मिणी तथा। सत्यभामा द्रौपदी च उर्वशी च तिलोत्तमा। पुष्पदन्तो महाबुद्धो बाणः कालश्च मन्दरः। कैलासः क्षीरसिन्धुश्च उदधिर्हिमवांस्तथा। नारदश्च महावीराः कामतो वीरसाधकाः। महाविद्याप्रसादेन स्वस्वकर्म्मसमन्विताः। एतेषां वत्स! नामानि विद्याविद्योपसेविनाम्। प्रातःकाले शुचिर्भूत्वा यः पठेत् प्रयतात्मवान्। पूजायां वा शुचिर्भूत्वा प्रसीदामि कुलान्वये। अशुचिर्वानिरालम्बश्चमालम्ब्य च कुलान्तिके। नित्यपूजाफलं तस्य ददामि वरमीप्सितम्।" कुलवीरकुलोपासकादयोऽप्यत्र

**कुलसौरभ** न०कुलं श्रेष्ठं सौरभमस्य। मरुवकवृक्षे शब्दमा०

**कुलस्त्री** स्त्री कुले स्वच्छे स्थिता स्त्री। कुलपालिकायाम् अमरः

**कुलहुण्डक** पु० कुलाय संघाय हुण्डते हुडि—संघे ण्वुल्। आवर्त्ते हारा० कुलहुण्डकोऽप्यत्र त्रि० शब्दा०।

**कुलाकुल** त्रि० तन्त्रोक्तेषु तत्संज्ञकतिथिवारनक्षत्रेषु। कुलाचारशब्दे विवृतिः

**कुलाकुलचक्र** न० कुलञ्च अकुलं कुलाकुलम् तयोर्विचारार्थं चक्रम्। तन्त्रोक्ते ग्राह्यमन्त्रस्य शुभाशुभताज्ञानार्थे चक्रभेदे तद्विवृतिः तन्त्रसारे "कुलाकुलस्य भेदं हि वक्ष्यामि मन्त्रिणामिह"। इत्युपक्रम्य निबन्धे "वाय्वग्निभूजलाकाशपञ्चाशल्लिपयः क्रमात्। पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धिसम्भवाः (यादयः)। कादयः पञ्चशः पञ्चलसहान्ताः समीरिताः"। अ आ ए क च ट त प य षा मारुताः। इ ई ऐ ख छ ठ थ फ र क्षा आग्नेयाः। उ ऊ ओ ग ज ड द ब ल ला पार्थिवाः। ऋ ॠ औ घ झ ढ ध भ व सा वारुणाः। ऌ ॡ अं ङ ञ ण न म श हा नाभसाः। "साधकस्याक्षरं पूर्वं मन्त्रस्यापि तदक्षरम्। यद्येकभूतदैवत्यं जानीयात् स्वकुलं हि तत्। भौमस्य वारुणं मित्रमाग्नेयस्यापि मारुतम्। मारुतं पार्थिवानाञ्च शत्रुराग्नेयमम्भसाम्"। चकारादाग्नेयं पार्थिवानां शत्रुः। तथाच रुद्रयामले "पार्थिवे वारुणं मित्रं तैजसं शत्रुरीरितः। ऐन्द्रवारुणयोः शत्रुर्मारुतं स प्रकीर्त्तितः। नाभसं सर्वमित्रं स्यात् विरुद्धे नैव शीलयेत्। मित्रे सिद्धिः समाख्याता उदासीने न किञ्चन। मृत्युर्व्याधिरमित्रे च स्वकुले सिद्धिरुत्तमा"।

**कुलाङ्गार** न० कुलस्याङ्गारमिव उपमितस०। कुलाधमे वंशदूषके "धक्ष्यति स्म कुलाङ्गारं चोदितो मे ततद्रुहम्" भाग० १।१४।३७।

**कुलाचार** पु० ६त०। कुलोचिते धर्मे 'जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेव च। क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते। ब्रह्मबुद्ध्या निर्विकल्पमेतेष्वाचरणञ्च यत्। कुलाचारः स एवोक्तो धर्मकामार्थमोक्षद" इत्युक्तरूपे सर्वत्र ब्रह्मदृष्टिसाधके २ज्ञानभेदे तन्त्रोक्ते ३आचारभेदे च तन्त्रसारे तदाचारप्रकारो दर्शितो यथा "कालीतन्त्रे "अथाचारं प्रवक्ष्यामि यत्कृतेऽमृतमश्नुते। सर्वभूतहिते युक्तः समयाचारपालकः। अनित्यकर्मसंत्यागी नित्यानुष्ठानतत्परः। मन्त्राराधनमात्रेण शिवभावेन तत्परः। परस्यान्देवतायान्तु सर्वकर्मनिवेदकः। अन्यमन्त्रार्च्चनश्रद्धा अन्यमन्त्रप्रपूजनम्। कुलस्त्रीवीरनिन्दाञ्च तद्द्रव्यस्यापहारणम्। स्त्रीषु रोषं प्रहारञ्च वर्ज्जयेन्मतिमान् सदा। स्त्रीमयञ्च जगत् सर्वं स्वयंभूवत् तथा भवेत्। पेयञ्चव्यं तथा चोष्यं भक्ष्यं लेह्यं दृढं सुखम्। सर्वञ्च युवतीरूपं भावयेन्मतिमान् सदा। कुलजां युवतीं वीक्ष्य नमस्कुर्यात् समाहितः। यदि भाग्यवशाद्देवि! कुलदृष्टिः प्रजायते। तदैव मानसीं पूजां तत्र तासां प्रकल्पयेत्"। तासां भगादिदेवीनाम्। तास्तु "भगिनीं भगचिन्ताञ्च भगाख्यां भगमालिनीम्। भगदत्तां भगाङ्गाञ्च भगकर्णां भगत्वचाम्। भगनासां भगस्तनीं भगस्थां भगसर्पिणीम्। संपूज्य ताभ्योगन्धाद्यैर्मानसैर्गुरुमेव च। नमस्कृत्य पुमानेवं क्षमस्वेति ततः सुधीः। बालां वा यौवनोन्मत्तां वृद्धां वा सुन्दरीं तथा। कुत्सितां वा महादुष्टां नमस्कृत्य विभावयेत्। तासां प्रहारं निन्दाञ्च कौटिल्यमप्रियन्तथा। सर्वथा न च कुर्य्यात्तु चान्यथा सिद्धिरोधकृत्। स्त्रियोदेवाः स्त्रियः प्राणास्त्रियश्चैव विभूषणम्। स्त्रीसङ्गिना सदा भाव्यमन्यथा स्वस्त्रिया अपि। विपरीतरता सा तु भविता हृदयोपरि। तद्धस्तार्चितं पुष्पं तद्धस्तार्चितं जलम्। तद्धस्तार्चितं द्रव्यं देवताभ्यो निवेदयेत्। स्त्रीद्वेषो नैव कर्त्तव्यो विशेषात् पूजनं महत्। जपस्थाने महाशङ्खं निवेश्योर्द्धं जपञ्चरेत्। स्त्रियं गच्छन् स्पृशन् पश्यन् विशेषात् कुलजां शुभाम्। भक्ष्यं ताम्बूलमन्यच्च भक्षद्रव्यं यथारुचि। भक्त्याप्यशेषभक्ष्याणि भुक्त्वा शेषं जपञ्चरेत्"। कालीतन्त्रे "दिक्कालनियमोनात्र स्थित्यादिनियमोन च। जपे न कालनियमोनार्चादिषु बलिष्वपि। स्वेच्छानियम उक्तश्च महामन्त्रस्य साधने। वस्त्रासनस्थानदेहागारपुष्पादिवारिणः। शुद्धिं नचाचरेत्तत्र निर्व्विकल्पं मनश्चरेत्"। कुलार्णवे "कुलाचारमदृष्ट्वा भक्त्या पापविशुद्धये। याचयेदमृतं कौलं तद्भात्रे जलं पिबेत्। कुलाचारेण यद्दत्तं कृत्वा पात्रेण भक्षितः। नमस्कृत्य च दृष्ट्वा रोषादन्यथा नरकं व्रजेत्"। अन्यत्रापि "न वृथा गमयेत् कालं द्यूतक्रीडादिना सुधीः। गमयेद्देवतापूजाजपयागस्तवादिना। वीराणां जपयज्ञस्तु सर्वकाले प्रशस्यते। सर्वदेशे सर्वपीठे कर्त्तव्यो नात्र संशयः"। शिवागमे "शक्तिः शिवः शिवः शक्तिः शक्तिर्ब्रह्मा जनार्द्दनः। शक्तिरिन्द्रो रविः शक्तिः शक्तिश्चन्द्रो ग्रहा ध्रुवम्। शक्तिरूपं जगत् सर्वं योन जानाति नारकी"। वीरतन्त्रे "स्नानादि मानसं शौचं मानसं प्रवरोजपः। मानसं पूजनं दिव्यं मानसन्तर्पणादिकम्। सर्व एव शुभः कालो नाशुभोविद्यते क्वचित्। न विशेषोदिवा रात्रौ न सन्ध्यायान्महा निशि। सर्वदा पूज-

येद्दोमस्नातः कृतभोजनः । महानिश्यशुचौ देशे बलिं मन्त्रेण दापयेत्" । यत्तु "रात्रावेव महापूजा कर्त्तव्या वीरवन्दिते ! । न दिने सर्व्वथा कार्य्या शासनान्मम सुव्रते" ! तत् पुनः कुलदेवताविषये । महानिशा तु तत्रैव "अर्द्धरात्रात् परं यच्च मुहूर्त्तद्वयमेव च । सा महारात्रिरुद्दिष्टा तद्दत्तमक्षयन्तु वै" गान्धर्व्वे, "पृथ्वीमृतुमतीं वीक्ष्य सहस्रं यदि नित्यशः । तदा वादी स्वसिद्धान्तहतः क्षितितलं विशेत्" । "पर्व्वते हस्तमारोप्य निर्भयोयतमानसः । कवितां लभते सोऽपि अमृतत्वञ्च गच्छति" । अत्रापि सहस्रमिति सम्बन्धः । पृथ्वीं स्त्रियं, नित्यश इति षोड़शदिनं यावत् । पर्वतं स्तनम् । अन्यच्च नीलतन्त्रे "पद्मं दृष्ट्वा तथा बिम्बं खञ्जनं शिखरन्तथा । चामरं रविबिम्बञ्च तिलपुष्पं सरोरुहम् । त्रिशूलं वीक्ष्य जप्त्वा च शनशः शुद्धभावनः । सुमुखं प्रसादं सुखं सुलोचनं सुहास्यकम् । सुवेशं सुगतिं गन्धं सुगन्धं सुखमेव च । लभते च यथासंख्यं शृणु पार्वति ! सादरम्" । पद्मं मुखं, बिम्बमधरं, खञ्जनञ्चक्षुः, शिखरं मस्तकं, चामरं केशं, रविबिम्बं सिन्दूरं, तिलपुष्पं नासिकां, सरोरुहं नाभिं, त्रिशूलं त्रिवेणीम्, सादृश्यत्वात् । भावचूड़ामणौ "एकाकी निर्ज्जने देशे श्मशाने विजने वने । शून्यागारे नदीतीरे निःशङ्कोविहरेत् सदा । महाचीनद्रुमे देवीं ध्यात्वा तत्र प्रपूजयेत् । तद्द्रुमोद्भवपुष्पेण पूजयेद्भक्तिभावतः । स भवेत् कुलदेवस्य कुलद्रुमगतः शुचिः । अश्वत्थरोर्म्महापीठे देवीं ध्यात्वा यथाविधि । तत्सुधारसधारेण तर्पयेन्मारकाननम् । महाचीनद्रुमलतावेष्टितः साधकोत्तमः । रात्रौ यदि जपेन्मन्त्रं सवै कल्पद्रुमोभवेत् । तिथिक्रमेण संख्याभिर्लताभिर्वेष्टितो यदि । तदा मासेन सिद्धिः स्यात् सहस्रजपमानतः । अष्टम्याञ्च चतुर्द्दश्यां द्विगुणं यदि दृश्यते । तत्रैव महती सिद्धिर्द्देवतानां सुदुर्लभा" । कुलचूड़ामणौ "शृणु पुत्र ! रहस्यं मे समयाचारसम्भवम् । येन हीना न सिध्यन्ति जन्मकोटिसहस्रतः । मानवः कुलशास्त्राणां कुलचर्य्यानुचारिणम् । उदारचित्तः सर्व्वत्र वैष्णवाचारतत्परः । परनिन्दासहिष्णुः स्यादुपकाररतः सदा । पर्व्वते विपिने वापि निर्ज्जने शून्यमण्डपे । चतुष्पथे कला(स्त्री)मध्ये यदि दैवाद्गतिर्भवेत् । क्षणं स्थित्वा मनुं जप्त्वा नत्वा गच्छेद्यथासुखम् । छत्रं वीक्ष्य महाकालीं नमस्कुर्य्यादलक्षितम् । क्षेमङ्करीं तथा वीक्ष्य जम्बुकीं यमदूतिकाम् । कुररश्येनभूकाकी कृष्णमार्ज्जारमेव च", दृष्ट्वा नमस्कुर्य्यादिति शेषः । मन्त्रस्तु "कृशोदरि ! महाचण्डे ! मुक्तकेशि ! बलिप्रिये ! । कुलाचारप्रसन्नास्ये ! नमस्ते शङ्करप्रिये ! । श्मशानञ्च शवं दृष्ट्वा प्रदक्षिणमनुव्रजन् । प्रणम्यानेन मनुना मन्त्री सुखमवाप्नुयात् । घोरदंष्ट्रे ! करालास्ये ! किटिशब्दनिनादिनि ! । घोरघोररवास्फाले ! नमस्ते ! चितिवासिनि ! । रक्तवस्त्रं तथा पुष्पं विलोक्य त्रिपुरां तथा । प्रणमेद्दण्डवद्भूमौ इमं मन्त्रं पठेन्नरः । बन्धूकपुष्पसङ्काशे त्रिपुरे ! भयनाशिनि ! । भाग्योदयसमुत्पन्ने ! नमस्ते वरवर्णिनि ! । कृष्णवर्णं तथा पुष्पं राजानं राजपूरुषम् । हस्त्यश्वरथशस्त्राणि फलकान् वीरपूरुषान् । महिषं कुलदेवञ्च दृष्ट्वा महिषमर्द्दिनीम् । प्रणम्य जयदुर्गां वा स च विघ्नैर्न्न लिप्यते । जय ! देवि ! जगद्धात्रि ! त्रिपुराद्ये ! त्रिदैवते ! भक्तेभ्योवरदे ! देवि ! महिषघ्नि ! नमोऽस्तु ते । मद्यभाण्डं समालोक्य मत्स्यं मांसं वरस्त्रियम् । दृष्ट्वा च भैरवीं देवीं प्रणम्य विलिखेन्मनुम् । घोरविघ्नविनाशाय कुलाचारसमृद्धये ! । नमामि ! वरदे ! देवि ! कुण्डलाभ्यां विभूषिते ! । रक्तधारासमाकीर्णवदने ! त्वां नमाम्यहम् । सर्वविघ्नहरे ! देवि ! नमस्ते हरवल्लभे ! । एतेषां दर्शने चैव यदि नैवं प्रकुर्वते । शक्तिमन्त्रं पुरस्कृत्य तस्य सिद्धिर्न्न जायते" तथा कुलचूड़ामणौ "कुलवारे कुलाष्टम्यां चतुर्दश्यां विशेषतः । योगिनीपूजनन्तत्र प्रधानं कुलपूजनम् । यथा विष्णुतिथौ विष्णुः पूजितो वाञ्छितप्रदः । तथा कुलतिथौ दुर्गा पूजिता वरदायिनी । कुलवारादिनियमोजामले "रविश्चन्द्रो गुरुः सौरिश्चत्वारश्चाकुलाह्वये । भौमशुक्रौ कुलाख्यौ हि बुधवारः कुलाकुलः । द्वितीया द्वादशी षष्ठी कुलाकुलमुदाहृतम् । विषमा स्त्वाकुलाः सर्व्वाः शेषाश्च तिथयः कुलाः" विषमाः प्रतिपत् तृतीया पञ्चमी सप्तमी नवमी एकादशी त्रयोदशी पञ्चदशी चकुलाख्या तद्भिन्नाः सर्व्वाः शेषास्तु तिथयः कुलाः । "वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम् । कुलानि समधिष्ण्यानि शेषाणि च कुलानि च । तत्फलमाह तत्रैव "तिथिवारे च नक्षत्रे चाकुले स्थायिनो भयम् । कुलाख्ये जयिनो नित्यं साम्यञ्चैव कुलाकुले" । एवं कुलवारादिकं ज्ञात्वा साधकः कर्मकुर्य्यात्" । विस्तृतिस्तु आगमे दृश्या ।

**कुलाचार्य्य** पु० कुलक्रमागतः आचार्य्यः । १कुलगुरौ कुलस्य

वंशस्य व्याख्यायामाचार्य्यः। आधुनिककुलख्यापके विप्र-भेदे। (घटक) [भेदे शब्दमा० स्त्रियां जातित्वात् ङीष्

कुलाट पुंस्त्री कुलेन संघेनाटति अट—अच् श त०। क्षुद्रमत्स्य

कुलाय पु० कुलं पक्षिसंघातोऽयतेऽत्र अय—घञ्। १पक्षिनिलये नीडे, अमरः "खगकुलाय कुलायनिलायिताम्" माघः वेदे तस्य क्लीवत्वमपि कुलायिनीशब्दे ता—ब्रा० वाक्ये उदा० दृश्यम्। २स्थानमात्रे मेदि० कौ लायो-गतिरस्मात्। ३ देहे न०।

कुलायस्थ पुंस्त्री कुलाये नीडे तिष्ठति स्था—क ७त०। नीडस्थे पक्षिमात्रे शब्दच० स्त्रियां जातित्वेऽपि संयोगोपधत्वात् टाप्। कुलायवासीत्यादयोऽप्यत्र स्त्रियां ङीप्

कुलायिका स्त्री कुलायः पक्षिवासस्थानं विद्यतेऽस्याम् ठन्। पक्षिशालायां (चिड़ियाखाना)। त्रिका०।

कुलायिनी स्त्री व्युत्पत्तिः मा०भाष्योक्ता। त्रिवृत्स्तोमस्य विष्टुतिभेदे तत्प्रकारादिकं ताण्ड्य०ब्रा०३अ० दर्शितं यथा।

"अथ कुलायिनीं विष्टुतिन्दर्शयति" माधवभाष्यम्

"तिसृभ्यो हिङ्करोति स पराचीभिस्तिसृभ्यो हिङ्करोति या मध्यमा सा प्रथमा, योत्तमा सा मध्यमा, या प्रथमा सोत्तमा, तिसृभ्यो हिङ्करोति योत्तमा सा प्रथमा, या प्रथमा सा मध्यमा, या मध्यमा सोत्तमा, कुलायिनी त्रिवृतो विष्टुतिः" ब्रा०

"परिवर्त्तिन्यादिव प्रथमः पर्य्यायः पराचीभिः। द्वितीये पर्य्याये तृचस्य या मध्यमा ऋक् सा प्रथमा कार्य्या। योत्तमा सा मध्यमा कार्य्या। या प्रथमा सोत्तमा कार्य्या। तृतीयः पर्य्यायः निगदसिद्धः। कुलायिनी कुलायो नीडं पक्षिणां निवासस्थानं तद्वया व्यस्ततृणादिनिर्म्मितम् एवं व्यत्यासयुक्ता ऋचः कुलायास्तैस्तद्वती कुलायिनी एतत्संज्ञा त्रिवृत्स्तोमस्य विष्टुतिरियम्"

"अस्यां विष्टुतौ कोऽधिकारीत्यत आह" भा०

"प्रजाकामो वा पशुकामो वा स्तुवीत प्रजा वै कुलायम्पशवः कुलायङ्कुलायमेव भवति" ब्रा०

"प्रजानाम्पशूनाञ्च कुलायवदवस्थितिहेतुत्वात् कुलायत्वेन स्तुतिः। कुलायिन्या स्तुवानोऽपि प्रजानां पशूनाञ्च कुलायमेव आश्रयभूतो भवत्येव"।

"पुनरप्यधिकारिविशेषं दर्शयति" भा०

"एतामेवानुजावराय कुर्य्यादेव तासामेवाग्रं परियतीनां प्रजानामग्रम्पर्य्येति" ब्रा०

"अनु पश्चाज्जायत इत्यनुजः कनीयान् सहि निकृष्टः तस्मादप्यवरो निकृष्टः अनुजावरस्तादृशाय यजमानायेति। अग्रं परियतीनां लोके याः प्रजाः अग्रं वयोगुणादिभिः श्रेष्ठपदं परियन्ति परितो गच्छन्ति एतासामेव श्रैष्ठ्यं परिगच्छन्तीनां प्रजानामग्र्यो स यजमानः अग्रं श्रेष्ठं पदं पर्य्येति परिगच्छति सर्व्वोत्कृष्टो भवतीत्यर्थः"

"सत्रेष्वहीनेषु च बहूनां यजमानानां फलसाम्यात् कुलायिनीं विधत्ते" भा०

"एतामेव बहुभ्यो यजमानेभ्यः कुर्य्यात् सर्व्वा अग्रिया भवन्ति सर्व्वा मध्या सर्व्वा उत्तमाः। सर्व्वानेवैनान् समावद्भाजः करोति नान्योन्यमपन्नते सर्व्वे समावदिन्द्रिया भवन्ति" ब्रा०

"एतामेव कुलायिनीन्त्रिवृतो विष्टुतिं बहुभ्यो यजमानेभ्यः उद्गाता कुर्य्यात् यत् यस्माद्धेतोः तृचगताः सर्व्वा ऋचः अग्रिया मुख्याः प्रथमा भवन्ति सर्व्वासु मध्ये वर्त्तमाना भवन्ति सर्व्वाश्चोत्तमा भवन्ति तद्यथा प्रथमे पर्य्याये प्रथमैव प्रथमा भवति। मध्यमे तु मध्यमा प्रथमा भवति। उत्तरे उत्तमा प्रथमा भवति। एवं सर्व्वासां प्राथम्यं जातम्। तथा प्रथमपर्य्याये मध्यमैव मध्यमा द्वितीये पर्य्याये उत्तमैव मध्यमा तृतीये पर्य्याये प्रथमैव मध्यमा। एवं सति तिस्रोऽपि मध्यमाः सम्पन्नाः। तथा प्रथमे पर्य्याये उत्तमोत्तमा भवति। द्वितीये पर्य्याये प्रथमैवोत्तमा भवति। तृतीये पर्य्याये मध्यमैवोत्तमा भवति। एवं सर्व्वा अप्युत्तमाः सम्पन्नाः। यस्मादेताः सर्व्वा ऋचः समानरूपाः ततो हेतोरनया विष्टुत्या सर्व्वानेवैनान् यजमानानुद्गाता समावद्भाजः समावच्छन्दः समपर्य्यायः समं फलं भजन्त इति समावद्भाजः साम्येन फलभाजः करोति। अतएव नान्योन्यमपन्नते परस्परञ्च हिंसन्ति। तथा सर्व्वे यजमानाः समावदिन्द्रियाः समावद्वीर्य्याः समानसामर्थ्या भवन्ति"।

"फलान्तरमाह" भा०

"वर्षुकः पर्ज्जन्यो भवतीमे हि लोकास्त्र्यक्षरान् हिङ्कारेण व्यतिषजति" ब्रा०

"लोकस्थानीयानां तिसृणामृचामादौ प्रयुक्तेनैकेनैव हिङ्कारेण व्यतिषञ्जनात् संयोजनात् तयाणां लोकानां परस्परमुपकार्य्योपकारकभावो न बाधित इति पर्ज्जन्यो वर्षणशीलो भवतीत्यर्थः"।

"अस्मामपि विष्टुतौ बहुदोषाः सम्भवन्तीत्याह" भा० "पापवसीयसन्तु भवति" ब्रा०

"तुशब्दः फलवैलक्षण्यद्योतनार्थः। पापं प्रसिद्धं वसीयः पुण्यं तदुभयमेकाश्रयं भवति। इतरत् उद्यतीवाक्यशेषवत् व्याख्येयम्। नञः भावोत्र विशेषः। इत्थं विष्टुतयस्तिस्रो विहिताः, तिसृष्वपि तासु फलविशेषश्रवणाच्चिन्दादर्शनाच्च समानफलत्वात्सर्वा नित्याः, यत्र विशेषादेशः क्रियते निमित्तं वा कामो वा श्रूयते ततोऽन्यः नित्यः। प्रयोगे आद्याभिरेताभिरेव स्तुतिभिः स्तोमसम्पादनं कार्य्यं, तदाह सूत्रकृत्। "प्रथमाभिर्विष्टुतिभिः स्तोमविधानमनादेशे ताः पच्याः सर्वाभिप्रायाश्चेति"। पुनरपि यथाभिषं या विदध्यादित्यादिना स्वण्डशेषेण बहवः पच्याः सूत्रकृतोपन्यस्ताः ते तत्रैव बोद्धव्याः। नन्वेतास्वपि प्रत्येकं निन्दादर्शनात् कथमासां नित्यत्वम्। नैष दोषः, उद्यत्यान्नायत् यो दोष उक्तः अवर्षुकः पर्ज्जन्यो भवतीति, स कुलायिनीपरिपक्षे परिह्रियते। यत्र हि वर्षुकः पर्ज्जन्यो भवतीत्याम्नातम्। यत्तु कुलायिन्यां दोषदर्शनं पापवसीयसन्तु भवत्यधरोत्तरमित्यादि तदुद्यतीप्रयोगेण विहृतं तत्र हि पापवसीयसी विष्टुतिरिति सा श्रूयते स्वस्त्येव तु पापवसीयसन्तु भवति"।

"अधरोत्तरमपायगतो रुध्यतेवगच्छत्यपरुद्धः पापीयाञ्छ्रेयांसमभ्यारोहति जनता जनतामभ्येत्यन्योन्यस्य प्रजा आददते न यथा चेतं कल्पन्ते" ब्रा०

"प्रथमाया मध्यमायाश्चान्ते प्रयोग इति यदस्ति तद्देतदधरोत्तरमनुष्ठानं यस्मिन् देशे क्रियते तत्र वा ईश्वरा पशूर्निर्मृज इति परिवर्त्तिन्यां यदपशुलक्षणं दोषदर्शनं तदुद्यत्यां परिहृतं भवति। एषा वै प्रतिष्ठिता विष्टुतिरिति, तत्र हि वाक्यशेषः प्रजापशुसम्बद्धा हि प्रतिष्ठितो भवतीति"।

एतत्सामयोनिः सूक्तविशेषः। तत्पाठप्रकारः साम संहिताभाष्ये उक्तोयथा "सामगानाद्युत्तरापन्ये तृचात्मकानि सूक्तान्याम्नातानि यथा "उपास्मै गायता नरः" इत्याद्यं सूक्तं "दविद्युतत्या रुचा" इति द्वितीयं "पवमानस्य ते कव" इति तृतीयम्" तच्च उद्यतीशब्दे ११८३पृ० दर्शितम्। एवमुद्यती विष्टुतिरुक्ता "एवं परिवर्त्तिनी कुलायिनीति द्वे विष्टुती भवतः "इति इत्युक्त्वा परिवर्त्तिन्या विष्टुतेः प्रकारमुक्त्वा कुलायिन्याः प्रकारकथनाय प्रागुक्तं ता० ब्रा० वाक्यमुदाहृत्य व्याख्यातम्। अत्र प्रथमसूक्ते "पराचीभिः अनुक्रमेणाम्नाताभिः। तेन पाठक्रमएव। द्वितीये पर्य्याये मध्यमोत्तमप्रथमाः। तृतीयेतूत्तमाद्यनामध्यमा इत्येवं व्यत्यासेन" मन्त्राः (पूर्वोक्ताः) बोध्याः

२कुलाययुक्ते त्रि० "जज्ञानं प्रथमः सीद योनिम्। कुलायिनं घृतवन्तम् सवित्रे" ऋ० ६।१५।१६। "कुलायिनं गुग्गुल्वादिसंभरणोपेतम् तथा च श्रूयते "कुलायमिव ह्येतद्यज्ञे क्रियते यत् पैतदारवाः परिधयो गुग्गुलूर्णास्तुकासुगन्धितेजनानि" ऐत०ब्रा०" भा०।

**कुलाल** पुंस्त्री कुल–कालन्, कुलमलति अल–अण्,कुलमालाति आ+ला–क–वा। १कुम्भकारे, (कुमार) अमरः "कुलालजनकोऽपरः भाषा० "नमः कुलालेभ्यः कर्म्मारेभ्यश्च" यजु० १६।२७। २कुक्कुभपक्षिणि मेदि० जातित्वात् स्त्रियां ङीष्। ततः तेन कृतमित्यर्थे संज्ञायां कुलाला० वुञ्। कौलालक तत्कृते शरावादौ त्रि०

**कुलालादि** पु० संज्ञायां तेन कृतमित्यर्थे वुञ्प्रत्ययनिमित्ते पाणिन्युक्ते शब्दगणभेदे स च गणः "कुलाल वरुड चण्डाल निषाद कर्म्मार सेना सिरिन्ध्र सैरिन्ध्र देवराज परिषत् बधू मधु रुरु रुद्र अनडुह् ब्रह्मन् कुम्भकार श्वपाक" कौलालकं वारुडकम् इत्यादि

**कुलाली** स्त्री कुलमलति अल–अण् ङीप्। १नीलोपलभेदे, कपित्थाञ्जनप्रस्तरभेदे, अमरः २आरण्यकुलत्थिकायाम्, राजनि० ३कुम्भकारभार्य्यायाञ्च। स्वार्थे क ह्रस्वः। कुलालिकाप्यत्र हेमच०

**कुलाह** पुंस्त्री० कुलमाहन्ति आ+हन–ड। ईषत्पीतवर्णे कृष्णजानौ अश्वे हेमच० ततः संज्ञायां कन्। २कृकलासे, (राङ्गाकुलेखाड़ा) इति ख्याते ३शाकभेदे शब्दमाला। "आमवातरक्तवातरोगनाशी कुलाहकः" राजवल्लभः [ वृक्षभेदे रत्नमाला

**कुलाहल** पु० कुलमाहलति सद्दते अच्। (कुकुरसोङ्गा)

**कुलि** पु० कुल–इन् किच्च। १हस्ते त्रिका०। २कण्टकारिकायां स्त्री शब्दरत्ना० कृदिकारान्तत्वात् वा ङीप्।

**कुलिक** त्रि०कुलमधीनत्वेन प्राधान्येन वास्त्यस्य ठन्। १कुलश्रेष्ठे मेदि०२शिल्पिकुल,प्रधाने अमरः। (कुलेखाड़ा)इति प्रसिद्धे ३शाकभेदे पु० मेदि० महानागान्तर्गते ४नागभेदे पु०"शेषः पद्मो महापाद्मः कुलिकः शङ्खपालकः। वासुकिस्तक्षकश्चैव कालियोमणिभद्रकः। ऐरावतो धृतराष्ट्रः

कर्कोटकधनञ्जयौ" तिथित० पु० "ततोऽधस्तात् पाताले नागलोकपतयो वासुकिप्रमुखाः शङ्खकुलिकमहाशङ्ख श्वेतधनञ्जयधृतराष्ट्रशङ्खचूड़कम्बलाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसन्ति" भाग० ५।२४।२। "कुलिकोऽर्द्धचन्द्रमौलिर्ज्वालाधूमसमप्रभः" हेमा० तद्रूपमुक्तम्। तन्त्रे तु तस्य पाटलतोक्ता। उपताराशब्दे १०५६पृ० तद्वाक्यमुक्तम्ः "भुजेषु नागः कुलिकोऽङ्गदोमतः"। तस्य उपताराङ्गदभूषणत्वमुक्तम्। रव्यादिवारेषु दिवारात्र्योः ५दुष्टमुहूर्त्तभेदे यथाह मुहु० चि० "शक्रार्कदिग्वसुरसाब्ध्यश्विन्यः कुलिका रवेः। रात्रौ निरेकास्तिथ्यंशाः शनौ चान्त्योऽपि निन्दितः"। रविमारभ्य सर्ववारेषु क्रमादुक्तसंख्यास्तिथ्यंशामुहूर्त्ताः कुलिकाः स्युः। यथा रवौ दिने १४,मुहूर्त्तः चन्द्रे १२, मङ्गले १०, बुधे ८, गुरौ ६, शुक्रे ४, शनौ २कुलिकः रात्रावेते निरेकाः कार्य्याः। यथा रवौ १३, चन्द्रे ११, भौमे ९,बुधे ७,गुरौ ५,शुक्रे ३,शनौ १,शनौ तु अन्त्यः पञ्चदशमुहूर्त्तोऽपि कुलिकः। एते निन्दिताः। अस्यापवादमाह गुरुः "वारेशे सबले चापि बलाढ्ये लग्नगे शुभे। कुलिकोद्भवदोषस्तु विनश्यति न संशयः। शुभे केन्द्रगते चन्द्रे शुभांशे वा शुभेक्षिते। लग्नगे सबले वापि कलिकस्तु विलीयते" अन्यत्र दोषमाह वशिष्ठः "निधनं प्रहरार्द्धे तु निःस्वत्वं यमघण्टके। कुलिके सर्वनाशः स्यात् रात्रावेते न दोषदाः" रात्रावेते न दोषदा इत्यस्यापवादो रत्नकोषे "तमस्विनीगम्यमुपेत्य वारदोषास्तथा शक्तिमनाप्नुवन्तः। अत्यं समासाद्य विलासिनीनां कटाक्षबाणाइव निष्फलाः स्युः"न वारदोषाः प्रभवन्ति रात्रौ देवेज्यदैत्येज्यदिवाकराणाम्। दिवा शशाङ्कार्कजभूसुतानां सर्वत्र निन्द्यो बुध० वारदोषः"। शुभकर्यानामावश्यकत्वे देशभेदेनापवादमाह गर्गः। "विन्ध्यस्योत्तरकूले तु यावदातुहिनाचलम्। यमघण्टकदोषोऽस्ति नान्यदेशेषु विद्यते। मत्स्याङ्गमगधान्ध्रेषु यमघण्टस्तु दोषकृत्। काश्मीरे कुलिकं दुष्टमर्द्धयामस्तु सर्वतः"। कुलिकस्य विशेषप्रयोजनन्तु "जपित्वा सितगुञ्जानां कुडकं कुलिकोदये" शारदायाम् नवदुर्गाभिचारकर्म्माङ्गतयोक्तम्। तट्टीकायां राघवभट्टेन च "मन्वर्कदिग्वसुतुवेदपक्षैरकोन्मुहूर्त्तैः कुलिका भवन्ति। दिवा निरेकैरथ यामिनीषु ते गर्हिताः कर्म्मसु शोभनेषु" इत्युक्तम् निरेकैः पूर्व्वोक्तमन्वादिमुहूर्त्तैरेकोनैरित्यर्थः" "न्यूनाधिमासकुलिकप्रहरार्द्धपातविष्कम्भवज्रघटिकात्रयमेव वर्ज्यम्" मुहु०चि० तस्य सर्वकर्म्मणि वर्ज्जनीयतामाह

**कुलिङ्ग** पु० कौ पृथिव्यां लिङ्गति चरणार्थं गच्छति अच्। १चटके, शब्दचि० २धूम्याटे, (फिङ्गा) अमरः भूमिप्रत्यासन्नतया धान्यादिस्थलचारिणि ३खगमात्रे च। ४कुत्सितलिङ्गे न०। ब०। ५तद्वति त्रि०। ६कर्कटशृङ्ग्याम् स्त्री गौरा० ङीष्। स्वार्थे क। कुलिङ्गक चटके हेमच०।

**कुलिङ्गाक्षी** स्त्री० कुलिङ्ग कुत्सितलिङ्गमक्षी वफलमस्याः षच् समा० ङीष्। (पेटारी) पटिकाख्ये रत्नमाला

**कुलिज** त्रि० कुलौ हस्ते कण्टकारिकायां वा जायते जन—ड ७त०। १हस्तजाते नखादौ "कुलिजक्लृप्ते दक्षिणतोऽग्ने सम्भारमाहरति" स्टह्यम् २कण्टकारीजाते च ततः "कुलजात् लुक्खौ च" पा० तदन्तात् द्विगोः सम्भवति अवहरति पचति वेत्यर्थेषु ठञ् तस्य लुक् वा ठञ् ख वा। द्विकुलज द्वैकुलजिक द्विकुलजिक द्विकुलजीन। तत्र सम्भवति, (कुलिजं स्वस्मिन् समावेशयति) तदपहारके तत्पाचके च त्रि०। ठञि स्त्रियां ङीष् अन्यतः टाप्।

**कुलिन्** पु० कुल+अस्त्यर्थे बला० पक्षे इनि। १पर्व्वते शब्दचि०। २सत्कुलवति त्रि० स्त्रियां ङीप्।

**कुलिन्द** पु० भूम्नि १देशभेदे "कुलिन्दाः कालयाश्चैव कुण्ठकाः करटास्तथा" भा०भी० ९अ० जनपदकथने। २तद्राजेषु च "शूरसेनाः भद्रकारा बोधाः शाल्वाः पटच्चराः। सुस्थलाश्च सुकुट्टाश्च कुलिन्दाः कुन्तिभिः सह" भा०स० १३अ०। "पूर्व्वं कुलिन्दविषये वशेचक्रे महीपतीन्। धनञ्जयो महाबाहुर्नातितीव्रेण कर्म्मणा"। "आनर्त्तान् कालकूटांश्च कुलिन्दांश्च विजित्य सः" भा०स० १३।२५अ० अयञ्च देशः वृहसं० कूर्म्मविभागे १४अ० ऐशान्यामुक्तः "वनराजकिरातचीनकौलिन्दाः" कुलिन्द+स्वार्थे अण्" कौलिन्दः। [मेषादिषु २चतुर्थे राशौ च

**कुलिर** पु० कुल—बा० इरन्+किच्च। १कर्कटे शब्दरत्ना०।

**कुलिश** पुंन० कुलौ हस्ते शेते शी—ड, कुलिनः पर्वतान् श्यति शो—ड वा ईषत् लिशति कु+लिश-क—कौ लिशति लिश—क वा यथायथं व्युत्पत्तिः। १इन्द्रायुधे वज्रे अशनिशब्दे ५७४पृ० तदुत्पत्त्यादिकमुक्तं तत्स्वरूपादिकं हेमा० परि० ख० लक्षणसमुच्चये औशनसधनुर्वेदोक्तमुक्तं तस्य तत्रैव दृश्यम् विस्तरभयान्नोक्तम् "अभयः शक्तिकुलिशपाशर्ष्टिकणपाः शराः" भा०व०२०अ०।

"त्वेदाग्न कुलिशच्चतानाम्" कुमा० २मत्स्यभेदे पु० त्रिका०। ३अस्थिसंहारवृक्षे रत्नमा०।

**कुलिशद्रुम** पु० कुलिश इव द्रुमः। स्नुहीवृक्षे शब्दचि०

**कुलिशधर** पु० कुलिशं धरति धृ—अच्। वज्रधरे इन्द्रे कुलिशभृदादयोऽप्यत्र पु०

**कुलिशनायक** पु० "स्त्रीपादद्वयमाक्रम्य विमुक्तितलिङ्गकः। योनिञ्च पीड़येत् कामी बन्धः कुलिशनायकः" रतिमञ्जर्य्युक्ते शृङ्गारबन्धभेदे। कुलिशनामक इति पाठः साधुः

**कुलिशपाणि** पु० कुलिशः पाणावस्य। इन्द्रे देवराजे

**कुलिशाङ्कुशा** स्त्री बौद्धानां विद्यादेवीभेदे हेमच०

**कुलिशासन** पु० कुलिशमिव दृढ़मासनमस्य। शाक्यमुनौ त्रिका०

**कुली** स्त्री कुल—क गौरा० ङीप्। १कण्टकारिकायाम् अमरः २वृहत्यां राजनि०। ३पत्नीज्येष्ठभगिन्याम् (वड़शाली) हेमच०

**कुलीक** पुंस्त्री० कुल—वा० ईकन् किच्च। पक्षिभेदे स्त्रियां जातित्वेऽपि टाप्। "सोमाय लवानालभते त्वष्ट्रे कौलीकान् गोषादीर्देवानां पत्नीभ्यः कुलीका देवजामिभ्यः" यजु०२४ २४ कुलीक+स्वार्थेऽण् कौलीकान् पक्षिणः" तिस्रः कुलीकाः पक्षिणोर्देवाजामिभ्य देवबधूभ्यः" वेद दी०।

**कुलीन** पुंस्त्री० कुले जातः ख। १सत्कुलजे हये स्त्रियां ङीप्। तन्त्रोक्ते २कुलाचारयुक्ते ३उत्तमकुलजाते त्रि०। कौ पृथिव्यां लीनः। ४भूमिलग्ने त्रि०। संज्ञायां कन्। कुलीनक वनमुद्गे पु० हेमच० [क। जले हेम०।

**कुलीनस** न० कुलिलीनं भूलग्नं स्यति सो—अन्तकर्म्मणि

**कुलीपय** त्रि० जलचरजन्तुभेदे "मित्राय कुलीपयान्, वरुणाय नक्रान्" यजु० २४,२१। "कुलीपयान् जलजान् मित्राय" वेददी०। नाक्रोमकरः: कुलीपयस्तेऽकूपारस्य" यजु० २४।३५ "नाक्रः मकरः कुलीपयस्ते लयः जलचर विशेषाः" वेददी०

**कुलीर** पुंस्त्री० कुल—संस्त्याने ईरन् किच्च। १कर्कटे(केँकड़ा) जलचरजन्तुभेदे अमरः स्त्रियां ङीप्। २कर्कटराशौ च। कर्कटशब्दे विवृतिः।

**कुलीरशृङ्गी** स्त्री कुलीरः कुलीरावयव इव शृङ्गमस्याः गौरा० ङीप्। (काँकड़ा शिङ्गा) वृक्षे रत्नमा० कुलीरविषाणीत्यप्यत्र स्त्री

**कुलीराद्** पु० कुलीरमत्ति अद्—क्विप्। कर्कटशिशौ तस्योत्पत्त्यैव स्वप्रसूतिगर्भविनाशनेन तद्भक्षकत्वात्तथात्वम्

**कुलीश** पुंन० कुलिश+पृषो०। वज्रे—सारसुन्दरी

**कुलुक** न० कुल—वा० उलच् किच्च। जिह्वामले हेमच०

**कुलुक्कगुञ्जा** स्त्री कौ भूमौ लुक्का गुप्ता गुञ्जेव। उल्काग्नौ हारा०।

**कुलुङ्ग** पुंस्त्री कुरङ्ग+पृषो०। हरिणभेदे स्त्रियां टाप्। "सोमाय कुलुङ्ग आरण्योऽजो नकुलः शकाः" यजु० २४ ३२। "कुलुङ्गः कुरङ्गः हरिणः" वेददी० "शार्द्धेभ्यः कुलुङ्गान्" यजु० २४।२७

**कुलुञ्च** त्रि० कुं भूमिं क्षेत्रगृहादिरूपां लुञ्चति हरति, कुत्सितं लुञ्चति वा लुन्च—अण्। चौरभेदे "उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः" यजु० १६।२२।

**कुलूत** पु० भूम्नि देशभेदे सच देशः वृं०सं० कूर्म्मविभागे वायव्यामैशन्याञ्च उक्तः यथा "दिशि पश्चिमोत्तरस्याम्" इत्युपक्रमे "अश्मककुलूतलहड़स्त्रीराज्यन्टसिंहवनस्याञ्च" "ऐशान्यां मेरुकनष्टराज्यमित्युपक्रमे "अभिसारदरदतङ्गणकुलूतसैरिन्ध्रवनराष्ट्राः"। तेन कुलूतदेशोद्विधा। तत्र भवः अण्। कौलूत तत्र भवे त्रि० बहुषु तस्य लुक् कुलूताः। तेषां राजा अण्। कौलूत तद्राजे बहुषु तस्य लुक्। कुलूता तद्राजाः।

**कुलेचर** पु० कुले जलसमीपे चरति चर—अच् अलुक्स०। उद्भिदे शाकभेदे "चवककुलेचरवंशकरीरप्रभृतीनि कफहराणि सृष्टमूत्रपूरीषाणि" सुश्रुतः।

**कुलेश्वर** पु० ६त०। १शिवे २वंशपतौ च शब्दमा०

**कुलेय** त्रि० कुले भवः वा० ढ। कुलजाते "बभूव तत्कुलेयानां द्रव्यकार्य्यमुपस्थितम्" भा० आ० १७८अ०

**कुलोत्कट** पुंस्त्री० कुलेन उत्कटः। १कुलीनाश्वे शब्दच० २उत्कटकुलजाते त्रि०

**कुलोद्वह** त्रि० कुलं वंशभारं रक्षणादिकमुद्वहति उद्+वह—अच्। कुलपालके कुलश्रेष्ठे "पुत्रोममानुरूपश्च सूरश्चेति कुलोद्वहः" भा०वि०३५अ०

**कुल्फ** पुंन०। कल—संख्याने फक् अत उच्च। १रोगभेदे २गुल्फे च उज्ज्वलद०। "अष्ठीवन्तौ परि कुल्फौ च देहत्" ऋ०७,५०,२, "अयमेव दक्षिण ऊरुर्वरुणप्राघास" इत्युपक्रमे "कुल्फावैन्द्राग्नं हविः" शत०ब्रा० ११,५।२।३। "अयमेवोत्तरऊरुरित्युपक्रमे "कुल्फावैन्द्राग्नं हविः तस्मादिमौ द्वौ कुल्फाविति च" ११।५।२।५। "जानुदघ्नोद्वितीयः कुल्फदघ्नस्तृतीयः" शत०ब्रा० १२।२।१।३०।

**कुल्मल** न० कुश—क्मलच् लत्वान्तादेशः। १पापे उज्ज्वलद०। "तत्र मे गच्छताद्धवं शल्य इव कुल्मलं यथा" अथ० २,

२०,३०।२तद्दति त्रि० "अपाङ्गाच्छ,ङ्गात् कुल्मलाच्चिरवोचमहं विषम्" ऋ०४,३,५,जिह्वा ज्या भवति कुल्मलम्५,१८,८,

**कुल्माष** पु० कोलति कुल–क्विप् कुल् माषोऽस्मिन् ७ब०। "अर्द्धस्विन्नाश्च गोधूमा अन्ये च चणकादयः। कुल्माषा इति कथ्यन्ते इत्युक्तेषु १अर्द्धस्विन्नगोधूमादिषु वैद्यकम् "कुल्माषा गुरवो रूक्षा वातला भिन्नवर्च्चसः" भावप्र० "सक्तून् विलेपी कुल्माषं जलञ्चापि शुभं पिबेत्" सुश्रु०। "बलाकां वारुणीकुल्माषाभ्याम्" (नाश्नीयात्)। सुश्रु०। "कणपिन्याकफलीकरणकुल्माषस्थालीपुरीषादीन्यमृतवदभ्यवहरति" भाग० ५,८,१०,। कुत्सिता माषाः पृषो०। २निन्दितमाषे च "स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे" छान्दो०उ० "कुल्माषान् कुत्सितान् माषान्" शा०भाष्यम्। ३सूर्य्यस्य पारिपार्श्विकभेदे ४शूकधान्ये यवादौ च शब्दचि०। ५काञ्जिके ६मसीप्रशिवामे च न० शब्दचि०। "कुल्माषाः कुलेषु सीदन्तीति" निरुक्तोक्ते ७कुत्सितार्थे त्रि० "कुल्माषांश्चिदाहवेत्यवकुत्सिते" निरुक्तकारः। कुल्माषाः प्रायेणान्नमस्याः अञ् स्त्रियां ङीप्। कौल्माषी पूर्णिमा। ८माषादिमिश्राद्धभ्रष्टभक्ते (खेचडी) भरतः। ६रोगभेदे शब्दरत्ना० १०वनकुलत्थे रत्नमा०।

**कुल्माषाभिषुत** न० ३त०। काञ्जिके क्षीरस्वामी।

**कुल्मास** न० कुल्माष+पृषो०। कुल्माषशब्दार्थे भरतः।

**कुल्य** न० कुल–क्यप्। १अस्थ्नि अमरः। २अष्टद्रोणपरिमाणे शूर्पे ३आमिषे च मेदि०। कुले भवः यत्। ४कुलजाते ५मान्ये च त्रि० मेदि०। कुल+चतुरर्थ्यां बला०य। ५कुलसन्निकृष्टदेशादौ त्रि०। कुलाय हितं यत्। ६कुलहिते त्रि० "हन्तीस कुल्याः पशुभूतवर्गान्" भाग० ७।६।१२। कुल्यायां भवः यत् यलोपः। ८कुल्याभवे त्रि० "नमः कुल्याय च सरस्याय च" यजु०१६,३७ कुलिमेऽल्पे १०सरिद्भेदे स्त्री अमरः ११पयःप्रणाल्याम् १२जीवन्त्यामौषधौ १२नदीमात्रे च स्त्री०मेदि० "सैन्ववारणमासाद्य कुल्यानां कुरु दर्शनम्" भा०व०१०४०८श्लो०। "हतकुल्याश्च दृश्यन्ते नद्यो बहुशतास्तया" भा०व०८५३०श्लो०। क्षीरकुल्या घृतकुल्या दधिकुल्या मधुकुल्या इत्यादि।

**कुल्यासन** न०कुलाय कुलाचारायहितं यत् कुल्यमासनम्। "अथकुल्यासनं वक्ष्ये यत् कृत्वा कुलिको भुवि। एकहस्ता मात्रकस्योऽधरौ नाभिगे करे" इति रुद्रयामलोक्ते आसनभेदे

**कुल्लूक** पु०मन्वर्थमुक्तावलीनामटीकाकारकविद्वद्भेदे "श्रीमद्भट्टदिवाकरस्य तनयः कुल्लूकभट्टोऽभवत्" तट्टीकोपक्रमः।

**कुल्व** कल–उल्वा० नि० १लोमराहित्यरूपे। (टाक) रोमभेदे २तद्युक्ते त्रि० "अथैतानष्टौ विरूपानालभते अतिदीर्घं चातिह्रस्वं चातिस्थूलं चातिकृशं चातिशुक्लं चातिकृष्णं चातिकुल्वं चातिलोमशं च अशूद्रा अब्राह्मणास्ते प्राजापत्याः" यजु०३०।२२। "अतिकुल्वं रोमरहितम्" वेददी०

**कुव** न० कुं भूमिं वाति गच्छति वा–क, कुङ् शब्दे कूउवज् वा। १जलजे, पुष्पमात्रे, २उत्पले च हेमच०।

**कुवकालुका** स्त्री कुवमिव कायति कै–क आलुका। घोलीशाके। राजनि०

**कुवङ्ग** न० ईषद् वङ्गं गुणेन। सीसके राजनि०।

**कुवचस्** त्रि० कुत्सितं वचोऽस्य। १कुत्सितवादकथके अमरः कुगतिस०। २परीवादकथने न०। कुवाक्यादयोऽप्यत्र न०।

**कुवज्र** न० कुत्सितं वज्रं हीरकमिव कायति कै–क। वैक्रान्तमणौ राजनि०।

**कुवम** पु०कौ पृथिव्यां वमति वर्षति जलं वम–अच्। १सूर्य्ये "कुलं कुलञ्च कुवमः कुवमः कश्यपोद्विजः" भा०आनु० ८३अ० "कुः पृथिवी तस्यां वमति वर्षतीति कुवमआदित्यः "आदित्याद् जायते वृष्टिरिति" श्रुतेः सर्वोऽप्यादित्योऽहमेव मत्तएव सर्वे षामादित्यानामुत्पत्तेः" नीलकण्ठः। कुपयोः इति पाठान्तरे सूर्य्य एवार्थः। कुत्सितं वमति। २विन्दितवमनकारके त्रि० [ रायमुकुटः

**कुवर** पु०कुत्सितं व्रियते वृ-अप्। १तुवरे २कषाये २तद्वति त्रि०

**कुवल** न०कौ वलति वल–अच्। १उत्पले २मुक्ताफले च मेदि०३वदर्य्यां स्त्री० गौरा० ङीष्। तस्याः फलम् अण् लुक्।४वदरीफले न०। कौ वलनात्। ५जले। ६सर्पोदरे च न०कुवलेशयः। प्रस्थे परे समासे कर्क्यादि०अस्य नाद्युदात्तता। तस्य पाकः पील्वादि० कुणच्। कुवलकुण तत्पाके पु०।

**कुवलय** न० कोर्वलयमिव शोभाहेतुत्वात्। १उत्पले, अमरः २श्वेतोत्पलेनीलोत्पले राजनि० "कस्त्वं साधो! कुवलयदलश्यामविस्तीर्णदृष्टे! इत्युद्भवदूतम्। ततः तारका० इतच्। कुवलयित जातकुवलये त्रि०। "कुवलयित गवाक्षालोचनैरङ्गनानाम्" रघुः। कोर्वलयम् ६त०। ४भूमण्डले न० "यतो भूवलयं सर्वं मन्नोऽयं विचरिष्यति। अतः कुवलयो नाम्ना ख्यातिं लोके प्रयास्यति" इत्युक्ते निरुक्तियुते ५असुरभेदे पु०।

**कुवलयानन्द** पु०कुवलयं भूमण्डलमानन्दयति आ+नन्द–अण्

उप०स० । चन्द्रालोकस्यालङ्कारमयूखव्याख्याने अप्पयदीक्षितकृते ग्रन्थभेदे ६त० । २कुमुदस्यानन्दे च । "अमुं कुवलयानन्दमकरोदप्पदीक्षितः । नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः । चन्द्रालोकोविजयतां शरदागमसम्भवः । हृद्यः कुवलयानन्दोयत्प्रसादादभूदयम्" । तद्ग्रन्थसमाप्तौ "तस्माच्च कुवलयानन्दः स्यग्रन्थोऽभूत् कुवलयस्यकुमुदस्यानन्दइति च श्लेषइति" चन्द्रिका

**कुवलयापीड** त्रि०कुवलयमापीडः भूषणं यस्य । नीलोत्पलभूषणवति १जने कंसासुरस्य हस्तिरूपधारिणि २दैत्यभेदे पु० । "नागं कुवलयापीडं चाणूरं मुष्टिकं तथा । कंसञ्च बलिनां श्रेष्ठं समणं देवकीसुतः । न्यहनत् गोपवेशेन क्रीडासक्तोहि केशवः" हरिवं० १०६अ० "राजा कुवलयापीडः समाजद्वारि कुञ्जरः । तिष्ठत्विति समाज्ञाप्य प्रेक्षागारमुपाययौ" हरि० ८६अ०

**कुवलयाश्व** पु० कुव(व)लाश्वनामके धुन्धुमारे नृपभेदे । स्वार्थे क तत्रार्थे "हृहदश्वस्तु श्रावन्तिस्ततः कुवलयाश्वकः । यः प्रियार्थमुतङ्कस्य धुन्धुनामासुरं बली । सुतानामेकविंशत्या सहस्रैरहनद्वृतः । धुन्धुमार इति ख्यातस्तन्सुतास्ते च जज्वलुः । धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः" भाग० ९।६।१८।१९ । कुवलाश्वशब्दे तच्चरितादि । [पद्मिन्याम् राजनि० ।

**कुवलयिनी** स्त्री कुवलयानां संवः खलादि० इनि । उत्-

**कुवलाश्व** पु० कौ पृथिव्यां वलते वल अच् तादृशोऽश्वोऽस्य । कुवलयाश्वे धुन्धुमारे नृपभेदे ।

**कुवलेशय** पु० कुवले जले शेते शी—अच् ७त० अलुक्स० । विष्णौ "कुमुदः कुवलेशयः" विष्णुस० । "क्षितौ वलनात् सम्वलनात् कुवलं जलं तस्मिन् शेषोदरे शेते इति कुवलेशयः, कुवलं वदरीफलं तन्मध्ये शेते कुवलेशयः तक्षकः सोऽपि भगवतोविभूतिरिति वा हरिः कुवलेशयः । कौ भूमौ वलति संव्रीयते सर्पाणामुदरं कुवलं तस्मिन् शेषोदरे शेते इति कुवलेशय इति" भाष्यम् ।

**कुवाद** त्रि० कुत्सितं वदति अण् । अपरदोषकथनशीले । अमरः । भावे घञ् कुगतिस० । २कुत्सितवादे ।

**कुवाहुल** पुंस्त्री वहति कु+वह—शा० उलच् । उष्ट्रे शब्दचन्द्र० स्त्रियां ङीष् ।

**कुवि(चि)क** पु० भूम्नि देशभेदे अयञ्च देशः वृह०सं० कूर्म्मविभागे ऐशान्यामुक्तः । "ऐशान्यामित्युपक्रमे कुनटखण्डघोषकुचि(वि) काख्याः" इति

**कुविद्** अव्य० कुः भूमिरिव विद्यते ज्ञायते वाहुल्यात् विद—भावे क्विप् ६त० । १वाहुल्ये २प्रशंसायाञ्च । चादिगण व्याख्याने मनोरमा । उच्चैर्वत् ३तद्वति च "कुवित्सस्य प्रहि व्रजम्" ऋ० ६।४५।२४। "कुविदङ्गयः स्यति छिनत्ति" भा० "कुविन्नो अस्य वचसः" ऋ०२।१६।७ कुविदङ्ग" भा० । 'स त्वष्टा चुक्रोध कुविन्मे पुत्रमवधीत्" शत० ब्रा० १।६ ३।६ ।"कुविदङ्ग नमसा ह्वासः" ऋ० ७।९१।१। कुविदिति वहुनाम । अङ्गेति क्षिप्रनाम कुविद्वहुशोऽङ्ग क्षिप्रं कृतेन नमसा" भा० ; "कुविद् अङ्ग" इति पदग्रन्थे पदद्वयतया विभागः। एतेन कुविदङ्गेति एकशब्दकल्पनं चिन्त्यम् । कुत्सितं वेत्ति विद—ज्ञाने कर्त्तरि क्विप् । ४कुज्ञानवति त्रि० ।

**कुविद्या** स्त्री कुगतिस०। १निन्द्यविद्यायाम् । व०। २तद्वति त्रि०

**कुविद्यास** त्रि० कुविद्यां स्यति छिनत्ति सो—क । कुविद्यानिरासके । ततः कृशाश्वादिषु विकुद्यासेत्यत्र पाठान्तरेऽस्य पाठात् चतुरर्थ्यां छण् । कौविद्यासीय तत्सन्निकृष्टदेशादौ त्रि० ।

**कुविन्द** पुंस्त्री कुं भूं कुत्सितं वा विन्दति विद—श । तन्तुवाये शूद्रागर्भे विश्वकर्म्मणो जाते जातिसङ्करभेदे अमरः [ २निन्दितमण्डले च त्रिका०

**कुविम्ब** पु०न० । कोविम्बं कुत्सितं विम्बं वा । १भूमण्डले

**कुविवाह** पु० । कुगतिस० वर्णभेदेन निन्दनीयविवाहे मनुना वर्णभेदेन ब्राह्माद्यष्टविवाहेषु निन्द्यानिन्द्यत्वमुक्तं यथा

"चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान् । अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत" मू०

"चतुर्णामिति । चतुर्णामपि वर्णानां ब्राह्मणादीनां परलोके इह लोके च कांश्चित् हितान् कांश्चिदहितान् इमान् अभिधास्यमानान् अष्ट संक्षेपेण भार्य्याप्राप्तिहेतून् विवाहान् शृणुत" कुल्लूकभट्टटीका

"ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः । गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः" मू०

"त एते नामतो निर्द्दिश्यन्ते ब्राह्म इति । ब्राह्मराक्षसादिसंज्ञा चेयं शास्त्रादौ संव्यवहारार्था स्तुतिनिन्दाप्रदर्शनार्था च । ब्रह्मण इवायं ब्राह्मः रक्षस इवायं राक्षसः नतु ब्रह्मादिदेवताकत्वं विवाहानां सम्भवति । पैशाचस्याधमत्वाभिधानं निन्दातिशयार्थम्" टी०

"यो यस्य धर्म्यो वर्णस्य गुणदोषौ च यस्य यौ ।

तद्वः सर्व्वं प्रवक्ष्यामि प्रसवे च गुणागुणान्” मू०
“य इति। धर्म्मादनपेतो धर्म्म्यः यो विवाहो यस्य वर्णस्य धर्म्म्यो यस्य विवाहस्य यौ गुणदोषौ इष्टानिष्टफले तत्तद्विवाहोत्पन्नापत्येषु ये गुणागुणास्तत् सर्व्वं युष्माकं प्रकर्षेणाभिधास्यामि। वक्ष्यमाणानुकीर्त्तनमिदं शिष्याणां सुखग्रहणार्थम्” टी०
“षडानुपूर्व्व्या विप्रस्य क्षत्त्रस्य चतुरोऽवरान्। विट्शूद्रयोस्तु तानेव विद्याद्धर्म्म्यान्न राक्षसान्” मू०
“षडिति। ब्राह्मणस्य ब्राह्मादिक्रमेण षट्। क्षत्त्रियस्य, अवरानुपरितनानासुरादींश्चतुरः, विट्शूद्रयोस्तु तानेव राक्षसवर्जितानासुरगान्धर्व्वपैशाचान् धर्म्मादनपेतान् जानीयात्” टी०

“चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः। राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः” मू०
“चतुर इति। ब्राह्मणस्य प्रथमपठितान् ब्राह्मादींश्चतुरः, क्षत्त्रियस्य राक्षसमेकमेव, वैश्यशूद्रयोरासुरमेतान् श्रेष्ठान् ज्ञातारो जानन्ति। अतएव ब्राह्मणादिष्वासुरादीनां पूर्व्वविहितानामप्यत्रानुपादानं जघन्यत्वज्ञापनार्थं तेन प्रशस्तविवाहासम्भवे जघन्यस्यापि परिग्रह इति दर्शितम्। एवमुत्तरत्रापि विगर्हितपरित्यागो बोद्धव्यः” टी०

“पञ्चानान्तु त्रयो धर्म्म्या द्वावधर्म्म्यौ स्मृताविह। पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन” मू०
“पञ्चानामिति। इह पैशाचप्रतिषेधादुपरितनानां प्राजापत्यादीनां ग्रहणम्। तेषु मध्ये प्राजापत्यगान्धर्व्वराक्षसास्त्रयो धर्म्मादनपेताः। तत्र प्राजापत्यः क्षत्त्रियादीनामप्राप्तो विधीयते ब्राह्मणस्य विहितत्वादनूद्यते। गान्धर्व्वस्य च चतुर्णामेव प्राप्तत्वादनुवादः। राक्षसोऽपि वैश्यशूद्रयोर्व्विधीयते ब्राह्मणस्य क्षत्त्रियवृत्त्यवस्थितस्यापि, आसुरपैशाचौ न कर्त्तव्यौ। कदाचनेत्यविशेषाच्चतुर्णामेव निषिध्यते। अत्र यं वर्णं प्रति यस्य विवाहस्य विधिनिषेधौ तस्य तं प्रति विकल्पः सच विहितासम्भवे बोद्धव्यः” टी०

“पृथक् पृथग्वा मिश्रौ वा विवाहौ पूर्व्वचोदितौ। गान्धर्व्वो राक्षसश्चैव धर्म्म्यौ क्षत्त्रस्य तौ स्मृतौ” मू०
“पृथगिति। पृथक्पृथगिति प्राप्तत्वादनूद्यते। मिश्राविति विधीयते। पृथक्पृथक् मिश्रौ वा पूर्व्वविहितौ गान्धर्व्वराक्षसौ क्षत्त्रस्य धर्म्म्यौ मन्वादिभिः स्मृतौ। यदा स्त्रीपुंसयोरन्योन्यानुरागपूर्व्वकसंवादेन परिणेता युद्धादिना विजित्य तामुद्वहेत्तदा गान्धर्व्वराक्षसौ मिश्रौ भवतः” टी०
“कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च। कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च” मनुः दुर्विवाहादयोऽप्यत्र “जायन्ते दुर्विवाहेषु ब्रह्मधर्म्मद्विषः सुताः। अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा” मनुः।

**कुवृत्ति** स्त्री० कुगतिसमा०। १निन्दिताचरणे २ईयत्करणे च ब०व्री०। ३तद्युक्ते त्रि०

**कुवृत्तिकृत्** पु० कुवृत्तिमीषदावरणरूपं चरणं करोति कृ—क्विप् (काँटाकरमचा) १ करञ्जभेदे शब्दचि०। २निन्दितचेष्टाकारके त्रि० शब्दचि०

**कुवेणि(णी)** स्त्री ईषत् वेणन्ते मत्स्या अस्याम् वेण—इन्, वा ङीप्) मत्स्यधान्याम् (खालुइ) अमरः

**कुवेर** न० कुत्सितं वेरमस्य। धनदे उत्तरदिक्पाले देवभेदे कुबेरशब्दे विवृतिः कुवेरोत्पत्यादिकं रामा० उ० का० ३ स० वर्णितं यथा
“श्रुत्वा तस्य तु तद्वृत्तं भरद्वाजो महामुनिः। ददौ विश्रवसे भार्य्यां स्वसुतां देववर्णिनीम्। प्रतिगृह्य तु धर्म्मेण भरद्वाजसुतान्तदा। प्रजान्वीक्षिकया बुद्ध्या श्रेयोह्यस्य विचिन्तयन्। मुदा परमया युक्तो विश्रवा मुनिपुङ्गवः। स तस्यां वीर्य्यसम्पन्नमपत्यं परमाद्भुतम्। जनयामास धर्म्मज्ञः सर्वैर्ब्रह्मगुणैर्वृतम्। तस्मिन् जाते तु संहृष्टः स बभूव पितामहः। दृष्ट्वा श्रेयस्करीं बुद्धिं धनाध्यक्षो भविष्यति। नाम चास्याकरोत् प्रीतः सार्द्धं देवर्षिभिस्तदा। यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव। तस्माद्वैश्रवणो नाम भविष्यत्येष विश्रुतः। स तु वैश्रवणस्तत्र तपोवनगतस्तदा। अवर्द्धताहुतिहुतो महातेजा यथाऽनलः। तस्याश्रमपदस्थस्य बुद्धिर्जज्ञे महात्मनः। चरिष्ये परमं धर्मं धर्मो हि परमा गतिः। स तु वर्षसहस्राणि तपस्तप्त्वा महावने। यन्त्रितो नियमैरुग्रैश्चकार सुमहत्तपः। पूर्णे वर्षसहस्रान्ते तं तं विधिमकल्पयत्। जलाशी मारुताहारो निराहारस्तथैव च। एवं वर्षसहस्राणि जग्मुस्तान्येकवर्षवत्। अथ प्रीतो महातेजाः सेन्द्रैः सुरगणैः सह। गत्वा तस्याश्रमपदं ब्रह्मेदं वाक्यमब्रवीत्। परितुष्टोऽस्मि ते वत्स! कर्म्मणाऽनेन सुव्रत!। वरं वृणीष्व भद्रन्ते वरार्हस्त्वं महामते!। अथाब्रवीद्वैश्रवणः पि-

तामहमुपस्थितम् । भगवन् ! लोकपालत्वमिच्छेयं लोकरक्षणम् । अथाब्रवीद्वैश्रवणं परितुष्टेन चेतसा । ब्रह्मा सुरगणैः सार्धं बाढमित्येव हृष्टवत् । अहं वै लोकपालानां चतुर्थं स्रष्टुमुद्यतः । यमेन्द्रवरुणानाञ्च पदं यत्तव चेप्सितम् । तद्गच्छ वत्स ! धर्मज्ञ ! निधीशत्वमवाप्नुहि । शक्राम्बुपयमानाञ्च चतुर्थस्त्वं भविष्यसि । एतच्च पुष्पकं नाम विमानं सूर्यसन्निभम् । प्रतिगृह्णीष्व यानार्थं त्रिदशैः समतां व्रज । स्वस्ति तेऽस्तु गमिष्यामः सर्व एव यथागतम् । कृतकृत्या वयं तात! दत्त्वा तव वरद्वयम् । इत्युक्त्वा स गतो ब्रह्मा स्वस्थानं त्रिदशैः सह । गतेषु ब्रह्मपूर्वेषु देवेष्वथ नभस्तलम् । धनेशः पितरं प्राह प्राञ्जलिः प्रयतात्मवान् । भगवन् ! लब्धवानस्मि वरमिष्टं पितामहात् । निवासनं न मे देवो विदधे स प्रजापतिः । तं पश्य भगवन्! कञ्चिन्निवासं साधु मे प्रभो !। न च पीड़ा भवेद्यत्र प्राणिनोयस्य कस्य चित् । एवमुक्तस्तु पुत्रेण विश्रवा मुनिपुङ्गवः। वचनं प्राह धर्मज्ञः श्रूयतामिति सत्तम !। दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः । तस्याग्रे तु विशाला सा महेन्द्रस्य पुरी यथा । लङ्का नाम पुरी रम्या निर्मिता विश्वकर्मणा । राक्षसानां निवासार्थं यथेन्द्रस्यामरावती । तत्र त्वं वस भद्रन्ते लङ्कायां नात्र संशयः । हेमप्राकारपरिखायन्त्रशस्त्रसमावृता । रमणीया पुरी सा हि रुक्मवैदूर्यतोरणा । राक्षसैः सा परित्यक्ता पुरा विष्णुभयार्दितैः । शून्या रक्षोगणैः सर्वैं रसातलतलङ्गतैः । शून्या संप्रति लङ्का सा प्रभुस्तस्या न विद्यते । स त्वं तत्र निवासाय गच्छ पुत्र ! यथासुखम् । निर्दोषस्तत्र ते वासो न बाधस्तत्र कस्य चित् । एतच्छ्रुत्वा स धर्मात्मा धर्मिष्ठं वचनं पितुः । निवासयामास तदा लङ्कां पर्वतमूर्धनि । नैरृतानां सहस्रैस्तु हृष्टैः प्रमुदितैः सदा । अचिरेणैव कालेन संपूर्णा तस्य शासनात् । स तु तत्रावसत् प्रीतो धर्मात्मा नैरृतर्षभः । समुद्रपरिखायां स लङ्कायां विश्रवात्मजः । काले काले तु धर्मात्मा पुष्पकेण धनेश्वरः । अभ्यागच्छद्विनीतात्मा पितरं मातरञ्च ह ।”

**कुवेरक** पु० कुवेर इव कायति कै—क । १नन्दीवृक्षे अमरः स्वार्थे क । २धनदे ३नन्दीवृक्षे मेदि० ४अर्हदुपासकभेदे हेम०

**कुवेराक्षी** स्त्री० कुवेरस्याक्षीव पिङ्गपुष्पत्वात् षच् समा० ङीष् । १पाटलावृक्षे अमरः २लताकरञ्जे राजनि०

**कुवेराचल** पु० ६त० । कैलासपर्वते त्रिका० कुवेरपर्वतादयोऽप्यत्र पु० [ला—क । उत्पले हेमच०

**कुवेल** न० कुवेषु जलजपुष्पेषु मध्ये ईं शोभां लाति—

**कुवैद्य** पु० कुगतिस० । सुश्रुताद्युक्तक्रियोल्लङ्घनेन स्वेच्छया विपरीताचारिणि वैद्ये तल्लक्षणदोषादिकं सुश्रुते उक्तं यथा “यस्तु केवलशास्त्रज्ञः कर्म्मस्वपरिनिष्ठितः । स मुह्यत्यातुरम्प्राप्य प्राप्य भीरुरिवाहवम् । यस्तु कर्म्मसु निष्णातो धार्ष्ट्याच्छास्त्रबहिष्कृतः । स सत्सु पूजां नाप्नोति वधं चार्हति राजतः । उभावेतावनिपुणावसमर्थौ स्वकर्म्मणि । अर्द्धवेदधरावेतावेकपक्षाविव द्विजौ । ओषध्योऽमृतकल्पास्ते शस्त्राशनिविषोपमाः । भवन्त्यज्ञैरुपहतास्तस्मादेतौ विवर्जयेत् । स्नेहादिष्वनभिज्ञो यः स्वेहादिषु च कर्म्मसु । स निहन्ति जनं लोभात् कुवैद्यो नृपदोषतः । यस्तूभयज्ञो मतिमान् स समर्थोऽर्थसाधने । आहवे कर्म्म निर्वोढुं द्विचक्रः स्यन्दनो यथा” “कुवैद्ये कितवे शठे । चाटचारणदासेषु दत्तं भवति निष्फलम्” स्मृतिः

**कुश** द्युतौ इदित् वा चुरा० पक्षे भ्वादि०पर०सक०सेट् । कुंशयति ते कुंशति अचुकुंशत्—त अकुंशीत् । कुंशयां बभूव आस चकार चक्रे चकुंश । प्रनिकुंशति

**कुश** श्लेषे दि० पर०सक० सेट् । कुश्यति । अकुशत्—अकोशीत् । चुकोश । कुशितः कोशः

**कुश** पु०न० कौ शेते शी—क, कुं पापं श्यति शो—ड वा । १स्वनामख्याते तृणे अमरः । “कुशाेनुमृष्टगर्भक्तो द्यति” २रामसुते “रिपुनागाङ्कुशं कुशमिति” रघुः । ३योक्त्रे, च पु० मेदि० ४घृतसमुद्रेणावृते द्वीपभेदे पु० । ५जले न० मेदि० । कुशेशयः । ६सर्पोदरे शङ्कराचार्य्यः “कौशं बर्हिः” कात्या० ३।२।१२ तस्यासंस्कृतकुशार्थतामाह “बर्हिःकौशं कुशा दर्भाः तस्येदं कौशं कुशमात्रमेव बर्हिःशब्देनोच्यते न संस्कारा॰, कुतः ? अन्वयव्यतिरेकाभ्यां जातिवाचित्वाद्बर्हिःशब्दस्य, यत्र यत्र बर्हिःशब्दप्रयोगस्तत्रतत्र जातिरित्यस्या व्याप्ते र्लोके वेदे च नास्ति व्यभिचारः, संस्कारव्याप्तेस्तु लौकिकप्रयोगे व्याभिचारो दृश्यते क्वचिद्देशविशेषे लौकिकव्यवहारे जातिमात्रमुपजीव्य विना संस्कारं बर्हिःशब्दः प्रयुज्यते बर्हिरादाय गावो गता इति तस्माज्जातिवाचो बर्हिःशब्दः । असंस्कृतं कुशमात्रं बर्हिःशब्देनोच्यत इत्यर्थः । प्रयोजनं बर्हिषि प्राग्ग्रदृष्टि च प्रास्तीर्

त्यादौ संस्कारा न कर्त्तव्याः । स्मृतौ कुशाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः । काशाभावे गृहीतव्या अन्ये दर्भा यथोचिताः । दर्भाभावे स्वर्णरूप्यताम्रैः कर्म्मक्रियाः सदा । कुशकाशशरा दूर्व्वायवगोधूमवाल्वजाः । सुवर्णं रजतं ताम्रं दश दर्भाः प्रकीर्त्तिताः । स्नाने होमे तथा दाने स्वाध्याये पितृतर्पणे । सपवित्रौ सदर्भौ वा करौ कुर्व्वीत नान्यथा । सर्व्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रथितं न वा । सपवित्रः सदर्भो वा कर्म्माङ्गाचमनं चरेत् । नोच्छिष्टं तत् सदर्भं च दर्भोच्छिष्टं तु वर्जयेदिति" कर्म्माङ्गकुशलक्षणादिकं श्रा० त० श्राद्ध यथा

"ब्रह्मपुराणे 'सपिञ्जलाश्च हरिताः पुष्टाः स्निग्धाः समाहिताः । गोकर्णमात्राश्च कुशाः सकृच्छिन्नाः समूलकाः । पितृतीर्थेन देयाः स्युर्दूर्व्वा श्यामाक एव च । काशाः कुशा बल्वजाश्च तथान्ये तीक्ष्णरोमशाः । मौञ्जाश्च शाद्वलाश्चैव षड्दर्भाः परिकीर्त्तिताः" । तीक्ष्णरोमशा इति बल्वजानां विशेषणं तेन तेषामलाभे 'शूकतृणशरशीर्षयुतबल्वजोलपशुण्ठवर्जं सर्व्वतृणानीति" गोभिलेन तद्व्यतिरिक्तबल्वजानां निषेधोबोद्धव्यः । सपिञ्जलाः साग्राः स्निग्धा अरूक्षाः पुष्टा न सूक्ष्माः समाहिता निर्दोषाः शाद्वला इति मौञ्जस्य विशेषणम् । शूकानि फलपुष्पमञ्जर्य्यस्तायेषां तृणानां सन्ति तानि शूकतृणानीति भट्टनारायणचरणाः । गोकर्णमात्रा विस्तृताङ्गुष्ठानामिकापरिमिताः । विष्णुः 'कुशस्थाने काशं दूर्व्वा वा दद्यादिति" कनकुष्टिहस्तपरिमिताः कुशाः प्रस्तरणार्थाः तथाच वायुपुराणम् 'रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संस्कृता' । उपमूले तथा लूनाः प्रस्तरार्थे कुशोत्तराः" । वर्ज्यकुशानाह हारीतः 'चितौ दर्भाः पथि दर्भाः ये दर्भा यज्ञभूमिषु । स्तरणासनपिण्डेषु षड्दर्भान् परिवर्ज्जयेत् । पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम् । मूत्रोच्छिष्टप्रलेपे तु त्यागस्तेषां विधीयते" । छन्दोगपरिशिष्टम् 'धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते । नीवीमध्ये च ये दर्भा ब्रह्मसूत्रे च ये धृताः । पवित्रांस्तान् विजानीयाद्यथा काय स्तथा कुशाः । आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तमः । नोच्छिष्टन्तु भवेत्तत्र भुक्तशेषं विवर्जयेत्' ।

अत्र विशेषः निर्णयसिन्धौ

"पृथ्वीचन्द्रोदये तदुपहरणकालमाह दक्षः "समितपुष्पकुशादीनां द्वितीयः परिकीर्त्तितः । अष्टधा विभक्तादिनस्य द्वितीयोभाग इत्यर्थः । तत्रैव यमः "समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्म्मणि । मूलेन लोकान् जयति शक्रस्य सुमहात्मनः" व्यासः "तर्पणादीनि कार्य्याणि पितॄणां यानि कानि चित् । तानि स्युर्द्विगुणैर्दर्भैः सप्रपत्रैर्विशेषतः" शालङ्कायनः "सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया । सपिण्डीकरणादूर्द्ध्वं द्विगुणैर्विधिवद्भवेत्" शङ्खः "अनन्तर्गर्भिणं साग्रकौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" हारीतः "पवित्रं ब्राह्मणस्यैव चतुर्भिर्दर्भपिञ्जलैः । एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम्" । स्मृत्यर्थसारे "सर्व्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रथितं नवम्" रत्नावल्याम् "द्वयोस्तु पर्व्वणोर्मध्ये पवित्रं धारयेद्बुधः" हेमाद्रौ स्कान्दे "अनामिकाधृता दर्भा ह्येकानामिकयापि वा । द्वाभ्यामनामिकाभ्यां तु धार्य्ये दर्भपवित्रके" पवित्राभावे तु तत्रैव सुमन्तुः "समूलाग्रौ विगर्भौ तु कुशौ द्वौ दक्षिणे करे । सव्ये चैव तथा त्रीन्वै बिभृयात् सर्व्वकर्म्मसु" । बौधायनः "हस्तयोरुभयोर्द्वौ द्वावासनेऽपि तथैव च" दर्भग्रहणे मन्त्रमाह शङ्खः "विरिञ्चिना सहोत्पन्न ! परमेष्ठिनिसर्गज ! । नुद सर्व्वाणि पापानि दर्भ ! स्वस्तिकरोभव" । स्मृत्यर्थसारे "हुम्फट्कारेण मन्त्रेण सकृच्छित्त्वा समुद्धरेत्" भरद्वाजः "प्रेतक्रियार्थं पित्र्यर्थमभिचारार्थमेव च । दक्षिणाभिमुखश्छिन्द्यात् प्राचीनावीतिकोद्विजः" । कुशाभावे अपरार्के सुमन्तुः "कुशाः काशाःशरो गुन्द्रोयवा दूर्व्वाऽथ वल्वजाः । गोकेशसुञ्जकुन्दाश्च पूर्व्वाभावे परः परः" । काशादौ विशेषमाह शङ्खः "काशहस्तस्तु नाचामेत्कदाचिद्विधिशङ्कया । प्रायश्चित्तेन युज्येत दूर्व्वाहस्तस्तथैव च" पृथ्वीचन्द्रोदये यमः "मासि मास्युद्धृता दर्भा मासि मास्येव चोदिताः" । षट्त्रिंशन्मते "मासेमास्यमावास्यां दर्भो ग्राह्योनवः स्मृतः" गृह्यपरिशिष्टे "ये च पिण्डाश्रिता दर्भा यैः कृतं पितृतर्पणम् । अमेध्याऽशुचिलिप्ता ये तेषां त्यागो विधीयते" लघुहारीतः "पथि दर्भाश्चितौ दर्भाये दर्भायज्ञभूमिषु । स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् । ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे । हतामूत्रपुरीषाभ्यान्तेषां त्यागो विधीयते" । हेमाद्रौ "अन्यानि च पवित्राणि कुशदूर्व्वात्मकानि च । हेमात्मकपवित्रस्य ह्येकां नार्हन्ति वै कलाम्"

भाद्रामावास्याग्टहीतदर्भस्यायातयामतामाह हेमा० श्रा० ख० हारीतः "मासे नभस्यमावास्या तस्यां

दर्भास्त्रयो मताः । अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः”

तस्योत्पत्तिरुक्ता भाग० ३,२०अ० “बर्हिष्मती नाम पुरी सर्व्वसम्पत्समन्विता । न्यपतन् यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः । कुशकाशास्तत्र चासन् शश्वद्धरितवर्च्चसः । ऋषयोयैः पराभाव्य यज्ञघ्नान् यज्ञमीजिरे” ।

पूजादौ तस्य तत्प्रतिनिधेर्वा धारणमावश्यकम् यथाह वरदातन्त्रे १प० “पूजाकाले सर्व्वदैव कुशहस्तो भवेच्छुचिः । सर्व्वया रजतं धार्य्यं स्वर्णं धार्य्यमनामया । कुशकार्य्यकरं यस्मात्तु वन्याः कुशाः कुशाः । कुशेन रहिता पूजा विफला कथिता मया” सधवायास्तद्धारणनिषेधमाह ब्राह्मणसर्व्वस्वे स्मृतिः । “न स्पृशेत् तिलदर्भांश्च सधवा तु कथञ्चन” ।

तत्पर्य्यायभेदादिकं भावप्र० उक्तं यथा “कुशोदर्भस्तथा बर्हिः सूच्यग्रोयज्ञभूषणम् । ततोऽन्योदीर्घपत्रःस्यात् क्षुरपत्रस्तथैव च । दर्भद्वयं त्रिदोषघ्नं मधुरं तुवरं हिमम् । मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक्प्रदरास्रजित्” । “एते लूनशिखास्तस्य दशनैरचिरोद्गतैः । कुशकाशविराजन्ते वटवः सामगा इव” । रामपुत्रकुशस्य नामनिरुक्तिसहितोत्पत्तिकथा रामा० उत्त० का० ६६स० यथा

“यामेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत् । तामेव रात्रिं सीतापि प्रसूता दारकद्वयम् । ततोऽर्धरात्रसमये बालका मुनिदारकाः । वाल्मीकेः प्रियमाचख्युः सीतायाः प्रसवं शुभम् । भगवन्! रामपत्नी सा प्रसूता दारकद्वयम् । ततोरक्षां महातेजः! कुरु भूतविनाशिनीम् । तेषां तद्वचनं श्रुत्वा महर्षिः समुपागमत् । बालचन्द्रप्रतीकाशौ देवपुत्रौ महौजसौ । जगाम तत्र हृष्टात्मा ददर्श च कुमारकौ । भूतघ्नीञ्चाकरोत्ताभ्यां रक्षां रक्षोविनाशिनीम् । कुशमुष्टिमुपादाय लवञ्चैव तु स द्विजः । वाल्मीकिः प्रददौ ताभ्यां रक्षां भूतविनाशिनीम् । यस्तयोः पूर्व्वजोजातः स कुशैर्मन्त्रसत्कृतैः । निर्मार्जनीयस्तु तदा कुश इत्यस्य नाम तत् । यश्चावरो भवेत्ताभ्यां लवेन स समाहितः । निर्माजनीयोवृद्धाभिर्लवेति च स नामतः । एवं कुशलवौ नाम्ना तावुभौ यमजातकौ । मत्कृताभ्यां च नामभ्यां ख्यातियुक्तौ भविष्यतः । ता रक्षाञ्जगृहुस्तां च मुनिहस्तात् समाहिता! । अकुर्वंश्च ततो रक्षान्तयोर्विगतकल्मषाः । तथा तां क्रियमाणां च वृद्धाभिर्गोत्रनाम च । सङ्कीर्तनञ्च रामस्य सीतायाः प्रसवौ शुभौ” । “मयाप्तं रामत्वं कुशलवसुता नत्वधिगता” सा०द० । कुशद्वीपमानस्थानाद्युक्तं विष्णु० पु० यथा

“सुरोदकः परिवृतः कुशद्वीपेन सर्व्वतः । शाल्मलस्य तु विस्ताराद्द्विगुणेन समन्ततः । ज्योतिष्मतः कुशद्वीपे सप्त पुत्राः शृणुष्व तान् । उद्भिदोवेणुमांश्चैव सुरथोलम्बनो धृतिः । प्रभाकरोऽथ कपिलस्तन्नाम्ना वर्षविस्तृतिः । तस्मिन् वसन्ति मनुजाः सह दैतेयदानवैः । तथैव देवगन्धर्व्वयक्षकिम्पुरुषादिभिः । वर्णास्तत्रापि चत्वारो निजानुष्ठानतत्पराः । दमिनः शुष्मिणः स्नेहा मन्देहाश्च महामुने! । ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्चानुक्रमोदिताः । यथोक्तकर्म्मकर्तृत्वात् स्वाधिकारक्षयाय ते । तत्र यत्तत् कुशद्वीपे ब्रह्मरूपं जनार्द्दनम् । यजन्तः क्षपयन्त्युग्रमधिकारफलप्रदम् । विद्रुमो हेमशैलश्च द्युतिमान् पुष्पवांस्तथा । कुशेशयो हरिश्चैव सप्तमो मन्दराचलः । वर्षाचलास्तु सप्तैव तत्र द्वीपे महामुने! । नद्योऽपि सप्त तासाञ्च शृणु नामान्यनुक्रमात् । धूतपापा शिवा चैव पवित्रा सम्मतिस्तथा । विद्युदम्भा मही चैव सर्वपापहरास्त्विमाः । अन्याः सहस्रशस्तत्र क्षुद्रनद्यस्तथाचलाः । कुशद्वीपे कुशस्तम्बः संज्ञया तस्य तत् स्मृतम् । तत्प्रमाणेन स द्वीपो घृतोदेन समावृतः” ।

भाग० ५,२०अ० अन्यथैवायं वर्णितः यथा

“एवं सुरोदाद्बहिस्तद्द्विगुणः समानेनावृतो घृतोदेन यथा पूर्व्वः कुशद्वीपो यस्मिन् कुशस्तम्बो देवकृतस्तद्द्वीपाख्यापनो ज्वलन इवापरः स्वशष्परोचिषा दिशोविराजयति । तद्द्वीपपतिः प्रियव्रतो राजन्! हिरण्यरेता नाम स्वं द्वीपं सप्तभ्यः स्वपुत्रेभ्यो यथाभागं विभज्य स्वयं तप आतिष्ठत् ! वसुवसुदानदृढरुचिनाभिगुप्तसत्यव्रतविप्रनामदेवनामभ्यः तेषां वर्षेषु सीमागिरयोनद्यश्चाभिज्ञाताः सप्तैव । बभ्रुश्चतुःशृङ्गकपिलश्चित्रकूटोदेवानीक ऊर्द्ध्वरोमा द्रविण इति । रसकुल्या मधुकुल्या मित्रविन्दा श्रुतिविन्दा देवगर्भा घृतच्युता मन्त्रमालेति यासां पयोभिः कुशद्वीपौकसः कुशलकोविदाभियुक्तकुलकसंज्ञा भगवन्तं जातवेदसरूपिणं कर्म्मकौशलेन यजन्ते” । कल्पभेदान्नामभेदः समाधेयः । कुशद्वीपोऽप्यत्र पु० “कुशोऽभूत् काञ्चनः कौशे स्वयम्भूश्चितिमर्हति” । कुत्सिते आचरणे शेते शी–ड । ७मास्थित्वमत्ते च त्रि० मेदि० ।

नृपभेदे पु० "अजकस्य तु दायादो बलाकाश्वो महीपतिः। बभूव मृगयाशीलः कुशस्तस्यात्मजोऽभवत्" हरि० २७अ०

**कुशकण्डिका** स्त्री कुशैः कण्डिकेव। वैदिकाग्निसंस्कारभेदे स च वेदिभेदेन भिन्नः तत्प्रकारश्च ऋग्विदिनाम् कालेशीकृते, यजुर्वेदिनाम् पशुपतिकृते, सामवेदिनां भवदेवभट्टकृते ग्रन्थे उक्तः संक्षेपेण तुलादानादिपद्धतौ तदनुसारिप्रकारोऽस्माभिर्दर्शितः। पृषो० कस्य लोपे कुशण्डिकाऽप्यत्र स्त्री "सर्व्वेषु माङ्गलियुक्तकर्म्मणाम् कुशण्डिकासंस्कृताग्निसाध्यत्वात् सैव प्रथममभिधीयते" भवदेवः

**कुशकाश** न० नित्यः समाहारद्व०। कुशकाशानां समाहारे क्वचित् इतरेतरसमास आर्षप्रयोगे दृश्यते यथा "इमे लूनशिखास्तस्य दशनैरचिरोद्गतैः। कुशकाशा विराजन्ते बटवः सामगा इव" विष्णु पु० इति केचित्। कुशसहिताः काशा इत्येव तत्र वाक्यमित्यन्ये

**कुशधारा** स्त्री० नदीभेदे

**कुशध्वज** पु० जनकस्य नृपस्यानुजे भ्रातरि। "तस्य पुत्रद्वयं जज्ञे धर्म्मज्ञस्य महात्मनः। ज्येष्ठोऽहमनुजो वीरो मम भ्राता कुशध्वजः" रामा० आ० का० ७१स० "जनकोक्तिः। तस्य राज्यञ्च साङ्काश्यनगरआसीत् यथोक्तं तत्रैव "साङ्काश्ये भ्रातरं शूरमभ्यषिञ्चं कुशध्वजम्"। "भ्राता यवीयान् धर्म्मज्ञ एषराजा कुशध्वजः" सच भरतशत्रुघ्नयोः श्वशुरः तत्कथा तत्रैव ७२ सर्गे दृश्या "निमिवंशज जनकस्यात्मजे नृपभेदे "स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत। ततः सीरध्वजोजज्ञे यज्ञार्थं कर्षतो महीम्। सीता सीराग्रतोजाता यस्मात् सीरध्वजः स्मृतः। कुशध्वजस्तस्य पुत्रस्ततो धर्म्मध्वजो नृपः" इति भाग० ९।१३।१२। अनयोर्विरोधः कल्पभेदात् समाधेयः "पार्थिवीमुद्वहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्म्मिलाम्। यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे" रघुः

**कुशनाभ** पु० कुशइव नाभिरस्य अच् समा०। बलाकाश्वपौत्रे कुशपुत्रे नृपभेदे "अजकस्य तु दायादो बलाकाश्वो महीपतिः। बभूव मृगयाशीलः कुशस्तस्यात्मजोऽभवत्। कुशपुत्रा बभूवुर्हि चत्वारोदेववर्चसः। कुशिकः कुशनाभश्च कुशाश्वो मूर्त्तिमांस्तथा" हरिवं २७अ०। कन्याकुब्जशब्दे तच्चरितानि दर्शितानि तस्य राजधानी महोदयनामपुरं यथा रामा० आदि०३२स० "कुशनाभस्तु धर्म्मात्मा पुरं चक्रे महोदयम्"।

**कुशनेत्र** पु० मारीचिपुत्रभेदे असुरे "शुम्भ प्रचण्डशक्तिश्च कुशनेत्रः शशिध्वजः। यथामति मया प्रोक्ताः मारीचेः कीर्त्तिवर्द्धनाः" हरिवं० २४०अ०

**कुशप** न० कुश—बा० कपन्। पानपात्रे उणादिकोषः

**कुशपुष्प** न० कुशाकारं पुष्पमस्य। १ग्रन्थिपर्णे वृक्षे रत्नमा०। कुशाश्च पुष्पाणि च समा० द्व०। २कुशपुष्पाणां समाहारे "कुशपुष्पं समिद्वारि ब्राह्मणः स्वयमाहरेत्" स्मृतिः

**कुशप्लवन** न० भारतप्रसिद्धे तीर्थभेदे "कुशप्लवनमासाद्य ब्रह्मचारी समाहितः। त्रिरात्रमुषितः स्नात्वा अश्वमेधफलं लभेत्" भा० व० ८५अ०

**कुशर** पु० कुत्सितः शरः। शरसदृशे अन्तश्छिद्रे तृणभेदे ऋ० भा० माधवः "शरासः कुशरास" ऋ० १।१९१।३।

**कुशल** न० कुश—कलन्। १कल्याणे। २तद्वति त्रि०। कुशान् लाति ला—क। ३कुशग्राहके त्रि०। कौ पृथिव्यां शलति चलयति कार्य्याणि शल—अच्। ४कार्य्यचतुरे त्रि०। अस्य च कुशग्राहकत्वे यौगिकत्वम् चतुरे लाक्षणिकत्वमिति काव्यप्रकाशकारआह तदेतन्मतं सा० द० निराकृत्य दक्षतायां रूढत्वमस्य व्यवस्थापितं यथा

"केचित् तु "कर्म्मणि कुशलः" इति रूढावुदाहरन्ति। तेषामयमभिप्रायः। "कुशं लाति" इति व्युत्पत्तिलभ्यः कुशग्राहिरूपो मुख्योऽर्थः प्रकृतेऽसम्भवन् विवेचकत्वसाधर्म्म्यसम्बन्धसम्बन्धिनं दक्षरूपमर्थं बोधयति"। तदन्ये न मन्यन्ते। कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात्। अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम्। व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे "गौः शेते" इत्यत्रापि लक्षणा स्यात्। "गमेर्डोः" इति गमधातोर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि प्रयोगात्"।

अत्रेदमभिदध्महे। "गमेर्डोरिति औणादिकडोप्रत्ययान्तस्य गोशब्दस्य "उणादयोऽव्युत्पन्नाः प्रातिपदिकानि" पा० उक्तत्वात् न यौगिकतासम्भवः अवयवलभ्यार्थाभावात् अतस्तस्य गवादौ रूढतैव। "आतोऽनुपसर्गे कः" पा० उक्तकप्रत्ययस्य कृत्त्वेन व्युत्पन्नत्वात् अवयवार्थलभ्यार्थसत्त्वाच्च गोशब्दतुल्यता "किञ्च उणादीनां व्युत्पन्नत्वपक्षेऽपि गोशब्दस्यावयवार्थयोगात् पङ्कजादिपदवत् अर्थविशेषे योगरूढत्वं गोशब्दे वक्ष्यते। अतएव गोशब्दस्य रूढत्वकल्पनमव्युत्पन्नत्वपक्षमाश्रित्यैवेति विवेच्यमिति। मण्डपशब्दस्य मण्डपानकर्त्तृतात्-

पार्श्वकत्वे यौगिकता जनाश्रयपरत्वे रूढत्वमिव कुशल शब्दस्य रूढयौगिकत्वमेव युक्तम् "पप्रच्छ कुशलं राज्ये" रघुः। "भयाम्रं रामत्वं कुशलवसुता न त्वधिगता" सा०द०। "प्रसारयन्ति कुशलाश्रितां वाचं पटीमिव" माघः। "तदनुप्रवेशमथ वा कुशलः" माघः। कुश+अस्त्यर्थे सिध्मा० लच्। ५कुशयुक्ते त्रि०। ततः अस्त्यर्थे इनि। कुशलिन् तद्युक्ते त्रि० स्त्रियां ङीप्। "कुशलिनी वत्सस्य वार्त्ताऽपि न" सा०द०। "मात्र कुशलिनीं ब्रूयाः" भा० उ०१३६अ०। शौण्डा० एतस्य ७त०। कर्म्म कुशलः। श्रेण्यादि०अभूततद्भावार्थे समा०। कुशलकृतः कुशलभूतः। अनेन सह कुमारशब्दस्य समासे कुमारस्य विशेष्यत्वेऽपि श्रमणादि० परनिपातः। कुमार कुशलः। ततः ब्राह्मणादि० कर्म्मणि भावे च ष्यञ्। कौशल्य दक्षतायाम् न०। युवा० तदर्थे अण्। कौशल तदर्थे "योगः कर्म्मसु कौशलम्" गीता।

**कुशलव** पु०द्वि०। पुष्पवतोरिव एकयत्नाप्या रामसुतयोः हेमच०

**कुशलिन्** त्रि० कुशल+अस्त्यर्थे इनि। कल्याणवति। "कुशलिनी वत्सस्य वार्त्तापि न" सा०द०। [ त्नकट्यचे वैद्य०।

**कुशली** स्त्री कुश इव लीयते ली—ड गौरा० ङीष्। अश्म-

**कुशविन्दु** पु० भूम्नि देशभेदे। "वातायना दशार्णाश्च रोमकाः कुशविन्दवः" भा० भी० ६अ० जनपदकथने।

**कुशस्थल** न० कुशप्रधानं स्थलम्। १कान्यकुब्जदेशे हेमच०। "कुशस्थलं वृकस्थलं माकन्दं वारणावतम्। देहिमे चतुरो ग्रामान् कञ्चिदेकञ्च पञ्चमम्" वेणीसं० २पुरीभेदे स्त्री ङीष् जटाधरः सा च प्राक् रेवतनृपेण निर्म्मिता पश्चात् यदुभिः संस्कृता यथा हरिवं० १२३ अ०

"इति सञ्चिन्त्य सर्वे च प्रतीचीं दिशमाश्रिताः। कुशस्थलीं पुरीं रम्यां रेवतेनोपशोभिताम् "विज्ञाय मथुरां रम्यां मानयन्तः पिनाकिनम्। कुशस्थलीं द्वारवतीं निवेशयितुमीप्सवः" हरिवं० २६अ०।

"आनर्त्तविषयश्चासीत् पुरी तस्य कुशस्थली" हरिवं०१०अ०।

**कुशा** स्त्री कुश—क। १रज्ज्वां मेदि० २मधुकर्कट्याम् शब्दच० ३वल्गायां हेमच०। कुशाशब्दे परे अयसः सत्वम् अयस्महिता कुशा अयस्कुशा सि० कौ०। साममानां स्तोत्रीयगणनार्थे औदुम्बरे ४शङ्कौ च शब्दचि०।

**कुशाकर** पु० कुशैराकीर्य्यते समन्तादग्नेः मूलाच्छादनेन वेष्ट्यतेऽत्र आ+कृ—आधारे अप्। यज्ञाग्नौ। स हि कुशकण्डिकायां कुशैराच्छिद्यते। [वानरे शब्दमाला

**कुशाच** पुंस्त्री कुश इव सूक्ष्मायमक्षि अस्य षच् समा०।

**कुशाग्र** न० ६त०। कुशस्याग्रे। "कुशाग्रेणापि कौन्तेय! न स्प्रष्टव्यो महोदधिः" भा० व० ११०२३श्लो०। कुशस्याग्रमिव सूक्ष्मत्वात्। २कुशाग्रतुल्यसूक्ष्मे ३अतिदुर्बोधग्राहके "कुशाग्रबुद्धे। कुशली गुरुस्ते" रघुः। कुशाग्रमिव इवार्थे छ। कुशाग्रीय कुशाग्रतुल्ये त्रि० "कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज" भट्टिः।

**कुशादिक** भावप्रकाशोक्ते तैलभेदे यथा

कुशाग्निमन्थशैरीयनलदर्भेक्षुगोक्षुराः। कपोतवङ्कावसुकवसिरेन्द्रीकरीशराः। धातक्यरलुवन्दाकाः कर्णपूरास्मभेदकाः। एषां कल्ककषायाभ्यां सिद्धं तैलं प्रयोजयेत्। पानाभ्यञ्जनयोगेन वस्तिनोत्तरवस्तिना। शर्कराश्मरिरोगेषु मूत्रकृच्छ्रे च दारुणे। प्रदरे योनिशूले च शुक्रदोषे तथैव च। वन्ध्यागर्भकरं प्रोक्तं तैलमेतत् कुशादिकम्"।

**कुशाम्ब** पु० निमिवंश्ये नृपभेदे कुशनृपसुते। "कुशनाभशब्दे हरिवं० वाक्यम्" रामा० उ०३२स० "ब्रह्मयोनिर्महानासीत् कुशोनाम महातपाः" इत्युपक्रमे "स महात्मा कुलीनायां युक्तायां सुमहारथान्। वैदर्भ्यां जनयामास चतुरः सदृशान् सुतान्। कुशाम्बं कुशनाभञ्च असूर्त्तरजसं वसुम्" नामभेदः कल्पभेदात् अविरुद्धः। "प्रत्यग्रथः कुशाम्बस्य यमाहुर्मणिवाहनम्" भा०आ०६३अ० कुशाम्बेन निर्वृत्ता अण् ङीप्। तत्कृतपुरीभेदे "कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत् पुरीम्" रामा० उ०३२स० निर्गतः कौशाम्ब्याः निष्कौशाम्बिः सि०कौ०। कुशाम्बस्यापत्यं शुभ्रा०ढक्। कौशाम्बेय तदपत्ये पुंस्त्री०।

**कुशारणि** पु० कुशं जलं शापार्थमुदकमरणिरिवास्य। दुर्वासमि मुनौ त्रिका० तस्य शापजलेनैव सर्वनाशकत्वात् तथात्वम्। [ राजनि०

**कुशाल्मलि** पु० कुत्सितः शाल्मलिः। रोहितकवृक्षे।

**कुशावती** स्त्री कुश—अस्त्यर्थे मतुप् मस्य वः संज्ञायां दीर्घः। रामात्मजकुशस्य राजधान्याम् पुर्य्याम्। "स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम्"। "कुशावतीं श्रोत्रियसात् स कृत्वा" रघुः। रामा०उ०का० तु कोशलेष्वेवैतदभिषेकोवर्णितः। "कोशलेषु कुशं वीरमुत्तरेषु तथा लवम्। अभिषिच्य महात्मानावुभौ रामः कुशीलवौ"। अतोरघुवाक्यं पुराणान्तरानुसारीति विवेच्यम्।

**कुशावर्त्त** पु०कुशस्य जलस्यावर्त्तोयत्र। गङ्गावतारतीर्थे "गङ्गाद्वारे कुशावर्त्ते विल्वके नीलपर्वते। तथा कनखले स्नात्वा

धूतपाप्मा दिवं व्रजेत्” भा० आनु० १७००श्लो०। “उपगम्य कुशावर्त्त आसीनं तत्त्ववित्तमम्” भाग० ३।२०।५। “कुशावर्त्ते गङ्गाद्वारे” श्रीधरः। २भरतनृपपुत्रभेदे। “तमनु कुशावर्त इलावर्त्तो ब्रह्मावर्त्तो मलयः केतुभद्रसेन इन्द्रस्पृग्विदर्भः कीकट इति नव नवतिप्रधानाः” भाग० ५।४।१०। तद्राज्यत्वात् कुशावर्त्तस्य तत्संज्ञत्वम्।

**कुशाश्व** पु० सूर्य्यवंश्ये नृपभेदे “सृञ्जयस्य सुतः श्रीमान् सहदेवः प्रतापवान्। कुशाश्वः सहदेवस्य पुत्रः परमधार्म्मिकः” रामा० आ०

**कुशासन** न० कुशैर्निर्म्मितमासनम्। कुशनिर्म्मिते आसने “कुशासनमनन्तरम्” श्राद्धक्रमः। तत्स्वरूपादि श्रा०त० “अथ कुशासनम् तत्र गोभिलः ‘पित्र्ये द्विगुणांस्तु दर्भान् पवित्रपाणिर्दद्यादासीनः सर्वत्र प्रश्नेषु पङ्क्तिमूर्द्धन्यं पृच्छति सर्वान् वा सर्वत्रासनेषु दर्भानास्तीर्य्येति” पित्र्ये पित्रर्थदाने तत्रादौ जलगण्डूषप्रक्षेपः। ततोद्विगुणभुग्नकुशपत्रत्रयं पितॄणामासनार्थं दद्यात् एतच्च आदौ विश्वदेवपक्षे कृत्वा पितृपक्षे कर्त्तव्यं तथा च याज्ञवल्क्यः ‘पाणिप्रक्षालनं दत्त्वा उपन्यस्येत्यृचा पितॄन्”। प्रक्षाल्यतेऽनेनेति प्रक्षालनं जलं तेन तूष्णीं ब्राह्मणपाणौ जलं दत्त्वा विष्टरार्थमासनार्थमिति दीपकलिका। कुशान् ऋजून दद्यात्। व्यक्तमाहाश्वलायनः “अपः प्रदाय दर्भान् द्विगुणभुग्नानासनं प्रदाय” इति आसनमित्यनेनोपवेशनीयत्वप्रतीते हस्ते तद्दानं प्रतीयते। तथाच कार्ष्णाजिनिः ‘दर्भांस्त्वेवासने दद्यान्न तु पाणौ कदा चन। पितृदेवमनुष्याणामेवं तृप्तिर्हि शाश्वती”। अत्र पितृदेवमनुष्येभ्योऽपि कुशासनदानं प्रतीयते। अत्र दैविकत्वेन कुशानां ऋजुत्वमिति विशेषः। देवपितृविप्रयोर्दक्षिणवामयोः कुशासनस्थापनमाह स्मार्त्तधृतब्रह्मपुराणवचनम्। “पितॄणामासनं दद्याद्वामपार्श्वे कुशान् सुधीः। दक्षिणे चैव देवानां सर्वत्र श्राद्धकर्म्मसु”। कोः पृथिव्याः २शासने च। “अब्राह्मणोऽपि कुशासनसहितः”

**कुशिंशपा** स्त्री कुत्सिता शिंशपा। कपिलशिंशपायां राजनि०

**कुशिक** पु० कुशः कुशनामा नृपः जनकत्वेनास्त्यस्य ठन्। गाधिनृपजनके विश्वामित्रपितामहे नृपभेदे तत्कथा यथा “कान्यकुब्जे महानासीत् पार्थिवो भरतर्षभ!। गाधीति विश्रुतो लोके कुशिकस्यात्मसम्भवः। तस्य धर्म्मात्मनः पुत्रः समृद्धबलवाहनः। विश्वामित्र इति ख्यातो बभूव रिपुमर्द्दनः। भा०आ०१७४अ०

“कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन!” रामा० आ० “कुशिकस्यात्मजः श्रीमान् गाधिर्नाम जनेश्वरः। भा०आ०४अ० “कुशपुत्रा बभूवुर्हि चत्वारो देववर्च्चसः। कुशिकः कुशनाभश्च कुशाश्वो मूर्त्तिमांस्तथा” कुशिकस्तु तपस्तेपे” इत्युपक्रमे “स गाधिरभवद्राजा मघवान् कौशिकः स्वयम्” हरिवं० २७।अ० कुशिकचरितं च भा०आनु०५२अध्यायावधि ५६अ० पर्य्यन्ते

“अत्राप्युदाहरन्तीममितिहासं पुरातनम्। च्यवनस्य च संवादं कुशिकस्य च भारत!। एतं दोषं पुरा दृष्ट्वा भार्गवश्च्यवनस्तदा। आगामिनं महाबुद्धिः स्ववंशे मुनिसत्तमः। निश्चित्य मनसा सर्वं गुणदोषं बलाबलम्। दग्धुकामः कुलं सर्व्वं कुशिकानां तपोधनः। च्यवनः समनुप्राप्य कुशिकं वाक्यमब्रवीत्। वस्तुमिच्छा समुत्पन्ना त्वया सह ममानघ!।

कुशिक उवाच। भगवन् सह धर्म्मोऽयं पण्डितैरिह धार्य्यते। प्रदानकाले कन्यानामुच्यते च सदा बुधैः। यत्तु तावदतिक्रान्तं धर्म्मद्वारं तपोधनम्। तत् कार्य्यं प्रकरिष्यामि तदनुज्ञातुमर्हसि। भीष्म उवाच। अथासनमुपादाय च्यवनस्य महामुने!। कुशिको भार्य्यया सार्द्धमाजगाम यतो मुनिः। प्रगृह्य राजा भृङ्गारं पाद्यमस्मै न्यवेदयत्। कारयामास सर्व्वाश्च क्रियास्तस्य महात्मनः। ततः स राजा च्यवनं मधुपर्कं यथाविधि। ग्राहयामास चाव्यग्रो महात्मा नियतव्रतः। सत्कृत्य तं तथा विप्रमिदं पुनरथाब्रवीत्। भगवन्! परवन्तौ स्वो ब्रूहि किं करवावहै। यदि राज्यं यदि धनं यदि गाः संशितव्रत!। यज्ञदानानि च तथा ब्रूहि सर्व्वं ददामि ते। इदं गृहमिदं राज्यमिदं धर्म्मासनञ्च ते। राजा त्वमसि शाध्युर्वीं योऽहं स परवांस्त्वयि। एवमुक्ते ततो वाक्ये च्यवनो भार्गवस्तदा। कुशिकं प्रत्युवाचेदं मुदा परमया पुनः। न राज्यं कामये राजन्न धनं न च योषितः। न च गा न च वै देशान्न यज्ञं श्रूयतामिदम्। नियमं कञ्चिदारप्स्ये युवयोर्यदि रोचते। परिचर्य्योऽस्मि यत्ताभ्यां युवाभ्यामविशङ्कया। एवमुक्ते तदा तेन दम्पती तौ जहर्षतुः। प्रत्यब्रूताञ्च तमृषिमेवमस्त्विति भारत!।

अथ तं कुशिको हृष्टः प्रावेशयदनुत्तमम्। गृहोद्देशं

ततस्तस्य दर्शनीयमदर्शयत्। इयं शय्या भगवतो यथाकाममिहोष्यताम्। प्रयतिष्यावहे प्रीतिमाहर्त्तुं ते तपोधन!। अथ सूर्य्योऽतिचक्राम तेषां संवदतां तथा। अथर्षिर्नोदयामास पानमन्नं तथैव च। तमपृच्छत्ततो राजा कुशिकः प्रश्रितस्तदा। किमन्नजातमिष्टन्ते किमुपस्थापयाम्यहम्। ततः स परया प्रीत्या प्रत्युवाच नराधिपम्। औपपत्तिकमाहारं प्रयच्छस्वेति भारत!। तद्वचः पूजयित्वा तु तथेत्याह स पार्थिवः। यथोपपन्नमाहारं तस्मै प्रादाज्जनाधिप!। ततः स भुक्त्वा भगवान् दम्पती प्राह धर्म्मवित्। स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिति प्रभो!। ततः शय्यागृहं प्राप्य भगवानृषिसत्तमः। संविवेश नरेशस्तु सपत्नीकः स्थितोऽभवत्। न प्रबोध्योऽस्मि संसुप्त इत्युवाचाथ भार्गवः। संवाहितव्यौ मे पादौ जागर्तव्यञ्च तेऽनिशम्। अविशङ्कस्तु कुशिकस्तथेत्येवाह धर्म्मवित्। न प्रबोधयतान्तौ च तं तथा रजनीक्षये। यथा तथा महर्षेस्तु शुश्रूषापरमौ तदा। बभूवतुर्महाराज! प्रयतावथ दम्पती। ततः स भगवान् विप्रः समादिश्य नराधिपम्। सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिम्। स तु राजा निराहारः सभार्य्यः कुरुनन्दन!। पर्य्युपासत तं हृष्टश्च्यवनाराधने रतः। भार्गवस्तु समुत्तस्थौ स्वयमेव तपोधनः। अकिञ्चिदुक्त्वा तु गृहान्निश्चक्राम महातपाः। तमन्वगच्छतां तौ तु क्षुधितौ श्रमकर्षितौ। भार्य्यापती मुनिश्रेष्ठस्तावेतौ नावलोकयत्। तयोस्तु प्रेक्षतोरेव भार्गवाणां कुलोद्वहः। अन्तर्हितोऽभूद्राजेन्द्र! ततो राजाऽपतत् क्षितौ। स मुहूर्त्तं समाश्वास्य सह देव्या महाद्युतिः। पुनरन्वेषणे यत्नमकरोत् परमं तदा” ५२ अ०

युधिष्ठिर उवाच। तस्मिन्नन्तर्हिते विप्रे राजा किमकरोत्तदा। भार्य्या चास्य महाभागा तन्मे ब्रूहि पितामह!। भीष्म उवाच। अदृष्ट्वा स महीपालस्तमृषिं सह भार्य्यया। परिश्रान्तो निववृते व्रीडितो नष्टचेतनः। स प्रविश्य पुरीं दीनो नाभ्यभाषत किञ्चन। तदेव चिन्तयामास च्यवनस्य विचेष्टितम्। अथ शून्येन मनसा प्रविश्य स्वगृहं नृपः। ददर्श शयने तस्मिञ्छयानं भृगुनन्दनम्। विस्मितौ तावृषिं दृष्ट्वा तदाश्चर्य्यं विचिन्त्य च। दर्शनात्तस्य तु तदा विश्रान्तौ सम्बभूवतुः। यथास्थानन्तु तौ स्थित्वा भूयस्तं संववाहतुः। अथापरेण पार्श्वेन सुष्वाप स महामुनिः। तेनैव च स कालेन प्रत्यबुध्यत स वीर्य्यवान्। न च तौ चक्रतुः किञ्चिद्विकारं भयशङ्कितौ। प्रतिबुद्धस्तु स मुनिस्तौ प्रोवाच विशाम्पते!। तैलाभ्यङ्गो दीयतां मे स्नास्येऽहमिति भारत!। तौ तथेति प्रतिश्रुत्य क्षुधितौ श्रमकर्षितौ। शतपाकेन तैलेन महार्हेणोपतस्थतुः। ततः सुखासीनमृषिं दम्पती संववाहतुः। न च पर्य्याप्तमित्याह भार्गवः सुमहातपाः। यदा तौ निर्विकारौ तु लक्षयामास भार्गवः। तत उत्थाय सहसा स्नानशालां विवेश ह। कॢप्तमेव तु तत्रासीत् स्नानीयं पार्थिवोचितम्। असत्कृत्य च तत् सर्वं तत्रैवान्तरधीयत। स मुनिः पुनरेवाथ नृपतेः पश्यतस्तदा। नासूयाञ्चक्रतुस्तौ च दम्पती भरतर्षभ!। अथ स्नातः स भगवान् सिंहासनगतः प्रभुः। दर्शयामास कुशिकं सभार्य्यं कुरुनन्दन!। स हृष्टवदनो राजा सभार्य्यः कुशिको मुनिम्। सिद्धमन्नमिति प्रह्वो निर्विकारो न्यवेदयत्। आनीयतामिति मुनिस्तञ्चोवाच नराधिपम्। स राजा समुपाजह्रे तदन्नं सह भार्य्यया। मांसप्रकारान् विविधांश्छाकानि विविधानि च। रसालापूपकांश्चित्रान्मोदकानथ खाण्डकान्। रसान् नानाप्रकारांश्च वन्यञ्च मुनिभोजनम्। फलानि च विचित्राणि राजभोज्यानि भूरिशः। वदरेङ्गुदकाश्मर्य्यभल्लातकफलानि च। गृहस्थानाञ्च यद्भोज्यं यच्चापि वनवासिनाम्। सर्वमाहारयामास राजा शापभयात्ततः। अथ सर्वमुपन्यस्तमग्रतश्च्यवनस्य तत्। ततः सर्वं समानीय तच्च शय्यासनं मुनिः। वस्त्रैः शुभैरवच्छाद्य भोजनोपस्करैः सह। सर्वमादीपयामास च्यवनो भृगुनन्दनः। न च तौ चक्रतुः क्रोधं दम्पती सुमहामती। तयोः संप्रेक्षतोरेव पुनरन्तर्हितोऽभवत्। तथैव च स राजर्षिस्तस्थौ तां रजनीं तदा। सभार्य्यो वाग्यतः श्रीमान्न कोपं स समाविशत्। नित्यं संस्कृतमन्नन्तु विविधं राजवेश्मनि। शयनानि च मुख्यानि परिषेकाश्च पुष्कलाः। वस्त्रञ्च विविधाकारमभवत् समुपार्ज्जितम्। न शशाक ततो द्रष्टुमन्तरं च्यवनस्तदा। पुनरेव च विप्रर्षिः प्रोवाच कुशिकं नृपम्। सभार्य्यो मां रथेनाशु वह यत्र ब्रवीम्यहम्। तथेति च प्राह नृपो निर्विशङ्कस्तपोधनम्। क्रीडारथोऽस्तु भगवन्नुत सांग्रामिको रथः। इत्युक्तः स मुनी राज्ञा तेन हृष्टेन तद्वचः। च्यवनः प्रत्युवाचेदं हृष्टः परपुरञ्जय!। सज्जीकुरु रथं क्षिप्रं यस्ते

सांग्रामिको रथः । सायुधः सपताकश्च शक्तीकनकयष्टि-मान् । किङ्किणीस्वननिर्घोषो युक्तस्तोरणकल्पनैः । जाम्बूनदनिबद्धश्च परमेषुशतान्वितः । ततः स तत्-थेत्युक्त्वा कल्पयित्वा महारथम् । भार्य्यां वामे धुरि तदा चात्मानं दक्षिणे तथा । त्रिदण्डं वज्रसूच्यग्रं प्रतोदं तत्र चादधत् । सर्व्वमेतत्ततो दत्त्वा नृपो वाक्यमथाब्रवीत् भगवन् ! क्व रथो यातु ब्रवीतु भृगुनन्दन ! । यत्र वक्ष्यसि विप्रर्षे ! तत्र यास्यति ते रथः । एवमुक्तस्तु भगवान् प्रत्यु-वाचाथ तं नृपम् । इतः प्रभृति यातव्यं पदकं पदकं शनैः । श्रमो मम यथा न स्यात्तथा मे च्छन्दचारिणौ । सुसुखञ्चैव वोढव्यो जनः सर्व्वश्च पश्यतु । नोत्सार्य्याः प-थिकाः केचित्तेभ्यो दास्ये वसु ह्यहम् । ब्राह्मणेभ्यश्च ये कामानर्थयिष्यन्ति मां पथि । सर्व्वान्दास्याम्यशेषेण धनं र-त्नानि चैव हि । क्रियतां निखिलेनैतन्मा विचारय पा-र्थिव ! । तस्य तद्वचनं श्रुत्वा राजा भृत्यानथाब्रवीत् । य-द्यद्ब्रूयान्मुनिस्तत्तत् सर्व्वं देयमशङ्कितैः । ततो रत्नान्यनेका-नि स्त्रियो युग्यमजाविकम् । कृताकृतञ्च कनकं गजेन्द्राश्चा-चलोपमाः । अन्वगच्छन्त तमृषिं राजामात्याश्च सर्व्वशः । हाहाकृतञ्च तत् सर्व्वमासीन्नगरमार्त्तवत् । तौ तीक्ष्णा-ग्रेण सहसा प्रतोदेन प्रतोदितौ । पृष्ठे विद्धौ कटे चैव निर्व्विकारौ तमूहतुः । वेपमानौ निराहारौ पञ्चाशद्रा-त्रिकर्षितौ । कथञ्चिदूहतुर्वीरौ दम्पती तौ रथोत्तमम् । बहुशो भृशविद्धौ च वहन्तौ च क्षतोद्भवम् । ददृशाते महा-राज ! पुष्पिताविव किंशुकौ । तौ दृष्ट्वा पौरवर्गस्तु भृशं शो-कसमाकुलः । अभिशापभयत्रस्तो न च किञ्चिदुवाच ह । द्वन्द्वशश्चाब्रुवन् सर्व्वे पश्यध्वं तपसो बलम् । क्रुद्धा अपि मुनिश्रेष्ठं वीक्षितुं नेह शक्नुमः । अहो भगवतो वीर्य्यं महर्षेर्भावितात्मनः । राज्ञश्चापि सभार्य्यस्य धैर्य्यं पश्यत यादृशम् । श्रान्तावपि हि कृच्छ्रेण रथमेतं समूहतुः । न चैतयोर्विकारं वै ददर्श भृगुनन्दनः ।

"भीष्म उवाच । ततः स निर्व्विकारौ तु दृष्ट्वा भृगुकुलो-द्वहः । वसु विश्राणयामास यथा वैश्रवणस्तथा । त-त्रापि राजा प्रीतात्मा यथादिष्टमथाकरोत् । ततोऽस्य भगवान् प्रीतो बभूव मुनिसत्तमः । अवतीर्य्य रथश्रेष्ठात् दम्पती तौ मुमोच ह । विमोच्य चैतौ विधिवत्ततो वाक्यमुवाच ह । स्निग्धगम्भीरया वाचा भार्गवः सुप्र-सन्नया । ददानि वां वरं श्रेष्ठं तं ब्रूतामिति भार-त ! । सुकुमारौ च तौ विद्धौ कराभ्यां मुनिसत्तमः । पस्पर्शामृतकल्पाभ्यां स्नेहाद्भरतसत्तम ! । अथाब्रवीन्नृपो वाक्यं श्रमो नास्त्यावयोरिह । विश्रान्तौ च प्रभावात्ते ऊचतुस्तौ च भार्गवम् । अथ तौ भगवान् प्राह प्रहृ-ष्टश्च्यवनस्तदा । न वृथा व्याहृतं पूर्व्वं यन्मया तद्भ-विष्यति । रमणीयः समुद्देशो गङ्गातीरमिदं शुभम् । किञ्चित्कालं व्रतपरो निवत्स्यामीह पार्थिव ! । गम्यतां स्वपुरं पुत्त्र ! विश्रान्तः पुनरेष्यसि । इहस्थं मां सभा-र्य्यस्त्वं द्रष्टासि श्वो नराधिप ! । न च मन्युस्त्वया कार्य्यः श्रेयस्ते समुपस्थितम् । यत् काङ्क्षितं हृदिस्थं ते तत् सर्व्वं हि भविष्यति । इत्येवमुक्तः कुशिकः प्रहृष्टेना-न्तरात्मना । प्रोवाच मुनिशार्दूलमिदं वचनमर्थवत् । न मे मन्युर्महाभाग ! पूतौ स्वो भगवंस्त्वया । संवृत्तौ यौवनस्थौ स्वो वपुष्मन्तौ बलान्वितौ । प्रतोदेन व्रणा ये मे सभार्य्यस्य त्वया कृताः । तान्न पश्यामि गात्रेषु स्वस्थोऽस्मि सह भार्य्यया । इमां च देवीं पश्यामि वपुषाऽप्सरसोपमाम् । श्रिया परमया युक्तां यथा दृष्टा पुरा मया । तव प्रसादात्संवृत्तमिदं सर्व्वं महामुने ! । नैतच्चित्रन्तु भगवंस्त्वयि सत्यपराक्रम ! । इत्युक्तः प्रत्युवाचैनं कुशिकं च्यवनस्तदा । आगच्छे-थाः सभार्य्यश्च त्वमिहेति नराधिप । इत्युक्तः समनुज्ञातो राजर्षिरभिवाद्य तम् । प्रययौ वपुषा युक्तो नगरीं देवराजवत् । तत एनमुपाजग्मुरमात्याः सपुरो-हिताः । बलस्था गणिकायुक्ताः सर्व्वाः प्रकृतयस्तथा । तैर्वृतः कुशिको राजा श्रिया परमया ज्वलन् । प्रवि-वेश पुरं हृष्टः पूज्यमानोऽथ वन्दिभिः । ततः प्रविश्य नगरं कृत्वा पूर्व्वाह्णिकीः क्रियाः । भुक्त्वा सभार्य्यो रज-नीमुवास स महाद्युतिः । ततस्तु तौ नवमभिवीक्ष्य यौ-वनं परस्परं विगतरुजाविवामरौ । ननन्दतुः शयनगतौ वपुर्धरौ श्रिया युतौ द्विजवरदत्तया तदा ।

अथाप्यृषिर्भृगुकुलकीर्त्तिवर्द्धनस्तपोधनो वनमभिराम-मृद्धिमत् । मनीषया बहुविधरत्नभूषितं ससर्ज यन्नो नगरे शतक्रतोः ।" इति ५३ अ॰

"भीष्म उवाच । ततः स राजा रात्र्यन्ते प्रतिबुद्धो म-हामनाः । कृतपूर्व्वाह्णिकः प्रायात् सभार्य्यस्तद्वनं प्रति । ततो ददर्श नृपतिः प्रासादं सर्व्वकाञ्चनम् । मणिस्तम्भस-हस्राढ्यं गन्धर्व्वनगरोपमम् । तत्र दिव्यानभिप्रायान् ददर्श कुशिकस्तदा । पर्व्वतान् रूप्यसानूंश्च नलिनीश्च सपङ्कजाः । तत्र शालाश्च विविधास्तोरणानि च भार-

त ! । शाद्वलोपचितां भूमिं यथाकाञ्चनकुट्टिमाम् । सहकारान् प्रफुल्लांश्च केतकोद्दालकान् धवान् । अशोकान् सहकुन्दांश्च फुल्लांश्चैवातिमुक्तकान् । चम्पकांस्तिलकान् भव्यान् पनसान् वञ्जुलानपि । पुष्पितान् कर्णिकारांश्च तत्र तत्र ददर्श ह । श्यामान् वारणपुष्पांश्च तथाऽष्टपादिका लताः । तत्र तत्र परिक्लृप्ता ददर्श स महीपतिः । वृक्षान् पद्मोत्पलधरान् सर्वर्त्तुकुसुमांस्तथा । विमानप्रतिमांश्चापि प्रासादाञ्छैलसन्निभाम् । शीतलानि च तोयानि क्वचिदुष्णानि भारत ! । आसनानि विचित्राणि शयनप्रवराणि च । पर्य्यङ्कान् रत्नसौवर्णान् परार्द्ध्यास्तरणावृतान् । भक्ष्यभोज्यमनन्तञ्च तत्र तत्रोपकल्पितम् । वीणावादाञ्छुकांश्चैव सारिकान् भृङ्गराजकान् । कोकिलाञ्छतपत्रांश्च सकोयष्टिककुक्कुभान् । मयूरान् कुक्कुटांश्चापि दात्यूहान् जीवजीवकान् । चकोरान् वानरान् हंसान् सारसांश्चक्रसाह्वयान् । समन्ततः प्रमुदितान् ददर्श सुमनोहरान् । क्वचिदप्सरसां सङ्घान् गन्धर्वाणाञ्च पार्थिव ! । कान्ताभिरपरांस्तत्र परिष्वक्तान् ददर्श ह । न ददर्श च तान् भूयो ददर्श च पुनर्नृपः । गीतध्वनिं सुमधुरं तथैवाध्यापनध्वनिम् । हंसान् सुमधुरांश्चापि तत्र शुश्राव पार्थिवः । तं दृष्ट्वाऽत्यद्भुतं राजा मनसाऽचिन्तयत्तदा । स्वप्नोऽयं चित्तविभ्रंश उताहो सत्यमेव तु । अहो सह शरीरेण प्राप्तोऽस्मि परमाङ्गतिम् ! उत्तरान् वा कुरून् पुण्यानथ वाऽप्यमरावतीम् । किञ्चेदं महदाश्चर्य्यं संपश्यामीत्यचिन्तयत् । एवं सञ्चिन्तयन्नेव ददर्श मुनिपुङ्गवम् । तस्मिन् विमाने सौवर्णे मणिस्तम्भसमाकुले । महार्हे शयने दिव्ये शयानं भृगुनन्दनम् । तमभ्ययात् प्रहर्षेण नरेन्द्रः सह भार्य्यया । अन्तर्हितस्ततो भूयश्च्यवनः शयनञ्च तत् । ततोऽन्यस्मिन् वनोद्देशे पुनरेव ददर्श तम् । कौश्यां वृष्यां समासीनं जपमानं महाव्रतम् । एवं योगबलाद्विप्रो मोहयामास पार्थिवम् । क्षणेन तद्वनञ्चैव ते वै चाप्सरसां गणाः । गन्धर्वाः पादपाश्चैव सर्वमन्तरधीयत । निःशब्दमभवच्चापि गङ्गाकूलं पुनर्नृप ! । कुशवल्मीकभूयिष्ठं बभूव च यथा पुरा । ततः स राजा कुशिकः सभार्य्यस्तेन कर्म्मणा । विस्मयं परमं प्राप्य तद्दृष्ट्वा महदद्भुतम् । ततः प्रोवाच कुशिको भार्य्यां हर्षसमन्वितः । पश्य भद्रे ! यथा भावा दृश्या दृष्टाः सुदुर्लभाः । प्रसादाद्भृगुमुख्यस्य किमन्यत्र तपोबलात् । तपसा तदवाप्यं हि यत्तु शक्यं मनोरथैः । त्रैलोक्यराज्यादपि हि तप एव विशिष्यते । तपसा हि सुतप्तेन शक्यो मोक्षस्तपोबलात् । अहो प्रभावो ब्रह्मर्षेश्च्यवनस्य महात्मनः । इच्छयैव तपोवीर्य्यादन्यान् लोकान् सृजेदपि । ब्राह्मणा एव जायेरन् पुण्यवाग्बुद्धिकर्म्मणः । उत्सहेदिह कृत्वैव कोऽन्यो वै च्यवनादृते । ब्राह्मण्यं दुर्लभं लोके राज्यं हि सुलभं नरैः । ब्राह्मणस्य प्रभावाद्धि रथे युक्तौ स्व धुर्य्यवत् । इत्येवं चिन्तयानः स विदितश्च्यवनस्य वै । सम्प्रेक्ष्योवाच नृपतिं क्षिप्रमागम्यतामिति । इत्युक्तः सहभार्य्यस्तु सोऽभ्यगच्छन्महामुनिम् । शिरसा वन्दनीयन्तमवन्दत च पार्थिवः । तस्याशिषः प्रयुज्याथ स मुनिस्तं नराधिपम् । निषीदेत्यब्रवीद्धीमान् सान्त्वयन् पुरुषर्षभ ! । ततः प्रकृतिमापन्नो भार्गवो नृपतेर्नृप ! । उवाच श्लक्ष्णया वाचा तर्पयन्निव भारत ! । राजन् ! सम्यग् जितानीह पञ्च पञ्चस्वयं त्वया । मनःषष्ठानीन्द्रियाणि कृच्छ्रान्मुक्तोऽसि तेन वै । सम्यगाराधितः पुत्र ! त्वया प्रवदतां वर ! । न हि ते वृजिनं किञ्चित् सुसूक्ष्ममपि विद्यते । अनुजानीहि मां राजन् ! गमिष्यामि यथागतम् । प्रीतोऽस्मि तव राजेन्द्र ! वरश्च प्रतिगृह्यताम् ।

कुशिक उवाच । अग्निमध्यगतेनेव भगवन् सन्निधौ मया । वर्त्तितं भृगुशार्दूल ! यन्न दग्धोऽस्मि तद्बहु । एष एव वरो मुख्यः प्राप्तो मे भृगुनन्दन ! । यत्प्रीतोऽसि मया ब्रह्मन् ! कुलं त्रातञ्च मेऽनघ ! । एष मेऽनुग्रहो विप्र ! जीविते च प्रयोजनम् । एतद्राज्यफलञ्चैव तपसश्च फलं मम । यदि त्वं प्रीतिमान् विप्र ! मयि वै भृगुनन्दन ! । अस्ति मे संशयः कश्चित्तन्मे व्याख्यातुमर्हसि । ५४ अ०

"च्यवन उवाच । वरश्च गृह्यतां मत्तो यश्च ते संशयो हृदि । तं प्रब्रूहि नरश्रेष्ठ । सर्वं सम्पादयामि ते । कुशिक उवाच । यदि प्रीतोऽसि भगवंस्ततो मे वद भार्गव ! । कारणं श्रोतुमिच्छामि मद्गृहे वासकारितम् । शयनञ्चैकपार्श्वेन दिवसानेकविंशतिम् । अकिञ्चिदुक्त्वा गमनं बहिश्च मुनिपुङ्गव ! । अन्तर्द्धानमकस्माच्च पुनरेव च दर्शनम् । पुनश्च शयनं विप्र ! दिवसानेकविंशतिम् । तैलाभ्यक्तस्य गमनं भोजनञ्च गृहे मम । समुपानीय विविधं यद्दग्धं जातवेदसा । निर्याणञ्च रथेनाशु सहसा यत् कृतं त्वया । धनानाञ्च विसर्गश्च वनस्यापि च दर्शनम् । प्रासादानां बहूनाञ्च काञ्चनानां महामुने ! । मणिविद्रुमपादानां पर्य्यङ्कानाञ्च दर्शनम् । पुनश्चादर्शनं तस्य

श्रोतुमिच्छामि कारणम्। अतीव ह्यत्र सह्यामि चिन्तयानो भृगूद्वह !। नचैवात्राधिगच्छामि सर्व्वस्यास्य विनिश्चयम्। एतदिच्छामि कात्स्न्र्येन सत्यं श्रोतुं तपोधन !
च्यवन उवाच। शृणु सर्व्वमशेषेण यदिदं येन हेतुना। न हि शक्यमनाख्यातुमेवं पृष्टेन पार्थिव !। पितामहस्य वदतः पुरा देवसमागमे। श्रुतवानस्मि यद्राजंस्तन्मे निगदतः शृणु। ब्रह्मक्षत्त्रविरोधेन भविता कुलसङ्करः। पौत्त्रस्ते भविता राजंस्तेजोवीर्य्यसमन्वितः। ततस्ते कुलनाशार्थमहं त्वां समुपागतः। चिकीर्षन् कुशिकोच्छेदं सन्दिधक्षुः कुलन्तव। ततोऽहमागम्य पुरे त्वामवोचं महीपते !। नियमं कञ्चिदारप्स्ये शुश्रूषा क्रियतामिति। न च ते दुष्कृतं किञ्चिदहमासादयं गृहे। तेन जीवसि राजर्षे। न भवेथास्त्वमन्यथा। एवं बुद्धिं समास्थाय दिवसानेकविंशतिम्। सुप्तोऽस्मि यदि मां कश्चिद्बोधयेदिति पार्थिव !। यदा त्वया सभार्य्येण संसुप्तो न प्रबोधितः। अहन्तदैव ते प्रीतो मनसा राजसत्तम !। उत्थाय चास्मि निष्क्रान्तो यदि मां त्वं महीपते !। पृच्छेः क यास्यसीत्येवं शपेयं त्वामिति प्रभो !। अन्तर्हितः पुनश्चास्मि पुनरेव च ते गृहे। योगमास्थाय संवृत्तो दिवसानेकविंशतिम्। क्षुधितौ मामसूयेथाः श्रमाद्वेति नराधिप !। एवं बुद्धिं समास्थाय कर्षितौ वां क्षुधा मया। न च तेऽभूत् सुसूक्ष्मोऽपि मन्युर्मनसि पार्थिव !। सभार्य्यस्य नरश्रेष्ठ ! तेन ते प्रीतिमानहम्। भोजनञ्च समानाय्य यत्तदा दीपितं मया। क्रुध्येथा यदि मात्सर्य्यादिति तन्मर्षितञ्च मे। ततोऽहं रथमारुह्य त्वामवोचं नराधिप !। सभार्य्यो मां वहस्वेति तच्च त्वं कृतवांस्तथा। अविशङ्को नरपते ! प्रीतोऽहञ्चापि तेन ह। धनोत्सर्गेऽपि च कृते न त्वां क्रोधः प्रधर्षयेत्। ततः प्रीतेन ते राजन् ! पुनरेतत् कृतं तव। सभार्य्यस्य वनं भूयस्तद्विद्धि मनुजाधिप !। प्रीत्यर्थं तव चैतन्मे स्वर्गसन्दर्शनं कृतम्। यत्ते वनेऽस्मिन्नृपते ! दृष्टं दिव्यं निदर्शनम्। स्वर्गोद्देशस्त्वया राजन् ! सशरीरेण पार्थिव !। मुहूर्त्तमनुभूतोऽसौ सभार्य्येण नृपोत्तम !। निदर्शनार्थं तपसो धर्म्मस्य च नराधिप !। तत्र यासीत् स्पृहा राजंस्तच्चापि विदितं मया। ब्राह्मण्यं काङ्क्षसे हि त्वं तपश्च पृथिवीपते !। अवमन्य नरेन्द्रत्वं देवेन्द्रत्वं नराधिप !। एवमेतद्यथात्थ त्वं ब्राह्मण्यं तात ! दुर्लभम्। ब्राह्मण्ये सति चर्षित्वं ऋषित्वे च तपस्विता। भविष्यत्येष ते कामः कौशिकात् कौशिको द्विजः। तृतीयं पुरुषं तुभ्यं ब्राह्मणत्वं गमिष्यति। वंशस्ते पार्थिवश्रेष्ठ ! भृगूणामेव तेजसा। पौत्त्रस्ते भविता विप्रस्तपस्वी पावकद्युतिः। यः सदेवमनुष्याणां भयमुत्पादयिष्यति। त्रयाणामेव लोकानां सत्यमेतद्ब्रवीमि ते। वरं गृहाण राजर्षे ! यत्ते मनसि वर्त्तते। तीर्थयात्रां गमिष्यामि पुरा कालोऽभिवर्त्तते।

कुशिक उवाच। एष एव वरो मेऽद्य यस्त्वं प्रीतो महामुने !। भवत्वेतत् यथात्थ त्वं भवेत् पौत्त्रो ममानघ !। ब्राह्मण्यं मे कुलस्यास्तु भगवन्नेष मे वरः। पुनश्चाख्यातुमिच्छामि भगवन् ! विस्तरेण वै। कथमेष्यति विप्रत्वं कुलं मे भृगुनन्दन। कश्चासौ भविता बन्धुर्मम कश्चापि सम्मतः। ५५ अ०

च्यवन उवाच। अवश्यं कथनीयं मे तवैतन्नरपुङ्गव !। यदर्थं त्वाहमुच्छेत्तुं संप्राप्तो मनुजाधिप !। भृगूणां क्षत्त्रिया याज्या नित्यमेतज्जनाधिप !। ते च भेदं गमिष्यन्ति दैवयुक्तेन हेतुना। क्षत्त्रियाश्च भृगून् सर्व्वान् वधिष्यन्ति नराधिप !। आ गर्भादनुकृन्तन्तो दैवदण्डनिपीडिताः। तत उत्पत्स्यतेऽस्माकं कुले गोत्रविवर्द्धनः। और्व्वो नाम महातेजा ज्वलनार्कसमद्युतिः। स त्रैलोक्यविनाशाय कोपाग्निं जनयिष्यति। महीं सपर्व्वतवनां यः करिष्यति भस्मसात्। कञ्चित् कालन्तु वह्निञ्च स एव शमयिष्यति। समुद्रे वडवावक्त्रे प्रक्षिप्य मुनिसत्तमः। पुत्त्रं तस्य महाराज ! ऋचीकं भृगुनन्दनम्। साक्षात् कृत्स्नो धनुर्वेदः समुपस्थास्यतेऽनघ !। क्षत्त्रियाणामभावाय दैवयुक्तेन हेतुना। स तु तं प्रतिगृह्यैव पुत्त्रे संक्रामयिष्यति। जमदग्नौ महाभागे तपसा भावितात्मनि। स चापि भृगुशार्दूलस्तं वेदं धारयिष्यति। कुलात्तु तव धर्म्मात्मन् कन्यां सोऽधिगमिष्यति। उद्भावनार्थं भवतो वंशस्य भरतर्षभ !। गाधेर्दुहितरं प्राप्य पौत्त्रीं तव महातपाः। ब्राह्मणं क्षत्त्रधर्म्माणं पुत्त्रमुत्पादयिष्यति। क्षत्त्रियं विप्रकर्म्माणं बृहस्पतिमिवौजसा। विश्वामित्रं तव कुले गाधेः पुत्त्रं सुधार्म्मिकम्। तपसा महता युक्तं प्रदास्यति महाद्युते !। स्त्रियौ तु कारणं तत्र परिवर्त्ते भविष्यतः। पितामहनियोगाद्वै नान्यथैतद्भविष्यति। तृतीये पुरुषे तुभ्यं ब्राह्मणत्वमुपैष्यति”।

“भीष्म उवाच ॥ कुशिकस्तु मुनेर्व्वाक्यं च्यवनस्य महात्मनः। श्रुत्वा हृष्टोऽभवद्राजा वाक्यञ्चेदमुवाच ह।

एवमस्त्विति धर्मात्मा तदा भरतसत्तम ! । च्यवनस्तु महातेजाः पुनरेव नराधिपम् । वरार्थं नोदयामास तमुवाच स पार्थिवः । वाढमेवं करिष्यामि कामं त्वत्तो महामुने ! । ब्रह्मभूतं कुलं मेऽस्तु धर्म्मे चास्य मनो भवेत् । एवमुक्तस्तथेत्येवं प्रत्युक्त्वा च्यवनो मुनिः । अभ्यनुज्ञाय नृपतिं तीर्थयात्रां ययौ तदा । एतत्ते कथितं सर्वमशेषेण मया नृप ! । भृगूणां कुशिकानाञ्च अभिसम्बन्धकारणम् । यथोक्तमृषिणा चापि तदा तद्भवन्नृप !" ५६अ० । कुशिकस्यापत्यम् अण् । कौशिक तदपत्ये पुंस्त्री० स्त्रियां ङीप् हेमच० मुनिभेदार्थकतामालोक्य जमदग्निपत्यर्थकतोक्तिः कल्पद्रुमे तन्मूलान्यत्वोक्तिश्च चिन्त्या । २सर्ज्जवृक्षे हेमच०। ३विभीतकवृक्षे पु० विश्वः ४कोकरे त्रि० ५अश्वकर्णवृक्षे राजनि० ६तैलशेषे पु० शब्दमा० कुशी+स्वार्थे क । कुशिका ७फाले स्त्री

**कुशित** त्रि० कुश—इतच् । जलमिश्रिते उणा०

**कुशिन्** त्रि० कुशोऽस्त्यस्य इनि । कुशयुक्ते "दिनेऽष्टमे तु विप्रेण दीक्षितोऽहं यथाविधि । दण्डी मुण्डी कुशी चीरी वृताक्तोमेखलीकृतः" भा०आनु०१४अ० २वाल्मीके मुनौ हेमच० ।

**कुशिम्बि(म्बी)** स्त्री कुत्सिता शिम्बी पृषो० वा ह्रस्वः । शिम्बीभेदे सुश्रु० । "सहादयं मूलकजाश्च शिम्बा कुशिम्बिवल्लीप्रभवाश्च शिम्बाः । ज्ञेया विपाके मधुरा रसे च बलप्रदाः पित्तनिवर्हणाश्च सुश्रु० । [फाले मेदि० ।

**कुशी** स्त्री कुश—अयोविकारेऽर्थे ङीप् नि० । लौहविकारे

**कुशो(सो)द** न० कु+सद—श पृषो० वा सस्य शः । वृद्ध्यर्थं धनप्रयोगे अमरः "कुशी(सी)दवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता" या० स्मृतिः । २रक्तचन्दने तन्त्रसा० । "लाक्षा कुशी(सी)दसिन्दूरं गोमयञ्च करीषकम् । विलोड्य गुटिकां कृत्वा जपसेव्याञ्च कारयेत्"

**कुशी(सी)रक** पु० कुत्सितः शी(सी)रोयत्न कर्षणे वा कप् । कर्षणेन कुत्सितहलके क्षेत्रादौ । ततः चतुरर्थ्यां सख्या० ढञ् । कौशी(सी)रकेय तत्सन्निकृष्टदेशादौ त्रि० ।

**कुशीलव** पु० कुत्सितं शीलं कुगति०अस्त्यर्थे व, कुशीलं वाति वा—क—वा । १कीर्त्तिसञ्चारके नटे,२चारणे,३गायके च । कुशीलववृत्त्यर्थं नाट्यप्रचारकत्वात् ४वाल्मीकौ मुनौ । शब्दचि० ५नटमात्रे अमरः । "यज्ञाद्यस्तु नःपूर्व्वं रङ्गविघ्नोपशान्तये" कुशीलवाः प्रकुर्व्वन्ति सा०द० । कुशश्च लवश्च पृषो० । ६कुशलवयोः द्वि० हेमच० । "अभिषिच्य महात्मानावुभौ रामः कुशीलवौ" रामा० उ० १०७स० । त्रिकाण्डशेषे कुशीवश इति वाल्मीक्यर्थे पाठः लिपिकरप्रमादकृतः ।

**कुशुम्भ** पु० कु+शुम्भ अच् । कुसुम्भशब्दार्थे हारा०

**कुशूल** पु० कुश—कूलच् । १तुषाग्नौ, जटाधरः २अन्नकोष्ठके, इष्टकादिनिर्म्मिते धान्यादिस्थापनार्हे ३स्थाने च । हेमच० "कुसूलपूरणाढकैः" स्मृतिः

**कुशूलधान्यक** पु० कुशूलपरिमितं धान्यं यस्य । यावता धान्येन वर्षत्रयं स्वस्य स्वकुटुम्बस्य स्वभृत्यस्य निर्वाहो भवति तावन्मात्रसञ्चितधान्ये १विप्रे । कुम्भीधान्यशब्दे विवृतिः ।

**कुशेशय** न० कुशे जले शेते शी—अच् अलुक् स० । १पद्मे, "कुशेशयैरत्र जलाशयोषिताम्" माघः । २सारसपक्षिणि, अमरः । ३कर्णिकारवृक्षे शब्दचिन्ता० । कुशद्वीपस्थे ४पर्व्वतभेदे पु० कुशशब्दे विवृतिः [जले

**कुशोदक** न० कुशसंसृष्टमुदकम् शाकत०। दानार्थे कुशसहिते

**कुष** निष्कर्षे क्र्यादि० पर० सक० सेट् । कुष्णाति अकोषीत् । निरस्तु वेट् निरकोषीत् निरकुक्षत् । चुकोष । निष्कर्षश्चेह दृयत्तापरिच्छेदः, मध्यस्थितस्य, वस्तुनो बहिर्निःसारणञ्च । "शिवाः कुष्णन्ति मांसानि" "ततोऽकुष्णात् दशग्रीवः क्रुद्धः प्राणान् वनौकसाम्" भट्टिः । क्त्वा सेट् कित् । "कुषित्वा जगतां सारम्" भट्टिः कर्मकर्त्तरि सार्वधातुके श्यन् वा प० । कुष्यति ते वा पादः । आर्द्धधातुके तु न परस्मैपदम् श्यन्सन्नियोगशिष्टत्वात् कोषिषीष्ट पादः ।

अनु+सादृश्येन वहिस्सारणे तूलेनानुकुष्णाति

अभि+आभिमुख्येन निःसारणे "न बालकर्णनासास्रोतो दशनविवराण्यभिकुष्णीयात्" सुश्रुतः

अव+अधोनिःसारणे तूलैरवकुष्णाति सि०कौ० ।

निर्+निष्कासने । निरकुक्षत् निरकोषीत् 'निष्कोष्टा निष्कोषिता । "निष्कोषितव्यान्निष्कोष्टुं प्राणान् दशमुखात्मजात् । आदाय परिघं तस्थौ बलान्निष्कुषितद्रुमः" भट्टिः "कीटनिष्कुषितं धनुः" भट्टिः "उपान्तयोर्निष्कुषितं विहङ्गैः" रघुः । आर्षे तु गणव्यत्ययोऽपि क्वचित् दृश्यते "यमपुरुषा अयस्मयैरग्नितप्तैः संदंशैस्त्वचि निष्कुषन्ति" भाग० ५।२६।१८।

**कुषल** त्रि० कुष—बा० कलच् । दक्षे पटौ भरतः [कोष

**कुषाकु** पु० कुष—आकु । १कपौ २वह्नौ ३सूर्य्ये च उणा०

**कुषित्** अव्य० कुविद्+पृषो०। १बाहुल्ये २प्रशंसायाञ्च मनोरमा

**कुषित** त्रि० कुष—क्त। जलमिश्रिते उणादि०।

**कुषीद** न० कु+सद—श पृषो० षत्वम्। वृद्ध्यर्थधनप्रयोगे भरतः

**कुषीतक** पु० ऋषिभेदे। तस्यापत्यम् काश्यपः ठञ्। कौषीतकेय तदपत्ये काश्यपे। अन्यत्रार्थे अत इञ्। कौषीतकि तदपत्येऽकाश्यपे। ततः उपकादि० द्वन्द्वेऽद्वन्द्वे च गोत्रप्रत्ययस्य लुक्।

**कुषुभ** क्षेपे कण्ड्वा०प०सक०सेट्। कुषुभ्यति अकुषु(भी)भ्यीत्। "भिनद्मि ते कुषुम्भं यस्ते विषधानः" अथ० २।३२।६।

**कुषुम्भक** पुं स्त्री कुषुभ—ण्वुल् भेदे पृषो० हुम् यलोपश्च। नकुले "कुकुम्भकस्तदब्रवीद्गिरेः प्रवर्त्तमानकः" ऋ० १९१।१६। "कुषुम्भकोनकुलः" भा०

**कुष्ठ** पुं न०कुष्णाति रोगम् कुष—क्थन्। (कुड) प्रसिद्धे वृक्षभेदे "कुष्ठमुष्णं कटु स्वादु शुक्रलं तिक्तकं लघु। हन्ति वातास्रवीसर्पकासकुष्ठमरुत्कफान्" भावप्र०। तद्भेदास्तत्रैवोक्ता यथा "उक्तं पुष्करमूलं तु पौष्करं पुष्करं च तत्। पद्मपत्रञ्च काश्मीरं कुष्ठभेदमिमं जगुः"। अयञ्च सुश्रुते एलादिकगणे एलातगरकुष्ठेत्यादिना, मुस्तकादिकगणे च मुस्ताहरिद्रेत्युपक्रमे विभीतककुष्ठेत्यादिना उक्तः। 'रोगभेदे तत्स्वरूपनिदानभेदादि भावप्र० दर्शितं यथा "विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च। भजतामागतांश्छर्द्दिवेगांश्चान्यान् प्रतिघ्नताम्। व्यायाममग्नितापञ्चाप्यतिभुक्त्वा निषेविणाम्। शीतोष्णलङ्घनाहारान् क्रमं मुक्त्वा निषेविणाम्। घर्म्मश्रमभयार्त्तानां द्रुतं शीताम्बुसेविनाम्। अजीर्णाध्याशिनां चापि पञ्च कर्म्मापचारिणाम्। नवान्नदधिमत्स्यादिलवणाम्लनिषेविणाम्। माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम्। व्यवायं चाप्यजीर्णेऽन्ने दिवा निद्रानिषेविणाम्। विप्रान् गुरून् धर्षयतां पापं कर्म्म च कुर्वताम्। वातादयस्त्रयो दोषास्त्वग्रक्तं मांसमम्बु च। दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः। अतः कुष्ठानि जायन्ते सप्तचैकादशैव च"। विरोधीन्यन्नपानानि क्षीरमत्स्यादीनि व्यायाममित्यादि। अतिभुक्त्वा व्यायामम्, अग्निसन्तापम् अग्निरुपलक्षणं सूर्य्यादिसन्तापञ्च निषेविणामिति। कृदन्तस्य योगे षष्ठी प्राप्ता द्वितीया तु मुनिवचनात्। एवमग्रेऽपि "शीतोष्णं लङ्घनाहारानित्यादिष्वपि द्वितीया। क्रमं—विधिं, घर्मेत्यादि। घर्म्मार्त्तत्वे सति द्रुतमविम्रम्य पाने स्नाने शीताम्बुसेविनाम्। अजीर्णाध्याशिनां भुक्तेऽजीर्णे भुक्तवताम्। पञ्चकर्म्मापचारिणां पञ्चकर्म्माणि वमनविरेचनस्यनिरूहानुवासनानि तेषु कृतेषु अपचारिणाम्। नवान्नदधिमत्स्यादि आहारादि सेविनाम्। व्यवायमित्यादि। अन्ने अजीर्णे विदग्धादिरूपे सति। व्यवायं मैथुनं निषेविणाम्। दिवानिद्रानिषेविणामिति भिन्नो हेतुः। धर्षयताम् अभिभवताम्। दोषदूष्यसंग्रहार्थमाह। वातादय इत्यादिग्रन्थेन त्रिष्वपि प्रतीतेषु त्रय इति पदं सर्वेषु कुष्ठेषु त्रयाणामपि वातादीनां दुष्टत्वबोधनार्थम्। त्वक्, रस, अम्बु, लसीका। अथ संख्यामाह। अतः कुष्ठानामित्यादि। अतः पूर्वोक्तदोषदूष्यसमुदायात्। सप्तचैकादशेति संख्याविच्छेदपाठेन सप्तानां महाकुष्ठत्वमेकादशानां क्षुद्रकुष्ठत्वं बोधयति। तत्र महाकुष्ठान्याह "पूर्वं त्रिकं तथा सिध्मं ततः काकणकं तथा। पुण्डरीकर्क्षजिह्वाके महाकुष्ठानि सप्त च"। पूर्वत्रिकं कपालौदुम्बरमण्डलाख्यम्। सिध्मशब्दोऽकारान्तो नपुंसकः। ननु कथं सिध्मस्य महाकुष्ठेषु गणना सुश्रुतेन क्षुद्रकुष्ठेषु उक्तत्वात् धातुप्रविष्टं सिध्मं तु स्यान्महाकुष्ठमेव च। एवंविधस्य सिध्मस्य चरकेण महाकुष्ठेषु दर्शितत्वात्। एषां महाकुष्ठत्वञ्च शीघ्रमुत्तरोत्तरधात्ववगाहनात् उल्वणदोषजन्यत्वात् चिकित्साबाहुल्याच्च। अथ क्षुद्रकुष्ठान्याह "एककुष्ठं स्मृतं पूर्वं गजचर्म ततः स्मृतम्। ततश्चर्मदलं प्रोक्तं ततश्चापि विचर्चिका। विपादिकाभिधा सैव पामाकच्छूस्ततः परम्। दद्रूविस्फोटकिटिभालसकानि च वेष्टितम्। क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैः"। ननु दद्रूः कथं क्षुद्रकुष्ठेषु गणिता? सुश्रुतेन महाकुष्ठेषूक्तत्वात्। उच्यते असितावगाढमूला दद्रूः सुश्रुतेन महाकुष्ठेषु उक्ता। असितेतराऽनवगाढमूला दद्रूः क्षुद्रकुष्ठमेव। एवंविधाया दद्र्वाश्चरकेण क्षुद्रकुष्ठेषु दर्शितत्वात्। कुष्ठानां त्रिदोषजत्वेनैकत्वेऽपि दोषस्योल्वणतया सप्तधात्वमाह। "कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः। सर्वेषु च त्रिदोषेषु व्यपदेशोऽधिकस्ततः"। सर्वेष्वपि त्रिदोषेषु व्यपदेशः कपालादिसंज्ञास्वेषामष्टादशरूपं यदधिकत्वं ततः कुष्ठानि सप्तधा, दोषैः कथंभूतैः पृथग्द्वन्द्वैः समागतैः सङ्गतैः संमिलितैरिति यावत्। अस्यायमर्थः। किमपि कुष्ठं वातोल्वणं, किमपि पित्तोल्वणं, किमपि कफोल्वणं, किमपि वातश्लेष्मोल्वणं, किमपि पित्तश्लेष्मोल्वणम्, किमपि वातपित्तोल्वणं, किमपि

त्रिदोषोल्वणमिति । पूर्व्वरूपमाह "अतिश्लक्ष्णः खरस्पर्शः स्वेदास्वेदविवर्णता । दाहः कण्डूस्त्वचिस्वापस्तोदः कोठोन्नतिः क्रमः । व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः । रूढ़ानामतिरूक्षत्वं निमित्तेऽल्पेऽपि कोपनम् । रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम्" । अतिश्लक्ष्णः अतिमृदुः । अथवा घर्मादिप्रसङ्गेऽपि स्वेदाभावः । त्वचिस्वापः स्पर्शाज्ञता । शीघ्रोत्पत्तिः व्रणानाम् । "दूषयन्ति श्लथीकृत्य निश्चलत्वादितस्ततः । त्वचः कुर्व्वन्ति वैवर्ण्यं दोषाः कुष्ठमुशन्ति तम्" । येनोल्वणेन यत्कुष्ठमुत्पद्यते तदाह । "वातेन कुष्ठं कापालं पित्तेनौदुम्बरं कफात् । मण्डलाख्यं विचर्चीं च ऋक्षाख्यं वातपित्ततः । चर्म्मैककुष्ठकिटिभं सिध्मालसविपादिकाः । वातश्लेष्मोद्भवाः पित्तकफाद्दद्रूशतारुषी । सपुण्डरीकविस्फोटपामाचर्म्मदलं तथा । सर्व्वैरेवोल्वणैर्दोषैराहुः काकणकं बुधाः" । विचर्चीं च कफादित्यन्वयः । पुण्डरीकं सविस्फोटं पामा चर्म्मदलं तथा पित्तकफादित्यन्वयः । अथ महाकुष्ठानां मध्ये कपालस्य लक्षणमाह । "कृष्णारुणं कपालाभं यद्रूक्षं परुषं तनु । कपालं तोदबहुलं तत् कुष्ठं विषमं स्मृतम्" । किञ्चित्कृष्णाः किञ्चिदरुणाः ये कपालाः स्फुटितमृत्पात्रखण्डाः 'खपरा' इति यावत् तद्वर्णं, परुषं खरस्पर्शम् । तनु तनुत्वक् कपालम् कपालसंज्ञं, विषमं दुश्चिकित्स्यम् । औदुम्बरमाह "उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत् । रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम्" । औदुम्बरफलाकारम् । मण्डलमाह "श्वेतरक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् । कृच्छ्रमन्योन्यसंसक्तं कुष्ठं मण्डलमुच्यते । श्वेतरक्तं किञ्चिच्छ्वेतं किञ्चिद्रक्तम् । स्थिरं चिकित्सां विना अविनाशि, स्त्यानम् आर्द्रं, स्निग्धं सस्वेदम् । उत्सन्नमण्डलम् उन्नतमण्डलम् । कृच्छ्रं कष्टसाध्यम् । अन्योन्यसंसक्तं परस्परमिलितम् । अथ सिध्ममाह "श्वेतताम्रञ्च तनु यत् रजोघृष्टं विमुञ्चति । प्रायेणोरसि तत् सिध्ममलाबूकुसुमोपमम्" । श्वेतताम्रं श्वेतं ताम्रम् । तनु तनुत्वक् । प्रायेणोरसि प्रायशब्दादन्यत्रापि बोद्धव्यम् काकणमाह "यत्काकणन्तिकावर्णमपाकं तीव्रवेदनम् । त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिध्यति । काकणन्तिका गुञ्जा । गुञ्जावर्णत्वेन मध्ये कृष्णमन्ते रक्तम् । अथवा मध्ये रक्तं मध्यान्ते कृष्णम् । अपाकं स्वभावात् । त्रिदोषलिङ्गम्—सर्व्वेषां कुष्ठानां त्रिदोषजत्वेऽपि उल्वणदोषत्रयलिङ्गम् । पुण्डरीकमाह "तत् श्वेतं रक्तपर्य्यन्तं पुण्डरीकदलोपमम् । सरागञ्चैव सोत्सेधं पुण्डरीकं कफोल्वणम्" पुण्डरीकदलोपमं पुण्डरीकं श्वेतकमलं तत्पत्रोपमम् सरागञ्चैव । अत एव श्वेतं, रक्तपर्य्यन्तं अन्ते रक्तम् । सरागमिति अन्ते लोहित्याधिक्यबोधनार्थम् । सोत्सेधम् उन्नतम् । ऋक्षजिह्वकमाह "कर्कशं रक्तपर्य्यन्तमन्तःश्यावं सवेदनम् । यदृक्षजिह्वासंस्थानमृक्षजिह्वं तदुच्यते" । रक्तपर्य्यन्तं अन्ते रक्तम् अन्तःश्यावं मध्ये धूम्रवर्णम् । ऋक्षजिह्वासंस्थानम् ऋक्षो भल्लूकस्तस्य जिह्वाकृति । अथ क्षुद्रकुष्ठानां मध्ये एककुष्ठगजचर्म्मणोर्लक्षणमाह "अस्वेदनं महावासं यन्मत्स्यशकलोपमम् । तदेककुष्ठं चर्म्माख्यं बहुलं गजचर्म्मवत्" । महावासं महास्थानम् । मत्स्यशकलोपमम् अत्र शकलशब्देन लक्षणया त्वगुच्यते । तेन चक्राकारमभ्रकपत्रसदृशं भवति । एककुष्ठमिति क्षुद्रकुष्ठेषु मुख्यत्वात् । चर्म्माख्यं गजचर्म्माख्यम् बहुलं स्थूलम् गजचर्म्मवत् रूक्षं कृष्णं च । अथ चर्म्मदलमाह "रक्तं सशूलं कण्डूमत् सस्फोटं दलयत्यपि । तच्चर्म्मदलमाख्यातं स्पर्शासहनञ्च यत्" । दलयत्यपि विदारयत्यपि चर्म्मेति शेषः । विचर्च्चिकामाह "सकण्डूः पिडका श्यावा बहुस्रावा विचर्च्चिका" । पिडका क्षुद्रपिडका । ननु क्षुद्रकुष्ठानां कथमेकादशत्वं विपादिकाया द्वादशत्वसम्भवात् उच्यते । विचर्च्चिकैव पादयोर्भवन्ती विपादिका तेन संख्यानतिरेकः । अतएव भोजः "दाल्यते त्वक् वरा हस्तपादयोर्ज्ञेया विचर्च्चिका । पादे विपादिका ज्ञेया स्थानभेदाद्विचर्च्चिका" । दाल्यते विदार्य्यते । केचिद्विचर्च्चिकातो विपादिकां भिन्नामाहुः । विपादिकामाह "वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम्" । पाणिपादस्फुटनं पाण्योः पादयोश्च स्फुटनं विदारणं येन तत् । पामामाह "सूक्ष्मा बह्व्यः स्रावयन्त्यः सदाहाः पामेत्युक्ताः पिडकाः कण्डुमत्यः" । पिडकाः पीडयन्तीति पिडका इति क्षिपकादित्वात् निपात्यते । कच्छुमाह "सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेया पाण्योः कच्छुरुग्रा स्फिचोश्च" । सैव पामा स्फोटैः महद्भिः, स्फिचौ-प्रोथौ । दद्रूमाह "सकण्डुरागपिडकं दद्रूमण्डलमुद्गतम्" । दद्रूमण्डलरूपेणोत्पत्तिमत्, उद्गतम् उच्छूनम् । विस्फोटमाह "स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः" । किटिभमाह "श्यामं किणखरस्पर्शपरुषं किटिभं स्मृतम् ।

किणखरस्पर्शम् किणः शुष्कव्रणस्थानं तद्वत् कर्कशस्पर्शम् । परुषं रूक्षम् । अलसकमाह "कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम्" गण्डैः महापिडकाभिः चितं वेष्टितम् । शतारुराह "रक्तश्यावं सदाहार्त्ति शतारुः स्यात् बहुव्रणम्" । अथ सप्तधातुगतानां कुष्ठानां लक्षणान्याह तत्र रसगतस्य लक्षणमाह "त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यञ्च जायते । त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्त्तनम्" । त्वक्शब्देनात्र रस उच्यते धातुप्रस्तावात् । त्वक्स्थत्वाच्च त्वक्स्वापः स्पर्शाज्ञत्वम् । त्वक्स्वाप इत्यादिकं केचिद्रक्तगतस्य लिङ्गं मन्यन्ते । रुधिरगतमाह "कण्डूर्विपूयकश्चैव कुष्ठे शोणितसम्भवे" । विपूयकः विशेषेण पूयः । अथ मांसगतमाह "बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः । तोदः स्फोटः स्थिरत्वञ्च कुष्ठे मांससमाश्रिते" । बाहुल्यं कुष्ठस्य पुष्टिः । पिडकोद्गमः क्षुद्रपिडकोद्गमः स्फोटः छत्रपिडका । स्थिरत्वम् असञ्चारित्वम् । मेदोगतमाह "कौण्यङ्गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम् । क्षतप्रसारो लिङ्गानि पूर्व्वोक्तानि यानि च । मेदःस्थानगते लिङ्गं प्रागुक्तानि तथैव च" । कौण्यं हस्तनाशः । अङ्गानां सम्भेदः अङ्गभङ्गः, क्षतसर्पणं क्षतप्रसरणं, पूर्व्वोक्तानि रक्तमांसगतलिङ्गानि । अस्थिमज्जागतमाह "नासाभङ्गोऽक्षिरागश्च क्षतेषु क्रिमिसम्भवः । स्वरोपघातः पीड़ा च भवेत् कुष्ठेऽस्थिमज्जगे" । शुक्रगतमाह "दम्पत्योः कुष्ठबाहुल्यात् दुष्टशोणितशुक्रयोः । यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम्" । ननु शुद्धशोणितशुक्रयोरेव दम्पत्योर्गर्भसम्भवः दुष्टशोणितशुक्रयोः कथम् अपत्योत्पत्तिः ? यत आह सुश्रुतः "कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः । गर्भः सञ्जायते नार्य्याः स जातो बाल उच्यते" । अयान्यच्च "वातादिदुष्टरेतसोऽप्यपत्योत्पादनेऽसमर्थाः" इति । उच्यते । गर्भोऽत्र शुद्धो बोद्धव्यः । अशुद्धगर्भोऽपि दुष्टशोणितशुक्रयोरपि भवति गतकर्णान्धवधिरादीनां सम्भवात् । शोणितमार्त्तवम् । कुष्ठितं कुष्ठं सञ्जातमस्येति तारकादित्वादितच् । शुक्रार्त्तवगतं कुष्ठमपत्येन व्यज्यते इति तात्पर्य्यम् । कुष्ठेषु उल्वणवातादिदोषलिङ्गमाह "खरं श्यावारुणं रूक्षं वातात् कुष्ठं सवेदनम् । पित्तात् प्रकुपितं दाहरागस्रावान्वितं मतम् । कफात् क्लेदि घनं स्निग्धं सकण्डूशैत्यगौरवम् । द्विलिङ्गं द्वन्द्वजं कुष्ठं त्रिलिङ्गं सान्निपातिकम्" । खरं कर्कशम् । श्यावारुणं श्यावं वा अरुणं वा । प्रकुपितं पूतिक्लेदवत्त्वम् । क्लेदम् आर्द्रतायुक्तम् घनं पुष्टम् । साध्यत्वादिकमाह "साध्यं त्वग्रक्तमांसस्थं वातश्लेष्माधिकञ्च यत् । मेदोगं द्वन्द्वजं जाप्यं वर्ज्यं मज्जास्थिसंश्रितम् । क्रिमितृड्दाहमन्दाग्निसंयुक्तं यत् त्रिदोषजम्" । वातश्लेष्माधिकञ्च यत् एतेन सिध्मैककुष्ठगजचर्म्मविपादिकाकिटिभालसकानि साध्यानि । मज्जागतं शुक्रगतमप्यसाध्यम् । क्रिमितृड्दाहोऽपि वर्ज्य इत्यन्वयः । अथारिष्टमाह "प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम् । पञ्चकर्म्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम्" । प्रभिन्नं विदीर्णम् । हतस्वरं घर्घरस्वरम् । पञ्चकर्म्मगुणातीतम् असञ्जातवमनादिपञ्चकर्म्मगुणम् । अथ त्वग्दुष्टिसाम्यात् कुष्ठभेदत्वाच्चात्रैव श्वित्रमाह "कुष्ठैकसम्भवं श्वित्रं किलासं चारुणं भवेत् । निर्द्दिष्टमपरिस्रावि त्रिधात्वुद्भवसंश्रयम्" । कुष्ठैकसम्भवं कुष्ठेन सहैकः समानः सम्भवो निदानं यस्य तत् । अथ श्वित्रस्य भेदमाह किलासञ्चारुणं भवेत् । श्वित्रमेव रक्तमांसाश्रयात्किलासमरुणञ्च भवेदित्यर्थः । ननु कुष्ठस्य श्वित्रस्य च को भेद इत्यत आह निर्द्दिष्टमपरिस्रावीति श्वित्रमपरिस्रावि भवति कुष्ठन्तु स्रावि अथ च त्रिधातूद्भवसंश्रयमिति । त्रयो धातवो वातपित्तकफास्तेभ्यः पृथग्भूतेभ्य उद्भवो यस्य तत् श्वित्रम् । अथ वा त्रयो धातवो रक्तमांसमेदांसि संश्रयोऽधिष्ठानं यस्य तत् । कुष्ठन्तु सान्निपातिकं सर्व्वधातुगतं भवतीति भेदः । दोषभेदेन लक्षणभेदानाह "वातादूक्षारुणं, पित्तात् ताम्रं कमलपत्रवत् । सदाहं रोमविध्वंसि, कफात् श्वेतं घनं गुरु । सकण्डूकं क्रमाद्रक्तमांसमेदःसु चादिशेत् । वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम्" । अरुणमीषल्लोहितम् । कमलपत्रवदित्यनेन मध्ये श्वेतमन्ते लोहितं बोधयति । घनं पुष्टम् । क्रमाद्रक्तमांसमेदःसु चादिशेत् । तथा च चरकः "अरुणं रक्तमेवात्र ताम्रं पित्ते प्रलक्ष्यते । श्वेतं श्लेष्माणि मेदःस्थे श्वित्रं कुष्ठं परापरमिति" उभयं द्विविधमपि श्वित्रं वर्णेन ईदृगेव । अरुणं ताम्रं श्वेतञ्च दोषभेदात् । द्विविधं दोषजं व्रणजं च । तथा च भोजः "श्वित्रं तु द्विविधं विद्याद्दोषजं व्रणजं तथेति" । श्वित्रं साध्यमसाध्यञ्चाह "अशुक्लरोमबहुलमसंसृष्टमयो नवम् । अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा" । अबहुलं तनु । अन्यच्च "गुह्यपाणितलौष्ठेषु जातमप्यचिरन्त-

नम् । वर्ज्जनीयं विशेषेण किलासं सिद्धिमिच्छता"। गुह्यं मेहनम् भगश्च तलमत्र पदतलं, तत्र जातं सुश्रुतेनान्ते जातमिति सामान्यतो निर्द्दिष्टत्वात् । अप्यचिरन्तनम् नवमपि । कुष्ठस्य संसर्गजत्वप्रसङ्गेनान्यानपि संसर्गजान् रोगानाह "प्रसङ्गाद्गात्रसंस्पर्शान्निःश्वासात् सहभोजनात्" । प्रसङ्गोमैथुनम् । "एकशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् । कण्डूकुष्ठोपदंशश्च भूतोन्मादव्रणज्वराः । औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् । म्रियते यदि कुष्ठेन पुनर्जातस्य तद्भवेत् । अतो निन्दितरोगोऽयं कुष्ठं कष्टं प्रकीर्त्तितम्" । एतावता कुष्ठिनां कुष्ठं सर्वथा प्रतीकरणीयं न तु उपेक्षणीयम्" ।

एतेषां मध्ये केषाञ्चित् महापातकचिह्नत्वं केषाञ्चिदतिपातकचिह्नत्वं केषांचिच्चोपपातकचिह्नत्वं स्मृत्यादौ प्रसिद्धम् । अष्टादशानां मध्ये अष्टानामेव पापरोगतया स्मृतौ तद्युक्तस्यादाह्यत्वादिकमुक्तं तच्च शु॰त॰निर्णीतं यथा भविष्यपुराणीयमध्यतन्त्रस्य षष्ठाध्याये "शृणु कुष्ठगणं विप्र! उत्तरोत्तरतोगुरुम् । विचर्च्चिका तु दुश्चर्म्मा चर्म्मरीयस्तृतीयकः । विकर्चुर्व्रणताम्रौ च कृष्णश्वेते तथाष्टकम् । एषां मध्ये तु यः कुष्ठी गर्हितः सर्वकर्म्मसु । व्रणवत् सर्वगात्रेषु गण्डे भाले तथा नसि" । तथा 'मृते च प्रोथयेत्तीर्थे अथवा तरुमूलके । न पिण्डं नोदकं कुर्य्यान्नच दाहक्रियाञ्चरेत् । षण्मासीयस्त्रिमासीयोस्तुतः कुष्ठी कदा चन । यदि स्नेहाच्चरेद्दाहं यतिचान्द्रायणं चरेत्" । यतिचान्द्रायणाशक्तौ पादोनधेनुचतुष्टयं देयम् । अतिपातकशेषफलत्वादप्येवं युक्तं यथाह विष्णुः "अथ नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुषेषु लक्षणानि भवन्ति कुष्ठ्यतिपातकी, ब्रह्महा यक्ष्मी, सुरापः श्यावदन्तकः, सुवर्णहारी कुनखी, गुरुतल्पगोदुश्चर्म्मा, इत्यादि । श्यावदन्तकः स्वभावकृष्णदन्तकः प्रधानदन्तद्वयमध्यवर्त्तिक्षुद्रदन्तः । प्रधानदन्तोपरि दन्तान्तरमिति केचित् । कुनखी सङ्कुचितनखः, दुश्चर्मा स्वभावतः अनावृतमेढ्ः, । अत एव महारोगिणोयावज्जीवमशौचमाह कूर्मपुराणम् "क्रियाहीनस्य मूर्खस्य महारोगिण एव च । यथेष्टाचरणस्याङ्गर्मरणान्तमशौचकम्" । क्रियाहीनस्य नित्यनैमित्तिकक्रियाननुष्ठायिनः । मूर्खस्य गायत्रीरहितस्य । सार्थगायत्रीरहितस्येति रुद्रधरः । महारोगिणः पापरोगाष्टकान्यतमरोगवतः । ते च उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासोमधुमेहोभगन्दर उदरोऽश्मरी इत्यष्टौ पापरोगानारदोक्ताः । यथेष्टाचारणस्य दूरतवेशप्राप्यासक्तस्य । एवञ्च भविष्यपुराणोक्तं यतिचान्द्रायणप्रायश्चित्तमकृतप्रायश्चित्तानां कुष्ठ्यादीनां दाहे बोद्धव्यम् अन्यथैषां प्रायश्चित्तोपदेशोविफलःस्यात् । यथाह विष्णुः 'कुनखी श्यावदन्तश्च द्वादशरात्रं कृच्छ्रं चरित्वोद्धरेयातां तद्दन्तनखौ' इति अत्र द्वादशरात्रं पराकरूपं तत्र पञ्च धेनवः नतु प्राजापत्यं तद्दाहकर्त्तुर्यतिचान्द्रायणेन विषमशिष्टत्वात् अत्र बहूनामेकधर्म्माणामिति वचनादाकाङ्क्षितत्वाच्च कुष्ठ्यादीनामपि प्रायश्चित्तम् । अतएव प्रायश्चित्तविवेकेऽप्युक्तमेवं दुश्चर्मादिष्वपूह्यमिति । महापातकादतिपातकस्य गुरुत्वात् तच्छेषेऽपि प्रायश्चित्तं द्विगुणम् । कर्मविपाके शातातपः "महापातकजं चिह्नं सप्तजन्मसु जायते । बाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः शमः । कुष्ठञ्च राजयक्ष्मा च प्रमेहोग्रहणी तथा" । अत्र कुष्ठपदमल्पकुष्ठपरमिति पूर्वेणाविरोधः" ।

**कुष्ठकेतु** पु॰ कुष्ठं तन्नाशनः केतुश्चिह्नं यस्य । मार्कण्डिकायां (भूँइखखसा) वृक्षे राजनि॰

**कुष्ठगण** पु॰ ६त॰ । शु॰त॰उक्ते कुष्ठशब्दे दर्शिते अदाह्यत्वादिप्रयोजके कुष्ठभेदसमूहे स च कुष्ठशब्दे भावप्र॰ अष्टादशविधो वर्णितः स च कुष्ठशब्दे दर्शितः [राजनि॰

**कुष्ठगन्धि** न॰ कुष्ठस्येव गन्धोऽस्य इच् समा॰ । एलवालुके

**कुष्ठगन्धिनी** स्त्री॰ कुष्ठस्येव गन्धोऽस्याः इनि ङीप् । अश्वगन्धायां शब्दचि॰

**कुष्ठघ्न** त्रि॰ कुष्ठं हन्ति हन–टक् । कुष्ठनाशके औषधे "मसूरिकायां कुष्ठघ्नलेपनादिक्रिया हिता" सुश्रु॰ । २हितावल्यां पु॰ राजनि॰३काकोडुम्बरिकायां ४वाकुच्यां च स्त्री ङीप् राजनि॰

**कुष्ठनाशन** पु॰ कुष्ठं नाशयति नश–णिच्–ल्यु । १वाराहीकन्दे २ श्वेतसर्षपे च राजनि॰ ३क्षीरीशवृक्षे रत्नमा॰ ४कुष्ठनाशके औषधादौ त्रि॰

**कुष्ठनाशिन्** त्रि॰ कुष्ठं नाशयति नश–णिच्–णिनि । कुष्ठनाशके स्त्रियां ङीप् । सा च २सोमराज्यां रत्नमा॰

**कुष्ठल** न॰कुत्सितं स्थलम् अम्बष्ठादित्वात् षत्वम् । कुत्सितस्थले

**कुष्ठविद्** स्त्री कुष्ठस्य तत्स्वरूपादेः विद् विद्या विद–सम्प॰ भावे क्विप् । कुष्ठस्वरूपादिविद्यायां तत्र साधुः कथादि॰ ठक् । कौष्ठविदिक तत्र साधौ त्रि॰कुष्ठं वेत्ति कर्त्तरि क्विप् । २कुष्ठस्वरूपवेत्तरि त्रि॰ । [राजनि॰। २कुष्ठनाशके त्रि॰

**कुष्ठसूदन** पु॰कुष्ठं सूदयति सूदि–ल्यु । १आरग्वधे(सोन्दाल)

**कुष्ठहन्तृ** पु० कुष्ठं हन्ति हन–तृच्। १हस्तिकन्दे (हातिकान्दा) राजनि० २कुष्ठनाशके त्रि० ३वाकुच्यां स्त्री०ङीप् राजनि० [त्रिका० २कुष्ठनाशके त्रि०

**कुष्ठहृत्** पु० कुष्ठं हरति हृ–क्विप् तुक् च। १विट्खदिरे

**कुष्ठारि** पु० ६त०। १विट्खदिरे शब्दच०। २पटोले ३आदित्यपत्रे ४खदिरमात्रे ५गन्धके च राजनि० ६कुष्ठनाशके

**कुष्ठिका** स्त्री कुष्ठीव कायति कै–क। पादावयवभेदे "यास्ते जङ्घाः याः कुष्ठिका ऋच्छरा ये च ते शफाः" अथ०१०।९।२३

**कुष्ठिन्** त्रि० कुष्ठ+अस्त्यर्थे इनि। कुष्ठरोगयुक्ते। कुष्ठशब्दे उदा० स्त्रियां ङीप्

**कुष्ठित** त्रि० कुष्ठं जातमस्य तार० इतच्। जातकुष्ठे "स्त्रीपुंसयोः कुष्ठदोषाद्दुष्टशोणितशुक्रयोः। यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम्" सुश्रुतः [उभा०

**कुष्मल** न० कुष–क्मलन्। १छेदने २स्फुटने ३विकसिते च

**कुष्माण्ड** पु० ईषत् उष्मा पित्तहेतुत्वात् अण्डेषु वीजेषु यस्य शक०। (कुमड़ा) ख्याते १वृक्षे, २शिवस्य पारिषदभेदे च तस्य कुष्माण्डाकृतित्वात्तथात्वम् जातित्वात् स्त्रियां ङीप् कुष्माण्डीत्यप्यत्र ३लताभेदे स्त्री भावप्र० ऋग्वेदादिप्रसिद्धेषु ४ऋग्विशेषेषु स्त्री ५यद्देवा देवहेडनमित्यादिमन्त्रपञ्चकात्मकेऽनुवाके पु० "स्नातस्य दशरात्रेण प्रायश्चित्तानि दापयेत्। साधितां रेवतीमिष्टिं कुष्माण्डमघमर्षणम्" भा० आनु० १२६अ० व्याख्याने नीलकण्ठः। यद्देवा इत्याद्यनुवाकस्य यजु० २०।१४।१७॥ यथा "यद्देवा देवहेडनं देवासश्चकृमा वयम्। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः" यजु० २०।१४। यदि दिवा यदि नक्तमेनांसि चकृमा वयम्। वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः"१५। यदि जाग्रद्यदि स्वप्न एनांसि चकृमा वयम्। सूर्य्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः" १६। यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये। यच्छूद्रे यदर्य्ये यदेनश्चकृमा वयम्। यदेकस्याधिधर्म्मणि तस्यावयजनमसि" १७। यदापो अघ्न्या इति वरुणेति नो मुञ्चत्वंहसः" १७॥ "इति सार्द्धचतुष्टयमन्त्रात्मकोऽनुवाकः तत्राद्यास्त्रिस्रः कुष्माण्डीसंज्ञा यथाह वेददी० "इत उत्तरमवभृथः मासरकुम्भं प्लावयति यद्देवा इति" का० १।५।१३। अवभृथेष्टिं कृत्वा यद्देवा इत्यादिना वरुणो नो मुञ्चत्वित्यन्तेन सार्द्धकण्डिकाचतुष्कात्मकेन मन्त्रेण मासरकुम्भं जले तारयति। अग्निवायुसूर्य्यदेवत्यास्तिस्रोऽनुष्टुभः कुष्माण्डीसंज्ञाः" इति। तेनावशिष्टसार्द्धमन्त्रसहितोऽनुवाकः कुष्माण्डसंज्ञक इति विवेच्यम् प्रागुक्तभारतव्याख्याने नीलकण्ठेन मन्त्रपञ्चात्मकस्य तथात्वोक्तिः अर्द्धमन्त्रस्य मन्त्रत्वकल्पनयेति बोध्यम्। स्वार्थे क कुष्माण्डकोऽपि (कुमड़ा) वृक्षे ओषधिभेदे, उमायां, (भसिना) कर्कारौ च। कुष्माण्डस्य गुणपाकप्रकारादि भावप्र० उक्तं "कुष्माण्डं बृंहणं वृष्यं गुरु पित्तास्रवातहृत्। बालं पित्तापहं शीतं मध्यमं कफकारकम्। वृद्धं नातिहिमं स्वादु सक्षारं दीपनं लघु। वस्तिशुद्धिकरं चेतोरोगहृत् सर्वदोषजित्। अस्य पाकप्रकाराः यथा "घृते तप्ते विनिःक्षिप्य खण्डान् कुष्माण्डसम्भवान्; वार्त्ताकुविधिना कुर्यात् प्रलेहतलनादिकम्। वेसवाराम्लतक्रेण घृते तलनपूर्बकम्। कुष्माण्डकं फलं सिद्धं विदुः सुस्वादु सुन्दरम्"। "घृतेन गुडयुक्तेन गोलकुष्माण्डखण्डकान्। रञ्जितान् जीरमरिचैरिमान् सुगुलिकां विदुः" "चतुरस्रायतान् स्थूलान् खिन्नान् क्षीरेण चोदितान्। सुपाच्यान् खण्डसर्पिर्भ्यां मरिचैलादिवासितान्"।"कुष्माण्डखण्डानि ससैन्धवानि तनूनि सम्मर्द्दितपिण्डितानि। जम्बीरनीराश्रितशृङ्गवेरैर्भवन्ति वक्त्रेरपि पोषणाय"। "कुष्माण्डसम्भवाः खण्डाः सुखिन्नास्तत्कणान्विताः। वेसवारयुते तैले तलयेद्वा प्रलेहयेत्। खण्डं कनिष्ठिकाकारं कौष्माण्डं स्वेद्य पिण्डितम्। राजिकादधिसम्मूर्त्यं मिश्रितं कास्तूरीयकम्। एवं बहुविधाः कार्याः कौष्माण्डा हि विचक्षणैः। प्रलेहतलनस्वादुक्षारसन्धानराजिकाः"। "अमृतं पक्वकुष्माण्डं कुष्माण्डं तरुणम् विषम्" वैद्य० "कुष्माण्डे चार्थहानिः स्यात्" तिथित०। अलाबूं चैव कुष्माण्डं कार्त्तिके परिवर्ज्जयेत्, कार्त्तिकव्रते पुरा०। ६ यागक्रियाविशेषे शब्दरत्ना० तन्मूलं दृश्यम्

**कुष्माण्डकरसायन** न० चक्रदत्तोक्ते कुष्माण्डस्य द्रव्यान्तरमिश्रितस्य पाकविशेषेण जाते औषधभेदे यथा "कुष्माण्डकात् पलशतं सुखिन्नं निष्कुलीकृतम्। पचेत् तप्ते घृतप्रस्थे शनैस्ताम्रमये दृढे। यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत्। पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य च। त्वगेलापत्रमरिचधान्यकानां पलार्द्धकम्। न्यसेच्चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेन्मुहुः। तत् पक्वं स्थापयेद्भाण्डे दत्त्वा क्षौद्रं घृतार्द्धकम्। तद्यथाग्निबलं खादेद्रक्तपित्ती क्षतक्षयी। कासश्वासतमश्छर्द्दितृष्णाज्वरनिपीडितः। वृष्यं पुनर्नवकरं बलवर्णप्रसादनम्।

उरःसन्धानकरणं वृंहणं स्वरबोधनम्। अश्विभ्यां निर्म्मितं सिद्धं कुष्माण्डकरसायनम्। खण्डामलकमानानुसारात् कुष्माण्डकद्रवात्। पात्रं पाकाय दातव्यं यावान् वात्र रसो भवेत्। अत्रापि सुद्रया पाको निम्नचं निष्कुलीकृतम्"।

**कुष्माण्डखण्ड** पुं॰ चक्रदत्तोक्ते औषधभेदे

"पञ्चाशतकं पलं स्विन्नं कुष्माण्डात् प्रस्थमाज्यतः। प्रास्यं पलशतं खण्डवासाक्वाथाढ़के पचेत्। मुस्ताधात्री शुभाभार्गीत्रिसुगन्धैश्च कार्षिकैः। ऐलेयविश्वधन्याकमरिचैश्च पलांशकैः। पिप्पलीकुड़वञ्चैव मधुमानीं प्रदापयेत्। कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम्। हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति"।

**कुस** श्लेषे दि॰ प॰ सक॰ सेट्। कुस्यति इरित् अकुसत्—अकोसीत् चुकोस। कुसलः

**कुसल** न॰ कुस—कलच्। १मङ्गले २तद्वति त्रि॰ अमरटीका

**कुसित** पु॰ कुस—इत नि॰ गुणाभावः। १जनपदे उणादिकोषः। २वृद्धिजीविनि त्रि॰ तस्य पत्नी ङीप् ऐदादेशः। कुसितायी तत्पत्न्यां स्त्री सि॰कौ॰। कु+सि बन्धने क्त। ३ ईषद्बद्धे त्रि॰।

**कुसिद** त्रि॰ कुस—इद नि॰ न गुणः। १वृद्ध्यर्थः धनप्रयोगे २वृद्धिजीविनि त्रि॰। तस्य पत्नी ङीप् ऐदन्तादेशः। कुसिदायी तत्पत्न्यां स्त्री सि॰ कौ॰

**कुसिन्ध** न॰ कबन्धे। "या वैताः श्रियः एतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येतास्ताः पञ्च चितयः" शत॰ ब्रा॰ ७,५,२,२, "कुसिन्धानि कबन्धानि" भा॰। "याभ्यां कुसिन्धं कृष्टं बबन्ध"। "तद्देवः कुसिन्धे अध्यादधौ" अथ॰ १०,२,३,५, [राजनि॰।

**कुसिम्बी** स्त्री कुशिम्बी+पृषो॰। शिम्बग्राम् (सिम)

**कुसीद** त्रि॰कुस—ईद नि॰ न गुणः "कुसेरुम्भोमेदेता"उणा॰ सूत्रे तृतीयप्रत्ययः सूक्ष्मादिदीर्घादिश्चेति वृत्तिकारहरदत्तादयः। १वृद्ध्यर्थे धनप्रयोगे (सुदखाओया) २पुनर्ग्राह्यत्वेन प्रयुक्ते धनविशेषे। तत्स्वरूपं नारदेनोक्तं यथा "स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते। तत् कुसीदमिति ज्ञेयम् तेन वृद्धिः कुसीदिनाम्" अस्यार्थः स्थानं मूलधनाऽवस्थानम् लाभोवृद्धिः दानग्रहणपदे कर्म्मणि ल्युटा साध्ये तेन मूलधनाऽवस्थाने सत्येव योलाभस्तदर्थं यद्दानं धनिकेन दीयमानं मूलधनम् अधमर्णेन च यद्ग्रहणं तथाङ्गीकृत्य गृह्यमाणं यत् तद्धनमिति अवश्यापाकरणीयत्वरूपगुणयोगात् गौणप्रयोगः। अतएव वाणिज्यार्थप्रयुक्तस्य न ऋणत्वम् इति मिश्राः। तस्यावयवार्थमाह वृहस्पतिः "कुत्सितात् सीदतश्चैव निर्विशङ्कैः प्रगृह्यते। चतुर्गुणं वाष्टगुणं कुसीदाख्यमृणान्ततः" इति अस्यार्थः कुत्सितात् सीदतश्चाधमर्णात् सकलधनं यत् गृह्यते निर्विशङ्कैरुत्तमर्णैः चतुर्गुणं वेति वाकारोऽनास्थायाम् तेनद्वैगुण्यादिलाभः इति। कुसीदे विशेषो गारुडे २१५ अध्याये उक्तः यथा "कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम्। आपत्काले स्वयं कुर्बन् नैनसा युज्यते द्विजः। बहवोवर्त्तनोपाया ऋषिभिः परिकीर्त्तिताः। सर्वेषामपि चैवैषां कुसीदमधिकं विदुः। अनावृष्ट्याराजभयान्मूषिकाद्यैरुपद्रवैः। कृष्यादिके भवेद्बाधा सा कुसीदे न विद्यते। शुक्लपक्षे तथा कृष्णे रजन्यां दिवसेऽपि वा। उष्णे वर्षति शीते वा वर्द्धनं न निवर्त्तते। देशं गतानां या वृद्धिर्नानापण्योपजीविनाम्। कुसीदं सर्वतः सम्यक् संस्थितस्यैव जायते। लब्धलाभः पितृन् देवान् ब्राह्मणांश्चैव पूजयेत्। ते तृप्तास्तस्य तद्दोषं शमयन्ति न संशयः। वणिक् कुसीदी दद्यात्तु वस्त्रं गां काञ्चनादिकम्। कृषीवलोऽन्नपानानि यानशय्यासनानि च। पणेभ्यो विंशतिं दत्त्वा पशुस्वर्णादिकं शतम्। पादेनायस्य पारक्यं कुर्यात् सञ्चयमात्मवान्। अर्द्धेन चात्मभरणं नित्यनैमित्तिकान्वितम्। पादञ्च प्रार्थमानस्य मूलभूतं विवर्द्धयेत्। विद्याशिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः। वृत्तिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः"। तस्य विप्रादिभिः स्वयंकर्त्तव्यता निर्णीता आह्नि॰ त॰ तत्र गौतमः

"कृषिगोरक्षवाणिज्ये अस्वयंकृते कुसीदञ्चेति" कुसीदस्य पृथग्ग्रहणं स्वयंकृतस्याभ्यनुज्ञानार्थं कुसीदं वृद्धिकर्म प्रदेशान्तरेऽभिधानादिति कल्पतरुः। वृहस्पतिः "कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम्। आपत्काले स्वयं कुर्वन् नैनसा युज्यते द्विजः। लब्धलाभः पितृन् देवान् ब्राह्मणांश्चैव भोजयेत्। ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः। वणिक् कुसीदी दद्यात्तु वस्त्रगोकाञ्चनादिकम्। कृषीवलोऽन्नपानानि यानशय्यासनानि च। पणेभ्यो विंशकं दत्त्वा पशुस्वर्णादिकं शतम्। वणिक् कुसीदाद्दोषः स्यात् ब्राह्मणानाञ्च पूजनात्। राज्ञे दत्त्वा तु षड्भागं देवतानाञ्च विंश-

कम् । त्रिंशद्भागञ्च विप्राणां कृषिं कृत्वा न दोषभाक्” । वृद्धिभेदः ऋणादानशब्दे १४१८ पृ० उक्तः । २तद्वति त्रि० तस्य पत्नी ङीप् ऐङ् च मुग्धबोधः । कुसीदायी वृद्ध्याजीविपत्न्याम् । पाणिन्यादिमते कुषितकुसिदशब्दाभ्यां ह्रस्वमध्याभ्यामेव ङीप् ऐच्च इति भेदः । कुसीदवृद्ध्यर्थद्रव्यं प्रयच्छति ठन् ठचौ । कुसीदिक वृद्ध्यर्थधनदायिनि त्रि० स्त्रियामुभयत्र षित्वात् ङीष् । स्वार्थे क । कुसीदक, मत्वर्थे अस्त्यर्थे इनि । कुसीदिन् वृद्ध्यर्थं धनप्रयोक्तरि उत्तमर्णे त्रि० स्त्रियां ङीप्

**कुसीदवृद्धि** स्त्री कुसीदरूपा वृद्धिः । कुसीदरूपायां वृद्धौ (सुद) “कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता” या० स्मृतिः । ब०व्री० । कुसीदरूपवृद्धियुक्ते त्रि०

**कुसुम** न० कुस—उम नि० गुणाभावः । १पुष्पे, “कुसुमसन्ततिसन्ततसङ्गिभिः” माघः । “कुसुमायोजितकार्मुकोमधुः” कुमा० । “विपिनविहारे कुसुमविचित्रा” छन्दोम० । २फले, ३स्त्रीरजसि, “यदा नार्य्याः पितुर्गेहे कुसुमस्तनसम्भवः” ज्यो० ४नेत्ररोगभेदे च मेदिनिः । पञ्चमात्रप्रस्तावे । ऽ ॥ षष्ठे ५प्रभेदे । फलकुसुमविशेषाणां द्रव्यान्तरसुलभत्वादिसूचकत्वं वृ० स० २९अ० दर्शितं यथा

“फलकुसुमसम्प्रवृद्धिं वनस्पतीनां विलोक्य विज्ञेयम् । सुलभत्वं द्रव्याणां निष्पत्तिश्चापि शस्यानाम् । शालेन कलमशाली रक्ताशोकेन रक्तशालिश्च । पाण्डूकः क्षीरिकया नीलाशोकेन सूकरकः । न्यग्रोधेन तु यवकस्तिन्दुकवृद्ध्या च षष्टिको भवति । अश्वत्थेन ज्ञेया निष्पत्तिः सर्वशस्यानाम् । जम्बूभिस्तिलमाषाः शिरीषवृद्ध्या च कङ्गुनिष्पत्तिः । गोधूमाश्च मधूकैर्यववृद्धिः सप्तपर्णेन । अतिमुक्तककुन्दाभ्यां कर्पासं सर्षपान् वदेदसनैः । बदरीभिश्च कुलत्थांश्चिरबिल्वेनादिशेन्मुद्गान् । अतसी वेतसपुष्पैः पलाशकुसुमैश्च कोद्रवा ज्ञेयाः । तिलकेन शङ्खमौक्तिकरजतान्यथ चेङ्गुदेन शणः । करिणश्च हस्तिकर्णैरादेश्या वाजिनोऽश्वकर्णेन । गावश्च पाटलाभिः कदलीभिरजाविकं भवति । चम्पककुसुमैः कनकं विद्रुमसम्पच्च बन्धुजीवेन । कुरुवकवृद्ध्या वज्रं वैदूर्यं नन्दिकावर्त्तैः । विद्याच्च सिन्धुवारेण मौक्तिकं कुङ्कुमं कुसुम्भेन । रक्तोत्पलेन राजा मन्त्री नीलोत्पलेनोक्तः । श्रेष्ठी सुवर्णपुष्पैः पद्मैर्विप्राः पुरोहिताः कुमुदैः । सौगन्धिकेन बलपतिरर्केण हिरण्यपरिवृद्धिः । आम्रैः क्षेमं भल्लातकैर्भयं पीलुभिस्तथारोग्यम् । खदिरशमीभ्यां दुर्भिक्षमर्जुनैः शोभना वृष्टिः । पिचुमर्द्दनागकुसुमैः सुभिक्षमथ मारुतः कपित्थेन । निचुलेनावृष्टिभयं व्याधिभयं भवति कुटजेन । दूर्वाकुशकुसुमाभ्यां भिक्षुर्वृद्धिश्च कोविदारेण । श्यामालताभिवृद्ध्या बन्धक्यो वृद्धिमायान्ति” ।

कुसुमविशेषप्रकाशने दोहदभेदः । “सनूपुररवेण स्त्रीचरणेनाभिताडनम् । दोहदं यदशोकस्य ततः पुष्पोद्गमोभवेत् । बकुलो मुखशीधुसिक्तः । आलोकितः कुरवकः कुरुते विकाशमालोडितस्तिलक उत्कलिको विभाति” कुमा० टी० मल्लि० । तदस्य संजातं तार० इतच् । कुसुमित संजातकुसुमे त्रि० ।

**कुसुमकार्म्मुक** पु० कुसुमं कार्मुकमस्य । कन्दर्पे “कुसुमकार्म्मुककार्मुकसंहितेत्यादि माघः । कुसुमचापादयोप्यत्र” पु० । “कुसुमचापमतेजयदंशुभिः” माघः ।

**कुसुमपञ्चक** न० कुसुमानां पञ्चकम् । कामदेववाणरूपे अरविन्दादिपञ्चके “मनसिशयमहास्त्र मन्यथाऽसौ न कुसुमपञ्चकमप्यलं विसोढुम्” माघः । कुसुमवाणशब्दे विवृतिः ।

**कुसुमपुर** न०(पाटना) इति ख्याते पाटलिपुत्रे नगरे “ततः पितृवधपरित्रासादपक्रान्ते कुसुमपुरात् कुमारे मलयकेतौ” “चाणक्यहतकेन आहूयाभिहिताः कुसुम पुरवासिनः” इति च मुद्रारा० । कुसुमनगर पुष्पपुरादयोऽप्यत्र न० । अल्लोपे कुसुमपुरमप्यत्र ।

**कुसुममध्य** पु० कुसुमं मध्ये फलमध्ये यस्य । (चालदा) वृक्षभेदे । शब्दच०

**कुसुममय** त्रि० कुसुमात्मकं कुसुमप्रचुरं वा कुसुम+मयट् । १पुष्पमये २पुष्पप्रचुरे च स्त्रियां ङीप् ।

**कुसुमवाण** पु० कुसुमानि अरविन्दादीनि पञ्च पुष्पाणि वाणाः यस्य । कन्दर्पे । “अरविन्दमशोकञ्च चूतञ्च नवमल्लिका । नीलोत्पलञ्च पञ्चैते पञ्चवाणस्य सायकाः” माधव्या० मल्लि० धृतवाक्यम् कुसुमशरादयोऽत्र पु० ।

**कुसुमविचित्रा** स्त्री “नयसहितौ न्यौ कुसुमविचित्रा” वृ०र० उक्ते १द्वादशाक्षरपादके वर्णवृत्तभेदे । कुसुमेन विचित्रः । २पुष्पैर्विचित्रे त्रि० । “विपिनविहारे कुसुमविचित्रा” (मुररिपुमूर्त्तिः) छन्दोमञ्जरी ।

**कुसुमाकर** पु०६त० । वसन्ते ऋतौ । “मासानां मार्गशीर्षोऽस्मि ऋतूनां कुसुमाकरः” गीता । पुष्पाकरादयोऽप्यत्र पु० ।

**कुसुमागम** पु० कुसुमानामागमोयत्र । वसन्ते ऋतौ

**कुसुमाञ्जन** न० कुसुमाकारमञ्जनं शाक० । पैत्तलमलजाते पुष्पाकारे अञ्जनभेदे अमरः ।

**कुसुमाञ्जलि** पु० कुसुमपूर्णोऽञ्जलिः । १पुष्पपूर्णेऽञ्जलौ कुसुमानामञ्जलिरिव । उदयनाचार्य्यप्रणीते पञ्चस्तवकात्मके परमात्मनिरूपके ग्रन्थभेदे "इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्रीः" इति तद्ग्रन्थोपसंहारे न्यायमस्तूनाञ्जलिरित्युपक्रमे च कीर्त्तनात् तस्य न्यायकुसुमाञ्जलिनामत्वेऽपि देवदत्तस्य पूर्व्वपदलोपे दत्त पदवाच्यतावत् पूर्व्वपदलोपेन तन्नामता लोकप्रसिद्धेति । पुष्पाञ्जल्यादयोऽप्यत्र पु०

**कुसुमात्मक** न० कुसुममेवात्मा स्वरूपं यस्य कप् । १कुङ्कुमे हारा० तस्य सर्व्वात्मनैव पुष्पाकारत्वात्तथात्वम् ।

**कुसुमाधिप** पु० कुसुमेषु कुसुमप्रधानेषु वृक्षेषु अधिपः श्रेष्ठः सुगन्धित्वात् । चम्पकवृक्षे शब्दर० ।

**कुसुमाधिराज्** पु० कुसुमेषु अधिराजते सुगन्धित्वात् राज-क्विप् । चम्पके त्रिका० ।

**कुसुमायुध** पु० कुसुमानि आयुधान्यस्य । कामदेवे "कुसुमायुधपत्नि ! दुर्लभः" "तव प्रसादात् कुसुमायुधोऽपि" कुमा० पुष्पास्त्रकुसुमास्त्रादयोऽप्यत्र पु०

**कुसुमाल** पु० कोः पृथिव्याः सुमालः सम्बन्धनभेदोऽस्य । चौरे हारा० । तस्य भूमिसन्धिकारित्वेन तत्सम्बन्धित्वात् तथात्वम् ।

**कुसुमासव** न० कुसुमस्य तद्रसस्यासवम् । १ पौष्पमधुनि, तज्जाते, २ मद्ये च राजनि० । आसवशब्दे विवृतिः ।

**कुसुमेषु** पु० कुसुमानि इषवोऽस्य । कामदेवे अमरः कुसुमबाणशब्दे विवृतिः । [६त० । २ पुष्पसमूहे ।

**कुसुमोच्चय** पु० कुसुमानामुच्चयः समूहो यत्र । १ स्तवके ।

**कुसुम्भ** पु० कुस-उम्भ नि० गुणाभावः । (कुसुम) पुष्पप्रधाने वृक्षे अमरः । पुष्पादिप्रसवपरत्वे न० । "कुसुम्भं नालिकाशाकं वृन्ताकं पूतिकां तथा । भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः" तिथित० उशनाः । "कुसुम्भं वातलं रूक्षं रक्तपित्तकफापहम्" भावप्र० । "कटुर्विपाके कटुकः कफघ्नो विदाहिभावादहितः कुसुम्भः" सुश्रु० । तस्य तैलगुणाः "कुसुम्भतैलमत्युष्णं गुरु स्वादु विदाहि च । चक्षुर्भ्यामहितं बल्यं रक्तपित्तकफप्रदम्" भावप्र० । सुश्रुते तु तत्तैलगुणाः सामान्यत उक्ता यथा 'निम्बातसीकुसुम्भमूलकजीमूतकवृक्षकतवेधनार्ककम्पिल्लकहस्तिकर्णपृथ्वीकापीलुकरञ्जेङ्गुदीशिग्रुसर्षपसुवर्चलाविडङ्गज्योतिष्मतीफलतैलानि तीक्ष्णानि लघून्युष्णवीर्य्याणि कटूनि कटुविपाकानि सराण्यनिलकफकृमिकुष्ठप्रमेहशिरोरोगहराणि चेति" । "कुसुम्भशाकस्य सएव" (त्रिफलासवः) सुश्रुते तस्यानुपानसूत्रम् । २कमण्डलौ अमरः । "लुप्तकेशश्मश्रुः पात्री दण्डी कुसुम्भवान्" मनुः । ३ स्वर्णे न० मेदि० ।

**कुसुम्भराग** पु० ६त० । कुसुम्भस्य तत्पुष्पस्य रागः, कुसुम्भस्तद्रस इव रागः इति वा । कुसुम्भ पुष्पस्य १काषजरागे २दम्पत्यो रागभेदे च । स च सा०द ३प० दर्शितः यथा "नीलीकुसुम्भमञ्जिष्ठाः पूर्व्वरागोऽपि च त्रिधा । न चातिशोभते यन्नापैति प्रेम मनोगतम् । तन्नीलीरागमाख्यातं यथा श्रीरामसीतयोः । कुसुम्भरागं तं प्राहुर्यदपैति च शोभते । मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते" ।

**कुसुम्भबीज** न० ६त० । (वरडा) पाश्चात्त्यभाषाप्रसिद्धे वरटाख्ये बीजे । यस्य तैलं कुसुम्भतैलम् ।

**कुसुरुविन्दु** पु० ऋषिभेदे येन "आजिघ्र कलश" इत्यादि मन्त्रो दृष्टः । यजु० ८।४२ वेददी० दृश्यः ।

**कुसू** पु० कुस-क्रू । गण्डूपदे (केँचो) हेमच० ।

**कुसूल** पु० कुस बा० कूलच् । कुशूलशब्दार्थे भरतः ।

**कुसृति** स्त्री कुत्सिता सृतिः सृ-गतौ भावे क्तिन् । १शाठ्ये अमरः २ इन्द्रजाले हेमच० । कुत्सिता सृतिराचारोऽस्य । ३दुर्वृत्ते त्रि० "कामादमी कुसृतयः खलयोनयस्ते" भाग० ८।२३।६

**कुस्तुभ** पु० कुं पृथिवीं स्तुभ्नोति स्तुभ मूल० क । १विष्णौ भरतः । २समुद्रे च शब्दचि० । तस्येदम् अण् । कौस्तुभ मणिभेदे तस्य विष्णुसम्बन्धित्वात् समुद्रोत्पन्नत्वात्तथात्वम् । कौस्तुभशब्दे विवृतिः ।

**कुस्तुम्बरी** स्त्री० कुत्सिता तुम्बरी पृषो० । धन्याके भरतः

**कुस्तुम्बुरु** न० कुत्सितं तुम्बरु तुवि-अर्द्दने बा० उरु । जातित्वे ङीष् । धन्याके सि० कौ० ।

**कुस्त्री** स्त्री कुगतिस० । कुत्सितायां स्त्रियां । तस्या भावः-कर्म्म वा युवा० अण् । कौस्त्र तद्भावे तत्कर्म्मणि च न० ।

**कुस्म** बुद्धिपूर्व्वकदर्शने चुरा० आत्म० सक० ईषद्धास्ये अक० सेट् । कुस्मयते अचुकुस्मतमङ्ग न्यमध्य इत्येके ।

**कुह** विस्मापने अद० आत्म० सक० सेट् । कुहयते अचुकुहत, कुहयां बभूव आस चक्रे कुहकम् कुहनम् ।

**कुह** अव्य० किम्+छन्दसि ह किमः कुः । कस्मिन्नित्यर्थे "यस्मा पृच्छन्ति कुह सेति घोरम्" ऋ० २।१२।५। "क्व वज्रिं कुह धितयः" ऋ० १।५६।८।छन्दसे-

वास्य प्रयोगः न लोके। कुहयति विस्मापयति ऐश्वर्य्येण कुह— अच्। २कुवेरे पु० हेमच०। ३विस्मापके त्रि०।

**कुहक** न० कुह—वा० कन्। १इन्द्रजाले असद्वस्तुनः सत्त्वेन बोधके व्यापारभेदे। "द्वेष्यैरपचैरहितैश्च तस्य भिद्यास नित्यं कुहकोद्यतैश्च" भा० व० २३३अ०। "धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि" भाग० १,१,१, २वञ्चनायां स्त्री चिपका० नेत्त्वम्। इन्द्रजालं च माया व कुहका वापि भीषणा" भा०उ० ५४६१ स्लो०। ३नागभेदे पु०। "ततोऽधस्तान्महातले काद्रवेयाणां सर्पाणां नैकशिरसां क्रोधवशोनाम गणः कुहकतक्षककालियसुषेणादिप्रधाना महाभोगवन्तः" भाग० ५।२४। २६। "द्विजोपसृष्टः कुहकस्तक्षको वा (मां) दशत्वलं गमत विष्णुगाथाः" भाग० १।१६।१४१ परीक्षिदुक्तिः

**कुहकस्वन** पुंस्त्री० कुहकः विस्मापकः स्वनोऽस्य। कुक्कुटविहगे हेमच० स्त्रियां ङीष्। [ङीष्।

**कुहकास्वर** पुंस्त्री कुहकस्वनवत्। कुक्कुटे हारा० स्त्रियां

**कुहक्क** पु०"द्रुतद्वन्द्वं लघुद्वन्द्वं ताले कुहक्कसंज्ञके" इति सङ्गीतदामोदरोक्ते तालभेदे।

**कुहन** न० ईषत् प्रयत्नेन हन्यते हन—कर्मणि वा अप्। १मृद्भाण्डे २काचपात्रे च मेदि० तयोरीषत्प्रयत्नेन हन्यमानत्वात्तथात्वम् कुत्सिताचारेण हन्ति हन—अच्। ३ईर्षालौ त्रि० मेदि०। कुं पृथ्वीं हन्ति हन—अच्। ४मूषिके ५सर्पे च पुंस्त्री स्त्रियां ङीष्।

**कुहना** स्त्री कुह—युच्। १दम्भचर्य्यायां मेदि० २लोभात् मिथ्येर्य्यापथकल्पनायाम् अमरः (दम्भेन कृतध्यान मौनादौ भानुदीक्षितः) भावे ल्युट् विस्मायने न० स्वार्थे क अत इत्त्वम्। कुहनिका तत्रार्थे शब्दरत्ना०।

**कुहर** पु० कुं हरति हृ—अच् कुह—विस्मायने क तं राति रा—क वा। १नागभेदे मेदि०। २गह्वरे ३छिद्रे न० मेदि० "तैः किं मत्तकरीन्द्रकुम्भकुहरे नारोपणीयाः कराः" प्रसन्नरा०। ४कर्णे ५कण्ठशब्दे ६गले ७समीपे च न० अजयपालः।

**कुहरित** न० कुहरयति कण्ठशब्दं करोति कुहर+कर्तौ णिच्—भावे क्त। १पिकालापे मेदि०२रतध्वनौ च मेदि० ३शब्दमात्रे विश्वः

**कुहलि** पु० कु+हलि—इन्। १पूगपुष्पिकायां (पान्) त्रिका०

**कुहा** स्त्री कुह—क। १कुजम्भटिकायाम् २कटुक्यां च (कट्की) शब्दच०।

**कुहु** स्त्री कुह—स्रग० कु। कुहूशब्दार्थे हेमच०। "कोकिलानां कुहुरवैः सुखैः श्रुतिमनोहरैः" भा० आश्व० ७२४ स्लो०। कुहुकुहायते कुहुशब्दे वक्ष्यमाण भारतवाक्यम् कुहु+डाच् द्वित्व कुहुकुहायते।

**कुहू** स्त्री कुह-कू। नष्टेन्दुकलायाममावास्यायाम्। "द्वे ह वा अमावास्ये या पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूरिति" श्रुतिः। व्यक्तमाह कालमा० व्यासः "दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता" स्मृत्यन्तरे "तिथिक्षये सिनीवाली नष्टचन्द्रा कुहूर्मता। वाक्यल्येऽपि कुहूर्चेया वेदवेदाङ्गवेदिभिः"। तत्र श्राद्धाधिकारिभेदमाह तत्रैव जावालिः "अपराह्णद्वयाव्यापी यदि दर्शस्तिथिक्षये। आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता"। आदिशब्दात् स्त्रीशूद्रयोरपि ग्रहणम् यथाह तत्रैव लौगाक्षिः "सिनीवाली द्विजैः कार्य्या साग्निकैः पितृकर्मणि। स्त्रीभिः शूद्रैः कुहूः कार्य्या तथा चानग्निकैर्द्विजैः"। अत्र विशेषादिःकालमाधवीयादौ ज्ञेयः। २तदधिष्ठात्र्यां देवपत्न्याम् "सिनीवाली कुहूरिति देवपत्न्याविति" नैरुक्ताः। सा च अङ्गिरसः सुता यथाह भाग० ४,१,२६। "श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत कन्यकाः। सिनीवाली कुहूराका चतुर्थ्यनुमतिस्तथा" भा०व०११७अ० तु अन्या अपि तत्कन्या आह यथा "देवी भानुमती नाम प्रथमाङ्गिरसः सुता। भूतानामेव सर्वेषां यस्यां रागस्तदाऽभवत्। रागाद्रागेति यामाहुर्द्वितीयाङ्गिरसः सुता। यां कपर्दिसुतामाहुर्दृश्यादृश्येति देहिनः। तनुत्वात् सा सिनीवाली तृतीयाङ्गिरसः सुता। पश्यत्यर्चिष्मती भाभिर्हविर्भिश्च हविष्मती। षष्ठीमङ्गिरसः कन्यां पुण्यामाहुर्महिष्मतीम्। महामखेष्वाङ्गिरसोदीप्तिमत्सु महामती। महामतीति विख्याता सप्तमी कथ्यते सुता। यां तु दृष्ट्वा भगवतीं जनः कुहुकुहायते। एकानंशेति तामाहुः कुहूमङ्गिरसः सुताम्।" विवृतमेतत् नीलकण्ठेन

"भानुमती सूर्य्ययुक्ता दिवसाभिमानिनीत्यर्थः। रात्रिमाह भूतानामिति सुषुप्तिकालत्वेन श्रमनाशकत्वात्तस्यां रागोऽभवत् रागात् रागहेतुत्वात् सन्ध्याद्वये रागोपेतत्वाद्वा। कपर्दिनो रुद्रस्य सुतामिव सुतां चन्द्रकलां ललाटे धृतत्वात् दृश्यादृश्यरूपां तत्र हेतुः तनुत्वादिति तेन सूक्ष्मचन्द्रयुक्तत्वं लक्ष्यते चतुर्दशीयुक्तामावास्या सिनीवाली "या पूर्वामावास्या सा सिनीवाली योत्तरा

सा कुहूरिति" श्रुतेः। अर्चिष्मती पूर्णचन्द्रोपेता शुद्ध-पौर्णमासी यस्यां भाभिर्जनोरात्रावपि पश्यति रूपादिकमिति शेषः। सा चतुर्थी यस्यां हविर्भिर्देवता इज्यन्ते सा हविष्मती। प्रतिपद्युक्ता पौर्णमासी राका नाम पञ्चमी। पुण्यां व्रतार्हां महिष्मतीं नाम चतुर्दशीयुक्तां पौर्णमासीम् अनुमतीं नाम "या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राकेति" श्रुतेः। शुद्धाममावास्यामाह मह्वामखेष्विति सोमयागादिषु दीप्तिमती अमावास्यायां हि दीक्षाकर्त्तुर्वर्धमानश्चन्द्रोऽग्ने दृश्यते पौर्णमास्यान्तु क्षीयमाणः अतो दीप्तिमत्सु दिनेषु एषा मह्वामतीत्युच्यते। यतोऽत्र महान् महस्वान् वा अन्तर्हितो विद्यतेऽस्यामिति योगात् पूर्वपदस्याकारोन्तादेश आर्षः। कुहुकुहायते विस्मितो भवति एका कला अनंशा अल्पांशवती अलवणा यवागूरितिवदल्पार्थे नञ्। "योत्तरा सा कुहूरिति" श्रुतेः प्रतिपद्युक्ता अमावास्या कुहूरिति प्रसिद्धम्।"

"कुहूं देवीं सुकृतं विद्मना" अथ०७४७।१। "कुहूर्देवानामस्तस्य पत्नी" अथ०७४७।२। "तं सिनी च कुहूश्चैव द्युतिः पुष्टिः प्रतावसुः। कीर्त्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे" हरि०वं० २५ अ०। "असमये मतिरुन्मिषति ध्रुवं, करगतैव गता यदियं कुहूः" "कुहूः कृताऽऽह्वयत चन्द्रवैरिणी" नैषधम्

२कोकिलशब्दे तस्य शब्देन विस्मायकत्वात्तथात्वम्। "उहूरिति कुहूरवध्वनिभियाऽपतन्मूर्च्छिता" "त्वमपि चन्द्रविरोधिकुहूरवः" उद्भटः।

**कुहूकण्ठ** पुंस्त्री कुहूरिति शब्दः कण्ठे यस्य। कोकिले। शब्दरत्ना० स्त्रियां ङीष्।

**कुहूमुख** पुंस्त्री कुहूरिति शब्दोमुखे यस्य। कोकिले त्रिका० स्त्रियां ङीष्। ६त०। प्रतिपद्युक्तामावास्याया मुखे न०।

**कुहूरव** पुंस्त्री कुहूरिति रवो यस्य, १कोकिले। कुहूशब्दादयोप्यत्र राजनि०स्त्रियां ङीष्। कर्म्म०।२कुहूरूपे शब्दे पु०।

**कुहूल** न० कुह—ऊलक्। सशल्यभूमिच्छिद्रे जटाध०

**कुहेडी(ली)** स्त्री ईषत् हेडति वेष्टते नेत्रसञ्चारोऽत्र हेड—वेष्टे इन् ङीप्। कुज्झटिकायां शब्दमाला डस्य वा लः। कुहेलीत्यप्यत्र त्रिका० स्वार्थे क। कुहेडि(लि)काऽपि तत्रार्थे।

**कुह्वान** न० ह्वे—भावे ल्युट् कुगतिस०। कुत्सितशब्दे "प्रत्यनूकस्य कुह्वानैर्वैश्वं मे शून्यमिच्छतः" भाग०१,१३,१४,

**कू** आर्तस्वरे तुदा०अक०सेट् कुटादि। कुवते अकुविष्ट चुकुवे।

**कू** शब्दे क्र्यादि० उभ० अक० सेट् प्वादि०। कुनाति कुनीते अकवीत् अकविष्ट। कुकाव चुकुवे। प्रनिकुनाति

**कू** स्त्री कू—क्विप्। पिशाच्याम् शब्दमा०।

**कूकुद** पु० कू शब्दे भावे क्विप् तस्याः कीर्त्तेः कुं भूमिं ददाति दा—क। "सत्कृतालङ्कृतां कन्यां योददाति स कूकुदः" इत्युक्ते कन्यादातरि अमरः। कुकुदशब्दे विवृतिः

**कूच** पु० कु—चट् दीर्घश्च। १स्तने टित्त्वात् ङीप्। कूची २तूलिकायां चित्रलेखनसाधनद्रव्ये स्त्री उणादि०। स्वार्थे क। कूचिकाप्यत्र स्त्री।

**कूचवार** पु० कूचं तृणोत्पत्त्र देशे वृ—आधारे घञ्। १ग्रामभेदे ततः सोऽभिजनोऽस्य ढक्। कौचवार्य्य पित्रादिक्रमेण तत्र वासिनि। २ऋषिभेदे पु० तस्यापत्यं विदा० अञ्। कौचवार तदपत्ये पुंस्त्री स्त्रियां ङीप्।

**कूज** अव्यक्तशब्दे भ्वा० प० अक० सेट्। कूजति अकूजीत्। "कूजन्तं रामरामेति मधुरं मधुराक्षरम्" रामा० "पुंस्कोकिलोयन्मधुरं चुकूज" कुमा० "चुकूज कूजे कलहंसमण्डली" नैष०। "कूजितं राजहंसेन नेदं नूपुरशिञ्जितम्" विक्र०। "समोऽकूजने" पा०।

**कूजित** न० कूज—क्त। १पक्षिशब्दे २अव्यक्तशब्दे च "मधुकरनिकरकरम्बितकूजितकुञ्जकुटीरे" इति जयदेवः।

**कूट** अपवादे दानाभावे च चुरा०आत्म०सक०सेट्। कूटयते अचुकूटत्—त। कूटयां—बभूव आस चकार चक्रे।

**कूट** दाहे मन्त्रणे प्रच्छादने च अद० चुरा० उभय० सक०सेट्। कूटयति ते अचुकूटत्—त। कूटयां बभूव आस चकार चक्रे

**कूट** पु० कूट—अच् यथायथं कर्म्मादौ घञ् वा। १अगस्त्यमुनौ शब्दरत्ना०। २गृहे पुंस्त्री शब्दरत्ना० ३निश्चले राशौ (ढेरी) "अन्नकूटाश्च दृश्यन्ते बहवः पर्वतोपमाः" रामा०।४लौहमुद्गरे ५दम्भे ६मायायाम् "नैव धर्म्मेण तद्राज्यं नार्ज्जवेन नचौजसा। अक्षकूटमधिष्ठाय हृतं दुर्य्योधनेन वै" भा० व०१२६६। ७पर्व्वतशृङ्गे चित्रकूटः त्रिकूटः। "अद्रीणामिव कूटानि धातुरक्तानि शेरते" भा०आ०१८अ०। ८तुच्छे ९हलावयवभेदे फालाधारे १०यन्त्रभेदे (फाँद) "वागुराभिश्च पाशैश्च कूटैश्च विविधैस्तथा" रामा०। ११असत्ये कृत्रिमे च पुंन० मेदि०। "तुलाशासनमानानां कूटकृन्नाणकस्य च" मनुः। १२कैतवे "वाचः कूटन्तु देवर्षेः स्वयं विमक्तशुधिया" भाग०६,५,१०, १३तद्वति त्रि० "मन्त्रोदुर्योधनस्य च कूटस्यधार्त्तराष्ट्रेण प्रेषण

पाण्डवान् प्रति" भा॰आ॰१अ॰। "न कूटैरायुधैर्हन्यात् युध्यमानो रणे रिपून्" मनुः। १४भग्नशृङ्गे पु॰हेम॰यथार्थस्य वस्तुनः स्वरूपप्रच्छादनेन १५अयथार्थवस्तुप्रकाशने "ब्रह्मानुशासनमवधीन्नहद्वै कूटे युक्तं मुसलं लुब्धकस्य" भा॰ मौ॰ ११अ॰। १६पुरद्वारि शब्दचि॰ "इयं कूटे मनुष्येन्द्र! गहना महती चमी" भा॰वि॰१५४श्लो॰। १७अग्रमात्रे "किरीटकूटोज्ज्वलितम् शृङ्गारं दीप्तकुण्डलम्" रामा॰। "वज्रकूटाङ्गनिपातवेग विशीर्णकुक्षिः" भाग॰ ३,१३२८, १८मिथ्याभूते त्रि॰ द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः" या॰स्मृ॰। १९निश्चले त्रि॰ कूटस्थः।

**कूटक** पु॰ कूट-ण्वुल्। १सुरानामगन्धद्रव्ये शब्दमा॰२नवर्यां त्रिका॰ ३फाले न॰ अमरः। कूट-संज्ञायां कन् ४पर्वतभेदे पु॰। "त्रिकूटऋषभः कूटकः कौङ्कः सह्यः" इत्यादि भा॰ ५,१९,१७,

**कूटकृत्** त्रि॰ कूटं करोति कृ-क्विप्। १कृत्रिममानादिकारके २कितवे च "तुलामानसमानानां कूटकृन्नाणकस्य च" मनुः ३कायस्थे पु॰ ४शिवे पु॰ त्रिका॰। [राजनि॰

**कूटज** पु॰ कूटाज्जायते जन-ड। कूटज वृक्षे (कुडची)

**कूटकार्षापण** पु॰ कर्म॰। मिथ्याभूतरौप्यादिमुद्रायाम्

**कूटपूर्व** पु॰ हस्तिनां त्रिदोषजे ज्वरे त्रिका॰।

**कूटपालक** पु॰ कूटं स्वनुस्तोमं पालयति पालि-ण्वुल्। १कुलाले अभेदोपचारात् तत्पावके २कलशादिपाकस्थाने (पोयान)

**कूटयन्त्र** न॰ कर्म॰। (फान्द) आमिषादिद्रव्यम् दत्त्वा मृगादि बन्धनार्थे यन्त्रभेदे अमरः।

**कूटशाल्मलि** त्रि॰ कर्म॰। १शाल्मलिभेदे अम॰। २कृष्णशाल्मली। "कूटशाल्मलिकाऽत्युष्णः कफवातज्वरापहः। भेदनः प्लीहजठरयकृद्गुल्मविषापहः। भूतानाहविबन्धाम्लशोथशूलकफापहः" भावप्र॰ तद्गुणा उक्ताः।

**कूटसंक्रान्ति** स्त्री कूटा मिथ्याभूता तद्दिवस्नानाद्यनङ्गत्वात् संक्रान्तिः। "अर्द्धरात्रे व्यतीते तु यदा संक्रमते रविः। सा ज्ञेया कूटसंक्रान्तिर्मुनिभिः परिकीर्त्तिता" ज्यो॰ उक्ते रवेरर्द्धरात्रोपरिराश्यन्तरसञ्चारे तस्याः कूटत्वञ्च तद्दिने स्नानदानाद्यनङ्गत्वात्। यथा "अर्द्धरात्रे व्यतीते तु संक्रान्तिर्यदृश्यते। पूर्वं व्रतादिकं कुर्य्यात् परेद्युः स्नानदानयोः" भुजबलभीमः। "परदिवसीयस्नानादार्थं पूर्वदिने उपवासः कार्य इत्यर्थः एका॰त॰रघु॰।

**कूटसाक्षिन्** त्रि॰ कर्म॰। मिथ्याभिधायिनि साक्षिणि "न ददाति तु यः साक्ष्यं जानन्नपि नराधमः। स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि" या॰स्मृ॰। तस्य भावः ष्यञ्। कौटसाक्ष्य मिथ्यासाक्ष्यदाने। तच्चोपपातकं "कौटसाक्ष्यं सुहृद्वधः" इति मनुनोपातकमध्ये तस्य गणितत्वात्

**कूटस्थ** त्रि॰ कूटोऽयोघनवत् निश्चलं यथा तथा तिष्ठति स्था-क। १एकरूपतया सर्वकालस्थायिनि परिणामादिशून्ये "अधिष्ठानतया देहद्वयावच्छिन्नचेतनः। कूटवन्निर्विकारत्वात् स्थितः कूटस्थ इष्यते" इत्युक्तलक्षणे २परमात्मनि पु॰। ३व्याघ्रनखाख्ये गन्धद्रव्ये न॰ राजनि॰।

**कूटागार** न॰ कर्म॰। १रहस्यागारे, २चन्द्रशालिकायाम्, च(चिलेर) ३क्रीडागृहे च त्रिका॰

**कूटायुस्** कूटमायुरस्य। गुग्गुलुवृक्षे त्रिका॰।

**कूटायुध** न॰ कर्म॰। अन्तर्प्रनिहितशस्त्रे बहिःकाष्ठादिमये अस्त्रभेदे शब्दचि॰

**कूटार्थभाषा** स्त्री कूटार्थस्य कल्पितार्थस्य भाषा कथा। प्रबन्धकल्पनारूपायां कथायाम् शब्दरत्ना॰। भाषणिनि। कूटार्थभाषिन् कल्पितार्थकथके स्त्रियां ङीप्

**कूड** घनीभावे अक॰ भक्षणे सक॰ पर॰ तुदादि॰सेट्। कूडति अकूडीत्। चकूड। प्रनिकूडति

**कूड्य** न॰ कूड-ण्यत्। कुड्यशब्दार्थे शब्दरत्ना॰।

**कूण** आभाषे सन्त्रणे च अद॰चुरा॰उभ॰ सक॰ सेट्। कूणयति-ते अचुकूणत् त। कूणयाम्-बभूव आस चकार चक्रे। [कूणितम् कूणिः प्रनिकूणयति

**कूण** सङ्कोचे चुरा॰ आत्म॰अक॰ सेट्। कूणयते अचूकुणत।

**कूणि** त्रि॰ कूण-इन्। रोगादिना सङ्कुचितनखरादौ जने

**कूणिका** स्त्री कूण-ण्वुल्। वीणामध्यस्थवंशशलाकायां हेमच॰

**कूदर** पुंस्त्री "ब्राह्मण्यामुपवीर्य्येण क्षत्तुः प्रथमवासरे। कुत्सिते चोदरे जातः कूदरस्तेन कीर्त्तितः" ब्रह्मवै॰ उक्ते १जातिभेदे स्त्रियां ङीष् "तदशौचं विप्रतुल्यं पतितोद्धृतु दोषतः। सद्यःकोटकसंसर्गादधमो जगतीतले"

**कूद्दाल** पु॰ कुद्दाल+पृषो॰। उद्दालवृक्षे रमानाथः।

**कू(कु)प** दौर्बल्ये अद॰ चुरा॰ उभ॰ अक॰ सेट्। कू(कु)पयति-ते अचुकू(कु)पत् त। कू(कु)पयां बभूव आस चकार चक्रे।

**कूप** पु॰ ईषत् आपो यत्र अच् समा॰, कुवन्ति मण्डूकाः अस्मिन् कु-पक् दीर्घश्च वा। १स्वनामख्याते

जलाधारे, अमरः तल्लक्षणं भावप्र० उक्तं यथा। "भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः। बद्धोऽबद्धः स कूपः स्यात् तदम्भः कौपमुच्यते। कौपं पयोयदि स्वादु त्रिदोषघ्नं हितं लघु। तत् चारं कफवातघ्नं दीपनं पित्तकृत् परम्"। कूपस्येदम् अण्। कौप तत्सम्बन्धिनि त्रि० स्त्रियां ङीप्। "प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति" सा०द०। कूपादिकरणफलादिकम् जलाश०त० "सेतुबन्धरता ये च तीर्थशौचरताश्च ये। तडागकूपकर्त्तारो मुच्यन्ते ते तृषाभयात्" आदित्य पु०। "अथ कूपकर्त्तुस्तत्प्रवृत्ते पानीये दुष्कृतार्द्धं विनश्यति" विष्णुः। तत्प्रवृत्ते कृतकूपाद्युद्धिते। "तडागकूपकर्त्तारस्तथा कन्याप्रदायिनः। छत्रोपानहदातारस्ते नराः स्वर्गगामिनः" विष्णुध०। "यो वापीमथ वा कूपं देशे तोयविवर्ज्जिते। खानयेत् स दिवं याति विन्दौ विन्दौ शतं समाः" नन्दि पु०"कूपारामतड़ागेषु देवतायतनेषु च। पुनः संस्कार कर्त्ता च लभते मौलिकं फलम्" विष्णुः "संस्कारविधौ "अजले जलकृपाद्य इति वचनात् जलशून्यदेशखनन एव प्रतिष्ठा न तु पङ्कोद्धारमात्रे। "प्रासादेष्वेवमेवं स्यात् कूपवापीषु गम्यते" जलाश० त० धृत वचनाच्च तत्र वास्तुयागः कार्य्यः। तज्जलञ्च "शीतकाले भवेदुष्णं ग्रीष्मकाले सु शीतलम्। वसन्ते तु प्रशस्तं स्यात् कालभेदात् गुणत्रयम्" राजवल्लभः "प्रेक्षादि० चतुरर्थ्याम् इनि। कूपिन् तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप्। २गर्त्ते उणादिके पः।

**कूपक** पु० कूपे गर्त्ते कायति कै—क। १नौकायाम् गुणाकर्षणयन्त्ररूपे दण्डे (मास्तुल) २नदीमध्यस्थवृक्षे ३तथाभूतपर्वते च उणा०। कूप+स्वार्थे क। ४कुक्षाण्डे मेदि०। ५तैलादिस्थापनाधारपात्रभेदे (कूपा) ६कुकुन्दरे ७उदपाने दर्षितायाञ्च मेदि०। ततः प्रेक्षादि० चतुरर्थ्याम् इनि। कूपकिन् तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप्।

**कूपकच्छप** पु० कूपे एवान्यत्र सञ्चारशून्यः कच्छप इव पातेससि० स०। अल्पविषयाभिज्ञतया निन्दनीये कूपमण्डूकशब्दवदस्यापि रावयत। युक्तारोहा० स्त्रियां जातित्वात् ङीष्। "असौ कूपमण्डूकि! तवैतावति कः श्रयः" भट्टिः।

**कूपखा** त्रि०कूपं खनति खन—वेदे विट् ङा च। कूपखनके।

**कूपज** पु० कूपइव जायते जन—ड। रोमकूपे शब्दचि०

**कूपद्** अव्य० कूप—बा० अदि। प्रश्ने प्रशंसायाञ्च मनो०

**कूपाङ्ग**(ङ्क) पु० कूपाकारोङ्कश्चिह्नं कूपाकारमङ्गं वा शिन्। रोमाञ्चे शब्दरत्ना०।

**कूपार** पु० कुं पृथिवीं पिपर्ति पूरयति अण् पूर्व्वदीर्घः। समुद्रे अमरटीका भृषो०कुवारोऽप्यत्र।

**कूपी** स्त्री कूप—इन् ङीप्। (कुपो) स्नेहपात्रभेदे शब्दचि०

**कूप्य** त्रि० कूपे भवादि यत्। कूपभवादौ। "शन्नः समुद्रिया आपः शमनः सन्तु कूप्याः" स्नानमन्त्रः। "कूप्याः" कात्या० १५,४,३०,

**कूम** न० कोः पृथ्व्याउमा कान्तिः यतः। सरोवरे जटाधरः।

**कूमनस्** त्रि० कुत्सितं मनोऽस्य "कचि तत्पुरुषेत्यादिना" पा० क्वचि पूर्व्वदीर्घः। कुत्सितमनस्के। लोके तु ह्रस्वादिः कुमना इत्येव

**कूर** पु०न० वेञ—भावे क्विप् ऊः कौ भूमौ ऊवं वयनं राति रा—क लस्य रः। अन्ने हलायुधः

**कूर्च** पु०न०कूर्य्यते कुर—चट् नि०दीर्घः। १भ्रुवोर्मध्ये स्थिते लोमोच्चये, अमरः २प्रस्मश्रुणि, ३कैतवे, मेदि०४दम्भे५मयूरपुच्छे ६कुशमुष्टौ ७अङ्गुष्ठाङ्गुलिमध्यस्थोपरिभागे दर्षीर्षे, शब्दचि०८आसनभेदे, तन्त्रोक्ते १०वीजभेदे (हुम्) च। कूर्च्चवीजन्तु हूमित्येव। "ईशानः सेन्दुवामश्रवणपरिगतो वीजमन्यन्महेशि! इत्थं ते मन्दचेता यदि जपति जनो वारमेकं कदाचित्" इति कर्पूरस्तवे तदुद्धारः। "वर्गाद्यं वह्निसंस्थं विधुरतिवलितं तत्त्रयं कूर्च्चयुग्मम्" तत्रैव। भैरवतन्त्रे "कालीवीजद्वयं देवि! दीर्घं हूङ्कारमेव च। त्र्यक्षरी सा महाविद्या चामुण्डा कालिका स्मृता"। ११कठिने त्रि०। १२विकत्थने हेमच०। १३मलापकर्षणार्थे(कुँचि)ख्याते पदार्थे "ततःसमर्पयेत् कूर्च्चं उशीरादिविनिर्म्मितम्। मलापकर्षणादार्थं श्रीमत्कूर्च्चमुत्तमं" "उशीरकूर्च्चकं दत्त्वा सर्वपापैः प्रमुच्यते। दत्त्वा गोवालजं कूर्च्चं सर्व्वान् तापान् व्यपोहति। दत्त्वा चामरकं कूर्च्चं श्रियमाप्नोत्यनुत्तमाम्" नरसिं० पु०। तत्रासनभेदे "किं स्वित् कूर्च्चं परित्यज्य कूर्च्चे न्यमार्जीत्" शत०ब्रा० "तद्यत् स्वच्चं परित्यज्य कूर्च्चे न्यमार्जिषम्" शत०ब्रा०११.३,५,३,कुशानाञ्च कूर्च्चमध्वर्य्यवे संस्तृणन्ति" सांख्या०श्रौ०सू० "स्रुक्स्रुवं कूर्च्चश्च सौवर्णः" भा० आश्व० २०६२श्लो० स्वार्थे क। तत्रार्थे "मृदुना वा दन्तधावन कूर्च्चकेनापनयेत्" सुश्रु० अस्त्यर्थे इनि। कूर्च्चिन्

कूर्च्चाकारयुक्ते त्रि०। "कूर्चिकिनोऽभ्यन्तरतपरिष्टाद्वा" सुश्रु०चूडा० लच् कूर्चलः। श्मश्रुयुक्ते त्रि०। १४पञ्चगव्ये ब्रह्मकूर्चशब्दे विवृतिः

**कूर्चशिरस्** न० ६त०। पादस्कन्धे (गुडमुडा) "बाहुमर्म्माणि तु क्षिप्रतलहृदयकूर्चकूर्चशिरोमणिबन्धेन्द्रवस्तिकूर्पराणि" सुश्रु०।

**कूर्चशीर्ष** न० कूर्चं श्मश्रु तद्वच्छीर्षमस्य वा कप्। १नारिकेले शब्दचि०। २जीवके अष्टवर्गान्तर्गते ओषधिभेदे राजनि०।

**कूर्चशेखर** पु०कूर्चं श्मश्रु इव शेखरमस्य। नारिकेले राजनि०

**कूर्चामुख** पु०विश्वामित्रवंशजे ऋषिभेदे। "लीलाढ्यो नारदश्चैव तथा कूर्चामुखः स्मृतः" भा०आनु०४अ०। तद्वंशोक्तौ

**कूर्चिका** स्त्री कूर्चस्तदाकारोऽस्त्यस्याः ठन्। क्षीरविकृतिभेदे सा च द्विविधा दधिकूर्चिका तक्रकूर्चिका च। "दध्ना सह च यत् पक्वं क्षीरं सा दधिकूर्चिका। तक्रेण पक्वं यत् क्षीरं सा भवेत् तक्रकूर्चिका" भरतः। "दधितक्रकूर्चिकामस्तुसौवीरकेत्यादि"। "ग्राहिणी वातला रूक्षा दुर्जरा तक्रकूर्चिका। तक्राल्लघुतरो मण्डः कूर्चिका दधितक्रजः" सुश्रुते तद्गुणा उक्ताः। "कूर्चिका पिक्षता भक्ष्या गुरवो नातिपित्तलाः। विदाहोत्क्लेशजनना रूक्षा दृष्टिप्रदूषणा" सुश्रु०।

**कूर्द** क्रीडायां कुर्दवत्।

**कूर्दन** न० कूर्द—भावे ल्युट् खेलायाम् (कोँदा) अमरः

**कूर्दनी** स्त्री कूर्द्यतेऽत्र आधारे ल्युट् ङीप्। चैत्रपूर्णिमायां त्रिका०। तत्र हि जनाः कूर्दनोत्सवं कुर्व्वन्ति

**कूर्प** पु० कुरं पाति पा—क दीर्घः। भ्रुवोर्मध्ये हेमा०

**कूर्पर** पु० कुर्परवत्। तदर्थे।

**कूर्पास** पु० कुर्पासवत्। तदर्थे। स्वार्थे क। तत्रार्थे

**कूर्म** पुंस्त्री०कुत्सितः कौ वा ऊर्म्मिर्वेगो यस्य पृषो०। १कच्छपे, अमरः स्त्रियां टाप्। तल्लक्षणं वृह०सं०६४अ०यथा "स्फटिकरजतवर्णो नीलराजीवचित्रः कलशसदृशमूर्तिश्चारुवंशश्च कूर्मः। अरुणसमवपुर्वा सर्षपाकारचित्रः सकलनृपमहत्त्वं मन्दिरस्थः करोति। अञ्जनभृङ्गश्यामवपुर्वा बिन्दुविचित्रोऽव्यङ्गशरीरः। सर्पशिरा वा स्थूलगलो यः सोऽपि नृपाणां राष्ट्रविवृद्ध्यै। वैदूर्यत्विट् स्थूलकण्ठस्त्रिकोणो गूढच्छिद्रश्चारुवंशश्च शस्तः। क्रीडावाप्यां तोयपूर्णे मणौ वा कार्यः कूर्मो मङ्गलार्थं नरेन्द्रैः"।

"उन्मीलने स्मृतः कूर्मो भिन्नाञ्जनसमप्रभः" शा०ति०टी० उक्ते २देहस्थे वायुभेदे। ३भगवदवतारभेदे कमठशब्दे १६८०पृ० विवृतिः। ४मुद्राभेदे तत्स्वरूपं तन्त्रसारे यथा "वामहस्तस्य तर्जन्यां दक्षिणस्य कनिष्ठया। तथा दक्षिणतर्जन्यां वामाङ्गुष्ठेन योजयेत्। उन्नतः दक्षिणाङ्गुष्ठः वामस्य मध्यमादिगः। अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च। वामस्य पितृतीर्थेन मध्यमानामिके तथा। अधोमुखे च ते कुर्य्याद्दक्षिणस्य करस्य च। कूर्मपृष्ठसमं कुर्य्याद्दक्षपाणिञ्च सर्व्वतः। कूर्ममुद्रेयमाख्याता देवताध्यानकर्म्मणि"।

**कूर्मचक्र** न० कूर्माकारं चक्रम्। १तन्त्रोक्ते ग्राह्यमन्त्रशुभादिसूचके कूर्माकारे चक्रभेदे। तत्स्वरूपादि रुद्रयामले उक्तं यथा

"कूर्मचक्रं प्रवक्ष्यामि शुभाशुभफलात्मकम्। यज्ज्ञात्वा सर्व्वशास्त्रार्थं जानाति पण्डितोत्तमः। अभेद्यं भेदकं चक्रं शृणुष्वादरपूर्व्वकम्। कूर्माकारं महाचक्रं चतुष्पादसमावृतम्। तुण्डे स्वरान्, दक्षपादे कवर्गं, वामपादके। चवर्गं, कीर्त्तितं पश्चात् अधःपादे टवर्गकम्। तदधस्तु तवर्गः स्यादुदरे च पवर्गकम्। यवान्तं हृदये प्रोक्तं शहान्तं पृष्ठमध्यके। लाङ्गूले शक्रबीजञ्च(लं) क्षकारं लिङ्गमध्यके। लिखित्वा गणयेन्मन्त्री चक्राकारं मलापहम्। स्वरे लाभः कवर्गे श्रीश्चवर्गश्च विवेकदः। टवर्गे राजपदवी तवर्गे धनवान् भवेत्। उदरे सर्वनाशः स्यात् हृदये बहुदुःखभाक्। पृष्ठे च सर्व्वसन्तापः लाङ्गूले मरणं ध्रुवम्। वैष्णवे पृष्ठदेशे तु दुःखञ्च वामपादके। विरुद्धद्वयलाभे तु न कुर्य्याच्चक्रचिन्तनम्। विरुद्धैके धर्म्मनाशो युग्मदोषे च मारणम्। यत्र देवाक्षरञ्चास्ति तत्र चेन्निजवर्णकम्। विरुद्धञ्च त्यजेच्चक्रमन्यमन्त्रं विचारयेत्। पृथक् होमे यदि भवेत् वर्णमाला महेश्वर!। यदि तत्र सौख्यभावः स्यात् तत् सौख्यं नापि वर्ज्जयेत्। विभिन्नगेहे दोषश्चेत् शुभमन्त्रञ्च संत्यजेत्। इति ते कथितं देव! दृष्टादृष्टफलप्रदम्। ये शोधयन्ति चक्रेन्द्रं मन्त्रसिद्धिप्रदं शुभम्"।

२जपाङ्गदेशभेदसूचके चक्रभेदे तत्स्वरूपं तन्त्रसारे उक्तं यथा "दीपस्थानं समाश्रित्य कृतं कर्म फलप्रदम्। दीप्यते पुरुषो यत्र दीपस्थानं तदुच्यते। चतुरस्रां भुवं भित्त्वा कोष्ठानां नवकं लिखेत्। पूर्व्वकोष्ठादि विलिखेत् सप्तवर्गाननुक्रमात्। लक्ष्मीशे मध्यकोष्ठे स्वरान् युग्मक्रमाल्लिखेत्। दिक्षु पूर्वादितो यत्र चेत्ता-

द्यचरसंस्थितिः। मुखं तत्तस्य जानीयात् हस्तावुभयतः स्थितौ। क्रोडे कुक्षी उभे पादौ द्वे शिष्टे पुच्छमीरितम्। क्रमेणानेन विभजेत् मध्यस्थमपि भागतः। मुखस्थो लभते सिद्धिं करस्थः स्वल्पजीवनः। उदासीनः कुक्षिसंस्थः पादस्थो दुःखमाप्नुयात्। पुच्छस्थः पीड्यते मन्त्री बन्धनोच्चाटनादिभिः। कूर्मचक्रमिदं प्रोक्तं मन्त्रिणां सिद्धिदायकम्" पिङ्गलायाम् "कूर्मचक्रमविज्ञाय यः कुर्य्याज्जपयज्ञकम्। तस्य यज्ञफलं नास्ति सर्व्वानर्थाय कल्पते"।

२ज्योतिषोक्ते नक्षत्रभेदेन देशभेदानां शुभाशुभज्ञापके कूर्म्माकारे चक्रे च तन्निरूपम् ज्यो० त०यथा "प्राङ्मुखो भगवान् देवः कूर्मरूपी व्यवस्थितः। आक्रम्य भारतं वर्षं नवभेदं यथाक्रमम्"। तत्र नक्षत्रन्यासक्रम: "मध्यप्रागग्नियाम्यादि कृत्तिकादित्रयत्रयैः। क्रूरखेटयुतैस्तैस्तु पीड्यन्ते तन्निवासिनः"। तत्र वेधो यथा "पूर्वापरे भवेद्वेधो वेधश्चोत्तरदक्षिणे। ईशानराक्षसे वेधो वेध आग्नेयमारुते। तारात्रयान्वितं तत्र सौरिं यत्नेन चिन्तयेत्"। तत्र वेधादिजन्यदोषाः "अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। स्वचक्रं परचक्रञ्च सप्तैते सम्भवन्ति च। एवं देशगृहग्रामक्षेत्रनामर्क्षतो वदेत्। तथाच यत्र नक्षत्रे दिव्यपार्थिवनाभसाः। दृश्यन्ते सुमहोत्पाताः स्वां दिशं तत्र पीडयेत्। सौरिर्बलाधिको दुष्टः, स्वल्पवीर्य्यः शुभावहः। एकदा पीडयेद्यत्र भानुजः कूर्मचक्रके। तत्र स्थाने महाविघ्नो जायते नात्र संशयः। दुष्टस्थाने गते चन्द्रे कर्त्तव्यं शान्तिपौष्टिकम्। द्रष्टव्येशभेदाश्च कूर्म्मविभागशब्दे दृश्याः

**कूर्म्मपुराण** न० कूर्म्मेण भाषितं पुराणम्। व्यासप्रणीतेषु अष्टादशसु महापुराणेषु पञ्चदशे पुराणे तत्प्रतिपाद्य विषयाश्च वृहन्ना० दर्शिता यथा

"श्रीब्रह्मोवाच। शृणु वत्स! मरीचे! ऽद्य पुराणं कूर्म्मसंज्ञितम्। लक्ष्मीकल्पानुचरितं यत्र कूर्म्मवपुर्हरिः। धर्म्मार्थकाममोक्षाणां माहात्म्यञ्च पृथक् पृथक्। इन्द्रद्युम्नप्रसङ्गेन प्राहर्षिभ्यो दयाधिकम्। तत् सप्तदशसाहस्रं सचतुःसंहितं शुभम्। यत्र ब्राह्म्या (संहितया) पुरा प्रोक्ता धर्म्मा नानाविधा मुने!। नानाकथाप्रसङ्गेन नृणां सद्गतिदायकाः"। तत्पूर्वभागे "तत्र पूर्वविभागे तु पुराणोपक्रमः पुरा। लक्ष्मीप्रद्युम्नसंवादः कूर्म्मर्षिगणसङ्कथा। वर्णाश्रमाचारकथा जगदुत्पत्तिकीर्त्तनम्। कालसङ्ख्या समासेन लयान्ते स्तवनं विभोः। ततः सङ्क्षेपतः सर्गः शाङ्करं चरितं तथा। सहस्रनाम पार्वत्या योगस्य च निरूपणम्। भृगुवंशसमाख्यानं ततः स्वायम्भुवस्य च। देवादीनां समुत्पत्तिर्दक्षयज्ञाहतिस्ततः। दक्षसृष्टिकथा पश्चात् कश्यपान्वयकीर्त्तनम्। आत्रेयवंशकथनं कृष्णस्य चरितं शुभम्। मार्कण्डकृष्णसंवादो व्यासपाण्डवसंकथा। युगधर्म्मानुकथनं व्यासजैमिनिकी कथा। वाराणस्याश्च माहात्म्यं प्रयागस्य ततः परम्। त्रैलोक्यवर्णनञ्चैव वेदशाखानिरूपणम्" तदुत्तरभागे "उत्तरेऽस्य विभागे तु पुरा गीतेश्वरी ततः। व्यासगीता ततः प्रोक्ता नानाधर्म्मप्रबोधनी। नानाविधानां तीर्थानां माहात्म्यञ्च पृथक् ततः। नानाधर्म्मप्रकथनं १ब्राह्मीयं संहिता स्मृता। अतः परं २भगवती संहितार्थनिरूपणे। कथिता यत्र वर्णानां पृथग्वृत्तिरुदाहृता"। तदुत्तरभागे भगवत्याख्यद्वितीयसंहितायाः पञ्चसु पादेषु "पादेऽस्याः प्रथमे प्रोक्ता ब्राह्मणानां व्यवस्थितिः। सदाचारात्मिका वत्स! भोगसौख्यविवर्द्धिनी। द्वितीये क्षत्रियाणान्तु वृत्तिः सम्यक् प्रकीर्त्तिता। यया त्वाश्रितया पापं विधूयेह व्रजेद्दिवम्। तृतीये वैश्यजातीनां वृत्तिरुक्ता चतुर्विधा। यया चरितया सम्यक् लभते गतिमुत्तमाम्। चतुर्थेऽस्यास्तथा पादे शूद्रवृत्तिरुदाहृता। यया सन्तुष्यति श्रीशो नृणां श्रेयोविवर्द्धनः। पञ्चमेऽस्यास्ततः पादे वृत्तिः सङ्करजन्मनाम्। यया चरितयाप्नोति भाविनीमुत्तमां जनिम्। इत्येषा पञ्चपाद्युक्ता द्वितीया संहिता मुने!। तृतीयात्रोदिता३सौरी नृणां कामविधायिनी। षोढा षट्कर्म्मसिद्धिं सा वोधयन्ती च कामिनाम्। चतुर्थी ४वैष्णवी नाम मोक्षदा परिकीर्त्तिता। चतुष्पदी द्विजादीनां साक्षात् ब्रह्मस्वरूपिणी। ताः क्रमात् षट्चतुर्द्वौ पुसाहस्राः परिकीर्त्तिताः"। तत्फलश्रुतिः "एतत् कूर्म्मपुराणन्तु चतुर्वर्गफलप्रदम्। पठतां शृण्वतां नृणां सर्वोत्कृष्टगतिप्रदम्। लिखित्वैतत्तु यो भक्त्या हेमकूर्म्मसमन्वितम्। ब्राह्मणायायने दद्यात् स याति परमां गतिम्"। तच्च पुराणम् तामसं "मात्स्यं कौर्म्मं तथा लैङ्गं शैवं स्कान्दं तथैव च। आग्नेयञ्च षडेतानि तामसानि निबोधत" पाद्मोत्तरख० ४२अ०।

**कूर्म्मविभाग** पु०कूर्म्मस्य तद्रूप भगवदवयवस्य विभागोऽत्र।

वराह मिहिरोक्ते नक्षत्रभेदेन देशविशेषाणां शुभाशुभबोधके ग्रन्थभेदे स च वृ॰ सं॰ १४ अध्यायः। यथा
"नक्षत्रत्रयवर्गैराग्नेयाद्यैर्व्यवस्थितैर्नवधा। भारतवर्षे मध्यात् प्रागादि विभाजिता देशाः। १भद्रारिमेदमाण्डव्यशाल्वनीपोज्जिहानसङ्ख्याताः। मरुवत्सघोषयामुनसारस्वतमत्स्यमाध्यमिकाः। माथुरकोपज्योतिष धर्मारण्यानि शूरसेनाश्च। गौरग्रीवोद्देहिक पाण्डुगुडाश्वत्थपाञ्चालाः। साकेतकङ्ककुरुकालकोटिकुकुराश्च पारियात्रनगः। औदुम्बरकापिष्ठलगजाह्वयाश्चेति मध्यमिदम् ३।४।५। अथ २पूर्वस्यामञ्जनवृषभध्वजपद्ममाल्यवद्गिरयः। व्याघ्रमुखसुह्मकर्वटचान्द्रपुराः शूर्पकर्णाश्च। खसमगधशिबिरगिरिमिथिलसमतटोड्राश्ववदनदन्तुरकाः। प्राग्ज्योतिषलौहित्यक्षीरोदसमुद्रपुरुषादाः। उदयगिरिभद्रगौडकपौण्ड्रोत्कलकाशिमेकलाम्बष्ठाः। एकपदताम्रलिप्तिककोशलका वर्धमानश्च ६।७।८। आग्नेय्यां ३दिशि कोशलकलिङ्गवङ्गोपवङ्गजठराङ्गाः। शौलिकविदर्भवत्साम्ध्रचेदिकाश्चोर्ध्वकण्ठाश्च। वृषनालिकेरचर्मद्वीपा विन्ध्यान्तवासिनस्त्रिपुरा। श्मश्रुधरहेमकूटव्यालग्रीवा महाग्रीवाः। किष्किन्धकण्टकस्थलनिषादराष्ट्राणि पुरिकदाशार्णाः। सह नग्नपर्णशबरैराश्लेषाद्ये ९।१०।११। त्रिके देशाः। अथ दक्षिणेन ४लङ्का कालाजिनसौरिकीर्णतालिकटाः। गिरिनगरमलयदर्दुरमहेन्द्रमालिन्द्यभरुकच्छाः। कङ्कटटङ्कणवनवासिशिविकफणिकारकोङ्कणाभीराः। आकरवेणावन्तकदशपुरगोनर्दकेरलकाः। कर्णाटमहाटविचित्रकूटनासिक्यकोल्लगिरिचोलाः। क्रौञ्चद्वीपजटाधरकावेर्यो रिष्यमूकश्च। वैदूर्यशङ्खमुक्तात्रिवारिचरधर्मपट्टनद्वीपाः। गणराज्यकृष्णवेल्लूरपिशिकशूर्पाद्रिकुसुमनगाः। तुम्बवरकार्मणेयकयाम्योदधितापसाश्रमा ऋषिकाः। काञ्चीमरुचीपट्टनचेर्यार्यकसिंहला ऋषभाः। बलदेवपट्टनं दण्डकावनतिमिङ्गिलाशना भद्राः। कच्छोऽथ कुञ्जरदरी सताम्रपर्णीति विज्ञेयाः १२।१३।१४। नैरृत्यां दिशि५ देशाः पह्लवकाम्बोजसिन्धुसौवीराः। वडवामुखारवाम्बष्ठकपिलनारीमुखानर्ताः। फेनगिरियवनमाकरकर्णप्रावेयपारशवशूद्राः। बर्बरकिरातखण्डक्रव्यादाभीरचञ्चूकाः। हेमगिरिसिन्धुकालकरैवतकसुराष्ट्रबादरद्रविडाः। स्वात्याद्ये भत्रितये १५।१६।१७। ज्ञेयश्च महार्णवोऽत्रैव। अपरस्यां ६मणिमान् मेघवान् वनौघः क्षुरार्पणोऽस्तगिरिः। अपरान्तकशान्तिकहैहयप्रशस्ताद्रिवोक्काणाः। पञ्चनदरमठपारततारक्षितिजृङ्गवैश्यकनकशकाः। निर्मर्यादा म्लेच्छा ये पश्चिमदिक्स्थितास्ते च १८।१९।२०। दिशि ७पश्चिमोत्तरस्यां माण्डव्यतुषारतालहलमद्राः। अश्मककुलूतलहडस्त्रीराज्यनृसिंहवनखस्थाः। वेणुमती फल्गुलुका गुरुहा मरुकुच्चचर्मरङ्गाख्याः। एकविलोचनशूलिकदीर्घग्रीवास्यकेशाश्च २१।२२।२३। उत्तरतः ८कैलासो हिमवान्वसुमान् गिरिर्धनुष्मांश्च। क्रौञ्चो मेरुः कुरवस्तथोत्तराः क्षुद्रमीनाश्च। कैकयवसातियामुनभोगप्रस्थार्जुनायनाग्नीध्राः। आदर्शान्तर्द्वीपित्रिगर्ततुरगाननाश्वमुखाः। केशधरचिपिटनासिकदासेरकवाटधानशरधानाः। तक्षशिलापुष्कलावतकैलावतकण्ठधानाश्च। अम्बरमद्रकमालवपौरवकच्छारदण्डपिङ्गलकाः। माणहलहूणकोहलशीतकमाण्डव्यभूतपुराः। गान्धारयशोवतिहेमतालराजन्यखचरगव्याश्च। यौधेयदासमेयाः श्यामाकाः क्षेमधूर्ताश्च २४,२५,२६,। ऐशान्यां ९ मेरुकनष्टराज्यपशुपालकीरकाश्मीराः। अभिसारदरदतङ्गणकुलूतसैरिन्ध्रवनराष्ट्राः। ब्रह्मपुरदार्वडामरवनराज्यकिरातचीनकौलिन्दाः। भल्लापलोलजटासुर कुनठखषघोषकुचि(वि)काख्याः। एकचरणानुविश्वाः सुवर्णभूर्वसुवनं दिविष्ठाश्च। पौरवचीरनिवसनत्रिनेत्रमुञ्जाद्रिगन्धर्वाः २७।१।२। वर्गैराग्नेयाद्यैः क्रूरग्रहपीडितैः क्रमेण नृपाः। पाञ्चालो मागधिकः कालिङ्गश्च क्षयं यान्ति। आवन्तोऽथानर्तो मृत्युं चायाति सिन्धुसौवीरः। राजा च हारहौरो मद्रेशोऽन्यश्च कौलिन्दः"।

**कूर्म्मपृष्ठ** न॰ कूर्म्मस्य पृष्ठमिव। १शरावे २अम्लानवृक्षे च पु॰ शब्दच॰। ६त॰। कूर्म्मस्य पृष्ठे न॰

**कूर्म्मराज** पु॰ कूर्म्माणां राजा श्रेष्ठत्वात् टच् समा॰, कूर्म्मरूपेण राजते राज–अच् वा। कूर्म्मरूपे भगवदवतारे जटा॰। "पृथि! स्थिरा भव भुजङ्गम। धारयैनां त्वं कूर्म्मराज! तदिदं द्वितयं दधीथाः" महना॰। २कूर्म्माणां श्रेष्ठे च

**कूल** आवृतौ भ्वा॰ पर॰ सक॰ सेट्। कूलति अकूलीत् चुकूल प्रतिकूलति कूलम्। "तासां प्राजमानो योमिमकूलयत्" टत॰ ब्रा॰ ४९।

**कूल** न॰ कूलति आवृणोति जलप्रवाहम् कूल–अच्। नद्यादेस्तीरे। "नदीकूलं यथा वृक्षः" मनुः "नदीवोभयकूलभाक्" रघुः। "चुकूज कूले कलहंसमण्डली" नैष॰। कर्म्मणि घञर्थे क। २स्तूपे ३तडागे ४सैन्यपृष्ठे च विश्वः

६अग्निके "कुलायकूलेषु विलुठ्य ते खगाः" नैष०। "कूलाय कूलेषु नीडान्तिकेषु" मल्लि०। बलादि० अस्त्यर्थे वा मतुप् मस्य वः। कूलवत् पक्षे इनिः कूलिन्। तद्युक्ते त्रि०स्त्रियां ङीप्। ततः भूमा० सौवीरे सम्बन्धिन्यर्थे वुञ्। कौलक कूलसम्बन्धिनि सौवीरे त्रि०। [२स्तूपे मेदि०।

**कूलक** न० कूल+ण्वुल्। १तीरे विश्वः। कूल+स्वार्थे क।

**कूलङ्कष** त्रि० कूलं कषति व्याप्नोति कष–खश् मुम् च। कूलव्यापके। "कूलङ्कषौघाः सरितस्तथाऽपराः" माघः। "कूलङ्कषेव सिन्धुः प्रसन्नमम्भस्तटतरुञ्च" शकुन्तला।

**कूलवती** स्त्री कूल+अस्त्यर्थे बलादि० मतुप् मस्य वः। ङीप्। नद्यां राजनि०।

**कूलचर** त्रि० कूले नदीकूले चरति चर–ट। गजादिजन्तुषु। कूलचराश्च जन्तवः समांसगुणाः सुश्रुते दर्शिता यथा "तत्र गजगवयमहिषरुरुचमरसृमररोहिषवराहखड्गिगोकर्णकालपुच्छकोन्द्र्न्यङ्कुरण्यगवयप्रभृतयः कूलचराः पशवः। वातपित्तहरा वृष्या मधुरा रसपाकयोः। शीतला बलिनः स्निग्धा मूत्रलाः कफवर्द्धनाः"।

**कूलन्धय** त्रि० कूलं धयति धे–खश् मुम् च मुग्धबो०। कूलस्पर्शिनि वनादौ स्त्रियां ङीप्।

**कूलभू** स्त्री ६त०। तीरभूमौ हेमच०। कूलभूमितीरभूम्यादयोऽपि "कावेरीतीरभूमीरुहभुजगवधूभुक्तमुक्तावशिष्टः। (वायुः) उद्भटः।

**कूलमुद्रुज** त्रि० कूलमुद्रुजति उद्+रुज खश् मुम् च। कूलभेदके। "आसादितौ कथं भूतं न गजैः कूलमुद्रुजैः" भट्टिः। "मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः" रघुः

**कूलमुद्वह** त्रि० कूलमापूर्य्य वहति उद्+वह–खश् मुम् च। कूलमापूर्य्यवाहिनद्यादौ "उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः" भट्टिः।

**कूलहु(ह)ण्डक** पु० कूले हुण्डते संघीभवति हुडि–संघे ण्वुल् पृषो० वा उलोपः। जलावर्त्ते त्रिका०

**कूलास** त्रि० कूलमस्यति क्षिपति अस–अण्। कूलक्षेपके ततः सङ्का० चतुरर्थ्याम् अण्। कौलास तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप्।

**कूलेचर** त्रि० कूले चरति चर अलुक्स०। नद्यादेस्तीरचरेषु महिषादिपशुषु। ते च "चमरीवारणाद्यः। एते कूलेचराः प्रोक्ताः यतः कूले चरन्त्यपाम्" भावप्र० उक्ताः आदिपदात् कूलचरशब्दे सुश्रुतेनोक्ता ग्राह्याः। "कूलेचरा मरुत्पित्तहरा वृष्या बलावहाः। मधुराः शीतलाः स्निग्धा मूत्रलाः श्लेष्मवर्द्धनाः" तद्गुणा उक्ताः।

**कूल्य** त्रि० कूले भवः यत्। १तीरभवे २रुद्रभेदे पु० "नमस्तीर्थ्याय च कूल्याय च" यजु० १६,४२, रुद्राध्यायः।

**कूवर** पु० कू–शब्दे कुटादि–वरच्। १कुब्जके वृक्षभेदे (कुँजा) २कुब्जे त्रि० ३मनोहरे त्रि० शब्दचि० ४युगन्धरे यत्र युगकाष्ठमासज्यते तत्र रथावयवभेदे पुंन० अमरः "वैदूर्य्यमणिकूवरम्" रामा०। "रथं चामितकूवरम्" भा० आनु० ४२६८श्लो०। "पादैः पुरः कूवरिणां विदारिताः" माघः। ५रथिकस्थाने गोयुक्तं रथमुपक्रम्य "पश्चसौ कूवरबाहूवाऽभिमृशेत्" गोभि०सू०। कूवरं रथिकस्थानम्" सं० त० रघुनन्दनः।

६कम्बलाच्छादितरथे स्त्री ङीषा० गौरा० ङीष्।

**कूवार** पु० कुं तीरभूमिं वृणोति वृ–अण् उप०स० पृषो० दीर्घः। कूपारशब्दार्थे अमरटीका

**कूश्म** पु० हवनीयदेवभेदे। "प्रदरान् पायुना कूश्मांश्छकपिण्डैः" यजु० २५७ "कूश्मान् देवान् प्रीणयामि" वेददी०।

**कूष्माण्ड** पु० ईषदूष्माण्डेषु वीजेष्वस्य। १कुष्माण्डशब्दार्थे २शिवपारिषद्भेदे हेमच० "अन्ये च ये प्रेतपिशाचभूतकूष्माण्डयादोमृगपक्ष्यधीशाः" भाग० २,६,४५। ३ऋषिभेदे पु० "कूष्माण्डोराजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः" या०स्मृ०। तद्दृष्टत्वात् "यद्देवा देवहेडनमित्याद्यासु ४ऋक्षु स्त्री ङीप् "त्रिरात्रोपोषितोभूत्वा कूष्माण्डीभिर्घृतं शुचिः। सुरापः स्वर्णहारी च रुद्रजापी जलेस्थितः" याज्ञ०स्मृ०। "त्रिरात्रमुपोषितः कूष्माण्डीभिर्यद्देवादेवहेडनमित्याद्याभिः कूष्माण्डदृष्टाभिरनुष्टुब्भिर्मन्त्रलिङ्गदेवताभिर्ऋग्भिश्चत्वारिंशद्घृताहुतीर्हुत्वा शुचिर्भवेत्। तथा बौधायनेनाप्युक्तम् "अथ कूष्माण्डीभिर्जुहुयाद्योऽपूतमिवात्मानं मन्येत यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते अयोनौ वा रेतः सिक्त्वा अन्यत्र स्वप्नादिति"। मिता० "सर्व्ववेदपवित्राणि वक्ष्याम्यहमतः परम्। येषाञ्जपैश्च होमैश्च पूयन्ते नात्र संशयः। अघमर्षणन्देवकृतः शुद्धवत्यस्तरत्समाः। कूष्माण्ड्यः पावमान्यश्च दुर्गासावित्र्यथैव च" मिताक्षरायां वशिष्ठस्मृः। स्वार्थे क। तत्रार्थे

**कूष्माण्डवटिका** स्त्री कुष्माण्डखण्डमिश्रिता माषादि वटिका शा०त०। (कुमडावडी) ख्याते पदार्थे "कूष्माण्डवटिका ज्ञेया पूर्व्वोक्तवटिकागुणा। विशेषात् रक्तपित्तघ्नी लघ्वी च कथिता बुधैः" भावप्र०। पूर्व्वोक्तवटिका माषवटिका।

**कूष्माण्डी** स्त्री ईषदूष्माऽण्डेष्वस्याः गौरा० ङीष्। १ओष-

भिभेदे २कर्कारौ३दुर्गायाञ्च हेमच०। दुर्गायाश्च कूष्माण्ड बलिप्रियत्वात्तथात्वम्। "कुष्माण्डी तु भृशं लघ्वी कर्कारुः परिकीर्त्तिता" भावप्र०। चर्म्मविशेषे च

कूहा स्त्री ईषत् जहातेऽत्र जह-वितर्के आधारे घञर्थे क। कुज्झटिकायाम् शब्दरत्ना०।

क्रु कृतौ भा० उभ० सक० अनिट् कविकल्प०। करति ते अकार्षीत् अकृत। चकार। भौवादिकस्यास्यापाणिनीयता

क्रु कृतौ तना० उभ० सक० अनिट्। करोति कुरुते कुर्य्यात्। करोतु कुरु अकरोत् अकार्षीत् अकृत। चकार कर्त्ता करिष्यतिते क्रियात् कृषीष्ट। कर्म्मणि क्रियते अकारिअकारिषाताम्कारयिषाताम्। कारकः कर्त्ता कारी कुर्वन् कुर्वाणः चकृवान् चक्राणः। डु-कृत्रिमः कृतः कृतवान् करणं कृतिः क्रिया कृत्वा कृत्वा प्रकृत्य। कृत्यं कार्य्यः कर्त्तव्यः करणीयः। णिचि कारयति ते अचीकरत्तसनि चिकीर्षति ते यङि चेक्रियते यङ् लुकि चरि(री)करीति चरि(री) कर्त्ति चर्करीति चर्कर्त्ति

"कृञो हेतुताच्छील्यानुलोम्येषु" पा०

"एषु द्योत्येषु करोतेष्टः स्यात्। अतः कृकमीति सः। यशस्करी विद्या। श्राद्धकरः वचनकरः" सि० कौ०

"दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिम्लिपिलिबिबलिभक्तिकर्त्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु" पा०।

"एषु कृञष्टः स्यात्। अहेत्वादावपि। दिवाकरः विभाकरः निशाकरः कस्कादित्वात्सः। भास्करः बहुकरः बहुशब्दस्य वैपुल्यार्थे संख्यापेक्षया पृथग्ग्रहणम् लिपिलिबिशब्दौ पर्य्यायौ। संख्या-एककरः। द्विकरः। कस्कादित्वात्सः। अहस्करः। नित्यम् समासेऽनुत्तरपदस्थस्येति षत्वम्। धनुष्करः। अरुष्करः। "किंयत्तद्बहुषु कृञोऽज्विधानमिति" वार्त्तिकम् किङ्करा। तत्करा। हेत्वादौ टम्बाधित्वा परत्वाच्च्। पुंयोगे ङीप्। किङ्करी। "कर्म्मणि भृतौ" पा०

"कर्म्मशब्दे उपपदे करोतेष्टः स्यात् भृतौ। कर्म्मकरो भृतकः। कर्म्मकारोऽन्यः" सि० कौ०

"न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु"पा०।

"एषु कृञष्टो न। हेत्वादिषु प्राप्तः प्रतिषिध्यते। शब्दकार इत्यादि"। "स्तम्बशकृतोरिन्" पा०

"व्रीहिवत्सयोरिति वक्तव्यम्" वार्त्ति०। स्तम्बकरिर्व्रीहिः। शकृत्करिर्वत्सः। व्रीहिवत्सयोः किम् स्तम्बकारः। शकृत्कारः" सि० कौ०

"सुकर्म्मपापमन्त्रपुण्येषु कृञः" पा० "सौ कर्म्मादिषु च कृञः क्विप् स्यात्। त्रिविधोऽत्र नियम इति काशिका। सुकृत् कर्म्मकृत् पापकृत् मन्त्रकृत् पुण्यकृत्। क्विवेति नियमात्कर्म्म कृतवानिति निष्ठा न। कृञ एवेति नियमान्मन्त्रमधीतवान्मन्त्राध्यायः अत्र न क्विप्। भूत एवेति नियमात् मन्त्रङ्करोति करिष्यति वेति विवक्षायाञ्च क्विप्। स्वादिष्वेवेति नियमाभावादन्यस्मिन्नप्युपपदे क्विप्। शास्त्रकृत्। भाष्यकृत्"। सि० कौ०

अधि+अधिकारे आरम्भे सक० अधिकरोति अधिकृत्य

अनु+सदृशीकरणे अनुकरोति।"शैलाधिपस्यानुचकार लक्ष्मीम्"

अप+अपकारे अनिष्टाचरणे अपकरोति "रिपौ सान्त्वमपक्रिया" माघः [प्राधान्येनापाक्रियते" इ०उ० भा०

अप+आ निवारणे सक०। अपाकरोति। "अयं प्रश्नः

आ+आकारे अवयवसंस्थाने आकृतिः आकारः

उद्+आ+उत्कालने सक० "उदाकरोति उत्कालयति "याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सोमश्रवाः! इति ताहोदाचकार"इ०उ०। "तागाः इ उदाचकार उत्कालितवानाचार्य्यस्तृहम्" भा०।

उप+उपकारे सक० उपकरोति"उपकृतं बहु तत्र किमुच्यते" सा० द०। संस्कारे सक० सुट् च। उपस्करोति

उप+आ+आरम्भे उपाकरोति उपाकृत्य "श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि" मनुः पश्वादिसंस्कारे च उपाकर्म्मशब्दे उदा०।

दुर्—दुष्टाचरणे दुष्कृतं दुष्कृतिः।

नि+पराभवे सक० निकरोति (पराभवति) नीकारः

निस्+निर्+शुद्धौ अक० निष्करोति निष्कृतिः (शुद्धिः)

निर् आ+निवारणे सक० निराकरोति"निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितोरणम्" भट्टिः। "निराकरिष्णोर्वृजिनादृतेऽपि" रघुः

परा+निराकरणे सक०। पराकरोति [परिष्करोति

परि+परिष्कारे सतोगुणान्तराधाने भूषणे च सक० सुट् च

प्र+प्रस्तावे सक० प्रकरोति प्रकृत्य। आरम्भे च "प्रकृतजपविधीनामास्युदृश्मिदन्तम्" माघः।

प्रति+प्रतिकारे अनिष्टनिवारणे प्रतिकूलाचरणे च सक० प्रतिकरोति प्रतीकारः प्रतिक्रिया।

वि+विभागे विकरोति "स तेधात्मानं व्यकुरुत" छा० उ०। "व्यकुरुत व्यभजत्"भा०। विकारे (अन्यथास्थितस्य वस्तुनोऽन्यथाभावे) अक०आ० वायुर्विकुरुते" सि० कौ०।

वि+आ+प्रकाशने व्याकरोति "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" श्रुतिः। व्याख्याने व्याकृतम् पाणिन्याद्युक्तशब्दसाधुत्वाधायकसंस्कारभेदे च "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः" वेदाङ्गोक्तौ "व्याक्रियाव्यञ्जनीया वा जातिः कापीह सा श्रुता" भर्तृहरिः।

वि+प्र+उपद्रवे सक० विप्रकरोति "तस्मिन् विप्रकृताः काले" कुमा०। "कामपरवशं न विप्रकुर्युः" कुमा०।

सम्+संस्कारे सतोगुणान्तराधाने सक० सुट् च। संस्करोति पात्रम्।

सम्+परि उप+भूषणे अर्थे सुट्। संस्करोति परिष्करोति उपस्करोति अलङ्करोतीत्यर्थः। तत्पूर्व्वकाः समवायेऽर्थे च अक० सुट् संस्करोति उपस्करोति परिस्करोति संघीभवतीत्यर्थः उप+सतोगुणान्तराधाने विकारे आकाङ्क्षितवाक्यस्य पूरणे च सुट्। उपस्कृतं भुङ्क्ते विकृतं भुङ्क्ते। उपस्कृतं ब्रूते वाक्यमध्याहृत्य ब्रूते" सि०कौ०।

अथ मतभेदेन कृञोऽर्थो निरूप्यते तत्र वैयाकरणाः तस्य यत्नार्थकतानिराकरणेन व्यापारार्थकतामाहुः यथा वै० भू० सारे

"व्यापारो भावना सैवोत्पादना सैव च क्रिया। कृञोऽकर्म्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते" मू०।

"पचति पाकमुत्पादयति पाकानुकूला भावना तादृश्युत्पादनेत्यादिविवरणाद्वि्रियमाणस्यापि तद्वाचकतेति भावः। व्यापारपदं फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यतां ध्वनयितुमुक्तम्। अतएव पचतीत्यत्राधःसन्तापनत्वफूत्कारत्वचुल्ल्युपरिधारणत्वयत्नत्वादिभिर्बोधः सर्वसिद्धः। नचैवमेषां शक्यतावच्छेदकत्वे गौरवापत्त्या कृतित्वमेव तदवच्छेदकं वाच्यम् रथो गच्छति जानातीत्यादौ च व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकरीतिः साध्वी, शक्यतावच्छेदकत्वस्यापि लक्ष्यतावच्छेदकत्ववद्गुरुणि सम्भवात् तयोर्वैषम्ये बीजाभावात्। नच पचति पाकं करोतीति यत्नार्थकरोतिना विवरणाद्यत्न एवाख्यातार्थ इति वाच्यम्। रथो गमनं करोति बीजादिना अङ्कुरः कृत इति दर्शनात् कृञो यत्नार्थकताया असिद्धेः। किञ्च भावनाया अवाच्यत्वे घटं भावयतीत्यत्रेव घटो भवतीत्यत्रापि द्वितीया स्यात् नचात्र घटस्य कर्तृत्वेन तत्संज्ञया कर्म्मसंज्ञायाबाधान्न द्वितीयेति वाच्यम् अनुगतकर्तृत्वस्य त्वन्मते दुर्व्वचत्वेन घटस्याकर्तृत्वात्। कृत्याश्रयत्वस्य कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात्। धात्वर्थानुकूलव्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वात्। अपि च भावनाया अवाच्यत्वे धातूनां सकर्म्मकत्वाकर्म्मकत्वविभाग उच्छिन्नः स्यात्। स्वार्थफलव्यधिकरणव्यापारवाचित्वं स्वार्थव्यापारव्यधिकरणफलवाचकत्वं वा सकर्मकत्वं भावनायावाच्यत्वमन्तरेणासम्भवि। अन्यतमत्वं तत्त्वमिति चेन्न एकस्यैवार्थभेदेनाकर्मकत्वसकर्मकत्वदर्शनात् तदेतदभिसन्धायाह कृञ इति। अयं भावः व्यापारावाच्यत्वपक्षे फलमात्रमर्थ इति फलितम्। तथा च करोतीत्यादौ यत्नप्रतीतेस्तन्मात्रं वाच्यमभ्युपेयम्। तथा च यती प्रयत्न इतिवत् फलस्थानीययत्नवाचकत्वाविशेषादकर्मकतापत्तिः उक्तरीत्या दुर्व्वारेति। तथा च नहि यत्नः इत्यत्र फलस्थानीयत्वेनेति शेषः कृञः इति धातुमात्रोपलक्षणं सर्वेषामप्यकर्म्मकता सकर्मकता वा न स्यादिति भावः। अथ वा व्यापारो भावना इत्यर्द्धेन व्यापारस्य वाच्यत्वं प्रसाध्य फलांशस्यापि तत्साधयन् नैयायिकाभ्युपगतं जानातिकृञादेः केवलज्ञानयत्नादिक्रियामात्रवाचित्वं दूषयति कृञः इति। अयं भावः फलांशस्यावाच्यत्वे व्यापार एव धात्वर्थः स्यात्। तथा च स्वार्थफलव्यधिकरणव्यापारवाचित्वादिरूपसकर्मकत्वोच्छेदापत्तिः। नच कृञादौ सकर्म्मकत्वव्यवहारो भाक्त इति नैयायिकोक्तं युक्तम् व्यवहारस्य भाक्तत्वेऽपि कर्म्मणि लकारासम्भवात्। न हि तीरे गङ्गापदस्य भाक्तत्वेऽपि तेन स्नानादिकार्यं कर्त्तुं शक्यम्। एवञ्च नहि यत्न इत्यत्र यत्नमात्रमित्यर्थः," । अतएवाह।

"किन्तूत्पादनमेवातः कर्म्मवत्स्यात् यगाद्यपि।
कर्मकर्त्तर्य्यन्यथा तु न भवेत् तद्दृशेरिव" मू०।

"उत्पादनम् उत्पत्तिरूपफलसहितं यत्नादि कृञर्थ इत्यर्थः। फलस्य वाच्यत्वे युक्त्यन्तरमाह अत इत्यादि। यतः कृञो यत्नमात्रार्थो नेष्यते अतः कर्मवत् स्यादिति पदेन 'कर्मवत्कर्मणा तुल्यक्रियः" इति(पा०)सूत्रं लक्ष्यते। अयमर्थः यत एवास्योत्पादनार्थकता अतः पच्यते ओदनः स्वयमेवेतिवत् क्रियते घटः स्वयमेवेति यगादयोऽप्युपपद्यन्ते। अन्यथा यत्नस्य कर्मनिष्ठत्वाभावात्तन्न स्यात् दृशिवत्। यथा दृश्यते घटः स्वयमेवेति न, दर्शनस्य घटावृत्तित्वात्तथा यत्नस्यापीति, तथा प्रयोगानुपपत्तेरिति"।

नैयायिकास्तु व्यापारार्थकतानिराकरणेन यत्नार्थकतामाहुः यथा शब्दचिन्तामणौ

"आख्यातस्य यत्नवाचकत्वादचेतने रथोगच्छतीत्यादौ चाख्याते व्यापारलक्षणा तथाह्याख्यातस्य पचतीत्यादौ यत्नोवाच्यः पचति पाकं करोतीत्यादियत्नार्थककरोतिना सर्व्वाख्यातविवरणाद्वृद्धव्यवहारादिव बाधकं विना विवरणादपि व्युत्पत्तेः। द्वन्द्वादिसमासस्य विग्रहेण विवरणादपि विग्रहार्थे न शक्तिग्रहः अन्यलभ्यत्वात् किंकरोतीति यत्नप्रश्ने पचतीत्युत्तरस्य यत्नार्थत्वं विनानुपपत्तेरित्याचार्य्याः। अत्र वदन्ति—आख्यातस्य करोतेश्च न यत्नार्थकत्वं रथोगच्छति जानाति यतते निद्रातीत्यत्र धात्वर्थानुकूलयत्नाभावेऽप्याख्यातपदप्रयोगात् गमनं करोतीति करोतिना तत्राख्यातविवरणाच्च अत्र व्यापारस्य करोत्यर्थत्वे चेतनेऽपि तथा। न च तत्राख्यातकरोत्योर्गौणत्वं मुख्ये बाधकाभावात्। अतएव प्रश्नोत्तरयोर्न यत्नार्थत्वं किन्तु क्रियावाचकत्वमेव क्रमः, तेन किं करोतीति क्रियामात्रप्रश्ने पचति गच्छतीति क्रियाविशेषेणोत्तरमपि समञ्जसम्भवति"। ततः परोग्रन्थः कर्त्तृशब्दे १७१७ दर्शितोदृश्यः। तत्परस्तु-

"ननु प्रकृतेस्तदर्थत्वेऽपि प्रत्ययस्य न तदर्थत्वं दोषः एकोद्वौबहवःपचिषतीत्यत्रेव तत्सम्भवात्। यत्तु तत्र द्वितीयसंख्येच्छादिकल्पनावदिहापि द्वितीययत्नकल्पनमिति तन्न द्वितीययत्नेच्छादा विच्छायत्नाऽभावात्। वस्तुतस्तु प्रत्येकसामर्थ्यानुभूतौ सन्देहे उभयोपस्थितेरावश्यकत्वेन कस्याप्यनन्वयेऽप्यदोषात् पाकाय यतेत पाकं कुर्य्यादित्यत्र कृत्यर्थकाख्यातेऽपि तथैवान्वयादिति चेत् न एको द्वौ बहव इत्यत्र नामार्थस्य विभक्त्युपनीतसंख्यान्वयावगमायोग्यत्वात् लडादेर्यत्नसामर्थ्यानवधारणात् लिङः पचेतेत्यत्र कृतौ सामर्थ्यावधारणाच्च। अथायत्नार्थकधातुपराख्यातस्य यत्नार्थत्वं तेन यतत इति नानन्वयः अचेतने चाख्यातप्रयोगो गौणएव। न च वृत्त्यन्तरेणापि प्रयोगसम्भवे शक्तिकल्पना युक्ता। यद्वाऽनुकूलयत्ने प्रवृत्तं पदं तदेकदेशेऽनुकूलमात्रे प्रवर्त्तते विशुद्धिमात्रं पुरस्कृत्य ब्राह्मणे श्रोत्रियपदवत्। अचेतने तु मध्यमोत्तमपुरुषौ न भवतएव उपपदयोर्युष्मदस्मदोस्तत्तनार्थत्वात्। भवतु वा गौण एव लोकस्यापर्यनुयोज्यत्वादिति चेत् न अचेतने आख्यातस्य मुख्यत्वे बाधकाभावेन गौणत्वाभावात् तस्मादाख्यातस्यानुकूलत्वेन व्यापारो वाच्यः" इति भाट्टाः। तेन चेतनाचेतनयोर्धात्वर्थानुकूलव्यापारस्य सत्त्वादाख्यातप्रयोगोमुख्यएव। पथि श्रमशयानेऽपि पचतीति स्यात् श्रमशान्तिद्वारा शयनस्य पाकानुकूलव्यापारत्वात् तव यत्नविशेषस्येवानुकूलव्यापारविशेषस्य वाच्यत्वात् अन्यथा यत्नवाच्यत्वेऽपि तण्डुलानुकूलयत्नवति पचतीति स्यात् एवमचेतनेऽपि करोतिनाख्यातविवरणात् करोत्यर्थोऽपि व्यापारविशेषः। कथन्तर्हि चैत्रःपचतीत्यत्र पाकानुकूलताप्रतीतिः आक्षेपादिति चेन्न आख्यातार्थेन व्यापारेण संख्यया वा यत्नानाक्षेपणात् तयोः प्रयत्नं विनापि सत्त्वात् नापि कर्त्रा, द्रव्यमात्रस्य कर्त्तृत्वात् यत्नवतश्च कर्तृत्वे आख्यातेन तदभिधाने यत्नस्याप्यभिधानात्। नापि धात्वर्थमात्रेण, तस्य यत्नं विनापि सत्त्वात् नापि यत्नोधात्वर्थः क्रियायास्तत्फलस्य वा धातुवाच्यत्वात् अन्यथा पाक इत्यत्रापि यत्नानुभवप्रसङ्गादिति चेत् न धात्वर्थविशेषेण पाकादिना यत्नाक्षेपात् तस्य यत्नं विनानुपपत्तेः। अथ पचतीत्यत्र पाकयत्नवानिति विवरणात् यत्नार्थतेति चेत् तर्हि कर्त्रर्थतापि स्यात् न हि पाकयत्नइत्येव विवरणं पचतीत्यस्य, तत्पार्य्यविवरणन्तत् तत्राक्षेपेणापि निर्व्वहतीति चेत् तुल्यं यत्नेऽपि कथन्तर्हि रथोगच्छति, विद्यते व्योमेति भावनानुभवइति चेत् न कथञ्चित्, भावनायाधात्वर्थान्वयायोग्यत्वेन त्वयापि तत्र गौणत्वाभ्युपगमादिति। उच्यते। चैत्रः पचतीत्यत्र पाकानुकूलयत्नानुभवावाद्यत्न एवाख्यातार्थोलाघवात् नत्वनुकूलो व्यापारः यत्नत्वापेक्षया व्यापारत्वस्योपाधित्वेन गुरुत्वात् नचाचेतन आख्यातार्थे मुख्यत्वार्थमनुगुणोव्यापार एवाख्यातवाच्यः मुख्यत्वसम्भवे त्यागायोगादिति वाच्यं शक्तिग्राहकेण लघुनि शक्तिपरिच्छेदात् अचेतने प्रयोगस्य वृत्त्यन्तरेणापि सम्भवात्। मुख्यत्वार्थं शक्तिकल्पने च वृत्त्यन्तरोच्छेदः। एतेन व्यापारवाचकस्याख्यातस्य यत्नसाध्यार्थकपपच्यादिधातूपसन्धानेन व्यापारविशेषयत्नोपस्थापनमिति निरस्तं लाघवेन यत्नस्यैव शक्यत्वात् ननु यत्नोनाख्यातार्थः पाकत्वेन पाकस्य यत्नसाध्यत्वानुमित्या यत्नलाभादित्युक्तमिति चेन्न चैत्रो यत्नं करोत्यतः पाकानुकूलवर्तमानयत्नवान् प्रतीयते। नच पाकस्य वर्त्तमानयत्नेन व्याप्तिरस्ति अतीतानागतयोर्व्यभिचारात्। न च धात्वर्थेनानुमिते यत्ने आख्यातेन वर्त्तमानतान्वयः सम्भवति यत्नस्यापदार्थत्वात् स्वार्थव्यापारस्य वर्त्तमानत्वबोधनेनाख्यातस्य पर्य्यवसि-

तत्वाञ्च। अथ चैत्रः पाकानुकूलवर्त्तमानव्यापारवानिति शाब्दबोधानन्तरं चैत्रः पाकानुकूलवर्त्तमानयत्नवान् चेतनत्वे सति पाकानुकूलवर्त्तमानव्यापारवत्त्वात् मैत्रवत्। अनुमानं विना च पाकयत्ने वर्त्तमानताभानमाख्यातस्य यत्ने शक्तिभ्रमादिति चेन्न यत्नाभावकालेऽपि तज्जन्य व्यापारस्य वर्त्तमानतया व्यभिचारात् किञ्च। व्यापारस्य वाच्यत्वं तल्लिङ्गकञ्च वर्त्तमानयत्नानुमानमिति कल्पनाद्वयमपेक्ष्य यत्न वाच्यत्वे लाघवात्। नचाचेतने आख्यातस्य व्यापारवाचकत्वावधारणादेव कल्पनेति युक्तं गौणतया शक्तिभ्रमेण वा तत्राख्याताद्व्यापारावगमोपपत्तेः। यत्नविगमदशायां तज्जन्यव्यापारकाले पचतीत्यत्र वर्त्तमानव्यापाराभिधानमाख्यातेन लक्षणया। यथा रथोगच्छतीत्यत्र, अतोऽन्यलभ्यत्वान्न तदनुरोधेन व्यापारे शक्तिः। अन्यथा तत्रापि यत्नकाले पचतीति नस्यात् तस्मान्न लडाख्यातं यत्नवाचकं आख्यातत्वात् लिङाख्यातवत् तर्कश्चोक्त एव। एतेन फलानुकूलोव्यापारोधात्वर्थः आख्यातवाच्या संख्यैव तेन चैत्रः पचति रथो गच्छतीत्यत्र चैत्ररथयोर्धात्वर्थानुकूलव्यापारवत्त्वप्रतीते र्मुख्य एव प्रयोगः। पचतीत्यत्र यत्नलाभोधात्वेना क्षेपात् विक्लित्त्यनुकूलव्यापारस्य यत्नं विनानुपपत्ते रिति गुरुमतमपास्तं पचतीत्यत्र पाकानुकूलयत्नवर्त्तमान त्वस्याक्षेपादलाभेनाख्यातार्थत्वात्”। रत्नकोषकृतस्तु धात्वर्थो व्यापारः आख्यातार्थ उत्पादना सा चोत्पादकता सैव भावना पचतीत्यादावाख्यातस्य पाकमुत्पादयतीति विवरणात् धात्वर्थोत्पादकता च चेतनाचेतनयोरिति सर्व्वत्राख्यातप्रयोगो मुख्यएव। यतते जानातीत्यादावपि यत्नं ज्ञानमुत्पादयतीत्यर्थात् नतु व्यापारो यत्नोवाख्यातार्थः यतत इत्यादौ मुख्यत्वे सति गौणत्वस्यान्याय्यत्वात् आख्यातार्थविवरणकरोत्यर्थोऽप्युत्पादकतैव पाकं करोतीत्यादौ करोतीत्यस्योत्पादयतीति विवरणात् घटं करोतीत्यादौ तदर्थ उत्पत्तिरेव गम्यते। अतएव किं करोतीति सामान्योत्पादनाप्रश्ने पचतीति पाकोत्पादनाविशेषेणोत्तरमात्रमपि समञ्जसम्। चैत्र उत्पादयतीत्यत्र धात्वर्थ एवोत्पादना चैत्रेणान्वेति आख्यातार्थोत्पादना त्वनन्वितैव उत्पत्ते रुत्पत्त्यभावात्। वस्तुतस्तूत्पादयतीत्यत्र धात्वर्थ एवोत्पादना अतोऽनुत्पादनार्थधातूत्तरवर्त्तिन आख्यातस्यानन्यलभ्यतयोत्पादना वाच्या” तन्मतञ्च शब्दचि० दूषितं विस्तरभयान्नोद्धृतम्।

एवं दर्शितेषु मतेषु युक्तायुक्तत्वं सुधीभिर्भाव्यम्। ततः स्वार्थे—णिच् कारयति करोतीत्यर्थः। “दश वर्षसहस्राणि रामो राज्यमकारयदित्यादि” रामा०

**कृ** बधे स्वादि उभ० सक० सेट्। कृणोति कृणुते अकार्षीत् अकृत। चकार। अस्य न सुट् सुड्विधौ तानादिकस्यैव ग्रहणात्।

**कृक** पु० कृ—कक्। गले कण्ठे हेमच०

**कृकण** पुंस्त्री इति कणति कण—शब्दे अच्। (कयार) १क्रकरपक्षिणि, अमरः स्त्रियां ङीष्। क्षुतकारके २देहस्थे वायुभेदे पाठान्तरम् ३कर्मौ हारा०।

**कृकर** पुंस्त्री इति शब्दं करोति। क्षुतकारके देहस्थे १वायौ। “कृकर(ण)स्तु क्षुते चैव जयाकुसुमसन्निभः” पदार्थादर्शे योगार्णवः। २शिवे त्रिका० ३कृकणविहगे शब्दरत्ना० ४चव्ये (चइ) ५करवीरेऽश्वघ्ने च राजनि०। [राजनि०

**कृकला** स्त्री कृकं कृकाकारं लाति ला—क। पिप्पल्याम्

**कृकलास** पुंस्त्री कृकं कण्ठं लासयति लस—णिच् अच्। सरटे (कॉंकलास) पक्षिणि अमरः स्त्रियां जातित्वात् ङीष्। कृकलासस्यानिष्टसूचकत्वं तच्छान्तिश्च शान्तिशब्दे दृश्या त्रिका० तालव्यान्तः पाठः शब्दरत्ना०। “ददृशुस्ते महाकायं कृकलासमवस्थितम्”। “श्वभ्रात्त्वयोदपानस्य कृकलासः स्थितोमहान्” भा०आनु० ७०अ०। स्वार्थे क तत्रार्थे। स्त्रियां ङीष्। शब्दो० कृकुलासोऽप्यत्र अमरटीका।

**कृकवाकु** पुंस्त्री कृकेण वक्ति वच—परिभाषणे ञुण् कस्य। १कुक्कुटे अमरः। २मयूरे, ३सरटे च मेदिनी। “कृकवाकोर्ध्वनिमाकर्ण्य कल्ये” माघः। [त्रिका०।

**कृकवाकुध्वज** पु० कृकवाकुर्मयूरः ध्वजोऽस्य। कार्त्तिकेये

**कृकाट** न० कृकं कण्ठमटति अण् उप० स०। घाटायाम् “इन्द्रः शिरो,ऽग्निर्ललाटं,यमः कृकाटम्”अथ० ६,७,१,

**कृकाटिका** स्त्री कृकं कण्ठमटति अट—ण्वुल् टाप् कापिमत इत्त्वम्। ग्रीवायासुन्नतदेशे अमरः “जत्रूर्द्ध्वं मर्म्माणि चतस्रोधमन्योऽष्टौ मातृका द्वे कृकाटिके”। “जानुकूर्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्दरावर्त्त कृकाटिकाश्चेति सन्धिमर्म्माणि। “कुकुन्दरे कक्षधरे विधुरे सकृकाटिके” इति च सुश्रु०। “शिरोग्रीवयोः सन्धाने कृकाटिके नाम तत्र चलमूर्द्धता” सुश्रुते तत्स्थानमुक्तम्। “कृकाटिकान्ते छिन्ने तु गच्छत्यपि समीरणे” सुश्रु०।

**कृच्छ्र** पु०न०कृत—रक् छोऽन्तादेशः उणा०। १सान्तापनादिव्रते कृच्छ्रस्य नानाविधः मिता०दर्शितः यथा

"गोमूत्रं गोमयं क्षीरन्दधि सर्पिः कुशोदकम्। जग्ध्वापरेऽह्न्युपवसेत् कृच्छ्रं सान्तपनञ्चरन्" या०। "पूर्वेद्युराहारान्तरपरित्यागेन गोमूत्रादीनि गव्यानि पञ्च द्रव्याणि कुशोदकसहितानि संयुज्य पीत्वा अपरेद्युरुपवसेदिति द्वैरात्रिकः सान्तपनः कृच्छ्रः सान्तपनञ्चोत्तरश्लोके पृथग्विधानादवगम्यते। कृच्छ्र इति चान्वर्थसंज्ञेयम् तपोरूपत्वेन क्लेशसाध्यत्वात्। गोमूत्रादीनाम्परिमाणं वक्ष्यते। यदा पुनः पूर्वेद्युरुपोष्यापरेद्युः समन्त्रकं संयुज्य समन्त्रकमेव पञ्चगव्यम्पीयते तदा ब्रह्मकूर्च इत्याख्यायते यथाह पराशरः "गोमूत्रङ्गोमयं क्षीरन्दधि सर्पिः कुशोदकम्। निर्दिष्टम्पञ्चगव्यन्तु पवित्रं कायशोधनम्। गोमूत्रन्ताम्रवर्णायाः, श्वेतायाश्चापि गोमयम्। पयः काञ्चनवर्णाया, नीलायाश्च तथा दधि। घृतञ्च कृष्णवर्णायाः, सर्वं कापिलमेव वा। अलाभे सर्ववर्णानाम्पञ्चगव्येष्वयं विधिः। गोमूत्रमाषकास्त्वष्टौ गोमयस्य तु षोडश। क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्त्तिताः। गोमूत्रवद्घृतस्येष्टास्तदर्द्धन्तु कुशोदकम्। गायत्र्यादाय गोमूत्रं, गन्धद्वारेति गोमयम्। आप्यायस्वेति च क्षीरन्दधिक्राव्णेति वै दधि। तेजोऽसि शुक्रमित्याज्यन्देवस्य त्वा कुशोदकम्। पञ्चगव्यमृचा पूतं होमयेदग्निसन्निधौ। सप्तपत्रास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः। एतैरुद्धृत्य होतव्यम्पञ्चगव्यं यथाविधि। इरावती इदं विष्णुर्मानस्तोके च शंवतीः। एताभिश्चैव होतव्यं हुत्वा शेषं पिबेद्द्विजः। प्रणवेन समालोड्य प्रणवेनाभिमन्त्र्य च। प्रणवेन समुद्धृत्य पिबेत्तत् प्रणवेन तु। मध्यमेन पलाशस्य पद्मपत्रेण वा पिबेत्। स्वर्णपात्रेण रौप्येण ब्रह्मतीर्थेन वा पुनः। यत्त्वगस्थिगतम्पापं देहे तिष्ठति मानवे। ब्रह्मकूर्चोपवासस्तु दहत्यग्निरिवेन्धनमिति"। यदा त्वेतदेव विमिश्रितम्पञ्चगव्यं त्रिरात्रमभ्यस्यते तदा यतिसान्तपनसंज्ञां लभते "एतदेव त्र्यहाभ्यस्तं यतिसान्तपनं स्मृतमिति" शङ्खस्मरणात्। जाबालेन तु सप्ताहसाध्यं सान्तपनमुक्तम् "गोमूत्रङ्गोमयं क्षीरन्दधि सर्पिः कुशोदकम्। एकैकं प्रत्यहम्पीत्वा त्वहोरात्रमभोजनम्। कृच्छ्रः सान्तपनो नाम सर्वपापप्रणाशनः" इति। एषाञ्च गुरुलघुकृच्छ्राणां शक्त्याद्यपेक्षया व्यवस्था विज्ञेया। एवमुत्तरत्रापि व्यवस्था बोद्धव्या। महासान्तपनाख्यं कृच्छ्रमाह "पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः। सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः" या० सप्ताहेनापवर्त्तितो महासान्तपनाख्यः कृच्छ्रो विज्ञेयः कथमित्यपेक्षायामुक्तम् पृथग्भूतैः षड्भिर्गोमूत्रादिभिरेकैकेनैकैकमहरतिवाहयेत्सप्तमञ्चोपवासेनेति। यमेन तु पञ्चदशाहसम्पाद्यो महासान्तपनोऽभिहितः "त्र्यहम्पिबेत्तु गोमूत्रन्त्र्यहं वै गोमयम्पिबेत्। त्र्यहन्दधि त्र्यहं क्षीरन्त्र्यहं सर्पिस्ततः शुचिः। महासान्तपनं ह्येतत्सर्वपापप्रणाशनमिति"। जाबालेन त्वेकविंशतिरात्रनिर्वर्त्यो महासान्तपन उक्तः। "षण्णामेकैकमेतेषां त्रिरात्रमुपयोजयेत्। त्र्यहञ्चोपवसेदन्त्यं महासान्तपनं विदुरिति"। यदा तु षण्णां सान्तपनद्रव्याणामेकैकस्य द्व्यहमुपयोगस्तदातिसान्तपनम् यथाह मनुः "एतान्येव तथा पेयान्येकैकन्तु द्व्यहं द्व्यहम्। अतिसान्तपनन्नाम श्वपाकमपि शोधयेदिति"। श्वपाकमपि शोधयेदित्यर्थवादः। इति महासान्तपनातिसान्तपने। पर्णकृच्छ्राख्यं व्रतमाह "पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः। प्रत्येकम्प्रत्यहम्पीतैः पर्णकृच्छ्र उदाहृतः" या०। "पलाशोदुम्बरारविन्दश्रीवृक्षपर्णानामेकैकेन क्वथितमुदकम्प्रत्यहम्पिबेत् कुशोदकञ्चैकस्मिन्नहनीति पञ्चाहसाध्यः पर्णकृच्छ्रः। यदा तु पर्णादीनामेकीकृतानां क्वाथस्त्रिरात्रान्ते पीयते तदा पर्णकूर्चः यथाह यमः "एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः। क्वाथयित्वा पिबेदद्भिः पर्णकूर्चोऽभिधीयते" इति। यदा तु बिल्वादिफलानि प्रत्येकं क्वथितानि मासम्पीयन्ते तदा फलकृच्छ्रादिव्यपदेशं लभते यथाह मार्कण्डेयः "फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः। श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा। मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम्। पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते। मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु" इति पर्णकृच्छ्रमेकादशविधम्। अथ तप्तकृच्छ्रं व्रतमाह "तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहम्पिबेत्। एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः" या०। दुग्धसर्पिरुदकानान्तप्तानामेकैकम्प्रतिदिवसम्प्राश्यापरेद्युरुपवसेदेवं दिवसचतुष्टयसम्पाद्यो महातप्तकृच्छ्रः। एभिरेव समस्तैः सोपवासैर्द्विरात्रसम्पाद्यः सान्तपनवत्तप्तकृच्छ्रः। मनुना तु द्वादशरात्रनिर्वर्त्योऽभिहितः "तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहम्पिबेदुष्णान् सकृत्स्नायी समाहितः" इति। क्षीरादिपरिमाणन्तु पराशरेणोक्तन्द्रष्टव्यम् "अपाम्पिबेत्तु त्रि-

पलं द्विपलन्तु पयः पिबेत्। पलमेकम्पिबेत्सर्पिस्त्रिरात्रं चोष्णमारुतमिति"। त्रिरात्रं चोष्णमारुतमिति त्रिरात्रमास्यपूरणमुष्णोदकवाष्पं पिबेदित्यर्थः। यदा तु शीतं क्षीरादि पीयते तदा शीतकृच्छ्रः "त्र्यहं शीतं पिबेत्तोयन्त्र्यहं शीतं पयः पिबेत्। त्र्यहं शीतं घृतम्पीत्वा वायुभक्षः परन्त्र्यहमिति" यमस्मरणात्। इति तप्तकृच्छ्रश्चतुर्विधः। पादकृच्छ्रमाह "एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः" या०। एकभक्तेन सकृद्भोजनेन दिवैव, नक्तेनेति पृथगुपादानात्। अतश्च दिवैव एकवारमेव भोजनेनैवैकमहोरात्रमतिवाहयेदिति। तत्र दिवेति रात्रिव्युदासः एकवारमिति द्विवारादिव्युदासः। भोजनेनेत्यभोजनव्युदासः। एतच्च कृच्छ्रादीनां व्रतरूपत्वात् पुरुषार्थभोजनपर्य्युदासेन कृच्छ्राङ्गभूतम्भोजनं विधीयते। तथा चापस्तम्बः "त्र्यहमनक्ताश्यदिवाशी च ततस्त्र्यहम्। त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किञ्चिदिति"। अत्र चानक्ताशीत्यनेन व्रते विहितणिनिप्रत्ययेन नक्तपर्युदासेन दिवाभोजननियमं दर्शयति। गौतमेनापीदमेव स्पष्टीकृतम् "हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयादिति"। एवं नक्तभोजनविधावपि। न विद्यते याचितं यस्मिन् भोजने तदयाचितम् तेन कालविशेषानुपादानाद्दिवारात्रौ वा सकृदित्येव तपोरूपत्वात् कृच्छ्राणां, द्वितीयभोजने तदनुपपत्तेः। अयाचितमिति न केवलं परकीयान्नयाचनप्रतिषेधोऽपि तु स्वीयमपि परिचारकभार्य्यादिभ्यो न याचितव्यम् प्रेषणाध्येषणयोः साधारणत्वाद्याच्ञायाः। अतः स्वगृहेऽपि भृत्यभार्य्यादयोऽनाज्ञप्ता एव यदि भोजनमुपहरन्ति तर्हि भोक्तव्यं नान्यथा। अमुनैवाभिप्रायेणोक्तङ्गौतमेन "अथापरत्र्यहं न कञ्चन याचेतेति"। अत्र च ग्राससंख्यानियमः पराशरेण दर्शितः "सायन्तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः। चतुर्विंशतिरायाच्याः परन्निरशनं स्मृतमिति"। आपस्तम्बेन त्वन्यथोक्तम् "सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः। चतुर्विंशतिरायाच्याः परे निरशनायस्तः। कुक्कुटाण्डप्रमाणास्तु यथा वा संविशेन्मुखमिति"। अनयोश्च कल्पयोः शक्त्यपेक्षो विकल्पः। आपस्तम्बेन तु प्राजापत्यं चतुर्द्धा विभज्य चतुरः पादकृच्छ्रान् उक्त्वा वर्णानुरूपेण व्यवस्था कृता "त्र्यहं निरशनं पादः पादश्चायाचितं त्र्यहम्। सायं त्र्यहन्तथा पादः प्रातः पादस्तथा त्र्यहम्। प्रातः पादं चरेच्छूद्रः सायं वैश्ये तु दापयेत्। अयाचितन्तु राजन्ये त्रिरात्रं ब्राह्मणे स्मृतमिति"। यदा तु याचितोपवासात्मकत्र्यहद्वयानुष्ठानं तदार्द्धकृच्छ्रः सायव्यतिरिक्तापरत्र्यहत्रयानुष्ठानन्तु पादोनमिति विज्ञेयम् "सायंप्रातर्विनार्द्धः स्यात्पादोनं नक्तवर्जितमिति" तेनैवोक्तत्वात्। अर्द्धकृच्छ्रस्य प्रकारान्तरमपि तेनैव दर्शितम् "सायं प्रातस्तथैकैकन्दिनद्वयमयाचितम्। दिनद्वयञ्च नाश्नीयात्कृच्छ्रार्द्धं तद्विधीयते" प्राजापत्यकृच्छ्रमाह "यथा कथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते" या०। अयमेव पादकृच्छ्रः। यथाकथञ्चिद्दण्डकलितवदावृत्त्या स्वस्थानविवृद्ध्या वा। तत्राप्यानुलोम्येन प्रातिलोम्येन वा। तथा वक्ष्यमाणजपादियुक्तं तद्रहितं वा त्रिरभ्यस्तः प्राजापत्योऽभिधीयते। तत्र दण्डकलितवदावृत्तिपक्षोवशिष्ठेन दर्शितः "अहः प्रातरहर्नक्तमहरेकमयाचितम्। अहः पराकन्तत्रैकमेवञ्चतुरहोऽपरः। अनुग्रहार्थं विप्राणां मनुर्द्धर्म्मभृतां वरः। बालवृद्धातुरेष्वेव शिशुकृच्छ्रमुवाच हेति"। आनुलोम्येन स्वस्थानविवृद्धिपक्षस्तु मनुना दर्शितः "त्र्यहं प्रातः त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहम्परञ्च नाश्नीयात् प्राजापत्यं चरन् द्विजः" इति। प्रातिलोम्यावृत्तिस्तु वशिष्ठेन दर्शिता। "प्रतिलोमञ्चरेत्पुष्टः कृच्छ्रं चान्द्रायणोत्तरमिति"। जपादिरहितपक्षस्तु स्त्रीशूद्रादिविषयोऽङ्गिरसा दर्शितः "तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम्। प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितमिति"। जपादियुक्तपक्षस्तु पारिशेष्याद्योग्यतया च त्रैवर्णिकविषयः स च गौतमेन दर्शितः। "अथातः कृच्छ्रान् व्याख्यास्यामो हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयादथापरन्त्र्यहं नक्तम्भुञ्जीतायापरन्त्र्यहं न कञ्चन याचेताथापरन्त्र्यहमुपवसेत्तिष्ठेदहनि रात्रावासीत क्षिप्रकामः सत्यं वदेदनार्य्यैर्न सम्भाषेत रौरवयौधाजपे नित्यं प्रयुञ्जीतानुसवनमुदकोपस्पर्शनमापोहिष्ठेति तिसृभिः पवित्रवतीभिर्मार्जयीत हिरण्यवर्णाः शुचयः पावका इत्यष्टाभिरथोदकतर्पणं नमोहनाय नमोमोहनाय नमोधन्वने तापसाय पुनर्वसवे नमः। मौञ्ज्यायोर्म्याय वसुविन्दाय सर्वविन्दाय नमः। पाराय सुपाराय महापाराय पारदाय पारपाराय पारयिष्णवे नमः। रुद्राय पशुपतये म--

हते देवाय त्र्यम्बकायैकचरायाधिपतये हराय शर्वायावनाशायोग्राय वज्रिणे घृणिने कपर्दिने नमः। सूर्यायादित्याय नमः। नीलग्रीवाय शितिकण्ठाय नमः। कृष्णायपिङ्गलाय नमः। ज्येष्ठाय श्रेष्ठाय वृद्धायेन्द्राय हरिकेशायोर्द्धरेतसे नमः। सत्याय पावकाय पावकवर्णायैकवर्णाय कामाय कामरूपिणे नमः। दीप्ताय दीप्तरूपिणे नमः। तीक्ष्णाय तीक्ष्णरूपिणे नमः। सौम्याय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमः। चन्द्रललाटाय कृत्तिवाससे नमः इति एतद्देवादित्योपस्थानमेता एवाज्याहुतयो द्वादशरात्रस्यान्ते चरुं श्रपयित्वैताभ्यो देवताभ्यो जुहुयादग्नये स्वाहा। सोमाय स्वाहा। अग्नीषोमाभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतयेऽग्नये स्विष्टकृत इति। अन्ते ब्राह्मणभोजनमिति"। तत्र "तिष्ठेदहनि रात्रावासीत क्षिप्रकामः" इत्यस्यायमर्थः यस्तु महतोऽप्येनसः क्षिप्रमेकेनैव कृच्छ्रेण मुच्येयमित्येवं कामयते असावहनि कर्माविरुद्धेषु कालेषु तिष्ठेद्रात्रावासीत। एवं रौरवयौधाजपसामजपौ नमोहनायेत्यादिभिस्तर्पणादित्योपस्थानादिकञ्चरुश्रपणादिकञ्च योगीश्वराद्युक्तं क्षिप्रकामः कुर्वीत। अतश्च योगीश्वराद्युक्तप्राजापत्यद्वयस्थाने गौतमीयमनेकेतिकर्त्तव्यतासहितन्द्रष्टव्यम्। एवमन्यत्रापि च स्मृत्यन्तरतो विशेषान्तराण्यन्वेषणीयानि। अतिकृच्छ्रमाह "अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः" या०। एतद्धर्मक एव एकभक्तादिप्राजापत्यधर्मयुक्तोऽतिकृच्छ्रः स्यात्। इयांस्तु विशेषः आद्ये त्र्यहत्रये पाणिपूरणमात्रमन्नं भुञ्जीत न पुनर्द्वाविंशतिग्रासान्। अत्र च प्राप्तभोजनानुवादेन पाणिपूरान्नभोजनविधानादन्यत्र्यहेऽतिदेशप्राप्त उपवासोऽप्रतिपन्नएव। अत्रापि पादशो व्यवस्थापूर्ववदेव द्रष्टव्या। यत्तु मनुनोक्तम् "एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत्। त्र्यहं चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः" इति तत्पाणिपूरणपरिमितादल्पत्वाच्छक्तविषयम्। कृच्छ्रातिकृच्छ्रमाह "कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्" या० एकविंशतिरात्रं पयसा वर्त्तनं कृच्छ्रातिकृच्छ्राख्यं व्रतं विज्ञेयम्। गौतमेन तु द्वादशरात्रमुदकेन वर्त्तनं कृच्छ्रातिकृच्छ्र उक्तः "अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्र" इति। अतश्च शक्त्यपेक्षयाऽनयोर्व्यवस्था। पराकमाह "द्वादशाहोपवासेन पराकः परिकीर्त्तितः" या० ऋज्वर्थोऽयमर्द्धश्लोकः। सौम्यकृच्छ्रमाह "पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम्। एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते"। पिण्याकोनिःसृततैलस्तिलस्तस्यौदनसिक्थोदश्विदुदकसक्तूनाञ्च पञ्चानामेकैकं प्रतिदिवसमुपभुज्य षष्ठेऽह्नि उपवसेदेवं सौम्याख्यः कृच्छ्रोऽभिधीयते। द्रव्यपरिमाणन्तु प्राणयात्रामात्रनिबन्धनमधिगन्तव्यम्। जाबालेन चतुरहव्यापी सौम्यकृच्छ्र उक्तः "पिण्याकं सक्तवस्तक्रञ्चतुर्थेऽहन्यभोजनम्। वासो वै दक्षिणां दद्यात्सौम्योऽयं कृच्छ्र उच्यत" इति। तुलापुरुषाख्यं कृच्छ्रमाह "एषान्त्रिरात्रमभ्यासादेकैकस्य यथाविधि। तुलापुरुष इत्येष ज्ञेयः पाञ्चदशाहिकः" या० "एषां पिण्याकादीनाम्पञ्चानां क्रमेणैकैकस्य त्रिरात्राभ्यासेन पञ्चदशाहव्यापी तुलापुरुषाख्यः कृच्छ्रोवेदितव्यः। अत्र पाञ्चदशाहिकत्वविधानादुपवासस्य निवृत्तिः। यमेन त्वेकविंशतिरात्रिकस्तुलापुरुषउक्तः "आचाममथ पिण्याकं तक्रञ्चोदकसक्तुकान्। त्र्यहन्त्र्यहम्प्रयुञ्जानो वायुभक्षस्त्र्यहम्। एकविंशतिरात्रस्तु तुलापुरुष उच्यते" इति। अत्र हारीताद्युक्तेतिकर्त्तव्यता ग्रन्थगौरवभयान्न लिख्यते" मिता०। चान्द्रायणकृच्छ्रस्तु चान्द्रायणशब्दे वक्ष्यते। २कष्टे दुःखे "अमन्त्रयत कृच्छ्रेषु तस्याः सर्वः सभाजनः" रामा०। "महत् खलु कृच्छ्रमनुभूतं तत्रभवत्या" मालवा०। ३कष्टसाधने ४कष्टयुक्ते च त्रि० अमरः "इत्यश्च देशाननुसञ्चराम: वनानि कृच्छ्राणि च कृच्छ्ररूपाः" भा० व०३४ अ०। "कृच्छ्रां प्राप स आपदम्" रामा०। ५कष्टसाध्ये त्रि० "अमन्त्रयित्वा सचिवैः योऽर्थं कृच्छ्रं नृपश्चरेत्" रामा०। "अतोऽन्यथा त्वसाध्यः स्यात् कृच्छ्रोऽयं मिश्रलक्षणः" सुश्रु०। ६प्रजापत्यव्रते "विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने" मनुः। "तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्" मनुः। "एकवर्षे गवि हते कृच्छ्रपादोविधीयते। अबुद्धिपूर्वं पुंसः स्याद्द्विपादस्तु द्विहायने। त्रिहायणे त्रिपादस्तु प्राजापत्यमतः परम्" प्रा०त० वृद्धप्रचेताः। "चतुर्हायणादौ प्राजापत्यविधानात् कृच्छ्रपदं प्राजापत्यपरम्" प्रा० त० रघु०। ७पापे न० मेदि० ८मूत्रकृच्छ्ररोगे पु० राजनि०। कृच्छ्रं वेदयते सुखा० क्यङ् पापचिकीर्षायाम्। कृच्छ्रायते पापं चिकीर्षति। सुखा० अस्त्यर्थे वा मतुप् मस्य वः। कृच्छ्रवत् पक्षे इनि। किञ्चिन्न् तद्युक्ते त्रि० "स ह कृच्छ्री बभूव" छा० उ०। स्त्रियां ङीप्। असत्वपरत्वे.

ततोहेतौ पञ्चमी कृच्छ्रान्मुक्तः सत्त्वपरत्वे तृतीया कृच्छ्रेण विषेण मुक्तः। एतत्पञ्चम्या अलुक्स०।

**कृच्छ्रसान्तपन** पु०न० सम्यक् तपनमत्र प्रज्ञाद्यण् कर्म्म०। व्रतभेदे कृच्छ्रशब्दे विवृतिः।

**कृच्छ्रातिकृच्छ्र** पु० कृच्छ्रादपि अतिकृच्छ्रः अतिकष्टसाध्यत्वात्। व्रतभेदे कृच्छ्रशब्दे विवृतिः। [तथात्वम्।

**कृच्छ्रारि** पु०६त०। विल्वभेदे राजनि०। कष्टनिवारकत्वात्तस्य

**कृच्छ्रार्द्ध** पु० व्रतभेदे कृच्छ्रशब्दे विवृतिः।

**कृणाञ्ज** पु० कृणञ्ज+पृषो०। कृणञ्जयशब्दार्थे राजनि०।

**कृणु** पु० कृ-वा०नु णत्वम्। चित्रकरजातौ त्रिका०

**कृत** संशब्दे चुरा०उभ०सक० सेट्। कीर्तयति ते अचिकीर्त्तत् त कीर्त्तयां बभूव आस चकार चक्रे। कीर्त्तिः कीर्त्तनम् कीर्त्तितः कीर्त्तयन्। कीर्त्त्यते कीर्त्त्यमानः

**कृत** छेदे तुदा० पर० सक० सेट् मुचादि। कृन्तति अकर्त्तीत् कर्त्तिष्यति-कर्त्स्यति ईदित् कृत्तः कृत्तिः। "न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्। विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति" हितो०। प्रनिकृन्तति णिचि कर्त्तयति ते अचीकृतत्-त अचकर्त्तत्-त सनि। चिकर्त्तिषति "शिरोऽतिरागाद्दृग्यमं चिकीर्त्तिषुः" माघः। कर्त्तनं कर्त्तनी कृन्तनम्। [चकर्त

**कृत** वेष्टे रुधा० पर० सक० सेट्। कृणत्ति कृन्तः अकर्त्तीत्।

**कृत्** पु०करोति प्रातिपदिकसंज्ञां कृ-क्विप्। १प्रत्ययभेदे कृत्त्वं च धातुप्रकृतिकत्वे सति प्रातिपदिकसंज्ञानिमित्तप्रत्ययत्वम्। धातोरित्यधिकारेण तद्विधानात् धातुप्रकृतिकत्वम् "कृत्तद्धितसमासाश्चेति" पा० तस्य प्रातिपादकसंज्ञावत्त्वम्। अतएवोक्तमभियुक्तैः "उणाद्यन्तं कृदन्तञ्च तद्धितान्तं समासजम्। नामसंज्ञा भवेत्तेषां स्वाद्युत्पत्तिस्ततः परम्" तद्धितव्युदासाय धातुप्रकृतिकत्वविशेषणम् तिङ्व्युदासाय प्रातिपदिकसंज्ञानिमित्तत्वमिति "कर्त्तरि कृत्"पा०। "गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः" वार्त्ति०। "कृदभिहितोभावोद्रव्यवत् प्रकाशते" महाभाष्यम् "सप्तम्याः कृति बहुलम्"पा०। २कर्त्तरि त्रि०

**कृत** त्रि० कृ+कर्म्मणि क्त। १सम्पादिते २जनिते३अभ्यस्ते च। "कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम्। ब्रीह्यादि चाकृतं प्रोक्तमिति द्रव्यं त्रिधा बुधैः" कात्या० उक्ते ४ओदानादौ हविषि न०। "कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकम्" वेणीसं० ५विहिते त्रि०। ६फले न०। ७सत्ययुगे न० तन्मानाद्युक्तं मनुना "चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः"। तेन ४८०० दिव्यवर्षास्तन्मानम् व्यक्तमुक्तं सू० सि० यथा "तद्द्वादशसहस्राणि चतुर्युगमुदाहृतम्। सूर्य्याब्दसङ्ख्यया द्वित्रिसागरैरयुताहतैः। सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम्। कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया युगस्य दशमो भागश्चतुस्त्रिद्व्येकसङ्गुणः। क्रमात् कृतयुगादीनां षष्ठांशः सन्ध्ययोः स्वकः"। ततश्च मानुषमानेन१७२८००० वर्षास्तन्मानं। तदेतदुक्तं सि०शि० "खखाभ्रदन्तसागरैर्युगाग्नियुग्मभूगुणैः। क्रमेण सूर्य्यवत्सरैः कृतादयो युगाङ्घ्रयः। स्वसन्ध्यकातदंशकैर्निजार्क १२भागसंमितैः। युताश्च तद्युतौ युगं रदाब्धयोऽयुताहताः" मू० 'खखाऽभ्रदन्तसागरैरिति। रविवर्षाणां लक्षचतुष्टयेन द्वात्रिंशत्सहस्राधिकेन चतुर्गुणेन कृतं नाम प्रथमो युगचरणः १७२८०००। त्रिगुणेन त्रेतासंज्ञो द्वितीयो युगचरणः १२९६०००। द्विगुणेन द्वापराख्यस्तृतीयः ८६४००। एकगुणेन कलिश्चतुर्थः ४३२०००। किंविशिष्टा एते युगचरणाः। स्वसन्ध्यकातदंशकैर्निजार्कभागसंमितैर्युताश्च। युगचरणप्रमाणस्य यो द्वादशांशस्तत्प्रमाणा तस्य चरणस्य सन्ध्या। सा चरणादौ भवति। तावांश्च सन्ध्यांशः। स चरणस्यान्ते। एवं स्वसन्ध्यासन्ध्यांशैः सह एते युगचरणाः कथिता इत्यर्थः। ततश्च कृतादौ सन्ध्यावर्षाणि१४४०००। कृतान्ते सन्ध्यांशः१४४०००। त्रेतादौ सन्ध्या १०८०००। त्रेतान्ते सन्ध्यांशः १०८०००। द्वापरादौ सन्ध्या७२०००। द्वापरान्ते सन्ध्यांशः ७२०००, कलेरादौ ३६००सन्ध्या तदन्ते ३६०० सन्ध्यांशः" प्रमि० "पदैश्चतुर्भिः सुकृतैः स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे" नैष०। ३२४ पृ० अयशब्ददर्शिते ९चतुरङ्कयुक्ते पाशकभेदे १०स्तोमभेदे च तत्रैवोदा० ११पर्य्याप्ते त्रि० मेदि०। भावे क्त। १२क्रियायां न० कृतपूर्व्वी कटम् कृतपूर्व्विशब्दे विवृतिः। १३दासभेदे पु० कृतदासशब्दे विवृतिः १४चतुःसंख्यायां "युग्माग्नी कृतभूतानि" ति०त० निगमः। १५साधिते पक्के त्रि० कृतान्नम्।

**कृतक** त्रि० कृतं करणं भावे क्त तत आगतः कन् कृतमेव स्वार्थे क कृन्तति स्वरूपं कृत-क्कुन् वा। १कृत्रिमे करणाज्जाते। कृत्रिमस्य स्वरूपाच्छादकत्वात् तथात्वम्। "यद्यत् कृतकं तदनित्यमिति न्यायः। "शब्दोऽनित्यः कृतकत्वात्" मुक्ता० "एतेन विधिना कृत्नः कृतकेन

यथाऽनलः” भा० वि० २अ० । “आर्य्यरूपसमाचारं चरन्तं कृतके पथि” भा०आनु० २६०७ श्लो० “कच्चिन्न कृतकैर्दूतैरित्यादि” कच्चिदध्यायशब्दे दर्शितम् । “कृतकं कामिनि चुक्षुवे मृगाक्ष्या” माघः । २विड्लवणे न० अमरः ।

**कृतकर्म्मन्** त्रि० कृतं कर्म्म येन । १दक्षे चतुरे कार्य्यक्षमे हेम० । २कृतस्वकार्य्ये च “यावदस्तं न यात्येष कृतकर्म्मा दिवाकरः” रामा० । कर्त्तव्यताशून्ये ३परमेश्वरे पु० । “इन्द्रकर्म्मा महाकर्म्मा कृतकर्म्मा कृतागमः” विष्णु स० “कृतमेव न कर्त्तव्यं किञ्चित् कर्म्मास्य विद्यते धर्म्मात्मकं कर्म्म कृतं वा कृतकर्म्मा” भा० । कृतकार्य्य कृतकृत्यादयोऽप्यत्र त्रि० “समूहकार्य्य आयतान् कृतकार्य्यान् विसर्ज्जयेत्” या०स्मृ० । “यथेष्टं गम्यतां तत्र कृतकार्य्यासि यं त्वया” भा०आनु०२८६२श्लो० । “कृतकृत्योविधिर्मन्ये न वर्द्धयति तस्य ताम्” माघः । ५कृतनित्याह्निके संन्यासिनि । “ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः । नैवास्ति किञ्चित् कर्त्तव्यमस्ति चेन्न स तत्त्ववित्” इत्युक्तरा तस्य समाप्तकृत्यत्वात्तथात्वम् “कृतकृत्यस्तु संन्यस्य स्वात्ममात्ररतिर्भवेत्” । अकृतकृत्योहि मृत्योर्बिभेति यथाह “प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः” इति ।

**कृतकाल** त्रि० कृतः कालः समयोयेन । १कृतावधौ शिष्यादौ । कर्म्म० । २कृते समये पु० “कृतशिल्पोऽपि निवसेत् कृतकालं गुरोर्गृहे” या० । कृतसमयादयोऽप्यत्र [च त्रिका० ।

**कृतकोटि** पु० कृता कोटिर्येन । १काश्यपमुनौ २उपवर्षमुनौ

**कृतक्रिय** त्रि० कृता क्रिया येन । कृतनित्यादिकार्य्ये “विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् । वैश्यः प्रतोदं रश्मीन् वा यष्टिं शूद्रः कृतक्रियः” मनुः ।

**कृतक्षण** त्रि० कृतः क्षणः समयो येन । लब्धावकाशे । “तमुतङ्कः प्रत्युवाच कृतक्षण एवास्मि शीघ्रमिच्छामि यथोपपन्नमन्नमुपस्कृतम्” भा० आ० ३अ० । कृतसमयादयोऽप्यत्र

**कृतघ्न** त्रि० कृतं हन्ति हन–टक् । कृतोपकारस्यापकारके “शरणागतदीनस्त्रीहिंसकान् संवसेन्न तु । चीर्ण्णव्रतानपि सदा कृतघ्नसहितानिमान्” या० स्मृ० “बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्म्मतः । शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्” मनुः “कृतघ्नानाह स्कन्दपुराणम् “भर्त्तृपिण्डापहर्त्ता च पितृपिण्डापहारकः । तस्माद्गृहीत्वा विद्याञ्च दक्षिणां न प्रयच्छति । एतान् स्त्रियश्च योद्वेष्टि यश्चैतान् घातयेन्नरः । कृतस्य दोषं वदति सकामान्न करोति यः । न स्मरेच्च कृतं यश्च आश्रमान् यस्तु दूषयेत् । सर्वांस्तानृषिभिः सार्द्धं कृतघ्नानब्रवीन्मनुः” “ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे । निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः” । “तस्मात् पित्रादिगुरोः कृतस्य सत्कर्म्मण इति शेषः । सकामान्न करोति उपकर्त्तृनिति शेषः” प्रा० त० रघुनन्दनः ।

**कृतघ्नोपाख्यान** न०कृतघ्नविशेषस्योपाख्यानम् । भारतशान्तिपर्व्वान्तर्गते १६८ अध्यायमारभ्य १७२ अध्यायपर्य्यन्ते ग्रन्थे नाडीजङ्घशब्दे विवृतिः । “कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् । अश्रद्धेयः कृतघ्नोहि कृतघ्ने नास्ति निष्कृतिः । मित्रद्रोहो न कर्त्तव्यः पुरुषेण विशेषतः । मित्रध्रुक् नरकं घोरमनन्तं प्रतिपद्यते । कृतज्ञेन सदा भाव्यं मित्रकाम्येण चैवह । मित्राच्च लभते सर्व्वं मित्रात् पूजां लभेत च । मित्राद्भोगांश्च भुञ्जीत मित्रेणापत्सु मुच्यते । सत्कारैरुत्तमैर्मित्रं पूजयेत विचक्षणः । परित्याज्यो बुधैः पापः कृतघ्नो निरपत्रपः । मित्रद्रोही कुलाङ्गारः पापकर्म्मा नराधमः । एष धर्म्मभृतां श्रेष्ठ ! प्रोक्तः पापो मया तव । मित्रद्रोही कृतघ्नोवै किंभूयः श्रोतुमिच्छसि” । भा०शा०१७२अ०

**कृतच्छिद्रा** स्त्री कृतं छिद्रं यस्याम् । कोषातकीलतायाम् । राजनि० ।

**कृतज्ञ** त्रि० कृतं कृतोपकारं जानाति ज्ञा–क । १कृतोपकारज्ञातरि २तत्प्रत्युपकारके । “कृतज्ञेन सदा भाव्यम्” भा० शा० १७२ अ० । ३कुक्कुरे पु० मेदि० स्त्रियां जातित्वेऽपि संयोगोपधत्वात् टाप् । कृतं कार्य्यं जगत् जानाति ज्ञा–क, कृतं कार्य्यं ज्ञ आत्मा यस्य वा । ४ परमेश्वरे पु० “महर्षिः कपिलाचार्य्यः कृतज्ञोमेदिनीपतिः” विष्णु स० “कृतज्ञतामस्य वदन्ति सम्पदः” किरा० ।

**कृतत्रा** स्त्री कृतं त्रायते त्रै–क । त्रायमाणालतायां राजनि०

**कृतदास** पु० कर्म्म० । एतावत्कालं त्वद्दास इत्यभ्युपगमिते पञ्चदशदासान्तर्गते दासभेदे दासाश्च पञ्चदशविधाः मिता० दर्शिता यथा

“गृहजातस्तथा क्रीतोलब्धोदायादुपागतः । अनाकालभृतस्तद्वदाहितः स्वामिना च यः । मोक्षितोमहतश्चर्णाद्युद्धप्राप्तः पणेजितः । तवाहमित्युपगतः प्रव्रज्यावसितः कृतः । भक्तदासश्च विज्ञेयस्तथैव बडवाहृतः । विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः” या० ।

"गृहे दास्यां जातो गृहजातः१ क्रीतो मूल्येन२। लब्धः३ प्रतिग्रहादिना। दायादुपागतः पित्रादिदासः४। अनाकालभृतो दुर्भिक्षे योदासत्वाय मरणाद्रक्षितः५। आहितः स्वामिना धनग्रहणेनाधितां नीतः६। ऋणमोचनेन दासत्वमभ्युपगतः ऋणदासः७। युद्धप्राप्तः समरे विजित्य गृहीतः८। पणे जितः यद्यस्मिन् विवादे पराजितोऽहन्तदा त्वद्दासो भवामीति परिभाष्य जितः९। तवाहमित्युपगतः तवाहन्दास इति स्वयमुपगतः१०। प्रव्रज्यावसितः प्रव्रज्यातश्च्युतः११। कृतः एतावत्कालं त्वद्दास इत्यभ्युपगमितः१२। भक्तदासः सर्वकालमन्नार्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः१३। वडवाहृतः वडवा गृहदासी तया हृतस्तल्लोभेन तामुद्वाह्य दासत्वेन प्रविष्टः१४। य आत्मानं विक्रीणीते स आत्मविक्रेता"१५। इत्येवम्पञ्चदश प्रकाराः"।

**कृतधी** त्रि० कृता सम्पादिता धीर्येन। शास्त्राभ्याससंस्कृतान्तःकरणे, स्थिरचित्ते, "कृतधीः किं प्रभाषेतेति" "कृतधीर्मुनिरुच्यते" गीता।

**कृतध्वज** पु० नृपभेदे "कुशध्वजस्तस्य पुत्रस्ततो धर्म्मध्वजोऽन्वयः धर्म्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ" भाग० ९,१०,१३, [ अभ्यासनिपुणे अमरः।

**कृतपुङ्ख** पु० कृतः अभ्यस्तः पुङ्खः तदुपलक्षितो बाणो येन। शरा-

**कृतपूर्व्वी** त्रि० कृतं पूर्व्वमनेन "सपूर्व्वाच्च" पाणिनि। कृतपूर्व्वकर्म्मके तद्बोधप्रकारः सरलायामस्माभिर्निरूपितो यथा "कृतपूर्व्वी कटं भुक्तपूर्व्वी ओदनमित्यादिमहाभाष्यकारप्रयोगा दृश्यन्ते तत्र च कृतं पूर्व्वमनेनेति विग्रहे "सह सुपा" इति पा०समासे पूर्व्वादिनिरितीनेरनुवृत्तिमता "सपूर्व्वाच्चेति" पा० सूत्रेण इनिर्विहितः तत्र यदि कृतमिति कर्म्मणि क्तः स्यात् तदा तस्य कटादिकर्म्मरूपविशेषणतया सापेक्षत्वेन पूर्व्वादिपदेन समासो न स्यात् एकत्र विशेष्यतयोपस्थितस्यान्यत्र विशेषणतयान्वयायोगात् न इनिसम्भवः। भाष्यप्रामाण्याच्च तत्र इनौ सत्यामेषा रीतिराकलनीया तथाहि प्रथमं कर्म्म विवक्षयाऽकर्म्मकत्वेन भावे क्तप्रत्यये विहिते तदन्तेन पूर्व्वस्य "सह सुपेति" पा०समासे कृते तत्पूर्व्वकात् पूर्व्वशब्दादिनिप्रत्ययो भवति। पश्चाच्च कर्त्तृकृतक्रियायाः कर्म्माकाङ्क्षायां कटादिकर्म्मणोऽन्वयः एतदेव हरिणा दर्शितं यथा "अकर्म्मकत्वे सत्येव क्ताने भावाभिधायिनि। पश्चात् क्रियावता कर्त्रा योगो भवति कर्म्मणा। अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः। क्रिया सम्बध्यते तद्वत् कृतपूर्व्व्यादिषु स्थितेति"। गमनकर्त्तृवाचकगतादिमध्यपातिनी गमनक्रिया कर्त्तृविशेषणत्वेनोपस्थिता यथा अविग्रहा अनुबोधा तथा कृतपूर्व्वकर्त्तृबोधककृतपूर्व्विमध्यपातिन्यपीति तदर्थः"।

**कृतप्रणाश** पु० कृतयोः पुण्यापुण्ययोर्भोगमन्तरेण प्रणाशो नाशः। कृतहानौ दोषभेदे। स च दोषविशेषः कृतप्रणाशाकृताभ्यागमौ दोषौ जीवस्यानित्यत्वे प्रसक्तौ" शा० सू० भा० दर्शितौ [ स्त्री राजनि०

**कृतफल** न० कृतं फलमस्य। १कक्कोले २कोलशिम्ब्यां टाप्

**कृतब्रह्मन्** त्रि० कृतं ब्रह्म स्तोत्रं येन। कृतस्तोत्रे "यन-वद्वनुष्मतः कृतब्रह्मा" ऋ० २,२५,१,

**कृतम्** अव्य० कृत—बा० कमु। अलमर्थे, निषेधे च।

**कृतमाल** पु० कृता मालास्य। १आरग्वधे, (सोन्दाल) २कर्णिकारे च अमरः। ३कर्णिकारवृक्षे ४नदीभेदे स्त्री राजनि०। ५कृतमाल्ये मालाकारे त्रि०।

**कृतमुख** त्रि० कृतं संस्कृतं मुखं यस्य। पण्डिते अमरः

**कृतरथ** पु० १निमिवंश्ये नृपभेदे "मेरोः प्रतीपकस्तस्माज्जातः कृतरथो यतः" भाग० ९,१३,१, श्लो०। २सम्पादितरथे रथकारे त्रि०

**कृतलक्षण** त्रि० कृतानि लक्षणान्यस्य। १गुणैर्विख्याते अमरः। २कृतचिह्ने च "ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः" मनुः।

**कृतवर्म्मन्** पु० कृतवीर्य्यभ्रातरि कनकनृपात्मजे। "कनकस्य तु दायादाश्चत्वारो लोकविश्रुताः। कृतवीर्य्यः कृतौजाश्च कृतवर्म्मा तथैव च। कृताग्निस्तु चतुर्थोऽभूत् कृतवीर्य्यादथार्जुनः" हरिवं ३३अ०। यदुवंश्ये २क्षत्रियभेदे "समीपुत्रः प्रतिक्षत्रः प्रतिक्षत्रस्य चात्मजः। स्वयंभोजः, स्वयंभोजाद् हृदिकः संबभूव ह। तस्य पुत्रा बभूवुर्हि सर्व्वे भीमपराक्रमाः। कृतवर्म्माग्रजस्तेषां शतधन्वा तु मध्यमः" हरिवं०३८अ० "रामे भारं समासज्य युयुधाने च वीर्य्यवान्। अक्रूरे विपृथौ चापि गदे च कृतवर्म्मणि" हरिवं०११३अ० [ त्रिका०

**कृतविद्य** त्रि० कृता अभ्यस्ता विद्या येन। अभ्यस्तविद्ये

**कृतवीर्य्य** पु० कृतं वीर्य्यमनेन। १चन्द्रवंश्ये कार्त्तवीर्य्यार्ज्जुनजनके नृपभेदे। "कनकस्य तु दायादाश्चत्वारो लोकविश्रुताः। कृतवीर्य्यः कृतौजाश्च कृतवर्म्मा तथैव च। कृताग्निस्तु चतुर्थोऽभूत् कृतवीर्य्यादथार्ज्जुनः" हरिवं०

२१अ० तस्यापत्यम् अण् । कार्त्तवीर्य्ये तदपत्ये कार्त्त-वीर्य्यशब्दे विवृतिः "गर्भस्य सम्भवतः पूर्व्वं शिरः सम्भवतीत्याह शौनकः शिरोमूलत्वाद्देहेन्द्रियाणां, हृदयमिति कृतवीर्य्यः बुद्धेर्मनसश्च स्थानत्वात्" सुश्रुतः । २वीर्य्यान्विते त्रि० ।

**कृतवेतन** त्रि० कृतं वेतनं यस्य । "योयावत् कुरुते कार्य्यं तावत्तस्येह वेतनम्" या० उक्तरीत्या कृतभृतिके दासे । "प्रमादद्दुष्टनष्टांश्च प्रदाप्यः कृतवेतनः" या०स्मृ०

**कृतवेदिन्** त्रि० कृतं वेत्ति विद्–णिनि । कृतोपकारस्योप-कारके स्त्रियां ङीप् [रत्नमा०

**कृतवेध(क)** पु० कृतो वेधोऽस्य वा कप् । श्वेतकोषातक्यां

**कृतवेधना** स्त्री कृतं वेधनं यस्याः । कोषातकीलतायाम् राजनि० [शिल्पोऽपि निवसेत् कृतकालं गुरोर्गृहे" या०

[कृ]तशिल्प पु० कृतमभ्यस्तं शिल्पं येन । अभ्यस्तशिल्पे "कृत-

**कृतश्रम** त्रि० कृतः श्रमो येन । मह्द्ध्यायाद्यन्विते । "पौरा-णिकः पुराणे कृतश्रमः" भा० आ० ८५श्लो० । २धर्म्म राजसभ्ये ऋषिभेदे 'वलीवाकः शिलीवाकः सत्यपालः कृतश्रमः', भा० स० ४अ० यमसभ्योक्तौ

**कृतसंज्ञ** त्रि० कृता संज्ञा संङ्केतो यस्य । कृतसङ्केते दासादौ "गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः" मनुः २कृतचेतन्ये नरेणाकृतसंज्ञेन विशुद्धेनान्तरात्मना" भा० आश्व०५अ० । कृतसंङ्केतादयोऽप्यत्र "नामसमेतं कृतसङ्केतम्" जयदेवः

**कृतसापत्निका** स्त्री कृतं सापत्न्यं यस्याः कप् टापि अत इत्त्वे यलोपः । अध्यूढायां स्त्रियां यस्या विवा-हात् पश्चात् तत्पतिना विवाहान्तरं कृतं तस्याम् अमरः

**कृतस्वर** पु० कृतः स्वरः शब्द उपतापो वा येन यत्र वा । स्वर्णोत्पत्तिस्थाने स्वर्णाकरे कार्त्तस्वरः २कृतशब्दे त्रि०

**कृतहस्त** त्रि० कृतः अभ्यस्तः हस्तो वाणादित्यागमोचणला-ववरूपा हस्तशिक्षा येन । सुशिक्षितशरक्षेप्ये जने अमरः "अप्राप्तांश्चैव तान् (शरान्) पार्थश्चिच्छेद कृत हस्तवत्" भा०वि०१८७६श्लो० "अप्राप्तांश्चैव तान् वाणान् चिच्छेद कृतहस्तवद्" हरिवं०१८२०५श्लो०

**कृताकृत** न० कृतं कार्य्यञ्च अकृतं कारणं च समा० द्व० । १कार्य्यकारणयोः । "क्तेन नञ्विशिष्टेनानञ्" पा० कर्म्मा०। कृते अकृते च २होमादौ । ऋत्विग्विशेषस्य ब्रह्मणः कृताकृतावेक्षणाय होमादौ वरणम् क्रियते इति याज्ञिक-सम्प्रदायः । ३कृतशब्दोक्ते कात्यायनपरिभाषिते तण्डु-लादौ कार्य्यकारणरूपे ४परमेश्वरे पु० "लोकाध्यक्षः सुराध्यक्षः धर्म्माध्यक्षः कृताकृतः" विष्णुसं० "कृतस्य कार्य्यरूपेण, अकृतस्य कारणरूपेणेति कृताकृतः" भा० । भावे क्त कृतं करणम् अकृतमकरणं द्वन्द्व०। ५कर-णाकरणयोः न० द्विव०। "नैनं कृताकृते तपतः" शत० ब्रा०१४।७।२।२७। कृतञ्चाकृतञ्च । ६किञ्चित्कृते किञ्चिदकृते च "कृताकृतञ्च कनकं हस्तिनश्चाचलोपमाः" भा०आनु० ५३अ० "कृताकृतांस्तण्डुलांश्च पललौदनमेव च" या० स्मृ०

**कृतागम** पु० कृत आगमोयेन । १परमेश्वरे वेदशास्त्र कर्त्तृत्वात्तस्य तथात्वम् । "कृतकर्म्मा कृतागमः" विष्णुसं० कृतोवेदात्मकआगमोयेनेति कृतागमः "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदश्च" इति श्रुतेः" भा० "कामः कान्तः कृतागमः" विष्णुसं०

**कृताग्नि** पु० कृतवीर्य्यानुजभ्रातरि । कृतवीर्य्यशब्दे विवृतिः

**कृताङ्क** पु० कृतसंख्यकचतुःसंख्यकोऽङ्कोयत्र । चतुःसंख्या-न्विते पाशकभेदे [ लुप्त्वे २संपुटीकृतहस्ते त्रि० धरणिः

**कृताञ्जलि** पु० कृतोऽञ्जलिरिव पत्रसङ्कोचो येन । १लज्जा-

**कृतात्मन्** पु० कृतः शिक्षितः संस्कृतो वा आत्माऽन्तःकरणं यस्य । १शिक्षितचित्ते, २शुद्धान्तःकरणे च । "गृहे गृहवतां नित्यमागच्छन्ति कृतात्मनाम्" "उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः" मनुः "पर्य्याप्तकामस्य कृता-त्मनस्तु इहैव सर्व्वे प्रविलीयन्ति कामाः"

**कृतात्यय** पु० कृतस्य कर्म्मजन्यभोगस्यात्ययोऽवसानम् । भोगं विना कृतकर्म्मनाशे 'कृतात्ययेऽनुशयवान्" शा०सू०

**कृतानुकृत** न० कृतस्यानुकृतमनुकरणम् । कृतप्रतिकृतौ कृतताडनादेस्ताडने "तौ जघ्नतुस्तदान्योन्यं कृतानुकृत-कारिणौ" रामा० "कृतानुकारकृतप्रतिकृत्यादयोऽप्यत्र

**कृतान्त** पु० कृतः अन्तो विपर्य्ययनाशो–निश्चयो विषयपरि-च्छेदो वा येन । १सिद्धान्ते । "कृतो नाशो येन । २दैवमात्रे ३पापे ४यमे च । ५पूर्व्वदेहजन्ये फलोन्मुखे ६दैवे अमरः ७शनौ ८तद्वारे च शब्दचि० "कृता-न्तकुजयोर्वारे यस्य जन्मदिनं भवेत्" ति०त० ज्यो० ८यम-दैवत्ये भरणीनक्षत्रे लक्षितलक्षणया १०द्वित्वसंख्यायाञ्च

**कृतान्तजनक** पु०६त० । सूर्य्ये हेमच० कृतान्तो जनको-यस्याः कालागुरुणि रेणुकागन्धद्रव्ये स्त्री शब्दच०

**कृतान्न** न० कृतं पक्वं तदन्नञ्च । लड्डुकादौ पक्वान्ने, 'कृ-तान्नमुदकं स्त्रियः" इति अविभाज्ये स्मृतिः । पाद्यान्य

भाषानामकाः कृतान्नभेदास्तत्साधनप्रकाराश्च भावप्र० दर्शिता यथा

"अथ कृतान्नवर्गः तत्रान्नानां साधनप्रकारः सिद्धानां गुणाश्च तत्र परिभाषा। समवायिनि हेतौ ये मुनिभिर्भणिता गुणाः। कार्य्येऽपि तेऽखिला ज्ञेयाः परिभाषेति भाषिता। क्वचित्संस्कारभेदेन गुणभेदो भवेद्यतः। भक्तं लघु पुराणस्य शालेस्तच्चिपिटो गुरुः। क्वचिद्योगप्रभावेन गुणान्तरमपेक्षते। कदन्नं गुरु सर्पिश्च लघून्तं सुहितं भवेत्।

अथ भक्तस्य नामानि साधनं गुणाश्च। भक्तमन्नं तथान्धश्च क्वचित्कूरञ्च कीर्त्तितम्। ओदनोऽस्त्री स्त्रियां भिस्सा-दीदिवः पुंसि भाषितः। सुधौतास्तण्डुलाः स्फीतास्तोये पञ्चगुणे पचेत्। तद्भक्तं प्रस्रुतं चोष्णं विशदं गुणवन्मतम्। भक्तं वह्निकरं पथ्यं तर्पणं रोचनं लघु। अधौतमस्रुतं शीतं गुर्वरुच्यं कफप्रदम्।

अथ (दालि)। दलितन्तु शमीधान्यं दालिर्दाली स्त्रियामुभे। दाली तु सलिले सिद्धा लवणार्द्रकहिङ्गुभिः। संयुक्ता सूपनाम्नी स्यात् कथ्यन्ते तद्गुणा अथ। सूपो विष्टम्भको रूक्षः शीतस्तु स विशेषतः। निस्तुषो भृष्टसंसिद्धः लाघवं सुतरां व्रजेत्।

अथ (खिचिड़ी)। तण्डुला दालिसंमिश्रा लवणार्द्रकहिङ्गुभिः। संयुक्ता सलिले सिद्धा कृशरा कथिता बुधैः। कृशरा शुक्रला बल्या गुरुः पित्तकफप्रदा। दुर्जरा बुद्धिविष्टम्भमलमूत्रकरी स्मृता।

अथ तापहरी (ताताहरीति) लोके। घृते हरिद्रासंयुक्ते माषजाम्भर्ज्जयेद्वटीम्। तण्डुलांश्चापि निर्धौतान् सहैव परिभर्जयेत्। सिद्धियोग्यं जलं तत्र प्रक्षिप्य कुशलः पचेत्। लवणार्द्रकहिङ्गूनि मात्रया तत्र निःक्षिपेत्। एषा सिद्धिः समानज्ञा प्रोक्ता तापहरी बुधैः। एषा तापहरी बल्या वृष्या श्लेष्माणमाहरेत्। वृंहणी तर्पणी रुच्या गुर्वी पित्तहरी स्मृता।

अथ क्षीरिका। पायसः परमान्नं स्यात् क्षीरिकापि तदुच्यते। शुद्धेऽर्द्धपक्वे दुग्धे तु घृताक्तांस्तण्डुलान् पचेत्। ते सिद्धा क्षीरिका ख्याता ससिताज्ययुतोत्तमा। क्षीरिका दुर्जरा प्रोक्ता वृंहणी बलवर्द्धिनी। नालिकेलन्तनूकृत्य च्छिन्नं पयसि गोः क्षिपेत्। सितागव्याज्यसंयुक्ते तत्पचेन्मृदुनाऽग्निना। नारीकेलोद्भवा क्षीरी स्निग्धा शीतातिपुष्टिदा। गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहा।

अथ (सेवइ)। समितां वर्त्तिकां कृत्वा सूक्ष्मां तु यवसन्निभाम्। शुष्का क्षीरेण संसाध्या भोज्या घृतसितान्विता। सेविका तर्पणी बल्या गुर्वी पित्तानिलापहा। ग्राहिणी सन्धिकृद्रुच्या तां खादेन्नातिमात्रया।

अथ (मण्डा)। गोधूमा धवला धौताः कुट्टिताः शोधितास्ततः। प्रोक्षिता यन्त्रनिष्पिष्टाश्चालिताः समिताः (मयदा) स्मृताः। वारिणा कोमलां कृत्वा समितां साधु मर्द्दयेत्। हस्ततलनया तस्या लोपलीं सम्यक् प्रसारयेत्। अधोमुखघटस्यैतत् विस्तृतं प्रक्षिपेद्बहिः। मृदुना वह्निना साध्यः सिद्धो मण्डक उच्यते। लोपली (लाइ)। दुग्धेन साज्यखण्डेन मण्डकं भक्षयेन्नरः। अथ वा सिद्धमांसेन सतक्रवटकेन वा। मण्डको वृंहणो वृष्यो बल्यो रुचिकरो भृशम्। पाकेऽपि मधुरो ग्राही लघुर्दोषत्रयापहः।

अथ (पोरी) कुत्रापि (दुनौरी) इति च। "कुर्य्यात्समितयाऽतीव तन्वी पर्प्पटिका ततः। स्वेदयेत्तप्तके (ताओया) तान्तु पोलिकां जगदुर्बुधाः। तां खादेल्लप्सिकायुक्तां तस्या मण्डकवद्गुणाः।

अथ प्रसङ्गाल्लप्सी। समितां सर्पिषा भृष्टां शर्करां पयसि क्षिपेत्। तस्मिन् घनीकृते न्यस्येल्लवङ्गं मरिचादिकम्। लप्सिका वृंहणी वृष्या बल्या पित्तानिलापहा। स्निग्धा श्लेष्मकरी गुर्वी रोचनी तर्पणी परम्।

(रोटि)। शुष्कगोधूमचूर्णेन किञ्चित्पुष्टाञ्च पोलिकाम्। तप्तके (ताओया)। स्वेदयेत्कृत्वा भूयोऽङ्गारेऽपि तां पचेत्। सिद्धैषा रोटिका प्रोक्ता गुणं तस्याः प्रचक्ष्महे। रोटिका बलकृद्रुच्या वृंहणी धातुवर्द्धनी। वातघ्नी कफकृद्गुर्वी दीप्ताग्नीनां प्रपूजिता।

अथ (लिट्टी) शुष्कगोधूमचूर्णन्तु साम्बु गाढं विमर्द्दयेत्। विधाय वटकाकारं निर्धूमेऽग्नौ शनैः पचेत्। अङ्गारकर्कटी ह्येषा वृंहणी शुक्रला लघुः। दीपनी कफकृद्बल्या पीनसश्वासकासजित्।

अथ (यवरोटी)। यवजा रोटिका रुच्या मधुरा विशदा लघुः। मलशुक्रानिलकरी बल्या हन्ति कफामयान्।

अथ माषरोटिका। माषाणां दालयस्तोये स्थापितास्त्यक्तकञ्चुकाः। आतपे शोषिता यन्त्रे पिष्टास्ता धूमसी स्मृता। धूमसी रचिता चैव प्रोक्ता भर्भरिका बुधैः। भर्भरी कफपित्तघ्नी किञ्चिद्वातकरी स्मृता।

अथ चनकरोटिका। चनकस्य रोटिका रूक्षा श्लेष्मपित्तास्रनु-

द्गुरुः । विष्टम्भिनी न चक्षुष्या तद्गुणा चातिशष्कुली" ।
अथ पिष्टिका । दालिः संस्थापिता तोये ततोऽपहृतकञ्चुका । शिलायां साधु सम्पिष्टा पिष्टिका कथिता बुधैः
अथ (वेठइ) । माषपिष्टिकया पूर्णगर्भा गोधूमचूर्णतः । रचिता रोटिका सैव प्रोक्ता वेटमिका बुधैः । भवेद्वेटमिका बल्या हृद्या रुच्याऽनिलापहा । उष्णसन्तर्पणी गुर्वी बृंहणी शुक्रला परम् । भिन्नमूत्रमला स्तन्यमेदःपित्तकफप्रदा । गुदकीलार्द्दितश्वासपङ्क्तिशूलानि नाशयेत् ।
अथ (पापर) धूमसी रचिता हिङ्गुहरिद्रालवणैर्युता । जीरकस्वर्जिकाभ्याञ्च तनूकृत्य च वेल्लिता । पर्प्पटास्ते सदाङ्गारभृष्टाः परमरोचकाः । दीपनाः पाचना रूक्षा गुरवः किञ्चिदीरिताः । मौद्गाश्च तद्गुणाः प्रोक्ता विशेषाल्लघवो हिताः । चनकस्य गुणैर्युक्ताः पर्प्पटाश्चनकोद्भवाः । स्नेहभृष्टास्तु ते सर्वे भवेयुर्मध्यमा गुणैः ।
अथ (पूरी) । माषाणां पिष्टिका पूर्य्या लवणार्द्रकहिङ्गुभिः । तया पिष्टिकया पूर्णा समिताकृतपोलिका । ततस्तैलेन पक्वा सा पूरीका कथिता बुधैः । रुच्या स्वाद्वी गुरुः स्निग्धा बल्या पित्तास्रदूषिका । चक्षुस्तेजोहरी चोष्णा पाके वातविनाशिनी । तथैव घृतपक्वापि चक्षुष्या रक्तपित्तहृत् ।
अथ (वरा) । माषाणां पिष्टिका युक्ता लवणार्द्रकहिङ्गुभिः । कृत्वा विदध्याद्वटकांस्तांस्तैले पचेच्छनैः । विशुष्का वटका बल्या बृंहणी वीर्य्यवर्द्धनी । वातामयहरा रुच्या विशेषाद्दर्द्दितापहा । विबन्धभेदिनी श्लेष्मकारिणोऽग्निर्प्रजिता । संचूर्ण्य निक्षिपेत्तक्रे भृष्टं जीरकहिङ्गुभिः । लवणं तत्र वटकान् सकलानपि मज्जयेत् । शुक्रलस्तत्र वटको बलकृद्रोचनो गुरुः । विबन्धहृद्विदाही च श्लेष्मलः पवनापहः । राज्यक्तपातितो वान्यान् पाचनांस्तांस्तु भक्षयेत् राज्यक्ता (राइता) इति लोके ।
अथ (काञ्जीवरा) । मन्थनी नूतना धार्य्या कटुतैलेन लेपिता । निर्मलनाम्बुनापूर्य्य तस्यां चूर्णं विनिःक्षिपेत् । राजिकाजीरलवणहिङ्गुशुण्ठीनिशाकृतम् । निःक्षिपेद्वटकांस्तत्र भाण्डस्यास्य मुद्रयेत् । ततो दिनत्रयादूर्द्धमम्लाः स्युर्वटका ध्रुवम् । काञ्जिको वटको रुच्यो वातघ्नः श्लेष्मकारकः । शीतो दाहं शूलमजीर्णं हरते दृगामयेष्वहितः ।
(उरीदवडा) । अम्लिकां स्वेदयित्वा तु जलेन सह मर्द्दयेत् । तन्नीरे कृतसंस्कारे वटकान्मज्जयेज्जनः । अम्लिका वटकास्ते तु रुच्या वह्निप्रदीपनाः । वटकस्य गुणैः पूर्वै रेषोऽपि च समन्वितः ।
अथ (हगवड) मुद्गानां वटकास्तप्ते (ताओया) भर्जिता लघवो हिमाः । संस्कारजप्रभावेन त्रिदोषशमना हिताः ।
अथ (माषवडा) माषाणां पिष्टिका हिङ्गुलवणार्द्रकसंस्कृता । तया विरचिता वस्त्रे वटिकाः साधुशोषिताः । भर्जितास्ततस्तैलेन अथवाम्बुप्रयोगतः । वटकस्य गुणैर्युक्ता ज्ञातव्या रुचिदा भृशम् ।
अथ (कोँहडावडी) । कूष्माण्डकवटी ज्ञेया पूर्वोक्तवटिकागुणाः । विशेषात्पित्तरक्तघ्नी लघ्वी च कथिता बुधैः ।
अथ (मुद्गवटी) मुद्गानां वटिका तद्वद्रचिता साधिता तथा । पथ्या रुच्या तथा लघ्वी मुद्गसूपगुणा स्मृता ।
(चरिकवच्छ) । माषपिष्टिकया लिप्तं नागवल्लीदलं महत् । तत्तु संस्वेदयेत् युक्त्या स्थाल्यामास्तारकोपरि । ततो निष्काश्य तं खण्डलतस्तैलेन भर्जयेत् । खण्डं खण्डेन योग्यमिति यावत् । अलीकमत्स्य उक्तोऽयं प्रकारः पाकपण्डितैः । तं हन्ताकभटित्रेण वास्तूकेन च भक्षयेत् ।
अथ (कडी) । स्थाल्यां घृते वा तैले वा हरिद्राहिङ्गु भर्जयेत् । अवलेहनसंयुक्तं तक्रन्तत्रैव निःक्षिपेत् । एषा सिद्धा समरीचा कथिता कथिता बुधैः । अवलेहनम् । (अरिहन) इति लोके । कथिता पाचनी रुच्या लघ्वी वह्निप्रदीपनी । कफानिलविबन्धघ्नी किञ्चित्पित्तप्रकोपिणी । अलीकमत्स्याः शुष्का वा किं वा कथितया पुनः । बृंहणा रोचना हृद्या बल्या वातगदापहाः । कोष्ठशुद्धिकराः शुक्राः किञ्चित्पित्तप्रकोपनाः । अर्द्दिते सहनुस्तम्भे विशेषेण हिताः स्मृताः ।
अथ (आदवरा) । मुद्गपिष्टाविरचितान् वटांस्तैलेन पाचितान् । हस्तेन चूर्णयेत्सम्यक् तस्मिंश्चूर्णे विनिःक्षिपेत् । भृष्टं हिङ्ग्वार्द्रकं सूक्ष्मं मरीचं जीरकं तथा । निम्बूरसं यवानीं च युक्त्या सर्वं विमिश्रयेत् । मुद्गपिष्टं पचेत्सम्यक् स्थाल्यामास्तारकोपरि । तस्मात्तु गोलकं कुर्य्यात् तन्मध्ये पूरणं क्षिपेत् । तैले तान् गोलकान् पक्वा कथितायां निमज्जयेत् । गोलकाः पाचकाः प्रोक्तास्ते त्वार्द्रकवटा अपि । मुद्गार्द्रकवटा रुच्याः लघवो बलकारकाः । दीपनास्तर्पणाः पथ्याः स्त्रिषु दोषेषु पूजिताः ।
(पकौरी) दालयम्बनकानान्तु निस्तुषा यन्त्रपेषिताः । तच्चूर्णं वेशनं प्रोक्तं पाकशास्त्रविशारदैः । वटिका वेशनस्यापि कथितायां निमज्जिताः । रुच्या विष्टम्भजननी बल्या

पुष्टिकरी स्मृता। एवमन्येऽपि वेशनभवाः प्रकाराः पापड़नखण्डप्रभृतयो बोद्धव्याः।

अथ मांसस्य प्रकाराः। तत्र शुद्धमांसम्। (सुधमांस) इति लोके। पाकपात्रे घृतं दद्यात् तैलञ्च तदभावतः। तत्र हिङ्गु हरिद्रां च भर्जयेत्तदनन्तरम्। छागादेरस्थिरहितं मांसं तत्खण्डितं ध्रुवम्। धौतं निर्गालितं तस्मिन् घृते तद्भर्जयेच्छनैः। सिद्धियोग्यं जलं दत्त्वा लवणन्तु पचेत्ततः। सिद्धे जलेन सम्पिष्य वेशवारं परिक्षिपेत्। वेशवारः (वेशम) इति लोके। द्रव्याणि वेशवारस्य नागवल्लीदलानि च। तण्डुलाश्च लवङ्गानि मरीचानि समास्ततः। अनेन विधिना सिद्धं शुद्धमांसमिति स्मृतम्। शुद्धमांसं परं हृद्यं बल्यं रुच्यञ्च बृंहणम्। त्रिदोषशमनं श्रेष्ठं दीपनं धातुवर्द्धनात्।

अथ सहार्द्रकम् (सहरमांस) इति लोके। छागादेर्मांसमूर्वादेः कुट्टितं खण्डितं पुनः। शुद्धमांसविधानेन पचेदेतत्सहार्द्रकम्। सहार्द्रकं गुणैरन्यै शुद्धमांसगुणं स्मृतम्।

अथ तक्रमांसम् (अखनी) पाकपात्रे घृतं दत्त्वा हरिद्रा हिङ्गु भर्जयेत्। छागादेः सकलस्यापि खण्डान्यपि च भर्जयेत्। सिद्धियोग्यं जलं दत्त्वा पचेन्मृदुतरं यथा। जीरकादियुते तक्रे मांसखण्डानि तारयेत्। तक्रमांसन्तु वातघ्नं लघु रुच्यं बलप्रदम्। कफघ्नं पित्तलं किञ्चित् सर्वाहारस्य पाचनम्।

अथ हरीसा (आस)। पाकपात्रे तु दहति मांसखण्डानि निःक्षिपेत्। पानीयं प्रचुरं सर्पिः प्रभूतं हिङ्गु जीरकम्। हरिद्रामार्द्रकं शुण्ठीं लवणं मरिचानि च। तण्डुलांश्चापि गोधूमान् जम्बीराणां रसान् बहून्। यथा सर्वाणि वस्तूनि सुपक्वानि भवन्ति हि। तथा पचेत् तु निपुणो बहुमांसस्थितिर्यथा। एषा हरीसा बलकृत् वातपित्तापहा गुरुः। शीतोष्णा शुक्रदा स्निग्धा सरा सन्धानकारिणी।

तलितमांसम्। शुद्धमांसविधानेन मांसं सम्यक् प्रसाधितम्। पुनस्तदाज्ये सम्भृष्टं तलितं प्रोच्यते बुधैः। तलितं बलमेधाग्निमांसौजःशुक्रवृद्धिकृत्। तर्पणं लघु सुस्निग्धं रोचनं दृढताकरम्।

अथ शूल्यम् (सोख) कालखण्डादिमांसानि ग्रथितानि शलाकया। तैलं सलवणं दत्त्वा निर्धूमे दहने पचेत्। तत्तु शूल्यमिदं प्रोक्तं पाककर्मविचक्षणैः। शूल्यं पलं सुधातुल्यं रुच्यं वह्निकरं लघु। कफवातहरं बल्यं किञ्चित्पित्तकरं हि तत्। (इदमेव शूल्याकृतं भट्टित्रमित्युच्यते)

मांसशृङ्गाटिकम्। सिद्धमांसं तनूकृत्य कर्त्तितं स्वेदितं जले। लवङ्गहिङ्गुलवणमरिचार्द्रकसंयुतम्। एलाजिरकधन्याकनिम्बूरससमन्वितम्। घृते सुगन्धे तद्भृष्टं मांसशृङ्गाटिकोच्यते। मांसशृङ्गाटकं रुच्यं बृंहणं बलकृद्गुरु। वातपित्तहरं हृद्यं कफघ्नं वीर्य्यवर्द्धनम्।

अथ मांसरसः। सिद्धमांसरसो रुच्यः श्रमश्वासक्षयापहः। प्रीणनो वातपित्तघ्नः क्षीणानामल्परेतसाम्। विश्लिष्टभग्नसन्धीनां कृशानां शुद्धिकाङ्क्षिणाम्। स्मृत्योजोबलहीनानां ज्वरक्षीणक्षतोरसाम्। शस्यते स्वरहीनानां दृष्ट्यायुःश्रवणार्थिनाम्। प्रकाराः कथिताः सन्ति बहवो मांससम्भवाः। ग्रन्थविस्तारभीतेस्ते मया नात्र प्रकीर्त्तिताः। (ते च सुश्रुतेक्तगुणकथानऽनुपदं वक्ष्यन्ते)

शाकपाकविधिः। हिङ्गु जीरयुते तैले क्षिपेच्छाकं सुखण्डितम्। लवणं चाम्लचूर्णादि सिद्धे हिङ्गूदकं क्षिपेत्। इत्येवं सर्वशाकानां साधनोऽभिहितो विधिः।

अथ मठकः (माठ) इति लोके। समितामर्द्दयेदन्यजलेनापि च सन्नयेत्। तस्यास्तु वटिकां कृत्वा पचेत्सर्पिषि नीरसम्। एलालवङ्गकर्पूरमरीचाद्यैरलङ्कृते। मज्जयित्वा सितापाके ततस्तञ्च समुद्धरेत्। अयं प्रकारः संसिद्धौ मठ इत्यभिधीयते। सन्नयेत् मर्द्दयेत्। मठस्तु बृंहणो हृद्यो बल्यः सुमधुरो गुरुः। पित्तानिलहरो रुच्यो दीप्ताग्नीनां सुपूजितः। समिताः शर्करासर्पिर्निर्मिता अपरेऽपि ये। प्रकारा अमुना तुल्यास्तेऽपि चेतद्गुणाः स्मृताः।

अथ सम्पावः (पेराकी) पर्पट्यः साज्यसमिता निर्मिता घृतमर्जिताः। कुट्टिताश्चालिताः शुद्धशर्कराभिर्विमर्द्दिताः। तत्र चूर्णं क्षिपेदेलालवङ्गमरिचानि च। नालिकेलं सकर्पूरञ्चारवीजान्यनेकधा। घृताक्तसमिता पुष्टरोटिका रचिता ततः। तदन्तः पूरणं तस्याः कुर्य्यान्मुद्रां दृढां सुधीः। सर्पिषि प्रचुरे तान्तु सुपचेन्निपुणो जनः। प्रकारस्तैः प्रकारोऽयं सम्पाव इति कीर्त्तितः।

अथ कर्पूरनालिका। घृताढ्यया समितया लम्बं कृत्वा पुटं ततः। लवङ्गोल्वणकर्पूरयुतया सितयाऽन्वितम्। पचेदाज्येन सिद्धैषा ज्ञेया कर्पूरनालिका। सम्पावसदृशी ज्ञेया गुणैः कर्पूरनालिका।

फेनिका (फेनी) समितायाः घृताढ्याया वर्त्तिं दीर्घां समाचरेत्। तास्तु सन्निहिता दीर्घाः पीठस्योपरि धारयेत्।

वेल्लयेद्वेल्लनेनैता यथैका पर्पटी भवेत् । ततश्छुरिकया तान्तु सलग्नामेव कर्त्तयेत् । ततस्तु वेल्लयेद्भूयः शट्टकेन च लेपयेत् । शालिचूर्णं घृतं तोयं मिश्रितं शट्टकं वदेत् । ततः संहृत्य तल्लोपत्रीं विदधीत पृथक् पृथक् । पुनस्तां वेल्लयेल्लोपत्रीं यथा स्यान्मण्डलाकृतिः । ततस्तां सुपचेदाज्ये भवेयुश्च पुटाः स्फुटाः । सुगन्धया शर्करया तदुद्धूलनमाचरेत् । सिद्धैषा फेनिका नाम्ना मण्डकेन समा गुणैः । ततः किञ्चिल्लघुरियं विशेषोऽयमुदाहृतः । वेल्लयेत् प्रसारयेत् वेल्लनम् (वेलन) इति लोके । पर्पटी रोटी । लोपत्री (लाइ) इति लोके ।

अथ शष्कुली(सोहाली) इति लोके । समिताया घृताक्तायाः लोपत्रीं कृत्वा च वेल्लयेत् । आज्ये तां भर्जयेत्सिद्धां शष्कुली फेनिकागुणा

अथ मोदकः (लाडू) । ययाद्यया समितया कृत्वा सूत्राणि तानि तु । निपुणो भर्जयेदाज्ये खण्डपाकेन योजयेत् । युक्तेन मोदकान् कुर्य्यात् ते गुणैर्मण्डका यथा ।

अथ मुद्गमोदकः (मोतिचुरलाडू) । मुद्गानां धूमसी सम्यक् घोलयेन्निर्मलाऽम्बुना । कटाहस्य घृतेषूर्द्ध्वं झर्झरं स्थापयेत्ततः । धूमसीन्तु द्रवीभूतां प्रक्षिपेत् झर्झरोपरि । पतन्ति विन्दवस्तस्मात् तान् सुपक्वान् समुद्धरेत् । सितापाकेन संयोज्य कुर्य्याद्धस्तेन मोदकान् । झर्झरं (झाझरा) इति लोके । लघुर्ग्राही त्रिदोषघ्नः स्वादुः शीतो रुचिप्रदः । चक्षुष्यो ज्वरहृद्बल्यस्तर्पणो मुद्गमोदकः ।

अथ सेवनमोदकः(सेओकालडुआ) । एवमेव प्रकारेण कार्य्याः सेवनमोदकाः । ते बल्या लघवः शीता किञ्चिद्वातकरास्तथा । विष्टम्भिनो ज्वरघ्नाश्च पित्तरक्तकफापहाः

दुग्धकूपिका । तण्डुलचूर्णविमिश्रितनष्टक्षीरेण सान्द्रपिष्टेन । दृढकूपिकां विदध्यात्ताञ्च पचेत्सर्पिषा सम्यक् । अथ तां पूरितमध्यां घनपयसा पूर्णगर्भाञ्च । शट्टकमुद्रितवदनां सर्पिषि सुपक्वबदनाञ्च । अथ पाण्डुखण्डपाके स्नापयेत् कर्पूरवासिते कुशलः । अथ दुग्धकूपिका सा बल्या पित्तानिलापहा कथिता । वृष्या शीता गुर्वी शुक्रकरी बृंहणी रुच्या । विदधाति कायपुष्टिं दृष्टिं दूरप्रसारिणीं सुचिरम् ।

कुण्डलिनी (जिलेबी) नूतनं घटमानीय तस्यान्तः कुशलो जनः । प्रस्थार्द्धचूर्णं दमालेन भाऽम्लेन प्रलेपयेत् । द्विप्रस्थां समितां तत्र दध्यम्लं प्रस्थसम्मितम् । घृतमर्द्धशरावञ्च घोलयित्वा घटे क्षिपेत् । आतपे स्थापयेत्तावद्यावद्याति तदम्लताम् । ततस्तत्प्रक्षिपेत्पात्रे सच्छिद्रे भाजने तु तत् । परिभ्राम्य परिभ्राम्य तप्तत्तप्ते घृते क्षिपेत् । पुनः पुनस्तदावृत्त्या विदध्यान्मण्डलाकृतिम् । तां सुपक्वां घृतान्नीत्वा सितापाके तनुद्रवे । कर्पूरादि सुगन्धञ्च स्नापयित्वोद्धरेत्ततः । एषा कुण्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा । धातुवृद्धिकरी वृष्या रुच्या च क्षिप्रतर्पणी ।

अथ पश्चात्परिवेश्या रसाला । (शिखरिणी) आदौ माहिषमस्तमम्बुरहितं दध्याढकं शर्करां शुभ्रां प्रस्थयुगोन्मितां शुचिपटे किञ्चिच्च किञ्चित् क्षिपेत् । दुग्धेनार्द्धघटेन सृण्मयनवस्थाल्यां दृढं स्रावयेत् एलाबीजलवङ्गचन्द्रमरिचैर्योग्यैश्च तद्योजयेत् । भीमेन प्रियभोजनेन रचिता नाम्ना रसाला स्वयम् श्रीकृष्णेन पुरा पुनः पुनरियं प्रीत्या समास्वादिता । एषा येन वसन्तवर्जितदिने संसेव्यते नित्यशः तस्य स्यादतिवीर्य्यवृद्धिरनिशं सर्वेन्द्रियाणां बलम् । ग्रीष्मे तथा शरदि ये रविशोषिताङ्गाः ये च प्रमत्तवनितासुरतातिखिन्नाः । ये चापि मार्गपरिसर्पणशीर्णगात्रास्तेषामियं वपुषि पोषणमाशु कुर्य्यात् । रसाला शुक्रला बल्या रोचनी वातपित्तजित् । दीपनी बृंहणी स्निग्धा मधुरा शिशिरा सरा । रक्तपित्तं तृषादाहं प्रतिश्यायं विनाशयेत् ।

अथ शर्करोदकम् (सरवत्) जलेन शीतलेनैव घोलिता शुभ्रशर्करा । एला लवङ्गकर्पूरमरिचैश्च समन्विता । शर्करोदकनाम्ना तत् प्रसिद्धं विदुषां मुखे । शर्करोदकमाख्यातं शुक्रलं शिशिरं सरम् । बल्यं रुच्यं लघु स्वादु वातपित्तप्रणाशनम् । मूर्च्छाच्छर्दितृषादाहज्वरशान्तिकरं परम् ।

अथ प्रपानकम् (पना) । तत्र आम्रफलप्रपानकम् । आम्रमामं जले स्विन्नं मर्द्दितं दृढपाणिना । सिताशीताम्बुसंयुक्तं कर्पूरमरिचान्वितम् । प्रपानकमिदं श्रेष्ठं भीमसेनेन निर्म्मितम् । सद्यो रुचिकरं बल्यं शीघ्रमिन्द्रियतर्पणम् ।

अथाम्लिकाफलपानकम् । अम्लिकायाः फलं पक्वं मर्द्दयेत् वारिणा दृढम् । शर्करामरिचैर्मिश्रं लवङ्गेन्दुसुवासितम् । अम्लिकाफलसम्भूतं पानकं वातनाशनम् । पित्तश्लेष्मकरं किञ्चित् सुरुच्यं वह्निबोधनम् ।

निम्बूकफलपानकम् । भागैकं निम्बुजं तोयं षड्भागं शर्करोदकम् । लवङ्गमरिचैर्मिश्रं पानं पानकमुत्तमम् । निम्बूफलभवं पानमत्यम्लं वातनाशनम् । वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम् ।

आम्लकपानकम् । शिलायां साधु संपिष्टं आम्रकं वस्त्रगालितम् । शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतम् । नूतने मृण्मये पात्रे स्थितं पित्तहरं परम् ।

अथ काञ्जी । काञ्जीविशिवटकावसरे लिखितः । काञ्जीकं रोचनं रूक्षं पाचनं वह्निदीपनम् । शूलजीर्णविबन्धघ्नं कोष्ठशुद्धिकरं परम् । न भवेत् काञ्जिकं यत्र तत्र जालिः प्रदीयते ।

अथ जालिः । आम्रमाम्रफलं पिष्टं राजीकालवणान्वितम् । भृष्टहिङ्गुयुतं पूतं घोलितं जालिरुच्यते । जालिर्हरति जिह्वायाः कुण्ठत्वं कण्ठशोधनी । मन्दमन्दन्तु पीता सा रोचनी वह्निवर्द्धिनी ।

अथ तक्रम् । तुर्य्यांशेन जलेन संयुतमतिस्थूलं सदस्रं दधि प्रायो माहिषमस्थुकेन विमले मृद्भाजने घोलयेत् । भृष्टं हिङ्गु च जीरकञ्च लवणं राजीञ्च किञ्चिन्मिताम् पिष्टान्तत्र विमिश्रयेद्भवति तत्तक्रं न कस्य प्रियम् । तक्रं रुचिकरं वह्निदीपनं पाचनं परम् । उदरे ये गदास्तेषां नाशनं तृप्तिकारकम् ।

अथ दुग्धम् । विदाहीन्यन्नपानानि यानि भुङ्क्ते हि मानवः । तद्विदाहप्रशान्त्यर्थं भोजनान्ते पयः पिबेत् । दुग्धस्यापरे गुणा उक्ता एव दुग्धवर्गे ।

अथ सक्तवः । धान्यानि भ्राष्ट्रभृष्टानि यन्त्रपिष्टानि सक्तवः ।

तत्र यवसक्तवः । यवजाः सक्तवः शीता दीपना लघवः सराः । कफपित्तहरा रूक्षा लेखनाश्च प्रकीर्त्तिताः । ते पीता बलदा वृष्या बृंहणा भेदनास्तथा । तर्पणा मधुरा रुच्याः परिणामे बलावहाः । कफपित्तश्रमक्षुत्तृड्व्रणनेत्रामयापहाः । प्रशस्ता घर्मदाहाढ्यव्यायामार्त्तशरीरिणाम् ।

चणकयवसक्तवः । निस्तुषैश्चणकैर्भृष्टैस्तुर्य्यांशेन यवैः कृताः । सक्तवः शर्करासर्पिर्युक्ता ग्रीष्मेऽतिपूजिताः ।

शालिसक्तवः । सक्तवः शालिसम्भूता वह्निदा लघवो हिमाः । मधुरा ग्राहिणो रुच्याः पथ्याश्च बलशुक्रदाः । न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा बहून् ।
न जलान्तरितान् तद्वि सक्तूनद्याच्च केवलान् । पृथक् पानं पुनर्दानं आमिषं पयसा निशि । दन्तच्छेदनमुष्णञ्च सप्त सक्तुषु वर्जयेत् ।

अथ धाना(बहुरी) यवास्तु निस्तुषा भृष्टाः स्मृता धाना इति स्त्रियाम् । धानाः स्युर्दुर्जरा रूक्षास्तृट्प्रदा गुरवश्च ताः । तथा मेहकफच्छर्दिनाशिन्यः सम्प्रकीर्त्तिताः ।

अथ लाजाः । येषां स्युस्तण्डुलास्तानि धान्यानि सतुषाणि च । भृष्टानि स्फुटितान्याहुर्लाजा इति मनीषिणः । लाजाः स्युर्मधुराः शीता लघवो दीपनाश्च ते । स्वल्पमूत्रमला रूक्षा बल्याः पित्तकफच्छिदः । छर्द्यतीसारदाहास्रमेहमेदस्तृषापहाः ।

अथ पृथुकाः(चिउड़ा) । शालयः सतुषा आर्द्रा भृष्टा अस्फुटिताश्च ते । कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि । पृथुका गुरवो वातनाशनाः श्लेष्मला अपि । सक्षीरा बृंहणा वृष्या बल्या भिन्नमलाश्च ते ।

अथ होलकः (होरहा) । अर्द्धपक्वैः शमीधान्यैस्तृणभृष्टैश्च होलकः । होलकोऽल्पानिलो मेदःकफदोषत्रयापहः । भवेद्यो होलको यस्य स च तत्तद्गुणो भवेत् ।

अथ ऊमी । मञ्जरी त्वर्द्धपक्वा या यवगोधूमयोर्भवेत् । तृणानलेन संभृष्टा बुधैरुमीति सा स्मृता । (उमिया) इति लोके । ऊमी कफप्रदा बल्या लघ्वी पित्तानिलापहा ।

अथ कुल्माषाः(घुघुनी) अर्द्धस्विन्नास्तु गोधूमा अन्येऽपि चणकादयः । कुल्माषा इति कथ्यन्ते शब्दशास्त्रेषु पण्डितैः । कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः ।

अथ पललम् (तिलकुट) पललन्तु समाख्यातं सैसवन्तिलपिष्टकम् । पललं मललद्वृष्यं वातघ्नं कफपित्तकृत् । बृंहणञ्च गुरु स्निग्धं मूत्राधिक्यनिवर्त्तकम् ।

अथ पिण्याकः (पीना) । तिलकिट्टन्तु पिण्याकस्तथा तिलखलिः स्मृतः । पिण्याको लेखनो रूक्षो विष्टम्भी दृष्टिदूषणः ।

अथ (चाउर) तण्डुलो मेहजन्तुघ्नः स नवस्तृतिदुर्जरः” ।
अन्येऽपि कृतान्नप्रकाराः पाकशास्त्रे द्रष्टव्याः
कृतान्नविशेषगुणाश्च सुश्रुते दर्शिता यथा
“अतः परं प्रवक्ष्यामि कृतान्नगुणविस्तरम् । लाजमण्डो विशुद्धानां पथ्यः पाचनदीपनः । वातानुलोमनो हृद्यः पिप्पलीनागरायुतः । स्वेदाग्निजननी लघ्वी दीपनी वस्तिशोधनी । क्षुत्तृट्श्रमग्लानिहरी पेया वातानुलोमनी । विलेपी तर्पणी हृद्या ग्राहिणी बलवर्द्धनी । पथ्या स्वादुरसा लघ्वी दीपनी क्षुत्तृषापहा । हृद्या सन्तर्पणी वृष्या बृंहणी बलवर्द्धनी । शाकमांसफलैर्युक्ता यवाग्वस्त्वाश्च दुर्जराः । सिक्थैर्विरहितो मण्डः, पेया सिक्थसमन्विता । विलेपी बहुसिक्था स्याद्यवागूर्विरलद्रवा । विष्टम्भी पायसो बल्यो मेदःकफकरो गुरुः । कफपित्तकरी बल्या कृशराऽनिलनाशनी । धौतस्तु विमलः शुद्धो मनोज्ञः सुरभिः समः । स्विन्नः सुप्रस्नुत-

स्रुष्टो विशदस्त्वोदनो लघुः। अधौतोऽप्रस्रुतोऽस्विन्नः शीतश्चाप्योदनो गुरुः। लघुः सुगन्धिः कफहा विज्ञेयो भृष्टतण्डुलः। स्नेहैर्मांसैः फलैः कन्दैर्वैदलाम्लैश्च संयुताः। गुरवो बृंहणा बल्या ये च क्षीरोपसाधिताः। सुस्विन्नो निस्तुषो भृष्ट ईषत्सूपो लघुर्हितः। स्विन्नं निःपीडितं शाकं हितं स्यात् स्नेहसंस्कृतम्। अस्विन्नं स्नेहरहितमपीड़ितमतोऽन्यथा। मांसं स्वभावतो वृष्यं स्नेहनं बलवर्द्धनम्। स्नेहगोरसधान्याम्लफलाम्लकटुकैः सह। सिद्धं मांसं हितं बल्यं रोचनं बृंहणं गुरु। तदेव गोरसादानं सुरभिद्रव्यसंस्कृतम्। विद्यात्पित्तकफोद्रेकि बलमांसाग्निवर्द्धनम्। परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु। रोचनं बलमेधाग्निमांसौजःशुक्रवर्द्धनम्। तदेवोल्लुप्तपिष्टत्वादुल्लुप्तमिति पाचकाः। परिशुष्कगुणैर्युक्तं वह्नेः प्रक्रमतो लघु। तदेव शूलिकाप्रोतमङ्गारे परिपाचितम्। ज्ञेयं गुरुतरं किञ्चित् प्रदिग्धं गुरुपाकतः। उल्लुप्तं भर्जितं पिष्टं प्रतप्तं कन्दुपाचितम्। परिशुष्कं प्रदग्धञ्च शूल्यं यच्चान्यदीदृशम्। मांसं यत्तैलसिद्धन्तु वीर्य्योष्णं पित्तकृद्गुरु। लघ्वग्निदीपनं हृद्यं रुच्यं दृष्टिप्रसादनम्। अनुष्णवीर्य्यं पित्तघ्नं मनोज्ञं घृतसाधितम्। प्रीणनः प्राणजननः श्वासकासक्षयापहः। वातपित्तश्रमहरो हृद्यो मांसरसः स्मृतः। स्मृत्योजःस्वरहीनानां ज्वरक्षीणक्षतोरसाम्। भग्नविश्लिष्टसन्धीनां कृशानामल्परेतसाम्। आप्यायनः संहननः शुक्रौजोबलवर्द्धनः। सदाडिमयुतो वृष्यः संस्कृतो दोषनाशनः। यन्मांसमुद्धृतरसं न तत्पुष्टिबलावहम्। विष्टम्भि दुर्जरं रूक्षं विरसं मारुतावहम्। दीप्ताग्नीनां सदा पथ्यः खालिकस्तु परं गुरुः। मांसं निरस्थि सुस्विन्नं पुनर्दृषदि चूर्णितम्। पिप्पलीशुण्ठिमरिचगुडसर्पिःसमन्वितम्। एकध्यं पाचयेत्सम्यक् वेशवार इति स्मृतः। वेशवारो गुरुः स्निग्धो बल्यो वातरुजापहः। प्रीणनः सर्वधातूनां विशेषान्मुखशोषिणाम्। क्षुत्तृट्तापहरः श्रेष्ठः सौरावः स्वादुशीतलः। कफघ्नो दीपनो हृद्यः शुद्धानां प्राणिनामपि। ज्ञेयः पथ्यतमश्चापि मुद्गयूषः कृताकृतः। स तु दाडिममृद्वीकायुक्तः स्याद्रागषाडवः। रुचिष्यो लघुपाकश्च दोषाणामविरोधकृत्। मसूरमुद्गगोधूमकुलत्थलवणैः कृतः। कफपित्ताविरोधी स्याद्वातव्याधौ च शस्यते। मृद्वीकादाडिमैर्युक्तः स एवोक्तोऽनिलार्दिते। रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते। पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ। पित्तघ्नौ दीपनौ हृद्यौ कृमिकुष्ठज्वरापहौ। श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान्। हन्ति मूलकयूषस्तु कफमेदोगलामयान्। कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः। तूणीप्रतूणीकासार्शोगुल्मोदावर्त्तनाशनः। दाडिमामलकैर्यूषो हृद्यः संशमनो लघुः। प्राणाग्निजननो मूर्च्छामेदोघ्नः पित्तवातजित्। मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः। यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः। सर्व्वधान्यकृतस्तद्वद्बृंहणः प्राणवर्द्धनः। खलकाम्बलिकौ हृद्यौ तथा वातकफे हितौ। बल्यः कफानिलौ हन्ति दाडिमाम्लोऽग्निदीपनः। दध्यम्लः कफकृद्बल्यः स्निग्धो वातहरो गुरुः। तक्राम्लपित्तकृत् प्रोक्तो विषरक्तप्रदूषणः। खडाः खडयवाग्वश्च षाडवाः पानकानि च। एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः। अस्नेहलवणं सर्व्वमकृतं कटुकैर्विना। विज्ञेयं लवणस्नेहकटुकैर्हि युतं कृतम्। अथ गोरसधान्याम्लफलाम्लैरन्वितञ्च यत्। यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसे। दधिमस्त्वम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः। तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम्। सिण्डाकी च गुरूणि स्युः कफपित्तकराणि च। तद्वच्च वटकान्याहुर्विदाहीनि गुरूणि च। लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः। तृष्णामूर्च्छाभ्रमच्छर्दिश्रमघ्ना रागषाडवाः। रसाला बृंहणी बल्या स्निग्धा वृष्या च रोचनी। स्नेहनं गुडसंयुक्तं हृद्यं दध्यनिलापहम्। सक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः। नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते। मन्थः सद्योबलकरः पिपासाश्रमनाशनः। साम्लस्नेहगुडो मूत्रकृच्छ्रोदावर्त्तनाशनः। शर्करेक्षुरसद्राक्षायुक्तः पित्तविकारनुत्। द्राक्षामधूकसंयुक्तः कफरोगनिबर्हणः। वर्गत्रयेणोपहितो मलदोषानुलोमनः। गौडमम्लमनम्लं वा पानकं गुरु मूत्रलम्। तदेव खण्डमृद्वीकाशर्करासहितं पुनः। साम्लं सुतीक्ष्णं सुहिमं पानकं स्यान्निरत्ययम्। माद्वीकं तु श्रमहरं मूर्च्छादाहतृषापहम्। परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम्। द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्राञ्च सर्वतः। पानकानां यथायोगं गुरुलाघवमादिशेत्"।

२कृतं साधितमन्नं येन। साधितान्ने पाचके त्रि०

कृताय पु० कृतसंज्ञकोऽयः। द्यूतक्रीड़ाप्रसिद्धे चतुरङ्कान्वित

पाशकभेदे “कृताये त्रेतादयस्तेऽन्तर्भवन्ति” अयशब्दे ३२५पृ० दर्शिते आनन्दगिरिः

**कृतार्थ** त्रि० कृतः अर्थः प्रयोजनं येन । कृतकार्य्ये । “शरदः कृतार्थताम्” किरा० “कृतः कृतार्थोऽस्मि निवर्हितांहसा” माघः

**कृतालय** त्रि० कृत आलयोयेन । १कृतवासे “यत्र ते दयिता भार्य्या तनयाश्च कृतालयाः” रामा० । २भेके पुंस्त्री० त्रिका०। स्त्रियां योपधत्वात् टाप् । [कर्म्मयुक्ते शब्दचि०।

**कृतावदान** त्रि० कृतमवदानं ख्यातकर्म्म येन । विख्यात

**कृतावसक्थिक** त्रि० कृताऽवसक्थिका येन । वस्त्रादिना जानुजङ्घापृष्ठबन्धयुक्ते “प्रौढ़पादोन कुर्व्वीत स्वाध्याय-पितृतर्पणम् । आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा । कृतावसक्थिको यस्तु प्रौढपादः सउच्यते” आ०त०कात्या० “कृतावसक्थिकः कृतपृष्ठजानुजङ्घाबन्धः” आ० त० रघु०

**कृतास्त्र** त्रि० कृतं शिक्षितमस्त्रं येन । शिक्षितास्त्रे । “येषां योद्धा सव्यसाची कृतास्त्रः” भा० व० ४अ०

**कृति** स्त्री कृ—क्तिन् । १पुरुषप्रयत्ने, २कर्त्तृव्यापारे, “वृथा जातिस्तदायुष्मन् ! कृतिर्यत्र न विद्यते” भा०व०१२४८२श्लो० ३विंशत्यक्षरपादके छन्दोभेदे “कृतिः प्रकृतिराकृतिः” वृ०र०। ३क्रियायाम् मेदि० “श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदियादियम्” नैष० ४नृपभेदे पु० “सप्ताश्वमेधानाहृत्य राजसूयं च पार्थिवः। कृतिर्नामाऽच्यवत् स्वर्गा-दसद्यवचनात् सकृत्” मार्क० पु० । स च जनकवंश्यः “बहुलाश्वोधृतेस्तस्य कृतिरस्य महाबलः” भाग०९।१३।१६ मैथिलवंश्यवर्णनोक्तौ । कृ वधे—क्तिन् । ५हिंसायां मेदि० ६विंशतिसंख्यायाम् कृतिकरः । कृत—बा० करणे इक् । ७कर्त्तर्य्यां स्त्री “हन्तेषु खादिश्च कृतिश्च संदवे” ऋ० १।१३४।२ “कृतिः कर्त्तनी” भा०

**कृतिकर** पु० कृतिसंख्यातुल्या विंशतिसंख्याः करा यस्य । रावणे शब्दमा० । तस्य विंशतिहस्तत्वात् तथात्वं कृति हस्तादयोऽप्यत्र पु०

**कृतिन्** त्रि० कृतमनेन कृत—इष्टा० इनि १कृतक्रिये कर्त्तरि अमरः, २पुण्यवति शब्दमा० “कृती श्रुती वृद्धमतेषु धीमान्” भट्टिः “न खल्वनिर्जित्य रघुं कृती भवान्” रघुः । “तवैव नामास्त्रगतिः कृती त्वम्” “यस्य चेतसि वर्त्तेथाः स तावत् कृतिनां वरः” कुमा० “कान्तवक्त्रसदृशाकृतिं कृती” माघः “कृतिः कृतिमुदे” कृतिशब्दे नैष०

**कृतिरात** पु० नृपभेदे “बहुलाश्वो धृतेस्तस्य कृतिरातो महाबलः” भाग० ९।१३।१७ पाठान्तरम् [ध्यर्चनकृते” या०

**कृते** अव्य० कृ—क्विप् नि० एदन्तत्वम् । निमित्तार्थे “देवाति-

**कृतेयुक** पु० पौरवे नृपभेदे । “ऋतेयुस्तस्य कक्षेयुः स्थण्डिलेयुः कृतेयुकः” भाग०९।२०३। रौद्राश्वस्य घृताच्यामप्सरसि उत्पन्नदशपुत्रोक्तौ

**कृतोदक** त्रि० कृतमुदकमुदककार्य्यं स्नानतर्पणादि येन । कृतस्नानादौ । “एवं कृतोदका भार्य्याः प्रवेक्ष्यन्ति गजाह्वयम्” भा० स० ७८ अ०

**कृतौजस्** पु० १कृतवीर्य्यभ्रातरि । कृतवीर्य्यशब्दे विवृतिः । कृतमोजोयेन । २कृततेजस्के कृतपराक्रमे त्रि०।

**कृत्त** त्रि० कृत+क्त । १छिन्ने, २वेष्टिते च हेम०

**कृत्ति** स्त्री कृत्यते कृत—कर्म्मणि—क्तिन्। १मृगादिचर्म्मणि कृत्तिवासाः। २त्वचि भूर्ज्जपत्रे ४कृत्तिकानक्षत्रे च मेदि० ५गृहे निरु०

**कृत्तिका** स्त्री कृन्तति उग्रत्वात् कृत—तिकन् किच्च । अश्विन्यादिषु तृतीये नक्षत्रे तस्याः क्षुरतुल्याकारत्वं षट्तारात्मकत्वञ्च अश्लेषाशब्दे ४९७पृ० दर्शितम् अन्ये तु शकटाकारत्वमाहुः । सा च ३६० अंशात्मके राशिचक्रे २६।४० अंशकलोत्तरम् १३।२० अंशकलात्मिका मेष वृषोभयराशिघटिका । तथा च तस्या आद्यचरणः मेष-राशिघटकः अन्त्यचरणत्रयं वृषराशिघटकम् । अश्विन्यादयश्च सप्तविंशतिः दक्षसुता चन्द्रपत्न्यः । तत्र भरणी कृत्तिकाद्याः २।३।६।९।१०।१२।१६।२१।२६ संख्यकाः सपत्नीं रोहिणीं प्रति चन्द्रस्यातिशयानुरागदर्शनेन चन्द्रस्य भर्त्सनां कृतवत्यः । ततः चन्द्रेण ताः प्रति गमनाप्रशस्ततादिशापदानं कालिकापु० २० अध्याये उक्तं तच्च कालिकापुराणशब्दे २०१४पृ० द्रष्टव्यम् । दक्षसुतानां च चेतनत्वात् कृत्तिकाभिः षड्भिः कार्त्तिकेयस्य पोषणं कृतं कार्त्तिकेयशब्दे विवृतिः । तस्या अग्निरधिष्ठातृदेवः सा च मिश्रगणान्तर्गता “मिश्रोऽग्निः सविशाखभः, शुभकराः सर्व्वे स्वकृत्ये गणाः” ज्यो०त० । कृत्तिकानक्षत्रयुक्ता पौर्णमासी अण् ङीप्, कार्त्तिकी साऽस्मिन् मासे पुनरण् । कार्त्तिक कार्त्तिक्या युक्ते चान्द्रे मासभेदे पु०

**कृत्तिकाञ्जि** पु० कृत्तिका शकटाकारा अञ्जिस्तिलकादि चिह्नमस्य । अश्वमेधीये शकटाकारतिलकचिह्नयुक्ते अश्वभेदे “त्रिरूप एषोऽश्वः” इत्युपक्रमे “कृत्तिकाञ्जिः पुरस्तात्” शत० ब्रा० ।१२।४ “३कृत्तिका शकटाकारा अञ्जिर्यस्य” भा०

**कृत्तिकातनय** पु० ६त० । कार्त्तिकेये तस्य यथा तथात्वं तथा कार्त्तिकेयशब्दे १९५६ पृ० उक्तम् । कृत्तिकापुत्रादयोऽप्यत्र पु०

**कृत्तिकाभव** पु० कृत्तिकायां नक्षत्रे भवः । चन्द्रे शब्दच०

**कृत्तिवास** पु० कृत्तिं गजासुरचर्म्म वस्ते वस–आच्छादने अण् उप०स० । महादेवे कृत्तिवासेश्वरः

**कृत्तिवासस्** पु० कृत्तिर्गजासुरचर्म्म वासोयस्य । महादेवे यथाच तस्य तद्वसनत्वं तथा काशी० ६८अ० वर्णितं यथा "कोलाहलो महानासीत् त्राहि त्राहीति सर्वतः । महिषासुरपुत्रोऽसौ समायाति गजासुरः । प्रमथ्नन् प्रमथान् सर्वान् निजवीर्य्यमदोद्धतः । यत्र यत्र धरायां स चरणं प्रणिदधाति हि । अचलान् दोलयाञ्चक्रे तत्र तत्रास्य भारतः । ऊरुवेगेन तरवः पतन्ति शिखरैः सह । तस्य दोर्दण्डवातेन चूर्णाः स्युश्च शिलोच्चयाः । यस्य मौलिजसंघर्षात् घना व्योम त्यजन्त्यलम् । नीलिमानं न चाद्यापि जहुस्तत्केशसङ्गजम् । यस्य निःश्वाससम्भारैरुत्तरङ्गा महाब्धयः । नाद्याप्यमन्दकल्लोला भवन्ति तिमिभिः सह । योजनानां सहस्राणि नव यस्य समुच्छ्रयः । तावानेव हि विस्तारस्तनोर्मायाविनोऽस्य हि । यन्नेत्रयोः पिङ्गलिमा तथा तरलिमा पुनः । विद्युता नोह्यते ऽद्यापि सोऽयमायाति सत्वरः । यां यां दिशं समभ्येति सोऽयं दुःसह दानवः । नाद्य शमीभवेदस्य साध्वसादिव दिग्भयम् । ब्रह्मलब्धवरस्वायं तृणीकृतजगत्त्रयः । अवध्योऽहं भयामीति स्त्रीपुंभिः कामनिर्जितैः । ततस्त्रिशूलहेतिस्तमायान्तं दैत्यपुङ्गवम् ! विज्ञायावध्यमन्येन शूलेनाभिजघान तम् । प्रोतस्तेन त्रिशूलेन स च दैत्यः गजासुरः । छत्रीकृतमिवात्मानं मन्यमानो जगौ हरम् । गजासुर उवाच । त्रिशूलपाणे ! देवेश ! जाने त्वां स्मरहारिणम् । तव हस्ते मम बधः श्रेयानेव पुरान्तक ! । किञ्चिद्विज्ञप्तुमिच्छामि अवधेहि ममेरितम् । सत्यं ब्रवीमि नासत्यं मृत्युञ्जय ! विचारय । त्वमेको जगतीबन्धो ! विश्वस्योपरि संस्थितः । अहं तदुपरिष्टाच्च स्थितोऽस्मीति जितं मया । धन्योऽस्म्यनुगृहीतोऽस्मि त्वत्त्रिशूलाग्रसंस्थितः । कालेन सर्व्वैर्मर्त्तव्यं श्रेयसे मृत्युरीदृशः । इति तस्य वचः श्रुत्वा देवदेवः कृपानिधिः । प्रोवाच प्रहसन् शम्भुर्यंटोद्भव ! गजासुरम् । ईश्वर उवाच । गजासुर । प्रसन्नोऽस्मि महापौरुषशेवधे! । स्वानुकूलं वरं ब्रूहि ददामि सुमतेऽसुर !। इत्याकर्ण्य स दैत्येन्द्रः प्रत्युवाच महेश्वरम् । गजासुर उवाच । यदि प्रसन्नो दिग्वासस्तदा नित्यं वसान मे । इमां कृत्तिं विरूपाक्ष ! त्वत्त्रिशूलाग्निपाविताम् । स्वप्रमाणां सुखस्पर्शां रणाङ्गणपणीकृताम् । दृष्टगन्धिः सदैवास्तु सदैवास्त्वतिकोमला । सदैव निर्म्मला चास्तु सदैवास्त्वतिमङ्गलम् । महातपानलज्वालां प्राप्यापि सुचिरं विभो ! । न दग्धा कृत्तिरेषा मे पुण्यगन्धनिधिस्ततः । यदि पुण्यवती नैषा मम कृत्तिर्दिगम्बर ! । तदा त्वदङ्गसङ्गोऽस्याः कथं जातो रणाङ्गणे । अन्यच्च मे वरं देहि यदि तुष्टोऽसि शङ्कर ! । नामास्तु कृत्तिवासास्ते प्रारभ्याद्यतनं दिनम्" इतऊर्द्धं कीर्त्तिवासेश्वरशब्दे दृश्यम् ।

**कृत्तिवासेश्वर** न० काशीस्थे शिवलिङ्गभेदे कृत्तिवासशब्दे दर्शितात् काशीख० वाक्यादुत्तरग्रन्थे तत्कथा यथा "इति तस्य वचः श्रुत्वा तथेत्युक्त्वा च शङ्करः । पुनः प्रोवाच तं दैत्यं भक्तिनिर्म्मलमानसम् । ईश्वर उवाच । शृणु पुण्यनिधे ! दैत्य ! वरमन्यं सुदुर्लभम् । अविमुक्ते महाक्षेत्रे रणत्यक्तकलेवर ! । इदं पुण्यशरीरं ते क्षेत्रेऽस्मिन् मुक्तिसाधने । मम लिङ्गं भवत्वत्र सर्वेषां मुक्तिदायकम् । कृत्तिवासेश्वरं नाम महापातकनाशनम् । सर्व्वेषामेव लिङ्गानां शिरोभूतमिदं वरम् । यावन्ति सन्ति लिङ्गानि वाराणस्यां महान्त्यपि । उत्तमं तावतामेतदुत्तमाङ्गवदुत्तमम् । मानवानां हितायात्र स्थास्येऽहं सपरिग्रहः । दृष्टेनानेन लिङ्गेन पूजितेन स्तुतेन च । कृतकृत्यो भवेन्मर्त्यः संसारं न विशेत् पुनः । रुद्राः पाशुपताः सिद्धा ब्रह्मयस्तत्त्वचिन्तकाः । शान्ता दान्ता जितक्रोधा निर्द्वन्द्वा निष्परिग्रहाः । अविमुक्ते स्थिता ये तु मम भक्ता मुमुक्षवः । मानापमानयोस्तुल्याः समलोष्टाश्मकाञ्चनाः । कृत्तिवासेश्वरे लिङ्गे स्थास्येऽहं तदनुग्रहात् । दशकोटिसहस्राणि तीर्थानि प्रतिवासरम् । त्रिकालमागमिष्यन्ति कृत्तिवासे न संशयः । कलिद्वापरसम्भूता नराः कलुषबुद्धयः । सदाचार विनिर्मुक्ताः सत्यशौचपराङ्मुखाः । मायया दम्भलोभाभ्यां मोहाहङ्कृतिसंयुताः । शूद्रान्नसेविनो विप्रा जिह्वाला रतिलालसाः । सम्ध्यास्नानजपेज्याम्मु दूरीकृतमनोधियः । कृत्तिवासेश्वरं प्राप्य सर्व्वपाप विवर्ज्जिताः । सुखेन मोक्षमेष्यन्ति यथा सुकृतिनस्तथा । कृत्तिवासेश्वरं लिङ्गं सेव्यं काश्यां ततोनरैः । जन्मान्तर सहस्रेषु मोक्षोऽन्यत्र सुदुर्लभः । कृत्तिवासेश्वरे लिङ्गे

लभ्यस्त्वेकेन जन्मना। पूर्व्वजन्म कृतं पापं तपोदानादिभिः शतैः। नश्येत्, सद्यो विनश्येत्तु कृत्तिवासेश्वरेक्षणात्। कृत्तिवासेश्वरं लिङ्गं येऽर्च्चयिष्यन्ति मानवाः। प्रविष्टास्ते शरीरे मे तेषां नास्ति पुनर्भवः। अविमुक्ते निवस्तव्यं जप्तव्यं शतरुद्रियम्। कृत्तिवासेश्वरोदेवो द्रष्टव्यश्च पुनः पुनः। सप्तकोटिमहारुद्रैः सुजप्तैर्यत् फलं लभेत्। तत् फलं लभ्यते काश्यां पूजनात् कृत्तिवाससः। माघकृष्णचतुर्द्दश्यामुपोष्य निशि जागरात्। कृत्तिवासेशमभ्यर्च्च्य सः स यायात् परां गतिम्। शुक्लायां पञ्चदश्यां यश्चैत्र्यां कर्त्ता महोत्सवम्। कृत्तिवासेश्वरे लिङ्गे न स गर्भं प्रवेक्ष्यति। कथयित्वा तु देवेशस्तत्कृत्तिं परिस्टह्य च। गजासुरस्य महतीं प्राहणोत्तां दिगम्बरः। यत्र कृत्तीकृती दैत्यः शूलमारोप्य भूतले। तच्छूलपाटनाज्जातं तत्र कुण्डं महत्तरम्। तस्मिन् कुण्डे नरः स्नात्वा कृत्वा च पितृतर्पणम्। कृत्तिवासेश्वरं दृष्ट्वा कृतकृत्यतरोभवेत्”॥

**कृत्नु** त्रि॰ कृ—क्नु। कारौ शिल्पिनि उणा॰ “बहुकर्म्मकरे च। “कृणवा कृत्नो! अकृनम्” ऋ॰ ६।१८।१५। “कृत्नो! बहुलकर्म्मणां कर्त्तः” भा॰

**कृत्य** न॰ कृ—क्यप् तुक् च। १कार्य्ये, व्याकरणप्रसिद्धे पाणिन्यादिपरिभाषिते २तव्यादौ ण्यत्क्यप्तव्यानीयर्यत्केलिमाख्ये प्रत्यये। ३कर्त्तव्ये त्रि॰ हेमच॰ “कृतकृत्यो विधिर्मन्ये” माघः। ४विद्विष्टे त्रि॰। मेदि॰५धनादिभेद्ये त्रि॰ जटा॰ “कृत्याः” पा॰ “तयोरेव कृत्यक्तखलर्थाः” “कृत्यैरधिकार्थवचने” पा॰। “कृत्याः षट् ते समाख्याताः क्यब्ण्यतौ भावकर्म्मणोः। तव्यानीयावलन्तात् यत् केलिमः कर्म्मकर्त्तरि” सुपद्म॰। कृत्याः इत्यधिकारे तेषां विहितत्वात् तेषां तत्संज्ञत्वम्। कृत्यप्रत्ययस्तु धातुविशेषात् कर्म्मभावादौ विहितः। कृत्यश्च वेदादिविहितावश्यकर्त्तव्याचारविशेषः। तदधिकारेणैव कृत्यचिन्तामणि कृत्यतत्त्वकृत्यरत्नाकरादयोग्रन्थ विशेषाः प्रवृत्ताः

**कृत्यविद्** त्रि॰ कृत्यं कर्त्तव्यं वेत्ति विद—क्विप्। कार्य्यज्ञे विविज्ञे, “कृत्यविदित्युवाचेति” रघुः।

**कृत्या** स्त्री॰ कृ—क्यप् टाप्। १क्रियायां २अभिचारक्रियाजन्ये अभिचारोद्देश्यनाशके ३देवादिमूर्त्तिभेदे च सा च शैदिकाद्यभिचारक्रियाजन्या अदृष्टविशेषनिर्वर्त्त्या देवादिमूर्त्तिरूपतयोत्पद्य अभिचारोद्देश्यं पुरुषं निहत्य नाशयतीति अथर्ववेदे प्रसिद्धम्। “पञ्चकल्पमथर्वाणां कृत्याभिः परिबृंहितम्” भा॰शा॰३४४अ॰। कृत्याविशेषोत्पादककथा भा॰ आनु॰ ९०अ॰ यथा

“इत्युक्तः स तु भृत्यैस्तैर्वृषादर्भिश्चुकोप ह। तेषां वै प्रतिकर्त्तुञ्च सर्व्वेषामगमद्गृहम्। स गत्वा हवनीयेऽग्नौ तीव्रं नियममास्थितः। जुहाव संस्कृतैर्मन्त्रैरेकैकामाहुतिं नृपः। तस्मादग्नेः समुत्तस्थौ कृत्या लोकभयङ्करी। तस्या नाम वृषादर्भिर्यातुधानीत्यथाकरोत्। सा कृत्या कालरात्रीव कृताञ्जलिरुपस्थिता। वृषादर्भिं नरपतिं किङ्करोमीति साऽब्रवीत्। वृषादर्भिरुवाच। ऋषीणां गच्छ सप्तानामरुन्धत्यास्तथैव च। दासीभर्त्तुश्च दास्याश्च मनसा नाम धारय। ज्ञात्वा नामानि चैवैषां सर्व्वानेतान् विनाशय। विनष्टेषु तथा स्वैरं गच्छ यत्रेप्सितं तव। सा तथेति प्रतिश्रुत्य यातुधानीस्वरूपिणी। जगाम तद्वनं यत्र विचेरुस्ते महर्षयः”। “इन्द्रेण च सा नाशितेति तत्रैवान्ते उक्तम् यथा “रक्षणार्थञ्च सर्वेषां भवतामहमागतः। यातुधानी ह्यतिक्रूरा कृत्यैषा वो वधैषिणी। वृषादर्भिप्रयुक्तैषा निहता मे तपोधनाः!। दुष्टा हिंसादियं पापा युष्मान् प्रत्यग्निसम्भवा”।

कृत्यानिवारणोपायमन्त्राश्च अथ॰ ५,१२,१४, उक्ता यथा “सुपर्णस्त्वान्वविन्दत् सूकरस्त्वाखनन्न सा। दिप्सौषधे! त्वं दिप्सन्तमव कृत्याकृतं जहि। अव जहि यातुधानानव कृत्याकृतं जहि। अथो यो अस्मान्दिप्सति तमु त्वं जह्योषधे!। रिश्यस्येव परीशासं परिकृत्य परि त्वचः। कृत्यां कृत्याकृते देवा निष्कमिव प्रति मुञ्चत। पुनः कृत्यां कृत्याकृते हस्तेगृह्य पराणय। समक्षमस्मा आ धेहि यथा कृत्याकृतं हनत्। कृत्याः सन्तु कृत्याकृते शपथः शपथीयते। सुखो रथ इव वर्त्ततां कृत्या कृत्याकृतं पुनः। यदि स्त्री यदि वा पुमान् कृत्यां चकार पाप्मने। तामु तस्मै नयामस्यश्वमिवाश्वाभिधान्या। यदि वासि देवकृता यदि वा पुरुषैः कृता। तं त्वा पुनर्णयामसीन्द्रेण सयुजा वयम्। अग्ने पृतनाषाट् पृतनाः सहस्व। पुनः कृत्यां कृत्याकृते प्रतिहरणेन हरामसि। कृतव्यधनि! विध्य तं यश्चकार तमिज्जहि। न त्वामचकृषे वयं बधाय सं शिशीमहि। पुत्र इव पितरं गच्छ स्वज इवाभिष्ठितो दश। बन्धमिवावक्रामी गच्छ कृत्ये! कृत्याकृतं पुनः। उद्देणीव वारण्यभिस्कन्दं मृगीव। कृत्या कर्त्तारमृच्छतु। इष्वा ऋजीयः पततु द्यावापृथिवी तं प्रति। सा तं मृग-

मिव गृह्णातु कृत्या कृत्याकृतं पुनः। अग्निरिवैतु प्रतिकूलमनुकूलमिवोदकम्। सुखो रथ इव वर्त्ततां कृत्या कृत्याकृतं पुनः"।

सुश्रुते चान्यप्रकारोऽत्र सामान्यतो दर्शितः यथा "कृत्यानां प्रतिघातार्थं तथा रक्षोभयस्य च। रक्षाकर्म्म करिष्यामि ब्रह्मा तदनुमन्यताम्। नागाः पिशाचा गन्धर्व्वाः पितरो यक्षराक्षसाः। अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा। पृथिव्यामन्तरीक्षे च ये चरन्ति निशाचराः। दिक्षु वास्तुनिवासाश्च पान्तु त्वां ते नमस्कृताः। पान्तु त्वां मुनयो ब्राह्म्या दिव्या राजर्षयस्तथा। पर्व्वताश्चैव नद्यश्च सर्व्वाः सर्वेऽपि सागराः। अग्नीरक्षतु ते जिह्वां प्राणान् वायुस्तथैव च। सोमो व्यानं, मपानं ते पर्जन्यः परिरक्षतु। उदानं विद्युतः पान्तु, समानं स्तनयित्नवः। बलमिन्द्रो बलपति, र्मनुर्मन्ये मतिं तथा। कामांस्ते पान्तु गन्धर्व्वाः, सत्वमिन्द्रोऽभिरक्षतु। प्रज्ञां ते वरुणो राजा, समुद्रो नाभिमण्डलम्। चक्षुः सूर्य्यो, दिशः श्रोत्रे, चन्द्रमाः पातु ते मनः। नक्षत्राणि सदा रूपं, छायां पान्तु निशास्तव। रेतस्त्वाप्याययन्त्वापो, रोमाण्योषधयस्तथा। आकाशं खानि ते पातु, देहं तव वसुन्धरा। वैश्वानरः शिरः पातु, विष्णुस्तव पराक्रमम्। पौरुषं पुरुषश्रेष्ठो, ब्रह्मात्मानं, ध्रुवो भ्रुवौ। एता देहे विशेषेण तव नित्या हि देवताः। एतास्त्वां सततं पान्तु दीर्घमायुरवाप्नुहि। स्वस्ति ते भगवान् ब्रह्मा स्वस्ति देवाश्च कुर्वताम्। स्वस्ति ते चन्द्रसूर्य्यौ च स्वस्ति नारदपर्व्वतौ। स्वस्त्यग्निश्चैव वायुश्च स्वस्ति देवाः सहेन्द्रगाः। पितामहकृता रक्षा स्वस्त्यायुर्वर्द्धतां तव। ईतितयस्ते प्रशाम्यन्तु सदा भव गतव्ययः। इति स्वाहा। एतैर्वेदात्मकैर्म्मन्त्रैः कृत्याव्याधिविनाशनैः। मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि"।

"ततोऽसुरा एषु लोकेषु कृत्यां वलगान्निचख्नुरुतैवं चिद्देवानभिभवेमेति, "तद्वै देवा अस्पृण्वत। तएतैः कृत्यां वलगानुदखनन्, यदा वै कृत्यामुत्खनन्ति" "अत्र कश्चिद्द्विषन् भ्रातृव्यः कृत्यां वलगान्निखनति" इति च शत०ब्रा० ३,५,४,२,३, "दामयो यानि गेहानि शपन्त्यप्रतिपूजिताः। तानि कृत्याहतानीव विनश्यन्ति न संशयः" मनुः

**कृत्याकृत्य** न० द्वि०। द्वन्द्व०। १कर्त्तव्याकर्त्तव्ययोः। सुश्रुतोक्ते २व्रणचिकित्साङ्गे कर्त्तव्याकर्त्तव्यविशेषे च ते च कृत्याकृत्ये सुश्रुतेन दर्शिते यथा

"अथातः कृत्याकृत्यविधिमध्यायं व्याख्यास्यामः। तत्र वयस्थानां दृढानां प्राणवतां सत्ववताञ्च सुचिकित्स्या व्रणा एकस्मिन् वा पुरुषे यत्रैतद्गुणचतुष्टयं तस्य सुखसाधनीयतमाः। तत्र वयस्थानां प्रत्यग्रधातुत्वादाशु व्रणारोहन्ति। दृढानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्य्यमाणं सिरास्नाय्वादिविशेषान्न प्राप्नोति। प्राणवतां वेदनाभिघाताहारयन्त्रणादिभिर्न ग्लानिरुत्पद्यते। सत्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति। तस्मादेतेषां सुखसाधनीयतमाः। तएव विपरीतगुणा वृद्धकृशाल्पप्राणभीरुषु द्रष्टव्याः। स्फिक्पायुप्रजननललाटगण्डौष्ठपृष्ठकर्णफलकोषोदरजत्रुमुखाभ्यन्तरसंस्थाः सुखरोपणीया व्रणाः। अक्षिदन्तनासापाङ्गश्रोत्रनाभिजठरसेवनीनितम्बपार्श्वकुक्षिवक्षःकक्षास्तनसन्धिभागगताः सफेनपूयरक्तानिलवाहिनोऽन्तःशल्याश्च दुश्चिकित्स्याः। अधोभागाश्चोर्द्ध्वभागनिर्वाहिनो रोमान्तोपनखमर्म्मजङ्घास्थिसंश्रिताश्च। भगन्दरमपि चान्तर्मुखं सेवनीकुटकास्थिसंश्रितम्।

भवति चात्र। कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम्। व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः। अवपाटिकानिरुद्धप्रकाशसन्निरुद्धगुदजठरग्रन्थिस्तनक्रिमयः प्रतिश्यायजाः कोष्ठजाश्च त्वग्दोषिणां प्रमेहिणां वा ये परिक्षतेषु दृश्यन्ते शर्करासिकतामेहवातकुण्डलिकाष्ठीलादन्तशर्करोपकुशकण्ठशालूकनिष्कोषणदूषिताश्च दन्तवेष्टाविसर्पास्थिक्षतोरःक्षतव्रणग्रन्थिप्रभृतयश्च याप्याः। साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा। घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम्। यापनीयं विजानीयात् क्रिया धारयते तु यम्। क्रियायान्तु निवृत्तायां सद्य एव विनश्यति। प्राप्ता क्रिया धारयति याप्यव्याधितमातुरम्। प्रपतिष्यदिवागारं विष्कम्भः साधुयोजितः। अतऊर्द्ध्वमसाध्यान् वक्ष्यामः। मांसपिण्डवदुद्गताः प्रसेकिनोऽन्तःपूयवेदनावन्तोऽश्वापानवदुद्वृत्तौष्ठाः। केचित्कठिना गोशृङ्गवदुन्नतस्थदुमांसप्ररोहाः। अपरे दुष्टरुधिरास्राविणस्तनुपिच्छिलास्राविणो वा मध्योन्नताः। केचिदवसन्नमुदिरपर्य्यन्ताः। शणतूलवत्स्नायुजालवन्तो दुर्दर्शा वसामेदोमज्जमस्तुलुङ्गस्राविणश्च दोषसमुत्थाः। पीताऽसितमूत्रपुरीषवातवाहिनश्च कोष्ठस्थाः क्षीणमांसानाञ्च सर्व्वतोगतयश्चाणुमुखा मांसबुद्बुदवन्तः सशब्दवातवाहिनश्च शिरःकण्ठस्थाः। क्षीणमांसानाञ्च पूयरक्तनिर्वाहिणोऽरोचकाविपाककास-

श्वासोपद्रवयुक्ताः। भिन्ने वा शिरःकपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ वा यत्रेति। भवन्ति चात्र। वसां मेदोऽथ मज्जानं मस्तुलुङ्गञ्च यः स्रवेत्। आगन्तुस्तु व्रणः सिध्येन्न सिध्येद्दोषसम्भवः। स मर्म्मोपहिते देशे सिरास्नाय्वस्थिवर्जिते। विकारो योऽनुपश्येति तदसाध्यस्य लक्षणम्। क्रमेणोपचयं प्राप्य धातूननुगतः शनैः। न शक्यउन्मूलयितुं वृद्धो वृक्ष इवामयः। स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च। निहन्त्यौषधवीर्य्याणि मन्त्रान् दुष्टग्रहो यथा। अतो यो विपरीतः स्यात् सुखसाध्यः स उच्यते। अवद्धमूलः क्षुपको यद्वदुत्पाटने सुखः। त्रिभिर्दोषैरनाक्रान्तः श्यावौष्ठः पिडकीसमः। अवेदनो निरास्रावो व्रणः शुद्ध इहोच्यते। कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः। स्थिराश्चिपिटिकावन्तो रोहन्तीति तमादिशेत्। रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम्। त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्द्दिशेत्। दोषप्रकोपाद्व्यायामादभिघातादजीर्णतः। हर्षात् क्रोधाद्भयाद्वापि व्रणो रूढोऽपि दीर्य्यति"।

**कृत्यादूषणी** स्त्री कृत्या दूष्यतेऽनया दूषि—ल्युट् ङीप्। १ओषधिभेदे। "अथो बलासनाशनाः कृत्यादूषणीश्च यास्ता इहायान्त्वोषधीः" अथ० ८,७,१०, "अनयाऽहमोषध्या सर्वाः कृत्या अदूदुषम्" १०,१,४,। आङ्गिरसे २जङ्गिडे ऋषिभेदे पु०। "अङ्गिरा असि जङ्गिड! रक्षितासि जङ्गिड!" इत्युपक्रमे "कृत्याकृत्यास्त्रिपञ्चाशीः शतं कृत्याकृतश्च ये। सर्वान् विनष्टतेजसोऽरसां जङ्गिडस्करत्" इत्याद्युक्त्वा "कृत्यादूषण एवायमतो अरातिदूषणः" इत्युक्तम्। अथ० १९,३४,१,

**कृत्यादूषि** पु० कृत्यां परकृताभिचारजां दूषयति दूषि—इन्। कृत्यानाशके जङ्गिडे मणिभेदे। अरण्यादन्य आभृतः कृत्या अन्योरसेभ्यः। कृत्यादूषिरयं मणिरथो अरातिदूषिः" अथ० २,४,५,६,

**कृत्रिम** न० कृ—क्त्रि त्रेर्मप् च। १विड्लवणे, मेदि० २काचलवणे, ३तुरष्कनामगन्धद्रव्ये, ४रसाञ्जने च राजनि०। ५सिह्लके पु० मेदि० ७क्रियया निष्पन्नमात्रे त्रि०। "सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्य्यतः" "चिक्रंसया कृत्रिमपत्रिपङ्क्तेः कपोतपालीषु निकेतनानाम्। मार्ज्जारमप्यायतनिश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने" माघः। "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसंप्रत्ययः" व्या०प०। द्वादशपुत्रमध्ये स्वयंकृते "सदृशं तु प्रकुर्य्याद्यं गुणदोषविचक्षणम्। पुत्रं पुत्रगुणोपेतं स विज्ञेयश्च कृत्रिमः" इति मनूक्ते ८पुत्रभेदे पु०। सदृशं स्वजातीयं "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" उपसंहारात्। "कृत्रिमः स्यात् स्वयं कृतः" या०"। "कृत्रिमस्तु पुत्रः स्वयं पुत्रार्थिना धनक्षेत्रप्रदर्शनादिलोभनेनैव पुत्रीकृतः मातापितृविहीनस्तत्सद्भावे तत्परतन्त्रत्वात्" मिता०। कलौ तु "दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः" इति आदित्यपु० दत्तौरसभिन्नानां पुत्रताकरणनिषेधात् न तस्य कर्त्तव्यता एवञ्च "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च" कलिधर्म्मप्रतिपादकपराशरवचने क्षेत्रजपदस्य औरसविशेषणत्वं कृत्रिमपदपदस्य च दत्तकविशेषणत्वं कल्पनीयमिति दत्तचन्द्रिका गौडदेशीयानां तथाचारश्च। पराशरवचनस्थकृत्रिमपदं न यौगिकं किन्तु परिभाषिकस्वयंकृतविषयमेव अन्यथा दत्तकस्य कृत्रिमत्वविशेषणं व्यर्थं स्यात् अतः आदित्यपुराणवचनस्थदत्तपदस्य कृत्रिमोपलक्षणपरता युक्तेति कलौ कृत्रिमपुत्रस्यापि ग्राह्यतेति दत्तकमीमांसादयः। पाश्चात्त्यादिवङ्गदेशेष्वस्य प्रचारः। अनयोर्युक्तत्वायुक्तत्वसद्भावेऽपि आचारस्य बलवत्त्वाद्व्यवस्था। अयञ्च "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादाबान्धवाश्च षट्" मनुना बन्धुदायहरत्वेनोक्तः। स्वार्थे क। तत्रार्थे। सिह्लके पु० जटाधरः,। तुरष्कनामगन्धद्रव्ये राजनि०।

**कृत्रिमधूप** पु० कर्म्म०। नानासुगन्धिद्रव्यसंयोगजाते दशाङ्गषोडशाङ्गादौ धूपे अमरः।

**कृत्रिमपुत्र** पु० कर्म्म०। १कृत्रिमे पुत्रभेदे। कृत्रिमसुतादयोऽप्यत्र। स्वार्थे क। तत्रार्थे वस्त्रादिरचितपुत्तलिकायाञ्च। "सा कन्दुकैः कृत्रिमपुत्रकैश्च" कुमा०

**कृत्वन्** त्रि० कृ—ङ्वनिप् तुक् च। कर्त्तरि। "तदिन्द्राव आ भर येना दंशिष्ठ कृत्वने" ऋ० ८,२५,२४, स्त्रियां ङीप् रश्चान्तादेशः। "महासिवेश्नः सहकृत्वरी बहुम—यशः-पटं तद्भटचातुरीतुरी" नैष०।

**कृत्वा** अव्य० कृ—कृतौ हिंसायां वा क्त्वा। १विधायेत्यर्थे "कृत्वाबकार्थे रुचिसंपक्षमम्" भट्टिः। २हिंसित्वेत्यर्थे च।

**कृत्वी** स्त्री व्यासपुत्रशुकदेवस्य १कन्यायाम्। "पराशरकुलोद्भूतः शुकोनाम महातपाः। भविष्यति युगे तस्मिन् (द्वापरे) महायोगी द्विजर्षभः। व्यासादरण्यां सम्भूतो

विधूमोऽग्निरिव ज्वलन्। स तस्यां पितृकन्यायां (पुलस्त्यकन्यायाम्) पीवर्य्यां जनयिष्यति। कन्यां पुत्रांश्च चतुरो योगधर्म्मान् महाबलान्। कृष्णं गौरं प्रभुं शम्भुं कृत्वीं कन्यां तथैव च। ब्रह्मदत्तस्य जननीं महिषीं त्वणुहस्य च" हरिवं० १८अ०। "अणुहोनाम तस्यासीत् पुत्रः परमधार्म्मिकः। प्रादात् कन्यां शुकस्तस्मै कृत्वीं पूजितलक्षणाम्। सत्वशीलगुणोपेतां योगधर्म्मरतां सदा" हरिवं० २३अ०

वेदे स्नात्व्यादि० आतईत्वम्। २कृत्वे त्यर्थे च।"अपागूह्रन्नमृतां मर्त्येभ्यः कृत्वी" ऋ० १०।१७।२। "कृत्वी कृत्वा" भा० "जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वी" १०।१५।१२। २कर्म्मणि स्त्री० "निरु० "भ्रातरस्तु वः कृत्व्येमसि" ऋ० १।१६१।३। "कृत्व्या कर्म्मणा एमसि एम" भा०

**कृत्व्य** त्रि० कृत्वीं कर्म्म अर्हति यत्। कर्म्मार्हे कर्म्मकारके "अज्यसेऽग्ने राजी न कृत्व्यः" ऋ० ६।२।८ "कृत्व्यः हविर्वहनादीनां कर्म्मणां कर्त्ता" भा०

**कृत्स** न० कृन्तति कृणत्ति वा कृत—छेदने वेष्टने वा सः किच्च। जले२समुदाये ३पापे पु० सि० कौ०

**कृत्स्न** न० कृत—क्स्न। १सकले २जले ३कुक्षौ पु०। २अशेषे त्रि० मेदि० "तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्" गीता। कृत्स्नस्य भावः ष्यञ्। कार्त्स्न्य न० तल्। कृत्स्नता स्त्री त्व कृत्स्नत्व। न० साकल्ये। "कार्त्स्न्यायत्त्योः सम्पद्यमाने सातिः। जलसात् सम्पद्यते

**कृदर** पु० कृ—अरन् "कृदरादयश्च" उणा० नि०। कुसूले अन्नकोष्ठे उज्ज्वल०। २दिशउत्तरे च न० निरु०। ३गृहे पु० निरु०।

**कृधु** त्रि० कृत—उन् बा० कित् पृषो०। ह्रस्वे निरु०। "यदस्या अंहुभेद्याः कृधु स्थूलमुपातसत्" यजु० २३,२८, "प्रतीत्ये न कृधुना तृपासः" ऋ० ४,५,१४, कृधुना ह्रस्वेन" भा० "मम स्वनात् कृधुकर्णो भयाते" ऋ० १०,२७,१३स्वार्थे क। तत्रार्थे। ततः अतिशायने इष्ठन् ऋतोरः। क्रधिष्ठ। ईयसुन्। क्रधीयस् अतिशयेनह्रस्वे त्रि० ईयसुनि स्त्रियां ङीप्। भावे इमनिच् क्रधिमन पु० अण् कार्द्धव न० ह्रस्वत्वे

**कृन्तत्र** न० कृत—क्त्रन् मुम् च। लाङ्गले सि०कौ०।

**कृन्तन** न० कृत—ल्युट् बा० मुम् च। १छेदने कर्त्तने "कृन्तनं नखकेशानां छेदनञ्च वनस्पतेः। शावाशौचे न कर्त्तव्यं पठनं पाठनं तथा" नारदः। कर्त्तरि ल्यु मुम् च। २छेदके त्रि० करणे ल्युट्। बा० मुम् च। ३छेदनसाधने "नातः परं कर्म्मनिबन्धकृन्तनम्" भाग० ६,२,४, स्त्रियां ङीप्। नखनिकृन्तनी

**कृन्तविचक्षणा** स्त्री कृन्त (छिन्धि) विचक्षण! इत्युच्यते यस्यां क्रियायां मयू० स०। विचक्षणसम्बोधनककर्त्तनार्थनिर्देशक्रियायाम्।

**कृप** कल्पने(सम्पत्तौ)भ्वा०आत्म०लुङि लुटि लृटि लृङि च उभ० द्युतादि अक० वेट्। अस्य ऋतः रकारस्थाने लः। कल्पते। अकल्पत्—अकल्पिष्ट—अक्लृप्त। कल्प्तासि कल्पितासे कल्प्स्यति कल्प्स्यते-कल्पिष्यते। कल्पितव्यः-कल्प्तव्यः कल्पनम् कल्पः। क्लृप्तः क्लृप्तिः। णिचि। कल्पयति ते अचकल्पत् त-अचीक्लृपत् त। कल्पितः कल्पना कल्पयिता। "क्लृपि सम्पद्यमाने" वार्त्ति०। एतद्योगे सम्पद्यमाने कर्त्तरि चतुर्थी। भक्तिर्ज्ञानाय कल्पते। "कल्पवित् कल्पयामास वन्यामेवास्य संविधाम्" "क्लृप्तेन सोपानपथेन" रघुः। "रुचिसंप्रक्लृप्तम्" भट्टिः "प्रजापतिकल्पितयज्ञभागम्" कुमा०। छेदने च सक० "क्लृप्तकेशनखश्मश्रुः" मनुः "कल्पनं छेदनम्" कुल्लू०।

अनु+प्रथमविधानप्रतिनिधीकरणे सक० "शक्तः प्रथमकल्पस्य योऽनुकल्पे प्रवर्त्तते" स्मृतिः।

अव+अवधारणे "अनवक्लृप्तावेयः" सि० कौ०।

आ+भूषणे सक० आकल्पः भूषा

वि+ कल्पि—संशये विकल्पयति संशेते इत्यर्थः।

सम्—कल्पि इदं करिष्यामीत्येवंरूपे मानसव्यापारभेदे। "कामः संकल्पोविचिकित्सेत्यादि" श्रुतिः "मनसा संकल्पयति वाचाऽभिलपति" स्मृतिः। मानसकर्म्माभिलापने "संकल्पेन विना राजन्! यत्किञ्चित् कुरुते नरः" ति०त०।

**कृप** दौर्बल्ये कद० चुरा० उभ० अक० सेट्। कृपयति ते अचिकृपत् त[ल्पयति ते कल्पति अचकल्पअचीक्लृपत्—त अकल्पीत्।

**कृप** स्तुतौ चित्रीकरणे वा चुरा० पक्षे भ्वा० पर० सेट्। क-

**कृप** पु० चु०कृप—अच्। राजर्षिभेदे "यथा रुशमं श्यावकं कृपमिन्द्र! प्रावः" ऋ० ८,३,१२, "रुशमं श्यावकं कृपं चैतन्नामकांस्त्रीन् राजर्षीन्" यथा प्रावः" भा०। कृपा अस्त्यस्य पालनसाधनत्वेन अर्श० अच्। शरद्वतो गौतमस्य २पुत्रे ३तत्सुतायां स्त्री ङीप्। यथा च तयोरुत्पत्तिस्तन्नामता च तथा भा०आ०१३०अ०उक्तं यथा "कृपस्यापि मम ब्रह्मन्! सम्भवं वक्तुमर्हसि। शरस्तम्बात् कथं जज्ञे कथं वाऽस्त्राण्यवाप्तवान्। वैशम्पायन

उवाच । महर्षेर्गौतमस्यासीच्छरद्वान्नाम गौतमः । पुत्रः किल महाराज! जातः सह शरैर्विभो! । न तस्य वेदाध्ययने तथा बुद्धिरजायत । यथाऽस्य बुद्धिरभवद्धनुर्वेदे परन्तप! । अधिजग्मुर्यथा वेदांस्तपसा ब्रह्मचारिणः । तथा स तपसोपेतः सर्व्वाण्यस्त्राण्यवाप ह । धनुर्वेदपरत्वाच्च तपसा विपुलेन च । भृशं सन्तापयामास देवराजं स गौतमः । ततो जानपदीं नाम देवकन्यां सुरेश्वरः । प्राहिणोत्तपसो विघ्नं कुरु तस्येति कौरव! । सा हि गत्वाश्रमं तस्य रमणीयं शरद्वतः । धनुर्वाणधरं बाला लोभयामास गौतमम् । तामेकवसनां दृष्ट्वा गौतमोऽप्सरसं वने । लोकेऽप्रतिमसंस्थानां प्रोत्फुल्लनयनोऽभवत् । धनुश्च शरास्तस्य कराभ्यामपतद्भुवि । वेपथुश्चापि तां दृष्ट्वा शरीरे समजायत । स तु ज्ञानगरीयस्त्वात्तपसश्च समर्थनात् । अवतस्थे महाप्राज्ञो धैर्य्येण परमेण ह । यस्तस्य सहसा राजन्! विकारः समदृश्यत । तेन सुस्राव रेतोऽस्य स च तन्नावबुध्यत । धनुश्च सशरं त्यक्त्वा तथा कृष्णाजिनानि च । स विहायाश्रमन्तञ्च ताञ्चैवाप्सरसं मुनिः । जगाम रेतस्तत्तस्य शरस्तम्बे पपात च । शरस्तम्बे च पतितं द्विधा तदभवन्नृप! । तस्याथ मिथुनं जज्ञे गौतमस्य शरद्वतः । मृगयाञ्चरतो राज्ञः शान्तनोस्तु यदृच्छया । कश्चित् सेनाचरोऽरण्ये मिथुनं तदपश्यत । धनुश्च सशरं दृष्ट्वा तथा कृष्णाजिनानि च । ज्ञात्वा द्विजस्य चापत्ये धनुर्वेदान्तगस्य ह । स राज्ञे दर्शयामास मिथुनं सशरं धनुः । स तदादाय मिथुनं राजा च कृपयान्वितः । आजगाम स्वगृहानेव मम पुत्राविति ब्रुवन् । ततः संवर्द्धयामास संस्कारैश्चाप्ययोजयत् । प्रातीपेयो नरश्रेष्ठो मिथुनं गौतमस्य तत् । गौतमोऽपि ततोऽभ्येत्य धनुर्वेदपरोऽभवत् । कृपया यन्मया बालाविमौ संवर्द्धिताविति । तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः । गोपितौ गौतमस्तत्र तपसा समविन्दत । आगत्य तस्मै गोत्रादि सर्वमाख्यातवांस्तदा । चतुर्विधं धनुर्वेदं शास्त्राणि विविधानि च । निखिलेनास्य तत्सर्वं गुह्यमाख्यातवांस्तदा । सोऽचिरेणैव कालेन परमाचार्य्यतां गतः । ततोऽधिजग्मुः सर्वे ते धनुर्वेदं महारथाः । धृतराष्ट्रात्मजाश्चैव पाण्डवाः सह यादवैः । वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः" ।

"अहल्या कन्यका यस्यां शतानन्दस्तु गोतमात् । तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः । शरद्वांस्तत्सुतो यस्य स्वर्वेश्यादर्शनात् किल । शरस्तम्बेऽपतद्रेतो मिथुनं तदभूत् शुभम् । तद्दृष्ट्वा कृपयाऽगृह्णाच्छान्तनुर्मृगयां चरन् । कृपः कुमारः कन्या च द्रोणपत्न्यभवत् कृपी" भाग० ९,२१, । स च रुद्रांशसम्भूतः यथाह "यस्तु राजन् । कृपोनाम ब्रह्मर्षिरभवत् क्षितौ । रुद्राणान्तु गणाद्विद्धि संभूतमतिपौरुषम्" भा० आ० ६७अ० । स च चिरजीवी । "अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः" पुरा० । "ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् । प्रह्लादञ्च हनूमन्तं विभीषणमथार्चयेत्" ति० त० गर्गः । ४कर्म्मणि च "यमासा कृपनीडं भासा केतुम् वर्द्धयन्ति" ऋ० १०,२०,३, "कृपनीडं कर्म्मस्थानम्" भा० ।

**कृपण** त्रि० कृप—क्युन् न लत्वम् । अदातरि कदर्य्ये अमरः "कृपणेन समोदाता न कश्चिद्भुवि विद्यते । धनमस्प्रृश्यनेव वित्तानि यत् परेभ्यः प्रयच्छति" व्यासः । "दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति" व्यासः । २मन्दे त्रि० मेदि० "कृपणाः फलहेतवः" गीता । ३महाव्यसनप्राप्ते दीने । "महद्वा व्यसनं प्राप्तोदीनः कृपण उच्यते" । रामा० । श्रेण्या०अभूततद्भावेऽर्थेऽस्य कृतादिभिः स० । कृपणकृतः । कृपणस्य भावः ष्यञ् । कार्पण्य दीनतायां न० "कार्पण्यदोषोपहतस्वभावः" गीता । तल् । कृपणता स्त्री, त्व कृपणत्व न० तत्रार्थे । ४दैन्ये न० । "वक्तुं न त्वहमुत्सहे सकृपणं देहीति दीनं वचः" शान्तिश० । सुखा० वेदनायाम् क्यङ् । कृपणायते दैन्यमनुभवतीत्यर्थः । सुखा० अस्त्यर्थे इनि । कृपणिन् दैन्ययुक्ते त्रि० स्त्रियां ङीप् । ५क्रिमौ पु० मेदि० । क्रतः पणोयस्य वेदे नि० तलोपः । ६क्रतपणे पणक्रीते दासादौ "एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणः" छ०उ० । "कृपणः पणक्रीत इव दासादिः" । भा०

**कृपा** स्त्री कृप—भिदा० अङ् "कृपेः संप्रसारणञ्च" गणसू० संप्र० । अनुपहेच्छायां प्रत्युपकारानपेक्षया परदुःखप्रहरणेच्छायाम् अमरः "मिथुने कृपावती" कुमा० ।

**कृपाण** पु० कृपां नुदति नुद—ड संज्ञायां णत्वम् । १खड्गे अमरः । गौरा० ङीष् । २कर्त्तर्य्याम् स्त्री अमरः । ३क्षुरिकायाम् स्त्री मेदि० । स्वार्थे क । कृपाणक । खड्गे पु० टाप् अत इत्त्वम् । कृपाणिका क्षुरिकायां स्त्री हेमच० ।

**कृपाद्वैत** पु० बौद्धभेदे हेम० । [कृपायुक्ते अमरः ।

**कृपालु** त्रि० कृपां लाति ला—आदाने मित० डु । दयालौ

**कृपीट** न॰ कृप—कीटन्। १उदरे २जले च मेदि॰। ३वने ६दहने च शब्दरत्ना॰। कृपीटयोनिः।

**कृपीटपाल** पु॰ कृपीटं पालयति पालि—अण् उप॰द॰। १स-मुद्रे। २केनिपाते नौकाङ्गे काष्ठभेदे च मेदि॰ ३वायौ शब्दरत्ना॰ तस्य उदरवनयोःपालकत्वात् तथात्वम्।

**कृपीटयोनि** पु॰कृपीटस्य जलस्य योनिः कृपीटं काष्ठं योनि रस्य वा। वह्नौ अमरः"अग्नेरापः इति श्रुतेस्तस्य जल हेतुत्वात् काष्ठोद्भूतत्वाच्च तथात्वम्। तत्पुरुषे स्त्री इति भेदः

**कृपीपति** पु॰ ६त॰। द्रोणाचार्य्ये शब्दमाला। तस्या-स्तत्पतित्वकथा कृपशब्दे दृश्या। [ कृपीतनयादयोऽप्यत्र

**कृपीसुत** पु॰ ६त॰। भारतप्रसिद्धे अश्वत्थाम्नि त्रिका॰

**कृ(क्रि)मि** पु॰ क्रम—इन् अतइत्त्वम्"भ्रमेः सम्प्रसारणञ्च" उ॰ इत्यतः सम्प्रसारणानुवृत्तौ सम्भया। १क्षुद्रजन्तुभेदे उज्ज्व-ल॰। "लुम्पन्ति कीटकृमयः परितस्तथैते" नागार्ज्जनीये ऋकारयुक्तपाठः। २लाक्षायां ३कृमियुक्ते ४खरे गर्द्दभे च मेदि॰। ५रोगभेदे पु॰। तन्निदानादि सुश्रुते उक्तं यथा "अथातः कृमिरोगमध्यायं व्याख्यास्यामः। अजीर्णाध्यश-नासात्म्यविरुद्धमलिनाशनैः। अव्यायामदिवास्वप्नगुर्व्व-तिस्निग्धशीतलैः। माषपिष्टान्नविदलविसशालूकशेरुकैः। पर्ण्णशाकसुराशुक्तदधिक्षीरगुडेक्षुभिः। पललानूपपिशित-पिन्याकपृथुकादिभिः। स्वाद्वम्लद्रवपानैश्च श्लेष्मा पित्तञ्च कुप्यति। कृमीन् बहुविधाकारान् करोति विविधाश्रयान्। आमपक्वाशयस्तेषां प्रसवः प्रायशः स्मृतः। विंशतेः कृमि-जातीनां त्रिविधः सम्भवः स्मृतः। पुरीषकफरक्तानि तेषां वक्ष्यामि लक्षणम्। अयवा वियवाः किप्या श्लिप्यागण्डू-पदास्तथा। चूरवो द्विमुखाश्चैव सप्तैवैते पुरीषजाः। श्वेताः सूक्ष्मास्तुदन्त्येते गुदं प्रतिसरन्ति च। तेषामेवापरे पुच्छैः पृ-थवश्च भवन्ति हि। शूलाग्निमान्द्यपाण्डुत्वविष्टम्भबलस-क्षयाः। प्रसेकारुचिहृद्रोगविड्भेदास्तु पुरीषजैः। रक्ता गण्डूपदा दीर्घा गुदकण्डूनिपातिनः। शूलाटोपशकृ-द्भेदपक्तिनाशकराश्च ते। दर्भपुष्पाः१ महापुष्पाः२ प्रलूनाः३ हिपिटा४स्तथा। पिपीलिका५ दारणाश्च६ कफकोपसमु-द्भवाः। रोमशा रोममूर्द्धानः सपुच्छाः श्यावमण्डलाः। रूढधान्याङ्कुराकाराः शुक्लास्ते तनवस्तथा। मज्जादा१ नेत्रलेढार२स्तालुश्रोत्रभुज३स्तथा। शिरोहृद्रोगवमथुप्रति-श्यायकराश्च ते। केशरोमनखादाश्च४ दन्तादाः५ किक्कि-शा६स्तथा। कुष्ठजाश्च परीसर्पा७ ज्ञेयाः शोणितसम्भ-वाः। ते सरक्ताश्च कृष्णाश्च स्निग्धाश्च पृथवस्तथा। रक्ता-धिष्ठानजान् प्रायोविकारान् जनयन्ति ते। माषपिष्टान्न-लवणगुडशाकैः पुरीषजाः। मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः। विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि। ज्वरो विवर्णता शूलं हृद्रोगः सदसंभ्रमः। भक्तद्वेषोऽतिसारश्च सञ्जातकृमिलक्षणम्। दृश्यास्त्रयो-दशाद्यास्तु कृमीणां परिकीर्त्तिताः। केशादाद्यास्त्व-दृश्यास्ते द्वावाद्यौ परिवर्जयेत्। एषामन्यतमं ज्ञात्वा जिघांसुः स्निग्धमातुरम्"। "तदन्यामत्वचं दंशा मश-कामत्कुणादयः। रुदन्तं विगतज्ञानं क्रिमयः क्रिमिर्बं यथा" भाग॰,३,३१,२८,

स्वार्थे क तत्रार्थे "ततो भक्षयतस्तस्य फलात् कृमिरभू-दणुः। सत्यवागस्तु स मुनिः कृमिर्मां दशतामयम्"। "एवमुक्त्वा स राजेन्द्रो ग्रीवायां सन्निवेश्य तम्। कृमिकं प्राहसत्तूर्णं मुमूर्षुर्नष्टचेतनः" भा॰ आ॰ ४३अ॰।

**कृमिकण्टक** न॰ कृमौ कृमिरोगे कण्टकमिव तन्नाशक-त्वात्। १विडङ्गे २चित्राङ्गे (चिता) ३उदुम्बरे च मेदि॰ तेषां तन्नाशकत्वात् तथात्वम्।

**कृमिकर** पु॰ कृमिं करोति कृ—ताच्छील्यादौ टच। कीट-भेदे "कोष्ठागारी कृ(क्रि)मिकरोयस्य मण्डलपुच्छकः" सुश्रु॰ प्राणनाशनकीटोक्तौ

**कृमिकर्ण(क)** पु॰ कृमियुक्तः कर्णोऽयत्र वा कप्। सुश्रुतोक्ते कर्णरोगभेदे। "यदा तु मूर्च्छन्त्यथवापि जन्तवः सृजन्त्यपत्यान्यथवापि मक्षिकाः। तदञ्जनत्वात् श्रवणो निरुच्यते भिषग्भिराद्यैः कृमिकर्णकस्तु सः"। "कृमि-कर्णप्रतीनाहौ विद्रधिर्द्विविधस्तथा"। "कृमिकर्णक-नाशार्थं कृमिघ्नं योजयेद्विधिम्" इति च सुश्रु॰।

**कृमिकोषोत्थ** न॰ कृमेः कोषादुत्तिष्ठति उद्+स्था—क ५त॰। कौषेये (रेशमी कापड) वस्त्रे अमरः।

**कृमिग्रन्थि** पु॰ सुश्रुतोक्ते सन्धिगतरोगभेदे। तद्विवृतिर्यथा "अथातः सन्धिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः पूयालसः सोपनाहः स्रावः पर्वणिकालजी। क्रि(कृ)मि ग्रन्थिश्च विज्ञेया रोगाः सन्धिगता नवेति" विभज्य क्रि(कृ)मिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्य्युः कृमयः सन्धि जाताः"। सुश्रु॰

**कृमिघ्न** पु॰ कृमिं हन्ति हन—ताच्छील्यादौ टक् "हन्तेरत्-पूर्व्वस्य" पा॰नियमात् न णत्वम्। १विडङ्गे अमरः २प-लाण्डौ (पेयाज) ३कोलकन्दे ५पारिभद्रे (पालिदामाँदार) ६भल्लातके (भेला) च राजनि॰ तेषां कृमिघाति-

तया तथात्वम् ७हरिद्रायां स्त्री० भावप्र० अजा० टाप् । ८विडङ्गे स्त्री० ङीप् राजनि०

**कृमिज** न० कृमिभिर्जन्यते कृमेर्जायते वा जन–ड । १अगुरुणि अमरः । २कृमिजातमात्रे त्रि० ३लाक्षायां स्त्री० राजनि०

**कृमिजग्ध** न० कृमिभिर्जग्धम् । उपचारात् तज्जाते अगुरुचन्दने राजनि०

**कृमिजलज** पु० कृमिरिव जलजः । कृमिशङ्खे राजनि०

**कृमिण** त्रि० कृमिरस्त्यस्य पामा० न णत्वञ्च । कृमियुक्ते

**कृमिदन्तक** पु० कृमियुक्तोदन्तोऽत्र । दन्तरोगभेदे "कृष्णच्छिद्रश्चलः स्रावी ससंरम्भो महारुजः । अनिमित्तरुजोवातात् स ज्ञेयः कृमिदन्तकः" तल्लक्षणम् "शौषिरो गजशालूकं कराला कृमिदन्तकः" क्षुद्ररोगगणनायाम् सुश्रु०

**कृमिफल** पु० कृमयः फलेऽस्य । उदुम्बरे शब्दचिन्ता०

**कृमिभोजन** पु० कृमिभिर्भुज्यतेऽत्र भुज–आधारे ल्युट् ६त० । नरकभेदे तामिस्रान्धतामिस्रादुपक्रमे "अन्धकूपकृमिभोजन इत्यादिना विभज्य भाग०५।२६।२४ तत्स्वरूपमुक्तं यथा

"यस्त्विह वा असंविभज्याश्नाति यत् किञ्चनोपनमतमनिर्मितपञ्चयज्ञोवायससंस्तुतः स परत्र कृमिभोजने नरकाधमे निपतति । तत्र शतसहस्रयोजने कृमिकुण्डे कृमिभूतः स्वयं कृमिभिरेव भक्ष्यमाणः कृमिभोजनोयावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानं यातयते" ।

कृमिभक्षादयोऽप्यत्र विष्णुपु० तन्नामतयैव कीर्त्तनात्

**कृमिमत्** त्रि० कृमि+अस्त्यर्थे मतुप् मोपधत्वेऽपि यवादि० न मस्य वः । कृमियुक्ते स्त्रियां ङीप् ।

**कृमिरिपु** ६त० । विडङ्गे शब्दरत्ना० । कृमिशत्रु प्रभृतयोऽप्यत्र

**कृमिल** त्रि० कृमिं लाति ला–क । कृमियुक्ते बहुप्रसवायां स्त्रियां स्त्री० हेमच०

**कृमिलाश्व** पु० आजमीढवंश्ये नृपभेदे "आजमीढात्तु नीलिन्यां सुशान्तिरुदपद्यत । पुरुजातिः सुशान्तेश्च वाह्याश्वः पुरुजातितः । वाह्याश्वतनयाः पञ्च बभूवुरमरोपमाः । मुद्गलः सृञ्जयश्चैव राजा बृहदिषुस्तथा । यवीनरश्च विक्रान्तः कृमिलाश्वश्च पञ्चमः" हरिवं० ३२अ०

**कृमिलोदर** त्रि० कृमिं लाति ला–क तादृशमुदरमस्य । कृमियुक्तोदररोगभेदयुक्ते । "भुक्त्वाऽस्य संस्यसंसृष्टोजायते कृमिलोदरः" शाता० ।

**कृमिवारिरुह** पु० कृमिरिव वारिरुहः । कृमिशङ्खे राजनि०

**कृमिवृक्ष** पु० कृमिप्रधानो वृक्षः । कोशाम्रे भावप्रकाशः ।

**कृमिशङ्ख** पु० कृमिरिव शङ्खः । शङ्खभेदे राजनि०

**कृमिशुक्ति** स्त्री कृमिरिव शुक्तिः । जलशुक्तौ राजनि०

**कृमिशैल** पु० कृमीणां शैल इव । वल्मीके । कृमिपर्व्वतादयोऽप्यत्र पु० [वमनुद्गे राजनि० ।

**कृमीलक** पु० कृमीन् ईरयति जनयति ईर–ण्वुल् रस्य लः ।

**कृमुक** पु० क्रमुक+पृषो० । गुवाकवृक्षे तस्योत्पत्तिकथा शत० ब्रा०६।६।२।११

"सा कार्मुकी स्यात् । देवासुराउभये प्राजापत्या अस्पर्द्धन्त ते देवा अग्निमनीकं कृत्वा सुरानभ्यायं स्तस्याचिषः प्रगृहीतस्यासुरा अग्रं प्राहंस्तदस्यां प्रत्यतिष्ठत्स कृमुकोऽभवत्तस्मात् स स्वादु रसोहि तस्माद् लोहितो चिर्हि स एषोऽग्निरेव यत् कृमुकोऽग्निमेवास्मिन्नेतत् सम्भृतिं दधाति" । कृमुकस्येयम् अण् ङीप् । कार्मुकी कृमुकसम्बन्धिन्यां समिधि स्त्री

**कृव** कृवौ हिंसे च इदित् स्वा० प० सक० सेट् औ स इत्यादेशः । कृणोति–अकृणोत् अकवीत् । इदित्त्वात् कुण्वत्रते इत्यत्र न नलोपः । [(ताँत) सि०कौ० ।

**कृवि** पु० करोत्यनेन कृ–वि किच्च । तन्तुवयनसाधनद्रव्ये तन्त्रे

**कृश** तनूकरणे दिवा० पर० सक० सेट् । कृश्यति इरित् अकृशत् अकशीत् । णिचि कर्शयति ते अचीकृशत्–त अचकर्शत्–त । कर्शयाम् बभूव आस चकार चक्रे । कृशः।

**कृश** त्रि० कृश–क्त नि० । १अल्पे, २सूक्ष्मे च । "आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः" उपवासकृशं तन्तु" "क्षत्रियञ्चैव सर्पञ्च ब्राह्मणं वा बहुश्रुतम् । नावमन्येत वै भूयः कृशानपि कदाचन" मनुः "ब्राह्मणस्य सुरश्रेष्ठ ! कृशवृत्तेः कदाचन" भा० आनु० ६२अ० । ३स्वल्पे कृशोदरी । कृशस्य भावः इमनिच् क्रशिमन् तद्भावे पु० । ष्यञ् । कार्श्य न० । तल् । कृशता स्त्री, त्व 'कृशत्व न० तद्भावे "त्वय्येवं कृशता कुतः" सा० द० । अतिशयेन कृशः इष्ठन् क्रशिष्ठ ईयसुन् क्रशीयस् । अतिशयकृशे त्रि० ईयसौ स्त्रियां ङीप् ।

**कृशर** पु० कृशमल्पमात्रां राति रा–क । "तिलतण्डुलसंमिश्रः कृशरः परिकीर्त्तितः" स्मृत्युक्ते १पक्वान्नभेदे हेमच०। (खिचड़ी) ख्याते २पक्वान्नभेदे स्त्री टाप् भावप्र० कृतान्नशब्दे लक्षणादि दृश्यम् । कृशरस्य शनैश्चराय प्रदेयत्वे बलित्वेन देयः यथाह मत्स्यपुरा० "गुडौदनं रवेर्दद्यात् सोमाय घृतपायसम् । संयावकं कुजे दद्यात्

क्षीरान्नं सोमसूनवे। दध्योदनञ्च जीवस्य शुक्राय तु घृतौदनम्। शनैश्चराय कृशरमाजमांसञ्च राहवे। चित्रौदनञ्च केतुभ्यः सर्व्वभक्ष्यैः समर्चयेत्"।

**कृशला** स्त्री कृशं कार्श्यं लाति ला—क टाप्। केशे शब्दच॰

**कृशशाख** पु॰ कृशा शाखा यस्य। १पर्पटे (पापडी) राजनि॰ २ह्रस्वशाखान्विते त्रि॰।

**कृशाङ्गी** स्त्री कृशमङ्गं यस्याः ङीष्। १प्रियङ्गुवृक्षे शब्दचन्द्रिका २सूक्ष्माङ्गयुक्ते त्रि॰ स्त्रियां ङीष्।

**कृशानु** पु॰ कृश—आनुक्। १वह्नौ २चित्रकवृक्षे च अमरः। तस्य तन्नामकत्वात् "तस्मिन् कृशानुसाङ्गते" भट्टिः। ३सोमपालके। "इत्कृशानोरस्तुर्मनसाह बिभ्युषा" ऋ॰ ६,७७,२,"कृशानोः सोमपालस्य:""कृशानुः सोमपालः सव्यस्य पदः" ऐत॰ब्रा॰३,२६,भा॰। "कृशानुरस्ता मनसा भुरण्यन्"ऋ॰४,२७,३,"कृशानुरेतन्नामकः सोमपालः" भा॰। ४सव्यपार्श्वस्थरश्मिधारके च।"कृशानो! सव्यानायच्छ" ता॰ब्रा॰ "कृशानुर्नाम सव्यपार्श्वस्थानां रश्मीनां धारयितेति" भा॰। ततः मत्वर्थे शोषदा॰ टन्। कृशानुक वह्नियुक्ते त्रि॰ तद्गणे कृशानुस्थाने कृशाकु इति वा पाठः कृशाकोऽत्र वह्निरेवाऽर्थः।

**कृशानुरेतस्** पु॰ कृशानौ पतितं रेतोऽस्य। १महादेवे अमरः। तस्य यथा वह्नौ तेजोनिषेकः तथा कालिकापु॰ ४७अ॰ उक्तं कालिकापु॰ शब्दे २०५५पु॰ तत्कथामात्रं दृश्यं विस्तरस्तु कालिकापुराणे दृश्यः। ६त॰। २वह्नेस्तेजसि न॰।

**कृशाश्व** त्रि॰ कृशोऽश्वोऽस्य। १ह्रस्वाश्वस्वामिनि। तृणविन्दुवंश्ये २राजर्षिभेदे पु॰। "तत् पुत्रात् संयमादासीत् कृशाश्वः सहदेवजः। कृशाश्वात् सोमदत्तोऽभूत्"भाग॰९.२, ११,श्लो॰। ३दक्षजामातृभेदे पु॰ "कृशाश्वोऽर्चिषि भार्य्यायां धूमकेशमजीजनत्। धिषणायां वेदशिरं देवलं वयुनं मनुम्"भाग॰ ६.६.१८,श्लो॰। रामा॰ तु अन्यमातृकयोर्दक्षकन्ययोः तद्भार्य्यात्वमुक्तं यथा

"सर्व्वास्त्राणि कृशाश्वस्य पुत्राः परमधार्म्मिकाः। कौशिकाय पुरा दत्ता यदा राज्यं प्रशासति। तेऽपि पुत्राः कृशाश्वस्य प्रजापतिसुतासुताः। नैकरूपा महावीर्य्या दीप्तिमन्तो जयावहाः। जया च सुप्रभा चैव दक्षकन्ये सुमध्यमे। अस्तुवातां च शस्त्राणि शतं परमभास्वरम्। पञ्चाशतं सुतान् लेभे जया लब्धवरा वरान्। वधायासुरसैन्यानामप्रमेयानुरूपिणः। सुप्रभाऽजनयच्चापि पुत्रान् पञ्चाशतं पुनः। संहारान्नाम दुर्धर्षान्दुराक्रामान् बलीयसः। तानि चास्त्राणि वेत्त्येष यथावत् कुशिकात्मजः। अपूर्वाणां च जनने शक्तो भयश्च धर्म्मवित्"। "देवि एतानि सरहस्यानि जृम्भकास्त्राणि यानि भगवतः कृशाश्वात् कौशिकमृषिमुपसंक्रान्तानि तेन च ताडकावधे प्रसादीकृतान्यार्यस्य" उत्तररामच॰। "व्यश्वः साश्वः कृशाश्वस्य शशविन्दुश्च पार्थिवः"भा॰स॰८अ॰ यमसभ्योक्तौ "धौन्धुमारिर्दृढाश्वश्च" इत्युपक्रमे "संहताश्वो निकुम्भस्य पुत्रो रणविशारदः। अकृशाश्वकृशाश्वौ च संहताश्वस्य तौ नृप" हरिवं॰ १२अ॰ उक्ते धुन्धुमारवंश्ये ३नृपभेदे च। ततः तेन प्रोक्तमधीयते नटसूत्रम् इनि। कृशाश्विन् तत्प्रोक्तनटसूत्राध्यायिनि ब॰व॰। (रकाणी) राजनि॰।

**कृशिका** स्त्री कृशैव स्वार्थे क। आखुकर्णीलतायां (उन्दु-

**कृष** विलेखने आकर्षणे च तुदा॰ आ॰ सक॰ अनिट्। कृषते। अकृक्षत—अकृष्ट। चकृषे चकृषिषे। क्रष्टा कर्ष्टा क्रक्ष्यते। कर्षणम्। प्रतिकृषते।

**कृष** विलेखने आकर्षणे च भ्वा॰ पर॰ सक॰ अनिट्। कर्षति अक्राक्षीत्—अकार्क्षीत्—अकृक्षत्। चकर्ष चकर्षिथ चकृषिव। क्रष्टा कृष्यात् क्रक्ष्यति। कर्म्मणि कृष्यते अकर्षि अकृक्षाताम् अकृषाताम्। कृष्यः कर्षणीयः क्रष्टव्यः। क्रष्टा कर्षकः कर्षी कर्षन् कृष्यमाणः। क्रक्ष्यन् क्रक्ष्यमाणः। कृष्टः कृष्टिः कृष्ट्वा अनुकृष्य। कर्षः कर्षणम्।

अनु+पूर्वस्थितस्य पदादेः उत्तरवाक्ये योजनार्थं अनुसन्धाने अनुषङ्गे सक॰ अनुकर्षति। अनुकर्षशब्दे विवृतिः

अप+हीनताकरणे स्वकालात् पूर्व्वत्र काले करणे च सक॰ अपकर्षति अपकर्षसपिण्डनम्। अपकृष्टः। अपकर्षशब्दे विवृतिः

अप+आ+निवर्त्तने सक॰। "तमशक्यमपाकृष्टुं निदेशात् स्वर्गिणः पितुः"रघुः।

अभि+आभिमुख्येन कर्षणे सक॰ अभिकर्षति।

अव+अधःस्थतया कर्षणे सक॰। अवकर्षति

आ+विषयान्तरतोनयने सक॰। आकर्षति

उद्+अतिशायने प्राधान्यप्रापणे स्वकालात् उत्तरकालकरणे आकर्षणे च सक॰। उत्कर्षन्त्यां च रश्मीनां क्रुद्धायां मयि पक्ष्मणे" रामा॰लं॰ २८,१४। उत्कर्षशब्दे विवृतिः

निस्+निर्+निस्सारणे निश्चये च सक॰। निष्कर्षति "निष्कृष्टुमर्थं चकमे कुबेरात्" रघुः। तदयं निष्कर्षः

प्र+अतिशयेन कर्षणे उत्कृष्टतापादने सक॰ प्रकर्षति प्रकृष्टः

प्रकर्षः पादाच्चनयने अक०“इदं तु मम दीनस्य मनोभूयः प्रकर्षति” रामा० सु० १,१,

**सम्+** सम्यक्कर्षणे सक० सङ्कर्षणम्। [समाकर्षी।

**सम्+आ+**सम्यक्तया दूरपर्य्यन्तनयने सक०। समाकर्षति

कृषधात्वन्यादिपाठात् द्विकर्म्मकः। कर्षणञ्च भूमिसंयोजनेन बलेन देशान्तरसंयोगानुकूलव्यापारानुकूलव्यापारः तेनास्य द्विव्यापारबोधकतया द्विकर्म्मकत्वम्। ग्राममजां कर्षति इत्यादौ अकथितञ्चेत्यादि पा० अजादेः कर्म्मत्वम्। अत्र प्रधाने कर्म्मण्येव वाच्ये लकारादयः। “प्रधाने नीकृष्वहाम्” भर्त्तृहर्य्युक्तेः। अजा ग्रामं कृष्यते। विलेखनञ्च विदारणं तदर्थे न द्विकर्म्मकतेति भेदः।

**कृषक** त्रि० कृष–क्वुन्। १कर्षके कृषिशब्दे उदा०। २फाले न० मेदि०। ३वृषे पु० हेम०।

**कृषर** न०कृष–करन्। कृशरशब्दार्थे पृषो०कृसरोऽप्यत्र केचित्

**कृषाण** त्रि० कृष–बा० आनक्। कर्षके कृषिशब्दे उदा०

**कृषि** स्त्री कृष–इक्। सस्योत्पादनार्थे भूमिकर्षणरूपे वैश्यवृत्तिभेदे अमरः कृषिकर्म्मप्रकारादि कृषिपराशरे दर्शितं यथा तत्रादौ कृषिप्रशंसा “चतुर्व्वेदान्तगो ब्रह्मा ब्रवीति कृपणं वचः। अलक्ष्म्या युज्यते सोऽपि प्रार्थनालाघवान्वितः। एकयैव पुनः कृष्या प्रार्थको नैव जायते। कृष्यान्वितो हि लोकेऽस्मिन् भूयादेकश्च भूपतिः। सुवर्णरौप्यमाणिक्यवसनैरपि पूरिताः। तथापि प्रार्थयन्त्येव कृषकान् भक्ततृष्णया। कण्ठे हस्ते च कर्णे च सुवर्णं यदि विद्यते। उपवासस्तथापि स्यादन्नाभावेन देहिनाम्। अन्नं प्राणा बलञ्चान्नमन्नं सर्व्वार्थसाधकम्। देवासुरमनुष्याश्च सर्व्वे चान्नोपजीविनः। अन्नन्तु धान्यसम्भूतं धान्यं कृष्या विना न च। तस्मात् सर्व्वं परित्यज्य कृषिं यत्नेन कारयेत्। कृषिर्धन्या कृषिर्मेध्या जन्तूनां जीवनं कृषिः। हिंसादिदोषयुक्तोऽपि मुच्यतेऽतिथिपूजनात्। तेनार्च्चितं जगत् सर्व्वमतिथिर्येन पूजितः। अर्च्चितास्तेन देवाश्च सएव पुरुषोत्तमः”।

अथ कृषेः स्वयमवेक्ष्यतोक्तिः“फलत्यवेक्षिता स्वर्णं, दैन्यं सैवानवेक्षिता। कृषिः कृषिपुराणज्ञ इत्युवाच पराशर.”।

अथ चान्ये मुनयश्चाहुः“पितृवत्तःपुरं दद्यान्मातृवद्वान्महानसम्। गोषु चात्मसमं दद्यात् स्वयमेव कृषिं व्रजेत्। कृषिर्गावो वाणिज्याः स्त्रियो राजकुलानि च। क्षणेनैवावसीदन्ति मुहूर्त्तमनवेक्षणात्। समर्थेश्च कृषिः कार्य्या लोकानां हितकाम्यया असमर्थो हि कृषको भिक्षामटति नोचयत्। गोहितः क्षेत्रगामी च कालज्ञो बीजतत्परः। वितन्द्रः सर्व्वशस्याढ्यः कृषको नावसीदति”।

अथ वाहपोषणादिप्रकारः। “कृषिञ्च तादृशीं कुर्य्यात् यथा वाहान्न पीड़येत्। वाहपीडार्जितं शस्यं गर्हितं सर्व्वकर्म्मसु। वाहपीडार्जितं शस्यं फलितञ्च चतुर्गुणम्। वाहनिश्वासविफलः कृषको निःस्वतां व्रजेत्। गुण्डकैर्यवसैर्भूसैस्तथान्यैरपि पोषणैः। वाहाः क्वचिन्न सीदन्ति सायं प्रातश्च चारणात्”।

अथ गोशालाविधानम्। “गोशाला सुदृढ़ा यस्य शुचिर्गोमयवर्जिता। तस्य वाहा विवर्द्धन्ते पोषणैरपि वर्जिताः। शकृन्मूत्रविलिप्ताङ्गा वाहा यत्र दिने दिने। निःसरन्ति गवां स्थानात् तत्र किं पोषणादिभिः। पञ्चपञ्चायता शाला गवां वृद्धिकरी मता। सिंहस्थाने कृता सैव गोनाशं कुरुते ध्रुवम्। सिंहगेहेऽर्पितां चैव गोशालां कुरुते यदि। प्रमादान्मन्दबुद्धित्वात् गवां नाशो भवेत्तदा। तण्डुलानां जलञ्चैव तप्तमण्डं भषोदकम्। कार्पासास्थितुषञ्चैव गोस्थाने गोविनाशकृत्। सम्मार्ज्जनीञ्च मुषलमुच्छिष्टं गोनिकेतने। कृत्वा गोनाशमाप्नोति तथा तत्राजबन्धने। गोमूत्रजालकेनैव तत्रावस्करमोचनम्। कुर्व्वन्ति गृहमेधिभ्यस्तत्र का वाहवासना। विलब्धिं गोमयस्यापि रविभौमशनेर्द्दिने। न कारयेत् भ्रमेणापि गोवृद्धिं यदि वाञ्छति। वारत्रयं परित्यज्य दद्यादन्येषु गोमयम्। विलभ्य शनिभौमेषु गवां हानिकरः स्मृतः। श्लेष्ममूत्रपुरीषाणि पङ्कानि च रजांसि च। न पतन्ति गवां यत्र तत्र लक्ष्मीः स्थिरा भवेत्। सन्ध्याकाले च गोस्थाने दीपो यत्र न दीयते। स्थानं तत् कमलाहीनं वीक्ष्य क्रन्दन्ति गोगणाः। हलमष्टगवं धर्म्म्यं षड्गवं व्यवसायिनाम्। चतुर्गवं नृशंसानां द्विगवञ्च गवाशिनाम्। नित्यं दशहले लक्ष्मीर्नित्यं पञ्चहले धनम्। नित्यञ्च त्रिहले भक्तं नित्यमेकहले ऋणम्। आत्मपोषणमात्रन्तु द्विहलेन च सर्व्वदा। पितृदेवातिथीनाञ्च पुष्ट्यर्थं सोऽक्षमो भवेत्।

अथ गोपर्वकथनम् “गोपूजां कार्त्तिके कुर्य्यात् लगुड़प्रतिपत्तिथौ। बद्ध्वा श्यामलतां स्कन्धे लिप्त्वा तैलहरिद्रया। कुङ्कुमैश्चन्दनैश्चापि कृत्वा चाङ्गे विलेपनम्। एवञ्च लगुडं हस्ते गोपालाः कृतभूषणाः। ततो वाद्यैश्च

रूपैश्च मण्डयित्वाऽम्बरादिभिः। भ्रामयेद्वृषभं मुख्यं ग्रामे गोविघ्नशान्तये। गवामङ्गे तदा दद्यात् कार्त्तिकप्रथमे दिने। तैलं हरिद्रया युक्तं मिलित्वा कुङ्कुमैः सह। ताम्रलोहादिकं तत्र गवामङ्गे प्रदापयेत्। छेदनञ्च प्रकुर्वीत लाङ्गूले कचकर्णयोः। सर्वा गोजातयः सुस्था भवन्त्येतेन तद्गृहे। नानाव्याधिविनिर्मुक्ता वर्षमेकं न संशयः"।

अथ गवां यात्राप्रवेशकालादि। पूर्वात्रयं धनिष्ठा च इन्द्राग्निसौम्यवारुणाः। एते शुभप्रदा नित्यं गवां यात्राप्रवेशयोः। उत्तरात्रयरोहिण्यां सिनीवाली चतुर्द्दशी। पुष्यश्रवणहस्तेषु चित्रायामष्टमीषु च। गवां यात्रां न कुर्वीत प्रस्थानं वा प्रवेशनम्। पशवस्तत्र नश्यन्ति ये चान्ये तृणचारिणः। अर्कार्किकुजवारेषु गवां यात्राप्रवेशयोः। गमने गोविनाशः स्यात् प्रवेशे गृहिणो बधः"।

अथ गोमयकूटोद्धारः "माघे गोमयकूटन्तु संपूज्य श्रद्धयान्वितः। सारं शुभदिनं प्राप्य कुद्दालैस्तोलयेत्ततः। रौद्रे संशोष्य तत् सर्वं कृत्वा गुण्डकरूपिणम्। फाल्गुने प्रतिकेदारे गर्त्तं कृत्वा निधापयेत्। ततो वपनकाले तु कुर्य्यात् सारविमोचनम्। विना सारेण यद्धान्यं वर्द्धते न फलत्यपि"।

अथ हलसामग्रीकथनम् "ईशा युगो हलस्थाणुर्निर्योलस्तस्य पाशिका। अड्डचल्लश्च शौलश्च पच्चनी च हलाष्टकम्। पञ्चहस्ता भवेदीशा स्थाणुः पञ्चवितस्तिकः। सार्द्धहस्तस्तु निर्योलो युगः कर्णसमानकः। निर्योलपाशिका चैव अड्डचल्लस्तथैव च। द्वादशाङ्गुलमानो हि शौलोऽरत्निप्रमाणकः। सार्द्धद्वादशमुष्टिर्वा कार्य्या वा नवमुष्टिका। दृढ़ा पच्चनिका ज्ञेया लौहाग्रा वंशसम्भवा। आबन्धो मण्डलाकारः स्मृतः पञ्चदशाङ्गुलः। योक्त्रं हस्तचतुष्कञ्च रज्जुः पञ्चकरात्मिका। पञ्चाङ्गुलाधिको हस्तो हस्तो वा फालकः स्मृतः। अर्कस्य पत्रसदृशी पाशिका च नवाङ्गुला। एकविंशतिशल्यस्तु विद्धकः परिकीर्त्तितः। नवहस्ता तु मदिका(मइ)प्रशस्ता कृषिकर्म्मसु। इयं हि हलसामग्री पराशरमुनेर्म्मता। सुदृढ़ा कर्षकैः कार्य्या शुभदा कृषिकर्म्मणि। अदृढ़ा युज्यमाना सा सामग्री वाहनस्य च। विघ्नं पदे पदे कुर्य्यात् कर्षकाले न संशयः"।

अथ हलप्रसारणकालादि "अनिलोत्तररोहिण्यां मृगमूलपुनर्वसौ। पुष्याश्रवणहस्तेषु कुर्य्याद्धलिप्रसारणम्। हलप्रसारणं कार्य्यं कर्षकैः शस्यवृद्धये। शुक्रेन्दुजीववारेषु शशिजस्य विशेषतः। भौमार्कदिवसे चैव तथैव शनिवासरे। कृषिकर्म्मसमारम्भो राज्योपद्रवमादिशेत्। दशम्येकादशी चैव द्वितीया पञ्चमी तथा। त्रयोदशी तृतीया च सप्तमी च शुभावहा। शस्यच्छेदः प्रतिपदि द्वादश्यां बधबन्धनम्। बहुविघ्नकरी षष्ठी कुहूः कृषकनाशिनी। हन्त्यष्टमी बलीवर्द्दान् नवमी शस्यघातिनी। चतुर्थी कीटजननी सर्वं हन्ति चतुर्द्दशी। वृषे मीने च कन्यायां युग्मे धनुषि वृश्चिके। एतेषु शुभलग्नेषु कुर्य्याद्धलप्रसारणम्। मेषलग्ने पशुं हन्यात् कर्कटे जलजात् भयम्। सिंहे चौरभयञ्चैव कुम्भे सर्पभयं तथा। मकरे शस्यनाशः स्यात् तुलायां प्राणसंशयः। तस्माल्लग्नं प्रयत्नेन कृष्यारम्भे विचारयेत्। शुभेऽर्के चन्द्रसंयुक्ते शुक्लयुग्मेन वाससा। शुक्लपुष्पैश्च गन्धैश्च पूजयित्वा यथाविधि। पृथिवीं हलसंयुक्तां पृथुञ्चैव प्रजापतिम्। अग्नेः प्रदक्षिणं कृत्वा भूरि दत्त्वा च दक्षिणाम्। फालाग्रं स्वर्णसंयुक्तं कृत्वा च मधुलेपनम्। अहेः क्रोड़े वामपार्श्वे कुर्य्याद्धलप्रसारणम्। स्मर्त्तव्यो वासवो व्यासः पृथूरामः पराशरः। सम्पूज्याग्निं द्विजं देवं कुर्य्याद्धलिप्रसारणम्। कृष्णौ वृषौ हले श्लाघ्यौ रक्तौ वा कृष्णलोहितौ। सुखपार्श्वौ तयोः श्लाघ्यौ नवन्या च घृतेन च। उत्तराभिमुखो भूत्वा इन्द्रायार्घ्यं निवेदयेत्। शुक्लपुष्पसमायुक्तं दधिक्षीरसमन्वितम्। हलवृष्टिं कुरु देवेश! गृहाणार्घ्यं शचीपते!। निविष्टो विष्टरे भक्तः संस्थाप्य जानुनी क्षितौ। प्रणमेद्वासवं देवं मन्त्रेणानेन कर्षकः। वृषो मन्दकटिर्वर्ज्यः खिन्नलाङ्गूलकर्णकः। सर्वशुक्लस्तथा वर्ज्यः कृषकैर्हलकर्म्मणि। हलप्रसारणं कार्य्यं नीरुग्भिर्दृष्टकर्षकैः। छिन्नरेखा न कर्त्तव्या यथा प्राह पराशरः। एका तिस्रस्तथा पञ्च हलरेखाः प्रकीर्त्तिताः। एका जयकरी रेखा तृतीया चार्थसिद्धिदा। पञ्चमाख्या तु या रेखा बहुशस्यप्रदायिनी। हलप्रवाहकाले तु कूर्म्मस्तूत्पाटयेद्यदि। गृहिणी म्रियते तस्य तथा चाग्निभयं भवेत्। फालोत्पाटे च भङ्गे च देशत्यागो भवेद्ध्रुवम्। लाङ्गलो भिद्यते वापि प्रभुस्तस्य विनश्यति। ईशाभङ्गो भवेद्वापि कृषको जीवनाक्षमः। भ्रातृनाशो युगे भग्ने शौले च म्रियते वृषः। योक्त्रच्छेदे च रोगः स्यात् शस्यहानिश्च जायते। निपाते कर्षकस्यापि कष्टं स्यात् राजमन्दिरे। हलप्रवाहकाले तु गौरेकः प्रपतेद्यदि। ज्वरातिसाररोगेण मानुषो

म्रियते तदा । हले प्रवहमाने तु वृषो धावन् यदि व्रजेत् । कृषिभङ्गो भवेत्तस्य पीड़ा चापि शरीरजा । हलप्रवाहमात्रन्तु गौरेको नर्द्दते यदि । नासालीढ़ं प्रकुर्वीत तदा शस्यं चतुर्गुणम् । प्रवाहान्मुक्तमात्रन्तु गौरेकः खनते यदि । अन्यस्य लेहनं कुर्य्यात् तदा शस्यं चतुर्गुणम् । हले प्रवहमाने तु शकन्मूत्रं यदा स्रवेत् । शस्यवृद्धिः शकृत्पाते मूत्रे वन्या प्रजायते । हलप्रसारणं येन न कृतं मृगकुम्भयोः । कुतस्तस्य कृषाणस्य फलाशा कृषिकर्म्मणि । हलप्रसारणं नैवं कृत्वा यः कर्षणं चरेत् । केवलं बलदर्पेण स करोति कृषिं वृथा । मृत् सुवर्णसमा माघे कुम्भे रजतसन्निभा । चैत्रे ताम्रसमा ख्याता धान्यतुल्या च माधवे । ज्यैष्ठे मृदेव विज्ञेया आषाढ़े कर्द्दमाह्वया । निष्फला कर्कटे चैव हलैरुत्पाटिता तु या"। तथाच पराशरः।"हेमन्ते कृषयते हेम । वसन्ते ताम्ररौप्यकम् । धान्यं निदाघकाले तु दारिद्र्यन्तु घनागमे" ।

अथ वीजस्थापनविधिः "माघे वा फाल्गुने वापि सर्ववीजसङ्ग्रहः । शोषयेदातपे सम्यक् नोहारे विनिधापयेत् । वीजस्य पुटिकां कृत्वा निधानं तत्र शोधयेत् । वीजं निधानसंमिश्रं फलहानिकरं परम् । एकरूपन्तु यद्वीजं फलं फलति निर्भरम् । एकरूपं प्रयत्नेन तस्माद्वीजं समाहरेत् । सुदृढं पुटकं बद्ध्वा तृणं छिन्द्यात् विनिर्गतम् । अच्छिन्नतृणके ह्यस्मिन् कृषिः स्यात्तृणपूरिता । न वल्मीके न गोस्थाने न प्रसूतानिकेतने । न च बन्ध्यावति गेहे वीजस्थापनमाचरेत् । नोच्छिष्टः संस्पृशेद्वीजं न च नारी रजस्वला । न बन्ध्या गुर्विणी चैव न च सद्यःप्रसूतिका । घृतं तैलञ्च तक्रञ्च प्रदीपं लवणं तथा । वीजोपरि भ्रमेणापि कृषको नैव कारयेत्" । तथाच गार्ग्यः "दीपाग्निधूपसंस्पृष्टं वृष्ट्या चोपहतञ्च यत् । वर्ज्जनीयं सदा वीजं यद्गर्त्तेषु पिवापितम् । मोषितं वीजसंमिश्रं भ्रान्त्या न निर्वपेत् क्वचित् । निधानं गुवाडसंमिश्रं तद्वीजं बन्ध्यतां व्रजेत् । कृषाणसारकेदारवृषलाङ्गलकादयः । सर्व्वे ते बन्ध्यतां यान्ति वीजे बन्ध्यत्वमागते । तिलधान्ययवादीनां विधिरेष प्रकीर्त्तितः । वीजे यत्नमतः कुर्य्यात् वीजमूलाः फलादयः" ।

अथ वीजवपनविधिः "वैशाखे वपनं श्रेष्ठं ज्यैष्ठे तु मध्यमं स्मृतम् । आषाढे चाधमं प्राहुः श्रावणे चाधमाधमम् । रोपणार्थन्तु वीजानां शुचौ वपनमुत्तमम् । श्रावणे चावमं प्रोक्तं भाद्रे चैवाधमाधमम् । उत्तरात्रयमूलेन्द्रमैत्रपैत्रेन्दुवारुणे । हस्तायामथ रेवत्यां वीजवापनमुत्तमम् । विष्णुपूर्वविशाखासु यमरौद्रानिलाहिषु । वीजानां वपनं कृत्वा वीजं प्राप्नोति मानवः । वपने रोपणे चैव वारयुग्मं विवर्जयेत् । मूषिकाणां भयं भौमे मन्दे शलभकीटयोः । न वापयेत्तिथौ रिक्ते क्षीणे सोमे विशेषतः । एवं सम्यक् प्रयुञ्जानः शस्यवृद्धिमवाप्नुयात् । ज्यैष्ठान्ते त्रिदिनं सार्द्धमाषाढादौ तथैव च । वपनं सर्वशस्यानां फलार्थी कृषकस्त्यजेत्" । तथाच वराहः "वृषान्ते मिथुनादौ च त्रीण्यहानि रजस्वला । वीजं न वापयेत्तत्र जनः पापाद्विनश्यति । मृगशिरसि निवृत्ते रौद्रपादेऽम्बुवाची भवति ऋतुमती क्ष्मा भास्करे त्रीण्यहानि । यदि वपति कृषाणः क्षेत्रमासाद्य वीजं न भवति फललाभो दारुणस्तत्र कालः । हिमेन वारिणा सिक्तं वीजं शान्तमनाः शुचिः । इन्द्रं चित्ते समाधाय स्वयं मुष्टित्रयं वपेत् । कृत्वा धान्यस्य पुण्याहं कृषका हृष्टमानसाः । प्राङ्मुखाः कलसं कृत्वा पठेयुर्म्मन्त्रमुत्तमम् । ओं वसुधे ! हेमगर्भासि बहुशस्यफलप्रदे ! । वसुपूज्ये ! नमस्तुभ्यं वसुपूर्णास्तु मे कृषिः । रोपयिष्यामि धान्यानां वृन्तवीजानि प्रावृषि । सुस्था भवन्तु कृषका धनधान्यसमृद्धिभिः । वासवो नित्यवर्षी स्यान्नित्यवर्षास्तु तोयदाः । शस्यसम्पत्तयः सर्वाः सफलाः सन्तु नीरुजः । इति प्रणम्य वसुधां कृषकान् घृतपायसैः । भोजयित्वा गृही भूरि निर्विघ्नां कुरुते कृषिम्" ।

अथ मदिकादानम् । "वीजस्य वपनं कृत्वा मदिकां तत्र दापयेत् । विना मदि(मड़)प्रदानेन सस्यजन्म न जायते"।

अथ धान्यरोपणविधिः "वपनं रोपणञ्चैव वीजं स्याद्भयात्मकम् । वपनं गदनिर्म्मुक्तं रोपणं सगदं विदुः । न वृन्तरूपधान्यानां वीजाकर्षणमाचरेत् । न फलन्ति दृढ़वीजा वृन्ताः केदारसंस्थिताः । हस्तान्तरं कर्कटे च सिंहे हस्तार्द्धमेव च । रोपणं सर्वधान्यानां कन्यायां चतुरङ्गुलम्" ।

अथ धान्यकट्टनम् "आषाढे श्रावणे चैव धान्यमाकट्टयेद्बुधः । अनाकृटन्तु यद्धान्यं यथा वीजं तथैव हि । भाद्रे च कट्टयेद्धान्यमदृष्टौ कृषितत्परः । भाद्रे चार्द्धफलप्राप्तिः फलाशा नैव चाश्विने । न बिलभूमौ धा-

न्यानां कुर्य्यात् कट्टनरोपणे। न च सारप्रदानन्तु तृण-मात्रन्तु शोधयेत्”।

अथ धान्यनिस्तृणीकरणम् “निष्पन्नमपि यद्धान्यमकृत्वा तृणवर्जितम्। न सम्यक् फलमाप्नोति तृणक्षीणा कृषिर्भवेत्। कुलीरभाद्रयोर्म्मध्ये यद्धान्यं निस्तृणं भवेत्। तृणैरपि तु सम्पूर्णं तद्धान्यं द्विगुणं भवेत्। द्विवारमाश्विने मासि कृत्वा धान्यन्तु निस्तृणम्। अथ पाकविहीनं हि धान्यं फलति माषवत्। तस्मात् सर्व्वप्रयत्नेन निस्तृणां कारयेत् कृषिम्। निस्तृणा हि कृषाणानां कृषिः कामदुघा भवेत्”।

अथ भाद्रे जलमोचनम् “नैरुज्यार्थं हि धान्यानां जलं भाद्रे विमोचयेत्। मूलमात्रन्तु संस्थाप्य कारयेज्जलमोक्षणम्। भाद्रे च जलसम्पूर्णं धान्यं विविधबाधकैः। प्रपीड़ितं कृषाणानां न धत्ते फलमुत्तमम्”।

अथ धान्यव्याधिखण्डनमन्त्रः “ओँ सिद्धिः, गुरुपादेभ्यो नमः। स्वस्ति, हिमगिरिशिखरात् शङ्खकुन्देन्दुधवलशिखरतटात् नन्दनवनसङ्काशात् परमेश्वरपरमभट्टारकमहाराजाधिराजश्रीमद्रामभद्रपादा विजयिनं समुद्रतटावस्थितनानादेशागतवानरकोटिलक्षाधिपगण्यं खरतरनखरातितीक्ष्णहस्तमूर्द्धलाङ्गूलं लीलागमनसमुद्भूतवातवेगावधूतपर्व्वतशतं परचक्रप्रमथनं पवनसुतं श्रीहनूमन्तमाज्ञापयन्ति अमुकग्रामे अमुकगोत्रस्य श्रीमतोऽमुकस्य अखण्डक्षेत्रे राता भोम्मा उदा गान्धिया भोम्भी गान्धी द्रोड़ी पाण्डरसुखी महिषामुण्डी धूलिश्टङ्गा मण्डूका इत्यादयः तालजङ्घाः चटकशुकशूकरमृगमहिषमूषिकवराहपतङ्गादयः सर्व्वे शस्योपघातिनो यदि त्वदीयवचनेन न त्यजन्ति तदा तान् वज्रलाङ्गूलेन ताड़यिष्यसीति। ओँ आं श्रीं ह्रीं नमः”।

मतान्तरे धान्यव्याधिखण्डनमन्त्रः “ओँ सिद्धिः, गुरुपादेभ्यो नमः। श्रीरामचन्द्रचरणेभ्यो नमः। स्वस्ति, हिमगिरिशिखरात् शङ्खकुन्देन्दुधवलशिलातटात् नन्दनवनसङ्काशात् परमेश्वरपरमभट्टारकमहाराजाधिराजश्रीमद्रामभद्रपादाः कुशलिनः समुद्रतटावस्थितनानादेशागतवानरकोटिलक्षाधिपगण्यं खरतरनखरातितीक्ष्णहस्तमूर्द्धलाङ्गूलं लीलागमनसमुद्भूतवातवेगावधूतपर्व्वतशतं परचक्रप्रमथनं पवनसुतं श्रीमन्तं हनूमन्तमाज्ञापयन्ति। अमुकग्रामे अमुकगोत्रस्य श्री अमुकस्य अखण्डक्षेत्रे भोम्मा--भोम्भी--पाण्डरसुखी-गान्धी-धूलिश्टङ्गादिरोगच्छलेन त्रिपुटी नाम राक्षसी सप्त पुत्रानादाय विविधविघ्नं समाचरन्त्यवतिष्ठते, इदं मदीयशासनलिखनमवगम्य तां पापराक्षसीं सपुत्रबान्धवां वज्रदण्डाधिकलाङ्गूलदण्डैः खरतरनखरैश्च विदार्य्य दक्षिणसमुद्रे लवणाम्बुधौ खण्डशः प्रक्षिपेहि, यद्यत्र त्वया क्षणमपि विलम्ब्यते तर्हि त्वं केशरिणा पित्रा पवनेन मात्रा चाञ्जनया शप्तव्योऽसीत्यन्यथा नाहं प्रभुर्न त्वं भृत्य इति ओँ ह्रां ह्रीं ह्रः”।

इमं मन्त्रं बिल्वकण्टकेन केतकीदले लिखित्वा रक्तकेशेनाटित्यवारे क्षेत्रस्यैशान्यां शस्यमध्ये मञ्जरीषु बन्धयेत्। पाठान्तरञ्च लिखित्वाऽलक्तकेनैतन्मन्त्रं शस्येषु बन्धयेत्। न व्याधिकीटहिंस्राणां भयं तत्र भवेत् क्वचित्”।

अथ जलरक्षणम्। आश्विने कार्त्तिके चैव धान्यस्य जलरक्षणम्। न कृतं येन मूर्खेण तस्य का शस्यवासना। यथा कुलार्थी कुरुते कुलस्त्रीपरिरक्षणम्। तथा संरक्षयेत् वारि शरत्काले समागते।

अथ कार्त्तिकसंक्रान्त्यां नलरोपणम् “घटप्रवेशसंक्रान्त्यां रोपयेत्तु नलं तथा। केदारैशानकोणे च सपत्रं कृषकः शुचिः। गन्धैः पुष्पैश्च धूपैश्च शुक्लवस्त्रैर्विशेषतः। पूजयित्वा नलं तत्र पूजयेद्धान्यरक्षकान्। दधिभक्तञ्च नैवेद्यं पायसञ्च विशेषतः। ततो दद्यात् प्रयत्नेन तालाष्टिशस्यमेव च”। तत्र मन्त्रः। “बालकास्तरुणा वृद्धाः सन्ति ये धान्यरक्षकाः। ज्येष्ठाश्चापि कनिष्ठा वा सगदा निर्गदाश्च ये। आज्ञया भीमसेनस्य रामस्य च पृथोपरि। ताड़िता नलदण्डेन सर्व्वे स्युः समपुष्पिताः। समपुष्पत्वमासाद्य फलन्त्वाशु च निर्भरम्। सुस्था भवन्तु कृषका धनधान्यसमन्विताः। रोपयित्वा नलं क्षेत्रे मन्त्रेणानेन च क्रमात्। धान्यवृद्धिं परां प्राप्य नन्दन्ति कृषका जनाः। नलन्तु घटसंक्रान्त्यां क्षेत्रे नारोपयन्ति ये। विषमा वन्ध्यपुष्पाश्च तेषां स्युर्धान्यजातयः”।

अथ मार्गे मुष्टिग्रहणम्। “ततो मार्गे तु सम्प्राप्ते केदारे शुभवासरे। धान्यस्य लवनं कुर्य्यात् सार्द्धमुष्टिद्वयं शुचिः। गन्धैः पुष्पैश्च धूपैश्च नैवेद्यैर्धान्यरक्षकान्। पूजयित्वा यथान्यायमीशाने लवनं चरेत्। ततस्तन्मस्तके कृत्वा सम्मुखं शीर्षकान्वितम्। न स्पृष्ट्वा कमपि क्वापि व्रजेन्मौनेन मन्दिरम्। सप्तपद्यां ततः पादं दत्त्वा सुख्यनिकेतने। प्रविश्य स्थापयेत्तत्तु पुष्पगन्धादिपूजितम्। न मुष्टिग्रहणं कुर्य्यात् कदाचिद्वटपौषयोः। श्रेष्ठो मुष्टिग्रहो

मार्गे धनधान्यफलप्रदः। सार्द्धं मुष्टिद्वयं मार्गे योऽच्छित्त्वा लवनञ्चरेत्। पदे पदे विफलता तस्य धान्यं कुतो गृहे। रौद्रे मघे तथा सौम्ये पुष्ये हस्तानिलोत्तरे। धान्यच्छेदं प्रशंसन्ति मूलश्रवणयोरपि। व्यतीपाते च भद्रायां रिक्तायां वैधृतौ तथा। भौमार्किबुधवारेषु मुष्टिसंग्रहणं त्यजेत्”।

अथ मार्गे मेधिरोपणम् “कृत्वा तु खलकं मार्गे समं गोमयलेपितम्। रोपणीया प्रयत्नेन तत्र मेधिः शुभेऽहनि। स्त्रीनाम्ना कृषकैः कार्य्या मेधिर्वृश्चिकभास्करे। मेधेर्गुणेन कृषकः शस्यवृद्धिमवाप्नुयात्। न्यग्रोधः सप्तपर्णो वा गाम्भारी शाल्मलिस्तथा। औदुम्बरो विशेषेण अन्योवा क्षीरवांस्तरुः। वटादीनामभावे तु कार्य्या स्त्रीनामधारिका। वैजयन्तीयुता मेधिर्निम्बसर्षपरक्षिता। धान्यकेशरसंयुक्ता तृणगर्कटकान्विता। अर्च्चिता गन्धपुष्पाभ्यां मेधिः शस्यसुखप्रदा। पौषे मेधिर्न चारोप्या क्रूराहे श्रवणे तथा। शस्यवृद्धिकरी मार्गे पौषे शस्यक्षयङ्करी। कपित्थबिल्ववंशानां वृक्षराज्ञां तथैव च। मेधिः कार्य्या नरैर्नैव यदीच्छेदात्मनः शुभम्”।

अथ पौषे पुष्ययात्राकथनम् “अखण्डिते ततो धान्ये पौषे मासि शुभे दिने। पुष्ययात्रां जनाः कुर्य्युरन्योन्यं क्षेत्रसन्निधौ। परमान्नञ्च तत्रैव व्यञ्जनैर्मत्स्यमांसजैः। निरामिषैस्तथा दिव्यैर्हिङ्गुमारीचसंयुतैः। दधिभिश्च तथा दुग्धैराज्यपायसमिश्रितैः। नानाफलैश्च मूलैश्च मिष्टपिष्टकविस्तरैः। एभिः सुढौकितं कृत्वा तदन्नं कदलीदले। भोजयेयुर्जनाः सर्वे यथावृद्धपुरःसराः। आचम्य च ततस्तत्र चन्दनैश्च चतुःसमैः। अन्योन्यं लेपनं कुर्य्युस्तैलैः पक्वैः सुगन्धिभिः। कर्पूरवासितं दिव्यं ताम्बूलं गन्धधूपितम्। भक्षयेयुः प्रपूर्य्यास्यं परिधाय नवाम्बरम्। पुष्पैराभरणं कृत्वा नमस्कृत्य शचीपतिम्। गीतैर्वाद्यैश्च नृत्यैश्च कुर्य्युस्तत्र महोत्सवम्। ततस्तु हर्षिताः सर्वे मन्त्रं श्लोकचतुष्टयम्। हस्तसंपुटकं कृत्वा पठेयुर्वीक्ष्य भास्करम्। क्षेत्रे चाखण्डिते धान्ये तव देव! प्रसादतः। पुष्यन्तु मिलिताः सर्वे शस्यानि शुभकारकाः। मनसा कर्म्मणा वाचा ये चास्माकं विरोधिनः। ते सर्वे प्रशमं यान्तु पुष्ययात्राप्रभावतः। धान्यवृद्धिर्यशोवृद्धिः प्रवृद्धिः पुत्रदारयोः। राजसम्मानवृद्धिश्च गवां वृद्धिस्तथैव च। मन्त्रशासनवृद्धिश्च लक्ष्मीवृद्धिरहर्न्निशम्। अस्माकमस्तु सततं यावत् पूर्णो न वत्सरः। ततः प्रमुदिताः सर्वे व्रजेयुः स्वनिकेतनम्। न भोजनं पुनः कुर्य्युस्तस्मिन्नहनि मानवाः। हिताय सर्वलोकानां पुष्ययात्रा मनोहरा। पुरा पराशरेणेयं कृता सर्वार्थसाधिनी। तस्मादियं प्रयत्नेन पुष्ययात्रा विधानतः। सर्वविघ्नप्रशान्त्यर्थं कार्य्या शस्यस्य वृद्धये। पुष्ययात्रां न कुर्वन्ति ये जना धनगर्विताः। न विघ्नोपशमस्तेषां कुतस्तद्वत्सरे सुखम्। पौषे मासि ततः कुर्य्याद्धान्यच्छेदं विचक्षणः। मर्द्दयित्वा यथायोगमाढ़केन प्रमापयेत्। सुप्रमाप्य च तद्धान्यं यथालाभं प्रबन्धयेत्। प्रमादेनापि पौषे तु व्ययं तस्य न कारयेत्। मापनं सर्वशस्यानां वामावर्त्तेन कीर्त्तितम्। धान्यानां दक्षिणावर्त्तं मापनं क्षयकारकम्। वामावर्त्तेन सुखदं धान्यवृद्धिकरं परम्”।

आढ़कलक्षणम् “द्वादशाङ्गुलकैर्म्मानैराढ़कः परिकीर्त्तितः। श्लेष्मातकाम्रपुन्नागकृतमाढ़कमुत्तमम्। कपित्थपर्कटीनिम्बजनितं दैन्यवर्द्धनम्”।

अथ धान्यस्थापनम्। हस्ते स्वातौ च पुष्यायां रेवत्याञ्च प्रजापतौ। यममूलोत्तरे सौम्ये मघायाञ्च पुनर्वसौ। जीवे सोमे भृगोर्वारे निधने क्रूरवर्जिते। मीनलग्ने शुभे ऋक्षे धान्यस्थापनमुत्तमम्”।

कृषिकर्त्तव्यतायां विशेषो वृहत्पराशरसं० दर्शितोयथा “अतःपरं गृहस्थस्य कर्माचारं कलौ युगे। धर्मं साधारणं साक्षाच्चतुर्वर्णक्रमागतम्। युष्माकं सम्प्रवक्ष्यामि पाराशरप्रचोदितम्। षट्कर्मसहितोविप्रः कृषिवृत्तिं समाश्रयेत्। हीनाङ्गं व्याधिसंयुक्तं प्राणहीनञ्च दुर्बलम्। क्षुद्युक्तं तृषितं श्रान्तमनड्वाहं न वाहयेत्। स्थिराङ्गं नीरुजं दृप्तं शान्तं षण्डविवर्जितम्। अदुष्टं सबलप्राणमनड्वाहं तु वाहयेत्। वाहयेद्दिवसस्यार्धं पश्चात् स्नानं समाचरेत्। कुगवैर्न कृषिं कुर्य्यात्सर्वथा धेनुसंग्रहम्। बन्धनं पालनं रक्षां द्विजः कुर्य्याद्गृही गवाम्। वत्साश्च यत्नतो रक्ष्या वर्धन्ते ते यथाक्रमम्। न दूरे तासु गोक्रव्याश्चरणाय कदाचन। दूरे गावश्चरन्त्यो वै न भवन्ति शुभायमाः। प्रातरेव हि दोग्धव्या दुह्याः सायं तथा गृही। दोग्धुर्विपर्य्यये नैव वर्द्धन्ते ताः कदाचन। अनादेयतृणं भुक्त्वा स्रवन्त्यनुदिनं पयः। तुष्टिकृद्देवतादीनां पूज्या गावः कथञ्च ताः। यस्याः शिरसि ब्रह्मास्ते स्कन्धदेशे शिवः स्मृतः। पृष्ठे विष्णुस्तथा तस्थौ श्रुतयश्चरणेषु तु। या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिताः। सर्वदेवमयी गौस्तु तुष्येत्तद्भक्तितो हरिः।

हरन्ति स्पर्शनात्पापं पयसा पोषयन्ति याः । प्रापयन्ति दिवं दत्ताः पूज्या गावः कथन्न ताः । यच्छफाहतभूमेस्तु उद्यतः पांशुसंचयः । प्रोथयेत् पुरुषस्यैनो वन्द्या गावः कथन्न ताः । शकृन्मूत्रं हि यस्यास्तु पितुः पुनाति पातकम् । किमपूज्यं हि तस्या गोरिति पाराशरोऽब्रवीत् । गौरवत्सा न दोग्धव्या नचैव गर्भसम्भिनी । प्रसूता च दशाहार्वागदोग्धा चेन्नरकं व्रजेत् । दुर्बला व्याधिसंयुक्ता पुष्पिता या द्विवत्सभूः । सा साधुभिर्न दोग्धव्या वर्णिभिः सुखमीप्सुभिः । कुलान्ते पुष्पिता गावः कुलान्ते बहुवत्सलाः । कुलान्ते चलचित्ता स्त्री कुलान्ते बन्धुविग्रहः । एकत्र पृथिवी सर्वा सशैलवनकानना । तथा गौर्ज्यायसी साक्षादेकत्रोभयतोमुखी । यथोक्तविधिना यस्ता वर्षैः पाल्यास्तु पूजिताः । पालयेत् पूजयंश्चैताः स प्रेत्येह च मोदते । दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि । बन्धनीयास्तथैतास्तु न च प्राक्पश्चिमामुखाः । गोहयवाजिशालायां सुतीक्ष्णं लोहदात्रकम् । स्थाप्यन्तु सर्वदा तस्यां गवि लुप्तविमोक्षणात् । गावो देयाः सदा रक्ष्याः पोष्याः पाल्याश्च सर्वदा । ताड़यन्ति च ये पापा ये चाकर्षन्ति ता नराः । नरके पच्यन्तेऽङ्गानि श्वासेन च प्रपीड़िताः । विसर्पन्तीं न दण्डेन पालकस्तां निवर्त्तयेत् । गच्छ गच्छेति तां ब्रूयान्मा भैरिति वारयेत् । संस्पृशन् गा नमस्कृत्य कुर्य्यात्तान्तु प्रदक्षिणम् । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा । तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम् । सोऽश्वमेधसमं पुण्यं लभते नात्र संशयः । पृथिव्यां यानि तीर्थानि समुद्राश्च सरांसि च । गवां शृङ्गोदकस्नाने कलां नार्हन्ति षोड़शीम् । कुतस्तेषां हि पापानि येषां गृहमलङ्कृतम् । सततं बालवत्साभिर्गोभिः स्त्रीभिरिव स्वयम् । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । तिष्ठन्त्येकत्र मन्त्राणि हविरेकत्र तिष्ठति । गोभिर्यज्ञाः प्रवर्तन्ते गोभिर्देवाः प्रतिष्ठिताः । गोभिर्वेदाः समुद्गीर्णाः सषड़ङ्गपदक्रमाः । सौरभेयास्तु तस्याग्रे पृष्ठतोऽप्यस्य ताः स्थिताः । वसन्ति हृदये नित्यन्तासां मध्ये वसन्ति ये । ते पुण्यपुरुषाः क्षौण्यां नाकेऽपि दुर्लभाश्च ते । शृङ्गमूले स्थितो ब्रह्मा शृङ्गमध्ये तु केशवः । शृङ्गाग्रे शङ्करं विद्यात्त्रयो देवाः प्रतिष्ठिताः । शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च । सर्वे देवाः स्थिता देहे सर्वदेवमयी हि गौः । ललाटाग्रे स्थिता देवी नासामध्ये तु षण्मुखः । कम्बलाश्वतरौ नागौ तत्कर्णे तु व्यवस्थितौ । स्थितौ तस्याश्च सौरभ्याश्चक्षुषोः शशिभास्करौ । दन्तेषु वसवश्चाष्टौ जिह्वायां वरुणः स्थितः । सरस्वती च हुङ्कारे यमयक्षौ च गण्डयोः । ऋष्यो रोमकूपेषु प्रस्रावे जाह्नवीजलम् । कालिन्दी गोमये तस्या अपरा देवतास्तथा । अष्टाविंशतिदेवानां कोट्यो लोमसु ताः स्थिताः । उदरे गार्हपत्योऽग्निर्हृद्देशे दक्षिणस्तथा । मुखे चाहवनीयस्तु चावसथ्यस्तु च कुक्षिषु । एवं यो वर्त्तते गोषु ताड़ने क्रोधवर्जितः । महतीं श्रियमाप्नोति स्वर्गलोके महीयते । कुल्यं तस्या न लङ्घेत प्रतिगन्धं न वर्जयेत् । यावज्जिघ्रति तद्गन्धं तावत्पुण्यं प्रवर्द्धते । यो गां पयस्विनीं दद्यात्तरुणीं वत्ससंयुताम् । शिवस्यायतनं दत्तं दत्तन्तेन च विश्वकम् । उक्षा गौर्वेधसा सृष्टा तस्य ह्लादनाय च । तदुत्पादितशस्येन सर्वमेतद्धि धार्य्यते । यश्चैतान् पालयेत् यत्नात् वर्धयेच्चैव यत्नतः । जगन्ति तेन सर्वाणि साक्षात् स्युः पालितानि च । यावद्गोपालने पुण्यमुक्तं पूर्वमनीषिभिः । उक्ष्णोऽपि पालने तेषां फलं दशगुणं भवेत् । जगदेतद्धृतं सर्वमनडुद्भिश्चराचरम् । वृष एष हतो रुद्रः पालनीयस्तु सर्वदा । धर्मोऽयं भूतले साक्षाद्ब्रह्मणा हितकारिणा । त्रैलोक्यधारणायालमन्नानाञ्च प्रसूतये । अनादेयानि धान्यानि विध्वंसन्ति सकामतः । भ्रमिता भूतलं दूरमुक्षाणङ्गो न पूजयेत् । उत्पादयन्ति शस्यानि मर्द्दयन्ति वहन्ति च । आनयन्ति दवीयःस्थमुक्ष्णो वा कोऽधिको भुवि । स्कन्धेन दूराच्च वहन्ति भारमन्नादिकानां न च भक्षयन्ति । स्वीयेन जीवेन परस्य जीवं रक्षन्ति पुष्णन्ति विवर्धयन्ति । पुण्यास्तु गावो वसुधातले मां बिभ्रत्यलं पृष्ठगगर्भभारम् । भारः पृथिव्या दशताड़िताया एकस्य चाप्यो ह्यपि साधुवाचः । एकेन दत्तेन वृषेण येन दत्ता भवेयुर्द्दश सौरभेयाः । दाने वृषीयं धरणी समा नो तस्माद्वृषात् पूजितमस्ति नान्यत् । उत्पाद्य शस्यानि तृणञ्चरन्ति तदेव भूयः सकलं वहन्ति । न भारखिन्नाः प्रवदन्ति किञ्चिदहोऽपाद्भार्यति जीवलोकः । तृतीयेऽह्नि चतुर्थे वा यदेवोक्षा दृढो भवेत् । तदा नस्यं न भेत्तव्या नैव प्राग्दुर्बलस्य च । नासावेधनकीलन्तु खादिरं वाथ शैंशपम् । द्वादशाङ्गुलकङ्कार्य्यं त्वजन्तु स्त्रीण समे च वा । शालां द्विपानां वृषगोहयानां तां याम्यदिग्द्वारवतीं विदध्यात् । सौम्यां ककुब्द्वारवतीं तु शोभान्ते-

र्थां शमिच्छन् हितमात्मनश्च। गावो दृप्तो वा हयहस्तिनो र्वा अन्येऽपि सर्वे पशवो द्विजेन्द्राः। याम्यामुखा नैव तु उत्तरादिङ्मुखांसकास्ते खलु बन्धनीयाः। शालाप्रवेशे वृषगोपस्थूनां राजापि यत्नाद्धयकुञ्जराणाम्। होमश्च सप्तार्चिषि शास्त्रयुक्तं कुर्याद्विधिज्ञो द्विजपूजनश्च। लाङ्गलं तत् प्रवक्ष्यामि यत्काष्ठं यत्नमाणतः। हलीशाया-स्तथा मानं प्रतोदस्य युगस्य च। चत्वारिंशत्तथाचाष्टा-वङ्गुलानि कुहः (हलः) स्मृतः। अथा ग्रामोऽङ्गुलैर्भाज्यो हलीशावेधतश्च यः। षोड़शैव तु तस्याधः षड्विंशति रथोपरि। वेधस्तथा च कर्त्तव्यः प्रमाणेन षडङ्गुलः। अष्टाङ्गुलस्तरस्तस्य वेधादूर्द्ध्वं प्रकल्पयेत्। ग्रीवा दशाङ्गुला चोर्द्ध्वं हस्तग्राहो ततः स्मृतः। अङ्गुलैश्चाष्टभिस्तत् स्यादधः स्यात् प्रतिहारकः। तस्यावस्ताद्यच्चत्वारि स वेधश्चतुरङ्गुलः। प्रतिहारी शुभा कार्य्या तद्वेधस्त्र्यङ्गुलो भवेत्। पञ्चाङ्गुलसरस्तस्याः सीरस्येति विभाजनम्। पृथुत्वं शिरसोधार्य्यं हस्ततलप्रमाणकम्। अङ्गुलानि तथा चाष्टौ उरसः पृथुता स्मृता। बन्ध इचिः प्रतीहारी षड्विंशदङ्गुला भवेत्। सुतीक्ष्णा लोहपालस्य उक्ता दामादिदारकृत्। न सीरं क्षीरवृक्षस्य न विल्वपिचुमर्दयोः। इत्यादीनां हि कुर्वाणो न नन्दति चिरं गृही। प्राञ्जला सप्तहस्ता तु हलीशा विदुषां मता। तस्याः(ईशायाः)वेधः सवर्णायाः कार्य्यो नववितस्तिभिः। प्रत्याचयोर्न तत्कुर्यात् कीर्तितौ तौ प्रकीर्तितौ। प्रमादतस्तु ताः कुर्वन् सशस्यो नश्यते गृही। नीचोच्चप्रमानेन तज्ज्ञास्तां प्रवदन्ति हि। चतुर्हस्तं युगं कार्य्यं स्कन्धस्थानेऽर्धचन्द्रवत्। मेषशृङ्गाः कदम्बस्य सालधवद्रुमस्य च। सस्या (साऽपि)वेधाद्बहिः कार्य्या दशाङ्गुलप्रमाणिका। तन्माने च प्रबाली च तदन्तरदशाङ्गुलम्। प्रतोदविषमपर्व्वा स्य वैणवश्च चतुःकरः। तदग्रे तु प्रकर्त्तव्या यवाकारा तु लोहवत्। हीनातिरिक्तं कर्त्तव्यं नैव किञ्चित्प्रमाणतः। कुर्यादनड्हां दैन्यादृदैन्यान्नरकं व्रजेत्। यथाऽभीष्टं यथाशोभं वाहकस्य प्रमाणतः। भूमेश्च कर्षणायालं तज्ज्ञाः सर्वे वदन्ति हि। योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा। श्रेष्ठनक्षत्रसंयुक्ते पुण्येऽह्नि तद्विधीयते। यत्र दिने तु बुध्येत तत्र कार्य्यं विजानता। यत्र कृत्यं हितं चापि पुण्यं वा मनसि स्मरेत्। तत्र विद्वान् द्विजश्रेष्ठः पुण्येऽह्नि तद्विधीयते। मातृश्राद्धं द्विजः कृत्वा यथोक्तविधिना गृही। द्रव्यकालानुसारेण कुर्वतो धर्म्मतः कृषिम्। प्रोल्लिखन् मण्डलं पुष्पधूपदीपैः समर्चयेत्। इन्द्राय च तथाश्विभ्यां मरुद्भ्यश्च तथा द्विजः। कुर्य्याद्वलिहृतिं विद्वान् उदकस्यच्चयाय च। तथा कुमार्थ्यै सीतायै अनुमत्यै तथा बलिम्। नमः स्वाहेति मन्त्रेण संयाच्छन्नात्मनः शुभम्। दधिगन्धाक्षतैः पुष्पैः शमीपत्रैस्तिलैस्तथा। दद्याद्बलिं वृषाणाञ्च तथाज्यप्राशनं ततः। संघृष्य सीरफालाग्रे हेम्ना वा राजतेन वा। प्रलिप्य मधुसर्पिर्भ्यां कुर्य्याच्चैव प्रदक्षिणम्। अग्न्युत्तोर्मण्डलं कुर्य्यात् कृत्वा सीरप्रवाहणम्। पुण्यं लाङ्गलकल्याणं कल्याणाय नमोऽस्त्विति। सीतायाः स्थापनं कुर्य्यात् पाराशरस्मृषिं स्मरन्। सीतां युञ्जत इत्याद्यैर्मन्त्रैः सीरं प्रवाहयेत्। दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुण्यदैः। सीतां पूज्य वशी भक्तैरक्तवस्त्रैर्विषाणके। सप्त धान्यानि चादाय प्रोच्चार्य पूर्वासुखो हली। तानि दत्त्वोक्षणः क्षेत्रे किरन् भूमौ कृषेद्द्विजः। न यवैर्न तिलैर्हीनं द्विजः कुर्य्याच्च कर्षणम्। तद्विहीनन्तु कुर्वाणं न प्रशंसन्ति देवताः। तिलमात्रच्युतं तोयं दक्षिणस्याम्मतेर्दिशि। तेन तृप्यन्ति पितरो यावन्न तिलविक्रयः। विक्रीणीते तिलान् यस्तु तर्पयेन्नर्षिदेवताः। विसृज्य पितरस्तन्तु प्रयान्तीव तिलैः सह। जपाजलं यवस्तम्बपत्रेभ्यो भूतले पतत्। पयोदधिघृताद्यैस्तु तर्पयेत् सर्व्वदेवताः। देवपञ्चैन्यभूसीरयोगात् कृषिः प्रजायते। व्यापारात् पुरुषस्यापि तस्मात्तत्वोद्यतो भवेत्। शालीन् सशणकार्पासं वार्त्ताकुप्रमृतीनि च। वापयेत्सर्व्ववीजानि सर्व्ववापी न सीदति। चन्द्रक्षये पतिर्विप्रो यो युनक्ति वृषान् कचित्। तत्पञ्चदशवर्षाणि त्यजन्ति पितरो हि तम्। चन्द्रक्षये द्विजो विद्वान् यो भुङ्क्ते तु पराशनम्। भोक्तुर्मासार्जितं पुण्यं भवेदशनसस्य तत्। चन्द्रार्कयोस्तु संयोगे कुर्य्याद्यः स्त्रीनिषेवणम्। सरेतोभोजिनस्तस्य षण्मासं पितरोऽहिताः। चन्द्रक्षये च यः कुर्य्यान्नरस्तरुनिकृन्तनम्। तत्पर्णसङ्ख्यया तस्य भवन्ति भ्रूणहत्यकाः। वनस्पतिगते सोमे योऽध्वधानं व्रजेन्नरः। प्रभ्रष्टद्विजकर्म्माणं तं त्यजन्त्यमरादयः। वासांसीन्दुप्रणाशे यो रजकस्यामतिः क्षिपेत्। पिबन्ति पितरस्तस्य मासं वस्त्रजलन्तु तत्। सोमक्षये द्विजो याति यत्कालस्तु हुताशनम्। तदेव पितृशापाग्निदग्धो नरकमाविशेत्।

अष्टमी कामभोगेन, षष्ठी तैलोपभोगतः। कुहूस्तु दन्तकाष्ठेन हिनस्त्यासप्तमं कुलम्। चन्द्राप्रतीतौः पुरुषस्तु दैवाद्यद्यादगत्या यदि दन्तकाष्ठम्। नराधिराजैः संहितस्तु तेन घातः कृतः स्यात्पितृदेवतानाम्। तत्राभ्यज्य विषाणानि गावश्चैव वृषास्तथा। चरणाय विसृज्यन्ते आगतान्निशि भोजयेत्। य उत्पाद्येह शस्यानि सर्व्वाणि तृणचारिणः। जगत्सर्व्वं धृतं यैस्तु पूज्यन्ते किन्न ते वृषाः। येनैकेन प्रदत्तेन दत्तं गोदशकम्भवेत्। यद्रूपेण स्थितो धर्म्मः पूज्यन्ते किन्न ते वृषाः। पाल्याहि यत्नतस्ते वै वाहनीया यथाविधि। स याति नरकं घोरं यो वाहयत्यपालयन्। नाधिकाङ्गो न हीनाङ्गः पुष्पिताङ्गो न दूषितः। वाहनीयो हि शूद्रेण वाहयन् क्षयमाप्नुयात्। वर्जयेद्दुष्टदोषांश्च गावो वै दोहने नरः। पाल्या वै यत्नतः सर्व्वे पालयन् शुभमाप्नुयात्। अन्नार्थमेतानुस्राख्यः ससर्ज परमेश्वरः। अन्नेनाप्यायते सर्व्वं त्रैलोक्यं सचराचरम्। अग्निर्ज्वलति चान्नार्थं वाति चान्नाय मारुतः। गृह्णाति चाम्भसां सूर्य्यो रसानन्नाय रश्मिभिः। अन्नं प्राणो बलं चान्नमन्नाज्जीवितमुच्यते। अन्नं सर्व्वस्य चाधारः सर्व्वमन्ने प्रतिष्ठितम्। सुरादीनां हि सर्व्वेषामन्नं वीजं परं स्थितम्। तस्मादन्नात्परं तत्त्वं न भूतं न भविष्यति। द्यौः पुमान्, धरणी नारी, अम्भोवीजन्दिवश्च्युतम्। द्युधात्रीतोयसंयोगादन्नादीनां हि सम्भवः। आपोमूलं हि सर्व्वस्य सर्व्वमप्सु प्रतिष्ठितम्। अतोऽमृतरसा ह्याप आपः शुक्रं बलं महः। सर्व्वस्य वीजमापो वै सर्व्वमद्भिः समावृतम्। सद्य आप्यायना ह्यापः आपो ज्येष्ठतरा ह्यतः। किञ्चित्कालं विनाऽन्नाद्यैर्जीवन्ति मनुजादयः। न जीवन्ति विना तास्तु तस्मादापोऽमृतं स्मृतम्। दत्तानि चाद्भिरेतस्यां किं न दत्तं क्षितौ भवेत्। तथान्नेन प्रदत्तेन सर्व्वं दत्तं भवेदिह। अतोऽप्यन्नार्थभावेन कर्त्तव्यं कर्षणं द्विजः। यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम्। सीते! सौम्ये! कुमारि! त्वं देवि! देवार्च्चिते! श्रिये। सन्तता हि यथा सिद्धा यथा मे सिद्धिदा भव। मरुत्सूनोर्विना नाम्ना सीतायाः स्थापनं विना। विनाप्युच्चरणार्थं सर्व्वं हरति राक्षसः। वापने लवने क्षेत्रे खले गन्त्रीप्रवाहणे। एष एव विधिर्ज्ञेयो धान्यानाञ्च प्रवेशने। देवतायतनोद्याननिपातस्थानगोव्रजान्। सीमाश्मशानभूमिञ्च वृक्षच्छायाक्षितिं तथा। भूमिं निखातयूपाञ्च शयनस्थानमेव च। अन्यामपि हि चावाह्यां न कर्षेत् कृषिकृत् धराम्। नोषरां वाहयेद्भूमिं वर्चोश्मकर्करीवृताम्। वाहयन्नप्रमत्तश्च न नदीऽजिनं तथा। यद्यसौ वाहयेल्लोभात् द्वेषाद्वापि हि मानवः। क्षीयते सोऽचिरात्पापात् सपुत्रपशुबान्धवः। नरकं घोरतामिस्रं पापीयान् याति चैनसा। परकीयां योऽपहृत्य कृषिकृद्वाहयेद्धराम्। स भूमिस्थेन पापेन ह्यनन्तनरकं वसेत्। न दूरे वाहयेत् क्षेत्रं नचैवात्यन्तिके तथा। वाहयन्न पथि क्षेत्रं वाहयन्दुःखभाग् भवेत्। क्षेत्रेष्वेवं वृतिं कुर्य्यात् यामुष्ट्रो नावलोकयेत्। न लङ्घयेत्पशुर्यां वा नाभीयाद्वाश्च शूकरः। बन्धश्च यत्नतः कार्य्यो मृगयुत्रासनाय च। अत्राप्युपद्रवं राजतस्करादिसमुद्भवम्। संरक्षेत्सर्व्वतो यत्नाद्यस्मात् गृह्णात्यसौ करात्। कृषिकृन्मानवस्त्वेवं मत्वा धर्म्मं कृषेर्ध्रुवम्। अनवद्यां शुभां स्निग्धां जलावगाहनक्षमाम्। निम्नां हि वाहयेद्भूमिं यत्र विश्रमते जलम्। वाहयेन्नु जलाभ्यर्णे पुटे ससेकसम्भवे। शारदसुन्नकैः स्थाने कलम्बं वापयेद्धली। अर्व्वाक्प्रकाश कार्पासं मदन्यत्र तु हैमनम्। वसन्तग्रीष्मकालीयमप्सु स्निग्धेषु तद्विदः। केदारेषु तथा शालीन् जलोपान्तेषु चेक्षवः। वृन्ताकशाकमूलानि कन्दानि च जलान्तिके। वृष्टिविश्रान्तपानीयक्षेत्रेषु च यवादिकान्। गोधूमांश्च मसूरांश्च खल्वान् खलु कुलत्थकाः। समस्निग्धेषु चोप्यानि भूमीजीवान् निजानता। तिला बहुविधाश्चोप्या अतसीशणमेव च। मदम्बुजं जगत्सर्वं वापयेत्कृषिकृन्नरः। संपश्येच्चरतः सर्वान् गोवृषादीन् स्वयङ्गृही। चिन्तयेत्सर्वमात्मानं स्वयमेव कृषिं व्रजेत्। प्रथमं कृषिवाणिज्यं द्वितीयं योनिपोषणम्। तृतीयं विक्रयः प्रोक्तश्चतुर्थं राजसेवनम्। नखैर्विलिखने यस्याः ब्रूयुर्दोषं मनीषिणः। तस्याः सीरविदारेण किन्न पापं क्षितेर्भवेत्। तृणैकच्छेदमात्रेण प्रोच्यते क्षयमायुषः। असङ्ख्यकन्दनिर्य्यासादसङ्ख्यातम्भवेदघम्। यत्सेचनात् कीटवधस्तथा सङ्घर्षणादपि। अंहः कुकुटिकानाञ्च तदंहः कृषिजीविनाम्। बधकानाञ्च यत्पापं यत्पापं मृगयोरपि। कदर्य्याणाञ्च तत्पापं तत्पापं कृषिजीविनाम्। वर्णानाञ्च गृहस्थानां कृषिवृत्त्युपजीविनाम्। तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः। द्वादशो नवमो वापि

सप्तमः पञ्चमोऽपि वा । धान्यभागः प्रदातव्यो देहिनः क्षेत्रिणा ध्रुवम् । असमर्थद्यूतधर्मौ च विट्पतिः क्षेत्रभृग्भवेत् । एकैकांशापकर्म्म स्याद्यावद्द्वादशसप्तमौ । ग्रामेशस्य नृपस्यापि वर्सिभिः कृषिजीविभिः । स स भागः प्रदातव्यो यतस्तौ कृषिभागिनौ । व्यूढौ तु श्वश्र्यमात्रया देयोंऽशः स्याच्चतुर्द्दशः । एकैकांशाप कर्म्म स्यात् यावद्द्वादशसप्तमौ । ब्राह्मणस्तु कृषिं कुर्व्वन्वाहयेदिच्छया धराम् । न किञ्चित् कस्यचिद्दद्यात्स सर्व्वस्य प्रभुर्यतः । ब्रह्मा वै ब्राह्मणानां स्यात्प्रभुस्तस्सृजदादितः । तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि । पशुपाल्यापणोत्पत्त्यै ऊरुभ्याञ्च तथा विशः । द्विजदास्याय पशयाय पद्भ्यां शूद्रमकल्पयत् । यत्किञ्चिज्जगतीसंस्थं भूगेहाश्वगजादिकम् । स्वभावेनेह विप्राणां ब्रह्मा स्वयमकल्पयत् । ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ । न तयोरन्तरं किञ्चित्प्रजा धर्म्मेण रक्षयेत् । तस्मान्न ब्राह्मणो दद्यात् कुर्व्वाणो धर्मतः कृषिम् । ग्रामेशस्य नृपस्यापि किञ्चिन्मात्रमसौ बलिम् । अथान्यत्सम्प्रवक्ष्यामि कृषिकृद्बुद्धिकारणम् । संशुद्धः कर्षकोवेन स्वर्गलोकमवाप्नुयात् । सर्व्वसत्त्वोपकाराय सर्व्वत्र कृषिकृन्नरः । कुर्य्यात् कृषिं प्रयत्नेन सर्व्वसत्त्वोपजीव्यकृत् । सर्व्वस्य स्थितिकारण्यात्स देवपितृभिः युतः । मनुष्याणान्तु पोषाय कृषिं कुर्यात् कृषीवलः । वयांसि चान्यसत्त्वानि क्षुत्तृष्णातो विमोचयन् । विमुक्तः सर्व्वपापेभ्यः स्वर्लोकमवाप्नुयात् । चतुर्द्दिक्षु खले कुर्य्यात्प्राच्यामतिघनावृतिम् । सैकद्वारपिधानञ्च पिदध्याच्चैव सर्व्वतः । खरोष्ट्राजोरणादींस्तु विशतस्तु निवारयेत् । शूकरान् श्वशृगालादिकाकोलूककपोतकान् । त्रिसन्ध्यं प्रोक्षणं कुर्य्यात् दानीयाम्बुक्षणाम्बुभिः । रक्षा च भस्मना कुर्य्याज्जलधाराभिरक्षणम् । त्रिसन्ध्यमर्च्चयेल्लीतां पराशरमृषिं स्मरन् । प्रेतभूतादिनामानि न वदेच्च तदग्रतः । सूतिकागृहवत्तत्र कर्त्तव्यं परिरक्षणम् । हरन्त्यरक्षितं यस्मात् रक्षांसि सर्व्वमेव हि । प्रशस्तोदिनपूर्व्वाह्णो नापराह्णे न सन्ध्ययोः । धान्योन्मानं सदा कुर्य्याल्लीतापूजनपूर्व्वकम् । यजेत खलभिक्षाभिः खलेरोहिण्यएव हि । भक्त्या सर्व्वं प्रदत्तं हि तत्समस्तमिहाक्षयम् । खलयज्ञाः पक्षिणां वै ब्रह्मणा निर्म्मिताः पुरा । भागधेयमथो कृत्वा तां गृह्णन्तीह मात्रिकाम् । शतक्रत्वाद्यो देवाः पितरः सोमपादयः । सनकादिमनुष्याश्च ये चान्ये दक्षिणाशनाः । तानुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथमं हली । विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च । पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम् । अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः । दीनानामप्यनाथानां कुष्ठिनां कुशरीरिणाम् । क्लीवान्धवधिरादीनां सर्व्वेषामपि दीयते । वर्णानां पतितानाञ्च द्युङ्गभूतानि तर्पयेत् । चाण्डालानां श्वपाकानां प्रीत्यात्युच्चावचा ददत् । ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः । स्तोकशः सीरिभिः सर्व्वैः वर्णिभिर्गृहमेधिभिः । दत्त्वा त्वनृतया वाचा क्रमेणाथ विसर्जयेत् । तत्कृत्वा स्वगृहं गच्छेच्छ्राद्धमभ्युदयं चरेत् । शरद्धेमन्तवसन्तनवान्नैः श्राद्धमाचरेत् । नाकृत्वा तत्तदश्नीयादन्नं स्तद्भवमश्नुते । कृष्या तूत्पाद्य धान्यानि खलयज्ञं समाप्य च । सर्व्वसत्त्वहितोद्युक्त इहामुत्र सुखी भवेत् । कृषेरन्योत्तमं धर्मं न लभेत् कृषितोऽन्यतः । न सुखं कृषितोऽन्यत्र यदि धर्मेण कर्षति । अवस्त्रत्वं निरन्नत्वं कृषितो नैव जायते । अनातिथ्यञ्च दुःखित्वं दुर्मनो न कदाचन । निर्धनत्वमसभ्यत्वं विद्यायुक्तस्य कर्हिचित् । अस्वानित्वमभाग्यत्वं न सुशीलस्य कर्हिचित् । वदन्ति कवयः केचित् कृष्यादीनां विशुद्धये । लाभस्यांशप्रदानञ्च सर्व्वेषां शुद्धिकृद्भवेत् । प्रतिग्रहचतुर्थांशं वणिग्लाभं तृतीयकम् । कृषितो विंशतिञ्चैव ददतो नास्ति पातकम् । राज्ञो दत्त्वा च षड्भागं देवतानां च विंशकम् । त्रयस्त्रिंशञ्च विप्राणां कृषिकर्म्मा न लिप्यते । कृष्या समुत्पाद्य यवादिकानि धान्यानि भूयांसि, मखं विधाय । मुक्तो गृहस्थोऽपि पराशरेण तस्यामयः कश्चिदथादि दोषः । देवा मनुष्याः पितरश्च सर्व्वे साध्याश्च यक्षाश्च सकिन्नराश्च । गावो द्विजेन्द्राः सह सर्व्वसत्त्वैः कृष्यां न तृप्तानि मनाग् दुरेति । यश्चैतदालोच्य कृषिं विदध्यात् लिप्येत पापैर्न स भूभवैश्च । सीरेण नस्तापि विदारितापि स्याद्भूतधात्री वरदानदात्री । षट् कर्म्माणि कृषिं ये तु कुर्य्युर्ज्ञानविधिं द्विजाः । ते सुरादिवरप्राप्ताः स्वर्गलोकमवाप्नुयुः । षट्कर्म्मभिः कृषिः प्रोक्तो द्विजानां गृहमेधिनाम्" ।

कृषिकार्य्यारम्भमुहूर्त्तो द मु० चि० पी०धा० दर्शितं यथा "मूलद्वीशमघाचरध्रुवमृदुक्षिप्रैर्विनार्कं शनिं पापैर्हीनबलैर्विधौ जलगृहे शुक्रे विधौ मांसले । लग्ने देवगुरौ-हलप्रवहणं शस्तं न सिंहे घटे कर्कजैणघटे तनौ क्षय-

करं रिक्तासु पश्चात्तथा। एतेषु श्रुतिवारुणादितिविशा खोडूनि भौमं विना बीजोप्तिर्गदिता शुभा त्वशुभतोऽष्टाग्नीन्दुरामेन्दवः। रात्रेन्द्वग्नियुगान्यसच्छुभकराण्युप्तौ हलेऽर्कोज्झिताद्भाद्रामाष्टनवाष्टभानि मुनिभिः प्रोक्तान्यसन्त्यन्ति च” मू०

“मूलविशाखामघाभिः चरध्रुवमृदुक्षिप्रैश्च एकोनविंशतिनक्षत्रैर्हलप्रवहणं हलप्रवृत्तिं कुर्यात् यदाह नारदः “मृदुध्रुवक्षिप्रचरविशाखापितृभेषु च। हलप्रवाहं प्रथमं विदध्यान्मूलभे वृषैः”। विशेषमाह श्रीपतिः “मृदुध्रुवक्षिप्रचरेषु मूले मघाविशाखासहितेषु भेषु। हलप्रवाहं प्रथमं विदध्यान्नीरोगमुष्कान्वित सौरभेयैः”। नीरोगाः पीडारहिता मुष्का वृषणास्तैरन्विता ये सौरभेया वृषास्तैर्विदध्यादित्यर्थः। उक्तञ्चैतत् वृषाणां वृषणास्तु फलरूपा अतस्तादृशैर्वृषैः कृतं कर्षणं सफलं स्यात् चूर्णितवृषणैर्वृषैः कृतं कर्षणं निष्फलमेव भवति। तथाऽर्कं सूर्यवारं शनिवारं विना त्वन्यवारेषु चन्द्रमङ्गलबुधवृहस्पतिशुक्रवारेषु हलप्रवहणं शुभम्। उक्तञ्च व्यवहारतत्त्वे “पूर्वाद्दीशयमाग्निभेऽर्कयमयोरिक्तासु नेष्टा कृषिरिति”। अथ सामान्यतोलग्नशुद्धिः तत्र पापग्रहैर्हीनबलैर्निर्बलैरुपलक्षिते लग्ने विधौ चन्द्रे शुक्रे मांसले बलिनि पुष्टे उदित इत्यर्थः। तत्र विधौ चन्द्रे जलगृहे जलराशिस्थे सति देवगुरौ लग्नस्थे च सति हलप्रवहणं शुभम्। उक्तञ्च रत्नमालायाम् “शक्तिशालिनि सितेऽथ शीतगौ दुर्बलैरसितभौमभास्करैः। आश्रिते शशिनि वारिभोदये लग्नवर्त्तिनि गुरौ कृषिक्रिया”। कश्यपोऽपि “गुरौ लग्नगते शुक्रे बलिन्यापोदये विधौ। शस्ता कृषिक्रिया तत्र दुर्बलैः क्रूरखेचरैः”। अथ विशेषतो लग्नशुद्धिः तत्र सिंहे घटे कुम्भे कर्के अजे मेषे एणे मकरे धटे तुलायाम् एषु लग्नेषु कृषिकर्म्म न शस्तं यतस्तत्क्षयकरं पीडाकरं तथा रिक्तासु चतुर्थीनवमीचतुर्दशीषु षष्ठ्याञ्च क्षयकरं तथाशब्दोऽनुक्तसमुच्चयार्थस्तेनाष्टम्यामपि न शस्तं कृषिकर्म्म। उक्तञ्च ज्योतिःसारसागरे “मेषलग्ने पशून् हन्ति कर्कटे जलजम्भयम्। सिंहे सस्यभयं ज्ञेयं तुलायां कलसंक्षयः। मकरे सस्यनाशः स्यात्कुम्भे चौरभयन्तथा। हन्त्यष्टमी बलीवर्दान् नवमी सस्यघातिनी। षष्ठी च कीटजननी पशून् हन्ति चतुर्दशी”। चतुर्थ्यामपीदं फलं ध्येयम्। अथ बीजोप्तिमुहूर्त्तं फणिचक्रहलचक्राणि शार्दूलविक्रीडितेनाह एतेष्विति। श्रुतिः श्रवणः वारुणं शततारका अदितिः पुनर्वसुः विशाखा प्रसिद्धा एतैरुडुभिर्नक्षत्रैर्विनैतेषु पूर्वोक्तनक्षत्रेषु मूलमघाध्रुवमृदुक्षिप्रधनिष्ठास्वातीषु पञ्चदशनक्षत्रेषु बीजोप्तिर्बीजवपनं शुभम्। उक्तं च रत्नमालायाम् “हस्ताश्विपुष्योत्तररोहिणीषु चित्रानुराधामृगरेवतीषु। स्वातीधनिष्ठासु मघासु मूले बीजोप्तिरुत्कृष्टफला प्रदिष्टा”। वसिष्ठेनाप्येतावन्त्येव नक्षत्राण्युक्तानि “धातृद्वये कौणपपैत्रपुष्ये हस्तत्रये त्र्युत्तरमैत्रभेषु। पौष्णे धनिष्ठास्वथ वाश्विनीषु बीजोप्तिरुत्कृष्टफलप्रदा स्यादिति”। कौणपोमूलम् नारदेनाप्युक्तानि “मृदुध्रुवक्षिप्रभेषु पितृवायुवसूडुषु। समूलभेषु बीजोप्तिरत्युत्कृष्टफलप्रदा”। कश्यपेनापि वसुवायुभनैर्ऋत्यक्षिप्रध्रुवमृदूडुषु। सीतां सृत्वाथ बीजोप्तिरत्युत्कृष्टफलप्रदा”। अत्र मया नोक्ता अत्र भौमोमङ्गलवारोनिषिद्धः अर्थात् सूर्यचन्द्रबुधगुरुशुक्रशनीनां वारेषु बीजोप्तिःशुभा। नेष्टा कृषिरित्यतो नकारोऽत्रानुवर्त्तते तेन बीजोप्तिर्नेष्टेत्यर्थः। अत्र कालविशेषनिषेधोराजमार्त्तण्डे “रवौ रौद्राद्यपादस्थे भूमेः संजायते रजः। तस्माद्दिनत्रयं तत्र बीजवापं परित्यजेदिति। अथ बीजोप्तौ फणिचक्रमुच्यते। अशुभतो न विद्यन्ते गावः किरणायस्यासावगुः यस्य स्वरूपाभावः। तस्य कुतस्तरां किरणाः तादृशोऽगूराहुस्तस्य भं नक्षत्रं तस्मादित्यर्थः राह्वधिष्ठितनक्षत्रादष्टौ भानि असन्त्यसमीचीनानि, ततस्त्रीणि शुभानि, तत एकमशुभं ततस्त्रीणि शुभानि ततोप्येकमशुभं ततस्त्रीणि शुभानि ततोऽप्येकमशुभं ततस्त्रीणि शुभानि ततश्चत्वार्यशुभानि। एवं बीजोप्तौ सप्तविंशति नक्षत्राणां शुभाशुभत्वमुक्तं उक्तञ्च नारदेन भवेद्भत्रितयं मूर्ध्नि धान्यनाशाय राहुभात्। गले त्रयं कज्जलाय वृद्धये द्वादशोदरे। निस्तण्डुलत्वं लाङ्गूले भचतुष्टयमीरितम्। नाशोवह्निःपञ्चके स्याद्बीजोप्ताविति चिन्तयेदिति”। राहुर्यस्मिन्नृक्षेऽस्ति तस्मान्नक्षत्रत्रयं मूर्द्धि-मस्तके स्थाप्यं धान्यनाशकरं भवति। ततस्त्रयं गले स्थाप्यं कज्जलाय श्यामिकासम्पादकं स्यात्। ततो द्वादश भानि बहिर्नक्षत्ररहितानि उदरे स्थाप्यानि तानि धान्यवृद्धये स्युः ततो नक्षत्रचतुष्टयं पुच्छे निस्तन्दुलत्वकरं स्यात् ततोऽवशिष्टं बहिर्नक्षत्रपञ्चकं धान्यनाशकरं स्यात्। रत्न-

मात्रायामपि "मूर्ध्नि त्रीणि गले त्रयञ्च जठरे धिष्ण्यानि
च द्वादश स्यात्पुच्छे च चतुष्टयं बहिरतोभानां स्थितं प-
ञ्चकम्। खेटं कज्जलमन्दवृद्धिरविका निस्तण्डुलत्वं क्र-
मात् स्यादीतिभयं भयञ्च फणिभाद्बीजोप्तिकाले स्फुटम्"।
अत्रकेचित्। फणिभात् सूर्यनक्षत्रादितिव्याचख्युस्तत्र
युक्तिः "सूर्यभादुरगःस्याप्यः" इति स्वरोदयवाक्यैक वाक्य-
त्वात्, तन्न नारदवाक्ये साक्षाद्राहुभादित्युक्तत्वात् "रा-
होर्धिष्ण्यात्समारभ्य धिष्ण्यत्रयत्रयं तु निष्फलमिति" कश्य-
पोक्तेश्च। "सूर्यभादुरगः स्याप्यः" इति तु स्वरोदयवचनं
बीजरोपणविषयम्। तत्र लग्नशुद्धिमाह वसिष्ठः "भवरिपु-
सहजे पापैस्त्रिकोणकेन्द्रस्थितैश्च शुभैः। कथितेषु च धिष्ण्ये-
ष्वपि शुभलग्ने बीजवापनं कार्यमिति" अथ हलप्रवहणे
चक्रमुच्यते हलेइति हले हलचक्रेऽर्कोज्झितात्सूर्यभुक्ता-
न्नक्षत्रात्क्रमेण त्रीणि नक्षत्राणि असन्ति अशुभफलानि।
ततोऽष्ट भानि सन्ति शुभफलदानि ततो नव भान्यसन्ति
ततोऽष्टौ भानि सन्ति यथा सूर्ये आर्द्रायां भुक्तभं मृ-
गः तत आरभ्य त्रीणि मृगार्द्रापुनर्वसुभान्यशुभानि।
ततः पुष्याश्लेषामघापूर्वफाल्गुनीहस्तचित्रास्वातीन-
क्षत्राणि शुभानि। ततो विशाखानुराधाज्येष्ठामूल
पूर्वाषाढोत्तराषाढाभिजिच्छ्रवणधनिष्ठानक्षत्राणि अ-
शुभानि। ततः शततारकापूर्वभाद्रपदोत्तरभाद्रपदारे-
वत्यश्विनीभरणीकृत्तिकारोहिणीनक्षत्राणि शुभानि।
एवमष्टाविंशतिभानि भवन्ति यदाह वसिष्ठः "अर्कग-
तागतसंस्थभत्रितयं नेष्टमुभयतस्त्विष्टम्। षोडश धिष्ण्यं
नवकं शिष्टमनिष्टं च लाङ्गले चक्रे" इति। अर्केण गतं
भुक्तम् आगतं भोग्यं संस्थमाक्रान्तम् एतद्भत्रितयं नेष्टं तत
उभयतःषोडशधिष्ण्यं इष्टं यथा सूर्यभुक्तभात् प्राक्तनान्य-
ष्टौ शुभानि सूर्यभोग्यभादग्रेतनानि शुभानि स्युरि-
त्यर्थः। शिष्टमुर्वरितं मध्यगतनक्षत्रनवकमनिष्टम् एव
मत्राप्यष्टाविंशतिर्भानि। नारदोऽपि "हलादौ वृषना
शाय भत्रयं सूर्यभुक्तभात्। अग्रे ऋक्षत्रयं लक्ष्मी सौख्यं
पार्श्वस्थपञ्चकम्। शूलत्रयेऽपि नवकं मरणायान्यपञ्चकम्।
श्रियै पुच्छे त्रयं श्रेष्ठं स्याच्चक्रे लाङ्गले शुभम्" इति।
अस्यार्थः: हलप्रवहणसमये सूर्यभुक्तनक्षत्रान्नक्षत्रत्रयं
वृषनाशाय स्यात्। तदग्रे नक्षत्रयं लक्ष्म्यै स्यात् तदग्रे
पार्श्वनक्षत्रपञ्चकं सौख्याय स्यात् तदग्रे शूलत्रयगतं
नक्षत्रनवकं मरणाय स्यात् तदग्रेऽन्यत् पार्श्वस्थपञ्चकं
श्रियै स्यात् तदग्रे पुच्छगतं नक्षत्रत्रयं श्रेष्ठं शुभफल-
मिति। अनेनापि प्रकारेण मृगादीनि तान्येवाशुभा-
शुभानि सम्भवन्ति। तत्र हलचक्राकृतिर्लिख्यते तत्र
कश्यपः "त्रिष्वष्टसु नवर्क्षेषु सप्तस्वर्कविमुक्तभात्।
हानिर्वृद्धिः कर्तृमृत्युर्लक्ष्मीश्चैव यथाक्रममिति, हल-
नक्षत्रोक्तमनन्तरमुक्तवान् अस्यायमर्थः अर्कविमुक्तभा-
त्त्रिषु भेषु हानिः ततोऽष्टसु भेषु वृद्धिः ततोनवसु भेषु
कर्त्तुर्नाशः, ततः सप्तसु भेषु लक्ष्मीप्राप्तिरिति यथाक्रमं
फलं ज्ञेयम्। अत्र सप्तविंशतिनक्षत्रोक्तेरभिजिद्गणना-
नास्ति। नन्वत्र पञ्चनक्षत्रत्यागे कोहेतुरित्यत आह
तदन्तरगत इति तच्छब्देन हलोर्ध्वदण्डशूलोर्द्ध्वद-
ण्डावुच्येते तयोरन्तरगते मध्ये विद्यमाने पङ्कपञ्चके
श्रियै स्याप्ये नक्षत्रदशकमिति यावत् तच्चान्यद्भत्रितयं
हलदण्डोर्ध्वभागे शुभफलदं लेख्यम्" पी॰धा॰

अत्र विशेषः ज्यो॰ त॰ तत्र

कूर्मचक्रशब्दे दर्शितात् ज्यो॰त॰ वाक्यात् परग्रन्थो यथा
"कूर्माङ्गस्थदेशानाह। "मध्ये सारस्वतामत्स्याः शूर-
सेनाः समाथुराः। पञ्चालशाल्वमाण्डव्यकुरुक्षेत्रगजाह्व-
याः। मरुनैमिषबिन्ध्याद्रिपाण्ड्यघोषाः सयामुनाः। का-
श्यथोध्या प्रयागश्च गयावैदेहकादयः। प्राच्यां मागधशोणौ
च वारेन्द्रोगौड़राढ़काः। वर्द्धमानतमोलिप्तप्राग्ज्योति-
षोदयाद्रयः। आग्नेय्यामङ्गवङ्गोपवङ्गत्रैपुरकोशलाः।
कलिङ्गोड्रान्ध्रकिष्किन्धाविदर्भशवरादयः। दक्षिणेऽवन्ति-
माहेन्द्रमलया ऋष्यमूककाः। चित्रकूटमहारण्यकाञ्ची-
सिंहलकोङ्कणाः। कावेरी ताम्रपर्णी च लङ्कात्रिकूटका-
दयः। नैरृते द्रविडानर्त्तमहाराष्ट्राश्च रैवतः। जवनः
पह्लवः सिन्धुः पारसिकादयो मताः। पश्चिमे हैहया-
स्ताद्रिम्लेच्छवासशकादयः। वायव्ये गुज्जराटश्च नाटजा-
लन्धरादयः। उत्तरे चीननेपालहूनकैकेयमन्दराः। गा-
न्धारहिमवत्क्रौञ्चगन्धमादनमालवाः। कैलासमद्रका-
श्मीरम्लेच्छदेशाः खसादयः। ईशाने स्वर्णभौमश्च ग-
ङ्गाद्वारञ्च टङ्कनः। काश्मीरब्रह्मपुरकिरातादरदा-
दयः"। देवलः। "सिन्धुसौवीरसौराष्ट्रास्तथा प्रत्य-
न्तवासिनः। अङ्गवङ्गकलिङ्गौड्रान् गत्वा संस्कार-
मर्हति" तीर्थयात्राव्यतिरेकेणेति द्रष्टव्यमिति मिता-
क्षरा। व्यासः "उषरा बहुला भूमिः पन्थानस्तस्करा-
हताः। सर्वे वाणिजिकाश्चैव भविष्यन्ति कलौ युगे।
शस्यानिष्पत्तिरफला तरुणा वृद्धिशालिनः। भविष्यत्य-
फलोहर्षः क्रोधश्च सफलोन्नृणाम्। पुरुषाल्पं बहुस्त्रीकं

तद्युगान्तस्य लक्षणम्”। तत्र ग्रामादिषु स्वनामफलम्। ज्योतिषे “अवर्गेऽष्टाविषुः के च,षट् चे, त्रेदाः टवर्गके। एवं ते सप्त, पे वर्गे, ये द्वयं, शे च वह्नयः। इत्थमष्टसु वर्गेषु याः संख्याः कथिताः क्रमात्। नाम्नि वर्गात् स्वराच्चैव प्रत्येकं तां प्रकल्पयेत्। एकीकृत्याष्टभिर्भक्ते शेषसंख्याध्वजादयः। ध्वजोधूम्रश्च सिंहः श्वा वृषभोरासभोगजः। ध्वाङ्क्षश्च क्रमतो ज्ञेयः फलं तत्र बलक्रमात्। ध्वाङ्क्षधूम्रवृषभागजः सिंहोध्वजः खरः। यथोत्तरबला एते ज्ञातव्याः स्वरपारगैः। प्रभौ योषे पुरे देशे मित्रनारीष्टदेहेषु च। बलात् प्रायोभवेल्लाभो न लाभोबलवर्ज्जितात्। अ गरुड़ः क मार्जारश्च सिंहः ट शुनीसुतः। त भुजङ्गः प आखुः स्यात् य वर्गभः, श मेषकः। नामादिवर्णतोज्ञेया अष्टौ वर्गाः क्रमादमी। यद्वर्गभक्ष्यो यः प्रोक्तस्तस्मात्तस्य भवेत् क्षयः। ग्रामवर्गस्य ये भक्ष्यास्त्यज्यास्तद्ग्रामवासिनः। एवं दुर्गे रणे त्यज्या न कर्त्तव्या गड़ाधिपाः। अवर्गाद्यष्टकं ज्ञेयं प्रागाद्यष्टदिशां क्रमात्। स्ववर्गात् पञ्चमे स्थाने खण्डभङ्गश्च जायते”। व्यासः “धनिनः श्रोत्रियोराजा नदी वैद्यश्च पञ्चमः। पञ्च यत्र न विद्यन्ते तत्र न दिवसं वसेत्”। मत्स्यपुराणे “फालकृष्टे तथा देशे सर्वबीजानि रोपयेत्। त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि। ज्येष्ठा मध्या कनिष्ठा भूर्वर्ज्जनीयेतरा मता”।

अथ लाङ्गलचक्रं स्वरोदये “लाङ्गलं दण्डकायूपं योक्तृद्वयसमन्वितम्। दण्डकादिलिखेद्भानि दिनेशाक्रान्तभादितः। दण्डकाहलयूपानां द्विद्विस्थाने त्रिकं त्रिकम्। योक्त्रयोश्च त्रिकञ्चैव मध्ये पञ्चाग्रके द्वयम्। दण्डस्थे च गवां हानिर्यूपस्थे स्वामिनोभयम्। लक्ष्मीलाङ्गलयोक्त्रादौ क्षेत्रारम्भदिनर्क्षके”।

अथ वीजोप्तिचक्रम्। “सूर्यभादुरगः स्थाप्यस्त्रिनाड्योकान्तरक्रमात्। मुखे त्रीणि गले त्रीणि भानि द्वादशतूदरे। पुच्छे चतुर्बहिः पञ्च दिनभाच्च फलं वदेत्। वदने चोचकं विद्यात् गलकेऽङ्गारकस्तथा। उदरे धान्यवृद्धिः स्यात् पुच्छे धान्यक्षयो भवेत्। ईतिरोगभयं राज्ये चक्रे वीजोप्तिसम्भवे”। सूर्यभात् सूर्यभुज्यमाननक्षत्रात् त्रिनाड्येकान्तरक्रमादिति यद्यश्विन्यां रविस्तदा नामारभ्य गणयेत्। त्रिनाडीषु अश्विनीभरणीकृत्तिका दत्त्वा रोहिणी बहिः कार्य्या मृगार्द्रापुनर्व्वसूनि त्रिनाडीषु दत्त्वा पुष्योबहिः कार्य्यः एवं क्रमेणान्या लेख्याः। चोचकं शस्यशून्यताम्। ईतयः। “अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः”वीजोप्तिः सम्भवः कारणमस्येति व्युत्पत्तिमाश्रित्य वीजरोपविषयमिति पी०धा० स्थितम्।

“वृषचक्रं वृषाकारं सर्व्वावयवसंयुतम्। लिखित्वा विन्यसेद्भानि वृषनामर्क्षपूर्व्वकम्। मुखाक्षिकर्णशीर्षेषु शृङ्गे स्कन्धे द्विकं द्विकम्। त्रीणि पृष्ठे द्वयं पुच्छेऽष्टौ पादे तूदरे त्रिकम्। हलप्रवाहवीजोप्तिप्रारम्भादिदिनर्क्षकम्। यदङ्गेषु स्थितं तस्माद्वक्ष्ये सर्व्वं शुभाशुभम्। आस्ये हानिः सुखं नेत्रे कर्णे भिक्षाटनं तथा। शीर्षे धृतिस्तथा शृङ्गे सौख्ये स्कन्धे च मङ्गलम्। पृष्ठे कष्टं शुभं पुच्छे भ्रमः पादे सुखं हृदि। चन्द्रयोगादिदं प्रोक्तं वृषचक्रफलं बुधैः”।

दीपिकायाम् “पूर्व्वाग्नियाम्यफणिपित्रशिवान्यभेषु विक्राष्टमीविगतचन्द्रतिथिं विहाय। द्व्यङ्गालिगोसमुदये विकुजार्किवारे शस्तेन्दुयोगकरणेषु हलप्रवाहः। हलप्रवाहवद्वीजवपनस्य विधिः स्मृतः। चित्रायाञ्च शुभे केन्द्रे स्थिरस्वमनुजोदये”। भीमपराक्रमे ‘वामे कृष्णं वलीवर्द्दं दक्षिणे लोहितं न्यसेत्। उत्तराभिमुखोभूत्वा कर्षकः कृषिमारभेत्। हले तु योजिते यत्र क्षेत्रे ग्रासं करोति गौः। तत्र स्याद्द्विगुणं शस्यमवश्यं गर्गभाषितम्”। कृत्यचिन्तामणौ बलभद्रः“सुखदा प्रतिपच्चैव द्वितीया कार्य्यसाधिनी। आरोग्यदा तृतीया च चतुर्थी कीटकृन्मदा। पञ्चमी श्रीप्रदा नूनं षष्ठी च कलहप्रिया। सप्तमी स्थानदा भोग्या वृषं हन्ति तथाष्टमी। नवमी शस्यनाशाय दशमी भूतिदा सदा। एकादशी तथा कुर्य्याद्धनं धान्यं मनोरथम्। द्वादशी प्राणसन्देहा सर्वसिद्धा त्रयोदशी। चतुर्द्दशी पतिं हन्ति पञ्चदश्येव निष्फला। अमावास्याष्टमीं षष्ठीं रिक्तां च परिवर्जयेत्। सौरिभौमदिने चैव कृष्यारम्भे धनक्षयः। प्राजेशविष्णुतिष्येषु पित्रकरोत्तरेषु च। अश्विनीवातपौष्णेषु मूलादितीन्दुभे तथा। वारे भानुजशुक्रे च जीवे शीतकरे तथा। लग्ने स्त्रीगोमीनयुग्मे च कृष्यारम्भं शुभं विदुः। ऐशान्यां पुष्पनैवेद्यैः क्षेत्रपालञ्च पूजयेत्। सालङ्कारोहलधरः स्रग्भिश्च पूजितं हलम्। दध्याज्यमधुभिः श्रेष्ठं फालाग्रञ्च प्रलेपितम्। कर्षं प्रावर्त्तयेत् प्राग्नोन्नतनेन ह-

-लेन च। हस्ताश्विनितिष्यचन्द्रेषु ब्रह्मेन्द्रविष्णुवारुणे। वायव्येन्द्राग्निभे चैव रोहिण्यामुत्तरासु च। वारे जीवज्ञशुक्रे च सोमे दिनकरे तथा। युग्मे युवतिगोक्षीते शस्तं स्याद्वीजवापनम्'। राजमार्त्तण्डे "प्राजेशश्रवणोत्तरादितिमघामार्त्तण्डतिष्याश्विनीपौष्णानुष्णमरीचयः शतभिषास्वातिविशाखा तथा। जीवार्केन्दुसितेन्दुनन्दनदिने वारे स्थिरस्योदये शस्यानां वपने भवन्ति लवने शस्ते तिथौ रोपणे'। देवलः 'गुरुसोमसूर्य्यशुक्राःचेस्याः सम्पत्कराः शुभाः। बुधार्किभूमिपुत्त्राश्च न भवन्ति फलप्रदाः। हन्ति मेषः पशून् सर्व्वान् स्वभावेनाथ वृश्चिकः। कर्कटे न भवेत् सौख्यं तुलायां न प्ररोहति। केशरी शस्यघाती स्यात् पार्थिवोपद्रवं धनुः। मकरे चैव कुम्भे च भयमेव विनिर्द्दिशेत्। गोस्त्रीमन्मथमीनेषु शस्यं सम्पद्यते महत्। प्रशस्ते चन्द्रतारे च शुचिः शुक्लेन वाससा। स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा विधानतः। पृथ्वीञ्च ग्रहसंयुक्तां पूजयित्वा प्रजापतिम्। अग्निं प्रदक्षिणीकृत्य दीयते भूरिदक्षिणा। कृष्णौ वृषौ नियोक्तव्यौ नवनीतैर्घृतेन वा। सुखपार्श्वं तयोर्लिप्यात् फालाग्रं कनकैः स्पृशेत्। उत्तराभिमुखोभूत्वा क्षीरेणार्घ्यं प्रदापयेत्। ततः शुभकरः श्रीमान् कृषिकर्म्म समाचरेत्। वर्जयेद्भग्नशृङ्गञ्च खुरभग्नञ्च वर्जयेत्। विकलं छिन्नलाङ्गूलं कपिलं वृषभं तथा। हलप्रवाहणं कार्य्यं नीरुग्भिः कृषिकर्म्मकैः। हलादिभिर्दृढैः क्षेमं कुड्ढैर्न शुभं वदेत्। वृषभार्यदि सुह्यन्ति तस्य विघ्नप्रदा भवेत्"। कृषिरिति शेषः। "तस्मात् सर्व्वप्रयत्नेन निर्व्विघ्नं कारयेत् सदा। एका जयकरी रेखा तृतीया चार्थदायिका। पञ्चमी या भवेद्रेखा बहुशस्यफला हि सा। अतऊर्द्ध्वं न कर्त्तव्यं महादोषस्ततोभवेत्। संपूजग्राग्निं द्विजं देवं कुर्य्याद्धलप्रवर्त्तनम्। हेमनिवृष्टं फालाग्रं छिन्नरेखां न कारयेत्। स्मर्त्तव्या वसवश्चेन्द्रः पृथूरामः सचन्द्रमाः। पराशरोबलभद्रः सर्वविघ्नप्रशान्तये। हले प्रवाह्यमाणे तु कूर्म्मउत्पद्यते यदि। गृहिणी म्रियते तस्य ततोऽग्नेश्च भयं भवेत्। लाङ्गलं भिद्यते चापि प्रभुस्तत्र विनश्यति। ईशाभङ्गोयदा कर्त्तुः संशयोजीवितस्य च। सुतनाशोयुगाभङ्गे समीने म्रियते सुतः"। समीने योक्त्रबन्धनकाष्ठद्वये। "योक्त्रच्छेदे तु व्याधङ्गः शस्यहानिश्च जायते। हले प्रवाह्यमाणे तु गौरेकः प्रपतेद्यदि। प्रपतेन्मूत्रमात्रस्तु बन्धनं स प्रपद्यते। ज्वरातिसाररोगेण कृषिभङ्गं विनिर्दिशेत्। प्रवाहसुक्तमात्रस्तु ततोगौः प्रपतेत् यदि। वत्सालोडेन नर्द्देत्तु तदा शस्यं चतुर्गुणम्। हेमवारिविलिप्तस्य वीजस्योच्चयतः शुचिः। इन्द्रं चित्ते निधायाथ स्वयं मुष्टित्रयं वपेत्। कृत्वा चान्योन्यप्रोत्साहं कर्षकोहृष्टमानसः। प्राङ्मुखः कलसं गृह्य इमं मन्त्रमुदीरयेत्। त्वं वै वसुन्धरे सीते! बहुपुष्पफलप्रदे!। नमस्ते मे शुभं नित्यं कृषिं मेधांशुभे! कुरु। रोहन्तु सर्वशस्यानि काले देवः प्रवर्षतु। कर्षकास्तु भवन्त्यग्र्या धान्येन च धनेन च स्वाहा"। कृत्यरत्नाकरे ब्रह्मपुराणम् "चैत्रे च कृष्णपक्षस्यां काम्रसीरा च रजस्वला। नित्यं भवति तस्मात्तां कृत्वा शैलमयीं स्त्रियम्। अभ्यङ्गवस्त्रनैवेद्यैः पूजयेच्च दिनत्रयम्। पुष्पालङ्कारधूपैश्च गोरसं वर्जयन्ति च"। काम्रसीरा पृथ्वी। "अष्टम्याञ्च ततः स्नाप्य ताभिरेव गृहे गृहे। सुस्नाताभिः प्रहृष्टाभिर्जीवपत्नीभिरेव च। अनन्तरं द्विजैः स्नाप्य सर्वौषधियुतैर्जलैः। गन्धैर्वीजैस्तथा रत्नैः फलैः सिद्धार्थकैस्तथा। स्नापयित्वा च तां देवीं गन्धैर्माल्यैश्च पूजयेत्। तन्निवेदितशिष्टन्तु प्राशितव्यं गृहे गृहे। अतःपरं स्नाता गर्भं गृह्णाति ऋतुमेदिनी"। तथा "ब्रह्मा विष्णुश्च रुद्रश्च काश्यपः सुरभी गृहे। इन्द्रः प्रचेताः पर्जन्यः शेषचन्द्रार्कवह्नयः। बलदेवो हलं भूमिर्वृषभो रामलक्ष्मणौ। रक्षोघ्नौ जानकी सीता युगं गगनमेव च" सीता लाङ्गलपद्धतिः। युगं युगकाष्ठम्। "एते द्वाविंशतिः प्रोक्ता प्रजानां पतयः शुभाः। गोमङ्गले तु संपूज्याः कृष्यारम्भे महोत्सवे। अर्घ्यैः पुष्पैश्च धूपैश्च माल्यै रत्नैः पृथक्पृथक्। हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलङ्कृतः"। तथा। "हत्वा वीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह"। वीजवपनं प्राजापत्यतीर्थेन यथाह हारीतः "कनिष्ठायाः पश्चात् प्राजापत्यमावपनं होमतर्पणे प्राजापत्येन कुर्य्यात्" इति। होमतर्पणे लाजहोमसनकादितर्पणे। राजमार्त्तण्डे पराशरः "नित्यं दशहले लक्ष्मीर्नित्यं पञ्चहले धनम्। नित्यञ्च त्रिहले भक्तं नित्यमेकहले ऋणम्"। "वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणीरवौ। अतःपरंक्षिन्नधमं न जातु श्रावणे शुभम्"। ज्योतिषे "पूर्वभाद्रपदा मूलं रोहिण्युत्तरफल्गुनी। विशाखा शतभिषा वा धा-

न्यानां रोपणे वरा। सदोषा रजनीं नीलीं पुत्रवित्तैर्वियुज्यते। स्वयं जाते पुनस्ते द्वे पालयन्नैव दुष्यति। आरामे गृहमध्ये वा मोहात् सर्षपमावपन्। पराभवं रिपोर्याति ससाधनधनक्षयम्। निशा नीली पलाशश्च चिञ्चा श्वेतापराजिता। कोविदारश्च सर्वत्र सर्वं निघ्नन्ति मङ्गलम्"। निशा हरिद्रा। कोविदारकोरक्तकाञ्चनः। "हेमाम्भसा हत्वबीजं स्नातोमन्त्रेण रोपयेत्। वसुधेति सुसीतेति पुण्यदेति धरेति च। नमस्ते शुभगे! नित्यं द्रुमोऽयं वर्द्धतामिति। अरिष्टाशोकपुन्नागबकुलाम्रप्रियङ्गवः। माङ्गल्याः पूर्वमारामे रोपणीया गृहेषु च। अश्वत्थमेकं पिचुमर्दमेकं द्वौ चम्पकौ त्रीण्यथ केशराणि। तालाष्टकं श्रीफलसप्तकञ्च पञ्चाम्रवापी नरकं न पश्येत्"। दानरत्नाकरे देवीपुराणम् "ये च पापा दुराचाराः श्रीतरुच्छेदकारिणः। तेऽप्यवीच्यादिनरके पच्यन्ते ब्रह्मणोदिनम्। मृतास्ते जीव्यमानास्तु ब्रह्मघ्नाः कीर्त्तिता भुवि। तस्मिन् देशे भयं नित्यं राजानोन चिरायुषः। नच नन्दन्त्ययं लोको यत्र श्रीफलभेदिनः। श्रीतरुर्विल्वः। "लिखित्वा लक्तकेनापि मन्त्रं शस्येषु बन्धयेत्। न व्याधिकीटहिंस्राणां भयं तत्र भवेत् क्वचित्। "सिद्धिः प्रचलतरङ्गतरलितसुदुतरसमीरणवनोद्देशे श्रीमद्रामभद्रपादाः कुशलिनः समुद्रतटे नानाशतसहस्रवानराणां मध्ये खरनखरपश्वार्द्धलाङ्गूलं पवनसुतं वायुवेगं परचक्रप्रमथनं श्रीमद्धनूमन्तमाज्ञापयन्ति अमुकसस्यखण्डक्षेत्रे वाताभोम्भोगाम्भोरुतीपाण्डरसुण्डीधूलीशृङ्गारतल्पाकृशराङ्कताफडिङ्गैलावानरागरुडामड़कमहिषादिरोगम् खण्डयत क्षणमपि विलम्बं मा चरत यदि विलम्बं कारयत तदा युष्मान्शतखण्डं कारयामीति। ग्रां ग्रीं ग्रों श्रीरामाय नमः"। इति शस्त्रेषु बन्धयेत्" "कृषेर्वृष्टिसमायोगात् दृश्यन्ते फलसिद्धयः" शु०त०पु०। वा ङीप् कृषीत्यप्यत्र। स्वार्थे क कृषिकाप्यत्र स्त्री। आधारे क्ति। भुवि २। "कृषिर्भूवाचकः शब्द" भा०। कृष्णशब्दे दृश्यम्

**कृषिक** पु० कृष–किकन्। फाले अम० कर्षके त्रि०।

**कृषिजीविन्** त्रि० कृष्या जीवति जीव–णिनि। स्वयमस्वयं वा कृतया कृषिवृत्त्या जीविनि स्त्रियां ङीप्।

**कृषिपराशर** पु० कृषिकर्त्तव्यताविधायकपराशरमतानुसारिनिबन्धभेदे।

**कृषीवल** त्रि० कृषिरस्त्यस्य वृत्तित्वेन वलच् दीर्घः। कर्षके कृषिजीविनि। "कच्चित्तुष्टाः कृषीवलाः" भा० स०५अ०

**कृष्कर** पु० अव्युत्पन्नं प्रातिपदिकम्। शिवे त्रिकाण्डशेषः

**कृष्ट** त्रि० कृष–कर्म्मणि क्त। १कृतकर्षणे क्षेत्रादौ "कृष्टजानामोषधीनां जातानां च स्वयं वने" मनुः कृष्टपच्यः भावे क्त। २कर्षणे न० "न प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत्" या०। ततः दृढा० भावे इमनिच् ऋतोरः। क्रष्टिमन् कृष्टत्वे कर्षणे पु०

**कृष्टपच्य** त्रि० कृष्टे क्षेत्रे स्वयमेव पच्यते पच–कर्म्मकर्त्तरि क्यप्। कृष्टक्षेत्रे–स्वयमेव पच्यमाने धान्यादौ "न कृष्टपच्यमश्नीयादकृष्टञ्चाप्यकालतः" भाग० ७।१२।१७। वानप्रस्थधर्म्मोक्तौ। शुद्धकर्म्मणि तु यण्देव "कृष्टपाक्य इति" सि० कौ०

**कृष्टि** पु०कृष–कर्त्तरि क्तिच् भावे क्तिन् वा। १पण्डिते अमरः २जनमात्रे निरु० "मानुषीणामेकः कृष्टीनामभवत् सहावा" ऋ० ६।१८।२ "विश्वानमत्त कृष्टयः" ऋ० ८।६।४। "कृष्टयः प्रजाः" भा०"कृष्टीनां विचर्षणिः"ऋ०६।४५।१६ ३कर्षणे स्त्री० त्रिका० ४आकर्षणे च

**कृष्टोप्त** त्रि० कृष्टे क्षेत्रे उप्तः। कृतकर्षणक्षेत्रे–कृतवपने ओषध्यादौ "वन्या ग्राम्याश्च ह तथा कृष्टोप्ताः पर्वताश्रयाः। अकण्टकाः कण्टकिनो गन्धरूपरसान्विताः" भा० आ० ९८अ०।

**कृष्ण** पु० कृष–नक्। भगवतोऽवतारभेदे वासुदेवे १देवकीनन्दने। "कृषिर्भूवाचकः शब्दः णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्णइत्यभिधीयते"इत्युक्ते २परब्रह्मणि, ३वेदव्यासे, ४अर्ज्जुने मध्यमपाण्डवे च। कृष्णवर्णत्वात् ५कोकिले, विश्वः ६काके, मेदि० करमर्द्दके (करमचा) ७वृक्षे, शब्दर० ८नीले, वर्णे ९तद्वति त्रि० अमरः १०कालागुरुणि राजनि०। ११अशुभकर्म्मणि च न०। कृष्णकर्म्मा अमरः १२द्रौपद्यां, १३नीलीवृक्षे, १४पिप्पल्यां, १५द्राक्षायां, स्त्री मेदि० १६नीलपुनर्नवायाम्, १७कृष्णजीरके, १८गाम्भार्य्यां १९कटुकायाम्, २०सारिवाभेदे २१राजसर्षपे, राजनि० २२पर्पट्यां, भावप्र०। २३काकोल्यां, २४सोमराज्याञ्च स्त्री टाप् जटा०कृष्णवर्णत्वाच्च तासां तथात्वम् २५घनभेदे न०कृष्णघनशब्दे विवृतिः। २६नीलाञ्जने, २७लौहे, २८मरिचे च पु० जटाधरः। तत्र भगवदवतारविशेषः "अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे। अष्टाविंशतिमे जातः कृष्णोऽसौ देव-

कौस्तुतः" ब्रह्मपु० । वसुदेवदेवक्यौ च कश्यपादिती । तौ च वरुणस्य गोहरणात् ब्रह्मणः शापेन गोपालत्वमापतुः । यथाह हरिवं० ५६अ०
"इत्यम्बुपतिना प्रोक्तो वरुणेनाहमच्युत ! । गवां कारणतत्त्वज्ञः कश्यपे शापमुत्सृजम् । येनांशेन हृता गावः कश्यपेन महात्मना । स तेनांशेन जगतीं गत्वा गोपत्वमेष्यति । या च सा सुरभिर्नाम अदितिश्च सुरारणी । उभे ते तस्य वै भार्य्ये सह तेनैव यास्यतः । ताभ्यां सह स गोपत्वे कश्यपो भुवि रंस्यते । तदस्य कश्यपस्यांशस्तेजसा कश्यपोपमः । वसुदेव इति ख्यातो गोषु तिष्ठति भूतले । गिरिर्गोवर्द्धनो नाम मथुरायास्त्वदूरतः । तत्रासौ गोष्वभिरतः कंसस्य करदायकः । तस्य भार्य्याद्वयञ्चैव अदितिः सुरभिस्तथा । देवकी रोहिणी चैव वसुदेवस्य धीमतः । तत्रावतर लोकानां भवाय मधुसूदन ! । जयाशीर्वचनैस्त्वेते वर्द्धयन्ति दिवौकसः । आत्मानमात्मना हि त्वमवतार्य्य महीतले । देवकीं रोहिणीञ्चैव गर्भाभ्यां परितोषय । तत्र त्वं शिशुरेवादौ गोपालकृतलक्षणः । वर्द्धयस्व महाबाहो ! पुरा त्रैविक्रमे यथा ॥ छादयित्वात्मनात्मानं मायया गोपरूपया । गोपकन्यासहस्राणि रमयंश्चर मेदिनीम् । गाश्च ते रक्षिता विष्णो ! वनानि परिधावतः । वनमालापरिक्षिप्तं धन्या द्रक्ष्यन्ति ते वपुः । विष्णो ! पद्मपलाशाक्ष ! गोपालवसतिङ्गते । बाले त्वयि महाबाहो ! लोको बालत्वमेष्यति । त्वद्भक्ताः पुण्डरीकाक्ष ! तव चित्तवशानुगाः । गोषु गोपा भविष्यन्ति सहायाः सततन्तव । वने चारयतो गास्तु गोष्ठेषु परिधावतः । मज्जतो यमुनायान्तु रतिमाप्स्यन्ति ते भृशम् । जीवितं वसुदेवस्य भविष्यति सुजीवितम् । यस्त्वया तात इत्युक्तः स पुत्र इति वक्ष्यति । अथ वा कस्य पुत्रत्वं गच्छेथाः कश्यपादृते । का वा धारयितुं शक्ता विष्णो ! त्वामदितिं विना । योगेनात्मसमुत्थेन गच्छ त्वं विजयाय वै" इति विष्णुं प्रति ब्रह्मोक्तिः । ताभ्यां तस्योत्पत्तिकथा च तत्र ६०अ० यथा "यदर्थं सप्त ते गर्भाः कंसेन विनिपातिताः । तन्तु गर्भं प्रयत्नेन ररक्षुस्तस्य रक्षिणः । स तत्र गर्भवसतौ वसत्यात्मेच्छया हरिः । समधत्त यशोदाऽपि गर्भं तदहरेव तु । विष्णोः शरीरजां निद्रां विष्णोर्निर्द्देशकारिणीम् । गर्भकाले त्वसंपूर्णे अष्टमे मासि ते स्त्रियौ । देवकी च यशोदा च सुषुवाते समं तदा । यामेव रजनीं विष्णुर्जज्ञे वृष्णिकुले प्रभुः । तामेव रजनीं कन्या यशोदातो व्यजायत । नन्दगोपस्य भार्य्यैका वसुदेवस्य चापरा । तुल्यकालं हि गर्भिण्यौ यशोदा देवकी तथा । देवक्यजनयद्विष्णुं यशोदा तान्तु कन्यकाम् । मुहूर्त्तेऽभिजिते प्राप्ते सार्द्धरात्रे विभूषिते । सागराः समकम्पन्त चेलुश्च धरणीधराः । जज्वलुश्चाग्नयः शान्ता जायमाने जनार्द्दने । शिवाः संप्रववुर्वाताः प्रशान्तमभवद्रजः । ज्योतींषि व्यत्यकाशन्त जायमाने जनार्द्दने । अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्व्वरी । मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दनः । अव्यक्तः शाश्वतः कृष्णो हरिर्नारायणः प्रभुः । जायते भगवांस्तत्र नयनैर्मोहयन् जगत्" । ततोऽनतिदूरे
"वसुदेवस्तु तं रात्रौ जातं पुत्त्रमधोक्षजम् । श्रीवत्सलक्षणं दृष्ट्वा युतं दिव्यैश्च लक्षणैः । उवाच वसुदेवस्तं रूपं संहर वै प्रभो ! । भीतोऽहं देव ! कंसस्य तस्मादेवं वदाम्यहम् । मम पुत्त्रा हतास्तेन तव ज्येष्ठाऽम्बुजेक्षण ! । वैशम्पायन उवाच । वसुदेववचः श्रुत्वा रूपं संहरदच्युतः । अनुज्ञाप्य पितृत्वेन नन्दगोपगृहं नय । वसुदेवस्तु संगृह्य दारकं क्षिप्रमेव च । यशोदाया गृहं रात्रौ विवेश सुतवत्सलः । यशोदायास्त्वविज्ञातस्तत्र निक्षिप्य दारकम् । गृहीत्वा दारिकां तांश्च देवकीशयने न्यसत् । परिवर्त्ते कृते ताभ्यां गर्भाभ्यां भयविक्लवः । वसुदेवः कृतार्थो वै निर्जगाम निवेशनात्" ।
यथा रूपेण तस्याविर्भावस्तथा रूपं भाग०१०३अ०वर्णितम्
"देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः । तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम् । श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् । महार्हवैदूर्य्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् । उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत । सविस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा । कृष्णावतारोत्सवसम्भ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम्" । इत्याविर्भावं वर्णयित्वा
"जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन ! । समुद्विजे भवद्धेतोः कंसादहमधीरधीः । उपसंहर विश्वात्मन्नदो रूपमलौकिकम् । शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् । विश्वं यदेतत् स्वतनौ निशान्ते यथावकाशं पुरुषः परो भवान् । बिभर्त्ति, सोऽयं मम गर्भजोऽभू

दहो न्टलोकस्य विडम्बनं तत्"। इत्थं देवक्याः प्रार्थने तां सान्त्वयित्वा तस्य प्राकृतरूपधारणं तत्रैवोक्तं यथा "इत्युक्त्वा तां हरिस्तूष्णीं भगवानात्ममायया। पित्रोः संपश्यतोरेव बभूव प्राकृतः शिशुः।"एवञ्च चतुर्भुजरूपेणोत्पत्तावपि प्राकृतरूपत्वोक्त्या तस्मादनन्तरं द्विभुजत्वमिति वैष्णवा मन्यन्ते। गीतायान्तु "तेनैव रूपेण चतुर्भुजेन सहस्रबाहो! भव विश्वमूर्त्ते!" इति भारतयुद्धकाले तस्य चतुर्भुजत्वकीर्त्तनात् चतुर्भुजत्वमेवासीत् शङ्खचक्राद्यायुधशून्यत्वेन प्राकृतत्वमिति तु युक्तमुत्पश्यामः। तस्येदानीं जन्मसमयोनिरूप्यते प्रागुक्तब्रह्मपु० कलौ जातत्वाभिधानात् कलियुगएवास्य प्रादुर्भावः। यदि च एकैकमन्वन्तरे बहवः कलयः सम्भवन्ति तथापि वर्त्तमानवैवस्वतमन्वन्तरे अष्टाविंशतिमे महायुगे यः कलिस्तत्रैवाभिर्भूतः। तत्रापि ज्योतिर्निबन्धे "उच्चस्थाः शशिभौमचान्द्रिशनयो लग्नं वृषोलाभगो जीवः सिंहतुलालिषु क्रमवशात् पूषोशनोराहवः। नैशोथः समयोऽष्टमी बुधदिनं ब्राह्मर्त्त्वमत्र क्षणे श्रीकृष्णाभिधमम्बुजेक्षणमभूदाविः परं ब्रह्म तत्" ग्रहाणां विशेषराश्यवस्थानकाले तस्याविर्भावोक्तेः तादृशसमयस्य च कलेः ६४७वर्षेषु गतेषु सम्भवः कलौ ततः पूर्व्वं तादृशसमयासम्भवात्। राजतरङ्गिण्यां च "शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले। कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः" इत्यनेन कलेः ६५३ वर्षेषु गतेषु तत्समकालीनयोः कुरुपाण्डवयोरुत्पत्तिरुक्ता अतस्तस्यापि तत्कालोत्पत्तिकत्वम्।

तदवतारचरितं च हरिवं० ४२अ० वर्णितं यथा

"अपरः केशवस्यायं प्रादुर्भावो महात्मनः। विख्यातो माथुरे कल्पे सर्व्वलोकहिताय वै। यत्र शाल्वञ्च मैन्दञ्च कंसं द्विविदमेव च। अरिष्टं वृषभं केशिं पूतनां दैत्यदारिकाम्। नागं कुवलयापीडं चानूरं मुष्टिकं तथा। दैत्यान्मानुषदेहस्थान् सूदयामास वीर्य्यवान्। छिन्नं बाहुसहस्रञ्च वाणस्याद्भुतकर्म्मणः। नरकश्च हतः सङ्ख्ये यवनश्च महाबलः। हृतानि च महीपानां सर्वरत्नानि तेजसा। दुराचाराश्च निहताः पार्थिवा ये महीतले"।

तस्य च कृष्णनामता गर्गेण तथा नामकरणात् यथाह भाग०१०।८।९ "आसन् वर्णास्त्रयोह्यस्य गृह्णतोऽनुयुगं तनूः। शुक्लोरक्तस्तथाऽपीत इदानीं कृष्णतां गतः" इति अपीतः श्याम इत्यर्थः भाग० ११अ० युगावतारे द्वापरे श्याममूर्त्तित्वोक्तेः यथा "कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः। कृष्णाजिनोपवीताक्षान् बिभ्रद्दण्डकमण्डलू। त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः। हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः। द्वापरे भगवान् श्यामः पीतवासा निजायुधः। श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः। नानातन्त्रविधानेन कलावपि यथा शृणु। कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदः। यज्ञैः संकीर्त्तनप्रायैर्यजन्तीह सुमेधसः"। अस्य तन्नामनिर्वचनं च भा० उ० ६९अ०

"कृषिर्भूवाचकः शब्दोणश्च निर्वृतिवाचकः। विष्णुस्तद्भावयोगाच्च कृष्णोभवति सात्वतः"

कल्पभेदेऽपि वैवस्वतमनोरष्टाविंशतिमे युगे युगे तस्याभिर्भावः अतएव छा०उ०कल्पभेदादिप्रायेणैव "तद्धैतत् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच" इत्युक्तम्। वस्तुतस्तस्य भगवदवतारात् भिन्नत्वमेव तस्य घोराङ्गिरसशिष्यत्वोक्तेः परमेश्वरस्य तथात्वासम्भवात्। अतस्तन्नाम्नि २९अपरस्मिन्नेव कृष्णशब्दस्य वृत्तिः। "कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते। भस्मीभवन्ति राजेन्द्र! महापातककोटयः" पुरा०। अर्ज्जुनस्य तन्नामनिर्वचनं भा० वि०४४अ०। "कृष्ण इत्येव दशमं नाम चक्रे पिता मम। कृष्णावदातस्य सतः प्रियत्वात् बालकस्य" च। व्यासस्य कार्ष्ण्यात्तथात्वम् "योव्यस्य वेदांश्चतुरस्तपसा भगवानृषिः। लोके व्यासत्वमापेदे कार्ष्ण्यात् कृष्णत्वमेव च" भा० आ०१०५अ०। कृष्णस्येदम् अण् कार्ष्ण तत्सम्बन्धिनि त्रि० "कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते" भा०आ०१अ०उक्ते। अपत्ये तु इञ्। कार्ष्णि तदपत्ये पुंस्त्री। चन्द्रह्रासकरप्रथमादिपञ्चदशकलाक्रियारूपे प्रतिपदादिदर्शान्तात्मकपञ्चदशतिथ्यात्मके ३०कालभेदे अर्द्धमासे"चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः" ति०त०षट्त्रि०। इन्दुकलाक्षयप्रकारः इन्दुशब्दे ९११पृ० उक्तः। तदुपलक्षिते ३१पितृयाने "शुक्लकृष्णे गती ह्येते जगतां शाश्वते मते। एकया यात्यनावृत्तिमन्यया वर्त्तते पुनः" गीता। पितृयाने च यथा कृष्णपक्षसंबन्धस्तथा आतिवाहिकशब्दे ६५१पृ० दर्शितम्। "धूमोरात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्" गीता। कृष्णपक्षाभिमानिनि पितृयानस्थे कर्म्मिणामातिवाहके ईश्वरनियोजिते ३२देवभेदे आतिवाहिकशब्दे

विवृतिः । २३द्यूताद्युपार्जिते धने न० कृष्णधनशब्दे अर्थशब्दे च विवृतिः । कृष्णस्य भावः ष्यञ् । कार्ष्ण्य तद्भावे न० "कार्ष्ण्यात् कृष्णत्वमेव च" भा०आ० १०५अ० । इमनिच् । कृष्णिमन् तद्भावे पु० "कृष्णिमानं दधानेन" । तल्, कृष्णता स्त्री, त्व कृष्णत्व, न०, कृष्णवर्ण । "कृष्णोऽपि शुद्धेरधिकं विधातृभिः" माघः । "अभिवृष्य मरुत्सस्यान् कृष्णमेघस्तिरोदधे" रघुः । २४नेत्रगतेऽशभेदे अक्षिशब्दे विवृतिः । २५कृष्णसारमृगे पुंस्त्री० "एषः कृष्णः स कीर्त्तितः" छन्दो०प० । कृष्णाजिनम्

**कृष्णक** पु० कृष्णप्रकारः स्थूला० कन् । १कृष्णसर्षपे अनुकम्पितं कृष्णाजिनम् कन् अजिनान्तत्वादुत्तरपदलोपः । अनुकम्पिते २कृष्णाजिने न०

**कृष्णकन्द** न० कृष्णः कन्दोऽस्य । रक्तोत्पले त्रिका०

**कृष्णकर्कटक** पुंस्त्री नित्यकर्म० । कर्कटभेदे सुश्रुतः । "कूर्मकुम्भीरकर्कटकृष्णकर्कटशिशुमारप्रभृतयः पादिनः" सुश्रुते पादिजलचरोक्तौ

**कृष्णकर्म्मन्** न० कर्म० । १हिंसादिनिषिद्धकर्म्मणि । व०व० । २तद्युक्ते पापाचारिणि त्रि० अमरः ३व्रणस्य कृष्णतासम्पादके क्रियाभेदे स च सुश्रुतेन दर्शितो यथा "अथ व्रणस्योपक्रमा भवन्तीत्युपक्रमे "दारुणकर्म क्षारकर्म्माग्निकर्म्म कृष्णकर्म्म पाण्डुकर्म्म" इत्याद्युक्त्वा । "दुरूढत्वात्तु शुक्लानां कृष्णकर्म्म हितं पुनः इति" तस्योपयोगो दर्शितः । कृष्णेऽर्पितं कृष्णार्पितं कर्म्म० । ४परमेश्वरार्पिते कर्म्मणि न०।ब०व०। ४तद्युक्ते त्रि० स्त्रियां वा ङाप् ।

**कृष्णकलि** पु० कृष्णा इव चूडाला कलिः कलिकाऽस्य । स्वनामख्याते पुष्पप्रधाने वृक्षे । [स्त्रियां जातित्वात् ङीष् ।

**कृष्णकाक** पुंस्त्री नित्यकर्म०। (दाँडकाक) काकभेदे हारा०

**कृष्णकापोती** स्त्री ओषधिभेदे सुश्रु० । "अथौषधीर्व्याख्यास्यामः" इत्युपक्रमे "श्वेतकापोती कृष्णकापोती" इत्यादिना विभज्य तदुपयोगप्रकारो दर्शितो यथा । "गोनसाजगरीकृष्णकापोतीनां सनखमुष्टि खण्डयित्वा क्षीरेण विपाच्याभिस्राव्य" इत्याद्युक्तं सुश्रु० तस्या लक्षणमोषधिशब्दे १५६३ पृ० उक्तम् ।

**कृष्णकाय** पुंस्त्री कृष्णःकायोऽस्य महिषे शब्दचि० । जातित्वेऽपि योपधत्वात् स्त्रियां न ङीष् किन्तु टाप् ।

**कृष्णकाष्ठ** न० कृष्णं काष्ठमस्य । कालागुरुणि राजनि०

**कृष्णकोहल** पु० कृष्णकस्य कृष्णकर्म्मणः ऊहं वितर्कं लाति ला-क । द्यूतकारिणि त्रिका० ।

**कृष्णगङ्गा** स्त्री नित्य० । कृष्णवेण्यायां नदीभेदे राजनि० ।

**कृष्णगतरोग** पु० नेत्रावयवभेदकृष्णगतरोगभेदे । तद्विज्ञानादि सुश्रुते उक्तं यथा ।

"अथातः कृष्णगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः । यत्सव्रणं शुक्रमथाव्रणं वा पाकात्ययश्चाप्यजका तथैव । चत्वार एतेऽभिहिताः विकाराः कृष्णाश्रयाः संग्रहतः पुरस्तात् । निमग्नरूपं हि भवेत्तु कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै । स्रावं स्रवेदुष्णमतीव रुक् च तत्सव्रणं शुक्रमुदाहरन्ति । दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न च संस्रवेद्धि । अवेदनावन्न च युग्मशुक्रं तत्सिद्धिमाप्नोति कदाचिदेव । सितं यदा भात्यसितप्रदेशे स्यन्दात्मकं नातिरुगश्रुयुक्तम् । विहायसीवाभ्रदलानुकारि तदव्रणं साध्यतमं वदन्ति । गम्भीरजातं बहलञ्च शुक्लं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम् । विच्छिन्नमध्यं पिशितावृतं वा चलं सिरासक्तमदृष्टिकृच्च । द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितञ्चापि विवर्ज्जनीयम् । उष्णाश्रुपातः पिडका च कृष्णे यस्मिन् भवेन्मुद्गनिभञ्च शुक्लम् । तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च यत्तित्तिरिपक्षतुल्यम् । संछाद्यते श्वेतनिभेन सर्वं दोषेण यस्यासितमण्डलन्तु । अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलाश्रुः । विदार्य्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत्"।

**कृष्णगति** पु० कृष्णा गतिर्गतिस्थानमस्य । कृष्णवर्त्मनि वह्नौ तस्य गमनस्थानस्य तद्दग्ध्वा कृष्णताप्राप्तेस्तस्य तथात्वम् । "ववृधे स तदा गर्भः कक्षे कृष्णगतिर्यथा" भा० आनु० ८५अ० ।

**कृष्णगन्ध** पु०कृष्ण उग्रो गन्धोऽस्य । शोभाञ्जनवृक्षे राजनि०

**कृष्णगर्भ** पु० कृष्णवर्णो गर्भोऽस्य । कट्फले राजनि० ।

**कृष्णगिरि** पु० नित्यकर्म० । नीलगिरौ

**कृष्णगोधा** कृष्णः गोधेव । कीटभेदे । "सूचीमुखः कृष्णगोधा यश्च काषायवासिकः" सुश्रु० कीटशब्दे विवृतिः ।

**कृष्णग्रीव** त्रि० कृष्णा ग्रीवा यस्य । कृष्णवर्णगलेऽजादौ "कृष्णग्रीव आग्नेयः" यजु० २४,२, "कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्नाः" इत्यादि अश्वमेधीयपशुविशेषोक्तौ । "श्वेतलोहितपर्य्यन्तः कृष्णग्रीवस्तडिद्द्युतः । त्रिवर्णपरिवेषाढ्यः सन्ध्यारागमथाव्रणोत्" हरि० १७५अ० । २नीलकण्ठे महादेवे पु० ।

**कृष्णचञ्चुक** पु० कृष्णा चञ्चूरस्य कप् । चणके राजनि० ।

**कृष्णचन्दन** न॰ कृष्णप्रियं चन्दनम् शा॰ त॰। हरिचन्दने श्वेतचन्दने शब्दचि॰ [माह्लादकत्वात्तथात्वम्।

**कृष्णचन्द्र** पु॰ कृष्णश्चन्द्र इव। वासुदेवे तस्य चन्द्रवत् भक्तानां

**कृष्णचर** पु॰ कृष्णस्य भूतपूर्व्वः चरट्। भूतपूर्व्वकृष्णसम्बन्धिनि गवादौ

**कृष्णचूड़ा** स्त्री कृष्णस्य चूड़ा इव चूड़ाऽस्य। स्वनामख्याते पुष्पवृक्षे। स्वार्थे क अत इत्त्वम्। तत्रार्थे राजनि॰।

**कृष्णचूडिका** स्त्री कृष्णा चूडाऽग्रं यस्याः कप् अत इत्त्वम्। गुञ्जायां राजनि॰। [राजनि॰।

**कृष्णचूर्ण** न॰ कृष्णं तद्वर्णं चूर्णम्। लौहमले (लोहार गु)

**कृष्णजटा** स्त्री कृष्णा जटा यस्याः। जटामांस्याम् रत्नमा॰

**कृष्णजीरक** पु॰ नित्यकर्म्म॰। कालवर्णजीरके (कालजीरे) अमरः "कटूष्णः कफशोथघ्नो जीर्णज्वरविनाशनः। चक्षुष्यो रुचिकृद्ग्राही कृष्णजीरक ईरितः" राजनि॰

**कृष्णतण्डुला** स्त्री कृष्णस्तण्डुलोऽस्याः। कर्णस्फोटलतायां राजनि॰। [शब्दमा॰।

**कृष्णताम्र** न॰ "यशोवर्णेन" मा॰ कर्म्म॰। गोशीर्षचन्दने

**कृष्णतार** पुंस्त्री कृष्णतारामृच्छति ऋ–अण् उप॰स॰। १कृष्णसारमृगे २हरिणमात्रे च राजनि॰। स्त्रियां जातित्वात् ङीप्।

**कृष्णत्रिवृता** स्त्री नित्य कर्म्म॰। (कालतेओडी) त्रिवृताभेदे जटा॰। [श्वरीटचे स्त्री राजनि॰ टाप्।

**कृष्णदन्त** त्रि॰ कृष्णा दन्तायस्य। १कालवर्णदन्तयुक्ते २का-

**कृष्णदेह** पुंस्त्री कृष्णोदेहोऽस्य।१भ्रमरे सारस्वतः स्त्रियांङीष् २कालवर्णदेहान्विते त्रि॰। कर्म्म॰। कालवर्णे ३देहे पु॰

**कृष्णद्वैपायन** पु॰ द्वीपे यमुनाद्वीपे भवः फक् द्वीपोऽयनं जन्मभूमिर्वास्य प्रज्ञाद्यण् कर्म्म॰। वेदव्यासे तस्य यमुनाद्वीपोत्पत्तिकथा भा॰आ॰ १०५ अ॰।

"धर्म्मयुक्तस्य धर्म्मार्थं पितुरासीत्तरी मम। सा कदाचिदहं तत्र गता प्रथमयौवना। अथ धर्मविदां श्रेष्ठः परमर्षिः पराशरः। आजगाम तरीं धीमांस्तरिष्यन् यमुनां नदीम्। स तार्य्यमाणो यमुनां मामुपेत्याब्रवीत्तदा। सान्त्वपूर्वं मुनिश्रेष्ठः कामार्त्तो मधुरं वचः। तमहं शापभीता च पितुर्भीता च भारत!। वरैरसुलभैरुक्ता न प्रत्याख्यातुमुत्सहे। अभिभूय स मां बालां तेजसा वशमानयत्। तमसा (कुज्झटिकया) लोकमावृत्य नौगतामेव भारत!। मत्स्यगन्धो महानासीत् पुरा मम जुगुप्सितः। तमपास्य शुभं गन्धमिमं प्रादात् स मे मुनिः। ततो मामाह स मुनिर्गर्भमुत्सृज्य मामकम्। द्वीपेऽस्या एव सरितः कन्यैव त्वं भविष्यसि। पाराशर्यो महायोगी स बभूव महानृषिः। कन्यापुत्रो मम पुरा द्वैपायन इति श्रुतः। योव्यस्य वेदांश्चतुरस्तपसा भगवानृषिः। लोके व्यासत्वमापेदे कार्ष्ण्यात् कृष्णत्वमेव च। सत्यवादी शमपरस्तपस्वी दग्धकिल्विषः। सद्योत्पन्नः स तु महान् सह पित्रा ततो गतः"। "श्रुत्वा तु सर्पसत्राय दीक्षितं जनमेजयम्। अभ्यगच्छदृषिर्विद्वान् कृष्णद्वैपायनस्तदा। जनयामास यं काली शक्तेः पुत्रात्पराशरात्। कन्यैव यमुनाद्वीपे पाण्डवानां पितामहम्। जातमात्रश्च यः सद्य इष्टं देहमवीवृधत्। वेदांश्चाधिजगे साङ्गान् सेतिहासान्महायशाः। यन्नैति तपसा कश्चिन्न वेदाध्ययनेन च। न व्रतैर्नोपवासैश्च न प्रसूत्या न मन्युना। विव्यासैकं चतुर्धा यो वेदं वेदविदांवरः। परावरज्ञो ब्रह्मर्षिः कविः सत्यव्रतः शुचिः। यः पाण्डुं धृतराष्ट्रञ्च विदुरं चाप्यजीजनत्। शान्तनोः सन्ततिं तन्वन् पुण्यकीर्त्तिर्महायशाः"।

"मातुर्नियोगाद्धर्मात्मा गाङ्गेयस्य च धीमतः। क्षेत्रे विचित्रवीर्य्यस्य कृष्णद्वैपायनः पुरा। त्रीनग्नीनिव कौरव्यान् जनयामास वीर्य्यवान्। उत्पाद्य धृतराष्ट्रञ्च पाण्डुं विदुरमेव च। जगाम तपसे धीमान् पुनरेवाश्रमं प्रति"। "कृष्णद्वैपायनाज्जज्ञे धृतराष्ट्रो जनेश्वरः। विचित्रवीर्य्यक्षेत्रे च पाण्डुश्चैव महाबलः। धर्मार्थकुशलो धीमान्मेधावी धूतकल्मषः। विदुरः शूद्रयोनौ तु जज्ञे द्वैपायनादपि"। भारते नानास्थाने

"कृष्णद्वैपायनं व्यासं विद्धि नारायणं विभुम्। कोह्यन्यः पुण्डरीकाक्षात् महाभारतकृत् भवेत्" विष्णुपु॰। तस्य विष्णोरवतारत्वकथा भाग॰ "ततः सप्तदशे जातः सत्यवत्यां पराशरात्। चक्रे वेदतरोः शाखा द्वापरे सोऽल्पमेधसः"। अवतारशब्दे ४२२पृ॰ विवृतिः। कृष्णेति द्वैपायनेति च तस्य नामद्वयम् कर्म्म॰ क्वचिदेकनामताऽपि। "द्वैपायनेन कृष्णेन नगरे वारणावते" भा॰स॰७६अ॰। "कार्ष्ण्यात् कृष्णत्वमेव च" "कार्ष्णं वेदमिमं श्रृणु" इति च व्यस्तप्रयोगः। "तमहमरागमतृष्णं कृष्णद्वैपायनं वन्दे" नैषीय॰। प्रागुक्तभारते च समस्तप्रयोगः

**कृष्णधत्तू(धूस्तू)र** पु॰ कर्म्म॰ (कनकधुतरा) वृक्षभेदे। "सितनीलकृष्णलोहितपीतप्रसूनाश्च सन्ति धत्तूराः। सामान्यगुणोपेतास्तेषु गुणाढ्यस्तु कृष्णकुसुमः स्यात्" राजनि॰। धत्तूरशब्दे तत्सामान्यगुणा भावप्र॰उक्तायथा

"धत्तूरो मदवर्णाग्निवातकृज्ज्वरकुष्ठनुत्। कषायो मधुरस्तिक्तो यूकालिक्षाविनाशकः। उष्णो गुरुर्व्रणश्लेष्म कण्डूकृमि विषापहः"।

**कृष्णधन** न० कर्म्म०। द्यूतादिभिरर्ज्जिते धने। अर्थशब्दे ३६७पृ०विवृतिः। "पार्श्विकद्यूतचौर्य्याप्ति प्रतिरूपकसाहसैः। छलेनोपार्ज्जितं यच्च तत्कृष्णं समुदाहृतम्" विष्णुसं०।"पार्श्विकः अपात्रस्य पात्रताख्यापनम्"प्रा० वि०

**कृष्णपक्ष** पु० कर्म्म०। चन्द्रस्य कलाह्रासकरे प्रतिपदादिदर्शान्ते पञ्चदशतिथ्यात्मके काले। तत्र (चान्द्रे) पक्षा वुभौ मासे शुक्लकृष्णौ क्रमेण हि। चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः। पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदश स्मृताः। दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके" ति०त० षट्‌त्रिंशन्मतम्। "रावणेन हृता सीता कृष्णपक्षे सिताष्टमी" महाना०

**कृष्णपदी** स्त्री कृष्णौ पादौ यस्याः कुम्भप० ङीप् अन्त्यलोपः पद्भावश्च। कालपादयुक्तायां स्त्रियाम्। [रत्नमा०

**कृष्णपर्णी** स्त्री कृष्णं पर्णमस्याः। कालतुलस्याम्।

**कृष्णपवि** पु० पूयते पू–शोधे इन् पविः पन्थाः "पन्था वातेन शुध्यति" इत्युक्तेः पथोवातभिन्नशुद्धिहेतुत्वनमेऽकरणात् तथात्वम् कृष्णः पन्था यस्य। यज्ञौ "पृथिव्यां कृष्णपविरोषधीभिर्ववक्षे" ऋ० ७,८,२। "कृष्णपविः कृष्णवर्त्माऽग्निः भा० [फलमस्य। करमर्द्दे रत्ना०

**कृष्णपाक** पु० पच्यते इति पाकः फलं कृष्णः कृष्णवर्णः पाकः

**कृष्णपाकफल** पु० कृष्णपाकरूपं फलमस्य। करमर्द्दे अमरः

**कृष्णपिङ्गल** त्रि०"वर्णोवर्णेन"पा० कर्म्म०। कालपिङ्गलवर्णयुक्ते "ऋतं सत्यं परं ब्रह्म पुरुषं कालपिङ्गलम्" रुद्रोपस्थानमन्त्रः। तस्यापत्यम् इञ्। कार्ष्णपिङ्गलि तदपत्ये बहुत्वे उपका०अन्यशब्देन द्वन्द्वे अद्वन्द्वे च वा तस्य लुक। कृष्णपिङ्गलास्तदपत्येषु। २दुर्गायां स्त्री० त्रिका०

**कृष्णपिण्डीतक** पु० नित्यकर्म्म०। कृष्णपिण्डीरभेदे रत्नमाला कृष्णपिण्डीरोऽप्यत्र।

**कृष्णपिप्पिली** स्त्री नित्यकर्म्म०। पिपीलिकाभेदे वृक्षारोहिपिपीलिकायां (काठपिपिड़ा) राजनि०

**कृष्णपुष्प** पु० कृष्णं पुष्पमस्य। १कृष्णधत्तूरे राजनि० २प्रियङ्गुवृक्षे स्त्री ङीप् शब्दच०

**कृष्णफल** पु०कृष्णं फलमस्य।१करमर्द्दे (करमचा)वृक्षे २सोमराज्यां स्त्री टाप् अमरटीकायांभरतः [हिरूपको०

**कृष्णफलपाक** पु० कृष्णः फलरूपः पाकोयस्य। करमर्द्दे

**कृष्ण(व)वलक्ष** पु० "वर्णोवर्णेन" पा०स०। १कालश्वेतवर्णे २तद्युक्ते त्रि० "अजिने पार्श्वसहिते कृष्णव(व)लक्षे आविके" कात्या० २२,४,१७, कृष्णधवलादयोऽप्यत्र।

**कृष्णभूम** पु० कृष्णा भूमिर्यत्र अच् समा०। कालवर्णमृत्तिकायुक्ते देशे हेम०

**कृष्णभूमिज** त्रि० कृष्णाया भूमेर्जायते जन–ड १कालवर्णमृत्तिकात उत्पन्ने २गोमूत्रिकातृणे स्त्री राजनि०

**कृष्णभेदा(दी)** स्त्री कृष्णोवर्णेन भेद। खण्डोऽस्याः ङीप् कटुकायां (कटकी) वृक्षे राजनि० वा गौरा० ङीष्। तत्रार्थे अमरः

**कृष्णमण्डल** न०कर्म्म०। "नेत्रावयवभेदे। नेत्रायामत्रिभागात् कृष्णमण्डलमुच्यते। कृष्णात् सप्तमभागं तु दृष्टिं दृष्टिविशारदाः" सुश्रु०। भीमसेनादिवत् उत्तरपदलोपे कृष्णमप्यत्र तदभिप्रायेणैव कृष्णादिति सुश्रुतोक्तिः

**कृष्णमल्लिका** स्त्री कृष्णा कृष्णप्रिया मल्लिकेव। कृष्णार्ज्जके (कालतुलसी) वृक्षे राजनि०।

**कृष्णमत्स्य** पुंस्त्री नित्यकर्म्म० (कालवस) इति ख्याते मत्स्यभेदे "पाठीनपाटलाराजीवर्म्मिगोमत्स्यकृष्णमत्स्य वागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयो नादेयाः"सुश्रुतः स्त्रियां ङीष्

**कृष्णमुख** त्रि० कृष्णं मुखमास्यमग्रं वा यस्य स्त्रियां वा ङीप् १कृष्णवर्णमुखयुक्ते २कालाग्रे च"स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा" गर्भलक्षणे सुश्रुतः ३वानरभेदे पुंस्त्री० स्त्रियां जातित्वात् ङीष्। ४दानवभेदे "सहस्रपात् कृष्णमुखः कृष्णश्चैव महोदरः" हरिवं० २४०अ० दानवोक्तौ। कृष्णवदनादयोऽपि पूर्व्वोक्तार्थे त्रि०

**कृष्णमुद्ग** पु० नित्यकर्म्म०। मुद्गभेदे तद्गुणादि भावप्र० उक्तं यथा

"मुद्गमसूरयोराध्मानकारित्वमन्यद्वैदलापेक्षया नतु सर्वथा एतयोरपि किञ्चिदाध्मानकारित्वात् तत्र मुद्गस्य गुणाः मुद्गोरूक्षो लघुर्ग्राही कफपित्तहरो हिमः। स्वादुरल्पानिलो नेत्र्यो ज्वरघ्नो वनजस्तथा। मुद्गो बहुविधः श्यामो हरितः पीतकस्तथा। श्वेतो रक्तश्च तेषान्तु पूर्वः पूर्वो लघुः स्मृतः। सुश्रुतेन पुनः प्रोक्तो हरितः प्रवरो गुणैः। चरकादिभिरप्युक्त एष एव गुणाधिकः"।

माधववासन्तसुराष्ट्रजेति राजनि०तस्य पर्यायदर्शनात् वसन्तकाले चैत्रमासे सुराष्ट्रदेशेऽस्योत्पत्तिरवसेया ततोदेशादानीयान्यत्र देशेऽपि तस्योत्पादना एवमन्यत्र कालेऽपि।

**कृष्णमूली** स्त्री०कृष्णं मूलमस्याः ङीप्। शारिवाभेदे। राजनि०

**कृष्णमृग** पुंस्त्री नित्यकर्म्म० । (कालसार) कृष्णसारमृगे "हत्वा कृष्णमृगांश्चैव मेध्यादन्यान् वनेचरान्" भा० व० ५१३अ० । स्त्रियां जातित्वात् ङीष् कृष्णहरिणा-दयोऽप्यत्र पुंस्त्री०

**कृष्णमृद्** स्त्री० कर्म्म० । १कृष्णवर्णे मृत्तिकाभेदे २कृष्णभूमौ हेमच० । "कृष्णमृत् क्षतदाहास्रप्रदरश्लेष्मपित्तनुत्" राजनि० कृष्णमृत्तिकाऽप्यत्र । ब० व० । ३तद्युक्ते त्रि० हेमच०

**कृष्णयजुर्वेद** पु० तैत्तिरीयरूपयजुर्वेदभेदे । तस्य कृष्णत्वञ्च तस्य पाठे प्रतिपदायुक्तपूर्व्वमायामाह्यत्वात् । यजुर्वेदस्य द्वौ भेदौ शुक्लकृष्णभेदात् तदवान्तरभेदाश्च चरणव्यूहभाष्ययो दर्शिताः यथा

"यजुर्वेदस्य षडशीतिर्भेदा भवन्ति । तत्र चरका नाम द्वादशभेदा भवन्ति "चरका आह्वरकाः कठाः प्राच्यकठाः कपिष्ठलकठाश्चारायणीया वार्त्तान्तरीयाः श्वेताश्वतरा वाराहा औपमन्यवश्छागलेया मैत्रायणीयाश्चेति । मैत्रायणीयानाम सप्तभेदा भवन्ति मानवामैत्रायणीया दुन्दुभाश्चैकेया हारिद्रवेयाः श्यामाःश्यामायनीयाश्चेति । तेषामध्ययनमष्टशतं यजुःसहस्राण्यधीत्य शाखापारो भवति तान्येव द्विगुणान्यधीत्य पदपारो भवति तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति षडङ्गान्यधीत्य षडङ्गविद्भवति शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि भवन्ति तत्र प्राच्य उदीच्यां, नैरृत्यां निरृत्यस्तत्र वाजसनेयानां पञ्चदश भेदा भवन्ति काण्वा माध्यन्दिनाः शापीयाः श्यामायनीयाः कापोलाः पौण्ड्रवत्सा आवटिकाः परमावटिकाः पाराशर्य्याः वैधेया वैनेया औधेया गालवा वैजवाः कात्यायनीयाश्चेति प्रतिपदमनुपदं छन्दो भाषा धर्म्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि उपज्योतिषं साङ्गलक्षणं प्रतिज्ञानुवाक्यः परिसंख्या चरणव्यूहः श्राद्धकल्पः प्रवराध्यायश्च शास्त्रक्रतुसंख्यानुगमयज्ञपार्श्वानि हौत्रिकप्रसवोक्थानि कूर्मलक्षणम् इत्यष्टादश परिशिष्टानि भवन्ति । द्वे सहस्रे शते न्यूने मन्त्रे वाजसनेयके । इत्युक्तमेतत्सकलं स शुक्रियश्च कीर्त्तितम् । ग्रन्थाश्च परिसंख्याता ब्राह्मणञ्च चतुर्गुणम् । तत्र तैत्तिरीयकानाम द्विभेदा भवन्ति । औखेयाः काण्डिकेयाश्चेति । काण्डिकेयानाम पञ्चभेदा भवन्ति । आपस्तम्बी बौधायनी सत्याषाढी हिरण्यकेशी औधेयी चेति तत्र कठानां तु प्रशाखचतुश्चत्वारिंशदुपग्रन्थाः मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते । यजुर्वेदः स विज्ञेयोऽन्ये शाखान्तराः स्मृताः । तेषामध्ययनं प्रवचनीयाश्चेति" सू० । विवृतमेतद्भाष्ये यथा "यजुर्वेदस्य षडशीतिर्भेदा भवन्ति" अत्र शाखाभेदो ग्राह्यः । षडुत्तराशीतिर्भेदा इत्यर्थः । "तत्रचरकानाम द्वादशभेदा भवन्ति" इतिस्पष्टार्थः । ते के भेदा इत्याह चरका इत्यादि मैत्रायणीयानाम सप्तभेदा भवन्ति । मैत्रायणीया मानवा इत्यादि । मैत्रायणीयशाखागण इत्यर्थः । मैत्रायणीयस्तु वाजसनीयवेदाध्यायी । मानवं कल्पसूत्रम् । तेषामध्ययनमष्टोत्तरशतं यजुःसहस्राण्यधीत्य शाखापारो भवति तेषामध्ययने द्विचत्वारिंशदध्यायाः अष्टशताधिकसहस्रमन्त्रा इत्यर्थः । तान्येव द्विगुणान्यधीत्य पदपारोभवति द्विवारपठनात्पदपारायणफलं भवति इत्यर्थः । तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति त्रिवारपठनात् क्रमपारायणफलं भवतीत्यर्थः । पदक्रमाध्ययनफलं भवतीत्यर्थः । तत्र प्राच्य उदीच्यां, नैरृत्यां निरृत्यस्तत्र वाजसनेयानां पञ्चदश भेदा भवन्ति प्राच्य उदीच्यनैरृत्य इति तिसृषु दिशासु । वाजसनेयवेदोत्पत्तिमग्रे वक्ष्यामः इतरदेशेषु वेदशाखयोर्विभाग उच्यते तच्च महार्णवे उक्तम् "पृथिव्यामध्यरेखायां नर्मदा परिकीर्त्तिता । दक्षिणोत्तरयोर्भागे शाखावेदश्च उच्यते । नर्मदादक्षिणे भागे आपस्तम्बाश्वलायनी । राणायनी पिप्पला च यज्ञकन्याविभागिनः । माध्यन्दिनी शाङ्खायनी कौथुमी शौनकी तथा नर्मदोत्तरभागे च यज्ञकन्याविभागिनः । तुङ्गकृष्णा तथा गोदा सह्याद्रिशिखरावधि । आआन्ध्रदेशपर्य्यन्तम् बह्वृचश्चाश्वलायनी । उत्तरे गुर्जरे देशे वेदो बह्वृच ईरितः । कौषीतकिब्राह्मणं च शाखा शाङ्खायनी स्थिता । आन्ध्रादिदक्षिणाग्नेय्यां गोदासागरकावधि । यजुर्वेदस्य तैत्तिर्य्या आपस्तम्बी प्रतिष्ठिता । सह्याद्रिपर्वतादाराद्दिशाम् नैरृत्यसागरात् । हिरण्यकेशी शाखा च पर्शुरामस्य सन्निधौ । मयूरपर्वताच्चैव यावद्गुर्जरदेशतः । व्याप्ता वायव्यदेशात्तु मैत्रायणी प्रतिष्ठिता । अङ्गवङ्गकलिङ्गाश्च कानीनो गुर्जरस्तथा । वाजसनेयी शाखा च माध्यन्दिनी प्रतिष्ठिता । ऋषिणा याज्ञवल्क्येन सर्वदेशेषु विस्तृता । वाजसनेयवेदस्य प्रथमा काण्वसंज्ञकाः" इति व्यासशिष्योवैशम्पायनोनिगदाख्ययजुर्वेदम्पठित्वा शिष्यान् चकार । तन्नाह भागवते१२।६अ० "वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् । यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् । याज्ञवल्क्यश्च तच्छिष्य आहाहोभगवन् ! कियत् । चरितेनाल्पसाराणां च-

रिष्योऽहं सुदुश्वरम्। इत्युक्तो गुरुरप्याह कुपितोयाह्यलं त्वया। विप्रावमन्त्रा शिष्येण मदधीतं त्यजस्त्विति॥ देवरातः सुतः सोऽपि छर्द्दित्वा यजुषांगणम्। ततोऽन्यतोऽथ मुनयो ददृशुस्तान् यजुर्गणान्। यजूंषि तित्तिरीभूत्वा तल्लोलुपतयाऽऽददुः। तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः”। याज्ञवल्क्यः “ओँ नमो भगवते” इत्यादिना सूर्य्यं तुष्टाव। “एवमुक्तः स भगवान् वाजिरूपधरो हरिः। यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः”। (अजीर्णभुक्तो उच्छिष्टवान्तो यातयामशब्द इति निघण्टुः तदन्यत् अयातयामम्) “यजुर्भिरकरोच्छाखा दश पञ्च शतैर्विभुः। जगृहुर्वाजसन्यस्ताः काण्वा माध्यन्दिनादयः” इत्यादि ग्रन्थपर्य्यालोचनया यजुर्वेदत्यागानन्तरं देवरातः सुतेनाब्राह्मणत्वभिया प्रसादितः सूर्य्यो वाजिरूपेण तस्मै दत्ता वाजेभ्यः केसरेभ्यः वाजेन वेगेन वा संन्यस्ताः शाखा वाजसनेयसंज्ञा। तस्य शाखारण्डत्वपरिहारार्थं चातुर्वेद्यत्वसंरक्षणार्थं च वाजिरूपेण सूर्य्येणायातयामानि यानि यजूंषि मुनये दत्तानि तैर्यजुर्भिरर्पितैः स मुनिस्ताः वाजसन्यः पञ्चदश शाखा अकरोत्। तस्माच्च मुनेः काण्वमाध्यन्दिनादयः अध्ययनं चक्रुः। ते पञ्चदश भवन्ति तथा च विष्णुपुराणे यजुर्वेदस्य विस्तारविभागमाह “यजुर्वेदतरोः शाखाः सप्तविंशन्महामुने!। वैशम्पायननामासौ व्यासशिष्यश्चकार वै। शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात्। याज्ञवल्क्यस्तु तस्याभूद्ब्रह्मरातः सुतो द्विजः। शिष्यः परमधर्म्मज्ञो गुरुवृत्तिरतः सदा। ऋषिर्यश्च महामेरोःसमाजेनागमिष्यति। तस्य वै सप्त रात्रन्तु ब्रह्महत्या भविष्यति। पूर्व्वमेवं मुनिगणैः समयोऽयं कृतो द्विज!। वैशम्पायन एकस्तु तं व्यतिक्रान्तवांस्तदा। स्वस्रीयं तं च हंसोऽथ पदहत्तमघातयत्। शिष्यानाह च भो शिष्या ब्रह्महत्यापरं व्रतम्। चरध्वं मत्कृते सर्व्वे न विचार्य्यमिदन्तथा। अथाह याज्ञवल्क्यस्तं किमेतैर्बहुभिर्द्विजैः। क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम्। ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामुनिम्। मुच्यतां यत् त्वयाऽधीतं यतो विप्रावमानकः। निस्तेजसोवदस्येतान् यस्त्वं ब्राह्मणपुङ्गवान्। तेन शिष्येण नार्थोऽस्ति ममाज्ञाभङ्गकारिणा। याज्ञवल्क्यस्ततः प्राह भक्त्यै तत्ते मयोदितम्। ममाप्यलन्त्वया त्वत्तोयदधीतं द्विज! त्विदम्। श्रीपराशर उवाच इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंष्यथ। छर्द्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः। यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज!। जगृहुस्तित्तिरीभूतास्तित्तिर्य्यास्तु च ते ततः। ब्रह्महत्याव्रतं चीर्णं गुरुणा नोदितैस्तु यैः। चरकाध्वर्य्यवस्ते तु चरणान्मुनिसत्तम!। याज्ञवल्क्योऽपि मैत्रेय! प्राणायामपरायणः। तुष्टाव प्रयतः सूर्य्यं यजूंष्यभिलषं स्ततः। याज्ञवल्क्य उवाच। नमः सवित्रे द्वाराय मुक्तेरमिततेजसे। ऋग्यजुःसामरूपाय त्रयीधामात्मने नमः” इत्यादि। पराशर उवाच। इत्येवमादिभिस्तेन स्तूयमानः सवै रविः। वाजिरूपधरः प्राह प्रीयमाणोऽभिवाञ्छितम्। याज्ञवल्क्यस्तथा प्राह प्रणिपत्य दिवाकरम्। यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ। पराशर उवाच। एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः। अयातयामसंज्ञानि यानि नो वेत्ति तद्गुरुः। यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम!। वाजिनस्ते समाख्याता सूर्य्याश्वोद्भवयोगतः। शाखाभेदास्तु तेषां वै दश पञ्च च वाजिनाम् काण्वाद्यास्तु महाभाग! याज्ञवल्क्यप्रवर्त्तिताः”

काण्वा माध्यन्दिनाः शापेया स्थामायनीयाः कापोलाः पौण्ड्रवत्साःआवटिकाःपरमावटिकाः पाराशर्य्या वैधेया वैनेया औधेया गालवा वैजपाः कात्यायनीयाश्चेति पञ्चदश शाखा इत्यर्थः। प्रतिपदमनुपदम् प्रतिपदे अनुपदम् अल्पपदं कर्त्तव्यमित्यर्थः। छन्दः छन्दोरत्नाकरादि। भाषा शब्दपरिभाषा, धर्म्मः धर्म्मशास्त्रं मन्वादि, मीमांसा प्रसिद्धा न्यायः तर्कः इति षडुपाङ्गानि। उपज्योतिषं ज्योतिःशास्त्रम् साङ्गलक्षणं सामुद्रिकादि प्रतिज्ञानुवाक्यः अनेन वाक्येन अयं सिद्धान्तः। परिसंख्या भूगोलादि। अयं रणव्यूहः। श्राद्धकल्पः प्रवराध्यायश्च शास्त्रं क्रतुसंस्थाकल्पादिषु ज्ञातव्यम्। अनुगमयज्ञा यज्ञक्रियापार्श्वानि हौत्रिकभेदाः। हौत्रं यज्ञक्रियाः। पाशवोक्थानि पशुयज्ञाः कूर्म्मलक्षणं यज्ञे प्रसिद्धम्। इति अष्टादश परिशिष्टानि भवन्ति। द्वे सहस्रे शतन्यूने मन्त्रे वाजसनेयके इत्युक्तेः सकलं सशुक्रियं ग्रन्थाश्च परिसंख्यात मित्यर्थः। वाजसनेयवेदे च नवशतात्रिकसहस्रमन्त्रा इत्यर्थः। एतत्सकलं सशुक्रियं मध्याह्ने शुक्लवर्णेन सूर्य्येण दत्तं सशुक्रियसंज्ञं परिसंख्यातमित्यर्थः। वेदोपक्रमणे चतुर्दशीयुक्तपूर्णिमापहरणात् शुक्लयजुः प्रथितमित्यर्थः। प्रतिपदायुक्तपूर्णिमापहरणात् कृष्णयजुरिति च। ब्राह्मणञ्च चतु-

र्गुणं ब्राह्मणमित्यर्थः,यजुर्वेदतरोरासन् शाखा ह्येकोत्तरं शतम्। तत्रापि च शिवाकारा दश पञ्च च वाजिनाम्। "तत्रापि प्रथमा मुख्या शाखेयं काण्वसंज्ञिका" इति ग्रन्थान्तरे। तैत्तिरीयानाम द्विभेदा भवन्ति औख्याः काण्डिकेयाश्चेति। काण्डिकेयानां पञ्च भेदा भवन्ति आपस्तम्बी बौधायनी सत्याषाढी हिरण्यकेशी औधेयी चेति तेषामध्ययनं परिमाणम्। "काण्डास्तु सप्त विज्ञेया प्रश्नाश्च चतुरुत्तराः। चत्वारिंशत्तु विज्ञेया अनुवाकाः शतानि षट्। एकपञ्चाशदधिका संख्या पञ्चाशयोच्यते। द्विसहस्रञ्चैकशतमष्टानवतिकाधिकम्। लक्षैकन्तु द्विनवतिः सहस्राणि प्रकीर्त्तितम्। पदानि नवतिश्चैव तथाक्षरन्तदुच्यते। लक्षद्वयं त्रिपञ्चाशत् सहस्राणि शताष्टकम्। अष्टषष्ट्यधिकं चैव यजुर्वेदप्रमाणकम्"। काण्डाः ७। प्रश्नाः १४४।अनुवाकाः६५१।पञ्चाशी २१९८।पदानि१९२०९०।अक्षरसंख्या २५३८६८।इति शाखावाक्यान्ययुतानि सहस्राणि नवानि च। चतुःशतान्यशीतिश्च अष्टौ वाक्यानि गण्यते तत्र इति ब्राह्मणे वाक्यसंख्या१९४८०तैत्तिरीयनिमदवेदाख्यसंख्या उक्ता इत्यर्थः। तत्र कठानां तु प्रगाथचतुश्चत्वारिंशदुपग्रन्थाः। मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते। यजुर्वेदः स विज्ञेयो अन्ये शाखान्तराः स्मृताः" चतुश्चत्वारिंशदुपग्रन्थाः मन्त्रब्राह्मणयोर्वेदस्य अध्याय समीपे उक्ताः चतुश्चत्वारिंशत्। मन्त्रश्च ब्राह्मणं च मन्त्रब्राह्मणे तयोः मन्त्रब्राह्मणयोः तयोश्च वेद इति संज्ञा तदुक्तं "मन्त्रब्राह्मणयोर्वेद" इति नामधेयमित्यृक्शाखीयप्रातिशाख्याभाष्यकारेण, आपस्तम्बसामान्यसूत्रभाष्यकारकपर्दिना धूर्त्तस्वामिना च। तथाच सति मन्त्रोनाम संहितामन्त्रस्तादृङ्मन्त्ररूपसंहितायाः मध्ये एव तदंपे ब्राह्मणत्वेन पठनमित्युभयथापि संहितात्वेन पदत्वेन क्रमत्वेन च पठनं त्रिगुणपठनमिति समन्त्रब्राह्मणयो र्वेदस्त्रिगुणो यत्र पठ्यते इत्यर्थः एतादृशं पठनं शाखाया अध्ययनं स यजुर्वेदस्तच्च तैत्तिरीयशाखायामेवास्ति" भाष्यम्। अयमत्र शाखाभेदसंख्या-निर्णयः। चरकादिकानां द्वादशानां प्रत्येकं मानयादि सप्तभेदैर्गुणितानां ८४संख्या सम्पद्यते तैत्तिरीयस्य द्वौ भेदौ एवं षडशीतिसंख्या वाजसनेयसंख्या पञ्चदशेति एकोत्तरशतसंख्या। अतएवमुक्तिकोपनिषदि "एकोत्तर शतं चैव यजुःशाखाः प्रकीर्त्तिताः" इत्युक्तम् दर्शितविष्णुपु० सप्तविंशतिभेदोक्तिः चरकादिद्वादशभेदाः काण्वादि पञ्चदशभेदाश्चेति मुख्यभेदाभिप्रायेणेति न विरोधः। कृष्णयजुर्वेदगतोपनिषदश्च उपनिषच्छब्दे दर्शिताः

**कृष्णयाम** पु० कृष्णोयामोवर्त्म यस्य। वह्नौ। "इश्वदनं कृष्णयामम्" ऋ० ६,६,१, "कृष्णयामं कृष्णवर्त्मानम्" भा०

**कृष्णरक्त** पु० वर्णोवर्णेनेति" पा० स०। १काललोहितवर्णे (वेगुनीरङ्) २तद्वति त्रि०। [राजनि०

**कृष्णरुहा** स्त्री कृष्णा सती रोहति रुह—क। जतुकायां

**कृष्णरूप्य** त्रि०कृष्णस्य भूतपूर्वःरूप्य। तदीयभूतपूर्वसम्बन्धिनि। कृष्णाया इत्यर्थे न पुंवत्। कृष्णारूप्य इति भेदः

**कृष्णल** पु०कृष्णोवर्णोऽस्त्यस्याग्रे फले सिध्मा० लच्। गुञ्जावृक्षे शब्दचि०तत्रार्थे स्त्री अमरः२तत्फले न०। "द्वे कृष्णले पलष्टते विज्ञेयोमध्यमोयवः" मनुः। "त्रियवं त्वेककृष्णलम्"। "स दण्ड्यः कृष्णलान्यष्टौ" मनुः। "जालसूर्य्यमरीचिस्थं त्रसरेणु रजः स्मृतम्। तेऽष्टौ लिक्षा,तु तास्तिस्रोराजसर्षप उच्यते। गौरस्तु ते त्रयः, षट् ते यवोमध्यस्तु, ते त्रयः। कृष्णलः,पञ्च ते माषः" इति याज्ञ०परिभाषिते ३परिमाणभेदे पु०स्वार्थे क। तत्रार्थे "पञ्चकृष्णलकोमाषः" मनुः अत्र पञ्च कृष्णलाःपरिमाणमजस्येति कन्। इति तु न्याय्यम्

**कृष्णलवण** न० नित्यकर्म्म०। सौवर्चललवणे (कालालोन) राजनि० काचलवणशब्दे १८५६पृ० विवृतिः।

**कृष्णलोह** नित्यक०। अयस्कान्ते लौहभेदे राजनि०।

**कृष्णलोहित** पु०कृष्णः सन् लोहितः "वर्णोवर्णेनेति" पा०स०। १रक्तकालमिश्रितवर्णे सूमले (वेगुनीरङ)। २तद्वति त्रि० अमरः।

**कृष्णवक्त्र** पुंस्त्री०कृष्णं वक्त्रमस्य। वानरे हलायुधः संयोगोपधत्वात् जातित्वेऽपि स्त्रियां टाप्। कृष्णवदनादयोऽप्यत्र

**कृष्णवर्ण** पु० कृष्णो वर्णोऽस्य। १राहौ ग्रहे। राहोः छायारूपत्वेन तमोरूपत्वात् तथात्वारोपात् तथात्वम्। कृष्णः अशुक्लो वर्णः। २शूद्रे पु०। कर्म्म०। काले वर्णे पु० कृष्णवर्णवति त्रि०। "कृष्णवर्णं त्विषाऽकृष्णम्" भागव० ११स्क०।

**कृष्णवर्त्मन्** पु० कृष्णं वर्त्म धूमप्रसाररूपगतिस्थानमस्य। १वह्नौ, "हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते" मनुः पातयामास विहगान् प्रदीप्ते कृष्णवर्त्मनि" भा० आ० २२६अ०। २चित्रकवृक्षे अमरः ३राहौ ग्रहे, मेदि०। कृष्णमपवित्रं वर्त्माचरणं यस्य। ४दुष्टकर्म्मकारके त्रि० अमरः कृष्णएव वर्त्म। ५वासुदेवरूपगतौ। "कृष्णवर्त्मनि गुणान् गणयन्ती जीवनेषु लघयन्त्यनुरागम्। श्यामता

वत जरेव हिमानी सेव्यतां सुरतरङ्गिणी” उद्भटः। कृष्णवर्त्मन्यादयोऽपि वह्नौ। “पावकं कृष्णवर्त्मनिम्” ऋ० ८,२३,१६, चिवकवृक्षे च

**कृष्णवर्वर** पु० नि०कर्म्म०। वर्वरभेदे (कालतुलसी) राजनि०।

**कृष्णवल्लिका** स्त्री कर्म्म०। जतुकालतायाम् राजनि०

**कृष्णवल्ली** स्त्री कर्म्म०। १कृष्णतुलस्याम्, २कर्कव्याञ्च शब्दच० ३शारिवाभेदे राजनि०। [ नि०स्त्रियां जातित्वात् ङीष्

**कृष्णवानर** पुंस्त्री नित्यकर्म्म०। वानरभेदे गोलाङ्गूले राज-

**कृष्णविषाणा** स्त्री कृष्णस्य मृगस्य विषाणा विषाणयुक्ता। यजमानकण्डूयनसाधनद्रव्यभेदे। तत्स्वरूपादि कात्या० ७,३,उक्तं यथा “कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीत”२६सू० “कृष्णस्य मृगस्य विषाणयुक्तां बध्नीत आत्मनेपदाद्यजमानः, कीदृशीं त्रिवलिं पन्थित्रययुक्तां पञ्चवलिं पञ्चग्रन्थियुक्तां वा। सा च प्रादेशमात्री परिशिष्ट उक्ता तस्मादक्षिणावर्त्तेन बन्धनमाम्नातमापस्तम्बेन “त्रिवलि: पञ्चवलिर्वा दक्षिणाद्दङ्गवति सव्यादृदिव्येके इति”कर्कः। “तया कण्डूयनम्” सू०३० “दीक्षितेन कर्त्तव्यम्” कर्कः। कृष्णोमृगः विषाणं योनिर्यस्य। दीक्षितधार्य्ये मृगचर्म्मभेदे स्त्री। यज्ञो हि कृष्णः (कृष्णमृगः) स यज्ञस्तत्कृष्णाजिनं या सा योनि: सा कृष्णविषाणा” शत० ब्रा० ३,२,१,२८,

**कृष्णवीज** पु० कृष्णं वीजमस्य। १रक्तशिग्रौ, जटाधरः २कालिङ्गे वृक्षे न० राजनि०।

**कृष्णवृन्ता** स्त्री कृष्णं वृन्तमस्याः १पाटलावृक्षे मेदि० २माषपर्ण्याम् अमरः। संज्ञायां कन् कापि अत इत्त्वम्। कृष्णवृन्तिका गाम्भार्य्याम्। रत्नमा०

**कृष्णवेणा** स्त्री भारतप्रसिद्धे नदीभेदरूपे तीर्थभेदे। “ततो-देवहृदेऽरण्ये कृष्णवेणाजलोद्भवे। जातिस्मरहृदे स्नात्वा भवेज्जातिस्मरोनरः” भा० व० ८५अ०। “सुवेणां कृष्ण-वेणाञ्च इरामाञ्च महारसाम्” भा० व० १८८ अ०। कृष्णवेण्वाप्यत्र “गोदावरी कृष्णवेण्वा कावेरी च सरि-द्वरा” भा० स० ६अ०

**कृष्णव्रीहि** पु० नित्यकर्म्म०। (केलेधान) व्रीहिभेदे। कृष्णव्रीहिशालासुखेत्यादिना व्रीहीन् विभज्य सुश्रुते तद्गुणा उक्ता यथा “कृष्णव्रीहिर्वरस्तेषां कषाया-नुरसो लघुः”। “नैर्ऋतः परिवृत्त्यै कृष्णव्रीहीणां नखनिर्भिन्नानाम्” कात्या० १५,३,१४,

**कृष्णश** न० कृष्णश+पृषो०। स्वयमकृष्णे कृष्णदशायुक्ते वा-

सषि। “वासः कृष्णशं कद्र” “अकृष्णं कृष्णदशं वा तदाख्यम्” कात्या०२२, ४,१२,१३,। “स्वयमकृष्णं सत् कृष्णदशं वासः तदाख्यं कृष्णशमित्यर्थः” सं० व्या०

**कृष्णशकुनि** पुंस्त्री नित्यकर्म्म०। काके। “स्त्रीशूद्रश्वकृष्णशकुनिशुनकादर्शनम्” पार० सू०।

**कृष्णशा(सा)र** पुंस्त्री कृष्णश्चासौ शारः (सार:) शवलश्च “वर्णो वर्णेनेति पा०स०। (कालसार)मृगभेदे रमानाथः “कृष्ण(शा)सारस्तु चरति मृगोयत्र स्वभावतः” मनुः। “कृष्ण(शा)सारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके” शकु०। स्त्रियां ङीष्

**कृष्णशालि** पु० कर्म्म०। (केलेधान) धान्यभेदे। राजनि०। “कृष्णशालिस्त्रिदोषघ्नोमधुरो दृष्टिकृद्धितः। पुष्टिवीर्य्य-वर्द्धनश्च वर्णकान्तिवलप्रदः” राजनि०

**कृष्णशिग्रु** पु०कर्म्म०। कृष्णशोभाञ्जने(कालसजना)। राजनि०

**कृष्णशिम्बिका** स्त्री० कर्म्म०। काकाण्ड्याम्। (कालशिम्) रत्नमा० [ स्त्रियां स्वाङ्गत्वात् ङीष्।

**कृष्णशृङ्ग** पुंस्त्री० कृष्णं शृङ्गमस्य। १महिषे हेमच०।

**कृष्णसख** पु० कृष्णस्य सखा टच् समा०। १अर्ज्जुने तन्नामके २अर्ज्जुनवृक्षे च शब्दचि०। वासुदेवतुल्यवर्णत्वात् ३कालजीरके स्त्री शब्दच०

**कृष्णसमुद्भवा** स्त्री कृष्णा सती समुद्भवति सम्+भू—अच्। कृष्णगङ्गायाम्। कृष्णःसमुद्भवोयस्य कृष्णपुत्रे २कामदेवादौ

**कृष्णसर्प** पुंस्त्री० नित्यक०। सुश्रुतोक्ते चक्रकरे कालरूपे (केउटा) सर्पभेदे अहिशब्दे विवृतिः“आशीविषैः कृष्ण-सर्पैः सुप्तं चैनमदंशयत्” भा० आ० ६१अ० स्त्रियां जातित्वेऽपि संयोगोपधत्वात् टाप्। २ओषधिभेदे स्त्री “वसन्ते कृष्णसर्पाख्या गोनसी प्राप्यते क्वचित्” सुश्रु०

**कृष्णसर्षप** पुंस्त्री० नित्यकर्म्म०। कालसर्षपे (राइसरिषा) राजनि०।

**कृष्णसार** पु०कृष्णशारवद् व्युत्पत्त्यादि। १मृगभेदे“एणः कृष्णः प्रकीर्त्तितः इति” भावप्र० मृगभेदानभिधाय “जाङ्गलाः प्रायशः सर्व्वे पित्तश्लेष्मकरा: स्मृताः। किञ्चिद्वातकरा श्चापि लघवोवलवर्द्धनाः” इति तन्मांसगुणाउक्ता “एणः कृष्णमृगः स्मृतः” छन्दो०प०। स्त्रियां ङीष्। कृष्णःसारोऽस्य। २स्नुहीवृक्षे ३शिंशपावृक्षे च मेदि०। ४खदिरवृक्षे शब्दरत्ना०। शिंशपावृक्षे स्त्री शब्दचि०

**कृष्णसारङ्ग** पु० कर्म्म०। मृगभेदे “कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गम्” कात्या० श्रौ० ७।६।२१। “कृष्णःश्यामः

सारङ्गः सारङ्गवर्णानुविद्धः” कर्कः “कृष्णसारङ्गः स्यादितराङ्गर्यदि कृष्णसारङ्गं न विन्देत अथो अपि लोहितसारङ्गम्” शत० ब्रा० ३।३।४।१२ “कृष्णसारङ्गः ग्रामशबलः” भा०

**कृष्णसारथि** पु० कृष्णः सारथिरस्य। १अर्जुने मध्यमपाण्डवे यथा च तस्य तत्सारथित्वं तथा भा०उ०६अ०वर्णितं यथा “अर्ज्जुन उवाच। भवान् समर्थस्तान् सर्व्वान्निहन्तुं नात्र संशयः। निहन्तुमहमप्येकः समर्थः पुरुषर्षभ!। भवांस्तु कीर्त्तिमाल्लोके तद्यशस्त्वां गमिष्यति। यशसा चाहमप्यर्थी तस्मादसि मया वृतः। सारथ्यन्तु त्वया कार्य्यमिति मे मानसं सदा। चिररात्रेप्सितं कामं तद्भवान् कर्त्तुमर्हति। वासुदेव उवाच। उपपन्नमिदं पार्थ! यत् स्पर्द्धसि मया सह। सारथ्यं ते करिष्यामि कामः सम्पद्यतां तव”। तन्नामके२अर्जुनवृक्षे च राजनि०

**कृष्णसुन्दर** त्रि०कृष्णवर्णोऽपि सुन्दरः। श्रीकृष्णे। तस्यापत्यम् इञ्। कार्ष्णसुन्दरि तदपत्ये पुंस्त्री० स्त्रियां ङीप् बहुत्वे तु तिककितवादित्वात् द्वन्द्वे अद्वन्द्वे च इञो लुक्।

**कृष्णस्कन्ध** पु० कृष्णः स्कन्धोऽस्य। तमालवृक्षे भरतः

**कृष्णागुरु** न० कर्म्म०। कालागुरुणि, “कृष्णं गुणाधिकं तत्तु लोहवत् वारि मज्जति” इत्युक्तलक्षणे गन्धद्रव्यभेदे राजनि० “विलिप्य कृष्णागुरुणा वाजपेयफलं लभेत्” आ०त० भवि० पु० “चन्दनाच्चागुरौ ज्ञेयं पुण्यमष्टगुणं नृप!। कृष्णागुरौ विशेषेण द्विगुणं फलमादिशेत्” तत्रैव शिवपूजाधिकारे भविष्यपुराणम्

**कृष्णाचल** पु० कृष्णप्रियः अचलः शा० त०। १रैवतकपर्वते जटाधरः। तस्य द्वारकासन्निकृष्टत्वेन तदीयाक्रीडपर्व्वतत्वात् तत्प्रियतत्वं तच्च माघे ४सर्गे वर्णितम्। कर्म्म०। २नीलपर्व्वते।

**कृष्णाजिन** न० ६त०। कृष्णसारमृगस्य चर्म्मणि एणेये “कृष्णाजिनं चोलूखलमुपले” शत० ब्रा० १,१,१,२२, “कृष्णाजिनोत्तरीयाश्च” भा० आनु० १४अ०

**कृष्णाञ्जनी** स्त्री अज्यतेऽनया अन्ज–करणे ल्युट् ङीप् कर्म्म०। कालाञ्जनीवृक्षे राजनि०।

**कृष्णाद्यतैल** न० चक्रदत्तोक्ते तैलभेदे “कृष्णाविडङ्गमधुयष्टिकसिन्धुजन्मविश्वौषधैः पयसि सिद्धमिदं कगल्याः। तैलं नृणां तिमिरशुक्रशिरोऽर्त्तिमूलपाकात्ययान् जयति नस्यविधौ प्रयुक्तम्”। [जनि०

**कृष्णानदी** स्त्री कर्म्म०बा० न०पुंवद्भावः। कृष्णगङ्गायां रा-

**कृष्णाध्वन्** पु० कृष्णः कध्वा यस्य। कृष्णवर्त्मनि वह्नौ। “कृष्णाध्वा तपूरुश्चिकेत” ऋ० २,४,६, [विड्ङ्गे दे।

**कृष्णानन्द** पु० तन्त्रसारनामकतन्त्रनिबन्धकारके तान्त्रिके

**कृष्णाभा** स्त्री कृष्णा सती आभाति आ+भा–क। कालाञ्जनीवृक्षे राजनि०। [नञ्+मिष–क। कालायसे हेम०।

**कृष्णामिष** न० कृष्णं वासुदेवमामिषति स्पर्द्धते वर्णे-

**कृष्णायस** न० कर्म्म० जातौ अच् समा०। लौहभेदे रत्नमा०

**कृष्णार्चिस्** पु० कृष्णः कालवर्णोऽर्च्चिर्भ्यो यस्य। कृष्णताकारकशिखे वह्नौ।

**कृष्णार्जक** पु० कर्म्म०। विषघ्ने (कालतुलसी) वनवर्व्वरे। “कृष्णार्जकः कटूष्णश्च कफवातामयापहः। नेत्ररोगविनाशी च रुच्यः सुप्रसवे हितः” राजनि०

**कृष्णालु** पु० कर्म्म०। कालालौ आलुभेदे राजनि०

**कृष्णावास** पु० आवसत्यस्मिन् आ+वस–आधारे घञ् ६त०। अश्वत्थवृक्षे। तस्य तदावासत्वमश्वत्थशब्दे ५०६पृ० उक्तम्

**कृष्णाष्टमी** स्त्री कृष्णा अष्टमी। १कृष्णपक्षाष्टम्याम् कृष्णस्य वासुदेवस्य जन्मदिनमष्टमी। गौणभाद्रपदमासीयकृष्णपक्षस्याष्टम्यां जन्माष्टम्याम् तस्याश्च “अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे। अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः”ब्रह्मपु० तज्जन्मदिनत्वोक्तेस्तथात्वम् तत्र कर्त्तव्यव्रतकालनिर्णयः कालमा० दर्शितो यथा “अथ जन्माष्टमी विचार्य्यते। सा किं पञ्चभेदेन निर्णेतव्या उत व्रतविशेषेणाहोस्विद्योगविशेषेणेति। अत्रैवेदमपरं चिन्त्यते किं जन्माष्टमीव्रतमेव जयन्तीव्रतमुत तयोर्भेद इति। तथान्यदपि चिन्तनीयं किं तिथ्यन्तरवदत्राह्वेध उत मध्यरात्रवेध इति। प्रथमं व्रतस्वरूपे निश्चिते पश्चादस्मिन् व्रते कीदृशी तिथिरित्याकाङ्क्षोदेति। तिथौ च पूर्व्वविद्धत्वेन परविद्धत्वेन वा निश्चितायां पश्चात्को दृशोवेध इत्याकाङ्क्षा। तस्मादादौ व्रतं निश्चीयते। तत्र जन्माष्टमीजयन्तीशब्दाभ्यां व्यवह्रियमाणं व्रतमेकमेवेति तावत् प्राप्तम्। कुतः? रूपभेदाभावात्। यथा यागस्य द्रव्यदेवते रूपं यथा वोपासनस्य गुणविशेषैर्युक्ता देवता यथा च तत्त्वविद्यायां वेद्यतत्त्वं रूपम्। तथा व्रते नियमविशेषोरूपम् नियमश्चात्रोपवासो जागरणं कृष्णपूजा चन्द्रार्घदानमित्यादिलक्षणः। सचोभयत्र न भिद्यते। अथोच्येत रूपाभेदेऽपि नित्यकाम्यत्वाभ्यां भेदो भविष्यति नित्या जन्माष्टमी अकरणे प्रत्यवायस्मरणात्। तथा च स्मर्यते “दृष्टमांसं खगं काकं श्येनं च मुनिसत्तम!।

मांसं वा द्विपदां भुङ्क्ते भुक्ता जन्माष्टमी दिने। जन्माष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम!। त्रैलोक्यसम्भवं पापं तेन भुक्तं द्विजोत्तमेति"। भविष्यपुराणे "श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम्। न करोति नरो यस्तु भवति ब्रह्मराक्षसः। कृष्णजन्माष्टमीं त्यक्त्वा योऽन्यद्व्रतमुपासते। नाप्नोति सुकृतं किञ्चिदिष्टापूर्त्तमथापि वा। वर्षे वर्षे तु या नारी कृष्णजन्माष्टमीव्रतम्। न करोति महाप्राज्ञ! व्याली भवति कानने" इति। स्कन्दपुराणेऽपि "ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतम्। ते भवन्ति नराः प्राज्ञ! व्याला व्याघ्राश्च कानने! रटन्तीह पुराणानि भूयोभूयो महामुने!। अतीतानागतन्तेन कुलमेकोत्तरं शतम्। पातितं नरके घोरे भुञ्जता कृष्णवासरे" इति। जयन्ती च काम्या फलविशेषस्मरणात् विष्णुधर्मोत्तरे हि जयन्तीं प्रकृत्य पठ्यते "यद्बाल्ये यच्च कौमारे यौवने वार्धके तथा। बहुजन्मकृतं पापं हन्ति सोपोषिता तिथिरिति"। वह्निपुराणेऽपि "सप्तजन्मकृतं पापं राजन्! यत्त्रिविधं नृणाम्। तत् क्षपयति गोविन्दस्तिथौ तस्यां समर्चितः। उपवासश्च तत्रोक्तो महापापप्रणाशनः। जयन्त्यां जगतीपाल! विधिना नात्र संशयः" इति। पद्मपुराणेऽपि "प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः। यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता। किं पुनर्बुधवारेण सोमेनापि विशेषतः" इति। स्कन्दपुराणेऽपि "महाजयार्थं कुरुतां जयन्तीं मुक्तयेऽनघ!। धर्ममर्थं च कामञ्च मोक्षञ्च मुनिपुङ्गव!। ददाति वाञ्छितानर्थानन्यथानतिदुर्लभानिति"। भविष्योत्तरे जयन्तीकल्पे "प्रतिवर्षं विधानेन मद्भक्तो धर्मनन्दन! नरो वा यदि वा नारी यथोक्तफलमाप्नुयात्। पुत्रं सौभाग्यमारोग्यं सन्तोषमतुलं लभेत्। इह धर्मरतिर्भूत्वा मृतो वैकुण्ठमाप्नुयादिति"। एवं जन्माष्टम्या अकरणे प्रत्यवायाज्जयन्त्याः फलविशेषाच्चो भयोः क्रमेण नित्यत्वं काम्यत्वञ्चाभ्युपगन्तव्यमिति नैवं गुण फलाधिकृत्वाभ्युपमेऽपि जयन्त्याः फलविशेषोपपत्तेः गोदोहनदध्यादि तत्र दृष्टान्तः यथा "चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्येति" नित्ययोर्दर्शपौर्णमासयोरपां प्रणयनं विधाय तदेवाश्रित्य पशुफलाय गोदोहन मात्रं विहितम्। "दध्नेन्द्रियकामस्य" इत्यत्र च पूर्वप्रकृते नित्याग्निहोत्रे फलाय गुणो विधीयते। अत्रादिपदात् "खादिरं वीर्यकामस्य" इत्युदाहार्यम्। एवं नित्यां जन्माष्टमीमाश्रित्य फलविशेषाय जयन्तीनामको रोहिणीयोगो विधीयताम्। न च रोहिणीलक्षणस्य कालविशेषस्यानुपादेयत्वादविधेयत्वं शङ्कनीयम्। कालविशेषस्य स्वरूपेण पुरुषैरनुपादेयत्वेऽपि अनुष्ठानाङ्गत्वं शास्त्रेणावगतं तत्प्रानुष्ठानाय तत्प्रतीक्षायाः कर्त्तुं शक्यत्वात्। अन्यथा "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादिः सर्वोऽपि कालविधिर्लुप्येत। रोहिणीयोगस्य च जयन्तीनामकत्वं जयन्तीलक्षणप्रतिपादकैः स्मृतिवाक्यैरध्यवसेयम्। तानि च वाक्यान्युदाहरामः "विष्णुधर्मे" "रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम!। जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिरिति" सनत्कुमारसंहितायाम् "शृणुष्वावहितो राजन्! कथ्यमानं मयानघ!। श्रावणस्य च मासस्य कृष्णाष्टम्यां नराधिप!। रोहिणी यदि लभ्येत जयन्ती नाम सा तिथिरिति" स्कान्दे "प्राजापत्येन संयुक्ता अष्टमी तु यदा भवेत्। श्रावणे बहुले सा तु सर्वपापप्रणाशिनी। जयं पुण्यं च कुरुते जयां पुण्यां च तां विदुरिति"। विष्णुरहस्ये "अष्टमी कृष्णपक्षस्य रोहिणीऋक्षसंयुता। भवेत् प्रोष्ठपदे मासि जयन्ती नाम सा स्मृता" पौर्णमास्यन्तेषु मासेषु स्वीकृतेषु श्रावण्यां पूर्णिमायां श्रावणमासस्य समाप्तत्वात् उपरितनीं प्रतिपदमारभ्य भाद्रपदमास इत्यभिप्रेत्य प्रोष्ठपद इत्युक्तम्। विष्णुधर्मोत्तरे "प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी। सोपवासो हरेः कृत्वा तत्र पूजां न सीदतीति"। वशिष्ठसंहितायाम् "श्रावणे वा नभस्ये वा रोहिणीसहिताऽष्टमी। यदा कृष्णा नरैर्लब्धा सा जयन्तीति कीर्त्तिता। "श्रावणे न भवेद्योगो नभस्ये तु भवेद्ध्रुवम्। तयोरभावे योगस्य तस्मिन्वर्षे न सम्भवः" इति। अत्र श्रावण इति मुख्यः कल्पः। नभस्य इत्यनुकल्पः। यदि वा श्रावणे यदि वा नभस्ये, सर्वथाऽपि रोहिणीकृष्णाष्टमीयोगो जयन्तीत्येतदविवादम्। पुराणान्तरे "रोहिणी च यदा पक्षे कृष्णेऽष्टम्यां द्विजोत्तम!। जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिरिति"। तदेवमेतैः स्मृतिवाक्यैर्जयन्त्याः कृष्णाष्टमीरोहिणीयोगस्वरूपे सति पूर्वोदाहृतफलकामिनस्तादृशो योगो गोदोहन दध्यादिवद्गुणत्वेन विधीयते। काम्ये तु ज्योतिष्टोमे गुणविशेषो न कोऽपि फलाय विहितः। अतः काम्य ज्योतिष्टोमवैषम्याद्गोदोहनदध्यादिसाम्याच्च पूर्वोदाहृत फलवाक्यानि प्रकृते नित्ये जन्माष्टमीव्रते गुणफलप्रतिपादकत्वेनोपपद्यन्ते। तथा सति यथा दर्शपौर्णमासाभ्या

मन्यः कश्चित्पशुफलको गोदोहनसंज्ञको यागोनास्ति किन्तु गुणएव केवलं गोदोहनम्। तथा न जन्माष्टमीव्रतादन्यज्जयन्तीव्रतं किन्तु प्रकृतएव व्रतेऽयं फलाय गुणविधिरित्येवं प्राप्ते ब्रूमः। व्रतद्वयमिदं भवितुमर्हति कुतः? नामभेदात्१ निमित्तभेदात्२ रूपभेदात्३ शुद्धमिश्रितत्वभेदात्४ निर्द्देशभेदाच्च५ तथाहि पूर्व्वोदाहृतेष्वकरणे प्रत्यवायप्रतिपादकस्मृतिवाक्येषु जन्माष्टमीव्रतमित्येव नाम व्यवहृतम्। तथा पूर्व्वोदाहृतेषु जयन्तीव्रतमिति नाम व्यवहारः। नामभेदाच्च कर्म्मभेदोज्योतिरधिकरणे व्यवस्थितः। तस्य चाधिकरणस्य संग्राहकावेतौ श्लोकौ भवतः। "अथैष ज्योतिरित्यत्र गुणो वा कर्म्म वा पृथक्। गुणः सहस्रदानात्मा ज्योतिष्टोमे ह्यनूदिते। अथेति प्रकृते च्छिन्न एतच्छब्दोऽप्यगं वदेत्। संख्ययेवान्यकर्म्मत्वमुत्पत्तिगतसंज्ञयेति"। अयमर्थः "अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्व्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेति" श्रुतम्। तत्र संशयः। किं प्रकृतएव ज्योतिष्टोमे सहस्रदक्षिणागुणविधिः उत यागान्तरविधिरिति। एष ज्योतिरेतेनेत्येताभ्यां एतच्छब्दाभ्यां प्रकृतं ज्योतिष्टोममनूद्य तत्र गुणविधिरिति पूर्व्वः पक्षः। अर्थान्तरद्योतकेनाथशब्देन प्रकृतस्य ज्योतिष्टोमस्य विच्छेदः क्रियते। एतच्छब्दश्च प्रत्यासन्नं ब्रूते प्रत्यासत्तिश्च द्विविधा अतीता आगामिनी चेति। तत्रातीतायाः प्रत्यासत्तेर्विच्छेदे सति आगामिप्रत्यासत्तिपरत्वेनैतच्छब्दावुपपन्नौ। तथाप्येककर्म्मत्वं मा भूत् कर्म्मभेदे तु किं प्रमाणमिति चेत्। अपूर्व्वसंज्ञेति वदामः। एष ज्योतिरित्यस्मिन्नुत्पत्तिवाक्ये पूर्व्वप्रकृतकर्म्मविषयाया ज्योतिष्टोमसंज्ञाया अन्या ज्योतिरित्येषा संज्ञा श्रूयते। तत्र यथा पूर्व्वाधिकरणे "सप्तदश प्राजापत्यान् पशूनालभेत" इत्यत्रोत्पत्तिवाक्यगतया संख्यया कर्म्मभेदो निरूपितः तथात्राप्युत्पत्तिगतया नूतनसंज्ञया कर्म्मभेदोऽभ्युपगन्तव्य इति एवं च सति प्रकृतेऽप्यनेन न्यायेनोत्पत्तिवाक्यगताभ्यां जन्माष्टमीव्रतजयन्तीव्रतसंज्ञाभ्यां व्रतभेदोऽभ्युपगन्तव्यः ॥१॥

तथा निमित्तभेदादपि व्रतभेदः। जन्माष्टमीव्रते तिथिरेव निमित्तं जयन्तीव्रते तु रोहिणीयोगः। ननु जन्माष्टमीत्यस्मिन्नपि व्यवहारे योग एव विवक्षितव्यः नक्षत्रयुक्तायामेव तिथौ देवकीनन्दनस्योत्पत्तेः, मैवम् तज्जन्मन्यष्टम्याएव प्रधानप्रयोजकत्वात् रोहिणीतद्योगयोर्विधीमानयोरपि बुधवारादिवदुपलक्षणत्वात्। अतएव शास्त्रेषु जन्माष्टमीत्येव समाख्यायते। अन्यथा जन्मरोहिणीति जन्मयोग इति वा समाख्यायेत कश्चित्सद्भावमात्रेण प्रयोजकत्वे बुधवारोऽपि प्रयोजकः स्यात्। अस्त्विति चेत् अतिप्रसङ्गात्। तज्जन्मकाले द्वापरावसानस्य संवत्सरविशेषस्य च सद्भावेन तयोरपि प्रयोजकत्वं केन वार्य्येत। तस्माज्जन्मन्यष्टम्याएव प्राधान्यम्। तत्प्राधान्ये च श्रुतिलिङ्गादिषु षट्सु समाख्यारूपं षष्ठं प्रमाणमुपन्यस्तं वेदितव्यम्। तथा प्रत्यक्षादिषु सम्भवैतिह्यान्तेष्वष्टसु प्रमाणेष्वैतिह्यरूपमागमरूपं वा प्रमाणमुक्तं भवति। ननु निरर्थकोऽयं पक्षवादलक्षणः कोलाहलः। यद्येकं व्रतं यदि नाम व्रतद्वयं तथाप्यनुष्ठाने कोविशेषः स्यात्। अस्त्येव महानतिशयः। यस्मिन् संवत्सरे श्रावणबहुलाष्टमीं परित्यज्यान्यस्मिन्नवम्यादौ रोहिणी भवति तस्मिन् संवत्सरे जयन्तीस्वरूपमेव नास्ति अतो जयन्तीव्रतस्य तत्र लुप्तत्वात्तस्यैव जन्माष्टमीव्रतत्वे तदपि न प्राप्नुयात्। भेदपक्षे त्वसत्यामपि जयन्त्यां जन्माष्टमीव्रतं तत्र प्रवर्त्तते इत्ययमनुष्ठानेऽतिशयः। भवत्वेवन्तथापि नोपन्यस्तो निमित्तभेदो व्रतभेदमावहति। कर्म्मभेदहेतुषु शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयेषु षट्सु प्रमाणेषु निमित्तस्यान्तर्भावादिति चेत्, मैवम् तथाहि पूर्व्वोक्तसंज्ञाभेदसम्पादितं व्रतभेदं निमित्तभेद उपोद्बलयति। तस्मादत्र निमित्तभेदाद्व्रतभेदः२

"तथा रूपभेदादपि व्रतभेदोऽवगन्तव्यः। रूपभेदस्य कर्म्मभेदहेतुत्वमामिक्षाधिकरणे निरूपितम् तस्य चाधिकरणस्य संग्राहकावेतौ श्लोकौ भवतः"गुणः कर्म्मान्तरं वा स्याद्वाजिभ्यो वाजिनन्त्विति। गुणोदेवानन्द्योक्तः समुच्चयविकल्पने। आमिक्षोत्पत्तिशिष्टत्वात् प्रबला, तत्र वाजिनम्। गुणोऽप्रविश्य कर्म्मान्यत् कल्पयद्वाजिदेवकमिति"। "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति"श्रुतम्। अम्लदधिसम्बन्धात् क्षीरनीरयोर्विभेदे सति योघनीभूतः क्षीरभागः साऽऽमिक्षा तस्याश्च विश्वेदेवा देवताः तत्र यत्पृथग्भूतं नीरं तद्वाजिनम् तस्य च वाजिनो देवताः। तच्चामिक्षाद्रव्यकं विश्वदेवदेवताकमेकं कर्म्म, तथा सति किमुपरितनेन वाजिभ्यो वाजिनमित्यनेन वाक्येन, पूर्व्वस्मिन्नेव कर्म्मणि वाजिनं गुणोविधीयते उत कर्म्मान्तरमिति संशयः। तत्र वाजो-

ऽश्वमामिक्षा सा येषां देवानामस्ति ते वाजिन इति व्युत्पत्त्या प्रकृतान् देवाननूद्य वाजिनगुणो विधीयते स चामिक्षया सह विकल्प्यते समुच्चीयते वेति पूर्व्वःपक्षः। उत्पत्तिशिष्टामिक्षागुणावरुद्धस्य कर्म्मणो गुणान्तराकाङ्क्षाऽभावाद्वाजिनस्य तत्र प्रवेशासम्भवे सत्यन्यथानुपपन्नो वाजिनगुणो वाजिशब्दार्थस्य प्रकृतदेवताव्यतिरिक्त देवताकत्वं कल्पयित्वा कर्म्मभेदे पर्यवस्यतीति सिद्धान्तः। अत्र यथा द्रव्यदेवतालक्षणस्य यागरूपस्य भिन्नत्वात् कर्म्मभेदस्तथा प्रकृतेऽपि रूपभेदोऽभ्युपगम्यताम्। उपवासमात्रं जन्माष्टमीव्रतस्वरूपं तदुत्पत्तिवाक्ये तन्मात्रस्य प्रतीयमानत्वात्। ननु जयन्तीव्रतएवोपवासं कुर्य्यादित्युत्पत्तिवाक्यं स्मर्य्यते न तु जन्माष्टमीव्रते, वाढम्। तथाप्यत्र विधिरुन्नेतव्यः अन्नभोजने प्रत्यवायस्मरणानुपपत्तेः। स चोन्नीयमानो विधिरुपवासमात्रं विधत्ते न तु मण्डपनिर्म्माणजागरणप्रतिमादानादिकं, विधेरुन्नयने हेतुभ्वकरणे प्रत्यवायबोधकवाक्येषु भोजननिषेधमात्रस्मरणात्। न हि तत्र निद्रायां दानाभावे वा प्रत्यवायः स्मर्य्यते। अत उपवासमात्रं तस्य स्वरूपं न तु दानादिकम्। अतएवाकरणे प्रत्यवायवाक्यशेषे जयन्तीप्रयुक्तदानादिशङ्काव्यावृत्तये केवलशब्द उपवासविशेषणत्वेन पठ्यते "केवलेनोपवासेन तस्मिन् जन्मदिने मम। शतजन्मकृतात् पापान्मुच्यते नात्र संशयः" इति। तस्माज्जन्माष्टमीव्रतस्योपवासमात्रं स्वरूपं, यदि शिष्टास्तत्र जागरणदानादिकमनुतिष्ठन्त्यनुतिष्ठन्तु नामाविरुद्धैः पुण्यविशेषैर्व्रतस्योपोद्बलनसम्भवात्। शास्त्रेण तु प्रापितमुपवासमात्रम्। जयन्तीव्रतस्य तु दानादिसहित उपवासः स्वरूपं तद्विधायकेषु शास्त्रेषु तथा विधानात्। तथा च वह्निपुराणे "तुष्ट्यर्थं देवकीसूनोर्जयन्तीसम्भवं व्रतम्। कर्त्तव्यं वित्तमानेन भक्त्या भक्तजनैरपीति"। भविष्योत्तरेऽपि "मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षगे। शशाङ्के वृषराशिस्थे ऋक्षे रोहिणीसंज्ञके। योगेऽस्मिन् वसुदेवाद्धि देवकी मामजीजनत्। तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः। ब्राह्मणान् भोजयेद्भक्त्या ततोदद्याच्च दक्षिणाम्। हिरण्यं मेदिनीं गाश्च वासांसि कुसुमानि च। यद्यदिष्टतमन्तत्तत् कृष्णो मे प्रीयतामिति"। भविष्यद्विष्णुधर्म्मोत्तरयोः "जयन्त्यामुपवासश्च महापातकनाशनः। सर्व्वैः कार्य्यो महाभक्त्या पूजनीयश्च केशवः" इति। वह्निपुराणे "कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी यदि। जयन्ती नाम सा प्रोक्ताउपोष्या सा प्रयत्नतः" इति। स्मृत्यन्तरेऽपि "प्राजापत्यर्क्षसंयुक्ता श्रावणस्यासिताष्टमी। वर्षेवर्षे तु कर्त्तव्या तुष्ट्यर्थं चक्रपाणिनः" इति। नारदीयसंहितायाम् जयन्तीं प्रकृत्य स्मर्यते "उपोष्य जन्मचिह्नानि कुर्य्याज्जागरणं पुनः। अर्द्धरात्रयुताष्टम्यां सोऽश्वमेधफलं लभेदिति"। एवमेतेषु विधिवाक्येषु दानादियुक्त उपवासोजयन्तीव्रतरूपत्वेन प्रतीयते। अतोरूपभेदाद्व्रतभेदः ३।

तथा शुद्धमिश्रत्वभेदादपि द्रष्टव्यः अकरणे प्रत्यवायमात्रश्रवणाच्छुद्धं नित्यं जन्माष्टमीव्रतम्। करणे फलविशेषश्रवणादकरणे प्रत्यवायश्रवणाच्च नित्यत्वेन काम्यत्वेन च मिश्ररूपं जयन्तीव्रतम्। तत्र फलवाक्यानि पूर्व्वपक्षएव प्रसङ्गादुदाहृतानि। अकरणे प्रत्यवायस्तु जयन्तीं प्रकृत्य कस्मिंश्चित्पुराणे स्मर्य्यते "अकुर्वन् याति नरकं यावदिन्द्राश्चतुर्दशेति"। स्कन्दपुराणेऽपि "शूद्रान्नेन तु यत्पापं शवहस्तस्य भोजने। तत्पापं लभते कुन्ति! जयन्तीविमुखो नरः"। "ब्रह्मघ्नस्य सुरापस्य गोवधे स्त्रीवधेऽपि वा। न लोकोयदुशार्दूल! जयन्तीविमुखस्य च। क्रियाहीनस्य मूर्खस्य परान्नं भुञ्जतोऽपि वा। न कृतघ्नस्य लोकोऽस्ति जयन्तीविमुखस्य च। न करोति यदा विष्णोर्जयन्तीसम्भवं व्रतम्। यमस्य वशमापन्नः सहते नारकीं व्यथाम्। जयन्तीवासरे प्राप्ते करोत्युदरपूरणम्। संपीड्यतेऽतिमात्रं तु यमदूतैः सुदारुणैः। काकोला आयसैस्तुण्डैः लुपन्त्यस्य कलेवरम्। योभुञ्जीत विमूढात्मा जयन्तीवासरे न्वमेति"। तैरेतैरकरणे प्रत्यवायवाक्यैर्नित्यत्वं जयन्त्याः। नन्वेवमुक्तैरकरणे प्रत्यवायवाक्यैः केवलेनोपवासेनेति पापक्षयवाक्यात् जन्माष्टमीव्रतमपि नित्यकाम्यं स्यात् नैवम् पापक्षयफलत्वमात्रेण काम्यत्वे सन्ध्यावन्दनादेरपि काम्यत्वप्रसङ्गात्। अतः सत्यपि पापक्षये फलान्तराश्रवणेन केवलनित्यत्वं जन्माष्टमीव्रतस्य युक्तम्। ततः शुद्धमिश्रभेदाद्व्रतयोर्भेदः ४।

तथा निर्द्देशभेदादपि व्रतभेदो द्रष्टव्यः निर्द्देशभेदश्च भृगुवाक्ये दृश्यते "जन्माष्टमी जयन्ती च शिवरात्रिस्तथैव च। पूर्व्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणमिति" यत्र जन्माष्टमी रोहिणी चेति पाठः तत्रापि रोहिणीशब्देन तद्युक्ता तिथिर्विवक्षिता न तु केवलरोहिणी, तस्मिन्वाक्ये निर्दिष्टयोः पूर्व्वोत्तरयोर्जन्माष्टमीशिवरात्र्योस्तिथित्वात्। यद्येकमेव व्रतं स्यात्तर्हि निर्द्देशभेदोनोपपद्यते। ननु व्रतभेदेऽप्यस्तु

दोषः यदा दिनद्वयेऽष्टमी वर्त्तते रोहिणी तूत्तरएव तदा पूर्व्वदिने जन्माष्टम्युपवासः परेद्युर्जयन्त्युपवास इति नैरन्तर्य्येणोपवासद्वयं प्रसज्यते प्रसज्यतां नाम प्रमाणवत्त्वादिति चेत् न परदिने भोजनोपवासलक्षणविरुद्धधर्म्मद्वयप्रसङ्गात्। उपवासस्याङ्गं पारणमिति हि वक्ष्यते। तथा च जन्माष्टम्युपवासाङ्गस्य पारणस्य जयन्त्युपवासस्य चैकत्र प्राप्तिः सोऽयमेकोदोषः। व्यतिरेकानुपलम्भस्यापरो दोषः। तथाहि यथा जयन्तीव्यतिरिक्ता जन्माष्टम्युपलभ्यते तथा जन्माष्टमीव्यतिरिक्तापि जयन्ती क्वापि वत्सरउपलभ्येत न त्वेवमुपलभ्यते अतोव्रतभेदोऽपि दुष्टएव। अत्रोच्यते न तावत्पारणोपवाससाङ्कर्य्यलक्षणोदोषोऽस्ति आघ्राणोदकपानादिना पारणे सम्पादितेऽप्युपवाससम्भवात् अन्यथा द्वादशीपारणत्रयोदशीव्रतयोः क्वचित्साङ्कर्य्यं केन वार्य्येत। नाप्युपवासद्वयनैरन्तर्य्यम् रोहिणीसंयोगसम्भवे जन्माष्टम्या अपि तत्रैव कर्त्तव्यत्वात् सर्व्वत्र तिथिनक्षत्रयोगस्य केवलतिथेरुत्कृष्टत्वेन केवलायास्तिथेस्तत्रोपेक्षणीयत्वात्। अतएव व्यतिरेकानुपलम्भोऽप्यलङ्काराय नतु दोषाय जन्माष्टम्या रोहिणीनिरपेक्षत्वेन व्यतिरेक उपलभ्यतां नाम। जयन्त्यास्तु योगरूपत्वेन रोहिण्यामिवाष्टम्यामपि सापेक्षत्वेन कथं व्यतिरेकाशङ्कावकाशः। तस्माद्व्रतद्वयपक्षे न कोऽप्यस्ति दोषः। किं च यदा रोहिणीयोगोऽस्ति तदा जन्माष्टमीजयन्त्योः सहयोगस्यावश्यम्भावित्वेन जयन्तीव्रतएव जन्माष्टमीव्रतमन्तर्भवति। तस्मादपि नोपवासद्वयप्रसङ्गः ५।

तदेवं व्रतभेदे दोषाभावात्तत्साधकानाञ्च नामभेदादीनां पञ्चानां सद्भावाद्व्रतभेदएवावश्यमभ्युपेयः। व्रतैक्यभ्रमस्तु तयोरुक्तयुक्त्यनुसन्धानाभावादष्टम्युपवाससादृश्याच्च केषांचिदुदेति। सादृश्यं च गुणविकृतित्वादाश्रयाश्रयिभावाच्च सम्भाव्यते। यथा दर्शयागस्य गुणविकृतिः साकंप्रस्थापीयोयागः। तत्र दर्शयागे यावन्तोऽङ्गाङ्गिविषयाः प्रयोगाः, ते सर्व्वेऽपि साकंप्रस्थापीये विद्यन्ते भेदस्तु स्वल्पएव भवति। दर्शयागे सान्नाय्यहविषोर्द्दधिपयसोः पृथगवदानम्। साकंप्रस्थापीये सहैव तु प्रस्थापनम् एतावता भेदेन गुणविकृतिरित्यभिधीयते। तथाग्निष्टोमस्य गुणविकृतिरुक्थः। अग्निष्टोमे द्वादश स्तोत्राणि उक्थे च द्वादशभ्योऽधिकानि त्रीणि,ततो गुणाधिक्याद्गुणविकृतित्वम्। एवमत्रापि जन्माष्टम्यामुपवासोऽनुष्ठेयः जयन्त्यां तु दानादिरधिकोगुणः। अतः सा गुणविकृतिः। आश्रयाश्रयिभावश्च ज्योतिष्टोमे तदङ्गाव रुद्धोपासने दृष्टः। तत्र ज्योतिष्टोम आश्रयः तस्याङ्गान्युक्थादीनि आश्रितानि। तत्रोक्थं नाम बह्वृचाध्यायिना होत्रा शस्यमानं मरुत्वतीयनिष्कैवल्यादिनामकं शस्त्रम्। तच्चोक्थमाश्रित्य बह्वृचब्राह्मणोपनिषत्सूपासनानि विहितानि। तथाच श्रुतिः “उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवीति अहमुक्थमस्मीति विद्यादिति च” उद्गीथो नाम सामवेदिनोद्गात्रा गीयमानः साम्नो भागविशेषः। तच्चोद्गीथमाश्रित्य छान्दोग्योपनिषत्सूपासनानि विहितानि “ओमित्येतदक्षरमुद्गीथमुपासीतेति”। एवं प्रकृतेऽपि जन्माष्टमीव्रते येयं श्रावणकृष्णाष्टमी तामाश्रित्य रोहिणीयोगनिमित्तं दानादिकं जयन्तीव्रते विधीयते। अतोगुणविकृतित्वेनाश्रयाश्रयिभावेन च सादृश्यसम्भवादनयोर्व्रतैक्यभ्रमो मन्दबुद्धीनां जायतां नाम प्रमाणन्यायदर्शिभिस्तु सर्व्वथैव व्रतभेदोऽङ्गीकार्य्य इति सिद्धम्।

यदेतद्विचारत्रयं पूर्व्वमुपक्षिप्तं व्रतभेदे तिथिनिर्णये वेधे चेति तत्र व्रतभेदो निर्णीतः। अथ तिथिर्निर्णेतव्या। तन्निर्णयश्च वेधाधीनः अतोवेधः पूर्व्वमभिधीयते। तिथ्यन्तरेष्वङ्ग एव प्रायेण कर्म्मकालत्वादुदयास्तमयवेलायां त्रिमुहूर्त्तवेधः सामान्येन निरूपितः। पञ्चम्यां तु विशेषतः षण्मुहूर्त्तवेधोदर्शितः जन्माष्टम्या जयन्त्याश्च रात्रिप्रधानत्वाद्रात्रियोगोऽत्र प्रशस्तः। एतच्च जाबालिवृद्धगौतमाभ्यां दर्शितम् “अहःसु तिथयः पुण्याः कर्म्मानुष्ठानतोदिवा। नक्तादिव्रतयोगेषु रात्रियोगो विशिष्यत” इति। यद्यप्युपवासस्य व्रतत्वादहनि रात्रौ च मुख्यत्वं युक्तितः सामर्थ्यसिद्धं तथाप्यर्द्धरात्रस्य मुख्यकालत्वमुक्तं वशिष्ठसंहितायाम् “अष्टमी रोहिणीयुक्ता निशार्द्धे दृश्यते यदि। मुख्यकाल इति ख्यातस्तत्र जातोहरिः स्वयमिति”। एवं सत्यर्द्धरात्रव्याप्तिरेवात्र कर्म्मकालव्याप्तिरित्यभिधीयते। एतदेवाभिप्रेत्य विष्णुरहस्ये पठ्यते “रोहिण्यामर्द्धरात्रे तु यदा कृष्णाष्टमी भवेत्। तस्यामभ्यर्च्चनं शौरेर्हन्ति पापं त्रिजन्मजमिति”। तस्मिन्नर्द्धरात्रे कियत्परिमाणमपेक्षितमित्यपेक्षायामादित्यपुराणे दर्शितम् “अर्द्धरात्रादधश्चोर्द्ध्वं कलयापि यदा भवेत्। जयन्ती नाम सा प्रोक्ता सर्व्वपापप्रणाशिनीति”। वराहसंहितायामपि “सिंहेऽर्के रोहिणीयुक्ता नभःकृष्णाष्टमी यदि। रात्र्यर्द्धपूर्व्वा-

परगा जयन्ती कलयापि चेति"। पूर्वं चापरञ्च पूर्वापरे रात्र्यर्द्धे च ते पूर्वापरे च रात्र्यर्द्ध पूर्वापरे तयोर्गच्छति वर्त्तत इति रात्र्यर्द्धपूर्वापरगा। घटिकाया अशीत्यधिकशततमोभागः१८० कला तावता परिमाणेन पूर्वार्द्धावसाने उत्तरार्द्धादौ च वर्त्तमाना ग्रहीतव्या। खण्डतिथिरूपा कृष्णाष्टमी द्विविधा पूर्वेद्युः सप्तमीयुक्ता परेद्युर्नवमीयुक्ता चेति। तत्र सप्तमीयुक्तायां रात्रिपूर्वार्धावसाने कलासद्भावोविधीयते। उत्तरार्द्धादौ स्वतः सिद्धत्वेनाविधेयत्वात्तद्विपर्ययेण नवमीयुक्तायामुत्तरार्द्धादौ कलासद्भावो विधीयते तदा पूर्वार्द्धावसाने स्वतः सिद्धत्वादनुवादः पूर्वार्द्धावसानकलायाः सप्तमीयुत विषयत्वं, विष्णुधर्मोत्तरे स्पष्टमभिहितम् "रोहिणी सहिता कृष्णा मासि भाद्रपदेऽष्टमी। सप्तम्यामर्धरात्राधः कलयापि यदा भवेत्। तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः। तमेवोपवसेत् कालं कुर्यात्तत्रैव जागरमिति"। इयमष्टमी कृष्णपक्षादिमासविवक्षया भाद्रपदे भवति सैवाष्टमी शुक्लपक्षादिमासविवक्षया श्रावणे भवति। अतएव योगीश्वरः "रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी। अर्द्धरात्रादधश्चोर्ध्वं कलयापि यदा भवेत्। जयन्ती नाम सा प्रोक्ता सर्वपाप प्रणाशिनीति"। कलाया अतिसूक्ष्मत्वेन दुर्लक्ष्यत्वात् स एव पक्षान्तरमाह। "अर्द्धरात्रादधश्चोर्ध्वमेकार्धघटिकाचिता। रोहिणी चाष्टमी ग्राह्या उपवासव्रतादिष्विति"। एका चार्द्धघटिका चैकार्धघटिके ताभ्यामाचिता। कलामपेक्ष्यार्धघटिका स्थूला। तामपेक्ष्य घटिका स्थूला। तत्रायमर्थः संपद्यते पूर्वभागावसाने एका घटिका उत्तरभागादौ चैका मिलित्वा तन्निशीथशब्दवाच्यं मुहूर्त्तं तावत्परिमाणं सर्वैरपि सुलक्ष्यत्वान्मुख्यः कल्पः। तदसम्भवेऽर्धघटिकान्वेष्टव्या। तस्याप्यसम्भवे कलेति तत्र मुख्यं पक्षमभिप्रेत्य भविष्योत्तरे "निशीथे कृष्णपक्षगे" इत्युक्तं तच्च वचनं साकल्येन पूर्वमुदाहृतम्। अत्र जयन्त्यां चन्द्रार्घ्यदानस्यावश्यकर्त्तव्यत्वात्तस्य च चन्द्रोदयकालीनत्वान्निशीथे योगः प्रशस्तः। एतदेव विष्णुधर्मोत्तरेऽभिहितम् "अर्द्धरात्रे तु योगोऽयन्तारापत्युदये तथा। नियतात्मा शुचिः स्नातः पूजां तत्र प्रवर्त्तयेदिति"। सोऽयमर्धरात्रयोगो मुख्यः कल्पः। यस्तु कृत्स्नाहोरात्रयोगः सोऽयं मुख्यतरः। यश्च यदा कदाचिदीषद्योगः सोऽनुकल्पः। स च वशिष्ठसंहितायां दर्शितः "अहोरात्रं तयोर्योगोह्यसंपूर्णोभवेद्यदि। मुहूर्त्तमप्यहोरात्रे योगश्चेत्तामुपोषयेदिति"। सोऽयं जयन्तीव्रते योगनिर्णयः। स एव जन्माष्टमीव्रतेऽपि द्रष्टव्यः। यस्मिन्वर्षे योगोनास्ति तस्मिन्वर्षे जन्माष्टमीव्रतमेकमेव प्रवर्त्तते तत्रापि नेतराष्टमीवद्दिवसवेधः किं त्वर्द्धरात्रवेधः। तथा च पुराणान्तरे "दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला। रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम्"। अन्यत्रापि "अष्टमी शिवरात्रिश्च ह्यर्द्धरात्रादधोयदि। दृश्यते घटिका या सा पूर्वविद्धा प्रकीर्त्तितेति"। इति वेधोनिरूपितः। अथ ग्राह्यतिथिर्निरूप्यते सा च संवत्सरभेदेन द्विधा भवति रोहिणीरहिता रोहिणीयुक्ता चेति। तत्र या रोहिणीरहिताष्टमी सापि द्विविधा शुद्धा सप्तमीविद्धा चेति। सूर्योदयमारभ्य प्रवर्त्तमानाष्टमी शुद्धा निशीथादर्वाक् सप्तम्या कियत्यापि युक्ता विद्धा। शुद्धा पुनर्निशीथव्याप्त्यव्याप्तिभ्यां द्विविधा तत्र निशीथव्यापिनी जन्माष्टमीव्रते मुख्या। "विशेषेणेन्दुसंयुतामिति" वचनात्। निशीथव्याप्तिरहितापि "रात्रियुक्तां प्रकुर्वीतेति" वचनेन ग्रहीतव्या भवति। ननु पूर्वेद्युर्निशीथादूर्ध्वमारभ्य परेद्युर्निशीथादर्वाक् समाप्यते तस्या उभयत्र रात्रिसंबद्धत्वात् कुत्रोपवास इति चेत् परेद्युरिति ब्रूमः उभयत्र निशीथव्याप्त्यभावस्य रात्रिसम्बन्धस्य च तुल्यत्वेऽपि परेद्युः प्रातःसंकल्पकालमारभ्य वर्त्तमानतया प्राशस्त्यं द्रष्टव्यम्। सप्तमीविद्धापि त्रिविधा। पूर्वेद्युरेव निशीथव्यापिनी परेद्युरेव निशीथव्यापिनी उभयत्र निशीथव्यापिनी चेति। तत्र प्रथमद्वितीययोः पक्षयोः निशीथव्याप्तेः प्रयोजकत्वेन या निशीथव्यापिनी सा "विशेषेणेन्दुसंयुतामिति" वचनेन ग्रहीतव्या भवति। या तु दिनद्वये निशीथव्यापिनी तस्याम् उभयत्र निशीथयोगस्य रात्रियोगस्य च तुल्यत्वान्नानेन वचनेन निर्णयः सम्भवति नापि "कृष्णपक्षेऽष्टमी" इत्यादिभिरष्टमीमात्रमुपजीव्य प्रवृत्तैः निर्णेतुं शक्यते तेषामुभयविषयत्वात्। अन्यथा व्रतान्तरेष्वपि निशीथवेधः प्रसज्येत तस्मान्न्यायः परिशिष्यते। न्यायश्च परेद्युरुपवासं प्रापयति, संकल्पकालमारभ्य तिथिसद्भावात्। न च साकल्याभिधायिवचनेन पूर्वेद्युरपि संकल्पकाले तिथिरस्तीति शङ्कनीयम्। तस्यामुख्यतिथित्वाभावात्।

किञ्च "सा तिथिः सकला ज्ञेया यस्यामस्तमितो रविरिति" वचनं निशीथव्यापिनीमष्टमीं न विषयी रोति तस्मात्परेद्युरेवोपवासः। तदेवं चतुर्विधा रोहिणीरहिताष्टमी निर्णीता। अथ रोहिणीसहिताष्टमी निर्णीयते सापि चतुर्विधा शुद्धा विद्धा शुद्धाधिका विद्धाधिका चेति। तत्र शुद्धायां संपूर्णयोगो निशीथयोगो यत् किञ्चिन्मुहूर्त्तयोगश्चेति त्रैविध्यं भवति। एवं विद्धायामपि द्रष्टव्यम्। एतेषु षट्सु भेदेषु दिनान्तरे योगाभावादुपवासे सन्देहो नास्ति किन्तु केवलं योगगततारतम्यात्प्राशस्त्यतारतम्यं भवति। यत्किञ्चिन्मुहूर्त्ते योगः प्रशस्तः अर्धरात्रयोगः प्रशस्ततरः सम्पूर्णयोगः प्रशस्ततमः। सर्वेष्वपि योगेषु योगमुपजीव्य उपवासो विहितः विष्णुधर्म्मोत्तरे "प्राजपत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी। मुहूर्त्तमपि लभ्येत सोपोष्या सुमहाफला। मुहूर्त्तमप्यहोरात्रे यस्मिन् व्यक्तं हि लभ्यते। अष्टम्यां रोहिणीऋक्षं तां पुण्यां समुपावसेदिति"। शुद्धाधिका तु पूर्व्वेद्युः सूर्य्योदयमारभ्य प्रवृत्ता परेद्युः सूर्य्योदयमतिक्रम्य प्रवर्त्तते सा च त्रिविधा पूर्व्वेद्युरेव रोहिणीयुक्ता परेद्युरेव रोहिणीयुक्ता दिनद्वयेऽपि रोहिणीयुक्ता चेति तत्राद्ययोर्द्वयोः पक्षयोर्नास्त्युपवाससन्देहः रोहिणीयुक्ताया द्वितीयायाः कोटेरभावात्। तृतीयपक्षे तु रोहिणीयोगस्योभयत्र समानत्वेऽपि गुणाधिक्यात् पूर्व्वैवोपास्या गुणाधिक्यं च दर्शयिष्यते। येयमत्रोपोष्यत्वेनोक्ता पूर्वा तिथिः सापि रोहिणीयोगभेदात्त्रिधा भिद्यते अष्टमीवत्सूर्य्योदयमारभ्य प्रवृत्ता रोहिणी कदाचित्परेद्युरपि कियती वर्त्तते, कदाचित्पूर्व्वेद्युर्निशीथमारभ्य रोहिणी प्रवर्त्तते। कदाचिन्निशीथादूर्द्ध्वमारभ्य प्रवर्त्तते। तत्र प्रथमपक्षे संपूर्णत्वमेको गुणः। संकल्पकालमारभ्य कृत्स्नकर्म्मकालव्याप्तिरपरो गुणः। निशीथव्याप्तिस्तृतीयो गुणः। न चैते त्रयो गुणाः परेद्युः सम्भवन्ति। द्वितीयपक्षे निशीथे जयन्तीसद्भावो गुणः। न च परेद्युः सोऽस्ति। तृतीयपक्षे दिनद्वयेऽपि निशीथयोगो नास्ति पूर्व्वेद्युः केवलाष्टमी परेद्युः केवला रोहिणी। तत्राष्टम्याः प्राधान्यात्प्राबल्यमास्थेयम्। सर्वत्र हि जयन्तीवाक्येषु रोहिणीसहिताष्टमीति व्यवहारादष्टमीसहिता रोहिणीति व्यवहाराभावाच्च तिथिनक्षत्रयोः क्रमेण प्रधानोपसर्जनभावोऽवगन्तव्यः। अतो गुणाधिक्याच्छुद्धाधिका पूर्व्वैवोपोष्या। निशीथादर्वाक् सप्तम्या युक्ता परेद्युरपि विद्यमाना विद्धाधिका। नन्वत्र निशीथवेधो ग्राह्य इत्युक्तम्। वाढं वेध्याया अष्टम्या निशीथसद्भावोऽत्र निशीथवेधः न तु वेधिकाया सप्तम्याः निशीथसमये सद्भावः। विद्धाधिकायामपि पक्षत्रयम्। द्वयोः पक्षयोश्च सन्देहाभावः पूर्व्ववद्योजनीयः। तत्र या पूर्व्वेद्युरेव रोहिणीयुक्ता विद्धाधिका तस्यामुपवास आदित्यपुराणे स्मर्य्यते "विनाऋक्षं न कर्त्तव्या नवमीसंयुताष्टमी। कार्य्या विद्धापि सप्तम्या रोहिणीसहिताष्टमीति"। विष्णुधर्म्मोत्तरेऽपि "जयन्ती शिवरात्रिश्च कार्य्ये भद्राजयान्विते। कृत्वोपवासं तिथ्यन्ते तथा कुर्य्यात्तु पारणमिति"। गारुड़पुराणेऽपि "जयन्त्यां पूर्व्वविद्धायामुपवासं समाचरेत्। तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणमिति"। या परेद्युरेव रोहिणीयुक्ता विद्धाधिका तत्रोपवासः पूर्वतिथौ न युक्तः, रोहिणीयोगाभावात् परेद्युः तत्सद्भावात्पूर्वोदाहृतेन प्राजापत्येत्यादिना विष्णुरहस्यवचनेनोपवासो विधीयते। या तूभयत्र रोहिणीयुक्ता विद्धाधिका सापि निशीथे जयन्तीयोगमपेक्ष्य चतुर्धा भिद्यते। पूर्व्वेद्युरेव निशीथयोगवती। परेद्युरेव तादृशी, उभयत्रापि निशीथयोगसहिता तद्रहिता चेति। तत्र या पूर्व्वेद्युरेव निशीथयोगवती सा पूर्वैवोपोष्या तदुक्तं पद्मपुराणे "कार्य्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी। तत्रोपवासं कुर्वीत तिथिभान्ते च पारणमिति" अत्रावशिष्टेषु त्रिषु पक्षेषु परदिन एवोपवासः। तत्र दिनद्वये निशीथयोगमुपलक्ष्य ब्रह्मवैवर्त्ते पठ्यते "वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी। सा सर्क्षापि न कर्त्तव्या सप्तमीसहिताष्टमी। "अविद्धायान्तु सर्क्षायां जातो देवकीनन्दनः" इति। यदा दिनद्वयेऽपि निशीथयोगे परत्रोपवासस्तदा किमु वक्तव्यं परेद्युरेव निशीथयोगे। दिनद्वयेऽपि निशीथयोगराहित्यं बहुधा जायते। तद्यथा पूर्वेद्युर्निशीथादूर्द्ध्वं तिथिनक्षत्रद्वयं प्रवृत्तं तच्च परेद्युर्निशीथादर्वागेव समाप्तमित्येकः प्रकारः। पूर्वेद्युर्निशीथादर्वागेव नक्षत्रं प्रवृत्तम् अष्टमी तु निशीथादूर्द्ध्वं प्रवृत्ता परेद्युर्निशीथादर्वाग् नक्षत्रं निवृत्तमित्यपरः। अष्टमी निशीथादर्वाक् प्रवृत्ता ऋक्षं च निशीथादूर्द्ध्वं प्रवृत्तम् अष्टम्याःपरेद्युर्निशीथादर्वागेव समाप्तिरिति तृतीयः। त्रिष्वप्येतेषु प्रकारेषु परैवोपोष्या दिनद्वयेऽप्यर्धरात्रयोगविषये पूर्वोदाहृतस्य "वर्जनीया

प्रयत्नेन" इत्यादिवचनस्तावार्ऽपि चारयितुं शक्यत्वात्। किञ्च प्रथमप्रकारे न्यायेऽप्युद्दलको भवति। सङ्कल्पकाल-मारभ्य तिथिनक्षत्रयोगस्य बहुकालव्यापित्वात् प्रशस्तत्वं द्रष्टव्यम्। द्वितीयप्रकारे परेद्युरष्टमीत्वाङ्गल्येऽपि नक्षत्र-योगस्याल्पत्वादनुपादेयत्वमित्याशङ्का न कर्त्तव्या। अतएव स्कन्दपुराणे पठ्यते"सप्तमीसहिताष्टम्यां भूत्वा ऋक्षं द्विजो-त्तम!। प्राजापत्यं द्वितीयेऽह्नि मुहूर्त्तार्धं भवेद्यदि। तदा-ष्टयामिकं ज्ञेयं मोक्तं व्यासादिभिः पुरेति"। तृतीयप्रकारे परेद्युर्नक्षत्रबाहुल्येऽपि अष्टमीयोगस्याल्पत्वादनुपादेयत्व मित्याशङ्का भवति सा च पद्मपुराणेन निवर्त्त्यते "पूर्व-विद्धाष्टमी या तु उदये नवमीदिने। मुहूर्त्तमपि संयुक्ता संपूर्णा साष्टमी भवेत्। कला काष्ठा मुहूर्त्तोऽपि यदा कृष्णा ष्टमी तिथिः। नवम्यां सैव ग्राह्या स्यात् सप्तमीसंयुता न हीति"। तदेवं जन्माष्टमीभेदा जयन्तीभेदाश्च निरू-पिताः। तत्र जयन्तीभेदेषूपवासदिने यदि बुधवारः सोमवासरो वा भवति तदा फलाधिक्यं भवति तदुक्तं पद्मपुराणे "प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः। यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता। किं पुन-र्बुधवारेण सोमेनापि विशेषतः। किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदेति"। स्कन्दपुराणेऽपि"उदये चाष्टमी किंचिन्नवमी सकला यदि। भवेत्तु बुधसंयुक्ता प्राजापत्य र्क्षसंयुता। अपि वर्षशतेनापि लभ्यते यदि वा नवेति"। विष्णुधर्मोत्तरेऽपि "अष्टमी बुधवारेण रोहिणीसहिता यदा। भवेत्तु मुनिशार्दूल! किं कृतैर्व्रतकोटिभिरिति"।

यथोक्तरीत्या विहिततिथावुपवासं कृत्वा परेद्युः पार-णेनोपवासं समापयेत् पार तीर-कर्मसमाप्तावित्यस्माद्धातोः निष्पन्नः पारणशब्दः। यद्यप्यसौ समाप्तिमात्रमभिधत्ते तथाप्युपवाससमाप्तावेव लोकशास्त्रयोः प्रयोगात् पङ्कजादि-शब्दवद्योगरूढोद्रष्टव्यः। तथा च योगरूढ्योपवासस्य चरमाङ्गं भोजनमभिधत्ते। अङ्गत्वञ्चोपवासविधिवाक्येषु "तिथिभान्ते च पारणमिति" विधानादवगन्तव्यम्। न च रागप्राप्तस्य भोजनस्यानेन वचनेनोपवासाङ्गतिथि नक्षत्रयोर्निषेधः क्रियते न तु पारणनामकं किञ्चिद-ङ्गं विधीयत इति शङ्कनीयम् तथासति पारणशब्द प्रयोगानुपपत्तेः रागप्राप्ते ह्यभ्यवहरणे भोजनशब्दः। तत्र पारणशब्देन रागप्राप्तभोजनविवक्षायां मुख्यार्थो बाधितः स्यात्। किञ्च यदि पारणमङ्गं न स्यात्तदा प्रति-निधिविधानं नोपपद्येत। तद्विधानञ्च द्वादशीप्रस्तावे देवलेन स्मर्यते"संकटे विषमे प्राप्ते द्वादश्यां पारयेत् कथम्?। अद्भिस्तु पारणं कुर्यात् पुनर्भुक्तं न दोषकृदिति"। अतः पारणशब्दबलात् प्रतिनिधिविधिबलाच्च पारणस्याङ्गत्वं द्रष्टव्यम्। अतएवादित्यपुराणे"पारणान्तं व्रतं ज्ञेयं व्रता-न्ते न द्विभोजनम्। असमाप्ते व्रते पूर्वं नैव कुर्याद्व्रतान्तर मिति" तच्च पारणमुपवासदिनात् परदिनपूर्वाह्णे कर्त्त-व्यम् "उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेदिति" देवल स्मरणात्। एवं सामान्यतः पूर्वाह्णे पारणप्राप्तौ क्वचि-दपवादाय "तिथिभान्ते च पारणम्" इत्यभिधीयते। शुद्धाधिकायां पूर्व्वेद्युरेव जयन्तीयोगः उभयत्रापि वा जयन्तीयोग इत्यनयोः पक्षयोः पूर्व्वेद्युरेवोपवासविधा-नात् परेद्युः केवलतिथेस्तिथिनक्षत्रयोर्वा सद्भावात्तदन्ते पारणविधिः। तथा शुद्धाधिकयोर्विद्धाधिकयोरुभयोरपि यदा परेद्युरेव जयन्तीयोगस्तदा परतिथावुपवासविधानात्पार-णदिने तिथ्यभावेऽपि कदाचिन्नक्षत्रावशेषसम्भवात्तदन्ते पारणं विधीयते तिथेर्वा नक्षत्रस्य वावशेषकाले पारणं ब्रह्मवैवर्त्ते प्रतिषिध्यते। "अष्टम्यामथ रोहिण्यां न कुर्या-त्पारणं क्वचित्। हन्यात्पुरा कृतं कर्म उपवासार्जितं फलम्। तिथिरष्टगुणं हन्ति नक्षत्रञ्च चतुर्गुणम्। त-स्मात् प्रयत्नतः कुर्यात्तिथिभान्ते च पारणमिति"। स्कन्द-राणेऽपि "तिथिनक्षत्रनियमे तिथिभान्ते च पारणम्। अतोऽन्यथा पारणे तु व्रतभङ्गमवाप्नुयादिति"। तिथिभान्तञ्च द्विविधं उभयान्त एकतरान्तश्चेति। दिनद्वये जयन्तीयोगवत्यां शुद्धाधिकायां परदिने अष्टमी मुहूर्त्तत्र-यं नातिक्रामति रोहिणी तु पूर्वेद्युर्निशीथादर्वाग् यदा कदाचित् प्रवृत्ता तदनुसारेण परेद्युः समाप्येत। तत्र यदि दिवैव समाप्येत तदा तामतिवाह्यैव पारणं कुर्यात् उभयान्तस्य मुख्यत्वात्। यदि रात्रौ समाप्तिस्तदा तत्समा-प्तिर्न प्रतीक्षणीया रात्रिपारणस्य निषिद्धत्वात्। तथा च ब्रह्मवैवर्त्ते "सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते। अन्यथा पुण्यहानिः स्यादृते धारणपारणमिति। अन्य-तिथ्यागमोरात्रौ तामसस्तैजसो दिवा। तामसे पारणं कुर्वंस्तामसीं गतिमश्नुते" इति। दिवापारणं कुर्वन्नपि नाष्टमीवेलायां कुर्यात् एकतरान्तस्याभावात् अष्टमीम-तिवाह्य रोहिण्यां वर्त्तमानायामपि पारणं कार्यम्। अतएव नारदीये "तिथिनक्षत्रसंयोग उपवासोयदा भवेत्। पारणं तु न कर्त्तव्यं यावन्नैकस्य संक्षयः"। सांयोगिके व्रते प्राप्ते यत्रैकोऽपि वियुज्यते। तत्रैव पारणं कुर्यादेवं

वेदविदो विदुरिति"। पूर्वेद्युरेव निशीथे जयन्तीयोग वत्यां विद्धाधिकायां पारणदिने तिथिभान्तो बहुधा संभाव्यते। अहन्युभयान्तएकतरान्तो वा, रात्रावेकतरान्त उभयान्तो वेति। तेषु चतुर्षु भेदेषु निर्णयः स्मर्यते "तिथिनक्षत्रयोर्यदा च्छेदो नक्षत्रान्तमथापि वा। अर्द्ध-रात्रेऽपि वा कुर्यात् पारणञ्च परेऽहनीति"। दिवसे यद्युभयान्तस्तदा पारणमिति मुख्यः कल्पः। नक्षत्रान्तमित्यनेनैकतरान्तत्वं विवक्षितम्। सोऽयमनुकल्पः। यदि रात्रौ निशीथादर्वागुभयान्त एकतरान्तो वा भवति तदा दिवसे मुख्यानुकल्पयोरुभयोरप्यसंभवाद्रात्रौ पारणस्य निषिद्धत्वाच्चार्थात्तत्राप्युपवासप्राप्तौ पारणस्य प्रतिप्रसवः क्रियते "अर्धरात्रेऽपि वा कुर्यादिति"। ननु पारणेऽष्टम्यन्तस्य प्रतीक्षणीयत्वेऽपि रोहिण्यन्तो न प्रतीक्षणीयः "याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः। ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणीम्" इति स्मरणात्। मैवम्। "नक्षत्रञ्च चतुर्गुणमिति" प्रत्यवायस्योदाहृतत्वात्। तस्मात् "विना श्रवणरोहिणीमिति वचनं केवलनक्षत्रोपवासविषयं पूर्वोक्तानुकल्पविषयं वेत्यवगन्तव्यम्। अशक्तस्य तु तिथिनक्षत्रयोरुभयोरनुवर्त्तमानयोरपि प्रातर्देवं संपूज्य क्रियमाणं पारणं न दुष्यति। "तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारणमिति" स्मरणात्।

तत्र निष्कृष्टार्थस्तु तेनैव कारिकाभिर्निबद्धो यथा "जयन्त्याख्यं व्रतं भिन्नं कृष्णजन्माष्टमीव्रतात्। शुद्धा च सप्तमीविद्धेत्येवं जन्माष्टमी द्विधा। सप्तमी चेन्निशीथात् प्राग्विद्धा शुद्धाऽन्यथा भवेत्। शुद्धायां नास्ति सन्देहो विद्धा च विविच्यते। निशीथयोगः पूर्वेद्युरुत्तरेद्युर्द्वयोरुत। पूर्वैव प्रथमे पक्षे परैवोत्तरपक्षयोः। अष्टमी रोहिणीयुक्ता जयन्ती सा चतुर्विधा। शुद्धा शुद्धाधिकैवेवं विद्धा विद्धाधिकेति च। शुद्धायामपि विद्धायां न संभाव्योत्तरा तिथिः। शुद्धाधिकायां योगः स्यादेकस्मिन्वा दिनद्वये। नैकयोगेऽस्ति सन्देहो द्वियोगे प्रथमन्दिनम्। यदा निशीथे पश्चाद्वेत्युत्तमो मध्यमोऽधमः। योगस्तत्रापि पूर्वेद्युः संपूर्णत्वादुपोषणम्। विद्धाधिकायां प्रत्येकदिनयोगे स ग्टह्यताम्। द्वयोर्योगस्त्रिधाभिन्नो निशीथव्याप्तिभेदतः। तद्व्याप्तिर्दिन एकस्मिन् भयोर्नोभयोरिति। एकस्मिंस्तद्दिनं स्यात् पक्षयोरन्ययोः परा। बुधे सोमे जयन्ती चेद्वारे साऽतिफलप्रदा। तिथ्यृक्षयोर्द्वयोरन्ते उत्तमं पारणं भवेत्। एकस्यान्त मध्यमं स्यादुत्सवान्तेऽधमं स्मृतम्। यस्मिन्वर्षे जयन्त्याख्यो योगो जन्माष्टमी तदा। अन्तर्भूता जयन्त्यां स्यादृक्षयोगप्रशस्तितः। नोपवासद्वयं कार्यमुपोष्यन्तु परं दिनम्"।

रघुनन्दनमते तु तद्व्यवस्था यथा "यत्रैकदिने जयन्तीलाभस्तत्रैवोपवासः। उभयदिने चेत्तदा परदिने। जयन्त्यलाभे च रोहिणीयुक्ताष्टम्याम्। उभयदिने रोहिणीयुक्ताष्टमीलाभे परदिने। रोहिण्यलाभे तु निशीथसम्बन्धिन्यामष्टम्याम्। उभयदिने निशीथसम्बन्धे तदसम्बन्धे वा परदिन इति। उपवासपरदिने तिथिनक्षत्रयोरवसाने पारणम्। यदा तु महानिशायाः पूर्व्वमेकतरस्यावसानमन्यतरस्य महानिशायां तदनन्तरं वा तदेकतरावसाने पारणम्। यदा महानिशायामुभयस्थितिस्तदोत्सवान्ते प्रातःपारणमिति"।

तत्प्रमाणवाक्यानि ति० त० जन्माष्टमीतत्त्वेऽनुसन्धेयानि माधवरघुनन्दनमतयोर्युक्तत्वायुक्तत्वे सत्यपि देशविशेषवासिभिस्तत्तद्व्यवस्थे आदर्त्तव्ये एते च व्यवस्थे स्मार्त्तैरेवादर्त्तव्ये। वैष्णवैस्तु हरिभक्तिविलासाद्यनुसारिणी व्यवस्थादर्त्तव्या सा च जन्माष्टमीशब्दे दृश्या। कृष्णजन्माष्टमीशब्दोऽप्यत्र दर्शितकालमाधवीयग्रन्थे उदा० दृश्यम्।

**कृष्णिका** स्त्री कृष्णोवर्णो भूम्नाऽस्त्यस्य ठन् कृष्णैव संज्ञायां कन्वा। (राइसरिषा) राजसर्षपे हेमच०

**कृष्णेक्षु** पु० कर्म०। (काजला) इक्षुभेदे कान्तारेक्षौ राजनि०। तद्गुणाः इक्षुशब्दे ९०९पृ० उक्ताः

**कृष्णोदर** पुंस्त्री० कृष्णमुदरमस्य। दर्वीकरसर्पभेदे "कृष्णसर्पो महासर्पः कृष्णोदरः" इत्यादि दर्वीकरसर्पभेदोक्तौ सुश्रु०। अहिशब्दे विवृतिः स्त्रियां जातित्वात् ङीष्।

**कृष्णोदुम्बरिका** स्त्री कृष्णस्य काकस्य प्रिया उदुम्बरिका। काकोदुम्बरिकायाम् राजनि०

**कृष्य** त्रि० कृष—कर्मणि अर्हार्थे क्यप्। कर्षणार्हे क्षेत्रादौ "कृष्यां दहन्नपि ननु क्षितिमिन्धनेद्धः" रघुः

**कृसर** पु० कृ—सर किच्च बा० न णत्वम्। "तिलतण्डुल सम्पक्वः कृसरः सोऽभिधीयते" कृ० प० उक्ते तिलखण्ड मिश्रिते पक्वे तण्डुले (खेचडी) कृतान्नभेदे स्त्री भावप्र० कृतान्नशब्दे दृश्यम्

**कृ** विक्षेपे तुदा० पर० सक० सेट्। किरति अकारीत्।

अकारिष्टाम् चकार चकरतुः चकरिथ। करीता।
क(रि)रीष्यति करी(रि)तव्यः कार्य्यः। कर्म्मणि कीर्य्यते
अकारि अकारिषाताम् अकारि(क(रि)री) षाताम्
किरन् कीर्य्यमाणः। कीर्णः कीर्णिः करी(रि)तुम्

अनु+पश्चात् क्षेपे अनुकिरति अनुकीर्णः

अप+हर्षवासभक्षणार्थतया खनने तत्र चतुष्पाजन्तु–पक्षि
कर्त्तृके आ० सुट् च। अपस्किरते हृष्टो वृषः भक्षार्थी
कुक्कुटः वासार्थी श्वा वा। हर्षाभावे तु न सुट् न वा
तङ्। अपकिरति कुसुमम्।

अव+अधःक्षेपणे दूरतःप्रक्षेपे च सक० अवकिरति मलार्थे
सुट् अवस्कारः। व्रतात् पतने अक०। अवकीर्णी

आ+समन्तात् क्षेपणे विस्तारे च सक० "आकीर्णमृषिपत्नीना
मुटजद्वाररोधिभिः" रघुः

उद्+उत्खनने (गाड़ा) उत्कीर्णशब्दे उदा० [त्कीर्णे"रघुः

सम्+उद्+छेदने विदारणे हिंसायां च सक०"मणौ वज्रसमु-

उप+छेदने सुट् च। उपस्किरति

परा+सम्यक् क्षेपे व्याप्तौ च सक० पराकीर्णः

प्र+प्रक्षेपे सक० नानाजातीयैर्मेलने। प्रकीर्णम्

प्रति+हिंसायाम् सुट् च।"उरोविदारं प्रतिचस्करे नखैः"माघः

वि+विक्षेपे सक० "व्यकीर्य्यत त्र्यम्बकपादमूलेः कुमा०

सम्+मिश्रणे। सङ्करः सङ्कीर्णः

**कॄ** हिंसने क्र्यादि० उभ० सक० सेट्। कृणाति अकारीत्।
चकार चकरे करीता करी(रि)ष्यति ते। कीर्णः कीर्णिः

**कॄ** विज्ञाने चुरा० आत्म० सक० सेट्। कारयते अचीकरत।

**कॄत** संशये सशब्दे चु० उभ० सक० सेट्। कीर्त्तयति–ते
अचकीर्त्तत्–त कविकल्पद्रुमः।

**क्लृप्त** त्रि० क्लृप–क्त। १रचिते, २नियते, 'क्लृप्तेन सोपानपथे-
नेति" रघुः। ३छिन्ने च। "क्लृप्तकेशनखश्मश्रुः" मनुः

**क्लृप्तकील** स्त्री क्लृप्तं कीलयति कीलि–अण्। व्यवस्थालि
पौ त्रिका०

**क्लृप्तधूप** पु० क्लृप्तोधूपोयेन। सिह्लके जटा०

**क्लृप्ति** स्त्री क्लृप–भावे क्तिन्। १कल्पने २अवधारणे ३नैयत्ये च।
"तेषां क्लृप्तिमन्वितरे कल्पन्ते" शत० ब्रा० १२।१।१।७
"संज्ञामूर्त्तिक्लृप्तिस्त्रिवृत्कुर्व्वतः" शा० सू०

**क्लृप्तिक** त्रि० क्लृप्तं मूल्यदानेन स्वत्वं देयत्वेनास्त्यस्य ठन्
ततः आगतः कन् वा। २क्रीते हला० तस्य मूल्यदा-
नेन स्वत्वनैयत्यापादकतया तथात्वम्।

**केकय** पु० ब० व० देशभेदे। "अनवद्यं जनपदान्निबोध
गदतो मम" इत्युपक्रमे "उपावृत्तानुपावृत्ताः सुराष्ट्राः
केकयास्तथा" भा० उ० ९अ०। "उभौ भरतशत्रुघ्नौ
केकयेषु परन्तपौ" रा०अ० ६७अ० "केकयांस्ते गमिष्य-
न्तोहयानारुह्य सम्मतान्" रामा० अ० ६०अ० "तथा
केकयराजानं वृद्धं परमधार्म्मिकम्। श्वशुरं राज-
सिंहञ्च सपुत्रं तमिहानय" रामा० आ०१३।१४ "अयं
केकयराजस्य पुत्रोवसति पुत्रक! त्वां नेतुमागतो वीरो
युधाजित् मातुलस्तव" रामा०११।१६।
स च देशः वृ०स० कूर्म्मविभागे उत्तरस्यामुक्तः। "उत्त-
रतः कैलासः इत्युपक्रमे "केकयवसातियामुनभोग
प्रस्थार्जुनायनाग्नीध्राः" इति। केकयानां राजा अण्
यादेरियादेशः। कैकेय तद्देशनृपे। बहुषु तस्य लुक्। केक-
याः तद्देशनृपेषु ब०व०। सोऽभिजनोऽस्य अण्। कैकेय
तद्देशवासिनि बहुषु तस्य लुक्। उपचारात् २केकयनृपे
पु० "सत्कृत्य केकयीपुत्रं केकयोधनमादिशत्" "सत्कृत्य
केकयो राजा भरतस्य ददौ धनम्"रा० अ० ७।२१।१९।
तस्यापत्यम् अण्। तदपत्ये पुंस्त्री० स्त्रियां तु भर्गा० न
लुक्। कैकेयी"गच्छ तातानुजाने त्वां कैकेयी सुप्रजास्त्वया"
रामा०अ०७०।१७।केकयात् जन्यजनकभावरूपपुंयोगे ङीप्
केकयी। ३केकयनृपकन्यायाम् स्त्री द्वापरयुगीये ४नृप-
भेदे पु० "यदा तु पञ्चालपतिर्महात्मा सकेकयश्चेदिपति-
र्वयश्च" भा०भी० १२०अ० युधिष्ठिरं प्रति श्रीकृष्णोक्तिः

**केकर** त्रि०के मूर्द्ध्नि करीतुं नेत्रतारां शीलमस्य कॄ–अच् अलुक्
स०। निम्नोन्नताक्षियुक्ते १पुरुषे (टेरा) अमरः "पित्रा-
विवदमानश्च केकरो मद्यपस्तथा"मनुः पाठान्तरे। उपचा-
रात्२तथाचक्षुषि न० "तरक्षौ निहते चैव जायते केक-
रेक्षणः" शाता०। तद्धेतुतया तरक्षुवधउक्तः "चतु-
र्वर्णस्तु केकरः" विश्वसारतन्त्रोक्ते चतुवर्णात्मके ३मन्त्रे
पु० कुमारशब्दे२१०६पृ० विवृतिः

**केका** स्त्री के मूर्द्ध्नि कायते कर्म्मणि ड अलुक्स०। मयूर-
रवे अमरः "षड्जसंवादिनीः केकाः" रघुः। ततः
अस्त्यर्थे इनिठनौ। केकिन् केकिक तद्युक्ते मयूरे
पुंस्त्री इनौ स्त्रियां ङीप् ठनि टाप्

**केकावल** पुंस्त्री० केकां रवभेदं वलते स्तृणाति वल–अच्
केका+बा० अस्त्यर्थे वलच् वा। मयूरे शब्दच० स्त्रियां
जातित्वात् ङीष्

**केचन** अव्य० किमः+पुंसिजसिरूपं ततश्चन सुग्ध०। केचि-
दित्यर्थे एवं चित्–केचिदित्यप्यत्र। "ये नाम केचिदिह

नः प्रथयन्त्यवज्ञाम्" मालतीमा० । पाणिनिमते द्विपदम् अतएव चिह्नणशब्दघटितमन्त्रान् पदकाराः द्विपदतया मेनुः

**केचक** न० कचु+स्वार्थे क पृषो० । कचुपदार्थे त्रिका० ।

**केणिका** स्त्री के मूर्द्धि कुत्सितः अणकः स्त्रीत्वं लोकात् । पटकुट्याम् (ताबु) पटमण्डपे हेमच० ।

**केत** मन्त्रणे निःश्रावणे (यथोचितभाषणे) च अद० चु० उ० सक० सेट् । केतयति ते अचिकेतत् त केतयाम् बभूव आस चकार चक्रे । केतितः सङ्केतः "सत्वधर्मागमध्याजौ केतयेत् कुलजं द्विजम्" भा० आनु० १५८५ "केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः" मनुः । सम्+इच्छाभेदे शब्दस्यार्थबोधकव्यापारे । "सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च" काव्यप्र० "साक्षात् सङ्केतितं योऽर्थम्" सा० द० अभिप्रायसूचके चेष्टाभेदे (इसारा) सक० "नामसहीतं कृतसङ्केतम्" जय० "कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका" अमरः

**केत** पु० कित–आधारे घञ् । १निवासे "अब्जकुलिशाङ्कुश केतुकेतैः" भाग०१,१६,२६, भावे घञ् । २वासे च "अवाङ्मुखाः पक्षिगणाः विशन्ति केतार्थमिवाशु वृक्षम्" भा० क० ४३३८ । ३प्रज्ञायां निरुक्त० ४संकल्पे "देवासो अनु केतमायन्" ऋ० ४,२६,२, । "केतं संकल्पम्" भा० । ५मन्त्रणे च । "आविष्टना पैजवनस्य केतम्" ऋ०७,१८,२५, "केतं मन्त्रणम्" भा० ६ज्ञातरि त्रि० । "प्रकेतोऽसि रुद्रेभ्यः" ताण्ड्य० ब्रा०१,१८,१०, प्रकेतः प्रकृष्टं ज्ञातासि" भा० । ७ध्वजे पु०

**केतक** पु०कित–निवासे ण्वुल् । "केतकः सूचिकापुष्पोजम्बुकः क्रकचच्छदः" इत्युक्तलक्षणे १वृक्षे । २तत्पुष्पे न० । "स्फुरितभृङ्गमृगच्छवि केतकम्" माघः । गौरादि० ङीष् । ३केतकीत्यपि तद्वृक्षे स्त्री । "सुवर्णकेतकी तुल्या लघुपुष्पा सुगन्धिनी" भावप्र० । "केतकः कटुकः स्वादुर्लघुस्तिक्तः कफापहः" भावप्र० । केतक्याः पुष्पम् अण् तस्य वहुलं लुक् लुकि स्त्रीप्रत्ययस्यापि लुक् । केतक ४तत्पुष्पे न० । बहुलग्रहणात् पाटलादिवत् स्त्रीप्रत्ययस्य क्वचित् न लुक् । "केतकीपत्रगर्भ" अर्च्चयेदित्यनुवृत्तौ "न केतक्या सदाशिवम्" नैष० टी० मल्लिनाथधृतवाक्यम् । आ०त० शिवपूजनाधिकारे भविष्यपु० "केतकी चाति सकञ्च कुन्दो यूथी मदन्तिका । शिरीषसर्ज्जबन्धूककुसुमानि विवर्ज्जयेत्" । एवं शिवपूजने तत्पुष्पस्य निषेधात् राजनि० शिवद्विष्टमिति तत्पर्याये उक्तम् । अतएव नैषधे "विनिद्रपत्रालिगतालिकैतवान्मृगाङ्कचूडामणिवर्जनार्जितम् । दधानमाशासु चरिष्णु दुर्यशः स कौतुकी तत्र ददर्श केतकम्" नैष० वर्णितम् वर्णितञ्च तस्याः क्रकचाकारपत्रावृतत्वादि यथा "वियोगभाजां हृदि कण्टकैः कटुर्निधीयसे कर्णिशरः स्मरेण यत् । ततोदुराकर्षतया तदन्तकृद्विगीयसे मन्मथदेहदाहिना । त्वदग्रसूचीसचिवः स कामिनोर्मनोभवः सीव्यति दुर्यशःपटौ । स्फुटञ्च पत्रैः करपत्रमूर्त्तिभिर्वियोगिहृद्दारुणि दारुणायसे । धनुर्मधुस्विन्नकरोऽपि भीमजापरं परागैस्तव धूलिहस्तयन् । प्रसूनधन्वा शरसात्करोति मामिति क्रुधाऽऽक्रुश्यत तेन केतकम्" । केतकमित्यत्र कथं न लुक् । पुष्पफलभिन्ने तु नाणो लुक् । "अगमत् कैतकं रजः" रघुः । केत+स्वार्थे क । ५ध्वजे पु० । "सारोहायुधकेतकान्" भा०क०२४अ०अत्र वहुव्रीहौ-कप् इति तु न्यायः

**केतन** न० कित-भावाधिकरणकर्म्मकरणेषु यथायथं ल्युट् । १निमन्त्रणे,२ध्वजे,३अम०।४चिह्ने,५कृत्ये हेमच०।६स्थाने शब्दरत्ना० । ७कृत्ये मेदि० । तत्र निमन्त्रणे "प्रतिगृह्य द्विजोविद्वानेकोद्दिष्टस्य केतनम्" मनुः । "यावन्तः पतितास्तिप्रा जडोन्मत्तास्तथैव च । दैवे वाप्यथ वा पित्र्ये तावच्चा घ्नन्ति केतनम्"। मनुः वासे "न तत्र वृक्षच्छाया वा पानीयं केतनानि च" भा०व०१३२६८ । ध्वजे । "भग्नं भीमेन मरुता भवतो रथकेतनम्" वेणी० "समालम्बे वृषराजकेतनः" कुमा० "व्यद्रवन्त रणे भीता विकीर्णायुधकेतनाः" भा०व० १४३०० ।

**केतु** पु० चाय–तु क्यादेशः । १प्रज्ञायां निरु० २राहोरर्द्धदेहात्मके ग्रहभेदे ज्यो० ३दीप्तौ हेमच० ४पताकायां चिह्ने ५ज्योतिषे प्रसिद्धे ६उत्पातभेदे च वा व० व० मेदि० तद्भेदश्च वृ० सं० ११अ० उक्तो यथा

"गार्गीयं शिखिचारं पाराशरमसितदेवलकृतं च । अन्यांश्च बहून् दृष्ट्वा क्रियतेऽयमनाकुलश्चारः । दर्शनमस्तमयो वा न गणितविधिनास्य शक्यते ज्ञातुम् । दिव्यान्तरिक्षभौमास्त्रिविधाः स्युः केतवो यस्मात् । अहुताशेऽनलरूपं यस्मिंस्तत् केतुरूपमेवोक्तम् । खद्योतपिशाचालय मणिरत्नादीन् परित्यज्य । ध्वजशस्त्रभवनतरुतुरगकुञ्जराद्येष्वथान्तरिक्षास्ते । दिव्या नक्षत्रोत्था भौमाः स्युरतोऽन्यथा शिखिनः । शतमेकाधिकमेके सहस्रमपरे वदन्ति केतूनाम् । बहुरूपमेकमेव प्राह मुनिर्नारदः केतुम् । यद्येको यदि बहवः किमनेन फलं तु सर्वथा वाच्यम् ।

उदयास्तमयैः स्थानैः स्पर्शैराधूमलैर्वर्णैः । यावन्त्यहानि दृश्यो मासास्तावन्त एव फलपाकाः । मासैरब्दांश्च वदेत् प्रथमात्पक्षत्रयात् परतः । ह्रस्वस्तनुः प्रसन्नः स्निग्धस्त्वृजुरचिरसंस्थितः शुक्लः । उदितो वाऽप्यभिदृष्टः सुभिक्षसौख्यावहः केतुः । उक्तविपरीतरूपो न शुभकरो धूमकेतुरुत्पन्नः । इन्द्रायुधानुकारी विशेषतो द्वित्रिचूलो वा । हारमणिहेमरूपाः किरणाख्याः पञ्चविंशतिः सशिखाः । प्रागपरदिशोर्दृश्या नृपतिविरोधावहा रविजाः । शुकदहनबन्धुजीवकलाक्षाक्षतजोपमा हुताशसुताः । आग्नेय्यां दृश्यन्ते तावन्तस्तेऽपि शिखिभयदाः । वक्रशिखा मृत्युसुता रूक्षा कृष्णाश्च तेऽपि तावन्तः । दृश्यन्ते याम्यायां जनमरकावेदिनस्ते च । दर्पणवृत्ताकारा विशिखाः किरणान्विता धरातनयाः । क्षुद्भयदा द्वाविंशतिरैशान्यामम्बुतैलनिभाः । शशिकिरणरजतहिमकुमुदकुन्दकुसुमोपमाः सुताः शशिनः । उत्तरतो दृश्यन्ते त्रयः सुभिक्षावहाः शिखिनः । ब्रह्मसुत एक एव त्रिशिखो वर्णैस्त्रिभिर्युगान्तकरः । अनियतदिक्सम्भवो विज्ञेयो ब्रह्मदण्डाख्यः । शतमभिहितमेकसमेतमेतदेकेन विरहितान्यस्मात् । कथयिष्ये केतूनां शतानि नव लक्षणैः स्पष्टैः । सौम्यैशान्योरुदयं शुक्रसुता यान्ति चतुरशीत्याख्याः । विपुलसिततारकास्ते स्निग्धाश्च भवन्ति तीव्रफलाः । स्निग्धाः प्रभासमेता द्विशिखाः षष्टिः शनैश्चराङ्गभवाः । अतिकष्टफला दृश्याः सर्वत्रैते कनकसंज्ञाः । विकचा नाम गुरुसुताः सितैकताराः शिखापरित्यक्ताः । षष्टिः पञ्चभिरधिका स्निग्धा याम्याश्रिताः पापाः । नातिव्यक्ताः सूक्ष्मा दीर्घाः शुक्ला यथेष्टदिक्प्रभवाः । बुधजास्तस्करसञ्ज्ञाः पापफलास्त्वेकपञ्चशत् । क्षतजानलानुरूपास्त्रिचूलताराः कुजात्मजाः षष्टिः । नाम्ना च कौङ्कुमास्ते सौम्याशासंस्थिताः पापाः । त्रिंशत्त्र्यधिका राहोस्ते तामसकीलका इति ख्याताः । रविशशिगा दृश्यन्ते तेषां फलमर्कचारोक्तम् । विंशत्याधिकमन्यच्छतमग्नेर्विश्वरूपसञ्ज्ञानाम् । तीव्रानलभयदानां ज्वालामालाकुलतनूनाम् । श्यामारुणा वितारास्त्वामररूपा विकीर्णदीधितयः । अरुणाख्या वायोः सप्तसप्ततिः पापदाः परुषाः । तारापुञ्जनिकाशा गणका नाम प्रजापतेरष्टौ । द्वे च शते चतुरधिके चतुरस्रा ब्रह्मसन्तानाः । कङ्का नाम वरुणजा द्वात्रिंशद्वंशगुल्मसंस्थानाः । शशिवत् प्रभासमेतास्तीव्रफलाः केतवः प्रोक्ताः । षण्णवतिः कालसुताः कबन्धसञ्ज्ञाः कबन्धसंस्थानाः । षण्डा भयप्रदाः स्युर्विरूपताराश्च ते शिखिनः । शुक्ला विपुलैकतारा नव विदिशां केतवः समुत्पन्नाः । एवं केतुसहस्रं विशेषमेषामतो वक्ष्ये । उदगायतो महान् स्निग्धमूर्तिरपरोदयी वसाकेतुः । सद्यः करोति मरकं सुभिक्षमप्युत्तमं कुरुते । तल्लक्षणोऽस्थिकेतुः स तु रूक्षः क्षुद्भयावहः प्रोक्तः । स्निग्धस्तादृक् प्राच्यां शस्त्राख्यो डमरमरकाय । दृश्योऽमावास्यायां कपालकेतुः सधूम्ररश्मिशिखः । प्राग्नभसोऽर्धविचारी क्षुन्मरकावृष्टिरोगकरः । प्राग्वैश्वानरमार्गे शूलाग्रः श्यावरूक्षताम्रार्चिः । नभसस्त्रिभागगामी रौद्र इति कपालतुल्यफलः । अपरस्यां चलकेतुः शिखया याम्याग्रयाङ्गुलोच्छ्रितया । गच्छेद्यथा यथोदक् तथा तथा दैर्घ्यमायाति । सप्त मुनीन् संस्पृश्य ध्रुवमभिजितमेव च प्रतिनिवृत्तः । नभसोऽर्धमात्रमित्वा याम्येनास्तं समुपयाति । हन्यात् प्रयागकूलाद्यावदवन्तीं च पुष्करारण्यम् । उदगपि च देविकामपि भूयिष्ठं मध्यदेशाख्यम् । अन्यानपि च स देशान् क्वचित् क्वचिद्धन्ति रोगदुर्भिक्षैः । दश मासान् फलपाकोऽस्य कैश्चिदष्टादश प्रोक्तः । प्रागर्धरात्रदृश्यो याम्याग्रः श्वेतकेतुरन्यश्च । क इति युगाकृतिरपरे युगपत्तौ सप्तदिनदृश्यौ । स्निग्धौ सुभिक्षशिवदावथाधिको दृश्यते कनामा यः । दश वर्षाण्युपतापं जनयति शस्त्रप्रकोपकृतम् । श्वेत इति जटाकारो रूक्षः श्यावो वियत्त्रिभागगतः । विनिवर्तते ऽपसव्यं त्रिभागशेषाः प्रजाः कुरुते । आधूम्रया तु शिखया दर्शनमायाति कृत्तिकासंस्थः । ज्ञेयः स रश्मिकेतुः श्वेतसमानं फलं धत्ते । ध्रुवकेतुरनियतगतिप्रमाणवर्णाकृतिर्भवति विष्वक् । दिव्यान्तरिक्षभौमो भवत्ययं स्निग्ध इष्टफलः । सेनाङ्गेषु नृपाणां गृहतरुशैलेषु चापि देशानाम् । गृहिणामुपस्करेषु च विनाशिनां दर्शनं याति । कुमुद इति कुमुदकान्तिर्वारुण्यां प्राक्छिखो निशामेकाम् । दृष्टः सुभिक्षमतुलं दश किल वर्षाणि स करोति । सकृदेकयामदृश्यः सुसूक्ष्मतारोऽपरेण मणिकेतुः । ऋज्वी शिखास्य शुक्ला स्तनोद्गता क्षीरधारेव । उदयन्नेव सुभिक्षं चतुरो मासान् करोत्यसौ सार्धान् । प्रादुर्भावं प्रायः करोति च क्षुद्रजन्तूनाम् । जलकेतुरपि च पश्चात् स्निग्धः शिखयाऽपरेण चोन्नतया । नव मासान् स सुभिक्षं करोति शान्तिं च लोकस्य । भवकेतुरेकरात्रं

दृश्यः प्राक् सूक्ष्मताकरः स्निग्धः। हरिलाङ्गूलोपमया प्रदक्षिणावर्त्तया शिखया। यावत एव मुहूर्त्तान् दर्शनमायाति निर्द्दिशेन्मासान्। तावदतुलं सुभिक्षं हन्ते प्राणान्तिकान् रोगान्। अपरेण पद्मकेतुर्मृणालगौरो भवेन्निशामेकाम्। सप्त करोति सुभिक्षं वर्षाण्यतिहर्षयुक्तानि। आवर्त इति निशार्धे सव्यशिखोऽरुणनिभोऽपरे स्निग्धः। यावत्क्षणान् स दृश्यस्तावन्मासान् सुभिक्षकरः। पश्चात् सन्ध्याकाले संवर्तो नाम धूम्रताम्रशिखः। आक्रम्य वियत्त्र्यंशं शूलाग्रावस्थितो रौद्रः। यावत एव मुहूर्त्तान् दृश्यो वर्षाणि हन्ति तावन्ति। भूपांश्च शस्त्रनिपातैरुदयर्क्षं चापि पीडयति। ये शस्तास्तान् हित्वा केतुभिराधूमिते ऽथवा स्पृष्टे। नक्षत्रे भवति बधो येषां राज्ञां प्रवक्ष्ये तान्। अश्विन्यामश्मकपं भरणीषु किरातपार्थिवं हन्यात्। बहुलासु कलिङ्गेशं रोहिण्यां शूरसेनपतिम्। औशीनरमपि सौम्ये५ जलजाजीवाधिपं तथार्द्रासु। आदित्ये७ऽश्मकनाथं पुष्ये मगधाधिपं हन्ति। असिकेशं भौजङ्गे ९पित्र्ये १०ऽङ्गं पाण्ड्यनाथमपि भाग्ये ११। औज्जयनिकमार्यम्णे १२ सावित्रे १३दण्डकाधिपतिम्। चित्रासु कुरुक्षेत्राधिपस्य मरणं समादिशेत्तज्ज्ञः। काश्मीरककाम्बोजौ नृपती प्राभञ्जने १५न स्तः। इक्ष्वाकुरलकनाथो हन्येते यदि भवेद्विशाखासु। मैत्रे १७पुण्ड्राधिपतिर्ज्यैष्ठासु च सार्वभौमबधः। मूलेऽन्ध्रमद्रकपती जलदेवे २०काशिपो मरणमेति। यौधेयकार्ज्जुनायनशिविचैद्यान् वैश्वदेवे २१ च। नैमिषनृपं २२हन्यात् केकयनाथं २३पाञ्चनदम् २४। सिंहलाधिपं२५ वाङ्गम् २६ किरातं २७श्रवणादिषु षट्स्विमान् क्रमशः। उल्काभिताडितशिखः शिवः शिवतरोऽभिवृष्टो यः। अशुभः स एव चोलावगाणसितहूणचीनानाम्। नक्षा यतः शिखिशिखाभिहता यतो वा ऋक्षं च यत् स्पृशति तत्कथितांश्च देशान्। दिव्यप्रभावनिहतान् स यथा गरुत्मान् भुङ्क्ते गतो नरपतिः परभोगिभोगान्"।

केतुविशेषाणां कालविशेषादनन्तरमुदयः पराशरवाक्यादिषु ज्ञेयस्तानि यथा

कपालकेतुः "अथादित्यजानां, कपालकेतुरुदयते अमावास्यायां पूर्व्वस्यां दिशि सधूम्रार्चिः शिखो नभसो विप्रयातश्चरो दृश्यते। पञ्चविंशवर्षशतं प्रोष्य लौक्ष पश्चात् रुतिर्यस्य कुमुदकेतोश्चारान्ते स दृष्टएव। दुर्भिक्षानावृष्टिव्याधिभयं प्रत्युपद्रवान् सृजति। यावतो दिवसान् दृश्यते तावन्मासान्मासैः संवत्सरान् पञ्चदशस्य वर्षाधान्यस्यार्घं कृत्वा प्रजानामेकमुपयुङ्क्ते" परा०।

कालकेतुः "अथ दक्षयज्ञे रुद्रक्रोधोद्भवः कालकेतुस्त्रीणि वर्षशतानि नव च मासान् प्रोष्य उदयते। पूर्व्वस्य वैश्वानरमार्गे इत्यमृतमयस्य मणिकेतोश्चारान्ते श्यावरूक्षताम्रारुणां शूलाकारप्रदर्शीं शिखां कृत्वा नभसस्त्रिभागचारी स शस्त्रभयरोगदुर्भिक्षावृष्टिमरकैः यावन्मासान् दृश्यते तावद्वर्षाणि त्रिभागशेषां प्रजां कृत्वा शारदधान्यस्याढकमर्द्धं कृत्वा चास्तं व्रजति" परा०। तथा च वृद्धगर्गः "ज्येष्ठा मूलमनुराधा या वीथी संप्रकीर्त्तिता। तास्तु वीथीं समारुह्य केतुश्चेत् क्रीडते भयम्। दक्षिणाभिनतां कृत्वा शिखां घोरां भयङ्कराम्। शूलाग्रसदृशीं तीक्ष्णां श्यावताम्रारुणप्रभाम्। पूर्व्वस्य उदितश्चैव नक्षत्राण्यवधूपयेत्। घोरं प्रजास्तत्सृजति फलं मासे त्रयोदशे। त्रिभागं नभसो गत्वा ततो गच्छत्यदर्शनम्। यावतो दिवसांस्तिष्ठेत् तावद्वर्षाणि तद्भयम्। शस्त्राग्निभयरोगैश्च दुर्भिक्षमरकैर्हताः। घूर्णमानाः प्रजाः सर्व्वा विद्रवन्ति दिशो दश"।

चलकेतुः "अथ पैतामहश्चलकेतुः पञ्चदशवर्षशतं प्रोष्य उदितः पश्चिमेनाङ्गुलिपर्व्वमात्रां शिखां दक्षिणाभिनतां कृत्वा कालकेतोश्चारान्ते नभसस्त्रिभागमनुचरन् यथा यथोत्तरां व्रजति तथा तथा शूलाग्राकारां शिखां दर्शयन् ब्राह्मं नक्षत्रमुपसृत्य मनाक् ध्रुवं व्रजन् राशिं सप्तर्षीन् संस्पृश्य नभसोऽर्द्धमात्रं दक्षिणमनु परिक्रम्य अस्तं व्रजति। स स्वर्गे दारुणकर्म्मा स्वर्गप्राप्तित्वादेव वक्रास्तमभिनिहन्ति लोकमपि च। भूमिं कम्पयित्वा दश मासान् मध्यदेशे भूयिष्ठं जनपदमवशेषं कुरुते। तेष्वपि च क्वचित् क्वचित् शस्त्रदुर्भिक्षमरकव्याधिभयैः क्षिणोत्यष्टादशमासानिति" परा० तथा गर्गः। "क्षुच्छस्त्रमरकव्याधिभयैः संपीडयेत् प्रजाः। मासान् दश तथाष्टौ च चलकेतुः सुदारुणः"।

उद्दालकश्वेतकेतुः ककेतुश्च "अथोद्दालकः श्वेतकेतुर्दशोत्तरं वर्षशतं प्रोष्य भद्रकेतोश्चारान्ते पूर्व्वस्यां दक्षिणाभिनतशिखोऽर्द्धरात्रकाले दृश्यस्तेनैव सह द्वितीयः कः प्रजापतिपुत्त्रः पश्चिमकेन ककेतुर्यूपसंस्थायी युगपद्दृश्येत। ततस्तावुभौ सप्तरात्रदृश्यौ दशवर्षाणि प्रजाः पीडयेते। कः प्रजापतिपुत्त्रो यद्यधिकं दृश्यते तदा दारुणतरं प्रजानां शस्त्रकोपं

कुर्य्यात्। तथैव स्नेहवर्णयुक्तौ क्षेमारोग्यसुभिक्षदौ भवतः” परा०।

काश्यपश्वेतकेतुः “अथ काश्यपः श्वेतकेतुः पञ्चदश वर्षशतं प्रोष्योपः सोमसुहृजस्य पद्मकेतोश्चारान्ते शास्त्रच्छायो नभस्त्रिभागमाक्रम्यापसव्यं निवृत्योर्द्ध्वं प्रदक्षिणजटाकारशिखः स यावन्मासान् दृश्यते तावद्वर्षाणि सुभिक्षमावहति। मध्यदेशे आर्य्यगणानामदीनामौदीच्यैर्भूयिष्ठस्त्रिभागशेषां प्रजामवशेषयति” परा०।

रश्मिकेतुः “अथ रश्मिकेतुर्विभावसुजः प्रोष्य वर्षशतमावर्त्तकेतोश्चारान्ते उदितः कृत्तिकासु धूमकेतुः। अथानियतदिक्कालरूपवर्णप्रमाणसंस्थानो धूमकेतुः पराभविष्यतां देशानां राज्ञां जनपदानाञ्च दृश्यपुरपर्वतवेश्मध्वजपताकाशस्त्रवर्म्मायुधावरणरथनागोष्ट्रपुरुषशयनासनभाण्डेषु च दृश्यते। स एव दिवि स्निग्धो निर्म्मलः प्रदक्षिणशिखो गजनागवीथीनामुत्तरेण व्रजन् सुभिक्षक्षेमारोग्यं चावहति। दशैकविंशतिद्विषष्टिशतधा वा दर्शनमिच्छन्ति मुनयो धूमकेतोस्तस्य च प्रागुदयाद्विमित्ताय्यवाचीनचलनमभ्रैः प्रभा मत्स्यप्रधूपनं दिशां शीतोष्णविपर्य्यय इति व्यक्तिवाक्यसम्भवश्च” परा०।

जलकेतुः “अथ जलकेतुः पैतामहः यश्च चलकेतोर्नवमासावशिष्टे कर्म्मणि कृते प्रवर्त्तयति। पश्चिमेनोदितः स्निग्धः सुजातोऽनुपश्चिमाभिनतः। स च शिखी नव मासान् क्षेमसुभिक्षारोग्याणि प्रजाभ्यो धत्ते अन्यग्रहकृतानां चाशुभानां व्याघातायेति”। परा०

भवकेतुः “अथ जलकेतोः कर्म्मसमाप्तौ धूम्रादयः शीतान्ताःअष्टौ प्रादुर्भवन्ति तत्र त्रयोदश चतुर्द्दशाष्टादश वर्षान्तात् दृश्यन्ते सुभिक्षायैश्याविपर्य्यया विपरीताः क्षुद्रजन्तूनाञ्च बधाय, तेषामष्टानां कर्म्मण्यतीते भवकेतुर्दृश्यते। पूर्व्वस्यैकरात्रं यावत् कृत्तिकानामन्तरतो वा तत्प्रमाणया स्निग्धपारुष्याभया सिंहलाङ्गूलसंस्थानया प्रदक्षिणतास्रया शिखयोदितः। स यावन्मुहूर्त्तान् दृश्यते तावन्मासान् भवत्यतीव सुभिक्षाय। रूक्षः प्राणहराणाञ्च रोगाणां प्रादुर्भावायेति” परा०

आवर्त्तकेतुः “अथावर्त्तकेतुः श्वेतकेतोः कर्म्मण्यतीते ऽपरेऽर्द्धरात्रेऽसव्योदितारुणाभया प्रदक्षिणेन ताम्रया शिखयोदितः। स यावन्मुहूर्त्तान् दृश्यते तावन्मासान् अतीव सुभिक्षं नित्यप्रोत्सवं जगत्” परा०

संवर्त्तककेतुः “अथ संवर्त्तको वर्षसहस्रमष्टोत्तरं प्रोष्य पश्चिमेनास्तं गते सवितरि सन्ध्यायां दृश्यते तन्वीं ताम्ररूपां शूलाभां धूमं विसृजन्तीं दारुणां शिखां कृत्वा नभस्त्रिभागमाक्रम्य यावन्मुहूर्त्तान् निशि तिष्ठति तावद्वर्षाणि हन्ति परस्परं शस्त्रौघमपि पार्थिवाः। यानि नक्षत्राणि समाश्रयति यत्र चोदेति तानि दारुणतरं पीडयति तदाश्रितांश्च देशानिति”। परा०। तथा गर्गः “येषां नक्षत्रविषये रूक्षः सज्वाललोहितः। दृश्यते बहुमूर्त्तिश्च तेषां विद्यात् महाभयम्। अयर्द्धशस्त्रपारुष्यकोपं दुर्भिक्षमेव च। कुर्य्यान्नृपतिपीडाञ्च स्वचक्रपरचक्रतः। यत्र तिष्ठति नक्षत्रे प्रवासं यत्र गच्छति। धूपयेद्वा स्पृशेद्वापि हन्याद्देशांस्तदाश्रयान्। यस्याभिषेकनक्षत्रं जन्मभं कर्म्मभं तथा। देशर्क्षं पीडयेद्वापि स शान्तिपरमो भवेत्। स्निग्धः प्रसन्नो विमलः प्रदक्षिणशिखस्तथा। दृश्यते येषु देशेषु शिवं तेषु विनिर्द्दिशेत्” परा०

सर्व्वशेषः। “यस्यां दिशि समुत्तिष्ठेत् तां दिशं नाभियोजयेत्। यतः शिखा यतो धूमस्ततो यायान्नराधिपः। प्रतिलोमोयतः केतुर्यथा ध्यायति पार्थिवः। सामान्यवाहनबलस्तन्नाशमधिगच्छति” परा०

अथ मासविशेषेषु नामविशेषास्तत्फलन्याह समयामृते “चैत्रवैशाखयोर्म्मध्ये कौवेरांस्तु विनिर्द्दिशेत्। उच्छ्रितैर्यूपवेदीभिरुच्छ्रितैर्ध्वजतोरणैः। हविर्धूमाकुला तत्र दृश्यते च वसुन्धरा। ज्यैष्ठे चैव तथाषाढे वायुपुत्त्रांश्च निर्द्दिशेत्। वान्ति चैव तथा वाता महायुद्धं महाभयम्। श्रावणप्रौष्ठपदयोर्वारुणांस्तु विनिर्द्दिशेत्। आरोहयन्ति ते मेघान् पूर्णां कुर्य्युर्वसुन्धराम्। धान्यं समर्घतां याति ईतयो न भवन्ति च। आश्विने कार्त्तिके चैव सूर्य्यपुत्त्रान् विनिर्द्दिशेत्। ततो दहति तीव्रांशुः सर्वाणि दिवाकरः। म्रियन्ते च तदा गावः श्वापदाश्च विशेषतः। मार्गशीर्षे च पौषे च वह्निपुत्त्रान् विनिर्द्दिशेत्। शीघ्रं भवति दुर्भिक्षं हाहाभूतमचेतनम्। माघे च फाल्गुने चैव यमपुत्त्रान् विनिर्द्दिशेत्। छर्द्दिर्ज्वरातिसारश्च ग्लानि सैवाक्षिवेदना”।

नक्षत्रभेदेन देशभेदे तदुपद्रवादि तत्रैवोक्तं यथा “कृत्तिका रोहिणी सौम्यं पृथिव्या मध्यमुच्यते। केतवो ह्यत्र दृश्यन्ते आग्नेया दश पञ्च च। आग्नेयेषु च दृष्टेषु लोकानां संक्षयो भवेत्। नित्योद्विग्नाः प्रजाः सर्वा भवन्ति हि न संशयः। पुनर्व्वसुस्तथा पुष्यः

पृथिव्याः पूर्व्वमुच्यते । केतवो ह्यत्र दृश्यन्ते रौद्रास्तेऽप्येकविंशतिः । यदा रौद्राः प्रदृश्यन्ते दुर्भिक्षं निर्द्दिशेत्तदा । घूर्णन्ते च प्रजाः सर्व्वा मृत्युक्षुद्रोगपीडिताः । अश्लेषा पित्र्य१०भाग्यानि ११विद्याद्दक्षिणपूर्व्वतः । केतवो ह्यत्र दृश्यन्ते औद्दालकिसुता दश । सुभिक्षं क्षेममारोग्यं सुवृष्टिः शस्यसम्पदः । आर्य्यमणादीनि १२।१३।१४च त्रीणि विद्याद्दक्षिणभागतः । केतवो ह्यत्र दृश्यन्ते काश्यपेयाश्चतुर्द्दश । अनावृष्टिभयं घोरं प्रजानामतिदारुणम् । स्वाती विशाखा मित्रञ्च १७भागो दक्षिणपश्चिमः । केतवो ह्यत्र दृश्यन्ते चत्वारो मृत्युसम्भवाः । दुर्भिक्षं मरकं घोरमनावृष्टिस्तथैव च । उपद्रवश्च भूतानां तदा भवति दारुणः । ज्येष्ठा मूलमथाषाढा भाग उत्तरपश्चिमः । केतवो ह्यत्र दृश्यन्ते त्रयस्ते सोमसम्भवाः । सुभिक्षञ्च सुवृष्टिश्च मही यज्ञोत्सवाकुला । उत्तरा २१श्रवणा चैव नक्षत्रं वसुदैवतम्२३ । केतवो ह्यत्र दृश्यन्ते माहेयाः पञ्चविंशतिः । माहेयेषु च दृष्टेषु लोकानां संक्षयो ध्रुवम् । तदा राजसहस्राणां मही पिबति शोणितम् । वारुणञ्चैव २४ नक्षत्रं तथा भाद्रपदद्वयम् । केतवो ह्यत्र दृश्यन्ते वारुणास्त्रय एव ते । ऊर्म्मिकेतुः श्वेतकेतुर्धूमकेतुस्तृतीयकः । ऊर्म्मिकेतुर्यदा दृश्येत्तदाप्युदकजं भयम् । श्वेतकेतुर्यदा दृश्येत् श्वेतास्थिं कुरुते महीम् । तदा मानुषमांसानि भक्षयन्तीह मानुषाः । क्षुद्भयार्त्तं जगत् कृत्स्नं चक्रवद्भ्रमते तदा । धूमकेतुर्यदा दृश्येत्तस्य वक्ष्यामि लक्षणम् । स हन्ति शिखया योधान् राजानं मन्त्रिणं जनान् । रेवत्याश्वयुज१श्चैव नक्षत्रं यमदैवतम्२ । केतवो ह्यत्र दृश्यन्ते यमपुत्त्रास्त्रयोदश । यमपुत्त्रेषु दृष्टेषु लोकानां संक्षयो ध्रुवम् । चतुर्व्विधानां भूतानां संशयो जायते महान्" ।

तेषां शान्तिस्तत्रैवोक्ता यथा

"केतूत्पाते तु सर्व्वस्मिन् सभये समुपस्थिते । महाशान्तिं प्रकुर्व्वीत विविधां भूरिदक्षिणाम् । धनं वा सर्व्वमुत्सृजन् मृत्योर्म्मुच्येत बन्धनात् । दद्याद्वा पृथिवीं सर्व्वां राजा शान्तिं नियच्छति । अकस्माद्दृश्यते केतुरुदयेऽस्तमयेऽपि वा । निहन्त्यन्तःपुरे राज्ञो ज्वरः पित्तोद्भवो भवेत् । दधिमधुघृताक्तानां पुष्पाणामयुतं ततः । जुहुयादिन्द्रनीलस्य केतुं दद्याद्द्विजातये । भूषितं हेमरत्नाद्यैस्ततः सम्पद्यते शुभम्" ।

"ग्रहे रवीन्द्वोरवनीप्रकम्पे केतूद्गमे" इत्यादिना ज्यो॰त॰ तदुद्गमेऽकाल उक्तः । "व्योम्नीव भ्रुकुटीच्छलेन वदने केतुश्चकारास्पदम्" माघः

नवग्रहमध्ये तस्य ग्रहत्वञ्च पी॰ धा॰ व्यवस्थापितं यथा "किं राहुकेत्वोर्ग्रहत्वाभावात् क्रूरग्रहत्वाभावाद्वा दृश्यग्रहत्वाभावाद्वा कर्त्तरी नास्ति नाद्यः । राहोर्ग्रहत्वं श्रुतिस्मृतिप्रामाण्यसिद्धम् । तथा हि । "स्वर्भानुर्हवा आसुरिः सूर्य्यन्तमसा विव्याधेति" माध्यन्दिनी श्रुतिः । कश्यपश्च "छिन्नोऽपि विष्णुचक्रेण सुधामयशिरास्तमः । केशवस्य करेणासौ तथापि ग्रहताङ्गतः" इति । नारदोऽपि "अमृतास्वादनाद्राहुः शिरश्छिन्नोऽपि सोऽमृतः । विष्णुना तेन चक्रेण तथापि ग्रहताङ्गतः" इति । यद्यपि "अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रिताः । शीघ्रमन्दोच्चपाताख्या ग्रहाणाङ्गतिहेतवः" इति सूर्यसिद्धान्ते पातानामदृश्यतोक्ता तथापि चन्द्रपातस्य ग्रहत्वं वाचनिकमेव । "स्वर्भुवे कुमुदिनीपतिपातं राहुमाहुरिह केऽपि तमेवेति, भास्कराचार्योक्तेश्च । अतएव राहोर्नैरृतदिक्स्वामित्वं दानञ्च संहिताकल्पभिहितम् । राहोरर्द्धशरीरभागः केतुसंज्ञ इति पुराणप्रसिद्धम् । न द्वितीयः । ननु केन वचनेन राहुकेत्वोः क्रूरत्वमुच्यते । न च "क्षीणेन्द्वर्कयमाराः पापास्तैः संयुतः सौम्यः" इति वराहेणोक्तम् तदुपादानाभावात् । किञ्च पापग्रहत्वानभिधानाच्छुभग्रहत्वमेवावसीयते । न च "गुरुबुधशुक्राः सौम्याः सौरिकुजार्का निसर्गतः पापाः । शशिजोऽशुभसंयुक्तः क्षीणोऽपि निशाकरः पापः" इति कल्याणवर्म्मवाक्ये शुभग्रहमध्ये गणनाभावात् क्रूरत्वमिति वाच्यम् । पापग्रहमध्येऽपि गणना नास्तीति शुभग्रहत्वस्यापि सुवचत्वात् । उभयभ्रष्टत्वेन वा नरसिंहवज्जात्यन्तरस्यापि वक्तुं शक्यत्वादिति चेत् । सत्यम् "सूर्यभौमशनिराहुकेतवः पापसंज्ञखचराः क्षयिचन्द्रः । पूर्णचन्द्रगुरुशुक्रसोमजाः सर्व्वकर्म्मसु हि सौम्यखेचराः" इति वसिष्ठेन कण्ठतः क्रूरत्वाभिधानादस्ति क्रूरत्वम् । स्वरोदयेऽपि "बुधशुक्रेन्दुजीवाश्च सदा सौम्यग्रहा मताः । शन्यर्कराहुमाहेयाः केतुः क्रूरग्रहा मताः" इति । न तृतीयः ननु स्वयमशक्तः कथं परान् साधयिष्यतीति न्यायात् सदा चाक्षुषदर्शनाभावमितस्य राहोः केतोर्वा फलदातृत्वा

सामर्थ्यादिति चेन्न अमावास्यायां प्रतिपदि वोत्पन्नस्य लग्नादिदुष्टस्थानस्थितचन्द्रस्यारिष्टमशुभफलजनकं भवन्मते निरर्थकमापद्येत । ननु "षष्ठेऽष्टमे चन्द्रः सद्योमरणाय पापसंदृष्टः । अष्टाभिः शुभदृष्टोमिश्रैर्वर्षैस्तदर्द्धेनेति" वराहोक्तेर्भविष्यतीति चेत् इहापि "स्वच्छन्दत्वं कदशनरतिर्वल्लभत्वं विशील्यं व्याधिः स्त्रीभिरितरथ सुखं गर्भपातप्रवृत्तिः । द्यूतासक्तिर्भवति रविजे वैभवे वक्त्ररोगः स्वर्भानौ वाप्यथ शिखिनि वा लग्नभावादिसंस्थे" इति वसिष्ठपद्ये शनिवद्राहुकेत्वोः शुभाशुभफलदातृत्ववचनं किं वायसैर्भक्षितम् । सारावल्याञ्च "राहुश्चतुष्टयस्थो निधनाय निरीक्षितो भवति पापैः । वर्षैर्वदन्ति दशभिः षोडशभिः केचिदाचार्याः । अजवृषकर्कटलग्ने रक्षति राहुः समस्तपीडाभ्यः । पृथ्वीपतिः प्रसन्नः कृतापराधं यथा पुरुषमिति" राहोः शुभाशुभफलाभिधानमस्ति । ननु वराहेण राहोः फलं कुत्रापि नोक्तमिति चेन्न "सोपप्लवे शशाङ्के सक्रूरे लग्नगे कुजेऽष्टमगे । माता सार्द्धं म्रियते चन्द्रवदर्केण शस्त्रेणेति" वराहपद्येऽपि राहुकेत्वोरन्यतराभिधानमस्ति । तथा हि किमिदं चन्द्रग्रहणं राहुसाहित्यकृतमुत केतुसाहित्यकृतमिति तत्र ग्रहणीयं, चन्द्रे लग्नगे सक्रूरे क्रूरसाहित्यमभिहितम् क्रूरास्तु सूर्यभौमशनय एव विवक्षिता इति चेत् सूर्यस्य तावद्योगाभावश्चन्द्रग्रहणे हि सप्तमराशिस्थत्वात् । भौमस्यापि योगः, कुजेऽष्टमग इत्युक्तेर्नास्ति । पारिशेष्याच्छनेरेव योगोवाच्यः । तत्र स्पष्टत्वार्थं शनिग्रहणमेव कर्त्तव्यमाकारि । अतः सामान्यवाचिनः क्रूरशब्दस्य प्रयोगाद्राहुकेत्वोरन्यतरयोगोऽपि विवक्षितोऽपरस्य (सूर्य्यस्य) सप्तमराशिस्थत्वात् । योग एकराशिस्थत्वे स्यान्न तु भिन्नराशिस्थत्वे इति । एवं ग्रहणमस्वभ्विलग्नस्थसूर्यारिष्टेऽपि राहुकेत्वोरन्यतरयोगो व्याख्येयः । अतएव "राहुस्तमोऽगुरसुरश्च शिखीति केतुरिति पर्यायाभिधानं कृतम् । विवाहपटलेऽपि "मरणं लता राहोः कार्यविनाशं भृगोर्वदन्तीति" कण्ठतो राहुलत्ताप्युक्ता । तस्माद्वराहमतेऽपि राहुकेतुयोगो विवक्षित एव । एवं सति जातके यथा राहोः शुभाशुभफलदातृत्वं वचनाद्बोध्यते । तथा विवाहेऽपि प्रागुक्तवसिष्ठवाक्यादपि तत्र तुल्यन्यायत्वात् कर्त्तरीदोषे सव्यवहस्यत्वे फलदातृता त्वयापि वक्तव्यैव । ननु "पापयोः कर्त्तरीकर्त्रोः शत्रुनीचगृहस्थयोः । यदा त्वस्तगयोर्वापि कर्त्तरी नैव दोषदेति" कश्यपादुक्तेरस्तङ्गतत्वेन राहुकेत्वोः कर्त्तरीदोषो नास्तीति चेत् भ्रान्तोऽसि शृणु । "सम्भवे व्यभिचारे च स्याद्विशेषणमर्थवदिति" न्यायादस्तङ्गतत्वविशेषेण भौमस्य क्रूरयुक्तबुधस्य शनेर्वेति त्रयाणामेव सम्भवति न सम्भवति च । सूर्यस्तु नित्योदित एव राहुकेतू नित्यास्तमिताविति व्यभिचाराभावात्त्रयाणामेव विशेषणम् । किञ्च किमस्तगत्वं क्षितिजसन्निधिकृतमुत सूर्यसान्निध्यकृतं वेति । तत्र क्षितिजसन्निधिकृतं यत्तत् सूर्यादिसकलग्रहसाधारणम् । तथा सत्यस्तगतत्वविशेषणवैयर्थ्यं प्रागुक्तन्यायात् । राहोस्तु नारदादिवाक्याच्छिरोरूपमण्डलावगतेः "इन्दर्कमण्डलाकृतिरसितत्वात् किल न दृश्यते गगने" इति वराहोक्तेस्तमोरूपत्वात्तादृक्स्वरूपानुपलब्धेरगोचरत्वपरम् । स्थानमप्यस्य चन्द्रविलमण्डक्रान्तिमण्डलस्वस्तिके, यदाह केशवार्कः "वेश्म चास्य शशभृद्विमण्डलक्रान्तिमण्डलमिलच्चतुःपथः" इति । अतएव न विद्यन्ते गावः किरणायस्येत्यगुरन्वर्थताप्यवसीयते । अथ यदि सूर्यसन्निधिकृतमित्युच्यतेति चेत् न इतरग्रहवद्राहोरप्युदयास्तप्रसिद्ध्यभावात् । किञ्च कालांशानभिधानात् कदोदितः कदास्तमितश्चेति निर्णेतुमशक्यत्वात् । एवं केतोरप्येतत् द्रष्टव्यम् । ननु केतूदयोत्पातादौ प्रत्यक्षतोदृश्यत इति चेन्न तस्यानियतदिक्प्रभवत्वात् अनियतनक्षत्रप्रभवत्वाच्च । किञ्च केतूत्पातो हि लोके दुरदृष्टसूचकः अनियतेन बहुना स्वल्पेनापि वा कालेन भवेत् । सूर्यसान्निध्यकृतोदयास्तौ तु नियतकालावेवेति तयोः केत्वोर्भेदः स्वीकर्त्तव्यः"

केतुक्षेत्रादिकं ज्यो० त० उक्तम् "सिंहस्त्रिकोणं धनुरुच्चसंज्ञं मीनोऽस्यगेहं शुक्रशनी विपक्षौ । सूर्यारचन्द्राः सुहृदः समानौ जीवेन्दुजौ षट् शिखिनः परांशाः" । तद्यानवर्णगोत्रदेशादि ग्रहयज्ञशब्दे वक्ष्यते । विंशोत्तरीयदशायां तद्दशामानं ७वर्षाः, तच्च दशाशब्दे वक्ष्यते । तस्य राशिभोगकालश्च १८मासाः । "केतूपप्लवभौममन्दगतयः षष्ठे तृतीये शुभाः" ज्यो० त० । ७दानवभेदे पु० केतुवीर्य्यशब्दे उदा० दृश्यम्

केतुकुण्डली स्त्री पञ्चस्वरोक्ते जन्मनक्षत्रभेदवशेन जन्मावध्येकैकवर्षे एकैकग्रहविशेषस्वामित्वज्ञापके चक्रभेदे सा च तत्रैव दर्शिता यथा

"अर्को बुधः कुजोजीवः सोमः शुक्रस्तथैव च। राहुः शनैश्चरश्चैव ज्ञातव्या केतुकुण्डली। अर्कसौम्यान्तरे केतुः कुजजीवान्तरेऽपि च। सोमशुक्रान्तरे केतू राहुशौरान्तरे तथा। दद्यादुत्तरभाद्रादि अष्टाविंशतिऋक्षकम्। त्रीणि त्रीणि च रव्यादौ एकैकम् केतुषु स्मृतम्। जन्मर्क्षात् प्रतिनक्षत्रं जन्माद्यब्दे प्रकीर्त्तिताः"। अयमर्थः यदि २६।२७।१ नक्षत्रेषु जन्म तदा सूर्य्यः प्रथमं वर्षेशः। तदुत्तरं केतुप्रभृतयः शन्यन्ताः २। भरण्यां जन्मनि केतुः प्रथमं वर्षेशस्ततः बुधादयः सूर्य्यान्ताः ।३।४।५ ऋक्षेषु बुधः प्रथमवर्षेशः ततः कुजादयः केत्वन्ताः।६।७।८। कुजः प्रथमं ततः केत्वादयः बुधान्ताः। ९ऋक्षे केतुः ततोजीवादयः कुजान्ताः १०।११।१२ऋक्षेषु जीवः ततः सोमादयः केत्वन्ताः। १३।१४।१५। सोमः ततः केत्वादयः जीवान्ताः। १६ऋक्षे केतुः ततः शुक्रादयः सोमान्ताः। १७।१८।१९।ऋक्षेषु शुक्रः ततः राहुप्रभृतयः केत्वन्ताः। २०।२१।०।२२ ऋक्षेषु राहुः ततः केत्वादयः शुक्रान्ताः २३केतुः ततः शन्यादयःराह्वन्ताः।२४।२५।२६ऋक्षेषु शनिः ततः सूर्य्यादयः केत्वन्ताः। सर्व्वत्र आरोहक्रमावन्तरमवरोहक्रमो ग्राह्यः। एवं द्वादशसु वर्षेषु तेषु पुनः सूर्य्यादीनां वर्षाः। एतासां फलविशेषस्तु केतुपताकाचक्रोक्तदिशोह्येयः। अत्र च बहुषु स्थानेषु केतोरवस्थानेन केतुप्राधान्यात् केतुकुण्डलीत्वम्।

**केतुधर्म्मन्** पु० त्रिगर्त्तेश्वरसूर्य्यवर्म्मानुजे नृपभेदे "केतुधर्म्मा तु तेजस्वी तस्यैवावरजोयुवा। युयुधे भ्रातुरर्थाय पाण्डवेन यशस्विना" भा० आश्व० ७४अ०

**केतुपताका** केतोः पताकेव। जन्मनक्षत्रभेदेन जन्मावध्येकैकवर्षेशग्रहविशेषज्ञापके चक्रभेदे सा च पञ्चस्वरायां दर्शिता यथा

"अर्केन्दू कुजसौम्यार्किगुरवः सूर्य्ययाक्रमम्। राहुः सर्पो भृगुश्चेति पताकप्रभवा ग्रहाः। वामं केतुपताकायां ऋतिकादिपरिभ्रमात्। जन्मर्क्षं खेचरे यत्र जन्माद्यब्दास्ततः क्रमात्। आदित्यसौरयोर्वेधो वेधश्चन्द्रसुरेज्ययोः। कुजराह्वोर्भृग्वोश्च केतुः किञ्चिन्नविध्यति" फलमाह। "रवेरब्दे मनुष्याणां भवेत् सर्व्वत्र निष्फलम्। शिरःशूलं ज्वरोगेहदाहो विघ्नः पदेपदे"। र०। "चन्द्रस्याब्दे लभेद्रौप्यं सुवर्णाभरणानि च०। कृषिः फलवती सिद्धिः सर्व्वत्रान्यैश्च पूज्यते" च०। "संवत्सरे महीजस्य कालादिव बिभेति च। गृहदाहोऽर्थहानिश्च चौरतो राजतोऽपि वा" म०। "बुधस्याब्दे सुशय्यः स्यान्नागादेशाधिपो भवेत्। बु० स्वर्णरौप्यधनं दानं पुण्यकर्मणि मानसम्" बु०। "मन्दस्याब्दे भवेद्दाहो बन्धनादि प्रपीडनम्। धनहानिः प्रहारश्च कलिः स्वजनबन्धुभिः" श०। "नाकनाथगुरोरब्दे बहुलोत्पत्तिसम्पदः। लक्षलोहितवस्त्रेण स्तुतो भवति भूतले"। वृ०। राहुकेत्वोः सदा बन्धो नौका विप्लवते जले। व्रणं हस्ते पदे देहे स्थानं कर्त्तुं क्षमोन च"। रा०के०। "दानवेन्द्रगुरोरब्दे महद्भिर्विभवैर्युतः। गजाश्ववाहनैर्युक्त उत्साहश्च दिने दिने" शु०। अन्ये तु पठन्ति "रविर्भ्रामयते देशं नरं दुःखसमन्वितम्। सन्तापरोगं शोकञ्च करोति क्षयतां तनोः" र०"बहुवित्तसुखं नित्यं बन्धुमित्रसमागमम्। समस्तास्पदसंपूर्णं चन्द्रः कुर्य्यात् दिनेदिने" च०। "मङ्गलोहन्ति सद्भावं क्रूरकर्म्मणि योजयेत्। व्रणं रोगञ्च दुःखञ्च सन्तापञ्च मुहुर्मुहुः" म०। "अर्थलाभं जयं सौख्यं राजपूजाञ्च सम्पदम्। ददाति विपुलां लक्ष्मीं बुधो विद्यां यशस्श्रियम्"। बु०। "रोगश्चार्थविनाशश्च कलहं भुजगाद्भयम्। स्थानत्यागं शनिः कुर्य्या ज्जीवनं प्रति संशयम्" श०। "सुवर्णमणिमाणिक्यरत्नादिविपुलं धनम्। कन्यारत्नसमायोगं गुरुः कुर्य्याद् दिने दिने" वृ०। "राहुःशोणितसंस्रावं रोगशोकादिसंकुलम्। विदेशगमनं कुर्य्यात् वह्निशत्रुभयान्वितम्" रा०। "विग्रहं बन्धुभिः सार्द्धं रोगशोकादिसङ्कुलम्। व्याधिपीडां करोत्युच्चैः केतुर्वित्तविनाशनः" के०। "गजाश्वयाहनैर्युक्तं महद्भिर्विभवैर्युतम्। वराङ्गनासमायुक्तं भृगुः कुर्य्याद्दिने दिने" शु०। "खयुग्मं२० शून्यबाणौ ५०च वसुयुग्मञ्च २८ षट्शरौ ५६। रामाग्नी ३३रामषट्के ६३। च विंशञ्च सप्ततिस्तथा। विंशमेतेऽन्तर्दिवसाः केतावर्कादिषु क्रमात्। शुभानां शोभना ज्ञेया अशुभानामशोभना। शुभानामशुभानाञ्च यत् फलं वत्सरे कृतम्। तत्फलं निर्द्दिशेत् सर्वं तेषामन्तर्दिनेष्वपि। वर्षे वर्षे रवेः स्वीयं प्रथमं दिनविंशकम्। ततश्चन्द्रस्य पञ्चाशदेवं शुक्रान्तमादिशेत्। विधोर्वर्षे विधोः स्वीयं प्रथमं वत्सरे दिनम्। ततो भौमस्य वर्षाच्च एवं रव्यन्तमादिशेत्। कुजस्याब्दे कुजस्यान्तरष्टाविंशं निजं दिनम्। ततो बुधस्य षट्पञ्चाशदेवं चन्द्रान्तमादिशेत्। बुधादीनाञ्च सर्वेषामेवमेव क्रमेण तु। कुर्य्यादन्तर्दशाभागं प्रोक्तया दिनसंख्यया"। ज्यो०त० तल्लेखनप्रकारो दर्शितो यथा

"रविश्चन्द्रः कुजः सौम्यः शनिर्जीवस्तमोभृगुः । इन्द्रे-शाद्यष्टरेखासु मध्ये केतुरिमेऽष्टधाः । कृत्तिकादि त्रिरा वृत्तिर्यश्चा केतौ मघा भवेत्" यथा १र०।४च०।५म०।६बु०। ७श०।८वृ०।९रा०।१०केतुः । ११शु०। १२र०। १३च०।१४म० १५बु० १६श० १७वृ० १८रा० १९केतुः २०शु०। २१र० २२च० २३म० २४बु०२५श०२६वृ० २७रा० १केतुः २शु०। एवं जन्मनक्षत्रानुसारेण प्रथमादिपर्वेशा रव्यादयः शुक्रान्ताः दशमादिषु पुनः रव्यादयः शुक्रान्ताः । एवं चन्द्रस्य प्रथमाद्दाधीशस्ते रव्यन्ताः एवं क्रमेण सर्व्वत्र योज्यम्

"पताका कुण्डली केतोः कुण्डली च वृहस्पतेः । सर्व्वत्र पापसंयोगे संशयो जायते महान्" पञ्चस्वरा

**केतुमत्** त्रि०केतुरस्त्यस्य मतुप् । १चिह्नादियुक्ते २प्रज्ञानयुक्ते "केतुमद्भ्युभिर्वावदीति" ऋ०६,४७,३०,"केतुमत् प्रजानयत्" भा० स्त्रियां ङीप् । ३काशीराजदिवोदासवंशेत्र नृपभेदे पु० । "क्षेमस्य केतुमान् पुत्रः सुकेतुरस्यात्मजः" हरिवं० २अ० दिवोदासवंशोक्तौ । वासुदेवमहिष्याः सुनन्दाया विवाहरूपे ४प्रासादभेदे पु० "सुनन्दाया निवासोऽसौ प्रथमः सर्व्वदैवतैः । महिष्या वासुदेवस्य केतुमानिति विश्रुतः" हरिवं० १५७अ० ५धन्वन्तरिपुत्रभेदे "धन्वन्तरिर्दीर्घतमस आयुर्वेदप्रवर्त्तकः । यज्ञभुग्वासुदेवांशः स्मृतिमात्रार्त्तिनाशकः । तत्पुत्रः केतुमानस्य जज्ञे भीमरथस्तथा" भाग० ९।१७।५ ६दानवभेदे । "तथा शतमखश्चैव वेगवान् केतुमांश्चयः" भा०आ०७दानवोक्तौ । सुमालिनो राक्षसस्य भार्य्यायां स्त्री "सुमालिनोऽपि भार्य्यासीत् पूर्णचन्द्रनिभानना । नाम्ना केतुमती राम !" रामा० उ० ४स० ।

"अससे सजौ सगुरुयुक्ता केतुमती समे भरनगाद्गः" वृ० र० उक्तलक्षणे दविषमवृत्ते छन्दोभेदे स्त्री ।

**केतुमाल** पु० । १आग्नीध्रनृपपुत्रभेदे २तन्नामके जम्बुद्वीपस्थे वर्षभेदे । तद्विवृतिः उत्तरकुरुशब्दे १०८४पृ० । कुरुशब्दे च २१२२पृ०दृश्यम् । "मेरोस्तु पश्चिमे पार्श्वे केतुमालो महीपते ! । जम्बुखण्डे च तत्रैव महाजनपदो नृप!" भा० भी० ६अ० । ३अवन्तिदेशस्थे नदीभेदे स्त्री "अवन्तिषु प्रतीच्यां वै कीर्त्तयिष्यामि ते दिशः" इत्युपक्रमे "केतुमाला च मेध्या च गङ्गाद्वारञ्च भूमिप !" भा० व० ८९ अ० ।

**केतुमालि(लिन्)** पु० शम्बरदैत्यस्य सेनाधिपभेदे । "दुर्द्धरः केतुमाली च शत्रुहन्ता प्रमर्द्दनः" इत्युपक्रमे "एतैः परिवृतो योधैः शम्बरः प्रययौ तदा" । "तेनैव तस्य चिच्छेद केतुमालेः शिरस्तदा" हरिवं० १६४अ० ।

**केतुरत्न** न० केतोः रत्नम् । वैदूर्य्यमणौ (लशुनिया) राजनि० तस्य तत्स्वामिकत्वात् तथात्वम् ।

**केतुवीर्य्य** पु० दानवभेदे । "विक्षोभणश्च केतुश्च केतुवीर्य्यः शतह्रदः" हरिवं० ३अ० दानवोक्तौ ।

**केतुवृक्ष** पु० केतुभूतोवृक्षः । मेरोश्चतुर्द्दिक्षु वर्त्तमानविष्कम्भपर्वतमन्दरादीनां चिह्नरूपे वृक्षभेदे । "विष्कम्भशैलाः किल मन्दरोऽस्य (मेरोः) सुगन्धशैलः (गन्धमादनः) विपुलः सुपार्श्वः । तेषु क्रमात् सन्ति च केतुवृक्षाः कदम्बजम्बूवटपिप्पलाख्याः" सि० शि० । "विष्कम्भाचलिता मेरोर्योजनायतमुच्छ्रिताः । पूर्व्वेण मन्दरोनाम दक्षिणे गन्धमादनः । विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्मृतः । कदम्बस्तेषु जम्बूश्च पिप्पलोवट एव च । एकादशशतायामाः पादपाः गिरिकेतवः" विष्णुपु०

**केतुशृङ्ग** पु० पौरवे नृपभेदे । "वत्सबन्धुर्निरामर्द्दः केतुशृङ्गो वृहद्बलः" भा०आ० १अ०

**केदर** पु०के इणाति दृ—अच् कैर्विदीर्य्यते दृ—अप् वा । १वृक्षभेदे अमरटीकायां भानुदीक्षितः । २टेरके केकरे शब्दचि०

**केदार** पु०के शिरसि दारोऽस्य केन जलेन दारोऽस्य वा नि० एत्वम् । हिमालयस्थे पर्व्वतभेदे तत्स्थे २शिवलिङ्गभेदे न० तन्माहात्म्यादि स्कन्दपु० केदारखण्डे दृश्यं तस्यैव काशीक्षेत्रे आविर्भावात् काशीस्थे ३लिङ्गभेदे च न० तत्कथा काशीख० ७७अ० यथा

"श्रीपार्व्वत्युवाच । "नमस्ते देवदेवेश ! प्रणमत्करुणानिधे ! । वद केदारमाहात्म्यं भक्तानामनुकम्पया । तस्मिन् लिङ्गे सदा प्रीतिस्तव काश्यामनुत्तमा । तद्भक्ताश्च जना नित्यं देवदेव ! महाधियः । श्रीदेवदेव उवाच । शृणुष्वपर्णे ! ऽभिधास्यामि केदारेश्वरसंकथाम् । यमाकर्ण्यापि यां पापोऽप्यपापोजायते क्षणात् । केदारं यातुकामस्य पुंसोनिश्चितचेतसः । आजन्मसञ्चितं पापं तत्क्षणादेव नश्यति । गृहाद्विनिर्गते पुंसि केदारगतिनिश्चिते । जन्मद्वयार्जितं पापं शरीरादपि निर्व्रजेत् । मध्यमार्गं प्रपन्नस्य त्रिजन्मजनितं त्वघम् । गेहाद्विनिःसृतस्यापि निराशं याति निश्चयत् । सायं केदारकेदार केदारेति लिखन् । गेहेऽपि निवसन्नूनं यात्राफलमवाप्नुयात् । दृष्ट्वा केदारशिखरं पीत्वा तत्रत्यमम्बु च । जन्मजन्मकृतात् पापान्मुच्यते नात्र संशयः । हरस्याथ

ह्रदे स्नात्वा केदारेशं प्रपूज्य च। कोटिजन्मार्जितैः पापै-र्मुच्यते नात्र संशयः। सकृत् प्रणम्य केदारं हरम्पापकृतोदकः। स्थाप्य लिङ्गं हृदम्भोजे प्रान्ते मोक्षं गमिष्यति। हरपापह्रदे श्राद्धं श्रद्धया यः करिष्यति। उद्धृत्य सप्त पुरुषान् स्वर्गलोकं गमिष्यति। पुरा रथन्तरे कल्पे यदभूदत्र तत् शृणु। अपर्णे! दत्तकर्णा त्वं वर्णयामि तवाग्रतः। एको ब्राह्मणदायाद उज्जयिन्या इहागतः। कृतोपनयनः पित्रा ब्रह्मचर्य्यव्रते स्थितः। स्थलीं पाशुपतीं काशीं स विलोक्य समन्ततः। द्विजैः पाशुपतैः कीर्णां जटामुकुटमण्डितैः। कृतलिङ्गसमार्च्चैश्च भूतिभूषितवर्ष्मभिः। भिक्षाकृतान्नसंतुष्टैः स्नुतैर्गङ्गोदकामृतैः। बभूवानन्दितमना व्रतं जग्राह चोत्तमम्। हिरण्यगर्भादाचार्य्यान्महत् पाशुपताभिधम्। स च शिष्यो वशिष्ठोऽभूत् सर्व्वपाशुपतोत्तमः। स्नात्वा ह्रदे हरम्पापे नित्यं प्रातः समुत्थितः। विभूत्याऽहरहः स्नाति त्रिकालं लिङ्गमर्च्चयन्। नान्तरं स विजानाति शिवलिङ्गे गुरौ तथा। स द्वादशाब्ददेशीयो वशिष्ठो गुरुणा सह। ययौ केदारयात्रार्थं गिरिं गौरीगुरोर्गुरुम्। यत्र गत्वा न शोचन्ति किञ्चित् संसारिणः क्वचित्। प्राश्योदकं लिङ्गरूपं लिङ्गरूपत्वमागताः। असिधारं गिरिं प्राप्य वशिष्ठस्य तपस्विनः। गुरुर्हिरण्यगर्भाख्यः पञ्चत्वमगमत्तदा। पश्यतां तापसानां च विमाने सार्व्वकामिके। आरोप्य तं पारिषदाः कैलासमनयन् मुदा। यस्तु केदारमुद्दिश्य गेहादर्द्धपथेऽप्यहो। अकातरस्त्यजेत् प्राणान् कैलासे स चिरं वसेत्। तदाश्चर्य्यं समालोक्य स वशिष्ठस्तपोधनः। केदारमेव लिङ्गं पु बहुमंस्त सुनिश्चितम्। अथ कृत्वा स केदारीं यात्रां वाराणसीमगात्। अपहीन्नियमं चापि यथार्थं चाकरोत् पुनः। प्रतिचैत्रं सदा चैत्र्यां यावज्जीवमहं ध्रुवम्। विलोकयिष्ये केदारं वसन् वाराणसीं पुरीम्। तेन यात्राः कृताः सम्यक्षष्टिरेकाधिका मुदा। आनन्दकानने नित्यं वसता ब्रह्मचारिणा। पुनर्यात्रां स वै चक्रे मधौ निकटवर्त्मनि। परमोत्साहसंतुष्टः पलिताकलितोऽप्यलम्। तपोवनैस्तन्निधनं शङ्कमानैर्निवारितः। कारुण्यपूर्णहृदयैरन्यैरपि च सज्जिभिः। ततोऽपि न तदुत्साहभङ्गोऽभूद्दृढचेतसः। मध्ये मार्गं मृतस्यापि गुरोरिव गतिर्मम। इति निश्चितचेतस्के वशिष्ठे तापसे शुचौ। अन्नदाच्चपरितुष्टे तुष्टोऽहं चण्डिके! ऽभवम्। स्वप्ने मया स संप्रोक्तो वशिष्ठस्तापसोत्तमः। दृढव्रत! प्रसन्नोऽस्मि केदारं विद्धि मामिह। अभीष्टं च वरं मत्तः प्रार्थयस्वाविचारितम्। इत्युक्तवत्यपि मयि स्वप्नो मिथ्येति सोऽब्रवीत्। ततोऽपि स मया प्रोक्तः स्वप्नोमिथ्या शुचिस्मिते!। भवादृशामभिथ्यैव स्वाध्यायवशवर्त्तिनाम्। वरं ब्रूहि प्रसन्नोऽस्मि स्वप्नशङ्कां त्यज द्विज!। तव सत्ववतः किञ्चिन्ममादेयं न किञ्चन। इत्युक्तं मे समाकर्ण्य वरयामास मामिति। शिष्यो हिरण्यगर्भस्य तपस्विजनसत्तमः। यदि प्रसन्नो देवेश! तदा मे येऽनुगा इमे। सर्व्वे मूलिन्ननुग्राह्या एष एव करोमम। देवि! तस्येदमाकर्ण्य परोपकृतिशालिनः। वचनं नितरां प्रीतस्तथेति तमुवाच ह। पुनः परोपकरणं तत्तपोद्विगुणीकृतम्। तेन पुण्येन स मया पुनः प्रोक्तोवरं वृणु। स वशिष्ठो महाप्राज्ञो दृढपाशुपतस्थितः। देवि! मे प्रार्थयामास हिमशैलादिह स्थितिम्। ततस्तत्तपसा तुष्टः कलामात्रेण तत्र हि। हिमशैले स्थितश्चात्र सर्व्वभावेन संस्थितः। ततः प्रभाते संजाते सर्व्वेषां पश्यतामहम्। हिमाद्रेः प्रस्थितः प्राप्तः स्तूयमानः सुरर्षिभिः। वशिष्ठं पुरतः कृत्वा सर्व्वसार्थसमावृतम्। हरम्पाप ह्रदे तीर्थे स्थितोऽहं तदनुग्रहात्। मत्परिग्रहतः सर्वे हरम्पापे कृतोदकाः। आराध्य मामनेनैव पुरुषाः सिद्धिमागताः। तदा प्रभृति लिङ्गेऽस्मिन् स्थितः साधकसिद्धये। अविमुक्ते परे क्षेत्रे कलिकाले विशेषतः। तुषाराद्रिं समारुह्य केदारं वीक्ष्य यत् फलम्। तत् फलं सप्तगुणितं काश्यां केदारदर्शने। गौरीकुण्डं यथा तत्र हंसतीर्थञ्च निर्म्मलम्। तथा मधुस्रवा गङ्गा काश्यां तदखिलं तथा। इदं तीर्थं हरम्पापं सप्तजन्माघनाशनम्। गङ्गायां मिलितं पश्चाज्जन्मकोटिशतावहम्। अत्र पूर्व्वं तु काकोलौ युध्यन्तौ स्वान्निपेततुः। पश्यतां तत्र संस्थानां हंसौ भूत्वा विनिर्गतौ। गौरि! त्वया कृतं पूर्व्वं स्नानमत्र महाह्रदे। गौरीतीर्थं ततः ख्यातं सर्वतीर्थोत्तमोत्तमम्। अत्रामृतस्रवा गङ्गा महामोहान्धकारहृत्। अनेकजन्मजनितं जाड्यध्वंसविधायिनी। सरसा मानसेनात्र पूर्व्वं तप्तं महत्तपः। अतस्तन्मानसं तीर्थं जने ख्यातिमिदं मतम्। अत्र पूर्व्वं जनः स्नानमात्रेणैव प्रमुच्यते। पश्चात् प्रसादितश्चाहं त्रिदशैर्दुर्गत्रिदुर्दशैः। सर्वे मुक्तिं गमिष्यन्ति यदि देवेह मानवाः। केदारकुण्डे सुस्नातास्तन्मुक्तिर्भविष्यति। सर्वे पा-

मेव वर्णानामाश्रमाणां च धर्म्मिणाम्। तस्मात्तनुविसर्गेण मोक्षं दास्यसि नान्यथा। ततस्तदुपरोधेन तथेति च मयोदितम्। तदारभ्य महादेवि! स्नानात्, केदारकुण्डतः। समर्च्चनाच्च भक्त्या वै मम नामजपादपि। नैःश्रेयसीं श्रियं दद्यामन्यत्रापि तनुत्यजाम्। केदारतीर्थे यः स्नात्वा पिण्डान् दास्यति चात्वरः। एकोत्तरशतं वंश्यास्तस्य तीर्णा भवाम्बुधेः। भौमवारे यदा दर्शस्तदा यः श्राद्धदो नरः। केदारकुण्डमासाद्य गयाश्राद्धेन किं? ततः। केदारं गन्तुकामस्य बुद्धिर्देया नरैरियम्। काश्यां स्पृश त्वं केदारं कृतकृत्यो भविष्यसि। चैत्रकृष्णचतुर्द्दश्यामुपवासं विधाय च। त्रिगण्डूषीं पिबन् प्रातर्म्मल्लिङ्गमधितिष्ठति। केदारोदकपाने तु यथा तत्र फलं भवेत्। तथाऽत्र जायते पुंसां स्त्रीणां चापि न संशयः। केदारभक्तं संपूज्य वासोऽन्नद्रविणादिभिः। आजन्मजनितं पापं त्यक्त्वा याति ममालयम्। आपक्षमासं त्रिकालं यः केदारेशं नमस्यति। तं नमस्यन्ति सततं लोकपाला यमादयः। कलौ केदारमाहात्म्यं योऽपि कोऽपि न वेत्स्यति। योवेत्स्यति च पुण्यात्मा सर्वं वेत्स्यति स ध्रुवम्। केदारेशं सकृत् दृष्ट्वा देवि! मेऽनुचरो भवेत्। तस्मात् काश्यां प्रयत्नेन केदारेशं विलोकयेत्। चित्राङ्गदेश्वरं लिङ्गं केदारादुत्तरे शुभम्। तस्यार्च्चनान्नरोनित्यं स्वर्गभोगानुपाश्नुते। केदाराद्दक्षिणे भागे नीलकण्ठविलोकनात्। संसारोरगदष्टस्य तस्य नास्ति विषाद्भयम्। तद्वायव्येऽम्बरीषेशो नरस्तद्दर्शनात्। गर्भवासं न चाप्नोति संसारे दुःखसङ्कुले। इन्द्रद्युम्नेश्वरं लिङ्गं तत्समीपे समर्च्च्य च। तेजोमयेन यानेन सस्वर्गभुवि मोदते। तद्दक्षिणे नरोदृष्ट्वा लिङ्गं कालञ्जरेश्वरम्। जराकालं विनिर्जित्य मम लोके वसेच्चिरम्। दृष्ट्वा कामेश्वरं लिङ्गमुदक् चित्राङ्गदेश्वरात्। सर्व्वत्र क्षेममाप्नोति लोकेऽत्र च परं दिवि। श्रीस्कन्द उवाच। देवदेवेन! विन्ध्यारे! केदारमहिमा महान्। इत्याख्यायि पुराऽम्बायै मया ते ऽपि निरूपितः। केदारेश्वरलिङ्गस्य श्रुत्वोत्पत्तिं कृती नरः। शिवलोकमवाप्नोति निष्पापोजायते क्षणात्"। लिङ्गपरत्वे न० केदारेशकेदारेश्वरादयोप्यत्र पु०। वदर्य्याश्रमस्याऽन्तिकस्थे ३क्षेत्रभेदे "केदाराख्ये महाक्षेत्रे देवी सा मार्गदायिनी" देवीगीता ४भूमिप्रदेशभेदे अमरः "मतङ्गस्य च केदारस्तत्रैव कुरुनन्दन!" भा०व० ८४अ०। "केदारे चैव राजेन्द्र! कपिलस्य महात्मनः" भा०८३अ०। जलनिवारणार्थे चतुःपार्श्वे सेतुबन्धयुक्ते ५क्षेत्रे ६आलवाले च मेदि० "यथा "तड़ागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति" वेदा० प०। "भूमावप्येककेदारे कालोप्तानि कृषीवलैः। नानारूपाणि जायन्ते वीजानीह स्वभावतः" मनुः "स्यानच्छेदस्य केदारमाहुः शल्यवतोमृगः" मनुः। केदाराणां समूहः "केदाराद्यञ् च" "ठञ् कवचिनश्च" पा०यञ् वुञ् ठञ् च। केदार्य्यं कैदारक कैदारिक तत् समूहे न० "कैदारिकाणामभितः समाकुलाः" माघः। अत्र केदारादिति निर्द्देशात् नि०एत्त्वम्। तस्येदमण्। कैदार तत्सम्बन्धिजलतण्डुलादौ त्रि० तद्गुणाः "कैदारं क्षेत्रमुद्दिष्टं कैदारं तज्जलं स्मृतम्। कैदारं वार्य्यभिष्यन्दि मधुरं गुरु दोषकृत्" भावप्र०। "कैदारा वातपित्तघ्नाः गुरवः कफशुक्रलाः। कषाया अल्पवर्चस्काः मेध्याश्चैव बलावहाः" भावप्र० केदारशाल्यादिगुणा उक्ताः

**केदारक** पु० केदारे भवः कन्। कृष्टक्षेत्रजाते व्रीहिभेदे षष्टिकककुकेत्युपक्रमे "कुरवककेदारकप्रभृतयः षष्टिकाः" सुश्रुतः। केदारशब्दे गुणाउक्ताः

**केदारकटुका** स्त्री केदारस्य कटुकेव। कटुकाभेदे राजनि०

**केदारखण्ड** पु० व्यासप्रणीते स्कन्दपुराणान्तरगते अवन्तिखण्डस्थकेदारमाहात्म्यप्रतिपादके ग्रन्थभेदे।

**केदारज** त्रि० केदारात् जायते जन–ड। १कृष्टभूमिजाते व्रीहिभेदे केदारशब्दे तद्गुणा उक्ताः। २पद्मकाष्ठे न० राजनि० केदारजातादयोऽप्यत्र

**केन** न० केनेत्युपक्रम्य प्रवृत्तम्। तलवकारोपनिषद्रूपे केनेषितमित्यादिके उपनिषद्भेदे "ईशा केन कठ प्रश्न मुण्डमाण्डूक्य तित्तिरिः" मुक्तिको० उपनिषच्छब्दे विवृतिः

**केनती** स्त्री के सुखार्थं नतिः वा० ङीप् अलुक्स०। स्मरलीलायां त्रिका०।

**केनार** पु० के मूर्द्ध्नि नारः न्ट–वञ् अलुक्स०। १कुम्भिनामनरके हेम०। २शिरसि ३कपोले ४सन्धौ च मेदि०।

**केनिप** पु० के सुखे निपतति नि+पत–ड अलुक्स०। मेधाविनि निघण्टुः "यथा केनिपानामिनो वृधे" ऋ०१०,४४,४, "केनिपानां मेधाविनाम्" भा०। निघण्टौ अकेनिप इति वा पाठः। तत्रार्थे।

**केनिपात** पु० के जले निपात्यते नि+पत–णिच्–कर्म्मणि घञ्। (हाल)नौकाचालने काष्ठनिर्म्मिते पदार्थे अरित्रे

शब्दमा० तं हि जले पातयित्वा चालनेन नौकां चालतीति तस्य तथात्वम्। स्वार्थे क। तत्रार्थे अमरः।

**कोन्दु** पु० ईषत् इन्दुरिव कोः कादेशः। १तिन्दुकवृक्षे शब्दरत्ना०। संज्ञायां कन्। (गाब) गाबवृक्षे। "लघुद्वयं विरामान्तं ताले कोन्दुकसंज्ञके" इति संगी०दा० उक्ते २तालभेदे पु०

**कोन्दुवाल** पु० के जले इन्दोरिव अर्द्धेन्दोरिव वालस्खलनमस्य। अरित्रे (हाल) इति ख्याते नौकाचालने काष्ठभेदे। "अरित्रशब्दः केन्दुवालवाचकः" यजुर्वेददीपः

**केन्दुविल्व** पु० गीतगोविन्दग्रन्थकारकजयदेवनिवासे ग्रामभेदे (केन्दुली) "केन्दुविल्वसमुद्रसम्भवरोहिणीरमणेन" (जयदेवेन) गीतगो०।

**केन्द्र** न० "वृत्तस्य मध्यं किल केन्द्रमुक्तम्। केन्द्रं ग्रहोच्चान्तरमुच्यतेऽतः। यतोऽन्तरे तावति तुङ्गदेशाद्ग्रहोऽस्ति वृत्तस्य सदैव केन्द्रम्" शि०सि०गोलाध्यायोक्ते १वृत्तस्य मध्यस्थाने २ग्रहाणामुच्चस्थानान्तरे च। तदानयनप्रकारः तस्य समविषमादिसंज्ञाभेदौ च सू०सि० रङ्गनाथाभ्यां दर्शितौ यथा

"ग्रहं संशोध्य मन्दोच्चात् तथा शीघ्राद्विशोध्य च। शेषं केन्द्रपदं तस्माद् भुजज्या कोटिरेव च" सू०| "ग्रहं राश्यादिकं मन्दोच्चात् प्रागानीतस्वकीयराश्यादिकं मन्दोच्चभागात् संशोध्योनीकृत्य शीघ्रात् प्रागानीतराश्यादि शीघ्रोच्चात्, चः समुच्चये ऊनीकृत्य शेषं राश्यात्मकं तयोरुच्चसम्बन्धेन केन्द्रं मन्दोच्चाद्धीनो ग्रहो मन्दकेन्द्रम्। शीघ्रोच्चाद्धीनो ग्रहः शीघ्रकेन्द्रं भवतीत्यर्थः। तस्मात् केन्द्रात् पदं राशित्रयात्मकं विषमं समं पदं ज्ञेयम्। त्रिराश्यन्तर्गतं चेत् प्रथमं विषमं पदम्। ततःषड्भाश्यन्तर्गतं चेत् त्र्यूनं केन्द्रं द्वितीयं समं पदम्। ततो नवराश्यन्तर्गतं चेत् षडूनं तृतीयं विषमं पदम्। ततो नवोनं चतुर्थं पदं सममित्यर्थः। तस्मात् पदाद् भुजस्य ज्या कोटिः कोटेर्ज्या। चः समुच्चये। एवकारात्तदाकारद्वयं साध्यमित्यर्थः। अत्रोपपत्तिः। उच्चस्थानाभिमुखमुच्चदैवतैर्ग्रहाणामाकर्षणोक्तेरुच्चाद्ग्रहः कियदन्तरेणेति ज्ञानार्थमुच्चहीनो ग्रहः केन्द्रमुच्चग्रहणवशात् तदाख्यम्। तत्र भगवता स्वेच्छया ग्रहादुच्चं यदन्तरेण तत् केन्द्रं कृतम्। उभयथा भुजकोट्योस्तुल्यत्वात्। द्वादशराश्यङ्किते वृत्ते उच्चस्थानाच्चतुर्विभागात्मक एकैको भागो राशित्रयात्मकः पदसंज्ञः। अथोच्चस्थानाद्ग्रहः कस्मिन् पदेऽस्तीति शून्यत्रिषण्णवोनं केन्द्रं कृतं, ज्यानां पदान्तर्गतत्वात्। ग्रहाधिष्ठितपदाद् भुजज्याकोटिज्ययोर्ज्ञानम्। तच्च ग्रहाणां राशंशकलाविकलादिस्थितिज्ञानार्थं स्पष्टाकरणसाधनं तत्रैव प्रसिद्धम्" रङ्ग०।

एतत्साम्यात् लग्नावधिकद्वादशराशिषु त्रिराश्यन्तरस्थानरूपे लग्नचतुर्थसप्तमदशमस्थानरूपे २स्थानचतुष्के। "लग्नाम्बुद्यूनकर्म्माणि केन्द्रमुक्तञ्च कण्टकम्। चतुष्टयञ्चात्र खेटो बली लग्ने विशेषतः" ज्यो० त०। केन्द्रगतग्रहबलञ्च बलशब्दे वक्ष्यते। केन्द्रगतग्रहवशादायुस्तु केन्द्रायुरित्यभिधीयते तच्चाकरे दृश्यम्। "आग्नेर्क्षिमगते चन्द्रे केन्द्रस्थे सुरपूजिते। योगः केन्द्र इति ख्यातो यातुरिष्टार्थसिद्धिदः" ज्योतिषोक्ते ३यात्राशुभयोगभेदे पु०। केन्द्रं स्थानत्वेनास्त्यस्य इनि। केन्द्रिन् तत्स्थे ग्रहे

**केप** चालने भ्वा० आत्म० सक० सेट्। केपते अकेपिष्ट। ऋदित् केपयति ते अचकेपत्-त। प्रनिकेपते

**केपि** त्रि० कु+पू—इन् पृषो०। "पुनाति कर्म्म कुत्सितं दुष्प्रयं भवतीति" निरुक्तोक्ते निन्दितकर्म्मणि। "न वे शेकुर्यज्ञियां नावमारुहमीर्म्मैव ते न्यविशन्त केपयः" ऋ० १०,४४,६, "केपयः कुत्सितपूयकर्म्माणः" भा०।

**केमद्रुम** पु० ज्योतिषोक्ते योगभेदे। स च योगः ज्ञातकपद्धतौ फलभङ्ग्यां सहितोदर्शितो यथा। "शीतांशोर्घनगैर्भवेद्धि सुनफा रिष्फस्थितैः साऽनफा। युग्मस्थैरविवर्जितैर्दुरधरा केमद्रुमोऽतोऽन्यथा"। तत्फलम् "नृपतेर्वंशजातोऽपि केमद्रुमभवो नरः। मलिनो दुःखितो नीचो निःस्वोदासः खलोभवेत्" तद्भङ्गस्तु तत्रैव "चन्द्रे केन्द्रगतेऽथवा ग्रहयुते सर्व्वैश्च दृष्टे विधौ सर्व्वैः कण्टकसंस्थितैर्ग्रहयुतैः केमद्रुमो नेष्यते। लग्नाद्धिपोर्वा दृढिस्थैः शुभैः सर्व्वं शुभं फलम्। द्वाभ्यां मध्यं तथैकेनाल्पं चेन्नास्ति दरिद्रता"

**केमुक** पु० के मूर्द्धि अमयति अम—रोगे उक अलुक् स०। (केँउ) १वृक्षभेदे। २कन्दशाकभेदे न० भावप्र०। "केमुकं कुटकं पाके तिक्तं ग्राहि हिमं लघु। दीपनं पाचनं हृद्यं कफपित्तज्वरापहम्। कुष्ठकासप्रमेहास्रनाशनं वातलं कटु"। तत्र तद्गुणाउक्ताः तत्फलन्तु हविष्ये वर्ज्यम् "फलं केमुकवर्ज्जितम्" स्मृतेः।

**केयूर** पु० के बाहुशिरसि याति या-ऊर किच्च अलुक् समा०। (बाजु) (ताड़)१बाहुभूषणे अमरः। "विदूरे केयूरे कुरु करयुगे रत्नवलयम्" सा० द० "केयूरबन्धोच्छ्वसितैर्नुनोद" रघुः। २रतिबन्धभेदे पु० स च द्विधा। "स्त्रोजङ्घे चैव

संपीड्य दोर्भ्यामालिङ्ग्य सुन्दरीम् । कारयेत् स्थापनं कामी बन्धः केयूरसंज्ञितः” स्मरदीपिका । “स्त्रीणां जङ्घान्तराविष्टो गाढमालिङ्ग्य सुन्दरीम् । कामवेद्विपुलं कामी बन्धः केयूरसंज्ञितः” । रतिमञ्जरी ।

**केरक** पु० ब० व० । देशभेदे । “एकपादांश्च पुरुषान् केरकान् वनवासिनः” भा० सभा० २०अ० । सहदेवदक्षिणदिग्विजये । अतः तद्देशस्य दक्षिणविभागस्थत्वम् ।

**केरल** पु० सगरेण म्लेच्छतां प्रापिते क्षत्रियभेदे । तत्कथा हरिवं०१४अ०

“ततः शकान् सयवनान् काम्बोजान् पारदांस्तथा । पह्लवांश्चैव निःशेषान् कर्त्तुं व्यवसितः किल । ते बध्यमाना वीरेण सगरेण महात्मना । वशिष्ठं शरणं गत्वा प्रणिपेतुर्मनीषिणम् । वशिष्ठस्त्वथ तान् दृष्ट्वा समयेन महाद्युतिः । सगरं वारयामास तेषां दत्त्वाऽभयन्तदा । सगरः स्वाम्प्रतिज्ञाञ्च गुरोर्वाक्यं निशम्य च । धर्म्मं जघान तेषां वै वेशानन्यत्वं चकार ह । अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत् । यवनानां शिरः सर्वं काम्बोजानां तथैव च । पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः,। निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना । शका यवनकाम्बोजाः पारदाः पह्लवास्तथा। कोलिसर्पाः समहिषा दार्व्याश्चोलाः सकेरलाः । सर्व्वे ते क्षत्रियास्तात ! धर्म्मस्तेषां निराकृतः । वशिष्ठवचनाद्राजन् ! सगरेण महात्मना” ।

२तदधिष्ठानदेशभेदे ब०व० । स च दक्षिणस्थः ट०सं० कूर्म्मविभागे १४अ० । “दशपुरगोनर्द्दकेरलकाः” दक्षिणस्यामुक्तम् तत्रत्य पर्व्वतनद्यादि रघौ वर्ण्णितं यथा “तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः । रामास्त्रोत्सारितोऽप्यासीत् सह्यलग्न इवार्णवः । भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् । अलकेषु चमूरेणुः चूर्णप्रतिनिधीकृतः । मुरलामारुतोद्धूतमगमत् कैतकं रजः” । ३होरायां ४ज्योतिर्ग्रन्थविशेषे च स्त्री गौरा० ङीष् शब्दरत्ना० । केरलज्योतिर्विद्यायाञ्च सङ्केतविशेषोदिग्मात्रं दर्श्यते।“वर्गवर्ण्णप्रमाणञ्च सस्वरं ताडितं क्रियः। पिण्डसंख्या भवेत्तस्य यथाभागैस्तु कल्पना” गर्गसंहिता । अयमर्थः । अ क च ट त प य श इत्यष्टौ वर्गास्तेषामेकादिसंख्या यथा अवर्गे १ । कवर्गे २ । चवर्गे३। टवर्गे४ । तवर्गे५ । पवर्गे६ । यवर्गे ७ । शवर्गे ८। वर्ण्णसंख्या च प्रतिवर्गं भिन्ना यथा अवर्गे१६ वर्ण्णा यथा अ१आ२ इ३ई४उ५ऊ६ इत्यादि। कादौ पान्ते वर्गे च पञ्च पञ्च संख्या । यवर्गे४शवर्गे च४। एवं च दाडिमफलनामप्रश्ने टकारस्य तवर्गत्वात् वर्गसंख्या ५ वर्ण्णसंख्या ३ मिलित्वा ८ । डस्य वर्गसंख्या ४ वर्ण्णसंख्या ३ मिलित्वा ७ । मस्य वर्गसंख्या६ वर्ण्णसंख्या ५ मिलित्वा११ एवं वर्गवर्ण्णसंख्या २६ । दाडिमपदे आ इ अ इति स्वरत्रययुक्तो अवर्गसंख्या १ आरूपसंख्या २ मिलित्वा ३ एवं इ ४ अ २ । मिलित्वा नवसंख्या तथा समष्टौ ३५ । पश्चात् यथोक्तक्रिया कार्य्या । प्रश्नशब्दे तद्गणनादि फलं च वक्ष्यते । क्वचित् स्वरसंख्यामनादाय अन्यथा सङ्केतो दर्शितो यथा । “काद्यष्टाद्योऽङ्काः स्युः पाद्याः पञ्च तथा मताः । याद्योऽष्टौ ङनां शून्यं गणकैः परिकीर्त्तितम्” इत्युक्तिमनुरुध्य कालमा० “सौरवार्हस्पत्यसावनशशधरनाक्षत्रिकाः क्रमेण । मातुलपातालातुलवितुलविमलवरदाश्च संवत्सराः पञ्च” आयुर्वेदवाक्ये “गणकप्रसिद्धयाक्षरसंख्यया मातुलशब्दः पञ्चषष्ट्यधिकशतत्रयमाचष्टे तावद्दिवसपरिमितः कालः सौरः । पातालशब्द एकषष्ठ्यधिकशतत्रयमाचष्टे तावद्दिवसपरिमितः वार्हस्पत्यः । अतुलशब्दः षष्ठ्यधिक शतत्रयमाचष्टे तावद्दिवसपरिमितः सावनः । विमलशब्दः चतुःपञ्चाशदधिकशतत्रयमाचष्टे तावद्दिनपरिमितश्चान्द्रः, वरदशब्दश्चतुर्विंशत्यधिकशतत्रयमाह तावद्दिवसपरिमितो नाक्षत्रिकः संवत्सरः” इत्युक्तम् । अस्यायमर्थः । मातुलशब्दस्य स्वरत्यागे मस्य पकारात् पञ्चमत्वं तेन ५संख्या गृह्यते। तकारस्य टादितः षष्ठत्वेन ६संख्या लस्य यादौ तृतीयत्वेन ३संख्या अङ्कस्य वामागत्या तेषां यथाक्रमयोजने मातुलशब्दे ३६५संख्या निष्पद्यते । एवं पातालशब्दे पस्य आद्यत्वात् १संख्या तकारस्य टादितः षष्ठत्वात् ६संख्या लस्य प्राग्वत् ३संख्या । तेन पातालशब्दे ३६१संख्या । अतुलशब्दस्य नञादेशाकारस्य शून्यवाचित्वात् ० । तकारस्य ६संख्या लस्य ३संख्या । तेन ३६०संख्या । विमलशब्दे च वस्य यादौ चतुर्थत्वात् ४संख्या मस्य प्राग्वत् ५संख्या लस्य ३संख्या यथा स्थानयोजने ३५४ संख्या । वरदशब्दे व ४ र २ द ३ यथाक्रमयोजने ३२४ संख्या । ईदृशकेरलसङ्केतमभिप्रेत्यैव मन्त्रविशेषपुटितसप्तशतीजपस्य एकस्मिन्दिने करणासामर्थ्ये १२माहात्म्यात्मकसप्तशत्या दिनविशेषेषु माहात्म्यासंख्याविशेषपाठार्थं तट्टीकायां नागोजी-

भट्टेन "पाठोऽयं विप्रकारः" इत्युक्तम्। तस्यायमाशयः यस्य यादावेकत्वात् १संख्या तेन प्रथमदिने १माहात्म्यं पाठ्यम्। ठस्य टादितः द्वितीयत्वात् २संख्या तेन द्वितीयदिने द्वे माहात्म्ये। यस्य यादावाद्यत्वात् १संख्या तेन तृतीयदिने १माहात्म्यं पाठ्यम्। वकारस्य यादौ चतुर्थत्वात् ४संख्या तेन चतुर्थदिने ४माहात्म्यानि। फस्य यादौ द्वितीयत्वात् २संख्या तेन पञ्चमदिने २द्वे माहात्म्ये। कस्य कादावाद्यसंख्यात्वात् १संख्या तेन षष्ठे दिने एकमाहात्म्यम् रस्य यादौ द्वितीयत्वात् २संख्या तेन सप्तमदिने २माहात्म्ये पाठ्ये। एवं सप्तभिर्दिनैः त्रयोदश माहात्म्यानि जप्यानीति। केरलोक्तदशा तु दशाशब्दे वक्ष्यते

**केरव** पुंस्त्री° हंसे शब्दचि°। कैरवशब्दे व्युत्पत्तिर्दृश्या।

**केल** चालने भ्वा° पर° सक° सेट्। केलति अकेलीत्। चिकेल। केलिः। ऋदित् णिचि अचिकेलत्-त।

**केलक** पु° केल-ण्वुल्। खड्गधारादिनर्त्तके त्रिका°।

**केला** विलासे कण्ड्वा° आ° अ° सेट्। केलायते अकेलायिष्ट केलायां बभूव आस चक्रे। केलायमानः

**केलास** पु° केला विलासः सीदत्यस्मिन् सद-आधारे बा° ड। स्फटिके शब्दचि° तत्तुल्यवर्णत्वात्। कैलासः

**केलि** पुंस्त्री° केल-इन्। १परीहासे, अमरः २क्रीडायां ३पृथिव्यां शब्दमाला। "विहारे सह कान्तेन क्रीडितं केलिरुच्यते" सा° द° उक्तलक्षणे स्त्रीणां कान्तेन सह ४विहारक्रीडनरूपे यौवनजालङ्कारे। एवं पुरुषस्य कान्तया सह ५विहारक्रीडने च। "उपचारः क्रिया केलिः स्पर्शो भूषणवाससाम्। सहखट्वासनञ्चैव सर्व्वं संग्रहणं स्मृतम्" मनुः स्त्रीत्वे वा ङीप्। तत्र पुंस्त्वे "गोपालानन्दशात् केलीन्" मुग्धबो° स्त्रीत्वे "मालत्याः कुसुमेषु येन सततं केली कृता हेलया" भ्रमरा°"माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमम्" सा° द°। उभयत्र "कुमुदिनीकुलकेलिकलालसः" भ्रमरा°

**केलिक** पु° केलिः प्रयोजनमस्य ठन्। अशोकवृक्षे राजनि°

**केलिकदम्ब** पु° केलेः केल्यर्थः कदम्बः। स्वनामख्याते कदम्बवृक्षभेदे।

**केलिकला** स्त्री केलिरूपा कला। १केलिरूपायां कलायां केलिना कला यत्र। २सरस्वतीवीणायां शब्दरत्ना°

**केलिकिल** पु° केलिना किलति किल-क्रीडायां क। २विदूषकरूपे नाट्ये शृङ्गारवयस्ये। २शिवस्यानुचरभेदे कुष्माण्डके च हेमच°। ३कामदेवपत्न्यां रतौ स्त्री त्रिका° ४परिहासकारके त्रि° "सतु केलिकलो विप्रो-भेदशीलश्च नारदः" हरिवं° २२०८श्लो°

**केलिकिलावती** स्त्री स्मरभार्य्यायां त्रिका° [स्त्रियां टाप्

**केलिकीर्ण** पुंस्त्री° केलिना कीर्णोधूलिभिः। १उष्ट्रे हेम°

**केलिकुञ्चिका** स्त्री° केलीनां कुञ्चिकेव। श्यालिकायां भार्य्याभगिन्यां त्रिका° तया सह केलिप्रादुर्भावात् तथात्वम्

**केलिकोष** पु° केलीनां कोषइव। नटे शब्दरत्ना°

**केलिगृह** न°६त°। १केलिमन्दिरे २रत्यादिगृहे च केलिमन्दिरादयोऽप्यत्र। [प्रधाने नागरे नायकभेदे जटाधरः

**केलिनागर** पु° केलिप्रधानो नागरः शा° त°। भोग

**केलिमुख** पु° केलिः सुखमत्र। परीहासे त्रिका°

**केलिरैवतक** न° हल्लीशलक्षणयुक्ते नाटकभेदे। हल्लीलक्षणसत्त्वा "केलिरैतकम्" सा° द° उदाहृतम्

**केलिवृक्ष** न° केलेः क्रीडार्थं वृक्षः। १केलिकदम्बवृक्षे शब्दरत्ना°। केलेर्वृद्वाश्रयत्वात्। २विदूषके शब्दमा°

**केलिशुषि** स्त्री केलिना शुष्यति शुष बा°कि। धरित्र्यां शब्दमा°

**केलिसचिव** पु° केलौ सचिवः सहायः। नर्म्मसचिवे क्रीडाविषये मन्त्रिणि विदूषकादौ शब्दमा°।

**कैव** सेवने भ्वा° आत्म° सक° सेट्। केवते अकेविष्ट, चिकेवे ऋदित् णिचि अचिकेवत् त।

**केवट** पु° के जलार्थमवटः अलुक्स°। जलाधारार्थे गर्त्तरूपे कूपे निघ° "मा कीं संशारि केवटे" ऋ° ६।५४।७ "केवटे कूपे" भा°

**केवर्त्त** पुंस्त्री° के जले वर्त्तते वृत-अच् अलुक्स°। कैवर्त्ते जातिभेदे स्त्रियां टाप् द्विरूपकोषः "अवराय केवर्त्तम्" यजु° ३०। १६ पुरुषमेधे बध्यकथने

**केवल** त्रि° केव-सेवने वृषा°कल, शिरसि बलयति चुरा° वल-प्रापणे अच् वा। १अद्वितीये असहाये एकमात्रे स्त्रियां "संज्ञाछन्दसोरेव नित्यम्" ङीप्। "अधीत इन्द्रः केवलीर्विशो बलिहृतस्करत्" ऋ° १०।१७३।६ "यथैव ताः पुरः केवलीरोषधीरश्नन्ति केवलीरपः पिबन्ति" केवलमेव पयो दुह्रे" श° ब्रा°।१६।१७।१५ "यथा पुरा अमावास्यातः पूर्व्वदिवसे ता गावः केवलीश्चन्द्रानुप्रवेशरहिता ओषधीरपश्चाहारं कृत्वा केवलं चन्द्ररहितमेव पयो ददुः दुहते"भा°। लोके असंज्ञायां च टाप्,"सा स्वकाननभुवं न केवलाम्" रघुः "किं तया क्रियते लक्ष्म्या

यौ वधूरिव केवला” पञ्चत० “नमस्त्रिमूर्त्तये तुभ्यं प्राक् सृष्टेः केवलात्मने” कुमा० “निषेदुषी स्थण्डिल एव केवले” कुमा० “अविपर्य्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्” सा० का०, क्रियाविशेषणत्वे न० “अनन्यगुर्वी-स्तव केन केवलम्” माघः ३निर्णये ज्ञानभेदे ४अव-धारणे न० मेदि० “न केवलं सद्मनि मागधीपतेः” रघुः सद्मन्येवेत्यर्थः एवं सर्वत्र केवलार्थान्वितावधारणं बो-ध्यम्। ज्ञानभेदश्च प्रागुक्त सां०का० वाक्योक्तः। ५कुहने पु० मेदि० [ अर्हद्विशेषे हेम०

**केवलज्ञानिन्** पु० केवलं शुद्धं ज्ञानमस्त्यस्य भूम्नि इनि।

**केवलद्रव्य** न० नि० क०। मरिचे शब्दचि० [विवृतिः

**केवलव्यतिरेकिन्** न० अनुमानभेदे केवलान्वयिशब्दे

**केवलान्वयिन्** त्रि० केवलमन्वयोऽस्त्यस्य इनि १कालेऽपि अभा-वरहिते वृत्तिमतोऽत्यन्ताभावाप्रतियोगिनि यथा प्रमे-यत्वादि तस्य न कुत्राप्यभावोऽस्ति। तथाच “साध्य-वदन्यावृत्तित्वं वा केवलान्वयिन्यभावात्” अनुमा० चि० “तथैवानुपसंहारी केवलान्वयिपक्षकः” भाषा० “केव-लान्वयिधर्म्मावच्छिन्नकपक्षक इत्यर्थः। सर्व्वमभिधेयं प्रमेयत्वादित्यादौ सर्व्वस्यैव पक्षत्वात् सामानाधिकरण्य-ग्रहस्थलान्तराभावान्नानुमितिः” “केवलान्वयिसाध्यकत्वं तत्त्वमिति तु युक्तमिति” मुक्ता०। केवलोऽन्वयव्याप्तिर-स्त्यस्य इनि। २अनुमानभेदे। तद्वृत्तिः अनु०चि० यथा “तच्चानुमानं त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्य-तिरेकिभेदात्। तत्रासद्विपक्षं केवलान्वयि तथाहि केव-लान्वयिनोऽभिधेयत्वस्य न विपक्षः अभिधानेऽनभिधाने च विपक्षव्याघातात्। अथ यथा आकाशशब्दाच्छब्दा-श्रयत्वमनभिधेयमप्युपतिष्ठते तथाभिधेयमप्युपतिष्ठते तथा भिधेयत्वविपक्षस्यानभिधेयत्वेऽपि पदादुपस्थितिः स्यात् एवञ्चाभिधेयत्वं कुतोऽपि व्यावृत्तं धर्म्मत्वात् गोत्वव-दिति चेन्न व्यावृत्तत्वस्याव्यावृत्तत्वे व्यावृत्तत्वमेव केवलान्व-यि, व्यावृत्तत्वे यत एव व्यावृत्तं व्यावृत्तत्वं तदेव केवलान्व-यीति धर्म्मत्वस्यानैकान्तिकत्वात्। एवमत्यन्ताभावप्रतियो-गित्वस्यात्यन्ताभावाप्रतियोगित्वे अत्यन्ताभावप्रतियोगित्व-मेव केवलान्वयि, अत्यन्ताभावप्रतियोगित्वे यन्निष्ठात्यन्ता-भावप्रतियोग्यत्यन्ताभावप्रतियोगित्वं तदेव केवलान्वयि। न चात्यन्ताभावप्रतियोगित्वं व्यावृत्तत्वञ्च नानेति वाच्यम् अनुगतप्रतीतिविषयत्वेन गोत्ववत्तयोः सिद्धेः। तत्र न तावद-त्यन्ताभावः केवलान्वयी तस्य प्रतियोग्यवच्छिन्ने-ऽप्यत्यन्ताभावात् अत्यन्ताभावाप्रतियोगिनश्च केवलान्वयि-त्वात् नाप्याश्रयनाशजन्यगुणनाशात्यन्ताभावः, तस्य नाश-स्य सर्व्वत्रात्यन्ताभावादिति वाच्यं यत्र हि प्रतियोगि-प्रागभावो वर्त्तते तत्र नाशप्रतियोगिसमानदेशे वर्त्तते तत्र न तदत्यन्ताभावो वर्त्तते तथाच नाशस्य प्रागभावो यत्र नाशप्रतियोगिसमानदेशे वर्त्तते तत्र कथं नाशात्य-न्ताभावो वर्त्ततां तर्हि नाशस्य तत्र वृत्तिः स्यादिति चेन्न पूर्वं तत्र नाशप्रागभावस्यैव सत्त्वादुत्तरकाले आश्रयस्यैवा-भावात्। नाप्याकाशात्यन्ताभावः केवलान्वयी तस्यापि प्र-तियोगिरूपात्यन्ताभावप्रतियोगित्वात् अभावात्यन्ताभावस्य भावत्वात्। अथाभावात्यन्ताभावो न प्रतियोगिरूपस्तथा-सत्यन्योऽन्याभावात्यन्ताभावः प्रतियोगिरूप इति प्रतियो-गिसमानदेशेऽन्योऽन्याभावो न स्यादिति चेन्न अत्यन्ता-भावस्तु प्रतियोगिवृत्तिरसाधारणो धर्म्म इति। उच्यते वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् आका-शात्यन्ताभावो यद्यपि प्रतियोगिरूपात्यन्ताभावप्रतियोगी तथापि स न वृत्तिमानित्याकाशात्यन्ताभाव एव केव-लान्वयी तथा प्रमेयत्वाभिधेयत्वादि केवलान्वयि वृत्तिम-तोऽत्यन्ताभावस्याप्रतियोगित्वात्। ननु प्रमेयत्वं प्रमावि-षयत्वं तच्च न केवलान्वयि प्रमायाविषयत्वस्य चाननुग-मादिति वाच्यं प्रमात्वमेव हि परम्परासम्बन्धात् घ-टादौ प्रमेयत्वमनुगतं प्रमाजातीयविषयत्वं वा। तथापि केवलान्वयिनि संशयाभावात् कथमनुमितिः प्रमेयत्वमत्र वर्त्तते न वेति संशयश्च न प्रमेयपक्षकः किन्तु प्रमेयत्वप-क्षको भिन्नविषयकः प्रमेयत्वपक्षके चास्तित्वसाध्यस्यान्व-यव्यतिरेकित्वं तथाच घटः प्रमेयो न वेति संशयो मृ-ग्यते स च नास्त्येव। अथ पक्षः साध्यवान्न वा पक्षे साध्यमस्ति न वेति संशयौ समानविषयकावेव तदस्यास्त्य-स्मिन्निति मतुपो विधानादिति चेन्न विशेषणविशेष्यभा-वभेदेनार्थभेदात्, मैवं य एव हि संशयः पक्षे साध्यसि-द्धिविरोधी स एवानुमानाङ्गमावश्यकत्वात् लाघवाच्च न तु समानविषयकत्वमपि तत्र तन्त्रं गौरवात् प्रमेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि न वेति संशयश्च घटः प्रमेय इति साध्यसिद्धिविरोधी भवत्येव यद्वा संशययोग्यतै-वानुमानाङ्गं संशयस्य तदानीं विनाशात् न च सापि साधकबाधकप्रमाणाभावः प्रमेयत्वाभावासिद्धौ तत्प्रमा-णासिद्धेस्तदभावासिद्धिरिति वाच्यं पक्षनिष्ठात्यन्ताभा-वाप्रतियोगित्वज्ञानस्यैव साध्यसाधकत्वेन तदभावस्यैव

योग्यत्वात् । प्रमेयत्वमत्यन्ताभावप्रतियोगीति भ्राम्यतः संशयः इत्यन्ये । नन्वेकरूपविकलमिदं कथं गमकं तत्त्वे वा व्यतिरेकविकलवत् रूपान्तरविकलमपि गमकं स्यादिति चेन्न अन्वयव्यतिरेकव्याप्त्योरन्यतरनिश्चयेनानुमित्यनुभवात् युगपदुभयव्याप्त्युपस्थितौ विनिगमकाभावेन उभयोरपि प्रयोजकत्वे व्यतिरेकोपासना व्यतिरेकस्य विपक्षवृत्तित्वशङ्कानिवृत्तिद्वारा व्यतिरेकव्याप्तावुपयुज्यते अत्र तु विपक्षाभावेन शङ्कैव नोदेति ।

केवलव्यतिरेकी त्वसत्सपक्षो यत्र व्यतिरेकसहचारेण व्याप्तिग्रहः । ननु व्यतिरेकि नानुमानं व्याप्तिपक्षधर्मताज्ञानस्य तत्कारणत्वात् यत्र व्यतिरेकसहचारः तत्र व्याप्तिरन्वयस्य पक्षधर्मता न च व्याप्तपक्षधर्मत्वं साध्याभावव्यापकाभावप्रतियोगित्वमुभयमप्यनुमितिप्रयोजकमिति वाच्यं अननुगमात् नचान्यतरत्वं तथा एकप्रमाणपरिशेषापत्तेः न च तृणारणिमणिन्यायेनानुमितिविशेषे तद्धेतुत्वमिति वाच्यं व्यतिरेकिसाध्येऽनुमितित्वासिद्धेः उभयसिद्धस्य प्रतत्कारणस्याभावात् । न च साध्याभावव्यापकाभावप्रतियोगित्वमेवानुमितिप्रयोजकमिति वाच्यं गौरवात् केवलान्वयिन्यभावाच्च । अथ साध्याभावव्यापकाभावप्रतियोगित्वेन साध्यव्याप्यत्वमनुमेयम् एवं व्यतिरेकव्याप्त्यन्वयव्याप्तिमनुमाय यत्रानुमितिः सएव व्यतिरेकीत्युच्यते तन्न अन्वयव्याप्तेर्गमकत्वे व्यतिरेकव्याप्त्युपन्यासस्यार्थान्तरतापत्तेः अन्वयव्याप्त्यनुकूलतया च तदुपन्यासे अन्वयव्याप्तिमनुपन्यस्य तदुपन्यासस्याप्राप्तकालत्वमिति । उच्यते निरुपाधिव्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते प्रतियोग्यनुयोगिभावस्य नियामकत्वात् अन्वयव्यतिरेकवत् । नन्वेवं व्याप्तिग्रहएव पृथिवीतरभिन्नमपि भासितं नियतसामानाधिकरण्यरूपत्वाद्व्याप्तेरिति सत्यं गन्धवत्त्वावच्छेदेनेतरभेदस्य साध्यत्वात् । अतएवाचार्य्यः पक्षतावच्छेदकस्य न हेतुत्वमनुमेने । पृथिवीत्वमितरभेदव्याप्यमिति प्रतीतावपि सर्वपृथिवीतरभिन्नोऽपि पृथिवीविशेषप्रकवृद्धे व्यतिरेकिसाध्यत्वाच्च" ।

अत्र दिग्मात्रं दीधितिरुपन्यस्यते ।

"केवलान्वयीत्यादि केवलान्वयिसाध्यकादीत्यर्थः । तत्र तेषु मध्ये, असिद्धिपक्षम् अत्यन्ताभावाप्रतियोगिसाध्यकं केवलान्वयि, एवमगृहीतान्वयव्यतिरेकिसाध्यकं केवलव्यतिरेकि, गृहीतान्वयव्यतिरेकिसाध्यकान्वयव्यतिरेकि, व्याप्तिग्राहकसहचारभेदाद्भेदे त्वन्वयसहचारमात्रगृहीतव्याप्तिकत्वं केवलान्वयित्वं तच्च प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वव्यापकान्वयसहचारत्वकत्वं तादृशसहचारत्वव्यापकप्रकृतव्याप्तिघटकसहचारत्वकत्वं वा गृहीतव्याप्तिभेदाद्भेदे तु प्रकृतहेतुकप्रकृतसाध्यानुमितिहेतुज्ञानविषयव्याप्तित्वव्यापकप्रकृतसाध्यव्याप्तित्वकत्वं तत्त्वम् । जलं निर्गन्धं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वादित्यादौ हेतुतावच्छेदिका च व्याप्तिर्न प्रकृतसाध्यानुमित्यौपयिकी तद्विशिष्टपक्षधर्मताज्ञानेऽपि व्याप्त्यन्तरबोधं विना निर्गन्धत्वानुमित्यनुदयादिति नाव्याप्तिः । वह्न्यभाववान् वह्निव्यापकाभावप्रतियोगिमत्त्वादित्यादावन्वयव्याप्तेरवच्छेदिका व्यतिरेकव्याप्तिर्न तु सैवेति नाप्रसङ्गः । अतएवेतरव्यापकाभावप्रतियोगित्वेनाभावप्रतियोगित्वेन वा यल्लिङ्गज्ञानं नप्रकृतसाध्यानुमितिहेतुस्तत्केवलान्वयीत्यपि वदन्ति । एवं केवलव्यतिरेकित्वादिकमपि निर्वाच्यम्" ।

वेदान्तिभिस्तु अनुमानत्रैविध्यं नाङ्गीक्रियते यथोक्तं वेदा॰प॰ "तच्चानुमानमन्वयिरूपमेकमेव न तु केवलान्वयि, सर्वस्यापि धर्मस्यास्मन्मते ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेनात्यन्ताभावाप्रतियोगिसाध्यकत्वरूपकेवलान्वयित्वस्यासिद्धेः नाप्यनुमानस्य व्यतिरेकिरूपत्वं साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावनुपयोगात् । कथं तर्हि धूमादावन्वयव्याप्तिमविदुषोऽपि व्यतिरेकव्याप्तिज्ञानादनुमितिः अर्थापत्तिप्रमाणादिति वक्ष्यामः अतएवानुमानस्य नान्वयव्यतिरेकिरूपत्वं व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वात्" ।

**केवलिन्** पु॰ केवलं शुद्धज्ञानमस्त्यस्य इनि । जैनभेदे हला॰

**केवली** स्त्री केवल—गौरा॰ ङीष् । १ज्ञानभेदे मेदि॰ । २केरलीशब्दार्थे हेम॰ तत्र रमध्यपाठः साधुः

**केवाली** अव्य॰ । ऊर्य्यादि ।१हिंसायां गणरत्नम् । केवालीकृत्य हिंसित्वेत्यर्थः २हिंसके त्रि॰ स्त्रियां गौरा॰ ङीष् ।

केवाली [पुष्पभेदे सद्गन्धायां राजनि॰

**केविका** स्त्री केव— ण्वुल् टाप् । (केवेर) कोङ्कणप्रसिद्धे

**केश** पु॰ क्लिश्यते क्लिश्नाति वा क्लिश—अच् ललोपश्च कस्य जलस्य ब्रह्मणो वा ईशोवा । १वरुणे, विश्वः । २ह्रीवेरे (वाला) ३दैत्यभेदे, केशिनि ४विष्णौ, हेम॰ काशते काश अच् पृषो॰ । ५सूर्य्याग्निप्रभृतिरश्मौ (केशिन्) शब्दे विवृतिः "ब्रह्मविष्णुरुद्रसंज्ञाःशक्तयः केशसंज्ञिताः" इत्युक्ते ब्रह्मादौ ६परब्रह्मशक्तिभेदे केशवशब्दे विवृतिः । के शिरसि शेते शी—ड अलुक्स॰ । ७चिकुरे

च। अस्थिधातुजातोपधातुविशेषोऽयं केशः। अस्मात् परवर्त्तिनः पाशादिशब्दाः केशभूयस्त्ववाचिनः। "पाशास्तु तत्पराः पाशो रचना भारउच्चयः। हस्तः पक्षः कलापश्च केशभूयस्त्ववाचकाः" हेमचन्द्रोक्तेः। केशस्तु पितृतोजायते यथाह सुश्रुतः "गर्भस्य केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि" "केशाः श्मश्रु च लोमानि नखा दन्ताः सिरास्तथा। धमन्यः स्नायवः शुक्रमेतानि पितृजानि हि" भावप्र०। तस्य सर्व्वदा वृद्धिमत्त्वमाह तत्रैव "शरीरे क्षीयमाणेऽपि बर्द्धेते द्वाविमौ सदा। स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः" "चेतनानामधिष्ठानं मनोदेहश्च सेन्द्रियः केशलोमनखाग्रान्नमलद्रव्यगुणैर्विना" तस्योत्पत्तिप्रकारः भावप्र० दर्शितो यथा "ततोऽस्थ्यग्निना पुनः पच्यमानं पञ्चाहोरात्रात् सार्द्धं दण्डञ्च यावद्‌स्थित्वेव तिष्ठति। ततः पच्यमानात् तस्मात् मलो निर्गच्छति। स च व्यानवायुना प्रेरितः सिराभिः मार्गमागत्याङ्गुलिषु नखाः, तनौ लोमानि च भवन्तीति" अत्र लोमसाम्यात् केशस्यापि तनौ प्ररोहादस्थिधातुजत्वमुन्नेयम्। एवं गर्भे षष्ठे मासि तस्य लोमसाम्यात् प्रादुर्भावः "षष्ठे बलस्य वर्णस्य नखलोम्नां च सम्भवः" या० उक्तेः। जनानां केशवत्त्वे कारणम् शत० ब्राह्मणे उक्तं तद्वाक्यञ्च (केशिन्) शब्दे वक्ष्यते। केशनाशकारणञ्च इन्द्रलुप्तशब्दे दर्शितम् केशकौल्यहेतुस्तु "क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः। पित्तं च केशान् पचति पलितं तेन जायते" सुश्रुतेनोक्तः "लताप्रतानोद्‌ग्रथितैः स केशैः"। रघु० "अलक्तकाङ्कानि पदानि पादयोः" "विकीर्णकेशासु परेतभूमिषु" कुमा० "केशः काशस्तवकविकाशः" सा० द० "केशेषु चमरीं हन्ति" शि०कौ०। "क्लृप्तकेशनखश्मश्रुः" मनुः "केशश्मश्रु धारयतामग्र्या भवति सन्ततिः" शु० त०दानधर्मः। केशश्मश्रु इत्यत्र श्मश्रुशब्दस्य व्यन्तत्वेऽपि राजद० परनिपातः। तस्य मूलं कर्णा० जाहच्। केशजाह तन्मूले न०। अस्य स्वाङ्गत्वात् उपसर्जनत्वे व्यतिकेशी सुकेशीत्यादौ स्त्रियां वा ङीप्। केशेषु प्रसितः(तत्परः) कन्। केशक तद्रचनातत्परे त्रि०।

**केशकर्म्मन्** न० केशानां कर्म्म रचनादि। केशानां रचनादिकरणेन संस्काररूपे व्यापारभेदे। "साहं ब्रुवाणा सैरिन्ध्री कुशला केशकर्म्मणि" भा० वि०३अ०। २केशान्तकर्म्मरूपे संस्कारभेदे च केशान्तशब्दे विवृतिः।

**केशकलाप** पु० ६त०। केशसमूहे हेमच०।

**केशकार** पु० केशं केशाकारं करोति कृ–अण् उप०स०। इक्षुभेदे भावप्र० इक्षुशब्दे यत् कोशकृत इति तदशुद्धम् केशकृत इत्येव शुद्धम्

**केशकारिन्** त्रि० केशं तद्रचनां करोति कृ–णिनि। केशरचनाकारके स्त्रियां ङीप्। "निहीनवर्णां सैरिन्ध्रीं बीभत्सां केशकारिणीम्" भा०वि०१४अ०।

**केशकीट** पु० ६त०। यूकाख्ये १केशकीटे। (उकुण) शब्दचि०। तद्धेतुः"अहंषि बहुवक्त्राणि बहुक्लेदानि मूर्द्धनि। कफासृक्कृमिकोपेन नृणां विद्याद्बहूंषिकाम्" सुश्रुतोक्तः। केशश्च कीटश्च द्व०। २केशे कीटे च। "केशकीटावपन्नञ्च पदा स्पृष्टञ्च कामतः" मनुः। [त्रिका०

**केशगर्भ(क)** पु० केशः गर्भेऽस्य वा कप्। कवरीरूपे पदार्थे

**केशग्रह** पु० ६त०। १बलात्कारेण कचग्रहणे सुरतक्रीडाङ्गे २तद्ग्रहणे च। "केशग्रहान् प्रहारांश्च शिरस्येतान् विवर्ज्जयेत्" मनुः "कोपेन केशग्रहणप्रहारौ शिरसि वर्ज्जयेत् कोपनिमित्तत्वादात्मनः परस्य च प्रतिषेधः। अतएव सुरतसमये कामिनीकेशग्रहणानिषेधः" कुल्लू०। "रतेषु केशग्रहाः" कादम्बरी "सुरतेषु न तु युद्धेषु इत्यर्थः। कचग्रहादयोऽप्यत्र। ल्युट् केशग्रहणमप्यत्र न०। "शम्भोः केशग्रहणमकरोत्" मेघदूतम्

**केशग्राहम्** अव्य०। केशान् गृहीत्वा "स्वाङ्गेऽध्रुवे" पा० ग्रह–णमुल् उप० स०। केशान् गृहीत्वेत्यर्थे येन विना न जीवनं तदध्रुवं तद्भिन्ने इत्यर्थः। केशं विनापि जीवनस्य सम्भवात् तस्याध्रुवत्वात् स्वाङ्गत्वाच्च तत्र णमुल्।

**केशघ्न** न० केशान्हन्ति हन–हेत्वादौ टक्। इन्द्रलुप्तरोगे (टाक) हेमच० इन्द्रलुप्तशब्दे ८५०पृ० विवृतिः

**केशच्छिद्** त्रि० केशान् छिनत्ति छिद–क्विप् ६त०। १केशच्छेदके २नापिते पु० शब्दमा० क। केशच्छिदोऽप्यत्र

**केशट** पु० केशेषु केशान् वा अटति अट–अच् शक०।(उकुण) १मत्कुणे। २विष्णौ ३छागे च मेदि०। ४भ्रातरि शब्दर०। ५ कामदेवस्य शोषणाख्ये वाणे विश्वः। ६शोनकवृक्षे (शोना) त्रिका०।

**केशधर** त्रि० केशान् धरति धृ–अच्। १केशवपनाकर्त्तरि व्रतप्राये २देशभेदे पु० ब० व०। स च देशः वृ०सं० कूर्म्मविभागे उत्तरस्यासुक्तः। "केशधरचिपिटनासिकदासेरकवाटधानाः"

**केशधृत्** पु॰ केशमिव धरति धृ—क्विप् । भूतकेशाख्ये तृणभेदे शब्दचि॰ [न्धद्रव्यभेदे ह्रीवेरे अमरः

**केशनामन्** न॰ केशस्य नामेव नाम यस्य । (वाला) इति ग-

**केशपक्ष** पु॰ केशानां समूहः बा॰ पक्षादेशः केशः पक्ष इव वा । केशसमूहे अमरः "केशपक्षे परामृष्टा पापेन हृतबुद्धिना" भा॰ आ॰ १७अ॰ "अभिद्रुत्य सुशर्माणं केशपक्षे परामृशत्" भा॰वि॰३१अ॰ केशभारोऽप्यत्र पु॰

**केशपर्णी** स्त्री केश इव पर्णमस्याः जातित्वात् ङीष् । अपामार्गे शब्दरत्ना॰

**केशपाश** पु॰ केशानां समूहः बा॰ पाशादेशः केशः पाश इव वा । केशसमूहे अमरः "करेण रुद्धोऽपि च केशपाशः" कुमा॰ रघुश्च । "तां काचन प्रधावन्तीं केशपाशे परामृशत्" भा॰ व॰ ४६१ एवं

**केशप्रसाधनी** स्त्री केशः प्रसाध्यते संस्क्रियतेऽनया प्र+ साध—करणे ल्युट् ङीप् । (काँकुइ) (चिरुणि) ख्याते पदार्थे "केशप्रसाधनी केश्या रजोजन्तुमलापहा" सुश्रुते तत्सेवनगुणा उक्ताः ।

**केशभू** स्त्री केशानां भूरुत्पत्तिस्थानम् । शिरसि राजनि॰ केशभूम्यादयोऽप्यत्र स्त्री "दारुणा कण्डुरा रूक्षा केशभूमिः प्रजायते । कफवातप्रकोपेन" सुश्रु॰

**केशमथनी** स्त्री केशोमथ्यतेऽनया मथ—करणे ल्युट् ङीप् । शमीवृक्षे राजनि॰ तस्याः कण्टकेन तदन्तिकयातुः केशधर्षणात्तथात्वम्

**केशमार्जक** न॰ केशान् मार्ष्टि मृज—ण्वुल् । (काँकुइ) (चिरुणि) ख्यातायां केशप्रसाधन्यां कङ्कतिकायां जटा॰

**केशमार्जन** न॰ केशो मृज्यतेऽनेन मृज—करणे ल्युट् वृद्धिः ६त॰ । १कङ्कतिकायां (चिरुणि) हेमच॰ । भावे ल्युट् । २केशसंस्कारभेदे (चुल आचड़ान)

**केशमुष्टि** पु॰ केशानां मुष्टिरिव । महानिम्बवृक्षे राजनि॰

**केश(स)र** पुंन॰ के जले शिरसि वा शीर्य्यति शॄ अच् सरति सृ—अच् अलुक्स॰केशः केशाकारोऽस्त्यस्य र वा । १किञ्जल्के पद्मादिपुष्पमध्यस्थे केशाकारपदार्थभेदे (शुमरि) अमरः । सकेश(स)रपुष्पवत्त्वात् २नागकेशरे ३वकुलवृक्षे ४पुन्नागवृक्षे ५सिंहादिस्कन्धस्थजटायां पु॰ मेदि॰ ६हिङ्गुवृक्षे न॰ भरतः "मृगपतिरिव स्कन्धावलम्बितकेशरभारः" काद॰ "व्याकीर्णकेशरकरालमुखाः मृगेन्द्राः" पञ्चत॰ "पुनः पुनः केशरदामकाञ्चीम्" कुमा॰ "नीपं दृष्ट्वा हरितकपिशं केसरैरर्द्धरूढैः" मेघ॰ "दशनांशुकेशरशोभितः" प-

रितः" माघः "दुष्टवर्षाजिनः स्कन्धान् लग्नकुङ्कुमकेशरान्" रघुः बकुले "सुरभिगन्धपराजितकेशरम्" रघुः "रक्ताशोकश्चलकिसलयः केशरश्चात्र कान्तः" मेघ॰। ७कुङ्कुमे च तस्य किञ्जल्ककाकारवत्त्वेन जायमानत्वात् तथात्वं एतेषु उदाहरणेषु दन्त्यमध्योऽपि वा पाठः । दन्त्यमध्यस्तु तुरगस्कन्धस्थलोमपुञ्जरूपजटायां हेमच॰ कासीसे वीजपूरके पु॰ स्वर्णे न॰ राजनि॰ "अर्थाश्वाश्वैः ४,७,७, र्मभनयरयुगैरुक्तं मतं केसरम्" वृ॰र॰ उक्ते छन्दोभेदे न॰ ।

**केशरचना** स्त्री ६त॰ । १केशानां कवर्य्यादिविन्यासभेदे "कुर्व्वन्ति केशरचनामपरास्तरुण्यः" रत्ना॰ । २केशसमूहे हेमच॰ [जवृक्षे (भीमराज) राजनि॰ ।

**केशरञ्जन** पु॰केशान् रञ्जयति रन्ज—णिच्—ल्यु । भृङ्गरा-

**केशराज** पु॰ केशा राजन्तेऽनेन राज—करणे घञ् । भृङ्गराजे (भीमराज) "भृङ्गारकः केशराजो भृङ्गारः केशरञ्जनः । भृङ्गराजः कटुस्तिक्तो रूक्षोष्णो कफवातनुत् । केश्यस्त्वच्यः क्रमिश्वासकासशोथामयापहृत् । दन्त्योरसायनोबल्यः कुष्ठनेत्रशिरोऽर्त्तिनुत्" भावप्र॰ ।

**केश(स)राम्ल** पु॰ केश(स)रे तद्वत्क्षेऽम्लः । भूतुरे जटा॰

**केश(स)रिन्** पुंस्त्री केश(स)राः सन्त्यस्य इनि । १सिंहे, २अश्वे च अमरः स्त्रियां ङीप् । ३पुन्नागवृक्षे ४नागकेशरवृक्षे, पु॰मेदि॰ ५वीजपूरकवृक्षे पु॰ जटाधरः ॥ ६हनुमत्पितरि वानरभेदे पु॰ । "पिता हनुमतः श्रीमान् केश(स)री प्रत्यदृश्यत" रामा॰

**केश(स)रिसुत** पु॰ ६त॰ । हनुमति केशरिक्षेत्रे अञ्जनायां पवनात् तस्योत्पत्तेस्तथात्वम् यथा "अहं केश(स)रिणः क्षेत्रे वायुना जगदायुना । जातः कमलपत्राक्ष! हनूमान्नाम वानरः" भा॰ व॰ १४७अ॰ ।

"सूर्य्यदत्तवरः स्वर्णः सुमेरुर्नाम पर्वतः । तत्र राज्यं प्रशास्त्यस्य केश(स)री नाम वै पिता । तस्य भार्य्या बभूवेष्टा ह्यञ्जनेति परिश्रुता । जनयामास तस्यां वै वायुरात्मजमुत्तमम् । शालिशूकनिभाभासं प्रासूतेमन्तदाञ्जना" रामा॰ उ॰ ६स॰ [वृक्षे राजनि॰

**केशरुहा** स्त्री केश इव रोहति रुह—क । भद्रदन्तिका-

**केशरूपा** स्त्री केशस्येव रूपमस्याः । वन्दाकवृक्षे (परगाछा) राजनि॰ ।

**केशलुञ्च** पु॰केशान् लुञ्चति लुञ्च—अपनयने अण् उप॰ स॰ । केशानामपनेतरि मुण्डितमस्तके जैनभेदे केशोल्लुञ्चो-

ऽप्यत "आः पापः पाषण्डापसद! चण्डालवेश! कं शोलुप्तक" प्रबोधचन्द्रोदयनाटकम्।

**केशव** त्रि०। केशाः प्रशस्ताः सन्त्यस्य "केशाद्वोऽन्यतरस्याम्" पा०व०। १प्रशस्तकेशयुक्ते। केशं—केशिनं वाति हन्ति वा—क। २विष्णौ "यस्मात् त्वया हतः केशी तस्मान्मच्छासनं शृणु। केशवोनाम नाम्ना त्वं ख्यातो लोके भविष्यसि" हरिवं०८१अ०। कश्च अश्च ईशश्च केशा ब्रह्मविष्णुरुद्रा नियम्यतया सन्त्यस्य कश्च ईशश्च केशौ पुत्रपौत्रत्वेन स्तोऽस्य वा व, तान् तौ वा वाति गच्छति तथात्वेन वा—क वा। ३परमेश्वरे। "शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः" इति पाद्मे तस्य तथात्वोक्तेः। तदभेदादपि वासुदेवेऽस्य वृत्तिः। अतएव विष्णुस० "नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः" "त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः" इत्युक्तं तद्भाष्ये च केशवशब्दस्य निरुक्तिद्वयमाश्रित्य नामद्वयं समर्थितम् तत्राद्यवाक्ये "अभिरूपाः केशायस्य स केशवः कश्च अश्च ईशश्च केशास्त्रिमूर्त्तयस्ते वशे वर्त्तन्ते यस्य स केशवः। केशिवधाद्वा केशवः "यस्मात्त्वयैव दुष्टात्मा हतः केशी जनार्द्दन! तस्मात् केशवनाम्ना त्वं लोके ज्ञेयोभविष्यसीति" विष्णु पु०" भा०। द्वितीयवाक्ये "केशसंज्ञिताः सूर्य्यादिसंक्रान्ताः अंशवस्तद्वत्तया केशवः "अंशवोये प्रकाशन्ते मम ते केशसंज्ञिताः सर्व्वज्ञाः। केशवं तस्मात् प्राहुर्मां द्विजसत्तमाः" भारतम्। "त्रयः केशिनः" इतिश्रुतेः ब्रह्मविष्णुशिवाख्या हि शक्तयः केशसंज्ञिताः-मत्केशा वसुधातले" इति स्मृतेश्च। आदौ केशशब्दः शक्तिपर्य्यायत्वेन प्रयुक्तः। कोब्रह्मेति समाख्यात ईशोऽहं सर्व्वदेहिनाम्। आवां तवांशसंभूतौ तस्मात् केशवनामवान्" हरिवंशोक्तेः" भा०। तेनास्य बहुधा निरुक्तिः। ज्योतिर्विद्भेदे यस्य जातकादिना नानाग्रन्थाः सन्ति। चतुर्विंशतिविष्णुमूर्त्तिमध्ये ५विष्णुमूर्त्तिभेदे तस्य ध्यानं ध्यानशब्दे वक्ष्यते। अजुकस०। ६जलस्थे शवे च "केशवं पतितं दृष्ट्वा द्रोणो हर्षमुपागतः। रुदन्ति पाण्डवाः सर्व्वे हाहा केशव केशव" विदग्धमुख०(भेदे यथा तन्त्रसारे

**केशवकीर्त्तिन्यास** तन्त्रसारोक्ते विष्णुपूजाङ्गे न्यास "अं केशवाय कीर्त्त्यै नमो ललाटे। आं नारायणाय कान्त्यै नमो मुखे। इं माधवाय तुष्ट्यै नमो दक्षनेत्रे। ईं गोविन्दाय पुष्ट्यै नमो वामनेत्रे। नमः सर्वत्र। उं विष्णवे धृत्यै दक्षकर्णे। ऊं मधुसूदनाय शान्त्यै वामकर्णे। ऋं त्रिविक्रमाय क्रियायै दक्षनासापुटे। ॠं वामनाय दयायै वामनासापुटे। ऌं श्रीधराय मेधायै दक्षगण्डे। ॡं हृषीकेशाय हर्षायै वामगण्डे। एं पद्मनाभाय श्रद्धायै ओष्ठे। ऐं दामोदराय लज्जायै अधरे। ओं वासुदेवाय लक्ष्म्यै ऊर्द्धदन्तपङ्क्तौ। औं सङ्कर्षणाय सरस्वत्यै अधोदन्तपङ्क्तौ। अं प्रद्युम्नाय प्रीत्यै मस्तके। अः अनिरुद्धाय रत्यै मुखे। कं चक्रिणे जयायै। खं गदिने दुर्गायै। गं शार्ङ्गिणे प्रभायै। घं खड्गिने सत्यायै। ङं शङ्खिने चण्डायै दक्षबाहुकरमूलसन्ध्यग्रेषु। चं हलिने वाण्यै। छं मुसलिने विलासिन्यै। जं शूलिने विजयायै। झं पाशिने विरजायै। ञं अङ्कुशिने विश्वायै, वामबाहुकरमूलसन्ध्यग्रेषु। टं मुकुन्दाय विनदायै। ठं नन्दजाय सुनन्दायै। डं नन्दिने स्मृत्यै। ढं नराय ऋद्ध्यै। णं नरकजिते समृद्ध्यै दक्षपादमूलसन्ध्यग्रेषु। तं हरये शुद्ध्यै थं कृष्णाय बुद्ध्यै। दं सत्याय भुक्त्यै। धं सत्वाय मत्यै। नं शौराय क्षमायै वामपादमूलसन्ध्यग्रेषु। पं शूराय रमायै दक्षपार्श्वे। फं जनार्द्दनाय उमायै वामपार्श्वे। बं भूधराय क्लेदिन्यै पृष्ठे। भं विश्वमूर्त्तये क्लिन्नायै नाभौ। मं वैकुण्ठाय वसुदायै उदरे। यं त्वगात्मने पुरुषोत्तमाय वसुधायै हृदि। रं असृगात्मने बलिने परायै दक्षांशे। लं मांसात्मने बलानुजाय परायणायै ककुदि। वं मेदआत्मने बलाय सूक्ष्मायै वामांसे। शं अस्थ्यात्मने वृषघ्नाय सन्ध्यायै हृदादिदक्षकरे। षं मज्जात्मने वृषाय प्रज्ञायै हृदादिवामकरे। सं शुक्रात्मने हंसाय प्रभायै हृदादिदक्षपादे। हं प्राणात्मने वराहाय निशायै हृदादिवामपादे। लं जीवात्मने विमलाय अमोघायै हृदाद्युदरे। क्षं क्रोधात्मने नृसिंहाय विद्युतायै हृदादिमुखे। तथा च गौतमीये "केशवादिरयं न्यासोन्यासमात्रेण देहिनाम्। अच्युतत्वम् ददात्येव सत्यं सत्यं न संशयः"। मातृकार्णं समुच्चार्य्य केशवाय इति स्मरेत्। कीर्त्त्यै च नमसा युक्त मित्यादिन्यासमाचरेत्। केशवाय ततः कीर्त्त्यै कान्त्यै नारायणाय च" इत्यगस्त्यसंहितावचनाच्चायं क्रमः। न तु केशवकीर्त्तिभ्यां नम इति। तथा भक्तिरुक्ति मिच्छताऽयं न्यासः श्रीवीजादिः कर्त्तव्यः। यथा श्रीं अं केशवाय कीर्त्त्यै नमइत्यादि। तथा च "एवं प्रविन्य सेव्यासं लक्ष्मीवीजपुरः-

चरम्। स्मृतिष्टतिमहालक्ष्मीं प्राप्यान्ते हरितां व्रजेत्”।

**केशवपनीय** पु० अतिरात्रयागभेदे तत्करणप्रकारादि कात्या० श्रौ०१५।८।२०दर्शितः यथा “तदन्ते केशवपनीयोऽतिरात्रः पौर्णमासीतुल्यः”सू०। “तयोः पशुबन्धयोरन्ते केशवपनीयसंज्ञः अतिरात्रसंस्थः सोमयागो भवति स च पौर्णमासीतुल्यः। ज्यैष्ठ्यां पौर्णमास्यां तस्य सुत्या भवतीत्यर्थः” सं०व्या०। शत०ब्रा० ५,५,२,१, विशेषोदर्शितः “एतौ पशुबन्धौ इत्युपक्रमे “अभिषेचनीयेनेष्ट्वा। केशान्न वपते तद्यत् केशान्न वपते वीर्यं वा एतदपां रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्य केशान् प्रथमान् प्राप्नोति स यत् केशान् वपेतैतां श्रियं जिह्मां विनाशयेद्व्युदुह्यात्तस्मात् केशान्न वपते संवत्सरम्। संवत्सरसमिता वै व्रतचर्या तस्मात् संवत्सरं न वपते स एष व्रतविसर्जनीयोपयोगो नाम स्तोमो भवति केशवपनीयः। तस्यैकविंशं प्रातःसवनम्। सप्तदशं माध्यन्दिनं सवनं, पञ्चदशं तृतीयसवनं सहोक्थैः सह षोड़शिना सह रात्र्या त्रिवृद्रथन्तरः सन्धिर्भवति एष एवैकविंशो य एष तपति स एतस्मादेकविंशादपयुङ्क्ते स सप्तदशमभिप्रत्यवैति सप्तदशात् पञ्चदशं पञ्चदशादस्यामेव त्रिवृति प्रतिष्ठायां प्रतितिष्ठति तस्य रथन्तरं पृष्ठं भवति इयं वै रथन्तरमस्यामेवैतत् प्रतिष्ठायां प्रतितिष्ठत्यतिरात्रो भवति प्रतिष्ठा वा अतिरात्रस्तस्मादतिरात्रो भवति। स वै न्येव वर्तयते। केशान्न वपते वीर्यं वा एतदपां रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्य केशान् प्रथमान् प्राप्नोति स यत् केशान् वपेतैतां श्रियं जिह्मां विनाशयेद्व्युदुह्यादथ यन्निवर्तयते तदात्मन्येवैतां श्रियं नियुनक्ति तस्मान्न्येव वर्तयते केशान्न वपते तस्यैव व्रतचर्या भवति यावज्जीवं नास्यां प्रतितिष्ठति। आसन्द्या उपानहावुपमुञ्चते। उपानद्भ्यामधि यदस्य यानं भवति रथो वा किञ्चिद्वा सर्वं वा एष इदमुपर्युपरि भवत्यर्वाग्गेवास्मादिदं सर्वं भवति यो राजसूयेन यजते तस्मादस्यैव व्रतचर्या भवति यावज्जीवं नास्यां प्रतितिष्ठति” मू०। “तृतीये केशपनीयातिरात्रस्य वैशेषिका धर्मा उच्यन्ते। पशुबन्धद्वयादनन्तरं केशवनीयातिरात्रयागः कर्त्तव्यः। अभिषेचनीयसोमयागं कृत्वा संवत्सरपर्यन्तं केशवपनाकरणलक्षणं व्रतमाचर्य्यम् ततस्तद्व्रतविसर्जनार्थमेकः सोमयागः पौर्णमासीतुल्यः कार्यः स एव केशवपनीयातिरात्र उच्यते रात्रिमतीत्य वर्त्तत इत्यतिरात्रः अतिरात्रसंस्थया कार्य्य इत्यर्थः। विदुह्यात् गतसारोऽपि भवेत्। केशवपनार्थमुपयुज्यमानः क्रियमाणः स्तोमः एकविंशादिस्तोमवान् यागः केशवपनीयः। तत्र सामगैर्गीयमाने स्तोत्रेषु चोदकेन प्रातःसवनादिषु त्रिवृदादिस्तोमप्राप्तौ तानपवदितुं विशेषं दर्शयति तस्यैकविंशमिति। प्रातःसव॰ नमेकविंशस्तोमयुक्तं कर्त्तव्यम् माध्यन्दिनं सप्तदशस्तोमकम् अस्य सोमयागस्यातिरात्रसंस्थानि तृतीयसवनेऽग्निष्टोमवद् द्वादश स्तोत्राणि तत उत्तरं त्रीण्युक्थस्तोत्राणि एकं षोड़शिस्तोत्रं रात्रिपर्यायस्तोत्राणि द्वादश तानि सर्वाण्यपि पञ्चदशस्तोमकानि कर्त्तव्यानि। स्तोमत्रिवृत्प्रचारस्तु प्राचीमारोहेत्यत्र दिक्समारोहणमन्त्रव्याख्यावसरे दर्शितः। किं च पूर्वदिवसरात्रिशेषे उत्तरदिवस॰ श्लेषःकाले यज्ञसंस्थापकमेकं चरमं स्तोत्रं तृतीयपर्यायस्यान्ते रथन्तरसाम्ना गातव्यम् तत् सन्धिस्तोत्रमित्युच्यते तत् स्तोत्रं त्रिवृत्स्तोमयुक्तं कार्य्यम्। एकविंशादवरोहणं त्रिवृत्पर्यन्तं यत् स्तोमकरणमुक्तं तत् सूर्य्यलोकाद्विक्रमाद् भूम्यवस्थानात्मना प्रशंसति एष एवैकविंश इति य एष तपति स एकविंशः सूर्य्य इत्यर्थः तस्मादपयुङ्क्ते अवरोहतीत्यर्थः सोऽवरुह्यावरुह्य त्रिवृद्रूपायामस्यां भूमिलक्षणायां प्रतिष्ठायां प्रतिष्ठितवान् भवति माध्यन्दिन सवने रथन्तरं बृहत्साम वा पृष्ठस्तोत्रं प्रकृतौ विकल्पितं अत्रैकं नियमयति तस्य रथन्तरमिति। अस्य सोमकालस्यातिरात्रसंस्थात्वं प्रतिष्ठात्मना प्रशंसति अतिरात्र इति। अतिरात्रसंस्थात्मना क्रतुरेष क्रतुः प्रतिष्ठारूपः। अस्य क्रतोः केशावापव्रतविसर्जनार्थं क्रियमाण॰ त्वात्तदन्ते केशवापः कार्य्यः तत्र कश्चिद्विशेषं विधत्ते स वै न्येवेति स यजमानो निवर्तयते केशान्निकृन्तेदेव न वपेत् वपनं नाम मुण्डनं तन्न कुर्यात् निवर्तनं कर्तनं तत्कु॰ र्यात् एषा केशकर्तनलक्षणा व्रतचर्या यावज्जीवनं कर्त्तव्या न केशमुण्डनं कार्य्यम् कदाचिदप्यनुपानत्कोऽपादुकः कस्यांचिदपि भूमौ उपानहौ पादुके न प्रतितिष्ठति अवस्थापनं न कुर्यात्। आसन्द्या अवरोहणसमयेऽपि उपानहौ पादुके उपमुञ्चते इतस्ततः संचरणसमये रथं वा यानं वारोहेत्”। भा०

**केशवर्द्धनी** स्त्री केशावर्द्धन्तेऽनया वृध—करणे ल्युट् ङीप्। सहदेवीलतायाम् “उत स्य केशदृंहणीरथो ह केशवर्द्धनीः” अथ० ६।२१।२

**केशवर्द्धिनी** स्त्री केशान् वर्द्धयति वृध–णिच्–णिनि। सहदेवीलतायाम् राजनि०

**केशवादित्य** पु० काशीस्थे आदित्यभेदे तत्कथा काशीख० ५१अ० यथा “अतः परं शृणु मुने! केशवादित्यमुत्तमम्। यथा तु केशवं प्राप्य सविता ज्ञानमाप्तवान्। व्योम्नि सञ्चरमाणेन सप्ताश्ववाहिकेशवः। एकदाऽदर्शि भावेन पूजयन् शिवमीश्वरम्। कौतुकाद्दिव उत्तीर्य्य हरेरविदपाविशत्। निःशब्दोनिश्चलः सुस्थोमहाश्चर्य्यसमन्वितः। प्रतीक्ष्यमाणोऽवसरं किञ्चित् प्रष्टुमना रविः। हरिं विसर्जितार्घञ्च प्रणनाम कृताञ्जलिः। स्वागतन्ते हरिः प्राह बहुमानपुरःसरम्। स्वाभ्यासमासयामास भास्वन्तमतकल्मषम्। कथावसरमालोक्य लोकचक्षुरधोक्षजम्। नत्वा विज्ञापयामास कृताञ्जली मुरारिणा। रविरुवाच। अन्तरात्मासि जगतां विश्वम्भर! जगत्पते!। तवापि पूज्यः कोऽप्यस्ति जगत्पूज्यात्र माधव!। त्वत्तश्चाविर्भवेदेतत्त्वयि सर्व्वं प्रलीयते। त्वमेव पाता सर्व्वस्य जगतोजगतां निधे!। इत्याश्चर्य्यं समालोक्य प्राप्तोऽहमत्र तवान्तिकम्। किमिदं पूज्यते नाथ! भवता भवतापहृत्!। इति श्रुत्वा हृषीकेशः सहस्रांशोरुदीरितम्। उच्चैर्मौल्यं च सप्ताश्वं वारयन् करसंज्ञया। विष्णुरुवाच। देवदेवोमहादेवो नीलकण्ठउमापतिः। एक एव हि पूज्योऽत्र सर्व्वेषां सर्वकारणम्। अत्र त्रिलोचनादन्यं समर्च्चयति मोहधीः। सलोचनोऽपि स ज्ञेयो लोचनाभ्यां विवर्जितः। एकोमृत्युञ्जयः पूज्योजन्ममृत्युजराहरः। मृत्युञ्जयं किलाभ्यर्च्य लोको मृत्युञ्जयोभवेत्। कालकालं समाराध्य भृङ्गी कालं जिगाय वै। शिलादिमपि तत्याज मृत्युर्मृत्युञ्जयार्च्चकम्। विजिग्ये त्रिपुरं यस्तु हेलयैकेषुमोक्षणात्। तं समभ्यर्च्य भूतेशं को न पूज्यतमोभवेत्। त्रिजगज्जयिनस्तातुस्त्र्यक्षस्याराधनं परम्। को नाराधयति ब्रध्न! हरस्य स्मरविद्विषः। यस्याक्षिपक्ष्मसङ्कोचाज्जगत्सङ्कोचमेत्यदः। विकस्वरं विकाशाच्च कथं पूज्यतमोन सः। शम्भोर्लिङ्गं समभ्यर्च्य पुरुषार्थचतुष्टयम्। प्राप्नोत्यत्र पुमान् सद्योनात्र कार्य्या विचारणा। समर्च्य शाम्भवं लिङ्गमपिजन्मशतार्ज्जितम्। पापपुञ्जं जहात्येव पुमानत्र क्षणाद्ध्रुवम्। किं किं न सम्भवेदत्र शिवलिङ्गसमर्च्चनात्। पुत्राः कलत्रं क्षेत्राणि स्वर्गमोक्षोऽप्यसंशयम्। त्रैलोक्यैश्वर्य्यसम्पत्तिर्मया प्राप्ता सहस्रगो!। शिवलिङ्गार्च्चनादेकात् सत्यं सत्यं पुनः पुनः। अयमेव परोयोगस्त्विदमेव परं तपः। इदमेव परं ज्ञानं स्थाणुलिङ्गं यदर्च्यते। यैर्लिङ्गं सकृदप्यत्र पूजितं पार्वतीपतेः। कुतोजन्मभयं तेषां संसारे दुःखभाजने। सर्वं परित्यज्य रवे! तल्लिङ्गं शरणं गतः। न तं पापानि बाधन्ते महान्त्यपि दिवाकर!। लिङ्गार्च्चने भवेच्छुद्धिस्तेषामेवात्र भास्कर!। येषां पुनर्भवच्छेदं चिकीर्षति महेश्वरः। न लिङ्गाराधनात् पुण्यं त्रिषु लोकेषु चापरम्। सर्वतीर्थाभिषेकः स्याल्लिङ्गस्नानाम्बुसेवनात्। तस्माल्लिङ्गं त्वमप्यर्क! समर्च्चय महेशितुः। संप्राप्नुं परमां लक्ष्मीं महातेजोविजृम्भिणीम्। इति श्रुत्वा हरेर्वाक्यं तदारभ्य सहस्रगुः। विधाय स्फाटिकं लिङ्गं मुनेऽद्यापि समर्च्चयत्। गुरुत्वेन तदाकल्प्य विवस्वानादिकेशवम्। तत्रोपतिष्ठतेऽद्यापि उत्तरेणादिकेशवात्। अतः स केशवादित्यः काश्यां भक्ततमोनुदः। समर्च्चितः सदा देयान्मनसोवाञ्छितं फलम्। केशवादित्यमाराध्य वाराणस्यां नरोत्तमः। परमं ज्ञानमाप्नोति येन निर्वाणभाग्भवेत्। तत्र पादोदके तीर्थे कृतसर्वौदकक्रियः। विलोक्य केशवादित्यं मुच्यते सर्व्वपातकैः। अगस्ते! रथसप्तम्यां रविवारो यदाप्यते। तत्र पादोदके तीर्थे आदिकेशवसन्निधौ। स्नात्वोषसि नरोमौनी केशवादित्यपूजनात्। सप्तजन्मार्ज्जितात् पापात् मुक्तो भवति तत्क्षणात्। यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु। तन्मे रोगञ्च शोकञ्च माकरी हन्तु सप्तमी। एतज्जन्मकृतं पापं यच्च जन्मान्तरार्ज्जितम्। मनोवाक्कायजं यच्च ज्ञाताज्ञातञ्च यत् पुनः। इति सप्तविधं पापं स्नानान्मे सप्तसप्तिके। सप्तव्याधिसमायुक्तं हर माकरि! सप्तमि!। एतन्मन्त्रत्रयं जप्त्वा स्नात्वा पादोदके नरः। केशवादित्यमालोक्य क्षणान्निष्कल्मषो भवेत्। केशवादित्यमाहात्म्यं शृण्वन् श्रद्धासमन्वितः। नरोन लिप्यते पापैः शिवभक्तिञ्च विन्दति”।

**केशवायुध** न० ६त०। १विष्णोरस्त्रे। केशवस्यायुधं तदाकारोऽस्त्यस्य अच्। २आम्रवृक्षे पु० शब्दमाला

**केशवार्क** पु० ज्योतिषनिबन्धकारके विद्वद्भेदे

**केशवालय** पु०६त०। १अश्वत्थवृक्षे त्रिका०अश्वत्थशब्दे विवृतिः। २तस्य मन्दिरे च। केशवावासादयोऽप्यत्र पु०जटा०

**केशवेश** पु०केशस्य वेशः। १कबरीबन्धने अमरः। २केशानां

रचनाविशेषे च "यथाकुलधर्म्मं केशवेशान् कारयेत्" आश्व० गृ० १,१७,१७, "एकशिखस्त्रिशिखः पञ्चशिखो वा" इति बौधायनः पूर्व्वशिखः परशिखः इति कुलधर्म्माः तेषु योयस्य कुलधर्म्मः तेन तस्य केशसन्निवेशान् कारयेत्" नारा० वृ० ।

**केशहन्तृफला** स्त्री केशहन्तृ फलमस्याः । शमीवृक्षे शब्दच०

**केशहन्त्री** स्त्री केशान् हन्ति हन—तृच् ङीप् । शमीवृक्षे राजनि०

**केशहस्त** पु० केशोहस्त इव । केशसमूहे अमरः "लक्ष्मीवान् सरसि रराज केशहस्तः" माघः । "केशहस्तेन ललना जागामाथ विराजती" भा० व० ४६अ०

**केशाकेशि** अव्य० केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं "तत्र तेनेदमिति सरूपे" पा० स० कर्म्मव्यतिहारे इच् समा० पूर्व्वदीर्घः तिष्ठद्गुप्रभृतित्वादव्ययत्वम् । अन्योन्यकेशग्रहणपूर्व्वकप्रवृत्तयुद्धे । एवं कचाकचप्रादयोऽप्यत्र अव्य० । असरूपे तु नेदं प्रवर्त्तते । "आर्छतां बहुसंरम्भात् केशाकेशि रथारथि" भा०वि०३अ० "केशाकेश्यभवद्युद्धं रक्षसां वानरैः सह" भा० व० २८३अ०

**केशान्त** पु० केशानन्तयति छेदनात् हन्ति अन्ति (नामधातुः) अण् । द्विजातीनां षोडशादिषु वर्षेषु कर्त्तव्ये केशच्छेदनाख्ये गोदानकर्म्मणि । केशान्ताख्य गोदानकर्म्मप्रकारादि आश्व० गृ० १।१८।१। सूत्रादौ दर्शितं यथा "एतेन गोदानम्" सू० व्याख्यातमिति शेषः एतेनेति कृत्स्नोपदेशः तत्रविशेषमाह । ना०वृ० । "षोड़शे वर्षे" सू० । तृतीयस्यापवादः अत्र मातुरुपस्योपवेशनं न भवति अयुक्तत्वात्" ना० वृ० । "केशशब्दे तु श्मश्रुशब्दान् कारयेत्" सू० । केशशब्दे त्विति जातावेकवचनं श्मश्रुशब्दानिति व्यक्तिपरोनिर्देशः तेन यत्र श्मश्रुशब्दाः तत्र "अदितिः केशान् वपतु" । "वप्ता केशान्" "दक्षिणे केशपक्ष इति" त्रिषु ते कार्याः । तन्त्रगतस्य तृतीयस्य केशशब्दस्याभावाद्विधिगतस्य ग्रहणं तेन दक्षिणे श्मश्रुपक्ष इति साधितं भवति" वृ० । "श्मश्रुणीहोन्दति" सू० । "शिरस्युन्दनस्यापवादः" । वृ० । "इन्धि शिरोमुखं मास्रायुः प्रमोषीरिति" सू० । "क्षुरनिमार्जनेऽयं विशेषः" वृ० । "केशश्मश्रुलोमनखान्युदक्संस्थानि संप्रवर्त्तति" सू० । "शीतोष्णाभिरद्भिरव्ययं कुर्वाणोऽक्षुण्वन् कुशली केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्विति नापितशासनम्" ना०वृ० । "आप्लुत्य वाग्यतः स्थित्वाऽहःशेषमाचार्यसकाशे वाचं विसृजेत् वरं ददामीति" सू० । "तत्र आप्लुत्य स्नात्वेत्यर्थः । वाग्यत इत्यमन्त्रयमाणः । स्थित्वेत्युपवेशनप्रतिषेधः । एवमहःशेषं स्थित्वाऽस्तमिते आचार्यसमीपे वरं ददामीति वाचं विसृजेत् । वरद्रव्यमाह" ना० वृ० । "गोमिथुनं दक्षिणा" सू० । ननु भिक्षुरयं कथमस्य गोमिथुनसम्भवः उच्यते यथास्य प्रावरणादि सम्भवस्तथास्यापि" वृ० । संवत्सरमादिशेत्" सू० । एवं गोदानं कृत्वा संवत्सरं व्रतमादिशेत् वक्ष्यमाणेन विधिना चरेत् । रात्रौ व्रतादेशाऽनुपपत्तेः अपरेद्युः कार्य्यम्" ना० वृ० ।

एतेनेत्यनेन चूडाविहितनक्षत्रादिग्रहणातिदेशः यथाह मू० चि० "केशान्तं षोडशे वर्षे चौलोक्तदिवसे शुभम्" "षोडशे वर्षे चौलोक्तदिवसे चूडावर्षतृतीयात् प्रभवतीत्यादिना कथितशुभदिवसे गोदानपर्य्यायं केशान्तसंज्ञं कर्म्म शुभं स्यात्" गावः केशा दीयन्ते खण्ड्यन्ते यस्मिन्निति व्युत्पत्तिः यदाह "केशान्तं षोडशे वर्षे कुर्याच्चौलोक्तभादिके" इति । महेश्वरोऽपि "कर्म केशान्तसंज्ञं हि स्मृतं वर्षे तु षोडशे । चौलकर्मोक्तधिष्ण्याद्यौ" षोडश इत्येतद्ब्राह्मणविषयं द्रष्टव्यं क्षत्रियविशोस्तु द्वाविंशतिचतुर्विंशतितमवर्षयोः केशान्तमित्यर्थः तदुक्तं मनुना "केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः" पी०धा० । चूडोक्तनक्षत्रादि च चूडाशब्दे वक्ष्यते । अत्र कर्मपरतया क्लीवता । मनुवचने तु संस्कारपरतया पुंस्त्वमिति बोध्यम् । एतस्मात् पूर्वं महानाम्न्यादिव्रतत्रयं वर्षत्रये कर्त्तव्यं तच्च उपनिषच्छब्दे सप्रमाणं दर्शितम् । केशस्यान्तः । २केशस्वरूपे ३केशाग्रे च । "केशान्तमन्तः कुसुमं तदीयम्" कुमा० ।

**केशान्तिक** त्रि० केशान्तः केशपर्य्यन्तः परिमाणमस्य ठञ् । केशान्तप्रमाणके "केशान्तिको ब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः । ललाटसंमितोराज्ञः स्यात्तु नासान्तिको विशः" मनुः । ( करणे क । सहदेवीलतायां राजनि० ।

**केशारुहा** स्त्री केशा आरुहन्ति अनया आ+रुह घञर्थे

**केशार्हा** स्त्री केश केशवर्णमर्हति अर्ह—अण् उप० स० । महानीलीवृक्षे राजनि० ।

**केशि** पु० १दानवभेदे । स्वस्रमः कालवदनः करालः केशिरेव च" हरि वं २६३ अ० । २केशिनि दानवे च "अरिष्टं वृषभं केशिं पूतनां दैत्यदारिकाम्" हरिव० ८२अ० ।

**केशिक** त्रि० प्रशस्तः केशोऽस्त्यस्य ठन् । प्रशस्तकेशयुक्ते जने

**केशिका** स्त्री केशीव कायति कै—क। शतावरीवृक्षे राजनि०

**केशिध्वज** पु० निमिवंश्ये नृपभेदे "कुशध्वजस्तस्य पुत्रस्ततो धर्म्मध्वजो नृपः। धर्म्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ। कृतध्वजात् केशिध्वजः" भाग० ९।१३।१२।

**केशिन्** त्रि० केश+प्राशस्त्ये भूम्नि वा इनि। १प्रशस्तबहुकेशयुक्ते "वहतामिन्द्र केशिना" ऋ०३।४१।९ स्त्रियां ङीप्। केशिन इदं स्वार्थे वा अण्। "गाथिविदथिकेशिगणिपणिनश्च" इत्यादिना पा० प्रकृतिभावः। कैशिन तत्सम्बन्धिनि केशयुक्ते च स्त्रियां ङीप्। "कैशिनीरेवेमा अप्येतर्हि प्रजाः प्रजायन्ते" शत०ब्रा० ११।८।४।६। २केशतुल्यकार्ष्णप्रयुक्ते त्रि० स्त्रियां ङीप्। "तमग्रुवः केशिनीः सं हि रेभिरे" ऋ० १,१४०,८, "केशिनीः केशस्थानीयोर्द्ध्वभाविकार्ष्ण्योपेताः ज्वालाः" भा०। केशिविद्याप्रकाशके ३गृहपतिस्वामिभेदे पु०। केशी गृहपतीनामुह सम्राड् दुघा शार्दूलो जघान" इत्यादि शत० ब्रा० ११,८,४, उक्तम्। तत्सम्बन्धाच्च प्रजानां केशयुक्तत्वम् उपसंहारे "ततो हैव स उत्ससाद कैशिनीरेवेमा अप्येतर्हि प्रजाः जायन्ते" इत्युक्तत्वात्। "एवमुपदिष्टः स केशी तत्रोद्देशात् उत्ससाद विनष्टोऽभूत्तस्मादेतर्हि इदानीमपि वर्त्तमानाः प्रजा कैशिनीरेव केशवत्य एव अथ वा केशिसम्बन्धिन्यो जायन्ते केशिना दृष्टिकरविद्यया लब्धत्वात्" भा०४ द्वापरयुगीये कृष्णनिहतेऽसुरभेदे केशिनिसूदनशब्दे विवृतिः

**केशिनिसूदन** न० केशिनं निसूदयति नि+सूद—ल्यु। वासुदेवे कृष्णे तन्निसूदनकथा च हरिवं० ८१अ० यथा "प्रागेव तु नरेन्द्रेण माथुरेणोग्रसेनिना। केशिनः प्रेषितो दूतो वधायोपेन्द्रकारणात्। स तु दूतवचः श्रुत्वा केशी क्लेशकरो नृणाम्। वृन्दावनगतो गोपान् बाधते स्म दुरासदः। मानुषं मांसमश्नानः क्रुद्धो दुष्टपराक्रमः। दुर्दान्तो वाजिदैत्योऽसावकरोत् कदनं महत्। निघ्नन् गा वै सगोपालान् गवां पिशितभोजनः। उद्दाम कामचारी च स केशी निरवग्रहः। तदरण्यं श्मशानाभं नृणामस्थिभिरावृतम्। यत्रास्ते स हि दुष्टात्मा केशी तुरगदानवः। खुरैर्द्दारयते भूमिं वेगेनारुजते द्रुमान्। ह्रेषितैः स्पर्द्धते वायुं प्लुतैर्लङ्घयते नभः। अतिप्रवृद्धो मत्तश्च दुष्टाश्वो वनगोचरः। प्रकम्पितसटो रौद्रः कंसस्य चरितानुगः। इरिणं तद्वनं सर्वं तेनासीत् पापकारिणा। कृतं तुरगदैत्येन सर्वान् गोपान् जिघांसता। तेन दुष्टप्रचारेण दूषितं तद्वनं महत्। न नृभिर्गोधनैश्चापि सेव्यते वनवृत्तिभिः। निःसम्पातः कृतः पन्थास्तेन तद्विषयाश्रितः। मदाच्चलितवृत्तेन नृमांसान्यश्नता भृशम्। नृशब्दानुसरः क्रुद्धः स कदाचिद्दिनागमे। जगाम घोषसंवासं चोदितः कालधर्मणा। तं दृष्ट्वा दुद्रुवुर्गोपाः स्त्रियश्च शिशुभिः सह। क्रन्दमाना जगन्नाथं कृष्णं नाथमुपाश्रिताः। तासां रुदितशब्देन गोपानां क्रन्दितेन च। दत्त्वाऽभयन्तु कृष्णो वै केशिनं सोऽभिदुद्रुवे। केशी चाप्युन्नतग्रीवः प्रकाशदशनेक्षणः। ह्रेषमाणो जवोदग्रो गोविन्दाभिमुखो ययौ। तमापतन्तं सम्प्रेक्ष्य केशिनं हयदानवम्। प्रत्युज्जगाम गोविन्दस्तोयदः शशिनं यथा। केशिनस्तु तमभ्याशे दृष्ट्वा कृष्णमवस्थितम्। मनुष्यबुद्धयो गोपाः कृष्णमूचुर्हितैषिणः। कृष्ण! तात! न खल्वेष सहसा ते हयाधमः। उपसर्प्यो भवान् बालः पापश्चैष दुरासदः। एष कंसस्य सहजः प्राणस्तात! बहिश्चरः। उत्तमश्च हयेन्द्राणां दानवोऽप्रतिमो युधि। त्रासनः परसैन्यानां तुरगाणां महाबलः। अवध्यः सर्वभूतानां प्रथमः पापकर्मणाम्। गोपानां तद्वचः श्रुत्वा वदतां मधुसूदनः। केशिना सह युद्धाय मतिञ्चक्रेऽरिसूदनः। ततः सव्यं दक्षिणञ्च मण्डलानि परिभ्रमन्। पद्भ्यामुभाभ्यां स हयः क्रोधेनारुजते द्रुमान्। मुखे लम्बसटे चास्य स्कन्धे केशघनावृते। वलयो भ्रूतरङ्गाभाः सुस्रुवुः क्रोधजं जलम्। सफेनं वक्त्रजञ्चैव ववर्ष रजसावृतम्। हिमकाले यथा व्योम्नि नीहारमिव चन्द्रमाः। गोविन्दमरविन्दाक्षं ह्रेषितोद्गारशीकरैः। सफेनैर्वक्त्रनिर्गीर्णैः प्रोक्षयामास भारत!। खुरोद्धूतासक्तेन मधुकक्षोदपाण्डुना। रजसा स हयः कृष्णं चकारारुणमूर्द्धजम्। प्लुतवल्गितपादस्तु तक्षमाणो धरां खुरैः। दन्तान् निर्दशमानस्तु केशी कृष्णमुपाद्रवत्। स संसक्तस्तु कृष्णेन केशी तुरगसत्तमः। पूर्वाभ्याञ्चरणाभ्यां वै कृष्णं वक्षस्यताडयत्। पुनः पुनश्च स बली प्राहिणोत्पार्श्वतः खुरान्। कृष्णस्य दानवो घोरं प्रहारममितौजसः। वक्त्रेण चास्य घोरेण तीक्ष्णदंष्ट्रायुधेन वै। वदनग्राहशिखरं कृष्णस्य रुषितो हयः। स लम्बकेशरसटः कृष्णेन सह सङ्गतः। रराज केशी मेघेन संयुक्तः ख इवांशुमान्। उरस्याश्वोरसा हन्तुमियेष बलवान् हयः। वेगेन वासुदेवस्य क्रोधाद्द्विगुणविक्रमः। तस्योत्सिक्तस्य बलवान् कृष्णोऽप्यमितविक्रमः। बाहुमाभोगिनं कृत्वा मुखे क्रुद्धः समादधत्।

स तं बाहुमशक्तो वै खादितुं भेत्तुमेव वा । दशनैर्मूलनिर्मुक्तैः सफेनं रुधिरं वमन् । विपाटिताभ्यामोष्ठाभ्यां कटाभ्यां विदलीकृतः । अक्षिणी विकृते चक्रे विवृते मुक्तबन्धने । निरस्तहनुराविष्टः शोणिताक्तविलोचनः । उत्कर्णो नष्टचेतास्तु स केशी बह्वचेष्टत । उत्पतन्नसकृत् पादैः शकृन्मूत्रं समुत्सृजन् । खिन्नार्द्ररोमा श्रान्तस्तु निर्यत्नचरणोऽभवत् । केशिशक्थिविलग्नस्तु कृष्णबाहुरशोभत । व्याभुग्न इव घर्मान्ते चन्द्रार्द्धकिरणैर्घनः । केशी च कृष्णसंसक्तः श्रान्तगात्रो व्यरोचत । प्रभातावनतश्चन्द्रः श्रान्तो मेरुमिवाश्रितः । तस्य कृष्णभुजोद्धूताः केशिनो दशना मुखात् । पेतुः शरदि निस्तोयाः सिताभ्रावयवा इव । स तु केशी भृशं श्रान्तः कृष्णेनाक्लिष्टकर्मणा । स्वभुजं स्वायतं कृत्वा पाटितो बलवत्तदा । स पाटितो भुजेनाजौ कृष्णेन विकृताननः । केशी नदन्महानादं दानवो व्यथितस्तदा । विघूर्णमानः स्रस्ताङ्गो मुखाद्रुधिरमुद्वमन् । भग्नः व्यङ्गीकृतवपुर्निकृत्तार्द्ध इवाचलः । व्यादितास्यो महारौद्रः सोऽसुरः कृष्णबाहुना । निपपात यथा कृत्तो नागो द्विविदलीकृतः । बाहुना कृत्तदेहस्य केशिनो रूपमाबभौ । पशोरिव महाघोरं निहतस्य पिनाकिना । द्विपादपृष्ठकृष्टार्द्धे श्रवणैकाक्षिनासिके । केशिनस्ते द्विधा भूते द्वे खण्डे रेजतुः क्षितौ । केशिदन्तक्षतश्चापि कृष्णस्य शुशुभे भुजः । कृत्तस्ताल इवारण्ये गजेन्द्रदशनाङ्कितः । तं हत्वा केशिनं युद्धे कल्पयित्वा च भागशः । कृष्णः पद्मपलाशाक्षो हसंस्तत्रैव तस्थिवान् । तं हतं केशिनं दृष्ट्वा गोपा गोपस्त्रियस्तथा । बभूवुर्मुदिताः सर्वे हतविघ्ना हतक्लमाः । दामोदरन्तु श्रीमन्तं यथास्थानं यथावयः । अभ्यनन्दन् प्रियैर्वाक्यैः पूजयन्तः पुनः पुनः" "वैशम्पायन उवाच अथान्तर्हितो विप्रो नारदः खगमो मुनिः । प्रीतोऽस्मि विष्णो ! देवेति कृष्ण ! कृष्णेति चाब्रवीत् । यदिदं दुष्करं कर्म्म कृतं केशिजिघांसया । त्वय्येव केवलं युक्तं त्रिदिवे त्र्यम्बकेऽपि वा । अहं त्वनेन गोविन्द ! कर्म्मणा परितोषितः । हयात्तस्मान्महेन्द्रोऽपि बिभेति बलसूदनः । कुर्वाणस्य वपुर्घोरं केशिनो दुष्टचेतसः । यत्त्वया पाटितं देहं भुजेनायतपर्वणा । एषोऽस्य मृत्युरन्ताय विहितो विश्वयोनिना । यस्मात्त्वया हतः केशी तस्मान्मत्कारणं शृणु । केशवो नाम तस्मात् त्वं ख्यातिं लोके गमिष्यसि" । केशिहन् इत्यादयोऽप्यत्र । "त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः" विष्णुस० । "प्रकाशमात् केशाः रश्मयस्ततः अस्त्यर्थे इनि । ५परमेश्वरे ६सूर्य्यादित्रये च । "केशी केशा रश्मयस्तद्वान् भवति काशनाद्वा प्रकाशनाद्वेति" १२।२६। निरु० निरुच्य "केश्यग्निं केशी विषं केशी बिभर्त्ति रोदसी । केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते" ऋ० १०।१३६। ऋचमुदाहृत्य व्याकृतं यथा "केशी अग्निञ्च विषञ्च विषमित्युदकनाम विष्णातेः विपूर्व्वस्य स्नातेः शुद्ध्यर्थस्य विपूर्व्वस्य वा सचतेः । द्यावा पृथिव्यौ धारयति केशीदं सर्व्वमिदमभिरोहति केशीदं ज्योतिरुच्यते इत्यादित्यमाह अथाप्येते इतरे ज्योतिषी केशिनी उच्येते धूमेनाग्निः रजसा च मध्यमः" इत्युक्त्वा च तेषामेषा साधारणाभवतीत्युक्त्वा च । "त्रयः केशिन ऋतुथा विचक्षते संवत्सरे वपत एकएषाम् । विश्वमेको अभिचष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम्" ऋ० १।१६४।४४। ऋगुदाहृता ; व्याख्याता चैषा भाष्ये

"केशस्थानीयप्रकृष्टरश्मियुक्तास्त्रयोऽग्न्यादित्यवायवः ते च ऋतुथा काले काले विचक्षते विविधलक्षणां भूमिं पश्यन्ति तेषां पृथक् पृथक् कार्य्यमाह एषां मध्य एकोऽग्निः संवत्सरेऽतीते सति संवत्सरं वपते दाहेन केशस्थानीयौषधिवनस्पत्यादिकच्छेदनेन नापितकार्य्यं करोति एकः अन्यः आदित्यो विश्वं सर्वं जगत् शचीभिः स्वकीयैः प्रकाशवृष्ट्यादिकर्म्मभिरभिचष्टे सर्वतः पश्यति एकस्य वायोर्ध्राजिर्गतिर्ददृशे दृश्यते सर्वैः न रूपं अप्रत्यक्षत्वात् स्पर्शशब्दधृतिकम्पलिङ्गैर्गम्यत इति हि न्यायविदो वदन्ति" भा०

केशिनी स्त्री केशाः तदाकारा जटाः सन्त्यस्य इनि ङीप् । १जटामांस्यां राजनि० २चोरपुष्पीवृक्षे (चोरकाँचकी) अमरः । ३प्रशस्तकेशयुक्तायां स्त्रियां, ऋतुपर्णं प्रति दमयन्तीप्रेरिते ४तद्दूतीभेदे "गच्छ केशिनि ! जानीहि" "एवमुक्त्वा केशिन्या नलस्य कुरुनन्दन!" । "ततः सा केशिनी गत्वा दमयन्त्यै न्यवेदयत्" इति च भा० व० ७४अ० । कश्यपपत्नीप्रधायाः ५कन्याकृमे अप्सरोभेदे । "प्रधाऽसूत महाभागा देवी देवर्षितः पुरा" इत्युपक्रमे "केशिनी च सुबाहुश्च सुरता सुरजा तथा" भा० आ० ६५अ० । ६पार्व्वतीसहचरीभेदे "गौरी विद्याऽथ गान्धारी केशिनी मित्रसाह्वया । सावित्र्या सह सर्व्वास्ताः पार्व्वत्या यान्ति पृष्ठतः" भा० व० २३०अ०

७अजमीढन्टपपत्नीभेदे। "अजमीढोवरस्तेषां तस्मिन् वंशः प्रतिष्ठितः। षट् पुत्रान् सोऽप्यजनयत् तिसृषु स्त्रीषु। भारत!। ऋक्षं धूमिन्यथो नीली दुष्मन्तपरमेष्ठिनौ। केशिन्यजनयज्जह्नुं सुतौ व्रजनरूपिणौ" भा०आ०६४अ०। "अजमीढस्य केशिन्यां जज्ञे जह्नुः प्रतापवान्" हरिवं ३२अ०। ८वसुहोत्रन्टपभार्यायाम् "सौहोत्रिरभवज्जह्नुः केशन्या गर्भसम्भवः" हरिवं० २७अ०। ६सगरभार्याभेदे "द्वे भार्ये सगरस्यास्तां तपसा दग्धकिल्विषे। ज्येष्ठा विदर्भदुहिता केशिनी नाम विश्रुता। केशिन्यसूत सगरादसमञ्जसमात्मजम्" हरिवं०१६०। १०राक्षसमातरि कैकस्याम् "ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवः-सुतौ। रावणः कुम्भकर्णश्च सर्व्वलोकोपतापनौ" भाग० ७।१।४२। कैकस्या नामान्तरमिदम्

केशी स्त्री केश—गौरा० ङीष्। १नीलीवृक्षे राजनि० २भूतकेशीवृक्षे ३अजलोमावृक्षे रत्नमा०

केशोच्चय पु० ६त०। केशसमूहे हेमच०

केश्य त्रि० केशाय हितः यत्। १केशहितकारके तत्का-र्य्योत्पादके २पदार्थे। "तिलोहि पाके मधुरोबलिष्ठः" इत्युपक्रमे "स्तन्योऽथ केश्योऽनिलहा गुरुश्च" "केश्यं रसायनं मेध्यं काश्मर्य्यं फलमुच्यते" "केशप्रसादनी (काँकुड़) केश्या रजोजन्तुमलापहा" सुश्रु०। मधुररसविनस्य केश्यत्वं तत्रोक्तं तदुपक्रमे "चक्षुष्यः केश्योवर्ण्यः" इति सुश्रु० २कृष्णागुरुणि न० ३भृङ्गराजे पु० राजनि० तयोः केशहितत्वात् तथात्वम्। [विवृतिः

केसर न० के जले सरति सृ-अच्। केशरशब्दार्थे तत्र

केसरवर न० केसरेण किञ्जल्केन वृणोति वृ—अच्। कुङ्कुमे। राजनि०।

के(श)सराचल पु०भूपद्मस्य केसरे स्थितः केशराकारतया वा स्थितः। सुमेरुपर्वते। तस्य च भूरूपपद्मस्य कर्णिका-रूपेण मध्यस्थितत्वात् तथात्वं यथोक्तं विष्णु पु० "जम्बुद्वीपः समस्तानां द्वीपानां मध्यतः स्थितः। तस्यापि मेरुर्मैत्रेय! मध्ये कनकपर्वतः" इत्युपक्रमे "भूपद्मस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः। तयो-र्मध्यगतो मेरुः कर्णिकाकारसंस्थितः। भारताः केतु-मालाश्च भद्राश्वाः कुरवस्तथा। पत्राणि लोकपद्मस्य मर्य्यादाशैव बाह्यतः" इति च विष्णु पु०। "सीता (नदी) तु ब्रह्मसदनात् केसराचलादिगिरिशिखरेभ्योऽधोऽधः प्रस्रवन्ती" भाग० ५।१७।८।

केसराम्ल पु० के जलनिमित्तं सरति अम्लो रसोऽस्य। बीजपूरके जम्बीरभेदे जटा०। दर्शनेनापि जिह्वाया रसनिः-स्रावकत्वात्तस्य तथात्वम्।

केसरिका स्त्री के जले सरति साधुकारितया सृ—वुन् अ-लुक् स० टाप् अतइत्त्वम्। सहदेवीलतायां राजनि०।

केसरिन् पुंस्त्री केसरोऽस्त्यस्य इनि। १सिंहे २घोटके च अमरः "धनुर्द्धरं केसरिणं ददर्श" रघुः। स्त्रियां ङीप्। ३पुन्नागे ४नागकेसरे पु० मेदि०। ५रक्तशोभाञ्जने राजनि०। ६हनूमत्पितरि पु० (केशरिन्)शब्दे दृश्यम्

केसरिसुत पु० ६त०। हनूमति तत्कथा केशरिसुतशब्दे उक्ता केसरितनयादयोऽपि तत्रार्थे पु०। [चक्रौ।

कै शब्दे भ्वा० पर० अक० अनिट्। कायति अकासीत्।

कैंशुक न० किंशुकस्येदम् "पुष्पफले बहुलम्" पा० बहुलग्रहणात् तस्य न लुक्। किंशुकपुष्पे "योषित् स्तन्यं शात कुम्भं विघृष्टं चौर्णीमेतं कैंशुकञ्चापि पुष्पम्" सुश्रु० लुपि तु किंशुकमित्येव तत्रार्थे न० [थे तच्छब्दे उदा०दृश्यम्

कैकय पु०त०स्वार्थेऽण् वा०ण यादेरियादेशः। केकयशब्दा-

कैकस पु०कीकसमस्थि सारतयाऽस्त्यस्य प्रज्ञा० अण्। १राक्षसे स्त्रियां शार्ङ्गरवा० ङीन् कैकसी। सा च २सुमा-लिकन्याभेदे "राका पुष्पोत्कटा चैव कैकसी च शुचि-स्मिता कुम्भीनसी च इत्येताः सुमालेः प्रसवाः सुताः"रामा० उ०६स०।सा च रावणादिमाता तत्कथा रामा०उ० ६स० "किं तु मां विद्धि ब्रह्मर्षे! शासनात् पितुरागताम्। कैकसी नाम नाम्नाहं शेषं त्वं ज्ञातुमर्हसि। स तु गत्वा मुनिर्ध्यानं वाक्यमेतदुवाच ह। विज्ञातं ते मया भद्रे! कारणं यन्मनोगतम्। सुताभिलाषो मत्तस्ते मत्तमात-ङ्गगामिनि!। दारुणायां तु वेलायां यस्मात् त्वं मास्तु पस्थिता। शृणु तस्मात् सुतान् भद्रे! यादृशान् जनयिष्य-सि। दारुणान्दारुणाकारान्दारुणाभिजनप्रियान्। प्रस-विष्यसि सुश्रोणि! राक्षसान् क्रूरकर्मणः। सा तु तद्-वचनं श्रुत्वा प्रणिपत्याब्रवीद्वचः। भगवन् नेदृशान् पुत्रांस्त्वत्तोऽहं ब्रह्मवादिनः। नेच्छामि सुदुराचारान् प्रसादं कर्त्तुमर्हसि। कन्यया त्वेवमुक्तस्तु विश्रवा मुनि पुङ्गवः। उवाच कैकसीं भूयः पूर्णेन्दुरिव रोहिणीम्। पश्चिमो यस्तव सुतो भविष्यति शुभानने!। मम वंशानु-रूपः स धर्मात्मा च न संशयः। एवमुक्ता तु सा कन्या राम! कालेन केनचित्। जनयामास बीभत्सं रक्षोरूपं सुदा-रुणम्। दशग्रीवं महादंष्ट्रं नीलाञ्जनचयोपमम्।

ताम्रोष्ठं विंशतिभुजं महास्यं दीप्तमूर्द्धजम्। तस्मिन् जाते ततस्तस्मिन् सज्वालाकवलाः शिवाः। क्रव्यादाश्चापसव्यानि मण्डलानि प्रचक्रमुः। ववर्ष रुधिरं देवो मेघाश्च खरनिःस्वनाः। प्रबभौ न च सूर्य्यो वै महोल्काश्चापतन् भुवि। चकम्पे जगती चैव ववुर्वाताः सुदारुणाः। अक्षोभ्यः क्षुभितश्चैव समुद्रः सरितां पतिः। अथ नामाकरोत् तस्य पितामहसमः पिता। दशग्रीवः प्रसूतोऽयं दशग्रीवो भविष्यति। तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः। प्रमाणाद्यस्य विपुलं प्रमाणं नेह विद्यते। ततः शूर्पणखा नाम संजज्ञे विकृतानना। विभीषणश्च धर्मात्मा कैकस्याः पश्चिमः सुतः"।

**कैकेय** पु० केकयानां राजा अण् यादेरियादेशः। १केकयदेशनृपे केकयशब्दे उदाहरणादि। तस्यापत्यम् अण् ङीप्। २भरतमातरि स्त्री "कैकेयीशङ्कयेवाह पलितच्छद्मना जरा" "दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः "श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः" रघुः

**कैटज** पु० कुटज+पृषो०। कुटजवृक्षे भावप्रकाश इति शब्दकल्पद्रुमः भावप्रकाशे तु कुटजः कूटज इत्येव पाठः कूटजशब्दे दृश्यः

**कैटभ** पु० असुरभेदे तत्कथा हरिवं० ५२अ०
"अहमादौ पुराणेन संक्षिप्ता पद्मयोनिना। मांश्च कृत्वा कृतौ पूर्वं मृण्मयौ द्वौ महासुरौ। कर्णस्रोतोभवौ द्वौ हि विष्णोरस्य महाबलौ। महार्णवे प्रस्वपतः काष्ठकुड्यसमौ स्थितौ। तौ विवेश स्वयं वायुर्ब्रह्मणा साधुचोदितः। तौ दिवं छादयन्तौ तु ववृधाते महासुरौ। वायुप्राणौ तु तौ दृष्ट्वा ब्रह्मा परिमृशञ्छनैः। एकं मृदुतरं मेने कठिनं वेद चापरम्। नामनी तु तयोश्चक्रे सवितुः कमलोद्भवः। मृदुस्त्वयं मधुर्नाम कठिनः कैटभोऽभवत्। तौ दैत्यौ कृतनामानौ चेरतुर्बलदर्पितौ। सर्वमेकार्णवं लोकं योद्धुकामौ सुनिर्भयौ। तावागतौ समालोक्य ब्रह्मा लोकपितामहः। एकार्णवाम्बुनिचये तत्रैवान्तरधीयत। स पद्मे पद्मनाभस्य नाभिमध्यात् समुत्थिते। रोचयामास वसतिं गुह्यं ब्रह्मा चतुर्मुखः। तावुभौ जलगर्भस्थौ नारायणपितामहौ। बहून् वर्षगणानप्सु शयानौ न चकम्पतुः। अथ दीर्घस्य कालस्य तावुभौ मधुकैटभौ। आजग्मतुस्तमुद्देशं यत्र ब्रह्मा व्यवस्थितः। दृष्ट्वा तावसुरौ घोरौ महाकायौ दुरासदौ। ब्रह्मणा ताडितो विष्णुः पद्मनालेन वै पुरा। उत्पपाताथ शयनात् पद्मनाभो महाद्युतिः। तद्युद्धमभवद्घोरं तयोस्तस्य च वै तदा। एकार्णवे तदा लोके त्रैलोक्ये जलतां गते। तदाभूत्तुमुलं युद्धं वर्षसङ्ख्यासहस्रशः। न च तावसुरौ युद्धे तदा श्रममवापतुः। अथ दीर्घस्य कालस्य तौ दैत्यौ युद्धदुर्मदौ। ऊचतुः प्रीतमनसौ देवं नारायणं प्रभुम्। प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युरावयोः। आवां जहि न यत्रोर्वी सलिलेन परिप्लुता। हतौ च तव पुत्रत्वं प्राप्नुयाव सुरोत्तम!। यो ह्यावां युधि निर्जेता तस्यावां विहितौ सुतौ। स तु दृष्ट्वा मृधे दोर्भ्यां दैत्यौ समपीडयत्। जग्मतुर्निधनञ्चापि तावुभौ मधुकैटभौ। तौ हतौ चाप्लुतौ तोये वपुर्भ्यामेकतां गतौ। मेदो मुमुचतुर्दैत्यौ मथ्यमानौ जलोर्मिभिः। मेदसा तज्जलं व्याप्तं ताभ्यामन्तर्दधे ततः। नारायणश्च भगवानसृजत् स पुनः प्रजाः। दैत्ययोर्मेदसा छन्ना मेदिनीति ततः स्मृता। प्रभावात् पद्मनाभस्य शाश्वती जगती कृता"।

**कैटभजित्** पु० कैटभं जितवान् जि—भूते क्विप्। विष्णौ अमरः तद्वधकथा च कैटभशब्दे उक्ता "उदमज्जि कैटभजितः शयनात्" कैटभद्विष् इत्यादयोऽप्यत्र "तनौ ममुस्तत्र न कैटभद्विषः" माघः ६त०। कैटभारि तत्रार्थे अमरः। कैटभशत्रु प्रभृतयोऽप्यत्र पु०

**कैटभी** स्त्री कैटभे कैटभनाशकाले स्तुत्या अण् ङीप्। महाकाल्याम् योगनिद्रायाम्। "यामस्तौच्छ्रयिते हरौ कमलजोहन्तुं मधुकैटभौ" महाकालीध्याने तदर्थं तस्याः स्तुतिरुक्ता। तत्स्तुतिश्च "योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते आस्तीर्य्य शेषमदनं कल्पान्ते भगवानप्रभुरितित्युपक्रम्य देवीमाहात्म्ये दर्शिता।

**कैटभेश्वरी** स्त्री "कैटभं निहतं कृत्वा गृहीता तत्पुरी यतः। तेन सा गीयते देवी पुराणे कैटभेश्वरीतिदेवीपु० ४५अ० उक्तनिरुक्तियुक्तायां दुर्गायाम्

**कैटर्य्य** पु० किट—त्रासे घञ् केटं राति अतितिक्तत्वात् रा+क स्वार्थे ष्यञ्। १भूनिम्बे, अमरः २कट्फले, रत्नमा० ३पूतिकरञ्जे ४मदनवृक्षे च राजनि०

**कैडर्य्य** पु० कैटर्य्य+पृषो०। कैटर्य्यशब्दार्थे राजनि०

**कैतव** न० कितवस्य भावः कर्म्म वा युवा० अण्। १शाठ्ये २द्यूते ३वैदूर्य्यमणौ राजनि०। स्वार्थे अण्। ४कितवे ५शठे ६द्यूतकारके ७धत्तूरे च पु० "कैतवेनाक्षवत्यां वा युद्धे

वा नाश्यतां धनुः" भा०व० ७८अ०। "दीव्य यत् कैतवं पाण्डव! तेऽवशिष्टम्" भा० स० ६७अ०। "यद्वोचस्तदवैमि कैतवम्" कुमा०

**कैतवेय** पु० कितवायाः अपत्यं ढक्। शुभ्रादिपकृते उलूके चान्त्यभेदे "उलूकः कैतवेयश्च वीरस्तांसुमतः सुतः" हरिवं०८८अ०। वा० अण्। कैतवोऽप्यत्र "उलूकः गच्छ कैतव्य! पाण्डवान् सहसोमकान्" भा० उ०५८अ०।

**कैन्दासायन** पुंस्त्री० किन्दासस्य युवापत्यम् हरिता० फक्। निन्दितदासस्य यूनपत्ये

**कैन्नर** त्रि० किन्नरः तन्नामवर्षमभिजनोऽस्य तक्षशिला० अञ्। पितृादिक्रमेण १किन्नरवर्षवासिनि। किन्नरस्येदम् अण्। २किंपुरुषसम्बन्धिनि त्रि० उभयत्र स्त्रियां ङीप्।

**कैमुतिक** पु० किमुत इत्यर्थात् आगतः ठक्। किमुतेत्यर्थतः प्राप्ते न्यायभेदे। यथा बह्वायाससाध्यकर्मसमर्थस्य अल्पायाससाध्यकर्मसामर्थ्यं तन्न्यायासिद्धमेवन्यदप्यूह्यम्।

**कैरलेय** त्रि० केरलानां राजा वा० ढक्। केरलदेशनृपे "उत्तमौजास्तथा शाल्वः कैरलेयश्च कौशिकः" हरिव०८८अ०

**कैरव** न० के जले रौति रु—अच् अलुक् स० कोरवो हंसस्तस्य प्रियम् अण्। १कुमुदे, शुक्लोत्पले, अमरः २शठे पु० कैतवे न० मेदि०। "जाग्रत्कलं कैरवध्वंसं हसयते च या सुमनसामुल्लासिनी मानसे" चन्द्रालो०। "कस्मै नाथ! समर्थ्य कैरवकुलं व्योमान्तमालम्बसे" उद्भटः। ततः पुष्करा० इनि ङीप्। कैरविणी कुमुदयुक्तलतायां तत्समूहे च स्त्री।

**कैरविणीखण्ड** पु०समूहे कमला० खण्ड। कुमुदलतासमूहे

**कैरविणीफल** न० ६त०। (वेरा) इति ख्याते कुमुदिनीबीजे

**कैरवबन्धु** पु० कैरवं प्रकाशयति बन्धु इव इति चन्द्रे शब्दसा०

**कैरवी** स्त्री कैरवस्य प्रिया अण् ङीप्। १चन्द्रिकायां मेदि० २मेथिकायां राजनि० [स्वार्थे अण्। स्थावरविषभेदे हेम०।

**कैराटक** पु० किरं पर्यन्तभूमिमटति अट—ण्वुल् ६त० ततः

**कैरात** पु० किरात इव शूरः इवार्थे अण्। १बलवत्पुरुषे, किरातदेशे (पर्यन्तदेशे) भवः अण्। २भूनिम्बे शब्दच० ३शम्बरचन्दने न० राजनि० ४भूनिम्बे पु० राजनि०। किरातस्येदम् अण्। ५किरातसम्बन्धिनि त्रि० "कैरातं वेशमास्थाय" भा०व० ३९अ०।

**कैराल** न० किरं पर्यन्तभूमिमलति अल—अण् उप०स० ततः स्वार्थे अण्। १विडङ्गे वैद्यकम्। गौरा०ङीष्। २कैराली तदर्थे स्त्री राजनि०।

**कैलास** पु० के जले लासो लसनं दीप्तिरस्य अलुक्स० केलसः स्फटिकस्तस्येव शुभ्रः अण्, केलीनां समूहः अण्—केलं तेनास्यतेऽत्र आस—आधारे घञ् वा। शिवकुवेरयोः स्थाने पर्वतभेदे। स च पद्म० सं० कूर्मविभागे उत्तरस्थासुक्तः "उत्तरतः कैलासोहिमवान् गिरिर्धनुष्मांश्च"। स च अलकासमीपस्थितः "अलकां समया चैव कैलासः शङ्करालयः" काशी० १२अ०। तत्स्वरूपञ्च हरिव० २१७अ० दर्शितं यथा

"मन्दरस्योपशिखरः, स्फाटिकैर्धातुभिश्चितः। वज्रगर्भैर्निरालम्बैः स्वर्गोपम इवाबभौ। सह भृङ्गैश्च कैलासः शिलाधातुविभूषितः। तोरणैश्चैव निविडैः प्रांशुभिश्चैव पादपैः। प्रवादवल्गुभिश्चैव किन्नरैश्च प्रगायिभिः। देवकन्याङ्गनाभिश्च प्रक्रीडित इवाबभौ। मधुरैर्वाद्यगीतैश्च नृत्यैश्चाभिनयोद्धतैः। भृङ्गारैः क्षुद्रकाभिश्च कैलासो मदनायते"।

तस्य विष्णुनाभिपद्मस्य गर्भाङ्कुरत्वं हरिवं० २०२ अ० वर्णितं यथा

"तस्मिन् हिरण्मये पद्मे बहुयोजनविस्तृते। सर्वतेजोगुणमये पार्थिवैर्लक्षणैर्युते। तच्च पद्मं पुराणज्ञाः पृथिवीरूपमुत्तमम्। नारायणात् समुत्पन्नं प्रवदन्ति महर्षयः। या तु पद्मासना देवी तां पृथ्वीं परिचक्षते। ये तु गर्भाङ्कुरास्तस्यास्तान् दिव्यान् पर्वतान् विदुः। हिमवन्तञ्च मेरुञ्च नीलं निषधमेव च। कैलासं क्रौञ्चवन्तञ्च तथाऽद्रिं गन्धमादनम्। पुण्यं त्रिशिखरं चैव कान्तं मन्दरमेव च। उदयञ्च गिरिश्रेष्ठं विन्ध्यमस्तञ्च पर्वतम्। एते देवगणानाञ्च सिद्धानाञ्च महात्मनाम्। आश्रयाः सर्वभूतानां पुण्याः कामयुजोऽद्रयः। एतेषामन्तरो देशो जम्बुद्वीप इति स्मृतः"।

कैलासप्रमाणञ्च भाग० ५,१६,२२, उक्तं यथा "जठरदेवकूटौ मेरुं पूर्वेण द्वादशयोजनसहस्रमुदगायतौ द्विसहस्रं पृथुतुङ्गौ भवतः एवमपरेण पवनपारियात्रौ" दक्षिणेन कैलासकरवीरौ प्रागायतौ"। "शुभ्रं पाण्डुरमेघाभं कैलासस्य नगोत्तमम्" हरि० २२६अ०। "कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः" मेघ०

**कैलासनाथ** पु० ६त०। १शिवे २कुवेरे च "कैलासनाथं तरसा जिगीषुः" रघुः। कैलासपत्यादयोऽप्यत्र।

**कैलासयात्रा** स्त्री कैलासयात्रामधिकृत्य कृतोग्रन्थः अण् आख्यायिकायां तस्य लुक्। हरिवंशे उक्ते "किमर्थं

भगवान् विष्णुर्देवदेवो जनार्द्दनः। गतः कैलासशिखरमालयं शङ्करस्य च" २६४स० अध्यायावधिके २८१अध्यायपर्य्यन्ते ग्रन्थे। उपसंहारे अनुक्रमणिकाध्याये "कैलासयात्रा कृष्णस्य पौण्ड्रकस्य बधस्तथा" इत्युक्तं तेन गौड़पुस्तके कैलासयात्राग्रन्थाभावः प्रामादिक एव

**कैलासौकस्** पु० कैलासओकोयस्य। १शिवे २कुवेरे च हेमच०

**कैवर्त्त** पुंस्त्री के जले वर्त्तते वृत–अच् अलुक् स० ततः स्वार्थे अण्। "निषादो मार्गवं सूते दाशं नौकर्म्मजीविनम्। कैवर्त्तमिति यं प्राहुरार्य्यावर्त्तनिवासिनः" मनूक्तायां(जेले)धीवरजातौ। "ब्राह्मणेन शूद्रायां जातो निषादः प्रागुक्तः प्रकृतायामायोगव्यां मार्गवं दाशापरनामानं नौव्यवहारजीविनं जनयति। आर्य्यावर्त्तदेशवासिनः तं कैवर्त्तशब्देन कीर्त्तयन्ति" कुल्लू०

**कैवर्त्तमुस्त** न० के जले वर्त्तते वृत–अच् अलुक्स० स्वार्थे अण् कर्म्म०। मुस्तकभेदे (केसुरिया) शब्दर० स्वार्थे क। तत्रार्थे भरतः [प्रसिद्धे लताभेदे यस्त्ररङ्गायाम् राजनि०

**कैवर्त्तिका** स्त्री कैवर्त्तीव इवार्थे कन् ह्रस्वः। मालवदेशप्रसिद्धे लताभेदे यस्त्ररङ्गायाम् राजनि०

**कैवर्त्तिमुस्तक** न०। कैवर्त्त्याः कैवर्त्तपत्न्याः प्रियं मुस्तकं संज्ञायां "ङ्यापोः" पा० वा ह्रस्वः। कैवर्त्तमुस्तके ह्रस्वाभावे कैवर्त्तीमुस्तकमप्यत्र (केसुरया) ख्याते मुस्तकभेदे भरतः

**कैवर्त्ती** स्त्री के जले वर्त्तते वृत-अच् अलुक्स० कैवर्त्तो जलस्थानेव स्वार्थे अण् ङीप्। (केसुरिया) १मुस्तकभेदे वैद्यकम् पुंयोगे ङीप्। २कैवर्त्तपत्न्याञ्च [ विडङ्गे रत्नमा०

**कैवल** न० के वलते वल–अच् अलुक्स० स्वार्थे अण्।

**कैवल्य** न० केवलस्य भावः ष्यञ्। १आत्यन्तिकदुःखविगमरूपे मुक्तिभेदे तत्स्वरूपसत्त्वादिकारणानि च सां०का०तत्त्वकौमुद्योर्दर्शितानि यथा"पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च "इतश्चास्ति पुरुष इत्याह कैवल्यार्थं प्रवृत्तेश्च शास्त्रकाराणां महर्षीणाञ्च दिव्यलोचनानां कैवल्यमात्यन्तिकदुःखत्रयप्रशमलक्षणं न बुद्ध्यादीनां सम्भवति ते हि दुःखाद्यात्मकाः कथं स्वभावाद्वियोजयितुं शक्यन्ते तदतिरिक्तस्य त्वतदात्मन आत्मनस्ततो वियोगः शक्यसम्पादः तस्मात्कैवल्यार्थं प्रवृत्तेरागमानां महर्षीणाञ्चास्ति बुद्ध्याद्यतिरिक्त आत्मेति सिद्धम्" तत्त्वकौमुदी "कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्त्तृभावश्च" सां०का० "आत्यन्तिकदुःखत्रयाभावः कैवल्यं तच्च स्वभावादेव त्रैगुण्यात् सुखदुःखमोहरहितत्वात् सिद्धम्" कौ० "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य" का० "पुरुषस्यापेक्षां दर्शयति पुरुषस्य कैवल्यार्थम्। तथा हि प्रधानेन सम्भिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते तच्च सत्त्वपुरुषान्यताख्यातिनिबन्धनम्। न च सत्त्वपुरुषान्यताख्यातिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते। अनादित्वाच्च संयोगगपरम्परायाः भोगाय संयुक्तोऽपि कैवल्याय पुनः संयुज्यते इति युक्तम्" त० कौ० विवृतञ्चैतदस्माभिः "व्यवहितमपि पुरुषस्येति पदं कैवल्यार्थमित्यत्रान्वेतीत्याख्यातुं पुरुषस्यापेक्षामुत्थापयति पुरुषस्यापेक्षामिति प्रकृतेरिति शेषः। कैवल्यं केवलीभावः स च अनुभूयमानस्य बुद्धिधर्म्मस्य दुःखत्रयस्य विनाश एव, तदर्थं तदुद्देशेन पुरुषस्य प्रकृत्यपेक्षा। तथा हि इष्टविषयेच्छया इष्टसाधनाय प्रवर्त्तमानो दृष्टः। पुरुषश्च आत्मन्यनुभूयमानं दुःखत्रयं जिहासुस्तत्परिहारसाधनमर्थयते दुःखत्रयाभिघातश्च प्रकृतिपुरुषविवेकाधीन इति प्रकृतिं विना कथङ्कारं पुरुषस्तद्भेदमात्मनि प्रतीयादिति दुःखत्रयाभिघातार्थमपेक्षणीयज्ञानसाधनत्वेन पुरुषस्य प्रकृत्यपेक्षा"।

"सम्यग्ज्ञानाधिगमाद्धर्म्मादीनामकारणप्राप्तौ। तिष्ठति संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः" सां० का० "तत्त्वसाक्षात्कारोदयादेवानादिरप्यनियतविपाककालोऽपि कर्म्माशयप्रचयो दग्धबीजभावतया न जात्याद्युपभोगलक्षणाय फलाय कल्पते। क्लेशसलिलावसिक्तायां हि बुद्धिभूमौ कर्म्मबीजान्यङ्कुरं प्रसुवते तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्म्मबीजानामङ्कुरप्रसवः। तदिदमुक्तं धर्म्मादीनामकारणप्राप्ताविति अकारणत्वप्राप्तावित्यर्थः। उत्पन्ने तत्त्वज्ञानेऽपि च संस्कारवशात्तिष्ठति यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशाद्भ्रमत्तिष्ठति कालपरिपाकवशात्तूपरते संस्कारे निष्क्रियं भवति। शरीरस्थितौ च प्रारब्धपरिपाकौ धर्म्माधर्म्मौ संस्कारौ। तथाचानुश्रूयते "भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते" इति "तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति। प्रचीयमानाविद्याविशेषस्य संस्कारस्तद्वशात्सामर्थ्याद्धृतशरीरस्तिष्ठति" त० कौ० विवृतमेतदस्माभिः—

"इतरे उत्पन्नविवेकज्ञानाः भोगेन प्रारब्धकर्म्माणीति शेषः क्षपयित्वा नाशयित्वा सम्पद्यते इति यावत् अथ—प्रारब्धक-

र्म्मक्षयानन्तरं सम्पद्यते बन्धशून्यतया कैवल्यभाजनतारूपेण सम्पद्यते । अस्य—उत्पन्नविवेकज्ञानस्य तावदेव चिरं कैवल्यप्राप्तौ विलम्बः, यावत् विमोक्ष्ये प्रारब्धकर्म्मभिरिति शेषः विमोक्ष्ये ततोऽर्थं प्राप्स्यतीत्यर्थः । अथ प्रारब्धकर्म्ममोचनानन्तरं सम्पत्स्ये कैवल्यरूपेण सम्पन्नो भविष्यतीत्यर्थः" ।

"प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तेः । ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति" सा० का० ।

"अनारब्धविपाकानां तावत्कर्म्माशयानां तत्त्वज्ञानाग्निना बीजभावोदग्धः प्रारब्धविपाकानां तूपभोगेन क्षये सति प्राप्ते शरीरभेदे विनाशे चरितार्थत्वात्कृतप्रयोजनत्वात् प्रधानस्य तं पुरुषं प्रति निवृत्तावैकान्तिकमवश्यम्भावि आत्यन्तिकमविनाशीत्युभयं कैवल्यं दुःखत्रयविगमं प्राप्नोति पुरुषः" त० कौ० । दृष्टञ्चैतदस्माभिः "ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुतेऽर्ज्जुन !" इति "ना भुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति" शास्त्रयोः प्रारब्धाप्रारब्धकर्म्मविषयकत्वेन क्षयाक्षयौ व्यवस्थापिताविह्याशयेनाह तत्त्वज्ञानाग्निनेत्यादि" ।

पातञ्जले कैवल्यपादे कैवल्यकारणमुक्त्वा तत्स्वरूपमुक्तं यथा "विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः" सू० । "यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्तानुमीयते तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्म्माभिनिर्वर्त्तितमित्यनुमीयते तस्यात्मभावभावना स्वाभाविकी प्रवर्त्तते यस्याभावादिदमुक्तं स्वभावं मुक्त्वा दोषाद्येषां पूर्व्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति तत्रात्मभावभावना कोऽहमासं, कथमहमासं, किं स्विदिदं मे, कथं स्विदहं, के भविष्याम, इति' सा तु विशेषदर्शिनो निवर्त्तते कुतः चित्तस्यैव विचित्रः परिणामः पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्म्मैरपरामृष्ट इति ततोऽस्यात्मभावभावना कुशलस्य निवर्त्तते इति" भाष्यम् ।

"तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्" सू० ।

"तदानीं यदस्य चित्तं विषयप्राग्भारमज्ञाननिम्नमासीत्तदस्यान्यथा भवति कैवल्यप्राग्भारं विवेकजज्ञाननिम्नमिति" भाष्यम् । "प्रसंख्यानेऽप्यकुसीदस्य सर्व्वथा विवेकख्यातेर्धर्म्ममेघः समाधिः" सू० । "यदायं ब्राह्मणः प्रसंख्यानेऽप्यकुसीदस्ततोऽपि न किंचित् प्रार्थयते तत्रापि विरक्तस्य सर्व्वथा विवेकख्यातिरेव भवतीति संस्कारबीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते तदास्य धर्म्ममेघोनाम समाधिर्भवति" भा० । "ततः क्लेशकर्म्मनिवृत्तिः" सू० । "तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति कुशलाकुशलाश्च कर्म्माशयाः समूलघातं हता भवन्ति क्लेशकर्म्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति कस्मात् ? यस्माद्विपर्य्ययो भवस्य कारणं न हि क्षीणविपर्य्ययः कश्चित् केनचित् क्वचिज्जातो दृश्यते" भा० ।

"तदा सर्व्वावरणमलापेतस्य ज्ञानस्यानन्त्यं ज्ञेयमल्पम्" सू० "सर्व्वैः क्लेशकर्म्मावरणैर्विमुक्तस्य ज्ञानस्यानन्त्यं भवति तमसाभिभूतमावृतज्ञानसत्त्वं क्वचिदेव रजसा प्रवर्त्तितमुद्घाटितं ग्रहणसमर्थं भवति तत्र यदा सर्व्वैरावरणमलैरपगतमलं भवति तदा भवत्यस्यानन्त्यं ज्ञानस्यानन्त्याज्ज्ञेयमल्पं सम्पद्यते यथाकाशे खद्योतः, यत्रेदमुक्तम् "अन्धो मणिमविध्यत्तमनङ्गुलिरावयत् । अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयदिति" भा० ।

"ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम्" सू० । "तस्य धर्म्ममेघस्योदयात्कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते न हि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते" भा०

"गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तन्तत्स्वरूपमवधार्य्यते" भा० "पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति" सू० । कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्य्यकारणात्मना गुणानान्तत्कैवल्यं स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानभिसम्बन्धात्पुरुषस्य चितिशक्तिरेव केवला तस्याः सदा तथैवावस्थानं कैवल्यमिति" भा० ।

"कैवल्यरूपावधारणपरस्य सूत्रस्यावान्तरसङ्गतिमाह गुणाधिकारेति पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति । कुतः करणीयतया पुरुषार्थशून्यानां यः प्रतिप्रसवः स्वकारणे प्रधाने लयः, तेषां कार्य्यकारणात्मनां गुणानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि लीयन्ते मनोऽस्मितायाम्, अस्मिता लिङ्गे, लिङ्गमलिङ्गे" इति योऽयं गुणानां कार्य्यकारणात्मकानां प्रतिसर्गः तत् कैवल्यं, यं कञ्चित् पुरुषं प्रति प्रधानस्य मोक्षः स्वरूपप्रतिष्ठा पुरुषस्य वा मोक्ष इत्याह । स्वरूपेति । अस्ति हि महाप्रलयेऽपि स्वरूपप्रतिष्ठा चितिशक्तिर्न त्वसौ मोक्ष इत्यत आह पुनरिति सोऽत्र इतिशब्दः शास्त्रपरिसमाप्तौ" वा० विवरणम् ।

वेदान्तिमते अविद्याकल्पितदेहादिप्रपञ्चनिवृत्तौ २ अद्वितीयब्रह्मभावापत्तिरूपे केवलत्वे च। तच्च कैवल्यं द्विविधं जीवन्मुक्तिर्विदेहकैवल्यञ्च। तत्र जीवन्मुक्तिलक्षणम् विस्तरेण जीवन्मुक्तशब्दे वक्ष्यते दिङ्मात्रमत्राभिधीयते तत्र विवेकचूडामणौ जीवन्मुक्तलक्षणमुक्तोक्तं यथा

"विज्ञातब्रह्मतत्त्वस्य यथापूर्वं न संसृतिः। अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः। प्राचीनवासनावेगादसौ संसरतीति चेत्। न सदेकत्वविज्ञानान्मन्दीभवति वासना। अत्यन्तकामुकस्यापि वृत्तिः कुण्ठति मातरि। तथैव ब्रह्मणि ज्ञाते पूर्णानन्दे मनीषिणः। निदिध्यासनशीलस्य बाह्यप्रत्यय इष्यते। ब्रवीति श्रुतिरेतस्य प्रारब्धफलदर्शनात्। सुखाद्यनुभवो यावत्तावत् प्रारब्धमिष्यते। फलोदयः क्रियापूर्वो निष्क्रियो न हि कुत्रचित्?। अहंब्रह्मेति विज्ञानात् कल्पकोटिशतार्जितम्। सञ्चितं विलयं याति प्रबोधात् स्वप्नकर्मवत्। यत् कृतं स्वप्नवेलायां पुण्यं वा पापमुल्वणम्। सुप्तोत्थितस्य किं तत् स्यात्? स्वर्गाय नरकाय वा। स्वमसङ्गमुदासीनं परिज्ञाय नभो यथा। न श्लिष्यति च यत्किञ्चित् कदाचिद्भाविकर्मभिः। न नभो घटयोगेन सुरागन्धेन लिप्यते। तथात्मोपाधियोगेन तद्धर्मैर्नैव लिप्यते। ज्ञानोदयात् पुराऽऽरब्धं कर्म ज्ञानान्न नश्यति। अदत्त्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत्। व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ। न तिष्ठति छिनत्त्येव लक्ष्यं वेगेन निर्भरम्। प्रारब्धं बलवत्तरं खलु विदां भोगेन तस्य क्षयः सम्यग्ज्ञानहुताशनेन विलयः प्राक्सञ्चितागामिनाम्। ब्रह्मात्मैक्यमवेक्ष्य तन्मयतया ये सर्वदा संस्थितास्तेषां तत्त्रितयं नहि क्वचिदपि ब्रह्मैव ते निर्गुणम्। उपाधितादात्म्यविहीनकेवलब्रह्मात्मनैवात्मनि तिष्ठतो मुनेः। प्रारब्धसद्भावकथा न युक्ता स्वप्नार्थसम्बन्धकथेव जाग्रतः। न हि प्रबुद्धः प्रतिभासदेहे देहोपयोगिन्यपि च प्रपञ्चे। करोत्यहन्तां ममतामिदन्तां किन्तु स्वयं तिष्ठति जागरेण। तदाऽस्य मिथ्यार्थसमर्थनेच्छा न संग्रहस्तज्जगतोऽपि दृष्टः॥ तत्रानुवृत्तिर्यदि चेन्मृषार्थे न निद्रया मुक्त इतीष्यते ध्रुवम्। तद्वत् परे ब्रह्मणि वर्त्तमानः सदात्मना तिष्ठति नान्यदीक्षते। स्मृतिर्यथा स्वप्नविलोकितार्थे तथा विदः प्राशनमोचनादौ। कर्मणा निर्मितो देहः प्रारब्धं तस्य कल्प्यताम्। नानादेरात्मनो युक्तं नैवात्मा कर्मनिर्मितः। अजो नित्यः शाश्वतश्च ब्रूते श्रुतिरमोघवाक्। तदात्मना तिष्ठतोऽस्य कुतः प्रारब्धकल्पना। प्रारब्धं सिध्यति तदा यदा देहात्मना स्थितिः। देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः। शरीरस्यापि प्रारब्धकल्पना भ्रान्तिरेव हि। अध्यस्तस्य कुतः सत्त्वम्? असत्यस्य कुतो जनिः?। अजातस्य कुतो नाशः? प्रारब्धमसतः कुतः?। ज्ञानेनाज्ञानकार्य्यस्य समूलस्य लयो यदि। तिष्ठत्ययं कथं देह! इति शङ्कावतो जडान्। समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः। न तु देहादिसत्यत्वबोधनाय विपश्चिताम्। परिपूर्णमनाद्यन्तमप्रमेयमविक्रियम्। एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन। सद्घनं चिद्घनं नित्यमानन्दघनमक्रियम्। एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन। प्रत्यगेकरसं पूर्णमनन्तं सर्वतोमुखम्। एकमेवाद्वयमित्यादि। अहेयमनुपादेयमनादेयमनाश्रयम्। एकमेवाद्वयमित्यादि। निर्गुणं निष्कलं सूक्ष्मं निर्विकल्पं निरञ्जनम्। एकमेवाद्वयमित्यादि। अनिरूप्यस्वरूपं यन्मनोवाचामगोचरम्। एकमेवाद्वयमित्यादि। सत्समृद्धं स्वतः सिद्धं शुद्धं बुद्धमनीदृशम्। एकमेवाद्वयमित्यादि। निरस्तरागा निरस्तभोगाः शान्ताः सुदान्ता यतयो महान्तः। विज्ञाय तत्त्वं परमं तदन्ते प्राप्ताः परां निर्वृतिमात्मयोगात्। भवानपीदं परतत्त्वमात्मनः स्वरूपमानन्दघनं विचार्य। विधूय मोहं स्वमनःप्रकल्पितं मुक्तः कृतार्थो भवतु प्रबुद्धः। समाधिना साधुविनिश्चलात्मना पश्यात्मतत्त्वं स्फुटबोधचक्षुषा। निःसंशयं सम्यगवेक्षितश्चेच्छ्रुतः पदार्थो न पुनर्विकल्प्यते। स्वस्याविद्याबन्धसम्बन्धमोक्षात् सत्यज्ञानानन्दरूपात्मलब्धौ। शास्त्रं युक्तिर्देशिकोक्तिः प्रमाणं चान्तःसिद्धा स्वानुभूतिः प्रमाणम्। बन्धो मोक्षश्च तृप्तिश्च चिन्तारोग्यक्षुदादयः। स्वेनैव वेद्या यज्ज्ञानं परेषामानुमानिकम्। तटस्थिता बोधयन्ति गुरवः श्रुतयो यथा। प्रज्ञयैव तरेद्विद्वानीश्वरानुगृहीतया। स्वानुभूत्या स्वयं ज्ञात्वा स्वमात्मानमखण्डितम्। संसिद्धः सन्मुखं तिष्ठेत् निर्विकल्पात्मनात्मनि। वेदान्तसिद्धान्तनिरुक्तिरेषा ब्रह्मैव जीवः सकलं जगच्च। अखण्डरूपस्थितिरेव मोक्षो ब्रह्माद्वितीये श्रुतयः प्रमाणम्"।

तदीयज्ञानाकारोऽपि तत्र दर्शितो यथा

"अकर्त्ताहमभोक्ताहमविकारोऽहमक्रियः। शुद्धबोध-

स्वरूपोऽहं केवलोऽहं सदाशिवः। द्रष्टुः श्रोतुर्वक्तुः कर्तुर्भोक्तुर्विभिन्न एवाहम्। नित्यनिरन्तरनिष्क्रियो निःसीमाऽसङ्गपूर्णबोधात्मा। नाहमिदं नाहमदोऽप्युभयोरवभासकं परं शुद्धम्। बाह्याभ्यन्तरशून्यं पूर्णं ब्रह्माद्वितीयमेवाहम्। निरुपममनादितत्त्वं त्वमहमिदमदइति कल्पनादूरम्। नित्यानन्दैकरसं सत्यं ब्रह्माद्वितीयमेवाहम्। नारायणोऽहं नरकान्तोऽहं पुरान्तकोऽहं पुरुषोऽहमीशः। अखण्डबोधोऽहमशेषसाक्षी निरीश्वरोऽहं निरहञ्च निर्ममः। सर्वेषु भूतेष्वहमेव संस्थितो ज्ञानात्मनान्तर्बहिराश्रयः सन्। भोक्ता च भोग्यं स्वयमेव सर्वं यद्यत् पृथक् दृष्टमिदन्तया पुरा। मय्यखण्डसुखाम्भोधौ बहुधा विश्ववीचयः। उत्पद्यन्ते विलीयन्ते मायामारुतविभ्रमात्। स्थूलादिभावा मयि कल्पिता भ्रमादारोपितानुस्फुरणेन लोकैः। काले यथा कल्पकवत्सराययनर्त्वादयो निष्कलनिर्विकल्पे। आरोपितं नाश्रयदूषकं भवेत् कदापि मूढैरतिदोषदूषितैः। नार्द्रीकरोत्यूषरभूमिभागं मरीचिकावारिमहाप्रवाहः। आकाशवत् कल्पविदूरगोऽहमादित्यवद्भास्यविलक्षणोऽहम्। आहार्यवन्नित्यविनिश्चलोऽहमम्भोधिवत् पारविवर्जितोऽहम्। न मे देहेन सम्बन्धो मेघेनेव विहायसः। अतः कुतो मे तद्धर्मा जाग्रत्स्वप्नसुषुप्तयः। उपाधिरायाति स एव गच्छति स एव कर्माणि करोति भुङ्क्ते। स एव जीर्यन् म्रियते सदाहं कुलाद्रिवन्निश्चल एव संस्थितः। न मे प्रवृत्तिर्न च मे निवृत्तिः सदैकरूपस्य निरंशकस्य। एकात्मको यो निबिडो निरन्तरो व्योमेव पूर्णः स कथं नु चेष्टते ?। पुण्यानि पापानि निरिन्द्रियस्य निश्चेतसो निर्विकृतेर्निराकृतेः। कुतो ममाखण्डसुखानुभूतेः ? ब्रूते ह्यनन्वागतमित्यपि श्रुतिः। छायया स्पृष्टमुष्णं वा शीतं वा सुष्ठु दुष्टु वा। न स्पृशत्येव यत् किञ्चित् पुरुषं तद्विलक्षणम्। न साक्षिणं साक्ष्यधर्माः संस्पृशन्ति विलक्षणम्। अविकारमुदासीनं गृहधर्माः प्रदीपवत्। रवेर्यथा कर्मणि साक्षिभावो वह्नेर्यथा दाहनियामकत्वम्। रज्जोर्यथारोपितवस्तुसङ्गस्तथैव कूटस्थचिदात्मनो मे। कर्त्तापि वा कारयितापि नाहं भोक्तापि वा भोजयितापि नाहम्। द्रष्टापि वा दर्शयितापि नाहं सोऽहं, स्वयंज्योतिरनीदृगात्मा। चलत्युपाधौ प्रतिबिम्बलौल्यमौपाधिकं मूढधियो नयन्ति। स्वबिम्बभूतं रविवद्विनिष्क्रियं कर्त्तास्मि भोक्तास्मि हतोऽस्मि हन्त। जले वापि स्थले वापि लुठत्वेष जडात्मकः। नाहं विलिप्ये तद्धर्मैर्घटधर्मैर्नभो यथा। कर्तृत्वभोक्तृत्वखलत्वमत्ततजडत्वबद्धत्वविमुक्ततादयः। बुद्धेर्विकल्पा न तु सन्ति वस्तुतः स्वस्मिन् परे ब्रह्मणि केवलेऽद्वये। सन्तु विकाराः प्रकृतेर्दशधा शतधा सहस्रधा वापि। किं मे सङ्गिभिरेभिर्न ह्यम्बुदा वरमम्बरं स्पृशन्ति। अव्यक्तादिस्थूलपर्यन्तमेतद्विश्वं यत्राभासमात्रं प्रतीतम्। व्योमप्रख्यं सूक्ष्ममाद्यन्तहीनं ब्रह्माद्वैतं यत्तदेवाहमस्मि। सर्वाधारं सर्ववस्तुप्रकाशं सर्वाकारं सर्वगं सर्वशून्यम्। नित्यं शुद्धं निश्चलं निर्विकल्पं ब्रह्माद्वैतं यत्तदेवाहमस्मि। यन्निरस्ताशेषमायाविशेषं प्रत्यग्रूपं प्रत्ययागम्यमानम्। सत्यज्ञानानन्दमानन्दरूपं ब्रह्माद्वैतं यत्तदेवाहमस्मि। निष्क्रियोऽस्म्यविकारोऽस्मि निष्कलोऽस्मि निराकृतिः। निर्विकल्पोऽस्मि नित्योऽस्मि निरालम्बोऽस्मि निर्द्वयः। सर्वात्मकोऽहं सर्वोऽहं सर्वातीतोऽहमद्वयः। केवलाखण्डबोधोऽहमानन्दोऽहं निरन्तरम्। स्वाराज्यसाम्राज्यविभूतिरेषा भवत्कृपाश्रीमहिमप्रसादात्। प्राप्ता मया श्रीगुरवे महात्मने नमो नमस्तेऽस्तु पुनर्नमोऽस्तु"।

पुनस्तल्लक्षणं तत्रैवोक्तं यथा

"क्षुधां देहव्यथां त्यक्त्वा बालः क्रीडति वस्तुनि। तथैव विद्वान् रमते निर्ममो निरहं सुखी। चिन्ताशून्यमदैन्यभैक्ष्यमशनं, पानं सरिद्वारिषु, स्वातन्त्र्येण निरङ्कुशा स्थितिरभी निद्रा श्मशाने वने। वस्त्रं क्षालनशोषणादिरहितं दिग्वास्तु शय्या मही सञ्चारो निगमान्तवीथिषु विदां क्रीडा परे ब्रह्मणि। विमानमालम्ब्य शरीरमेतद् भुनक्त्यशेषान् विषयानुपस्थितान्। परेच्छया बालवदात्मवेत्ता योऽव्यक्तलिङ्गोऽननुसक्तबाह्यः। दिगम्बरो वापि च साम्बरो वा त्वगम्बरो वापि चिदम्बरस्थः। उन्मत्तवद् वापि च बालवद् वा पिशाचवद् वापि चरत्यवन्याम्। कामान्निष्कामरूपी संचरत्येकचरो मुनिः। स्वात्मनैव सदा तुष्टः स्वयं सर्वात्मना स्थितः। क्वचिन्मूढो विद्वान् क्वचिदपि महाराजविभवः क्वचिद्भ्रान्तः सौम्यः क्वचिदजगराचारकलितः। क्वचित् पात्रीभूतः क्वचिदवमतः क्वाप्यविदितश्चरत्येवं प्राज्ञः सततपरमानन्दसुखितः। निर्धनोऽपि सदा तुष्टोऽप्यसहायो महाबलः। नित्यतृप्तोऽप्यभुञ्जानोऽप्यसमः समदर्शनः। अपि कुर्वन्नकुर्वाणश्चाभोक्ता फलभोग्यपि। शरीर्यप्य-

शरीरस्थोऽपि परिच्छिन्नोऽपि सर्वगः । अशरीरं सदा सन्तमिमं ब्रह्मविदं क्वचित् । प्रियाप्रिये न स्पृशतस्तथैव च शुभाशुभे । स्थूलादिसम्बन्धवतोऽभिमानिनः सुखञ्च दुःखञ्च शुभाशुभे च विध्वस्तबन्धस्य सदात्मनो मुनेः कुतः शुभं वाप्यशुभं फलं वा । तमसा ग्रस्तवद्भानादग्रस्तोऽपि रविर्जनैः । ग्रस्त इत्युच्यते भ्रान्त्या ह्यज्ञात्वा वस्तुलक्षणम् । तद्वद्देहादिबन्धेभ्यो विमुक्तं ब्रह्मवित्तमम् । पश्यन्ति देहवन्मूढाः शरीराभासदर्शनात् । अहिनिर्ल्वयनीवायं मुक्तदेहस्तु तिष्ठति । इतस्ततश्चाल्यमानो यत्किञ्चित् प्राणवायुना । स्रोतसा नीयते दारु यथा निम्नोन्नतस्थलम् । दैवेन नीयते देहो यथाकालोपभुक्तिषु । प्रारब्धकर्म्मपरिकल्पितवासनाभिः संसारिवच्चरति भुक्तिषु मुक्तदेहः । सिद्धः स्वयं वसति साक्षिवदत्र तूष्णीं चक्रस्य मूलमिव कल्पविकल्पशून्यः । नैवेन्द्रियाणि विषयेषु नियुङ्क्त एष नैवापयुङ्क्त उपदर्शनलक्षणस्थः । नैव क्रियाफलमपीषदवेक्षते स स्वानन्दसान्द्ररसपानसुमत्तचित्तः । लक्ष्यालक्ष्यगतिं त्यक्त्वा यस्तिष्ठेत् केवलात्मना । शिवएव स्वयं साक्षादयं ब्रह्मविदुत्तमः । जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः” ।

विदेहकैवल्यमपि तत्र दर्शितं यथा “उपाधिनाशाद्ब्रह्मैव सन् ब्रह्माप्येति निर्द्वयम् । शैलूषवेषसद्भावाभावयोश्च यथा पुमान् । तथैव ब्रह्मविच्छ्रेष्ठः सदा ब्रह्मैव नापरः । यत्र क्वापि विशीर्णं सत् पर्णमिव तरोर्वपुः पतनात् । ब्रह्मीभूतस्य यतेः प्रागेव तच्चिदग्निना दग्धम् । सदात्मनि ब्रह्मणि तिष्ठतो मुनेः पूर्णाद्वयानन्दमयात्मना सदा । न देशकालाद्युचितप्रतीक्षा त्वङ्मांसविट्पिण्डविसर्जनाय । देहस्य मोक्षो मोक्षो न दण्डस्य कमण्डलोः । अविद्याहृदयग्रन्थिमोक्षो मोक्षो यतस्ततः । कुल्यायामथ नद्यां वा शिवक्षेत्रेऽपि चत्वरे । पर्णं पतति चेत्तेन तरोः किं नु शुभाशुभम् ? । पत्रस्य पुष्पस्य फलस्य नाशवद्देहेन्द्रियप्राणधियां विनाशः । नैवात्मनः स्वस्य सदात्मकस्यानन्दाकृतेर्वृक्षवदस्ति चैषः । प्रज्ञानघन इत्यात्मलक्षणं सत्यसूचकम् । अविद्योपाधिकस्यैव कथयन्ति विनाशनम् । अविनाशी वा अरेऽयमात्मेति श्रुतिरात्मनः । प्रब्रवीत्यविनाशित्वं विनश्यत्सु विकारिषु । पाषाणवृक्षतृणधान्यकटाम्बराद्या दग्धा भवन्ति हि मृदेव यथा तथैव । देहेन्द्रियासुमनआदि समस्तदृश्यं ज्ञानाग्निदग्धमुपयाति परात्मभावम् । विलक्षणं यथा ध्वान्तं लीयते भानुतेजसि । तथैव सकलं दृश्यं ब्रह्मणि प्रविलीयते । घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम् । तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित् स्वयम् । क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले । संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः” ।

एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम् । ब्रह्मभावं प्रपद्यैष यतिर्नावर्त्तते पुनः । सदात्मैकत्वविज्ञानदग्धाविद्यादिवर्ष्मणः । अमुष्य ब्रह्मभूतत्वाद्ब्रह्मणः कुत उद्भवः? । मायाक्लृप्तौ बन्धमोक्षौ न स्तः स्वात्मनि वस्तुतः । यथा रज्जौ निष्क्रियायां सर्पाभासविनिर्गमौ । आवृतेः सदसत्त्वाभ्यां वक्तव्ये बन्धमोक्षणे । नावृतिर्ब्रह्मणः काचिदन्याभावादनावृतम् । यद्यस्त्यद्वैतहानिः स्यात् द्वैतं न सहते श्रुतिः । बन्धञ्च मोक्षञ्च मृषैव मूढा बुद्धेर्गुणं वस्तुनि कल्पयन्ति । दृगावृतिं मेघकृतां यथा रवौ यतोऽद्वयासङ्गचिदेकमक्षरम् । अस्तीति प्रत्ययो यश्च यश्च नास्तीति वस्तुनि । बुद्धेरेव गुणावेतौ न तु नित्यस्य वस्तुनः । अतस्तौ मायया क्लृप्तौ बन्धमोक्षौ न चात्मनि । निष्कले निष्क्रिये शान्ते निरवद्ये निरञ्जने । अद्वितीये परे तत्त्वे व्योमवत् कल्पना कुतः? । न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता । सकलनिगमचूडास्वान्तसिद्धान्तगुह्यं परमिदमतिगुह्यं दर्शितं ते मयाद्य । अपगतकलिदोषं कामनिर्मुक्तबुद्धिं त्वमतुवद् सकृत्त्वं भावयित्वा मुमुक्षुम्” । कैवल्यं स्वरूपत्वेनास्त्यस्य अर्श० अच् । ३कैवल्यस्वरूपे त्रि० “ज्ञानविज्ञानयुक्तानां निरुपाख्या निरञ्जना । कैवल्या या गतिर्ब्रह्मसदने सा गतिर्भवान्” भा० अनु० १६अ० । “कैवल्या मोक्षाख्या गतिः” नीलक० । केवल एव स्वार्थे ष्यञ् । ४अद्वितीये वस्तुनि न० “धातारमजमव्यक्तं यमाहुः परमव्ययम् । कैवल्यं निर्गुणं विश्वमनादिमजमक्षरम्” भा० अ० ६३अ०

कैशिक न० केशानां समूहः ठक् । १केशसमूहे । २नाटकप्रसिद्धे वृत्तिभेदे स्त्री ङीप् हेमच० सा० द० सरस्वतीकण्ठाभरणे च कौशिकीत्येव पाठः । अलङ्कारशब्दे ३८८पृ० तल्लक्षणमुक्तम् । ३शृङ्गारे पु० जटा० तस्य केशवेशपूर्व्वकत्वेन तदधीनत्वात् तथात्वम् । ४नृपभेदे पु० “आहूतिः कैशिकश्चैव भीष्मकश्च नराधिपः” हरिवं० ८६अ०

कैशोर न० किशोरस्य भावः कर्म्म वा प्राणभृद्वयोवाचित्वात् अञ् । “कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।

कैशोरमा पञ्चदशात् यौवनं तु ततः परमिति” श्रीधरर्दर्शिते एकादशावधिपञ्चदशपर्य्यन्तवयसि “तस्मिन् वयसि कैशोरे भयानुग्रहकारकम्” भाग० ३।१२८।१८ स्वार्थे क। तत्रार्थे “कैशोरकं मानयन् वै सह ताभिर्मुमोद ह” हरिवं० ७७ [ ढक्। किशोर्य्या अपत्ये

कैशोरिकेय पुंस्त्री० किशोरी+स्वार्थे क ततः शुभ्रा० अपत्ये

कोक पुंस्त्री कुक–आदाने अच्। १चक्रवाके “हंसारवैः कोकरवैश्च” भा० आनु० २६अ० “विरहविधुरकोकद्वन्द्वशोकं विभिन्दन्” उद्भटः। २वृके “वने यूथपरिभ्रष्टा मृगी कोकैः (वृकैः) रिवार्द्दिता” रामा०। ३भेके च स्त्रियां ङीप्। ४ज्येष्ठ्याम् (टिकटिकी) ५खर्ज्जूरीवृक्षे च पु० मेदि० ६विष्णौ पु० त्रिका०

कोकड पुंस्त्री कोकं तद्रवं लाति ला–क लस्य डः। विलेशयमृगभेदे चमरमृगे राजनि० स्त्रियां ङीष्।

कोकदेव पुंस्त्री कोकइव दीव्यति दिव–अच्। कपोते राजनि०

कोकनद न० कोकान् चक्रवाकान् नदति नादयति अन्तर्भूतण्यर्थे नद–अच्। १रक्तकुमुदे, २रक्तपद्मे च। “व्याकोशकोकनदतां दधते नलिन्यः” माघः। “सरसः कोकनदभ्रमादिव” नैष०

कोकनदच्छवि पु० कोकनदस्य छविरिव छविर्दीप्तिर्यस्य। १रक्तवर्णे २तद्वति त्रि० अमरः। [ सूर्य्ये शब्दच०।

कोकबन्धु पु० कोकयोश्चक्रवाकयोर्मेलनकारित्वात् बन्धुरिव।

कोकरक पु० ब०व० देशभेदे। “वकाः कोकरकाः प्रोष्ठाः समवेगवशास्तथा” भा० भी० ६ देशकथने।

कोकवाच पुंस्त्री कोकस्य वाचेव वाचा वाक् रवोयस्य। विलेशयमृगभेदे राजनि०

कोकाख्य पु० कोकस्येवाख्यास्य। समष्ठिलक्षुपभेदे राजनि०

कोकामुख न० भारतप्रसिद्धे तीर्थभेदे “कोकामुखमुपस्पृश्य ब्रह्मचारी यतव्रतः। जातिस्मरत्वमाप्नोति दृष्टमेतत् पुरातनैः” भा० व० ८४अ० “कोकामुखे विगाह्याथ” भा० आनु०। २५अ०

कोकाह पु० कोकरवाहन्ति आ+हन–ड। श्वेताश्वे हेमच०

कोकिल पुंस्त्री कुक–इलच्। स्वनामख्याते पक्षिणि अमरः। “पुंस्कोकिलो यन्मधुरं चुकूज” कुमा० स्त्रियाम् जातित्वेऽपि–अजा० टाप्। “कोकिलाकलरवो वनेवने नूनमत्र निगडो भविष्यति” उद्भटः। “अवकुहू: कोकिलेति” सि० कौ० “रतिदूतिपदेषु कोकिलाम्” कुमा० “कोकिलामञ्जुवादिनीम्” रघुः। अङ्गारे पु० त्रिका०

संज्ञायां कन्। “हयदशभिर्नजौ भजजला गुरु नहटकम्। मुनिगुहकार्णवैः कृतयति वद कोकिलकम्” वृ० र० उक्ते २छन्दोभेदे न०।

कोकिलनयन पु० कोकिलस्य नयनमिव रक्तं पुष्पमस्य। अतिरक्तपुष्पे (तालमाखना) (कुलेखाड़ा) वृक्षभेदे रमानाथः [ (तालमाखना) वृक्षभेदे अमरः

कोकिलाक्ष पु० कोकिलस्याक्षीव रक्तं पुष्पमस्य पचक्षमा०।

कोकिलावास पु० ६त०। आम्रवृक्षे राजनि०

कोकिलासन न० रुद्रयामलोक्ते आसनभेदे तल्लक्षणम् यथा “अथान्यदासनं वक्ष्ये येन सिद्धो भवेन्नरः। निरुध्याद्दवायुसञ्चारं कोकिलाख्यासनेन च। जङ्घे हस्तद्वयं कृत्वा तदग्रे पादयोः सुधीः। बद्धाङ्गुष्ठद्वयं नाथ! शनैः शनैः प्रकारयेत्। पद्मासनं समाकृत्य कुर्परोपरि संस्थितः”

कोकिलेक्षु पु० कोकिल इव कृष्णः इक्षुः। (काजला) इक्षुभेदे। राजनि०

कोकिलेष्टा स्त्री० ६त०। महाजम्बूवृक्षे राजनि०

कोकिलोत्सव पु० कोकिलानामुत्सवोऽत्र। आम्रवृक्षे राजनि० [ (देशान्) भाग० ५।६।८

कोङ्क पु० ब०व०। देशभेदे। “संक्रमाय कोङ्कवेङ्कटकान्”

कोङ्कण पु० ब०व०। देशभेदे स च देशः वृ० सं० कूर्मविभागे दक्षिणस्यामुक्तः “शिबिकफणिकारकोङ्कणाभीराः”। “अथापरे जनपदा दक्षिणा भरतर्षभ!। कौकुट्टकास्तथा चोलाः कोङ्कणा मलवानराः” भा० भी० ६अ०। क्वचित् देकत्वम् “नाथं वर्ज्यः कोङ्कणे मागधे च” मु० चि० “मालवे गौडदेशे च सिन्धुदेशे च कोङ्कणे। व्रतं चूडां विवाहञ्च वर्ज्जयेन्मकरे गुरौ” पी० धा०। तेषां राजा अण्। कौङ्कण तद्देशन्वपे बहुषु तस्य लुक्। तत्रार्थे स्वार्थे क “कुन्तलांश्च तथा वङ्गान् शाल्वान् कोङ्कणकांस्तथा (विजित्य) हरिवं० १४अ०

कोङ्कणासुत पु० कोङ्कणदेशोद्भवा अत्र तस्य लुक् कोङ्कणा रेणुका ६त०। परशुरामे शब्दमा०

कोच त्रि० कुच–ज्वला० कर्त्तरि ण। १सङ्कोचके, । भावे घञ्। २सङ्कोचे “एकैकस्य त्वकोचभेदस्पनाङ्कसादाः कुष्ठे महत्पूर्वयुते भवन्ति” सुश्रु० ब्रह्मवै०पु० उक्ते ३जातिभेदे (कोँच) “तीवरस्यैव स पुत्रः मांसच्छेदिसङ्गवः। कोचजातिरिति तत्तोक्तः। स्त्रियां ङीष्। ४तत्प्रधाने देशे पु०। सोऽभिजनोऽस्य अण्। कौच तद्देशवासिनि बहुषु तस्य अणोलुक्।

**कोजागर** पु॰कोजागर्त्ति इति लक्ष्म्या उक्तिरत्र काले पृषो॰। आश्विनपौर्णमास्याम्। तत्कृत्यव्यवस्थादि ति॰ त॰ कल्पतरौ ब्रह्मपुराणम् “आश्वयुज्यां पौर्णमास्यां निकुम्भोवालकार्णवात्। आयाति सेनया सार्द्धं कृत्वा युद्धं सुदारुणम्। तस्मात्तत्र नरैर्मार्गाः स्वगेहस्य समीपतः। शोधितव्याः प्रयत्नेन भूषितव्याश्च मण्डनैः। पुष्पार्घ्र्यफलमूलान्नसर्पपप्रकरैस्तथा। वेश्मानि भूषितव्यानि नानावर्णैर्विशेषतः। सुस्नातैरनुलिप्तैश्च नरैर्भाव्यं सवान्धवैः। दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः। स्त्रीबालमूर्खवृद्धैश्च भोक्तव्यं पूजितैः सुरैः”। पूजितैः सुरैः पूजितसुरैरित्यर्थः। “पूज्याश्च सफलैः पुष्पैस्तथाद्वारोर्द्ध्वभित्तयः। द्वारोपान्ते सुदीप्तस्तु संपूज्योहव्यवाहनः। यवाक्षतघृतोपेतैस्तण्डुलैश्च सुतर्पितः। संपूजितव्यः पूर्णेन्दुः पयसा पायसेन च। स्कन्दः सभार्य्यरुद्रश्च तथा नन्दीश्वरोमुनिः। गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः। उरभ्रवद्भिर्व्वरुणो गजवद्भिर्विनायकः। पूज्यः साश्वैश्च रेवन्तो यथाविभवविस्तरैः। ततः पूज्यो निकुम्भोऽपि समांसैस्तिलतण्डुलैः। सुगन्धिभिर्घृतोपेतैः कृशराख्यैश्च भूरिभिः। ब्राह्मणान् भोजयित्वा तु भोक्तव्यं मांसवर्जितम्। वह्निपार्श्वगतैर्नेया दृष्टा क्रीड़ाः पृथग्विधाः”। ततश्च द्वारोर्द्ध्वभित्तिहव्यवाहपूर्णेन्दुसभार्य्यरुद्रस्कन्दनन्दीश्वरमुनयः सर्व्वे पूज्याः। द्वारोर्द्ध्वभित्तिशब्दोऽत्र बहुवचनान्तः। नन्दीश्वरोमुनिरेकः। गोमता सुरभिः, छागवता हुताशनः मेषवता वरुणः, हस्तिमता विनायकः, अश्ववता रेवन्तः सर्व्वैरेव निकुम्भः पूज्यः, महार्णवे लिङ्गपुराणम्। “आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि। कौमुदी सा समाख्याता कार्य्या लोकविभूतये। कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावते स्थितम्। सुगन्धिर्निशि सद्वेशो अक्षैर्ज्जागरणं चरेत्”। तथा “निशीथे वरदा लक्ष्मीः कोजागर्त्तीति भाषिणी। तस्मै वित्तं प्रयच्छामि अक्षैः क्रीड़ां करोति यः। नारिकेलैश्चिपिटकैः पितन् देवान् समर्च्चयेत्। बन्धूंश्च प्रीणयेत्तेन स्वयं तदशनोभवेत्”। अत्र निशीति निशीथ इति चाभिधानात् रात्रिकृत्यमिदम्। ततश्च “प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा। प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वयमिष्यते” इति वत्सवचनात् यद्दिने प्रदोषनिशीथोभयव्यापिनी पौर्णमासी तद्दिने कोजागरकृत्यम् उभयव्याप्त्यनुरोधात्। यदा तु पूर्व्वदिने निशीथव्याप्तिः परदिने प्रदोषव्याप्तिस्तदा परेद्युस्तत्कृत्यम्। प्रधानपूजाकालव्याप्त्यनुरोधात्। यदा तु पूर्व्वदिने निशीथव्याप्तिः परदिने न प्रदोषव्याप्तिस्तदा सुतरां पूर्व्वेद्युस्तत्कृत्यम् “अहःसु तिथयः पुण्याः कर्म्मानुष्ठानतोदिवा। नक्तादिव्रतयोगे तु रात्रियोगोविशिष्यते” इति वचनात्”। “नारिकेलोदकं पीत्वा अक्षैर्जागरणं निशि। तस्मै वित्तं प्रयच्छामि कोजागर्त्ति महीतले” कृत्यकौमुदी। तत्राक्षक्रीड़ा कार्य्या। अक्षक्रीडाविशेषश्च चतुरङ्गशब्दे वक्ष्यते। “या तु कोजागरे याते” ति॰ त॰ राजमार्त्तण्डः।

**कोट** पु॰ कुट—घञ्। १कौटिल्ये। आधारे घञ्। दुर्गे (गड) मेदि॰। ततः चतुरर्थ्याम् अश्मा॰ र कोटर कोटसन्निकृष्टदेशादौ त्रि॰ [ विवृतिः स्त्रियां ङीप्।

**कोटक** पुंस्त्री कुट—ण्वुल् जातिभेदे ब्रह्मवै॰ जातिशब्दे

**कोटचक्र** न॰ कोटस्य दुर्गस्य शुभाशुभज्ञापनार्थे अष्टविध चक्रभेदे चक्रशब्दे विवृतिः। “कोटचक्रमष्टविधं चतुरस्रादिभेदतः “इति नरपतिजयचर्य्या

**कोटर** पुंन॰ कोटं कौटिल्यं राति रा-क। वृक्षस्कन्धादिस्थगह्वरे। “चलत्फणाधरमिव कोटरं तरोः” माघः। “महाहङ्कारविटपइन्द्रियाङ्कुरकोटरः” भा॰ आश्व॰ ४७अ॰ र दुर्गसन्निकृष्टदेशादौ त्रि॰ व्युत्पत्तिः कोटशब्दे दृश्या। कोटरं दुर्गसन्निकृष्टं वनम् तथाभूतवृक्षाणां वा वनम् कोटरा॰ पूर्व्वपददीर्घः णत्वञ्च। कोटरावणम् वनभेदे न॰।

**कोटरादि** पु॰ वनशब्दे परे पूर्व्वस्वरदीर्घनिमित्ते पा॰ग॰ सूत्रोक्ते शब्दगणे स च गणः। “कोटर मिश्रक सिध्रक पुरग शारिक”।

**कोटरी** स्त्री कोटं कौटिल्यं रीणाति री—वधे गतौ च क्विप् १नग्नायां स्त्रियां २दुर्गायाञ्च अमरटीका।

**कोटवी** स्त्री कोटं कौटिल्यं दुर्गं वा वाति वा—गतौ हिंसने क गौरा॰ङीष्। १दुर्गायाम् धरणिः। २नग्नायां स्त्रियां अमरटीका।

**कोटि** स्त्री कुट—इञ्। १धनुषोऽग्रभागे अमरः २वस्तुमात्रस्याग्रभागे, ३अस्त्राणां कोणे ४उत्कर्षे ५शतलक्षमितसंख्यायां, ६तत्संख्येये च मेदि॰। ७पृक्कायाम् (पिड़िङ्गशाक) अमरः ८संशयस्यालम्बने,वादे निर्णयार्थं कृते ९पूर्व्वपक्षे, वा ङीप् कोटीत्यप्यत्र। “धनुष्कोट्यातुदन् कर्णेन वीरम्” भा॰ आ॰ १अ॰। “तेन

मूर्ध्निकिंहितैककोटि तत्" (कार्मुकम्) रघुः। "आवर्जितजटामौलिविलम्बिशशिकोटयः" कुमा० "च्छिन्नदीर्घितक्रोटिमेनम्" माघः "विप्रतिपत्तिवाक्यजन्यकोट्युपस्थितः" संशयहेतुकौ मदाघरः। "इष्टाद्वाहोर्यः स्यात्तत्स्पर्द्धिन्यां दिशीतरो बाहुः। व्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता तज्ज्ञैः" १०लीलावत्युक्ते त्रिकोणादिक्षेत्रावयवरेखाभेदे स्त्री "तत्रायते तद्भुजकोटि जातः" लीला० "त्रिभिर्भैः पदं तानि चत्वारि चक्रे क्रमात् स्यादयुग्मयुग्मसंज्ञा च तेषाम्। अयुग्मे पदे यातम् एष्यन्तु युग्मे भुजोबाहुहीनं त्रिभं कोटिरुक्ता" सि०शि० उक्ते राशिचक्रस्य ११तृतीयांशे १२तत्रोक्ते छायानिरूपणार्थं कल्प्यमानक्षेत्रावयवरेखाभेदे यथा "दिक्स्थलसम्पातगतस्य शङ्कोश्छायायापूर्व्वापरस्थलमध्यम्। दोर्दोःप्रभावर्गवियोगमूलं कोटिर्नरात् प्रागपरा ततः स्यात्" सि० शि०" "दिक्संपातस्यस्य शङ्कोर्भायं यत्र पतति तस्य पूर्व्वापरस्थलस्य च यदन्तरं स दोरित्युच्यते दोश्छायपयोर्वर्गान्तरपदं पूर्व्वापरा कोटिरिति" प्रमि० १३चन्द्रस्य शृङ्गोन्नतिज्ञानार्थं तत्रैव दर्शिते क्षेत्रावयवभेदे च यथा "योऽधो नरो दिनकृतः स विधोरुदयशङ्कुरन्वितो मम मता खलु सैव कोटिः" सि० शि०

"यो रवेरधःशङ्कुरसौ विधोरूर्ध्वशङ्कुना युतः सैव कोटिर्मम मता अत्रोपपत्तिः। इन्द्वर्कयोर्याम्योत्तरभावेन यदन्तरं स भुजः। ऊर्द्ध्वाधरभावेन यदन्तरं सा कोटिः। सा चैवं भवति। उदयेऽस्ते वा यदि शृङ्गोन्नतिस्तदा रविशङ्कोरभावाच्छशिशङ्कुरेव कोटिः। यदा निशि रवेरधः शङ्कुस्तदा स शङ्कुर्विधोरुदयशङ्कुना युतो यावांस्तावत् तयोर्यष्ट्योरुद्द्राश्यमन्तरं सैव कोटिरुचिता। यतो द्रष्टा पुरुषेणात्मनोऽवस्थानवशेन शशिनः शृङ्गमुन्नतमवलोक्यम्। अतः स्वावस्थानसमस्थलादूर्द्ध्वरूपिण्या कोट्या भवितव्यम्। भुजकोटिकर्णकृतं त्र्यस्रं दृष्टेरुन्नतमादर्शवत् संस्थं यथा भवति तथा कल्प्यम्" प्रमि० तत्रैवोक्ते १४उदयास्तसूत्रकल्पितक्षेत्रावयवभेदे यथा "सूत्राद्विषयात् तलं यमं श याम्यां गतं हि द्युनिशं कुजोर्द्ध्वे। अथच सौम्यां निशि सौम्यमस्मात् सद्युक्तिमुक्तं स्फुतलं निरुक्तम्। सौम्यापकायाद् तलं हि साम्यं याम्यापकायात् पुनरेव याम्यम्। तदन्तरैक्यं समदृक्स्वेटमध्यांशजीवां भुवि बाहुमाहुः। दृग्ज्यां श्रुतिं चाथ तयोश्च कोटिं पूर्वापरां वर्गवियोगमूलम्" सि०शि०

"क्षितिजस्थाहोरात्रवृत्तसंपातयोर्बद्धं सूत्रमुदयास्तसूत्रम्। यः स्वस्थानाल्लम्बः शङ्कुः। तस्य तलमुदयास्तसूत्राद्दक्षिणतो भवति। यतः क्षितिजादुपरि दक्षिणतोऽहोरात्रवृत्तं गतम्। अथस्तूत्तरतो गतम्। अतो निशुत्तरं स्फुतलम्। अथ भुज उच्यते। उत्तरगोलेऽग्रोत्तरा स्फुतलं याम्यमतस्तेनोनाग्रा बाहुर्भवति। बाहुर्नाम शङ्कुप्राच्यपरसूत्रयोरन्तरम्। यदाऽग्रा शङ्कुतलादूना तदा तयोरन्तरं दक्षिणं शङ्कुतलं बाहुः स्यात्। एवं समवृत्तप्रवेशादुपरि दक्षिणगोले तथा याम्या शङ्कुतलं च याम्यं तयोर्योगे कृते बाहुः स्यात्। रविसमवृत्तयोरन्तरांशानां ज्या बाहुः। तत्र या दृग्ज्या स कर्णः। तयोर्वर्गान्तरपदं पूर्व्वापरा कोटिः" प्रमि०

"शतं शतसहस्राणां कोटिमाहुर्मनीषिणः" रामा०। तत्र संख्यायाम् "योनिकोटिसहस्रेषु सृतिं चास्यान्तरात्मनः" मनुः। "कोटिकोटिगुणितं दिवि दायि" नैष०। संख्यान्विते "कोटीश्चतस्रो दश चाहरेति" रघुः। ततो वारे कृत्वसुच्। कोटिकृत्वस् कोटिवारार्थे अव्य०। कारकार्थवृत्तेस्ततः वीप्सायां शस्। कोटिशस् वीप्सान्वितकारकवृत्ते तदर्थे अव्य० कोटिशोददाति। [गोपकोटि जटाधरः]

**कोटिक** पु० कोट्या बहुधा कायति प्रकाशते कै—क। इन्द्रगोपकीटे जटाधरः।

**कोटिकास्य** पु० कोटिकस्येवास्यमस्य। शिविवंश्ये सुरथपुत्रे नृपभेदे "अहन्तु राज्ञः सुरथस्य पुत्रः यं कोटिकास्येति विदुर्मनुष्याः" भा० व० २६४अ०। द्रौपदीं प्रति तदुक्तिः

**कोटिजित्** पु० कोटिं कविकोटिं, पक्षे कोटिमितं द्रव्यं वा जितवान् जि-भूते क्विप्। रघुवंशादिकाव्यकारे कालिदासे त्रिका०।

**कोटिज्या** स्त्री सू० सि० उक्ते यह स्फुटतासाधनाङ्गे चापावयवभेदे तदानयनं यथा

"गताद्भुजज्या विषमे गम्यात् कोटिः पदे भवेत्। युग्मे तु गम्याद्बाहुज्या कोटिज्या तु गताद्भवेत्" सू०सि०। "विषमे पदे गतात् ग्रहस्य पदादितो यद्गतं राशित्रिभामात्मकं भाग ज्ञातं तस्मादित्यर्थः भुजज्या स्यात्। गम्याद्गतोनं त्रिभं पश्चात् पदान्ताबधिकमेष्यम्। तस्मात् कोटिः कोटिज्या स्यात्। युग्मे समे तुकारात् पदे एष्याद्भुजज्या, गतात् कोटिज्या स्यात् तुकारो विशेषद्योतकः। एकस्मादेवोक्तरीत्या द्वयं साधितमित्यर्थः। अत्रोपपत्तिः विषमपदे पश्चोर्ध्वाधररेखान्तरानुसारेण फलसुत्पद्यते ततो दृक्सानतकादन्तरमभंज्या भूजरूपा तदङ्कचापं तदन्तरांशाः

वृत्तभागस्था गतः। ऊर्ध्वाधररेखामत्यग्रमस्थतिर्यग्-रेखाग्रहयोरन्तरसूत्रमर्धज्याग्रदानः कोटिज्या भुजोत्क्र-मज्योनव्यासार्धरेखाग्रकोटितुल्यत्वात्। तदर्द्धचापं भु-जांशोनं त्रिभमिति गम्यात् कोटिज्या। समपदे ग्रहोर्ध्वा-धररेखान्तर तिर्यगर्धज्या भुजज्येति तदर्धं चापं भ्वाद्यं तिर्यग्रेखाग्रहान्तरं तिर्यगर्धज्याकोटिज्यात्वात् कोटि-स्वज्ञापं पदगतमित्युपपन्नं यतादित्यादि" रङ्गनाथः

**कोटितीर्थ** न० कोटिः तीर्थान्यत्र। १अवन्तिदेशस्थमहाकालस-न्निधिस्थे तीर्थभेदे। "महाकालं ततोऽगच्छेत् नियतो नियताशनः। कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत्" भा०व० ८२अ०। २पञ्चनदान्तर्गते तीर्थभेदे च। "ततः पञ्चनदं गत्वा नियतो नियताशनः। कोटितीर्थमुप-स्पृश्य हयमेधफलं लभेत्" भा०८३अ०

**कोटिपात्र** न० कोटिरग्रं पात्रे जलाशयेऽस्य। केनिपातके हेमच० तदग्रस्य जले पातनेन नौचालनास्तस्य तथा-त्वम्। शब्दकल्पद्रुमे पुंस्त्वोक्तिः प्रामादिकी "केनिपातः कोटिपात्रमरित्रं डोडुपः प्लवः" इति हेमचन्द्रे क्लीबत्व-निर्देशात्।

**कोटिफल** न०६त०। त्रिकोणादिक्षेत्रावयवस्य कोटेः फले। सि०शि०तदायनप्रकारोदर्शितोयथा। "खेनाहते परिधिना भुजकोटिजीवे भांशैः ३६० हृते च भुजकोटिफलाह्वये-स्तः" मू०। "अत्रोपपत्तिः। यावत् केन्द्रप्रतिमण्डले ताव-देव नीचोच्चवृत्ते स्यात्। अतः प्रतिमण्डलदोःकोटिज्ये अनुपातेन नीचोच्चवृत्ते परिणाम्येते यदिभांशवृत्ते ३६०एते दोःकोटिज्ये तदा परिध्यंशवृत्ते किमिति। अथवा त्रि-ज्याव्यासार्धे एते दोःकोटिज्ये तदान्त्यफलज्याव्यासार्धे किमिति। फलं तुल्यमेव" प्रमि०।

एतच्च सू०सि० रङ्गनाथाभ्यां यथा

"तद्गुणे भुजकोटिज्ये भगणांशविभाजिते। तद्भुजज्याफल-धनुर्मान्दं लिप्तादिकं फलम्" मू० "भुजकोटिजे मन्द-शीघ्रान्यतरसम्बन्धेन केन्द्रभुजकोटिज्ये तद्गुणे स्वीयस्फु-टपरिधिना गुणिते भगणांशैः षष्ट्यधिकशतत्रयेण भक्ते भुजफलकोटिफले भवतः। मन्दकेन्द्रभुजज्योत्पन्नफलस्य धनुःफलादिकं मान्दं फलं भवति। अत्रोपपत्तिः। कक्षास्थोच्चस्थानस्थितदेवतया स्वहस्तस्थितसूत्रप्रोतं ग्रह-बिम्बं स्वाभिमुखाकर्षणेन कक्षास्थमध्यग्रहस्थानात् पर-मफलज्यान्तरितस्थाने आकर्षणवशात् मार्गरूपतिर्यकर्ष-मार्गे चाल्यते। तेन मध्यग्रहस्थानीयकक्षाप्रदेशाद्दन्यफ-लज्याव्यासार्धेनोत्पन्नवृत्ते भगणांशाङ्किते भूमध्यग्रहस्-ग्रे खामकतद्वृत्तप्रदेशग्रहयोर्व्यस्थानात् केन्द्रान्तरेण कक्षावि-परीतमार्गे तद्वृत्तपरिधौ ग्रहो भवति। तस्मिन्नुनीचोच्च-वृत्ते ऊर्ध्वरेखाग्रहयोस्तिर्यगन्तरसूत्रमर्धज्याकारं पर-मफलज्यानुरूद्धं भुजफलम्। तस्मिन्नेव वृत्ते व्यासमित-तिर्यग्रेखाग्रहयोरन्तरमूर्ध्वाधरमर्धज्याकारं परमफल-ज्यानुरूद्धं कोटिफलम्। एते तत्र कक्षास्थभुजज्याको-टिज्यावद्भुजकोटिरूपे इति। कक्षास्थभगणांशप्रमाणेनैते भुजज्याकोटिज्यारूपे भुजकोटी तदा कक्षास्थमानप्रमा-णानुरुद्धप्रागुक्तनीचोच्चपरिधिभागैः केइत्यनुपातेन फल-वृत्तस्थत्वाद्भुजफलकोटिफले" रङ्गनाथः

**कोटिर** पु० कोटिं राति रा-क। १इन्द्रे, २नकुले, ३इन्द्रगो-पकीटे च मेदि०

**कोटि(टी)वर्षा** स्त्री० कोटिभिरग्रं वर्षति वृषु ड्व-अच्। (पिड़िङ्ग) १शाकभेदे। अमरः दीर्घमध्यत्वदर्शे शब्दच० २वाणासुरपुरे न० शब्दर०

**कोटि(टी)श** पु० कोट्या अग्रेण शृणाति शो-क। १लोष्टभेद-नेऽस्त्र (मइ)(मुगर)इति वा ख्याते पदार्थे रत्नको०।सुम-मध्यः वाङ्कितयोः २नागभेदे पु०"कोटिशोमानसः पूर्णः शलः पालोहलीमकः" भा० आ०५७अ० कारुकिंयोक्तौ

**कोटी** स्त्री० कट-इन् ङीष्। (पिड़िङ्ग)१शाकभेदे शब्दरत्ना० २कोटिशब्दार्थे च "प्रतोदैश्चापि कोटीभिर्ङ्कुशैः सादु-यान्वितः" भा० द्रो० ८६अ०

**कोटीर** पु० कोटिमीरयति ईर-अण्।१किरीटे, हेमच० २ज-टायां त्रिका० "कोटीरबन्धनधनुर्गुणयोगपट्टेति" नैष०

**कोट्ट** पु० कुट्ट-घञ् नि० गुणः। दुर्गे (गड़) अमरः २पुरभेदे (कोटकाङ्गड़ा) ३राजधानीभेदे च न० हेमच०

**कोट्टवी** स्त्री० कोट्टं वाति वा-क गौरा० ङीष्। १नग्नायां मुक्तकेश्यां स्त्रियाम् २दुर्गायाश्च जटा० ३वाणासुरमातरि च तत्र दुर्गायाम् हरिवं० १८५अ०

"कुमारस्यवधार्थाय बिभ्रती सुततं तदा। दिव्यात्दैव-वचनात् प्रा.तदद्य कोट्टवी। लम्बा नाम महाभागा भागा देव्यास्तथाष्टमः। विवस्त्रा कनकश्लिष्टा स. च लम्बा स्थितान्तरे। अथान्तरा कुमारस्य देवीं दृष्ट्वा म-हाभुजः। पराङ्मुखस्ततो वाक्यमुवाच मधुसूदनः। भगवानुवाच अपगच्छाग्र गच्छ त्वं धिक् त्वामिति च सोऽ-ब्रवीत्। किमेवं कुरुषे विघ्नं निश्चितस्य वधस्यति। वैश-म्पायन उवाच। श्रुत्वैव वचनं तस्य कोट्टवी तु तदा वि-

थाः। नैव यावः समाधत्ते कुमारपरिरक्षणात्”। ९८अ० वाणमार्त्तरि भाग० १०।६३।२१ “तस्यात्मा कोट्टवी नाम नग्ना मुक्तशिरोरुहा। पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया” उभयत्र नग्नत्वस्य कोटवर्त्तिविशेषणं तत्काले तथाभूतत्वख्यापनाय अन्नत्वयोगदा नग्नत्वमुक्तकेशयुक्तत्वात्मकत्वम्

**कोट्टवीपुर** न० ६त०। वाणासुरपुरे तस्यास्तत्र प्रधानत्वात् तयैव वाणासुरस्य रक्षणात् तत्पुरस्य तन्नामत्वम्।

**कोट्टार** पु० कुट्ट—आरक् पृषो०। १कूपे २नागरे ३पुष्करिण्याः घाटके च। (घाट) मेदि०

**कोठ** पु० कुठि—अच् नि० नलोपः। मण्डलाकारे कुष्ठरोगे। तल्लक्षणमुक्तं निदाने “असम्यग्वमनो दीर्णपित्तश्लेष्मान्ननिग्रहैः मण्डलानि” सकण्डूनि रागवन्ति बहूनि च। उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयते” इति माधवकरः। रक्षितेन चान्यथोक्तम् “वरटीदष्टनिकाशः कण्डूमान् लोहितोऽसकृत्कफपित्तात्। क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः” “उद्वर्त्तनन्तु विज्ञेयं कण्डूकोठानिलापहम्” “कण्डूकोठ निलस्तम्भमलरोगापहश्च सः” “उद्वर्त्तनं निर्वापकं कण्डूकोठविनाशनम्” इति च सुश्रुतः

**कोठर** पु० कुठि—अर पृषो०। अङ्कोटवृक्षे राजनि०

**कोठरपुष्पी** स्त्री कोठरस्य पुष्पमिव पुष्पमस्या ङीप्। वृद्धदारके राजनि०

**कोण** पु० कुण—करणे घञ् कर्त्तरि अच् वा। येन चतुरस्रतितया काष्ठेन वीणादयोवाद्यन्ते तस्मिन् वादनसाधने १काष्ठभेदे २वाद्ये, अमरः। ३खड्गादीनामेकदेशे, ४अस्त्राग्रभागे, ५लगुडे, मेदि० ६मङ्गलग्रहे हेम० ७शनिग्रहे शब्द०। द्वयोर्दिशोर्मध्यभागे ८विदिशि राजनि० “कनककोणैरभिहन्यमानः” काद० “भेरीमृदङ्गवीणानां कोणसंघट्टितः पुनः” रामा० “खड्गहस्ताङ्कुशे तेन चत्वारः स्वर्णपूरिताः। कुम्भाश्चतुर्षु कोणेषु निगूढाः स्थापिता भुवि” कथास०। “सुवर्णकोणाभिहतः प्राणदद्याम्दुन्दुभिः” रामा० “सिन्दूरितकोणवहकोणवदारयुग्मम्” नन्दशा०। समकोणं विषमकोणम् क्षेत्रम्

**कोणकुण** पु० कोणे गृहस्यैकदेशे कुणति शब्दति कुण—क। मत्कुणे (उकुण) हेमच०

**कोणाघात** पु० “ढक्काशतसहस्राणि भेरीशतशतानि च। एकदा यत्र हन्यन्ते कोणाघातः स उच्यते” इति भरतोक्ते वाद्यसंघाते ६त०। काष्ठेन वीणादेस्ताडने च। “कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः” वेणी० [ अमरः

**कोणि** त्रि० कुण—इन्। आदानशक्तिहीनहस्तयुक्ते (कोंडा)

**कोथ** पु० कुथ—पातित्ये घञ्। १नेत्ररोगभेदे (कँचो)। कर्मणि अच्। २मथिते त्रि० मेदि० “मूढेन मांसलुब्धेन यदस्थ्यल्पमघोन सहाभ्यवहृतं यदावगादपुरीषोन्मिश्रमपानेनाधः प्रेरितमसम्यगागतं गुदं छिनत्ति तत्र क्षतनिमित्तः कोथ उपजायते” इति सुश्रुतोक्ते गुह्यक्षयकारके ३भगन्दररोगोपद्रवभेदे। भावे घञ्। ४गलने “तस्मिन् क्षते पूयरुधिरावकोथे मांसकोथे भूमाविव जलसिक्तायां क्रमयो जायन्ते” सुश्रुतः “तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः” सुश्रु० “कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम्” (जलम्) सुश्रु० “शीघ्रस्तकोथकृता मन्दा, मध्याः काष्ठे इष्टकोद्भवाः” सुश्रु०

**कोदण्ड** न० कु—शब्दे विच् कोःशब्दितो दण्डोऽस्य। १धनुषि, “विस्फुर्जत्यस्य कोदण्डः” भाग० ३।२१।५१। तत्स्वरूपत्वात् २भ्रूलतायां, ३देशभेदे च। अमरः ४धनूराशौ च।

**कोदार** पु० ईषद्दारः कोःकादेशः। धान्यभेदे “न ग्राह्यं सर्वथा माषवरकोदारकोद्रवम्” कात्या० १,६,८, स्तन भाष्ये कर्कधृतवाक्यम्

**कोद्रव** पु० कु—विच् कोः सन् द्रवति द्रु—अच् कर्म०। (कोदो) धान्यभेदे अमरः “कोद्रवोवातलो ग्राही हिमः पित्तकफापहः” भावप्र० तद्गुणाउक्ताः। “अयज्ञिया वै कोद्रवाः” श्रुतिः। “अतोऽन्यदपि संग्राह्यं वर्ज्यं धान्यजातकम्। न ग्राह्यं सर्वथा माषवरकोदारकोद्रवम्” कात्या०श्रौ० १,६,८,स्तनभा० कर्कधृतवाक्यम्। तस्य वैश्वदेवे अपाहृतता “पचनाग्निं समुज्ज्वाल्य वैश्वदेवं समाचरेत्। निष्पावान् कोद्रवान् माषान् कलायांश्चनकांस्त्यजेत्” काशी० ३५अ०। तस्याग्राह्यता भा० अनु० ४३६३ श्लोके उक्ता यथा “अग्राह्यानि धान्यानि कोद्रवाः पुलकास्तथा”

**कोनालक** पुंस्त्री कोने जलोने अलति अपर्याप्तोति अल—ण्वुल्। संघचारिविष्वे लक्षणपुक्ष्ये जलेतदरे जलचरपक्षिभेदे हंससारसेत्युपक्रमे कोनालकं पठित्वा “प्लवाः संघचारिणः” सुश्रु०। इन् कोनालि अप्यत्र। “कुमावीकोनालिप्रभृतीन् सेवेत” सुश्रु० स्त्रियां ङीप्।

**कोन्वगिर** पु० ब्राह्मणशापेन शूद्रत्वप्राप्ते क्षत्रियभेदे भा० अनु० ३५अ०

"सन्ति चाशीविषसमाः सन्ति मन्दास्तथाऽपरे। विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर!। मेकला द्रविडा लाटाः पौण्ड्राः कोन्वशिरास्तथा। शौण्डिका दरदा दार्व्वाश्चोलाः शवरवर्व्वराः। किराता यवनाश्चैव तास्ताः क्षत्त्रियजातयः। वृषलत्वमनुप्राप्ता ब्राह्मणानाममर्षणात्"।

**कोप** पु॰ कुप—भावे घञ्। १क्रोधे कामानाम्निजे चित्तवृत्तिभेदे अमरः। "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" पा॰ वधाद्यनुकूलश्चित्तवृत्तिभेदः कोपः। अमर्षशब्दे विवृतिः। "पादेन प्रहरन् कोपात्" मनुः। "मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः। द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि। प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना" सा॰ द॰ उक्ते शृङ्गाररसाङ्गे २प्रणयकोपे च

"अपकारिणि चेत् कोपः कोपे कोपः कथं नहि। धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि" नीतिसा॰। "रिपौ बन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः। विवेकिनः कुतः कोपः स्वदेहावयवेष्विवेति" ३धातुवैषम्यकारिदोषाणां विकारभेदे सुश्रु॰ "तत्र एते स्वभावत एव दोषाणां सञ्चयप्रकोपप्रशमप्रतीकारहेतवः" शारीराणां विकाराणामेष वर्गश्चतुर्विधः। चये कोपे शमे चैव हेतुरुक्तश्चिकित्सने" सुश्रु॰ "स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः" सुश्रु॰

**कोपक्रम** न॰ उपक्रम्यते कर्म्मणि घञ् ह्रस॰ उपक्रमान्तत्वात् क्लीवता। कस्य ब्रह्मण उपक्रमे—उपक्रम्यमाणे १ब्रह्मणा आदौ ज्ञात्वा उपक्रम्यमाणायां जगतः सृष्टौ अमरः। कोपक्रमयत्न न॰। ह्रस॰। २कोपस्य क्रमे पु॰

**कोपन** त्रि॰ कुप—ताच्छील्ये युच्। कोपशीले जटाध॰"चण्डस्त्वत्यन्तकोपनः" अमरः। "आसीद्विभावसुर्नाम महर्षिः कोपनो भृशम्" भा॰आ॰२९अ॰। "तपस्वी कोपनो भृशम्" भा॰व॰११०अ॰ "पादानतः कोपनयाऽवधूतः"कुमा॰ २असुरभेदे पु॰"शरभः शलभश्चैव कुपनः कोपनः क्रथः" हरि॰ ४२अ॰ कुप—णिच्—भावे ल्युट्। ३कोपनिष्पादने ४दोषविकारकारकव्यापारभेदे न॰ "स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्" भा॰ आश्व॰ १७अ॰। "यथोक्तैः कोपनैर्दोषाः कुपिताः कोष्ठमागताः" सुश्रु॰ कुप—णिच् कर्त्तरि ल्यु। ५कोपसाधके त्रि॰ "कोपनं कफवातानां दुर्जरं चाधिकं दधि" सुश्रुतः

**कोपनक** पु॰ कोपनः कोपशील इव कायति कै—क। १चोरनामकगन्धद्रव्ये राजनि॰ स्वार्थे क। २कोपने त्रि॰

**कोपनीय** त्रि॰ कुप—कर्म्मणि अनीयर्। दृषविषये "ते च शब्दादयउपस्थिताः परस्परेणाभिहन्यमानास्तदुपाश्रयाभिमादयः स्वरूपेणैव कोपनीया भवन्तीति" सां॰त॰ कौ॰

**कोपयिष्णु** त्रि॰ कुप—णिच् वा॰ इष्णुच्। परस्य कोपकारके "वैरायैव तदा व्यस्त्रं चलियान् कोपयिष्णुभिः भा॰ आ॰ १७६अ॰

**कोपलता** स्त्री कोपहेतुर्लता। कर्णस्फोतलतायां राजनि॰

**कोपिन्** पुंस्त्री॰ अवश्यं कुप्यति णिनि। १जलपारावते २अवश्यकोपशालिनि त्रि॰ राजनि॰ स्त्रियां ङीप्। कोपयति णिजन्तात् णिनि। ३कोपसम्पादके त्रि॰ "सिद्धार्थकः शोणितपित्तकोपी" सुश्रुतः स्त्रियां ङीप्।

**कोमल** न॰ कु—कलच् मुट् च नि॰ गुणः। १जले। २मृदौ, अकठिने, च त्रि॰ मेदि॰ ३चीरिकायां स्त्री॰ टाप् शब्दच॰। ४मनोहरे त्रि॰ शब्दर॰। "निशा च शय्या च शशाङ्ककोमला" नैष॰। शशशाङ्कवत् मृदुला शय्या। शशाङ्केन मनोहरा निशा च इत्यर्थः। "अनघुतः कोमलरत्नराशीन्" माघः।

**कोमलक** त्रि॰ स्वार्थे क। १कोमलशब्दार्थे। संज्ञायां क। २मृणाले शब्दच॰।

**कोमलवल्कलो** स्त्री कोमलं वल्कलं यस्याः। लवलीलतायां (नोयाड़) शब्दचिन्ता॰।

**कोमलासन** न॰ आसनशब्ददर्शितस्वस्तिकचर्म्मनिर्म्मिते आसनभेदे"इदानीं शृणु देवश! रहस्यं कोमलासनम्। योगसिद्धिप्रकाराय सिद्धौ चर्म्मासनं तु तत्" रुद्रया॰।

**कोमासिका** स्त्री ईषदुमेव अतसीदृक्तदव आस्ते आस—ण्वुल् टाप् अतइत्त्वम्। जालिकायाम् (फलेर जालि) हारावली।

**कोम्य** त्रि॰ कम—कर्म्मणि ण्यत् पृषो॰। काम्ये। "अहा नः सन्तु कोम्या" ऋ॰ १।१७१।३। "कोम्या काम्यानि" भा॰

**कोयष्टि** पु॰ कं जलं यष्टिरिवास्य पृषो॰ अत ओत्त्वम्। जलकुक्कुभे पक्षिणि। "प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान्"। मनुः संज्ञायां कन् कोयष्टिक (टिट्टिर), टिट्टिभपक्षिणि "कपोतपारावतभृङ्गराजपरभृतेत्यादि प्रतुदपक्षिगणे कोयष्टिकस्योक्ता "कषाया मधुराश्चाः फलाहाराः मरुत्कराः। पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्चसः" सुश्रुते तन्मांसगुणा उक्ताः।

**कोर** पु० कुल—संस्थाने अच् लस्य रः । १संस्थानवति कोरका कारे सुश्रुतोक्ते देहस्थसन्धिभेदे यथा "त एते सन्धयोऽष्टविधाः । कोरोदूखलसामुद्गप्रतरतुन्नसेवनीवायसतुण्डमण्डलशङ्खावर्त्ताः । तेषामङ्गुलिमणिबन्धगुल्फजानुकूर्परेषु कोराः सन्धयः" । "नामभिरेवाकृतयः व्याख्याताः" । कुल—घञ् । २संस्थाने पु०

**कोरक** पुंन० कुल-संस्थाने ण्वुल् लस्य रः । कलिकायाम् । "कलिका कोरकः पुमानित्यमरोक्तिः प्रायिकाभिप्राया"कोरकं कुड्मलेऽपि स्यात् कक्कोलकमृणालयोः" विश्वोक्तेः तेन "समुपहरन् विचकार कोरकाणि" माघे क्लीव प्रयोगः "कोरकोऽस्त्री कुड्मले स्यात्" मेदि० । २कक्कोले ३मृणाले च विश्वः । ४चोरनामगन्धद्रव्ये जटाध० । ततः तारका० संजातेऽर्थे इतच् । कोरकित जातमुकुले त्रि०

**कोरङ्गी** स्त्री० कुर—अङ्गच् गौरा० ङीष् । १सूक्ष्मैलायाम् (छोटएलाइच्) अमरः २पिप्पल्यां राजनि०

**कोरदूष** पु० कोरं संस्थानं दूषयति दूषि ण्यन्तात् अण् उप० स० । (कोँदो) ख्याते व्रीहिभेदे अमरः । "निशापष्टिक यवगोधूमकोरदूषेत्यादि" सुश्रु० "श्यामाककोरदूषान्नं तक्रं पिण्याकसक्तुभिः" सुश्रु० । ण्वुल् । कोरदूषकोऽप्यत्रार्थे । "देशोभविता लोको युगान्ते पर्य्युपस्थिते । वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकः" भा०व०१९०अ०

**कोल** पु० कुल—संस्थाने अच् । १शूकरे २प्लवे(भेला) अमरः ३क्रोडे ४शनिग्रहे ५चित्रके (चिता) ६अङ्कपाली ७आलिङ्गने मेदि०। ८देशभेदे पु०ब०व० शब्दरत्ना०६।अस्त्रभेदे पु० घर० "नेटात् धीवरकन्याजाते १०जातिभेदे ब्रह्मवै० पु० । ११न्टपभेदे "कल्लामादयाक्रीडश्चत्वारस्तस्य चात्मजाः । पाण्ड्यश्च केरलश्चैव कोलश्चोलश्च पार्थिवः । तेषां जनपदाःख्याताः पाण्ड्याः कोलाः सकेरलाः"हरिवं०३२अ०। १२मरिचे न० राजनि० १३चव्ये(चइ)वैद्य० । १४तोलक परिमाणे वैद्यकम् । १५कर्कन्धूवृक्षे स्त्री० गौरा० ङीष् । तस्याः फलम् अण् तस्य लुक् ।१६बदरीफले न०। कर्कन्धूशब्दे विवृतिः "बदरीसदृशाकारोवृक्षः सूक्ष्मफलोभवेत् । अटव्यामेव सा घोण्टा कोलबोण्टेति योच्यते" सूभूतिः "हस्तिकोलिर्गोपघोण्टा घोण्टा च बदरीच्छदा। शृगालकोलिः कर्कन्धूः" रत्नकोषः "आद्यकोलतुलितप्रकाशनैः" "यः कोलतां बल्लवताञ्च बिभ्रत्"माघः । कोलवृक्षश्च सुश्रुते अम्लवर्गे उक्तः । तच्च वाक्यं ३३३पृ० दृश्यम्

**कोलक** पु० कुल—ण्वुल् । १अङ्कोठवृक्षे, राजनि० २अङ्कवारहृक्षे जटाधरः (कांकला)च ३गन्धद्रव्यभेदे, ४मरिचे, ५कक्कोले च न० अमरः ।

**कोलकन्द** पु० कोलइव कन्दोऽस्य । महाकन्दभेदे राजनि० "कोलकन्दः कटूष्णश्च क्रमिशोथविनाशनः । वसिच्छर्दि प्रशमनः विषदोषानिलापहः" राजनि०

**कोलकर्कटिका** स्त्री० कोलइव कर्कटिका । मधुखर्ज्जूरिकायां राजनि०

**कोलघोण्टा** स्त्री । बदरीभेदे सुभूतिः । [वृक्षे अमरः ।

**कोलदल** न० कोलं बदरीफलमिव दलमस्य । नखीनामगन्ध-

**कोलगिरि** पु० दक्षिणदिक्स्थे पर्वतभेदे "कृतस्नं कोलगिरिञ्चैव सुरभीपट्टनं तथा" भा० स० ३०अ० सहदेवदक्षिणादिग्विजये । कोलाचलादयोऽप्यत्र । कोलाचलमल्लिनाथेति तस्य विशेषणं तत्पर्वतस्थितत्वात् [वृक्षे हारा०

**कोलनासिका** स्त्री० कोलस्य शूकरस्य नासिकेव । रङ्किणी-

**कोलपुच्छ** पु० कोलस्य शूकरस्येव पुच्छोऽस्य । कङ्कपक्षिणि हारा० । [ राजनि०

**कोलमूल** न० कोलं बदरीफलमिव मूलमस्य । पिप्पलीमूले

**कोलम्बक** पु० कुल—अम्बच् स्वार्थे कन् । तन्त्रीभिन्ने अलाबूप्रभृतिसमुदाये वीणायाः अवयवे भरतः

**कोलवल्ली** स्त्री० कोलोवराह इव वल्ली तल्लोमतुल्यसूक्ष्माङ्गवत्त्वात् । गजपिप्पल्याम् राजनि० । २शूकरपादिकायां राजनि०

**कोलशिम्बि** स्त्री कोलपादाकारा शिम्बिरस्याः । (आलकुशीति) ख्यातायां शूकरपादिकायां लतायाम् । वा ङीप् । "कोलशिम्बी समीरघ्नी गुर्व्युष्णा कफवातहृत् । शुक्राग्निमान्द्यकृद्बल्या रुचिकृत् बद्धविड् गुरुः" इति भावप्र०

**कोला** स्त्री कुल—ज्वला० ण टाप् ।१पिप्पल्याम्,२चव्ये(चइ) मेदि०३कोलिवृक्षे शब्दरत्ना० । ४कोलापुरे च

**कोलाञ्च** पु० ब० व० । देशभेदे शब्दरत्ना०

**कोलापुर** न० दक्षिणदेशप्रसिद्धे लक्ष्मीदेव्याः स्थाने पुरभेदे

**कोलाविध्वंसिन्** त्रि०कोलां पुरभेदे विध्वंसितं वस्तुं शीलमस्य विशब्देन धातोरन्यार्थपरत्वम् । पर्वतवासिनि म्लेच्छभेदे, "एवं पालयतस्तस्य म्लेच्छाः पर्वतवासिनः । कोलाविध्वंसिनः प्राप्ताः" इति देवीभागवतम् । "कोलाविध्वंसिनस्तथेति"देवीमाहा०। कोलाशब्दः कोलाहलवाचकस्तथा च कोलाहलेनैव राज्यविध्वंसं ये कुर्वन्ति । २तेषु च ।

**कोलाहल** पु० कुल—घञ् तमाहलति अच् । बहुविधे दूर गामिन्यव्यक्ते शब्दे अमरः "शौघ्रं भेरीनिनादेन स्फुटकोलाहलेन वै" रामा०

कोलि स्त्री कुल–इन्। वदर्य्याम् पक्षे वा ङीप् अमरः

कोलिसर्पः पु० सगरेण म्लेच्छतां प्रापिते क्षत्रियभेदे। उदा० केरलशब्दे हरिवं० वाक्यसत्त्वम् "कोलिसर्पामाहिषका-स्तास्ताः क्षत्रियजातयः। वृषलत्वं परिगता ब्राह्मणाना-मदर्शनात्" भा०आनु०६६अ० [राजा अण् कौलूत तन्नृपे

को(कौ)लूत पु० कुलूतशब्दार्थे हे० स० पाठान्तरम्। तत्र

कोल्या स्त्री कोलमर्हति यत्। पिप्पल्यां रत्नमा०

कोल्ल पु० भारतवर्षस्थे पर्वतभेदे "भारतेऽस्मिन् वर्षे सरि-च्छैलाः सन्ति बहवः" इत्युपक्रमे "ऋषभः कूटकः कोल्लः सह्यगिरिः" इत्यादि भाग० ५।१९।१० उक्तम्। स च गिरिः द०सं०कूर्म्मविभागे "अथ दक्षिणेन लङ्का" इत्युक्रमे "कर्म्मोदकमहाटविचित्रकूटनासिक्यकोल्लगिरिचोलाः" इति दर्शितस्थानुक्तः। कोल्लगिर्य्यादयोऽप्यत्र। तत्र भवः तस्य राजा वा बा० ढक्। कौल्लगिरेय तत्रभवे तन्नृपे च। "अर्च्चितः प्रययौ भूयो दक्षिणं सलिलार्णवम्। तत्रापि द्राविडैरान्ध्रै रौद्रैर्माहिषकैरपि। तथा कौल्लगिरेयैश्च युद्धमासीत् किरीटिनः" आ० आश्व० ८३अ०।

कोविद पु० कुङ् शब्दे–विच् कोर्वेदस्तं वेत्ति विद–क। १पण्डिते २विदुषि अमरः "समीक्ष्यकारिणं प्राज्ञं धर्म्म-कामार्थकोविदम्" मनुः। "आत्मनैव गुणदोषकोविदः"। "श्रौतमार्गसुखगानकोविदेति च" माघः।

कोविदार पु० कुं भूमिं विदृणाति–वि+दृ–अण् पृषो०। १रक्तकाञ्चनारे (रक्तकाञ्चन)। अमरः। "कोविदार-कलिकाऽतिकोमला तक्रसिद्धतिलतैलपाचिता। हिङ्गु-वासकसुवासवासिता वेसवारलुलिताऽतिलोभदा" पाक-शास्त्रम्। काञ्चनारशब्दे गुणाद्युक्तम्। "कशेरु कोवि-दारश्च तालकन्दस्तथा विषम्"। श्राद्धदेयकथने वायुपु०। "श्वेतकाञ्चनसदृशः कोविदारः" इति श्राद्धविवेकः। २पा-रिजाते च। हरिवं० १२६अ० तद्व्युत्पत्तिर्दर्शिता यथा "कोऽप्ययं दारुरित्याहुरजानन्तोयतोजनाः। कोवि-दार इति ख्यातस्तत्त्वतः स महातरुः। मन्दारः कोवि-दारश्च पारिजातस्य नामभिः। स वृक्षो ज्ञायते दिव्यो यस्यैतत् कुसुमोत्तमम्" पारिजातहरणे। "पारि-जातान् कोविदारान् देवदारुद्रुमांस्तथा" भा०व० १५५अ०। अत्र पारिजाताद्भिन्नत्वेन निर्द्देशात् रक्तकाञ्चनपरता स्वार्थे क। रक्तकाञ्चनवृक्षे "अशनैः पिचुमर्द्दैश्च मन्दारैः कोविदारकैः" काशी०।

कोश(ष) पुंन० अश्नादि कुश(ष)–आधारादौ घञ् कर्त्तरि अच् वा। १अण्डे शब्दर०। कुड्मलतयोः २हेमरूप्ययोः अमरः। ३कुट्मले मुकुले ४खड्गपिधाने। (खाप) ५समूहे ६दिव्यभेदे अमरः। मूर्द्धन्यमध्यस्तु अभिधानरूपे ७शब्दपर्य्यायज्ञापकग्रन्थे मेदि० ८धना-द्यागारे ९पानपात्रे चषके १०शिम्बायां हेमच०। पनसादिमध्यस्थे (कोया) ख्याते ११पदार्थे धर०। शब्दान्तरपूर्व्वस्तु गोलकाकारे १२पदार्थे यथा "नेत्र-कोषः" क्षीरस्वामी। तत्र खड्गपिधाने "वैयाघ्रकोषे निहितो हेमचित्रत्सरुर्म्महान्"। "पृथुवर्षिणकोषस्य" तस्य हेममये कोषे सुतप्ते पावकप्रभे" भा०वि० ४२अ०। क्वचित् प्रयोगः। धनागारे "निःशेषविश्राणितकोषजातम्" मुकुले "मार्गाचणोद्द यत्र विभिन्नकोशैः" "भिन्नाद्रिगैरिक-तटा इव दन्तकोशाः" रघुः १३तन्मयाद्यावरणे कोषवदाव-रकत्वात् "शरीरकोशाद्यत्तस्याः पार्वत्याः निःसृताम्बिका। कौशिकीति समाख्याता ततोलोकेषु गीयते" देवीमा०। १४पिधानमात्रे "सुजातयोः पङ्कजकोशयोः श्रियम्" रघुः। "कोशमङ्गुष्ठाङ्गुलिपर्वसु विदध्यात्" सुश्रु० "योऽयं द्वीपः कुवलयकमलकोशाभ्यन्तरकोशः" भाग० ५।१६।६। कोश(ष)पानदिव्यञ्च वीरमि० दर्शितं यथा "अथ कोश(ष)विधिः। तत्र "अतः परं प्रवक्ष्यामि कोश(ष)स्य विधिमुत्तमम्। शास्त्रविद्भिर्यथा प्रोक्तं सर्व्वकाला-विरोधिनम्। पूर्वाह्णे कोपवासस्य स्नातस्यार्द्रपटस्य च। सशङ्कस्याऽव्यसनिनः कोशपानं विधीयते। इत्यतः श्रद्धानस्य देवब्राह्मणसन्निधाविति"। सशङ्कस्य अधस्तेन दिव्यकरणेऽभिशङ्कायुक्तस्य कोषपानम्। उग्रदेवता-स्नानोदकपानं देवतास्नानोदकञ्च प्रसृतित्रयं पाययेदाह विष्णुः "उग्रान् देवान् समभ्यर्च्च्य तत्स्नानोदकात्प्रसृ-तित्रयं पिबेदिदमया न कृतमिति व्याहरन् देवताभिमुखः" इति। याज्ञवल्क्योऽपि "देवानुग्रान् समभ्यर्च्च्य तत्स्ना-नोदकमाहरेत्। संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रय-मिति"। उग्रान्दे वान्दुर्गादित्यादीन्। तेषामन्यतमं देवं प्राड्विवाकः सोपवासो गन्धपुष्पादिभिः सम्पूज्य स्नापयि-त्वा तत्स्नानोदकं दिव्यदेशमानयेदित्यर्थः। नीत्वा च तत्र निधाय धर्म्मावाहनादि शोध्यशिरसि पत्रारोपणान्तं सर्व्व-दिव्यसाधारणविधिं विधाय देवतायतनसमीपे मण्डलञ्च विधाय तत्र शोध्यं प्राङ्मुखं स्थापयित्वा तमसक्ते नैर्ऋत-व्यक्तरणे ऽनिष्टं संश्राव्य जलविधानोक्तेन "तोय! त्वं प्राणिनां प्राणः" इत्यादिना मन्त्रेणाभिमन्त्र्य पूर्वनिहितोदकात् प्र-

स्तितयं पाययेत् । शोध्यश्च जलविधानोक्तेन "सत्यान्तत-विभागस्य" इत्यादिना मन्त्रेणाभिमन्त्र्य पिबेत् । तथा च नारदः "तमाहूयाभिशस्तन्तु मण्डलाभ्यन्तरे स्थितम् । आदित्याभिमुखं कृत्वा पाययेत् प्रसृतित्रयमिति" । पितामहोऽपि "प्राङ्मुखं कारिणं कृत्वा पाययेत् प्रसृतित्रयम् । पूर्व्वोक्तेन विधानेन स्नानमार्द्रोचितं शुचिमिति" । कारिणं दिव्यकारिणं शोध्यमिति यावत् । पूर्व्वोक्तेन शक्त-दिव्यसाधारणतया प्रागुक्तेनेत्यर्थः । नारदोऽपि "अर्च्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन तु । एनश्च श्रावयित्वा तु पाययेत् प्रसृतित्रयमिति" । एनः पापम् । तच्च तत्-फलापाभिधानमुखेन तेनैव दर्शितम् । "स्वेच्छया यः पिबेत्कोषस्य कश्चिद्दूषितो नरः । स संदेहरो लोभात् चत्री भवति दुर्मतिः । जानानः कामकारेण कोषमपीत्वा विसंवदेत् । दरिद्रो व्याधितो मूर्खः सप्तजन्मानि जायते" इति । सचिरस्थेऽभियोगे अभियोक्तुः आप्यमनिष्टमप्याह सएव "प्रत्यात्कोषं हि यो दत्त्वा हितमिच्छेत चात्मनः । कःतिनाशो भवेत्तस्य सद्य कार्यं न सिद्ध्यतीति" । एवं यस्य कस्यचिदुपदेशस्य स्नानोदकमाहूय कोषानुष्ठाने प्राप्ते नियमार्थमाह पितामहः "भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् । समभावे तु देवानामादित्यस्य तु पाययेत् । दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः । भास्करस्य तु यत्तोयं ब्राह्मणं तत्र पाययेदिति" । उग्रदेवतायुधानि स्नापयित्वा तदुदकं स्वल्पेऽपराधे पाययेत् । तथा च कात्यायनः "स्वल्पेऽपराधे देवानां पाययित्वाऽऽयुधोदकम् । पाय्योविकारे चाशुद्धो नियम्यः शुचिरन्यथेति । पाय्यः पाययितव्यः । नियम्यो दण्ड्यः । आयुधपदञ्च ताम्रादिनिर्मितादिसमस्तशस्त्राप्युपलक्षणम् अतएव वृहस्पतिः "यद्भक्तः सोऽभियुक्तः स्यात्तद्देवायुधमण्डलम् । प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयमिति" अत्र विशेषमाह पितामहः "दुर्गायाः पाययेच्छूलमादित्यस्य तु मण्डलम् । अन्येषामपि देवानां स्नापयेदायुधानि तु इति" । कृतकोषपानस्य किं तत्कालमेव शुद्धिर्नेत्याह कात्यायनः "अथ दैवविसंवादस्त्रिसप्ताहात्तु दापयेत् । अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव चेति" । दैवविसंवादः दैविकव्याध्युद्भवः । दैविकव्याध्यादीनपि स एव दर्शयति "ज्वरातिसारविस्फोटाः सूजास्थिपरिपीडनम् । नेत्रगुभाक्षरोगश्च तथोन्मादः प्रजायते । शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणामिति" । शुद्धिकाला-वधिं विष्णुरप्याह "यस्य पश्येद्द्विसप्ताहात् त्रिसप्ताहादथापि वा । रोगोऽग्निर्ज्ञातिमरणं राजदण्डमथापि वा । तमशुद्धं विजानीयात् तथा शुद्धं विपर्य्ययेत् । दिव्ये च शुद्धं पुरुषं सत्कुर्य्याद्धार्म्मिको नृपः" इति । पितामहोऽपि "त्रिरात्रात्सप्तरात्राद्वा द्विसप्ताहादथापि वा । वैकृतं यत्र दृश्येत पापकृत्स तु मानवः । तस्यैकस्य न सर्व्वस्य जनस्य यदि तद्भवेत् । रोगोऽग्निर्ज्ञातिमरणं सैव तस्य विभावनेति" । तद्रोगवैकृतं कृतकोषपानस्यैकस्य यदि भवेत् तदैव स पापकृदिति न, किन्तु तदीयसर्व्वस्य जनस्य-मध्येऽपि यदि कस्यचिद्भवेत् तदापीत्यर्थः । अतएव वृहस्पतिः "सप्ताहाद्वा द्विसप्ताहाद्यस्यार्त्तिर्न प्रजायते । पुत्रदारधनानाञ्च स शुद्धः स्यान्न संशयः" इति । याज्ञवल्क्योऽपि "अर्व्वाक् चतुर्द्दशादह्नो यस्य नो राजदैविकम् । व्यसनञ्जायते घोरं स शुद्धः स्यान्न संशयः" इति । एतेषाञ्च त्रिरात्रादीनां पक्षाणाम् अभियोगाल्पत्वमहत्त्वाभ्यां व्यवस्था ज्ञातव्या । अवधेरूर्द्ध्वन्तु रोगाद्युद्भवेऽपि न पराजयः तथा च नारदः "ऊर्द्ध्वं यस्य द्विसप्ताहाद्वैकृतन्तु महद्भवेत् । नाभियोज्यस्तु विदुषा कृतकालव्यतिक्रमादिति" । अत्र द्विसप्ताह इत्यवधिकालमात्रोपलक्षणम् कृतकालव्यतिक्रमहेतोरभिधानात् । तेनैकविंशतिरात्रस्यावधिकालत्वाश्रयणे चतुर्द्दशरात्रादूर्द्ध्वमपि वैकृतोत्पत्तौ पराजयः एवं त्रिरात्रसप्तरात्रात् प्रागपि वैकृतोत्पत्तौ पराजय इति सिद्धम् ।

१५ कोषवदावरकेषु वेदान्तप्रसिद्धेषु अन्नमयादिषु पञ्चसु पदार्थेषु अन्नमय प्राणमयः मनोमयः विज्ञानमयः आनन्दमयः इत्येते पञ्च पदार्था अनात्मकाः तेषामात्मतोऽविवेकार्थं वेदान्तिभिः कल्पिताः । तत्र पञ्चकोषविवृतिः विवेकचूड़ामणौ "देहोऽयमन्नभवनोऽन्नमयस्तु कोषश्चान्नेन जीवति विनश्यति तद्विहीनः । त्वक्चर्म्ममांसरुधिरास्थिपुरीषराशिर्नायं स्वयं भवितुमर्हति नित्यशुद्धः । पूर्व्वं जनेरपि मृतेरधुनायमस्ति जातक्षणः क्षणगुणोऽनियतस्वभावः । नैकोजड़श्च घटवत्परिदृश्यमानः स्वात्मा कथं भवति भावविकारवेत्ता । पाणिपादादिमान् देहो नात्मा व्यङ्गोऽपि जीवनात् । तत्तच्छक्तेरनाशाच्च न नियम्योनियामकः । देहतद्धर्म्मतत्कर्म्मतदवस्थादिसाक्षिणः । स्वतएव स्वतःसिद्धं तद्वैलक्षण्यमात्मनः । शल्यराशिर्मांसलिप्तो मलपूर्णोऽतिकश्मलः । कथं भवेदयं वेत्ता स्वयमेतद्विलक्षणः । त्वङ्मांसमेदोऽस्थिपुरीषराशावहंमतिं मूढजनः करोति ।

विलक्षणं वेत्ति विचारशीलो निजस्वरूपं परमार्थ-
भूतम्। देहोऽहमित्येव जडस्य बुद्धिर्देहे च जीवा-
ऽविदुषस्त्वहंधीः। विवेकविज्ञानवतोमहात्मनो ब्रह्माह-
मित्येव मतिः सदात्मनि। अत्रात्मबुद्धिं त्यज मूढबुद्धे!
त्वङ्मांसमेदोस्थिपुरीषराशौ। सर्व्वात्मनि ब्रह्मणि नि-
र्विकल्पे कुरुष्व शान्तिं परमां भजस्व। देहेन्द्रियादा-
वसति भ्रमोदितां विद्वानहन्तां न जहाति यावत्। ता-
वन्न तस्यास्ति विमुक्तिवार्त्ताप्यस्त्वेष वेदान्तनयान्तदर्शः।
छायाशरीरे प्रतिविम्बगात्रे यत् स्वप्नदेहे हृदि कल्पिता-
ङ्गे। यथात्मबुद्धिस्तव नास्ति काचित् जीवच्छरीरे च त
थैव मास्तु। देहात्मधीरेव नृणामसद्धियां जन्मादिदुःख-
प्रभवस्य वीजम्। यतस्ततस्त्वं जहि तां प्रयत्नात् त्यक्ते
तु चित्ते न पुनर्भवाशा। कर्म्मेन्द्रियैः पञ्चभिरन्वितोऽयं
प्राणो भवेत् प्राणमयस्तु कोषः। येनात्मवानन्नमयोऽन्न
पूर्णात् प्रवर्त्ततेऽसौ सकलक्रियासु। नैवात्मापि प्राण-
मयो वायुविकारो गन्ता गन्ता वायुवदन्तर्व्वहिरेषः।
यस्मात् किञ्चित् क्वापि न वेत्तीष्टमनिष्टं स्वं वान्यं वा
किञ्चन नित्यं परतन्त्रः। ज्ञानेन्द्रियाणि च मनश्च
मनोमयः स्यात् कोषोममाहमिति वस्तुविकल्पहेतुः।
संज्ञादिभेदकलनाकलितो बलीयांस्तत्पूर्व्वकोषमभिपूर्य्य
विजृम्भते यः। पञ्चेन्द्रियैः पञ्चभिरेव होतृभिः प्रचीय-
मानोविषयाज्यधारया। जाज्वल्यमानो बहुवासनेन्धनैर्म-
नोमयाग्निर्दहति प्रपञ्चम्। न ह्यस्त्यविद्या मनसोऽतिरिक्ता
मनोह्यविद्या भवबन्धहेतुः। तस्मिन् विनष्टे सकलं
विनष्टं विजृम्भितेऽस्मिन् सकलं विजृम्भते। स्वप्नेऽर्थशू-
न्ये सृजति स्वशक्त्या भोक्त्रादि विश्वं मनएव सर्व्वम्।
तथैव जाग्रत्यपि नो विशेषस्तत्सर्व्वमेतन्मनसो विजृम्भ-
णम्। सुषुप्तिकाले मनसि प्रलीने नैवास्ति किञ्चित्
सकलप्रसिद्धेः। अतो मनःकल्पितएव पुंसः संसार
एतस्य न वस्तुतोऽस्ति। वायुना चीयते मेघः पुनस्ते-
नैव लीयते। मनसा कल्प्यते बन्धोमोक्षस्तेनैव कल्प्यते।
देहादिसर्व्वविषये परिकल्प्य रागं बध्नाति तेन पुरुषं
पशुवद्गुणेन। वैरस्यमत्र विषवत् सुविधाय पश्चादेनं विमो-
चयति तन्मन एव बन्धात्। तस्मान्मन. कारणमस्य
जन्तोर्बन्धस्य मोक्षस्य च वा विधाने। बन्धस्य हेतुर्मलिनं
रजोगुणैर्मोक्षस्य शुद्धं विरजस्तमस्कम्। विवेकवैराग्य-
गुणातिरेकाच्छुद्धत्वमासाद्य मनोविमुक्त्यै। भवत्यतो-
बुद्धिमतो मुमुक्षोस्ताभ्यां दृढाभ्यां भवितव्यमग्रे। मनो

नाम महाव्याघ्रो विषयारण्यभूमिषु। चरत्यत्र न
गच्छन्तु साधवो ये मुमुक्षवः। मनः प्रसूते विषयानशेषान्
स्थूलात्मना सूक्ष्मतया च भोक्तुः। शरीरवर्णाश्रमजा-
तिभेदान् गुणक्रियाहेतुफलानि नित्यम्। असङ्गचिद्रू-
पममुं विमोह्य देहेन्द्रियप्राणगुणैर्निबध्य। अहंममेति
भ्रमयत्यजस्रं मनः स्वकृत्येषु फलोपभुक्तिषु। अध्या-
सदोषात् पुरुषस्य संसृतिरध्यासबन्धस्त्वमुनैव कल्पितः।
रजस्तमोदोषवतोऽविवेकिनो जन्मादिदुःखस्य निदानमे-
तत्। अतः प्राहुर्मनोऽविद्यां पण्डितास्तत्त्वदर्शिनः।
येनैव भ्राम्यते विश्वं वायुनेवाभ्रमण्डलम्। तन्मनः
शोधनं कार्य्यं प्रयत्नेन मुमुक्षुणा। विशुद्धे सति चैतस्मिन्
मुक्तिः करफलायते। मोक्षैकसक्त्या विषयेषु रागं
निर्मूल्य संन्यस्य च सर्वकर्म्म। सच्छ्रद्धया यः श्रवणा-
दिनिष्ठो रजःस्वभावं स धुनोति बुद्धेः। मनोमयो
नापि भवेत् परात्मा ह्याद्यन्तवत्त्वात् परिणामिभावात्।
दुःखात्मकत्वाद्विषयत्वहेतोर्द्रष्टा हि दृश्यात्मतया न दृष्टः।
बुद्धिर्बुद्धीन्द्रियैः सार्द्धं सवृत्तिः कर्त्तृलक्षणः। विज्ञान-
मयकोषः स्यात् पुंसः संसारकारणम्। अनुव्रजेच्चित्प्रति-
विम्बशक्तिर्विज्ञानसंज्ञः प्रकृतेर्विकारः। ज्ञानक्रियावान-
हमित्यजस्रं देहेन्द्रियादिष्वभिमन्यते भृशम्। अनादि-
कालोऽयमहंस्वभावो जीवः समस्तव्यवहारवोढा।
करोति कर्म्माण्यपि पूर्ववासनः पुण्यान्यपुण्यानि च तत्फ-
लानि। भुङ्क्ते विचित्रास्वपि योनिषु व्रजन्नायाति
निर्यात्यध ऊर्द्ध्वमेषः। अस्यैव विज्ञानमयस्य जाग्रत्स्व-
प्नाद्यवस्थासुखदुःखभोगाः। देहादिनिष्ठाश्रमधर्म्मकर्म्म
गुणाभिमानः सततं ममेति। विज्ञानकोषोऽयमतिप्रकाशः
प्रकृष्टसान्निध्यवशात् परात्मनः। अतोभवत्येव उपाधिरस्य
यदात्मधीः संसरति भ्रमात्तु। योऽयं विज्ञानमयः
प्राणेषु हृदि स्फुरत्ययं ज्योतिः। कूटस्थः सन्नात्मा
कर्त्ता भोक्ता भवत्युपाधिस्थः। स्वयं परिच्छेदमुपेत्य
बुद्धेस्तादात्म्यदोषेण परं मृषात्मनः। सर्व्वात्मकः
सन्नपि वीक्षते स्वयं स्वतः पृथक्त्वेन मृदोघटानिव।
उपाधिसम्बन्धवशात् परात्मा ह्युपाधिधर्म्माननुयाति
तद्गुणः। अयोविकारानविकारिवह्निवत् सदैकरूपोऽपि
परः स्वभावात्। शिष्य उवाच। भ्रमेणाप्यन्यथा वाऽस्तु
जीवभावः परात्मनः। तदुपाधेरनादित्वान्नानादेर्नाश इ-
ष्यते। अतोऽस्य जीवभावोऽपि नित्या भवति संसृतिः।
न निवर्त्तेत, तन्मोक्षः कथं? मे श्रीगुरो! वद।

श्रीगुरुरुवाच । सम्यक् पृष्टं त्वया विद्वन् ! सावधानेन तत् शृणु । प्रामाणिको न भवति भ्रान्त्या मोहितकल्पना । भ्रान्तिं विना त्वसङ्गस्य निष्क्रियस्य निराकृतेः । न घटेतार्थसम्बन्धो नभसो नीलतादिवत् । स्वस्य द्रष्टुर्निर्गुणस्याक्रियस्य प्रत्यग्बोधानन्दरूपस्य बुद्धेः । भ्रान्त्या प्राप्तो जीवभावो न सत्यो मोहापाये नास्त्यवस्तुस्वभावः । यावद्भ्रान्तिस्तावदेवास्य सत्ता मिथ्याज्ञानोज्जृम्भितस्य प्रमादात् । रज्ज्वां सर्पोभ्रान्तिकालीनएव भ्रान्तेर्नाशे नैव सर्पोऽपि तद्वत् । अनादित्वमविद्यायाः कार्य्यस्यापि तथेष्यते । उत्पन्नायान्तु विद्यायामाविद्यकमनाद्यपि । प्रबोधे स्वप्नवत् सर्व्वं सहमूलं विनश्यति । अनाद्यपीदं नो नित्यं प्रागभाव इव स्फुटम् । अनादेरपि विध्वंसः प्रागभावस्य वीक्षितः । यद्बुद्ध्युपाधिसम्बन्धात् परिकल्पितमात्मनि । जीवत्वं न ततोऽन्यस्तत्स्वरूपेण विलक्षणः । सम्बन्धः स्वात्मनो बुद्ध्या मिथ्याज्ञानपुरःसरः । विनिवृत्तिर्भवेत्तस्य सम्यग्ज्ञानेन नान्यथा । ब्रह्मात्मैकत्वविज्ञानं सम्यक् ज्ञानं श्रुतेर्मतम् । तदात्मानात्मनोः सम्यग्विवेकेनैव सिध्यति । ततोविवेकः कर्त्तव्यः प्रत्यगात्मसदात्मनोः । जलं पङ्कवदत्यन्तं पङ्कापाये जलं स्फुटम् । यथा भाति, तथात्मापि दोषाभावे स्फुटप्रभः । असन्निवृत्तौ तु सदात्मना स्फुटं प्रतीतिरेतस्य भवेत् प्रतीचः । ततो निरासः करणीय एव सदात्मनः साध्वहमादिवस्तुनः । अतोनायं परात्मा स्याद्विज्ञानमयशब्दभाक् । विकारित्वाज्जडत्वाच्च परिच्छिन्नत्वहेतुतः । दृश्यत्वात् व्यभिचारित्वात् नानित्योनित्य इष्यते"।

आनन्दमयकोषस्तु आनन्दमयकोषशब्दे ७२६पृ॰ उक्तः

धननिचयात्मककोषस्य राज्याङ्गतामाह "स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा । सप्त प्रकृतयोह्येताः सप्ताङ्गं राज्यमुच्यते । सप्तानां प्रकृतीनां तु राज्यस्यासां यथाक्रमम् । पूर्व्वं पूर्व्वं गुरुतरं जानीयाद्व्यसनं महत्" मनुः "स्वामी राजा अमात्योमन्त्र्यादिः । पुरं राज्ञः कृतदुर्गनिवासनगरं, राष्ट्रं देशः, कोषोवित्तनिचयः, दण्डो हस्त्यश्वरथपादातं, मित्रं त्रिविधं सप्तमाध्यायोक्तमित्येते सप्त प्रकृतयोऽङ्गानि सप्ताङ्गमिदं राज्यमित्युच्यते । ततः किमतआह सप्तानामिति । आसां राज्यस्य प्रकृतीनां सप्तानां क्रमिकोक्तानामुत्तरस्याविनाशमपेक्ष्य पूर्व्वस्याविनाशरूपं व्यसनं गरीयोजानीयात् । तथाहि मित्रव्यसनात् स्वबलव्यसनं गरीयः सम्पन्नबलस्यैव मित्रानुग्रहे सामर्थ्यात् । एवं बलात् कोषोगरीयान् कोषनाशे बलस्यापि नाशात् । कोषाद्राष्ट्रं गरीयः राष्ट्रनाशे वतः कोषोत्पत्तिः । एवं राष्ट्राद्दुर्गं गरीयो दुर्गेहिव यवसेन्धनादिसम्पन्नाद्राज्यरक्षासिद्धेः । दुर्गादमात्यो गरीयान् प्रधानामात्यनाशे सर्व्वाङ्गवैकल्यात् । अमात्यादपि आत्मा सर्व्वस्यात्माधीनत्वात्" कुल्लू॰

कोषसञ्चयस्यावश्यकता युक्तिकल्पतरौ दर्शिता यथा "कोषो महीपतेर्जीवो न तु प्राणाःकथञ्चन । द्रव्यं हि देहो भूपस्य न शरीरमिति स्थितिः । धर्म्महेतोः सुखार्थाय भृत्यानां भरणाय च । आपदर्थञ्च संरक्ष्यः कोषः कोषवता सदा । धनात् कुलं प्रभवति धनाद्धर्म्मः प्रवर्त्तते । नाधनस्य भवेद्धर्म्मः कामश्चैव कथञ्चन । अधर्म्मार्जितवनं कुर्य्यात्तद्धनं गृह्यते परैः । स्वयं पापस्य पात्रं स्यात् सिंहो हस्तिवधादिव । तादात्विको मूलहरः कदर्य्यस्त्रिविधो ऽर्जकः । उत्पन्नार्थव्ययकरो यो भविष्यद्धनाशया । स तादात्विक आख्यातः कल्याणी तस्य नार्त्तिः । यः पित्राद्यर्जितं वित्तमन्यायेन तु भक्षयेत् । स मूलहर आख्यातस्तदुदर्को ऽपि चाशुभः । स कदर्य्यस्तु भृत्याद्यपीडनैरर्थसञ्चयी । तद्धनं राजदायादतस्कराणां निधिर्भवेत् । निम्नगा च राजकोषस्य स्तोकस्तोकेन वर्द्धते । अञ्जनञ्च धनञ्चैव स्तोकस्तोकेन हीयते । कोषस्य साधनोपायो मुख्यं राष्ट्रमिति स्मृतम् । भूगुणैर्वर्द्धते राष्ट्रं तद्वृद्धिर्नृपवृत्तता । राज्ञोपायेन संरक्ष्या ग्रामे ग्रामे कृषीबलाः । तेभ्यः कृषिस्ततश्चार्था अर्थेभ्यः सर्वसम्पदः । शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा । तथा वर्षेषु वर्षेषु कर्षणात् भूगुणक्षयः । एकस्यां गुणहीनायां कृषिमन्यत्र कारयेत्" ।

तत्सञ्चयोपायाश्च भा॰ शा॰ ८८अ॰ दर्शिताः यथा "यदा राजासमर्थोऽपि कोषार्थी स्यान्महामते! ।"इत्यादि युधिष्ठिरप्रश्ने भीष्मोक्तिः "यथादेशं यथाकालं यथाबुद्धि यथाबलम् । अनुशिष्यात् प्रजा राजा धर्म्मार्थी तद्धिते रतः। यथा तासाञ्च मन्येत श्रेय आत्मन एव च । तथा कर्म्माणि सर्व्वाणि राजा राष्ट्रेषु वर्त्तयेत्" इत्युपक्रमे "मधुदोहमित्याद्युक्तं" तच्च करशब्दे १६८७पृ॰ दर्शितम् । तत्र ८०अ॰ इत्युक्तिः प्रामादिकी ८८अ॰ इत्येव साधु । ततः परं कियदन्तरे "प्रयोगं कारयेयुस्तान् यथा बलिकरांस्तथा । कृषिगोरक्षवाणिज्यं यच्चान्यत् किञ्चिदीदृशम् । पुरुषैः कारयेत्

कर्म बहुभिः कर्मभेदतः। भरयेत् क्षत्रियोरक्षाबाणिजग्राह्यानुष्ठितौ। संशयं लभते किञ्चित्तेन राजा विगर्ह्यते। धनिनः पूजयेन्नित्यं पानाच्छादनभोजनैः। बक्तव्याश्चानुगृह्णीध्वं प्रजाः सह मयेति वै। अङ्गमेतन्महद्राजन् धनिनो नाम भारत!। ककुदं सर्वभूतानां धनस्थो नात्र संशयः। प्राज्ञः शूरो धनस्थश्च स्वामी धार्मिक एव च। तपस्वी सत्यवादी च बुद्धिमांश्चापि रक्षति। तस्मात् सर्वेषु भूतेषु प्रीतिमान् भव पार्थिव!। सत्यमार्ज्जवमक्रोधमानृशंस्यञ्च पालय। एवं दण्डञ्च कोषञ्च मित्रं भूमिञ्च लप्स्यसे। सत्यार्ज्जवपरो राजन्मित्रकोषबलान्वितः"। १६तदाधारे गृहे जटा० (खाजानाघर) "तस्मात्द्विजेभ्योदत्त्वार्द्धमर्द्धं कोषे निवेशयेत्" मनुः। १७मेघे निघ०।

**कोश(ष)कार** पु० कोशं(षं)करोति कृ—ण्वुल् उप०स०। १खड्गाद्यावरणकारके स्त्रियां टाप् सि०कौ० तस्य पत्नी ङीप्। मुग्धबोधमते ईप्। "नैर्ऋत्यै कोषकारीम्" यजु० ३०।१४। "खड्गावरणकोश(ष)कारिणीम् स्त्रियम्" वेददी०। २इक्षुभेदे शब्दरत्ना०। कोशं स्ववेष्टनं तन्तुभिः करोति कृ—अण्। ३कीटभेदे (गुटिपोका)। "संवेष्टमानं बहुभिः मोहात्तन्तुभिरात्मजैः। कोषकारमिवात्मानं वेष्टयन्नावबध्यते" भा०शा० ३३१अ०।

**कोश(ष)कृत्** त्रि० कोशं खड्गाद्यावरणं वेष्टनं वा करोति कृ—क्विप् ६त०। १कोषकारार्थे। २इक्षुभेदे सुश्रुतः "नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोषकृत्" सुश्रु० इक्षुभेदोक्तौ

**कोश(ष)चञ्चु** पु० कोशः चञ्चौ यस्य। सारसपक्षिणि शब्दच०

**कोश(ष)पाल** पु० कोशं राज्याङ्गधनसंचयं पालयति पालि—अण् उप०स०। कोषरक्षके तल्लक्षणमुक्तं हेमा० परि०ख० लक्षणसमुच्चये। "धातुवस्त्राजिनादीनां रत्नानां प्रविभागवित्। विज्ञाता फल्गुसाराणामसंहार्य्यः शुचिः सदा। निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः। आयद्वारेषु सर्व्वेषु धनाध्यक्षसमा नराः। व्ययद्वारेषु च तथा कर्त्तव्याः पृथिवीक्षिता। आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारदः। कृताकृतज्ञो भृत्यानां ज्ञेयः स्यादर्थरक्षकः"। "निर्यान्तु कोश(ष)पालाश्च कुरुक्षेत्राश्रमं प्रति" भा० आश्र० २२अ०। ण्वुल्। कोश(ष)पालकोऽप्यत्र।

**कोश(ष)फल** न० कोशे(षे)फलमस्य। कङ्कोले अमरः २महाकोषातक्याम् स्त्री अजा० टाप्। ३तपुष्यां च स्त्री राजनि० गौरा० ङीष्।

**कोशयी** पु० कुश—बा० अयी। स्वर्णादिपूर्णे। "कोशयीर्दश वाजिनोऽदात्" ऋ० ६।४७।२२। छान्दसः प्रयोगः

**कोश(स)ला** स्त्री कुश(स) वृषा० कल नि० गुणः। १सरयूतटस्थायामयोध्यायां पुर्य्यां २तद्युक्ते देशे पु०ब०व०। "कुन्तलाः काशिकोश(स)लाः" भा० भी०६अ० जनपदकथने। पूर्व्वदिक्स्थदेशभेदेषु प्राच्यकोशलेषु पु०ब०व० ते च कोशलकाशर्द्धमानाश्च" वृ०सं० कर्म्मविभागे पूर्व्वस्यामुक्ताः। कचिदेकत्वमपि। "कोश(स)लोनाम मुदितः स्फीतोजनपदो महान्। निविष्टः सरयूतीरे प्रभूतधनधान्यवान्" रामा० १।५।५। कोशलदेशोद्विविधः प्राच्योत्तरभेदात् तत्र अयोध्यायुक्तदेशस्योत्तरकोशलत्वम् "पितुरनन्तरमुत्तरकोशलान्" "तस्मै विसृज्योत्तरकोश(स)लानाम्" "प्रियामखोरुत्तरकोशलेश्वरः" रघुः प्राच्यकोशलास्तु कोसलशब्दे वक्ष्यते। तद्देशस्य राजा अण्। कौस(श)ल्य कोशलदेशनृपे। "कौ(श)सल्यइत्युत्तरको(श)सलानाम्" रघुः स्त्रियां टाप् कौसल्या। "कौसल्यानन्दिवर्द्धनोरामः" रामा०

**कोश(स)लात्मजा** स्त्री कोश(स)लाः पूर्व्वकोश(स)लदेशः लक्षणया तदधिपः तस्यात्मजा। प्राच्यकोसलाधिपस्य सुतायाम् राममातरि शब्दर०

**कोशलिक** न० कुशलाय कर्म्मणे दीयते ठक् पृषो० ओत्त्वम्। निजकार्य्यसाधनार्थं राजादिकार्य्यकरेभ्योदीयमाने उत्कोचे (घुस) हेम० कौशलिकमिति पाठान्तरं साधु

**कोश(ष)वत्** त्रि०कोषः(शः)अस्त्यस्य मतुप् मस्य वः। १कोश(ष)युक्ते। "धर्म्मात्मा कोषवांश्चापि देवराज इवापरः" भा० आनु० २अ०। स्त्रियां ङीप् कोश(ष)वती सा च २कोषातकीवृक्षे "दन्तीयुतं वा मगधोद्भवानां कल्कं पिबेत् कोषवतीरसेन" "शुकाख्याकोषवत्योश्च मूलं मदन एव च" "जीमूतकैः कोशवतीफलैश्च दन्तीद्रवन्तीत्रिवृताश्च चैव" इति च सुश्रु०

**कोश(ष)वासिन्** पु० कोशे(षे)वसति वस—णिनि ७त०। कोषाभ्यन्तरस्थे जन्तुभेदे "कोशवासिनां पादिनां च तदेव" (अनुपानम्) सुश्रु० कोशस्थशब्दे विवृतिः

**कोश(ष)वृद्धि** पु० कोषस्य मुकुलस्य वृद्धिर्यत्र। १कुरण्डक वृक्षे। ६त०। २अण्डकोषवृद्धौ रोगभेदे ३धनसञ्चयवृद्धौ च स्त्री

**कोश(ष)शायिका** स्त्री कोषे(शे) पिधानमध्ये शेते शी ण्वुल् ७त० अतइत्त्वम्। क्षुरिकायां जटाधरः

**कोश(ष)स्कृत्** पु० कोशं(षं)करोति कृ—क्विप् नि० सुट्। कोषकारके जन्तुभेदे (गुटिपोका) "त्यजेत् कोश(ष)स्कृदिवेह

मान:" भाग० ७।४।११ "कोश(ष)स्था् कोशकार:" श्रीधरः

**कोश(ष)स्थ** पु० कोशे(षे)तिष्ठति स्था—क ७त० । सुश्रुतोक्ते शङ्खादिके जन्तुभेदे । "आनूपवर्गस्तु पञ्चविधः" इत्युपक्रम्य कोशस्था इत्युद्दिश्य "शङ्ख शङ्खनख शुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः पादिनश्च" इत्युक्ता कूर्मादींश्चोक्त्वा तन्मांसगुणाउक्ता यथा "शङ्खकूर्मादयः स्वादुरसगन्धा मरुन्नुदः । शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः"

**कोशा(षा)गार** न० ६त० । धनागारे (खाजनाघर) "कोषागारमायुधागारमश्वशालां हस्तिशालाञ्च कुरु" भा०व० १६७ कोश(ष)स्थहादयोऽप्यत्र न० [कड़] तुपभेदे हारा०

**कोशा(षा)ङ्क** न० कोशः(षः) इवाङ्कमस्य । बकुमूले इत्कटौ(श्रो-

**कोशा(षा)तक** पु० कोश(ष)मतति अत—कुन् । १कठे वेदशाखाभेदे २पटोल्याम् घोषके (तरइ) (झींङा) ख्याते शाकभेदे स्त्री मेदि० गौरा० ङीष् । भा०प्र० इयं राजसेव्यत्वात् महत्त्वाद्वा राजोपपदा निर्दिष्टा "धामार्गवः पीतपुष्पा जालिनी कृतवेधना । राजकोशातकी चेति तदोक्ता राजिमत्फला । राजकोशातकी शीता मधुरा कफवातला । पित्तघ्नी दीपनी श्वासज्वरकासकृमिप्रणुत्" "कोषातकीवल्लिभवाऽप्यपल्लवास्तके च युक्ताः सुष्टतेव संस्कृताः । सम्भर्जिताः सैन्धवहिङ्गुवाधिते तैलेऽतिरुच्या बलपुष्टिदायकाः" तस्याःफलम् अण् हरीतक्या० लुप् । तत्फले स्त्री "कोशातकीपुष्पगुलुच्छकान्तिभिः" म०भ०

**कोशा(षा)म्र** पु० को(षे)षे आम्र इव । १फलप्रधानवृक्षभेदे (कोशाम) "कोशाम्रः कुष्ठशोथासृपित्तव्रणकफापहः । तत्फलं ग्राहि वातघ्नमम्लोष्णं गुरु पित्तलम् । पक्वं तु दीपनं रुच्यं लघूष्णं कफदातहृत्" भावप्र० । (केओड) २फलवृक्षे राजवल्लभः

**कोशि(षि)न्** त्रि० कोश(ष)+अस्त्यर्थे इनि । १कोश(ष)युक्ते आमोपपदकोषी तु सुश्रुतोक्ते कर्णबन्धनजे रोगभेदे "बद्धमात्रस्तु यः कर्णः सहसैवाभिवर्द्धयेत् । आमकोषी समाख्यातः क्षिप्रमेव विशुध्यते" । २आम्रवृक्षे पु० शब्दमाला।

**कोशि(षि)ला** स्त्री कोष+अस्त्यर्थे पिच्छादित्वात् इलच् । सूक्ष्मपर्ण्याम् राजनि०

**कोशी(षी)** स्त्री कुश—(कुष) अच् गौरा० ङीष् । १चर्मपादुकायाम् २धान्याद्यग्रभागे च (शुङ्गा) हेम०

**कोश्य(ष्य)** त्रि० कोशे हृदयस्थे(षे)भवः यत् । हृदयकोश मांसपिण्डे "शिङ्गानि कोश्याभ्याम्" यजु० ३६।२८ "कोश्याभ्यां हृदयस्य मांसपिण्डाभ्याम्" वेददी०

**कोष** पु०न० १ कुष—पचादि० अच् । १कोशशब्दार्थे कोशशब्दे विवृतिः । २ऋषिभेदे । "अथोह कोषा धावयन्तः शत० ब्रा० १०।५।५।८ "कोषानाम ऋषयः" भा० ।

**कोषक** पु० कोष—स्वार्थे क । अण्डकोषे शब्दर०

**कोषला** स्त्री० कोष—अलच् । अयोध्यायां पुर्यां शब्दरत्ना०

**कोष्ठ** पु० कुष—थन् । १गृहमध्ये, २उदरमध्ये, ३धान्यादिस्थापने ४कुसूले च (कुठी) ५आत्मीये त्रि० मेदि० "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृद्वण्डुकः पुप्फुसश्च कोष्ठइत्यभिधीयते" ६सुश्रुतोक्ते आमाग्निपक्वमूत्ररुधिरस्थाने "प्रवाहिका शिरः शूलं कोष्ठशूलञ्च दारुणम्" "चले दोषे मृदौ कोष्ठे नेक्षेताव बलं भृशाम्" सुश्रु० "भुक्तं भुक्तमिदः कोष्ठे कथमन्नं विपच्यते" भा० आश्व० ५७अ० "पतिं भार्यौपतिष्ठेत ध्यायेत् कोष्ठगतं यथा" भा० भी० ६।१८। ५२ । अकथहादिचक्रचतुःपार्श्वस्थरेखाचतुष्कान्विते ७स्थानभेदे अकथहशब्दे ८८पृ० उदा० । दपदे स्थानमात्रे "पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् । यत् पञ्चविपणम् चैव पञ्चप्रकृतिस्त्रीधरम् । पञ्चेन्द्रियार्थ आरामा द्वारः प्राणा नव प्रभो! । तेजोऽबन्नानि कोष्ठानि कुलमिन्द्रियसंग्रहः । विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया" भाग० ४।२८।५।१।५२।५२। कुसूले "जरत्कोष्ठाद्व्रीहीन्क्रर्करशर्मिरनानाहरति" कौषीतकिब्रा०

**कोष्ठागार** न० कोष्ठमगारमिव । धान्यधनादेःस्थापने गृहे (कुठी) "कोष्ठागारायुधागारदेवतागारभेदकान्" मनुः "कोष्ठागारं तु ते नित्यं स्फीतं धान्यैः सुसंवृतम् । सदास्तु सत्सु संन्यस्तं धनधान्यपरोभव" भा० आ० ११६अ०

**कोष्ठागारिक** त्रि० कोष्ठागारे भवः तत्र नियुक्तोवा वा० ठन् । १कोष्ठागारभवे । "अत्यर्थं स्रवति रक्तं कोष्ठागारिकाङ्गारकृतपिण्डेत्यादि" सुश्रु० २कोष्ठागारे नियुक्ते च ।

**कोष्ठागारिन्** पु० कोष्ठरूपमगारमिवास्त्यस्य इनि । कीटभेदे "कोष्ठागारी क्रमिकरश्च मण्डलपुच्छकः" सुश्रुते प्राणनाशककीटोक्तौ

**कोष्ण** न० ईषदुष्णम् कोः कादेशः । १ईषदुष्णस्पर्शे २तद्वति त्रि० अमरः । "भुवं कोष्णेन पीनोष्मी मेध्येनावभृथादपि" रघुः "एतेन वा शान्तिमुपैति जिह्वा कोष्णेन यष्टीमधुकान्वितेन" "शोथं ततोदं कोष्णेन सर्पिषा परिषेचयेत्" सुश्रु०

**कौसल** पु० ब०व०। कुस—अलच्। देशभेदे। तेऽभिजनोऽस्य तेषां राजा वा ष्यञ्। कौसल्य पित्रादिक्रमेण तद्देशवासिनि बहुषु तस्य लुक् कोसलाः। कोशलशब्दे विवृतिः। कोसलदेशश्च द्विविधः पूर्व्वोत्तरभेदात् "कोसलाधिपतिं चैव तथा वेखातटाधिपम्। कान्तारकांश्च समरे तथा प्राक्कोसलान्नृपान्" भा० स० ३०अ० "दक्षिणाये च पाञ्चालाः पूर्व्वाः कुन्तिषु कोसलाः" १३अ० उत्तरकोसलास्तु कोशलशब्दे दर्शिताः

**कोहल** पु० कौ हलति स्पर्द्धते अच् पृषो०। १वाद्यभेदे मेदि० २मद्यभेदे च हेम० ३नाटकशास्त्रकर्त्तृमुनिभेदे तस्यापत्यम् शिवा० अण्। कौहल तदपत्ये पुंस्त्री० डलयोरैक्यात् कौहडोऽप्यत्र

**कोहनीय** पु० ऋषिभेदे "उपयातायार्घ्यमिति कोहनीयाः" गोभि० गृ०सू०। उपयातायाचार्य्यं समीपं गतायार्घ्यं देयमिति कोहनीया आचार्य्या आहुः" सं०त०रघुनन्दनः

**कोहित** पु०। ऋषिभेदे। ततोऽपत्ये शिवा० अण्। कौहित तदपत्ये पुंस्त्री०

**कौकिली** स्त्री कोकिलेन दृष्टा अण्। कोकिलपरिदृष्टायां सौत्रामण्याम्। "द्वे सौत्रामण्यौ कोकिली चरकसौत्रामणी च" लाट्या० श्रौ०सू०।

**कौकुट्टक** पु० ब०व०। देशभेदे स च दक्षिणस्थः। "अथापरे जनपदा दक्षिणा भरतर्षभ!" इत्युपक्रमे "कौकुट्टकास्तथा चोलाः कौङ्कणाः मालवानराः" भा०भी० ६अ०।

**कौकुन्तक** पु० ब० व०। जनपदभेदे।

**कौकुर** पु० ब० व०। कुकुराणां देशः अण्। १देशभेदे। "अम्बष्ठाः कौकुरास्तार्क्ष्या वस्त्रपाः पह्लवैः सह" भा० सभा० ५१अ०। कुकुराः यादवभेदाएव स्वार्थे अण्। कुकुरवंश्ये २नृपभेदे। "श्रुत्वा विनष्टान् वार्ष्णेयान् सभोजान्धककौकुरान्" भा० मौ० ५अ०।

**कौकृत्य** न० कुत्सितं कृत्यं स्वार्थे अण्। १अयुक्तकरणे २अनुतापविषये च मेदि०।

**कौक्कुटिक** पु० कुक्कुटीं मायां, पादपतनदेशञ्च पश्यति ठक्। १दाम्भिके,कीटादिवधभीत्या पादक्षेपस्थानमात्रदृष्टिसन्धानिनि च मेदि०। सन्यासी हि हिंसाभयात् पादन्यास प्रदेशपर्य्यन्तमेव पश्यन् दूरात् चक्षुः संयम्य यातीति तथात्वम्।

**कौक्कुटिकन्दल** पुंस्त्री कुक्कुटस्यायम् इञ् कौक्कुटिः स इव कन्दलः। (वेङ्गासाप) सर्पभेदे त्रिका० स्त्रियां ङीष्।

**कौक्ष** त्रि० कुक्षौ बद्धः असिभिद्यः। कुक्षिबद्धे अलङ्कारादौ

**कौक्षक** त्रि० कुक्षौ देशभेदे भवः धूमा० वुञ्। कुक्षिदेशभवे

**कौक्षेय** त्रि० कुक्षौ भवः"दृतिकुक्षीत्यादिना"पा०ढञ्। कुक्षौ भवे। "असिं कौक्षेयमुद्यम्य चकारापनसं मुखम्" भट्टिः

**कौक्षेयक** पु० कुक्षौ बद्धः असिः ढकञ्। कुक्षिबद्धे खड्गे "कौक्षेयकेण सन्निहितविषधरेणेव चन्दनलता" काद०। "बहुतीक्ष्णकौक्षेयक." दशकुमा०।

**कौङ्क** पु० कोङ्कएव स्वार्थे अण्। कोङ्कणदेशे शब्दरत्ना०

**कौङ्कण** पु० ब० व०। कोङ्कण+स्वार्थे अण्। १कोङ्कणदेशे "कौङ्कणाः मालवानराः" भा०भी० ६अ०। तस्य राजन् अण् २तद्देशनृपे च।

**कौङ्किण** न० ब०व०। कोङ्कण+पृषो०। कोङ्कणदेशे शब्दर०।

**कौञ्च** पु० क्रुञ्चएव स्वार्थे अण् पृषो०। क्रौञ्चपर्व्वते त्रिका०।

**कौञ्जायन्य** पु० कुञ्जा० गोत्रापत्ये च्फञ् ततः स्वार्थे ञ्य। १कुञ्जर्षिगोत्रापत्ये स्त्रियान्तु न ञ्य किन्तु गोत्रप्रत्ययान्तत्वात् ङीष् कौञ्जायिनी सा च २ब्राह्मण्याम् जटाधरः।

**कौञ्जि** पुंस्त्री० कुञ्जस्यर्षेरनन्तरापत्यम् अतइञ्। कुञ्जर्षेरनन्तरापत्ये स्त्रियां वा ङीप्।

**कौट** त्रि० कूटे अद्रिशृङ्गे भवः उत्सा० अञ्। १कुटजवृक्षे (कुरची) भावप्र० कुट्यां पायभवः अण्। २स्वतन्त्रे त्रि० कूटस्य भावः अण्। ३मिथ्याकथने ४मिथ्यासाक्ष्ये च

**कौटकिक** त्रि० कूटमेव कूटकं मांसकूटं तत्पण्यमस्य ठञ्। मांसविक्रेतरि शब्दरत्ना०

**कौटज** पु० कुटमेव कौटं तत्र जातः। कुटजवृक्षे रायमुकुटः

**कौटजभारिक** त्रि० कुटजस्य भारं हरति वहत्यावहति वा वंशा०ठञ्। १कुटजभारहारिणि २तद्वाहके ३तदावहके च

**कौटजिक** त्रि० कुटजं भारभूतं हरति वहति आवहति वा ठञ्। भारभूतकुटजस्य १हारके २वाहके ३आवाहके च

**कौटतक्ष** पु० कोटः स्वतन्त्रः तक्षा टच् समा०। स्वतन्त्रे तक्षणि

**कौटल्य** न० कुट-कलच् स्वार्थे ष्यञ्। कौटिल्यशब्दार्थे हेमच०

**कौटसाक्ष्य** न० कूटसाक्षिणोभावः कर्म्म वा ष्यञ्। मिथ्यासाक्ष्ये "कौटसाक्ष्यं सुहृद्वधः" मनुना सुरापाणसमानगोक्त्या तस्यानुपातकता। कौटसाक्ष्यदण्डश्च मनुना दर्शितो यथा

"यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत्। तत्तत् कार्य्यं निवर्त्तेत कृतञ्चाप्यकृतं भवेत्। लोभान्मोहाद्भयान्मैत्रात् कामात् क्रोधात्तथैव च। अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते। एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्। तस्य दण्डविशेषांस्तु प्रवक्ष्याम्य-

सुपूर्व्वं शः। लोभात् सहस्रं दण्ड्यस्तु मोहात् पूर्व्वन्तु साहसम्। भयाद्द्वे मध्यमे दण्ड्यो मैत्रात् पूर्व्वं चतुर्गुणम्। कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्। अज्ञानाद् द्वे शते पूर्णे बालिश्याच्छतमेव तु। एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान्मनीषिभिः। धर्मस्याव्यभिचारार्थमधर्म्मनियमाय च। कौटसाक्ष्यन्तु कुर्व्वाणांस्त्रीन् वर्णान् धार्मिको नृपः। प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत्"।

**कौटि** पुंस्त्री कूटस्यापत्यम् इञ्। कूटस्य मिथ्याशंसिनोऽपत्ये स्त्रियां तु क्रौड्यादि० ष्यङ्। कौट्या

**कौटिक** त्रि० कूटेन मृगबन्धनयन्त्रेण चरति ठक्। मांसविक्रयोपजीविनि अमरः। कूट+चतुरर्थ्यां कुमु० ठक्। कूटसन्निकृष्टदेशादौ त्रि०।

**कौटिलिक** त्रि० कुटिलिका व्याधानां गतिभेदः कर्म्मारोपकरणभूतं लौहञ्च तया हरति मृगान् अङ्गारान् वा। "अण् कुटिलिकायाः" पा० अण्। १व्याधे २कर्म्मकारे च सि० कौ०।

**कौटिल्य** न० कुटिलस्य भावः ष्यञ्। १वक्रीभावे "नित्यं कौटिल्ये गतौ" पा०। "कौटिल्यं कचनिचये करचरणाधरतलेषु रागस्ते" काव्यप्र० तच्चोपपातकम् "कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम्" या० स्मृतेः। उपपातकशब्दे विवृतिः; स्वार्थे ष्यञ्। २चाणक्यमुनौ पु० राजनि० "आकर्ण्य व्याःख्यातम्। कौटिल्यः—कुटिलमतिः स एष येन क्रोधाग्नौ प्रसभमदाहि नन्दवंशः" मुद्राराक्षसम्

**कौटीगव्य** पुंस्त्री कुटीगोर्श्चर्ष्यभेदस्य गोत्रापत्यम् गर्गा० यञ्। कुटीगोर्ष्यभेगोत्रापत्ये। तस्य छात्रः कण्वा० अण् यलोपः। कौटीगव, तच्छात्रे। [देशादौ

**कौटीय** त्रि० कूट+चतुरर्थ्यां कृशाश्वा० छण्। कूटसन्निकृष्ट-

**कौटीर्य** त्रि० कुटीरः केवल एव स्वार्थे ष्यञ्। केवले असहाये। कौटिरीय्या यस्याः। २दुर्गायाम् स्त्री "कौटीर्यां मदिरां चण्डामिलां मलयवासिनीम्" हरिवं० १७८अ०

**कौटुम्ब** त्रि० कुटम्बं तद्भरणं प्रयोजनमस्य अण्। कुटुम्बभरणोपयोगिद्रव्ये। आहरेदियत्तद्वृत्तौ "अन्यथा कौटुम्बम्" आश्व० स्ट० सू० २,६,१०,

**कौटुम्बिक** त्रि० कुटम्बे तद्भरणे प्रसृतः ठक्। कुटुम्बभरणे व्यापृते "कौटुम्बिकः क्रुध्यति वै जनाय" भाग० ५,५,१२,६,। कुटुम्बे भवः ठक्। २कुटुम्बमध्यपातिनि। "यत्र कौटुम्बिका दारापत्यादयोनाम्ना, कर्म्मणा वृकसृगाला एव" भाग० ५,१४,५,

**कौट्या** स्त्री कूटस्यापत्यम् इञ् स्त्री कौटिः सैव क्रौड्या ष्यङ्। १कूटापत्यस्त्रियाम् कूट+चतुरर्थ्याम्। संङ्काशा० ण्य। २कौट्य कूटसन्निकृष्टदेशादौ त्रि०

**कौठारिकेय** त्रि० स्वल्पा कुठारी कुठारिका तस्याः इदम् शुभ्रा० ढक्। स्वल्पकुठारसम्बन्धिनि

**कौडविक** त्रि०कुडवस्य वापः ठञ्। कुडववापयोग्ये क्षेत्रादौ कुडवं तत्परिमितमन्नं सम्भवति पचति अवहरति वा ठञ्। २तस्मिन् कुडवमितान्नसमावेशके कटाहादौ ३तत्पाचके सूदादौ ४तदवहारके च स्त्रियां ङीप्। कुडवः परिमाणमस्य ठञ्। ५कुडवपरिमिते। संख्यापूर्व्वकत्वे पूर्व्वपदस्य न वृद्धिः द्विकौडविकः। तत्पूर्व्वकस्य तु वा वृद्धिः आ(अ)र्द्धकौडविकः। असंज्ञायान्तु ठञोलुक्। द्विकुडवम् अर्द्धकुडवम् इत्यादि।

**कौड्यक** त्रि० कुट्ड—काकर्श्यं यत् संयोगादिलोपः कुड्या तत्र जातादि कच्छ्या० ढकञ् "कुड्याया यलोपश्च" पा० ग०यलोपः। कार्कश्यकरणार्हायां भूमौ जातादौ

**कौणकुत्स्य** पु० ऋषिभेदे। "भरद्वाजः कौणकुत्स्य आर्ष्टिषेणोऽथ गौतमः" भा० आ० ८अ०।

**कौणप** पु० कुणपः शवः भक्ष्यत्वेन विद्यतेऽस्य,अण् कुणपस्तद्गन्धो शीलमस्य ण वा। राक्षसे अमरः"न कौणपाः शृङ्गिणो वा न देवा नच भा०आ०१७०अ०मानुषाः"स्त्रियां ङीप्

**कौणपदन्त** पु० कौणपस्य दन्तादिव दन्ता अस्य। भीष्मे त्रिका०

**कौणपाशन** पु० कौणपानामशनमिवाशनमस्य। सर्पभेदे "हस्तिपिण्डः पिठरकः सुमुखः कौणपाशनः" भा० आ० ३१क० नागनामोक्तौ

**कौण्डपायिन्** पु० ब०व० कुण्डमेव कौण्डं तेन पिबति सोमं पा—णिनि। सोमयागकारियजमानभेदेषु।

**कौण्डपायिन** न० कुण्डपायिनामिदम् अण् नि० प्रकृतिभावः। कुण्डपायिनां (कुण्डेन सोमपायिनाम्)सम्बन्धिनि अयनरूपे सत्रभेदे कुण्डपायिनामयनशब्दे विवृतिः।

**कौण्डल** त्रि० कुण्डलमस्त्यस्य ज्योत्स्ना० अण्। कुण्डलयुक्ते त्रि० स्त्रियां ङीप्। [सन्निकृष्टदेशादौ

**कौण्डलिक** त्रि० कुण्डल+चतुरर्थ्यां कुमु० ठक्। कुण्डल

**कौण्डाग्नक** त्रि० कुण्डस्येदमण् कौण्डे अग्नौ भवः वृद्धात्वाग्न्युत्तरपदत्वात् वुञ्। कुण्डसम्बन्ध्यग्निभवे

**कौण्डायन** त्रि० कुण्डस्यादूरदेशादि पक्षा० चतुरर्थ्यां फक्। कुण्डसन्निकृष्टादेशादौ [कुण्डिननगरजातादौ

**कौण्डिनेयक** त्रि० कुण्डिने जातादि कच्छ्या० ढकञ्।

**कौण्डिन्य** पुंस्त्री कुण्डिनस्यर्षे र्गोत्रापत्यं गर्गा॰यञ्। कुण्डिन गोत्रापत्ये। "कौण्डिन्यात् कौण्डिन्य" शत॰ब्रा॰१४।५।५।२०। स्त्रियां तु ङीपि यलोपः "पाराशरकौण्डिनीपुत्रात् पाराशरकौण्डिनीपुत्रः" शत॰ ब्रा॰ १४।९।४।३०। वंशब्राह्मणे। कुण्डिनस्य युवापत्यम् गर्गा॰ यञि यञन्तात् फक्। कौण्डिन्यायन कुण्डिनस्य युवापत्ये पुंस्त्री "कौण्डिन्यायनाच्च कौण्डिन्यायनः" शत॰ ब्रा॰ १४।५।५।२०। कौण्डिन्यस्य छात्रः कण्वा॰ अण् यलोपश्च। कौण्डिन कौण्डिन्यस्यछात्रे। बहुषु अणोलुक् कुण्डिनादेशश्च कुण्डिनः। स्त्रियां तु न लुक् किन्तु गोत्रत्वात् ङीष्यलोपौ कौण्डिनी।

**कौण्डलक** पु॰ १सुश्रुतोक्ते शकम्युनविषे जन्तुभेदे विषशब्दे विवृतिः। २तत्लोक्ते कीटभेदे च कीटशब्दे विवृतिः

**कौण्डोपरथ** पु॰। आयुधजीविसंघे ततः स्वार्थे छ। कौण्डोपरथीय तदर्थे। "आङ्गुष्ठिगर्त्तपत्रांस्तु कौण्डोपरथदाण्डिकाः क्रौष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः" सि॰ कौ॰। [ तस्कुतोभवे।

**कौतस्कुत** त्रि॰ कुतः कुतोभवः अण् टिलोपः कस्का॰। कु-

**कौतस्त** त्रि॰ कुतस्त्येभवः अण् नि॰ वेदे यलोपः। कुतस्त्यभवे। "कौतस्तावध्वर्यू अरिमेजयश्च जनमेजयश्च" पारा॰ आह्न॰।

**कौतुक** न॰ कुतुकस्य भावः युवादि॰ अण् प्रज्ञा॰ स्वार्थे अण् वा। १कुतूहले अमरः। तत्र अङ्गुतजिज्ञासातिशयः। "कौतुकागारमागात्" कुमा॰। २मङ्गलार्थहस्तसूत्रे शाश्वतः "वैवाहिकैः कौतुकसंविधानैः" कुमा॰। ३उत्सवे ४अभिलाषे ५नर्मणि ६हर्षे ७परम्परायातमङ्गले ८गीतादिभोगे ९भोगकाले च हेम॰।

**कौतूहल** न॰ कुतूहलस्य तदन्वितस्य भावः कर्म वा युवा॰ अण् प्रज्ञादि॰स्वार्थे अण् वा। कुतूहले "विस्तरश्रवणे जातं कौतूहलमतीव मे" भा॰ आ॰ ६२अ॰। "महत् कौतूहलं मेऽस्ति हरिश्चन्द्रकथां प्रति" मार्क॰ ८।१।

**कौतूहल्य** न॰ कुतूहल+ब्राह्मणा॰ स्वार्थे ष्यञ्। कुतूहले

**कौतोमत** पु॰ कुतोमतस्यापत्यम् ऋष्यण्। ऋषिभेदे। "सहस्रवाग्गुर्गौपल्य इति कौतोमतेन" गोपथब्राह्मणम्।

**कौत्स** पुंस्त्री कुत्सस्य ऋषेरपत्यम् ऋष्यण्। कुत्सापत्ये "भूर्भुवः स्वरिति जपित्वा कौत्सोऽहिंङ्कुरोति" आश्व॰श्रौ॰ सू॰ १।२।५। "कौत्साय दत्त्वा कन्यान्तु हर्वीं नाम यशस्विनीम्" भा॰ आ॰ १२७अ॰। "कौत्सः प्रभेदे वरतन्तुशिष्यः" रघुः। बहुषु तस्य लुक्। कुत्साः तदपत्येषु। कुत्सेन दृष्टं साम अण्। कुत्सर्षिदृष्टे विकृतियागे गेये सामभेदे। तच्च साम देवाने १६प्र॰ २अर्द्धे १०गानम्। "कौत्सं भवति काण्वं भवति" श्रुतिः।

**कौथुम** त्रि॰ कुथुमं वेदशाखाभेदमधीते वेद वा अण्। १कुथुमशाखाध्यायिनि तद्वेत्तरि च। तस्य कार्त्तकौजपादित्वात् द्वन्द्वे पूर्वपदं प्रकृत्या। कठकौथुमाः इत्यादि। "अनुवादे चरणानाम्" पा॰ द्वन्द्वे एकवत् प्रत्ययात् कठकौथुमम्। "स्थेणोर्लुङि" वार्त्ति॰ स्थाधातोरिणधातोश्च लुङ्प्रयोग एव तस्य तथात्वं नियमितम् [ ब्रह्मवै॰जातिशब्दे विवृतिः

**कौदालीक** पुंस्त्री॰ रजक्यां तीवराज्जाते संकीर्णवर्णभेदे

**कौद्रविक** न॰ कोद्रवो निमित्तमस्य ठञ्। सौवर्च्चलवणे राजनि॰ [ धान्यभवनयोग्ये क्षेत्रे अमरः

**कोद्रवीण** न॰ कोद्रवस्य भवनं क्षेत्रं कोद्रव+खञ्। कोद्रव

**कौद्रा(न्द्रा)यण** पुंस्त्री॰ कद्र(न्द्र)स्य ऋषेर्युवापत्यम् इञ कौद्रिः(न्द्रिः) इञन्तत्वात् यून्यपत्ये फक्। कुद्रि(न्द्रि) नामर्षेर्युवापत्ये ततः अरीह॰ चतुरर्थ्यां वुञ्। कौन्द्रायणक तत्सन्निकृष्टदेशादौ त्रि॰

**कौनख्य** न॰ कुनखिनोभावः ष्यञ् टिलोपः। कुत्सितनखरूपे रोगभेदे तच्च सुवर्णस्तेयमहापातकजचिह्नम् "सुवर्णचौरः कौनख्यम्" मनूक्तेः। [ मित्र्यादौ

**कौन्तायनि** त्रि॰ कुन्ती+चतुरर्थ्यां कर्णा॰ फिञ्। कुन्ती-

**कौन्तिक** कुन्तः प्रहरणमस्य ठञ्। कुन्तास्त्रेण युद्धकारके अमरः। [पृथौ अमरः

**कौन्ती** स्त्री कुन्तिषु देशेषु भवा अण् ङीप्। भस्मगन्धिन्यो-

**कौन्तेय** पु॰ कुन्त्या अपत्यम् ढक्। १युधिष्ठिरादिषु त्रिषु। "कौन्तेय! प्रतिजानीहि न मे कर्मफले स्पृहा" गीता २अर्जुनवृक्षे राजनि॰ तस्य तत्तुल्यनामत्वात्तथात्वम्।

**कौप** त्रि॰ कूपस्येदम् अण्। कूपसम्बन्धिनि जलादौ "क्षार पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु" सुश्रुते तद्गुणा उक्ताः। "वसन्ते कौपं मासवर्णं वा चौभ्रेत्रवम्" सुश्रुतोक्तकाले तस्य सेव्यता। स्त्रियां ङीप्।

**कौपीन** न॰ कूपे पतनमर्हति खञ् अकार्यं नि॰। १अकार्ये २पापे ३गुह्यप्रदेशे अमरः ४चीरे त्रिका॰ ५मेखलावद्धे वस्त्रखण्डे (कपनी) मेदि॰ तद्वारेण कूपे पतनात् तस्य तथात्वम्। अकार्यवदाच्छाद्यत्वात् ६पुरुषलिङ्गे शब्दचि॰ तदावरकतया वस्त्रखण्डस्य कौपीनत्वम्। "कौपीनवन्तः खलु भाग्यवन्तः" पुरा॰"कौपीनाच्छादनं यावत्तावदिच्छेद्धि

चीवरम्" भा० आ० ८१अ० । "अवलासत्सकौपीनाः सुहृदः सव्यजिण्णवः" भा०अनु०४६अ० । [हूपकोषः ।

**कौपोदकी** स्त्री कौमोदकी पृषो० । विष्णुगदायां हि-

**कौमार** पु० अपूर्व्वपतिकां कुमारीमुपपन्नः पतिः "कौमारा रापूर्व्ववचने" पा० नि० । अपूर्व्वपतिकायाः कुमार्य्याः १वोढरि । कुमारस्य भावः"प्राणभृज्जयो वचनत्वात् अञ् । "जातः कुं पृथिवीं यज्ञैर् मारयेत् स कुमारकः । इति प्रधानतो विद्धि कौमारं प्रागभवावदतः'" इत्युक्तायधिके "कौमारं पञ्चमावधि" इत्युक्ते २वयोवस्थाभेदे न० । "देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा" गीता । "पिता रक्षति कौमारे भर्त्ता रक्षति यौवने" मनुः । कुमार एव स्वार्थे अण् । ३कुमारे शब्दचिन्ता० । कुमारस्य सनत्कुमारस्येदम् अण् । ४सर्गभेदे पु० स च सर्गः सनत् कुमारादिसर्ज्जनपूर्व्वकत्वात् तन्नामकः । "कौमार आर्षः प्राजापत्योमानव इत्यादि सर्गनामानि" श्रीधरः । "सएव प्रथमं देवः कौमारं सर्गमाश्रितः । चचार दुश्चरं ब्रह्मा ब्रह्मचर्य्यमखण्डितम्" भाग० १,३,७, "वैकारिकस्तु यः प्रोक्तः "कौमारस्तूभयात्मकः" भाग० ३.१०,२०,५, ५कुमारसम्बन्धिनि त्रि० "तत विद्याव्रतस्नातः कौमारं व्रतमास्थितः" भा० व० ८५अ०

**कौमारायण** पु०स्त्री० कुमारस्य गोत्रापत्यं नड़ा० फक् । कुमारनामकर्षिगोत्रापत्ये । [कानीने

**कौमारिकेय** पु०स्त्री० कुमारिकाया अपत्यं शुभ्रा० ढक् ।

**कौमारी** स्त्री अप्रतोकं कुमारं पतिमुपपन्ना स्त्री "कौमारापूर्व्ववचने"पा०नि०ङीप् । १अदृष्टोतदारान्तरस्य पत्युः १भार्य्यायाम् । कुमारस्येयमण् ङीप् । २कुमार सम्बन्धि-चेष्टादौ "कौमारीं दर्शयंश्चेष्टाम्" भाग०३,२,२८, कुमारस्य कार्त्तिकेयस्येयम् अण् ङीप् । ३कार्त्तिकेयशक्तौ । "कौमारी शक्तिहस्ता च मयूरवरवाहना । योद्धु-मभ्याययौ क्रुद्धं रक्तवीजं महासुरम्" कौमारीशक्ति निर्भिन्नाः केचिन्नेशुर्महासुराः" देवीमाहात्म्यम्

**कौमुद** पु०"कौ मोदन्ते जनायस्मिन् कौमुदस्तेन कीर्त्तितः" इत्युक्तलक्षणे १कार्त्तिकमासे । "एतैरन्यैश्च राजेन्द्रैः पुरा मांसं न भक्षितम् । शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुयुः । कौमुदं तु विशेषेण शुक्लपक्षं नराधिप ! । वर्ज्जयेत् सर्वमांसानि धर्मोह्यत्र विधीयते" म०त०भार०

**कौमुदी** स्त्री कुमदस्येयं प्रकाशकत्वात् प्रिया अण् ङीप् । १ज्योत्स्नायाम् अमरः । "शशिना सह याति कौमुदी" "कुमा०।तद्वत्प्रकाशिकायाम् "त्वमस्य लोकस्य च नेत्रकौमुदी"कुमा० कौमुदस्येयम् अण् ङीप् । "कुशब्देन मही ज्ञेया मुद हर्षे० ततोद्वयम् । धातुज्ञैर्नियमैश्चैव तेन सा कौमुदी स्मृता" इत्युक्तायां २कार्त्तिकपौर्ण्णमास्यां "कौ मोदन्ते जनायस्यान्नानाभावैः परस्परम् । हृष्टास्तुष्टाः सुखापन्नास्तेन सा कौमुदी मता" इत्युक्तायाम् ३आश्विन पौर्ण्णमास्याम्"आश्विने पौर्ण्णमास्यान्तु चरेज्जागरणं निशि कौमुदी सा समाख्याता कार्य्या लोकविभूतये" ति० त० लिङ्गोक्तेः । ४दीपोत्सवतिथौ दीपोत्सवतिथिं प्रकृत्य भविष्योत्तरे "कौ मोदन्ते जनायस्यां तेन सा कौमुदी मता" "सखीजनोद्वीक्षणकौमुदीमुखम्" रघुः कौमुदी दीपोत्सवतिथिः"इति मल्लि०"५उत्सवे धरणिः" ६कार्त्तिकोत्सवे त्रिका० । स्वार्थे क । ह्रस्वे कौमुदिका ज्योत्स्नायाम् । संज्ञायां कन् । ७मासखीभेदे शब्दरत्ना० कुमुद+चतुरर्थ्यां ऋ० कुमुदा० ठक् । कौमुदिक कुमुदसन्निकृष्टदेशादौ त्रि०

**कौमुदीचार** पुं न० कौमुद्या ज्योत्स्नाया चारः प्राशस्त्यमत्र काले । आश्विनपौर्ण्णमास्याम् त्रिका०

**कौमुदीपति** पु० ६त० । चन्द्रे हारा०कौमुदीनाथादयोऽप्यत्र

**कौमुदीवृक्ष** पु० कौमुद्याः प्रकाशिकायाः दीपशिखाया वृक्ष इवाधारः । दीपवृक्षे (पिलसुज) हारा०

**कौमोदकी** स्त्री कोः पृथिव्याः पालकत्वात् मोदकः कुमोदको विष्णुः तस्येयम् अण् । विष्णुगदायाम् अमरः "कौमोदकी मोदयति स्म चेतः"माघः ।"दैत्यैरनादिवीर्य्यस्य गदा तस्यापरे करे । निक्षिप्ता कुमुदाक्षस्य नाम्ना कौमुदकीति सा" हरि० ८२अ०

**कौमोदी** स्त्री कुं मोदयति अण् कुमोदः विष्णुस्तस्येयमण् ङीप् । विष्णुगदायाम् शब्दरत्ना०

**कौम्भकारि** पुंस्त्री० कुम्भकारस्यापत्यं शिल्पित्वात् पक्षे इञ् । कुम्भकारापत्ये स्त्रियां वा ङीप् । पक्षे अञ् । कौम्भकार्य्य तत्रार्थे ।

**कौम्भायन** त्रि० कुम्भस्य सन्निकृष्टदेशादि पक्षा० फक् । कुम्भसन्निकृष्टदेशादौ [ष्टदेशादौ

**कौम्भायनि** त्रि० कुम्भ+चतुरर्थ्यां कर्णा०फिञ् । तत्सन्निक-

**कौम्भेयक** त्रि० कुम्भ्यां जातादि कत्र्या० ढकञ् । कुम्भी-जातादौ [कृष्टदेशादौ

**कौम्भ्य** त्रि० कुम्भ+चतुरर्थ्यां सङ्काशा० ण्य । कुम्भसन्नि-

**कौरयाण** पु०कुरयाणस्य (शत्रुं प्रति कृतयानस्य)अयम् अण् वेदे पृषो०। शत्रुं प्रति कृतयानस्य सम्बन्धिनि तत्पुत्रादौ

"पाकस्य मा कौरयाण:"ऋ०८।३।२१तद्भाष्ये तथार्थोक्तेः
**कौरव** पुंस्त्री० कुरोरपत्यादि उत्सा० अञ् तद्देशस्य राजा अण् तेषु भवो वा अण्। १कुरुवंश्ये "तस्यान्ववायः सुमहान् यस्य नाम्ना स्म कौरवाः। कुरोस्तु पुत्राश्चत्वारः" हरिवं ६२अ०। २तद्देशन्टपे पु० ३कुरुसम्बन्धिनि ४तद्देशभवे च त्रि०। स्त्रियां ङीप्। "द्रुपदः कौरवान् दृष्ट्वा प्राधावत समन्ततः। शरजालेन महता मोहयन् कौरवीं चमूम्" भा० आ० १३८अ० "क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः" मेघदूतम्।
**कौरवक** त्रि० कुरौ तद्वंशे जातादि "विभाषा कुरुयुगेन्धि" पा० वा वुञ्। १कुरुवंशोद्भवे। कुरवकस्येदमण्। २कुरवकसम्बन्धिनि
**कौरवायणि** पुंस्त्री कुरोरपत्यम् तिका० फिञ्। कुरुवंश्ये
**कौरवेय** पुंस्त्री कुरोपत्यं बा० ढक्। कुरुवंश्ये। "सभा हि कौरवेयाणां वयं ते चैव पुत्रक!" भा० आ० १४२अ०। "निमोच्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत!" भा० व० ८अ०।
**कौरव्य** पुंस्त्री० कुरोरपत्यम् कुर्व्वादि० ण्य। १कुरुवंश्ये। "कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलम्" वेणीसं०। तस्यापत्यं तिका० फिञ्। कौरव्यायणि कुरुकुलोत्पन्ने ब्राह्मणादावपत्ये पुंस्त्री कुरूणां राजा ण्य। २कौरव्य कुरुदेशराजे। स्त्रियां ङीप् कौरवी स्त्री। ण्यान्तत्वात् यून्यपत्ये फिञो लुक्। कौरव्यः पिता पुत्रश्च सि० कौ०।
**कौरुकत्य** पुंस्त्री कुरुकतस्यर्षेरपत्यम् गर्गा० यञ्। कुरुकतस्यर्षेरपत्ये युवापत्ये फिञ्। कौरुकत्यायनि तदीय युवापत्ये पुंस्त्री
**कौरुज(जा)ङ्गल** त्रि० कुरुजङ्गले जातादि अण् उत्तरपदस्य वा वृद्धिः। कुरुजङ्गलभवे
**कौरुपाञ्चाल** त्रि० कुरुपञ्चालदेशे प्रसिद्धः अण् उभयपद वृद्धिः। कुरुषु पञ्चालेषु च प्रसिद्धे। "प्रज्ञातं कौरुपाञ्चालं यद्वत्तरवत्तम्" शत०ब्रा० १,७,२,८, कौरुपाञ्चालो वा अयं ब्रह्मा ११।४।१।२।
**कौर्प्य** पु० "क्रियतावृरिजित्तमकुलीरलेयपाथेययूककौर्प्याख्याः। तौक्षिक आकोकेरो हृद्रोगश्चान्त्यभं चेत्थम्" नीलकण्ठोक्ते वृश्चिकराशौ।
**कौर्म** न०कूर्ममधिकृत्य कृतो ग्रन्थोः अण्, कूर्मस्येदम् अण् वा। १कूर्मपुराणे २कूर्मसम्बन्धिनि त्रि०।

**कौल** त्रि० कुले भवः त्र्भिच्चः अण्। सत्कुलभवे १कुलीने ऋषि तु कौलेयक इत्येव। कुले कुलाचारे रतः तं वेत्ति वा अण्। २तन्त्रोक्तकुलाचाररते ३तदाचारवेदिनि च। "दिव्यभावरतः कौलः सर्वत्र समदर्शनः" कुलार्णवः। 'पशोर्मुखाल्लब्धमन्त्रः पशुरेव न संशयः। वीराल्लब्धमनुर्वीरः कौलाच्च ब्रह्मविद्भवेत्" महानीलतन्त्रम्। कुलं कुलाचारमधिकृत्य कृतो ग्रन्थः अण्। ४कुलाचारप्रवर्त्तके ग्रन्थे कौलोपनिषदादौ।
**कौलक** त्रि० कुले भवः सौवीरः धूमा०वुञ्। कुलभवे सौवीरे
**कौलकेय** त्रि० कुले सत्कुले भवः बा० ढक् कुक् च। १सत्कुलोद्भवे। कौलटेय+पृषो०। २असतीपुत्रे पुंस्त्री शब्दरत्ना०
**कौलटिनेय** पुंस्त्री भिक्षुक्याः सत्या अपत्यम् ढक् इनादेशश्च। सत्या भिक्षुक्याः अपत्ये अमरः स्त्रियां ङीप्
**कौलटेय** पुंस्त्री कुलटायाः सत्याः असत्या वा अपत्यम् ढक्। सत्याः असत्याश्च भिक्षुक्याः अपत्ये अमरः। स्त्रियां ङीप्।
**कौलटेर** पुंस्त्री कुलटायाः असत्या अपत्यम् आचारेण क्षुद्रत्वात् ("क्षुद्राभ्यः")पा०द्रक्। बन्धक्याः अपत्ये अमरः।
**कौलत्थ** त्रि० कुलत्थेन संस्कृतम् अण्। कुलत्थसंस्कृते "पायसेन्द्वाम्लकौलत्थसुरासौवीरकादिभिः" सुश्रु०।
**कौलत्थीन** न० कुलत्थस्य भवनं क्षेत्रम् खञ्। कुलत्थोत्पत्तियोग्ये क्षेत्रे
**कौलपुत्रक** न० कुलपुत्रस्य भावः मनोज्ञा० वुञ्। कुलपुत्रभावे
**कौलव** पु० ववादिषु तृतीये तिथ्यर्द्धरूपे करणभेदे। करणशब्दे १६६० पृ० विवृतिः
**कौलालक** त्रि० कुलालेन कृतं संज्ञायां वुञ्। कुलालकृते शरावादौ असंज्ञायान्तु अण् कौलाल तत्कृते। तस्येदमण् कौलाल तत्सम्बन्धिनि त्रि० "रथचक्रं वा कौलालचक्रं वा" शत० ब्रा० ११।८।४।१
**कौलिक** त्रि०कुलादागतः ठक्। १कुलपरम्परागते आचारादौ। कुले कुलागमे सिद्धः ठक्। तन्त्रोक्ते २कुलाचारे। कौलं कुलधर्मं प्रवर्त्तयति ठक्। ३कुलधर्मप्रवर्त्तके शिवे। शब्दमा०। ४पाषण्डे त्रिका०। कुलं तदाचारः प्रयोजनमस्य ठक्। ५कौले ब्रह्मविदि "यदः कौलिकः" श्रुतिः
**कौलितर** पु० कुलितरस्यापत्यम् ऋष्यण्। शम्बरासुरे "उत दासं कौलितरं बृहतः पर्व्वतादधि। अवाहन्निन्द्र" शम्बरम्" ऋ०४,३,०१४ कुलितरनाम्नोऽपत्यं शम्बरमसुरम्" भा०
**कौलिशायनि** त्रि०कुलिश+चतुरर्थ्यां कर्णा० फिञ्। कुलिशसन्निकृष्टदेशादौ

**कौलिशिक** त्रि॰ कुलिश+अङ्गुल्या॰ इवार्थे ठक्। कुलिशसदृशे

**कौलीन** त्रि॰ कौ पृथिव्यां लीनः ७त॰ अलुक् स॰। १भूमिलग्ने। कुलादागतः खञ्। २कुलक्रमागते "सद्व इवमर्य्यादां कौलीनां नात्यवर्त्तत" रामा॰ आ॰ ८७ अ॰। ली-भावे क्त कौ लीनं लयो यस्मात्, कुलीनं भूमिलग्नमर्हति अण् वा। भूमिलग्नतासाधने ३अपवादे "कौलीनमात्माश्रयमाचचक्षे" "कौलीनभीतेन गृहान्निरस्ता" रघुः "मा कौलीनाद्दलितनयने! मय्यविश्वासिनी भूः" मेघः अपवादे हि भूमिलग्नइव लोकोभवतीति तस्य तथात्वम्। ४गुह्ये ५जन्ये (युद्धे) ६कुकार्य्ये ७पशुसर्पाणां युद्धे च न॰ मेदि॰ तेषां भूमिलग्नतासाधनत्वात्तथात्वम्।

**कौलीरा** स्त्री कुलीरः तत्कृङ्गाकारोऽस्त्यस्याः अच्। कर्कटशृङ्गाम् (काँकडाशिङ्गा) राजनि॰

**कौलेय** त्रि॰ कुले+भवः वा॰ ढक्। सत्कुलोत्पन्ने भरतः

**कौलेयक** पु॰ कुले भवः श्वा ढकञ्। १कुलागते कुक्कुरे। अमरः २सत्कुलीने मेदि॰।

**कौलेशभैरवी** स्त्री त्रिपुराभैरवीभेदे। "सम्पत्प्रदाभैरवीवत् विद्धि कौलेशभैरवीम्। ह्रसायाः सैव देवेशि! त्रिषु बीजेषु पार्व्वति!" ज्ञानार्णवः। "त्रिकूटे ह्रसाद्यासेत् तदा कौलेशभैरवी भवति" तन्त्रसारः

**कौल्माषिक** त्रि॰ कुल्माषे साधु ठञ्। कुल्माषसाधने

**कौल्माषीण** न॰ कुल्माषाणां भवनं क्षेत्रम् खञ्। कुल्माषधान्योत्पत्तियोग्ये क्षेत्रे

**कौल्य** त्रि॰ कुले भवः ष्यञ्। सत्कुलीने हिरूपकोषः।

**कौवल** न॰ कुवलमेव प्रज्ञा॰ स्वार्थे ण। कोलिफले हिरूपको॰।

**कौविदार्य्य** त्रि॰ कोविदार+चतुरर्थ्यां प्रगद्या॰ ञ्य। कोविदारसन्निकृष्टदेशादौ।

**कौवेर** त्रि॰ कुवेरस्येदम्, कुवेरोदेवताऽस्य वा अण्। १कुवेरसंबन्धिनि २तद्देवताके च "कौवेरमथ याम्यञ्च चक्राते वरुणस्य च" देवीभा॰। "यानं सस्मार कौवेरम्" रघुः। "कौवेरदिग्भागमपास्य मार्गम्" माघः। स्त्रियां ङीप्। "दिग्विभागे तु कौवेरी दिक् शिवप्रीतिदायिनी" ति॰त॰ पु॰। "ततः प्रतस्थे कौवेरीम्" रघुः। ३कुष्टद्रव्ये (कुड़) न॰ शब्दरत्ना॰। [रिकाया अपत्ये।

**कौवेरिकेय** पुंस्त्री॰ कुवेरिकाया अपत्यम् शुभ्रा॰ ढक्। कुवे-

**कौश** न॰ कुशाः भूम्ना सन्त्यत्र अण्। १कान्यकुब्जदेशे हेमच॰। स्वार्थेऽण्। २कुशद्वीपे "शाकं ततः शाल्मलमत्र कौशम्" सि॰ शि॰। कुशशब्दे २१४५पृ॰ विवृतिः। कुशस्येदं तद्विकारो वा अण्। ३कुशसम्बन्धिनि ४तन्मये पवित्रादौ। "तत्र वासाय शयने कौशे सुखसुवास ह" भा॰ अनु॰ १९अ॰। स्त्रियां ङीप्। "कौश्यां बृष्यां समासीनम्" भा॰ अनु॰ ५४अ॰

**कौशल** न॰ कुशलस्य भावः युवा॰ अण्। दक्षतायाम् "सीमेव पद्मासनकौशलस्य" भट्टिः। "आन्वीक्षिकी कौशलानाम्" "योगः कर्म्मसु कौशलम्" गीता। "हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषः" माघः।

**कौशलि** पुंस्त्री॰ कुशलाया अपत्यं बाह्वा॰ इञ्। कुशलाया अपत्ये स्त्रियां वा ङीप्। यून्यपत्ये फञ्। कौशलायन तदीययुवापत्ये पुंस्त्री

**कौशलिका** स्त्री कुशलस्य पृच्छा ठक्। १कुशलप्रश्ने। कुशलाय मङ्गलाय दीयते ठक्। २उपायने उपढौकने। त्रिका॰। [ढौकने २कुशलप्रश्ने च त्रिका॰।

**कौशली** स्त्री कुशलाय दीयते तस्य पृच्छा वा अण्। १उप-

**कौश(स)लेय** स्त्री कोश(स)लाया अपत्यं ढक् यलोपः। श्रीरामे दशरथपुत्रे

**कौशल्य** न॰ कुशलमेव ब्राह्म॰ ष्यञ्। १कुशले। भावे ब्राह्म॰ ष्यञ्। २दक्षतायाम्। "दृष्ट्वा कौशल्यमन्योन्यं रथचर्य्यास्ववर्त्तस्थिरे" भा॰ व॰ २४४अ॰

**कौश(स)ल्या** स्त्री कोश(स)लदेशे भवा ञ्य। कोश(स)लदेशभवायां श्रीराममातरि दशरथपत्नीभेदे। [दयोऽप्यत्र।

**कौश(स)ल्यातनय** पु॰ ६त॰। सीतापतौ श्रीरामे तत्सुता-

**कौश(स)ल्यायनि** पु॰ कौश(स)ल्याया अपत्यम् फिञ्। श्रीरामे त्रिका॰ "श्रियामहे न गच्छामः कौश(स)ल्यायनिवल्लभाम्" भट्टिः। कौश(स)ल्य पयार्थकता जयमङ्गलयाक्ता।

**कौशाम्ब** त्रि॰ कुशाम्बेन निर्वृत्तः अण्। १कौशाम्बराजकृते २तत्कृते पुरीभेदे स्त्री ङीप्। "कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत् पुरीम्" रामा॰। सा च पुरी गौडदेशान्तर्गतवत्सभूमिगता। "अस्ति वत्स इति ख्यातोदेश इत्युपक्रमे" कौशाम्बी नाम तत्रास्ति मध्यभागे महापुरी" कथासरित्सागरः। "अस्ति गौडविषये कौशाम्बी नाम नगरी" हितो॰। "निर्ऋकौशाम्बिः" सि॰ कौ॰

**कौशाम्बेय** पुंस्त्री कुशाम्बस्य गोत्रापत्यम् शुभ्रा॰ ढक्। कुशाम्बवंश्ये

**कौशिक** न॰ कुशिकस्यापत्यं कुशस्य कुशेन हृतः अध्या॰ ठञ्। कुशिके तद्वंशे भवः अण् वा। १इन्द्रे २पेचके पुंस्त्री॰ उभयत्र "शशाङ्कुर्ग सोढुमभीरुलोचनः सहस्ररश्मेरिव

यस्य दर्शनम्। प्रविश्य हैमाद्रिगुहाभ्यन्तरं विनाव विभ्यद्दिवसानि कौशिकः” माघः। इन्द्रस्य कुशिकपुत्रत्वप्राप्तिकथा “कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमप्रभम्। लभेयमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान्। स गाधिरभवद्राजा मघवान् कौशिकः स्वयम्” हरिवं० १अ०। “कुशिकस्तु तपस्तेपे” इत्युपक्रम्य “अत्युग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः। समर्थं पुत्रजनने स्वमेवांशमवासयत्। पुत्रत्वे कल्पयामास स देवेन्द्रः सुरोत्तमः। स गाधिरभवद्राजा मघवान् कौशिकः स्वयम्” हरिवं० २७अ०। कुशैर्देतत्वाद्वा कौशिकत्वमस्य यथाह तत्रैव “जातमात्रस्तु भगवानादित्यां स(शक्रः)कुशैर्वृतः। तदाप्रभृति देवेशः कौशिकत्वमुपागतः” हरि० २२७अ०। ३गुग्गुलौ ४व्यालग्राहिणि (सापुड़े) अमरः। ५नकुले ७कोषाध्यक्षे मेदि०। ८कोषकारे शब्दरत्ना० ८शृङ्गाररसे त्रिका० १०मज्जनि हेम० ११अश्वकर्णवृक्षे राजनि०। कुशिकस्य गोत्रापत्यम् विदा० अञ्। १२विश्वामित्रमुनौ स हि कुशिकपुत्रस्य गाधेरपत्यम्। कुशिकशब्दे तन्मूलं दृश्यम्। “अपिबच्च ततः सोममिन्द्रेण सह कौशिकः” भा० आ० १७५अ०।
१३पौरववंश्ये नृपभेदे। “पारीक्षितस्य द्वौ पुत्रौ” इत्युपक्रमे “प्रतिष्ठायाश्च द्वौ पुत्रौ पैप्पलादिश्च कौशिकः” हरिव १८१अ०। जरासन्धन्टपस्य हंसनामके १४सेनापतिभेदे “स तु(जरासन्धः)सेनापती! राजा सस्मार भरतर्षभ!। कौशिकं चित्रसेनञ्च तस्मिन् युद्धे उपस्थिते। ययोस्ते नामनी राजन् हंसेति डिम्भकेति च” भा० स० २१अ०। तस्य च कौशिकवंश्यत्वात् तथात्वम्। १५असुरभेदे “स्वस्रमः शाक्षवदनः करालः कौशिकः शरः” हरिव० ४२अ०। कुशिकवंशोद्भवत्वात् १६नदीभेदे स्त्री तस्या उत्पत्तिकथा रामा० आ० ३४अ०
“कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन!। पूर्वजा भगिनी चापि मम राघव! सुव्रता। नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता। सशरीरा गता स्वर्गं भर्त्तारमनुवर्त्तिनी। कौशिकी परमोदारा प्रवृत्ता च महानदी। दिव्यपुण्योदका रम्या हिमवन्तमुपाश्रिता। लोकस्य हितकार्यार्थं प्रवृत्ता भगिनी मम। ततोऽहं हिमवत्पार्श्वे वसामि नियतः सुखम्। भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन!। सा तु सत्यवती पुण्या सत्ये धर्मे प्रतिष्ठिता। पतिव्रता महाभागा कौशिकी सरितां वरा”
“तत्र मासं वसेद्वीर! कौशिक्यां भरतर्षभ!। अश्वमेधस्य यत् पुण्यं तत्प्राप्नोत्यधिगच्छति” भा०व०८४अ०; “कुशिकस्याश्रमं गच्छेत् सर्वपापप्रमोचनम्। कौशिकीं तत्र गच्छेत महापापप्रणाशिनीम्। राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः” तत्रैवाध्याये। “इयञ्च नदी हिमवतः निःसृता चम्पानगरसन्निकृष्टे उत्तरपारे गङ्गायां सङ्गता। “ततो गच्छेत राजेन्द्र! चम्पकारण्यमुत्तमम्” तत्रत्यक्रोसस्यास्तत्सन्निकृष्टत्वम्। १७यशोदाकन्यात्वेनोत्पन्नायां योगमायायाम्। कौशिकेन्द्रेण भगिनीत्वेन कल्पनेन विष्णुना तस्यास्तन्नामकरणात्तथात्वं यथोक्तम् “तत्र त्वां शतधा(?) शक्रो मत्प्रदिष्टेन कर्मणा। अभिषेक्ष्य दिव्येन दैवतैः सह योक्ष्यसे। तत्रैव त्वां भगिन्यर्थे गृहीष्यति स वासवः। कुशिकस्य तु गोत्रेण कौशिकी त्वं भविष्यसि” हरिव०५८अ०योगमायां प्रति विष्णूक्तिः। “आर्या कात्यायनी देवी कौशिकी ब्रह्मचारिणी” भा० हरि०५८अ०। पार्वत्याः शरीरकोष(शा)न्निःसृते १८देवीमूर्त्तिभेदे तस्य च मूर्त्त्यन्तरमध्यतापीति भेदः तन्मूलं देवीमाहात्म्यवाक्यं तच्च कोषशब्दे दर्शितं नाठ्ये २०वृत्तिभेदे अलङ्कारशब्दे लक्षणादिकं दृश्यम् [ तथात्वम्

**कौशिकप्रिय** पु० ६त०। श्रीरामे विश्वामित्रप्रियाचरणात्तस्य

**कौशिकफल** कौशिक कोशस्थं फलमस्य। नारिकेले शब्दरा०

**कौशिका** स्त्री कोशएव स्वार्थे क अतइत्वम्। पानपात्रे चषके हेम० [ शब्दमाला १विश्वामित्रपुत्रे च

**कौशिकात्मज** पु० ६त०। १इन्द्रपुत्रे जयन्ते २अर्जुने च

**कौशिकायनि** पु० कुशिकस्यापत्यम् वा० फिञ्। यजुर्वेदवंशब्राह्मणस्थे ऋषिभेदे “कौशिकायनेः कौशिकायनिः” शत० ब्रा० १४।५।५।२१

**कौशिकायुध** न० ६त०। इन्द्रचापे शब्दचि०

**कौशिकाराति** पु०६त०। १काके राजनि०तस्य पेचकारातित्व च तेन सह नित्यविरोधित्वात्। तत्कथा काकोलूकशब्दे दृश्या कौशिकारिप्रभृतयोऽप्यत्र पु०

**कौशिकिन्** पु० ब० व० कौशिकेन प्रोक्तमधीयते णिनि। विश्वामित्रप्रोक्ताध्यायिषु

**कौशिक्योज** पु० कौशिक्या इव ओजोयस्य पृषो० सलोपः। शाखोटवृक्षे (सेओड़ा) राजनि०

**कौशिज** पु° ब° व° देशभेदे "पञ्चालाः कौशिजाश्चैव नैकपृष्ठाः धुरन्धराः" भा° भी° ६अ° जनपदकथने

**कौषे(षे)धान्य** न° कोषे(षे)भवा कौषी(षी) कर्म्मधा°। कोश(ष)जाते धान्ये तिलादौ। "सर्व्वमेवैतदहः कोषी(षी)धान्यं विवर्जयेत्" कात्या°श्रौ° २।१।१०

**कौषे(शे)य** न° कोषा(शा)दुद्धृतम् ढञ्। कृमिकोषादिजाते वस्त्रे अमरः "निर्नाभि कौषे(शे)यमुपात्तरागम्" कुमा° "कौषेयं व्रजदपि गाढतामजस्रम्" माघः "लाक्षालोहितकौषे(शे)यपरिधानम्" काद° "कौषेयाविकयोरूषौ" मनुना तच्छोधनद्रव्यमुक्तम्

**कौश्य** त्रि° कुशस्येदम् षञ्। १कुशसम्बन्धिनि शयनादौ "प्रास्कन्दच्छयने कौश्ये दृष्ट्वां गत्स्यमिव प्लवम्" भा° अनु°७१अ°। कुशस्य गोत्रापत्यं वा° षञ्। २कुशगोत्रजे ऋषिभेदे पु° "तं होवाच सुश्रवाः कौश्यः" शत°ब्रा° १०।५।५।४ "कौश्यः कुशगोत्रजः" भा°; तेन ब्राह्मणे कौष्य इति मूर्द्धन्ययुक्तपाठस्तु प्रामादिकः।

**कौशा(षा)रव** पु° कुषा(षा)रोरपत्यम् ऋष्यण्। कुशा(षा)रोर्मुनेरपत्ये मैत्रेये "शातनः ऋतमान् प्रथात् च्युता कौशारवायतः" भाग°१।१३।२ "कौशारवस्य मैत्रेयस्यायतः" श्रीधरः "ननु ते तत्त्वसंराध्य ऋषिः कौशारवोऽन्तिमे" भाग° ३।४।१ बाह्वा° इञ्। कौशारविरप्यत्र "यत्र कौशारवेस्तस्य संवादोऽध्यात्मसंश्रितः" भाग°२।१०।५२

**कौषिकी** स्त्री° कौषिक+ङीप्°। १कौषिकशब्दार्थे मेदि°२दुर्गामूर्त्तिभेदे स्त्री "शरीरकोषाद्यत्तस्याः पार्वत्याः निःसृताम्बिका। कौषिकीति समाख्याता ततोलोकेषु गीयते" देवीमा° "कायकोषान्निःसृता या कालिकायास्तु भैरव!। सा कौषिकीति विख्याता चारुरूपा मनोहरा" कालिका° पु° ६०अ°

**कौषीतक** पु° कुषीतकस्यापत्यम् ऋष्यण्। कुषीतकर्षिपुत्रे बहुषु च प्रत्ययं तत्पर्याये ऋषिभेदे कहोडे "कहोडं कौषीतकमित्यादि" आश्व° गृ° ३।४।३।२२ ऋषितर्पणे। कुषीतकस्यापत्यम् इञ्। कौषीतकिरपि कहोडे ऋषौ "तदुहोवाच कहोडः कौषीतकिः" शत°ब्रा° २।४।२।११ तत्सम्बन्धित्वात् कौषीतकिब्राह्मणं कौषीतकी उपनिषच्च ऋग्वेदान्तर्गता।

**कौषीतकिन्** पु° ब° व°। कौषीतकेन प्रोक्तमधीयते णिनि। कौषीतकेन प्रोक्ताध्यायिषु। "सदस्यं सप्तदशं कौषीतकिनः समामनन्ति" आश्व°गृ°।।२३।५।

**कौ(षी)तकी** कुषीतकस्यापत्यम् ऋष्यण् ङीप्। तस्य पत्न्यां सिद्धा°

**कौषीतकेय** पुंस्त्री कुषीतक+वा° अपत्ये ढक्। कुषीतकस्यापत्ये कहोडे "अथ हैनं कहोडः कौषीतकेयः पप्रच्छ" शत° ब्रा° १४।६।४।१।

**कौष्ठविदिक** त्रि° कुष्ठविदि तद्विद्यायां साधु कथा° ठक्। दस्य चर्त्वेन तालव्यतया ठस्य कादेशे। कुष्ठविद्यासाधौ। दस्य चर्त्वाभावमाश्रित्य तालव्याभावेन कौष्ठविदिक इत्यन्ये तन्मतेनैव तथारूपं २१५४पृ° उक्तम्

**कौसीद्य** न°कुत्सितं सीदत्यस्मिन् सीद्+वा° आधारे य स्वार्थे षञ्। १आलस्ये २तन्त्रायाञ्च हेम°। कुसीदस्य भावः ष्यञ्। ३वृद्धिरूपकुसीदवृत्तौ शब्दचि°

**कौसुम** न°कुसुमेन निर्वृत्तमण्। १पुष्पाञ्जने अमरः। तस्येदमण्। २पुष्पसम्बन्धिनि त्रि° "विनयति सुदृशो दृशोः परागं प्रणयिनि कौसुममाननानिलेन" माघः

**कौसुम्भ** पु° कुसुम्भ+स्वार्थे अण्। १अरण्यकुसुम्भे २शाकभेदे राजनि°। कुसुम्भेन रक्तम् अण्। ३कुसुम्भरागरञ्जिते वस्त्रादौ त्रि° "कौसुम्भं पृथुकुचकुम्भसङ्गि वासः" माघः। तस्येदमण्। कुसुम्भसम्बन्धिनि त्रि° "दिनकरकरसङ्गव्यक्तकौसुम्भरागम्" माघः। उभयतः स्त्रियां ङीप्।

**कौसुरुविन्द** पु° दशरात्रसाध्ययागभेदे "कौसुरुविन्दः" कात्या°श्रौ°सू°२३।५।१८। "द्वितीयो दशरात्र एतत्संज्ञः" सं°व्या°।प्रायणीययागानन्तरं कौसुरुविन्ददशरात्रस्य२प्रथमे त्र्यहे च "कौसुरुविन्दः प्रथमस्त्र्यहः" कात्या° २४।३।१

**कौसुरुविन्दि** पु° कुसुरुविन्दस्यापत्यम् इञ्। तदपत्ये उद्दालके मुनौ "कौसुरुविन्दिरुद्दालक आरुणौ ब्रह्मचर्यमुवास" शत° ब्रा° १२।२।२।१३। [को जटाधरः

**कौसृतिक** त्रि° कुसृत्या चरति ठक्। मायाकारके मायायु-

**कौस्तुभ** पु° कुं भूमिं स्तुभ्नाति कुस्तुभोजलधिः तत्र भवः अण्। विष्णोर्वक्षःस्थे "कौस्तुभस्तु महातेजाः कोटिसूर्य्यसमप्रभः" इत्युक्तलक्षणे मणिभेदे। तस्य समुद्रादुत्पत्तिकथा हरिवं° २२अ°

"सुरासुरगणाः सर्वे सहिता बलवाम्भसः। मन्दरं पुष्करं कृत्वा नेत्रं वासुकिमेव च। समाः सहस्रं मथितं जलमोषधिभिः सह। क्षीरभूतं समायोगादमृतं समपद्यत। तज्जग्मु स्सुराः पूर्वमाक्रान्ता लोभमन्युना। तदा पश्चाज्जहुर्देवाः कामतेजोबलान्विताः। धन्वन्तरिस्तथा मद्यं श्रीर्देवी कौस्तुभोमणिः। यथाङ्गे विमलश्चापि सहस्त्रस्य

हमन्ततः" । "ततः शतसहस्रांशुर्मथ्यमानात्तु सागरात् । प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः । श्रीरनन्तर मुत्पन्ना घृतात् पाण्डुर वासिनी । सुरा देवी समुत्पन्ना तुरगः पाण्डरस्तथा । कौस्तुभस्तु मणिर्दिव्य उत्पन्नो घृतसम्भवः । मरीचिविकचः श्रीमान् नारायण उरोगतः" भा॰आ॰१८अ॰ "उच्चैः श्रवाहयश्रेष्ठो मणिरत्नञ्च कौस्तुभम्" रामा॰ उक्तः क्लीवत्वमपि "कौस्तुभाख्यमपांसारं बिभ्राणं बृहतोरसा" "सकौस्तुभं ह्रेपयतीव वक्षः" रघुः । २तैलभेदे न॰ "घृतार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम् । आज्यं, वा तदभावे तु साक्षात्तैलं ग्रहीष्यते । तैलाभावे ग्रहीतव्यं तैलं जर्त्तिलसम्भवम् । तदभावेऽतसीस्नेहं कौस्तुभं सर्षपोद्भवम् । वृक्षस्नेहोऽथवा ग्राह्यः पूर्व्वाभावे परःपरः" कर्कधृतं मण्डनवाक्यम् । कोस्तुभमित्यत्र कौसुम्भमिति पाठस्तु सम्यक् । ३तन्त्रोक्ते मुद्राभेदे "अनामाङ्गुष्ठसंलग्ना दक्षिणस्य कनिष्ठिका । कनिष्ठयान्यया बद्धा तर्ज्जन्या दक्षया तथा । वामानामाञ्च बध्नीयात् दक्षिणाङ्गुष्ठमूलके । अङ्गुष्ठमध्यके भूयः संयोज्य सरलाः पराः । चतस्रोऽप्यत्र संलग्ना मुद्रा कौस्तुभसंज्ञिका" तन्त्रसारः ।

**कौस्तुभवक्षस्** पु॰ कौस्तुभोवक्षसि यस्य । विष्णौ हारा॰ कौस्तुभहृदयादयोऽप्यत्र पु॰। एवं कौस्तुभलक्षणादयोऽप्यत्र ।

**क्नथ** बधे वा॰ चु॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट् घटादि । क्नथयति-ते क्नथति अचिक्नथत्-त अक्नथीत्-अक्नाथीत् । क्नथयां-बभूव आस चकार—चक्रे-चक्नाथ ।

**क्नस** दीप्तौ कौटिल्ये च दिवा॰ पर॰ अक॰ सेट् । क्नस्यति अक्नसीत्-अक्नासीत् चक्नास । घटा॰ क्नसयति-ते । अचिक्नसत्-त उदित् क्नसित्वा-क्नस्त्वा ।

**क्नस** दीप्तौ वा॰ चु॰ उभ॰ पक्षे भ्वा॰ अक॰ सेट् घटादि क्नसयति-ते । क्नसति । अचिक्नसत्-त अक्नसीत्-अक्नासीत् क्नसयां बभूव आस चकार चक्रे चक्नास। उदित् क्नसित्वा-क्नस्त्वा। "ष्वस्क् हृतौ क्नस् कुसि किच भासने कुस इत्तिवि" वोपदेवव्याख्याने "परोऽनुबन्धः पूर्व्वेषामेकवाक्यस्थधातुषु" इति तदुक्तिमाश्रित्य भ्रान्त्या दुर्गादासेन क्नस इदित्त्वमुक्तम् तच्चिन्त्यम् । पा॰ धातुपाठे चुरादिषु "लसिपिसि कुसि दशि कुशीत्यादिना कुसेरेवेत्त्वमुक्तेः दिवादिषु च क्नसु ह्वरणदीप्त्योरित्युक्तेः घटादौ च जनीजृष क्नसु रञ्ज इति पाठाच्च इदित् क्नसधातोरदर्शनात् । अतः परानुबन्धस्य वोपदेवस्य प्राप्तिः तेन सवा चुरादित्वम् अन्यथा कुसिवत् क्नसीत्येव मूलकृत् पठेत् । न च तथाऽपाठि अतस्तस्य नेदित्त्वम् ।

**क्नूय** दुर्गन्धे आर्द्रीभावे शब्दे च भ्वा॰ आत्म॰ अक॰ सेट् । क्नूयते अक्नूयिष्ट चुक्नूये । णिचि क्नोपयति ते । अस्य चेलार्थककर्म्मण्युपपदे णमुल् चेलक्नोपम् वस्त्रक्नोपम् । "यूनि गाढपरिरम्भिणि वस्त्रक्नोपमम्बु ववृषे मदनेन" माघः । 'वस्त्रं क्नोपयित्वा परिषिच्येत्यर्थः" मल्लि॰। अभि+अतिव्याप्त्या आर्द्रीभावकरणे प्रतीभावकरणे च सक॰ "आपो वै सर्व्वमन्नं ताभिर्हीदमभिक्नूयमिवाद्नन्ति" शत॰ ब्रा॰ १४।१।१।२४। यान्तत्वात् ताच्छील्ये नातोयुच् किन्तु तृच् । क्नूयिता इत्येव ।

[रीत् चक्मार ।

**क्मर** कौटिल्ये भ्वा॰ पर॰ अक॰ सेट् । क्मरति अक्मा(क्म)-

**क्य** त्रि॰ कः प्रजापतिस्तस्मै हितः यत् । प्रजापतिहिते । "केत्य चत्वारि क्यानां क्यानीति" प्रश्ने "एतान्येव चत्वारि क्यानां क्यानि" शत॰ ब्रा॰ १०।३।४।२।४। भा॰तथार्थतोक्ता

**क्याम्बू** स्त्री क्यं प्रजापतिहितमम्बु यत्र ऊङ् । दूर्वाभेदे "क्याम्बूरत्नरोहतु शाण्डदूर्वा व्यल्कशा" ऋग्॰१८।३।६।

**क्रंश** प्रकाशने भ्वा॰ सक॰ सेट् क्रंशति अक्रंशीत् चक्रांश । "क्रंशतेर्वा प्रकाशयतिकर्म्मणः । निरुक्तकारः २।२५।

**क्रकच** पु॰क्र इति कचति शब्दायते कच-शब्दे अच्। १ग्रन्थिलाख्ये वृक्षे मेदि॰ । २दारुदारणास्त्रे करपत्रे (करात) पु॰ न॰ अमरः । ज्योतिषोक्ते ३योगभेदे च । तल्लक्षणञ्च "षष्ठ्यादितिथयो मन्दात् विलोमं क्रकचः स्मृतः" इति "यथा शनौ षष्ठी, शुक्रे सप्तमी, गुरावष्टमी, बुधे नवमी, भौमे दशमी, सोमे एकादशी, रवौ द्वादशी, एते योगाः क्रकचसंज्ञा ज्ञेयाः पीयू॰धा॰। यदाह नारदः "त्रयोदश स्युर्मिलने संख्ययोस्तिथिवारयोः" क्रकचो नाम योगोऽयं मङ्गलेष्वतिगर्हितः"

[क्रकचदलादयोप्यत्र

**क्रकचच्छद** पु॰ क्रकच इव छदो यस्य । केतकीवृक्षे त्रिका॰

**क्रकचपत्र** पु॰क्रकच इव पत्रमस्य । १शाकवृक्षभेदे राजनि॰ २केतकीवृक्षे च ।

**क्रकचपाद(द्)** पु॰ क्रकचमिव पादो यस्य वा अन्त्यलोपः । कृकलासे हारा॰

[वृक्षभेदे । त्रिका॰ ।

**क्रकचपृष्ठी** स्त्री क्रकच इव पृष्ठं यस्याः ङीष् । (कइ) म-

**क्रकचव्यवहार** पु॰ लीलावत्युक्ते क्रकचच्छेद्यवस्तुनोवेतनज्ञानार्थे तत्फलज्ञापके गणितभेदे यथा "क्रकचव्यवहारे करणसूत्रं वृत्तम् । पिण्डयोगदलमग्रमूलयोर्दैर्घ्यसङ्गुणितमङ्गुलात्मकम् । दारुदारणपथैः

समाहृतं षट्खरैर्विहृतं कराख्यकम् । उदाहरणम् ।
मूले नखा(२०)ङ्गुलमितोऽय न्यपा(१६)ङ्गुलोऽग्रे पिण्डः शताङ्गुलमितं किल यस्य दैर्घ्यम् । तद्दारुदारणपथेषु चतुर्षु किं स्यात् हस्तात्मकं वद सखे ! गणितं द्रुतं मे ।
(तदाकारदर्शनार्थचित्रम्)




न्यासः
पिण्डयोगशद्दलं । १८ । दैर्घ्येण १०० सङ्गुणितं १८०० । दारुदारणपथैश्चतुर्भिर्गुणितं ७२०० । षट्खरेषु ५७६ विहृतं जातं कराख्यकं गणितं २५/२ । क्रकचान्तरे करणसूत्रं सार्द्धवृत्तम् । छिद्यते तु यदि तिर्य्यगुक्तवत्पिण्डविस्तृतिहतेः फलं तदा । दृषिकाचितिदर्षणचितिखातक्राकचव्यवहृतौ खलु मूल्यम् । कर्म्मकारजनसम्मतिपत्न्या तक्षृदुत्वकठिनत्ववशेन । उदाहरणम् । अङ्घितिर्हिन ३२ मिताङ्गुलानि पिण्डस्तथा षोडश यत्र काष्ठे । छेदेषु तिर्य्यक्षु च प्रवद किं स्यात् फलं तत्र कराख्यकं मे ॥
न्यासः विस्तारः ३२ पिण्डः ।१६। पिण्डविस्तृतिहतिः
(तदाकारचित्रम् ।)




५१२ । दारुदारणमार्गैर्नवभिर्हता ४६०८ । षट्खरेषु ५७६ विहृता जातं फलं हस्ताः । ८।"
**क्राकचा** स्त्री क्रकचस्येदमाकारोऽस्त्यस्याः अर्श० अच् टाप् ।
केतकीवृक्षे रत्नमा० ॥
**क्राकण** पु० क्र इति कणति शब्दायते कण—अच् । (कयार) पक्षिभेदे अमरः स्त्रियां जातित्वात् ङीष् ।
**क्राकर** पु० क्र इति शब्दं कर्त्तुं शीलमस्य ताच्छील्ये ट ।
क्रकचे (कयार) १पक्षिभेदे अमरः स्त्रियां ङीप् । २करीरवृक्षे ३करपत्रास्त्रे च पु० ४दीने त्रि० हेमच० "चोरयित्वा तु पक्षोर्थं क्रकरत्वं नियच्छति" भा० अनु० १११अ० । "चकोरकलविङ्कमयूरक्रकरेत्याद्युपक्रमे "विष्कारलघवः शीतमधुराः कषाया दोषशमनाश्च" इति सामान्यत उक्त्वा "वातपित्तहरा हृद्या मेधाग्निबलवर्द्धनाः । लघवः क्रकराः हृद्यास्तथा चैवोपचक्रकाः" सुश्रु० तन्मांसगुणा उक्ताः ।
**क्रतु** पु० कृ-कतु । १यूपसहिते, सोमसाध्ये यज्ञे, २संकल्पे, ब्रह्मणोमानसे पुत्रे ३ऋषिभेदे, ४विश्वदेवभेदे, ५इन्द्रियेषु च । ६विष्णौ तस्य सर्व्वयज्ञमयत्वेन सयूपयज्ञरूपत्वमपीष्टं यथाह "यज्ञैरिज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः" विष्णुस० । "सर्व्वयज्ञस्वरूपत्वात् यज्ञः यूपसहितोयज्ञः क्रतुरिति" भाष्यम् । तेन क्रतुशब्दस्य यूपसहितयज्ञबोधकता । अतएव तत्तद्यागे यूपविशेषाः शतपथब्राह्मणादौ उक्ताः । तत्र सोमसाध्ययागाश्च त्रयः क्रतवः "त्रीन् क्रतूनन्वाहाग्नेयक्रतुपशुमाश्विनम्" श्रुतौ "द्वयमग्नेयः क्रतुः अथोपस्थः" "अथाश्विनः" आश्व०श्रौ० ४।१।१८।१४।१।१५।१। सूत्रेषु दर्शिताः । अन्येऽपि क्रतवो वेदेषु दर्शितास्ततएवावगन्तव्याः । संकल्पस्य कामनाधीनः चित्तवृत्तिभेदः यथोक्तम् "कामः क्रतुः कर्म्म जन्मोत्थमेषां क्रमोभवेत् । पुंसोया विषयापेक्षा स काम इति भण्यते । सएव वर्द्धमानश्चेत् क्रतुत्वं प्रतिपद्यते" । "रुचेरतिशयः काम्ये विषये क्रतुरीर्य्यते" इत्युक्ते रुचेराधिक्ये च । दमयन्त्यां निघ० । हस्तवनादिकर्म्मणि च । "पुरुहूत ! क्रत्वा नः शग्धि" ऋ० ४।२१।१० "क्रत्वा कर्म्मणा स्तुत्यादिहेतुना" भा० । क्रतुनामा मुनिश्च "ब्रह्मणोमानसाः पुत्रा विदिताः षण्महर्षयः । मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः" भा० आ०६५अ० उक्तः । "क्रतोरपि क्रियाभार्य्या वालिखिल्यानसूयत ॥ ऋषीन् षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा" भाग० ४।१।३२। तद्दशाद्युक्तम् "ससर्ज सृष्टिं तद्रूपां स्रष्टुमिच्छन् प्रजापतीन् मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् । वशिष्ठञ्च महातेजाः सोऽसृजत् सप्त मानसान्" हरिवं० १अ० । विश्वदेवाश्च तन्मोदय यथा
"आत्मार्थे चासृजत् पुत्त्रान् लोककर्त्तॄन् पितामहः । विश्वे प्रजानां पतयो येभ्यो लोका विनिःसृताः । विश्वेशं प्रथमं नाम महातपसमात्मजम् । सर्व्वात्मसमपरं पुण्यं आत्मा

धर्मं स सृष्टवान्। दक्षं मरीचिमत्रिञ्च पुलस्त्यं पुलहं क्रतुम्। वशिष्ठं गौतमञ्चैव भृगुमङ्गिरसं मनुम्। अथर्भूता इत्येते ख्याताश्चैव महर्षयः। त्रयोदश सुता येषां वंशा वै संप्रतिष्ठिताः"। हरिवं० २०४अ०

जटाधरेण तु "विश्वेदेवा दश स्मृता" इत्युक्तम्। गणदेवता शब्दे तन्मूलं वक्ष्यते। कल्पभेदादविरुद्धम्

तत्र प्रज्ञा निश्चयः अध्यवसायः यथाह

"अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत" छा०उ०। "क्रथमुपासीत। स क्रतुं कुर्वीत क्रतुर्निश्चयोऽध्यवसायश्च एवमेव नान्यथेति अविचलः प्रत्ययस्तं क्रतुं कुर्वीतोपासीतेत्यनेन व्यवहितेन सम्बन्धः। किं पुनः क्रतुकरणेन कर्त्तव्यं प्रयोजनम्? कथं वा क्रतुः कर्त्तव्यः? क्रतुकरणं वाभिप्रेतार्थसाधनं कथम्? इत्यस्यार्थस्य प्रतिपादनार्थमथेत्यादिग्रन्थः। अथ खल्विति हेत्वर्थः। यस्मात् क्रतुमयः क्रतुप्रायोऽध्यवसायात्मकः पुरुषो जीवः। यथाक्रतुर्यादृशः क्रतुरस्य सोऽयं यथाक्रतुर्यथाध्यवसायो यादृङ्निश्चयोऽस्मिँल्लोके जीवन्निह पुरुषो भवति। तथेतोऽस्माद्देहात् प्रेत्य मृत्वा भवति। क्रत्वनुरूपफलात्मको भवतीत्यर्थः एवं ह्येतच्छास्त्रतो दृष्टम्। "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरमित्यादि" यत एवं व्यवस्था शास्त्रदृष्टाऽतः स एवं जानन् क्रतुं कुर्वीत यादृशं क्रतुं वक्ष्यामस्तम्। यत एवं शास्त्रप्रामाण्यादुपपद्यते क्रत्वनुरूपं फलमतः स कर्त्तव्यः क्रतुः" भा०। १०आषाढमासे चातुर्मास्यादियागारम्भकत्वात् तस्य तथात्वम् "वाजाय स्वाहा प्रसवाय स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाऽहर्पतये स्वाहाह्ने मुग्धाय स्वाहा मुग्धाय वैनंशिनाय स्वाहा, विनंशिन आन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा" यजु०१८।२८, "वाजादीनि चैत्रादिमासानां नामानि तन्नाम गृहीत्वा होतव्यमित्यर्थः अन्नप्राचुर्य्याच्चैत्रोऽन्नरूपः, प्रसवायानुज्ञारूपाय जलक्रीड़ादौ अभ्यनुज्ञादानात् प्रसवो वैशाखः। अपिजाय अप्सु जायत इत्यपिजः सम्यग्ग्लुक् जलक्रीड़ारतत्वादपिजो ज्यैष्ठः। क्रतवे यागरूपाय चातुर्मास्यादियागप्राचुर्य्यात् क्रतुराषाढ़" वेददी०।

**क्रतुदोषनुद्** पु० क्रतुनामिन्द्रियाणां दोषं नुदति क्विप्। प्राणायामे शब्दचि० "दह्यन्ते ध्मायमानानां धातूनां यथा मलाः। प्राणायामैस्तथा दोषाः शाम्यन्तीन्द्रियगोचराः" मनूक्तेस्तस्येन्द्रियदोषनाशकत्वम् [नास्तिके च

**क्रतुद्रुह्** पु० क्रतवे द्रुह्यति द्रुह–क्विप्। १असुरे जटाधरः

**क्रतुद्विष्** पु० क्रतवे द्वेष्टि द्विष–क्विप्। १असुरे त्रिका० २नास्तिके च।

**क्रतुध्वंसिन्** पु० क्रतुं दक्षयज्ञं ध्वंसयति ध्वन्स–णिच्–णिनि। शिवे अमरः। वीरभद्रद्वारा तद्यज्ञध्वंसनात्तस्य तथात्वम् तत्कथा काशी० ८९अ० यथा

"महावीरोऽसि रे भद्र! मम सर्व्वगणेष्विह। वीरभद्राख्यया त्वं हि प्रथितिं परमां व्रज। कुरु मे सत्वरं कार्य्यं दक्षयज्ञं क्षयं नय। ये त्वां तत्रावमन्यन्ते तत्सहाय्यविधायिनः। ते त्वयाप्यवमन्तव्या व्रज पुत्र! शुभोदय!। इत्याज्ञां मूर्द्ध्नि चाधाय स ततः पारमेश्वरीम्। हरं प्रदक्षिणीकृत्य जगामानन्तरंहसा। ततस्तदनुगान् शम्भुः स्वनिश्वाससमुद्भवान्। शतकोटिमितानुग्रान् गणानस्थानवासृजत्। ते गणा वीरभद्रं तं यान्तं केचित् पुरोगताः। केचित्तदनुगा याताः केचित्पार्श्वतोऽययुः। अम्बरं तैः समाक्रान्तं तेजोविजितभास्करैः। शृङ्गाग्राणि गिरीणां च कैश्चिदुत्पाटितानि वै। आचूड़मूलाः कैश्चिच्च पिष्टा वै शिलोच्चयाः। उत्पाट्य महतो वृक्षान् केचित् प्राप्ता मखाङ्गणम्। कैश्चिदुत्पाटिता यूपाः केचित्कुण्डान्यपूरयन्। मण्डपं ध्वंसयामासुः केचित् कोपपरा गणाः। अचीखनन् यज्ञवेदीः केचिद्वै शूलपाणयः। अभक्षयन् हवींष्यन्ये पृषदाज्यं पपुः परे। दध्नां सुरचराशींश्च केचित् पर्व्वतसन्निभान्। केचिद्वै पायसाहाराः केचिद्वै चीरपायिनः। केचित् पक्वान्नपुष्टाङ्गा यज्ञपात्राण्यचूर्णयन्। अमोचयन् स्रुचां दण्डान् केचिद्दोर्दण्डशालिनः। व्यभञ्जन् शकटान् केचित् पशून् केचिदमोलुपन्। अग्निं निर्वापयामासुः केचिदत्यग्नितेजसः। स्वयं परिदधुश्चान्ये दुकूलानि मुदा युताः। जगृहुः केचन पुनारत्नानां पर्वतं क्षतम्। एकेन च भगो देवः पश्यन् चक्रे विलोचनः। पुष्णोदन्तावलीकन्यः पातयामास कोपनः। यज्ञः पलायितो दृष्ट्वा केनचिन्मृगरूपधृक्। शिरोविरहितश्चक्रे तेन चक्रेण दूरतः"।

**क्रतुपुरुष** पु० क्रतुः पुरुष इव। पुरुषाकारे क्रतुमये यज्ञवराहे। तद्रूपवर्णनञ्च हरिवं० २२४अ०

"वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः। अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः। अहोरात्रेक्षणधरो वेदाङ्ग-

श्रुतिभूषणः। आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान्। सत्यधर्म्ममयः श्रीमान् क्रमविक्रमसत्कृतः। प्रायश्चित्तमहानखो पशुजानुर्म्मखाकृतिः। उद्गातान्त्रो होमलिङ्गो बीजौषधिमहाफलः। वाय्वन्तरात्मा सत्रस्फिक् विकृतः सोमशोणितः। वेदस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान्। प्राग्वंशकायो द्युतिमान् नानादीक्षाभिरन्वितः। दक्षिणाहृदयो योगी महासत्त्रमयो महान्। उपाकर्म्मोष्ठरुचकः प्रवर्ग्यावर्त्तभूषणः। नानाच्छन्दोगतिपथो गुह्योपनिषदासनः। छायापत्नीसहायो वै मणिशृङ्ग इवोच्छ्रितः। भूत्वा यज्ञवराहोऽसौ द्रागमः प्राविशद्धरः"।

"रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव! यदध्वरात्मकम्। छन्दांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम्। स्रुक्तुण्ड आसीत् स्रुव ईश! नासयोरिडोदरे चमसाः कर्णरन्ध्रे। प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणन्ते भगवन्नग्निहोत्रम्। दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्र!। जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते। सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव! धातवः! सत्राणि सर्व्वाणि शरीरसन्धयस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः"। भाग॰ ३।१३अ॰।

"यज्ञात्मतां प्रपञ्चयन्तः स्तुवन्ति रूपमित्यादि चतुर्भिः छन्दांसि गायत्र्यादीनि यज्ञाङ्गभूतच्छन्दआद्यनुवादेन भगवदवयवता विधीयते बर्हिःशब्दे दीर्घश्चात्र आर्षः दृशि चक्षुषि चातुर्होत्रं हौत्रादिचतुष्टयं कर्म। स्रुक् जुहूः। तुण्डे मुखाग्रे। स्रुवो नासिकयोः। इडा भक्षणपात्रं चमसा ग्रहाश्च सोमपात्राणि। प्राशित्रं ब्रह्मभागपात्रं ग्रस्यतेऽनेनेति ग्रसनं मुखान्तर्वर्त्ति छिद्रं चर्वणं भक्षणम्। दीक्षा दीक्षणीयेष्टिः। अनुजन्म वारं वारम् अभिव्याप्तिः। उपसदस्तिस्र इष्टयः शिरोधरं ग्रीवा। प्रायणीया दीक्षानन्तरेष्टिः उदयनीया समाप्तीष्टिः ते एव दंष्ट्रे यस्य। प्रवर्ग्यो महावीरः प्रत्युपसदः पूर्व्वं क्रियते। सभ्यो होमरहितोऽग्निः आवसथ्यः औपासनाग्निः तयोद्वैक्यं तव क्रतुरूपस्य शीर्षकं शिरः। चितयः इष्टकाचयनानि पञ्च असवः प्राणाः। प्रातःसवनादीनि अवस्थितिरासनं बाल्याद्यवस्था वा। अग्निष्टोमोऽत्यग्निष्टोमः उक्थः षोडशी वाजपेयोऽतिरात्रः आप्तोर्यामः इति सप्त संस्थाविभेदाः सप्त त्वङ्मांसादिधातवः। सत्राणि द्वादशाहादीनि बहुयागसङ्घातरूपाणि, असोमा-यज्ञाः ससोमाः क्रतवस्तद्रूपस्त्वं इष्टियजनं अनुष्ठानञ्च तदेव बन्धनं यस्य सः" श्रीधरः। [प्राशस्त्यात् तथात्वम्।

**क्रतुपशु** पु॰ क्रतोरङ्गं पशुः। अश्वे हारा॰ तस्य अश्वमेधे

**क्रतुप्रा** पु॰ क्रतून् कर्म्माणि प्राति प्रा-पूर्त्तौ क्विप्। कर्म्मपूरके "महश्चर्कर्म्यर्वतः क्रतुप्राः" ऋ॰४।३८।२। "क्रतुप्राः कर्मणां पूरकः" भा॰।

**क्रतुभुज्** पु॰ क्रतुं क्रतुदेयं हविर्भुङ्क्ते भुज-क्विप्। देवे क्रतुदेयद्रव्यत्यागोद्देश्यत्वात्तेषामचेतनत्वेऽपि तद्भोगित्वं बोध्यम् चेतनत्वे तु तेषां मनुष्यादीनामिव भोगो नास्ति किन्तु दृष्टिमात्रेण यथाह "न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति" छा॰उ॰।

**क्रतुराज्** पु॰ क्रतुषु राजते राज-क्विप्। १अश्वमेधे यज्ञे तस्य सर्व्वयज्ञानां श्रेष्ठत्वात् तथात्वम्। "यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः" मनुः २राजसूये च शब्दचि॰

**क्रतुविक्रयिन्** त्रि॰ क्रतुं तत्फलं विक्रीणाति वि+क्री-णिनि। स्वकीयक्रतुफलस्य अन्यदीयत्वस्थापनेन ततो-धनग्राहके। "पिशुनानृतिनोश्चापि क्रतुविक्रयिणस्तथा" मनुः। [चाप्सरसौ" यजु॰ १५।१५।

**क्रतुस्थला** स्त्री अप्सरोभेदे "पुञ्जिकस्थला च क्रतुस्थला

**क्रतुस्पृश्** त्रि॰ क्रतुमिन्द्रियं स्पृशति क्विन्। इन्द्रियस्पर्शिनि "अपश्यन् हृदिस्पृक् क्रतुस्पृक्" आश्व॰श्रौ॰ ५।१०।५

**क्रतूत्तम** पु॰ क्रतुषूत्तमः। राजसूययज्ञे त्रिका॰।

**क्रत्वर्थ** पु॰ क्रतवेऽयम् अर्थेन सह नित्यस॰ विशेष्यलिङ्गता च, क्रतुरर्थोयस्य वा। क्रतूपकारके। तल्लक्षणादिकञ्च जै॰ सू॰ भाष्ययोर्दर्शितं यथा

"अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" १सू॰। "तृतीयेऽध्याये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानैः शेषविनियोगलक्षणमुक्तम्। इह इदानीं क्रत्वर्थपुरुषार्थौ जिज्ञास्येते,—कः क्रत्वर्थः? कः पुरुषार्थः? इति, यापि प्रयोजकाप्रयोजकफलविध्यर्थवादाङ्गप्रधानचिन्ता, सापि क्रत्वर्थपुरुषार्थजिज्ञासैव। कथम्?। अङ्गं क्रत्वर्थः, प्रधानं पुरुषार्थः, फलविधिः पुरुषार्थः, अर्थवादः क्रत्वर्थः, प्रयोजकः कश्चित् पुरुषार्थोऽप्रयोजकः क्रत्वर्थः। तस्मात् "क्रत्वर्थपुरुषार्थयोर्जिज्ञासा"—इति सूत्रितम्। तत्र अथातःशब्दौ प्रथमे एवाध्याये प्रथमसूत्रे वर्णितौ। अथेति प्रकृतं शेषविनियोगलक्षणमपेक्षते। अतः—इति क्रत्वर्थपुरुषार्थजिज्ञासाविशेषं प्रकुरुते। क्रतवे यः, क

क्रत्वर्थः, पुरुषाय यः, स पुरुषार्थः। जिज्ञासाशब्दोऽपि तत एव समधिगतः,—ज्ञातुमिच्छा जिज्ञासा—इति। तदेतत् प्रतिज्ञासूत्रम्,—'क्रत्वर्थपुरुषार्थयोर्जिज्ञासा"—इति" ।(४।१।१) शवरभाष्यम्

"यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात्" सू०२।

"अथ किंलक्षणः क्रत्वर्थः, किंलक्षणः पुरुषार्थः इति लक्षणं वाच्यं, तथा हि लघीयसी प्रतिपत्तिः, उपदेशे गरीयसी तदुच्यते,—यस्मिन् प्रीतिः पुरुषस्य, (यस्मिन्कृते पदार्थे पुरुषस्य प्रीतिर्भवति) स पुरुषार्थः पदार्थः। कुतः?। तस्य लिप्सा अर्थेन च भवति, न शास्त्रेण, क्रत्वर्थो हि शास्त्रात् अवगम्यते, न अन्यथा,अविभक्तो हि पुरुषार्थः प्रीत्या, यो यः प्रीतिसाधनः स पुरुषार्थः। पुरुषार्थे लक्षिते तद्विपरीतः क्रत्वर्थः—इति क्रत्वर्थस्य लक्षणं सिद्धम् (१वर्णकम्)।

एवं वा सूत्रं वर्ण्यते,—दर्शपूर्णमासयोराम्नायते,—'अनतिदृश्यं स्तृणाति अनतिदृश्यमेवैनं प्रजया पशुभिः करोति, इति तथा आहार्यपुरोषां पशुकामस्य वेदिं कुर्यात्, वत्सजानुम् पशुकामस्य वेदिं कुर्यात्,गोदोहनेन पशुकामस्य प्रणयेत्'—इत्येवमादीति। तत्र संशयः,—किम् एवञ्जातीयकाः क्रत्वर्थाः उत पुरुषार्थाः—इति। किं प्राप्तम्—क्रत्वर्थाः इति। कुतः? प्रत्यक्ष उपकारस्तेभ्यो दृश्यते क्रतोः, पुरीषहरणं वेदिस्तरणं च, तदुक्तं, (३।१।३सू०) द्रव्यगुणसंस्कारेषु वादरिः'—इति। तस्मात् क्रत्वर्थाः—एवं प्राप्ते ब्रूमः,-यस्मिन् प्रीतिः पुरुषस्य स पुरुषार्थ एव इति, प्रीतिस्तेभ्यो निर्वर्त्त्यते,तस्मात् एते पुरुषार्थाः-इति। 'ननु प्रत्यक्षः उपकारः क्रतोर्दृश्यते—इत्युक्तम्'। उच्यते-सत्यं दृश्यते, न तु क्रतोरुपकाराय एभ्यः सङ्कीर्त्तितेभ्य,ः फलेभ्य एते श्रूयन्ते, न च स उपकरोति स शेषः, यस्तु यदर्थः श्रूयते, स तस्य शेषः—इत्युक्तं(३।१।२ सू०)'शेषः परार्थत्वात्'—इति। (२वर्णकम्)

एवं वा, द्रव्यार्जनम् उदाहरणम्, इह द्रव्यार्जनं तैस्तैर्नियमैः श्रूयते, ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिना। तत्र सन्देहः,-किं क्रत्वर्थो द्रव्यपरिग्रहः उत पुरुषार्थ इति। किं प्राप्तम् क्रत्वर्थो नियमात्, यद्येष पुरुषार्थः स्यात्, नियमोऽनर्थको भवेत्, प्रत्यक्षेण एतत् अवगम्यते,—नियमादनियमञ्चार्जितं द्रव्यं पुरुषं प्रीणयति—इति, तस्मात् क्रत्वर्थः

कामश्रुतिभिश्चास्य सहैकवाक्यता दृष्टा, इतरथा, अनुमेयेन फलवाक्येन सहैकवाक्यतां यायात्। लिङ्गं चापि भवति,—'अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्, यस्याहिताग्नेः सतोऽग्निर्गृहान् दहेत्, यस्य हिरण्यं नश्येदाग्नेयादीनि निर्वपेत्—इत्येवमादि तद्धि द्रव्योपघाते चोद्यते यदि द्रव्यपरिग्रहः कर्मार्थः, तत एतदपि सति सम्बन्धे कर्मार्थम्—इत्युच्यते इतरथा असति सम्बन्धे कर्मार्थम्—इत्यनुमीयते फलं च कस्य कल्प्येत। तस्मात् यजतिश्रुतिगृहीतं द्रव्यार्जनं येन विना यागो न निर्वर्त्त्यते, स यागस्य श्रुत्या परिगृहीतः—इति गम्यते। तस्मात् क्रत्वर्थः—इति।

एवं प्राप्ते ब्रूमः,-पुरुषार्थः—इति। यस्मिन् कृते पदार्थे प्रीतिः पुरुषस्य भवति तस्मात् अस्य लिप्सा अर्थलक्षणा शरीरधारणार्था यस्य शरीरं ध्रियते व्यक्तं तस्यास्ति द्रव्यं शरीरिणां यागः श्रूयते तस्मात् विद्यमानद्रव्यस्य विनियोग उच्यते। न द्रव्यार्जनं श्रुतिगृहीतं विनापि हि द्रव्यार्जनवचनत्वेन शब्दस्य यागो निर्वर्त्त्यत एव, तस्मात् पुरुषार्थो द्रव्यपरिग्रहः।

अपि च, यदि शास्त्रात् कर्मार्थं द्रव्यार्जनं, तस्मान्यत्र विनियुज्येत तथार्जितम्, तत्र सर्वतन्त्रपरिलोपः स्यात्। अपि च उपक्रान्तानि सर्वकर्माणि द्रव्यार्जनेन भवेयुः, तत्र एतन्नोपपद्यते,—अपि वा एष सुवर्गाल्लोकाच्छिद्यते, यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वा अतिपातयेत्'—इति एवञ्च सति प्रयोगकालाद्बहिरेतदङ्गं सदनुपकारकं स्यात्। न च आधानवत् भवितुमर्हति,तत्र हि वचनं—वसन्तेऽग्निमादधीत—इति न चैतत् अङ्गम् अथ यदुक्तं—नियमवचनम् अनर्थकं पुरुषार्थे द्रव्यपरिग्रहे सति-इति। उच्यते, नैतावता पुरुषार्थता व्यावर्त्त्यते प्रत्यक्षा हि सा,तया च परोक्षया युक्तिरुद्धा व्यपदिश्यते, न च परोक्षं प्रत्यक्षस्य बाधकं भवति, तस्मात् नियमवचनात् काममपरमदृष्टं कल्प्येत न तु दृष्टहानम् तस्मात् यत् पुरुषस्य प्रयोजनं प्रीतिः तदर्थं धनस्य अर्जनम्-इत्येवं च सति व्रीहिणा यागः कर्त्तव्यः प्रीत्यर्थमर्जितेन वा क्रत्वर्थमर्जितेन वा न अत्र कश्चित् विशेषः प्रीत्यर्थम् उपार्जितोऽपि व्रीहिः व्रीहिरेव, कर्मार्थम् उपार्जितोऽपि व्रीहिः व्रीहिरेव। तस्मात् न प्रयोगचोदनागृहीतं द्रव्यार्जनम्। अथ यदुक्तम्-अनुमेयेनाप्रकृतेन वा शब्देन युग्मपक्षे नियमस्य एकवाक्यता, क्रत्वर्थे

तु दृष्टेन प्रयोगवचनेन-इति नैष दोषः अस्मत्पक्षेऽपि दृष्टेन भुजिना न फलवचनेन। 'कथं तर्हि-नियमाद् दृष्टं भवति-इति गम्यते'। यथैव भवदीये पक्षे। आह अस्मत्पक्षे फलवत एकवाक्यभावात् फलवत उपकरोति इति गम्यते'। उच्यते अस्मत्पक्षेऽपि फलवत एवैकवाक्यभावः, एतावांस्तु विशेषः-तव श्रुतं फलं मम तु दृष्टम्। अथ यत् लिङ्गम् उक्तं—गृहदाहादिषु कर्म श्रूयते-इति। तत्र उच्यते यद्यपि न क्रत्वर्थं द्रव्यार्जनं तथापि दाहे निमित्ते फलाय वा कर्माङ्गभावाय वा क्षामवत्यादीनां विधानम् उपपद्यत एव। तस्मात् पुरुषार्थं द्रव्यार्जनं प्रीत्या हि तदविभक्तम्" भाष्यम् तत आरभ्य क्रत्वर्थाः पदार्थास्तत्र दर्शिताः तत एवावगम्याः

**क्रत्वादि** पु० पाणिन्युक्ते सोः परतः स्थितस्य आद्युदात्ततानिमित्ते शब्दगणे। स च गणः "क्रतु दृशीक प्रतीक प्रतूर्ति हव्य भग"।

**क्रत्वीश्वर** न० क्रतुना स्थापितमीश्वरलिङ्गम्। काशस्थे क्रतुना मुनिना स्थापिते शिवलिङ्गभेदे "वरणायास्तटे रम्ये क्रत्वीश्वरमनुत्तमम्। वाशिष्ठमीश्वरञ्चैव लभते वसतिं त्विह" काशी० १८अ०

**क्रथ** वधे भ्वा० पर०सक० सेट् घटा०। क्रथति अक्रथीत्-अक्राथीत्। चक्राथ, णिच्—क्रथयति-ते। अचिक्रथत् त

**क्रथ** प्रतिहर्षे चु० उभय० सक० सेट् घटा०। क्राथयति-ते अचिक्रथत्-त। क्रथयां-बभूव आस चकार चक्रे

**क्रथन** न० क्रथ-वधे ल्युट्। १मारणे२छेदने च "राजन्योत्तंसकूट क्रथनपटुरिति" प्रबोधचन्द्रोदयः। ३दानवभेदे पु०। "क्रथनश्च महावीर्य्यः" भा० आ० ६७अ०।

**क्रथनक** पुंस्त्री क्रथने दन्तकरणककराटकच्छेदने प्रसृतः कन्। उष्ट्रे अमरः स्त्रियां जातित्वात् ङीष्।

**क्रथकैशि(शी)क** पु०ब०व० देशभेदे "सपाण्ड्यान् क्रथकैशीकान्" भा० स० १२०श्लो० "अथेश्वरेण क्रथकैशिकानाम्" "प्रत्युज्जगाम क्रथकैशिकस्तम्" रघुः। ह्रस्वमध्यात् संज्ञायां कन्। सितागुरुणि न० शब्दच०।

**क्रद** रोदने वैकल्ये अक० आह्वाने सक० भ्वा० पर० इदित् सेट्। क्रन्दति अक्रन्दीत् चक्रन्द। भावे क्रन्द्यते क्रन्दितम्। अव्यक्तशब्दकरणे "अक्रन्ददग्निः स्तनयन्निव द्यौः" यजु० १२।६। अक्रन्दत् क्रन्दति विस्फूर्जति" वेददी०। "यदक्रन्दः प्रथमं जायमानः" यजु० २९,१२। [याति अनु+क्रन्दनेनानुगमने सक० अनुक्रन्दति सुतम् क्रन्दनेनानु-

अभि+आभिमुख्येन शत्रुप्रभृतेराह्वाने सक०। "अभिक्रन्दन् वृषायसे" ऋ० १०।२१।८। "अभिक्रन्दन् आभिमुख्येन युद्धार्थं शत्रूनाह्वन्" भा०। "आभिमुख्येन शब्दकरणे अक०। 'अभिक्रन्द स्तनय गर्भम्" ऋ० ५।८३।७। "अभिक्रन्द भूम्यभिमुखं क्रन्द शब्दाय" भा०।

आ+आह्वानपूर्व्वकरोदने सक०। "आक्रन्दत् भीमसेनं वै" भा० व० १५७अ०। सख्यक्रन्दने च "आक्रन्दिषुः सखीनह्वन्" भट्टिः। "तदीयमाक्रन्दितमार्त्तसाधोः" रघुः।

सम्+आ+सम्यगाह्वानपूर्व्वकक्रन्दने "हा तात! धर्म्मराजेति समाक्रन्दन्महाभये" भा० आश्व० १०७२श्लो०

नि+यथानामशब्दोच्चारणे। "न्यक्रन्दीज्जन्म प्रब्रुवाणो यथास्य शब्दस्तथा नामेरयति वाचम्" निरु० ८।४।

प्र+स्तवने "प्र वः स्पडक्रन् सुविता यः" ऋ० ५।५९।१। "अक्रन् स्तौति" भा० वेदे गणव्यत्ययात् शपोलुक्।

वि+विशेषेण क्रन्दने। सम् सम्यक् क्रन्दने।

**क्रद** वैकल्ये भ्वा० आत्म० अक०सेट् घटादि०। क्रदते अक्रदिष्ट चक्रदे णिच् क्रदयति। यङ् वेदे कनिक्रद्यते यङ् लुकि कनिक्रत्ति कनिक्रदीति "उपस्थे वृषभः कनिक्रदत्" ऋ०६।७७।५। "कनिक्रदत् शब्दं कुर्वन्" भा०।

अनु+अनुगमने सक०। "संनशेयं चौणीरनुचक्रदे" ऋ० ८।३।१०। "अनुचक्रदे अनुगच्छति" भा०।

**क्रन्द** निरन्तरशब्दकरणे चुरा० अक० उभ०सेट्। प्रायेणाङ्पूर्व्वः आक्रन्दयति ते आचक्रन्दत् त। आक्रन्दयाम् बभूव आस चकार चक्रे

**क्रन्दन** न० क्रदि—भावे ल्युट्। १शोकादिनाऽश्रुपातहेतुव्यापारे रोदने शब्दरत्ना० योधवीरादेः २आह्वाने च अमरः ३विड़ाले पुंस्त्री शब्दमा०। स्त्रियां जातित्वात् ङीष्।

**क्रन्दित** न० क्रदि—भावे क्त। रोदने अमरः। आह्वाने मेदि० योधानां चीत्कारशब्दकरणे शब्दरत्ना०।

**क्रप** कृपायाम् भ्वा० अक० आत्म० सेट् घटादि। क्रपते अक्रपिष्ट चक्रपे णिचि क्रपयति ते। "उतस्तास्रुर्मवक्रपिष्ट" ऋ०७।२०।९। वेदेऽस्य क्वचित् संप्रसारणम्। "उतो कृपन्त धीतयो देवानां नाम बिभ्रतीः" ऋ० ८।३९।४। "विन्दन्त ज्योतिश्च कृपन्त धीभिः" ऋ० ४।१।१४। "मर्तानां चिदुर्वशीरकृपन्" ऋ० ४।२।१८। "विश्वे देवा अकृपन्त समीच्योर्निष्पतन्त्यः" ऋ० १०।२४।५। "कविं कृपमाणमकृणुतं विचक्षे" ऋ० १।११६।१४।

**क्रम** पादविक्षेपणेन गतौ भ्वा०पर०सक० सेट्। अस्य सार्व-

धातुके वा श्यन् छेडमन्तत्वात् अतिङि खिति ञिति चिणि परे न वृद्धिः। कर्त्तरि क्रम्यति कामति। क्रम्येत्-क्रामेत्। क्रम्यतु क्रामतु। अक्रम्यत् अक्रामत्। अक्रमीत्। चक्राम। क्रमिता क्रम्यात् क्रमिष्यति। अक्रमिष्यत्। कर्म्मणि क्रम्यते। अक्रमि। णिचि ह्रस्व मुलो वा वृद्धिः। क्रमयति-ते। अचिक्रमत्-त। कर्म्मणि क्रम्यते। अक्(क्रा)मि। क्(क्रा)मितासे क्रमयितासे। कृत्सु क्रमणीयम्। क्रमितव्यम् क्रम्यम् क्रमणम्। क्रमकः। क्रमी। क्रमिता। क्रान्तिः। क्रमितुम्। उदित् क्रमित्वा क्रान्त्वा। संक्रम्य। क्रमं क्रमम्। णिचो णमुलि वा वृद्धिः क्(क्रा)मं क्र(क्रा)मम्। क्रम्यन् क्रामन्। क्रमिष्यन् क्रमिष्यमाणः। णयन्तस्य क्रमयिता क्रमितः। क्रमयितुम्। क्रमयितव्यम्। क्तिन्नास्ति युच् क्रमणा। क्रम—यन् माणः क्रमयिष्यन्। कर्म्मणि क्रम्यमाणः। क्(क्रा)मिष्यमाणः। क्रमयिष्यमाणः। सनि चिक्रमिषति आत्म॰चिक्रंसते। "समुद्रात् पश्चिमे पूर्वं दक्षिणादपि चोत्तरा। क्रामत्यनुदिते सूर्य्ये वाली व्यपगतक्लमः" रामा॰कि॰८० अ॰। "देवा इमाँल्लोकानक्रमन्त" शत॰ब्रा॰६।७।२।१० "विष्णुस्त्वा क्रमताम्" यजु॰ १।६। "पादेनाक्रम्यारोहतु" वेददी॰। "हत्वा रक्षांसि लवितुमक्रमीन्मारुतिः पुनः" भट्टिः "हतोद्विजाग्र्यैरभिपूज्यमानः चक्राम वज्रीव दितेः सुतेषु" भा॰ आ॰ १६३ अ॰। "क्रमं बबन्ध क्रमितुं सकोपः" "क्रन्त्वा क्रन्त्वा स्थितं क्वचित्" भट्टिः। परोपक्रमवत् अप्रतिबन्धादौ आत्म॰। "न तत्र क्रमते मृत्युर्न जरा न च पावकः" भा॰ आनु॰ ८३अ॰। "हरेयदक्रामि पदैककेन खम्" नैषधे अक्रामीत्यसाधु। स्वार्थे णिच-कथञ्चित् साधु इत्यन्ये। निष्ठायां नेट् क्रान्त इत्यादि कौटिल्ये यङ् चंक्रम्यते नागः। "सोऽपि चंक्रम्यमाणः कूपे पपात" भा॰ आ॰ ७०० श्लो॰।

अति+अतिक्रमणे उल्लङ्घने सक॰। "स नदीः पर्वतांश्चापि सलिलानि सरांसि च। अचिरेणातिचक्राम खेचरः खे चरन्निव" भा॰आ॰ ४६५२श्लो॰। "अत्यक्राममिमान् मासां स्तद्वधं परिचिन्तयन्" रामा॰ युद्ध॰ ८८अ॰।

अभि+अति+आभिमुख्येनातिक्रमणे सक॰। "न दिष्टमभ्यतिक्रान्तुं शक्यं बुद्ध्या बलेन च" भा॰ स॰ १०५१श्लो॰।

वि+अति+वैपरीत्येन क्रमणे। "तदन्तः पुरमासाद्य व्यतिचक्राम तं जनम्" रामा॰ बाल॰ ७०अ॰। विशेषेण अतिक्रमे च। "स लोकानाहिताग्नीनामृषीणां पुण्यकर्म्मणाम्। देवानाञ्च व्यतिक्रम्य ब्रह्मलोकमवाप ह" रामा॰ आर॰६अ॰। "एवं हि सुमहान् कालो व्यत्यक्रामत मस्य वै" भा॰अनु॰४५५श्लो॰। "विवाहे च व्यतिक्रमः" उद्वा॰त॰

सम्+अति+सम्यगतिक्रमणे। "अवलीमृत्यवन्तञ्च समतिक्रम्य पर्वतम्" भा॰ व॰ २२१श्लो॰

अधि+आधिक्येन क्रमणे

अनु+परिपाट्या क्रमणे। "श्रद्धा रतिर्भक्तिरनुक्रमिष्यति" भा॰२।२५।२५५। "महर्षिभिरनुक्रान्तं धर्म्मपन्थानमास्थितः" रामा॰उ॰४७अ॰। "परिपाटी त्वनुक्रमः" अमरः।

अप+ अपसरणे अक॰ "हित्वा सेनामपचक्राम चापि" भा॰ आ॰ १।१७७श्लो॰।

अभि+आभिमुख्येन गमने सक॰ "तमभिक्रम्य सर्वेऽद्य वयं वाऽर्थामहे वसु" भा॰ व॰ ८२१अ॰। "प्रदक्षिणमभिक्रम्य सर्वे प्राञ्जलयः स्थिताः" भा॰अनु॰६०४७० "आरम्भे च "नेहाभिक्रमनाशोऽस्ति" गीता अभिक्रमः आरभ्यमाणः।

अव+अपसरणे हिंसने च सक॰। "अवक्रामन्तः प्रपदैरमित्रान्" ऋ॰ ६।७५।७। "अपक्रामन्तः हिंसन्तः" भा॰।

अनु+अव+अनुगमने प्रवेशे च सक॰। "एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति" शत॰ ब्रा॰ १४।७।२।१। "मृतिकाले हृदयस्थां बुद्धिमेवान्वागच्छति" भा॰।

आ+बलपूर्वकास्कन्दने। "आक्रामन्नागभवने तदा नागकुमारकान्" भा॰आ॰५०१८श्लो॰। "आरोहणे च आक्रान्तिसम्मानितपादपीठम्" कुमा॰। उद्गमे अक॰तत्र दीप्त्यान्वितस्योद्गमे आत्म॰। "भाद्रकृष्णचतुर्द्दश्यां यावदाक्रमते जलम्। तावद्गर्भं विजानीयात्तदूर्द्ध्वं तीरमुच्यते" प्रा॰त॰ दानधर्म्मः। एवं सूर्य्य आक्रमते इत्यादि। अन्यत्र आक्रामति। अत्यादिपूर्वकस्याङस्तु तत्तदर्थविशिष्टारोहणादिद्योतकता। "सममेव समाक्रान्तं द्वयं द्विरदगामिना" रघुः

उत्+उदये अक॰। "यत्रास्य शीर्षाच्छिन्नस्य उदक्रामत्" शत॰ ब्रा॰ १४।१।२।१२। ऊर्द्ध्वक्रमणे च "न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते" श्रुतिः। "कस्मिन्नुत्क्रान्ते सर्व्वमिदमुत्क्रान्तम्" श्रुतिः। "तान् हत्वा पतगश्रेष्ठः सर्वानुत्क्रान्तजीवितान्" भा॰आ॰ ३२अ॰। "विश्वङ्ङन्या उत्क्रमणे भवन्ति" छा॰ उप॰। उल्लङ्घने सक॰। उत्क्रमः।—वैपरीत्येन क्रमणे अक॰ "क्रमोत्क्रमात्तमेषतुलादिमानम्" ज्यो॰ त॰

अनु+उद्+उत्क्रमणानुसरणे सक॰। "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" शत॰ ब्रा॰ ७।२।२।

वि+उद्+वैपरीत्येन विशेषेण च लङ्घने सक॰ऊर्द्ध्वं गतौ अक॰

"इन्द्रियाणि वीर्य्याणि व्युदक्रामन्" शत०ब्रा०१२।७।१।८। "व्युत्क्रान्तरजसोऽमलाः" भा० अनु० १२१८ श्लो०। "व्युत्क्रमात् प्रेतश्राद्धानि योमोहात् धर्ममोहितः" ति० त० देवलः।

उप+आरम्भे सक० आत्म०। उपक्रमते आरभते इत्यर्थः। "उपक्रमस्व पुरुरूपमाभर वाजम्" ऋ० ८।१।१४। "उपक्रमोपसंहारौ" वेदान्तसा०। "योयस्य विहितः कालः कर्म्मणस्तदुपक्रमे। तिथिर्याऽभिमता सा तु कार्य्या नोपक्रमोज्झिता" बौधा०। गत्यर्थमात्रद्योतकत्वे नात्मनेपदम् "भागधेयमुपचक्राम भगवांस्तच्चकौशिकः" भा० स० १८अ०। अप्रतिबन्धे उत्साहे वृद्धौ च आत्म०। क्वचित् उपक्रमते बुद्धिः न प्रतिहन्यते इत्यर्थः अध्ययनाय उपक्रमते उत्सहते। उपक्रमन्ते शास्त्राणि स्फीतानि भवन्ति इत्यर्थः। एवं परापूर्वकस्य कोऽलस्य च एष्वर्थेषु अकर्म्मकता आत्मनेपदञ्च। अन्योपसर्गपूर्वकत्वे तत्तदर्थेषु, परोपपूर्व्वस्यार्थान्तरे च न तङ्। उपसर्गराहित्ये अप्यार्थेऽपि वा तङ्। क्रामति क्रमते इति। आङि तु ज्योतिरुद्गमने आत्मनेपदमिति भेदः। विपूर्वकस्य विशेषो वक्ष्यते समादिपूर्व्वकोपशब्दस्य तत्तदर्थविशिष्टारम्भद्योतकता। यक्तुं समुपचक्रमे।

नि+नितरां क्रमणे अवश्यक्रमणे। "कर्म्मन् वाजी न्यक्रमीत्" ऋ० ८।२६।१। "न्यक्रमीत् नितरामक्रमीत्" भा०

अनु+नि+अनुक्रमणे। "सप्तपदान्यनुनिक्रामति" शत० ब्रा० ३।२।१।१।

निर्(स्)+निस्सरणे "जिगीषया महीं पाण्डुर्निरक्रामत् पुरात् प्रभो!" भा०आ०११२अ०। अस्य क्वचिदात्मनेपदित्वम् "वाताप्रे! निष्क्रमस्वेति पुनः पुनरुवाच ह" भा०व० ९९अ०।

अभि+निर्(स्)+आभिमुख्येन निःसरणे। "अभिनिष्क्रामति द्वारम्" पा०। "स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम्" सि० कौ० "प्रविश्य चाभिनिष्क्रान्तं सुग्रीवं वानरर्षभाः" राम० किष्कि० २५अ०

वि+निर्(स्)+विशेषेण निःसरणे "यथा प्रविश्यान्तरमन्तकस्य को वै मनुष्योहि विनिष्क्रमेत" भा०य०१०२७३अ०।

परा+बलेनाक्रमणे आत्म० सक०। "यत्र तपः पराक्रम्य व्रतं धारयन्नुत्तरम्" अथ० १०।७।११। अप्रतिबन्धादौ उपोपसर्गवत्। तत्रोत्साहे "पानीयार्थं पराक्रान्ता यत्र ते भ्रातरोहमाः" भा० मड़ा० ९१श्लो०। पराक्रमः।

परि+भ्रमणे अक०। "परिक्रामति संसारे चक्रवत् बहुवेदनः" भा० व० २०८अ०। परितोगमने सक०। "परिक्रामति यः सर्वांल्लोकान् संत्रासयन् बलात्" भा० ८६।१२।२०।

सम्+परि+सम्यक् वेष्टनाकारेण परितो गमने सक० "बहूनि संपरिक्रम्य तीर्थान्यायतनानि च" भा० आ० १२श्लो० पर्य्यटने अक०

प्र+आरम्भे आत्म०। "प्रचक्रमे वक्तुमनुज्झितक्रमः" रघुः। अनारम्भे तु न आत्म० "विष्णोर्वत्सरमं पदं प्रदक्षिणं प्रक्रामन्ति" भाग०५.२२। ३७श्लो०।

प्रति+प्रतिरूपक्रमे सक० "यं स्रुवेण प्रतिक्रामति" शत० ब्रा० २।४।४।८। प्रतिकूलक्रमणे निवृत्तौ अक०। "भद्रे! प्रतिक्राम नियच्छ वाचम्" भा० व० २६८अ०।

वि+पादविहरणे अक०आत्म०। "साधु विक्रमते वाजी" सि०कौ० "त्रेधा विष्णुरुरुगायोविचक्रमे" तैत्ति०। पादाकरणके तु न तङ्। वाजिना विक्रामति। "ते विक्रमन्तः स्फुरता हठेन विक्षिप्यमाणा धनुषा नरेन्द्राः" भा० आ० १८अ०। इत्यत्र न तङ् "ततएनं महादेवः पीड्य गात्रैः सुपीडितम्। तेजसा व्यक्रमद्रोषात् चेतस्तस्य विमोहयन्" भा० व० ३९अ०। दीर्घाभाव आर्षः। वीर्य्यातिशयेन पराक्रमे अक०। "ते यूयं त्वरिताः सर्वे विक्रमध्वं प्लवङ्गमाः" रामा० किष्कि० ५८अ०। तङ् आर्षः। एवं "ताश्च विक्रमसे जेतुम्" भा०स० १९६श्लो० तङ् आर्षः। "वेः पादविहरणे" पा० योगविभागाद्वा क्वचिदन्यत्रापि तङ् इत्यन्ये।

अधि+वि+आधिक्येन पराक्रमे "यजमानायाधिविक्रमस्व" कात्या० २३।३।१।

निर्+वि+विशेषेण निःसरणे। "भित्त्वा कुक्षिं निर्विचक्राम विप्रः" भा० आ० ७६अ०

सम्+एकत्रस्थितस्यान्यत्र संचरणे सक० "कार्मुकं तु परित्यज्य झषं (मृगम्) संक्रमते रविः" ति०त०भवि० पु०। "रविसंक्रान्तिरेव च" तत्रैव। "जीवः संक्रमतेऽन्यत्र कर्म्मबन्धनिबन्धनः" भा०व०२०८अ०। तङार्षः। "औपसर्गिकरोगाः सक्रामन्ति नरान्नरम्" सुश्रु०। "संक्रामन्ति हि पापानि तैलविन्दुरिवाम्भसि" पराशरः "कालोह्ययं संक्रमितुं द्वितीयम्" रघुः। सम्यक् क्रमणे सक० "संक्रामन्तौ बहून् देशान् शैलाच्छैलं वनाद्वनम्" रामा० आर० ७६अ०।

अनु+सम्+आनुरूप्येण आनुपूर्व्येण च संक्रमणे। "इष्टापूर्त्तमनुसंक्राम विद्वन्!" अथ० १८।२।५।

उप+सम्+सामीप्येन संक्रमणे सक० "सविशेषणे हि विधि-

निषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे" दीधितौ न्यायवाक्यम् "एतमन्नमयात्मानमुपसंक्रामति" तैत्ति० प्रति+सम्+प्रतिकूलसङ्क्रमणे निवृत्तौ "तावच्च संहृतिरसौ प्रतिसंक्रमेत" भाग० ३।८।१०श्लो०। "प्रतिसंक्रामयद्विश्वम्" ४।२४।४८श्लो० प्रतिसंक्रामयत् निवर्त्तयत् ।

**क्रम** पु० क्रम—भावकरणादौ यथायथं घञ् मान्तत्वाद्वृद्धिः । १पादविक्षेपे २पादे हेमच० अर्थानां नैयत्येन ३पूर्वापरावस्थाने। ४कल्पे अनुष्ठाने अमरः ५सामर्थ्ये (सामर्थ्यहेतुकव्यापारे) ६आक्रमणे च मेदि० । ७वेदसंहितानुसारिपाठतद्विलोमरूपे पाठभेदे। ऋग्वेदशब्दे तत्स्वरूपभेदादिकं १४११पृ०चरणव्यूहवाक्यतद्भाष्याभ्यां दर्शितम् । ८विष्णौ "ईश्वरोविक्रमी धन्वी मेधावी विक्रमः क्रमः" विष्णुस० । 'क्रमणात् प्राणरूपेण गगनात् । क्रमणहेतुतया । (प्राणिगमनसाधनपादविन्यासहेतुभूतरथ्यादिप्रकाशनाधिष्ठातृस्थ्यादिदेवरूपतया) वा क्रमः"भा० ९परिपाट्यां यथोचितसन्निवेशे मेदि० । शेषशेषिभावे अधिकृताधिकारे वा सत्येव वैदिककर्म्मणोरनुष्ठाने पौर्वापर्य्यरूपक्रम ग्रहणमिति शा०भा०स्थितम् तन्नियामकश्च श्रुत्यर्थपाठप्रवृत्तिकाण्डमुख्यभेदात् षड्विधः तस्य च कर्म्मविशेषे विशेषेण याज्ञता तद्वृतिः मीमांसा ५अ०।१पा०भाष्ययोर्दर्शिता यथा "श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात्" जै० १सू०

"चतुर्थेऽध्याये प्रयोजकाप्रयोजकलक्षणं वृत्तं, तत्र विस्मर्त्तव्यम्, इह इदानीं क्रमनियमलक्षणम् उच्यते,तत् श्रुत्यर्थपाठप्रवृत्तिकाण्डमुख्यैर्वर्ज्यते, श्रुत्यादीनाम् च बलाबलम् । आदितस्तु श्रुतिक्रमश्चिन्त्यते,—किं यथाश्रुति पदार्थानाम् क्रमआस्थेयः, उत अनियमेन ?—इति । किं प्राप्तम् ?—एकत्वात् कर्त्तुः, अनेकत्वाच्च पदार्थानाम्, अवश्य भाविनि क्रमे लाघवात् प्रयोग आशुभावाच्च अनियमः—इत्येवं प्राप्ते ब्रूमः

"श्रुतिलक्षणम् आनुपूर्व्यं तत्प्रमाणत्वात्—इति श्रुतिर्ग्रहणम् अक्षराणां, तन्निमित्तं यस्य क्रमस्य, स साधु क्रमः । श्रुतिप्रमाणका हि वैदिका अर्थाः नैषामन्यत् प्रमाणमस्ति (१।१।२सू०)—इत्युक्तम् । किम् इह उदाहरणम् ? । सत्रे दीक्षाक्रमं विधत्ते, 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारं ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्द्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारम् उद्गातुः, मैत्रावरुणं होतुः, ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, अग्नीध्रं ब्रह्मणः, प्रतिहर्त्तारम् उद्गातुः, अच्छावाकं होतुः,ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः, ततस्तमन्यो ब्राह्मणो सुब्रह्मण्योदीक्षयति, ब्रह्मचारी वा आचार्य प्रेषितः—इति । अनियमेन क्रमः कर्त्तव्यो, यथा पूर्वः पक्षः, यथा तर्हि सिद्धान्तः, एष एव क्रमः कर्त्तव्यः—इति ।

तत्र आह, अन्याय्यं श्रुतिवचनम्—इति । उच्यते,-किमयं न साधुः ? न न साधुः—इति ब्रूमः । न्याय्यं तर्हि न ब्रूमः,—न साधुः क्रमः—इति, किं तर्हि ?—उक्तस्य पुनर्वचनमन्याय्यम्—इति । उच्यते,—साधोर्वचनं बहुशोऽप्युच्यमानं न्याय्यमेव, असाधोस्तु सकृदप्यन्याय्यम् । आह सकृद्वचनेन ज्ञातस्य पुनर्वचने न प्रयोजनम् इति, उच्यते भवति अविस्मरणमपि प्रयोजनम् इत्युक्तम् । वृत्तिकारेण तत् कार्यम्,—इति चेत् । सूत्रकारस्याप्यविशेषो वृत्तिकारेण । (१म वर्णकम् )

अथवा अर्थान्तरमेव इदम् तत्र हि अन्य एव संशयो विचारो निर्णयश्च,-श्रुतिप्रमाणकोधर्मः अन्यप्रमाणकोवा? इति संशयः । प्रत्यक्षादीनाम् अधिगम्यनिमित्तत्वात् न तत्प्रमाणकः, अतीन्द्रियत्वाच्चोदनालक्षणः—इति विचारः । चोदनालक्षण एव-इति निर्णयः । इह तु सिद्धे तत्प्रमाण्ये व्यवहारक्रमस्य साधुत्वावधारणम्(।२य वर्णकम्)

अथ वा श्रुतिविचारोऽयं-किं पदार्थाः कर्त्तव्याः? इति विधानम् ? किं वा क्रमो विधीयते ?-इति । अनेकार्थविधानानुपपत्तेः क्रमे अनुवादः, पदार्थानां विधिः, अवदानवाक्येष्विव पादार्थविधानं श्रुत्या, क्रमविधानं वाक्येन, तस्मात् न क्रमो विधीयते-इति पूर्वः पक्षः । ननु अवदानवाक्येषु क्रमो विधीयते सत्यं विधीयते, पाठेन, न श्रुत्या, ये ऋत्विजस्ते यजमानाः "इति तु दीक्षायाः प्राप्तत्वात् क्रमविधानार्था श्रुतिः-इति सिद्धान्तः । तस्मात् अपुनरुक्तम्-इति" (३म वर्णकम्) । भाष्यम्

"अर्थाच्च" २सू०

"किम् एष एव उत्सर्गः ? उत न, सर्वत्र श्रुतिवशेनैव भवितुमर्हति-इति उक्तं हि,—"चोदनालक्षणोऽर्थोधर्मः"

एवं प्राप्ते ब्रूमः-अर्थाच्च (सामर्थ्याच्च) क्रमो विधीयते-इति, गुणभूतोहि पदार्थानां क्रमोभवति, यश्च यस्य निर्वर्त्यमानस्य उपकरोति, स तस्य गुणभूतः, यस्मिंश्चाक्रीयमाणे पदार्थः एव न सम्पद्यते,न स गुणभूतः, विनापि

तेन, न वैगुण्यम्। एवं प्रयत्नक्रमस्य गुणभावो यत्र, तत्र अर्थेन स एवान्वयितव्यः। यथा "जाते वरं ददाति, जातमञ्जलिना गृह्णाति जातमभिप्राणिति"-इति अर्थात् पूर्वमभिप्राणितव्यम् ततः अञ्जलिना गृहीतव्यः, ततो वरो देयः,-इति, तथा विमोकः पूर्वमाम्नातः, पश्चात्तद्योगः, अर्थात् विपरीतः कार्यः। याज्यानुवाक्ये तु विपर्ययेण आम्नाते, विपर्ययेण कर्त्तव्ये, न अत्र पाठक्रमोऽभीयते, यतो देवतोपलक्षणार्थाऽनुवाक्या, प्रदानार्था याज्या, "अग्निहोत्रम् जुहोति"-इति पूर्वमाम्नातम्, "ओदनं पचति"-इति पश्चात्, असम्भवात् पूर्वमोदनःपक्तव्यः। प्रैषप्रैषार्थौ तु विपर्ययेण आम्नातौ, तौ च विपर्ययेण कर्त्तव्यौ" भाष्यम्

"अनियमोऽन्यत्र" ३ सू०

अन्यस्मिन् विषये क्रमस्य नियमो नास्ति, यथा दर्शपूर्णमासयोर्याजमानानां प्रयाजानुमन्त्रणादीनाम् नानाशाखान्तरसमाम्नातानाम् "वसन्तमृतूनाम् प्रीणामि"-इत्येवमादीनाम्, 'एको धर्म,-इत्येवमादीनाञ्च" भा०

"क्रमेण वा नियामकता क्रत्वेकत्वे तद्गुणत्वात्" ४ सू०

"दर्शपूर्णमासयोराम्नातम्'-'समिधो यजति तनूनपातं यजति इड़ो यजति बर्हिर्यजति स्वाहाकारं यजति"-इति। तत्र संशयः-किम् अनियतेनैव क्रमेण एषाम् अनुष्ठानम्? उत यः पाठक्रमः स एव नियम्येत?-इति। किंप्राप्तम्?-नियमकारिणः शास्त्रस्याभावात् अनियमः-इति। एवं प्राप्ते ब्रूमः-क्रमेण, एव नियम्येत एकस्मिन् क्रतौ-इति। कुत?। तद्गुणत्वात्, तद्गुणत्वं हि गम्यते पदार्थानाम्, यथा, स्नायात् अनुलिम्पेत्,भुञ्जीत-इति च क्रमेण अनुष्ठानम् अवगम्यते, वाक्यात् पदार्थानाम्, यथा चादृष्टार्थेषु उपदिश्यमानेषु, कश्चित् ब्रूयात्,-'देवाय धूपो देयः पुष्पाण्यवकारितव्यानि चन्दनेनानुलेप्तव्यः उपहारोऽस्मै उपहर्त्तव्यः" एवं कृते देवस्तुष्यति,-इति, तमन्यः प्रतिब्रूते, नैतदेवं, न प्रथमं धूपो दातव्यः प्रथमं पुष्पाणि अवकारितव्यानि-इति, एवं मन्यते-धूपदानस्य प्राथम्यम् अनेन उक्तम्-इति। तस्मात् वाचनिक एषाम् एष क्रमः-इति" भा०

"अशाब्द इति चेत्, स्याद्वाक्यशब्दत्वात्। ५ सू०

इति चेत्, पश्यसि, "अर्थैवं गम्यमाने अशाब्दः एव क्रमः। कथं? पदार्थपूर्वको वाक्यार्थः पदेभ्यश्च पदार्था एव अवगम्यन्ते न क्रमः। स्यात् एतदेवं, यदि पदार्थानाम् समूहस्य श्रवणं प्रत्यायकम् अर्थस्य स्यात्, न तु समुदायः प्रत्यायकः,-इत्युक्तं "तद्भूतानां क्रियार्थेन समाम्नायः" (१।१।२५ अ०)-इत्यत्र। तस्मात् क्रमस्य वाचकशब्दाभावात् व्यामोह एष क्रमोऽवगम्यते। एवं चापर्यासत्तिरनुगृह्येत, इतरथा सापि विप्रकृष्येत घटीयन्त्र इव। दर्शयिष्यति च,-"हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः,अथ वक्षसः,-इति। यदि नियामकः पाठक्रमः ततो न विधातव्यमेतत्, नियामके हि पाठक्रमे पाठक्रमात् एव प्राप्नुयात्" भा०

"अर्थकृते वानुमानं स्यात्, क्रत्वेकत्वे परार्थत्वात् स्वेन त्वर्थेन सम्बन्धः, तस्मात्स्वशब्दमुच्येत" ६सू०

"एकस्मिन् क्रतावेकत्वात् क्रतोः,अनेकस्मिन् पदार्थेऽर्थकृतत्वात् क्रमस्य, तत्र एष एव क्रमो नियम्येतानुमानेन। कुतः? परार्थत्वात् वेदस्य, परार्थो हि वेदो यद्यत् अनेन शक्यते कर्त्तुम्, तस्मै-तस्मै प्रयोजनाय एष समाम्नायते,शक्यते च अनेन पदार्थो विधातुम्, शक्यते च क्रियाकाले प्रतिपत्तुम्। तस्मात् वेदः पदार्थांश्च विधातुम् उपादेयः, क्रियाकाले च प्रतिपत्तुम्, न शक्यते विशेषः-विधातुमयं समाम्नायते, न प्रतिपत्तुम्-इति, अवक्ष्यमाने विशेषे उभयार्थम् उपादीयते-इति गम्यते। प्रतिपत्तुं च अनेन क्रमेण शक्यते, नान्येन, अत एव च कृत्वा पाठक्रमापचारे, विनष्ट-इत्युच्यते, इतरथा हि यत् यस्य प्रयोजनं,तस्मिन् निर्वर्त्त्यमाने एव किं नष्टं स्यात्, अदृष्टं कल्प्येत, तच्च अन्याय्यं दृष्टे सति। तस्मात् स्वशब्दः क्रमः-य एव पदार्थानां वाचकः शब्दः स एव क्रमस्यापि" भा०

"तथा चान्यार्थदर्शनम्" ७सू०

"एवं च अन्यार्थं दर्शयति,-'व्यत्यस्तमृतव्या उपदधाति"। "व्यत्यस्तं षोड़शिनं शंसति"।"आश्विनो दशमो गृह्यते तं तृतीयं जुहोति"-इति, यदि अनियमेन उपधानं शंसनं च, व्यत्यस्तवचनम् अनर्थकं स्यात्, न हि कथञ्चित् अव्यत्यासः-इति। तथा आश्विनस्य तृतीयस्य होमानुवादो न अवकल्पेत, यदि पाठक्रमेण नियमः-इति। तथा-'अभिचरता प्रतिलोमं होतव्यम्" प्राणानेव अस्य प्रतीचः प्रतियौति"-इति क्वचित् प्रतिलोमं विदधदनुलोमं दर्शयति, तदुपपद्यते, यदि पाठक्रमेण प्रयोगः, इतरथा, सर्व्वमनुलोमं स्यात् प्रतिलोमदर्शनं नोपपद्येत! तथा 'चतुर्थोत्तमयोः प्रतिसमानयति"-इति, उक्ते सति,

'अतिग्राहेडोर्बर्हिः प्रतिसमानयति,—इति उच्यते तेन बर्हिषः चतुर्थतां दर्शयति, सा पाठक्रमे नियामकोऽत्र कल्प्यते" भा०

"प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात्" ८सू०

"वाजपेये "सप्तदश प्राजापत्यान् पशून् आलभते"—इति श्रूयते। तेषु पशुषु चोदकप्राप्ताःप्रोक्षणादयो धर्माः, तत्र प्रथमः पदार्थो यतः कुतश्चिदारब्धव्यः द्वितीयादिषु भवति संशयः,— किं तत एव द्वितीयोऽपि पदार्थ आरब्धव्यः ? उत द्वितीयादिषु अनियमः?—इति। किं तावत् प्राप्तम्? नियमकारिणः शास्त्रस्याभावात् अनियमः-इति। एवं प्राप्ते, ब्रूमः,—यतः पूर्व आरब्धः, ततएव द्वितीयादयोऽपि पदार्था आरब्धव्याः—इति। कुतः एतत्?। 'तदुपक्रमात्' सर्वे हि पदार्था प्रधानकालात् न विप्रकृष्टव्याः, प्रधानं हि चिकीर्षितं, कृतं वा तेषां निमित्त, सहवचनं हि भवति"-'पदार्थैः सह प्रधानं कर्त्तव्यम्'—इति। बहुपदार्थसमाम्नानात्तु अवश्यम्भावी विप्रकर्षः, तथापि तु यावद्भिर्व्यवहितः शक्यः पदार्थः कर्तुम्, तावद्भिर्व्यवधानम् अवश्यं कर्त्तव्यम्। ततोऽभ्यधिकेन न व्यवधातव्यम्—इति, यदि द्वितीयं पदार्थमन्यत आरभेत, ततोऽधिकैरपि व्यवदध्यात्, तथा प्रयोगवचनं बाधेत!। 'ननु तथा सति कश्चिदल्पैर्व्यवहितो भविष्यति'। उच्यते,—अनुमतानां व्यवधायकानां त्यागेन कश्चित् अभ्यधिको गुणो भवति—इति तस्मात् यतः पूर्वपदार्थ आरब्धः तत एव उत्तर आरम्भणीयः—इति" भा०

"सर्वमिति चेत्" ९सू०

"इति चेत् पश्यसि, प्रधानाविप्रकर्षेण प्रयोगवचनानुग्रहः—इति, सर्वं तर्हि—गुणकाण्डम् एकस्मिन् अपवर्जयितव्यं, यथा सौर्यादिषु" भा०।

"नाकृतत्वात्" १०सू०।

"नैतदेवम्, सहप्रयोगे एवं हि न अनुष्ठितः स्यात्"भा०।

"क्रत्वन्तरवदिति चेत्"। ११सू०

"अथ यदुक्तं,—यथा क्रत्वन्तरेषु सौर्यादिषु—इति, तत् परिहर्त्तव्यम्" भा०

"नासमवायात्" १२सू०

"न तेषामर्थात् क्रमः प्राप्नोति, यो नियम्येत, अङ्गाश्रयो हि नियमो भवितुमर्हति, अनङ्गासमाश्रयस्य स्वयमङ्गता कल्प्येत" भा०

"स्थानाच्चोत्पत्तिसंयोगात्" १३ सू०

"एकविंशेन अतिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकामम्" इत्येवमादि श्रूयते। तत्र आगमेन सङ्ख्यापूरणम्—इति वक्ष्यते। तत्र आगमे क्रियमाणे, किम् अनियमजक्रमाः सर्वा ऋच आगमयितव्याः? उत काण्डक्रमेभ्यः ? इति। किं प्राप्तम् ?—अनियमेन—इति। कुतः ? अतिरात्रे त्रिणवादि शब्दार्थैनैताः प्राप्नुवन्ति, तत्र एतासां प्राप्नुवतीनाम् पाठक्रमो नास्ति—इति। एवं प्राप्ते उच्यते,—यदासां सामाम्नाये स्थानं, तेनैता अत्र नियम्यन्ते, याः पूर्वं समाम्नाताः, ताः पूर्वमेव प्रयोक्तव्याः, आनुपूर्व्यस्य हि दृष्टमेतत् प्रयोजनम्, यदुत्तरस्मरणं, तदपि चिकीर्षितमेव—इति। त्रिणवादिशब्दैः अतिरात्रे यौगपद्येन आसां प्राप्तेः पाठक्रमस्य अविषयः—इति अधिकरणान्तरम्—इति भवति मतिः। समाम्नायपाठक्रमादेव अत्र नियमः—इति पुनरुक्ततामस्यते—इति अन्यथा वर्ण्यते" १मव०

"साद्यस्के श्रूयते,—सह पशूनालभते,—इति अत्र एषोऽर्थः समधिगतः"—सवनीयकाले त्रयाणाम् आलम्भः—इति। अथ अत्र पाठक्रमात्, किम् अग्नीषोमीयः पूर्वम् आलब्धव्यः? उत स्थानक्रमात् पूर्वं सवनीयः इति। कुतः ?। पाठक्रमात्। एवं प्राप्ते ब्रूमः,—सवनीयः पूर्वं, "स्थानात्, यदि पूर्वम् अग्निषोमीयः स्यात्, सवनीय स्थानं व्याहन्येत! "आश्विनं गृहीत्वा त्रिवृता यूपं परिवीय" इति। "ननु इतरथापि पाठक्रमोबाध्येत, बाध्यतां, तस्य हि प्रतिषेधार्थः सहशब्दः समाम्नातः, अप्रतिषिद्धं च आश्विनग्रहस्थानम्, तन्न बाधितव्यम्" (२वर्णकम्) भा०

"मुख्यक्रमेण वाङ्गानां तदर्थत्वात्" १४सू०

"सारस्वतौ भवतः एतत् वै द्विदैवत्यं मिथुनम्"—इति श्रूयते। तत्र सन्देहः,—किं स्त्रीदैवत्यस्य प्रथमं धर्माः ? उत पुंदैवत्यस्य ?—इति। नियमकारिणः शास्त्रस्य अभावात् अनियमः,—इति प्राप्ते ब्रूमः,—मुख्यक्रमेण वा नियमः स्यात्—इति स्त्रीदैवत्यस्य हि पूर्वं याज्यानुवाक्ययोः समाम्नानं, "प्रणो देवी सरस्वती"-इति। तस्मात् स्त्रीदैवत्यस्य पूर्वं प्रदानेन भवितव्यम्, तस्मात् स्त्रीदैवत्यस्य पूर्वं धर्माः कार्याः, तथा हि प्रधानकालता भवति अङ्गानाम्, इतरथा, यैः पादर्थैर्व्यवधानं सामर्थ्यात् अनुज्ञातं तेभ्योऽधिकैरपि व्यवधानं स्यात्"। भा०

"प्रकृतौ तु स्वशब्दत्वात् यथाक्रमं प्रतीयेत" १५सू०

"दर्शपूर्णमासयोः पूर्वमौषधधर्माः समाम्नाताः, ततः आज्यस्य । तत्र सन्देहः,—किम् अग्नीषोमीयधर्माणाम्, मुख्यक्रमेण पूर्वम् आज्यस्य धर्माः कर्त्तव्याः ! उत यथापठम् ?-इति । मुख्यक्रमानुग्रहेण आज्यस्य पूर्वम्,-इति प्राप्ते ब्रूमः,-प्रकृतौ यथापाठं प्रतीयेत, स्वशब्दो हि तेषां पाठक्रमः, सः अन्यथा क्रियमाणो बाधितः स्यात्, मुख्यस्य पुनरुपसङ्ख्याहकः प्रयोगवचनः स्वक्रमेण पदार्थे सन्निधापयन् न बाधितो भविष्यति । अपि च पाठक्रमे स्वशब्दः,—"स्वाध्यायोऽध्येतव्यः" मुख्यक्रमेण प्रयोगवचनैकवाक्यता सूच्या" भा०

"मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मात् उत्पत्तिदेशः सः" १६ सू०

"दर्शपूर्णमासयोः,आग्नेयस्य पूर्वं मन्त्रपाठः, उत्तरो ब्राह्मणस्य । तत्र सन्देहः-कतमः पाठो बलीयान्?-इति । उच्यते,-अनियमः, नियमकारिणः शास्त्रस्य अभावात्-इति ।

एवं प्राप्ते ब्रूमः,-मन्त्रपाठो बलीयान् । कुतः ? प्रयोगरूपसामर्थ्यात्'-प्रयोगाय मन्त्रस्य रूपसामर्थ्यं, तदस्य सामर्थ्यं येन मन्त्रः प्रयुज्यते, तस्य च प्रयुज्यमानस्य क्रमो दृष्टाय भवति । 'ननु च ब्राह्मणपाठस्य अपि तदेव प्रयोजनम्' । उच्यते-उत्पत्तिदेशः सः'-अपरमपि तस्य प्रयोजनं कर्मोत्पत्त्यर्थं भविष्यति" भा०

"तद्वचनाद्विकृतौ यथाप्रधानं स्यात्" १७सू०

"अस्ति अध्वरकल्पा नामेष्टिः,—'आग्नावैष्णवम् एकादशकपालं निर्वपेत्, सरस्वती आज्यभागा स्यात् बार्हस्पत्यश्चरुः'—इति । तत्र सन्देहः—किम् आग्नेयविकारस्य बार्हस्पत्यस्य पूर्वं धर्माः कार्य्याः, चोदको बलवत्तरः, प्रयोगवचनात्, उत उपांशुयागविकारस्य प्रयोगवचनो बलवत्तरः, चोदकात् ?—इति । किम् प्राप्तम् ?—'विकृतौ' अस्यां 'यथाप्रधानं स्यात्' 'तद्वचनात्'—तेषां साक्षाद्वचनक्रमो विकृतौ, तेन सन्निहितानाम् उपसंहारकः प्रयोगवचनो हि प्रत्यक्षः, तद्धर्माणां च आनुमानिकः चोदकेन हि स प्राप्तः । तस्मात् प्रत्यक्षः प्रयोगवचनो बलवत्तरः, तेन चोदक आनुमानिको बाध्यते भा०

"विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति" १८सू०

मुख्याङ्गक्रम—विप्रतिपत्तौ वा यथा प्रकृतौ, तथैव विकृतौ भवितुमर्हति—इति । कुतः ? । 'प्रकृत्यन्वयात्' यादृशाः प्रकृतौ धर्माः, तादृशा एव विकृतौ भवितुमर्हन्ति—इति, मुख्यक्रमेण क्रियमाणा न प्रकृतिवत् कृताः स्युः ? । चोदको हि प्रयोगवचनात् बलवत्तरः, स हि उत्पादयति प्रापयति च । प्रापितान् अभिसमीक्ष्य प्रयोगवचन उपसंहरति, स प्राप्तेषु उत्पन्नः प्राप्तिनिमित्तक उत्तरकालं पूर्वप्राप्तं न बाधितुमर्हति चोदकं, प्रत्यक्षोऽपि सन्, बहिरङ्गत्वात्, यथाप्राधान्येनोपसंहरिष्यति । तस्मात् पूर्वं बार्हस्पत्यस्य धर्माः, तत आज्यस्य" भा० । एतच्च स्पष्टतया तत्त्वबोधिन्यां दर्शितं यथा

"अग्निहोत्रं जुहोति यवागूं पचतीत्यादौ अनुष्ठेयानामनुष्ठानक्रमनियमोऽस्ति नवेति । तत्र न क्रमनियमः तत्प्रापकप्रमाणाभावादिति प्राप्ते क्रमनियमप्रापकाण्याह श्रुत्यर्थपठनस्थानमुख्यप्रावर्तिकाः क्रमाः । १श्रुतिरानन्तर्य्यबोधकमथशब्दक्त्वाप्रत्ययादिकम् । २अर्थः प्रयोजनं,३पठनं पाठक्रमः ४स्थानं स्वस्थानस्थितिः, यथा आश्विनकालहसामीप्यं सवनीयपशोः,। स्थानं स्वोत्पत्तिवाक्यमिति केचित् । ५मुख्यं प्रधानं कर्म । ६प्रवृत्तिः प्रवर्त्तनक्रमः । प्रावर्त्तिकेति तद्धितेन प्रवृत्तिगम्यत्वाभिधायकेन श्रुत्यादिपदानां श्रुतिगम्यत्वादिपरत्वं सूचितं तथा च श्रुत्यादीनि क्रमप्रापकाणीति । अत्र श्रुत्यादीनां क्रमप्रापकताबोधकसूत्राणि बहूनि उक्तानि तानि च ग्रन्थगौरवभयात् निखिलप्रमाणसूत्रार्थविवेचनेन व्यक्तीभविष्यत्त्वाच्च न लिखितानि । तत्र श्रुतितो यथा "द्वादशाहसत्रयागे "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारमिति"आनन्तर्य्यार्थक्त्वाप्रत्ययेन क्रमो बोध्यते । यथा वा "हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः अथ वक्षसः" इति अथशब्देन । अयं च क्रमोऽन्येभ्यो बलवान् शब्दलभ्यत्वात् । एवमेषां पूर्व्वत उत्तरोत्तरं दुर्ब्बलं बोध्यम् । नन्वथादिशब्दादुपस्थितस्यापि क्रमस्य धात्वर्थरूपक्रियात्वाऽभावेन कथं विधेयत्वं तदिदमुक्तं प्रापकप्रमाणाभावादिति चेदुच्यते यथा दध्ना जुहोतीत्यादौ अक्रियारूपं दधिद्रव्यं क्रियाविशेषणं सद्विधीयते दधिसाधनकं होमं कुर्य्यादिति तथा इदमनेन क्रमेण कर्त्तव्यमिति क्रियाविशेषणतया क्रमो विधीयते । तथा च सूत्रम् "श्रुतिलक्षणमानुपूर्व्व्यं तत्प्रधानत्वात्"आनुपूर्व्यं श्रुतिगम्यं विधिगम्यं तस्य क्रमस्य प्रधानत्वात् दध्यादिवत् क्रियाविशेषणत्वेन विधेयत्वात् । तच्च क्वचित् श्रुतशब्दादर्थादितः क्वचिच्चार्थादितोऽनुमानादिति विशेषः । इत्थञ्च श्रुतिगम्यं श्रुति

शब्दलभ्यमित्यर्थः सूत्रबोध्य इति भावः। श्रुतिगम्यं श्रुतिलभ्यमानुपूर्व्यं ग्राह्यमिति शेषः। "अथ अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादौ दीक्षैव विधीयते श्रुतितस्तद्विध्यवगमात् क्रमस्तु वाक्यार्थो न विधेय इति। तद्विध्यवगमाभावात् तदुक्तं "वाक्यार्थो विधिरन्याय्यः श्रुत्यर्थविधिसम्भवे। तस्माद्दीक्षाविधिः पाठाद्दीक्षाणां प्राप्यते क्रमः"। उच्यते। द्वादशाहसत्रे य एव यजमानास्तएव ऋत्विजः" इति ब्रह्मादीनां सर्वेषामृत्विजां यजमानत्वेन यजमानदीक्षां विधिप्राप्तामनूद्य अनेनाप्राप्तक्रमएव विधीयते। तदुक्तं "सर्वेषां यजमानत्वात् दीक्षाप्राप्तेरचोदनात्। क्रमस्तु नान्यतः प्राप्त इति सोऽत्र विधीयते"।

"अर्थाच्चेति" सूत्रम्। २अर्थात् यथाग्निहोत्रं जुहोति यवागूं पचतीत्यत्र यवागूपाकस्य होमः प्रयोजनं तच्च होमानन्तरपाके सति न सम्भवति होमोऽपिच यवागूं विना न निष्पद्यत इति पाकानन्तरं होमः। अतएव गृहपत्यादिदीक्षासु पाठप्राप्तक्रमस्यैवादृतत्वात् इहापि होमपाकयोः पाठप्राप्तक्रमोग्राह्य इति निरस्तं पाठक्रमग्रहणे विहितार्थानिष्पत्तेः। न च जुहोतीत्यस्य सामान्यप्राप्ताज्यादिद्रव्यकत्वमिति द्रव्यान्तरेण होमः, यवागूपाकस्य च ऋत्विग्भक्षादिरूपप्रयोजनान्तरं कल्पनीयम् अथवा यवागूमित्यस्य जुहोतीत्यनेनान्वयात् पचतीत्यस्य कर्मान्तरमध्याहार्य्यमिति वाच्यं तत्कल्पकाभावात् गौरवात् विलम्बोपस्थितेः। द्वितीये यवाग्वाहोमद्रव्यत्वाङ्गीकारेणार्थक्रमस्याभ्युपगमाच्च यवागूं जुहोतीत्यन्वये पाकं विना यवाग्वाअसम्भवेन पाकस्यावश्यकत्वाच्च। अत एवार्थक्रमः पाठक्रमाद्बलवान् जुहोतीत्यनेनाकाङ्क्षितद्रव्यान्तरसाध्यहविरादिना होमनिस्वयात् तत्र प्रवृत्तिः यवागूपाकस्य च प्रयोजनान्तरमवगम्य तदर्थं पाके प्रवृत्तिरिति तादृशावगमस्य कल्पनासापेक्षत्वेन विलम्बितत्वात् आश्वत्तिवशात् यवागूमित्यनेन जुहोतीत्यस्यान्वयात् यवागूपाकस्य होमप्रयोजनकत्वात्तस्य झटित्यवगमात्। अर्थात् युक्तेरिति कश्चित् तन्न। पठनस्थानादीनामपि युक्तिलभ्यत्वेन विभागानुपपत्तेः। अतएव प्रयोजनवशात् नियम इति शास्त्रदीपिका। माधवाचार्य्यस्तु "यवागूं पचति यवाग्वाग्निहोत्रं जुहोतीति श्रुतिमभिधाय तृतीयया यवाग्वाहोमसाधनत्वमवगम्यत इत्याह।

३पठनाद्यथा "समिधोयजति तनूनपातं यजतीत्यादिषु दर्शपौर्णमासाङ्गप्रयाजादिषु क्रमपठितानां क्रमेणानुष्ठानम्। नन्वत्र गृहपत्यादिदीक्षायामिव क्रमबोधकशब्दाभावात् यवागूपाकस्येव साध्याभावाच्च कथं क्रमनियम इति चेत् न, तथैव लोकप्रतिपत्तेः। तथा च सूत्रं "क्रमेण वानियम्येत क्लृप्तत्वे तद्गुणत्वात्"। तदुक्तं "यथापाठमनुष्ठानं तथैव प्रतिपत्तितः। स्मृतिप्रयोगवेलायां वाक्यैरेव च कर्म्मणाम्"। आसनं स्वागतमित्यादिषु क्रमपाठस्थेषु आसनादिषु गन्धपुष्पादिषु तथैवानुष्ठानं लौकिकाः प्रतिपद्यन्ते। अयं स्थानादिक्रमतोबलवान् तदपेक्षया शीघ्रोपस्थितेः।

४स्थानाद्यथा। साद्यस्क्रनामकः कश्चिद्यागविशेषः ज्योतिष्टोमविकृतिः। तत्र श्रूयते "सह पशूनालभते" इति तत्र च प्रकृतियागज्योतिष्टोमे अग्नीषोमीयपशुरावसथ्यपूर्व्वदिने आलभ्यते, सवनीयः पशुः सुत्यादिने प्रातःसवने आश्विनग्रहग्रहणादूर्द्धमालभ्यते तथा च श्रुतिः "आश्विनग्रहं गृहीत्वा त्रिवृता यूपं परिवीय सवनीयमाग्नेयं पशुमुपाकरोतीति" अनुबन्ध्यपशुरावसथ्यादूर्द्धमालभ्यते विकृतौ सायस्क्रे त्रयोऽपि पशवः सहालभ्यन्ते सहालभनमेकस्मिन् सवनीयस्थाने सुत्यादिने ध्यालभनं तत्र च प्रकृतौ ज्योतिष्टोमे अग्नीषोमीयस्य प्रथममुपाकरणं ततोविकृतावपि अग्नीषोमीयस्य प्रथममुपाकरणमिति प्राप्ते "स्थानाच्चोत्पत्तिसंयोगात्" उत्पत्तिसंयोगात्। उत्पत्तिवाक्यात् प्राप्तात् स्थानात् उपाकरणस्थाने प्रथमं सवनीयपशोरालभनीयत्वेन सवनीयपशोः स्थानप्रायस्यात्। तथाचोक्तं सह पशुना आ इतनपरिपाठ्या पशुना सह कार्य्यः" अयम्भावः सवनीयपशोः स्थानमपि ग्रहसमीपम् अन्ययोस्तु अन्यत्, तत्र प्रकृतौ "आश्विनग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयपशुमुपाकरोतीति" श्रूयते त्रिवृता कुशमेखलया त्रिरावृत्त्या परिवीय संवेष्ट्य इत्यर्थः। अत्र प्रकृतौ तथा श्रुतेस्तदतिदेशात् विकृतावपि सवनीयपशूपकरणात् पूर्व्वमाश्विनग्रहो ग्राह्यः। ततश्च गृहीते तस्मिन् समीपे स्वस्थानस्थितस्य सवनीयपशोरेव प्रथममुपस्थितिस्तस्यैव प्रथममुपाकरणं न तु प्रकृतौ प्रथममुपाकरणमग्नीषोमीयपशोः, तस्य प्रथममनुपस्थितेः इतरयोः सहोपाकरणानुरोधात् स्वस्थानात् सवनीयपशोः स्थानादितरयोरपि स्वस्थानभ्रष्टयोः सतोः

प्रथममुपस्थापकाभावात् प्रकृतिदृष्टक्रमेणालभनम्। तदुक्तम् "आश्विनग्रहणेनासौ पर्य्युपास्थाप्यते यतः। इतरस्त्वनितः स्थानान्नोपस्थाप्येत केनचित्॥ तयोस्तु प्रकृतौ दृष्टः क्रमोग्राह्योमनीषिभिः"। यत्तु स्थानक्रमो यथा एकोद्दिष्टे पार्व्वणधर्म्मातिदेशात् कुशासनदानाद्यनुष्ठानं तत्र पार्व्वणे यस्मिन् स्थाने यत् क्रियते तस्य एकोद्दिष्टेऽपि तथेत्युदीच्येनोक्तं तन्न शास्त्रदीपिकादिमीमांसानिबन्धाननादृत्य स्वकपोलरचितत्वात् स्थानपदार्थमुख्यार्थत्यागात् मुख्यार्थत्वे स्थानस्यैव लाभेन क्रमालाभात् "प्रकृतिवद्विकृतिरिति न्यायेनैव तल्लाभात् स्थानक्रमानुपयोगाच्चेत्यलमाग्रहेण। मुख्यक्रमादयं बलवान्।

५ मुख्याद्यथा। चित्रयागे सप्तहविषां मध्ये चतुर्थपञ्चमाविथमाम्नायेते "सारस्वतौ भवतः" इति एतद्वै दैवत्यं मिथुनमिति" वाक्यशेषात् स्त्रीपुंदैवत्यं यागद्वयं विहितं तत्र सरस्वती च सरस्वांश्चेति समासे "पुमान् स्त्रिया" इति सूत्रेणैकशेषात् देवतार्थेन प्रत्ययाल्लभ्यते तयोश्च यागयोर्निर्व्वापादयो धर्म्मा विधिप्राप्ताः तत्र स्त्रीयागस्य पुंयागस्य वा प्रथमं निर्वापः कार्य्य इति संशयः। अत्र श्रुत्यर्थपठनस्थानप्रवृत्तीनां अन्यतमस्यापि प्रक्रमाभावादनियमात् स्वेच्छया कर्त्तव्य इति प्राप्ते आह "मुख्यक्रमेण वाङ्गानां तदर्थत्वात्" सू०। मुख्यस्य प्रधानस्य क्रमेणाङ्गानां क्रमोग्राह्यः तदर्थत्वात् अङ्गानां प्रधानार्थत्वात् प्रधानोद्देश्यकप्रवृत्तिसाध्यत्वादिति यावत् हौत्रकाण्डे याज्यानुवाक्ये "प्रणोदेवी सरस्वतीति" पूर्व्वमाम्नातं "पीपिवांसः सरस्वतः" इति पश्चादाम्नातमिति याज्यानुवाक्यापाठक्रमात् स्त्रीदेवताकस्य होमस्य प्रथममनुष्ठानं पश्चाच्च पुंदेवताकस्यानुष्ठानं प्रतीयते अतस्तदङ्गनिर्वापादीनामपि तथैव पौर्वापर्य्यं युक्तमिति भावः। नन्वत्र येन क्रमेण याज्यानुवाक्ययोः प्रवृत्तिस्तेनैव निर्वापादीनामपीति प्रावर्त्तिकनियमसम्भवे किमिति मुख्यक्रमादपि नियमः सम्भवतीति चेदुच्यते दर्शपौर्णमासयोः साम्नाय्यस्य दधिदुग्धहविषोर्धर्म्माः शाखाप्रहरणादयः पूर्व्वं प्रवर्त्तन्ते तत्राग्नेयस्य धर्म्मा निर्वापादयः याज्यानुवाक्ययोस्तु पाठवशात् प्रथममाग्नेयहोमः पश्चात् साम्नाय्यस्येति विपरीता प्रवृत्तिः तत्र किं मुख्यक्रमात् प्रथममाग्नेयस्याभिघारणादिवयाणां मध्ये आग्नेयस्य प्रथमं प्रवृत्तिः? किंवा भूतभाविप्रवृत्तिद्वयवशादनियम इति प्राप्ते मुख्यक्रमाभिधानम्। तस्मात्तत्र मुख्यक्रमादाग्नेयस्य प्रथममभिघारणम् एवञ्च सति अङ्गप्रधानयोर्यावदनुष्ठानमेव व्यवधानं स्यादितरथा तु पश्चाद् भाविप्रधानस्य प्रथमं क्रियमाणमङ्गं प्रधानेनात्यन्तव्यवहितं स्यान्मुख्यक्रमेण नियमे। इयांश्च विशेषः मुख्यक्रमे प्रधानप्रवृत्तिरङ्गानां नियमकारणं, प्रवृत्तिक्रमे त्वङ्गानां मिथः प्रत्यासत्तिरिति।

६ प्रवृत्तेर्यथा वाजपेये "सप्तदश प्राजापत्यान् पशूनालभेतेति" श्रूयते तेषाञ्चोपाकरणनियोजनादयः संस्कारा विहिता उपाकरणं प्रोक्षणं नियोजनं यूपेबन्धनं तत्र चेदृशे पशावुपक्रमः ईदृशे च समाप्तिरिति नियमकारिणः शास्त्रस्याभावात् ऐच्छिकेन क्रमेणोपाकरणसंस्कारः उत उपकृतानाञ्च यूपे नियोजनसंस्कारः पश्चात् कर्त्तव्यः? इति तत्रापि नियमकारिणां श्रुत्यर्थपठनादीनामभावान्नास्ति क्रमनियमः ऐच्छिक एव क्रम इति प्राप्ते आह "प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात्" सू०। तुल्यकालानामेककालप्रवृत्तानां गुणानामङ्गानामुपाकरणादीनां प्रवृत्त्या उपाकरणप्रथमसंस्कारे स्वेच्छातः प्रवृत्तेः तत्क्रमेण तदुपक्रमात् प्रथमोपाकृतपशुक्रमात् प्रवृत्तिक्रमोग्राह्यः। अत्र ब्रूमः स्वेच्छातोयस्य पशोः प्रथममुपाकरणं क्रियते तस्यैव प्रथमनियोजनादि कार्य्यं, तदनन्तरं तदुत्तरोपाकृतस्य नियोजनमेवेत्यपरापरस्यापीत्यर्थः। प्रथमगुणारम्भत्यागे कारणाभावात्। अयमभिप्रायः प्रावर्त्तिकक्रमस्वीकारे प्रथमपशावुपाकरणनियोजनयोः प्रथमद्वितीयसंस्कारयोर्मध्ये पश्वन्तरेष्वनुष्ठितैरुपाकरणैः षोडशभिरेव व्यवधानं भवति तच्चाभ्यनुज्ञातं सप्तदशे विधानात् प्रावर्त्तिकं क्रमं परित्यज्य पश्वन्तराणां पूर्व्वं नियोजनं कृत्वा पश्चात् प्रथमपशोर्नियोजनं यदि क्रियते तदा द्वात्रिंशद्भिः पदार्थैर्व्यवधानं स्यात् तच्च नाभ्यनुज्ञातम् तदुक्तम्, "प्रवृत्त्या वा नियम्येत प्रत्यासत्तेरनुग्रहात्। अन्यथा व्यवधानं स्यादनुज्ञाताधिकैरपीति"।

कात्यायनश्रौतसूत्र १।५।१ सूत्रादौ तद्भाष्ये च क्रमविशेषास्तेषां बलाबलञ्चोक्तं यथा

"कर्म्मणामानुपूर्व्यं न युगपद्भावात्" १ सू०। आनुपूर्व्यं पौर्वापर्य्यं क्रम इत्यनर्थान्तरम् कर्म्मणामिति अग्न्यन्वाधानादीनामङ्गकर्म्मणामनुष्ठाने आनुपूर्व्यं न भवति क्रमनियमो न भवति। कुतः? युगपद्भावात् अतस्तान्यङ्गानि

यदा प्रधानेनापेक्ष्यन्ते तदा युगपद्भाविनैव यौगपद्येनैव सहैव सम्बन्धं प्राप्नुवन्ति न क्रमेण । ततस्तेषां नियमेन क्रमेणानुष्ठाने कारणाभावात् कर्तुरेकत्वादवश्यम्भाविनि क्रमे येन केनचिदनियतेन क्रमेणानुष्ठानम्''भा०

"अर्थनिर्वृत्तेश्च" २सू०। "येन केनचित्क्रमेणाङ्गानुष्ठाने क्रियमाणे अर्थनिर्वृत्तिरङ्गकलापनिष्पत्तिः सुखेनैव भवति नियतक्रमेण क्रियमाणे तु नियतक्रमस्यानायतस्य वस्तुतः प्रतीक्षणेन विलम्बाद्बहुना कालेन स्यात् तथा सति प्रयोगे प्राशुभावो न स्यात् प्रधानप्रत्यासत्त्या कालो ह्यङ्गानां विहितः अङ्गानां नियतक्रमेणानुष्ठाने च सोऽपि अतिक्रान्तः स्यादिति तस्मादङ्गानुष्ठाने क्रमनियमो नेति पूर्वः पक्षः । सिद्धान्तमाह''भा० "स्यादानुपूर्व्यं नियमः श्रुत्यर्थक्रमेभ्यः" ३सू० । वाशब्दः "पूर्वपक्षनिरासार्थः । अग्न्यन्वाधानादीनामङ्गकर्मणामानुपूर्व्यं नियमः स्यात् अनुष्ठाने क्रमनियमो भवेत् नानियमः । केभ्यः प्रमाणेभ्यः श्रुत्यर्थक्रमेभ्यः श्रुतेः अर्थात्क्रमाच्च । १श्रुतेस्तावत् यथा द्वादशाहे सत्रे "तेषां गृहपतिः प्रथमो दीक्षते"(शत० ब्रा०१२।१।१।१) "अथ ब्रह्माणं दीक्षयति अथोद्गातारम् अथ होतारमित्यादि" नात्र ब्रह्मादीनां दीक्षा विधीयते यजमानत्वादेव तस्याः प्राप्तेः क्रमस्य त्वन्यतः प्राप्त्यभावात् स एवात्र विधीयते । तथा "तस्मादेष दशमो यज्ञो गृह्यते तृतीय एव वषट्क्रियते" इति शत० ब्रा० (४।१।५।१६) अयमपि श्रुतिक्रम एव । २अर्थादपि क्रमोऽवगम्यते तद्यथा पेषणसंयवनयोरवघातपेषणयोश्च "अग्निहोत्रं जुहोति यवागूं पचतीति" क्रमेण श्रुतेऽपि अर्थात् पूर्वं पाकस्ततो होम इति होमद्रव्यं हि यवागूः तदुत्पत्त्यर्थः श्रुत्या लिङ्गेन च पाकः । स च पश्चात् क्रियमाणोऽनर्थकः स्यात् होमोऽप्यसति द्रव्ये न निर्वर्तेतातः पक्त्वा होमः कार्य्यः । ३क्रमः पाठक्रमः । स च द्विविधः श्रुतिपाठक्रमो मन्त्रपाठक्रमश्च,उभयविधोऽपि क्रमनियमे कारणं भवति,नियतेन हि क्रमेण पदार्थविधिपाठो मन्त्रपाठश्च वर्तेते । तत्रैवमवगम्यते येन क्रमेण पदार्थविधिपाठो मन्त्रपाठश्च तेनैव क्रमेणानुष्ठानमिति क्रमान्तरेणानुष्ठाने त्ववगतस्य क्रमस्य त्यागः अनवगतस्य क्रमस्योपादानमित्यसंगतं स्यात् तस्मात् पाठक्रमादपि क्रमनियमोऽङ्गकर्म्मणां भवतीति'' वर्क्कभाष्यम्

"प्राकृतं च विकृतौ" ४सू० । "अतोऽपि कारणात् पाठक्रमेणाङ्गकर्मणामनुष्ठानं भवति यतो विकृतौ प्राकृतमेव क्रमं श्रुतिरनुवदति यथा महापितृयज्ञे "स तत एव प्राक्पर्यागृह्णाति स्रुच्यजुर्हरति" इत्यादिना "स यज्ञोपवीती भूत्वाज्यानि गृह्णातीत्येवमन्तेन'' (शत०ब्रा०२।६।१।१२) अत्राज्यग्रहणे यज्ञोपवीतित्वविधिपरे वाक्ये प्राकृतं क्रमं दर्शयति यदि पाठक्रमेणानुष्ठानं न स्यात् तदानेनैव क्रमेणानुवादो न स्यात् । अपरे त्वन्यथा व्याचक्षते प्राकृतं च विकृतौ, विकृतौ प्राकृतवैकृतयोः कर्मणोः संनिपाते प्राकृतं पूर्वं कर्तव्यम् पश्चात् वैकृतमिति । तद्यथा "प्रकृतौ प्रास्तरणं चक्षुष्या" इत्यात्मानमालभेत" इति (कात्या० ३।३।२५) प्रस्तरतृणानुप्रहरणानन्तरमात्मालम्भ उक्तः विकृतौ च "प्रस्तृत्य तृणं तेन चरतीति" कात्या० (४।४।११) तृणानुप्रहरणानन्तरं वाजिनयाग उक्तः तत्र पूर्वं प्राकृतमात्मालम्भोदकस्पर्शरूपं कृत्वा पश्चाद्वाजिनयागः कर्तव्यः । तथा प्रकृतौ हविराशादनोत्तरकालं हविरालम्भात्मालम्भोदकालम्भाः विहिताः विकृतौ च "आसाद्य हवींष्यग्निं मन्थति" इत्यग्निमन्थनम्,(शत० ब्रा० ३।४।१। १९) हविरासादनोत्तरकालं विहितम् तत्र पूर्वं प्राकृता हविरालम्भात्मालम्भोदकालम्भाः, पश्चाद्वैकृतमग्निमन्थनम् । एवम् ''अथासाद्य सोमं उपस्पृश्य राजानं प्रपादयति'' (शत० ब्रा० ३।६।३।१७) इत्येतदप्युदाहार्यम्, अत्रापि पूर्वं प्राकृताः हविरालम्भात्मालम्भोदकालम्भाः पश्चाद्वैकृतं सोमप्रपादनादि । तथा पितृयज्ञे परिषेकात् प्राग्दिशाभक्षणाभ्यनपवित्रप्रतिपत्तिदक्षिणादानान्यत एव सिद्धानि । सुत्यायां च सवनीयपुरोडाशानां निर्वपणादूर्ध्वं भाविनः प्राग्वाङ्करणाद् ये पदार्थाः तेषां प्राक्प्रचरणीयहोमादनुष्ठानं सिद्धम् । अतएव यतो प्राकृतं पूर्वमित्यस्य बाधनाय यत्नं करोति "उत्तराघारमाघार्य पशुं पूर्वं समनक्तीति" (कात्या० ६।४।२सू०) अत्र पूर्वमित्यनेन प्राकृतमुपाञ्जनात् पूर्वं पशुसमञ्जनं विदधाति । तस्मात्सम्यक्चीनमेतद्व्याख्यानम् । अथ क्रमप्रमाणानां विरोधे बलाबलं निर्णीयते । यत्र पाठक्रमार्थक्रमयोर्विरोधो भवति तद्यथा । स वै ''पर्णशाखया वत्सानपाकरोति तामाच्छिनत्तीति'' (शत० ब्रा० १।७।१।१।२) पाठक्रमः अर्थस्वनेन क्रमेण न सिध्यति न ह्यच्छिन्नया दृश्यमानया शाखया वत्सापाकरणं कर्तुं शक्यते वत्साकापरणायैव च छेदनमिति तत्र किं पाठक्रमाध्यवसानम् ? उतार्थक्रमादिति ? संशये आह'' कर्कभाष्यम्

"विरोधेऽर्थस्तत्परत्वात्" ५सू० "पाठक्रमार्थक्रमयोर्विरोधे अर्थक्रमएव बलीयान् न पाठक्रमः। कुतः? तत्परत्वात् पाठस्यार्थपरत्वात् अर्थार्थत्वात् कार्यसिद्ध्यर्थत्वादित्यर्थः। तेन पूर्वं छेदनम् पश्चात्तया छिन्नया शाखया वत्सापाकरणमिति। अथ यत्र श्रुतेः श्रुतिपाठक्रमस्य च विरोधो भवति तद्यथा "संस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयादिति" (शत०ब्रा०१।७।३।२८) श्रुतिः कर्मणि समाप्ते प्रैषं विदधाति पाठक्रमात्तु स्विष्टकृतः पश्चात् प्राशित्रावदानाच्च पूर्वमिति तत्र केन क्रमेणानुष्ठानमिति? संशये सत्याह" भा० "श्रुतिः क्रमादानुमानिकत्वात्" ६सू० "क्रमादिति श्रुतिपाठक्रमाच्छ्रुतिर्बलीयसी तेन श्रुतिप्रतीतक्रमेणैव संस्थिते कर्मणि प्रैषोच्चारणम् न पाठक्रमेण। कुतः आनुमानिकत्वात् पाठक्रमएव अर्थाच्छ्रुतेः प्रत्यक्षत्वादिति ज्ञेयम्, प्रत्यक्षा हि श्रुतिः संस्थिते यज्ञे इति। पाठक्रमे त्वनुमानम्, अतोऽनेन क्रमेण पदार्था अनुष्ठेयाः यतोऽनेनैव क्रमेण पाठ इति। दुर्बलं च प्रत्यक्षादनुमानम्। अतः श्रुतिक्रमेणानुष्ठानमिति सिद्धम्। एवम् "तस्मादेष दशमो ऽहो स्तूयते तृतीय एव वषट्क्रियते" (श०ब्रा०४।१।५।१६) इत्येतदप्यत्रोदाहरणम् किं श्रुतिमन्त्रपाठात्तृतीयस्थाने स्तूयते? उत श्रुतिबलाद्दशमे? इति तत्र श्रुतिबलात्तु दशमे इति सिध्यति। अथ यत्र चोदनापाठक्रमस्य मन्त्रपाठक्रमस्य च परस्परं विरोधो भवति। यथाज्याधिश्रयणे "सोऽसावाज्यमधिश्रयतीषे त्वेति" धिश्रयणं विधाय तदनन्तरमेव "तत्पुनरुद्वासयत्यूर्जे त्वेति" (शत०ब्रा०१।२।२।६) चोदनापाठक्रमः। मन्त्रपाठे आज्याधिश्रयणमन्त्रानन्तरं "धर्नोऽसि विश्वायुरित्यादिम् (यजु० १।२२) पत्नीसंनहनमन्त्रान्तं मन्त्रगणं पठित्वा आज्योद्वासनमन्त्र "ऊर्जे त्वेति" पठितः। पूर्वाधिकरणे हि क्रमाच्छ्रुतेः प्रत्यक्षत्वाद्बलीयस्त्वमुक्तम् इहोभयोः प्रत्यक्षत्वात्किं चोदनापाठक्रमेणाज्योद्वासनं कर्तव्यमुत मन्त्रपाठक्रमेणेति संशये सत्याह" भा० "मन्त्रचोदनयोर्मन्त्रबलं प्रयोगित्वात्" ७सू०। "मन्त्रचोदनयोरिति मन्त्रपाठचोदनापाठयोर्विरोधे मन्त्रबलम् मन्त्रपाठएव बलवानित्यर्थः। कुतः? प्रयोगित्वात् मन्त्राणाम्, मन्त्रा हि कर्मकाले प्रयुज्यन्ते पठ्यन्ते न चोदनावाक्यानि अतो मन्त्रपाठः पदार्थानां संनिकृष्टः चोदनापाठस्तु विप्रकृष्टः। तथा हि समिधो यजति" (शत०ब्रा०१।५।३।६) इत्यनेन पदार्थो विहितः सोऽनुष्ठानवेलायां येन वाक्येन विहितस्तद्वाक्यं स्मारयति तेन वाक्येन स्मृतेनानुष्ठानवेलायां स्वपदार्थः स्मारितः सन्ननुष्ठीयते, इतीतरेतराश्रयं स्यात् अर्थेन वाक्यं स्मार्यते वाक्येन चार्थ इति नैष दोषः सामान्यविशेषभेदात् सामान्येन हि दार्शिकमङ्गं कर्तव्यमित्यवगम्यते विशेषस्मरणार्थं विधायकं वाक्यमालोचयति तेन चालोचितेन पश्चात्तदर्थविशेषः स्मारितोऽनुष्ठीयते अनुष्ठितश्चासौ झटित्येव द्वितीयं पदार्थं न स्मारयति अर्थानां अन्यानपेक्षेण रूपेण पौर्वापर्यस्यानवक्लृप्तत्वात् किं तर्ह्यनुष्ठानोत्तरकालं योऽसौ कृतस्तमालोचयति समिद्यागोऽयं कृत इति स चालोच्यमानो येन समिधो यजतीत्यनेन (शतपथ)१।५।३।६। ब्राह्मणवाक्येन विहितस्तत्स्मारयति तच्च स्मृतं स्वादुत्तरम् "तनूनपातं यजतीत्येतत् स्मारयति कुतः? पाठात् ततः परं हि तत्पठितमिति तद्ब्राह्मणं पुनः पदार्थं विदधाति विधिरेव तस्य कार्यम् न स्मृतिः अनुष्ठानवेलायां तदेव ब्राह्मणं विधिव्यापारं कृत्वा चिरनिवृत्तव्यापारं प्रयोगकालाद्बहिर्भूतं स्मारकमपेक्षितम्। अयं मन्त्रपाठाद्ब्राह्मणपाठे विप्रकर्षः। मन्त्रः पुनरन्तःक्रतु प्रयुज्यमानः परिसमाप्यमान उत्तरं मन्त्रं पर्युपस्थापयति। स चोत्तरो मन्त्रः पर्युपस्थाप्य उत्तरं पदार्थं पर्युपस्थापयन्नेव पर्युपतिष्ठते। तस्मात्तत्रालोचनान्तरापेक्षाभावान्नास्ति विप्रकर्षः। एतदुक्तं भवति स्मारकक्रमेण तावदनुष्ठानक्रमः न च मन्त्रे अनन्यार्थे सति ब्राह्मणस्य स्मारकत्वम् अप्रयुज्यमानतया सामर्थ्याभावात्। न हि निर्वपामीतिवन्निर्वपेदिति पदमुच्चारितमनुष्ठानौपयिकमनुष्ठेयप्रकाशनं करोति किं तु सम्बन्धिमात्रतया प्रयोगबहिर्भूतं सत् अनेन वाक्येनेदं विहितमत एतत्करोमीत्येवमालोचनेन स्मारकं भवति। मन्त्रस्तु प्रयुज्यमान एवाभिधानत एव स्मारक इति संनिकृष्टः। विप्रकृष्टाच्च संनिकृष्टं बलवदित्येवं प्राप्ते आह" भाष्यम् "न समत्वात्" ८सू०। "मन्त्रपाठ एव बलवान् यदुक्तं तन्न कुतः? समत्वात् मन्त्रपाठचोदनापाठयोः। कथमुभयोः समता उच्यते मन्त्रः कर्मणि करिष्यमाणस्य कर्मणः स्मरणार्थं प्रयुज्यन्ते, चोदना तु कर्मणो विधायिका अत एव चोदनायाः प्रवृत्तिः पूर्वम् यतः पदार्थे विहिते सति पश्चात्तत्स्मरणार्थं मन्त्रः प्रयुज्यते अतः सममेवैतदिति प्राप्ते सिद्धान्तमाह" भा० "गुणानां तु भूयस्त्वात्" ९सू०। "तुशब्दः पूर्वपक्षनिरासार्थः। नैतदुभयं समम् किन्तु मन्त्रपाठ एव बलवान्। कुतः?

मन्त्रेषु गुणानां भूयस्त्वात् गुणानां बाहुल्यात् यतः चोदनापाठापेक्षया मन्त्रेषु बहवो गुणाविद्यन्ते । तद्यथा कर्मकाले उच्चारणे पदार्थस्मारके यतो मन्त्रा अर्थवादादिकृतव्यवधानरहिताः क्रमेण पठ्यन्ते तेनोत्तरमुत्तरं पदार्थं झटिति स्मारयितुं शक्नुवन्ति नैवं चोदनापाठः विधेयार्थस्तावकवाक्यसंदर्भव्यवहितत्वेन मन्त्रवत्स्मारयितुमशक्तत्वात् । न च कर्मकाले तस्योच्चारणं विहितं मन्त्रवत् । श्रुतिरपि मन्त्राणां गुणभूयस्त्वमाह "तस्मादेतदृषिणाभ्यनूक्तमित्यादिना(शत०ब्रा०१।७।४।४।)यो हि स्वप्रतिपादितस्यार्थस्य प्रामाण्यार्थमन्यस्योक्तिं प्रदर्शयति स आत्मापेक्षया उत्कृष्टस्यैव दर्शयति न निकृष्टस्य तेन गुणभूयस्त्वं मन्त्रेषु अतो मन्त्रपाठ एव बलवानिति सिद्धम् । पदार्थानां क्रमनियमे श्रुत्यादीनि त्रीणि प्रमाणान्युक्तानि तेषां विरोधे बलाबलं चोक्तम् अथेदं चिन्त्यते । यत्र बहूनि प्रधानानि सह क्रियन्ते यथा दर्शपूर्णमासयोराग्नेयोपांशुयाजाग्नीषोमीयैन्द्राग्नादीनि यथा चातुर्मास्यपर्वसु वाजपेयेऽतिरात्रपशुवशापृश्निसप्तदशप्राजापत्येषु च तत्रारादुपकारकाण्यङ्गानि सर्वेषां तन्त्रेण क्रियन्ते इति । वक्ष्यति कर्मणां युगपद्भावस्तन्त्रमित्यत्र(कात्या०१।७।१।)तेन न तेषु कश्चिन्ता संनिपत्योपकारकाणि तु द्रव्यसंस्काररूपाणि प्रतिप्रधानभेदेन कर्त्तव्यानि तत्र चिन्त्यते तानि किमेकैकस्य सर्वाणि कृत्वापरस्य कर्त्तव्यानि ? किं वा समान एकैकः पदार्थः सर्वेषां कर्त्तव्यः? इति । तत्रैकैकं प्रधानमव्यवहितानि स्वाङ्गान्यपेक्षते तत्राङ्गानां प्रधानकालत्वस्य न्याय्यत्वादेकैकस्मिन् गुणकाण्डमपवृज्यात् इतरथा हि पदार्थानुसमये सति स्वप्रधानाद्विप्रकृष्येरन् यद्येकस्यासादनं कृत्वापरस्य तदैव क्रियते तदा पूर्वस्यासादनयोर्व्यवायः स्यात् सहवचनं त्वारादुपकारकसाहित्यमात्रेणाप्युपपद्यते तस्मात्काण्डानुसमयएवेति प्राप्ते आह" भा० "तुल्यसमवाये सामान्यपूर्वमानुपूर्व्ययोगात्" १०सू०। "तुल्यसमवाये तुल्यानां प्रधानानां सह प्रयोगे द्रव्यसंस्काररूपाणि संनिपत्योपकारकाण्यङ्गानि सामान्यपूर्वं कर्त्तव्यानि पूर्वः पूर्वः पदार्थः सर्वेषां समानः सदृशः कर्त्तव्यः । तद्यथा बहुषु हविःषु प्रथमं सर्वेषां विभक्तीकरणम् ततः सर्वेषां पात्रीस्थापनम् ततः सर्वेषां तत्र व्यभिचारः ततः सर्वेषां पात्रीषूपस्तारः ततः सर्वेषामुद्वासनम् ततः सर्वेषां वेद्यामासादनम् ततः सर्वेषामालम्भः इत्येवं पदार्थानुसमयः कर्त्तव्यः । यद्येकैकस्मिन् गुणकाण्डमपवृज्यते तथा सति क्रमेण प्रयोगात् प्रयोगवाक्यावगतस्य साहित्यस्य बाधः स्यात् न हि वचनेनाविशेषतः साहित्यमवगम्यमानं कात्स्निकेन प्रधानासत्तिमात्रेणारादुपकारकविषयमात्रं कल्पयितुं शक्यते । तस्मात्पदार्थानुसमयः । कुतः ? आनुपूर्व्ययोगात् पदार्थानां तन्मन्त्राणां च एवं क्रियमाणे पदार्था आनुपूर्व्येण अनुक्रमेण युज्यन्ते तन्मन्त्राश्च अन्यथोत्तरपदार्थकरणानन्तरं पूर्वेषु क्रियमाणेषु आनुपूर्व्ययोगो न स्यात् । "पौर्णमास्यां पौर्णमास्या यजेत" इत्यनेन वाक्येन पौर्णमासीशब्दबोध्यानां तत्सम्बद्धानां त्रयाणां यागानां साङ्गानामेककालप्रयोगोऽवगम्यते अतो यस्मिन्नेव क्षणे एकस्याधिश्रयणं कर्तव्यमापतति तस्मिन्नेवापरस्याधिश्रयणं कर्तव्यं सदशक्यतया केवलं न क्रियते द्वितीये तु क्षणे न कश्चिद्धेतुर्येन पुरोडाशान्तरं नाधिश्रियेत अतः प्रथमं पदार्थं सर्वेषां कृत्वा ततोद्वितीयादिः पदार्थः सर्वेषां कर्त्तव्यः । एवं बहुषु प्रधानेषु सर्वत्र पदार्थानुसमय एव न्याय्योन काण्डानुसमयो इति स्थितम् । यत्र तु प्रधानविरोधो भवति पदार्थानुसमये क्रियमाणे । तत्र काण्डानुसमय एवेति वाचनिकेन साहित्येन पदार्थानुसमयः प्राप्तोऽपि प्रधानविरोधात्त्यक्तव्य. । पुरोडाशाङ्गं ह्यधिश्रयणादयः तदङ्गं च क्रमः पदार्थानुसमयरूपः तदाश्रयणे च हुतप्रकपालसंयोगात् पुरोडाशशोषप्रसङ्गः । न चाङ्गानुरोधेन प्रधानबाधोयुक्तः । तेनातिबहुषु हविःष्वेकैकस्य पुरोडाशस्याधिश्रयणं प्रथनमद्भिरभिमर्शनं चेत्यन्तं काण्डानुसमयः कार्यः । यत्र तु नास्ति प्रधानबाधः द्वित्रिचतुरादिहविःषु तत्र भवतु पदार्थानुसमयः । दाहसम्भवशङ्कायां तु उद्वासनमपि व्युत्क्रमेण कार्यम् यदुक्तम् पूर्व्वस्य पदार्थे कृते तस्मिन्नेव द्वितीयस्य क्रियमाणे पूर्व्वस्य व्यवधानमिति तत् सहत्वविधिबलात् परिह्रियते । एवं च सति वाजपेये आग्नेयैन्द्राग्नसारस्वतीवशापृश्निसप्तदशप्राजापत्येषु द्वाविंशतिसंख्येषु पशुष्वेकविंशत्या पदार्थैः समानासमानजातीयैर्व्यवधानमिष्यते न न्यूनाधिकैः । अन्ये त्वसमानजातीयैरेव । अनेनैव मुख्यक्रमप्रवृत्तिकक्रमावुक्तौ भवतः । तथाहि यत्र बहूनि प्रधानानि भवन्ति तत्र यो मुख्यानां प्रधानानां क्रमस्तेनैव क्रमेण तदङ्गानां क्रमोभवति यथा पौर्णमास्यां प्रथममाग्नेययागः ततोऽग्नीषोमीययागः कृत आग्नेयस्य प्रथमं ग्रहणम् ततोऽग्नीषोमीयस्य, एवं

प्रोक्षणादावपि । अयं मुख्यक्रमः अनेन क्रमेण यदङ्गा न्यनुष्ठीयन्ते तदाङ्गानां नियता प्रधानप्रत्यासत्तिरनुग्रहीता भवति एवं ह्यङ्गप्रधानयोर्यावदनुष्ठान-मेव व्यवधानं भवति इतरथा तु पश्चाद्भाविनः प्रधानस्य प्रथमाङ्गं क्रियमाणं प्रधानेनात्यन्तं व्यवहितं स्यात् ।

अथ प्रवृत्तिक्रम उच्यते यत्र बहूनि हवींषि भवन्ति समानदैवतानि यथा वाजपेये पशवः तत्र चोपाकरणादयः संनिपातिनः प्रतिपश्वावर्तनीयाः । तेषां चावृत्तिर्नैकस्य पशोः कार्त्स्न्येन कृत्वा परस्यापि तथैव क्रियन्त इत्येवम् । किं तर्हि ? सर्व्वेषामुपाकरणं यतः कुतश्चित् पशोरारभ्य कृत्वा ततः सर्व्वेषां नियोजनमित्युक्तम् । तत्र प्रथमे पदार्थे उपाकरणे अनियम एव यतः कुतश्चित् पशोरारभ्य कर्त्तव्यः । द्वितीयस्तु पदार्थो नियोजनरूपः किं प्रथमो यत आरब्धः तत एवारम्भणीयः? उत तत्राप्यनियम एवेति ? तत्र क्रमनियमकारणानां श्रुत्यर्थपाठानामभावदनियमे प्राप्ते उच्यते प्रवृत्त्यैव नियमः । प्रथमः पदार्थो येन क्रमेण कृतः सएव क्रम उत्तरेष्वपि नियोजनादिषु नियम्यते । कुतः ? पदार्थैः सह प्रधानं कर्त्तव्यमिति वचनात् सर्व्वे पदार्थाः प्रधानकालान्न विप्रकृष्टव्याः कथं? पदार्थैः सह प्रधानस्य वचनम् यावता "दर्शपूर्णमासाभ्यां यजेत प्राजापत्यैश्चरन्तः" इत्यादिषु प्रधानमात्रं श्रूयते उच्यते, समीहितं भावयेद्यागेनेत्यमिति हि यजेतेत्यस्यार्थः । तत्र यस्यामेव वेलायां स्वर्गो भावने कर्तृत्वं प्रतिपद्यते तस्मिन् क्षणे करणेतिकर्त्तव्यते अपि व्याप्रियेते । अयमर्थः नात्र प्रधानं कर्तव्यं श्रूयते किंतु प्रधानेन स्वर्गः कार्य इति करणविभक्तिनिर्देशाद्यागेनेष्टं कार्यमस्मिन्काले कुर्यादिति तेन स्वकार्यं सेतिकर्तव्यताकेन कर्तुं शक्यते नान्यथा । तस्माच्चितयस्य फलकरणेतिकर्तव्यत्वस्य युगपद्यजेतेत्यनेन कर्तव्यतयोच्यते । ततोऽन्यथा करणेतिकर्तव्यताकत्वमेव न स्यात् न हि पश्चाद्भावि करणं भवति । तथा भविष्यति भाव्ये भूते च करणे अस्मात्रैव दोषः न हि विनष्टं करणं भवतीति । तथा करणेतिकर्तव्यतयोरपि मिथो विप्रकर्षे अयमेव दोषः । न हि विनष्टमनागतं वानुग्राहकं भवति । तेन शङ्क्यस्तु स्यामेककालतैषां त्रयाणाम् । ततः प्रधाने सेतिकर्तव्यताके एकस्मिन् क्षणे सह कर्तव्ये प्राप्ते सति एकः कर्ता बहूनि प्रधानानि इतिकर्तव्यतां वा असमर्थः कर्तुं, यौगपद्येनेत्यवश्यम्भावी कियानपि विप्रकर्षः । ईदृशेनापि विप्रकर्षेण सहैव पदार्थाः कृता भवन्ति । प्रयोगवचनो हि यावतः पदार्थाननुष्ठापयति तावद्भिरवर्जनीयतया यावान् कालो व्याप्यते तावानेकः कालः तावति च काले सर्वेषां कालो विधीयते न त्वेकस्मिन् क्षणे अशक्यार्थविधिप्रसङ्गात् । तेन प्रत्यासत्तिरेतेषां साहित्यम् नैकक्षणवर्तित्वम् । यद्येवम् प्रयोगवचनेनैव क्रमस्य सिद्धत्वात् श्रुत्यादिभिः किं क्रियते ? अनियतक्रमेणानुष्ठानं प्राप्नोतीति क्रमनियमे तेषां व्यापारः । यस्मात् प्रयोगविधिर्नैकक्षणवर्त्तित्वं विधत्ते प्रत्यासत्तिमात्रम् । तस्मात् प्रधानं चिकीर्षितमनागतं कृतं वा तेषां प्रधानार्थानामनुष्ठापकम् ! करिष्यमाणेन कृतेन वा प्रधानेन प्रत्यासत्तिमात्रमङ्गानां तत्साहित्यम् नैकक्षणवर्तित्वम् । तत्राग्न्यन्वाधानादीनां करिष्यमाणं प्रधानं निमित्तम् स्विष्टकृदादीनां तु कृतम् । तेनैवमवश्यम्भाविनि विप्रकर्षे केचित्पदार्थाः क्षणव्यवहिताः प्रधानेनापेक्ष्यन्ते केचिद्द्वाभ्यां क्षणाभ्यां व्यवहिताः केचिद्बहुभिरिति । एवं वाजपेयपशुष्वपि अग्न्यन्वाधानादि प्रागुपाकरणात् साधारण्यं सर्वपशूनां सह अनुभूतम् । उपाकरणादयोऽपि संनिपत्योपकारकास्तन्त्रेणाविभवादावर्तयितव्या अपि साहित्येनैव पशुभिरनुभवितव्याः। यदैकस्योपाकरणम् तदैवेतरेषामपि कुतः ? सहचोदितत्वात्पशूनां साङ्गानाम् । तत्रैवं सहानुभवितव्ये सति यस्य पशोः प्रथममुपाकरणं क्रियते तस्य प्राकृतेन पाठेन यद्यपि द्वितीयः पदार्थो नियोजनरूपः स्थाप्यते तथापि सहवचनादेव एकविंशतिक्षणव्यवहितं द्वितीयं पदार्थमाकाङ्क्षति । द्वितीयस्तु पशुर्विंशत्योपाकरणक्षणैर्व्यवहितमेकेन प्रथमस्य पशोर्नियोजनक्षणेन च व्यवहितं स्वीयं द्वितीयं पदार्थमाकाङ्क्षति । एवं तृतीयादयोऽपि पशवः सजातीयविजातीयव्यवहितानात्मीयान् पदार्थानपेक्षन्ते । अन्त्यस्तु विजातीयैः पूर्वोपाकृतानामेकविंशतेः पशूनां नियोजनक्षणैर्व्यवहितमेव द्वितीयं पदार्थमपेक्षते । तदेवं संनिपत्योपकारकानालोच्य ईदृशी एकविंशतिक्षणव्यवधानापेक्षा प्रधानानां भवति । ततश्च यावद्भिर्नोव्यवहितः शक्यः पदार्थः कर्तुं तावद्भिर्व्यवधानमगत्यावश्यं कर्त्तव्यम् अतोऽभ्यधिकैस्तु न व्यवधातव्यम् । यद्येकं पदार्थमेकस्य कृत्वा द्वितीयोऽपि पदार्थस्तस्यैव क्रियते ततः सहवचनं नोपपद्येत । एवं सर्वत्र तृतीयादिष्वपि पदार्थेषु योज्यम् । प्रथमपदार्थक्रम एव द्वितीयादिष्वपि समाश्रयितव्यः इतरथा केषां चन व-

ङ्गान्यधिकैरपि क्षणैर्व्यवहितानि स्युः। न च तद्युक्तम्। न चैवं केषांचिदल्पैर्व्यवधानं गुणो भविष्यतीति वाच्यम् यथाधिकैर्व्यवधानेऽश्रुतकरणम् एवं न्यूनैरपि व्यवधाने अश्रुतकरणमेव। तस्मादेकविंशतेः पशूनां साहित्यसम्पत्तये प्रयोगविधिनायं क्रमः पदार्थानां मिथ एकविंशतिक्षणव्यवधानाक्रमोऽपेक्षितः। स न्यूनेरधिकैश्च व्यवधाने बाध्येत। अतः सर्वेषां तुल्यप्रत्यासत्तिसिद्धो प्रथमपदार्थक्रम एव द्वितीयादिष्वाश्रयणीय इति सिद्धम्। अत्राङ्गानां मिथः प्रत्यासत्तिर्नियमकारणम्, मुख्यक्रमे तु अङ्गानां प्रधानप्रत्यासत्तिरिति विशेषः। मुख्यक्रमप्रवृत्तिक्रमयोर्विरोधे च मुख्यक्रमो बलीयान्। तद्यथा दर्शपूर्णमासयोः सांनाय्यधर्माः शाखाच्छेदनादयः पूर्वं प्रवर्त्तन्ते पश्चादाग्नेयधर्माः,प्रदानं त्वाग्नेयस्य प्रथमम् पश्चात्सांनाय्यस्य ततः स्विष्टकृदवदानं प्रयाजशेषाभिघारणं प्राशित्रावदानं वेद्यामासादनादिकं च किं प्रवृत्तिक्रमात् सांनाय्यस्य पूर्वं भवति ? उत मुख्यक्रमादाग्नेयस्येति ? संदेहादनियमे प्राप्ते मुख्यक्रमो बलीयानित्युच्यते। अस्मिन् हि आश्रीयमाणे अल्पीयांसः प्रथमपदार्थाः प्रधानाद्विप्रकृष्यन्ते अन्ये सर्वे संनिकृष्टा भवन्ति प्रवृत्तिक्रमे तु बहूनां विप्रकर्षः। पूर्वं तु इह प्रवृत्तिभ्यां बलीयसा पाठक्रमेण मुख्यक्रमो बाध्यते प्राशित्रावदानादिषु पाठक्रमाभावात् प्रवृत्तिक्रमो मुख्यक्रमेण बाध्यते। अथ स्थानप्रमाणमुच्यते। साद्यस्क्रे "सह पशूनालभेत" इति(श्रौ०२२.२, २८,)श्रूयते साहित्यं च सवनीयस्य स्थाने। तत्र किमुपाकरणादौ अनियमः ? उताग्नीषोमीयस्य प्रथममुपाकरणम् ? अथवा सवनीयस्येति? । तत्र नियमकारणाभावादनियमे प्राप्ते प्रकृतिवदाग्नीषोमीयस्य प्राथम्ये प्राप्ते उच्यते सवनीयस्यैव प्रथममुपाकरणम्। अग्नीषोमप्रणयनानन्तरमग्नीषोमीयस्योपस्थानम्। स तेनोपस्थितोऽपि सहालम्भवचनेन तत्स्थानाच्चलितत्वादननुष्ठितो ऽत्र तु न तस्य किंचिदुपस्थापकमस्ति। सवनीयस्तु स्वस्थानादप्रचलितः सद्याश्विनग्रहणादुपस्थितत्वात्तदनन्तरमुपाक्रियते। ततः साहित्यवचनादितरोपाकरणम्। अतः सवनीयस्यैव प्राथम्यम्। इतरयोस्तु कथं क्रमः ? अनियम एव, तयोरुपस्थाने विशेषाभावात्। अथवा प्रकृतिदृष्टं पौर्वापर्यमस्ति बाधेऽनुग्रहीतव्यमित्यग्नीषोमीयस्यानुबन्ध्योपाकरणमिति। तदेवं श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिसंज्ञानि षट् प्रमाणानि क्रमनियमकारीण्युक्तानि तेषां परस्परविरोधे च पूर्वं-पूर्वं बलवत् उत्तरमुत्तरं च दुर्बलमिति। तदुक्तम् "श्रुत्यर्थपठनस्थानमुख्यासत्तिप्रवृत्तिभिः। एकाख्यातगृहीतानां नियमः कर्मणां क्रमः। विरोधे पारदौर्बल्यमेतेषामपि पूर्ववदिति" भा० (पूर्व्ववत् श्रुतिलिङ्गादिवत्)

क्रमस्य विनियोगसाधनता जै० सू० भाष्ययोर्दर्शिता यथा "क्रमश्च देशसामान्यात्" ३।३।१२ सू०

"अथ किमेतावन्त्येव विनियोगकारणानि ?। न,—इत्युच्यते। किं च क्रमश्च देशसामान्यात्, क्रमवतामानुपूर्व्येणोपदिश्यमानानां यस्य पर्याये यं धर्ममामनन्ति तस्य तं प्रति आकाङ्क्षा अनुमीयते, सत्यामाकाङ्क्षायामेकवाक्यभावः, तस्मात् ततो विनियोगः—इति। किमिहोदाहरणम् ? किं च प्रयोजनम् ?। आनुपूर्व्यवतां यागानामनुमन्त्रणेष्वाम्नातेषु उपांशुयाजस्य क्रमे "दब्धिर्नामासीति" समाम्नातः, तस्य आकाङ्क्षामुत्पाद्य तेन एकवाक्यतां यात्वा तत एव विनियोगमर्हति—इति, तथा च ऐन्द्राग्नं कर्म विघातसजातस्य अस्ति भ्रातृव्यवतः, तस्य याज्यानुवाक्यायुगलमप्याम्नायते ऐन्द्राग्नम्, "इन्द्राग्नी रोचनादिवः प्रयर्षिभ्यः"—इत्येकम्, अपरं "इन्द्राग्नी नवतिं पुरः श्नथद्वृतम्"—इति। तत्र लिङ्गाद्विनियोगे सिद्धे विशेषविनियोगो भवति, पूर्वं युगलं पूर्व्वस्य ऐन्द्राग्नस्य, उत्तरमुत्तरस्य—इति, एतत् उदाहरणम् प्रयोजनञ्च" भा०

क्रमप्रकरणयोरेकत्र समवाये प्रकरणं बलीयः। क्रमसमाख्ययोस्तु क्रमो बलीयान् "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" सू०। "श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया या० कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या" पार्थसारथिमिश्रैर्विनियोगसाधकानां श्रुत्यादीनां लक्षणोक्त्या स्थानशब्दस्य क्रमवाचकतावगतेः। विवृतमेतत् तत्त्वबोधिन्यां यथा

"योगबलं प्रसिद्धावयवशक्ति—समाख्या योगार्थेन प्रवृत्तं पदम्। यथा हौत्रमाध्वर्यवमौद्गात्रमिति। दर्शपौर्णमासादिषु याज्यायाजकपाठादयोधर्माः ऋग्वेदोक्ताहौत्रसंज्ञकाः, दोहननिर्वापादयो यजुर्वेदोक्ता, आध्वर्यवसंज्ञकाः, स्तोत्रपाठादयः सामवेदोक्ता औद्गात्रसंज्ञकाः पदार्था उक्ताः। तस्मात्ते धर्मा इति नियामकाभावात् स्वेच्छया सर्व्वेषां सर्व्वकरणप्रसक्तौ होतृ-

रिदं हौत्रमिति प्रकृतिप्रत्ययरूपावयवशक्तिलभ्यार्थयोगवलरूपसमाख्यया हौत्रादिकर्त्तव्यत्वं प्रतीयते। एवं "हौत्रं जुहोति औद्गात्रं जुहोतीत्यादौ" हौत्रादेर्होमकर्तृत्वं प्रतीयते। होता ऋग्वेदी अध्वर्युर्यजुर्वेदी उद्गाता सामवेदी "अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमादिति" कोषात्। न च समुदाये शक्तिः प्रमाणाभावात् अतएवोक्तं भट्टपादैः "पाकन्तु पचिरेवाह कर्त्तारं प्रत्ययोऽप्यकः। पाकशिष्टः पुनः कर्त्ता वाच्यो नान्यस्य कस्यचित्"। पाकशिष्टः पाकविशिष्टः"।

शवरभाष्ये उदा० यथा "अथ प्रकरणस्य क्रमस्य च विरोधे किमुदाहरणम्?। राजसूयप्रकरणेऽभिषेचनीयक्रमे शौनःशेफाख्यानादि आम्नातं, यदि प्रकरणं बलवत् सर्वेषां, तदङ्गम्, यदि क्रमः, अभिषेचनीयस्यैव। किं तावत्प्राप्तम्?—तुल्यबले एते कारणे—इति। कुतः?। न तावत् विशेषमुपलभामहे, नावगच्छाम इदं बलीयः—इति। तस्मात् तुल्यबले एते कारणे—इति। अपि च प्रकरणं वाक्येन बाधितं, तस्मात् बाध्येत क्रमेणापि—इति"।

"एवं प्राप्ते ब्रूमः,—प्रकरणं क्रमात् बलीयः। कुतः?। अर्थविप्रकर्षात्। कोऽत्रार्थविप्रकर्षः?। प्रकरणवतः साकाङ्क्षत्वात् सन्निधानाम्नातेन परिपूर्णेनाप्यवकल्प्येत एकवाक्यत्वम्, न तु क्रमवतः, क्रमेण आम्नातेन, अनेकस्याम्नायमानस्य सन्निधिविशेषाम्नानमात्रं हि क्रमः तत्र सन्निधिविशेषाम्नानसामर्थ्यात् क्रमवतः सन्निधानाम्नातस्यानुपलभ्यमानमेव आकाङ्क्षावत्त्वमस्ति—इत्यवगन्तव्यम्। प्रकरणे तु प्रकरणवतः प्रत्यक्षम्, न च प्रकरणवता क्रमवता च यौगपद्येन एकवाक्यता सम्भवत्याम्नातस्य—इति विरोधः। तत्र प्रकरणे प्रत्यक्षं साकाङ्क्षत्वं, क्रमआनुमानिको बाधितुमर्हति। साकाङ्क्षत्वात् एकवाक्यत्वम्, एकवाक्यत्वादभिधानसामर्थ्यं, सामर्थ्यात् श्रुत्यर्थः—इति सन्निकृष्टः प्रकरणस्य श्रुत्यर्थो, विप्रकृष्टः क्रमस्य। तस्मात् क्रमप्रकरणयोः प्रकरणं बलवत्तरम्—इति"।

"अथ यदुक्तं,—वाक्येनापि हि तत् बाधितम्, अतोऽन्येनापि तत् बाधितव्यम्—इति, नैतत्, बाधितस्यानुग्रहो न्याय्यो, न बाधितं बाधितव्यम्—इति"।

"अथ क्रमसमाख्ययोर्विरोधे किमुदाहरणं? किं बलवत्तरम्?—इति। पौरोडाशिकम्—इति समाख्याते काण्डे सान्नाय्यक्रमे "शुन्धध्वं दैव्याय कर्मणे"—इति शुन्धनार्थो मन्त्रः समाम्नातः। तत्र सन्दिह्यते,—किं समाख्यानस्य बलीयस्त्वात् पुरोडाशपात्राणां शुन्धने विनियोक्तव्यः,(मन्त्रः) उत क्रमस्य बलीयस्त्वात् सान्नाय्यपात्राणाम्?—इति। किं तावत्प्राप्तम्?—तुल्यबले एते कारणे स्याताम्। कुतः? अविशेषात्, यदि वा समाख्यैव बलीयसी, बाधितो हि क्रमः प्रकरणेनापि इति"।

"एवं प्राप्ते ब्रूमः,—क्रमो बलीयान्। कुतः?। अर्थविप्रकर्षात्। कः पुनरत्रार्थविप्रकर्षः?। निर्ज्ञाते प्रकरणेन केनापि सहैकवाक्यत्वे यत् सन्निधावाम्नायते, तत्र आकाङ्क्षा परिकल्प्यते, नैकवाक्यतेत्यवगम्यते, लौकिकस्य शब्दः समाख्या, न च, लोक एवंविधेषु अर्थेषु प्रमाणम्। तस्मात् क्रमो बलीयान्"

विवृतमेतत् तत्त्वबोधिन्यां यथा

"स्थानप्रकरणयोर्यथा। पश्विष्टिसोमयागा बहवः परस्परनिरपेक्षेणापि प्रत्येकं फलवन्तः समप्राधान्याः। ते च मिलिता राजसूयः। तन्मध्येऽभिषेचनीयाख्यः कश्चित् सोमयागविशेषः तत्सन्निधौ अक्षदेवनादिकं श्रूयते। यथा "अक्षैर्दीव्यति राजन्यं जिनाति शौनःशेफमाख्यापयतीति" जिनाति जयति। शौनःशेफं वह्वृच ब्राह्मणे आम्नातं शुनःशेफमुनिविषयमुपाख्यानमिति माधवाचार्य्यः। एतेन शुनःशेफमुनेश्चरित्रं पुराणप्रसिद्धमित्युदीच्यव्याख्यानं निरस्तं, वैदिके कर्म्मणि वैदिकोपाख्यानस्यैवोचितत्वाच्च "शौनःशेफं श्रावयतीति" पाठकल्पनमपि कल्पनमेव माधवाचार्य्यादिभिर्वेदस्यैराख्यापयतीत्यस्य लिखितत्वात्। तत्र च सान्निध्यरूपस्थानबलात् अक्षदेवनादेरभिषेचनीयाङ्गत्वं लभ्यते प्रकरणात्तु सर्व्वयागात्मकराजसूयस्य इति कर्त्तव्यताकाङ्क्षया अक्षदेवनादयो विहिता इति। प्रकरणबलात् राजसूयाङ्गत्वमक्षदेवनादेः राजसूयस्य बहुयागात्मक इति तत्र सर्व्वयागाङ्गत्वं, सर्व्वाङ्गत्वञ्च राजसूयघटकीभूतसर्व्वयागजन्यफलशिरस्कापूर्व्वोपकारद्वारा सर्व्वोपकारकत्वम्। अत्र चाकाङ्क्षायाः क्लृप्तत्वाद्वाक्यलिङ्गश्रुतिरूपत्रितयकल्पनं व्यवधानम् अभिषेचनीयस्याक्षदेवनादेराकाङ्क्षा नास्ति तस्य ज्योतिष्टोमविकृतित्वेन प्रकृतिवद्विकृतिन्यायात् अतिदिष्टैः प्रकृतीभूतज्योतिष्टोमाङ्गैरेवेतिकर्त्तव्यताकाङ्क्षानिवृत्तेरिति सन्निधिपाठबलात् आकाङ्क्षामुत्थाप्य तद्द्वारा वाक्यलिङ्गश्रुतीनां कल्पनीयतया चतुर्भिर्व्यवहितमङ्गत्वज्ञानमिति प्रकरणादिलक्षेन ज्ञापकं स्थानं दुर्व्वलमिति। तस्मात्

प्रकरणात् सर्व्वयागात्मकराजसूयाङ्गमक्षदेवनादिकमिति। ननु सर्व्वाङ्गमभिषेचनीयाङ्गमेव वा उभयथापि राजसूये तेषां कर्त्तव्यत्वाद्विचारोऽयमनुपयुक्त इति। न च प्रत्येकराजसूये प्रत्येकयागकाले तेषामनुष्ठानार्थं विचार इति वाच्यं तथा सति प्रत्येकाङ्गत्वेन प्रत्येकजन्यकलिकापूर्व्वोपकारकतया फलशिरस्कापूर्व्वानुपकारकत्वात् राजसूयाङ्गत्वानुपपत्तेः। न च कलिकापूर्व्वद्वारैव फलशिरस्कापूर्व्वोपकारकत्वमिति वाच्यं तत्तदङ्गापूर्वाणां प्रत्येकं षट्त्वस्य तेषाञ्च षट्कलिकापूर्व्वं प्रतिकारणत्वस्य कल्पनायां महागौरवात्। तस्माद्राजसूयाङ्गत्वेनाक्षदेवनादीनां सकृदेनुष्ठानं तत्तदङ्गापूर्व्वद्वारा फलशिरस्कापूर्व्वोपकारकत्वं लाघवादितिचेत् सत्यं अक्षदेवनादीनामभिषेचनीयाङ्गत्वे यत्र प्रधानतया स्वतन्त्रेणाभिषेचनीयानुष्ठानं तत्राप्यक्षदेवनादिकरणापत्तेर्वारणार्थं विचारारम्भात्। अतएवाकाङ्क्षायाः कल्पत्वं स्थानप्राप्तौ दोष इति सङ्गच्छते अन्यथा राजसूयाङ्गत्वेनाभिषेचनीयेऽपि तस्याः क्लृप्तत्वात्। एवञ्चाभिषेचनीयसन्निधौ पाठस्तत्काले कर्त्तव्यताज्ञापनार्थमिति ध्येयम्। स्थानसमाख्ययोर्यथा। ब्रह्ममन्त्रानुक्रा“एतत् पौरोडाशिकं काण्डम्”इत्युक्तं पुरोडाशमन्त्रकाण्डे च“शुन्धध्वं दैव्याय कर्म्मणे देवयाज्यायै” इति मन्त्रः पठितः तत्र च शुन्धध्वमिति मन्त्रलिङ्गात् पात्रशोधने मन्त्रस्य विनियोग प्रतीयते स च पुरोडाशस्येदं पौरोडाशिकमिति प्रकृतिप्रत्ययार्थरूपसमाख्याबलात् पुरोडाशकाण्डोक्तानामुलूखलयज्ञादीनामपि क्रतुस्थ पुरोडाशपात्रशोधने प्रतीयते अथ च साम्नाय्यहोमसन्निधाने मन्त्रः श्रूयते यथा “साम्नाय्यान् पहान् गृह्णाति”शुन्धध्वं दैव्याय कर्म्मणे देवयाज्यायै साम्नाय्येन जुहोति” इत्यादिदध्योदनरूपसन्निधानपाठात् स्थानबलात् साम्नाय्यपात्रशोधनाङ्गत्वम्। तथाहि पौरोडाशिकमित्यत्र प्रकृत्या पुरोडाश उच्यते तद्धितेन च मन्त्रादिकलापरूपं काण्डमुच्यते तद्धितवाच्यकाण्डपदार्थमन्त्रादेः पुरोडाशसम्बन्धित्वं तु न कस्यापि पदस्यार्थः, किन्तु समभिव्याहारलभ्यम्। तदुक्तम् “नैतदेवं समाख्या हि न सम्बन्धाभिधायिनी। पाकं हि पचिरेवाह कर्त्तारं प्रत्ययोऽप्यकः। पाकयुक्तः पुनः कर्त्ता वाच्योनैकस्य कस्यचित्”। तथा च पौरोडाशिकपदस्य तन्मन्त्रसान्निध्यं विना तद्धितवाच्यकाण्डपदार्थे मन्त्रे पुरोडाशसम्बन्धित्वं न लभ्यते समाख्यान्यथानुपपत्त्या पौरोडाशिकपदस्य मन्त्रसान्निध्यं कल्पनीयमन्यथा समाख्याया अकिञ्चित्करत्वम्। सांनाय्यहोमस्यापि पुरोडाशकाण्डपातितया तत्सम्बन्धेऽपि समाख्यासम्भवान्नेति साम्नाय्येन मन्त्रस्य सान्निध्यं कल्प्यमिति प्रकरणादिकल्पनाचतुष्टयमात्रव्यवहितमिति सिद्धं समाख्यातः स्थानं बलवदिति। तदुक्तम्। “एकद्वित्रिचतुःपञ्चवस्त्वन्तरप्रकाशनम्। लिङ्गादीनाञ्च वैषम्यं श्रुत्यपेक्षं विधीयते। बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा। मध्यमानान्तु बाध्यत्वं बाधकत्वन्त्वपेक्षया”। स्थानसमाख्ययोर्विरोधे पार्थसारथिमिश्रमाधवाचार्य्यदेवनाथप्रभृतिभिरेवं व्याख्यातम्”।

पौर्व्वापर्य्यरूपक्रमोद्विविधः कालिकोदैशिकश्च तत्र वैदिककर्म्मानुष्ठाने श्रुत्यादिभिः यः क्रमोनियमितः स सर्व्वोऽपि कालिकः। दैशिकस्तु “क्रमान्मेषादयः, स्मृताः” एव इत्यादौ राशिचक्रपूर्व्वापरदेशस्थितत्वात्तेषां दैशिकक्रमवत्त्वम्। “वृत्तानुपूर्व्वं च नचातिदीर्घे” कुमा॰ इत्यत्रापि दैशिकक्रमः। क्वचित् उपदेशक्रमेण पदार्थानां क्रमवत्त्वम् यथा “वर्णक्रमात्कृतं द्वित्रिचतुःपञ्चकन्यथा” या॰ स्मृ॰। अत्र ब्राह्मणादीनां वर्णानां चतुर्णां क्रमेणोपदेशात् तत्क्रमेण ब्राह्मणादीनाम् क्रमिकत्वम्। एवं “तासां वर्णक्रमेणैव ज्यैष्ठ्यं पूजा च वेश्म च” मनुवाक्ये “अध्वर्य्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात्”इत्यमरवाक्ये च उपदेशक्रमात् क्रमवत्त्वम्। गर्भाधानादीनां संस्काराणामुपदेशक्रमेणैव क्रमिकत्वम् क्वचित् पदार्थगतोत्पत्त्यादिक्रमेणापि पदार्थक्रमोऽभिधीयते इत्याद्यूह्यम्। सं एवम् लक्षक्रमव्यङ्ग्य असंलक्ष्यक्रमव्यङ्ग्य इत्यादावपि तथात्वम्।

अत्र क्रमणे “सागरः प्लवगेन्द्रेण क्रमेणैकेन लङ्घितः” भा॰ व॰ ११८७श्लो॰। “व्यदर्शि तैरङ्गनभःकृतक्रमैः” नैष॰। पादे “पदानि त्रीणि दैत्येन्द्र! सम्मितानि पदा मम” इत्युपक्रमे “त्रिभिः क्रमैरसन्तुष्टोद्वीपेनापि न पूर्य्यते” भाग॰ ८।१९।१९। बलिं प्रतिवामनोक्तिः। “अपि क्रमैरिमाल्लोकान् विश्वकायः क्रमिष्यति” तत्रैव २६श्लो॰ बलिं प्रति शुक्रोक्तिः। सामर्थ्ये “क्रमं बबन्ध क्रमितुं सकोपः” भट्टिः क्रमं सामर्थ्यं बबन्ध चकार क्रमितुं क्रमं यत्सामर्थ्यं तच्चकारेत्यर्थः” जयम॰। सामर्थ्यहेतुव्यापारविशेष एव क्रमशब्दार्थ इति तु न्याय्यम्। अतएव “न क्रमः सञ्जीकृत आसीत्”त्वया स-

अतिक्रमेण स्थातव्यम्" "तद्ग्रहणार्थं मया क्रमः सज्जीकृतः" "सिंहोऽपि क्रमं कृत्वा निःसृतः" इति च पञ्चत० तत्परतैव । परिपाट्याम् "प्रचक्रमे वक्तुमनुज्झितक्रमः" रघुः "नैतक्रमेणोपरुरोध सूर्यम्" रघुः । न तक्रमेणांशुपरिपाट्या" मल्लि० आनुपूर्व्ये "क्रमाद्मुतमश्वतरोरुर्वीपमाः" "रघुः क्रमाद्यौवनभिन्नशैशवः" रघुः । आनुपूर्वी च वस्तुभेदात् भिन्ना तत्र शब्दस्यानुपूर्वी अव्यवहितोत्तरोच्चार्य्यमाणत्वम् इतरस्य तु अव्यवहितोत्तरकालवर्त्तित्वम् यथा प्रथमं शैशवं ततो यौवनं ततो जरेति वयोविशेषाणां, विद्यानान्तु वेदपूर्व्वकत्वमितरविद्यानां तथात्वात् । एवं पदार्थगतानुपूर्व्यविशेषः यथायथमूह्यः । सच अयुगपद्भावः । "अर्थक्रियाकारित्वं च क्रमाक्रमाभ्यां व्याप्तं न च क्रमाक्रमाभ्यामन्यः प्रकारः समस्ति" सर्व्व० स० बौ० द० । "क्रमत्तानं क्रमाभिधानव्याप्तम्" दायभागः । अनुष्ठाने । "इत्थमस्य विततक्रमे क्रतौ" माघः "विततक्रमे विततानुष्ठाने" मल्लि० । १०विन्यासे "उत्क्रान्तवर्णक्रमधूसराणाम्" रघुः । "उत्क्रान्तवर्णक्रमाः शीर्णवर्णविन्यासाः" मल्लि० । ११पद्धे च न० "क्रमः शक्तौ परीपाट्यां क्रमं चरणपद्धयोरितिविश्वोक्तेः पादे क्लीवतापि ।

**क्रमक** त्रि० क्रमं वेदपाठभेदमधीते वेद वा क्रमा० वुन् । १वेदपाठविशेषक्रमपक्रमाध्यायिनि २तद्वेत्तरि च ।

**क्रमजित्** पु० नृपभेदे "अनूपराजोदुर्द्दर्षः क्रमजिच्च सुदर्शनः" भा० स० ४अ० ।

**क्रमज्या** स्त्री ग्रहाणां स्पष्टाधिकारे सि० शि० उक्ते चतुर्विंशत्यर्द्धजीवाभेदे तन्मानं तत्रोक्तं यथा

"तत्त्वाश्विनो नन्दसमुद्रवेदाश्चन्द्रर्तुरुद्राः गगनाङ्कनागाः पञ्चाभ्ररुद्रास्तिथिविश्वतुल्या आदौ निरुक्ता नखबाणचन्द्राः । नन्दावनीशैलभुवो दिगङ्कचन्द्रा हुताशग्रहपूर्णदस्राः । तुरङ्गपट्काकृतयः कुरामसिद्धाः शराष्टप्रथमाः क्रमेण । गजाश्विभान्यष्टशराष्टदस्रास्तुरङ्गसप्तग्रहलोचनानि । अम्भोधिकुम्भाभ्रगुणास्तुरङ्गशैलेन्दुरामा रसभूतदलाः । कुदन्तलोका द्वितरङ्गदेवा गोऽभ्राब्धिलोकाः कुगुणाब्धिरामाः । भुजङ्गलोकाब्धिगुणाः क्रमज्या" सि० "इह हि स्फुटीकरणप्रभृते सर्वकर्माधिज्याभिः प्रतिपाद्यते । यतो ग्रहवलये कोऽप्यवधिभूतः प्रदेशोमध्यमान्नोच्यते । तस्मान्मध्यसूत्रात् तिर्य्यक्स्थोग्रहो वलयेऽर्धज्याप्रे भवति । अतोऽर्धज्याभिः सर्वं कर्म । तत्र भगणकलाङ्कितस्य चतुर्थांशे इष्टशान्येव चतुर्विंशतिज्यार्धानि भवन्ति" प्रमिता० । २४क्रमज्याङ्काश्च यथा
२२५ । ४४६ । ६७१ । ८६० । ११०५ ।१३१५ ।१५२० । १७१६ । १६१० । २०८३ । २२६७ । २४३१ । २५८५ । २७२८ । २८५६ । २६७७ । ३०८४ । ३१७७ । ३२५६ । ३३२१ । ३३७२ । ३४०६ । ३४३१ । ३४३८ ।

तासां तथामानं मर्मर्थितं सू० सि० रङ्गनाथाभ्यां यथा "राशिलिप्ताष्टमो भागः प्रथमं ज्यार्धमुच्यते । तत्तद्विभक्तलब्धोनमिश्रितं तद् द्वितीयकम् । आद्येनैवं क्रमात् पिण्डान् भक्त्वा लब्धोनसंयुताः । खण्डकाः स्युश्चतुर्विंशज्ज्यार्धपिण्डाः क्रमादमी" सू० सि० ।

"एकराशिकलानामष्टादशशतानामष्टमोंऽशस्तत्त्वाश्विमितः २२५ प्रथममाद्यं ज्यार्धं सम्पूर्णजीवार्धपिण्डकः कथ्यते तद्भिज्ञैः । ततः प्रथमज्यार्धात् तेन प्रथमज्यार्धेन भक्तालब्धेन हीनमन्यस्याप्रसङ्गात् प्रथमज्यार्धमनेन युक्तं तत् प्रथमज्यार्धं द्वितीयकं ज्यार्धं भवति द्विगुणप्रथममेकोनम् । तृतीयादीनामानयनार्थमुक्तप्रकारमतिदिशति आद्येनेति । प्रथमज्याद्ध पिण्डेन । एवमुक्तरीत्या क्रमात् सिद्धपिण्डान् भक्त्वा लब्धैरूनमाद्यं खण्डमनेन युताः खण्डका असिद्धाव्यवहितसिद्धज्यार्धपिण्डा असिद्धपिण्डा भवन्ति । यथा प्रथमखण्डं २२५ प्रथमभक्तं फलं १ तेन हीनं खण्डं २२४ तेन युक्तं द्वितीयखण्डं ४४६ । तच्च प्रथमभक्तं फलम् २ अर्धाधिकावयवस्यैकाधिकत्वेन ग्रहणस्य साम्प्रदायिकत्वात् । फलैक्येन ३हीनं प्रथमम् २२२ अनेन द्वितीयखण्डो ४४६ युतस्तृतीयम् ६७१ । एवमिदं प्रथमखण्डभक्तं फलम् ३अनेन पूर्वफलैक्येन ३युतं जातं सर्व्वफलैक्यम् ६ अनेन प्रथमं खण्डं हीनम् २१६ अनेन तृतीय ६७१युतं चतुर्थम् ८६०। एवमिदं प्रथमखण्डभक्तं फलं ४ पूर्व्वलब्धैक्येन पूरीनं प्रथमखण्डरूपं २१६ ज्यान्तररूपखण्डकमनेन ४ हीनं २१५ चतुर्थ८६० युतं पञ्चमं ११०५ एवमग्रेऽपि । अयोत्तरोत्पन्नखण्डानां सम्भवात् खण्डनियममात्र कृतिरिति । एवं चतुर्विंशत्खण्डका ज्यार्धपिण्डाः कार्या न तदधिकाः । "एकविंशाच्च विंशाच्च षष्ठात् पञ्चदशादपि । सप्तमादष्टमाद्गात् नप्रदशाद्यार्धोत्तरं मतम्" इति अन्यसिद्धान्तोक्तस्थलेऽर्धाधिकावयवस्यैकाधिकत्वेन न ग्रहणम् इतिध्येयम् । गणितस्याविस्तृतत्वात् सिद्धाः पिण्डाः कथं नोक्ताः? इत्यत आह क्रमादिति । अमी सिद्धाः पिण्डाः क्रमात्

समनन्तरमेवोच्यन्ते । अत्रोपपत्तिः । समायां भूमौ वृत्तं भगणकलाङ्कितं तिर्य्यगूर्द्ध्वाधरव्याससमितरेखाभ्यां चतुर्भागं कार्य्यं तत्रोर्द्ध्वरेखासक्तपरिधिप्रदेशादुभयत्र समविभागं विगणय्य तदग्रयोर्बद्धं सूत्रं वृत्ते द्विगुणविभागमितसम्पूर्णचापस्य सम्पूर्णज्या । अत्र गणिते ऊर्द्ध्वरेखातोऽर्द्धज्याया एव प्रयोजनात् तदर्द्धचापस्यज्यार्धमर्धज्या । एवं वृत्तचतुर्थांशे ऊर्द्ध्वरेखातोऽभीष्टांशानां चापाकाराणामर्धज्या अभीष्टा गण्याः । तत्र भगवता स्वेच्छया वृत्तचतुर्थांशे त्रिराशिमिते चतुर्विंशज्ज्याः कल्पितास्तज्ज्ञानं तु वृत्ते चक्रकलानामङ्कितत्वात् तत्परिधिव्यासार्धं त्रिराशिज्यान्तिमा ३४३८ । यदा भनन्दाग्निमितपरिधौ ३९२७खबाणसूर्य १२५०मितो व्यासस्तदा चक्रकलापरिधौ क इत्यनुपातेन व्यासानयनम् । यथा चक्रकला: २१६०० खबाणसूर्य १२५०गुणाः २७०००००० भनन्दाग्नि ३९२७ भक्ता व्यासः ६८७६ एतदर्धमन्तिमा ज्या ३४३८ । अथ वृत्ते चापज्ययोर्विवेके तयोरतुल्यत्वमपि भगवता कोऽपि वृत्तभागः समोऽस्त्यन्यथामलकादौ सम्पाद्यवस्थानं न स्यादिति मत्वा तद्भागस्य ज्या तत्तुल्यैवेत्युक्तम् । “वृत्तस्य षण्णवत्यंशो दण्डवद्दृश्यते तु सः” इति शाकल्योक्तेः प्रथमज्या चक्रकलाद्वादशांशरूपैकराशिकलानामष्टमोऽशस्तत्त्वाश्विमितः २२५ एतन्मितमेव प्रथमचापकृत एतदन्तरेखाभीष्टा ज्याचतुर्विंशत् । अथ चतुर्विंशति जीवानां यथोत्तरमुपचयात् तदन्तररूपखण्डानां यथोत्तरमपचयस्य वृत्ते ज्याङ्कनेन प्रत्यक्षत्वाज्ज्यान्तररूपखण्डानामन्तरं यथोत्तरमुपचितमिति द्वाविंशतित्रयोविंशतिचतुर्विंशतिज्यानामन्तरयोरन्तरमिदं परमं खण्डान्तरं सूक्ष्मज्योत्पत्तिप्रकारेणावगतं १५।१६ ।४८ । अथ यदि त्रिज्ययेदं खण्डकान्तरं तदा प्रथमज्यया किमित्यनुपातेन फलप्रमाणयोः फलेनापवर्त्त्य प्रमाणस्थाने तत्त्वाश्विनोऽनेन भक्तः प्रथमज्या फलं पूर्व्वद्वितीयखण्डयोरन्तरम् । अनेन पूर्व्वखण्डं हीनं द्वितीयं खण्डं भवति । तत्र पूर्व्वखण्डं प्रथमज्यातुल्यमेव । द्वितीयखण्डं प्रथमज्यायां युतं द्वितीयज्या । एवमस्मात्तत्त्वाश्विभागलब्धं द्वितीयतृतीयखण्डकयोरन्तरमनेन द्वितीयखण्डमूनं तृतीयखण्डमित्थनेन द्वितीयज्या युता तृतीयज्या । एवं चतुर्थाद्याः । तत्र पूर्वमधोऽधोऽधिकग्रहणेनोत्तरत्राधिकान्तरपातसम्भावनया क्वचित् क्वचिदर्धाद्यधिकावयवस्यैकाधिकत्वेन ग्रहणम् इत्युपपन्नं श्लोकद्वयम्” रङ्ग० । उत्क्रमज्याङ्कास्तु उत्क्रमशब्दे वक्ष्यन्ते

**क्रमण** पु० क्रामत्यनेन करणे ल्युट् । १चरणे हेम० । २यदुवंश्ये नृपभेदे “क्रमिश्च क्रमणश्चैव धृष्णुः शूरः पुरञ्जयः” हरिवं० ३८अ० । भावे ल्युट् । ३पादन्यासे न० । “पृष्ठे त्वधर्म्मः क्रमणेषु यस्य” भाग० ८,१०,२१, “पदैस्त्रिभिः क्रमणेऽपि तस्य नः” नैष० ।

**क्रमजटा** स्त्री ऋग्वेदशब्दे १४११पृ० दर्शिते वेदपाठप्रकार- [भेदे ।

**क्रमदण्डक** पु० ऋग्वेदशब्दे १४११पृ० दर्शिते वेदपाठप्रकारभेदे

**क्रमदीश्वर** पु० संक्षिप्तसारव्याकरणकारके विद्वद्भेदे “संक्षिप्तसारमाचष्टे पण्डितः क्रमदीश्वरः” संक्षिप्तसारव्या० ।

**क्रमपद** पु० ऋग्वेदशब्दे १४११पृ० दर्शिते “क्रमपारः क्रमपदः क्रमजटा क्रमदण्डकश्चेति चतुष्पारायणमित्युक्ते वेदपाठप्रकारभेदे ।

**क्रमपार** पु० ऋग्वेदशब्दे १४११पृ० दर्शिते वेदपाठप्रकारभेदे

**क्रमपूरक** पु० क्रमेण पूरयति बीजम् पूरि-ण्वुल् । वकवृक्षे राजनि० तस्य पुष्पवृन्ते क्रमेण बीजपूरकत्वात्तथात्वम् ।

**क्रमशस्** अव्य० कारकार्थवृत्तेः क्रमात्+वीप्सायां शस् । क्रमं क्रमम्, क्रमेण क्रमेणेत्यादिकेऽर्थे “कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोवराः” मनुः ।

**क्रमसंग्रह** पु० श्रीकृष्णतर्कालङ्कारकृते दायाधिकारिक्रमज्ञापके ग्रन्थभेदे ।

**क्रमसन्दर्भ** पु० अनुष्ठानज्ञानज्ञापके ग्रन्थभेदे ।

**क्रमागत** त्रि० क्रमेणागतः । १कुलादिपरम्परया आगते “तस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः” मनुः “अस्वतन्त्राः स्त्रियः सर्वाः पुत्रदासपरिग्रहाः । अस्वतन्त्रस्तत्र गृही यस्य तस्य क्रमागतमिति” व्यव०त० नारदः । २पित्रादिक्रमेण प्राप्ते च “आगमोऽप्यधिको भोगाद्विना पूर्व्वक्रमागतात्” स्मृतिः । क्रमायातादयोऽप्यत्र

**क्रमादि** पु० वेत्त्यधीते वेत्यर्थे वुन् प्रत्ययप्रकृतिभूते पा० उक्ते शब्दगणभेदे स च गणः “क्रम पद शिक्षा मीमांसा”

**क्रमि** पु० क्रम-इन् । कृमिपदार्थे । द्विरूपको० “आमाटोपापचीश्लेष्मशूलक्रमिविकारिणाम्” सुश्रु०

**क्रमिक** त्रि० क्रमादागतः ठन् । कुलक्रमागते । “आप्तैरलुब्धैः क्रमिकैस्ते च (कर्म्मान्ताः) काश्चिदधिष्ठिताः” भा० स०५अ० । क्रमोविद्यतेऽस्य ठन् । २क्रमवर्त्तिनि । “क्रमिकं यन्नामयुगमेकार्थेऽन्यार्थबोधकम्” शब्दश० प्र०

**क्रमिकण्टक** न० क्रमौ कण्टकमिव तन्नाशकत्वात् । ?चित्रके १चित्राङ्गे (चिता) २उदुम्बरे च मेदि०

**क्रमिघ्न** न० कृमिं हन्ति हन-ट १विडङ्गे रत्नमा० । २कृमिनाशकमात्रे त्रि० स्त्रियां ङीप् ।

**क्रमिज** न० कृमिभ्योजायते जन-ड १अगुरुचन्दने अमरः २लाक्षायां स्त्री रत्नमाला०

**क्रमिशत्रु** पु० कृमेः शत्रुरिव। विड़ङ्गे रत्नमाला

**क्रमु** पु० क्रम उन् । गुवाके हिरूपकोषः

**क्रमुक** पु० क्रम—उन् संज्ञायां कन् । १पट्टिकालोध्रे २गुवाकवृक्षे ३ब्रह्मदारुवृक्षे च अमरः ४भद्रमुस्तके ५कार्पासिकाफले न० मेदि० अयं सालसारादिगणे सुश्रुते उक्तः "सालसाराजकर्णखदिरकदरकालस्कन्दक्रमुकेत्याद्युक्रमे "सालसारादिरित्येष: गुल्मकुष्ठविनाशनः । मेहपाण्डामयहरः कफमेदोविशोषणः" सुश्रु० तद्गुणा उक्ता "आस्वादिताद्रक्रमुकाः समुद्रात्" माघः गौरा० ङीष् । १गुवाके स्त्री शब्दरत्नमाला

**क्रमेतर** त्रि० ५त० । क्रमात् वेदपाठप्रकारभेदात् भिन्ने । ततः उक्थ्या० तद्वेत्त्यधीते वा ठक् । क्रामेतरक तद्वेत्तरि तदध्येतरि च त्रि०

**क्रमेल** पुंस्त्री० क्रामति क्रम—विच् एलति अच् कर्म०। उष्ट्रे स्वार्थे क । तत्रार्थे । उभयत्र जातित्वात् ङीष् ।

**क्रय** पु० क्री—भावे अच् । पणपूरणादिमूल्यदानेन विक्रेतुः स्वत्वापनयनेन स्वत्वापादनव्यापारे (केना)। प्रतिरूपद्रव्यदानेन तथाचरणे तु न क्रयव्यवहारः इत्यतः द्रव्यपदमनूक्त्वा पणपूरणेत्युक्तम् । क्रयस्य स्वत्वहेतुत्वञ्च पूर्व्वस्वामिस्वत्वनाशादेव भवति सति तत्स्वत्वे सजातीयस्वत्वं प्रति सजातीयस्वत्वस्य प्रतिबन्धकत्वेन क्रेतुः स्वतोत्पत्त्यभावात् अतोमूल्यदानेन तत्स्वत्वापाकरणम् । तस्य च स्वत्वहेतुत्वम् "सप्त वित्तागमा धर्म्याः दायोलाभः क्रयोजयः । विभागः संप्रयोगश्च सत्प्रतिग्रहएव च" स्मृतेः "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" गोतमवचनाच्च । क्रयादिरूपागमसहितभोगस्यैव स्वत्वे प्रामाण्यं वीरमि० व्यवस्थापितं यथा

"सप्त स्थावरागमोपायान् प्रदर्श्य तत्र भुक्तेः प्रामाण्यमाह वृहस्पतिः । विद्यया क्रयबन्धेन शौर्य्यभार्य्यान्वयागतम् । सपिण्डस्याप्रजस्यांशं स्थावरं सप्तधा मतम्। पित्र्यलब्धक्रयाधाने रिक्थशौर्य्यप्रवेदनात् । प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात्" ।

विद्यया प्रतिग्रहादिकमर्योजिकया, स्वत्वोपायःक्रयःप्रसिद्धः । बन्धो बन्धकं सोपाधिकस्वत्वहेतुर्नदानधर्म्यात्यन्तिकस्वत्वहेतुस्तदयुत्तरत्र विवेचनीयम् । क्रयबन्धेनेति समाहारद्वन्द्व एकत्वम् । शौर्य्यागतं युद्धार्जितम् । भार्य्यागतं विवाहकाले प्राप्तम् । अन्वयागतं पित्रादिक्रमोपात्तम् । अप्रजस्य सपिण्डस्यांशं रिक्थहरान्तराभावे पिण्डदानाद्यधिकारितया प्राप्तम् । पित्र्येत्यादिना प्रागुक्तानेव सप्तस्थावरागमोपायाननूद्य तत्र भोगस्य प्रामाण्यं विधीयते । तत्र प्रवेदनं विवाहः । स एव "क्रमागतः शासनिकः क्रयाधानागमान्वितः । एवं विधस्तु यो भोगः स तु सिद्धिमवाप्नुयात् । संविभागक्रयप्राप्तं पितृलब्धञ्च राजतः । स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया । प्राप्तमात्रं येन भुक्तं स्वीक्रियापरिपन्थिनम् । तस्य तत्सिद्धिमाप्नोति हानिस्त्वोपेक्षया तथा । अध्यासनात् समारभ्य भुक्तिर्यस्याविघातिनी । त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत्" ।

मूल्यं दास्यामीति नियमं कृत्वाऽपि ग्रहणादपि क्रयसिद्धिः यथाह विवादचि० कात्या० "पण्यं गृहीत्वा योमूल्यमदत्त्वैव दिशं व्रजेत् । ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात्" अत्र विषये लेख्यपत्रकरणमाह वृहस्पतिः "गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् । पत्रं कार्यते यत्तु क्रयलेख्यं तदुच्यते" । तस्यानुशयकालश्च अनुशयशब्दे दर्शितः" । वैदिककर्म्माङ्गपरिक्रयादौ प्रायेण यजमानस्यैवाधिकारः यथाह क्रयाधिकरणे जै०सू०भा०

"स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात्"३।८।१ सू० ।

"अस्ति परिक्रयः ज्योतिष्टोमे "द्वादशशतं दर्शपूर्णमासयोः अन्वाहार्यम्" । तत्र सन्देहः किम् अध्वर्युणा परिक्रेतव्या ऋत्विजः, उत स्वामिना ?-इति । किं प्राप्तम्? समाख्यानात् अध्वर्युणा,-इति प्राप्ते ब्रूमः,-'स्वामिकर्म परिक्रयः' कस्मात् ? कर्मणः तदर्थत्वात्,फलकामो हि यजमानः यस्य फलकामः, तेन स्वयं कर्त्तव्यम्, स यदि परिक्रीणीते, ततः स्वयं सर्वं करोति इति गम्यते, अथ न परिक्रीणीते, न सर्व्वं कुर्यात् । तस्मात् स्वामी परिक्रीणीते इति" शवरभाष्यम्

"वचनादितरेषां स्यात्" २सू०

"किम् एष एवोत्सर्गः ? न-इत्युच्यते,-'वचनात् इतरेषां स्यात्' । यत्र वचनं भवति, तत्र वचनमामाण्यात् भवति परिक्रयः,-'य एतामिष्टकाम् उपदध्यात् स त्रीन् वरान् दद्यात्'-इति" भा० ।

सोमादिक्रयस्य द्रव्यसाध्यतया स्त्रीणां पित्रा विक्रीतत्वात्

स्वामिना च क्रीतत्वात् द्रव्यस्वामित्वाभावे यज्ञाधिकारित्वं नास्तीत्याशङ्कायां सहपत्न्याऽधिकार इत्येतत् जै० ६। १।१० सूत्रादौ भाष्ये च व्यवस्थापितं यथा

"द्रव्यवत्त्वात् पुंसां स्यात्, द्रव्यसंयुक्तं, क्रयविक्रयाभ्याम् अद्रव्यत्वं स्त्रीणां द्रव्यैः समानयोगित्वात्" १०सू०(पू०)

"पुंसां तु स्यात् अधिकारः, द्रव्यवत्त्वात्, द्रव्यवन्तो हि पुमांसो न स्त्रियः, द्रव्यसंयुक्तं च एतत् कर्म 'व्रीहिभिर्यजेत, यवैर्यजेत'-इत्येवमादि। कथम्? अद्रव्यत्वं स्त्रीणां' 'क्रयविक्रयाभ्यां क्रयविक्रयसंयुक्ता हि स्त्रियः,पिता विक्रीयन्ते,भर्त्रा च क्रीयन्ते,विक्रीतत्वाच्च पितृधनानामनीशिन्यः क्रीतत्वाच्च भर्तृधनानाम्। विक्रयो हि श्रूयते, 'शतमधिरथं दुहितृमते दद्यात्, "आर्षे गोमिथुनम्"-इति च। न च, एतत् दृष्टार्थे-सति आनमनेऽदृष्टार्थं भवितुमर्हति। एवं द्रव्यैः समान योगित्वं स्त्रीणाम्"भा०"तथाच क्रय्यस्यार्थदर्शनम्" ११सू०

'या पत्या क्रीता सती "अथान्यैश्चरति'-इति क्रीततां दर्शयति" भा०

"तादर्थ्यात् कर्मतादर्थ्यम्" १२सू० (आ० नि०) 'आह, यदनया भक्तोपसर्पणेन वा कर्त्तनेन वा धनम् उपार्जितं, तेन यक्ष्यते,-इति। उच्यते,-तदप्यस्या न स्वं, यदा हि सा अन्यस्य स्वभूता, तदा यत् तदीयं, तदपि तस्यैव। अपिच, स्वामिनस्तया कर्म कर्त्तव्यं न तं परित्यज्य स्वकर्माहेति कर्त्तुम्। यत् तया अन्येन प्रकारेण उपार्ज्यते, तत् पत्युरेव स्वं भवितुमर्हति-इति। एवं च स्मरन्ति, "भार्या दासश्च पुत्रश्च निर्द्धनाः सर्व एव ते। यत्ते समधिगच्छन्ति, यस्य ते तस्य तद्धनम्" इति' भा०

"फलोत्साहाविशेषात्तु" १३सू० (सि०) तुशब्दःपक्षं व्यावर्त्तयति। न च एतदस्ति,-निर्द्धना स्त्री-इति, द्रव्यवती हि सा, फलोत्साहाविशेषात्, स्मृतिप्रमाण्यात् अस्वया तया भवितव्यं फलार्थिन्यापि, श्रुतिविशेषात् फलार्थिन्या यष्टव्यम्, यदि स्मृतिमनुरुध्यमाना परवशा निर्द्धना च स्यात्, 'यजेत'-इत्युक्ते सति न यजेत, तत्र स्मृत्या श्रुतिर्बाध्येत। न च एतत्-न्याय्यम्। तस्मात् फलार्थिनी सती स्मृतिमप्रमाणीकृत्य द्रव्यं परिगृह्णीयात् यजेत च-इति" भा०

"अर्थेन च समवेतत्वात्" १४सू०

अर्थेन च अस्याः समवेतत्वं भवति, एवं दानकाले संवादः क्रियते,-"धर्मे च अर्थे च कामे च न अति चरितव्यः'-इति। यत्तु उच्यते,-'भार्यादयो निर्द्धनाः'-इति स्मार्य्यमाणमपि निर्द्धनत्वम् अन्याय्यमेव, श्रुतिविरोधात्। तस्मात् अस्वातन्त्र्यम् अनेन प्रकारेण उच्यते। संव्यवहारप्रसिद्ध्यर्थम्" भा०

"क्रयस्य धर्ममात्रत्वम्" १५सू०। (आ०नि०) यत्तु क्रयः श्रूयते,-धर्ममात्रं तु तत्, नासौ क्रयः-इति, क्रयो हि उच्चनीचपण्यपणो भवति। नियतं त्विदं दानं शतमधिरथं, शोभनाम् अशोभनाञ्च कन्यां प्रति। स्मार्त्ते च श्रुतिविरुद्धं विक्रयं नानुमन्यन्ते। तस्मात् अविक्रयोऽयम्-इति भा०

"स्ववतामपि दर्शयति" १६सू०

'पत्नी वै पारिणय्यस्य ईष्टे-पत्यैव गतमनुमतं क्रियते। तथा "भसदा पत्नीः संयाजयन्ति, भसद्वीर्या हि पत्नयः भसदाश्च एताः परगृहाणाम् ऐश्वर्यमवरुन्धते" भा०।

"स्ववतोस्तु वचनादैककर्म्यं स्यात्" १७सू०

स्ववन्तावुभावपि दम्पती-इत्येवं तावत् स्थितम्। तत्र सन्देहः,-किं पृथक् पत्नी यजेत, पृथक् यजमानः उत सम्भूय यजेयाताम्!-इति। किं प्राप्तम्?-पृथक्त्वेन। कुतः?। एकवचनस्य विवक्षितत्वात्, उपादेयत्वेन कर्त्ता 'यजेत'-इति श्रूयते तस्मात् एकवचनं विवक्ष्यते,-यथा न द्वौ पुरुषौ सम्भूय यजेयाताम्,तथा अत्रापि द्रष्टव्यम्। एवं प्राप्ते ब्रूमः,-"स्ववतोस्तु वचनात्तयोः सहक्रिया एवं स्मरन्ति,-'धर्मे चार्थे च कामे च नातिचरितव्यः'-इति, तथा'सह धर्मश्चरितव्यः, सहापत्यम् उत्पादयितव्यम्'-इत्युच्यते,-स्मृतिवचनेन श्रुतिवचनं युक्तं बाधितुम्। न-इति ब्रूमः,-इह किञ्चित् कर्म,स्त्रीपुंसयोः कृत्स्नमेव, यथा दर्शपूर्णमासौ-ज्योतिष्टोमः-इति, यत्र पत्न्यवेक्षितेन यजमानावेक्षितेन च आज्येन होम उच्यते, तत्र अन्यतराभावे वैगुण्यम्।

"ननु पुंसो यजमानस्य यजमानावेक्षितमाज्यं, स्त्रियाः यजमानायाः पत्न्यवेक्षितं भविष्यति'-इति। न-इति आह,-नायम् ईक्षितृसंस्कारः, ईक्षितुः संस्कारो यदि, तदैवं स्यात्,आज्यसंस्कारश्च अयं, गुणभूतौ ईक्षितारौ, तत्र अन्यतरापाये नियतं वैगुण्यं, सर्वाङ्गोपसंहारी च प्रयोगवचनः। तत्र एतत् स्यात्,-स्त्रीयजमाना पुमांसं परक्रेष्यति आज्यस्य ईक्षितारं, पुमांश्च स्त्रियमन्ववेक्षित्रीम्-इति। तच्च न, पत्नीति हि यज्ञस्य

स्वामिनी इत्युच्यते, न क्रीता पत्नी—इति सम्बन्धि शब्दोऽयं यजमानः-इति च स्वामी, क्रीतः। तस्मात् स्त्रीपुंसयोरेकम् एवञ्जातीयकं कर्म्म—इति।

"नत्व श्रुतिसामर्थ्यात्-'यः-कश्चित्, यया कयाचित् सह सम्भूय यजेत'-इति प्राप्ते इदम् उच्यते,-'यस्त्वया कश्चित् धर्म्मः कयाचित् सह कर्त्तव्यः, सोऽनया सह—इति, तेन न श्रुतिविरोधः स्मृतेः—इति गम्यते। अथ यदुक्तं,—केवलस्य पुंसोऽधिकारः केवलायाश्च स्त्रियाः, 'यजेत'—इत्येकवचनस्य विवक्षितत्वात्—इति, तत् परिहर्त्तव्यम्। इदं तावदयं प्रष्टव्यः—'यजेत'—इत्येकवचने विवक्षिते, षोड़शभिर्ऋत्विग्भिः सहयागो भवति-इत्येवम् उच्यते, प्रतिकारकं क्रियाभेदः,याजमानानेव पदार्थान् परिक्रयादीन् कुर्वन् 'यजते' इत्युच्यते यजमानः, आध्वर्य्यवानेव कुर्वन् अध्वर्य्युर्यजति-इत्येवम् उच्यते,यथा सम्भरणमेव कुर्वती स्थाली पक्तिं करोति—इत्युच्यते, यस्य च कारकस्य य आत्मीयोव्यापारः, स एकवचने विवक्षिते एकेन कर्त्तव्यो भवति—इति। एवं चेत् यावान् व्यापारो यजमानस्य, स तावान् न सम्भूय कर्त्तव्यः, एकैकेनैको याजमानोऽपरेणापरः। द्वादशे वा शते एकेन षट्पञ्चाशत्, अपरेणापि षट्पञ्चाशत्—इति। इह तु पत्नीव्यापारः अन्य एव, न तत्र पत्नी प्रवर्त्तमाना यजमानस्य एकत्वं विहन्ति,यथा अध्वर्य्युराध्वर्य्यवेषु प्रवर्त्तमानः। अवश्यं च सह पत्न्या यष्टव्यं, मध्यगं हि इदं दम्पत्योर्धनं तत्र यागोऽवश्यं सह पत्न्या कर्त्तव्यः,इतरथा अन्यतरानिच्छयां त्याग एव न संवर्त्तेत,तथाहि द्वितीयया पत्न्या विना त्यागोनैवावकल्पते, यस्य द्वितीया पत्न्यस्ति, तत्र क्रत्वर्थान् एका करिष्यति। कर्म्मसंस्कारार्थेषु नैव दोषः, सम्भवन्ति हि तानि सर्वत्र—इति" भा०

"लिङ्गदर्शनाच्च" १८सू०।

"लिङ्गं खल्वपि दृश्यते,'योक्त्रेण पत्नीं सन्नह्यति मेखलया यजमानं मिथुनत्वाय"—इति। यदि स्त्रीपुंसाववेकत्र, योक्त्रस्य मेखलायाश्च विभागो वाक्यात् गम्यते, मिथुनसम्भवश्च, तदेतत् स्त्रीपुंससाधनके कर्म्मण्युपपद्यते, न अन्यथा" भा०

'क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते' १९सू०

"स्थितादुत्तरमुच्यते। तुशब्दः पक्षं व्यावर्त्तयति। नैतदस्ति, यदुक्तं स्ववती स्त्री—इति, क्रीता हि सा, दृष्टार्थत्वात् अधिरथशतदानस्य,कृतो यदस्याः स्वामित्वम् उच्यते, तत् भक्त्या यथा पूर्व्वकोऽस्माकं बलीवर्द्दानाम् ईष्टे—इति, एवं पत्न्यपि पारिणय्यस्य ईष्टे—इति" भा०

"फलार्थित्वात्तु स्वामित्वेनाभिसम्बन्धः" २०सू०

"नैतदस्ति, क्रयो मुख्यः, गौणं स्वामित्वम्-इति, फलार्थिनी हि सा, स्वर्गं तर्नादरिष्यते, स्मृत्यनुरोधात् अस्वा स्यात्, स्ववती श्रुत्यनुरोधात्" भा०

"फलवत्तां च दर्शयति" २१सू०

"सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य धुर्य्यायुक्तावभूताम्, सञ्जानानौ विजहताम् अरातीर्दिवि ज्योतिरजरमारभेताम्"-इति दम्पत्योः फलं दर्शयति। तस्मात् अप्युभावधिकृतौ-इति सिद्धम्" शवरभाष्यम्।

"शूद्रान्नौ रसैः क्रयक्रीतैः कर्म्म कुर्वन् पतत्यधः" स्मृतिः।

क्रयनक्षत्राणि मु० चि० पी० धा० उक्तानि यथा।

"क्रयर्क्षे विक्रयो नेष्टो विक्रयर्क्षे क्रयोऽपि न। पौष्णाम्बुपाश्विनीवातश्रवश्चित्राः क्रये शुभाः" मु०चि०।

"अथ क्रयविक्रयनक्षत्रेषु परस्परनिषेधं वदन् क्रयविक्रयनक्षत्राण्यनुष्टभाह क्रयर्क्षे इति। क्रयनक्षत्रे विक्रयो न कार्यः, तथा विक्रयर्क्षे क्रयोऽपि न कार्यः, नन्विदमयुक्तं विक्रयोनाम मौल्यं गृहीत्वा वस्तुदानं क्रयोनाम मौल्यं दत्त्वा स्वग्रहणं यदा येन क्रयः कर्त्तव्यः तदान्येन विक्रयोऽपि कर्त्तव्यस्तत्र क्रयविक्रयनक्षत्राणां महाभेदादुभयविधमुहूर्त्तानुपपत्तिः उच्यते विक्रेता यदा मुहूर्त्ते विक्रयार्थं गृह्णते तदा क्रयिणोऽनुज्ञां लब्ध्वा दावदिष्टं वस्तु स्वगृहात्पृथक् क्रियते, तत्कर्म विक्रयशब्दवाच्यं यदा तु क्रयिणा क्रयमुहूर्त्तं प्राप्यते तदा विक्रेतृमूल्यद्रव्यं दत्त्वा पृथक् कृतविक्रेतव्यवस्तु गृह्यते तत्कर्मक क्रयशब्दवाच्यमिति मत्वात्र समाधिः। अथवा क्रयिविक्रेत्रोरन्यतरस्य कदाचिन्मुहूर्तसम्भवादुयोवनावश्यकत्वे। आवश्यकत्वे तु मुहूर्त्तगवेषणायां कालविलम्बनिष्पत्तावन्येन हतीकेन मुहूर्त्तविचारमनङ्गीकृत्य समवस्तुप्राप्त्या वस्तुग्रहणसिद्धिसम्भवात् तदा विक्रेतुरेव मुहूर्त्तविचारः। एवं च क्रेतुरप्यवश्यविक्रेतव्यस्य वस्तुनो यदा गृहीता सम्भवेत्तदैव मुहूर्त्तमनालोच्य वस्तुदानमावश्यकम् मुहूर्त्तविचारतः कालविलम्बे तावद्व्यवहारानुपपत्तेः। तदा तु क्रयण एव मुहूर्त्तविचारः। नन्वेवमपि क्रयविक्रयनक्षत्राणां पार्थक्येनाभिधानात्तयोः परस्परगतनिषेधो न युज्यते यथा राजदर्शन विहितनक्षत्रेभ्योऽन्यनक्षत्रेषु राजदर्शनं निषिद्धमि-

त्वयोद्भ्यते, सर्वं "वाक्यं सावधारणं भवतीति" न्यायात् उच्यते। क्रयनचत्रे क्रयः कार्य इत्युक्तेः विक्रयस्य स्वतन्त्र कर्मत्वात् तत्र क्रयस्येव निषेधाभावः एवं विक्रयस्येव्यपि क्रयनिषेधाभावः तत्र निषेधे सत्यन्यनचत्राणां मध्यमत्वावगतेः कदाचित् क्रयनक्षत्राणां मध्यमत्वमङ्गीकृत्य विक्रयस्य विहितमुहूर्त्तानुपलब्धौ तत्र मुहूर्त्तोमध्यमोऽपि ग्राह्यास्तद्र्थमपि याचनिकस्तन्निषेधः अतः। क्रयविक्रयन चत्रेभ्योभिन्ननक्षत्रेषु क्रयविक्रयौ मध्यमावित्यनुमिमः निषेधस्य वाचनिकत्वमुक्तं दीपिकायाम् "यमार्द्रशक्राद्दिहुताशपूर्वा नेष्टाः क्रये विक्रयणेऽतिशस्ताः। पौष्णाऽश्विचित्राम्बुपवातकर्णाः शस्ताः क्रये विक्रयणे निषिद्धाः" इति अथ क्रयमुहूर्त्त उच्यते। तत्र पौष्णं रेवती अम्बुपः शततारका अश्विनी वातः स्वाती श्रवणः चित्रा एतानि भानि क्रये शुभानि विक्रये निषिद्धानि च सम्मतिरत्नोक्तेश्च"।

**क्रयण** न० क्री–भावे ल्युट्। क्रये "वैश्यराजन्ययोः सोमे न्यग्रोधस्तिभीनुपनह्योच्छन् भत्ताय क्रयणप्रभृत्यनुसोमम्" कात्या०श्रौ०१०,८,२०, क्रयणप्रभृति (सोम) क्रयणादारभ्य" कर्कः। क्रयणस्येदम् छ। क्रयणीय क्रयणसम्बन्धिनि। "अपत्स्वभक्षावापनं क्रयणीयादौ" कात्या० श्रौ० १६,६,२२, आदौ क्रयणीयस्याङ्गः" सं० व्या०।

**क्रयनियम** पु० क्रये नियमः। क्रेतृविक्रेत्रोर्नियमभेदे। स च नियमः "भूयसा वस्नमचरत् कनीयोऽविक्रीतो अकानिषं पुनर्यन्। स भूयसा कनीयो नारिरेचीद्दीना दक्षा वि दुहन्ति प्रवाणम्" ऋ०४,२४,९, भाष्ये दर्शितो यथा— "अत्र ऋग्द्वये संप्रदायविद्भिः पूर्वाचार्यैः केचित् श्लोकाः पठ्यन्ते तएव लिख्यन्ते। "अल्पं यः प्रतिगृह्णाति मूल्यं पण्येन भूयसा। स क्रेतारं पुनर्गच्छन्नविक्रीतस्त्वयं मया। इति ब्रुवन् कामयते पुनर्मूल्यस्य पूरणम्। स विक्रेता पुनर्मूल्यं भूयसा न प्रपूरयेत्। हीनं न लभते वस्नं यदा विक्रीतवान् पुरा। यथासमयमेव स्यात्तयोर्न पुनरन्यथा। अयं विक्रय एवेति समयश्चेत् कृतोभवेत्। अथ मूत्रार्थमेतत् स्याद्विचार्यैव तु निर्णयः। द्रव्येवं समयो ऽकारि तदा मूल्यं प्रपूर्यते। तस्मादादौ मया कार्य्यः समयोऽत्रेति चिन्तयत्। वामदेवो वशीकृत्य शक्रं स्तोत्रेण भूयसा। विक्रीणन् समयं चक्रइन्द्रं क इममित्यृचा। अतश्च ह्युच एकार्थौ भूयसा वस्नमित्ययमिति"। अयमर्थः प्रतिपाद्यते कश्चित् भूयसा भूम्ना पण्येन द्रव्येण कनीयोऽल्पतरं वस्नं तस्य मूल्यं धनमचरत् प्राप्नोति पुनर्यन् क्रेतारं पुनर्गच्छन् अविक्रीतोऽयमर्थो मया न विक्रीत इति ब्रुवन् न कानिषं मूल्यपूर्तिं कामयते व्ययेनोत्तम पुरुषः। स विक्रेता भूयसा धनेन कनीयोऽल्पतरं मूल्यं नारिरेचीत् क्रेतुः सकाशाद्रिक्तीकरोति न लभत इत्यर्थः। दीना असमर्था दक्षाः समर्थाश्च यार्थं वचनं विप्रदुहन्ति यथोक्तं क्रयकाले तथैव लभन्ते"

"कइमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः यदा वृत्राणि जंघनदथैनं मे पुनर्ददत्" ऋ० ४,२४,१०,

"मम मदीयमिदं स्वभूतमिन्द्रं धेनुभिः प्रीणयित्रीभिर्दशभिर्दशसंख्याकाभिः स्तुतिभिः कः क्रीणाति क्रयं करोति क्रेतारोयुष्माकं मध्ये एवमपि समयः क्रियते यदाऽयमिन्द्रो वृत्राणि त्वदीयान् शत्रून् जंघनत् हन्यात् अथानन्तरमेवैनमिन्द्रं मे मह्यं पुनर्ददत् पुनर्दद्यात्" भा०। "निश्चित्य वस्तु तन्मूल्यमुभयोः सम्मतौ शिवे!। परस्पराचाकरणं क्रयसिद्धिस्ततो भवेदिति"। "क्रयसिद्धिरदुष्टानां गुणश्रवणतो भवेत्। विपर्यये तद्गुणानामन्यथा भवति क्रयः" महा० नि० त०

**क्रयलेख्य** न० ६त०। "गृहं क्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्। पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते" बृहस्पत्युक्तलक्षणे क्रयसूचकपत्रे (कवाला)।

**क्रयविक्रय** पु०द्वि०व०। द्वन्द्वः। क्रये विक्रये च। "आगमं निर्गमस्थानं तथा वृद्धिक्षयावुभौ। विचार्य्य सर्वपण्यनां कारयेत् क्रयविक्रयौ। पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथवा गते। कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः" मनुः। "आगमनियमोपयोगादेः पण्यानामनियतत्वात् अस्थिरार्घाणां पञ्चरात्रे पञ्चरात्रे गते, स्थिरतरार्घाणां पक्षे पक्षे गते वणिजामर्घविदां प्रत्यक्षं नृपतिराप्णुरूपेण व्यवस्थां (मूल्यस्य) कुर्यात्" कुल्लू०। "क्रयविक्रयानुशयश्च विवादः स्वामिपालयोः" मनुः। क्रयसहितोविक्रयः शा० त०। २क्रयसहितविक्रये। "देवदानवगन्धर्वयक्षराक्षसपन्नगाः। नासन् कृतयुगे तात! तदा न क्रयविक्रयः" भा० व० १४६अ०। ३तद्युक्ते वाणिज्ये "ऋणदानं तथाऽऽदानं वस्तूनां क्रयविक्रयम्। न कुर्य्याद्गुरुणा सार्द्धं शिष्योभूत्वा कथञ्चन" तन्त्रसा०।

**क्रयविक्रयानुशय** पु० क्रये विक्रये चानुशयः पश्चात्तापः। मनूक्ते अष्टादशविवादान्तर्गते विवादभेदे। स च द्विविधः, क्रीतानुशयो विक्रीतानुशयश्च। अनुशयशब्दे १८६पृष्ठे वक्ष्यति: द्रष्टव्या। अधिकं क्रीतानुशयशब्दे वक्ष्यते।

**क्रयविक्रयिक** पु॰ क्रयविक्रयाभ्यां जीवति ठन्। वणिग्जने "वस्नक्रयविक्रयाट् ठन्" पा॰ क्रयविक्रयग्रहणं व्यस्तसमस्तविषयम् तेन व्यस्तादपि ठन्। क्रयिक विक्रयिक तेन जीविनि त्रि॰।

**क्रयशीर्ष** न॰ कपिशीर्ष+पृषो॰। कपिशीर्षे त्रिका॰।

**क्रयाक्रयिका** क्रयसहितः अक्रयः शाक॰ स्वार्थे क अतइत्त्वम्। क्रये अक्रये च।

**क्रयारोह** पु॰ क्रयस्य क्रयार्थमारोहत्यत्र आ+रुह आधारे घञ् चतुर्थ्यर्थे ६त॰। हट्टे (हाट) हारा॰।

**क्रयिक** त्रि॰क्रयेण जीवति क्रयात् व्यस्तादपि ठन्। वणिग्जने "पर्य्यागतं क्रयिकलोकमगण्यपण्येतित्यादि" माघः क्रय+प्रयोजनमस्त्यस्य ठन्। २क्रेतरि "धनेन क्रयिको हन्ति खादकश्चोपभोगतः। घातको वधबन्धाभ्यामित्येष त्रिविधो बधः" भा॰ आनु॰ ११५अ॰

**क्रय्य** त्रि॰ क्रयाय क्रेतारः क्रीणीयुरितिबुद्ध्या प्रसारितम् क्री—यत् "क्रय्यस्तदर्थे" पा॰ नि॰। क्रयनिमित्तं हट्टे प्रसारिते द्रव्ये "क्रय्यस्ते सोमो राजा इति क्रय्य इत्याह सोमविक्रयी" शत॰ ब्रा॰ ३,३,३,१,

**क्रवण** त्रि॰ क्रुङ-शब्दे ल्यु। १स्तुतिकर्त्तरि "अत्रा न हार्द्दि क्रवणस्य रेजते" ऋ॰ ५,४४,९, "क्रवणस्य स्तुतिकर्त्तुः" भा॰ भावे ल्युट्। २शब्दकरणे न॰

**क्रविष्णु** त्रि॰ क्रु—बा॰इष्णुच्। क्रव्यादे राक्षसादौ "क्रव्यात् क्रविष्णुर्विविनोतु वृक्णम्" ऋ॰ १,८७,४,

**क्रविस्** न॰क्लव-इसुन् लस्य रः। मांसे क्रव्ये। "यदश्वस्य क्रविषो मक्षोऽस्ति" ऋ॰१,१६२,९,१२, "क्रविषः मांसस्य" भा॰

**क्रव्य** न॰ क्लव-यत् लस्य रः। आममांसे अमरः। "स्फुटगतमपि क्रव्यमव्यग्रमत्ति" मालती॰। "क्रव्यादाः प्राणिनां क्रव्यं दुदुहुः स्वकलेवरात्" भाग॰ ४,१८,२२,। मांसभेदास्तद्गुणाश्च सुश्रुते उक्ता यथा

"अत ऊर्द्ध्वं मांसवर्गानुपदेक्ष्यामः तद्यथा—जलेशया आनूपा ग्राम्याः क्रव्यभुज एकशफा जाङ्गलाश्चेति षण्मांसवर्गास्तेषां वर्गाणामुत्तरोत्तरं प्रधानतमाः। ते पुनर्द्विविधा जाङ्गला आनूपाश्चेति। तत्र जाङ्गलवर्गोऽष्टविधः तद्यथा—जाङ्गला विष्किराः प्रतुदा गुहाशयाः प्रसहाः पर्णमृगा बिलेशया ग्राम्याश्चेति। तेषां जाङ्गलविष्किरौ प्रधानतमौ तावेणहरिणर्क्षकुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्करमृगमातृकाप्रभृतयो जाङ्गला मृगाः कषाया मधुरा लघवो वातपित्तहरास्तीक्ष्णा हृद्या वस्तिशोधनाश्च। कषायो मधुरो हृद्यः पित्तासृक्कफरोगहा। संग्राही रोचको बल्यस्तेषामेणो ज्वरापहः। मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः। शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः। एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते। न कृष्णो नच ताम्रश्च कुरङ्गः सोऽभिधीयते। शीतासृक्पित्तशमनी विज्ञेया मृगमातृका। सन्निपातक्षयश्वासकासहिक्काऽरुचिप्रणुत्। लावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकावर्त्तकनप्तृकावार्तीकचकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रककुतित्तिरिकुररात्युक्कयवलकप्रभृतयस्त्र्याह्वा विष्किरा लघवः शीतमधुराः कषाया दोषशमनाश्च। संग्राही दीपनश्चैव कषायमधुरो लघुः। लावः कटुविपाकश्च सन्निपाते च पूजितः। ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्द्धनः। तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः। हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः। रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः। कफोत्थेषु च रोगेषु मन्दवाते च शस्यते। वातपित्तहरा वृष्या मेधाग्निबलवर्द्धनाः। लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः। कषायः स्वादुलवणस्त्वच्यः केश्यो रुचिप्रदः। मयूरः स्वरमेधाग्निदृक्श्रोत्रेन्द्रियकार्श्यकृत्। स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलावहः। वृंहणः कुक्कुटो वन्यस्तद्वद्ग्राम्यो गुरुस्तु सः। वातरोगक्षयवमीविषमज्वरनाशनः। कपोतपारावतभृङ्गराजपरभृतकोयष्टिककुलिङ्गगृहकुलिङ्गगोक्षोडकडिण्डिमाणकशतपत्रकमातृनिन्दकभेदाशिशुकसारिकावल्गुलीगिरिशालट्टालट्टूषकसुगृहीखञ्जरीटकहारीतदात्यूहप्रभृतयः प्रतुदाः। कषायमधुरा रूक्षाः फलाहारा मरुत्कराः। पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्चसः। सर्वदोषकरस्तेषां भेदाशी मलदूषकः। कषायस्वादुलवणो गुरुः कालकपोतकः। रक्तपित्तप्रशमनः कषायविशदोऽपि च। विपाके मधुरश्चापि गुरुः पारावतः स्मृतः। कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्द्धनः। रक्तपित्तहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः। सिंहव्याघ्रवृकतरक्षृक्षद्वीपिमार्जारशृगालमृगेर्वारुकप्रभृतयो गुहाशयाः। मधुरा गुरवः स्निग्धा बल्या मारुतनाशनाः। उष्णवीर्य्या हिता नित्यं नेत्रगुह्यविकारिणाम्। काककङ्ककुररचाषभासशशघात्युलूकचिल्लिश्येनगृध्रप्रभृतयः प्रसहाः। एते सिंहादिभिः सर्वे समाना वायसादयः। रसवीर्य्यविपा-

केषु विशेषाच्छोषिणे हिताः मद्गुमूषिकवृक्षशायि-
कावकुशपूतिघासवानरप्रभृतयः पर्णमृगाः । मधुरा
गुरवो वृष्याश्चक्षुष्याः शोषिणे हिताः । सृष्टमूत्रपुरीषाश्च
कासार्शःश्वासनाशनाः । श्वाविच्छल्यकगोधाशशवृषदंशलो-
पाकलोमशकर्णकदलीमृगप्रियकाजगरसर्पमूषिकनकुल-
महाबभ्रुप्रभृतयो विलेशयाः । वर्च्चोमूत्रं संहतं कु-
र्य्युरेते वीर्य्ये चोष्णाः पूर्ब्बवत् स्वादुपाकाः । वातं हन्युः
श्लेष्मपित्ते च कुर्य्युः स्निग्धाः कासश्वासकार्श्यापहाश्च ।
कषायमधुरस्तेषां शशः पित्तकफापहः । नातिशीतल-
वीर्य्यत्वाद्वाते साधारणो मतः । गोधा विपाके मधुरा
कषायकटुका स्मृता । वातपित्तप्रशमनी वृंहणी बल-
वर्द्धिनी । शल्यकः स्वादुपित्तघ्नो लघुः शीतो विषापहः ।
प्रियको मारुते पथ्योऽजगरस्त्वर्शसां हितः । दुर्नामा-
निलदोषघ्नाः क्रिमिदूषीविषापहाः । चक्षुष्या मधुराः
पाके सर्पा मेधाग्निवर्द्धनाः । दर्व्वीकरा दीपकाश्च तेषूष्णाः
कटुपाकिनः । मधुराश्चातिचक्षुष्याः सृष्टविण्मूत्रमा-
रुताः । अश्वाश्वतरगोखरोष्ट्रवस्तोरभ्रमेदःपुच्छकप्रभृतयो
ग्राम्याः । ग्राम्या वातहराः सर्व्वे वृंहणाः कफपित्त-
लाः । मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः । ना-
तिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः । छगलस्त्व-
नभिष्यन्दी तेषां पीनसनाशनः । वृंहणं मांसमौरभ्रं
पित्तश्लेष्मावहं गुरु । मेदःपुच्छोद्भवं वृष्यमौरभ्रसदृशं
गुणैः । श्वासकासप्रतिश्यायविषमज्वरनाशनम् । श्रमा-
त्यग्निहितं गव्यं पवित्रमनिलापहम् । औरभ्रवत्सलवणं
मांसमेकशफोद्भवम् । अल्पाभिष्यन्द्ययं वर्गो जाङ्गलः
समुदाहृतः । दूरे जनान्तनिलया दूरे पानीयगोचराः ।
ये मृगाश्च विहङ्गाश्च तेऽल्पाभिष्यन्दिनो मताः । अ-
तीवासन्ननिलयाः समीपोदकगोचराः । ये मृगाश्च वि-
हङ्गाश्च महाभिष्यन्दिनस्तु ते । आनूपवर्गस्तु पञ्चविधः
तद्यथा कूलचराः प्लवाः कोशस्थाः पादिनो मत्स्या-
श्चेति । तत्र गजगवयमहिषरुरुचमरसृमररोहित-
वराहखड्गिगोकर्णकालपुच्छकोद्रन्यङ्कुरण्यगवयप्रभृतयः
कूलचराः पशवः । वातपित्तहरा वृष्या मधुरा रस-
पाकयोः । शीतला बलिनः स्निग्धा मूत्रलाः कफवर्द्ध-
नाः । विरूक्षणो लेखनश्च वीर्य्योष्णः पित्तदूषणः । स्वा-
द्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः । गवयस्य तु
मांसं हि स्निग्धं मधुरकासजित् । विपाके मधुरं
चापि व्यवायस्य तु वर्द्धनम् । स्निग्धोष्णमधुरो वृष्यो
महिषस्तर्पणो गुरुः । निद्रापुंस्त्वबलस्तन्यवर्द्धनो मांस-
दार्ढ्यकृत् । रुरुमांसं समधुरं कषायानुरसं स्मृतम् ।
वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम् । तथा चमरमांसन्तु
स्निग्धं मधुरकासजित् । विपाके मधुरं चापि वातपित्त-
प्रणाशनम् । सृमरस्य तु मांसञ्च कषायानुरसं स्मृतम् ।
वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम् । स्वेदनं वृंहणं
वृष्यं शीतलं तर्पणं गुरु । स्निग्धं श्रमानिलहरं वाराहं
बलवर्द्धनम् । कफघ्नं खड्गिपिशितं कषायमनिलापहम् ।
पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् । गोकर्ण-
मांसं मधुरं स्निग्धं मृदु कफावहम् । विपाके मधुरञ्चापि
रक्तपित्तविनाशनम् । हंससारसक्रौञ्चचक्रवाककुररका-
दम्बकारण्डवजीवञ्जीवकवकबलाकापुण्डरीकप्लवशरारी-
मुखनन्दीमुखमद्गूत्क्रोशकाचाक्षमल्लिकाक्षशुक्लाक्षपुष्कर-
शायिकाकोनालकाम्बुकुक्कुटिकामेघरावश्वेतवारणप्रभृतयः
प्लवाः संघातचारिणः । रक्तपित्तहराः शीताः
स्निग्धा वृष्या मरुज्जितः । सृष्टमूत्रपुरीषाश्च मधुरा रस-
पाकयोः । गुरूष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः ।
वृंहणः शुक्रलस्तेषां हंसो मारुतनाशनः । शङ्खशङ्ख-
नखशुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः । कूर्म्मकुम्भीर-
कर्कटककृष्णकर्कटकशिशुमारप्रभृतयः पादिनः । शङ्खकू-
र्म्मादयः स्वादुरसपाका मरुन्नुदः । शीताः स्निग्धा हिताः
पित्ते वर्च्चस्याः श्लेष्मवर्द्धनाः । कृष्णकर्कटकस्तेषां बल्यः
कोष्णोऽनिलापहः । शुक्लः सन्धानकृत् सृष्टविण्मूत्रोऽनि-
लपित्तहा । मत्स्यास्तु द्विविधा नादेयाः सामुद्राश्च । तत्र
नादेयाः । रोहितपाठीनपाटलाराजीववर्म्मिगोमत्स्य-
कृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयो नादेयाः । ना-
देया मधुरा मत्स्या गुरवो मारुतापहाः । रक्तपित्तकरा-
श्चोष्णा वृष्याः स्निग्धाल्पवर्च्चसः । कषायानुरसस्तेषां शष्प-
शैवालभोजनः । रोहितो मारुतहरो नात्यर्थं पित्तको-
पनः । पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः ।
दूषयेद्रक्तपित्तन्तु कुष्ठरोगं करोत्यसौ । मुरलो वृंहणो
वृष्यः स्तन्यश्लेष्मकरस्तथा । सरस्तडागसम्भूताः स्निग्धाः
स्वादुरसाः स्मृताः । महाह्रदेषु बलिनः स्वल्पेऽम्भस्यबलाः
स्मृताः । तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरालकनन्दि-
वारलकमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतयः सा-
मुद्राः । सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः ।
उष्णा वातहरा वृष्या वर्च्चस्याः श्लेष्मवर्द्धनाः । बला-
वहा विशेषेण मांसाशित्वात्समुद्रजाः । तेषामप्य-

निलम्बत्वाच्चौष्ट्रकौपग्रौ गुणोत्तरौ । स्निग्धत्वात् स्वादुपाकत्वात् तयोर्वीरग्रा गुणोत्तराः । नादेया गुरवो मध्ये यस्मात्तु च्छास्यचारिणः । सरस्तडागजानान्तु विशेषेण शिरोलघु । अदूरगोचरा यस्मात्तस्मादुत्सोदपानजाः । किञ्चिन्मुक्त्वा शिरोदेशमत्यर्थं गुरवस्तु ते । अधस्ताद्गुरवो ज्ञेया मत्स्याः सरसिजाः स्मृताः । उरोविचरणात्तेषां पूर्वमङ्गं लघु स्मृतम् । इत्यानूपो महाभिस्यन्दिमांसवर्गो व्याख्यातः । तत्र शुष्कपूतिव्याधितविषसर्पहतदिग्धविद्धजीर्णकृशबालानामसात्म्यचारिणां मांसान्यभक्ष्याणि यस्माद्विगतव्यापन्नापहतपरिणतत्वात्संपूर्णवीर्यत्वाद्दोषकराणि भवन्ति । अरोचकं प्रतिश्यायं गुरु शुष्कं प्रकीर्त्तितम् । विषव्याधिहतं मृत्युं बालं छर्दिञ्च कोपयेत् । कासश्वासकरं वृद्धं त्रिदोषं व्याधिदूषितम् । क्लिन्नमुत्क्लेशजननं कृशं वातप्रकोपणम् । एभ्योऽन्यं चासुपादेयं मांसमिति । स्त्रियश्चतुष्पादेषु पुमांसो विहङ्गेषु महाशरीरेष्वल्पशरीरा अल्पशरीरेषु महाशरीराः प्रधानतमा एवमेकजातीयानां महाशरीराः प्रधानतमाः । स्थानादिकृतं मांसस्य गुरुलाघवमुपदेच्यामः तद्यथा—रक्तादिषु शुक्रान्तेषु धातुषूत्तरोत्तरेषु गुरुतरास्तथा सक्थिस्कन्धक्रोडशिरःपादकरकटीपृष्ठचर्म्मकालेयकयकृद्दन्ताणि । शिरःस्कन्धं कटीपृष्ठं सक्थिनी चात्मपक्षयोः । गुरुपूर्वं विजानीयाद्यानवस्तु यथोत्तरम् । सर्वस्य प्राणिनो देहे मध्यो गुरुरुदाहृतः । पूर्वभागो गुरुः पुंसामधोभागस्तु योषिताम् । उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम् । पक्षोत्क्षेपात्समो दिष्टो मध्यभागस्तु पक्षिणाम् । अतीव रूक्षं मांसन्तु विहङ्गानां फलाशिनाम् । वृंहणं मांसमत्यर्थं खगानां पिशिताशिनाम् । मत्स्याशिनां पित्तकरं वातघ्नं धान्यचारिणाम् । जलजानूपजा ग्राम्याः क्रव्यादेकशफास्तथा । प्रसहाविलवासाश्च ये च जाङ्गलसंज्ञिताः । प्रतुदा विष्किराश्चैव लघवः स्युर्यथोत्तरम् । अल्पाभिस्यन्दिनश्चैव यथापूर्वमतोऽन्यथा । प्रमाणाधिकास्तु स्वजातौ चाल्पसारा गुरवश्च । सर्वप्राणिनां सर्वशरीरेभ्यो प्रधानतमा भवन्ति यकृत्प्रदेशवर्त्तिनस्तानाददीत प्रधानलाभाभावे मध्यमवयस्कं साद्यस्कमक्लिष्टमुपादेयं मांसमिति । भवति चात्र । वयः शरीरावयवाः स्वभावो धातवः क्रियाः । लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्षिता" ।

**क्रव्यघातन** पु० क्रव्यस्य क्रयार्थं घात्यतेऽसौ हन—स्वार्थे णिच्—कर्म्मणि ल्युट् चतुर्थ्यर्थे ६त० । १मृगमात्रे शब्दच० । क्रव्यार्थं घातयन्ति घाति—ल्यु । मांसार्थघातके २रुरुरूपे मृगभेदे "यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयन्ति" भाग० ५।२६।१५ तस्य तथात्वोक्तेः "क्रव्येण निमित्तेन मांसार्थम्" श्रीधरः

**क्रव्यभुज्** पु० क्रव्यं भुङ्क्ते भुज—क्विप् । १क्रव्यादे राक्षसे २क्रव्यादे रुरुरूपे मृगभेदे च "ससैन्धवः क्रव्यभुगेणमांसयोर्हितः ससर्पिः समधुः पुटाह्वयः" सुश्रु० । ३मांसभोक्तृमात्रे त्रि० ।

**क्रव्याद्** पु० क्रव्यं मांसमत्ति अद—क्विप् । १राक्षसे २मांसाशिनि त्रि० मेदि० "क्रव्याद्गणपरीवारश्चिताग्निरिव जङ्गमः । रघु:"क्रव्यादः श्वप्रादयः" भट्टि० "क्रव्याद्भिश्च हतस्यान्यैः" मनुः "क्रव्याद्भिः व्याघ्रादिभिः" कुल्लू० "श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव" मनु० च ३शवदाहके अग्निभेदे "अपाग्ने अग्निमामादं जहि निष्क्रव्यादं सेधद्यथ्यं वा आमाद् येनेदं मनुष्याः पक्वाऽश्नन्ति अथ येन पुरुषं दहन्ति स क्रव्याद् एतावेवैतदुभावतोऽपहन्ति" शत० ब्रा० १।२।१।४। "हे अग्ने ! गार्हपत्य ! आमादमग्निमपजहि परित्यज तथा क्रव्यादमग्निं निःसेध निःशेषं दूरे गमय" वेददी० "योऽग्निं क्रव्यात् प्रविवेश यो गृहम्" ऋ० १०।१६।१० क्रव्याद्योनिप्राप्तिश्च गुरुतल्पगमनमहापातकावशेषवतां मनूक्ता यथा "तृणगुल्मलतानाञ्च क्रव्यादां दंष्ट्रिणां तथा । क्रूरकर्मकृताञ्चैव शतशो गुरुतल्पगः"

**क्रव्याद** पु० क्रव्यमत्ति अद-अण् उप० स० । १राक्षसे २मांसभोजिमात्रे त्रि० स्त्रियां टाप् सि०कौ० । "क्रव्यादः शवभक्षणे" विधानपा० ५०पृ० उक्ते ३वह्निभेदे ।

वह्नेश्च क्रव्यादत्वं भा० आ०७अ० भृगुणा सर्वभक्षत्वे शापे अग्नये दत्ते तत्परिहारार्थं शवदहकक्रव्यादनादुक्तम् "कथं देवमुखो भूत्वा यज्ञभागाग्रभुक् तथा । हुतभुक् सर्वलोकेषु सर्व्वभक्षत्वमेष्यति" इत्युपक्रमे "लोकानामिह सर्व्वेषां त्वं कर्त्ता चान्त एव च । त्वं धारयसि लोकांस्त्रीन् क्रियाणाञ्च प्रवर्त्तकः । स तथा कुरु लोकेश ! नोच्छिद्येरन् यथा क्रियाः । कस्मादेवं विमूढस्त्वमीश्वरः सन् हुताशन ! । त्वं पवित्रं सदा लोके सर्व्वभूतगतिश्च ह । स त्वं सर्वशरीरेण सर्वभक्षत्वमेष्यसि । अपाने ह्यर्चिषो यास्ते सर्वं भोक्ष्यन्ति ताः शिखिन् ! । क्रव्यादा

च तनुर्या ते स सर्वं भक्षयिष्यति। यथा सूर्य्यांशुभिः स्पृष्टं सर्वं शुचि विभाव्यते। तथा त्वदर्च्चिर्भिर्दग्धं सर्वं शुचि भविष्यति। त्वमग्ने! परमं तेजः स्वप्रभावाद्विनिर्गतम्। स्वतेजसैव तं शापं कुरु सत्यमृषेर्विभो!। देवानां चात्मनो भागं गृहाण त्वं मुखे हुतम्"। क्रव्यात्शब्ददर्शिते शत० ब्रा० वाक्येन ऋग्वेदवाक्येन च तस्य कर्म्मादावपसारणमुक्तम्। "क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाहः। इहैवायमितरो जातवेदा देवेभ्योहव्यं वहतु प्रजानन्" ऋ०१०,१६,९,भा० "आहिताग्निमरणे एतदादिके द्वे ऋचौ औपासनोद्वासने विनियुक्ते तत्र प्रथमायाः पूर्व्वार्द्धेन दक्षिणस्यां दिशि चतुष्पथादावौपासनाग्निं निरस्यति उत्तरेण शान्तिकर्म्मार्थमादत्ते। "क्रव्यादं क्रव्यमामिषं तदत्तीति तीव्रमग्निं दूरं विप्रकृष्टे देशे प्रहिणोमि प्रगमयामि। रिप्रं पापं तस्य वोढा सोऽग्निः यमराज्ञो यमो राजा येषां तान् यमराजकान् प्रदेशान् गच्छतु प्राप्नोतु अथ शान्तिकर्म्मार्थमुपासने इतरः क्रव्यादादन्यो जातवेदा अग्निरिहैव देशे देवेभ्यो देवार्थं हव्यं वहतु" भाष्ये दक्षिणपश्चिमदेशे तस्याग्नेः प्रक्षेपणोक्तेः। ४मांसभक्षके मृगभेदे "यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयन्ति" भाग० ५,२६,१५,।

क्रव्यादाश्च व्याघ्रादयस्तद्योनिप्राप्तिश्च अभक्ष्यभक्षणपापात् भवतीति मनुनोक्तं "हिंस्रा भवन्ति क्रव्यादाः कृमयोऽभक्ष्यभक्षणात्" क्रव्यादा व्याघ्रादयः कुल्लू० क्रव्यादिनृप्रभृतयोऽप्यत्र स्त्रियां ङीप्।

**क्रशि** नामधातुः कृशं करोति णिच् ऋतोरः। क्रशयति ते अचक्रशत् त। क्त क्रशितः। "क्रशितं शरीरमशरीरशरैः" माघः। क्रशितं कृशीकृतम्।

**क्रशिमन्** पु० कृशस्य भावः दृढा०इमनिच् ऋतोरः। कार्श्ये "सुभ्रु वां क्रशिमशालिनि मध्ये" माघः।

**क्रशिष्ठ** त्रि० अतिशयेन कृशः इष्ठन् ऋतोरः। अतिशय कृशे। ईयसुन्। क्रशीयस् तत्रार्थे त्रि०। स्त्रियां ङीप्।

**क्रा** त्रि० क्रम्-विट् मस्यात्। क्रान्तरि उदधिक्राः।

**क्राकचिक** त्रि० क्रकचः करपत्रं तत्क्रियया जीवति ठक्। करपत्रक्रियोपजीविनि (कराति)। "मायूरकाः क्राकचिकाः वेधकारचकास्तथा" रामा०अयोध्याकाण्डे ८३अ०

**क्राथ** पु० क्रथदेशानां राजा अण्। १राहुग्रहावतारे दक्षिणापथेश्वरे नृपभेदे "यस्तु सुतो यन्तु सिंहिकानन्दवर्द्धनम्। स क्राथ इति विख्यातो बभूव मनुजाधिपः" भा० आ०६७अ०। "तमन्वयुर्द्धर्मराजं दक्षिणापथवासिनः। क्राथोऽंशुमान् श्रुतर्वा च वेणुदारिश्च वीर्य्यवान्" हरिवं०११८अ०। २रामसेनापतिवानरभेदे च "नलनीलाङ्गदक्राथमैन्दद्विविदपालिता। ययौ सुमहती सेना राघवस्यार्थसिद्धये" भा० व० २८३अ०। ३नागभेदे "ह्रादः क्राथः शितिकण्ठोग्रतेजास्तथा नागौ चक्रमन्दातिषण्डौ" भा० सौ० ४अ०। क्रथ-भावे घञ्। ४मारणे पु० हेम०

**क्रान्त** पुंस्त्री क्रम-कर्त्तरि क्त। १घोटके स्त्रियां जातित्वेऽपि संयोगोपधत्वात् टाप्। कर्म्मणि-क्त। २आक्रान्ते ३आरूढे च त्रि० "क्रान्तं रुचा काञ्चनवप्रभाजा" माघः "अश्वक्रान्ते! रथक्रान्ते! विष्णुक्रान्ते! वसुन्धरे!" स्नानमन्त्रः। ४पादेन्द्रिये न०। "मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरम्" मनुः "क्रान्ते पादेन्द्रिये" कुल्लू०। भावे-क्त। ५क्रमणे न०। तदभिहितो भावोद्रव्यवत् प्रकाशते" इत्युक्तेः ६क्रमणकर्म्मणि न० "विष्णोः क्रान्तमसीतीमे लोकाः विष्णोर्विक्रमण विष्णोर्विक्रान्तं विष्णोः क्रान्तम्" शत० ब्रा० ५।४।२।६। कर्त्तरि क्त। ७बृहत्यां स्त्री राजनि० ८अतीते त्रि०क्रान्तदर्शी

**क्रान्तदर्शिन्** त्रि०क्रान्तमस्मदाद्यो न्द्रियविषयतामतिक्रान्तं वस्तु भूतादि सर्व्वं वस्तु द्रष्टुं शीलमस्य दृश-णिनि। १अतीतादिवस्तुद्रष्टरि २सर्व्वज्ञे ब्रह्मणि न०कविशब्दे १८११पृ०दृश्यम्।

**क्रान्ति** स्त्री० क्रम-भावे क्तिन्। १पादविक्षेपे २गतौ च हेम० अयनशब्दे २२९पृ०दर्शिते ज्योतिषप्रसिद्धे अपमशब्दार्थे-तत्त्वानुक्रमणिकं सू० सि० रङ्गनाथाभ्यां दर्शितं यथा "ननु गोले वृत्ते द्वादशराशीनां सत्त्वादन्यथा चक्रकलानुपपत्तेरित्यत्र कक्षाभावात् कथं राश्यङ्कनं?राशिविभागानुपपत्तिश्च अन्तरालभागस्याकाशात्मकत्वादित्यतो वृत्तकथनच्छलेन पूर्वोक्तं स्पष्टयन् सूर्य्यस्तद्वृत्ते भगणभोगं करोतीत्याह" रङ्ग०। "अयनादयनं चैव कक्षा तिर्यक् तथाऽपरा। क्रान्तिसंज्ञा तया सूर्य्यः सदा पर्य्येति भासयन्" सू०सि०। "अयनस्थानमारभ्यायनं परिवर्त्तनं तदयनस्थानपर्यन्तम्। चकार आरम्भसमाप्त्योर्भिन्नायनस्थाननिरासार्थकः। अपरा गोले आधारवृत्तप्रमाणा वृत्तरूपा कक्षा तथा राश्यङ्कमार्गेण। एवकारोऽन्यमार्गव्यवच्छेदार्थकः। तिर्य्यक् उक्तवृत्तानुकारविलक्षणानुकारा क्रान्तिसंज्ञा क्रमणं क्रान्तिः ग्रहगमनभोगज्ञानार्थं वृत्तं तत्संज्ञमुपकल्पितम्। अयनविषुवद्द्वयसंज्ञं क्रान्तिवृत्त द्वादशराश्य-

ङ्कित गोले निबध्नीयादिति तात्पर्य्यार्थः। भासयन् भुवनानि प्रकाशयन् सन् सः सूर्य्यः। एतेन चन्द्रादीनां निरासः। सदा निरन्तरं मया क्रान्तिसञ्ज्ञया कक्षया पर्य्येति स्वगत्या गच्छन् भगणपरिपूर्तिभोगं करोति। सूर्य्यगत्यनुरोधेन नियतं क्रान्तिवृत्तं कल्पितमिति भावः। ननु चन्द्राद्याः क्रान्तिवृत्ते कुतो न गच्छन्तीत्यत आह" रङ्ग० "चन्द्राद्याश्च स्वकैः पातैरपमण्डलमाश्रितैः। ततोऽपकृष्टा दृश्यन्ते विक्षेपान्तेष्वपक्रमात्" सू० "चन्द्रादयोऽर्कव्यतिरिक्ता ग्रहाः स्वकैः स्वकीयैः पातैः पाताख्यदैवतैरपमण्डलं क्रान्तिवृत्तमाश्रितैः स्वस्वगोलस्थानेऽधिष्ठितैस्ततः क्रान्तिवृत्तान्तर्गतग्रहभोगस्थानादित्यर्थः। चक्रार्द्धान्तर्विक्षेपान्तरेणापकृष्टा दक्षिणत उत्तरतो वा कर्षिता भवन्ति। अतः कारणादपक्रमात् क्रान्तिवृत्तान्तर्गतस्वभोगस्थानादित्यर्थः। दक्षिणत उत्तरतो वा विक्षेपान्तेषु गणितागतविक्षेपकलाग्रस्थानेषु भूस्थजनैर्दृश्यन्ते। तथा च क्रान्तिवृत्तं यथा विषुवन्मण्डलेऽवस्थितं तथा क्रान्तिवृत्ते पातस्थाने तत्षड्भान्तरस्थाने च लग्नमुक्तपरमविक्षेपकलाभिस्त्रिभान्तरस्थानादूर्ध्वाधःक्रमेण दक्षिणोत्तरतो लग्नं च वृत्तं विक्षेपवृत्तं चन्द्रादिगत्यनुरोधेन स्वं स्वं भिन्नं कल्पितं तत्र गच्छन्तीति भावः" रङ्ग०

क्रान्तिस्पष्टताप्रकारश्च सू० सि० रङ्गनाथाभ्यां दर्शितो यथा "अथ दिनरात्रिमानज्ञानार्थं चरानयनं विवक्षुः प्रथमं तदुपयुक्तां स्पष्टक्रान्तिमाह" रङ्गना० "विक्षेपापक्रमैकत्वे क्रान्तिर्विक्षेपसंयुता। दिग्भेदे वियुता स्पष्टा भास्करस्य यथा गता" सू० सि०

"यस्य ग्रहस्य स्पष्टक्रान्तिरभीष्टा तस्य ग्रहस्यायनांशसंस्कृतस्य भुजज्यातः परमापक्रमज्येत्यादिना क्रान्तिरयनांशसंस्कृतग्रहगोलदिक्का ज्ञेया। तस्य विक्षेपोऽपि पूर्वोक्तप्रकारेण पातोनगोलदिक्को ज्ञेयः। गोलस्तु मेषादिषट्कमुत्तरस्तुलादिषट्कं दक्षिणः। अथ शरक्रान्त्योरेकदिक्त्वेन क्रान्तिः कलाद्या कलात्मकविक्षेपेण युता तयोर्दिगन्यत्वे क्रान्तिर्विक्षेपेण वियुताऽन्तरिता शेषदिक्का स्पष्टा क्रान्तिः स्यात्। ननु सूर्य्यस्य विक्षेपाभावात् कथं स्पष्टा क्रान्तिर्ज्ञेयेत्यत आह भास्करस्येति। सूर्य्यस्य यथागता पूर्वागता क्रान्तिरेव स्पष्टा क्रान्तिः। अत्रोपपत्तिः। विषुवद्वृत्ताद्ग्रहबिम्बकेन्द्रपर्य्यन्तं याम्यमुत्तरं वान्तरं स्पष्टक्रान्तिरिति तयोरेकदिक्त्वे तद्योगतुल्यमन्तरं, भिन्नदिक्त्वे तदन्तरमितमन्तरमिति। अत्र शरस्य क्रान्तिसंस्कारयोग्यत्वसम्यादिका क्रिया लोकश्रमभयात् स्वल्पान्तरत्वाच्चोपेक्षिता भगवता कृपावता। अन्यथा शरस्य ध्रुवाभिमुखत्वे भगवदुक्तभावनदृक्कर्म्म कथमव्याहतं स्यादित्यलम्" रङ्गनाथः।

रवेर्देशक्रान्तिवशेन दिनरात्रिभेदः सू० सि० रङ्गनाथाभ्याम् "हानिवृद्धी सदा वामं सुरासुरविभागयोः" इति दिनरात्र्योर्हानिवृद्धी सुरासुरविभागयोर्भवत इत्युपक्रम्य विशदीकृत्य दर्शितो यथा

"मेषादौ तु सदा वृद्धिरुदगुत्तरतोऽधिका। देवांशे च क्षपाहानिर्विपरीतं तथाऽऽसुरे। तुलादौ द्युनिशोर्वामं क्षयवृद्धी तयोरुभे। देशक्रान्तिवशान्नित्यं तद्विज्ञानं पुरोदितम्" सू० "मेषादौ षड्भे उदगुत्तरगोले सूर्य्ये सति उत्तरतो यथोत्तरं सदा यावदुत्तरगोले देवांशे जम्बूद्वीपेऽधिका यथोत्तरमधिका वृद्धिर्निरक्षदेशीयदिने। तुलाराद्ययोत्तरं सूर्य्यस्योत्तरगमने यथोत्तरं दिने वृद्धिः परमोत्तरगमनात् परावर्त्तते। यथोत्तरं न्यूना वृद्धिरित्यर्थः। क्षपाहानी रात्रेरपचयः। चः समुच्चये। आसुरे समुद्रादिदक्षिणभागे तथा दिनरात्र्योः क्षयवृद्धी विपरीतं व्यस्तम्। दिने हानी रात्रौ वृद्धिरित्यर्थः। तुलादौ षड्भे दक्षिणगोले सूर्य्ये सति तयोर्जम्बूद्वीपसमुद्रादिदक्षिणभागयोर्दिनरात्र्योरुभे द्वे क्षयवृद्धी उभक्षयापचयौ वामं व्यस्तम्। अयमर्थः जम्बूद्वीपे दिनरात्र्योरुत्तरगोलस्थवृद्धिक्षयक्रमेण क्षयवृद्धी स्तः। समुद्रादिदक्षिणभागे दिनरात्र्योर्वृद्धिक्षयौ स्त इति। ननु क्षयवृद्ध्योः कियन्मितत्वमित्यतः पूर्वोक्तं स्मारयति देशक्रान्तिवशादिति। तद्विज्ञानं तयोः क्षयवृद्ध्योर्ज्ञानं सङ्ख्याज्ञानं नित्यं प्रत्यहं देशक्रान्तिवशात्। देशपलभा क्रान्तिरेतदुभयानुरोधात् पुरा पूर्वखण्डस्पष्टाधिकारे "क्रान्तिज्या विषुवद्भाघ्नी क्षितिज्या द्वादशोद्धृता। त्रिज्यागुणाहोरात्रार्धकर्णाप्ता चरजासवः"। तत्कार्मुकमित्यनेन दिनरात्र्योरर्धं उक्तम् तद्द्विगुणं दिनरात्र्योरित्यर्थसिद्धम्। अत्रोपपत्तिः। निरक्षदेशे ध्रुवद्वयलग्नक्षितिजवृत्तं तत्र उत्तरभागे स्वस्थानक्षितिजं स्वभूगोलमध्यस्थमुत्तरध्रुवादधो दक्षिणध्रुवाच्चोच्चमित्यत उत्तरगोले निरक्षक्षितिजादधो दक्षिणगोल ऊर्ध्वमिति पञ्चदशघटिका निरक्षदेशदिनार्धं क्षितिजान्तरकूपचरेण गोलक्रमेण युतहीनं दिनार्धं रात्र्यर्धं च विपरीतम्। एवं दक्षिणभागेऽभीष्टदेशे क्षितिजमुत्तरध्रुवादुन्नतं दक्षिण-

भृशाद्वतमिति निरक्षक्षितिजाद्भिन्नक्षितिजं गोलक्रमेणोर्ध्वाध इत्युत्तरभागादग्रस्तम् । अथोक्तावधिदेशं विवक्षुः प्रथमं तदुपयुक्तानि क्रान्त्यंशयोजनान्याह” रङ्ग० “भूवृत्तं क्रान्तिभागघ्नं भगणांशविभाजितम् । अवाप्तयोजनैरर्को व्यक्षाद्याव्युपरिस्थितः” सू०सि० ।
“भूवृत्तं भूपरिधियोजनमानं प्रागुक्तमभीष्टक्रान्त्यंशैर्गुणितं द्वादशराशिभागैः षष्ट्यधिकशतत्रयमितैर्भक्तं लब्धयोजनैः कृत्वा सूर्य्य उपरि आकाशे स्थितो वर्त्तमानो दक्षिणत उत्तरतो वा याति गच्छति । क्रान्त्यभावे तु निरक्षदेशोपर्य्येव परिभ्रमति । अत्रोपपत्तिः । निरक्षदेशान्मेरोरुत्तरदक्षिणाग्राभिमुखं सूर्य्यः क्रान्त्यंशैर्गच्छति । तद्योजनज्ञानं तु भगणांशैर्मेर्व्वद्वयनिरक्षदेशस्य स्पष्टभूपरिधियोजनानि तदा क्रान्त्यंशैः कानीत्यनुपातेनेत्युपपन्नम् । अथ दिनमानानयनगणितस्यावधिदेशज्ञानं श्लोकाभ्यामाह” रङ्ग० । “परमापक्रमादेवं योजनानि विशोधयेत् भूवृत्तपादाच्छेषाणि यानि स्युर्योजनानि तैः । अयनान्ते विलोमेन देवासुरविभागयोः । नाडीषष्ट्या सकृदहर्निशाप्यस्मिन् सकृत् तथा” सू० सि० “परमक्रान्तिभागाच्चतुर्विंशन्मितात् एवं पूर्वोक्तरीत्या योजनानि जातानि । भूपरिधेः पूर्वोक्तस्य चतुर्थांशात् परिवर्जयेत् । अवशिष्टानि यानि यत्सङ्ख्यामितानि योजनानि भवन्ति तैर्योजनैर्देवासुरविभागयोर्निरक्षदेशादुत्तरदक्षिणप्रदेशयोर्यौ देशौ तयोरित्यर्थः । अयनान्ते उत्तरदक्षिणायनसन्धौ कर्कादिस्थे सूर्य्ये दक्षिणोत्तरायनसन्धौ मकरादिस्थे सूर्य्ये विलोमेन व्यत्यासेन सकृदेकवारं नाडीषष्ट्या घटीषष्ट्याहर्दिनमानं भवति । अस्मिन्नेतादृशे देशे तस्मिन्नेवायनसन्ध्यासन्ने सकृदेकवारं तथा षष्टिघटीमिता विलोमेन रात्रिर्भवति । अपिशब्दो दिनेन समुच्चयार्थः । एतदुक्तं भवति—कर्कादिस्थे सूर्य्ये निरक्षदेशादुत्तरतद्योजनान्तरितदेशे षष्टिघटीमितं दिनं तत्रैव निरक्षदेशाद्दक्षिणतद्योजनान्तरितदेशे षष्टिघटीमिता रात्रिः । मकरादिस्थे सूर्य्ये तादृशोत्तरभागे षष्टिघटीमिता रात्रिर्दक्षिणभागे तादृशे षष्टिमितं दिनमिति । अत्रोपपत्तिः—परमक्रान्तियोजनानि भूवृत्तचतुर्थांशयोजनेभ्यो हीनानि । निरक्षदेशात् तन्मितयोजनान्तरितो यो दक्षिणोत्तरदेशस्तस्मान्मेरोर्दक्षिणोत्तराग्रं क्रमेण परमक्रान्तियोजनान्तरितम् । अतस्तत्र लम्बांशाश्चतुर्विंशतिः पलांशाश्च षट्षष्टिरिति । तद्देशे क्रान्तिवृत्तानुकारं क्षितिजमित्ययनान्ते पञ्चदशघटीमितमहोरात्रवृत्तचतुर्भागखण्डं निरक्षतद्देशक्षितिजयोरन्तरालरूपं चरमत उक्तरीत्या दिनार्धं रात्र्यर्धं वोक्तरीत्या यथायोग्यं त्रिंशत् तद्द्विगुणं षष्टिघटीमिततन्मानं गणितरीत्योपपन्नम् । युक्तं चैतत् अयनान्ताहोरात्रवृत्तस्यैकस्य तत्क्षितिजप्रदेश एकत्रैव संलग्नत्वाद्द्विधा संलग्नत्वाभावात् प्रवहभ्रमितसूर्य्यपरिवर्त्तपूर्त्तेः षष्टिघटीभिर्दर्शनमदर्शनं यथायोग्यं गोलस्थित्या प्रत्यक्षसिद्धमेवेति । अथोक्तदिनरात्रिमानगणितं तदवधिदेशपर्य्यन्तं दक्षिणोत्तरभागयोर्नाग्रे इत्याह” रङ्ग० “तदन्तरेऽपि षष्ट्यन्ते क्षयवृद्धी अहर्निशोः । परतो विपरीतोऽयं भगोलः परिवर्त्तते” सू० “तदन्तरे निरक्षदेशोक्तावधिदेशयोरन्तरालदक्षिणोत्तरविभागदेशे षष्ट्यन्ते षष्टिघटीमध्ये क्षयवृद्धी अपचयोपचयावुक्तरीत्या दिनरात्र्योर्यथायोग्यं भवतः । परतोऽवधिदेशादग्रिमदेशे दक्षिणोत्तरे दैत्यदेवस्थाननिकटेऽयं प्रत्यक्षो भगोलो नक्षत्राद्यधिष्ठितो मूर्त्तो गोलो विपरीतोऽवधिदेशान्तर्गतदेशसम्बन्धी गणितसिद्धा परिवर्त्तते भ्रमति । तत्रोक्तरीत्या दिनरात्र्योर्वृद्धिक्षयौ न भवत इत्यर्थः । त्रिप्रश्नाधिकाराच्चरानयनानुपपत्तेः चरस्वरूपासम्भवाच्च तथा विपरीतगोलस्थितिं श्लोकाभ्यां प्रदर्शयति” रङ्ग० “ऊने भूवृत्तपादे तु द्विज्यापक्रमयोजनैः । धनुर्मृगस्थः सविता देवभागे न दृश्यते । तथा च सुरभागे तु मिथुने कर्कटे स्थितः । नष्टच्छायामहीवृत्तपादे दर्शनमादिशेत्” सू० “द्विराशिज्या ये क्रान्त्यंशास्तेषां योजनैः पूर्वागतैर्भूपरिधिचतुर्थांशे हीने कृते सति । तुकारान्निरक्षदेशात् तद्योजनान्तरिते देशे देवभाग उत्तरभागे धनुर्मकरराशिस्थोऽर्कस्तद्देशवासिभिर्न दृश्यते । धनुर्मकरस्थेऽर्के तेषां रात्रिः सदा स्यादित्यर्थः । असुरभागे निरक्षदेशाद्दक्षिणप्रदेशे । चः समुच्चयार्थः । तुकारात् तद्योजनान्तरितप्रदेशे मिथुने कर्के कर्कराशौ स्थितोऽर्कस्तथा तद्देशवासिभिर्न दृश्यते । नष्टच्छायामहीवृत्तपादे अभावं प्राप्ता महोच्छाया भूच्छाया यत्र तादृशे भूपरिधिचतुर्थांशे सूर्य्यस्य दर्शनं सदा कथयेत् । यत्र भूच्छायात्मिका रात्रिर्नास्ति तत्र दिनमित्यर्थः । तथा च निरक्षदेशात् तद्योजनान्तरितोत्तरप्रदेशे कर्कमिथुनस्थोऽर्को दृश्यते तद्योजनान्तरितदक्षिणप्रदेशे धनुर्मकरस्थोऽर्को दृश्यते इति फलितार्थः । अतएव “त्र्यंशयुङ्नवरसाः पलांशका यत्र तत्र विषये कदाचन । दृश्यते न मकरो न कार्मुकं

किञ्च कर्कि नियुनौ सदोदितौ" इति भास्कराचार्योक्तं नङ्कृते" रङ्गनाथः ।

**क्रान्तिचेल** न० क्रान्तिज्ञानार्थं चेलम् । सि० शि० उक्ते अपमचेलाकारे पदार्थे यथा

"क्षेत्राणि वक्ष्ये ऽपमसंभवानि संक्षेपतोऽक्षप्रभवाणि चातः। भुजोऽपमः कोटिगुणो द्युजीवा कर्णस्त्रिभज्या त्रिभुजेऽपमोत्थे । मेषादिजीवाः श्रुतितोऽपवृत्ते तद्भूमिजे क्रान्तिगुणा भुजाः स्युः । तत्कोटयः स्वद्युनिशाख्यवृत्ते व्यासार्द्धतत्ते परिणामनानाम् । चापेषु तासामयवस्ततो ये तेऽपो विशुद्धा उदया निरक्षे" सि०शि०

**क्रान्तिज्या** स्त्री क्रान्तिवृत्तचेलस्थे सि० शि० उक्ते अक्षचेलावयवभेदे । अक्षचेलशब्दे ४२पृ० अक्षचेलाणि उक्तानि । तन्मानानयनम् ।

"युक्तायनांशादपमः प्रसाध्यः कालौ च खेटात् खलु भुक्तभोग्यौ । जिनांशमौर्व्यां १३९७ गुणिताऽर्कदोर्ज्या त्रिज्यो ३४३८ द्धृता क्रान्तिगुणोऽस्य वर्गम् । त्रिज्याकृतेः ११८१९८४४ प्रोज्झ्य पदं द्युजीवा क्रान्तिर्भवेत् क्रान्तिगुणस्य चापम् । अक्षप्रभासंगुणितापमज्या तद्भाद्‌गांशो भवति चितिज्या सि० शि० ।

"अत्र खेटादित्युपलक्षणम् । यस्मात् खेटाद्वग्नाद्वाऽपमः साध्यस्तस्मात् सायनांशादेव । तथा यस्मादुदयमस्त्रिनौ भुक्तभोग्यकालौ साध्यौ तस्मादपि सायनांशादेव । सायनार्कस्य दोर्ज्या जिनभागज्यया गुणिता त्रिज्यया भक्ता क्रान्तिज्या स्यादित्यादि स्पष्टार्थम् ।

अस्योपपत्तिः । विषुवत्क्रान्तिवृत्तयोर्याम्योत्तरमन्तरं क्रान्तिः । तयोः संपाते क्रान्त्यभावः । ततस्त्रिभेऽन्तरे परमा जिन २४तुल्यभागाः । अतस्तत्संपातादारभ्य क्रान्तिः साध्या । उदयाश्च तत एव । स तु संपातो मेषादेः प्रागयनांशतुल्येऽन्तरे । अतः सायनांशात् खेटात् क्रान्तिर्भुक्तभोग्यकालौ चेयुक्तम् । यदि त्रिज्यतुल्यया भुजज्यया जिनांशज्यातुल्या क्रान्तिज्या लभ्यते तदेष्टज्ययाकिमिति । फलं क्रान्तिज्या विषुवद्वृत्तात् तिर्यग्रूपा भवति । क्रान्तिज्या भुजस्त्रिज्या कर्णस्तद्वर्गान्तरपदमहोरात्रवृत्तव्यासार्धम् । सैव द्युज्या" प्रमि० ।

देशभेदे कालभेदेन रवेः क्रान्तिज्याज्ञानार्थं प्रश्नपूर्वकं सि० शि० निर्णीतं यथा

"मार्तण्डः सममण्डलं किल यदा दृष्टः प्रविष्टः सखे ! काले पञ्चघटीमिते दिनगते यद्वा नते तावति । केनाप्युज्जयिनीगतेन तरणेः क्रान्तिं तदा वेत्सि चेत्मन्ये त्वां निशितं सगोलगणकोन्मत्तेभकुम्भाङ्कुशम्" ।

"हे गणक ! केनचित् किलोज्जयिनीगतेन यदा दिनगते पञ्चघटीमिते काले मार्तण्डः सममण्डलं प्रविष्टो दृष्टस्तदा कियती क्रान्तिज्येत्येकः प्रश्नः । अथानन्तरः तावति पञ्चघटीमिते नते वा काले सममण्डलं प्रविष्टो दृष्टस्तदा च या क्रान्तिज्या तां त्वं चेद्वेत्सि तदा सगर्वगणकोन्मत्तेभकुम्भाङ्कुशं निशाणोद्धृतं त्वामहं मन्ये" प्रमि०

"या स्यादुन्नतकालजीवाभीष्टा हृतिः सा प्रथमं प्रकल्प्या । अर्का१२ग्रभावातहृताऽक्षकर्णक्षत्योद्धृता स्यादपमज्यकाऽल्पाः । चरादिकेनेष्टहृतिः प्रसाध्या गुणस्तया क्रान्तिगुणोऽसकृच्च । तदाद्यहृत्या विहृतः स्फुटः स्यात् सहस्रर्श्मौ सममण्डलस्थे" शि०शि० ।

"रवेः सममण्डलप्रवेशे य उन्नतकाल उद्दिष्टस्तस्य जीवा सा तावत् प्रथममिष्टहृतिः कल्प्या । ततो द्वादशगुणयाऽक्षया गुण्या पलकर्णवर्गेण भाज्या । सा किल स्थूला क्रान्तिज्या भवति । तस्याः क्रान्तिज्याया द्युज्यां कुज्यां चरज्यां चरं च कृत्वा "अधोन्नताद्‌नयुताञ्चरेण" इत्यादिनेष्टहृतिः साध्या । तया पूर्वमागता क्रान्तिज्या गुण्या । आद्यहृत्या कल्पितया भाज्या । फलं स्फुटासन्ना क्रान्तिज्या भवति । अत्रोपपत्तिः । अत्रोन्नतकालजीवातुल्या प्रथमं तद्धृतिः कल्पिता । तस्या अनुपातेन शङ्कुः । यदि पलकर्णेन द्वादश कोटिस्तदा तद्धृतिकर्णेन किमिति । अत्र तद्धृतेर्द्वादशगुणः पलकर्णो हरः । फलं सममण्डलशङ्कुः । पुनरन्योऽनुपातः । यदि पलकर्णेनाक्षभा भुजो लभ्यते तदा सममण्डलशङ्कुतुल्येन कर्णेन किमिति । फलं क्रान्तिज्या स्थूला । अस्याः क्रान्तिज्यायाश्चरादिकेन "अधोन्नताद्‌नयुताञ्चरेण" इत्यादिनेष्टहृतिः साध्या । तां तद्धृतिं प्रकल्प्य पुनः क्रान्तिज्या साध्या । एवमसकृद्यावदविशेषः । तत्रासकृत्कर्मणि त्रैराशिकेन क्रियोपसंहारः कृतः । यदि कल्पितया हृत्येयं क्रान्तिज्या लभ्यते तदेदानीमानीतया किमिति । एवं क्रान्तिज्या स्फुटा स्यादित्युपपन्नम् । इदानीं द्वितीयप्रश्नस्योत्तरमाह" प्रमि०

"तदा नतज्यात्रिभजीवयोर्यद्वर्गान्तरं तत् पलभाकृतिघ्नम् । तेनोद्धृतो व्यासदलस्य वर्गो वेदेन्द्र १४४निघ्नोऽथ सरूपलब्ध्या । व्यासार्धवर्गाद्विहृतात् पदं स्यात् क्रान्तिज्यका सा त्रिभशिञ्जिनीघ्नी । जिनांशमौर्व्या विहृताऽथ चापाद्दग्रे भवच्चे च यथा रविः स्यात्" सि०शि० ।

"यदा सममण्डलं प्रविष्टो इष्टस्तदा या नतघटिकास्तासां जीवा तस्या वर्गेण त्रिज्यावर्गो रहितः। ततः पलभावर्गेण गुण्यः। तेन भाज्यस्त्रिज्यावर्गः। किंविशिष्टः वेदेन्द्र १४४ गुणितः। तत्र यत् फलं लभ्यते तेन सैकेन त्रिज्यावर्गाद्भक्ताद्यन्मूलं लभ्यते सा क्रान्तिज्या स्यात्। सा क्रान्तिज्या त्रिज्यागुणा जिनांशज्यया भक्ता यत् फलं तस्य चापाद्यथा रविर्भवति तथाग्रे वक्ष्ये" प्रमि०।

क्रान्तिज्याविशेषेण रव्यादिज्ञानादिकमपि तत्रोक्तं विस्तरभयात् नोक्तम्। क्रमज्याशब्दे २२०२ पृ० दर्शिते क्रमज्यारूपे पदार्थे च।

**क्रान्तिपात** पु० क्रान्त्यर्थं पातः विषुवत्क्रान्तिवलययोः अश्वघातादिवत् चतुर्थ्यर्थे ६त०। सि० शि० उक्ते क्रान्तिनिमित्ते विषुवत्क्रान्तिवृत्तयोः संपाते। सि० शि० तद्वृत्तिर्यथा विषुवत्क्रान्तिवलययोः संपातः क्रान्तिपातः स्यात्। तद्भगणाः सौरोक्ता व्यस्ता अयुतत्रयं कल्पे। अयनचलनं यदुक्तं मुञ्जालाद्यैः स एवायम्। तत्पक्षे तद्भगणाः कल्पे गोऽङ्गर्तुनन्दगोचन्द्राः। तस्य जातं पातं क्षिप्त्वा खेटेऽपमः साध्यः। क्रान्तिवशाच्चरमुदयास्तदललग्नागमे ततः ज्ञेयः" सि० शि०। "क्रान्त्यर्थं पातः क्रान्तिपातः। पातो नाम संपातः। कयोः विषुवत्क्रान्तिवलययोः। नहि तयोर्मेषादावेव संपातः। किंतु तस्यापि चलनमस्ति येऽयनचलनभागाः प्रसिद्धास्त एव विलोमगस्य क्रान्तिपातस्य भागाः। मेषादेः पृष्ठतस्तावद्भागान्तरे क्रान्तिवृत्ते विषुवद्वृत्तं लग्नमित्यर्थः। नहि क्रान्तिपातो नास्तीति वक्तुं शक्यते प्रत्यक्षेण तस्योपलब्धत्वात्। उपलब्धिप्रकारमग्रे वक्ष्यति। तत् कथं ब्रह्मगुप्तादिभिर्निपुणैरपि नोक्तः? इति चेत्। तदा स्वल्पत्वात् तैर्नोपलब्धः। इदानीं बहुत्वात् साम्प्रतैरुपलब्धः। अत एव तस्य गतिरस्तीत्यवगतम्। यद्येवमनुपलब्धोऽपि सौरसिद्धान्तोक्तत्वादागमप्रामाण्येन भगणपरिध्यादिवत् कथं तैर्नोक्तः? सत्यम् अत्र गणितस्कन्धे उपपत्तिमानेवागमः प्रमाणम्। तर्हि मन्दोच्चपातभगणा आगमप्रामाण्येनैव कथं तैरुक्ताः? इति नच वक्तव्यम्। यतो ग्रहाणां मन्दफलाभावस्थानानि प्रत्यक्षेणैवोपलभ्यन्ते। तान्येव मन्दोच्चस्थानानि। यान्येव विक्षेपाभावस्थानानि तान्येव पातस्थानानि। किंतु तेषां गतिरस्ति नास्ति वेति सन्दिग्धम्। तत्र मन्दोच्चपातानां गतिरस्ति चन्द्रमन्दोच्चपातवदित्यनुमानेन सिद्धा। सा च कियती तदुच्यते। यैर्भगणैरुपलब्धिस्थानानि तानि गणितेनागच्छन्ति तद्भगणसंभवा वार्षिकी दैनन्दिनी वा गतिर्ज्ञेया। नन्वेवं यद्यन्यैरपि भगणैस्तान्येव स्थानान्यागच्छन्ति तदा कतरस्या गतेः प्रामाण्यम्। सत्यम् तर्हि साम्प्रतोपलब्ध्यनुसारिणी कापि गतिरङ्गीकर्तव्या। यदा पुनर्महता कालेन महदन्तरं भविष्यति तदा महामतिमन्तो ब्रह्मगुप्तादीनां समानधर्माण एवोत्पत्स्यन्ते। ते तदुपलब्ध्यनुसारिणीं गतिमुररीकृत्य शास्त्राणि करिष्यन्ति। अत एवायं गणितस्कन्धो महामतिमद्भिर्धृतः सन्ननाद्यन्तेऽपि काले खिलत्वं न याति। अतोऽस्य क्रान्तिपातस्य भगणाः कल्पेऽयुतत्रयं तावत् सूर्यसिद्धान्तोक्ताः। तथा मुञ्जालाद्यैर्यदयनचलनमुक्तं स एवायं क्रान्तिपातः। ते गोऽङ्गर्तुनन्दगोचन्द्रा १९९६६९ उत्पद्यन्ते। अथ च ये वा ते वा भगणा भवन्तु। यदा येऽंशा निपुणैरुपलभ्यन्ते तदा स एव क्रान्तिपात इत्यर्थः। तं विलोमगं क्रान्तिपातं ग्रहे प्रक्षिप्य क्रान्तिः साध्या" प्रमिता०।

**क्रान्तिवृत्त** न० सि० शि० उक्ते-क्रान्तिवलयाकारे वृत्तक्षेत्रे। तन्निवेशनप्रकारादि च गोलबन्धे तत्रोक्तं यथा "याम्योत्तरक्षितिजवत् सुदृढं विदध्यादाधारवृत्तयुगलं ध्रुवयष्टिबद्धम्। षट्याङ्कमत्र सममण्डलवत् तृतीयं नाड्याह्वयं च विषुवद्वलयं तदेव" सि० शि० यथा खगोले क्षितिजं याम्योत्तरं च तदाकारमपरमाधारवृत्तद्वयं ध्रुवयष्टिस्थं कृत्वा तदुपर्यन्यत् तृतीयं सममण्डलाकारं घटीषष्ट्याङ्कितं कार्यम्। तन्नाडीवृत्तं विषुवद्वृत्तसंज्ञं च "इदानीं क्रान्तिवृत्तमाह" प्रमि०। "क्रान्तिवृत्तं विधेयं स्वहाङ्कं भ्रमत्यत्र भानुस्स भार्धे कुभा भानुतः। क्रान्तिपातः प्रतीपं तथा प्रस्फुटाः क्षेपपाताश्च तत्स्थानकान्यङ्कयेत्" सि० शि० "अथान्यत् तत्प्रमाणमेव वृत्तं कृत्वा तत्र मेषादिं प्रकल्प्य द्वादशराशयोऽङ्क्याः। तत् क्रान्तिवृत्तसंज्ञम्। तस्मिन् वृत्ते रविर्भ्रमति। तथा रवेर्भार्धान्तरे भूभा च। तथा तत्र क्रान्तिपातो मेषादेर्विलोमं भ्रमति। तथा ग्रहाणां विक्षेपपाताः प्रस्फुटा विलोमं भ्रमन्ति। अतः क्रान्तिपातादीनां स्थानानि तत्राङ्क्यानि। इदानीं क्रान्तिवृत्तस्य निवेशनमाह" प्रमि०

"क्रान्तिपाते च पाताद्भषट्कान्तरे नाडिकावृत्तलग्नं विदध्यादिदम्। पाततः प्राक् त्रिभे सिद्धभागैरुदग् दक्षिणे तैश्च भागैर्विभागेऽपरे" सि० शि०

"क्रान्तिपातचिह्नात् षड्भेऽन्तरेऽन्यच्चिह्नं कार्यम्। ते चिह्ने नाडीवृत्तेन संसक्ते कृत्वा पातचिह्नादपत स्त्रिभेऽन्तरे नाडीवृत्ताद्गच्छत् यैश्चलौत्तरतो यथा भवत्यपरविभागे त्रिभेऽन्तरे दक्षिणतश्च, तैर्भागैर्यथा भवति तथा बध्नीयात्"। प्रमि॰ अधिकं क्रान्तिशब्दे दृश्यम्। क्रान्तिवलयक्रान्तिमण्डलादयोऽप्यत्र।

**क्रान्तिसाम्य** न॰ ६त॰। ग्रहाणां तुल्यक्रान्तौ। यद्यपि सर्वग्रहाणां क्रान्तिसाम्यमस्ति तथापि चन्द्रार्कयोः क्रान्तिसाम्यस्य मङ्गलकार्ये वर्ज्जनीयता १८६५पृ॰उपयमशब्दे विस्तरेण दर्शिता। क्रान्तिसाम्ये च ग्रहाणामवनत्यभावः सू॰ सि॰ दर्शितो यथा "अक्षोदगमध्यभक्रान्तेः साम्ये नावनतेरपि" सू॰ सि॰

"अक्षांशा उत्तरा ये मध्यभस्य मध्यलग्नस्य क्रान्त्यंशाः। अत्र मध्यलग्नशब्देन दशमभावस्त्रिभोनलग्नं वा ग्राह्यमुभयपक्षेऽप्यदोषः। अनयोस्तुल्यत्वे ऽवनतेर्नतेः अपिशब्दात् सम्भवो न अभाव इत्यर्थः" रङ्गनाथः।

**क्रान्तिसूत्र** न॰ सि॰शि॰ उक्ते ध्रुवस्पर्शिनि क्रान्तीनां सूत्राकारे योगभेदे। "सर्व्वतः क्रान्तिसूत्राणां ध्रुवे योगोऽभेद्यतः। विषुवन्मण्डलप्राच्या ध्रुवे याम्या तथोत्तरा" सि॰ शि॰।

**क्रान्तु** पुंस्त्री क्रम–तुन् इडित्त्व। पक्षिणि उज्ज्वलद॰।

**क्रायक** त्रि॰क्री ण्वुल्। १क्रेतरि अमरः २क्रयजीविनि भरतः तच्चिन्त्यं तत्र क्रयिक इत्येव साधु जीवतीत्यर्थे वस्नादपि क्रयशब्दात् ठन्विधानात्।

**क्रावन्** त्रि॰ क्रम–वनिप् "विड्वनोरनुनासिकस्यात्" पा॰ मस्यात् क्रान्तरि "दधिक्राव्णोऽकारिषं जिष्णोरश्वस्य वाजिनः" यजु॰२३।३२। स्त्रियां ङीप् रश्चान्तादेशः क्रावरी।

**क्रिमि** पु॰ क्रम–इन् अतइच्च। १क्रमौ क्षुद्रजन्तौ उज्ज्वल॰ २रोगभेदे क्रमिशब्दे २१६४पृ॰ विवृतिः। "क्रमयस्तु द्विधा प्रोक्ताः बाह्याभ्यन्तरभेदतः। बहिर्म्मलकफासृग्विड्जन्मभेदाच्चतुर्व्विधाः। नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः" "तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः। बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः" माधवः। "क्रिमयः क्रमिलं यथा" भाग॰ ३,३१,२८, [ मेदि॰

**क्रिमिकण्टक** न॰ क्रिमौ कण्टकमिव। क्रमिकण्टकशब्दार्थे

**क्रिमिघ्न** पु॰ क्रिमिं हन्ति हन–टक्। १विडङ्गे रमानाथः। २क्रिमिनाशके त्रि॰ स्त्रियां ङीप्। सा च ३सोमराज्यां स्त्री शब्दच॰। [२लाक्षायां स्त्री रत्नमाला।

**क्रिमिज** न॰ क्रिमेर्जायते जन–ड ५त॰। १अगुरुचन्दने अमरः

**क्रिमिशत्रु** पु॰ क्रिमेः शत्रुरिव नाशकत्वात्। रक्तपुष्पके (पालदामाँदार) शब्दच॰। [खदिरे शब्दच॰।

**क्रिमिशालव** पु॰ क्रिमेः शालवद्व नाशकत्वात्। विट्-

**क्रिमिशैल** पु॰ क्रिमिनिर्म्मितः शैलः। वल्मीके (उइ-ढिपि) त्रिकाण्ड॰

**क्रिय** पु॰ क्रिया ग्रहाणामाद्यागतिक्रिया विद्यतेऽत्र अच्। मेषराशौ दीपिका कौर्पशब्दे २२७८पृ॰ प्रमाणं दृश्यम्। "क्रियैणतौलीन्दुभतोनवांशाः" नील॰ ता॰।

**क्रिया** स्त्री कृ–भावे करणादौ वा यथायथं श। १आरम्भे २निष्कृतौ (प्रायश्चित्ते) ३शिक्षायां ४पूजायां ५संप्रधारणे (विवादविचाराङ्गे साधने) ६सामाद्युपाये। ७न्यायादिमतसिद्धे उत्क्षेपणादौ कर्म्मणि ८व्याकरणमतसिद्धे धात्वर्थे ९चेष्टायां (परिस्पन्दे) १०चिकित्सायां च अमरः। ११करणे(अनुष्ठाने)हेम॰। १२श्राद्धे क्षीरस्वामी। १३शौचे शब्दरत्ना॰। १४प्रयोगे च तत्र न्यायमतसिद्धा क्रिया कर्म्मशब्दे १७५५पृ॰ दर्शिता। कर्म्मत्वलक्षणन्तु औलूक्यशब्दे सर्व्व॰द॰ वाक्ये १५८६पृ॰ उक्तम् तत्र अनित्यमात्रसमवेतत्वे सतीति शुद्धम् नित्यमात्रसमवेतत्वाभावादित्यशुद्धम् अनित्यमात्रसमवेतत्वाभावादिति शुद्धम्। वैयाकरणमते तु धात्वर्थः क्रिया तत्स्वरूपशाब्दबोधप्रकारादि शब्दार्थरत्नेऽस्माभिर्निरूपितं यथा

"क्रिया च भावना उत्पादयितृव्यापाररूपा साध्यत्वेनाभिधीयमानेति बोध्यम्। "व्यापारो भावना सैवोत्पादना सैव च क्रियेति" हर्य्युक्तेः "यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते" इति "साध्यत्वेन क्रिया तत्र तिङ्पदैरभिधीयते" इति च वाक्यपदीयाच्च। "यावदिति सर्व्वमित्यर्थः तदेव विवृणोति सिद्धमसिद्धं वेति। सिद्धं वर्त्तमानध्वंसप्रतियोगि, तद्भिन्नमसिद्धं तच्च वर्त्तमानं भविष्यच्चेति द्विविधं तेनापचत् पक्ष्यति पचतीत्यादौ सर्व्वत्र साध्यत्वेन असत्वरूपत्वेनाभिधीयमाना क्रियेति क्रियाशब्दस्य रूढिरनेन दर्शितेति भावः। यौगिकत्वमप्याह आश्रितक्रमरूपत्वादिति। आश्रितःक्रमो रूपं यस्यास्तत्त्वात् पूर्वापरीभूतावयवकत्वादित्यर्थः। तदीयावयवानामधिश्रयणाद्यधःश्रयणपर्य्यन्तानां क्रमेणोत्पत्तेः क्रियापदेन तत्समुदायोऽभिधीयते यत्र च न क्रमिको व्यापारोऽस्ति तत्र रूढिरादरणीयेति पौर्वापर्य्यारोपेण वा सर्व्वत्र फलस्य स्वजन-

कव्यापारगतपौर्वापर्यारोपवत् यौगिकत्वम्। अतएव फलमात्रबोधकस्यापि क्वचित् धातुत्वसिद्धिरिति फलितार्थः। इयांस्तु विशेषः पाकइत्यादौ धातुना साध्यत्वेनोपस्थाप्यायाः क्रियायाःसिद्धक्रियारूपे घञर्थे विशेषणत्वं पचतीत्यादौ तु नैवमिति। अतएव “साध्यत्वेन क्रिया तत्र तिङ्पदैरभिधीयते” इति वाक्यपदीयकारिकाव्याख्यायां भूषणसारदर्पणे तिङ्पदैरित्यतद्गुणसंविज्ञानबहुव्रीहिणा तिङन्तपदैर्धातुभिरित्यभिहितम्। तेन सर्वत्र धातोः साध्यरूपक्रियाबोधकत्वम्। किञ्च क्रमिकावयवानामेकदाऽसत्त्वेऽपि यत्किञ्चिदवयवसत्त्वकाले वर्त्तमानत्वव्यवहारः अवयवावयविनोरभेदारोपात्। भूतभविष्यत्त्वव्यवहारस्तु सर्वेषामवयवानां भूतभविष्यत्त्वयोरेव, नतु यत्किञ्चित्क्रियाव्यक्तिभूतत्वादौ। उक्तञ्च वाक्यपदीये “गुणभूतैरवयवैः समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते” इति। अस्यार्थः क्रमिकतत्तद्व्यापारं प्रति गुणभूतैर्गुणभावेन भासमानैरवयवैरुपलक्षितः बुद्ध्या एकत्वबुद्ध्या प्रकल्पितोऽभेदो यस्मिन् तद्रूपः क्रमजन्मनां व्यापाराणां समूहः क्रियेति। अत्र क्षणनश्वराणां व्यापाराणां मेलनासिद्ध्या बुद्ध्येत्युक्तम् तथा च बुद्धिजन्यसंस्कारद्वारा तेषां मेलनसम्भवइति भावः। अतएव भाष्ये “क्रिया हि नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्यते पिण्डीभूता निदर्शयितुमिति” व्यापारसमुदायात्मिकायाः क्रियायादर्शनायोग्यत्वोक्त्या तदवयवानां तद्विषयत्वं व्यतिरेकमुखेन दर्शितम्। तस्याश्चाभिन्नैकबुद्धिविषयतया एकत्वव्यवहारइत्यपि बोध्यम्। अथवाऽनेकव्यापारव्यक्तिवृत्तिर्जातिरेव क्रियेति सिद्धान्तरत्नमादरणीयः। तस्याश्च व्यक्तिद्वारैव साध्यत्वम् अस्ति च पचित्वादिकं जातिः पचतीत्याद्यनुगतव्यवहारात् तज्जातेश्चैक्यादेकत्वव्यवहार इति मन्तव्यम्। तदुक्तं वाक्यपदीये “जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्त्तिनीम्। असाध्यां, व्यक्तिरूपेण सा साध्येत्यभिधीयते” इति। युक्तञ्चैतत् सर्वत्रैव लाघवाज्जातिशक्तिस्वीकारेण पच्यादिधातूनामपि तत्रैव शक्तिरुचितेति दिक्। सा च क्रिया धातुवाच्या फलव्यापारोभयरूपा, तद्विशिष्टरूपा वा “फलव्यापारयोर्धातुः” इत्यभिमवचनात्। व्यवस्थापयिष्यते च मतभेदेन फलव्यापारयोः पृथक्शक्त्या विशिष्टशक्त्या वा धातुवाच्यता। अत्र फलांशस्य कर्त्तुरुद्देश्यत्वेऽपि प्राधान्याभावात् व्यापारस्यैव प्राधान्यं समुचितं तस्य च साध्यतया कर्मातिरिक्तसर्वकारकाणां तत्रैव स्वस्वव्यापारद्वारा साधकत्वेनान्वयः कर्मणस्तु फल एव, क्रियाजन्यफलाश्रयतयैव तस्योद्देश्यत्वादिति विवेकः। उक्तञ्च वाक्यपदीये “प्राधान्यात्तु क्रिया पूर्वमर्थस्य प्रविभज्यते। साध्यप्रयुक्तान्यङ्गानि फलं तस्याः प्रयोजकमिति”। अर्थस्य फलस्य तदपेक्षयेत्यर्थः। प्राधान्यात् विशेष्यत्वात् साध्यं प्रयुक्तं यैः तानि साध्यसाधकानि अङ्गानि कारकाणीत्यर्थः। अत्र फलस्य क्रियाप्रयोजकत्वाभिधानं तदुद्देशेनैव क्रियायां प्रवृत्तिरित्येतदभिप्राय। तथा च सर्वो लोकः स्वाभीष्टफलमभिप्रेप्सुस्तत्साधनाय यतते लभते च ततस्तत्तत्फलमुपायसंसाधनेन। एवं च क्रियाफलं विक्लित्त्यादिकमभीप्सुः पाकाय यतमानो जनः पाकसंसाधनेन फलं लभते। ततश्च फलसाधनतया पाकादेरपीष्टत्वात् साध्यत्वम्। फलविशिष्टक्रियायाधात्वर्थत्वमते तु विशिष्टत्वेनैवेष्टत्वात् विशिष्टस्यैव साध्यत्वमिति विशेषः। कारकान्वयस्त्वेतन्मते पूर्वोक्तदिशावसेयः एकदेशान्वयस्वीकाराच्च न कर्मणोऽनन्वय इति बोध्यम्। तथाचैवं रीत्या साध्यत्वेन क्रियां जानता जनेन तस्याः प्राधान्यबुबोधयिषयैवाख्यातान्तस्य धातुः प्रयुज्यते अन्यथा कृदन्तस्येति। एवञ्च भावकृदन्तस्थले धातुना साध्यरूपक्रियावबोधनेऽपि तस्याः प्रत्ययार्थसिद्धरूपक्रियाविशेषणत्वेन न प्राधान्यम् “भावप्रधानमाख्यातमित्यादि” निरुक्तवचनस्य, “प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थप्राधान्यमिति” न्यायस्य च परस्परं विरोधपरीहाराय न्यायस्य आख्यातातिरिक्तविषयत्वव्यवस्थापनम्। हरिणापि धातुभावकृतोः क्रियावाचित्वाविशेषेऽपि धातुना साध्यत्वेन, कृता तु सिद्धत्वेन क्रियाया बोधनमिति व्यवस्थापितं यथा “साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना। सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः” इति “आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता। प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः” इत्येताभ्याम्। भागाभ्यां पश्य मृगोधावतीत्यादौ तिङन्ताभ्यां साध्यसाधनवर्त्तितेति मृगोधावतीत्येतस्य साधनत्वमपरस्य साध्यत्वं क्रियाकारकभावेन तयोरन्वयात् घञर्थक्रियायास्तु इतरक्रियायामेव साधनत्वमिति विवेकः। साध्यत्वञ्च लिङ्गसंख्यानन्वयित्वं तद्विपरीतं सिद्धत्वं तथाच घञाद्युपस्थाप्यक्रियायाः लिङ्गसंख्यान्वयित्वेनापरक्रियायां साधनत्वम्। युक्तञ्चैतत् यत् घञन्तादौ द्विकि-

घक्रियायाभानं कारकाणां साध्यक्रियायामेवान्वयोपगमात् कृदन्तस्थले कारकविभक्तिप्रयोगस्य सर्व्वजनीनतया साध्यत्वेन तदुपस्थितावेव कारकान्वयोपपत्तिः। "साध्यस्य साधनाकाङ्क्षेति" "नियतं साधने साध्यं क्रिया नियतसाधनेति" "साध्यत्वेन निमित्तानि क्रिया परमपेक्षते" इति चाभियुक्तोक्तेः। अतएव स्तोकं पाक इत्यादौ द्वितीयान्ततोपपद्यते साध्यक्रियाफलस्य विशेषणेऽपि द्वितीयानुशासनात्। घञाद्युपस्थाप्यक्रियाविशेषणस्य तु विशिष्यलिङ्गतया प्रथमाद्यन्तता "कृदभिहितो भावो द्रव्यवत् प्रकाशत" इति भाष्योक्तेः। कृदभिहितः कृता बोधितः। भावो भावना धात्वर्थस्वरूपमिति यावत् द्रव्येण तुल्यं प्रकाशते द्रव्यधर्म्मान् लिङ्गसंख्याकारकत्वानि भजते इति यावत्। अत्र द्रव्यत्वं लिङ्गसंख्यान्वयित्वमेव योग्यत्वात् न तु पृथिव्याद्यात्मकत्वं ज्ञानपाकादौ तदभावात्। नापि "वस्तूपलक्षणं यत्र सर्व्वनाम प्रयुज्यते। द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः" इति पारिभाषिकसर्व्वनामपरामर्शयोग्यत्वादिरूपं, साध्यक्रियाया अपि तथात्वेनाविशेषापत्तेः। किन्तु सत्त्वप्रधानानि नामानीत्येकवाक्यतया सत्त्वद्रव्ययोः पर्य्यायत्वस्य बहुषु स्थलेषु दर्शनात् सत्त्वभूतत्वमेव द्रव्यत्वमिति फलितार्थः "क्रिया न युज्यते" इत्यादिना लिङ्गाद्ययोगस्यासत्त्वलक्षणत्वाभिधानात् तद्योगस्यैव सत्त्वलक्षणत्वौचित्यादिति तु तत्त्वम्। वैयाकरणादिमते चल इत्यादौ क्रियायां शक्तिः "सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च" काव्यप्र० उक्तेः। "असम्पादयतः कञ्चिज्जातिद्रव्यक्रियागुणैः" माघः। प्रयोगे "तस्मिन्नुपायाः सर्व्वे नः क्रूरे प्रतिप्रहतक्रियाः" कुमा० "प्रतिहतक्रियाः विफलप्रयोगाः" मल्लि० करणे (अनुष्ठाने) "वचसस्तस्य सपदि क्रिया केवलमुत्तरम्" माघः। "यथाक्रमं पुंसवनादिकाः क्रियाः" रघुः। "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" "तद्भूतानां क्रियार्थेन समाम्नायः" जै० सू०। शिक्षायाम् "क्रिया हि वस्तूपहिता प्रसीदति" रघुः "चिकित्सायां "क्रियाः(मोघाः) सर्व्वा गतायुषः" सुश्रु०। कर्म्मणि(स्पन्दे) "क्षितिर्जलं तथा तेजः पवनोमन एव च। परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी" भाषा०। "यदाश्रया क्रिया तमविकुर्व्वती नैवात्मानं लभते" शा०भा०। "क्रियैव कालः इति मते सुतरां नाधिकरणता" ति० त० रघु०। संयोग विभागयोरसमवायिकारणतावच्छेदकतया क्रियात्वजातिसिद्धिः। "क्रियां जातिं योग्यवृत्तिं समवायं च तादृशम्। गृह्णाति चक्षुःसम्बन्धादालोकोद्भूतरूपयोः" भाषा० तेन योग्यवृत्तेस्तस्याः प्रत्यक्षता "धात्वर्थे व्यापारे "तेन तुल्यं क्रिया चेद्वतिः" क्रियासमभिहारे यङ्" "स्वरितञितः कर्त्रभिप्राये क्रियाफले" पा०। "क्रियया यमभिप्रैति" वार्त्ति० "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्। विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्" "कर्तृकर्म्मव्यवहितामसाक्षाद्धारयत् क्रियाम्। उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्" "क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते। दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते"। "निर्द्दिष्टविषयं किञ्चिदुपात्तविषयं तथा। अपेक्षितक्रियञ्चेति त्रिधाऽपादानमिष्यते" "धातूपात्तक्रिये नित्यं कारके कर्त्तृतेष्यते" इति च भर्त्तृहरिः। "क्रियासमभिहारेण विराध्यन्तं क्षमेत कः" माघः। धात्वर्थे फले। "कर्म्मवत् कर्म्मणा तुल्यक्रियः" पा० कर्म्मणा कर्म्मस्थक्रियया तुल्यक्रियः समानाधिकरणक्रियः कर्म्मस्थमात्रस्थक्रियारूपफलक इत्यर्थः। क्रियाविशेषणम्। अत्र च यथा फलस्य विशेषणत्वेऽपि द्वितीया तथा क्रियाविशेषणशब्दे वक्ष्यते। क्रियान्वयिनश्च हरिणा दर्शिता यथा

"संबोधनान्तं कृत्वोऽर्थः कारकं प्रथमोवतिः। धातुसम्बन्धाधिकारविहितमसमस्तनञ्। तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम्। संबन्धस्याष्टकस्यास्य क्रिययैवावधार्य्यताम्"। व्यवहाराङ्गक्रियायाम् उदा० क्रियापादशब्दे वक्ष्यते। श्राद्धे "चतुर्द्दश्यां क्रियाः कार्य्या अन्येषान्तु विगर्हिताः" म० त० मरीचिः। "मृते पितरि पुत्रेण क्रिया कार्य्या विधानतः" शु० त० मरीचिः। "सपिण्डसन्ततिर्वापि क्रियार्हा नृप! जायते" तत्रैव विष्णुपु०। "ये सपिण्डीकृताः प्रेता न तेषां च पृथक्क्रिया" ति० त० शाता०

**क्रियाकल्प** पु० क्रियायां चिकित्सायां कल्पोविधिः। सुश्रुतोक्ते उत्तरतन्त्रे अष्टादशाध्यायप्रतिपाद्ये क्रियाभेदे। "अथातः क्रियाकल्पं व्याख्यामः" इत्युपक्रमात् तस्योक्तेस्तथात्वम्

**क्रियाकार** पु० क्रियां शिक्षारम्भं करोति कृ—अण् उप०स०। १नवच्छात्रे त्रिका० २कार्य्यकारकमात्रे त्रि० स्त्रियां टाप् सि० कौ०। मुग्ध० मते ङीप् इति भेदः।

**क्रियाद्वेषिन्** त्रि० क्रिया व्यवहाराङ्गसाधनं साक्षिलेख्यादिकं द्वेष्टि द्विष—णिनि ६त०। विवादे-पञ्चविधहीनागतहीनप्रतिवादिनि "अन्यवादी क्रियाद्वेषी नोपस्थाता

निरुत्तरः। आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः” मिता० नारदः तल्लक्षणं यथा “लेख्यं च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः। तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते” वीरमि० कात्या०।

**क्रियापाद** पु० क्रिया विवादसाधनं पाद इव। चतुष्पाद्व्यवहारे साध्यार्थसाधनरूपे तृतीये पादे। १पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः। ३क्रियापादस्तथान्यश्च तृतीयो ४निर्णयस्ततः” वृह०। तस्य व्यवहारपादत्वं तद्विरोधादि वीरमित्रोदये निर्णीतं यथा

“अथ क्रियापादः। तत्र तदुपयोगिप्रत्याकलितं प्रथमं निरूप्यते। विज्ञानयोगिना तस्य व्यवहारपादत्वानभ्युपगमेऽपि क्रियादानोपयोगित्वाभ्युपगमात्। अन्यैस्तु व्यवहारपादत्वस्यैव स्वीकारात् क्रियापादप्रागभावस्तूभयसम्मतः। प्रत्याकलितन्नाम भाषोत्तरयोरर्थिप्रत्यर्थिभ्यां लिखितयोः क्रियोपन्यसनमनयोर्मध्ये कस्य स्यात्का चास्मिन् वादे क्रिया स्याद्धीनवादी वानयोर्मध्ये क इत्यादिः सभ्यप्राड्विवाकस्य सभापतेः सभ्यस्य प्राड्विवाकस्य वा परामर्श उच्यते। तथा च वृहस्पतिः“ये तु तिष्ठन्ति करणे तेषां सभ्यैर्विभावना। कलयित्वोत्तरं सभ्यैर्दातव्येकस्य वादिनः”। करणे धर्माधिकरणे ये तिष्ठन्ति वादिनः प्रतिवादिनश्च तेषामुत्तरं मिथ्यादिचतुर्भेदं कलयित्वा विचार्य एतदुत्तरे कस्य क्रियोपन्यास उचित इति निर्धार्य विभाव्यते साध्यमनयेति विभावना क्रियाप्रमाणमिति यावत्। एकस्य वादिनोऽर्थिप्रत्यर्थ्यन्यतरस्य सभ्यैर्दातव्या उपन्यसनीयत्वेनाज्ञापयितव्येत्यर्थः। कात्यायनोऽपि “लिखिते शोधिते सम्यक् सति निर्दोष उत्तरे। अर्थिप्रत्यर्थिनोर्वापि क्रियाकरणमिष्यते”। क्रियाकरणं क्रियोपन्यासः। पुनर्वृहस्पतिः “श्रुत्वा पूर्वोत्तरं सभ्यैर्निर्दिष्टा यस्य भावना। विभावयेत् प्रतिज्ञातं सोऽखिलं लिखितादिना”। विभाव्यते साध्यते साध्यमनयेति विभावना क्रियैव। पूर्वोत्तरं पूर्वपक्षमुत्तरञ्चेत्यर्थः। द्वन्द्वैकवद्भावः। निर्दिष्टा ब्रूहीत्युपदिष्टा। कस्मिन्नुत्तरे कस्य क्रिया क्रियारहितञ्च किमुत्तरमित्यपेक्षायामाह व्यासः “प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम्। मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्”। प्राङ्न्यायकारणोत्तरयोः प्राङ्न्याये कारणे च साधितेऽपि साध्यस्य पक्षस्य धारणासाधकत्वात्तदर्थं साधनं प्रत्यर्थिनाऽभ्युपगमाच्चेति तत्रैव साध्यत्वाविर्भावात्तदुपन्यासकारिण एव प्रत्यर्थिनः प्रमाणोपन्यास इह साधनायोचितः। अर्थिसम्बन्धविरुद्धप्रत्यर्थिसम्बन्धस्योद्धयोरपि तेनैव निर्णयात्। मिथ्योत्तरे तु वादिनः प्रमाणमपेक्ष्यं यदि प्रतिज्ञातेऽर्थे प्रमाणाभाव एव प्रत्यर्थ्यभिमतोऽर्थिप्रतिज्ञातसाध्यहेत्वभावः सिध्यतीति तत्परिहाराय भावाभावयोर्भावस्यैव साध्यत्वौचित्याच्चार्थिन एव क्रिया। सम्प्रतिपत्तौ तु नैकस्यापि साध्यमस्तीति निरर्थकत्वात् क्रियैव नास्तीत्यर्थः। वृहस्पतिः “प्रतिज्ञाम्भावयेद्वादी प्रत्यर्थी कारणन्तथा। प्रागवृत्तं वादिजयी जयपत्रेण भावयेत्” प्रतिज्ञाम्प्रतिज्ञातार्थम्। इदञ्च परिशेषान्मिथ्योत्तरविषयम्। प्राग्वृत्तं प्राङ्न्यायं जयपत्रेणेति प्राङ्न्यायदर्शिभृत्यपलक्षणम्। मनुः “अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि। अभियोक्ता दिशेद्देश्यं कारणं वान्यदुद्दिशेत्”। दिशति कथयति यथादृष्टमर्थमिति देश्यः साक्षी। मेधातिथिस्तु स्वधादिप्रयोगदेशवर्त्तिनः साक्षिणो देशशब्देन लक्ष्यन्त इत्याह। अन्यत्कारणं प्रमाणं साक्षिभिन्नं लेख्यादि। मेधातिथिना तु “करणं वा समुद्दिशेदिति” पठित्वा करणशब्दः प्रमाणसामान्यवाचकोऽपि गोवलीवर्दन्यायेन साक्षिभिन्नकरणमाचष्टे पृथगुपादानात्। कारणं वा समुद्दिशेदिति पाठेऽप्ययमेवार्थः” इत्युक्तम्।। यत्र मिथ्याप्रत्यवस्कन्दनयोः क्रतुरूपपक्षव्यापिता। यथा कश्चिच्छुङ्गग्राहिकया कञ्चिदभियुक्ते स्तौीयेदक्षौरसुकस्मिन् काले नष्टास्य गृहे दृष्टा यतः। तत्राभियुक्त उत्तरयति मिथ्यैतत्। एतत्प्रदर्शितनाशकालात् प्रागेवास्या मद्गृहेऽवस्थितत्वादिति। इदन्तावत्पक्षप्रतिक्षेपत्वमनमित्यनुत्तरत्वानर्हम्। कारणोपन्यासाच्च शुद्धं मिथ्योत्तरम्। एकदेशाभ्युपगमाभावाच्चार्थिना लिखितोऽर्थ इत्यादि प्रागुक्तप्रत्यवस्कन्दनलक्षणं नास्कन्दति। साध्यभेदाय प्रतिज्ञाभेदापादकत्वाभावाच्च न पक्षैकदेशम् यत्तत्त्वमित्युत्तरं युगपद्व्यवहारासम्भवकृतं युगपदनुत्तरम्। तस्मात्कारणं मिथ्योत्तरमेवेदम् अन्यतरसाधनेनापि विवादपर्यवसानात्। अत्र “मिथ्याक्रियापूर्ववादे” इति वचनात्“कारणे प्रतिवादिनीति”वचनाच्चान्यतरस्य यथारुचिक्रियोपन्यास इति भाति यद्यपि, तथापि मिथ्याक्रियेत्यादेः शुद्धमिथ्याविषयत्वे नैतद्विषयत्वाभावात् “कारणे प्रतिवादिनीति” वचनात् प्रतिवादिन एवात्र क्रिया। नचास्यापि शुद्धप्रत्यवस्कन्दनविषयत्वादेतद्विषयत्वाऽभावप्रसङ्गेन न कस्यापि क्रिया प्राप्नोतीति निर्णय-

प्रतिभाव्य एवेति वाच्यम्। यतः प्रसङ्गप्राप्तस्कन्दनेऽपि ग्रहणाद्यभ्युपगमेन प्रतिदानादिकारणोत्तरत्वस्यासम्भाविनीति वाच्यम् एकदेशाभ्युपगमस्य प्रायिकत्वात्। कारणोपन्यासस्यैवोत्तरान्तरासङ्कीर्णतया तल्लक्षणत्वावश्यम्भावात्। एवं च तत्तत्पक्षस्यापि सप्राङ्न्यायं मिथ्योत्तरमपि द्रष्टव्यम्। यथा प्राक्तनाभियोग एव। यद्येवं प्रतिवदति मिथ्यैतत्। यतः प्रागनेनास्मिन्नभियोगे मया व्यवहारमार्गेण पराजित इति। अत्रापि प्राङ्न्यायकारणोक्तौ” इत्यादिप्राक्प्रदर्शितवचनात् प्रत्यर्थिन एव क्रियोपन्यासः। प्राङ्न्यायसिद्धौ प्रतिज्ञायाः प्रकटमेव मिथ्यात्वपर्यवसानादस्य शुद्धप्राङ्न्यायविषयत्वासम्भवादेतादृशप्राङ्न्यायविषयतायाः अपरिवर्जनीयत्वात्। पक्षप्रतिक्षेपलक्षणस्यास्य प्राग्वदेवानुत्तरत्वानर्हत्वात्। यत्र तु कारणप्राङ्न्याययोः तत्तत्पक्षस्थापितयैकोत्तरत्वं तत्र प्रत्यर्थिना प्राङ्न्याय एव साधनीयः। कारणसाधनस्य तदन्तर्भूतत्वात्। यथा रूपकशतमनेन मामकं गृहीतमित्यभियुक्तः प्रतिवदति सत्यं गृहीतं प्रतिदत्तत्यादिदानीमस्मै न धारयामि। अस्मिन्नेवार्थे प्रागप्यनेनाहमभियुक्तस्तत्र प्राड्विवाकसभ्यैरनेन पराजितवानिति। इदानीं हीनपरिज्ञानोपायः तत्र मनुः। “बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्। स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च”। स्वरो विकृतो गद्गदत्वादिः। वर्णोऽस्वाभाविकः कृष्णत्वादिः। इङ्गितं स्वेदवेपथुरोमाञ्चादि। आकारो विकृतो भ्रुवः क्रियादिः। चक्षुः कातरम्। चेष्टितं वृथास्थानात् स्थानान्तरगमनादि। याज्ञवल्क्यः “देशाद्देशान्तरं याति सृक्कणी परिलेढि च। ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च। परिशुष्यत्स्खलद्वाक्यो विरुद्धम्बहु भाषते। वाक्चक्षुः पूजयति नो तथौष्ठौ निर्भुजत्यपि। स्वभावाद्विकृतं गच्छेन्मनोवाक्कायकर्मभिः। अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्त्तितः।” मनोवाक्कायकर्मभिर्यः स्वभावाद्विकृतिङ्गच्छेत् न भयादिनिमित्तमसावभियोगे साक्ष्ये वा दुष्टः परिकीर्त्तितः। मन आदि विकृतीरेव विविच्य दर्शयति। देशान्तरं याति नचैकत्रावतिष्ठते। सृक्कणी ओष्ठप्रान्तौ परिलेढि जिह्वया पुनः पुनः परिघट्टयतीति। कर्मणो विकृतिः। अस्य ललाटं स्विद्यते स्वेदबिन्दुसन्दोहाङ्कितम्भवति। मुखं वैवर्ण्यं वर्णान्यत्वं पाण्डुत्वकृष्णत्वादि एति प्राप्नोतीति कायस्य। परिशुष्यत्स्खलद्वाक्यः परिशुष्यद्गद्गदं स्खलद्व्यस्तपदवर्णं वाक्यं यस्य सः। बहु अनुपयुक्तं विरुद्धं पूर्वापरविरोधवद्भाषते। परोक्तां वाचम्प्रतिवचनदानेन, इति वाचः। चक्षुश्च परस्य प्रतिवीक्षणेन न पूजयति नाभिनन्दतीति चक्षुषः। मनोविकृतेर्लिङ्गम्परकीयमनोविकृतेरप्रत्यक्षत्वात्। तथा ओष्ठौ निर्भुजति वक्रयत्युपर्यधोभावेन चालयतीति कायस्यैव विकृतिः। मनुरेव “आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च। नेत्रवक्त्रविकारैश्च ज्ञायतेऽन्तर्गतं मनः” कात्यायनः “आकारेङ्गितचेष्टाभिस्तस्य भावं विभावयेत्। प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते। कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठशोषाभिमर्षणम्। भूलेखनं स्थानहानिस्तिर्यगूर्द्ध्वनिरीक्षणम्। स्वरभेदश्च दुष्टस्य चिह्नान्याहुर्मनीषिणः”। प्रतिवादिशब्देन परस्परप्रतिपक्षवादित्वादुभयोर्ग्रहणम्। अभिमर्षणञ्जिह्वयोष्ठप्रान्तावलेहनं इन्दैकवद्भावः। श्रीरामायणे ‘आकारं छाद्यमानोऽपि न शक्यो विनिगूहितुम्। बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम्”। अनेन च पराजयसम्भावनामात्रम्प्रतिपाद्यते तस्य च फलं क्रियादिपरामर्शे सभ्यादीनामत्यवधानेन व्यवहारशेषविचारः। नत्वेतावता पराजयनिश्चयो साक्ष्यनिर्णयो वा, नैसर्गिकनैमित्तिकविकारयोर्वैलक्षण्यस्य विवेक्तुमशक्यत्वात्। यद्यपि कोऽपि निपुणतममतिर्विवेक्तुं शक्नुयात् तथापि न पराजयनिमित्तमसाक्षित्वनिबन्धनं वा दण्डादिकार्यं सम्भवति। न हि निपुणभिषगभियोगमूलकमरणनिश्चयेऽपि मृतकार्य्यमार्याः समाचरन्ति। योगीश्वरः “सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत्। नचाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स स्मृतः”। सन्दिग्धमधमर्णादिभिरनभ्युपगतमेवार्थं यः स्वतन्त्रः प्रमाणनिरपेक्ष एव साधयेदासेधादिना राजादिभ्योऽनिवेद्यैव तस्मान्निष्कर्षति तदुपरि दण्डाद्यापादयति वा स हीनो दण्ड्यो भवति। न परं प्रकृतार्थहानिमाप्नोति प्रत्युत स्वातन्त्र्यनिबन्धनं राजदण्डमपि दातुमर्हति। यश्च स्वयमभ्युपेते नेतं साधनं वा साधितं याच्यमानो निष्पतेत् पलायेत। सोऽपि तथा दण्ड्यः साधितं धनञ्च दाप्यः। यश्चाहूतोऽभियुक्तोराज्ञा चाहूतः सदसि न किञ्चिद्वदति स प्रकृतार्थहानिं दण्डञ्च प्राप्नोति। प्रकरणात् दुष्टपरिज्ञानमेव मा भूदिति दण्डग्रहणं दण्ड्योऽपि शास्त्रोऽप्यर्थान्न हीयत इति स्वार्थान्न हीयत इत्यर्थादहीनत्वदर्शनादत्र तन्माभूदिति हीनग्रहणम् नारदोऽपि। “अन्यवादी

क्रियाद्वेषी नोपस्थाता निरुत्तरः । आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः । अन्यवादी तथा हीनः स एव विक्षताननः । पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः । वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः" । कात्यायनेनापि "आश्रयित्वा यदा कार्यं त्यजेदन्यद्वदेदसौ । अन्यपक्षाश्रयस्तेन कृतो वादी स हीयते" । यस्तु कञ्चिदभियुज्य नाहमेनमभियुञ्जे इत्येवं विरुद्धमभिदधीत सोऽप्यन्यवादी तथा हीन इत्याह स एव "न मयाभिहितं कार्यमभियुज्य परं वदेत् । विब्रुवंश्च भवेदेव हीनन्तमपि निर्दिशेत्" । तथा पत्रे लिखितं पूर्वपक्षमप्यन्यथा कुर्वन्नन्यवादी तथा हीन इत्याह स एव "लेखयित्वा तु यो वाक्यमूनं वाऽभ्यधिकं पुनः । वदेद्वादी स हीयेत नाभियोगन्तु सोऽर्हति" । अभियोगं पूर्वपक्षं नार्हति वादित्वयोग्यो न भवतीत्यर्थः । क्रियाद्वेषिणोऽनुपस्थातुश्च हीनतायास्तेनैव विवरणं कृतम् "लेख्यं च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः । तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते । आह्वानादनुपस्थानात् सद्य एव स हीयते" । निरुत्तरतया हीनमप्याह स एव "ब्रूहीत्युक्तोऽपि न ब्रूयात् सद्यस्तद्दनमर्हति । द्वितीयेऽहनि दुर्बुद्धे विद्यात्तस्य पराजयम्" । पराजयं तत्पक्षहीनताम् । अतएव हारीतः "सापदेशं हरेत्कालमब्रुवंश्चापि संसदि । उक्त्वा वचो विब्रुवंश्च हीयमानस्य लक्षणम्" । सापदेशं सव्याजम् । यथाह कात्यायनः "व्याजेनैव तु यत्रासौ दीर्घकालमतिक्रमेत् । सापदेशं तु तद्विद्याद्धानिकरं स्मृतमिति" । आहूतप्रपलायी अभियोगपरिहारार्थमाह्वानबुद्ध्या प्रच्छन्नचारी । एतेषामुत्तरोत्तरस्य हीनता गुर्वीति ज्ञापयितुं "हीनः पञ्चविध" इत्युक्तं न परिसंख्यार्थमन्येषामपि हीनत्वस्मरणात् । हीनतागुरुत्वज्ञापनं दण्डभूयस्त्वार्थम् । यथोक्तं कात्यायनेन "अन्यवादी पणान् पञ्च क्रियाद्वेषी पणान्दश । नोपस्थाता दश द्वे च षोडशैव निरुत्तरः । आहूतप्रपलायी च पणान्दाप्यस्तु विंशतिम्" । अत्रापि विशेष उक्तस्तेनैव "त्रिराहूतमनायातमाहूतप्रपलायिनम् । पञ्चरात्रमतिक्रान्तं विनयेत्तं महीपतिः" कात्यायनेनैव प्रकारान्तरेणापि हीनः उक्तः । "भावितव्यवहाराणामेकं यत्र प्रभेदयेत् । वादिनं लोभयेच्चैव हीनन्तमपि निर्दिशेत्" । भावितव्यवहाराणां सभ्यादीनां मध्ये एकमपि यः प्रभेदयेत् अन्द्वारानुरोधाद्युत्पादनेनेत्यर्थः ।

बृहस्पतिरपि "भयं करोति भेदं वा भीषणं वा निरोधनम् । एतानि वादिनो यस्य व्यवहारे स हीयते" । भयादीनि व्यस्तसमस्तानि येन कृतानि स हीयत इत्यर्थः । भयं करोति भीषणामन्यमुखेन भयोत्पादनमिति शेषः । मनुरपि "अदेश्यं यश्च दिशति निर्दिश्यापह्नुते च यः । यश्चाधरोत्तरानर्थान् विगतान्नावबुध्यते । अपदिश्यापदेश्यञ्च पुनर्यस्त्वपधावति । सम्यक् प्रणिहितञ्चार्थं पृष्टः सन्नाभिनन्दति । असम्भाष्ये साक्षिभिश्च देशे सम्भाषते मिथः । निरुच्यमानं प्रश्नञ्च नेच्छेद्यश्चापि निष्पतेत् । ब्रूहीत्युक्तश्च न ब्रूयात् उक्तञ्च न विभावयेत् । न च पूर्वापरं विद्यात्तस्मादर्थान् स हीयते । ज्ञातारः सन्ति मेत्युक्त्वा दिशेत्युक्तो दिशेन्न यः । धर्मस्थः कारणैरेतैर्हीनन्तमपि निर्दिशेत्" । अदेश्यमनुपयोगासत्यत्वादिना निर्देशानर्हं दिशति कथयति यः । यश्च कथितमपि न मयेदमुक्तमित्यपलपति । यश्चाधरोत्तरानर्थान् पूर्वापराभिहितान्विगीतान्विरुद्धांस्तत्त्वेन नावबुध्यते । यश्चापदेश्यं व्याजं पीडादिकमपदिश्योद्धृत्यापधावति अपसरति सभातः । यश्च सम्यक् प्रणिहितं सम्यक् प्रणिधानेनाकलितमपि परोक्तमर्थं पृष्टः सन्नाभिनन्दति अनुवादप्रत्युत्तरदानादिना नाद्रियते । मेधातिथिस्त्वदेशमिति पठित्वा भाषावादिलिखितदेशभिन्नमसम्भाविषयं वा देशम् । यद्वाऽभियोक्ता दिशेद्देशमित्यत्रेव देशशब्देन साक्षिणो व्याख्याय साक्षिनिर्देशः । अकाले सम्भावितसाक्षिणो निर्दिशतीति" व्याचख्यौ । यश्च ज्ञातारः साक्षिणो ममोक्तेऽर्थे सन्तीति सभायामुक्त्वा के ते वदेत्युक्तो न वदेत्तान् । अत्र मा मां ज्ञातारः । यथार्थवाद्यहमिति जानानाः साक्षिण इति यावत् । द्वितीयैकवचनान्तस्यास्मच्छब्दस्य द्वितीयाया इत्यनेन माम् इत्यस्य मा इत्यादेशः । ननु मे इति षष्ठ्यन्तमेतत् । "खलर्थतृनामिति" तन्निषेधात् । तेन मेति सन्धिरपि समाहित इति मेधातिथिः । आचार्यास्तु व्याकरणाधिकरणे सन्धिकरणमत्रापशब्द इति पूर्वपक्षप्रसङ्गेन वदन्तः षष्ठ्यन्ततामेवास्य मन्यन्ते मे सन्तीति सम्बन्धाच्च तृतीयासम्बन्धप्रयुक्तषष्ठीप्रतिषेधावकाश इति तेषामभिसन्धिः । सन्ति ज्ञातार इत्युक्तेति कल्पतरुलिखितपाठस्त्वनाकर एवाचार्यमेधातिथिभ्यामदृष्टत्वादिति ध्येयम् । सिद्धान्ते त्वाचार्याणां छान्दसत्वमत्र समाधिरभिमतः । एतैः कारणैर्व्यस्तैः समस्तैर्वा वादिप्रतिवादिनोरन्यतरं हीनन्निर्दिशेदित्यर्थः । हीनवादितया दण्डार्हतामात्रञ्च प्रक-

तार्थहानिरिति प्रमादपरिहारार्थमेवायं प्रपञ्चः "छलन्निरस्येत्यादि" वचनात्। अतएव नारदोऽपि "सर्वेष्वर्थविवादेषु वाक्छले नावसीदति। परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते"। अस्यार्थः अर्थविवादेषु सर्वेषु वाक्छले प्रमादाभिधाने पूर्व्वपक्षितेऽपि नावसीदति प्रकृतादर्थान्न हीयते। अत्रोदाहरणमात्रं परस्त्रीत्यादि। एतेषु प्रमादाभिधानेऽपि शास्यो दण्ड्योऽपि यथा न प्रकृतार्थाद्धीयते इति एवं सर्वेष्वर्थविवादेष्वित्यर्थः। अन्यथा परस्त्रीत्यादेरानर्थक्यमेव भवेत्। अर्थविवादे पादनान्यूनतेषु प्रकृतार्थादपि हीयत इत्यर्थादुक्तं भवति। यथाऽहमनेन शिरसि ताडित इत्यावेद्य भाषादिसमये हस्तेन पादे ताडित इति वदन् दण्ड्यः पराजितश्च भवति। मन्युकृतावेशादसदेव ताडनादिकमयमभिचारोप्यावेदितवान् धर्म्माधिकरणे इति प्रतीतेः। अतएव "दोषानुरूपं संग्राह्यः पुनर्वादो न विद्यते" इति वाहस्पत्यः पुनर्वादनिषेधोऽपि मन्युकृतव्यवहारविषय एव। संग्राह्यो दण्ड्य इत्यर्थात्। असम्भाष्ये सम्भाषणानर्हे विजन इति यावत्। नेच्छेत् श्रुतमप्यश्रुतवत्कुर्य्यात्। राजकार्य्यादिव्याजमुत्सृज्य ग्रामान्तरङ्गच्छेत्। ब्रूहीत्यादि गतार्थम्। अन्यादेशमित्यादौ ब्रूहीत्यादौ च बहुकृत्वोऽपि तथ्यं वदितव्यमिति शावरभाष्योक्तरीत्यास्मिन् प्रकरणे पुनरुक्तिर्न दोष इति भगवान्मेधातिथिराह। क्वचिदर्थविवादेऽप्यर्थहानिः सन्दिग्धार्थमित्यनेन दर्शिता। नारदोऽप्याह "अनिवेद्य तु यो राज्ञे सन्दिग्धेऽर्थे प्रवर्तते। प्रसह्य स विनेयः स्यात् स चाप्यर्थो न सिध्यति"। प्रवर्त्तते साधयति बलादित्यर्थः। वृहस्पतिरपि "आहूतप्रपलायी च मौनी साक्षिपराजितः। स्ववाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः"। साक्षिपराजितः साक्षिवचनाद्यः पराजितः, स्ववाक्यप्रतिपन्नः संप्रतिपत्त्युत्तरदाता, अनयोर्दृष्टान्तत्वेनोपादानम्। यथाऽनयोर्विप्रतिपन्नार्थहानिस्तथान्ययोरपीत्यर्थः। अत्राप्युत्तरोत्तरहीनताधिक्यप्रतिपादनार्थं चतुर्विधग्रहणन्न परिसङ्ख्यार्थमन्यथान्यथान्तकथनं विरुध्येत। कश्चित् कदा हीनकार्य्यमित्यत्र कालावधिरुक्तस्तेनैव "प्रपलायी त्रिपक्षेण मौनकृत् सप्तभिर्दिनैः। साक्षिभिश्च स्ततक्षणेन प्रतिपन्नश्च हीयते" इति साक्षिभिश्च तत्पराजितः यश्च सामान्यान् साक्षिणो विर्दिश्य पश्चाद्विशिष्य निर्दिशेत् मनुना ज्ञातारः इत्यनेन हीनतयोक्तः तत्रापि कालावधिं वृहस्पतिरेवाह "साक्षिणस्तु समुद्दिश्य यस्तु तान्न विवादयेत्। त्रिंशद्रात्रात् त्रिपक्षाद्वा तस्य हानिः प्रजायते" इति। दैविकराजिकान्तराये त्ववध्यतिक्रमेऽपि न दोष इत्यप्याह स एव "आचारकरणे दिव्ये कृत्वोपस्थाननिर्णयम्। नोपस्थितो यदा कश्चिच्छलन्तत्र न कारयेत्। दैवराजकृतो दोषस्तस्मिन् काले यदा भवेत्। अवधित्यागमात्रेण न भवेत् स पराजितः"। इति आचारकरणे व्यवहारकरणे। छलन्तत्र न कारयेदिति वदता यत्र वचनेनार्थहानिः प्रतिपादिता तत्रैव पुनर्विवादाभावोऽन्यत्र तु हीनतानिमित्तं दण्डं कृत्वा पुनर्वादः प्रवर्त्तनीय एवेति सूचितम्। यत आह कात्यायनः "पलायनानुत्तरत्वादन्यपक्षाश्रयेण वा। हीनस्य गृह्यते वादो न स्ववाक्यजितस्य च"। स्ववाक्यजितस्येति प्रकृतार्थहानिनिमित्तोपलक्षणन्तेनैव निर्दिष्टमिदम् "यो हीनश्चिह्नेन जितस्तस्योद्धारं विदुर्बुधाः। स्ववाक्यहीनोयस्तु स्यात् तस्योद्धारो न विद्यते" इति। उद्धारः पुनर्व्यवहारः। अत्रापि स्ववाक्यहीन इति प्रकृतार्थहानिनिमित्तोपलक्षणम्। विवादमुपक्रम्य राजानं वञ्चयित्वाऽन्योन्यं यौ वादिप्रतिवादिनौ स्वयमेव विवादान्निवर्त्तेते तयोरुभयोरपि दण्ड्यत्वमाह वृहस्पतिः "पूर्वोत्तरे सन्निविष्टे विचारे सम्प्रवर्त्तिते। प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणन्दमम्"। मिथ इत्यनेन राज्ञो निवेदनमकृत्वैवाऽन्योन्यशमयानोक्तेः राज्ञेऽनिवेदनमवगम्यते। कात्यायनस्तु स्पष्टमाह "आवेद्याप्रष्टहीतार्थं प्रशमं यान्ति ये मिथः। सर्वे द्विगुणदण्डाः स्युर्विप्रलम्भान्नृपस्य ते" इति। द्विगुणो दण्डस्तु पराजयनिमित्तदण्डापेक्षया न तु विवादास्पदीभूतद्रव्यापेक्षया अद्रव्यविवादेष्वव्याप्तेः। राज्ञे निवेद्याऽन्योन्यसख्यात् राजानुरोधेनैव वा सन्धिकरणे तु न दण्ड इत्यर्थसिद्धं स्फुटीकृतं वृहस्पतिना "पूर्वोत्तरेऽभिलिखिते प्रक्रान्ते कार्य्यनिर्णये। द्वयोरुत्तरयोः सन्धिः स्यात् [illegible]ड्योरिव। साक्षिसत्क्रियस्तु भवेत्तत्रोभयोरपि। दोलायमानौ यौ सन्धिं कुर्य्यातान्तौ विचक्षणौ। प्रमाणसमता यत्र भेदः शास्त्रचरित्रयोः। तत्र राजाज्ञया सन्धिरुभयोरपि शस्यते। धर्मार्थी यस्य कीर्त्तिर्भवेत्तस्यैव भूपतेः। न क्लिश्यन्ते साक्षिसभ्या वैरञ्च विनिवर्त्तते। निग्रहानुग्रहं दण्डं धर्मं प्राप्य यशोऽयशः। विग्रहाज्जायते नृणां पुनर्दोषस्तथैव च। तस्मात्कुलगणाध्यक्षधर्मज्ञाः समदृष्टयः। अर्द्धप्रक्षोभादुद्भूयु-

स्तत्कर्तव्यं विजानतेति"। साक्षिसभ्यविकल्प इति उभयोरर्थिप्रत्यर्थिनोः किमेते वक्ष्यन्तीति साक्षिसभ्यविषयको विकल्पो भवेत् तत्र कार्य्यनिर्णये दोलायमानौ सन्देहदोलारूढौ यावदर्थिप्रत्यर्थिनौ सन्धिं कुर्य्यातान्तौ विचक्षणौ चतुरौ पराजयजनिताऽप्रतिष्ठादितिरोधानादित्यर्थ इति कल्पतरुः। रत्नाकरस्तु "साक्षिणां सभ्यानाञ्च विकल्पः परस्परविरोधः इत्याह। प्रमाणसमतेति। यत्र सभ्यानां वादिद्वयपक्षे प्रमाणं साम्यं प्रतिभाति। यत्र च शास्त्रचरित्रयोर्भेदः शास्त्रे शास्त्रान्तरेण चरित्रे व्यवहारे चरित्रान्तरेण भेदो विप्रतिपत्तिर्नतु शास्त्रव्यवहारयोः परस्परभेदः धर्मशास्त्राविरोधे व्यवहारस्यार्थशास्त्रत्वेन दुर्बलत्वात्" इति व्याचख्यौ। तत्र राजाज्ञया सन्धिः कार्य्यत्वेन प्रशस्यते धर्म्मार्थोपग्रहादिहेतुत्वात् निग्रहानुग्रहाद्यव्यवस्थानिवर्त्तकत्वाच्च। तस्मादित्यादिना राजाज्ञैव केवलं न सन्धिहेतुः कुलगणाध्यक्षादिवचोऽपि राजवचनसममिति प्रतिपाद्यते। एतच्च प्रत्याकलितं सभ्यैरवश्यमादर्त्तव्यमित्याह नारदः "प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः। सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः"। अस्यार्थः स्मृतिचन्द्रिकाकारेणैवमुक्तः "अव्यवस्थितैः प्रमाणैः प्रमाणानि प्रमाणकर्त्तारः प्रमाणशब्देन लक्ष्यन्ते। ते सीदन्ति विनश्यन्ति निर्णयं नाप्नुवन्ति। अतः प्रत्याकलनकौशलेन प्रमाणज्ञैः सभ्यैर्यत्नतस्तानि प्रमाणानि परिपाल्यानि यथा व्यवस्थादुःस्थितानि न भवन्ति तथा विवेचनीयानीत्यर्थ इति"। वयन्तु अव्यवस्थितैर्मूलशैथिल्यादिना दुःस्थितैः प्रमाणैः प्रमाणानुग्राहकैस्तर्कैः प्रमाणानि साक्ष्यादीनि सीदन्ति निर्णयाक्षमाणि भवन्ति, हि यतोऽतः प्रमाणज्ञैः प्रमाणानि यत्नतः परिपाल्यानि सत्तर्कपरिशुद्ध्यनुग्रहेण तत्त्वनिर्णयफलानि कार्य्याणीति व्याचक्ष्महे। अनयोश्च व्याख्यानयोस्तारतम्यन्तत्त्वविद्भिर्विवेचनीयम्। इदञ्च प्रत्याकलितं व्यवहर्त्तृसम्बन्धाभावात् व्यवहारदर्शिमात्रकर्त्तृकत्वाच्च व्यवहारपादचतुष्टयान्तर्भूतमिति मिताक्षराकारस्य सम्मतम् नत्वनुपादेयम्, एतदन्तरेण तृतीयक्रियापादानवतारात्। तथाहि उत्तराभिधानानन्तरमर्थिप्रत्यर्थिनोः कस्य क्रिया का वा क्रियेति परामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानाद्व्यवहर्त्तृसम्बन्धाभावाच्च न व्यवहारपादत्वमिति। अपरार्कस्तु "साध्यसिद्धिपदेन जयपराजयावधारणलक्षणं प्रत्याकलितं योगीश्वरवचने लक्षणया गृह्यत इति वदन् क्रियोपन्यासोत्तरकालीनविचारस्य सभ्यैः क्रियमाणस्य प्रत्याकलितरूपतामभिप्रैति"। "सम्प्रतिपत्त्युत्तरेण क्रियापादे नापि जयपराजयावधारणलक्षणप्रत्याकलितपाद इति द्विपात्त्वमेवेति" प्राड्वाको वाचस्पतिरपि तदेवानुबध्नाति। कल्पतरुस्मृतिचन्द्रिकाकारौ मिताक्षराकारवदेवोत्तरलेखनानन्तरभाविनां हीनपरिज्ञानसाक्षिकरणक्रियादानानां क्रियापादप्राग्भाविनां प्रत्याकलितत्वमभिहितवन्तौ। व्यवहारोपयोगित्वाद् बृहस्पत्यादिवचनानां प्रागभिहितानामनुरोधाच्च व्यवहारपादत्वं परन्त्वनभ्युपगतवन्तौ क्रियापादप्राग्भावित्वमेव तु तस्य युक्तम्। ये तु तिष्ठन्ति करणं इत्यादिवचनात् व्यवहारपादत्वमस्तु नवेत्यन्यदेतत्। यत्तु साध्यसिद्धेर्व्यवहारफलत्वाच्च व्यवहारपादत्वं युक्तमिति तन्न व्यवहारभावनया फलापवर्गिण्याः फलनिरूप्यत्वेन फलस्य तदंशत्वेन तत्पादत्वे बाधकाभावात्। अतएव फलांशा भावनेति मीमांसकानामुद्घोषः। तात्पर्यपरिशुद्धावुदयनाचार्यस्तु प्रमाणोपन्यासमेव प्रत्याकलितमभिमन्यते यथाह "यद्यपि परीक्षायां न वादिप्रतिवादिनौ स्तः। पृच्छोपक्रममात्रेण द्वितीयोपयोगात्। सद्भावेऽपि तयोर्विमर्शोपस्थापनमात्रपर्यवसानात् स्थेयस्यैव परीक्षकत्वम्। तथापि पूर्वपक्षोत्तरपक्षप्रत्याकलितनिष्कर्षभेदेन चतुष्पाद्व्यवहारप्रवर्त्तनात् फलतो न कश्चिद्विशेषः। एककर्त्तृकत्वेऽपि तावत एव व्यापारकलापस्य विचारे विद्यमानत्वात् तस्मादयनिपुणो देशकस्तथापि देश्यं सावगममेवेति"। वस्तुतस्तु न प्रमाणोपन्यासस्तस्य प्रत्याकलितत्वेनाभिप्रेतः। किन्तु सभिकृतः प्रमाणोपष्टम्भकतर्ककोटिपरामर्श एव। यतो न शास्त्रीयकथायां व्यवहारवत्पूर्वपक्षोत्तरपक्षौ स्वाभिमतसहेतुकसाध्यनिर्देशमात्रपरौ। किन्तु पूर्वपक्षिणा कण्टकोद्धारोत्तरपक्षदूषणपुरःसरं स्वपक्षे स्थिरीकृते सिद्धान्तवादिना तदुभयप्रतिक्षेपेण स्वपक्षसाधकप्रमाणप्रख्यापनं प्रथमं क्रियते। ततः स्थेयैस्तदुभयविवेकरूपप्रत्याकलितेन निष्कर्ष एकतरपक्षनिर्द्धारणरूपः क्रियते। तावता कथासमाप्तिर्वादे, जल्पवितण्डयोस्तु सभिकादीनामुत्तरोऽपि व्यापारो विद्यत इत्यादि लक्षणमाकरे। अत्र तु साक्ष्यादिविलक्षणं मानमुत्तरभेदेन नियतं प्रागुपन्यासानर्हमिति न पूर्वोत्तरपादान्तर्गतिरस्य। अतएव प्रत्याकलितस्यात्रोत्तरे कस्य क्रियेत्यादिविमर्शस्य स्थेयकृतस्य प्रत्याकलितस्य प्राच्यत्वं

प्रमाणोपन्यासात्तत्र तु प्रतीच्यत्वमेव स्येयत्तत्प्रमाणसाध्यसाधुतां विनैकरूपता चेत्यस्तु विस्तरः । एवं प्रत्याकलितमाकलितम् । अधुना क्रियापादो विविच्यते । तत्र कात्यायनः । वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम् । तत्साध्यं साधनं येन तत्साध्यं साध्यतेऽखिलम् । सारभूतं पदं मुक्त्वा निःसाराणि बहून्यपि । संसाधयेत् क्रियायान्तु ताञ्जह्यात् सारवर्जिताम् । पक्षद्वयं साधयेद्या ताञ्ज्याद्दूरतः क्रियाम् । क्रियां बलवतीमुक्त्वा दुर्बलां योऽवलम्बते । स जयेऽवधृते सभ्यैः पुनस्तान्नाप्नुयात् क्रियामिति” । तामबलवतीम् । तेन प्रागेव प्रबलं प्रमाणमुद्भाव्य दुर्बलप्रमाणालम्बनेन पराजितस्य पश्चात्प्रबलप्रमाणोपन्यासावसरो नास्तीत्यर्थः । अतएवाह नारदः “निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् । लिखितं साक्षिणो वापि पूर्वमावेदितं नचेति” । निर्णिक्ते शोधिते अन्यतरजयपराजयान्यतरावधारणं प्रापित इति यावत् । पूर्वमेव दुर्बलप्रबलसकलप्रमाणोपन्यासे कृते तु सर्वप्रमाणानुसारेण कृतं निरस्तेत्यभिधानात् निर्णयः । पश्चादुद्भावितन्तु छलिमत्त्वादिशङ्काकलङ्कितमित्यनुपादेयमेवेत्यर्थः । अतश्च पूर्ववाक्येऽपि मुक्त्वेति पुनरिति चोक्तम् । सएव “यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः । निर्णिक्तव्यवहाराणां प्रमाणमफलं तथेति” । उत्तरे पत्रनिवेशिते साध्यसिद्धेः साधनाय तत्साधननिर्देशः कुर्यादित्यपेक्षिते याज्ञवल्क्य आह “ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्” । तत उत्तरलिखनानन्तरमर्थी अर्थ्यत इत्यर्थः साध्यं सोऽस्यास्तीत्यर्थी साध्यवान् सद्य एवाविलम्बेन प्रतिज्ञातस्य प्रतिज्ञाविषयस्यार्थस्य साध्यस्य साधनस्य साध्यतेऽनेनेति साधनं प्रमाणम् । साधनादि लौकिकमलौकिकं वा लेखयेत् लेखकद्वारा । स्वयं वा लिखेदित्यपि द्रष्टव्यम् दृष्टार्थत्वात् अत्र सद्य इति वदन्नुत्तराभिधाने कालविलम्बनमप्यनुमन्यते । तच्च विशेषपरिभाषायां विवक्ष्यते । अर्थी लेखयेदित्यनेन सम्प्रतिपत्तौ न कस्यापि प्रार्थित्वमिति न कोऽपि साधनं लेखयेदिति पादद्वयेनैव व्यवहारनिर्वाहः तथाचोक्तम् “द्विपात्सम्प्रतिपत्तिस्तिष्ठति मिथ्योत्तरे पूर्ववादिन एवार्थित्वात् सएव साधनं लेखयेत् । कारणोत्तरप्राङ्न्यायोत्तरयोस्तु प्रत्यर्थ्येव साध्यवान् कारणप्राङ्न्याययोस्तस्यैव साध्यत्वादिति स एव लेखयेदित्युक्तं भवति । तेन ‘प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम् । मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् । मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि । प्राङ्न्यायेऽपि तथैव स्यात् प्रतिपत्तौ न सा भवेदिति” व्यासादिस्मृत्युक्तोऽर्थिपदेन सङ्क्षेपतः सर्व एवोक्तो भवति । अत्र चण्डेश्वरः “साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् । विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः” । इत्यत्र सद्यो विवादयेदुत्तरन्दापयेदित्यनेन प्रत्यर्थिपक्षस्य लिखने विलम्बप्राप्तौ साहसादिषु तत्पक्षमपि सद्य एव लेखयेदिति योऽपवादः स यदि प्राग्भाषावादिपक्षलिखने विलम्बोक्त्यार्थप्राप्तः प्रत्यर्थिपक्षलिखनविलम्बः स्यात् तदैव घटते नान्यथेत्यतद्वाक्यव्याख्याने यदर्थिपदेन प्रत्यवस्कन्दनप्राङ्न्याययोः प्रत्यर्थ्येवाऽर्थी जात इति स एव साधनं लेखयेदिति । प्रत्यर्थिनोऽपि ग्रहणमिति मिताक्षराकारव्याख्यानं तत्पूर्वापरविरोधान्मन्दमित्याह” । तदतिसाहसम् भाषोत्तरवादिपक्षमात्रलेखनपरत्वं यद्यनयोर्वाक्ययोस्तर्हि साधनपदान्वये समासानुपपत्तेः सन्दर्भविरोधाच्च साधनलेखनस्यैवोत्तरलेखनोत्तरमाकाङ्क्षितत्वात् साहसादिष्वप्युत्तरभेदव्यवस्थया द्वयोरपि पूर्ववाक्योपात्तसाधनलेखने सद्यस्त्वर्थाक्षिप्तोत्तरलेखनविलम्बापवादोपपत्तेः । नचोत्तरलेखनं सर्वत्र प्रत्यर्थिन एवेति तद्विलम्बानुमतिविभक्त्योक्तं प्रत्येव प्रतिपादनार्हमिति वाच्यम् एतावतापि क्रियोपन्यासप्रतिपालवचनस्यार्थिपदेन भाषावादिमात्रग्रहणाग्रहे नियामकाभावात् । प्रत्युत मिथ्याक्रियेत्यादिवचनार्थसंग्रहाय द्वयोरपि ग्रहणमर्थिपदेनेत्यस्यैव युक्तत्वात् । एवं सति मिताक्षरायां पूर्वापरविरोधापादनमज्ञानविलसितमेवेत्यास्तां तावत् । बृहस्पतिः “द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा । एकैकानेकधा भिन्ना मुनिभिस्तत्त्ववादिभिः । साक्षिलेख्यानुमानञ्च त्रिविधा मानुषी क्रिया” । साक्षिलेख्यानुमानमिति द्वन्द्वैकवद्भावः । “साक्षी द्वादशभेदस्तु लिखितं दशधा स्मृतम् । अनुमानन्तु द्विविधन्नवधा दैविकी क्रिया” । इदं संख्याभिधानञ्च नियमाय भेदान्तराणामपि प्रमाणप्रकरणे दर्श्यमानत्वात् । कात्यायनः “लिखितं साक्षिणो भुक्तिः प्रमाणन्त्रिविधं विदुः । लेशोद्देशस्तु युक्तिः स्याद्दिव्यानीह विषादयः” । लेशोऽन्यथानुपपत्तो धर्मस्तस्योद्देशो विमर्शो युक्तिरित्यर्थः । “पूर्ववादेऽपि लिखिते यथाऽक्षरमशेषतः । अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत्” । पूर्ववादो भाषालिखितं पूर्व-

पक्षतया लिखितं उत्तरमिति यावत्। तृतीयपादः प्रत्याकलिताख्यः तस्मिन् सति क्रियया प्रमाणेन प्रतिपादयेत् साध्यमिति शेषः। भाषोत्तरप्रत्याकलिताख्यपादत्रये सति क्रियया स्वकार्य्यमर्थी साधयेदिति तात्पर्य्यार्थः। कार्य्यक्रियाशब्दौ व्याचष्टे व्यासः "कार्य्यं हि साध्यमित्युक्तं साधनन्तु क्रियोच्यते। द्विभेदा सा पुनर्ज्ञेया मानुषी दैविकी तथेति"। साधनं प्रमाणं प्रत्याकलितस्य तृतीयव्यवहारपादत्वमभ्युपगच्छता स्मृतिचन्द्रिकाकारेणैवमिदं वचो व्याख्यातम्। मिताक्षराकारमते तु तृतीयपादक्रिययेति स एवार्थः। साक्षीद्वादशभेद इत्यादिप्रमाणप्रकरणे प्रपञ्चयिष्यामः। याज्ञवल्क्यः "प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम्। एषामन्यतमाभावे दिव्यान्यतममुच्यते" इति। दिव्येष्वन्यतममित्यर्थः। कात्यायनः "यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम्। मानुषीं तत्र गृह्णीयान्नतु दैवीं क्रियां नृपः। यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी। सा ग्राह्या नतु पूर्णापि दैविकी वदतां नृणाम्"। एकदेशप्राप्ता साध्यैकदेशविषया। अत्र यद्येको वादी मानुषीं साक्ष्याद्यन्यतमां क्रियां स्वपक्षसाधकतयोपन्यस्यत्यन्यस्तु तत्प्रतिपक्षतया दैविकीन्तदा इतरवादि-पक्षसिध्यसिध्योः सुलभत्वेन न दिव्यापेक्षेति प्रथमवचनार्थः। एवमेकोऽपि वादी साध्यानेकत्वे साध्यैकदेशमपि यदि प्रमाणेन साधयति तदैकदेशविभावितन्यायेनैकदेशान्तरस्यापि सिद्धेर्वक्ष्यमाणत्वान्न दिव्यावसर इति द्वितीयवाक्यार्थः। दिव्यस्वरूपप्रमाणयोरागमैकगम्यत्वान्मानुषप्रमाणासम्भव एव दिव्यस्य प्रामाण्यमिति मुनिवचननिचयपर्य्यालोचनयावगम्यते। अन्यान्यपि कचित् कचित्केषाञ्चित् प्रमाणानां प्राधान्याभिप्रायेण व्यवस्थापकानि वचनान्यृषीणां यथा "क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु। लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः" इति कात्यायनः। पितामहः "स्थावरेषु विवादेषु दिव्यानि परिवर्ज्जयेत्। साक्षिभिर्लिखितेनाथ भुक्त्या चैतान् प्रसाधयेत्"। इदमपि साक्ष्यादिसमक्षं स्थावरविषयविवादेषु सुलभमतस्तत्सम्भवान्वेषणमेव कार्य्यमित्येवम्परन्न सर्व्वथा दिव्यपरिहारपरम्। सर्व्वथा साक्ष्याद्यसम्भवेऽपि दिव्याग्रहणे निर्णयाभावप्रसङ्गात्। कात्यायनः "दत्तादत्तेषु भृत्यानां स्वामिनां निर्णये सति। विक्रीयादानसम्बन्धे क्रीत्वा धनमनिच्छति। द्यूते समाह्वये चैव विवादे समुपस्थिते। साक्षिणः साधनं प्रोक्तन्न दिव्यं नच लेख्यकम्। पूगश्रेणीगणादीनां या स्थितिः परिकीर्त्तिता। तस्यास्तु साधनं लेख्यन्न दिव्यन्न च साक्षिणः। द्वारमार्गक्रियाभोगजलवाहादिषु क्रिया। भुक्तिरेव तु गुर्व्वी स्यान्न दिव्यं नच साक्षिणः"। दत्तादत्ते प्रतिश्रुत्याप्रदाने दत्त्वा पुनः प्रत्याहृत्य ग्रहणे वा दत्ताप्रदानिके विवादपद इति यावत्। भृत्यानामित्यादिना वेतनादाने। विक्रीयादानेत्यादिना क्रयविक्रयानुशये इतरद्व्यक्तम्। दत्तादत्तादिषु वृद्धानां लिखितकरणाप्रसिद्धेर्भुक्तेश्चासम्भवात् साक्षिणस्तादृशविषये सुलभत्वान्मानुषप्रमाणसम्भवे च दिव्यासम्भवाच्च दिव्यं नच लेख्यकमित्युक्तम्। पूगादीनां संविदि तु बहुकर्त्तृकायां लिखितं विना न निर्व्वाहः सर्व्वेषां व्यवहर्त्तृत्वाच्चोदासीनसाक्षिसम्भवो मानुषसत्त्वे च दिव्यानवकाश इत्यभिसन्धायाभिहितन्न दिव्यं च साक्षिण इति। द्वारमार्गादिष्वपि गमनागमनादिरूपभोगस्यैव परं भावाल्लेख्यस्य चाप्रसिद्धेर्मानुषाभाव एव च दिव्यावकाशान्न दिव्यमित्यादि भुक्तिरेव तु गुर्व्वीति चोक्तम्। एवं सर्व्ववचनानि विवेचनीयानि। अतएव "अरण्ये निर्ज्जने रात्रावन्तर्वेश्मनि साहसे। न्यासापह्नवने चैव दिव्या सम्भवति क्रियेति" नारदेन सम्भवतीत्युक्तम्। स एव "यदा साक्षी न विद्येत विवादे वदतां नृणाम्। तदा दिव्यैः परीक्षेत शपथैश्च पृथग्विधैः। स्त्रीणां शीलाभियोगे च स्तेयसाहसयोरपि। एष एव विधिर्दृष्टः सर्व्वार्थापह्नवेषु चेति"। कात्यायनः "गूढसाहसिकानान्तु प्राप्तं दिव्यैः परीक्षणम्। युक्तिलेशेङ्गिताकारवाक्चक्षुश्चेष्टितैर्नृणाम्। अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत्। दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत्"। बृहस्पतिः "मणिमुक्ताप्रवालानां कूटकृन्न्यासहारकः। हिंसकोऽन्याङ्गनासेवी परीक्ष्यः शपथैः सदा। महापापाभिशापेषु निःक्षेपहरणे तथा। दिव्यैः कार्य्यं परीक्षेत राजा सत्स्वपि साक्षिषु। चिरन्तनोपांशुकृतचिरनष्टेषु साक्षिषु। प्रदुष्टेषु समानेषु दिव्यैः कार्य्यं विशोधयेत्"। अत्र सत्स्वपि साक्षिष्वित्यनेनैतादृशि विषये साक्षिण एव तावन्न सम्भवन्ति। सम्भवन्तोऽपि वा कथञ्चित्कूटतया प्रायः प्रदुष्टा इति विवक्षितं न तु यथाश्रुतम्। चिरन्तनकृते उपांशुकृते रहसि कृते इत्यनेन लेख्याद्यसम्भवमेवोपलक्षयति। अतएवाग्रे चिरनष्टेषु

प्रदुष्टेषु समानेष्वि यनेनासाक्षिवन्निमित्तान्युपलक्षितवान्। व्यासः "प्रथमे यत्र भिद्यन्ते साक्षिणश्च तथाऽपरे। परेभ्यश्च तथाचान्ये तं वादं शपथैर्नयेत्"। भिद्यन्ते प्रभेदं प्रतिपद्यन्ते। कात्यायनः "समत्वं साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेत्। प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु। दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः"। साक्षिषु विद्यमानेष्वपि तत्र दोषावष्टम्भेन दिव्यमालम्बत इत्यर्थः। समत्वं साक्षिणां यत्रेति। यत्रोभाभ्यां भाषावादिभ्यामुपन्यस्तानां साक्षिणां गुणतः सङ्ख्यातश्च तुल्यत्वमित्यर्थः। व्यासः "न मयैतत्कृतं लेख्यं कूटमेतेन कारितम्। अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः"। लेख्यदोषोद्भावने लेख्ये निर्णयाक्षमे तदारूढसाक्षिषु सुतरां दण्डापूपकन्यायेन दोषोद्भावनान्मानुषासम्भवे दिव्येन निर्णयः कार्य्य इत्यर्थः। प्रजापतिः "यन्नामगोत्रैर्यल्लेख्यं तुल्यं लेख्यं क्वचिद्भवेत्। अगृहीतधने तत्र कार्य्यो दिव्येन निर्णयः"। मूललेख्येन नामगोत्रैस्तुल्यं लेख्यान्तरविपरीतार्थं यदा तदा तदप्रमाणीकृत्य दिव्येन निर्णयः कार्य्य इत्यर्थः। कात्यायनः "यत्र स्यात्सोपधं लेख्यं तद्वाक्ये श्रावितं यदि। शोधयेत्तु दिव्येन राजा धर्मासनस्थितः"। सोपधं यत्र छलकृतं यच्च मिथ्योत्तरे पूर्ववादिनः क्रियादानं नोत्तरवादिन इति प्रागुक्तं तत्र भाषावादिनो मानुषप्रमाणसम्भवादुत्तरवादिनश्च तदसम्भवान्मानुषसम्भवे च दिव्यानवसरादिति न्यायमूलमिति। यदि तत्रापि भाषावादिनो दिव्यभिन्नप्रमाणाभावस्तदा "न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत्। अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैरिति" कात्यायनीयादुत्तरवादिन एव दिव्यं देयम्। पूर्वार्द्धेनार्थिनो दिव्यनिषेधात् प्रत्यर्थिनोऽर्थात्सिद्धौ पुनः परार्द्धेन तद्विधाने सिद्धे सत्यारम्भो नियमायेति न्यायेन निषेधदार्ढ्यार्थत्वम्। प्राङ्न्यायकारणोत्तरयोः क्रियापदमुभयक्रियापरमपि मिथ्योत्तरे मानुषमात्रपरं कात्यायनीयानुरोधात्। नचैवमनुषङ्गानुपपत्तिः तदर्थकतयोभयान्वयस्यानुषङ्गहेतुत्वन्न यावदर्थकत्वस्य विरुद्धार्थकत्वे व्यवायवत्सन्निधिबाधेनानुषङ्गस्य तुल्ययोगितानिबन्धनस्य भङ्गः किञ्चिदर्थानन्वयेऽपि तुल्ययोगतायाः सत्त्वात्तदभङ्गात्। यदा तु प्रत्यर्थी सन्दिहानस्तदा तस्याधिकारनिश्चयाभावान्मानुषप्रमाणाभावेऽपि न दिव्यं किन्त्वर्थिनोऽधिकारनिश्चयादिति ध्येयम्। नच "न कश्चिदिति" कात्यायनवचनविरोधः अधिकारानिश्चये तत्प्रवृत्त्यसम्भवात्। 'धनं धनी साधयतीति' लोकप्रवादोऽप्येतद्विषयाभिप्रायक एव। यत्र विवादविषये प्रत्यर्थी सन्दिहानस्तत्र तस्योत्तरानर्हतयेति व्यवहारतत्त्वलिखनन्त्वतत्त्वमेव अज्ञानरूपमिथ्योत्तरार्हत्वात्। अज्ञानस्य निश्चयाभावरूपस्य सन्देहेऽपि सम्भवात् प्रत्यर्थिन एव सर्वत्रोत्तरकर्त्तृत्वाच्च। यदा तु द्वयोरपि मानुषप्रमाणाभावो दिव्यानध्यवसायश्च तदा निर्णयोपायमाह पितामहः "लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः। न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः। निश्चेतुं ये न शक्याः स्युर्वादाः सन्दिग्धरूपिणः। तेषां नृपः प्रमाणं स्यात्सर्वस्य प्रभुरिष्यते" इति। तादृग्व्यवहारे नृपेणोभयापीडया स्वेच्छया काञ्चन व्यवस्थां कृत्वा देया सोभाभ्यां नातिक्रमणीयेत्यर्थः। दिव्यावान्तरभेदादि सर्वं दिव्यप्रकरणे वक्ष्यामः।

**क्रियाफल** न० ६त०। "उत्पत्तिराप्तिर्विकृतिः संस्कृतिश्च चतुर्विधम्। क्रियाफलं प्राङ्कराय्यौ" कैवल्ये तन्न विद्यते" वेदा० प्र० उक्ते १कर्म्मफले उत्पत्त्यादौ, २यागादिजन्ये पुण्यापुण्यादौ च। क्रियाजन्ये तृप्तिस्वर्गादिरूपे प्रयोजनापरपर्य्यायरूपे ३फले "स्वरितञितः कर्त्रभिप्राये क्रियाफले" पा०। विवृतञ्चैतदस्माभिः शब्दार्थरत्ने यथा "स्वरितञिद्भ्यात्तरतङः कर्तृगामिन्येव सति क्रियाफले कर्तृवाचकत्वं नान्यथा तत्र फलञ्च न धातूपस्थाप्यं, जानात्यादीनां ज्ञानरूपफलस्य समवायेन कर्तृनिष्ठतया सर्वदैव जानीतेइत्येव प्रयोगापत्तेः जानातीत्यादेरप्रयोगापत्तेश्च नेष्यते तु तथा शास्त्रकारैः। नापि क्रियाजन्यवेतनदक्षिणारूपलाभादि गौणं फलमिह विवक्षितं तथा सति सूदादेस्तादृशफलवत्त्वेन सूदः पचते ऋत्विजो यजन्ते इत्यादिप्रयोगापत्तेः। किन्तु फलतीति व्युत्पत्त्या प्रयोजनापरनाम क्रियाजन्यं तृप्तिस्वर्गादिरूपमेव मुख्यं फलं ग्राह्यं यथोक्तं हरिणा "यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः। तत्प्रधानं फलं तासां न लाभादि प्रयोजनमिति"। प्रसिद्ध्यर्थं निष्पत्त्यर्थं पचादयः पाकादयः। तत् तासां पचादीनां प्रधानं फलमित्यर्थः। फलस्य प्राधान्यञ्चेतरापेक्षया बोध्यं तेन इतरेच्छानधीनेच्छाविषयत्वस्य तस्य सुखादिष्वेव सत्त्वेऽपि क्वचित्साक्षात्सुखादिरूपप्रयोजनालाभे तत्साधनरूपेतरफलस्यापि ग्रहणमिति द्रष्टव्यम्। तेन अपाक्षदित्यादिसूत्रविहिततङः सुखादि-

रूपमुख्यप्रयोजनाभावेऽपि कर्तृवाचकत्वम्। क्रियोद्देश्ये संयोगविभागादिरूपे फलविशिष्टव्यापारस्य धात्वर्थतावादिमते धात्वर्थतावच्छेदकरूपे ४फले पृथकशक्तिवादिमते कर्म्माख्यातस्थले तद्धातूपस्थाप्ये धात्वर्थोऽंशे विशेष्यतया भासमाने तद्धातुजन्ये ५संयोगादिके फले च। इत्थमेव शब्दार्थरत्नेऽस्माभिर्दर्शितं यथा

"तत्र फलतीतिव्युत्पत्त्या फलं नाम तद्धात्वर्थजन्यं संयोग विभागादि, गम्यादौ विभागस्य फलत्ववारणाय तद्धातूपस्थाप्यत्वेन विशेषणेऽपि विभागजन्यसंयोगस्य पतनफलत्वमते विभागस्य तद्धात्वर्थजन्यत्वात् तद्धातूपस्थाप्यत्वादतिव्याप्तिरतस्तद्धात्वर्थे विशेषणतया भासमानत्वेनैव विशेषणीयं गम्यादौ च विभागस्य तद्धात्वर्थे विशेषणतया भासमानत्वाभावात् न फलत्वप्रसङ्गः। मञ्जूषाकृन्मते तु कर्त्तृप्रत्ययस्थले तथाभासमानत्वमिति विवेकः। क्रियाविशेषणादेर्धात्वर्थे विशेषणत्वेऽपि तज्जन्यत्वाभावाच्च फलत्वप्रसङ्गः। विशेषणत्वञ्च साक्षादेव विवक्षितं तेन घटं करोतीत्यादौ घटादेः धात्वर्थक्रियाजन्यस्य विभक्त्यर्थद्वारा तद्विशेषणत्वेऽपि न फलत्वापत्तिः" इति।

**क्रियाभ्युपगम** पु० क्रियायाः कर्षणादिक्रियार्थमभ्युपगमः चतुर्थ्यर्थे ६त०। अत्र चेत्रे उत्पन्नस्य शस्यस्य उभयोः फलभागितेतिनियमेन कर्षणाद्यर्थमन्यक्षेत्रस्वीकारे। "क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत् प्रदीयते। तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च" मनुः।

**क्रियाभ्यावृत्ति** स्त्री क्रियाया अभ्यावृत्तिः। क्रियायाः पौनपुन्ये। "क्रियाभ्यावृत्तिगणने कृत्वसुच्" पा०। विवृतमेतदस्माभिः शब्दार्थरत्ने यथा

"क्रियायाएव पौनःपुन्यसम्भवेनाभ्यावृत्तिपदेनैव क्रियाप्राप्तौ पुनः क्रियाग्रहणेन इतरांशे विशेषणतानापन्नसाध्यक्रियाया एवाभ्यावृत्तौ तेषां साधुत्वज्ञापनात् पञ्चकृत्वः पचतीत्येव प्रयोगः नतु पञ्चकृत्वःपाकइत्यपि। केचित्तु "द्विर्व्वचनेऽचीति" पा० निर्देशात् साध्यरूपक्रियान्वये एव तेषां साधुत्वं तेन भावघञन्तादावपि धातुना साध्यक्रियाया अभिधानात् पञ्चकृत्वः पाक इत्यपि भवत्येव। सिद्धरूपक्रियायां तदन्वयविवक्षायां तु नैवं तेन तत्र पञ्च इत्येव स्यादिति प्राहुः"

**क्रियायोग** पु० क्रियैव योगः योगोपायः। "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगाः" इति पातञ्जलसूत्रभाष्यादुक्ते योगोपायभूते क्रियाभेदे। तस्य योगोपायत्वादिदर्शकं तद्वाक्यं कर्म्मयोगशब्दे ४७११पृ० दर्शितम्। "ज्ञानयोगस्तु योगस्य यस्तु साधनमात्मना। यस्तु बाह्यार्थसंयोगः क्रियायोगः स उच्यते। प्रधानं कारणं योगोमुक्तेः सनिवरोत्तम!। क्रियायोगस्तु योगस्य परमं तस्य साधनम्" कल्किपु०। मत्स्यपु०५२अ० विस्तरेणोक्तं यथा

"कर्म्मयोगञ्च वक्ष्यामि यथा विष्णुविभाषितम्। ज्ञानयोगसहस्राद्धि कर्म्मयोगः प्रशस्यते। कर्म्मयोगोद्भवं ज्ञानं तस्मात्तत्परमम्पदम्। कर्म्मज्ञानोद्भवं ब्रह्म न च ज्ञानमकर्म्मणः। तस्मात् कर्म्मणि युक्तात्मा तत्त्वमाप्नोति शाश्वतम्। वेदोऽखिलो धर्म्ममूलमाचारश्चैव तद्विदाम्। अष्टावात्मगुणास्तस्मिन् प्रधानत्वेन संस्थिताः। दया सर्वेषु भूतेषु क्षान्तीरक्षाऽऽतुरस्य तु। अनसूया तथा लोके शौचमन्तर्बहिर्द्विजाः!। अनायासेषु कार्येषु माङ्गल्याचारसेवनम्। न च द्रव्येषु कार्पण्यमार्त्तेषूपार्जितेषु च। तथाऽस्पृहा परद्रव्ये परस्त्रीषु च सर्व्वदा। अष्टावात्मगुणाः प्रोक्ताः पुराणस्य तु कोविदैः। अयमेव क्रियायोगो ज्ञानयोगस्य साधकः। कर्म्मयोगं विना ज्ञानं कस्यचिन्नेह दृश्यते। श्रुतिस्मृत्युदितं धर्म्ममुपतिष्ठेत् प्रयत्नतः। देवतानां पितॄणाञ्च मनुष्याणाञ्च सर्व्वदा। कुर्यादहरहर्यज्ञैर्भूतर्षिगणतर्पणम्। स्वाध्यायैरर्चयेच्चर्षीन् होमैर्देवान् यथाविधि। पितॄन् श्राद्धैरन्नदानैर्भूतानि बलिकर्म्मभिः। पञ्चैते विहिता यज्ञाः पञ्चसूनापनुत्तये। कण्डनी पेषणी चुल्ली जलकुम्भी प्रमार्जनी। पञ्च सूना गृहस्थस्य तेन स्वर्गं न गच्छति। तत्पापनाशनायामी पञ्च यज्ञाः प्रकीर्त्तिताः। द्वाचत्वारिंशति स्तथाऽऽदौ च ये संस्काराः प्रकीर्त्तिताः। तद्युक्तोऽपि न मोक्षाय यस्त्वात्मगुणवर्जितः। तस्मादात्मगुणोपेतः श्रुतिकर्म्म समाचरेत्। गोब्राह्मणानां वित्तेन सर्वदा भद्रमाचरेत्। गोभूहिरण्यवासोभिर्गन्धमाल्योदकेन च। पूजयेद् ब्रह्मविष्ण्वर्करुद्रवस्वात्मकं शिवम्। व्रतोपवासैर्विधिवत् श्रद्धया च विमत्सरः। योऽसावतीन्द्रियः शान्तः सूक्ष्मोऽव्यक्तः सनातनः। वासुदेवो जगन्मूर्त्तिस्तस्य सम्भूतयो ह्यमी। ब्रह्मा विष्णुश्च भगवान् मार्त्तण्डो वृषवाहनः। अष्टौ च वसवस्तद्वदेकादशगणाधिपाः। लोकपालाधिपाश्चैव पितरो मातरस्तथा। इमा विभूतयः प्रोक्ताश्चराचरसमन्विताः। ब्रह्माद्याश्चतुरो मूलमव्यक्ताधिपतिः स्मृतः। ब्रह्मणा चाथ सूर्येण विष्णुनाथ शिवेन वा। अभेदात् पूजितेन स्यात् पूजितं सचराचरम्।

ब्रह्मादीनां परन्धाम त्रयाणामपि संस्थितिः। वेदमूर्त्तिमतः पूषा पूजनीयः प्रयत्नतः। तस्मादग्निद्विजमुखान् कृत्वा संपूजयेदिमान्। दानैर्व्रतोपवासैश्च जपहोमादिना नरः। इति क्रियायोगपरायणस्य वेदान्तशास्त्रस्थितिवत्सलस्य। विकर्म्मभीतस्य सदा न किञ्चित् प्राप्तव्यमस्तीह परे च लोके"। २क्रियासम्बन्धे "उपसर्गाः क्रियायोगे" पा॰ पद्मपुराणे क्रियायोगसारे विवृतिः।

**क्रियार्थ** त्रि॰ क्रिया अनुष्ठानमर्थोऽभिधेयोयस्य। कर्त्तव्यविधिबोधके वेदादिवाक्यभेदे तादृशवाक्यस्यैव प्रामाण्यम् मीमांसायां स्थापितं यथा

"आम्नायस्य क्रियार्थत्वादानार्थक्यमतदर्थानाम्" जै॰सू॰। "क्रिया कथमनुष्ठेया इति तां वदितुं समाम्नातारो वाक्यानि समासनन्ति यानि क्रियां नावगमयन्ति क्रियासम्बद्धं वा किञ्चित् तान्येव भूतमर्थमन्वाचक्षते" "अतस्तेषामानर्थक्यम् (अप्रामाण्यम्)" इति च शवरभा॰। "चोदनालक्षणोऽर्थो धर्म्मः" जै॰सू॰। "चोदनेति क्रियायाः प्रवर्त्तकं वचनमाहुः। चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं नान्यत् किञ्चनेन्द्रियमिति" भा॰। तेन क्रियाप्रवर्त्तकवेदभागानामेव प्रामाण्यम् अर्थवादानां भूतार्थानां तु क्रियार्थेन सहैकवाक्यत्वात् प्रामाण्यं यथाह तत्रैव "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" जै॰सू॰। "वायव्यं श्वेतमालभेत भूतिकामः" "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागेनोपधावतीति स एवैनं भूतिं गमयतीति" वायुर्वै क्षेपिष्ठा देवतेत्यत्र यद्यपि क्रिया नावगम्यते क्रियासम्बद्धं किञ्चित्, तथापि विध्युद्देशेनैकवाक्यत्वात् प्रमाणं भूतिकाम इत्येवमन्तो विध्युद्देशः तेनैकवाक्यभूतो वायुर्वै क्षेपिष्ठा देवतेत्येवमादिः"। "पदानां साकाङ्क्षत्वात् विधेः स्तुतेश्चैकवाक्यत्वं भवति भूतिकाम आलभेत, कस्मात्? यतो वायुः क्षेपिष्ठेति"। "स्तुत्यर्थेन विधीनां स्युः स्तुतिशब्दाः स्तुवन्तः क्रियां, प्ररोचयमानाः अनुष्ठातृणामुपकरिष्यन्ति क्रियायाः" इति च भा॰। "तद्भूतार्थानां तु क्रियार्थेन समाम्नायः" जै॰सू॰ तेन सहैकवाक्यात् प्रामाण्यमिति स्थितम्। तदेतन्मतं विशदीकृत्य पूर्वपक्षीकृत्य शा॰सू॰भाष्याभ्यां निराकृतं यथा "कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते? यावता 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम्, अतोवेदान्तानामानर्थक्यम्, अक्रियार्थत्वात्। कर्त्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वमुपासनादिक्रियान्तरविधानार्थत्वं वा। न हि परिनिष्ठितवस्तुस्वरूपप्रतिपादनं सम्भवति प्रत्यक्षादिविषयत्वात् परिनिष्ठितवस्तुनः। तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात्। अत एव "सोऽरोदीत्" इत्यादीनामानर्थक्यं मा भूदिति "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति स्तावकत्वेनार्थवत्त्वमुक्तम्। मन्त्राणाञ्च "इषे त्वा" इत्यादीनां क्रियातत्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम्। न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टा उपपन्ना वा। न च परिनिष्ठिते वस्तुस्वरूपे विधिः सम्भवति, क्रियाविषयत्वाद्विधेः। तस्मात् कर्म्मापेक्षितकर्त्तृदेवतादिस्वरूपप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम्। अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते तथापि स्ववाक्यगतोपासनादिकर्मपरत्वम्। तस्मान्न ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते उच्यते" भाष्यम्। "तत्तु समन्वयात्" शारीरकसूत्रम्।

"तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। तद् ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादवगम्यते। कथम्? समन्वयात्। सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि "सदेव सौम्येदमग्र आसीत्" "एकमेवाद्वितीयं ब्रह्म" "आत्मा वा इदमेक एवाग्र आसीत्" "तदेतद् ब्रह्मापूर्वमनपरमनन्तरमवाह्यम्" "अयमात्मा ब्रह्म सर्व्वानुभूः" "ब्रह्मैवेदममृतं पुरस्तात्" इत्यादीनि। न च तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। न च तेषां कर्त्तृदेवतादिस्वरूपप्रतिपादनपरतावसीयते। 'तत् केन कं पश्येत्" इत्यादिक्रियाकारकफलनिराकरणश्रुतेः। न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वम्। "तत्त्वमसि" इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात्। यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति नैष दोषः हेयोपादेयशून्यब्रह्मात्मावगमादेव सर्वक्लेशप्रहाणात् पुरुषार्थसिद्धेः"। तत्रैव सूत्रे आख्यानशेषे

"यदपि शास्त्रतात्पर्यविदामनुक्रमणम्। "दृष्टो हि तस्यार्थः कर्मावबोधनमित्येवमादिः" तद्धर्म्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम्। अपि च "आम्नायस्य क्रियार्थत्वादानार्थक्यमतदर्थानाम्" इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसङ्गः प्रवृत्तिनिवृत्ति-

विधितच्छेषव्यतिरेकेण भूतञ्चेद्वस्तूपदिशति भव्यार्थत्वेन, कूटस्थनित्यं भूतं नोपदिशतीत्यत्र को हेतुः। न हि भूतमुपदिश्यमानं क्रिया भवति। अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात् क्रियार्थ एव भूतोपदेश इति चेत्, नैष दोषः क्रियार्थत्वेऽपि क्रियानिर्वर्त्तनशक्तिमद्वस्तूपदिष्टमेव। क्रियार्थत्वन्तु प्रयोजनं तस्य। न चैतावता वस्त्वनुपदिष्टं भवति। यदि नामोपदिष्टं किं तव तेन स्यादिति? उच्यते, अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति, तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन। अपि च "ब्राह्मणो न हन्तव्यः" इति चैवमाद्या निवृत्तिरुपदिश्यते। न च सा क्रिया नापि क्रियासाधनम्। अक्रियार्थानामुपदेशोऽनर्थकश्चेत् ब्राह्मणो न हन्तव्यः" इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तं, तच्चानिष्टम्। न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीनव्यतिरेकेण। नञश्चैष स्वभावो यत् स्वसम्बन्धिनोऽभावं बोधयति, अभावबुद्धिश्चौदासीन्यकारणं सा च दग्धेन्धनाग्निवत् स्वयमेवोपशाम्यति, तस्मात् प्रसक्तक्रियाया निवृत्त्यौदासीन्यमेव "ब्राह्मणो न हन्तव्यः" इत्यादिषु प्रतिषेधार्थं मन्यामहे अन्यत्र प्रजापतिव्रतादिभ्यः। तस्मात् पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवाक्यानामानर्थक्याभिधानं द्रष्टव्यम्। यदप्युक्तं कर्त्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात् (सप्तद्वीपा वसुमतीत्यादिवदिति) तत् परिहृतं रज्जुरियं नायं सर्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात्" भा०। क्रिया अर्थः प्रयोजनं यस्य। २क्रियानिमित्ते त्रि०। "तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम्" पा०।

**क्रियावत्** त्रि० क्रियाऽस्त्यस्य मतुप् मस्य वः। १क्रियाविशिष्टे २क्रियानिरते अमरः "यः क्रियावान् स पण्डितः" चाण०। "त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावताम्" भा० व०३अ०। ३क्रियाश्रये कर्त्तरि च "पश्चात् क्रियावता कर्त्रा योगो भवति कर्मणा" हरिः। क्रतपूर्व्विशब्दे दृश्यम्।

**क्रियावसन्न** त्रि० क्रियया अवसन्नः। साक्ष्यादिप्रमाणेनावसन्ने पराजिते वादिनि प्रतिवादिनि च। "यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्" इत्युपक्रम्य "स्वयमभ्युपपन्नोऽपि स्वचर्य्यावसितोऽपि सन्। क्रियावसन्नोऽप्यर्हति परं सभ्यावधारणम्" व्य० त० नारदः। "क्रियावसन्नः साक्ष्यादिना प्राप्तपराजयः" रघुनन्दनः।

**क्रियावादिन्** त्रि० क्रियां क्रियासाध्यं वदति वद–णिनि। व्यवहारे साक्ष्यादिप्रमाणरूपक्रियासाध्ययुक्ते वादिनि (फैरादी) मिता०।

**क्रियाविशेषण** न०६त०। धात्वर्थसाध्यरूपक्रियायाः शाब्दबोधे विशेषणत्वेन भासमाने पदार्थे। शब्दार्थरत्ने विवृतिः "आख्यातं सकारकविशेषणमिति" भाष्योक्तवाक्यलक्षणे विशेषणपदस्य कारकविशेषणक्रियाविशेषणोभयपरतया कारकविशेषणानां क्रियाविशेषणानां कारकभिन्नसम्बोधनादीनां च वाक्यघटकत्वम्। तानि च वाक्यपदीये कतिचित् संगृह्य प्रदर्शितानि यथा "संबोधनान्तं कृत्वोऽर्थः कारकं प्रथमोदितः। धातुसम्बन्धाधिकारनिष्पन्नमनमस्तनञ्। तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम्। सम्बन्धश्चाष्टकस्यास्य क्रियया एवावधार्य्यताम्"। अत्र यद्यपि सम्बोधनस्य सर्वत्र प्रकृतक्रियान्वयित्वं न सम्भवति तथापि जानीहीत्यध्याहृतक्रियान्वयितया तस्याः प्रकृतक्रियायामन्वयात् परम्परया भवत्येव प्रकृतक्रियान्वयित्वम्। तथाहि "सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः। प्राप्ताभिमुख्यः सम्बोध्यः क्रियासु विनियुज्यते" इति वाक्यपदीये क्रियासु नियोज्यस्यैव संबोध्यतोक्त्या विनियोगविषयक्रियायामेव तस्य साधुत्वात् व्रजानि देवदत्तेत्यादौ तु देवदत्तस्य गमनक्रियायां विनियोगाभावेनाध्याहर्त्तव्यायां जानीहीत्यादिक्रियायामेवान्वयौचित्यात् तत्क्रियायाश्च व्रजानीत्यादिक्रियाविषयत्वादिसम्बन्धेन विशेषणत्वादेकवाक्यत्वम्। अन्यथा व्रजानि देवदत्तेत्यनयोरुभयवाक्यघटकत्वे तयोः परस्परनन्वयेनैकवाक्यत्वाभावेन समानवाक्यमात्रविषयनिघातानुपपत्तेः। तथाहि पदादित्यधिकृत्य सर्वमनुदात्तमपदादाविति "चोपक्रम्य आमन्त्रितस्य चेति" सूत्रेण अष्टमाध्याये पदादुत्तरवर्त्तिनो ऽपादादिस्थितस्यामन्त्रितस्य षष्ठाध्यायविहितादुदात्तत्वं निहत्य सर्वानुदात्तत्वं विहितं वार्त्तिककारेण च "समानवाक्ये निघातयुष्मदस्मदादेशाः" इत्यनेन चाद्युदात्तत्वनिघातः एकवाक्य एव व्यवस्थापितोऽतः व्रजानि देवदत्तेत्यनयोरुक्तरीत्यैकवाक्यत्वएव निघातो नान्यथेति। उक्तञ्च वाक्यपदीये "संबोधनपदं यच्च तत् क्रियाया विशेषणम्। व्रजानि देवदत्तेति निघातोऽत्र

गर्यासतीति" । अत्रेदं बोध्यम् विशेष्यतेऽनेनेति व्युत्पत्त्या विशेषणपदं भेदाभेदान्यतरसम्बन्धेनान्वयिविशेषणपरं तत्र कारकादीनां भेदसम्बन्धेन क्रियायामन्वयात् भेदविशेषणत्वम् स्तोकं पचतीत्यादौ तु विक्लित्तिरूपधात्वर्थफले, द्रुतं गच्छतीत्यादौ धात्वर्थव्यापारे मत्यादौ च अभेदेनान्वयात्स्तोकादेरभेदविशेषणत्वम् । अत्रायं भेदः साध्यरूपक्रियाया विशेषणत्वे तस्याश्च लिङ्गसंख्यान्वयित्वाभावेन तद्विशेषणस्य सामान्यत्वात् क्लीवता उत्सर्गतोभावाख्यातवदेकवचनान्तता च तेन स्तोकं पच्यते इत्यादि साधु । घञाद्यन्ते तु साध्यसिद्धोभयक्रिययोर्धातुप्रत्ययाभ्यां बोधनस्य क्रियाशब्दे दर्शितत्वेन धातुबोध्यसाध्यरूपक्रियाविशेषणत्वविवक्षायामेकवचनक्लीवता घञाद्यर्थसिद्धक्रियान्वयविवक्षायां तु विशेष्यस्य लिङ्गसंख्यान्वयित्वेन तद्विशेषणस्य द्विवचनपुंस्त्वादि । अतएव "सञ्चारो रतिमन्दिरावधि सखी कर्णावधि व्याहृतमिति" "आगमोनिष्फलस्तत्र भुक्तिः स्तोकापि यत्र नो" इति च प्रयोगः संगच्छते । फलविशिष्टस्य कर्मणः कर्मसंज्ञाविधानेन व्यपदेशिवद्भावपरिभाषया साध्यक्रियाविशेषणस्य कर्मत्वम् तेन स्तोकमीशब्दस्य कारकपूर्ब्बकत्वात् यण् । तत्र पदसाधुतामात्रार्थं द्वितीयामात्रविधाने तन्न स्यात् इति बोध्यम् । अस्य च एकवचनान्ततेत्युक्तिरप्यौत्सर्गिकी क्वचित् द्विवचनादिप्रयोगोभवत्येव उक्तञ्च हरिणा "एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया । भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रय इति"। उत्सर्गतएकत्वे सत्यपि साधनाश्रयसंख्ययाख्याते क्रिया भिद्यते इत्यर्थः । अत्राख्यात इत्युपादानात् आख्यातार्थाश्रयसंख्ययैव क्रियाभेदो नतु तृतीयाद्युपस्थाप्याश्रयसंख्ययापि तेन चैत्राभ्यां सुप्यते इत्यादौ न द्विवचनादि, तथा नामार्थलिङ्गेन क्रियाभेदो लिङ्गस्येतरपदोपात्तत्वात् । एवञ्च लिङ्गसंख्यानन्वयित्वरूपासत्त्वलक्षणे संख्याविशेषस्य साक्षादनन्वयित्वविवक्षणाल्लिङ्गमात्रस्य वा तथात्वविवक्षणान्न दोष इत्यनुसन्धेयम् । उष्ट्रासिका आसते हतशायिकाः शयते इत्यादि भाष्योदाहरणे च उपमानोष्ट्रासनादिबाहुल्येनोपमेयासनादेर्बाहुल्यस्य विवक्षणाद्भावेऽपि बहुवचनादीत्याकरे स्पष्टम् । उष्ट्रासिकापदञ्च द्वितीयाबहुवचनान्तं क्रियाविशेषणतया द्वितीयोत्पत्तेर्बाहुल्येनैवोपमानविवक्षणात् बहुवचनम्" अत्र मतभेदेन शब्दशक्ति प्र॰ विशेषोदर्शितो यथा "भावविहितानामपि घञादीनाङ्कृत्यैव गतिः तत्रापि भावपदस्य धात्वर्थस्वरूपपरत्वात् । अन्यथा पाकं पश्येत्यादौ धात्वर्थस्य पचनादेः कर्म्मत्वादावन्वयापत्तेः सुबर्थे धात्वर्थस्यान्वयस्याव्युत्पन्नत्वात् इत्यमेव च स्तोकः पाक इत्यादिप्रयोगस्य परिशिष्टाद्युक्तस्य प्रामाण्यम् अन्यथा स्तोकादीनां धात्वर्थे विशेषणत्वे नियमतो द्वितीयापत्तेः अतएव "सञ्चारोरतिमन्दिरावधि सखीकर्णावधि व्याहृतम्" इत्यादिकं काव्यम् "आगमोनिष्फलस्तत्र भुक्तिः स्तोकापि यत्र नो" इत्यादिः स्मृतिश्च सङ्गच्छतइति नव्याः । स्तोकरप्रत्ययार्थसाकाङ्क्षस्यैव धातोरर्थे विशेषणतापन्नस्य बोधने तदर्थकनाम्नोद्वितीयाद्यपेक्षा नतु धातुमात्रस्य तथाच स्तोकः पाक इत्यादिरेव प्रमाणं नतु स्तोकं पाकइत्यादिः । घ्रुवरूपक्रियाया विशेषणं कर्म्मत्वाद्यनुशिष्टेरपि तत्रैव तात्पर्य्यात् । अतएव स्तोकं स्थीयते साधु गतं चकितं द्रष्टव्यमित्यादौ धात्वर्थस्य तिङाद्यर्थकालादिसाकाङ्क्षत्वान्न तद्विशेषणस्य द्वितीयाद्यनुपपत्तिरिति तु शाब्दिकसम्प्रदायः" ।

भेदसम्बन्धेन क्रियायामन्वयिविशेषणे तु पौनःपुन्येन गच्छति अतिशयेन पचति समेनैति विषमेनैतीत्यादिषु प्रकृत्यादि॰ तृतीया । क्वचित् धात्वर्थस्य करणत्वेनान्वये तद्विशेषणीभूतात् तृतीयादि यथा "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादौ यागेनेष्टं भावयेदिति भाट्टमते यागस्य करणतया भावनायामन्वयात् अश्वमेधस्य तत्राभेदविशेषणत्वेन तद्वद्विभक्तिकत्वम् । अन्यमते तु नाम्ना शिव इत्यादिवत् अभेदे तृतीयेति भेदः । मुग्धबोधे "कर्मक्रियाविशेषणेत्यादि" कर्मसंज्ञाद्वितीयाविधानञ्च अभेदान्वयिविशेषणपरम् । भेदविशेषणे तु तृतीयैव । तत्रायं विशेषः क्रियायाम् अभेदसम्बन्धेनान्वयविवक्षायां द्वितीया । अभेदप्रकारकान्वयविवक्षायां तु तृतीया ।

**क्रियाशक्ति** स्त्री क्रियैव शक्तिः । जगदुत्पत्तिसाधने परमेश्वरस्य शक्तिभेदे । सा च ब्राह्मीरूपा यथोक्तं शा॰ ति॰ पदार्थादर्शे च "सच्चिदानन्दविभवात् सकलात् परमेश्वरात् । आसीच्छक्तिस्ततोनादोनादाद्बिन्दुसमुद्भवः । परशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः । बिन्दुर्नादोबीजमिति तस्य भेदाः समीरिताः । बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः । समवायः, समाख्यातः सर्व्वागमविशारदैः । रौद्री बिन्दोस्ततोनादाज्ज्येष्ठा बीजादजायत । वामा, ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः । ते ज्ञानेच्छाक्रियात्मानो वह्नीन्दु-

र्कन्वस्वरूपिणः” शा॰ति॰। व्याख्यातमेतत् पदार्थादर्शे “अविद्याशबलितत्वेन जड़त्वे कथं तस्य सृष्टिकर्त्तृत्वमिति? शङ्कां वारयति सच्चिदानन्दविभवादिति अनेनाविद्योपहितत्वेऽपि तस्य न स्वरूपहानिरित्यर्थः। सकलाच्छक्तिरासीदिति योजना। शक्तिसहितोदेवः पुनः शक्तिस्तस्मात् सा कथमासीदिति? चेत् सत्यं या अनादिरूपा चैतन्याध्यासेन महाप्रलये सूक्ष्मा स्थिता तस्या गुणवैषम्यानुगुणतया सात्त्विकराजसतामसस्रष्टव्यप्रपञ्चकार्य्यसाधने उच्छूनरूपत्वमेवोपचारादुत्पत्तिः। इदं सांख्यमतेनोक्तम्। प्रयोगसारे “तस्माद्विनिर्गता शक्तिः सर्वगा विश्वसम्भवा”। वायुसंहि॰“शिवेच्छया परा शक्तिः शिवतत्त्वैकतां गता। ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिवेति”। पञ्चरात्रेऽपि “एवमालोच्य सर्गादौ सच्चिदानन्दरूपिणीम्। समस्ततत्त्वसंबन्धत्वात् स्फर्त्त्यधिष्ठातरूपिणीम्। व्यक्तां करोति तां नित्यां प्रकृतिं परमः पुमान्” तस्या एव नादविन्दू सृष्ट्युपयोग्यवस्थारूपौ तदुक्तं प्रयोगसारे “नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी। शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता। सेव सर्गक्षमा” अन्यत्रापि “अभिव्यक्ता परा शक्तिरविनाभावलक्षणा। अखण्डा परचिच्छक्तिर्मता चिद्रूपिणी विभुः। समस्ततत्त्वभावेन विवर्त्तेच्छासमन्विता। प्रयाति विन्दुभावं च क्रियाप्राधान्यलक्षणम्”। इच्छाशक्त्यादिरूपतया विन्दोस्त्रैविध्यमाह परेति साक्षात् परशक्तिमयः अतः पश्चात्तदवस्थात्मकत्वमेवोक्तम् असौ त्रिधा भिद्यते। एतौ नादविन्दू प्रथमोक्तनादविन्दभ्यामन्यौ तदुक्तं “स विन्दुर्भवति त्रिधा”। विन्द्वादेर्भेदत्रयस्वरूपमाह विन्दुरिति। ततस्तस्मात् विन्दोः रौद्री यतस्तस्याः शिवमयत्वम् अतोऽन्वर्थताऽपि। नादाज्ज्येष्ठेति। सर्वश्रेष्ठत्वे नावस्थितत्वेनान्वर्थता ज्ञेया। वीजाद्वामा अजायतेति सम्बन्धः तस्याः सुन्दरत्वादन्वर्थत्वम्। तदुक्तं प्रयोगसारे “विन्दुः शिवात्मकस्तत्र वीजं शक्त्यात्मकं स्मृतम्। तयोर्योगे भवेन्नादस्तेभ्यो जातास्त्रिशक्तयः। रौद्री विन्दोः समुद्भूता ज्येष्ठा नादादजायत। वामा वीजादभूच्छक्तिस्ताभ्यो देवास्त्रयोऽभवन्”। ते इति ज्ञानमिच्छा क्रिया च तदात्मानस्ते रुद्रब्रह्मरमाधिपाः क्रमेणेच्छाशक्तिक्रियाशक्तिज्ञानशक्तिस्वरूपाः। अतएव रुद्रादयः निरोधकाले वह्नीन्दर्क स्वरूपिणः शक्तेरेवावस्थाविशेषा ज्ञेयाः एषामिच्छाक्रियाज्ञानरूपशक्तित उत्पन्नत्वात्। वक्ष्यते च “इच्छाज्ञानक्रियात्मानः” इति। ईश्वरप्रत्यभिज्ञायाम् “यतदिच्छति तज्ज्ञातुं कर्त्तुं वा स्वेच्छया क्रियाम्। अनन्तरं हि तत्-कार्य्यज्ञानं दर्शनशक्तितः। ज्ञानशक्तिस्तया ज्ञेयोयोऽसौ स्थूलसमुद्यमः। सा क्रियाशक्तिरुदिता यतः सर्व्वं जगत् सृजेत्” गोरक्षसंहितायाम् “इच्छा क्रिया तथा ज्ञानं रौद्री ब्राह्मी तु वैष्णवी। त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति”

**क्रियासमभिहार** पु॰ सम्+अभि+हृ—घञ् इत॰। क्रियायाः पौनःपुन्ये। “क्रियासमभिहारे यङ्” पा॰ “क्रियासमभिहारेण विराध्यन्तं क्षमेत कः?” इति माघः।

**क्रियास्नान** न॰ क्रियाङ्गं स्नानम्। शङ्खोक्ते स्नानविधिभेदे तत्प्रकारो यथा

“क्रियास्नानं प्रवक्ष्यामि यथावद्विधिपूर्व्वकम्। मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि। जले निमज्य उन्मज्य उपस्पृश्य यथाविधि। तीर्थस्यावाहनं कुर्य्यात्तत् प्रवक्ष्याम्यशेषतः। प्रपद्ये वरुणं देवमम्भसां पतिमर्च्चितम्। याचेत देहि मे तीर्थं सर्वपापापनुत्तये। तीर्थमावाहयिष्यामि सर्व्वाघविनिसूदनम्। सान्निध्यमस्मिन् तोये च क्रियतां मदनुग्रहात्। रुद्रान् प्रपद्ये वरदान् सर्व्वानप्सु सदस्तथा। सर्व्वानप्सुसदश्चैव प्रपद्ये प्रयतः स्थितः। देवमंशुसदं वह्निं प्रपद्येऽघनिसूदनम्। आपः पुण्याः पवित्राश्च प्रपद्ये शरणं तथा। रुद्राश्चाग्निश्च सर्पश्च वरुणस्त्वाप एव च। शमयन्त्वाशु मे पापं माञ्च रक्षन्तु सर्वशः। हिरण्यवर्णातिसृभिर्ज्जगतीति चतसृभिः। शन्नोदेवीति च तथा शन्नआपस्तथैव च। इदमापः प्रवहते इ्यचञ्च समुदीरयेत्। एवं सम्मार्जनं कृत्वा च्छन्दआर्षञ्च देवताः। अघमर्षणसूक्तञ्च प्रपठेत् प्रयतः सदा। छन्दोऽनुष्टुप् च तस्यैव ऋषिश्चैवाघमर्षणः। देवता भाववृत्तश्च पापक्षये प्रकीर्त्तितः। ततोऽम्भसि निमग्नः स्यान्त्रिः पठेदघमर्षणम्। द्रुपदद्यान्मूर्द्ध्नि तथा महाव्याहृतिभिर्जलम्। यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः। तथाघमर्षणं सूक्तं सर्वपापप्रणाशनम्। अनेन विधिना स्नात्वा स्नातवान् धौतवाससा। परिवर्त्तितवासास्तु तीर्थनामानि संजपेत्। उदकस्यापदानात्तु स्नानशाटीं न पीड़येत्। अनेन विधिना स्नातस्तीर्थस्य फलमश्नुते”।

**क्रियेन्द्रिय** न॰ क्रियायाः साधनमिन्द्रियम्। वाक्पादादौ कर्म्मेन्द्रिये हेम॰।

**क्रिवि** पु॰ कृवि-इन् नि॰। १कूपे निघण्टुः २कर्त्तरि३हिंसके

लि० "रुद्र ! यत्ते क्रिविपरं नाम" यजु० १०।२०। ४असुरभेदे "अभ्योजसा क्रिविं युधाः" ऋ० २,२२,२, "क्रिविं नामासुरम्" भा०। ५पञ्चालदेशे पु० व० व०। "आप्नोर्यामोऽनिरात्रस्तेन हैतेन क्रव्यः पञ्चालो राजा" "क्रिवय इति ह वै पुरा पञ्चालानाचक्षते" शत० ब्रा० १३, ५,४,७, [क्रिविर्दती" ऋ० १,१६६,६,

**क्रिविस्** लि० क्रवि—दस नि०। हिंसके "यत्रा वोदिद्युद्रदति

**क्री** क्रये (मूल्यादानेन द्रव्यग्रहणे) क्र्या० उभ०सक०अनिट्। क्रीणाति क्रीणीते अक्रैषीत् अक्रेष्ट। चिक्राय चिक्रिये क्रेतव्यः क्रयणीयः क्रेयः क्रयार्थे प्रसारिते क्रय्यः क्रायकः क्रेता क्रीणन् क्रीणानः। क्रीतः क्रीत्वा विक्रीय। क्रेतुम्। कर्मणि क्रीयते अक्रायि अक्रायिषाताम्—अक्रेषाताम्। चिक्रिये। "कइमं दशभिर्ममेन्द्रं, क्रीणाति धेनुभिः" ऋ०४, २४,१०, "शुक्रं त्वा शुक्रेण क्रीणामि" यजु० ४,२६,। "क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्" मनुः "कच्चित् सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम्" भा०स० कच्चिदध्यायः। "सोमं राजानमक्रीणंस्तस्मात् प्राच्यां दिशि क्रीयते" ऐत० १,१२, "स्मृद्रानीतैः क्रयक्रीतैः (जलैः) कर्म कुर्वन् पतत्यधः" स्मृतिः। अनुशयशब्दे उदा०।

अप+मूल्यादिदानेन वशनयने। "सा चेदस्मै न दद्यात् काममेनामपक्रीणीयात्" शत० ब्रा० १४,६,४,७, "तदा एनां स्वपत्नीं वस्त्राभरणभोज्यादिदानेन कामं यथाशक्तिवैभवमपक्रीणीयात् वशं नयेत्" भा०।

अभि+अभिलक्ष्यीकृत्य विक्रये संस्कारविशेषे च। "एकं वा एष क्रीयमाणोऽभिक्रीयते छन्दसामेव राज्याय" शत० ब्रा० ३,३,२,१, "एषः क्रीयमाणः क्रयेण सम्पाद्यमानः सोमः एकं वै एकं खलु प्रयोजनमभिलक्ष्य विक्रीयते, अभिषवादिना स्वात्मना संस्क्रियते वा" भा०।

अव+धनादिना वशनयने। "ब्राह्मणं क्षत्रियं वा सहस्रेण शताश्वेनावक्रीय" सांख्या० श्रौ०सू० १५,१०,१०,

आ+ ईषत्क्रये। "भार्यां शुल्काक्रीताम्" दशकुमा०

उप+सामीप्येन क्रये। "वटादीनुपक्रीय" हितो०।

निस्+(र) विक्रये क्रयानुरूपमूल्यदाने च। "न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्या विमुच्यते" मनुः। "निष्क्रयो-विक्रयः" उ०त०रघु०। "भोः केशव! मदीयस्त्वमङ्गिरस्तोऽसि सत्यया। स त्वं मामनुगच्छस्व कुरुष्व यद्ब्रवीम्यहम्। प्रथमः कल्प इत्येवमब्रवीत् मधुसूदनः। व्रजन्तमनुवव्राज नारदश्च जनार्द्दनः। परिहासान् बहुविधान् कृत्वा मुनिवरस्ततः। तिष्ठस्व गच्छामीत्युक्त्वा परिहासविचक्षणः। अपनीय ततः कण्ठात् पुष्पदामैनमब्रवीत्। कपिलां गां सवत्सां मे निष्क्रयार्थं प्रयच्छ मे। तिलं कृष्णाजिनं स्मूर्पं प्रयच्छ ताम्रकाञ्चनम्। एषोऽत्र निष्क्रयः कृष्ण! विहितो वृषकेतुना" हरि० १३५अ० ३निष्कृतौ। "तपोदानोपहारेषु व्रतेषु नियमेषु च। इज्याध्यायनधर्मेषु योनाऽऽसक्तः स निष्क्रयः" वशिष्ठः

परि+नियतकालं भृत्या स्वीकारे अनियतकालस्वत्वोत्पादकात् क्रयात् तस्य नियतकालत्वेन न्यूनता। तद्योगे करणस्य वा सम्प्रदानसंज्ञा। "शतेन शताय वा परिक्रीतः" सि०कौ०। "सम्भोगाय परिक्रीतः कर्त्तास्मि तव नाप्रियम्" भट्टिः "भक्त्या सुक्तिः परिक्रीता सर्ब्बिर्षिष्णोरुषाऽरिभिः" मुग्ध०। "कृतेनोपकृतं वायोः परिक्रीणानमुत्थितम्" भट्टिः। क्रयशब्दे २३०५ पृ० दर्शितम् जै० सूत्रवाक्यादि उदा०।

वि+मूल्यग्रहणेन स्वस्वत्वध्वंसपरस्वत्वापादकव्यापारे "वस्नेव विक्रीणावहा इषमूर्ज्जं शतक्रतो!" यजु०३,४९, विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः" मनुः अनुशयशब्दे भूरि उदा०।

सम्+सम्यक् क्रये "न च मे विद्यते वित्तं संक्रेतुं पुरुषं क्वचित्" भा० आ० १६०अ०।

"परिव्यवेभ्यः क्रियः" पा०

अकर्त्तृगामिन्यपि क्रियाफले तङ्।

**क्री** त्रि० क्री—क्विप्। क्रेतरि कारकोपदत्वेऽपि संयोगोपधत्वात् न यण्, किन्तु इयङ्। यवक्रियौ यवक्रिय इत्यादि।

**क्रीड़** खेलने भ्वा० पर० अक० सेट्। क्रीडति अक्रीडीत्। चिक्रीड क्रीडिता। क्रीडितव्यः क्रीड्यः क्रीडकः क्रीडिता। क्रीड़ः। क्रीडा। क्रीडितः। क्रीडनं क्रीडितुम्। क्रीडित्वा विक्रीड्य। "एष सोमो अधित्वचि गवां क्रीडत्यद्रिभिः" ऋ० ९,६६,२९, "माता च पिता च तेऽग्रे वृक्षस्य क्रीडतः" यजु० २३,२५, चिक्रीड चैव प्रजहास चैव" भा० व० १०४२श्लो० "क्रीडारसं निर्विशतीव बाल्ये" कुमा०। अस्मादर्षे प्रयोगे तङपि दृश्यते। ब्रह्मशङ्करशक्राद्यैर्देववन्द्यैः पुनः पुनः। क्रीडसे त्वं नरव्याघ्र! बालः क्रीडनकैरिव" भा० व० ५०४श्लो०

अन्वादुपसर्गे तत्तद्योत्यार्थविशिष्टे क्रीडने तत्र "क्रीडोऽनुसंपरिभ्यश्च" पा०एभ्यः चकारात् आङश्च तङ् "साध्वनुक्रीडमानानि पश्य द्वन्द्वानि पक्षिणाम्" भट्टिः। "आक्रीडमानोऽद्भुतात्मा श्रीमान् वायुसुतोययौ" भा० व०

१४६अ०। "फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु" भट्टिः। "मरुतस्समभितः परिचिक्रीडुः" शत० ब्रा० २,५,२,२०, आर्षस्तङभावः। समस्तु अकूजने अव्यक्तशब्दाभावे एव तङ्। "समोऽकूजने" वार्त्तिककृता नियमात् "हरः संक्रीडमानस्य उमया सह पर्व्वते" रामा० आ० ४७,१०, तेनास्य कूजनार्थताऽपि किन्तु तत्र न तङ् "संक्रीडति चक्रम्" सि०कौ०। "तैस्तैर्द्विहारैर्बहुभिर्दैत्यानां कामरूपिणाम्। समाः संक्रीडतां तेषाम्" भा० आ० २०६अ०। अत्र आर्षः तङभावः।

**क्रीड** पु० क्रीड–घञ्। परीहासे शब्दरत्ना०। [त्रिका०।

**क्रीडक** न० क्रीड–ण्वुल्। १क्रीडाकारके। २द्वाःस्थे सेवके

**क्रीडचक्र** न० "इदं क्रीडचक्रं सदीर्घं समस्तैर्यकारैः समेतम्" वृ० र० उक्ते छन्दोभेदे।

**क्रीडन** न० क्रीड–भावे–ल्युट्। १खेलायाम् "उदकक्रीडनं नाम कारयामास भारत!" भा० आ० १२८अ०। "बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि" महाना०। करणे ल्युट्। २क्रीडासाधने। "यथा हिरण्याक्ष उदारविक्रमो महासुधे क्रीडनवन्निराकृतः" भाग० ३,१६,१४, स्वार्थे क। तत्रार्थे "क्रीडसे त्वं नरव्याघ्र! बालः क्रीडनकैरिव" भा० व० १२अ०।

**क्रीडनीय** त्रि० क्रीड–करणे वा० अनीयर् क्रीडनाय साधु छ वा। क्रीडासाधने। "क्रीडतः क्रीडनीयानि ददुः पक्षिगणांश्च ह" भा० अनु०८६अ०।

**क्रीडा** स्त्री क्रीड–भावे अ। १परीहासे २खेलने च "क्रीडारसं निर्विशतीव बाल्ये" कुमा०। "आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः" छा० उप०। "तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः" मेघ० "क्रीडायासश्रमशमपटवः" माघः। क्रीडागृह, क्रीडाशैल, क्रीडोद्यानादयः क्रीडार्थे गृहादौ। क्रीडासचिव नर्म्मसचिवे

**क्रीडाताल** पु० "एकएव द्रुतोयत्र क्रीडातालः स कथ्यते" इति संगीतदामोदरोक्ते तालभेदे।

**क्रीडानारी** स्त्री क्रीडायाः क्रीडार्थं नारी अश्ववासादिवत् चतुर्थ्यर्थे इत०। क्रीडार्थायां वेश्यारूपायां नार्य्याम्। "वेश्या निवेशिता वीर! द्वारवत्यां सहस्रशः। सामान्यास्ताः कुमाराणां क्रीडानार्य्यो महात्मनाम्" हरि०१४७अ०। [शब्द चि०

**क्रीडायान** न० क्रीडार्थं यानम् चतुर्थ्यर्थे इत०। पुष्परथे

**क्रीडारत्न** न० क्रीडाया रत्नमिव। रतौ त्रिका०

**क्रीडारथ** पु० क्रीडायाः क्रीडार्थो रथः चतुर्थ्यर्थे इत०। पुष्परथे "क्रीडारथोऽस्तु भवतश्च उत सांग्रामिको रथः" भा० आ० ५३अ०।

**क्रीडारसातल** न० श्रीमद्दितलक्षणयुते उपरूपकभेदे यथा "प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम्। प्रसिद्धनायकं गर्भविमर्षाभ्यां विवर्ज्जितम्। भारतीवृत्तिबहुलं श्रीतिशब्देन संयुतम्। मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् यथा क्रीडारसातलम्" सा०द०।

**क्रीडि** त्रि० क्रीड–इन्। क्रीडके। "आ क्रीडयो न मातरं तुदन्तः" ऋ० १।१६४।१४।

**क्रीडिन्** त्रि० क्रीड–वा०ताच्छील्ये इनि। १क्रीडाशीले २वायुभेदे पु० "क्रीडिभ्यः संस्तृष्टान् मरुद्भ्यः" यजु० २४।२६ "क्रीडी च शाकी चाज्जेषी" यजु० १७।८५, "क्रीडी सदाक्रीडाशीलोमरुत्" वेददी०।

**क्रीडु** त्रि० क्रीड उन्। क्रीडाकारके। "क्रीडुर्मखो न मंहयुः पवित्रं सोम! गच्छसि" ऋ० ६।२०।७

**क्रीत** त्रि० क्री–कर्म्मणि क्त। १मूल्यदानेन स्वत्वास्पदीभूते कृते। "भृत्यैर्नीतैः क्रयक्रीतैः (जलैः)कर्म्म कुर्व्वन् पतत्यधः" स्मृतिः। २गौणपुत्रभेदे पु०। "क्रीतश्च नवमः स येन क्रीतः" विष्णु सं०। भावे क्त। ३क्रये न० क्रीतानुशयः। पुत्रभेदास्तल्लक्षणानि च योगीश्वरेण दर्शितानि यथा "औरसो धर्म्मपत्नीजस्तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा। गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः। कानीनः कन्यकाजातो मातामहसुतोमतः। अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः। दद्यान्माता पिता वा यं स पुत्रोदत्तको भवेत्। क्रीतश्च ताभ्यां विक्रीतः, कृत्रिमः स्यात् स्वयंकृतः। दत्तात्मा तु स्वयन्दत्तो गर्भे विन्नः सहोढजः। उत्सृष्टो गृह्यते यस्तु सोऽपविद्धोभवेत् सुतः"। "अदूरबान्धवमिति देशभाषाविप्रकृष्टस्य प्रतिषेधः एवं क्रीतस्वयन्दत्तकृत्रिमेष्वपि योज्यं समानन्यायत्वात्। क्रीतस्तु विक्रीतः मातापितृभ्यां पूर्व्ववत् तथैकं पुत्रं ज्येष्ठञ्च वर्जयित्वा आपदि। सवर्ण इत्येव यत्तु मनुनोक्तम् "क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोपिवेति" तद्गुणैः सदृशोऽसदृशो वेति व्याख्येयं न जात्या "सजातीयेष्वयम्प्रोक्तस्तनयेषु मया विधिः" इत्युपसंहारात्" मिता०। स्वार्थे क। तत्रार्थे। "कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा।

स्वयं दत्तश्च शौद्रश्च षड्दायादबान्धवाः" इति मनूक्तेः तस्य पितृमातृभिन्नदायानधिकारित्वम्। दत्तकमीमांसामते "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम च" पराशरेण कलिधर्म्मप्रस्तावे चतुर्णामेव ग्राह्यताया उक्तेः दत्तकचकामते "दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः" इत्यादि पुराणे दत्तौरसभिन्नानां कलौ वर्ज्यत्वोक्तेश्च क्रीतपुत्रस्य न कलौ कर्त्तव्यता।

**क्रीतानुशय** पु० क्रीते क्रये अनुशयः। "क्रयविक्रयानुशयश्च" इति मनूक्ते अष्टादशविवादान्तर्गते विवादभेदे अनुशयशब्दे १८६ पृ० तद्विवृतिर्दर्शिता। अधिकं वीरमित्रोदये दर्शितं यथा

"अथ क्रीतानुशयोव्यवहारपदम्। तत्स्वरूपमाह नारदः "क्रीत्वा मूल्येन यत् पण्यं क्रेता न बहु मन्यते। क्रीतानुशय इत्येतद्विवादपदमुच्यते" इति। न बहु मन्यते—सम्यगसम्यगिति पूर्व्वं न विचार्य्य गृहीत मित्यर्थः। क्रीतं परीक्षणीयमित्याह बृहस्पतिः "परीक्षेत स्वयं क्रीतमन्येषाञ्च प्रदर्शयेत्। परीक्षितं बहुमतं गृहीता न पुनस्त्यजेदिति"। अन्येषां पण्यगुणदोषविदामिति शेषः। नारदोऽपि "क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः। परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनरिति"। चर्म्मादीनां परीक्षा सद्यः कार्य्या तथा च व्यासः "चर्म्मकाष्ठेष्टकासूत्रधान्यासवरसस्य च। वसुकुप्यहिरण्यानां सद्य एव परीक्षणमिति"। अत्र वसुशब्देन रूप्यं गृह्यते। कुप्यं रूप्यहेमव्यतिरिक्तं त्रपुसीसादिकम्। तथा च हेमरूप्ये प्रस्तुत्याहामरसिंहः "ताभ्यां यदन्यत्तत्कुप्यमिति"। क्रीतपण्यद्रव्यविशेषेण परीक्षणकालावधिमाह नारदः "त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु। मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम्। द्विपदामर्द्धमासन्तु पुंसान्तद्द्विगुणं स्त्रियाः। दशाहं सर्व्वबीजानामेकाहं लोहवाससाम्। अतोऽर्व्वाक्पण्यदोषस्तु यदि सञ्जायते क्वचित्। विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयादिति"। त्र्यहात् क्रयदिनादारभ्येति शेषः। पञ्चाहादित्यादावप्येवमेव शेषोऽवगन्तव्यः। त्र्यहं विक्रेतृप्रतिदेयमित्यादिविधिदर्शनात् त्र्यहाद्दोह्यमित्यादि परीक्षणं प्रीतिदोह्यादिद्रव्यविषयमिति मन्यते इति स्मृतिचन्द्रिका। दोह्यं महिष्यादिकम् वाह्यं बलीवर्द्दादिकम्। मुक्ताग्रहणं रत्नोपलक्षणम्। द्विपदाम्पुंसान्दासानामित्यर्थः। तद्द्विगुणं मासादित्यर्थः स्त्रियादास्या इत्यर्थः। पूर्व्वोदाहृतचर्म्मकाष्ठेत्यादिव्यासवचनेन भक्षणाद्यर्थं गृहीतानां धान्यादीनां सद्यःपरीक्षणाभिधानात् सर्व्वबीजानामित्यत्र बीजशब्दोवपनार्थं गृहीतधान्यपरः। अन्यथा सद्यःपरीक्ष्यत्वप्रतिपादकव्यासवचनविरोधः स्यात्। अतोऽर्व्वाक् त्र्यहादेरभ्यन्तर इत्यर्थः। कात्यायनोऽपि "भूमेर्दशाहोऽनुशयः क्रेतुर्विक्रेतुरेव चेति"। भूमेर्गृहक्षेत्रादिरूपाया अनुशयः परावर्त्तनयोग्यः कालः परीक्षाकाल इति यावत्। यथोक्तपरीक्षाकालातिक्रमे दोषदर्शने न प्रतिदानमित्याह स एव "अविज्ञातन्तु यत् क्रीतं दुष्टं पश्चाद्विभावितम्। क्रीतन्तत् स्वामिने देयम्पण्यं कालेऽन्यथा न त्विति"। अविज्ञातं परीक्षाशैथिल्यात्तत्त्वतोऽपरिज्ञातम्। दुष्टं विभावितं दोषवत्तया ज्ञातमित्यर्थः। काले परीक्षाकाले। अन्यथा तत्कालात्यये दुष्टतया परिभावितमपि तत् स्वामिने न देयम्। अविज्ञातन्तु यत्क्रीतमित्यनेन यत् क्रयात् प्राक् अपरीक्ष्य क्रीतन्तत् परीक्षासमये दोषदर्शने परावर्त्तनीयम्। यत्तु परीक्ष्य गृहीतं तन्न परावर्त्तनीयमिति। दर्शितमर्थं नारदश्चाह "क्रीत्वा नानुशयं कुर्य्याद्वणिक्पण्यविचक्षणः। क्षयं वृद्धिञ्च जानीयात् पण्यानामागमन्तथा। क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः। परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत् पुनरिति"। अनुशयं पश्चात्तापम्। पण्यानां अश्वादीनां अस्मिन्देशे मूल्यहानिरस्मिन्देशे तदाधिक्यमिति क्षयवृद्धी एतद्देशसम्भवमित्यागमञ्च क्रयात् प्रागेव जानीयादित्यर्थः। दोषदर्शनमन्तरेण परीक्षाकाल एव प्रत्यर्पणे विशेषमाह कात्यायनः "क्रीत्वा चानुशयं पश्चात् त्यजेद्दोषादृते नरः। अजुष्टमेव काले तु स मूल्याद्दशमं वहेत्। क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागते। षड्भागन्तस्य मूल्यस्य दत्त्वा क्रीतं त्यजेन्नरः" इति। अजुष्टमनभिभुक्तम्। काले परीक्षाकाले अत्र मूल्यदशमभागदानं यदुपभुज्यमानमपि न नश्यति भूम्यादिकं तद्विषयम् उपभोगविनश्वरबीजादिविषयं षड्भागदानमिति व्यवस्था ज्ञेया। ननु विजानताऽप्यनुशयो न कार्यः "क्रीत्वा नानुशयम् कुर्य्यादिति" निषेधसद्भावादिति चेन्नत्यं अपवादस्य सत्त्वात् स चापवादोदर्शितो नारदेन "क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतमिति"। मन्यत इत्यनेन वस्तुतो दोषाभाव उक्तः। द्वितीयादिदिवसे प्रत्यर्पणे विशेषमाह स एव "द्वितीयेऽह्नि ददत् क्रेता मू-

स्याच्चिंशांशमाहरेत् । द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तदिति" । परतः तृतीयाहात् परतः क्रेतुरेव तत् क्रीत्वा अनुशयादिकं न कुर्य्यादित्यर्थः । यत्तु मनुवचनम् "क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत् । सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वेति" तदुपभोगे नश्वरवस्त्वन्दह्यानशयनादिविषयम् । यत्तू पभोगेन विकारप्रापितं सदोषमपि तत् परीक्षाकालमध्येऽपि न प्रतिदेयमित्याह नारदः "परिभुक्तन्तु तद्वासः क्लिष्टरूपं मलीमसम् । सदोषमपि तत् क्रीतं विक्रेतुर्न भवेत्पुनरिति" । वासोग्रहणमुपलक्षणमिति मदनरत्ने । वासोविषयतैवास्येति माधवीये । पण्यानां देशकाले उपचयापचयौ ज्ञातव्याविति आह नारदः "क्षयं वृद्धिञ्च जानीयात्पण्यानामागमन्तथेति" । अश्वादिपण्यानामस्मिन् कालेऽस्मिन् देशे च क्षयं वृद्धिं वा जानीयात्तथागमं कुलीनत्वादिज्ञानार्थम् उत्पादकजन्मभूम्यादिकञ्च जानीयादित्यर्थः । क्रयकाले मूल्यक्षयवृद्धिदोषदर्शनमन्तरेण क्रीतविक्रीतयोः प्रत्यर्पणे पुनर्ग्रहणे दण्डमाह याज्ञवल्क्यः "वृद्धिं क्षयं वा वणिजा पण्यानामविजानता । क्रीत्वा नानुशयः कार्य्यः कुर्वन् षड्भागदण्डभागिति" । वृद्धिं मूल्यवृद्धिम् अविजानता क्रेत्रा एवं मूल्यक्षयमविजानता विक्रेत्रेत्यर्थः । परीक्षाकालातिक्रमेण प्रत्यर्पणे दण्डमाह मनुः "अहणे तु दशाहस्य न दद्यान्नापि दापयेत् । आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षडिति" । दशाहग्रहणं परीक्षाकालस्य पूर्व्वोक्तस्योपलक्षणम् । सर्वमेतत्परिभाषणाकृते परिभाषणे तु तदनुसारेणैव प्रतिदानं तदभावादिकं मन्तव्यम्" । क्रयानुशयोऽप्यत्र ।

**क्रुञ्च्** पुंस्त्री० क्रुन्च—क्विन् "दधृषित्यादि०" पा०नि० नलोपाभावः (कोँचवक) १ वकभेदे अमरः स्त्रियां टाप् । २ हंसे च "अद्भ्यः क्षीरं व्यपिबत् क्रुङ्ङाङ्गिरसो धिया । ऋतेन सत्यमिन्द्रियम्" यजु० १९।७२ "आङ्गिरसः अङ्गानां रसः प्राणो यथा क्रुङ् हंसो भूत्वा धिया प्रज्ञया अद्भ्यः सकाशात् क्षीरं दुग्धमपिबत् पिबति संसृष्टाभ्यां क्षीरोदकाभ्यां क्षीरमेव हंसः पिबतीति जातिस्वभावः" वेददी० ।

**क्रुञ्च** पुंस्त्री० क्रुन्च—अच् । (कोँचवक) वकभेदे अमरः "वायवे बलाका इन्द्राग्निभ्यां क्रुञ्चान्" यजु० २४।२२ "कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा, वाचे क्रुञ्चः" यजु० २४।३१ स्त्रियां संयोगोपधत्वात् टाप् । पुंयोगे तु अजा०टाप् । टावन्तः। २ वीणाभेदे स्त्री शब्दरत्ना०। ततः चतुरर्थ्यां नडादि० छ कुक्चागमश्च । क्रुञ्चकीय तत्सन्निकृष्टदेशादौ । क्रुञ्चा वीणाऽस्यास्य क्रुञ्चावती ज्वालात् वा मतुप् यवादि० न मस्य वः । क्रुञ्चामत् तद्युक्ते त्रि० ३ क्रौञ्चपर्व्वते पु० हेमच० । स्वार्थे अण् । क्रौञ्च स्वनामख्याते पर्व्वते क्रौञ्चदारणः। वकभेदे च "ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुदर्शनम्" "यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्" रामा० आ० २स० । स्त्रियां तु अणन्तत्वात् ङीप् । "निशम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत्" रामा० आ० २स०

**क्रुड** निमज्जने घनीभावे च तु० कुटा० प० अक० सेट् । क्रुडति अक्रुडीत चुक्रोड—क्रोडः ।

**क्रुथ** हिंसने क्र्या० प० सक० सेट् चान्द्राः । क्रुथ्नाति अक्रोथीत् चुक्रोथ । क्रोथः ।

**क्रुध** कोपे दिवा० पर० अक० सोपसर्गः सक० अनिट् । क्रुध्यति सत्यमभिक्रुध्यति ऌदित् अक्रुधत् । चुक्रोध-क्रोद्धा क्रोत्स्यति । क्रोद्धव्यम् क्रोध्यम् क्रोधनीयम् क्रोद्धा क्रोधी क्रुद्धः । क्रुध्यन् क्रोधः। क्रुद्ध्वा संक्रुध्य "चुक्रोध पुरमादकः" भा० आ०१५२अ० "द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः" भाग० ६,४,५, अत्र तङ् आर्षः यङ्न्तादौ चानश् वा। "क्रुध्यन् कुलं धक्ष्यति विप्रवह्निः" "वह्निः क्रोधं विभो ! संहर संहरेति" कुमा० । "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" पा० कोपविषयस्य सम्प्रदानता । अरये क्रुध्यति । "क्रुधद्रुहोरुपसृष्टयोः कर्म्म" पा० सोपसर्गस्य तस्य सम्प्रदानस्य कर्म्मता "क्रुध्यन्तं न प्रतिक्रुध्येत्" मनुः। "सत्यमभिक्रुध्यति" सि० कौ० अन्वाद्युपसर्गात् परस्तु तत्तदुपसर्गद्योत्यार्थयुक्तकोपे सक० प्रति+वैपरीत्येन कोपने सक० "क्रुध्यन्तं न प्रतिक्रुध्येत्" मनुः

**क्रुध्** स्त्री क्रुध—सम्प० भावे क्विप् । कोपे कामव्याघातहेतुके चित्तवृत्तिभेदे अमरः "दृतिक्रुधाऽऽक्रुष्यत तेन केतकम्" नैष० । हलन्तत्वात् वा टाप् क्रुधा

**क्रुध्मिन्** त्रि०क्रुध—बा० मिनि किच्च । कोपयुक्ते "शुष्मो वः शुष्मः क्रुध्मी मनांसि" ऋ० ७।५६।८

**क्रुन्च(ञ्च)** कौटिल्ये, अल्पीभावे च अक०पर०सेट् । क्रुञ्चति अक्रुञ्चीत् चुक्रुञ्च । क्रुङ् क्रुञ्चः क्विन् क्रुङ् अत्र "चोः कुः" पा० चवर्गान्तत्वेन कुत्वप्राप्तौ दधृषित्यादिना क्विनं विधाय "क्विन् प्रत्ययस्य कुः" पा० क्विनन्तस्य पृथक् कुत्वविधानात् संयोगान्तलोपात् प्राक् कुः । भावे कुच्यते अक्रुञ्चि । केचित् दृष्टमादिस्थले क्रुञ्चामिति निर्द्दिश्य क्रुञ्चेति क्रो-

वयं शीतं प्रातुमाङ्गः तन्मते भावे क्रुध्यते इत्येव। एतन्मते क्रुद् इत्यत्र क्विनि नलोपाभावे न निपातकल्पना

**क्रुध्य** क्लेशे शोषे च क्या० पर० अक० सेट् इलायुधः। क्रुध्यति अक्रुध्यीत् चुक्रुध्य अयमपाणिनीयः

**क्रुमु** त्रि० क्रम–उन् वेदे पृषो०। सर्व्वत्र क्रमणशीले "क्रुमुर्मा वः सिन्धुर्निरीरमत्" ऋ० ५।५३।९। "क्रुमुः सर्व्वत्र क्रमणशीलः" भा०

**क्रुमुक** पु० क्रम–उक वेदे पृषो०। शुवाके "क्रुमुकमपि कुर्य्यात् एषा वा अग्नेः प्रिया तनुः यत्क्रुमुकः" तैत्ति०५।१०।९।५

**क्रुश** रोदने अक० आह्वाने आक्रोशे च सक० भ्वा० प० अनिट्। क्रोशति अक्रुक्षत्। चुक्रोश क्रोक्ष्यति। क्रोष्टा क्रुष्टः क्रोशन् क्रोशः क्रोशनः क्रोष्टुः। "रथन्तरस्याग्न्यां सायमक्रुक्षदिति मन्यते" ऋ० १०।१४६।४ "इहहदन्ति मदिरेषु मन्द्रिनेन्द्रं क्रोशन्तोऽविदन्नना मधु" ऋ०१०।९४।४ "एष क्रोशति दात्यूहस्तं शिखी प्रतिकूजति" रामा० अयो०५६अ०। कर्म्मणि क्रुश्यते अक्रोशि "इतिक्रुधाक्रुश्यत तेन केतकम्" नैष०

अत्याद्युपदर्गात् परस्तु तत्तद्द्योत्यार्थयुक्ते रोदनादौ

**अनु**+दयायाम् अनुरोदने च सक०। अनुक्रोशा (दया) "न तावुमनुक्रोशन्ति क्षितयोभरेषु" ऋ० ४।३८।५ "किमनुक्रुश्य वैकल्यमुत्पादयसि मेऽनघ !" भा०अनु०५अ०

**आ**+अप्रियकथने सक०। "शतं ब्राह्मणमाक्रुश्य क्षत्रियोदण्डमर्हति" मनुः। "प्रत्याक्रोशेदिहाक्रुष्टः" भा० अनु० ४५६२श्लो०। "आक्रुष्टः पुरुषः सर्व्वं प्रत्याक्रोशेदनन्तरम्" भा० व० १९१श्लो०। "हा प्रिये! क्वासि मद्वासि आक्रोशन्नपतत् क्षितौ" रामा० आ० ८६अ०

**उद्**+उच्चैराह्वाने सक० "उदक्रोशन् स पावकवान्" भा० आ० ७४८श्लो०। उच्चैरोदने च अक०

**क्रुश्वन्** पुंस्त्री क्रुश–क्वनिप्। शृगाले उज्ज्वल० स्त्रियां ङीप् रश्चान्तादेशः क्रुश्वरी।[ताप्रिये २आहृते च त्रि०।

**क्रुष्ट** न० क्रुश–भावे क्त। १रोदनरवे। कर्म्मणि क्त। २कुपि-

**क्रूड** क्रूडनम्। क्रूडति अक्रूडीत् चुक्रोड "तस्य रेतः परापतत् तदग्निर्योनिनोपाम्य्यछादयत्ता तदक्रूडयत्तत् क्रूडमानं गवि न्यदधत् तदिदं पयः" श्रुतिः।

**क्रूर** त्रि० कृत–रक् धातोः क्रूः। १निर्दये २कठिने अमरः ३हिंसके ४उष्णे च मेदि०। "तस्याभिषेकसंभारं कल्पितं क्रूरनिश्चया" रघुः। "तत्रिवधपायाः सर्व्वैनः क्रूरे प्रतिहृतक्रियाः" कुमा०। "इष्टकारी क्षुदुर्दान्तः क्रूराचारैरसंवसन्" मनुः। तस्य भावः ष्यञ् क्रौर्य्य न०, तल् क्रूरता स्त्री, त्व क्रूरत्व न०, निर्दयत्वे हिंसने काठिन्ये उष्णत्वे च। "ओजोऽथ युग्मं विषमः समश्च क्रूरोऽथ सौम्यः पुरुषोऽङ्गना च। चरस्थिरद्व्यात्मकनामधेया मेषादयोऽमी क्रमशः प्रदिष्टाः" दीपिकोक्ते मेषादिषु मध्ये ५विषमराशौ पु० "अक्षीणेन्दुर्कसौराराः पापाः सौम्यास्तथा परे। पापयुक्तोबुधः पापोराहुकेतू च पापदौ" ज्योति० उक्ते ६पापग्रहभेदे च "यथा दुष्टफला क्रूरास्तथा सौम्याः शुभप्रदाः। क्रूरयुक्तः पुनः सौम्योज्ञेयः क्रूरफलप्रदः" "इदञ्च सौम्यक्रूराणां फलं स्थानवशात् समम्। एतदेव फलं विद्धि सौम्यैः क्रूरैर्विपर्य्ययात्" "ग्रहाः सौम्यास्तथा क्रूरा वक्राः शीघ्रोच्चनीचगाः" इति "तिथिराश्यंशनक्षत्रं विद्धं क्रूरग्रहेण यत्। सर्व्वेषु शुभकार्य्येषु वर्ज्जयेत्तत् प्रयत्नतः। न नन्दति विवाहे च यात्रायां न निवर्त्तते। रोगाद्विमुच्यते रोगी वेधवेलाकृतोद्यमः। रोगकाले भवेद्वेधः क्रूरखेचरसम्भवः" "क्रूरायक्रा महाक्रूरा इति च ज्यो० त० पापग्रहार्थपरतया क्रूरशब्दप्रयोगात्। क्रूरवेधप्रकारस्तु चक्रशब्दे सर्व्वतोभद्रचक्रे वक्ष्यते। ७रक्तकरवीरे पु०८श्येनपक्षिणि ९कङ्कपक्षिणि च पुंस्त्री० राजनि० स्त्रियां जातित्वात् ङीष्। १०रक्तपुनर्नवायां स्त्री राजनि०

**क्रूरकर्म्मन्** त्रि० क्रूरं हिंसकं कर्म्म यस्य। १हिंसाकर्म्मकारिणि "क्रूरकर्म्मकृताश्चैव शतयोगुरुतल्पगः" मनुः। २कटुतुम्बिनीवृक्षे पु० राजनि०।

**क्रूरकोष्ठ** त्रि० क्रूरं कठिनं कोष्ठं यस्य। धातुवैषम्यकृते बद्धकोष्ठाशये। "क्रूरकोष्ठस्यातितीक्ष्णाग्ने रल्पमौषधमल्पगुणं वा भक्तवत् पाकमुपैति तत्र समुदीर्णदोषा यथाक्रमनिर्ह्रियमाणा व्याधिं बलविभ्रममापादयन्ति" सुश्रु०।

**क्रूरगन्ध** पु० क्रूर उग्रोगन्धोऽस्य। १गन्धके राजनि० २तीक्ष्णगन्धमात्रे त्रि० क्रूरः गन्धएकदेशोऽस्याः टाप्। कन्थारीवृक्षे तीक्ष्णकण्टकायाम् राजनि०।

**क्रूरदृश्** त्रि०क्रूरा दृग् यस्य, क्रूरं पश्यति दृश–क्विन् २त० स० वा। १पिशुने खले २शनैश्चरग्रहे पु० मेदि०। ३मङ्गलग्रहे "आरोवक्रः क्रूरदृक् चावनेयः" ज्यो०त०। कर्म्म०। नील० ता० उक्ते स्थानविशेषस्थितानां ग्रहाणां स्थानविशेषे ४चतुरस्रदृष्टौ रिपुदृष्टौ स्त्री। २५५पृ०अरिशब्दे विवृतिः। क्रूरस्य ग्रहविशेषस्य दृक्। ५पापग्रहदृष्टौ स्त्री।

**क्रूरधूर्त्त** पु० क्रूरः क्रूरत्वात् तत्सदृशः धूर्त्तः। कृष्णधत्तूरके राजनि०

**क्रूरप्रसादन** त्रि० क्रूरमपि प्रसादयति प्र+सद+णिच्—ल्यु। भक्ते सेवके शब्दचि०। [राजनि० स्त्रियां ङीप्।

**क्रूररोविन्** पुंस्त्री० क्रूरमुग्रं रौति रु-णिनि। द्रोणकाके

**क्रूरलोचन** पु० क्रूरं लोचनमस्य। शनिग्रहे हारा० तद्दृष्ट्याहिंसकत्वात् तस्य तथात्वम्। यथा च तद्दृष्ट्या घातकत्वं तथा दृमाननशब्दे ९८१पृ० उक्तम्

**क्रूराकृति** त्रि० क्रूरा आकृतिर्यस्य। १कठिनमूर्त्तिके २रावणे पु० शब्दमा०। कर्म्म०। ३कठिनायां मूर्त्तौ स्त्री

**क्रैङ्कित** न० क्रैङ्कत्यव्यक्तं शब्दं करोति णिच्—भावे क्त। क्रैङ्कत्यव्यक्तशब्दभाषणे "निरुध्यमाना चक्रेण चक्री कैङ्कितभाषणैः" काशीख०

**क्रैणि** त्रि० क्री—नि। क्रेतरि—शस्यक्रैणिः उज्ज्वलद०

**क्रैय** त्रि० क्री—कर्म्मणि यत्। क्रेतव्ये अमरः

**क्रैडिन** त्रि० क्रीडी मरुत् देवताऽस्य अण् वेदे नि० नलोपाभावः। क्रीडिदैवत्ये साकमेधीये तृतीयाह्ने प्रातःसवनिके अण्डद्वयशिश्नरूपे हविषि। "शिश्नान्येवास्य क्रैडिनं हविः शिश्नैर्हि क्रीडतीवायमेवावाङ् प्राणः" शत० ११,५,२,४ "अण्डौ लिङ्गं चेति त्रीणि शिश्नानि" भा० "तृतीयेऽहन्युपांश्वन्तर्यामौ हुत्वा पौर्णादर्व्वं प्रातः सवनिकेषु क्रैडिनम्" आश्व० श्रौ० ८।२।१५ तद्द्रव्यमधिकृत्य इष्टिः स्त्र। क्रैडिनीया इष्टिभेदे सा च इष्टिः कात्या० श्रौ० ५,७,१ सूत्रादौ दर्शिता। तस्याः पद्धतिश्च संक्षेपेण कर्कभाष्ये दर्शिता यथा

"अथ क्रैडिनीया द्विहविष्केष्टिरुच्यते तत्र मरुद्भ्यः क्रीडिभ्यः सप्तकपालः, अदित्यै चरुः, इमे हविषी समानतन्त्रे भवतः प्रतीक्ष्युद्धरणपक्षे क्रैडिन्यादित्येष्ट्यर्थमिध्मं ह्वरणे क्रैडिन्यादित्येष्टिभ्यामहं यक्ष्ये इति। वरणे पात्रासादने सप्तकपालानि एका चरुस्थाली, दक्षिणा अन्वाहार्यः शतावदानानन्तरम्, मेक्षणम् विंशतिरिध्मकाष्ठानि पुरोडाशपात्र्येका अन्यत्सर्वं प्रकृतिवत्। ग्रहणे मरुद्भ्यः क्रीडिभ्यो जुष्टम्, अदित्यै जुष्टम्। प्रोक्षणे मरुद्भ्यः क्रीडिभ्यस्त्वा जुष्टम् अदित्यै त्वा जुष्टम्। नानावीजपक्षे तद्धर्मा उक्ताः एकवीजपक्षे करणान्ते विभज्यालम्भः इदं मरुतां क्रीडिनाम्, इदमदित्याः। प्राणदाने मरुतः क्रीडिनो गच्छ, अदितिं गच्छ, सप्तदशेन वज्रेणेत्यत्रबाधने। उत्तमप्रयाजे इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इत्यादि। प्रधानयागे मरुद्भ्यः क्रीडिभ्योऽनुब्रूहि मरुतः क्रीडिनो यज इदं मरुद्भ्यः क्रीडिभ्यः, अदित्या अनुब्रूहि अदितिं यज इदमदित्यै, मेक्षणेन चरोरवदानम्। स्विष्टकृदादि पुरोडाशस्य प्राशित्रे डाव्यतिरिक्तं न भवति चरोस्तु सर्वं भवत्येव। व्यूहने मरुतां क्रीडिनामदित्या उज्जितिम् मरुतः क्रीडिनोऽदितिस्तमपनुदन्तु। प्रस्तरहोमे इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्योऽदित्यै देवेभ्य इति। अन्यत्कर्मापवर्गान्तं प्रकृतिवत् इति"

**क्रैव्य** पु० क्रिवीणां पञ्चालानां राजा बा० ञ्य। क्रिविदेश राजभेदे क्रिविशब्दे दृश्य०

**क्रौञ्च** पु० क्रुञ्च अच् वा० गुणः। "कैलासे धनदावासे क्रौञ्चः क्रौञ्चोऽभिधीयते" इति हृहद्वारावल्युक्ते क्रौञ्चपर्व्वते क्रौञ्चदारणः कार्त्तिकेयः इति रायमुकुटः

**क्रोड** पुंस्त्री० क्रुड—घनीभावे संज्ञायां घञ्। १शूकरे "क्रोडकुलदश्यमानभद्रमुस्तारसामोदः" काद० "नदी सैवालदिग्धाङ्गं हरिश्मश्रुजटाधरम्। लम्नो शङ्कुनसंर्गात्रैः क्रोडैरिवार्पितम्" भा० अनु० ५० अ०। २भुजयोरन्तरे (कोल) न०स्त्री० अमरः "कुपितकपिकपोलक्रोडताम्रस्तमांसि" उद्भटः ३वृक्षकोटरे "हा हा हन्त तथापि जन्मविटपिक्रोडे मनोधावति" उद्भटः। घनीभूते ४वक्षोमध्यभागे पु० "इन्द्रस्य क्रोडोऽदित्यै पाजस्यम्" यजु० २५,८ "क्रोडस्य घनीभूतवक्षोमध्यभागपरता वेददीपे उक्ता। क्रोडं तु वक्षोभुजान्तरे देहांशभेदः। "हृदयं जिह्वां क्रोडं सव्यसक्थि पूर्वनडकं पार्श्वे सकृत् दृक्कौगुदमध्यं दक्षिणा श्रोणिरिति जौहवानि" कात्या० श्रौतसू० ६,७,६ "क्रोडं वक्षोभुजान्तरम्" कर्कः "शेषमिडापात्र्यामासिच्य क्रोडमनस्थीनि च प्रास्यति श्रोणि वर्ज्जम्" कात्या० श्रौतसू० ६,८,१२,। ५अश्वानासुरसि ६उत्तरस्थग्रामभेदे शब्दचि० ७वाराहीकन्दे पु० राजनि० ८शनिग्रहे पु० मेदिनिः

**क्रोडकन्या** क्रोडस्य शूकरस्य कन्येव प्रियत्वात्। वाराहीकन्दे राजनि०। [(वड़ शुलकुड़ि) राजनि०

**क्रोडचूडा** स्त्री क्रोडे चूडा यस्याः। महाश्रावणिकायाम्

**क्रोडपत्र** न० क्रोडे उपचारात् मध्ये स्थितं पत्रम् ७त०। ग्रन्थलेखने भ्रमात् त्रुटितग्रन्थस्य परिपूरणाय ग्रन्थस्थपत्रयोर्मध्ये चिह्नविशेषेण लिखित्वा स्थापिते पत्रे।

**क्रोडपर्णी** क्रोडे कण्टकमध्ये पर्णं यस्याः गौरा० ङीष्। कण्टकारिकायाम् शब्दच०

**क्रोडपाद्** पुंस्त्री क्रोडे पादोऽस्य। कच्छपे हेम॰ क्रोडाङ्घ्रि-प्रभृतयोऽप्यत्र।

**क्रोडादि** पु॰ पाणिन्युक्ते उपसर्ज्जनस्वाङ्गे ङीष्निषेध निमित्ते शब्दगणे स च गणः “क्रोड नख खुर शाखा उखा शिखा बाल शफ शूक” क्रोडादिराकृतिगणः तेन भग गल घोण इत्यादयोऽपि ग्राह्याः

**क्रोडी** स्त्री क्रोड+जातौ, गौरा॰ङीष्। १वराहजाति-स्त्रियां २वाराहीकन्दे च राजनि॰।

**क्रोडीकरण** न॰क्रोड+च्वि+कृ—भावे ल्युट्। आलिङ्गने हला॰

**क्रोडीमुख** पुंस्त्री क्रोड्याः शूकर्य्यामुखमिव मुखमस्य। गण्डके (गण्डार) राजनि॰ स्त्रियां जातित्वात् ङीष्।

**क्रोडेष्टा** स्त्री क्रोडस्य इष्टा प्रिया। मुस्तके (मुथा) राजनि॰

**क्रोथ** पु॰ क्रुथ—हिंसने भावे घञ्। हनने हेमच॰

**क्रोध** पु॰क्रुध-भावे घञ्। १परापकाराय चित्तवृत्तिभेदे, परानिष्टाभिलाषेण अनिष्टविषयद्वेषहेतुके चित्तवृत्तिभेदे। क्रोधश्च रौद्ररसस्य स्थायिभावः“रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः”सा॰ द॰“क मएव कुतश्चित् प्रतिहतः क्रोध-रूपेण परिणमते स च रजोगुणकार्य्यः”“कामएष क्रोधएष रजोगुणसमुद्भवः। महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्”गीतोक्तेः“यस्त्वया पृष्टोहेतुरेष काम एव। ननु क्रोधोऽपि पूर्वं त्वयोक्तः“इन्द्रियस्येन्द्रियस्यार्थे”इत्यत्र, सत्यं नासौ ततः पृथक् किन्तु क्रोधोऽप्येष एव, कामएव हि केन-चित् प्रतिहतः क्रोधात्मना परिणमते। पूर्वं पृथक्त्वेनोक्तोऽपि क्रोधः कामज एवेत्यभिप्रायेण कीर्त्यते उच्यते रजोगुणात् समुद्भवतीति तथा” श्रीधरः। तस्य कामजत्वमपि “सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते”गीतायामुक्तम्। तत्कार्य्याणि उक्तानि“न कर्म्म क्रोधान्धः प्रभवति विचारं रचयितुं”“अन्धीकरोति भुवनं बधिरीकरोति धीरं सचेतनमचेतनतां नयेत् क्रुत्। कृत्यं न पश्यति न-चात्महितं शृणोति धीमानधीतमपि न प्रतिसन्दधाति” नीतिशा॰“क्षमैव क्रोधविजये समर्थेति विवेकिनः। क्रोधः कार्य्यविभङ्गाय तस्मात्तं क्षमया जयेत्” शकुनशा॰स च मृदुमध्याधिमात्रभेदेन त्रिधेति पा॰ साधन पादे ३४सू॰ भा॰ स्थितम् “क्रोधं विभो! संहर संहरेति” कुमा॰। “क्रोधे शक्रगणः शरे दशमुखः पाणौ प्रलम्बासुरः” सा॰ द॰। “क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तक-स्यान्तकोऽहम्” वेणी॰। “विषमस्थं जगत्सर्व्वं व्याकुलं समुदाहृतम्। जनानां जायते भद्रे! क्रोधे क्रोधः परमम्” इत्युक्तलक्षणे षष्टिवर्षान्तर्गते अष्टत्रिंशत्तमे २वर्षभेदे पु॰।

**क्रोधकृत्** त्रि॰क्रोधं करोति कृ—क्विप्। क्रोधकारिणि २पर-मेश्वरे पु॰ “क्रोधहा क्रोधकृत् कर्त्ता विश्वबाहुर्महीधरः” विष्णुसं॰ असाधून् प्रति क्रोधकर्तृत्वात् तस्य तथात्वम् “श्रुति स्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते। आज्ञाच्छेदी मम द्वेषी नरके प्रतिवर्त्तते” इति श्रुतिस्मृत्युदितकर्म्मानाचरणे ईश्वरद्विष्टत्वोक्तेः तस्य तादृशान् प्रति क्रोध-कर्तृत्वम्। तच्च प्राणिनां स्वादृष्टविशेषात् भवति

**क्रोधज** त्रि॰ क्रोधात् जायते जन—ड ५त॰। १क्रोधजाते २मोहे पु॰ मोहस्य क्रोधजत्वं गीतायामुक्तं यथा “क्रोधात् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः” क्रोधजाते द्विविधव्यसनान्तर्गते व्यसनाष्टके च. यथाह मनुः “पैशुन्यं साहसं द्रोहईर्ष्यासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः”

**क्रोधन** क्रुध—युच्। १क्रोधशीले अमरः “यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः” वेणी॰ “वाग्दुष्टः क्रोधनो हिंस्रः पिशुनः कविरेव च। स्वसृमः पितृवर्त्ती च नामभिः कर्म्मभिस्तथा। कौशिकस्य सुता आसन् शिष्याः गर्गस्य भारत!” हरि॰ २१२ अ॰ उक्ते गर्गशिष्ये २कौशिक-पुत्रभेदे।“रोगोमरणदुर्भिक्षं विरोधोत्तरसङ्कुलम्। क्रोधने विषमं सर्वं समाख्यातं हरप्रिये!” इत्युक्तलक्षणे षष्टिसं-वत्सरान्तर्गते ऊनषष्टितमे ३वर्षभेदे। “कपिताङ्गोरुरुश्चण्ड उन्मत्तःक्रोधनस्तथ।” इति तन्त्रोक्ते ४भैरवभेदे च पु॰।

**क्रोधमूर्च्छित** त्रि॰ क्रोधोमूर्च्छितो बहुलीभूतोऽस्य ३त॰ वा। १अतिकोपने “एवमुक्ता तु पार्थेन उर्व्वशी क्रोधमूर्च्छिता” भा॰व॰ ४६अ॰ ५त॰। २चोरनामगन्धद्रव्ये पु॰ शब्दर॰

**क्रोधवर्द्धन** त्रि॰ क्रोधं वर्द्धयति वृध—णिच् ल्यु ६त॰। १को-पस्य वर्द्धके अनिष्टसूचकवाक्यादौ २असुरभेदे पु॰ “चन्द्र-हन्ता क्रोधहन्ता क्रोधवर्द्धन एव च” हरि॰ २६२अ॰ असुरकथने। स एव भारतयुद्धकाले दण्डधारनृपत्वेना-विर्भूतः यथा “क्रोधवर्द्धन इत्येव यस्त्वन्यः परिकी-र्त्तितः। दण्डधारइति ख्यातः सोऽभवन्मनुजर्षभः” भा॰ आ॰६७अ॰ अंशावतारे

**क्रोधहन्** पु॰ क्रोधं हन्ति हन्—क्विप्। १विष्णौ “क्रोधहा क्रोधकृत् कर्त्ता विश्वबाहुर्महीधरः” विष्णुसं॰ “साधूनां क्रोधं हन्तीति क्रोधहा” भा॰। २कोपघातके त्रि॰

**क्रोधहन्तृ** त्रि॰ क्रोधं हन्ति हन—तृच् ६त॰। १कोपघातके

२असुरभेदे पु० स च वृत्रासुरस्यावरजः। "क्रोधहन्तेति यस्तस्य (वृत्तस्य) बभूवावरजोऽसुरः। दण्ड इत्यभिविख्यातः स आसीन्नृपतिः चितौ" भा० आ० ६७०। ३असुरभेदे पु० क्रोधवर्द्धनशब्दे दृश्यम्

**क्रोधसम्भव** त्रि० सम्भवत्यस्मात् सम्+भू—अपादाने अप् क्रोधः सम्भवोऽस्य। कोपजाते "क्रोधात् भवति संमोहः" गीता०भावे अप् ६त०। २कोपोत्पत्तौ "मार्जारमूषिकासर्पे आक्रुष्टे क्रोधसम्भवे" क्रोधसम्भवे कोपोत्पत्तौ" प्रा० त० रघुनन्दनः। [ बलो निशाविहारी" सुश्रुतः

**क्रोधालु** त्रि० क्रुध—बा० आलुच्। कोपयोगे "क्रोधालुर्विपुल-

**क्रोधिन्** त्रि० क्रुध—णिनि। कोपयुक्ते मारुतप्रकृतेरेव तथात्वं भवति यथाह सुश्रुतः

"सप्त प्रकृतयो भवन्ति। दोषैः पृथक्‌द्विशः समस्तैश्च?। शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः। प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु। तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मात्सर्य्यनार्य्यो गान्धर्व्वचित्तः स्फुटितकरचरणोऽतिरूक्षश्मश्रुनखकेशः क्रोधी दन्तनखखादी च भवति। अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी। द्रुतगतिरटनोऽनवस्थितात्मा वियदपि गच्छति सम्भ्रमेण सुप्तः। अव्यवस्थितमतिश्चलदृष्टिर्मन्दरत्नधनसञ्चयमित्रः। किञ्चिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेष मनुष्यः"।

**क्रोश** पु० क्रुश—भावे घञ्। १रोदने २आह्वाने च। क्रोशति यतः अपादाने घञ्। "हस्तैश्चतुर्भिर्भवतीह दण्डः क्रोशः सहस्रद्वितीयेन तेषाम्" लीला०व०उक्ते८०००सहस्रकरमिते अध्वपरिमाणे "चतुर्हस्तो धनुर्दण्डो नालिका तद्युगेन च। क्रोशोऽस्तुः सहस्रेण गव्यूतिस्तु चतुर्गुणा" हेमा०दा०मार्क० पु० उक्तेः, "गव्यूतिः स्त्री क्रोशयुगम्" अमरोक्तेश्च तस्य गव्यूतेरर्द्धमानता प्रतीयते हेमाद्रि० दा० आदित्यपुराणे च "धनुःसहस्रे द्वे चापि गव्यूतिरुपदिश्यते" इत्युक्त्या तु गव्यूतेर्द्विसहस्रधनुर्मितत्वात् तदर्द्धत्वेन चतुःसहस्रहस्तमितत्वमपि क्रोशस्य कार्य्यविशेषे स्वद्यते इति भेदः। ३मुहूर्त्ते "दण्डदण्डे तु या पूजा तत्सर्व्वमक्षयं भवेत्। षष्ठे क्रोशे महेशानि! तत्सर्व्वं मखतोपमम्। सप्तमे क्रोशके देवि! द्रव्यतुल्यं न संशयः। अतःपरं महेशानि। विफलं तु न संशयः" इति यन्त्रिस्व० त० ६पटले। "क्रोशार्द्धं प्रकृतिपुरःसरेण गत्वा" रघुः

**क्रोशताल** पु०क्रोशं व्याप्य तालः शब्दोऽस्य। ढक्कायां हारा०

**क्रोशध्वनि** पु० क्रोशं व्याप्य ध्वनिरस्य। ढक्कायां हारा०

**क्रोशयुग** न० ६त०। क्रोशद्वयमिते गव्यूतौ अमरः

**क्रोशिन्** त्रि०क्रुश—णिनि। शब्दकारके उपमानपूर्व्वकतया समासे क्रोशिनि परे पूर्व्वपदस्याद्युदात्तता। उष्ट्रक्रोशी

**क्रोष्टु** पुंस्त्री क्रुश—तुन्। १शृगाले अमरः अस्य अव्ययेषु सर्व्वनामस्थाने परे नित्यं तृतीयाद्यचि वा, स्त्रियां तु नित्यं तृच्वत्। क्रोष्टा क्रोष्टारौ हे क्रोष्टो!। क्रोष्टून्। क्रोष्ट्रा क्रोष्टुना क्रोष्टुभ्यामित्यादि स्त्रियां ङीप् क्रोष्ट्री। "क्रोष्टा मायोरिन्द्रस्य गौरमृगः" यजु०२४,३२ "शाहू स्वस्य गुहां गम्यां नीचः क्रोष्टाऽभिमर्दति" भा०आ० २१३अ० २यदुवंश्ये नृपभेदे पु०। "क्रोष्टोस्तु शृणु राजेन्द्र! वंशमुत्तममव्ययम्। यदोर्वंशधरस्याथ यज्वनः पुण्यकर्म्मणः। क्रोष्टोर्वंशं हि श्रुत्वेमं सर्व्वपापैः प्रमुच्यते। यस्यान्ववायजो विष्णुर्हरिर्वृष्णिकुलोद्वहः" "गान्धारी चैव माद्री च क्रोष्टोर्भार्य्ये बभूवतुः" हरि०३५अध्यायें च। शृगाले "क्रोष्टुकहोपियदनेकं सर्वभक्षसमस्त" भा० आ०१४०अ०। क्रोष्टुकपुच्छिका। क्रोष्टुर्गोत्रापत्यम् क्रुञ्जा० चफञ् क्रोष्टुः क्रोष्टस्य। क्रौष्टायन ततः स्वार्थे अस्त्रियां ञ्यः। क्रौष्टायन्य तद्गोत्रापत्ये पुंसि स्त्रियान्तु न ञ्यः। जातित्वात् ङीष् क्रौष्टायनी।

**क्रोष्टुकपुच्छिका** स्त्री क्रोष्टुकस्य शृगालस्य पुच्छमिव पुच्छमस्त्यस्य ठन्। १पृश्निपर्ण्याम् (चाकुलिया) (रामवासक) इत्यभरटीकायां स्वामी २गोलोमिकायाम् राजनि०

**क्रोष्टुकमेखला** स्त्री क्रोष्टुकस्य मेखलेवाकृतिरस्याः अच्। पृश्निपर्ण्यां (चाकुलिया) रत्नमा०

**क्रोष्टुकर्ण** पु०। ग्रामभेदे सोऽभिजनोऽस्य तक्षशिला० अञ्। क्रौष्टुकर्ण पित्रादिक्रमेण तद्ग्रामवासिनि स्त्रियां ङीप्

**क्रोष्टुकशिरस्** न० "वातशोणितजःशोफः जानुमध्ये महारुजः। शिरःक्रोष्टुकपूर्वन्तु स्थूलं क्रोष्टुकमूर्द्धवत्" सुश्रुतोक्ते वातजे रोगभेदे। क्रोष्टुकशिरःखञ्जपङ्गुलवातवेदनास्वित्यादि" "अष्टमी विश्वाची क्रोष्टुकशिरःखञ्जेत्यादि सुश्रु०

**क्रोष्टुपाद** पु० ऋषिभेदे तस्य गोत्रापत्यम् इञ्। क्रौष्टुपादि तद्गोत्रापत्ये अस्त्रियां बहुत्वे यस्का०तस्य लुक्। क्रोष्टुपादाः स्त्रियान्तु क्रौष्टुपाद्यः। एवं क्रोष्टुमान, क्रोष्टुमायश्च्दौ ऋषिभेदयोः तदपत्ये इञ् बहुषु अस्त्रियाम् यस्कादि० तस्य लुक्।

**क्रोष्टुपुच्छिका** स्त्री क्रोष्टुःपुच्छमिवाकृतिरस्याः ठन्। पृश्निपर्ण्याम् (चाकुलिया) रत्नमा०

**क्रोष्टुपुच्छी** स्त्री क्रोष्टोः पुच्छमिव पुच्छमस्याः ङीप्। पृश्निपर्ण्याम् (चाकुलिया) शब्दरत्ना०

**क्रोष्टुफल** पु० क्रोष्टोः प्रियं फलमस्य। इङ्गुदीवृक्षे राजनि०

**क्रोष्टुविन्ना** स्त्री क्रोष्टुना विन्ना प्राप्ता पुच्छाकारेण श०त०। पृश्निपर्ण्याम् (चाकुलिया) अमरः। (शियालकाञ्चि) २वृक्षे भरतः।

**क्रोष्टेक्षु** पु० क्रोष्टुः प्रिय इक्षुः शृगो०। श्वेतेक्षौ राजनि०

**क्रोष्ट्री** स्त्री क्रोष्टुजातिस्त्री क्रोष्टुस्तृज्वत् ऋदन्तत्वात् ङीप्। १शृगालजातिस्त्रियाम् तत्प्रियत्वात् २श्वेतभूमिकुष्माण्डे अमरः। ३लाङ्गलिकायां ४वाराह्याम् च मेदि०

**क्रौञ्च** पुंस्त्री० क्रुञ्च्+स्वार्थे प्रज्ञा० अण्। (काँचवक) वकभेदे स्त्रियाम् अयन्तत्वात् ङीप्। "निशम्य रुदतीं क्रौञ्चीम्" रामा०बा०२स०। स्त्रियां टाप् इति वदन् भरतश्चिन्त्यः। अजादिषु क्रुञ्चशब्दस्यैव पाठात् तदप्रवृत्तेः। २हिमवतः पौत्रे पर्वतभेदे "धनुर्विकृष्य व्यसृजद्बाणान् श्वेते महागिरौ। बिभेद स (कार्त्तिकेयः) शरैः शैलं क्रौञ्चं हिमवतः सुतम्" भा० व० २२४अ०। तस्य हिमवत्पौत्रत्वेऽपि सन्तानाभिप्रायेण सुतत्वोक्तिः। तस्य हिमवत्पुत्रमैनाकपुत्रत्वं हरिवं० १८अ० उक्तं यथा "एतेषां मानसी कन्या मेना नाम महागिरेः। पत्नी हिमवतः श्रेष्ठा यस्यां मैनाक उच्यते। मैनाकस्य सुतः श्रीमान् क्रौञ्चोनाम महागिरिः। पर्वतप्रवरः पुत्रो नानारत्नसमन्वितः"। ३द्वीपभेदे ४असुरभेदे। "क्रौञ्चे(द्वीपे)क्रौञ्चो हतो दैत्यः क्रौञ्चाद्रौ हेमकन्दरे। स्कन्देन युद्धा सुचिरं चित्रमायी सुमायिना। स शैलस्तस्य दैत्यस्य ख्यातश्चित्रेण कर्मणा। केतुतामगमत्तस्य नाम्ना क्रौञ्चः स उच्यते" स्कन्दसंहिता। क्रौञ्चदैत्यश्च मयदानवपुत्रः यथाह हरि० ४७अ० "मयो ददर्श मायावी दानवान्दिवि दानवः। स शिलाजालविततां गण्डशैलाट्टहासिनीम्। पादपोत्कटकूटाग्रां कन्दराकीर्णकाननाम् सिंहव्याघ्रगणाकीर्णां नदन्तीं दैत्ययूथपैः। ईहामृगगणाकीर्णां पवनाघूर्णितद्रुमाम्। निर्म्मितां स्वेन पुत्त्रेण क्रौञ्चेन दिवि कामगाम्। प्रथितां पार्वतीं मायां ससृजे स समन्ततः"। "धनुश्चरितमिव श्रूयमाणक्रौञ्चवनिताप्रलापम्, काद० ५कुररीखगे राजनि०। ६अर्हतां ध्वजभेदे ७राक्षसभेदे च सु०हेम०। क्रौञ्चद्वीपस्थानञ्च "भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बुद्वीपं प्राहुराचार्य्यवर्य्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः" इत्युपक्रमे जम्बुद्वीपमुक्त्वा। "शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च। द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति" सि०शि० उक्तम्। तद्वृत्तिः विष्णुपु० "घृतोदश्च समुद्रोवै क्रौञ्चद्वीपेन संवृतः। क्रौञ्चद्वीपो महाभाग। श्रूयताञ्चापरो महान्। कुशद्वीपस्य विस्ताराद् द्विगुणो यस्य विस्तरः। क्रौञ्चद्वीपे द्युतिमतः पुत्राः सप्त महात्मनः। तन्नामानि च वर्षाणि तेषाञ्चक्रे महीपतिः। कुशलो मन्दगश्चोष्णः पीवरोऽथान्धकारकः। मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता मुने!। तत्रापि देवगन्धर्व्वसेविताः सुमनोरमाः। वर्षाचला महाबुद्धे! तेषां नामानि मे शृणु। क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः। चतुर्थो हरशैलश्च स्वभाभिर्भासयन्नभः। देवावृत् पञ्चमश्चैव तथान्यः पुण्डरीकवान्। दुन्दुभिश्च महाक्रौञ्चो द्विगुणास्ते परस्परम्। द्वीपा द्वीपेषु ये शैला यथा द्वीपानि वै तथा। वर्षेष्वेतेषु रम्येषु वर्षशैलवरेषु च। निवसन्ति निरातङ्काः सह देवगणैः प्रजाः। पुष्कराः पुष्कला धन्यास्तिष्याख्याश्च महामुने!। ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्राश्चानुक्रमोदिताः। तैस्तत्र नद्यो मैत्रेय! याः पीयन्ते शृणुष्व ताः। सप्त प्रधाना शतशस्तथान्याः क्षुद्रनिम्नगाः। गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा। ख्यातिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः। तत्रापि वर्णैर्भगवान् पुष्कराद्यैर्जनार्द्दनः। योगी रुद्रस्वरूपस्तु इज्यते यज्ञसन्निधौ। क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च। आवृतः सर्वतः क्रौञ्चद्वीपतुल्येन मानतः। दधिमण्डोदकस्यापि शाकद्वीपेन संवृतः। क्रौञ्चद्वीपस्य विस्ताराद्द्विगुणेन महामते!"। "तथा बहिः क्रौञ्चद्वीपो द्विगुणः स्वमानेन क्षीरोदेन परित उपक्लृप्तः। इतो यथा कुशद्वीपो घृतोदेन। यस्मिन् क्रौञ्चो नाम पर्वतराजोद्वीपनामनिर्वर्त्तक आस्ते। योऽसौ गुहप्रहरणोन्मथितनितम्बकुञ्जोऽपि क्षीरोदेनाभिषिच्यमानो भगवता वरुणेनाभिगुप्तोऽभयो बभूव। तस्मिन्नपि प्रैयव्रतो घृतपृष्ठो नामाधिपतिः स्वे द्वीपे वर्षाणि सप्त विभज्य तेषु पुत्रनामसु सप्त रिक्थादान् वर्षपान्निवेश्य स्वयं भगवतः परममङ्गल्यायशस आत्मभूतस्य हरेश्चरणारविन्दमुपजगाम। आमो मधुरुहो मेघपृष्ठः सुधामा भ्राजिष्ठो लोहितार्णो वनस्पतिरिति घृतपृष्ठसुताः। तेषां वर्षगिरयः सप्त सप्तैव नद्यश्चाभिख्याताः। शुक्लो वर्द्धमानो भोजन उपबर्हिणो नन्दो नन्दनः सर्वतोभद्र इति। अभया

वरुतीवा आर्य्यका तीर्थवती पवित्रवती शुक्लेति। यासामम्भः पवित्रममलमुपयुञ्जानाः पुरुषर्षभद्रविण-देवकसंज्ञावर्षपुरुषा आपोमयं देवमपांपूर्णेनाञ्जलिना यजन्ते”भाग० ५,२०,१२, अन्यथोक्तं कल्पभेदादविरुद्धम्। ८सामभेदे न० “क्रौञ्चानि भवन्ति”श्रुतिः तच्च साम गेयगाने १५प्र० २याङ्के ८,९गानम्। क्रौञ्चपर्वतश्च द्विविधः विष्णु-पुराणोक्तक्रौञ्चद्वीपान्तर्गतः श्वेतगिरेः सन्निकृष्टस्थः हिमवत्पौत्ररूपश्च तमेव प्रकृत्य “प्रालेयाद्रेरुपतटमति-क्रम्य तांस्तान् विशेषान् हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम्” मेघदूते वर्णितम्”। क्रौञ्चादिव हंस-निवहो निर्ज्जगाम गुणगुणः” काद०

**क्रौञ्चदारण** पु० क्रौञ्चं पर्व्वतं दारयति दृ–णिच् ल्यु। १कार्त्तिकेये अमरः तद्दारणकथा क्रौञ्चशब्दे भा०व०२२४अ० वाक्यस्था। २परशुरामे च तत्कथा क्रौञ्चरन्ध्रशब्दे दृश्या

**क्रौञ्चपदा** “क्रौञ्चपदा भ्मौ सभौ ननना नृगाविशुरवसुमुनि विरतिरिह भवेत्” वृ० र० उक्ते पञ्चविंशत्यक्षरपादके छन्दोभेदे

**क्रौञ्चपदी** स्त्री भारतोक्ते तीर्थभेदे “अग्रपृष्ठे पयस्याञ्च निरविन्दे च पर्व्वते। तृतीयां क्रौञ्चपद्याञ्च ब्रह्महत्यां विशुध्यति” भा० आनु० २५अ०

**क्रौञ्चपुर** न० यदुवंशप्रसारमन्दपनिर्म्मिते पुरभेदे “सारसेनापि विहितं रम्यं क्रौञ्चपुरं महत्। चम्पकाशोकबहुलं विपुलं ताम्रमृत्तिकम्। वनवासीति विख्यातः स्फीतोजनपदो महान्। पुरस्य तस्य तु श्रीमान् द्रुमैः सर्व्वर्त्तुकैर्वृतः। हरि० ९५अ० “ततः सह्याचलयुतं सहार्य्येणाहमव्ययम्। आत्मद्वितीयः श्रीमन्तं प्रवेक्ष्ये दक्षिणापथम्। करवीरपुरञ्चैव रम्यं क्रौञ्चपुरं तथा” ९६अ० “तां (खट्वाङ्गीन्) तीर्त्त्वा निम्नगां तत्र तांश्च दृष्ट्वा तपोधनान्। रम्यं क्रौञ्चपुरं नाम गमिष्यामः पुरोत्तमम्” ९६अ०

**क्रौञ्चबन्धम्** अव्य० क्रौञ्चमिव बद्ध्वा “बन्धः संज्ञायायाम्” पा० णमुल् कर्मादिषु यथाविध्यनुप्रयोगः। क्रौञ्चमिव बद्ध्वा बद्ध इत्यर्थे

**क्रौञ्चरन्ध्र** न० क्रौञ्चस्य रन्ध्रम्। मानसस्थहंसनिर्गममार्गे क्रौञ्चपर्व्वतस्थे रन्ध्रे “हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम्”मेघ०। “मानसस्यायिनो हंसाः क्रौञ्चरन्ध्रेण सञ्चरन्ते इत्यागमः” मल्लि० क्रौञ्चादिव हंसनिवहो निर्जगाम गुणगणः”काद०। तच्च रन्ध्रं परशुरामेण कृतं यथा मेघदूतव्याख्याने मल्लिनाथधृतम्

“पुरा किल भगवतो देवात् धूर्ज्जटेः धनुर्वेदमधीयानेन भृगुनन्दनेन स्कन्दस्य स्पर्द्धया क्रौञ्चं शिखरिणम् अतिनिशितविशिखमुखेन हेलया कृतपक्षभेदं भित्त्वा ततः क्रौञ्चभेदादेव सद्यःसमुज्जृम्भिते कस्मिन्नपि यशःक्षीरनिधौ निखिलमपि जगज्जालम् आप्लावितमिति” कथा श्रूयते”।

**क्रौञ्चसूदन** पु० क्रौञ्चं मयदैत्यसुतं सूदयति सूद–णिच्–ल्यु। कार्त्तिकेये तस्य तथात्वं क्रौञ्चशब्दे स्कन्दसंहितावाक्यात् ज्ञेयम् “स ते स्कन्दः प्रसीदतु” इत्युपक्रमे “रम्यं दव्यम्बुदेषः पातु त्वां क्रौञ्चसूदनः” सुश्रुते उक्तम्। क्रौञ्चनिसूदकादयोऽप्यत्र “ऋषभद्वीपमासाद्य सेव्यं क्रौञ्चनिसूदकम्। सरस्वत्यामुपस्पृश्य विमानस्थो विराजते” भा०व० ८४अ०

**क्रौञ्चवत्** पु० क्रौञ्चाः बकभेदा बाहुल्येन सन्त्यत्र मतुप् मस्य वः। पर्व्वतभेदे “कैलासं क्रौञ्चवन्तं च तथाद्रिं गन्धमादनम्” हरि० २०२अ०। क्रौञ्चयुक्तमात्रे त्रि० स्त्रियां ङीप्।

**क्रौञ्चादन** न० अद्यते कर्म्मणि ल्युट् ६त०। मृणाले २चि-ञ्चोटके (चेंचको) ३घेञ्चुलिकायां (घेंचु)मेदि०४पद्मकन्दां शब्दरत्ना० पद्मबीजे स्त्री० राजनि० ङीप्।

**क्रौञ्चाराति** पु० क्रौञ्चस्य दैत्यभेदस्यारातिः। १कार्त्तिकेये हला० २परशुरामे च शब्दमाला क्रौञ्चरिपुप्रभृतयोऽप्यत्र।

**क्रौञ्चारण्य** न० जनस्थानात् क्रोशत्रयान्तरे दण्डकारण्यपार्श्ववर्त्तिनि वनभेदे “ततः परं जनस्थानात् त्रिक्रोशं गम्य राघवौ। क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ” रामा० आर० ६९अ०। “ततः पूर्व्वेण गत्वा च त्रिक्रोशं भ्रातरावुभौ। क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रममन्तिके” तत्रैवोक्तेः तस्य मतङ्गाश्रमात् त्रिक्रोशान्तरितपश्चिमस्थत्वम्।

**क्रौशशतिक** त्रि० क्रोशशतादभिगमनमर्हति ठञ्। १क्रोश-शतादागन्तरि भिक्षौ। क्रोशशतं गच्छति ठञ्। २क्रोश-शतगन्तरि हि०। उभयतः स्त्रियां ङीप्।

**क्रौष्टायण्य** पुंस्त्री०प्रकृतिग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् क्रोष्ट्र्या गोत्रापत्यम् कुञ्जा० च्फञ् ततः स्वार्थे व्यस्त्रियाम् ञ्य। क्रौष्टायण्यः क्रोष्टुगोत्रोत्पन्नस्त्रियागोत्रापत्ये। बहुषु यस्का० लुक्। क्रौष्टायणाः तद्गोत्रापत्येषु। ततः अरीहणा० चतुरर्थ्यां वुञ्। क्रौष्टायणक तत्सन्निकृष्टदेशादौ त्रि०।

**क्रौष्टुकि** पुंस्त्री०क्रोष्टेव स्वार्थे क तस्यापत्यम् इञ्। १क्रोष्टु-

कर्मैरपत्ये स्त्रियां ङीप्। २ऋषिभेदे पु०। "तत्क्रो द्रविणोदाः ? इन्द्र इति क्रौष्टुकिः" निरुक्त० ८,२

**क्लथ** वधे वा चुरा० उभ०पक्षे भ्वा०प०सेट् घटादि०। क्लथयति ते क्लथति, अचिक्लथत् अक्लाथीत् अक्लथीत्। क्लथयांबभूव आस चकार चक्रे चक्लाथ। मध्ये घृतस्यापवर्त्तने च। "पौष्णो विष्यन्दमाने मारुतः क्लथन्" यजु० ३९,५, "क्लथनं मध्ये घृतस्यापवर्त्तनम्" वेददीपः

**क्लद** रोदने अक० आह्वाने सक० इदित् भ्वा० पर० सेट्। क्लन्दति अक्लन्दीत्। चक्लन्द। क्लन्द्यते

**क्लद** वैकल्ये दि० आत्म० अक०सेट् घटादि०। क्लद्यते अक्लदिष्ट चक्लदे। क्लदयति त अचिक्लदत् त।

**क्लद** रोदने भ्वा० उभ० इदित् अक० सेट्। क्लन्दति ते अक्लन्दीत् अक्लन्दिष्ट। चक्लन्द चक्लन्दे। क्लन्द्यते "याः क्लन्दास्तमिषीचयो ऽनुकामामनो मुहः ताभ्यो गन्धर्वपत्नीभ्योऽप्सराभ्योऽकरं नमः" अथ० २,२,५

**क्लप** अव्यक्तवाक्ये चुरा० उभ० अक० सेट् घटा०। क्लपयति-ते अचिक्लपत्—त। क्लपयां बभूव आस चकार चक्रे

**क्लम** ग्लानौ दिवा०पर०अक०सेट् शमा०। क्लाम्यति अक्लमीत् चक्लाम। उदित् क्लमित्वा—क्लान्त्वा। क्लान्तः। घञ् न वृद्धिः क्लमः। क्लम्यते अक्लमि। "क्लमं ययौ कन्दुकलीलयाऽपि या" "अक्लाय सा नियमजं क्लममुत्ससर्ज" कुमा० "न चक्लाम न विव्यथे" भट्टिः "तपः क्लमं साधयितुं य इच्छति" शकु०

**क्लम** ग्लानौ भ्वा० पर० अक० सेट्। क्लमति इरित् अक्लमत् अक्लमीत् चक्लाम। क्लमित्वा। क्लमितः।

**क्लम** पु० क्लम—भावे घञ् अवृद्धिः। "योऽनाय सः श्रमोद्रेके प्रवृद्धः श्वाससङ्कुतः। क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः"। भावप्र० उक्ते श्रमभेदे।

**क्लमथ** पु० क्लम-अथच्। आयासे अमरः।

**क्लमिन्** त्रि० क्लम-घिनुण् अवृद्धिः। क्लान्तियुक्ते।

**क्लव** भये दिवा० आत्म० अक० सेट् घटादि०। क्लव्यते अक्लविष्ट। चक्लवे। क्लवयति। वि-वैकल्ये विक्लवः।

**क्लान्त** त्रि० क्लम-क्त। श्रमार्त्ते। [ यस्तदानीम्" माघः।

**क्लान्ति** स्त्री क्लम-क्तिन्। परिश्रमे "क्लान्तिच्छिदोवनवनस्पत-

**क्लिद** आर्द्रीभावे दिवा० पर० अक० वेट्। क्लिद्यति। इरित्। अक्लिदत्-अक्लेदीत्-अक्लैत्सीत्। चिक्लेद। क्लेदः। क्लिद्यन् क्लेदी। क्लेदयति ते। अचिक्लिदत् त। "तेन क्लिद्यति मध्यः" सुश्रु०। "सुवेशं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम्। योनिः क्लिद्यति नारीणाम्" हितो०। "लुठन्ति भूमौ क्लिद्यन्ति बान्धवा मे स्वपन्ति च" भट्टिः। "कुन्त्याः प्रस्रवसंयुक्तैरस्त्रैः क्लिन्नमुरोऽभवत्" भा० आ० १३५। "नचैनं क्लेदयन्त्यापो न शोषयति मारुतः। अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च" गीता। "रक्तैराचिक्लिदद्भूमिम् सैन्यैश्चानस्तरङ्कतैः" भट्टिः। उपसर्गविशेषपूर्वकस्तु तत्तदुपसर्गद्योत्यार्थविशिष्टे क्लेदे।

**क्लिद** रोदने इदित् भ्वा० उभ० अक० सेट्। क्लिन्दति ते अक्लिन्दीत् अक्लिन्दिष्ट। चिक्लिन्द चिक्लिन्दे। क्लिन्दितः। परिदेवने शोके सक०आत्म०। क्लिन्दते चैलम्" सि०कौ०।

**क्लिन्न** त्रि० क्लिद-कर्त्तरि क्त। आर्द्रे (भिजे) क्लदधातौ उदा०

**क्लिन्नवर्त्मन्** न० "अरुजं बाह्यतः शूनमन्तःक्लिन्नं स्रवत्यपि। कण्डूनिस्तोदभूयिष्ठं क्लिन्नवर्त्म तदुच्यते" सुश्रुतोक्ते नेत्रावयवभेदवर्त्माश्रये रोगभेदे।

**क्लिब** पु० क्लृप क्विप् पृषो०। लोके। "ओं क्रतो! स्मर क्लिबे स्मर कृतं स्मर" यजु० ४०,१५, "क्लिबे कर्मप्राय लोकाय स्मर" माधवः। "कल्पते भोगाय क्लप् लोकः तस्मै स्मर जश्त्वादेश आर्षः छन्दस्युभयथेति" पा० "पदान्तत्वात्" वेददी०

**क्लिश** उपतापे दिवा० आ० अक० उपतप्तीकरणे सक० सेट् पा०। क्लिश्यते अक्लेशिष्ट। क्लिशित्वा क्लिष्ट्वा। क्लिशितः क्लिष्टः। कविकल्पमते अयमुभयपदी तेन "क्लिश्यन्नपि हि मेधावी" प्रत्याख्यातस्मारदीर्घितकरक्लिश्यत्तमोवल्लयीति" न्यपालजौ चिक्लिशतुः समीतौ" भट्टिः साधुः सकर्मकत्वे "इन्द्रियैः कामवृत्तैस्तु क्लिश्यसे माहलीयथा" रामा० कि० ३६,२७, अकर्मकत्वे "क्लिश्यते हि जनः सर्व्वः तरमाणः पुनः पुनः" भा० व० ३१अ०। "चिरं क्लिशित्वा मर्मा वित्" भट्टिः परस्मैपदित्वे "वयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम्" मनुः। "हिमक्लिष्टप्रभावानि ज्योतींषीव सुखानि वः" कुमा०। "क्लेशः फलेन हि पुनर्नवतां विधत्ते" कुमा०।

उपसर्गपूर्व्वकस्तु तत्तदुपसर्गविशेषद्योत्यार्थोपतापे

**क्लिश** बाधने सक०क्र्या०ऊदित् वेट्। क्लिश्नाति अक्लेशीत् अक्लिक्षत् चिक्लेश। क्लिष्टः। क्लेशः क्लिशित्वा क्लिष्ट्वा। क्लिशितः क्लिष्टः "इत्यमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्" कुमा०। "अयं मां सुदृढं क्षुद्रः कौरवाणां यशोहरः। क्लिश्नाति नाहं तत् सोढुं चिरं शक्ष्यामि कौरव!" भा०स० ६७। "असुरस्तारकोनाम त्वया दत्तवरः प्रभो!। सुरान्बीय क्लिश्नाति कथमस्य विधीयताम्" भा० आनु० ८५अ०।

"क्लिश्नन्निवास्य भुजमध्यमुरःस्थलेन" रघुः। अत्र मल्लिनाथः क्लिश्नन्निति पठित्वा क्लिश्नातिरयं सकर्म्मकः "क्लिश्नाति भुवनत्रयमिति दर्शनादित व्याचख्यौ। तेन टीकापुस्तके क्लिश्यन्निति पाठः प्रामादिकएव।

उपसर्गविशेषात्तु तत्तदुपसर्गद्योत्यार्थयुक्ते बाधने।

परि+सर्व्वतोबाधने ; "परिक्लिश्यमाने" पा०।

**क्लिशित** त्रि० क्लिश-क्त वा इट्। १क्लेशयुक्ते २उपतापिते च

**क्लिष्ट** त्रि० क्लिश-क्त वा इडभावः। १क्लेशयुक्ते २पीडिते च। ३पूर्व्वापरविरुद्धार्थके वाक्ये न० अमरः

**क्लिष्टा** स्त्री क्लिष्टं क्लेशः अस्त्यस्याम् अच्। पातञ्जलोक्ते चित्तवृत्तिभेदे यथा

"वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः" सू०

"क्लेशहेतुकाः कर्म्माशयप्रचयक्षेत्रीभूताः क्लिष्टाः। ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः क्लिष्टप्रवाहपतिता अप्यक्लिष्टाः। क्लिष्टच्छिद्रेष्वप्यक्लिष्टा भवन्ति। अक्लिष्टच्छिद्रेषु क्लिष्टा इति। तथाजातीयकाः संस्काराः वृत्तिभिरेव क्रियन्ते संस्कारैश्च वृत्तय इति एवं वृत्तिसंस्कारचक्रमनिशमावर्त्तते तदेवम्भूतं चित्तमवसिताधिकारमात्मकल्पेनावतिष्ठते प्रलयं वा गच्छतीति। ताः क्लिष्टाश्च पञ्चधा वृत्तयः" भा०

"स्यादेतत् पुरुषो हि शक्यो, उपदेष्टुम्। न च वृत्तिनिरोधो वृत्तीरविज्ञाय शक्यो, न च सहस्रेणापि पुरुषायुषैरलमिमाः कैश्चित् परिगणयितुमसंख्यातास्च कथं निरोद्धव्या इत्याशङ्क्य तासामियत्तास्वरूपप्रतिपादकपरं सूत्रमवतारयति ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः। वृत्तिरूपोऽवयव्युक्तः। तस्य प्रमाणादयोऽवयवाः पञ्च ततस्तदवयवाः पञ्चतय्यः पञ्चावयवा वृत्तिर्भवति तास्च वृत्तयश्चैत्रमैत्रादि चित्तभेदात् बह्व्य इति बहुवचनमुपपन्नम् एतदुक्तं भवति चैत्रो वा मैत्रो वा कश्चित्सर्व्वेषामेव तेषां वृत्तयः पञ्चतय्यः एव नाधिका इति! चित्तस्येति चैकवचनं जात्यभिप्रायं चित्तानामिति तु द्रष्टव्यम्। तासामवान्तरविशेषमनुष्ठानोपयोगिनं दर्शयति। क्लिष्टाऽक्लिष्टा इति। अक्लिष्टा उपादेयाः क्लिष्टा निरोद्धव्यास्ता अपि परेण वैराग्येणेति। अस्य व्याख्यानम्। क्लेशहेतुका इति। क्लेशाः अस्मितादयो हेतवः प्रवृत्तिकारणं यासां वृत्तीनान्तास्तथोक्ताः। यद्वा पुरुषार्थं प्रधानस्य रजस्तमोमयीनां हि वृत्तीनां क्लेशकारित्वेन क्लेशैव प्रवृत्तिः क्लेशः क्लिष्टम् तदासामस्तीति क्लिष्टा इति। यत एव क्लेशोपार्जनार्थममूषां प्रवृत्तिरत एव कर्म्माशयप्रचयक्षेत्रीभूताः प्रमाणादिकाः। खल्वयं प्रतिपत्त्यर्थमवसाय तत्र सक्तो द्विष्टो वा कर्म्माशयमाचिनोतीति भवन्ति धर्म्माधर्म्मप्रचयप्रसवभूमयो वृत्तयः क्लिष्टा इति अक्लिष्टा व्याचष्टे ख्यातिविषया इति। विधूतरजस्तमसो बुद्धिसत्त्वस्य प्रशान्तवाहिनः प्रज्ञाप्रसादः ख्यातिस्तया विषयिण्या तद्विषयं सत्वपुरुषविवेकमुपलक्षयति तेन सत्वपुरुषविवेकविषया यतः अतएव गुणाधिकारविरोधिन्यः कार्य्यकरणं हि गुणानामधिकारो विवेकख्यातिपर्य्यवसानश्च स इति चरिताधिकाराणां तु गुणानामधिकारं विरुन्धति इति अतस्ता अक्लिष्टाः प्रमाणप्रभृतयो वृत्तयः। स्यादेतत् वीतरागजन्मादर्शनात् क्लिष्टवृत्तय एव सर्व्वे प्राणभृतां न च क्लिष्टवृत्तिप्रवाहे भवितुमर्हन्त्यक्लिष्टवृत्तयः। नचामूषां भावेऽपि कार्य्यकारिता विरोधिमध्यपातित्वात्। तस्मात् क्लिष्टानामक्लिष्टाभिर्निरोधस्तासां च वैराग्येण परेणेति मनोरथमात्रमित्यत आह। क्लिष्टप्रवाहेति। आगमानुमानाचार्य्योपदेशपरिशीलनलब्धजन्मनी अभ्यासवैराग्ये क्लिष्टच्छिद्रान्तरे तत्र पतिताः स्वयमक्लिष्टाएव यद्यपि क्लिष्टप्रवाहपतिताः। न खलु शालग्रामे किरातशतसङ्कीर्णे प्रतिवसन्नपि ब्राह्मणः किरातो भवति। अक्लिष्टच्छिद्रेष्विति निदर्शनम्। क्लिष्टान्तर्वर्त्तितया च क्लिष्टाभिरनभिभूता अक्लिष्टाः स्वसंस्कारपरिपाकक्रमेण क्लिष्टा एव तावदभिभवन्तीत्याह तथाजातीयका इति। अक्लिष्टाभिर्वृत्तिभिरक्लिष्टाः संस्कारा इत्यर्थः। तदिदं वृत्तिसंस्कार, चक्रमनिशमावर्त्तते आनिरोधसमाधेः तदेवंभूतञ्चित्तं निरोधावस्थं संस्कारशेषं भूत्वात्मकल्पेनावतिष्ठत इत्यापाततः। प्रलयं वा गच्छतीति परमार्थतः। पिण्डीकृत्य सूत्रार्थमाह। ता इति पञ्चेत्यर्थकथनमात्रं न तु शब्दवृत्तिव्याख्यानं तयपः प्रकारेऽस्मरणात्। ताः स्वसंज्ञाभिरुद्दिशति" विव०

"प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः" सू०

"निर्द्देशे यथावचनं विग्रहश्चार्थे द्वन्द्वसमास इतरेतरयोगः। यथाऽनित्याऽशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येत्युक्तेऽपि न दिङ्मोहालातचक्रादिविभ्रमा व्युदस्यन्ते। एवमिहापि प्रमाणाद्यभिधानेऽपि वृत्त्यन्तरसद्भावशङ्कां न व्युदस्येति तन्निरासाय वक्तव्यं पञ्चतय्य इति एतावत्य एव वृत्तयोनापराः सन्तीति दर्शितं भवति" विव०

**क्लिष्टि** स्त्री क्लिश-क्तिन्। १क्लेशे २सेवायां च भरतः।

**क्लीत** पु० सुश्रुतोक्ते अग्निप्रकृतिके कीटभेदे। "क्लीतः क्रमिसरारी च" सुश्रुतः कीटशब्दे विवृतिः

**क्लीतक** न० क्लीत-क्विप् नि०वलोपः क्लीयं तकति हसते अच्। मधूके (यष्टिमधु)। अमरः। "तत्र क्लीतकाश्वमारगुञ्जाशुनग्वगर्गरकरघाटविद्युदिवाविजयानीत्यष्टौ मूलविषाणि" सुश्रुतः। २करञ्जबीजे "आत्मनि मन्त्रान् संनमयेत्" "एकक्लीतकेन" आश्व० श्र०१,८,७,८, "करञ्जबीजस्य यत्रैकं बीजं तदेकक्लीतकम्" नारा० वृ०।

**क्लीतकिका** स्त्री क्लीतादागतः कन् क्लीतकः विक्रयः निन्द्यायां ठन् ह्रस्व त्वः। नीलाग्रामोषधौ अमरः। नीलग्राः विक्रयस्य निनिन्दितत्वमाह मिता० आपस्तम्बः "रोमकूपे यदा गच्छेद्रसो नीलग्रास्तु कस्यचित्। त्रिवर्णेषु च सामान्यात्तत्प्रकृत्य विशोधनम्। पालनं विक्रयश्चैव तद्वृत्त्या चोपजीवनम्। पतनञ्च भवेद्विप्रे त्रिभिः कृच्छ्रैर्व्यपोहति"

**क्लीतनक** न० क्लीतं कीटभेदं नुदति नुद-बा० ड संज्ञायां कन्। मधूलिकायाम् अतिरसायाम् राजनि०।

**क्लीब(व)** वैक्लव्ये अप्रागल्भ्ये च भ्वा० आत्म० अक० सेट्। क्लीब(व)ते अक्लीबि(वि)ष्ट। चिक्लीबे(वे) क्लीबि(वि)त्वा। वा० मते अयं पवर्गान्त्यः कवि० मते अन्त्यस्थान्त्यः। इदित् चङि अचिक्लीब(व)त् त।

**क्लीब(व)** पु० न०। क्लीब(व)-क। पुंस्त्रीभिन्ने तृतीयप्रकृतौ षण्ढे। स च "न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति। मेढ्रं चोन्मादशुक्राभ्यां हीनः क्लीवः स उच्यते" इति कात्यायनोक्तलक्षणः। स च चतुर्दशविधः नारदेन दर्शितो यथा।

"चतुर्दशविधः शास्त्रे षण्ढो दृष्टो मनीषिभिः। चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात्। निसर्गषण्ढो१ऽनवद्धश्च २पक्षषण्ड ३स्तथैव च। अभिशापात् ४ गुरो ५रोगात् ६देवक्रोधात् ७तथैव च। ईर्ष्याषण्ढश्च ८सेव्यश्च ९वातरेता १०मुखेभगः११। आक्षेप्तः १२मोघबीजश्च १३शालीनो १४ऽन्यापति १५स्तथा। तत्राद्यावप्रतीकार्यौ पक्षाख्यं मासमाचरेत्। अनुक्रमात्त्रयस्यास्य कालः संवत्सरः स्मृतः। ईर्ष्याषण्डादयोऽन्ये चत्वारः समुदाहृताः। त्यक्तव्यास्ते पतितवत् क्षतयोन्या अपि स्त्रियाः। आक्षेप्तमोघबीजाभ्यां क्षतेऽपि पतिकर्मणि। पतिरन्यः स्मृतो नार्या वत्सरं तु प्रतीक्ष्य तु। शालीनस्यापि धृष्टस्त्रीसंयोगाद्भ्रंशयेत् ध्वजः। तं हीनवेगमन्यस्त्रीबालाद्याभिरुपाचरेत्। अन्यस्यां यो मनुष्यः स्यादमनुष्यः स्वयोषिति। लभेत साम्यं भर्त्तारमेतत्कार्यं प्रजाकृते। अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं वीजिनो नराः। क्षेत्रं वीजवते देयं नवीजी क्षेत्रमर्हति" अत्र "नष्टे मृते प्रव्रजिते क्लीवे वा पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते" इति क्लीवपतिपरित्यागे प्राप्ते क्लीवस्य चिकित्स्याचिकित्स्यत्वभेदेन द्वैविध्यमुक्त्वा चिकित्स्यस्य कालविशेषपर्यन्तं सुश्रुताद्युक्तवाजीकरणादिना उपचर्य्यता अचिकित्स्यस्य तु सर्वथा त्याज्यता दर्शिता। तत्र निसर्गषण्डः मनूक्तो मातापित्रोः समवीर्य्यजातः। अनवद्धः कषण्डहीनः छिन्नाण्डः क्षतक्लीवश्च तौ द्वौ अप्रतीकार्यौ अचिकित्स्यौ। पक्षाख्यं पक्षव्यापकषण्ढं मासमाचरेत् चिकित्सेत्। त्रयस्य गुरोरभिशापरोगदैवकोपकृतकक्लैव्यस्य संवत्सरं चिकित्स्यत्वम्। ईर्ष्याषण्डादयस्तु चत्वारः अचिकित्स्यत्वात् पतिततुल्यत्वेन सर्वथा त्याज्याः न तत्र कालप्रतीक्षा। आक्षेप्ता बीजस्य ईषत्क्षेप्ता दर्शनमात्रादिना स्खलितवीर्यः मोघवीर्यः अपत्योत्पादनायोग्यवीजः एतौ द्वौ षण्मासं चिकित्स्यौ शालीनस्य तु चिकित्स्यत्वेन अत्याज्यता। अन्यपतेस्तु सर्वथा त्याज्यता। अत्र क्षतयोन्या इति विशेषणात् क्लीवपतित्यागवचनं वाग्दत्ताविषयमिति कल्पनं निरस्तम्। नष्टे मृतेइत्यादिवचनं युगान्तरविषयम् "दत्तायाश्चैव कन्यायाः पुनर्दानं वरस्य च" इत्यादित्यपुराणे कलिवर्ज्यधर्म्मेष्वभिधानात् इति माधवाचार्य्यः। अन्ये तु कलिधर्म्मप्रकरणे पराशरेण तथाविधानात् स्मृतेः पुराणात् बलवत्त्वेन कलावपि तत्प्रवृत्तिरित्याहुः। साम्प्रदायिकास्तु वेदार्थानुभवजन्यमुनिप्रणीतवाक्यस्यैव स्मृतित्वेन पुराणान्तर्गतधर्म्मविधायकनिषेधवाक्ययोरपि स्मृतित्वात् "द्वैधे बहूनां वचनमिति" न्यायेन बहूनां तथासम्मत्यभावात् शिष्टाचारविरोधाच्च पराशरवाक्यमनादृत्य बहुसम्मत एव पक्ष आदरणीय इत्याहुः। इष्ट्र्यीषण्डादिलक्षणं सुश्रुतोक्तम्। सुश्रुते तु नपुंसकोत्पत्तिकारणमुक्त्वा तत्भेदा अन्यथा दर्शिता यथा

"पित्रोरत्यल्पवीजत्वादासेक्यः पुरुषो भवेत्। स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम्। यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः। स योनिशेफसोर्गन्धमाघ्राय लभते बलम्। स्वे गुदेऽब्रह्मचर्य्याद्यः स्त्रीषु पुं-

वत् प्रवर्त्तते । कुम्भीकः स च विज्ञेय ईर्ष्यकं शृणु चापरम् । दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते । ईर्ष्यकः स च विज्ञेयः षण्डकं शृणु पञ्चमम् । यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते । ततः स्त्रीचेष्टिताकारो जायते षण्डसंज्ञितः । ऋतौ पुरुषवद्वापि प्रवर्त्तेताङ्गना यदि । तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता । आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा । सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसंज्ञितः । अनया विप्रकृत्या तु तेषां शुक्रवहाः सिराः । हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत्" ।

तस्य दायानधिकारिता अनंशशब्दे १४२पृ॰उक्ता । तत्रायं विशेषः । "क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः । अन्धोऽचिकित्स्यरोगाद्याभर्त्तव्याः स्युनिरंशकाः" या॰ व्याख्या मिता॰ "एतेषां विभागात् प्रागेव दोषप्राप्तावनंशत्वं न पुनर्विभक्तानां, विभागोत्तरकालमप्यौषधादिना दोषनिर्हरणे भागप्राप्तिरस्त्येव "विभक्तेषु सुतोजातः सवर्णायां विभागभाक्" इत्यस्य समानन्यायात् । क्लीबान्धौ यदि जन्मत आरभ्य तदा विभागानर्हावेव यदि त्वन्तरा तदा, तदपगमश्चेदौषधादिना, तर्हि "दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितादिति" रीत्या विभागार्हावेवेत्युक्तम्" । अत्र विशेषः क्लीबादीनामनंशत्वात्तत्पुत्राणामप्यनंशत्वे प्राप्त इदमाह" मिता॰ "औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः" । या॰ "एतेषां क्लीबादीनामौरसाः क्षेत्रजा वा पुत्रा निर्दोषा अंशग्रहणविरोधिक्लैब्यादिदोषरहिता भागहारिणः, अंशग्राहिणो भवन्ति । तत्र क्लीबस्य क्षेत्रजः पुत्रः सम्भवत्यन्येषामौरसा अपि । औरसक्षेत्रजयोर्ग्रहणं इतरपुत्रव्युदासार्थम् । क्लीबादिदुहितॄणां विशेषमाह मिता॰" । "सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः" । या॰ "एतेषां क्लीबादीनां सुता दुहितरो यावद्विवाहसंस्कृता न भवन्ति तावद्भरणीयाः । चशब्दात्संस्कार्य्याश्च । क्लीबादिपत्नीनां विशेषमाह मिता॰" "अपुत्रायोषितश्चैषां भर्तव्याः साधुवृत्तयः । निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च" या॰ । "एषां क्लीबादीनामपुत्राः पत्न्यः साधुवृत्तयः सदाचारास्चेद्भर्तव्या भरणीयाः । व्यभिचारिण्यस्तु निर्वास्याः । प्रतिकूलास्तथैव च निर्वास्या भवन्ति भरणीयाश्चाव्यभिचारिण्यश्चेत् । न पुनः प्रातिकूल्यमात्रेण भरणमपि न कर्त्तव्यम्" मिता॰

वीरमित्रोदये विशेष "क्लीबादीनामपि दारपरिग्रहेण पुत्रश्च अत्र उक्तो मनुना "यद्यर्थिता तु दारैः स्यात् क्लीबादीनां कथञ्चन । तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति" । तन्तुरपत्यम् । नच क्लीबादेरुपनयनाभावेन पतितत्वात् कथं दारसम्बन्ध इति वाच्यम् । उपनयनानर्हतया अनुपनीतत्वे शूद्रवदपतितत्वात्" ।

एतच्चिन्त्यं "मुखेभगाश्च ये केचित् क्लीबप्राया नपुंसकाः । ब्रह्मदण्डहता ये च ये च वै ब्राह्मणैर्हताः । महापातकिनो ये च पतितास्ते प्रकीर्त्तिता" शु॰ त॰ ब्रह्मपु॰ क्लीबस्य पतितत्वोक्तेः । केचित्तु तत्र उत्तरार्द्धे "पतितानां न दाहःस्यान्नान्त्येष्टिर्नास्थिसञ्चयः पातः कर्त्तव्यो नचाश्रु नाशौ च सुदकक्रिया" इत्युक्तेरशौचाद्यभावाङ्गमिदं पातित्यं नान्यत्र । अतएव अनंशिगणनायां याज्ञवल्क्यादिभिः पतितात् पृथक् क्लीबस्य कीर्त्तनं सङ्गच्छते इत्याहुः । मनुनाऽस्यापाङ्क्तेयत्वमुक्तम् "आचारहीनः क्लीबश्च नित्ययाचनकस्तथा" इत्युपक्रमे "एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान्" इति । "अस्योत्पत्तौ कारणमुक्तं मनुना । "पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः । साम्येऽपुमान् पुंस्त्रियौ वा क्षीणाल्पे च विपर्य्ययः" "पुंसोवीजे अधिकेऽयुग्मास्वपि पुत्रो जायते स्त्रीवीजेऽधिके युग्मास्वपि दुहितैव । अतोदृष्याहारादिना निजवीजाधिक्यं भार्य्यायाश्चाहारलाघवादिना वीजाल्पत्वमवगम्यायुग्मास्वपि पुत्रार्थिना गन्तव्यमिति दर्शितं स्त्रीपुंसायोस्तु वीजसाम्येऽपुमान् नपुंसकं जायते पुंस्त्रियाविति यमौ निःसारेऽल्पे चोभयोरेव वीजे गर्भस्यासम्भवः" कुल्लू॰ ।

कर्त्तव्यकर्म्मसु२निरुद्यमाहे३अधीरे ४विक्रमहीने अमरः तस्य भावः ष्यञ् । क्लैब्य न॰ । तल् क्लीबता स्त्री । त्व क्लीबत्व न॰ तद्भावे "मा क्लैव्यं गच्छ कौन्तेय ! नैतत्त्वय्युपपद्यते" गीता । "पुनरक्लीवतया प्रकाश्यताम्" रघुः । "अक्लीवतया धैर्य्येण" मल्लि॰ । "कोहि धर्म्मोऽस्ति ते भीष्म ! ब्रह्मचर्य्यमिदं वृथा । यद्धारयसि मोहाद्वा क्लीवत्वाद्वा न संशयः" भा॰ स॰४०अ॰ । क्लैब्यञ्च पुंस्त्वेन्द्रियोपघातः अशक्तिशब्दे ४७२ पृ॰ उदा॰ । जातस्य क्लीवताकारणं च सुश्रुते दर्शितं यथा "शुक्रवहे द्वे धमन्यौ तयोर्मूलं स्तनौ वृषणौ च तत्र विद्धस्य क्लीवता चिरात् प्रसेको रक्तशुक्रता च" । "क्लीवरूपांस्तिरीटिनः" कथ॰ ८,६,७, क्लीवइवाचरति क्यङ् क्विप् वा । क्लीवायते । क्ला-

ष्पि आत्म०क्लीबते सुख० । ४शब्दनिष्ठे धर्मभेदे तद्विवृतिः शब्दार्थरत्ने यथा

"लिङ्गत्वञ्च प्राकृतगुणगततारस्थात्मकोधर्म एव तद्विशेषश्च पुंनपुंसकत्वादिः । तथा हि सर्व्वेषां त्रिगुणप्रकृतिकार्य्यतया शब्दानामपि तथात्वेन गुणगतविशेषाच्छब्देषु लिङ्गविशेष इति कल्प्यते स च विशेषः शास्त्रे इत्यमभ्यधायि । विकृतसत्वादीनां तुल्यरूपेणावस्थानात् नपुंसकत्वं सत्वस्याधिक्ये पुंस्त्वम्, रजआधिक्ये स्त्रीत्वमिति । एवञ्च लिङ्गस्य शब्दधर्मत्वेऽपि शब्देन सहार्थाभेदारोपात् अर्थे ति वाचके अर्थेऽपि साक्षात् तत्पारतन्त्र्येण वा सर्व्वत्र तस्य विशेषणत्वम् शाब्दबोधे शब्दभानस्येष्टत्वाच्च शब्दस्य नामार्थतावत् तद्गतलिङ्गस्यापि नामार्थतौचित्यात् "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इतिप्रागुक्तेः "शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा । नो चेत् श्रोत्रादिभिः सिद्धोऽप्यसावर्थेऽवभासते" इति हर्य्युक्तेश्च शब्दानां नामार्थतावगतेः । तथा प्रातिपदिकार्थः । अभेदविवक्षायां तु श्रोत्रादिभिरेव सिद्धः ज्ञातः सन् अर्थे प्रकारतया भासते इति तदर्थः । युक्तञ्चैतत् पुंलिङ्गः शब्द इतिव्यवहारात् "स्वमोर्नपुंसकादिति" पा०सूत्रे शब्दस्यैव नपुंसकत्वव्यपदेशात् दारानित्यादौ पुंस्त्वान्वयबाधाच्च लिङ्गस्य शब्दधर्म्मत्वमन्यथैतेषु लिङ्गाद्यनन्वयापत्तेर्व्यवहारसूत्रनिर्द्देशासङ्गत्यापत्तेश्च । तथा अर्थभेदाच्छब्दभेदवत् लिङ्गभेदादपि शब्दभेद इति कल्प्यते प्रागुक्तधर्म्मविशेषरूपभेदकसद्भावात् । उक्तञ्च भाष्ये "एकार्थे शब्दान्यत्वा दृष्टं लिङ्गान्यत्वमिति" । एवञ्च तटादिशब्दानामनेकलिङ्गत्वव्यवहारः समानानुपूर्व्वीकत्वेनैव वस्तुतस्तेषां भिन्नानामेव भिन्नलिङ्गत्वमिति दिक्" । "अकारादि क्षकारान्तान् क्लीवहीनान् लिखेत्ततः । ऋऋॣॡद्वयं लृद्वयं क्लीवं प्रचक्षते" अकडमचक्रे तन्त्रसारोक्ते ऋकारादिवर्णचतुष्के च

**क्लु** गतौ भ्वा० आ० सक० अनिट् । क्लवते अक्लोष्ट चुक्लुवे

**क्लृप्त** त्रि० क्लृप–क्त । १रचिते २कल्पिते ३विहिते ४निर्म्मिते च शब्दच० "पतिंवरा क्लृप्तविवाहवेषा" क्लृप्तेन सोपानपथेन मञ्चम्" रघुः । ५वापिते च "क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः" मनुः ।

**क्लृप्तकीला** स्त्री क्लृप्ता कीलमत्र । (पाट्टा) इतिख्याते । निर्द्दिष्टकरग्रहणार्थं दत्तभूमिस्वत्वग्रहणोपयोगिस्वत्वज्ञापके पत्रभेदे हि० ।

**क्लेद** पु० क्लिद–भावे घञ् । १आर्द्रतायाम् । सा च जलविकारभेदः यथाह या० "रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्द्दवम्" । "रसादुदकात् रसनेन्द्रियं शैत्यमङ्गानां, स्नेहं स्निग्धताम् मृदुतासहितं क्लेदमार्द्रताम्" मिता० । देहस्थः क्लेदश्च श्लेष्मकार्य्यः क्लेदनशब्दे विवृतः । "तदञ्जनक्लेदसमाकुलाक्षम्" "स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया" रघुः । २पतीभावे शब्दचि० "पदस्थितस्य पद्मस्य बन्धू वरुणभास्करौ । पदाच्च्युतस्य तस्यैव क्लेदशोषकरावुभौ"

**क्लेदक** त्रि० क्लेदयति क्लिद णिच् ण्वुल् । १क्लेदकारके देहस्थकफे क्लेदनशब्दे विवृतिः । २क्लेदकारके जलादौ त्रि० । देहस्थदशवह्निमध्ये ३वह्निभेदे अग्निशब्दे ५० पृ० पदार्थादर्शवाक्यम् दृश्यम् । जलस्य क्लेदकत्वेऽपि तत्र अग्नेः साहचर्य्यादेव तथात्वम् ।

**क्लेदन्** पु० क्लेदयति क्लिद-णिच्–कनिन् ( चन्द्रे उणा० )

**क्लेदन** पु० क्लेदयति क्लिद–णिच् ल्यु । क्लेदकारके देहस्थे श्लेष्मभेदे तद्विवृतिः भावप्रकाशे

"कफस्यैतानि नामानि क्लेदनश्चावलम्बनः । रसनः स्नेहनश्चापि श्लेष्मणः स्थानभेदतः । अथ क्लेदनादीनां स्थानान्याह "आमाशयेऽथ हृदये कण्ठे शिरसि सन्धिषु । स्थानेष्वेषु मनुष्याणां श्लेष्मा तिष्ठत्यनुक्रमात्" । दोषाणां सकलशरीरव्यापिनामपि पञ्च पञ्च स्थानानीति बाहुल्याभिप्रायेणोक्तानि । तथाच वाग्भटः "इति प्रायेण दोषाणां स्थानान्यविकृतात्मनाम् । व्यापिनामपि जानीयात् कर्म्माणि च पृथक् पृथक्" । चरकश्च "ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्द्ध्वसंश्रयाः" इति । अथ तत्तत्स्थानगतस्य श्लेष्मणः कर्म्माण्याह "क्लेदनः क्लेदयत्यन्नमाशयगत्यापराण्यपि । अनुगृह्णाति च श्लेष्मस्थानान्युदककर्म्मणा" । अयमर्थः क्लेदनोऽन्नं क्लेदयति तेन संहतमन्नं भेदं प्राप्नोति । अपराण्यपि श्लेष्मस्थानानि हृदयादीनि मार्गेण गत्वा तत्र तत्र हृदयालम्बनसन्धारणरसग्रहणसमस्तेन्द्रियतर्पणसन्धिसंश्लेषणादुदककर्म्मभिरनुगृह्णाति उपकरोति । तथा च "रसयुक्तात्मवीर्य्येण हृदयस्यावलम्बनम् । त्रिकसन्धारणं चापि विदधात्यवलम्बनः" । त्रिकं शिरोबाहुद्वयसन्धिः । "उभावपि ततः सौम्यौ तिष्ठतस्तन्निके यतः । ततो "रसान्विजानीयात् रसनारसनौ समौ" । रसना रसनेन्द्रियं रसनः कण्ठस्थकफः । "स्नेहनः स्नेहदानेन समस्तेन्द्रियतर्पणः ।

श्लेष्मणः सर्वसन्धीनां संश्लेषं विदधात्यसौ"। २क्लेदकारके जलादौ त्रि०।

**क्लेदु** पु० क्लिद-उन्। १चन्द्रे उज्ज्वल० २सन्निपाते त्रिका०

**क्लेश** पु० क्लिश। भावे घञ्। उपतापे दुःखे क्लिश्नन्ति क्लिश्यबाधते कर्त्तरि अच। पातञ्जलोक्तेषु अविद्यादिषु पञ्चसु। "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" पात० सू०। "अविद्यादयः क्लेशाः" भा०। "क्लिश्नन्ति खल्वमी पुरुषं सांसारिकं विविधदुःखप्रहारेणेति" विवरणम्। अविद्यादीनां यथाक्लेशहेतुत्वात् तच्छब्दवाच्यत्वम् तथा तेषां निरोधोपायश्च तत्रैव साधनपादे दर्शितो यथा

"अथ के क्लेशाः कियन्तो वेति" भा०

"अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः पञ्च क्लेशाः" सू०।

"इति पञ्च विपर्य्यया इत्यर्थः। ते स्पन्दमाना गुणाधिकारं द्रढयन्ति परिणाममवस्थापयन्ति कार्य्यकारणस्रोत उन्नमयन्ति परस्परानुग्रहतन्त्रीभूत्वा कर्म्मविपाकं चाभिनिर्हरन्ति" भाष्यम्।

"पृच्छति अथेति। अविद्येति सूत्रेण परिहारः। अविद्यादयः क्लेशाः। व्याचष्टे पञ्च विपर्य्यया इति। अविद्या तावद्विपर्य्यय एव अस्मितादयोऽप्यविद्योपादानास्तदविनिर्भागवर्त्तिन इति विपर्य्ययाः। ततश्चाविद्यासमुच्छेदे तेषामपि समुच्छेदो युक्त इति भावः। तेषामुच्छेतव्यताहेतुं संसारकारणत्वमाह ते स्पन्दमानाः। समुदाचरन्तो गुणानामधिकारं द्रढयन्ति बलवन्तं कुर्व्वन्ति अतएव परिणाममवस्थापयन्ति अव्यक्तमहदहङ्कारपरम्परया हि कार्य्यकारणस्रोत उन्नमयन्ति उद्भावयन्ति। यदर्थं सर्व्वमेतत् कुर्व्वन्ति तद्दर्शयति परस्परेति। कर्म्मणां विपाको जात्यायुर्भोगलक्षणः पुरुषार्थः" तममी क्लेशा अभिनिर्हरन्ति निष्पादयन्ति। किं प्रत्येकं? नेत्याह परस्परानुग्रहेति कर्म्मभिः क्लेशाः क्लेशैश्च कर्म्माणीति" वाचस्पतिविवरणम्।

"अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्" सू० "अत्राऽविद्या क्षेत्रं प्रसवभूमिरुत्तरेषामस्मितादीनां चतुर्विधकल्पितानां प्रसुप्ततनुविच्छिन्नोदाराणाम्। तत्र का प्रसुप्तिः? चेतसि शक्तिमात्रप्रतिष्ठानां वीजभावोपगमः तस्य प्रबोध आलम्बने संमुखीभावः प्रसंख्यानवतो दग्धक्लेशवीजस्य संमुखीभूतेऽप्यालम्बने नाऽसौ पुनरस्ति दग्धवीजस्य कुतः प्ररोह इति। अतः क्षीणक्लेशः कुशलश्चरमदेह इत्युच्यते तत्रैव सा दग्धवीजभावा पञ्चमी क्लेशावस्था नान्यत्रेति सतां क्लेशानां तदा वीजसामर्थ्यं दग्धमिति विषयस्य संमुखीभावेऽपि सति न भवत्येषां प्रबोध इत्युक्ता प्रसुप्तिर्दग्धवीजानाम् अप्ररोहश्च। तनुत्वमुच्यते प्रतिपक्षभावनोपहताः क्लेशास्तनवो भवन्ति। तथा विच्छिद्य विच्छिद्य तेन तेनात्मना पुनः पुनः समुदाचरन्तीति विच्छिन्नाः कथं? रागकाले क्रोधस्यादर्शनात्। न हि रागकाले क्रोधः समुदाचरति रागश्च क्वचित् दृश्यमानो विषयान्तरे नास्ति, नैकस्यां स्त्रियां चैत्रो रक्त इति अन्यासु स्त्रीषु विरक्तः, किन्तु तत्र रागो लब्धवृत्तिः, अन्यत्र भविष्यद्वृत्तिरिति स हि तदा प्रसुप्ततनुविच्छिन्नो भवति। विषये यो लब्धवृत्तिः स उदारः। सर्व्व एवैते क्लेशविषयत्वं नातिक्रामन्ति। कस्तर्हि विच्छिन्नः प्रसुप्तस्तनुरुदारो वा क्लेशः? इति, उच्यते सत्यमेवैतत् किन्तु विशिष्टानामेवैतेषां विच्छिन्नादित्वं यथैव प्रतिपक्षभावनातो निवृत्तं तथैव स्वव्यञ्जकाञ्जनेनाभिव्यक्तम् इति सर्व्व एवामी क्लेशा अविद्याभेदाः कस्मात्? सर्व्वेषु अविद्यैवाभिप्लवते यदविद्यया वस्त्वाकार्य्यते तदेवानुशेरते क्लेशाः विपर्य्यासप्रत्ययकाले उपलभ्यन्ते क्षीयमाणां चाविद्यामनुक्षीयन्त इति" भा०।

"हेयानां क्लेशानामविद्यामूलत्वं दर्शयति अविद्याक्षेत्रमित्यादि। तत्र का प्रसुप्तिरिति स्वोचितामर्थक्रियामकुर्व्वतां क्लेशानां सद्भावे न प्रमाणमस्तीत्यभिप्रायः पृच्छतः। उत्तरं चेतसीति। मा नामार्थक्रियां कार्षुः क्लेशाः विदेहप्रकृतिलयानां वीजभावं प्राप्तास्तु ते शक्तिमात्रेण सन्ति चोर इव दधिनोऽविवेकख्यातेरस्त्यदसि कारणं तद्धर्म्मतायाम् अतो विदेहप्रकृतिलया विवेकख्यातिविरहिणः प्रसुप्तक्लेशा न यावदवधिकालं प्राप्नुवन्ति, ततः प्राप्तौ तु पुनरावृत्ताः सन्तः क्लेशास्तेषु तेषु विषयेषु संमुखीभवन्ति। शक्तिमात्रेण प्रतिष्ठा येषां ते तथोक्ताः। तदनेनोत्पत्तिशक्तिरुक्ता वीजभावोपगम इति च कार्य्यशक्तिरिति। ननु विवेकख्यातिमतोऽपि क्लेशाः कस्मान्न प्रसुप्ताः? इत्यत आह प्रसंख्यानवत इति। चरमदेहो न तस्य देहान्तरमुत्पत्स्यते यदपेक्षयास्य देहः पूर्व इत्यर्थः। विदेहादिष्वित्यर्थः नान्यत्र ननु सतो नात्यन्तविनाश इति किमिति तदीययोगर्द्धिबलेन विषयसंमुखीभावेन क्लेशाः प्रबुध्यन्ते इत्यत आह सतामिति। सन्तु क्लेशाः दग्धस्तेषां प्रसङ्ख्यानाग्निना वीजभाव इत्यर्थः। क्लेशप्रतिपक्षः क्रियायोगस्तस्य

भावनमनुष्ठानं तेनोपहृतास्तनवः अथवा सम्यग्ज्ञान-मविद्यायाः प्रतिपक्षः, भेददर्शनलक्षणाया, माध्यस्थ्यं रागद्वेषयोः,अनुबन्धवुद्धिनिवृत्तिरभिनिवेशस्येति । विच्छि-त्तिमाह तथेति । क्लेशानामन्वयनमेन समुदाचरता-ऽभिभवाद्वाऽन्यविषयसेवया वा विकच्छविच्छिद्य तेन ते-नात्मना समुदाचरन्ति आविर्भवन्ति बीजोकरणाय प्रयोगे-ण वाभिभावकदौर्बल्ये वेति । वीप्सया च विच्छेदसमुदा-चारयोः पौनःपुन्यं दर्शयता यथाक्रमात् प्रत्ययात् भेद उ-क्तः। रागेण वा समुदाचरता विजातीयः क्रोधोऽभिभूयते सजातीयेन वा विषयान्तरवर्त्तिना रागेणैव विषयान्तर-वर्त्ती रागोऽभिभूयत इत्याह रागेति भविष्यद्वृत्तेस्त्वयो गतिः यथायोगवेदितव्येत्याह । सर्वेति भविष्यद्वृ-त्तिक्लेशमात्रपरामर्शि सर्वनाम । न चैवरागपरामर्शि तस्य विच्छिन्नत्वादेवेति । उदारमाह विषय इति । ननु उदार एव पुरुषान् क्लिश्नातीति भवतु क्लेशो अन्ये त्वक्लि-श्नन्तः कथं क्लेशा? इत्यत आह । सर्व एवैते इति क्ले-शविषयत्वं क्लेशपदवाच्यत्वं नातिक्रामन्ति उदारतामाप-द्यमानाः अतएव तेऽपि हेया इति भावः । क्लेशत्वेनैकता-मनुमान्यो दर्शयति कस्तर्हि? इति। क्लेशत्वेन समानत्वेऽपि यथोक्तावस्थाभेदाद्विशेष इति परिहरति उच्यते सत्यमिति स्यादेतदविद्यातो भवन्तु क्लेशाः, तथाप्यविद्यानिवृत्तौ क-स्मान्निवर्त्तन्ते? न खलु पटः कुविन्दनिवृत्तौ निवर्त्तते इ-त्यत आह सर्व एवेति भेदा इव भेदास्तदविनिर्भागवर्त्तिन इति यावत् कस्मात्? इति प्रश्नः। उत्तरं सर्वेष्वेति तदेव स्फुटयति यदिति आकार्य्यते समारोप्यते शेषं सुगमम् "प्रसुप्तास्तत्त्वलीनानां तन्ववस्थाश्च योगिनाम् । विच्छि-न्नोदाररूपाश्च क्लेशाविषयसङ्गिनामिति" संग्रहः" विव० । "क्लेशप्रहाणमिह लब्धसवीजयोगाः" "क्लेशकर्मफल-भोगवर्ज्जितम्" माघः । "दाशरथ्योः क्षणक्लेशः" रघुः "क्लेशः फलेन हि पुनर्नवतां विधत्ते" कुमा० "यन्मातापितरौ क्लेशं सहेते सम्भवे नृणाम्" मनुः । "तस्याजननिरेवास्तु जननीक्लेशकारिणः" माघः २कोपे ३व्यवसाये मेदि० । तयोरपि तद्धेतुत्वात्तथात्वम् । "अथे क्लेशतमसोः" पा० हन्तेःड । क्लेशापहः पुत्र

क्लेशक त्रि० क्लिश-वुञ् । क्लेशशीले "वल्ला मिठे वुञ्-विधानं ताच्छीलादिषु वासरूपन्यायेन तृजादयो न सि० कौ० । तेन क्लेशितेत्यादि असाधु । कर्त्तरि णि-निश्च भवत्येव । "निःश्वासेनावरक्लिसल-क्लेशिना विक्षिप-न्तीम्" माघः ताच्छीलेत्र इत्युक्ते कर्त्तरि तृच् भवत्येवे तेन "विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति । अनाशयित्वा क्लेशारं परलोके च नन्दति" भा०व० २९अ०

क्लैतकिक न० क्लीतकेन निर्वृत्तम् ठञ् । मद्ये शब्दचन्द्रिका।

क्लोमन् न० क्लु-गतौ मनिन् । हृदयस्याधोभागे दक्षिण-कुक्षिस्थे मांसपिण्डाकारे पदार्थे "तस्याधोवामतः प्लीहा फुप्फुसश्च दक्षिणतो यकृत् क्लोम" सुश्रुतः । "वपावसाव-हननं नाभिः क्लोम यकृत् प्लिहा" या० । अवहननं फु-प्फुसः प्लीहा आयुर्वेदप्रसिद्धः तौ च मांसपिण्डाकारौ सव्यकुक्षिगतौ । यकृत् कालकं, क्लोम मांसपिण्डस्तौ च दक्षिणकुक्षिगतौ" मिता० । "वृक्कयोः प्लीह्नि यकृति हृदय क्लोम्नि वा तथा । श्वासो यकृति तृष्णा च पिपासा क्लोमजेऽधिका । नाभीष्टहृदय क्लोमनिवद्धास्त्वष्टादश" कण्ठहृदयनेत्र क्लोमनाडीषु मण्डलाः" शुष्कक्लोमगलाननः" इति च सुश्रुतः । सर्वे नाम्ना अदन्ताः स्युरित्युक्तौ क्लोममप्यत भरतः। क्लोम च पिपासास्थानमिति वैद्यकम् । अतएव सुश्रुते पिपासा क्लोमजेऽधिका इत्युक्तम् "निष्कु-तीव क्लोम" दशकुमा० "वल्मीकान् क्लोमभिः" यजु० २५,८,अस्य पुंस्त्वमपि। "यकृत् क्लोमानं वरुणोभिषज्यन्" यजु० १९,८५

क्लोश पु० क्रोश+रस्य लः । भये । "सिन्धुरिव प्रवण आशुया यतो यदि क्लोशमनुष्वणि" ऋ० ६,४६,१४, क्लोशेति भ-यनाम" भा०

क्व अ० किम्+अ किमः कुः । कस्मिन्नित्यर्थे "वौ द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः" सा०द० "स्थायं स्थायं क्वचिद्यान्तं क्रान्त्वा च क्रन्त्वास्थितं क्वचित्" भट्टिः कशब्दौ स्वार्थान्वितयोर्महदन्तरं सूचयतः । "क्व सूर्य्य-प्रभवो वंशः क्व चाल्पविषया मतिः" रघुः । सूर्य्यवंशकवि-प्रज्ञयोर्विषयविषयिभावोऽत्यन्तमसम्भवीति गम्यते । एवमन्य-त्रापि यथायथमूह्यम् । ततो भवार्थे त्यप् त्यक् वा क्वत्य कस्मिन् भवे अर्थे त्रि० । ततः स्वार्थे क टापि। क्वत्यिका । मुग्धबोधमते अस्मात् चित्चनौ क्वचित् क्वचन । "क्वचित् क्वचित् विवरणे गूढभावः प्रकाश्यते" विवरणटीका । "क्वचन पतनयोग्यं देशमन्विष्य ताधः" नैष० । अमरमते द्वे पदे इति भेदः तयोः समासे काक्वाचितकपदसिद्धिः

क्वङ्गु पु० कु+अगि उन् । कङ्गौ(काङ्नी) धान्यभेदे हेमच०

क्वण अव्यक्तशब्दे भ्वा० पर० अक० सेट् । क्वणति अक्वाणीत्-अक्वणीत् चक्वाण । ज्वला० क्वणः क्वाणः । क्वणितम् ।

"विलोलघण्टाक्वणितेन नागाः" रघुः "दुःसहा हि परिक्षिप्तः क्वणद्भिरलिगायकैः" अक्वणिषुस्त्रुनोत्साहाः" चक्वणाशङ्किनीयोद्धम्" "विभूषणानां क्वणितञ्च षट्पदः" भट्टिः "किञ्चित्क्वणत्किन्नरमध्युवास" कुमा० उपनिप्रादिपूर्वः वीणायाः शब्दे अमरः। णिच् क्वणयति।

**क्वण** पु० क्वण—अप्। १वीणायाः शब्दे, अमरः २ध्वनिमात्रे हेमच०। कर्त्तरि अच्। ३शब्दकारके त्रि०

**क्वणन** न० क्वण—भावे ल्युट्। १वीणायाः शब्दे (कनकन) इति २शब्दभेदे। कर्त्तरि ल्यु। ३क्षुद्रघण्टिकायां (छोटघाण्टि) त्रिका०।

**क्वथ** निष्पचने (क्वाथशब्दोक्तपाकभेदे) भ्वा०पर०सक० सेट्। क्वथति एदित् अक्वथीत् चक्वाथ क्वाथः। क्वथ्यमानः। णिच् क्वाथयति "जलाशयेषु तप्तेषु क्वथ्यमानेषु वह्निना" भा० आ० २२६अ० "पञ्चान्नयोर्वाप्यश्नीयात् यवागूं क्वथितां सकृत्" मनुः

**क्वथित** त्रि० क्वथ—क्त। १अतिशयपक्वे व्यञ्जनादौ, २दशमूलपाचनादौ च हेमच०। भावप्र० क्वथितजलगुणा उक्ता यथा "क्वथितस्य जलस्य शीतलीकृतस्य विशेषमाह सुश्रुतः। "शृताम्बु तत् त्रिदोषघ्नं यदन्तर्वाष्पशीतलम्। अरुष्यमनभिष्यन्दि कृमिहृट्ज्वरहृल्लघु। धारापातेन विष्टम्भि दुर्ज्जरं पवनाहृतम्। भिनत्ति श्लेष्मसंघातं मारुतञ्चापकर्षति। अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि:" अन्तर्वाष्पशीतलम् पिहितमेव शीतलम्"

**क्वथिता** स्त्री भावप्र० उक्ते (काड़ी) इतिख्याते पदार्थे "स्थाल्यां घृते वा तैले वा हरिद्राहिङ्गु भर्जयेत्। अवलेहनसंयुक्तं तक्रन्तत्रैव निःक्षिपेत्। एषा सिद्धा समरीचा क्वथिता कथिता बुधैः। अवलेहनम्। (आरहन) इति लोके। "क्वथिता पाचनी रुच्या लघ्वी वह्निप्रदीपनी। कफानिलविबन्धघ्नी किञ्चित्पित्तप्रकोपणी। अलीकमतृष्णाः शुष्का वा किं वा क्वथितया पुनः। बृंहणा रोचना हृद्या बल्या वातगदापहा। कोष्ठशुद्धिकरी शुक्ला किञ्चित्पित्तप्रकोपनी। अर्हिते सहनुस्तम्भे विशेषेण हिता स्मृता"।

**क्वल** पु० कु+अल—अच्। प्रौढबदरफले "कुवलं यत् पूतीकैर्वा पर्णवल्कैर्वातञ्च्यात् सौम्यं तद्यत् क्वलैराञ्चसं तत् तद्यत् तण्डुलैर्वैश्वदेवं तद्यदातञ्चनेन मानुषं तद्यद्दध्ना यत् ऐन्द्रं दध्नातनक्ति सैन्द्रत्वाय" इति तैत्ति० २।५।३।५ "सोमवक्षीयमानाया लतायाः खण्डाः पूतीकाः। पलाशकाष्ठस्यांशाः पर्णवल्काः। प्रौढबदरफलानि क्वलाः। ईषदम्लतक्रम् तञ्चनं पूतीकादिभिरातञ्चनं सोमप्रियम्" भा०।

**क्वाण** पु० क्वण भावे घञ्। १शब्दे उपनिप्रादिपूर्व्वकस्तु वीणायाःशब्दे अमरः। ज्वला० कर्त्तरि ण। २शब्दकर्त्तरि त्रि०

**क्वाथ** पु० क्वथ-करणे घञ्। १अतिदुःखे हेम०। दुःखेन हि चित्तं क्वथ्यमानमिव भवतीति तस्य तथात्वम्, वैद्यकोक्ते जलादेः पाकभेदे यथा भावप्रकाशे

"पानीयं षोड़शगुणं क्षुण्णे द्रव्यपले क्षिपेत्। मृत्पात्रे क्वाथयेद् ग्राह्यमष्टमांशावशेषितम्। कर्षादौ तु पलं यावद्दद्यात् षोड़शिकं जलम्। ततस्तु कुड़वं यावत्तोयमष्टगुणं भवेत्। चतुर्गुणमतश्चोर्द्ध्वं यावत्प्रस्थादिकं जलम्। षोडशिकं षोड़शगुणम्। "तज्जलं पाययेद्धीमान् कोष्णं मृद्वग्निसाधितम्। शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते"। क्वाथपानमात्रामाह "मात्रोत्तमा पले तत् स्यात् त्रिभिरक्षैस्तु मध्यमा। जघन्या च पलार्द्धेन स्नेहक्वाथौषधेषु च। तन्त्रान्तरे "क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते। चतुर्भागावशिष्टन्तु पेयं पलचतुष्टयम्। दीप्तानलं महाकायं पाययेदञ्जलिं जलम्। कल्के त्विदं परित्यज्य प्रकृतिं तु चिकित्सकाः। क्वाथत्यागमनिष्क्रान्तस्त्वष्टभागावशेषितम्। पारम्पर्योपदेशेन वृद्धवैद्याः पलद्वयम्"। अष्टभागावशेषितस्य चतुर्भागावशिष्टापेक्षया गुरुत्वात् दीप्तानलं महाकायं पलद्वयं पाययेन्मध्यमाग्निमल्पकायं पलमात्रं पाययेत् मात्रोत्तमा पलेनस्यादित्यादिवचनात्। "क्वाथे क्षिपेत् सितामंशैश्चतुर्थाष्टमषोड़शैः। वातपित्तकफातङ्के विपरीतं मधु स्मृतम्। जीरकं गुग्गुलुं क्षारं लवणं च शिलाजतु। हिङ्गु त्रिकटुकं चैव क्वाथे शाणोन्मितं क्षिपेत्। क्षीरं घृतं गुडं तैलं मूत्रं चान्यत् द्रवं तथा। कल्कं चूर्णादिकं क्वाथे निःक्षिपेत् कर्षसंमितम्। तत्रोपविश्य विश्रान्तः प्रसन्नवदनेक्षणः। औषधं हेमरजतमृद्भाजनपरिस्थितम्। पिबेत् प्रसन्नहृदयः पीत्वा पात्रमधोमुखम्। विधायाचम्य सलिलं ताम्बूलाद्युपयोजयेत्"।

क्वाथसेवनप्रकारादि भावप्र० दर्शितं यथा

"तत्रानुक्ते प्रभातं स्यात्कषायेषु विशेषतः। कुष्यभैषज्यसम्बन्धो निषिद्धस्तरुणज्वरे। तोयपेयादिसंस्कारे त्वदोषं तत्र भेषजम्"। मुख्यभैषजं क्वाथः तस्य सम्बन्धः पानम्। यतश्चाह "न कषायं प्रशंसन्ति नराणां तरुणे ज्वरे।

कषायेणाकुलीभूता दोषा जेतुं सुदुस्तराः"। आकुलीभूताः मग्नाः स्वमार्गं परित्यज्य इतस्ततो गताः। अत्र कषायशब्देन क्वाथो गृह्यते। उक्ताश्च क्वाथस्य पर्य्यायाः। "शृतं क्वाथःकषायश्च निर्य्यूहः स निगद्यते, इति। "तोयपेयादिसंस्कारे निर्द्दोषं तत्र भेषजमिति"। तत्र तरुणज्वरे भेषजम् मुख्यभेषजं क्वाथरूपं न तु कल्ककनखुहिम कषायः प्रतिषिध्यत इति कल्कनं तोयपेयायवाग्वादिकम्। ननु "स्वरसस्य तथा कल्कः क्वाथस्य हिमफाण्टयोः। ज्ञेया कषायाः पञ्चैते लघवः स्युर्यथोत्तरम्" इति वचनात् स्वरसादयोऽपि कथं न निषिध्यन्ते। तत्राह "तत्र यस्तु कषायः स्यात्स वर्ज्यस्तरुणज्वरे" इति। चतुर्थभागावशेषकरणेनाष्टमभागशेषकरणे च कषायशब्दः कषायरसस्य स्यात्। स कषायः क्वाथः स तरुणज्वरे निषिद्धः। कषायस्य लक्षणमाह, "पादशिष्टः कषायः स्यात्"। अतः षडङ्गादिस्तरुणज्वरे न निषिद्धः पाकादूर्द्ध्वपाके चोक्तलक्षणाभावेन कषायत्वाभावात्। अथ तरुणज्वरे कषायस्य दोषमाह "दोषा बद्धाःकषायेण स्तम्भितास्तरुणज्वरे। स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषमज्वरम्"। कषायेण स्तम्भिता प्रवृत्तये निवारिताः। यत आह कषायरसगुणान् "कषायः स्तम्भनः शीतोरूक्षः पित्तकफापहः" इत्यादि। स्तभ्यन्ते आध्मानं कुर्वन्ति न पच्यन्ते सुखेन न विपच्यन्ते दुःखं दत्त्वाऽविलम्बेन विपच्यन्ते इति यावत्"। [अमरः।

**क्वाथोद्भव:** न० क्वाथादुद्भवति उद्+भू-अच्। तुत्थाञ्जने

**क्ले ल** कम्पे भ्वा० गतौ सक० प० सेट् कवि०। क्लेलति अक्लेलीत् ऋदित् चङि अचिक्लेलत् त।

**क्ष** पु० क्षि-बा० ड। १संवर्त्ते २राक्षने ३नरसिंहे ४विद्युति ५क्षेत्रे ६क्षेत्रपाले ७नाशे च मेदि०। तस्य वाचकशब्दाः तन्त्रशास्त्रे वर्णाभिधाने उक्ता यथा

"क्षः क्रोधस्तुम्बुकः कालोरुक्षः संवर्त्तकः परः। नृसिंहोविद्युता माया महातेजा युगान्तकः। परात्मा क्रोधसंहारौ वर्णान्तो मेरुवाचकः। सर्वाङ्गः सागरः कामः संयोगान्तस्त्रिपूरकः। क्षेत्रपालो महाक्षोभो मातृकान्तोऽनलःक्षयः। मुखं कव्यवहानन्ता कालजिह्वा गणेश्वरः। कायापुरस्य संघातोमलयश्रीर्ललाटगः" अत्र संयोगान्त इत्युक्तेः शब्दकल्पद्रुमे क्षकारस्य वर्णान्तरत्वकल्पनम् लोकशास्त्रविरुद्धत्वादतीव प्रामादिकम्। तथाहि

अस्य कषयोः संयोगजत्वेन कादित्वम्। पृथग्वर्णत्वे क्षमे चुक्षोद चिक्षेपेत्यादिकपदं न सिद्ध्येत् असंयुक्ततया क्षलादिशेषप्रसक्तौ कवर्गादित्वाभावेन क्षत्वाप्रसक्तेः। किञ्च संयुक्तवर्णात् पूर्व्वस्य गुरुत्वेन "निपीय यस्य क्षितिरक्षिणः कथाम्" नैषधे "लाङ्गूलविक्षेपविसर्पिशोभैः कुमारादौ काव्ये च "गजाहढोयातिक्षितिपतिरित्यादौ" "दक्षिणे कालिके ति" च भैरवतन्त्रोक्तकालीस्तवे च सर्वत्र तत्पूर्व्वस्य गुरुत्वे सत्येव छन्दोनुगुणता असंयुक्तवर्णत्वे सर्वत्र छन्दोभङ्गः स्यात्। न च तस्यासंयुक्ततया क्वचिदपि तत्पूर्व्वस्य लघुत्वं दृष्टम्। अतएव कविकल्पद्रुमे "क्षदाद्यन्तादिमक्रमः" इति प्रतिज्ञाय कादिष्वेव क्षकारादिधातुपाठः मेदिन्यादौ कोषेऽपि तथैव कादिषु तस्य पाठः।

तन्त्रे तु कषयोः संयोगजत्वेऽपि मातृकावर्णानामेकपञ्चाशत्संख्यापरिपूर्त्यै लकारवत् पृथक् कीर्त्तनं न्यासादिकार्य्यार्थं "पञ्चाशल्लिपिभिर्माला विहिता सर्व्वकर्मसु। अकारादिक्षकारान्ता वर्णमाला प्रकीर्त्तिता। क्षार्णं मेरुमुखं तत्र कल्पयेन्मुनिसत्तम!। अनया सर्वमन्त्राणां जपः सर्वसमृद्धिदः" इति गौतमतन्त्रोक्तजपाङ्गमालाकल्पनार्थञ्च न वर्णान्तरत्वार्थम्। एवं सर्व्वसामञ्जस्ये वर्णान्तरत्वकल्पनं लोकशास्त्रविरुद्धत्वादुपेक्ष्यम्। "विशेषं कथयाम्यद्य प्रोच्चार्य्याः कण्ठतः स्वराः। क्षद्वयं जिह्वया मूर्द्ध्नि लद्वयं दन्तजिह्वया। मुखस्थानाद्धलोवाच्याः क्षकारः कण्ठयातः" इति वरदातन्त्रे १०पटले तस्य कण्ठस्थानोच्चार्य्यत्वोक्तिः। आद्यककाराभिप्रायेण द्रष्टव्या। "अतएव पान्ताः स्युर्यदि वा क्षान्ता वर्णानामनुरोधतः। पृथक् क्रमेण वक्ष्यन्ते तथाप्येते समन्वयात्" विश्वप्रकाशे तस्य उभयरूपतासमन्वय उक्तः। तत्समन्वयस्तूक्तरीत्या बोध्यः। एतेन वङ्गानां खतुल्यत्वेन मैथिलानां च तस्य छकारत्वेनोच्चारणं प्रामादिकमेव।

**क्षज** क्षञ्जीवने इदित् चुरा० उभ० अक० सेट्। क्षञ्जयति ते अचक्षञ्जत् त। क्षञ्जयां बभूव आस चकार चक्रे।

**क्षज** वधे भ्वा० आ० सक० सेट् घटा०। क्षजते अक्षजिष्ट। चक्षजे षित् क्षजा। क्षजयति ते अचिक्षजत् त।

**क्षज** गतौ दाने च भ्वा० आत्म० इदित् सक० सेट्। क्षञ्जते अक्षञ्जिष्ट चक्षञ्जे। कर्म्मणि क्षञ्ज्यते घटा० क्षञ्जयति इणि अक्ष(क्षा)ञ्जि णमुलि क्षञ्जं क्षञ्जं क्षाञ्जं क्षाञ्जम् अनुपधाया अपि दीर्घः

**क्षण** वधे तना० उभ० सक० सेट्। क्षणोति क्षणुते। अक्ष-

णोत् अच्च णट। च्च्राम च्चरणे। उदित् क्षणित्वा क्षत्वा। क्षतिः क्षतः। क्षणः। नान्तत्वमतेऽपि रूपं तुल्यम् विचि क्षन् इति भेदः।

**क्षण** पु० क्षणोति दुःखं क्षण—अच्। १उत्सवे २मुहूर्त्तात्मक कालस्य द्वादशांशे त्रिंशत्कलात्मके कालांशभेदे अमरः ३प्रशस्तमुहूर्त्ते दीपिका "ध्रुवमृदुचरवर्गैर्वाजिहस्ता समेतैः क्षणमुदयमथैषां सत्सु केन्द्रस्थितेषु" नाडीद्वया त्मके ४मुहूर्त्तरूपे कालांशे सि० शि० तद्वाक्यं १७८८पृष्ठे दर्शितम्। ५निमेषक्रियावच्छिन्नकालस्य चतुर्थभागे शब्दचि० तादृशार्थाभिप्रायेण "क्षणादिः स्यादुपाधितः" भाषा० व्या० मुक्तावलीवाक्यं तच्च कालशब्दे १९८५पृ० दर्शितम्। ६निर्व्यापारस्थितौ अमरः ७अवसरे ८मध्ये ९पराधीनतायां हेमच०। तत्र उत्सवकालभेदयोः "क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना" माघः। उत्सवे "गार्हस्थ्यमुचितं त्वेकं शूद्रस्य क्षणमाचरेत्" उ०त०ब्रह्मपु०। "क्षणमुत्सवम्" उ०त०रघु०। कालांशे "क्व नु मां क्षणभिन्नसौहृदः" "स्थिताः क्षणं पक्ष्मसु ताडिताधराः" कुमा०। अवसरे "स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः। तेन नारद! नारीणां सतीत्वमुपजायते" "दीयते स्म शयितुं शयनीये न क्षणः क्षणदयाऽपि वधूभ्यः" माघः। अत्र क्षणदयापि न क्षणो दत्तइति उत्सवार्थत्वेन विरोधस्य कालविशेषार्थत्वेन परिहारात् विरोधाभासः। "नीता रात्रिः क्षणइव मया शार्ङ्गिण्यस्यारतैर्या" मेघः

**क्षणक्षण** अव्य० वा० प्रकारे—द्वित्वम्। क्षणमात्रे त्रिका०

**क्षणतु** पु० क्षण—भावे बा० अतु। क्षते विदरणादौ हेम०

**क्षणद** पु० क्षणं यात्रादिमुहूर्त्तं उत्सवं वा ददाति दा-क। १मौहूर्त्तिके गणके मेदि० २जले न०हेम०।३रात्रौ ४हरिद्रायाञ्च स्त्री अमरः "क्षणदापायशशाङ्कदर्शनः" रघुः "न क्षणः क्षणदयापि वधूभ्यः" माघः

**क्षणदाकर** पु० क्षणदां करोति हेतौ ट। निशाचरे चन्द्रे "आरुह्य नार्य्यः क्षणदासु यत्र" माघः

**क्षणदाचर** पु०स्त्री क्षणदायां चरति चर-ट। निशाचरे राक्षसे "सन्निता धर्मराजेन प्रसेदुः क्षणदाचराः" भा० व० ५५अ०। "सानुप्लवः प्रभुरपि क्षणदाचराणाम्" रघुः। स्त्रियां जातित्वात् ङीष्। २निशाचरे खगादौ त्रि० स्त्रियां ङीप्।

**क्षणदान्ध्य** न० क्षणदायामान्ध्यम्। रात्र्यन्धत्वे। "गो तोजं वैश्वर्यं कृष्णां रेणुकाञ्चापि पेषयेत्। अजमूत्रेण ता वर्त्त्यः क्षणदान्ध्यप्रशमने हिताः" सुश्रुतः

**क्षणद्युति** स्त्री क्षणं द्युतिरस्याः। क्षणप्रभायां विद्युति।

**क्षणन** न० क्षण—भावे ल्युट्। वधे हनने अमरः

**क्षणनिःश्वास** पुंस्त्री० क्षणात् मुहूर्त्तात् निःश्वासोऽस्य। शिशुमारे (शोशक) शब्दरत्ना०। स्त्रियां जातित्वात् ङीष्।

**क्षणप्रभा** स्त्री क्षणं प्रभाऽस्याः। विद्युति चञ्चलायाम् अमरः

**क्षणभङ्ग** पु० क्षणात्परः भङ्गः ५त०। सर्व्वेषां भावानां क्षणिकत्वे क्षणनश्वरत्वे। स च सर्व्व०द०दर्शितो यथा।

"तत्र क्षणिकत्वं नीलादिक्षणानां सत्त्वेनानुमातव्यं यत् सत् तत् क्षणिकं यथा जलधरपटलं सन्तश्चामी भावा इति। न चायमसिद्धो हेतुः अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य नीलादिक्षणानां प्रत्यक्षसिद्धत्वात् व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिन्यायेन व्यापकक्रमाक्रमव्यावृत्तावक्षणिकात् सत्त्वव्यावृत्तेः सिद्धत्वाच्च। तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तं न च क्रमाक्रमाभ्यामन्यः प्रकारः समस्ति "परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकतापि विरुद्धानामुक्तिमात्रविरोधतः" इति न्यायेन व्याघातस्योद्भटत्वात्। तौ च क्रमाक्रमौ स्थायिनः सकाशाद्व्यावर्त्तमानौ अर्थक्रियामपि व्यावर्त्तयन्तौ क्षणिकत्वपक्ष एव सत्त्वं व्यवस्थापयत इति सिद्धम्। नन्वक्षणिकस्यार्थक्रियाकारित्वं किं न स्यात्? इति चेत् तदयुक्तं विकल्पासहत्वात् तथा हि वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोः किमर्थक्रिययोः स्थायिनः सामर्थ्यमस्ति? न वा?। आद्ये तयोरनिराकरणप्रसङ्गः समर्थस्य क्षेपायोगात् यत् यदा यत्करणसमर्थं तत् तदा तत्करोत्येव यथा सामग्री स्वकार्य्यं समर्थश्चायं भाव इति प्रसङ्गानुमानाच्च। द्वितीयेऽपि कदापि न कुर्य्यात् सामर्थ्यमात्रानुबन्धित्वादर्थक्रियाकारित्वस्य, यत् यदा यन्न करोति तत् तदा तत्रासमर्थं यथा शिलाशकलमङ्कुरे, न चैवं वर्त्तमानार्थक्रियाकरणकाले वृत्तवर्त्तिष्यमाणे अर्थक्रिये करोतीति तद्विपर्य्ययाच्च। ननु क्रमवत्सहकारिलाभात् स्थायिनः अतीतानागतयोः क्रमेण करणमुपपद्यते इति चेत् तत्रेदं भवान् पृष्टो व्याचष्टां, सहकारिणः किं भावस्योपकुर्वन्ति? न वा?। नो चेत् नापेक्षणीयास्ते अकिञ्चित्कुर्व्वतां तेषां तादर्थ्यायोगात्। उपकारकत्वपक्षे सोऽयमुपकारः किं भावाद्भिद्यते? न वा?। भेदपक्षे आगन्तुकस्यैव तस्य कारणत्वं स्यात् न भावस्याक्षणिकस्य,

आगन्तुकातिशयान्वयव्यतिरेकानुविधायित्वात् कार्य्यस्य । तदुक्तम् "वर्षातपाभ्यां किं व्योम्नश्चर्म्मण्यस्ति तयोः फलम् ? । चर्म्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फलः" इति । अथ भावस्तैः सहकारिभिः सहैव कार्य्यं करोतीति स्वभाव इति चेत् अङ्ग तर्हि सहकारिणो न जह्यात् प्रत्युत पलायमानानपि गले पाशेन बद्धा कृत्यं कार्य्यं कुर्य्यात् स्वभावस्यानपायात् । किञ्च सहकारिजन्योऽतिशयोऽतिशयान्तरमारभते ? न वा ? उभयथापि प्रागुक्तदूषणपाषाणवर्षणप्रसङ्गः । अतिशयान्तरारम्भपक्षे बहुमुखानवस्थादौस्थ्यमपि स्यात् । अतिशये जनयितव्ये सहकार्य्यन्तरापेक्षायां तत्परम्परापातइत्येकानवस्थाऽऽस्थेया । तथाहि सहकारिभिः सलिलपवनादिभिः पदार्थसार्थैराधीयमाने वीजस्यातिशये वीजमुत्पादकमभ्युपेयम् अपरथा तदभावेऽप्यतिशयः प्रादुर्भवेत्, वीजञ्चातिशयमादधानं सहकारिसापेक्षमेवाधत्ते अन्यथा सर्वदोपकारापत्तौ अङ्कुरस्यापि सदोदयः प्रसज्येत । तस्मादतिशयार्थमपेक्ष्यमाणैःसहकारिभिरतिशयान्तरमाधेयं वीजे,तस्मिन्नप्युपकारे पूर्वन्यायेन सहकारिसापेक्षस्य वीजस्य जनकत्वे सहकारिसम्पाद्यवीजगतातिशयानवस्था प्रथमा व्यवस्थिता । अथोपकारः कार्य्यार्थमपेक्ष्यमाणोऽपि वीजादिनिरपेक्षः कार्य्यं जनयति तत्सापेक्षो वा । प्रथमे वीजादेरहेतुत्वमापतेत् । द्वितीये अपेक्ष्यमाणेन वीजादिना उपकारे अतिशय आधेय एवं तत्र तत्रापीति वीजादिजन्यातिशयनिष्ठातिशयपरम्परापात इति द्वितीयानवस्था स्थिरा भवेत् । एवमपेक्ष्यमाणेनोपकारेण वीजादौ धर्म्मिण्युपकारान्तरमाधेयमित्युपकाराधेयवीजातिशयाश्रयातिशयपरम्परापात इति तृतीयानवस्था दुरवस्था स्यात् । अथ भावाद्भिन्नोऽतिशयः सहकारिभिराधीयत इत्यभ्युपगम्यते तर्हि प्राचीनो भावोऽनतिशयात्मा निवृत्तः अन्यश्चातिशयात्मा कुर्वद्रूपादिपदवेदनीयो जायत इति फलितं ममापि मनोरथद्रुमेण । तस्मादक्षणिकस्यार्थक्रिया दुर्घटा । नाप्यक्रमेण घटते विकल्पासहत्वात् । तथाहि युगपत्सकलकार्य्यकरणसमर्थः स भावस्तदुत्तरकालमनुवर्त्तते न वा । प्रथमे तत्कालवत् कालान्तरेऽपि तावत्कार्य्यकरणमापतेत् । द्वितीये स्थायित्वप्रत्याशा मूषिकभक्षितवीजादावङ्कुरादिजननप्रार्थनामनुहरेत् । यत् विरुद्धधर्म्माध्यस्तं तन्नाना यथा शीतोष्णे विरुद्धधर्म्माध्यस्तश्चायमिति जलधरे प्रतिबन्धसिद्धिः । न चायमसिद्धो हेतुः स्थायिनि कालभेदेन सामर्थ्यासामर्थ्ययोः प्रसङ्गतद्विपर्य्ययसिद्धत्वात् । तत्रासामर्थ्यसाधकौ प्रसङ्गतद्विपर्य्ययौ प्रागुक्तौ सामर्थ्यसाधकावभिधीयेते यद्यदा यज्जननासमर्थं तत्तदा तन्न करोति यथा शिलाशकलमङ्कुरम् असमर्थश्चायं वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोरर्थक्रिययोरिति प्रसङ्गः यद्यदा यत् करोति तत्तदा तत्र समर्थं यथा सामग्री स्वकार्य्ये, करोति चायमतीतानागतकाले तत्कालवर्त्तिन्यावर्थक्रिये भाव इति प्रसङ्गव्यत्ययः विपर्य्ययः । तस्माद्विपक्षे क्रमयौगपद्यव्यावृत्त्या व्यापकानुपलम्भेनाधिगतव्यतिरेकव्याप्तिकं प्रसङ्गतद्विपर्य्ययबलात् गृहीतान्वयव्याप्तिकं सत्त्वं क्षणिकत्वपक्ष एव व्यवस्थास्यतीति सिद्धम् । तदुक्तं ज्ञानश्रिया "यत् सत्तत् क्षणिकं यथा जलधरः सन्तश्च भावा अमी सत्ताशक्तिरिहार्थकर्म्मणि मितेः सिद्धेषु सिद्धा न सा । नाप्येकैव विधान्यथा परमतेनापि क्रियादिर्भवेत् द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यतीति" । न च कणभक्षादिपक्षकक्षीकारेण सत्तासामान्ययोगित्वमेव सत्त्वमिति मन्तव्यं, सामान्यविशेषसमवायानामसत्त्वप्रसङ्गात् । न च तत्र स्वरूपसत्तानिबन्धनः सद्व्यवहारः, प्रयोजकगौरवापत्तेः अनुगतत्वाननुगतत्वविकल्पपराहतेश्च, सर्षपमहीधरादिषु विलक्षणेषु क्षणेष्वनुगतस्याकारस्य मणिषु सूत्रवद्भूतगणेषु गुणवच्चाप्रतिभासनाच्च । किञ्च सामान्यं सर्व्वगतं,स्वाश्रयसर्व्वगतं वा ? प्रथमे सर्ववस्तुसङ्करप्रसङ्गः अपसिद्धान्तापत्तिश्च यतः प्रोक्तं प्रशस्तपादेन "स्वविषयसर्वगतमिति" । किञ्च विद्यमाने घटे वर्त्तमानं सामान्यमन्यत्र जायमानेन सम्बध्यमानं तस्मादागच्छत् सम्बध्यते अनागच्छद्वा आद्ये द्रव्यत्वापत्तिः द्वितीये सम्बन्धानुपपत्तिः । किञ्च विनष्टे घटे सामान्यमवतिष्ठते ? विनश्यति ? स्थानान्तरं गच्छति ? वा प्रथमे निराधारत्वापत्तिः, द्वितीये नित्यत्ववाचोयुक्त्ययुक्तिः, तृतीये द्रव्यत्वप्रसक्तिः इत्यादि दूषणग्रहग्रस्तत्वात् सामान्यमप्रामाणिकम् । तदुक्तम् "अन्यत्र वर्त्तमानस्य ततोऽन्यस्थानजन्मनि । तस्मादचलतः स्थानाद्वृत्तिरित्यतियुक्तता । यत्रासौ वर्त्तते भावस्तेन सम्बध्यते न तु । तद्देशिनञ्च व्याप्नोति किमप्येतन्महाद्भुतम् । न याति न च तत्रासीदस्ति पश्चान्न चांशवत् । जहाति पूर्वं नाधारमहो व्यसनसन्ततिरिति" । अनुवृत्तप्रत्ययः किमालम्बन इति चेत् अङ्ग अन्यापोहालम्बन एवेति सन्तोष्टव्यमायुष्मतेति अलमतिप्रसङ्गेन" ।

विवरणोपन्यासे चायं पक्षः पूर्व्वपक्षीकृत्य दूषितो यथा "अथैवं घटादिषु क्षणिकत्वं साध्येत विमताः उपान्त्यादयो घटसत्ताक्षणाः स्वस्वानन्तरक्षणभाविघटनाशव्याप्ताः घटसत्ताक्षणत्वादन्त्यघटक्षणवदिति' तन्न विमतो घटनाशक्षणो घटसत्तावान् कालत्वात् सम्मतवदित्याभाससमानत्वात्। अत्र घटाभावानुभवविरोध इति चेत् तर्हि क्षणिकत्वानुमानेऽपि सोऽयं घट इति प्रत्यभिज्ञाविरोधोऽस्त्वत्र। ननु सर्वे भावाः क्षणिकाः अर्थक्रियाकारित्वात् व्यतिरेकेण शशविषाणवत् विपक्षे स्थायिनोऽर्थक्रियानुपपत्तिर्बाधिका। न च स्थायिनएव पदार्थस्य निमित्तसंयोगादन्यथाभूतस्यार्थक्रियापूर्व्वकं कार्य्यमुत्पादयितुं सामर्थ्यं न क्षणिकस्येति वाच्यम् किमसौ स्थायी पदार्थ एकमेव कार्य्यमुत्पादयेत्? उत युगपदनेकानि? अथवा क्रमेणानेकानि?, तत्र प्रथमद्वितीययोः कृतं स्थायित्वेनासत्कार्य्योत्पादनस्य क्षणिकेनैव सिद्धेः। न तृतीयः समर्थस्य क्षेपायोगात्। अतोभावानामेकस्मिन्नेव क्षणेऽर्थक्रियाकारित्वं सत्त्वमिति, नैतद्युक्तं त्वन्मते अर्थक्रियायादुर्निरूपत्वात्। किमर्थक्रिया नाम संविदां स्वगोचरज्ञानजननं? किं वा क्षणान्तरोत्पादनम्? आद्येऽपि स्वसन्ताने तज्जननं? पुरुषान्तसन्ताने वा? सर्व्वज्ञसन्ताने वा? नाद्यः संविदां स्वप्रकाशत्वेन तदसम्भवात्, अस्तु तर्हि द्वितीयः, देवदत्तसंवेदनं हि स्वप्रकाशमपि यज्ञदत्तसंवेदनस्य विषयत्वाज्जनकं भविष्यतीति, तदसत् न तावत् प्रत्यक्षज्ञानस्य विषयतया जनकमिति शक्यं वक्तुं, न हि पुरुषान्तरज्ञानं प्रत्यक्षतया क्वचिद्दृष्टं। नाप्यनुमानज्ञानविषयतया जनकं त्वया पुरुषान्तरप्रत्यक्षज्ञानमेव विषयजन्यमित्यङ्गीकारात्। ननु तर्हि तृतीयोऽस्तु सर्व्वज्ञस्य हि प्रत्यक्षज्ञानं सर्व्वपुरुषगतसंवेदनानि विषयीकुर्व्वत् तैर्जन्यते, मैवं तथा सति सोपप्लवैः सांसारिकसंवेदनैरीश्वरसंवेदनमप्युपप्लुतं स्यात् त्वन्मते ज्ञानज्ञेययोरभेदात्। अथ ईश्वरज्ञानमुपप्लुतमपि नोपप्लवदोषं भजते तत्त्वज्ञानेनोपप्लवस्य बाधादिति चेत् मैवं न तदेव ज्ञानं सोपप्लवं बाधते उपप्लवस्यैकस्मिन्नेव क्षणे प्राप्तिबाधयोरसम्भवात् नापि ज्ञानान्तरमुत्पाद्य उपप्लवं बाधितुं क्षमते पूर्व्वज्ञानोपप्लवस्य ज्ञानान्तराविषयत्वात् विषयत्वे पूर्व्वज्ञानान्तरमप्युपप्लुतं सत् कथं बाधकं स्यात्? नचोपप्लवांशं विहाय संवेदनांशस्यैवेश्वरज्ञानं प्रति विषयतया जनकत्वं, तस्मिन् सत्युपप्लवानभिज्ञः कथमीश्वर उपदिशेत्। नापि क्षणान्तरोत्पादनमर्थक्रियेति द्वितीयः पक्षः, त्वत्प्रक्रियया चरमक्षणस्यासत्त्वप्रसङ्गात् तथा हि विज्ञानानि स्थायित्वकल्पनया द्रव्यगुणादिदोषैर्विषयैश्चोपप्लुतानि पूर्व्वपूर्व्वसजातीयविज्ञानलक्षणेभ्यः संस्कारेभ्य उत्तरोत्तराण्युत्पद्यन्ते तत्र सर्व्वमिदं क्षणिकमिति भावनया स्थायित्वकल्पना निवर्त्तते स्वलक्षणमिति भावनया द्रव्यगुणादिकल्पना नश्यति दुःखमिति भावनया रागादिदोषप्रवृत्तिसुखदुःखोपप्लवाः क्षीयन्ते, शून्यमिति भावनया विषयोपप्लवविगमः। ततश्च भावनाभेदैश्चतुर्विधैश्चतुर्विधसंस्कारविरोधिभिश्चतुर्विधोपप्लवे क्रमेण मन्दीकृते भावनाप्रकर्षस्यान्त्यभूतादुपान्त्यप्रत्ययात् सर्व्वोपप्लवविरहि विज्ञानमुत्पद्यते तच्च संस्कारसन्तानान्त्यात्त्वरमक्षण इति गीयते, तस्य च कार्य्याभावादसत्त्वापत्तौ तथैव क्रमेण पूर्व्वपूर्व्वज्ञानानामप्यसत्त्वं प्राप्नुयात्। चरमक्षण ईश्वरज्ञानस्य जनकस्तद्विषयत्वादिति चेत् तर्हि चरमक्षणसर्व्वज्ञज्ञानयोर्विशुद्धतया तुल्यस्वभावयोरेकसन्तानत्वं स्यात् तुल्यस्वभावयोः कार्य्यकारणभावस्यैकसन्तानलक्षणत्वात् ततश्च सन्तानाविच्छेदान्निर्मोक्षः स्यात्। सर्व्वज्ञसन्तानप्रवेशएव मोक्ष इति चेत् एवमपि चरमक्षणस्य ईश्वरज्ञानविषयत्वं दुर्निरूपमिति, तज्जनकत्वं दूरापास्तं, भेदे हि सति संविदो वैषयविषयिभावः नचेह भेदोऽस्ति। न तावत् संवित् संविदन्तरात् संविदाकारेण भिद्यते तथासति वैलक्षण्यसिद्धये प्रतियोगिनोऽसंवित्त्वप्रसङ्गात् नाप्यसंविदाकारेण धर्म्मिणोरसंवित्त्वप्रसङ्गात् तस्माच्चरमक्षणस्य सर्व्वज्ञज्ञानोत्पादनलक्षणयाऽर्थक्रियया सत्त्वं दुःसम्पादम्। यद्यस्यार्थक्रिया कल्प्येत तदापि सा किं कारणस्य सत्त्वं सम्पादयति? उत प्रतीतिम्? नाद्यः कार्य्यात् पूर्व्वमेव कारणस्य सत्त्वात् अन्यथा कारणत्वायोगात्। द्वितीये तत् कार्य्यं स्वकार्य्येण प्रतिभासितं सत् कारणप्रत्यायकं तदपि तथैवेत्यनवस्था स्यात्। संवित् स्वयमेव स्वात्मानं प्रकाशयतीति नानवस्थेति चेत् तर्ह्यर्थक्रिया प्रतीतिहेतुरिति पक्षो हीयेत। स्वयमेव स्वार्थक्रियेति वदन् आत्माश्रयं दुर्निवारम्। तदेवं न सत्त्वेनार्थक्रियाकारित्वं किन्तु स्वाभाविकः कश्चिद्धर्मः, तथा चैकस्मिन् क्षणेऽर्थक्रियां कृत्वा पुनस्तूष्णीम्भूतस्यापि स्थायिनः सत्त्वं न विरुध्यते। यदुक्तं स्थायिनः क्रमेणानेककार्य्योत्पादकत्वं नास्ति समर्थस्य क्षेपायोगात् इति तदसत शक्तस्यापि सहकारिसन्निधानविशेषक्रमापेक्षया कार्य्यक्रमउपपन्नः लोके तथैवानुभवात्। अथ मतम् शक्तस्य सहकार्य्य-

पेक्षाया अप्ययुक्तत्वात् अशक्ता एव सर्वे पदार्थाः परस्परापेक्षया सामग्रीं जनयन्ति सा च शक्ता कार्य्यमुत्पादयति, तदप्ययुक्तं सामग्रीं प्रत्यपि शक्तत्वे पदार्थानामन्योन्यापेक्षा न युक्ता अशक्तत्वे च तदजनकत्वात् निष्फलाऽन्योन्यापेक्षेति अनपेक्षैव सर्वत्र स्यात्। मा भूत्तर्हि कस्यापि सहकार्य्यपेक्षेति चेत् न अनुभवविरोधात्। नचानुभवोभ्रान्तः, बाधाभावात्,। यद्यपि शक्तस्याशक्तस्य वाऽपेक्षा न युक्तेत्युक्तं तथापि शक्तत्वाशक्तत्वविनिर्मुक्तवस्तुमात्रस्य सहकार्य्यपेक्षा स्यात् न्यायस्यास्य त्वयाप्यङ्गीकार्य्यत्वात्। तथा हि कार्य्यसत्त्वेऽसत्त्वहानिः असत्त्वे चासंबद्धता कारणविशेषेण कार्य्यविशेषस्य समवायानिरूपणात् सर्वं सर्वस्मादुत्पद्येतेति परेण चोदिते सत्त्वासत्त्वसम्बद्धत्वासंबद्धत्वविशेषं विसृज्य नियतपूर्व्वभावि कारणं नियतोत्तरभावि कार्यमिति त्वया निरूपणीयम् अन्वयव्यतिरेकौ तत्र निरूपकौ स्त इति चेत् सहकारिण्यपि तौ स्त एव तस्मादस्त्येव सहकार्यपेक्षा तत्कृतस्योपकारविशेषश्चिन्त्यताम्। यत्त्वेकदेशी मन्यते अन्वयव्यतिरेकसिद्धा भूम्युदकादिसहकारिणो बीजाख्ये कारणे विशेषमुच्छूनताख्यं जनयन्ति ततस्तद्बीजमङ्कुराख्ये कार्ये शक्तम् अन्यथानुपकारी भूम्यादिर्बीजेन नापेक्ष्येतेति, तदसत् बीजं स्वगतविशेषोत्पत्तौ शक्तं न चेत् सहस्रसन्निधानमपि न तं जनयेत् ततोनाङ्कुरोत्पादनेऽपि शक्ष्यति। अथ शक्तं तदापि यदि सहकारिसहकृतः विशेषान्तरं प्राप्योच्छूनतायां शक्नुयात् तदाऽनवस्था स्यात्। अथ तदप्राप्यैव तत्र शक्तं तदाङ्कुरेऽपि विशेषमन्तरेणैव शक्तं स्यात्। अथ मतम् अङ्कुरोत्पत्तिरुच्छूनत्वजन्मपूर्व्विका उच्छूनतोत्पत्तिस्तु सहकारिसन्निधिमात्रसाध्या तथैव दृष्टत्वादिति चेत् न तथासति शक्तिमता कारणेन स्वात्मन्यनुपकुर्व्वन्नपि सहकार्यपेक्ष्यत इति त्वयैव स्वमतव्याघात आपादितः स्यात्। तस्मान्नैकदेशिपक्षो युक्तिसहः। नन्वत एवास्मन्मतमादरणीयं न हि वयं तद्वत् कारणस्वरूपे सहकार्युपकारं ब्रूमः किं तर्हि क्षणिकान्मूलकारणादुत्पद्यमानं कार्यं सहकारिणमपेक्षते कार्यस्य बहुकारणसाध्यत्वादिति ब्रूमः। यद्यपि स्थायिकारणमतेऽप्येतावत् समानं तथापि तन्मते यावत् कारणसत्त्वं नैरन्तर्य्येण कार्योत्पत्तिर्दुर्वारा नियामकाभावात्। न च सहकारिसम्बन्धो नियामकः सम्बन्धस्यापि यावत्सम्बन्धिसत्त्वं भवितव्यत्वात्। न च तस्य सम्बन्धान्तरं नियामकम् अनवस्थापातात्। न च वाच्यं क्षणिकपक्षेऽपि न कारणसत्त्वक्षणे कार्यं जायते तयोर्यौगपद्यप्रसङ्गात् अन्यदा जन्माङ्गीकारे चानियमापत्तिरिति, कारणान्तरक्षणस्य कार्यनियामकत्वात् अतः क्षणिकत्वपक्ष एव श्रेयान्, मैवं सर्वत्र हि कार्यकारणभावो व्याप्तिबलेन निश्चेतव्यः तत्र किं त्वन्मते कार्य्यकारणव्याप्तिर्धूमाग्निव्यक्त्योः? उत तत्सन्तानयोः?। नाद्यः क्षणिकयोरन्वयव्यतिरेकबुद्धिद्वयकालावस्थानायोगात्। द्वितीयेऽङ्गारावस्थादग्नेर्धूमोजायेत तत्सन्तानपातित्वाविशेषात् काष्ठाभावात्तदा जन्म नेति चेत् तस्यापि स्वसन्ताने विद्यमानत्वात् नचाग्निकाष्ठयोः सम्बन्धाभावः सन्तानद्वयनित्यत्वेन तस्याप्यनिर्व्वाहत्वात्। सम्बन्धः सम्बन्धान्तरपूर्व्वकत्वात् न सदातन इति चेत् न अनवस्थापत्तेः त्रिचतुरकक्षाविश्रान्त्यभ्युपगमेन नानवस्था इति चेत् तर्हि स्थायिकारणाभ्युपगमेऽप्यनवस्थाया। सुपरिहरत्वान्नोक्तदोषः। ननु स्थिरकारण उपकारकत्वाङ्गीकारे यदि स्थायित्ववादी स्वमतमपि समीकुर्यात् तर्हि तन्नाङ्गीकुर्म इति चेत् धूमकाष्ठयोः कार्यसहकारिणोरुपकार्योपकारकभावस्यान्वयव्यतिरेकसिद्धस्यावर्ज्जनीयत्वादन्वयव्यतिरेकयोश्चोपकार्योपकारकभावसाधकत्वं मूलकारणतत्कार्ययोरग्निधूमयोर्दृष्टं तस्मादुपकारके सहकारिणि मतद्वयेऽप्यपेक्षा समाना। तथा च क्षणिकपक्षे यथैकस्य वह्नेः सहकारिभेदात् देशभेदाच्च युगपदनेककार्यमभ्युपेयते वह्निः स्वदेशे वह्न्यन्तरं जनयति उपरिष्टाद्धूमम्, अधस्ताद्भस्म, पुरुषे विज्ञानञ्चेति तथा स्थायिपक्षेऽप्येकस्य कारणस्य कालभेदात् सहकारिभेदाच्चानेककार्यजनकत्वम् तत्र क्रमकारित्वं किं न स्यात्। नचैतावता क्षणिकस्थायिवादिनोर्मतसाङ्कर्यं शङ्कनीयं पूर्वस्य प्रतिकर्म्मव्यवस्थावादस्यान्ते निराकृतत्वात्। तदेवमतिदुष्टं क्षणिकविज्ञानवादिमतमुपेक्ष्य कूटस्थनित्यचैतन्ये सर्व्वमध्यस्ततया प्रतीयत इत्ययमेव वेदान्तवादोऽतिनिर्दोषत्वादादरणीय” इति।

आत्मतत्त्वविवेके च “अथ बाधकं भवदात्मनि क्षणभङ्गो-वेत्यादिना” पञ्चविप्रतिपत्तीनामाविताणां मध्ये प्रथमविप्रतिनिरासेऽस्य विवृतिर्दृश्या

क्षणभङ्गुर त्रि० क्षणं प्राप्य भङ्गुरः। क्षणमात्रेण विनाशशालिनि “यदि पुनरमी किमपि नाहमास्पदमस्ति किञ्चिदपि वस्तु स्थिरं, विश्वमेव क्षणभङ्गुरम्, अलीकमेत्याधारयेरन् न किञ्चिदपि कामयेरन्, न चाकामयमानाः

केचिदपि प्रवर्त्तन्ते” आत्मत० शिरोमणिः [शब्दमा०

**क्षणरामिन्** पुंस्त्री० क्षणेक्षणे रमते रम–णिनि । पारावते

**क्षणिक** त्रि० क्षणः स्वसत्ता व्याप्यतयाऽस्त्यस्य ठन् । क्षणमात्र स्थायिनि । तल्लक्षणञ्च आत्मतत्त्वविवेकव्याख्याने रघुनाथ शिरमण्युक्तम् यथा

“क्षणिकत्वञ्च स्वाधिकरणसमयप्रागभावाधिकरणक्षणा-नुत्पत्तिकत्वे सति कादाचित्कत्वम् उत्पत्तिमत्त्वं वा । उ-त्पत्तिश्च स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिक्षण सम्बन्धः । क्षणश्च स्वाधेयपदार्थप्रागभावानाधारः समयः प्रसिद्धिस्तु विधेर्नैयायिकानां प्रागभावे चरमध्वंसे च, निषेधस्य बौद्धानामलीके, स्वाधिकरणसमयप्रागभावाधि-करणक्षणावृत्तित्वं क्षणिकत्वमिति तु न्यायः” । अत्र ग-दाधरव्याख्या कादाचित्कशब्दे १८८२ पृ० दर्शिता अत्र कादाचित्कत्वं सत्त्वे सति किञ्चित्कालवृत्त्यभावप्रति-योगित्वम् । “क्षणिकत्वञ्च तृतीयक्षणवृत्तिध्वंस प्रतियो-गित्वम्” मुक्ताव० । २विद्युति स्त्री हेम०

**क्षणित** त्रि० क्षणः संजातोऽस्य तार० इतच् । जातक्षणे

**क्षणिन्** त्रि० क्षण: विश्रान्तिकालः उत्सवोवाऽस्त्यस्य इनि । क्षणात् १विश्रान्ते २उत्सवान्विते च ।“तं विश्रान्तं शुभे देशे क्षणिनं कल्पमच्युतम्” भा० स० १२अ० । स्त्रियां ङीप् सा च ३रात्रौ शब्दर०

**क्षणेपाक** पु० क्षणे पच्यते पच–कर्म्मणि घञ् न्यङ्क्वा कु अलुक्स० । क्षणेन पच्यमाने पदार्थे । [च क्षत्नम् ।

**क्षत्** स्त्री० क्षण–भावे संप० क्विप् । १हनने२विदारणे३पीडने

**क्षत** त्रि० क्षण–क्त । १विदारिते २पीड़िते ३वर्षिते च । “रवोरवःस्थमनेन पत्रिणा हृदि क्षते गोत्रभिदप्यमर्षणः” रघुः । ४क्षतियुक्ते “रुद्राणामपमूर्द्धानः क्षतहुङ्कार शंसिनः” कुमा० “क्षततिमिरेषु दिगन्तमुखेषु” भट्टिः क्ष-तयोन्या अपि स्त्रियाः” “कन्यैवाक्षतयोनिर्या पाणिग्र-हणदूषिता” इति च नारदः । विदारणञ्च शस्त्रादिभि-रवयवविभागः, “क्षङ्गुलीनोरगक्षता” रघुः । सर्पेण दशनेनाङ्गुल्याविदारणात्तथात्वम् । भावे क्त ।५विदारणे न० “नखक्षतानीव वनस्थलीनाम्”कुमा०“अनलङ्कृतोऽपि सुन्दर ! हरसि मनोमे यतः प्रसभम् किं पुनरलङ्कृतस्त्वं नखरक्षतैस्तस्याः” सा०द०। ६घर्षणे “क्षतोज्ज्वलाङ्कुशनखां-शुभिन्नया” माघः । उपचारात् तत्कार्य्ये ७दुःखादौ “क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दोभुवनेषु रूढः” रघुः उपचारात् (घा) इति प्रसिद्धे स्वव्रण पूयादौ दूषणे हेमच० “प्रकुपितास्तु दोषामेदश्चाभिपन्ना-मांसशोणिते प्रदूष्य कण्डूं जनयन्ति तत्र कण्डूयनात् क्षतं समुपजायते क्षते दुष्टमांसजाः प्ररोहाः पिच्छिल रुधिरस्राविणो जायन्ते कूर्चकिणोऽभ्यन्तरमुपरिष्टाद्वा” सुश्रु० “यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां ल भते” सुश्रु० व्रणशब्दे विवृतिः ।

क्षतनिमित्तमरणेऽशौचभेदमाह शु० त० व्याघ्रः “क्षतेन म्रियते यस्तु तस्याशौचं भवेद्विधा । आ सप्ताहाच्चिरात्रं स्यात् दशरात्रमतः परम् । शस्त्रघाते त्र्यहादूर्द्धं यदि कश्चित् प्रमीयते । अशौचं प्राकृतं तत्र सर्व्ववर्णेषु निश्च-यः” ।“अत्र शस्त्रघातपदं क्षतेतरशस्त्रघातपरं पारिभाषि-कशस्त्रघातपरमपि । यथा देवीपु० “पक्षिमत्स्यमृगैर्ये तु दंष्ट्रिशृङ्गिनखैर्हताः । पतनानशनप्रायैर्वज्राग्निविषबन्ध-नैः । मृता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः” । अ-न्यथा क्षतं विना पतनादिभिर्विलम्बमृतानां दिनग्रह-णेऽनध्यवसायः स्यात् । न च शास्त्रीये व्यवहारेऽन्तरङ्ग-त्वेन पारिभाषिकग्रहणस्यैव युक्तत्वमिति वाच्यम् आद्ये पारिभाषिकापारिभाषिकशस्त्रघातग्रहणवदत्रापि तथा यु-क्तत्वात् पारिभाषिकत्वादेव न प्रकरणनियमः” शु०त०

**क्षतकास** पु० ५त० । क्षतजाते कासभेदे “पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः” भावप्र० । कासशब्दे २०४२पृ० विवृतिः [शब्दच० । २लाक्षायां स्त्री हेम० ।

**क्षतघ्न** पु० क्षतं हन्ति हन हेतौ-क । (कुकुरसोंगा), क्षुपभेदे ।

**क्षतज** न० क्षतात् जायते जन-ड । १रुधिरे “अमरः स च्छिन्नमूलः क्षतजेन रेणुः”रघुः “क्षतजकणवर्णबभ्रुणा च भ्रमता”काद० २पूये हेम०। ३क्षतजातमात्रे त्रि० । सुश्रु-तोक्ते ४कासभेदे कासशब्दे तद्विस्तार उक्तप्रायोऽपि स्पष्टार्थं सुश्रुतवाक्यमत्रोदाह्रियते यथा

“उक्ता ये हेतवो नृणां रोगयोः श्वासहिक्कयोः । कास-स्यापि च विज्ञेयास्त एवोत्पत्तिहेतवः । धूमोपघाताद्र-जसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च । विमार्गगत्वादपि भोजनस्य वेगावरोधात् क्षवथोस्तथैव । प्राणोह्युदानानु-गतः प्रदुष्टः संभिन्नकांस्यस्वनतुल्यघोषः । निरेति वक्त्रा-त्सहसा सदोषः कासः स विद्भिरुदाहृतस्तु । स वात-पित्तप्रभवः कफाच्च क्षतात्तथान्यः क्षयजोऽपरश्च । पञ्च-प्रकारः कथितो भिषग्भिर्विवर्द्धितो यक्ष्मविकारकृत् स्यात् । भविष्यतस्तस्य तु कण्ठकण्डूर्भोज्योपरोधो गलतालुलेपः । स्वशब्दवैरस्यमरोचकोऽग्निसादश्च लिङ्गानि भवन्त्यमूनि ।

हृत्कण्ठमूर्द्धोदरपार्श्वशूली क्षामाननः क्षीणबलस्वरौजाः। प्रसक्तवेगस्तु समीरणेन कासेत् स शुष्कं स्वरभेदयुक्तः। उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्त्तः। पित्तेन पीतानि वमेत्कटूनि कासेत् स पाण्डुः परिदह्यमानः। विलिप्यमानेन मुखेन सीदन् शिरोरुगार्त्तः कफपूर्णदेहः। अभक्तरुग्गौरवसादयुक्तः कासेद्भृशं सान्द्रकफः कफेन। वक्षोऽतिमात्रं विहतस्य यस्य व्यायामभाराध्ययनाभिघातैः। विश्लिष्टवक्षाः स नरः सरक्तं ष्ठीवत्यभीक्ष्णं क्षतजः स उक्तः। अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः। रूक्षस्योरः क्षतं वायुर्गृहीत्वा कासमावहेत्। स पूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम्। कण्ठेन रुजतात्यर्थं विभिन्नेनेव चोरसा। सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना। दुःखस्पर्शेन शूलेन भेदपीडाभितापिना। पर्वभेदज्वरश्वासतृष्णावैस्वर्य्यपीडितः। पारावतइवाकूजन् कासवेगात् क्षतोद्भवात्"।

**क्षतजव्रण** पु० भावप्र० उक्ते व्रणभेदे "पृथक् समस्तदोषोत्था रक्तजागन्तुजौ तथा। व्रणशोथाः षडेते स्युःसंयुक्ताः शोथलक्षणैः। (शोथलक्षणैः पूर्वोक्तैः) विशिष्टं रूपमाह। "विषमं पच्यते वातात् पित्तोत्थश्चाचिरश्चिरम्। कफजः पित्तवच्छोथो रक्तागन्तुसमुद्भवौ"। अत्र रक्तजेत्युक्तेः क्षतजव्रणइत्येव शब्दस्यौचित्यात् शब्दकल्पद्रुमे क्षतव्रणशब्दकल्पनं प्रामादिकम् भावप्र० उक्ते ५पिपासाभेदे स्त्री यथा

"भयश्रमाभ्यां बलसंक्षयाद्वा ऊर्द्ध्वं चितं पित्तविवर्द्धनैश्च। पित्तं सवातं कुपितं नराणां तालु प्रपन्नं जनयेत् पिपासाम्। स्रोतःस्वपांवाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तोः। तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथान्याऽऽमसमुद्भवा च। भक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्व्वशस्तु"। नराणां चितं स्वस्थान एव सञ्चितं पित्तं सवातं पित्तविवर्द्धनैः कट्वम्लोष्णादिभिः कुपितं भयश्रमाभ्यां बलसंक्षयादुपवासादेश्च वातः कुपितः। तद्द्वयम् ऊर्द्ध्वं प्रसरत् तालु प्रपन्नं सत् पिपासां जनयेत्। न केवलं तालुन्येव दूषिते तृष्णा भवति। किन्तु जलवाहिस्रोतःस्वपि अत आह स्रोतःस्वित्यादि। नन्वत्र बहुवचनं न युक्तम्। यतो जलवहे द्वे स्रोतसी सुश्रुतेनोक्ते। उच्यते। तयोरेवानेकप्रतानयोगाद्य दोषः। अपांवाहिषु स्रोतःस्विति जिह्वादेरप्युपलक्षणम् यत आह चरकः "रसवाहि-नीश्च धमनीर्जिह्वा हृदयगलतालु क्लोम च। संशोष्य नृणां देहेषु कुरुतस्तृष्णामतिप्रबलौ पित्तानिलाविति। संख्यामाह तिस्र इत्यादि। तृष्णायाः सामान्यलक्षणमाह। "सततं यः पिबेत्तोयं न तृप्तिमधिगच्छति। मुहुः काङ्क्षति तोयन्तु तं तृष्णार्दितमादिशेत्"। क्षतजामाह "क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु"। क्षतस्य शस्त्रादिक्षतयुक्तस्य रुक् पीड़ा"।

**क्षतविध्वंसिन्** पु० क्षतं विध्वंसयति वि+ध्वन्स-णिच्-णिनि ६त०। वृद्धदारकवृक्षे शब्दच०

**क्षतव्रत** पु० क्षतं व्रतमस्य। गृहीतव्रतत्यागिनि अवकीर्णिनि अमरः तत्प्रायश्चित्तमाह प्रायश्चित्तविवेके "अथावकीर्णिप्रायश्चित्तम् "अथावकीर्णी मैथुनेन क्षतव्रतः यथाह याज्ञवल्क्यः "अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितमिति" प्रायश्चित्तमाहाङ्गिराः "अवकीर्णी निकृत्य ब्रह्महत्याव्रतञ्चरेत्। खरचर्म्मवासाः षण्मासांस्तथा मुच्येत किल्विषात्"। अवकीर्णमवकीर्णताभावे क्तः। अत्र सार्द्धसप्तभेनवः। इदं प्रमादकृतम् एतद्विषय एव याज्ञवल्क्यः "अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम्। गर्द्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति"। प्रयत्नात् स्त्रियमुत्साहत्य प्रवृत्ते तु मनुः "एतस्मिन्नेव संप्राप्ते वसित्वा गर्द्दभाजिनम्। सप्तागारांश्चरेद्भैक्ष्यं स्वकर्म्म परिकीर्त्तयन्। तेभ्यो लब्धेन भैक्ष्येण वर्त्तयन्नैककालिकम्। उपस्पृशंस्त्रिषवणमब्देन स विशुद्ध्यति"। एतद्विषयएवाभ्यासे शातातपः "अथातो-ऽवकीर्णिप्रायश्चित्तं व्याख्यास्यामः "ब्रह्मचारी यद्यवकीर्य्येत चतुर्थकालमब्दं भैक्ष्यं चरेदेवंपूतोभवतीति- तथा पैठीनसिरपि "अवकीर्णी गर्द्दभाजिनं वसेत् संवत्सरं प्राजापत्यं चरेत्" शङ्खलिखिताभ्यान्तु विकल्प एवोक्तः। तद्यथा "सप्तरात्रमवकीर्य्येत भैक्षाग्निकार्य्ये कुर्व्वन् सद्यः कामादुत्सर्गे रेतसोऽन्यत्र स्वप्नात् तत्र प्रायश्चित्तं महाव्याहृतिभिर्जुहुयात् ओङ्कारपूर्व्विकाभिः संवत्सरं वा नक्तं भैक्षञ्चरेत् चतुर्थकाले मितभुग्गायत्रीं नरत्समाहुगाञ्जपेदिति"। गायत्रीमपि संवत्सरं जपेदित्यर्थः। महाव्याहृतिहोमस्य लघुत्वादातिदेशिकावकीर्णित्वेन भैक्षाग्नित्यागे स्त्रियं विना कामात् सकृद्रेतस्त्यागे व्यवतिष्ठते, स्त्रियं विनापि कामाद्रेतस उत्सर्गे प्रमादगमने च वशिष्ठः "ब्रह्मचारी चेत् स्त्रियमुपेयादरण्ये

चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्द्दभं पशुमालभेत नैर्ऋतं वा चरुं निर्व्वपेत् तस्य जुहुयात् कामाय स्वाहा कामकामाय स्वाहा। नैर्ऋत्यै स्वाहा रक्षोदेवताभ्यः स्वाहा इति एतदेव रेतसः प्रयत्नोत्सर्गे दिवा स्वप्ने व्रतान्तरेषु च"। अत्र नावर्त्तनादृते तो विसर्गे दिवास्वप्ने चाभ्यासे ज्ञेयम्। पश्वोरभावे नैर्ऋतं चरुं निर्व्वपेदित्यर्थः। एतच्चामावास्यायां कर्त्तव्यमित्याह बौधायनः। "अथावकीर्ण्यमावस्यायां निशाग्निमुपसमाधाय संपरिस्तीर्य्य दार्व्वीं हौमिकीं परिचेष्टां कृत्वा द्वे आज्याहुती जुहुयात्"। अत्र च व्रतान्तरेष्विति अभिदधता वशिष्ठेन द्वादशाहादिकव्रतेषु पुण्यार्थचान्द्रायणादिषु च यथातिदिष्टं तथा चैतदतिदिष्टमविशेषात्। अतएव "कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः। अतिक्रमं व्रतस्याहुर्धर्म्मज्ञा ब्रह्मवादिनः" इति मनुना सामान्येनैवावकीर्णिलक्षणमन्वकारि अकामतो रेतसः स्रावे मनुः "स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः। स्नात्वार्कमर्च्चयित्वा तु पुनर्म्मामित्यृचं जपेत्"। ब्रह्मचारिणो गुरुदारगमने तु तद्गमनोक्तप्रायश्चित्तेनैव गुरुणा लघ्ववकीर्णिप्रायश्चित्तं कृतं भवेत्। यथा दण्डनिपातप्रायश्चित्तेनैव गुरुणा तन्नान्तरीयकावगोरण प्रायश्चित्तं सम्पद्यते"।

**क्षतहर** न० क्षतं हरति हृ–हेतौ ट। क्षतहरणहेतौ १अगुरुचन्दने शब्दच०। २क्षतहारकमात्रे त्रि०

**क्षताशौच** न० क्षतनिमित्तमशौचम्। व्रणादिक्षतकृते मृत्युक्ते अशौचे। "सव्रणः सूतकी प्रोक्तः क्षतोन्मत्तरजस्वलाः। क्षतबन्धुरबन्धुश्च वर्ज्यान्यष्टौ स्वकालतः" प्रा०त० देवलः। अशुचित्वमप्याह तत्रैव सएव। "दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत्। न तत्र बहुशः कुर्य्यात् यत्नमुद्धरणे पुनः। भवेदशौचमत्यन्तं तृणवेधात् क्षते कृते"। तृणवेधादित्युपलक्षणं व्रणहेतुक्षतमात्रस्य। अस्यापवादः "चन्द्रसूर्य्यग्रहे चैव मृतानां पिण्डकर्म्मणि। महातीर्थे तु संप्राप्ते क्षतदोषो न विद्यते" प्रा०त० पुलस्त्यः। मृतानां पिण्डकर्म्मणि नित्यकाशत्वात् पितापिण्डोदकदानादौ। संप्राप्ते नियतकालादिना सम्यक्प्राप्ते।

**क्षति** स्त्री क्षण–क्तिन्। १हानौ, २अपचये ३नाशे च। "हयानां न क्षतिः काचिन्न रथस्य न मातलेः" भा० व० १७२अ०। "द्विषां क्षतीर्य्या प्रथमे शिलीमुखाः" किरा०

**क्षतोदर** क्षतजाते उदररोगभेदे उदरशब्दे ११५० पृ० विवृतिः। शल्यमित्यादि तत्रत्यं सुश्रुतवाक्यं भावप्र० व्याख्याय चरकमुनि सम्मतिप्रदर्शनेन विशेष उक्तो यथा "शल्यं कण्टककर्करादि। अन्नोपहृतं भुक्तं यत् अन्त्रं भिनत्ति वथा अन्यथा आगतं भोजनं विना आगतं, शर्कराभिरितरथापि यदन्त्रं भिनत्ति तत्। उपलक्षणम्। जृम्भणमत्यशनं वा यदन्त्रं भिनत्ति। यतउक्तञ्चरकेण शर्करातृणकाष्ठास्थिकण्टकैरन्नसंयुतैः। भिद्येतान्त्रं यदा भुक्तं जृम्भयात्यशनेन चेत्"। तस्मात् भिन्नादन्त्रात्। गुदतस्तु भूयः अन्नात्संसुत्य पुनर्गुदतः स्रवेदित्यर्थः। दाल्यति विदार्य्यत एव। पदैर्भिरार्षत्वात्। एतत् क्षतोदरन्तन्त्रान्तरे परिस्राव्युदरमादिष्टम्"

**क्षत्तृ** पु० स्त्री० क्षद–संवृतौ संज्ञायाम् तृच् अनिट्। १सारथौ २द्वाःस्थे ३क्षत्रियायां शूद्रेण जाते वर्णसङ्करे पुंस्त्री० अमरः स्त्रियां ङीप्। ४दासीपुत्रे ५नियुक्ते ६वेधसि पु० मेदि० ७मत्स्ये संक्षिप्तसा०। उपधादीर्घविधौ क्षत्तृशब्दस्य पृथग्ग्रहणात् औणादिकतृजन्तस्यान्यस्य निषेधेऽपि दीर्घः क्षत्तारौ "क्षत्तारौ ते प्रजापते। ताविहावतां स्कृतिम्" २,२४,७, "यत् क्षत्तारं ह्वयत्या" अथ० ८,६,४८, आविक्षितस्याग्निः क्षत्ता विश्वेदेवाः सभासदः" शत०ब्रा० १३, ५,४,६, "विविक्तं क्षत्तारम्" यजु० ३०,१३, । "क्षत्रिया मागधं वैश्यात् शूद्रात् क्षत्तारमेव च" या० उक्तेः "शूद्रादायोगवः क्षत्ता चण्डालश्चाधमोऽनृणाम्। वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः। एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथा स्मृतौ। क्षत्तृवैदेहकौ तद्वत् प्रातिलोम्येऽपि जन्मनि" मनूक्तेश्च क्षत्रियायां विप्राज्जात इति अमरमतत्वेन शब्दक० उक्तिः प्रामादिकी। "क्षत्ता स्यात् सारथौ द्वाःस्थे, क्षत्रियायाञ्च शूद्रजे" इति नानार्थेऽमरोक्तेः मनुयाज्ञवल्क्यवाक्यादिसंवादाच्च "माहिष्योऽर्य्यक्षत्रिययोः क्षत्तार्य्याशूद्रयोः सुतः" इत्यमरोक्तौ अर्य्याशूद्रजातस्य क्षत्तृत्वोक्तावपि तत्र अर्य्या स्वामिनी योग्यत्वात्तत्र क्षत्रिया, तेन न पूर्व्वापरविरोध इति भानुदीक्षितव्याख्या। अतएव मेदिन्याम् "क्षत्ता शूद्रक्षत्रियाजे प्रतीहारे च सारथौ। भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसोः पुमान्"। तस्य वृत्तिमाह मनुः "क्षत्रुग्रपुक्कसानां तु बिलौकोवधबन्धनम्"। तत्र दासीपुत्रे "ततः प्रीतमनाः क्षत्ता (विदुरः) धृतराष्ट्रं विशाम्पते!। उवाच दिष्ट्या कुरवोवर्द्धन्त इति विस्मितः। वैचित्रवीर्य्यस्तु नृपो निशम्य विदुरस्य तत्" भा०आ०२००अ०। विदुरस्य दासीपुत्रत्वं विदुरशब्दे वक्ष्यते "ततोऽपश्यत्

विदुरं तूर्णमाराद्भ्यायान्तं सचरयः स राजा । अथाब्रवीत् भ्रातरं भीमसेनं किं नु क्षत्ता वक्ष्यते न समेत्य ?" भा० व० ५अ० । द्वाःस्थे । "तत्र द्वास्थः प्रविश्यैवेत्युपक्रमे "ततो हृष्टो मत्स्यराजः क्षत्तारमिदमब्रवीत्" "क्षत्तारं कुरुराजस्तु शनैः कर्णमुपाजपत्" इति च भा० वि० ६८अ० । सारथौ "जानश्रुतिर्हपौत्रायण उपशुश्राव स ह संजिहान एव क्षत्तारमुवाच" "स ह क्षत्तान्विष्य नाविदमिति" "स ह क्षत्ताऽविदमिति" च छा० उप० । दण्डकोषाध्यक्षे च "अथ क्षत्ता पाल्पागूलीमभिमेथति" शत० ब्रा० १३।५।२।८ "क्षत्ता सन्निधिनः कोषाध्यक्षः" भा०

**क्षत्र** पुंन० । क्षतस्त्रायते त्रै—क ५त० क्षद-संभृतौ कर्त्तरि त्र वा अर्द्धर्चा० । क्षत्रिये "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः" श्रुतिः "यत्र ब्रह्म च क्षत्रञ्च सम्यञ्चौ चरतः सह" यजु० २०।२५। "क्षत्रं च तयजातिः" वेददी० "क्षतात् किल त्रायते इत्युग्रः क्षत्त्रस्य शब्दो भुवनेषु रूढः" रघुः । अत्र मल्लि० "क्षणु हिंसायामिति धातोः सम्पदादित्वात् क्विप् गमादीनामिति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धम् क्षतः न शात् त्रायते इति क्षत्त्रः सुपीति योगविभागात् कः । तामेतां व्युत्पत्तिं कविरर्थतोऽनुक्रामति क्षतादित्यादिना । उदग्रः उन्नतः क्षत्त्रस्य क्षत्त्रवर्णस्य वाचकः शब्दः क्षत्त्रशब्द इत्यर्थः क्षतात् त्रायते इति व्युत्पत्त्या भुवनेषु रूढः किल प्रसिद्धः खलु नाश्वकर्णादिवत् केवलरूढः किन्तु पङ्कजादिवत् योगरूढः"। "नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्द्धते । ब्रह्म क्षत्त्रञ्च संयुक्तमिहामुत्र च वर्द्धते" मनुः । क्षद्यते संभ्रियते राज्ञा, क्षद-कर्म्मणि त्र । २राष्ट्रे "क्षत्रं वा एष प्रपद्यते योराष्ट्रं प्रपद्यते क्षत्रं राष्ट्रम्" शत० ब्रा० ।२२ । क्षत्रस्य कर्म्म अण् । तत्कर्म्मणि, "क्षात्रं द्विजत्वञ्च परस्परार्थम्" भट्टिः तस्येदमण् ; क्षात्र तत्सम्बन्धिनि त्रि० "क्षात्रं कर्म्म स्वभावजम्" गीता ३उदके ४धने च निघ० ५देहे उणादिको० ६तगरे न० राजनि०

**क्षत्रकर्म्मन्** न० ६त० । "शौर्य्यं तेजोधृतिर्दाक्ष्यम् युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षत्रकर्म्म स्वभावजम्" गीतोक्ते कर्म्मभेदे । अत्र क्षात्त्रं कर्म्मेति वा पाठः

**क्षत्रधर्म्म** पु० ६त० । स्मृत्याद्युक्ते क्षत्त्रियस्य धर्म्मभेदे । तत्राह हारीतः

"राज्यस्थः क्षत्त्रियश्चापि प्रजा धर्म्मेण पालयन् । कुर्य्यादध्ययनं सम्यग्यजेद्यज्ञान् यथाविधि । दद्याद्दानं द्विजातिभ्योधर्म्मबुद्धिसमन्वितः । स्वभार्य्यानिरतो नित्यं षड्भागार्हः सदा नृपः । नीतिशास्त्रार्थकुशलः सन्धिविग्रहतत्त्ववित् । देवब्राह्मणभक्तश्च पितृकार्य्यपरस्तथा । धर्म्मेण यजनं कार्य्यमधर्म्मपरिवर्जनम् । उत्तमां गतिमाप्नोति क्षत्त्रियोऽप्येवमाचरन्" ।

"त्रीणि राजन्यस्याध्ययनं शस्त्रेण च प्रजापालनं स्वधर्मस्तेन जीवेत्" वशिष्ठः । पद्मपु० स्वर्गखण्डे २६अ० "क्षत्त्रियस्यापि यो धर्म्मस्तं ते वक्ष्यामि पार्थिव ! । दद्याद्राजा न याचेत यजेत न च याजयेत् । नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् । नित्योद्युक्तो दस्युवधे रणे कुर्य्यात् पराक्रमम् । ये तु क्रतुभिरीजानाः श्रुतवन्तश्च पार्थिवाः । ये तु युद्धे विजेतारस्ते तु लोकजितो नृपाः । अविक्षतशरीरो हि संगराद्यो निवर्त्तते । क्षत्त्रियस्य तु तत् कर्म्म नेभयत्र यशःप्रदम् । क्षत्त्रियाणामयं धर्म्मो निर्णीतो मुनिभिः परः । नास्य कृत्यतमं किञ्चिद्राज्ञो दस्युविनिग्रहात् । दानमध्ययनं यज्ञो राज्ञां श्रेयोऽभिधीयते । तस्माद्राज्ञा महाराज ! योद्धव्यं धर्म्मशीलिना । प्रजाः स्वेषु च धर्म्मेषु स्थापयेत महीपतिः । धर्म्माण्येव हि कर्म्माणि कारयेत् सततं प्रजाः । परमां सिद्धिमाप्नोति नृपतिः परिपालनात् । कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो राजन्य उच्यते । राजन्यानां करादानं विना वैवाहिकञ्च यः । प्रतिग्रहः स निन्द्योऽत्र परत्र चासुखप्रदः । युद्धे पलायनञ्चैव तथा कातरताऽर्थिषु । अपालनं प्रजानाञ्च दाने धर्म्मे विरक्तता । अनवेक्षा स्वराष्ट्रस्य ब्राह्मणानामनादरः । अमात्यानामसम्मानस्तेषां कर्म्मानवेक्षणम् । भृत्यानाञ्च परीहासो निषिद्धं क्षत्त्रजन्मनाम् । राजन्दस्तु महाराज ! यथा क्षेममवाप्नुयात् । तत् शृणुष्व तवाख्यास्ये धर्म्मसंग्रहतत्परः । वेदानधीत्य धर्म्मेण राजशास्त्राणि चानघ ! । स्नानादीनि कर्म्माणि कृत्वा सोमं निषेव्य च । पालयित्वा प्रजाः सर्व्वा धर्म्मेण जयतां पर । राजसूयाश्वमेधादीन् मखानन्यांस्तथैव च । आहृत्य च यथा पाठं विप्रेभ्यो दत्तदक्षिणः । संग्रामे विजयं प्राप्य तथाल्पं यदि वा बहु । स्थापयित्वा प्रजापालं पुत्रं राज्ये च पार्थिवः । अन्यगोत्रं प्रशस्तं वा क्षत्त्रियं क्षत्त्रियर्षभ ! । अर्च्चयित्वा पितॄन् सम्यक् पितृयज्ञे यथा-

विति। देवान् यज्ञैश्चर्षीन् वेदैरर्चयित्वा प्रयत्नतः। अन्तकाले च सम्प्राप्ते य इच्छेदाश्रमान्तरम्। सोऽनुपूर्व्याश्रमान् राजन्! गत्वा सिद्धिमवाप्नुयात्। राजर्षित्वेन राजेन्द्र! भैक्षचर्य्याध्वसेवया। अपेतगृहधर्म्मोऽपि चरेज्जीवितकाम्यया। न चैनन्नैष्ठिकं कर्म्म त्रयाणां भूरिदक्षिणम्। चतुर्णां राजशार्दूल! प्राहुराश्रमवासिनाम्। बाह्वायत्तं क्षत्रियैर्मानवानां लोकश्रेष्ठं धर्म्ममासेवमानैः। सर्व्वे धर्म्माः सोपधर्म्मास्त्रयाणां राज्ञो धर्म्मा इति वेदाच्छृणोमि। एवं धर्म्मान् राजधर्म्मेषु सर्व्वान् सर्व्वावस्थं संप्रलीनान्निबोध। अन्यश्रमानल्पफलान् वदन्ति धर्म्मानन्यान् वेदविदो महर्षयः। महाश्रमं बहुकल्याणरूपं क्षात्रं धर्म्मं नेतरं प्राहुरार्य्याः। सर्व्वे धर्म्माः राजधर्म्मप्रधानाः सर्व्वे धर्म्माः पाल्यमाना भवन्ति। सर्व्वं त्यागो राजधर्म्मेषु राजंस्त्यागं धर्म्मञ्चाहुरग्र्यं पुराणम्। मज्जेत्त्रयीदण्डनीतौ हतायां, सर्व्वे धर्म्माः प्रक्षयेयुर्विरुद्धाः। सर्वे धर्म्माश्चाश्रमाणां हताः स्युः क्षात्रे त्यक्ते राजधर्म्मे पुराणे। सर्वे त्यागा राजधर्म्मेषु चोक्ताः सर्वा विद्या राजधर्म्मेषु युक्ताः। सर्वे लोका राजधर्म्मे प्रविष्टा यथा जाताः प्राकृतैर्वध्यमानाः। धर्म्मश्रुतानामुपपीडनाय एवं धर्म्मा राजधर्म्मैर्विमुक्ताः। चातुराश्रम्यधर्म्माश्च यतिधर्म्माश्च पार्थिव!। लोकवेदोत्तराश्चैव क्षात्रे धर्म्मे समाहिताः। सर्व्वाण्येतानि धर्म्माणि क्षात्रे राजन्यसत्तम!। अप्रत्यक्षं बहुद्वारं धर्म्ममाश्रमवासिनाम्। क्षात्रेणैव हि धर्म्मेण प्रत्यक्षं क्रियते नृप!। द्विजार्च्चनं क्षत्रियाणां तथा नारायणार्च्चनम्। राज्यानां पालनञ्चैव रणे निर्भयता तथा। नित्यं दानं ब्राह्मणेभ्यः शरणागतरक्षणम्। पुत्रतुल्यं प्रजानाञ्च दुःखिनां परिपालनम्। शस्त्रास्त्राणाञ्च नैपुण्यं रणे शौर्य्यं तथैव च। तपश्च धर्म्मसत्यञ्च यत्नतः कुरुते सदा। पण्डितं नीतिशास्त्रज्ञं नित्यञ्च परिपालयेत्। सभामध्ये वासयेच्च नित्यं सद्भिश्च संयुतः। हस्त्यश्वरथपादातं सेनाङ्गञ्च चतुष्टयम्। पालयेत् यत्नतो नित्यं यशस्वी च प्रतापवान्। रणेऽरिमन्त्रितश्चैव दानेनाभिमुखो भवेत्। रणे यो वा त्यजेत् प्राणान् तस्य स्वर्गो यशस्करः"। विस्तरस्तु भा० शा० राजधर्म्मे

**क्षत्रधर्म्मन्** पु० नहुषभ्रातुरनेनसो वंश्ये संकृतेः पुत्रे १नृपभेदे। "संकृतेरपि धर्म्मात्मा क्षत्रधर्म्मा महायशाः। अनेनसः समाख्याताः क्षत्रवृद्धस्य मे शृणु" हरिवं० २६ अ०

क्षत्रस्य। धर्म्मः। २क्षत्रियस्य धर्म्मे च युद्धादौ। क्षत्रं तत्सम्बन्धी धर्म्मो यस्य कनिच् समा०। ३क्षत्रियधर्म्मयुते। "शास्त्राभिमुखोयस्तु वध्यते क्षत्रधर्म्मवा" मनुः

**क्षत्रधृति** पु० क्रतुभेदे "क्षत्रधृतिः" "तदुभयम एके त्रिष्टोमज्योतिष्टोमौ" कात्या० श्रौ० १५।६१।२४।२५। "ततो मासान्ते श्रावण्याम् क्षत्रधृतिर्नाम क्रतुर्भवति। कुर्व्वन्ति एके उपरिष्टात्। अत च वैशाखामावास्यायां पशुबन्धौ, ज्यैष्ठमासपौर्णमास्यां केशवपनीयः, आषाढ्यां व्युष्टिद्विरात्रः, श्रावण्यां क्षत्रधृतिः" भाद्रपदाश्वयुजयोस्त्रिष्टोमज्योतिष्टोमौ, कार्त्तिक्यां सौत्रामणीति" कर्कः।

**क्षत्रबन्धु** पु० क्षत्रं राष्ट्रं बन्धुरिवास्य। १क्षत्रिये "ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्"। "आ द्वाविंशात् क्षत्रबन्धोरा चतुर्विंशतेर्विशः" मनुः। क्षत्रस्य बन्धुरिव। २क्षत्रियतुल्ये अपकृष्टक्षत्रिये। "क्षत्रबन्धुः सदानार्य्यो रामः परमदुर्म्मतिः" रामा० ल० २३अ०

**क्षत्रभृत्** पु० क्षत्रं बिभर्त्ति भृ-क्विप्। क्षत्रियभरणकर्त्तरि अग्निभेदे। "अग्निर्ब्राह्मणवानग्निः क्षत्रभृत्" आश्व० श्रौ० ४।१।२२। "विराडग्ने क्षत्रभृदा दिदीहि" यजु० २७।७। क्षत्रं भर्त्तव्यत्वेनास्त्यस्य मतुप् मस्य वः। क्षत्रवत् तत्रैव।

**क्षत्रवनि** पु० क्षत्रं वनति "छन्दसि वनसनरक्षिमथाम्" पा० कर्म्मण्युपपदे इन्। १क्षत्रजातिभागिनि। "ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि" यजु० २७। सुपां सुलुगिति" पा० सर्वत्र अमो लुक्। क्वचित् कर्म्मणि वाच्येऽपि इनि। २क्षत्रस्येव्य "ध्रुवमसि पृथिवीं दृंह ब्रह्मवनि त्वा क्षत्रवनिः" यजु० १।१७। "क्षत्रेण वन्यते पुरोडाशनिष्पत्त्यर्थं क्षत्रवनि" वेददी०

**क्षत्रविद्या** स्त्री ६त०। धनुर्वेदे। तस्य व्याख्यानः ऋगयना० अण्। क्षात्रविद्य १तस्याव्याख्याने ग्रन्थे तां वेत्ति अधीते वा अण्। "विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम् वार्त्ति० विद्यान्तत्वेन ठञ् प्राप्ते "अङ्गक्षत्रधर्म्मत्रिपूर्वविद्यान्ताच्चेति" वार्त्ति० ठञो निषेधात् न ठञ्। क्षात्रवेद्य तद्विद्याध्येतरि तद्वेत्तरि च त्रि०।

**क्षत्रवृक्ष** पु० क्षत्रः क्षत्रविशेषनामा वृक्षः। मुचकुन्दाख्ये वृक्षे राजनि० तस्य मुचकुन्दक्षत्रनामकत्वात्तथात्वम्।

**क्षत्रवृद्ध** पु० आयुर्वंश्ये वृद्धशर्म्मनामान्तरके नृपभेदे "क्षत्रधर्म्मेति शब्दे दृश्यम्।" अनेनसः समाख्याता क्षत्रवृद्धस्य मे शृणु।

क्षत्रवृद्धात्मजस्तत्र सुहोत्रोऽथ महायशाः” हरिवं० २६ अ०
क्षत्रवृध अप्यत्र । “यः पुरूरवसः पुत्र आयुस्तस्याभव-
न् सुताः । नहुषः क्षत्रवृद्धश्च रजिरम्भश्च वीर्यवान् ।
अनेना इति राजेन्द्र ! शृणु क्षत्रवृधेऽन्वयम् । क्षत्रवृद्ध-
सुतस्यासन् सुहोत्रस्यात्मजस्त्रयः” भाग० ९।१७।२

क्षत्रेषु इद्धः । २ भेदकक्षित्रे त्रयोदशस्य रुचिना-
मकस्य मनोः ३ पुत्रभेदे “त्रयोदशस्य पुत्रास्ते विज्ञे-
यास्तु रुचेः सुताः । चित्रसेनोऽविचित्रश्च नाभोधर्म-
भृतोऽर्हतिः । सुनेत्रः क्षत्रवृद्धश्च सुतपा निर्भयो दृढ़ः”
हरिवं० ७ अ०

**क्षत्रसव** पु० इत० । क्षत्रियकर्त्तव्ये यज्ञभेदे

**क्षत्रान्तक** पु० इत० । परशुरामे “क्षत्रान्तकस्याभिभवेन
चैव”भट्टिः इत० । क्षत्रान्तकारिन् अप्यत्र “महानन्दसुतः
शूद्रागर्भोद्भवोऽतिलुब्धः परशुराम इव अपरोऽखिलक्ष-
त्रान्तकारी भविता ततः प्रभृति शूद्रा भूपाला भविष्य-
न्ति” शु० त० विष्णुपु०

**क्षत्रिय** पुंस्त्री० क्षत्रे राष्ट्रे साधु तस्यापत्यं जातौ वा घः ।
१ब्राह्मणानन्तरवर्णे अमरः टाप् । “नृपायां नृपसंस-
र्गात् प्रच्छन्नात् गूढजातकः । सोऽपि क्षत्रिय एव
स्याद्भिषेके च वर्ज्जितः” उशनसोक्ते नृपात् अपरणी-
तायां क्षत्रियजातिस्त्रियां गूढोत्पन्ने पुत्रे च” । पा०
उक्तोक्तस्तु जातावेव अपत्यमात्रे इञ् । क्षात्रि क्ष-
त्रजातेरपत्यमात्रे पुंस्त्री स्त्रियां वा ङीप् । स्वार्थे क ।
तत्रार्थे स्त्रियां टापि यपूर्वत्वात् वा अत इत्वम् ।
क्षत्रियिका क्षत्रियका । ततो भावे त्व क्षत्रियत्व
न० तल् क्षत्रियता स्त्री तद्भावे । ब्राह्मणत्ववत्
क्षत्रियत्वस्य जातिविशेषत्वेऽपि गुणविशेषेण शूद्रस्यापि
क्षत्रियत्वादि भवति । “शूद्रयोनौ हि जातस्य सद्-
गुणानुतिष्ठतः । वैश्यत्वं लभते ब्रह्मन् ! क्षत्रियत्वं
तथैव च । आर्जवे वर्त्तमानस्य ब्राह्मण्यमभिजायते” भा०
व० २११ अ० । सद्गुणाश्च तत्रैवोक्ताः । “शूद्रस्येति
कर्म्मणि षष्ठी वैश्यत्वादि कर्त्तृ सद्गुणवन्तं वैश्यत्वादयः
स्वयमायान्तीति गुणकृत एव वर्णविभागो न जातिकृत
इति भावः” नीलक० । तस्य पत्नी ङीष् वा आनुक् ।
क्षत्रियाणी क्षत्रियी अमरः । “अर्य्यक्षत्रियाभ्याम्” वा-
स्वार्थे आनुक् ङीप् चेति सि० कौ० । पत्न्यान्तु ङीषे-
वेत्यक्रम् । जातौ तु योपधत्वात् न ङीष् किन्तु टाप् ।
क्षत्रिया क्षत्रशब्दे उदा० ।

**क्षत्रियहण** पु० क्षत्रियं हन्ति अच् णत्वम् । परशुरामे ।
“किं न वै क्षत्रियहणो हरतुल्यपराक्रमः । विदितः
पुत्र ! रामस्ते यतस्तं योद्धुमिच्छसि” भा० व० १७९ अ०

**क्षत्रियासन** न० “क्षत्रियासनमावक्ष्ये यत्कृत्वा धनवान्
भवेत् । कोणेन पादयुगलं बद्धा तिष्ठेदधोमुखः” रुद्रया-
मलोक्ते आसनभेदे

**क्षद** संभूतौ पेषणे भक्षणे च सौ० आ० सक० सेट् । क्षदते
ऋचादिष्ट चक्षः । “तद्यशैवादो मनुष्यराज आगतेऽ-
न्यस्मिन् वार्हलुक्षाणं वा वेहतं वा क्षदन्त एवमेवास्मा
एतत्” ऐत० ब्रा० १।१५ “शतं मेषान् वृक्ये चक्षदानम्”
ऋ० १।११६।१६ “तस्मै इतं सुरां मध्वक्षमन्न क्षदामहे”
अथ० ।१०।६।५

**क्षद्मन्** न० क्षद—भक्षणे—मनिन् । १उदके २अन्ने च निघ० “दा-
ढ्हाणो वज्रमिन्द्रो गभस्त्योःक्षद्मेव तिग्ममसनाय संश्यत्”
ऋ० १।१३०।४ “क्षद्मेवार्थेषु तर्तरीय उग्रा” ऋ० १०।१०६।१७

**क्षन्तृ** त्रि० क्षम—तृच् । क्षमाशीले सहिष्णौ अमरः “ये क्ष-
न्तारो नाभिजल्पन्ति चान्यान्” भा० अ० १०२ अ० ।

**क्षन्तव्य** त्रि० क्षम—तव्य । १सोढव्ये “तदेतत् क्षन्तव्यं न खलु
पशुरोषः समुचितः” कर्पूरस्तवः, भावे क्त कर्त्तव्य २क्ष-
मायां न० “क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्य्यिणां
नृणाम्” । मनुः “सर्व्वथा वर्त्तमानस्य राज्ञोह्यस्याहितैः
सदा । क्षन्तव्यं पुत्र !” भा० अ० ४१ अ०

**क्षप** क्षपे अद० चुरा० उभ० सक० सेट् । क्षपयति ते अचिक्षपत्
त । क्षपयाम् बभूव आस चकार चक्रे । “अरण्ये का-
ष्ठवत् त्यक्त्वा क्षपयेयुस्त्र्यहं ततः” मनुः

**क्षप** सहने चुरा० इदित् उभ० सक० सेट् । क्षम्पयति ते
अचक्षम्पत् त । क्षम्पयाम् बभूव आस चकार चक्रे ।
अयं मित् “तेन इणि ऋचम्पि-अचाम्पि । णमुलि क्षम्पं
क्षम्पं-क्षाम्पं क्षाम्पम्” अनुपधाया अपि वा दीर्घः ।

**क्षप्** स्त्री चु० क्षप-क्विप् । रात्रौ “स क्षपः परि षस्वजे”
ऋ० ८।४१।३ “क्षपोरात्रीः” भा० “क्षप उस्रा वरिवस्यन्तु
देवाः” ६।५२।१५ ।

**क्षप** पु० चु० क्षप—कर्म्मणि अच् । उदके निघ०

**क्षपण** पु० क्षपयति विषयरागं क्षप-ल्यु । बौद्धसंन्यासिनि
दिगम्बरे स्वार्थे क । तथार्थे “एकः क्षपणक । शाकाहरं
तत्र क्षपणक ! दश शाकाशाः । यत्र क्षपणक ! दश शा-
काशास्तत्र क्षपणक । का शाकाशा” उद्भ० “स पथि नग्नं
क्षपणकमपश्यत् ” भा० आ० ७९६ श्लो० “नग्नक्षपणके देशे-

रजकः किं करिष्यति" पञ्च॰ भावे ल्युट्। २क्षेपणे "स-ब्रह्मचारिणे राकाहमतीते क्षपणं स्मृतम्" "भुक्तातोऽन्ध-तमस्याद्यमनया क्षपणं त्र्यहम्" मनुः कर्त्तरि ल्यु। ३क्षपके त्रि॰ "चरितानि यत्र गायन्ति लोकशमलक्षपणा-नि भक्ताः" भाग॰ ३।५।७॰श्लो॰

**क्षपणी** स्त्री क्षप-कर्म्मणि ल्युट् ङीप्। जालायाम् अमरटी॰

**क्षपण्यु** क्षप-बा॰ अन्यु। अपराधे शब्दमा॰।

**क्षपा** स्त्री क्षपयति चेष्टाम् क्षप-अच्। १रात्रौ २हरिद्रायां च अमरः "क्षपातमस्काण्डमलीमसं नभः"। "प्रतिक्षपं ह-र्म्यतलेषु यत्र" माघः "दिनक्षपामध्यगतेव सन्ध्या" रघुः।

**क्षपाकर** पु॰ क्षपां करोति कृ-ट। १चन्द्रे २कर्पूरे च अमरः क्विप् क्षपाकृदप्यत्र। "विशदाश्मकूटघटिताः क्षपाकृतः" माघः

**क्षपाचर** पुंस्त्री॰ क्षपायां चरति चर-ट। १राक्षसे "निर्याणे च मतं कृत्वा निशायामिं क्षपाचरः" भा॰ व॰२८८अ॰। स्त्रियां जातित्वात् ङीष्। २रात्रिचरमात्रे त्रि॰

**क्षपाट** पुंस्त्री॰ क्षपायामटति अट-पचा॰ अच्। १राक्षसे "ततः क्षपाटैः पृथुपिङ्गलाक्षैः" भट्टिः स्त्रियां ङीष्।

**क्षपानाथ** पु॰६त॰। १चन्द्रे २कर्पूरे च "क्षिप्रं क्षपानाथ इवा-धिरूढः" माघः क्षपापत्यादयोऽप्यत्र।

**क्षम** सहने भ्वादि॰ आत्म॰सक॰वेट्। क्षमते अक्षमिष्ट अक्षंस्त चक्षमे क्षान्तः क्षान्तिः। क्षमिता क्षन्ता। "इन्द्र त्वा यज्ञः क्षममाणमानट्" ऋ॰१०।१०४।६। योनित्यं क्षमते तात! बहून् लोकान् स विन्दति" भा॰ उ॰ १८५ श्लो॰। "का-र्पण्यात् साधुभावाच्च कुन्तो राजन्य क्षन्तुं न" भा॰ द्या॰ १५७अ॰। "कृनेरवेः क्षालयितुं क्षमेत कः" माघः "कुरुष्व भीरु! यत्तेऽभ्योद्हाद्धोऽपि क्षमामहे" भट्टिः। षित् क्षमा "तेजः क्षमा वानैकान्तम्" माघः वैदिके तु वि॰ क्षमति क्षमिति। इति भा।

**क्षम** सहने दिवा॰ पर॰सक॰सेट् शमादि॰ इरित्। क्षाम्यति अक्षमत् अक्षमीत्। चक्षाम "कामं क्षाम्यतु यः क्षमी" माघः।

**क्षम** न॰ क्षम-अच्। १युक्ते। २शक्ते, "रक्षितुं सहितुं रणे—काकुत्स्थं भीरु! कः क्षमः" भट्टिः आत्मकर्म-क्षमं देहम्" रघुः "प्रियासु बालासु रतक्षमासु" च नैष॰ ४क्षमावति त्रि॰ "अतोऽत्र किञ्चिद्भवतीं बहुक्षमाम्" कुमा॰।

**क्षमता** स्त्री॰ क्षमस्य भावः तल्। १योग्यतायां, शब्दनिष्ठे २अर्थप्रकाशनसामर्थ्ये च "स्मृतिर्द्वितीया च क्षमता च विज्ञम्" भट्टकारिका।

**क्षमा** स्त्री क्षम अङ्। 'बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्। न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता" 'आक्रुष्टोऽभिहतो वापि नाक्रोशेन्न च हन्ति वा। अदुष्टैर्वाङ्मनःकायैस्तितिक्षोः सा क्षमा मता' इत्युक्ते लक्षणायाम् तितिक्षायाम् चित्तवृत्तिभेदे, "आक्रुष्टोऽ-भिहतो यस्तु नाक्रोशेन्न हनेदपि। अदुष्टैर्वाङ्मनोकायैः स्तितिक्षुश्च क्षमा स्मृता' मात्स्ये १२० अ॰। "विभा-गशीलः सततं क्षमायुक्तोदयान्वितः गृहस्थः स्यात् क्षमायुक्तो न गृहेण गृही भवेत् "क्षमा दया च विज्ञानं सत्यञ्चैव दमः शमः। अध्यात्मनिरता ज्ञानं ज्ञानमेतद् ब्राह्मणलक्षणम्। विगर्हातिक्रमो हिंसाब-न्धवधात्मनाम्। अन्यमन्युसमुत्थानां दोषाणां वर्ज्जनं क्षमा" कूर्म्मपु॰१४अ॰। २भूमौ च। अमरः। क्षान्तौ अव्य॰ शब्दरा॰। पृषो॰ क्षाम् क्षमा क्ष्मा क्ष्मि क्षामा इत्यादयोऽपि निघण्टुमायां पर्यायाः "क्षाम तुभ्यं इत्या अग्नु क्षत्रं महना मनग्न द्यौः" ऋ॰ ४।१७।१। "द्यौ-श्च प्राञ्जनिकन्दजत्क्षाः" ४।२२।४ "अग्नो न क्षां दा-धार पृथिवीम्" ऋ॰४।६७।५ "क्षां दासायोपबर्हणीं कः" १।१७४।६ "मृळद्यो वर्तते यक्षमि क्षाम्" १।६८।२ "दिवि क्षमा च" ५।५२।३। "क्षमा मनश्च रपो विश्वं नो अस्तु भेषजम्" अथ॰६।५७।३ "अभिक्ष्मि विष्णुरूपं यद्दस्ति" ऋ॰ ७।२७।३ "अग्निर्यद्रोधति क्षमि" ऋ॰ ४।४३।६। "स प्रत्ना त्वचसा क्ष्मो दिवश्च" १।१००।१५ "द्यावाक्षामा" ऋ॰१।९६।५ "तुग्मरसयति भौतितौ नः क्षमा" इ॰ र॰ उक्ते ३त्रयोदशाक्षरपादके छन्दोभेदे स्त्री "दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा" नमोऽस्तु ते" ४इत्युक्ते दुर्गाशक्तिभेदे ५राधिकासहचरीभेदे "मया पूर्वन्तु त्वं दृष्टो गोप्या च क्षमया सह" "क्षमा देहं परित्यज्य लज्जया पृथिवीं गता" ब्रह्मवैपु॰ प्रकृ-तिख॰ ८अ॰। ६खदिरे राजनि॰

**क्षमाज** पु॰ क्षमातोजायते जन+ड ५त॰; १मङ्गले २नरकासुरे ३भूजातमात्रे त्रि॰ क्षमाजातादयोऽप्यत्र

**क्षमादंश** पु॰ क्षमायाः दंश इव। शिग्रुवृक्षे राजनि॰

**क्षमापि** क्षमं क्षमान्वितं करोति क्षम-णिच् सत्या॰ पुक् दी-र्घश्च। क्षमापयति ते अचि(च)क्षमापत् न क्षमापयाम्-बभूव आस चकार चक्रे। "तन्निमित्तं ब्राह्मणं क्षमा-पयति हेतुवचनोक्त्या" का॰उ॰भा॰। "क्षमापय महाभागं ततः शान्तिर्भविष्यति" भाग॰ ६।४।५२ श्लो॰

**क्षमाभुज्** पु० क्षमां भुनक्ति भुज–अवने क्विप् । नृपे "सुर-वैरिवक्ष उरसि क्षमाभुजः" माघः । क । क्षमाभुजोऽप्यत्र

**क्षमावत्** त्रि० क्षमा+अस्त्यर्थे मतुप् मस्य वः । क्षमायुक्ते । "एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जनः" गरु० पु० ११४अ० स्त्रियां ङीप्

**क्षमितृ** त्रि० क्षम–तृच् । साढरि सहनशीले अमरः

**क्षमिन्** त्रि० क्षम-ताच्छील्ये घिनुण् । क्षमाशीले "कामं क्षाम्यतु यः क्षमी" माघः "अक्रूरः पेशलो दक्षो दाक्षिणः क्षमिणां वरः" विष्णुस० स्त्रियां ङीप् ।

**क्षय** पु० क्षि–क्षये क्षि–निवासगत्योर्वा भावादौ यथायथम् अच् । त्रिवर्गान्तर्गते नीतिवेदिनां राज्ञाम् १अष्टवर्गापचये । अष्टवर्गश्च । "कृषिर्वणिक्पथो दुर्गं सेतुकुञ्जरबन्धनम् । धात्वाकरः करादानं सैन्यानाञ्च निवेशनम् । अष्टवर्गः स्मृतो राज्ञाम्" भरतः । "क्षयस्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्" अमरः । क्षयः अष्टवर्गस्यापचयः तस्यैवोपचयः वृद्धिः, स्थानं तस्य उपचयापचयहीनतया स्थितिः" २प्रलये तस्मिन् सर्व्वेषां क्षयात्तथात्वम् । ३अपचये स च भावविकारभेदः यास्कोक्तः यथा

"षड् भावविकारा भवन्तीति वार्ष्यायणिः जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति । जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति, अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं, विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं, वर्धत इति स्वाङ्गाभ्युच्चयं, सांयौगिकानां कर्म्मणा वर्धते विजयेनेति वा वर्धते शरीरेणेति वा, अपक्षीयत इत्यनेनैव व्याख्यातः प्रतिलोमं, विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति" । ४गृहे अमरः ५यक्ष्मरोगे यक्ष्मरोगस्य क्षयसंज्ञाकारणं यथा "क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते बुधैः । राज्ञश्चन्द्रमसो यस्मादभूदेष महामयः । तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः" सुश्रु० । "रक्तपित्तात्भवेत् कासः कासात् संजायते क्षयः" वैद्यकम् "राजयक्ष्मपरिहाणिमाययौ" इत्युपक्रमे "राशितत् क्षणमभूत् क्षयातुरे" रघुः । ६रोगमात्रे राजनि० । षष्टिवर्षान्तर्गते षष्टितमे ७वर्षे तल्लक्षणं ज्यो०त० भवि०पु० "मेदिनी लभते देवि ! सर्वभूतं चराचरम् । देशभङ्गश्च दुर्भिक्षं क्षये संक्षीयते प्रजा । सौराष्ट्रे मालवे देशे दक्षिणे कोङ्कणे तथा । दुर्भिक्षं जायते घोरं क्षये संवत्सरे प्रिये ! । कौमुदीनर्म्मदाद्याश्च यमुनानर्म्मदातटम् । त्रिव्याद्यां सैन्धवस्यापि विनश्यति न संशयः । सिंहलमध्यदेशस्य कालञ्जरस्तथैव च । क्षये क्षयन्ति सर्वाणि नान्यथा वरवर्णिनि !" ।

ता० ब्राह्मणोक्ते स्तोत्रसंघे देवसंघे च यथा "रश्मिरसि क्षयाय त्वा क्षयं जिन्व सवितृप्रसूता बृहस्पते स्तुत" ता०ब्रा० "तैतीरीयाणां पञ्चमकाण्डोक्तब्राह्मणे रश्मिरिति मन्त्राणामादित्यादिसृष्टिहेतुत्वाभिधानादादित्यादिपरतया रश्म्यादिशब्दाव्याख्येयाः तत्तु ब्राह्मणमुत्तरत्रोदाहरिष्यते । हे आदित्य ! त्वं रश्मिरसि रश्मियुक्तोऽसि देवा यस्मिन् क्षियन्ति निवसन्ति इति स्तोत्रसंघः क्षयः तस्मै क्षयाय तत्सङ्घाय तत्प्राप्त्यर्थं, आदित्य! त्वां स्मरामीति शेषः । ततः क्षयं देवसङ्घं जिन्व प्रीणय क्षयशब्दस्य देवविषयत्वं तैत्तिरीयास्तृतीयकाण्डोक्तब्राह्मणे समामनन्ति "रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह देवे क्षय इति" भा० । ज्योतिषोक्ते द्विसंक्रान्तियुक्ते शुक्लप्रतिपदाद्यमावस्यान्ते चान्द्रे मासे यथाह सि०शि०

"असंक्रान्तिमासोऽधिमासः स्फुटं स्याद्द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् । क्षयः कार्त्तिकादित्रये नान्यतः स्यात् तदा वर्षमध्येऽधिमासद्वयं च" ।

"यस्मिन् शशिमासेऽर्कसंक्रान्तिर्नास्ति सोऽधिमास इति प्रसिद्धम् । तथा यत्र मासे संक्रान्तिद्वयं भवति स क्षयमासो ज्ञेयः । यतः संक्रान्त्युपलक्षिता मासाः । अत एकस्मिन् मासे संक्रान्तिद्वये जाते सति मासयुगलं जातम् । स क्षयमासः कदाचित् कालान्तरे भवति । यदा भवति तदा कार्त्तिकादित्रय एव । तदा क्षयमासात् पूर्वं मासत्रयान्तर एकोऽधिमासोऽग्रतश्च मासत्रयान्तरितोऽन्यश्चासंक्रान्तिमासः स्यात् । अत्रोपपत्तिः । चन्द्रमासप्रमाणमेकोनत्रिंशत् सावनदिनान्येकत्रिंशत् घटिकाः पञ्चाशत् पलानि २९।३१।५० । तथार्कमासस्त्रिंशद्दिनानि षड्विंशतिघटिकाः सप्तदशपलानि ३०।२६।१७। एतावद्भिर्दिवसैरविर्मध्यगत्या राशिं गच्छति । यदार्कगतिरेकषष्टिः कलास्तदा सार्धैकोनत्रिंशता दिनैः २९।३० राशिं गच्छति । अतश्चान्द्रमासादल्पोऽर्कमासस्तदा स्यात् । एवं रविमासस्य परमाल्पता २९।२०।४० । सा चैकषष्टिगतिर्वृश्चिकादित्रयेऽर्कस्य । स ईदृशोऽल्पोऽर्कमासो यदा चन्द्रमासस्यान्तस्यान्तःपाती भवति तदैकस्मिन् मासे संक्रमणद्वयमुपपद्यते । अत उक्तं क्षयः कार्त्तिकादित्रय इति । पूर्वं

किल भाद्रपदेऽर्कसंक्रान्तिर्जाता ततोऽर्कगतेरधिकत्वान्मार्गशीर्षे द्विसंक्रान्तिः। ततः पुनर्गतेरल्पत्वाच्चैत्रोऽप्यसंक्रान्तिर्भवति। ततो वर्षमध्येऽधिमासद्वयमित्युपपन्नम्” प्रमिता०। मेषादिषु सूर्य्यस्य गतिभेदात् भोगकालसावनदिनादिक मुच्यते

| मे | वृ | मि | क | सि | क | तु | वृ | ध | म | कु | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ३० | ३१ | ३१ | ३१ | ३१ | ३० | २९ | २९ | २९ | २९ | २९ | ३० |
| ५५ | २४ | ३७ | २८ | २ | २९ | ५७ | २७ | १५ | २४ | ४९ | २५ |
| २२ | ५६ | २२ | २५ | ५२ | ४ | २ | २९ | ३ | ० | ४२ | २१ |

“इदानीं गणकानां प्रतीत्यर्थं क्षयमासकालान् गतागतान् कतिचिद्दर्शयति स्म” प्रमिता०।

“गतोऽब्ध्यद्रिनन्दै ९७४ र्मिते शाककाले तिथीशै १११५ र्भविष्यत्यथाङ्गाक्षसूर्यैः १२५६। गजाद्र्यग्निभूमि १३७८ स्तथा प्रायशोऽयं कुवेदेन्दु १४१वर्षैः क्वचिद्गोकुभिश्च १९।

“स्पष्टम्। अत्रोपपत्तिः। यदा किलैकविंशतिः शुद्धिस्तदा भाद्रपदोऽधिमासः। तस्मिन् जाते कार्त्तिकादित्रये क्षयमासः संभाव्यते। सा च तथाविधा शुद्धिः कुवेदेन्दु १४१ वर्षान्तरे काले पुनर्भवति। किन्तु पलत्रिभागाभिः षड्भिर्घटिकाभिरधिका भवति। कदाचिदेकोनविंशत्या वर्षैस्तादृशी भवति। तत्र त्रिभागोनाभिश्चतुर्दशघटिकाभिरधिका भवति। कुवेदेन्दुवर्षेभ्यस्तथैकोनविंशतिवर्षेभ्यो द्विधा यदा द्विराशैः खराङ्कैश्च भक्ता इत्यादिना लब्धेष्वधिमासेषु शेषतिथिषु शून्यं प्रथमस्थाने सत्यपि शुद्धौ षड्घटिकाः स्युः ६। २०। द्वितीये त्रिभागोनाश्चतुर्दश १३। ४०। अत उक्तं प्रायशोऽयं कुवेदेन्दुवर्षैः क्वचिद्गोकुभिश्चेति। प्रागागतश्चेत्यथोक्तं स्यात्” प्र मता०।

कालमा० उक्तं सि०शि० वाक्यं व्याख्याय विशेषोऽभिहितः “स्फुटमानेन योऽयमसङ्क्रान्तः स स्फुटोऽधिमासः तेनैव मानेन यो द्विसंक्रान्तियुक्तः स क्षयाख्यः स च कार्त्तिकमार्गशीर्षपौषेष्वेव त्रिष्वन्यतमो भवति नान्येषु माघादिषु नवसु एवंविधक्षयमासयुक्ते वर्षे क्षयमासात् पूर्वेषु त्रिषु मासेषु मध्ये कश्चिदधिमासो भवति क्षयमासादूर्द्ध्वमपि मासत्रयमध्ये अपरोऽधिमासः। तदेवंविधमेकवर्षस्थं मलमासद्वयं चिरेण कालेन यदा कदाचिदायाति तस्यैकाधिमासवत् पुनः पुनः क्षयमासः समायाति तस्यैतयागमनकालः सिद्धान्तशिरोमणौ दर्शितः। “गतोऽब्ध्यद्रीत्यादि (वाक्यं प्रागुदाहृतम्) अस्यायमर्थः। चतुःसप्तत्यधिकनवशतसंख्याकैर्वर्षैः परिमिते शाककाले कश्चिदुक्तमासत्रयोपेतो वत्सरोगतः। यथोक्तसंख्या चाब्ध्यद्रिनन्दैरित्यनेन पदेन विवक्षिता। अब्धयश्चत्वारः अद्रयः सप्त नन्दा नव। एतत्संख्यात्रयगमका अङ्का गणकप्रसिद्ध्या प्रातिलोम्येन लिखिता यथोक्तसंख्यायां पर्य्यवस्यन्ति। तिथीशैरित्यत्रापि तिथयः पञ्चदश ईशा एकादश तत्र तयोरङ्केषु प्रक्षिप्तेषु पञ्चदशाधिकशतयुक्तसहस्रसंख्या सम्पद्यते। तावद्भिःशकवर्षैर्मिते काले, कश्चिदुक्तमासत्रययुतः संवत्सरः। अङ्गाक्षसूर्य्यैरित्यत्राङ्गानि षट् अक्षाणीन्द्रियाणि पञ्च सूर्य्या द्वादश तत्राङ्कप्रक्षेपे षट्पञ्चाशदधिकशतद्वयोपेतसहस्रसंख्या सम्पद्यते। तावद्भिर्वत्सरैर्मिते शककाले यथोक्तमासत्रयोपेतः कश्चिद्वत्सरः। तस्य चोदाहरणम्। पूर्व्वोदाहृत ईदृशसंवत्सरः प्राचीनोभावी वा संवत्सरः। तत्र भाद्रपदबहुलामावास्यायां कन्यासंक्रान्तिस्तत ऊर्द्ध्वम् असंक्रान्तमेकमासमतीत्य उत्तरयोर्मासयोः क्रमेण तुलावृश्चिकसंक्रान्ती तत ऊर्द्ध्वमेकस्मिन्नेव मासे शुक्लप्रतिपदि धनुःसंक्रान्तिः ततऊर्द्ध्वं दर्शे मकरसंक्रान्तिः। तत ऊर्द्ध्वं कुम्भसंक्रान्तिः समनन्तरे मासे दर्शे। तत ऊर्द्ध्वं असंक्रान्तिमासमतीत्योत्तरस्यां प्रतिपदि मीनसंक्रान्तिरेवं च एकस्मिन्नेव वत्सरे द्वावसंक्रान्तौ मासौ एको द्विसंक्रान्तिमास इति यथोक्तमासत्रयं सम्पद्यते। गजाद्र्यग्निभूमिरित्यत्रापि गजा अष्टौ, अद्रयः सप्त, अग्नयस्त्रयः भूरेका तत्राङ्कप्रक्षेपे सत्यष्टसप्तत्यधिकशतत्रयोपेतसहस्रसंख्या सम्पद्यते। तावद्भिर्वत्सरैर्मिते शाककाले कश्चिदुक्तविधः सम्पत्स्यते वत्सरः। कुवेदेन्दुवर्षैरित्यत्र कुरेकः वेदाश्चत्वार इन्दुरेकस्तत्राङ्कप्रक्षेपे एकचत्वारिंशदधिकशतसंख्या भवति एतावद्भिर्वर्षैः क्वचित्पूर्व्वोत्तरक्षयमासयोर्व्यवधानं भवति गोकुभिश्चेत्यत्र नपुंसकवर्जितेषु स्वरान्तेषु गण्यमानेष्वोकारो नवमः सम्पद्यते। कुरेका तत्राङ्कप्रक्षेपे सति एकोनविंशतिर्भवति तावद्भिर्वत्सरैः क्वचित्पूर्वोत्तरयोः क्षयमासयोर्व्यवधानमिति। अत्र द्विसंक्रान्तियुक्तस्य क्षयसंज्ञायामुपपत्तिरुच्यते। यदा धनुःस्थे रवौ दर्शपूर्त्तिस्तदा तस्य मेषादिस्थवचनेन मार्गशीर्षत्वं प्राप्तम्। तथा सति पूर्वोदाहृते द्विसंक्रान्ते मासे धनुःस्थे रवौ दर्शो न समाप्तः मकरस्थे तु रवौ समाप्तः। अतः पौषमासत्वं तस्य सम्पन्नम्। तथा च मार्गशीर्षस्य तत्र लुप्तत्वात् तस्य क्षयसंज्ञा युक्ता। अत एवैकमास-

स्थायित्वादंहसः पापस्य पतिरिति व्युत्पत्त्या स एवांहस्पतिसंज्ञयापि व्यवह्रियते। स च व्यवहारो बार्हस्पत्यज्योतिषेऽन्यो दृश्यते “यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा। संसर्पांहस्पती मासावधिमासश्च निन्दितः” इति तत्र क्षयमासात् प्राचीनोयोऽसंक्रान्तः स संसर्पस्तस्यासंक्रान्तत्वे नेतराधिमासवत् कर्मानर्हः सन् सम्यक् सर्पतीति संसर्पः। तस्य कर्मानर्हत्वशास्त्रे एवं स्मर्यते “सिनीवालीमतिक्रम्य यदा संक्रमते रविः। रविणा लङ्घितो मासोऽनर्हः सर्वकर्मस्विति”। तदपवादश्चैवं स्मर्यते। “मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत्। प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः” इति संक्रान्तिरहितयोर्द्वयोर्मासयोर्यः पूर्वोऽसंक्रान्तः स प्राकृतः शुद्धः। कर्मार्ह इत्यर्थः। अस्मिन्नेवार्थे जावालिः “एकस्मिन्नेव वर्षे चेद्द्वौ मासावधिमासकौ। प्राकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुचः” इति। अतः संसर्पत्वं तस्योपपन्नम्। असंक्रान्तमासद्वयमध्यवर्त्तिनः क्षयमासस्यांहस्पतित्वनिरुक्तिः पूर्वमेव दर्शिता। तदुत्तरभाविनोऽसंक्रान्तस्य कालाधिक्यादधिमासत्वम्। त एते त्रयोऽपि ज्योतिःशास्त्रप्रसिद्धा विवाहादौ निन्दिताः। यथोक्तप्रकारेणांहस्पतिनाम्नः क्षयमासस्य द्वितीयसंक्रान्तिप्रयुक्तनामसम्भवे सति शुद्धमासवत् स्वातन्त्र्याच्च पूर्वोत्तरमासशेषत्वशङ्कावकाशः”।

कृत्य॰ चि॰ पी॰ तादृशमासत्रयस्य माङ्गल्यकर्मसु वर्ज्यतोक्ता यथा

“स्वगृहप्रवेशगोदानस्थानाश्रममहोत्सवम्। न कुर्यात् मलमासे तु संसर्पेऽंहस्पतौ तथा” मरीचिः “यदा क्षयमासो भवति तदा पूर्वोत्तरावधिमासौ भवतः तत्र पूर्वः संसर्पः द्वितीयोऽंहस्पतिः मासः” वाप्यादिषु वर्जनीये “मिथुनस्थे मृजर्सितयोर्न्यूनाधिमासे तथा” कृत्य॰ चि॰। अपचये। “सर्वं पार्थिव भवान्यपि क्षयम्” माघः “क्षयं हरस्य वणिजा पण्यानामविजानता” या॰ स्मृ॰ नष्टे “इनतोऽस्तुलभ्रक्षयागमाः” माघः “अवेक्ष्य निरये चैव यातनाश्च यमक्षये” मनुः। १०नाशे “कालोऽस्मि लोकक्षयकृत् प्रवृद्धः”। “कुलक्षये विनश्यन्ति कुलधर्माश्च शाश्वताः” गीता। “अन्वष्टकासु वृद्धौ च गयायां च क्षयाहनि” श्र॰ त॰ भवि॰ पु॰

**क्षयङ्कर** त्रि॰ क्षयं करोति कृ—ख। क्षयकारके। “शत्रुपक्षक्षयङ्करः”। भा॰ आ॰ २६६॰ श्लो॰

**क्षयज** पु॰ क्षयात् जायते जन—ड। कासभेदे। यथा

“विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात्। घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः। कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम्। स गात्रशूलज्वरदाहमोहान् प्राणक्षयञ्चोपलभेत कासी। शुष्कान् विनिष्ठीवति दुर्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम्। तं सर्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति। वृद्धत्वमासाद्य भवत्यथो वै याप्यत्वमाहुर्भिषजस्तु कासम्” “क्षयजे क्षयमासाद्य कर्त्तव्यो बृंहणोविधिः” इति च सुश्रुतः। क्षयात् कासः। क्षयकासोऽप्यत्र।

**क्षयतरु** पु॰ क्षयस्य क्षयहेतुस्तरुः अश्वघासादिवत् चतुर्थ्यर्थे ष॰त॰। स्थालीवृक्षे राजनि॰

**क्षयथु** पु॰ क्षि-अथुच्। कासरोगे हेम॰।

**क्षयनाशिनी** स्त्री क्षयं रोगं नाशयति नश—णिच्—णिनि ङीप्। १जीवन्तीवृक्षे शब्दमाला। २क्षयरोगनाशके त्रि॰।

**क्षयपक्ष** पु॰ क्षीयते चन्द्रोऽस्मिन् क्षि-आधारे अच् कर्म॰। कृष्णपक्षे। “चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः” ज्यो॰ उक्तेस्तस्य तथात्वम्। [दृश्यम्।

**क्षयमास** पु॰ कर्म॰। द्विसंक्रान्ते चान्द्रमासे क्षयशब्दे

**क्षयरोग** पु॰ क्षयहेतुः रोगः। यक्ष्मरोगे “क्रियाक्षयकरत्वाच्च क्षय इत्यभिधीयते” सुश्रुतः स विद्यतेऽस्य इनि। तद्रोगयुक्ते त्रि॰ “राजहा क्षयरोगी स्यादेषा तस्य च निष्कृतिः। गोभूहिरण्यमिष्टान्नजलवस्त्रप्रदानतः। घृतधेनुप्रदानेन तिलधेनुप्रदानतः। इत्यादिना क्रमेणैव क्षयरोगः प्रशाम्यति” शाता॰।

**क्षयवायु** पु॰ क्षयस्य प्रलयस्य वायुः। प्रलयवायौ “युष्मानचेतन् क्षयवायुकल्पान् इति” भट्टिः

**क्षयिन्** त्रि॰ क्षयो राजयक्ष्माऽस्त्यस्य इनि। १राजयक्ष्मयुक्ते। २चन्द्रमसि पु॰ चन्द्रस्य यक्ष्मरोगश्च दक्षशापात् तत्कथा राजयक्ष्मशब्दे दृश्या। राज्ञश्चन्द्रमसो यस्मादभूदेष महामयः। तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः” सुश्रु॰ “क्षयामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च” मनु॰ “श्वित्रिकुष्ठि कुले जातां क्षयिणां मनुजेश्वर!”। भा॰ आनु॰ १०४अ॰। क्षि—ताच्छील्ये इनि, ३क्षयशीले त्रि॰ “स तु तत्समवृद्धिश्च न चाभूत् ताविव क्षयी” रघुः

**क्षयिष्णु** त्रि॰ क्षि—बा॰ इष्णुच्। क्षयशीले “स्वखेदक्षयिष्णुमायामयशूकरस्य” भाग॰ ६।१२।२४ अन्तर्भूतण्यर्थोऽत्र।

**क्षय्य** त्रि॰ क्षेतुं शक्यः क्षि—शक्यार्थे यत् "क्षय्यजय्यौ शक्यार्थे" पा॰ नि॰। क्षेतुं शक्ये। शब्दक॰ क्लीवोक्तिः प्रामादिकी

**क्षर** सञ्चलने भ्वा॰ पर॰ अक॰ सेट्। क्षरति अक्षारीत्। चक्षार क्षरितः क्षरन् क्षारः। "इयं त इन्द्र! रातिं क्षरति सुन्वतः" ऋ॰८,१२,४। "मधु क्षरन्ति सिन्धवः" मधुसूक्तम्। "यज्ञोऽनृतेन क्षरति तपः क्षरति कीर्त्तनात्" "इन्द्रियाणां हि च सर्वेषां यद्येकं क्षरतीन्द्रियम्। तेनास्य क्षरति प्रज्ञा" मनुः। "त्वत्प्रसादान्महादेव! तपो मे न क्षरेत वै" भा॰ अ॰ ७॰ ११ श्लो॰। आर्षत्वात् पदव्यत्ययः। "अक्षारिषुः शरास्त्राणि तस्मिन् रक्षःपयोधराः" भट्टिः ज्वला॰ क्षरः क्षारः। उपसर्गपूर्वस्तु तदुपसर्गद्योत्यार्थयुक्ते चलने। आङ्पूर्वकः णिजन्तस्तु आक्षारणे ६॰२ पृ॰ दृश्यम्। सञ्चलनञ्च मोचनं स्रवणं चलनं स्यन्दनञ्च तत्र मोचने सक॰ अन्यत्र अक॰। तत्र मोचने "मधु क्षरन्ति सिन्धवः"। "स्रोतोभिस्त्रिदशगजा मदं क्षरन्तः" किरा॰। स्रवणे "तपः क्षरतीत्यादि प्रागुक्तम्। वेदे नि॰ तिपि क्षरिति।

**क्षर** न॰ क्षरति स्यन्दते मुञ्चति वा क्षर—ज्वला॰ वा अच्। १जले २मेघे पु॰ मेदि॰। ३चले त्रि॰ ४देहे "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" गीतोक्तेषु ५सर्वप्राणिषु तेषां स्वोपाध्यन्तःकरणचलनेन औपाधिकचलनवत्त्वात्तथात्वम् भा॰ अनु॰ १७अ॰ जीवानां क्षरणप्रकार उक्तो यथा "आयुःकीर्त्तिकराणीह यानि कृत्यानि सेवते। शरीरग्रहणे यस्मिंस्तेषु क्षीणेषु सर्वशः। आयुःक्षयपरीतात्मा विपरीतानि सेवते। बुद्धिर्व्यावर्त्तते चास्य विनाशे प्रत्युपस्थिते। सत्त्वं बलञ्च कालञ्च विदित्वा चात्मनस्तथा। अतिवेलमुपाश्नाति स्वविरुद्धान्यनात्मवान्। यदाऽयमतिकष्टानि सर्वाण्युपनिषेवते। अत्यर्थमपि वा भुङ्क्ते न वा भुङ्क्ते कदाचन। दुष्टान्नामिषपानञ्च यदन्योन्यविरोधि च। गुरु चाप्यमितं भुङ्क्ते नातिजीर्णेऽपि वा पुनः। व्यायाममतिमात्रञ्च व्यवायञ्चोपसेवते। सततं कर्म्मलोभाद्वा प्राप्तं वेगं विधारयेत्। रसाभियुक्तमन्नं वा दिवास्वप्नञ्च सेवते। अपक्वानागते काले स्वयं दोषान् प्रकोपयेत्। स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्। अपि योद्बन्धनादीनि परीतानि व्यवस्यति। तस्य तैः कारणैर्जन्तोः शरीरं च्यवते तदा। जीवितं च्यवमानं तद्यथावदुपधारय। ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः। शरीरमनुपर्य्येत्य सर्वान् प्राणान् रुणद्धि वै। अत्यर्थं बलवानूष्मा शरीरे परिकोपितः। भिनत्ति जीवस्थानानि कर्म्माणि विद्धि तत्त्वतः। ततः सवेदनो जीवः सद्यः प्रच्यवते क्षरात् (देहात्)। शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्म्मसु। वेदनाभिः परीतात्मा तद्विद्धि द्विजसत्तम!। जातीमरणसंविग्नाः सततं सर्वजन्तवः। दृश्यन्ते सन्त्यजन्तश्च शरीराणि द्विजर्षभ!। गर्भसंक्रमणे चापि कर्म्मणामतिसर्पणे। तादृशीमेव लभते वेदनां मानवः पुनः। भिन्नसन्धिरथ क्लेदमद्भिः स लभते नरः। यथा पञ्चसु भूतेषु सम्भूतत्वं नियच्छति। शैत्यात् प्रकुपितः काये तीव्रवायुसमीरितः। यः स पञ्चसु भूतेषु प्राणापाने व्यवस्थितः। स गच्छत्यूर्द्ध्वगो वायुः कृच्छ्रान्मुक्त्वा शरीरिणम्। शरीरञ्च जहात्येवं निरुच्छ्वासश्च दृश्यते। स निरूष्मा निरुच्छ्वासो निःश्रीको हतचेतनः। ब्रह्मणा सम्परित्यक्तो मृत इत्युच्यते नरः। स्रोतोभिर्यैर्विजानाति इन्द्रियार्थान् शरीरभृत्। तैरेव च विजानाति प्राणानाहारसम्भवान्। तत्रैव कुरुते काये यः स जीवः सनातनः। तथा यद्यद्भवेद्युक्तं सन्निपाते क्वचित् क्वचित्। तत्तन्मर्म्म विजानीहि शास्त्रदृष्टं हि तत्तथा। तेषु मर्म्मसु भिन्नेषु ततः स समुदीरयन्। आविश्य हृदयं जन्तोः सत्त्वञ्चाशु रुणद्धि वै। ततः सचेतनो जन्तुर्नाभिजानाति किञ्चन। तमसा संवृतज्ञानः संवृतेष्वेव मर्म्मसु। स जीवो निरधिष्ठानश्चाल्यते मातरिश्वना। ततः स तं महोच्छ्वासं भृशमुच्छ्वस्य दारुणम्। निष्क्रामन् कम्पयत्याशु तच्छरीरमचेतनम्। स जीवः प्रच्युतः कायात् कर्म्मभिः स्वैः समावृतः। अभितः स्वैः शुभैः पुण्यैः पापैर्वाऽप्युपपद्यते। ब्राह्मणा ज्ञानसम्पन्ना यथावच्छ्रुतनिश्चयाः। इतरं कृतपुण्यं वा तं विजानन्ति लक्षणैः। यथाऽन्धकारे खद्योतं लीयमानं ततस्ततः। चक्षुष्मन्तः प्रपश्यन्ति तथा च ज्ञानचक्षुषः। पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा। च्यवन्तं जायमानञ्च योनिञ्चानुप्रवेशितम्। तस्य स्थानानि दृष्टानि त्रिविधानीह शास्त्रतः। कर्म्मभूमिरियं भूमिर्यत्र तिष्ठन्ति जन्तवः। ततः शुभाशुभं कृत्वा लभते सर्वदेहिनः। इहैवोच्चावचान् भोगान् प्राप्नुवन्ति स्वकर्म्मभिः। इहैवाशुभकर्म्माणः कर्म्मभिर्निरयं गताः। अवाग्गतिरियं कष्टा यत्र पच्यन्ति मानवाः। तस्मात् सुदुर्लभो मोक्ष आत्मा रक्ष्यस्तातो भृशम्। ऊर्द्ध्वन्तु जन्तवो गत्वा ये तु स्थानेष्ववस्थिताः। कीर्त्यमानानि तानीह त-

न्ततः शृणुवबोध मे । तच्छ्रुत्वा नैष्ठिकीं बुद्धिं विन्देथाः कर्म्मनिश्चयम् । ताराहृपाणि सर्वाणि यत्रैतच्चन्द्रमण्डलम् । यत्र विभ्राजते लोके स्वभासा सूर्य्यमण्डलम् । स्थानान्येतानि जानीहि जनानां पुण्यकर्म्मणाम् । कर्म्मक्षयाच्च ते सर्वे च्यवन्ते वै पुनः पुनः । तत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमः । न च तत्रापि सन्तोषो दृष्ट्वा दीप्ततरां श्रियम् । इत्येता गतयः सर्वाः पृथक् ते समुदीरिताः । उपपत्तिन्तु वक्ष्यामि गर्भस्याहमतः परम् । तथा तन्मे निगदतः शृणुष्वावहितो द्विज !" ।

११अज्ञाने च "क्षरं त्वविद्या च स्मृतं तु विद्या" श्वेताश्व० उ० । १२परमेश्वरे "सदसत्क्षरमक्षरम्" विष्णु स० । "सर्वं खल्विदं ब्रह्मेति" श्रुतेस्तस्य सर्वभूतमयत्वात् तथात्वम् । "कार्य्यकारणरूपं तु नश्वरं क्षरमुच्यते" इत्युक्तयोः १३कार्य्यकारणयोः ।

**क्षरे(र)ज** त्रि० क्षरे जायते जन–ड वा सप्तम्या लुक् । मेघजाते

**क्षरण** न० क्षर–भावे ल्युट् । १स्रवणे २मोचने च "क्षरणात् क्षणनाद्वा क्षारः" सुश्रुतः "अङ्गुलीक्षरणसन्नविक्रमः" । कर्त्तरि ल्यु । ३क्षरणशीले त्रि० ।

**क्षरिन्** पु० क्षर–इनि । १वर्षाकाले हेमच० । २क्षरणयुक्ते त्रि० स्त्रियां ङीप् ।

**क्षल** शोधने वा चु० उभ०पक्षे भ्वा० पर० सक० सेट् । क्षालयति ते क्षलति अचिक्षलत् त अक्षालीत् । क्षालयाम् बभूव आस चकार चक्रे चक्षाल । ज्वला० क्षलः क्षालः । "कृते रवेः क्षालयितुं क्षमेत कः" माघः । "क्षालितमपि हृदयं मलिनं शोकोर्म्मिभिः क्रियते" प्रबो० । "क्षालयन्नपि वृक्षाङ्घ्रीन्नदीवेगो निकृन्तति" हितो० । भ्वादिस्तु क्षाले चयने कवि० इति भेदः । प्राद्युपसर्गपूर्व्वस्तत्तदुपसर्गद्योत्यार्थयुक्तशोधने । "गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा" भा० वि० १७अ० । "मुखं प्रक्षालयेत्ततः" स्मृतिः ।

**क्षव** पु० क्षु–भावादौ अप् । १क्षुते (हाँचि) २राजिकायां (राइसर्षा) । अमरः । ३कासे शब्दरत्ना० ।

**क्षवक** पु० क्षु–करणे अप् संज्ञायां क । १राजिकायाम् २अपामार्गे ३भूतांकुशे च राजनि० । [भावप्र० ।

**क्षवकृत्** पु० क्षवं करोति कृ–क्विप् । क्षुपभेदे (छिकनी)

**क्षवथु** पु० क्षु–अथुच् । १क्षुते (हाँचि) । २कासे च मेदि० । क्षुतलक्षणं सुश्रुते उक्तं "घ्राणाश्रिते मर्म्मणि संप्रदुष्टे यस्यानिलो नासिकया निरेति । कफानुयातो बहुशः सशब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः" । "उद्घाततोयः क्षवथुर्निरेति" सुश्रुतः । क्षतजशब्दे २३५६ पृ० उदा० ।

**क्षवपत्रा** स्त्री क्षवः क्षुतहेतुः पत्रं यस्याः । द्रोणपुष्प्याम् राजनि० तत्पत्राघ्राणे हि क्षुतं जायते । क्षरपत्रेति वा पाठः ।

**क्षविका** स्त्री क्षवः क्षुतं साध्यतयाऽस्त्यस्य ठन् । बृहतीभेदे राजनि० ।

**क्षात्र** न० क्षत्रस्य कर्म्म भावो वा–अण् । "शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म्म स्वभावजम्" गीतोक्ते १क्षत्रियकर्म्मणि । तस्येदमण् । २तत्सम्बन्धिनि त्रि० "आत्मकर्म्मक्षमं देहं क्षात्रोधर्म्म इवाश्रितः" रघुः ।

क्षतॄणां समूहः अण् । ३तत्समूहे न० "शतं क्षात्तॄ संग्रहीतानाम् पुत्राः" शत० ब्रा० १३,४,२,५, "क्षत्तारः कोषाध्यक्षाः तेषां समूहः क्षात्त्रम्" भा० ।

**क्षात्रि** त्रि० क्षत्रस्यायं जातिभिन्न इञ् । क्षत्रसम्बन्धिनि जातौ तु क्षत्रिय इत्येव ।

**क्षान्त** त्रि० क्षम–कर्त्तरि क्त । १सहिष्णौ केनचित्पीडनेऽपि सामर्थ्ये सति तत्प्रतीकारपराङ्मुखे । कर्म्मणि क्त । २सोढे । ३निर्वैरो निर्वृतिः क्षान्तो निर्म्मन्युः क्रविरेव च । विघसो मातृवर्त्ती च व्याधाः परमधार्म्मिकाः" हरिव० २१अ० उक्ते सप्तव्याधमध्ये ३व्याधभेदे । ते च गुरोर्गोहरणात् क्रमेण कृष्णचक्रवाकादियोनिमाप्ताः तत्रैव तत्कथा । क्षान्ताशब्दे परे प्रिया० कर्म्मधारये न पुंवत् । परमाक्षान्ता । उत्करा० चतुरर्थ्यां छ । क्षान्तीय तन्निर्वृत्तादौ त्रि० । ४ऋषिभेदे पु० । क्षान्तस्य गोत्रापत्यम् अश्वा० फञ् । क्षान्तायन तदृषिगोत्रापत्ये पुंस्त्री० ।

**क्षान्ति** स्त्री क्षम–भावे क्तिन् । क्षमायाम् सामर्थ्ये सत्यप्यपकारिणोऽप्यपकाराचिकीर्षायाम् । "क्षान्त्या शुध्यन्ति विद्वांसः" मनुः । "शमोदमस्तपः शौचं क्षान्तिरार्ज्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजम्" गीता "शमोदमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् । ज्ञानं दयाच्युतात्मत्वं सत्यञ्च ब्रह्मलक्षणम्" भाग० ७।११ २२

**क्षान्तु** पु० क्षम–तुन् वृद्धिश्च । १क्षमाशीले उणादिकोषः २पितरि ए० संक्षिप्तसा० ।

**क्षाम** त्रि० क्षै–कर्त्तरि क्त । १क्षीणे २अल्पे शब्दरत्ना० "क्षामोविवर्णवक्त्रश्च नखैः किञ्चिच्छिनत्त्यपि" । "क्षामेण मृदुकोष्ठेन मन्दाग्निना" सुश्रुतः "क्षामच्छायं भवनमधुना मद्वियोगेन नूनम्" "मध्ये क्षामा चकितहरिणीप्रेक्षणा नि-

क्ष्णाभिः" मेघ०। अतिसूक्ष्मत्वात् ३परमेश्वरे "नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः" विष्णुस०। "क्षामा भिन्दन्तो अरुणीरपव्रन्" ऋ० ४।२।१६।४धरायां स्त्री निघ०। भावे क्त ५क्षये न०

**क्षामन्** त्रि० क्षै-मनिन्। १क्षयशीले २पृथिव्यां निघ०। "क्षपा क्षामन् रुरुच उषसो न भानुना" यजु० १७,१०, "तेन इन्द्रः पृथिवी क्षाम वर्द्धन्" ऋ० ५,५१,११। हिरण्ययं शकुनं क्षामणि स्थाम्" ६,८५,११

**क्षामवत्** त्रि० क्षामं दोषक्षयः साध्यतयाऽस्त्यस्य मतुप् मस्य वः। १अग्निभेदे। "अष्टकपालोऽग्नये क्षामवते पुरोडाशः" कात्या० श्रौ०। २इष्टिभेदे स्त्री। "क्षामवत्यादिना यद्यत्कर्म्म का छतनापते!। दैवदोषादकरणे जाते दोषकदम्बके। होमेनैकेन दोषाणां सर्व्वेषां क्षयमादिशेत्"। एवञ्चैकप्रायश्चित्तेनानेकदोषक्षये क्षामवतीष्टिः सर्व्वत्र दृष्टान्तः" प्रा० त०।

**क्षामास्य** न० क्षामस्य क्षयस्यास्य स्थानम्। कुपथ्ये "अपथ्यमहितं रोग्यं क्षामास्यं परिकीर्त्तितम्" शब्दच०। क्षमस्यमिति वा पाठः पृषो०।

**क्षार** त्रि० क्षर-ज्वला० वा ण। १क्षरणशीले। २लवणरसे ३धूर्त्ते ४लवणे ५भस्मनि च पु० मेदि० ५गुडे हेम० ६टङ्कणे ७सर्जिकाक्षारे पु० राजनि०। ७विडलवणे ८यवक्षारे च न० त्रिका०। चक्रदत्तोक्ते ९भस्मभेदजाते औषधभेदे यथा "प्रशस्तेऽहनि नक्षत्रे कृतमङ्गलपूर्व्वकम्। कालमुष्ककमाहृत्य दग्ध्वा भस्म समाहरेत्। आढ़कन्त्वेकमादाय जलद्रोणे पचेद्भिषक्। चतुर्भागावशिष्टेन वस्त्रपूतेन वारिणा। शङ्खचूर्णस्य कुड़वं प्रक्षिप्य विपचेत् पुनः। शनैःशनैर्दृढ़ावग्नौ यावत् सान्द्रतनुर्भवेत्। सर्जिकायवशूकाभ्यां शुण्ठी मरिचपिप्पली। वचा चातिविषा चैव हिङ्गुचित्रकयोस्तथा। एषां चूर्णानि निक्षिप्य प्रत्येकेनाष्टमांशकम्। दर्व्या संघट्टितश्चापि स्थापयेदायसे घटे। एष वह्निसमः क्षारः कीर्त्तितः काश्यपादिभिः। तोये कालकमुष्कस्य विपन्नेद्भ्राढ़कं षड्गुणे पात्रे लोहमये दृढ़े विपुलधीर्दर्व्या शनैर्घट्टयन्। दग्ध्वाग्नौ बहुशङ्खनाभिशकलान् पूताम्भसि क्षिपेत् यद्योरसत्त्वजनालमेव दहति क्षारो वरो काश्यपात्। प्रायश्चित्तभावविशिष्टेऽग्निचक्रपश्चिमस्थरत्नता। संजायते तदा साव्यं क्षाराग्नो प्राह्यमिष्यते। तुर्य्येणाष्टमकेन षोडशभवेनांशेन संयुहितो मध्यः अपरः इति क्रमेण त्रिविधः क्षारो दकाच्छङ्खकः। योऽतिसान्द्रो नातितनुः क्षारपाक उदाहृतः। दुर्नामकादौ निर्द्दिष्टः क्षारोऽयं प्रतिसारणः। पानीयो यस्तु गुल्मादौ तं क्षारानेकविंशतम्। स्रावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे"।
यवक्षारादिविशेषगुणाः सुश्रुते उक्ता यथा
"यवक्षारसर्जिकाक्षारपाकिमटङ्कणक्षाराः। गुल्मार्शोग्रहणीदोषशर्कराश्मविनाशनाः। क्षारास्तु पाचनाः सर्वे रक्तपित्तकराः स्मृताः। ज्ञेयौ वह्निसमौ क्षारौ सर्जिकायावशूकजौ। शुक्रश्लेष्मविबन्धार्शोगुल्मप्लीहविनाशनौ। उष्णोऽनिलघ्नः प्रक्लेदी जपक्षारो क्लमापहः। मेदोघ्नः पाकिमः क्षारो मूत्रवस्तिविशोधनः। विरूक्षणोऽनिलकरः श्लेष्मघ्नः पित्तदूषणः। अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणः क्षार उच्यते"। मेदिन्युक्ते भस्म च शुष्ककदलीत्वगादिभस्म तच्च रजकस्य वस्त्रशोधकद्रव्यम्। "यथा क्षारोदकैर्निर्णेजनाभिर्वासांसि शुद्धिमुपयन्ति" प्रा० त० हारीतः। कालभेदे वस्त्रे क्षारयोजननिषेधमाह स्मृतिः "द्वादश्यां पञ्चदश्योरन्ते संक्रान्त्यां श्राद्धवासरे। वस्त्रं न पीडयेत्तत्र न च क्षारेण योजयेत्"। ततः उत्करा० चतुरर्थ्यां छ। क्षारीय तत्सन्निकृष्टदेशादौ त्रि०

**क्षारक** पु० क्षर-ण्वुल्। १अचिरजाते फले (जालि) अमरः। २पक्षमीनादिपिठके (खाचा) मेदि०। क्षारस्य मद्योजनाय साधु कन्। ३रजके शब्दमा०।

**क्षारगुड** पु० क्षारेण पक्वः गुडः शा० त०। च० द० उक्ते क्षारपक्वे गुडभेदे यथा
"पञ्चमूलं च त्रिफलामर्कमूलं शतावरीम्। दन्तीं चित्रकमास्फोतां रास्नां पाठां सुधां शठीम्। पृथग्दश पलान् भागान् दग्ध्वा भस्म समावपेत्। त्रिःसप्तकृत्वस्तद्भस्म जलद्रोणेन गालयेत्। तद्रसं साधयेदग्नौ चतुर्भागावशेषितम्। ततो गुड़तुलां दत्त्वा साधयेन्मृदुनाग्निना। सिद्धं गुड़न्तु विज्ञाय चूर्णानीमानि दापयेत्। वृश्चिकालीं द्विकाकल्यौ यवक्षारं समां वचाम्। एतत् पञ्चपला भागाः पृथक् पञ्च पलानि च। हरीतकीं त्रिकटुकं सर्जिकां चित्रकां वचाम्। हिङ्ग्वम्लवेतसाभ्याञ्च द्वे पले तत्र दापयेत्। अक्षप्रमाणां गुटिकां कृत्वा खादेद्यथाबलम्। अजीर्णं जरयत्येष जीर्णं सन्दीपयत्यपि। भुक्तं भुक्तञ्च जीर्य्येत पाण्डुत्वमपकर्षति। प्लीहार्शःश्वयथुञ्चैव श्लेष्मकासमरोचकम्। मन्दाग्निविषमाग्नीनां कफे कण्ठोरसि स्थिते। कुष्ठानि च प्रमेहाणां गुल्मञ्चाशु नियच्छति।

ख्यातः क्षारगुडो ह्येष रोगयुक्तो प्रयोजयेत्" ।

**क्षारतैल** न० चक्र०उक्ते कर्णशूलनिवारके १पक्वतैलभेदे यथा "बालमूलकशुण्ठीनां क्षारो हिङ्गु सनागरम् । शतपुष्पवचाकुष्ठं दारुशिग्रुरसाञ्जनम् । सौवर्च्चलं यवक्षारः सर्जिकोद्भिदसैन्धवम् । भूर्जग्रन्थिविडं मुस्तं मधुशुक्तं चतुर्गुणम् । मातुलुङ्गरसश्चैव कदल्या रस एव च । तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम् । बाधिर्यं कर्णनादश्च पूयस्रावश्च दारुणः । पूरणादस्य तैलस्य क्रिमयः कर्णसंश्रिताः । क्षिप्रं विनाशं गच्छन्ति कृष्णात्रेयस्य शासनात् । क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् । मधुप्रधानं शुक्तन्तु मधुशुक्तं तथोच्यते । जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम् । मधुभाण्डे विनिःक्षिप्य धान्यराशौ निधापयेत् । मासेन तज्जातरसं मधुशुक्तमुदाहृतम्" । गारुडे १८०अ० इत्थमेव । तत्रोक्ते निर्लोमता दिसाधने २तैलभेदे च यथा "शुक्तिशम्बूकशङ्खानां दीर्घवृन्तात् समुष्ककात् । दग्ध्वा क्षारं समादाय खरमूत्रेण गालयेत् । क्षाराष्टभागं विपचेत् तैलस्य सार्षपं बुधः । इदमन्तःपुरे देयं तैलमात्मेषु पूजितम् । बिन्दुरेकः पतेद्यत्र तत्र रोमापुनर्भवः । अर्शादिव्रणे देयमश्विभ्यां विनिर्म्मितम् । अर्शसां कुष्ठरोगाणां पामादद्रुविचर्च्चिकाम् । क्षारतैलमिदं श्रेष्ठं सर्वकुष्ठहरं परम् ।"

**क्षारत्रय** न० ६त० "सार्जिकश्च यवक्षारः टङ्कणक्षारएव च क्षारत्रयश्च विक्षारम् क्षारत्रितयमेव च" राजनि० । उक्ते क्षारद्रव्यत्रये [राजनि०

**क्षारदला** स्त्री क्षारोदलेऽस्याः । चिल्लीशाके क्षुद्रवास्तूके

**क्षारदशक** न० ६त० । "शिग्रुमूलकपलाशचुक्रिका चित्रकार्द्रक कनिम्बसम्भवैः । इक्षुगोक्षुरिकमोचकोद्भवैः क्षारपूर्वदशकं प्रकीर्त्तितम्" राजनि० उक्ते दशविधक्षारद्रव्ये

**क्षारदेश** पु० क्षारप्रधानोदेशः शा० त० । क्षारप्रधाने देशे "जीवनं जीवनं हन्ति प्राणान् हन्ति समीरणः । किमाश्चर्यं क्षारदेशे प्राणदा यमदूतिका" उद्भटः

**क्षारद्रु** पु० क्षारप्रधानोद्रुः । घण्टापाटलिवृक्षे रत्नमा०

**क्षारनदी** स्त्री क्षारप्रधाना नदी । नरकविशेषस्थे नदीभेदे

**क्षारपत्र** पु०क्षारः पत्रेऽस्य । वास्तूकशाके राजनि०वा कप् । तत्रार्थे हेमच०

**क्षारपाक** पु० सुश्रुतोक्ते क्षारद्रव्यस्य पाकभेदे तत्र क्षारभेदस्य गुणप्रयोगादिकमुक्त्वा तत्पाकविधिरुक्तो यथा "अथातः क्षारपाकविधिमध्यायं व्याख्यास्यामः । शस्त्रानुशस्त्रेभ्यः क्षारः प्रधानतमश्छेद्यभेद्यलेख्यकरणात्त्रिदोषघ्नत्वाद्विशेषक्रियावचारणाच्च । तत्र क्षरणात् क्षणनाद्वा क्षारः । नानौषधिसमवायात्त्रिदोषघ्नः शुक्लत्वात्सौम्यस्तस्य सौम्यस्यापि सतो दहनपचनदारणादिशक्तिरविरुद्धा स आग्नेयौषधिगणभूयिष्ठत्वात् कटुक उष्णस्तीक्ष्णः पाचनो विलयनः शोधनो रोपणः शोषणः स्तम्भनो लेखनः कृम्यामयकफकुष्ठविषमेदसामुपहन्ता पुंस्त्वस्य चातिसेवितः । स द्विविधः प्रतिसारणीयः पानीयश्च । तत्र प्रतिसारणीयः कुष्ठकिटिभदद्रुकिलासमण्डलभगन्दरार्बुददुष्टव्रणनाडीचर्म्मकीलतिलकालकन्यच्छव्यङ्गमशकबाह्यविद्रधिकृमिविषार्शःसूपदिश्यते सप्तसु च मुखरोगेषूपजिह्वाधिजिह्वोपकुशदन्तवैदर्भेषु तिसृषु च रोहिणीष्वेतेषु चैवानुशस्त्रप्रणिधानमुक्तम् । पानीयस्तु गरगुल्मोदराग्निसङ्गाजीर्णारोचकानाहशर्कराश्मर्य्याभ्यन्तरविद्रधिकृमिविषार्शःसूपयुज्यते । अहितस्तु रक्तपित्तज्वरितपित्तप्रकृतिबालवृद्धदुर्बलभ्रममदमूर्च्छातिमिरपरीतेभ्योऽन्येभ्यश्चैवंविधेभ्यः । तस्येतरक्षारवद्दग्ध्वा परिस्रावयेत्तस्य विस्तारोऽन्यत्र । स च त्रिविधो मृदुर्मध्यस्तीक्ष्णश्च । तं चिकीर्षुः शरदि गिरिसानुजं शुचिरुपोष्य प्रशस्तेऽहनि प्रशस्तदेशजातमनुपहतं मध्यमवयसं महान्तमसितमुष्ककमधिवास्यापरेद्युः पाटयित्वाभिमन्त्र्यानेन मन्त्रेण । अग्निवीर्य्य ! महावीर्य्य ! मा ते वीर्य्यं प्रणश्यतु । इहैव तिष्ठ कल्याण ! मम कार्य्यं करिष्यसि । मम कार्य्ये कृते पश्चात् स्वर्गलोकं गमिष्यसि । श्वेतपुष्परक्तपुष्पसहस्रं जुहुयात् । खण्डशः प्रकल्प्यावपाते देशे निचितं कृत्वा सुधाशर्कराश्च प्रक्षिप्य तिलनालैरादीपयेदथोपशान्तेऽग्नौ तद्भस्म पृथग्गृह्णीयाद्भस्मशर्कराश्च । अथानेनैव विधानेन कुटजपलाशाश्वकर्णपारिभद्रकविभीतकारग्वधविल्वकार्कस्नुह्यपामार्गपाटलानक्तमालवृषकदलीचित्रकपूतीकेन्द्रवृक्षास्फोताश्वमारकसप्तच्छदाग्निमन्थान् गुञ्जाश्चतस्रश्च कोशातकीः समूलफलपत्रशाखा दहेत् । ततः क्षारद्रोणमुदकद्रोणैः षड्भिरालोड्य मूत्रैर्वा यथोक्तैरेकविंशतिवारान् विस्राव्य महति कटाहे शनैर्दर्व्या विघट्टयन् विपचेत् । स यदा भवत्यच्छो रक्तस्तीक्ष्णः पिच्छिलश्च तमादाय महति वस्त्रे परिस्राव्येतरं विसृज्य च पुनरग्नावधिश्रयेत् । तत एव च क्षारोदकात् कुडवमध्यर्द्धं वाऽपनयेत् । ततः कटशर्कराभस्मशर्कराक्षीरपाकशङ्खनाभीरग्निवर्णाः कृत्वाऽऽयसे

पात्रे तस्मिन्नेव क्षारोदके निषिच्य पिष्ट्वा तेनैव द्विद्रोणेऽष्टपलसम्मितं शङ्खनाभ्यादीनां प्रमाणं प्रतिवाप्य सततमप्रमत्तश्चैनमवघट्टयन् विपचेत्। स यथा नातिसान्द्रो नातिद्रवश्च भवति तथा प्रयतेत। अथैनमवगतपाकमवतार्य्यानुगुप्तमायसे कुम्भे संवृतमुखे निदध्यादेष मध्यमः। एष एवाप्रतीवापः पक्वः संव्यूहितो मृदुः। प्रतीवापे यथालाभं दन्तीद्रवन्तीचित्रकलाङ्गलकीपूतिकाप्रवालतालपत्रीविडसुवर्चिकाकनकक्षीरीहिङ्गुवचातिविषाः समाः श्लक्ष्णचूर्णाः शुक्तिप्रमाणाः प्रतीवापः। स एव सप्रतीवापः पक्वः पाक्यस्तीक्ष्णस्तेषां यथाव्याधिबलमुपयोगः। क्षीणबले तु क्षारोदकमावपेद्बलकरणार्थम्। भवतश्चात्र। नैवातितीक्ष्णो न मृदुः शुक्लः श्लक्ष्णोऽथ पिच्छिलः। अभिष्यन्दी शिवः शीघ्रः क्षारो ह्यष्टगुणः स्मृतः। अतिमार्दवशैत्यौष्ण्यतैक्ष्ण्यपैच्छिल्यसर्पिताः। सान्द्रताऽपक्वता हीनद्रव्यता दोष उच्यते। तत्र क्षारसाध्यव्याधिव्याधितमुपवेश्य निवाते देशेऽसम्बाधेऽग्रोपहरणीयोक्तेन विधानेनोपसम्भृतसम्भारं ततोऽस्य तमवकाशं निरीक्ष्यावघृष्यावलिख्य प्रच्छयित्वा शलाकया क्षारं पातयित्वा वाक्शतमात्रमुपेक्षेत। तस्मिन्निपतिते व्याधौ कृष्णता दग्धलक्षणम्। तत्राम्लवर्गः शमनः सर्पिर्मधुकसंयुतः। अथ चेत् स्थिरमूलत्वात् क्षारं दग्धं न शीर्य्यते। इदमालेपनं तत्र समग्रमवचारयेत्। "अम्लकाञ्जिकबीजानि तिलान्मधुकमेव च। प्रपिष्य समभागानि तेनैवमनुलेपयेत्। तिलकल्कः समधुको घृताक्तो व्रणरोपणः। रसेनाम्लेन तीक्ष्णेन वीर्य्योष्णेन च योजितः। आग्नेयेनाग्निना तुल्यः कथं क्षारः प्रशाम्यति। एवं चेन्मन्यसे वत्स! प्रोच्यमानं निबोध मे। कटुवर्ज्जान् रसान् क्षारे सर्व्वानेव विभावयेत्। कटुकस्तत्र भूयिष्ठो लवणानुरसस्तथा। अम्लेन सह संयुक्तः स तीक्ष्णलवणो रसः। माधुर्य्यं भजतेऽत्यर्थं तीक्ष्णभावं विमुञ्चति। माधुर्य्याच्छमनमाप्नोति वह्निरद्भिरिवाप्लुतः। तत्र सम्यग्दग्धे विकारोपशमो लाघवमनास्रावश्च। हीनदग्धे तोदकण्डूजाड्यानि व्याधिवृद्धिश्च। अतिदग्धे दाहपाकरागस्रावाङ्गमर्दक्लमपिपासामूर्च्छा मरणं वा। क्षारदग्धव्रणन्तु यथादोषं यथाव्याधि चोपक्रमेत्। तथा नैतेषु क्षारकृत्याः। तद्यथा दुर्बलबालस्थविरभीरुसर्वाङ्गशूनोदरिरक्तपित्तिगर्भिण्यृतुमतीप्रवृद्धज्वरिप्रमेहिरूक्षक्षतक्षीणतृष्णामूर्च्छोपद्रुतक्लीबापवृत्तोद्वृत्तफलयोनयः। तथा मर्म्मशिरास्नायुसन्धितरुणास्थिसेवनीगलनाभीनखान्तरशेफःस्रोतःस्वल्पमांसेषु च प्रदेशेष्वक्ष्णोश्च न दद्यादन्यत्र वर्त्मरोगात्। तत्र क्षारसाध्येष्वपि व्याधिषु शूनगात्रमस्थिशूलिनमन्नद्वेषिणं हृदयसन्धिपीडोपद्रुतं क्षारो न साधयति"।

**क्षारभूमि** स्त्री क्षारयुक्ता भूमिः। क्षाराम्बुधिसमीपस्थभूमौ

**क्षारमध्य** पु० क्षारो मध्येऽस्य। अपामार्गे रत्ना०

**क्षारमृत्तिका** स्त्री क्षारसंयुक्ता मृत्तिका। ऊषरस्थाने। अमरः। [राजनि०

**क्षारमेलक** पु० क्षाराणां मेलः संघः स्वार्थे क। क्षारसमूहे

**क्षारमेह** पु० सुश्रुतोक्ते पित्तजे मेहभेदे "पित्तान्नीलहरिद्राम्लक्षारमञ्जिष्ठाशोणितमेहाः षट् साध्याः" सुश्रु० "क्षारमेहिनं त्रिफलाकषायम्" सुश्रुतः

**क्षारवृक्ष** पु० क्षारप्रधानो वृक्षः। मुष्ककवृक्षे राजनि०

**क्षारश्रेष्ठ** न० क्षारः श्रेष्ठोऽत्र। १पलाशे २मुष्कके च राजनि०

**क्षारषट्क** न० ६त०। "धवापामार्गकुटजलाङ्गलीतिलमुष्ककैः। क्षारैरेतैस्तु मिलितैः क्षारषट्कादिको गणः। राजनि० उक्ते क्षारद्रव्यषट्के।

**क्षारसमुद्र** पु० क्षारप्रधानः समुद्रः। लवणसमुद्रे "सीता तु ब्रह्मसदनात् केशराचलादिशिखरेभ्योऽधोधः प्रस्रवन्ती गन्धमादनमूर्द्धसु पतित्वाऽन्तरेण भद्राश्वं वर्षं प्राच्यां दिशि क्षारसमुद्रमभि प्रविशति" भाग० ५।१७८। क्षारसिन्धु क्षाराम्बुधिप्रभृतयोऽप्यत्र "भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बुद्वीपं प्राहुराचार्य्यवर्य्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः" सि०शि०।

**क्षारसूत्र** न० चक्र० द० उक्ते क्षारभाविते सूत्रभेदे "भावितं रजनीचूर्णैः स्नुहीक्षीरे पुनः पुनः। बन्धनात् सुदृढं सूत्रं भिनत्त्यर्शोभगन्दरम्"।

**क्षारागद** पु० सुश्रुतोक्ते औषधभेदे यथा

"धवाश्वकर्णतिनिशपलाशपिचुमर्दपाटलिपारिभद्रकाम्रोडुम्बरकरहाटकार्जुनककुभसर्ज्जकपीतनश्लेष्मातकाङ्कोठामलकप्रग्रहकुटजशमीकपित्थाश्मन्तकार्कचिरबिल्वमहावृक्षारुष्करारलुमधुकमधुशिग्रुशाकगोजीमूर्व्वातिल्वकेक्षुरकगोपघण्टारिमेदानां भस्मान्याहृत्य गवां मूत्रेण क्षारकल्पेन परिस्राव्य विपचेद्दद्याच्चात्र पिप्पलीमूलतण्डुलीयकवराङ्गचोचकमञ्जिष्ठाकरञ्जिकाहस्तिपिप्पलीमरिचोत्पलसारिवाविडङ्गगृहधूमानन्तासोमसरलावाह्लीकगुहाकोशाम्रश्वेतसर्षपलवणक्षारनिचुलकवर्द्धमानयष्ट्याह्वपुक्षुरवीरसप्तपर्णटण्डुकैलवालुकनागदन्त्यतिविषाभयाभद्रदारुकुष्ठहरि-

द्रास्त्वाचूर्णानि लोहानाञ्च समभागानि ततः क्षारवदा-गतपाकमवतार्य्य लोहकुम्भे निदध्यात् । अनेन दुन्दुभिं लिम्पेत् पताकातोरणानि च । श्रवणाद्दर्शनात् स्पर्शात् विषात् सम्प्रतिमुच्यते । एष क्षारागदो नाम शर्कराश्मशरीषु च । अर्शःसु वातगुल्मेषु कासमूलोदरेषु च । अजीर्णे ग्रहणीदोषे भक्तद्वेषे च दारुणे । शोफे सर्व्वसरे चापि देयः श्वासे च दारुणे । एष सर्वविषार्त्तानां सर्व्वथैवोपयुज्यते । तथा तत्तत्कमुख्यानामयं दर्पाङ्कुशोऽगदः"।

**क्षाराच्छ** न० क्षारेणाच्छम् । सामुद्रलवणे हारा० ।

**क्षारिका** स्त्री क्षर-ण्वुल् टाप् अतइत्वम् । क्षुधायां हारा०

**क्षारित** त्रि० क्षर-णिच्-क्त । १अपवाददत्ते, "प्राप्तदोषे, अमरः २स्रावित मेदि०

**क्षारोद(क)** पु० क्षारमुदकमस्य वा उदादेशः । लवणसमुद्रे "क्षारोदेक्षुरसोदसुरोदघृतोदक्षीरोददधिमण्डोदशुद्धोदाः सप्त जलधयः" भाग० ५।१०।१५ श्लो० "क्षारोदधिरप्यत्र "जम्बुद्वीपोऽयं यावत्प्रमाणविस्तारस्तावता क्षारोदधिः" भाग० ५।२०,२श्लो०

**क्षाल** त्रि० क्षल-शोधने ज्वला० १कर्त्तरि ण । शोधनकर्त्तरि

**क्षालन** न० क्षल-भावे ल्युट् । शोधने "स्त्रीशूद्रौ प्रयतौ नित्यं क्षालनाच्च करौष्ठयोः" आ० त० ब्रह्मपु० "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" नीतिसा०

**क्षालित** त्रि० क्षल-क्त । १शोधिते कृतप्रक्षालने च । "क्षालितं तु शमितस्तु वधूनां द्रावितं तु हृदयं मधुवारैः" माघः

**क्षि** क्षये अक० ऐश्वर्ये सक० भ्वा० पर० अनिट् । क्षयति अक्षैषीत् चिक्षाय क्षीयात् । क्षीणः क्षितिः । क्षयः । क्षयन् क्षेतुम् । भावे दैन्ये आक्रोशे च निष्ठातस्य वा नः दीर्घो वा । तत्र दैन्ये क्षितं क्षीणं वा तपस्विना । आक्रोशे क्षितायुः क्षीणायुः भूयात् । "क्षयन्तमस्य रजसः पराके" ऋ०७,१००,१५, "यस्मिन् क्षयन्ति प्रदिवः" अथ०१२,२,१, "ताहि मध्यं भराणामिन्द्राग्नी अधिक्षितः" ऋ०८,४०, २, कर्म्मकर्त्तरि क्षीयते "अपक्षीयते नश्यति" यास्कः "क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" कठो० । "शरीरकर्षणात्प्राणाः क्षीयन्ते प्राणिनां यथा । तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात्" मनुः

**क्षि** हिंसायां स्वा० पर० सक० अनिट् । क्षिणोति, क्षिणुतः क्षिण्वः-क्षिणुवः । अक्षैषीत् । चिक्षाय । "खटिनी क्षिणोति" नैष० । "यन्मां हृदन्वाक्यशल्यैः क्षिणोषि" भा० व० २४अ० । "सिंहीवैनं भूत्वा क्षिणोति" शत० ब्रा० ३।५।१।२५। अयं क्र्यादिरपि तदर्थे । "क्षिणामि ब्रह्मणामित्रान्" अथ० ३।१९।३।

**क्षि** वासे अक० गतौ सक० तु० प० अनिट् । क्षियति । अक्षैषीत् चिक्षाय । "अन्तरीक्षं पृथिवीं क्षियन्ति" तैत्ति० २,१,१,७, "मनुष्यं न दीन उदनि क्षियन्तम्" ऋ०१०,६८,८, वेदे गणव्यत्ययात् क्वचित् शपो लुक् । "जयति क्षेति पुष्यति" ऋ० ७,३२।९। "क्षेति क्षेमेभिः साधुभिः" ८।७३।९।

**क्षि** त्रि० क्षि-बा० डि । १निवासे २गतौ ३क्षये च मेदि० ।

**क्षिण** हिंसायां तना० उभ० सक० सेट् । क्षिणोति क्षिणुते अक्षणीत् अक्षणिष्ट । चिक्षाण चिक्षिणे ।

**क्षित** त्रि० क्षि-हिंसायां कर्म्मणि क्त । १हिंसिते । भावे क्त २हिंसायां न०

**क्षिति** स्त्री क्षि-निवासे आधारे क्तिन् । १भूमौ, "निपीय यस्य क्षितिरक्षिणः कथाम्" नैष० । भावे क्तिन् । २निवासे क्षि-क्षये भावे-क्तिन् । ३क्षये, कर्त्तरि क्तिच् । ४रोचनाख्यगन्धद्रव्ये शब्दच०५मनुष्ये निघ०।। "इन्द्र ! प्रराजसि क्षितीः" ऋ० ८,६,२६ "क्षतीर्मनुष्यान्" भा० ! "प्रजासु ता नः क्षितीः करतमूर्जयन्तीम्" ऋ०७,६६,२, "ध्रुवासु क्षितिषु क्षियन्तः" ऋ० ७,८८,७, "दस्म क्षितीर्मानुषीर्बोधयन्ती" ७,७९,१। "क्षितीर्हि सा" अथ०१२,५,१६ । क्षि क्षये आधारे क्तिन् । ६प्रलयकाले मेदि० । क्षितिशब्दनिरुक्तिः ब्रह्मवै०पु०प्रा-ख०७अ० । "महालये क्षयं याति क्षितिस्तेन प्रकीर्त्तिता"। अस्मिन्पक्षे कर्त्तरि क्तिच् इति भेदः ।

**क्षितिकण** पु० ६त० । धूलौ त्रिका० ।

**क्षितिकम्प** पु० ६त० । क्षितिधरायाः चलननिमित्ते भूमेः कम्पे तत्र विशेषः अद्भुतसागरे "मेषे वृश्चिकभे गजः प्रचलति व्यासादिभिः कथ्यते, चापे मीनकुलीरभे च वृषभे सत्यं चलेत् कच्छपः । यूके कुम्भधरे मृगेन्द्रमिथुने कन्यामृगे पन्नगस्तेषामेकतमो यदि प्रचलति क्षोणी तदा कम्पते । कच्छपे मरणं ज्ञेयं मरणञ्चापि पन्नगे । सर्व्वत्र सुखदश्चैव पृथिव्यां चलिते गजे । प्रथितनरेश्वरमरणं व्यसनान्याग्नेयमारुतयोः । क्षुद्भयमतिवृष्टिभिरुपपीड्यन्ते जनाश्चापि । त्रिचतुर्थपञ्चमदिने मासे पक्षे त्रिपक्षके । भवति यदा भूकम्पः प्रधाननृपनाशनं कुरुते" । "क्षितिभृदिव क्षितिकम्पकीर्णशृङ्गः" भट्टिः ।

**क्षितिक्षम** पु० क्षितौ क्षमते क्षम-अच् । खदिरवृक्षे राजनि०

**क्षितिक्षित्** पु० क्षितिमीष्टे क्षि ऐश्वर्ये क्विप् । भूमीश्वरे-

राजनि। "अपदान्तरञ्च परितः क्षितिक्षिताम्" माघः। मही क्षदादयोऽप्यत्र।

क्षितिज पु० क्षितेर्जायते जन–ड। १मङ्गले "क्षितिजान्तर्जं गतः" ज्यो०। २नरकासुरे। ३भूनागे उपरसभेदे राजनि०। ४महीरुहे वृक्षे च। ५भूमिजाते त्रि० सि०शि० गोलबन्धाधिकारोक्ते वृत्तभेदभेदे यथा "पूर्वापरं विरचयेत् सममण्डलाख्यं याम्योत्तरं च विदिशोर्वलयद्वयं च। ऊर्ध्वाध एवमिह वृत्तचतुष्कमेतदावेष्ट्य तिर्यगपरं क्षितिजं तदर्धे" सि०शि०।

"एकं पूर्वापरसन्धयाम्योत्तरं तथा कोणवृत्तद्वयमेवं वृत्तचतुष्टयमूर्ध्वाधोवृत्तमावेष्ट्य तदर्धे वृत्तं क्षितिजाख्यं निवेशयेत्। अत्र याम्योत्तरवृत्त उत्तरक्षितिजादुपरि पलांशान्तर एकं ध्रुवचिह्नं कार्यम्। दक्षिणक्षितिजादधोऽन्यत्। इदानीमुन्मण्डलमाह" प्रमि०।

"पूर्वापरक्षितिजसंगमयोर्विलग्नं याम्ये ध्रुवे पललवैः क्षितिजादधःस्थे। सौम्ये कुजादुपरि चाचलवैर्ध्रुवे तदुन्मण्डलं दिननिशोः क्षयवृद्धिकारि" सि०शि०।

"समवृत्तक्षितिजयोर्यौ पूर्वापरौ संपातौ तयोर्ध्रुवचिह्नयोश्च सक्तं यन्निबध्यते तदुन्मण्डलसंज्ञम्। दिनरात्र्योर्वृद्धिक्षयौ तद्वशेन भवतः" प्र०।

क्षितिजन्तु पु० क्षितेर्जन्तुरिव। भूनागे उपरसभेदे राजनि०।

क्षितिदेव पु० क्षितौ देव इव पूज्यत्वात्। ब्राह्मणे क्षितिदेवतादयोऽपि तत्रार्थे। "अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः" आ० त० पराशरः।

क्षितिधर पु० क्षितिं धारयति धृ–णिच् अच् ह्रस्वः। १पर्वते "क्षितिधरपतिकन्यामाददानः करेण" कुमा०। २कूर्मा वासुकिदिग्गजेषु च हला०। [राजनि०।

क्षितिनाग पु० क्षितिजातो नागः। उपरसभेदे भूनागे

क्षितिनाथ पु० ६त०। भूमिपाले राजनि क्षितिपत्यादयोऽप्यत्र। "क्षितिपतिमण्डलमन्यतो वितानम्" रघुः।

क्षितिप पु० क्षितिं पाति पा–क। भूपाले राजनि "क्षितिपः चयिनोऽद्रुताम्बकः" माघः। "क्षितिपसमाजमगात् स्वयंवरस्थम्" रघुः। "अहंयुनाऽथ क्षितिपः शुभंयुः" भट्टिः।

क्षितिपाल पु० क्षितिं पालयति पालि–अण् उप०स०। महीपालके राजनि "शिलोच्चयोऽपि क्षितिपालमुच्चैः" रघुः। ण्वुल्। क्षितिपालकोऽप्यत्र। "हताहतेभ्यः क्षितिपालभागभ्यः" भट्टिः। "क्षितिपालं भजन्ते यानि दूतमुखेष्वादीनि तेभ्यः क्षितिपालभागभ्यः" जयम०। अत्र शब्दक० क्षितिपालभाकशब्दस्य राजार्थकत्वकल्पनमतीव प्रामादिकम्।

क्षितिपुत्र पु० ६त०। १मङ्गलग्रहे २नरकासुरे च तयोस्तत्पुत्रत्वकथा आत्रेयशब्दे ८२६ पृ० कुजशब्दे २०६० पृ० दर्शिता "स मानुषेण मानेन क्षितिपुत्रः (नरकासुरः) शतं समाः" कालिकापु०३८अ०। क्षितितनयादयोऽप्यत्र।

क्षितिभृत् पु० क्षितिं बिभर्ति धारयति पालयति भृ धारणपोषणयोः क्विप्। भूधरे १पर्वते "क्षितिभृद्दिव क्षितिकम्पकीर्णशृङ्गः" भट्टिः। २महीपाले राजनि। "अधुना धनैः क्षितिभृतोऽनिभृताः" किरा०। भूभृदादयोऽप्यत्र। "प्रमथितभूभृतः प्रतिपदं मथितस्य भृशं महीभृता" माघः।

क्षितिरन्ध्र न० ६त०। गर्ते शब्दचि०।

क्षितिरुह पु० रोहति रुह–क ७त०। वृक्षे हेम०। "क्षितिरुहपल्लवपुष्पकर्णपूरे" माघः।

क्षितिवदरी स्त्री क्षितौ सक्ता वदरी। भूवदर्याम् राजनि०।

क्षितिवर्द्धन त्रि० क्षितिं वर्द्धयति वृध–णिच् ल्यु। मृते शवे त्रिका०। 'करोमि क्षितिवर्द्धनम्" भट्टिः।

क्षितिव्युदास पु० क्षितिं व्युदस्यति वि+उद्+अस–अण् उप० स०। गर्त्तस्थकट्टे शब्दचि०

क्षितीश पु० क्षितिमीष्टे ईश–अण्। भूमीश्वरे नृपे "आसमुद्रक्षितीशानाम्" रघुः "पश्यध्वं मे वीर्यमस्य क्षितीशाः" भा०व० १८२अ०। १विष्णौ च "देवकीनन्दनः स्रष्टा-क्षितीशः पापनाशनः" विष्णुस०।

क्षितीश्वर पु० ६त०। भूमीश्वरे नृपे "तदाननं मृत्सुरभि क्षितीश्वरः" "कौशिकेन स किल क्षितीश्वरः" रघुः।

क्षित्यदिति स्त्री क्षितौ अदितिः। क्षितौ अदितेरवतारे देवक्यां वसुदेवपत्न्याम्। तत्कथा च हरिवं० ५६अ०। "या च सा सुरभिर्नाम अदितिश्च सुरारणी। उभे ते तस्य वै भार्ये सह तेनैव यास्यतः। ताभ्यां सह स गोपत्वे कश्यपो भुवि रंस्यते। तदस्य कश्यपस्यांशस्तेजसा कश्यपोपमः। वसुदेव इति ख्यातो गोषु तिष्ठति भूतले। गिरिर्गोवर्द्धनो नाम मथुरायास्त्वदूरतः। तत्रासौ गोष्वभिरतः कंसस्य करदायकः। तस्य भार्याद्वयञ्चैव अदितिः सुरभिस्तथा। देवकी रोहिणी चैव वसुदेवस्य धीमतः। तत्रावतर लोकानां भवाय मधुसूदन!"। विष्णुं प्रति ब्रह्मोक्तिः।

क्षित्वन् पु० क्षि–क्वनिप् तुक् च। वायौ उज्ज्वलदत्तः

क्षिद्र पु० क्षिद–रक्। १रोगे २सूर्य्ये ३विषाणे च संक्षिप्तसा०।

क्षिप प्रेरणे तुदा० उभ० सक० अनिट्। क्षिपति ते कर्म-

पसीत् अक्षिप । चिक्षेप चिक्षिपे । क्षिप्तः क्षेपकः । क्षेप्ता क्षिता क्षिपः क्षिपन् । "क्षिपत्येकेन वेगेन पञ्च बाणशतानि च" भा० व० १०१८श्लो० । "सुधर्म्मा साय-कांस्तीक्ष्णान् क्षिपते च पुनः पुनः" भा० वि० ३३अ० । "पदाङ्गुष्ठेन चिक्षेप संपूर्णं दशयोजनं"रामा० १।११अ० "यांश्च ( च त्वमपि शक्तिश्च स एकोन भविष्यति"भा०क० ६७अ० "स यत् काष्ठं तृणं वापि शिलां वा क्षेप्स्यते मयि" भा० व० २८१अ० "चिक्षेप मारीचोरसि" रामा० बा० ३२स० । आक्षेपे च "चिक्षेप च स तं धीमान् वाग्भिरुग्राभिरच्युतम्" भा० आश्व० ३५अ० । प्रेरणे क्वचित् स्वार्थे च णिच् क्षेपयति ते अचिक्षिपत्-त

अति+ अत्यन्तक्षेपे । "सन्धिमुक्तमुत्पिष्टं श्लिष्टं विवर्त्तित मवक्षिप्तमतिक्षिप्तं तिर्य्यक्क्षिप्तमिति षड्विधम्" "अति-क्षिप्ते द्वयोःसन्ध्योरतिक्रान्तता वेदना" सुश्रुतः ।

अधि–तिरस्कारे "तस्माद्देतैरधिक्षिप्तः सहेतासंज्वरः सदा" मनुः । "त्वं नाधिक्षेप्तुमर्हसि" भा० व० ८८अ० । अधिक्षेपशब्दे विवृतिः । [ अवक्षेपशब्दे विवृतिः

अव+अधःक्षेपणे "अवक्षिप दिवो अश्मानमुच्चा" ऋ०२,५३,५

आ+ आकर्षणे"आक्षिप्य केशान् वेगेन बाहुमेत्यात्र पाण्ड-वम्" भा० वि० ७५०श्लो० । भर्त्सने । आक्षेपशब्दे ६०१पृ० विवृतिः । "आक्षिपन्तं प्रभां भानोः"भा० आ० ११०२ । "आक्षिपन्तोमिव प्रभां शशिनः स्वेन तेजसा"भा० व० २१४७श्लो० । [ कुमा० ।

परि+आ+आ क्रम्य बन्धने । "पर्याक्षिपत् काचिदुदारबन्धम्"

उद्+ऊर्द्ध्वक्षेपणे । "बलिमाकाश उत्क्षिपेत्" मनुः "शिर उत्क्षिप्य नाम्रय पुनः पुनरवाक्षिपत्"भा०आ०११२६श्लो० उत्क्षेपणशब्दे १०८६ पृ० विवृतिः

नि+नितरां क्षेपणे निधाने च । "अन्नं भूमौ श्वचाण्डाल वायसेभ्यश्च निक्षिपेत्"याज्ञ० । गात्राणि कान्तासु च नि-क्षिपन्तः" रामा० ५।११ निक्षेपशब्दे विवृतिः

निस्+निःशेषेण क्षेपे । "मक्षिकावणजातस्य निःक्षिपन्ति सदा कृमीन्" सुश्रुतः ।

परि + परितः क्षेपे । "गङ्गास्रोतःपरिक्षिप्तम्" कुमा० ।

प्र + प्रकर्षेण क्षेपे "नामेध्यं प्रक्षिपेदग्नौ" मनुः

प्रति+प्रतिरूपक्षेपे । "अन्तः सिराणां श्वसनः स्थितोऽपि प्रतिक्षिप्तम्" सुश्रु० । अधिक्षेपे निवारणे प्रेरणे च

वि + विशेषेण क्षेपे"विक्षिप्यमाणाः चक्षुषा नरेन्द्राः"भा०आ० ७०२२श्लो० । वायुकृते उन्मादे, विक्षिप्तचित्तः । योगा-न्तरायकरणे चित्तस्येतरस्थले सञ्चारे च"अखण्डवस्त्वनव-लम्बनेन चित्तस्येतरन्यालम्बनं विक्षेपः" वेदान्तसा० "लये संबोधयेत् चित्तं विक्षिप्तं शमयेत् पुनः" तत्रस्था कारिका

सम्+सम्यक्क्षेपे विस्तीर्णस्य सङ्कोचापादने व्यापारे"आतपा-त्ययसंक्षिप्तनीवारासु निषादिभिः" रघुः ।"संक्षिप्तैः प्रति-संस्कृतैः" अमरः । "संक्षिप्तसारमाचष्टे" संक्षिप्तसा०

क्षिप प्रेरणे दिवा० प० सक० अनिट् । क्षिप्यति-ते अक्षे-प्सीत् । चिक्षेप । "शत्रून्नान् युधि हस्तिभोगिगिरीन् क्षिप्यन्नकलिमान्" "वारुणं लक्ष्मणोऽक्षिप्यदक्षिपद्रौद्र-मिन्द्रजित्" भट्टिः ।

उपसर्गभेदेनार्थविशेषः तौदादिकवत् ।

क्षिप् स्त्री क्षिप क्विप् । अङ्गुलौ निघ० । "दश क्षिपः पूर्व्यं सोमजीजनन्" ऋ० २,२३,२, हलन्तत्वात् वा टाप् । "हिन्वन्ति धीराः दशभिः क्षिपाभिः ऋ० ८,८७,५७,

क्षिप त्रि० क्षिप-क । १क्षेपके । भावे भिद० अङ् टाप् । क्षिपा । २क्षेपणे स्त्री ।

क्षिपक त्रि० क्षिप–क क्षिपः ततः अस्त्यादौ वन् । क्षेपके स्त्रियां टापि क्षिपका० नात इत्वम् । ततः निर्वृत्तादौ प्रेक्षादि० चतुरर्थ्याम् इनि । क्षिपकिन् तन्निर्वृत्तादौ त्रि० स्त्रियां ङीप् ।

क्षिपकादि पु० पा० उक्ते कापि इत्वनिषेधनिमित्ते शब्द गणभेदे स च गणः । क्षिपका ध्रुवका चरका सेवका करका चटका अवका लहका अलका कन्यका ध्रुवका एडका" आकृतिगणः ।

क्षिपणा न० क्षिप-भावे बा० क्युन् । क्षेपणे जटा०

क्षिप(णि)णी स्त्री क्षिप्यतेऽनया क्षिप-अनि किच्च वा ङीप् । १नौकादण्डे (दाँड) अमरटीका । कर्म्मणि अनि । २जालभेदे ३आयुधे च उज्ज्वल० ४वडिशे शब्दचि० । ५अध्वर्यौ संक्षिप्तसा० । भावे अनि । ६क्षेपणे "उ तस्य वाजी क्षिपणिं तुरण्यति" ऋ० ४।४०।४, इमा-सुदाहृत्य "क्षिपणिं क्षेपणम्" इति २।२८। निरुक्तोक्तम्

क्षिपणु पु० क्षिप–अनुङ् । १वाते त्रिका० २व्याधे "मृगादिव क्षिपणोरीयमानाः" यजु० १७।८४ । "क्षिपणोः क्षिप-ति हिनस्ति क्षिपणुर्व्याधः" वेददी०

क्षिपण्यु पु० क्षिप–कन्युच् । १वसन्ते उज्ज्वल० २देहे पु० ३सुरभिगन्धे पु० ३तद्वति त्रि०मेदि०

क्षिपति(प्ति) पु० क्षिप–बा०करणे अति(क्ति) । बाहौ निघ०

**क्षिप्त** त्रि॰ क्षिप–क्त। १प्रेरिते, २त्यक्ते, ३विकीर्णे ४अवज्ञाते, ५रागद्वेषादिवशाद्विषयासक्ते चित्ते, ६वायुरोगग्रस्ते च। ७निहिते निधानरूपेण स्थापिते "क्षिप्तः समीरैः सरितां पुरः पतत्" "केशरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः" माघः "तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि" भाग॰ २।१८।४८। "क्षिप्ता अवज्ञाताः" श्रीधरः। "आलस्यं क्षिप्तचित्तताम्" भा॰ स॰ ५ अ॰। "क्षतस्य भेषजमथो क्षिप्तस्य भेषजीम्" अथ॰ ६।१०६।३।८ रात्रौ स्त्री हला॰

**क्षिप्तकुक्कुर** पुंस्त्री कर्म्म॰। अलर्के (क्षेपा कुकुर) स्त्रियां ङीष्।

**क्षिप्तयोनि** त्रि॰ क्षिप्ता योनिर्मातृत्पत्तिस्थानमस्य। क्षिप्तमातृके स्वभर्त्तृनाशक्तमातृके। "क्षिप्तयोनिरिति चैके" आश्व॰ गृ॰ सू॰ १,२२,१८ "क्षिप्तयोनिर्नाम यस्य माता स्वभर्त्तरि नावतिष्ठते" नारा॰ वृत्तिः। तस्य (तत्कर्त्तृकम्) आर्त्विज्यं न कार्य्यमित्यनुषङ्गः

**क्षिप्नु** त्रि॰ क्षिप–क्नु सुभ्ना॰ न णत्वम्। क्षेपणशीले त्रि॰

**क्षिप्र** न॰ क्षिप-रक्। १शीघ्रे क्रियाविशेषणत्वे क्लीवता "क्षिप्रं ततोऽध्वन्यतुरङ्गयायी" भट्टिः। २तद्वति त्रि॰ "अति क्षिप्रेव विध्यति" ऋ॰ ४।८।८। "पुष्याश्विन्यभिजिद्धस्ता लघु क्षिप्रं गुरुस्तथा" ज्यो॰ उक्ते पुष्यादिषु ३नक्षत्रेषु "रिक्ताभौमघटान् विना च विपणी मित्रध्रुवक्षिप्रभे" मुहू॰ चि॰ ४शीघ्रगे त्रि॰ "कृतज्येन क्षिप्रेण धन्वना" ऋ॰२।२४।५। ततः अतिशायने इष्ठन् ईयसुन् रलोपे गुणः। क्षेपिष्ठ क्षेपीयस् अतिशयशीघ्रे त्रि॰ "वायुर्वै क्षेपिष्ठा देवता" श्रुतिः ईयसुनि स्त्रियां ङीप्। क्षेपीयसी।

**क्षिप्रकारिन्** त्रि॰ क्षिप्रं करोति कृ–णिनि। (चालाक) शीघ्रक्रियाकारके।

**क्षिप्रपाकिन्** पु॰ क्षिप्रं शीघ्रं पच्यते पच-बा॰ णिनुन्। (गन्धभादिलिया) १द्रुमभेदे रत्नमा॰। २शीघ्रपाकवति त्रि॰

**क्षिप्रहोम** पु॰ क्षिप्रं हूयते हु-मन्। सायं प्रातःकर्त्तव्ये होमे तद्विवृतिः सं॰ त॰ "द्विविधा होमा याज्ञिकप्रसिद्धाः क्षिप्रहोमास्तन्त्रहोमाश्च। तत्र क्षिप्रहोमाः क्षिप्रं हूयन्त इति व्युत्पत्त्या सायंप्रातर्होमादयः। तन्त्रहोमाश्च परिसमूहनबर्हिरास्तरणाद्यङ्गविस्तारयुक्ताः। अत्र ये समिद्धविस्तारास्तन्त्रहोमाः यथ सुखप्रसवार्थं शोष्यन्तीहोमस्तेषु येषाञ्च वैश्वदेवसायंप्रातर्होमादीनामेतद्विधाख्यं द्रव्यं उपरि पश्चात् अथ इध्मानुकल्पयेत इत्यनेन सूत्रेणोक्तं तेषु वा तत्सङ्गेषु क्षिप्रहोमेषु इध्मस्य निवृत्तिर्भवेदिति"।

तत्र विशेषमाह व्यासः "दग्धे रुद्धे न कुर्वीत क्षिप्रहोमे त्विदं द्वयम्" द्वयं परिसमूहनमास्तरणं चेति। "विरूप च च न जपेत् प्रणवञ्च विवर्जयेत्" क्षिप्रहोमेषु अनाह्वानेषु सायं प्रातःशोष्यन्तीहोमादिषु माह्मणम् इमं स्तोममर्हते इत्यादिमन्त्रकरणं वा परिसमूहनं न कुर्यात्"।

**क्षिया** स्त्री क्षि–क्षये भावे भिदा॰ अङ्। १अपचये अमरः २धर्म्मव्यतिक्रमे सि॰ कौ॰। "हेति क्षियायाम्" "क्षियाशीःप्रयोगेषु तिङाकाङ्क्षम्" पा॰ "क्षयायां धर्म्मव्यतिक्रमे सि॰ कौ॰ यथा "स्वयं ह रथेन याति ३उपाध्यायं पदातिं गमयति" उदा॰ अत्राद्यतिङ् प्लुतः।

**क्षिव** निरसने भ्वा॰ पर॰ सक॰ सेट्। क्षेवति अक्षेवीत्। चिक्षेव उदित्। क्षिवित्वा क्ष्यूत्वा क्ष्यूतः क्ष्यूतिः। निरसनं फूत्कार इति मैत्रेयः: सुखेन श्लेष्मादेर्बमनमित्यन्ये

**क्षिव** निरसने दिवा॰ पर॰ सक॰ सेट्। क्षीव्यति अक्षेवीत् चिक्षेव। उदित् क्षेवित्वा क्ष्यूत्वा।

**क्षी** हिंसायां भ्वा॰ उभ॰ सक॰ अनिट्। क्षयति ते अक्षैषीत् अक्षेष्ट। चिक्षाय चिक्षिये [चिक्षीज

**क्षीज** अव्यक्तशब्दे भ्वा॰ पर॰ अक॰ सेट्। क्षीजति अक्षीजित्

**क्षीजन** न॰ क्षीज–भावे ल्युट्। कीचकवंशशब्दे हेम॰।

**क्षीण** त्रि॰ क्षि–क्त। १दुर्बले, २क्षामे च "अष्टमांशे चतुर्द्दश्याः क्षीणोभवति चन्द्रमाः" छन्दो॰। "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" श्रुतिः

भावप्र॰ वातादिक्षयभेदेन क्षीणभेदास्तल्लक्षणादिकमुक्तम् "वातक्षयेऽल्पचेष्टत्वं मन्दवाक्यं विसंज्ञता। पित्तक्षयेऽधिकः श्लेष्मा वह्निमान्द्यं प्रभाक्षयः। सन्धयः शिथिलामूर्च्छा रौक्ष्यन्दाहः कफक्षये। हृत्पीड़ा कण्ठशोषोऽथ त्वक् शून्या तड् रसक्षये। सिराः श्लथा हिमाम्लेच्छा त्वक्पारुष्यं क्षयेऽसृजः। गण्डौष्ठकन्धरास्कन्धवक्षोजउरः सन्धिषु। उपस्थशोर्षपिण्डीषु शुष्कता गात्ररूक्षता। मेदोधमन्यः शिथिलाः भवेयुर्मांससंक्षये। प्लीहाभिवृद्धिः सन्धीनां शून्यता तनुरूक्षता। प्रार्थना स्निग्धमांसस्य लिङ्गं स्यान्मेदसः क्षये। अस्थिशूलन्तनौ रौक्ष्यं नखदन्तत्रुटिस्तथा। अस्थिक्षये लिङ्गमेतद्दोषैः सर्वैरुदाहृतम्। शुक्राल्पत्वं पूर्वभेदस्तोदः शून्यत्वमस्थिनि। लिङ्गान्येतानि जायन्ते नराणां मज्जसंक्षये। शुक्रक्षये रतेऽशक्तिर्व्यथा शेफसि मुष्कयोः। चिरेण शुक्रसेकः स्यात्सेको रक्ताल्पशुक्रता। अथौजःक्षयस्य निदानमाह "ओजः संक्षीयते कोपात्क्षुन्नाशोकश्रमादिभिः। कृशती

क्ष्णोष्णकटुकैः कर्षणैरपरैरपि । अथ क्षीणौज आदीनां लक्षणमाह । "बिभेति दुर्बलोऽभीक्ष्णं चिन्तयेद्व्यथितेन्द्रियः । अभ्युत्थानोन्मना रूक्षः क्षामः स्यादोजसः क्षये । पुरीषस्य क्षये पार्श्वे हृदये च व्यथा भवेत् । सशब्दस्यानिलस्योर्द्ध्वगमनं कुक्षिसंवृतिः" । कुक्षिसंवृतिः उदरसङ्कोचः "मूत्रक्षयेऽल्पमूत्रत्वं बस्तौ तोदश्च जायते । स्वेदनाशे त्वचो रौक्ष्यञ्चक्षुषोरपि रूक्षता । स्तब्धाश्च रोमकूपाः स्युर्लिङ्गं स्वेदक्षये भवेत् । आर्त्तवस्य स्वकाले चाभावस्तस्याल्पताथ वा । जायते वेदना योनौ लिङ्गं स्यादार्त्तवक्षये । अभावः स्वल्पता वा स्यात् स्तन्यस्य भवतस्तथा । म्लानौ पयोधरावेतल्लक्षणं स्तन्यसंक्षये । अनुन्नतो भवेत् कुक्षिर्गर्भस्यास्पन्दनन्तथा । इति गर्भक्षये प्राज्ञैर्लक्षणं समुदाहृतम्" । अथ क्षीणानां धातुदोषमलानां वर्द्धनमाह । "तत्तत्संवर्द्धनाहारविहारातिनिषेवणात् । तत्तत् प्राप्य नरः शीघ्रं तत्तत्क्षयमपोहति । ओजस्तु वर्द्धते नृणां सुस्निग्धस्वादुभिस्तथा । हृद्यैरन्यैर्विशेषात्तु क्षीरमांसरसादिभिः" । अन्यच्च "दोषधातुमलक्षीणो बलक्षीणोऽपि मानवः । तत्तत्संवर्द्धनं यत्तदन्नपानं प्रकाङ्क्षति । यद्यदाहारजातन्तु क्षीणः प्रार्थयते नरः । तस्य तस्य स लाभेन तत्तत्क्षयमपोहति" । तत्र केन क्षीणः किङ्काङ्क्षतीत्याकाङ्क्षायामाह "कषायकटुतिक्तानि रूक्षशीतलघूनि च । यवमुद्गप्रियङ्गूंश्च वातक्षीणोऽभिकाङ्क्षति" । पित्तक्षीणः किं काङ्क्षतीत्याकाङ्क्षायामाह "तिलमाषकुलत्थादिपिष्टान्नविकृतिन्तथा । मस्तुशुक्ताम्लतक्राणि काञ्जिकञ्च तथा दधि । कट्वम्ललवणोष्णानि तीक्ष्णं क्रोधं विदाहि च । समयं देशमुष्णञ्च पित्तक्षीणोऽभिकाङ्क्षति । मधुरस्निग्धशीतानि लवणाम्लगुरूणि च । दधि क्षीरं दिवास्वप्नं कफक्षीणोऽभिकाङ्क्षति । रसक्षीणो नरः काङ्क्षत्यम्भोऽतिशिशिरं मुहुः । रात्रिं निद्रां हिमं चन्द्रं भोक्तुञ्च मधुरं रसम् । इक्षुं मांसरसं मन्थं मधुसर्पिर्गुड़ौदनम् । द्राक्षादाड़िमशुक्तानि सस्नेहलवणानि च । रक्तसिद्धानि मांसानि रक्तक्षीणोऽभिकाङ्क्षति । अन्नानि दधिसिद्धानि षाड़वांश्च बहूनपि । स्थूलक्रव्यादमांसानि मांसक्षीणोऽभिकाङ्क्षति" । षाड़वा मधुराम्लादिरससंयोगपाचिताः गुड़प्रभृतयः । "मेदःसिद्धानि मांसानि ग्राम्यानूपौदकानि च । सक्षाराणि विशेषेण मेदःक्षीणोऽभिकाङ्क्षति । अस्थिक्षीणस्तथा मांसं मज्जास्थिस्नेहसंयुतम् । स्वाद्वम्लसंयुतं द्रव्यं मज्जाक्षीणोऽभिकाङ्क्षति । शिखिनः कुक्कुटस्याण्डं हंससारसयोस्तथा । ग्राम्यानूपौदकानाञ्च शुक्रक्षीणोऽभिकाङ्क्षति । यवान्नं यावकाद्यञ्च शाकानि विविधानि च । मसूरमाषयूषञ्च मलक्षीणोऽभिकाङ्क्षति । पेयमिक्षुरसं क्षीरं सगुड़ं वदरोदकम् । मूत्रक्षीणोऽभिलषति त्रपुसैर्वारुकाणि च । अभ्यङ्गोद्वर्त्तने मद्यं निवातशयनासने । गुरु प्रावरणं चैव स्वेदक्षीणोऽभिकाङ्क्षति । कट्वम्ललवणोष्णानि विदाहीनि गुरूणि च । फलशाकानि पानानि स्त्री काङ्क्षत्यार्त्तवक्षये । सुराशाल्यन्नमांसानि गोक्षीरं शर्करान्तथा । आसवं दधि हृद्यानि स्तन्यक्षीणाऽभिकाङ्क्षति । मृगाजाविवराहाणां गर्भान्वाञ्छति संस्कृतान् । वसाशूल्यप्रकारादीन् भोक्तुं गर्भपरिक्षये" ।

**क्षीणचन्द्र** पु० कर्म० । उभयपक्षयोरष्टमीमध्यस्थे चन्द्रे "कृष्णाष्टमीदलादूर्द्ध्वं यावच्छुक्लाष्टमीदलम् । तावत्कालं शशी क्षीणः पूर्णस्तत्रोपरि स्मृतः" ज्यो० ।

**क्षीणाष्टकर्मन्** पु० क्षीणान्यष्ट कर्माण्यस्य । जिने हेम० अर्हच्छब्दे १८६पृ० विवृतिः "अष्टकर्मक्षयान्मोक्षः" "क्षीणाष्टकर्मणो मुक्तिः" इति तत्रत्यवाक्यम्

**क्षीब(व)** मदे भ्वा० आत्म० अक० सेट् क्षीब(व)ते अक्षीबी(वी)त् । चिक्षीब(व)

**क्षीब(व)** त्रि० क्षीब(व)–क्त नि० । मत्ते । "क्षीबाः(वाः) कुर्वन्ति हास्यञ्च कलहं च तथाऽपरे" रामा० सु० ६ स० ।

**क्षीर** पु० न० क्षि-क्रन् दीर्घश्च, घस—अदने ईरन् किच्च उपधालोपे चर् वा अर्द्धर्चा० । १दुग्धे २जले अमरः ३सरलद्रव्ये शब्दच० । "आसप्तरात्रं प्रसवात् क्षीरं पेयूषमुच्यते । परतो मोरटं विद्यादप्रसन्नं कफात्मकम्" रत्नमा० । क्षीरवर्गशब्दे विवृतिः "शाकाम्लफलपिण्याककुलत्थलवणान्वितैः । करीरदधिमाषैश्च प्रायः क्षीरं विरुध्यते । स्निग्धं शीतं गुरु क्षीरं सर्वकालं न सेवयेत् । दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च । क्षीरं न भुञ्जीत कदाप्यतप्तं तप्तञ्च नैतल्लवणेन सार्द्धम् । पिष्टान्नसन्धायकमाषमुद्गकोषातकीकन्दफलादिकैश्च" । "मत्स्यमांसगुड़मुद्गमूलकैः कुष्ठितां वहति सेवितं पयः । शाकजाम्बवरसादिसेवितं मारयत्यबुधमाशु सर्पवत्" वैद्यके द्रव्यान्तरसंयोगे तस्य वर्ज्यतोक्ता ।

"धेनुस्तनाद्विनिष्क्रान्तां धारां क्षीरस्य यो नरः । शिरसा प्रतिगृह्णाति स पापेभ्यः प्रमुच्यते" वरा० पु० "धेनु क्षीरवहा

नद्यो ह्रदाः पायसकर्दमाः । तान् लोकान् पुरुषा यान्ति क्षीरस्नपनका हरेः । आह्लादं निर्वृतिं स्वास्थ्यमारोग्यं चानुरूपताम् । सप्तजन्मस्ववाप्नोति क्षीरस्नानपरो हरेः । दध्यादीनां विकाराणां क्षीरतः सम्भवो यथा । तथैवा-शेषकामानां क्षीरस्नपनमुत्तमम् । यथा च विमलं क्षीरं यथा निर्विकारकम् । तथास्य विमलं स्नानं भविष्यति फलप्रदम् । यशानुकूलतां पुष्टिं प्रियत्वञ्चाखिले जने । करोति भगवान् विष्णुः क्षीरस्नपनतोषितः । सर्वोऽस्य स्निग्धतामेति दृष्टिमात्रे प्रसीदति । स्नानक्षीरेण देवेशे स्नपिते मधुसूदने" । वह्नि० पु० क्रियायोगनामाध्याये । तत्पाकविधिः भावप्र० । "क्षीरमष्टगुणं द्रव्यात् क्षीरान्नीरं चतुर्गुणम् । क्षीरावशेषं तत्पीतं शूलमामोद्भवं जयेत्"

**क्षीरक** पु० क्षीरमिव कायति कै-क । क्षीरमोरटलतायाम् रत्नमा० । [ वृक्षे रत्नमा० ।

**क्षीरकञ्चुकी** स्त्री क्षीरं कञ्चुकमिव त्वगस्य । क्षीरीश

**क्षीरकण्ठ** पु० क्षीरं कण्ठे यस्य । स्तनन्धये बालके ।

**क्षीरकन्द** पु० क्षीरमिव कन्दोयस्य । १क्षीरविदार्य्याम्, जटाधरः २क्षीरवल्ल्यां स्त्री राजनि० । "क्षीरकन्दोद्विधा प्रोक्तो विनालश्च सनालकः" राजनि० ।

**क्षीरकाकोलिका** स्त्री क्षीरमिव शुभ्रा काकोली । क्षीर-विदार्य्यां भावप्र० काकोलीशब्दे १८५४ दृश्यम् ।

**क्षीरकाण्डक** पु० क्षीरान्वितं काण्डं यस्य कप् । १स्नुहीवृक्षे, २अर्कवृक्षे च अमरः ।

**क्षीरकाष्ठा** स्त्री क्षीरप्रधानं काष्ठमस्याः । वटीवृक्षे राजनि०

**क्षीरकीट** पु० ६त० । दुग्धजाते कीटभेदे हारा०

**क्षीरक्षव** पु० क्षीरं क्षवति क्षु-अच् । दुग्धपाषाणे राजनि०

**क्षीरखर्ज्जूर** पु० क्षीरवत् स्वादुः खर्ज्जूरः । पिण्डखर्ज्जूरे

**क्षीरघृत** न० क्षीरावस्थात उद्धृत घृतम् । मथितदुग्धजाते घृते "क्षीरघृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमनं नेत्ररोगहितञ्च" सुश्रुते तद्गुणा उक्ताः "द्राक्षारसं क्षीरघृतं पिबेद्वा" सुश्रुतः [ मासे त्रि०

**क्षीरज** न० क्षीराज्जायते जन-ड । १दध्नि हेम० २दुग्धजात-

**क्षीरतैल** न० क्षीरपक्वं तैलम् । सुश्रुतोक्ते तैलभेदे "द्रोणेनकाथ्य पादांशशिष्टमवतार्य्य परिस्राव्य तैलेनोन्मिश्य पुनरग्नावधिश्रयेत् ततस्तैलं क्षीरानुगतमवतार्य्य शीतीभूतमभिमथ्नीयात्तत्र यः स्नेह उत्तिष्ठेत्तमादाय मधुरौषधसहाक्षीरयुक्तं विपचेदेतत् क्षीरतैलमर्दितातुराणां पानाभ्यङ्गादिषूपयोज्यम् । तैलहीनं वा क्षीरसर्पिर्वातपर्णमिति" ।

**क्षीरदल** पु० क्षीरं दले यस्य । अर्कवृक्षे (आकन्द) राजनि०

**क्षीरद्रुम** पु० क्षीरप्रधानोद्रुमः शा०त० । अश्वत्थवृक्षे राजनि०

**क्षीरधि** पु० क्षीरं धीयतेऽस्मिन् धा—आधारे कि । क्षीरसमुद्रे क्षीरनिधिरप्यत्र । "इन्दुः क्षीरनिधाविव" रघुः

**क्षीरधेनु** स्त्री क्षीरनिर्म्मिता धेनुः । दानार्थकल्पितक्षीरविहितधेन्वाम् तद्विधानादि हेमा० दा० ख०स्क पु०यथा "क्षीरधेनुं प्रवक्ष्यामि तां निबोध नराधिप! । अनुलिप्ते महीपृष्ठे गोमयेन नरोत्तम! । गोचर्म्ममात्रमानेन कुशानास्तीर्य्य सर्वतः । तत्रोपरि महाराज! न्यसेत् कृष्णाजिनं बुधः । तत्रोपरि कुण्डलीकां गोमयेन कृतामपि । क्षीरकुम्भं ततः स्थाप्य चतुर्थांशेन वत्सकम् । सुवर्णमुखशृङ्गाणि चन्दनागुरुकाणि च । प्रशस्तपत्रश्रवणां तिलपात्रोपरि न्यसेत् । मुखं गुडमयं तस्या जिह्वा शर्करया तथा । फलप्रशस्तदन्ताञ्च मुक्ताफलमयेक्षणाम् । इक्षुपादां दर्भरोमां सितकम्बलकम्बलाम् । ताम्रपृष्ठां कांस्यदोहां पट्टसूत्रमयं तथा । प्रच्छन्न, न्टपशार्द्दूल! नवनीतमयस्तनीम् । स्वर्णशृङ्गीं रौप्यखुरां पञ्चरत्नमयीं भुवि । चत्वारि तिलपात्राणि चतुर्द्दिक्ष्वपि स्थापयेत् । सप्तव्रीहिसमायुक्तां दिक्षु सर्वासु प्रक्षिपेत् । एवं लक्षणसंयुक्तां क्षीरधेनुं प्रकल्पयेत् । आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैः समर्च्चयेत् । धूपन्दीपादिकं कृत्वा ब्राह्मणाय निवेदयेत् । आच्छाद्यालङ्कृतं कृत्वा कुण्डिकाकर्णपत्रकैः । पादुकोपानहं छत्रं दत्त्वा दानं समर्पयेत् । अनेनैव तु मन्त्रेण क्षीरधेनुं प्रकल्पयेत् । या लक्ष्मीः सर्वभूतानामित्यादि नरपुङ्गव! । आप्यायस्वेति मन्त्रेण क्षीरधेनुं प्रदापयेत् । गृह्णामि त्वां देवि! भक्त्या याहको मन्त्रमुच्चरेत् । एवं धेनुं प्रादायाथ क्षीराहारोदिनं चरेत् । त्रिरात्रन्तु पयोभक्षो ब्राह्मणो राजसत्तम! । दीयमानां प्रपश्यन्ति ते यान्ति परमां गतिम् । एतां हेमसहस्रेण शतेनाथ स्वशक्तितः । शतार्द्धमथ वाप्यर्द्धं, तथैवार्द्धं यथेच्छया । दत्त्वा धेनुं महाराज! शृणु तस्यापि तत्फलम् । दिव्यं वर्षसहस्रन्तु रुद्रलोके महीयते । पितृपितामहैः सार्द्धं ब्रह्मणो-भवनं व्रजेत् । दिव्यं विमानमारूढो दिव्यगन्धानुलेपनः । क्रीडित्वा सुचिरं कालं विष्णुलोकं स गच्छति । द्वादशादित्यसङ्काशैर्विमानैर्वरमण्डितैः । गीतवादित्रनिर्घोषैरप्सरोगणसेवितैः । तत्रोपविष्टोऽसौ राजा विष्णुसायुज्यतां व्रजेत् । य इदं शृणुयाद्राजन्! पठेद्वा भक्तिभावितः । सर्वपापविनिर्म्मुक्तो विष्णुलोकं स गच्छति"

**क्षीरनाश** पु॰ क्षीरं नाशयति नश—णिच् अण् उप॰स॰। शाखोटकवृक्षे राजनि॰। तद्दलदुग्धयोगादन्यदुग्धस्य नाशनं लोकसिद्धम्।

**क्षीरनीर** न॰ क्षीरात्तं नीरमिव। १आलिङ्गने शब्दमा॰ आलिङ्गने हि क्षीरनीरयोरिव संसर्गो भवति। समा॰द्व॰। २क्षीरनीरसमाहारे न॰ "क्षीरनीरसमं मित्रं प्रशंसन्ति विचक्षणाः। तत्र नीरं क्षीरयति" वेता॰। क्षीरमिव नीरम्। ३क्षीरतुल्ये जले न॰ क्षीरनीरं धीयतेऽत्र धा-आधारे कि। क्षीरधि दुग्धसमुद्रे पु॰।

**क्षीरप** त्रि॰ क्षीरं पिबति पा—क। दुग्धपायिनि बालकभेदे पु॰ "तत्रोनषोडशवर्षा बालास्तेऽपि त्रिविधाः क्षीरपाः क्षीरान्नादा अन्नादा इति तेषु संवत्सरपराः क्षीरपाः द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादाः" सुश्रु॰ "क्षीरं तु बालवत्सानां ये पिबन्तीह मानवाः। न तेषां क्षीरपाः केचित् भवन्ति कुलवर्द्धनाः" भा॰आनु॰१२५अ॰

**क्षीरपर्णिन्** पु॰ क्षीरयुक्तं पर्णमस्यास्य इनि। अर्कवृक्षे राजनि॰

**क्षीरपर्णी** स्त्री क्षीरं पर्णेऽस्या गौ॰ ङीष्। अर्कवृक्षे शब्दच॰

**क्षीरपलाण्डु** पु॰ क्षीरमिव शुभ्रः पलाण्डुः। श्वेतपलाण्डौ "स्निग्धोरुचिष्यः स्थिरधातुकर्त्ता बल्योऽस्रमेधाकर पुष्टिदश्च। स्वादुर्गुरुः स्वादितप्रितयस्तः सपिच्छलः क्षीरपलाण्डुरुक्तः" सुश्रुते तद्गुणा उक्ताः।

**क्षीरपाण** पु॰ पीयते पा-कर्मणि ल्युट् क्षीरं पानंयस्य "पानं देशे" णत्वम् अत्र देशः देशस्थायिजनपरः। १उशीनरवासिजने सि॰कौ॰ "वा भावकरणयोः" पा॰ भावे करणे च ल्युटि वा णत्वम् ६त॰। २तत्पानकरणे त्रि॰। ३तत्पानपात्र्यां स्त्री ङीप्। ४दुग्धस्य पाने न॰।

**क्षीरभृत** पु॰ क्षीरेण भृतः। दुग्धमात्रभृतिके गोपाले भृत्यभेदे। "गोपः क्षीरभृतोयस्तु स दुह्याद्दशतो वराम्। गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः" मनुः "यो गोपालस्यो भृत्यः क्षीरेण भृतो न भक्तादिना स स्वाम्यनुज्ञया दशभ्योगोभ्यः श्रेष्ठामेकां गां भृत्यर्थं दुह्यात् सा भक्तादिरहिते गोपाले भृतिः स्यात्। एवञ्चैकगवीक्षीरदानेन दश गाः पालयेदित्युक्तम्" कुल्लू॰

**क्षीरवर्ग** पु॰ ६त॰ सुश्रुतोक्ते क्षीरभेदसंघे यथा "गव्यमाजन्तथा चौष्ट्रमाविकं माहिषञ्च यत्। अश्वायाश्चैव नार्य्याश्च करेणूनाञ्च यत्पयः। तत्त्वनेकौषधिरसप्रसादं प्राणदं गुरु। मधुरं पिच्छिलं शीतं स्निग्धं श्लक्ष्णं सरं मृदु। सर्वं प्राणभृतां तस्मात्सात्म्यं क्षीरमिहोच्यते। तत्र सर्व्वमेव क्षीरं प्राणिनामप्रतिषिद्धं जातिसात्म्यात्। वातपित्तशोणितमानसविकारेष्वविरुद्धम्। जीर्णज्वरकासश्वासशोषक्षयगुल्मोन्मादोदरमूर्च्छाभ्रममददाहपिपासाहृद्बस्तिपाण्डुरोगग्रहणीदोषार्शःशूलोदावर्त्तातिसारप्रवाहिकायोनिरोगगर्भास्रावरक्तपित्तश्रमक्लमहरं पाप्मापहं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं सन्धानमास्थापनं वयःस्थापनमायुष्यं जीवनं बृंहणं वमनं विरेचनञ्च तुल्यगुणत्वाच्चौजसो वर्द्धनमिति बालवृद्धक्षतक्षीणानां क्षुद्व्यवायव्यायामकर्शितानाञ्च पथ्यतमम्। गोक्षीरमनभिष्यन्दि स्निग्धं गुरु रसायनम्। रक्तपित्तहरं शीतं मधुरं रसपाकयोः। जीवनीयं तथा वातपित्तघ्नं परमं स्मृतम्। गव्यतुल्यगुणं त्वाजं विशेषाच्छोषिणां हितम्। दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत्। अजानामल्पकायत्वात् कटुतिक्तनिषेवणात्। नात्यम्बुपानाद्व्यायामात्सर्व्वव्याधिहरं पयः। रूक्षोष्णं लवणं किञ्चिदौष्ट्रं स्वादुरसं लघु। शोफगुल्मोदरार्शोघ्नं क्रिमिकुष्ठविषापहम्। आविकं मधुरं स्निग्धं गुरु पित्तकफावहम्। पथ्यं केवलवातेषु कासे चानिलसम्भवे। महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम्। निद्राकरं शीतकरं गव्यात् स्निग्धतरं गुरु। उष्णं चैकशफं बल्यं शाखावातहरं लघु। नार्य्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम्। नस्याश्च्योतनयोः पथ्यं जीवनं लघु दीपनम्। हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु। स्निग्धं स्थैर्यकरं शीतं चक्षुष्यं बलवर्द्धनम्। प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम्। रात्रौ सोमगुणत्वाच्च व्यायामाभावतस्तथा। दिवाकराभितप्तानां व्यायामानिलसेवनात्। वातानुलोमि श्रान्तिघ्नं चक्षुष्यं चापराह्णिकम्। पयोऽभिष्यन्दि गुर्व्वामं प्रायशः परिकीर्त्तितम्। तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम्। वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम्। धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा। तदेवातिशृतं सर्वं गुरु बृंहणमुच्यते। अनिष्टगन्धमम्लञ्च विवर्णं विरसञ्च यत्। वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत्"। भावप्र॰ अत्र विशेष उक्तस्तत्रैव दृश्यं।

**क्षीरमोरट** पु॰ क्षीरवत् स्वादुः मोरटः। मोरटभेदे मोरटशब्दे विवृतिः। "क्षीरमोरटमधूलिकाकुष्माण्डप्रभृतीनि समासेन मधुरोवर्गः" सुश्रु॰ सा च पीलुपर्ण्यां के।

**क्षीरलता** स्त्री क्षीरप्रधाना लता। क्षीरविदार्य्याम् राजनि॰

**क्षीरवत्** पु० क्षीरमिव निर्यासोऽस्त्यस्य मतुप् मस्य वः।१अमृत्यादौ श्वेतनिर्यासयुक्ते वृक्षे । २दुग्धयुक्ते त्रि० "अपूपवान् क्षीरवांश्चरुमेह सादतु" अथ० १८।४।१६ स्त्रियां ङीप् । सा च ७नदीभेदे "ततः क्षीरवतीं गच्छेत् पुण्यां पुण्यतमैर्वृताम् । पितृदेवार्च्चनपरो वाजपेयमवाप्नुयात्" भा० व० ८४अ०

**क्षीरवल्ली** स्त्री क्षीरा क्षीरवती वल्ली । क्षीरविदार्य्याम् राजनि०

**क्षीरवारि** पु० क्षीरमिव वारि यस्य । क्षीरसमुद्रे

**क्षीरवारिधि** पु० क्षीरमिव वारि धीयतेऽस्मिन् धा-आधारे कि । क्षीरसमुद्रे क्षीरसिन्धुःप्रभृतयोऽप्यत्र

**क्षीरविकृति** स्त्री ६त० (क्षीरसा) कूर्चिकायाम् अमरः

**क्षीरविदारी** स्त्री क्षीरमिव शुभ्रा विदारी । १श्वेतभूमिकुष्माण्डे शब्दचि०। क्षीरप्रधाना विदारी। २शुक्लक्षपयोभूमिकुष्माण्डयोः राजनि०

**क्षीरविषाणिका** स्त्री क्षीरमिव विषाणमग्रमस्त्यस्य ठन् । १ऋषिकालीवृक्षे (विछाटि) जटाध० । २क्षीरकाकोल्याम् राजनि०

**क्षीरवृक्ष** पु० क्षीरप्रधानो वृक्षः । १उडुम्बरे जटा० २क्षीरिकायां भरतः । ३राजादन्याम् राजनि० ४न्यग्रोधे ५अश्वत्थे ६मधूके (मौल) च सुश्रुतः । "चतुर्णां वा क्षीरवृक्षाणां न्यग्रोधोदुम्बराश्वत्थमधूकानाम्" सुश्रु० "पत्राणि क्षीरवृक्षाणाम्" सुश्रु० ।

**क्षीरशर** पु० क्षीरं शीर्य्यतेऽत्र शॄ—आधारे अप् । आमिक्षायां हेमच० दधियोगात्तप्तोष्णपयसः अन्यमेन जायमानत्वात् तथात्वम् । [भावप्र०उक्ते नष्टे दुग्धे (छेंडा दुध)

**क्षीरशाक** न० "पक्वमेव हि यन्नष्टं क्षीरशाकं हि तत् पयः"

**क्षीरशीर्ष** पु०क्षीरमिव शीर्षमस्य। श्रीवासे चन्दनभेदे राजनि०

**क्षीरशुक्ल** पु० क्षीरमिव शुक्लः । १शृङ्गाटके(पानीयफल)शब्दच० ।२राजादन्यां राजनि०। ३शुक्लभूकुष्माण्डे स्त्री अम०

**क्षीरशुक्ला** स्त्री क्षीरवत् शुक्ला । क्षीरकाकल्यां राजनि०

**क्षीरश्री** त्रि० क्षीरेण श्रीयते मिश्रीक्रियते श्री—कर्म्मणि क्विप् । क्षीरमिश्रिते सोमादौ "शुक्रः क्षीरश्रीः" यजु० ८।५७। "क्षीरमिश्रितः सोमः शुक्र एव भवति" वेददी० क्षीरस्य श्रीरिव श्रीरस्य। २दुग्धतुल्यशोभाके त्रि० । ६त० ।३दुग्धशोभायां स्त्री

**क्षीरषट्पलक** न० क्षीरेण सह षण्णां पञ्चकोलानां पलमत्र कप् । चक्र० उक्ते पक्वे घृते "पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसा समम् । सर्पिः प्रस्थं शृतं प्लीहविषमज्वरगुल्मनुत्"

**क्षीरषष्टिक** न० क्षीरेण पक्वं षष्टिकम् । क्षीरपक्वे षष्टिकधान्यान्ने । तच्च यच्चरुषु बुधबलौ देयं यथाह याज्ञ० "गुडौदनं पायसञ्च हविष्यं क्षीरषष्टिकम् । दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च । दद्यात् ग्रहक्रमात्तत्" ।

**क्षीरस** पु० क्षीरं स्यति सो—क । क्षीरसरे राजनि०

**क्षीरसन्तानिका** स्त्री० क्षीरस्य सन्तानोऽस्त्यस्य ठन् । आमिक्षायां (छाना) राजनि० "क्षीरसन्तानिका हृद्या स्निग्धा पित्तानिलापहा" राजनि०

**क्षीरसमुद्र** पु० क्षीरतुल्यः स्वादुरसः समुद्रः । क्षीराम्बुधौ क्षीरसागरादयोऽप्यत्र ।"मथितःक्षीरसागरः"भाग०८।८।४

**क्षीरसर्पिस्** न० क्षीरेण पक्वं सर्पिः । सुश्रुतोक्ते क्षीरतैलपाकविधिना क्षीरेण पक्वे घृतभेदे । क्षीरतैलपाकविधिः क्षीरतैलशब्दे उक्तः । "तैलहीनं वा क्षीरसर्पिरचितर्पयाम्"सुश्रु०। "क्षीरसर्पिषा चैनमनुवासयेत्" सुश्रु०

**क्षीरसार** पु० क्षीरं सरति गच्छति कारणत्वेन सृ—अण् । क्षीरजाते शृङ्गाटकादिचूर्णमिश्रणेन (पालजात)ख्याते १पदार्थे । ६त०। २नवनीते च "क्षीरसारमपनीय शङ्कया स्वीकृतं यदि पलायनं त्वया" उद्भटः ।

**क्षीरस्फटिक** पु० क्षीरमिव शुभ्रः स्फटिकः । क्षीरवर्णे स्फटिकमणिभेदे हेम० ।

**क्षीरस्वामिन्** पु० अमरटीकाकारे शाब्दिके पण्डितभेदे

**क्षीरहिण्डीर** पु० ६त० । दुग्धफेने शब्दचिन्ता० ।

**क्षीरह्रद** पु० क्षीरपूर्णो ह्रदः । क्षीरपूर्णे ह्रदे । तत्रभवादौ शिवा०—अण् । क्षैरह्रद तद्भवादौ त्रि०

**क्षीरा** स्त्री क्षीरं तद्वर्णोऽस्त्यस्य अच् । काकोल्याम् राजनि०

**क्षीराब्धि** पु० क्षीरस्य दुग्धरसस्याब्धिः । क्षीरसमुद्रे एवं क्षीरसागरादयोऽप्यत्र ।

**क्षीराब्धिज** पु० क्षीराब्धौ जायते जन—ड । १चन्द्रे । २लक्ष्म्यां स्त्री३अमृतादौ यथायोग्यलिङ्गता ।४मौक्तिके ५सामुद्रलवणे न० मेदि०। "यथा भगवता ब्रह्मन्! मथितः क्षीरसागरः" इत्युपक्रमे भाग०८,८,अ०तेषु सुदुत्पत्तिर्दर्शिता यथा "तद्वागा जम्ब्वुः सर्वे तच्छेषं शङ्करो ऽग्रहीत् । नारायणाज्ञया तेन नीलकण्ठत्वमाप्नुवान् । ऐरावतश्च नागेन्द्रो हयश्चोच्चैःश्रवाः पुनः । द्वितीयावर्त्तनाद्राजन्नुत्पन्नाविति नः श्रुतम् । तृतीयावर्त्तनेऽप्सरोगणो जातः सुशोभनः । चतुर्थात् पारिजातश्च उत्पन्नः स महातरुः । पञ्चमात् हिमशुक्तस्मात् उत्थितः क्षीरसागरात् । तं भवः शिरसा धत्ते नारीव स्वस्तिकं नृप ! । नाना-

नाविधानि रत्नानि दिव्यान्याभरणानि च। क्षीरोदधेस्तू-
त्थितानि गन्धर्वाश्च सहस्रशः। एतान् दृष्ट्वा तदोत्पन्ना-
नत्याश्चर्यसमन्विताः। अभवन् जातहर्षास्ते तत्र सर्वे
सुरासुराः। दैवपक्षे ततो मेघाः सम्यग्वर्षन्ति संस्थिताः।
कृष्णाज्ञया तु वायुस्तु सुखं वाति सुरान् प्रति। विप्र
निःश्वासवातेन वासुकेश्चार्कतापनात्। निस्तेजसोऽभ-
वन् दैत्या निर्वीर्याश्च महामते!। ततः श्रीरुत्थिता तस्मात्
क्षीरोदाद्धृतपङ्कजा। विभ्राजमाना राजेन्द्र दिशः सर्वाः
स्वतेजसा। ततस्तीर्थोदकैः स्नाता दिव्यवस्त्रैरलङ्कृता।
दिव्यगन्धानुलेपैस्तु सुमनोभिः सुपूजिता। देवपक्षं समा-
साद्य स्थिता क्षणमरिन्दम!। हरिवक्षःस्थलं प्राप्ता ततः
सा कमलालया। ततोऽमृतघटं पूर्णं स्वहीत्वा पयसो-
निधेः। धन्वन्तरिः समुत्तस्थौ"।

**क्षीराब्धितनया** स्त्री ६त०। लक्ष्म्यां १तस्मात्सञ्जातत्वा-
त्तथात्वम् २चन्द्रे पु० क्षीराब्धिजशब्दे दृश्यम्।

**क्षीरावी** स्त्री क्षीरमवति अव–अण् ङीप्। दुग्धिकायाम्
(दुधी) अमरः स्वार्थे क। तत्रार्थे। अस्याः पत्रच्छेदने
दुग्धवर्णनिर्यासवहिर्भावात्तथात्वम्। सा च "चक्रलतुल्य-
पत्रा" सुभूतिः। [त्रिका०

**क्षीराह्व** पु० क्षीरमाह्वयते स्पर्द्धते आ+ह्वे-क। सरलद्रुमे

**क्षीरिका** स्त्री क्षीरं तत्तुल्यस्वादोऽस्त्यस्य ठन्। १राजादने
२पिण्डखर्ज्जूरे अमरः। "क्षीरिकायाः फलं पक्वं
गुरु विष्टम्भि शीतलम्" राजनि०। "क्षीरिकायाः फलं हृद्यं
बल्यं स्निग्धं हिमं गुरु। तृष्णामूर्च्छामदभ्रान्तिक्षयदो-
षत्रयास्रजित्" भावप्र०। ३परमान्ने भावप्र० कृतान्नशब्दे
२१८०पृ० दृश्यम्

**क्षीरिद्रुमाद्य** न० "क्षीरिद्रुमाद्योत्थरसे विपक्वं तज्जैश्च
कल्कैः पयसा च सर्पिः। सितोपलार्द्धं मधुपादयुक्तं
रक्तातिसारं शमयत्युदीर्णम्" चक्रदत्तोक्ते घृतभेदे

**क्षीरिन्** पु० क्षीरं तत्तुल्यनिर्यासोऽस्त्यस्य इनि। क्षीरतुल्य
निर्यासयुक्ते १वृक्षभेदे स च भावप्र० उक्तो यथा
"न्यग्रोधोदुम्बराश्वत्थपारीषप्लक्षपादपाः। पञ्चैते क्षीरिणो
वृक्षास्तेषां त्वक् पञ्चवल्कलम्। केचित्तु पारीषस्थाने
शिरीषं वेतसं परे" वदन्तीति शेषः। "क्षीरवृक्षा हिमा
वर्ण्या योनिरोगव्रणापहाः। रूक्षाः कषायामेदोघ्न
विसर्पशयनाशनाः। शोथपित्तकफास्रघ्नाः स्तन्याभ-
ग्नास्थियोजकाः। त्वक्पञ्चकं हिमं ग्राहि व्रणशोथ
विसर्पजित्। तेषां पत्रं हिमं ग्राहि कफवातास्रनुल्लघु।
विष्टम्भाध्मानजित् तिक्तं कषायं लघुलेखनम्" तद्गुणाः।
२हिमजायां तिक्तदुग्धायां पीतदुग्धायां क्षीरिकायां स्त्री
ङीप् जटा० "क्षीरिणी तिक्तपीता च रेचना शोकताप-
नुत्। क्रिमिदोषकफघ्नी च पित्तज्वरहरी परा" राज-
नि०। ३वराहक्रान्तायां शब्दचि० ४कुटुम्बिन्यां ५काश्म-
र्य्यां ६दुग्धिकायां च राजनि० दुग्धिकायां पुंस्त्री शब्दच०
७स्नुहीवृक्षे ८अर्कवृक्षे ९राजादन्याम् १०दुग्धपाषाणे
११प्लक्षे १२सोमलतायां १३स्थालीवृक्षे च पु० राजनि०

**क्षीरी** स्त्री० क्षीर+अस्त्यर्थे अच् गौरा०ङीष्। (शिरखोला)
ख्याते वृक्षभेदे शब्दर०।

**क्षीरीश** पु० क्षीरिणां वृक्षाणामीशः प्रधानत्वात्। वरपर्णे
स्नुक्छदे मूलकाकारमूले खसगन्धे वृक्षभेदे रत्नमा०।

**क्षीरेयी** स्त्री० क्षीरेण ढं शोभां याति या-क गौ० ङीष्,
क्षीर+ञ० भवार्थे ढञ् वा ङीप्। परमान्ने हला०

**क्षीरोद** पु० क्षीरमिव स्वादु उदकं यस्य उदादेशः। दुग्धस-
मुद्रे "ततः श्रीरुत्थिता तस्मात् क्षीरोदात् धृतपङ्कजा"
नृसिंहपु०। क्षीरोदमन्थनकथा यथा
"मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्।
दानवैः सहिता भूत्वा मथध्वं क्षीरसागरम्। अहञ्च
तत्र साहाय्यं करिष्यामि दिवौकसः!। भविष्यत्यमृतं तत्र
तत्पानाद्बलवत्तराः। भविष्यथ क्षणादेव अमृतस्य प्रभा-
वतः। यूयं सर्वे महावीर्या भुञ्जिष्ठ रणविक्रमाः।
इन्द्राद्यास्तु महोत्साहाः स्थानलब्धिमहानरीन्।
ततो हि दानवान् जेतुं समर्था नात्र संशयः। इत्युक्ता
देवदेवेन देवाः सर्वे जगत्पतिम्। प्रणम्यागम्य निलयं
सन्धिं कृत्वाथ दानवैः। क्षीराब्धिमथने सर्वे चक्रु-
रुद्योगमुत्तमम्। बलिना चोद्धृतो राजन्! मन्दराख्यो
महागिरिः। क्षीराब्धौ क्षेपितश्चैव तेनैकेन नृपोत्तम!।
सर्वौषधिश्च प्रक्षिप्ता दैवैर्दैत्यैः पयोदधौ। वासुकिश्च
ततस्तत्र राजन्। नारायणाज्ञया। सर्वदेवहितार्थाय वि-
ष्णुश्च स्वयमागतः। ततो विष्णुसमादेशात्तत्र सर्वे सुरा-
सुराः। समेत्य मित्रभावेन क्षीराब्धेस्तटमाश्रिताः।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वाऽथ वासुकिम्। ततो
मथितुमारब्धा नृपते! तरसाऽमृतम्। विष्णुना मुखभागे
तु वासुकेर्दानवाः कृताः। देवाश्च पुच्छभागे तु मन्थ-
नार्थं नियोजिताः। एवन्तु मन्थनात्तत्र मन्दराधः प्र-
विश्य वै। आधारेण विना राजंस्तं दृष्ट्वा सहसा हरिः।
सर्वलोकहितार्थाय कूर्म्मरूपमधारयत्। आत्मानं सं-

प्रवेश्याथ मन्दरस्य गिरेरधः। प्रविश्य धृतवान् शैलं पृथग्रूपेण केशवः। उपर्य्याक्रान्तवान् शैलं पृथग्रूपेण केशवः। चकर्ष नागराजानं देवैः सार्द्धं जनार्द्दनः। असुराद्यरूपेण दैत्यमध्ये च केशवः। ततस्ते तु त्वरायुक्ता ममन्थुः क्षीरसागरम्। यावच्छक्त्या नृपश्रेष्ठ! बलवन्तः सुरासुराः। मथ्यमाने ततस्तस्मात् क्षीराब्धेरभवन्नृप!। कालकूटमिति ख्यातं विषमत्यन्तदुःसहम्”

**क्षीरोदतनय** पुं० ६त०। १चन्द्रे २लक्ष्म्यां स्त्री क्षीरोदसुतादयोऽप्यत्र पुंस्त्री।

**क्षीरौदन** पु० क्षीरेणोपसिक्त ओदनः “अन्नेन व्यञ्जनम्” पा० स०। दुग्धोपसिक्ते भक्ते “क्षीरौदनं भुक्तमथान्नवासेत्” सुश्रु०

**क्षीव** निरासे भ्वा० प०सक० सेट्। क्षीवति अक्षीवीत् चिक्षीव। निरासः फूत्कारः तत्र अक०, मुखेन श्लेष्मादेर्निरसनञ्च तत्र सक० इति भेदः।

**क्षु** क्षुतौ पु०(हाँचि) अदा० अक० सेट्। क्षौति क्षुतः क्षुवन्ति अक्षावीत् चुक्षाव क्षविष्यति। उगन्तत्वात् किति क्ङिति अनिट् क्षुतम्। क्षुतिः क्षुत्वा। क्षवथुः “पुरा चुक्षाव चाशुभम्” भट्टिः। “क्षतकं कामिनि चुक्षुवे मृगाक्ष्या”माघः “सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतं वचः। पीत्वापोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि सन्”। “क्षुवतीं जृम्भमाणां वा” मनुः। “क्षुतोत्पतनजृम्भसु” ति० त० पुरा०। “रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या” चौरप०।

अव + अधःस्थस्य क्षवथुना दूषणे “अवक्षुतं केशपतङ्गकीटैः” यमः। अवक्षुतं उपरिकृतक्षुतेन दूषितम्। “पतितान्नमवक्षुतम्” मनुः “अवक्षुतम् उपरिकृतक्षुतम्” कुल्लू० अन्योपसर्गपूर्व्वस्तु तत्तद्द्योत्यार्थयुक्तक्षुतौ।

**क्षु** पु० क्षुद–बा० डु। १अन्ने निघण्टुः “तत्त्वायदी मनसो वेनता वाग्ज्येष्ठाय वा धर्म्मणि क्षोरनीके” ऋ० ८।५।७,२२ क्षण–हिंसायां डु। २सिंहे एकाक्षरकोषः ३क्षुतादिशब्दे क्षुमत्

**क्षुण** पु० क्षु–नक्। अरिष्टवृक्षे शब्दच०

**क्षुस्त** त्रि० क्षुद–क्त। १अभ्यस्ते, २विहते ३चूर्णीकृते च जटा०। “अभीक्ष्णमक्षुस्तयाऽतिदुर्गमम्” “क्षुस्तं यदन्तःकरणेन वृक्षाः” “क्षुस्तं क्षणं यदुबलैर्दिवमाततांसुः” इति च माघः। “रेखामात्रमपि क्षुस्तात्” रघुः। “क्षुस्तभिन्नविपन्नकैः” भट्टिः

**क्षुत्** स्त्री० क्षु–सं०प० भावे क्विप्। क्षुते (हाँचि) अमरः।

**क्षुत** न० क्षु–भावे क्त। क्षवथौ (हाँचि) अमरः क्षवथुशब्दे वि-

वृतिः। क्षुतस्य शुभाशुभसूचकत्वं, वसन्तराजशाकुने ३प्र० “अथ क्षुताख्यं शकुनं क्रमेण महाप्रभावं प्रविभावयामः। नश्यन्ति यस्माच्छकुनाः समस्ता मृगाधिनाथादिव वनत्रसत्वाः। सर्व्वस्य सर्व्वत्र च सर्व्वकालं क्षुतं न कार्य्यं क्वचिदेव शस्तम्। यातुः क्षुते तेन न किञ्चिदेव कुर्य्यात् क्षुतं प्राणहरञ्च गन्तुः। निषेधमध्येऽक्षिणि दक्षिणे च धनक्षयं दक्षिणकर्णदेशे। तत्पृष्ठभागे कुरुतेऽर्थवृद्धिं क्षुतं कदाचित् शुभमादधाति। भोगाय वामस्रवणस्य,पृष्ठे कर्णे च वामे कथितं जयाय। सर्व्वार्थलाभाय च वामनेत्रे जातं क्षुतं स्यात् क्रमशोऽष्टधैव। क्रमान्निषेधं गमनस्य विघ्नं कलिं समृद्धिं क्षुतमुग्ररोगम्। करोति रोगक्षयमर्थलाभं दीप्त्यादिनाशञ्च क्षुतं करोति। प्राणास्यपुंसः परतोऽपरा स्यात् पुनः पुनर्व्वीतत एव जातम्। वृद्धाच्छिशोर्व्वा कफतो हठाद्वा जातं क्षुतं केऽपि वदन्ति शस्तम्। आद्यन्तयोर्न स्वजन्मे प्रशस्तं क्षुतं प्रशंसन्ति न भोजनादौ। भवेत्तु कथञ्चिद्यदि भोजनान्ते भवेत्तदाग्रे न हि भोज्यलाभः। आदौ क्षुतञ्चेत् शकुनैस्ततः किं जातानजातान् शकुनान्निहन्ति। क्षुतं क्षणेनात्र न संशयोऽस्मिन् प्रयोजने यत्नकृतेऽपि जातम्। क्षुतं क्षणात्तद्विनिहन्त्यवश्यं वाय्वात्मकेनापि मनागदोषम्। तस्मादुपेक्ष्यं न विचक्षणेन क्षुतं यतश्चाशु फलं विवत्ते”। इति।

“छिक्काया लक्षणं वक्ष्ये लभेत् पूर्वे महाफलम्।आग्नेये शोकसन्तापौ, दक्षिणे हानिमाप्नुयात्। नैर्ऋते शोकसन्तापौ, मिष्टान्नञ्चैव पश्चिमे। अन्नं प्राप्नोति वायव्ये, उत्तरे कलहो भवेत्। ईशाने मरणं प्रोक्तं, प्रोक्तं छिक्काफलाफलम्” गारुडपु० ६०अ०

ति०त० वर्षकृत्यवाक्यम् “वित्तं ब्रह्मणि,कार्यसिद्धिरतुला शक्रे, हुताशे भयं, याम्यामग्निभयं, सुरद्विषि कलि,लाभः समुद्रालये। वायव्यां वरवस्त्रगन्धसलिलं, दिव्याङ्गना चोत्तरे, ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने। ज्येष्ठीरुते क्षुतेऽप्येवमूचुः केचिच्च कोविदाः” इति। क्वचित्तस्य शुभसूचकता यथ.“आसने शयने दाने भोजने वस्त्रसंग्रहे। विवादे च विवाहे च क्षुतं सप्तसु शोभनम्” क्षुतनिमित्तं शुद्ध्यर्थमाचमनं कर्त्तव्यम् यथाह याज्ञ० “स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा वस्त्रोपसर्पणे। आचान्तः पुनराचामेत् वासोविपरिधाय च”। अशक्तौ स्मृतिः “क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने। कर्म्मस्थ एषु

नाचामेत् दक्षिणं श्रवणं स्पृशेत्”। अन्दक्षुते जीवशब्दः प्रयोज्यः यथा मदनपारिजातधृतम् “जीवेति क्षवतो ब्रूयात् जीवेत्युक्तो त्वया सहेति” “क्षुतोत्पतनजृम्भासु जीवेत्तिष्ठाच्छ्लिष्ट्वनिः। शत्रोरपि च कर्त्तव्योऽन्यथा ब्रह्महा भवेत्” ति०त०। “दीर्घायुष्कृत् क्षुतं दीर्घं युगपद्द्विर्विपिण्डितम्” काशीख०स्त्रीलक्षणे। असंयुतमुखस्य क्षुतकरणं निषिद्धं यथा विष्णुध० “नासंवृतमुखः कुर्य्याद्धास्यं जृम्भां तथा क्षुतम्”। “स्वनितं प्रतिक्षुतमिवोपशुश्रुवे” माघः ताजकोक्तायाम् २अरिष्टौ अरिशब्दे २५५पृ० विवृतिः “क्षुताख्यदृष्ट्या न शुभं तदापि”। “क्षुतदृष्ट्या रिपोर्भयम्” नीलक०।

**क्षुतक** पु० क्षुताय साधु कन्। राजिकायाम् राजनि०।

**क्षुताभिजनन** पु० क्षुतमभिजनयति अभि+जन-णिच्-ल्यु। (राइ) कृष्णसर्षपभेदे अमरटीकायां स्वामी

**क्षुत्करी** स्त्री क्षुतं करोति कृ-ट ङीप्। सर्पाक्षीवृक्षे शब्दच०

**क्षुद** गतौ निघ० भ्वा० प० सक० सेट्। क्षोदति अक्षोदीत् चुक्षोद। “उत क्षोदन्ति रोदसी महित्वा” ७,८१,१, “क्षोदन्त आपो रिणते वनानि” ऋ०५,५८,६,

**क्षुद** पेषणे रुधा० उभ० सक० अनिट् इरित्। क्षुणत्ति अक्षुदत् अक्षौत्सीत् अक्षुत्त। चुक्षोद चुक्षुदे। क्षुण्णः क्षुन्दन् क्षुन्दानः। क्षोदः। “क्षुण्णभिन्नविपन्नकैः” “क्षुन्दन्ति सर्पान् पाताले” भट्टिः। “ते तं व्याशिषुरक्षौत्सुः” “अनु क्षुद्राजिकाङ्गरम्” भट्टिः “षष्ठः खण्डनखण्डखाद्यसहजक्षोदक्षमे” नैषधम्। उपसर्गपूर्व्वस्तु तत्तद्योत्यार्थयुक्ते पेषणे। [ कविक०।

**क्षुद्** स्त्री क्षुद-सम्प० भावे क्विप्। चूर्णने “क्षुदिर क्षदि”

**क्षुद्र** त्रि० क्षुद-कर्त्तरि रक्। १कृपणे २अधमे ३क्रूरे ४अल्पे च मेदि०। ५दरिद्रे हेम०। ६तण्डुलीयशाके पु० संक्षिप्तसा०। “क्षुद्रेऽपि नूनं शरणं प्रपन्ने” कुमा० “क्षुद्राः संत्रासमेते विजहतु हरयः” सा०द०। “कामात्मा विषयः क्षुद्रः” मनुः। ततः अतिशायने इष्ठन् ईयसुन् रलोपे गुणः। क्षोदिष्ठ क्षोदीयस् अतिशयकृपणादौ त्रि०। “बृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति” माघः

**क्षुद्रकण्टकारी** स्त्री नि० क०। अग्निदमनीवृक्षे राजनि०

**क्षुद्रकण्टकी** स्त्री क्षुद्रं कण्टकं यस्याः गौ०ङीष्। १बृहत्याम् भावप्र० क्षुद्रभण्टाकीति वा पाठः

**क्षुद्रकण्टिका** क्षुद्रं कण्टकं यस्याः टाप् अत इत्त्वम्। कण्टकारिकायाम् शब्दचि०।

**क्षुद्रकमानस** न० काश्मीरदेशस्थे कुङ्कुमोत्पत्तिस्थानभेदे। “काश्मीरेषु सरोनाम्ना दिव्यं क्षुद्रकमानसम्” सुश्रु०

**क्षुद्रकम्बु** पु० कर्म्म०। शम्बूके (शामुक)। हेमच०

**क्षुद्रकारवेल्ली** स्त्री कर्म्म०। वनकारवेल्लीभेदे राजनि० पृषो० क्षुद्रकारलिकाप्यत्र राजनि०

**क्षुद्रकुलिश** पु० नि० कर्म्म०। वैक्रान्तमणौ राजनि०

**क्षुद्रकुष्ठ** न० कर्म्म० सुश्रुताद्युक्तेषु एककुष्ठादिषु एकादश कुष्ठभेदेषु कुष्ठशब्दे विवृतिः [ क्षुरे राजनि०

**क्षुद्रक्षुर** पु० क्षुद्रक्षुरस्येवाकारोऽस्त्यस्य अच्। क्षुद्रगो-

**क्षुद्रगोक्षुरक** क्षुद्रगोक्षुरमिव कायति कै-क (छोटगोक्षुरी) गोक्षुरभेदे राजनि० [ किङ्किण्याम् (घुङुर) अमरः

**क्षुद्रघण्टिका** स्त्री० घण्टा+अल्पार्थे कन् घण्टिका कर्म्म०।

**क्षुद्रघोली** स्त्री नि० कर्म्म०। १चिरिल्लिकाक्षुपे राजनि०

**क्षुद्रचञ्चु** पु० क्षुद्र चञ्चुरिवाकारोऽस्य। क्षुपभेदे राजनि०

**क्षुद्रचन्दन** पु० नित्य कर्म्म०। रक्तचन्दने राजनि०

**क्षुद्रचिर्भटी** स्त्री नि० कर्म्म०। गोपालकर्कट्यां राजनि०

**क्षुद्रचूड** पुंस्त्री क्षुद्रा चूडा यस्य (गुण्सालिक) खगभेदे शब्दच०

**क्षुद्रजन्तु** पु० कर्म्म०। “क्षुद्रजन्तुरनस्थिः स्यादथ वा क्षुद्रएव वा। शतं वा प्रसृतौ येषां केचिदान कुलादपि” इत्युक्ते स्वल्पे १जन्तौ। २शतपद्यां शब्दमाला

**क्षुद्रजम्बू** स्त्री कर्म्म०। भूमिजम्ब्वाम् शब्दचि०।

**क्षुद्रजातीफल** पु० कर्म्म०। आमलके राजनि०

**क्षुद्रजीरक** न० कर्म्म०। कणजीरके, सुगन्धे शब्दच०

**क्षुद्रजीवा** स्त्री कर्म्म०। जीवन्तीवृक्षे राजनि०

**क्षुद्रतुलसी** स्त्री नि० कर्म्म०। वर्वरीभेदे राजनि०

**क्षुद्रदंशिका** स्त्री नि०कर्म०। (छोटडाँश) दंशभेदे जटा०।

**क्षुद्रदुरालभा** स्त्री नि०कर्म्म०। स्वल्पदुरालभाभेदे राजनि०

**क्षुद्रदुस्पर्शा** स्त्री नि० कर्म्म०। अग्निदमनीवृक्षे राजनि०

**क्षुद्रधात्री** स्त्री नित्य कर्म्म०। कर्कटवृक्षे राजनि०।

**क्षुद्रधान्य** न० कर्म्म०। तृणधान्ये कङ्गुप्रभृतौ भावप्र० “क्षुद्रधान्यं कुधान्यञ्च तृणधान्यमिति स्मृतम्। क्षुद्रधान्यमनुष्णं स्यात् कषायं लघु लेखनम्। मधुरं कटुकं पाके रूक्षञ्च क्लेदशोषकम्। वातकृत् बद्धविट्कञ्च पित्तरक्तकफापहम्” तद्गुणा उक्ताः।

**क्षुद्रनासिक** त्रि० क्षुद्रा नासिकाऽस्य। ह्रस्वनासिके (खाँदा)

**क्षुद्रपत्रा** स्त्री क्षुद्रं पत्रं यस्याः टाप्। चाङ्गेर्य्याञ्च (चुकोपालङ्ग)। हारा०। २स्वल्पपत्रान्विते त्रि०। गौरा० ङीष्। ३वचायां स्त्री राजनि०।

**क्षुद्रपनस** पु० नि० कर्म० । लकुचे (माँदार) राजनि० ।

**क्षुद्रपर्ण** पु० क्षुद्रं पर्णमस्य । १अर्जके वर्वरीभेदे राजनि० । २स्वल्पपत्रयुक्ते त्रि० । [क्षुपभेदे राजनि० ।

**क्षुद्रपाषाणभेदा** स्त्री नि० कर्म० । गिरिभवे कन्दरोत्थे

**क्षुद्रपिप्पली** स्त्री नित्य० कर्म० । वनपिप्पल्याम् राजनि०

**क्षुद्रपृषती** स्त्री नित्य० कर्म०। सूक्ष्मबिन्दुचितबिन्दु युक्तायां पृषत्यां मृगीभेदे "पृषती क्षुद्रपृषती स्थूलपृषती मैत्रावरुणाः" यजु० २४,२, अतत्यवेददीपे उक्तार्थकता दृश्या

**क्षुद्रपोतिका** स्त्री नि० कर्म० । मूलपोतिकायां राजनि० ।

**क्षुद्रफल(क)** क्षुद्रं फलमस्य वा कप् । १जीवनवृक्षे शब्दच० । २भूमिजम्बुवृक्षे शब्दमा० । कबभावे । ३इन्द्रवारुण्यां ४गोपालकर्कट्याम् ५अग्निदमन्यां ६कण्टकारिकायां च स्त्री राजनि० टाप् ।

**क्षुद्रभण्डाकी** स्त्री नि० कर्म० । वृहत्याम् राजनि० ।

**क्षुद्रमत्स्य** पु० कर्म० । स्वल्पमत्स्ये (छोटमाछ)"क्षुद्रमत्स्याः स्वादुरसा दोषत्रयविनाशनाः । लघुपाका रुचिकराः सर्वदा ते हिता मताः । अतिसूक्ष्माः पुंस्त्वहराः रुच्याः कासानिलापहाः" भावप्र० तद्गुणा उक्ताः ।

**क्षुद्रमुस्त** स्त्री नि० कर्म० । कसेरुक्षुपे राजनि० ।

**क्षुद्ररोग** पु०कर्म०। सुश्रुतोक्ते चतुश्चत्वारिंशत्स्वल्परोगभेदे यथा "अथातः क्षुद्ररोगाणां निदानं व्याख्यास्यामः । समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति । तद्यथा अजगल्लिका यवप्रख्याऽन्धालजी विवृता कच्छपिका वल्मीकमिन्द्रवृद्धा पनसिका पाषाणगर्दभो जालगर्दभः कक्षा विस्फोटकोऽग्निरोहिणी चिप्पं कुनखोऽनुशयी विदारिका शर्कराऽर्बुदं पामा विचर्चिका रकसा पाददारिका कदरमलसेन्द्रलुप्ते दारुणकोऽरुंषिका पलितं मसूरिका यौवनपिडका पद्मिनीकण्टको जतुमणिर्मशकश्चर्मकीलस्तिलकालको न्यच्छं व्यङ्गः परिवर्त्तिकाऽवपाटिका निरुद्धप्रकशो निरुद्धगुदोऽहिपूतनं वृषणकच्छूर्गुदभ्रंशश्चेति । स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा । कफवातोत्थिता ज्ञेया बालानामजगल्लिका १ । यवाकारा सुकठिना ग्रथिता मांससंश्रिता । पिडका श्लेष्मवाताभ्यां यवप्रख्येति२ सोच्यते । घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम् । अन्धालजी३ मल्पपूयां तां विद्यात् कफवातजाम् । विवृतास्यां महादाहां पक्वोडुम्बरसन्निभाम् । विवृतामिति४ तां विद्यात्पित्तोत्थां परिमण्डलाम् । ग्रन्थयः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः । कफानिलाभ्यामुद्भूतां विद्यात्तां कच्छपी५मिति । पाणिपादतले सन्धौ ग्रीवायामूर्द्ध्वजत्रुणि । ग्रन्थिर्वल्मीकवद्यस्तु शनैः समुपचीयते । तोदक्लेदपरीदाहकण्डूमद्भिर्व्रणैर्वृतः । व्याधिर्वल्मीक ६ इत्येष कफपित्तानिलोद्भवः । पद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम् । इन्द्रवृद्धान्तु ७ तां विद्याद्वातपित्तोत्थितां भिषक् । कर्णोपरि समन्ताद्वा पृष्ठे वा पिडकोग्ररुक् । शालूकवत्पनसिकां ८ तां विद्यात् श्लेष्मवातजाम् । हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम् । पाषाणगर्दभं ९ विद्याद्बलासपवनात्मकम् । विसर्पवत्सर्पति यो दाहज्वरकरस्तनुः । अपाकः श्वयथुः पित्तात्स ज्ञेयो जालगर्दभः१० । बाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम् । पित्तप्रकोपात्सम्भूतां कक्षामिति११ विनिर्दिशेत् । अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः । क्वचित्सर्वत्र वा देहे स्मृता विस्फोटका१२ इति । कक्षाभागेषु ये स्फोटा जायन्ते मांसदारणाः । अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः । सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् । तामग्निरोहिणीं १३ विद्यादसाध्यां सन्निपाततः । नखमांसमधिष्ठाय पित्तं वायुश्च वेदनाम् । करोति दाहपाकौ च तं व्याधिं चिप्प१४मादिशेत् । तदेव क्षतरोगाख्यं तथोपनखमित्यपि । अभिघातात्प्रदुष्टो यो नखो रूक्षोऽसितः खरः । भवेत्तु कुनखं१५ विद्यात्कुलीनमिति संज्ञितम् । गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् । कफादन्तःप्रपाकान्तां विद्यादनुशयीं१६ भिषक् । विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु । रक्तां विदारिकां१७ विद्यात् सर्वजां सर्वलक्षणाम् । प्राप्य मांसशिरास्नायुश्लेष्मा मेदस्तथाऽनिलः । ग्रन्थिं कुर्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम् । स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः । मांसं विशोष्य ग्रथितां शर्करां जनयेत्पुनः । दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः शिराः । स्रवन्ति सहसा रक्तं तद्विद्याच्छर्करार्बुदम्१८ । पामाविचर्च्चिके१९ २०कुष्ठेषु रकसा२१च प्रकीर्त्तिता । परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः । पादयोः कुरुते दारीं२२ सरुजां तलसंश्रिताम् । शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः । मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम् । स कीलः कठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा । कोलमात्रः सरुकस्रावो जायते कदरस्तु२३ सः । क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ । दुष्टकर्दमसंस्पर्शादलसं २४ तं विनिर्दिशेत् । रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् । प्रच्यावयति

रोमाणि ततः श्लेष्मा सशोणितः। रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः। तदिन्द्रलुप्तं २५खालित्यं रुज्येति च विभाव्यते। दारुणा कण्डुरा रूक्षा केशभूमिः प्रजायते। कफवातप्रकोपेण विद्याद्दारुणकन्तु२६रम्। अरूंषि बहुवक्त्राणि बहुक्लेदानि मूर्द्धनि। कफासृक्कृमिकोपेन नृणां विद्यादरूंषिकाम्२७। क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः। पित्तञ्च केशान् पचति पलितं२८तेन जायते। दाहज्वररुजावन्तस्ताम्राः स्फोटाः सपीतकाः। गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः२९। शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः। जायन्ते पिडका यूनां ३०वक्त्रे या मुखदूषिकाः। कण्टकैराचितं वृत्तं कण्डुमत्पाण्डुमण्डलम्। पद्मिनीकण्टकप्रख्यैस्तदाख्यं३१ कफवातजम्। नीरुजं समसुत्सन्नं मण्डलं कफरक्तजम्। सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं ३२विदुः। अवेदनं स्थिरञ्चैव यस्य गात्रेषु दृश्यते। माषवत्कृष्णमुत्पन्नमनिलान्माषकं३३दिशेत्। सुसुत्थानानिदानाभ्यां चर्मकील३४ प्रकीर्त्तितम्। कृष्णानि तिलमात्राणि नीरुजानि समानि च। वातपित्तकफोद्रेकात्तान्विद्यात्तिलकालकान्३६। मण्डलं महदल्पं वा श्यामं वा यदि वा सितम्। सहजं नीरुजं गात्रे न्यच्छ३५मित्यभिधीयते। क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः। सहसा मुखमागम्य मण्डलं विसृजेत्ततः। नीरुजं तनुकं श्यावं मुखे व्यङ्गं ३७तमादिशेत्। मर्द्दनात्पीडनाच्चापि तथैवाप्यभिघाततः। मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरः। तदा वातोपसृष्टन्तु चर्म्म प्रतिनिवर्त्तते। मणेरधस्तात्कोशस्य ग्रन्थिरूपेण लम्बते। सवेदनः सदाहश्च पाकञ्च व्रजति क्वचित्। मारुतागन्तुसम्भूतां विद्यात्तां परिवर्त्तिकाम्३८। सकण्डू कठिना चैव सैव श्लेष्मसमुत्थिता। अल्पीयसीं यदा हर्षाद्बालां गच्छेत्स्त्रियं नरः। हस्ताभिघातादथ वा चर्म्मण्युद्वर्त्तिते बलात्। मर्द्दनात्पीडनाद्वापि शुक्रवेगविघाततः। यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम्३९। वातोपसृष्टमेवन्तु चर्म संश्रयते मणिम्। मणिचर्म्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च। निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम्। मूत्रं प्रवर्त्तते जन्तोर्मणिर्न च विदीर्य्यते। निरुद्धप्रकशं४० विद्याद्रुद्धां चावपाटिकाम्। वेगसन्धारणाद्वायुर्विहतो गुदमाश्रितः। निरुणद्धि महत् स्रोतः सूक्ष्मद्वारं करोति च। मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति। सन्निरुद्धगुदं४१व्याधिमेनं विद्यात्सुदुस्तरम्। शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत्। स्विन्नस्य स्नाप्यमानस्य कण्डूरक्तकफोद्भवा। कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते। एकीभूतं व्रणैर्घोरं तं विद्याद्वृषणकच्छूम्४२। स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः। प्रक्लिद्यते यदा स्वेदात्स कण्डूं जनयेत्तदा। तत्र कण्डूयनात् क्षिप्रं स्फोटाः स्रावश्च जायते। प्राहुर्वृषणकच्छूं ४३तां श्लेष्मरक्तप्रकोपजाम्। प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः। रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत्।

**क्षुद्रल** त्रि० क्षुद्राः क्षुद्ररोगाः सन्त्यस्य सिध्मा० लच्। क्षुद्ररोगयुक्ते

**क्षुद्रवर्वरा** स्त्री नित्यकर्म्म०। वरटायां राजनि०

**क्षुद्रवल्ली** स्त्री नित्यकर्म्म०। मूलपोतिकायाम् राजनि०

**क्षुद्रवार्त्ताकिनी** स्त्री नि०कर्म्म०। श्वेतकण्टकार्य्यां राजनि०

**क्षुद्रवार्त्ताकी** स्त्री नि० कर्म्म०। वृहत्याम् अमरः

**क्षुद्रशङ्ख** पु० नित्य कर्म्म०। शङ्खनखे (जोङ्ङा) अमरटीका

**क्षुद्रशर्करा** स्त्री नि०कर्म्म०। यावनालशर्करायाम् राजनि०

**क्षुद्रशार्द्दूल** पुंस्त्री नि० कर्म्म०। क्षुद्रव्याघ्रे (चिताबाघ) राजनि० [वति त्रि०

**क्षुद्रशीर्ष** पु०क्षुद्रं शीर्षमस्य। १मयूरशिखावृक्षे, २स्वल्पशीर्ष-

**क्षुद्रशुक्ति** स्त्री नि० कर्म्म०। जलशुक्तिकायाम्। स्वार्थे क तत्रैवार्थे राजनि०

**क्षुद्रश्यामा** स्त्री नि० कर्म्म०। कटभीवृक्षे राजनि०

**क्षुद्रश्लेष्मातक** पु० नि० कर्म्म०। भूकर्बुदारवृक्षे राजनि०

**क्षुद्रश्वास** पु० कर्म्म०। श्वासरोगभेदे

"क्षुद्रकस्तमकश्छिन्नो महानूर्द्ध्वश्च पञ्चधा भिद्यते स महाव्याधिः श्वास एकोविशेषतः। प्राग्रूपं तस्य हृत्पीडा भक्तद्वेषोऽरतिः परा। आनाहः पार्श्वयोः शूलं वैरस्यं वदनस्य च। किञ्चिदारभमाणस्य यस्य श्वासः प्रवर्त्तते। निषण्णस्यैति शान्तिञ्च स क्षुद्र इतिसंज्ञितः" सुश्रु०

"रूक्षायासोद्भवः कोष्ठे क्षुद्रवातमुदीरयन्। क्षुद्रश्वासो न सोऽत्यर्थदुःखेनाङ्गप्रबाधकः। हिनस्ति न च गात्राणि न च दुःखं यथेतरे। न च भोजनपानानां निरुणद्धुचितां गतिम्। नेन्द्रियाणां व्यथाञ्चापि काञ्चिदुत्पादयेद्रुजम्। स साध्य उक्तो बलिनः सर्वैश्चाव्यक्तलक्षणः" भावप्र०

**क्षुद्रश्वेता** स्त्री सुश्रुतोक्ते अर्काद्दिगणोक्ते ओषधिभेदे "आलर्कपुष्पी क्षुद्रश्वेता महाश्वेत्यादि" सुश्रुतः

**क्षुद्रसहा** स्त्री सह–अच् क्षुद्रस्य सहा ६त०। १शङ्खपुष्प्याम् २मार्ज्जारगन्धायाञ्च राजनि०

**क्षुद्रसुवर्ण** न० नि० कर्म्म०। पित्तले राजनि०

**क्षुद्रहिङ्गुली** स्त्री कर्म्म०। १कण्टकार्य्याम्। स्वार्थे क अतो इत्वे टाप्। अत्रैवार्थे शब्दच०।

**क्षुद्रा** स्त्री क्षुद–रक्। १वेश्यायाम्, "क्षुद्राधिष्ठितभवनाः" काद० २कण्टकार्य्याम्, ३सरघायाम्, अमरः ४मक्षिकामात्रे, ५चाङ्गेर्य्याम्, ६हिंस्रायाम्, हेमच० ७गवेधुकायां (गडगड़ेधान) रत्नमा० ८वादरतायाम्, शब्दर० "क्षुद्राभिरक्षुद्रतराभिराकुलम्" माघः "क्षुद्राभिः सरघाभिः" मल्लि० ९व्यङ्गायाञ्च। क्षुद्राभिः निर्वृत्तम् अण्। क्षौद्र मधुनि "स क्षौद्रपटलैरिव" रघुः [कायाम् राजनि०

**क्षुद्राग्निमन्थ** पु० कर्म्म०(क्षोटगणियारी) स्वल्पगणिकारि-

**क्षुद्राञ्जन** न० सुश्रुतोक्ते अञ्जनभेदे "गोमूत्रपित्तमदिरा यकृद्धात्रीरसे पचेत्। क्षुद्राञ्जनं रसे चान्यतरयकृत् स्वे फलेऽपि वा। गोमूत्राज्यार्णवमलपिप्पलीक्षौद्रकट्फलं सैन्धवोपहितं युक्त्याञ्जितं हितं वेणुगह्वरे। मेदो यकृद्घृतञ्चाजं मिषपल्यः सैन्धवं मधु। रसमामलकञ्चापि पक्वं सम्यग्निधापयेत् कोशे खदिरनिर्म्माणे तद्वत् क्षुद्राञ्जनं हितम्"।

**क्षुद्राण्डमत्स्यसंघात** पु० क्षुद्राणामण्डमत्स्यानामण्डाभिनवजातानां मत्स्यानां संघातः। (पोनार झांक) पोताधाने अमरः

**क्षुद्रादिकषाय** पु० चक्रदत्तोक्ते कषायभेदे "क्षुद्रामृतानागरपुष्कराह्वयैः कृतः कषायः कफमारुतोद्भवे। सश्वासकासारुचिपार्श्वरुग्भवे ज्वरे त्रिदोषप्रभवे च शस्यते"

**क्षुद्रापामार्ग** पु० नि० कर्म्म०। रक्तापामार्गे राजनि०

**क्षुद्रामलकसंज्ञ** पु० क्षुद्रामलकस्य संज्ञेव संज्ञा यस्य। कर्कटवृक्षे राजनि०

**क्षुद्राम्र** पु० नि० कर्म्म०। कोषाम्रे राजनि०

**क्षुद्राम्रपनस** पु० नि० कर्म्म०। लकुच त्रिका०

**क्षुद्राम्ला** स्त्री कर्म० अम्लरसा कर्म्म०। १चाङ्गेर्य्याम् हारा० (चुकोपालङ्) स्वार्थे क। तत्रैवार्थे। २[illegible]ल्याम् राजनि०

**क्षुद्रिका** स्त्री क्षुद्रैव क। दंशे(डाँश) राजनि०

**क्षुद्रीय** त्रि० क्षुद्र+उत्करा० चतुरर्थ्याम् छ। क्षुद्रकर्षादौ

**क्षुद्रेङ्गुदी** स्त्री नित्यकर्म०। यवासे राजनि०

**क्षुद्रेर्वारु** पु० कर्म०। गोपालकर्कट्याम् राजनि०

**क्षुद्रोदुम्बरिका** स्त्री कर्म०। काकोदुम्बरिकायाम् राजनि०

**क्षुद्रोपोदिका** स्त्री नि० कर्म०। मूलपोतिकायाम् राजनि०

**क्षुद्रोलूक** पुंस्त्री कर्म०। उलूके राजनि०

**क्षुध** बुभुक्षायां दिवा० पर० सक० अनिट् ऌदित्। क्षुध्यति अक्षुधत्। चुक्षोध क्षुत्। क्षुधा क्षुधितः। क्षुधित्वा। "क्षुध्यद्भ्योवय आसुतिदाः" ऋ० १,१०४,७, मा क्षुधन्मा-तृषत्" अथ० २,२९,४, क्षुध्यन्तोऽध्यघसन् व्याला"। "क्षुधित्वा प्रतिभिर्वनम्" भट्टिः। क्षुधाजाताऽस्य तारका० इतच्। क्षुधित संजातक्षुधे त्रि०

**क्षुध्** स्त्री क्षुध–भावे संप० क्विप्। १बुभुक्षायाम्। कर्म्मणि क्विप्। २अन्ने निघ० पाठान्तरम्। "यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा" मनुः हलन्तत्वात् वा टाप्। क्षुधायत्त स्त्री क्षुधार्त्तः। "या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता" देवीमा०। क्षुधा च प्राणिनां स्वाभाविकदुःखहेतुर्यथोक्तं सुश्रुते "स्वाभाविकाः क्षुत्पिपासाजरामृत्युनिद्रा प्रभृतयः"। इयञ्च प्राणधर्म्मः यथाह शा०ति० "बुभुक्षा च पिपासा च प्राणस्य,मनसः स्मृतौ। शोकमोहौ, शरीरस्य जरामृत्यू षडूर्म्मयः"। क्षुधा कार्य्याणि यथा
"व्याधयो निर्जिताः सर्वे क्षुधया नृपसत्तम!। कुब्जको मुकटी रुग्णो तथैवालङ्कृतो नरः। क्षुधार्त्तो न विराजेत प्रेतवत्क्षुधितो नृणाम्। स्त्रीरत्नं विविधान् भोगान् वस्त्राण्याभरणानि च। न चेच्छति नरः किञ्चित् क्षुधया कलुषीकृतः। यथा भूमिगतं तोयं रविरश्मिभिः शुष्यति। शरीरस्थस्तथा धातुः शुष्यते जाठराग्निना। न शृणोति न चाघ्राति चक्षुषा न च पश्यति। दह्यते वेपते मूढः शुष्यते च क्षुधार्दितः। मूकत्वं बधिरत्वञ्च जडान्धत्वन्तु पङ्गुताम्। रौद्रं मर्य्यादहीनत्वं क्षुधा सर्वं प्रयच्छति। भगिनीं जननीं पुत्रं भार्य्यां दुहितरं तथा। भ्रातरं स्वजनं वापि क्षुधाविष्टो न विन्दति"।

**क्षुधाकुशल** पु० ७त०। विल्वान्तरवृक्षे राजनि०

**क्षुधाभिजनन** पु० क्षुधामभिजनयति अभि+जन+णिच् ल्यु। १राजिकायां अमरः। २क्षुधाजननमात्रे त्रि०

**क्षुधालु** त्रि० क्षुध–बा० आलुच्। क्षुधायुक्ते

**क्षुधावत्** त्रि० क्षुधा–अस्त्यस्य क्षुधा साध्यतयाऽस्त्यस्याः वा मतुप् मस्य वः। १क्षुधायुक्ते स्त्रियां ङीप्। भैषज्यरत्नावल्युक्ते २गुटिकाभेदे स्त्री "रसाद्गोगन्धकाभ्याञ्च त्र्युषणं त्रिफला वचा। यमानी शतपुष्पा च चविका जीरकद्वयम्। प्रत्येकं पलमेषान्तु घण्टाकर्णा पुनर्नवा। माषकं

पन्थिकाश्चेन्द्रवोशराजसुदर्शनाः। दण्डोत्पला त्रिवृद्दन्ती जामाटरक्तचन्दनम्। भृङ्गापामार्गकुलका मण्डूकाश्च पलाईकम्। चार्द्रकस्य रसेनाथ गुडिकां संप्रकल्पयेत्। बदरास्थिसमाञ्चैतां भक्षयित्वा पिबेदनु। वारि भक्तं जलञ्चैव प्रातरुत्थाय मानवः। वटी क्षुधावती नाम सर्वाजीर्णविनाशिनी। अग्निञ्च कुरुते दीप्तं भस्मकञ्च नियच्छति। अम्लपित्तञ्च शूलञ्च परिणामकृतञ्च यत्। तत् सर्वं शमयत्याशु भास्करस्तिमिरं यथा। मसूरं वर्ज्जयेदन्न विशेषात् क्षीरशर्करे"।

**क्षुधासागररस** पु० भैषज्यरत्नावल्युक्ते औषधभेदे "त्रिकटु त्रिफला चैव तथा लवणपञ्चकम्। क्षारत्रयं रसं गन्धं भागैकं पूर्ववद्भिषक्। गुञ्जामात्रां वटीं कुर्य्याल्लवङ्गैः पञ्चभिः सह। क्षुधासागरनामायं रसः सूर्य्येण निर्म्मितः"। [अमरः। "अशनस्य क्षुधितः पातम्"

**क्षुधित** त्रि० क्षुधा + जाताऽस्य तार० इतच्। क्षुधायुक्ते

**क्षुधुन** पुंस्त्री क्षुध–उन किञ्च। म्लेच्छजातौ उज्ज्वल०।

**क्षुप** मर्दे सौ० प० अक० सेट्। क्षोपति अक्षोपीत् चुक्षोप "स सटचक्षुपलतः" भा० आ० १७१अ०

**क्षुप** पु० क्षुप–क क्षु–पक् वा। ह्रस्वशाखाशिफे वृक्षे अमरः। वासुदेवस्य सत्यभामायां गर्भजातपुत्रभेदे। "जज्ञिरे सत्यभामायां भानुर्भीमरथः क्षुपः" हरिवं० १६अ०। इक्ष्वाकुपितरि ३राजभेदे च पु०। "आसीत् कृतयुगे तात! मनुर्दण्डधरः प्रभुः। तस्य पुत्रो महाबाहुः प्रसन्धिरिति विश्रुतः। प्रसन्धेरभवत् पुत्रः क्षुप इत्येव संज्ञितः। क्षुपस्य पुत्र इक्ष्वाकुः" भा० आश्व० ४अ०। ४द्वारकापश्चिमस्थे ४पर्वतभेदे।

"बभौ रैवतकः शैलो रम्यसानुगुहाजिरः। पूर्वस्यां दिशि लक्ष्मीवान् मणिकाञ्चनतोरणः। दक्षिणस्यां लतावेष्टः पञ्चवर्णो विराजते। इन्द्रकेतुप्रतीकाशः पश्चिमस्यां तथा क्षुपः" हरि० १५७अ०।

**क्षुपडोडमुष्टि** पु० दोलयति दुल–उत्क्षेपे अच् तादृशी मुष्टिरस्य पृषो० कर्म्म०। त्रिपत्रुष्टिक्षुपे राजनि०

**क्षुब्ध** पु० क्षुभ नि० करणे क्तः। १मन्थानदण्डे हेम०। "सुधेव मन्दरक्षुब्धक्षोभिताम्भोधिवर्णना" माघः २क्षोभयुक्ते त्रि०। "पार्श्वे परिपदे कृत्वा योनिं लिङ्गेन ताडयेत्। बाहुभ्यां धारणं गाढं बन्धोऽयं क्षुब्धसंज्ञकः" रतिम० उक्ते ३रतिबन्धभेदे पु०

**क्षुभ** सञ्चलने भ्वा० आत्म० सक० सेट् लृदित्। क्षोभते अक्षुभत् चुक्षुभे क्षोभ्यम्। क्षोभः क्षोभणम् क्षोभी "तानसौ नापि क्षाक्षुभत्" माक्षुभद्राक्षसोऽम्बातुः" भट्टिः क्षुब्धः क्षुभितः। "क्षुब्धतोया महावेगाः श्वसमाना इवाशुगाः" भा० व० ८अ०। "क्षुभिताः सागराः सर्व्वे" रामा० बा० ६५स०। "चुक्षुभे द्विषतां मनः" रघुः "यदेतदादित्यस्य मध्ये क्षोभत इव" छा० उ०। क्षोभमाणः।

**क्षुभ** अङ्गचालने वा दिवा० क्र्या० अक० सेट्। क्षुभ्यति क्षुभ्नाति अक्षोभीत्। क्षुभितः। "क्षुभ्यन्ति प्रसभमहोवि नापि हेतोः" माघः। क्षुभ्नातीत्यत्र क्षुभ्ना० न णत्वम्। प्राद्युपसर्गपूर्व्वकस्तत्तद्धोत्यार्थयुक्ते क्षोभे

**क्षुभ** त्रि० क्षुभ–क। १क्षोभके २प्रवर्त्तके च "मठरारुणदण्डाद्यांस्तांस्तान् वन्देऽग्निक्षुभान्" भा० व० ३अ० "अग्निक्षुभान् तत्प्रवर्त्तकान्" नीलक०। ३सूर्य्य पारिषद्भेदे स्त्री। "क्षुभया सहिता मैत्री याश्चान्याभूतमातरः" तत्रैव "क्षुभानिग्रहानुप्रकर्त्री देवता" नीलक०

**क्षुभित** त्रि० क्षुभ–क्त। १आलोडिते, २व्याकुले, ३भीते च हला०। "क्षुभितसैन्यपरागविपाण्डुरे" माघः "महाप्रलयमारुतक्षुभितपुष्करावर्त्तकेति वेणी०

**क्षुभ्नादि** पा० उक्ते निमित्ते सत्यपि णत्वनिवृत्तिनिमित्ते शब्दगणे स च गणः "क्षुभ्ना नृनमन नन्दिन् नन्दन नगर। एतान्युत्तरपदानि संज्ञायामप्रयोजयन्ति। हरिनन्दी हरिनन्दनः गिरिनगरम्। नृतिर्यङि प्रयोजयति। नरीनृत्यते। नर्त्तन गहन नन्दन निवेश निवास अग्नि अनूप एतान्युत्तरपदानि प्रयोजयन्ति। परिनर्त्तनम् परिगहनम् परिनन्दनम् शरनिवेशः शरनिवासः शराग्निः दर्भानूपः। आचार्य्यादणत्वञ्च। आचार्य्यभोगीनः। आकृतिगणोयम् क्षुभ्नादिः। "अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्य "इति भाष्यम्" न भाभूपूकमीत्यादयस्तस्यैव प्रपञ्चः" इति कैयटः। पाठान्तरम्" क्षुभ्ना तृप्नु नृनमन नर नगर नन्दन यङ्नृति गिरिनदी गृहनमन निवेश निवास अग्नि अनूप आचार्य्यभोगीन चतुर्हायन इरिकादीनि वनोत्तरपदानि (संज्ञायाम्) इरिका तिमिर समीर कुबेर हरि कर्म्मार क्षुभ्नादिः"।

**क्षुमत्** त्रि० क्षु + अस्त्यर्थे मतुप्। १अन्नयुक्ते उपचारात् २अन्नवत्स्तुत्ये च। "आ तू इन्द्र! क्षुमन्तम्" ऋ० ८,८१,१, "क्षुमन्तं स्तुत्यम्" भा०

**क्षुमा** स्त्री क्षु–मक्। (मसिना) (तिसी) १अतस्याम् अमरः। "क्ष्मायी विधूनने क्ष्मायति शत्रून कम्पयति पृषो०। क्षुमा २शत्रुकम्पके त्रि० "क्षुमासि पावके-

नम्" यजु० १०,८ वेददीपे उक्तैव व्युत्पत्तिर्दर्शिता २शणे धारसुन्दरी ३नीलिकायाम् लताभेदे शब्दमा०। क्षुमाया इदम् अण्। क्षौम वस्त्रभेदे "क्षौमं शाणं वा ब्राह्मणस्य" शाता०

**क्षुम्प** गतौ भ्वा०प० सक०सेट्। क्षुम्पति अक्षुम्पीत् चुक्षुम्प

**क्षुर** विलेखने तुदा० पर० सक० सेट्। क्षुरति अक्षोरीत् चुक्षोर क्षुरः।

**क्षुर** पु० क्षुर-क क्षुरक् वा। १नापितास्त्रे पश्वादीनां२शफे, (खुर) अमरटीकायां स्वामी ३कोकिलाक्षे अमरः ४गोक्षुरे, मेदि० ५महापिण्डीतके ६वाणे च राजनि० खट्टादिपादुकायाम् भरतः "छेदयेन्नखशः क्षुरैः मनुः "संधाय धनुषि क्षुरम्" रा० आ०७२स०। "क्षुरेण शितधारेण चकर्त्तास्य शरासनम्" रामा० ल० ८२अ०

**क्षुरक** पु० क्षुर-क्वुन्। १गोक्षुरे, (गोखुरी) २कोकिलाक्षे, मेदिनी ३तिलकद्रुमे अमरः ४भूताङ्कुशे राजनि० स्वार्थे क। क्षुरशब्दार्थे च

**क्षुरकर्मन्** न० क्षुरसाध्यं कर्म। केशच्छेदने। क्षुरकर्मणि विहितनक्षत्रादिकं मू० चि० पी० धा० उक्तं यथा "दन्तक्षौरनखक्रियात्र विहिता चौलोदिते वारभे पातङ्ग्यारखीन्विहाय नवमङ्कस्त्रञ्च सन्ध्यान्तथा। रिक्तां पर्वनिशां निरासनरणग्रामप्रयाणोद्यतस्नाताभ्यक्त कृताशनैर्नहि पुनः कार्य्या हितप्रेप्सुभिः"। मू० चि० "चौलोदितेषु चौलप्रोक्तेषु वारेषु नक्षत्रेषु उपलक्षणत्वात्तदुक्ते लग्नेऽपि च दन्तक्षौरनखक्रियात्र विहितोक्ता। "येषु येषु प्रशंसन्ति क्षुरकर्म महर्षयः। तेषु तेषु प्रशंसन्ति नखदन्तविलेखनमिति"। येषु येषु वारनक्षत्रलग्नादिष्वित्यर्थः। अथ क्षौरनिषिद्धकाल उच्यते। पातङ्गीति। पतङ्गः पक्षिसूर्य्ययोरित्यभिधानात् पतङ्गः सूर्यस्तस्यापत्यं पातङ्गिः शनिः आररवी प्रसिद्धौ। तेषां वारान् विहाय त्यक्त्वा उपलक्षणत्वात् तेषां लग्नानि मकरकुम्भमेषवृश्चिकसिंहाख्यानि अंशकांश्च विहायेत्यर्थः। उक्तञ्च वसिष्ठेन "हस्तत्रये पुष्यपुनर्वसौ च शशाङ्कविष्णुत्रितयाश्विनीषु। पौष्णेन्द्रधिष्ण्ये क्षुरकर्म शस्तं व्यर्कारमन्दांशकवारलग्ने" इति। अतः शुभग्रहाणां वारलग्नांशे क्षौरं कार्य्यमिति फलितोऽर्थः। वारफलानि गर्गोक्तानि "भानुरायुः क्षपयति मासं, सप्त शनैश्वरः। भौमोमासाष्टकं हन्ति क्षोयच्छेत्पञ्चमासकम्। एकादश कविर्दद्यात्कृते तु क्षौरकर्मणीति"। तुल्यन्यायत्वाल्लग्नानामंशानां चैतानि फलान्यूह्यानि। न केवलमायुर्हानिः किन्तु शस्त्रघातोऽपि पापवारेषु। तदुक्तं वसिष्ठेन "आदित्यभौमार्किदिनेषु धीमान् दन्तकाष्ठ क्षुरकर्म कार्य्यम्। कुर्वन्नवाप्नोति फलं समग्रं शस्त्रेण सम्यक् स्वशरीरघातम्"। तथा नवमं घस्रं च विहाय यद्दिने क्षौरं कृतं ततो नवमदिने पुनः क्षौरं न कार्य्यम्। "उत्कटे भूषिते चैव यानगो नवमेऽहनीति" नारदोक्तेः। यत्तु नवमे नवम्यामिति व्याकुर्वन्ति तदयुक्तं दिनपदोपादानाप्रसङ्गात्। दिनपदं तिथिपरमिति चेन्न रिक्तायाः वक्ष्यमाणस्वतन्त्रनिषेधानुपपत्तेः। ननु पृथगुपादानात् नवम्यां सर्वथा क्षौरं निन्द्यमेव चतुर्थीचतुर्दश्योस्तु तथा नेति चेन्न "चतुर्थीं चैव षष्ठीं च अष्टमीञ्च चतुर्दशीम्। तथा पञ्चदशीञ्चैव ब्रह्मचारी भवेत्सदा। श्मश्रुकर्म शिरोऽभ्यङ्गं दन्तधावनमैथुनम्। जन्तुश्चैतानि यः कुर्य्याल्लक्ष्मीस्तत्र न तिष्ठति"। क्षौरे व्यासवचने चतुर्थीचतुर्दश्योः सर्वथा निषेधाभिधानात्। अतएवास्मदर्थं स्फुटमाह पराशरः "क्षौराहान्नवमे त्वह्नि नेष्टमात्ययिकेष्वपीति" तथा सन्ध्यां प्रातः सन्ध्यां सायं सन्ध्याञ्च विहाय एवं रिक्ताम् विहाय पर्वाण्यपि निशां रात्रिमपि विहायेत्यर्थः अथाधिकारिणो निरूप्यन्ते हितप्रेप्सुभिः शुभोदर्कमिच्छद्भिरेतादृशैः क्षौरक्रिया हि निश्चयेन न कार्या। कीदृशैः आसनङ्कम्बलादिः तद्रहितैः रणः संग्रामः ग्रामो जनपदविशेषः प्रयाणमर्थयात्रा एतदर्थमुद्यतैः कृतोद्योगैः स्नातैरनुष्ठितनित्यनैमित्तिकस्नानैः यत्तु क्षौरार्थमेव स्नानं विधीयते प्रायश्चित्तादौ च तत्र नायं निषेधस्तथैव तस्य विधानात्। अभ्यक्तैः कृततैलाभ्यङ्गैः कृताशनैः कृतभोजनैः सुवर्णाद्यलङ्कारभूषितैरित्यपि ध्येयम्। यदाह वराहः "न स्नातमात्रगमनोत्कट भूषितानामभ्यक्तभुक्तरणकालनिरासनान म्। सन्ध्यानिशाशनिकुजार्कदिने च रिक्ते क्षौरं हितं न नवमेह्नि न चापि विष्ट्यामिति" उत्कटानां कुक्कुटासनवदवस्थितानाम्। सन्ध्यालक्षणमपि वराहेणोक्तम् "अर्धास्तमितादुदितात्सूर्यादस्पष्टभं नभोयावत्"। वृद्धगर्गः "शन्याररविवारेषु रात्रौ पाते व्रतेऽहनि। श्राद्धाहे प्रतिपद्रिक्ताभद्रा क्षौरंविवर्जयेत्। षष्ठ्यमापार्णमापातश्चतुर्दश्यष्टमी तथा। आसु सन्निहितं पापं तैले मांसे क्षुरे भगे इति"। पी० धा०

"क्रतुपाणिपीडसुतिबन्धमोक्षणे क्षुरकर्म च द्विज-

नृपाज्ञया चरेत्। शववाहतीर्थगमसिन्धुमज्जनं क्षुरमाचरेन्न खलु गर्भिणीपतिः"। मू० चि०

"अथ केषाञ्चिन्निमित्तविशेषे क्षौरस्य विधिनिषेधौ मञ्जुभाषिणीच्छन्दसाह। क्रतुपाणीति अत्र पूर्व्वार्द्धे यद्यपि निषिद्धवारादौ एषु कर्म्मसु क्षुरकर्म क्षौरं सद्यः कार्य्यमिति वाक्यार्थः क्रतौ यज्ञे विप्राज्ञया क्षौरम्। तथा पाणिपीडो विवाहो लक्षणया ततः प्राग्भाविनि गोदानकर्म्मणि केचित्तु विवाहे श्मश्रुकर्मप्राशस्त्यपरं क्षौरमित्याहुः अतएव शाखाविशेषेण विवाहे क्षौरमुक्तमित्यूचुः। तथा च श्रुतिः "मुण्डयितारः श्रविष्ठाय नावधूमढामित्यादि"। मृतौ मातापित्रोर्मरणे बन्धमोक्षणे कारागृहे बन्धस्य यदामोचनं भवेत्तदा द्विजाज्ञया राजाज्ञादावपीति बोध्यम नृपो राजा तस्याज्ञया चौरादेः क्षौरं कार्य्यमेव यदाह नारदः "नृपविप्राज्ञया यज्ञे मरणे बन्धमोक्षणे। उद्वाहेऽखिलवारर्क्षतिथिषु क्षौरमिष्टदमिति"। धर्म्मशास्त्रे "गङ्गायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि। आधाने सोमपाने च षट्सु क्षौरं विधीयते" इति। अथ शवेति गर्भिणी गर्भवती तस्याः पतिर्भर्त्ता शववाहं मृतकवहनं तीर्थयात्रां उपलक्षणत्वाद्विदेशगमनमपि। सिन्धुमज्जनम् समुद्रस्नानं, क्षुरं क्षुरकर्म एतानि कर्म्माणि न आचरेन्न कुर्य्यात्। यदाह वसिष्ठः "गृहनिर्माणमुदधिस्नानं चौलं सुतस्य तु। तीर्थयात्रां नखश्मश्रु न कुर्य्याद्गर्भिणीपतिः"। "सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनम्। विदेशगमनञ्चैव न कुर्य्याद्गर्भिणीपतिः" धर्म्मशास्त्रे तु विशेषतः "राजा योगी पुरस्त्री च मातापित्रोस्तु जीवतोः। मुण्डनं सर्वतीर्थेषु न कुर्य्याद्गर्भिणीपतिः" अयञ्च क्षौरादिनिषेधो गुर्विणीपतेः सप्तमासादूर्ध्वं न प्राक्, यदुक्तं नारदीये "वपनं तीर्थयात्राञ्च वर्जयेद्गुर्विणीपतिः। श्राद्धञ्च सप्तमान्मासादूर्ध्वं नान्यत्र वेदवित्"। श्राद्धं श्राद्धभोजनम्। इदमुत्तरार्द्धं गर्भाधानप्रकरणे वक्तव्यमपि प्रसङ्गादत्रैवोक्तं ग्रन्थकृतेति"। पी० धा०

"नृपाणां हितं क्षौरभे श्मश्रुकर्म दिने पञ्चमे पञ्चमेऽस्योदये वा। षडग्निस्त्रिमैत्रोऽष्टकः पञ्चपित्र्योऽब्दतोऽब्धयर्यमा क्षौरकृन्मृत्युमेति"। मू० चि०

"अथ क्षौरे राज्ञां विशेषं सर्वथा वर्ज्यनक्षत्राणि च भुजङ्गप्रयातेनाह नृपाणां हितमिति क्षौरभे क्षौरनक्षत्रे विहिते सति पञ्चमे पञ्चमे एव दिने श्मश्रुकर्म्म-सुखशोभाकारि क्षुरकर्म नृपाणां राज्ञां हितं प्रशस्तं यदाह वशिष्ठः "महीभृतां पञ्चमे पञ्चमेऽह्नि क्षौरं च कार्य्यं हितमुक्तभेषु" ननु पञ्चमे इति वीप्सोक्त्या नियम। प्रतीतेर्विहितनक्षत्राभावे च सति श्मश्रुकर्म कार्य्यमिति उक्तं च वसिष्ठेन "न लभ्यते चेन्न तदुक्तधिष्ण्यं तद्भोदये वा निखिलं विधेयमिति" उदयशब्देन मुहूर्त्त इति कृष्णजवो व्याकुर्वते तदाह गर्गः "क्षौरकर्म महीशानां पञ्चमे पञ्चमेऽहनि। कर्त्तव्यं क्षौरनक्षत्रेऽप्यथवा तन्मुहूर्त्तके इति तेषां क्षौरनक्षत्राणां ये स्वामिनस्तेषां मुहूर्त्ते इत्यर्थः। तांश्च मुहूर्त्तान् विवाहप्रकरणे वक्ष्यति। अत्र क्षौरपदं श्मश्रुकर्मपरम्। "राजा योगी पुरस्त्री च मातापित्रोस्तु जीवतोः। मुण्डनं सर्वतीर्थेषु न कुर्य्याद्गर्भिणीपतिरिति" राज्ञो मुण्डननिषेधात्। अतएवोक्तं श्रीपतिना "श्मश्रुकर्म पञ्चमे च पञ्चमेऽह्नि च भूभृताम्। क्षौरभस्योदये वाऽपि स्यान्न निन्द्यतारका न चेत्" इति। निन्द्यतारका जन्मविपदादितारका। अन्ये त्वेवं व्याचक्षते अस्योदये वेति अस्य क्षौरभस्योदये लग्ने। यथा मेषलग्नं त्रिंशत्भागात्मकं तत्राद्यास्त्रयोदशभागा १३,२० सविंशतिलिप्ता यावता कालेन मेषलग्ने उदयं यान्ति तावदश्विनीनक्षत्रमुदयं यातीत्यर्थः। तदनन्तरं तावन्त एवांशा यावता कालेनोदयं यान्ति तावद्भरण्युदय इत्यनेन न्यायेन सर्वेषां नक्षत्राणामुदया ज्ञेयाः। इयं च व्याख्या वराहपद्यव्याख्यावसरे भट्टोत्पलेनाभ्यधायि। पितृचरणास्त्वेवं व्याकुर्वते। यस्मिन्काले अश्विन्या उदयः क्षितिजसंबन्धः संपद्यते तं समयमारभ्य यावद्भरण्या उदयः क्षितिजसंबन्धस्तदन्तराले यावान्कालः सोऽश्विन्या उदय उच्यते। एवं सत्युदयमद्वयांशान्तरालाद्गणितमार्गेण यावानिष्टकाल आगच्छेत्स एव तत्तन्नक्षत्रोदय इति निष्कृष्टार्थ इति। नक्षत्रस्योपलक्षणत्वाच्छुभवारारम्भेऽपि तद्धोरायां कार्यम् उक्तञ्च नारदेन "यस्य खेटस्य यत्कर्म वारे प्रोक्तं विधीयते। ग्रहस्य क्षणवारेऽपि तस्य तत्कर्म सर्वदेति"। क्षणवारः कालहोरा। एवं सति निषिद्धनक्षत्रवारेऽपि प्रथमश्मश्रुकर्म कार्यमिति युक्तमुत्पश्यामः। षडग्निरिति। अग्निः कृत्तिका क्षौराहत्या षड्वारं कृत्तिका यस्य। एवं त्रीणि मैत्राण्यनुराधायस्य अष्टौ का रोहिण्योयस्य। पञ्च पित्र्याणि मघायस्य। अब्धयश्चत्वारोऽर्यमाण उत्तराफाल्गुन्यो यस्य। स एतादृशः क्षौरकृत् अब्दतः वर्षानन्तरं मृत्यु-

मरणमेति प्राप्नोति यदाह वशिष्ठः "अश्वाजकश्च पितृ-पञ्चकस्य षड्वह्निधिष्ण्यञ्चतुरर्यमर्क्षं। त्रिमैत्रभं पञ्च जलं निभोऽपि चौरी नरोऽवदग्निभवं गतः सः" इति। पद्मजो ब्रह्मा तन्नक्षत्रमस्त्वाद्यस्तदुपादानं कैमुतिकन्याय-सूचनार्थम् ननु रत्नमालापद्ये "षट्कृत्तिकः पञ्चमघ स्त्रिमैत्रो ब्रह्माष्टकोयञ्चतुरुत्तरश्च। चौरी स वर्षं चतुरा-ननोऽपि न प्राप्नोतीति प्रचुरः प्रवादः" इत्येवं सामान्यतः तिसृणामप्युत्तराणां ग्रहणाद्विरोधः इति चेत् नैवं अत्राप्युत्तरापदेन प्रथमोपस्थितिकत्वाद्वशिष्ठवाक्येन श्रुद्धै-कवाक्यतानुरोधाच्चोत्तराफाल्गुन्येव ग्रह्यते नाषाढभाद्र-पदे। अत्र तु वचनान्तरविरोधो नास्ति पौष्णमारुत मघोत्तराश्वित्रैरित्यादौ तत्र सामान्यतः सर्वासामुत्तराणां ग्रहणं भवति" पी॰ धा॰

"प्राचीमुखः सौम्यमुखोऽपि भूत्वा कुर्यान्नरः क्षौ-रमनुत्कटस्थः। उत्तरात्रितयशाख्यरोहिणीरौद्रसार्पपि-तृभेषु चाग्निभे। श्मश्रुकर्म सकलं विवर्जयेत् प्रेतकार्य-मपि बुद्धिमान्नरः" ज्यो॰ त॰

**क्षुरधान** न॰ क्षुरो धीयतेऽत्र धा—आधारे—ल्युट्। (भाँड) इति ख्याते नापितास्त्रस्थापने पात्रभेदे "आ-नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः" शत॰ ब्रा॰ १४,४,२,१६ [ पर्णयुक्ते २शरवणाढ्ये त्रि॰ राजनि॰

**क्षुरपत्र** पु॰ क्षुर इव पत्रमस्य। क्षुरधारे बाणे, क्षुरतुल्य-

**क्षुरपत्रिका** स्त्री॰ क्षुर इव पत्रं यस्याः कप् अत इत्वम्। पालङ्क्यशाके राजनि॰

**क्षुरपवि** त्रि॰ क्षुरतुल्या पविर्धाराऽस्य। तीक्ष्णाग्रभागे "ते ह स्म क्षुरपवी निमेषम्" शत॰ २,६,२,८ "क्षुरपवी क्षुरधारे" भाष्यम् निरुक्ते ५,५ पविशब्दस्य पूर्वार्ध-कत्वमाह" "पवीरथनेमिर्भवति यद्विपुनाति भूमिम्। "तं मरुतः क्षुरपविना व्ययुः"

**क्ष(खु)रप्र** पु॰ क्षुरः (खुरः) इव प्रुणाति हिनस्ति प्रु—क। (खुरपी) इति ख्याते १घासच्छेदनास्त्रे, तत्तुल्याग्रफलके २शरभेदे च हेमच॰

**क्षुरभाण्ड** न॰ ६त॰। (भाँड) ख्याते नापितास्त्रस्थापने पात्र भेदे "शीघ्रमानीयतां क्षुरभाण्डं क्षौरकर्मकरणाय गच्छा-मि" पञ्चत॰ [ हेमच॰

**क्षुरमर्दिन्** पु॰ क्षुरं मृद्नाति मर्दयति मृद-णिनि। नापिते

**क्षुरमुण्डिन्** पु॰ क्षुरेण मुण्डयति मुण्ड-णिनि ३त॰। नापिते। शब्दचि॰

**क्षुराङ्ग** पु॰ क्षुर इवाङ्गमस्य। गोक्षुरे (गोखुरो)। राजनि॰

**क्षुरिका** स्त्री॰ क्षुद्रः क्षुरः ङीप् सैव क। १छुरिकायां (पालङ्क) २शाकभेदे राजनि॰

**क्षुरिकापत्र** पु॰ क्षुरिका छुरिकेव पत्रमस्य। शरे राजनि॰

**क्षुरिणी** स्त्री॰ क्षुर + अस्त्यर्थे इनि ङीप्। १वराहक्रान्ता-याम् २नापितभार्यायाञ्च शब्दच॰

**क्षुरिन्** पु॰ क्षुर + इनि। १नापिते, २पशौ च।

**क्षुरी** स्त्री अल्पः क्षुरः ङीप्। छुरिकायाम् हेम॰

**क्षु(खु)ल्ल** त्रि॰ क्षुद्र(खुद) द किप् क्षुद्(खुद्) तां लाति ला-क। १अल्पे, २लघौ, ३कनिष्ठे च हेम॰ स्वार्थे क। तत्रार्थे

**क्षुल्लक** त्रि॰ क्षुधा लक्यते लक-आस्वादने घञर्थे क। १नीचे, २अल्पे च भरतः। २पामरे, हेमच॰ ३दुःखयुक्ते राजनि॰

**क्षुल्लतात** पु॰ नित्यकर्म॰। पितृकनिष्ठभ्रातरि जटाध॰। एवं क्षुल्लपितामहादयोऽपि पितामहादिकनिष्ठभ्रातरि

**क्षेत्र** न॰ क्षि-ष्ट्रन्। १शस्याद्युत्पत्तिस्थाने केदारे (क्षेत) अमरः शस्यभेदेन तस्य नामभेदा शब्दरत्ना॰ उक्ता यथा "व्रीहिभवोचितं क्षेत्रं व्रैहेयं तत् समीरितम्। शाल्युद्भवोचितं यत्तु शालेयमभिधीयते। यव्यं यवोचितं क्षेत्रं यवक्यं यवकोचितम्। षष्टिकोद्भवकं यत्तु षष्टिक्यं तत् प्रकीर्त्तितम्। तिलोद्भवोचितं यत्तु तिल्यं तैलीन मित्यपि। एवं माषन्तु माषीणं कौद्रव्यं कौद्रवीणवत्। तथा भङ्गाञ्च भाङ्गीनमुम्यमौमीनमित्यपि। अथ मौद्गञ्च मौद्गीनमणव्यमाणवीनवत्। माषकोद्रवभङ्गोमामुद्गाणु-प्रभवोचितम्। बीजाकृतमुप्तकृष्टन्तु शीतिसमाह्वये। शीत्यं कृष्टञ्च हल्यञ्च तृतीयाकृतमित्यपि। त्रिगुणाकृतमित्येवं त्रिवारकृष्टभूमिषु। शम्बाकृतं द्विहल्यञ्च द्वितीयं द्विगु-णाकृतम्। द्वितीयाकृतमप्यत्र द्विवारकृष्टभूमिषु। द्रोणा-ढकखार्य्यादेर्वापादौ द्रौणिकस्तथा। स्यादाढकिक-खारीकौ उत्तमर्णादयस्त्रिषु। आदिभ्यां प्रास्थिकादिश्च पाकादौ द्रौणिकोऽपि च"

२देहे ३अन्तःकरणे ४कलत्रे, ५सिद्धस्थाने च मेदि॰। सिद्धस्थानानि काशीक्षेत्रादीनि तानि भारतादौ प्रसि-द्धानि कतिचित् संक्षिप्य प्रदर्श्यन्ते

तत्र वाराणसीक्षेत्रं यथा "आसन्नं युवयोः क्षेत्रमिदं वा-राणसी तु यत्। कथितं नातिदूरे च वर्त्तते करस-ङ्गमौ"। कामरूपक्षेत्रं यथा। "नाचिरात् कामदं पुण्यं क्षेत्रं पीठं निगद्यते। चिरात्तु कामदो देवो नचिराद्यत्र शानदः। तत् क्षेत्रमिति लोके प्रदृश्यते

पूर्व्वसूरिभिः । कामरूपं महापीठं गुह्याद्गुह्यतमं परम्” कालिकापु० ५० अ० । गङ्गाक्षेत्रं स्कान्दे “तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते” । नारायणक्षेत्रं यथा “प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । तत्र नारायणःस्वामी गङ्गागर्भान्तरे वरे । तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे । एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः । स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च” ब्रह्मवै० पु०प्र०ख०२७ अ० । भास्करक्षेत्रम्“गङ्गायां भास्करक्षेत्रे मातापित्रोर्म्मृते गुरौ । आधाने सोमपाने च वपनं सप्तसु स्मृतम् । इतिस्मृति समुच्चयलिखितवचनम् । “भास्करक्षेत्रं प्रयागः” इति प्रायश्चित्ततत्त्वम् । गयाक्षेत्रं यथा “पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः”इति वायुपुराणम् । पुरुषोत्तमक्षेत्रम् । “ब्रह्म उवाच । पुरुषोत्तमाख्यं सुमहत् क्षेत्रं परमपावनम्” । “जैमिनि रुवाच । एतत्क्षेत्रवरं साक्षाद्वपुर्भूतं महात्मनः । स्वयं वपुष्मान् यत्रास्ते स्वनाम्ना ख्यापितं हि तत्” उत्कलखण्डम् । विष्णुक्षेत्राणि यथा “श्रीभगवानुवाच । शृणुष्वावहितो ब्रह्मन् ! गुह्यनामानि मेऽधुना । क्षेत्राणि चैव गुह्यानि तव वक्ष्यामि तत्त्वतः । कोकामुखे वराहञ्च मन्दरे मधुसूदनम् । अनन्तं कपिलद्वीपे प्रभासे रविनन्दनम् । माल्योदये तु वैकुण्ठं महेन्द्रे तु नृपात्मजम् । ऋषभे तु महाविष्णुं द्वारकायान्तु भूपतिम् । पाण्डुसह्ये तु देवेशं वसुरूढे जगत्पतिम् । वल्लीवने महायोगं चित्रकूटे नराधिपम् । नैमिषे पीतवासञ्च गवां निष्क्रमणे हरिम् । शालग्रामे तपोवासम् अचिन्त्यं गन्धमादने । कुब्जागारे हृषीकेशं गङ्गाद्वारे गदाधरम् । गरुड़ध्वजं तोषके च गोविन्दं नामसाह्वये । वृन्दावने तु गोपालं मथुरायां स्वयम्भुवम् । केदारे माधवं विद्यात् वाराणस्यान्तु केशवम् । पुष्करे पुष्कराक्षन्तु धृष्टद्युम्ने जयध्वजम् । तृणबिन्दुवने वीरमशोकं सिन्धुसागरे । कसेरटे महाबाहुममृतं तैजसे वने । विशाखयूपे विश्वेशं नारसिंहं वने वने । लोहकूले रिपुहरं देवशाले त्रिविक्रमम् । पुरुषोत्तमं दशपुरे कुब्जके वामनं विदुः । विद्याधरं वितस्तायां वाराहे धरणीधरम् । देवदारुवने गुह्यं कावेर्यां नागशायिनम् । प्रयागे योगमूर्त्तिञ्च पयोष्ण्यां सुन्दरं विदुः । कुमारतीर्थे कौमारं लौहित्ये हयशीर्षकम् । त्रिविक्रमञ्चोज्जयिन्यां लिङ्गस्फोटे चतुर्भुजम् । हरिहरं तुङ्गभद्रायां दृष्ट्वा पापात् प्रमुच्यते । विश्वरूपं कुरुक्षेत्रे मणिकुण्डे हलायुधम् । लोकवीरमयोध्यायां कुण्डिने रुक्मिणीपतिम् । भण्डीरे वासुदेवञ्च चक्रतीर्थे सुदर्शनम् । आद्यं विष्णुपदे विद्यात् शूकरे शूकरम् विदुः । कुशेशं मानसे तीर्थे दण्डके श्यामलं विदुः । त्रिकूटे नागमोक्षञ्च मेरुपृष्ठे च भास्करम् । विरजं पुष्पभद्रायां बालं चामीकरे विदुः । यशस्करं विपाशायां माहिष्मत्यां हुताशनम् । क्षीराब्धौ पद्मनाभञ्च विमले तु सनातनम् । शिवनद्यां शिवकरं गयायाञ्च गदाधरम् । सर्व्वत्र परमात्मानं यः पश्यति स मुच्यते । अष्टषष्टिस्तु नामानि कीर्त्तितानि मया तव । क्षेत्राणि चैव गुह्यानि कथितानि विशेषतः । द्रष्टव्यानि यथाशक्त्या क्षेत्राण्येतानि मानवैः । वैष्णवैस्तु विशेषेण तेषां मुक्तिं ददाम्यहम्” नारसिं० पु० ६२ अ० । ६ मेषादिद्वादशराशिषु । “राशिनामानि च क्षेत्रं भवनं भञ्च हनाम च । मेषादीनाञ्च पर्य्यायं लोकादेव विचिन्तयेत्” । मङ्गलादीनां क्षेत्राणि ज्यो०त० च कुजशुक्रबुधेन्दर्कसौम्यशुक्रावनीभुवाम् । जीवार्किभानुजेज्यानां क्षेत्राणि स्युरजादयः” ज्योतिःत० । “इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः । इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम्” गीतोक्तेषु ७पदार्थेषु क्षेत्राकारे ८लीलावत्यादिप्रसिद्धे त्रिकोणचतुष्कोणादिके पदार्थे तादृशक्षेत्रभेदाश्च रेखाभेदसाध्या अतोरेखाभेदसंज्ञा निरूप्यते तत्राङ्कुरचरणैः क्षेत्रतत्त्वदीपिकायामित्यमभ्यधायि यथा

१ यः पदार्थोलक्षयितुं शक्यः परिमाणस्थूलत्वदैर्घ्यविस्ताररहितः स विन्दुः । [ (विन्दुसमुदायोरेखा)

२ यः पदार्थोदीर्घो विस्तारस्थूलत्वाभ्यां रहितः स रेखा

३ यः पदार्थोविस्तारदैर्घ्ययुक्तः स्थूलत्वरहितः स धरातलम्

४ यः पदार्थोविस्तारदैर्घ्यस्थौल्ययुक्तः सः स्थूलपदार्थः ।

५ रेखा च त्रिविधा सरला वक्रा मिश्रिता च ।

६ तत्र या रेखा एकदिग्गमनेनैव चिह्नद्वयान्तराले तिष्ठति एवं ययोश्चिह्नयोरन्तराले कृतास्वनेकरेखास्वतिशयेनाल्पतमा सा सरला । यत्र रेखापदमुक्तं तत्र सरलैव ग्राह्या ।

७ या रेखा वर्त्तनेन प्रतिचिह्नं दिगन्तरं गच्छति सा वक्रा । (उभयलक्षणान्विता मिश्रिता)

८ रेखा च समानान्तरा विषमान्तरा लम्बः सम्पातरेखा च ।

९ ययो रेखयोरन्तरं समानम् एवं वर्द्धनेन तयोर्योगः

कदापि न भवितुमर्हति सा समानान्तरा रेखा भवति ।

१० ययोरन्तरं विषमम् एवं यद्दिशग्रस्थान्तरं तद्दिशि वर्द्धने नोत्तरोत्तरमल्पान्तरं यावद्रेखायोगस्तदनन्तरमुत्तरोत्तरमल्पान्तरं विवर्द्धते योगश्च कदापि भवितुं न शक्नोति सा विषमान्तरा ।

११ एकरेखायामन्यरेखासंयोगादुत्पन्नौ कोणौ यदि समानौ भवतस्तदा ते रेखे मिथोलम्बरूपे भवतः ।

१२ या रेखा वृत्तपालिमिलिता सती पालिखण्डं न करोति सा सम्पातरेखा भवति । यद्वृत्तं वृत्तसम्पातेन खण्डितं न भवति स वृत्तसम्पातः ।

१३ एकचिह्नान्निःसृते द्वे रेखे यदि सम्मुखेतरभिन्नदिग्गते भवत स्तदा तच्चिह्ने कोणोभवति ।

१४ कोणस्त्रिविधः समकोणोऽल्पकोणोऽधिककोणश्च ।

१५ तत्र समानरेखायां लम्बयोगादुत्पन्नः कोणः समकोणः

१६ समातिरिक्तोविषमकोणोभवति ।

१७ समकोणान्न्यूनोऽल्पकोणोभवति ।

१८ समकोणादधिकोऽधिककोणो भवति ।

१९ धरातलं द्विविधं समं वर्त्तुलं च ।

२० तत्र यस्मिन्धरातले सरला रेखा सर्वतो भावेन संलग्ना भवति यद्वा यत्र कुत्रापि चिह्नद्वये लग्ना सरला रेखा सर्वतः स्पृशति तद्धरातलं समं ज्ञेयम् । समातिरिक्तं विषममिति ।

२१ सरलरेखाभिः कुटिलरेखाभिर्वा निबद्धसीमं धरातलं समधरातलक्षेत्रं भवति । यत्र क्षेत्रमन्द्स्तत्र समधरातलक्षेत्रं ज्ञेयम् ।

२२ सरलरेखानिबद्धसीमं धरातलकं क्षेत्रं भुजैः कोणैर्वाऽभिधेयं भवति किन्तु यावन्तोभुजास्तावन्त एव कोणाः भवति । [णैर्वाऽनेकविधं भवति ।

२३ त्रिभिर्भुजैर्निबद्धसीमं धरातलं त्रिभुजक्षेत्रं भुजैः को-

२४ यस्य त्रयोबाहवः समानास्तत्समत्रिभुजं भवति ।

२५ यस्य द्वौ बाहू समानौ तत्समद्विभुजं ज्ञेयम् ।

२६ यस्य त्रयोबाहवोविषमास्तद्विषमत्रिभुजं भवति ।

२७ यस्यैकः समकोणस्तत्समकोणत्रिभुजं ज्ञेयम् ।

२८ समातिरिक्तकोणं विषमत्रिभुजं भवति ।

२९ यस्यैकोऽधिककोणस्तदधिककोणत्रिभुजं भवति ।

३० यस्य त्रयोऽपि न्यूनकोणास्तन्न्यूनकोणत्रिभुजं ज्ञातव्यम् ।

३१ चतुर्भुजैर्निबद्धसीमं धरातलं चतुर्भुजक्षेत्रं भवति ।

३२ यस्य चतुर्भुजस्य परस्परं सम्मुखौ भुजौ समान्तरौ भवतस्तत्समानान्तरभुजं चतुर्भुजं क्षेत्रं भवति । तद्व्यमाणाभिधानं चतुर्विधं तद्यथा ।

३३ यस्य चतुर्भुजस्य परस्परसम्मुखौ भुजौ समानौ एवमेकः समकोणश्च भवति तच्चतुर्भुजं समकोणायतं भवति ।

३४ यस्य चत्वारोभुजा मिथःसमानाः कोणाश्च समास्तच्चतुर्भुजं समकोणसमचतुर्भुजं वर्गक्षेत्रं वा भवति ।

३५ यस्य परस्परं सम्मुखरेखाद्वयं समानं समानान्तरं च भवति । कोणाश्च विषमास्तच्चतुर्भुजं विषमकोणायतम्

३६ यस्य चत्वारोबाहवः समानाः समानान्तराश्च भवन्ति कोणाश्च विषमास्तद्विषमकोणसमचतुर्भुजं भवति ।

३७ यस्य च परस्परं सम्मुखौ भुजौ विषमान्तरौ तच्चतुर्भुजं विषमचतुर्भुजं भवति ।

३८ यस्य भुजद्वयं समानान्तरं तत्समानान्तरविषमचतुर्भुजम्

३९ चतुर्भुजस्यैकान्तरकोणसंलग्ना रेखा कर्णो भवति ॥

४० चतुर्भुजादधिकभुजैर्निबद्धं धरातलं सामान्यतोबहुभुजं क्षेत्रं तद्बहुविधं भुजानुसारेण कोणानुसारेण वा तेषां नामानि

४१ यथा पञ्चभुजं षड्भुजं सप्तभुजमष्टभुजं नवभुजं दशभुजमेकादशभुजं द्वादशभुजमित्यादीनि ॥

४२ तत्र बहुभुजक्षेत्रं यदि समभुजं भवति तस्य कोणा समानाभवन्ति तदा तत्क्षेत्रं समपञ्चभुजमित्याभिधानकं भवति तदितरत् विषमपञ्चभुजमित्यादि ।

४३ एवमेव समत्रिभुजे कोणाः समानाभवन्त्येवेति नियमः तत्त्रिभुजं समानकोणसमत्रिभुजं भवति । यस्य चत्वारो भुजाः समानाः सन्ति तत्समचतुर्भुजं क्षेत्रं भवति ।

४४ यस्य क्षेत्रस्य भुजाः समानाभवन्ति तत् क्षेत्रं समभुजं यस्य कोणाः समानास्तत्समानकोणं क्षेत्रं यस्य भुजाः कोणाश्च समानाभवन्ति तत्क्षेत्रं समकोणसमभुजं भवति

४५ कुटिलरेखया निबद्धसीमं धरातलं वृत्तक्षेत्रं भवति सा रेखा परिधिसंज्ञिका पालिसंज्ञिका वा भवति तस्या मध्यविन्दुः केन्द्रसंज्ञकोभवति ॥

४६ केन्द्रान्निःसृता वृत्तपालिसंलग्ना रेखा व्यासार्द्धं भवति ।

४७ या रेखा उभयतः पालिसंलग्ना केन्द्रगा च भवति सा व्याससंज्ञिका भवति ॥

४८ परिधिखण्डश्चापसंज्ञकोभवति ॥

४९ चापोभयप्रान्तगा रेखा चापकर्णसंज्ञिका ज्यासंज्ञिका च

५० जीवाचापाभ्यां निबद्धधरातलकं क्षेत्रं धनुःक्षेत्रं चापक्षेत्रं वा भवति ॥

५१ यस्य चापस्य व्यासरेखा जीवा भवति तत् अर्द्धवृत्तम् ।

५२ केन्द्राद्विःसृते द्वे रेखे चापोभयप्रान्तसंलग्ने यदि भवत स्तदा तत्क्षेत्रं वृत्तांशसंज्ञकं वृत्तखण्डकं च भवति ॥

५३ यस्य चापः परिधिपादमितः केन्द्राद्विःसृताभ्यां रेखाभ्यां समकोणश्च भवति तद्वृत्तपादक्षेत्रं भवति ॥

५४ क्षेत्रस्योर्द्ध्वकोणादाधाररेखायां पतितलम्बमितमौच्च्यम्

५५ समकोणत्रिभुजे समकोणसम्मुखभुजः कर्णोभवत्यन्यौ पादौ भवतः किं वैक आधारोऽन्योलम्बः ॥

५६ अत्र कोणोपलब्धिः कल्पितत्रिभिर्वर्णैर्भवति किन्तु सदैव कोणसंलग्नोवर्णोमध्यउच्चारणीयः ॥

५७ परिधेः षष्ट्यत्रिकशततमांशोंऽशसंज्ञकोभवति । अंशस्य षष्ट्यंशः कला । कलायाः षष्ट्यंशोविकला । विकलायाः षष्ट्यंशः प्रतिविकलेत्यादि ।

५८ कोणस्य परिमितिः कोणचिह्नगतकेन्द्रात् कृते वृत्ते तत्कोणाकारकरेखयोरन्तरालचापगतांशतुल्या भवति स कोणस्तद्वृत्तस्य केन्द्रं भवति ॥

५९ तेषां चापानां केन्द्राद्दूरत्वं समानं भवति येषु केन्द्राद्विःसृतोलम्बः समोभवति ॥

६० येषु दीर्घोलम्बः पतति तेषां दूरत्वं दीर्घं भवति ॥

६१ चापगतैकचिह्नाद्विःसृते द्वे रेखे तदन्यचापोभयप्रान्तमिलिते तदुद्भूतः कोणश्चापान्तर्गतकोणोभवति ॥

६२ अनन्तरोक्तकोणादपरदिग्भवः कोणस्तत्कोणसत्त्वे चापोपरिस्थः कोणोभवति किन्तु द्वयोः कोणयोः स्वरूपं समानं तयोः प्रथमोऽन्तर्गतोद्वितीयउपरिस्थइत्येष भेदः

६३ यत्कोणचिह्नं परिधिगतं भवति स पालिकोणोभवति यस्य तच्चिह्नं केन्द्रगतं स्यात्स कोणः केन्द्रकोणोभवति ॥

६४ सरलरेखाकृतक्षेत्रस्य सर्व्वे कोणा यदि वृत्तमध्ये परिधिसंलग्नाभवन्ति तदा तत्क्षेत्रं वृत्तान्तर्गतं क्षेत्रोपरिगतवृत्तं वा भवति ॥

६५ यदि सरलरेखाकृतक्षेत्रस्य मध्ये सर्व्वभुजसंलग्नः परिधिस्तदा तद्वृत्तं क्षेत्रान्तर्गतं वृत्तोपरिगतक्षेत्रं वा,

६६ सरलरेखाकृतक्षेत्रस्य सर्व्वभुजसंलग्नायदि तद्रूपस्यान्यक्षेत्रस्य सर्व्वे कोणाभवन्ति तदा तत्क्षेत्रं क्षेत्रान्तर्गतं क्षेत्रोपरिगतक्षेत्रं वा भवति ॥

६७ यद्रेखायाएकांशोवृत्तान्तर्गतोद्वितीयोवहिर्गतः स्यात्सा रेखा वृत्तखण्डिनी भवति ॥

६८ ययोर्द्वयोस्त्रिभुजयोर्येषां सरलरेखाकृतक्षेत्राणां वा प्रतिदिग्भुजैः प्रतिदिग्भुजाः समानाः सन्ति तानि परस्परं समभुजानि भवन्ति ययोर्येषां वा प्रतिदिक्कोणैः प्रतिदिक्कोणाः समानास्तानि क्षेत्राणि परस्परं समानकोणानि भवन्ति ॥

६९ उभयोः क्षेत्रयोः परस्परं भुजाः कोणाश्च परस्परं भुजैः कोणैश्च समानाभवन्ति किं वैकस्य क्षेत्रस्य सर्व्वे भुजाः कोणाश्च द्वितीयक्षेत्रस्य सर्व्वैर्भुजैः कोणैश्च परस्परं समानाः यथा एकक्षेत्रोपरि द्वितीयक्षेत्रं स्थाप्यते तदा सर्व्वे भुजाः कोणाश्च सर्व्वभुजोपरि कोणोपरि च समानरूपेण पतिताः स्युः यथा द्वयोरेकरूपं स्यादीदृक्क्षेत्राण्येकरूपाणि भवन्ति ॥

७० येषां क्षेत्राणां प्रतिदिक्कोणाः समानाएवं प्रतिदिग्भुजा एकनिष्पत्तियुताभवन्ति तानि क्षेत्राणि सजातीयानि

७१ क्षेत्रस्याखिलभुजयोगः सीमास्तत्वमित्युच्यते ॥

एवं रेखानिष्पन्नक्षेत्राणां भुजकोणादिमानफलज्ञानार्थं लीलावत्युक्तः क्षेत्रव्यवहारोऽत्र दर्श्यते यथा

“भुजकोटिकर्णानामन्यतमाभ्यामन्यतमानयनाय करणसूत्रं वृत्तद्वयम् । इष्टाद्वाहोर्यः स्यात्तत्स्पर्द्धिन्यां दिशीतरोबाहुः । त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्त्तिता तज्ज्ञैः । तत्कृत्योर्योगपदं कर्णो,दोःकर्णवर्गयोर्विवरात् । मूलं कोटिः, कोटिश्रुतिकृत्योरन्तरात्पदं बाहुः। उदाहरणम् । कोटिश्चतुष्टयं यत्र दोस्त्रयं तत्र का श्रुतिः । कोटिन्दोःकर्णतः, कोटिश्रुतिभ्याञ्च भुजं वद ।

न्यासः




कोटिः ।४। भुजः ।३। भुजवर्गः ९ । कोटिवर्गः । १६। एतयोर्योगात् ।२५।मूलम्।५। कर्णोजातः॥

॥अथ कर्णभुजाभ्यां कोट्यानयनम् ॥

न्यासः




कर्णः ।५। भुजः ।३।अनयोर्वर्गान्तरम् ।१६। एतन्मूलं ।४। कोटिः

॥अथ कोटिकर्णाभ्यां भुजानयनम् ॥

न्यासः



कोटिः ।४। कर्णः ।५। अनयोर्वर्गान्तरम् ।९। एतन्मूलं । ३ । भुजः "प्रकारान्तरेण तज्ज्ञानाय करणसूत्रं सार्द्धवृत्तम् । राश्योरन्तरवर्गेण द्विघ्ने घाते युते तयोः । वर्गयोगो भवेदेवं तयोर्योगान्तराहृतिः । वर्गान्तरं भवेदेवं ज्ञेयं सर्वत्र धीमता ॥

कोटिश्चतुष्टयमिति पूर्वोक्तोदाहरणे ।

न्यासः



कोटिः । ४ । भुजः । ३ । अनयोर्वधे ।१२। द्विघ्ने ।२४। अन्तरवर्गेण ।१। युते वर्गयोगः ।२५। अस्य मूलं कर्णः ।५।

अथ कर्णभुजाभ्यां कोट्यानयनम् ।

न्यासः



कर्णः ।५। भुजः ।३। अनयोर्योगः ।८। पुनरेतयोरन्तरेणा ।२। ऽऽहतोवर्गान्तरम् । १६ । अस्य मूलं कोटिः । ४ ।

अथ कर्णकोटिभ्यां भुजायनम् ।

न्यासः



कोटिः ।४। कर्णः ।५। (उक्तरीत्या) जातोभुजः । ३ ।

"उदाहरणम् । साङ्घ्रित्रयमितोबाहुर्यत्र कोटिश्च तादृशी । तत्र कर्णप्रमाणं किं गणक ! ब्रूहि मे द्रुतम् ॥

न्यासः



भुजः १३/४ कोटिः१३/४ अनयोर्वर्गयोर्योगः१६९/८ अस्य मूलाभावात्करणीगतएवायं कर्णः

अस्यासन्नमूलज्ञानार्थमुपायः वर्गेण महतेष्टेन हताच्छेदांशयोर्वधात् । पदं गुणपदघ्नच्छिद्भक्तं निकटं भवेत् ॥

अयं कर्णवर्गः१६९/८अस्य छेदांशघातः१३५२अयुतघ्नः १३५२०००० अस्यासन्नमूलम् ३६७७ इदं गुणमूल १०० गुणितच्छेदेन ८०० भक्तं लब्धमासन्नपदं ४ भागाः ४७७/८०० अयं कर्णः । एवं सर्वत्र ।

"त्र्यस्रजात्ये करणसूत्रं वृत्तद्वयम् । इष्टोभुजोऽस्माद्द्विगुणेष्टनिघ्नादिष्टस्य कृत्यैकवियुक्तयाप्तम् । कोटिः पृथक् सेष्टगुणा भुजोना कर्णोभवेत्त्र्यस्रमिदन्तु जात्यम् ॥ इष्टोभुजस्तत्कृतिरिष्टभक्ता द्विःस्थापितेष्टोनयुतार्द्धिता वा । तौ कोटिकर्णाविति कोटितोवा बाहुश्रुती वाऽकरणीमते स्तः ।

उदाहरणम् । भुजे द्वादशके यौ यौ कोटिकर्णावनेकधा । प्रकाराभ्यां वद क्षिप्रं तौ तावकरणीमतौ ॥

न्यासः



भुजः। १२ । इष्टम् । २ । अनेन द्विगुणेन । ४ । गुणितोभुजः ।४८। इष्ट । २ । कृत्या । ४ । एकोनया । ३ । भक्तोलब्धा । १६ । कोटिः इयमिष्टगुणा। ३२ । भजो। १२ । ना जातः कर्णः । २० ।

त्रिकेष्टेन वा ।




कोटिः । ९ । कर्णः ।१५।

(उक्तरीत्यायातः)

पञ्चकेनेष्टेन वा




कोटिः । ५ । कर्णः । १३ । (उक्तरीत्यायातः)

अथ द्वितीयप्रकारेण ।

न्यासः




भुजः । १२ । अस्य कृतिः । १४४ । इष्टेन ।२। भक्ता लब्धम् । ७२ । इष्टेन । २ । ऊन । ७० । युतौ । ७४ । अर्द्धितौ जातौ कोटिकर्णौ । ३५ । ३७ ।

चतुष्टयेन वा ।




कोटिः । १६ । कर्णः । २० ।

(उक्तरीत्यायातः)

षट्केन वा ।




कोटिः । ९ । कर्णः । १५ ।

(उक्तरीत्यायातः)

अथेष्टकर्णात्कोटिभुजानयने करणसूत्रं वृत्तम् । इष्टेन निघ्नाद्द्विगुणाच्च कर्णादिष्टस्य कृत्यैकयुजा यदाप्तम् । कोटिर्भवेत् सा पृथगिष्टनिघ्नी तत्कर्णयोरन्तरमत्र बाहुः ॥

"उदाहरणम् । पञ्चाशीतिमिते कर्णे यौ यावकरणीगतौ । ज्ञातां कोटिभुजौ तौ तौ वद कोविद । सत्वरः

न्यासः




कर्णः । ८५। अयं द्विगुणः।१७०। द्विकेनेष्टेन हतः । ३४० । इष्ट० । २ । कृत्या । ४ ।सैकया । ५ । भक्तो जाता कोटिः । ६८ । इयमिष्टगुणा । १३६ । कर्णो । ८५ । निता जातोभुजः॥५१॥

चतुष्केणेष्टेन वा ।




कोटिः । ४० । भुजः । ७५ ।

( उक्त रीत्यायातः )

प्रकारान्तरेण तत्करणसूत्रं वृत्तम् । इष्टवर्गेण सैकेन भिन्नः कर्णोऽथ वा हृतः । फलोनः श्रवणः कोटिः फलमिष्टगुणं भुजः ॥

पूर्वोदाहरणे । न्यासः




कर्णः । ८५ । अत्र द्विकेनेष्टेन जातौ किल कोटिभुजौ । ५१ । ६८ ।

चतुष्केण वा।




कोटिः । ७५ । भुजः ।४०। अत्र दोःकोट्योर्नामभेद एव केवलं न स्वरूपभेदः ।

अथेष्टाभ्यां भुजकोटिकर्णानयने करणसूत्रं वृत्तम् । इष्टयोराहतिर्द्विघ्नी कोटिर्वर्गान्तरं भुजः । कृतियोगस्तयोरेवं कर्णश्चाकरणीगतः ॥

उदाहरणम् । यैर्यैस्त्र्यस्रं भवेज्जात्यं कोटिदोःश्रवणैः सखे ! । त्रीनव्यविदितानेतान् क्षिप्रं ब्रूहि विचक्षण ! ॥

न्यासः




अत्रेष्टे । २ । १ । आभ्यां कोटि भुजकर्णाः । ४ । ३ । ५ ।

(उक्तरीत्यायातः)




अथवेष्टे । ३ । २ । आभ्यां कोटिभुज कर्णाः । १२ । ५ । १३ ।

(उक्तरीत्यायाताः)




अथवेष्टे । २ । ४ । आभ्यां कोटिभुजकर्णाः । १६ । १२ । २० । एवमन्यत्रानेकधा ॥

कर्णकोटियुतौ भुजे च ज्ञाते पृथक्करणसूत्रं वृत्तम् । वंशाग्रमूलान्तरभूमिवर्गो वंशोद्धृतस्तेन पृथग्युतोनौ । वंशौ तदर्द्धे भवतः क्रमेण वंशस्य खण्डे श्रुतिकोटिरूपे ।

उदाहरणम् । यदि समभुवि वेणुर्द्वित्रिपाणि प्रमाणो गणक ! पवनवेगादेकदेशे स भग्नः । भुवि नृप१६मितहस्तेष्वङ्ग लग्नं तदग्रं कथय कतिषु मूलादेष भग्नः करेषु ॥




वंशाग्रमूलान्तरभूमिर्भुजः । १६ । वंशः कोटिकर्णयुतिः । ३२ । जाते अद्घोर्ध्वः खण्डे । २० । १२ ।

बाहुकर्णयोगे दृष्टे कोट्याञ्च ज्ञातायां पृथक्करणसूत्रं वृत्तम् । स्तम्भस्य वर्गोऽहिबिलान्तरेण भक्तः फलं व्यालबिलान्तरालात् । शोध्यं तदर्द्धप्रमितैः करैः स्याद्विलाग्रतो व्यालकलापियोगः ॥

उदाहरणम् । अस्ति स्तम्भतले बिलं तदुपरि क्रीडाशिखण्डी स्थितः स्तम्भे हस्तनवोच्छ्रिते त्रिगुणितस्तम्भप्रमाणान्तरे । दृष्ट्वाहिं बिलमाव्रजन्तमपतत्तिर्यक् स तस्योपरि क्षिप्रं ब्रूहि तयोर्बिलात्कतिमितैः साम्येन गत्योर्युतिः ॥




स्तम्भः । ९ । अहिबिलान्तरम् । २७ । जाता बिलगत्योर्मध्यहस्ताः । १२ ।

कोटिकर्णान्तरे भुजे च दृष्टे पृथक्करणसूत्रं वृत्तम् । भुजाद्वर्गितात्कोटिकर्णान्तराप्तं द्विधा कोटिकर्णान्तरेणोनयुक्तम् । तदर्द्धे क्रमात्कोटिकर्णौ भवेतामिदं धीमताऽऽवेद्य सर्वत्र योज्यम् । सखे ! पद्मतन्मज्जनस्थानमध्यं भुजः कोटिकर्णान्तरं पद्मदृश्यम् । नलः कोटिरेतन्मितः स्यादगाधोवदैवं समानीय पानीयमानम् ॥

उदाहरणम् । चक्रक्रौञ्चाकुलितसलिले क्वापि दृष्टं तडागे तोयादूर्द्ध्वं कमलकलिकाग्रं वितस्तिप्रमाणम् । मन्दं मन्दं चलितमनिलेनाहतं हस्तयुग्मे तस्मिन्मग्नं गणक ! कथय क्षिप्रमम्भःप्रमाणम् ॥ न्यासः




कोटिकर्णान्तरम् १/२ भुजः । २ । लब्धं जलगाम्भीर्यम् १५/४ इयं कोटिः इयमेव कलिकामानयुता जातः कर्णः १७/४

कोट्येकदेशेन युते कर्णे भुजे च दृष्टे कोटिकर्णज्ञानाय करणसूत्रं वृत्तम् । द्विनिघ्नतालोच्छ्रितिसंयुतं तत्सरोऽन्तरं तेन विभाजितायाः । तालोच्छ्रितेस्ताडसरोऽन्तरघ्नादुड्डीनमानं खलु लभ्यते तत् ॥

उदाहरणम् । वृक्षाद्धस्तशतोच्छ्रयाच्छतयुगे वाप्यां कपिः कोऽप्यगादुत्तीर्याथ परोद्रुतं श्रुतिपथेनोड्डीय किञ्चिद्द्रुमात् । जातैवं समता तयोर्यदि गतावुड्डीनमानं कियद्विद्वन् ! चेत्सुपरिश्रमोऽस्ति गणिते क्षिप्रं तदाऽऽचक्ष्व मे ॥ ॥ न्यासः




वृक्षवाप्यन्तरम् । २०० । वृक्षोच्छ्रायः । १०० । लब्धमुड्डीनमानम् । ५० । कोटिः । १५० । कर्णः । २५० । भुजः । २०० ।

भुजकोट्योर्योगे कर्णे च ज्ञाते पृथक्करणसूत्रं वृत्तम् । कर्णस्य वर्गाद्द्विगुणा

द्विघ्नोऽथो दोःकोटियोगः स्वगुणोऽस्य मूलम्। योगो द्विधा मूलविहीनयुक्तः स्यातां तदर्द्धे भुजकोटिमाने ॥

उदाहरणम्। दशसप्ताधिकः कर्णस्त्र्यधिका विंशतिः सखे!। भुजकोटियुतिर्यत्र तत्र ते मे पृथग्वद ॥

न्यासः




कर्णः । १७ । दोःकोटियोगः।२३ । जाते भुजकोटी । ८ । १५ ।

उदाहरणम्। दोःकोट्योरन्तरं शैलाः कर्णो यत्र त्रयोदश । भुजकोटी पृथक्तत्र वदाशु गणकोत्तम ॥

न्यासः




कर्णः । १३ । भुजकोट्यन्तरम् । ७ । लब्धे भुजकोटी । ५ । १२ ।

लम्बाबाधाज्ञानाय करणसूत्रं वृत्तम्। अन्योऽन्यमूलाग्रगसूत्रयोगाद्वेण्वोर्वधे योगहृते च लम्बः। वंशौ स्वयोगेन हृतावभीष्टभूघ्नौ च लम्बोभयतः कुखण्डे ॥

उदाहरणम्। पञ्चदशदशकरोच्छ्रायवेणवोर-ज्ञातमध्यभूमिकयोः। इतरेतरमूलाग्रगसूत्रयुतेर्लम्बमानमाचक्ष्व॥

न्यासः




वंशौ । १५ । १० । जातो लम्बः । ६ । वंशान्तरभूः । ५ । अत्र जाते भूखण्डे । ३ । २ अथवा भूः । १० । खण्डे । ६ । ४ । वा भूः। १५ । खण्डे । ९ । ६ । वा भूः।२०, खण्डे । १२ । ८ । एवं सर्वत्र लम्बः स एव ।

यद्यत्र भूमितुल्ये भुजे वंशः कोटिस्तदा भूखण्डेन किमिति त्रैराशिकेन सत्र प्रतीतिः।

अथ अक्षेत्रलक्षणे सूत्रम्। धृष्टोद्दिष्टमृजुभुजं क्षेत्रं यत्रैकबाहुतः स्वल्पा। तदितरभुजयुतिरथवा तुल्या ज्ञेयं तदक्षेत्रं ॥

उदाहरणम्। चतुरस्रे त्रिषड्द्व्यर्का भुजास्त्र्यस्रे त्रिषड्नवाः। उद्दिष्टा यत्र धृष्टेन तदक्षेत्रं विनिर्दिशेत्

एते अनुपपन्ने क्षेत्रे ।







भुजप्रमाणाभृजुशलाकाः भुजस्थाने षु विन्यस्यानुपपत्तिर्दर्शनीयेति ।

आबाधादिज्ञानाय करणसूत्रमार्याद्वयम्। त्रिभुजे भुजयोर्योगस्तदन्तरगुणो भुवा हृतो लब्ध्या। द्विःस्था भूरूनयुता दलिताऽऽबाधे तयोः स्याताम् ॥

स्वाऽऽबाधाभुजकृत्योरन्तरमूलं प्रजायते लम्बः। लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवति ॥

उदाहरणम्। क्षेत्रे मही मनुमिता त्रिभुजे भुजौ तु यत्र त्रयोदशतिथिप्रमितौ च मित्र!। तत्रावलम्बकमितिं कथयावबाधे क्षिप्रं तथा च समकोष्ठमितिं फलाख्याम् ॥ न्यासः




भूः। १४ । भुजौ । १३ । १५ । लब्धे आबाधे । ५ । ९ । लम्बः । १२ । क्षेत्रफलञ्च । ८४ । ऋणाऽऽबाधोदाहरणम्। दशसप्तदशप्रमौ भुजौ त्रिभुजे यत्र नवप्रमा मही। अबधे वद लम्बकं तथा गणितं गणितिकाशु तत्र मे ॥




भुजौ ।१०,१७। भूमिः । ९ । अत्र त्रिभुजे भुजयोर्योगइत्यादिना लब्धम् । २१ । अनेन भूरूना न स्यात् अस्मादेव भूरपनीता शेषार्द्धमृणगताऽऽबधा दिग्वैपरीत्येनेत्यर्थः। तथा जाते आबाधे । ६ । १५ । अतउभयत्रापि जातो लम्बः । ८ । फलम् । ३६ ।

चतुर्भुजत्रिभुजयोरस्पष्टफलानयने करणसूत्रं वृत्तम्। सर्वदोर्युतिदलञ्चतुःस्थितं बाहुभिर्विरहितञ्च तद्वधात्। मूलमस्फुटफलं चतुर्भुजे स्पष्टमेवमुदितं त्रिबाहुके ॥

उदाहरणम्। भूमिश्चतुर्दशमिता मुखमङ्कसङ्ख्या बाहू त्रयोदशदिवाकरसम्मितौ च। लम्बोऽपि यत्र रवि-

वंशकएव तत्र क्षेत्रे फलं कथय तत्कथितं यदाद्यैः

न्यासः




भूमिः । १४ । मुखम् । ९ । बाहू । १३ । १२ । लम्बः । १२ । उक्तवत्करणेन जातं क्षेत्रफलं करणी । १९८०० । अस्याः पदं किञ्चिन्न्यूनैकचत्वारिंशदधिकशतम् १४१ । इदमत्र क्षेत्रे न वास्तवं फलम् किन्तु लम्बेन निघ्नं कुमुखैक्यखण्डमित्यादिवक्ष्यमाणकरणेन वास्तवं फलम् ।१३८

अत्र त्रिभुजस्य पूर्वोदाहृतस्य

न्यासः




भूमिः । १४ ।भुजौ । १३ । १५ । अनेनापि प्रकारेण त्रिबाहुके तदेव वास्तवं फलम् । ८४ । अत्र चतुर्भुजस्यास्पष्टत्वादितरः ।

अथ स्थूलत्वनिरूपणार्थं सूत्रं सार्द्धवृत्तम् । चतुर्भुजस्यानियतौ हि कर्णौ कथं ततोऽस्मिन्नियतं फलं स्यात् । प्रसाधितौ तच्छ्रवणौ यदाद्यैः स्वकल्पितौ तावितरत्र न स्तः ॥ तेष्वेव बाहुष्वपरौ च कर्णावनेकधा क्षेत्रफलं ततश्च ॥ चतुर्भुजे हि एकान्तरकोणावाक्रम्याऽन्तःप्रवेश्यमानौ स्वसंसक्तं कर्णं सङ्कोचयतः इतरौ वहिरपसरन्तौ कोणौ स्वसंसक्तं कर्णं वर्द्धयतः अतउक्तन्तेष्वेव बाहुष्वपरौ च कर्णाविति । लम्बयोः कर्णयोर्वैकमनिर्दिश्यापरान् कथम् । पृच्छत्यनियतत्वेऽपि नियतञ्चापि तत्फलम् । स पृच्छकः पिशाचोवा वक्ता वा नितरान्ततः । यो न वेत्ति चतुर्बाहुक्षेत्रस्यानियतां स्थितिम् ॥ समचतुर्भुजाऽऽयतयोः फलानयने करणसूत्रं सार्द्धश्लोकद्वयम् । इष्टा श्रुतिस्तुल्यचतुर्भुजस्य कल्प्याथ तद्वर्गविवर्जिता या । चतुर्गुणा बाहुकृतिस्तदीयं मूलं द्वितीयश्रवणप्रमाणम् ॥ अतुल्यकर्णाभिहतिर्विभक्ता फलं स्फुटं तुल्यचतुर्भुजे स्यात् । समश्रुतौ तुल्यचतुर्भुजे च तथाऽऽयते तद्भुजकोटिघातः ॥ चतुर्भुजेऽन्यत्र समान्तलम्बे लम्बेन निघ्नं कुमुखैक्यखण्डम् ॥

उदाहरणम् । क्षेत्रस्य पञ्चकृतितुल्यचतुर्भुजस्य कर्णौ तकानु कथितं गणक ! प्रपञ्च । तुल्यश्रुतेश्च खलु तस्य तथा-यतस्य यद्विस्तृतीरसमिताष्टमितं च दैर्घ्यम् ॥

प्रथमोदाहरणे ।

न्यासः




भुजाः ।२५।२५।२५ । २५ । अत्र त्रिंशन्मिता ।३० । मेकां श्रुतिं प्रकल्प्य जाताऽन्या । ४० । फलञ्च । ६०० । (तथाहि भुजवर्गः ६२५ । चतुर्गुणा २५०० श्रुतिवर्गेण ९०० हीनात् १६०० मूलम् ४०) द्वितीय श्रुतिः । तयोः ३० । ४० । श्रुत्योर्घातः १२०० द्विभक्तः ६०० ।

अथ वा ।

न्यासः




चतुर्दशमितामेकां ।१४। श्रुतिं प्रकल्प्योक्तवत्करणेन जाताऽन्या श्रुतिः । ४८ । फलञ्च । ३३६ ।

(अत्र क्षेत्रे २४ स्थानेऽशुद्धः १४ शुद्धम् इति)

द्वितीयोदाहरणे ।

न्यासः




तत्र द्वयोर्योगपदं क- र्णइति जाता करणी- गता श्रुतिः

समचतुरस्र तुल्यैव । गणितञ्च । ६२५ ।

अथायतस्य ।

न्यासः




विस्तृतिः ।६।
दैर्घ्यम् । ८ ।
अस्य गणितम्
। ४८ ।

उदाहरणम् । क्षेत्रस्य यस्य वदनं मदनारितुल्यं विश्वम्भरा द्विगुणितेन मुखेन तुल्या । बाहू त्रयोदशनखप्रमितौ च लम्बः सूर्य्योन्मितश्च गणितं वद तत्र किं स्यात् ॥

न्यासः




वदनम् । ११ ।

विश्वम्भरा ।२२।

बाहू ।१३ ।२०।

लम्बः ।१२।

अत्र सर्व्वदोर्य्युतिदलमित्यादिना स्थूलं फलम् ।२५० वास्तवन्तु लम्बेन निघ्नं कुमुखैक्यखण्डमिति जातं फलम्। ।१९८ । क्षेत्रस्य खण्डत्रयं कृत्वा फलानि पृथगानीय ऐक्यं कृत्वास्य फलोपपत्तिर्दर्शनीया खण्डत्रयदर्शनम् ।










प्रथमस्य भुजकोटिकर्णाः । ५।१२ ।१३। द्वितीयतस्य विस्तृतिः । ६ । दैर्घ्य । १२। तृतीयस्य भुजकोटिकर्णाः ।१६ । १२ । २० ।

अत्र त्रिभुजयोर्भुजकोटिघाताद्धं फलम् यथा प्रथमक्षेत्रे फलम् । ३० । द्वितीये । ७२ । तृतीये ।९६। एषामैक्यं सर्व्वक्षेत्रफलम् । १९८ ।

अथान्यदुदाहरणम् । पञ्चाशदेकसहिता वदनं यदीयं भूः पञ्चसप्ततिमिता प्रमितोऽष्टषष्ट्या । सव्योभुजोद्विगुणविंशतिसम्मितोऽन्यस्तस्मिन् फलं श्रवणलम्बमिती प्रचक्ष्व।

न्यासः




वदनम् ।५१ । भूमिः । ७५।

भुजौ । ६८

अत्र पञ्चावयवस्थूतीनां ज्ञानार्थं सूत्रं वृत्तार्द्धम् । ज्ञातेऽथ लम्बे श्रवणः श्रुतौ तु लम्बः फलं ज्ञातिमतन्तु तत्र । कर्णस्यानियतत्वाल्लम्बोऽप्यनियतस्त्वयं ।

लम्बज्ञानाय करणसूत्रं वृत्तार्द्धम् । चतुर्भुजान्तस्त्रिभुजेऽवलम्बः प्राग्वद्भुजौ कर्णभुजौ मही भूः ॥

अत्र लम्बज्ञानार्थं सव्यभुजाग्रादितरभुजमूलगामी दृष्टः कर्णः सप्तसप्ततिमितः कल्पितस्तेन चतुर्भुजान्तस्त्रिभुजं कल्पितं तत्राऽसौ कर्णस्त्वेकोभुजः । ७७ । द्वितीयस्तु सव्यभुजः । ६८ । भूः सैव ।७५ । अत्र प्राग्वल्लब्धोलम्बः ३०८/५

लम्बे ज्ञाते कर्णज्ञानार्थं सूत्रं वृत्तम् । यल्लम्बलम्बाश्रितबाहुवर्गविश्लेषमूलं कथिताऽवधा सा ।
तदूनभूवर्गसमन्वितस्य यल्लम्बवर्गस्य पदं स कर्णः ॥

अत्र सव्यभुजाग्राल्लम्बः किल कल्पितः ३०८/५
तदूनभूवर्गसमन्वितेत्यादिना जातः कर्णः । ७७ ।

द्वितीयकर्णज्ञानार्थं सूत्रं वृत्तद्वयम् । इष्टोऽत्र कर्णः प्रथमं प्रकल्प्यस्त्र्यस्रे तु कर्णोभयतः स्थिते ये । कर्णं तयोः क्ष्मामितरौ च बाहू प्रकल्प्य लम्बावबधे च साध्ये एवाधयोरेककुप्स्थयोर्यल्लम्बान्तरं तत्कृतिसंयुतस्य । ल-

स्यैक्यवर्गस्य पदं द्वितीयः कर्णोभवेत्सर्वचतुर्भुजेषु ॥

न्यासः



अत्र चतुर्भुजे सव्यभुजाग्राद्दक्षिणभुजमूलगामिनः कर्णस्य मानं कल्पितम् । ७७ । तत्कर्णरेखावच्छिन्नस्य क्षेत्रस्य मध्ये कर्णरेखोभयतोये त्र्यस्रे उत्पन्ने तयोः कर्णं भूमिं तदितरौ च भुजौ प्रकल्प्य प्राग्वल्लम्बः आबाधा च साधिता । तद्वशेन लम्बः ॥ ६० ॥ द्वितीय लम्बः ॥२४॥ आबाधयो । ४५ । ३२ । रेकककुण्स्थयो रन्तरस्य । १२ । कृते । १६८ । लम्बैक्य । ८४ । कृतेश्च ७०५६योगः।७२२५।तस्य पदं ।८५। द्वितीयकर्णप्रमाणम्

अत्रेष्टकर्णकल्पने विशेषोक्तिस्सूत्रं सार्द्धवृत्तम् ।

कर्णाश्रितस्वल्पभुजैक्यमुर्वीं प्रकल्प्य तच्छेषभुजौ च बाहू । साध्योऽवलम्बोऽथ तथान्यकर्णः स्वोर्व्याः कथंचिच्छ्रवणेन दीर्घः ॥ तदन्यलम्बान्न लघुस्तथेदं ज्ञात्वेष्टकर्णः सुधिया प्रकल्प्यः ॥ चतुर्भुजं हि एकान्तरकोणयोराकृष्य सङ्कोच्यमानं त्रिभुजत्वं याति तत्रैककोण लग्नलघुभुजयोरैक्यं भूमिरितरौ भुजौ च तल्लम्बादूनः सङ्कोच्यमानः कर्णः कथञ्चिदपि न स्यात् तदितरोभूमेरधिकोन स्यादेवमुभयथापि एतदनुक्तमपि बुद्धिमता ज्ञायते ।

विषमचतुर्भुजफलानयनाय करणसूत्रं वृत्तार्द्धम् । त्र्यस्रे तु कर्णोभयतः स्थिते ये तयोः फलैक्यं फलमत्र नूनम्। अनन्तरोक्तक्षेत्रान्तस्त्र्यस्रयोः फले ।८२४। २३१० । अनयोरैक्यं। ३२३४ । तस्य फलम् ।

समानलम्बस्याबाधादिज्ञानाय करणसूत्रं वृत्तद्वयम् । समानलम्बस्य चतुर्भुजस्य मुखोनभूमिं परिकल्प्य भूमिम् । भुजौ भुजौ त्र्यस्रवदेव साध्ये तस्याबधे लम्बमितिस्ततश्च ॥ अबाधयोना चतुरस्रभूमिस्तल्लम्बवर्गैक्यपदं श्रुतिः स्यात् । समानलम्बे लघुदोःकुयोगान्मुखान्यदोःसंयुतिरल्पिका स्यात् ॥

उदाहरणम् । द्विपञ्चाशन्मितव्येकचत्वारिंशन्मितौ भुजौ । मुखन्तु पञ्चविंशत्या तुल्यं षष्ट्या मही किल । ॥ अतुल्यलम्बकं क्षेत्रमिदं पूर्वमुदाहृतम् । षट्पञ्चाशत्त्रिषष्टिश्च नियते कर्णयोर्मिती ॥ कर्णौ तत्रापरौ ब्रूहि समलम्बञ्च तच्छ्रुती ॥




अत्र इष्टत् कर्णं त्रिषष्टिमितं प्रकल्प्यात् जातः प्राग्वदन्यः कर्णः । ५६ ।

अथ षट्पञ्चाशत्स्थाने द्वात्रिंशन्मितं कर्णं । ३२ । प्रकल्प्य न्यासः




प्राग्वत्साध्यवाने कर्णे जातं करणीखण्डद्वयं । ६७१ । २१०० । अनयोर्मूलयो २४ ५१ / २२ २४ / २५ २५ रैक्यं द्वितीयः कर्णः ७२ / २२ / २५

न्यासः अथ तदेव क्षेत्रं समलम्बम् ।




तदा मुखोनभूमिं परिकल्प्य भूमिमिति ज्ञानार्थं त्र्यस्रङ्कल्पितं

(अत्र क्षेत्रे लम्बावहारयोः षट्शते पतिते) न्यासः




अत्राबाधे जाते २/५ १७२/५ लम्बश्च करणीगतोजातः ३८०१६ / २५ आसन्नमूलकरणेन जातः ३८ / ६२२ / ६२५

अयं तत्र चतुर्भुजे समलम्बः लम्बाऽऽबाधोनितसमभूमेर्लम्बस्य च वर्गयोगः । ५०४९ । अयं कर्णवर्गः एवं ह्रस्वदाबाधातोद्वितीयकर्णवर्गः । २१७६ । अनयोरासन्नमूलकरणेन जातौ कर्णौ ७१/१/२०।४६१३/२० एवं चतुरस्रे तत्रैव बाहुष्वन्यौ कर्णौ बहुधा भवतः एवमनियतत्वेऽपि नियतावेव कर्णावानीतौ ब्रह्मगुप्ताद्यैस्तदानयनं यथा ।

कर्णाश्रितभुजघातैक्यमुभयथाऽन्योऽन्यभाजितं गुणयेत् । योगेन भुजप्रतिभुजहत्योः कर्णौ पदे विषमे




न्यासः

कर्णाश्रितभुजघातेति एकवारमनयो । २५ । ३९ घात । ९७५ । तथा । ५२ । ६० । ऽनयोर्घातः ३१२० । तयोर्द्वयोरैक्यम् । ४०९५ । तथा द्वितीयवारम् । २५ । ५२ । अनयोर्घाते जातम् । १३०० । तथा द्वितीयवारम् । ३९ । ६० । अनयोर्घाते । २३४० । घातयोर्द्वयोरैक्यम् । ३६४० । भुजप्रतिभुज । ५२ । ३९ । घातः । २०२८ । पश्चात् । २५ । ६० । अनयोर्वधः । १५०० । तयोरैक्यम् । ३५२८ । अनेनैक्येन । ३६४० । गुणितं जातं पूर्व्वैक्यम् । १२८४१९२० । प्रथमकर्णाश्रितभुजघातैक्येन । ४०९५ । भक्तं लब्धम् । ३१३६। अस्य मूलम् । ५६ । एकः कर्णः तथा द्वितीयकर्णार्थं प्रथमकर्णाश्रितभुजघातैक्यं । ४०९५ । भुजप्रतिभुजवधयोगः ३५२८ गुणितं जातम् । १४४४७१६०। अन्यकर्णाश्रितघातैक्येन । ३६४०। भक्तं लब्धम् । ३९६९ । अस्य मूलं । ६३ । द्वितीयः कर्णः । अस्य कर्णानयनस्य प्रक्रियागौरवं लघुप्रक्रियादर्शनद्वारेणाह । अभीष्टजात्यद्वयबाहुकोटयः परस्परं कर्णहताभुजादति । चतुर्भुजे यद्विषमं प्रकल्पितं श्रुती तु तत्र त्रिभुजद्वयात्ततः ॥ बाह्वोर्वधः कोटिवधेन युक् स्यादेका श्रुतिः कोटिभुजाह्वयैक्यम् । अन्या लघौ सत्यपि साधनेऽस्मिन् पूर्व्वैः कृतं यद्गुरु तन्न विद्मः ॥

जात्यत्रद्वयस्य

न्यासः




एतयोरितरेतरकर्णहताभुजाः कोटयः, इतरेतरकर्णहताः कोटयोभुजादति कृते जातं । २५ । ६० । ५२ । ३९ । तेषां महती भूर्लघु सुखमितरौ बाहू इति प्रकल्प्य क्षेत्रदर्शनं इमौ कर्णौ महतायासेनानीतौ । ६३ । ५६ । अस्यैव जात्यद्वयस्योत्तरोत्तरभुजकोट्योर्घातौ जातौ । ३६ । २० । अनयोरैक्यमेकः कर्णः । ५६ । बाह्वोः । ३ । ५ । कोट्योश्च । ४ ।१२। घातौ । १५ । ४८ । अनयोरैक्यमन्यः । ६३ । एवं सुखेन श्रुती स्यातां अथ यदि पार्श्वभुजद्वयोर्व्यत्ययं कृत्वा न्यस्तं क्षेत्रम् न्यासः




तदा जात्यद्वयकर्णयोर्वधः । ६५ । द्वितीयकर्णः ।

अथ सूचीक्षेत्रोदाहरणम् । ते यत्र घनत्रयं । ३०० । क्षितिर्भितिस्तत्वेन्दु । १२५ । तुल्यं सुखं बाहू खोक्तृतिभिः । २६० । यरातिधृतिभि । १९५ । स्तुल्यौ च तत्र श्रुती । एका खाष्टयमैः । २८० । समा तिथिगुणै । ३१५ । रन्याऽथ तल्लम्बकौ तुल्यौ गोधृतिभि । १८९ । स्तथाजिनयमै । २२४ । यौगाच्छ्रुतोलम्बयोः ॥ तत्खण्डे कथयाधरे श्रवणयोर्योगाच्च लम्बाधो तत् सूची निजमार्गवृद्धभुजयोर्योगाद्यथा स्यात्ततः । साबाधं वद लम्बकञ्च भुजयोः सूचग्राः प्रमाणे च के सर्वं गणितिक ! प्रचक्ष्व नितरां क्षेत्रेऽत्र दक्षोऽसि चेत् ।

२५.२२




सूच्याबाधा १५२६/१७ सूच्याबाधा २५६४/१७
(अत्र चित्रे १प्रथमपीठे २५२ इति शुद्धम् १५८इत्यशुद्धम्)

भूमानं ।२०० । मुखं ।१२५। बाहू । २६०। १९५ ।
कर्णौ । २८० । २१५ । लम्बौ । १८६ । २२४ ।

अथ सन्ध्याद्यानयनाय करणसूत्रं वृत्तम् । लम्ब तदाश्रितबाह्वोर्मध्यं सन्ध्याख्यमस्य लम्बस्य । सन्ध्योना भूः पीठं साध्यं यस्याधरं खण्डम् ॥ सन्धिर्द्विस्थः परलम्बश्रवणहतः परस्य पीठेन । भक्तोलम्बस्तुत्योर्योगात्स्यातामधःखण्डे ॥

लम्बः । १८६ । तदाश्रितभुजः । १९५ । अनयोर्मध्ये यस्मिन्लम्बाश्रितबाहुवर्ग मेंत्यादिनाऽऽगता ऽऽबाधा सन्धिसंज्ञा । ४८ । तदूनितभूरिति द्वितीया ऽऽबाधा सा पीठसंज्ञा । २५२ ।

एवं द्वितीयलम्बः । २२४ । तदाश्रितभुजः ।२६० । पूर्ववत् सन्धिः ।१२२। पीठम् ।१६८ । खण्डं साध्यम् ।

अथाद्यलम्बस्य । १८६ अधःखण्डं साध्यम् ।
अस्य सन्धिः । ४८ । द्विःस्थः । ४८ । परलम्बेन । । २२४ । श्रवणेन च । २८०। पृथग्गुणितः । १०७५२ । । १३४४० । परस्य पीठेन ।१६८ भक्तः ।

एवं द्वितीयलम्बस्य ॥ २२४ ॥ सन्धिः ॥ १२२ ॥ परलम्बेन १८६ ॥ कर्णेन च २१५ पृथग्गुणितः परस्य पीठेन २५२ ॥ भक्तोलब्धं लम्बाधःखण्डम् ९९॥ श्रवणाधःखण्डञ्च १६५ ॥

अथ कर्णयोर्योगादधोलम्बज्ञानार्थं सूत्रं वृत्तम् । लम्ब भूघ्नौ निजनिजपीठविभक्तौ च वंशौ स्तः । ताभ्यां प्राग्वच्छ्रुत्योर्योगाल्लम्बः कुखण्डे च ॥

लम्बौ ॥१८६ ॥ २२४ ॥ भू २०० घ्नौ जातौ ५६७२०० ॥ स्वस्वपीठाभ्यां २५२, १६८ भक्तौ एवमत्र लब्धौ वंशौ ॥ २२५ ।४०० ॥ काभ्याम् अन्योऽन्यमूलाग्रगसूत्रयोगादित्यादिकरणेन लब्धः कर्णयोगादधोलम्बः । १४४ । भूखण्डे च । १०८ । ९२ ।

अथ सूच्याऽऽबाधालम्बभुजज्ञानार्थं सूत्रं वृत्तमयम् । लम्बहृतोनिजसन्धिः परलम्बगुणः समाख्योल्पेयः । स्वपरसन्ध्योरैक्यं हारस्तेनोद्धृतौ तौ च ॥ स्व परसन्धी भूघ्नौ सूच्याऽऽबाधे पृथक् स्याताम् । हारहृतः परलम्बः सूचीलम्बोद्धृतौ सूच्याः । एवं चेत्क्षोदः प्राग्वत्त्रैराशिकाज्ज्ञेयः ॥

अत्र किलायं लम्बः । २२४ । अस्य सन्धिः ।१२२ । अयं परलम्बेन । १८६ । गुणितो । २२४ । ऽनेन भक्तो जातः समाख्यः८९१/८ । अस्य परसन्धेश ४८ । योगोहारः १२७५/८अनेन भू । २००। घ्नः समः१६७२००/८ परसन्धि १४४००/१ स भक्तो जाते सूच्याऽऽबाधे २५६४/१७।१५२६/१७ एवं द्वितीयलम्बस्य १८६ सन्धिः ४८परलम्बेन२२४गुणितः १०७५२स्वलम्बेन १८६भक्तः ) द्वितीयसमाख्यः ५१२/६ (उक्तरीत्या) द्वितीयोहारः१७००/६अनेन२००भूघ्नःस्वीयःसमः१५२६००/६ परसन्धिश्च २८६००/१ भक्तोजाते सूच्याऽऽबाधे १५२६/१७ २५६४/१७। परलम्बः । २२४ । भूमि ।२०० गुणोहारेण १७००/६भक्तोजातः सूचीलम्बः ६०४८/१७ सूचीलम्बेन भुजौ । १९५ । २६० । गुणितौ स्वस्व लम्बाभ्यां । १८६ । २२४ । यथाक्रमं भक्तौ जातौ सूमार्गवृद्धौ सूचीभुजौ ६२४०/१७ ७०२०/१७

एवमत्र सर्वत्र भागहारराशिं प्रमाणं गुण्यगुणकौ तु यथायोग्यं फलेच्छे प्रकल्प्य सुधिया त्रैराशिकमूह्यम् ॥

अथ वृत्तक्षेत्रे करणसूत्रं वृत्तम् । व्यासे भनन्दाग्नि । ३९२७ । हते विभक्ते खबाणसूर्यैः । १२५० । परिधिः स सूक्ष्मः । द्वाविंशतिघ्ने विहृतेऽथ शैलैः । ७ । स्थूलोऽथ वा स्याद्व्यवहारयोग्यः ॥

उदाहरणम् । विष्कम्भमानं किल सप्त यत्र तत्र प्रमाणं परिधेः प्रचक्ष्व । द्वाविंशतिर्यत्परिधिप्रमाणं तद्व्यासवङ्ख्यास्त्र सखे ! विचिन्त्य ॥

व्यासः




व्यासमानं । ७ ।

लब्धं परिधि मानं २१ $\frac{१२२९}{१२५०}$

स्थूलोवा परिधिर्लब्धः । २२ ।

अथवा परिधितोव्यासानयनाय व्यासः




गुणहारविपर्य्ययेण व्यासमानं लब्धं ७ $\frac{११}{३९२७}$

स्थूलं वा ।७।

वृत्तगोलयोः फलानयने करणसूत्रं वृत्तम् । वृत्त क्षेत्रे परिधिगुणितव्यासपादः फलं यत् क्षुण्णं वेदैरुपरि परितः कन्दुकस्येव जालम् । गोलस्यैवं तदपि च फलं पृष्ठजं व्यासनिघ्नं षड्भिर्भक्तं भवति नियतं गोलगर्भे घनाख्यम् ॥

उदाहरणम् । यद्व्यासस्तुरगैर्मितः किल फलं क्षेत्रे समे तत्र किं व्यासः सप्तमितश्च यस्य सुमते ! गोलस्य तस्यापि किम् । पृष्ठे कन्दुकजालसन्निभफलं गोलस्य तस्यापि किं मध्ये ब्रूहि घनं फलञ्च विमलाञ्चेद्वेत्सि लीलावतीम् ॥

वृत्तक्षेत्रफलदर्शनाय व्यासः




व्यासः । ७ ।

परिधिः २१ $\frac{१२२९}{१२५०}$

क्षेत्रफलम् ३८ $\frac{२४२३}{५०००}$

गोलपृष्ठफलदर्शनाय व्यासः




व्यासः । ७ ।

गोलपृष्ठफलम् १५३ $\frac{११७३}{१२५०}$

गोलान्तर्गतघनफलदर्शनाय व्यासः




व्यासः ।७।

गोलस्यान्तर्गतं घनफलम् १७९ $\frac{१४८७}{२५००}$

अथ प्रकारान्तरेण तत्फलानयने करणसूत्रं सार्द्धवृत्तम् । व्यासस्य वर्गे भनवाग्निनिघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते । रुद्राहते शक्रहृतेऽथ वा स्यात् स्थूलं फलं तद्व्यवहारयोग्यम् ॥ घनीकृतव्यासदलं निजैकविंशांशयुग्गोलघनं फलं स्यात् ॥

व्यासः । ७ । अस्य वर्गे । ४९ । भनवाग्निनिघ्ने पञ्चसहस्रभक्ते तदेव सूक्ष्मं फलम् ३८ $\frac{२४२३}{५०००}$

अथवा व्यासस्य वर्गे । ४९ । रुद्राहते ११ । ५३९ । यमाहृते १४लब्धं स्थूलं फलम् ३८ १/२

घनीकृतव्यासदलं३४३/२

निजैकविंशांशयुक् गोलस्य घनफलं स्थूलं १७९ २/१

शरजीवानयनाय करणसूत्रं सार्द्धवृत्तम् । ज्याव्यासयोगान्तरघातमूलं व्यासस्तदूनोदलितः शरः स्यात् । व्यासाच्छरोनाच्छरसङ्गुणाच्च मूलं द्विनिघ्नं भवतीह जीवा । जीवार्द्धवर्गे शरभक्तयुक्ते व्यासप्रमाणं प्रवदन्ति वृत्ते ॥

उदाहरणम् । दशविस्तृतिवृत्तान्तर्यत्र ज्या षण्मिता सखे ! । तत्रेषुं वद बाणाज्ज्यां ज्याबाणाभ्यां च विस्तृतिम् ॥ १८० ॥ न्यासः




व्यासः ।१०। ज्या ।६।योग ।१६। अन्तरं । ४ । घातः । ६४ । मूलम् । ८ । एतत् दूनोव्यासः । २ । एतद्दलितः । १ । जातः शरः ।१। व्यासात् । १० । शरोनात् । ९ । शर । १ । सङ्गुणात् । ९ । मूलम् । ३ । द्विनिघ्नं जाता जीवा । ६ ।

एवं ज्ञाताभ्यां ज्याबाणाभ्यां व्यासानयनं यथा जीवा ।६। दलं।३। वर्गे । ९ । शर । १ । भक्ते ।९। शर ।१। युक्ते जातोव्यासः । १० ।

अथ वृत्तान्तस्त्र्यस्रादिनवास्रान्तक्षेत्राणां भुजमानानयनाय करणसूत्रं वृत्तत्रयम् । त्रिद्व्यङ्काग्निनभश्चन्द्रैः १०३९२३ । त्रिबाणाष्टयुगाष्टभिः । ८४८५३ । वेदाग्निबाणखाश्वैश्च । ७०५३४ । खखाभ्राभ्ररसैः । ६०००० । क्रमात् ॥ बाणेषुनखबाणैश्च । ५२०५५ । द्विद्विनन्देषुसागरैः । ४५९२२ । कुरामदशवेदैश्च ४१०३१। वृत्तव्यासे समाहते ॥ खखखाभ्रार्कै । १२००००। संभक्ते लभ्यन्ते क्रमशोभुजाः । वृत्तान्तस्त्र्यस्रपूर्व्वाणां नवास्रान्तं पृथक् पृथक् ॥

उदाहरणम् । सहस्रद्वितयव्यासं यद्वृत्तं तस्य मध्यतः । समत्र्यस्रादिकानां मे भुजान्वद पृथक् पृथक् ॥

अथ वृत्तान्तस्त्रिभुजे भुजमानानयनाय न्यासः




व्यासः ॥ २०००॥ त्रिद्व्यङ्काग्निनभश्चन्द्रैः । १०३९२३। गुणितः । २०७८४६०००खखखाभ्रार्कैः । १२०००० । भक्ते लब्धं त्र्यस्रे भुजमानम् १७३२ १/२० ।

वृत्तान्तश्चतुर्भुजे भुजमानानयनाय

न्यासः




व्यासः । २००० । त्रिबाणाष्टयुगाष्टभिः । ८४८५३ । गुणितः । १६९७०६००० । खखखाभ्रार्कैः । १२०००० भक्ते लब्धं चतुरस्रे भुजमानम् १४१४ १३/६०

वृत्तान्तःपञ्चभुजे भुजमानानयनाय

न्यासः




व्यासः।२०००। वेदाग्निबाणखाश्वै । ७०५३४गुणितः ॥ १४१०६८०००॥ खखखाभ्रार्कैः१२०००० भक्ते लब्धं पञ्चास्रे भुजमानम् ११७५ १७/२०

वृत्तान्तःषड्भुजे भुजमानानयनाय व्यासः




व्यासः २०००
खखाभ्राभ्रर-
सै ६०००० गुणि-
तः १२००००००
खखखाभ्रार्कै
१२००००
उक्तं लब्धं षडस्रे
भजमानम्।१०००

वृत्तान्तःसप्तभुजमानानयनाय व्यासः




व्यासः २००००
वाणेषुनवाणै
५२०५५ गुणितः
॥ १०४११०००००
खखाभ्रार्कै
१२०००० भक्तं
लब्धं सप्तास्रे
भुजमानम् ८६७ $\frac{११}{२०}$

वृत्तान्तरष्टभुजे भुजमानानयनाय व्यासः




व्यासः २०००
द्विद्विनन्देषुसागरै
४५९२२ गुणितः
॥९१८४४००० ॥ ख०
खखाभ्रार्कै १२०००
भक्तं लब्धमष्टास्रे
भुजमानम् ७६५ $\frac{११}{२०}$

वृत्तान्तर्नवभुजे भुजमानानयनाय व्यासः




व्यासः २०००
कुरामदस्रैः दै
।४१०२१।गुणितः
८२०६२०००।
खखाभ्रार्कै
।१२००००।भक्तं
लब्धं नवास्रे
भुजमानम् ६८३ $\frac{११}{२०}$

एवमिष्टव्यासादेभ्योऽन्याअपि जीवाः सिध्यन्तीति तास्तु गोले ज्योत्पत्तौ वक्ष्ये।

अथ स्थूलजीवाज्ञानार्थं लघुक्रियया करणसूत्रं वृत्तम्
चापोननिघ्नपरिधिः प्रथमाह्वयः स्यात्पञ्चाहतः परिधि-वर्गचतुर्थभागः। आद्योनितेन खलु तेन भजेच्चतुर्घ्नव्यासाहतं प्रथममाप्तमिह ज्यका स्यात्।

उदाहरणम्। अष्टादशांशेन वृतेः समानमेकादिनिघ्नेन च यत्र चापम्। पृथक् पृथक्तत्र वदाशु जीवां खार्कैर्मितं व्यासदलञ्च यत्र। व्यासः




(अत्रचित्रे ४जीवामानं २२४ इत्यशुद्धम् १५४ इतिशुद्धम्)

व्यासः ॥२४० ॥ अत्र किलाङ्कलाघवाय विंशतेः सार्द्धशतांशमिलितः सूक्ष्मपरिधिः ७५४ अस्याष्टादशांशः ४२ अत्राद्यङ्कलाघवाय द्वयोरष्टादशांशयुतोष्ट-

ह्रीतः। अनेन पृथक् पृथगेकादिगुणितेन तुल्ये धनुषि कल्पिते ज्याः साध्याः।

अथवाऽत्र सुखार्थं परिधेरष्टादशांशेन परिधिं धनूंषि चापवर्त्त्य ज्याः साध्यास्तथाऽपि ता एव भवन्ति।
अपवर्त्तिते न्यासः परिधिः १८ चापानि च ।१।२।३।४।५।६।७,८।९। यथोक्तकरणेन लब्धाजीवाः ।४२।८२।१२०।१५४।१८४।२०८।२२६।२३६।२४०।

अथ चापानयनाय करणसूत्रं वृत्तम्। व्यासाब्धिघातयुतमौर्व्विकया विभक्तोजीवाङ्घ्रिपञ्चगुणितः परिधेस्तु वर्गः। लब्धोनितात्परिधिवर्गचतुर्थभागादाप्ते पदे वृतिदलात्पतिते धनुः स्यात्॥

उदाहरणम्। विदिताइह ये गुणास्ततोवद तेषा मधुना धनुर्मितिम्। यदि तेऽस्ति धनुर्गुणक्रियागणिते गाणितिकातिनैपुणम्॥

न्यासः। ४२। ८२। १२०। १५४। १८४। २०८। ।२२६। २३६। २४०। सएवापवर्त्तितपरिधिः ।१८ जीवाङ्घ्रिया २१/२ पञ्चभि। ५। स परिधे। १८। वर्गो २२४ गुणितः। १७-१०। व्यासा। २४०। ब्धि। ४। घात। ९६०। युतमौर्विकयानया। १००२। विभक्तोलब्धो। १७। ऽत्राङ्कलाघवाय चतुर्विंशतेरर्द्धधिकसहस्रांशयुतोग्टहीतोऽनेनोनितात्परिधि। १८। वर्ग। २२४। चतुर्थभागात्। ६४। पदे प्राप्ते। ८। वृति। १८। दलात्। ९। पतिते। १। जातं धनुः। एवं जातानि धनूंषि। १। २। ३। ४। ५। ६। ७। ८। ९। एतानि परिधिष्वष्टादशांशेन गुणितानि स्युः”

तत्र लीलावतीप्रदर्शितप्रथमक्षेत्रे कर्णस्य भूजकोटिवर्गयोगमूलात्मकत्वं यदुक्तं तत्रोपपत्तिः प्रदर्श्यते। समचतुर्भुजे हि क्षेत्रे “समश्रुतौ तुल्यचतुर्भुजे च तथायते तद्भुजकोटिघातः” इत्यनेन चतुर्हस्तमितभुजस्य कोटित्वेन कल्पितस्य इतरतथाविधभुजेन गुणिते १६हस्तमितं क्षेत्रफलम् अतस्तद्भुजस्य क्षेत्रफलस्य १६हस्तस्य मूलं ४हस्तात्मकोभुजः। एवं त्रिहस्तमितकोटेर्भुजरूपतया कल्पनेन समचतुर्भुजक्षेत्रकरणे उक्तरीत्या तत्फलं ९हस्ताः क्षेत्रफलं कोटिरूपभुजस्य तन्मूल३हस्तरूपता।अनयोर्योगः २५ हस्ताः, यस्य च क्षेत्रस्य कर्णरूपभुजत्वेन कल्पने समचतुर्भुजकरणे पूर्व्वोक्तं २५हस्तमितफलं तुल्यं भवति तादृशसमचतुर्भुजे क्षेत्रे २५ कस्य मूलरूपा कर्णमितिः। तथाहि पञ्चहस्तमितसमचतुर्भुजक्षेत्रे भुजकोटिरूपचतुर्भुजत्वेन कल्पनेन समचतुर्भुजक्षेत्रफलयोः १६,९, हस्तात्मकयोः समावेशः इत्यतः भुजकोटिवर्गयोगमूलरूपता कर्णस्य युक्ता। एवमन्यत्रापि उपपाद्यमिति बहवः।

अन्यथाप्यत्रोपपत्तिः प्रदर्श्यते भुजं कोटिं कर्णञ्च व्यासस्थानीयं कृत्वा वृत्तार्द्धक्षेत्रकरणे तत्र भुजव्यासक क्षेत्रस्य “व्यासस्य वर्गे भनवाग्निनिघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते। रुद्राहते शक्रहृतेऽथ वा स्यात् स्थूलं फलमिति” रीत्या भुज ४रूपव्यासस्य वर्गे १६ रुद्र ११गुणिते १७६।शक्र १४हृते १७६/१४ स्थूलंफलं तदर्द्धं १७६/२८, वृत्तक्षेत्रार्द्धस्य स्थूलं फलम्। एवं कोटिरूप३व्यासवर्गः९।११गुणितः ९९।शक्र१४भक्तः,९९/१४ तदर्द्धं ९९/२८ तस्य क्षेत्रफलम् अनयोर्योगः २७५।२८ इदं कर्णव्यासकवृत्तक्षेत्रार्द्धफलतुल्यम् तादृशफलेन कर्णमानानयनञ्च गुणहारादिव्यत्ययेन कार्य्यं यथा २७५/२८ शक्र१४ गुणितः२७५।२।रुद्र ११भक्तः २५/२एतच्च तत्क्षेत्रफलं तच्च द्विगुणितं२५तस्य मूलं ५कर्णः। एवं सूक्ष्मफलं तु भुजकोटिकर्णव्यासके वृत्तक्षेत्रे व्यासस्य वर्गे भनवाग्नि ३९२७ गुणिते ५००० भक्ते भवति मत्रोक्तरीत्या भुजकोटिव्यासकक्षेत्रे फलयोग तुल्यता कर्णव्यासकक्षेत्रफलस्येति कल्प्यम्। अयमेव पक्षः भास्कराचार्य्यस्याभिमतः कर्णस्य भुजकोटिवर्गयोगमूलात्मकत्वेन तेनाभिधानात् यथानिर्द्दिष्टवृत्तक्षेत्र फलस्य व्यासवर्गघटितत्वेन तेनाभिधानाच्च। अतस्तथा प्रत्यभिज्ञायते इत्यस्माभिः नवीनः उपपत्तिपथ उद्भावितः।

वृत्तान्तर्गतसमत्रिकोणानां ये भुजा उक्तास्तेषां तथा मानत्वे उपपत्तिर्दर्श्यते। तत्र क्रमज्याशब्दे २३०२पृ० सिद्धान्तोक्ताः २४क्रमज्या जीवा दर्शिताः। तत्र चक्रकला २१६०० तुल्यः परिधिः। तास्र कलाः“व्यासे भनन्दाग्नि-३९२७ हते विभक्ते खवाणसूर्य्यैः १२५० परिधिः स सूक्ष्मः” इत्युक्तरीत्या वैपरीत्येन खवाणसूर्य्यं १२५० हताः २७०००००० । भनवाग्नि ३९२७ भक्ताः। ६८७६ व्यासस्तदर्द्धं ३४३८ इयमन्तिमज्या त्रिज्येति चोच्यते। तत्रानुपातार्थं चक्रकलातुल्य २१६०० परिधिवृत्तस्यान्तःस्थत्रिकोणादीनां क्रमेण भुजाः साध्यन्ते। तत्र चक्रकलानां २१६०० क्रमेण त्रिचतुरादिभिर्भक्तानामर्द्धानि क्रमेण चापार्द्धानि स्युः। तानि च ३६००।२७००।२१६० ।१८००।१५४२।१३५०। १२००। क्रमेण एतत्कलामितानि। ‘तत्त्वाश्विभक्ताक्षव: कला या यत्नव्यर्थं सा

गतशिञ्जिनी. सा। गतैष्यजीवान्तरशेषघातात् तत्त्वाश्वि-लब्ध्या सहितेषिसता स्यात्" इत्युक्तरीत्या ताः कलाः क्रमेण तत्त्वाश्वि २२५ भक्ताः क्रमेण त्र्यस्रे १६चतु-रस्रे।१२पञ्चास्रे ६।१२५। शेषः षडस्रे ८।सप्तास्रे ६।१६३। शेषः अष्टास्रे ६; नवास्रे ५।७५ शेषः तथाच त्रिकोणे क्रमज्यासु पठिता षोड़शी २६७७। अर्द्धजीवा। चतुरस्रे तत्रोक्ता द्वादशी २४२१ पञ्चकोणे तत्रोक्ता नवमी १६१० गता एष्या दशमी २०६३। तयोरन्तरं १८३। शेषकला १२५ तयोर्घातः २४७०५ तत्त्वाश्वि २२५भक्तो लब्धिः११० अनया सहिता गतजीवा।२०२०। इयं अर्द्धजीवा। षडस्रे तत्रोक्ता अष्टमी १७१६। सप्तास्रे षष्ठी जीवा १३१५ गता। एष्या १५२० तयो-रन्तरं २०५। शेषकलाः १६३ अनयोर्घातः ३३५६५। तत्त्वाश्विभक्ते १७५ लब्धिः अनया युक्ता गतजीवा १४६० इयं सप्तास्रे अर्द्धजीवा। अष्टास्रे षष्ठी १३१५। नवास्रे पञ्चमी ११०५ गता एष्या १३१५तयोरन्तरं २१० शेषकला ७५। तयोर्घातः २२५० तत्त्वाश्विभक्तः लब्धिः १० अनया सहिता गतजीवा ११०५। १११५ नवास्रे अर्द्धजीवा। एताद्विगुणाः क्रमेण चक्रकला२१६०० तुल्य परिधिकवृत्ते समत्र्यस्रादीनां भुजाः यथा ५६५४।४८६२ ।४०४०।२४२८।२६८०।२६२०।२२३०। क्रमेण भुजाः। यदि चक्रकलापरिधिव्यासार्द्धे २४२८। क्रमेण एते भुजाः तदा फलेच्छयोः समानजातीयत्वकरणेन षष्टिगुणित-प्रकृतव्यासार्द्धे क इत्यनुपाते फलं द्विगुणितं किञ्चिन्यूना-त्रिका षष्टिगुणिते१२००००व्यासे त्रिद्व्यङ्काग्निनभश्चन्द्रादयः क्रमेणाङ्काःलब्धाः। यदि खखखार्क १२०००० व्यासवृत्ते एते १०३९२३।८४८५३।७०५३४५।६००००।५२०५५।४५९२२। ४१०३१। क्रमेण भुजाः तदा इष्टव्यास २००० वृत्ते के इत्यनुपातेन उक्तानि फलानि भुजमानानि स्युरिति

अत्र वृत्तान्तर्गतं त्रिकोणस्य समत्रिकोणं तत्र सर्वेषां भुजानां तुल्यत्वात्। तथाहि परिधितृतीयांश रूपाणां सर्व्वचापांशानां तुल्यतया तुल्यचापांशेषु जीवास्थानीयभुजानां तुल्यत्वौचित्यात्।

अन्यान्यक्षेत्रे पूपपत्तिर्लीलावतीटीकायां दर्शिता विस्तर-भयान्नोल्लिखिता।

६ स्थानमात्रे "धर्म्मक्षेत्रे कुरुक्षेत्रे" गीता। तत्र केदारे "यादृशं तूप्यते वीजं क्षेत्रे कालोपपादिते" येऽक्षेत्रिणो वीजवन्तः परक्षेत्रे प्रवापिणः" मनुः

कलत्रे "अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः" याज्ञ० देहे "इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते" गीता। क्षेत्रज्ञः "क्षत्रक्षेत्रज्ञयोरेवम्"। "गीता क्षेत्रे क्षेत्रमजोऽय-मात्मा" स्मृतिः तीर्थस्थाने "प्रविशन्तस्तु तत्क्षेत्रं सर्वे स्यु-र्विष्णुमूर्त्तयः"। उत्कलखण्ड०। क्षेत्रं विद्यतेऽस्य इनि क्षेत्रिन्, ठन् क्षेत्रिक क्षेत्रस्वामिनि त्रि० "फलं त्वनभिसन्धाय क्षेत्रिणां वीजिनां तथा" कुर्व्वन्ति क्षेत्रिणोयद्वद्" प्रत्यक्षं क्षेत्रिकस्यार्थः" "क्षेत्रिकस्यैव तद्वीजम्" मनुः। एतस्मि-न्नुपपदे कर्म्मभूते कर्त्तरि कृञः टः। क्षेत्रकर क्षेत्रकारिणि त्रि० स्त्रियां ङीप्। [राजनि०

**क्षेत्रकर्कटी** स्त्री क्षेत्रजाता कर्कटी। वालुक्यां कर्कटीभेदे

**क्षेत्रचिर्भिटा** स्त्री क्षेत्रे जाता चिर्भिटा। पाण्डुफलायां चिर्भिटाभेदे राजनि०

**क्षेत्रज** पु० क्षेत्रे जायते जन-ड ७त०। "यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य च। स्वधर्म्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः" इति मनूक्ते पुत्रभेदे नियोगधर्म्मश्च मनुनोक्ता निषिध्य च वाग्दानोत्तरमेव पतिमरणे विहितः यथा

"देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया। प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये। विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि। एकमुत्पादयेत् पुत्रं न द्वितीयं कथञ्चन। द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः। अनिर्व्वृत्तं नियोगार्थं पश्यन्तो धर्म्मतस्तयोः। विधवायां नियोगार्थे निर्वृत्ते तु यथा-विधि। गुरुवच्च स्नुषावच्च वर्त्तेयातां परस्परम्। नि-युक्तौ यौ विधिं हित्वा वर्त्तेयातान्तु कामतः। तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ। नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः। अन्यस्मिन् हि नियुञ्जाना धर्म्मं हन्युः सनातनम्। नोद्वाहिकेषु म-न्त्रेषु नियोगः कीर्त्त्यते क्वचित्। न विवाहविधावुक्तं विधवावेदनं पुनः। अयं द्विजैर्हि विद्वद्भिः पशुधर्म्मो विगर्हितः। मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशा-सति। स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा। वर्णानां सङ्करं चक्रे कामोपहतचेतनः। ततः प्रभृति

यो मोहात् प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः । यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः । यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथो भजेताप्रसवात् सकृत् सकृदृतावृतौ” ।

वृहस्पतिना “उक्तो नियोगो मनुना निषिद्धः स्वयमेव हि” इत्यादिना तन्निषेधउक्तः । मिताक्षरायामप्ययं पक्षो द्व्यामुष्यायणप्रसङ्गे समर्थितः यथा
“अपुत्त्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्म्मतः” या० । “अपुत्त्रो गुर्व्वनुज्ञातः” इत्याद्युक्तविधिना अपुत्त्रेण देवरादिना परक्षेत्रे परभार्य्यायां गुरु नियोगेनोत्पादितःपुत्त्रउभयोर्वीजक्षेत्रिणोरसौ रिक्थी रिक्थहारी पिण्डदाता च धर्म्मत इत्यस्यायमर्थः । यदाऽसौ नियुक्तोदेवरादिःस्वयमप्यपुत्त्रोऽपुत्त्रस्य क्षेत्रे स्वपरपुत्त्रार्थं प्रवृत्तोयं जनयति स द्विपितृकोद्व्यामुष्यायणोद्वयोरपि रिक्थहारी पिण्डदाता च । यदा तु नियुक्तःपुत्त्रवान् केवलं क्षेत्रिणःपुत्त्रार्थं यतते तदा तदुत्पन्नः क्षेत्रिणएव पुत्त्रोभवति न वीजिनःसच नियमेन वीजिनोरिक्थहारी पिण्डदोऽपीति । यथोक्तं मनुना “क्रियाभ्युपगमात् क्षेत्रं वीजार्थं यत् प्रदीयते । तस्येह भागिनौ दृष्टौ वीजी क्षेत्रिकएवचेति” । क्रियाभ्युपगमादिति अत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्विति संविदङ्गीकरणाद्यत् क्षेत्रं क्षेत्रस्वामिना वीजिने वीजवपनार्थं दीयते तस्मिन् क्षेत्रउत्पन्नस्यापत्यस्य वीजक्षेत्रिणौ भागिनौ दृष्टौ महर्षिभिः । तथा । “फलंत्वनभिसन्धाय क्षेत्रिणां वीजिनां तथा । प्रत्यक्षं क्षेत्रिणामर्थो वीजाद्योनिर्व्वलीयसीति” मनुः । “फलं त्वनभिसन्धायेति अत्रोत्पन्नमपत्यमावयोरुभयोरस्त्वित्येवमनभिसन्धाय परक्षेत्रे यदपत्यमुत्पाद्यते तदपत्यं क्षेत्रिणएव । यतोवीजाद्योनिर्व्वलीयसी गवाश्वादिषु तथादर्शनात् । अत्रापि नियोगोवाग्दत्ताविषयएव इतरस्य नियोगस्य मनुना निषिद्धत्वात् “देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये । विधवायां नियुक्तस्तु घृताक्तोवाग्यतोनिशि । एकमुत्पादयेत्पुत्त्रं न द्वितीयं कथञ्चन” इत्येवं नियोगमुपन्यस्य मनुः स्वयमेव निषेधति । “नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन् हि नियुञ्जाना धर्म्मं हन्युः सनातनम् । नोद्वाहिकेषु मन्त्रेषु नियोगःकीर्त्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः । एवंद्विजैर्हि विद्वद्भिःपशुधर्म्मोविगर्हितः । मनुष्याणामपि प्रोक्तोवेने राज्यं प्रशासति । स महीमखिलां भुञ्जन् राजर्षिप्रवरःपुरा । वर्णानां सङ्करञ्चक्रे कामोपहतचेतनः । ततःप्रभृति योमोहात् प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यार्थं गर्हन्ते तं हि साधवः” इति । नच विहितप्रतिषिद्धत्वाद्विकल्प इति मन्तव्यम् नियोक्तॄणां निन्दाश्रवणात् । स्त्रीधर्म्मेषु व्यभिचारस्य बहुदोषश्रवणात् संयमस्य प्रशस्तत्वाच्च । यथाह मनुरेव “कामं तु क्षपयेद्देहं पुष्पमूलफलैःशुभैः । न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्यत्विति” जीवनार्थं पुरुषान्तराश्रयणं प्रतिषिध्य “आसीतामरणात् क्षान्ता नियताब्रह्मचारिणी । योधर्म्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् । अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् । मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्त्रापि यथा ते ब्रह्मचारिणः । अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तते । सेह निन्दामवाप्नोति परलोकाच्च हीयते” इति पुत्त्रार्थमपि पुरुषान्तराश्रयणं निषेधति । तस्माद्विहितप्रतिषिद्धत्वाद्विकल्पइति न युक्तम् । एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कस्तर्हि धर्म्मोनियोग इत्यतआह “यस्याम्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजोविन्देत देवरः । यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथोभजेताप्रसवात्सकृत्सकृदृतावृताविति” । यस्मै वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेव गम्यते । तस्मिन् प्रेते देवरस्तस्य ज्येष्ठःकनिष्ठोवा निजःसोदरोविन्देत परिणयेत् । यथाविधि यथाशास्त्रमधिगम्य परिणीयानेन विधानेन घृताभ्यङ्गवाङ्नियमादिना । शुक्लवस्त्रां शुचिव्रतां मनोवाक्कायसंयमां मिथोरहस्यागर्भग्रहणात्प्रत्यृत्वेकैकं वारं गच्छेत् । अयञ्च विवाहोवाचनिकोघृताभ्यङ्गादिनियमवन्नियुक्ताभिगमनाङ्गमिति न देवरस्य भार्य्यात्वमापादयत्यतस्तदुत्पन्नमपत्यं क्षेत्रस्वामिनएव भवति न देवरस्य संविदा तूभयोरपि” अनेन सन्दर्भेण प्रमीतपतिकायां नियोगनिषेधात् सधवायामनिषेधः तेन पाण्डुराजेन कुन्त्यां माद्र्यां च नियोगद्वारा पुत्त्राणामुत्पादनं न विरुद्धम् ।
वस्तुतः “अनेकधा कृताः पुत्त्रा ऋषिभिर्यैः पुरातनैः न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः” इति वृहस्प-

तिना यक्तिहीनानामिदानीन्तनानां तथाचरणस्य निषेधात् शक्तिशालिभिर्ऋषिभिस्तस्याचरणं न निषिद्धं तेषां तपःप्रभावात् तत्पापक्षयसम्भवात् । अतएव क्षतपत्निकयोरपि अम्बिकाम्बालिकयोर्विचित्रवीर्य्यभार्य्ययोर्नियोगात् व्यासेन धृतराष्ट्रपाण्डुरूपक्षेत्रजयोरुत्पादनं न विरुद्धम् । अतएवादित्यपुराणे कलिवर्ज्यप्रकरणे "देवरेण सुतोत्पत्तिर्दत्तकन्या प्रदीयते" इत्युक्तं कालिकापुराणे च तत्प्रकरणे "दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः" इत्युक्तम् । धृतराष्ट्रादीनां तु कलियुगोत्पन्नत्वेऽपि वासुदेवस्य भुवावस्थितिपर्य्यन्तं कलिधर्म्माणां प्रादुर्भावाभावाच्च विरोधः । अतः कलौ तस्य सर्व्वथा निषेधात् तद्विषये विशेषो नाभिहिता । २क्षेत्रजातमात्रे त्रि० ३श्वेतकण्टकार्य्यां ४शशाण्डुल्यां ५गोमूत्रिकायां ६त्रिफलिकायां ७चविकायाञ्च स्त्री राजनि०

**क्षेत्रज्ञ** पु० क्षेत्रमात्मत्वेन सर्व्वात्मत्वेन वा जानाति ज्ञा—क । १आत्मत्वेन देहाद्यभिमानिनि जीवे २सर्व्वज्ञे परमेश्वरे । "इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते । एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः । क्षेत्रज्ञञ्चापि मां विद्धि सर्व्वक्षेत्रेषु भारत! । क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ! तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् । स च यो यत्प्रभावश्च तत् समासेन मे शृणु । ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् । ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः । महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः। इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत् क्षेत्रं समासेन सविकारमुदाहृतम्" गीता । "अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च" विष्णु स० ३शालिनि च । "प्रकृत्यास्तु विकाराये क्षेत्रज्ञैरधिष्ठितः" नचैनं ते प्रजानन्ति स तु जानाति तानि वै" भा०शा०२४२अ० । "यस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते" इति मनूक्ते ४अन्तर्य्यामिणि "हृदि स्थितः कर्म्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति" भा० का० ३०१६ श्लो० । ५वटुकभैरवे "क्षेत्रज्ञः क्षत्रियो विराट्" वटुकस्तवः । ६विदग्धे त्रि० मेदि० ७कृषके त्रि० शब्दरत्ना० ८क्षेत्रज्ञातरि त्रि० "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्य्युपरि सञ्चरन्तो न विन्देयुः" छा०उ० । ततः ब्राह्मणा० भावे ष्यञ् क्षैत्रज्ञ्य युवा० अण् । क्षैत्रज्ञ तद्भावे न० ।

**क्षेत्रदूती** स्त्री क्षेत्रे दूतीव । श्वेतकण्टकारिकायाम् राजनि० ।

**क्षेत्रपति** पु० ६त० । क्षेत्रस्वामिनि "जीवं क्षेत्रपतिं प्राहुः केचिद् ब्रह्मणयापरे । स्वतन्त्र एव स कश्चित् क्षेत्रस्य परितिरिष्यते" तन्त्र० क्षेत्रपतेरपत्यादि पत्युत्तरपदत्वेऽपि अश्वपत्यादौ पाठात्अण् । क्षैत्रपत तदपत्यादिषु त्रि० ।

**क्षेत्रपर्पटी** स्त्री क्षेत्रे पर्पटीव । (क्षेतपापड़ा) इति ख्याते क्षुपभेदे वैद्यकम् ।

**क्षेत्रपाल** त्रि० क्षेत्रं पालयति पालि—अण् । १क्षेत्ररक्षके त्रि० । २भैरवभेदे पु० । तद्भेदाः प्रयोगसारे उक्ता यथा "भेदा एकोनपञ्चाशत् क्षेत्रपालस्य कीर्त्तिताः। मातृकावीजभेदेन सञ्चिन्त्या नामभेदतः । अजरश्चापकुम्भश्च इन्द्रसुतस्ततःपरः। ईड़ाचारश्चोक्षसंज्ञ उन्माद ऋषिसूदनः । ऋसुक्री लृप्तकेशश्च लृप्तकश्चैकदंष्ट्रकः । ऐरावतश्चौषवन्धुरौषधेशस्तथैव च । अञ्जनश्चास्त्रवारश्च कवलः खरखानलः । गोमुखश्चैव घण्टादोङमनाश्चकवारणः । छटाटोपो जटालाख्यो भङ्कारश्च जटुश्वरः । टङ्कपाणिस्तथाचान्यष्ठानवन्धुश्च डामरः । ढक्कारवो णवर्णश्च तडिद्देह स्थिरस्तथा । दन्तुरो धनदश्चान्योनतिकान्तः प्रचण्डकः । फट्कारो वीरसंघश्च भङ्काख्यो मेषभासुरः । युगान्तो रौद्रकश्च लम्बोष्ठो वसुमांस्तथा । शूकनन्दः षडाखाख्यः सुनाभा हुम्बकस्तथा । एते भेदाः समाख्याता मातृकाचरयोनिकाः" । क्षेत्रपालकथनप्रयोजनं यथा "नाम पद्यस्य वर्णानां यो वर्णो मातृकान्तरे । दृश्यते प्रथमं तत्र तत्रायं क्षेत्रपालकः । तत्र तत्र विशिष्टात्मा भेदैरेतैर्व्यवस्थितः । ततो विशिष्टो यष्टव्यः क्षेत्रपालस्तु सर्वतः । क्षेत्रपालमसंपूज्य यः कर्म कुरुते क्वचित् । तस्य कर्मफलं हन्ति क्षेत्रपालो न संशयः"। तन्त्रोक्ते २पश्चिमद्वारपाले भैरवभेदे च "गणेशं वटुकं चैव क्षेत्रपालञ्च योगिनीः । पूर्वादिक्रमयोगेन द्वारपालान् प्रपूजयेत्" तन्त्र० ३क्षेत्रपालके त्रि०

**क्षेत्रफल** न० क्षेत्रस्य फलम् । १भूम्यादिक्षेत्रजाते शस्यादौ । लीलावत्याद्युक्ते त्रिकोणादिक्षेत्रभवे २हस्तादिरूपे (कालि) फले क्षेत्रशब्दे विवृतिः । [वचायां वैद्यकम् ।

**क्षेत्रमालिका** स्त्री क्षेत्रं मालयति मल—णिच्—ण्वुल् ।

**क्षेत्ररुहा** स्त्री क्षेत्रे रोहति रुह—क । १वालुक्यां कर्कटीभेदे राजनि० २क्षेत्रजातमात्रे त्रि० । [तत्त्वज्ञापके व्यवहारभेदे ।

**क्षेत्रव्यवहार** पु० लीलावतीप्रदर्शिते त्रिकोणादिक्षेत्रफलादि-

**क्षेत्रसम्भव** त्रि० क्षेत्रे सम्भवति सम्+भू—अच् । १क्षेत्रजाते "क्षेत्रसम्भवफलं घनं भवेत्" लीला० । २भूमिजातमात्रे त्रि० । ३भिण्डाक्षुपे पु०राजनि० ।

**क्षेत्रसम्भूत** पु० क्षेत्रे संभूतः। १कुन्दरे पु० शब्दचि० २भूमिभवे त्रि०।

**क्षेत्रसाधस्** त्रि० क्षेत्रं साधयति साधि—असुन्। क्षेत्रसाधके "सपर्य्यन्न पुरुप्रियं मित्रं न क्षेत्रसाधसा" ऋ०८,३१,१४।

**क्षेत्राजीव** त्रि० क्षेत्रं तत्फलं यस्य आजीवति आ—जीव—अण्। कर्षके अमरः।

**क्षेत्राधिदेवता** स्त्री ६त०। सिद्धस्थानतीर्थाधिष्ठातृदेवताभेदे। तन्नामोच्चारणञ्च श्रीशब्दोच्चारणपूर्वं कार्य्यं यथाह सं०त० प्रयोगसारः "देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्। सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्"।

**क्षेत्राधिप** स्त्री ६त०। १मेषादिद्वादशराशिस्वामिषु कुजादिषु क्षेत्रशब्दे विवृतिः। २क्षेत्रस्वामिनि त्रि०। [शब्दमा०।

**क्षेत्रामलकी** स्त्री क्षेत्रे जाता आमलकी। भूम्यामलक्याम्

**क्षेत्रिक** त्रि० क्षेत्रमस्त्यस्य ठन्। क्षेत्रस्वामिनि। "ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति। क्षेत्रिकस्यैव तद्बीजम्" मनुः। इनि क्षेत्रिन् अप्यत्र क्षेत्रशब्दे उदा०। "यावत्सस्यं विनश्येत्तु क्षेत्री तस्य फलं लभेत्" याज्ञ०।

**क्षेत्रिय** त्रि० परक्षेत्रे देहान्तरे चिकित्स्यः परक्षेत्रस्य क्षेत्रियजादेशः। देहान्तरे चिकित्स्ये अप्रतीकार्य्ये १रोगे "दण्डोऽयं क्षेत्रियो येन मय्यपातीति साऽब्रवीत्" भट्टिः। क्षेत्रमस्त्यस्य वा० घ। २क्षेत्रस्वामिनि त्रि०। "क्षेत्रियस्यात्यये दण्डो भागाद्दशगुणो भवेत्। ततोऽर्द्धदण्डो भृत्यानामज्ञानात् क्षेत्रियस्य तु" मनुः क्षेत्रियस्येत्यत्र क्षेत्रिकस्येति पाठान्तरम्। क्षेत्रे भवः वा० घ। ४क्षेत्रजाते तृणादौ त्रि० क्षेत्रे स्वपरक्षेत्रमात्रे प्रसितः वा०घः। ५परदाररते पु० मेदि०।

**क्षेत्रेक्षु** पु०क्षेत्रे इक्षुरिव। यावनाले(जुन्नारी)ख्याते राजनि०

**क्षेप** पु० क्षिप—घञ्। १निन्दायां, २विक्षेपे, ३प्रेरणे, ४लेपने ५हेलायां ६लङ्घने हेम०। करणे घञ्। ६गर्वे मेदि० ७विलम्बे हेम०। कर्मणि घञ्। ८गुच्छे त्रिका०। तत्र निन्दायां "सत्यासत्यान्यतं स्तोत्रे न्यूनाङ्गेन्द्रियरोगिणाम्। क्षेपं करोति चेद्दण्ड्यः" याज्ञ०। "क्षेपं संप्राप्तवांस्तत्र प्रकृत्या कोपनः प्रभुः" भा०शा० ४९अ०। "क्षेपयुक्तैर्वचोभिः" भा०आ० ५५५ श्लो०। विक्षेपे दृष्टिक्षेपः अपटीक्षेपः। विलम्बे "क्षतक्षयक्षेपमुदैक्षताच्युतम्" माघः। कर्मणि घञ्। क्षिप्यमाणे कुट्टकशब्दे पृ० २०७१ उदा० फलान्यधोधस्तदधो निवेश्यः" लीला० क्षेप+स्वार्थे क। तत्रार्थे "भाज्यो हारः क्षेपकश्चापवर्त्त्य" इत्यादि तत्र शब्दे लीलावतीवाक्ययुक्तम्।

**क्षेपक** त्रि० क्षिप—ण्वुल्। १दिक्षेपकर्त्तरि ग्रन्थकृदक्षतांशस्य तद्ग्रन्थमध्ये संनिवेशके च। क्षेप+स्वार्थे क। क्षिप्यमाणे यथा लीलावत्यां "पादोनपद्याकतुल्यटङ्कैरित्यादि" श्लोकद्वयम्।

**क्षेपण** न० क्षिप—ल्युट्। १अपवादे २लङ्घने ३प्रेरणे ४दिक्षेपे ५यापने च। "आयुषः क्षेपणार्थञ्च न दातव्यं स्त्रीधनं विना" हरीतः "उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षेपणं स्मृतम्" मनुः। करणे ल्युट्। ६क्षेपसाधने अस्त्रव्यापारभेदे (फेकान) "क्षेपणैर्मुष्टिभिश्चैवावरोहोद्धूतनिःस्वनैः" भा०वि०१२अ० "क्षेपणं कथ्यते यत्तु स्थानात् प्रच्यावनं हठात्" तद्व्याख्यायां नीलकण्ठधृतं शास्त्रवाक्यम्।

**क्षेपणि(णी)** स्त्री क्षिप बा० अनि वा ङीप्। १नौकादण्डे (दांड़) अमरः। २जालभेदे (क्षेपजाल) मेदिनिः।

**क्षेपणीय** पु० क्षिप—अनीयर्। "क्षेपणीयोभिन्दिपालः लङ्घोदीर्घमहाफलः" यादवोक्तलक्षणे १भिन्दिपालेऽस्त्रे, २क्षेप्यमात्रे पाषाणादिके त्रि०। "नाराचक्षेपणीयाश्मनिष्पेषपतितानलम्" रघुः। [शीघ्रतायाम्।

**क्षेपिमन्** पु० क्षिप्रस्य भावः पृथ्वा० इमनिच्" क्षेपादेशः।

**क्षेपिष्ठ** त्रि० अतिशयेन क्षिप्रः इष्ठन् क्षेपादेशः। अतिशयशीघ्रे "वायुर्वै क्षेपिष्ठा देवता" श्रुतिः। ईयसुन्। क्षेपीयस् तत्रार्थे त्रि० स्त्रियां ङीप्।

**क्षेम** पु० क्षि—मन्। १चोरनामगन्धद्रव्ये। २लब्धवस्तुनोरक्षणे पु० न० अर्द्धर्चादि० मेदिनिः। "उभयादीश्वरश्चैव योगक्षेमार्थसिद्धये" याज्ञ० लब्धस्य रक्षणं क्षेमः" आ०त० रघु०। "यन्ता च मे धर्त्ता च मे क्षेमश्च मे" यजु०१८,७०, क्षेमः विद्यमानधनादे रक्षणशक्तिः" वेददी०। ३विद्यमानसत्ताकस्य वस्तुनः स्वाधिकरणे विशिष्ट बुद्धि नियामक सम्बन्ध विशेष व्यवस्थापने क्षेमिकशब्दे विवृतिः। ४कुशले न० ५तद्वति त्रि० अम०। "स्फ्रीतं राज्यं विपुलं क्षेमं निष्कण्टकम्" भा० व० २५९७६ श्लो० "अतःक्षेमः पुनः पन्थाः" भा० व० ४४४श्लो० "श्वश्रूश्वशुरभर्तॄणां मम क्षेमास्तु शर्वरी" २९८अ०। ६मुक्तौ न० हेम०। "भविता सहदेवस्य" इत्युपक्रमे "अथ मागधराजानो भाविनो ये वदामि ते" "ततः श्रुतञ्जयाद्विप्र! शुचिस्तस्य भविष्यति। क्षेमोऽथ सुव्रतस्तस्माद्धर्म्मस्तत्र समन्ततः" भा०भा०९,२२,३०अ०उक्ते सहदेववंश्ये ७नृपभेदे पु०। "जन्मसम्पद्विपत्क्षेमप्रत्यरिःसाधकोवधः। मित्रं परममित्रं च" ज्यो० उक्ते स्वजन्मतारावधिके चतुर्थपर्य्योदयद्वाविंशे नक्षत्रे च न०।

**क्षेमक** पु० क्षेम—स्वार्थे क। १चोरनामगन्धद्रव्ये जटा० २राक्षसभेदे, “एतस्मिन्नेव काले तु पुरीं वाराणसीं नृप! शून्यां निवेशयामास क्षेमको नाम राक्षसः” हरि०२९अ० ३पाण्डुवंश्ये नृपभेदे। “दण्डपाणिर्निमिस्तस्य क्षेमको भविता ततः” इत्युपक्रमे “क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ” भा० ९,२२,२९श्लो०।

**क्षेमकर** त्रि०क्षेमं करोति कृ—अच् ६त०। १मङ्गलकारके “पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्विजाः!” भा० आश्व० १५ अ०।

**क्षेमकार** त्रि०क्षेमं करोति कृ—अण् उप०स०। मङ्गलकारके “पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनाम्” भट्टिः

**क्षेमकृत्** त्रि० क्षेमं करोति कृ—क्विप् ६त०। १कृतमङ्गले २उपात्तस्य रक्षके परमेश्वरे पु०। “अनियन्ता नियन्तात्मा संक्षेप्ता क्षेमकृच्छिवः” विष्णुसं०।

**क्षेमङ्कर** त्रि० क्षेमं करोति “क्षेमप्रियमद्रेऽण् च” पा० चकारात् खच् मुम् च। क्षेमकारके।

**क्षेमङ्करी** स्त्री “क्षेमान् देवेषु या देवी कृत्वा दैत्यपतेः क्षयम्। क्षेमङ्करी शिवेनोक्ता पूज्या लोके भविष्यसि” देवीपु० ४० अ०उक्ते १देवीभेदे, २शङ्खचिल्लायाञ्च। “कुङ्कुमारुणसर्वाङ्गि! कुन्देन्दुधवलानने। मत्स्यमांसप्रिये! देवि! क्षेमङ्करि! नमोऽस्तु ते” इति तत्प्रणाममन्त्रः

**क्षेमदर्शिन्** त्रि० क्षेमं पश्यति दृश—णिनि। मङ्गलदर्शिनि स्त्रियां ङीप्। कोशलाधिपराजभेदे।“कोशलानामाधिपत्यं संप्राप्तं क्षेमदर्शिनम्” “स कालं पञ्जरे बद्धा विषयं क्षेमदर्शिनः” भा० शा० ८२ अ०।

**क्षेमधन्वन्** पु०रामवंश्ये राजभेदे। “रामस्य तनयोऽत्र कुश इत्यभिविश्रुतः” इत्युपक्रमे “नभस्य पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः” हरि० १५ फ०। “स क्षेमधन्वानममोधधन्वा” रघुः।

**क्षेमधूर्त्त** पु० ब०व० बृह० सं० कूर्म्मविभागे “शङ्खाभाकाः क्षेमधूर्ताश्च” इति उत्तरस्याभुक्ते देशभेदे।

**क्षेमधूर्त्ति** पु० कैकेयदेशाधिपे राजभेदे। “बृहन्तं त्वमथासन्नं कैकेयं दृढविक्रमम्। क्षेमधूर्त्तिं महाराज! विद्याधोरसि मार्गणैः” भा० द्रो०१० ७अ०। “गणः क्रोधवशो नाम यस्ते राजन्! प्रकीर्त्तितः। ततः सञ्जज्ञिरे वीराः” इत्युपक्रमे “कारूषमच राजानः क्षेमधूर्त्तिस्तथैव च”भा०आ०६७अ०। [क्षेमाफलेति पाठे प्रयो०।

**क्षेमफला** स्त्री० क्षेमं फलं यस्य। उदुम्बरवृक्षे शब्दच०।

**क्षेममूर्त्ति** स्त्री दुर्य्योधनभ्रातृभेदे “उग्रश्रवाः उग्रसेनः क्षेममूर्त्तिस्तथैव च” भा० आ० ६७ अ०।

**क्षेमवृद्धिन्** त्रि० क्षेमस्य वृद्धमस्त्यस्य इनि। क्षेमवर्द्धनशीले ततः बाह्वा० इञ्। क्षैमवृद्धि तदपत्ये पु० स्त्री०।

**क्षेमा** स्त्री १देवीमूर्त्तिभेदे “निक्षिप्ते पूजयेत् क्षेमां सर्वकामफलप्रदाम्”देवी०पु०४७अ०। २अप्सरोभेदे च “अम्बिका लक्षणा क्षेमा देवी रम्भा मनोरमा” भा० आ०१२२अ०।

**क्षेमाधि** पु० मिथिलाधिपे राजभेदे। “अरिष्टनेमिस्तस्यापि श्रुतायुस्तत् सुपार्श्वकः। ततश्चित्ररथोयस्य क्षेमाधिर्मिथिलाधिपः” भाग०९,१३,१४।

**क्षेमासन** न० “अथ क्षेमासनं वक्ष्ये यत् कृत्वा प्रेक्षयेद्दिवम्। दण्डहस्तो दण्डपादं केवलं स्थापयेत् सुधीः” इति रुद्रयामलोक्ते आसनभेदे।

**क्षेम्य** त्रि० क्षेमाय साधु यत्। कुशलयोग्ये “वायं मनुष्याश्च पशवश्च क्षेम्या भवन्ति” श्रुतिः।

**क्षेय** त्रि० क्षेतुं योग्यः क्षि—यत्। क्षेतुं योग्ये।

**क्षेव** सेवने भ्वा०पर०सक० सेट्। क्षेवति अक्षेवीत् चिक्षेव।

**क्षै** क्षये भ्वा० पर०अक० अनिट्। क्षायति अक्षासीत् चक्षौ। क्षेयं क्षाता क्षामः।

**क्षैत** त्रि० क्षितेरयम् अण्। १क्षितिसम्बन्धिनि २क्षीणतासम्बन्धिनि च “यमस्तरोयशसां क्षैतो अस्तु” ऋ०९,९७,२,

**क्षैतयत** पु० क्षैताय क्षीणतायै यतते यत—अच्। क्षीणतायै यतमाने ऋषिभेदे नडादित्वात् फक्। क्षैतयतायनि तदपत्यादौ

**क्षैत्र** न०क्षेत्राणां समूहः भिक्षा० अण्। १क्षेत्रसमूहे। स्वार्थे अण्। २क्षेत्रे च “वैश्वानरं क्षैत्रजित्याय देवाः” यजु० २२,६०। क्षेत्रमेव क्षैत्रं तस्य जित्यं जयस्तस्मै यजमानस्य क्षेत्राप्त्यै” वेददी०

**क्षैमिक** त्रि० क्षेमेण निर्वृत्तं ठञ्। १लब्धस्य रक्षणोपयोगिनि २विद्यमानसत्ताकस्य वस्तुनः स्वाधिकरणे स्वविशिष्टबुद्धिनियामकसम्बन्धव्यवस्थापननिर्वाह्ये जन्यत्वे च। यथा दुःखात्यन्ताभावस्य मोक्षत्ववादिमते अत्यन्ताभावस्याजन्यत्वेऽपि स्वप्रतियोगिदुःखानुत्पादनद्वारा स्वाधिकरणे स्वविशिष्टबुद्धिनियामकदुःखाकालीनस्वरूपसम्बन्धनिर्वाहकत्वं तत्त्वज्ञानस्येति दुःखात्यन्ताभावस्य क्षैमिकी तत्त्वज्ञानसाध्यता। एवं कृतिसाध्यत्वस्य विध्यर्थत्वमते “एकादश्यामुपवसेत्” इत्यादौ अहोरात्रभोजनाभावस्य क्षैमिकं कृतिसाध्यत्वम्। “भावोयथाऽ-

भावः कार्य्यवत् कारणं मतः” इत्युदयनाकार्य्यैरभावमात्रस्य दृष्टान्तविषया कार्य्यत्वोक्तिः क्षणिकविषया। एतेन प्रायश्चित्तविवेकटीकायां श्रीकृष्णतर्कालङ्कारेणात्यन्ताभावस्य क्षणिकजन्यत्वस्य निराकरणम् निरस्तम् प्रतियोग्यकालीनस्वरूपसम्बन्धविशेषस्यैवात्यन्ताभावविशिष्टबोधनियामकत्वेन तादृशसम्बन्धस्य तत्त्वज्ञानतत्त्वादिनिर्वाह्यत्वात् स्वाधिकरणे सति हि दुःखे भोजने वा तादृशस्वरूपसम्बन्धाभावात् विशिष्टबुद्धेरनुदयात् तस्य तत्त्वज्ञानादिप्रयोज्यत्वमेवमन्यत्रोह्यम्

**क्षैरह्रद** त्रि॰ क्षीरह्रदस्येदम् शिवा॰ अण्। क्षीरह्रदसम्बन्धिनि।

**क्षैरेय** त्रि॰ क्षीरे संस्कृतम् ढञ्। १क्षीरे संस्कृते परमान्ने न॰ हेम॰। २यवाग्वां स्त्री ङीप्।

**क्षोड** पु॰ खोड़-घञ् पृषो॰। १आलाने गजबन्धन्याम् शब्दचि॰

**क्षोण** त्रि॰ क्षि—बा॰ डोन। क्षयशीले। “महः क्षोणस्याश्विना कण्वाय” ऋ॰१,११७,८ क्षोणस्य क्षयणस्य निरु॰ ६,६,

**क्षोणि(णी)** स्त्री क्षै—बा॰ डोनि वा ङीप्। १पृथिव्यां निघ॰। “मत्स्यो युगान्तसमये मनुनोपलब्धः क्षोणीमयो निखिलजीवनिकायकेतुः” भाग॰२,७,१२। २एकसंख्यायाञ्च

**क्षोद** पु॰ क्षुद-घञ्। १चूर्णने पेषणे अमरः कर्म्मणि घञ्। २रजसि च हेम॰। “आनेमिमग्नैः शितिकण्ठपक्ष क्षोदद्युतश्चुभिरे रथौघैः” माघः “षष्ठः खण्डनखण्ड खाद्यसहजक्षोदक्षमे” नैष॰।

**क्षोदक्षम** त्रि॰ क्षोदं क्षमते क्षम—अच्। विचारसहे “षष्ठः खण्डनखाद्यसहजक्षोदक्षमे” नैष॰।

**क्षोदस्** न॰ क्षुद—असुन्। जले निघ॰।

**क्षोदित** न॰ क्षुद—णिच्-क्त। १चूर्णिते पेषिते शब्दचि॰।

**क्षोदिमन्** पु॰क्षुद्रस्य भावः इमनिच् क्षोदादेशः। क्षुद्रतायाम्।

**क्षोदिष्ठ** त्रि॰ अतिशयेन क्षुद्रः इष्ठन् क्षोदादेशः। अतिक्षुद्रे।

**क्षोदीयस्** त्रि॰ अतिशयेन क्षुद्र ईयसुन् क्षोदादेशः। क्षुद्रतरे “बृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति”; माघः स्त्रियां ङीप्। [प्रजाश्च भवन्ति” शत॰ब्रा॰ १,५,२,७।

**क्षोधुक** त्रि॰ क्षुध— बा॰उकञ्। क्षुधायुक्ते। “क्षोधुका ह्यस्य

**क्षोभ** पु॰ क्षुभ-घञ्। १सञ्चलने “स नूपुरक्षोभपदाभिरासीत्” “रथक्षोभपरिश्रान्तः” रघुः। २विकारे च “क्षोभमाशु हृदयं न यदूनाम्” माघः। “अथेन्द्रियक्षोभमयुग्मनेत्रः” कुमा॰।

**क्षोभक** पु॰“दुर्जराख्यस्य पूर्वस्यां पुरं नाम वराशनम्। तद्दक्षिणे महाशैलः क्षोभको नाम नामतः” कालिकापु॰ ७८अ॰ उक्ते कामाख्यतीर्थस्थनगभेदे। क्षुभ—ण्वुल्। २क्षोभकारके त्रि॰।

**क्षोभण** त्रि॰क्षुभ-णिच्-ल्यु। १क्षोभजनके। २कामबाणविशेषे पु॰ पञ्चबाणशब्दे विवृतिः ३शिवे पु॰। “नमो बुद्धाय लुब्धाय क्षुब्धाय क्षोभणाय च” भा॰ शा॰ २८६अ॰ शिवसहस्रनाम। ४विष्णौ। “उद्भवः क्षोभणो देवः श्रुतगर्भीरमेश्वरः” विष्णुसं॰ तस्य च सृष्टिकाले प्रकृत्यादिक्षोभकत्वात्तथात्वम् यथाह विष्णुपु॰ “प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया प्रभुः। क्षोभयामास भगवान् सर्गकालेऽव्ययाव्ययौ”। भावे ल्युट्। ५क्षोभणे न॰।

**क्षोम** न॰क्षु-मन्। १मण्डपोपरिशालायाम्(चिलेवर)शब्दचि॰। २अट्टे भरतः ३गन्धद्रव्ये पु॰ जटाधरः संज्ञायां कन्। तत्रार्थे ४चोरनामगन्धद्रव्ये पु॰ शब्दचि॰।

**क्षौ(क्ष्मा)णी** स्त्री क्षु—बा॰ नि इत्विञ्च वा ङीप्। १धरण्याम् अमरः। अन्या व्युत्पत्तिः ब्रह्मवै॰पु॰२०७ अ॰उक्ता यथा “दृत्वा च यागधाराञ्च क्षौणी क्षीणा लये यया। महालये चयं यान्ति क्षितिस्तेन प्रकीर्त्तिता” तेन क्षीणाशब्दात् पृषो॰ साधु। २एकसंख्यायाञ्च।

**क्षौणीप्राचीर** पु॰ क्षौणी प्राचीर इव यस्य। समुद्रे जटा॰।

**क्षौणीभुज्** पु॰ क्षौणीं भुनक्ति अवति भुज-क्विप्। क्षिति पालके राजनि

**क्षौद्र** न॰क्षुद्राभिः सरघाभिर्निर्वृत्तम् अण्। “मक्षिकाः कपिलाः सूक्ष्माः क्षुद्राख्यास्तत्कृतं मधु। मुनिभिः क्षौद्रमित्युक्तं तद्वर्णात् कपिलं भवेत्” इति भावप्र॰उक्ते १मधुनि अमरः। “सक्षौद्रपटलैरिव” रघुः। “गुणैर्माक्षिकवत् क्षौद्रं विशेषान्मेहनं परम्” भावप्र॰। २जले मेदि॰। ३चम्पकवृक्षे पु॰ शब्दच॰। ४क्षितिकणे पांशौ न॰ शब्दचि॰ ५मागध्यां जाते जातिसङ्करभेदे पु॰स्त्री॰ “चतुरो मागधी सूते क्रूरान् मायोपजीविनः। मांसं स्वादुकरं क्षौद्रं सौगन्ध्यमिति विश्रुतम्” भा॰ अनु॰ ४८ अ॰। क्षुद्रस्य भावः अण्। ६क्षुद्रतायां न॰।

**क्षौद्रक्य** न॰ क्षुद्रकः आयुधजीविसंघः स्वार्थे ञ्यट्। आयुधजीविसंघे टित्त्वसामर्थ्यात् स्त्रियां ङीप्. क्षौद्र कीत्यप्यत्र स्त्री सि॰कौ॰।

**क्षौद्रज** न॰ क्षौद्रात् जायते जन-ड। (मोम) ख्याते १सिक्थके राजनि॰। २मधुजातमात्रे त्रि॰।

**क्षौद्रधातु** पु॰ कर्म॰। माक्षिके उपधातुभेदे वैद्यकम्।

**चौद्रप्रिय** पु॰ चौद्रमिव प्रियः खादुत्वात् । १जलमधूकवृक्षे
हेम॰ । २मधुप्रिये त्रि॰ ।

**चौद्रमेह** पु॰ चौद्रमिव मेहः। मधुमेहे रसु मेहशब्दे ८१०पृ॰
सुश्रुतवाक्यं तल्लक्षणं दृश्यम् "कषायं मधुरं रूक्षं
चौद्रमेहं वदेत्बुधः" भावप्र॰ ।

**चौद्रेय** न॰ चौद्रे भवः ढञ् । (मोम) सिक्थके राजनि॰ ।

**चौम** न॰ चु—मन् प्रज्ञा॰ स्वार्थे अण् । १दुकूले पट्टवस्त्रे ।
"श्रियः पद्मनिषण्णायाः चौमान्तरितमेखले" रघुः
"चौममाकुलतया विचकर्ष" माघः "वस्त्रोरत्नानुपूर्व्येण
चाक्ष्णौमाविकानि च" मनुः । चुमाया अतस्या विकारः
अण् । २तन्भेदजातवस्त्रे स्त्रियां ङीप् चौमी कन्था ।
चौमेण दुकूलेन परिहृतो रथः अण् । ३दुकूलपरिहृते रथे
पु॰। ४हर्म्यभेदे पु॰न॰कोटिल्यः। अट्टे अमरः। अट्टश्च
प्राकारार्थस्थितवलभीरूपं हर्म्यमिति केचित् । मण्डपोपरि-
निर्म्मित स्थानम् (चिलेघर) इत्यन्ये । [मत्र्षि॰ ।

**चौमिक** पु॰ चौममिव कायति कै—क । चौरमामगन्धद्रव्ये ।

**चौमी** स्त्री चुमैव स्वार्थे प्रज्ञा॰ अण् ङीप् । १अतस्यां
(मसिना)ख्याते द्रव्ये । चुमाया विकारः कन्था अण्
ङीप् । २चुमाजातवस्त्रतकन्थायां स्त्री ।

**चौर** न॰ चुरेण निर्वृत्तम् अण् । १क्षुरकर्म्मणि केशकर्त्तने ।
तत्र विहितनक्षत्रादि चुरकर्म्मशब्दे २१८६ पृ॰ उक्त-
प्रायं विशेषोऽत्र कश्चिदभिधीयते
"व्रतामावसुपवासानां श्राद्धादीनाञ्च संयमे । न करोति
चौरकर्म्म अशुचिः सर्वकर्म्मसु । स च तिष्ठति कुम्भेषु न-
चादीनाञ्च सुन्दरि !। तदेव दिनमारभ्य तच्छोजी दस्क-
त।ष्कृतः" ब्रह्म वै॰ पु॰२७अ॰ । "चन्द्रशुद्धिर्यदा नास्ति
तारायाश्च विशेषतः । अचौरमेऽपि कर्त्तव्यं चन्द्रचन्द्र
अबोहिने"ज्यो॰त॰। "मानं चौरे हन्ति गुरुः शुक्रं शुक्रो-
धनं रविः । आयुरङ्गारको हन्ति सर्वं हन्ति शनैश्चरः"
श्रीपतिरत्नमाला।"कान्यया नरपतेर्हि जन्मनां दारकर्म्मकृत
कृतकेषु च । बन्धमोक्षमवदीक्षयोरपि चौरमिष्टमखिलेषु
कोडुषु"भोजदे॰।"एकाग्र्ये पितृश्राद्धे रवेरंशपरिच्छये ।
चुरिकर्म न कुर्वीत जन्ममासे च जन्मभे" इत्यगार्ग्यः,
"केशवमार्त्तपुरं पाटलिपुत्रं पुरीमहिच्छत्राम् ।
दितिमर्दितस्य चरतां चौरविधौ भवति कल्याणम्"
ज्यो॰ त॰। अत्र क्रमो वराहपु॰ "श्मश्रुकर्म कारयित्वा
नखच्छेदमनन्तरम्" ज्योति॰ त॰। "केशश्मश्रुलोम-
नखानि वापयीत शिखावर्ज्जम्" शु॰ त॰ गोभिलः ।
"रोहिण्याञ्च विशाखायां मैत्रे चैवोत्तरासु च ।
मघायां कृत्तिकायाञ्च द्विजैः चौरं विवर्ज्जितम् । कृत्वा
तु मैथुनं चौरं यो देवांस्तर्पयेत् पितॄन् । रुधिरं
तद्भवेत्तोयं दाता च नरकं व्रजेत्" ब्रह्म॰ वै॰ पु॰
नापितशब्दे चौरनिषेधो यथा "स्वयं माल्यं स्वयं
पुष्पं स्वयं इस्तञ्च चन्दनम् । नापितस्य गृहे चौरं
शक्रादपि हरेत् श्रियम्" कर्म्मलोचनः ।

**चौरपव्य** न॰ चुरं पविरिव स्वार्थे ष्यञ् । अति-
तीक्ष्णे "कचिद्वंस चिलकथं चौरपव्यं स्वयं भ्रमिम्"
भाग॰ ६, ५, ८ ।

**चौरिक** पु॰ चौरं शिल्पत्वेनास्त्यस्य ठन् । नापिते शब्दमा॰

**च्णु** तेजने अदा॰ पर॰ सक॰ सेट् । च्णौति अच्णावीत् ।
चुच्णाव । च्णविता च्णुनः । "वाचं च्णुवानोद्मयन्
सपत्नान्"अथ॰५।२०।१ । "उभयतो च्णोदं वाचः च्णुतम्"
शत॰ ब्रा॰ ६.३.१.२४ ।

**च्णुत** त्रि॰ च्णु—क्त । तीक्ष्णीकृते अमरः ।

**च्णोत्र** न॰च्णु—करणे ष्ट्रन् । अस्त्रतेजने शाणाख्ये यन्त्रभेदे ।
"च्णोत्रेणेव स्वधितिर्मांसशीतम्" ऋ॰ १,२७,७ ।

**च्णा** स्त्री चमते भारं च्णम—अच् उपधालोपश्च । १धरायाम् ।
अमरः "च्णां लङ्घयित्वा चमयोपपन्नम्"रघुः ।"नचोदक
प्रवेशेन न च च्णाशयनादपि" भा॰ व॰ १९९ अ॰ ।
"च्णया चरति परि सा इयत्तु नः" निरु॰ भूता च्णक्
२एकसंख्यायाञ्च ।

**च्णाज** पु॰च्णाया जायते जन-ड ।१मङ्गलग्रहे २नरकासुरे च

**च्णापति** पु॰ ६त॰ । भूपे च्णानाथादयोऽप्यत्र ।

**च्णाभुज** पु॰ च्णां भुनक्ति अवति भुज—क्विप् । भूमिपाले

**च्णाभृत्** पु॰च्णां बिभर्त्ति पालयति धारयति वा भृ—क्विप्
तुक् च । १राजनि २पर्वते च तस्य भूमिधरत्वात्तथात्वम् ।

**च्णाय** विधूनने कम्पने भ्वा॰आत्म॰ अक॰ सेट् । च्णायते ।
अच्णायिष्ट चच्णाये ऐदित् च्णातः । "अच्णायन्त मही
भृतः" "चच्णाये च मही रामः" भट्टिः । णिचि पुक्
यलोपश्च । च्णापयति ।

**च्णील** निमेषे भ्वा॰ पर॰ अक॰ सेट् । च्णीलति अच्णीलीत्
चिच्णील । निमेषः पक्ष्मभिश्चक्षुषोराच्छादनम् ।

**च्छिड** च्छेदे भ्वा॰ आत्म॰ अक॰ मोचे सक॰ सेट् । च्छेडते
लृदित् अच्छिडत् । चिच्छिडे ञीदित् । च्छेडितम् ।
आदित् च्छेड्टुम् च्छेडितं तेन "नास्फोटयेन्नचाच्छेडेत्"
मनुः । परस्मैपदमार्षम् एवं "च्छेडन्तोधावमानाश्च

प्रक्ष्वेडुस्ते महाजवाः” रामा० कि० ४५ अ० । “क्ष्वेडन्ति घुघुरायन्ते ज्वलन्तीव च ते श्वाः” सुश्रुतः । अव्यक्त दन्तशब्दकरणे अक० “क्ष्वेडितोत्क्रुष्टसङ्कुलः” भा० आश्व० ५८ अ० ।

**क्ष्विद्** मोचने सक० स्नेहे अक० भ्वा० आ० सेट् । क्ष्वेदते ऌदित् अक्ष्विदत् ओदित् क्ष्विण्णः आदित् क्ष्विण्णं क्ष्वेदितं तेन ।

**क्ष्विद्** कूजने दिवा० पर० अक० सेट् । क्ष्विद्यति । इरित् अक्ष्वेदीत् अक्ष्विदत् । आदित् क्ष्विण्णं क्ष्वेदितं तेन ।

**क्ष्वेड** पु० क्ष्विड—भावादौ घञ्, पचाद्यच् वा । १अव्यक्तदन्तशब्दभेदे २स्नेहे ३मोचने ४त्यागे । ५कर्णामयभेदे कर्णगतरोगशब्दे १७०८ पृ० विवृतिः। ६विषे पु० अम० ७पीतघोषाद्धक्षे रत्नमा० ८लोहितार्कपर्णफले न० मेदि० ९वंशशलाकायां १०सिंहनादे ११कोषातकीवृक्षे स्त्री राजनि०

**क्ष्वेडित** न० क्ष्विड भावे—क्त । सिंहनादे अमरः ।

**क्ष्वेल** संचालने, गतौ सक० क्रीडायाम् अक०भ्वा०पर०सेट् । क्ष्वेलति अक्ष्वेलीत् ऋदित् णिचि चङि न ह्रस्वः । अचक्ष्वेलत् । “ये तु विटपमालाभिः क्ष्वेलन्ति च रुवन्ति च” (ये हरियूथपाः) रामा०६,२अ० “दष्ट्राः प्रहृष्टा संहृष्टाः क्ष्वेलन्त्यपि यथासुखम्” ६,२६ अ०। “ते तदा स्फोटयामासुः क्ष्वेलन्तश्च समन्ततः” १७ अ० ।

**क्ष्वेला** स्त्री क्ष्वेल—अ । क्रीडायाम् । स्वार्थे क क्ष्वेलिकाप्यत्र । “क्ष्वेलिकया तृणा वनाचिता आमोदिना [illegible]त्यं प्रेमसंरम्भेण चकितचकित आगत्य कुञ्चपद्म[illegible]विलासाय्येव लुठति” भाग० ५स्क०८अ० । चौरा० कृत् क्ष्वेलीत्यन्त । “बाहुप्रसार परिरम्भ करालकोरुनीविस्तनालभननर्मनखाग्रपातैः । क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन् रतिपतिं रमयाञ्चकार” भाग० १० स्क० २९ अ० ।

इति श्री तारानाथतर्कवाचस्पतिभट्टाचार्यविरचिते वाचस्पत्ये क्षकारादिशब्दार्थसङ्कलनम् ।

# ख

खकारः "जिह्वामूले तु कुः प्रोक्तः" शिक्षोक्तेः कण्ठमूलोच्चार्यः जिह्वामूलपदस्य कण्ठमूलपरत्वात्। अस्योच्चारणे आभ्यन्तरप्रयत्नः स्पृष्टता (जिह्वामूलस्पर्शः) बाह्यप्रयत्नाश्च "खयां यमाः खयः + ꣹ पौ विसर्गः शर एव च। एते श्वासानुप्रदाना अघोषाश्च विवृण्वते। कण्ठम्" इति शिक्षोक्तेः श्वासाघोषविवाराः "अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः" इति शिक्षोक्तेः वर्गमध्ये युग्मवर्णत्वात् महाप्राणश्च। खादिशब्दे परे पूर्वस्य विसर्गस्य स्थाने जिह्वामूलीयः यथा अधो+खनिः ꣹खनिः समासे तु वा सत्वञ्च। भा+खरः भास्खरः भाःखर इति। वर्णाभिधाने अस्य वाचकाः शब्दाः दर्शिताः यथा "खः प्रचण्डः कामरूपी शुद्धिर्मङ्गिः सरस्वती। आकाशमिन्द्रियं दुर्गा चण्डी सन्तापिनी गुरुः। विश्वरूपी दन्तजातीयः कफोऽपवर्गरतोमदी। शून्यं कपाली कल्याणी सूर्यकर्णोऽजरामरः। शुभाश्लेषः चन्द्रलिङ्गे जनो भट्टारखड्गकौ"। अस्य मातृकावर्णात्मकतत्त्वेन ध्येयरूपं वर्णोद्धारतन्त्रे उक्तं यथा "बन्धूकपुष्पसङ्काशां रत्नालङ्कारभूषिताम्। वराभयकरीं नित्यामीषद्धास्यमुखीं पराम्। एवं ध्यात्वा खस्वरूपां तन्मन्त्रं दशधा जपेत्"। मातृकान्यासे चास्य बाहौ न्यस्तता। श्लोकरचनायां तस्याद्यवर्णतयोपन्यासे पञ्चकर्त्तुः अश्लोकरता "कः खोगोघश्च लक्ष्मीं वितरति नियमोङः सुखं चः सुखं छः" वृत्तर० टीकाधृतवाक्यात्।

ख पु० खर्व—खन—वा० ड। १सूर्य्ये हेमच०। २इन्द्रिये ३पुरे ४क्षेत्रे ५शून्ये ६विन्दौ ७आकाशे ८संवेदने ९स्वर्गे १०कर्मणि च न० मेदि०। ११लग्नात् दशमे स्थाने ज्यो०त०। "आरे खस्थे चतुष्पाद्गोभयम्" नीलक०। "तनुनिधनखभेशाः केन्द्रकोणे त्रिलाभे" जातकप०। १२सुखे हेमच०। १३अभ्रके (आव) उपधातुभेदे राजनि०। "तत्रेन्द्रिये "ऊर्द्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः" मनुः। आकाशे "नश्यतीषुर्यथा विद्धः खे विद्धमनुविध्यतः" मनुः खं "वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति" प्रबो०। "एतस्माज्जायते— खं वायुर्ज्योतिरापश्च" श्रुतिः। "यावत् गिरः खे मरुतां चरन्ति" कुमा० १४परमानन्दस्वरूपे ब्रह्माकाशे। "कं ब्रह्म खं ब्रह्म" "यदेव कं तदेव खम्" इति च छा०उ०।

खकक्षा स्त्री सूर्य्यरश्मिप्रचारावधिके वेष्टनाकारे ब्रह्माण्डसुषिरे गगनपरिधौ। सि० शि० तत्परिमाणमुक्तं यथा "कोटिघ्नैर्नखनन्दषट्कनखभूभृद्भुजङ्गेन्दुभि १८७१२०६९२०००००००० र्ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः। तद्ब्रह्माण्डकटाहसंपुटतटे केचिज्जगुर्वेष्टनम् केचित् प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः। करतलकलितामलकवदमलं सकलं विदन्ति ये गोलम्। दिनकरकरनिकरनिहततमसो नभसः स परिधिरुदितस्तैः" मू०। "एभिर्योजनैस्तुल्यां गणकाः खकक्षामाकाशपरिधिं वदन्ति। तत्र कथमनन्तस्याकाशस्येयत्ता वक्तुं शक्यत इत्याशङ्क्याऽऽह—परिमितिद्युतियुजो नभसः परिधिरिदं वदन्ति। अत एव पौराणिका गणकास्ते ब्रह्माण्डपरिधिं वदन्ति। केचिल्लोकालोकं वदन्ति। यतस्तदन्तवर्त्तिन एवार्करश्मयः। एवमन्ये वदन्तीति नास्माकं मतमित्यर्थः प्रमाणशून्यत्वात्। करतलकलितसकलब्रह्माण्डगोला एवं वक्तुं शक्नुवन्ति। इदानीं स्वमतमाह" प्रमि०। "ब्रह्माण्डमेतन्मितमस्तु नो वा कल्पे ग्रहः क्रामति योजनानि। यावन्ति पूर्वैरिह तत्प्रमाणं प्रोक्तं खकक्षाख्यमिदं मतं नः" मू०। इदानीं ग्रहकक्षा आह। "ग्रहस्य चक्रैर्विहृता खकक्षा भवेत् खकक्षा निजकक्षकायाम्। ग्रहः खकक्षामितयोजनानि भ्रमत्यजस्रं परिवर्त्तमानः" मू०। "सा खकक्षा यस्य यस्य भगणैर्ह्रियते तस्य तस्य ग्रहस्य कक्षामितिर्लभ्यते। अस्योपपत्तिरूपं श्लोकस्योत्तरार्द्धमिति। यतः खकक्षायां ग्रहो भ्रमन्नजस्रं परिवर्त्तमानः खकक्षामितानि योजनानि पूरयति। अतो ग्रहभगणैर्भक्तायाः खकक्षाया यल्लभ्यते सा ग्रहकक्षामितिरित्युपपन्नम्।

खकामिनी स्त्री खं सुखमाकाशं वा कामयते कम—स्वार्थे णिङ्—णिनि ङीप्। १चर्चिकायां २चन्द्रदयितायां च त्रिका०। [महादेवे त्रिका०। खकेशादयोऽप्यत्र।

खकुन्तल पु० खमाकाशः कुन्तलस्थनीयमिव यस्य। व्योमकेशे

खक्ख हासे भ्वा०पर०अक० सेट्। खक्खति अखक्खीत्। चखक्ख। प्रनिखक्खति।

खक्खट पु० खक्ख—अटन्। कठिन्यां (खडि) रायमु०।

खखोल्क पु० काशीस्थे आदित्यभेदे तत्कथा काशी० ५० अ० यथा "खखोल्कोनाम भगवानादित्यः परिकीर्त्तितः। त्रिपिष्टपोत्तरे भागे सर्वव्याधिविघातकः। यथा खखोल्कनामाभूत् तस्यादित्यस्य तच्छृणु" इत्युपक्रमे

"खखोल्का निपतेद्देवा ध्रुवं मद्दर्भा पिवी। मुर्च्छां गत-वतो पत्रपुटा भूत्वा विलोरगो। खखुल्का निपतेद्देवा वक्तव्ये ऽप्यतिसंभ्रमात्। खखोल्केति यदुक्ता गीः कद्रवा सम्भ्रान्तचेतसा। तदा खखोल्कनामार्कस्तुतो विनतया वक्ष" "तपस्विनीमथालोक्य कदाचिद्विनतां प्रभुः। शिव-स्यैव परोमूर्त्तिः खखल्को नाम भास्करः। दत्त्वा वरं स्वपापघ्नं शिवज्ञानसमन्वितम्। काशीवासिजनानेककल्प पापक्षयङ्करः। विनतादित्य इत्याख्यः खखोल्कस्तत्र संस्थितः। इत्थं खखोल्क आदित्यः काशीविघ्नतमो-हरः। तस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते। काश्यां पैलङ्गिले तीर्थे खखोल्कस्य विलोकनात्। नरश्चिन्तित-माप्नोति नीरोगो जायते क्षणात्। नरःश्रुत्वै तदाख्यानं खखोल्कादित्यसम्भवम्। गरुडेशेन सहितं सर्वपापैः प्रमुच्यते" तत्रैवाध्यायशेषे

**खग** पु॰ मेदि॰ खे आकाशे गच्छति गम–ड ७त॰। १सूर्य्ये २सूर्य्यादपत्रे ३देवे ४शरे ५पक्षिणि पु॰ स्त्री॰ मेदि॰। स्त्रियां जातित्वात् ङीष्। ६वायौ शब्दच॰ "तमांसीव यथा सूर्य्यो वृक्षानग्निर्घनान् खगः" भा॰व॰२६०अ॰। ७ग्रहभेदे भरतः। ८आकाशगामिनि त्रि॰। "सुरासुरैरवध्यं हि पुरमेतत् खगं महत्" भा॰ अा॰१६२अ॰। तत्र विहगे "खगचञ्चुपुटक्रोडीपूरणे तव कः श्रमः" चातका॰। "अधुनीत खगः स नैकधा" "धृतवद्राजमधुव्रतं खगः" नैष॰। ग्रहे "आपोक्लिमे यदि खगाः स क्लिलेन्दुवारः" नीलक॰।

**खगङ्गा** स्त्री॰ ६त॰। आकाशगङ्गायां मन्दाकिन्यां त्रिका॰।

**खगण** पु॰ कुशवंश्ये नृपभेदे। "कुशस्य चातिथिस्तस्मात्" इत्युपक्रमे "ततो वनस्थलस्तस्माद्वज्रनाभोऽर्कसम्भवः। खगणस्तत्सुतस्तस्मात् विधृतिश्चाभवत् सुतः" भाग॰ ६.११.२, स्त्रोक:।

**खगगति** स्त्री॰ ६त॰। पक्षिणां गमने तद्भेदाश्च भा॰क॰ ४१अ॰ दर्शिताः यथा

'शतमेकञ्च पातानां पतिताश्मि न संशयः। शतयोजन-मेकैकं विचित्रं विविधं तथा॥ उड्डीनमवडीनञ्च प्रडीनं डीनमेव च। निडीनमथ सण्डीनं तिर्य्यक्डीन गतानि च। विडीनं परिडीनञ्च पराडीनं सुडीन-कम्। अभिडीनं महाडीनं निर्डीनमतिडीनकम्॥ अवडीनं प्रडीनञ्च संडीनं डीनडीनकम्। संडीनो-ड्डीनडीनञ्च पुनर्डीनविडीनकम्॥ सम्पातं समु-ड्डीनञ्च ततोऽन्यद्व्यतिरिक्तकम्। गतागतं प्रतिगतं बहुधा निकुलीनकाः"॥ विवृतमेतत् नीलकण्ठेन यथा "पातानां शतमेकं गणयति उड्डीनमित्यादिना "उड्डीनं१मूर्द्धगमनमवडीनं२मधोगतिः। प्रडीनं३ सर्वतो यानं डीनं४ गमनमात्रकम्। निडीनं५ शनकैर्यानं संडी-नं६ ललितं गतम्। तिर्य्यग्डीनं गतं प्राज्ञस्तिरश्चरं बुधाः। तान्याशाभेदभिन्नानि चत्वारि प्रतिजानते। तानि (तिर्य्यग्डीनानि४)१०। विडम्बितं विडीनं११ स्यात्परिडी-नन्तु१२ सर्वतः। पश्चाद्गतः पराडीनं१३ स्वर्गमनन्तु सुडीन-कम्१४। आभिमुख्येन गमनमभिडीनं१५ प्रचक्षते। यानं महाडीन१६माहुः पविप्राप्तर्ज्जतां गतिम्। निर्डीनं१७ निश्चलं यानं प्रचक्षत्यतिडीनकम्१८"। (विडम्बितं मल्लवदुड्डीयोड्डीयगमनम्)। अवरोहो-वडीनं१९ स्यात् प्रडीनं२० चिरमुच्यते। गत्वा ललितया पूर्वमुपक्रम्य समन्ततः। परिक्रम्य प्रपतनं संडीनं२१ डीनडीनकम्२२। (समन्ततः प्रपतनं, संडीनं परिक्रम्य प्रपतनं डीनडीनकमित्यन्वयः) संडीनोड्डीनडीनं स्यात्तद्देवोर्द्ध्वप्रकल्पनात्२३। गतौ गत्यन्तरे द्वे द्वौ अवेड्-डीनविडीनकम्२४॥ पश्चात् संगत्य निष्क्रम्य पक्षसंपात-२४मुच्यते। उद्धांगगतिसंभेदः समुड्डीनं२५ प्रचक्षते। संकल्प्य पक्षगमनमुच्यते व्यतिरिक्तकम्२६। षड्विंशति-रमी भेदाः पातानामिह दर्शिताः। महाडीनं विहा-येणां पातानां त्रिविधा गतिः७५। गतन्तत्र यथोद्दिष्ट-मागतं पुनरागमः। प्रत्याहृत्तिः प्रतिगतिरिति च त्र्यप्रतिः७६ स्मृताः। (गतागतप्रतिगतिभेदास्त्रिविधम्)। तेषां निपाताः कथ्यन्ते प्रत्येकं पञ्चविं-शतिः"१०१। (निकुलीनकाः निपाताः)। २ग्रहाणां गतौ च।

तत्र ग्रहभेदे गतिभेदाः सू॰ सि॰ सकारणम् उक्ता यथा "अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रिताः। शीघ्र-मन्दोच्चपाताख्या ग्रहाणां गतिहेतवः"॥ तद्वातर-श्मिभिर्बद्धास्तैः सव्येतरपाणिभिः। प्राक् पश्चादपकृष्यन्ते यथासन्नं स्वदिङ्मुखम्॥ प्रवहाख्यो मरुत् तांस्तु स्वोच्चाभिमुखमीरयेत्। पूर्वापरापकृष्टास्ते गतिं यान्ति पृथग्विधाम्॥ ग्रहात् प्राग्भगणार्द्धस्थः प्राङ्मुखं कर्षति ग्रहम्। उच्चसंज्ञोऽपरार्द्धस्थस्तद्वत् पश्चान्मुखं ग्रहम्॥ स्वोच्चापकृष्टा भगणैः प्राङ्मुखं यान्ति यद्-ग्रहाः। तत् तेषु धनमित्युक्तमृणं पश्चान्मुखेषु तु॥

दं चयोत्तरतोऽप्येवं पातो राहुः खरंश्वा । विक्षिप्त्येव विक्षेपं चन्द्रादीनामपक्रमात् ॥ उत्तराभिमुखं पातो विक्षिपत्यपरार्द्धगः । यत्नः प्रागभगयार्धस्थो याम्यायामपकर्षति ॥ बुधभार्गवयोः शीघ्रात् तद्वत् पातो यदा स्थितः । तच्छीघ्राकर्षणात् तौ तु विक्षिप्येते यथोक्तवत् ॥ महत्त्वान्मण्डलस्यार्कः स्वल्पमेवापकृष्यते । मण्डलाल्पतया चन्द्रस्ततो बह्वपकृष्यते ॥ भौमादयोऽल्पमूर्त्तित्वाच्छीघ्रमन्दोच्चसञ्ज्ञकैः । दैवतैरपकृष्यन्ते सुदूरमतिवेगिताः ॥ अतो धनर्णं सुमहत् तेषां गतिवशाद्भवेत् । आकृष्यमाणास्तैरेवं व्योम्नि यान्त्यनिलाहताः ॥ वक्रानुवक्रा कुटिला मन्दा मन्दतरा समा । तथा शीघ्रतरा शीघ्रा ग्रहाणामष्टधा गतिः ॥ तत्रातिशीघ्रा शीघ्राख्या मन्दा मन्दतरा समा । ऋज्वीति पञ्चधा ज्ञेया या वक्रा सानुवक्रगा" सू० सि० ॥ वक्रानुवक्रेत्यादिकं रङ्गनाथेन विवृतं यथा ।

"भौमादिग्रहाणां विरविचन्द्राणामष्टप्रकारा गतिः । कथिता । तत्र वक्रेत्यादिसमेत्यन्तं षट्प्रकारा गतिः शीघ्रतरा शीघ्रेति गतिद्वयम् । तथा समुच्चये । आसां सङ्ख्यामानमपे स्फुटम् । अथैनामष्टधा गतिं भेदद्वयेन क्रोडयति । तत्राष्टविधगतिष्वतिशीघ्रेत्यादिसमेत्यन्ता इत्येवं पञ्चधा गतिः । ऋज्वी मार्गी गतिर्ज्ञेया या गतिः सानुवक्रगानुवक्रगमनेन सह वर्त्तमाना पूर्वश्लोकेऽनुवक्रगतेर्वक्रकुटिलमध्याभिधानादुभयथासत्त्वाच्च वक्रानुवक्रा कुटिलेति गतिर्वक्रा ज्ञेया तथा च ग्रहाणां मार्गी वक्रेति गतिद्वयम्" ॥ शेषमान्द्यादिप्रकारस्तु तत्रैव दृश्यः विस्तरभयान्नोदाहृतः ।

**खगपति** पु० खगानां पतिः ६ त० । गरुडे खगपत्यादयोऽप्यत्र । गरुडस्य खगपतित्वलाभकथा भा०आ० ३१अ० यथा "अथापश्यदृषीन् ह्रस्वानङ्गुष्ठोदरवर्ष्मणः । पलाशयष्टिकामेकां वहतः संहतान् पथि । प्रलीनान् स्वेष्विवाङ्गेषु निराहारांस्तपोधनान् । क्लिश्यमानान्मन्दबलान् गोष्पदे संप्लुतोदके । तान् सर्वान् विस्मयाविष्टो वीर्योन्मत्तः पुरन्दरः । अवहस्याभ्यगाच्छीघ्रं लङ्घयित्वाऽवमन्य च । तेऽथ रोषसमाविष्टाः सुभृशं जातमन्यवः । आरेभिरे महत् कर्म तदा शक्रभयङ्करम् । जुहुवुस्ते सुतपसो विधिवज्जातवेदसम् । मन्त्रैरुच्चावचैर्विप्रा येन कामेन तच्छृणु । कामवीर्यः कामगमो देवराजभयप्रदः । इन्द्रोऽन्यः सर्वदेवानां भवेदिति यतव्रताः । इन्द्राच्छतगुणः शौर्ये वीर्ये चैव मनोजवः । तपसो नः फलेनाद्य दारुणः सम्भवत्विति । तद्बुद्ध्वा भृशसन्तप्तो देवराजः शतक्रतुः । जगाम शरणं तत्र कश्यपं संशितव्रतम् । तच्छ्रुत्वा देवराजस्य कश्यपोऽथ प्रजापतिः । वालिखिल्यानुपागम्य कर्मसिद्धिमपृच्छत । एवमस्त्विति तञ्चापि प्रत्यूचुः सत्यवादिनः । तान् कश्यप उवाचेदं सान्त्वपूर्वं प्रजापतिः । अयमिन्द्रस्त्रिभुवने नियोगाद्ब्रह्मणः कृतः । इन्द्रार्थे च भवन्तोऽपि यत्नवन्तस्तपोधनाः । न मिथ्या ब्रह्मणो वाक्यं कर्त्तुमर्हथ सत्तमाः । भवतां हि न मिथ्याऽयं सङ्कल्पो वै चिकीर्षितः । भवत्वेष पतत्रीणामिन्द्रोऽतिबलसत्त्ववान् । प्रसादः क्रियतामस्य देवराजस्य याचतः । एवमुक्ताः कश्यपेन वालिखिल्यास्तपोधनाः । प्रत्यूचुरभिसम्पूज्य मुनिश्रेष्ठं प्रजापतिम् । वालिखिल्या ऊचुः । इन्द्रार्थोऽयं समारम्भः सर्वेषां नः प्रजापते ! । अपत्यार्थं समारम्भो भवतश्चायमीप्सितः । तदिदं सफलं कर्म त्वयैव प्रतिगृह्यताम् । तथा चैवं विधत्स्वात्र यथा श्रेयोऽनुपश्यसि । सौतिरुवाच एतस्मिन्नेव काले तु देवी दाक्षायणी शुभा । विनता नाम कल्याणी पुत्रकामा यशस्विनी । तपस्तप्त्वा व्रतपरा स्नाता पुंसवने शुचिः । उपचक्राम भर्त्तारं तामुवाचाथ कश्यपः । आरम्भः सफलो देवि ! भविता यस्त्वयेप्सितः । जनयिष्यसि पुत्रौ द्वौ वीरौ त्रिभुवनेश्वरौ । तपसा वालिखिल्यानां मम सङ्कल्पजौ तथा । भविष्यतो महाभागौ पुत्रौ त्रैलोक्यपूजितौ । उवाच चैनां भगवान् कश्यपः पुनरेव ह । धार्य्यतामप्रमादेन गर्भोऽयं सुमहोदयः । एतौ सर्वपतत्रीणामिन्द्रत्वं कारयिष्यतः । लोकसम्भावितौ वीरौ कामरूपौ विहङ्गमौ । शतक्रतुमथोवाच प्रीयमाणः प्रजापतिः । त्वत्सहायौ महावीर्यौ भ्रातरौ ते भविष्यतः । नैताभ्यां भविता दोषः सकाशात्ते पुरन्दर ! । व्येतु ते शक्र ! सन्तापस्त्वमेवेन्द्रो भविष्यसि । न चाप्येवं त्वया भूयः क्षेप्तव्या ब्रह्मवादिनः । न चावमान्या दर्पात्ते वाग्वज्रा भृशकोपनाः । एवमुक्तो जगामेन्द्रो निर्विशङ्कस्त्रिपिष्टपम् । विनता चापि सिद्धार्था बभूव मुदिता तथा । जनयामास पुत्रौ द्वावरुणं गरुडं तथा । विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः । पतत्रीणाञ्च गरुड इन्द्रत्वेनाभ्यषिच्यत" ।

**खगम** त्रि० खे आकाशे गच्छति गम-अच् । आकाशगामिनि सिद्धगन्धर्वादौ । "ततो दिव्यान्समापन्ना गन्धर्वा हेम-

मालिनः" इत्युपक्रमे "ते कार्य्यमाणाः खगमाः शरवर्षैः समन्ततः" भा०व० २४४ अ० । [शब्दच० ।

**खगवक्त्र** पु० खगस्य वक्त्रमिवाकारोऽस्य । नकुचवृक्षे (मान्दार)

**खगवती** स्त्री खगः खगसादृश्यम् आकाशस्थितत्वेनास्त्यस्या मतुप् मस्य वः । भूमौ जटा० । तस्याः व्योम्नि स्थितत्वात् खगतुल्यत्वम् । "मध्ये समन्तादण्डस्य भूगोलः व्योम्नि तिष्ठति । बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम्" सू०सि०उक्तेः । आर्य्यभट्टमते तु पृथिव्याः खकक्षायामाकाशगतिमत्त्वात् खगतुल्यगतित्वेन सादृश्यमिति भेदः । खगोलशब्दे विवृतिः ।

**खगशत्रु** पु० खगस्य शत्रुरिव । १पृश्निपर्ण्याम् (चाकुलिया) शब्दच० । ६त० । २श्येनविहगे ।

**खगस्थान** न० ६त० । द्रुमस्य कोटरे शब्दच० ।

**खगान्तक** पु० अन्तयति अन्तं करोति णिच्—ण्वुल् ६त० । श्येनविहगे राजनि० ।

**खगासन** पु० खगः गरुड़ आसनमस्य । १विष्णौ तद्वाहनत्वात्तदासनत्वं तस्य तत्कथा च भा० आ० ३३ अ० यथा "विष्णुना च तदाकाशे वैनतेयः समेयिवान् । तस्य नारायणस्तुष्टस्तेनालौल्येन कर्मणा । तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् । स वव्रे तव तिष्ठेयमुपरीत्यन्तरीक्षगः । उवाच चैनं भूयोऽपि नारायणमिदं वचः । अजरश्चामरश्च स्याममृतेन विनाप्यहम् । एवमस्त्विति तं विष्णुरुवाच विनतासुतम् । प्रतिगृह्य वरौ तौ च गरुड़ो विष्णुमब्रवीत् । भवतेऽपि वरं दद्यां वृणोतु भगवानपि । तं वव्रे वाहनं विष्णुर्गरुत्मन्तं महाबलम् । ध्वजञ्च चक्रे भगवानुपरि स्थास्यतीति तम् । एवमस्त्विति तं देवमुक्त्वा नारायणं खगः । वव्राज तरसा वेगाद्वायुं स्पर्द्धन्महाजवः" । "बद्धं कृत्वा अधः शीर्षं यः करोति खगासनम् । खगासनप्रसादेन अमलोपि भवेद्द्रुतम्" रुद्रजा० उक्ते २आसनभेदे न० ।

**खगेन्द्र** पु० ६त० गरुड़े खगपतिशब्दे विवृतिः ।

**खगेन्द्रध्वज** पु० खगेन्द्रः गरुड़ो ध्वजोऽस्य । विष्णौ तस्य गरुड़ध्वजस्वीकारकथा खगासनशब्दे दर्शिता ।

**खगेश्वर** पु० ६त० । गरुड़े अमरः ।

**खगोल** पु० सू०सि०उक्ते गोलाकारे आकाशस्य परिधौ सूर्यकिरणप्रचारयोग्यदेशे ग्रहाद्याधारे वाक्यांशभेदे । यथा "ब्रह्माण्डमेतत् सुषिरं तत्रेदं भूर्भुवादिकम् । कटाहद्वितयस्यैव सम्पुटं गोलकाकृतिः" सू० सि० । "एतत् प्रागुक्तं ब्रह्माधिष्ठितं सुवर्णाण्डं सुषिरमवकाशात्मकं, तत्रावकाश इदं जगत् भूर्भुवादिकं भूर्भुवःस्वर्गात्मकमवस्थितं न बहिः । ब्रह्माण्डस्य गोलाकारत्वेनान्तरवकाशात्मकत्वं न सम्भवतीत्यत आह कटाहद्वितयस्येति । कटाहोऽर्धगोलाकारं सावकाशं पात्रं तस्य द्वितयं द्वयं तस्य समम् । एवकारो न्यूनाधिकव्यवच्छेदार्थः । सम्पुटमाभिमुख्येन मिलितं गोलकाकृतिर्गोलाकारः स्यात् । तथाच न क्षतिः । अथ ब्रह्माण्डान्तः परिधिं वदंस्तदन्तर्भचक्रादिकमाकाशे यथास्थानं परिभ्रमतीति श्लोकाभ्यामाह" र० ना० "ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते । तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा । मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः । परिभ्रमन्त्यधोऽधःस्थाः सिद्धविद्याधरा घनाः" सू० सि० । "ब्रह्माण्डान्तः परिधिस्तुल्यवृत्तमाना व्योमकक्षा खकक्षाकाशकक्षोच्यते । तन्मध्ये ब्रह्माण्डमध्य आकाशे भानां नक्षत्राणां सर्वेषां सर्वतस्तुल्योर्ध्वान्तरितानां भ्रमणं भवति । तथा तन्त्योर्ध्वान्तरेणाधो नक्षत्रेभ्योऽधोऽधः क्रमात् शनिबृहस्पतिभौमार्कशुक्रबुधचन्द्रा अधस्तात् परिभ्रमन्ति । सिद्धा विद्याधरास्तथाभ्रास्चन्द्रादधःस्थिता अधोऽधः क्रमेणाकाशे स्थिताः । एषां प्रवहवायाववस्थानाभावाच्चन्द्रादिवन्न परिभ्रमः । अथ भूम्यवस्थानमाह" र० ना० "मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति । बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम्" सू० सि० । "अण्डस्य ब्रह्माण्डस्य समन्तात् सर्वप्रदेशान्मध्ये मध्यस्थाने केन्द्ररूपे आकाशे भूगोलस्तिष्ठति । नन्वाकाशे निराधारवस्तुनोऽवस्थानासम्भवात् कथमवस्थितो भूमिगोल इत्यतो भूगोलविशेषणमाह बिभ्राण इति । ब्रह्मणः परमां शक्तिं धारणात्मिकां निराधारावस्थानरूपां बिभ्राणो धारयन् । तथाच न क्षतिः । एतेन "भूः किमाकारा किमाश्रयेति" प्रश्नद्वयमुत्तरितम् । अथ कथं चान्त सप्त पातालभूमय इति प्रश्नस्योत्तरमाह" र० ना० "तदन्तरपुटाः सप्त नागासुरसमाश्रयाः । दिव्यौषधिरसोपेतारम्याः पातालभूमयः" सू० मेर्वादिस्थितिमाह "अनेकरत्ननिचयो जाम्बूनदमयो गिरिः । भूगोलमध्यगो मेरुरुभयत्र विनिर्गतः । उपरिष्टात् स्थितास्तस्य सेन्द्रा देवा महर्षयः । अधस्तादसुरास्तद्वद् द्विषन्तोऽन्योऽन्यमाश्रिताः । ततः समन्तात् परिधिः क्रमेणायं महार्णवः । मेखलेव स्थितो धात्र्या

देवासुरविभागकृत् । समन्तान्मेरुमध्यात् तु तुल्यभागेषु तोयधेः । द्वीपेषु दिक्षु पूर्वादिनगर्यो देवनिर्मिताः । भूवृत्तपादे (१२५६) पूर्वस्यां यमकोटीति विश्रुता । भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा । याम्यायां भारते वर्षे लङ्का तद्वन्महापुरी । पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्त्तिता । उदक् सिद्धपुरी नाम कुरुवर्षे प्रकीर्त्तिता । तस्यां सिद्धा महात्मानो निवसन्ति गतव्यथाः । भूवृत्तपादविवरास्ताश्चान्योन्यं प्रतिष्ठिताः। ताभ्यश्चोत्तरगो मेरुस्तावानेव १२५६ सुराश्रयः । तासामुपरिगो याति विषुवस्थो दिवाकरः । न तासु विषुवच्छाया नाक्षस्योन्नतिरिष्यते । मेरोरुभयतो मध्ये ध्रुवतारे नभःस्थिते । निरक्षदेशसंस्थानामुभये क्षितिजाश्रये । अतो नाक्षोच्छ्रयस्तासु ध्रुवयोः क्षितिजस्थयोः । नवतिर्लम्बकांशास्तु मेरावक्षांशकास्तथा । मेषादौ देवभागस्थे देवानां याति दर्शनम् । असुराणां तुलादौ तु सूर्यस्तद्भागसञ्चरः । अत्यासन्नतया तेन ग्रीष्मे तीव्राः करा रवेः । देवभागे सुराणां तु हेमन्ते मन्दतान्यथा । देवासुरा विषुवति क्षितिजस्थं दिवाकरम् । पश्यन्त्यन्योन्यमेतेषां वामसव्ये दिनक्षपे । मेषादावुदितः सूर्यस्त्रीन् राशीनुदगुत्तरम् । सञ्चरन् प्रागहर्मध्यं पूरयेन्मेरुवासिनाम् । कर्कादीन् सञ्चरंस्तद्वदह्नः पश्चार्धमेव सः । तुलादींस्त्रीन् मृगादींश्च तद्वदेवासुरद्विषाम् । अतो दिनक्षपे तेषामन्योन्यं हि विपर्ययात् । अहोरात्रप्रमाणं च भानोर्भगणपूरणात् । दिनक्षपार्धमेतेषामयनान्ते विपर्ययात् । उपर्यात्मानमन्योन्यं कल्पयन्ति सुरासुराः । अन्येऽपि समसूत्रस्था मन्यन्तेऽधः परस्परम् । भद्राश्वकेतुमालस्था लङ्कासिद्धपुराश्रिताः । सर्वत्रैवं महीगोले स्वस्थानमुपरि स्थितम् । मन्यन्ते खे यतो गोलस्तस्य क्वोर्ध्वं क्व वाप्यधः । अल्पकायतया लोकाः स्वस्थानात् सर्वतोमुखम् । पश्यन्ति वृत्तामप्येतां चक्राकारां वसुन्धराम् । सव्यं भ्रमति देवानामपसव्यं सुरद्विषाम् । उपरिष्टाद्भगोलोऽयं व्यक्षे पश्चान्मुखः सदा । अतस्तत्र दिनं त्रिंशन्नाडिकं शर्वरी तथा । हानिवृद्धी सदा वामं सुरासुरविभागयोः । मेषादौ तु सदा वृद्धिरुदगुत्तरतोऽधिका । देवांशे च क्षपाहानिर्विपरीतं तथाऽऽसुरे । तुलादौ द्युनिशोर्वामं क्षयवृद्धी तयोरुभे । देशक्रान्तिवशान्नित्यं तद्विज्ञानं परोदितम्" ।

अथोक्तक्षावधिदेशं बिभक्षुः प्रथमं तदुपयुक्तानि क्रान्त्यंशयोजनान्याह 'भूवृत्तं क्रान्तिभागघ्नं भगणांशविभाजितम् । अवाप्तयोजनैरर्को व्यक्षाद्यात्युपरिस्थितः" सू० सि० ॥ "भूवृत्तं भूपरिधियोजनमानं (५०२६ स्थूलम् ४९६७ सूक्ष्मम् ) प्रागुक्तमभीष्टक्रान्त्यंशैर्गुणितं द्वादशराशिभागैः षष्ट्यधिकशतत्रयमितैर्भक्तं लब्धयोजनैः कृत्वा सूर्य्य उपरि आकाशे स्थितो वर्तमानो दक्षिणत उत्तरतो वा याति गच्छति । क्रान्त्यभावे तु निरक्षदेशोपर्येव परिभ्रमति । अत्रोपपत्तिः निरक्षदेशान्मेरोरुत्तरदक्षिणाभिमुखं सूर्यः क्रान्त्यंशैर्गच्छति । तद्योजनज्ञानं तु यदि भगणांशैर्व्यवहृतनिरक्षदेशस्पृष्टभूपरिधियोजनानि तदा क्रान्त्यंशैः कानीत्यनुपातेनेत्युपपन्नम् अथ दिनमानानयनगणितस्यावधिदेशज्ञानं श्लोकाभ्यामाह" र० ना० । "परमापक्रमादेवं योजनानि विशोधयेत् । भूवृत्तपादाच्छेषाणि यानि स्युर्योजनानि तैः । अयनान्ते विलोमेन देवासुरविभागयोः । नाडीषष्ट्या सकृदहर्निशाप्यस्मिन् सकृत् तथा" सू० सि० ॥ "परमक्रान्तिभागाच्चतुर्विंशन्मितात् । एवं पूर्वोक्तरीत्या योजनानि जातानि ३२६ भूपरिधेः पूर्वोक्तस्य ५०२६ चतुर्थांशात् १२५६ परिवर्जयेत् । अवशिष्टानि यानि यत्सङ्ख्यामितानि योजनानि भवन्ति तैर्योजनैर्देवासुरविभागयोर्निरक्षदेशादुत्तरदक्षिणप्रदेशयोर्यौ देशौ तयोरित्यर्थः । अयनान्ते उत्तरदक्षिणायनसन्धौ कर्कादिस्थे सूर्ये दक्षिणोत्तरायनसन्धौ, मकरादिस्थे सूर्ये विलोमेन व्यत्यासेन सकृदेकवारं नाडीषष्ट्या घटीषष्ट्याऽहर्दिनमानं भवति । अस्मिन् तादृशे देशे दक्षिणस्मिन्नयनसन्ध्यासन्ने सकृदेकवारं तथा षष्टिघटीमिता विलोमेन निशा रात्रिर्भवति । अपिशब्दो दिनेन समुच्चयार्थः । एवदुक्तं भवति । कर्कादिस्थे सूर्ये निरक्षदेशादुत्तरतद्योजनान्तरितदेशे षष्टिघटीमितदिनं तदेव निरक्षदेशाद्दक्षिणतद्योजनान्तरितदेशे षष्टिघटीमिता रात्रिः । मकरादिस्थे सूर्ये तादृशोत्तरभागे षष्टिघटीमिता रात्रिर्दक्षिणभागे तादृशे षष्टिघटीमितं दिनमिति । अत्रोपपत्तिः । परमक्रान्तियोजनानि ३२६ भूवृत्तचतुर्थांशयोजनेभ्यो १२५६ हीनानि ९३० । निरक्षदेशात् तन्मितयोजनान्तरितो यो दक्षिणोत्तरदेशस्तस्मान्मेरोर्दक्षिणोत्तरात्मं क्रमेण परमक्रान्तियोजनान्तरितम् । अतस्तत्र लम्बांशाश्चतुर्विंशतिः पलांशाश्च षट्षष्टिरिति तद्देशे क्रान्तिवृत्तानुकारं क्षितिजमित्ययमान्ते पञ्चदशघटीमितमक्षोराक्षवृत्तचतुर्भागस्वरूपं निरक्षतद्देशक्षितिजयोरन्तरालरूपं चर-

दृश्यं ग्रहगणितम्” र०ना० ॥ अथ निरक्षदेशाद्भूपरिधिपञ्चदशभागपर्यन्तं (२४) सूर्यस्य दक्षिणोत्तरतो गमनमुक्त्वा तच्छायागमनं प्रतिपादयति” र०ना०। “तदन्तरालयोश्छाया याम्योदक् सम्भवत्यपि । मेरोरभिमुखं याति परतः स्वविभागयोः” सू० स०. “तदनन्तरालयोर्निरक्षदेशात् पञ्चदशभागमध्यस्थितदक्षिणोत्तरदेशयोश्छाया द्वादशाङ्गुलशङ्कोर्मध्याह्नच्छायाभीष्टकालिकच्छायापि वा दक्षिणाग्रमुत्तराग्रं वा सम्भवति । एतदुक्तं भवति निरक्षदेशात् पञ्चदशभागान्तरालोत्तरदेशे मध्याह्ननतांशानां दक्षिणत्वे छायाग्रमुत्तरम्, उत्तरत्वे छायाग्रं दक्षिणम् । एवं निरक्षदेशात् पञ्चदशभागान्तरालस्थितदक्षिणदेशे सूर्यस्योत्तरस्थत्वे छायाग्रं दक्षिणं दक्षिणस्थत्वे छायाग्रमुत्तरमिति। परतः पञ्चदशभागान्तरालदेशे स्वविभागयोर्दक्षिणोत्तरविभागयोर्मेरोरभिमुखं मेवंप्रयोः सम्मुखं क्रमेण दक्षिणाग्रमुत्तराग्रं यथा स्यात् तथेत्यर्थः। छाया याति गच्छति भवतीत्यर्थः। अपिशब्दः पूर्वार्धेन समुच्चयार्थकः। अथ “कथं पर्येति भुवनानि विभावयन्निति प्रश्नस्योत्तरं श्लोकाभ्यामाह” र०ना०॥ “भद्राश्वोपरिगः कुर्याद्भारते तूदयं रविः । रात्र्यर्धं केतुमाले तु कुरावस्तमयं तदा भारतादिषु वर्षेषु तद्वदेव परिभ्रमन् । मध्योदयार्धरात्र्यस्तकालान् कुर्यात् प्रदक्षिणम्” सू० सि० ॥ “भद्राश्ववर्षोपरिगतः सूर्यो भारतवर्षे स्वोदयं कुर्यात् । तुकाराद्भद्राश्ववर्षे मध्याह्नं कुर्यात् । तदा तस्मिन् काले केतुमालवर्षेऽर्धरात्रं कुरौ कुरुवर्षेऽस्तमयं स्वास्तं कुर्यात् । तुकारादुक्तवर्षयोरन्तराले दिनस्य गतं शेषं वा रात्रेश्च तद्यथायोग्यं कुर्यादित्यर्थः। अतिस्थूलदेशपक्षे यथाश्रुतमिदं मध्यं किञ्चित्सूक्ष्मदेशपक्षे तु यमकोटिलङ्कारोमकसिद्धपुराण्यन्तर्गतानि तच्छब्दवाच्यानि ज्ञेयानि । “लङ्कापुरेऽर्कस्य यदोदयः स्यात् तदा दिनार्धं यमकोटिपुर्याम् । अधस्तदा सिद्धपुरेऽस्तकालः स्याद्रोमके रात्रिदलं तदैव” इति भास्कराचार्योक्तं भूगोले उक्तनगरीणां भूपरिधिचतुर्थांशान्तरत्वात् सङ्गच्छते । अथ भारतादिषु त्रिषु वर्षान्तरेषु भारतकेतुमालकुरुवर्षेषु तद्वद्भद्राश्ववर्षोपरिगवत् । एवकारात् तन्न्यूनाधिकव्यवच्छेदः । परिभ्रमन् परिभ्रमणेन स्वस्वाभिमतस्थानोपरि स्थितं कुर्वन् सूर्यः प्रदक्षिणं यथा स्यात् तथा सव्यक्रमेण स्वस्थानादक्रमेणेति यावत् । उक्तचतुर्वर्षेषु मध्योदयार्धरात्र्यस्तकालान् मध्याह्नोदयार्धरात्र्यस्तरूपान् कालान् कुर्यात् । एतदुक्तं भवति । भारतवर्षोपरिगतेऽर्के भारतकेतुमालकुरुभद्राश्ववर्षेषु क्रमेण मध्याह्नसूर्योदयार्धरात्रास्ताः स्युः । केतुमालवर्षोपरिगतेऽर्के केतुमालकुरुभद्राश्वभारतवर्षेषु क्रमेण मध्याह्नसूर्योदयार्धरात्रास्ताः । कुरुवर्षोपरिगतेऽर्के कुरुभद्राश्वभारतकेतुमालवर्षेषु क्रमेण मध्याह्नसूर्योदयार्धरात्रास्ता भवन्तीति” र० ना० ॥ ननु ग्रहाणां गतिसद्भावात् प्रतिदेशं याम्योत्तरयोर्ग्रहगमनं प्रतिक्षणं च विलक्षणं भासतां परन्तु नक्षत्राणां गत्यभावात् प्रतिक्षणं भ्रमणैकत्वात् स्थानाभावेऽपि प्रतिदेशमेकरूपावस्थानं कुतो न ?। एवं ध्रुवयोः परिभ्रमस्याप्यभावात् सदा सर्वत्रैकरूपावस्थानदर्शनापत्तिरित्यत आह” र०ना०। “ध्रुवोन्नतिर्भचक्रस्य नतिर्मेरुं प्रयास्यतः । निरक्षाभिमुखं यातुर्विपरीते नतोन्नते” सू० सि० ॥ “मेरुं मेरोरुत्तराग्रं दक्षिणाग्रं वा तदभिमुखं प्रयास्यतो गच्छतः पुरुषस्य ध्रुवोन्नतिः क्रमेणोत्तरदक्षिणयोर्ध्रुवयोरौच्च्यं भवति । भचक्रस्य नक्षत्राधिष्ठितगोलमध्यभागवृत्तस्य नतिः क्रमेण दक्षिणोत्तरयोर्नतत्वं भवति । मेरोर्निरक्षदेशाभिमुखं गच्छतः पुरुषस्य नतोन्नते पूर्वोक्ते व्यस्ते भवतः । उत्तरभागस्थपुरुषस्य निरक्षाभिमुखं गच्छतः पूर्वोक्तस्थानापेक्षयोत्तरध्रुवस्य नतत्वं पूर्वस्थानापेक्षया भचक्रस्योन्नतत्वम् । एवं दक्षिणभागस्थपुरुषस्य निरक्षाभिमुखं गच्छतः पूर्वस्थानापेक्षया दक्षिणध्रुवस्य नतत्वं भचक्रस्योन्नतत्वमिति” ।

अथ कुत एवमित्यतः “कथं पर्येति भगणः सग्रहोऽयं किमाश्रयः” प्रश्नस्योत्तरं भचक्रभ्रमणवस्तुस्थितिमाह” र०ना० । “भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः । पर्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम्” सू० सि० । “भचक्रं नक्षत्राधिष्ठितमूर्तगोलरूपं ध्रुवयोर्दक्षिणोत्तरस्थिरतारयोर्बद्धं ब्रह्मणा निबद्धं नियतवायुगतिना गोलाकारेण प्रतिबद्धं प्रवहानिलैः प्रवहवाय्वंशैः स्वस्वस्थानस्थैराक्षिप्तं स्वस्वस्थानाभिघातं प्राप्तं सदजस्रं निरन्तरं पर्येति । पश्चिमाभिमुखं भ्रमतीत्यर्थः । ननु नक्षत्रचक्रं वायुना भ्रमति ग्रहास्तु तदधःस्थाः सम्बन्धाभावात् कथं भ्रमन्तीत्यत आह तन्नद्धा इति । ग्रहाणां शन्यादीनां कक्षा मार्गा वाय्वंशरूपा भचक्रान्तर्गता आकाशस्था यथाक्रममधोऽधस्तन्नद्धा महाप्रवहवायुगोलस्थापितभचक्रे वायुरूपत्वेन निबद्धा अतो भचक्रेण सह भ्रमन्ति । तत्रस्था ग्रहा अपि भ्रमन्तीति किं चित्रम् । तत्र च

प्रवहवायुगोलमध्यस्थविषुवद्वृत्तपूर्वापरनिरक्षदेशे ध्रुवयोः क्षितिजस्थत्वाद्भचक्रस्य मस्तकोपरिभ्रमणाच्च मेर्वभिमुखं यथा तुर्भुवि उच्चो भवति। तत आसन्नत्वाद्भचक्रं नतं भवति। ततो दूरत्वाद्ध्रुवो नताभचक्रमुन्नतं भवतीति सर्वं युक्तम्। “सुरासुराणामन्योन्यमहोरात्रं विपर्ययात्” “कस्मिन् वा कथं वा स्यादिति”। “पित्र्यं मासेन भवतीति” प्रश्नयोरुत्तरमाह” र० ना०। “एकदुद्गतमर्काधं पश्यन्त्यर्कं सुरासुराः। पितरः शशिगाः पक्षं स्वदिनं च नरा भुवि” सू० सि०। “यथा देवदैत्या एकवारमुदितं सूर्यं सौरवर्षार्द्धपर्यन्तं पश्यन्ति। तथा पितरश्चन्द्रबिम्बगोलोर्ध्वस्थिताः पक्षं पञ्चदशतिथिपर्यन्तं पश्यन्ति। नरा भूमौ स्वदिनपर्यन्तमर्कं पश्यन्त्यतः “पित्र्यं कालेन भवति नाडीषष्ट्या तु मानुषम्”। इति सर्वं युक्तम्। अतएव “विधूर्ध्वभागे पितरो वसन्तः स्वाधः सुधादीधितिमामनन्ति। पश्यन्ति तेऽर्कं निजमस्तकोर्ध्वे दर्शे यतोऽस्मादुदलं तदैषाम्॥ भार्धान्तरत्वान्न विधोरधःस्थं तस्मान्निशीथः खलु पौर्णमास्याम्। कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्तमेत्यर्थत एव सिद्धम्” इति भास्कराचार्येण विस्तीर्णोक्तं सङ्गच्छते। अथ प्रसङ्गादूर्ध्वस्थस्याल्पभगणानामधःस्थस्याधिकभगणानां युक्त्या प्रतिपादनार्थं प्रथमं कक्षाया ऊर्ध्वाधःक्रमेण महदल्पत्वं तत्रस्थभागानां महदल्पदेशत्वं चाह” र०ना०। “उपरिस्थस्य महती कक्षाऽल्पाधःस्थितस्य च। महत्या कक्षया भागा महान्तोऽल्पास्तथाल्पया” सू० सि०॥ “ऊर्ध्वस्थस्य ग्रहस्य कक्षा वायुवृत्तमार्गरूपा महती महापरिधिप्रमाणा। अधःस्थस्य ग्रहस्य कक्षा अल्पाऽल्पपरिधिप्रमाणा। चो निश्चयार्थे। लघुकक्षाणां महाकक्षान्तर्गतत्वेन महाकक्षाणां चान्तर्गतलघुकक्षात्मनोर्ध्वाधःस्थयोर्महदल्पपरिधिके कक्षे अन्यथा क्रमस्वरूपानुपपत्तेः। एवं महति वृत्तपरिधौ द्वादशराशिभागानां समत्वेनाङ्कने भागा एकैकभागप्रदेशा महत्या कक्षया कृत्वा महान्तो बहुस्थलात्मकाः, लघुनि वृत्ते तदङ्कने तथा भागा अल्पया कक्षया कृत्वाल्पा अल्पस्थलात्मकाः। क्रमेणैकैकभागप्रमाणमधिकाल्पं न समं चक्रांशपूर्त्यनुपपत्तेरिति तात्पर्यम्। अथोर्ध्वाधःक्रमेण ग्रहभगणभोगकालयोर्महदल्पत्वमाह” र० ना० “कालेनाल्पेन भगणं भुङ्क्तेऽल्पभ्रमणाश्रितः। ग्रहः कालेन महता मण्डले महति भ्रमन्” सू० सि०। “अल्पभ्रमणाश्रितः। अल्पं भ्रमणं परिधिमानं यस्याः स्यात् भ्रमणाऽधःस्थकक्षा। तदस्थो ग्रहोऽल्पेन कालेन भगणं द्वादशराश्यात्मकं भुङ्क्तेऽतिक्रमते। महति मण्डले ऊर्ध्वस्थकक्षायामित्यर्थः। भ्रमन् गच्छन् ग्रहो महता बहुना समयेन द्वादश राशीन् भुङ्क्ते कक्षायां ग्रहयोर्गतेरभिन्नत्वात्। अथातएवोर्ध्वाधःक्रमेण ग्रहयोर्भगणास्तुल्यकालेऽल्पा बहवो भवन्तीति सोदाहरणमाह” र०ना० “स्वल्पयाऽतो बहून् भुङ्क्ते भगणान् शीतदीधितिः। महत्या कक्षया गच्छन् ततः स्वल्पं शनैश्चरः” सू० सि०। स्वल्पप्रमाणया कक्षया। तु कारादतिक्रामंश्चन्द्रो बहुभगणान् भगणान् बहुवारं द्वादश राशीनित्यर्थः। भुङ्क्ते। महाप्रमाणया कक्षया गच्छन् शनिस्ततश्चन्द्रात् स्वल्पं भगणमल्पप्रमाणान् भगणान् जात्यभिप्रायेणैकवचनम्। अल्पवारं द्वादश राशीन् भुङ्क्ते। अतएव शनैश्चर इत्युक्तम्। अथ “ग्रहर्क्षकक्षाः किम् स्युः” इति प्रश्नोत्तरं विवक्षुः प्रथमं नक्षत्राणां कक्षामानमाह” र०ना० “भवेद्भकक्षा तिग्मांशोर्भ्रमणं षष्टिताडितम्। सर्वोपरिष्टाद्भ्रमति योजनैस्तैर्भमण्डलम्” सू० सि०। सूर्यस्य भ्रमणं कक्षापरिधिमानं योजनात्मकम् “खखार्थैकसुरार्णवाः” इति वक्ष्यमाणं ६३३१५०० षष्ट्या गुणितं ३५९८९०००० नक्षत्राणां कक्षा नक्षत्राधिष्ठितगोलस्य मध्यवृत्तं स्यात्। तैर्नक्षत्रकक्षामितैर्योजनैर्भमण्डलं नक्षत्राधिष्ठितगोलमध्यवृत्तं सर्वोपरिष्टाच्चन्द्रादिसप्तग्रहेभ्य उपरि दूरं भ्रमति भूगोलादभितः परिभ्रमति। अत्रोपपत्तिः। नक्षत्राणां गत्यभावाच्छनेरप्यत्यूर्ध्वं नक्षत्रमण्डलं तत्र यदि सूर्यगत्या सूर्यकक्षा तदा नक्षत्रगत्यभावेऽप्येकक्षामितकल्पनयानुपातान्यथानुपपत्तितया “कल्प्यो हरो रूपमहारराशेः” इतीच्छाह्रासे फलवृद्धेर्युक्तत्वाद्व्यस्तानुपातो लाघवात् सूर्यगतिः षष्टिकलामिता च भगवता कृता। नक्षत्रगतेरभावाच्चेति षष्टिताडितमित्युपपन्नम्। अथ ग्रहकक्षाणां मानज्ञानार्थमाकाशकक्षामानम् “कियती तत्कर-व्याप्तिः” इति प्रश्नोत्तरमाह र०ना० “कल्पोक्तं चन्द्रभगणा गुणिताः शशिकक्षया। आकाशकक्षा सा ज्ञेया करव्याप्तिस्तथा रवेः” सू० सि०। “कल्पोक्तचन्द्रभगणाः “एते सहस्रगुणिताः कल्पे स्युर्भगणादयः” इत्युक्ता युगचन्द्रभगणाः ५७७५३३३६, सहस्रगुणिताः ५७७५३३३६०००, कल्पचन्द्रभगणा” इत्यर्थः। चन्द्रकक्षया “खत्रया ब्धिद्विदहना” इति ३२४०००, दक्षमाणया गुणिता तज्जिताकाशस्य कक्षा १८७१२०८०८६४००००००, परिधि-

रूपा ज्ञेया। धीमतेति शेषः। नन्वनन्ताकाशस्य कथं परिधिरियत आह। करव्याप्तिरिति। सूर्यस्य किरणप्रचारस्तयाकाशकक्षापरिमित इत्यर्थः। तथाच यद्देशावच्छेदेन सूर्यकिरणप्रचारस्तद्देशावच्छिन्नाकाशगोलस्य मध्यात् ब्रह्माण्डकटाहान्तर्गतस्य परिधिमानं समधरमेवेति भावः। अत्रोपपत्तिः। समनन्तरमेव यद्भगणभक्ता खकक्षा तस्य कक्षा स्यादित्युक्तेर्भगणकक्षाघाता खकक्षा सिद्धा। अतश्चन्द्रभगणकक्षाघातोऽपि खकक्षातुल्य एवेति दिक्। अथ ग्रहाणां कक्षानयनं योजनगत्यानयनं चाह” र॰ना॰“सैव यत्कल्पभगणैर्भक्ता तद्भ्रमणं भवेत्। कुवासरैर्विभज्याप्ताः सर्वेषां प्राग्गतिः स्मृता” सू॰सि॰। “सार्ककरव्याप्तिरूपाकाशकक्षा यत्कल्पभगणैर्यस्य कल्पभगणैर्भक्ता फलं तस्य कक्षा भवेत्। एवकारो निश्चयार्थे। खकक्षा कल्पदिवसावनैर्भक्ता प्राप्तं फलं सर्वेषामुक्तभगणसम्बन्धिनां ग्रहादीनामह्नो दिवसस्य दिनसम्बन्धिनीत्यर्थः। प्राग्गतिर्योजनात्मिका कथिता। अत्रोपपत्तिः। कल्पभगणकृद्यावानभ्राकाशकक्षा कल्पभगणभक्ता कक्षा स्यादेव। कल्पे खकक्षामितयोजनानि ग्रहः क्रमतीति यदि कल्पदिवसावनदिनैराकाशकक्षामितयोजनानि तदैकदिवसावनदिनेन कानीत्यनुपातेन पूर्वगतिर्योजनात्मिका प्रत्यहं तुल्येत्युपपन्नम्। अथ योजनात्मकगतेः कलात्मकगतं चोयामाह” र॰ना॰“भुक्तियोजनजा संख्या सेन्दोर्भ्रमणसङ्गुणा। खकक्षाप्ता तु सा तस्य तिथ्याप्ता गतिर्लिप्तिकाः” सू॰सि॰। गतियोजनोत्पन्ना या संख्या चन्द्रस्य भगणसङ्गुणा कक्षया २२४०००, गुणिता खकक्षयाप्ताभिमतग्रहस्य कक्षया भक्ता सा फलरूपा तिथ्याप्ता पञ्चदशभक्ता। तुकारात् फलं तस्याभिमतग्रहस्य गतिकला भवन्ति। अत्रोपपत्तिः। यदि कक्षायोजनैश्चक्र २१६००, कलास्तदा गतियोजनैः का इत्यनुपातेन गतिकलाः। तत्रापि चन्द्रकक्षा ३२४०००, पञ्चदशभक्ताश्चक्रकला २१६००, इति चक्रकलास्वरूपं छेदमित्युपपन्नम्। अथ किमन्तमिता इति प्रश्नस्योत्तरमाह र॰ ना॰ “कक्षा भूकर्णगुणिता महीमण्डलभाजिता। तत्कर्णा भूमिकर्णोना ग्रहोच्चत्वं स्वदलीकृताः” सू॰ सि॰। “ग्रहाणां योजनात्मिका कक्षा भूकर्णेन “योजनानि शतान्यष्टौ भूकर्णो द्विगुणानि च” इत्युक्तभूव्यासेन षोडशशतैः(स्थूलेन)गुणिता भूपरिधिना (५०२६,१४/२५, स्थूलेन) तद्गतेन भक्ता फलं तस्याः कक्षायाः कर्णा व्यासा भवन्ति। एते भूव्यासेन हीना अर्धिताः सन्तः स्वस्वहीनव्याससम्बन्धिग्रहौच्च्यं ग्रहस्योच्चता भूमेः सकाशाद्भवति। अत्रोपपत्तिः। यदि भूपरिधिना भूव्यासस्तदा कक्षायोजनैः क इत्यनुपातेन कक्षाव्यासास्तेऽर्धिताः कक्षाव्यासार्धं भूगर्भकक्षापरिधिप्रदेशान्तरालरूपं भूपृष्ठात् तदन्तरज्ञानार्थं भूव्यासार्धेन हीनं भूपृष्ठात् कक्षौच्च्यं तत्र कक्षाव्यासा भूव्यासोना अर्धिताः कृता उभयथा समत्वात्। कक्षौच्च्यमेव ग्रहौच्च्यं ग्रहस्य तत्राधिष्ठानादिति। एतेन सिद्धग्रहौच्च्येभ्यः परस्परान्तरज्ञानं सुगममिति श्रीपति वाक्ये (तन्मानं वक्ष्यमाणं स्पष्टम्) किमन्तरा इति प्रश्नस्योत्तरं स्वतः सिद्धमेवेति दिक्। अथोर्ध्वक्रमेण सिद्धाः कक्षा विवक्षुः प्रथमं चन्द्रस्य कक्षां बुधशीघ्रोच्चकक्षां चाह। “खत्रयाब्धिद्विदहनाः कक्षा तु हिमदीधितेः। ज्ञशीघ्रस्याङ्कखद्वित्रिकृतशून्येन्दवस्ततः” सू॰ सि॰। “चन्द्रस्य कक्षा खत्रयगुणितसिद्धरामाः३२४०००। तुकारादागमप्रामाण्येनाङ्गीकार्या। अन्यथान्योन्याश्रयापत्तेस्ततश्चन्द्रादूर्ध्वं बुधशीघ्रोच्चस्य कक्षा नवखदन्तवेददश:१०४३२०९। यद्यपि बुधशीघ्रोच्चमाकाशे प्रत्यक्षं नेति तत्कक्षोक्तिरयुक्ता तथापि बुधशीघ्रोच्चभगणानीतकक्षायां गत्यनुरोधेन चन्द्रोर्ध्वगायां बुधो भ्रमति। पूर्वं सूर्यशुक्रेन्दुजेन्दवः” इति क्रमोक्तेः। अन्यथा भगणैक्यादेककक्षायां रविबुधशुक्राणामवस्थितौ मण्डलभङ्गापत्तेरिति सूचनार्थमुक्ता। अथ शुक्रशीघ्रोच्चस्य कक्षां सूर्यबुधशुक्राणामभिन्नां कक्षां चाह” र॰ना॰ “शुक्रशीघ्रस्य सप्ताद्रिरसाब्धिरसषड्यमाः। ततोऽर्कबुधशुक्राणां खखार्थैकसुरार्णवाः” सू॰ सि॰। “तदूर्ध्वं शुक्रशीघ्रोच्चस्य कक्षाऽश्वाद्र्यङ्गवेदषट्रसपक्षाः२६६४६७७ शुक्रावस्थानसूचनार्थमुक्ता। ततस्तदूर्ध्वं सूर्यबुधशुक्राणां भगणैक्यादभिन्ना कक्षा खखपञ्चभूदेवाब्धय:४३३१५००। यद्यपि बुधशुक्रयोः सूर्याधःस्थत्वात् केवलं सूर्यकक्षा वक्तुमुचिता तथापि यदि एतया कक्षयैको भगणस्तदा कल्पदिवसावनदिनैः खकक्षामितयोजनानि तदाहर्गणेन कानीत्यनुपातागतयोजनैः क इत्यनुपातेन सूर्यबुधशुक्राणामभिन्नत्वसिद्ध्यर्थं बुधशुक्रयोरप्युक्ता अन्यथा समत्वानुपपत्तेरिति। अथ भौमस्य कक्षां चन्द्रमन्दोच्चस्य कक्षां चाह” र॰ ना॰ “कुजस्याप्यङ्कशून्याङ्कषड्वेदैकभुजङ्गमाः। चन्द्रोच्चस्य कृताष्टाब्धिवसुद्विनवत्वक्ष्मयः” सू॰ सि॰। “भौमस्य। कपिशब्दात् सूर्यादूर्ध्वं कक्षा नवखनवर्त्विन्दुसर्पाः ८१४६९०९। चन्द्रमन्दोच्चस्य कक्षा वेदाङ्कवेदसर्पेभ-

रामनागरामाः ३८३२८४८४ । इयमप्याकाशे न दृश्या तथापि गतयोजनैश्चन्द्रोच्चस्थानायोक्ता । अथ गुरुराह्वोः कक्षे आह, र०ना०। "ततः तुनिपक्षाद्रिगुणेन्दुविषया गुरोः। स्वर्भानोर्वेदतर्काष्टद्विशैलार्थखकुञ्जराः" सू० सि० । "वृहस्पतेर्भोगाच्चन्द्रचन्द्राद्ध्वोर्ध्वं कक्षा वेदाङ्गमुनिपञ्चस्वरराम चन्द्रशराः ५१३७५७६४ । राहोः कक्षा वेदऋगजयमसप्तपञ्चाशीतयः ८०५७०८६४ । इयमदृश्यापि राहोर्गतियोजनैर्हीनार्द्धसूक्ता । अत्रापि पातस्य चक्रशुद्धत्वमवधेयम् ॥ अथ शनेः कक्षां नक्षत्र भचितमूर्त्तगोलमध्यकक्षां चाह र०ना०। "पञ्चबाणाचनागर्तु रसाद्र्यर्काः शनेस्ततः। भानां रविखम्भून्याङ्कवह्नरद्धशराश्विनः" सू०सि० । "ततो वृहस्पतेराहोर्वोर्ध्वं शनेः कक्षा पञ्चपञ्चद्व्यष्टषट्रससप्तार्काः १२७६६८२५५ । नक्षत्राणां गोलमध्ये कक्षा शनेरूर्ध्वं द्वादशनवशताष्टनवतितत्त्वानि २५९८९००१२ । यद्यपि "भवेद्भकक्षा तीक्ष्णांशोर्भ्रमणं षष्टिताडितम्" इत्यनेनोक्ता भकक्षाया द्वादशान्तरितत्वादयुक्तत्वं तथापि "सैव यत्कल्पभगणैः" इत्यनेन सूर्यकक्षाया उक्त्या द्वादशाधोऽवयवस्य निबन्धने त्यागेऽपि भकक्षार्थं भगवता स्वहीतत्वाददोषः । एतेनाधोऽवयवस्यार्धन्यूनत्वे न त्यागोऽभ्यधिकत्वे नोर्ध्वमेकाधिकग्रहणं कक्ष निबन्धेन कृतमिति सूचितम् । ननु चन्द्रकक्षाया आगमप्रामाण्येनाङ्गीकारे सर्वकक्षाणामागमप्रामाण्यापत्त्या "सैव यत्कल्पभगणैर्भक्ता तद्भ्रमणं भवेत्" इति कक्षानयनं व्यर्थम् । अन्यथाकाशकक्षाज्ञानासम्भवापत्तेरित्यत आकाशकक्षे आगमप्रामाण्येनाङ्गीकार्येति वसन्ततिलकेनाह" र० ना० । "खव्योमखत्रयखसागरषट्कनागव्योमाष्टशून्ययमरूपनगाष्टचन्द्राः । ब्रह्माण्डसम्पुटपरिभ्रमणं समन्तादभ्यन्तरे दिनकरस्य करप्रसारः" सू० सि० ॥ १८७१२०८०८६४००००००० मितयोजनानि" र०ना० । कक्षादीनां योजनमानभेदेऽनुपदं वक्ष्यमाणस्य सि०शि० वाक्यस्य सूक्ष्मत्वादविरोधः) । खगोले अगस्त्यादीनां स्थानदेशमाह यथा

"अशीतिभागैर्याम्यायामगस्त्यो मिथुनान्तगः । विंशे च मिथुनस्यांशे मृगव्याधो व्यवस्थितः । विक्षेपो दक्षिणे भागैः खार्णवैः स्वादपक्रमात् । हुतभुग्ब्रह्महृदयौ वृषे द्वाविंशभागगौ । अष्टाभिस्त्रिंशता चैव विक्षिप्तावुत्तरेण तौ । गोलं बद्ध्वा परीक्षेत विक्षेपं ध्रुवकं स्फुटम्" सू० सि० "स्वकीयात् क्रान्तिविभागस्थानात् (७४)दक्षिणस्यामशीत्यंशैस्ताराख्योऽगस्त्यो मिथुनान्तः कर्कादिभागे स्थितः । मृगव्याधनक्षत्रस्य राशित्रयं (९०) ध्रुवकः । दक्षिणविक्षेपोऽशीतिरित्यर्थः । मृगव्याधो लुब्धको मिथुनराशेर्विंशतिभागे (८०) स्थितः । चकारः समुच्चये । लुब्धकनक्षत्रस्य राशिद्वयं विंशतिभागा ध्रुवक इत्यर्थः । दक्षिणस्यां चत्वारिंशता भागैः परिमितस्तस्य च क्रान्तिवृत्तस्थानाद्विक्षेपः । वृषराशौ वह्निब्रह्महृदयौ द्वाविंशभागे स्थितौ (५२) वह्निब्रह्महृदयनक्षत्रयोर्द्विशतभागा विकैकरा ध्रुवकः । तौ वह्निब्रह्महृदयौ । अष्टाभिस्त्रिंशता । चकारः क्रमार्थे । एवकारो न्यूनाधिकव्यवच्छेदार्थः । उत्तरेणोत्तरस्यामित्यर्थः । विक्षिप्तौ विक्षेपवन्तौ । वह्नेर्विक्षेपोऽष्टभाग उत्तरः । ब्रह्महृदयस्योत्तरो विक्षेपस्त्रिंशदित्यर्थः । नन्वेते ध्रुवविक्षेपाश्च कालक्रमेण नियता अनियता वेत्यत आह गोलमिति । गोलं वक्ष्यमाणं बद्ध्वा वंशशलाकादिभिर्निबध्य स्फुटं विक्षेपं क्रान्तिसंस्कारयोग्यं ध्रुवाभिमुखं ध्रुवकं स्फुटमायनदृक्कर्मसंस्कृतं परीक्षेत । स्वस्वकाले दृग्गोचरविद्भिरङ्गीकुर्वीत । तथा च क्रान्तिसंस्कारयोग्यविक्षेपायनसंस्कृतध्रुवकयोरयनांशवशादस्थिरत्वादपि मन्देदानीन्तनसमयानुरोधेन लाघवार्थमायनदृक्कर्मसंस्कृता ध्रुवाः क्रान्तिसंस्कारयोग्यविक्षेपाश्च नियता उक्ताः । कालान्तरे गोलयन्त्रेण वेधस्तु गोलबन्धोक्तविधिना गोलयन्त्रे कार्यः"। तत्र खगोलस्योपरि भगोलम् आधारवृत्तस्योपरि विषुवद्वृत्तम् । तत्र यथोक्तं क्रान्तिवृत्तं भगणांशाङ्कितं च बद्ध्वा ध्रुवयष्टिकीलयोः प्रोतमन्यच्चलं भवेधवलयम् । तच्च भगणांशाङ्कितं कार्यम् । ततस्तद्गोलयन्त्रं सम्यग्ध्रुवाभिमुखयष्टिकं जलसमार्चितजवलयं च यथा भवति तथा स्थिरं कृत्वा रात्रौ गोलमध्यच्छिद्रगतया दृष्ट्या रेवतीतारां विलोक्य क्रान्तिवृत्ते मीनान्ताद्दृष्टकलान्तरितपश्चाद्भागे रेवतीतारायां निवेश्य मध्यगतयैव दृष्ट्याश्विन्यादेर्नक्षत्रस्य योगतारां विलोक्य तस्या उपरि तद्वेधवलयं निवेश्यम् । एवं कृते सति वेधवलयस्य क्रान्तिवृत्तस्य च यः सम्पातः स मीनान्तादग्रतो यावद्भिरंशैस्तावन्तस्तस्य नक्षत्रस्य ध्रुवांशा ज्ञेयाः । वेधवलये तस्यैव सम्पातस्य योगतारायाश्च यावन्तोऽन्तरेंऽशास्तावन्तस्तस्य विक्षेपांशा दक्षिणा उत्तरा वा वेद्याः । अथ रोहिणीशकटभेदमाह" र०ना० । "वृषे सप्तदशे भागे यस्य याम्योऽंशकद्वयात् । विक्षेपोऽभ्यधिको भिन्द्याद्रोहिण्याःशकटं तु सः" सू० सि०

"वृषराशौ सप्तदशेंऽशे यस्य ग्रहस्य भागद्वयाधिको विक्षेपो दक्षिणः स ग्रहो रोहिण्याः शकटं शकटाकारसन्निवेशं भिन्द्यात् । तन्मध्यगतो भवेदित्यर्थः । तुकाराद्ग्रहविक्षेपो रोहिणीविक्षेपादल्प इति विशेषार्थकः । विक्षेपस्य दक्षिणस्य रोहिणीविक्षेपादधिकत्वे शकटाद्बहिर्दक्षिणभागे ग्रहस्य स्थितत्वेन तद्भेदकत्वाभावात् । अत्र शकटाग्रिमनक्षत्रस्य ध्रुव एकराशिः सप्तदशांशाः १७ । दक्षिणः शरो भागद्वयमिति वेधसिद्धा स्पष्टा युक्तिः" र०ना० ।

अथ ब्रह्मसञ्ज्ञकनक्षत्रव्याख्यानमाह ।

"पूर्वस्यां ब्रह्महृदयादंशकैः पञ्चभिः स्थितः । प्रजापतिर्वृषान्तेऽसौ सौम्येऽष्टत्रिंशदंशकैः" सू० सि० । "ब्रह्महृदयस्थानात् पूर्वभागे पञ्चभिरंशैः प्रजापतिस्तारात्मको ब्रह्मा क्रान्तिवृत्ते स्थितः । कुत्रेत्यत आह । वृषान्त इति । वृषान्तनिकटे । एकराशिः सप्तविंशत्यंशा १।२७ ब्रह्मध्रुवक इत्यर्थः । अस्य विक्षेपमाह । असाविति । ब्रह्मा उत्तरस्यामष्टत्रिंशद्भागैः स्थितः । अष्टत्रिंशद्भागा अस्य विक्षेप इत्यर्थः" र० ना० । "अपांवत्सस्तु चित्रायास्तूत्तरेंऽशैस्तु पञ्चभिः । बृहत्किञ्चिदतो भागैरापः षड्भिस्तथोत्तरे" सू० सि० । "चित्रायाः सकाशादपांवत्ससञ्ज्ञकस्तारात्मकः पञ्चभिर्भागैरुत्तरस्यां स्थितः । प्रथमतुकारश्चित्राध्रुवतुल्यध्रुवकार्थकः । द्वितीयतुकारश्चित्राविक्षेपस्य दक्षिणभागद्वयात्मकत्वादपांवत्सविक्षेप उत्तरत्रिभाग इति स्फुटार्थकः । अतोऽपांवत्सात् किञ्चिदल्पान्तरेण बृहत् स्थूलतारात्मक आपसञ्ज्ञकः । तथाऽपांवत्सात् षड्भिरंशैरुत्तरस्यां स्थितश्चित्राध्रुवक एवापस्योत्तरो नवांशः" र०ना० ।

तारासङ्ख्यादिकम् अश्लेषाशब्दे ४६९ पृ० दर्शितं तेषां ध्रुवकविक्षेपरूपशरयोरानयनविधा सू०सि०दर्शिता यथा "प्रोच्यन्ते लिप्तिका भानां स्वभोगोऽथ दशाहतः । भवन्त्यतीतधिष्ण्यानां भोगलिप्ता युता ध्रुवाः" सू० सि० "भानामश्विन्यादिनक्षत्राणामुत्तराषाढाभिजिच्छ्रवणधनिष्ठावर्जितानां लिप्तिका भोगसञ्ज्ञाः कलाः प्रोच्यन्ते समनन्तरमेव कथ्यन्ते । अथानन्तरं स्वभोगः स्वाभीष्टनक्षत्रभोगः कलात्मको वक्ष्यमाणो दशभिर्गुणितः कार्यः । तत्र स्वाभीष्टनक्षत्रगतनक्षत्राणामश्विन्यादीनां भोगलिप्ताः । भभोगोऽष्टशती लिप्ता इत्युक्ताष्टशतकलाः प्रत्येकं युताः । अश्विन्याद्यतीतनक्षत्रसङ्ख्यागुणितकलाष्टशतं युतमित्यर्थः । ध्रुवा नक्षत्राणां भवन्ति" अथ प्रतिज्ञाता नक्षत्रभोगलिप्ता उत्तराषाढाभिजिच्छ्रवणधनिष्ठाव्यतिरिक्तानां तेषां ध्रुवकाद्यनक्षत्रशरांश्चाष्टश्लोकैराह" र०ना० । "अष्टार्णवाः शून्यकृताः पञ्चषष्टिर्नगेषवः । अष्टार्था अब्धयोऽष्टागा अङ्गागा मनवस्तथा । कृतेषवो युगरसाः शून्यबाणा वियद्रसाः । खवेदाः सागरनगा गजागाः सागरर्तवः । मनवोऽथ रसा वेदा वैश्वमाप्यार्धभोगगम् । आप्यस्यैवाभिजित्प्रान्ते वैश्वान्ते श्रवणस्थितिः । त्रिचतुःपादयोः सन्धौ श्रविष्ठा श्रवणस्य तु । स्वभोगतो वियन्नागाः षट्कृतिर्यमलाश्विनः । रन्ध्राद्रयः क्रमादेषां विक्षेपाः स्वापदक्रमात् । दिङ्मासविषयाः सौम्ये याम्ये पञ्च दिशो नव । सौम्ये रसाः खं याम्येऽगाः सौम्ये खार्कास्त्रयोदश । दक्षिणे रुद्रयमलाः सप्तत्रिंशदथोत्तरे । याम्येऽध्यर्धलिप्तिकाद्या नवसार्धशरेषवः । उत्तरस्यां तथा षष्टिस्त्रिंशत् षट्त्रिंशदेव हि । दक्षिणे स्वर्धभागस्तु चतुर्विंशतिरुत्तरे । भागाः षड्विंशतिः खं च दस्रादीनां यथाक्रमम्" सू० सि० । "अश्विन्यादिनक्षत्राणां क्रमाद्भोगा एते । तत्राश्विन्याम् अष्टचत्वारिंशत् कलाः । भरण्याश्चत्वारिंशत् । कृत्तिकायाः कलाः पञ्चषष्टिः । रोहिण्याः सप्तपञ्चाशत् कलाः । मृगशिरसोऽष्टपञ्चाशत् । आर्द्रायाश्चत्वारः । अत्राब्धय इत्यत्र गोऽब्धयो गोऽग्नय इति वा पाठस्त्वयुक्तः शाकल्यसंहिताविरोधात् "सौरोक्तरुद्रभस्यांशास्त्रयोऽगाब्धयः कलाः इति नार्मदोक्तं दशकलोनपञ्चदशभागा मिथुने सर्वजनाभिमतध्रुवको दशकलोनषड्दशभागाः पर्वताभिमतध्रुवकस्य निरस्तः । पुनर्वसोरष्टसप्ततिः । पुष्यस्य षट्सप्ततिः । अश्लेषायाश्चतुर्दश । तथेति छन्दःपूरणार्थम् । मघायाश्चतुःपञ्चाशत् । पूर्वफाल्गुन्याश्चतुःषष्टिः । उत्तरफाल्गुन्याः पञ्चाशत् । हस्तस्य षष्टिः । चित्रायाश्चत्वारिंशत् । स्वात्याः चतुःसप्ततिः । विशाखाया अष्टसप्ततिः । अनुराधायाश्चतुःषष्टिः । ज्येष्ठायाश्चतुर्दश । अनन्तरं मूलस्य षट् । पूर्वाषाढायाश्चत्वारः । उत्तराषाढाया ध्रुवकमाह । वैश्वमिति । उत्तराषाढायोगतारानक्षत्रम् । आप्यार्धभोगगम् । आप्यस्य पूर्वाषाढानक्षत्रस्यार्धभोगः धनूराशेर्विंशतिभागस्तत्र स्थितं ज्ञेयम् । अष्टौ राशयो विंशतिभागा उत्तराषाढाया ध्रुवः इत्यर्थः । एतेन पूर्वाषाढायोगतारायाः सकाशादुत्तराषाढायोगतारा विंशतिकलोनसप्तभागान्तरिता । तेन पूर्वाषाढाध्रुवकोऽष्टराश्य-

चतुर्दश भागा विंशतिकलोनसप्तभागैर्युत उत्तराषाढ़ाया ध्रुवश्चत्वारिंशत्कलाधिकोऽङ्कध्रुव इति पर्वतोक्तमपास्तम् ब्रह्मसिद्धान्तविरोधात्। अभिजिद्ध्रुवकमाह। आद्य-स्येति। पूर्वाषाढ़ाया अवसाने धनूराशेर्विंशतिकलोन-सप्तविंशतिभागेऽभिजिद्योगतारा ज्ञेया। चत्वारिंशत्-कलाधिकषड्विंशतिभागाधिका अष्टौ राशयोऽभिजितो ध्रुव इत्यर्थः। एवकारोऽन्ययोगव्यवच्छेदार्थः। तेन संहितासम्मतं श्रवणपञ्चदशांशस्थानं विंशतिविकलायुत-लवोदयकलायुतचतुर्दशभागादिकनवराशयो निरस्ताः। श्रवणस्य ध्रुवकमाह। वेदान्त इति। उत्तराषाढ़ाया अवसाने श्रवणयोगताराया स्थानं ज्ञेयम्। नव राशयो दश भागाः श्रवणध्रुवक इत्यर्थः। धनिष्ठाया ध्रुवक-माह। त्रिचतुःपादयोरिति। श्रवणस्य तृतीयचतुर्थ-चरणयोः क्रमेणान्तादिसन्धौ मकरराशेर्विंशतिभागे श्र-विष्ठा धनिष्ठा ज्ञेया। नव राशयो विंशतिभागा धनिष्ठा-ध्रुव इत्यर्थः। तुकारात् खेटान्तर्गतधनिष्ठास्थानं कुम्भस्य विंशतिकलोनसप्तभागा निरस्ताः। शततारायाः भोग-माह। स्वभोगत इति। धनिष्ठाभोगात् कुम्भस्य विंश-तिकलोनसप्तभागावधेरित्यर्थः। शततारायाः अशीति-र्भोगः। अतः प्राक्तद्ध्रुव इति ज्ञापनार्थं स्वभोगत इत्युक्तम्। शततारायाः स्थानं शततारकध्रुव इति पर्यवसन्नम्। अवशिष्टनक्षत्राणां भोगानाह। षट्-कृतिरिति। पूर्वभाद्रपदायाः षट्त्रिंशत् कला भोगः। उत्तरभाद्रपदाया द्वाविंशतिः। रेवत्या एकोनाशीतिः। अथ ध्रुवकानयनं यथा। अश्विन्या भोगः। ४८। दश-गुणितः। ४८०। अतीतनक्षत्राभावाल्लोगयोजनाभावः। अतोऽश्विन्याः कलात्मको ध्रुवः ४८०। राश्याद्यस्तु ०।८। भरण्या भोगः। ४०। दशाहतः। ४००। अतीतनक्षत्र-स्यैकत्वादष्टशतयुतो भरण्याः परिभाषया राश्याद्यो ध्रुवः ।०।२०। एवमार्द्राभोगः। ४। दशाहतः। ४०। अतीतनक्षत्राणां पञ्चतया पञ्चगुणिताष्टशतेन। ४०००। चतुःसहस्रात्मकेन युतः कलाद्यो ध्रुवः। ४०४०। राश्याद्यस्तु। २। ७। २०। एवं पूर्वाषाढ़ाया दशगुणितो भोगः। ४०। एकोनविंशतिगुणिताष्टशतेन। १५२००। युतः परिभाषया राश्याद्यो ध्रुवः। ८। १४। शतता-राया दशगुणितो भोगः। ८००। त्रयोविंशतिगुणिता-ष्टशतेन। १८४००। युतश्चतुर्विंशतिगुणिताष्टशतरूपो। १९२००। जातो ध्रुवो राश्याद्यः। १०। २०। पूर्वभा-द्रपदाया दशगुणितो भोगः। ३६०। पञ्चविंशतिगुणि-ताष्टशतेन। १९२००। युतो। १९५६०। जातो ध्रुवो राश्याद्यः। १०। २६। उत्तराषाढ़ाभिजिच्छ्रवणधनि-ष्ठानां स्वभोगस्थानात् पश्चात् स्थितत्वेनोक्तरीत्यनवस्थाभि-धरीत्या ध्रुवका उक्ताः स्वादिस्थानाद्योगतारा यदन्तर-कलाभिस्थितास्ता लाघवाद्भागपर्यवसिता भोगकलया उक्ताः। तथा च ब्रह्मसिद्धान्ते "अष्टौ त्रिंशत्त्रिरष्टौ नखाश्चिन्त्यर्थं षट्खेषवः। त्रितर्काः षष्टिभागाद्दिरष्टाद्य-स्त्राच षठ्यतम्॥ नवाग्नयो नवकृतश्च वेदेन्दवः शरा-ब्धभूः। खात्यष्टिः खष्टतिर्गोऽतिधृतिर्विश्वाश्विनस्तथा॥ वेदात्यतिर्गोदृगष्टाः कामिरूता युगार्णवक्। खोत्-कृतिस्त्र्यष्टीनाश्वरवकलाः खदृक्तिरुक्। खमोऽ-श्विनः षदन्ताः षड्दन्ताः शैलगुणान्वयः। मेषाद्यास्त्रा-दिमध्यांशाः षडंशोनाः खषड्गुणाः"॥ इति। अथ नक्षत्राणां विक्षेपभागानाह एवाभिति। उक्तध्रुव-कसम्बन्धिनामश्विन्यादिनक्षत्राणां यथाक्रमं क्रमादि-त्यर्थः। स्वात् स्वकीयापक्रमात् क्रान्त्यग्रात् क्रान्तिवृत्त-स्थध्रुवकस्थानादित्यर्थः। विक्षेपा विक्षेपभागा दक्षिणा उत्तरा वा भवन्ति। तत्रोत्तरदिश्यश्विन्यादिनक्षत्राणां दिङ्मात्रांशकाः क्रमेण दश द्वादश पञ्चेत्यर्थः। दक्षिण-दिशि रोहिण्यादित्रयाणां पञ्चदश नव। उत्तरस्यां पुन-र्वसोः षड्भागाः। पुष्यस्य खं विक्षेपाभावः। अत्र पञ्चमा-क्षरस्य गुरुत्वेन छन्दोभङ्ग आर्षत्वान्न दोषः। दक्षिणस्या-मश्लेषायाः सप्त। उत्तरस्यां मघादित्रयाणां शून्यं द्वादश त्रयोदश। दक्षिणस्यां हस्तचित्रयोरेकादश द्वौ। अनन्तरं स्वात्या उत्तरदिशि सप्तत्रिंशत्। दक्षिणस्यां विशाखादीनां षण्णां सार्धैकः त्र्यं चत्वारः। नव सार्ध-पञ्च पञ्च क्रमेण उत्तरदिशि तथा विक्षेपभागा अभि-जितः षष्टिः। श्रवणस्य त्रिंशत्। धनिष्ठायाः षट्-त्रिंशत्। एवकारो न्यूनाधिकव्यवच्छेदार्थः। चकारः पूरणार्थः। दक्षिणस्यां तुकारस्तथा। सार्धभागः शत-तारायाः। तुकारस्तथा। उत्तरस्यां पूर्वभाद्रपदा-याश्चतुर्विंशतिः। तस्यामेव दिशि भागा विक्षेपभागा उत्तरभाद्रपदायाः षड्विंशतिः। रेवत्या विक्षेपाभावः। चकारः पूरणार्थः" र० ना०॥ अत्र बाहुल्यात् अनेकेषां नक्षत्राणां ध्रुवका न दर्शिताः। सि० शि० प्रमिताक्षरायां तु यथाक्रमं सर्वेषांस्वरूपतो ध्रुवका दर्शिता यथा

| अ॰ | भ॰ | कृ॰ | रो॰ | मृ॰ | आ॰ | पु॰ | पु॰ | आ॰ | म॰ | पू॰ | उ॰ | ह॰ | चि॰ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | १ | १ | २ | २ | ३ | ३ | ३ | ४ | ४ | ५ | ५ | ६ |
| ८ | १० | ८ | २२ | ६ | ७ | ३ | १६ | १८ | ९ | २७ | ५ | २० | ३ |
| ० | ० | २८ | २८ | ० | २० | ० | ० | ० | ० | ० | ० | ० | ० |

| स्वा॰ | वि॰ | अ॰ | ज्ये॰ | मू॰ | पू॰ | उ॰ | अ॰ | श्र॰ | ध॰ | श॰ | पू॰ | उ॰ | रे॰ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ | ७ | ७ | ७ | ८ | ८ | ८ | ८ | ९ | ९ | १० | १० | ११ | ० |
| १९ | २ | १४ | १९ | १ | १४ | २० | २५ | ८ | २० | २० | २६ | ७ | ० |
| ० | ५ | ५ | ५ | ० | ० | ० | ० | ० | ० | ६ | ० | ० | ० |

विक्षेपा यथा

| अ॰ | भ॰ | कृ॰ | रो॰ | मृ॰ | आ॰ | पु॰ | पु॰ | आ॰ | म॰ | पू॰ | उ॰ | ह॰ | चि॰ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १० | १२ | ४ | ४ | १० | ११ | ६ | ० | ७ | ० | १२ | १२ | १२ | १ |
| | | १० | १० | | | | | | | | | | ४५ |
| उ | उ | उ | द | द | द | उ | उ | द | उ | उ | उ | द | द |

| स्वा॰ | वि॰ | अ॰ | ज्ये॰ | मू॰ | पू॰ | उ॰ | अ॰ | श्र॰ | ध॰ | श॰ | पू॰ | उ॰ | रे॰ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २७ | १ | १ | ३ | ८ | ५ | ५ | ६२ | ३० | ३६ | ० | २४ | २६ | ० |
| | २० | ४५ | ३० | २० | २० | | | | | २० | | | |
| उ | द | द | द | द | द | द | उ | उ | उ | द | उ | उ | उ |

सि॰शि॰ग्रहकक्षा अन्यविधा उक्ता यथा

"खाभ्रद्विगोमनुशराब्धिमितार्ककक्षा ४३३१४९७१/२ चान्द्री ग्रहवगुणिता जिनरामसंख्या ३२४०००। अभ्रे ब्धि- माङ्गगजकुञ्जरतोऽखपक्षाः २५९८८९८५० कक्षा स्तयानि गगनाय भगणस्य चेमाम्" सि॰शि॰। शेषाणां ग्रहाणां कक्षाप्रमाणानि श्रीपतिनान्यथोक्तानि यथा "अष्टाङ्कषण्मनु नगाः ८१४६९१६ क्षितिनन्दनस्य शास्त्रे यदन्तकतसेन्दु मिता ३०४२२११ च सूरेः। रूपाश्विनागयुगशैलगुणेन्दुबाणाः ५१३७४८२१ बाण्यब्धयागररसोत्कृतयः२६६४६३० सितस्य, भूधराब्धिगगनागरषत् बाणधराश्वियमिनः१२७६६८७८७। शनिकक्षा" रव्यादीनां मन्दोच्चादिपरिधिमानमुक्तं सि॰शि॰ 'मन्दोच्चनीचपरिधिस्त्रिलवोनशक्र १३।४० भागा रवेर्जिन- कलोनरदा ३१।३६ हिमांशोः। खाश्वा ७० भुजङ्गदहना ३८ शरराम ३३ भवाश्च ११ पूर्वैर्नवो ५० निगदिताः क्षिति- जादिकानाम्"सि॰शि॰। "इह ग्रहभ्रमणोपपत्त्यर्थं मन्दो- च्चनीचवृत्तानि पूर्वैः कल्पितानि। तेषां प्रमाणान्येता- वन्तो भागाः। अत्रोपपत्तिः। ग्रहस्य यन्त्रवेधविधिना यत् परमं फलमुत्पद्यते तस्य ज्या परमफलज्यान्त्य- फलज्या चोच्यते। अन्त्यफलज्यातुल्यव्यासार्धेन यद्वृत्त-

मुत्पद्यते तन्नीचोच्चवृत्तम्। तत्परिधिस्त्रैराशिकेन। यदि त्रिज्याव्यासार्धे भांशाः ३६० परिधिस्तदान्त्यफलज्या- व्यासार्धे किमिति लब्धं परिधिभागाः। एवमर्कादीनां त्रिलवोनशक्रा इत्यादय उत्पद्यन्ते। अथ भौमादीनां चलपरिधीनाह" प्रमि॰ सौरागमेण तुल्यत्वादविरोधः।

"एषां चलाः कृतजिनाब्धिलवेन हीना २४३।४० दन्तेन्दवो १३२ वसुरसा ६८ वसुबाणदस्राः २५८। पूर्णाब्धयो ४० ऽथ भृगुजस्य तु मन्दकेन्द्रदोःशिञ्जिनी द्विगुणिता त्रिगुणेन २४३८ भक्ता। लब्धेन मन्दपरिधी रहितः स्फुटः स्यात् तच्छीघ्रकेन्द्रभुजमौर्व्यथ वाणनिघ्नी। उत्तरस्यां समर्पितमाग" अभिधाने १४५२ पृ॰ दर्शितं तेषां शतवर्षैरेकैकनक्षत्रभोगस्तत्र प्रमाणं वराहसंहिता वाक्यं तत्रोक्तम्। भचक्रस्य द्वादशधा विभक्तमपि अश्वि- न्यादिभिः सप्तविंशतिनक्षत्रात्मकं तत्र त्रिभिस्त्रिभिर्नक्षत्रै- र्नव वीथयः बृह॰सं॰ उक्ता यथा "नागगजैरावत- वृषभगोजरद्गवमृगाजदहनाख्याः। अश्विन्याद्याः कैश्चित् त्रिभाः क्रमाद्वीथयः कथिताः॥ नागा तु पवनयाम्या नलानि पैतामहात्त्रिभास्तिस्रः। गोवीथ्यामश्विन्यः पौष्णं द्वे चापि भाद्रपदे॥ जरद्गव्यां श्रवणात् त्रिभं मृगाख्या त्रिभं च मैत्राद्यम्। हस्तविशाखात्वाष्ट्राण्यजेत्याषाढाद्वयं दहना॥ तिस्रस्तिस्रस्तासां क्रमादुदङ्मध्ययाम्य- मार्गस्थाः। तासामप्युत्तरमध्यदक्षिणावस्थितैकैका॥ वीथीमार्गानपरे कथयन्ति यथा स्थिता भमार्गस्य। नक्ष- त्राणां तारायाम्योत्तरमध्यमार्गस्थत्॥ उत्तरमार्गो या- म्यादि निगदितो मध्यमस्तु भाग्याद्यः। दक्षिणमार्गोऽषा- ढादि कैश्चिदेवं कृता मार्गाः"॥

भचक्रस्थग्रहाणां प्राग्गतिभेदकारणमुक्तं सू॰सि॰ यथा "पश्चाद् व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः। जीयमा- नास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः"॥ सू॰ सि॰।" "पश्चादनन्तरं पुनरादृत्या पश्चात् पश्चिमदिगभिमुखं नक्षत्रै- स्तारकादिभिः सह ग्रहाः सूर्यादयोऽतिजवात् प्रवहवायु- कृतत्वरगतिवशात् सततं निरन्तरं व्रजन्तो गच्छन्तः स्वमार्ग- गाः स्वकक्षाग्रस्थाः जीयमाना नक्षत्रैः पराजिता नक्षत्रा- णामग्रे गमनात्। अत एव लज्जयेव गुरुभूता इति तात्प- र्यार्थः। तुल्यं समम्। एवकारादधिकन्यूनत्वव्यवच्छेदः। लम्बन्ते स्वस्थानात् पूर्वस्मिन् लम्बायमाना भवन्ति। यथा लज्जितः पश्चाद्भवति नाग्रे। तुकारादधोऽधःकक्षाक्रमा- नुरोधेन शन्यादिग्रहाणां चन्द्रान्तानां गुरुताचयः शनि-

रतिगुरुभूतस्तस्मात् किञ्चिन्न्यूनो गुरुस्तस्मादपि भौम इत्यादि यथोत्तरम् । यस्य कक्षा महती तस्य गुरुत्वाधिक्यं यस्य लघ्वी तस्य तदनुरोधेन गुरुत्वाल्पत्वमिति । एतदुक्तं भवति। ब्रह्मणा प्रवहवायौ नक्षत्राधिष्ठितो मूर्त्तो गोलः स्थापित-स्तदन्तर्गताः खखाकाशगोलस्थाः शन्यादयो नक्षत्राधिष्ठित-मूर्त्तगोलस्थक्रान्तिवृत्तस्थरेवतीयोगतारासन्नरूपमेषादिप्रदेश-समसूत्रस्थाः स्थापिताः । क्रान्तिवृत्तं तु मेषतुलास्थाने-विषुवद्वृत्तलग्नसम्पातात् त्रिभान्तरितक्रान्तिवृत्तप्रदेशौ स्वा-सन्नविषुवद्वृत्तप्रदेशाभ्यां चतुर्विंशत्यंशान्तरेण दक्षिणोत्तरौ मकरकर्कादिरूपौ तदेवं द्वादशराश्यात्मकं वृत्तं ग्रहचारभू-तम् । विषुवद्वृत्तं तु ध्रुवमध्यस्थं निरक्षदेशोपरिगम् ।तत्र प्रवहवायुना स्वाघातेन मूर्त्तो नक्षत्रगोलो नाक्षत्रषष्टिघटी-भिः परिवर्त्यते । तदन्तर्गतवायुभिस्तदाघातेन वा ग्रहा भ्रमन्तोऽपि नक्षत्रगोलस्थितक्रान्तिवृत्तीयमेषादिप्रदेशेन समं न गच्छन्ति वायूनां स्वल्पत्वात् तदाघातस्याप्यल्पत्वाद्बि-म्बानां गुरुत्वाच्च । अतस्तत्स्थानाद्ग्रहाणां लम्बनं दृश्यते । अत एव नक्षत्रोदयकाले तेषां द्वितीयदिने नोदयः किन्तु ग्रहो लम्बितप्रदेशेन वायुना तदनन्तर-मूर्द्ध्वमागच्छतीत्यनन्तरमुदयः । लम्बनं तु शन्यादीनां कक्षानुरोधेन गुरुत्वाद्वायूनां तद्घातानां वा कक्षानुरोधेन बह्वल्पत्वात् तुल्यम् । यद्यपि वायोर्ध्रुवानुरोधेन सत्त्वा-द्ग्रहावलम्बनं विषुवद्वृत्ते भवितुमुचितं न क्रान्तिवृत्ते, तथा च वक्ष्यमाणक्रान्त्यनुपपत्तिः क्रान्तिवृत्तस्थद्वादश-राशिभोगेन वक्ष्यमाणानां भगणानामनुपपत्तिश्च । तथापि वायुनावलम्बितो ग्रहो विषुवन्मार्गगोऽपि तद्विषुवप्रदेशा-सन्नक्रान्तिवृत्तप्रदेशेन ग्रहाकाशगोल एव स्वसमसूत्रेणा-कृष्यत इति नानुपपत्तिः । अत एव स्वमार्गगा इति क्रान्तिवृत्तानुसृतस्वाकाशगोलस्थकक्षामार्गगता इत्यर्थक-मुक्तमिति सङ्क्षेपः । अत एव ग्रहाणां लोके प्राग्गतित्वं सिद्धमित्याह" रं॰ना॰ ।

"प्राग्गतित्वमतस्तेषां भगणैः प्रत्यहं गतिः । परिणा-हवशाद्भिन्ना तद्वशाद्भानि भुञ्जते" सू॰सि॰ । "अतो ऽवलम्बनादेव तेषां ग्रहाणां प्राग्गतित्वं प्राच्यां दिशि गतिर्येषां ते प्राग्गतयस्तद्भावः प्राग्गतित्वं सिद्धम् । लम्बनस्वरूपैव ग्रहाणां पूर्वगतिरुपपन्ना लोकैः कारणा-नभिज्ञैः प्रत्यक्षावगततया तच्छक्तिजनिता कल्पितेत्यर्थः । सा कियतीत्यत आह । भगणैरिति । वक्ष्यमाणभग-णैः प्रत्यहं प्रतिदिनं गतिः प्राग्गमनरूपा भगणानां यदि गत्युपपन्नत्वाद्भगणसम्बन्धिवक्ष्यमाणदिनैः सूर्य्यसावनै-र्ग्रहभगणा लभ्यन्ते तदैकेन दिनेन केत्यनुपाताज्ज्ञेया । ननु ग्रहभगणानां तुल्यत्वाभावात् प्रतिदिनं ग्रहगति-र्भिन्नेति पूर्वं लम्बनरूपा ग्रहगतिरयुक्तोक्ता ग्रहलम्बन-स्याभिन्नत्वादित्यत आह परिणाहवशादिति । परि-णाहः कक्षापरिधिस्तद्वशात् तदनुरोधादियं ग्रहगति-र्भिन्नाऽतुल्या । अयमभिप्रायः । ग्रहाणां लम्बनं तुल्यप्रदेशे न, परन्तु स्वस्वकक्षायां तत्तत्प्रदेशे तुल्ये याः कलास्ता गतिकलास्तास्तु महति कक्षावृत्तेऽल्पा लघु-कक्षावृत्ते बह्व्यः सर्वकक्षापरिधीनां चक्रकलाङ्कितत्वात् भगणास्तु गतिवशादेव यस्य कक्षावृत्तं महत् तस्याल्पा यस्य च लघु कक्षावृत्तं तस्य बहवस्तदुपपन्ना गतिरपि तथेति न विरोधः । नन्वेकरूपगतिं विहाय भिन्नरूपा गतिः कथमङ्गीकृतेत्यत आह । तद्वशादिति भिन्न-गतिवशाद्भानि राशीन् नक्षत्राणि भुञ्जते ग्रहा भुञ्जन्ती-त्यर्थः । तथा च ग्रहराश्यादिभोगज्ञानार्थमियमेव गतिरुपयुक्ता नैकरूपेति भावः । अथ भभोगे विशेषं वदन् वक्ष्यमाणभगणस्वरूपमाह" रं॰ना॰ । "शीघ्रगस्ता-न्यथाल्पेन कालेन महताल्पगः । तेषां तु परिवर्त्तेन पौष्णान्ते भगणः स्मृतः" सू॰सि॰ । "अथशब्दः पूर्वोक्त-विशेषसूचकः शीघ्रगतिग्रहस्तानि भान्यल्पेन कालेन भुनक्त्यल्पगतिर्ग्रहो बहुकालेन भुनक्ति तुल्यराश्यादि-भोगो मन्दशीघ्रगतिग्रहयोस्तुल्यकालेन न भवतीति विशेषार्थः । तेषां राशीनां परिवर्त्तेन भ्रमणेन । तुका-राद्ग्रहादिगतिभोगजनितेन भगणः प्राज्ञैरुक्तः । क्रा-न्तिवृत्ते द्वादशराशीनां सत्त्वात् तद्भोगेन चक्रभोगसमा-प्तेर्यत् स्थानमारभ्य चलितो ग्रहः पुनस्तत् स्थानमायाति स चक्रभोगः परिवर्त्तसञ्ज्ञोऽपि द्वादशराशिभोगाद्भगण इत्यर्थः । ननु क्रान्तिवृत्ते सर्वप्रदेशेभ्यः परिवर्त्तसम्भवा-दत्र कः परिवर्त्तादिभूतः प्रदेश इत्यत आह पौष्णान्त इति । सृष्ट्यादौ ब्रह्मणा क्रान्तिवृत्ते रेवतीयोगताराऽऽ-सन्नप्रदेशे सर्वग्रहाणां निवेशितत्वात् तदवधितो ग्रहचल-नाच्च पौष्णस्य रेवतीयोगताराया अन्ते निकटे प्रदेशे तथा च रेवतीयोगतारासन्नाग्रिमस्थानमेवाद्यन्तावधि-भूतमिति भावः" रं॰ना॰ ।

सूर्यादिग्रहाणां महायुगे भगणमानमुक्तं तत्रैव ।

"युगे सूर्य्यज्ञशुक्राणां खचतुष्करदार्णवाः । कुजा-र्किगुरुशीघ्राणां भगणाः पूर्वयायिनाम्" सू॰सि॰। "महा-

युगे ४३२०००० वर्षे सूर्यबुधशुक्राणां खानां चतुष्कमेकस्थानादिदशस्थानान्तचतुःस्थानस्थानि शून्यानि ततोऽयुतादिप्रयुतस्थानपर्यन्तं दन्तचतुर्द्रास्तथा च युगे सौरवर्षाणि खाभ्रखाभ्रद्विरामवेदमितानि ४३२०००० भगणा द्वादशराशिभोगात्मकपरिवर्त्तानां सङ्ख्या भवन्तीति शेषः। शीघ्रशनिबृहस्पतीनां यानि शीघ्राणि शीघ्रोच्चानि तेषामेतन्मिता भगणाः। चकारः समुच्चयार्थकोऽनुसन्धेयः। अत्र कक्षाक्रमेण वारक्रमेण वा गुरोः खलु मध्यगता भवतीति न तथोद्देशः स्वतन्त्रस्य नियोगानर्हत्वाद्वा। नन्वाकाशे एषां विम्बाभावादवलम्बनासम्भवेन गत्यभावात् कथं भगणा उक्ता इत्यत आह पूर्वशायिनामिति पूर्वगामिनाम्। तथा च तेषामदृश्यरूपाणां पूर्वगतसद्भावाद्भगणोक्तौ न क्षतिः। एषां स्वरूपादिनिर्णयस्तु स्पष्टाधिकारे प्रतिपादयिष्यते। अथ चन्द्रभौमयोर्भगणानाह” र० ना०। “इन्दो रसाग्नित्रित्रीषुसप्तभूधरमार्गणाः। दस्रत्र्यष्टरसाङ्काक्षिलोचनानि कुजस्य तु” सू० सि०। “पूर्वश्लोकोक्तभगणा इत्यत्रापि मश्लोकेष्वन्वेति। भूधराः सप्त न तु पर्वतस्य धराभिधानत्वादेकसप्ततिः मार्गणाः शरास्तथा च चन्द्रस्य भगणाः षडग्नित्रित्रिपञ्चसप्तसप्तपञ्चमिताः ५७७५३३३६ भौमस्य तु कारादाकाशस्थविम्बात्मकस्येति पुनरुक्तिभ्रमवारणार्थं दन्ताष्टषडङ्कक्षितिमिताः २२९६८३२। अथ बुधशीघ्रोच्चगुर्वोर्भगणानाह” र० ना०। “बुधशीघ्रस्य शून्यर्तुखाद्रित्र्यङ्कनगेन्दवः। बृहस्पतेः खदस्राक्षिवेदषड्वह्नयस्तथा” सू० सि०। “बुधशीघ्रोच्चस्यादृश्यरूपस्य पूर्वगतेर्भगणाः षष्टिसप्तत्रित्र्यङ्कात्यष्टिमिताः १७९३७०६० बृहस्पतेस्तथा विम्बात्मकस्येति पुनरुक्तिभ्रमवारणाय नखद्विवेदषड्रामिताः ३६४२२०। अथ शुक्रशीघ्रोच्चशन्योर्भगणानाह” र० ना०। “सितशीघ्रस्य षट्सप्तत्रियमाश्विखभूधराः। शनेर्भुजङ्गषट्पञ्चरसवेदनिशाकराः” सू० सि०। “शुक्रशीघ्रोच्चस्यादृश्यरूपस्य पूर्वगतेर्भगणाः षट्सप्तत्रिद्विद्विखसप्त ७०२२३७६ एतेन भूधरा इत्यस्यैकसप्ततिरेकादश वार्थो निरस्तः। शनेर्विम्बात्मकस्याष्टषट्पञ्चरसेन्दुमिताः १४६५६८ अथ चन्द्रस्योच्चपातयोर्भगणानाह” र० ना०। “चन्द्रोच्चस्याग्निशून्याश्विवसुसर्पार्णवा युगे। वामं पातस्य वस्वग्नियमाश्विशिखिदस्रकाः” सू० सि०। “चन्द्रमन्दोच्चस्य पूर्वगतेरदृश्यरूपस्य भगणा महायुगे रामनखाष्टाष्टवेदमिताः ४८८२०३। पातस्य चन्द्रग्रहस्य सन्निहितत्वाच्चन्द्रगतस्यादृश्यरूपस्य वामं पश्चिमगत्या द्वादशराशिभोगात्मकपरिवर्त्तरूपभगणा महायुगे अष्टरामाक्षितरामद्विमिताः २३२२३८ अत्र युगग्रहणं वक्ष्यमाणग्रहोच्चपातभगणसम्बन्धिकल्पवारणार्थम्। ग्रहोच्चपातभगणास्तु युगे युगे नोत्पन्ना इत्यस्मान् युगसम्बन्धप्रसङ्गेनोक्ताः। मन्दोच्चपातस्वरूपादिनिर्णयस्तु स्पष्टाधिकारे व्यक्तो भविष्यति”। अथ युगे नाक्षत्रदिवसांस्तत्स्वरूपावगमाय ग्रहसावनदिनस्वरूपं स्वसङ्ख्याज्ञानहेतुकं चाह” र० ना०।। “भानामष्टाक्षिवस्वद्रित्रिद्विद्व्यष्टशरेन्दवः। भोदया भगणैः स्वैः स्वैरूनाः स्वस्वोदया युगे” सू० सि०। “भानां नक्षत्राणां स्वतो गत्यभावेऽपि प्रवहवायुना परिभ्रमणात् तत्सङ्ख्यातुल्या भगणाः स्वदिनतुल्याः। अत एवात्र वाममिति पूर्वोक्तस्य युक्तोऽन्वयः। अष्टद्व्यष्टनगाग्निजातिगजतिथिमिताः १५८२२३७८२८। ननु ग्रहाणामपि प्रवहवायुना परिभ्रमणेनोदयसद्भावात् तेषां दिवसाः कथं ज्ञेया इत्यत आह। भोदया इति। उदयन्त्यस्मिन्नहनि स्वाद्यन्तावधिरूप इति व्युत्पत्त्योदयशब्देन दिनम्। तथा च भोदया नक्षत्रदिवसा एते उक्ताः स्वैः स्वैः स्वकीयैः स्वकीयैर्भगणैः प्रागुक्तैर्वर्जिताः सन्तः स्वस्वोदया निजनिजसावनदिवसा युगे भवन्ति। युग इत्यनेनाभीष्टकाले नाक्षत्रदिवसा ग्रहगतभोगादिना भगणादिनोना ग्रहसावनदिवसा अभीष्टा भवन्ति। परन्तु राशीन् पञ्चगुणितानंशादिकं दशगुणितं कृत्वा पञ्चादिस्थाने हीनं कार्यमन्यथा विजातीयत्वादन्तरानुपपत्तेरिति सूचितम्। अत्रोपपत्तिः यदि ग्रहाणां प्राग्गमनावलम्बनं न स्यात् तर्हि ग्रहोदयनक्षत्रोदययोरेकहेतुकत्वान्नाक्षत्रसावनदिवसयोरभेदः स्यात् अतो ग्रहाणां लम्बनेन नाक्षत्रादिदिवसेभ्यः सावनादिदिवसानामन्तरितत्वादवलम्बनजभगणान्तरेण युगे नाक्षत्रदिवसेभ्यो ग्रहसावनदिवसा न्यूना भवन्ति। प्रवहेण भगणतुल्यपश्चिमग्रहतुल्यानामकरणादित्युपपन्नं भोदया इत्यादि! अनेनैव भगणसावनभोगो नाक्षत्रदिवसा इत्यर्थसिद्धम्” र० ना०। महायुगे चान्द्रादिमासदिनसंख्या तत्रोक्ता यथा

“भवन्ति शशिनो मासाः सूर्येन्दुभगणान्तरम्। रविमासोनितास्ते तु शेषाः स्युरधिमासकाः” सू० सि०। “सूर्यचन्द्रभगणयोरन्तरं चन्द्रस्य मासा भवन्ति ते चान्द्रमासा रविमासोनिताः। अत्र प्रथमं तुकारान्वयाद्द्वादशगुणितरविभगणरूपसौरमासार्कमासैरूनिताः सन्तः शेषा

अवशिष्टा ये चान्द्रमासास्तेऽधिमासा एव भवन्ति नान्ये। अनेन चान्द्रत्वमधिमासानां स्पष्टीकृतम्। अत्रोपपत्तिः। त्रिंशत्तिथ्यात्मकस्य रवीन्दुयुतिकालरूपदर्शान्तावधेश्चान्द्रमासस्य द्वादशराशिमितेन सूर्य्येन्द्वन्तरेणैव सिद्धिः। कथमन्यथा दर्शान्ते मन्दशीघ्रयोः सूर्य्येन्द्वोर्योगस्य पुनर्दर्शान्ते सम्भवः। द्वादशराश्यन्तरं त्वेकं भगणान्तरमतो भगणान्तरेण चान्द्रो मासः सिद्धः। सौरमासापेक्षया यदन्तरेण चान्द्रमासानामधिकत्वं त एवाधिमासा इति स्वरूपमेव वक्ष्यमाणोपयोगात् परिभाषितम्। अथ वक्ष्यमाणावमसूर्य्यसावनयोः स्वरूपमाह" र० ना०। "सावनाहानि चान्द्रेभ्यो द्युभ्यः प्रोज्झ्य तिथिक्षयाः। उदयादोदयं भानोर्भूमिसावनवासराः"। चान्द्रेभ्यो द्युभ्यो वक्ष्यमाणचान्द्रदिवसेभ्यः सकाशादित्यर्थः। सावनाहानि सावनदिनानि प्रोज्झ्य त्यक्त्वावशेषं तिथिक्षयाः। तिथिषु चान्द्रदिनेषु सावनदिनानामवशेषतुल्यः क्षयो न्यूनत्वम्। यद्वा तिथिशब्देन सावनो दिवसस्तस्य चान्द्रदिवसात् क्षय इति स्वरूपमेव वक्ष्यमाणोपयोगात् परिभाषितम्। ननु भोदया भगणैरित्यादिना पूर्वं सर्वेषां सावनदिवसा उक्ता इत्यत्र कस्य ग्राह्या इत्यतः सूर्य्यसावनस्वरूपकथनच्छलेनोत्तरमाह। उदयादिति। सूर्य्यस्योदयकालमारभ्याव्यवहिततदुदयकालपर्य्यन्तं यः कालः स एको दिवसः। इति ये दिवसास्ते भूमिसावनवासराः। भूदिवसा उदयस्य भूसम्बन्धेनावगमात्। सावनादिवसास्त्वित्यर्थः। तथा च निरुपपदसावनभूमिशब्दाभ्यां सूर्य्यस्य वासरा एव नान्येषां सोपपदत्वाभावादिति भावः। ते कियन्त इत्यतस्तत्प्रमाणं चान्द्रदिनप्रमाणं चाह"र०ना० "वसुद्व्यष्टाद्रिरूपाङ्कसप्ताद्रितिथयो युगे। चान्द्राः खाष्टखव्योमखाग्निखर्त्तुनिशाकराः" सू०। "अष्टाश्विगजसप्तपञ्चभूमिता युगे सूर्य्यसावनदिवसाः। चान्द्रा दिवसा युगतिथय इत्यर्थः। अशीतिशून्यचतुष्कत्रिखरूपा एते त्रिंशद्गुणाश्चान्द्रमासा उक्तप्रायाः। अनेनैव चान्द्रदिवसानामुपपत्तिः सूर्य्यचन्द्रयोर्भगणयोरन्तररूपचान्द्रमासास्त्रिंशद्गुणिता इति स्पष्टीकृता। अथाधिमासावमयोः सङ्ख्यामाह" र०ना०। "षडग्निक्रिकृताशाङ्कतिथयश्चाधिमासकाः। तिथिक्षया यमार्थाश्विद्व्यष्टव्योमशराश्विनः" सू०। "अधिमासकाः प्रागुक्तस्वरूपाश्चकाराद्युगे षड्देवरामगोशरेन्दुमितास्तिथिक्षया दिनक्षया अवमानीत्यर्थः। यमौ पञ्च। एवं द्विशरात्मकाष्टखतत्त्वानि। ननु सूर्य्यमासानुक्तेरधिमाससङ्ख्या कथं ज्ञातेत्यतो रविमाससङ्ख्यां स्वरूपेण कथयन्नाह" र०ना०। "खचतुष्कसमुद्राष्टकुपञ्च रविमासकाः। भवन्ति भोदयाभानुभगणैरूनिताः कुहाः" सू०। "सूर्य्यमासा द्वादशगुणितरविभगणानुरूपाः शून्यचतुष्कवेदाष्टैकशरमिताः। ननु सावनदिवससङ्ख्या प्रागुक्ता कथमन्यत इत्याह। भवन्तीति। भोदया नाक्षत्रदिवसाः प्रागुक्ताः सूर्य्यभगणैः प्रागुक्तैर्वर्जिताः सन्तः कुहा भूवासरा भवन्ति। भोदया इत्यादिप्रागुक्तेः।

ननु सूर्य्यादिमन्दोच्चभौमादिपातानां युगे भगणानुक्तेः कल्पभगणकथनमावश्यकमतस्तत्पङ्क्त्यां प्रागुक्ता एते भगणादयः कल्प एव कथं नोक्ता इत्यत आह" र०ना०। "प्राग्गतेः सूर्य्यमन्दस्य कल्पे सप्ताष्टवह्नयः। कौजस्य वेदखयमा बौधस्याष्टर्त्तुवह्नयः। खखरन्ध्राणि जैवस्य शौक्रस्यार्थगुणेषवः। गोऽग्नयः शनिमन्दस्य पातानामथ वामतः" सू० सि०। प्राग्गतेः कल्प इत्यनयोः शनिमन्दान्तं प्रत्येकं सम्बन्धः। पूर्व्वगतेः सूर्य्यमन्दोच्चस्य कल्पे सप्ताष्टरामसिताः ३८७ शनिपातस्य भगणा इति वक्ष्यमाणस्य भगणा इति पदमत्र प्रत्येकमन्वेति। कौजस्य कुजसम्बन्धिनः सूर्य्यमन्दस्येत्यस्यैकदेशो मन्दस्येति मन्दोच्चस्येत्यर्थकमत्रान्वेति। तथा च भौममन्दोच्चस्य चतुरधिकं शतद्वयम् २०४। बौधस्य बुधमन्दोच्चस्याष्टषट्त्रिमिताः ३६८। जैवस्य गुरुसम्बन्धिनः। अत्र शनिमन्दस्येति वक्ष्यमाणस्यैकदेशो मन्दस्येति मन्दोच्चस्येत्यर्थकमन्वेति काकाक्षिन्यायात्। यद्वाद्यनयोर्मन्दस्येत्युक्तेरेव मध्यस्थानामन्वयः सूपपन्न इति। तथा च गुरुमन्दोच्चस्य नवशतं ९०० शौक्रस्य शुक्रमन्दोच्चस्य पञ्चत्रिंशदधिकपञ्चशतं ५३५ शनिमन्दोच्चस्यैकोनचत्वारिंशत् ३९। अथानन्तरं पातानां भौमादिपातानां वामतः पश्चिमगत्या भगणा उच्यन्त इति शेषः तान् श्लोकाभ्यामाह" र० ना०। "मनुदस्रास्तु कौजस्य बौधस्याष्टाष्टसागराः। कृताद्रिचन्द्रा जैवस्य त्रिखाङ्काश्च भृगोस्तथा। शनिपातस्य भगणाः कल्पे यमरसर्त्तवः। भगणाः पूर्वमेवात्र प्रोक्ताश्चन्द्रोच्चपातयोः"। सू० सि०। "कुजसम्बन्धिनः। तकारात् पातस्य भौमपातस्य कल्पे भगणाश्चतुर्दशाधिकं शतद्वयम् २१४। बौधस्य बुधसम्बन्धिनः शनिपातस्येत्यस्यैकदेशः पातस्येत्यत्रान्वेति। बुधपातस्य द्वादशोना पञ्चशती ४८८। जैवस्य गुरुपातस्य चतुःसप्तत्यधिकं शतम् १७४। भृगोः शुक्रस्य

तथा च नखाब्धिनवशरात्तरात् शातस्य शुक्रपातस्य त्वयं। तत्र-धिका नवशतीध०२। शनिपातस्य द्विरसषट्का ६६२भगणाः कल्पे भवन्ति। नन्वस्मिन् प्रसङ्गे चन्द्रस्योच्चपातयोर्भगणाः कथं नोक्ता इति मन्दाशङ्कापाकरणाय पूर्वोक्तं स्मारयति। भगणा इति। चन्द्रोच्चपातयोश्चन्द्र मन्दोच्चपातयोर्भगणा च माध्यमाधिकारे पूर्वं ग्रहयुगभगणकथने। एवकारो विस्तरस्य निरासार्थकः "प्रोक्ताश्चन्द्रोच्चस्य त्वादिश्लोकेनोक्ताः" र०ना०। कुजादिकक्षाणां भूमिमध्यत उच्छ्रितिः श्रीपतिनोक्ता यथा भौमस्य गोकुरसगजसमसूर्यसंख्या १२९६२१९ दन्ताभ्रपक्ष-क्षपमिता १६६०२२ स्मृतिरिन्दुजस्य। पूज्यस्य नागगुण-वह्निरसाद्रिभूमि नागाश्च ८१७६५३८ सर्पगजस्वाब्धिय-साब्धयोऽथ ४२४०८८। शुक्रस्य, सूर्यतनयस्य कुरसप्रशाङ्क भूत्राभ्रदस्रमित २०३१९०७१ योजनकर्ण एवम्। नागाश्च-वसुमरसाग्निकुवेदसंख्यो ४१२६२६५८ नक्षत्रमण्डलभवः श्रवणो निरुक्तः"। सि०शि० विशेष उक्तः।

"सृष्टा भचक्रं कमलोद्भवेन ग्रहैः सहैतद्भगणादिसंस्थैः। शश्वद्भ्रमे विश्वसृजा नियुक्तं तदन्ततारे च तथा ध्रुवत्वे। ततोऽपराशाभिमुखं भपञ्जरे सखेचरे शीघ्रतरे भ्रमत्यपि। तदल्पगत्येन्द्रदिशं नभश्चराश्चरन्ति नीचोच्चतराश्रवर्त्मसु" सू०। "यदेतद्भचक्रं ग्रहैः सह भूपद्दृश्यते तद्विश्वसृजा जगदुत्पादकेन कमलोद्भवेन ब्रह्मणा सृष्ट्यादौ सृष्टं ततः शश्वद्भ्रमेऽनवरतभ्रमणे नियुक्तम्। एतदुक्तं भवति। अश्विन्यादीन्यन्यानि विशिष्टानि ज्योतींषि तेषां समूहश्चक्रं ग्रहाश्च सूर्या-दयस्तैः सह सृष्टम्। तानि भानि प्राक् संस्थया सम-न्तान्निवेशितानि। ग्रहास्तु भगणादावश्विनीमुखे निवे-शितास्तु उपर्युपरि संस्थया। तत्रादौ तावदधश्चन्द्रः। तदुपरि बुधः। ततः शुक्रः। ततो रविः। तस्मा-द्भौमः। ततो गुरुः। ततः शनिः। सर्वेषामुपरि दूरे भचक्रम्। एषां कक्षाप्रमाणानि कक्षाध्याये प्रति-पादयिष्यन्ते। ननु यद्यूर्ध्वोर्ध्वस्था ग्रहास्तदुपरि दूरतो भगणास्तत् कथं भगणादिसंस्थैर्ग्रहैरित्युच्यते। सत्यम्। अत्र भूमध्ये सूत्रस्यैकमग्रं बद्ध्वा द्वितीयमग्रं भचक्रेऽश्विनीमुखे किल निबद्धम्। तस्मिन् सूत्रे प्रोता मणय इव चन्द्रादयो ग्रहाः सृष्ट्यादौ ब्रह्मणा निवे-शिताः। भूमध्यं द्वादशधा विभज्यैवं भूमध्यात् सूत्राणि प्रतिभागं नीत्वा किल बद्धानि तैः सूत्रैः सह ग्रहकक्षाणां ये संपातास्ते तासु कक्षासु राशयस्ता-

स्तद्वत्प्रकारा राशय इति सङ्क्षेपमिदमुक्तम्। कक्षाध्याये गोले च किञ्चिद्विस्तीर्य वक्ष्यामः। एवंविधं भचक्रं सृष्टा ब्रह्मणा गगने निवेशितम्। यत्र निवेशितं तत्र प्रवहो नाम वायुः। स च नित्यं प्रत्यग्गतिः। तेन समाहतं भचक्रं सखेचरं पश्चिमाभिमुखभ्रमे प्रवृत्तम्। यत् तस्य प्रत्यग्भ्रमणं तच्छीघ्रतरम्। यत एकेनाह्ना भमण्डलस्य परिवर्त्तः। एवं तस्मिन् भपञ्जरे सखेचरे शीघ्रतरे भ्रमत्यपि खेचरा इन्द्रदिशं चरन्ति पूर्वाभिमुखं व्रजन्ति। नीचोच्चतराश्रवर्त्मसु। अनन्तरकथितेषु स्वस्व-मार्गेषु तेषां प्राग्भ्रमणम्। तत् तदल्पगत्या प्रत्यग्-गतेर्बहुत्वात् प्रागल्पगत्या व्रजन्तो नोपलक्ष्यन्ते इति भावः। तथा तस्य भपञ्जरस्य यौ दक्षिणोत्तरावन्तौ तत्र ये तारे ते ध्रुवत्वे नियुक्ते" प्रमिता०। सि०शि० ग्रहाणां केषां चित् कल्पभगणा अन्यथोक्ता यथा।

"अर्कशुक्रबुधपर्यया विधेरह्नि कोटिगुणिता रदाब्धयः ४३२०००००००। एत एव शनिजीवभूभुवां कीर्त्तिताश्च भचकैश्चलोच्चजाः। खाभ्रखाभ्रगगनामरेन्द्रियक्ष्माधरा-द्रिविषया ५७७५३२०००० हिमद्युतेः। युग्मयुग्म-शरनागलोचनव्यालपक्षनयमाऽश्विनो २२९६८२८५२२ ऽब्जजः। सिन्धुसिन्धुरनवाष्टगोऽङ्कषट्सप्ताङ्कसप्तशशिनो १७९३६९९८९८४ शशीघ्रजाः। पञ्चपञ्चयुगषट्कलोचन-द्व्यब्धिषड्गुणमिता ३६४२२६४५५ गुरोर्मताः। द्विनन्द-वेदाङ्कगजाग्निलोचनद्विशून्यशैलाः ७०२२३८९४९२ सित-शीघ्रपर्ययाः। भुजङ्गनन्दद्विनगाङ्कबाणषट्शतेन्दवः १४६५६७०२९८ सूर्यसुतस्य पर्ययाः। खाष्टाब्धयो ४८० ऽष्टाश्वगजेषुदिग्द्विपद्विपाब्धयो ४८८१०५८५८ द्व्यङ्कयमा २९२ रदाग्नयः ३३२। शरेभिभा ८५५ स्वर्णदशाः ६५३ कृशानराः ४१ सुः पूर्वगत्या तरणेरुदूच्चजाः। गजाष्टिभर्मैतिरदाश्विनः ३२२३१११६८ कुम्भदूसाश्विनः २६७ कुद्विशराः ५२१ कृमर्त्तवः ६३। त्रिनन्दनागा ८९३ युगकुञ्जरेषवो ५८४निशाकराद्यस्तगपातपर्ययाः" सि०। ग्रहाणां पूर्वगत्या गच्छतां कल्प एतावन्तो भगणा भ-वन्ति। तथा मन्दोच्चानां चलोच्चानां च प्राग्गत्या एता-वन्तः पर्यया भवन्ति। तथा पातानां पश्चिमगत्या एता-वन्तो भवन्ति। अत्रोपपत्तिः। सा तु गत्यज्ञानकुशलेन तत्तत्क्षेत्रसंस्थानज्ञेन स्फुटगोलेनैव ज्ञातुं शक्यते नान्येन। ग्रहमन्दशीघ्रोच्चपाताः स्वस्वमार्गेषु गच्छन्तः एतावतः पर्ययान् कल्पे कुर्वन्तीत्यत्रागम एव प्रमाणम्। स

चागमो महता कालेन लेखकाध्यापकाध्येतृदोषैर्बहुधा जातस्तदा कतमस्य प्रामाण्यम्। अथ यद्येवमुच्यते गणितस्कन्धे उपपत्तिमानेवागमः प्रमाणम्। उपपत्त्या ये सिध्यन्ति भगणास्ते ग्राह्याः। तदपि न। यतोऽतिमात्रेण पुरुषेणोपपत्तिर्ज्ञातुमेव शक्यते। न तथा तेषां भगणानामियत्ता कर्तुं शक्यते पुरुषायुषोऽल्पत्वात्। उपपत्तौ तु ग्रहः प्रत्यहं यन्त्रेण वेध्यः भगणान्तं यावत्। एवं शनैश्चरस्य तावत्त्रिंशता वर्षैर्भगणः पूर्यते। मन्दोच्चानां तु वर्षशतैरनेकैः। अतो नायमर्थः पुरुषसाध्य इति। अत एवातिप्राज्ञा गणकाः साम्प्रतोपलब्ध्यनुसारिणं प्रौढगणककल्पितं कमप्यागममङ्गीकृत्य ग्रहगणिते आत्मनो गणितगोलयोर्निरतिशयं कौशलं दर्शयितुं तथान्यैर्भ्रान्तिज्ञानेनान्यथोदितानर्थांश्च निराकर्तुमन्यान् ग्रन्थान् रचयन्ति। ग्रहगणित इति कर्तव्यतायामस्माभिः कौशलं दर्शनीयं भवत्वागमो योऽपि कोऽप्यसमाश्रयस्तेषाम्। यथात्र ग्रन्थे ब्रह्मगुप्तस्वीकृतागमोऽङ्गीकृत इति। तर्हि तिष्ठतु तावदुपपत्त्या भगणानामियत्तासाधनम्। अथ यद्युपपत्तिरुच्यते तर्हि इतरेतराश्रयदोषशङ्कया वक्तुमशक्या। तथापि संक्षिप्तामुपपत्तिं वक्ष्यामः। इतरेतराश्रयदोषोऽत्र दोषाभासः। उपपत्तिभेदानां यौगपद्येन वक्तुमशक्यत्वात्। अथोच्यते अर्कशुक्रबुधपर्यया त्रिभेरित्यादि। यावन्ति कल्पे वर्षाणि तावन्त एव सूर्यभगणा इत्युपपन्नम्। यतो भगणभोगकालो हि वर्षमुक्तम्। बुधशुक्रौ तु रवेरासन्नावेव कदाचिदग्रतः कदाचित् पृष्ठतस्तस्यानुचराविव सदा व्रजन्तौ दृश्येते। अतस्तयोरपि रविभगणतुल्या भगणा इत्युपपन्नम्। चलोच्चभगणोपपत्तिमग्रे वक्ष्यामः। अथ समायां भूमावभीष्टकर्कटकेन त्रिज्यामिताङ्कैरङ्कितेन वृत्तं दिगङ्कितं भगणांशैरङ्कितं कृत्वा तत्र प्राचीचिह्नाद्दक्षिणतो नातिदूरे प्रदेशे उत्तरेऽयने वृत्तमध्यस्थितेन कीलेन रवेरुदयो वेध्यः। ततोऽनन्तरं वर्षमेकं रव्युदया गणनीयाः। ते च पञ्चषष्ट्यधिकशतत्रय ३६५ तुल्या भवन्ति। तत्रान्तिमोदयः पूर्वोदयस्थानादासन्नो दक्षिणत एव भवति। तयोरन्तरं विगणय्य ग्राह्यम्। ततोऽन्यस्मिन् दिने पुनरुदयो वेध्यः। स तु पूर्वचिह्नादुत्तरत एव भवति। तदप्युत्तरमन्तरं ग्राह्यम्। ततोऽनुपातः। यद्यन्तरद्वितयकलाभिरेकीकृताभिः षष्टि ६० घटिका लभ्यन्ते तदा दक्षिणेनान्तरेण किमिति। अत्र लभ्यन्ते

पञ्चदश घटिकास्त्रिंशत् पलानि सार्धानि द्वाविंशतिर्विपलानि १५। ३०। २२। ३०। आभिर्घटीभिः सहितानि पञ्चषष्ट्यधिकशतत्रयतुल्यानि सावनदिनान्यर्कवर्षे भवन्ति ३६५। १५। ३०। २२। ३०। ततोऽनुपातः। यद्येकेन वर्षेणैतावन्ति कुदिनानि तदा कल्पवर्षैः किमिति। एवं ये लभ्यन्ते ते सावनदिवसा भवन्ति कल्पे। अथ यदि तैरेव रवेर्भगणान्तःपातिभिः कुदिनैश्चक्रकला लभ्यन्ते तदेकेन किमिति। फलं मध्यमा रविगतिरित्युपपन्नम्। अथ चन्द्रभगणोपपत्तिः। तत्रादौ तावद् ग्रहवेधार्थं गोलबन्धोक्तविधिना विपुलं गोलयन्त्रं कार्यम्। तत्र खगोलस्यान्तर्भगोल आधारवृत्तद्वयस्योपरि विषुवद्वृत्तम्। तत्र च यथोक्तं क्रान्तिवृत्तं भगणांशाङ्कितं च बध्वा कदम्बद्वयकीलकयोः प्रोतमन्यद्द्वयं ग्रहवेधवलयम्। तच्च भगणांशाङ्कितं कार्यम्। तत्र तद्गोलयन्त्रं सम्यग् ध्रुवाभिमुखयष्टिकं जलसमक्षितिजवलयं च यथा भवति तथा स्थिरं कृत्वा रात्रौ गोलमध्यचिह्नगतया दृष्ट्या रेवतीतारां विलोक्य क्रान्तिवृत्ते यो मीनान्तस्तं रेवतीतारायां निवेश्य मध्यगतयैव दृष्ट्या चन्द्रं विलोक्य तद्वेधवलयं चन्द्रोपरि निवेश्यम्। एवं कृते सति वेधवृत्तस्य क्रान्तिवृत्तस्य च यः संपातस्तस्य मीनान्तस्य च यावदन्तरं तस्मिन् काले तावान् स्फुटश्चन्द्रो वेदितव्यः। क्रान्तिवृत्तस्य चन्द्रबिम्बमध्यस्य च वेधवृत्ते यावदन्तरं तावांस्तस्य विक्षेपः। ततो यावतीषु रात्रिगतघटिकासु वेधः कृतस्तावतीष्वेव पुनर्द्वितीयदिने कर्तव्यः। एवं द्वितीयदिने स्फुटचन्द्रं ज्ञात्वा तयोरन्तरं सा तद्दिने स्फुटा गतिः। अथ तौ चन्द्रौ "स्फुटग्रहं मध्यखगं प्रकल्प्येत्यादिना" मध्यमौ कृत्वा तयोरन्तरं या मध्यमा चन्द्रगतिः। तयाऽनुपातः। यद्येकेन दिनेनैतावती चन्द्रगतिस्तदा कुदिनैः किमित्येवं चन्द्रभगणा उत्पद्यन्ते। तथा चाह श्रीमान् ब्रह्मगुप्तः "ज्ञातं कृत्वा मध्यं भूयोऽन्यदिने तदन्तरं भुक्तिः। त्रैराशिकेन भुक्त्या कल्पग्रहमण्डलानयनम्" ॥ एवमन्येषामपि भगणोपपत्तिः। अथ चन्द्रोच्चस्य। एवं प्रत्यहं चन्द्रवेधं कृत्वा स्फुटगतयो विलोक्याः। यस्मिन् दिने गतेः परमाल्पत्वं दृष्टं तत्र दिने मध्यम एव स्फुटचन्द्रो भवति। तदेवोच्चस्थानम्। यत उच्चसमे ग्रहे फलाभावो गतेश्च परमाल्पत्वम्। ततश्च तस्माद्दिनादारभ्यान्यस्मिंश्चन्द्रपर्यये प्रत्यहं चन्द्रवेधात् तथैवोच्चस्थानं ज्ञेयम्। तत्र

पूर्वस्थानादग्रत एव भवति। यत् तयोरन्तरं तज्ज्ञात्वाऽनुपातः क्रियते। यद्येतावद्भिरन्तरदिनैरिदमुच्चयोरन्तरं लभ्यते तदैकेन किमिति। फलं तुङ्गगतिः। तयाऽनुपातात् कल्पभगणाः। अथ चन्द्रपातभगणोपपत्तिः। एवं प्रत्यहं चन्द्रवेधाद्दक्षिणविक्षेपे क्षीयमाणे यस्मिन् दिने विक्षेपाभावो दृष्टः क्रान्तिवृत्ते तत् स्थानं चिह्नयित्वा तत्र यावान् विधुः स भगणाच्छुद्धः पातः स्यादिति ज्ञेयम्। पुनरन्यस्मिन्नपि पर्यये दक्षिणविक्षेपाभावस्थानं ज्ञेयम्। क्रान्तिवृत्ते तत् स्थानं पूर्वस्थानात् पश्चिमत एव भवति। अतो ज्ञाता पातस्य विलोमा गतिः। सा चानुपातात्। यद्येतत्कालान्तरदिनैरेतावत् पातयोरन्तरं लभ्यते तदैकेन किमिति। फलं पातगतिः। तया प्राग्वत् कल्पभगणाः। अथ रविभगणोपपत्तिः। मिथुनान्ते रवौ कस्मिंश्चिद्दिने रेवतीतारकोदयाद्यावतीभिर्घटिकाभी रविरुदितस्तावतीभिर्मीनाद्याल्लग्नं साध्यम्। यल्लग्नं स तदा स्फुटो रविर्ज्ञेयः। एवमन्यस्मिन् दिनेऽपि। तयोः स्फुटार्कयोरन्तरं स्फुटा गतिः। एवं प्रत्यहं स्फुटगतयो ज्ञातव्याः। यस्मिन् दिने गतेः परमाल्पत्वं तद्दिने यावान् रविस्तावदेव रवेरुच्चं भवति। तस्योच्चस्य चलनं वर्षशतेनापि नोपलभ्यते। किन्त्वाचार्यैश्चन्द्रमन्दोच्चवदनुमानात् कल्पिता गतिः। सा चेयम् यैर्भगणैः साम्प्रताहर्गणाद्वर्षगणाद्वा एतावदुच्चं भवति ते भगणा युक्त्या कुट्टकेन वा कल्पिताः। अथान्येषां शीघ्रोच्चोपपत्तिः। तत्र "एत एव शनिजीवभूभुवामित्यादि"। उच्चो ह्याकर्षको भवति। तेन स्वकक्षामण्डले भ्रमन् ग्रहः स्वाभिमुखमाकृष्यते। तेनाकृष्टः सन् कक्षामण्डले मध्यग्रहादग्रतः पृष्ठतो वा यावतान्तरेण दृश्यते तावत् तस्य फलं मान्दं शैघ्र्यं वा। ननूच्चो नाम प्रदेशविशेषस्तेन कथमाकृष्यते? अतस्तस्य देवतारूपत्वमुक्तं सूर्यसिद्धान्ते। "अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रिताः। शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः। तद्वातरश्मिभिर्बद्धास्तैः सव्येतरपाणिभिः। प्राक् पश्चादपकृष्यन्ते यथासन्नं स्वदिङ्मुखम्" इत्यादि। एवमुच्चस्य देवताविशेषत्वेनाङ्गीकृतत्वाददोषः। एतदुक्तं भवति। शनेर्जीवात् कुजाद्वा यदा रविरग्रे वर्त्तते तदा मध्यग्रहात् स्फुटग्रहोऽग्रतो दृश्यते। यदा तु पृष्ठगतोऽर्कस्तदा मध्यात् स्फुटग्रहः पृष्ठतो दृश्यते। अतस्तेषां तथात्वात् रविरेव शीघ्रोच्चं पौरैः कल्पितम्। अतो रविभगणतुल्याः शीघ्रोच्चभगणा इत्युपपन्नम्। अथ मन्दोच्चोपपत्तिः। तत्र वेधेन स्फुटग्रहं ज्ञात्वा तं मन्दस्फुटं प्रकल्प्य ततः शीघ्रफलमानीय तत् तस्मिन् स्फुटे विलोमं कृत्वैवमसकृन्मन्दस्फुटो ज्ञेयः। एवं प्रत्यहं मन्दस्फुटमुपलभ्य स मन्दस्फुटो धनर्णे मन्दफले क्षीयमाणे यस्मिन् दिने मध्यमतुल्यो भवति तदा तत्तुल्यमेव मन्दोच्चं ज्ञेयम्। ततस्तस्माद्रविमन्दोच्चवद्भगणाः कल्प्याः। एवं सर्वेषाम्। अथ बुधशुक्रयोः शीघ्रोच्चोपपत्तिः। तत्र रविशुक्रयोः पूर्वस्यां दिशि चक्रयन्त्रवेधेनान्तरभागा ज्ञेयाः। ते तयोः स्फुटयोरन्तरांशा जातास्तैः स्फुटार्काद्योजितैः स्फुटः शुक्रो भवति। ततः शुक्रस्य मन्दफलमानीय तत् स्फुटे शुक्रे धनर्णं व्यस्तं कार्यम्। रविश्च मध्यमः कार्यः। तयोर्यदन्तरं तच्छीघ्रफलमृणं धनं च ज्ञेयम्। एवं प्रतिदिनवेधेन तच्छीघ्रफलं परममृणं ज्ञातव्यम्। तत् तादृक् फलमर्कात् तिर्यक्स्थितेनोच्चेनाकृष्टस्य भवति। तच्च तिर्यक्स्थत्वं त्रिभान्तरितस्य स्यात्। अतस्तत्र त्रिभोनेन स्फुटशुक्रेण तुल्यं शीघ्रोच्चं ज्ञेयम्। एवं पुनरन्यस्मिन् पर्यये प्राच्यामेवान्यच्छीघ्रोच्चं ज्ञात्वानुपातः क्रियते। यद्येतत्कालान्तरदिनैस्तयोरुच्चयोरन्तरं लभ्यते तदैकेन किमिति। फलं तुङ्गगतिः। प्राग्वत् तया भगणाः। एवं बुधस्यापि। अथ भौमादीनां वेधेन प्राग्वद्दक्षिणविक्षेपाभावस्थाने यावान् मन्दस्फुटो ग्रहस्तच्चक्रशुद्धस्तावान् पातः। बुधशुक्रयोस्तु तदा मन्दफलव्यस्तसंस्कृतं यावच्छीघ्रोच्चं चक्रशुद्धं तावान् पातो ज्ञेयः। ततः प्राग्वद्भगणकल्पना। अथ भभ्रमानाह" प्रमि०। "खखेषुवेदषड्गुणाक्षतीभभूतभूमयः। शताहता १५८२२३६४५०००० भपश्चिमभ्रमा भवन्ति काहनि" काहनि ब्रह्मदिने एतावन्तो भानां पश्चिमभ्रमा भवन्ति। अत्रोपपत्तिर्गोले "समं भूस्थयार्युदितावित्यादिना" कथिता व्याख्याता च। अथ सूर्याहांश्चान्द्राहांश्चाह" प्रमि०। "विधिदिने दिनस्य दिवसाः करेन्द्रियशरेषुभुवोऽम्बुदसंगुणाः १५५५२०००००००० । नवनवाङ्कराभ्ररसेन्दवः प्रयुतसंगुणिता १६०२९९९०००००० विधुवासराः"॥ अत्रोपपत्तिः। रविवर्षाणि (४३२००००००।३६० गुणितानि) दिनीकृतानीति सुगमम्। चन्द्रार्कयोर्यावन्तः कल्पे योगास्तावन्तः किल शशिमासाः। ते तु योगा भगणान्तरतुल्याः स्युः। उभयोरपि प्राग्गमनात्। अतो भगणान्तरतुल्याः शशिमासा भवन्ति। ते त्रिंशद्गुणाः शशिदिवसाः

भवन्तीत्युपपन्नम् । अथ कुदिनान्याह । भूदिनानि शरवेदभूपगोसप्तसप्ततिथयोऽयुताहताः १५७७९१६४५०००० । भभ्रमास्तु भगणैर्विवर्जिता यस्य तस्य कुदिनानि तानि वा" ॥ एषामुपपत्तिः प्रागेवोक्ता । एकस्मिन् रविवर्षे यावन्तो भभ्रमाः स्युस्तावन्त एवैकोना रविसावनदिवसा भवन्ति । यतो रविः प्राग्गत्या एकं पर्ययं गतः । अतो भगणसंख्ययोना भभ्रमाः कुदिना भवन्ति । एवमन्येषामपि ग्रहाणां कुदिनानि स्युरित्युपपन्नम्" प्रमि० इदानीं कलिगतादहर्गणादिकमाह । "कलिगतादथवा दिनसंचये दिनपतिर्भृगुजप्रभृतिस्तदा । कलिमुखध्रुवकेण समन्वितो भवति तद्द्युगणोद्भवखेचरः" सि० शि० "अत्र कलिगताहर्गणेऽयं विशेषः । शुक्राद्यो वारो गणनीयः । यतः कल्पगताहर्गणात् कलिमुखे शुक्रवारो भवति । तत्र च ये ग्रहास्ते ध्रुवसंज्ञाः कल्पिताः । तद्द्युगणभवः खेचरश्च कलिमुखध्रुवकेण समन्वितः कार्य इत्यत्र वासनापि सुगमा । इदानीं कलिमुखग्रहानाह" प्रमि० । "खाद्रिरामाग्नयः २३७० कुजिनरामाङ्कका ९३२१ वेदवेदाङ्कचन्द्रा १९४४ विलिप्ताः क्रमात् । षड्रसाङ्काब्धयो ४९६६ ऽङ्काभ्रवेदाब्धयो ४४०९ वेदषट्काभ्रभूपाभ्रभूसंमिताः १०१६०६४ । वेदचन्द्रद्विवेदाब्धिनागाः ८४४२१४ करद्व्यब्धिवेदाब्धिशैलं ७४४४२२ भवेयुः कुजात् । द्वापरान्तध्रुवाश्चक्रशुद्धास्तथा सूर्यतुङ्गेन्दुतुङ्गेन्दुपातोद्भवाः" सि० शि० । "कुजादीनां सर्वेषां ध्रुवाश्चक्रशुद्धाः पठिता लाघवार्थम् स्पष्टार्थमिदम्" प्रमि०

कल्यादौ ग्रहाः ।

| मं. | बु. | गु. | शु. | श. | रतु. | चंतु. | चंपा |
|---|---|---|---|---|---|---|---|
| ११ | ११ | ११ | ११ | ११ | २ | ४ | ५ |
| १९ | २७ | २९ | २८ | २८ | १७ | ५ | ३ |
| ३ | २४ | २७ | ४२ | ४६ | ४५ | २९ | १२ |
| ५० | २९ | ३६ | १४ | ३४ | ३६ | ४६ | ५८ |

अत्र बालावबोधार्थं रूपमहर्गणं कृत्वा ग्रहाणां सावन दिनगतयः साधिताः ।

| र | चं | मं | बु | गु | शु | श | उ | पा |
|---|---|---|---|---|---|---|---|---|
| ० | १२ | ० | ४ | ० | १ | ० | ० | ० |
| ५९ | १० | ३१ | ५ | ४ | ३६ | २ | ६ | ३ |
| ८ | ३४ | २६ | ३२ | ५९ | ७ | ० | ४० | १० |
| १० | ५३ | २८ | १८ | ९ | ४४ | २२ | ५३ | ४८ |
| २१ | ० | ७ | २८ | ९ | ३५ | ५१ | ५६ | २० |

दिनगणः स्वषष्ट्यंशोनो भाग इति प्रत्यहं कलोनषष्टिः कला गृहीताः । शेषावयवेन षष्टिभागैः सप्तभिर्दिनैरेका कला भवति" प्रमि० ।

खगोले सप्त वायुस्कन्धाः सि० शि० उक्ताः यथा "भूवायुरावह इह प्रवहस्तदूर्द्ध्वः स्यादुद्वहस्तदनु संवहसंज्ञकश्च । अन्यस्ततोऽपि सुवहः परिपूर्वकोऽस्माद्बाह्यः परावह इमे पवनाः प्रसिद्धाः ॥ भूमेर्बहिर्द्वादश योजनानि भूवायुरत्राम्बुदविद्युदाद्यम् । तदूर्द्ध्वगो यः प्रवहः, स नित्यं प्रत्यग्गतिस्तस्य तु मध्यसंस्था । नक्षत्रकक्षा खचरैः समेतो यस्मात्ततस्तेन समाहतोऽयम् । भपञ्जरः खेचरचक्रयुक्तो भ्रमत्यजस्रं प्रवहानिलेन" । श्रीपतिः "स्यादावहः प्रवह उद्वहसंवहौ च स्यात्विवहः परिवहश्च परावहश्च । स्कन्धाः क्रमेण मरुतामिह सप्तसंख्या विश्वम्भरापवनमावहमाहुरेके" ।

मतभेदेन भूगोलभगोलयोश्चलाचलत्वविप्रतिपत्तौ भगोलस्यैव भ्रमणं सि० शि० मु० को० निरूपितं यथा "यान्तो भचक्रे लघुपूर्वगत्या खेटास्तु तस्यापरशीघ्रगत्या । कुलालचक्रभ्रमिवामगत्या यान्तो न कीटा इव भान्ति यान्तः" सि० शि० । आर्य्यभट्टमते तु भूमेरेव चलनं व्यवस्थापितं यथा

"अनुलोमगतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत् । अचलानि भानि तद्वत् समपश्चिमगानि लङ्कायाम्" । अनेन भूमेरेव गतिर्भचक्रस्य भ्रमणभ्रम इत्युक्तम् तेन च भचक्रस्थानां ग्रहाणामुदयास्तमयनिमित्तं भ्रमणमङ्गीकृतम् यथा "उदयास्तमयनिमित्तं प्रवहेन वायुना क्षिप्तः । लङ्कायां समपश्चिमगो भपञ्जरः सग्रहो भ्रमति" अत उदयास्तमयनिमित्तत्वेन ग्रहगतिस्वीकारेण कालभेदे शुक्रादीनामिव रवेरुदयास्तमयाभावात् न गतिमत्त्वं प्रत्यहमुदयास्तमयौ तु तस्य भूगत्यैव सम्भवतः भूमिवृत्ताद्येनाच्छादनाद्दृश्यत्वाभावेनास्तत्वमिति भेदः । अत्रेदं बोध्यम् ग्रहगतिस्वीकारेणैव सर्वोपपत्तौ भूगतिस्वीकारोऽनर्थक इत्यभिप्रेत्य श्रीपतिना आर्य्यभट्टमतमुपन्यस्य तत्र दूषणमुक्त्वा भगोलस्यैव भ्रमणमुपपादितं यथा "नौस्थोविलोमगमनादचलं यथावद्या मन्यते चलति नैवमिलाभ्रमेण । लङ्कासमापरगतिप्रचलद्भचक्रमाभाति सुस्थिरमपीति वदन्ति केचित् । यद्येवमम्बरचरा विहगाः स्वनीडमासादयन्ति न खलु भ्रमणे धरित्र्याः । किञ्चाम्बुदा अपि न भूरिपयोमुचः स्युर्देशस्य पूर्वगमनेन चिराय हन्त ।

भूगोलवेगजनितेन समीरणेन केत्वादयोऽप्यपरदिग्गतयः सदा स्युः । प्रासादभूधरशिरांस्यपि संपतन्ति तस्माद्भ्रमत्युडुगणस्त्वचलाऽचलैव"। रङ्गनाथोऽपि "यदि च भ्रमति क्ष्मा तदा स्वकुलायं कथमाप्नुयुः खगाः । इषवोऽभिनभः समुज्झिता निपतन्तः स्युरपांपतेर्दिशि । पुरतोऽभिमुखे भ्रमे भुवो वरुणाशाभिमुखो व्रजेद्घनः । अथ मन्दगमात् तथा भवेत् कथमेकेन दिवा परिभ्रमः" इत्याह ।

सि॰ शि॰ भूमेरेव स्थितत्वं व्यवस्थापितं यथा "भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षावृत्तैर्वृत्तो वृतः सन् मृदनिलसलिलव्योमतेजोमयोऽयम् । नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीहास्य पृष्ठे निष्ठं विश्वं च शश्वत् सदनुजमनुजादित्यदैत्यं समन्तात् । सर्वतः पर्वतारामग्रामचैत्यचयैश्चितः । कदम्बकुसुमग्रन्थिः केसरप्रसरैरिव" सि॰ शि॰ । "योऽयं मृदनिलसलिलव्योमतेजोमय इति पाञ्चभौतिको भूमेः पिण्डो वृत्तो वर्त्तुलाकारश्चन्द्रादिस्थैः शशाङ्कादिकक्षावृत्तैरावृतः स नन्याधारः स्वशक्त्यैव नियतं निश्चितं वियत्याकाशे तिष्ठति । तत्पृष्ठनिष्ठं च जगत् । सदनुजमनुजादित्यदैत्यम् । दनुजा दानवाः । मनुजा मानवाः । आदित्या देवाः । दैत्या असुराः । तैः समेतं समन्तात् तिष्ठति । शेषं स्पष्टार्थम्" प्रमि॰ । इदानीं पुराणेषु भूमेराधारपरम्परा या पठिता तां निराकुर्वन्नाह । "मूर्त्तो धर्त्ता चेद्धरित्र्यास्ततोऽन्यस्तस्याप्यन्योऽस्यैवमत्रानवस्था । अन्त्ये कल्प्या चेत् स्वशक्तिः किमाद्ये किं नो भूमेः साष्टमूर्त्तेश्च मूर्त्तिः" सि॰शि॰ । कथमियं भूमेः स्वशक्तिरित्याशङ्कां परिहरन्नाह । "यथोष्णताऽर्कानलयोश्च शीतता विधौ, द्रुतिः के कठिनत्वमश्मनि । मरुच्चलो भूरचला स्वभावतो यतो विचित्रा बत वस्तुशक्तयः । आकृष्टिशक्तिश्च मही तया यत् खस्थं गुरु स्वाभिमुखं स्वशक्त्या । आकृष्यते तत्पततीव भाति समे समन्तात् क्व पतत्वियं खे" सि॰शि॰ । "आकृष्टिशक्तिश्च महीत्यनेन भूमेरधःपतनशङ्का तत्तिर्यगधःस्थितानां चाधःपतनशङ्का निरस्ता" प्रमि॰ । तथाप्यत्रापि युक्तिरत्र दर्शिता यथा "विलोक्याङ्गा भ्रमतश्च परिभ्रमम्" । "यदा भरणीस्थो रविर्भवति तदा तस्यास्तमयकाले ध्रुवमत्स्यस्तिर्यक्स्थो भवति । तस्य मुखतारा पश्चिमतः, पुच्छतारा पूर्वतः । तदा मुखताराक्रमे रविरित्यर्थः । अथ निशावसाने मुखतारा परिवर्त्य पूर्वतो याति । पुच्छतारा पश्चिमतो याति । ततो मुखताराक्रमगतस्यैवार्कस्योदयो दृश्यते" प्रमि॰ । अत्रायमाशयः यदि भूमेरेव चलनं न भचक्रस्य चलनमुररीक्रियेत तदा ध्रुवमत्स्यस्य ध्रुवतारासन्निकटस्थाने भचक्रे स्थितस्य स्थूलतारात्मकताराद्वयस्य ध्रुवचतुर्दिक्षु भचक्रभ्रमणवत् पश्चात् प्रत्यहमेकेनाह्ना परिभ्रमणं दृश्यते भरणीस्थे सूर्य्ये च अस्तमयकाले ध्रुवमत्स्यस्य मुखतारायाः पश्चिमस्थत्वं पुच्छतारायाश्च पूर्वस्थत्वं दृश्यते दृश्यते च निशावसाने तयोर्दिग्विपर्ययः । भूमेरेव चलनात् तस्योदयास्तमयस्वीकारे यथास्थितैकरूपेणावस्थानमपि दृश्येत न च तथा दृश्यते । अतो भचक्रस्यैव चलनात् सर्वव्यवहारोपपत्तौ मुधा भूमेश्चलनाङ्गीकारेण । एवं सप्तर्षिमण्डलस्य मरीच्यादिक्रमेण निशामुखे उदयसमये पूर्वस्थत्वमस्तमयकाले निशावसाने च तद्विपर्ययेणावस्थानं भचक्रभ्रमणं विनाऽनुपपन्नमेव तेषां च राशिचक्रे यथा पूर्वादिक्रमेण स्थितिः शतवर्षेणैकैकनक्षत्रभोगस्तथा ऋषिशब्दे १४५ पृ॰ दर्शितम् । अत्र श्रीपतिना "प्रासादशिरांसि पतन्तीति" यदुक्तं तदापाततः भूमेः खोर्द्ध्वाकाशविभागस्थानस्थानां तथाकृष्टमूर्त्तीनामेव भूमौ पतनमिति नियमेन स्वाधिष्ठिततया भूभागस्यैवाधोभागतत्त्वे च पतनसम्भवात् तेन न प्रासादशिरःपतनसम्भवः "क्वाधःपतेदिति वाक्यपर्य्यालोचनया तथैवावगमादिति सुधीभिर्भाव्यम् । भूचलने अन्येऽपि दोषाः सम्भवन्ति । तथाहि भूपृष्ठपरभागे तुल्ययन्त्रेणाकृष्य क्षिप्तशरयोः समगतिरेव प्रत्यक्षसिद्धा समया गत्या च तुल्यभूमिभागे एव तयोः पतनमुचितम् । भूमेः प्राग्गतित्वाङ्गीकारे च प्राक्क्षिप्तस्याधिकभूम्यन्तरे, पश्चात्क्षिप्तस्य चाल्पभूम्यन्तरे पतनं स्यात् । न च तथा लक्ष्यते । किञ्च द्वादशयोजनात्मकभूवायुना सार्द्धं भूमेः प्राग्गतिस्वीकर्त्तॄणामिङ्गलण्डीयज्योतिर्विदां मतेऽपि प्राग्गतेः शरस्य वायोरनुकूलत्वादपि अधिकगतित्वं प्रत्यग्गतेस्तु प्रतिकूलवायुना प्रतिरोधात् अल्पगतित्वमपि स्रोतोऽनुकूलप्रतिकूलगतिमतोर्गतिभेदवत् स्यात् ।

किञ्च आर्य्यभट्टमते भूमेः स्वकक्षायामेव भ्रमणाङ्गीकारेऽपि इङ्गलण्डीयज्योतिर्भिः प्रत्यहं भूमेरेककारं प्राग्गतावपि वर्षेण च क्रमशः सूर्य्यमण्डलभ्रमणमुररीकृतं तथाऽङ्गीकारे च भूमेः विषुवत्स्थानावधि षड्राशिषु क्रमशो वेष्टमाकारेणोर्द्ध्वगत्या षण्मासोत्तरं सूर्य्यस्योर्द्ध्वे स्थितिः स्यात् । तथा च तदानीं सूर्य्यस्य भूतलापेक्षया यावदुच्चतप्रदेशे स्थिति स्तावद्भिर्योजनैः सूर्य्यस्योर्द्ध्वे भूमेः स्थितिः अवनद्धे

तिर्य्यक्स्थितिः स्यात् तथा स्वीकारे च ध्रुवतारयोरपि विषवतो- नतत्वोन्नतत्वेन दृश्यत्वापत्तिः अयनयोश्च तिर्य्यक्स्थितत्वापत्तिश्च नच तथा दृश्यते सदा एकरूपेणैव तयोर्दर्शनात् न च तयोरतिदूरस्थत्वात् न तथा लोकनं सम्भाव्यते इति वाच्यं भचक्रस्य ध्रुवलग्नत्वेन नक्षत्रकक्षासन्निकृष्टतया ध्रुवस्य स्थितया नक्षत्रकक्षायाश्च सूर्य्यकक्षायाः षष्टिगुणान्तरितत्वात् तदानीं सूर्य्योर्द्ध्वस्थितस्य भूमण्डलस्य ततोऽल्पान्तरेण स्थितेरतिदूरस्थत्वाभावात् सूर्य्याधःस्थितिकाले च अधिकान्तरे भूमेः सत्त्वावश्यकत्वापत्तेः । नानन्त- योजनैः ध्रुवसन्निकृष्टपूर्वपश्चिमतारात्मकमतुल्यस्य नतोन्नततया तिर्य्यक्तया च दर्शनापत्तेरनुल्लेपत्वात् । किञ्च सूर्य्योर्द्ध्वस्थितिकाले सूर्य्येण सहैकराशिगतानां कुजजीवमन्दादीनामासन्नतातारतम्येन तेषां स्थूलत्वतारतम्येन दर्शनापत्तिः । इत्यादि बहु वक्तव्यमस्ति विस्तरभयान्निरस्यते ।

सि॰शि॰ भूवृत्तादिमानमुक्तं यथा “प्रोक्तो योजनसंख्यया कुपरिधिः सप्ताङ्गनन्दाब्धय४९६७स्तद्व्यासः कुभुजङ्गसायकभवो१५८१ऽथ प्रोच्यते योजनम् । याम्योदक्पुरयोः पलान्तरहतं भूवेष्टनं भांश३६०हृत् तद्भक्तस्य पुरान्तराध्वन इह ज्ञेयं समं योजनम्” सि॰शि॰ । “भूपरिधेरुपपत्तिर्गोले कथिता । योजनलक्षणं गणिते कथितमस्ति । तथाप्यत्र यदुच्यते तत्रेदं कारणम् । भूरेकैव किन्तु यत्त्वार्य्यभट्टादिभिराचार्य्यैः सत्यपि नियामके पलांशदर्शनेऽन्यथाऽन्यथा तत्प्रमाणमभिहितं तत्र षट्सप्ताष्टयवमङ्गुलं कनिष्ठिकादिभेदेन शास्त्रे दृश्यते । तेनाभिप्रायेणाऽन्येन वा तथोक्तम् । याम्योत्तरयोः पुरयोः पलांशान् वक्ष्यमाणप्रकारैर्ज्ञात्वा तेषामन्तरेणानुपातः । यदि भांशपरिधौ दक्षिणोत्तरमण्डल एतावत् पलान्तरं तदा भूपरिधौ पुरान्तरे किमिति । यल्लब्धं तावन्तो विभागाः पुरान्तरस्य क्रियन्ते । यावानेको विभागस्तावद्योजनं ज्ञेयम् । तादृशैर्योजनैर्देशान्तरं कर्त्तव्यमित्यर्थः” प्रमि॰ । इदानीं भूपरिधिस्फुटीकरणं मध्यरेखां चाह । “लम्बज्यागुणितो भवेत् कुपरिधिःस्पष्टस्त्रिभज्याहृतो यद्वा द्वादशसंगुणः स विषुवत्कर्णेन भक्तः स्फुटः । यल्लङ्कोज्जयिनीपुरोपरि कुरुक्षेत्रादिदेशान् स्पृशत् सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः” सि॰ शि॰ । रेखापुराण्याह श्रीपतिः “लङ्का कुमारी नगरी च काञ्ची पानाटमद्रिश्च सितः षडास्यः । श्रीवत्सगुल्मं च पुरी ततश्च माहिष्मती चोज्जयिनी प्रसिद्धा ॥ स्यादाश्रमोऽस्मान्नगरं सुरम्यं ततः पुरं गर्गविराजितास्यम् । श्रीगर्गराटं च सरोहितास्यं स्थानेश्वरं शीतगिरिः सुमेरुः ॥ इतीव याम्योत्तरगां धरायां रेखामिमां लोकविदो वदन्ति । अन्यानि रेखास्थितिभाञ्जि लोके ज्ञेयानि तज्ज्ञैः पुरभेदनानि” ॥

ग्रहाणां प्रतिदिनं स्वकक्षायोजनमितिमानं सि॰शि॰ उक्तम्

“कल्पोद्धृतैः क्षितिदिनैर्गगनस्य कक्षा भक्ता भवेद्दिनगतिर्गगनेचरस्य । पादोनगोऽष्टतिभुमितयोजनानि ११८५८।४५ खेटा व्रजन्त्यनुदिनं निजवर्त्मनीमे” सि॰शि॰ अत्रोपपत्तिः । यदि कल्पदिनैः स्वकक्षामितयोजनानि लभ्यन्ते तदैकेन किमिति । फलं दिनगतियोजनानि । तानि च स्थूलत्वेन तावत् पादोनगोऽष्टतिभूमितानि स्युः” ग्रहाणां दिनभुक्तिमाह” प्रमि॰ । “मन्दोमितास्तु गमनात् फलानि यानि तत्कलाः । भवन्ति मध्यमाः क्रमात्त्वमःसदां द्युभुक्तयः । समा गतिस्तु योजनैर्नभःसदां सदा भवेत् । कलादिकल्पनावशान्मृदुद्रुता च सा स्मृता” सि॰शि॰ । “अत्रोपपत्तिस्त्रैराशिकेन । पूर्वं गतियोजनात्मिका ग्रहाणां तुल्यैवोक्ता । इदानीमतुल्या सा कलादिकल्पनावशात् । इदानीमतुल्यत्वे कारणमाह प्रमि॰

“कक्षाः सर्वा अपि दिविषदां चक्रलिप्ताङ्किताः स्युर्वृत्ते लघ्व्यो लघुनि महति स्युर्महत्यश्च लिप्ताः । तस्मादेते शशिजभृगुजादित्यभौमेज्यमन्दा मन्दाक्रान्ता इव शशधराद्भान्ति यान्तः क्रमेण” सि॰शि॰ । “अतः सर्वा अपि कक्षाश्चक्रलिप्ताभिरेवाङ्किताः । अतो महति वृत्ते महत्यो लिप्ताः स्युः । लघुनि लघ्व्यः । तद्यथा चन्द्रकक्षा सर्वाधःस्था लघ्वी । तस्यामेका कला पञ्चदशभिर्योजनैर्भवति । शनेः कक्षा सर्वोपरिस्था सा महती तस्यामेका कला योजनानां षड्भिः सहस्रैरेकषष्ट्योनै-५९३९ र्भवति । योजनं चतुःक्रोशमेव । अतश्चन्द्रात् सकाशादूर्द्ध्वस्था बुधशुक्रादयः क्रमेण मन्दाक्रान्ता मन्दगतय इव भान्ति” प्रमि॰ ।

ग्रहाणां तुङ्गादिपरिधिभेदकारणम् सि॰शि॰ उक्तं यथा “उच्चस्थितो व्योमचरः सुदूरे नीचस्थितः स्यान्निकटे धरित्र्याः । अतोऽणुबिम्बः पृथुलश्च भाति भानोस्तथासन्नसुदूरवर्त्ती” सि॰शि॰ । इदानीमन्यदप्युपपत्त्यन्तरमाह” प्रमि॰ । “उक्ता मयैवा प्रतिवृत्तभङ्ग्या युक्तिः पृथक् चोच्चसंभ्रमार्थम् । स्फुटीकृतेयां गुरवश्चाह नीचोच्चवृत्तस्य च वक्ति भङ्ग्या” सि॰शि॰ ।

"इह किल स्फुटीकरणयुक्तिः प्रतिवृत्तभङ्ग्या मयोक्ता । अथ तामेव नीचोच्चवृत्तभङ्ग्या वच्मि । इदानीं तां भङ्गिमाह" प्रमि० । "कक्षाख्यमध्यग्रहचिह्नतोऽथ वृत्तं लिखेदन्त्यफलज्यया तत् । नीचोच्चसंज्ञं रचयेच्च रेखां कुमध्यतो मध्यखगोपरिस्थाम् । कुमध्यतो दूरतरे प्रदेशे रेखायुते तुङ्गमिह प्रकल्प्यम् । नीचं तथासन्नतरेऽथ तिर्यङ्नीचोच्चमध्ये रचयेच्च रेखाम् । नीचोच्चवृत्ते भगणाङ्कितेऽस्मिन् मान्द्ये विलोमं निजकेन्द्रगत्या । शैघ्र्येऽनुलोमं भ्रमति स्वतुङ्गादारभ्य मध्यग्रहचरो हि दद्यात् । अतो यथोक्तं मृदुशीघ्रकेन्द्रं देयं निजोच्चादुदुचरस्तदग्रे । दोर्ज्यैवरेखावधिखेटतः स्यात् तिर्यक्स्वरेखावधि कोटिजीवा" सि०शि० । "प्राग्वत् कक्षावृत्तं चक्रांशाङ्कितं कृत्वा तत्र मध्यग्रहं च दत्त्वा ग्रहचिह्नेऽन्त्यफलज्याप्रमाणेनान्यवृत्तं लिखेत् । तन्नीचोच्चसंज्ञवृत्तम् । अथ भूमध्याद्ग्रहोपरिगता रेखा किञ्चिद्दीर्घा कार्या । सा नीचोच्चरेखा । नीचोच्चवृत्ते भूमेर्दूरतरे प्रदेशे रेखायुते उच्चं प्रकल्प्यम् । आसन्ने रेखायुते नीचम् । नीचोच्चचिह्नाभ्यां मत्स्यमुत्पाद्य तिर्यग्रेखा मध्ये कार्या । तस्मिन् वृत्ते केन्द्रगत्योच्चस्थानादारभ्य मध्यग्रहो भ्रमति । मान्द्ये विलोमं, शैघ्र्येऽनुलोमम् । अतः कारणान्मान्दकेन्द्रमुच्चाद्विलोमं देयम् । शीघ्रकेन्द्रमनुलोमम् । तदग्रे ग्रहः" प्रमि० ।

ग्रहाणामस्तकालांशाश्च सि०शि० उक्ताः

तत्र वाक्यं १९९१पृ० कालशब्दे उक्तम् । ग्रहबिम्बानां गोलाकारत्वेऽपि सूर्याभिमुखानामेव द्युतिलाभः यथाह्यार्यभट्टः । "भूग्रहभानां गोलार्द्धानि यथा विवर्णानि । अर्द्धानि यथासारं सूर्याभिमुखानि दीप्यन्ते" । सि०शि० रविचन्द्रराहुबिम्बमानम् उक्तं यथा "बिम्बं रवेर्द्विद्विशरर्तु ६५२२ संख्यानीन्दोः खनागाम्बुधि४८० योजनानि । भूव्यासहीनं१५८१ रविबिम्बमिन्दुःकर्णाहतं भास्करकर्णभक्तम् ; भूविस्तृतिर्लब्धफलेन हीना भवेत् कुभाविस्तृतिरिन्दुमार्गे" सि०शि० । "सूर्यस्य बिम्बं मध्यमं द्विशराङ्गषट्कतुल्यानि ६५२२ योजनानि । इन्दोस्तु शून्यवसुवेद ४८० मितानि । राहोरुच्यते । रविबिम्बं ६५२२भूव्यासेन १५८१ हीनं कृत्वेन्दुकर्णेन स्फुटेन योजनात्मकेन संगुण्य रविकर्णेन स्फुटेन भजेत् फलेन भूव्यासो वर्जितश्चन्द्रकक्षायां भूभाव्यासो भवति । एतानि योजनबिम्बानि । अत्रोपपत्तिः । यस्मिन् दिनेऽर्कस्य मध्यतुल्यैव स्फुटा गतिः स्यात् । तस्मिन् दिने उदयकाले चक्रकलाव्यासार्धमितेन अतिदृढतयेन सूत्रमिलितेन तत्रस्थयष्ट्या तद्यष्ट्यां बिम्बप्रान्तौ विध्येत् । या यष्ट्यग्रयोरन्तरकलास्ता रविबिम्बकला मध्यमाः भवन्ति ताश्च द्वात्रिंशत् किञ्चिदधिकैकत्रिंशद्विकलाधिकाः ३२।३१ ३३ । एवं विधोरपि पौर्णमास्यां यदा मध्यैव गतिः स्पष्टा विध्येत् तस्यैवं किञ्चिदधिकाः द्वात्रिंशत् कलाः ३२।०।१९ उत्पद्यन्ते बिम्बकलानां योजनीकरणायानुपातः । यदि त्रिज्याव्यासार्धे एतावत्प्रमाणं बिम्बं तदा पठितस्फुटयोजनैः किमित्येवमुत्पद्यन्ते द्विद्विशरर्तु ६५२२ संख्यानि योजनानि । विधोस्तु खनागाम्बुधिः ४८० मितानीति" "अत्र श्रीपतिः व्याप्ता रवीन्दुच्छितिगोलकानां क्रमेण तेजोजलरूपमयानाम् । सुर्योजनैराकनिशाणषड्भिः ६५२२ व्योमाष्टवेदैः ४८० कुगजेषुचन्द्रैः १५८५" । अन्येषां गुरुगुरुतरकक्षास्थितानां ग्रहाणां गुरुगुरुतरत्वादिकं बोध्यं न तु विशेषसंख्या सौरागमेषूक्ता विष्णुपुराणादौ उक्ताऽपि उपपत्तिहीनत्वादत्र न प्रदर्शिता ।

भास्कराचार्येण स्वल्पान्तरेणाङ्गीकृतानि मेषादिराशिस्थितेऽर्के सावनदिनानि ।

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कु | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ३० | ३१ | ३१ | ३१ | ३१ | ३० | २९ | २९ | २९ | २९ | २९ | ३० |
| ५५ | २४ | ३७ | २८ | २ | २९ | ५७ | २७ | १५ | २४ | ४९ | २२ |
| ३३ | ५६ | ३२ | ३५ | ५२ | ४ | २ | ३९ | ३ | ० | ४३ | ३१ |

एतन्निबन्धनश्लोकाश्च । "त्रिंशत् पञ्चशरा देवा मेषेऽर्के दिवसादिकम् । वृषे धराग्नयः सिद्धाः षट्शरा मिथुने क्रमात् ॥ धराग्नयः सप्तरामा रदाः कर्के धराग्नयः । गजाश्विनोऽब्धिरामाश्च, सिंहे भूवह्नयो द्वयम् ॥ द्विशराश्च, स्त्रियां त्रिंशद्वेदोऽश्विनः श्रुतय, स्तुले । गोऽश्विनोऽद्रिशराः पक्षौ, गोऽश्विनो भानि गोऽग्नयः ॥ कौर्प्ये, धनुषि गोदस्रास्तिथयो वह्नयो, मृगे । गोऽश्विनोऽब्धियमाः, कुम्भे गोदस्रा गोऽब्धयस्तथा ॥ रामाब्धयो, झषे त्रिंशद्रामदस्रा धराग्नयः" ।

सर्वेषां राशीनां त्रिंशद्भागात्मकत्वेऽपि कालभेदेनैव तेषामुदयो देशभेदात् भिन्नएव तेन देशभेदेन दिनरात्रिमानभेदश्च तत्र कारणं च सि०शि०निरूपितं यथा

"यो हि प्रदेशोऽपममण्डलस्य तिर्यक्स्थितोयात्युदयं

तथात्वम्। सोऽल्पेन कालेन य ऊर्ध्वसंस्थोऽनल्पेन सोऽस्तमुदया न तुल्याः। ये उद्गमे याम्यनतास्तु गाद्याः खखापमेनापि निरक्षदेशे। याम्याक्षतस्तेऽतिनतत्वमाप्ता उद्यन्ति कालेन ततोऽल्पकेन। कर्क्यादयः सौम्यनता हि येऽत्र ते यान्ति याम्याक्षवशादृजुत्वम्। कालेन तस्माद्बहुनोदयं ते तदन्तरे स्याच्चरखण्डमेव" सि॰शि॰। "विषुवदहोरात्रवृत्तानि लङ्कायां समपश्चिमगानि राशिवलयं तु मकरादौ परमक्रान्त्या २४ विषुवन्मण्डलाद्दक्षिणतो मिथुनान्ते उत्तरतो लम्बमतस्तिरश्चीनं सदपि मेषः स्वक्रान्त्या महत्या तिरश्चीन उदेति अतोऽल्पकालोदयः वृषभस्तदल्पयातस्तस्मात्किञ्चिदधिककालः मिथुनस्तदल्पयातस्तदधिककालः एवं निरक्षेऽपि न समा उदयाः। अथ ये मकरादयो याम्ये नतास्ते याम्याक्षवशात् अतिनता उद्गच्छन्ति स्वदेशेऽतोऽल्पकालोदयाः, ये तु कर्क्यादयः स्वस्वक्रान्त्या सौम्ये नतास्ते याम्याक्षवशादृजुत्वं गता उद्यन्ति अतश्चिरकालोदयाः लङ्कास्वदेशोदययोरन्तराले स्वचरखण्डमेव भवति यतस्तत्क्षितिजयोरन्तराले चरम्। अथ चरखण्डैरूनाधिकत्वं गोलभ्रमणोपरि यथा प्रतीयते तथाह" प्र॰मि॰। "मेषचक्रपादास्तिथिनाडिकाभिः पृथक् समुद्यन्ति निरक्षदेशे। चक्रार्धमाद्यं च तथा द्वितीयं सर्वत्र पूर्णाग्निमिताभिरेव। मेषादिर्मिथुनान्तो नाडीभिस्तिथिमिताभिरुद्गच्छति। लगति कुजे तदधःस्थे प्रथमं ताभिश्चरोनाभिः। कन्यान्ताद्धनुषोऽन्तं तिथिमितनाडीभिरुद्गलये। लगति कुजे चोर्ध्वस्थे पश्चात्ताभिश्चराढ्याभिः। तद्रहितत्रिंशद्भिः कन्यान्तो वा झषान्तो वा। चरखण्डैरूनाढ्यास्तेन निरक्षोदयाः स्वदेशे स्युः। क्षितिजेऽजादिं कृत्वा गोलं भ्रमयन् प्रदर्शयेत्सर्वम्। उक्तमनुक्तं चान्यत् शिष्याणां बोधजननार्थम्"। सि॰शि॰। चरखण्डकालमाह सि॰शि॰ "उन्मण्डलक्ष्मावलयान्तराले द्युरात्रवृत्ते चरखण्डकालः। तज्ज्यात्र कुज्या चरशिञ्जिनी स्याद्व्यासार्धवृत्ते परिणामिता सा" सि॰शि॰। "क्षितिजोन्मण्डलयोर्मध्येऽहोरात्रवृत्ते यावान् कालः स चरखण्डकालः तत्रोन्मण्डलादुभयतश्चरतुल्येऽन्तरे चिह्नं कृत्वा तयोर्निबद्धसूत्रस्यार्धं कुज्या सैव त्रिज्यावृत्तपरिणता सती चरज्या स्यादित्यादि विमत्रे व्याख्यातम्" प्र॰मि॰।

इदानीं लङ्कास्वदेशावधिभयोरन्तरं चरकालमाह। "निरक्षदेशे क्षितिजाख्यवृत्तमुन्मण्डलं तज्जगुरन्यदेशे। खे खे कुजेऽर्कस्य सदुद्गमोऽस्माच्चरार्धमर्कोदययोस्तु मध्ये" सि॰शि॰। चरफलस्य धनर्णवासनामाह। "आदौ स्वदेशेऽथ निरक्षदेशे सूर्योदयः स्यादुदयोऽस्य पश्चात्। ऋणं गृहेऽस्मादुदये स्वमस्ते फलं चरोत्थं रविसौम्यगोले। याम्ये विलोमं खलु तत्र यस्मादुन्मण्डलं स्यात्क्षितिजादधस्तात्। नाड्याह्वयादुत्तरयाम्यभागौ गोलस्य तावुत्तरयाम्यगोलौ" सि॰शि॰।

चरस्थानञ्च सि॰शि॰ दर्शितं यथा
"यल्लङ्कोज्जयिनीपुरोपरि कुरुक्षेत्रादिदेशान् स्पृशत् सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः। आदौ प्रागुदयोऽपरत्र विषये पश्चाद्धि रेखोदयात् स्यात् तस्मात् क्रियते तदन्तरभवं खेटेष्वृणं स्वं फलम्" सि॰शि॰। "लङ्काया मेरुपर्यन्तं नीयमाना रेखोज्जयिनी कुरुक्षेत्रादिदेशान् स्पृशन्ती या याति सा मध्यरेखेत्युच्यते। रेखायां यदार्कोदयस्तत्कालात् पूर्वमेव पूर्वदेशे भवति। रेखोदयकालादनन्तरं पश्चिमदेशेऽर्कोदयः। तदन्तरालस्तदन्तरयोजनैः स्पष्टभूवेष्टनादनुपातेन ज्ञायते। यदि स्फुटपरिधियोजनैः षष्टिः ६० घटिका लभ्यन्ते तदा रेखास्वपुरयोरन्तरयोजनैः किमितीति त्रैराशिकेन देशान्तरघटिका लभ्यन्ते। मध्यमस्था च या आनीता सा स्वस्थाभिरनुपातः। यदि घटीषष्ट्या ग्रहस्य गतिकला लभ्यन्ते तदा देशान्तरघटीभिः किमिति। अथ योजनैरेवानुपातः। यदि स्फुटपरिधियोजनैर्गतिः प्राप्यते तदा देशान्तरयोजनैः किमिति। फलं कलाः प्राक्स्वं यतस्तत्कालादनुदयः। पश्चादृणम्। यतस्तत्र रेखोदयादनन्तरमर्कोदय इत्युपपन्नम्" प्र॰मि॰।

चरखण्डानयनञ्च सि॰शि॰ "एकस्य राशेर्बृहती च्युता या द्वयोस्त्रिभस्यापि क्रान्तिलिप्तानाम्। स्वस्वापमज्याकृतिवर्जितानां मूलानि तासां त्रिगुणा २४२८ हृतानि। स्वस्वद्युमौर्व्या विभजेत् फलानां चापान्यधोऽधः परिशोधितानि। क्रमोत्क्रमस्थानि निरक्षदेशे मेषादिकानामुदयासवः स्युः" सि॰शि॰। "एकस्य राशेर्बृहती ज्या अष्टमी १७१६ ज्या। द्वयोरिति षोडशी २९७७ ज्या। त्रिभस्येति २०२८ त्रिज्या। आसां वर्गितानां स्वकीयस्वकीयक्रान्तिज्यावर्गैर्वर्जितानां मूलानि त्रिज्यागुणित निस्वस्वद्युज्यया विभजेत्। फलानां चापान्यधोऽधः परिशोधितानीति तृतीयात् द्वितीयं द्वितीयात् प्रथमं शोध्यम्। प्रथमं तथाविधमेव। एवं लङ्कोदयासवः स्युः। अत्रोपपत्तिः। अत्रेक्षतः क्रान्तिवृत्तस्य तिर्यक्स्थितत्वात् त्र-

चापानि येनाभ्युत्पद्यन्ते। तद्यथा मेषान्तस्य ज्या क्रान्तिवृत्ते कर्णः, तत्क्रान्तिज्या बाहुक्षितिजे भुजः। तद्गर्भान्तरपदं मेषान्तेऽहोरात्रवृत्ते कोटिः। एवं राशिद्वयस्य ज्या कर्णः, तत्क्रान्तिज्या भुजः, तद्गर्भान्तरपदं वृषभान्तेऽहोरात्रवृत्ते कोटिः। एवं त्रिराशिज्या कर्णः, परमा क्रान्तिज्या भुजः, परमाल्पद्युज्या कोटिः। एताः कोटयश्चापकरणार्थं त्रिज्यावृत्ते परिणामिताः। त्रिज्यागुणाः स्वस्वद्युज्यया भक्तास्तासां चापानि। प्रथमं मेषोदयस्य चापः। द्वितीयं राशिद्वयस्य। तृतीयं राशित्रयस्य। अतो विश्लेषितानीत्युपपन्नम्" प्रमि०। "इदानीं प्रकारान्तरेणाह। "कीटादिराश्यन्तककोटिजीवाभिज्या २४२८ गुणाः स्वस्वदिनज्ययाप्ताः। चापीकृताः प्राग्वदतो विशुद्धाः कीटादिकानामुदयासवो वा" शि०शि०। "कीटादिराश्यन्तककोटिजीवाः एवं हि त्रिराशिज्या भवन्ति ३।१।२२७०।२४२८ एतास्त्रिज्यया २४२८ गुणाः स्वस्वदिनज्यया भक्ता इति येव वृषभान्ते द्युज्या सैव कीटान्तेऽपि २२१८। सैव मेषान्ते कुज्या सैव सिंहान्तेऽपि २२६६। कर्कान्ते द्युज्या त्रिज्यैव २४२८। त्रिज्या भाज्याः। फलानां चापान्यधोऽधः शुद्धानि कीटादीनामुदयासवः स्युर्निरक्षे वा। त एव मिथुनवृषभमेषाणामित्यर्थः। अत्रोपपत्तिः। क्रान्तिवृत्ते वृषभान्ते सूत्रस्यैकमग्रं बद्ध्वा द्वितीयमग्रं कीटान्ते निबध्यते तस्य सूत्रस्यार्धमेकराशेर्ज्या भवति। एवं सूत्रस्यैकमग्रं मेषान्ते बद्ध्वा द्वितीयं सिंहान्ते तस्य सूत्रस्यार्धं राशिद्वयस्य ज्या भवति। एवं मेषतुलादौ बद्धसूत्रस्यार्धं त्रिज्या। एता एव वृषभान्तमेषान्तमीनान्ताऽहोरात्रवृत्तानां ज्या भवन्ति। यतस्तत्सम्पातेषु क्रान्तिवृत्ते सूत्राणि बद्धानि। अतस्तासां त्रिज्यावृत्तपरिणतानां चापान्तराणि कीटादिकानामुदया भवन्तीति गोले प्रदर्शयेत्"। इदानीं पुनः प्रकारान्तरेणाह प्रमि०। "मेषादिजीवास्त्रिभमौर्विकाघ्नी २१४१ युक्ता हृताः स्वस्वदिनज्यया वा। चापीकृताः प्राग्वदतो विशुद्धा मेषादिकानामुदयासवो वा" शि०शि०। अस्योपपत्तिर्गोले कथितैव सुगमा च। अथ निरक्षांस्तानसूनाह। "लङ्कोदयाः" नागाद्रिभूपा १६७० गुणगोऽद्रिचन्द्राः १७९३ सप्ताङ्गनन्देन्दुमिताः १९३७ अथैते। क्रमोत्क्रमस्थाश्चरखण्डकैः स्वैः क्रमोत्क्रमस्थैश्च विहीनयुक्ताः। मेषादिषण्णामुदयाः स्वदेशे तुलादितोऽमी च विलोमसंस्थाः। उदेति राशिः समयेन येन तत्सप्तमोऽस्तं समुपैति तेन" शि०शि०। अत्र प्रथमप्रकारेण प्रथम उदयो ज्ञायते। द्वितीयप्रकारेण द्वितीयतृतीयौ। "अत्रोपपत्तिः। निरक्षस्वदेशार्कोदययोरन्तरं चरम्। निरक्षे स्वदेशे च मेषादिः सम-सूत्रे स्थिते मेषान्त आदौ स्वक्षितिजे तत उन्मण्डले लगति। अतश्चरखण्डोनो मेषोदयः स्वदेशोदयो भवति। एवं वृषमिथुनयोरपि। कर्क्यादौ तु चरखण्डानामपचीयमानत्वाद्धनं तानि परिणमन्ति। तुलादौ तून्मण्डलस्याधःस्थितत्वाच्चरखण्डानि धनं भवन्ति। मकरादौ तु चरखण्डानामपचीयमानत्वादृणं परिणमन्ति। इत्यादि गोले सम्यगवलोक्यम्" प्रमि०।

दिननिशोर्लङ्घनमहत्त्वे हेतुमाह "अतश्च सौम्ये दिवसो महान् स्याद्रात्रिर्लघुर्व्यस्तमतश्च याम्ये। द्युरात्रवृत्ते क्षितिजादधस्थे रात्रिर्यतः स्याद्दिनमानमूर्द्ध्वे। सदा समत्वं द्युनिशोर्निरक्षे नोन्मण्डलं तत्र कुजाद्यतोऽन्यत्" शि० शि०। "क्षितिजादुपरिस्थेऽहोरात्रवृत्तखण्डे यावान् कालस्तावान् दिवसः यावांस्तदधस्थे तावती रात्रिरिति" प्रमि०। इदानीं विशेषमाह "षट्षष्टिभागाभ्यधिकाः पलांशा यत्राथ तत्राल्पपरो विशेषः। लम्बाधिका क्रान्तिरुदक् च यावत्तावद्दिनं सन्ततमेव तत्र। यावच्च याम्ये सततं तमिस्रा ततश्च मेरौ सततं समार्द्धम्" शि०शि०। "यत्र देशे षट्षष्टे (६६) रधिकाः पलांशास्तत्रायं विशेषः अर्कस्योत्तरा क्रान्तिः (२४) यावत्कालं लम्बाधिका भवति तावत्कालं सततं दिनमेव याम्या क्रान्ति (२४) र्यावत् तावत्सततं रात्रिरेव तद्यथा यत्र किल सप्ततिः (७०) पलांशास्तत्र लम्बो विंशतिः (२०) तत्र देशे विषुवद्वृत्तं दक्षिणक्षितिजादुपरिभागविंशत्योत्तरक्षितिजादधस्तात्तत्र यदा रवेरुत्तरा क्रान्तिर्भागविंशतिर्भवति तदोत्तरक्षितिजे रविबिम्बमर्धोदितं भूत्वा मध्याह्ने दक्षिणक्षितिजादुपरि-याम्योत्तरमण्डले भागचत्वारिंशतोन्नतं भवति तदा त्रिंशद्घटिका दिनदलम् अतो दिनं षष्टिः रात्रिः शून्यं ततो द्वितीयदिने उत्तरक्रान्तेरधिकत्वाद्रविरुत्तरक्षितिजं न स्पृशति एवं प्रतिपर्ययं परमक्रान्ति(२४)र्यावदुपर्युपरि परिभ्रमति एवं मिथुनान्ते उत्तरक्षितिजादुपरिभागचतुष्टयं याति पुनस्तेनैव क्रमेणावरोहति विंशतिभागाधिका क्रान्ति र्यावत्तावत्कालं रविः सततं दृश्यः तावद्दिनमेव अनयैव युक्त्या दक्षिणगोले क्षितिजादधस्थे सततं रात्रिरिति अतएव मेरौ षण्मासं दिनम्" प्रमि०।

तेनात्र देशे सौम्ययाम्ययोर्दिनरात्रिमानं वर्षः।
"विषुवद्वृत्तं कुसदां क्षितिजत्वमितं तथा च दैत्यानाम्। उत्तरयाम्यौ क्रमशोमूर्द्धोर्द्ध्वगतौ ध्रुवौ यतस्तेषाम्। उत्तरगोले क्षितिजादूर्द्ध्वं परितो भ्रमन्तमादित्यम्। सव्यं त्रिदशाः सततं पश्यन्त्यसुरा अपसव्यगं याम्ये" सि॰शि॰। अयनकालभेदे संहितोक्तरम्यार्थपरत्वमाह।
"दिनं सुराणामयनं यदुत्तरं निशेतरत्सांहितिकैः प्रकीर्तितम्। दिनोन्मुखेऽर्के दिनमेव तन्मतं निशा तथा तत्फलकीर्तनाय तत्। द्वन्द्वान्तमारोहति यैः क्रमेण तैरेव वृत्तैरवरोहतीनः। यत्रैव दृष्टः प्रथमं स देवैस्तत्रैव तिष्ठन् विलोक्यते किम्?" सि॰शि॰। "सांहितिकानां न चेदयमभिप्रायस्तर्हि मेषादेरूर्ध्वं मिथुनान्तं यावत् यैर्वृत्तै रेवारोहणं कुर्वन्नपि देवैर्दृष्टः तैरेव पुनरवरोहणं कुर्वन् किं न दृश्यत इति" प्रमि॰। तत्फलं दर्शितं श्रीपतिना "मृगादिराशिद्वयभानुभोगात् षट्चर्त्तवः स्युः शिशिरो वसन्तः। ग्रीष्मश्च वर्षा च शरच्च तद्वद्धेमन्तनामा कथितोऽत्र षष्ठः। शिशिरपूर्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्च तदामरम्। भवति दक्षिणमन्यदृतुत्रयं निगदिता रजनी मरुतां च सा। गृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रतबन्धपूर्वम्। सौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत्खलु दक्षिणे च"। इदानीं दिनरात्रिस्वरूपे पितृदिनञ्चाह "दिनं दिनेशस्य यतोऽत्र दर्शने तमी तमोहन्तुरदर्शने सति। कुपृष्ठगानां द्युनिशं यथा नृणां तथा पितॄणां शशिपृष्ठवासिनाम्" सि॰शि॰। पितृदिनस्योदयास्तकालानाह। "विधूर्ध्वभागे पितरोवसन्तः स्वाधः सुधादीधितिमामनन्ति। पश्यन्ति तेऽर्कं निजमस्तकोर्ध्वे दर्शे यतोऽस्माद् द्युदलं तदेषाम्। भार्द्धान्तरत्वान्न विधोरधःस्थं तस्मान्निशीथः खलु पौर्णमास्याम्। कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्तमेत्यर्थत एव सिद्धम्" सि॰शि॰।
इदानीं देशविशेषेण राशिभेदान् सदोदितानुदितांश्चाह। त्र्यंशयुङ्नरसाः (६८।१/२०) पलांशका यत्र तत्र विषये कदाचन। दृश्यते न मकरो नकार्मुकं किञ्च कर्कमिथुनौ सदोदितौ। यत्र साङ्घ्रिगजवाजिसंमिता (७८।१/४) स्तत्र वृश्चिकचतुष्टयं न च। दृश्यतेऽथ वृषनाद्यचतुष्टयं सर्वथा समुदितं च लक्ष्यते। यत्र तेऽथ नवतिः (९०) पलांशकास्तत्र काञ्चनगिरौ कदाचन। दृश्यते न भदलं तुलादिकं सर्वदा समुदितं क्रियादिकम्" सि॰शि॰। "अयमर्थस्त्रिप्रश्ने "लम्बाधिका क्रान्तिरुदक् च यावात्तावद्दिनं सन्ततमेव तत्र" इत्यादिना सम्यक् कथित एव। यत्र वृश्चिकान्तक्रान्तितुल्यो लम्बस्तत्र ते पलांशाः" ।६८।१/२०। तत्र धनुर्मकरौ क्षितिजादधःस्थितावेव भ्रमतः" कर्कमिथुनौ तूपर्येव। (तेन देवभागे धनुर्मकरस्थसूर्यकौ द्वौ मासौ रात्रिः शिष्टा दश मासा दिनम्)। एवमसुरभागे तथा पलांशके कर्कादिस्थरविकौ द्वौ मासौ रात्रिः शिष्टा दशमासा दिनम्। यत्र तुलान्तक्रान्तितुल्योलम्बस्तत्राष्टसप्ततिःपञ्चदशकलाधिकाः।७८।१५। पलांशास्तत्र वृश्चिकादिचतुष्टयं क्षितिजादधो वृषभादिकमुपरि। "तेन देवभागे वृश्चिकादिस्थरविकाश्चत्वारोमासा रात्रिः शिष्टा अष्टौमासा दिनम्। दैत्यभागे तु विपर्ययेण तथा दिनरात्री। एवं मेरौ नवतिः ९० पलांशास्तत्र तुलादिषट्कमधोमेषादिकमुपरीति (तेन मेषादिषड्राशिस्थरविकाः षण्मासा देवानां दिनं शिष्टा रात्रिः। एवं तुलादिषड्राशिस्थरविकाः षण्मासा दैत्यानां दिनं शिष्टा रात्रिः) सर्वे भगोले भ्रामिते सति दृश्यते" प्रमि॰। "उक्तैवविधिना ध्रुवोन्नतियौ नतिश्च भवतोऽक्षलम्बकौ। तौ क्रमादिषुवदङ्ग्रहद्वे येऽथवा नतसमुन्नतालवाः" सि॰शि॰। "चक्रदन्त्रेण यष्टिवेधवत् ध्रुवं विध्येत् तत्र नेम्यां ये उन्नतांशास्तेऽक्षांशाः ये नतास्ते लम्बांशाः। अथ वा विषुवद्दिनार्धे येऽर्कस्य नतोन्नतांशास्तेऽक्षलम्बांशा इति युक्तियुक्तम्" प्रमि॰। सममराश्युदयस्थास्तकालताहेतुमाह तत्रैव "योऽभ्युदेति समयेन येन तत् सप्तमोऽस्तमुपयाति तेन च। राशिरूर्ध्वमपमण्डलं कुजादर्धमेव सततं यतः स्थितम्" मू॰। "यो राशिर्येन कालेन उदेति तेन तत्सप्तमोऽस्तं याति ये मेषादीनामुदयास्ते तुलादीनामस्तमयाः ये तुलादीनामुदयास्ते मेषादीनामस्तमया इत्यर्थः। यतः अपमवृत्तं क्षितिजादुपरि अर्धमेव भवति अर्धमधश्च अतो राश्योरुदयमस्तमयञ्च गच्छतोस्तुल्यकालता उपपद्यते इदानीं विशेषमाह" प्रमि॰। "यत्र लम्बजलवा जिना २४ नकास्तत्र नोदयचराद्युदूक्तवत्। नान्यसंस्थितनयान्यथोदितं येन नैष विषयो न्गोचरः"। यस्मिन्देशे षट्षष्टिभागाधिकः पलस्तत्र केचन राशयः सदोदयाः केचन सदा अस्तमिताः केचन प्रान्तादुद्गच्छन्ति अतस्तत्र यथा कथितास्तथा उदया न भवन्ति यावत्सदोदितो रविस्तावदहोरात्रवृत्तं क्षितिजं न स्पृशति अहोरात्रवृत्ते क्षितिजोन्मण्डलयोरन्तरं हि चरम् अतस्तत्र कुज्याचरज्यादिकमसत् शेषं स्पष्टम्" प्रमि॰।

कालविभागाः शि॰शि॰ दर्शिता यथा । "गुर्वक्षरैः खेन्दुमितैः १० रसुः स्यात् षड्भिः पलं तैर्घटिका खषड्भिः। स्याद्वा घटीषष्टिरहः खरामैर्मासो दिनैस्तैर्द्वि-कुभिश्च वर्षम्" "एकमात्रो लघुः । द्विमात्रो गुरुः । तथाच "सानुस्वारोविसर्गान्तोदीर्घोयुक्तपरस्तु यः" इति छन्दो-ग्रन्थप्रतिपादितम् यदक्षरं सानुस्वारं विसर्गान्तं दीर्घं यस्याक्षरस्य परतः संयोगस्तल्लघ्वपि गुरुसंज्ञं ज्ञेयम्। गुर्वक्षरस्योच्चारणमात्रस्य यावान् कालस्तद्दशकेनैकोऽसुः प्राणः प्रशस्तेन्द्रियपुरुषस्य श्वासोच्छ्वासान्तर्वर्त्ती काल इत्यर्थः । षड्भिः प्राणैरेकं पानीयपलम् पलानां षष्ट्या घटी । घटीनां षष्ट्या दिनम् । त्रिंशद्दिनैरेकोमासः मासैर्द्वादशभिर्वर्षमिति कालस्य विभागो दर्शितः" प्रमि॰ । भचक्रविभागस्तत्रैव विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते । तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते" ।

ब्राह्मादि दिनभेदाः सू॰सि॰ उक्ता यथा

"ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा । सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव । चतुर्भि-र्व्यवहारोऽत्र सौरचान्द्रार्क्षसावनैः । बार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यशः" सू॰सि॰ । "अत्र मनुष्यलोके सौरचान्द्रनाक्षत्रसावनैश्चतुर्भिर्मानैर्व्यवहारः कर्मघटना । षष्ट्यब्दं प्रभवादिषष्टिवर्षं जात्यभिप्रायेणैकवचनम् । बार्हस्पत्येन बृहस्पतिमानेन बृहस्पति-मध्यमराशिभोगात्मककालेन प्रत्येकं ज्ञेयम् । अन्यैरव-शिष्टैर्ब्राह्मदिव्यपित्र्यप्राजापत्यैः । नित्यशः सदेत्यर्थः । व्यवहारो नास्ति । तुकारात् काराचित्कत्वेन तैर्व्यव-हारः" र॰ना । अथ सौरेण व्यवहारं प्रदर्शयति "सौरेण द्युनिशोर्मानं षडशीतिमुखानि च । अयनं विषुवच्चैव संक्रान्तेः पुण्यकालता" सू॰सि॰ । "अहो-रात्रयोर्मानं सौरेण ज्ञेयम् । प्रात्यहिकसूर्यगति-भोगादहोरात्रं भवतीत्यर्थः । षडशीतिमुखानि वक्ष्य-माणानि । चः समुच्चये । तेन सौरमानेन ज्ञेयानि अयनं विषुवत् । चः समुच्चये । संक्रान्तेः पुण्यकालता सूर्यबिम्बकलासम्बद्धा सौरमानेन" र॰ना॰ । अथ षड-शीतिमुखमाह "तुलादिषडशीत्यङ्गां षडशीतिमुखं क्रमात् । तच्चतुष्टयमेव स्याद्द्विस्वभावेषु राशिषु" सू॰सि॰। "तुलारम्भात् षडशीतिदिवसानां सौराणां षडशीति-मुखं भवति । तच्चतुष्टयं षडशीतिमुखस्य चतुःसङ्ख्या द्विस्वभावेषु राशिषु चतुर्षु क्रमादेवं वक्ष्यमाणा भवति" र॰ना॰ । "षड्विंशे धनुषो भागे द्वाविंशेऽनिमिषस्य च । मिथुनाष्टादशे भागे कन्यायास्तु चतुर्दशे" सू॰सि॰ । "धनुराशेः षड्विंशतितमेऽंशे षडशीतिमुखं, मीनराशे-र्द्वाविंशतितमेऽंशे षडशीतिमुखम् । चकारः समुच्चया-र्थकः प्रत्येकमन्वेति । मिथुनराशेरष्टादशेऽंशे षडशीति-मुखं, कन्यायाश्चतुर्दशे भागे षडशीतिमुखम् । अत एव तुलादितः षडशीत्यंशो गणनया येषु राशिषु भवति ते राशयो द्विस्वभावाः षडशीतिमुखसञ्ज्ञा संक्रान्तिप्रकरणे सांहितिकैरुक्ताः" र॰ना॰ । अथ षडशीत्यंशगणनया चत्वारि षडशीतिमुखान्युक्त्वा भगणांशपूर्त्यर्थमवशिष्टांशाः षोडशातिपुण्या इत्याह "ततः शेषाणि कन्याया यान्यहानि तु षोडश । क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम्" सू॰सि॰ । "ततः कन्यादिचतुर्दशभागा-नन्तरं शेषाणि भगणभागेऽवशिष्टानि कन्याया यान्य-हानि सौरभागसमानि तानि षोडश । तुकारात् पूर्व-दिनासमानि क्रतुभिर्यज्ञैः समानि । अतिपुण्यानीत्यर्थः । तत्र पितॄणां दत्तं श्राद्धादि कृतमक्षयमनन्तफलदं भवति" र॰ना॰।"अथ राश्यधिष्ठितक्रान्तिवृत्ते चत्वारि स्थानानि पदसन्धिस्थाने विषुवायनाख्यां प्रसिद्धानीत्याह "भचक्रनाभौ विषुवद्द्वितयं समसूत्रगम् । अयनद्वितयं चैव चतस्रः प्रथितास्तु ताः" सू॰सि॰ । "भचक्रनाभौ भगोलस्य ध्रुवद्वयाभ्यां तुल्यान्तरेण मध्यभागे विषुवद्वि-तयं विषुवद्द्वयं समसूत्रगं परस्परं व्याससूत्रान्तरितं ध्रुवमध्ये विषुवद्वृत्तस्थानात् तद्वृत्ते क्रान्तिवृत्तभागौ यौ लग्नौ तौ च क्रमेण पूर्वापरौ विषुवत्सञ्ज्ञौ मेष-तुल्याख्यौ चेत्यर्थः । अयनद्वितयमयनद्वयं कर्कमकरादि-रूपम् । चः समुच्चये । तेन समसूत्रगं ता विषुवाय-नाख्याः क्रान्तिवृत्तप्रदेशरूपा भ्रमयश्चतस्रश्चतुःसङ्ख्याकाः प्रथिता गणितादौ पदादित्वेन प्रसिद्धाः । एवकारा-दन्यराशीनां निरासः । तुकारात् तासां समसूत्रस्थत्वे-ऽपि विषुवायनत्वाभावात् पदादित्वेनाप्रसिद्धिरित्यर्थः" र॰ ना॰ । अथावशिष्टनामादिस्वरूपमन्यदप्याह । "तदन्तरेषु संक्रान्तिद्वितयं द्वितयं पुनः । नैरन्तर्यात् तु संक्रान्तेर्ज्ञेयं विष्णुपदीद्वयम्" सू॰सि॰ । "तदन्तरेषु विषुवायनान्तरालेषु । अत्रान्तरालानां चतुःस्थाने सङ्ख्या-वाहुल्यवचनम् । संक्रान्तिद्वितयं द्वितयं पुना राश्यादि-भागे यथाक्रमक्रमशं वारद्वयं भवति । तदन्तराले राश्यादिभागौ द्वौ भवत इत्यर्थः । तथा हि मेषान्त-

विषुवत्कर्क्यायनयोरन्तराले वृषमिथुनयोरादौ । कर्कतुलयोरन्तराले सिंहकन्ययोरादौ । तुलामकरयोरन्तराले वृश्चिकधनुषोरादौ । मकरमेषयोरन्तराले कुम्भमीनयोरादौ इति । एवं विषुवानन्तरं संक्रमणद्वयमनन्तरमयनं तदनन्तरं संक्रान्तिद्वयं तदनन्तरं विषुवमनन्तरं संक्रान्तिद्वयमनन्तरमयनमित्यादि पौनःपुन्येन ज्ञेयमित्यर्थः । संक्रान्तिद्वयमध्ये प्रथमसंक्रान्तौ विशेषमाह नैरन्तर्यादिति । निरन्तरतया सम्भूतायाः संक्रान्तेः सकाशाद्विष्णुपदीद्वयं तदन्तराले इत्यर्थः । अयनस्य प्रथमसंक्रान्तिर्विष्णुपदसञ्ज्ञा तयोर्द्वयं तदभ्यन्तरे प्रत्येकं भवतीति तात्पर्य्यार्थः । षडशीतिसञ्ज्ञं द्वितीयसंक्रमणं पूर्वसूचितं तयोरपि द्वयं तदन्तराले भवतीति ध्येयम्” र०ना० । अथायनद्वयमाह ”भानोर्मकरसंक्रान्तेः षण्मासा उत्तरायणम् । कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम्” सू०सि० । “सूर्यस्य मकरसंक्रान्तेः सकाशात् षट् सौरमासा उत्तरायणं भवति । कर्कादेः कर्कसंक्रान्तेः सकाशात् तथा सूर्यभोगात् । एवकारादन्यपक्षनिरासः । षण्मासाः तुकारात् सौराः । दक्षिणायनं भवति” र०ना० । अथर्तुमासवर्षाण्याह “द्विराशिनाथा ऋतवस्ततोऽपि शिशिरादयः । मेषादयो द्वादशैते मासास्तैरेव वत्सरः” सू०सि० । “ततो मकरसंक्रान्तेः सकाशात् । अपिशब्दः उत्तरायणावधिना समुच्चयार्थकः । द्विराशिनाथा राशिद्वयस्वामिका राशिद्वयार्कभोगात्मका इत्यर्थः । शिशिरादयः शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ता ऋतवः कालविभागविशेषा भवन्ति । एते सूर्यभोगविषयका मेषादयो राशयो द्वादश मासास्तैर्द्वादशभिर्मासैः । एवकारात्न्यूनाधिकव्यवच्छेदः । वत्सरः सौरवर्षं भवति” र०ना० । अथ प्रसङ्गात् संक्रान्तौ पुण्यकालानयनमाह । “अर्कबिम्बकलाः षष्ट्या गुणिताभुक्तिभाजिताः । तदर्धनाड्यः संक्रान्तेरर्वाक् पुण्यं तथापरे” सू०सि० । “सूर्यस्य बिम्बप्रमाणकला. षष्ट्या गुणिताः सूर्यगत्या भक्तास्तस्य फलस्यार्द्धं तत्सङ्ख्याका घटिका इत्यर्थः । संक्रान्तेः सूर्यस्य राशिप्रवेशकालादित्यर्थः । अर्वाक् पूर्वं पुण्यं स्नानादिधर्मकृत्ये पुण्यघटिकाः पुण्यवृद्धिकारिकाः । अपरे संक्रान्त्युत्तरकाले तथा । स्नानादिधर्मकृत्ये पुण्यवृद्धिदा इत्यर्थः । अत्रोपपत्तिः । सूर्यबिम्बकेन्द्रस्य राश्यादौ सञ्चरणकालः संक्रमणकालस्तस्य सूक्ष्मत्वेन दुर्ज्ञेयत्वात् स्थूलकालः कोऽप्यभ्युपेयः स तु राश्यादौ बिम्बसञ्चरणकालोऽङ्गीकृतो बिम्बसम्बन्धात् । कृतोऽर्यादिसूर्यगत्या षष्टिघटिकाः-तदा सूर्यबिम्बकलाभिः का इत्यनुपातानीता बिम्बघटिकाः संक्रान्तिकालः स्थूलः प्राङ्नेमिसञ्चरणकालात् पश्चिमनेमिसञ्चरणकालपर्य्यन्तं तदर्द्धं घटिका अर्धार्द्धं घटिका इति । संक्रान्तिकालात् ताभिः पूर्वमपरत्र काले प्राक्परनेम्योः क्रमेण सञ्चरणात् पूर्वोत्तरकाले पुण्या इति” र०ना० अथ सौरसञ्ज्ञा क्रमप्राप्तं चान्द्रमानमाह । “अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी । तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः” सू०सि० । “सूर्यात् समागमं त्यक्त्वा विनिर्गतः पृथग्भूतः सचन्द्रोऽहरहः प्रतिदिनं यत् तत्सङ्ख्यामितं प्राचीं पूर्वां दिशं गच्छति तत् प्रतिदिनं चान्द्रमानं तत्तु गत्यन्तरांशमितम् । ननु सौरदिनं सूर्यांशेन यथा भवति तथैतद्रूपैरंशैः कियद्भिः पूर्णं चान्द्रं दिनं भवतीत्यत आह अंशैरिति । भागैस्तुकारात् सूर्यचन्द्रान्तरोत्पन्नैः, तस्य तद्रूपत्वात् द्वादशभिर्द्वादशसङ्ख्याकैस्तिथिर्ज्ञेया । एकं चान्द्रं दिनं ज्ञेयमित्यर्थः । एतदुक्तं भवति । सूर्यचन्द्रयोगाच्चान्द्रदिनप्रवृत्तेः पुनर्योगे माससमाप्तेर्भगणान्तरेण चान्द्रे मासस्त्रिंशच्चान्द्रदिनात्मकः । अतस्त्रिंशद्भिरेवं द भगणांशान्तरं षष्ट्यैकेन किमिति । द्वादशभागैरेकं चान्द्रदिनम् । “दर्शः सूर्येन्दुसङ्गमः” इत्यभिधानाद्दर्शावधिकमासस्य त्रिंशत्तिथ्यात्मकत्वात् तिथिश्चान्द्रदिनरूपेति” र०ना० । अथ चान्द्रव्यवहारमाह “तिथिः करणमुद्वाहः क्षौरं सर्वक्रियास्तथा । व्रतोपवासयात्राणां क्रिया चान्द्रेण गृह्यते” सू०सि० । “तिथिः प्रतिपदाद्या करणं ववादिकमुद्वाहो विवाहः क्षौरं चौलकर्म । एतदाद्याः सर्वक्रिया व्रतबन्धाद्युत्सवरूपा व्रतोपवासयात्राणां नियमोपवासगमनानां क्रिया करणम् । तथा समुच्चयार्थकः । चान्द्रमानेन गृह्यते अङ्गीक्रियते” र०ना० । अथ चान्द्रमासं प्रसङ्गात् पितृमानं चाह “त्रिंशता तिथिभिर्मासश्चान्द्रः, पित्र्यमहः स्मृतम् । निशा च, मासपक्षान्तौ तयोर्मध्ये विभागतः” सू०सि० । “त्रिंशता त्रिंशत्सङ्ख्यकैस्तिथिभिश्चान्द्रो मासः । पित्र्यं पितृसम्बन्धि । अहर्दिनम् निशा च रात्रिः पितृसम्बन्धा । चकारो व्यवस्थार्थकः । तेनोभयं नैकं प्रत्येकं, किन्तु मिलितम् । स्मृतमिति लिङ्गानुरोधेनोभयत्रान्वेति तथा च चान्द्रो मासः पित्र्याहोरात्रमित्यर्थः फलितः । मासपक्षान्तौ मासान्तो दर्शान्तः, पक्षान्तः पूर्णिमान्तः

स्तान्तमित्यर्थः। विभागतः क्रमेणेत्यर्थः। तयोः पित्र्याहोरात्रयोर्मध्ये ऽर्द्धे भवतः। दर्शान्तः पितॄणां मध्याह्नः, पूर्णिमान्तः पितॄणां मध्यरात्रमित्यर्थः। अर्थात् कृष्णाष्टम्यर्द्धे दिनप्रारम्भः। शुक्लाष्टम्यर्द्धे दिनान्त इति सिद्धम्" र०ना०। अथ क्रमप्राप्तं नाक्षत्रमानं प्रसङ्गान्मासनामसंज्ञां चाह "भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते। नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्वान्तयोगतः" "नित्यं प्रत्यहं भचक्रभ्रमणं नक्षत्रसमूहस्य प्रवहवायुकृतपरिभ्रमः नाक्षत्रं नक्षत्रसम्बन्धि दिनं मानज्ञैः कथ्यते नित्यमित्यनेन चन्द्रभोगनक्षत्रभोगो नाक्षत्रमित्यस्य निरासः भचक्रभ्रमणानुपपत्तेः। मासमंज्ञा मह नक्षत्रमाहेति। पर्वान्तयोगतः पर्वान्तः पूर्णिमान्तः तस्य योगात् तत्सम्बन्धात् नक्षत्रसंज्ञया मासाः। तुकाराच्चान्द्रा अवगम्याः पूर्णिमान्तस्थितचन्द्रनक्षत्रसंज्ञो मासो ज्ञेय इति तात्पर्य्यार्थः। तथाहि यद्दर्शान्तावधिकश्चान्द्रो मासस्तदभ्यन्तरस्थितपूर्णिमान्तस्थितचन्द्रनक्षत्रसंज्ञः। यथा चित्रासम्बन्धाच्चैत्रः। विशाखासम्बन्धाद्वैशाखः। ज्येष्ठासम्बन्धाज्ज्यैष्ठः। आषाढासम्बन्धादाषाढः। श्रवणसम्बन्धाच्छ्रावणः। भाद्रपदासम्बन्धाद्भाद्रपदः। अश्विनीसम्बन्धादाश्विनः। कृत्तिकासम्बन्धात् कार्त्तिकः। मृगशीर्षसम्बन्धान्मार्गशीर्षः। पुष्यसम्बन्धात् पौषः। मघासम्बन्धान्माघः। फाल्गुनीसम्बन्धात् फाल्गुन इति" र०ना०। ननु पूर्णिमान्ते तत्तन्नक्षत्राभावे कथं तत्संज्ञा मासानामुचितेत्यत आह "कार्त्तिक्यादिषु संयोगे कृत्तिकादि द्वयं द्वयम्। अन्त्योपान्त्यौ पञ्चमश्च त्रिधा मासत्रयं स्मृतम्" सू०सि०। नक्षत्रसंयोगार्थमिति निमित्तसप्तमी। कार्त्तिक्यादिषु कार्त्तिकमासादीनां पौर्णमासीष्वित्यर्थः। कृत्तिकादि द्वयं द्वयं नक्षत्रं कथितं कृत्तिकारोहिणीभ्यां कार्त्तिकः। मृगार्द्राभ्यां मार्गशीर्षः। पुनर्वसुपुष्याभ्यां पौषः। आश्लेषामघाभ्यां माघः। चित्रास्वातिभ्यां चैत्रः। विशाखानुराधाभ्यां वैशाखः। ज्येष्ठामूलाभ्यां ज्यैष्ठः। पूर्वोत्तराषाढाभ्यामाषाढः। श्रवणधनिष्ठाभ्यां श्रावण इति फलितम्। अवशिष्टमासानामाह। अन्त्योपान्त्याविति। अत्र कार्त्तिकादित्वेन पश्चादन्त्य आश्विनः। उपान्त्यो भाद्रपदः। एतौ मासौ पञ्चमः फाल्गुनः। चकारः समुच्चये इति मासत्रयं त्रिधा स्थानत्रय उक्तम्। रेवत्यश्विनीभरणीति नक्षत्रत्रयसम्बन्धादाश्विनः। शतताराप्रूर्वोत्तराभाद्रपदेति नक्षत्रत्रयसम्बन्धाद्भाद्रपदः। पूर्वोत्तराफाल्गुनीहस्तेति नक्षत्रत्रयसम्बन्धात् फाल्गुन इति सिद्धम्" र०ना०। अथ प्रसङ्गात् कार्त्तिकादिवृहस्पतिवर्षाण्याह। "वैशाखादिषु कृष्णे च योगः पञ्चदशे तिथौ। कार्त्तिकादीनि वर्षाणि गुरोरस्तोदयात् तथा" सू०सि०। यथा पौर्णमास्यां नक्षत्रसम्बन्धेन तत्संज्ञो मासो भवति। तथेति समुच्चयार्थकम्। वृहस्पतेः सूर्यसान्निध्यदूरत्वाभ्यामस्तादुदयाद्वा वैशाखादिषु द्वादशसु मासेषु कृष्णपक्षे पञ्चदशे तिथौ अमायामित्यर्थः। चकारः पौर्णमासीसम्बन्धात् समुच्चयार्थकः। योगो दिननक्षत्रसम्बन्धः कार्त्तिकादीनि द्वादश वर्षाणि भवन्ति। वैशाखकृष्णपक्षपञ्चदश्याममावास्यायां वृहस्पतेरस्त उदये वा जाते सति तदादि वृहस्पतिवर्षं कृत्तिकादिनक्षत्रसम्बन्धात् कार्त्तिकसंज्ञम्। एवं ज्यैष्ठाषाढश्रावणभाद्रपदाश्विनकार्त्तिकमार्गशीर्षपौषमाघ फाल्गुनचैत्रमासेषु मृगपुष्यमघापूफाचित्राविशाखाज्येष्ठापूषाश्रवणपूभाश्विनीदिननक्षत्रसम्बन्धान्मार्गशीर्षादीनि भवन्ति। अत्रापि प्रोक्तनक्षत्रद्वयत्रयसम्बन्धः प्रागुक्तो बोध्यः। पञ्चदशे इत्युपलक्षणम्। तेन यद्दिने वृहस्पतेरुदयोऽस्तो वा तद्दिने यच्चन्द्राधिष्ठितनक्षत्रं तत्संज्ञं वार्हस्पत्यं वर्षं भवतीति तात्पर्य्यम्। संहितास्वन्ये ऽस्तोदयवशाद्वर्षाण्युक्ताः परमिदानीमुदयवर्षव्यवहारो गणकैर्गृह्यते "येनोदितेज्य इत्युक्तेरिति" र०ना० अथ क्रमप्राप्तं सावनमाह "उदयादोदयं भानोः सावनं तत् प्रकीर्त्तितम्। सावनानि स्युरेतेन यज्ञकालविधिस्तु तैः" सू०सि०। सूर्य्यस्योदयादुदयकालमारभ्याव्यवहितोदयकालपर्य्यन्तं यत् कालात्मकं तत् सावनं मानज्ञैरुक्तम्। एतेनोदयद्वयान्तरात्मकालस्य गणनया सावनानि वक्ष्यमाणादीत्यादिना मध्याधिकारोक्तानि भवन्ति। तद्व्यवहारमाह यज्ञकालविधिरिति। यज्ञस्य यः कालस्तस्य गणना तैः सावनैः। तुकारोऽन्यमाननिरासार्थकैवकारपरः" र०ना०। अथ व्यवहारान्तरमाह। "सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमा ग्रहभुक्तिस्तु सावनेनैव गृह्यते" सू०सि०। "सूतकं जन्ममरणसम्बन्धि। आदिपदग्राह्यं चिकित्सितचान्द्रायणादि। तस्य परिच्छेदो निर्णयः। दिनाधिपमासेश्वरवर्षेश्वराः। तथा समुच्चये ग्रहाणां गतिर्मध्यमा। तुकारात् स्पष्टगतेर्निरासः तस्याः प्रतिक्षणं वैलक्षण्याद्दिनसम्बन्धत्वाभावात्। एतेन स्पष्टमध्या स्पष्टग्रह

चालनं निरस्तं स्थूलत्वादिति सूचितम्। सावनमानेन एवकारादन्यमाननिरासः। व्यह्नाते सुधीभिरङ्गीक्रियते। अत्र बहुवचनानुरोधेन व्यह्नात इत्यत्र बहुवचनं ज्ञेयम्। अथ दिव्यमानमाह। “सुरासुराणामन्योन्यमहोरात्रं विपर्ययात्। यत् प्रोक्तं तद्भवेद्दिव्यं भानोर्भगणपूरणात्” सू॰सि॰। “पूर्वार्द्धं पूर्वं व्याख्यातम्। यदहोरात्रं पूर्वोक्तं सूर्यस्य भगणभोगपूर्तेः प्रोक्तं पूर्वमनेकधा निर्णीतं तदहोरात्रं दिव्यमानं स्यात्” र॰ना॰। अथावशिष्टे प्राजापत्यब्राह्ममाने आह “मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम्। न तत्र द्युनिशोर्भेदो ब्राह्मं कल्पः प्रकीर्त्तितम्” सू॰सि॰।

दृष्टान्तभूगोलभगोलरचनाप्रकारः सू॰ सि॰ दर्शितो यथा “भूभगोलस्य रचनां कुर्य्यादाश्चर्य्यकारिणीम्। अभीष्टं पृथिवीगोलं कारयित्वा तु दारवम्। दण्डं तन्मध्यगं मेरोरुभयत्र विनिर्गतम्। आधारकक्षाद्वितयं कक्षां वैषुवतीं तथा” सू॰ सि॰। “भगोलस्य भूगोलादभितः संस्थितस्य नक्षत्राधिष्ठितगोलस्य प्रागध्यायोक्तार्थस्य रचनां स्थितिज्ञानार्थं दृष्टान्तात्मकगोलस्य निर्मितिं सुधीर्गणको गोलशिल्पज्ञः कुर्य्यात्। ननु त्वदुक्तेन सर्वं ज्ञानं भवतीति दृष्टान्तगोलनिबन्धनं व्यर्थमेवेत्यत आह आश्चर्य्यकारिणीमिति। उक्तप्रतीत्युक्तत्वात् तद्बुद्धिजनयित्रीं तथाचोक्तेन खाधस्तिर्य्यग्भागयोर्लोकावस्थानस्य तद्भागस्थभगोलप्रदेशस्य च भूर्निराधारत्वादेश्च ज्ञानं मनसि सप्रतीतिकं न भवत्यतो दृष्टान्तगोले तन्निश्चयसम्भवात् तन्निबन्धनमावश्यकमिति भावः। कथं रचनां कुर्य्यादित्यत आह अभीष्टमिति। सुधी गोलमभीष्टं स्वेच्छाकल्पितपरिधिप्रमाणकं दारवं काष्ठघटितं सच्छिद्रं कारयित्वा काष्ठशिल्पज्ञद्वारा कृत्वेत्यर्थः। मेरोरनुकल्परूपं दण्डकाष्ठं तन्मध्यगं तस्य कष्ठघटितभूगोलस्य मध्ये छिद्रमध्ये शिथिलतया स्थितम्। उभयत्र भूगोलस्यव्यासप्रमाणच्छिद्राग्राभ्यां बहिरित्यर्थः। विनिर्गतमेकाग्रादन्यतराग्रावशिष्टदण्डप्रदेशतुल्यं निःसृतम्। उभयाग्राभ्यां तुल्यौ दण्डप्रदेशौ यथा स्यातां तथा कुर्य्यादित्यर्थः। भगोलनिबन्धनार्थमाधारवृत्तद्वयमाह आधारकक्षाद्वितयमिति। भगोलनिबन्धनार्थमादावाधारार्थं वृत्तयोर्द्वितयमूर्द्धाधस्तिर्य्यगवस्थानक्रमेणैकमेकमेवं द्वयमित्यर्थः। भूगोलादुभयतस्तुल्यान्तरेण दण्डप्रदेशयोः प्रोतमेकं वृत्तं कुर्य्यात्। तत्तुल्यं वृत्तमपरं तदर्धच्छेदेन दण्डप्रोतं कुर्य्यादिति विशेषार्थः। आद्यवृत्तद्वयव्यतिरेकेण भूगोलादभितो भगोलनिबन्धनानुपपत्तेः। भगोलनिबन्धनारम्भमाह कक्षेति। वैषुवतीं विषुवद्वृत्ताख्यां कक्षां वृत्तपरिधिं विषुवद्वृत्तमित्यर्थः। तथाधारवृत्तद्वयस्यार्द्धच्छेदेन भगोलमध्यवृत्तानुकरणेन तद्वदेव निबद्धामित्यर्थः” र॰ ना॰। अथ मेषादिद्वादशराशीनामहोरात्रवृत्तनिबन्धनमन्तर्दर्प श्लोकपञ्चकेनाह “भगणांशाङ्गुलैः कार्य्या दलितैस्तिस्र एव ताः। स्वाहोरात्रार्द्धकर्णैश्च तत्प्रमाणानुमानतः। क्रान्तिविक्षेपभागैश्च दर्शितैर्दक्षिणोत्तरैः। स्वैः स्वैरपक्रमैस्तिस्रो मेषादीनामपक्रमात्। कक्षाः प्रकल्पयेत् ताश्च कर्कादीनां विपर्य्ययात्। तद्वत् तिस्रस्तुलादीनां मृगादीनां विलोमतः। याम्यगोलाश्रिताः कार्य्याः कक्षाधाराद्द्वयोरपि। याम्योदग्गोलसंस्थानां भानामभिजितस्तथा। सप्तर्षीणामगस्त्यस्य ब्रह्मादीनां च कल्पयेत्। मध्ये वैषुवती कक्षा सर्वेषामेव संस्थिता” सू॰ सि॰। “भगणांशाङ्गुलैः द्वादशराशिभागैः षष्ट्यधिकशतत्रयपरिमिताङ्गुलैः दलितैः समविभागेन खण्डितैरङ्कितैरित्यर्थः। ताः कक्षाः वंशशलाकादिवृत्तात्मिकास्तिस्रः त्रिसङ्ख्याकाः। एवकारादूने वृत्ते च न्यूनाधिकव्यवच्छेदः। विषुवद्वृत्ततद्गणितदेशेन कार्य्याः। एताः पूर्ववृत्तप्रमाणेन न कार्य्या इत्यभिप्रायेणाह स्वाहोरात्रार्द्धकर्णैरिति। चकारेण मेषादित्रिकं तस्य प्रतिराश्यहोरात्रवृत्तस्यार्द्धकर्णा व्यासार्द्धं बुद्ध्वा तैरित्यर्थः। चकारात् कार्य्याः। स्वस्वद्युज्यामितेन व्यासार्द्धेन मेषादित्रयाणां वृत्तत्रयं कार्य्यमित्यर्थः। ननु स्पष्टाधिकारोक्ताहोरात्रार्द्धकर्णानयने युक्त्यभावात् तैर्वृत्तनिर्माणं कुतः कार्य्यमित्यत आह तत्प्रमाणानुमानत इति। विषुवत्कक्षाप्रमाणानुमानाद्वृत्तत्रयं कार्य्यम्। यथा विषुवद्वृत्तं पूर्ववृत्तसमम्। तथा तदनुरोधेन मेषान्तवृत्तमल्पं तदनुरोधेन वृषान्तवृत्तमल्पं तदनुरोधेन मिथुनान्तवृत्तमल्पमित्युत्तरोत्तरमल्पव्यासार्द्धत्वम्। तत्त्वहोरात्रवृत्तमिति द्युज्याव्यासार्द्धेन वृत्तनिर्माणं युक्तियुक्तं क्रान्तिज्यावर्गोनत्रिज्यावर्गान्मूलस्याहोरात्रवृत्तव्यासार्द्धत्वादिति भावः। वृत्तत्रयं सिद्धं कृत्वा दृष्टान्तगोले निबध्नीतः। क्रान्तिविक्षेपभागैरिति क्रान्तिवृत्तस्य विषुवद्वृत्तप्रदेशाद्दिग्भागप्रदेशा यैरंशैः। चकारादाधारवृत्तस्थैरङ्कितैः समविभागेन खण्डितैरङ्कितैः। दक्षिणोत्तरैर्विषुवद्वृत्त-

द्वादशराशीनां सत्त्वादन्यथा चक्रकलानुपपत्तेरित्यलैकवृत्ता-
भावात् कथं राश्यङ्कनं ? राशिविभागोपपत्तिश्च अन्तरा-
लाभावस्याकाशात्मकत्वादित्यतो वृत्तकथनच्छलेन पूर्वोक्तं
स्पष्टयन् सूर्यस्तद्वृत्ते भगणभोगं करोतीत्याह "अयना-
द्यनं चैव कक्षा तिर्यक् तथापरा। क्रान्तिसंज्ञा तया
सूर्यः सदा पर्येति भासयन्" सू० सि०। "अयनस्थान-
मारभ्य परिवर्त्ततदयनस्थानपर्य्यन्तं चकार आरम्भ-
समाप्त्योर्भिन्नायनस्थाननिरासार्थकः। अपरा गोल आ-
धारवृत्तसमा वृत्तरूपा कक्षा तथा राश्यङ्कमार्गेण। एव
कारोऽन्यमार्गव्यवच्छेदार्थकः। तिर्यक् उक्तवृत्तानु-
कारनिरक्षयानुकारा क्रान्तिसंज्ञा क्रमशः क्रान्तिः।
ग्रहगमनभोगस्थानार्थं वृत्तं तत्संज्ञमनुकल्पितम्। अय-
नविषुवद्वयसंलग्नं क्रान्तिवृत्तं द्वादशराश्यङ्कितं गोले नि-
बध्नीयादिति तात्पर्यार्थः। भासयन् भुवनानि प्रकाशयन्
सन् स सूर्यः। एतेन चन्द्रादीनां निरासः। सदा निर-
न्तरं तया क्रान्तिसंज्ञया कक्षया पर्येति स्वगत्या ग-
च्छन् भगणपरिपूर्त्तिभोगं करोति। सूर्यगत्यनुरोधेन
नियतं क्रान्तिवृत्तं कल्पितमिति भावः"। ननु चन्द्राद्याः
क्रान्तिवृत्ते कुतो न गच्छन्तीत्यत आह" र० ना०। "चन्द्राद्याश्च
स्वकैः पातैरपमण्डलमाश्रितैः। ततोऽपकृष्टा दृश्यन्ते
विक्षेपान्तेष्वपक्रमात्" सू० सि०। "चन्द्रादयोऽर्कव्यति-
रिक्ता ग्रहाः स्वकैः स्वीयैः पातैः पाताख्यदैवतैरपम-
ण्डलं क्रान्तिवृत्तमाश्रितैः स्वस्वभोगस्थानेऽधिष्ठितैस्ततः
क्रान्तिवृत्तान्तर्गतग्रहभोगस्थानादित्यर्थः। चकाराद्विक्षे-
पान्तरेणापकृष्टा दक्षिणत उत्तरतो वा कर्षिता भवन्ति।
अतः कारणादपक्रमात् क्रान्तिवृत्तान्तर्गतस्वभोगस्थाना-
दित्यर्थः। दक्षिणत उत्तरतो वा विक्षेपान्तेषु गणिता-
गतविक्षेपकलाग्रस्थानेषु भूस्थजनैर्दृश्यन्ते। तथाच क्रा-
न्तिवृत्तं यथा विषुवन्मण्डलेऽर्पितं तथा क्रान्तिवृत्ते
पातस्थाने तत्षड्भान्तरस्थाने च लग्नं तुङ्गपरमविक्षेप-
कलाभितस्त्रिभान्तरस्थानादूर्ध्वाधःक्रमेण दक्षिणोत्तरतो
लग्नं च वृत्तं विक्षेपवृत्तं चन्द्रादिगत्यनुरोधेन स्वं स्वं
भिन्नं कल्पितं तत्र गच्छन्तीति भावः" र० ना०।
अथ त्रिप्रश्नाधिकारोक्तलग्नमध्यलग्नयोः स्वरूपमाह
"उदयक्षितिजे लग्नमस्तं गच्छच्च तद्वशात्। लङ्कोदयै-
र्यथासिद्धं खमध्योपरि मध्यमम्" सू० सि०। "उद-
यक्षितिजे क्षितिजवृत्तस्य पूर्वदिक्प्रदेश इत्यर्थः। लग्नं
क्रान्तिवृत्तं यत्प्रदेशे प्रवहवायुना संलग्नं तत्प्रदेशो मे-
षाद्यवधिभोगेनोदयलग्नमुच्यत इत्यर्थः। प्रसङ्गादस्तलग्न-
स्वरूपमाह अस्तमिति। तद्वशादुदयलग्नानुरोधाद-
स्तमस्ताचलितं क्षितिजवृत्तस्य पश्चिमदिक्प्रदेशमित्यर्थः।
क्रान्तिवृत्तं गच्छत्। यत्प्रदेशेन प्रवहवायुना संलग्नं
तत्प्रदेशो मेषाद्यवधिभोगेनास्तलग्नमुच्यत इत्यर्थः।
तथा च क्षितिजोर्द्ध्वं तथा क्रान्तिवृत्तस्य सद्भावादुदयास्त-
लग्नयोः षड्राश्यन्तरं सिद्धम् लङ्कोदयैर्निरक्षदेशीयराश्यु-
दयासुभिः। यथा त्रिप्रश्नाधिकारोक्तप्रकारेण तथाङ्गुला-
मितं सिद्धं निष्पन्नम्। मध्यमं मध्यमलग्नं तत् खमध्यो-
परि खस्य दृश्यांशविभागस्य मध्यं मध्यगतदक्षिणोत्तरवृ-
त्तवृत्तानुकारप्रदेशरूपं नतु खमध्यं भास्कराचार्याभि-
मतं स्वस्वस्तिकं तल्लग्नस्य कादाचित्कत्वेन तदानुत्पत्तेः।
तस्योपरि स्थितं क्रान्तिवृत्तं याम्योत्तरवृत्ते यत्प्रदेशेन
लग्नं तत्प्रदेशो मेषाद्यवधिभोगेन मध्यलग्नमुच्यत इति
तात्पर्यार्थः" र० ना०। अथ त्रिप्रश्नाधिकारोक्तान्त्यायाः
स्वरूपं स्पष्टाधिकारोक्तचरज्यायाः स्वरूपं चाह "भ-
मध्यक्षितिजयोर्मध्ये या ज्या सान्त्याभिधीयते। ज्ञेया
चरदलज्या च विषुवत्क्षितिजान्तरम्" सू० सि०। "या
उत्तरगोले त्रिज्या चरज्यायुतिरूपा दक्षिणगोले चरज्योन-
त्रिज्यारूपा त्रिप्रश्नाधिकारोक्ता। सा अन्त्या मध्ये या-
म्योत्तरवृत्तं क्षितिजं स्वाभिमतदेशक्षितिजवृत्तं तयोर्मध्ये-
ऽन्तरालेऽहोरात्रवृत्तस्यैकदेशप्रदेशे ज्या। उदयास्तसूत्र-
याम्योत्तरसूत्रसम्पातादहोरात्रयाम्योत्तरवृत्तसम्पातावधि-
सूत्ररूपा ज्याखण्डानुकारा न तु ज्या अहोरात्र-
क्षितिजवृत्तसम्पातद्वयबद्धोदयास्तसूत्रस्याहोरात्रवृत्तव्यास-
सूत्रत्वाभावात्। अतएवोत्तरगोलेऽस्याः त्रिज्याधिक्य-
मुच्यते। अभिधीयते गोलज्ञैः कथ्यते। नन्वन्त्योपजी-
व्यचरज्यैव किंस्वरूपा यया तत्सिद्धिरित्यत आह ज्ञे-
येति। "उन्मण्डलं च विषुवन्मण्डलं परिकीर्त्यते" इति
त्रिप्रश्नाधिकारोक्तेन द्वयोः शब्दयोरेकार्थवाचकत्वात्
तिर्यगाधारवृत्तानुकारं स्थिरं निरक्षक्षितिजवृत्तमुन्मण्डलं
क्षितिजं स्वाभिमतदेशक्षितिजवृत्तमनयोरन्तरम्। चकारो
विशेषार्थकस्तुकारपरत्वेन तदन्तरावस्थिताहोरात्रवृत्तैक-
देशस्यार्द्धज्यारूपमृजुसूत्रयोरन्तरविशेषात्मकम्। तथा च
स्वनिरक्षदेशस्वदेशयोरुदयास्तसूत्रयोरन्तरमूर्ध्वाधरमिति फ-
लितार्थः। चरदलज्या तदन्तरावस्थिताहोरात्रवृत्तैकदे-
शरूपचरासुखण्डकस्य। न तु दलमर्द्धम्। ज्या चर-
ज्यार्थः। मौर्वीतज्या" र० ना०। ननु पूर्वोक्त-

दृग्योग्यं क्षितिजज्ञानं विना दुर्बोधमित्यतः श्लोकार्धेन क्षितिजस्वरूपमाह "कृत्वोपरि स्वकं स्थानं मध्ये क्षितिजमण्डलम्" सू० सि०। भूगोले स्वकं स्वीयं स्थानं भूप्रदेशैकदेशरूपमुपरि सर्वप्रदेशेभ्य ऊर्द्ध्वं कृत्वा प्रकल्प्य मध्ये तादृशभूगोल ऊर्द्धाधःखण्डसन्धौ यद्वृत्तं तत् क्षितिजवृत्तं तदनुरोधेन दृष्टान्तगोले क्षितिजवृत्तं स्थिरं संसक्तं कार्य्यमिति भावः" र० ना०। कथमेनं दृष्टान्तगोलं सिद्धं कृत्वास्य स्वत एव पश्चिमभ्रमो यथा भवति तथा प्रकारमाह "वस्त्रच्छन्नं बहिश्चापि लोकालोकेन वेष्टितम्। अमृतस्रावयोगेन कालभ्रमणसाधनम्" सू० सि०। "बहिः गोलोपरीत्यर्थः। गोलाकारेण वस्त्रेण छन्नं छादितं दृष्टान्तगोलम्। चकाराद्वस्त्रोपरि तत्तद्वृत्तानामङ्कनं कार्य्यम्। लोकालोकेन वेष्टितं दृग्ग्राह्यग्राह्यसन्धिस्थवृत्तेन क्षितिजाख्येन संसक्तम्। अपिः समुच्चये। एतेन क्षितिजं वस्त्रच्छन्नं न कार्यं किं तु वस्त्रोपरि क्षितिजं गोलसंसक्तं केनापि प्रकारेण स्थिरं यथा भवति तथा कार्य्यमिति तात्पर्यम्। अमृतस्रावयोगेनैतादृशं गोलं कृत्वा जलप्रवाहाघातेन कालभ्रमणसाधनं षष्टिनाक्षत्रघटीभिर्दृष्टान्तगोलस्य भ्रमणं यथा भवति तथा साधनं कारणं कार्य्यं स्वयंवहगोलयन्त्रं कार्य्यमित्यर्थः। एतदुक्तं भवति दृष्टान्तगोलं वस्त्रच्छन्नं कृत्वा तदाधारयष्ट्यग्रे दक्षिणोत्तरभित्तिच्छिद्रनलिकयोः क्षेप्ये। यथा यष्ट्यग्रं ध्रुवाभिमुखं स्यात्। ततो यष्ट्यधर्मार्गगतजलप्रवाहेण पूर्वाभिमुखेन तस्याधः पश्चाद्भागे घातोऽपि यथा स्यात् तथाऽस्य दर्शनार्थमेव वस्त्रच्छन्नत्वमुक्तम् अन्यथा गोलवृत्तान्तरवकाशमार्गेण जलाघातदर्शनभ्रमेण चमत्कारानुत्पत्तेः। आकाशाकारतासम्पादनार्थमपि वस्त्रच्छन्नत्वमुक्तम्। इदं वस्त्रमार्द्रं यथा न भवति तथा चिक्कणवस्तुना भक्तादिना लिप्तं कार्य्यम्। क्षितिजवृत्ताकारेणाधो गोलो दृश्यो यथा स्यात् तथा परिखारूपा भित्तिः कार्य्या। परन्तु दक्षिणपश्चिमभागस्थल शिथिलो यथा भवति अन्यथा भ्रमणानुपपत्तेः। पूर्वदिक्स्थपरिखाविभागाद्बहिर्जलप्रवाहोऽदृश्यः कार्य्य इत्यादि स्वबुध्यैव ज्ञेयमिति" र० ना०।

सि०शि० अत्र विशेषोऽभिहितो यथा "कृत्वादौ ध्रुवयष्टिमिष्टतरुजामृज्वीं सुवृत्तां ततो यष्टीमध्यगतां विधाय शिथिलां पृथ्वीमपृथ्वीं बहिः। मन्दोच्चाक्षिविशेषकृत्तपनादेश्चार्क्षभानां दृढान् गोलांस्तत्परितः क्रमाच्च भनिकासंस्थौ खगगोलकौ" सि०शि० "आदौ सारदारुमयीं यष्टिं कृत्वा तदर्द्धस्थाने तत्र प्रोताम् अपृथ्वीं स्वल्पां शिथिलां च पृथ्वीं विधाय तस्या बहिश्चन्द्रादीनां गोलान् यष्ट्या सह दृढान् बध्नीयात्। तेषां बहिर्भनिकासंस्थौ खद्गगोलाविति साधारण्येनोक्तम्" प्रमि०। इदानीं सविशेषमाह "पूर्वापरं विरचयेत् समभमण्डलाख्यं याम्योत्तरं च विदिशोर्वलयद्वयं च। ऊर्द्ध्वं च एवमिह वृत्तचतुष्कमेतदावेष्ट्य तिर्य्यगपरं क्षितिजं तदर्द्धे" सि०शि०। "एकं पूर्वापरमन्यद्याम्योत्तरं तथा कोणद्वयमेवं वृत्तचतुष्टयमूर्ध्वाधोरूपमावेष्ट्य तदर्द्धे वृत्तं क्षितिजाख्यं निवेशयेत्। अत्र याम्योत्तरवृत्ते उत्तरक्षितिजादुपरि पलांशान्तरे एकं ध्रुवचिह्नं कार्यम्। दक्षिणक्षितिजादधोऽन्यत्। इदानीमुन्मण्डलमाह" प्रमि० "पूर्वापरक्षितिजसंगमयोर्विलग्नं याम्ये ध्रुवे पललवैः क्षितिजादधःस्थे। सौम्ये कुजादुपरि चाचलनैर्ध्रुवे तदुन्मण्डलं दिननिशोः क्षयवृद्धिकारि" सि०शि०। "समवृत्तक्षितिजयोर्यौ पूर्वापरौ संपातौ तयोर्ध्रुवचिह्नयोश्च सक्तं यद्विबध्यते तदुन्मण्डलसंज्ञम्। दिनरात्र्योर्वृद्धिक्षयौ तद्वशेन भवतः। इदानीं विषुवन्मण्डलमाह" प्रमि० "पूर्वापरस्वस्तिकयोर्विलग्नं याम्यस्वस्तिकाद्दक्षिणतोऽक्षभागैः। अधश्च सौम्यस्वस्तिकादुत्तरतोऽङ्कितं च घट्यात्मनाडीवलयं विदध्यात्" सि०शि०। "तयोरेव पूर्वापरसंपातयोर्विलग्नं तथा याम्योत्तरवृत्ते स्वस्वस्तिकाद्दक्षिणतोऽधःस्वस्तिकादुत्तरतोऽक्षांशान्तरे यद्वृत्तं निबध्यते तद्विषुवद्वृत्तम्। इदानीं दृङ्मण्डलमाह" प्रमि०। "ऊर्द्ध्वाधरस्वस्तिककीलयुग्मे प्रोतं च यद्दृग्वलयं तदन्तः। कृत्वा परिभ्राम्य च यत्र तत्र नेयं ग्रहो गच्छति यत्र यत्र" सि०शि० "स्वस्तिके चाधःस्वस्तिके चान्तःकीलकौ कृत्वा तयोः प्रोतं यद्दृग्वलयं कार्यम्। तत् पूर्ववृत्तेभ्यः किञ्चिन्न्यूनं कार्यम्। यथा खगोलान्तर्भ्रमति। यद्येक एव ग्रहगोलस्तदैकमेव दृङ्मण्डलम्। यो यो ग्रहो यत्र यत्र वर्त्तते तत्र तस्योपरिगमेव परिभ्राम्य नियम्य दृग्ज्यादृक्क्षेपादिकं दर्शनीयम्। अथ वा पृथक् पृथगन्यैदृङ्मण्डलानि रचयेत्। तत्रादिमं त्रिविभमण्डलम्। तच्च दृक्क्षेपमण्डलम्। अथ विशेषमाह" प्रमि०। "एवं तदेवाखिलखेचराणां पृथक् पृथग्वा रचयेत् तथाद्यं। दृङ्मण्डलं त्रिविभमण्डलकस्य दृक्क्षेपवृत्ताख्यमिदं वदन्ति" सि०शि०। व्याख्यातमेवेदम्। इदानीमेकं

खगोलबन्धप्रकारमुक्त्वा दृग्गोलबन्धप्रकारं दर्शयति। "बद्ध्वा खगोले नलिकाद्वयं च ध्रुवद्वये तन्नलिकास्थमेव। बहिः खगोलाद्विदधीत धीमान् दृग्गोलमेवं खलु वक्ष्यमाणम्। भगोलवृत्तैः सहितः खगोलो दृग्गोलसंज्ञोऽपममण्डलाद्यैः। दृग्गोलजातं खलु दृश्यतेऽत्र चेत्थं हि दृग्गोलमतो वदन्ति" सि॰शि॰। "तस्मिन् खगोले ध्रुवचिह्नयोर्नलिकाद्वयं बद्ध्वा तन्नलिकाधारमेव खगोलाद्बहिरङ्गुलत्रयान्तरे दृग्गोलं रचयेत्। कथितैः खगोलोवृत्तैर्वक्ष्यमाणैर्भगोलवृत्तैः क्रान्तिविमण्डलाद्यैर्यो निबध्यते स दृग्गोलः। कथमस्य दृग्गोलसंज्ञेति तदर्थमाह दृग्गोलजातमित्यादि। यतोऽजादिकुज्यासमशङ्क्वाद्यक्षेत्राणि दृग्गोलजातानि भगोलवृत्तैः खगोलवृत्तमिलितैरुत्पद्यन्ते। भिन्नगोलबन्धे सम्यङ्नोपलभ्यन्त इति दृग्गोलः कृतः। इदानीं भगोलबन्धमाह" प्रमि॰। "याम्योत्तरक्षितिजवत् सुदृढं विदध्यादाधारवृत्तयुगलं ध्रुवयष्टिबद्धम्। षष्ट्यङ्कमत्र सममण्डलवत् तृतीयं नाड्याह्वयं च विषुवद्वलयं तदेव" सि॰शि॰। यथा खगोले क्षितिजं याम्योत्तरं च तदाकारमपरमाधारवृत्तद्वयं ध्रुवयष्टिस्थं कृत्वा तदुपर्यन्यत् तृतीयं सममण्डलाकारं घटीषष्ट्या चाङ्कितं कार्यम्। तन्नाडीवृत्तं विषुवद्वृत्तसंज्ञं च" प्रमि॰। इदानीं क्रान्तिवृत्तमाह "क्रान्तिवृत्तं विधेयं ग्रहाङ्कं भ्रमत्यत्र भानुश्च भार्धे कुभा भानुतः। क्रान्तिपातः प्रतीपं तथा प्रस्फुटाः क्षेपपाताश्च तत्स्थानकान्यङ्कयेत्" सि॰शि॰। "अथान्यत् तत्प्रमाणमेव वृत्तं कृत्वा तत्र मेषादिं प्रकल्प्य द्वादशराशयोऽङ्क्याः। तत् क्रान्तिवृत्तसंज्ञम्। तस्मिन् वृत्ते रविर्भ्रमति। तथा रवेर्भार्धान्तरे भूभा च तथा तत्र क्रान्तिपातो मेषादेर्विलोमं भ्रमति। तथा ग्रहाणां विक्षेपपाताः प्रस्फुटाः विलोमं भ्रमन्ति। अतः क्रान्तिपातादीनां स्थानानि तत्राङ्क्यानि। इदानीं क्रान्तिवृत्तस्य निवेशनमाह" प्रमि॰।

"क्रान्तिपाते च पाताङ्कषट्कान्तरे नाडिकावृत्तलग्नं विदध्याद्दृढम्। पाततः प्राक् त्रिभे सिद्धभागैरुदग् दक्षिणे तैश्च भागैर्विभागेऽपरे" सि॰शि॰। "क्रान्तिपातचिह्नात् षड्भेऽन्तरेऽन्यच्चिह्नं कार्यम्। ते चिह्ने नाडीवृत्तेन संसक्ते कृत्वा पातचिह्नादग्रतस्त्रिभेऽन्तरे नाडीवृत्ताद्भागचतुर्विंशत्योत्तरतो यथा भवति, अपरविभागे त्रिभेऽन्तरे दक्षिणतश्च तैर्भागैर्यथा भवति तथा बध्नीयात्। इदानीं विमण्डलमाह" प्रमि॰। "नाडिकामण्डले क्रान्तिवृत्तं यथा क्रान्तिवृत्ते तथा खेटवृत्तं न्यसेत्। खेटवृत्तं तु राश्यङ्कितं तत्र च क्षेपपातेषु चिह्नानि कृत्वोक्तवत्। क्रान्तिवृत्तस्य विक्षेपवृत्तस्य च क्षेपपाते सषड्भे च कृत्वा युतिम्। क्षेपपातादग्रतः पृष्ठतश्च त्रिभे क्षेपभागैः स्फुटैः सौम्ययाम्ये न्यसेत्। शीघ्रकर्णेन भक्तास्त्रिभज्यागुणाः स्युः परक्षेपभागा ग्रहाणां स्फुटाः। क्षेपवृत्तानि चैषां विदध्यात् पृथक् स्वस्ववृत्ते भ्रमन्तीन्दुपूर्वा ग्रहाः" सि॰शि॰। "अस्य समयस्य व्याख्यानम् यथा क्रान्तिवृत्तं पृथक् कृतमेवं विमण्डलमपि राश्यङ्कं पृथक् कृत्वा तत्र मेषादेर्व्यस्तं स्फुटं क्षेपपातं दत्त्वाग्रे चिह्नं कार्यम्। अथ क्रान्तिवृत्तस्य विमण्डलस्य च क्षेपपातचिह्नयोः संपातं कृत्वा तस्मात् षड्भान्तरेऽन्यं च संपातं कृत्वा क्षेपपातादग्रतस्त्रिभेऽन्तरे क्रान्तिवृत्तादुत्तरतः स्फुटैः क्षेपभागैः पृष्ठतश्च त्रिभेऽन्तरे तैरेव भागैर्दक्षिणतः स्थिरं कृत्वा विमण्डलं निवेशनीयम्। अथ पठिता ये विक्षेपभागास्ते त्रिज्यागुणाः शीघ्रकर्णेन भक्ताः स्फुटाः स्युः। अत्रानुपातः। यदि कर्णाग्र एतावन्तस्तर्हि त्रिज्याग्रे कियन्त इति। यतो भगोले त्रिज्यैव व्यासार्धम्। एवं चन्द्रादीनां च वृत्तमण्डलानि कार्याणि च। स्वस्वविमण्डले ग्रहा भ्रमन्ति। इदानीं क्रान्तिं विक्षेपं चाह" प्रमि॰। "नाडिकामण्डलात् तिर्यगत्रापमः क्रान्तिवृत्तावधिः क्रान्तिवृत्ताच्छरः। क्षेपवृत्तावधिस्तिर्यगेवं स्फुटो नाडिकावृत्तखेटान्तरालेऽपमः" सि॰शि॰। क्रान्तिवृत्ते यत् स्फुटग्रहस्थानं तस्य क्रान्तिवृत्ताद्यत् तिर्यगन्तरं स विक्षेपः। अथ विमण्डलस्थग्रहस्य नाडिवृत्ताद्यत् तिर्यगन्तरं सा स्फुटा क्रान्तिः। इदानीं क्रान्तिपातमाह" प्रमि॰ "विषुवत्क्रान्तिवलययोः संपातः क्रान्तिपातः स्यात्। तद्भगणाः सौरोक्ता व्यस्ता अयुतत्रयं कल्पे। अयनचलनं यदुक्तं मुञ्जालाद्यैः स एवायम्। तत्पक्षे तद्भगणाः कल्पे गोऽङ्गर्तुनन्दगोचन्द्राः १९९६६९। तत्संजातं पातं क्षिप्त्वा खेटेऽपमः साध्यः। क्रान्तिवशाच्चरमुदयाश्चरदललग्नागमे ततः क्षेप्यः" सि॰शि॰। "क्रान्त्यर्थं पातः क्रान्तिपातः। पातो नाम संपातः कयोः। विषुवत्क्रान्तिवलययोः। तयोर्मेषादावेव संपातः। किन्तु तस्यापि चलनमस्ति। येऽयनचलनभागाः प्रसिद्धास्त एव विलोमगस्य क्रान्तिपातस्य भागाः। मेषादेः पृष्ठतस्तावद्भागान्तरे क्रान्तिवृत्ते विषुवद्वृत्तं लग्नमित्यर्थः। न हि क्रान्तिपातो नास्तीति वक्तुं शक्यते।

प्रत्यक्षेण तस्योपलब्धत्वात् । उपलब्धिप्रकारमग्रे वक्ष्यति । तत् कथं ब्रह्मगुप्तादिभिर्निपुणैरपि नोक्त इति चेत् तदा स्वल्पत्वात् तैर्नोपलब्धः, इदानीं बहुत्वात् साम्प्रतैरुपलब्धः । अत एव तस्य गतिरस्तीत्यवगतम् । यद्येवमनुपलब्धोऽपि सौरसिद्धान्तोक्तत्वादागमप्रामाण्येन भगणपरिध्यादिवत् कथं तैर्नोक्तः । सत्यम् । अत्र गणितस्कन्ध उपपत्तिमानेवागमः प्रमाणम् । तर्हि मन्दोच्चपातभगणा अ.गमप्रामाण्येनैव कथं तैरुक्ता इति न च वक्तव्यम् । यतो ग्रहाणां मन्दफलाभावस्थानानि प्रत्यक्षेणैवोपलभ्यन्ते । तान्येव मन्दोच्चस्थानानि । यान्येव विक्षेपाभावस्थानानि तान्येव पातस्थानानि । किन्तु तेषां गतिरस्ति नास्ति वेति सन्दिग्धम् । तत्र मन्दोच्चपातानां गतिरस्ति चन्द्रमन्दोच्चपातवदित्यनुमानेन सिद्धा । सा च कियती तदुच्यते । यैर्भगणैरुपलब्धिस्थानानि यानि गणितेनागच्छन्ति तद्भगणसम्भवा वार्षिकी दैनन्दिनी वा गतिस्तेषां वा । नन्वेवं यद्यन्यैरपि भगणैस्तान्येव स्थानान्यागच्छन्ति तदा कतरस्या गतेः प्रामाण्यम् । सत्यम् । तर्हि साम्प्रतोपलब्ध्यनुसारिणी कापि गतिरङ्गीकर्तव्या । यदा पुनर्महता कालेन महदन्तरं भविष्यति तदा महामतिमन्तो ब्रह्मगुप्तादीनां समानधर्माण एवोत्पत्स्यन्ते । ते तदुपलब्ध्यनुसारिणीं गतिमुररीकृत्य शास्त्राणि करिष्यन्ति । अतएवायं गणितस्कन्धो महामतिमद्भिर्धृतः सन्ननाद्यन्तेऽपि काले खिलत्वं न याति । अतोऽस्य क्रान्तिपातस्य भगणाः कल्पेऽयुतत्रयं तावत् सूर्यसिद्धान्तोक्ताः । तथा मुञ्जालाद्यैर्यदयनचलनमुक्तं स एवायं क्रान्तिपातः । ते गोऽङ्कर्तुनन्दगोचन्द्रा १९९६६९ उत्पद्यन्ते । अथ च ये वा ते वा भगणा भवन्तु । यदा येऽमी निपुणैरुपलभ्यन्ते तदा स एव क्रान्तिपातः इत्यर्थः । तं विलोमगं क्रान्तिपातं ग्रहे प्रक्षिप्य क्रान्तिः साध्या । इदानीं विक्षेपपातानाह” प्रमि० । “एवं क्रान्तिविमण्डलसंपाताः क्षेपपाताः स्युः । चन्द्रादीनां व्यस्ताः क्षेपानयने तु ते बोध्याः । मन्दस्फुटो द्राक्प्रतिमण्डले हि ग्रहो भ्रमत्यत्र च तस्य पातः । पातेन युक्ताद्गणितागतेन मन्दस्फुटात् खेचरतः शरोऽस्मात् । पातोऽथ वा शीघ्रफलं विलोमं कृत्वा स्फुटात् तेन युताच्छरोऽतः । चन्द्रस्य कक्षामण्डले हि पातः स्फुटाद्ग्रहोर्मध्यमपातयुक्तात्” सि० शि० । “तथा क्रान्तिवृत्तविमण्डलयोः संपातः क्षेपपातः तं ग्रहे प्रक्षिप्य क्षेपः साध्यः । एतदुक्तं भवति क्रान्तिपातः प्रसिद्धः । यथा तं ग्रहे प्रक्षिप्य क्रान्तिः साध्यते । एवं विक्षेपपातं ग्रहे प्रक्षिप्य क्षेपः साध्य इत्यर्थः । अथ विक्षेपपातो मन्दस्फुटे यत् प्रक्षिप्यते तत्कारणमाह मन्दस्फुट इति । यतः शीघ्रप्रतिमण्डले मन्दस्फुटगत्या ग्रहो भ्रमति । तत्र च वृत्ते पातोऽतो गणितागतं पातं मन्दस्फुटे प्रक्षिप्य क्षेपः साध्यते । शेषं स्पष्टम् । इदानीं भृगुकुजयोर्विशेषमाह” प्रमि० “ये चात्र पातभगणाः पठिता इभस्य वोस्ते शीघ्रकेन्द्रभगणैरधिका यतः स्युः । स्वल्पाः कुजार्थमुदितास्तु चलकेन्द्रयुक्तौ पातौ तयोः पठितचक्रभवौ विधेयौ । चलाद्विशोध्यः किल केन्द्रसिद्ध्यै केन्द्रे सपाते द्युचरस्तु योज्यः । अतश्चलात् पातयुताज्ज्ञशुक्रयोः सुधीभिराद्यैः शरसिद्धिरुक्ता । स्फुटोनशीघ्रोच्चयुतौ स्फुटौ तयोः पातौ भगोले स्फुट एव पातः” सि०शि० । “ननु भृगुज्ञयोः शीघ्रोच्चपातयुतं केन्द्रं कृत्वा यो विक्षेप आनीतः स शीघ्रोच्चस्थान एव भवितुमर्हति । न ग्रहस्थाने । यतो ग्रहोऽन्यत्र वर्तते । अत इदमनुपपन्नमिव प्रतिभाति । तथा च ब्रह्मसिद्धान्तभाष्ये “भृगुज्ञयोः शीघ्रोच्चस्थाने यावान् विक्षेपस्तावानेव यत्रतत्रस्थस्यापि ग्रहस्य भवति । अत्रोपलब्धिरेव वासना नान्यत् कारणं वक्तुं शक्यत इति” । चतुर्वेदेनाप्यनध्यवसायोऽत्र कृतः । सत्यम् । अत्रोच्यते । येऽत्र भृगुज्ञयोः पातभगणाः पठितास्ते शीघ्रकेन्द्रभगणैर्युताः सन्तस्तद्भगणा भवन्ति । तथा च माधवीये सिद्धान्तचूडामणौ पठिताः “अतोऽल्पभगणभवः पातः स्वशीघ्रकेन्द्रेण युतः कार्यः । शीघ्रोच्चाद्ग्रहे शोधिते शीघ्रकेन्द्रम् । तस्मिन् सपाते क्षेपकेन्द्रकरणार्थं ग्रहः क्षेप्यः । अतस्तु शोध्यक्षेपयोर्नाशे कृते शीघ्रोच्चपातयोग एवावशिष्यत इत्युपपन्नम् ।

किञ्च मन्दस्फुटोनं शीघ्रोच्चं प्रतिमण्डले चलकेन्द्रम् तत्पाते क्षेप्तुं युज्यते । एवं कृते सति विक्षेपकेन्द्रं मन्दफलेनान्तरितं स्यात् । ग्रहच्छायाधिकारे “सितज्ञपातौ स्फुटौ स्वचलकेन्द्रयुतौ” इत्यत्र मन्दस्फुटोनं शीघ्रोच्चं शीघ्रकेन्द्रपाते क्षिप्तम् । अतस्तत्र मन्दफलान्तरमङ्गीकृतमित्यर्थः इतरकेन्द्रस्यानुपपत्तेः । अतो मन्दफलं पातेऽव्यस्तं देयम् । यतोऽनुपातसिद्धं चलकेन्द्रं मध्यग्रहोनशीघ्रोच्चतुल्यं भवति । यच्च भगोले क्रान्तिमण्डलं तत् कक्षावृत्तम् । तत्र प्रतिमण्डलं यत्र स्फुटग्रहः । तत्

स्फुटपातयोगो हि विक्षेपकेन्द्रम्। अतः स्फुटपातस्थाने संपातं कृत्वा ततस्त्रिभेऽन्तरे स्फुटीकृतैः परमविक्षेपांशैः प्राग्वदुत्तरे दक्षिणे च विन्यस्तम्। तथा न्यस्ते विमण्डले स्फुटग्रहस्थाने विक्षेपः स्फुटविक्षेपेण गणितागतेन तुल्यो दृश्यते नान्यथेत्यर्थः। इदानीं ग्रहगोले विशेषमाह” प्रमि०। “ग्रहस्य गोले कथितापमण्डलं प्रकल्प्य कक्षावलयं यथोदितम्। निबध्य शीघ्रप्रतिवृत्तमस्मिन् विमण्डलं तत् पठितैः शरांशैः। मध्योऽत्र पातो द्युसदां ज्ञभृग्वोः स्वशीघ्रकेन्द्रेण युतस्तु देयः” सि०शि०। “भगोल एव तावद्ग्रहगोलः कल्प्यः। तत्र स्फुट एव पातः। अथ यदि तदन्यो ग्रहगोलोऽन्यो निबध्यते तदा तत्र यथोक्तं विषुवद्वृत्तं क्रान्तिवृत्तं च बद्ध्वा तत् क्रान्तिवृत्तं कक्षामण्डलं प्रकल्प्य तत्र छेद्यकोक्तविधिना शीघ्रप्रतिमण्डलं बद्ध्वा तत्र प्रतिमण्डले गणितागतं पातं मेषादेर्विलोमं गणयित्वा तत्र चिह्नं कार्यम् अथ त्रिज्याव्यासार्धमेवान्यद्वृत्तं राश्यङ्कं विमण्डलाख्यं कृत्वा तत्रापि मेषादेर्व्यस्तं पाताग्रे चिह्नं कृत्वा प्रतिमण्डलविमण्डलयोः पातचिह्ने प्रथमं संपातं ततो भार्धान्तरे द्वितीयं च संपातं कृत्वा पातादग्रतः पृष्ठतश्च त्रिभेऽन्तरे परमविक्षेपांशैः पठितैः प्रतिवृत्तादुत्तरे दक्षिणे च विमण्डलं विन्यस्यम्। तत्र मन्दस्फुटगत्या पारमार्थिको ग्रहो भ्रमति। अतो मेषादेरनुलोमं मन्दस्फुटो विमण्डले देयः। स तत्रस्थः प्रतिमण्डलाद्यावतान्तरेण विक्षिप्तस्तावांस्तत्प्रदेशे विक्षेपः। यतो वृत्तसंपातस्थे ग्रहे विक्षेपाभावः। त्रिभेऽन्तरे परमो विक्षेपः। मध्येऽनुपातेन। अतो वृत्तसंपातग्रहयोरन्तरं ज्ञेयम्। तदन्तरं पातग्रहयोगे कृते भवति पातस्य विलोमगत्वात्। स योगः शरार्थं केन्द्रम्। यदि त्रिज्यातुल्यया केन्द्रज्यया परमः शरस्तदाभीष्टयाऽनया क इति फलं प्रतिमण्डलविमण्डलयोस्तिर्यगन्तरं स्यात्। विमण्डलस्थग्रहाद्यद्भूमध्यगं सूत्रं तद्भूग्रहान्तरम्। स च शीघ्रकर्णः। यदि भूमध्यात् कर्णाग्रे एतावान् विक्षेपस्तदा त्रिज्याग्रे कियानिति द्वितीयं त्रैराशिकम्। आद्ये त्रिज्या हरो द्वितीये गुणस्तयोर्नाशे कृते केन्द्रज्यायाः परमशरगुणायाः कर्णो हरः। फलं कक्षावृत्तसूत्रयोस्तिर्यगन्तरम्। स स्फुटः शरः। इदानीमहोरात्रवृत्तमाह” प्रमि०। “ईप्सितक्रान्तितुल्येऽन्तरे सर्वतो नाडिकाख्यादहोरात्रवृत्ताह्वयम्। तत्र बद्ध्वा घटीनां च यष्ट्याङ्कयेदस्य विष्कम्भखण्डं द्युजीवा मता” सि०शि०। “नाडीवृत्तादुत्तरतो दक्षिणतो वा सर्वत इष्टक्रान्तितुल्येऽन्तरे यद्वृत्तं निबध्यते तदहोरात्रवृत्तम्। तेन वृत्तेन तस्मिन् दिने रविर्भ्रमतीत्यर्थः। तस्य वृत्तस्य व्यासार्धं द्युज्या। इदानीमन्यदाह” प्रमि०। “अथ कल्प्या मेषाद्या अनुलोमं क्रान्तिपाताङ्कात्। एषां मेषादीनां द्युरात्रवृत्तानि बध्नीयात्। नाडीवृत्तोभयतस्त्रीणि त्रीणि क्रमोत्क्रमात् तानि” सि०शि०। क्रान्तिपाताङ्कादारभ्य त्रिंशता त्रिंशता भागैरङ्कान् मेषादीन् प्रकल्प्य तदग्रे द्युक्रवदहोरात्रवृत्तानि बध्नीयात्। तानि च नाडीवृत्तस्योभयतस्त्रीणि त्रीणि भवन्ति। तान्येव क्रमोत्क्रमतः सायनांशार्कस्य द्वादशराशीनाम्” प्रमि०। “एष भगोलः कथितः खेचरगोलोऽयमेव विज्ञेयः। अत्रापमण्डले वा सूत्राधारैरधश्च तस्यैव। शन्यादीनां कक्षा बध्नीयादूर्ध्वनाभजालाभाः। बद्ध्वा भगोलमेवं यष्ट्यां यष्टिं खगोलनलिकान्तः। प्रक्षिप्य भ्रमयेत्तं यष्ट्याधारं स्थिरौ खदृग्गोलौ” सि०शि०। “यथायं भगोलो बद्धस्तथैव ग्रहगोलाऽपि बध्नीयाः। किन्तु तेषां छेद्यकमन्तश्चालयितुं नायातीति बहिःस्थमेव दर्शनीयम्। अथ वा भगोले यदपमण्डलं तस्याधोऽधस्तन्निबद्धैः सूत्राधारैर्बद्ध्वा शन्यादीनां कक्षा दर्शनीयाः। एवंविधं भगोलं यष्ट्यां दृढं बद्ध्वा यष्ट्यग्रयोः प्रोते नलिकाद्वये निबद्धौ खगोलदृग्गोलौ कृत्वा भगोलभ्रमणं दर्शयेत्” प्रमि०।

## तदयं खगोलस्थपदार्थसंक्षेपः।

कटाहद्वितयवत् सम्पुटाकारस्यान्तरवकाशवतो ब्रह्माण्डस्य मध्ये सूर्यकिरणसञ्चारावधिर्व्योमकक्षा। तदधः नक्षत्रकक्षा तदधः क्रमेण दृश्याः पूर्वगाः शनिजीवकुजसूर्यशुक्रबुधशशिनः अदृश्याश्च राहुपातादयः पश्चिमगतयः, वक्ष्यमाणस्वस्वकक्षायां स्थिताः। अश्विन्यादिनक्षत्राणि स्थिराण्यपि तत्समुदायात्मकं भचक्रं पश्चाद्गतिमता प्रवहवायुनाऽभिहतं पश्चात् भ्रमत् नाक्षत्रषष्टिघटिकाभिः भूगोलमेकवारं भ्रमति तत्स्था रव्यादयः ग्रहाश्च स्वगत्या पूर्वयायिनोऽपि तदाधाराश्रितभचक्रपश्चाद्भ्रमणेन पश्चाद्भ्रमणभ्रमविषया भवन्ति।

राशिचक्रञ्च ३६० अंशैर्विभक्तमंशाश्च षष्टिकलाभि-

विभागाः, कलाश्च षष्टिविकलाभिर्विभक्तास्तेन ३६०अंशैः, २१६०० कलाभिः, १२९६००० विकलाभिर्विभक्तं भचक्रम्। भचक्रद्वादशविभागो राशिरित्युच्यते राशयश्च मेषादयः द्वादशमिताः। तेनैकैकराशौ त्रिंशदंशाः, १८०० कलाः १०८००० विकलाः सन्ति। मेषादिराशयोऽपि अश्विन्यादि २७ नक्षत्रात्मकाः। तेन सपादनक्षत्रद्वयेनैकैकोराशिः प्रतिनक्षत्रं च १३।२०। विंशतिकलाधिकास्त्रयोदश अंशाः सन्ति। तथाहि अश्विनी १३।२० भरणी १३।२० कृत्तिकाद्यपादश्च ३।२० मेषः। कृत्तिकान्त्यपादत्रयम् १०। रोहिणी १३।२०। मृगशिराद्यार्द्धञ्च ६।४०। वृषः। मृगशिरान्त्यार्द्धम् ६।४० आर्द्रा १३।२०। पुनर्वस्वाद्यपादत्रयं च १०। मिथुनम्। पुनर्वस्वन्त्यपादः ३।२०। पुष्यम् १३।२० अश्लेषा च १३।२०। कर्कः। मघा १३।२०। पूर्वफल्गुनी १३।२०। उत्तरफाल्गुन्याद्यपादश्च ३।२०। सिंहः। उत्तरफाल्गुन्यन्त्यपादत्रयं १०। हस्तः १३।२०। चित्राद्यार्द्धञ्च ६।४०। कन्या। चित्रान्त्यार्द्धं ६।४०। स्वातिः १३।२०। विशाखाद्यपादत्रयञ्च १०। तुला। विशाखान्त्यपादः ३।२० अनुराधा १३।२०। ज्येष्ठा च १३।२०। वृश्चिकः। मूलं १३।२०। पूर्वाषाढा १३।२० उत्तराषाढाद्यपादश्च ३।२०। धनुः। उत्तराषाढान्त्यपादत्रयं १०। श्रवणं १३।२०। धनिष्ठाद्यार्द्धञ्च ६।४०। मकरः। धनिष्ठान्त्यार्द्धं ६।४०। शतभिषा १३।२०। पूर्वभाद्रपदाद्यपादत्रयञ्च १०। कुम्भः। पूर्वभाद्रपदान्त्यपादः ३।२०। उत्तरभाद्रपदा १३।२० रेवती च १३।२० मीनः। उत्तराषाढायाः शेषपादश्रवणाद्यघटिकाचतुष्टयस्याभिजित्संज्ञा कुत्रचित् कार्य्यार्था। तस्य स्थानादि २८७ पृ० उक्तम्। एते च राशयः तत्राश्विन्यादयश्च यथा पूर्वमवस्थिताः तेषां स्वरूपमस्तेषाशब्दे ४९८ पृ०, विक्षेपा ध्रुवकाश्च २४२२ पृ० दर्शिताः। वक्ष्यमाणभचक्रयोजनानि द्वादशधा विभक्तानि मेषादिराशीनां स्थानमानयोजनानि। २७विभक्तानि अश्विन्यादिनक्षत्रादीनां स्थानमानयोजनानि। ३६० विभक्तानि अंशस्थानमानयोजनानि। २१६०० विभक्तानि कलास्थानमानयोजनानि। भचक्रस्य शून्याद्यूर्द्ध्वस्थत्वात् तदाश्रितनक्षत्राणामप्यूर्द्ध्वस्थत्वम्। भचक्रवत् भूगोलस्य तावदंशकलाद्यात्मकतया भूगोलांशकलादिस्थानसंलग्नसूत्रकायस्य निवेशने नक्षत्रकक्षायामंशकलाद्यात्मकस्थानेषु सूत्रापान्तरस्य निवेशने च तन्मध्यस्थानां शून्यादिकक्षाणामंशकलादिस्थानविभागः भचक्रकलादिस्थानानामन्तरालानां तदाश्रितदृक्कलाविकलाद्यात्मकत्वं गौणम्।

चन्द्रकक्षातोऽधः सिद्धविद्याधरघनाः क्रमेणाधोऽधःस्थिताः। ते च भूगोलात् द्वादशयोजनपर्य्यन्तमूर्द्ध्वगामिनि आवह नाम्नि भूवायौ स्थितत्वात् प्रवहवायवस्थानाभावाच्च न राशिचक्रगत्या पश्चात् गच्छन्ति। तदधः भकक्षायाः समानान्तरालाकाशप्रदेशरूपकेन्द्रस्थाने भूगोलः स्थितः। भूगोलशब्दे विवृतिः। संक्षेपेणेह किञ्चिदुच्यते। स च ब्रह्मणो धारणात्मकशक्त्याश्रयत्वात् निराधारः एवाकाशे स्थितः। तस्य च स्थिरत्वं भचक्रस्यैव चलत्वं च परमतनिराशेन २४२३ पृ० समर्थितम्। भूगोलमध्यगतो मेरुः स च भूगोलाद्दूर्ध्वाधोनिर्गतः। तत्र ऊर्द्धस्थे मेरौ देवानां वासः, अधःस्थे चासुराणाम्। स च भूगोलः देवासुरभागतया द्विधा विभक्तः तद्विभाजकश्च महार्णव एव। स च पृथिव्या मेखलेव चतुर्दिक्षु वेष्टनाकारेण स्थितः। मेरुमध्यात् चतुर्दिक्षु तुल्यभागेषु ९० अंशेषु समुद्रद्वीपमध्ये लङ्कादीनि भूपरिधिपाद १२४६ योजनान्तरदेशस्थितानि चत्वारि पुराणि। यथा पूर्वस्यां भद्राश्ववर्षे यमकोटी। दक्षिणस्यां भारतवर्षे लङ्का। पश्चिमायां केतुमालवर्षे रोमकपुरी। उत्तरस्यां कुरुवर्षे सिद्धपुरी। ताभ्यः पुरीभ्यः (१२५६) योजनान्तरे देवाश्रयः मेरुरुत्तरतःस्थितः। असुराश्रयश्च तथैव दक्षिणतः। विषुवस्थः सूर्यः तासामुपरिगो याति। तासु च विषुवच्छायापातोनास्ति न वा तदपेक्षयान्यत्राक्षोन्नतिः तत्रैव भचक्रस्य सर्व्वोन्नतत्वात् इत्यतस्तासां निरक्षेति संज्ञा मेर्वोरुपरिस्थितैः ध्रुवतारे, मूर्द्धस्थिते निरक्षपुरीषु च ते क्षितिसंलग्ने दृश्येते। तत्स्थानात् उत्तरां गच्छतः क्रमशः उत्तरध्रुवः क्षितिजदृत्तादुन्नतो भवति दक्षिणध्रुवश्च क्षितिमध्यप्रविष्टो भवति। एवं दक्षिणां गच्छतः क्रमशः दक्षिणध्रुवस्योन्नतिः उत्तरध्रुवस्य नतत्वात् भूवृत्तेनाच्छादनम्। भूवृत्तस्य ३६० अंशात्मकत्वेन निरक्षस्थानेभ्यः पादान्तरितस्थानस्थितत्वेन मेरौ ९० अंशाः अक्षांशाः। तदन्तरदेशेषु त्रैराशिकेनानुपातात् अक्षांशा ज्ञेयाः। यदि ९० अंशैः १२५६ योजनानि तदा १अंशे किमिति। किञ्चिन्न्यून १४ योजनैः एकोऽक्षांशः। सौम्ययाम्ययोः सूर्यस्य भूवृत्तपञ्चदशांश एव निरक्षस्थानात् परमक्रान्त्यंशाः २४। तेन निरक्षस्थानात् १४ गुणिते २४ अंशे ३३६ एतद्योजनमितस्थानपर्य्यन्तं सूर्य्यस्य तयोर्दिशोरुपरिगमनम्। अवन्ती च लङ्कातः क्षितिषोडशांशे ३०१४ योजनान्तरे स्थिता। तेन तत्र २२।१/२ अक्षांशाः।

ततः ११।१/२ अंशान्तरिते २१ योजनान्तरितदेशपर्य्यन्त स्थितदेशोर्द्ध्वगः सूर्य्य उत्तरायणान्तगो गच्छति। ततः पूर्व्वस्यां पश्चाद्वा तत्समसूत्रपातस्थदेशेऽपि। राशिचक्रस्य निरक्षदेशोपरि पश्चाद्गत्या भ्रमदपि देवासुराभ्यां सव्यापसव्यगतिमत्तया, निरक्षदेशे क्षितिजसममध्यतया च दृश्यते। राशिचक्रमध्यस्थानमेव विषुवस्थानं तत्र सुरासुराणां क्षितिजवृत्तलग्नतया दृश्यम्। तत्र भचक्रे मेषादिषट्कमुत्तरोन्नतं तुलादिषट्कं च दक्षिणनतमत उत्तरमेरुस्थदेवैः मेषादिषट्कमेव दृश्यते तुलादिषट्कं तु भूवृत्तेनाच्छादनात् न दृश्यते। दक्षिणमेरुस्थदैत्यैस्तु तुलादिषट्कमेव दृश्यते मेषादिषट्कं तु भूवृत्ताच्छादनात् न दृश्यते। अतो मेषादिषट्कस्थरविकाः षण्मासा देवानां दिनम्, सूर्य्यदर्शनयोग्यकालस्यैव दिनत्वात् तुलादिषट्कस्थरविकाः षण्मासाः रात्रिः, सूर्य्यादर्शनयोग्यकालस्यैव रात्रित्वात्। दैत्यानां तु तुलादिषट्कस्थरविकाः षण्मासाः दिनं, मेषादिषट्कस्थरविकाः षण्मासा रात्रिः। निरक्षदेशात् सौम्ययाम्ययोः ६६ अंशान्तरितदेशे तु द्वादशमासा एव दिनम् रात्रिर्नास्ति तद्वासिभिः सूर्य्यस्य सदा दर्शनात्। तथाहि पूर्व्वापरयोरिव याम्यसौम्ययोरपि उभयत्र ९० अंशपर्य्यन्तदृष्टिप्रचारात् सौम्ययाम्ययोश्च २४ अंशपर्य्यन्तमेव रवेः परमक्रान्तेरुक्तत्वात् सौम्ये ६६ अंशान्तरितदेशस्थानाम् याम्ये २४ अंशपर्य्यन्तरवेःस्थितावपि मिलित्वा ९० रवेः अंशान्तरालस्थितत्वात् दृष्टियोग्यता। एवं याम्ये ६६ अंशान्तरितदेशस्थानामपि सौम्ये २४ अंशपर्य्यन्तदेशोपरिगरवेर्दृष्टियोग्यता ९० अंशमध्यस्थत्वात्। सौम्ये निरक्षस्थानात् ६८।१/२० पलांशान्तरितदेशे धनुर्मकरराशी न दृश्येते। अतः धनुर्मकरस्थरविकौ द्वौ मासौ तत्र रात्रिः शिष्टादश मासा दिनम्। याम्ये तु तदंशस्थदेशे कर्कमिथुने न दृश्येते अतस्तत्र कर्कमिथुनस्थरविकौ द्वौ मासौ रात्रिः शिष्टादश मासा दिनम्। निरक्षात् सौम्ये ७८।१/२ अंशान्तरितदेशे वृश्चिकादिराशिचतुष्कं न दृश्यते। तेन तत्स्थरविकाश्चत्वारो मासा रात्रिः। शिष्टा अष्टौ मासा दिनम्। याम्ये तु निरक्षात् तथान्तरितदेशे वृषादिचतुष्कं न दृश्यते। अतस्तत्स्थरविकाश्चत्वारो मासा रात्रिः। शिष्टा अष्टौ मासा दिनम्।

सौम्ययाम्यायनद्वयोः सम्पातस्थानं विषुवद्वयं तत्र निरक्षोपरिगमम्। अयनद्वयस्य च इष्टारम्भ मिथुनान्तात् ६६।८कालेन प्राक् पश्चात् वा एतैकांशमतीत्य चलतीति अदःगृहे २६७पृ० दर्शितम्। अयनद्वयचलनाच्च तत्सम्पातस्थानादिकमपि भिद्यते। इदानीञ्च पश्चात् २१ अंशचलनम् तेन मिथुनस्य नवमांशे उत्तरायणान्तकालः। धनुषोनवमांशे च याम्यायनान्तकालः। तदनुसारेण तयोः सम्पातस्थानरूपविषुवस्थानद्वयमपि भिन्नम्। इदानीञ्च मीननवमांशे पूर्व्वविषुवस्थानं कन्यानवमांशे त्वपरविषुवस्थानम्। एवं विषुवायनमध्यगविष्णुपदादिस्थानमपि भिन्नम्। अयनञ्च द्विधा सौम्ययाम्यभेदात्। मीननवमांशात् कन्यानवमांशं यावत् सौम्यं, कन्यादशमांशात् मीननवमांशं यावच्च याम्यम्। एते एवायने देवासुरयोर्दिवारात्रिविभागदनरात्रिमानस्थानोपयोगि मुख्यतया। धनुर्नवमांशात् मिथुननवमांशं यावत् सौम्यायनं मिथुननवमांशात् धनुर्नवमांशं यावत् याम्यायनन्तु सौम्ययाम्यदिशोरेकस्य गत्यारम्भकालतया चूड़ादिषु मङ्गलकर्म्मतया गोणं सौम्यायन एव चूड़ादिविधानात् याम्यायने तन्निषेधाच्च तथात्वमिति सि०शि०स्थितम्। इदानीं मीननवमांशरूपविषुवस्थाने च भूवृत्ताद्विनिर्गतः सूर्य्यः क्रमेण मेषादीन् त्रीन् राशीन् ९० अंशान् मिथुनदशमांशपर्य्यन्तम् उत्तरोत्तरमारोहन् देवानां पूर्व्वार्द्धं सम्पादयति मिथुनदशमांशात् कन्यानवमांशान्तञ्चावरोहन् अपरार्द्धम्। एवं कन्यादशमांशात् धनुर्नवमांशान्तं यावत् सञ्चरन् दैत्यानामह्नः पूर्व्वार्द्धं सम्पादयति धनुर्दशमांशात् मीननवमांशं यावत् सञ्चरंश्च उत्तरार्द्धमिति विवेकः।

विधूर्द्ध्वभागस्थितपितॄणाञ्च चान्द्रमासेनाहोरात्रम्। तथाहि सूर्य्याचन्द्रमसोरेकराश्येकांशावच्छेदेन स्थितिकालरूपामावस्या। सूर्य्यस्य चन्द्रोपरिगततया तदानीं तेषां मध्याह्नकालः अतएवामावस्यायां पितॄणां श्राद्धविधानम् तत्समध्याह्नस्यैव भोजनकालत्वात्। पौर्णमास्याञ्च चन्द्रापेक्षया सप्तमराशिस्थतया सूर्य्यस्य तदा चन्द्राधोवर्त्तमानतयाऽदृश्यत्वात् अर्द्धरात्रम्। पुराणादौ चन्द्रात् सूर्य्यस्याधःस्थत्वकीर्त्तनमपि पितॄणां दृष्ट्या पौर्णमासाभिप्रायेण। तेन पञ्चदशांशरूपहोरात्रमध्यकालतया कृष्णाष्टम्यर्द्धसमये तेषां सूर्य्योदयः। शुक्लाष्टम्यर्द्धकाले चास्तमनमिति तद्दिनस्य चान्द्रमासरूपता।

निरक्षदेशात् भूवृत्तस्य पञ्चदशभागपर्य्यन्तमेव सूर्य्यस्य सौम्ययाम्ययोः परमक्रान्तेरुक्तत्वात्। भूवृत्तपञ्चदशभागः१२६ योजनान्तरालोत्तरदेशे तदपेक्षया सूर्य्यस्य [illegible]

छायाप्रसरणम्, उत्तरस्थत्वे छायायां दर्शनम्। निरक्षात् याम्ये तथान्तराल २३ विभागस्थदेशे तदपेक्षया सूर्य्यस्य दक्षिणत्वे छायाप्रसरणम् उत्तरत्वे छायायां दर्शनम्। ततोऽप्यधिकयोजनान्तरिते तु देशे, सूर्य्यस्य सौम्ययाम्यस्थत्वेऽपि सदा छायायां विभाजकमेरुमुखम्। तथा च सौम्ये तथाविधदेशे छायायां सौम्यमेरुमुखं याम्ये तु याम्यमेरुमुखमिति भेदः। लङ्कापुरे यदा सूर्य्योदयः तदा यमकोट्यां मध्याह्नः, भारताधःस्थे सिद्धपुरेऽस्तकालः, रोमकेऽर्द्धरात्रम्। एवं सर्वत्र भूपृष्ठे अधोर्ध्वःस्थितदेशयोरुदयास्तकालौ स्वस्वतिर्य्यक्पूर्वस्थितदेशे भूवृत्तपादान्तरिते मध्याह्नकालः, स्वकृतिर्य्यक्पश्चात्तथास्थितदेशेऽर्द्धरात्रम्। तदन्तरालस्थदेशानान्तु त्रैराशिकेनोदयास्तकाला वेदितव्याः। सूर्य्यं च राशिचक्रस्यानियभ्रमणात् तद्गतसूर्य्यस्यापि तद्वशात् भ्रमणेन देशभेदेनैवोदयास्तादिकालव्यवस्था।

निरक्षदेशात् उत्तरमेरुं गच्छतः क्रमेण उत्तरध्रुव उन्नतो दृश्यते, दक्षिणस्तु भूवृत्तेनाच्छादनात् न दृश्यते। भचक्रमध्यं च क्रमेण नतं दृश्यते। सौम्यमेरुस्थितदेशात् निरक्षं गच्छतश्च उत्तरध्रुवः क्रमेण नतः, भचक्रञ्च क्रमेणोन्नतं दृश्यते। एवं निरक्षात् दक्षिणमेरुं गच्छतश्च क्रमेण दक्षिणध्रुवः उन्नतः, भचक्रञ्च नतमुत्तरध्रुवस्तु भूवृत्तेनाच्छादनात् न दृश्यते। ततो निरक्षाभिमुखं गच्छतश्च क्रमेण दक्षिणध्रुवो नतो भचक्रञ्चोन्नतं भवति। तथा प्रवहवायुगोलस्यपूर्वापरविषुवद्वृत्ताधःस्थनिरक्षदेशे ध्रुवयोः क्षितिजस्थत्वभ्रान्तिः, तत्र च भचक्रस्य मस्तकोपरिभ्रमणं च दृश्यते। तेन मेर्वभिमुखं गच्छतः क्रमेण ध्रुव उच्चः, भचक्रं च नीचमिति युक्तम्।

भचक्रस्येव तदधोऽधःस्थानां ग्रहकक्षाणामपि तत्तुल्यांशकलाविकलाद्यात्मकतयाऽङ्कने महत्याः कक्षाया अंशादेर्बृहत्त्वात्मकत्वम्, अल्पकक्षायां च अल्पत्वात्मकत्वं, तेन महाकक्षायां स्थितस्य बहुकालेन भगणपूर्त्तिर्लघुकक्षास्थितस्य स्वल्पकालेन। अतो विधोः सर्वाधोलघुकक्षास्थितत्वेन मासेनैव भचक्रभ्रमणं, शनेस्तु सर्वोपरिमहाकक्षास्थितत्वात् ३० वर्षैर्भचक्रभ्रमणम्। एवमन्येषां तदन्तरालस्थितानां भचक्रभ्रमणकालविशेषः त्रैराशिकेन कल्पनीयः।

खकक्षादिस्थानयोजनानि अधोऽधःस्थग्रहकक्षामानयोजनानि च सू० सि० उक्तानि तासां भूमध्यस्य च।

खकक्षायाः १८७१२०८०८६४००००००

नक्षत्रकक्षायाः २५९८९०००० उ० । ४१३६२३५८

शनिकक्षायाः १२७६६८२५५ उ० । २०३१९०७१

अहम्सराहुकक्षायाः ८०५७२८६४

गुरुकक्षायाः ५१३७५७६४ उ० । ८१७६५३८

अहम्सचन्द्रमन्दोच्चकक्षायाः ३८३२८४८४

कुजकक्षायाः ८१४६९०९ उ० । १२९६६१९

बुधशुक्रसूर्य्यकक्षाणाम् ४३३१५०० उ० । ६८९३७७

अहम्सशुक्रशीघ्रोच्चकक्षायाः २६६४६७७ उ० । ४२४०८८

अहम्सबुधशीघ्रोच्चकक्षायाः १०४३२०९ उ० । १६६०२२

चन्द्रकक्षायाः ३२४००० उ० । ५१५६६

भूवृत्तपरिधेः ५०२६ स्थूलम् ४९६७ सूक्ष्मम्

अगस्त्यादीनां भचक्रस्थितिस्थानांशविक्षेपास्तु सू० सि० उक्ता यथा।

अगस्त्यः मिथुनान्ते भचक्रस्य ९० अंशे स्थितः। मिथुनान्तक्रान्तिवृत्तात् याम्ये ८० अंशास्तस्य विक्षेपः।

मृगव्याधः मिथुनविंशांशे भचक्रस्य ८० अंशे स्थितः तदीयक्रान्तिवृत्तात् ४० अंशास्तस्य याम्ये विक्षेपः।

वह्निनक्षत्रं वृषराशिद्वाविंशभागे भचक्रस्य ५२ अंशे स्थितम्। तस्याष्टावंशाः स्वक्रान्तिस्थानात् उत्तरे विक्षेपः।

ब्रह्महृदयम् वृष २२ भागे भचक्रस्य ५२ भागे स्थितं स्वक्रान्तिवृत्तात् सौम्येऽस्य ३० अंशाः विक्षेपः।

एतच्च मिथुनान्तेऽयनांशकाले, अयनांशचलने तु अन्यत्र विक्षेपः।

रोहिणीशकटम् वृषराशिसप्तदशांशे भचक्रस्य ४७ अंशे स्थितं स्वक्रान्तिस्थानात् अंशद्वये याम्येऽस्य विक्षेपः।

ब्रह्मनामनक्षत्रम् वृषसप्तविंशांशे भचक्रस्य ५७ अंशे स्थितम् स्वक्रान्तिस्थानात् सौम्ये ३८ अंशा अस्य विक्षेपः।

अपांवत्सनक्षत्रं चित्रातुल्यध्रुवके स्थितं चित्राविक्षेपात् अंशद्वयात् ५ अंशाः सौम्ये अस्य विक्षेपः।

आपसंज्ञनक्षत्रं चित्रायामेव स्थितं अपांवत्सात् ६ अंशान्तरेऽस्य सौम्ये विक्षेपः।

सप्तर्षयस्तु उत्तरस्यां स्थिताः विक्षेपभेदस्तु सौरागमे नोक्तः तेषां शतवर्षैरेकैकर्क्षभोगः बृ० सं० उक्तः ऋषिशब्दे १४५१ पृ० विवृतिः।

कृत्तिकादीनां योगतारादिकं भशब्दे ४६७ पृ० उक्तम् ध्रुवकविक्षेपास्तु २४५२ पृ० उक्ताः।

वीथिविवृतिः बृहत्संहितायां यथा।

नागवीथिः अश्विनीभरणीकृत्तिकाः,

गजवीथिः रोहिण्यार्द्रामृगशीर्षाः,

| | |
|---|---|
| ऐरावतवीथिः | पुनर्वसुपुष्याश्लेषाः |
| वृषभवीथिः | मघादित्रयम् |
| गोवीथिः | हस्तादित्रयम् |
| जरद्गववीथिः | विशाखादित्रयम् |
| मृगवीथिः | मूलादित्रयम् |
| अजवीथिः | श्रवणादित्रयम् |
| दहनवीथिः | पूर्वभाद्रपदादित्रयम् |

सूर्यादिग्रहाणां ४३२०००० वर्षात्मकयुगे राशिचक्र भ्रमणसंख्या सू॰सि॰ उक्ता यथा

| | | |
|---|---|---|
| रवेः | ४३२०००० | पूर्वगत्या |
| बुधस्य | ४३२०००० | तथा |
| शुक्रस्य | ४३२०००० | तथा |
| अदृश्यभौमशीघ्रोच्चस्य | ४३२०००० | तथा |
| अदृश्यगुरुशीघ्रोच्चस्य | ४३२०००० | तथा |
| अदृश्यशनिशीघ्रोच्चस्य | ४३२०००० | तथा |
| चन्द्रस्य | ५७७५३३३६ | तथा |
| भौमस्य | २२९६८३२ | तथा |
| अदृश्यबुधशीघ्रोच्चस्य | १७९३७०६० | तथा |
| गुरोः | ३६४२२० | तथा |
| अदृश्यशुक्रशीघ्रोच्चस्य | ७०२२३७६ | तथा |
| शनेः | १४६५६८ | तथा |
| अदृश्यचन्द्रमन्दोच्चस्य | ४८८२०३ | तथा |
| अदृश्यराहोः (पातस्य) | २३२२३८ | पश्चाद्गत्या |

एत एव सहस्रगुणिताः कल्पे सूर्यादिभगणाः।
तत्र सि॰शि॰सूक्ष्मतया विशेष उक्तः स च २४२९पृ॰दर्शितः।

कल्पे सूर्यमन्दोच्चादिभगणसंख्या

| | सू॰सि॰ मते | सि॰शि॰ मते |
|---|---|---|
| प्राग्गतेः सूर्यमन्दोच्चस्य | ३८७ | ४८० |
| तथा कुजमन्दोच्चस्य | २०४ | २९२ |
| तथा बुधमन्दोच्चस्य | ३७८ | ३३२ |
| तथा जीवमन्दोच्चस्य | ९०० | ८५५ |
| तथा शुक्रमन्दोच्चस्य | ५३५ | ६५३ |
| तथा शनिमन्दोच्चस्य | ३९ | ४१ |
| पश्चाद्गतेः कुजपातस्य | २१४ | २६७ |
| तथा बुधपातस्य | ४८८ | ५२१ |
| तथा जीवपातस्य | १७४ | ६३ |
| तथा शुक्रपातस्य | ९०३ | ८९३ |
| तथा शनिपातस्य | ६६२ | ५८४ |

कल्पादौ पातं विहाय सर्वे ग्रहाः मीनान्ते मेषादौ प्राग्गत्या स्थिताः
पातस्तु विलोमगत्या तुलादौ स्थित इति भेदः। तदुत्तरकाले तु स्वस्वगत्यनुसारेण राशिकलादौ स्थितिः प्राग्गत्या पश्चाद्गत्या वा बोध्या ॥ चैत्रशुक्लप्रतिपदि शनिवारे कल्पारम्भः इदानीञ्च श्वेतवराहकल्पः। तत्र च वर्त्तमानकालपर्य्यन्ताहर्गणानयनम् अहर्गणशब्दे ५७७ पृ॰ दर्शितरीत्या ज्ञेयम्। अस्य कल्पस्य शुक्रवारे प्रवृत्तिः।

महायुगे नाक्षत्रादिदिनसंख्या सू॰सि॰ उक्ता

| | |
|---|---|
| नाक्षत्रदिनसंख्या | १५८२२३७८२८ |
| सावनदिनसंख्या | १५७७९१७८२८ |
| चान्द्रदिनरूपतिथिसंख्या | १६०३०००८० |

सूर्यादिबिम्बमानयोजनानि सि॰शि॰ उक्तानि

| | |
|---|---|
| रवेर्बिम्बव्यासयोजनानि | ६५२२ |
| चन्द्रमण्डलव्यासयोजनानि | ४८० |

भूमण्डलव्यासयोजनानि स्थूलानि १६००सू॰सि॰ उक्तानि १५८१ सूक्ष्माणि सि॰शि॰ उक्तानि। योजने करमानाङ्गुलस्य षट्सप्ताष्टयवमितत्वभेदेन योजनसंख्याभेदः। अन्येषां ग्रहाणां बिम्बमानं सौरागमे नोक्तम्। कल्पादौ ग्रहाणां ध्रुवकाः २४३२ पृष्ठे उक्ता ग्रहाणां सावनदिने मध्यगतिमानं तत्रैव पृष्ठे उक्तं, मेषादौ सूर्यस्य सावनमानेन भोगकालः ४२३४,३५ पृ॰ दर्शितः

दशगुर्वक्षरोच्चारणकालः प्राणः असुरिति चोच्यते ६ षड्भिः प्राणैः पलं विनाडी च, षष्ट्या पलैः नाडीदण्ड इति चोच्यते षष्ट्या दण्डैर्नाक्षत्रमहोरात्रम्। भचक्रस्य तावता कालेन भ्रमणात् तस्य नाक्षत्रत्वम्। सावनदिनं सूर्योदयाद्द्वितीयसूर्योदयपर्य्यन्तकालरूपम् तच्च नाक्षत्रदिनात् सूर्यस्य स्वाक्रान्ततत्तद्राश्यंशादि भोगकालाधिकम्। सावनदिनमपि नाक्षत्रदिनवत् स्वपरिमाणानुसारिषष्टिदण्डात्मकमिति भेदः।
नक्षत्रचक्रस्य षष्ट्या दण्डैर्भ्रमणेऽपि तस्य द्वादशराश्यात्मकतया षष्टिदण्डमध्ये द्वादशराशीनामुदयः। राश्युदयश्च स्वस्वदृष्टिगोचरक्षितिजवृत्ते पूर्वस्यां प्राथमिकदृष्टिगोचरयोग्यस्थानसम्बन्धः। राशीनां मध्ये यस्य यत्किञ्चित्कलाद्युदयः तस्योदय इति व्यवह्रियते। राशिचक्रस्य तिर्य्यक्स्थिततया देशभेदेन दृष्टियोग्यकालतारतम्येन कालभेदेनैव मेषादीनामुदयः न तु समकालेन। तत्र निरक्षदेशेषु मेषादीनामुदयासवः सू॰सि॰उक्ता यथा

| | असवः | पलानि | दण्डादि । |
|---|---|---|---|
| मेषस्य | १६७० | २७८।२/६, | ४।३८।२/६ |
| वृषस्य | १७९१ | २९८।५।६ | ४।५८।५/६ |
| मिथुनस्य | १९३७ | ३२२।५/६ | ५।२२।५/६ |
| कर्कस्य | १९३७ | ३२२।५/६ | ५।२२।५/६ |
| सिंहस्य | १७९१ | २९८।५/६, | ४।५८।५/६ |
| कन्यायाः | १६७० | २७८।२/६, | ४।३८।२/६ |
| तुलायाः | १६७० | २७८।२/६ | ४।३८।२/६ |
| वृश्चिकस्य | १७९१ | २९८।५/६ | ४।५८।५/६ |
| धनुषः | १९३७ | ३२२।५/६ | ५।२२।५/६ |
| मकरस्य | १९३७ | ३२२।५/६ | ५।२२।५/६ |
| कुम्भस्य | १७९१ | २९८।५/६, | ४।५८।५/६ |
| मीनस्य | १६७० | २७८।२/६ | ४।३८।५/६, |

मेषादीनामुदयकालभेदे कारणम् २४२६ पृ० दर्शितम् अन्यदेशेषु चरखण्डवशेन लग्नमानभेदं ज्ञेयः ।
चरखानञ्च द्विविधं सौम्ययाम्यं पूर्वापरञ्च ।
तत्र लङ्कातोमेरुपर्य्यन्तदेशः सौम्ययाम्यं चरस्थानं मध्य-रेखातः समसूत्रपातस्थपूर्वापरदेशः पूर्वापरचरस्थानम् ।
चरखण्डानयनञ्च २४२६ पृ० दर्शितम् ।

देशभेदेन सूर्य्योदयादिव्यवस्था सि०शि० उक्ता लङ्कामारभ्य उत्तरमेरुं शीयमाना रेखा अवन्तीकुरुक्षेत्रादिदेशान् स्पृशन्ती या याति सा मध्यरेखा। मध्यरेखायां यदा सूर्य्योदयः तत्पूर्वदेशे ततः पूर्वमेव तदुदयः । ततः पश्चिमे भागे तु पश्चात् । तत्र यदि ६० घटीभिः भूवृत्तयोजनानि लभ्यन्ते तदा रेखास्वपुरान्तरालयोजनानि कियन्त्या घट्या इत्यनुपातेनोदयकालज्ञानम् ।
सौम्यायने देवभागस्थदेशे दिवसो महान् तदुपरि सूर्य्यस्य गतत्वात्, रात्रिस्तु स्वल्पा। याम्यायने देवभागे दिनं स्वल्पं रात्रिर्महती । निरक्षे तु सर्व्वदैव अहोरात्रं समानम् पूर्वप्रदर्शितप्रमाणकोदयकालकानां मेषादीनां मध्ये यंकञ्चिदारभ्य दिनारम्भे त्रिंशद्घटिकामानत्वसिद्धेः। तत्र मेषादौ देवभागस्थतया सूर्य्यसान्निध्यत्वात् तत्रप्रदेशे ग्रीष्मप्रधानता । तुलादौ तु दैत्यभागस्थत्वात् सूर्य्यस्य विप्रकृष्टतया देवभागे शिशिरप्रधानता । दैत्यभागे तु वैपरीत्येन शिशिरप्रीष्मते । द्वादशराशिषु मध्ये द्वयोः सौम्ययाम्यायनसंक्रान्ती द्वयोर्विषुवसंक्रान्ती [illegible] [illegible] संक्रान्तयः। तथाहि विषुवायनयोर्मध्ये द्वे विष्णुपद्याख्यौ संक्रान्ती । तेन मेषारम्भे पूर्वविषुव-संक्रान्तिः । वृषे विष्णुपदीसंक्रान्तिः मिथुनेऽपि विष्णुपदी संक्रान्तिः तस्यांशविशेषे च षडशीतिमुखं तेनेयं संक्रान्तिः षडशीतिमुखेऽतीते जायमानत्वात् षडशीतिरिति च भण्यते । मिथुनान्ते कर्कादौ याम्यायनसंक्रान्तिः सूर्य्यस्य दक्षिणगतेरारम्भात् तस्य दक्षिणायनत्वं तच्च चूडादिषु वर्ज्यतया गौणम् । सिंहे विष्णुपदी । कन्यारम्भे विष्णुपदी प्राग्वत् षडशीतिरिति च कथ्यते । कन्यान्ते तुलादौ अपरविषुवसंक्रान्तिः तुलान्ते वृश्चिकादौ विष्णुपदी, धनुरादौ विष्णुपदी प्राग्वत् षडशीतिरिति च । धनुरन्ते सौम्यायनसंक्रान्तिः सूर्य्यस्योत्तरगत्यारम्भात् । तच्च चूडादौ विहितत्वेन गौणम् । मकरान्ते कुम्भादौ विष्णुपदी, कुम्भान्ते मीनादौ विष्णुपदी षडशीतिरिति च कथ्यते । षडशीतिमुखत्वञ्च षडशीत्यंश मितान्तरकालस्थित्या । तथाहि तुलादितः षडशीतितमोऽंशः धनुषः षड्विंशोऽंशः तत्र प्रथमं तन्मुखम् तत आरभ्य मीनद्वाविंशेऽंशे द्वितीयं, ततोमिथुनस्याष्टादशांशे तृतीयं कन्यायाश्चतुर्दशांशे चतुर्थमिति भेदः । अतश्चराचरद्व्यात्मकराशिषु षडशीतिमुखसद्भावात् तिस्रः षडशीतयः। सुरासुराणां दिनरात्रिविभागकारि अयनन्तु मेषादिमारभ्य कन्यान्तं यावत् सौम्यायनं तुलादिमीनान्तं च याम्यायनमिति भेदः । संक्रान्तिश्च द्विविधा स्थिरा चला च विवृतिरयनसंक्रान्तिशब्दे ३२९ पृ० द्रष्टव्या । अयनचलनवत् विषुवविष्णुपद्यादीनां चलनात् कालभेदेन राशिविशेषाद्यंशभेदेनैव तत्तत्संक्रान्तिर्भवति ।
इदानीन्तु मीनस्य पश्चात् एकविंशांशे अर्थात् तन्नवमांशे विषुवारम्भः मिथुननवमांशे च अयनारम्भः । इत्येवं सर्वसंक्रान्तीनां तत्तदंशभेदे चलसंक्रान्तिरित्यूह्यम् ।
राशिचक्रस्थ गतस्याश्विन्यादिसप्तविंशतिनक्षत्राणाञ्च एकस्यां रात्रौ दृष्टियोग्यता । तथाहि सूर्य्यस्य यस्मिन् राशौ यदंशादौ उदयः, ततः सप्तमे राशौ तथाविधांशादावस्तमनम् । तेन सूर्य्याक्रान्तांशापेक्षया १८० भचक्रांशाः क्रमेण दिवसे उदिता अपि सूर्य्यकिरणाच्छन्नतया दिवसे न दृष्टियोग्या अस्तमिते तु सूर्य्ये रात्र्यारम्भात्तथे ते सर्वे पूर्वकुजवृत्तात् पश्चिमकुजवृत्तमध्ये नतोन्नततया दृश्यन्ते । यथा यदा मेषस्य प्रथमांशे सूर्य्योदयात् दिनारम्भः ततः पूर्वस्था मेषावशिष्टांशाः, वृषादिराशिपञ्चक १५०अंशात्मकं तुलायाः प्रथमांशाद्यार्द्धं च क्रमेण दिने उद-

च्छति। ततः रात्र्यारम्भे तुलायाः प्रथमांशद्वितीयार्द्धं, ततो धनुरादिपञ्चकम् १५०अंशात्मकं, मेषस्याद्यांशश्च क्रमेण रात्रौ उद्गच्छति ; अत एकस्यां रात्रौ सर्वराशिचक्रांशदर्शनम्। इयांस्तु विशेषः पूर्वकुजवृत्तात् खमध्योपरिस्थाकाश-भागरूपं खस्वस्तिकं यावत् ९० अंशात्मकं राशित्रयं मध्याह्नकालमध्ये क्रमेणोन्नतं भवति अपराह्णे तु तदेव ९०अंशात्मकं राशित्रयं खस्वस्तिकात् पश्चिमकुजवृत्ताभिमुखं सत् नतं भवति। उन्नतांशानां मध्ये यस्य यस्य स्वापेक्षया पूर्वस्थैकनवतितमांशस्योदयः तस्य तस्य नतिर्भवति। नतांशानाञ्च मध्ये यस्य स्वापेक्षया १८१ पूर्वस्थैकाशी-त्युत्तरशततमांशस्योदयः तस्य तस्य पश्चिमकुजवृत्तेनाच्छा-दनादस्तत्वम् भवति। राशिचक्रवत् तत्स्थानि अश्वि-न्यादीनि नक्षत्राणि तत्स्था भौमादिग्रहाश्च एकरात्रौ दर्शनयोग्या भवन्ति। अस्तंगतास्तु सूर्येण सह दिन एव उदिता अपि सूर्यकिरणाभिभूततेजस्त्वात् न दृश्यन्ते। कालशब्दे १९९१पृ०दर्शितास्तांशमध्यवर्तिनस्तु सूर्यसन्नि-कर्षविशेषेण मन्दकिरणतया दृश्या अपि न सम्यक् दृश्यन्ते। चन्द्रस्य दर्शने त्वयं विशेषः चन्द्रोहि जल-मयः तस्य स्वतेदीप्तिर्नास्ति तस्य दूरस्थजलमयस्य दृश्य-योग्यत्वात्। सूर्यकिरणप्रवेशेनैव दीप्त्या दर्शनयोग्यता तस्मात्तु नक्षत्रचक्रांशः स्थितत्वेऽपि एकराश्यंशावस्थिति-कालरूपामावास्यान्तकालात् क्रमेण सूर्यात् पूर्वगतस्य तिर्यग्रूपेण स्थितत्वात् तत्प्रवेशः। तत्रापि ४८० यो-जनात्मकचन्द्रबिम्बस्य गोलाकृततया सूर्याभिमुखार्द्ध एव सूर्यकरप्रवेशः नेतरार्द्धे। तथा च पूर्णिमान्तसमये तयोः सम्यक्तिर्य्यग्रूपेण स्थितत्वात्तदानीमेव चन्द्र-बिम्बार्द्धे २४० योजनात्मके तत्करसंपूर्णप्रवेशः। पूर्णि-मान्तकालश्च सूर्याक्रान्तराश्यादितः भचक्रस्य १८० अंशस्थे चन्द्रे भवति। स च पञ्चदशतिथिभिर्भवति तथा च यदि १५ दिनैः १८० अंशगत्या करप्रवेशपूर्त्तिकालः तदा एकेन दिनेन क इत्यनुपातेन फलम् १२ अंशाः। यदि १८०अंशगत्या २४०योजनात्मकपूरणं तदा द्वादशांशगत्या किमित्यनुपातेन फलं १६योजनात्मकं चन्द्रबिम्बार्द्धस्य पञ्चदशांशरूपकला-पूरणं लभ्यते ततश्च चन्द्रबिम्बार्द्धस्य पूर्वगतो पञ्चदशांशात्मक १६योजनरूपायाः कलायाः पश्चिमस्य सूर्यापेक्षया तिर्य्य-क्स्थित्या सूर्यकिरणप्रवेशानुकूलतया वृद्धिक्रियात्व आरो-प्यते। षड्दशकलात्मकचन्द्रमण्डलस्य तु शुक्लप्रतिपदापि सूर्याक्रान्तांशादितो विभाग.द्वादशक्रियाद्यपनिःसरणस्य

ग्रस्यात् न षोडशैकादिकलाक्रिया, अस्वीकारे च षोडशायास्तस्या बिम्बं विहाय गमनाभावात् न तन्निःसरणं सम्भवति न वा दृश्यते। दृश्यते च द्वितीयादौ सूर्याक्रान्तांशादिभ्योऽन्तदूरतया चन्द्र-बिम्बस्य स्थितिः। किन्तु प्रथमादि दिने प्रथमादिकला-मात्रस्य पूर्वतोनिःसरणस्वीकारे चन्द्रबिम्बस्य पूर्वादि-कलानामेव दृश्यतापत्तिः। न च तथा दृश्यते प्रत्युत पश्चिमस्थकलानामेव क्रमशः दृश्यमाने। अतः सूर्य-किरणप्रवेशयोग्यत्वसम्पादिका तिर्य्यक्स्थितिरूपैव प्रथ-मादिकलाक्रियेति वस्तुस्थितिः। तत्राप्यमावास्यान्ते सूर्या-क्रान्तराश्यंशादिसाम्येन तदधःस्थचन्द्रस्य सर्वथाऽदर्शनम् सूर्येण सह दिन एव तस्योदयात्। ततः शुक्लप्रतिपदि द्वादशांशान्तरितत्वेन तस्य सूर्यात् पूर्वगत्या १६ योज-नात्मकचन्द्रबिम्बार्द्धकलायाः तिर्य्यक्स्थितत्वेऽपि काल-शब्दे १९९० पृ० दर्शितास्तांशमध्यवर्त्तित्वात् अस्तांशमध्य-वर्त्ति भौमादीनामिव न दृष्टिः। एवं कृष्णचतुर्द्दश्यामपि द्वादशांशान्तरितत्वेन पश्चात्तिर्य्यक्स्थित्यापि न दृष्टियोग्यता। शुक्लद्वितीयायान्तु सूर्याक्रान्तराश्यंशात् दिनद्वयेन २४ अंशान्तरितत्वेन पूर्वापेक्षया सूर्यादधिकतिर्य्यक्स्थित्या २४ योजनात्मकस्य चन्द्रबिम्बार्द्धपञ्चदशांशरूपकलाद्वयस्य सूर्यकिरणप्रवेशात् दृष्टियोग्यता। एवं तृतीयादिष्वपि क्रमेण सूर्यकिरणप्रवेशाधिक्यात् अंशविशेषे दीप्तिपरि-वृद्धिः। शुक्ले पक्षे सूर्याक्रान्तराशितः द्विमादिराश्य-न्तरितत्वेन स्थितस्य दिवोदितस्यापि चन्द्रबिम्बस्य सूर्य-किरणविशेषप्रवेशेऽपि सौरालोकेनाभिभूतत्वात् धूम्रतयैव दृष्टियोग्यता। पूर्णिमायान्तु चन्द्रस्य सूर्याक्रान्तराशितः १८० भचक्रांशगत्या परमतिर्य्यक्स्थित्या सर्वकलासु २४० योजनात्मिकासु सूर्यकिरणप्रवेशः। कृष्णप्रतिपदि तु द्वा-दशांशान्तरितत्वेन सूर्यात् पश्चात् स्थित्या तिर्य्यग्गमनाभावतया १५ योजनरूपप्रथमकलायां न सूर्यकरप्रवेश इत्यतस्तस्य न दर्शनम् तत्र सूर्यकराप्रवेशनानुकूलतिर्य्यग्गतिभेद एव कृष्णपक्षीयकलाक्रियेति भेदः। अधिकमिन्दुशब्दे ९३० पृ० उक्तम्।

तिथिकरणयोगनक्षत्रवारेशादिरूपादिकं तत्तच्छब्दे दृश्यमितिदिक्।

खगाड पु० खे आकाशे गच्छति गम—अच् पृषो० कस्य डः। (खागडा) ख्याते वृक्षभेदे रत्नमा०। [पूर्वकुन्दे कुलक०।

खङ्गर पु० खन्यते खन—किप् कीर्य्यते कॄ—अप् कर्म्मधा०।

**खच** पूतौ उत्पत्तौ च अतिक्रान्तोत्पत्तौ सि०कौ० क्र्या० प०अक०सेट्। खच्ञाति अखचीत्-अखाचीत्। मध-व्यत्यासात् "खचद्भूतावलीढम्" कथास०।

**खच** बन्धने अद० चुरा० उभ० सक० सेट्। खचयति ते अचखचत् त। "भुजङ्गनीडखचितं बिभ्रज्जटामण्डलम्" मकु० "रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः" मेघदू०। उद्+खच बन्धने। "अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव" रघुः। "उत्खचिता सह घ-टिता" मल्लिना०।

**खचमस** पु० खे आकाशे चम्यतेऽसौ चम-कसच्। चन्द्रे त्रिका० "एष सोमोराजा देवानामन्नं देवा एनं भक्षयन्तीति" श्रुतेः स्वर्गवासिभिरास्वादनात्तस्य तथात्वम्।

**खचर** पु० खे आकाशे चरति चर-ट। १मेघे शब्दच०। २वायौ ३सूर्य्ये च। ४राक्षसे पु०स्त्री मेदि०स्त्रियां ङीप्। "खचरस्य सुतस्य सुतः खचरः खचरस्य पिता न सुनः खचरः। खचरस्य सुतेन हतः खचरः खचरी परिरोदिति हा खचर!" इति शब्दकल्पद्रुमे द्रोणपर्व्वीयतया लिखितं तत्तु घटोत्कचवधपर्व्वण्येव सम्भवदपि तत्र न दृश्यते। तस्य श्लोकस्यायमर्थः खचरस्य वायोः सुतस्य भीमस्य सुतः पुत्रः खचरः घटोत्कचः। खचरस्य राक्षसस्य तस्य पिता भीमः न खचरः राक्षसः। खचरः घटोत्कचः खचरस्य सूर्य्यस्य सुतेन कर्णेन हतः। खचरी हिडम्बा तन्माता राक्षसी हा खचरेत्युक्त्वा रोदितीति। ५आकाशगामिमात्रे देवपक्षिशरपक्षादौ त्रि० स्त्रियां ङीप्। "पवनोदिक्पतिर्भूमिराकाशं खचरामराः"। संकल्पादौ पाठमन्त्रः। अत्र खचरशब्देन पक्षा उच्यन्ते अमरपवनयोः पृथङ्निर्द्देशात्। "खचरनगरकल्पं लाघवात् पाण्डवानाम्" भा०द्रो०७अ०। "पुरं सुरमणीयञ्च खचरं सुमहाप्रभम्" भा०व० १७२ अ०। खपुरशब्दे विवृतिः। "जितकाशिनश्च खचरास्त्वरिताश्च महारथाः" भा०व०२४२ अ०। खचरा गन्धर्व्वाः॥ बृ०स० १४ अ० कूर्म्मविभागे उत्तरस्यामुक्ते ६देशभेदे पु०ब०व०। "उत्तरतः कैलासः" इत्युपक्रमे "हेमतालराजन्यखचरगव्याश्च" "खचरे रङ्गताले स्यात् गुरुरादौ लघुस्तथा। शाम्येऽथ वा हास्यरसे भवेदेष दश।चरः" संगीतदा० उक्ते ७गीतभेदे पु०।

**खचारिन्** त्रि० खे आकाशे चरति-चर-णिनि। १आकाशगामिनि पक्ष्यादौ स्त्रियां ङीप्। २कार्त्तिकेये पु० "खचारी ब्रह्मचारी च शूरः शरवणोद्भवः" भा०व०१२२अ०

**खचित** त्रि० खच-क्त। १संयुक्ते त्रिका० २व्याप्ते शब्दच०। ३स्फुरिते जटाध०। [खचि कृतः खजयति।०

**खज** मन्थे भ्वा०पर०सक०सेट्। खजति अखा(ख)जीत् घटा०

**खजि** पङ्गुतायां भ्वा० इदित् पर० अक० सेट्। खञ्जति अखञ्जीत्। खञ्जः। पङ्गुता चेहैकपादविकलता।

**खज** पु० खजति मथ्नाति खज-अच्। १मन्थानदण्डे। "यथाश्वनहितं सर्पिर्यद्वन्निर्मथ्यते खजैः। शुक्रं निर्मथ्यते तद्वद्देहसंकल्पजैः खजैः" भा०शा० २१४ अ०। "दध्नः सौम्य! मथ्यमानस्य योऽणिमा स ऊर्द्ध्वः समुदीषति तत्सर्पिर्भवति" छा०उ०। "वायुसङ्गृहितेन खजेन मथ्यमानस्य दध्नः" भा०शा०। "खजोमन्थानः तेन मथ्यमानस्य दध्नः" आन० (डाता) २दर्व्वीम् भरतः ३युद्धे च तत्र शत्रोर्मर्द्दनात् तथात्वं "अलर्षि युध्म खजकृत् पुरन्दर!" ऋ०८।१।७, "खजकृत् युद्धकर्त्तः!" भा० स्वार्थे क। खजक। मन्थानदण्डे हेम०। [उज्ज्वलद०।

**खजप** न० खज्यते मथ्यते खज-कर्म्मणि कपन्। घृते उ-

**खजल** न० खे आकाशे सञ्चितं, खात् पतितं वा जलं शाक० त०। १नीहारे त्रिका० २आकाशपतिते जले च "वर्षासु चरन्ति वनैः सहोरगा विषति कीटभूताश्च। तद्विषजुष्टमपेयं खजलमगस्त्योदयात् पूर्वम्" राजवल्लभः।

**खजा** स्त्री खज-घटा० भावे अ। १मन्थने (मओता) २मारणे हेम०। कर्त्तरि अच् टाप्। चमसाकारे ३पाकसाधनद्रव्ये मेदि०। "खजाश्च दर्वीः करेण धारयन्" भा० वि० ७अ०।

**खजाक** पुंस्त्री खज-आकन्। १पक्षिणि उज्ज्वलद० खजा-स्वार्थे क। २चमसाकारे पाकसाधने द्रव्ये स्त्री अमरः।

**खजिका** स्त्री खजैव स्वार्थे क वा अत इत्वम्। खजायां चमसाकारे पाकसाधनभेदे शब्दचि०।

**खजित्** पु० खेन शून्यभावनया जयति संसारं जि-क्विप्। बुद्धभेदे सहि "सर्वं शून्यं शून्यमिति भावनया जगतांस्थिरत्वनिराकरणेन संसारं जयतीति" तस्य तथात्वं बुद्धशब्दे विवृतिः। [राजनि०।

**खज्योतिस्** पु० खे आकाशे ज्योतिरस्य। खद्योते कीटभेदे

**खञ्ज** त्रि० खजि गतिवैकल्ये अच्। (खोंडा) एकपादविकले। तस्य लक्षणादिकं भावप्र० उक्तं यथा "वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद् यदा। खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात्। सक्थ्नः कण्डरा-

गुल्फस्थ, कण्डरां वातास्त्रायुम् आक्षिपेत् गमनादौ कम्पयेत् । वधात् गमनादिक्रियाघातात्" । तथाच एकपादविकलत्वे खञ्जः द्विपादविकलत्वे पङ्गुरिति भेदः । तस्यैव भेदः कलापखञ्जः तल्लक्षणं तत्रोक्तं यथा "कम्पते गमनारम्भे खञ्जन्निव च लक्ष्यते । कलापखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् । गमनारम्भे कम्पते । एतयोः खञ्जाद्यमेव भेदः कलापखञ्ज इति शास्त्रे रूढा संज्ञा न तु यौगिकी"। तस्य कर्मविशेषविपाकत्वम् शातातपेनोक्तं यथा "हरणे निहते खञ्जः शृगाले तु विपादकः" । विपादकः पादद्वयगतिशून्यः पङ्गुरित्यर्थः ।"काणं वाप्यथ वा खञ्जमन्यं वापि तथाविधम् । तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणावरम्" मनुः तस्य दैवपैत्रकर्मकरणकालेऽपसार्यतामाह" मनुः "खञ्जो वा यदि काणो दातुः प्रेष्योऽपि वा भवेत् । हीनातिरिक्तगात्रो वा तमप्यपनयेत्ततः" जन्मतः खञ्जत्वे सुश्रुतेन कारणमुक्तं यथा "दौहृदविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति" । स्वार्थे क खञ्जक तत्रार्थे हेम० । अस्य कडारादिपाठात् वा पूर्वनिपातः खञ्जबाहुः कलापखञ्ज इत्यादि ।

**खञ्जकारि** पु० खञ्जकरोऽरिः (खेंशारि) धान्यभेदे राजनि० तत्सेवनात् खञ्जत्वं नश्यतीति तस्य तथात्वम् ।

**खञ्जखेट** पुंस्त्री खञ्ज इव खेटति खिट-गतौ अच् । खञ्जन विहगे शब्दमा० । स्त्रियां जातित्वात् ङीष् ।

**खञ्जखेल** पुंस्त्री खञ्ज इव खेलति खेल-अच् । खञ्जनखगे स्त्रियां जातित्वात् ङीष् ।

**खञ्जन** न० खजि-भावे ल्युट् । १विकलगतौ मेदि० कर्त्तरि ल्यु । २खनामख्याते पक्षिभेदे पुंस्त्री० स्त्रियां ङीष् । स्वार्थे क । तत्रार्थे । तस्य दर्शने शुभाशुभफलाद्युक्तं वृ०सं० ४५ अ० यथा "खञ्जनको नामायं यो विहगस्तस्य दर्शने प्रथमे । प्रोक्तानि यानि मुनिभिः फलानि तानि प्रवक्ष्यामि । स्थूलोऽभ्युन्नतकण्ठः कृष्णगलो भद्रकारको भद्रः । आ कण्ठमुखात् कृष्णः सम्पूर्णः पूरयत्याशाम् । कृष्णो गलेऽस्य बिन्दुः सितकरटान्तः स रिक्तकृद्रिक्तः । पीतो गोपीत इति क्लेशकरः खञ्जनो दृष्टः । अथ मधुरसुरभिफलकुसुमतरुषु सलिलाशयेषु पुण्येषु । करितुरगभुजगमूर्ध्नि प्रासादोद्यानहर्म्येषु । गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपे । हस्तितुरङ्गमशालाच्छत्रध्वजचामराद्येषु । हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तेषु । दधिपात्रधान्यकूटेषु च नित्यं खञ्जनः कुरुते । पङ्के स्वाद्वन्नाप्तिर्गोरसपङ्के च गोमयोपगते । शाद्वलगे वस्त्राप्तिः शकटस्थे देशविभ्रंशः । गृहपटलेऽर्थभ्रंशो वध्रे बन्धोऽशुचौ भवति रोगः । पृष्ठे त्वजाविकानां प्रियसङ्गममावहत्याशु । अर्थविनाशं कुर्याद्गर्दभास्थिश्मशानगृहकोणशर्करादिस्थः । प्राकारभस्मकेशेषु चाशुभो मरणरुग्भयदः । पक्षौ धुन्वन् शुभः शुभः पिबन् वारि निम्नगासंस्थः । सूर्योदयेऽथ शस्तो नेष्टफलः खञ्जनोऽस्तमये । नीराजने निवृत्ते यया दिशा खञ्जनं नृपो यान्तम् । पश्येत्तया गतस्य क्षिप्रमरातिर्वशमुपैति । तस्मिन्नधिभवति मैथुनमेति यस्मिन् यस्मिंस्तु छर्दयति तत्र तलेऽस्ति काचः । अङ्गाररख्यामुपदिशन्ति पुरीषणेऽस्य तत्कौतुकापनयनाय खनेद्धरित्रीम् । स्तनितकलविभिन्नरोमतः खगतुसमानफलप्रदः खगः । घनहृदभिनिलीयमानको वियति च बन्धुसमागमप्रदः । नृपतिरपि शुभं शुभप्रदेशे खगमवलोक्य महीतले विदध्यात् । सुरभिकुसुमधूपयुक्तमर्घं शुभमभिनन्दितमेवमेति वृद्धिम् । अशुभमपि विलोक्य खञ्जनं द्विजगुरुसाधुसुरार्चने रतः । न नृपतिरशुभं समाप्नुयान्न यदि दिनानि च सप्त मांसभुक् । आ वर्षात् प्रथमे दर्शने फलं प्रतिदिनं तु दिनशेषे । दिक्स्थानमूर्त्तिलग्नर्क्षशान्तदीप्तादिभिश्चोह्यम्" नि०त० । "कृत्वा नीराजनं राजा बलवृद्ध्यै यथाबलम् । शोभनं खञ्जनं पश्येत् जलगोगोष्ठसन्निधौ । (तत्र तिमन्त्रः) "नीलग्रीव ! शुभग्रीव ! सर्वकामफलप्रद ! । पृथिव्यामवतीर्णोऽसि खञ्जरीट ! नमोऽस्तु ते" । वसन्तराजे "दृष्टो दृतेऽगस्त्यमुनौ सुदेशे सुचेष्टितं खञ्जनकोविदध्यात्" इत्युपक्रम्य "त्वं योगयुक्तो मुनिपुङ्गवस्त्वम् दृश्यतामेषि शिखोद्गमेन । संदृश्यसे प्रावृषि निर्गतायां त्वं खञ्जनाश्चर्यमयो नमस्ते" । एतद्वचनात् यदा शिरसि शिखोद्गमस्तदा खञ्जनो न दृश्यते अगस्त्योदयानन्तरं शिखाविगमात् पुनर्दृश्यते । दर्शनफलम् "अब्जेषु गोषु गजवाजिमहोरगेषु । राज्यप्रदः कुशलदः शुचिशाद्वलेषु । भस्मास्थिकेशनखलोमतुषेषु दृष्टो दुःखं ददाति बहुशः खलु खञ्जरीटः" । वर्षकमे "वित्तं ब्रह्मणि कार्यसिद्धिरतुला शक्रे हुताशे भयं, याम्ये त्वभ्भयं सुराद्विषि कलिर्लाभः समुद्रालये । वायव्यां वरवस्त्रगन्धवनिता द्विजाङ्गना चोत्तरे ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने" ।

काष्ठनिर्म्मिते शयनसाधने द्रव्यभेदे । तस्या अङ्गादिनिरूपणेन रचनाप्रकारः आकारादिभेदेन नामभेदादिकं च युक्तिकल्पतरौ उक्तं यथा

“अष्टाभिः काष्ठखण्डैश्च खट्वेति प्रतिपद्यते । तिष्ठेत् यदाश्रित्य खट्वा तज्ज्ञेयं चरणाद्वयम् । शिरःस्थं व्युपधानं स्यात् अधःस्थं स्यात् निरूपकम् । अलिङ्गने उभे पार्श्वे प्राह भोजमहीपतिः । आलिङ्गने चतुर्हस्ते व्युपधाननिरूपके । तदर्द्धेन, तदर्द्धेन चत्वारश्चरणा इति । सर्व्वषोड़शिका खट्वा सर्व्वत्राभयदायिका । आलिङ्गने सार्द्धवेदे व्युपधाननिरूपके । सार्द्धद्वये, च चरणा हस्तैकपरिसम्मिताः । सर्व्वाष्टादशिका खट्वा सर्व्वकामफलप्रदा । आलिङ्गने पञ्चहस्ते व्युपधाने निरूपके । तदर्द्धेन, तदर्द्धेन चत्वारश्चरणा इति । सर्व्वविंशतिका खट्वा धनधान्यजयप्रदा । आलिङ्गने पञ्चहस्ते व्युपधाने निरूपके । त्रिहस्तसम्मिते, पादा हस्तैकपरिसम्मिताः । सर्व्वैकविंशिका खट्वाप्येवमप्युपजायते । आलिङ्गने सार्द्धपञ्चे व्युपधाने निरूपके । तदर्द्धेन, तदर्द्धेन चत्वारश्चरणा इति । सर्व्वद्वाविंशिका खट्वा सर्व्वसम्पत्प्रदायिनी । आलिङ्गने च षड्हस्ते व्युपधाने निरूपके । त्रिहस्तसम्मिते, पादाश्चत्वारश्चरणा इति । चतुर्विंशतिका खट्वा सर्व्वरोगक्षयङ्करी । आलिङ्गने सप्तहस्ते व्युपधाने निरूपके । त्रिहस्ते, सार्द्धहस्ताश्च चत्वारश्चरणा इति । सर्व्वषड्विंशिका खट्वा सर्व्वसौभाग्यकारिका । आलिङ्गने सार्द्धसप्ते व्युपधाने निरूपके । सार्द्धत्रिहस्ते, सार्द्धाश्च चत्वारश्चरणा इति । सर्व्वाष्टाविंशिका खट्वा सर्व्वभोगप्रदायिका । आलिङ्गने चाष्टहस्ते व्युपधाने निरूपके । चतुर्हस्ते, सार्द्धहस्ताश्चत्वारश्चरणा इति । सर्व्वत्रिंशतिका खट्वा सर्व्वकामार्थदायिनी । एवमष्टविधाः खट्वाः समासेनोपदर्शिताः । क्षत्रियादिदशाजानां न्येषां सम्पत्तिदायिकाः । कार्य्याः शिल्पिभिरेतास्तु विविधाश्चर्तकल्पनाः । सर्व्वषोड़शिका खट्वा सर्व्वेषामेव युज्यते । अष्टौ खण्डानि यस्याः स्युश्चतुर्हस्तयुतानि च । श्रीसर्व्वमङ्गला नाम खट्वैषा पृथिवीपतेः । इयं यदा सचन्दना तदा सर्व्वजयाभिधा । याता सिद्धिः सर्व्वसिद्धिर्विजया चाष्टमङ्गला ॥ एकैकहस्तवृद्ध्या तु भवेत्सम्भ्रमतःपरम् । जयोऽथ मङ्गलः प्रेयान् चिलकान्तः परोमहान् ॥ एकैकहस्तवृद्ध्या तु सङ्गाना मिति सम्भवम् । या वक्रा कृतिवक्रा च विस्तरी विषमे यथा । एकैकहस्तवृद्ध्या तु इह दशाभिधीयते । बालादिवृद्धिं समारभ्य येऽमी षोड़श कीर्त्तिताः । आदित्यादिदशाजानामाद्यन्तं वहवं क्रमात् । दूरदर्शी दीर्घदर्शी दुर्जयोऽथ दुरासदः । सर्व्वोत्तरं दशगुणाः पादैकपरिवाहिनः । प्रासादसंज्ञकाः कार्य्या राज्ञा हृष्टमभीप्सता । चत्वारस्ते च सर्व्वेषां भूपतीनां सुखावहाः” । भोजमते तु “सर्व्वत्रिंशतिकां यावत् आरभ्य भयषोड़शीम् । खट्वानामिति नामानि यष्टौ षष्ठ्यक्षराधिकाः । मङ्गला विजया पुष्टिः क्षमा तुष्टिः सुखासनम् । प्रचण्डा सर्व्वतोभद्रा खट्वानामाष्टकं विदुः” । ज्योतिःपराशरसंहितायां तु “अष्टाभिः काष्ठखण्डैस्तु योऽङ्कपिण्डोऽभिजायते । स चेत् समो भवेत् खट्वा प्रशस्ता स्यादतोऽन्यथा । समे सर्व्वाः सम्पत्तिर्विषमे विषमास्तरम् । तस्मात् खट्वाङ्कपिण्डोऽयः समः कार्य्यः स सूरिभिः” । तस्या दोषगुणा यथा “खट्वायां यो गुणोदोषोमानस्य परिकीर्त्तितम् । तेनैव खट्वा काष्ठोत्था तथैव गुणमावहेत् । अनेनैव विधानेन कार्य्यं वस्तुविधानम् । विना नौकासमं कार्य्यं सर्व्वत्रैवासनं गुरु” युक्तिक० । बृहत्संहितायां ७९ अ० तस्याः काष्ठविशेषेण शुभाशुभदायकत्वादिकं नामभेदास्तत्फलञ्चोक्तं यथा

“सर्व्वस्य सर्व्वकालं यस्मादुपयोगमेति शास्त्रविदाम् । राज्ञां विशेषतोऽतः शयनासनलक्षणं वक्ष्ये । असनस्पन्दनचन्दनहरिद्रसुरदारुतिन्दुकीशालाः । काश्मर्य्यञ्जनपद्मकशाका वा शिंशपा च शुभाः । अशनिजलानिलहस्तिप्रपातिता मधुविहङ्गकृतनिलयाः । चैत्यश्मशानपथिजोर्द्ध्वशुष्कवल्लीनिबद्धाश्च । कण्टकिनो वा ये स्युर्महानदीसङ्गमोद्भवा ये च । सुरभवनजाश्च न शुभा ये चापरयाम्यदक्पतिताः । प्रतिसिद्धवृक्षनिर्म्मितशयनासनसेवनात् कुलविनाशः । व्याधिभयव्ययकलहा भवन्त्यनर्थाश्च नैकविधाः । पूर्व्वच्छिन्नं यदि वा दारु भवेत्तत्परीक्ष्यमारम्भे । यद्यारोहेत्तस्मिन् कुमारकः पुत्रपशुदं तत् । सितकुसुममत्तवारणदध्यक्षतपूर्णकुम्भरत्नानि । मङ्गल्यान्यन्यानि च दृष्ट्वारम्भे शुभं ज्ञेयम् । कर्म्माङ्गुलं यवाष्टकमुदरासक्तं तुषैः परित्यक्तम् । अङ्गुलशतं नृपाणां महती शय्या जयाय कृता । नवतिः सैव षडूना द्वादशहीना त्रिषट्कहीना च । नृपमन्त्रिबलपतिपुरोधसां स्युर्यथासङ्ख्यम् । अर्द्धमतोऽष्टांशोनं विष्कम्भो विश-

कर्मणा प्रोक्तः । आशावक्त्रं शयनः पादोच्छ्रायः सकुचि- शिराः । यः सर्वः श्रीपर्ण्याः पर्यङ्को निर्मितः स धन- दाता । असनकृतो रोगहरस्तिन्दुकसारेण वित्तकरः । यः केवलशिंशपया विनिर्मितो बहुविधं स वृद्धिकरः । चन्दनमयो रिपुघ्नो धर्मयशोदीर्घजीवितकृत् । यः पद्म- कपर्यङ्कः स दीर्घमायुः श्रियं श्रुतं वित्तम् । कुरुते, शालेन कृतः कल्याणं शाकरचितश्च । केवलचन्दनरचितं काञ्चनगुप्तं विचित्ररत्नयुतम् । अध्यासनपर्यङ्कं विबुधै- रपि पूज्यते नृपतिः ! अन्येन समायुक्ता न तिन्दुकी शिंशपा च शुभफलदा । न श्रीपर्णी न च देवदारुवृक्षो न चाप्यसनः । शुभदौ तु शाकशालौ परस्परं संयुतौ पृथक् चैव । तद्वत् पृथक् प्रशस्तौ सहितौ च हरिद्रकक- दम्बौ । सर्वः स्यन्दनरचितो न शुभः प्राणान् हिनस्ति चाम्रकृतः । असनोऽन्यदारुसहितः क्षिप्रं दोषान् करोति बहून् । आम्रस्यन्दनचन्दनवृक्षाणां स्यन्दनाच्छुभाः पादाः । फलतरुणा शयनासनमिष्टफलं भवति सर्वेण । गजदन्तः सर्वेषां प्रोक्ततरूणां प्रशस्यते योगे । कार्योऽल- ङ्कारविधिर्गजदन्तेन प्रशस्तेन । दन्तस्य मूलपरिधिं द्वि- रायतं प्रोज्झ्य कल्पयेच्छेषम् । अधिकमनूपचराणां न्यूनं गिरिचारिणां किञ्चित् । श्रीवत्सवर्द्धमानच्छत्र- ध्वजचामरानुरूपेषु । छेदे दृष्टेष्वारोग्यविजयधनवृद्धि- सौख्यानि ॥ प्रहरणसदृशेषु जयो नन्द्यावर्त्ते प्रनष्ट- देशाप्तिः । लोष्टे त्वलब्धपूर्वस्य भवति देशस्य सम्प्राप्तिः । स्त्रीरूपे स्वंवनाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः । कुम्भेन निधिप्राप्तिर्यात्राविघ्नं च दण्डेन । कृकलासकपिभुजङ्गे- ष्वसुभिक्षव्याधयो रिपुवशत्वम् । गृध्रोलूकध्वाङ्क्षश्येना- कारेषु जनमरकः । पाशेऽथ वा कबन्धे नृपमृत्युर्जन- विपत् स्नुते रक्ते । कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति । शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवे- च्छेदः । अशुभशुभच्छेदा ये शयनेष्वपि ते तथा फलदाः । ईषायोगे दारु प्रदक्षिणाग्रं प्रशस्तमाचार्यैः । अपसव्ये- कदिग्मुखे भवति भयं भूतसंजनितम् । एकेनाशाक्रान्त- रया भवति हि पादेन पादवैकल्यम् । द्वाभ्यां न जीवतेऽसौ त्रिचतुर्भिः क्लेशवधबन्धाः । सुषिरेऽथ वा विवर्णे ग्रन्थौ पादस्य शीर्षगे व्याधिः । पादे कुम्भो यश्च ग्रन्थौ तस्मिन् उदररोगः । कुम्भाधस्ताज्जङ्घा तत्र कृतो जङ्घयोः करोति भयम् । तस्याश्चाधारोऽधः क्षयकृद् द्रव्यस्य तत्र कृतः । खुरदेशे यो ग्रन्थिः खुरिणां पीडा- करः स निर्दिष्टः । ईषाशीर्षण्यंश्च त्रिभागसंस्थो भवेच्च शुभः । निष्कुटमथ कोलाक्षं शूकरनयनं च वत्सनाभं च । कालकमन्यद्धुन्धुकमिति कथितश्छिद्रसङ्क्षेपः । घटवत् सुषिरं मध्ये सङ्कटमास्ये च निष्कुटं छिद्रम् । निष्पावमाषमात्रं नीलं छिद्रं च कोलाक्षम् । शूकर- नयनं विषमं विवर्णमध्यर्धपर्वदीर्घं च । वामावर्त्तं भिन्नं पर्वमितं वत्सनाभाख्यम् । कालकसंज्ञं कृष्णं धुन्धुक- मिति यद्भवेद्विनिर्भिन्नम् । दारुसवर्णं छिद्रं न तथा पापं समुद्दिष्टम् । निष्कुटसंज्ञे द्रव्यक्षयस्तु कोलेक्षणे कुलध्वंसः । शस्त्रभयं शूकरके रोगभयं वत्सनाभाख्ये । कालकधुन्धुकसंज्ञं कीटैर्विद्धं च न शुभदं छिद्रम् । सर्वं ग्रन्थिप्रचुरं सर्वत्र न शोभनं दारु । एकद्रुमेण धन्यं द्रुमद्वयनिर्मितं च धन्यतरम् । त्रिभिरात्मजवृद्धिकरं चतुर्भिरर्थो यशश्चाग्र्यम् । पञ्चवनस्पतिरचिते पञ्चत्वं याति तत्र यः शेते । षट्सप्ताष्टतरूणां काष्ठैर्घटिते कुलविनाशः” वृ०सं० ।

सुश्रुतोक्तेषु चतुर्दशसु व्रणबन्धविशेषेषु खट्टाकारे २बन्धभेदे “तत्र कोशदामस्वस्तिकानुवेल्लितप्रतोलीमण्डलस्थगिकायम- कखट्वाचीनविबन्धवितानगोफणाः पञ्चाङ्गी चेति चतुर्दश- बन्धविशेषाः । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः” तस्य बन्धस्योपयोगस्तत्रैवोक्तो यथा “हनुशङ्खगण्डेषु खट्वाम्”

**खट्वाका** खट्वा—स्वार्थे क “आदाचार्य्याणाम्” पा० वा आत् । खट्वायाम् । अल्पार्थे कन् । २स्वल्पखट्वायाम् । इत्त्वाभावे वा ह्रस्वः पक्षेऽतइत्त्वम् । खट्वका खट्विकाप्यत्र ।

**खट्वाङ्ग** न० ६त० । (खाटेरखुर) १खट्वाङ्गभेदे तदाकारे २शिवस्यास्त्रभेदे । “खट्वाङ्गवरधारकः” शिवस्तवः । “खट्वाङ्गैः पट्टिशैः शूलैर्लाङ्गुलैर्मुषलैरलम्” काशीख० ३सूर्य्यवंश्ये नृपभेदे पु० । “सुतः पञ्चजनादासीद् शुभा- निति विश्रुतः । दिलीपस्तनयस्तस्य खट्वाङ्ग इति विश्रुतः” हरिवं० १५अ० । भागवते तु ९।९।२२ श्लो० “ततो दश- रथस्तस्मात् पुत्र ऐडविडिस्ततः । राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्त्यभूतम्” इत्यनेन अन्यपुत्रता तस्याभिहिता कल्पभेदादविरोधः । प्रायश्चित्तैर्विधार्य्ये खट्वाङ्गाकृतौ ४पात्रभेदे न० “एककालं तु भुञ्जीत चरन् भैक्ष्यं स्वक- र्मकृत् । कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोद्यतः” भा० शा० ३५ अ० । “खट्वाङ्गी चीरवासाश्च” मनुः ।

**खट्वाङ्गधर** पु० खट्वाङ्गं धरति धृ—अच् । शिवे । ब—क्विप् । खट्वाङ्गभृदप्यत्रार्थे । २खट्वाङ्गधारिणि त्रि० ।

**खट्वाङ्गमुद्रा** स्त्री तन्त्रोक्ते मुद्राभेदे तल्लक्षणं यथा "पञ्चाङ्गुल्योदक्षिणस्य मिलिताह्यूर्द्धसंहताः। खट्वाङ्गमुद्रा-विख्याता देवस्य सुप्रिया मता" रुद्रया०।

**खट्वाङ्गवन** न० नित्यक०। वनभेदे "अहं हि खट्वाङ्गवने नारदेन समागतः" हरिवं० ७६ अ०।

**खट्वारूढ़** त्रि० खट्वा+आरूढ़ अलौकिकविग्रहे द्वितीयान्तस्य-क्तान्तेन नित्यसमासः निन्दायाम्। जाल्मे सि०कौ०। प्रहृष्टादि० अन्तोदात्तताऽस्य। "हतस्त्वं पालेसमितैः खट्वा-रूढः प्रमादवान्" भट्टिः। "खट्वारूढः उत्पथप्रस्थितः" जयमङ्गला। तेन २तदर्थे च।

**खड** मन्थने भञ्जने च भ्वा०आत्म० इदित् सक० सेट्। खण्डते अखण्डिष्ट। चखण्डे खण्डनं खण्डः खण्डितः।

**खड** भेदने चुरा०उभ०सक० सेट्। खाडयति-त अचीखडत् त खाडयाम् बभूव आस चकार चक्रे। खण्डयन्।

**खड** न० खड अच्। १तृणभेदे (खड) २पानकभेदे, पु० मेदि० तच्च पानकं वैद्यके प्रसिद्धम् तत्करणप्रकारः वैद्यात्ज्ञेयः यथाह सुश्रुतः "खडाः खडयवाग्वश्च खाडवाः पानकानि च। एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः" स च भोजनकाले प्रस्तरमात्ते पेयो यथोक्तं सुश्रुते "सूक्तानि च खडांश्चैव सर्वशोषु दापयेत्"। खड+ चातुरर्थ्यामनद्यामपि मतुप् मस्य वः। खडवत् खडस-न्निकृष्टदेशादौ त्रि० स्त्रियां ङीप्। ३ऋषिभेदे पु० तस्य गोत्रापत्यम् अश्वा० फञ्। खाडायन तद्गोत्रापत्ये पुंस्त्री०

**खडक** न० खड+संज्ञायां कन्। स्थाणौ "स्थाणुः खडक-मुच्यते" कात्या०श्रौ० १४।२।१२ सू० व्याख्यायां कर्कः।

**खडक्की** स्त्री खडक् इत्यव्यक्तशब्दं करोति कृ—बा०ड गौ० ङीष्। पक्षद्वारे (खिड्कि)। स्वार्थे क ह्रस्वः। खड-क्किका तदर्थे हारा०।

**खडतु** पु० खड+अतु। बाहुजङ्घातरणे संक्षिप्तसारः।

**खडयवागू** स्त्री खडपक्वा यवागूः। पानकभेदे खडशब्दे विवृतिः "खडयूषयवागूषु पिप्पल्याद्यं व योजयेत्" सुश्रुतः

**खडयूष** पु० "तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः। सुपक्वं खडयूषोऽयमयं चाम्बलिकोऽपरः" चक्रदत्तोक्ते पक्वतक्रभेदे।

**खड़िक** त्रि० खडमस्त्यस्य ठन्। खडयुते। ततः सुतङ्गमा० चतुरर्थ्याम् इञ्। खाड़िकि तत्सन्निकृष्टदेशादौ त्रि०।

**खडी** स्त्री खड—अच् गौ० ङीष्। खटिकायाम् शब्दच०। सैव क ह्रस्वः। खडिका तदर्थे।

**खडु** स्त्री खड—कु—। स्तनमध्यायां संक्षिप्तसारः।

**खडूर** त्रि० खडमस्त्यस्य वा० उरच्। खडयुक्ते। "खडूरे अधिचङ्क्रमां खर्विकां खर्ववासिनीम्" अथर्व० ११।६।१६। ततः शुभ्रा० अपत्ये ढक्। खाडूरेय तदपत्ये पुंस्त्री०

**खडोन्मत्ता** स्त्री खडेन उन्मत्ता। खडरसेनोन्मत्तायाम्। ततः शुभ्रा० अपत्ये ढक्। खाडोन्मत्तेय तदपत्ये पुंस्त्री०।

**खड्ग** खड-भेदने गन्। असिशब्दे ५११ पृ० दर्शितलक्षणे लौहादिमये १प्रहरणास्त्रभेदे। "न हि खड्गो विजानाति-कर्मकारं स्वकारणम्" उद्भटः (खाग्) इति ख्याते २पदार्थे ३गण्डकखड्गे ४गण्डके (गाण्डार) पुंस्त्री०। ५बुद्धभेदे पु० मेदि० ६चोरनामगन्धद्रव्ये पु० राजनि०। खड्ग-स्योत्पत्तिः शब्दकल्पद्रुमे ब्रह्मयज्ञान्नित उक्ता तत् प्रमाणस्य मूलमृग्यम्। तस्य चालने गतिभेदस्तच्चोदश्चविधः महाभारते उक्तो यथा "मण्डलाकारतः खड्गभ्रामणं भ्रान्त १मुच्यते। तदेव बाहुमुद्यम्य कृतमुद्भ्रान्त २मीरि-तम्। भ्रामणं स्वस्य परितः खड्गस्याविद्ध ३मुच्यते। परप्रयुक्तशस्त्रस्य वारणार्थमिदं त्रयम्। शत्रोराक्रमणा-र्थाय गमनन्त्वाप्लुतं ४मतम्। खड्गस्याग्रेण तद्देहस्पर्शनं प्रसृतं ५मतम्। वञ्चयित्वा रिपौ शस्त्रपातनं सृतं ६ मतम्। परिवृत्तं ७भवेच्छत्रोर्वामदक्षिणतो गतिः। पश्चात् यदापसरणं निवृत्तं ८समुच्यते। अन्योन्य ताड़नं प्राहुः सम्पात९मुभयोरपि। आधिक्यमात्मनो यत् तत्समुदीर्ण१०मुदीरितम्। चाङ्गप्रत्यङ्गदेशेषु भ्रामणं भारतं ११स्मृतम्। विचित्रखड्गसञ्चारदर्शनं कौशिकं१२ स्मृतम्। निलीय चर्मनिक्षेपो यदसेः सात्वतं १३हि तत्" वह्निपुराणे खड्गचर्मयुद्धे द्वात्रिंशत्स्थानान्युक्तानि यथा "भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम्। सम्पात-समुदीर्णञ्च श्येनपात-मथाकुलम्। उद्धूतमवधूतञ्च सव्यं दक्षिणमेव च। अनालक्षितविस्फोटौ करालेन्द्रमहा-सखौ। विकरालनिपातौ च विभीषणभयानकौ। समग्रार्द्धतृतीयांशपादपादार्द्धधारणम्। प्रत्यालीढमथा-लीढं वराहललितं तथा। इति द्वात्रिंशतो ज्ञेयाः खड्गचर्मविधौ रणे"। गण्डकरूपखड्गस्य पञ्चनखत्वेऽपि भक्ष्यतामाह मनुः "श्वाविधं शल्यकं गोधां खड्गकूर्मशशां-स्तथा। भक्ष्यान् पञ्चनखेष्वाहुः"। अस्य मांसस्य श्राद्धे प्रशंसामाह" मनुः "कालशाकं महाशल्काः खड्ग-लौहामिषं मधु। आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्वशः"। "प्रामोविषाणपरिमोक्षलघूत्तमाङ्गान् खड्गा-

चकार खड्गनिर्भिन्नैः खुरप्रैः" रघुवंशमहाकाव्य।

खड्गधेनु स्त्री खड्गिनी धेनुः जातित्वात् युवतिपोटेत्यादि कर्म॰ पूर्वनिपातः पुंवच्च। गण्डकजातिधेन्वाम्। "खड्गधेनुकानां सापरिच्छन्नपोतान्वेषिणीनाम्" काद॰।

खड्गिन् पुंस्त्री खड्गः तदाकारं शृङ्गमस्त्यस्य इनि। १गण्डके "एतत् खड्गिकुलक्रीड़ितम्" काद॰। स च सुश्रुते आनूपवर्गे कूलचरमध्योक्तः यथा "तत्र गजगवयमहिषरुरुचमरसृमररोहितवराहखड्गिगोकर्णकालपुच्छकोन्द्रन्यङ्कुरण्यगवयप्रभृतयः कूलचराः पशवः"। तन्मांसगुणाश्चोक्ता यथा "कफघ्नं खड्गिपिशितं कषायमनिलापहम्। पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम्। स्त्रियां ङीप् २असिधारके त्रि॰। ३मञ्जुघोषे पु॰ शब्दचि॰। ४महादेवे पु॰ ५ "अशनी शतघ्नी खड्गी पट्टिशी चायुधी महान्" भा॰ आनु॰ १७ शिवसहस्रनामोक्तौ [खड्गाकारपत्रके लताभेदे शब्दच॰।

खड्गिमार पु॰ खड्गिनं मारयति मृ–णिच्–अण् उप॰स॰।

खड्गीक न॰ खड्गो तत्कर्मणि कुशलः बा॰ईक। दात्रे शब्दरत्ना॰। तस्य खड्गसाध्यकारित्वात् तथात्वम्।

खण्ड पु॰ खडि–घञ्। १भेदे "खण्डं खण्डं ययुर्धनाः" देवीमाहात्म्यम्। २विड्लवणे, ३इक्षुविकारभेदे (खाँड) न॰ राजनि॰। खण्डगुणाः इक्षुशब्दे ९१॰ पृ॰ उक्ताः। "मधुःखण्ड नखण्डखाद्यसहजक्षोदक्षमे" नैष॰। कर्मणि घञ्। ६एकदेशे पु॰न॰ अमरः। "ताराधिपखण्डधारी" कुमा॰ काशीखण्डः केदारखण्ड इत्यादि। ७मणिदोषभेदे मेदि॰। कर्मणि घञ्। ८खण्डिते त्रि॰ "खण्डाशौचिपितुर्व्रतौ" स्मृतिः "न खण्डे खण्डमिष्यते" स्मृतिः ततः पृथ्वा॰ भावे इमनिच्। खण्डिमन् खण्डभावे पु॰। उत्करा॰ चतुरर्थ्यां छ। खण्डीय खण्डसन्निकृष्टदेशादौ त्रि॰।

खण्डक पु॰ खण्डेन निर्वृत्तादि खण्ड+ऋश्या॰ क। खण्डनिर्मिते सितासण्डे शर्कराभेदे राजनि॰। खण्डयति खडि–ण्वुल्। २छेदके त्रि॰। [त्रिका॰।

खण्डकथा स्त्री॰ खण्डः खण्डिता कथा। स्वल्पकथायाम्

खण्डकर्ण पु॰ खण्ड इव कर्णः कन्दो यस्य। (शकरकन्द) आलुभेदे। हेमच॰।

खण्डकाद्यलौह पु॰ चक्रदत्तोक्ते खण्डपक्वलौहभेदरूपे औषधभेदे तल्लक्षणं यथा

"शतावरीच्छिन्नरुहावृषमुण्डतिकाबलाः। तालमूली च गायत्री त्रिफलायास्त्वचस्तथा। भार्गीं पुष्करमूलञ्च पृथक् पञ्च पलानि च। जलद्रोणे विपक्तव्यमष्टमांशावशेषितम्। दिव्यौषधहतस्यापि माक्षिकेन हतस्य वा। पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम्। खण्डतुल्यं घृतं देयं पलषोड़शिकं बुधैः। पचेत् ताम्रमये पात्रे गुड़पाको यथामतम्। प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकं त्वचम्। शृङ्गी विड़ङ्गं कृष्णा च शुण्ठ्यजाजीपलं पलम्। त्रिफला धान्यकं पत्रं द्व्यक्षं मरिचकेशरम्। चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत्। यथाकालं प्रयुञ्जीत विड़ालपदकं ततः। गव्यक्षीरानुपानञ्च सेव्यं मांसरसं पयः। गुरुवृष्यानुपानानि स्निग्धं मांसादिबृंहणम्। रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः। वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्लमम्। श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरन्तथा। आनाहं रक्तसंस्रावं चाम्लपित्तं निहन्ति च। चाक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम्। आरोग्यपुत्रदं श्रेष्ठं कामाग्निबलवर्द्धनम्। श्रीकरं लाघवकरं खण्डकाद्यं प्रकीर्त्तितम्। छागं पारावतं मांसं तित्तिरिः क्रकराः शशाः। कुरङ्गाः कृष्णसारास्च तेषां मांसानि योजयेत्। नारिकेलपयःपानं सुनिषण्णकवास्तुकम्। शुष्कमूलकजीराख्यं पटोलं वृहतीफलम्। फलं वार्त्ताकुपक्वाम्रं खर्जूरं स्वादु दाड़िमम्। ककारपूर्वकं यच्च मांसञ्चानूपसम्भवम्। वर्जनीयं विशेषेण खण्डकाद्यं प्रकुर्वता। लौहान्तरवदत्रापि पुटनादिक्रियेष्यते"। [आलुभेदे शब्दच॰।

खण्डकालु पु॰ खण्ड इव कायति कै–क कर्म॰। (शकरकन्द)

खण्डकाव्य न॰ "खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च" सा॰द॰ उक्ते काव्यभेदे तच्च महाकाव्यस्य अष्टाधिकसर्गतया ततो न्यूनसर्गात्मकं यथा मेघदूतादि।

खण्डकुष्माण्डक पु॰ खण्डेन पक्वं कुष्माण्डमत्र कप्। कुष्माण्डरसायनशब्दे १०५ पृ॰ चक्रदत्तोक्तलक्षणे औषधभेदे।

खण्डखर्ज्जूर न॰ खण्डेन पक्वं खर्जूरम्। खण्डपक्वे १खर्जूरफले। खण्ड इव स्वादु खर्जूरम्। २स्वादुखर्जूरे च

खण्डज पु॰ खण्ड इव जायते जन–ड। यवासशर्करायां गुड़भेदे राजनि॰।

खण्डजोद्भवज पु॰ खण्डज उद्भवोऽस्य तस्मात् जायते जन–ड। यवासशर्करारचिते खण्डभेदे राजनि॰

खण्डताल पु॰ "द्रुतमेकं भवेदात्र खण्डतालः स उच्यते

अपरं नियतं विना" इत्युक्तलक्षणे एकतालरूपे संगीते तालभेदे (एकताला) संगीतदामो० ।

**खण्डधारा** स्त्री खण्डे एकदेशे धारा यस्याः । कर्त्तर्याम् (कातारी) अस्त्रभेदे शब्दमाला ।

**खण्डन** न० चु० खडि—भावे ल्युट् । १भेदने, २छेदने, ३निराकरणे च । "अरसस्य रसखण्डनवर्जितम्" "दर्शनेन कृतखण्डनव्यथम्" रघुः । भावे युच् । तत्रार्थे स्त्री शब्दार्थनिर्वचनखण्डनया नयन्तः" श्रीहर्षखण्डनम् । खडि-करणे ल्यु । परमतादिनिराकरणे ५शास्त्रभेदे यथा श्रीहर्षखण्डनं शिरोमणिपदार्थखण्डनम् ।"षटः खण्डनखण्डखाद्यसंहजजोदयमे" नैष० । कर्त्तरि ल्यु । ६खण्डके त्रि० "स्मरगरलखण्डनम् मम शिरसि मण्डनम्" गीतगो०

**खण्डनखण्डखाद्य** न० खण्डनं पदार्थस्य निर्वचनीयतानिराकरणं खाद्यम् खण्ड इव । श्रीहर्षप्रणीते सर्वपदार्थानाम् निर्वचनीयताप्रतिपादके चतुःपरिच्छेदात्मके ग्रन्थभेदे तत्र प्रथमपरिच्छेदे प्रमाणतदाभासनिर्वचनखण्डनम् । द्वितीये हेत्वाभासनिग्रहस्थाननिर्वचनखण्डनम् । तृतीये सर्वनामार्थनिर्वचनखण्डनम् । चतुर्थे भावाभावविशेषसत्तादिपदार्थानां निर्वचनखण्डनम्

**खण्डपरशु** पु० खण्डयतीति खण्डः परशुरस्य । १शिवे ततोऽस्य तत्परशुके २जामदग्न्ये च मेदि० "येनैव खण्डपरशुर्भगवान् प्रचण्डःखण्डीपतिस्त्रिभुवनेषु गुरुः, प्ररूढः" वीरच० ३विष्णौ "दृढधन्वा खण्डपरशुः" विष्णुस० । "शत्रूणां खण्डनात्खण्डः परशुरस्य जामदग्न्याकृतेरिति" भ० ।

**खण्डपाल** पु० खण्डं पालयति खण्डितसाधनतया पालि-ण्वुल् । गुडविकारनिर्मातरि शिल्पिभेदे (मयरा)

**खण्डप्रलय** पु० खण्डस्य भूम्यादिखण्डस्य प्रलयः । चतुर्युगसहस्ररूपब्राह्मदिनावसाने भूम्यादिखण्ड लयाधारे कालभेदे "ह्रद्भिर्निधेरङ्घ्रि भुवः समन्तात् खाद्योलनं भूभवभूतपूर्वैः । ब्राह्मे लये योजनमात्रवृद्धेर्नाशो भुवः प्राकृतिकेऽखिलायाः" सि० शि० । "अत्र लयो नाम भूतविनाशः । प्रत्यहमुद्पद्यते । स दैनंदिन उच्यते । यो ब्रह्मदिनान्ते चतुर्युगसहस्रावसाने लोकत्रयस्य संहारः स ब्राह्मलय उच्यते । तत्राक्षीणपुण्यपापा एव लोकाः कालवशेन ब्रह्मशरीरं प्रविशन्ति । तत्र मुखं ब्राह्मणाः, बाह्वन्तरं क्षत्रियाः, ऊरुद्वयं वैश्याः, पादद्वयं शूद्राः । ततो निशावसाने पुनर्ब्रह्मणः सृष्टिं चिन्तयतो हृत्कादिस्थानेभ्यः कर्मपुटान्तरमाहुब्राह्मणादयस्तत एव निःसरन्ति । तस्मिन् प्रलये भुवो योजनमात्रवृद्धेर्विनाशो नाखिलायाः" प्रमि० ।

खण्डप्रलयप्रकारश्च हरिवं० १९८ । १९९अ० उक्तो यथा "दिव्यं द्वादशसाहस्रं यदेतद्युगमुच्यते । तदेकसप्ततिगुणं मन्वन्तरमिहोच्यते । एतद्ब्रह्मशुणमहर्ब्राह्ममिहोच्यते । ततोऽहनि गते तस्मिन् सर्वेषामेव देहिनाम् । शरीरनिर्हिनिष्क्रान्तो हरुः संहारबुद्धिमान् । दैवतानाञ्च सर्वेषां ब्राह्मणानां महीपते ! । दैत्यानां दानवानाञ्च यक्षकिन्नररक्षसाम् । देवर्षीणां ब्रह्मर्षीणां तथा राजर्षीणामपि । गन्धर्वाणामप्सरसां भुजगानां तथैव च । पर्वतानां नदीनाञ्च पशूनाञ्चैव भारत ! । तिर्यग्योनिगतानाञ्च सत्त्वानां कृमीणां तथा । महाभूतपतिर्ह्येवः पञ्च भूतानि भूतकृत् । जगत्संहरणार्थाय कुरुते वैशसं महत् । भूत्वा सूर्यश्चक्षुषी चाददाति भूत्वा वायुः संहरन् प्राणिजालम् । भूत्वा वह्निर्निर्दहन् सर्वलोकान् मेघो भूत्वा भूय एवाभ्यवर्षत् १९८अ० । वैशम्पायन उवाच । भूत्वा नारायणो योगी सप्तमूर्त्तिर्विभावसुः । गभस्तिभिः प्रदीप्ताभिः संशोषयति सागरान् । पीत्वार्णवांश्च वै सर्वान् नदीः कूपांश्च सर्वशः । पर्वतानाञ्च सलिलं सर्वमादाय रश्मिभिः । भित्त्वा सहस्रशश्चैव महीं गत्वा रसातलम् । रसातलगतं कृत्स्नं पिबते रसमुत्तमम् । अपसृजन् क्लेदमन्यद्ददाति प्राणिनां ध्रुवम् । तत् सर्वमरविन्दाक्ष आदत्ते पुरुषोत्तमः । वायुश्च बलवान् भूत्वा स विधूयाखिलं जगत् । प्राणेदयं सुराणाञ्च वायुना कुरुते हरिः । ततो देवगणानाञ्च सर्वेषामेव देहिनाम् । ये चेन्द्रियगणाः सर्वे ये चान्ये भूतसम्भवाः । तथा घ्राणं शरीरञ्च पृथिवीमाश्रिता गुणाः । जिह्वा रसश्च स्नेहश्च संश्रिताः सलिलं गुणाः । रूपं चक्षुर्विपाकश्च ज्योतिरेवाश्रिता गुणाः । स्पर्शः प्राणश्च चेष्टा च पवनं संश्रिता गुणाः । परमेष्ठिनमेते वै कूर्मोऽयं समाश्रिताः । ततो भगवता तत्र रश्मिभिः परिवारिताः । वायुना क्रम्यमाणाश्च रूपाण्योऽन्यसमाश्रयात् । तेषां सङ्घर्षजाद्भूतः पावकः शतधा ज्वलन् । अदहत्त्रिदिवान् लोकानपः संवर्त्तकोऽनलः । स पर्वतान् द्रुमान् गुल्मान् लतावल्लीस्तृणानि च । विमानानि च दिव्यानि पुराणि विविधानि च । आश्रमांश्च तथा पुण्यान् दिव्यान्यायतनानि च । यानि भावकीर्णानि

नानि सर्वाणि चाहरत् । भक्षीभूतांस्ततः सर्वान् लोकान् लोकगुरुर्हरिः । भूयो निर्वापयामास जलयुक्तेन कर्मणा । सहस्रहस्तमहातेजा भूत्वा कृष्णो महामनाः । दिव्यतोयेन हविषा तर्पयामास मेदिनीम् । ततः क्षीरनिकाशेन स्वादुना परमाम्भसा । शिवेन पुण्येन मही निर्वाणमगमत् परम् । तेन सा जलसञ्छन्ना पयसा सर्वतो धरा । एकार्णवजला भूत्वा सर्वसत्त्वविवर्जिता । महाभूतान्यपि च तं प्रविष्टान्यमितौजसम् । नष्टार्कपवनाकाशे सूक्ष्मे जनविवर्जिते । संशोषयित्वा पीत्वा च कल्पयित्वा च देहिनम् । दग्ध्वा सन्तापयित्वा च वसत्येकः सनातनः । पौराणं रूपमास्थाय किमप्यमितदुर्दमान् । एकार्णवजलावासी योगी योगमुपासते । अयुतानां सहस्राणि शतान्येकार्णवाम्भसि” ।

**खण्डफण** पु० खण्डा खण्डिता फणाऽस्य । दर्वीकरसर्पभेदे “तत्र दर्वीकराः” इत्युपक्रमे “मवेधुकः परिसर्पः खण्डफण” इत्यादि सुश्रुतः ।

**खण्डमोदक** पु० खण्ड इव मोदयति मुद–णिच्–ण्वुल् । सिताखण्डे यवासशर्करायाम्” राजनि० । [लष्टदेशादौ ।

**खण्डर** त्रि० खण्ड+चतुरर्थ्याम् अश्मादि० र । खण्डसन्नि-

**खण्डल** पुंन० खण्डं लाति ला–क कश्यादि । खण्डधरे ।

**खण्डलवण** न० खण्ड्यते खडि–कर्मणि घञ् कर्मधा० । विड्लवणे राजनि० ।

**खण्डशर्करा** स्त्री खण्ड इव शर्करा । शर्कराभेदे । “यो यो मत्स्यण्डिकाखण्डशर्कराणां स्मृतो गुणः । तेन तेनैव निर्दिश्यस्तेषां विमलतो गुणः” सुश्रुते तद्गुणोक्तिः ।

**खण्डशाखा** स्त्री खण्डा खण्डिता शाखाऽस्याः । महिष वल्लीलताभेदे राजनि० । [सिताखण्डे राजनि० ।

**खण्डसर** पु० खण्ड इव सरति सृ–अच् । यवासशर्करायां

**खण्डाभ्र** न० कर्म० । १छिन्नमेघे । खण्डः अभ्रमिव । २दन्तक्षतावसेषे च मेदि० ।

**खण्डामलक** न० खण्डं खण्डितमामलकम् । १आमलकचूर्णे मेदि० । खण्डपक्वमामलकम् । (आमलकीरमोरव्वा) इति ख्याते २खण्डपक्वे आमलकीफले च ।

**खण्डाली** स्त्री खण्डं पद्मादिखण्डमालाति आ+ला-क गौरा० ङीष् । १सरसाम् । खण्डं दन्तनखादिखण्डनमालाति आ+ला–क ङीष् । २कामुकस्त्रियां ३तैलमानभेदे च मेदि०

**खण्डिक** पु० खण्ड+अस्त्यर्थे ठन् । १कलाये, २ऋषिभेदे, स च उद्दालिपुत्रः यथाह “खण्डिक एवौद्दारिरस्य प्रायश्चित्तिं वेद” शत० ११।८।४।१ । ३कक्षे हेम० । ४क्रुद्धे त्रि० । “खण्डिकोपाध्यायः शिष्याय चपेटं ददातीति” पा० भाष्यम् । ततः पुरोहिता० भावादौ यक् । खाण्डिक्य तद्भावे न० । खण्डिकानां समूहः खण्डिका० अञ् । खाण्डिक तत्समूहे न० ।

**खण्डिकादि** पा०ग० उक्ते समूहार्थे अञ्प्रत्ययनिमित्ते शब्दसमूहे स च गणः । खण्डिक वडवा क्षुद्रक (मालवात्) सेना (संज्ञायाम्) भिक्षुक शुक उलूकश्वन् अहन् युगवरत्र हलबन्ध ।

**खण्डित** त्रि० खडि–क्त । १छेदिते २छिन्ने, ३द्विधाकृते च “स्नातान्यसङ्गविकृतेः खण्डितेर्ष्याकषायिता” इत्युक्तायां ४स्त्रियां स्त्री “प्रियमिति वनिता नितान्तमागःस्मरणसमर्पितकषायितायताक्षी । चरणगतसखीवचोऽनुरोधात् किल कथमप्यनुकूलयाञ्चकार” माघः सा०द० तु “पार्श्वमेति प्रियो यस्याः अन्यसंभोगचिह्नितः । सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता” लक्षयित्वा “तदवितथमवादीर्यन्मम त्वं प्रियेति प्रियजनपरिभुक्तं यद्दुकूलं दधानः । मदधिवसतिमागाः कामिनां मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन” माघपद्यमुदाहृतम् । ५खण्डिताङ्गे हीनाङ्गे त्रि० खण्डिताङ्गत्वं च दुष्टवचनकर्मविपाकः यथाह शातातपः “दुष्टवादी खण्डितः स्यात् स वै दद्याद्द्विजातये । रूप्यं पलद्वयं दुग्धं घटद्वयसमन्वितम्” । अत्र खण्डिक इत्येव पाठ इत्यन्ये कुण्डकृतेर्दुष्टवचनकर्मविपाकौचित्यात् । तत्र निराकृते छिन्ने च “सपदि तरुणपल्लवेन वध्वा विगतदयं खलु खण्डितेन मन्ये” माघः “खण्डितेन छिन्नेन तरुणपक्षे निराकृतेन” मल्लि० । ततः चतुरर्थ्यां कुमुदा० इञ् । खाण्डित प्रगद्यादि ञ्य । खाण्डित्य तद्भिन्नत्वादौ त्रि० ।

**खण्डिन्** त्रि० खण्डयति खडि–णिनि । १खण्डके खण्डोऽस्त्यस्य इनि । २खण्डवति स्त्रियां ङीप् सा च ३पृथिव्यां शब्दमा० तस्याः नवखण्डवत्त्वात् तथात्वम् ।

**खण्डी** स्त्री खडि–अच् गौरा० ङीष् । वनमुद्गे हेम० । [हेम० ।

**खण्डीर** पु० अपकृष्टा खण्डी शुण्डादित्वात् र । पीतमुद्गे ।

**खण्डु** त्रि० खण्डयति खडि–उन् । खण्डके ततः कर्णादि० चतुरर्थ्याम् वुञ् । खाण्डवक तत्सन्निकृष्टत्वादौ त्रि० ।

**खतमाल** पु० खे तमाल इव । १धूमे, २मेघे च मेदि० ।

**खद** स्थैर्ये अक०वधे सक०भ्वा०पर०सेट् । खदति अखादीत्-

अखदीत् चखाद। प्रतिखदति। "तथाखदिरःसरच-
वडुर्गति तथा निखर्गति" शत०ब्रा० १।७।४।१० "अल्पतर-
त्वादस्थिरमगाढबलम्" भाष्यम्।

खद पु० खद-बा० भावे अप्। १स्थिरत्वे। तस्मै हितादि
गवादि० यत्। खद्य स्थिरत्वहिते त्रि०। खद्यपत्नी।

खदिका स्त्री खे आकाशे दीयते दो-खण्डने घञर्थे क
टाप् ततः संज्ञायां कन्। लाजेषु त्रिका०। तेषां भर्ज्ज-
नपात्रात् ऊर्द्ध्वाकाशे एव स्फोटनात् तथात्वम्।

खदिर पु० खद-किरच्। (खयेर) ख्याते १वृक्षभेदे तस्य
सारे स्थिरत्वात्तथात्वम्। २इन्द्रे त्रिका० बलहिंसकत्वात्
तथात्वम्। खे आकाशे दीर्य्यते दृष्टापूर्त्तकारिभिर्यतः
दृ-अपादाने किरच्। ३चन्द्रे मेदि०। दृष्टापूर्त्तकारि-
भिर्हि चन्द्रमण्डलात् आरम्भाकाशदेहविदारेणाकाशे
पतनात् तस्य तथात्वं अमरोक्ष्यमङ्के ४४० पृ० विवृतिः
खदिरवृक्षभेदपर्य्यायगुणा भावप्र० उक्ता यथा
"खदिरो रक्तसारश्च गायत्री दन्तधावनः। कण्टकी
बालपत्रश्च बहुशल्यश्च यज्ञियः। खदिरः शीतलो दन्त्यः
कण्डूकासारुचिप्रणुत्। तिक्तः कषायो मेदोघ्नः कृमि-
मेहज्वरव्रणान्। श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान्
हरेत्। खदिरः श्वेतसारोऽन्यः कदरः सोमवल्कलः।
कदरो विशदो वर्ण्यो मुखरोगकफास्रजित्। इरिमेदो
विट्खदिरः कालस्कन्धोऽरिमेदकः। इरिमेदः कषायोष्णो
मुखदन्तगदास्रजित्। हन्ति कण्डूविषश्लेष्मकृमिकुष्ठ
विषव्रणान्" खदिररसादिविधानं सुश्रुते उक्तं यथा
"अतः खदिरविधानमुपदेक्ष्यामः। प्रशस्तदेशजातमनुपहत
मध्यवयसं खदिरं परितः खानयित्वा मध्यममूलं
छित्त्वायोमयं कुम्भं तस्मिन्नन्तरे निदध्याद्यथा रस-
ग्रहणसमर्थो भवति। ततस्तं गोमयमृदावलिप्तमवकीर्य्य-
मनेर्गोमयाग्निभिराद्दीपयेत्। यथास्य दह्यमानस्य रसो
द्रवत्यधस्तात्तदा जानीयात्पूर्णं भाजनमित्यथैनमुद्धृत्य
परिस्राव्य रसमन्यस्मिन् पात्रे निधायानुगुप्तं निदध्यात्
ततो यथायोगं मात्रामामलकरसमधुसर्पिर्भिः संसृज्योप
युञ्जीत जीर्णे भल्लातकविधानवदाहारः परिहारश्च।
प्रस्थे चोपयुक्ते शतं वर्षाणामायुषोऽभिवृद्धिर्भवति॥
खदिरसारतुलामुदकद्रोणे विपाच्य षोडशांशावशिष्टमव-
तार्य्यानुगुप्तं निदध्यात् तमामलकरसमधुसर्पिर्भिः संसृ-
ज्योपयुञ्जीत। एष एव सर्वेष्वसारेषु कल्पः। खदिर-
सारचूर्णतुलां खदिरसारक्वाथपालां वा प्रातः प्रातरुप-
योगेन खदिरसारक्वाथसिद्धमाक्षिकं वा सर्पिः। आमल-
करसोत्तरं काथं वा प्रातःप्रातरुपयोगेन लभेत् वा
सर्पिः अपराह्ने सर्पिर्मधुमोदनामलकयूषेण भुञ्जी-
तैवं मासमुपयुज्य सर्वकुष्ठैर्विमुच्यत" इति।
"अथ तैलभल्लातकतैलामलकरससर्पिषां द्रोणं शालसारा-
दिगणस्य च त्रिफलात्रिकटुकषट्कमञ्जिष्ठापरूप-
सारपिप्पलीमधुकहरिद्राद्वयत्रिवृद्दन्तीमधुयष्टीमधुका-
तिविषारसाञ्जनप्रियङ्गूनां च त्रिकान् भागान् शनैः
श्रेष्ठपाकविधानेन पचेत् तत्पाकसिद्धमवताय्यं परि-
स्राव्यानुगुप्तं निदध्यात् तत उपसंस्कृत शरीरं प्रातः प्रात-
रुत्थाय पाणिशुक्तिमात्रं पीत्वा प्रतिसंसृज्योपयुञ्जीत
जीर्णे मुद्गामलकयूषेणालवणेन सर्पिष्मन्तं खदिरोदक
सिद्धं शाल्योदनमश्नीयात् खदिरोदकसेवीत्येवं द्रोणमुप-
युज्य सर्वकुष्ठैर्विमुक्तः शुद्धतनुः स्मृतिमान् वर्षशतायुर-
रोगो भवति"। खदिरवृक्षस्योत्पत्तिः श्रूयते। "प्रजा-
पतेः प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमध्रियत" इत्युपक्रम्य
"अस्थिभ्य एवास्य खदिरः समभवत् तस्मात् स दारुणो
बहुसारो दारुणमिव ह्यस्थि तेनैवेनं तद्रूपेण समर्द्धयति
अन्तरे वेल्वा भवन्ति वाह्ये खादिरा अन्तरे हि अन्नानी
वाह्यान्यस्थीनि" शत०ब्रा० १३।४।४।६ "विना खदिर-
सारेण हारेण हरिणीदृशाम्। नाधरे जायते रागो-
नानुरागः पयोधरे" उद्भटः। खदिरस्य विकारः अण्।
खादिर खदिरवृक्षजाते त्रि०। "खादिरे पशुं बध्नीत
खादिरं वीर्यकामस्य यूपं कुर्वीत" श्रुतिः। स्त्रियां ङीप्।
"अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः। उडुम्बरः
शमी दूर्वा कुशाश्च समिधः क्रमात्" याज्ञ० उक्तेः तस्य
सूर्य्यग्रहसमित्त्वम्। "अभावे खदिरबिल्वरौहितकान्"
"खदिराभावे सोमरूतरान्"। कात्या० ६।१।८।१०।
पलाशाभावे खदिरादीन् यूपान् कुर्वीत सोमयागे खदिर
एव मुख्यः। तदभावे बिल्वादि इति भेदः। ४ऋषि-
भेदे च तस्य गोत्रापत्यम् अश्वादि० फञ्। खादि-
रायण तद्गोत्रापत्ये पुंस्त्री०। ततः कण्वादि० चतु-
रर्थ्यां क। खदिरस्य तन्निर्वृत्तादौ त्रि०। खदिरो विद्यते
ऽस्य मतुप् मस्य वः अजिरा० न पूर्वदीर्घः। खदिरवत्
खदिरयुते त्रि० स्त्रियां ङीप् खदिरवती नदीभेदे स्त्री
"अन्तोऽवत्याः" पा० अन्तोदात्तता। खदिराद् वरण-
नयादेश्च अर्थग्रामामपि वनं खदिरवणम्। खदिरस्य
पाकः कोला० कुणप्। खदिरकुण तत्पाके पु०। ततः

बलकरादि चतुरर्थ्याम् छ । खदिरीय तत्सन्निकृष्टदेशादौ लि० । वराहा० चतुरर्थ्यां कक् । खादिरक तत्सन्निकृष्टादौ लि०

**खदिरपत्रिका** स्त्री खदिरस्य पत्रमिव पत्रमस्याः कप् कापि अत इत्वम् । १अरिखदिरे २लज्जालुलतायाञ्च राजनि० कबभावे ङीप् । खदिरपत्री लज्जालुलतायां स्त्री जटा० । ["विना खदिरसारेण" उद्भटः ।

**खदिरसार** पु० ६त० । खदिरद्रुमस्य निर्यासजे सारे (खएर)

**खदिरा** स्त्री खदिरः तत्पत्राकारोऽस्त्यस्याः पत्रे अच् । लज्जालुलतायाम् राजनि० ।

**खदिरिका** स्त्री खदिरः खदिररसस्मरसोऽस्त्यस्याः ठन् । १लाक्षायां तस्या हि खदिरतरुनिर्यासत्वात् तथात्वम् । २लज्जालुलतायां च राजनि० ।

**खदिरी** स्त्री खद–किरच् गौरा० ङीप् । लज्जालुलतायाम् शाकभेदे, (हाड़जोड़ा) २लतायाञ्च जटा० । [रत्नमा० ।

**खदिरोपम** न० खदिर उपमा यस्य । (काँटाशावला) द्रुमभेदे

**खदूरक** त्रि० खद–बा० ऊरच् संज्ञायां कन् । ऋषिभेदे । ततः शिवा० अपत्यादौ अण् । खादूरक तदपत्यादौ ।

**खदूरवासिनी** खे आकाशे दूरे वसति वस–णिनि ङीप् । बुद्धशक्तिभेदे त्रिका० ।

**खद्यमत्री** स्त्री खदे स्थैर्ये हितं गवा० यत्, खद्यं पत्रमस्य गौरा० ङीप् । खदिरे राजवल्लभः ।

**खद्योत** पु० खे द्योतते द्युत–अच् । १कीटभेदे (जोनाकी-पोका) "खद्योतवदभिव्रातं तन्मया विस्मयान्वितम्" भा० व० १२२ अ० । "खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम्" मेघदू० । खं द्योतयति द्युत-णिच्–अच् उप०स० । २सूर्ये जटाधरः ।

**खद्योतक** पु० खद्योत इव कायति कै–क । १फलविषे वृक्षभेदे सुश्रु० । "कुमुद्वतीरेणुकाकरम्भमहाकरम्भ कर्कोटकरेणुकखद्योतकचर्मरीभगन्धासर्पघातिनन्दनसारपाकानीति द्वादश फलविषाणि" । २सूर्ये पु० । [जटा० ।

**खद्योतन** पु० खमाकाशं द्योतयति द्युत–णिच्–ल्यु । सूर्ये

**खधूप** पु० खमाकाशं धूपयति धूप–अण् उप०स० । खे धूप इव वा । आकाशगामिनि अग्निशिखायुक्ते (हाउइ) इति ख्याते पदार्थे "ससृजुः खधूपान्" भट्टिः ।

**खन** विदारे भ्वा०उभ०सक० सेट् । खनति ते–अखानीत्–अखनीत्–अखनिष्ट खायात्–खन्यात् । चखान चखनतुः चख्ने, खानयन्ति चखनिथ । खनिता । खनित्वा–खात्वा खातः खनितम् । खनन् खनमानः । खायते खन्यते खनिः खनकः । "इमां खनाम्योषधिम्" ऋ० १०।१४५।२१ । "कश्चिदपि नार्य्यसि त्वया वयमग्निं शकेम खनितुम्" यजु०।। "त्वं मन्थवा अखनत्" यजु० १२,६८ । "यथा खनन् खनित्रेण नरोवार्य्यधिगच्छति" मनुः । "अगस्त्यः खनमानः खनित्रैः" ऋ० १,१७९६ ।

अभि+आभिमुख्येन सर्वतश्च खनने । "यो होतारिं खनेदप एवाभिविन्देत्" शत०ब्रा० ११,१,६,१६ ।

अव+अधःखनने । अवखनति अवखातः ।

आ+समन्तात् खनने आखरः आखनः आखुः ।

उद्+उत्पाटने "फलैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः" (कलमाः) । "त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः !" "वङ्गानुत्खाय तरसाउत्खातलोकत्रयकण्टकोऽपि" रघुः ।

नि+निधाने सक० "निचखान जयस्तम्भम्" यज्ञ-भूमौ निचख्नतुः" "अष्टादशद्वीपनिखातयूपः" रघुः "विषादशङ्कुश्च मतौ निचख्ने" भट्टिः ।

निस्+निर्+निष्क्रामणे "समुद्रान्निरखनं स्तोत्रैरभिः" शत०ब्रा० ७।५।२।५२ ।

परि+परितः खनने परिखा उत्पाटने च "कण्टकिक्षोरिखस्तु समूलान् परिखायाद्वा वासयेदपामार्गम् आश्व०२।७ ५

वि+विशेषेण खनने । "यत्ते भूमिं विखनामि क्षिप्रं तदपि रोहतु" अथ० १२।१।३५ ।

**खनक** पु० खन–वुन् । १मूषिके, २सन्धिचौरे च । ३भूविदारके (कोड़ा) त्रि० हेम० "विदुरस्य सुहृत् कश्चित् खनकः कुशलोऽब्रवीत् ह्यहम्" भा०आ० १४७ अ० । ४स्वर्णाद्युत्पत्तिस्थाने आकरे मेदि० । "पुरी समन्ताद्विहिता सपताका सतोरणा । सचक्रा सहुडा चैव सयन्त्रखनका तथा" भा०व०१५ अ० ।

**खन(मा)पान** अनुवंश्ये क्षत्रियभेदे "खन(मा)पानोऽङ्गदोजज्ञे तस्मादविरथस्ततः" भाग० ९।२२।२ ।

**खनयित्री** स्त्री खन–णिच्–नि० इत्वाभावः तृच् ङीप् । (खन्ती) इति ख्याते अस्त्रभेदे सा च जिगीषुणा यात्रायामग्रे चालनीया यथाह नारदपञ्चरात्रे "खनयित्री शुभा यात्रा जयार्थं युद्धकाङ्क्षिभिः । पञ्चवर्णांशुकयुता चालनीया पुरःस्थिता"

**खनित्र** न० खन-इत्र । (खोन्ता) अस्त्रभेदे । "यथा खनन् खनित्रेण नरोवार्य्यधिगच्छति" मनुः । स्वार्थे क तत्रार्थे हारा० ।

**ख(नि)नी** स्त्री खन–इन् वा ङीप् । धातुराशुद्धि—

१आकरे "खनिभिः सुषुवे रत्नम्" "रत्नोपहारैरुदितैः खनिभ्यः" रघुः । २भूविदारणे च । ३आधारमात्रे "षट्सिः षट् च वरा योषित् कुङ्कुमादामसत्खनी" काशी० ३७अ० । ४खाते गर्त्ते "घृतगम्भीरखनीखनीलिम" नैष० ।

**खनित्रिम** त्रि० खननेन निर्वृत्तम् खन-भावे बा० क्त्रि-मप् च । खननिर्वृत्ते । "खनित्रिमा उत वा याः स्वयंजाः" ऋ० ७।४९।२ ।

**खनिनेत्र** पु० इक्ष्वाकुवंश्ये नृपभेदे "विविंशतेः सुतोरम्भः खनिनेत्रोऽस्य धार्मिकः" भाग० ६।२।२६ ।

**खन्य** त्रि० खन-वेदे नि० यत् । खननीये यत्र । खान्य इत्यपि तत्रार्थे । लोके तु खेय इत्येव ।

**खपुर** पु० खं पिपर्त्ति उच्चतया पृ-क । १गुवाके अमरः । खमिन्द्रियं पिपर्त्ति-पृ-क । २अलसे त्रि० मेदि० । खे न पूर्य्यते कर्मणि क । ३भद्रमुस्तके पु० मेदि० ४व्याघ्रनखवृक्षे राजनि० खे आकाशे उदितं पुरं शा०त० । अशुभसूचनायाकाशोदिते ५गन्धर्वनगरे । तस्योत्तरादि-दिग्भेदेनोदये फलभेदः वृ०सं० ५६अ० उक्तो यथा "उदगादि पुरोहितनृपबलपतियुवराजदोषदं खपुरम् । सितरक्तपीतकृष्णं विप्रादीनामभावाय । नागरनृपति-जयावहमुदग् विदिक्स्थं विवर्णनाशाय । शान्ताशायां दृष्टं सतोरणं नृपतिविजयाय । सर्वदिगुत्थं सततो-त्थितं च भयदं नरेन्द्रराष्ट्राणाम् । चौराटविकान् हन्यात् मानलशक्रचापाभम् । गन्धर्वनगरमुत्थितमा-पाण्डु रमशनिपातवातकरम् । दीप्ते नरेन्द्रमृत्युर्वामे ऽरिभयं जयः सव्ये । अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम् । यदा तदा नागमनुष्य वाजिनां पिबत्यसृग् भूरि रणे वसुन्धरा ।" खे आकाशे चरं पुरं शाक०त० । ६आकाशगामिनि दैत्यपुरभेदे तदुत्पत्तिकथा "पुलमा नाम दैतेयी कालका च महासुरी । दिव्यं वर्षसहस्रन्ते चेरतुः परमं तपः । तपसोऽन्ते ततस्ताभ्यां स्वयम्भूरददद्वरम् । अग्रह्णीतां वरन्ते तु सुतानामल्पदुःखिताम् । अवध्यताञ्च राजेन्द्र ! सुरराक्षसपन्नगैः । पुरं सुरमणी-यञ्च खचरं सुमहाप्रभम् । रत्नैरग्र्यैः समुदितं दुर्धर्षममरैरपि । महर्षियक्षगन्धर्व्वपन्नगासुरराक्षसैः । सर्व्वकामगुणोपेतं वीतशोकमनामयम् । ब्रह्मणा भरत-श्रेष्ठ ! कालकेयकृते कृतम् । तदेतत् खपुरं दिव्यं चरत्यमरवर्ज्जितम् । पौलोमाध्युषितं वीर ! काल-खञ्जैश्च दानवैः" भारते वनपर्व्वणि १७२ अध्याये । "विध्वस्ते खपुरे तस्मिन् दानवेषु हतेषु च" भा० व० १७२ अ० । ७हरिश्चन्द्रपुरे त्रिका० ।

**खपुष्प** न० ६त० । आकाशकुसुमे तस्य यथा मिथ्यात्वमेवं मिथ्यात्वद्योतनाय खपुष्पेणोपमा शास्त्रेषु दीयते खकुसुमादयोऽप्यत्र ।

**खभ्रान्ति** पु०स्त्री खे आकाशे भ्रान्तिर्भ्रमणं मांसान्वेष-णाय यस्य । चिल्ले त्रिका० । तस्य मांसान्वेषणाय खे भ्रमणात्तथात्वम् । स्त्रियां वा ङीप् । [त्रिका० ।

**खमणि** पु० खे आकाशे मणिरिव प्रकाशकत्वात् । सूर्य्ये

**खमीलन** न० खानामिन्द्रियाणां मीलनम् । तन्द्रायाम् । शब्दच० तत्र सर्वेषां बहिरिन्द्रियाणां स्वस्वकार्य्ये व्या-पाराभावात् निमीलनं भवतीति तस्यास्तथात्वम् ।

**खमूर्त्ति** पु० खं मूर्त्तिरस्य । अष्टमूर्त्तिधरे १शिवरूपे शिवे तस्य ब्रह्मणोमूर्त्तिः स्वरूपम् । २ब्रह्मस्वरूपे स्त्री "स ब्रह्मपरमभ्येति वायुभूतः खमूर्त्तिमान्" मनुः ।

**खमूली** स्त्री खं शून्यभूतं मूलमस्याः ङीप् । कुम्भिकायां (पाना) त्रिका० तस्याः मूलशून्यत्वात् तथा त्वम् । पृषो० वा ह्रस्वः । खमूलि तत्रार्थे । स्वार्थे क ह्रस्वः, खमूलिका तत्रार्थे शब्दच० ।

**खम्ब** गतौ भ्वा०पर०सक० सेट् । खम्बति अखम्बीत् चखम्ब ।

**खर** पु० खं मुखविवरमतिशयेनास्त्यस्य र खमिन्द्रियं लाति ला-क वा रलयोरेकत्वम् । १गर्द्दभे । २अश्वतरे अमरः ३राक्षसभेदे च हेम० 'चेरतुः खरदूषणावि'ति भट्टिः । "वसतस्तस्य रामस्य ततः शूर्पनखाकृतम् । खरे-णासीत् महद्वैरं जनस्थाननिवासिना, । रक्षार्थं ताप-सानान्तु राघवो धर्मवत्सलः । चतुर्द्दश सहस्राणि जघान भुवि राक्षसान् । दूषणञ्च खरञ्चैव, निहत्य सुमहाबलौ । चक्रे क्षेमं पुनर्धीमान् धर्मारण्यं स राघवः" भा०व० २७६ अ० । ४कराटकिवृक्षभेदे, अजयः ५काके, अजयपालः ६कङ्कविहगे, ७कुररपार्श्वणि, राजनि० ८०संवत्सरमध्ये पञ्चविंशतमे व्दवर्षभेदे तत्फलं यथा । 'उपद्रुतं जगत्सर्वं तस्करैर्मूषिकैः खगैः । पीडिताश्च प्रजाः सर्वाः देशभङ्गः खरे प्रिये !" ज्यो०त० । ९रवि-पार्श्वचरे १०पश्चिमहारस्थे शब्दच० ११तिक्तरसे च । १२तद्वति, त्रि० अमरः । खरकिरणः खरांशुः १३कठिने च त्रि० 'खरविशदमभ्यवहार्य्यं मन्यमिति" मा० भाष्यम् । १४देवताडवृक्षे स्त्री टाप् अमरः १५घर्मे मेदि० १६तीक्ष्णे हेम० । १७दैत्यभेदे त्रिका० । जातित्वे स्त्रियां ङीप् ।

**खरकर** पु० खरस्तीव्रः करोऽस्य । सूर्य्ये खरकिरणखरांशु-प्रभृतयोऽप्यत्र । [इत्त्वम् । वलायामौषधौ राजनि० ।

**खरकाष्ठिका** स्त्री खरमुग्रं काष्ठं यस्याः कप् कापि अत

**खरकुटी** स्त्री खरा तीव्रा क्षुरवत्त्वात् कुटी । १नापितगृहे त्रिका० तस्याः क्षुरवत्त्वात्तथात्वम् । ६त० । गर्द्दभगृहे च खरगृहादयोऽप्यत्र ।

**खरकोण** पुंस्त्री खरं तीव्रं कोणयते शब्दायते कुण—सङ्कोचे धातूनामनेकार्थत्वात् इह शब्दार्थता अण् उप०स० । तित्तिरिपक्षिणि हेम० । जातित्वात् स्त्रियां ङीष् ।

**खरगन्धनिभा** स्त्री खरगन्धेन नितरां भाति नि+भा—क । नागबलायां नागबलाग्राम् (पान) जटा० ।

**खरगन्धा** स्त्री खरो गन्धोयस्याः । नागबलायाम् राजनि०

**खरघातन** पु० खरमुग्ररोगं, तन्नामराक्षसं वा घातयति हन—स्वार्थे णिच्—ल्यु । १नागकेशरे, २श्रीरामे च शब्दच० ।

**खरच्छद** पु० खरः छदः पत्रमस्य । (उलुखड़) १तृणभेदे रत्नमा० । २कुन्दरवृक्षे राजनि० ।

**खरज्जु** त्रि० खरं जीर्य्यति जॄ—बा० कु । तीव्रगतौ "क्रभूनापत् खरमज्रा खरज्जुः" ऋ० १०,१०६,७ ।

**खरणस्** त्रि० खरस्य नासेव खरा वा नासा अस्य नसादेशः णत्वम् । १खरतुल्यनासिके २तीव्रनासिके च । अच् समा० । खरणसोऽप्यत्रार्थे अमरः । [भावप्र० ।

**खरत्वच्** पु० खरा कठिना त्वक् यस्य । १लज्जालुभेदे ।

**खरदण्ड** न० खरः उग्रः कण्टकाहतत्वात् दण्डोऽस्य । पद्मे शब्दचि ।

**खरदला** स्त्री खरं दलं यस्याः । काष्ठोदुम्बरे शब्दच० ।

**खरदूषण** पु० खरमुग्रं दूषणमुन्मादकताहेतुदोषो यत्र । १धत्तूरे (धुतुरा) २बहुदोषे त्रि० । शब्दरत्ना० । द्व० । राक्षसभेदयोः द्विव० "खरदूषणयोर्भ्रात्रोः" भट्टिः ।

**खरधार** त्रि० खरा उग्रा धाराऽस्य । तीव्रधारे अस्त्रभेदे करपत्रभिन्नस्य खरधारस्य च व्रणादौ प्रयोगे दोषाः यथाह सुश्रुतः "तत्र वक्रं कुण्ठं खण्डं खरधारमतिस्थूलमत्यल्पमतिदीर्घमतिह्रस्वमित्यष्टौ शस्त्रदोषाः । अतो विपरीतगुणमाददीतान्यत्र करपत्रात्तद्धि खरधारमस्थिच्छेदनार्थम्" ।

**खरध्वंसिन्** पु० खरं खरनामानं राक्षसं ध्वंसयति ध्वन्स-णिच्—णिनि । श्रीरामे । खरहन्त्रादयोऽप्यत्र । रामस्य खरध्वंसकथा खरशब्दे दृश्या ।

**खरनादिन्** त्रि० खरं नदति नद्—णिनि । तीव्रशब्दकारके स्त्रियां ङीप् । सा च २रेणुकाख्यगन्धद्रव्ये शब्दच० । खर इव नदति नद्—णिनि । ३गर्द्दभतुल्यनादकारके त्रि० "उपमानं शब्दार्थप्रकृतावेव" पा० अस्याद्युदात्तता । खरनादिनोऽपत्यं बाह्वादि० इञ् । खारनादि तदपत्ये पुंस्त्री० ।

**खरनाल** न० खरं नालमस्य । पद्मे "नार्वाग्गतस्तत्खरनालनालनाभिं विचिन्वंस्तदविन्दताजः" भाग० ३,८,२१ ।

**खरप** पु० खरं पिबति पा—क । १ऋषिभेदे ततो नडादि० गोत्रापत्ये फक् । खारपायण तद्गोत्रापत्ये पुंस्त्री० । बहुषु तस्य यास्का० लुक् । खरपास्तद्गोत्रापत्येषु ।

**खरपत्र** पु० खरं पत्रमस्य । १शाकवृक्षे (सेगुन) २क्षुद्रतुलसवृक्षे च रत्नमा० । ३यावनालशरे ४मरुवके ५हरिदर्भे च राजनि० । वा कप् । खरपत्रक । तिलकवृक्षे शब्दच० ।

**खरपत्री** स्त्री खरपत्रमस्याः गौ० ङीष् । १गोजिह्वावृक्षे २काकोदुम्बरिकायाञ्च राजनि० ।

**खरपात्र** न० खरं पात्रम् कर्म० । लौहपात्रे त्रिका० ।

**खरपादाढ्य** पु० खरैः पादैर्मूलैराढ्यः । कपित्थद्रुमे शब्दच०

**खरपुष्प** पु० खरं पुष्पमस्य । मरुवके रत्नमा० ।

**खरपुष्पा(ष्पी)** स्त्री खराणि पुष्पाण्यस्याः वा ङीप् । बर्बराशाके (बाबुइ तुलसी) अमरः ।

**खरप्रिय** पुंस्त्री खलो धान्यादिमर्द्दनस्थानं प्रियोऽस्य लस्य रः । पारावते शब्दमा० स्त्रियां जातित्वेऽपि योपधत्वात् टाप् ।

**खरमञ्ज** पु० खरं मज्जयति मस्ज—र । अत्यन्तशोषके खरज्जुशब्दे उदा० ।

**खरमञ्ज(रि)री** स्त्री खरा मञ्जरी यस्याः समासान्तविधेरनित्यत्वात् न कप् ह्रस्वः वा ङीप् । अपामार्गे अमरः । तत्र ह्रस्वान्ते "पलाशपुष्पं खरमञ्जरेर्वा" "फलानि पिप्पलीः खरमञ्जरेर्वा" । "खरमञ्जरियष्ट्याह्वसैन्धवामरदारुभिः" सुश्रु० । दीर्घान्ते "विडङ्गखरमञ्जरीमधुशिग्रुसूर्य्यवल्लीत्यादि० सुश्रुतः ।

**खररोमन्** त्रि० खरं रोमाऽस्य । कठिनरोमयुक्ते स्त्रियां वा डाप् । खररोमत्वं गर्द्दभहत्याकर्मविपाकः यथाह शाता० "खरे विनिहते चैव खररोमा प्रजायते" इति । २नागभेदे पु० जटा० । [काभावे खरवल्लीत्यप्यत्र रत्नमा०

**खरवल्लिका** स्त्री खरा वल्ली सैव स्वार्थे क । नागबलाग्राम्

**खरशब्द** पु० खर उग्रः शब्दोऽस्य । १कुररखगे । ६त० । २गर्द्दभशब्दे पु० । कर्म० । ३उग्रशब्दे पु० । [भावप्र० ।

**खरशाक** पु॰ खरं शाकमस्य। (वामनहाटि) भार्ग्याम्।

**खरशाल** न॰ खराणां शाला नपु॰। गर्द्दभगृहे। शब्दचि॰ तत्र जातार्थस्य लुक्। खरशाल। तत्र भवे त्रि॰।

**खरसोनि** स्त्री खे आकाशे रसमूनयति उनि—इन्। लोहिकालतायां हारा॰। [लौहपात्रे त्रिका॰।

**खरसोन्द** पु॰ खं शून्यभूतः रसोन्दः रसक्लेदनमत्र। खरपात्रे

**खरस्कन्ध** पु॰ खरः स्कन्धोऽस्य। १प्रियालद्रुमे। २खर्जूर्य्यां स्त्री टाप्। राजनि॰। [मल्लिकायां रत्नमा॰।

**खरस्वरा** स्त्री खरं स्वरति उपतापयति स्वृ—अच्। वन-

**खरा** स्त्री खमाकाशं लाति ला—क लस्य रः। देवताडवृक्षे अमरः। [देवताड़वृक्षे रायमुकुटः।

**खरागरी** स्त्री खरमागिरति आ+गृ—अच् गौरा॰ ङीष्।

**खराब्दाङ्कुरक** न॰ खराब्दात् तीव्रगर्जनमेघात् अङ्कुरयति अङ्कुरि—ण्वुल्। वैदूर्य्यमणौ राजनि॰ तस्य नवमेघशब्दात् जायमानाङ्कुरत्वात्तथात्वम्।

**खराश्वा** स्त्री खरैरश्यते भुज्यते अश-भोजने वा॰ व। मयूरशिखायाम् (रुद्रजटालता) अमरः।

**खराह्वा** स्त्री खरं तीव्रं गन्धमाह्वयति आ+ह्वे—क। अजमोदायाम् राजनि॰। [चूर्णाकृतिकस्तूरीभेदे राजनि॰।

**खरिका** स्त्री खं राति रा—क संज्ञायां कन् अत इत्वम्।

**खरीजङ्घ** पु॰ खर्य्या गर्द्दभ्या इव जङ्घा यस्य। १ऋषिभेदे २शिवे पु॰। ततोऽपत्ये इञ्। खारीजङ्घि तदपत्ये पुंस्त्री॰ ततोद्वन्द्वे अद्वन्द्वे च बहुषु तस्य लुक्। खरीजङ्घास्तस्यापत्येषु।

**खरु** पु॰ खन—कु रश्चान्तादेशः। १शिवे २दर्पे, ३अश्वे, ४दन्ते, मेदि॰ ५कामदेवे उणा॰। ६श्वेतवर्णे ७श्वेतवर्णवति, ८निषिद्धैकरुचौ, हेम॰। ९निर्बोधे, १०क्रूरे त्रि॰ उणा॰ष्ट॰ ११पतिं वरायां कन्यायां स्त्री। हेम॰ गुणवाचित्वेऽपि पश्वादित्वान्न ङीष्। १२तीक्ष्णे त्रि॰ संक्षिप्तसारः। [चखर्ज।]

**खर्ज** व्यथायां भ्वा॰अक॰पर॰ सेट्। खर्जति। अखर्जीत्।

**खर्ज्जन** न॰ खर्ज—ल्युट्। कण्डूयने। [शब्दच॰।

**खर्जिका** स्त्री खर्ज्ज—ण्वुल् अत इत्वम्। उपदंशरोगे

**खर्जु** पु॰ खर्ज—उन्। १कण्डूभेदे (चुलकानि) २खर्जूरीवृक्षे ३कीटभेदे च हेमच॰।

**खर्ज्जुर** न॰ खर्ज—उरच्। रौप्ये रत्नमा॰। [उणादिको॰।

**खर्ज्जू** स्त्री खर्ज्ज—ऊ। १कण्डूभेदे (चुलकानि) २कीटभेदे

**खर्ज(र्जु)र्ज्जुघ्न** पु॰ खर्जुं (र्जूम्) कण्डूयनं हन्ति हन—टक। १चक्रमर्द्दे, (दादमर्द्दन) २अर्कद्रुमे च राजनि॰।

**खर्ज्जूर** पुंस्त्री खर्ज्ज ऊरच् स्त्रीत्वे गौरा॰ ङीष्। (खेजुर) वृक्षे तस्य फलम् अण् तस्य लुप्। तत्फले न॰ उद्भेदगुणाश्च भावप्र॰ उक्ताः यथा

"भूमिखर्ज्जूरिका स्वाद्वी दुरारोहा मृदुच्छदा। तथा स्कन्धफला काककर्कटी स्वादुमस्तका। पिण्डखर्ज्जूरिका त्वन्या सा देशे पश्चिमे भवेत्। खर्ज्जूरी गोस्तनाकारा परद्वीपादिहागता। जायते पश्चिमे देशे सा छोहारेति कीर्त्यते। खर्ज्जूरीत्रितयं शीतं मधुरं रसपाकयोः। स्निग्धं रुचिकर हृद्यं क्षतक्षय हरं गुरु। तर्पणं रक्तपित्तघ्नं पुष्टिकृच्चापि शुक्रदम्। कोष्ठमारुतहृद्बल्यं वान्तिवातकफापहम्। ज्वरातिसारक्षुत्तृष्णाकासश्वासनिवारकम्। मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत्। महतीभ्यां गुणैरल्पा स्वल्पखर्ज्जूरिका स्मृता। खर्ज्जूरीतरुतोयन्तु मदपित्तकरं भवेत्। वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत्" "खर्जूरीस्कन्धनद्धानाम्" रघुः। २रौप्ये ३हरिताले न॰ हेमच॰। ४खले (खामार) मेदि॰। ५वृक्षजातिभेदे स्त्री अमरः। (वनखेजुर)।

**खर्ज्जूरवेध** पु॰ एकार्गलापरपर्य्याये विवाहे वर्ज्जनीययोगभेदे उपयमशब्दे १२६६ पृ॰ विवृतिः।

**खर्द्द** दंशने भ्वा॰पर॰सक॰सेट्। खर्द्दति अखर्द्दीत्। चखर्द्द।

**खर्पर** पु॰ कर्परशब्दवत् पृषो॰ खत्वम्। १तस्करे, २धूर्त्ते, ३भिक्षापात्रे कपाले ४भिन्नमृण्मयखण्डे च मेदि॰ ५उपधातुभेदे, तुत्थाञ्जने (तुँते) च न॰ शब्दच॰।

**खर्परी** स्त्री खर्परं उपधातुभेदः कारणत्वेनास्त्यस्य अच् गौरा॰ ङीष्। खर्परीतुत्थे अमरः। ठन् खर्परिकाप्यत्र।

**खर्परीतुत्थ** न॰ कर्म॰। तुत्थभेदे (तुँते) राजनि॰ तत्पाकप्रकार गुणाः भावप्र॰ उक्ता यथा। "नरमूत्रेण गोमूत्रे सप्ताहं रसकं (पारदम्) पचेत्। दोलायन्त्रेण शुद्धः स्यात् ततः कार्येषु योजयेत्। खर्परं कटुकं क्षारं कषायं वामकं लघु। लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत्। विषाश्मकुष्ठकण्डूनां नाशनं परमं मतम्"।

**खर्व्व(र्ब)** गतौ भ्वा॰ पर॰ सक॰ सेट्। ख(र्ब)र्वति अखर्वी(र्बी)त्। चख(र्ब)र्व। गतिरत्र नीचतमगतिः खर्वशब्ददर्शनात्। अन्त्यस्थान्त्यस्तु गर्वे इति भेदः।

**खर्व(र्ब)** पु॰ खर्व—गर्वे अच्। १कुवेरनिधिभेदे शब्दरत्ना॰। २कुब्जक वृक्षे अन्त्यस्थमध्यः राजनि॰ तस्य गन्धस्योत्-

कठनया गर्वहेतुत्वात् तथात्वम्। खर्व—गतौ अच्। वर्ग्य-मध्यः ३ह्रस्वे ४वामने त्रि० अमरः "खर्व ! गर्वसमूह-पूरिततनो!" ताराकोलम्। ५संख्याभेदे (सहस्रकोटौ) "अर्बुदमब्जं खर्वनिखर्व"मिति लीलावती। ६तत्संख्याते च

**खर्व(र्वे)ट** पु० खर्व(र्व)—अटन्। "एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम्। मिश्रं तु खर्व(र्व)टोनाम नदी-गिरिसमाकुलः" भाग० टीकायां श्रीधरोक्ते ग्रामभेदे।

**खर्वशाख** त्रि० खर्वा शाखा तत्तुल्यस्य हस्तपदादयोऽस्य। वामने हेम०।

**खर्वित** त्रि० खर्व—नीचगतौ कर्त्तरि क्त। ह्रस्वे स्त्रियां टाप्। साच अमावास्याभेदे, "संमिश्रयेच्चतुर्द्दश्या अमावास्या भवेत् क्वचित्। खर्वितां तां विदुः केचिद्गताध्वा-मिति चापरे" कर्मप्रदी० पूर्वदिनस्थिततिथ्यपेक्षया परदिने २ऽल्पकालस्थिततिथिमात्रे च।

**खर्वरा** स्त्री खर्व उरच्। तरदीवृक्षे राजनि०।

**खर्बु(र्वु)ज** न० खर्बु(र्व) उन् तथा भूता जायते जन—ड। (खरबुज) लताफलभेदे। तस्य गुणा भावप्र० उक्ता "खर्बु(र्वु)जं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु। स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम्। तेषु यच्चाम्लमधुरं सच्चा-रञ्च रसाद्भवेत्। रक्तपित्तकरं तत्तु मूत्रकृच्छ्रकरं परम्"।

**खल** चलने खलने च भ्वा० पर० अक० सेट्। खलति अखालीत् खलति प्रनिखलति खलः।

**खल** पुंन० खल—अच् अर्द्धर्चा०। धान्यमर्द्दनस्थाने हेम०। (खामार) धान्यखलः गोधूमखलः यवखलः। "खलात् क्षेत्रादगाराद्वा यतोवाप्युपलभ्यते" मनुः। खलयज्ञः खलेकपोतः। "खले न पर्षान् प्रतिहन्मि भूरि" ऋ० १०,४८,७, २धूलिराशौ च ३भुवि ४स्थानमात्रे च। खलस्य साद्यस्क्रेषु यज्ञेषु उत्तरवेदित्वेन विहितो यथा "साद्यस्क्रे पूर्वरा वेदिः "खल उत्तरवेदिः" आश्व० श्रौ० ७,१२,१४, तत्र खलशब्दनिर्द्धारणं कात्यीये यथा "खल उत्तरवेदिः धान्यखलः प्रत्ययात्" कात्या० श्रौ० २२,३,३२,४४, खल इत्युक्ते धान्यखलः प्रतीयते यतः" कर्कः। "ये वेदिमभितस्तानुत्तरवेदिदेशे स्तृणन्ति" कात्या०श्रौ० ४५, "धान्यखलमभितः सन्निधानात् वेदि-मभितो ये शस्यविशेषास्तानुत्तरवेदिदेशे स्तृणन्ति मर्द्दयन्ते तस्येभ्यो विमोकार्थमनुडुद्भिः परितो गच्छद्भिराक्राम-न्तीत्यर्थः" कर्कः। इति पूर्वपक्षः "पांशुखलो वा प्रत्य-याविशेषात्" ४७सू०। वाशब्दः पक्षान्तरे पांशुखलो-वोत्तरवेदिर्भवति तत्रापि खलशब्दप्रयोगप्रत्ययौ" कर्कः "पांशुखलो धूलिराशिः प्रत्येतव्यः कुतः खल इत्युक्ते धान्य-खलोऽपि प्रतीयते पांशुखलोऽपि प्रतीयते" सं०व्या० इति सिद्धान्तः। ५तिलकल्के पु० (खलि) ६नीचे ७अधमे ८दुर्जने त्रि० "सर्पः क्रूरः खलःक्रूरः सर्पात् क्रूरतरः खलः। मन्त्रौषधिवशः सर्पः खलः केन निवार्य्यते" चाणक्यः। "स्वप्राणान् यः परप्राणैः प्रपुष्णात्यघृणः खलः" भाग० १,७,३७,। ६इतरे च त्रि० अमरः। खे लीयते ली—ड। १०सूर्य्ये। खं तद्दृष्टं लाति ला—क। ११तमालवृक्षे पु० शब्दच०। १२प्रस्तरमये औषधमर्द्दनपात्रभेदे वैद्य-कम्। १३खडे डलयोरैक्यात्। "खलाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः" सुश्रुतः। खलकाम्बलिकौ हृद्यौ तथा वातकफे हितौ" सुश्रुतः। खलएव अङ्गु-ल्या० स्वार्थे ठक्। खालिक खलशब्दार्थे। शब्दच०।

**खलक** पु० खं शून्यं मध्ये लाति ला—क संज्ञायां कन्। कुम्भे

**खलकुल** —० खलकौ खलभूमौ लीयते ली—बा० ड। कुलत्थ कलाये "दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिल माषा अणुप्रियङ्गवो गोधूमाश्च खल्वाः खलकुलाश्च" छा०उ० "खलकुलाः कुलत्थाः" भा०।

**खलता** स्त्री खस्य लता। १आकाशलतायाम्। खलस्य भावः तल्। १दुर्जनत्वे च। "अनिवारिततापसम्पदं फलहीनां सुमनोभिरुज्झिताम्। खलतां खलतामिवासतीं प्रतिप-द्येत कथं बुधोजनः" माघः। खलता च "अद्रोहिणि तथा शान्ते विद्वेषः खलता स्मृता" इत्युक्तलक्षणा।

**खलति** पु० स्खलन्ति केशाः अस्मात् भीमा० अपादाने अति प्रत्य०। (टाक) १इन्द्रलुप्तरोगे तच्छब्दे विवृतिः। २तद्वति त्रि० स्त्रियां वा ङीप्। तद्रोगयुक्तपरत्वे कडा० कर्मधा० परनि०। युवखलतिः खलतियुवा। "अवभृथेऽप्सु-न्ते इत्युपक्रमे "पिङ्गलखलतिविक्लिधशुक्लस्य मूर्द्धनि जुहोति" कात्या० श्रौ० २०,८,१८, "खलतिः खल्वाटः" कर्कः।

**खलतिक** पु० खलतिरिव कायति कै—क। पर्वते "खलति-कादिषु वचनम्" वार्त्ति०। खलतिकः पर्वतस्तत्र भवानि खलतिकं वनानि" बहुत्वेऽपि एकवचनम् सि०कौ०।

**खलधान** पु० खलाः खडा धीयतेऽस्मिन् धा—आधारे ल्युट्। (खामार) ख्याते खलपदार्थे हेमच०।

**खलपू** त्रि० खलं भूमिं पुनाति पू—क्विप्। स्थानशोधन कारिणि (फराश)। अमरः।

**खलयज्ञ** पु० खले कर्त्तव्यो यज्ञः। खले कर्त्तव्ये यज्ञभेदे

लाट्यायनश्रौ० सू० ४,१,२५, सूत्रादौ तस्य विवृतिः ।

**खलाजिन** न० खलस्थितमजिनम् । खलस्थितचर्म्मणि ततः उत्करा० चतुरर्थ्यां छ । खलाजिनीय तत्सन्निकृष्टदेशादौ त्रि० ।

**खलादि** पु० का० वार्त्तिकोक्ते समूहार्थे इनिप्रत्ययनिमित्ते शब्दसमूहे स च गणः । खल डाक कुटुम्ब द्रुम अङ्ग गो रथ कुण्डल" खलिनी डाकिनीत्यादि तत्समूहे ।

**खलाधारा** स्त्री खल आधारो यस्याः । तैलापोका) "तैलपायिकायाम्" जटाध० ।

**खलि** स्त्री खल-इन् । ( खलि ) इति ख्याते तैलकिट्टे राजनि० वा० ङीप् । "स्थाल्यां वैदूर्य्यमय्यां पचति तिलखलीं चन्दनैरिन्धनौघैः"भारतरत्ना० २तालमूले रत्नमा० ।

**खलि(ली)न** पुंन० खे अश्वमुखच्छिद्रे लीनं पृषो० वा ह्रस्वः अर्द्धर्चादि । अश्वमुखस्थायां कविकायां (कड़िआल) । ह्रस्वमध्यः इति रायमुकुटः ।"उभयतः खलीन कनककटकावलम्बाभ्यां पदेपदे लताकुसुमप्रयत्नाभ्यां पुरुषाभ्यामवलम्ब्यमानाम्" (अश्वम्) काद० । दीर्घमध्यः २आकाशलीने त्रि० ।

**खलिवर्द्धन** पु० "मारुतेनाधिकोदन्तो जायते तीव्रवेदनः । खलिवर्द्धनसंज्ञोऽसौ जायते रुक् न शाम्यति" इति भावप्र० उक्ते रुग्णदन्तभेदे ।

**खलिश** पु०खे आकाशे जलादूर्द्ध भागे लिशति लिश-क । (खलसा) मत्स्यभेदे शब्दरत्ना० । तद्गुणाश्च "खलिशस्तु मतोग्राही कषायो वातकोपनः । रूक्षो लघुः स्थूलहरः किञ्चिदामविनाशनः" राजवल्लभः । पृषो० खल्लिशः खल्लीशोऽप्यत्र ।

**खलीकार** पु० खल+अभूततद्भावे च्वि—कृ—भावे घञ् । १अपकारे जटाधरः । २भर्त्सने च । खलीकृधातोस्तदर्थकताऽपि तेन "परोक्षे खलीकृतोऽयं द्यूतकरः "खलीक्रियते" मृच्छ० खलीक्रियते भर्त्स्यते इत्यर्थः ।

**खलु** अव्य० खल-उन् । निषेधे एतदर्थयोगे धातोःक्त्वा "निर्द्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम्" माघः "खल्वि'त १निषेध २वाक्यालङ्कार ३जिज्ञासा ४ऽनुनय ५नियमेषु" गणरत्नोक्तेषु वाक्यालङ्कारादिषु च तत्र वाक्यालङ्कारे "खलु वाचिकम्" जिज्ञासायां "स खल्वधीते वेदम्"। अनुनये "न खलु न खलु मुग्धे ! साहसं कार्य्यमेतत्" । नियमे (अवधारणे) "प्रवृत्तिसाराः खलु मादृशां धियः" प्रवृत्तिसारा एवेत्यर्थः" गणरत्नम् । जिज्ञासार्थे "न खलूपरुषा पिनाकिना"कुमा०। ६निश्चये ७वाक्यपादपूरणे ८वीप्सायायां शब्दरत्ना० । तत्र निश्चये "न खलु प्रेम चलं सुहृज्जने" कुमा० । "न खलु वयममुष्य दानयोग्याः"माघः ।"न खल्वनिर्जित्य"रघु "कृती भवान्" रघुः ।वाक्यालङ्कारे "सर्वं प्रियं खलु भवत्यनुरूपचेष्टम्" माघः । "अंशा गुणाः खल्वपि लोककान्ताः" रघुः । वीप्सा व्याप्तिः "काले खलु समारब्धाः फलं बध्नन्ति नीतयः" रघुः । काले समारब्धानीतयः फलजननव्यापिका इत्यर्थः ।

**खलुक्** पु० खमिन्द्रियं तेलव्यापारं लुञ्चति लुञ्च—अपनये क्विप् । अन्धकारे त्रिका० ।

**खलुरिष** पुंस्त्री खलु रिष्यते बध्यतेऽसौ खलु+रिष—वधे कर्म्मणि घञ् सुप्सुपेति स० । मृगभेदे शब्दच० ।

**खलूरिका** स्त्री अव्युत्पन्नोऽयम् । शस्त्राभ्यासे हेमच० ।

**खलेकपोत** पु० स०व० खले पतन्तः कपोताः शा०त० अलुक् स० । खलेपतत्सु कपोतेषु । तत्तुल्यः न्यायः खलेकपोत न्यायः यथा खले कपोता युगपत् पतन्ति तथा परस्परविशेष्यविशेषणभावानापन्ना एकत्रान्विताः यथा क्रियायां कर्मादिकारकाणां सर्वेषामेव युगपदन्वयः न तु विशेष्यविशेषणमिति रीत्या "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" जै०उक्तेः । अयमेव न्यायः एकत्रद्वयमिति संज्ञकोऽपि । यथा महानसीयवह्निर्नाऽस्तीत्यतः एकस्मिन् अभावप्रतियोगिनि महानसीयत्वं वह्नित्वञ्चेत्युभयं प्रकारविधया भासते इति जगदीशः । गदाधरमते तु निर्द्धर्मितावच्छेदकभानाखीकारेण वह्नित्वं धर्मितावच्छेदकीकृत्यैवात्र महानसीयत्वं भासते इति तत्र न एकत्रद्वयमिति रीत्या बोधः किन्तु क्रियाकारकान्वय एव तथा बोधः इति भेदः सएव खलेकपोतन्यायः ।

**खलेधानी** स्त्री खले धीयन्ते वृषभा अत्र धा—आधारे ल्युट् ङीप् । मेधिकाष्ठे जटाधरः । २शूलौ हेम० ।

**खलेयव** अव्य० । खले यवोयत्र काले तिष्ठद्गु प्र० स० । खलेस्थितयवकाले ।

**खलेवाली** स्त्री खले वाल्यन्ते चाल्यन्ते वृषभा यत्र वल-चालने आधारे घञ् गौरा० ङीष् । शस्यमर्द्दनभूमिमध्यस्थे काष्ठभेदे (मेढ़काठ) । "खलेवाली यूपो खाङ्खेषा" कात्या० श्रौ० २२,३,४८, खलमध्ये निखाता मेधिभूता खलेवाली" इति सं०व्या० । आश्व० श्रौ० ६,७,१५, तु तत्रव्याख्यायामन्या व्युत्पत्तिरुक्ता यथा खलेवाली

यूपः" सू० । खलेऽनडुद्गमने तद्बन्धनार्थो मेधिः खले-वालीत्युच्यते खलेऽनडुहोवारयतीति खले वाली"नारा० मेध्यां हि बन्धनेनानडुहां वारणात् तथा भवति" रलयोरैक्यात् तथात्वम् ।

**खलेवुस** अव्य० खले वुसमत काले तिष्ठद्गु०स०। खलेस्थित वुसकाले

**खलेश** पु० स्त्री खे जलादूर्द्धाकाशे लिशति संश्लिष्यति गति-काले लिश–क्च् ७त०। (खलिसा) मत्स्यभेदे हारा० स्त्रियां जातित्वात् ङीष् ।

**खलेशय** पु० स्त्री खलेशं जलादूर्द्धस्याकाशसंसर्गं याति या–क । (खलिशा) मत्स्यभेदे शब्दरत्ना० । स्त्रियां जातित्वेऽपि योपधत्वात् टाप् । [(खामार समूह) ।

**खल्या** स्त्री खलानां समूहः यत् । खलसमूहे अमरः

**खल्ल** पु० खलति क्विप् खल् तं लाति ला–क । १ वस्त्रभेदे २ गर्त्ते ३ चर्म्मणि ४चातकविहगे पु०स्त्री० मेदि० । स्त्रियां जातित्वात् ङीष् । ५ दृतौ चर्म्मभयपात्रे (मसक) हेम० । ६ औषधमर्द्दनपात्रे (खल) वैद्यकम् ।

**खल्लिका** स्त्री खल–क्विप् तं लाति–ला–क ततः संज्ञायां कन् कापि अत इत्त्वम् । ऋजीषे भर्जनपात्रे (भाजनाखोला) शब्दच० । शब्दचिन्तामणौ अयं वमध्ये पठितः तत्र वातेः क इति भेदः ।

**खल्ली** स्त्री खल–क्विप् तं लाति ला–क गौरा० ङीष् । "खल्ली तु पादजङ्घोरुकरमूलावमोटनी" इति भावप्र-काशोक्ते रोगभेदे ।

**खल्लीट** पु० खल्लीव टलति टल–विक्लवे बा० ड । १खलति-रोगे २तद्वति त्रि० त्रिका० पृषो० ह्रस्वः खल्लिटोऽप्यत्र शब्दरत्ना० । "खल्लीटः परनिन्दावान् धेनुं दद्यात् सकाञ्चनाम्" शातातपेन तस्य परनिन्दनकर्मविपा-कतोक्ता । खल्लाट इत्येव पाठः साधुः । तत्र खल्लं इवाटति अट–अच् इति व्युत्पत्तिः ।

**खल्व** पु० खल–क्विप् तं वाति वा–क । निष्पावे धान्यधान्य-भेदे "दश धान्यानि धान्यानीत्युपक्रमे "खल्वाश्च खल-कुलाश्च" छ०उ० । "खल्वाः निष्पावाः वल्ला इति प्रसिद्धाः" शङ्करमाधवौ "व्रीहयश्च मेइत्युपक्रमे "मुद्-गाश्च मे खल्वाश्च मे" यजु० १८,१२, खल्वाश्चणकाः वेददीपः । तेन २चणके च ।

**खल्वाट** पु० खल–क्विप् तं वटते वेष्टयते वट–वेष्टे अण् उप०स०। इन्द्रलुप्तरोगे (टाक) २तद्रोगवति त्रि० हेमच०

**खव** सम्पत्तिपवित्रतयोः प्रादुर्भावे, च क्र्या० पर०अक०सेट् । अवाति अखावीत् अखवीत् । चखाव । प्रनिखवाति ।

**खवल्ली** स्त्री खे शून्ये वल्ली । मूलशून्यायाम् १आकाशवल्लयाम राजनि० खवल्लरीखलतादयोऽप्यत्र २आकाशलतायाञ्च ।

**खवारि** न० खात् पतितं वारि शा०त० । दिव्योदके राजनि० खजलादयोऽप्यत्र ।

**खवाष्प** पु० खस्य वाष्पम् । हिमजलकणे (ओस) हारा० ।

**खस(श)** पु०देशभेदे त्रिका० तस्य दन्त्यमध्यता मन्वादौ दृश्यते क्वचित् तालव्यमध्यता च तेनोभयरूपता । स च देशः बृ०सं० कूर्म्मविभागे १४अ० पूर्वस्यामुक्तः "अथ पूर्वस्याम-त्युपक्रमे "खशमगधशिविरगिरिमिथिलसमतटोड्राश्व-वदनदन्तुरकाः" । सोऽभिजनोऽस्य, तद्देशस्य राजा वा अण् । खास(श) । तद्देशवासिनि तद्देश नृपे च बहुषु तु अणो लुक् । ख(शा)सास्तद्देशवासिनः तन्नृपाश्च । ते च शनकैः क्रियालोपात् वृषलत्वं गताः यथाह मनुः "शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः । वृषलत्वं गता लोके ब्राह्मणादर्शनेन च । पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा जवनाः शकाः । पारदापह्लवाश्चीनाः किराता दरदाः खशाः" । "खशांस्तु खारांश्चोलांश्च मद्रान् किष्कि-न्धकांस्तथा हरि० १४ अ० । "खसा एकासनाह्यर्हाः प्रदरादीर्घवेणवः" भा० स० ५१ अ० । "अङ्गवङ्गखसेष्वेव नान्यदेशे कदाचन" सू०चि० । ३सुरानामगन्धद्रव्ये शब्दच० ४कश्यपपत्नीभेदे दक्षकन्यान्तरे स्त्री यथा गरुडपु० ६अ० "धर्म्मपत्न्यः समाख्याताः कश्यपस्य वदाम्यहम् । अदिति र्दितिर्दनुः काला चतायुः सिंहिका मुनिः । कद्रूः प्रधा इरा क्रोधा विनता सुरभिः खशा(सा)" । "इरा वृक्ष लतावल्लीतृणजातीश्च सर्वशः । खशा(सा) च यक्ष रक्षांसि मुनेरप्सरसस्तथा" तत्रैव तत्प्रजोक्तिः ।

**खशीर** पु० १देशभेदे २तद्देशवासिनि ३तन्नृपे च बहुव० । "खशीराश्चान्तचाराश्च पह्लवा गिरिगह्वराः,, भा० आ० ६ अ० उत्तरस्यजनपदकथने ।

**खशेट** पुंस्त्री खं शेटति शिट–अनादरे अण् । (खलिसा) मत्स्ये त्रिका० तस्य गतिकाले खस्यानाधारत्वेन गतियोग्यत्वाभावेऽपि तस्य तथात्वानादरेण गमनात्तथात्वम्

**खश्वास** पु० खस्य श्वास इव । वायौ त्रिका० ।

**खष** वधे भ्वा० पर० सक० सेट् । खषति अखाषीत्-अख-षीत् । चखाष ।

**खष्प** पु० खन–प नि० नस्य षः । १ क्रोधे २ बलात्कारे च । खष्पौ क्रोधबलात्कारौ,, सि० कौ० उक्तेः शब्दक-

त्वद्रुमे तस्य शब्दस्य क्लीवतोक्तिः प्रामादिकी।

**खस** पु० खानि इन्द्रियाणि स्यति निश्चलीकरोति सो—क। (खोस) (पाचड़ा) ख्याते १रोगभेदे। २देशभेदे ३सवर्णायां ब्राह्मणविशाजाते जातिभेदे "झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च। नटश्च करणश्चैव खसो द्रविड एव च" मनुः। (खसखस्) इति ख्याते वृक्षे भावप्र० खसतिलशब्दो दृश्यः।

**खसकन्द** पु० खस इव कन्दोऽस्य। चीरकञ्चुकीवृक्षे रत्नमा०। खसगन्ध इति पाठान्तरेऽपि तथार्थता। खसस्येव गन्धोऽस्य तत्र वाक्यम्।

**खसतिल** पु० खसः खसपूर्व इव तिलति स्निह्यते शुक्लत्वे हत्वात् तिल—स्नेहे क। (पोस्ता) अहिफेननिर्यासके (खस्खस) ख्याते वृक्षे राजनि०। तस्य तैलस्य खसपूर्वत्वगुणभाक्त्वात्तथात्वम्।

खसतिलस्य फलचूर्णादिगुणा भावप्र० उक्ता "तिलभेदः खसतिलः कासश्वासहरः स्मृतः। स्यात् खाखसफलोद्भूतं वल्कलं शीतलं लघु॥ ग्राहि तिक्तं कषायञ्च वातकृच्च कफास्रहृत्। धातूनां शोषकं रूक्षं मदकृद् वाग्विवर्द्धनम्॥ मुहुर्मोहकरं रुच्यं सेवनात् पुंस्त्वनाशनम्। उक्तं खसफलक्षीरमाफूकमहिफेनकम्। आफूकं शोधनं ग्राहि श्लेष्मघ्नं वातपित्तलम्॥ तथा खसफलोद्भूतवल्कलप्रायमित्यपि। उच्यते खसबीजानि ते खाखसतिला अपि। खसबीजानि बल्यानि वृष्याणि सुगुरूणि च॥ जनयन्ति कफम् तानि शमयन्ति समीरणम्"।

**खसन** पु० खं शून्यं सनं यस्य। बुद्धे त्रिका०। तस्य सर्वस्य शून्यभावनयाऽस्थिरत्वचिन्तनेन जगतःस्थिरत्वनिराकरणात् सर्वशून्यत्वोक्तरेण तस्य तथात्वम्।

**खसम्भवा** स्त्री खे सम्भवति सम्+भू—अच्। आकाशमांसी वृक्षे राजनि०। [बुद्धशब्दे विवृतिः।

**खसर्पण** पु० खे बन्धच्छेदेन जह्वदेशे सर्पणमस्य। बुद्धे त्रिका०।

**खसात्मज** पु० खसायाः कश्यपपत्नीभेदस्य आत्मजः। राक्षसे त्रिका० तस्य तत्पुत्रत्वकथा खसशब्दे दृश्या।

**खसूचिन्** खं सूचयति सूच—णिनि। प्रश्नविचारणाय आकाशस्य नैर्मल्यादिसूचके निन्दिते वादिनि। वैयाकरणखसूचिः सि०कौ०।

**खहर** पु० सिंहिकासुते असुरभेदे "सिंहिकायां समुत्पन्ना विप्रचित्तिसुतास्तथा। व्यंसः शल्यश्च बलवान् नभश्चैव महाबलः॥ वातापिर्नमुचिश्चैव इल्वलः खसृमस्तथा। अन्तको नरकश्चैव कालनाभस्तथैव। निवातकवचा दैत्याः प्रह्लादस्य कुलेऽभवन्" गारुडपु०६अ०। "खसृमः शालकटनः करालः कौशिकः शरः हरि०४०अ०।

**खस्खस** पु० खसस्याकारः द्वित्वम् पृषो०। खसतिले (पोस्ता) वृक्षभेदे राजनि०।

**खसखसरस** पु० ६त०। अहिफेने राजनि०।

**खस्तनी** स्त्री खमाकाशः स्तन इव यस्याः। पृथिव्यां त्रिका०

**खस्फाटिक** पु० खमिव निर्मलःस्फाटिकः। १सूर्यकान्तमणौ २चन्द्रकान्तमणौ च हेमच०।

**खस्वस्तिक** न० खं मूर्द्धस्थित आकाशः स्वस्तिकमिव। सनत्सूत्रपातेन मस्तकोपरिस्थे आकाशविभागे प्रमिताक्षरा खगोलशब्दे दृश्यम्।

**खहर** पु० खं शून्यं हरोऽस्य। बीजगणितोक्ते शून्यहारके राशिभेदे। "अस्मिन् विकारः खहरे न राशावपि प्रविष्टेष्वपि निःसृतेषु। बहुष्वपि स्याल्लयसृष्टिकालेऽनन्तेऽच्युते भूतगणेषु यद्वत्"। [कर्त्तरि विट् आत्। २खनितरि त्रि० विसखाः।

**खा** स्त्री खन—कर्मणि विट् आत्। नद्याम् निघ० खन—

**खाखस** पु० खस+स्वार्थे द्वित्वम् पृषो०। खसतिले भावप्र० यद्दोज (गोला)। खसतिलशब्दे विवृतिः।

**खाङ्गाह** पु० खे आकाशऽङ्गानि हन्ति गतिकाले आ+हन—ड। श्वेतपिङ्गलाश्वे शब्दचि०।

**खाजिक** पु० खे ऊर्द्धे आजः! क्षेपः तत्र साधुः ठन्। लाजेषु हारा०। तस्य भर्जनकालात् ऊर्द्धेण स्फोटनेन तथात्वम्

**खाट** पु० खे ऊर्द्धमार्गे अटनेन अट—करणे घञ्। शवरथे शवहरणशय्यायाम् शब्दरत्ना०।

**खाटि** स्त्री खट—काङ्क्षायाम् वा० इञ्। १किणे (वेटा) २असद्ग्रहे ३शवरथे च मेदि०। ४शुष्कव्रणस्थाने उज्ज्व०। संज्ञायाम् कन्। खाटिका शवरथे स्त्री शब्दरत्ना०।

**खाड्गभारिक** त्रि० खड्गभारं हरति वहति आवहति वा ठञ्। १खड्गभारहारके २तद्वाहके ३तदावाहके च। भारभूतखड्गाहारकादौ खाटिक इत्येव।

**खाडव** न० भावप्रकाशोक्ते चूर्णविशेषे यथा। "कोलामलकजं चूर्णं गुडशर्करान्वितम्। मातुलुङ्गरसेनाक्तं शोषितं सूर्यरश्मिभिः। एवन्तु बहुशोऽभ्यक्तं शोषितञ्च पुनः पुनः। ईषल्लवणसंयुक्तं चूर्णं खाडवमुच्यते। खाडवं सुखवैशद्यकारकं रुचिधारणम्। हृद्रोगशमनञ्चेति मुखवैरस्यनाशनम्। भोजनान्ते विशेषेण भोक्तव्यं खाडवं सदा"।

**खाण्ड** न० खण्डस्य भावः पृथ्वा० भावे पक्षे अण् । खण्डभावे खण्डस्य विकारः अण् । २खण्डविकारे च ।

**खाण्डव** त्रि० खाण्डं खण्डविकारं वाति वा०क । खण्डविकारयुक्ते मोदकादौ । "रसालापूपकांश्चित्रान् मोदकांश्च सखाण्डवान्" भा० आनु० ५२ अ० ।

२वनभेदे । तच्च वनं पुरा शक्राद्यावासस्थानं तच्च छित्त्वा सोमवंश्येन सुदर्शनेन राज्ञा खाण्डवी पुरी कृता पुनः सा काशीराजेन विजयेन जित्वा शक्रनिदेशात् वनतां प्रापिता यथाह कालिकापु० ७८ अ० ।

"सोमवंशेऽभवद्राजा महात्मा स महाबलः । वीरः सुदर्शनो नाम चारुरूपः प्रतापवान् । स वै हिमवतो नातिदूरे भङ्क्त्वा महावनम् । सिंहान् व्याघ्रान् समुत्साय्य कांश्चिदपि तपोधनान् । खाण्डवीं नाम नगरीमकरोत्तत्र शोभनाम् । त्रिंशद्योजनविस्तीर्णामायतां शतयोजनम्" ॥ "अथ हित्वा नरपतिर्विजयस्तं सुदर्शनम् । कृतापचारं बहुशो देवानाञ्च तथा नृणाम् । वाराणसीपतिं वीरं विजयं जयशालिनम् । सम्वाय कृत्वा साचिव्यं तत्रैव न्यवाजयत् । विजयो विवरं प्राप्य महाबलपराक्रमः । सुदर्शनस्य न्यनैरस्त्वान्नथाकरोत् । नासहत् सोऽप्यवस्कन्दं विजयस्य सुदर्शनः । चतुरङ्गबलेनाशु युद्धायाभिमुखोऽभवत् । विजयो रथमारुह्य नियुज्य चतुरङ्गिणीम् । सेनां सुदर्शनं योद्धुं समुखोऽभवद्रुषा । तदा महद्युद्धमासीद्विजयेन महात्मना । सुदर्शनस्य नृपतेर्बलवासवयोरिव । ततः सुदर्शनो राजा दारितो गदयाऽपतत् ॥ उत्फुल्लनयनो राजा विजयः परवीरहा । मेनेऽमरावतीं तान्तु पुरीं क्षितिगतामिव" । "तं वीक्ष्य नरपतिं नगरीं तां सुरेश्वरः । समेत्य विजयं प्राह सान्त्वयन् श्लक्ष्णया गिरा । इन्द्र उवाच । राजन्! महद्वनमिदमासीद्देवगणावृतम् । नरगन्धर्वयक्षाणां मुनीनाञ्च मनोहरम् । सर्व्वानुत्साय्य देवादीन्मम चायमिये रतः । भङ्क्त्वा वनमिदं शुद्धं समुत्साद्य तपोधनम् । खाण्डवीं नगरीं चक्रे हठाद्राजा सुदर्शनः । तदिदं पुनरेव त्वं वनं कुरु नृपोत्तम! । तत्राहं विहरिष्यामि तच्चैव समं रहः । मुनीनाञ्च तपःस्थानं भवत्वं ते प्रसादतः । भविष्यति च यक्षाणां किन्नराणाञ्च पार्थिव! । मार्कण्डेय उवाच । एतत् श्रुत्वा वचस्तस्य शक्रस्य विजयस्तदा । वनमेवाकरोत्तान्तु खाण्डवीं शक्रगौरवात् । गच्छन्तु भो यथास्थानं प्रजाः सर्व्वा यथेच्छया । येषां वाञ्छास्ति लोकानां मद्राज्यगमने पुनः । वाराणसीं ते गच्छन्तु मयैव प्रतिपालिताम् ॥ ततस्तस्य वचः श्रुत्वा जनाः केचिन्निजं पदम् । जग्मुर्वाराणसीं केचिद्विजयेनाभिपालिताम्" ॥ "अष्टाविंशतिमे प्राप्ते युगे द्वापरशेषतः । वह्निर्ब्राह्मणरूपेण भिक्षां जिष्णुमयाचत । दातुमङ्गीकृते भिक्षां तदा पाण्डुसुतेन वै । वह्निस्वरूपमास्थाय जिष्णुं वचनमब्रवीत् । अहमग्निः पाण्डुपुत्र! यज्ञभागातिभोजनात् । व्याधितोऽहं ततो व्याधिं मम त्वं नाशयाधुना । खाण्डवं नाम विपिनं सर्व्वसत्त्वमृगराक्षसम् । यदि त्वं मां भोजयितुं शक्तोऽसि श्वेतवाहन! तदा ममायसौ व्याधिरपयास्यति नोचिरात् । पुरा तु विजयो राजा खाण्डवीं नाम तां पुरीम् । भङ्क्त्वा वनं ततश्चक्रे तेन तत् खाण्डवं वनम् । यदर्थं देवविहितं वनं तच्छृणु वाहन! । विरोधात्तत्तु शक्रस्य न स्वयं भोक्तुमुत्सहे । तन्मां वाहि महाभाग! वने तस्मिन्नियोजय । यथाहं सकलं भोक्तुं प्राप्नोमि त्वत्प्रसादतः । तस्य तद्वचनं श्रुत्वा सव्यसाचो महाबलः । दाहयामास विपिनं तत् सर्वं प्राणिसंयुतम् । देवकीतनयोपेतो वासुदेवेन पालितः । खाण्डवं दाहयामास ज्वलनस्य हिते रतः" । २तन्नामपुर्य्यां स्त्री ।

**खाण्डवप्रस्थ** पु० इन्द्रप्रस्थे युधिष्ठिरवासस्थानभेदे "अस्माभिः खाण्डवप्रस्थे युष्मद्वासोऽभिचिन्तितः" भा० आ० ६१ अ० । इन्द्रप्रस्थशब्दे तत्कथा दृश्या ।

**खाण्डवायन** पु० ऋषिभेदे "व्याजत तदा राजन्! प्रख्याताः खाण्डवायनाः" भा० व० ११७ अ० ।

**खाण्डविक** पु० खाण्डवं मोदकादि शिल्पमस्य ठञ् । मोदककारके (मयरा) "आरालिकाः सूपकाराः ये च खाण्डविकास्तथा" भा० आश्र० १ अ० ।

**खाण्डवीरणक** त्रि० खण्ड इव वीरणः खण्डवीरणः ततः अरोहणा० चतुरर्थ्यां वुञ् । खाण्डवीरणसन्निकृष्टदेशादौ । [मोदककारके हारा० ।

**खाण्डिक** स्त्री खण्डं मोदकादि शिल्पमस्य उञ् ।(मयरा)

**खात** न० खन–भावे क्त । १खनने कर्म्मणि क्त । २पुष्करिण्यादौ त्रि० "पूर्त्तं खातादिकर्म्म च" अमरः । तडागशब्दे विवृतिः । खातवेतनादिदानार्थं क्षेत्रफलज्ञानोपयोगी खातव्यवहारो लीला० उक्तो यथा ।

"अथ खातव्यवहारे करणसूत्रं सार्द्धार्य्या । गणयित्वा

विस्तारं बहुषु स्थानेषु तद्युतिर्भाज्या । स्यात्तकमित्या सममितिरेवं दैर्घ्ये च वेधे च । क्षेत्रफलं वेधगुणं खाते घनहस्तसङ्ख्या स्यात् ॥ उदाहरणम् । भुजवक्रतया दैर्घ्यं दशेशार्ककरैर्मितम् । त्रिषु स्थानेषु षट्पञ्चसप्तहस्ता च विस्तृतिः ॥ यस्य खातस्य वेधोऽपि द्विचतुस्त्रिकरः सखे ! । तत्र खाते कियन्तः स्युर्घनहस्ताः प्रचक्ष्व मे ॥




अत्र स मि तकरणेन विस्तारे हस्ताः । ६ । दैर्घ्ये ११ वेधे । ३ ।
तत् क्षेत्रदर्शनम् यथा




यथोक्तकरणेन लब्धा घनहस्तसङ्ख्या । १९८ ।
खातान्तरे करणसूत्रं वार्त्तिकम् । मुखजतलजतद्युतिजक्षेत्रफलैक्यं हृतं षड्भिः ॥ क्षेत्रफलं सममेतद्वेधगुणं घनफलं स्पष्टम् । समखातफलत्र्यंशः सूचीखाते फलं भवति ॥
उदाहरणम् । मुखे दशद्वादशहस्ततुल्यं विस्तारदैर्घ्यन्तु तले तदर्द्धम् । यस्याः सखे ! सप्तकरश्च वेधः का खातसङ्ख्या वद तत्र वाप्याम् ॥




मुखजं क्षेत्रफलम् ।१२०। तलजम्।३०। तद्युतिजम्। ३७० । एषामैक्यम् । ४२०।

षड्भिः । ६ । हृतं जातं समफलम् ।७० । वेध । ७। हतं जातं खातफलं घनहस्ताः । ४९० ।

द्वितीयोदाहरणम् । खातेऽथ तिग्मकरतुल्यचतुर्भुजे च किं स्यात् फलं नवमितः किल यत्र वेधः । वृत्ते तथैव दशविस्तृतिपञ्चवेधे सूचीफलं वद तयोश्च पृथक् पृथङ्मे ॥




भुजः । १२।वेधः ।९ जातं यथोक्त करणेन खातफलं घनहस्ताः ।१२९६। सूचीफलम् । ४३२।

वृत्तखातदर्शनाय ।




व्यासः । १० । वेधः । ५ । अत्र सूक्ष्मपरिधिः ३९२७/१२५ सूक्ष्मक्षेत्रफलम् ३९२७/५

वेधगुणं जातं सूक्ष्मखातफलं ३९/१०/२७ सूक्ष्मसूचीफलं १३०९/१० यद्वा स्थूलखातफलं २७५०/७ सूची फलं स्थूलं वा २७५/२१ ।”
कुण्डशब्दे उदा० । ३कूपे त्रिषु० । ४खननकर्म्ममात्रे त्रि० “खातखुरैर्द्रुमभुजां विषाणे” माघः ।

**खातक** न०खात+संज्ञायां कन् । १परिखायाम् (खाइ) हेमच० । "उत्तमर्णोधनस्वामी अधमर्णस्तु खातकः" इत्युक्ते २अधमर्णे ३परसैन्यविदारके च "खातकस्य हतस्त्वत्र बलदर्पणकोविदम्" भा० शा० ११८ अ०। "खातकाः परसैन्यविदारकाः" नीलक० ।

**खातभू** स्त्री खातयुक्ता भूः।१परिखायां २प्रतिकूपे च हारा०

**खाति** स्त्री खन—खै—वा भावे—क्तिन् आत् । खनने ।

**खात्र** न० खन—त्रल् किञ्च आत् । १खनित्रे २जलाधारे च सि०कौ० ३वने ४सूत्रे च संक्षिप्तसारः ।

**खाद** भक्षणे भ्वा० पर० सक० सेट् । खादति अखादीत् चखाद । खाद्यः खादकः खादनम् । णिचि । खादयति अचिखादत् त । "सक्तून् खादति यस्य तस्य रिपवोनाशं प्रयान्ति ध्रुवम्" ति० त० "न खादेः परमस्याणि" इत्योत्सर्गमन्त्रः।"देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्"मनुः। "स हि (उषस्तिः) कुल्माषान् खादन्तं बिभिक्षे"छा०उप०।"मांसानि च न खादेद्यस्तयोः पुण्यं समं स्मृतम्"मनुः।"आशङ्कमानो वैदेहीं खादितां निहतां मृताम्"भट्टिः।"तादृशं भवति प्रेत्य दृथा मांसानि खादकः" मनुः । षष्ट्रभावश्छान्दसः । खादनस्य हिंसाव्यभिचरितत्वात् हिंसार्थत्वात् अकित्त्वेऽपि वा० चुरा० तेन स्वार्थे णिच् खादयति । "दुर्बलं बलवन्तो हि मत्स्यामत्स्यं विशेषतः । खादयन्ति" मत्स्यपु० "मां खादय मृगश्रेष्ठ! दुःखादस्मा द्विमोचय" भा०व० ६१ अ० । "देवराजो मया दृष्टो वारिवारणमस्तके । खादयन्नर्कपत्राणि" विदग्धमु० । अस्य भक्षणार्थत्वेऽपि आदिखाद्योर्न"वार्त्ति० णिचि प्रयोज्यकर्त्तुः न कर्मत्वम् । खादयति अन्नं वटुना" "वयोभिः खादयन्त्यन्ये" "तां श्वभिः खादयेद्राजा" मनुः ।"मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसैः"भट्टिः। खादनञ्च कठिनादि द्रव्यस्य गलाधःसंयोगानुकूलव्यापारविशेषः प्रतिषिद्धभक्षणविषये तु वदनमात्रप्रवेशेऽपि प्रायश्चित्तार्द्धमिति भेदः यथाह प्रा०त० "यद्यपि अन्नादीनां कण्ठादधोनयनमेव भक्षणं न तु निष्ठीवनाय शुण्ठ्यादेः कपोलधारणं, तथाविधे प्रयोगाभावात् । तथापि पापविषये तथाविधानुबन्धेऽपि प्रायश्चित्तं, ब्रह्मवधे तथा दर्शनात् यथा याज्ञवल्क्यः"चरेद्व्रतमहत्वाऽपि घातार्थञ्चेत् समागतः"। अत्र हननप्रतिषेधेन यथा तदङ्गभूताध्यवसायादेरपि प्रतिषिद्धत्वात् प्रायश्चित्तविधानं तथाऽत्रापि भक्षणप्रतिषेधेन तदङ्गभूताव्यभिचारितान्नादिसंयोगस्यापि प्रतिषिद्धत्वेन दोषस्य विद्यमानत्वात् भवत्येव प्रायश्चित्तं, मिताक्षरायामप्येवम् । अतएवोक्तं "जिघ्रन्नपि सुरां कश्चित् पिबतीत्यभिधीयते । यावन्न क्रियते वक्त्रे गण्डूषस्य प्रवेशनम्" इति । अत्र वक्त्रे गण्डूषस्य प्रवेशनेन पानातिदेशवद्भक्षणोद्यमेऽपि भक्षणातिदेशः । ततश्च विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने" इति याज्ञवल्क्योक्तः दण्डोद्यमे दण्डनिपातप्रायश्चित्तार्द्धवत् भक्षणोद्यमे कण्ठादधोनयनसम्भावनारहिते अर्द्धं प्रायश्चित्तं ज्ञेयम्"

**खादक** त्रि०खाद—ण्वुल् ।१भक्षके ।"वृथा मांसानि खादकः" मनुः"यदि चेत् खादको न स्यात् न तदा घातको भवेत्" भा० आनु० ५६२४ श्लो० । २अधमर्णे च "खादको वित्तहीनः स्यात् लग्नको वित्तवान् यदि । मूलं तस्य भवेद्देयम्" नारदः "खादकोऽधमर्णः" मिता० ।

**खादतमोदता** खादत मोदत इत्युच्यते यस्यां क्रियायाम्, मयू०स० । खादनमोदनाय निर्देशक्रियायाम् ।

**खादन** पु० खादत्यनेन खाद—करणे ल्युट् । १दन्ते हेम० । भावे ल्युट् । २भक्षणे न० । "अश्वानां खादनेनाहमर्थी नान्येन केनचित्" रामा०२,५०स०४५श्लोकः ।

**खादि** त्रि० खाद—कर्मणि इन् । भक्ष्ये "अंसेष्वा वः प्रपथेषु खादयः" ऋ०१,१६६,९,। "खादयः भक्ष्याः" भा० खाद—धातूनामनेकार्थत्वात् त्राणे कर्त्तरि इन् । २त्रायके । "हस्तेषु खादिश्च कृतिश्च संदधे" ऋ०१, १६८,२ । "हस्तेषु खादिः हस्तत्रायकः"भा० ।

**खादित** त्रि० खाद—क्त । भक्षिते अमरः । "आशङ्कमानो वैदेहीं खादितां निहतां मृताम्" भट्टिः ।

**खादिन्** त्रि० खाद—णिनि । भक्षके स्त्रियां ङीप् । "लोष्टमर्द्दी तृणच्छेदी नखखादी च यो नरः" मनुः ।

**खादुक** त्रि० खाद—उन् संज्ञायां कन् । हिंसाशीले हेम० ।

**खादोअर्णस्** स्त्री खाद—कर्मणि असुन् खादः खाद्यमर्णो जलं यस्याः पृषो० पूर्वरूपैकादेशाभावः नद्यां । निघ० ।

**खाद्य** त्रि० खाद—कर्मणि ण्यत् । भक्ष्ये । "मांसप्रकारैर्विविधैः खाद्यैश्चापि तथा नृप !" भा०स० ४अ० ।

**खान** न० खै—धातूनामनेकार्थत्वात् भक्षणे भावे ल्युट् । भक्षणे ।"सद्भावेन हि तुष्यन्ति देवाः सत्पुरुषा द्विजाः । इतरे खानपानेन वाक्प्रदानेन पण्डिताः" गरु० पु० १०९ अ० ।"खाने पाने च दातव्यम्"दत्ता० तन्त्रम् खै—खनने हिंसने च भावे ल्युट् ।१खनने २हिंसने च ।

**खानक** त्रि० खन–ण्वुल् । खनके "व्याधान् शाकुनिकान् गोपान् कैवर्त्तान् मूलखानकान्" मनुः ।

**खानि** स्त्री खनिरेव पृषो० वृद्धिः । स्वर्णाद्युत्पत्तिस्थाने आकरे हेमच० । वा ङीप् तत्रार्थे शब्दच० । [त्रिका० ।

**खानिक** न० खानेन खननेन निर्वृत्तं ठञ् । कुड्यच्छेदे गर्त्ते

**खानिल** पु० खानं खननं शिल्पत्वेनास्त्यस्य बा० इलच् । सन्धिचौरे भित्तिभेदनेन चोरयितरि त्रिका० ।

**खानिष्क** पु०"द्रोणाग्नीनां सदा पथ्यः खानिष्कः कफहा गुरुः" सुश्रुतोक्ते मांसभेदे । [त्रिका० ।

**खानोदक** पु० खानाय भोजनाय उदकमस्य । नारिकेले

**खापगा** स्त्री खस्याकाशस्यापगा । गङ्गायाम् हेम० खधुनी खनद्योऽप्यत्रयोऽप्यत्र ।

**खार** पु० खमवकाशमाधिक्येन ऋच्छति ऋ–अण् उप० स० । खारीपरिमाणे उज्ज्वल० ।

**खारि(री)** स्त्री खं मध्यावकाशमाराति आ+रा–क गौरा०ङीष् वा सुख०। द्रोणषोडशात्मके धान्यादिमानभेदे । "पलञ्च कुडवः प्रस्थः आढको द्रोण एव च । धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः। द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते" हेमा० दा०विष्णुध० । अर्द्धशब्दात् संख्यायाश्च परतोऽस्य समासे वा टच् । अर्द्धखारम् अर्द्धखारि। द्विखारं द्विखारि । अर्द्धखार्या क्रीतम् ठक् पूर्वपदस्य वा वृद्धिः । अ(आ)र्द्धखारिकम्। अध्यर्द्धशब्दात् संख्यायाश्च परतःखार्याः क्रीताद्यर्थे ईकन् । अध्यर्द्धखारीकं द्विखारीकम् । केवलाया अपि ईकन् तत्रार्थे खार्या क्रीतम् खारीकम् । [सुखश्च । खारीध्मायके ।

**खारिन्धम** त्रि० खारीं धमति ध्मा–खश् धमादेशः मुम्

**खारिम्पच** त्रि० खारीं तन्मितधान्यं पचति पच–खश् मुम् ह्रस्वश्च । खारीमितान्नपाचके ।

**खारीक** त्रि० खारीं खारीवापमर्हति ईकन् । खारीवाप योग्ये क्षेत्रे अमरः २खारीमितधान्यादिक्रीते च ।

**खारीवाप** त्रि०खारी तन्मितधान्यम् उप्यतेऽत्र वप–आधारे घञ् । खारीमितधान्यवपनयोग्ये क्षेत्रादौ अमरः। खारीं वपति वप–कर्त्तरि अण् उप०स० । खारीमितधान्यादिवापके त्रि० स्त्रियां टाप् सि०कौ० । मुग्ध० मते घञ् अतः स्त्रियाम् ईप् इति भेदः ।

**खार्कार** पु० गर्द्दभजातिशब्दे "खार्काररभसा मत्ताः पर्य्यधावन् वरूथशः" भाग० ३,१७,१२ तत्र तत्रार्थतामाह श्रीधरः ।

**खार्जुरेय** त्रि० खर्जुरस्येदम् वा० ढक् ।१खर्जुरसम्बन्धिनि । २रसालभेदे न० । "मधुरदधनि मध्ये शर्करां सन्नियोज्य शुचि विदलितखण्डं प्रक्षिपेत् खार्जुरेयम् । करविलुलितमेवैर्वासितं नाभिगन्धैर्जगमिषुजठराग्निं स्वादयत्येव नूनम् । रसालं खर्जु(र्जू)रस्येदं विष्टम्भितविकारकम् । हृद्यञ्च कफदं बल्यं पित्तघ्नं मलकृत् सरम्" भावप्र० ।

**खालत्य** न०खलतेर्भावः ष्यञ् । इन्द्रलुप्तरोगे"जरा खालत्यं पालित्यं शरीरमनुप्राविशन्" अथ० ११।८।१९ । पृषो० इसमध्यतायां केत यथाह सुश्रुतः "रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् । प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः । रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः ।तदिन्द्रलुप्तं खालित्यं रुज्येति च विभाव्यते" ।

**खिखिर** पुंस्त्री खिङ्किर–पृषो० । (स्थाकशेयाली) शिवाभेदे त्रिका० । [शेयाली ) शिवाभेदे त्रिका० ।

**खिङ्किर** पु० खिमित्यव्यक्तं शब्दं किरति कॄ–क । (स्थाक-

**खिट** भये भ्वा० पर० अक० सेट् । खेटति अखेटीत् । चिखेट । खेटकम् ।

**खिद्** परितापे तुदा० पर०अक०अनिट् मुचादि । खिन्दति खिन्दतः । अखैत्सीत् चिखेद । खिन्नः ।

**खिद्** दैन्ये दिवा० रुधा० च आत्म० अक० भोगायां सक० अनिट् । खिद्यते खिन्ते अखित्त चिखेद । खिन्नः । "सुखनिरभिलाषः खिद्यते लोकहेतोः" शकु० । "हरिरित्यखिद्यत नितम्बिनीजनः" माघः । "खिन्ने तेभ्येव ये द्रव्यं दीयमानं न स्फूर्जति" कविरहस्यम् । "अखिन्दानस्य तेजसा" भट्टिः । "प्रहर्त्तास्विखिदे न च" भट्टिः "खिदञ् धौ दैन्यके"इत्येव वोपदेवे पाठः अतएव "रक्तं न्यष्ठीवदङ्गाभ्यदखिदद्युवाजिकुञ्जरम्" भट्टिः

आ+प्रकर्षेण खेदने । "आखेदते प्रखिदते च नमः" यजु० १६।४६।"आखेदते प्रकर्षेण खेदयति पापिनः"वेददी०। वेदे गणव्यत्यासः अन्तर्भूतण्यर्थता च ।

उद्+उत्पाटने । "प्रजापतिरात्मनोवपामुदखिदत्" श्रुतिः । "अथ वपामुत्खिदन्ति" शतब्रा० ३।८।२।५। "इमां वपामुत्खिदन्ति मध्यतः" ३।८।३।२। "वपामुत्खिदतोत्युत्खिद्य" ४।५।११।२। सर्व्वत्र गणव्यत्ययः ।

परि+समन्तात् खेदे । "कान्तावियोगपरिखेदितचित्तवृत्तिः । "परिखेदितविन्ध्यवीरुधः" भट्टिः। "लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः" भाग० ३।६।२८।

सम्+सम्यक्तापे अक०उत्पाटने सक०। "यथा सुरयः पशूरी

शङ्कून् संखिदेत् एवमितरान् समखिदत्” का०उ० ।
**खिदिर** पु० खिद्यते क्षयपक्षे खिद–किरन् । चन्द्रे उज्ज्व० ।
**खिद्यमान** त्रि० खिद–ताच्छील्ये चानश् ।१दैन्ययोगे२खेद-युक्ते च ।
**खिद्र** त्रि० खिद–दैन्ये रक् । १रोगे १दरिद्रे च उज्ज्वल० ।
“वज्रिस्था पर्वतानां खिद्रं बिभर्षि पृथिवि !”अथ०५।८४।१।
**खिद्वन्** त्रि० खिद–अन्तर्भूतण्यर्थे क्वनिप् । खेदकारके ।
“कस्ते किरयो दम्र खिद्वः” ऋ० ६।२२।४। “खिद्वः ! शत्रूणां खेदयितः!” भा० ।
**खिन्न** त्रि० खिद–क्त । १दैन्ययुक्ते, २अलसे,३खेदयुक्ते च ।
“खिन्नः कार्य्येऽपक्षे न्नृपः !” मनुः “तयोपचाराञ्जलि-खिन्नहस्तया” रघुः ।
**खिरहिट्टी** स्त्री महासमङ्गायाम् राजनि० ।
**खिल** कणश आदाने तुदा० पर० सक० सेट् । खिलति अखेलीत् । चिखेल ।
**खिल** त्रि०खिल–क । इगुपधलक्षणे कादिना १अकृष्टे क्षेत्रादौ२सारतः संक्षिप्ते पूर्वतानुक्तपरिशिष्टे, यथा ऋग्वेदे श्रीसूक्तादि, यजुर्वेदे शिवसंकल्पादि, महाभारते हरिवंशः । खिलेषु हरिवंश इति पुष्पिकाव्याख्याने “खिलो नारायणः प्रोक्तस्तद्गुणा इमवः स्मृताः” इति नीलकण्ठेनोक्तेः ४नारायणे पु०। ततः अभूततद्भावे भूधातुना कृधातुना च समासः । खिलीभवति खिलीकरोति त्रि० । “खिलीभूते विमानानां तदापातभयात् पथि” कुमा० । “तौ सुकेलसुतया खिलीकृते” रघुः । “पीडयिष्यति न मां खिली कृता स्वर्गपद्धतिरभोगलोलुपम्”रघुः ।
“विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा” माघः ।
“धर्मशास्त्राणि चैव हि । आख्यानानीतिहासाश्च पुराणानि खिलानि च” मनुः । “अलं दृग्यैर्मृद्दौनैः खिलानां शिवमस्तु वः” भाग० ६।४।१५ ।
**खिल्य** त्रि० खिले भवः यत् । खिलभवे लवणादौ । “यथा सैन्धवखिल्यः उदके प्रास्त उदकमेवानुविलीयेत” शतब्रा०१४,५,४।१२।“स्यन्दनात् सिन्धुरुदकं तस्य विकार-स्तत्प्रभवो वा सैन्धवः सचासौ खिल्योलवणशकलश्चेति सैन्धवखिल्यः”भा०। २खिले परिशिष्टे पठिते च ।“इदानीं खिल्यान्युच्यन्ते, वेददी० । तानि च “अग्निश्च पृथिवी च सन्नते” इत्यादीनि यजु० २६अ० गतानि । एवमृग्वेदे खिल्यानि दशमण्डले द्रष्टव्यानि ।
**खिलेषु** पु० खिलस्य हरेरिषुर्गुणो यत्र । हरिवंशे । तत्र हरिगुणाधिक्यवर्णनात्तथात्वम् । “खिलेषुहरि-वंशे” हरिवंशस्याध्यायसमाप्तिषु पुष्पिका ।
**खील** पु० कील+पृषो० । कीलके । “त्रीणि शतानि शङ्कवः षष्टिः खीला अविचाचला ये” अथ०१०।८।४ । [चुखुवे ।
**खु** ध्वनौ भ्वा० आत्म० अक० अनिट् । खवते अखोष्ट ।
**खुङ्गाह** पु० खुमित्यव्यक्तं शब्दं कृत्वा गाहते गाह–अच् । कृष्णपिङ्गलश्वेतवर्णेऽश्वे हेमच० ।
**खुज** स्तेये भ्वा० पर० सक० सेट् । खोजति अखोजीत् । चुखोज उदित् खोजित्वा खूक्त्वा खुग्नः ।
**खुज्जा(ज्ञा)क** पु० खुज–बा० आक बा० जुगागमो सुमा-गमो वा । देवतालवृक्षे रत्नमा० ।
**खुड** खञ्जे इदित् भ्वादि० आत्म०अक० सेट् । खुण्डते अखु-ण्डिष्ट । चुखुण्डे । खुण्ड्यते।
**खुड** भेदने चुरा० उभ० सक० सेट् । खोडयति–ते अचूखु-डत्–त । खोडयाम् बभूव मास चकार चक्रे ।
**खुड** भेदे चुरा० इदित् उभ० सक० सेट् । खुण्डयति ते अचुखुण्डत् त ।
**खुडक** पु० खुलकः लस्य डः । गुल्फभागभेदे खुलकशब्दे दृश्यः “न्यस्ते तु विषमे पादे रुजः कुर्य्यात् समीरणः । वातकण्टक इत्येष विज्ञेयः खुडकाश्रितः” सुश्रु०” भावप्र० तु “रुक् पादे विषमे न्यस्ते श्रमाद्वा जायते यदा । वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम्” स-मानप्रकरणे खुडकाश्रित इत्यस्य स्थाने गुल्फाश्रयतोक्ते-स्तस्य गुल्फांशार्थता ।
**खुद** भेदने सक० पर० अनिट् । खोदति अखोदीत् चुखोद ।
“चोदयत खुदत वाजसातये” ऋ० १०।१०१।१२ ।
माधवस्तु खुर्दधातोरेव तद्रूपसङ्गा रलोपश्छान्दस इत्याह वोपदेवधातुपाठे तु अयं धातुर्नास्ति ।“चनीखुदद् यथा सपम्”आश्व०श्रौ० २।१०।१४। [ खुरः ।
**खुर** विलेखने तुदा०पर०सक०सेट् । खुरति अखोरीत् चुखोर
**खुर** पु० खुर–क । १शफे पशूनां पादस्योर्ध्वस्थिते नखाधारे पदार्थे २कोलदले ३नखीनामगन्धद्रव्ये मेदि० । करणे घञर्थे क । ४नापितास्त्रभेदे शब्दर० । ५खट्वापादे(खाटेर खुरा ) धरणी । “उदातृक्षणानुशकलेषु खुराभिघातात्” माघः । “रजःकणैः खुरोद्धूतैः” रघुः । खुरशब्दस्य बह्वा०ङीप् वा खुरी । तेन स्त्रीत्वमप्यस्य ।
**खुरक** पु० खुर इव कायति कै–क । तिलवृक्षे शब्दच० ।
**खुरणस(स)** त्रि० खुर इव नासिकाऽस्य नसादेशः टच्

समा० चलञ्च । चिपिटनासिके । अमरः । [स्वामी ।

**खुरप्र** पु० खुर इव प्राति—पूरयति प्रा—क । क्षुरप्रशब्दार्थे

**खुरली** स्त्री खुर इव लाति—ला—क गौरा० ङीष् । १शरा-भ्यासे त्रिका०। शस्त्रप्रयोगे २अभ्यासकाले च । "खुरली कलहे गणानाम्" महावीरच० ।

**खुराक** पु०स्त्री खुर—आकन् । पशौ उणा० ।

**खुरालक** पु० खुर इवालति पर्य्याप्नोति अल—ण्वुल् । लौह-मयवाणे शब्दमा० ।

**खुरालिक** पु० खुराणामालिभिः कायति प्रकाशते कै—क । (भाँड)१नापिताखभाण्डे,२नाराचास्त्रे ,३उपधाने च मे०

**खुरासान** पु०"हिङ्गुपीठं समारभ्य मक्केशान्तं महेश्वरि !। खुरासानाभिधो देशो म्लेच्छमार्गपरायणः" इत्युक्ते देशभेदे

**खु(खू)र्द** क्रीडायां भ्वा०आ० अक० सेट् । खु(खू)र्द्दते अखु-(खू)र्द्दिष्ट चुखु(खू)र्द्दे ।

**खुलक** पु०खुर—कुन् स्वार्थे क । गुल्फाद्यस्थभागे "आ गुल्फ-कण्ठात् सुमितस्य जन्तोस्तस्याष्टभागं खुलकादिभक्तं" सुश्रु०।

**खुल्ल** न० क्षुद्-संप०क्विप् तां लाति ला—क पृषो० । १नखी-नामगन्धद्रव्ये शब्दच०। २क्षुद्रे ३अल्पे ४कनिष्ठे च त्रि० स्वार्थे क । तदर्थे निष्ठुरे दरिद्रे खले च अमरः।

**खुल्लतात** पु०खुल्लः कनिष्ठस्तातस्य नि०पूर्वनि०। पितुः कनिष्ठ-भ्रातरि शब्दच०एवं खुल्लपितामहादयोऽपि पितामहादेः कनिष्ठभ्रातरि ।

**खुल्लम** पु०खुल्लेन मीयते मा वा० बन्नर्थे क । पथि त्रिका० ।

**खृगल** न० तनुत्राणे "खृगलेव विस्रसः पातमस्मान्" ऋ० २।३९।४ । खृगला "तनुहिंसाया रक्षतः"भा० "पिशङ्गे स्तवे खृगलं तदा बध्नन्ति वेधसः" अथ० ३।९।३ ।

**खेखीलक** पु० खे आकाशे खीलक इव लस्य रः । शब्दवत्यां यष्ट्राम् हारा० । [ कलहविहगे शब्दमा०।

**खेगमन** पुंस्त्री खे आकाशे गमनमस्य अलुक् स० । काल-

**खेचर** पु० खे चरति चर—ट अलुक्स०। १शिवे, शब्दर० २विद्याधरे जटा० ३पारदे राजनि० ४सूर्य्यादिग्रहे, ५आकाशगामिमात्रे त्रि० । स्त्रियां ङीप् । ६तत्त्वे न० रत्ना० तत्त्वस्य वात्यया खे गतिमत्त्वात्तथात्वम् । ७घोटके पुंस्त्री शब्दरत्ना० द्योगाङ्के मुद्राभेदे स्त्री यथाह काशीख० ४०अ० । "कपालकुहरे जिह्वा प्रविष्टा विपरीतगा । भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी । न पीड्यते स रोगेण न च लिप्यते कर्म्मणा । बाध्यते न च कालेन यो मुद्रां वेत्ति खेचरीम् । चित्तं चरति खे यस्मात् जिह्वा चरति खे गता । तेनैषा खेचरी नाम मुद्रा सिद्धैर्निषेविता । याव-द्विन्दुः स्थिरो देहे तावत् कालभयं कुतः । यावद्बद्धा च सा मुद्रा तावद्विन्दुर्न गच्छति" तन्त्रोक्ते पूजाङ्गे मुद्राभेदे यथा "सव्यन्दक्षिणदेशेषु सव्यदेशे तु दक्षि-णम् । बाहुं कृत्वा महादेवि ! हस्तौ द्वौ परिवर्त्य च । कनिष्ठानामिके देवि ! युक्ते तेन क्रमेण च । तर्ज्ज-नीभ्यां समाक्रान्ते सर्वोर्द्ध्वमपि मध्यमे । अङ्गुष्ठौ महेशानि ! सरलां वापि कारयेत् । इयं सा खेचरी नाम्ना पार्थिवस्थानयोजिता" तन्त्रसा० । १०मेषादिराशौ पु० । "खेचराश्च सर्वे" ज्यो० त० । सर्वे राशयः ।

**खेट** भोजने अद० चु० उभ० सक० सेट् । खेटयति ते अ-चिखेटत् त ।

**खेऽट** पु० खेऽटति अट—अच् खिट—अच् वा । १सूर्य्या-दिग्रहे, "यस्मिन्नृक्षे स्थिताः खेऽटाः" इति ज्यो०त० । २हुनिन्दके त्रि० विश्वः । ३अधमे त्रि० अमरः ४कर्षकग्रामे पु० मेदि०"खेटखर्वटवाटीश्च वनान्युपवनानि भाग० १,७,११ । "खेटाः कर्षकग्रामाः" श्रीधरः । ५अस्त्रभेदे पु०। "यष्टिरूपेण खेट ! त्वमरिसंहारकारकः । देवीहस्तस्थितोनित्यम्" तत्पूजा मन्त्रः । स्वार्थे क । तदर्थे पु०न०"दिव्याम्बरधरां देवीं खड्ग खेटकधारिणीम्" भा० वि० इत्य० । "अनयोः स्त्रियौ च कार्य्ये खेटक-निस्त्रिंशधारिण्यौ" इह०सं० । अनयोःशाम्बप्रद्युम्नयोः, "खेटकं पूर्ण्ण चापञ्च" दुर्गाध्यानम् ।"खेटकास्त्रन्तु हस्त-स्थितमेवारीन् हन्ति यथाह "हस्तघ्नोविश्वायुनानि" यजु० १९,५१ । "हस्ते स्थितोहन्ति हस्तघ्नः खेटकः" वेददी० स च यष्टिरूपः । ६चर्मणि मेदि०। खिट भये करणे घञ् । ७मृगयायाम् पु०न० आखेटकम् । कर्त्तरि अच् । टरणे न० हेमच०। कु(क)वचास्त्रबाधःस्थिते टफलकाकारे काष्ठभेदे न० तन्मानमुक्तं हेमा०परि०ख० लक्षणसमुच्चये "तत्र खेटकस्यापि कु(क)वचस्य त्रिविधमुत्तमं द्वादशाङ्गुलं दशाङ्गुलं मध्यममष्टाङ्गुलं निकृष्टम् वाला-नामेतत् खेटकमबालानान्तु विंशत्यङ्गुलमुत्तममष्टादशाङ्गुलं मध्यमं षोडशाङ्गुलं निकृष्टमिति" औशनसनीतिः । १०धनहृद्धिजीविनि त्रि० हारा० ११बलदेवगदायामि-त्यन्ये, १२कफे मेदिनिः ।

**खेटाङ्ग** खेऽटमङ्गं यस्य । उपद्रावकजन्तुभेदे, "डाकिनी शाकिनीभूतप्रेतवेतालराक्षसाः । ग्रहकूष्माण्डखेटाङ्गाः

कालकर्षौ शिशुपद्मा:। ज्वरापस्मारविस्फोटशीतीयक चतुर्थका:। सर्वे प्रशममायान्ति शिवतीर्थजलोक्षणात्" काशीख० ३३ अध्या०।

**खेटितान** पु० खे ऽटति खिट-इन् खेऽटति अट-इन् वा खेटि: तानोऽस्य। वैतालिके बोधकरे शब्दमा०।

**खेटिन्** पु० खिट-णिनि। १नागरे २कामिनि शब्दमा०।

**खेड** भक्षणे अद० चु०उभ०सक०सेट्। खेडयति ते अचखेडत्

**खेद** पु० खिद-भावे घञ्। १शोके हेम० २अवसादे जटा०। खिद-णिच् कर्त्तरि अच्। ३रोगे कैयट:। "खेदो-रत्यध्वगत्यादे: श्वासनिद्रादिकृच्छ्रमम्"सा०द० तस्य रति-मार्गगत्यादिकार्य्यता श्वासनिद्रादिकारणता चोक्ता "रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्य्यय:"सा०द०। "नि-यमितपरिखेदा तच्छिरश्चन्द्रपादै:" कुमा०।

**खेदि** पु० खिद-अपादाने इन्। १किरणे निघण्टु:।

**खेदिन्** त्रि०खिद-णिच्-णिनि। १दैन्यकारके स्त्रियां ङीप् सा च २अश्वगन्धौषधितायाम् शब्दच०।

**खेय** त्रि०खन-कर्मणि यत् टेरेत्। १खननीये २परिखायां न० अमर:। ३सेतुभेदे "सेतुश्च द्विविधो ज्ञेय: खेयो बन्ध्यस्तथैव च। तोयप्रवर्त्तनात् खेय:"मिता०नारद:। सेतुशब्दे विवृति:। "नाऽखेय: सागरोऽप्यन्यस्तस्य सद्भुजशालिन:" भट्टि:।

**खेल** चलने अक०गत्यां सक० भ्वा०पर० सेट्। खेलति अखे-लीत्। ऋदित् अचिखेलत् त। "माऽस्मिन् खल: खेलतु" नैष०। खेला खेलनम् खेल:। "लीला-खेलमनुप्रापुर्महोक्षास्तस्य विक्रमम्" रघु: "खे खेल-गामी तमुवाह वाह:" कुमा०। खेलितम् "स्फुट-कमलोदरखेलितखञ्जनयुग्मम्" गीतगो०।

**खेलन** न०खेल-ल्युट्। १क्रीडायाम् हलायु०। आधारे ल्युट् ङीप्। २शारिफलके (छक) स्त्री हेम०। करणे ल्युट्। ३क्रीडासाधने।

**खेला** विलासे कण्ड्वा०प०अक०सेट्। खेलायति अखेलायीत् खेलायां बभूव आस चकार। "खेलायन्निश नापि सङ्कुलत्व रतिं वसेत्" भट्टि:।

**खेला** स्त्री खेल-भावे अ। क्रीडायाम् अमर:।

**खेऽलि** स्त्री खे आकाशे अलति अल-इन्। १गाने २वाणे ३सूर्य्ये ४विहगे च पु० ५आकाशगामिमात्रे त्रि०।

**खेव** सेवने भ्वा०आ०सक०सेट्। खेवते अखेविष्ट ऋदित् अचि-खेवत् त।

**खेसर** पु०स्त्री खे आकाश इव शीघ्रगामित्वात् सरति सृ-ट अलुक् स०। गर्द्दभात्स्त्रीजाते अश्वाद्गर्द्दभीजाते वा अश्वतरे पशुभेदे राजनि०। [खायति अखासीत् चखौ।

**खै** स्थैर्य्ये अक० खनने हिंसायाञ्च सक० भ्वा०पर० अनिट्।

**खैमख** पु०खे आकाशे कर्त्तव्य: मख: स्वार्थे अण्। आकाश-कर्त्तव्ये यज्ञभेदे"खखखाइ खैमखाइ मध्ये तदुरि:" अथ० ४।१५।१५। खैमखे इत्यत्र स्तोभयोगात् कम्ने इत्यत्र अम्नाइ इति तद्रूपम्। [कादौ।

**खैलायन** त्रि० खिल+चतुरर्थ्यां पक्षा० फक्। खिलनिर्वृ-

**खोङ्गाह** पुंस्त्री। श्वेतपिङ्गलवर्णे अश्वे हेमच०।

**खोट** गतिप्रतिघाते भ्वा०पर०अक०सेट्। खोटति अखोटीत्। चखोट खोट: खोटनम् खोटितम्। ऋदित् चङि न ह्रस्व:। अचुखोटत् त। [खोटत् त।

**खोट** क्षेपे अद०चुरा० उभ०सक० सेट्। खोटयति ते अचु-

**खोटि(टी)** स्त्री खोट-इन् वा ङीप्। १चतुरनार्य्यां १पालङ्कीषधौ च शब्दच०।

**खोड** गतिप्रतिघाते भ्वा०पर०अक०सेट्। खोडति अखोडीत् चुखोड। ऋदित् णिचि चङ्यह्रस्व: अचुखोडत् त।

**खोड** क्षेपे अद०चु०उभ०सक०सेट्। खोडयति ते अचुखोडत् त

**खोड** त्रि० खोड-गतिप्रतिघाते अच्। खञ्जे। (खोंड़ा)। कडारा० कर्म्म०वा पूर्व्वनिपात:। बालखोड: खोडबाल:।

**खोडकशीर्षक** न०खोड क्षेपे ल्युल् तथाभूतं शीर्षमस्य कप्। कपिशीर्षके त्रिका०।

**खोर** गतिवैकल्ये भ्वा० पर० अक० सेट्। खोरति अखो-रीत्। चुखोर। ऋदित् चङि नह्रस्व: अचुखोरत् त।

**खोर** त्रि० खोर-अच्। खञ्जे हेमच० संज्ञायां कन्। खोरक हयानां ज्वरे ज्वरशब्दे विवृति:।

**खोल** गतिवैकल्ये भ्वा० पर० अक० सेट्। खोलति अखो-लीत् चुखोल ऋदित् च नह्रस्व: अचुखोलत् त।

**खोल** त्रि० खोल-अच्। खञ्जे शब्दसा०।

**खोलक** पु० खोल-अच् संज्ञायां कन्। पाकपात्रभेदे (खोला) २शिरसो भागभेदे (खोपडा)३वल्मीके ४गुवा-कवल्कले मेदि०।

**खोलि** स्त्री खोल-इन्। तूणे शब्दमा०।[मिङ्गलयष्टे त्रिका०।

**खोलमुक** पु० खे आकाशे उल्मुक इव रक्तवर्णत्वात्।

**ख्या** प्रसिद्धौ दीप्तौ अक०कथने प्रकाशने ज्ञाने च सक० अद० पर०अनिट्। ख्याति अख्यत्। आर्द्धधातुके चक्षिङआदेश: ख्याधातुस्तु उभ०। अख्यत् अख्यात-अख्यास्त। चख्यौ चख्ये। ख्यात: ख्याति: ख्यानम्। ख्येयम्। ख्याता

तत्र कथने "अख्यन्मुनिस्तस्य शिवं समाधेः" भट्टिः। कर्म्मणि ख्यायते अख्यायि। "हिरण्यपुरमित्येव ख्यायते नगरं परम्" भा०। खपुरशब्दे दृश्यम्। "विभीषणेन सोऽख्यायि" भट्टिः। "शुभयोगसमायुक्ता शनौ शतभिषा यदि। महामहेति सा ख्याता कुलकोटीः समुद्धरेत्" ति० त०। [२२।१४।

अति+अतिक्रम्य कथने। "परोहृद्रावतिख्यतम्" ऋ० ८।

अनु+अनुकर्षणे। "अनु पूर्वाणि चख्यथुर्युगानि" ऋ० ७।७०।४। "अनुचख्यथुः अनुक्रमेणवन्तावनुग्रहार्थम्" भा०। अनुवादे च। [२१६ पृ० दृश्यम्।

अनु+आ+तात्पर्य्यविधारणार्थं व्याख्याने अन्वाख्यानशब्दे

अभि+आभिमुख्येन दर्शने "स्वलीकं सुमना अभिख्यम्" ऋ०७।८६।२। "अभिख्यमभिपश्येयम्" भा०। "अभिख्याय तं तिगितेन विध्य" ऋ०२।३०।६। "अभिख्याय संवीक्ष्य" भा०। अभितः ख्यातौ च "पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत!" भा०आनु०६६अ०। दीप्तौ अक०। अभिख्या। "काप्यभिख्या तयोरासीत्" रघुः।

अव+अवाक्प्रेक्षणे।"अव हि ख्यताधिकूलादिवस्पशः" ऋ०-८।४७।२। न्यक्कारेण दर्शने च "यदा वाख्यत्स मर णम्" ऋ० १०।२७।३।"अवाख्यत् अवाकृतं न्यक्कृत-महं पश्यामि" भा०।

आ+कथने। "आख्याहि मेको भवानुग्ररूपः" गीता। आख्यातमाख्यातेन क्रियासातत्ये" पा०।"स पृष्टः सर्वतो वार्त्तमाख्यद्राज्ञे न सन्ततिम्" रघुः। "अनाख्याय ददत् दोषं दण्ड्य उत्तमसाहसम्" याज्ञ०। "सैवा स्वद्दत्तिराख्याता" मनुः। [३।३।३।४

उद्+आ+उदाहरणे। "दश वीर्याण्युदाख्याय" शत०ब्रा०

उप+आ+पुरावृत्तकथने। उपाख्यानम्। उत्तरदानेन व्याख्याने च। "यदुताहं त्वया पृष्टो वैरजात् पुरुषादिदम्। यदासीत् तद्—उदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः" भाग० २।६।४५।

प्रति+आ+निवारणे"यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद!" भा०व० ५६अ०। "अभिप्रेतमनापन्नः प्रत्याख्यातुमनीश्वरः" भाग० ३।३१। २५।

वि+आ+विवरणे शब्दान्तरेण तदर्थकथने। "अथातः पुत्रपरिग्रहविधिं व्याख्यास्यामः" शौनकः।"व्याख्यातुं कुशलाः केचित् ग्रन्थान् धारयितुं परे" भा० आ० १अ०। विशेषेण कथने च "व्याचख्युश्चैव शुभं प्रशस्तम्"।

अनु+वि+आ+। उक्तस्य पुनः व्याख्याने"एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" छा०उप०।

उप+वि+आ+उपासनादिविभूतिफलकथने "ओमित्युद्गायति तस्योपव्याख्यानं भवति" छा० उ०। "तस्याक्षरस्योपव्याख्यानमेवमुपासनम् एवंविभूति एवं फलमित्यादि कथनमुपव्याख्यानम्" भा०। "खल्वेतस्यैवाक्षरस्योपव्याख्यानम्" छा०उ०।

सम्+आ+ सम्यक्कथने। "तिथयस्ताः समाख्याताः षोडशैव वरानने!" स्कन्दपु० प्रभासख०।

परि+परितः सर्वतो वा ख्यातौ"स्वतपुत्र! यथा तस्य भार्गवस्य महात्मनः। च्यवनत्वं परिख्यातं तन्ममाचक्ष्व पृच्छतः" भा०आ० ५अ०। "अञ्जनेति परिख्याता पत्नी केशरिणः कवेः"रामा०स्त० २।१४।

सम्+परि+सम्यक् सर्वतः ख्यातौ। "यथावत् संपरिख्यातो गन्धर्वाप्सरसां तथा" भा० आ० ६५ अ०।

प्र+प्रकर्षेण कथने। "यस्तु देव मनुष्येषु प्रख्यातः सहजैर्गुणैः" भा० व० ३५ अ०।

वि+विशेषेण ख्यातौ "संह्लाद इति विख्यातः प्रह्लादस्यानुजस्तु यः" भा० आ० ६७ अ०।

सम्+सम्यक् कथने "दश पितामहान् सोमपान् संख्याय" शत०ब्रा० ४।३।१। एकादिसंख्याभेदेन गणने "संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप!"भा०२०७अ०।

अन्वादिपूर्वकस्य सम् तदुपसर्गद्योत्यार्थसहितसंख्याने "अतः कालं प्रसंख्याय संख्यामेकत्र पिण्डयेत्" सू० सि० प्रतिसंख्या प्रत्येकसंख्या प्रतीतसंख्या वेत्यर्थः।

**ख्यात** त्रि० ख्या—क्त। १कथिते २विश्रुते च अमरः। भावे क्त। ४कथने ५घोषणायाम् न०। "तथा ख्यातविधानञ्च योगसञ्चार एव च" भा० शा० ५६ अ०। "ख्यातमभिमन्त्रितदुन्दुभिनादेन प्रयाणकथनम्" नीलक०।

**ख्यातगर्हण** त्रि० ख्याता गर्हणा निन्दाऽस्य। प्रसिद्ध निन्द्ये अवगीते अमरः।

**ख्यातगर्हित** त्रि० गर्हितं गर्हणं भावे क्त ख्यातं गर्हितमस्य। प्रसिद्धनिन्द्ये जटा०।

**ख्याति** स्त्री ख्या+क्तिन्। १प्रशंसायाम्, २प्रसिद्धौ ३कथने च अमरः। ४प्रकाशे ५ज्ञाने च। "ख्यातिञ्च सत्त्वपुरुषान्यतयाऽधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम्" माघः। "सत्त्वपुरुषयोः प्रकृतिपुरुषयोरन्यतया अन्यत्वेन मिथो भिन्नत्वेन ख्यातिं ज्ञानं चाधिगम्य प्रकृतिपुरुषौ

भिन्नाविति स्यात्ेत्यर्थः प्रकृतिपुरुषयोर्विवेकाग्रहणात् संसारः विवेकात् मुक्तिरिति साङ्ख्याः। अथ तां ख्यातिमपि निरोद्धुं निवर्त्तयितुं वाञ्छन्ति हत्तिरूपान्तां निवर्त्य स्वयम्प्रकाशतयैव स्थातुमिच्छन्तीत्यर्थः" मल्लि०। ज्ञानरूपा ख्यातिश्चतुर्विधा असत्ख्यातिशब्दे ५३१ पृ० दर्शिता। "प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्म-मेघः समाधिः" पात०सू०। "यदायं ब्राह्मणः प्रसङ्ख्याने-ऽप्यकुसीदस्ततोऽपि न किञ्चित् प्रार्थयते तत्रापि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति संस्कारबीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते तदास्य धर्म्ममेघनामसमाधि-र्भवति" भा०। "मनोमहान् मतिर्ब्रह्मा पूर्बुद्धिः ख्याति-रीश्वरः" इति सा०भा० दर्शिते हिरण्यगर्भबुद्धिरूपे ६ महत्तत्त्वे च। "स्वप्ने यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी" साङ्ख्यप्रवचनभाष्यधृतवाक्यम्।

**ख्यापक** त्रि० ख्या—ज्ञाने प्रकाशे णिचि ण्वुल्। १ज्ञापके २प्रकाशके "नित्यपुरुषख्यापकान् हेतून्" सुश्रुतः।

**ख्यापन** न० ख्या—प्रकाशे णिच्—भावे ल्युट्। प्रकाशने "ख्या-पनेनानुतापेन तपसा धारणेन च। पापकृन्मुच्यते पापात् तथा दानेन चापदि" मनुः।

## इति वाचस्पत्ये खकारादिशब्दार्थ सङ्कलनम्।

---

### २४६१पृष्ठस्य क्रोडपत्रम् खड्गिधेनुशब्दस्यपूर्व्वमिदम्

**खड्गकोष** पु० खड्ग इव कुष्णाति कुष—अच्। खड्गा-कारपत्रे लताभेदे शब्दचि०। ६त०। (खाप) इति ख्याते खड्गावरके काष्ठचर्म्मादिनिर्म्मिते २पदार्थे अत्रार्थे तालव्यान्तोऽपि।

**खड्गट** पु० खड्गे इव टलति अव टल—विक्लवे बा० आधारे ड। १इक्कृत्काशे हारा० तस्याङ्गस्पर्शे असिवत् पीड़ा-करत्वात्तथात्वम्।

**खड्गधेनु** स्त्री खड्गो धेनुरिव यस्याः। छुरिकायाम् तस्या अ-सिपुत्रिकात्वात्तथात्वम्। खड्गा गण्डकी धेनुः जाति-त्वात् पोटेत्यादिना पा० कर्म्मधा० पूर्व्वनिपातः पुंव-द्भावश्च। २धेनुरूपगण्डक्यां मेदि०। [लताभेदे शब्द०।

**खड्गपत्र** पु० खड्ग इव तीक्ष्णं पत्रमस्य। खड्गलताख्ये

**खड्गपरीक्षा** स्त्री खड्गस्य परीक्षा। खड्गस्य रूपघटनादिना शुभाशुभज्ञानोपयोगिन्यां परीक्षायाम् सा च युक्तिकल्पतरौ उक्ता यथा"खड्गरूपं तथा जातिर्नेत्रारिष्टे च भूमिका। ध्वनिर्मानमिति प्रोक्तं खड्गज्ञानात्मकं शुभम्। अभिन्ने दृश्यते यादृक् विच्छिद्य घटिते तथा। यदेव दृश्यते चिह्नं तदङ्गं सम्प्रचक्षते। नीलकृष्णादिकं खड्गे रूपमित्य-भिधीयते। तेनैव यत् प्रतीतं स्यात् तत् जातिरिति गद्यते। अङ्गातिरिक्तं यज्जातिस्तन्माहात्म्योपसूच-कम्। तन्नेत्रमिति जानीयात् खड्गे खड्गविशारदः। अङ्गातिरिक्तं खड्गादेर्यच्छुद्भावसूचकम्। तदरिष्ट-मिति प्राङ्भूमिरङ्गादिधारणम्। यः खड्गे जायते शब्दोनखदण्डादिनाहते। स ध्वनिस्तुलना मानम् ज्ञानमष्टविधन्त्विदम्। पञ्चाद्या निपुणैः खड्गे सम्भाव्य-न्तेऽपि कृत्रिमाः। अन्त्यावकृत्रिमौ ज्ञेयौ तावेव सहजा विति। शतमङ्गानि चत्वारि रूपाणि जातयस्तथा। त्रिंशन्नेत्राणि जानीयादरिष्टानि तथैव च। भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मतः। मानन्तु द्विविधं प्रोक्तमित्येषां सङ्ग्रहो मतः"। अधिकमसिशब्दे दृश्यम्।

**खड्गपिधान** न० खड्गोऽपिधीयते आच्छाद्यतेऽनेन अपि+धा—करणे ल्युट् अपेरल्लोपः। (खाप) असिकोषे हलायु०। स्वार्थे क। तत्रार्थे हेम०।

**खड्गपुत्रिका** स्त्री खड्गस्य पुत्रिकेव। छुरिकायां मेदि०।

**खड्गफल(क)** पु०खड्गः फलमिव त्वगावृतत्वात् मध्ये यस्य वा कप्। (खाप) इति ख्याते असिपिधाने त्रिका०।

**खड्गमुद्रा** स्त्री "कनिष्ठानामिके बद्धा स्वाङ्गुष्ठेनैव दृश्यते। शिष्टाङ्गुली तु प्रसृते संसृष्टे खड्गमुद्रिका" तन्त्रसा-रोक्ते शक्तिपूजनाङ्गे मुद्राभेदे।

**खड्गारीट** पु० खड्गस्यारिरिव एटति गच्छति इट—गतौ क। (ढाल) ख्याते चर्म्ममये फलके। खड्गं तद्-धारातुल्यव्रतमार्च्छति आ+ऋ—गतौ कीटन्। असि धाराव्रतधारिणि त्रि० मेदि०। तच्च व्रतमसिधारा-व्रतशब्दे ५५० पृ० दर्शितम्।

**खड्गिक** पु० खड्गं खड्गाकारोऽस्त्यस्य ठन्। मत्स्यभेदे क्षी-रफेने तस्य खड्गाकारवत् शुभ्रतया तथात्वम्। खड्गेन चरति ठन्। १यौगिके क्षमयौ च मेदि०।

## ग

गकारः व्यञ्जनवर्णभेदः तस्योच्चारणस्थानं जिह्वामूलञ्च-पकण्ठदेशः, आभ्यन्तरप्रयत्नः जिह्वामूलस्पर्शः,बाह्यप्रयत्नाः संवारनादघोषाः अल्पप्राणश्च। मातृकान्यासेऽस्य दक्षिणमणिबन्धे न्यासः। अस्य ध्येयरूपदेवतादिकं कामधेनुतन्त्रे उक्तं यथा“गकारं परमेशानि! पञ्चदेवात्मकं सदा। निर्गुणं त्रिगुणातीतं निरीहं निर्मलं सदा। पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये!। अरुणादित्यसङ्काशं कुण्डलीं प्रणमाम्यहम्”। हृदयस्थद्वादशदलकमलस्य कादिठान्तद्वादशवर्णयुततया अस्य तन्मध्यगत्वम्। अस्य वाचकशब्दा वर्णाभिधाने उक्ता यथा “गो गौरी गौरवं गङ्गा गणेशो गोकुलेश्वरः। शार्ङ्गी पञ्चात्मको गाथा गन्धर्वः सर्वगः स्मृतिः। सर्वसिद्धिः प्रभा धूम्रा द्विजाख्यः शिवदर्शनः। विश्वात्मा गौः पृथग्रूपा मणिबन्धश्चिलोचनः। गीतं सरस्वती विद्या भोगिनी नकुलोधरा। तेजस्वती च हृदयं ध्यानं जालन्धरो जयः”। काव्यादिरचनायामस्य संयुक्ततया प्रथमविन्यासे लक्ष्मीः फलम्। “कः श्रीगोपस्य लक्ष्मीम्” संयुक्तं चेह न स्यात् सुखभरणपदैर्वर्गविन्यासयोगः। पद्यादौ गद्यवक्त्रे वर्णश्च च सकले प्राकृतादौ समोऽयमिति” वृ०र०टी० सर्वेषामयोक्तेः।

**ग** न० गै–क। १गीते २गणेशे ३गन्धर्वे पु०एकाक्षरको० ४गुरुवर्णे “म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः” वृत्तर०। “गुरुरेको गकारस्तु लकारो लघुरेककः” छन्दोम०। “यरामन्तगलौ सतौ” “गौ स्त्री” वृत्तर०। “सुप्युपपदे गमे र्ड। हृद्ग हृदयगामिनि कण्ठग कण्ठगामिनि इत्याद्यर्थे त्रि०“हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः” मनुः। सुप्युपपदे गै–क। सामग सामगातरि छन्दोग छन्दोगातरि त्रि०।

**गकार** पु०ग+स्वरूपे कार। गस्वरूपे वर्णे “गुरुरेको गकारस्तु लकारो लघुरेककः” छन्दो०।

**गगन** न० गम–युच् गोऽन्तादेशः। णत्वं प्रामादिकम् “फाल्गुने गगने फेने णत्वमिच्छन्ति वर्वराः” इत्युक्तेः। १आकाशे २शून्याङ्के। ३लग्नापेक्षया दशमराशौ तस्य उदितराश्यपेक्षया खस्वस्तिकस्थितत्वात् तथात्वं तथा हि पूर्वस्यामेव राशीनामुदयेन ततः सप्तमराश्युदये तस्य अस्तम् दशमराशिस्तु तदा खस्वस्तिकस्थितः इति तस्य मूर्द्धस्थाकाशस्थितत्वात् तथात्वम्। तद्गुणादेः आकाशशब्दे ५६२ पृ० विवृतिः। सुश्रुते देहस्य पाञ्चभौतिकत्वाङ्गीकारेण “आन्तरीक्षास्तु शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता चेति”देहस्याकाशधर्मा उक्ताः “पृथिव्यप्तेजो वाय्वाकाशानां समुदायात् द्रव्याभिनिर्वृत्तिः”इत्युपक्रम्य द्रव्यगता गगनजधर्मास्तत्रोक्ता यथा “श्लक्ष्णसूक्ष्ममृदुव्यवायिविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयम् तन्मार्दवशौषिर्यलाघवकरम्”। तथाकाशगुणभूमिष्ठं संशमनम्”इत्युपक्रम्य भूतविशेषसाचिव्येन धातुविशेषसंशमनकारित्वं तस्य दर्शितं सुश्रुतेन यथा “खतेजोऽनिलजैः श्लेष्मा शममेति शरीरिणाम्। वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः” “तस्याकाशगुणभूयिष्ठं मृदुत्वम्” इति च। तस्य धर्मविशेषाः भा० शा० उक्ता यथा “आकाशस्य गुणः शब्दोव्यापित्वम् छिद्रमेव च। अनाश्रयमनालम्बमव्यक्तमविकारिता। अप्रतीघातिता चैव भूतत्वं विकृतानि च”। “गगनं गगनाधिपतिर्मूर्त्तिरिति” माघः। “अवोचदेनं गगनस्पृशा (स्वरेण) रघुः। “प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टीः” मेघ०।

**गगनगति** पु० गगने गतिर्यस्य। १देवे २सूर्यादिग्रहे ३आकाशगामिनि त्रि०। ७त०। ४आकाशे गतौ स्त्री।

**गगनचर** त्रि० गगने चरति चर–ट। आकाशगामिनि देवसूर्यादिग्रहविहगादौ। तत्र विहगे “निम्नदयन् बहुविधमत्स्यजीविनो बुभुक्षितो गगनचरेश्वरः (गरुड़ः) तदा” भा० आ० २८ अ०। [ हेमच०

**गगनध्वज** पु० गगनस्य ध्वज इव। १मेघे, हारा० २सूर्ये

**गगनप्रिय** पु० दैत्यभेदे। “प्रह्लादोऽश्वशिराः कुम्भः संह्रादो गगनप्रियः” हरि० ४२ अ०।

**गगनमूर्द्धन्** पु० दानवभेदे। “तथा गगनमूर्द्धा च वेगवान् केतुमांश्च यः” भा० आ० ६५अ०। दनुवंशकथने।“तथा गगनमूर्द्धा च कुम्भनाभो महासुरः” हरि० ३अ०।

**गगनसद्** त्रि० गगने सीदति गच्छति सद–क्विप्। गगनगामिनि देवग्रहविहगादौ। “बालत्वं इह ता वा यदि गगनसदां जन्मकाले नराणाम् प्रज्ञामान्द्यम्” जातकालङ्कारः। “विद्धेरान् गगनसदः करोत्यकुप्यन्” माघः। गगनविहारिनृप्रभृतयोऽप्यत्र स्त्रियां ङीप्।

**गगनसिन्धु** स्त्री ६त०। मन्दाकिन्याम् “गगनसिन्धुफेनपटलजालान्तरस्य” काद०। गगननद्यादयोऽप्यत्र।

**गगनाङ्गना** स्त्री गगनगताङ्गना। अप्सरःसु।

**गगनाध्वग** पु॰ गगनाध्वना आकाशमार्गेण गच्छति गम—ड। सूर्य्ये हेम॰।

**गगनाम्बु** न॰ ६त॰। दिव्योदके तडागादावपतिते पात्रादौ धृते मेघनिःसृतजले। "गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने। बल्यं रसायनं मेध्यं पात्रापेक्षि ततःपरम् रक्षोघ्नं शीतलं ह्लादि जड़दाहविषापहम्" सुश्रुतः।

**गगनेचर** पु॰ गगने चरति चर—ट अलुक् स॰। १देवे २सूर्य्यादिग्रहे ३राशिचक्रे च। ४विहगादौ त्रि॰ स्त्रियां टाप्। "तस्मिंस्तु कथिते माता कारणे गगनेचरः" भा॰ आ॰ २७ अ॰।

**गगनोल्मुक** पु॰ गगने उल्मुक इव। १मङ्गलग्रहे हारा॰। तस्य गगनगत्वात् लोहिताकृतित्वाच्च तथात्वम्। [जगग्ध।

**गग्घ** हासे भ्वा॰ पर॰ अक॰ सेट्। गग्घति अगग्घीत्

**गज्जु** स्त्री वाचि निघण्टौ "वज्जु" इत्यत्र पाठान्तरम्।

**गङ्गा** स्त्री गम—गन्। १विष्णुपादभवे नदीभेदे २हिमवत्कन्याभेदे च। "इमं मे गङ्गे! यमुने! सरस्वति! शुतुद्रि! स्तोमं सचता परुष्ण्या। असिक्न्या मरुद्वृधे! वितस्तयार्जीकीये! शृणुह्या सुषोमया" ऋ॰ १०,७५,५। इमामृचमधिकृत्य दशप्रधाननदीनां निरुक्तिर्यास्केन ९, २६ दर्शितम् यथा "अथैकपदनिरुक्तम् गङ्गा १गमनात्। यमुना २प्रयुवती गच्छतीति वा विप्रयुतं गच्छतीति वा। सरस्वती ३सर इत्युदकनाम सर्त्तेः तद्वती। शुतुद्री ४शुद्राविणी क्षिप्रद्राविणी आशुतुन्नेव द्रवतीति वा। इरावतीं परुष्णी५त्याहुः पर्ववती भास्वती कुटिलगामिनी। असिक्नी ६अशुक्ला ऽसिता सितमिति वर्णनाम तत्प्रतिषेधोऽसितम्। मरुद्वृधा ७सर्वा नद्यः, मरुत एना वर्द्धयन्ति। वितस्ता ८विदग्धा विवृद्धा महाकूला। आर्जीकीया ९विपाडित्याहुः ऋजुकप्रभवा वा ऋजुगामिनी। विपाट् विपाटनाद्वा विपाशनाद्वा विप्रापणाद्वा पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतस्तस्माद्विपाडुच्यते पूर्वमासीदुरुञ्जिरा। सुषोमा १०सिन्धुर्यदेनामभिप्रसुवन्ति सिन्धुः स्यन्दनात्"। "अष्टाविंशति (हयान्) भरतो दौष्मन्तिर्यमुनामनु। गङ्गायां वृत्रघ्नेऽबध्नात् पञ्चपञ्चाशतं हयान्" शत॰ ब्रा॰ १३,५,४,११। "न वै गावो मन्दीरस्य गङ्गाया उदकं पपुः" कात्या॰ श्रौ॰ १२,३,२०। "तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः" मनुः। "गङ्गाया हिमवत्कन्यारूपत्वेऽपि नदीरूपतया पृथिव्यवतरणकथा रामा॰ आदि॰ यथा

"भगीरथस्तु राजर्षिर्धार्म्मिको रघुनन्दन!। अनपत्यो महाराजः प्रजाकामः स च प्रजाः। मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः। तपो दीर्घं समातिष्ठद्गोकर्णे रघुनन्दन!। ऊर्द्ध्वबाहुः पञ्चतपा मासाहारो जितेन्द्रियः!। तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः। अतीतानि महाबाहो! तस्य राज्ञो महात्मनः। सुप्रीतो भगवान् ब्रह्मा प्रजानां प्रभुरीश्वरः। ततः सुरगणैः सार्द्धमुपागम्य पितामहः। भगीरथं महात्मानं तपस्यन्तमथाब्रवीत्। भगीरथ! महाराज! प्रीतस्तेऽहं जनाधिप!। तपसा च सुतप्तेन, वरं वरय सुव्रत!। तमुवाच महातेजाः सर्व्वलोकपितामहम्। भगीरथो महाबाहुः कृताञ्जलिपुटः स्थितः। यदि मे भगवान् प्रीतो यद्यस्ति तपसः फलम्। सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः। गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम्! स्वर्गं गच्छेयुरत्यन्तं सर्व्वे च प्रपितामहाः। देव! याचे ह सन्तत्यै नावसीदेत् कुलञ्च नः। इक्ष्वाकूणां कुले देव! एष मेऽस्तु वरः परः। उक्तवाक्यं तु राजानं सर्वलोकपितामहः। प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम्। मनोरथो महानेष भगीरथ! महारथ!। एवम्भवतु भद्रन्ते इक्ष्वाकुकुलवर्द्धन!। इयं हैमवती ज्येष्ठा गङ्गा हिमवतः सुता। तां वै धारयितुं राजन्! हरस्तत्र नियुज्यताम्। गङ्गायाः पतनं राजन्! पृथिवी न सहिष्यते। तां वै धारयितुं राजन्नान्यं पश्यामि शूलिनः। तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत्। जगाम त्रिदिवं देवैः सर्व्वैः सह मरुद्गणैः।" ४२ स॰।

"देवदेवे गते तस्मिन् सोऽङ्गुष्ठाग्रनिपीड़िताम्। कृत्वा वसुमतीं राम! वत्सरं समुपासत। अथ संवत्सरे पूर्णे सर्व्वलोकनमस्कृतः। उमापतिः पशुपती राजानमिदमब्रवीत्। प्रीतस्तेऽहं नरश्रेष्ठ! करिष्यामि तव प्रियम्। शिरसा धारयिष्यामि शैलराजसुतामहम्। ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता। तदा सातिमहद्रूपं कृत्वा वेगञ्च दुःसहम्। आकाशादपतद्राम! शिवे शिवशिरस्युत। अचिन्तयच्च सा देवी गङ्गा परमदुर्द्धरा। विशाम्यहं हि पातालं स्रोतसागृह्य शङ्करम्। तस्यावलेपनं ज्ञात्वा क्रुद्धस्तु भगवान् हरः। तिरोभावयितुं बुद्धिञ्चक्रे त्रिनयनस्तदा। सा तस्मिन् पतिता पुण्या पुण्ये रुद्रस्य मूर्द्धनि। हिमवत्प्रतिमे राम! जटाम-

जटामण्डलगह्वरे । सा कथञ्चिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता । नैव सा निर्गमं लेभे जटामण्डलमध्यतः । तत्रैवाबम्भ्रमद्देवी संवत्सरगणान् बहून् । तामपश्यन् पुनस्तत्र तपः परममास्थितः । स तेन तोषितश्चासीदत्यन्तं रघुनन्दन ! । विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति । तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ह्लादिनी पावनी चैव नलिनी च तथैव च । तिस्रः प्राचीं दिशं जग्मुर्गङ्गाः शिवजलाः शुभाः । सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी । तिस्रश्चैता दिशं जग्मुः प्रतीचीन्तु शुभोदकाः । सप्तमी चान्वगात्तासां भगीरथरथं तदा । भगीरथोऽपि राजर्षिर्दिव्यस्यन्दनमास्थितः । प्रायादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ।" ४३ स० ।

"स गत्वा सागरं राजा गङ्गयानुगतस्तदा । प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः । भस्मन्यथाप्लुते राम ! गङ्गायाः सलिलेन वै । सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् । तारिता नरशार्दूल ! दिवं याताश्च देववत् । षष्टिः पुत्राः सहस्राणि सगरस्य महात्मनः । सागरस्य जलं लोके यावत् स्थास्यति पार्थिव ! । सगरस्यात्मजाः सर्वे दिवि स्थास्यन्ति देववत् । इयञ्च दुहिता ज्येष्ठा तव गङ्गा भविष्यति । त्वत्कृतेन च नाम्नाथ लोके स्थास्यति विश्रुता । गङ्गा त्रिपथगा नाम दिव्या भागीरथीति च । त्रीन् पथो भावयन्तीति तस्मात्त्रिपथगा स्मृता ।" ४४ स० ।

पुराणसर्वस्वे तु तस्या अवतरणप्रकारोऽन्यथा उक्तः कल्पभेदादविरोधः । यथा

महाभारते "महापुण्यां गगनतः पतन्तीं तां महेश्वरः ! दधार शिरसा गङ्गां तामेव दिवि सेवते" । ब्रह्माण्डे "महादेवस्य या मध्योरुत्तमाङ्गोत्तमाङ्गभात् । विनिर्गता महानन्दा दक्षिणेक्षणतः शुभा" स्कान्दे "त्रिविक्रमपदोद्भिन्नब्रह्माण्डशुषिरोद्भवा । परा विष्णुपदीगङ्गा सप्तद्रापूर्त्तिकारिणी ।" वैष्णवे "ततः प्रभवति ब्रह्मन् ! सर्वपापहरा सरित् । गङ्गा देवाङ्गनाङ्गानामनुलेपनपिञ्जरा । विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् । समन्ताद्ब्रह्मणः पुर्य्यां गङ्गा पतति वै दिवः । सा तत्र पतिता दिक्षु चतुर्द्धा प्रत्यपद्यत । सीता चालकनन्दा च वङ्क्षुर्भद्रा च वै क्रमात् ।" पाद्मे "क्षितौ तारयते मर्त्यान्नागांस्तारयतेऽप्यधः । दिवि तारयते देवां स्तेन त्रिपथगा स्मृता ।" भविष्ये "महेश्वरस्य या शक्तिर्मूर्त्तिरेषा सनातनी । त्रैलोक्यपावनार्थाय दयया धरणीकृता ।" तत्स्वभावप्रकरणं ब्रह्माण्डे "पापिष्ठानां पापहन्त्री स्वर्गमोक्षादिहेतुका । स्वभाव एव गङ्गायाः शैत्यं शीतरुचो यथा" भविष्ये "पापसङ्घनशीला हि यतोगङ्गा स्वभावतः । उपपातकराशीनां सा हि हन्त्री यतः स्मृता" स्कान्दमात्स्ययोः "क्रोधलोभैकवृत्तीनां विपरीतक्रियावताम् । कामिनाञ्च तथान्यत्र तपोयज्ञादि निष्फलम् । गङ्गायान्तु कृतं सर्वं सफलं स्यान्न संशयः । परब्रह्मस्वरूपाया गङ्गायास्तु स्वभावतः" । सर्वदेवादिमयप्रकरणम् भविष्ये "शिववाक्यं" त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च । पर्वतादीनि रम्याणि पुण्यक्षेत्राणि यानि च । धर्माश्च सर्वदेवाश्च सर्वयज्ञतपांसि च । अहं ब्रह्मा च विष्णुश्च सर्वशक्तिसमन्वितः । अष्टाविंशतिकोट्यस्तु देवता याश्च वै सदा । गङ्गायां सर्व एवैते सूक्ष्मरूपेण संस्थिताः । तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत् । सर्वदा कलिकाले च गङ्गायां नात्र संशयः" भविष्ये "सर्वदेवमयी गङ्गा सर्ववेदस्वरूपिणी" भगवद्गीतायां "स्रोतसामस्मि जाह्नवीति" अथ तस्या विशिष्टताप्रकरणम् "देवानान्तु महादेवो यथा श्रेष्ठतमः स्मृतः । सर्वेषामेव तीर्थानां तथा गङ्गा विशिष्यते" महाभारते "सर्वतीर्थमयी गङ्गा सर्वधर्ममयो मनुः । सर्वशास्त्रमयी गीता सर्वदेवमयो हरिः" स्कान्दे "भूतेश्वरादिह परोऽस्ति न पूजनीयो नैवाश्वमेधसदृशः क्रतुरस्ति लोके । गङ्गासमं त्रिभुवने न हि तीर्थमस्ति नान्यद्व्रतं च शिवरात्रिसमं तथास्ति" महाभारते "न गङ्गासदृशं तीर्थं न देवः केशवात् परः । ब्राह्मणेभ्यः परं नास्तीत्येवमाह पितामहः" ब्रह्माण्डे "कलौ तु सर्वतीर्थानि स्वमहात्म्यप्रभावतः । गङ्गामभिमुखं यान्ति सा तु देवी न कुत्रचित्" नारदीये "कोटिव्रतात्तु दशसु तीर्थानां यत् फलं भवेत् । तत्समस्तमिहैकत्र गङ्गायां लभते नरः" भविष्ये "अभिभूति प्रयाणेन भक्तिग्राह्या महेश्वरी । भावानुरूपफलदा गङ्गा सर्वजनहिता" ब्रह्माण्डे "प्रभासे गोसहस्रेण राहुग्रस्ते दिवाकरे । यत्फलं पाण्डवश्रेष्ठ ! गङ्गायां तद्दिने दिने । महापुण्या महावेगा सद्यः शुद्धिकरी परा । महापुण्यप्रदा सद्यः स्वर्गमोक्षप्रदैव सा" दानधर्मे "स्वायम्भुवं यथा स्थानं सर्वेषामुत्तमं स्मृतम् । तीर्थानां

सरितां श्रेष्ठा तथा गङ्गा इहोच्यते" मात्स्ये "तीर्थानां परमं तीर्थं नदीनामुत्तमा नदी । मोक्षदा सर्वभूतानां मह्यं प्राह द्विजसत्तमः" भविष्ये "ध्यानं कृते मोक्षहेतुस्त्रेतायां तच्च वै तपः । द्वापरे यज्ञमेवाहुः कलौ गङ्गैव केवलम् । चित्तानामपि गच्छन्ति गङ्गायास्तोयबिन्दवः । विशिष्टा यत् प्रयच्छन्ति भक्तेभ्यश्चिन्तितं फलम्" शैवे "नास्ति गङ्गासमं तीर्थं नास्ति वेदसमा श्रुतिः । नास्ति यज्ञसमः शास्ता नास्ति भूतिसमं तपः" कौर्म्ममात्स्ययोः "कृते च सर्वतीर्थानि त्रेतायां पुष्करं परम् । द्वापरे तु कुरुक्षेत्रं कलौ गङ्गैव केवलम्" दानधर्मे "ते देशास्ते जनपदास्ते शैलास्तेऽपि चाश्रमाः । येषां भागीरथी गङ्गा मध्ये याति सरिद्वरा" स्मरणप्रकरणम् हरिवंशे "दिव्या त्रिधारा दृष्टा यैः पुण्या त्रिपथगा नदी । स्मरणादेव सर्वेषामंहसां या विभेदिनी" ब्रह्माण्डे "मनसा संस्मरेद्यस्तु गङ्गां दूरस्थितो नरः । चान्द्रायणसहस्रन्तु लभते नात्र संशयः" भविष्ये "स्मरणादेव गङ्गायाः पापसंघातपञ्जरम् । भेदं सहस्रधा याति गिरिर्वज्रहतो यथा" ब्रह्माण्डे "यत्र तत्र स्थितोवापि मरणे समुपस्थिते । "भक्त्या गङ्गां स्मरन् याति नरः शिवपुरं परम्" भविष्ये "गच्छन् तिष्ठन् स्वपन् ध्यायन् जाग्रद्भुञ्जन् श्वसन् वदन् । यः स्मरेत् सततं गङ्गां स च मुच्येत संकटात्" कीर्त्तनप्रकरणम् वैष्णवे "गङ्गा गङ्गेति यैर्नाम योजनानां शतैरपि । स्थितैरुच्चारितं हन्ति पापं जन्मत्रयार्जितम्" । "गङ्गा गङ्गेति यो ब्रूयात् योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति" यात्राप्रकरणम् ब्रह्माण्डे "येषां बुद्धिं शुभां देवाः प्रयच्छन्ति महात्मनाम् । तेऽपि गच्छन्ति नियता गङ्गामभिगतां सुरैः" तत्रैव "स्नानस्य भक्त्या गङ्गायां कर्त्तुकामस्य गच्छतः । पदेपदेऽश्वमेधस्य फलं प्राप्नोति मानवः" । भविष्ये "वृथा कुलं वृथा विद्या वृथा यज्ञा वृथा तपः । वृथा दानानि तस्येह कलौ गङ्गां न याति यः" । वाराहब्रह्माण्डयोः "अर्घ्यादिकं गृहीत्वा तु सेन्द्रा देवाः समासते । आगच्छन्ति कदा मर्त्त्या गङ्गामभिगता नराः" । भविष्ये "अनुषङ्गेण सङ्गेन वाणिज्येनापि सेवया । कामासक्तोऽपि च नरो गङ्गां प्राप्य दिवं व्रजेत् । दानधर्मे "गङ्गाकृता वै त्रिदिवं गतास्ते" अथ क्षेत्रप्रकरणम् "सार्द्धहस्तशतं यावत् गर्भतस्तीरमुच्यते । न मन्त्रो न विधिः काली न मृदो न च गोमयम्" । अत्र ऋषयः पठन्ति "अत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि" । स्कान्दे "तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते । अत्र दानं जपो होमो गङ्गायां नात्र संशयः" । दानधर्मे "भाद्रकृष्णचतुर्द्दश्यां यावदाक्रमते जलम् । तावद्गर्भं विजानीयात् तदूर्द्ध्वं तीरमुच्यते" ब्रह्माण्डे "प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । अत्र नारायणः स्वामी नान्यः स्वामी कदाचन" । स्पर्शादिप्रकरणम् वैष्णवे "श्रुताभिलषिता दृष्टा स्पृष्टा पीताऽवगाहिता । या पावयति भूतानि कीर्त्तिता च दिनेदिने"

गतिप्रकरणम् भविष्ये "परदारपरद्रव्यवाञ्छा द्रोहः परस्य च । गतिमन्विच्छमानस्य गङ्गैव परमा गतिः । प्लवनप्रकरणम्" महाभारते "गङ्गोर्मिभिरथो दिग्धः पुरुषः पवनो यथा । स्पृशते सोऽस्य पाप्मानं सद्य एवापकर्षति" दर्शनप्रकरणम् दानधर्मे । "जात्यन्धैरिह तुल्यास्ते मृतैः पङ्गुभिरेव वा । समर्था ये न पश्यन्ति गङ्गां पुण्यजलां शुभाम्" ब्रह्माण्डे "ज्ञानमैश्वर्य्यमायुश्च प्रतिष्ठा सर्वमान्यता । शुभानामाश्रयत्वञ्च गङ्गादर्शनजं फलम्" अथ नमस्कारप्रकरणम् भविष्ये "सर्वतीर्थमयीं गङ्गां परमात्मस्वरूपिणीम् । त्रैलोक्यपावनार्थाय गाङ्गतां प्रणमेत् सदा" । स्पर्शनप्रकरणम् ब्रह्माण्डे "अभक्त्या हि महापापी गङ्गां स्पृष्ट्वा शुचिर्भवेत् । अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः" नारदीये "तथेह गङ्गां संस्पृश्य ब्रह्मरूपां सुपुण्यदाम् । शुद्धा भवन्तीह सर्वे सद्य एव न संशयः" वाराहे "ब्रह्महा गुरुहा गोघ्नः स्पृष्टो वा सर्वपातकैः । तस्यास्तोयं नरः स्पृष्ट्वा सर्वपापैः प्रमुच्यते" । अथावगाहनप्रकरणम् वनपर्व्वणि "यद्यकार्य्यशतं कृत्वा कृतं गङ्गावगाहनम् । सर्वं दहति गङ्गाम्भस्तूलराशिमिवानलः" स्नानप्रकरणम् वैष्णवे "स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति । अपूर्व्वपुण्यप्राप्तिश्च सदा मैत्रेय ! जायते" भविष्ये "यज्ञस्य पण्डितस्यापि गुणिनः सत्यशालिनः । गङ्गास्नानविहीनस्य तस्य जन्म निरर्थकम्" तत्रैव "पितरो योगिनश्चैव गाथां गायन्ति सादराः । अपि नः स्वकुले कश्चित् गङ्गास्नायी भविष्यति । देवेभ्यश्च पितृभ्यश्च दास्यते सलिलाञ्जलिम् । गङ्गास्नानरतं मर्त्त्यं दृष्ट्वैव यमकिङ्कराः । दिशो दश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः । यमो भीतस्तु तं दृष्ट्वा प्रणिपत्य प्रपूज्य च । न शक्नोति

तथा स्यात् तत्स्नाने पुण्यकर्मणः। मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्म्मणः। गङ्गास्नानेन दग्धः स्यात्तूलराशिरिवानलैः” ब्रह्माण्डे “स्पृष्ट्वा स्वर्गमवाप्नोति पीत्वा स्नानमवाप्नुयात्। गङ्गास्नाने तु भक्त्या वै प्राप्नोति परमं पदम्” ब्रह्मवैवर्त्ते “गङ्गायां मौषलं स्नानं महापातकनाशनम्। अस्नानात् स्वर्गसंप्राप्तिर्मोनान्मुक्तिर्न संशयः”। पुण्यकालविशेषस्नानप्रकरणम् भविष्ये “द्वादश्यां श्रवणर्क्षेण चाष्टम्यां पुष्ययोगतः। आर्द्रायाञ्च चतुर्द्दश्यां गङ्गास्नानं विशेषतः। वैशाखे पूर्णिमा या स्यान्माघे वै कार्त्तिके तथा। तथा माघी त्वमावास्या गङ्गास्नाने सुदुर्लभा। कृष्णाष्टम्यां सहस्रन्तु शतं स्यात् सर्वपर्वसु। अमावास्यादिने चैव सहस्रन्तु दिनक्षये। चन्द्रसूर्य्यग्रहे लक्षं व्यतीपाते त्वनन्तकम्” ब्राह्मे “चन्द्रसूर्य्यग्रहे चैव योऽवगाहति जाह्नवीम्। स स्नातः सर्वतीर्थेषु किमर्थमटते महीम्” स्मृतिः “इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं तथा। गङ्गातोये तु संप्राप्ते इन्दोः कोटीरवेर्दश” (नन्दामहाव्यतीपातवारुणीदयहरार्द्धोदयस्नानफलं तत्तच्छब्दे द्रष्टव्यम्)। मृदाधारणप्रकरणम् दानधर्मब्रह्माण्डाग्नेयेषु।

“जाह्नवीतीरसंभूतां मृदं मूर्द्ध्ना बिभर्त्ति यः। बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्” तर्पणप्रकरणम् ब्रह्माण्डाग्नेयदानधर्मेषु “स इच्छेत् सफलं जन्म जीवनं श्रुतमेव च। स पितॄंस्तर्पयेद्गङ्गामभिगम्य सुरांस्तथा” अथ दानप्रकरणम् भविष्ये “वासो हिरण्यरत्नानि पत्रपुष्पफलानि च। अन्नदानादिकञ्चापि चात्मनो यदभीप्सितम्। तत्तु भक्त्या तु गङ्गायां यः प्रयच्छति मानवः। तत्तत्सुखमनन्तञ्च समाप्य चेह जन्मनि। प्रेत्य चाप्नोति निर्वाणं परमं ब्रह्मरञ्जनम्। यज्ञोदानं तपो ध्यान श्राद्धञ्च सुरपूजनम्। गङ्गायान्तु कृतं सर्वं कोटिकोटिगुणं भवेत्” व्रतप्रकरणम् ब्रह्माण्डे “शालितण्डुलप्रस्थेन द्विप्रस्थपयसा तथा। पायसं पाचयित्वा तु मधुखण्डं घृतं तथा। प्रत्येकं पलमात्रन्तु तत्र निक्षिप्य भक्तितः। तत् पायसमपूपञ्च लड्डुकान् यावकामपि। तथा गुञ्जार्द्धमात्रन्तु सुवर्णं रूप्यमेव च। चन्दनागुरुकर्पूरकुङ्कुमानि च गुग्गुलुम्। विल्वपत्राणि दूर्वाञ्च रोचनां सितसर्षपम्। नीलोत्पलस्य पत्राणि पत्राभावे फलानि च। यथा शक्त्या महाभक्त्या गङ्गायां यो विनिक्षिपेत्। मासि मासि पौर्णमास्यां दर्शे वा प्रहरद्वये। अनयानेन मन्त्रेण यावत् संवत्सरं तथा। (ओं गङ्गायै नारायण्यै ते नमो नमः)। इति मन्त्रेण सततं शतमष्टोत्तरं जपेत्। गङ्गाजलान्नभुक् स्यात्तु तन्मनास्त्यक्तसंशयः। हविष्याशी मिताहारी क्षमी तेषु दिनेषु च। संवत्सरान्ते तस्यैषा गङ्गा दिव्यवपुर्धरा। दिव्यमाल्याम्बरधरा दिव्यगन्धानुलेपना। चारुरूपधरा देवी दिव्यरत्नविभूषिता। प्रत्यक्षरूपा पुरतस्तिष्ठत्येव वरप्रदा। एवं प्रत्यक्षतः साक्षात् गङ्गां दिव्यवपुर्धराम्। दृष्ट्वा स्वचक्षुषा मर्त्त्यो वरदानसमुद्यताम्। यान् यान् कामयते कामांस्तांस्तान् सर्वानवाप्नुयात्। निष्कामस्तु परं मोक्षं लभते नात्र संशयः” श्राद्धप्रकरणम् भविष्ये “गयाश्राद्धं कृतं तेन उत्सृष्टश्च वृषस्तथा। येन गङ्गाम्भसा सिक्ते तीरे श्राद्धमकारि च। पितॄनुद्दिश्य यो भक्त्या पायसं मधुसंयुतम्। गुड़सर्पिःसमायुक्तं गङ्गाम्भसि विनिक्षिपेत्। तृप्ताः भवन्ति पितरस्तस्य वर्षशतत्रयम्” देवीपुराणे “गङ्गायामथवा काशे तीरे श्राद्धं तथा नरैः। प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणम्” अथ पिण्डप्रकरणम् देवीपुराणे “सकृद्गङ्गाभिगमनं कृत्वा पिण्डं ददाति यः। तारिताः पितरस्तेन भवाम्भोधेस्तिलोदकैः।” तत्रैव “गङ्गायाञ्च गयायाञ्च पिण्डदानं समं स्मृतम्। विशेषतः कलियुगे गङ्गापिण्डं प्रशस्यते। गङ्गायां पिण्डदानेन पितरस्तु तिलोदकैः। नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः। माहेन्द्रे विरजे चैव गयायां जाह्नवीतटे। अत्र पिण्डप्रदो याति ब्रह्मलोकमनामयम्” जलप्रकरणम् ब्राह्मे “योऽसौ निरञ्जनो देवश्चित्स्वरूपी जनार्द्दनः। स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः”। लैङ्गे “ब्रह्महा गुरुहा गोघ्नः स्तेयी च गुरुतल्पगः। गङ्गाम्भसा च पूयन्ते नात्र कार्य्या विचारणा”। ब्राह्मे “तिष्ठेद्युगसहस्रन्तु पादेनैकेन यः पुमान्। मासमेकन्तु गङ्गाम्भः सेवते स विशिष्यते। मेरोः समुद्रस्य च रत्नराशेः संख्योपलानामुदकस्य वापि। शक्यं वक्तुं नेह गङ्गाजलानां गुणाख्यानं परिमाणं तथैव” तोयदानप्रकरणम् भविष्ये “अन्नदानैश्च गोदानैश्च स्वर्णदानादिभिस्तथा। रथाश्वगजदानैश्च यत्फलं परिकीर्त्तितम्। ततः शतगुणं गङ्गातोयदानादवाप्नुयात्” महाभारते “चान्द्रायणसहस्रेण यश्चरेत् कायशोधनम्। यः पिबेद्यथेष्टञ्च गङ्गाम्भः स विशिष्यते। गङ्गा-

तीरे वसेन्नित्यं गङ्गातोयं पिबेत् सदा। दीक्षितः सर्वयज्ञेषु सोमपानं दिने दिने। गङ्गातोयाभिसंसिक्तां भिक्षामश्नाति यो नरः। सर्पवत् कञ्चुकं मुक्त्वा पापानीह नरोत्तमः। स्वार्गापवर्गिकीं सिद्धिं प्राप्नोत्येव न संशयः" स्कान्दे "गण्डूषमात्रपानेन अश्वमेधफलं लभेत्। स्वच्छन्दं यः पिबेदम्भस्तस्य मुक्तिः करे स्थिता" पाद्मे "त्रिभिः सारस्वतं तोयं सप्तभिस्त्वेव यामुनम्। नार्मदं दशभिर्मासैर्गाङ्गं वर्षेण जीर्यति" अथ वासरूपसेवाप्रकरणम्। ब्राह्मे "तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा गतिम्। न तां संलभते जन्तुर्गङ्गां संसेव्य यां लभेत्" नारदीये "किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः। वास एव हि गङ्गायां ब्रह्मज्ञानस्य कारणम्" महाभारते "पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः। पश्चाद्गङ्गां समाश्रित्य तेऽपि यान्ति परां गतिम्" ब्रह्माण्डे "महापातकिनो ये च सेवन्ते यदि जाह्नवीम्। पातकेभ्योऽपि मुच्यन्ते का कथाऽन्यस्य पाप्मनः" भविष्ये "त्रिरात्रं सप्तरात्रं वा स्थितिमात्रेण भक्तितः। गङ्गातीरे नरो यस्तु नरकं स न पश्यति"। विघ्नप्रकरणम् भविष्ये "षष्टिर्विघ्नसहस्राणि गङ्गां रक्षन्ति यत्नतः। निरासयन्त्यभक्तांश्च पापकर्मरतांस्तथा। कामक्रोधमदोन्माहलोभादिनिशितैः शरैः। प्रहरन्ति मनस्तेषां स्थितिं वै नाशयन्ति च" प्रतिग्रहप्रकरणम् मात्स्ये "यस्तत्र प्रतिगृह्णाति तीर्थेष्वायतनेषु च। हिरण्यं रजतं ताम्रं यच्चान्यद्वस्तु किञ्चन। निःफलं तस्य तत् तीर्थं यावत्तद्वस्तु चाश्नुते। वरं विक्रयणं मातुर्वरं विक्रयणं पितुः। अपि गङ्गाजलस्थन्तु न म्लेच्छीयात् कदाचन" स्मृतिः। "गङ्गाविक्रयणाद्राजन् विष्णोर्विक्रयणं भवेत्। जनार्दने तु विक्रीते विक्रीतं स्याज्जगत्त्रयम्" अभक्तिप्रकरणम् भविष्ये "गङ्गां प्राप्याथ ये मर्त्याः श्रद्धां भक्तिं न कुर्वते। तीर्थान्तरे रतिं कुर्युस्ते वै निरयगामिनः"। कृतकृत्यप्रकरणम् ब्रह्माण्डे "गङ्गां संश्रित्य यस्तिष्ठेत्तस्याकार्यं न विद्यते। कृतकृत्यः स वै मुक्तो जीवन्मुक्तो भवेन्नरः"। मृत्युफलप्रकरणम् ब्राह्मे "ज्ञानतोऽज्ञानतो वापि कामतोऽकामतोऽपि वा। गङ्गायान्तु मृतो मर्त्यो मोक्षं स्वर्गञ्च विन्दति" भविष्ये "कृमिकीटपतङ्गाद्या ये मृता जाह्नवीजले। कूलाच्चिप्तपतिता वृक्षास्तेऽपि यान्ति परां गतिम्" तथा "अपि योजनपर्यन्ते गङ्गां स्मृत्वा तनुं त्यजेत्। वैवस्वतोऽपि तस्यार्घ्यं दत्त्वा स्वर्गं प्रयच्छति" स्कान्दे "अर्द्धोदके तु जाह्नव्या म्रियतेऽनशनेन यः। स याति न पुनर्जन्म ब्रह्मसायुज्यमेव च" अस्थिप्रक्षेपप्रकरणम् वनपर्वणि कौर्मे च "यावन्त्यस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य च। तावद्वर्षसहस्राणि ब्रह्मलोके महीयते। यावदस्थि मनुष्यस्य गङ्गायाः स्पृशते जलम्। तावद्वर्षसहस्राणि स्वर्गलोके महीयते" ब्रह्माण्डे "गङ्गातोये तु यस्यास्थि नीत्वा संक्षिप्यते नरैः। तत्कालमादितः कृत्वा स्वर्गे तस्य भवेत् स्थितिः। गङ्गातोयेषु यस्यास्थि प्लाव्यते पुण्यकर्मणः। न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कदाचन" केशादिप्रकरणम् ब्रह्माण्डे "केशलोमनखादीनि येषां पुंसान्तु वायुना। निक्षिप्यन्ते च गङ्गायां तेषां स्याद्दिव्यति स्थितिः" अथ प्रकीर्णकम् ब्रह्माण्डे "दृष्ट्वा शतकृतं पापं स्पृष्ट्वा जन्मशतानि च। स्नात्वा जन्मसहस्राणि हन्ति गङ्गा कलौ युगे"। गङ्गाद्वारवाराणसीप्रयागादिप्रकरणम् मात्स्ये "सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा। गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे" वनपर्वणि "स्वर्गद्वारेण तत्तुल्यं गङ्गाद्वारं न संशयः। तत्राभिषेकं यः कुर्यात् सोऽश्वमेधमवाप्नुयात्" ब्रह्माण्डे वाराणस्यां विशेषेण गङ्गा नित्यं विमुक्तिदा। अनन्तकोटिकल्पोत्थं पापं पुंसां प्रणाशयेत्। वाराणस्यां विशेषेण सद्यः पापविनाशिनी। गङ्गायान्तु जले मोक्षो वाराणस्यां जले स्थले। जले स्थले चान्तरीक्षे गङ्गासागरसङ्गमे"। मोक्षप्रकरणम् स्कान्दे "ब्रह्मादिदेवलोकानां मुक्तेश्च प्राप्तये नृणाम्। गङ्गा च परमा हेतुः कलिकाले विशेषतः"।

गङ्गामाहात्म्यं काशीख० विष्णुं प्रति शिवेनोक्तम् यथा

"ममैव सा परा मूर्त्तिस्तोयरूपा शिवात्मिका। ब्रह्माण्डानामनेकेषामाधारः प्रकृतिः परा। सिद्धविद्यास्वरूपा च विशक्तिः करुणात्मिका। आनन्दाऽमृतरूपा च शुद्धधर्मस्वरूपिणी। तामेनां जगतां धात्रीन्धारयामि स्वलीलया। विश्वस्य रक्षणार्थाय परब्रह्मस्वरूपिणीम्। त्रैलोक्ये यानि तीर्थानि पुण्यक्षेत्राणि यानि च। सर्वत्र सर्वे ये धर्म्माः सर्वे यज्ञाः सदक्षिणाः। तपांसि विष्णो! सर्वाणि श्रुतिः साङ्गा चतुर्मिता। अहञ्च त्वञ्च ब्रह्मा च देवतानां गणाश्च ये। पुरुषार्थाश्च सर्वे वै शक्तयो विविधाश्च याः। गङ्गायां सर्व एवैते सूक्ष्मरूपेण संस्थिताः। स स्नातः सर्वे-

तीर्थेषु सर्वक्रतुषु दीक्षितः । चीर्णसर्वव्रतः सोऽपि यस्तु गङ्गां निषेवते । तपांसि तेन तप्तानि सर्वदानप्रदः स च । स प्राप्तयोगनियमो यस्तु गङ्गां निषेवते । सर्ववर्णाश्रमिभ्यश्च वेदविद्भ्यश्च वै तथा । शास्त्रार्थ पारगेभ्यश्च गङ्गास्नायी विशिष्यते । मनोवाक्कायजैर्दोषैर्दुष्टो बहुविधैरपि । वीक्ष्य गङ्गां भवेत् पूतः पुरुषो नात्र संशयः । कृते सर्वाणि तीर्थानि त्रेतायां पुष्करं परम् । द्वापरे तु कुरुक्षेत्रं कलौ गङ्गैव केवलम् । ध्यानं कृते मोक्षहेतुस्त्रेतायां तच्च वै तपः । द्वापरे तद्द्वयं यज्ञः कलौ गङ्गैव केवलम् । पूर्वजन्मान्तराभ्यासवासनावशतो हरे ! । गङ्गातीरे निवासः स्यान्मदनुग्रहतः परम् । यो देहपातनाद्यावद्गङ्गातीरं न मुञ्चति । स हि वेदान्तविद्योगी ब्रह्मचर्यव्रती सदा । कलौ कलुषचित्तानां पापद्रव्यरतात्मनाम् । विधिहीनक्रियाणाञ्च गतिर्गङ्गां विना नहि । अलक्ष्मीः कालकर्णी च दुःस्वप्नो दुर्विचिन्तितम् । गङ्गागङ्गेति जपनात्तानि नोपविशन्ति हि । गङ्गा हि सर्वभूतानामिहामुत्र फलप्रदा । भावानुरूपतो विष्णो ! सदा सर्वजगद्धिता । यज्ञदानतपोयोगजपाः सनियमा यमाः । गङ्गासेवासहस्रांशं न लभन्ते कलौ हरे ! । किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः । वास एव हि गङ्गायां ब्रह्मज्ञानस्य कारणम् । अपि दूरस्थितस्यापि गङ्गामाहात्म्यवेदिनः । अयोग्यस्यापि गोविन्द ! । भक्त्या गङ्गा प्रसीदति । श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा ज्ञानं परन्तपः । श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धया सा प्रसीदति । अज्ञानरागलोभाद्यैः पुंसां संमूढ़चेतसाम् । श्रद्धा न जायते धर्मे गङ्गायाञ्च विशेषतः । बहिःस्थितं जलं यद्वन्नारिकेलान्तरस्थितम् । तथा ब्रह्माण्डबाह्यस्थं परं ब्रह्माम्बु जाह्नवम् । गङ्गालाभात् परो लाभः कचिदन्यो न विद्यते । तस्माद्गङ्गामुपासीत गङ्गैव परमः पुमान् । शक्तस्य पण्डितस्यापि गुणिनो दानशालिनः । गङ्गास्नानविहीनस्य हरे ! जन्मनिरर्थकम् । वृथा कुलं वृथा विद्या वृथा यज्ञो वृथा तपः । वृथा दानानि तस्येह गङ्गाभक्तो न यो भवेत् । गुणवत्पात्रपूजायां न स्याद्वै तादृशं फलम् । यथा गङ्गाजले स्नातः पूजने विधिना फलम् । मम तेजोऽग्निगर्भेयं मम वीर्य्यातिसम्भृता । दाहिका सर्वदोषाणां सर्वपापविनाशिनी । स्मरणादेव गङ्गायाः पापसङ्घातपञ्जरम् । शतधा भेदमायाति गिरिर्वज्रहतो यथा ।

गङ्गां गच्छति यस्त्वेको यस्तं भक्त्यानुमोदयेत् । तयोस्तुल्यं फलं प्राहुर्भक्तिरेवात्र कारणम् । गच्छंस्तिष्ठन् स्वपन् भुञ्जन् ध्यायन् जाग्रत् श्वसन् वदन् । यः स्मरेत् सततं गङ्गां स हि मुच्येत बन्धनात् । पितॄनुद्दिश्य यो भक्त्या पायसं मधुसंयुतम् । गुड़सर्पिस्तिलैः सार्द्धं गङ्गाम्भसि विनिःक्षिपेत् । तृप्ता भवन्ति पितरस्तस्य वर्षशतं हरे ! । यच्छन्ति विविधान् कामान् भूरिभूतान् पितामहाः । लिङ्गेशे पूजिते सर्वमर्चितं स्याज्जगद्यथा । गङ्गास्नानेन लभते सर्वतीर्थफलं तथा । गङ्गायान्तु नरः स्नात्वा यो लिङ्गं नित्यमर्च्चति । एकेन जन्मना मुक्तिं परां प्राप्नोति स ध्रुवम् । अग्निहोत्राणि यज्ञाश्च तथा दानतपांसि च । गङ्गायां लिङ्गपूजायाः कोट्यंशेनापि नो समाः । गङ्गां गन्तुं विनिश्चित्य कृत्वा श्राद्धादिकं गृहे । स्थितस्य सम्यक् सङ्कल्पात् तस्यानन्दन्ति पूर्वजाः । पापानि च रुदन्त्याशु हा क यास्याम इत्यलम् । लोभमोहादिभिः सार्द्धं मन्त्रयन्ति पुनः पुनः । यथा गङ्गां न यात्येष तथा विघ्नं प्रकुर्म्महे । गङ्गां गतो यदा चैष न उच्छित्तिं विधास्यति । गृहाद्गङ्गावगाहार्थं गच्छतस्तु पदे पदे । निराशानि व्रजन्त्येव पापान्यस्य शरीरतः । पूर्वजन्मकृतैः पुण्यैस्त्यक्त्वा लोभादिकं हरे ! । व्युदस्य सर्वविघ्नौघान् गङ्गां प्राप्नोति पुण्यवान् । अनुषङ्गेण शुल्केन वाणिज्येनापि सेवया । कामासक्तोऽपि वा मर्त्यो गङ्गास्नायी दिवं व्रजेत् । अनिच्छयापि संस्पृष्टो दहनोऽपि यथा दहेत् । अनिच्छयापि संस्नाता गङ्गा पापं तथा दहेत् । तावद्भ्रमति संसारे यावद्गङ्गां न सेवते । संसेव्य गङ्गां नो जन्तुर्भवक्लेशं प्रपश्यति । यो गङ्गाम्भसि संस्नातो भक्त्या संत्यक्तसंशयः । मनुष्यचर्म्मणा नद्धः स देवो नात्र संशयः । गङ्गास्नानार्थमुद्युक्तो मध्येमार्गं मृतो यदि । गङ्गास्नानफलं सोऽपि तदाप्नोति न संशयः । महात्म्यं ये च गङ्गायाः शृण्वन्ति च पठन्ति च । तेऽप्यशेषैर्महापापैर्मुच्यते नात्र संशयः । दुर्बुद्धयो दुराचारा हैतुका बहुसंशयाः । पश्यन्ति मोहिता विष्णो ! गङ्गामन्यां नदीमिव । जन्मान्तरकृतैर्दानैस्तपोभिर्नियमैर्व्रतैः । इह जन्मनि गङ्गायां नृणां भक्तिः प्रजायते । गङ्गाभक्तिमतामर्थे महेन्द्रादिपुरेषु च । हर्म्याणि रत्नभोगाणि निर्मितानि स्वयम्भुवा । सिद्धयः सिद्धलिङ्गानि सर्वलिङ्गान्यनेकशः । प्रासादा रत्न-

र्चिताश्चिन्तामणिगणा अपि । गङ्गाजले न तिष्ठन्ति कलिपापानि भीतितः । अतएव हि संसेव्या कलौ गङ्गेष्टसिद्धिदा । सूर्य्योदये तमांसीव वज्रिवज्रभयाद्गगाः । तार्क्ष्यस्य दर्शनाद्यथा सर्पाः मेघा वाताहता यथा । तत्त्वज्ञानाद्यथा मोहाः सिंहं दृष्ट्वा यथा मृगाः । तथा सर्वाणि पापानि यान्ति गङ्गेक्षणात् क्षयम् । दिव्यौषधैर्यथा रोगा लोभेन च यथा गुणाः । यथा शीतौघस्तन्मिरगाधह्रदमज्जनात् । तूलशैलाः स्फुलिङ्गेन यथा नश्यन्ति तत्क्षणात् । तथा दोषाः प्रणश्यन्ति गङ्गाम्भःस्पर्शनाद्ध्रुवम् । क्रोधेन च तपोयद्वत् कामेन च यथा मतिः । अनयेन यथा लक्ष्मीर्विद्या मानेन वै यथा । दम्भकौटिल्यमायाभिर्यथा धर्मो विनश्यति । तथा नश्यन्ति पापानि गङ्गायादर्शनेन तु । मानुष्यं दुर्लभं प्राप्य विद्युत्सम्पातचञ्चलम् । गङ्गां यः सेवते सोऽत्र बुद्धेः पारं परं गतः । विधूतपापाये मर्त्याः परज्योतिःस्वरूपिणीम् । सहस्रसूर्य्यप्रतिमां गङ्गां पश्यन्ति ते भुवि । साधारणाम्भसा पूर्णां साधारणनदीमिव । पश्यन्ति नास्तिका गङ्गां पापोपहतलोचनाः । संसारमोचनार्थाय जनानामनुकम्पया । गङ्गातरङ्गरूपेण सोपानं निर्ममे दिवः । सर्व एव शुभः कालः सर्वो देशस्तथा शुभः । सर्वे जना दानपात्रं श्रीमति जाह्नवीतटे । यथाश्वमेधो यज्ञानां नगानां हिमवान् यथा । व्रतानान्तु यथा सत्यं दानानामभयं यथा । प्राणायामश्च तपसां मन्त्राणां प्रणवो यथा । धर्माणामप्यहिंसा च कम्यानां श्रीर्यथा वरा । यथात्मविद्या विद्यानां स्त्रीणां गौरी यथोत्तमा । सर्वदेवगणानाञ्च यथाहं परमेश्वरः । सर्वेषामेव भक्तानां शिवभक्तो यथा वरः । तथा सर्वेषु तीर्थेषु गङ्गातीर्थं विशिष्यते । हरे ! यस्त्वावयोर्भेदं न करोति महामतिः । शिवभक्तः स विज्ञेयो महापाशुपतश्च सः । पापपांशुमहावात्या पापद्रुमकुठारिका । पापेन्धनदवाग्निश्च गङ्गेयं पुण्यवाहिनी । नानारूपाश्च पितरो गाथां गायन्ति सर्वदा । अपि कश्चित् कुलेऽस्माकं गङ्गास्नायी भविष्यति । देवर्षीन् परिसन्तर्प्य दीनानाथांश्च दुःखितान् । श्रद्धया विधिना स्नात्वा दास्यते सलिलाञ्जलिम् । अपि नः स कुले भूयाच्छिवे विष्णौ च शास्त्रदृक् । तदालयकरो भक्त्या तत्र सम्मार्ज्जनादिकृत् । अकामो वा सकामो वा तिर्य्यग्योनिगतोऽपि वा । गङ्गायां यो मृतो मर्त्यो नरकं न स पश्यति । तीर्थमन्यत् प्रशंसन्ति गङ्गातीरे स्थिताश्च ये । गङ्गां न बहु मन्यन्ते ते स्युर्निरयगामिनः । मां च त्वाञ्चैव गङ्गाञ्च यो द्वेष्टि पुरुषाधमः । स्वकीयैः पितृभिः सार्द्धं स घोरं नरकं व्रजेत् । षष्टिर्गणसहस्राणि गङ्गां रक्षन्ति सर्वदा । अभक्तानाञ्च पापानां वासे विघ्नं प्रकुर्वते । कामक्रोधमहामोहलोभादिनिशितैः शरैः । घ्नन्ति तेषां मनस्तत्र स्थितिञ्चापनयन्ति च । गङ्गां समाश्रयेत् यस्तु स मुनिः स च पण्डितः । कृतकृत्यः स विज्ञेयः पुरुषार्थचतुष्टये । गङ्गायाञ्च सकृत्स्नातो हयमेधफलं लभेत् । तर्पयंश्च पितॄंस्तत्र तारयेन्नरकार्णवात् । नैरन्तर्य्येण गङ्गायां मासं यः स्नाति पुण्यभाक् । स शक्रलोके वसति यावच्छक्रः सपूर्वजः । अब्दं स्नाति च गङ्गायां नैरन्तर्य्येण पुण्यवान् । विष्णुलोकं समागत्य सुखं संवसेच्चरः ! । गङ्गायां स्नाति यो मर्त्यो यावज्जीवं दिने दिने । जीवन्मुक्तः स विज्ञेयो देहान्ते मुक्त एव सः । तिथिनक्षत्रपर्वादि नापेक्ष्यं जाह्नवीजले । स्नानमात्रेण गङ्गायां सञ्चितार्थं विनश्यति । पण्डितोऽपि स मूर्खः स्याच्छक्तियुक्तोऽप्यशक्तिकः । यस्तु भागीरथीतीरं सुखसेव्यं न संश्रयेत् । किमायुष्यारोग्येण विकाशिन्याथ किं श्रिया । किं वा बुद्ध्या विमलया यदि गङ्गां न सेवते । यः कारयेदायतनं गङ्गाप्रतिकृतेर्नरः । भुक्त्वा स भोगान् प्रेत्यापि याति गङ्गासलोकताम् । शृण्वन्ति महिमानं ये गङ्गाया नित्यमादरात् । गङ्गास्नानफलं तेषां वाचकप्रेषणाद्धनैः । पितॄनुद्दिश्य यो लिङ्गं स्नापयेद्गाङ्गवारिणा । तृप्ताः स्युस्तस्य पितरो महानिरयगा अपि । कष्टकृतो मन्त्रजप्यैर्विस्तपूतैः सुगन्धिभिः । प्रोचुर्गाङ्गैर्जलैः स्नानं घृतस्नानादिकं बुधाः । आपः क्षीरकुशाग्राणि घृतं दधि गवां मधु । रक्तानि करवीराणि रक्तचन्दनमित्यपि । अष्टद्रव्यविमिश्रेण गङ्गातोयेन यः सकृत् । माधव ! प्रस्थमात्रेण ताम्रपात्रस्थितेन च । भानवेऽर्घं प्रदद्याच्च स्वकीयपितृभिः सह । सोऽतितेजोविमानेन सूर्य्यलोके महीयते । अष्टाङ्गोऽर्घोऽयमुद्दिष्टस्तनीव रवितोषणः । गाङ्गैर्वारिभिः कोटिगुणो ज्ञेयो विष्णोऽन्यवारितः । गङ्गातीरेषु भक्त्या यः कुर्य्याद्देवालयं सुधीः । अन्यतीर्थप्रतिष्ठातो लभेत् कोटिगुणं फलम् । कूपवापीतडागादिप्रपादानादिभिस्तथा । अन्यत्र यद्भवेत् पुण्यं तद्गङ्गा-

दर्शनाद्भवेत् । अश्वत्थवटवृक्षादिवृक्षारोपेण यत् फलम् । पुष्पवाट्यादिभिश्चापि गङ्गास्पर्शस्ततोऽधिकः । कन्यादानेन यत् पुण्यं यत् पुण्यं गोप्रदानतः । तत् पुण्यं स्याच्छतगुणं गङ्गागण्डूषपानतः । चान्द्रायणसहस्रेण यत् फलं स्याज्जनार्दन ! । ततोऽधिकं फलं गङ्गाऽमृतपानादवाप्नुयात् । भक्त्या गङ्गावगाहस्य किमन्यत् फलमुच्यते । अक्षयः स्वर्गवासोऽपि निर्वाणमथ वा हरे ! । गङ्गायाः पादुकायुग्मं नित्यमर्च्चति यो नरः । आयुः पुण्यं धनं पुत्रान् स्वर्गमोक्षौ च विन्दति । नास्ति गङ्गासमं तीर्थं कलिकल्मषनाशनम् । नास्ति मुक्तिप्रदं क्षेत्रमविमुक्तसमं हरे ! । गङ्गास्नानरतं मर्त्यं दृष्ट्वैव यमकिङ्कराः । दिशो दश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः । गङ्गाव्रजनशीलस्य गङ्गातटनिवासिनः । अर्च्चां कृत्वा यथान्यायमश्वमेधफलं लभेत् । गोभूहिरण्यदानेन भक्त्या गङ्गातटे शुभे । नरो न जायते भूयः संसारे दुःखसङ्कटे । दीर्घायुष्यञ्च वासोभिर्ज्ञानं पुस्तकदानतः । अन्नदानेन सम्पत्तिः कीर्त्तिः कन्याप्रदानतः । अन्यत्र यत् कृतं कर्म व्रतं दानं जपस्तपः । गङ्गातटे तु तत् सर्वं हरे ! कोटिगुणं भवेत् । धेनुं पयस्विनीं दद्यात् गङ्गातीरे विधानतः । गोरोमसंख्यया विष्णोर्युगान् सर्वं समृद्धिदान् । गोलोके मम लोके वा कामधेनुव्रजावृतः । भुञ्जानः सर्वकामांस्तु दिव्यान् नानाविधान् बहून् । देवानामप्यलभ्यांश्च भुक्त्वा तु सह बान्धवैः । पितृभिश्च सुहृद्भिश्च सर्वरत्नविभूषितः । जायते सुकुले पश्चाद्धनधान्यसमाकुले । रत्नकाञ्चनसम्पूर्णे शीलविद्यासमन्विते । भुक्त्वा च विपुलान् भोगान् पुत्रपौत्रसमन्वितः । पुनर्गङ्गां समासाद्य काश्यामुत्तरवाहिनीम् । विश्वेश्वरं समाराध्य प्रागजन्मार्थसनाथशात् । कालाद्देहान्तमासाद्य मुक्तः सम्पद्यते ततः । निवर्त्तनद्वयमपि भूमेर्भागीरथीतटे । नरो ददाति योभक्त्या तस्य पुण्यफलं शृणु । तद्भूमित्रसरेणूनां संख्यया युगमानया । महेन्द्रचन्द्रलोकेषु भुक्त्वा भोगान् मनःप्रियान् । सप्तद्वीपपतिर्भूत्वा महाधर्मपरायणः । नरकस्थानपि पितॄन् ! प्राप्य त्रिदिवं व्रजेत् । स्वर्गस्थांश्च पितॄन् सर्वान् मोचयित्वा महाद्युतिः । अन्ते ज्ञानासिना छित्त्वा ह्यविद्यां पाञ्चभौतिकीम् । परं वैराग्यमापन्नो युञ्जानो योगमुत्तमम् । प्राप्याथ वाऽविमुक्तञ्च परं ब्रह्माधिगच्छति । सुवर्णमात्रमपि यः सुवर्णं वा प्रयच्छति । सुवर्णञ्च सुविप्राय हरे ! भागीरथीतटे । स हेमरत्नखचिते विमाने सर्वगे शुभे । सर्वैश्वर्य्यसमायुक्तः सर्वलोकेषु पूजितः । ब्रह्माण्डान्तरसंस्थेषु भुक्त्वा भोगान् मनोरमान् । सर्वैः संपूजितो विष्णो ! यावदाहूतसंप्लवम् । एकराट् च ततोभूत्वा जम्बुद्वीपे प्रतापवान् । ततोऽविमुक्तमासाद्य परं निर्वाणमृच्छति । जन्मर्क्षे तु कृते स्नाने गङ्गायां भक्तिपूर्वकम् । जन्मप्रभृतिपापौघात् संचितात् मुच्यते क्षणात् । वैशाखे कार्त्तिके माघे गङ्गास्नानं सुदुर्लभम् । दर्शे शतगुणं पुण्यं संक्रान्तौ च सहस्रकम् । चन्द्रसूर्य्यग्रहे लक्षं व्यतीपाते त्वनन्तकम् । अयुतं विषुवे चैव नियुतन्त्वयनद्वये । सोमग्रहः सोमदिने, रविवारे रवेर्ग्रहः । तच्चूडामणिपूर्वाख्यं तत्र स्नानमसंख्यकम् । स्नानं दानं जपोहोमो यच्च चूडामणौ कृतम् । तदक्षयमिदं सर्वं विष्णो ! भागीरथीतटे । श्रद्धया भक्तियुक्तस्तु गङ्गां स्नात्वा विधानतः । ब्रह्महापि विशुद्ध्येत किं पुनस्त्वन्यपातकी । कृमिकीटपतङ्गाद्या ये मृता जाह्नवीजले । कूलात् पतन्ति ये वृक्षा स्तेऽपि यान्ति परां गतिम्” । अन्यान्यपि तत्रत्य फलानि प्रा० त० उक्तानि तत्र दृश्यानि । ब्रह्माण्डे “गङ्गां पुण्यजलां प्राप्य त्रयोदश विवर्जयेत् । शौचमाचमनं सेकं निर्माल्यं मलघर्षणम् । गात्रसंवाहनं क्रीड़ां प्रतिग्रहमथोऽरतिम् । अन्यतीर्थरतिञ्चैव अन्यतीर्थप्रशंसनम् । विण्मूत्रादिमलोत्सर्गं सन्तारञ्च विशेषतः” । तस्याश्च वैशाखशुक्लतृतीयायां ब्रह्मलोकात् हिमवति पतनं ततो भूमौ पतनञ्च दशहरायां यथा “वैशाखशुक्लपक्षे तु तृतीयायां जनार्दनः । यवानुत्पादयामास युगं चारब्धवान् कृतम् । ब्रह्मलोकात्त्रिपथगां पृथिव्यामवतारयत्” ब्रह्मपुराणम् । “ज्यैष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां हस्ते शैलादिरममदियं जाह्नवी मर्त्यलोकम्” ति०त० धृतवाक्यम् । एतयोरविरोधाय तथा व्यवस्था । २तज्जलाधिष्ठातृदेवीभेदे । गङ्गाया इदम्, नदीपरत्वे अवृद्धत्वात् अण् । गाङ्ग तत्सम्बन्धिनि । “गाङ्गमम्बुसितमम्बुयामुनम्” काव्यप्र० । “गाङ्गं जलं निर्मलम्” गङ्गास्तोत्रम् । “गाङ्गं वर्षेण जीर्य्यति” पद्मपु० । नदीपरत्वाभावे गङ्गाया अपत्यं ढक् । गाङ्गेय गङ्गादेव्यपत्ये भीष्मे कार्त्तिकेये च । “गङ्गाप्रवाहोक्षितदेवदारु” कुमा० “गङ्गास्रोतोऽन्तरेषु सः” रघुः । ४नदीमात्रे च । सप्तगङ्गम् सि०कौ० ।

**गङ्गाक्षेत्र** न० ६त०। "तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते" इत्युक्ते गङ्गातीरादुभयपार्श्वस्थक्रोशद्वयमितस्थाने। [(गाँगचित्र) ह्वारा०।

**गङ्गाचिल्ली** स्त्री गङ्गास्था नदीस्था चिल्ली। चिल्लभेदे

**गङ्गाज** पु० गङ्गातो जायते जन—ड। १भीष्मे २कार्त्तिकेये च तत्र भीष्मस्य गङ्गातो जन्मकथा।

"स राजा शान्तनुर्धीमान् देवराजसमद्युतिः। बभूव मृगयाशीलः सततं वनगोचरः। स मृगान् महिषांश्चैव विनिघ्नन् राजसत्तमः। गङ्गामनुचचारैकः सिद्धचारणसेविताम्। स कदाचिन्महाराज! ददर्श परमां स्त्रियम्। जाज्वल्यमानां वपुषा साक्षाच्छ्रियमिवापराम्। सर्वानवद्यां सुदतीं दिव्याभरणभूषिताम्। सूक्ष्माम्बरधरामेकां पद्मोदरसमप्रभाम्। तां दृष्ट्वा हृष्टरोमाऽभूद्विस्मितो रूपसम्पदा। पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः। सा च दृष्ट्वैव राजानं विचरन्तं महाद्युतिम्। स्नेहादागतसौहार्दा नातृप्यत विलासिनी। तामुवाच ततो राजा सान्त्वयन् श्लक्ष्णया गिरा। देवी वा दानवी वा त्वं गन्धर्वी वाथ वाप्सराः। यक्षी वा पन्नगी वापि मानुषी वा सुमध्यमे!। याचे त्वां सुरगर्भाभे! भार्या मे भव शोभने।" भा० आ० ९७अ०।

"एतत् श्रुत्वा वचो राज्ञः सस्मितं मृदु वल्गु च। वसूनां समयं स्मृत्वाऽथाभ्यागच्छदनिन्दिता। उवाच चैवं राज्ञः सा ह्लादयन्ती मनो गिरा। भविष्यामि महीपाल! महिषी ते वशानुगा। यत्तु कुर्य्यामहं राजन्! शुभं वा यदि वाऽशुभम्। न तद्वारयितव्यास्मि न वक्तव्या तथाऽप्रियम्। एवं हि वर्त्तमानेऽहं त्वयि वत्स्यामि पार्थिव!। वारिता विप्रियञ्चोक्ता त्यजेयं त्वामसंशयम्। तथेति राज्ञा सा तूक्ता तदा भरतसत्तम!। प्रहर्षमतुलं लेभे प्राप्य तं पार्थिवोत्तमम्। आसाद्य शान्तनुस्ताञ्च बुभुजे कामतो वशी। न प्रष्टव्येति मन्वानो न स तां किञ्चिदूक्तवान्। स तस्याः शीलवृत्तेन रूपौदार्य्यगुणेन च। उपचारेण च रहस्तुतोष जगतीपतिः। दिव्यरूपा हि सा देवी गङ्गा त्रिपथगामिनी। मानुषं विग्रहं कृत्वा श्रीमन्तं वरवर्णिनी। भाग्योपनतकामस्य भार्य्येवोपस्थिताऽभवत्। शान्तनोराजसिंहस्य देवराजसमद्युतेः। सम्भोगस्नेहचातुर्य्यैर्हावलास्यमनोहरैः। राजानं रमयामास तथा रेमे तयैव सः। स राजा रतिसक्तत्वादुत्तमस्त्रीगुणैर्हृतः। संवत्सरानृतून् मासान् बुबुधे न बहून् गतान्। रममाणस्तया सार्द्धं यथाकामं नरेश्वरः। अष्टावजनयत् पुत्रांस्तस्याममरसन्निभान्। जातं जातं च सा पुत्रं क्षिपत्यम्भसि भारत!। प्रीणामि च त्वामित्युक्त्वा गङ्गास्रोतस्यमज्जयत्। तच्च तस्य प्रियं राज्ञः शान्तनोरभवत्तदा। न च तां किञ्चनोवाच त्यागाद्भीतो महीपतिः। अथैनामष्टमे पुत्रे जाते प्रहसतीमिव। उवाच राजा दुःखार्त्तः परीप्सन् सुतमात्मनः। मा वधीः कासि कस्यासि किञ्च हंसि सुतानिति। पुत्रघ्नि! सुमहत् पापं संप्राप्तं ते विगर्हिते!। स्त्र्युवाच। पुत्रकाम! न ते हन्मि पुत्रं पुत्रवतां वर!। जीर्णोऽस्तु मम वासोऽयं यथा स समयः कृतः। अहं गङ्गा जह्नुसुता महर्षिगणसेविता। देवकार्य्यार्थसिद्ध्यर्थमुषिताहं त्वया सह। इमेऽष्टौ वसवो देवा महाभागा महौजसः। वशिष्ठशापदोषेण मानुषत्वमुपागताः। तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते। मद्विधा मानुषी धात्री लोके नास्तीह काचन। तेषाञ्च जननीहेतोर्मानुषत्वमुपागता। जनयित्वा वसूनष्टौ जिता लोकास्त्वयाऽक्षयाः। देवानां समयस्त्वेष वसूनां संश्रुतो मया। जातं जातं मोक्षयिष्ये जन्मतो मानुषादिति। तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः। स्वस्ति तेऽस्तु गमिष्यामि पुत्रं पाहि महाव्रतम्। एष पर्य्यायवासो मे वसूनां सन्निधौ कृतः। मत्प्रसूतं विजानीहि गङ्गादत्तमिमं सुतम्" ९८अ०।

"स कदाचिन्मृगं विद्ध्वा गङ्गामनुसरन्नदीम्। भागीरथीमल्पजलां शान्तनुर्दृष्टवान्नृपः। तां दृष्ट्वा चिन्तयामास शान्तनुः पुरुषर्षभः। स्यन्दते किं न्वियं नाद्य सरिच्छ्रेष्ठा यथा पुरा। ततो निमित्तमन्विच्छन्ददर्श स महामनाः। कुमारं रूपसम्पन्नं बृहन्तञ्चारुदर्शनम्। दिव्यमस्त्रं विकुर्वाणं यथा देवं पुरन्दरम्। कृत्स्नां गङ्गां समावृत्य शरैस्तीक्ष्णैरवस्थितम्। तां शरैरावृतां दृष्ट्वा नदीं गङ्गां तदन्तिके। अभवद्विस्मितो राजा दृष्ट्वा कर्म्मातिमानुषम्। जातमात्रं पुरा दृष्ट्वा तं पुत्रं शान्तनुस्तदा। नोपलेभे स्मृतिं धीमानभिज्ञातुं तमात्मजम्। स तु तं पितरं दृष्ट्वा मोहयामास मायया। संमोह्य तु ततः क्षिप्रं तत्रैवान्तर-

षीयत। तदङ्गुतं ततो दृष्ट्वा तत्र राजा स शान्तनुः। शङ्कमानः सुतं गङ्गामब्रवीद्दर्शयेति ह। दर्शयामास तं गङ्गा बिभ्रती रूपमुत्तमम्। गृहीत्वा दक्षिणे पाणौ तं कुमारमलङ्कृतम्। अलङ्कृतामाभरणैर्विरजोऽम्बरधारिणीम्। दृष्टपूर्वामपि स तां नाभ्यजानात् स शान्तनुः। गङ्गोवाच। यं पुत्रमष्टमं राजंस्त्वं पुरा मय्यविन्दथाः। स चायं पुरुषव्याघ्र! सर्वास्त्रविदनुत्तमः। गृहाणेमं महाराज! मया संवर्द्धितं सुतम्। आदाय पुरुषव्याघ्र! नयस्वैनं गृहं विभो!" भा॰आ॰ १००अ॰ "गङ्गाज। लङ्केश्वरारिकेतुः" भा॰वि॰ ३९अ॰। गङ्गाजेत्यत्र मुद्रितपुस्तके नदीजेति पाठः। कार्त्तिकेयस्य गङ्गातो जन्मकथा अग्निगर्भशब्दे ५५पृ॰ उक्ता। गङ्गाजातगङ्गातनयादयोऽप्यत्र।

**गङ्गाटेय** पु॰ गङ्गाया नद्यास्तटे याति या–क पृषो॰ तलोपः अलुक् स॰। (चिङ्गुड़ी) मत्स्यभेदे त्रिका॰।

**गङ्गादत्त** पु॰ गङ्गया दत्तः। भीष्मे गङ्गाजशब्दे दृश्यम्।

**गङ्गादित्य** पु॰ काशीस्थे विश्वेशाद्दक्षिणस्थिते आदित्यभेदे "गङ्गादित्योऽस्ति तत्रान्यो विश्वेशाद्दक्षिणेन वै। तस्य दर्शनमात्रेण नरः शुद्धिमियादिह। यदा गङ्गा समायाता भगीरथपुरस्कृता। तदा गङ्गां परिष्टोतुं रविस्तत्रैव संस्थितः। तस्याप्यहर्निशं गङ्गां संमुखीकृत्य भास्करः। परिष्टौति प्रसन्नात्मा गङ्गाभक्तवरप्रदः। गङ्गादित्यं समाराध्य वाराणस्यां नरोत्तमः। न जातु दुर्गतिं क्वापि लभते च न रोगभाक्" काशीख॰५१अ॰।

**गङ्गाद्वार** न॰ गङ्गाया भूम्यवतरणद्वारम्। मायापुर्यां हरिद्वारे "ततो मायापुरीं प्राप्तः दुष्प्रापां पापकारिभिः। यत्र सा वैष्णवी माया जन्तून् पाशैर्न पाशयेत्। केचिद्वदन्ति हरिद्वारं मोक्षद्वारं जगुः परे। गङ्गाद्वारञ्च केऽप्याहुः केचिन्मायापुरीं पुनः। यतोऽविनिर्गता गङ्गा ख्याता भागीरथी भुवि। यन्नामोच्चारणात् पुंसां पापं याति सहस्रधा। वैकुण्ठस्यैकसोपानं हरिद्वारं जगुर्जनाः। तत्राप्लुता नरा यान्ति तद्विष्णोः परमं पदम्" काशीख॰७अ॰।

**गङ्गाधर** पु॰ गङ्गां धरति मूर्द्ध्नि धृ–अच् ६त॰। १महादेवे अमरः। गङ्गाशब्दे तद्धारणकथा दृश्या गङ्गाभृदादयोऽप्यत्र। २समुद्रे त्रिका॰। लोलम्बराजोक्ते जीर्णातिसारनाशके चूर्णभेदे यथा "धातक्यामलकीपयोधरहरीतकीकट्फलयष्टीमधुमोजम्बाम्रफलास्थिनागरविषाह्रीबेरलोध्रेन्द्रजैः। तुल्यांशं विहितं सतण्डुलजलं गङ्गाधराख्यं महच्चूर्णं तूर्णमपाकरोति सकलं जीर्णातिसारं परम्"।

**गङ्गाधररस** पु॰ वैद्यकप्रसिद्धे औषधभेदे।

**गङ्गापत्री** स्त्री गङ्गेव शुभ्रं पत्रमस्याः ङीप्। सुगन्धिकायां वृक्षभेदे राजनि॰।

**गङ्गापुत्र** पु॰ ६त॰। गङ्गातनये १भीष्मे २कार्त्तिकेये च "लेटात् तीवरकन्यायां गङ्गापुत्र इति स्मृतः" ब्रह्मवै॰पु॰ उक्ते सङ्कीर्णजातिभेदे (सरदाफराश)।

**गङ्गायात्रा** स्त्री॰ गङ्गामुद्दिश्य यात्रा। गङ्गामरणार्थं यात्रायाम्।

**गङ्गालहरी** स्त्री ६त॰। १गङ्गायास्तरङ्गसन्ततौ २जगन्नाथपण्डितरचिते गङ्गास्तोत्रभेदे च।

**गङ्गावतार** पु॰ गङ्गाया अवतारः ब्रह्मलोकात् भूमौ पतनमत्र। गङ्गाद्वाररूपे तीर्थभेदे ६त॰। तस्या भूमौ २अवतरणे च। "भगीरथ इव दृष्टगङ्गावतारः" कद॰।

**गङ्गावाक्यावली** गङ्गामाहात्म्यादिप्रतिपादकानां वाक्यानामावली। स्मृतिनिबन्धभेदे।

**गङ्गासागर** पु॰ गङ्गया सङ्गतः सागरः शा॰ त॰। गङ्गासागरयोः सङ्गमरूपे तीर्थभेदे।

**गङ्गासुत** पु॰ ६त॰। १भीष्मे, २कार्त्तिकेये च हेम॰।

**गङ्गाह्रद** पु॰ गङ्गाया ह्रद इव। भारतप्रसिद्धे स्वस्तिपुरस्थे १कूपरूपे तीर्थभेदे। "ततः स्वस्तिपुरं गच्छेत्" इत्युपक्रमे "गङ्गाह्रदश्च तत्रैव कूपश्च भरतर्षभ!। तिस्रः कोट्यस्तु तीर्थानां तस्मिन् कूपे महीपते!। तत्र स्नात्वा नरो राजन्! स्वर्गलोकं प्रपद्यते" भा॰व॰ ८३अ॰। २कोटितीर्थस्थे तीर्थभेदे च "कोटितीर्थे स्पृशन् लभेदिह सुवर्णकम्। गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम!। तत्र स्नायीत धर्मज्ञ! ब्रह्मचारी समाहितः। राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः"। तत्राध्याये "६त॰। ३गङ्गायाह्रदे च।

**गङ्गुका** पु॰ कङ्गुक+पृषो॰। कङ्गुके धान्यभेदे (काङ्नी) सुश्रु॰। "रक्तशालियष्टिकगङ्गुकमुकुन्दकपाण्डुकपीतकप्रमोदककालकाशनकपुष्पककर्दमकशकुनाहृतसुगन्धककलमनीवारकोद्रवोद्दालकश्यामाकगोधूमवेणुयवादयः"।

**गङ्गोद्भेद** पु॰ गङ्गायाः उद्भेदः प्रथमप्रकाशो यत्र। तीर्थभेदे। "गङ्गोद्भेदं समासाद्य तर्पयेत् पितृदेवताः। वाजपेयमवाप्नोति ब्रह्मभूतो भवेत् सदा" भा॰वन॰८१अ॰

**गङ्गोज्झ** न॰ गङ्गया उज्झ्यते उज्झ–कर्मणि घञ्। गङ्गास्रोतःशून्ये जलादौ।

**गञ्जोल** पु० गोमेदकनामके मणिभेदे हारावली।

**गच्छ** पु० गम–सम्प०क्विप् मलोपे तुक् च गतं गतिं छ्यति छो–क। १वृक्षे त्रिका०। लीलावत्युक्ते श्रेढीव्यवहारे प्रवृत्तगणाहिक्रियाविरतिकारके २पदसंज्ञे स्थाने पु०। तज्ज्ञानार्थं तत्राह "श्रेढीफलादुत्तरलोचनघ्नाच्चयार्द्ध-वक्त्रान्तरवर्गयुक्तात्, मूलं मुखोनं चयखण्डयुक्तं चयोद्धृतं गच्छमुदाहरन्ति। उदाहरणम्। द्रम्मत्रयं यः प्रथमे-ऽह्नि दत्त्वा दातुं प्रवृत्तो द्विचयेन तेन। शतत्रयं षष्ट्यधिकं द्विजेभ्यो दत्तं कियद्भिर्दिवसैर्वदाशु। न्यासः आदिः०।३। चयः।२। गच्छः।०। सर्वधनं ३६०। लब्धो गच्छः१८। अथ द्विगुणोत्तरादिफलानयने करण-सूत्रं सार्द्धवृत्तम्। विषमे गच्छे व्येके गुणकः स्थाप्यः समेऽर्द्धिते वर्गः। गच्छक्षयान्त्यमन्त्याद्व्यस्तं गुणवर्गजं फलं यत्तत्। व्येकं व्येकगुणोद्धृतमादिगुणं स्याद्गुणो-त्तरे गणितम्। उदाहरणम्। पूर्वं वराटकयुगं येन द्विगुणोत्तरं प्रतिज्ञातम्। प्रत्यहमर्थिजनाय स मासे निष्कान् ददाति कति। न्यासः आदिः।२। चयो-द्विगुणः २। गच्छः।३०। लब्धावराटकाः। २१४७४८-३६४६। निष्कवराटकाभिर्भक्ताजाता निष्काः। १०४८-५७। द्रम्माः।९। पणाः।९। काकिण्यौ।२। वराटकाः।६। उदाहरणम्। आदिर्द्विकं सखे! वृद्धिः प्रत्यहं त्रिगुणोत्तरा। गच्छः सप्तदिनं यत्र गणितं तत्र किं वद। न्यासः। आदिः।२। चयोगुणः ३। गच्छः।७। लब्धं गणितम्।२१८६" शब्दकल्पद्रुमे निर्विसर्गगच्छेत्यस्य विभक्त्यन्तस्य शब्दत्व-कल्पनेनार्थकथनमतीव हास्यास्पदम् गच्छेत्यस्य वि-भक्त्यन्ततया पदत्वेन शब्दत्वाभावात् अन्यथा नाना-विभक्तियोगेन नानाशब्दार्थकथनापत्तेः।

**गज** मदे स्वने च भ्वा० पर० अक० सेट्। गजति अगाजीत् अगजीत्। जगाज। गजः।

**गज** स्वने भ्वा० इदित् पर० अक० सेट्। गञ्जति अगञ्जीत्। जगञ्ज। गञ्ज्यते। गञ्जा। [जवत।

**गज** स्वने चुरा० उभ० अक० सेट्। गजयति ते अजग-

**गज** पुंस्त्री० गज–मदे अच्। १हस्तिनि "नगजा न गजा दयिता दयिताः" भट्टिः। इभशब्दे विवृतिः। स्त्रियां जातित्वात् ङीष्। २अष्टसंख्यायाम् गजानामैरावता-दीनामष्टत्वात् तथात्वम्। "कृत्वा त्रिघ्नं गजैर्हृत्वा" ज्यो० त० "गजभुजङ्गशेषम्" तन्त्रसा०। "अरत्नीनां शतान्यष्टा-वेकषष्ट्यन्वितानि च। गजप्रमाणमाख्यातं मुनिभिर्मान-वेदिभिः" शब्दार्थचि० उक्ते ३मानभेदे। "साधारणनरा-ङ्गुल्या त्रिंशदङ्गुलको गजः" इत्युक्ते ४मानभेदे। ५मान-मात्रे ६वास्तुमानभेदे च मेदि०। स च ज्यो० त० उक्तः यथा "प्रस्तारदैर्घ्यमानं तु स्वहस्तेन तथा नरैः। कृत्वा त्रिघ्नं गजैर्हृत्वा वास्तुमाननिरूपणम्। ध्वजो धूमश्च सिंहश्च श्वा वृषः खर एव च। गजः काकपदं चैव मानान्यष्टौ च वास्तुनः" ज्यो० त०। "पुष्टिर्गजे काकपदे विनाशः" तत्-फलम् ७औषधपाकार्थे गर्त्तभेदे वैद्यकम् गजपुटशब्दे दृश्यम्। गजानां समूहः तल्। गजता तत्समूहे स्त्री। ततः ऊर्द्ध्वमाने दघ्नच्, गजदघ्न, द्वयसच्, गजद्वयस, गज-तुल्योर्द्ध्वपरिमाणे त्रि०। स्त्रियां ङीप्। "द्वितीयश्च तृतीयश्च ऊर्द्ध्वमाने मतो मम" व्या० का० उक्तेः ऊर्द्ध्वमान एव तयोः प्रयोगः। परिमाणमात्रे तु मात्रच्। गजमात्र इत्येव त्रि०। [हस्तिकन्दे इत्ये राजनि

**गजकन्द** पु० गजो गजदन्त इव कन्दोऽस्य। (हातिकांदा)

**गजकर्ण** पु० गजस्य कर्ण इव कर्णोऽस्य। १यक्षभेदे "कुसुम्भः पिशाचश्च गजकर्णो विशालकः" भा० स० १० अ०। यक्ष-कथने। २औषधिभेदे स्त्री ङीप्। "गजकर्णी तु ति-क्तोष्णा तथा वातकफान् जयेत्। शीतज्वरहरा स्वादुः पाके तस्यास्तु कन्दकः। पाण्डुरोगकृमिप्लीहा-गुल्मानाहोदरापहः। पहण्यर्शोविकारघ्नो वनसूरण-कन्दवत्" भावप्र०।

**गजकूर्माशिन्** पु० गजश्च कूर्मश्च तौ अश्नाति अश–भो-जने णिनि। १गरुड़े शब्दरत्ना० गजकच्छपभोजनात्वा-दयोऽप्यत्र। तौ च विभावसुप्रतीकमुनी अन्योन्यशापाद् गजकूर्मतां प्राप्तौ गरुड़ेन भक्षितौ यथाह भा० आ० २९ अ०

"आसीद्विभावसुर्नाम महर्षिः कोपनो भृशम्। भ्राता तस्यानुजश्चासीत् सुप्रतीको महातपाः। स नेच्छति धनं भ्रात्रा सहैकस्थं महामुनिः। विभागं कीर्त्तय-त्येव सुप्रतीको हि नित्यशः। अथाब्रवीच्च तं भ्राता सुप्रतीकं विभावसुः। विभागं बहुशो मोहात् कर्त्तु-मिच्छन्ति नित्यशः। ततो विभक्तास्त्वन्योऽन्यं विरु-ध्यन्तेऽर्थमोहिताः। ततः स्वार्थपरान् मूढ़ान् पृथ-ग्भूतान् स्वकैर्धनैः। विदित्वा भेदयन्त्येतानमित्रा मित्र-रूपिणः। विदित्वा चापरे भिन्नानन्तरेषु पतन्त्यथ। भिन्नानामतुलो नाशः क्षिप्रमेव प्रवर्त्तते। तस्माद्विभागं

भ्रातॄणां न प्रशंसन्ति साधवः। गुरुशास्त्रेऽनिबद्धाना-मन्योऽन्येनाभिशङ्किनाम्। नियन्तुं नहि शक्यस्त्वं भेदतो धनमिच्छसि। यस्मात्तस्मात् सुप्रतीक! हस्तित्वं समवाप्स्यसि। शप्तस्त्वेवं सुप्रतीको विभावसुमथाब्रवीत्। त्वमप्यन्तर्जलचरः कच्छपः सम्भविष्यसि। एवमन्योऽन्य-शापात्तौ सुप्रतीकविभावसू। गजकच्छपतां प्राप्तावर्थार्थं मूढचेतसौ। रोषदोषानुषङ्गेण तिर्य्यग्योनिगतावुभौ। परस्परद्वेषरतौ प्रमाणबलदर्पितौ। सरस्यस्मिन्महा-कायौ पूर्ववैरानुसारिणौ। तयोरन्यतरः श्रीमान् समु-पैति महागजः। यस्य बृंहितशब्देन कूर्म्मोऽप्यन्त-र्जलेशयः। उत्थितोऽसौ महाकायः कृत्स्नं विक्षो-भयन् सरः। यं दृष्ट्वा वेष्टितकरः पतत्येष गजो जलम्। दन्तहस्ताग्रलाङ्गूलपादवेगेन वीर्य्यवान्। विक्षोभयंस्ततो नागः सरो बहुझषाकुलम्। कूर्म्मोऽप्य-भ्युद्यतशिरा युद्धायाभ्येति वीर्य्यवान्। षडुच्छ्रितो योजनानि गजस्तद्द्विगुणायतः। कूर्म्मस्त्रियोजनोत्-सेधो दशयोजनमण्डलः। तावुभौ युद्धसम्मत्तौ पर-स्परवधैषिणौ। उपयुज्याशु कर्म्मेदं साधयेहितमात्मनः। महाभ्रघनसङ्काशौ तौ भुक्त्वाऽमृतमानय"।

इत्येवं पित्रानुशिष्टो गरुड़स्तावभक्षयत् यथाह तत्रैव ३०अ०। "भक्षयामास गरुड़स्तावुभौ गजकच्छपौ"।

**गजकृष्णा** स्त्री गज इव कृष्णा। गजपिप्पल्याम् भावप्र० गजपिप्पलीशब्दे दृश्यम्।

**गजचिर्भ(र्भि)टा** स्त्री गजप्रिया चिर्भ(र्भि)टा शा०त०। इन्द्र-वारुण्याम् (राखालशशा) रत्नमा०।

**गजचिर्भिट** पु० गजचिर्भिटाया इव आकारो ऽस्त्यस्य अच्। गोडुम्बायाम् त्रिका०। [राजनि०।

**गजचिर्भिटी** स्त्री गजप्रिया चिर्भिटी। १माहेन्द्रवारुण्याम्

**गजच्छाया** स्त्री "यदेन्दुः पितृ(१०)दैवत्ये सूर्य्यश्चैव करे(१३)स्थितः याम्या १४तिथिर्भवेत् सा हि गजच्छायेति कीर्त्तिता"१इत्युक्ते, "कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः। यदा तदा गजच्छाया"२इत्युक्ते च योगभेदे"द्विगुणा ह्यात्मनश्छाया दर्शे स्यादापराह्णिकी। गजच्छायेति सा प्रोक्ता इत्युक्ते ३दर्शापराह्णे च। "सैंहि यो यदा भानुं ग्रसते पर्व-सन्धिषु। गजच्छाया तु सा प्रोक्ता श्राद्धं तत्र प्रकल्प-येत्" वराहोक्ते ४सूर्य्यग्रहणकाले च कुञ्जरच्छायशब्दे २०६८पृ०वि०। [च्छायां गजोपरिस्थढक्कायाम् हारा०।

**गजढक्का** स्त्री गजोपरिस्था ढक्का। हस्तिमदसूचनार्थकृतश-

**गजता** स्त्री गजानां समूहः तल्। हस्तिसमूहे अमरः।

**गजदन्त** पु० गजस्य दन्ताविव दन्तावस्य। १गणेशे। २हस्ति-दन्ततुल्यदन्तवति त्रि०। ६त०। ३करिदन्ते पु०। गणेशस्य तथात्वं च गजाननत्वेन तत्तुल्यदन्तत्वात्। गजदन्ताकृति-त्वात् भित्तौ द्रव्यादिस्थापनार्थं गजदन्तद्वयाकारे ४नाग-दन्ते (दाण्डा) ५दन्तोपरिजातदन्ते तस्याकारेण गज-दन्ततुल्यत्वात्तथात्वम्। [याम् राजनि०।

**गजदन्तफला** स्त्री गजदन्त इव फलमस्याः। १डङ्गरीलता-

**गजदान** न० ६त०। १हस्तिमदे। तस्य प्रस्रवणस्थानञ्च "करात् कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदस्रुतिः" पाल-काव्ये उक्तम्। ६त०। २हस्तिनो विसर्गे च। "मां पुच्छे करिणं करे इत्युक्तेः तस्य करावच्छेदेन ग्राहकेण स्पर्शनेन तस्य दानं विहितम्।

**गजनासा** स्त्री ६त०। गजस्य शुण्डे। सा इव ऊरुर्यस्याः गजनासोरु(रू) करिशुण्डतुल्यनाकायां स्त्रियाम्। उप-मानपूर्वकत्वात् वा ऊङ्। "धर्मस्तु गजनासोरु! सद्भि-राचरितः पुरा" रामा० ७,३०,३०।

**गजपति** पु० ६त०। १श्रेष्ठगजे २अत्युच्चगजे च "गजपति द्वयसीरपि हैमनः" माघः। [स्थालीवृक्षे भावप्र०।

**गजपादप** पु० गजप्रियः पादपः शा०त०। (खुलकुडि) ख्याते

**गजपिप्पली** स्त्री गजोपपदा पिप्पली शाक०त०। स्वनाम-ख्यातायां पिप्पल्याम्। "चविकायाः फलं प्राज्ञैः कथिता गजपिप्पली। गजकृष्णा कटुर्वातश्लेष्मनुत् वह्निव-र्द्धिनी। उष्णा निहन्त्यतीसारश्वासकण्ठामयक्रमीन्" भावप्र० हरतीति शेषः। "मूर्वा निर्दहनी पाठा त्रपूषणं गजपिप्पली" सुश्रुतः।

**गजपुट** पु० "हस्तप्रमाणो गर्त्तो यः पुटः स तु गजाह्वयः" इत्युक्ते औषधपाकार्थे हस्तमित खाते गर्त्तभेदे वैद्यकम्।

**गजपुर** न० गजस्य हस्तिनामनृपस्य पुरम्। "युधिष्ठिर राजधान्याम् (दिल्ली) "स निर्ययौ गजपुराद्याजकैः परिवारितः" भा०आनु० १६७ अ०।

**गजपुष्पी** स्त्री गजस्तन्द इव गन्धयुतं पुष्पमस्याः। नाग-पुष्पायां लतायां शब्दार्थचि०। "गजपुष्पीमिमां फुल्लामुत्-पाट्य शुभलक्षणाम्" रामा० कि० १।१२।३९।

**गजप्रिया** स्त्री ६त०। शल्लकीद्रुमे हेमच०।

**गजबन्धनी** स्त्री गजा बध्यन्तेऽत्र ल्युट् ङीप्। हस्तिबन्ध-नशालायां (हातिशाला) अमरः। [शालायां जटा०।

**गजबन्धिनी** स्त्री गजस्य बन्धोऽस्त्यत्र इनि ङीप्। गज-

**गजभक्षक** पु॰ गजो भक्षकोऽस्य। अश्वत्थवृक्षे राजनि॰।

**गजभक्ष्या** स्त्री गजेन भक्ष्या। शल्लकीवृक्षे अमरः। गजेन भक्ष्यते कर्म्मणि घञ्। गजभक्षा तत्रार्थे स्त्री शब्दरत्ना॰।

**गजमण्डली** स्त्री गजानां सन्निवेशनभेदेन मण्डली परिवेशः वेष्टनाकारपरिधिः। गजानां सन्निवेशनविशेषेण परिधिरूपे वेष्टने। स्वार्थे क ह्रस्वः। तत्रार्थे। "चन्द्राकृतीनि गजमण्डलिकाभिरुच्चैः" माघः। ६त॰। २गजसमूहे च।

**गजमाचल** पुंस्त्री मच–कल्कने घञ् माचः गजस्य माचं गर्वं लुनाति लू–बा॰ ड। १सिंहे हारा॰ स्त्रियां जातित्वात् ङीष्।

**गजमुक्ता** स्त्री गजे तत्कुम्भे जाता मुक्ता। हस्तिकुम्भजाते मुक्ताभेदे "मुक्ताफलैः केशरिणां किराता" कुमा॰व्या॰ मल्लिनाथधृतवाक्यम् "करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि। मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि" मुक्तैव स्वार्थे क ठञ्। गजमौक्तिकमप्यत्र। "गजमौक्तिकावलियुतेन वक्षसा" किरा॰ मल्लिनाथतद्व्या॰ करिणां मुक्तायोनित्वे प्रमाणमाहागस्त्यः "जीमूतकरिमत्स्याहिवंशशङ्खवराहजाः। शुक्त्युद्भवाश्च विज्ञेया अष्टौ मौक्तिकयोनयः"।

**गजमुख** पु॰ गजस्य मुखं मुखमस्य। १गणेशे यथा च तस्य तन्मुखमुखता तथा इभाननशब्दे ९८१ पृ॰ उक्ता। "प्रमथाधिपो गजमुखः" हरि॰स॰५८अ॰। गजवदनादयोऽप्यत्र।

**गजमोटन** पुंस्त्री॰ गजं मोटयति चु॰ मुट–चोदे ल्यु। १सिंहे शब्दमा॰। स्त्रियां जातित्वात् ङीष्।

**गजवल्लभा** स्त्री ६त॰। १बहुवीजायां गिरिकदल्यां, २शल्लक्याञ्च राजनि॰।

**गजवीथी** स्त्री उत्तरमार्गस्थे "रोहिण्यार्द्रामृगशिरो गजवीथ्यभिधीयते" इत्युक्ते १नक्षत्रत्रये। खगोलशब्दे २४५१ पृ॰ विवृतिः। ६त॰। २गजानामावलौ च।

**गजशिक्षा** स्त्री गजानां शिक्षा। गजचालनाभ्यासे "तथैव गजशिक्षायां नीतिशास्त्रेषु पारगः" भा॰आ॰१०९ अ॰।

**गजशिरस्** पु॰ गजस्य शिर इव शिरोऽस्य। १दैत्यभेदे "गजोदरो गजशिरा गजस्कन्धो गजेक्षणः" हरिवं॰२४० अ॰। गजस्य तन्नामासुरस्य वा शिरः शिरोऽस्य। २गणेशे च। इभाननशब्दे ९८१ पृ॰ गजाननशब्दे च दृश्यम्।

**गजसाह्वय** पु॰ गजेन हस्तिनामकनृपेण सहित आह्वयो यस्य। हस्तिनापुरे (दिल्ली)। "निर्य्ययुर्गजसाह्वयात्" भा॰ व॰ १अ॰। गजाह्वयमप्यत्र न॰।

**गजस्कन्ध** पु॰ गजस्य स्कन्ध इव स्कन्धोऽस्य। दैत्यभेदे गजशिरःशब्दे उदा॰ दृश्यम्। गजवत् संश्लिष्टस्कन्धे उत्तमपुरुषलक्षणयुते च।

**गजाख्य** पु॰गज गजकर्णमाख्याति पत्रेण आ+ख्या–क। १चक्रमर्दवृक्षे राजनि॰। तस्य पत्रस्य गजकर्णतुल्याकारत्वात् तथात्वम्। २गजतुल्यनामनि हस्तिनापुरे न॰

**गजाग्रणी** पु॰ ६त॰। ऐरावते हस्तिनि शब्दर॰।

**गजाजीव** पु॰ गजैस्तत्पालनादिभिराजीव्यते जीव–घञ्। १हस्तिपालके हेमच॰।

**गजाण्ड** न॰गजस्याण्डमिव मूलं यस्य।१पिण्डमूले राजनि॰

**गजादिनामन्(मा)** स्त्री गज इति शब्द आदौ यस्य तादृशं नामास्य वा डाप्। गजपिप्पल्याम् "कालाकृताशिग्रु पुनर्नवार्कगजादिनामाकरहाटकुष्ठैः" सुश्रुतः।

**गजानन** पु॰ गजस्याननमाननं यस्य। १गणेशे अमरः। इभाननशब्दे ९८१पृ॰दृश्यम्। स्कन्दपु॰गणेशख॰११अ॰ तु अन्यथा तस्य गजाननता वर्णिता तत्र गणेशस्य मस्तकशून्यतयोत्पत्तौ पुरा शिवच्छिन्नेन कैलासे स्थापितेन गजासुरमस्तकेन मुखयोजनं तेन कृतमित्युक्तं यथा "गुरुरुवाच। अवतारो यदि इतः साधुत्राणाय भो विभो!। प्रकाशयाशु वदनं सर्वेषां शोकनाशनम्। नयस्व सर्वदेवानामानन्दं हृदयं प्रभो!। शिव उवाच। प्रत्युवाच गुरुं पुत्रः पार्वत्या हीनमस्तकः। शिशुरुवाच। महेशास्त्रेन राज्ञा ते प्रणतौ चरणौ यदा। तदाशीर्या त्वया दत्ता तस्मै राज्ञे गुरो! मुदा। गजयोनौ जनिर्मुक्तिः शिवहस्तादुदीरिता। तत्सर्वमभवत् तस्य विद्यते चास्य मस्तकः। पूज्यमानं शिवेनास्ते सुखण्डादखण्डः सुशोभनः। अवतारकरोऽस्तौ मे गुरोऽस्ति भविता ध्रुवम्। शिवउवाच। आश्चर्यपूर्णहृदयो गुरुरूचे पुनः शिशुम्। गुरुरुवाच। भगवन्! विश्वरूपोऽसि त्रिकालज्ञोऽखिलेश्वरः। मया यदुदितं तस्मै त्वया ज्ञातं यतः प्रभो!। कण्ठशीर्षस्वरूपन्तं परिच्छेत्तुं न च क्षमः। स्तुत्वैवं ब्रह्मणः पुत्रो नारदस्तत्र चाब्रवीत्। नारद उवाच।

"एवमेवावतीर्णोऽसि हीनमूर्द्धा कथं प्रभो!। अथवा बालरूपस्य छिन्नं केन तच्छिरः। एतन्मे संशयं छिन्धि कृपया परमेश्वर!। शिव उवाच। निपीय नारदीं वाणीमुवाच शिशुरुत्सुकैः। शिशुरुवाच। सिन्दूरः कोऽपि

दैत्यो मे वायुरूपवरोऽच्छिनत् । अष्टमे मासि सम्पूर्णं प्रविश्योमोदरं शिरः । तमिदानीं हनिष्येऽहं गजास्यं साम्प्रतं द्विज ! । शिव उवाच । श्रुत्वैयं नारदः प्राह शिशुरूपिणमीश्वरम् । नारद उवाच । अकिञ्चिज्ज्ञा वयं देव ! योजनेऽस्य मुखस्य ते । त्वमेव च स्वभावेन मुखमेतद्वियोजय । शिव उवाच । वदतीत्थं मुनि यावत्तावत् स ददृशेऽखिलैः । सर्वावयवसम्पूर्णो गजाननउमासुतः । कीरीटकुण्डलधरो युगबाहुः सुलोचनः । वामदक्षिणभागे च सिद्धिबुद्धिविराजितः । दृष्ट्वा विनायकं स्कन्द ! तथाभूतं निजेच्छया । हर्षेणोत्फुल्लनयना देवाः सर्वे तदाऽब्रुवन् । गजानन इति ख्यातो भवितायं जगत्त्रये" "एवं भाद्रचतुर्थ्यां स अवतीर्णो गजाननः" इति च तत्राध्याये । ६त०। हस्तिमुखे न०।

**गजारि** पु०६त०। १सिंहे । २वृक्षभेदे हड्डचन्द्रः। ३शिवे च गजासुरद्वेषिशब्दे दृश्यम् । [ (भाङ्गत) अमरः

**गजारोह** पु० गजमारोहति आ+रुह–अच् । १हस्तिपाले

**गजा(द)शन** पु० गजैरश्य(द्य)ते कर्मणि ल्युट् । १अश्वत्थद्रुमे । २शल्लक्यां स्त्री ङीप् । ३गजभक्ष्यायाम् (भाग शब्दच० ४पद्ममूले न० रत्ना० ।

**गजासुर** पु० गजाकारोऽसुरः । असुरभेदे ।

तस्योत्पत्तिकथा च स्कन्दपु० गणेशख० १०अ० यथा "साम्प्रतं कथयिष्यामि गजासुरकथानकम् । पुरा युगे स राजासीन्नीतिज्ञो लोकपालकः । लक्ष्मीवान् रूपसम्पन्नो वेदशास्त्रार्थकोविदः । देवद्विजार्चनरत आत्मविद्याविशारदः" । "महेश इति नाम्ना च विख्यातो भुवनत्रये" इत्युपक्रम्य "उत्पत्तिमाप्स्यते राजन् त्वया योनौ गजस्य हेति" गुरुवाक्यमुपन्यस्य "कदाचिद्गच्छता तेन वीक्षितो नारदः पथि । अवमन्य ययौ तं तु सप्तोऽसौ मुनिना रुषा । इभास्यो भवितासि त्वमौद्धत्यादन्यजन्मनि । गजासुर इति ख्यातिं यास्यसि त्वं नराधिप ! । कैलासे प्राप्स्यसे स्थानमन्ते तस्यैव जन्मनि । अवमन्य यतो यातो मामिदानीं नराधम ! । इत्युक्त्वान्तर्हितो भूत्वा स स्वयं नारदो मुनिः । गुरुनारदवाक्याभ्यां महेशो विस्मयं गतः । गते बहुतिथे काले राजा पञ्चत्वमाप सः । पश्य लोकानने स्कन्द ! करिण्यां जनिमाप सः। इभास्यो बलवान् वीरः सर्वत्रासौ नराकृतिः" ।

**गजासुरद्वेषिन्** पु० गजासुरं द्वेष्टि द्विष–णिनि ६त० । महादेवे कृत्तिवासःशब्दे विवृतिः ।

स्कन्दपु०गणेशख० १०अ० तु तं हत्वा तस्य स्वभक्तिमाकर्ण्य तच्चर्मधारणं तच्छिरसः कैलासे स्थापनञ्च वर्णितं यथा "जघान तं त्रिशूलेन स्कन्द! कोपात् गजासुरम्" इत्युपक्रम्य "तव हस्तादभून्मृत्युरन्ते ते दर्शनं यतः । उक्तञ्च गुरुणा पूर्वं भविष्यं नारदेन च । कैलासन्तु गते तस्मिन् गृहाणास्य चर्म चाननम् । चर्मणः परिधानञ्च मुखस्यापि प्रपूजनम् । भक्तवात्सल्यभावेन क्रियतेऽद्यापि षण्मुख !" । अस्यैव शिरसा विमस्तकस्य विनायकस्य गजाननतेति गजाननशब्दे दर्शितम् ।

**गजास्य** पु० गजस्यास्यमास्यमस्य । १गणेशे हेम० । ६त० । २हस्तिवदने न० । गजस्यास्यमिवास्यं यस्य । ३गजासुरे पु० गजासुरशब्दे दृश्यम् ।

**गजाह्व** न०गजसंहिता आह्वा यस्य शाक० त० । १हस्तिनापुरे मेदि० । गजाह्वयमयत । "युधिष्ठिरस्यानुमते वनवासात् गजाह्वयम्" भा० व० ६अ० । २तत्पुरयुक्ते देशभेदे तद्वासिषु तन्नृपेषु च पु० बहुव०, स च देशः बृहत्सं० १४अ० कूर्मविभागे मध्यस्थतयोक्तः । "गजाह्वयाश्चेति मध्यमिदम्" । [मेदि०। २हस्तिनापुर्यां च ।

**गजाह्वा** स्त्री गजोपपदा आह्वा अस्या । १गजपिप्पल्याम्

**गजेन्द्र** पु० गज इन्द्र इव व्याघ्रा०उपमितस०, ६त०वा । १श्रेष्ठगजे । २गजयूथपतौ च । "नेत्रश्रियं विकसतो विदधुर्गजेन्द्राः" माघः । अगस्त्यशापेन गजेन्द्रतां प्राप्ते इन्द्रद्युम्ननृपे च तस्य तथाशापादिकथा भाग०८स्क०४अ०उक्ता यथा

"स वै पूर्वमभूद्राजा पाण्ड्योद्रविडसत्तमः । इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः । स एकदाऽऽराधनकाल आत्मवान् गृहीतमौनव्रत ईश्वरं हरिम् । जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रमः । यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः । तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह ! तस्मादिमं शापमदादसाधुरयं दुरात्माऽकृतबुद्धिरद्य । विप्रावमन्ता विशतां तमिस्रं यथा गजस्तब्धमतिः स एव । श्रीशुक उवाच । एवं शप्त्वा गतोऽगस्त्यो भगवान्नृप ! सानुगः । इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् । आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशिनीम् । हर्यर्चनानुभावेन यद्गजत्वेऽप्यनुस्मृतिः" ।

ततः तच्छापेन गजेन्द्रतां प्राप्तस्य कदाचित् त्रिकूटपर्वते वरुणोद्यानस्थसरसि निमग्नस्य ग्राहेण पहस्ये

पूर्वजन्मार्ज्जितहरिसेवाराधनावशात् हरिस्मरणमेव सदुपायतया संचिन्त्य तस्य स्तवने कृते हरिणा तस्य तस्मो विमोक्षणं कृतं तेनैव च दिव्यगतिलाभश्च तस्य जात इत्येषा कथा तत्रैव २० अ० स्थिता दिङ्मात्रं ततः उदाह्रियते ।

"इयो करेणु करभांच दुर्मदो नाचष्ट कञ्जं कृपणोऽजमायया । तं तत्र कश्चिन्नृप! दैवचोदितो ग्राहो बलीयांश्चरणे रुषाऽग्रहीत् । यदृच्छयैवं व्यसनं गतो गजो यथाबलं सोऽतिबलो विचक्रमे । यथातुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा । विचक्रुशुर्दीनधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन् । नियुध्यतोरेवमिभेन्द्रनक्रयोर्विकर्षतोरन्तरतो बहिर्मिथः । समाः सहस्रं व्यगमन्महीपते ! सप्राणयोश्चित्रममंसतामराः । ततो गजेन्द्रस्य मनोबलौजसां कालेन दीर्घेण महानभूद्व्ययः । विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत् सकलं जलौकसः । इत्थं गजेन्द्रः स यदाप सङ्कटं प्राणस्य देही विवशो यदृच्छया । अपारयन्नात्मविमोक्षणे चिरं दध्याविमां बुद्धिमथाभ्यपद्यत । न मामिमे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवन्ति मोचितुम् । ग्राहेण पाशेन विधातुरावृतोऽप्यहं च तं यामि परं परायणम् । यः कश्चनेशोबलिनोऽन्तकोरगात् प्रचण्डवेगादभिधावतो भृशम् । भीतं प्रपन्नं परिपाति, यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि"। भा० ८।२ अ० ।

ततः तत्कृतस्तुतिसुपवर्ण्य ३अ० शेषे, हरिणा ततो गजेन्द्रस्य मोक्षणमुक्तं यथा

एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः । नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत् । तं तद्वदार्त्तमुपलभ्य जगन्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः। छन्दोमयेन गरुडेन समुह्यमानश्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः । सोऽन्तःसरस्युरुबलेन गृहीत आर्त्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् । उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रान्नारायणाखिलगुरो ! भगवन्नमस्ते । तं वीक्ष्य पीडितमजः सहसाऽवतीर्य स ग्राहमाशु सरसः कृपयोज्जहार । ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं सम्पश्यतां हरिरमूमुचदुच्छ्रियाणाम्" ।

गजेन्द्रमोक्षणरूपस्य हरिचरितस्य श्रवणे फलमाह

"एतन्महाराज ! तवेरितो मया कृष्णानुभावो गजराजमोक्षणम् । स्वर्ग्यं यशस्यं कलिकल्मषापहं दुःस्वप्ननाशं कुरुवर्य ! शृण्वताम् । यथानुकीर्त्तयन्त्येतच्छ्रेयस्कामाद्द्विजातयः । शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये" ।

तद्गजेन्द्रकृतस्तवमाहात्म्यमपि तत्रैवोक्तं यथा "ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुध्य निशात्यये । तेषां प्राणात्यये चाहं ददामि विमलां मतिम्" तं प्रति हरेर्वरदानम् ।

**गजेष्टा** स्त्री गजानामिष्टा । विदार्य्याम् भूमिकुष्माण्डे राजनि० ।

**गजोदर** पु० गजस्योदरमिवोदरमस्य । दैत्यभेदे हरिवं०। गजाशिरःशब्दे दृश्यम् । [राजनि० ।

**गजोषणा** स्त्री गजोपपदा उषणा । गजपिप्पल्याम् ।

**गञ्ज** पु० गजि—घञ् । १अवज्ञायाम् हेमच० । आधारे घञ् । २गोष्ठागारे हारा०, ३भाण्डागारे ४खनौ मेदि० । ५पामरगृहे, ६हट्टस्थाने, ७मद्यभाण्डे, शब्दरत्ना० दर्श्दिरागृहे स्त्री टाप् अमरः ।

**गञ्जन** त्रि० गजि—खने णिच्—ल्यु । तिरस्कारके "नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयम्" सा० द० । "युष्मत्कृते खञ्जनगञ्जनाक्षि ! शिरोमदीयं यदि याति यातु" उद्भटः । "अलिकुलगञ्जनमञ्जनकम्"गीतगो० ।

**गञ्जिका** स्त्री गञ्ज एव स्वार्थे क । मदिरागृहे शब्दर० ।

**गड़** सेके भ्वा० पर० सक० सेट् । गडति अगाडीत्-अगडीत् । जगाड घटा० । गडयति-ते ।

**गड़** वदनैकदेशे (गण्डस्थापारे) इदित् भ्वा० पर० अक०सेट् । गण्डति अगण्डीत् । जगण्डः गण्डः । गण्डूषः ।

**गड़** पु० गड—सेके अच् । (गडुइ) गडकीनामके मत्स्यभेदे । "गडकी मधुरा तिक्ता तुवरा वातपित्तहृत् । कफघ्नी रुचिकृद्बल्या दीपनी बलवीर्य्यकृत्" भावप्र० । तस्य पाकविशेषे गुणा उक्ता वैद्यके "पुच्छशीर्षेण रहिताः कासमर्द्दविमर्द्दिताः । हिङ्गुतैले च संतप्ता गडमत्स्यस्य खण्डकाः । गडो वातहरो बल्यो हृद्यः पथ्योऽग्निवर्द्धनः । सुरुच्यः शुक्रदोऽत्यर्थं किञ्चित् कफकरः सरः" २अन्तराये मेदि० । ३परिखायां ४व्यवधाने शब्दर० । ५देशभेदे शाम्बरे राजनि० । गड—संज्ञायां कन् । गडक (गडुइ) मत्स्यभेदे अमरः ।

**गड़देशज** न० गडदेशे शाम्बरदेशे जायते जन-ड । शाम्बरदेशजातलवणे राजनि० ।

**गड़यन्त** पु॰ षटा॰ गड–णिच्–झच् ह्रस्वः। १मेघे सि॰कौ॰

**गड़लवण** न॰ गडदेशजं लवणम्। शाम्बरदेशजे लवणभेदे राजनि॰। "गड़ोत्थं लघुवातघ्नमत्युष्णं भेदि पित्तलम्। तीक्ष्णं व्यवायि सूक्ष्मञ्चाभिष्यन्दि कटुपाकि च" भावप्र॰

**गड़ि** पु॰ गड–इन्। १वत्सतरे राजनि॰। २भारवहनादि-स्वकार्य्ये अलसे गवादौ (गड़िया) "गुणानामेव दौरा-त्म्याद्धुरि धुर्य्यो नियुज्यते। असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गडिः" काव्यप्र॰।

**गडु** पु॰ गड–उन्। १गलगण्डे घाटामस्तकयोर्मध्ये मांस-वृद्धिकारके रोगभेदे भरतः। २कुब्जे मेदि॰। ३शल्यास्त्रे शब्दर॰। ४किञ्चुलके (केंचो) त्रिका॰। गल-गण्डवन्निरर्थके ५पदार्थे च "काव्यान्तर्गडुभूतत्वात् नाल-ङ्कारः प्रहेलिका" सा॰ द॰। "क्रिमन्तर्गडुला" सर्वद॰ स॰। अस्य कण्ठशब्देन समासे आहिता॰ वा पूर्वनि॰। गडुकण्ठः, कण्ठगडुः।

**गडुक** पु॰ गडुर्गलगण्ड इव कायति मध्ये कै–क। (गाडु) ख्याते भृङ्गारे पात्रभेदे तन्मध्यस्य गलगण्डाकृतित्वात् तथात्वम्। "घण्टागडुककुम्भादिस्नानोपस्करभाजनैः" काशी॰ ३अ॰। २तदाकृतौ ऋषिभेदे पु॰ तस्य गोत्रापत्यम् इञ्। गाडुकि तदपत्ये पुंस्त्री अन्यशब्देन तस्य द्वन्द्वे अद्वन्द्वे च बहुषु इञोलुक्। गडुकास्तद्गोत्रापत्येषु।

**गडुर(ल)** त्रि॰ गडुः कुब्जरोगोऽस्त्यस्य सिध्मा॰ लच् बा॰ र वा। १कुब्जे शब्दर॰। स्त्रियां गौरा॰ ङीष्। गल-गण्डवदाकृतिमत्त्वात् तस्य तथात्वम्। ततः ब्राह्मणा॰ भावे ष्यञ्। गाडुल्य तद्भावे न॰ कडा॰ कर्म्मधा॰ अस्य पूर्वनि॰। खञ्जगडुलः गडुलखञ्जः।

**गडेर** पुंस्त्री॰ गड–एरक्। १मेषे (गाडोल)। त्रिका॰। जातित्वात् स्त्रियां ङीष्।

**गड़ोत्थ** न॰ गड़ात् देशभेदात् उत्तिष्ठति उद्+स्था–क। शाम्बरदेशजे लवणभेदे राजनि॰। [२पांसे हेम॰।

**गडोल** पु॰ गड–ओलच्। १गुड़के (गुली) ग्रासभेदे उज्ज्व॰।

**गड्डर(ल)** पु॰ गड–बा॰डर डल वा तस्य नेत्त्वम्। १मेषे।

**गड्डरि(लि)का** स्त्री गड्डरं(लं) मेषमनुधावति ठन्। मेषानुगन्त्र्यां १मेषपङ्क्तौ। तस्मादृश्यादविच्छिन्नगतौ अज्ञातप्रवाहागमभूते २धारावाहिनि च शब्दचि॰।

**गड्डुक** पु॰ गडुक+पृषो॰। १भृङ्गारे जलपात्रभेदे शब्दर॰ पृषो॰ दीर्घमध्योऽपि तत्रार्थे।

**गण** संख्याने अद॰ चु॰ उभ॰ सक॰ सेट्। गणयति ते अ-जीगणत् त अजगणत् त। गणयाम्–बभूव आस-चकार चक्रे। गणयितव्यः। गण्यः। गणयिता गणयन्। गणितम् गणनम् गणना। गणयित्वा। विग-णय्य। गणः, "गणयति विहितकृतार्थविकल्पम्" गीतगो॰ "तां भक्तिरेवागणयत् पुरस्तात्" रघुः। "पदानि गणयन् गच्छ स्वानि नैषध! कानिचित्" भा॰व॰२६१८। नलं प्रति कर्कोटकनागोक्तिः "यदि त्रिलोकी गणनापरा स्यात् तस्याः समाप्तिर्यदि नायुषः स्यात्। पारेपरार्द्धं ग-णितं यदि स्यात् गणेयनिःशेषगुणोऽपि स स्यात्" नैष॰। "लीलाकमलपत्राणि गणयामास पार्वती" कुमा॰। "अजी-गणद्दाशरथं न वाक्यम्" भट्टिः। "वाणीं काणभुजीमजी-गणदवाशासीच्च वैयासिकीम्" माघटी॰ मल्लिनाथः "इन्द्र-स्तिस्रो भगवानादित्येष्वेव गण्यते" भा॰आ॰ २६॰२ श्लो॰

अव+अवज्ञायाम्। "नार्हन्नेनमवगणैरेकात्मभिरसाधनैः" भा॰ व॰ ८२अ॰।

वि+विशेषेण संख्याने "अदूरवर्त्तिनीं सिद्धिं राजन्! विग-णयात्मनः" रघुः।

**गण** पु॰ गण–कर्मणि अच् कर्त्तरि अच् वा। १समूहे। "गणानां त्वां गणपतिम्" यजु॰२३,१९। "गणपतिं गणानां समूहानां पालकम्" वेददी॰। २प्रमथे "सकलहंसगणं शुचि मानसम् शिवमगात्मजया च कृतेर्ष्यया सकलहं सगणं शुचिमानसम्" "गणानमेरुप्रसवावतंसाः" कुमा॰। सेनाविशेषाणां ३सङ्ख्याविशेषे अमरः। स च अनीकि-नीशब्दे १६९पृ॰दर्शितेन "त्रयोगुल्मा गणो नाम" इत्या-दिवाक्येन उक्तः तेन(रथाः२७गजाः२७। अश्वाः८१प-दातिकाः १३५सर्वसमष्टिः२७०, इति संख्याविशेषः)। ४चोरनामगन्धद्रव्ये मेदि॰। गणः प्रमथादिः वश्यत्वेन सत्त्वादिगुणगणः वश्यत्वेन वा गणः गणदैत्यः शासत्वेन वाऽस्त्यस्य अच्। ५गणेशे "गणदीक्षाप्रवर्त्तकः" महानि॰। प्रमथाधिपत्वात् तस्य गणेशत्वम्। विवाहे वरकन्ययो-र्मेलनज्ञानोपयोगिनि ६देवराक्षसमानुषसूचके ताराभेद-वर्गे उपयमशब्दे १२५०पृ॰विवृतिः। "गणमैत्री भकूटं च नाड़ी चैते गुणाधिकाः" मुहूर्त्तचि॰। "नो गणानां च दोषः" ज्यो॰त॰। ७ध्रुवादिसंज्ञके नक्षत्रविशेष-समूहे "उग्रः पूर्वमघान्तका ध्रुवगणः इत्यादि" ज्यो॰त॰। सम्भूय एकद्रव्यतापादनेन व्यवहारकारिणि-वणिक्समूहे च "श्रेणिनैगमपाषण्डिगणानामप्ययं विधिः" "गणद्रव्यं हरेद्यस्तु संविदं यश्च लङ्घयेत्" याज्ञव॰।

"भ्वाद्यदादौ जुहोत्यादिर्दिवादिः स्वादिरेव च । तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः" इत्युक्तेषु शबादिविकरणविशेषनिमित्तेषु दशसु धातुसमुदायेषु तद्युक्तत्वात् १०गणपाठग्रन्थेऽपि । पाणिनिरचिते ११स्वरादिशब्दप्रतिपादकग्रन्थे १२दैत्यभेदे स च दैत्यः अभिजिद्परनाम्नो गुणवतः गुणवत्यां जातः यथाह स्कन्दपु० गणेशख० ३अ० "अथ सोऽप्यभिजित् पत्न्या समुद्रस्नानमावयौ । पर्वणि श्रद्धया युक्तश्चक्रे स्नानं तया सह । तृषिता सा गुणवती पपौ चाऽञ्जलिना जलम् । यद्वीर्य्यं ब्रह्मणात्यक्तं दैवात्तदुदरे गतम्" । "भार्य्या गुणवती तस्य नवमासादनन्तरम् । पुत्रं प्रासूतऽह्नि शुभे दिव्यरूपं गुणाङ्कुलम् । ज्योतिर्विद्भिरनुज्ञातो गण इत्यभिधां पिता । कृत्वाभ्युदयिकं चक्रे व्यतीते दशमेऽहनि" स च महादेवमाराध्य लब्धवरस्त्रैलोक्यं निर्जित्य कपिलमुनेश्चिन्तामणिं हृतवान् तेन जातमन्युना तेन गणेशस्य सेवने कृते गणेशेन तद्गृहे अवतीर्य्य तं गणदैत्यं नाशितवान् इत्येषा कथा तत्रैव विस्तीर्णा दिङ्मात्र मुच्यते यथा "कथं नाशितवान् स्कन्दो ! गणदैत्यं विनायकः । तत्सर्वं कृपया देव ! कथयस्व समासतः । शिव उवाच । यथा नाशितवान् दैत्यं गणं दुष्टमतिं विभुः । तथाहं कथयामि त्वं शृणुष्व षडानन" ६अ० इत्युपक्रम्य

"प्राप्तसंज्ञां परशुना हन्ति स न रुषा विभुः । दृष्टवान् परशुं वीरसत्तमः सूर्य्यमिवाऽपरम् । सुतीक्ष्णं ज्वालया व्याप्तं कालचक्रनिभं शुभम् । दहन्तं दशदिग्भागान् प्रलयानलसन्निभम् । यदा तत्सादरं दृष्टुमुपचक्राम दैत्यराट् । तदैवापातयच्छित्त्वा परशुस्तस्य मस्तकम् । सपर्वतवना पृथ्वी चालयत् सागरैः सह । अभिजित्प्रमुखाः सर्वे रुरुदुः पतिते गणे" ७अ० । शस् गणशस्, कृत्वस् गणकृत्वस् वीप्सार्थे कारकार्थवृत्तौ गणशब्दार्थे अव्य० । १३स्वपक्षे "सगणाय सपरिवाराय सायुधाय सशक्तिकाय इन्द्राय नमः" इति विधानपारिजा० । १४वाक्ये निघण्टुः ।

**गणक** त्रि०गण—ण्वुल् । १संख्याकारके २सांवत्सरिके पु० । तस्य लक्षणगुणदोषादिकमुक्तं वृ०सं० २अ० यथा

"ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम् तत्कार्त्स्न्योपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता । स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ होरान्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ।

"अथातः सांवत्सरसूत्रं व्याख्यास्यामः । तत्र सांवत्सरोऽभिजातः प्रियदर्शनो विनीतवेषः सत्यवागनसूयकः समसुसंहतोपचितगात्रसन्धिरविकलचारुकरचरणनखनयनचिबुकदशनश्रवणललाटभ्रूत्तमाङ्गो वपुष्मान् गम्भीरोदात्तघोषः । प्रायः शरीराकारानुवर्त्तिनो हि गुणाश्च दोषाश्च भवन्ति । तत्र गुणाः । शुचिर्दक्षः प्रगल्भो वाग्मी प्रतिभानवान् देशकालवित् सात्त्विको न पर्षद्भीरुः सहाध्यायिभिरनभिभवनीयः कुशलोऽव्यसनी शान्तिपौष्टिकाभिचारस्नानविद्याभिज्ञो विबुधार्चनव्रतोपवासनिरतः स्वतन्त्राश्चर्य्योत्पादितप्रभावः पृष्टाभिधाय्यन्यत्र दैवात्ययाद्ग्रहगणितसंहिताहोराग्रन्थार्थवेत्ता । तत्र ग्रहगणिते पौलिशरोमकवासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु युगवर्षायनर्त्तुमासपक्षाहोरात्रयाममुहूर्त्तनाडीविनाडीप्राणत्रुटित्र्यवयवाद्यस्य कालस्य क्षेत्रस्य च वेत्ता । चतुर्णां च मासानां सौरसावननाक्षत्रचान्द्राणामधिमासकावमसम्भवस्य च कारणाभिज्ञः । षष्ट्यब्दयुगवर्षमासदिनहोराधिपतीनां प्रतिपत्तिविच्छेदवित् । सौरादीनाञ्च मानानां सदृशासदृशयोग्यायोग्यत्वप्रतिपादनपटुः । सिद्धान्तभेदेऽप्ययननिवृत्तौ प्रत्यक्षं सममण्डलरेखासम्प्रयोगाभ्युदितांशकानाञ्च छायाजलयन्त्रदृग्गणितसाम्येन प्रतिपादनकुशलः । सूर्य्यादीनाञ्च ग्रहाणां शीघ्रमन्दयाम्योत्तरनीचोच्चगतिकारणाभिज्ञः सूर्य्यचन्द्रमसोश्च ग्रहणे ग्रहणादिमोक्षकालदिक्प्रमाणस्थितिविमर्दवर्णदेशानामनागतग्रहसमागमयुद्धानामादेष्टा । प्रत्येकग्रहभ्रमणयोजनकक्षाप्रमाणप्रतिविषययोजनपरिच्छेदकुशलो भूभगणभ्रमणसंस्थानाद्यक्षावलम्बकाहर्व्यासचरदलकालराश्युदयच्छायानाडीकरणप्रभृतिषु क्षेत्रकालकरणेष्वभिज्ञो नानाचोद्यप्रश्नभेदोपलब्धिजनितवाक्सारो निकषसन्तापाभिनिवेशैर्विशुद्धस्य कनकस्येवाधिकतरममलीकृतस्य शास्त्रस्य वक्ता तन्त्रज्ञो भवति । उक्तञ्च न प्रतिबद्धं गमयति वक्ति न च प्रश्नमेकमपि पृष्टः । निगदति न च शिष्येभ्यः स कथं शास्त्रार्थविज्ञेयः । ग्रन्थो ऽन्यथान्यथार्थः करणं यश्चान्यथा करोत्यबुधः । स पितामहमुपगम्य स्तौति नरो वैशिकेनार्य्याम् । तन्त्रे सुपरिज्ञाते लग्ने छायाम्बुयन्त्रसंविदिते । होरार्थे च सुरूढे नादेष्टुर्भारती बन्ध्या । उक्तञ्चार्य्यविष्णुगुप्तेन । अप्यर्णवस्य पुरुषः प्रतरन् कदाचिदासादयेदनिलवेगवशेन पारम् । न त्वस्य कालपुरुषाख्यमहा-

र्णवस्य गच्छेत् कदाचिदस्वप्नेनापि पारम्। होराशास्त्रेऽपि राशिहोराद्रेक्काणनवांशकद्वादशभागत्रिंशद्भागबलाबलपरिग्रहो ग्रहाणां दिक्स्थानकालचेष्टाभिरनेकप्रकारबलनिर्द्धारणं प्रकृतिधातुद्रव्यजातिचेष्टादिपरिग्रहो निषेकजन्मकालविस्मापनप्रत्ययादेशसद्योमरणायुर्दायदशान्तर्दशाष्टवर्गराजयोगचन्द्रयोगद्विग्रहादियोगानां नाभसादीनाञ्च योगानां फलान्याश्रयभावावलोकननिर्याणगत्यनूकानि तात्कालिकप्रश्नशुभाशुभनिमित्तानि विवाहादीनाञ्च कर्म्मणां करणम्। यात्रायाञ्च तिथिदिवसकरणनक्षत्रमुहूर्त्तविलग्नयोगदेहस्पन्दनस्वप्नविजयस्नानग्रहयज्ञगणयागाग्निलिङ्गहस्त्यश्वेङ्गितसेनाप्रवादचेष्टादिग्रहषाड्गुण्योपायमङ्गलामङ्गलशकुनसैन्यनिवेशभूमयोऽग्निवर्णा मन्त्रिचरदूताटविकानां यथाकालं प्रयोगाः परदुर्गलम्भोपायाश्चेत्युक्तं चाचार्य्यैः। जगति प्रसारितमिवालिखितमिव मतौ निषिक्तमिव हृदये। शास्त्रं यस्य सभगणं नादेशा निष्फलास्तस्य। संहितापारगश्च दैवचिन्तको भवति। यत्रैते संहितापदार्थाः। दिनकरादीनां ग्रहाणां चारास्तेषु च तेषां प्रकृतिविकृतिप्रमाणवर्णकिरणद्युतिसंस्थानास्तमनोदयमार्गमार्गान्तरवक्रानुवक्रर्क्षग्रहसमागमचारादिभिः फलानि नक्षत्रकूर्म्मविभागेन देशेष्वगस्तिचारः सप्तर्षिचारो ग्रहभक्तयो नक्षत्रव्यूहग्रहशृङ्गाटकग्रहयुद्धग्रहसमागमग्रहवर्षफलगर्भलक्षणरोहिणीस्वात्याषाढीयोगाः सद्योवर्षकुसुमलतापरिधिपरिवेषपरिघपवनोल्कादिग्दाहक्षितिचलनसन्ध्यारागगन्धर्व्वनगररजोनिर्घातार्घकाण्डसस्यजन्मेन्द्रध्वजेन्द्रचापवास्तुविद्याङ्गविद्यावायसविद्यान्तरचक्रमृगचक्राश्वचक्रवातचक्रप्रासादलक्षणप्रतिमालक्षणप्रतिष्ठापनवृक्षायुर्वेददगार्गलनीराजनखञ्जनोत्पातशान्तिमयूरचित्रकघृतकम्बलखड्गपट्टकृकवाकुकूर्म्मगोऽजाश्वेभपुरुषस्त्रीलक्षणान्यन्तःपुरचिन्तापिटकलक्षणोपानच्छेदवस्त्रच्छेदचामरदण्डशय्यासनलक्षणरत्नपरीक्षादीपलक्षणदन्तकाष्ठाद्याश्रितानि शुभाशुभानि निमित्तानि सामान्यानि च जगतः प्रतिपुरुषं पार्थिवे च प्रतिक्षणमनन्यकर्म्माभियुक्तेन दैवज्ञेन चिन्तयितव्यानि। न चैकाकिना शक्यन्तेऽहर्निशमवधारयितुं निमित्तानि। तस्मात् सुभृतेनैव दैवज्ञेनान्ये तद्विदश्चत्वारो भर्त्तव्याः। तत्रैकेनैन्द्री चाग्नेयी च दिगवलोकयितव्या। याम्या नैर्ऋती चान्येनैवं वारुणी वायव्या, चोत्तरा चैशानी चेति। यस्मादुल्कापातादीनि निमित्तानि शीघ्रमुपगच्छन्तीति। तेषां चाकारवर्णस्नेहप्रमाणादिग्रहर्क्षाभिघातादिभिः फलानि भवन्ति। उक्तञ्च गर्गेण महर्षिणा "कृत्स्नाङ्गोपाङ्गकुशलं होरागणितनैष्ठिकम्। यो न पूजयते राजा स नाशमुपगच्छति। वनं समाश्रिता येऽपि निर्म्ममा निःपरिग्रहाः। अपि ते परिपृच्छन्ति ज्योतिषां गतिकोविदम्। अप्रदीपा यथा रात्रिरनादित्यं यथा नभः। तथाऽसांवत्सरो राजा भ्रमत्यन्ध इवाध्वनि। मुहूर्त्तं तिथिनक्षत्रमृतवश्चायने तथा। सर्व्वाण्येवाकुलानि स्युर्न स्यात् सांवत्सरो यदि। तस्माद्राज्ञाभिगन्तव्यो विद्वान् सांवत्सरोऽग्रणीः। जयं यशः श्रियं भोगान् श्रेयश्च समभीप्सता। नासांवत्सरिके देशे वस्तव्यं भूतिमिच्छता। चक्षुर्भूतो हि यत्रैष पापं तत्र न विद्यते। न सांवत्सरपाठी च नरकेषूपपद्यते। ब्रह्मलोकप्रतिष्ठाञ्च लभते दैवचिन्तकः। ग्रन्थतश्चार्थतश्चैतत् कृत्स्नं जानाति यो द्विजः ! अग्रभुक् स भवेच्छ्राद्धे पूजितः पङ्क्तिपावनः। म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम्। ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्दैवविद्द्विजः ! कुहकावेशपिहितैः कर्णोपश्रुतिहेतुभिः। कृतादेशो न सर्व्वत्र प्रष्टव्यो न स दैववित्। अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते। स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः। नक्षत्रसूचकोद्दिष्टमुपहासं करोति यः। स व्रजत्यन्धतामिस्रं सार्द्धमृक्षविडम्बिना। नगरद्वारलोष्टस्य यद्वत् स्यादुपयाचितम्। आदेशस्तद्वदज्ञानां यः सत्यः स विभाव्यते। सम्पत्त्या योजितादेशस्तद्विच्छिन्नकथाप्रियः ! । मत्तः शास्त्रैकदेशेन त्याज्यस्ताद्दङ्महीक्षिता। यस्तु सम्यग्विजानाति होरागणितसंहिताः। अभ्यर्च्यः स नरेन्द्रेण स्वीकर्त्तव्यो जयैषिणा। न तत् सहस्रं करिणां वाजिनां वा चतुर्गुणम्। करोति देशकालज्ञो यदेको दैवचिन्तकः। दुःस्वप्नदुर्व्विचिन्तितदुःप्रेक्षितदुःकृतानि कर्म्माणि। क्षिप्रं प्रयान्ति नाशं शशिनः श्रुत्वा भसंवादम्। न तथेच्छति भूपतेः पिता जननी वा स्वजनोऽथवा सुहृत्। स्वयशोऽभिविवृद्धये यथा हितमाप्तः स्वबलस्य दैववित्"।

शि॰ शि॰ ज्योतिःशास्त्रस्य वेदनेत्ररूपाङ्गत्वप्रतिपादनेन तदध्ययने द्विजातिमात्रस्यैवाधिकारं प्रतिपाद्य तद्वेत्तुर्गणकस्य प्रशंसा दर्शिता यथा

"तुट्यादिप्रलयान्तकालकलना मानप्रभेदः क्रमाच्चारश्च

द्युचरां द्विधा च गणितं प्रश्नास्तथा सोत्तराः। भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः॥ जानन् जातकसंहिताः सगणितस्कन्धैकदेशा अपि ज्योतिःशास्त्रविचारसारचतुरः प्रश्नेष्वकिञ्चित्करः। यः सिद्धान्तमनन्तयुक्तिविततं नो वेत्ति भित्तौ यथा राजा चित्रमयोऽथवा सुघटितः काष्ठस्य कण्ठीरवः॥ गर्जत्कुञ्जरवर्जिता नृपचमूरथ्यूर्जिताऽश्वादिकैरुद्यानं च्युतचूतवृक्षमथवा पाथोविहीनं सरः। योषित् प्रोषितनूतनप्रियतमा यद्वन्न भात्युच्चकैर्ज्योतिःशास्त्रमिदं तथैव विबुधाः सिद्धान्तहीनं जगुः"॥ "इदानीं ज्योतिःशास्त्रस्य वेदाङ्गत्वं निरूप्य वेदाङ्गत्वादवश्यमध्येतव्यं तद्द्विजैरेव नान्यैः शूद्रादिभिरित्येतत्प्रतिपादनार्थं श्लोकचतुष्टयमाह" प्रमि॰ "वेदास्तावद्यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण। शास्त्रादस्मात् कालबोधो यतः स्याद्वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात्॥ शब्दशास्त्रं मुखं ज्योतिषं चक्षुषी श्रोत्रमुक्तं निरुक्तं च कल्पः करौ। या तु शिक्षास्य वेदस्य सा नासिका पादपद्मद्वयं छन्द आद्यैर्बुधैः। वेदचक्षुः किलेदं स्मृतं ज्योतिषं मुख्यता चाङ्गमध्येऽस्य तेनोच्यते। संयुतोऽपीतरैः कर्णनासादिभिश्चक्षुषाङ्गेन हीनो न किञ्चित्करः। तस्माद्द्विजैरध्ययनीयमेतत् पुण्यं रहस्यं परमं च तत्त्वम्। यो ज्योतिषं वेत्ति नरः स सम्यग् धर्मार्थकामान् लभते यशश्च" सि॰शि॰। एवं गणकस्य प्रशंसायां स्थितायाम् सिद्धान्तानभिज्ञस्य नक्षत्रसूचिनो निन्दाश्रवणाच्च "वरं चाण्डालसंसर्गं कुर्य्यात्तु साधकोत्तमः। तथाप्यसद्ब्रह्मगणकं सर्वदा तु परित्यजेत्" महर्षिगर्हितमीतन्त्रवाक्यम् नक्षत्रसूचिविषयम् "चर्मकारस्य द्वौ पुत्रौ गणको वाद्यपूरकः," इत्युक्त सङ्कीर्णवर्णरूपगणकपरत्वे सङ्कोचाभावाच्च तस्यापमशूद्रतया वेदाङ्गज्योतिषेऽनधिकारात् अनधिकृतशास्त्राध्यायिनो निन्द्यौचित्यात्। "द्विजातेस्तु यथोक्तलग्नादित्रयवेत्तृरूपगणकस्य प्रशंस्यत्वात्। न तथा। यथाहपी॰धा॰ "सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम्। वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम्। विनैतदखिलं श्रौतं स्मार्तकर्म न सिध्यति। तस्माज्जगद्धितायेदं ब्रह्मणा निर्मितं पुरा। अतएव द्विजैरेतदध्येतव्यं प्रयत्नतः" इति। तत्रैव ज्योतिःशास्त्राध्येतृमाहात्म्यमाह माण्डव्यः "एवंविधस्य श्रुतिनेत्रशास्त्रस्वरूपवेत्तुः खलु दर्शनं वै। निहन्त्यशेषं कलुषं जनानां भ्रूणहत्वजं धर्मसुखास्पदं स्यात्" अत्र स्थानविशेषेण ज्योतिर्विदः पूज्यतातारतम्यं जीवैरभ्यधायि "दशदिनकृतपापं हन्ति सिद्धान्तवेत्ता त्रिदिनजनितदोषं तन्त्रवित्तः स एव। करणभगणवेत्ता हन्त्यहोरात्रदोषं जनयति घनमंहस्तत्र नक्षत्रसूची"। नक्षत्रसूची दैवज्ञो घनं बहु अंहः पापं जनयति। तल्लक्षणं वराहसंहितायां "अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते। स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः" अन्यच्च "तिथ्युत्पत्तिं न जानन्ति ग्रहाणां नैव साधनम्। परवाक्येन वर्त्तन्ते ते वै नक्षत्रसूचकाः" व्युत्पत्तिस्तु गृहे गृहे गत्वाऽपृष्ट एव नक्षत्राण्यश्विन्यादीनि शुभाशुभफलसूचकानि सूचयतीति नक्षत्रसूची। वराहः "नक्षत्रसूचकोद्दिष्टमुपवासं करोति यः। स व्रजत्यन्धतामिस्रं सार्द्धमृक्षविडम्बिना नक्षत्रसूचकं पापं भिषजं गुलकजीविनम्। तादृक् पौराणिकादींश्च वाङ्मात्रेणापि नार्चयेत्" अतएव वसिष्ठः "त्रिस्कन्धपारङ्गम एव पूज्यः श्राद्धे सदा भूसुरवृन्दमध्ये। नक्षत्रसूची खलु पापरूपो हेयः सदा सर्वसुधर्मकृत्ये"। वराहोऽपि ग्रन्थतश्चार्थतश्चैव कृत्स्नं जानाति यो द्विजः। अग्रभुक् स भवेच्छ्राद्धे पूजितः पङ्क्तिपावनः। नासांवत्सरिके देशे वस्तव्यं भूतिमिच्छता। चक्षुर्भूतोऽपि यत्रैव पापं तत्र न विद्यते। मुहूर्त्तं तिथिनक्षत्रमृतवश्चायनानि च। सर्वाण्येवाकुलानि स्युर्न स्यात् सांवत्सरो यदि"। अत एव यज्ञमशास्त्रे सुमन्तुः "तस्करकितवेत्यादिना महता गद्येन यत् "सांवत्सरिकोऽपाङ्क्तेयः" इत्याह यच्च महाभारतेऽपि "कितवो भ्रूणहा यक्ष्मीत्यादिपद्याष्टकमध्ये कुशीलवो देवलको नक्षत्रैर्यश्च जीवति। एतानिह विजानीयाद्ब्राह्मणान् पङ्क्तिदूषकानित्युक्तं तन्नक्षत्रसूचकज्योतिर्विद्विषयं यदाह कश्यपः "दारत्विग्भ्रूणहन्तॄंश्च व्यङ्गान्नक्षत्रसूचकान्। वर्ज्जयेत् ब्राह्मणानेतान् सर्वकर्मसु यत्नतः" इति "नक्षत्रसूचकश्चैव पर्वकारश्च गर्हितः" इति ब्रह्मपुराणेऽप्युक्तम् मनुः "तिथिं पक्षस्य न ब्रूयान्न नक्षत्राणि निर्दिशेत्" इत्याह स अपृष्ट इति शेषः। यमोऽपि "नक्षत्रतिथिपुण्याहान्मुहूर्त्तान् मङ्गलानि च। न निर्दिशन्ति ये विप्रास्तैर्भुक्तं ह्यक्षयं भवेदिति" वसिष्ठवाक्यन्तु "प्रागभिहितम् महाप्रयोजनं त्वेतच्छास्त्रस्य सम्यग्ज्ञानाद्ब्रह्म सायुज्यमिति" तदुक्तं गर्गेण "ज्योतिश्चक्रं तु लोकस्य सर्वस्योक्तं शुभाऽशुभम्। ज्योतिर्ज्ञानं च यो

वेद स याति परमां गतिम्" । गतिं ब्रह्मसायुज्यमिति सूर्य्यसिद्धान्तेऽपि "दिव्यचक्षुर्ग्रहर्क्षाणां दर्शितं ज्ञानमुत्तमम् । विज्ञायार्कादिलोकेषु स्थानं प्राप्नोति शाश्वतम्" वराहसंहितायामपि "न सांवत्सरपाठी च नरके परिपच्यते । ब्रह्मलोके प्रतिष्ठाञ्च लभते दैवचिन्तक"इति गणकस्य पत्नी ङीष् गणकी तत्पत्न्यां जटा० । "तस्मिन् मग्नं गणक! कथय क्षिप्रमस्याः प्रमाणम्" "गणक! पवनवेगादेकदेशे स भग्नः"लीला०। "गणकचक्रचूडामणिः" सि० शि० । "चर्म्मकारस्य द्वौ पुत्रौ गणको वाद्यपूरकः" इत्युक्ते ३सङ्कीर्णजातिभेदे प्रजापतिपुत्रे तारापुञ्जात्मके अष्टसंख्यके ४केतुभेदे "तारापुञ्जनिकाशा गणका नाम प्रजापतेरष्टौ" वृह० सं० ११ अ० ।

**गणकर्णिका** स्त्री गणस्य गणेशस्य कर्ण इव पत्रमस्याः कप् अत इत्त्वम् । इन्द्रवारुण्याम् राजनि० ।

**गणकार** पु० गणं धात्वादिगणपाठं करोति कृ—अण् । धात्वादिगणार्थप्रतिपादके१ग्रन्थकर्त्तरि २भीमसेने शब्दच० ।

**गणकारि** पु० गणं धात्वादिगणं करोति कृ बा० इञ् । धात्वर्थप्रतिपादकग्रन्थकर्त्तरि । ६त० गणकस्यारौच । तस्यापत्यं कुर्वा० ण्य । गाणकार्य्यं तदपत्ये पुंस्त्री ।

**गणकूट** पुंन० गणरूपं कूटम् । वरकन्ययोर्नक्षत्रभेदेन जातयोः विवाहे मेलनोपयोगिनि सुरराक्षसमानुषरूपे कूटे । उपयमशब्दे १२५० पृ० विवृतिः ।

**गणचक्रक** न० गणानां धार्मिकगणानां चक्रमत्र कप् । धार्म्मिकानां सम्भूय भोजने त्रिका० ।

**गणता** गणस्य भावः तल् । गणसमूहे ।

**गणतिथ** त्रि० गण+असंख्यावाचकत्वेऽपि पूरणे डट् तिथुगागमश्च । गणानां पूरणे ।

**गणदीक्षिन्** पु० गणान् दीक्षयति दीक्ष—णिनि । १बहुयाजके । "वेश्याभिशस्तवार्द्धुषि गणिका गणदीक्षिणाम्" अभक्ष्यान्नकथने याज्ञ० । "गणदीक्षिणो बहुयाजकाः" मिता० २गणेशदीक्षकावति त्रि०स्त्रियां ङीप् ।

**गणदेवता** स्त्री गणभूता सङ्घभूता देवता । सङ्घभूते देवभेदे "आदित्याविश्वे वसवस्तुषिता भास्वरानिलाः। महाराजिकसाध्याश्च रुद्राश्च गणदेवताः । आदित्या द्वादश प्रोक्ता विश्वे देवा दश स्मृताः । वसवश्चाष्टसंख्याताः षट् त्रिंशत् तुषिता मताः । आभास्वरा श्चतुःषष्टिर्वाताः पञ्चाशदूनकाः । महाराजिकनामानो द्वे शते चापि विंशतिः। साध्या द्वादशविख्याता रुद्राश्चैकादश स्मृताः । एते च संहृता देवास्तत्रादित्याः स्वनामतः" जटाधरकोषः ।

**गणद्रव्य** ६त० । गणस्वामिके द्रव्ये । गणं गणीभूतं द्रव्यं द्रव्याणां गणे च ।

**गणद्वीप** पुंन० गणानां सप्तानां राज्यत्वात् द्वीपः । सप्तानां राज्यरूपे द्वीपभेदे "यत्नवन्तो गणद्वीपं सप्तराज्योपशोभितम्" रामा० कि० ४०३०अ० । यवद्वीपमिति पाठान्तरम् ।

**गणन** न० गण—भावे ल्युट् । सङ्ख्याकरणे सङ्ख्याने (गोणा) "येनैव लिखितं कुर्यात् तेनैव गणनं भवेत्" विश्वसारत० । युच् । गणनायत्त स्त्री । "यदि त्रिलोकी गणनापरा स्यात्"नैष०"व्याजपर्वगणनाभिवोढ़वन्"रघुः

**गणनाथ** पु०गणानां प्रमथादीनां नाथः । १गणेशे २शिवे च गणनायकादयोऽप्यत्र । ३बहूनां स्वामिनि त्रि० । गणनायिका स्त्री ३दुर्गायाम् त्रिका० ।

**गणनीय** त्रि० गणयितुमर्हति गण—अनीयर् । गणनार्हे अमरः । यत्, गण्य, तव्य गणितव्य तदर्थे त्रि० ।

**गणपति** पु० ६त० । गणेशे तस्याविर्भावकथा दृभानमशब्दे ६८१पृ० गजाननशब्दे २४६५पृ०च उक्ता तस्य गण.धिपतित्वं याज्ञवल्क्येनोक्तं तच्च वाक्यं गणपतिकल्पशब्दे दृश्यम् २शिवे ३समूहपतौ च "गणानां त्वा गणपतिम्" यजु० १६।१८ ।

**गणपतिकल्प** पु० गणपत्युद्देशेन कल्पः विधानभेदः । गणेशोद्देशेन विघ्नविघाताय तत्स्नपनादिरूप, विधानभेदे । स च कल्पः याज्ञ० उक्तो यथा ।

"विनायकः कर्म्मविघ्नसिद्ध्यर्थं विनियोजितः। गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा। तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत । स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति । काषायवाससश्चैव क्रव्यादांश्चाधिरोहति । अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते । व्रजन्नपि तथात्मानं मन्यतेऽनुगतं परैः । विमना विफलारम्भः संसीदत्यनिमित्ततः । तेनोपसृष्टो लभते न राज्यं राजनन्दनः। कुमारी न च भर्त्तारमपत्यं न च गर्भिणी । आचार्य्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा । वणिग्लाभं न चाप्नोति कृषिञ्चैव कृषी वलः । स्नपनं तस्य कर्त्तव्यं पुण्येऽह्नि विधिपूर्वकम् । गौरसर्षपकल्केन साज्येनोत्सादितस्य च । सर्व्वौषधैः सर्वगन्धैः प्रलिप्तशिरसस्तथा । भद्रासनोपविष्टस्य स्वस्ति वाच्या द्विजाः शुभाः । अश्वस्थानाद्गजस्थानाद्वल्मी-

कात् सङ्गमात् ह्रदात् ! मृत्तिकां रोचनां गन्धान् गुग्गुलुञ्चाप्सु निःक्षिपेत् । या आहृता एकवर्णैश्चतुर्भिः कलशैर्ह्रदात् । चर्म्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं तथा । सहस्राक्षं शतधारमृषिभिः पावनं कृतम् । तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते । भगन्ते वरुणो राजा भगं सूर्यो वृहस्पतिः । भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः । यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि । ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा । स्नातस्य सार्षपं तैलं स्रुवेणोडुम्बरेण च । जुहुयान्मूर्द्धनि कुशान् सव्येन परिगृह्य च । मितश्च संमितश्चैव तथा शालकटङ्कटौ । कुष्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः । नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः । दद्याच्चतुष्पथे सूर्पे कुशानास्तीर्य सर्वतः । कृताकृतांस्तण्डुलांश्च पललौदनमेव च । मत्स्यान् पक्वांस्तथैवामान् मांसमेतावदेव तु । पुष्पं चित्रं सुगन्धञ्च सुराञ्च त्रिविधामपि । मूलकं पूरिकापूपांस्तथैवैरण्डिकाः स्रजः । दध्यन्नं पायसञ्चैव गुड़पिष्टं समोदकम् । एतान् सर्वानुपाहृत्य भूमौ कृत्वा ततः शिरः । विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम् । दूर्वासर्षपपुष्पाणां दत्त्वार्घ्यं पूर्णमञ्जलिम् । रूपं देहि यशो देहि भाग्यं भगवति ! देहि मे । पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे । ततः शुक्लाम्बरधरः शुक्लगन्धानुलेपनः । ब्राह्मणान् भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि । एवं विनायकं पूज्य ग्रहांश्चैव विधानतः । कर्म्मणां फलमाप्नोति श्रियञ्चाप्नोत्यनुत्तमाम् । आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा । महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात्" ।

**गणपर्व्वत** पु० गणभूयिष्ठः पर्वतः । कैलासाचले त्रिका० ।

**गणपाठ** पु० गणानां स्वरादिगणानां पाठोऽत्र । पाणिन्यादिरचिते स्वरादिगणानां स्वरूपकथने ग्रन्थभेदे ।

**गणपाद** पु० गणस्येव पादोऽस्य । प्रमथतुल्यपादयुक्ते युक्तारोह्यादित्वादाद्युदात्तताऽस्य । [शब्दच० ।

**गणपीठक** न० गणस्य पीठ इव कायति कै—क । १वक्षसि

**गणपुङ्गव** पु० गणः पुङ्गव इव उपमि०स० ।१गणश्रेष्ठे २देशभेदे च ।३तद्देशवासिषु ४तद्देशनृपेषु च बहुव०"कौलिङ्गान् गणपुङ्गवानथ शिवीनायोध्यकान् पार्थिवान्" वृह० स० ४अ० ।

**गणपूज्य** पु० गणो गणेशः प्रमथो वा पूज्योऽस्य । १देशभेदे २तद्देशस्थजनेषु ३तन्नृपेषु च बहुव० ।"गणपूज्यस्खलितव्रतयवरपुलिन्दार्थपरिहीनाः" वृह० सं० १६अ० ।

**गणपूर्व्व** पु० गणानां ग्रामादिस्थलोकानां पूर्व्वः प्रधानम् । ग्रामण्याम् "अपरिज्ञातपूर्व्वाश्च गणपूर्व्वाश्च भारत !" भा० आ० २२अ० आज्ञानहैकथने ।"गणपूर्व्वा ग्रामण्यः" नीलक० । गणमुख्यादयोऽप्यत्र । "रविजेन सिते विजिते गणमुख्याः शस्त्रजीविनः चलम्" वृह०स० १७अ०

**गणभर्त्तृ** पु० गणानां प्रमथादीनां भर्त्ता । १महादेवे । "स्तुत्यमूर्तमूर्ध्न्या भजते गणभर्त्तुरच्चा" किरा० । गणस्वामिप्रभृतयोऽप्यत्र । २गणेशे ३समूहस्वामिनि त्रि० ।

**गणयज्ञ** पु० गणस्य भ्रातॄणां सखीनां वा समूहस्य कर्त्तव्यः यज्ञः । मरुत्स्तोमाख्ये भ्रातृसखिवर्गकर्त्तव्ये यज्ञभेदे । "वैश्यस्तोमर्द्धिकामालिङ्गो मरुत्स्तोमे गणयज्ञो भ्रातॄणां सखीनां वा" कात्या० श्रौ० २२।११।१२ । "सत्रमखयज्ञे बहुत्वयज्ञात्" कात्या०२५।१३।२८ । "एतच्च सत्रे भवति गणयज्ञे च "तेन सह यजेरन्निति" बहुत्वश्रवणात्"कर्कः।"तयोरनेकयजमानसद्भावात्रान्यत्र"सं०व्या० ।

**गणयाग** पु० गणोद्देशेन शान्त्यर्थं यागः । गणेशोद्देशेन कर्त्तव्ये गणपतिकल्पोक्ते तत्स्नपनादौ "विजयस्नानप्रयत्नगणयागाग्निलिङ्गेत्यादि" वृह०सं०२अ० ।

**गणरत्न** न०गणाः स्वरादयः रत्नानीव यत्र । पाणिन्युक्तस्वरादिगणानाम् श्लोकैर्निबन्धनपूर्वकं तदर्थकथनरूपे ग्रन्थभेदे । तस्य व्याख्या गणरत्नमहोदधिः ।

**गणराज्य** न० वृ० स० १४ उक्ते दक्षिणस्यास्थ्ये देशभेदे "गणराज्यकृष्णवेल्लूरेत्यादि तद्वाक्यं कूर्म्मविभागशब्दे २४६८ पृ० उक्तम् ।

**गणरात्र** न० गणानां रात्रीणां समाहारः गणशब्दस्य संख्यावाचकत्वात् द्विगुस० अच्समा० । रात्रिवृन्दे ।

**गणरूप** पु० गणा बहूनि रूपाण्यस्य । १अर्कवृक्षे अमरः । संज्ञायां कन् । गणरूपक राजार्के राजनि० ।

**गणरूपिन्** पु० गणा बहूनि रूपाणि सन्त्यस्य इनि । श्वेतार्के रत्नमा० ।

**गणवत्** त्रि० गणोऽस्त्यस्य मतुप् मस्य वः । १गणयुते "गणवती याज्यानुवाक्ये भवतः" तैत्ति० २।३।२।५ । स्त्रियां ङीप् । सा च २दिवोदासमातरि त्रिका० ।

**गणशस्** अव्य० गण+वीप्सायाम् कारकार्थे शस् । गणान् गणान् कृत्वा इत्याद्यर्थे । "स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या

विश्वेदेवा मरुतः" शत०ब्रा०१२।४,२।२४। "अजगणनम् गणशः प्रियमन्ततः" माघः।

**गणश्रि** पु० गणं गणरूपं श्रयति श्रि—क्विप् नि० ह्रस्वभावः। गणरूपेणावस्थिते मरुदादौ संहतदेवे। "रोदसी आ वदता गणश्रियः" ऋ० १।६४।६। हे गणश्रियः! (मरुतः) गणं श्रयमाणाः सप्त गणरूपेणावस्थिता इत्यर्थः" भा०। "पिब मन्दमाने गणश्रिभिः" ऋ० ५।६१।८। "गणश्रिभिः गणभावमाश्रयद्भिः" भा० "गणश्रिये स्वाहा गणपतये स्वाहा" यजु०२२।३।

**गणहासक** पु०गणान् हासयति हस-णिच्—ण्वुल्। १चोरनामगन्धे अमरः। २समूहहासके त्रि०। अण् उपमि० स०। गणहास तत्रार्थे राजनि०।

**गणाग्रणी** पु० ६त०। १गणेशे त्रिका०।२बहुनामग्रगण्ये त्रि०

**गणाचल** पु० गणभूयिष्ठोऽचलः। कैलासपर्वते जटा०।

**गणाधिप** पु० ६त०। १गणेशे अमरः २शिवे हला०। गणाधिपत्यादयोऽप्यत्र।"गगनं गणाधिपतिमूर्त्तिरिति"माघः। जैनशास्त्रप्रसिद्धेषु "गणा नवास्यर्षिसंघा एकादश गणाधिपाः"। हेमचन्द्रोक्तेषु एकादशजैनश्रेष्ठभेदेषु।

**गणान्न** न०गणायोत्सृष्टं, गणानां वाऽन्नम्। मठादौ १बहुजनोद्देशेनोत्सृष्टान्ने, २बहुस्वामिकेऽन्ने च 'गणान्नं गणिकान्नञ्चेति" मनुना निषिद्धान्नमध्ये गणितम्। "गणान्नं गणिकान्नञ्च लोकेभ्यः परिकृन्तति" मनुना। तद्भक्षणे पापविशेष उक्तः।

**गणाभ्यन्तर** त्रि०गणायोत्सृष्टमठादौ अभ्यन्तरः तदुपजीवनासक्तः। "गणायोत्सृष्टमठधनाद्युपजीविनि" कुल्लू०। "ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च" मनुः।

**गणि** स्त्री गण—इन्। गणने।

**गणिका** स्त्री गणः समूहोऽस्त्यस्याः भर्तृत्वेन ठन्।१वेश्यायाम्, तद्वृत्तिलाकर्षकत्वात् २यूथिकायाम्(जुँइ)अमरः। ३गणिकारिकावृक्षे शब्दर०। गण—ण्वुल्। ४हस्तिन्यां जटा०। "अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखकमतापकरम्। निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका" माघः। वेश्यायाः साधारणस्त्रीत्वं लक्षणादिकं च सा० द० उक्तं यथा।

"धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका। निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि। वित्तमात्रं समालोक्य सा रागं दर्शयेद्बहिः। काममङ्गीकृतमपि परिक्षीणधनं नरम्। मात्रा निष्कासयेदेषा पुनः सन्धानकाङ्क्षया। तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा। लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः। एषापि मदनायत्ता क्वापि सत्यानुरागिणी। रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम्"। प्रसङ्गात् तस्याः पञ्चमजातित्वं तद्गमनादौ दण्ड दण्डाभावादिकं मिताक्षरोक्तम् प्रदर्श्यते।

"साधारणस्त्रीगमने दण्डमाह "अवरुद्धासु दासीषु भुजिष्यासु तथैव च। गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकन्दमम्" या०। गच्छन्नित्यनुवर्त्तते। उक्तलक्षणावर्णस्त्रियोदासस्त्रा एव स्वामिना शुश्रूषाहानिव्युदासार्थं गृहे एव स्थातव्यमित्येवं पुरुषान्तरोपभोगतो निरुद्धाः, अवरुद्धाः पुरुषनियतपरिग्रहा भुजिष्याः। यदा दास्योऽवरुद्धा भुजिष्या वा भवेयुस्तदा तासु तथा चशब्दाद्वेश्यास्वैरिणीनामपि साधारणस्त्रीणां भुजिष्याणां ग्रहणात्तासु च सर्वपुरुषसाधारणतया गम्यास्वपि गच्छन् पञ्चाशत् पणान्दण्डन्दापनीयः परपरिगृहीतत्वेन तासाम्परदारतुल्यत्वात्। एतच्च स्वैरसुत्रकारेण "स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी तथा। गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः। आस्वेव तु भुजिष्यासु दोषः स्यात् परदारवत्। गम्यास्वपि हि नोपेयाद्यत्ताः परपरिग्रहाः" इति। निष्कासिनी स्वाम्यनवरुद्धा दासी। ननु स्वैरिण्यादीनां साधारणतया गम्यत्वाभिधानमयुक्तम् न हि जातितः शास्त्रतो वा काश्चन लोके साधारणाः स्त्रिय उपलभ्यन्ते। तथाहि स्वैरिण्योदासश्च तावद्वर्णस्त्रियएव "स्वैरिणी यां पतिं हित्वा सवर्णं कामतः श्रयेत्। वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः" इति स्मरणात्। न च वर्णस्त्रीणामन्यौ जीवति मृते वा पुरुषान्तरोपभोगो घटते "दुःशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः। परिचार्यः स्त्रिया साध्व्या सततन्देववत् पतिः। कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य त्विति" निषेध(मनु)स्मरणात्। नापि कन्यावस्थायां साधारणत्वं पित्रादिपरिरक्षितायाः कन्याया एव दानोपदेशाद्दातृभावेऽपि तथाविधाया एव स्वयं वरोपदेशात्। न च दासीभावात् स्वधर्माधिकारच्युतिः। पारतन्त्र्यं हि दासत्वं स्वधर्मपरित्यागः। नापि वेश्या साधारणी वर्णानुलोमजव्यतिरेकेण गम्य

जात्यन्तरासम्भवात्। तदन्तःपातित्वे च पूर्ववद्वेश्यागम्यत्वं प्रतिलोमजत्वे तु तासान्नितरामगम्यत्वम्। अतः पुरुषान्तरोपभोगे तासान्निन्दितकर्माभ्यासेन पातित्यात् पतितसंसर्गस्य च निषिद्धत्वान्न सकलपुरुषोपभोगयोग्यत्वम्। सत्यमेवम्। किन्त्वत्र स्वैरिण्याद्युपभोगे पित्रादिरक्षकराजदण्डभयादिदृष्टदोषाभावाद्गम्यत्ववाचोयुक्तिः। दण्डाभावश्चावरुद्धासु दासीष्विति नियतपुरुषपरिग्रहोपाधितो दण्डविधानात्तदुपाधिरहितास्वर्थाद्गम्यते। स्वैरिण्याद्यानां पुनर्दण्डाभावो विधानाभावात् "कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेदिति" लिङ्गदर्शनाच्चावगम्यते। प्रायश्चित्तन्तु स्वधर्मस्खलननिमित्तकस्यानाश्रमिणां वाऽविशेषाद्भवत्येव। यत् पुनर्वेश्यानाञ्जात्यन्तरासम्भवेन वर्णान्तःपातित्वमनुमानादुक्तम् वेश्यावर्णानुलोमाद्यन्तःपातिन्यो मनुष्यजात्याश्रयत्वात् ब्राह्मण्यादिवदिति। तन्न कुण्डगोलकादिभिरनैकान्तिकत्वात्। अतो वेश्याख्या काचिज्जातिरनादिर्वेश्यायामुत्कृष्टजातेः समानजातेर्वा पुरुषादुत्पन्ना पुरुषसंयोगवृत्तिर्वेश्येति ब्राह्मण्यादिवल्लोकप्रसिद्धिबलादभ्युपगमनीयम्। न च निर्मूलेयम्प्रसिद्धिः। स्मर्य्यते हि स्कान्दपुराणे "पञ्चचूडा नाम काचनाप्सरसस्तत्सन्ततिर्वेश्याख्या पञ्चमी जातिरिति। अतस्तासान्नियतपुरुषपरिणयनविधिविधुरतया समानोत्कृष्टजातिपुरुषाभिगमने न दृष्टदोषो नापि दण्डस्तासु चानवरुद्धासु गच्छतां पुरुषाणां यद्यपि न दण्डस्तथाप्यदृष्टदोषोऽस्त्येव "स्वदारनिरतः सदेति" नियमात्। "पशुवेश्याभिगमने प्राजापत्यं विधीयते" इति प्रायश्चित्तस्मरणाच्चेति निरवद्यम्। अवरुद्धासु दासीष्वित्यनेन दासीस्वैरिण्यादिभुजिष्याभिगमने दण्डं विदधतस्तास्वभुजिष्यासु दण्डो नास्तीत्यर्थादुक्तम्। तस्यापवादमाह "प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः। बहूनां यद्यकामासौ चतुर्विंशतिकः पृथक्" या०। पुरुषसम्भोगजीविकासु दासीषु स्वैरिण्यादिषु शुल्कदानविरहेण प्रसह्य बलात्कारेणाभिगच्छतो दशपणो दण्डः। यदि बहवः अकामामनिच्छन्तीमपि बलात्कारेणाभिगच्छन्ति तर्हि प्रत्येकञ्चतुर्विंशतिपणपरिमितन्दण्डं दण्डनीयाः। यदा पुनस्तदिच्छया भाटिन्दत्त्वा पश्चादनिच्छन्तीमपि बलात् व्रजन्ति तदा तेषामदोषः यदि व्याध्याद्यभिभवस्तस्या न स्यात् "व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा। आमन्त्रिता चेन्नागच्छेददण्ड्या वड़वा स्मृतेति" नारदवचनात्। किञ्च। "गृहीतवेतना वेश्या नेच्छन्ती द्विगुणं वहेत्। अगृहीते समन्दाप्यः पुमानप्येवमेव च" या०। यदा तु शुल्कं गृहीत्वा सुस्थापि तं नेच्छति तदा शुल्कं द्विगुणं दद्यात् तथा शुल्कं दत्त्वा स्वयमनिच्छतः स्वस्थस्य पुंसः शुल्कहानिरेव "शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत्। अनिच्छन् दत्तशुल्कोऽपि शुल्कहानिमवाप्नुयादिति तेनैवोक्तत्वात्। तथान्योऽपि विशेषस्तेनैव दर्शितः "अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम्। अक्रमेण च सङ्गच्छन् तथा दन्तनखादिभिः। अयोनौ चाभिगच्छद्यो बहुभिर्वाभिवासयेत्। शुल्कमष्टगुणं दाप्यो विनयन्तावदेव तु।" "वेश्या प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः। तत्समुत्थेषु कार्य्येषु निर्णयं संशये विदुरिति"। "गणान्नं गणिकान्नञ्च" अभक्ष्याख्यकथने मनुना तदन्नं निषिद्धम्।

**गणिकारिका** स्त्री गणनं गणिः गण-इन् तं करोति अण् गौरा० ङीष् गणिकारी स्वार्थे के ह्रस्वः, कृ—ण्वुल् वा कापि अत इत्त्वम्। १(गणियारी) द्रुमे अमरः। "अग्निमन्थो जयः स स्याच्छ्रीपर्णी गणिकारिका। जया जयन्ती तर्कारी नादेयी वैजयन्तिका। अग्निमन्थः श्वयथुनुद्वीर्य्योष्णः कफवातहृत्। पाण्डुनुत् कटुकस्तिक्तस्तुवरो मधुरोऽग्निदः" भावप्र०।

**गणिकारी** स्त्री गणिं गणनं करोति कृ—अण् उप० स० गौरा० ङीष्। क्षुद्रगणिकारिकायाम् राजनि०।

**गणित** न० गण—भावे क्त। १गणने "पारेपरार्द्धं गणितं यदि स्यात्" नैष०। पदार्थानां २गतिस्थित्यादिगणने यथा गणिताध्यायः। करणे क्त। ३व्यक्ताव्यक्तरूपे अङ्कशास्त्रे "द्विविधगणितमुक्तं व्यक्तमव्यक्तयुक्तं तदवगमननिष्ठः शब्दशास्त्रे पटिष्ठः। यदि भवति तदेदं ज्यौतिषं भूरिभेदं प्रपठितुमधिकारी सोऽन्यथा नामधारी" सि०शि०। कर्म्मणि क्त। ४कृतगणने संख्याते त्रि० अमरः "विद्यां प्रमादगणितामपि चिन्तयामि" चौरप०। गणनया आगते ५त्रैराशिकादौ (कालि) "चलस्य पञ्चांशतितुल्यचतुर्भुजस्य कर्णौ ततश्च गणितं गणक! प्रचक्ष्व"। "सूर्य्योन्मितस्य गणितं वद तत्र किं स्यात्" लीला०।

**गणिताध्याय** पु० गणितम् ग्रहगतिस्थित्यादिगणनमधीयतेऽत्र। अधि+इ—आधारे घञ्। सि०शि०ग्रन्थान्तर्गते अध्या-

ग्रभेदे तत्र च प्रतिपाद्यविषयाश्च प्रथमं ग्रहाणां मध्यमगत्यादिकम्। ततः कालमानम् ततो भगणाः। मध्यग्रहस्पष्टीकरणम् ग्रहकक्षामानम्। प्रत्यब्दशुद्धिः। अधिमासादिनिर्णयः। स्पष्टग्रहानयनम्। त्रिप्रश्नाधिकारः। पर्व्वसम्भवः। चन्द्रग्रहणम् सूर्य्यग्रहणम् ग्रहच्छाया। ग्रहोदयास्तमनादि। ग्रहशृङ्गोन्नतिः। ग्रहयुतिः। भग्रहयुतिः पाताधिकारश्चेति। [गणनाकर्त्तरि।

**गणितिन्** त्रि॰ गणितमनेन गणित+इष्टा॰ कर्त्तरि इनि।

**गणिपिटका** स्त्री हेमचन्द्रोक्ते आचाराङ्गादिषु द्वादशसु जिनानामङ्गेषु। यथा "आचाराङ्गं सूत्रकृतं२ स्थानाङ्गं३ समवाययुक्४। पञ्चमं भगवत्यङ्गं५ ज्ञाताधर्म्मकथा६ ऽपि च। उपासकाऽन्तकृत्७ अनुत्तरोपातिकाः८ दशाहः९। प्रश्नव्याकरणं१०श्चैव विपाकश्रुत११मेव च। इत्येकादश सोपाङ्गान्यङ्गानि द्वादश पुनः। दृष्टिवादो द्वादशाङ्गी स्याद्गणिपिटकाह्वया"

**गणीय** त्रि॰गण—ण्य। गणनीये संख्येये अमरः।"गणेयनिःशेषगुणोऽपि स स्यात्" नैष॰।

**गणेरु** पु॰ गण—बा॰ एरु। १कर्णिकारवृक्षे, २वेश्यायां ३हस्तिन्याञ्च स्त्री मेदि॰। [त्रिका॰।

**गणेरुका** स्त्री गणेरुष् वेश्यासु कायति कै—क। १कुट्टन्याम्

**गणेश** पु॰गणानामीशः। १स्वनामख्याते देवे २शिवे च। गणेशोत्पत्तिः इभाननशब्दे ९८१पृ॰उक्ता तस्य वक्रतुण्डकपिलचिन्तामणिविनायकादिरूपेण प्रादुर्भावकथा स्कन्दपु॰ गणेशख॰ उक्ता। तत एवावसेया विस्तरभयान्नोक्ता। गणेशस्य परब्रह्मरूपत्वं नामभेदात् तद्भेदाश्च गणपतितत्त्वग्रन्थे विस्तरेणोक्ता दिङ्मात्रमुदाह्रियते।"एष सर्वेश्वरः एष सर्वज्ञः एष भूतपतिरेष भूतलय एष सेतुर्विधरणः प्रधानक्षेत्रज्ञपतिर्गणेशः इति" श्रुतिप्रसिद्धसर्वेश्वरादिपदवद्गणेशपदस्य नित्यसिद्धेश्वरपरत्वम् दृश्यते इत्युपक्रम्य "तस्मात् प्रधानक्षेत्रज्ञपतिर्गणेशः" इति श्रुतेः "गुणत्रयस्येश्वरोऽसि न नाम्ना त्वं गणेश्वरः" इति विनायसंहितावचनाच्च गणशब्दाभिहितस्य सत्वादिगुणसंघातस्य पतिर्गणेश इति सिद्धमित्युक्तम्"। अन्ते च नमः सहमानायेत्याद्यनुवाकैस्तस्य सर्व्वेषां नाम्नां सङ्कलनेन एकोननवत्यधिकशतद्वयम् इत्युक्तम्। गणपतिभेदाश्च आगममन्त्रैर्वेदमन्त्रैर्वाराधनीया इत्यप्युक्तम्। तन्त्रे तु अन्यथा संख्योक्ता यथा शारदातिलकराघवटीकायाम् "विघ्नेशो विघ्नराजश्च विनायकशिवोत्तमौ। विघ्नकृत् विघ्नहर्त्ता च गणैकदन्तकाः। गजवक्त्रनिरञ्जनौ कपर्दी दीर्घजिह्वकः। शङ्कुकर्णश्च वृषभध्वजश्च गणनायकः। गजेन्द्रः शूर्पकर्णश्च त्रिलोचनसंज्ञकः। लम्बोदरमहानन्दौ चतुर्मूर्त्तिसदाशिवौ। आमोददुर्मुखौ चैव सुमुखश्च प्रमोदकः। एकपादो द्विजिह्वश्च शूरवीरः षण्मुखः। वरदो वामदेवश्च वक्रतुण्डो द्विरण्डकः। सेनानीर्ग्रामणीर्मत्तो विमत्तो मत्तवाहनः। जटी मुण्डी तथा खड्गी वरेण्यो वृषकेतनः। भक्ष्यप्रियो गणेशश्च मेघनादकसंज्ञकः। व्यापी गणेश्वरः प्रोक्ताः पञ्चाशद्रूपा इमे। तरुणारुणसङ्काशा गजवक्त्रास्त्रिलोचनाः। पाशाङ्कुशवराभीतिहस्ताः शक्तिसमन्विताः"। तेषाञ्च पञ्चाशच्छक्तयस्तत्रोक्ता यथा "ह्रीः श्रीश्च पुष्टिः शान्तिश्च स्वस्तिश्चैव सरस्वती। स्वा[illegible] मेधा कान्तिकामिन्यौ मोहिन्यपि वै नटी। पार्वती ज्वालिनी नन्दा सुयशाः कामरूपिणी। उमा तेजोवती सत्य विघ्नेशानी सुरूपिणी। कामदा मदजिह्वा च भूतिः स्याद्भौतिकासिता। रमा च महिषी प्रोक्ता मञ्जुला च विकर्णपा। भ्रुकुटिः स्यात्तथा लज्जा दीर्घघोणा धनुर्द्धरा। यामिनी रात्रिसंज्ञा च कामान्धा च शशिप्रभा। लोलाक्षी चञ्चला दीप्तिः सुभगा दुर्भगा शिवा। भर्गा च भगिनी चैव भोगिनी शुभदा मता। कालरात्रिः कालिका च पञ्चाशच्छक्तयः स्मृताः। सर्व्वाङ्गाभरणोद्दीप्ताः प्रियाङ्कस्थाः सुशोभनाः। रक्तोत्पलकरा ध्येया रक्तमाल्याम्बरावृताः"।

**गणेशकुण्ड** न॰ नर्म्मदास्थकुण्डभेदे। तत्कुण्डाविर्भवकथा स्कन्दपु॰ गणेशख॰११ख॰ यथा "पार्वती सिन्दूरेणाथ दृष्टा सा पर्य्यलीवने। प्रसुप्तां गिरिजां वीक्ष्य प्रसुप्तं मां (शिवम्) च षण्मुख!। प्रविवेशोदरं दैत्य उमाया वायुरूपधृक्। छित्त्वा नखैः करे धृत्वा गर्भस्थमस्तकं बहिः। निर्गत्य तच्छिरस्त्यक्तं विन्ध्याचलसमीपतः। यत्रास्ते शर्म्मदात्री सा नर्मदा दुरितापहा। मुक्तिदा सर्वजन्तूनाम् तपसां सिद्धिदायिनी। गणेशकुण्डं तत्राभूद्यत्रापतत् तच्छिरः। तदादि नर्मदान्तःस्था कुण्डान्तःस्थास्तथोपलाः। आसन् ये रक्तवर्णाभा गणेशास्तेऽभवन् भुवि"। [शब्दार्थचि॰।

**गणेशकुसुम** न॰ गणेश इव रक्तत्वात् कुसुमम्। रक्तकुसुमे

**गणेशखण्ड** न॰ स्कन्दपुराणान्तर्गते गणेशाविर्भवादिवेदके खण्डभेदे।

**गणेशजननी** स्त्री त०। १दुर्गायां "गणेशजननी दुर्गा राधा लक्ष्मीः सरस्वती" तन्त्र०गणेशमातादयोऽप्यत्र।

**गणेशभूषण** न०गणेशं भूषयति भूषि–ल्यु। सिन्दूरे राजनि० तस्य ध्याने "सिन्दूरशोभाकरम्" इत्युक्तेः सिन्दूरस्य तथात्वम् सिन्दूरेण शोभाकरमिति तदर्थः।

**गणेशान** पु० गणानामीशानः। गणेशे "गणेशान करि-गणेशानाननमनामयम्" काशीख०। "ततः सत्कार-हेरम्ब व्यासः सत्यवतीसुतः। कृतमालो गणेशानो भक्तचिन्तितपूरकः" भा० आ० १२ अ०। २शिवे च।

**गणेश्वर** पु० गणानामीश्वरः। १गणेशे २शिवे च। गणात्मक ईश्वरः।३रुद्रादिषु त्रयस्त्रिंशत्संख्यदेवेषु च। ते च रुद्रा-दयः ११ आदित्याः १२ वसवः ८ अश्विनौ२। एते त्रय-स्त्रिंशत्। रुद्रादीन् एतान् अभिधाय"एते देवास्त्रय स्त्रिंशत् सर्वभूते गणेश्वराः" भा० आनु० १५०अ०।

**गणोत्साह** पुंस्त्री गणे गणभावे समूयकरणे उत्साहो-ऽस्य। गण्डके स्त्रिका०स्त्रियां जातित्वात् ङीष्।

**गण्ड** पु०गडि+बदनैकदेशे अच्। १कपोले(गाल)२हस्तिकपोले च अमरः।३गण्डके पुंस्त्री०४वीथ्यङ्गे५पिटके६चिह्ने७वीरे ८हयभूषणे ६बुद्बुदे च मेदि०।१०स्फोटके ११ग्रन्थौ रमा-नाथः। विष्कुम्भादिषु १२दशमे योगे।१३अश्विन्यादिनक्ष-त्राणां दण्डभेदे। गण्डमाह ज्यो०त० "अश्विनी मघ-मूलानां तिस्रो गण्डाद्यनाड़िकाः। अन्त्याः पौष्णोर-गेन्द्राणां पञ्चैव जवना जगुः। मूलेन्द्रयोर्दिवा गण्डो निशायां पितृसर्पयोः। सन्ध्याद्वये तथा ज्ञेयो रेवती-तुरगर्क्षयोः। तत्र जातस्य दोषा यथा। सन्ध्यारात्रि दिवाभागे गण्डयोगोद्भवः शिशुः। आत्मानं मातरं तातं विनिहन्ति यथाक्रमम्" "मूलयाः प्रथमे पादे पितुर्वपुर्विनश्यति। द्वितीये नियतां पीड़ां मातुः कुर्य्यात् पितुस्तथा। तृतीये धननाशश्च चतुर्थे सर्व-सम्पदः। व्यत्ययेन फलं ज्ञेयमश्लेषास्वपि पूर्ववत्।" "दिवा जाता तु या कन्या निशि जातस्तु यः पुमान्। नोभयोर्गण्डदोषः स्यात् नाचलो हन्ति पार्वतीम्।" विस्तरस्तु मुहूर्त्तचिन्तामणौ पीयूषधारायामुक्तो यथा। "अभुक्तमूलं घटिकाचतुष्टयं ज्येष्ठान्त्यमूलादिभवं हि नारदः। वशिष्ठ एकद्विघटीमितं जगौ वृहस्पतिस्त्वेक-घटीप्रमाणकम्। अथोचुरन्ये प्रथमाष्टघय्योमूलस्य शा-क्रान्तिमपञ्चनाद्यः। जातं शिशुं तत्र परित्यजेद्वा मुखं पिताऽस्याष्टसमा न पश्येत्"। "आद्ये पिता नाशमुपैति मूलपादे, द्वितीये जननी तृतीये। धनं चतु-र्थोऽस्य शुभोऽथ शान्त्या सर्वत्र सत् स्यादहिभे विलोमम्। स्वर्गे शुचिप्रोष्ठपदेषमाघे भूमौ नभःकार्त्तिकचैत्रपौषे। मूलं ह्यधस्तात्तु तपस्यमार्गवैशाखशुक्रे ष्वशुभं च तत्र। गण्डान्तेन्द्रभमूलपातपरिघव्याघातगण्डावमे संक्रान्ति व्यतिपातवैधृतिसिनीवालीकुहूदर्शके। वज्रे कृष्णचतु-र्दशीषु यमघण्टे दग्धयोगे हृतौ विष्टौ सोदरभे जनिर्न पितृभे यस्ता शुभा शान्तितः"मु०चि०। एतद्व्याख्या पी०धा० "अत्राभुक्तमूलस्यानेके भेदाः तत्रैकस्तावदयं ज्ये-ष्ठान्तिकालान्ते भवं ज्येष्ठान्त्यं मूलादौ भवं मूलादिभवं ज्येष्ठान्त्यजातं घटीचतुष्टयं मूलादिजातं घटीचतुष्टयं मिलित्वाष्टौ घटिकाः प्रहर इति यावत्तावान् कालो ऽभुक्तमूलाख्यः(गण्डाख्यः) इति नारद आह (उप-लक्षणत्वादश्लेषान्तिमघटीचतुष्टयं मघादिमघटीचतुष्टयं चाभुक्तमूलाख्यः कालः यदाह नारदः"यो ज्येष्ठामूल-योरन्तरालप्रहरजः शिशुः। अभुक्तमूलजः सार्पमघानक्षत्र-योरपीति"। तथापरोभेदः एकेति ज्येष्ठान्ते एकघटीमितं मूलादौ घटीद्वयमितमेवं मिलित्वा त्रिघटिकमभुक्तमूलं स्या-दिति वशिष्ठमुनिर्जगौ यदाह वशिष्ठः "ज्येष्ठान्त्यपादघटि-कामितमेव केचिन् मूलं ह्यभुक्तमपरे पुनरामनन्ति। मूला-द्यपादघटिकाद्वितयेन सार्द्धमष्टौ समाःपरिहरेदिह जन्म-भाजमिति"समा वर्षाणि। अथान्योभेदः एकेति ज्येष्ठान्त्या-र्द्धघटिका मूलाद्यार्द्धघटिका मिलित्वा एकघटी प्रमाणमस्य तदेकघटीप्रमाणकं"शेषाद्विभाषा"इति पा०कप् तादृशमभुक्त-मूलं स्यादिति वृहस्पतिर्जगौ तदाह गुरुः"ज्येष्ठान्त्यघटि-कार्द्धञ्च मूलादौ घटिकार्द्धकम्। तयोरन्तर्गता नाड़ी ह्यभुक्त-मूलमुच्यत"इति अथेतरो भेदः अथेति अथशब्दः पादपूरणे मूलनक्षत्रस्य प्रथमा आदिमा अष्ट घटिकाः शाक्रस्य ज्ये-ष्ठायाः अन्तिमाः पञ्च नाड्यः पञ्च घटिकाः। एवमुभयो-र्ज्येष्ठा मूलयोरन्तरालवर्त्तिन्यस्त्रयोदशघटिका अभुक्तमूल-मिति लोका ऊचुः। "ज्येष्ठान्त्यघटिकाः पञ्च मूलाद्या वसुनाड़िकाः। अभुक्तमूलमित्युक्तं तत्र जातं शिशुं त्यजे-दिति"स्मरणात्। एवमभुक्तमूलस्यानेकभेदसत्त्वे कः सा-धीयान् पक्ष इति चेत् उच्यते नारदोक्तः पक्ष एव साधीयान् किमत्र प्रमाणमिति चेत् शृणु बहुमुनिसं-वाद एवात्र प्रमाणं तदाह कश्यपः ज्येष्ठान्त्यमूलयो-रन्तरालयामोद्भवः शिशुः। अभुक्तमूलजः सोऽप्य-श्लेषापितृभयोरपीति"। वशिष्ठोऽपि "भुजङ्गपौर-

न्तरपौष्णभानां तदश्वभानाञ्च यदन्तरालम्। अभुक्तमूलं प्रहरप्रमाणं त्यजेत् सुतं तत्र भवां सुताञ्चेति"। अतएव पूर्वमुक्ते वशिष्ठवाक्ये केचिदित्यन्यमताभिप्रायेण यतस्तद्वाक्ये केचिदिति अपरे इति चेत्युक्तिरस्ति यद्येवं घटीन्यूनाधिकभावाभिधायिनां प्रागुक्तवाक्यानां का गतिरिति चेत्। उच्यते दोषस्याधिक्याल्पत्वसूचनमेव गतिः। अथाभुक्तमूलसंज्ञाकथनस्य प्रयोजनमाह जातमिति। तत्राभुक्तमूलाख्ये काले जातं शिशुं बालकम् उपलक्षणत्वात्तत्र जातां कन्यां वा पिता परित्यजेद्विवासयेत् "त्यजेत् सुतं तत्रभवां सुताञ्चेति"वशिष्ठोक्तेः। यद्यशक्यं निष्कासनं स्यात्तदा किं कार्य्यमित्यत आहवेति वा अथ वा पूर्वपक्षकर्त्तव्यताशक्तौ पिताऽस्य शिशोः कन्याया वा मुखमष्ट समाः अष्टौ वर्षाणि "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समा" इत्यमरः तावत् कालं न पश्येत् यदाह नारदः"अभुक्तमूलजं पुत्रं पुत्रीमपि परित्यजेत्। अथवाब्दाष्टकं तातस्तन्मुखं न विलोकयेदिति'। च्यवनोऽपि "अभुक्तमूलभेभवं परित्यजेच्च बालकम्। समाष्टकं पिताऽथ वा न तन्मुखं विलोकयेत्" इति गण्डान्तदोषस्तु विवाहप्रकरणे वक्ष्यत इति कृत्वाऽत्र नोक्तः (तच्चोपयमशब्दे१२५८पृ०दर्शितम्)। अथ प्रसङ्गान् मूलाश्लेषा जातस्य बालस्य चरणवशेनशुभाशुभफलमुपजात्याह आद्ये इति मूलनक्षत्रस्याद्ये पादे प्रथमे चरणे चतुर्थांशे इति यावत् तत्र जातस्य शिशोः कन्याया वा पिता नाशं मरणमुपैति प्राप्नोति तथा मूलद्वितीयपादे जननी माता नाशमुपैति। तथा तृतीयमूलपादे धनं द्रव्यं नाशमुपैति चतुर्थो मूलपादोऽस्य शिशोः शुभः शुभफलदः। उक्तञ्च ब्रह्मपुराणे"मूलाद्येंऽशे पितुर्नाशो द्वितीये मातुरेव च। तृतीये धनधान्यादिनाशस्तुर्य्ये धनागमः" इति। तुर्य्ये चतुर्थे रत्नमालायाम् "तदाद्यपादके पिता विपद्यते जनन्यथ। तृतीयके धनक्षयश्चतुर्थकः शुभावहः" इति। अत्र पितुर्बहुस्त्रीकत्वेऽपि स्वमातुरेव नाशो वाच्यो न सापत्नमातुः यदाह कश्यपः "मूलाद्यपादजो हन्ति पितरन्तु द्वितीयजः। मातरं स्वां तृतीयोऽर्थान् सुहृदश्च तुरीयजः" इति। यतो मातृशब्दः सापत्नमातुरपि वाचकः। यदाह गौतमः "पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तदपत्यानि मातुलेयानीति। अतः स्पष्टार्थमेव कश्यपवाक्ये स्वामिति पदोपादानम्। अत्र विशेषो

वसिष्ठसंहितायां "मूलाद्यपादो दिवसे यदि स्यात्तज्जः पितुर्नाशनकारणं स्यात्। द्वितीयपादो यदि रात्रिभागे तदुद्भवो मातृविनाशकःस्यात्। मूलाद्यपादो यदि रात्रिभागे तदात्मनो नास्ति पुनर्विनाशः। द्वितीयपादो दिनगो यदि स्यान्न मातुरल्पोऽपि तदास्ति दोषः"इति। नारदसंहितायाञ्च "दिवाजातस्तु पितरं रात्रौ तु जननीं तथा। आत्मानं सन्ध्ययोर्हन्ति नास्ति गण्डविवर्जयेदिति"। एतदेव मातापितृगण्डमिति जीर्णा व्यवहरन्ति। अथ दोषसत्त्वे किं कार्य्यमत आह अथेति। अथानन्तरं शान्त्या मूलाश्लेषाशान्त्यास्वनुष्ठितया सर्वत्र चरणचतुष्टयेऽपि शुभमनिष्टफलनाशकं कल्याणं स्यात् उक्तञ्च वसिष्ठेन 'नैरृत्यभौजङ्गमगण्डदोषनिवारणायाभ्युदयाय नूनम्। पितामहोक्तां रुचिरां च शान्तिं प्रवच्मि लोकस्य हिताय सम्यक्। शास्त्रोक्तरीत्या खलु सूतकान्ते मासे तृतीयेऽथवा वत्सरान्ते" इति। नैरृत्यं मूलं तद्दोषः। भौजङ्गमश्लेषा तद्दोषः गण्डो वक्ष्यमाणस्तद्दोषस्य द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत इति न्यायात् अतस्तद्दोषाणां निवारणं तदर्थम् अतएव कश्यपेन "तद्दोषशमनार्थं हि शान्तिं कुर्य्यात् प्रयत्नतः"इति सामान्यत उक्तम्। अत्र वसिष्ठवाक्ये कालत्रयकथनं सामर्थ्यासामर्थ्यकृतं ध्येयं तथा हि यदि मातुः शीतोदकस्नाने सामर्थ्यं स्यात् तदा सूतकान्त एव शान्तिस्तत्राप्यशक्तौ तृतीये मासि शान्तिः दीर्घरोगादिना तदाप्यशक्तिश्चेत्तर्हि वर्षसमाप्तिदिवसे शान्तिः। मातृगण्डे तु विशेषस्तेनैवोक्तः "मातृगण्डे सुते जाते सूतकान्ते विचक्षणः। कुर्य्याच्छान्तिं तदृक्षे वा तद्दोषस्यापनुत्तये इति" शिष्टास्तु सर्वत्र यस्मिन्नक्षत्रे जन्म तन्नक्षत्र एव शान्तिरिति व्यवहरन्ति। ननु मूलपादचतुष्टयेऽपि शान्तिः कर्त्तव्येत्युक्तं तत्र चतुर्थचरणस्य शुभफलत्वात् शान्तिरयुक्तेति प्रतिभाति "अनिमित्तकृता शान्तिर्निमित्तायोपजायते" स्मरणात्। उच्यते यद्यपि चतुर्थचरणे धनागमरूपं शुभफलमभिहितं तथापि कश्यपेन "सुहृदश्च तुरीयजः"इति सुहृन्नाशरूपस्य फलस्यानिष्टस्योक्तेस्तदपाकरणार्थमवश्यं कर्त्तव्या शान्तिः। न हि कस्यचिद्वैरिनाशवन्मातुलाद्यनेकसुहृन्नाश इष्टः मूलतृतीयपादे पुरुषकन्ययोरशुभफलकथनाच्च। मूलदृक्षस्तु समनन्तरमेव मया वक्ष्यते यदि मूलाश्लेषादिदोषसम्भवे शान्तिर्न क्रियते तदानिष्टं भवति एवेत्याह नारदः "वत्स-

रात् पितरं हन्ति मातरं तु त्रिवर्षतः। द्युम्नं वर्षद्वये-नैव श्वशुरं नववर्षतः। जातं बालं वत्सरेण वर्षैः पञ्च-भिरग्रजम्। मातुलं चाष्टभिर्वर्षैरनुक्तान् हन्ति सप्तभिः। तस्मात्कान्ति प्रकुर्वीत प्रयत्नाद्विधिपूर्वकमिति" द्युम्नं धनं तस्मादवश्यं चरणचतुष्टयेऽपि शान्तिर्विधेयेति। व्यत्यये विलोममिति। अहिभे अश्लेषायामुक्तं फलं विलोमं विपरीतं ज्ञेयं तद्यथा मूलस्य प्रथमे पादे पितृनाश इति फलमुक्तं तत्फलमश्लेषाचतुर्थपादोत्पन्नस्य स्यात् मूलस्य द्वितीयपादे मातृनाश इत्युक्तं फलं तदश्लेषातृतीयचरणोत्पन्नस्य स्यात् अर्थनाशस्तृतीयचरणे इत्युक्तं तदश्लेषाद्वितीयपादजातस्य स्यात् मूलस्य चतुर्थपादः शुभ इत्युक्तं तदश्लेषाप्रथमचरणोत्पन्नस्य स्यादित्यर्थः। तदाह कश्यपः "फलं तदेव सार्पर्क्षे प्रतीपं त्वन्यपादतः" इति। वशिष्ठोऽपि "मूलाद्यपादजनितः पितरं निहन्ति द्वैतीयजः स्वजननीं विपदेऽर्थहन्त्रम्। तौरीयजः शुभकरः फलमेतदेव वैलोमतो भुजगधिष्ण्यभवस्य सर्वमिति"। द्वितीय एव द्वैतीयः प्रज्ञादेराकृतिगणत्वात् स्वार्थेऽण् एवं तौरीयवैलोमशब्दौ साध्यौ। अयमर्थः स्पष्टमुक्तो भास्करव्यवहारे "सार्पांशे प्रथमे राज्यं द्वितीये तु धनक्षयः। तृतीये जननीनाशश्चतुर्थे मरणं पितुरिति"। अंशस्वरणः अत्र लग्नादिदौष्ट्ये सति दुष्टफलमविकलं भवतीत्याह बादरायणः "मूलसार्पादिजं दौष्ट्यं स्यात् सम्यगन्तु लग्नपे। सक्रूरेऽर्के च विबले शुभदृष्टिविवर्ज्जिते" इति। अतः यथा अश्लेषादौष्ट्येऽपि शान्तिकं विधेयं तथाश्लेषान्त्यमघादिस्थान्तरालप्रहरात्मका भुक्तमूलाख्यकालेयोऽभिर्विहितस्तत्रोत्पन्नस्यापि शान्तिकं विधेयम्। अत्र सम्मतिवाक्यं प्रागभिहितं तत्र मूलशान्तिरश्लेषाशान्तिश्च गण्डान्तेन्द्रभेति पद्यव्याख्यानानन्तरं लिखिष्यते"।"अथात्र प्रसङ्गान्मूलवृक्षविचारोऽभिधीयते जयार्णवे मूलस्तम्भस्त्वचा शाखा पत्रं पुष्पं फलं शिखा। मुनयोऽष्टौ दिशो रुद्राः सूर्याः पञ्चाङ्कयोऽग्नयः। मूले तु मूलनाशः स्यात् स्तम्भे वंशविनाशनम्। त्वचि१० मातृभ्रंवेत् क्लेशः शाखायां११ मातुलस्य च। पत्रे१२ राज्यं विजानीयात् पुष्पे५ मन्त्रिपदं स्मृतम्। फले ४च विपुला लक्ष्मीः शिखायां३ मल्पजीवितमिति" अस्य मूलाख्यस्य पुरुषस्याङ्गेषु घटीविन्यासस्तत्रैव। "मूलस्य घटिकान्यासो मूर्ध्नि पञ्च५ नृपो भवेत्। मुखे सप्त७ स्मृतिः पितोः स्कन्धे वेदा४ महाबलः। बाह्वोरष्टौ बली पाण्योस्तिस्रो३ हस्तान्वितो भवेत्। हृदि खेटाः९ भूपमन्त्री नाभौ द्वौ२ ब्रह्मविद्भवेत्। गुह्ये दशा१० ऽतिकामी स्याज्जानुनोः षण्६ महामतिः। पादयोः षण्६ मतिस्स्वल्पायुः ज्ञायान् कमलासनः" इति। अथ मूलोद्भूतायाः कन्यायाः फलार्थं मूलाङ्गविभागस्तत्रैव। "चतस्रो४ नाड़िकाः शीर्षे कुर्वन्ति पशुनाशनम्। मुखे षट्६ धनहानिश्च कण्ठे पञ्च धनागमः। कौटिल्यं हृदये पञ्च बाह्वोर्वित्तागमं च तत्। वेदाः४ पाण्योर्द्वयाधर्म्मं वेदा ४ गुह्येऽतिकामिनी। ज्येष्ठमातुलनाशश्च जङ्घयोर्युगं३ नाड़िकाः। ज्येष्ठभ्रातृविनाशश्च चतस्रो जानुयुग्मके। पादयोर्दश१० नाड्यश्च तत्र वैधव्यमादिशेत्। इति मूलप्रसूतायाः फलमीरितमीदृशमिति" अस्यार्थः शीर्षे चतस्रो ४ घटिकाः मुखे षट्६ कण्ठे पञ्च५ हृदये पञ्च५ बाह्वोर्बाहुद्वये पञ्चपञ्चेति५ वीप्सा। पाण्योर्मेषिवत्वादधो भागयोश्चतस्र इत्यत्रापि वीप्सा। गुह्ये चतस्रः ४ जङ्घयोर्जङ्घाद्वये द्वे द्वे २।२ एवञ्चतस्रः जानुद्वये द्वे द्वे एवं चतस्रः पादयोः पादद्वये पञ्चपञ्चेत्येवं दश१० एवं मिलित्वा षष्टि६०र्घटिका भवन्ति। अथाश्लेषाजातयोः पुत्रकन्ययोरङ्गविभागेन फलं तत्रैवोक्तम् मूर्ध्नि पञ्च५ पुत्राप्तिर्मुखे सप्त७ पितृक्षयः। नेत्रे द्वे२ जननीनाशो ग्रीवायां स्त्रीषु लम्पटः। स्कन्धे वेदा ४ गुरौ भक्ति र्हस्तेऽष्टौ ८च बली भवेत्। हृद्येकादशभि११रात्मघाती संजायते नरः। द्वाभ्यां नाभौ भ्रमः,षड्भिर्गुदे नन्दैः६स्तपोधनः। पादे पञ्च५ धनं हन्ति सार्पादेतत्फलं क्रमादिति"। अथाश्लेषावृक्षोऽपि तत्रैवोक्तः फलं पुष्पं दलं शाखा त्वग्लता कन्द एव च। सार्पवल्ल्या दशा१० त्वां५ क्षुं९ स्वर७ विश्वा१३ र्क१२ सागराः ४। नाडिकास्तद्भवे बाले फलं ज्ञेयं यथाक्रमम्। श्रीः श्रीराजभयं हानिर्मातृपितात्मसंक्षयः" इति। अयञ्च विभागो नक्षत्रस्य षष्टि६०र्घटिकात्मकत्वे ज्ञेयः न्यूनाधिकत्वे तु त्रैराशिकमुह्यम्"।

वशिष्ठेनान्येष्वपि कियत्सु नक्षत्रेषु जातस्यारिष्टमुक्तं "चित्राद्यार्द्धे पुष्यमध्ये द्विपादे पूर्वाषाढ़ाधिष्ण्यपादे तृतीये। जातः पुत्रस्त्वोत्तराद्ये विधत्ते मातापित्रोर्भ्रातरं चात्मनाशम्। द्विमासस्योत्तरादोषः पुष्ये चैव त्रिमासकः। पूर्वाषाढ़ाष्टमे मासि चित्रा षाण्मासिकं फलमिति" अत्रोत्तराशब्देनोत्तराषाढ़ा गृह्यते पूर्वाषाढ़ासाहचर्यात्। अत एष्वपि नक्षत्रेषु यथाशक्तिमूलव-

च्छान्तिकं दोषपरिहारार्थं विधेयम् परन्त्वत्र देवताभेद एव केवलं ध्येयः। स च तत्तत्स्वामिकृतः तत्तन्मन्त्राश्च वेदादेवावगन्तव्यास्तच्छान्तिकञ्च तिथिगण्डान्तशान्तावस्माभिर्वक्ष्यत इत्यलमतिप्रसङ्गेन" पी०धा०। अथ मूलनिवासं सफलमिन्द्रवज्राच्छन्दसाह स्वर्गे इति शुचिराषाढः प्रौष्ठपदो भाद्रपदः इष आश्विनः माघः प्रसिद्धः एषु मासेषु मूलं मूलनक्षत्रं स्वर्गेऽस्ति स्वर्गे निवासस्तस्य। नभाः श्रावणः अन्ये प्रसिद्धाः श्रावणकार्त्तिकचैत्रपौषेषु भूमौ मूलं तिष्ठति। तपस्यः फाल्गुनः शुक्रो ज्येष्ठः अन्यौ प्रसिद्धौ फाल्गुनमार्गशीर्षवैशाखज्यैष्ठेष्वधस्तात्पाताले मूलं तिष्ठति एष मूलनिवास उक्तः एतत्फलञ्च मूलनक्षत्रं यदा यस्मिन्मासे यत्र वसति तत्रैव स्वर्गभूमिपातालेष्वेवोक्ता-शुभाशुभफलं ददाति अयमत्र तात्पर्य्यार्थः द्रव्याद्यभावेन शान्तिकं कर्त्तुमशक्तु यतः पुंसः स्वर्गपातालनिवासित्वेन मूलस्यारिष्टदोषस्तथा न प्रभवेत् यदा तु भूमावेव निवासस्तदा दोषानिवारणं नैव स्यादित्यशक्तेनापि शान्तिकं विधेयं नैतावता प्रागुक्ते विषये शान्त्यभाव एव किन्तु यथाशक्ति तत्रापि शान्तिकं विधेयं शक्तेन तु सर्वत्रैव विधेयम् तदुक्तं ज्योतिषार्णवे "मार्गफाल्गुनवैशाखज्यैष्ठे मूलं रसातले। माघाश्विननभस्येषु शुचौ मूलं सुरालये। पौषश्रावणचैत्रेषु कार्त्तिके भूमिसंस्थितम्। भूमिष्ठं दोषबहुलं स्वल्पमन्यत्र संश्रितम्" क्वचित् सौरमासपरत्वेन मूलनिवासोऽभिहितः "वृषालिसिंहेषु घटे च मूलं दिविस्थितं युग्मतुलाङ्गनान्त्ये। पातालगं मेषधनुःकुलीरनक्रेषु भूमाविति संस्मरन्ति। स्वर्गे मूले भवेद्राज्यं पाताले च धनागमः। मर्त्यलोके यदा मूलं तदा शून्यं समादिशेदिति" ज्योतिषरत्नेऽभिहितत्वात्" पी०धा०। अथ मूलप्रसङ्गाद्दुष्टेषु गण्डान्तादिनिमित्तेषु सत्सु जातस्यारिष्टं सपरिहारं शार्दूलविक्रीडितेनाह गण्डान्तेति एतेषु पदार्थेषु सत्सु जनिः शिशोरुत्पत्तिर्न शस्ता दुष्टफलदा गण्डान्तः सन्धिविशेषः स त्रिविधो नक्षत्रतिथिलग्नभेदेन तल्लक्षणं ज्येष्ठा पौष्णभेत्यादिना वक्ष्यति इन्द्रभं ज्येष्ठानक्षत्रं मूलः मूलाख्यो दुष्टयोगः पातो महापातो गणितसाध्यो, व्यतीपाताख्यो वैधृताख्यश्च परिघव्याघातगण्डा अपि दुष्टयोगाः अवमस्तिथिक्षयः संक्रान्तिः सूर्य्यस्य राश्यन्तरसंक्रमपुण्यकालः व्यतीपातवैधृतौ सप्तदशसप्तविंशतितमौ दुष्टयोगौ सिनीवाली दृष्टेन्दुरमावास्या। कुहूर्नष्टेन्दुरमावस्या "सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः" इत्यभिधानात् दर्शश्चन्द्रदर्शनरहितामावास्या एतच्चाग्रे सम्यक् प्रतिपादयिष्यते वज्रे दुष्टयोगे कृष्णे कृष्णपक्षे चतुर्दशी बहुवचनमाद्यन्तत्रभिप्रायं यमघण्टे मघाविशाखेत्युक्ते दुष्टयोगे दग्धयोगे सूर्य्येशपञ्चाग्निरसाष्टनन्दा इत्युक्ते दुष्टयोगे केचित्तु चापान्त्यगे गोघटगे पतङ्ग" इति वक्ष्यमाणो दुष्टयोग इति व्याचख्युः स्रुतौ हीशात्तोयादित्यादिनोक्ते मृत्युयोगे विष्टौ भद्रायां सोदरस्य भ्रातुर्भगिन्या वा भे नक्षत्रे पितृभे माता च पिता च पितरौ तयोर्भे मातृभे पितृभे च एषु निमित्तेषु सुतस्य सुताया जन्म चेत् स्यात्तदनिष्टकृत् स्यादित्यर्थः। दुष्टनिमित्तस्योपलक्षणत्वात् सूर्य्यचन्द्रग्रहणजन्मत्रीतरजन्माद्यनिष्टं सजातीयापत्यत्रयप्रसवानन्तरं विजातीयापत्यप्रसवस्त्रीतरः यथा पुत्रत्रयप्रसवानन्तरं कन्याया जननं कन्यात्रयप्रसवानन्तरं पुत्रस्य जननम् अतएव त्रिभ्यः सजातीयेभ्यः इतरो विजातीयस्त्रीतरः स्त्री च त्रीतरेति व्युत्पत्तिश्च त्रीतरश्च त्रीतरा च त्रीतरौ पुमान् स्त्रियेत्येकशेषः अथ परिहारोऽप्युच्यते सा जनिः शान्तितो वसिष्ठाद्यृषिप्रोक्तायाः शान्त्याः शुभा परिणामे सुखदायिनी शारीरक्लेशानुभवपूर्वकनीरोगदीर्घायुष्ट्वं शिशोः स्यादित्यर्थः। अत्र मूलवाक्यानि लिख्यन्ते। तत्र प्राक्पद्यप्रतिज्ञातसकलशान्तिसामान्यकर्मोपयिकी च मूलशान्तिस्तावदुच्यते। शौनक उवाच। अथातः सम्प्रवक्ष्यामि मूलजातहिताय च। मातापित्रोर्धनस्यापि कुले शान्तिहिताय च। त्यागो वा मूलजातस्य स्यादष्टावदात् प्रदर्शनम्। अभुक्तमूलजातानां परित्यागो विधीयते। अदर्शने वापि पिता स तु तिष्ठेत् समाष्टकम्। एवं च दुहितुर्गर्भ्यं मूलजातफलं बुधैः। मुख्यकालं प्रवक्ष्यामि शान्तिहोमस्य यत्नतः। जातस्य जननाह्ने तु जन्मर्क्षे वा शुभे दिने। समाष्टके वा मतिमान् कुर्याद्वै शान्तिमादरात्। यदेव शान्तिकं कुर्य्यात् कर्म तत्तु प्रचक्ष्महे" अधिकं तत्र दृश्यम्।

"गण्डेषु स्फुटरचनाजपत्रवल्ली" "गण्डोज्ज्वलाज्ज्वलनाभिचक्रया" इति च माघः।

**गण्डक** पुंस्त्री गण्ड+स्वार्थे क। (गाण्डार) १पशुभेदे स्त्रियां जातित्वात् ङीष्। २गण्डशब्दार्थे तस्य हयभूषणपरत्वेऽपि क्वचित् भूषणमात्रपरतेत्यभिप्रायेण "व्याघ्रनखपङ्क्तिमण्डिता गण्डकाभरणा (वालग्रीवा) च" काद०। "३पन्थौ

"गोरोचनालिखितभूर्ज्जपत्रगर्भान् मन्त्रगण्डकान्" काद०
स्फोटकरोगे "अनेकवेत्राघातनिर्मितबहुगात्रगण्डकम्"
काद०। गण्डकी नदी सन्निकृष्टतयाऽस्त्यस्य अच्।
गण्डकप्राचीस्थदेशभेदे तत्रवासिषु तद्भूपेषु बहुव०
"ततः स गण्डकान् शूरो विदेहान् भरतर्षभः। विजि-
त्याल्पेन कालेन" भा०स०२८अ० भीमप्राचीजयोक्तौ।

**गण्डकी** स्त्री गण्ड+जातौ ङीष्। १गण्डकी गण्डकजा-
तिस्त्रियाम्। २नदीभेदे ३तदधिष्ठातृदेवीभेदे च सा
च विष्णुसेवया शालग्रामशिलाखनित्वं लेभे तत्-
कथा। वराहपु०

"गण्डक्यापि पुरा तप्तं वर्षाणामयुतं विधे!। शीर्ण-
पर्णाशनं कृत्वा वायुभक्षाप्यनन्तरम्। दिव्यं वर्षशतं
तेपे विष्णुं चिन्तयती सदा। ततः साक्षाज्जगन्नाथो
हरिर्भक्तजनप्रियः। उवाच मधुरं वाक्यं प्रीतः
प्रणतवत्सलः। गण्डकि! त्वां प्रसन्नोऽस्मि तपसा वि-
स्मितोऽनघे!। अनवच्छिन्नया भक्त्या वरं वरय
सुव्रते!। किं देयं तद्वदस्वाशु प्रीतोऽस्मि वरवर्णिनि!।
गण्डक्यपि पुरोदृष्ट्वा शङ्खचक्रगदाधरम्। दण्डवत्
प्रणता भूत्वा ततः स्तोतुं प्रचक्रमे।" "ततो हिमांशो!
सा देवी गण्डकी लोकतारिणी। प्राञ्जलिः प्रणता भूत्वा
मधुरं वाक्यमब्रवीत्। यदि देव! प्रसन्नोऽसि देयो मे
वाञ्छितो वरः। मम गर्भगतो भूत्वा विष्णो! मत्
पुत्रतां व्रज। ततः प्रसन्नो भगवान् चिन्तयामास
गोपते!। किं याचितं निम्नगया नित्यं मत्सङ्ग-
लुब्धया। दास्यामि याचितं येन लोकानां भवमोचणम्।
इत्येवं कृपया देवो निश्चित्य मनसा स्वयम्। गण्डकी
मवदत् प्रीतः शृणु देवि! वचो मम। शालग्रामशिला
रूपी तव गर्भगतः सदा। तिष्ठामि तव पुत्रत्वे भक्तानु-
ग्रहकारणात्। मत्सान्निध्यात् नदीनां त्वमतिश्रेष्ठा
भविष्यसि। दर्शनात् स्पर्शनात् स्नानात् पानाच्चैवाव-
गाहनात्। हरिष्यसि महापापं वाङ्मनःकायसम्भवम्।
यः स्नास्यति विधानेन देवर्षिपितृतर्पकः। तर्पयेत्
स्वपितॄंश्चापि तारयित्वा दिवं नयेत्। स्वयम् मम प्रियो
भूत्वा ब्रह्मलोकं गमिष्यति। यदि त्वय्युत्सृजेत्
प्राणान् मम कर्मपरायणः। सोऽपि याति परं स्थानं
यत्र गत्वा न शोचति। एवं दत्त्वा वरान् देव्यै तत्रै-
वान्तरधीयत। ततः प्रभृति तिष्ठामः चक्रेऽस्मिन् शश-
लाञ्छन!"। "गण्डक्याश्चैकदेशे च शालग्रामस्थलं
स्मृतम्। पाषाणं तद्भवं यत्तत् शालग्राममिति स्मृतम्"
स्मृतिः। सा च शोणनदसन्निकृष्टस्थाने गङ्गायां सङ्गता
हरिहरक्षेत्रतया च तत्सङ्गमस्थानं प्रसिद्धम्। "गण्ड-
कीञ्च महाशोणं सदानीरां(करतोयाम्)तथैव च। एक-
पर्वतके सद्यः क्रमेणैवाव्रजन्त ते" भा०स०१९अ०"गण्ड-
कीन्तु समासाद्य सर्वतीर्थजलोद्भवाम्। वाजपेयम-
वाप्नोति सूर्य्यलोकञ्च गच्छति" भा०व० ८४। "गण्डक्या
उत्तरे तीरे गिरिराजस्य दक्षिणे। रिंहस्यं (?) कारस्यञ्च
गुरुं यत्नेन वर्ज्जयेत्" मलमा० त०।

**गण्डकारी** स्त्री गण्डं ग्रन्थिं भग्नसंयोजनरूपं करोति
कृ—अण् गौ० ङीष्। (हातजोड़ा) १वराहक्रान्ताया-
मोषधौ रत्नमा०। २खदिरवृक्षे शब्दच०।

**गण्डकाली** स्त्री गण्डेषु ग्रन्थिषु काली। १खदिरीवृक्षे
२समङ्गायाम् अमरः। [शब्दे तस्य तत्पुत्रत्वकथा दृश्या

**गण्डकीपुत्र** पु० ६त०। १शालग्रामे शिलाभेदे। गण्डकी-

**गण्डकीशिला** स्त्री गण्डक्यामुत्पन्ना शिला। शालग्राम-
शिलायाम्। [मदे हारा०।

**गण्डकुसुम** न०गण्डस्य हस्तिकपोलस्य कुसुममिव। १हस्ति-

**गण्डकूप** पु० गण्डे गण्डवदुच्चपर्वतस्थगौ कूपः। पर्वतोच्च-
देशस्थे कूपे हारा०। [फलप्रधाने वृक्षे शब्दचि०।

**गण्डगात्र** न० गण्ड इव उच्चावचं गात्रमस्य। (आता)

**गण्डदूर्व्वा** स्त्री गण्डयुक्ता ग्रन्थिमती दूर्वा। (गाँटदूर्वा)
दूर्वाभेदे राजनि०। "गण्डदूर्वा हिमा लौहद्राविणी
ग्राहिणी लघुः। तिक्ता कषाया मधुरा वातकृत् कटु
पाकिनी। दाहतृष्णावलासास्रकुष्ठपित्तज्वरापहा"
भावप्र०। [लोपः। गण्डतुल्यचरणे।

**गण्डपाद** त्रि० गण्डस्य पाद इव पादोऽस्य हस्त्या० नान्त्य-

**गण्डफलक** न० गण्डः फलकमिव प्रशस्तत्वात् उपमितस०।
१विस्तीर्णगण्डे। बहु०स०। २तद्युक्ते त्रि०। "छतमुग्धगण्ड-
फलकैर्विबभुर्विकसद्भिरास्यकमलैः प्रमदाः" माघः। गण्डं भि-
त्तिरिव। गण्डभित्त्यादयोऽपि तत्रार्थे "निर्धौतदानामल-
गण्डभित्तिः" "अनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय" रघुः।

**गण्डमाला** स्त्री ६त०। १रोगभेदे। तल्लक्षणभेदाद्युक्तं
भावप्र० यथा

"कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागल
वङ्क्षणेषु। मेदःकफाभ्यां चिरमन्दपाकैः स्याद्गण्ड-
माला बहुभिस्तु गण्डैः।" "गण्डमालाया एका-
वस्थाविशेषमपचीमाह "ते ग्रन्थयः केचिदवाप्तपाकाः

स्रवन्ति नश्यन्ति भवन्ति चान्ये । कालानुबन्धं चिर मादधाति सैवापचीति प्रवदन्ति केचित् । ते ग्रन्थयः गण्डमालाया एव गण्डाः केचिद्रवाम्रपाकाः सन्तः स्रवन्ति, केचित् नश्यन्ति पुनः प्ररोहन्ति । अन्ये भवन्ति च । कालानुबन्धाच्चिरमादधाति या गण्डमाला चिरं तिष्ठति सैवापची इति केचिद्वदन्ति । अपच्याः साध्यत्वा दिकमाह । साध्या स्मृता पीनसपार्श्वशूलकास-ज्वरच्छर्दियुता त्वसाध्या । ग्रन्थेर्लक्षणमाह । वा-तादयो मांसमसृक् च दुष्टं संदूष्य मेदश्च तथा शि-राश्च । वृत्तोन्नतं विग्रथितं तु शोथं कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्टः । विग्रथितं ग्रन्थिरूपम्" । गण्डमालाऽस्त्यस्य इनि । गण्डमालिन् तद्रोगवति त्रि० । तस्य श्राद्धे वर्ज्यतामाह मनुः "भ्रामरी गण्ड-माली च श्वित्र्यथो पिशुनस्तथा" ।

**गण्डमालिका** स्त्री गण्डानां ग्रन्थीनां माला यत्र कप् कापि अत इत्वम् । १लज्जालुलतायाम् रत्नमा० ।

**गण्डयन्त** पु० गडि-झच् । १मेघे उज्ज्वलदत्तः ।

**गण्डली** पु० गण्ड इव भूमेरुच्छूनप्रदेशः क्षुद्रशैलस्तत्र क्षी-यते क्षि-क्विप् । १महादेवे "गण्डली मेरुधामा च देवाधिपतिरेव च" भा० आनु० १७अ० । "शिवसहस्र-नामोक्तौ "सुलोपः आर्षः" नीलकण्ठः ।

**गण्डलेखा** स्त्री लिख्यतेऽत्र लेखा स्थली गण्डः स्थलीव । १प्रशस्तगण्डस्थल्याम् ।

**गण्डशिला** स्त्री गण्डः भूमेरुच्छूनप्रदेश इव शिला । भूमेरुच्छूनप्रदेशवत् १स्थूलपाषाणे । "दृष्टोऽङ्गुष्ठशिरो मात्रः क्षणाद्गण्डशिलासमः" भाग०३।१३।११ ।

**गण्डशैल** पु० गण्ड इव भूमेरुच्छूनप्रदेशः शैलः स्थूलो-पलः, शैलस्य गण्ड इव वा राजद० पूर्वनि० । भू-कम्पादिना पर्वतात् पतिते स्थूलपाषाणे अमरः । "लीलां दधौ राजतगण्डशैलः" "अस्मिन् भजन्ति कन-कोपलगण्डशैलाः" । "योषाणामुरुभिरुरोजगण्डशैलैः" इति च माघः ।

**गण्डसाह्वया** स्त्री गण्डेन सहित आह्वयो यस्याः । १गण्डक्यां नद्याम् "गङ्गा च शतकुम्भा च शरयूर्गण्डका-ह्वया" भा०व०२१२अ० । [ शब्दच० स्त्रियां ङीप् ।

**गण्डाङ्ग** पुंस्त्री गण्ड इव उच्छूनमङ्गं यस्य । १गण्डके

**गण्डान्त** न० "नक्षत्रतिथिलग्नानां गण्डान्तं त्रिविधं स्मृतम् । नवपञ्चचतुर्थानां द्वे नाड्यौ घटिकामितम्" ज्योति-षोक्ते तिथिनक्षत्रादीनां सन्धिसमयभेदे उपयमशब्दे १२५८ पृ० विवृतिः । [वृक्षे भावप्र० ।

**गण्डारि** पु० गण्डरोगस्यारिः नाशकत्वात् । १कोविदार-

**गण्डाली** स्त्री गण्डेन ग्रन्थिनाऽल्यते भूष्यते अल-घञ् गौरा०ङीष् । १श्वेतदूर्वायां अमरः । गण्डमलति-अल-अच् गौरा० ङीष् । २सर्पाक्षीवृक्षे भावप्र० । [ हेम० ।

**गण्डि** पु० गडि-इन् । वृक्षस्य मूलाच्छाखावधिभागे (गुडि)

**गण्डिक** त्रि०गण्डः बुद्बुद इवाकारोऽस्त्यस्य ठन् । बुद्बुदो-पमे १क्षुद्रपाषाणादौ "गन्धमादनपार्श्वे तु परे त्वपर-गण्डिकाः" भा०भी०६अ० । "अपरे अस्य गन्धमादनस्यै-वावयवभूता बुद्बुदोपमाः क्षुद्रशैलाः" नील० । अल्पार्थे ङीप् स्वार्थे क ह्रस्वः । २गण्डिका क्षुद्रगण्डपाषाणे स्त्री "तथा माल्यवतः शृङ्गे पूर्वपूर्वानुगण्डिका" भा०भी०७अ० । अत्र "नगं डिकाकारयोगं करेऽणुमिति" भा० आश्व० ८श्लोकं कश्चिदुदाजहार तच्चिन्त्यं तस्य श्लोकस्य नग-मितिच्छेदः तदर्थस्तु नीलकण्ठेनोक्तः यथा नगं पर्वतं, डीयते विहायसा गच्छति डीः पक्षी ततः अल्पार्थे कन् डिका मशकादि तस्याकारेण योगोऽस्य तथाभूतं करे कुर्वे तथा च पर्वतमपि मशकीकर्त्तुं शक्नोमीति" ।

**गण्डीर** पु० गडि-बा०ईरन् । १समष्ठिलायां (शशा) ख्याते वृक्षे जटा० (गुमिया)ख्याते २शाकभेदे भरतः । ३सेहुण्ड-वृक्षे (सिजु) स्त्री राजनि० गौरा० ङीष् ।

**गण्डु** (गडू) पुंस्त्री गण्डयते गडि-आधारे उन् स्त्रीत्वे अप्राणिजातिवाचकत्वात् ऊङ् । १उपधाने (बालिश) जटा० तत्र कपोलरूपवदनैकदेशव्यापारसत्त्वात्तथा-त्वम् । २ग्रन्थौ पु० शब्दार्थचि० गण्डूपदः । गण्डुः ग्रन्थिरस्त्यस्य सिध्मा०वा लच् । ३गण्डुल ग्रन्थियुते त्रि० । पक्षे मतुप् । गण्डुमत् तत्रार्थे त्रि० स्त्रियां ङीप् ।

**गण्डूपद** पुंस्त्री०गण्डुः ग्रन्थयः तद्युतानि पदानि यस्य । (केँचो)१किञ्चुलुके अमरः । स्त्रियां ङीष् । अल्पार्थे ङीप् । गण्डूपदी २क्षुद्रकिञ्चुलके अमरः । [ हेमच० ।

**गण्डूपदभव** न० गण्डूपद इव भवति भू-अच् । १सीसके

**गण्डूष** पु० गडि-ऊषन् । १मुखपूरणे २मुखान्तर्गतजलादौ च "गण्डूषमुज्झितवता पयसः सरोषम्" माघः । "सु-खोष्णः स्नेहगण्डूषो नस्यं स्नैहिकमेव च" सुश्रु० । "अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते" स्मा० त० । "तस्य जह्नुः सुतो, गङ्गां गण्डूषीकृत्य योऽपिबत्" भाग० ८।१५।३। "गजाय गण्डूषजलं करेणुः" कुमा० । ३हस्ति

गुण्डाये ४प्रस्थतिपरिमाणे च मेदि० "गण्डूषजलमात्रेण शफरी फर्फरायते" उद्भटः। ५उन्नतनाभौ च स्त्री टाप् अमरोक्तं स्त्रीत्वमेतदर्थपरमिति शब्दार्थचि० ।

गण्डूषकवलधारणादौ विधिश्च भावप्र० दर्शितो यथा "स्नेहक्षीरकषायादिद्रवैः संपूर्णमाननम् । आपूर्य्य स्थीयते तावद्विधिर्गण्डूषधारणे । कफपूर्णास्यता यावच्छेदो दोषस्य वा भवेत् । नेत्रघ्राणस्रुतिर्य्यावत्तावद्गण्डूषधारणम् । गण्डूषान् सुस्थितः कुर्यात् स्विन्नभालगलादिकः । मनुष्यस्त्रींस्तथा पञ्च सप्त वा दोषनाशनान् । गलादिक इत्यादि शब्देन गण्डकपोलौ गृह्येते सुश्रुतोक्तत्वात् । चतुर्विधः स्याद्गण्डूषः स्नेहनः शमनस्तथा । शोधनो रोपणश्चैव कवलश्चापि तादृशः । स्निग्धोष्णैः स्नैहिको वाते, स्वादुशीतैः प्रसादनः। पित्ते कट्वम्ललवणैरुष्णैः संशोधनः कफे । कषायतिक्तमधुरैः कटूष्णो रोपणो व्रणे। दद्याद्द्वेषु चैषाञ्च गण्डूषे कोलमात्रकम् । कर्षप्रमाणः कल्कस्य कवले दीयते बुधैः । धार्यन्ते पञ्चमाद्वर्षाद्गण्डूषाः कवलादयः । व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् । इन्द्रियाणां प्रसादश्च गण्डूषे विहिते भवेत् । हरेदास्यस्य वैरस्यं शोषपाकं व्रणं तृषाम्। दन्तचालं च गण्डूषो वैशद्यं तु करोति हि । अथ कवलः वातपित्तकफघ्नस्य द्रव्यस्य कवलं मुखे। अर्द्धं निःक्षिप्य संचर्व्य निष्ठीवेत्कवले विधिः । कवलः कुरुते काङ्क्षाभक्ष्येषु हरते कफम् । तृष्णां शोफञ्च वैरस्यं दन्तचालञ्च नाशयेत् ।"

**गण्डोपधान** न० गण्ड उपधीयतेऽत्र उप+धा—आधारे ल्युट् ६त० । (गालबालिश) गण्डस्थापनार्हे १उपधाने । "मृदुगण्डोपधानानि शयनानि सुखानि च" सुश्रु०।

**गण्डोल** पु० गडि—ओलच् ।१गुडके २ग्रासे च हेमच० । गुडकस्य वर्त्तुलाकारः(गोला)पदार्थभेदः। गुडकशब्दे दृश्यम् ।

**गण्डोलपाद** पु० गण्डोल इव पादोऽस्य उपमानपूर्वत्वेऽपि हस्त्या० नान्त्यलोपः । १गण्डोलतुल्यवर्त्तुलपादे त्रि० स्त्रियां स्वाङ्गत्वात् वा ङीप् ।

**गण्य** त्रि० गणं लब्धा गण+यत्,गण—कर्मणि यत् वा । गणं सङ्ख्यानं १लब्धरि,२गणनीये च । अग्रगण्यः । गणेभवः दिगा०यत् । गण्य ३गणभवे त्रि०। अस्य केनचित् समासे उत्तरपदस्थत्वे वर्ग्यादि०अकर्म्मधारये उत्तरपदस्याद्युदात्तता धार्म्मिकगण्य इति ।

**गत** त्रि० गम—कर्त्तरि क्त । १अतीते "तुनोद तस्य स्थलपद्मिनीगतम्" किरा०। "गता बहुतरा कान्ते ! स्वल्पा तिष्ठति यामिनी" "गताः समाः पादयुताः" नी०ता० "आयुषोऽर्द्धं गतं तस्य" सू०सि० धातूनामनेकार्थत्वात् २इत्थंभावं प्राप्ते च । "तथागतायां परिहासपूर्व्वम्" रघुः "तथागतायां तथाभूतायाम्" मल्लिना० । तथारूपप्राप्तायामिति तु न्याय्यम् ।३समाप्ते ४पतिते । कर्म्मणि क्त ।५ज्ञाते ६प्राप्ते ७कृतगतिके च। भावे क्त ।८गमने न० "गतं तिरश्चीनमनूरुसारथेः" माघः। "गतेषु लीलाञ्चितविक्रमेषु" कुमा०। "गतं गतं वह्निसमागतं गतम्" भट्टिः ।

**गतत्रप** त्रि० गता त्रपा लज्जा यस्य ।१निर्लज्जे । [अमरः।

**गतनासिक** त्रि० गता नासिकाऽस्य । (खादा)नासिकाशून्ये

**गतप्रत्यागत** त्रि० पूर्वं विरागात् स्वस्थानात् गतः पश्चादागतः स्वसेवायां विरक्ततया पूर्वं गते पश्चादागते १भृत्यादौ "शत्रुसेविनि मित्रे च गूढे युक्ततरो भवेत् । गतप्रत्यागते चैव स हि कष्टतरो रिपुः" मनुः । "सा चेदक्षतयोनिः स्याद्गतप्रत्यागताऽपि वा" मनुः । भावे क्त । २गमनप्रत्यागमनयोश्च न० द्विव० । गदाशब्दे दृश्यम् ।

**गतबुद्धि** त्रि० गता बुद्धिरस्य । १ज्ञानशून्ये ।

**गतरस** त्रि०गतो रसोऽस्य । १नष्टरसे "यातयामं गतरसम् । अभक्ष्यकथने" स्मृतिः ।

**गतभर्त्तृका** स्त्री गतो नष्टः प्रोषितो वा भर्त्ता यस्याः कप् । १विधवायां २प्रोषितभर्त्तृकायाञ्च । "किमु मुकुर्स्मुहुर्गतभर्त्तृकाः" माघः ।

**गतव्यथ** त्रि० गता नष्टा व्यथा यस्य । १व्यथाशून्ये ।

**गतसङ्ग** त्रि०गतः सङ्गोऽस्य ।१फलकामनाशून्ये२फलासक्ते ।

**गतसन्नक** पु० गतं सन्नमवसादहेतुर्मदोऽस्य कप् । निर्मदे १हस्तिनि शब्दच०। [स्पृहोऽप्यागमनप्रयोजनम्" माघः ।

**गतस्पृह** त्रि० गता स्पृहा अस्य । १निवृत्ततर्षे । "गत-

**गतस्मय** त्रि० गतः स्मयो गर्व्वो, विस्मयो वा यस्य । १अहङ्कारशून्ये २विस्मयशून्ये च । [ षित्त्वात् ङीष् ।

**गताक्ष** त्रि०गतमक्षि यस्य षच् समा०। १अन्धे हेमच०स्त्रियां

**गतागत** न०गतं गमनमागतमागमनं द्वयोः,समाहारः।१गमागमनयोः। "एवं त्रयीधर्म्ममनुप्रपन्ना गतागतं कामकामा लभन्ते" गीता । जीवस्य गतागतं च संसारे मरणोत्तरं पुनर्जन्मग्रहणरूपम् निष्क्रियस्य तस्य अन्यथा तदसम्भवात् । "गतागतकुतूहलं नयनयोरपाङ्गावधि" रसमञ्जरी । "मध्येन भवानां गतागतं लोहितः करोति ततः" इह०सं० ६अ० । गतागतेन निर्दिष्टम् अश्व-

द्यूता०ठक्। गतागतिक यातायातनिष्पादिते त्रि०। पूर्वं गतं पश्चादागतम्। २पक्षिगतिभेदे जटाधरः। गम—कर्त्तरि क्त। कर्म्म०। पूर्वं गते पश्चादागते त्रि०। खगगतिशब्दे विवृतिः। आ+गम—क्तिन् गतोत्तरमागतिः। गतागतिरप्यत्र स्त्री। "जाबालिरपि जानीते लोकस्यास्य गतागतिम्" रामा० अयो० ११०।

**गताध्वन्** त्रि० गतः अध्वा येन। १गतमार्गे २ज्ञाततत्त्वे च "गताध्वः छिन्नसंशयः" भा०शा०२२२अ०। स्त्रियां "डाबुभाभ्यामन्यतरस्याम्" पा०वा डाप्। सा च ३चतुर्दशीयुक्तामावास्यायां खर्वितशब्दे २४६६ पृ० कर्म्मप्रदीपवाक्यं दृश्यम्। "अमावास्यां कुर्वीत चन्द्रे दृश्यमानेऽप्येकदा गताध्वा भवतीति" गोपथब्रा० १।५।१०।

**गतानुगत** त्रि० गतस्य गमनस्यानुगतम् अनुगमनम्। १गमनामुरूपगमने। तेन निर्वृत्तं अक्षद्यूतादि०ठक्। गतानुगतिक गमनानुगमननिष्पन्ने त्रि०। गतानुगतमस्त्यस्य ठन्। गतानुगतिक तद्युक्ते त्रि० "गतानुगतिको लोको न लोकः पारमार्थिकः" पञ्चत०।

**गतान्त** त्रि० गत उपस्थितः अन्तः अन्तकालोऽस्य। १उपस्थितान्तकाले, मुमूर्षौ "मम वृद्धस्य कैकेयि! गतान्तस्य तपस्विनः" रामा० अ० १२।१०। गतः प्राप्तः अन्तो येन। २प्राप्तचरमसीमनि च।

**गतायुस्** त्रि० गतं गतप्रायमायुर्जीवनकालोऽस्य। १प्राप्तचरमकाले, गतायुर्लक्षणं सुश्रुतेनोक्तं यथा "शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत्। तत्त्वारिष्टं समासेन व्यासतस्तु निबोध मे। शृणोति विविधान् शब्दान् यो दिव्यानामभावतः। समुद्रपुरमेघानामसम्पत्तौ च निःस्वनान्। तान् स्वनानावगृह्णाति मन्यते चान्यशब्दवत्। ग्राम्यारण्यस्वनांश्चापि विपरीतान् शृणोत्यपि। द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति। न शृणोति च योऽकस्मात्तं ब्रुवन्ति गतायुषम्। यस्तूष्णमिव गृह्णाति शीतमुष्णञ्च शीतवत्। सञ्जातशीतपिड़को यश्च दाहेन पीड्यते। उष्णगात्रोऽतिमात्रञ्च यः शीतेन प्रवेपते। प्रहाराद्याभिजानाति योऽङ्गच्छेदमथापि वा। पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते। वर्णान्यभावराज्यो वा यस्य गात्रे भवन्ति हि। स्नातानुलिप्तं यञ्चापि भजन्ते नीलमक्षिकाः। सुगन्धिर्वाति योऽकस्मात्तं ब्रुवन्ति गतायुषम्। विपरीतेन गृह्णाति रसान् यश्चोपयोजितान्। उपयुक्ताः क्रमाद्यस्य रसा दोषाभिवृद्धये। यस्य दोषाग्निसाम्यञ्च कुर्य्युर्मिथ्योपयोजिताः। यो वा रसान्न संवेत्ति गतासुं तं प्रचक्षते। सुगन्धिं वेत्ति दुर्गन्धं दुर्गन्धञ्च सुगन्धिताम्। गृह्णीते योऽन्यथा गन्धं शान्ते दीपे च नीरुजः। यो वा गन्धान्न जानाति गतासुं तं विनिर्दिशेत्। द्वन्द्वान्युष्णहिमादीनि कालावस्था दिशस्तथा। विपरीतेन गृह्णाति भावानन्यांश्च यो नरः। दिवाज्योतींषि यश्चापि ज्वलितानीव पश्यति। रात्रौ सूर्य्यं ज्वलन्तं वा दिवा वा चन्द्रवर्चसम्। अमेघोपप्लवे यश्च शक्रचापतडिद्गुणान्। तडिततोऽसितान् यो वा निर्मले गगने घनान्। विमानयानप्रासादैर्यश्च सङ्कुलमम्बरम्। यश्चानिलं मूर्त्तिमन्तमन्तरीक्षञ्च पश्यति। धमनीहारवासोभिरावृतामिव मेदिनीम्। प्रदीप्तमिव लोकञ्च यो वा प्लुतमिवाम्भसा। भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति। न पश्यति सनक्षत्रां यश्च देवीमरुन्धतीम्। ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषम्। ज्योत्स्नादर्शणतोयेषु छायां यश्च न पश्यति। पश्यत्येकाङ्गहीनां वा विकृतां वाऽन्यसत्वजाम्। श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम्। पिशाचोरगनागानां भूतानां विकृतामपि। यो वा मयूरकण्ठाभं विधूमं वह्निमीक्षते। आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात्।" अधिकं कालचिह्नशब्दे १९९६ पृ० उक्तम्।

**गतार्त्तवा** स्त्री गतमार्त्तवं यस्याः। गतपञ्चाशद्वर्षवयस्कायां स्त्रियाम्। "द्वादशाद्वत्सरादूर्द्ध्वमापञ्चाशत्समं स्त्रियः। मासि मासि भगद्वारा प्रकृत्यैवार्त्तवं स्रवेत्" भावप्र० तद्गतिकाल उक्तः। रोगादिना तन्मध्ये गतरजस्कायामपि जातवन्ध्यायां २स्त्रियाञ्च राजनि०।

**गतार्थ** त्रि० गतो ज्ञातोऽर्थो यस्य। ज्ञातार्थके पदार्थे "तदपि स्वलक्षणकथनेनैव गतार्थम्" सा० द०।

**गतासु** त्रि० गताः असवोऽस्य। १मृते २शवे "गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः" गीता। ३गतप्रायप्राणके च सुश्रुतः गतायुःशब्दे दृश्यम्।

**गति** स्त्री गम—भावे क्तिन्। १गमने। "त्वमेवासि मे गतिः" रघुः। "प्रणयातिभूमिमगमयत् गतिभिः" माघः। "उपागमे दुश्चरिता इवापदां गतिं न निश्चेतुमलं शिलीमुखाः" किरा०। २परिणामे च "दुरधिगमा हि गतिः प्रयोजनानाम्" किरा०। "गतिः परिणामः" मल्लि०। ३ज्ञाने। करणे क्तिन्। ४प्रमाणे च। "अनेन

पूर्वं न मयेति का गतिः” किरा० “का गतिः किं प्रमाणम्” मल्लि०। आधारे क्तिन्। ५सरणौ पथि “भिन्नगतिर्हि लोकः” रघुः। ६स्थाने च। “कां गतिं कृष्ण! गच्छति” गीता। “गतिं प्रतापस्य जलत्प्रमाथिनः” किरा० “गतिं स्थानम्” मल्लि०। गम्यते कर्म्मणि क्तिन्। ७स्वरूपे “न वयं निरूपयितुमस्य गतिम्” किरा० “गतिं स्वरूपम्” मल्लि०। ८विषये च “मनोरथानामगतिर्न विद्यते” कुमा० “अगतिरविषयः” मल्लि०। भावे क्तिन्। ९यात्रायाम्। करणे क्तिन् १०अभ्युपाये “कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा” पुरा०। ११नाड़ीव्रणे मेदि०। पक्षिपतङ्गगतिभेदाश्च खगगतिशब्दे २४१५ पृ० उक्ताः। वृह० सं० ७अ० नक्षत्रभेदेन बुधस्य गतिभेदास्तत्फलभेदाश्चोक्ता यथा

“प्राकृतविमिश्रसङ्क्षिप्ततीक्ष्णयोगान्तघोरपापाख्याः। सप्त पराशरतन्त्रे नक्षत्रैः कीर्त्तिता गतयः। प्राकृतसञ्ज्ञा१ वायव्य१५याम्य२पैतामहानि४ बहुलाश्च३। मिश्रा गतिः२ प्रदिष्टा शशि५शिव६पितृ१०भुजग९दैवानि। सङ्क्षिप्तायां३ पुष्यः पुनर्वसुः फल्गुनीद्वयं चेति। तीक्ष्णायां४भाद्रपदाद्वयं सशाक्राश्वयुक्१८।१। पौष्णम्२७। योगान्तिकेति५ मूलं द्वे चाषाढे गतिः सुतस्येन्दोः। घोरा६ श्रवणस्त्वाष्ट्रं१४ वासवं२३ वारुणं२४ चैव, पापाख्या७। सवितं१२ मैत्रं१७ शक्राग्निदैवतं१६ चेति। उदयप्रवासदिवसैः स एव गतिलक्षणं प्राह। चत्वारिंशत्त्रिंशद्द्विसमेता विंशति२२र्द्विनवकं च१८। नव मासार्धं दश चैकसंयुताः११ प्राकृताद्यानाम्। प्राकृतगत्यामारोग्यवृष्टिसस्यप्रवृद्धयः क्षेमम्। सङ्क्षिप्तमिश्रयोर्मिश्रमेतदन्यासु विपरीतम्। ऋज्व्यतिवक्रा वक्रा विकला च मतेन देवलस्यैताः। पञ्चचतुर्द्व्यकाहा ऋज्व्यादीनां षडभ्यस्ताः। ऋज्वी हिता प्रजानामतिवक्रार्थं गतिर्विनाशयति। शस्त्रभयदा च वक्रा विकला भयरोगसञ्जननी।”

पाणिन्युक्तेषु प्रादिषु१२शब्दविशेषेषु पु० ते च “प्रादयः” “उपसर्गाः क्रियायोगे” “गतिश्च” “ऊर्य्यादिच्विडाचश्च” “अनुकरणं चानितिपरम्” “आदरानादरयोः सदसती” “भूषणेऽलम्” “अन्तरपरिग्रहे” “कणेमनसी” “श्रद्धाप्रतीघाते” “पुरोऽव्ययम्” “अस्तं च” “अच्छ गत्यर्थवदेषु” “अदोऽनुपदेशे” “तिरोऽन्तर्धौ” “विभाषा कृञि” “उपाजेऽन्वाजे” “साक्षात्प्रभृतीनि च” “अनत्याधाने उरसिमनसी” “मध्ये पदे निवचने च” “नित्यं हस्ते पाणावुपयमने” “प्राध्वं बन्धने” “जीविकोपनिषदावौपम्ये।” पा० उक्ताः धातुविशेषयोग एव तत्संज्ञां भजन्ते धातुविशेषाश्च सि०कौ० त०स०प्र० दृश्याः। तेषाञ्च गतिसंज्ञकानां “गतिर्गतौ” पा० अनुदात्तता। “सगतिरपि तिङ्” पा०। काष्ठं प्रपचतीत्यादौ अनुदात्तता। “गतिरनन्तरः” पा० “कर्म्मार्थे क्तान्ते परेऽव्यवहितो गतिः प्रकृत्या”। पुरोहितम्। “गतिकारकोपपदानां कृद्भिः समासवचनं प्राक्सुबुत्पत्तेः” वार्त्ति०। “गतिबुद्ध्यादि” पा० णिचि प्रयोज्यकर्त्तुः कर्म्मत्वम् ग्रामं गमयति देवदत्तम् चैत्रः। गत्यर्थकर्म्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि” पा०। ग्रामं ग्रामाय वा गच्छति अध्वनि तु मार्गं गच्छति। अचेष्टायां मनसा गच्छति “गत्यर्थाकर्म्मकेत्यादि” पा० कर्त्तरि च क्त। ग्रामं गतश्चैत्रः चकारात् भावे कर्म्मणि च गतं चैत्रस्य, गतो ग्रामश्चैत्रेण। “क्तोऽधिकरणे च” “ध्रौव्यगतिप्रत्यवसानेत्यादि” पा० आधारे क्त। “इदं यातं रमापतेः” सि० कौ०। सर्वे गत्यर्था ज्ञानार्थाः प्राप्त्यर्थाश्चेत्युक्तेः “मतिबुद्धिपूजार्थेभ्यश्च” पा० वर्त्तमानेऽपि क्त। शास्त्रमधिगतम् विप्रेण वर्त्तते, तेन ज्ञायमानमित्यर्थः। गत्यर्थकधातवश्च गणपाठे पठिता एव ज्ञेयाः। वैदिकप्रयोगे तु केचित्ततोन्येऽपि धातवः समष्ट्या निघण्टौ पठिता यथा

“वर्तते। अयते। लोटते। लोठते। स्यन्दते। कसति। सर्पति। स्यमति। स्रवति। स्रंसते। अवति। श्चोतति। ध्वंसति। वेनति। मार्ष्टि। भुरण्यति। शवति। कालयति। पेलयति। कण्टति। पिस्यति। विस्यति। मिस्यति। प्रवते। प्लवते। च्यवते। कवते। गवते। नवते। क्षोदति। नक्षति। सक्षति। म्यक्षति। सचति। ऋच्छति। तुरीयति। चतति। अतति। गाति। इयक्षति। सश्चति। त्सरति। रंहति। यतते। भ्रमति। ध्रजति। रजति। लजति। क्षियति। धमति। मिनाति। ऋण्वति। ऋणोति। स्वरति। सिसर्ति। वेविष्टि। योषिष्टि। रिणाति। रीयते। रेजति। दध्यति। दभ्नोति। युध्यति। धन्वति। अरुषति। आर्यति। डीयते। तकति। दीयति। ईषति। फणति। हनति। अर्दति। मर्दति। सस्र्ते। नसते। हर्यति। इयर्ति। ईर्ते। ईङ्खते। जयति। श्वात्रति। गन्ति। आ गनीगन्ति। जङ्घन्ति।

जिम्वति। जषति। गमति। भ्रति। भ्राति। भ्रयति। वञ्चते। अथर्यति। जेहते। घःकति। क्षुम्पति। पसाति। वाति। याति। द्रुर्षति। द्राति। द्रूडति। एजति। जमति। जवति। वञ्चति। अनिति। पवते। हन्ति। सेधति। अगत्। अजगन्। जियाति। पतति। इम्वति। इमति। द्रवति। वेति। इयक्षात्। एति। जगायात्। अयुथुरिति। द्वाविंशशतं गतिकर्माणः।" एतेषां भ्वाद्यादिगणीयत्वं विकरणादेवावसेयम्।

**गतितालिन्** पु० स्कन्दसैन्यभेदे "शृणु नामानि चाप्येषां येऽन्ये स्कन्दस्य सैन्यकाः" इत्युपक्रमे "वैताली गतितालो च तथा कथकवाचिकौ" भा० शल्य० ४६अ०।

**गतिला** स्त्री गम—इलच् मिथिला० नि तान्तादेशः। १वेत्रलतायाम् उज्ज्वल०। २नद्यां ३परम्परायाञ्च उणादिको०।

**गतिसत्तम** पु० गतिर्बोधः, प्राप्यं स्थानं वा चासौ सत्तमश्च। १परमेश्वरे। "आदित्यो ज्योतिरात्मा च सहिष्णुर्गतिसत्तमः" विष्णुस०।

**गत्वन्** त्रि०गम—क्वनिप् मलोपे तुक्। गन्तरि। स्त्रियां ङीप् रश्चान्तादेशः। गत्वरी।

**गत्वर** त्रि० गम—क्वरप् मलोपे तुक्। गमनशीले स्त्रियां ङीप्। "अभिमानधनस्य गत्वरैः" किरा०।

**गत्वा** अव्य० गम—क्त्वा। गतिं कृत्वेत्यर्थे "सद्यः पुरीपरिसरे च शिरीषमृद्वी गत्वा जवात् त्रिचतुराणि पदानि सीता" उत्तरच०। वेदे तु "क्त्वो यक् च" पा० यक्। गत्वाय तदर्थे अव्य० "दिवं सुपर्णो गत्वाय सोमं वज्रिण आभरत्" ऋ० ८,१००,८। "गत्वाय गत्वा" भा०। स्नात्व्यादि० नि० आतःस्थाने ईत्। गत्वी तदर्थे अव्य०। "सा नोदुही यद्यवसेव गत्वी" ऋ० ४।४१।५।

**गद** मेघध्वनौ अद० चुरा० उभ० अक० सेट्। गदयति ते अजगदत् त। गदयां बभूव आस चकार चक्रे।

**गद** व्यक्तभाषणे भ्वा० पर० सक० सेट्। गदति अगादीत्-अगदीत् जगाद। गदितं गदः। गद्यं निगाद्यम्। प्रणिगदति+प्रण्यगदत्। "जगादाग्रे गदाग्रजम्" माघः। "यत्र सायं सदा चैवं श्लोकमेकं जगाद ह" भा० व० ६७अ०। "अथ जगदुरनीचैराशिषस्तस्य विप्राः" भट्टिः। "सुद्धान्तरक्ष्या जगदे कुमारी" रघुः। "अन्तर्वाष्पभरोपरोधि गदितम्" शकु०। "विस्तरात् गदतो मम" देवीमा०।

नि+नितरां कथने। "निगदामि यथा युक्तं पुराणाश्रयसंयुतम्" भा० आ० ५अ०। "पौरा निवर्त्तध्वमिति न्यगादीत्" भट्टिः। "मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र! सदा निगद्यसे" रघुः। "न नैषध कार्य्यमिदं निगाद्यम्" नैष०। भावे वा अप्। निगादः निगदः। चतुर्थ्यन्ततयोच्चारणे च। "प्रतिनिगद्य होमः" कात्या०श्रौ०६,१०२६। "देवतां प्रति निगद्य देवतापदं चतुर्थ्यन्तमुच्चार्य्य स्वाहाकारेण होमः" कर्कः।

प्रति+प्रत्युत्तरकथने। "अभिगीयाभिरव्ययः प्रश्नं प्रतिजगाद ह" भा० आनु० १२४अ०।

वि+विरुद्धोक्तौ। "न हि निम्नात् स्रवेत् चौद्रं लोके विगदितं वचः" रामा० अयो० ३५अ०।

**गद** पु० गद—अच्। १रोगे अमरः। "व्रणोत्थानाञ्च विज्ञानं तद्गदप्रतिषेधनम्। प्रतिश्यायनिषेधश्च शिरोगदविवेचनम्। चिकित्सा तद्गदानाञ्च" सुश्रुतः। "येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः!" सुश्रु०। "असाध्यं कुरुते कोपं प्राप्ते काले गदो यथा" माघः। गद—अभ्रध्वनौ भावे घञ्। २मेघध्वनौ। शब्दक० भाषणार्थकतोक्तिश्चिन्त्या हलन्तत्वात् ततो भावे घञ एवानुशासनात् नाविशेषगदेऽप्योविधानात्। ३रोहिणीगर्भजाते वसुदेवपुत्रभेदे पु०। "बलं गदं सारणञ्च दुर्मदं विपुलम् ध्रुवम्। वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत्" भाग० ९,१४अ०। "हृदीकः ससुतोऽक्रूरो जयन्तगदसारणाः। आसते कुशलं कच्चित्" भा० ३।१२१४,२८। चलितानकदुन्दुभिः पुरः सबलस्त्वं सह सारणेन तम्। समितौ रभसादुपागतः सगदः सम्प्रतिपत्तुमर्हसि" माघः "जगादाग्रे गदाग्रजम्" माघः। कु(ड़) ४कुष्ठे विषभेदे न० राजनि०। गदाख्य-गदाह्वयादयोऽप्यत्र।५असुरभेदे पु०। गदाशब्दे दृश्यम्।

**गदगद** न० गद्गद+पृषो०। गद्गदभाषणे "वक्त्रजेषु कण्ठोष्ठतालूनामन्यतमे गदगदवाक्यता" सुश्रु०। गद्गदेत्येव पाठः सम्यक्।

**गदयित्नु** पु० गदि—इत्नुच् णेरयादेशः। १कामे, २कामुके ३वावदूके च त्रि०मेदि० ४शब्दे उज्ज्वलदत्तः।

**गदा** स्त्री गद—अच् टाप्। १स्वनामख्याते लौहादिकीलिते, २लौहमये याऽस्त्रभेदे, तद्युद्धक्रियाभेदो वह्नि पु० धनुर्वेदे दर्शितो यथा "आहतं विहृतं चैव गोमूत्रकमनावनम्। तथोर्द्धगावनमितं वामदक्षिणमेव

च। व्याहूतञ्च पराहृत्तम् पादोद्धूतमवप्लुतम्। हंसमार्गं विमार्गञ्च गदाकर्म्म प्रकीर्त्तितम्”। तत्रैवा-नतिदूरे च “सव्यासव्यशदण्डञ्च वराहोद्धूतकं तथा। हस्तावहस्तपालीनमेकहस्तावहस्तके। द्विहस्तबाहुपाशे च कटिकाचितकोद्गते। भव्ये ललाटघाते च भुजाविधमनं तथा। कारोद्धूतं विमानञ्च पादाहतविपादकम्। गात्रसंप्रेषणं क्रान्तं तथागात्रविपर्य्ययम्। ऊर्द्ध्वप्रहारं घातञ्च गोमूत्रं सव्यदक्षिणे। पादसन्ताड़नं मण्डं करचं विधमाकुलम्। तिर्य्यग्वत्स्नमपाघातं भीमवेगप्रदर्शनम्। सिंहाक्रान्तं गजाक्रान्तं गर्द्धभाक्रान्तमेव च। गदाकर्म्माणि जानीयात्”। भा० शल्य० गदा पर्वणि ५७अ० तु अन्यथैव प्रकारो दर्शितः यथा “अचरद्भीमसेनस्तु मार्गान् बहुविधांस्तथा। मण्डलानि विचित्राणि गतप्रत्यागतानि च। अस्त्रयन्त्राणि चित्राणि स्थानानि विविधानि च। परिमोक्षं प्रहाराणां वर्जनं परिधावनम्। अभिद्रवणमाक्षेपमवस्थानं सविग्रहम्। परिवर्त्तनसंवर्त्तमवप्लुतमुपप्लुतम्। उपन्यस्तमपन्यस्तं गदायुद्धविशारदौ। एवन्तौ विचरन्तौ तु न्यघ्नतां वै परस्परम्”। “मण्डलानि शत्रोः परिवेष्टनानि परितो भ्रमणानि। गतं शत्रोः सम्मुखगमनं प्रत्यागतम् आभिमुख्येन तत एवापसरणम्। अस्त्रयन्त्राणि कठिनमर्मदेशमाक्षिप्य येन शत्रोरुत्क्षेपणमपक्षेपणं च क्रियते तदस्त्रयन्त्रम् अस्यते क्षिप्यतेऽनेनेत्यस्त्रं तच्च तद्यन्त्रं नियन्त्रणम् चास्त्रयन्त्रमिति समासः। स्थानानि तेषामेवोपयोगीनि मर्मदेशादीनि परिधावनं वेगेन सव्यापसव्यकरणम्। अभिद्रवणं वेगेनाभ्यागमनम् आक्षेपं परयत्नस्य तत्पातनहेतुतासम्पादनम्। अवस्थानमचाञ्चल्यं सविग्रहं शत्रावुत्थिते पुनस्तेन सह युद्धकरणं परिवर्त्तनं शत्रुं प्रहर्त्तुं परितः प्रसरणं, संवर्त्तं शत्रुप्रसरणस्यावरोधनम् अवप्लुतं प्रहारवञ्चनार्थं नम्रीभावेन निःसरणम् उपप्लुतं तदेवार्वाग्गमनयुक्तम्। उपन्यस्तं उपेत्यायुधप्रक्षेपः अपन्यस्तं परावृत्य पृष्ठतः कृतेन हस्तेन शत्रोस्ताड़नम्” नी०क०।

गदालक्षणन्तु हेमा० परि०ख० लक्षणसमुच्चये “गदा पञ्चाशदङ्गुलायामा श्रेष्ठा, चत्वारिंशदङ्गुलायामा मध्या, त्रिंशदङ्गुलायामा कनिष्ठेत्यादि” अधिकं तत्रैव दृश्यम्। असुरभेदस्य गदस्यास्थिजातत्वात् विष्णुगदायास्तथात्वम्। यथा वायुपु० गयामा०५अ०। “गदो नामासुरो ह्यासीत् वज्राद्वज्रतरो दृढः। प्रार्थितो ब्रह्मणे प्रादात् स्वशरीरास्थि दुस्त्यजम्। ब्रह्मोक्तो विश्वकर्म्मापि गदां चक्रेऽद्भुतां तदा। तदस्थ्ना वज्रनिष्पेषैः कुन्दैः स्वर्गेऽप्यधारयत्” तस्याश्च विष्णवे दानकथा गदाधरशब्दे वक्ष्यते अन्य गदानां तदाकृतित्वात्तथात्वम्। “मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदाम्” विष्णु स०भा०धृतवाक्यात् ३बुद्धितत्त्वे च। गदाधरः गदाभृत्। ४पाटलावृक्षे शब्दच०।

**गदागद** पु० द्वि० व० गदमागच्छति आ+गम–ड गदागं रुग्नं दायतः शोधयतः दैप्–शोधने क। अश्विनीकुमारयोः त्रिका०।

**गदाग्रज** पु० गदस्याग्रजः। १बलरामे गदशब्दे बलरामस्य तथात्वं दृश्यम् २श्रीकृष्णे त्रिका० तस्य सापत्न्यभ्रातृत्वेऽपि एकपितृकत्वेन तस्य गदतोऽग्रजत्वात् तथात्वम् “तथ्यामृतथ्यानुजवज्जगाग्रे गदाग्रजम्” माघः।

**गदाग्रणी** पु० ६त०। १क्षयरोगे राजनि० तस्य सर्वरोगश्रेष्ठत्वात्तथात्वम्।

**गदाधर** पु० गदां धारयति धृ–अन्तर्भूतण्यर्थे अच्। १विष्णौ तस्य तद्धारणकथा वायुपु० गयामा० ५अ० गदाशब्ददर्शितवाक्ये गदानिर्म्माणमुक्त्वा “अथ कालेन महता मनौ स्वायम्भुवेऽन्तरे। हेतिरक्षो ब्रह्मपुत्रस्तपस्तेपे सुदारुणम्। दिव्यवर्षसहस्राणां शतं वायुमभक्षयत्। ऊर्द्ध्वमुखश्चोर्द्ध्वबाहुश्च पादाङ्गुष्ठभरेण हि। एकेनातिष्ठदव्यग्रः शीर्णपर्णानिलाशनः। ब्रह्मादींस्तपसा तुष्टान् वरं वव्रे वरप्रदान्। देवैर्दैत्यैश्च शस्त्रास्त्रैर्विविधैर्मनुजादिभिः। कृष्णेशानस्य चक्राद्यैरवध्यः स्यां महाबलः। तथेत्युक्तान्तर्हितास्ते हेतिर्देवानथाजयत्। इन्द्रत्वमकरोद्धेतिः भीता ब्रह्महरादयः। हरिन्ते शरणं जग्मुरूचुर्हेतिं जहीति तान्। ऊचे हरिरवध्योऽयं हेतिर्देवासुरैः सुराः!। महास्त्रं मे प्रयच्छध्वम् हेतिं हन्मि हि येन तम्। इत्युक्तास्ते ततो देवा गदान्तां हरये ददुः। दधार तां गदामादौ देवैरुक्तो गदाधरः। गदया हेतिमाहत्य देवेभ्यस्त्रिदिवं ददौ” वायुपु० गया० ५अ०। मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदाम्। धारयन् लोकरक्षार्थमुक्तश्चक्रगदाधरः” विष्णुसह० भाष्यधृतवाक्यात् लोकमर्य्यादारक्षार्थं बुद्धितत्त्वस्य प्रेरकत्वेन धारयितृत्वाद्वा तस्य तथात्वम्। “गदाधरं व्यपगतकालकल्मषम्” वायुपु० विष्णुस्तवः। “शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः” विष्णुस०। “बुद्धितत्त्वा-

त्मिकां गदाम् वहन् गदाधरः" भा० । विष्णोर्मूर्त्तिभेदे गदाया हस्तविशेषेण धारणं ध्यानशब्दे विष्णुचतुर्विंशतिमूर्त्तिध्यानकथने वक्ष्यते ।

**गदाभृत्** पु० गदां बिभर्त्ति भृ–क्विप् तुक् । विष्णौ हेमच० "पार्श्वस्थास्य गदभृतः" भाग० १० रासपञ्चाध्याये ।

**गदामुद्रा** स्त्री "अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली । अङ्गुष्ठौ मध्यमे भूयः सुलग्ने सुप्रसारिते । गदामुद्रेयमुदिता विष्णुसन्तोषवर्द्धिनी" तन्त्रसारोक्ते विष्णुपूजाङ्गे मुद्राभेदे ।

**गदाम्बर** पु० गदोऽम्बध्वनियुक्तमम्बरमस्मात् । १मेघे त्रिका० ।

**गदाराति** पु० ६त० । १औषधे राजनि० ।

**गदालोल** न० गयातीर्थस्थे हेतिदैत्यनाशोत्तरं गदाक्षालनाज्जाते तीर्थभेदे "क्षालनार्थं गदा यत्र विष्णुना लोलिताऽभवत् । बभूव तद्गदालोलं तीर्थं परमपावनम्" वायुपु० गया० ५ अ० ।

**गदावसान** न० गदाया जरासन्धत्यक्तगदागतेरवसानमत्र । मथुरासमीपस्थे जरासन्धत्यक्तगदापतनस्थाने । "निहते वासुदेवेन तदा कंसे महीपतौ । जातो वै वैरनिर्बन्धः कृष्णेन सह तस्य ( जरासन्धस्य कंसश्वशुरस्य) वै । भ्रामयित्वा शतगुणमेकोनं तेन भारत ! । गदा क्षिप्ता बलवता मागधेन गिरिव्रजात् । तिष्ठतो मथुरायां वै कृष्णस्याद्भुतकर्मणः । एकोनयोजनशते सा पपात गदा शुभा । दृष्ट्वा पौरैस्तदा सम्यग्गदा चैव निवेदिता । गदावसानं तत् ख्यातं मथुरायाः समीपतः । तस्यास्तौ हंसडिम्बकावशस्त्रनिधनावुभौ" भा० सभा० १८अ० ।

**गदासन** न० "गदासनमथो वक्ष्ये गदाकृति वसेत् भुवि । ऊर्द्ध्वबाहुर्भवेत् येन तस्य साधनहेतुना" तन्त्रसारोक्ते आसनभेदे ।

**गदित** त्रि० गद–क्त । कथिते स्त्रियां टाप् "ननभर सहिता गदितोज्ज्वला वृ०र० । अत्र गदितोज्ज्वलेति छन्दो नाम इत्यन्ये । उज्ज्वलेत्येव नामेति बहवः ।

**गदिन्** पु० गदाऽस्त्यस्य इनि । १विष्णौ "किरीटिनं गदिनं चक्रिणञ्च" गीता । २गदाधारिमात्रे त्रि० । "पिनाकिनं वज्रिणं दीप्तशूलम् परश्वधिनं गदिनं स्वायतासिम्" भा० द्रो० २०१ अ० । गद+इनि । ३रोगयुक्ते त्रि० स्त्रियां ङीप् ।

**गद्गद** वाक्स्खलने कण्ड्वा० पर०अक०सेट् । गद्गद्यति अगद्गदीत् अगद्गदीत् गद्गदया(दाम्)बभूव आस चकार ।

**गद्गद** पु० गद्गद–कण्ड्वा० भावे घञ् कर्त्तरि अच् वा अलोपः १अव्यक्तास्फुटशब्दे । २तद्वति त्रि० अमरः । तन्निदानमाह "आहत्य वायुः सकफो धमनीः शब्दवाहिनीः । नरान् करोत्यक्रियकान् मूकमिन्मिनगद्गदान्" माधवकरः । सा०द०तु सात्त्विकभावोक्तौ स्वरभङ्गरूपता तस्योक्ता यथा "स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः" इत्याद्यष्टसात्त्विकभावानुक्त्वा "मदसंमोदपीडाद्यैर्वैस्वर्यं गद्गदं विदुः" इत्युक्तम् "तत् किं रोदिषि गद्गदेन वचसा कस्यायतो रुद्यते नन्वेतन्मम, का तवास्मि दयिता, नास्मीत्यतो रुद्यते"अमरुश० । "विललाप सवाष्पगद्गदम्" रघुः । "हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः" सा०द० । "सगद्गदस्वरं किञ्चित् प्रियं प्रायेण भाषते सा०द० मुग्धानुरागोक्तौ । तत्र कुशलः आकर्षा० कन् । गद्गदक गद्गदकुशले त्रि० । सुश्रुते गद्गदत्वकारणमुक्तम् "तमतिस्थूलं क्षुद्रश्वासपिपासाक्षुत्स्वप्नस्वेदगात्रदौर्गन्ध्यक्रथनगात्रसादगद्गदत्वानि क्षिप्रमेवाविशन्ति" ।

**गद्गदध्वनि** पु० गद्गदः कफादिनाऽव्यक्तः ध्वनिः । हर्षशोकादिना सकफेन वायुना यथास्थानानुच्चारणात् सं जाते अव्यक्तध्वनौ । बहु०स० । २तद्वति त्रि० ।

**गद्य** त्रि०गद–यत् । १कथनीये "सह्यः कथं वियोगश्च गद्यमेतत्त्वया मम" भट्टिः । सा० द० उक्ते २पादरहिते काव्यभेदे न० । "श्रव्यं श्रोतव्यमात्रं तत् पद्यगद्यमयं द्विधा" इति श्रव्यकाव्यं विभज्य "वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च । भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्विधम् । आद्यं समासरहितं वृत्तभागयुतं परम् । अन्यद्दीर्घसमासाढ्यं तुर्यञ्चाल्पसमासकम् । मुक्तकं यथा "गुरुर्वचसि पृथुरुरसीत्यादि । वृत्तगन्धि यथा समरकण्डूयननिविडभुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनीटङ्कारोज्जागरितवैरिनगरः । अत्र कुण्डलीकृतकोदण्डेत्यनुष्टुब्वृत्तस्य पादः । उत्कलिकाप्रायं यथा अणिसविसुमरणिसिदसरविसरविदलितसमरपरिगदपवरपरबलेत्यादि (प्राकृतम्) । चूर्णकं यथा गुणरत्नसागर ! जगदेकनागर ! कामिनीमदन ! जनरञ्जनेत्यादि" । छन्दोमञ्जर्यामन्यथाभेदसंहितं तल्लक्षणादिकमुक्तं यथा "गद्यं पद्यमिति प्राहुर्वाङ्मयं द्विविधं बुधाः । प्रागुक्तलक्षणं पद्यं गद्यं सम्प्रति गद्यते । अपादं पदसन्तानं गद्यं तत्तु त्रिधा मतम् । वृत्तकोत्कलिका

प्रायवृत्तगन्धिप्रभेदतः । अकठोराक्षरं स्वल्पसमासं वृत्तकं मतम् । तत्तु वैदर्भरीतिस्थं गद्यं हृद्यतरं भवेत् । भवेदुत्कलिकाप्रायं समासाढ्यं दृढाक्षरम् । वृत्तैकदेशसम्बन्धात् वृत्तगन्धि पुनः स्मृतम् ।"

"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् । क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके । आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम्" यथा कादम्बर्यादि" ।

"गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते" । यथा देशराजचरितम् । "गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते । यथा विरुदमणिमाला" सा०द० ।

"यजुषामृचां च साम्नाञ्च गद्यानाञ्चैव सर्वशः । आसीदुच्चार्यमाणानां निस्वनो हृदयङ्गमः" भा० व०२६अ० । भाग० ५स्क०, विष्णु पु० च तत्प्रपञ्चो दृश्यः ।

**गद्याण** पु० भावप्र० कालिङ्गमानोक्तौ "यवद्वयेन गुञ्जा स्यात्त्रिगुञ्जो वल्ल उच्यते । माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत् क्वचित् । चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च । गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषिकः" इत्युक्ते अष्टचत्वारिंशद्गुञ्जामिते मानभेदे । स्वार्थे क । तत्रार्थे । "मुल्या यवाभ्यां कथितात्र गुञ्जा वल्लस्त्रिगुञ्जो धरणञ्च गतेऽष्टौ । गद्याणकस्तद्द्वयमिन्द्र१४तुल्यैर्वल्लैस्तथैको धटकः प्रदिष्टः" लीला०उक्ते परिमाणभेदे । तेन अष्टगुञ्जात्मकमाषषड्गुणतया तस्याष्टाचत्वारिंशद्गुञ्जामानत्वम् । क्वचिदस्य दन्त्यनमध्यतापि लमध्यता च । शब्दकल्पद्रुमे क्लीवोक्तिश्चिन्त्या भावप्र० गद्याणशब्दस्य पुंस्त्वोक्तेः स्वार्थिकप्रत्ययस्योत्सर्गतः प्रकृतिलिङ्गत्वौचित्यात् ।

**गद्य** त्रि० गद-यत् पृषो० नि० । १प्राह्ये । "ऋजा वाजं न गध्यम्" ऋ०४।१६।११ । "गध्यं ग्राह्यम्" "गध्यं ग्रहणातेः निगमः" भा० "मक्षू वाजस्य गध्यस्य सातौ" ऋ०६।२६।२। "गध्यस्य ग्राह्यस्य" भा० ।

**गध** मिश्रीभावे निघण्टुः दिवा० पर० सेट् । गध्यति अगधीत् अगाधीत् । जगाध गधिता "वाजस्य गध्यस्य सातौ" ऋ० ६।१०।६ गध्यस्य गध्यतिर्मिश्रीभावकर्मा मिश्रणीयस्य प्राप्यस्य वाजस्य सातौ सुसंभजने" भा० ।

**गन्तव्य** त्रि०गम-तव्य ।१गम्ये "गन्तव्यमस्ति कियदित्यसकृत् ब्रुवाणा रामाश्रुणः कृतवती प्रथमावतारम्" उत्तर० । "राजा स्तोनेन गन्तव्यो मुक्तकेशेन धावता" मनुः ।

**गन्तु** त्रि० गम-तुन् । १पथिके आगन्तुरभ्यागतः उज्ज्वलदत्तः २गन्तरि च । क्वचिन्नाबेऽपि तुन् । "मध्या- वीरिषमायुर्गन्तोः" ऋ० १,८६।८, "आयुर्गन्तोः मृत्युप्राप्तेर्गमनात् पूर्वम्" भा० । अत्र गन्तोः भावलक्षणे "स्थेण कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्" पा० ३।४।१६ । विहिततोसुनन्ततया माधवोक्तिश्चिन्त्या तत्र सूत्रे गमेरपाठात् । सितनिगमीत्यादिसूत्रेण तुनप्रत्ययान्तस्यैव तद्रूपस्यौचित्यात् । "युयोत नो अनपत्यानि गन्तोः" ऋ० ३।५४।१८ इत्यस्याः व्याख्यायां च तेन तुनन्ततयैव साधितत्वात् तथैवेहौचितत्वात् । वस्तुतः तोसुन्नन्तस्याव्ययतया तत्स्वरार्थमेव तथासाधनं तेन बा० तोसुन् इत्येव न्यायः ।

**गन्तृ** त्रि० गम-शीलार्थे तृन् । १गमनशीले २प्राप्तिशीले "तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च" गीता शीलार्थतृन्नन्तत्वात् न कर्मणि षष्ठी । कर्त्तरि तृच् । ३गमनकर्त्तरि त्रि० । अत्र कर्मणि षष्ठीति भेदः । उभयत्र स्त्रियां ङीप् । "गन्त्री वसुमती नाशम्" या० ।

**गन्त्री** स्त्री गम्यतेऽनया ष्ट्रन् ङीप् । १वृषवद्धयोग्ये शकटे अमरः । २गमनकारिकायां ३गमनशीलायां स्त्रियाञ्च ।

**गन्त्रीरथ** पु० गन्त्री रथ इव अभीष्टस्थानप्रापकत्वात् । शकटे अमरः । [न्दिक-पित्रादिक्रमेण तत्रवासिनि ।

**गन्दिका** स्त्री पुरीभेदे साऽभिजनोऽस्य सिन्ध्वा० अण् । गा-

**गन्ध** अर्द्दने (हिंसायाम्) गत्यां भूषणे च चुरा०आ०सक०सेट् । गन्धयते अजिगन्धत । गन्धनम् "गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः" पा० "गन्धनं हिंसनम्, गन्धनाङ्क उपयमे तु" इति च सि०कौ० । "गन्धनाङ्क सूचनार्थे इत्यर्थः । तेन सूचनार्थेऽपि ।

**गन्ध** पु० गन्ध-पचाद्यच् । घ्राणेन्द्रियग्राह्ये पृथिवीवृत्तौ विशेषगुणभेदे अमरः । २प्रतिवेशिनि त्रि०३लेशे ४सम्बन्धे ५गन्धके च मेदि०६गर्वे हेमच०।७शोभाञ्जने शब्दरत्ना० । "इष्टो मलयजो गन्धः" इति स्मृत्युक्ते ८घृष्टचन्दने च । गन्धश्च पृथिवीमात्रस्य गुणः । "रूपगन्धस्पर्शवती पृथिवी" कणा० सू० । न च पाषाणादौ गन्धरसयोरनुपलम्भात् तत्राव्यापकमिति वाच्यम् । तत्रापाततो गन्धरसयोरनुपलम्भेऽपि तदीयभस्मनि तदुपलम्भस्य सत्त्वात् य एवावयवाः पाषाणारम्भकास्त एव तद्भस्मारम्भका अपि "यत् द्रव्यं तद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति" व्याप्तेरतो नाव्याप्तिः । गन्धवत्त्वस्तु उत्पत्तिकाले घटादाव्याप्तमतो गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिवीत्वलक्षणम् । रत्नावल्याञ्च

"तत्र क्षितिर्गन्धहेतुरिति" का॰व्याख्यायाम् तथैवोक्तं यथा "गन्धहेतुरिति गन्धसमवायिकारणमित्यर्थः। यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितं तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम्। तथाहि पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिध्यति अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः। न च पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति वाच्यं तत्रापि गन्धसत्त्वात् अनुपलब्धिस्तु अनुत्कटत्वेनाप्युपपद्यते कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते? भस्मनो हि पाषाणध्वंसजन्यत्वात् पाषाणोपादानोपादेयत्वं सिध्यति, "यद् द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः दृष्टञ्चैतत् खण्डपटे महापटध्वंसजन्ये। इत्थञ्च पाषाणपरमाणोः पृथिवीत्वात् तज्जन्यस्य पाषाणस्यापि पृथिवीत्वं तथा च तस्यापि गन्धवत्त्वे बाधकाभावः"। गुणग्रन्थे च तस्य घ्राणग्राह्यत्वं द्वैविध्यञ्चोक्तं यथा "घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः। सौरभश्चासौरभश्च स द्विधा परिकीर्त्तितः" गन्धस्य पृथिव्यां स्वाभाविकत्वमौपाधिकत्वं वेति सन्दिह्य स्वाभाविकस्यैव तल्लक्षणत्वं कणा॰सू॰वृत्त्योः समर्थितं यथा "पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् व्यवस्थितः पृथिव्यां गन्धः।" सू॰ "इदानीं भूतानां लक्षणानि गन्धादीनि परीक्षिष्यु र्गन्धादीनां स्वाभाविकत्वमौपाधिकत्वञ्च व्यवस्थापयन्नाह। रूपरसगन्धस्पर्शा यत्र कारणगुणप्रक्रमेणोत्पद्यन्ते तत्र स्वाभाविकाः सन्तो लक्षणतामुपयन्ति नान्यथा नहि समीरणे उपलभ्यमानं सौरभं शिलातले उपलभ्यमानं शैत्यं जले उपलभ्यमानमौष्ण्यं वा लक्षणं भवति तदेतदाह पुष्पवस्त्रयोरिति नहि कनककेतकीकुसुम सन्निकृष्टे वाससि कनककेतकीसौरभमुपलभ्यमानं वाससः। नहि वाससः कारणगुणप्रक्रमेण तदुत्पन्नम्, किन्तर्हि कनककेतकीसन्निधानादौपाधिकं नहि वस्त्रे गन्धाभावे केतकीगन्धाभावो लिङ्गम्। किं लिङ्गमत उक्तं गुणान्तराप्रादुर्भाव इति गुणान्तरात् कारणगुणात् अप्रादुर्भावोऽनुत्पत्तिः यदि हि वस्त्रे यो गन्ध उपलभ्यते स तस्य स्वाभाविकः स्यात्तदा तदवयवेषु तन्तुषु केतकीसन्निकर्षात् पूर्व्वं तत्र वस्त्रे चोपलभ्येत न चैवमित्यर्थः। तथा च विवादाध्यासितो गन्धो न वस्त्रसमवेतः तदवयवगुणाजन्यविशेषगुणत्वात् शीतोष्णस्पर्शवत्। स्वाभाविकं गन्धं पृथिव्या लक्षणमाह पृथिव्यां व्यवस्थितोऽयोगान्ययोगाभ्यां परिच्छिन्नः समानासमानजातीयव्यावर्त्तकतया गन्धो लक्षणमित्यर्थः भवति हि पृथिवी गन्धवत्येव, पृथिव्येव गन्धवतीति, तदेवं समानजातीयेभ्यो जलादिभ्योऽसमानजातीयेभ्यो गुणादिभ्यश्च व्यावर्त्तकः स्वाभाविकः पृथिव्यां गन्ध इति व्यवस्थितम्" वृत्तिः। तत्र पृथिव्या उक्तार्थकगन्धवत्त्वलक्षणं यदुक्तं तस्य कथङ्कारं लक्षणता स्यादित्याशङ्कापूर्वकं कणादसू॰ उप॰ वृत्तौ समर्थितं यथा

"ननु लक्षणमिदं व्यतिरेकिलिङ्गमितरभेदसाधकं व्यवहारसाधकं वा तत्र पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् यन्नेतरभिन्नं तन्न गन्धवत् यथा जलादि इतरभेदाभावव्यापकाभावप्रतियोगिगन्धवती चेयं तस्मादितरभिन्ना। तत्रेतरभेदस्य साध्यस्य प्रसिद्धौ ततो हेतोर्व्यतिरेके सपक्षविपक्षव्यावृत्ततयाऽसाधारण्यम्। अव्यतिरेके चान्वयित्वम्। अप्रसिद्धौ च अप्रसिद्धविशेषणः पक्षः। तथाच तत्र न सन्देहो न वा सिषाधयिषा न वा तद्विशिष्टज्ञानरूपानुमितिः। किञ्च हेतुसाध्यव्यतिरेकयोर्व्याप्तिस्तथाच न व्याप्तस्य पक्षधर्मत्वं पक्षधर्मस्य न व्याप्तत्वमिति वैषम्यम्, अत एवोपनयवैयर्थ्यमपि व्याख्यायते नत्वगृहीतव्याप्तिकमिति तदुक्तम्, "साध्याप्रसिद्धिर्वैषम्यं व्यर्थतोपनयस्य च। अन्वयेनैव सिद्धिश्च व्यतिरेकिणि दूषणम्" इति। एवं व्यवहारसाध्यकेऽपि, तत्र यद्यपि व्यवहारः पृथिवीपदवाच्यत्वं तच्च पृथिवीत्वजातावप्यस्ति तत्र च पृथिवीत्वं हेतुर्नास्तीत्यसाधारण्यं तथापि पृथिवीत्वप्रवृत्तिनिमित्तकपृथिवीपदवाच्यत्वं साध्यमिति नासाधारण्यं यद्वा पृथिवीत्वं क्वाचित्कपदप्रवृत्तिनिमित्तं जातित्वात् घटत्ववदिति सामान्यतः सिद्धौ पृथिवीपदं पृथिवीत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वात् यन्नैवं तन्नैवमिति साध्यम्। तथा चात्रापि साध्याप्रसिद्धिरेवेति चेत् मैवम्, इतरेषां जलादीनाम् भेदस्य घट एव प्रसिद्धेः। वाय्वादेरतीन्द्रियस्यापि भेदस्य अन्योन्याभावस्य घटादौ प्रत्यक्षत एव सिद्धत्वात् अन्योन्याभावग्रहे अधिकरणयोग्यतामात्रस्य तन्त्रत्वात् स्तम्भः पिशाचो न भवतीत्यादौ तथादर्शनात्, नचैवं घट एव तर्हि दृष्टान्तोऽस्तु किं व्यतिरेकिणा "ऋजुमार्गेण सिद्धान्तं कोहि वक्रेण साधयेत्" इति वाच्यम् अव्यतिरेकिलिङ्गं चेदनाभासं, तदाऽयमपि मार्गो वक्ररुचिं प्रत्यप्रतिहत एव साध्याप्रसिद्धेर्निरासे तन्मूल-

कदोषाणां निरस्तत्वात्। व्यतिरेकसहचारेण अन्वयव्याप्तेरेव ग्रहात् व्यतिरेकव्याप्त्याऽन्वयव्याप्तेरनुमानाद्वा न वैषम्यम्। नचोपनयवैयर्थ्यम्, गृहीतव्याप्तेरेव हेतोः पक्षे उपसंहारात् तदुक्तम्, "नियम्यत्वनियन्तृत्वे भावयोर्यादृशी मते। त एव विपरीते तु विज्ञेये तदभावयोः"। इति व्यवहारस्तु गन्धवती पृथिवीत्युपदेशादेव यथा कम्बुग्रीवादिमान् घटपदवाच्य इति। तथा कुत्रचिदेव हतादौ मृदादौ च गन्धवत्त्वेनोपलक्षणेन पृथिवीत्वे पृथिवीपदप्रवृत्तिनिमित्तत्वं येनोपदेशाद्गृहीतम्, गन्धवत् सर्व्वं पृथिवीत्वेन प्रवृत्तिनिमित्तेन पृथिवीपदवाच्यं गन्धवत्त्वात् यन्नैवं तन्नैवमिति व्यतिरेकी तत्राप्यवतरत्येव। ननु भेदसाधकव्यतिरेकिणि भेदो वैधर्म्यं स्वरूपभेदो वा अन्योन्याभावो वा न तावदाद्यौ प्रत्यक्षत एव तदवगमात् न तृतीयः अभावभेदस्यापि साध्यत्वेन तदन्योन्याभावस्य तत्राभावात् तेन सह स्वरूपभेदे साध्ये साध्याननुगमादितिचेन्न अभावप्रतियोगिकान्योन्याभावस्यापि साध्यत्वात् स यद्यतिरिक्तस्तदाऽस्त्येव न चेत् स्वरूपमादाय तत्पर्य्यवसानात् वस्तुतोभिन्नएव तद्वैधर्म्यस्य तदन्योन्याभावव्याप्यत्वात्, नचानवस्था यावत्येवानुभवस्तावत्येऽविश्रामात् अन्यत्र त्वननुभवेनैव विश्रामात् यत्तु त्रयोदशान्योन्याभावास्त्रयोदशसु प्रसिद्धाः मिलिताः पृथिव्यां साध्यन्ते इति तन्तुच्छं प्रत्येकं प्रसिद्धेरतन्त्रत्वात् मिलितप्रसिद्धेरभावात् किन्तु निर्गन्धत्वावच्छिन्नप्रतियोगिताकान्योन्याभावः साध्येत प्रतियोगितावच्छेदकभेदेनाभावभेदस्यावश्यकत्वात् स च घटादावेव प्रत्यक्षसिद्ध इत्युक्तत्वात्"। (जलाद्यष्टद्रव्याणि गुणादिभावपञ्चकञ्चेति त्रयोदश) तस्य चाश्रयनाशादेव नाशादनित्यत्वं यथाह कणादसू०।

"पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च" सू० "पृथिव्यादीनां वाय्वन्तानामवयविनां रूपादयश्चत्वारोगुणा अनित्याः। यद्यप्यन्येऽपि गुणा अवयविषु वर्त्तमाना अनित्या एव,तथापि तेषामन्यतोऽपि विनाशः, रूपादयश्चत्वारोगुणा आश्रयनाशादेव नश्यन्ति न तु विरोधिगुणान्तरात्, द्रव्यानित्यत्वादिति द्रव्यस्याश्रयभूतस्यानित्यत्वादाश्रितानामनित्यत्वमित्यर्थः।" उप० वृ० "रूपादीनामनित्यत्वे यद्याश्रयानित्यत्वं तन्त्रं तदा नित्याश्रयवृत्तीनां नित्यत्वमित्याक्षेपबललभ्यमित्याह"। "एतेन नित्येषु नित्यत्वमुक्तम्।" सू० "रूपादीनामेव चतुर्णां नित्येष्वाश्रयेषु वर्त्तमानानां नित्यत्वमुक्तम् एतेनेति एतेनेति आश्रयानित्यत्वेनानित्यत्वाभिधानेनेत्यर्थः" उप० वृ०। एतेन मुक्तावल्यां सर्वगन्धोऽनित्य इत्युक्तिश्चिन्त्या। तस्य पाकजत्वमपि कणादसू० वृत्तौ उक्तं यथा

"कारणगुणपूर्वकाः पृथिव्यां पाकजाः" सू० "पाकजा रूपरसगन्धस्पर्शा इत्यर्थः कारणगुणपूर्वका इति रूपाश्रयस्य घटादेर्यत् समवायिकारणं कपालादि तद्गुणपूर्वकाः तथा च कपालरूपकारणैकार्थसमवायप्रत्यासत्त्या घटरूपाद्यसमवायिकारणम्, एवं रसादावपि"।

रूपादीनां पाकप्रकारः पाकजशब्दे वक्ष्यते। गुणगुणिनोरभेद इति वेदान्तिनो मन्यन्ते कणादसूत्रवृत्तौ तन्निराकृतं यथा।

"ननु नीलपीतादयोगुणा द्रव्याभिन्ना एव धर्मधर्मिणोरभेदादितिचेन्न रूपं घटः स्पर्शोघट इत्यादिव्यवहारप्रसङ्गात्, ननु नेदमनिष्टं यतो भवत्येव शुक्लः पटो नीलः पट इत्यादिप्रतीतिरितिचेन्न मतुब्लोपादभेदोपचाराद्वा प्रतीत्युपपत्तेः। भेदे प्रमाणे सति कल्पनेयं यथाकथञ्चिदुपपद्यते इति चेन्न चन्दनस्य रूपं चन्दनस्य गन्ध इत्यादिव्यपदेशबलाद्भेदसिद्धेः पटस्य रूपाभेदे पटवद्रूपमपि त्वगिन्द्रियेण गृह्येत पटमानयेत्युक्ते यत्किञ्चिद्रूपमानयेत् रूपमानयेत्युक्ते यत्किञ्चिद्द्रव्यमानयेत्। अस्तु तर्हि भेदाभेदः अत्यन्तभेदेऽत्यन्ताभेदे च सामानाधिकरण्यानुपपत्तेरितिचेन्न अवच्छेदभेदं विना विरुद्धयोर्भेदाभेदयोरेकत्रासम्भवात्, अन्योन्याभावत्वमव्याप्यवृत्तिवृत्ति नित्याभाववृत्तिधर्मत्वादत्यन्ताभावत्ववदितिचेन्न एकत्र संयोगतदत्यन्ताभावयोः प्रतीतिबलादत्यन्तभावस्याव्याप्यवृत्तित्वाभ्युपगमात् अन्योन्याभावे तु तथाप्रतीतेरभावात्।"

वेदान्तिमते तु तत्सत्त्वनियतसत्ताकत्वरूपतादात्म्यस्यैवाभेदत्वस्वीकारात् न तद्दोषावतारः। अतएवोक्तं "सत्यैक्ये मिथोभेदस्तादात्म्यमिति"। ऐक्ये तत्सत्त्वनियतसत्ताकत्वे सति मिथः परस्परं भेदः इति तैरभ्युपगमाच्च किञ्चिद्दूषणमवहतीति।

"रूपरसगन्धस्पर्शाः रूपत्वादिगुणत्वसाक्षाद्व्याप्यजातिमन्तः।" इत्युपक्रम्य उप०वृत्तौ तल्लक्षणमुक्तं यथा "घ्राणमात्रग्राह्यो गुणो गन्धः घ्राणमात्रग्राह्यगुणत्वव्याप्यजातिमत्त्वं गन्धत्वं स च सुरभिरसुरभिश्चेति द्विविधः, यद्वा पृथिवीवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं गन्धत्वम्।

सचायं गन्धः द्विविधः सुरभिरसुरभिश्च । भा॰ आश्व॰ ५०अ॰ अस्य दशविधतोक्ता यथा ।
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः । एते पञ्चगुणा भूमेर्विज्ञेया द्विजसत्तमाः! । पार्थिवश्च सदा गन्धो गन्धश्च बहुधा स्मृतः । तस्य गन्धस्य वक्ष्यामि विस्तरेण बहून् गुणान् (भेदान्) । इष्टश्चानिष्टगन्धश्च मधुरोऽम्लः कटुस्तथा । निर्हारी संहतः स्निग्धो रूक्षो विशद एव च । एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत" । तत्रेष्टः १कस्तूरिकादौ, अनिष्टः २विष्ठादौ, मधुरः ३मधुपुष्पादौ, कटुः ४मरिचादौ, निर्हारी ५हिङ्ग्वादौ । संहतश्चित्रगन्धः ६अनेककल्कद्रव्यादौ, स्निग्धः ७सद्यस्तप्तघृतादौ । रूक्षः ८सार्षपतैलादौ । विशदः ९शाल्यादौ, अम्लः १०तिन्तिड्यादौ । तस्योत्कटानुकटत्वादिकः अवान्तरधर्म्मः उद्गतशब्दे ११८१ पृ॰ विवृतः ।
तत्र सुरभिगन्धः पञ्चविधः पूजाङ्गम् यथाह कालि॰पु॰ । "गन्धञ्च सम्यक् शृणुतं पुत्रौ! वेतालभैरवौ! । चूर्णीकृतो १वा घृष्टो २वा दाहकर्षित ३एव वा । रसः सम्मर्दजो ४वापि प्राण्यङ्गोद्भव ५एव वा । गन्धः पञ्चविधः प्रोक्तो देवानां प्रीतिदायकः । गन्धचूर्णं गन्धपत्रचूर्णं सुमनसां तथा । प्रशस्तगन्धयुक्तानां पत्रचूर्णानि यानि च । तानि गन्धाह्वयानि स्युः स गन्धः प्रथमः १स्मृतः । घृष्टो मलयजो गन्धः सरलस्य नमेरुणा । अगरुप्रभृतिश्चापि यस्य पङ्कः प्रदीयते । घृष्ट्वा, स घृष्टो गन्धोऽयं द्वितीयः परिकीर्त्तितः २ । देवदार्वगुरुब्रह्मसालसारान्तचन्दनाः । प्रियादीनाञ्च यो दग्ध्वा गृह्यते दाहजो रसः। स दाहाकर्षितो गन्धस्तृतीयः परिकीर्त्तितः३ । स गन्धः करवीरविल्वगन्धिनीतिलकं तथा । प्रभृतीनां रसो योऽसौ निष्पीड्य परिगृह्यते । स सम्मर्दादुद्गतो गन्धः सम्मर्द्दज ईर्य्यते ४ । मृगनाभिसमुद्भूतस्तत्कोषोद्भव एव वा । गन्धः प्राण्यङ्गजः प्रोक्तो मोददः स्वर्गवासिनाम् ५ । कर्पूरगन्धसाराद्याः चोद्दे घृष्टे च संस्थिताः । चन्द्रभागादयश्चापि रसे पङ्के च सङ्गताः । गन्धसारस्तु सर्वत्र संसर्गादौ प्रयुज्यते । मृगनाभिर्भवेद्धृष्टश्चूर्णोऽप्यन्यस्य योगतः । एवं सर्वस्तु सर्वत्र गन्धो भवति पञ्चधा । घृष्टादिभावादन्योन्यं गन्धः प्रीतिकरः परः । गन्धस्य विस्तरो भेदः प्रोक्तः कालीयकादयः । सर्वः पञ्चविधेष्वेव प्रविष्टो भवति क्षणात् । गन्धो मलयजो यस्तु दैवे पैत्रे च सम्मतः । तत्पङ्को वा रसो वापि चूर्णो वा विष्णुतुष्टिदः । सर्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः। तस्मात् सर्वप्रयत्नेन दद्यान्मलयजं सदा । कृष्णागुरुः सकर्पूरः सहितो मलयोद्भवैः । वैष्णवप्रीतिदो गन्धः कामाख्यायाश्च भैरवौ! । कुङ्कुमागुरुकस्तूरीचन्द्रभागैः समीकृतैः । त्रिपुराप्रीतिदो गन्धस्तथा चण्ड्याश्च शम्भुना । दैवतोद्देशपूर्वेण गन्धान् सम्पूज्य साधकः । देवायेज्याय वितरेत् सर्वसाध्येषु पूजकः । गन्धेन लभते कामं गन्धो धर्म्मप्रदः सदा । अर्थानां साधको गन्धो गन्धे मोक्षः प्रतिष्ठितः । अयं वै कथितो गन्धः पुत्रौ वेतालभैरवौ" कालि॰ पु॰ ६८अ॰ ।
२कृष्णागुरुणि न॰ शब्दार्थचि॰ "नवपरिमलगन्धः केन शक्योवरीतुम्" सा॰द॰।"गन्धवद्रुधिरचन्दनोक्षिता" रघुः । "वर्जयेन्मधुमांसं च गन्धं माल्यं रसान् स्त्रियः" मनुः । ४गन्धवति त्रि॰। उद्+पूति+सु+सुरभि+शब्दात् परस्य गन्धस्य बहु॰ इच् समा॰। उत्कटो गन्धोऽस्य उद्गन्धिः एवं पूतिगन्धिः सुगन्धिः सुरभिगन्धिः । "गन्धस्येत्त्वे तदेकान्तग्रहणम्"वार्त्ति॰ "एकान्त एकदेश इवाविभागेन लक्ष्यमाण इत्यर्थः यथा सुगन्धि पुष्पम् सलिलं वा सुगन्धिर्वायुरिति"च सि॰कौ॰। अत्र औपाधिकगन्धवत्त्वात् तथात्वम् शोभना गन्धा गन्धयुक्ताः पदार्था सन्त्यस्य सुगन्ध आपण इत्यादौ न" सि॰कौ॰ । "कण्डूयतः कटभुवं करिणो मदेन स्कन्धं सुगन्धिमनुलीनवता नमस्य" "सुगन्धितामप्रतियत्नपूर्वाम्" माघः । "आघायि वान् गन्धवहः सुगन्धस्तेनारविन्दव्यतिषङ्गवांश्च"भट्टिः। "अरविन्दव्यतिषङ्गवत्त्वात् गन्धस्येत्त्वं न भवति विभागेन लक्ष्यत्वादिति जयम॰ । एवं उपमानपूर्वकस्य तस्येत् समा॰ पद्मगन्धिः । "प्रस्थं हिमाद्रेर्मृगनाभिगन्धि" कुमा॰ लेशवाचकत्वेऽपि इत् समा॰। "सूपगन्धि घृतगन्धि भोजनम्" सि॰ कौ॰ । देवादौ गन्धदानेऽङ्गुलिविशेषनियमः तन्त्रसारे उक्तो यथा "मध्यमानामिकाङ्गुष्ठैरङ्गुल्यग्रेण पार्वति! । दद्याच्च विमलं गन्धं मूलमन्त्रेण साधकः" । तत्र देयगन्धस्तु चन्दनकर्पूरकालागुर्वात्मकः यथाह तन्त्रसा॰ निबन्धे "गन्धश्चन्दनकर्पूरकालागुरुभिरीरितः" तद्योजनप्रकारो गन्धयुक्तिशब्दे दृश्यः ।
**गन्धक** पु॰गन्धोऽस्त्यस्य अर्श॰ अच् स्वार्थे क । १शिग्रुवृक्षे (सजना) शब्दर॰ । २स्वनामख्याते उपधातुभेदे तस्योत्पत्तिगुणभेदशोधनादिकं भावप्र॰ उक्तं यथा

"श्वेतद्वीपे पुरा देव्याः क्रीडन्त्या रजसाप्लुतम्। दुकूलं तेन वस्त्रेण स्नातायाः क्षीरनीरधौ। प्रसृतं यद्रजस्तस्माद्गन्धकः समजायत"। तस्य भेदाः "चतुर्द्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः। रक्तो हेमक्रियासूक्तः पीतश्च रसायने। व्रणादिलेपने श्वेतः कृष्णः श्रेष्ठः स दुर्लभः। श्रेष्ठो हेमक्रियादिषु सर्वत्र प्रशस्तनर इत्यर्थः। अस्य गुणाः। गन्धकः कटुकस्तिक्तो वीर्य्योष्णस्तुवरः सरः। पित्तलः कटुकः पाके कण्डूविसर्पजन्तुजित्। हन्ति कुष्ठक्षयप्लीहकफवातान् रसायनः। अशोधितो गन्धक एष कुष्ठं करोति तापं विषमं शरीरे। सौख्यञ्च रूपञ्च बलं तथौजः शुक्रं निहन्त्येव करोति चाद्रम्। शोधितो यस्तु गन्धः स्यात् जरामृत्युज्वरापहः। अग्निसन्दीपनः श्रेष्ठो वीर्य्यवृद्धिकरोऽस्थिकृत्। शोधनविधिस्तु। लोहपात्रे त्रिभिःक्षिप्य घृतमग्नौ प्रतापयेत्। तप्ते घृते तत् समानं क्षिपेद्गन्धकजं रजः। विद्रुतं गन्धकं दृष्ट्वा तनुवस्त्रे विनिःक्षिपेत्। तथा वस्त्राद्विनिःसार्य्य दुग्धमध्येऽखिलं क्षिपेत्। एवं स गन्धकः शुध्येत् सर्वकर्म्मोचितो भवेत्।" गन्धेन कायति कै—क। इति व्युत्पत्तिरित्यन्ये।

**गन्धकचूर्ण** पु० गन्धकप्रधानश्चूर्णः। (बारुद) इति ख्याते पदार्थे शब्दार्थचि०।

**गन्धकन्द** पु० गन्धप्रधानः कन्दोऽस्य। कसेरुवृक्षे वैद्य०।

**गन्धकारिका** स्त्री गन्धं गन्धप्रधानं वेशादिकं करोति कृ—ण्वुल् कापि अत इत्त्वम्। परवेश्मस्थायां स्ववशायां वेशादिकारिकायाम् १सैरन्ध्र्यां हला०।

**गन्धकाली** स्त्री प्रशस्तः गन्धस्तस्मै अलति पर्य्याप्नोति अल—अच् गौरा० ङीष्। सत्यवत्यां व्यासमातरि। "भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीं मातरमुदवाहयत् यामाहुर्गन्धकालीमिति तस्यां पूर्वं कानीनो गर्भः पराशरात् द्वैपायनोऽभवत्। तस्यामेव शान्तनोरन्यौ द्वौ पुत्रौ बभूवतुः विचित्रवीर्य्यचित्राङ्गदश्च" भा० आ० ६१५ अ०। "अद्य त्वं जननीं भीष्म! गन्धकालीं यशस्विनीम्" भा० हरि० २० अ०। गन्धवतीशब्दे दृश्यम्। स्वार्थे क। गन्धकालिकाऽप्यत्र हेमच०। [ २शम्बरचन्दने राजनि०।

**गन्धकाष्ठ** न० गन्धयुक्तं काष्ठमस्य। १अगुरुचन्दने त्रिका०।

**गन्धकुटी** स्त्री गन्धस्य कुटीवाधारः। १मुरानामगन्धद्रव्ये। अमरः।

**गन्धकुसुमा** स्त्री गन्धयुक्तं कुसुमं यस्याः। (गणियारी) गणिकारीवृक्षे राजनि०।

**गन्धकेलिका** स्त्री गन्धं केलति गच्छति केल—ण्वुल् कापि अत इत्त्वम्। १कस्तूर्य्यां मृगमदे राजनि०। गन्धप्रधानत्वात्तस्यास्तथात्वम्।

**गन्धकोकिला** स्त्री गन्धप्रधाना कोकिलेव कृष्णत्वात्। "तीक्ष्णोष्णा कफहृत् तिक्ता सुगन्धा गन्धकोकिला" भावप्र० उक्तगुणके लतौषधिभेदे।

**गन्धखेड़(ल)(क)** न० गन्धस्य खेला यत्र वा कप् डलयोरेकत्वात्। (वेणा)गन्धवति १भूतृणे रत्नमा०। कबन्तः तत्रार्थे न० शब्दरत्नावली।

**गन्धचेलिका** स्त्री गन्धं चेलति गच्छति चेल—ण्वुल् कापि अत इत्त्वम्। १कस्तूर्य्यां मृगमदे त्रिका०।

**गन्धजटिला** स्त्री गन्धेन जटिला। १वचायां(वच)रत्नमा०।

**गन्धजल** न० गन्धाढ्यद्रव्यवासितं जलं शा० त०। गन्धाढ्यकुसुमादिपुष्पवासितजले "सिक्तां गन्धजलैरुप्तां फलपुष्पाक्षताङ्कुरैः" भाग० १।१।२।१३।

**गन्धजात** न० गन्धो व्यञ्जनादौ जातो यस्मात् निष्ठान्तान्तत्वात् परनि०। (तेजपात) १तेजपत्रे शब्दरत्ना०। ६त०। २गन्धद्रव्यसंघे न०।

**गन्धज्ञा** स्त्री गन्धं जानाति रसज्ञेत्यत्रेव करणस्य कर्त्तृत्वोपचारात् ज्ञा—कर्त्तरि क। १नासिकायाम् हेमच०।

**गन्धतण्डुल** पु० गन्धप्रधानं तण्डुलमस्य। (वासमति) १शालिभेदे राजनि०।

**गन्धतन्मात्र** न० सांख्यमतप्रसिद्धे शान्तघोरादिविशेषशून्यगन्धमात्रगुणके स्थूलपृथिव्यारम्भके सूक्ष्मपार्थिवांशे यथाह "स्थूलात् पञ्चतन्मात्रस्य" सा० प्र० सूत्रभाष्ये "तन्मात्राणि च यज्जातीयेषु शान्तादिविशेषत्रयं न तिष्ठति तज्जातीयानां शब्दस्पर्शरूपरसगन्धानामाधारभूतानि सूक्ष्मद्रव्याणि स्थूलानां हेतवोऽविशेषाः "तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता। न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः" इति विष्णुपुराणादिभ्यः। अस्यायमर्थः तेषु तेषु भूतेषु तन्मात्रास्तिष्ठन्तीति कृत्वा धर्मधर्म्यभेदाद्द्रव्याणामपि तन्मात्रता स्मृता। ते च पदार्थाः शान्तघोरमूढाख्यैः स्थूलशब्दादिगतविशेषैः शून्या एकरूपत्वात्। तथा च शान्तादिविशेषशून्यशब्दादिमत्त्वमेव भूतानां शब्दादितन्मात्रत्वमित्याशयः। अतोऽविशेषिणोऽविशेषसंज्ञिता इति शान्तं सुखात्मकं

घोरं दुःखात्मकं मूढं मोहात्मकम्। तन्मात्राणि च देवादिमात्रभोग्यानि केवलं सुखाधिक्यादिति" [शब्दर०।

**गन्धतूर्य्य** न० गन्धे हिंसास्थाने रणे तूर्य्यम्। १रणवाद्यभेदे

**गन्धतृण** न० गन्धप्रधानं तृणं शा०त०। सुगन्धयुक्ते भूतृणे सुरसे सुखरागे तृणभेदे (वेणा) राजनि०। "ईषत्तिक्तं गन्धतृणं स्निग्धं चैव रसायनम्। सुगन्धि मधुरं शीतं कफपित्तश्रमापहम्" इति तत्र तद्गुणा उक्ताः।

**गन्धतैल** न० गन्धयुक्तस्य चन्दनस्याग्निसंयोगेन जनितं तैलम् शा०त०। यन्त्रपाकेण जनिते तैलभेदे। (चन्दनीआतर) १प्रभृतौ। "प्रदीपैः काञ्चनैस्तत्र गन्धतैलावसेचितैः"भा०भी० ९८अ०। सुश्रुतोक्ते २पक्वतैलभेदे च तत्पाकप्रकारस्तत्रोक्तो यथा

"रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले। दिवा दिवा शोषयित्वा गवां क्षीरेण भावयेत्। त्रिरात्रं सप्तरात्रं वा भावयेन्मधुकाम्बुना। ततः क्षीरे पुनः पीतान्सुशुष्कांश्चूर्णयेद्भिषक्। काकल्यादिं सयष्ट्याह्वं मञ्जिष्ठां सारिवां तथा। कुष्ठं सर्ज्जरसं मांसीं सुरदारु सचन्दनम्। शतपुष्पाञ्च सञ्चूर्ण्य तिलचूर्णेन योजयेत्। पीडनार्थञ्च कर्त्तव्यं सर्वगन्धशृतं पयः। चतुर्गुणेन पयसा तत्तैलं विपचेद्भिषक्। एलामंशुमतीं पत्रं जीरकं तगरं तथा। लोध्रं प्रपौण्डरीकञ्च तथा कालानुसारिणम्। सौरेयकं क्षीरशुक्लामनन्तां समधूलिकाम्। पिष्ट्वा शृङ्गाटकञ्चैव पूर्व्वोक्तान्यौषधानि च। एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाग्निना। एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्म्मसु। आक्षेपके पक्षवाते तालुशोषे तथाऽर्द्दिते। मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे। बाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः। पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने। ग्रीवास्कन्धोरसां वृद्धिरस्तेनैवोपजायते। सुखञ्च पद्मप्रतिभं सुसुगन्धिसमीरणम्। गन्धतैलमिदं नाम्ना सर्ववातविकारनुत्। राजार्हमेतत्कर्त्तव्यं राज्ञामेव विचक्षणैः।"

**गन्धत्वच्** न० गन्धप्रधाना त्वक् यस्य। १एलवालुके राजनि०

**गन्धदला** स्त्री गन्धयुक्तं दलं यस्याः।१अजमोदायाम् राजनि०

**गन्धदारु** न० गन्धप्रधानं दारु। चन्दने मलयजे हेमच०। तस्य दारुण्येव गन्धसत्त्वात्तथात्वम्। [न्धाढ्यद्रव्यमात्रे च

**गन्धद्रव्य** न० गन्धप्रधानं द्रव्यम्।१नागकेशरे त्रिका०। २ग-

**गन्धद्विप** पु० गन्धप्रधानो मदगन्धाढ्यः द्विपः। मदगन्धाढ्ये हस्तिनि। "गन्धद्विपे वन्य इव द्विरेफाः" "रणो गन्धद्विपस्येव गन्धभिन्नान्यदन्तिनः" रघुः। "गन्धद्विपस्येव मतङ्गजौघः" किरा०। गन्धगजादयोऽप्यत्र।

**गन्धधारिन्** त्रि० गन्धं गन्धयुक्तं द्रव्यं धारयति धारि-णिनि। १गन्धद्रव्यधारिणि स्त्रियां ङीप्। २महादेवे पु०। "अजश्च बहुरूपश्च गन्धधारी कपर्द्यपि" भा० अनु०१७अ०। शिवनामोक्तौ।

**गन्धधूमज** पु० गन्धस्य गन्धाढ्यस्य धूमात् जायते जन–ड। स्वादुनामगन्धद्रव्ये राजनि०।

**गन्धधूलि** स्त्री गन्धाय धूलिश्चूर्णोऽस्याः। कस्तूर्य्यां हेमच०।

**गन्धन** न० गन्ध–अर्द्दने भावकरणादौ ल्युट्। १उत्साहे २प्रकाशने ३हिंसायाम् ४सूचने च मेदि०। ५तृणभेदे (गन्धतृणे) शब्दार्थचि०। "गन्धनावक्षेपणे-त्यादि" पा०। "वा गतिगन्धनयोरिति धातुः"। वातपद्व्युत्पत्तौ सुश्रुतः "गन्धनाङ्गे" सि० कौ०।

**गन्धनकुल** पु० गन्धेन लेशेन नकुलतुल्याकृतित्वात्, दुर्गन्ध-प्रधानो वा नकुलः।(छुचो) छुछुन्दर्य्यां जन्तुभेदे हारा०।

**गन्धनाकुली** स्त्री गन्धान्विता नाकुली रास्ना। रास्नाभेदे अमरः। "नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली। नकुलेष्टा भुजाङ्गाक्षी सर्पाङ्गी विषनाशिनी। नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत्। भोगिलूताष्टश्चिकाखुविषज्वरक्रिमिव्रणान्" भावप्र०।

**गन्धनामन्** पु० गन्धेति पदयुक्तं नामास्य। १रक्ततुलस्याम् रत्नमा०२रोगभेदे स्त्री ङीप्। तल्लक्षणमुक्तं भावप्र० यथा "बाहुकक्षांसपार्श्वेषु कृष्णस्फोटां सवेदनाम्। पित्त-प्रकोपसम्भूतां कक्षामिति विनिर्दिशेत्। एतान्तु तादृशीं दृष्ट्वा पिडकां स्फोटसन्निभाम्। त्वग्जातां पित्तकोपेन ग-न्धनाम्नीं प्रचक्षते। तादृशीं बाह्वादिषु कृष्णां सवेदनाञ्च"

**गन्धनाली** स्त्री गन्धस्य गन्धज्ञानस्य नालीव। नासिका-याम् त्रिका०। स्वार्थे क ह्रस्वः। गन्धनालिका तत्रार्थे।

**गन्धनिलया** स्त्री गन्धस्य निलयो वासो यत्र। नवमल्लिका-याम् शब्दच०। [ शठीभेदे राजनि०।

**गन्धनिशा** स्त्री० गन्धेन निशा हरिद्रेव। गन्धपत्रायां

**गन्धप** पु० गन्धं पिबति गन्धेनैव तृप्यति पा–क। १देवभेदे "आभासुरा गन्धपा दृष्टिपाश्च वाचा विरुद्धाश्च मनोवि-रुद्धाः" भा० अनु०१८अ० नानादेवानां शिवरूपतोक्तौ।

**गन्धपत्र** पु०गन्धयुक्तं पत्रमस्य। १श्वेततुलस्यां रत्नमा०। २म-रुवके ३वर्वरे ४नागरङ्गे ५विल्वे च राजनि०। ५शटीभेदे स्त्री टाप् "गन्धपत्रा कटुः स्वादुस्तीक्ष्णोष्णा कफ-

मातङ्गत्। कासकफादिज्वरान् हन्ति पित्तकोपकरी तथा" राजनि०। गौरा०ङीष्। ६अश्वगन्धायाम् ७अम्बष्ठायाम् ८अजमोदायाञ्च राजनि०। ततः स्वार्थे क। गन्धपत्रिका अश्वगन्धादिषु राजनि०।

**गन्धपलाशिका** स्त्री गन्धयुतं पलाशमस्याः कप् अत इत्त्वम्। हरिद्रायां हारा०। [भावप्र०।

**गन्धपलाशी** स्त्री गन्धयुक्तं पलाशं यस्या ङीप्। शठ्याम्

**गन्धपाषाण** पु० गन्धयुक्तः पाषाण इव कठिनत्वात्। गन्धके उपधातुभेदे जटाधरः। [धूपे हेमच०।

**गन्धपिशाचिका** स्त्री गन्धेन पिशाच इव ऊर्द्ध्वगतित्वात्।

**गन्धपोता** स्त्री गन्धयुक्तं पीतं पत्रं यस्याः। १शटीभेदे गन्धपत्रायाम् राजनि०।

**गन्धपुष्प** पु० गन्धयुक्तं पुष्पमस्य। १वेतसवृक्षे शब्दच०। २अङ्कोटकवृक्षे जटाध० ३वञ्जुवारवृक्षे राजनि०। ४नील्यां ५केतकीवृक्षे ६गणिकारीवृक्षे च स्त्री टाप् राजनि०। ७पुष्पवति गन्धयुक्तवृक्षमात्रे त्रि०। गन्धसहितं पुष्पम् शा०त०। ८गन्धसहितपुष्पे न० "गन्धपुष्पैरलङ्कृतम्" रामा०२१अ०। द्वन्द्वः।९गन्धपुष्पयोः द्विव०। "अभावे गन्धपुष्पाभ्यां केवलेन जलेन वा" आ०त०। [वृक्षे रत्नमा०।

**गन्धफणिज्झक** पु० गन्धप्रधानः फणिज्झकः। रक्ततुलसी

**गन्धफल** पु० गन्धयुक्तं फलं यस्य। १कपित्थे २विल्वे ३तेजफलवृक्षे राजनि०। ४प्रियङ्गुवृक्षे स्त्री टाप् शब्दरत्ना०। ५मेथिकायां ६विदार्य्यां ७शल्लक्याञ्च स्त्री टाप् राजनि०। ८चम्पककलिकायां ९प्रियङ्गुवृक्षे च स्त्री अमरः गौरा० ङीष्। १०आमोदयुक्तफलवति वृक्षमात्रे त्रि०।

**गन्धवणिज्** पु०गन्धस्य आमोदिद्रव्यस्य वणिक्। (गन्धवेणे) सङ्कीर्णजातिभेदे "अम्बष्ठात् राजपुत्राञ्च जातो गन्धवणिक् स्मृतः" ब्रह्मवै०। नवशाखशब्दे विवृतिः। वणिक्शब्दस्य वर्ग्यादित्वात् शब्दकल्पद्रुमे तन्मूलतया शब्दस्तोमे च अयथास्थाने लिखनं प्रामादिकम्।

**गन्धबन्धु** पु० गन्धं बध्नाति बन्ध–उण्। आम्रवृक्षे शब्दर०।

**गन्धबहुला** स्त्री गन्धोबहुलोऽत्र। १गोरक्षीवृक्षे राजनि०।

**गन्धभद्रा** स्त्री गन्धेन लेशमात्रसेवनेन भद्रं यस्याः ५व०। (गन्धभादाल) लताभेदे शब्दच०। [शब्दर०।

**गन्धभाण्ड** पु० गन्धस्य भाण्ड इव। (गन्धभादाल) लताभेदे

**गन्धमांसी** स्त्री गन्धप्रधाना मांसी। जटामांसीभेदे राजनि०

**गन्धमाता** स्त्री गन्धस्य मातेव उत्पादकत्वात्। क्षितौ हेमच० "तत्र क्षितिर्गन्धहेतुः" इत्युक्तेस्तस्यास्तदुत्पादकत्वम्।

**गन्धमाद** पु० १रामसैन्यस्थवानरभेदे। "सुग्रीवलक्ष्मणमरुत्सुतगन्धमादनीलाङ्गदाङ्गदनलादिभिरन्वितोऽगात्" भाग० ९।१०।१९। "गान्दिन्यास्तु श्वफल्कतः" अक्रूरप्रमुखा आसन्" इत्युपक्रमे "शत्रुघ्नो गन्धमादश्चेति" भाग० ९।१४।९०। उक्ते २अक्रूरभ्रातरि च।

**गन्धमादन** पुं०न०गन्धेन मादयति मादि–ल्यु। १पर्वतभेदे स च पर्वतः रोमकपत्तनात् उदक्, नीलनिषधपर्य्यन्तदीर्घः तस्य जलधेश्च मध्ये केतुमालं वर्षम्। एवं निषधनीलमाल्यवद्गन्धमादनैराष्टतमिलावृतं नवमं वर्षम् मूलवाक्यमिलावृतशब्दे ९८५ पृ० दृश्यम्। "गन्धमादनशृङ्गेषु पुरुषः सह राक्षसैः"। "गन्धमादनपार्श्वे तु परेत्वपरगण्डिकाः" भा० भी० ६अ०। "ततः किंपुरुषावासं सिद्धचारणसेवितम्। ददृशुर्हृष्टरोमाणः पर्वतं गन्धमादनम्" भा० व० १५८ अ०। "तथैवापरेण पूर्वेण च माल्यवद्गन्धमादनौ नीलनिषधायतौ" भाग०५।१६।१०२। एवं सर्वत्र पुंस्त्वम् क्वचित् क्लीवत्वमपि। "यस्य चोपवनं बाह्यं गन्धवत् गन्धमादनम्" कुमा०। "अत्र गन्धवत्गन्धमादनम्" इति आगन्तुकः पाठः। प्राचीनपाठस्तु "सुगन्धिर्गन्धमादनः" इति पुंलिङ्गान्तः। अतएव क्षीरस्वामिना "गन्धमादनमन्ये चेयत्र गन्धेर मादयतीति गन्धमादनः" इति व्याख्याय प्रयोगे च पुंलिङ्गता दृश्यत इत्याशयेनोक्तं "सुगन्धिर्गन्धमादन इति" कालिदासः इति" मल्लिना०। स च मेरोर्दक्षिणस्थविष्कम्भरूपः यथाह विष्णुपु० "इलावृतमनुक्रम्य "चत्वार उपपर्वताः"। "विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः। पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः। विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्मृतः"। तत्र च केतुवृक्षो जम्बुः। यथाह तत्रैव "कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च" तत्र वनं नन्दनं, चैत्ररथं, गन्धमादनाख्यं, वा कल्पभेदात् व्यवस्थितं तत्र विष्णुपु०"वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनम्। वैभ्राजं पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम्" इत्युक्तेः गन्धमादनाख्यवनवत्त्वं तस्य। "तान् विष्कम्भान् गिरीनुपक्रम्य" भाग० ५।१६। देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमिति"। चैत्ररथवनवत्तोक्ता। सि०शि०"वनं तथा चैत्ररथं विचित्रं तेष्वप्सरोनन्दननन्दनञ्च। धृत्याह्वयं यद्रतिकृत् सुराणां भ्राजिष्णु वैभ्राजमिति प्रसिद्धम्" इत्युक्ते र्नन्दनवनवत्त्वम्।

"अरुणोदं महाभद्रं असितोदं समानसम्। सरांस्ये-तानि चत्वारि देवभोग्यानि सर्वदा" विष्णु पु० उक्ते-स्तत्र महाभद्रं सरः। "सरांस्यथैतेष्वरुणञ्च मानसम् महाह्रदं श्वेतजलं यथाक्रममिति" सि०शि० उक्तेस्तत्र मानसं सरः। सरसां कल्पभेदान्नामभेदः। ७तद्वासिनि रामसैन्यस्थवानरभेदे च "गन्धमादनवासी च प्रथितो गन्धमादनः। कोटीशतसहस्राणि हरीणां समकर्षत" भा० व० २८८अ०। तत्पर्वतस्थे ८वनभेदे न० उदा-हृतविष्णु पु० वाक्ये दृश्यम्।

**गन्धमादनी** स्त्री गन्धेन माद्यतेऽनया मादि+करणे ल्युट् ङीप्। १मदिरायां त्रिका० २वन्दाके ३चीडानामद्रव्ये च राजनि०। [१लाक्षायां २सुरानामगन्धद्रव्ये च राजनि०।

**गन्धमादिनी** स्त्री गन्धेन मादयति मादि—णिनि ङीप्।

**गन्धमार्ज्जार** पु० गन्धप्रधानः मार्ज्जारः। खट्टासजन्तौ जटाधरः। [णायां लतायाम् भावप्र०।

**गन्धमालती** स्त्री गन्धेन मालतीव। गन्धकोकिलातुल्यगु-

**गन्धमालिनी** स्त्री गन्धमालाऽस्त्यस्या इनि ङीप् मल—संश्लेषे णिनि वा ६त०। १सुरानामगन्धद्रव्ये जटाधरः।

**गन्धमुखा** स्त्री गन्धो मुखेऽस्याः। १छुछुन्दर्य्याम् (छुँचा)। शब्दार्थचि०। २आमोदिमुखवति त्रि०। स्त्रियां स्वाङ्गत्वात् ङीप्। [अण्। (गन्धभादाल) लताभेदे वैद्यकम्।

**गन्धमुण्ड** पु० गन्धं मुण्डयति मुण्ड+तत्करोति णिच्—

**गन्धमूल** पु० गन्धप्रधानं मूलं यस्य। १कुलञ्जनवृक्षे २शल्लक्यां ३शट्याञ्च स्त्री टाप् राजनि०।४शट्यां स्त्री अमरः जाति-त्वात् ङीष्। वा कप् कापि अत इत्त्वम्। गन्धमूलिका १माकन्द्यां २शट्याञ्च राजनि०। [राजनि०।

**गन्धमूषिक** पुंस्त्री० गन्धप्रधानः मूषिकः। छुछुन्दर्य्याम्

**गन्धमूषी** स्त्री स्वल्पः मूषः मूषी गन्धप्रधाना मूषी। छुछु-न्दर्य्यां हेमच०। [२खट्टासे च शब्दमा०।

**गन्धमृग** पु० गन्धप्रधानो मृगः। १गन्धयोनौ कस्तूरीमृगे।

**गन्धमैथुन** पु० गन्धेन गन्धघ्राणेन मैथुनं मैथुनारम्भो यस्य। वृषे जटाधरः। [राजनि०।

**गन्धमोदन** पु० गन्धेन मोदयति मुद—णिच्—ल्यु। गन्धके

**गन्धमोहिनी** स्त्री गन्धेन मोहयति मुह—णिच्—णिनि ङीप्। चम्पककलिकायां राजनि०।

**गन्धयुक्ति** स्त्री गन्धानां गन्धद्रव्याणां युक्तिर्योजनविशेषः। ६त० उक्ते गन्धद्रव्ययोजनप्रकारभेदे। गन्धयुक्तिश्च सप्रयोजनभेदसहिता तत्र ७७अ० दर्शिता यथा

"स्रग्गन्धधूपाम्बरभूषणाद्यं न शोभते शुक्लशिरोरु-हस्य। यस्मादतो मूर्द्धजरागसेवां कुर्यात्तथैवाञ्जनभूषणा-नाम्। लौहे पात्रे तण्डुलान् कोद्रवाणां शुक्ते पक्वाँल्लोहचूर्णेन साकम्। पिष्टान् सूक्ष्मं मूर्ध्नि शुक्ला-म्लकेशे दत्त्वा तिष्ठेद्वेष्टयित्वार्कपत्रैः। याते द्वितीये प्र-हरे विहाय दद्याच्छिरस्यामलकप्रलेपम्। सञ्छाद्य पत्रैः प्रहरद्वयेन प्रक्षालितं काष्ण्यमुपैति शीर्षम्। पश्चा-च्छिरःस्नानसुगन्धितैलैर्लौहाम्लगन्धं शिरसोऽपनीय। हृद्यैश्च गन्धैर्विविधैश्च धूपैरन्तःपुरे राजसुखं निषेवेत्। त्वक्कुष्ठरेणुनलिकास्पृक्कारसतगरबालकैस्तुल्यैः। केसर-पत्रविमिश्रैर्नरपतियोग्यं शिरःस्नानम्। मञ्जिष्ठया व्याघ्रनखेन शुक्त्या त्वचा सकुष्ठेन रसेन चूर्णः। तैलेन युक्तोऽर्कमयूखतप्तः करोति तच्चम्पकगन्धि तैलम्। तुल्यैः पत्रतुरुष्कबालतगरैर्गन्धः स्मरोद्दीपनः सव्यामो बकुलोऽयमेव कटुकाहिङ्गुप्रधूपान्वितः। कुष्ठेनोत्पलग-न्धिकः समलयो मूर्वा भवेच्चम्पको जातीत्वक्सहितोऽति-मुक्तकइति ज्ञेयः स कुस्तुम्बुरुः। शतपुष्पाकुन्दुरुकौ पा-देनार्धेन नखतुरुष्कौ च। मलयप्रियङ्गुभागौ गन्धो धूप्यो गुडनखेन। गुग्गुलुबालकलाक्षामुस्तानखशर्कराः क्रमा-द्धूपः। अन्यो मांसीबालकतुरुष्कनखचन्दनैः पिण्डः। हरीतकीशङ्खघनद्रवाम्बुभिर्गुडोत्पलैः शैलकमुस्तकान्वितैः। नवान्तपादादिविवर्धितैः क्रमाद् भवन्ति धूपा बहवो म-नोहराः। भागैश्चतुर्भिः सितशैलमुस्ताः श्रीसर्जभागौ नखगुग्गुलू च। कर्पूरबोधो मधुपिण्डितोऽयं कोप-च्छदो नाम नरेन्द्रधूपः। त्वगुशीरपत्रभागैः सूक्ष्मैलार्धेन संयुतैश्चूर्णः। पटवासः प्रवरोऽयं मृगकर्पूरप्रबोधेन। घनबालकशैलेयककर्पूरोशीरनागपुष्पाणि। व्याघ्रनखस्पृ-क्काऽगुरुदमनकनखतगरधान्यानि। कर्पूरचोरमलयैः स्वेच्छापरिवर्तितैश्चतुर्भिरतः। एकद्वित्रिचतुर्भिर्भागैर्गन्धा-र्णवो भवति। अत्युल्बणगन्धत्वाद् एकांशो नित्यमेव धान्यानाम्। कर्पूरस्य तदूनो नैतौ द्वित्र्यादिभिर्देयौ। श्रीसर्जगुडनखैस्ते धूपयितव्याः क्रमाच्च पिण्डस्थैः। बोधः कस्तूरिकया देयः कर्पूरसंयुतया। अत्र सहस्र-चतुष्टयमन्यानि च सप्ततिसहस्राणि। लक्षं शतानि सप्त विंशतियुक्तानि गन्धानाम्। एकैकमेकभागं द्वित्रिचतुर्भा-गिकैर्युतं द्रव्यैः। षड्गन्धकरं तद्वद् द्वित्रिचतुर्भागिकं कुरुते। द्रव्यचतुष्टययोगाद् गन्धचतुर्विंशतिर्यथैकस्य। एवं शेषाणामपि षस्वर्तितः सर्वपिण्डोऽत्र। षोडशके

द्रव्यगणे चतुर्विकल्पेन भिद्यमानानाम् । अष्टादश जायन्ते शतानि सहितानि विंशत्या । प्रस्तवतिभेदभिन्नश्चतुर्विकल्पो गणो यतस्तस्मात् । प्रस्तवतिगुणः कार्यः सा सङ्ख्या भवति गन्धानाम् । पूर्वेण पूर्वेण गतेन युक्तं स्थानं विनान्त्यं प्रवदन्ति सङ्ख्याम् । इच्छाविकल्पैः क्रमशोऽभिनीय नीते निवृत्तिः पुनरन्यनीतिः । द्वितीन्द्रियाष्टभागैरगुरुः पत्रं तुरुष्कशैलेयौ । विषयाष्टपक्षदहनाः प्रियङ्गुमुस्तारसाः केशः । स्पृक्कात्वक्तगराणां मांस्याश्च कृतैकसप्तषड्भागाः । सप्तर्तुवेदचन्द्रैर्मलयनखश्रीककुन्दुरुकाः । षोडशके कच्छपुटे यथा तथा मिश्रितैश्चतुर्द्रव्यैः । येऽत्राष्टादशभागास्तेऽस्मिन् गन्धादयो योगाः । नखतगरतुरुष्कयुता जातीकर्पूरमृगकृतोद्बोधाः । गुडनखधूप्या गन्धाः कर्तव्याः सर्वतोभद्राः । जातीफलमृगकर्पूरबोधितैः ससहकारमधुसिक्तैः । बहवोऽत्र पारिजाताश्चतुर्भिरिच्छापरिगृहीतैः । सर्जरसश्रीवासकसमन्विता येऽत्र धूपयोगास्तैः । श्रीसर्जरसवियुक्तैः स्नानानि सवालकत्वग्भिः । लोध्रोशीरलतागुरुमुस्ताप्रियङ्गुवनपथ्याः । नवकोष्ठात्कच्छपुटाद् द्रव्यत्रितयं समुद्धृत्य । चन्दनतुरुष्कभागौ शुक्त्यर्धं पादिका तु शतपुष्पा । कटुहिङ्गुलगुडधूप्याः केसरगन्धाश्चतुरशीतिः । सप्ताहं गोमूत्रे हरीतकीचूर्णसंयुते क्षिप्त्वा । गन्धोदके च भूयो विनिःक्षिपेद्दन्तकाष्ठानि । एलात्वक्पत्राञ्जनमधुमरिचैर्नागपुष्पकुष्ठैश्च । गन्धाम्भः कर्तव्यं कञ्चित्कालं स्थितान्यस्मिन् । जातीफलपत्रैलाकर्पूरैः कृतयमैकशिखिभागैः । अवचूर्णितानि भानोर्मरीचिभिः शोषणीयानि । वर्णप्रसादं वदनस्य कान्तिं वैशद्यमास्यस्य सुगन्धितां च । संसेवितुः श्रोत्रसुखां च वाचं कुर्वन्ति काष्ठान्यसकृद्भवानाम् । कामं प्रदीपयति रूपमभिव्यनक्ति सौभाग्यमावहति वक्त्रसुगन्धितां च । ऊर्जं करोति कफजांश्च निहन्ति रोगांस्ताम्बूलमेवमपरांश्च गुणान् करोति । युक्तेन चूर्णेन करोति रागं रागक्षयं पूगफलातिरिक्तम् । चूर्णाधिकं वक्त्रविगन्धकारि पत्राधिकं साधु करोति गन्धम् । पत्राधिकं निशि हितं सफलं दिवा च भोक्तान्यथाकरणमस्य विडम्बनैव । कक्कोलपूगलवलीफलपारिजातैरामोदितं मदमुदामुदितं करोति" "लेख्यमणिरागगन्धयुक्तिविदः" इ०स० ।

**गन्धरस** पु० गन्धयुक्तो रसोऽस्य । १बोले । (फुलसत्व) ख्याते उपधातुभेदे । गन्धश्च रसश्च द्व०। २आमोदरसयोः द्विव०। "अङ्गापूतं गन्धरसोपपन्नम् (अन्नम्)" भा०उ० २६अ० "शीतस्यामृतकल्पस्य दिव्यगन्धरसस्य च" भा०भी०१२२अ० ।

**गन्धरसाङ्गक** पु० गन्धरसौ अङ्गे यस्य कप् । श्रीवेष्टनाख्यगन्धद्रव्ये राजनि०।

**गन्धराज** पु०गन्धानां गन्धयुक्तानां राजा टच् समा०। १स्व-नामख्याते पुष्पप्रधाने वृक्षे २मद्गरवृक्षे ३कणगुग्गुलौ च राजनि० । गन्धेन राजते राज–अच् । ४जवादिनामगन्धद्रव्ये पु० ५गन्धद्रव्यश्रेष्ठे त्रि० ६चन्दने न०राजनि० । ७नखीनामगन्धद्रव्ये स्त्री ङीप् शब्दचन्द्रिका ।

**गन्धर्व** पु० गन्धमामोदमर्वति अर्व–अच् ६त० शक०, गाः स्तुतिरूपा गीतिरूपा वा वाचः रश्मीन् वा धारयति धृ–व गोर्गमादेशो वा ।१घोटके २मृगभेदे कस्तूरीमृगे ३अन्तराभवसत्त्वे च अमरः। अन्तराभवसत्त्वस्तु जन्ममरणयोर्मध्यभवः यातनाशरीरवान्, गुप्तप्राणी वा ।"गन्धर्वाः पतयो मम"भा०वि०१०अ० । सैरिन्ध्रीरूपद्रौपदीवाक्यम् । अन्तराभवसत्त्वः सत्त्वान्तरमध्ये आवेशकारी सत्त्वभेद इत्येव युक्तम् । स च सुश्रुते दर्शितो यथा "अथातोऽमानुषप्रतिषेधीयं व्याख्यास्यामः" इत्युपक्रमे "देवास्तथा शत्रुगणाश्च तेषां,गन्धर्वयक्षाः पितरो भुजङ्गाः। रक्षांसि या चापि पिशाचजातिरेषोऽष्टधा देवगणो ग्रहाख्यः" इत्यष्टधा विभज्य ।"हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः । नृत्यन् वा प्रहसति चारु चाल्पशब्दं गन्धर्वग्रहपरिपीडितो मनुष्यः" इति तद्ग्रहाविष्टलक्षणमुक्तम्। "ते पतञ्जलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता" शत०ब्रा० १४।६।३।१ । "गन्धर्वेणामानुषेण गृहीता आविष्टा" भा०।४एरण्डे भावप्र०"गन्धर्वतैलसिद्धां हरितकीं गोऽम्बुना पिबेत्" अस्य व्याख्यायां "गन्धर्वतैलमेरण्डतैलम्" तदुक्तेः तस्य च गन्धर्वरूपमृगभेदपादतुल्यपत्रकत्वात्तथात्वम् । ५गायनमात्रे त्रि०मेदि०।६देवगायने देवयोनिभेदे पु० अमरः । तत्रार्थे "रथं संयोजयामासुर्गन्धर्वैर्हेममालिभिः"भा०व०१६१अ०। "गावः रश्मयः उदकानि वा धारयति गवि उपपदे धृ–व गोर्गमादेशः इति ता० ब्रा० भाष्ये माधवोक्तेः ७रश्मिधारके सोमादित्यादौ । "गन्धर्वोऽस्य रशनामगृभ्णात्" ऋ० १,१६३,२, "गन्धर्वः सोमः" भा०। "ऊर्ध्वो गन्धर्वो अधिनाके अस्थात्" ऋ० ८,८५,१२ । "गन्धर्वो रश्मीनां धारकः" भा० । "गन्धर्व इत्था पदमस्य रक्षति" ६,८३,४। "गन्धर्वः उदकानां

स्तुतीनां वा धारक आदित्यः” भा० “शतक्रतुरत्सरत् गन्धर्वमस्तुतम्” ऋ० ८,१,११। “गन्धर्वः गवां रश्मीनां भर्त्तारं सूर्य्यम्” भा० “दिव्यो गन्धर्वः केतपूः” यजु०११,७,“गां वाचं स्तुतिरूपाम् धारयतीति गन्धर्वः सविता” वेददी०। गायने। “विश्वावसुरसि तन्नोरक्षतु दिव्यो गन्धर्वः” ऋ० १०,१३९,५ दिव्य इति विशेषणात् गायन मात्रपरत्वम्। अत एव शब्दार्थचि० “अस्मिन् कल्पे मनुष्यः सन् पुण्यपाकविशेषतः। गन्धर्वत्वं समापन्नो मर्त्यगन्धर्व उच्यते। पूर्वकल्पकृतात् पुण्यात् कल्पादावस्य चेद्भवेत्। गन्धर्वत्वं, तादृशोऽत्र दिव्यगन्धर्व उच्यते” इति गायनरूपगन्धर्वाभिप्रायेण द्वैविध्यमुक्तम् देवयोनि गन्धर्वाश्च वह्निपुराणे एकादशविधा उक्ता यथा

“अभ्राजोऽङ्घ्रारिवम्भारी सूर्यवर्चास्तथा कृधुः। हस्तः सुहस्तः स्वाम्येव मूर्द्धवांश्च महामनाः। विश्वावसुः कृशानुश्च गन्धर्वैकादशोगणः”।

जटाधरेण तन्नामान्यन्यथोक्तानि यथा “हाहा हूहू-श्चित्ररथो हंसो विश्वावसुस्तथा। गोमायुस्तुम्बुरु-र्नन्दिरेवमाद्याश्च ते स्मृताः”। देवगन्धर्वाश्च द्विविधाः केचित् मौनेयाः केचित् प्राधेयाश्च तत्र मौनेयाः कश्यपपत्न्यां दक्षसुतायां मुनिनामिकायां जाताः षोडश,प्राधेयाश्च प्राधायां तत्पत्न्यां जाता दश इत्येवं भा०आ०६५अ० उक्ता यथा “भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा। गोपतिर्धृतराष्ट्रश्च सूर्य्यवर्चाश्च सप्तमः। सत्यवागर्कपर्णश्च प्रयुतश्चाभिविश्रुतः। भीमश्चित्ररथश्चैव विख्यातः सर्व-विद्वशी। तथा शालिशिरा राजन् पर्जन्यश्च चतुर्दशः। कलिः पञ्चादशस्तेषां नारदश्चैव षोड़शः। इत्येते देव-गन्धर्वा मौनेयाः परिकीर्त्तिताः। अथ प्रभूतान्यन्यानि कीर्त्तयिष्यामि भारत!। अनवद्यां मनुं वंशामसुरां मार्गणप्रियाम्। अनूपां सुभगां भासीमिति प्राधा व्य-जायत। सिद्धः पूर्णश्च बर्हीं च पूर्णायुश्च महायशाः। ब्रह्मचारी रतिगुणः सुपर्णश्चैव सत्तमः। विश्वावसुश्च भा-नुश्च सुचन्द्रो दशमस्तथा। इत्येते देवगन्धर्वाः प्राधेयाः परिकीर्त्तिताः” स्वारोचिषमन्वन्तरे तु गन्धर्वा अरि-ष्टायाः पुत्राः यथा हरिवं०३अ०। “अरिष्टा तु महा-सत्वान् गन्धर्वानमितौजसः” इत्युक्ता “एष मन्वन्तरे तात! सर्गः स्वारोचिषे स्मृतः”। जातिपरत्वे स्त्रियां ङीप्। “नैव देवी न गन्धर्वी न यक्षी न च किन्नरी” रामा०आर०८२अ०। पत्न्यामपि ङीष् “गन्धर्वी गुह्यका यक्षा विबुधानुचराश्च ये। तथैवाप्सरसः सर्वा राजसेषू-त्तमा गतिः”। “दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम्” मनुः। द्वीपभेदे पु० “भारतस्यास्य वर्षस्य नव भेदान्नि-शामय। इन्द्रद्वीपकशेरुमांस्ताम्रवर्णो गभस्तिमान्। नागद्वीपस्तथा सौम्यः गन्धर्वस्त्वथ वारुणः। अयन्तु नव-मस्तेषां द्वीपः सागरसंवृतः”। गन्धर्वो देवताऽस्य अण्। गान्धर्व अस्त्रभेदे “संमोहनं नाम सखे! ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम्। गान्धर्वमादत्स्व यतः प्रयो-क्तुर्न चारिहिंसा विजयश्च हस्ते” रघुः। विवाहभेदे च “गान्धर्वः समयान्मिथः” मनुः।

**गन्धर्वनगर** न० अनिष्टसूचके आकाशोत्थिते वृ० सं० उक्ते १खपुरे खपुरशब्दे विवृतिः तस्य कालभेदे विपाकः वृ०सं०९७अ० उक्तो यथा। “गन्धर्वपुरं मासात् रसवैकृत्यं हिरण्यविकृतिश्च”। हेत०। २गन्धर्वाणां नगरे च। “सरो-मानसमासाद्य हाटकानभितः प्रभुः। गन्धर्वरक्षितं देशमजयत् पाण्डवस्ततः। तत्र तित्तिरिकुल्माषान् मण्डूकाख्यान्। हयोत्तमान् लेभे स करमत्यन्तं ग-न्धर्वनगरात्तदा” भा० स० १७ अ०। अर्जुनोत्तरदि-ग्विजयोक्तौ। गन्धर्वपुरादयोऽप्यत्र।

**गन्धर्ववधू** स्त्री गन्धर्वस्य वधूरिव प्रियत्वात्। १शठ्यां २चोडा-नामगन्धद्रव्ये च राजनि०।

**गन्धर्वलोक** पु० ६त०। गुह्यकलोकोपरिस्थे विद्याधरलोकस्या-धोनिविष्टे स्थाने। तत्स्थानकथा तत्प्राप्तिपुण्यानि च गुह्यकलोकोक्त्यनन्तरं काशीख०दर्शितानि यथा।

“गान्धर्व्वस्त्वेष लोकोऽमी गन्धर्वाश्च शुभप्रदाः। देवानां गायनाह्येते चारणाः स्तुतिपाठकाः। गीतज्ञा अभिगीतेन तोषयन्ति नराधिपान्। स्तुवन्ति च धनाढ्यांश्च धनलोभेन मोहिताः। राज्ञां प्रसादल-ब्धानि सुवासांसि धनान्यपि। द्रव्याण्यपि सुगन्धीनि कर्पूरादीन्यनेकशः। ब्राह्मणेभ्यः प्रयच्छन्ति गीतिं गायन्त्यहर्निशम्। स्तुतावेव मनस्तेषां नान्यशास्त्रे कृत-श्रमाः। तेन पुण्येन गन्धर्वलोकस्तेषां विशिष्यते। ब्राह्मणास्तोषिता यद्वै गीतिविद्यार्जितैर्धनैः। गीत विद्याप्रभावेन देवर्षिर्नारदो महान्। मान्यो वैष्णव लोके वै श्रीशम्भोश्चातिवल्लभः। तुम्बुरुर्नारदश्चोभौ देवानामपि दुर्लभौ। नादरूपी शिवः साक्षान्नादविद्या-विदां हितः। यदि गीतं क्वचिद्गीतं श्रीमद्धरिहरा-त्मकम्। मोक्षन्तु तत्फलं प्राहुः सान्निध्यमथ वा तयोः।

मोदते यदि गीतेन नाप्नोति परमं पदम् । रुद्रस्यानुच रोभूत्वा तेनैव सह मोदते । अथिवा के सदा कालं स्ट-तिरेषा प्रगीयते । तद्गीतमालया पूज्यौ देवौ हरिहरौ सदा । इति श्रुत्वान् वचनात् प्राप पुरमन्यन्मनोहरम् । शिवशर्माथ पप्रच्छ किं संज्ञं नगरन्त्विदम् । गणावूचतुः । असौ विद्याधरो लोको नानाविद्याविशारदाः ।"

**गन्धर्वविद्या** स्त्री ६तत्। सङ्गीतविद्यायाम् । [वेदशब्दे दृश्यः।

**गन्धर्ववेद** पु० ६तत्। सामवेदस्योपवेदे सङ्गीतमूलग्रन्थे उप-

**गन्धर्वहस्त** पु० गन्धर्वस्य मृगभेदस्य हस्तः पाद इव पत्रमस्य । एरण्डवृक्षे हारा० । कप् । तत्रार्थे अमरः । सुश्रुतेन तत्पत्रात्ममक्षोत्पत्तिरभिहिता यथा "गन्धर्वहस्तकसुष्क-कनक्कमाखाटरूपकपूतीकारगवधचित्रपदीनां पत्राख्या-द्रीणि लवणेन सहोदूखलेऽनुवद्य स्ने हघटे प्रक्षिप्यावलिप्य गोमयाग्निर्द्दाहयेदेतत्पत्रलवणमुपदिशन्ति वातरोगेषु" ।

**गन्धलता** स्त्री गन्धान्विता लता । प्रियङ्गौ शब्दार्थचि० ।

**गन्धलोलुप** त्रि०७तत० । गन्धलोभातिशयवत्यां मधुमक्षिकायां शब्दर० ।

**गन्धवत्** त्रि० गन्धो विद्यतेऽस्य मतुप् मस्य वः । १गन्धयुक्ते "गन्धवद्रुधिरचन्दनोक्षिता"रघुः । स्त्रियां ङीप् । सा च २पृथिव्याम् मत्स्यगन्धायां सत्यवत्याम् ३व्यासमातरि तस्यास्तन्नामत्वप्राप्तिः भा० भी०६३अ० उक्ता यथा

"एवमुक्ता वरं वव्रे गात्रसौगन्ध्यमुत्तमम् । सचा-स्यै भगवान् प्रादात् मनसः काङ्क्षितं भुवि । ततोलब्ध-वरा प्रीता स्त्रीभावगुणभूषिता । जगाम सह संसर्गम्-षिणाऽद्भुतकर्मणा । तेन गन्धवतीत्येवं नामास्याः प्रथितं भुवि । तस्यास्तु योजनाद्गन्धमाजिघ्रन्ति यन्नरा भुवि । तस्या योजनगन्धेति ततो नामापरं स्मृतम् । इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तमम् । पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा । जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान् ।"

४सुरायां मेदि० ५नवमल्लिकायां रत्नमा०६मुरानाम-गन्धद्रव्ये जटा०।७वायुपुर्याञ्च यथाह खगेन्द्रसंहिता यथा "वायोर्गन्धवतीं तुङ्गश्वेतपीतध्वजां शृणु । बलवद् भूतसंजुष्टां सर्वरत्नविनिर्मिताम्"। काशीख०१३अ०।"इमां गन्धवतीं रम्यां पुरीं वायोर्विलोकय । वारुण्या उत्तरे भागे महाभाग्यनिधे ! द्विज !" इति गन्धवतीपुर्याः स्वरूपं ते निरूपितम्। तस्याः प्राच्यां कुबेरस्य भ्राज-त्येषालका पुरी" । तदुत्तराध्याये । मेदिनिकोषे "अथ गन्धवती पृथ्वी पुरीभिद्व्यासमातरीति" पुरीभेदार्थकता-मात्रोक्तेः शब्दकल्पद्रुमे तन्मूलकशब्दस्तोमे च वरुण पुरीपरत्वकथनं प्रामादिकमेव । वरुणपुर्य्यास्तु निम्लो-चनीति नाम यथोक्तं भाग० ५ । २०।१० । यथा "तस्मिन्नैन्द्रीं पूर्वस्मान्मेरोर्देवधानीं नाम दक्षिणतो याम्यां संयमनीं नाम पश्चाद्वारुणीं निम्लोचनीं नाम उत्तरतः सौम्यां विभावरीं नाम"

**गन्धवल्कल** न० गन्धो वल्कलेऽस्य । (दारचिनि) त्वचे । राजनि०। [ गन्धवल्लीत्यप्यत्र राजनि० ।

**गन्धवल्लरी** स्त्री गन्धान्विता वल्लरी । सहदेवीलतायाम्

**गन्धवह** पु० गन्धं वहति वह—अच् ६तत० । १वायौ अमरः "आघ्रायि वान् गन्धवहः सुगन्धः" भट्टिः "दिग्-दक्षिणा गन्धवहं मुखेन" कुमा० । २गन्धयुक्ते नाय-कभेदे पु० । "नवालता गन्धवहेन चुम्बिता" नैष० । अत्र नायिकापक्षे गन्धवहशब्दस्य नायकभेदपरत्वम् । ३गन्धधारिमात्रे त्रि० । "आकाशात्तु विकुर्वाणात् सर्वगन्धवहः शुचिः । बलवान् जायते वायुः स वै स्पर्शगुणो मतः" मनुः । "वायुर्गन्धवहः" भाग० २।१०।२० ।४नासिकायां स्त्री अमरः ।

**गन्धवहल** गन्धं वहति वह—बा०अलच् गन्धो बहलोऽस्य वा ।१सितार्जकवृक्षे २श्वेततुलस्याञ्च राजनि०। [जले ।

**गन्धवारि** न० गन्धद्रव्यवासितं वारि । सुगन्धिद्रव्यवासिते

**गन्धवाह** पु० गन्धं वहति वह—अण् उप०स० । १वायौ । अमरः । "प्रसरदसमबाणप्राणवद्गन्धवाहः"गीतगो० । २कस्तूरीमृगे हेमच० । ३नासिकायां स्त्री ङीप् हेमच०

**गन्धविह्वल**पु० गन्धेन विह्वलयति वि+ह्वल—णिच्—अच् । गोधूमे शब्दच० । [राजनि० ।

**गन्धबीजा** स्त्री स्त्री गन्धो बीजे यस्याः । मेथिकायाम् ।

**गन्धवृक्षक** पु० गन्धप्रधानो वृक्षः संज्ञायां कन् । १शालवृक्षे राजनि० । [ अच् । १कक्कोले । शब्दच० ।

**गन्धव्याकुल** पुंन० गन्धेन व्याकुलयति वि+आ+कुल—णिच्-

**गन्धशटी** स्त्री गन्धप्रधाना शटी शा० त० । शठ्याम् शब्दच०

**गन्धशाक** न० गन्धप्रधानं शाकम् शा०त० । गौरसुवर्णशाके राजनि० ।

**गन्धशालि** पु० गन्धप्रधानः शालिः । आमोदवति धान्यभेदे (वासमती) प्रसिद्धे सुगन्धके शालौ । "गन्धशालिः सुमधुरो हृद्यः पित्तश्रमप्रणुत् । स्नायुविदाहशमन क्लान्यगर्भस्थिरत्वकृत् । ईषद्वातप्रशमनः स्वल्पकफबल-

प्रदः” राजनिघण्टौ तद्गुणाः समासेन दर्शिताः ।

**गन्धशुण्डिनी** स्त्री गन्धयुक्तः शुण्डो मुखमस्त्यस्याः इति ङीप् । छुछुन्दर्य्यां राजनि० ।

**गन्धशेखर** पु० गन्धः शेखरेऽस्य । कस्तूर्य्यां मृगमदे हारा० । [ गन्धशब्दे उदा० ।

**गन्धसार** पु० गन्धयुक्तः सारो यस्य । चन्दनवृक्षे अमरः ।

**गन्धसारण** पु० गन्धं सारयति सृ-णिच्-ल्यु । १वृहल-खोनामगन्धद्रव्ये रत्नमा० । २मुद्गरवृक्षे राजनि० ।

**गन्धसोम** न० गन्धार्थं सोमो विधुर्यस्य । १कुमुदे हारा० चन्द्रोदये हि तस्य गन्धः ।

**गन्धहारिका** स्त्री गन्धं हरति हृ-ण्वुल् टाप् कापि अत इत्त्वम् । परगृहस्थायां गन्धाढ्यवेशकारिकायां स्त्रियाम् शब्दमाला ।

**गन्धा** स्त्री गन्ध-णिच् अच्, गन्ध+अस्त्यस्य अच् वा । आमोदहेतौ चम्पककलिकायाम् शब्दरत्ना० । २शट्याम् राजनि० ३शालपर्ण्यां भरतः । ४आमोदयुक्तायां स्त्रियाञ्च । [ हारा० ।

**गन्धाखु** स्त्री गन्धयुक्त आखुः । छुछुन्दर्य्याम् ( छुचा ) ।

**गन्धाजीव** पु० गन्धेन गन्धद्रव्येणाजीवति आ+जीव-अच् । (गन्धवेणे) गन्धवणिजि जटाधरः ।

**गन्धाढ्य** न० गन्धेनाढ्यः । १जवादिनामगन्धद्रव्ये २चन्दने च राजनि० ३नारङ्गवृक्षे पु० राजनि० । ४गन्धपत्रायां (गन्धभादाल) ५स्वर्णयूथ्यां ६तरुण्याम् ७आरामशीतलायाञ्च स्त्री राजनि० ८गन्धोत्याञ्च स्त्री शब्दच० । ९गन्धयुक्ते त्रि० । “वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः” धूपदानमन्त्रः ।

**गन्धाधिक** न० गन्धोऽधिकोऽत्र । तृणकुङ्कुमे राजनि० [ राजनि०

**गन्धाम्ला** स्त्री गन्धयुक्तः अम्लो रसो यस्याः । वनवीजपूरके

**गन्धार** पु० ब० व० गन्धमृच्छन्ति ऋ-अण् उप० स० १देशभेदे “काश्मीराः सिन्धुसौवीरा गन्धारादर्शकास्तथा” भा० भी० ९ अ० नानाजनपदोक्तौ । “पण्डितो मेधावी गन्धारानेवोपसम्पद्यते” छा० उप० । “गन्धारराजपुत्रोऽभूच्छकुनिः सौबलस्तथा” भा० आ० ६३० । २तन्नृपेषु ब० व० । ततो भवार्थादौ कच्छादि० अण् । गान्धार तद्देशभवे त्रि० स्त्रियां ङीप् । गान्धारी सा च शकुनिदुर्य्योधनमातरि । गन्धाराः अभिजनोऽस्य सिन्ध्वा० गन्धार-अण् । गान्धार-पित्रादिक्रमेण गन्धारदेशवासिनि त्रि० ।

**गन्धारि** पु० गन्धम् ऋच्छति ऋ-इन् ६त० । गन्धारदेशे । “सर्वाहमस्म्यरोम्य गान्धारीणामिवाविका” ऋ० १।१२६ । गन्धं लेशरूपं गर्भमृच्छति अण् गौरा० ङीष् । १गन्धारी गर्भवत्याञ्च उक्तमन्त्रभाष्ये माधव आह स्म “रोमशत्वे दृष्टान्तः गन्धारीणामविकेव । गन्धारा देशाः । तेषां सम्बन्धिन्य विजातिरिव तद्देशस्था अवयो मेषा यथा रोमशाः तथाहमस्मि । यद्वा गन्धारीणां गर्भधारिणीनां स्त्रीणामविकात्वर्थं तर्पयन्ती योनिरिव । तासामाप्रसवं रोमादिविकर्त्तनस्य शास्त्रे निषिद्धत्वाद्योनी रोमशा भवति अतः सोपमीयते” [ लतायां शब्दच० ।

**गन्धाला** स्त्री गन्धायालति पर्य्याप्नोति अल-अच् । (जियति)

**गन्धाली** स्त्री गन्धमलति पर्य्याप्नोति अल-अण् गौरा० ङीष् । (गन्धभादाल) लताभेदे अमरः । ६त० । गन्धश्रेणौ च ।

**गन्धालीगर्भ** स्त्री गन्धाली गन्धश्रेणी गर्भे यस्याः । सूक्ष्मैलायाम् राजनि० ।

**गन्धाश्मन्** पु० गन्धयुक्तोऽश्मा शा० त० । गन्धके अमरः ।

**गन्धाष्टक** न० गन्धानां गन्धद्रव्याणामष्टकम् । चन्दनाद्यष्टसु आमोदाढ्यद्रव्येषु ।

देवताभेदेन देयाष्टप्रकारगन्धद्रव्यभेदा यथा “चन्दनागुरुकर्पूरचोरकुङ्कुमरोचनाः । जटामांसी कपियुता शक्तेर्गन्धाष्टकं विदुः । चन्दनागुरुह्रीवेरकुष्ठकुङ्कुमसेव्यकाः । जटामांसीसुरमिति विष्णोर्गन्धाष्टकं विदुः । चन्दनागुरुकर्पूरतमालदलकुङ्कुमम् । कुसीदं कुष्ठसंयुक्तं शैवं गन्धाष्टकं शुभम् । स्वल्पं चन्दनं चोररोचनागुरुरेव च । मदं मृगद्वयोद्भूतं कस्तूरीचन्द्रसंयुतम् । गन्धाष्टकं विनिर्दिष्टं गणेशस्य महेशितुः” शारदा० ति० । “चन्दनागुरुकर्पूररोचनाकुङ्कुमं मदम् । रक्तचन्दनह्रीवेरं गाणपत्यमुदाहृतम् । जलकाश्मीरकुष्ठैस्तु रक्तचन्दनचन्दनैः । उशीरागुरुकर्पूरैः सौरं गन्धाष्टकं विदुः” मेरुतन्त्रम् ।

**गन्धाह्वा** स्त्री गन्धेनाह्वयति आ+ह्वे-क । रक्ततुलस्याम् । “मालती कटुतुम्बी गन्धाह्वा मूलकं तथा” सुश्रुतः ।

**गन्धि** न० गन्ध-इन् । तृणकुङ्कुमे राजनि० ।

**गन्धिक** पु० गन्धोऽस्त्यस्य ठन् । १गन्धके गन्धो गन्धद्रव्यं पण्यत्वेनास्त्यस्य ठन् । २गन्धवणिजि ।

**गन्धिन्** त्रि० प्रशस्तः गन्धोऽस्त्यस्य इनि । प्रशस्तामोदयुक्ते “अनोकहाकम्पितपुष्पगन्धी” “हविः शमीलाजगन्धि” “शालनिर्यासगन्धिभिः” धूमैराहुतिगन्धिभिः” रघुः । “यत्रैव गन्धि नो रस्यं नो रूपि न च शब्दवत् । मन्यन्ते मुनयो बुद्ध्या तत् प्रधानं प्रचक्षते” भा० आश्व० ५२ अ० ।

स्त्रियां ङीप् । "गावः सुरभिगन्धिन्यस्तथा गुग्गुलुगन्धयः" भा० आनु० ७८अ० । सा च २मुरानामगन्धद्रव्ये अमरः । [गन्धिफलादयोऽप्यत्र ।

**गन्धिपर्ण** पु० गन्धि गन्धयुक्तं पर्णमस्य। सप्तच्छदे राजनि०।

**गन्धेन्द्रिय** न० गन्धग्राहकमिन्द्रियम् शा० त० । घ्राणेन्द्रिये तच्च पृथिव्यंशोत्पन्नम् "पार्थिवो गन्धो गन्धेन्द्रियं सर्वमूर्त्तिसमूहो गुरुता चेति" सुश्रुतः। तस्य यथा पार्थिवता तथा मुक्तावल्यां समर्थितं यथा

"घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धव्यञ्जकघृतवत् न च दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात् न च नवशरावगन्धव्यञ्जकजलेनानैकान्त्यमिति वाच्यं तस्य सक्तुरसाभिव्यञ्जकत्वात् यद्वा परकीयेति न देयं वायूपनीतसुरभिभागस्य दृष्टान्तत्वसम्भवात् नच घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यं द्रव्यत्वे सति इति विशेषणात् ।" अधिकमिन्द्रियशब्दे उक्तम् । [जन्तुभेदे त्रिका०।

**गन्धो(न्धौ)तु** पु० गन्धप्रधान ओतुः वा वृद्धिः । खट्टाशे

**गन्धोत्कटा** स्त्री गन्धेन उत्कटा उग्रा । दमनकवृक्षे राजनि०

**गन्धोत्तमा** स्त्री गन्धेन उत्तमा उत्कृष्टा । मदिरायाम् अमरः

**गन्धोद** न० गन्धवासितमुदकं शा०त० वा उदादेशः । गन्धद्रव्यवासितजले "आसिक्तमार्गं गन्धोदैः" भाग०९।११।१८ । उदादेशाभावे गन्धोदकमप्यत्र गन्धयुक्तिशब्दे उदा० ।

**गन्धोपजीविन्** पु० गन्धं गन्धद्रव्यमुपजीवति उप+जीव–णिनि । गन्धवणिजि । "दन्तकाराः सूपकारा ये च गन्धोपजीविनः" रामा० अयो०८३।१ श्लो० ।

**गन्धोलि(ली)** स्त्री गन्ध–ओलि–वा ङीष् । शट्याम् । ङीबन्तः । २भद्रमुस्तायाम् मेदि० ।

**गन्धोली** स्त्री गन्ध–अर्द्दने बा० ओलच् गौरा० ङीष् । वरटायां (बोलता) अमरः।

**गभ** न० भग+पृषो० वर्णविपर्य्ययः । भगे । "आहन्ति गभे पसो निगल्गलीति धारका" यजु०२३।२२ "गभे भगे वर्णविपर्य्ययः" वेददी० "गभे मुष्टिमतंसयत्" २३।४।२४ "आहन्ति गभे पसो निगल्गलीति धारके" शत० ब्रा० १३।२।९।६ ।

**गभस्ति** पु० गम्यते ज्ञायते गम–ड गः विषयस्तं बभस्ति भासयति भस–क्तिच् । १किरणे, २सूर्य्ये च । ३स्वाहायां वह्निपत्न्यां स्त्री मेदि० वा ङीष् । "यथा राजन् ! क्षतीः सर्वाः सूर्य्यः पाति गभस्तिभिः" भा० व० १३३अ० । "निजवदनमलिनमयगभस्तिभिः सुभयति" भाग० ५।८।२७ । "गभस्तिधाराभिरिव द्रुतानि तेजांसि भानोः" भट्टिः । ४अङ्गुलीषु ब०व० ५बाह्वौ द्वि० निघण्टुः । "पृथू करस्ना बहुला गभस्ती" ऋ० ६।१९।३ । "भगस्ती बाहू" भा० । "आ रश्मयोः गभस्त्योः स्थूरयोः" २९।२ । "गभस्त्योः बाह्वोः" भा० ६पाणौ च "पाणी वै गभस्ती पाणिभ्यां ह्येनं पावयति" गभस्तिपूतनिरुक्तौ शत०ब्रा० ४।१।१।९ । "कृष्णोऽंशुभ्यां गभस्तिपूतः" यजु० ७।१ । "गभस्तिभ्यां पाणिभ्यां पूतः"वेददी० ।

**गभस्तिनेमि** पु०गभस्तय एव चक्रं तस्य नेमिरिव । गभस्तिरूपचक्रमध्यस्थस्य सूर्य्यात्मनो नेमितुल्ये परमेश्वरे । "गभस्तिनेमिः सत्त्वस्थः" विष्णु स० । "गभस्तिनेमिः श्रीपद्मः" भा० शा० १२अ० विष्णुस्तुतिः ।

**गभस्तिपाणि** पु०गभस्तिः पाणिरिवास्य रसाकर्षणाय । सूर्य्ये हेमच०। गभस्तिकरादयोऽप्यत्र। गभस्तिहस्तशब्दे दृश्यम् ।

**गभस्तिमत्** पु०गभस्तयोभूम्ना सन्त्यस्य मतुप् । सूर्य्ये शब्दरत्ना० । तस्य सहस्रकिरणत्वात्तथात्वम् । "घनव्यपायेन गभस्तिमानिव" रघुः गभस्तयोनित्यं सन्त्यत्र नित्ययोगे मतुप् । २पातालभेदे न० शब्दर० । "आह्लादकारिणः शुभ्राः मणयो यत्र सुप्रभाः । दिवाकररश्मयो यत्र प्रभां तन्वन्ति नातपम् । शशिनश्च न शीताय निशि द्योताय केवलम्" विष्णुपुराणोक्तेः तस्य सर्वदा मण्यादिदीप्तिमत्त्वात् तथात्वम् ३द्वीपभेदे पु० गन्धर्वशब्दे दृश्यम् ।

**गभस्तिहस्त** पु० गभस्तयो हस्ता इव जलाकर्षणाय यस्य । सूर्य्ये त्रिका० । "सूर्य्यः किरणजालेन वायुयुक्तेन सर्वतः। जगतो जलमादत्ते कृत्स्नस्य द्विजसत्तम !" विष्णु पु० उक्तेस्तस्य किरणद्वारा जलाकर्षकत्वात् तत्किरणानां तस्य हस्ततुल्यत्वम् । [ मेतद्दिव्यमहःप्रदम्" काशीख० ।

**गभस्तीश** पु० काशीस्थे लिङ्गभेदे "गभस्तीशो महालिङ्ग-

**गभि** त्रि० गच्छति नीरमत्र गम–आधारे इन् भश्चान्तादेशः । गभीरे ।"गभौ सज्जते सम्–सज–क्विप् गभिषज् गभीरस्थायिनि । "तेषां हि धाम गभिषक् समुद्रियम्" अथ० ७।७।१।

**गभीका** स्त्री गभीरे कायति कै–क पृषो०रलोपः ।(गाम्भार) वृक्षभेदे तस्याः फलम् अण् हरितक्या० तस्य लुप् तद्धितलुपि प्रकृतिलिङ्गता । गभीका तत्फले स्त्री ।

**गभीर** त्रि० गच्छति जलमत्र गम–ईरन् भान्तादेशश्च। १निम्नस्थाने, २अतलस्पर्शे, ३मन्द्रे ध्वनौ च अमरः। ४गहने, ५दुष्प्रवेशे, ६दुर्बोधे च उणादिकोषः। "जीर्णा तरिः सरिदतीव गभीरनीरा" उद्भटः। "न त्वां गभीरं गुरु-हन्तः! सिन्धुः" ऋ० ३।३२।१६। "न तं गूहन्ति स्रवतो गभीराः" ऋ० १०।१०८।४॥ ७वाचि स्त्री निघण्टुः। द्यावापृथिव्योः रोदस्योः स्त्री द्विव० निघण्टुः।

**गभीरात्मन्** पु० गभीरः दुर्लक्ष्य आत्मा स्वरूपमस्य। परमेश्वरे। "चतुरश्रो गभीरात्मा" विष्णु स०। आत्मा-स्वरूपं चित्तं वा गभीरं परिच्छेत्तुमशक्यमस्य गभीरात्मा" भा०। [बृहड्ढक्कायाम् शब्दरत्ना०।

**गभीरिका** स्त्री गभीरा मन्द्रध्वनियुक्ता संज्ञायां कन्।

**गभोलिक** पु० अव्युत्पन्नप्रातिपदिकम्। मसूरे हारा०।

**गम** गतौ भ्वा० पर० अनिट्। गच्छति लृदित् अगमत् जगाम जग्मतुः। गन्ता गम्यात् गमिष्यति। गन्ता गमी गम्यः गन्तव्यः गमनीयः गच्छन् गतं गतः गतिः गन्तुम् गत्वा आगत्य। छन्दसि जग्मिवान्। कर्मणि गम्यते अगमि गम्यमानः। णिच्। गमयति ते अजीगमत् ते। सन् जिगमिषति संजिगांसते। यङ् जङ्गम्यते। यङ्लुक् जङ्गमीति-जङ्गन्ति। जङ्गमम्। "चीदीयानपि गच्छति" माघः "गच्छति पुरः शरीरम्" शकु० "तेन गच्छन् न रिष्यति" मनुः। "न गणस्याग्रतो गच्छेत्" हितो०। "जगाम गहनं वनम्" देवीमा०। "तत्र निश्चित्य कन्दर्पमगमत् पाकशासनः" कुमा०। "गतं तिरश्चीनमनूरुसारथेः" माघः। "क्रोशार्द्धं प्रकृतिपुरःसरेण गत्वा" रघुः। "अगम्यां च स्त्रियं गत्वा" स्मृतिः।

अच्छ+आभिमुख्ये गच्छगत्य अभिमुखं गत्वा।

अति+अतिक्रम्य उत्क्रम्य वा गमने। "ततो दशाहेऽतिगते कृतशौचो नृपात्मजः" रामा० अयो० ७७।१। "चिन्तामतिजगाम ह" भा० शल्य०४७ अ०। अतिक्रमार्थे नास्य गतित्वम् अतिगत्वा।

वि+अति+विशेषेणातिक्रम्य गतौ "कथमर्ज्जुन! कालोयम् स्वर्गे व्यतिगमस्तव" भा० व० १६७ अ०।

अधि+प्राप्तौ। "अधिगत्य जगत्यधीश्वरात्" नैष०। यथा "खनन् खनित्रेण नरो वार्य्यधिगच्छति" मनुः। "विशेषं नाधिगच्छामि निर्द्धनस्यावरस्य च" भा० शा० २२६ श्लो०। "वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च" याज्ञ०।

सम्+अधि+सम्यक् प्राप्तौ। "यतो समधिगच्छन्ति यस्ते तस्य तद्धनम्" मनुः।

अनु+प्राप्तौ पश्चाद्गमने अनुकरणे च। "तत् पापं शतधा भूत्वा तद्दातॄननुगच्छति" स्मृतिः "श्रुतेरिवार्थं स्मृतिरन्वगच्छत्" रघुः। "अनुगतनयमार्गामर्गलां दुर्नयस्य" माघः।

अन्तर्+व्यवधाने गतौ मध्यगतौ च। "भानौ यस्मादन्तर्गतः" शत०ब्रा० १।६।३।१। "अन्तर्गता मदनवह्निशिखावली या" उद्भटः।

अप+अपाये विश्लेषजनकक्रियायाम्। "सा कन्यापजगामाथ समीपात्तस्य धीमतः" भा० द्रो० ५४अ०।

अपि+सकारवादौ प्रवेशे "अस्तं वागपिगच्छतु" अथ०२।१२।८।

अभि+आभिमुख्येन गतौ। "अनुरागाद्वने रामं दिष्ट्या त्वमभिगच्छसि" रामा० अयो० २ अ०। सम्यग्गतौ च "अभिगन्तास्मि भगिनीं मातरं च तथेति च" याज्ञ०।

अव+बोधे, "यदावगच्छेदायत्यामनिष्टं ध्रुवमात्मनः" मनुः। प्राप्तौ च "कुतो युद्धं जातु नरोऽवगच्छेत्" भा० उ० ७४०श्लो०।

आ+पश्चाद्देशविभागपूर्वकगतौ। "आगत्य बिल्वशाखायां चण्डिके! कुरु सन्निधिम्" दुर्गावाहनमन्त्रः। "धनुषोऽस्यासमागत्य" भा० आ०१८७अ०। "आगता वत जरेव हिमानी सेव्यतां सुरतरङ्गिणी" उद्भटः। बोधे "आगमो निष्फलस्तत्र भक्तिस्तोकापि यत्र नो"। आ+गम–णिच्। क्षमायां प्रतीक्षायाञ्च आत्म० "यावदागमयतेऽथ नरेन्द्रान्" नैष०। आगमयते कालम्। "कर्मादिषु सर्वेषु अध्वर्युः संप्रेषमागमयेत" लाट्या०श्रौ४।६।८।

अधि+आ+प्राप्तौ "नाध्यागमच्च मृगयंस्तां मां मुनिरुदारधीः" भा० आ०६६अ०।

अनु+आ+अनुकृतौ सम्यग्गतौ पश्चाद्गतौ प्रत्यागतौ च "अन्वागतो यज्ञपतिर्वो अत्र" यजु०१८।५६। "अन्वागतो कर्म समाप्तौ भवतः प्रत्यागमिष्यति" वेददी०। सम्बन्धे च। "किञ्चित् पश्चात्यनन्वागतः" शत० ब्रा० १४।६।३।१७। "अनन्वागतः अननुबद्धः" भा०।

अभि+आ+आभिमुख्येनागतौ "सर्वत्राभ्यागतो गुरुः" मनुः सम्यगागतौ "क्रमादभ्यागतं द्रव्यम्" याज्ञ०। प्राप्तौ च

उप+आ+समीपागतौ "वनादाराद्वुपागतः" रामा०। "तपोनिधिं वेत्सि न मामुपागतम्" शकु०। उपस्थितौ च अक०। "कथमापदुपागता" भा० स०२६०६अ०।

प्रति+आ+पराष्टत्यागमने (यतो गतिस्तत्र पुनरागतौ) "द-

यात् प्रत्यागतं प्रसूरं भार्य्याञ्च गतयौवनाम्” चाण० । “प्रत्यागतश्चैव पुनस्तथैव” प्रा०त० ।

उद्+ऊर्द्ध्वगतौ उत्थाने अक० । “इत्युद्गताः पौरवधूमुखेभ्यः शृखन् कथाः” रघु० । उद्गमः । उत्क्रम्य गतौ च “ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति” मनुः ।

अभि+आ+आभिमुख्येनागमने । “अभ्यागतास्त्वा वयमद्य सर्वे” भा०आ० ८८अ० ।

प्रति+उद्+प्रतिलक्ष्यीकृत्य उत्थाने अक० । “तमागतमभिप्रेक्ष्य प्रत्युद्गम्य परन्तपः” भा०आ० १६८अ० । (आगवाड़ा) गतिभेदे सक० । “प्रत्युज्जगामातिथिमातिथेयः” । “प्रत्युद्गतमिवानुष्णैः” “प्रत्युद्गता पार्थिवधर्मपत्न्या” रघुः “प्रत्युज्जगामागमनप्रतीतः” कुमा० ।

उप+समीपगमने । “यत्रास्तमुपगच्छन्ति सारमेया इवामिषम्” “मदनमुपगतोऽहं पूर्वमम्भोजयोनेः” प्रबोधच० । “सुप्तां मत्तां प्रमत्तां वा रहोयत्रोपगच्छति” मनुः । प्रतिज्ञायाम् उपगमः ।

अभि+उप+प्रतिज्ञायाम् स्वीकारे च । “वयमभ्युपगच्छाम क्षणेन त्वां प्रधर्षितम्” हरिवं०३अ० । अभ्युपगमः । आभिमुख्येन समीपगतौ च “गच्छन्त्यभ्युपगच्छन्ति यशसेऽर्थाय भाविनि !”भा०१२४अ० ।

नि+नियमेन प्राप्तौ । “हिते मित्रे निगताव् हन्ति वीरान्” ऋ०१०।१२२।५ । “निगतान् हननाय नियमेन प्राप्तान्”भा० । णिच् । निश्चयेन बोधने च निगमो वेदः । निगमकल्पतरोर्गलितं फलम्” भाग० १।१।३ । उक्तार्थस्योपसंहारे च निगमनशब्दे विवृतिः ।

निर्+निष्क्रमणे । “अभिविद्धा तु या नारी निर्गच्छेद् पिता गृहात्”मनुः । विशेषेण प्राप्तौ च । “पुरुषाः प्रेष्यतामेके निर्गच्छन्ति धनार्थिनः” भा० व० २५८अ० ।

परा+पराहत्य गमने परिगतौ च । “यद्दे मनः परागतं यद्बद्धमिह वेह वा” अथ०७।१२।४ । “विद्यया तदारोहन्ति यत्र कामाः परागताः” शत०ब्रा० १०।५।४।१६ । व्याप्तौ च । “स्फुटपरागपरागतपङ्कजम्” माघः ।

परि+परितो गतौ “यथा हि मेरुर्भगवता(सूर्य्येण)नित्यशः परिगम्यते” भा०व० २०४ अ० । वेष्टने च “अथ स वल्कदुकूलकुथादिभिः परिगतोज्ज्वलदुद्धतवालधिः” भट्टिः ।

प्रति+वैपरीत्येन गतौ (यत्र आगतिस्तत्रैव गमने) “भवतु प्रतिगमिष्यामस्तावत्”शकु० “अधीतां योगहीनस्य विद्यां प्रतिगतामिव” रामा०सुन्द०१८अ० ।

वि+विशेषेण गतौ विच्छेदे विगमे च । “अवनितलविगतैश्च भूतसंघैः” भा० द्रो० ३७अ० । “ततो निशा साव्यगमन्महात्मनाम्” भा० आश्व० ६४अ० । “श्रद्धा च नो मा विगमत्” मनुः । “रुचिभर्त्तुरस्य विरहाधिगमादिति सन्ध्ययापि सपदि व्यगमि” माघः ।

सम्+सङ्गे अक० आ० । “यत्र देवाः समगच्छन्त विश्वे” ऋ० १०।८२।६ । “सङ्गच्छस्व मया सार्द्धमेकेनैकनराशन !”भा० अयो०१५३अ० । “स्थले स्थले चान्तरीक्षे गङ्गासागरसङ्गमे” प्रा०त० । “परमं भगवन्नेवं संगमिष्ये त्वया सह” भा० व० २०६ अ० । “दिष्ट्या मे सङ्गतं यथा” भा० सम्यग्गतौ पर०सक० । “सङ्गच्छ पोंश्चलि ! त्वं मास्” भट्टिः । गमेः कर्म्मविशेषे उपपदे कर्त्तरि ख । तुरङ्गमः हृदयङ्गमः भुजङ्गमः इत्यादि । उरआदिषु उपपदेषु ड । उरगः भुजगः तुरगः हृद्गः अन्तग इत्यादि ।

**गम** पु० गम–यथायथं भावादौ अप् । १जिगीषोर्यात्रायाम्, २पथि, अमरः ३द्यूतभेदे, ४गमने, च । ५अपर्य्यालोचिते अध्वनि मेदि० । ६सदृक्पाठे हेम० । गम्यते कर्म्मणि अप् न वृद्धिः । ७गम्यमाने मार्गादौ । “अश्वसैकाहगमः” पा० तत्र गमने “दृषसिंहवृश्चिकवटेविद्धि स्थानं गमागमौ नक्तः” षट्पञ्चाशिका ।

**गमक** त्रि० गमयति गम–णिच्–ण्वुल् । १गमयितरि २बोधके च “सापेक्षत्वेऽपि गमकत्वात् समासः” महाभा० “यत् प्रौढत्वमुदारता च वचसां यच्चार्थतोगौरवम् तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः” मालतीमा० । ३स्वरभेदे । “गमकः स्वश्रुतिस्थानस्थानां श्रुत्यन्तराश्रयात् । स्वरो यो मूर्च्छनामेति गमकः स इहोच्यते । कम्पितः स्फुरितो लीनो भिन्नः स्थविर एव च । आहतान्दोलितौ चेति गमकाः सप्त कीर्त्तिताः । माघपौषनिशायान्तु शेषप्रहरमात्रके । साधकः सलिले स्थित्वा गमकान् सप्त साधयेत् । दाक्षिणात्या हरिप्रीत्यै गायन्ति गमकानिमान्” सङ्गी०दा०

**गमथ** पु० गम–अथच् । पथिके उज्ज्वद० ।

**गमन** न० गम–भावे ल्युट् । स्वाश्रयसंयोगविभागासमवायिकारणे १क्रियाभेदे “प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च” “भ्रमणं रेचनं स्यन्दनोर्द्ध्वज्वलनमेव च । तिर्य्यग्गमनमप्यत्र गमनादेव लभ्यते” भाषा० । उत्क्षेपणशब्दे१०८६पृ०विवृतिः । २जिगीषोः प्रयाणे च अमरः ।

**गमिन्** त्रि० “भविष्यति गम्यादयः”पा० गम–भव्ये इनि ।

भाविगमनके स्त्रियां ङीप्। "गम्यादीनामुपसंख्यानम्" वार्त्तिकोक्तेः ग्रामगमीत्यादौ द्वितीयात०समा०। इदन्तत्वेऽपि तद्योगे कर्म्मणि न षष्ठी ग्रामं गमी।

**गमिष्ठ** त्रि० अतिशयेन गन्ता—गन्तृ—अतिशायने इष्ठन्। गन्तृतमे। "किमङ्ग वा प्रत्यवर्त्ति गमिष्ठः" ऋ० १।११८।३।

**गम्ब(न्व)** गतौ भ्वा० पर० सक० सेट्। गम्बति अगम्बीत् जगम्ब। नोपधत्वे क्विपि गनौ गनः। मोपधत्वे गमौ गम इति भेदः।

**गम्भन्** त्रि० गम—बा० अन् भुगागमश्च। गम्भीरे "अपां गम्भन्त्सीद महत्त्वा" यजु० १३।३०। "गम्भन् गम्भनि गभीरे" वेददी०। वेदे सप्तमीलोपः।

**गम्भर** न० गम—विच् गमं निम्नगतिं बिभर्त्ति भृ—अच् इत०। उदके निघण्टुः। "इहस्येव गम्भरेषु प्रतिष्ठाम्" ऋ०१०।१०६।८।"गम्भरेषु गहनेषु जलेषु" भा०।

**गम्भारिका** स्त्री गम—विच् गमं निम्नगतिं बिभर्त्ति—भृ—ण्वुल् कापि अत इत्त्वम्।(गाम्भार) वृक्षभेदे राजनि०।

**गम्भारी** स्त्री गमं गतिभेदं बिभर्त्ति अण्, कं जलं बिभर्त्ति पृषो० कस्य ग इत्यन्ये उप०स० गौरा० ङीष्। (गाम्भार) वृक्षभेदे अमरः। गम्भार्य्याः फलं पुष्पं वा अण् तस्य लुपि प्रकृतिवल्लिङ्गता। गम्भारी-तत्फले पुष्पे च स्त्री। "गम्भारी भद्रपर्णी च श्रीपर्णी मधुपर्णिका। काश्मीरी काश्मरी हीरा काश्मर्य्यः पीतरोहिणी। कृष्णवृन्ता मधुरसा महाकुसुदिकापि च। काश्मरी तुवरा तिक्ता वीर्य्योष्णा मधुरा गुरुः। दीपनी पाचनी मेध्या भेदनी भ्रमशोषजित्। दोषतृष्णामशूलार्शोविषदाहज्वरापहा। तत्फलं वृंहणं वृष्यं गुरु केश्यं रसायनम्। वातपित्ततृषारक्तक्षयमूत्रविबन्धकृत्। स्वादु पाके हिमं स्निग्धं तुवराम्लं विबन्धकृत्। हन्याद्दाहतृषावातरक्तपित्तक्षतक्षयान्"भावप्र०

**गम्भिष्ठ** त्रि० गम्भन्+अतिशायने इष्ठन् टिलोपः। गम्भीरतमे। "अपां गम्भन्त् सीदेति एतद्वापां गम्भिष्ठं यत्रैष एतत्तपति" शत०ब्रा० ७।५।१।१८।

**गम्भीर** त्रि० गच्छति जलमत्र गम—ईरन् नि० भुगागमः। १निम्नस्थाने अगाधे, अमरः। "हृतगम्भीरखनीखनीनिभ" नैष०। २मन्द्रे शब्दे "स्निग्धगम्भीरनिर्घोषमेकस्यन्दनमास्थितौ" रघुः। ३गभीरार्थे च उणादि०। ४जम्बीरे, ५पद्मे, ६ऋगमन्त्रभेदे च पु०। "स्वरे सत्वे च नाभौ च त्रिषु गम्भीरता शुभा।

**गम्भीरवेदिन्** पु० गम्भीरं गहनं यथातथा वेत्ति विद—णिनि। "चिरकालेन यो वेत्ति शिक्षां परिचितामपि। गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः" राजपुत्रीयोक्ते चिह्ने १गजे। "अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः" रघुः। गम्भीरवेदिनः पुरः कवलं करीन्द्रे" माघः। तृच्। गम्भीरवेत्तृ "त्वग्भेदात् शोणितस्रावात् मांसस्य क्रथनादपि। आत्मानं यो न जानाति स स्यात् गम्भीरवेदिता" इत्युक्तलक्षणोक्तचिह्ने गजे।

**गम्भीरिका** स्त्री गम्भीर—स्वार्थे क संज्ञायां कन् वा कापि अत इत्त्वम्। १गम्भीरायां नद्यां २नदीभेदे च। "लौहित्यः सिन्धुनदः सरयूर्गम्भीरिका रथाह्वा च। गङ्गाकौशिक्याद्याः सरितो विदेहकाम्बोजाः" वृह०सं०१६अ०। ३नाडीभेदे "नाड्यो गम्भीरिका यास्तु सद्यश्छिन्नास्तथैव च"सुश्रुतः। ४दृष्टिरोगभेदे "हताधिमन्थो निमिषो दृष्टिर्गम्भीरिका च या"सुश्रुतः। तल्लक्षणं तत्रैव उक्तं यथा "दृष्टिर्विरूपा श्वसनोपसृष्टा सङ्कुच्यतेऽभ्यन्तरतश्च याति। रुजावगाढा च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञाः"।

**गम्य** त्रि० गम—पवर्गान्तत्वात् कर्मादौ यत्। १गमनीये २प्राप्ये च। अर्हार्थे यत्। गमनयोग्ये। "गम्यान्यपि तीर्थानि कीर्त्तनान्यगमानि च"भा०व० ८५।"अभिकामां स्त्रियं यश्च गम्यां रहसि याचितः" भा० आ० ८३ अ०। "गम्यं त्वभावे दातॄणां कन्या कुर्य्यात् स्वयं वरम्"याज्ञ० "समानश्च खेदविगमो गम्यायामगम्ययाञ्च तत्र नियमः क्रियते इयं गम्या इयमगम्येति"महाभाष्यम्"खेदयतीति खेदो रोगः इन्द्रियनियमासामर्थ्यं वा" इति कैयटः तथा च अगम्यानिषेधस्य इतराभ्यनुज्ञाफलकतया स्वदारगमने दोषाभावः"विवरणम्।

**गम्यमान** त्रि० गम—कर्म्मणि शानच्। १वर्त्तमानगतिकर्मणि। २बुध्यमाने च"गम्यमानाऽपि क्रिया विभक्तौ प्रयोजिका" व्या०न्यायः। "गम्यमानेऽर्थे" सि० कौ० भूरिप्रयोगः।

**गम्यादि** न० "भविष्यति गम्यादयः" पा० उक्ते भविष्यदर्थे इनिप्रत्ययान्तशब्दसमूहे ते च "गमी आगमी भावी प्रस्थायी प्रतिरोधी प्रतियोधी प्रतिबोधी प्रतियायी प्रतिषेधी इत्येते" पा०ग०। "गम्यादीनामुपसंख्यानम्" वार्त्ति० तद्योगे द्वितीयातत्पुरुषः। ग्रामगमी।

**गय** पु० रामायणप्रसिद्धे १वानरभेदे। "कोटीशतदृतो वापि गयो गवय एव च। वानरेन्द्र ह्यौमवीर्य्यौ पृथक्

पृथगदृश्यताम्” भा० व० २८२अ०। २हविर्धानराजपुत्रभेदे, तत्कथा “हविर्धानाद्धविर्धानी विदुरासूत षट् सुतान्। बर्हिषदङ्गयं शुक्लं कृष्णं सत्यजितं व्रतम्” भाग० ५।१५अ०। प्रियव्रतवंशोद्भवे ३राजभेदे तत्कथा यथा “नक्ताद्दृतिपुत्रो गयो राजर्षिप्रवर उदारश्रवा अजायत। साक्षाद्भगवतो विष्णोर्जगद्रिरक्षया गृहीतसत्त्वस्य कला आत्मवत्त्वादिलक्षणेन महापुरुषतां प्राप्तः। स वै स्वधर्मेण प्रजापालनपोषणप्रीणनोपलालनानुशासनलक्षणेनेज्यादिना च भगवति महापुरुषे परावरे ब्रह्मणि सर्वात्मनार्पितपरमार्थलक्षणेन ब्रह्मविच्चरणानुसेवयापादितभगवद्भक्तियोगेन चाभीक्ष्णशः परिभावितविशुद्धमतिरुपरतानात्म्य आत्मनि स्वयमुपलभ्यमानब्रह्मात्मानुभवोऽपि निरभिमान एवावनिमजूगुपत। तस्येमां गाथां पाण्डवेय! पुराविद उपगायन्ति। गयं नृपं कः प्रतियाति कर्मभिर्यज्वाभिमानी बहुविद्धर्मगोप्ता। समागतश्रीः सदसस्पतिः सतां सत्सेवकोऽन्यो भगवत् कलात्मने। यमभ्यषिञ्चन् परया मुदा सतीः(सत्यः) सत्याशिषो दक्षकन्याः सरिद्भिः। यस्य प्रजानां दुदुहे धराऽऽशिषो निराशिषो गुणवत्सस्नुतोधाः। छन्दांस्यकामस्य च यस्य कामान् दुदुहुराजहुरथो बलिं नृपाः। प्रत्यञ्चिता युधि धर्मेण विप्रा यदाशिषां षष्ठमंशं परेत्य। यस्याध्वरे भगवानध्वरात्मा मघोनि माद्यत्युरुसोमपीथे। श्रद्धाविशुद्धाचलभक्तियोगसमर्पितेज्याफलमाजहार। यत्प्रीणनाद्बर्हिषि देवतिर्य्यङ्मनुष्यवीरुत्तृणमाविरिञ्चात्। प्रीयेत सद्यः स ह विश्वजीवः प्रीतः स्वयं प्रीतिमगाद्गयस्य। गयाद्गायन्त्यां चित्ररथः सुमतिरवरोधन इति त्रयः पुत्रा बभूवुः” भाग०५।१५। अमूर्त्तरयसः पुत्रे प्रधानषोड़शराजान्तर्गते ४राजर्षिभेदे तत्कथा।

“गयञ्चामूर्त्तरयसं मृतं सृञ्जय! शुश्रुम। यो वै वर्षशतं राजा हुतशिष्टाशनोऽभवत्। तस्मै ह्यग्निर्वरं प्रादात्ततो वव्रे वरं गयः। तपसा ब्रह्मचर्येण व्रतेन नियमेन च। गुरूणाञ्च प्रसादेन वेदानिच्छामि वेदितुम्। स्वधर्मेणाविहिंस्यान्यान् धनमिच्छामि चाक्षयम्। विप्रेषु ददतश्चैव श्रद्धा भवतु नित्यशः। अनन्यासु सवर्णासु पुत्रजन्म च मे भवेत्। अन्नं मे ददतः श्रद्धा धर्मे मे रमतां मनः। अविघ्नं चास्तु मे नित्यं धर्मकार्येषु, पावकः। तथा भविष्यतीत्युक्त्वा तत्रैवान्तर्धीयत। गयो ह्यवाप्य तत्सर्वं धर्मेणारीनजीजयत्। स दर्शपौर्णमासाभ्यां कालेष्वाग्रयणेषु च। चातुर्मास्यैश्च विविधैर्यज्ञैश्चावाप्तदक्षिणैः। अयजच्छ्रद्धया राजा परिसंवत्सरान् शतम्। गवां शतसहस्राणि शतमश्वशतानि च। शतं निष्कसहस्राणि गवाञ्चाप्ययुतानि षट्। उत्थायोत्थाय संप्रादात् परिसंवत्सरान् शतम्। नक्षत्रेषु च सर्वेषु ददन्नक्षत्रदक्षिणाः। ईजे च विविधैर्यज्ञैर्यथा सोमोऽङ्गिरास्तथा। सौवर्णीं पृथिवीं कृत्वा य इमां मणिशर्कराम्। विप्रेभ्यः प्राददद्राजा अश्वमेधे महामखे। जाम्बुनदमया यूपाः सर्वे रत्नपरिच्छदाः। गयस्यासन् समृद्धास्तु सर्वभूतमनोहराः। सर्वकामसमृद्धांश्च प्रादात्तांश्च गयस्तथा। ब्राह्मणेभ्यः प्रहृष्टेभ्यः सर्वभूतेभ्य एव च। ससमुद्रवनद्वीपनदीनदवनेषु च। नगरेषु च राष्ट्रेषु दिवि व्योम्नि च येऽवसन्। भूतग्रामाश्च विविधाः संतृप्ता यज्ञसम्पदा। गयस्य सदृशो यज्ञो नास्त्यन्य इति तेऽब्रुवन्। षड्विंशयोजनायामा त्रिंशद्योजनमायता। पश्चात् पुरस्तद्विंशद्वेदी ह्यासीद्धिरण्मयी। गयस्य यजमानस्य मुक्तावज्रमणिस्तृता। प्रादात् स ब्राह्मणेभ्योऽथ वासांस्याभरणानि च। यथोक्ता दक्षिणाश्चान्या विप्रेभ्यो भूरिदक्षिणाः। यत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः। कुल्याः सुस्रुतवाहिन्यो रसानामभवंस्तदा। वस्त्राभरणगन्धानां राशयश्च पृथग्विधाः। यस्य प्रभावाच्च गयस्त्रिषु लोकेषु विश्रुतः। वटश्चाक्षय्यकरणः पुण्यं ब्रह्मसरश्च तत्। स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः” भा० द्रो० ६६अ०। ५धने ६अपत्ये ६गृहे च निघण्टुः। “इन्द्रो वसुभिः परिपातु नो गयम्” ऋ० १०।६६।३। “गयं गृहनामैतत्। प्राप्तव्यं गीयते शब्द्यतेऽत्रेति वा गयं गृहम्” भा०। “अरक्षद्दाशुषे गयम्” ऋ० १।७४।२। “गयं धनम्” भा०। “परि पाहि नो गयम्” ऋ० ६।७१।३। “गयं गृहं धनं वा” भा०। ८अन्तरीक्षे च। “गयमस्माकं शर्म वनवत्स्वावसुः” ऋ०५।४४।७। “गयं गृहमन्तरिक्षं वा” भा०। ९गृहगते प्राणिनि च। “या नो गयमाविवेश” ऋ० ६।७४।२। “गयं गृहगतं प्राणिजातम्” भा०। १०स्वस्थाने। “हित्वी गयमारे अवद्य आगात्” ऋ०१०।८८।५। “गयं स्वस्थानम्” भा०। ११प्राणेषु बहुव०, “सा हैषा गयांस्तत्रे प्राणा वै गयास्तत्

प्राणांस्तत्रे तद्यद्गयांस्तत्र तस्माद्गायत्री नाम” शत० ब्रा० १४।८।१५।७। गयाऽस्त्यत्र अच्। १२गयाप्रदेशे बहुव०। “गयस्य यजमानस्य गयेष्वेव महाक्रतुम्। आहूता सरितां श्रेष्ठे गययज्ञे सरस्वती” भा० शल्य०३८ अ० “गयेन यजमानेन गयेष्वेव पितॄन् प्रति” रामा० अयो०१७७।१। तेन तद्यागस्थानत्वेन च गयेति प्रसिद्धिः १२असुरभेदे। तत्कथा वायुपु०गयामाहात्म्ये २अ०यथा।

“गयासुरोऽसुराणाञ्च महाबलपराक्रमः। योजनानां सपादञ्च शतं तस्योच्छ्रयः स्मृतः। स्थूलः षष्टियोजनानां श्रेष्ठोऽसौ वैष्णवः स्मृतः। कोलाहले गिरिवरे तपस्तेपे सुदारुणम्। बहुवर्षसहस्राणि निरुच्छ्वासं स्थितोऽभवत्। तत्तपस्तापिता देवाः संक्षोभं परमं ययुः। ब्रह्मलोकं गता देवाः प्रोचुस्ते प्रपितामहम्।”

ततस्तत्कृतस्तवादिकमुपवर्ण्य तद्वरकथा तत्रैव यथा

“यदि तुष्टास्तु मे देवा ब्रह्मविष्णुमहेश्वराः। सर्वदेवद्विजातिभ्यो यज्ञतीर्थशिलोच्चयात्। देवेभ्योऽतिपवित्रोऽहमृषिभ्योऽपि शिवाव्ययात्। मन्त्रेभ्यो देवदेवीभ्यो योगिभ्यश्चापि सर्वशः। न्यासिभ्यश्चापि कर्मिभ्यो धर्मिभ्यश्च तथा पुनः। ज्ञातिभ्योऽतिपवित्रोऽहं पवित्रः स्यां सदासुराः!। पवित्रतास्तु तं देवाः सत्यमुक्त्वा दिवं ययुः। दृष्ट्वा दैत्यं, तथा स्पृष्ट्वा सर्वे हरिपुरं ययुः। शून्ये लोकत्रये याते शून्या यमपुरी ह्यभूत्। यम इन्द्रादिभिः सार्द्धं ब्रह्मलोकं ततोऽगमत्। ब्रह्माणमूचिरे देवा गयासुरविलोपिताः। त्वया दत्ताधिकारांस्त्वं तान् गृहाण पितामह!। ब्रह्माब्रवीत्ततो देवान् व्रजामो विष्णुमव्ययम्। ब्रह्मादयोऽब्रुवन् विष्णुं त्वया दत्तवरोऽसुरः। तद्दर्शनाद्ययुः स्वर्गं शून्यं लोकत्रयं ह्यभूत्। देवैरुक्तो वासुदेवो ब्रह्माणं स वचोऽब्रवीत्। गयासुरं प्रार्थयस्व यज्ञार्थं देहि देहकम्। विष्णूक्तः ससुरो ब्रह्मा गत्वाऽपश्यद् गयासुरम्। गयासुरोऽब्रवीत् दृष्ट्वा ब्रह्माणं त्रिदशैःसह। संपूज्योत्थाय विधिवत् प्रणतः श्रद्धयान्वितः। गयासुर उवाच। अद्य मे सफलं जन्म अद्य मे सफलं तपः। यदागतोऽतिथिर्ब्रह्मा सर्वं प्राप्तं मयाद्य वै। योगिन्! योगाङ्गवित् सर्वलोकस्वामिन्! पितर्गुरो!। यदर्थमागतो ब्रह्मन् तत्कार्य्यं करवाण्यहम्। ब्रह्मोवाच। पृथिव्यां यानि तीर्थानि दृष्टानि भ्रमता मया। यज्ञार्थं न तु ते तानि पवित्राणि शरीरतः। त्वया देहे पवित्रत्वं प्राप्तं विष्णुप्रसादतः। अतः पवित्रं देहं त्वं यज्ञार्थं देहि मेऽसुर!। गयासुर उवाच। धन्योऽहं देवदेवेश! मद्देहं प्रार्थ्यते त्वया। पितृवंशे कृतार्थोऽहं मातृवंशे तथैव च। त्वयैवोत्पादितो देहः पवित्रस्तु त्वया कृतः। सर्वेषामुपकाराय यागोऽवश्यं भविष्यति। इत्युक्त्वा सोऽपतद्भूमौ श्वेतकल्पे गयासुरः। नैरृतं दिशमाश्रित्य तदा कोलाहले गिरौ। शिरः कृत्वोत्तरे दैत्यः पादौ कृत्वा तु दक्षिणे। ब्रह्मा संभृतसम्भारो मानसानृत्विजोऽसृजत्” इत्युपक्रम्य कतिचित्तत्कल्पितर्षीनुक्त्वा “एतानन्यांश्च विप्रेन्द्रान् वेधा लोकपितामहः। परिकल्प्याकरोद्यागं गयासुरशरीरके। अग्निशर्मापि पञ्चाग्नीन् मुखादेतानवासृजत्। दक्षिणाग्निं गार्हपत्याहवनीयौ तपोऽव्ययः। सभ्यावसथ्यौ देवर्षिर्येषु यज्ञाः प्रतिष्ठिताः। यज्ञस्य च प्रतिष्ठार्थं विप्रेभ्यो दक्षिणां ददौ। हुत्वा पूर्णाहुतिं ब्रह्मा स्नात्वा चावभृथे सुरैः। यज्ञयूपं सुरैः सार्द्धं समानीय व्यरोपयत्। ब्रह्मणः सरसां श्रेष्ठे सरस्येवोच्छ्रितं शुभम्। यज्ञवाटे सुरैःसार्द्धं गयासुरमपश्यत। चलितं चकितो ब्रह्मा धर्मराजमभाषत। या सा गृहे तव शिला समानीयाविचारयन्। दैत्यस्य शीघ्रं शिरसि तां धारय ममाज्ञया। निश्चलार्थं, यमः श्रुत्वाऽधारयन्मस्तके शिलाम्। शिलायां धारितायान्तु सशिलश्चासुरोऽचलत्। देवानूचेऽथ रुद्रादीन् शिलायां निश्चलाः किल। तिष्ठध्वं देवाः सकलास्तथेत्युक्त्वा च ते स्थिताः। देवाः पादैश्चलयित्वा तथापि चलितोऽसुरः। ब्रह्माथ व्याकुलो विष्णुं गतः क्षीराब्धिशायिनम्। दृष्ट्वा प्रणतो भूत्वा नत्वा चाहत्य तं प्रभुम्। ब्रह्माण्डस्य पते! नाथ! नमामि जगतां पतिम्। गतिं कीर्त्तिमतां मुख्यां भुक्तिमुक्तिप्रदायकम्। विश्वक्सेनोऽब्रवीत् विष्णुं देव! त्वां स्तौति पद्मजः। हरिराहानयस्व त्वं विष्णूक्तः स तमानयत्। अजमूचे हरिः कस्मादागतोऽसि वदस्व तत्। ब्रह्मोवाच। देवदेव! कृते यागे प्रचचाल गयासुरः। शिलायां देवरूपिण्यां न्यस्तायां तस्य मस्तके। रुद्रादिषु च देवेषु संस्थितेष्वसुरोऽचलत्। इदानीं निश्चलार्थं हि प्रसादं कुरु माधव!। ब्रह्मणो वचनं श्रुत्वा ह्याकृष्य स्वशरीरतः। मूर्त्तिं ददौ निश्चलार्थं ब्रह्मणे भगवान् हरिः। आनीय मूर्त्तिं ब्रह्मापि शिलायां समधारयत्। तथापि चलितं वीक्ष्य पुनर्देवमथागमत्। आगत्य विष्णुः क्षीराब्धेः शिलायां संस्थितोऽभवत्। जनार्द्दनाभिधानेन पुण्डरीकेति नामतः।

शिलायां निश्चलार्थं हि स्वयमादिगदाधरः। निश्चलार्थं पञ्चधासीत् शिलायां प्रपितामहः। पितामहोऽथ फल्ग्वीशः केदारः कनकेश्वरः। ब्रह्मा स्थितः स्वयं तत्र गजरूपी विनायकः। गयादित्यश्चोत्तरार्को दक्षिणार्क स्त्रिधा रविः। लक्ष्मीः सीताभिधानेन, गौरी वै मङ्गलाह्वया। गायत्री चैव सावित्री त्रिसन्ध्ये्यं सरस्वती। इन्द्रो बृहस्पतिः पूषा वसवोऽष्टौ महाबलाः। विश्वे देवाश्चाश्विनेयौ मरुतो विश्वनायकाः। यक्षोरगगन्धर्व्वास्तस्थुर्देवाः स्वशक्तिभिः। आदितो गदया चासौ यस्मात् दैत्यः स्थिरीकृतः। स्थित इत्येव हरिणा तस्मादादिगदाधरः। ऊचे गयासुरो देवान् किमर्थं वञ्चितोह्यहम्। यज्ञार्थं ब्रह्मणे दत्तं शरीरममलं मया। विष्णोर्व्वचनमात्रेण किं न स्यां निश्चलोह्यहम्। यत्सुरैः पीडितोऽत्यर्थं गदया हरिणा तथा। पीडितो यद्यहं देवाः प्रसन्नाः सन्तु सर्व्वदा। गदाधरादयस्तुष्टाः प्रोचुर्दैत्यं गयासुरम्। वरं ब्रूहि प्रसन्नाः स्मो देवानूचे गयासुरः। यावत् पृथ्वी पर्व्वताश्च यावच्चन्द्रार्कतारकाः। तावच्छिलायां तिष्ठन्तु ब्रह्मविष्णुमहेश्वराः। अन्याश्च सकला देवा मन्नाम्ना क्षेत्रमस्तु वै। पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः। तन्मध्ये सर्व्वतीर्थानि प्रयच्छन्तु हितं नृणाम्। स्नानादितर्पणं कृत्वा पिण्डदानात् फलादिकम्। सहात्मनि सहस्रस्य कुलानाञ्चोद्धरेत्वरः। व्यक्ताव्यक्तस्वरूपेण यूयं तिष्ठन्तु सर्वदा। गदाधराद्यस्य लोकात् भूयात् सर्व्वाघनाशनात्। श्राद्धं सपिण्डकं येषां ब्रह्मलोकं प्रयान्तु ते। ब्रह्महत्यादिकं पापं विनश्यतु च सेविनाम्। नैमिषं पुष्करं गङ्गा प्रयागं चाविमुक्तकम्। एतान्यन्यानि तीर्थानि दिवि भुव्यन्तरीक्षतः। समायान्तु सदा नृणां प्रयच्छन्तु हितं सुराः। ते देवास्तानि तीर्थानि प्रयच्छन्तु हितं नृणाम्। पितॄणां ब्रह्मलोकञ्च भुक्तिमुक्तिफलं तथा। एको विष्णुस्त्रिधामूर्त्तिर्यावत् संकीर्त्त्यते बुधैः। तावद्गयासुरक्षेत्रं ख्यातिमेतु सदा भुवि। ब्रह्महत्यादिकं पापं विनाशयतु सेविनाम्। किं बहूक्त्या सुरेशाना! युष्मास्वेकापि देवता। चेन्न तिष्ठेदहं चापि, समयः प्रतिपाल्यताम्। गयासुरवचः श्रुत्वा प्रोचुर्व्विष्ण्वादयः सुराः। त्वया यद् प्रार्थितं सर्वं तद्भविष्यत्यसंशयम्। पितॄणां वै कुलशतमात्मानं पिण्डदानतः। श्राद्धादिना नयिष्यन्ति ब्रह्मलोकमनामयम्। अस्मत्पादानर्च्चयित्वा यास्यन्ति परमां गतिम्। सनत्कुमार उवाच। देवैर्दत्तवरो दैत्यो हर्षितो निश्चलोऽभवत्।" ४अङ्गिरसे मुनिभेदे गर्गशब्दे दृश्यम् अस्य दृषा०आद्युदात्तता।

**गयस्फान** पु० स्फायी—वृद्धौ अन्तर्भूतण्यर्थात् ल्युट् नि० यलोपः गयस्य धनस्य स्फानः। धनवर्द्धके। "गयस्फानो अमीवहा वसुवित् पुष्टिवर्द्धनः" ऋ० १०। ६१।८२। "गयस्फानः धनस्य वर्द्धयिता" भा०। "एधि गयस्फानो गोभिरश्वेभिरिन्द्र!" ऋ० ७।५४।२।

**गया** स्त्री गयो गयासुरः गयरूपो वा कारणत्वेनास्त्यस्य अच्। तीर्थभेदे गयशब्दे तत्कथा उक्ता।

वायुपु० गयामा० १अ० तन्माहात्म्यं यथा

"वक्ष्ये तीर्थवरं पुण्यं श्राद्धादौ सर्व्वतारकम्। गयातीर्थं सर्व्वदेशे तीर्थेभ्योऽप्यधिकं शृणु। गयासुरस्तपस्तेपे ब्रह्मणा क्रतवेऽर्थितः। प्राप्तस्य तस्य शिरसि शिलां धर्म्मोह्यधारयत्। तत्र ब्रह्माकरोद्यागं स्थितश्चादिगदाधरः। फल्गुतीर्थादिरूपेण निश्चलार्थमहर्निशम्। गयासुरस्य विप्रेन्द्र! ब्रह्माद्यैर्दैवतैः सह। कृतयज्ञो ददौ ब्रह्मा ब्राह्मणेभ्यो गृहादिकम्। श्वेतकल्पे तु वाराहे गयोयागमकारयत्। गयनाम्ना गयाख्याता क्षेत्रं ब्रह्माभिकाङ्क्षितम्। काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः। गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति। गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत्। पद्भ्यामपि जलं स्पृष्ट्वा सोऽस्मभ्यं किं न दास्यति?। गयां गत्वान्नदाता यः पितरस्तेन पुत्रिणः। पक्षत्रय निवासी च पुनात्यासप्तमं कुलम्। न चेत् पञ्चदशाहं वा सप्तरात्रं त्रिरात्रकम्। महाकल्पकृतं पापं गयां प्राप्य विनश्यति। पिण्डं दत्त्वा च पित्रादेरात्मनोऽपि तिलैर्विना। ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः। पापं तत्सङ्गजं सर्व्वं गयाश्राद्धाद्विनश्यति। आत्मजोऽप्यन्यजो वापि गयाभूमौ यदा तदा। यन्नाम्ना पातयेत् पिण्डं तन्नयेत् ब्रह्म शाश्वतम्। नामगोत्रे समुच्चार्य्य पिण्डपातनमीष्यते। येन केनापि कस्मैचित् स याति परमां गतिम्। ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा। वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्व्विधा। ब्रह्मज्ञानेन किं साध्यं गोगृहे मरणेन किम्। वासेन किं कुरुक्षेत्रे यदि पुत्रो गयां व्रजेत्। गयायां पर्व्वकालेषु पिण्डं दद्याद्विचक्षणः। अधिमासे जन्मदिने चास्तेऽपि गुरुशुक्रयोः। न त्यक्तव्यं गयाश्राद्धं

सिंहस्थेऽपि वृहस्पतौ। तथा दैवप्रमादेन प्रवहत्सु व्रणेषु च। पूतः कर्म्माधिकारी च श्राद्धकृद्ब्रह्मलोकभाक्। प्रीत्या श्राद्धन्तु कर्त्तव्यं सर्व्वेषां वर्णलिङ्गिनाम्। एवं कुर्व्वन् नरः सम्यक् महतीं श्रियमाप्नुयात्। सकृद्गयाभिगमनं सकृत्पिण्डस्य पातनम्। दुर्ल्लभं किं पुनर्नित्यमस्मिन्नेव व्यवस्थितः। प्रमादान्म्रियते चेत्ते ब्रह्माद्यैर्मुक्तिदायके। ब्रह्मज्ञानाद्यथा मुक्तिर्लभ्यते नात्र संशयः। कीकटादिमृतानाञ्च पितॄणां तारणाय च। तस्मात् सर्व्वयत्नेन वस्तव्यं सुविचक्षणैः। ब्रह्मप्रकल्पितान् विप्रान् हव्यकव्यादिनार्च्चयेत्। तैस्तुष्टैस्तोषिताः सर्व्वाः पितृभिः सह देवताः। मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिः। वर्ज्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम्। दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः। दण्डं न्यस्य विष्णुपदे पितृभिः सह मुच्यते। न दण्डी किल्विषं धत्ते पुण्यं वा परमार्थतः। अतः सर्व्वक्रियां त्यक्त्वा विष्णुं ध्यायति भावुकः। संन्यसेत् सर्व्वकर्म्माणि वेदमेकं न संत्यजेत्। कुण्डपृष्ठाच्च पूर्व्वस्मिन् पश्चिमे दक्षिणोत्तरे। सार्द्धं क्रोशद्वयं मानं गयेति ब्रह्मणेरितम्। पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः। तन्मध्ये सर्व्वतीर्थानि त्रैलोक्ये यानि सन्ति वै। श्राद्धकृद्यो गयाक्षेत्रे पितॄणामनृणो हि सः। शिरसि श्राद्धकृद् यस्तु कुलानां शतमुद्धरेत्। गृहाच्चलित मात्रेण गयाया गमनं प्रति। स्वर्गारोहणसोपानं पितॄणाञ्च पदे पदे। पदेपदेऽश्वमेधस्य यत्फलं गच्छतो गयाम्। तत्फलञ्च भवेन्नॄणां समग्रं नात्र संशयः। पायसेनाथ चरुणा सक्तुना पिष्टकेन वा। तण्डुलैः फलमूलाद्यैर्गयायां पिण्डपातनम्। तिलाज्यदधिमध्वादिपिण्डद्रव्येषु योजयेत्। मुष्टिमात्रप्रमाणेन आर्द्रामलकमात्रतः। शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे। उद्धरेत् सप्त गोत्राणि कुलमेकोत्तरं शतम्। तिलकल्केन खण्डेन गुड़ेन सघृतेन वा। केवलेनैव दध्ना वा दुग्धेन मधुनाथ वा। पिण्याकं सघृतं खण्डं पितृभ्योऽक्षयमित्युत। दृश्यतेऽत्राश्रितो भोज्यं हविष्यं मनुरब्रवीत्। एकतः सर्व्ववस्तूनि रसवन्ति मधूनि हि। स्मृत्वा गदाधराङ्घ्र्यब्जं फल्गुतीर्थाम्बु चैकतः। पिण्डासनं पिण्डदानं पुनः प्रत्यवनेजनम्। दक्षिणा चान्नसंकल्पस्तीर्थश्राद्धेष्वयं विधिः। नावाहनं न दिग्बन्धो न दोषो दृष्टिसम्भवः। सकारुण्येन कर्त्तव्यं तीर्थश्राद्धं विचक्षणैः। अन्यत्रावाहिताः काले पितरो यान्त्यमुं प्रति। तीर्थे सदा वसन्त्येते तस्मादावाहनं न हि। तीर्थश्राद्धं प्रयच्छद्भिः पुरुषैः फलकाङ्क्षिभिः। कामं क्रोधं तथा लोभं त्यक्त्वा कार्य्या क्रियाऽनिशम्। ब्रह्मचार्य्येकभोजी च भूशायी सत्यवाक् शुचिः। सर्व्वभूतहिते रक्तः स तीर्थफलमश्नुते। तीर्थान्यनुसरन् धीरः पाषण्डं दूरतस्त्यजेत्। पाषण्डं तच्च विज्ञेयं यद्भवेत् कामकारतः। तीर्थेषु ये नराधीराः कर्म्म कुर्व्वन्ति सङ्गताः। यथा ब्रह्मविदो वेद्यं वस्तु ध्यानन्यचेतसः। प्रविशन्ति परेशाख्यं ब्रह्म ब्रह्मपरायणाः। याऽऽस्ते वैतरणी नाम नदी त्रैलोक्यविश्रुता। सावतीर्णा गयाक्षेत्रे पितॄणां तारणाय वै। स्नातो गोदो वैतरण्यां त्रिःसप्तः कुलमुद्धरेत्। तथाक्षयवटं गत्वा विप्रान् सन्तोषयिष्यति। ब्रह्मप्रकल्पितान् विप्रान् हव्यकव्यादिनार्च्चयेत्। तैस्तुष्टैस्तोषिताः सर्व्वाः पितृभिः सह देवताः। गयायां नहि तत्स्थानं यत्र तीर्थं न विद्यते। सान्निध्यं सर्व्वतीर्थानां गयातीर्थं ततो वरम्। मीनमेषे स्थिते सूर्य्ये कन्यायां कार्म्मुके घटे। दुर्ल्लभं त्रिषु लोकेषु गयायां पिण्डपातनम्। मकरे वर्त्तमानेऽर्के ग्रहणे चन्द्रसूर्य्ययोः। दुर्ल्लभं त्रिषु लोकेषु गयाश्राद्धं सुदुर्लभम्। गयायां पिण्डदानेन यत् फलं लभते नरः। न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि”।

तद्यात्राविधिश्च तत्रैव ६ अ०। “सनत्कुमार उवाच। गयायात्रां प्रवक्ष्यामि शृणु नारद! मुक्तिदाम्। निष्कृतिः पिण्डकर्त्तॄणां ब्रह्मणा गीयते पुरा। उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः। विधाय कर्पटिवेशं कृत्वा ग्रामं प्रदक्षिणम्। ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम्। ततः प्रतिदिनं गच्छेत् प्रतिग्रहविवर्ज्जितः। प्रतिग्रहादपावृत्तः सन्तुष्टो नियतः शुचिः। अहङ्कारविमुक्तो यः स तीर्थफलमश्नुते। यस्य हस्तौ च पादौ च मनश्चापि सुसंयतः। विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते। ततो गयाप्रवेशे च पूर्व्वतोऽस्ति महानदी। तत्र तोयं समुत्पाद्य स्नातव्यं निर्म्मले जले। देवादींस्तर्पयित्वाथ श्राद्धं कृत्वा यथाविधि। स्वस्ववेदशाखोदितमर्घ्यावाहनवर्जितम्। अपरेद्युः शुचिर्भूत्वा गच्छेद्वै प्रेतपर्व्वते। ब्रह्मकुण्डे ततः स्नात्वा देवादींस्तर्पयेत् सुधीः। कुर्य्यात् श्राद्धं

सपिण्डानां प्रयतः प्रेतपर्व्वते । प्राचीनावीतिनाभ्यर्च्च्य दक्षिणाभिमुखः स्मरन् । "कव्यवालोनलः सोमो यमश्चैवार्य्यमा तथा । अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः । आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह" । "मदीयाः पितरो ये च कुले जाताः कुलाह्वयाः । तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम् । ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम्" । आचम्योक्ता च पञ्चाङ्गं प्राणायामं प्रयत्नतः । पुनराहृचिरहितः ब्रह्मलोकाप्तिहेतवे । एवञ्च विधिवत् श्राद्धं कृत्वा पूर्व्व यथाक्रमम् । पितृनावाह्य चाभ्यर्च्च्य मन्त्रैः पिण्डप्रदो भवेत् । तीर्थे प्रेतशिलादौ च चरुणा सक्तेन वा । प्रक्षाल्य पूर्वं तत्स्थानं पञ्चगव्यैः पृथक् पृथक् । मन्त्रैस्तैरथ संपूज्य पञ्चगव्यैश्च देवताम् । यावच्छिला मनुष्यैश्च गृहीताः पितृकर्म्मसु । गच्छन्ति तावदसुराः सिंहत्रस्ता यथा मृगाः । अष्टकासु च वृद्धौ च गयायां मृताहेऽहनि । मातुः श्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सह । वृद्धिश्राद्धे तु मात्रादि गयायां पितृपूर्वकम् । गृहीत्वाञ्जलिना तेभ्यः पितृतीर्थेन तत्त्वतः । सक्तुना मुष्टिमात्रेण दद्यादक्षय्यपिण्डकम् । आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः । तृप्यन्तु पितरः सर्वे मातृमातामहादयः । अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आ ब्रह्मभुवनात् लोकादिदमस्तु तिलोदकम् । पिता पितामहश्चैव तथैव प्रपितामहः । माता पितामही चैव तथैव प्रपितामही । मातामहस्तत्पिता च प्रमातामहकादयः । तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् । मुष्टिमात्रप्रमाणञ्च आर्द्रामलकमात्रकम् । शमीपत्रप्रमाणं वा पिण्डं दद्याद्गयाशिरे । उद्धरेत् सप्तगोत्राणां कुलानि शतमुद्धरेत् । पितुर्मातुश्च भार्य्याया भगिन्या दुहितुस्तथा । पितृष्वसुर्मातृष्वसुः सप्त गोत्राः प्रकीर्त्तिताः । विंशतिर्विंशतिरिन्द्राः१४ षोड़श द्वादशैव हि । रुद्राश्च११वसवश्चैव कुलान्येकोत्तरं शतम् । नावाहनं न दिग्बन्धो न दोषो दृष्टिसम्भवः । सकारुण्येन कर्त्तव्यं तीर्थश्राद्धं विचक्षणैः । पिण्डासनं पिण्डदानं पुनः प्रत्यवनेजनम् । दक्षिणा चान्नसंकल्पस्तीर्थश्राद्धेष्वयं विधिः" ।

अधिकं मदीयगयाश्राद्धादिपद्धतौ द्रष्टव्यम् । गयाश्राद्धस्य फलादेराधारादिकं गयाश्राद्धादिपद्धतौ अस्माभिर्न्यरूपि सम्प्रति "गयाश्राद्धफलं किंनिष्ठमिति विविच्यते । "यन्नाम्ना पातयेत् पिण्डम्" इत्यादिवचनजातात् पुत्त्रादिकृतश्राद्धात् तदुद्देश्यपित्रादिगतं नरकनिवृत्तिब्रह्मलोकावाप्त्यादिफलमवगम्यते तच्च नोपपद्यते । तथा हि सर्व्वो हि लोकः स्वेष्टसाधने कर्म्मणि प्रवर्त्तते तत्प्रवृत्त्या च तत्तदिष्टसाधनं वस्तु साधयति इत्येवं नियमे स्थिते वैदिककर्म्मण्यपि तथैव स्वाभीष्टफलवत्येव प्रवृत्तिरुचिता नान्यगामिफले । एवं शास्त्रदेशितं फलमनुष्ठातर्य्येव कर्म्मभिर्व्यज्यते "शास्त्रीयं फलं प्रयोक्तरि तल्लक्षणत्वादिति" जैमिनीयन्यायात् । अन्यकर्त्तृकक्रिययाऽन्यदीयफलस्य जननेऽतिप्रसङ्गः स्यात् । तत्त्व पुत्त्रादिकृतश्राद्धात् कथं पित्रादेरुद्धारादिसम्भवः तस्य श्राद्धाद्यकर्त्तृत्वात् इत्येवं प्राप्ते उच्यते "यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव सः" इत्यादिवेदवचनात् जैमिनीयन्यायस्य जातेष्ट्यादिभिन्नविषयत्वं कल्प्यते । तथा च पित्रादिकृतजातेष्ट्यादिद्वारा अध्यापनादिसंस्कारद्वारा च यथा तत्राऽकर्त्तर्य्यपि पुत्त्रे फलमुत्पद्यते एवं गयादिश्राद्धकर्त्तुरुद्देश्यस्याकर्त्तुरपि उद्धारादिफलसम्बन्धः नानापुराणवचनबलादपि सम्भवति "फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वादिति" जैमिनीयन्यायान्तरेण विधिविशेषेणैव फलविशेषसम्बन्ध इत्युक्तत्वात् । तथा च प्रागुक्तातिप्रसङ्गस्य शास्त्रातिरिक्तविषयत्वमिति कल्प्यते "नास्ति वचनस्यातिभारः" इति न्यायात् "वाचनिकेऽर्थे न्यायानवतारात्" इति न्यायाच्च । तत्र वचनाच्चोभयगतफलसाधनताऽवगता जातेष्ट्यादिवत् । तच्च फलं पुण्यविशेषस्तज्जन्यनरकादुद्धारो वेत्यन्यदेतत् । मीमांसादावेवैतद्विवेचितमित्युपरम्यते । काश्यादिस्मृतिपठितकृतगयाश्राद्धस्य तु कर्त्तव्यतैवाकरणनिबन्धनप्रत्यवायपरिहारमात्रं, सति कामे विशिष्टसन्तानश्च फलम् "गयायां पिण्डदानेन पितृणामनृणो भवेत्" इत्यादिवचने पितृणामकरणस्यावश्यकतया तदकरणे प्रत्यवायबोधनात् "गयाभिगमनं कर्त्तुं यः शक्तो नाभिगच्छति । शोचन्ति पितरस्तस्य वृथा तस्य परिश्रमः" इति कूर्मपुराणीयेन समर्थस्य गयाश्राद्धाऽकरणे दूषणाभिधानतोक्तः "जीवतोर्वाक्यकरणात् प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्त्रस्य पुत्त्रता" इत्यादिवचने गयाश्राद्धादिकरणेनैव पुत्त्रकार्य्यकारितया पुत्त्रत्वमित्युक्तेश्च । तेन गयाश्राद्धं नित्यमत एव यथाशक्ति चानुष्ठेयं "नित्यं यथा शक्नुयादिति" न्यायात् । तथापि सकृत्करणमेव

नित्यं तावतैव शास्त्रार्थसिद्धेः "सकृत्कृते कृतः शास्त्रार्थ इति" न्यायात् आवृत्तिबोधकवीप्साद्यभावाच्च जन्मतिथ्यादिकृयवन्न पुनःपुनः करणावश्यकता। पुनःकरणे तु फलाधिक्यम् "यो भूय आरभते तस्य फले विशेषः" इति न्यायात् "सकृद्गयाभिगमनं सकृत्पिण्डप्रपातनम्" इत्यादिवाक्यमथाद्यस्यैवावश्यकत्वार्थं न तु द्वितीयादेर्निरासार्थमपि, परिसंख्यापत्तेः। तत्रापि प्रथमयात्रायां येषां प्रेतत्वनिवारणार्थं प्रेतशिलायां पिण्डदानभाण्डस्फोटने कृते तत्र द्वितीययात्रायां तेषां ते न कार्य्ये इत्येव विशेषः। प्रथमयात्रानन्तरमृतानान्तु द्वितीययात्रायां ते अपि कार्य्ये। अन्यत् सर्व्वं सर्व्वास्वपि यात्रासु समानम्। तस्मादमुक्ते पित्रादौ नरकोद्धारादि यथायथं फलं मुक्ते तु तस्मिन् पुत्त्रादेः प्रत्यवायाभावः सत्याञ्च कामनायां विशिष्टसन्तानादि पुत्त्रादिगतं फलं भवतीति सिद्धम्। अत्रेदं विविच्यते प्रागुक्तपुराणादिवचनेषु गयाश्राद्धस्य पित्राद्युद्धारः प्रत्यवायपरिहारः पुत्त्रावाप्तिश्च फलत्वेन श्रूयते तत्र गयाश्राद्धप्रवृत्तौ किं प्रयोजकं किमेकैकमुभयं वा त्रितयं वेति सन्देहे त्रितयस्यैव-प्रयोजकता तत्र कामनाभेदादेकस्य मुख्यफलताऽपरयोर्द्वारता प्रासङ्गिकता वा तथा च यदा पित्राद्युद्धारार्थिना गयाश्राद्धं क्रियते तदा तदेव मुख्यं फलं तत्प्रवृत्तौ प्रयोजकं, प्रत्यवायपरिहारः पुत्त्रोत्पत्तिश्च तत्र प्रासङ्गिकौ कन्यार्थदीपस्यानुद्देश्यप्रकाशनवत्। यदा तु पुत्रार्थिना तदनुष्ठीयते तदा पुत्त्रोत्पत्तिरेव मुख्यं फलं पित्राद्युद्धारस्तु तत्र द्वारमित्येव सिद्धान्तः। एवं पित्राद्युद्धारस्य फलत्वे स्थितेऽधुना तत्रेदं विचार्य्यते। उद्धारो नाम स्थापेक्षयोत्कृष्टस्थानादिनयनं तच्च प्रकृते नारकीयदेहविगमानन्तरं देवादिदेहप्रापणरूपं तच्च न सम्भवति नारकीयादिदेहादेः स्वस्वकर्म्मणारब्धतया कारणसत्त्वे विगमासम्भवात् तत्कर्म्मणां च भोगेनैव नाश्यत्वात् "नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति" आगमात्। ततश्च तद्देहनाशः स्वारम्भककर्म्मनाश एव नान्यथा। तथा च गयाश्राद्धादिना कथमुद्धारसम्भवः। प्रारब्धकर्म्मणाञ्च भोगादेव क्षये सति गयाश्राद्धेनोद्धारो जननीय इति कल्पनापि न युक्ता भोगादेव कर्म्मक्षये कल्प्ये गयाश्राद्धवैफल्यापत्तेः। इत्येवं स्थिते उच्यते कर्म्मविपाकोक्तदानादिना प्रारब्धकर्म्मक्षयद्वारा यथा रोगनाशकल्पना तथा प्रकृतेऽपि गयाश्राद्धादिना प्रारब्धक्षयनाशद्वारैव उद्धारकल्पना "नाभुक्तं क्षीयते" इत्यादिवाक्यस्य तु बलवद्वाक्यस्यैव प्रतिबन्धकस्य सत्त्वे नाप्रवृत्तेः "न हि वचनस्यातिभारः इति" न्यायात् तथा च गयाश्राद्धस्यैव प्रारब्धक्षयजनकपुण्यविशेषजनकता कर्म्मविपाकोक्तदानादिवदेव कल्प्यते इति न कश्चिद्विरोधः। किञ्च भोगादेव प्रारब्धकर्म्मक्षयादनन्तरमुद्धारकल्पनेऽपि न गयाश्राद्धवैफल्यं पापविशेषैरेकैकयोनिष्वनेकावृत्तिसम्भवात् फलोन्मुखानामितरेषामनारब्धफलानां कर्म्मणाञ्च गयाश्राद्धनाश्यता भविष्यतीति। असति च नारकीयाद्यारम्भके पापे उद्धारस्य ब्रह्मलोकावाप्तिरूपतैव। स्वकर्म्मानुसारेण तल्लोकप्राप्तेरपि पूर्व्वं वृत्तत्वे तु पुत्त्रनिष्ठः प्रत्यवायपरिहार एव फलं मुक्तपित्रादौ तथाकल्पनस्य पूर्व्वमुक्तत्वात् तथैवात्र कल्पनौचित्यात्।

अथ गयाश्राद्धाधिकारिणः। तत्र पुत्त्रपौत्त्रप्रपौत्त्रा एव प्रधानाधिकारिणः। तद्भिन्नाः सर्व्वेऽपि गौणाधिकारिणः। तथा "पुत्त्रेषु विद्यमानेषु नान्यो वै कारयेत् स्वधाम्" इत्यादिवचनेन पुत्रसत्त्वेऽन्यकर्त्तृकश्राद्धस्य निषेधेऽपि गयायां तस्य प्रतिप्रसवः, "आत्मजो वाऽन्यजो वापि गयाकूपे यदा तदा। यन्नाम्ना पातयेत् पिण्डं तं नयेद् ब्रह्म शाश्वतम्" इति वायवीयवचनात् "सवर्णा ज्ञातयो मित्रबान्धवाः सुहृदस्तथा। तेऽपि भूयो गयां गत्वा पिण्डं दद्युर्विधानतः" इति स्मृतिरत्नावलीधृतवाक्याच्च। तथा चात्र सर्व्वेषामेवाधिकारः। यो यदीयधनं यथा कथञ्चिद्गृह्णाति सोऽसवर्णोऽपि तदीयगयाश्राद्धेऽधिकारी, "प्रेत किञ्चिद्विशुद्ध्यर्थम्" इत्यादि वायवीयवचनेऽसवर्णवणिग्दत्तपिण्डेन प्रेतोद्धारस्य कीर्त्तनात् पुत्रो वा बन्धुपुत्त्रो वा मित्रं वा स्वजनोऽपि वा। ऋणिको वाथवा दद्याद् द्वयोः स्वर्गस्तदा तयोरिति" वह्निपुराणीयाच्च। तथान्यत्र कर्त्तृविशेषविषयनिषेधोऽपि गयायां न प्रवर्त्तते "न पुत्त्रेभ्यः पिता दद्यान्नानुजेभ्यस्तदाग्रजः। न पत्न्यै तु पतिर्द्द्यात् बुद्धिमान् सुसमाहितः" इति च सामान्यतो निषिध्य "तेऽपि यान्ति दिवं सर्व्वे पिण्डे दत्ते इति स्मृतिः। अतस्तेभ्योऽत्र यत्नेन पिण्डं दद्यात् समाहितः" इति स्मृतिरत्नावल्यां गयायां प्रतिप्रसवात् बौधायनेनापि "पित्रा श्राद्धं न कर्त्तव्यं पुत्त्राणान्तु कदाचन। भ्रात्राग्रजेन वा कार्य्यं भ्रातॄणां न कनीयसाम्। अतिस्नेहेन कार्य्यं वा सपिण्डीकरणं विना। गयायामविशेषेण ज्यायानपि समा-

चरेदिति सामान्यतो निषिध्य गयायां प्रतिप्रसवाच्च। पूर्ब्ववचने अत्रेति गयायामित्यर्थः।

अथ गयाश्राद्धानधिकारिणः। जीवत्पितृको जीवन्मातृकश्च गयाश्राद्धे सर्व्वथानधिकारी। जीवत्पितृको मृतमातृकस्तु यदि प्रसङ्गेन गयां प्राप्नोति तदा अन्वष्टकाश्राद्धमिव मातृपार्व्वणमेव कुर्य्यात् "आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च क्षयाहनि। मातुः श्राद्धं सुतः कुर्य्यात् पितर्य्यपि च जीवति" इति मैत्रायणीयपरिशिष्टवाक्यात्। अत्र प्राप्तावित्युक्त्या प्रासङ्गिकगमनं सूचितम् "गयां प्रसङ्गतो गत्वा मातृश्राद्धं समाचरेदिति त्रिस्थलीसेतुधृतवचने प्रसङ्गत इति पदस्य स्पष्टोपादानस्वरसात्। तेन जीवत्पितृकस्य गयामुद्दिश्य गमने न मातृश्राद्धकरणम्। मातृश्राद्धस्यान्वष्टकाश्राद्धसादृश्यात् पार्व्वणमेव कार्य्यमिति त्रिस्थलीसेतुप्रभृतयः। अन्ये तु जीवन्मातृको मृतमातृको वा जीवत्पितृकोऽपि पार्व्वणविधिना पितामहादीनां गयाश्राद्धं कुर्य्यात् "जीवे पितरि वै पुत्रः श्राद्धकार्य्यं विवर्ज्जयेत्। येषां वापि पिता दद्यात्तेषामेके प्रचक्षते" इति हारीतवचनोत्तरार्द्धेन जीवत्पितृकपार्व्वणस्य विधानेन गयायामपि तत्प्रवृत्तेरित्याहुः। आचार एतदन्यतरपक्षग्रहणे शरणम्।

संन्यासिनस्तु सर्व्वकर्मपरित्यागितया गयाश्राद्धेऽनधिकारिणः। तथापि तत्र विष्णुपदादिश्राद्धस्थानेषु दण्डमात्रस्पर्शनं प्रणवोपासनादिवत् तैराचरणीयं न तु श्राद्धतर्पणादि "दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः। दण्डं स्पृष्ट्वा विष्णुपदे पितृभिः सह मुच्यते" इति वायवीयात् स्पृष्ट्वा स्पर्शयित्वेत्यर्थः। पुत्त्रवत्याः स्त्रिया नाधिकार इति गौड़ैकदेशिनामाचारः स तु मूलाभावान्नादरणीयः।

अथ गयाश्राद्धकालः। न तत्र कालशुद्ध्यपेक्षा "गयायां सर्व्वकालेषु पिण्डं दद्यात् विचक्षणः। अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः। न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च वृहस्पताविति" वायवीयात्। अत्र सर्व्वकालेष्वित्युपक्रमात् अस्ते इत्याद्युक्तिस्तु सर्व्वसमयाशुद्धिप्रयोजकनिमित्तमात्रोपलक्षणार्था न तु रात्र्यादिपर्य्युदस्तकालग्रहणार्थेति बोध्यं सर्व्वत्र तीर्थादौ रात्र्यादिकालस्य पर्य्युदस्ततया रघुनन्दनादिभिः स्वीकारात्। संक्रान्त्यादौ तु फलातिशयः "गयाश्राद्धं प्रकुर्व्वीत संक्रान्त्यादौ विशेषतः। काले वाऽपरपक्षे वा चतुर्थ्यादितिथिष्वपीति" वह्निपुराणीयात् "मकरे वर्त्तमानेऽर्के ग्रहणे चन्द्रसूर्य्ययोः। दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनमिति" वायुपुराणवाक्याच्च। तथान्येऽपि निषिद्धकाला गयायां प्रतिप्रसूताः। यथा "विवाहव्रतचूड़ासु वर्षमर्द्धं तदर्द्धकम्। पिण्डदानं मृदा स्नानं न कुर्य्यात्तिलतर्पणमिति" कार्ष्णाजिनिवचनेन, "वृद्धिमात्रे तथान्यत्र पिण्डदाननिराक्रिया। कृता गर्गादिभिर्मुख्यैर्मासमेकन्तु कर्म्मिणामिति" स्मृतिसंग्रहवाक्येन च विवाहादेरूर्द्ध्वं वर्षादिकालपर्य्यन्तं पिण्डदानस्य निषेधेऽपि "महालये गयाश्राद्धे मातापित्रोर्मृताहनि। कृतोद्वाहोऽपि कुर्व्वीत पिण्डनिर्व्वपणं सुतः" इति, "पित्रोः क्षयाहे यज्ञे च पितृयज्ञे महालये। गयायां पिण्डदानस्य न कदाचिन्निराक्रियेति" च त्रिस्थलीसेतुधृतस्मृतिसंग्रहवाक्याच्च तत्प्रतिप्रसवः। तथा तत्र तिलतर्पणनिषेधाभावोऽपि "उपरागे व्यतीपाते गयायामथ पर्व्वणि। आदित्यादिनिषेधेऽपि कर्त्तव्यं तिलतर्पणमिति" स्मृतिदर्पणधृतसंग्रहवाक्यात्।

अथ गयाश्राद्धे निषिद्धकालः। "तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम्। अब्दमध्ये न कुर्व्वीत महागुरुनिपातने" इति गारुड़ात् प्रमीतमहागुरुकस्य वर्षमात्रं गयाश्राद्धं निषिद्धम्। तत्रायं विशेषः वृद्ध्यादिनिमित्तकसपिण्डीकरणे तु कर्त्तुं शक्यत एव "अस्थिक्षेपं गयाश्राद्धं श्राद्धञ्चापरपक्षिकम्। अब्दमध्ये न कुर्व्वीत सपिण्डीकरणं विना" इति गारुड़वाक्यान्तरात्। अत्राप्यपरोविशेषः यदि पितृभक्तिमान् तदाब्दमध्येऽपि गयाश्राद्धं कर्त्तुं शक्नोति "अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम्। प्रथमाब्देऽपि कुर्व्वीत यदि स्याद्भक्तिमान् सुतः" इति त्रिस्थलीसेतुधृतवचनात्। अत्र भक्तिः प्रीतिरिति बहवः। अन्ये तु अब्दमध्ये प्रेतस्य देवतात्वयोग्यतासिद्धये देवतासंस्कारकमेकं पार्व्वणं कर्त्तव्यं तदेव भक्तिपदाभिधेयं तच्च कृत्वा गयाश्राद्धं कुर्य्यादित्याहुः। भक्त्या वर्षमध्ये गयाश्राद्धकरणे तु वृद्धाविव मासिकादीन्यपकृष्य कार्य्याणीति बोध्यम्। अत्रेयं सम्प्रदायानुसारिणी व्यवस्था अकृतसपिण्डनस्य प्रथमाब्दे गयाश्राद्धं नैव कार्य्यं कृतसपिण्डनस्यापि सति सम्भवे प्रथममाब्दे नैव कार्य्यमित्येव मुख्यः पक्षः प्रसङ्गतो गयाप्राप्तौ पुनरागमनाद्यसम्भावनायान्तु भक्त्या, मतान्तरोक्तं श्राद्धं कृत्वा वा। प्रथमाब्देऽपि तत् कार्य्यं नित्य-

त्वादिति। महापातकिनामपि वर्षमात्रं गयाश्राद्धं न कार्य्यम् "क्रियते पतितानां च गते संवत्सरे क्वचित्। देशधर्म्मप्रमाणत्वाद्गयाकूपे स्वबन्धुभिरिति" ब्राह्मात् कूपग्रहणं गयास्थतीर्थमात्रोपलक्षणम्। पतितानामिति यावद्दुर्मरणमृतानामुपलक्षणार्थं ते च विस्तरभयान्नात्र लिखिताः। मुक्तञ्चैतत् मिताक्षरायां यावद्दुर्निमित्तमृतानां संवत्सरादूर्द्ध्वमेव नारायणबलिविधानपूर्व्वकं श्राद्धकरणस्योक्ततया गयाश्राद्धस्यापि तत्स्थानीयत्वेन तत्काले एव करणौचित्यम्। अतएव तद्धृतषट्त्रिंशन्मतीयवाक्यम् "गोब्राह्मणहतानाञ्च पतितानां तथैव च। ऊर्द्ध्वं संवत्सरात् कार्य्यं सर्व्वमेवौर्द्ध्वदैहिकमिति"। अत्र सर्व्वमिति सर्व्वशब्दस्वरसात् नारायणबलेरिव गयाश्राद्धादेरपि वर्षोत्तरमेव कर्त्तव्यता नार्वागिति प्रतीयते। अतएव तद्वचनव्याख्यायां मिताक्षराकृता नारायणबलिं कृत्वौर्द्ध्वदैहिकं कार्य्यमित्युक्तम्। एतच्चात्मघातिनाम् "नास्ति किञ्चिद्गयां विना" इत्युक्तेरपि वर्षोत्तरमेव तत्कर्त्तव्यतार्थैवेति बोध्यम्। अथ कर्त्तृविशेषे गयाश्राद्धविशेषः। तत्र "पितॄणां दत्तमक्षयमिति", "पिण्डं दद्याच्च पित्रादेरिति" च वायवीयात् पित्रादित्रयाणामुद्देश्यता। "पितरो यत्र पूज्यन्ते तत्र मातामहादयः" इत्युक्तेः, गयामुपक्रम्य "मातामहानामप्येवं श्रुतिरेषा सनातनीति" पाद्मसृष्टिखण्डवचनाच्च, मातामहादीनामप्युद्देश्यतेत्येवं षड्दैवतं पार्व्वणमिति गौड़ीयाः। "अन्वष्टकायां वृद्धौ च गयायाञ्च मृताहनि। अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह" इति वाय्वग्निपुराणोक्तेः "नान्दीमुखेऽन्वष्टकायां गयायाञ्च मृताहनि। पितामह्यादिभिः सार्द्धं मातुः श्राद्धं समाचरेत्" इति शातातपोक्तेश्च मात्रादीनामप्युद्देश्यता तेन नवदैवत्यम्। तत्राप्ययं विशेषः। नान्दीमुखे असामवेदिनामेव नवदैवतपार्व्वणस्य विधानेन तत्साहचर्य्यात् तद्वेदिनामेव नवदैवत्यमिति। "पित्रादि नवदैवं वा तथा द्वादशदैवतम्" वह्निपुराणीयात् मातामह्यादित्रिकसहितं नवदैवतमिति द्वादशदैवतं वा। तत्र वाशब्दश्रवणात् विकल्प एव गम्यते स च देशभेदादिना व्यवस्थितः। पितृव्यादीनान्तु एकोद्दिष्टमेव तदशक्तौ पिण्डदानमात्रं कार्य्यम्। तत्पत्नीनामपि पृथगेवैकोद्दिष्टादि कार्य्यम् "न योषिद्भ्यः पृथग्दद्यात्" इत्यादिना पृथग्दाननिषेधेऽपि "स्वगोत्रे परगोत्रे वा दम्पत्योः पिण्डपातनम्। अपृथक् निष्फलं श्राद्धं पिण्डञ्चोदकतर्पणम्" इति वायवीये गयामुपक्रम्य सहदाननिषेधेन तत्प्रतिप्रसवात्।"

**गयाकूप** गयास्थकूपभेदे पुं॰ **गयाक्षेत्र** न॰ गयारूपे क्षेत्रभेदे **गयातीर्थ** तद्रूपे तीर्थे न॰। **गयादित्य** पु॰ बलत्यादित्यभेदे **गयाशिरस्** न॰ गयास्थे गयशिरसि। "सर्वे सान्ता अदन्ताश्च" इत्युक्तेः गयाशिरमप्यत्र न॰ "पिण्डं दद्यात् गयाशिरे" वायुपु॰। **गयाशीर्ष** गयाशेखरादयोऽप्यत्र। ६गन्तव्ये। "खरोऽसि गयोऽसि" ता॰ ब्रा॰। "गयः फलाकाङ्क्षिभिर्गन्तव्यः" भा॰।

**गर** त्रि॰ गीर्य्यते गॄ—कर्म्मादौ पचादि॰ अच्। तत्र गणे गरट् इति पाठात् टित्त्वात् स्त्रियां ङीप्। १गीर्य्यमाणे २उपविषे ३रोगे ४विषे च पु॰ हेमच॰। "गरो गिरः पल्लवनार्थलाघवे मितञ्च सारञ्च वचो हि वाग्मिता" नैष॰। "स्त्रियोऽन्नपानं नखरोमसूत्रविड़ार्त्तवैर्युक्तमसाधुवृत्ताः। यच्छन्ति प्रयच्छन्त्यरयो गरांश्च" सुश्रुतः। "विषनिमित्तस्तु गरोपयोगाद्दुष्टतोयसेवनात्" सुश्रुतः विषभक्षणजातश्वयथुकरणोक्तौ "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः" स्मृतिः। ५विषभेदे न॰ हेमच॰ "तस्मादिदं गरं भुङ्क्ते" भाग॰ ८।७।३३श्लो॰। ६वत्सनाभाख्ये विषे राजनि॰ ववादिषु पञ्चमे तिथ्यर्द्धरूपे ७करणे न॰ मेदि॰। करणशब्दे विवृतिः। "गरोदूष्ये" पा॰ गणसूत्रोक्ते दूष्ये च तस्य उञ्छादि॰ अन्तोदात्तता। भावे अप्। ८निगरणे पु॰। ततः तार॰ इतच्। गरित सञ्जातगरणे। गीर्य्यते कर्म्मणि अप्। १०भक्ष्ये चूर्णभेदे "दृष्टेषु मन्दविषेषु" इत्युपक्रमे "योगैर्नानाविधैरेषां चूर्णानि गरमादिशेत्" सुश्रुतः।

करणशब्दे अनुक्तत्वात् प्रसङ्गात् करणाधीशाः कृत्यभेदे तेषां ग्रहणादिकं च वृ॰ स॰ ९९अ॰ उक्तं प्रदर्श्यते यथा।

"ववबालवकौलवतैतिलाख्यगरवणिग्विष्टिसञ्ज्ञानाम्। पतयः स्युरिन्द्रकमलजमित्रयमभूश्रियः सयमाः। कृष्णचतुर्द्दश्यर्द्धाद्ध्रुवाणि शकुनिश्चतुष्पदं नागम्। किन्तुघ्नमिति च तेषां कलिदृषफणिमारुताः पतयः। कुर्य्याद्ववे शुभचरस्थिरपौष्टिकानि, धर्म्मक्रिया द्विजहितानि च बालवाख्ये। सम्प्रीतिमित्रकरणानि च कौलवे स्युः सौभाग्यसंग्रहगृहाणि च तैतिलाख्ये। कृषिवीजगृहाश्रयजानि गरे वणिजि ध्रुवकार्य्यवणिग्युतयः। नहि विष्टिकृतं विदधाति शुभं परघातविषादिषु सिद्धिकरम्। कार्य्यं पौष्टिकमौषधादि

शकुनौ गूढानि मन्त्रास्तथा। गोकार्यादि चतुष्पदे द्विजपितृनुद्दिश्य राज्यानि च। नागे स्थावरदाहणानि हरणं दौर्भाग्यकर्म्मोच्यतः। किन्तुन्ने शुभमिष्टकल्यकरणं मङ्गल्यसिद्धिक्रियाः।"

**गरघ्न** पु० गरं हन्ति हन–टक्। १कृष्णार्जके २वर्व्वरे च राजनि०। (गरुड़) ३मत्स्यभेदे स्त्री ङीप्। भावप्र० तद्‌गुणा उक्ता यथा "गरघ्नी मधुरा तिक्ता तुवरा वातपित्तनुत्। कफघ्नी रुचिकृद्‌गुल्मघ्नी दीपनी बलवीर्य्यकृत्"।

**गरण** न० गॄ–सेचने गॄ–निगरणे वा भावे ल्युट्। १सेचने २भक्षणे च। "गरुत्मान् गरणवान्" निरुक्तौ ६।१८। ३विषे शब्दचि०।

**गरद** न० गरेण सेचनेन दीयते खण्ड्यते दो–खण्डने कर्म्मणि घञर्थे क। १विषे हेम० दा–क ६त०। २विषदातरि त्रि० "अग्निदो गरदश्चैव" स्मृतिः।

**गरभ** पु० गॄ–बा० अभच्। गर्भे हेमच०।

**गरल** न०गिरति जीवनम् गॄ–अलच् गरं सेचनं लाति प्रतीकाराय ला–क वा। १विषे अमरः। "खरगरलखण्डनं मम शिरसि मण्डनम्"।"गरलमिव कलयति मलयसमीरम्" गीतगो० "संक्षादितं गरलमिवाशनेन" भा० व० ६७ अ०। २तृणपुले(घासेर आटि) ३सर्पविषे ४मानभेदे च हेमच०।

**गरलारि** पु० ६त०। मरकतमणौ राजनि०। [शब्दरत्ना०।

**गरव्रत** पुंस्त्री गरः विषवद्‌सर्पभोजनं व्रतमस्य। मयूरे

**गरस्** न० गॄ–बा० असुन्। १भक्षणे। "सगरा असि बुभ्रः"ता०ब्रा०। "गरसा भक्षणेन सह वर्त्तमानः"भा०।

**गरहन्** पु० गरं हन्ति हन्–क्विप्। १कृष्णार्जके २वर्व्वरे च त्रिका०।

**गरा** स्त्री गॄ–गॄ–बा अच् अजादेराकृतिगणत्वात् टाप्। १देवतालीवृक्षे राजनि०। भावे–अ। २भक्षणे धरणौ।

**गरागरी** स्त्री गरं मूषिकविषमागिरति गॄ–अच् गौरा० ङीष्। देवतालीवृक्षे अमरः।

**गरात्मक** न० गरस्य विषस्येवात्मा यस्य। शिग्रुवीजे शब्दच०।

**गराधिका** स्त्री गरे गरप्रतीकारेऽधिका श्रेष्ठा। लाक्षायाम् रत्नमा०। गरायिकेति पाठान्तरे गर इवाचरति क्यच्–ण्वुल्। तत्रार्थे। [उभ० सेट् गरयति अजगरत् त।

**गरि** (गुरुं करोतीत्यर्थे णिच् गुरोर्गरादेशः) गुरुकरणे अक०

**गरिमन्** पु० गुरोर्भावः इमनिच् गरादेशः। अधःपतनसाधने ऊर्द्ध्वस्थितिविरोधिनि गुरुत्वरूपे गुणे। "पादाहतं यत् सहशं गरिमणः"। "इतराङ्गवन्न यदिदं गरिमग्लपितावलग्नमगमत्तनुताम्" माघः। "प्रोद्यद्राजफलो रूढ़ीतगरिमा विष्वग्हतोभोगिभिः"सा०द०।

**गरिष्ठ** त्रि० अतिशयेन गुरुः गुरु+इष्ठन् गरादेशः। १अतिगुरौ। २राजभेदे पु० "हविर्धांश्च गरिष्ठश्च हरिश्चन्द्रश्च पार्थिवः" भा० स० ७अ० शक्रसभ्योक्तौ। ३दैत्यभेदे पु०। "हविष्यश्च गरिष्ठश्च प्रलयो नरकः पृथुः" हरिवं० २६२ अ० दैत्योक्तौ।

**गरी** स्त्री गॄ–पचाद्यच् तत्र गणे गरट् इति पाठात् ङीप्। देवतालीवृक्षे अमरः गरागरीत्यत्र पदद्वयमित्यन्यमतात्।

**गरीयस्** त्रि० अतिशयेन गुरुः गुरु+ईयसुन् गरादेशः। अतिगुरौ "सखा गरीयान् शत्रुश्च" "वाक्यस्यार्थगरीयसः" माघः। स्त्रियां ङीप्। "तथापि शुश्रूषुरहं गरीयसीः" माघः।

**गरुड** पु० गरुद्भ्यां डयते डी–ड पृषो० तलोपः। कश्यपात्मजे विनतागर्भजाते १पक्षिराजे अमरः। "विनतापि सुसिद्धार्था वभूव मुदिता तदा। जनयामास पुत्रौ द्वावरुणं गरुड़ं तथा। विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः। पतत्रिणान्तु गरुड इन्द्रत्वेनाभ्यषिच्यत" भा० आ० ३१अ०। विंशतिविधप्रासादमध्ये २प्रासादभेदे। "गरुड़ाकृतिश्च गरुड़ो नन्दीति षट्चतुष्कविस्तीर्णः। कार्य्यश्च सप्तभौमो विभूषितोऽण्डैश्च विंशत्या"वृ०स० ५६अ० ३सैन्यनिवेशनभेदरूपे व्यूहभेदे। "दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा। वराहमकराभ्यां वा सूच्या वा गरुड़ेन वा" मनुः।"सूच्यमुखपश्चाद्भागः पृथुमध्यो वराहव्यूहः एष एव पृथुतरमध्यो गरुड़व्यूहः ताभ्यां पार्श्वयोर्भये सति व्रजेत्"कुल्लू०।

**गरुड़ध्वज** पु० गरुड़ो ध्वजोऽस्य। १विष्णौ अमरः। यथा च तस्य तत्केतनत्वं तथा खगासनशब्दे पृ०२४१६दृश्यम्। गरुड़केतनादयोऽप्यत्र। "पर्य्यासि भक्त्या गरुड़ध्वजस्य" माघः। "महाक्षो गरुड़ध्वजः" विष्णुसं०।

**गरुड़पुराण** न० गरुड़ायोक्तं विष्णुना पुराणम्। अष्टादशमहापुराणान्तर्गते सप्तदशे महापुराणभेदे। गरुड़स्येदम् उद्देश्यतया अण् गारुड़मप्यत्र। तत्संख्याप्रतिपाद्यविषयाश्च उत्तरख० १०८अ० नारदीयपुराणोक्ताः यथा

"ब्रह्मोवाच। मरीचे! शृणु वच्म्यद्य पुराणं गारुड़ं शुभम्। गरुडायाब्रवीत् पृष्टो भगवान् गरुड़ा-

स्तनः। एकोनविंशसाहस्रं तार्क्ष्यकल्पकथाचितम्”। तत्र पूर्वखण्डे। “पुराणोपक्रमो यत्र सर्गः सङ्क्षेपतस्ततः। सूर्य्यादिपूजनविधिर्दीक्षाविधिरतः परम्। श्राद्धादिपूजा ततः पश्चान्नवव्यूहार्च्चनं द्विज!। पूजाविधानञ्च वैष्णवं तथा पञ्जरं ततः। योगाध्यायस्ततो विष्णोर्नामसाहस्रकीर्त्तनम्। ध्यानं विष्णोस्ततः सूर्य्यपूजा मृत्युञ्जयार्च्चनम्। मालामन्त्राः शिवार्च्चाऽथ गणपूजा ततः परम्। गोपालपूजा त्रैलोक्यमोहनं श्रीधरार्च्चनम्। विष्ण्वर्च्चा पञ्चतत्त्वार्च्चा चक्रार्च्चा देवपूजनम्। न्यासादिसन्ध्योपास्तिश्च दुर्गार्च्चाऽथ सुरार्च्चनम्। पूजा माहेश्वरी चातः पवित्रारोहणार्च्चनम्। मूर्त्तिध्यानं वास्तुमानं प्रासादानाञ्च लक्षणम्। प्रतिष्ठा सर्वदेवानां पृथक् पूजा विधानतः। योगोऽष्टाङ्गो दानधर्मः प्रायश्चित्तविधिक्रिया। द्वीपेशनरकाख्यानं सूर्य्यव्यूहश्च ज्यौतिषम्। सामुद्रिकं स्वरज्ञानं नवरत्नपरीक्षणम्। माहात्म्यमथ तीर्थानां गयामाहात्म्यमुत्तमम्। ततो मन्वन्तराख्यानं पृथक् पृथग् विभागशः। पित्राख्यानं वर्णधर्मा द्रव्यशुद्धिः समर्पणम्। श्राद्धं विनायकस्यार्च्चा ग्रहयज्ञस्तथाऽऽश्रमाः। मलहाख्या प्रेताशौचं नीतिसारो व्रतोक्तयः। सूर्य्यवंशः सोमवंशोऽवतारकथनं हरेः। रामायणं हरिवंशो भारताख्यानकन्ततः। आयुर्वेदे निदानं प्राक्चिकित्सा द्रव्यजा गुणाः। रोगघ्नं कवचं विष्णोर्गारुडस्त्रैपुरो मनुः। प्रश्नचूड़ामणिश्चान्ते हयायुर्वेदकीर्त्तनम्। ओषधीनामकथनं ततोव्याकरणोहनम्। छन्दःशास्त्रं सदाचारस्ततः स्नानविधिः स्मृतः। तर्पणं वैश्वदेवञ्च सन्ध्या पार्वणकर्म च। नित्यश्राद्धं सपिण्डाख्यं धर्मसारोऽघनिष्कृतिः। प्रतिसंक्रम उक्तोऽस्माद्युगधर्माः कृतेः फलम्। योगशास्त्रं विष्णुभक्तिर्नमस्कृतिफलं हरेः। माहात्म्यं वैष्णवञ्चाथ नारसिंहस्तवोत्तमम्। ज्ञानामृतं गुह्याष्टकं स्तोत्रं विष्ण्वर्च्चनाह्वयम्। वेदान्तसाङ्ख्यसिद्धान्तं ब्रह्मज्ञानात्मकं तथा। गीतासारः फलोत्कीर्त्तिः पूर्वखण्डोऽयमीरितः”। उत्तरखण्डे प्रेतकल्पे। “अथास्यैवोत्तरे खण्डे प्रेतकल्पः पुरोदितः। यत्र तार्क्ष्येण संपृष्टो भगवानाह वाडव!। धर्मप्रकटनं पूर्वयोनीनां गतिकारणम्। दानादिकं फलञ्चापि प्रोक्तमत्रौर्द्ध्वदेहिकम्। यमलोकस्य मार्गस्य वर्णनञ्च ततः परम्। षोडशश्राद्धफलकं वृत्तानाञ्चात्र वर्णितम्। निष्कृतिर्यममार्गस्य धर्मराजस्य वैभवम्। प्रेतपीड़ाविनिर्द्देशः प्रेतचिह्ननिरूपणम्। प्रेतानां चरिताख्यानं कारणम् प्रेततां प्रति। प्रेतकृत्यविचारश्च सपिण्डीकरणोक्तयः। प्रेतत्वमोक्षणाख्यानं दानानि च विमुक्तये। आवश्यकोत्तमं दानं प्रेतसौख्यकरं हितम्। शारीरकविनिर्द्देशो यमलोकस्य वर्णनम्। प्रेतत्वोद्धारकथनं कर्मकर्त्तृविनिर्णयः। मृत्योः पूर्वक्रियाख्यानं पश्चात् कर्मनिरूपणम्। मध्यं षोडशकं श्राद्धं स्वर्गप्राप्तिक्रियोहनम्। सूतकस्याथ सङ्ख्यानं नारायणबलिक्रिया। वृषोत्सर्गस्य माहात्म्यं निषिद्धपरिवर्जनम्। अपमृत्युक्रियोक्तिश्च विपाकः कर्मणां नृणाम्। कृत्याकृत्यविचारश्च विष्णुध्यानं विमुक्तये। स्वर्गतौ विहिताख्यानम् स्वर्गसौख्यनिरूपणम्। भूर्लोकवर्णनञ्चैव सप्तधा लोकवर्णनम्। पञ्चोर्द्ध्वलोककथनं ब्रह्माण्डस्थितिकीर्त्तनम्। ब्रह्माण्डानेकचरितं ब्रह्मजीवनिरूपणम्। आत्यन्तिकलयाख्यानं फलस्तुतिनिरूपणम्। इत्येतद्गारुड़ं नाम पुराणं भुक्तिमुक्तिदम्”। तत्फलश्रुतिः। “कीर्त्तितं पापशमनं पठतां शृण्वतां नृणाम्। लिखित्वैतत्पुराणन्तु विषुवे यः प्रयच्छति। सौवर्णहंसयुग्माढ्यं विप्राय स दिवं व्रजेत्”।

**गरुड़मन्त्र** पु० ६त०। “संवर्त्तको नेत्रयुतः पार्श्वस्तारोऽग्निसुन्दरी। (क्षिप ओं स्वाहा)। गारुड़ो मनुराख्यातो विषद्वयविनाशनः। स्मरन् गरुड़मात्मानं मन्त्रमेनं जपेन्नरः। विषमालोचनेनैव हन्यान्नागभयं कुतः” तन्त्रसारे निबन्धोक्ते विषहारके मन्त्रभेदे।

**गरुड़मुद्रा** स्त्री “हस्तौ तु विमुखौ कृत्वा ग्रथयित्वा कनिष्ठके। मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा। मध्यमानामिकाग्रे तु द्वौ पक्षाविव चालयेत्। एषा गरुड़मुद्रा स्याद्विष्णोः सन्तोषवर्द्धिनी” तन्त्रसारोक्ते विष्णुपूजाङ्गे मुद्राभेदे।

**गरुड़रुत** न० “गरुड़रुतं नजौ भजतगा यदा स्युस्तदा” छन्दो० उक्तलक्षणे षोड़शाक्षरपादके छन्दोभेदे ६त०। गरुड़स्य रवे च “अमरमयूरमानसमुदे गरुड़रुतं सुरारिभुजगेन्द्रसन्त्रासने” छन्दोम०।

**गरुड़वेगा** स्त्री गरुड़स्य वेग इव वेगो गमने यस्याः। शीघ्रोत्पद्यमानलताभेदे। “वीरुधयो वाराही ज्योतिष्मती च गरुडवेगा” वृ०सं० ५४ अ०।

**गरुड़व्यूह** पु० गरुड़ इवाकृत्या व्यूहः। सैन्यनिवेशन-

विशेषेण गरुड़ाकृतौ व्यूहभेदे गरुड़शब्दे दृश्यम् ।

**गरुड़ाग्रज** पु० ६त० । विनतायाः ज्येष्ठपुत्रे सूर्य्यसारथौ १अरुणे । अमरः । तस्य गरुड़ाग्रजत्वकथा गरुड़शब्दे दृश्या । "विभिन्नवर्णा गरुडाग्रजेन" माघः ।

**गरुड़ाङ्कित** न० गरुड इवाङ्कितं तुल्यवर्णत्वात् । १मरकतमणौ शब्दरत्ना० । गरुडाङ्कादयोऽप्यत्र ।

**गरुड़ाश्मन्** पु० गरुड इवाश्मा समानवर्णत्वात् । मरकतमणौ जटाधरः ।

**गरुड़ासन** न० "गरुडासनमावक्ष्ये येन ध्यानस्थिरो भुवि । सर्वदोषादिनिर्मुक्तो भवतीह महाबली । एकपादमूरौ बद्ध्वा एकपादे च दण्डवत् । जङ्घापादसन्धिदेशे जान्वोरग्रं व्यवस्थितम् । एतदासनमाकृत्य पृष्ठे संहारमुद्रया । आधार्य्य योगनाथश्च स दास ईश्वरस्य च" रुद्रयामलोक्ते आसनभेदे ।

**गरुड़ोत्तीर्ण** पु० गरुडो वर्णेनोत्तीर्णः अतिक्रान्तो येन । मरकतमणौ राजनि० । [उपनिषच्छब्दे दृश्यम् ।

**गरुड़ोपनिषद्** स्त्री अथर्ववेदान्तर्गते गारुडाख्योपनिषद्भेदे ।

**गरुत्** पु० ऋ—गृ—वा उति । खगानां नभोगतिहेतौ पक्षे (पाखा) अमरः । २गरणे गरुत्मच्छब्दे उदा० । ३भक्षणे च ।

**गरुत्मन्** पु० प्रशस्तौ गरुतौ स्तोऽस्य मतुप् यवादि० मस्य न वः । १गरुडे अमरः । "सुपर्णोऽसि गरुत्मान्" यजु० १२।४ । "अङ्क सवितुर्गरुत्मान् पूर्व्वो जातः" ऋ० १०।१४९।२ । २हविर्भक्षणवति वह्नौ च । "सुपर्णोऽसि गरुत्मान् पृष्ठे" यजु० १७।७२ । "अग्ने ! त्वं सुपर्णोऽसि सुपर्णपक्ष्याकारो गरुड इवासि । गरुत्मान् गरुत् गरणं गिलनं भक्षणमस्यास्तीति गरुत्मान् अशनायावानित्यर्थः" वेददी० । ३पक्षिमात्रे च ।

**गरुद्योधिन्** पुंस्त्री गरुता युध्यति युध—णिनि ३त० । भारतीखगे (भारद) त्रिका० ।

**गरुल** पु० गरुड+डस्य वा लः । गरुडे हेमच० ।

**गर्ग** पु० गृ—ग तस्य नेत्त्वम् । आङ्गिरसे मुनिभेदे । "बृहस्पतेरङ्गिरसः पुत्रो राजन् ! महामुनिः । संक्रामितो भरद्वाजः" इत्युपक्रमे "वितथश्चाभिषिच्याथ भरद्वाजो वनं ययौ । स चापि वितथः पुत्रान् जनयामास पञ्च वै । सुहोत्रञ्च सुहोतारं गयं गर्गं तथैव च । कपिलञ्च महात्मानम्" हरिवं ३२ अध्या० । तस्य च शिवतोषात् चतुःषष्ट्यङ्गज्योतिषज्ञानं यथाह भा० आनु० १८अ० । "गर्ग उवाच चतुःषष्ट्यङ्गमददत् कालज्ञानं ममाद्भुतम् । सरस्वत्यास्तटे तुष्टो(शिवः)मनोयज्ञेन पाण्डव !" कलाज्ञानमित्यपपाठः । तस्य च कालज्ञानप्रकारः भा० व०२८अ०उक्तः । तच्च वाक्यं गर्गस्रोतःशब्दे दृश्यम् । तत्कृता ज्योतिषसंहिता गर्गसंहितेति प्रसिद्धम् । "तल्लक्षणानि सुनिर्मलानि निबद्धानि तानि दृष्ट्वेदम् । क्रियते गर्गपराशरकाश्यपवात्स्यरचितानि" "गर्गादीनां मतं वीक्ष्य" इति च वृ०सं० २१ अ० । स च भरद्वाजगोत्रान्तर्गतः आर्षशब्दे ८१७पृ० दृश्यम् । तस्य गोत्रापत्यं गर्गा०यञ् । गार्ग्य तद्गोत्रापत्ये पुंस्त्री । यून्यपत्ये फक् । गार्ग्यायण यूनि तद्गोत्रापत्ये पुंस्त्री । बहुषु यञोलुक् अस्त्रियाम् । "गर्गाः शतं भोज्यन्ताम्" महाभा० "गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजशैन्यगार्ग्य त्रेति पञ्च" आश्व० श्रौ० १०।१२।१२ । स्त्रियान्तु ङीप् यलोपश्च गार्गी इत्येव "गार्गी वाचक्नवी" आश्व० गृ० ३।४।४ । गार्ग्यश्च गार्ग्यायणश्च इत्येकशेषे "वृद्धो यूना" पा० वृद्धशेषे गार्ग्यौ । कुणिरोगाक्रान्ते २मुनिभेदे । "ऋषिरासीत् महावीर्य्यः कुणिगर्गो महायशाः" भा० श० ५२ अ० । तत्कथा वृद्धकन्याशब्दे दृश्या । गयाक्षेत्रे यज्ञार्थं सृष्टे ब्रह्मणो ३मानसपुत्रभेदे । "ब्रह्मा सम्भृतसंभारो मानसानृत्विजोऽसृजत्" इत्युपक्रमे "गर्गं कौशिकवासिष्ठौ वायु० गयामा०२अ० । ४वृषे ५किञ्जुलुके शब्दार्थचि० । "चतुर्द्रुतविरामान्तस्तालोऽयं गर्गसंज्ञितः" संगीतदामोदरोक्ते ६तालभेदे पु० ।

**गर्गत्रिरात्र** पु० त्रिसृभिः रात्रिभिः साध्यः अण् द्विगोर्लुक् लुकि व्यक्तिवचनत्वा गर्गकृतस्त्रिरात्रः । त्रिसुत्यके त्रिदिनसाध्ये यागभेदे । "त्र्यहाः पञ्च गर्गवैदछन्दोमान्तर्वसुपराकाः" कात्या० श्रौ० २३२।८ । "त्र्यहाः (त्र्यह साध्याः") पञ्च अहीनाः । "द्विगौ क्रतौ" पा० पूर्वपदमन्तोदात्तम् । युक्तारोह्या० आद्युदात्तञ्च

**गर्गर** पुंस्त्री गर्गेति शब्दं राति रा—क ऋ—वा० गरन् वा । "यः पीतवर्णोऽपि च पिच्छिलाङ्गः पृष्ठेषु रेखाबहुलः सशल्कः । स गर्गरो बर्बरनादरूक्षो जडश्च शीतः कफवातकारी" राजनि० उक्ताकारगुणे मत्स्यभेदे स्त्रियां जातित्वात् ङीष् । २तरुणपशौ ३दधिमन्थनभाण्डे च शब्दार्थचि० "गर्गरोद्गारनिस्वनम्" हरिवं० ६१ अ० । "नैषां ब्रह्म च नोतपुत्रा न गर्गरो मथ्यते नो यजन्ते" भा० शा० ७० अ० । "न दृषाः संप्रवर्त्तेरन्नमथ्येरंश्च गर्गराः" भा० शा० ६८ अ० ।

४कलसे अल्पार्थे ङीप्। ५खल्पघटे स्त्री "मेघादौ सङ्कृते देया वारिपूर्णा तु गर्गरी" ति०त०। गर्गरस्येदम् कुर्वा० ण्य। गार्ग्य तत्सम्बन्धिनि त्रि०।

**गर्गशिरस्** पु० दैत्यभेदे। "इरा गर्गशिरा यश्च" हरिवं० ३अ०।

**गर्गसंहिता** स्त्री गर्गेण कृता कालज्ञानस्य संहिता। गर्गकृते ज्योतिषग्रन्थभेदे।

**गर्गस्रोतस्** न० भा०व० प्रसिद्धे सरस्वतीर्थस्थे तीर्थभेदे "तस्माद्गाम्भवतीर्थाच्च महाबाहुररिन्दमः। गर्गस्रोतो महातीर्थमाजगामैककुण्डली (बलभद्रः)। यत्र गर्गेण वृद्धेन तपसा भावितात्मना। कालज्ञानगतिश्चैव ज्योतिषाञ्च व्यतिक्रमः। उत्पाता दारुणाश्चैव शुभाश्च जनमेजय!। सरस्वत्याः शुभे तीर्थे विदिता वै महात्मना। तस्य नाम्ना च तत्तीर्थं गर्गस्रोत इति स्मृतम्। तत्र गर्गं महाभागमृषयः सुव्रता नृप!। उपासाञ्चक्रिरे नित्यं कालज्ञानं प्रति प्रभो!" भा० श० ३८अ०

**गर्गाट** पुंस्त्री गर्गेति शब्दायाट्ति अट–अच्। मत्स्यभेदे हारा०।

**गर्गादि** पु० गोत्रे यञ्प्रत्ययनिमित्ते शब्दगणे स च गणः गर्ग वत्स (राजा से) संकृति अज व्याघ्रपात् विदभृत् प्राचीनयोग अगस्ति पुलस्ति चमस रेभ अग्निवेश शङ्ख शट शक एक धूम अवट मनस् धनञ्जय वृक्ष विश्वावसु जरमाण लोहित संशित बभ्रु वल्गु मण्डु गण्डु शङ्कु लिगु गुह्लु मन्तु मङ्क्षु अलिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋक्ष वृक्ष तनु तरुक्ष तलुक्ष तण्ड वतण्ड कपि कत कुरुकत अनडुह् कण्व शकल गोकक्ष अगस्त्य कुण्डिनी यज्ञवल्क पर्णवल्क अभयजात विरोहित वृषगण बहुगण शण्डिल चणक चुलुक मुद्गल मुसल जमदग्नि पराशर जातूकर्ण महित मन्त्रित अश्मरथ शर्कराक्ष पूतिमाष स्थूरा अररक एलाक पिङ्गल कृष्ण गोलन्द उलूक तितिक्ष भिषज् भिष्णज भड़ित भण्डित दल्भ चेकित चिकित्सित देवहू इन्द्रहू एकलू पिप्पलू वृहदग्नि सुलोहिन् सुलाभिन् उक्थ कुटीगु।

**गर्ज्ज** जर्ज्जाहेतुकशब्दे भ्वा० पर० अक० सेट्। गर्ज्जति। अगर्जीत् जगर्ज। गर्जितम्। गर्जनं गर्जः। गर्जन्। गर्ज्जा। "गर्ज गर्ज क्षणं मूढेति" देवीमाहात्म्यम्। "गरदि गर्जति, न वर्षति, वर्षति वर्षासु निःस्वनो मेघः" उद्भटः। "कुम्भकर्णस्ततोऽगर्जीत्" "गर्ज्जन् हरिः साम्भसि शैलकुञ्जे" भट्टिः। "योधानां चैव गर्जताम्" भा० भी० ६७८ श्लो०। "नाम संश्रावयामास जगर्ज च ननाद च" रामा० सु० ८६। शीलार्थे चानश्। गर्जमानः। "तथात्र गर्जमाने तु मेघवृन्द इभिनिस्वनम्" भा० आ० २०अ०। "सन्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः। चत्वारि तस्य नश्यन्ति आयुर्विद्यायशोबलम्" स्मृतिः। "माघादिचतुरो मासान् गर्जमात्र विवर्जयेत्" स्मृतिः।

अनु+गर्जनप्रतिरूपगर्जने। "अनुगर्जितसन्दिग्धाः करणैर्रजस्वना" कुमा०। अनुरूपगर्जने च। "सोऽनुगर्जन् धनुष्पाणिः" भा० द्रो० ४० अ०।

अभि+अभिलक्ष्य गर्जने सक०। "दुःशासनस्तामभिगर्जमानः" भा० स० ६५अ०। ताच्छील्ये चानश्। "शार्दूलाविव चान्योन्यमामिषार्थेऽभ्यगर्जताम्" भा० द्रो० १३३अ०। सम्यगगर्जने अक०। "शूराणाञ्चाभिगर्जताम्" भा० क० २१अ०

प्रति+प्रतिरूपगर्जने अक०। "बलवच्चापि संक्रुद्धावन्योन्यं प्रतिगर्जताम्" भा० वि० २२अ०। आर्षः पदव्यत्ययः। "प्रतीपं पततो मत्तान् कुञ्जरान् प्रतिगर्जतः" भा० उ० ५० अ० "सुहृदयोहृदयः प्रतिगर्जताम्" रघुः। प्रतिलक्ष्यीकृत्य गर्जने सक०। "कृषीणां कदनं कृत्वा नामपि प्रतिगर्जति" हरिवं ४९अ०।

**गर्ज्ज** रवे चुरा० उभ० अक० सेट्। गर्ज्जयति ते अजगर्जत्-त। गर्जयां बभूव आस–चकार चक्रे। गर्जयन् गर्जयमानः।

**गर्ज** पु० गर्ज–भावे घञ्। १हस्तिशब्दे २मेघादिशब्दे च गुरुमत्त्वात् सेट्कत्वाच्च भावे अ स्त्रियाम्। गर्जा। ३मेघादिध्वनौ स्त्री "गण्डूषगर्जजागरभुजकीलज्वालवर्त्तकक्रीडाः। उत्कण्ठसठवराटकरभसाः स्त्रीत्वे तु टावन्ताः" लिङ्गा०।

**गर्ज्जक** पु० गर्ज–ण्वुल्।(शाल)मत्स्यभेदे शब्दर०। [मेदि०।

**गर्ज्जन** न० गर्ज–भावे ल्युट्। १शब्दे करणे ल्युट्। २कोपे

**गर्ज्जर** न० गर्ज–बा० अरच्। १गृञ्जने (गाजर) ख्याते मूलप्रधाने वृक्षे भावप्र०। "गर्जरं गृञ्जनं प्रोक्तं तथा सारङ्गवर्णकम्। गर्जरं मधुरं तीक्ष्णं तिक्तोष्णं दीपनं लघु। संग्राहि रक्तपित्तार्शोग्रहणीकफवातजित्"।

**गर्ज्जाफल** पु० गर्जया फलति फल–अच् ३त०। विकङ्कटवृक्षे राजनि०।

**गर्ज्जि** पु० गर्ज–भावे इन्। १मेघशब्दे हेम०।

**गर्ज्जित** न० गर्ज–भावे क्त। १मेघादिध्वनौ कर्त्तरि क्तः।

२मत्तगजे अमरः। ३गर्जनकर्त्तरि मेघादौ त्रि॰ "स-न्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः" स्मृतिः। गर्जो जातोऽस्य तार॰—इतच्। ४जातगर्जने त्रि॰।

**गर्ज्य** न॰ गर्ज—ण्यत् "न क्वादेः" पा॰न कुत्वम्। गर्जनीये।

**गर्त्त** पु॰ गॄ—तन्। १भूमिच्छिद्रे १निम्नदेशे ३स्त्रीनितम्बस्थ ककुन्दरे च विश्वः। ४रोगभेदे शब्दर॰। ५रथे निघ॰। ६रथे ७सभास्थाणौ च निरु॰। "अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानाम्" ऋचो निरुक्तौ गर्त्तः सभास्थाणुर्गृणातेः सत्यसङ्गरो भवति रथोऽपि गर्त्त उच्यते गृणातेः स्तुतिकर्म्मणः स्तुततमं यानम्" इति ३।५। "वरुण! मित्र! गर्त्तमचचाथे" ऋ॰ ५।६२।८। "गर्त्तं रथम्" भा॰ "नमस्वन्ता धृतदक्षाधिगर्त्ते" २५।६।१। "गर्त्ते रथे" भा॰। ८खातभेदे "धनुः-शतपरीणाहो न गतिर्यासां न विद्यते। न ता नदी-शब्दवहा गर्त्तास्ताः परिकीर्त्तिताः" ति॰ त॰। "स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च" मनुः। ९खातेन कृतबिलमात्रदेशे च "अशुचिस्थानम् उच्छिष्टक्षेपणस्थान गर्त्तादिकम्" मिता॰। "न ससत्त्वेषु गर्त्तेषु न गच्छ-न्नापि च स्थितः" (मूत्रं कुर्य्यात्) मनुः। "गर्त्तेष्वव-काशी-पाशमित्यवधापयेत्" आश्व॰ गृ॰ २।८।१४। "सर्वासां स्थूणानां गर्त्तेषु" नारा॰ "वर्षाभ्यस्तत्र गर्त्तेऽवदध्युः" ४।५।५। "स्थाणुं वर्च्छत् गर्त्ते वा पात्यते" छा॰भा॰श्रुतिः। गर्त्तस्यादूरभवो देशः सुवास्वा॰ अण्। गार्त्त गर्त्तसन्नि-कृष्टदेशादौ त्रि॰। ततः चतुरर्थ्याम् प्रेक्षा॰ इनि। गर्त्तिन् गर्त्तसन्निकृष्टादौ त्रि॰ स्त्रियां ङीप्। गर्त्ते भवः धूमा॰ वुञ्। गार्त्तक गर्त्तभवे त्रि॰। उत्करा॰ चतु-रर्थ्यां छ। गर्त्तीय गर्त्तयुक्तदेशादौ त्रि॰। कुमुदा॰ चतुरर्थ्यां ठञ्। गर्त्तिक गर्त्तसन्निकृष्टदेशादौ। गर्त्तं तत्पतनमर्हति "छन्दसि च" पा॰ यत्। गर्त्त्य गर्त्तपतनमर्हति त्रि॰छन्दसीत्युक्तेः वेद एवास्य प्रयोगः।

**गर्त्तिका** स्त्री गर्त्तोऽस्त्यस्याः ठन्। १तन्त्रवपनशालायां (ता-तघर)। हेमच॰। २गर्त्तवति त्रि॰।

**गर्द्द** रवे वा चुरा॰ उभ॰ पक्षे भ्वा॰ पर॰ अक॰ सेट्। गर्द्द-यति-ते गर्दति अजगर्दत्-त अगर्दीत्। गर्द्दयाम् बभूव आस चकार चक्रे जगर्द्द।

**गर्द्दभ** पुंस्त्री॰ गर्द—अभच् (गाधा) १जन्तुभेदे। स्त्रियां जातित्वात् ङीष्। "सह्यैव दशभिः पुत्रैर्भारं वहति गर्दभी"। "अविश्रामं वहेद्भारं शीतोष्णञ्च न विन्दति। सन्तोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात्" चाणक्य॰। "दीपनं गार्दभं मूत्रं कृमि-वातक-फापहः। शोफकुष्ठोदरोन्मादमारुतकृमिनाशनम्" सुश्रु॰ तत्र पुंसामेव मूत्रं ग्राह्यं यथाह भावप्र॰ "खरोष्ट्रेभनराश्वानां पुंसा मूत्रं हितं स्मृतम्"। तस्यो-त्पत्तिः "अथ यासां पांसवः पर्य्यशिष्यन्त ततो गर्द-भः समभवत् तस्माद्यत्र पांसुलं भवति गर्दभस्थानमिव तत्रेत्याहुः" शत॰ब्रा॰ ४।५।१।९। तस्य पांसुषु उत्पन्न-त्वात् पांसुलस्थानप्रियता। "चण्डालश्वपचानान्तु बहि-र्ग्रामात् प्रतिश्रयः। अपात्राश्च कर्त्तव्या धनमेषां श्व गर्दभम्" मनुना तस्य श्वपचादिधनत्वमुक्तम्। २गन्धे हेमच॰। ३श्वेतकुमुदे ४विडङ्गे च न॰ रत्नमा॰।

**गर्द्दभगद** पु॰ जालगर्दभाख्ये रोगभेदे राजनि॰। जाल-गर्दभशब्दे लक्षणादि।

**गर्द्दभयाग** पु॰ गर्दभेन यागः। अवकीर्णिनः पाप-क्षयार्थे नैर्ऋतदेवताककाणगर्दभपश्वालम्भनेन कर्त्तव्ये यागभेदे।। तद्विधिर्मनुनोक्तो यथा

"अवकीर्णी तु काणेन गर्दभेन चतुष्पथे। पाक-यज्ञविधानेन यजेत निर्ऋतिं निशि। हुत्वाग्नौ विधि-वद्धोमानन्ततश्च समेत्यृचा। वातेन्द्रगुरुवह्नीनां जुहुयात् सर्पिषाऽऽहुतीः। कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः। अतिक्रमं व्रतस्याहुर्धर्म्मज्ञा ब्रह्मवादिनः। मारुतं पुरु-हूतञ्च गुरुं पावकमेव च। चतुरो व्रतिनोऽभ्येति ब्राह्मं तेजोऽवकीर्णिनः"।

गर्दभयज्ञ गर्दभेज्यादयोऽप्यत्र। तत्र विशेषः कात्या॰श्रौ॰ सूत्रे उक्तो यथा।

"वाऽवकीर्णिनो गर्दभेज्या" सू॰१।१।१३ "यो ब्रह्मचारी सन् स्त्रियं गच्छति सोऽवकीर्णी तस्यावकीर्णिनः स्खलित-ब्रह्मचर्यस्य गर्दभेज्या गर्दभेनेज्या यागो गर्दभेज्या प्राय-श्चित्तार्था भवति। वाशब्दो विकल्पार्थः तेन गृह्योक्तमपि प्रायश्चित्तान्तरमाज्याहुतिद्वयरूपं विकल्पेन भवति "अथाप-रमाज्याहुती जुहोति कामावकीर्णोऽस्मीत्यादिना" (पार-स्कर) शाखान्तरे उभयस्य विकल्पेन श्रुतत्वात् अत्रैतद्विचार्य्यते किं स्थपतीष्टिरवकीर्णिपशुश्च तदुभय-साधनसंस्कृतेष्वाहवनीयादिषु भवति उत लौकिके इति। तत्र प्रकृतित आहवनीयादिप्राप्तेराहवनीयादीनां चा-धाननिष्पाद्यत्वात् स्थपतेरवकीर्णिनश्चाधानविध्यभावेऽपि इष्टिपश्वर्थ आधानं प्रयोजतः अत एतदर्थमेवाधानेनाऽऽ-

हवनीयादीनुत्पाद्य तेष्वेतदुभयं कर्त्तव्यमिति प्राप्ते आह" कर्कः। "लौकिके" १४सू०। 'एतौ स्थपतीष्ट्यवकीर्णिपशू लौकिकेऽग्नौ भवतः न होमाविष्टिपशू आधानं प्रयोजयतः आभ्यां हि तदेव गृह्यते यद्दर्शपूर्णमासाङ्गं भवति। न चाधानं दर्शपूर्णमासाङ्गम् स्वकाले हि पुरुषसंस्कारकत्वेन तद्विहितमिति। अतो लौकिकाग्नावेवैतावनुष्ठेयौ लौकिकमेव गार्हपत्यस्थाने स्थापयित्वा तत आहवनीयादिस्थानेषु विहृत्य स्थपतीष्ट्यवकीर्णिपशू दर्शपूर्णमासपशुवत् कर्त्तव्यौ। अत्र विशेषविधानार्थमाह" कर्कः। "भूमौ पशुपुरोडाशश्रपणम्" १५सू०। "अत्रावकीर्णिनो गर्दभपशुयागे पशुपुरोडाशस्य श्रपणं भूमावेव कर्त्तव्यम् न तु कपालेषु" कर्कः। "अप्स्ववदानहोमः" १६सू०। 'अवदानानां हृदयजिह्वाक्रोडादीनां होमोऽप्सु उदकेषु भवति नाग्नौ वचनात्। अवदानग्रहणादन्यदाघाराज्यभागहोमादिकमग्नावेव कार्य्यम्" कर्कः। "शिश्नात् प्राशित्रावदानम्" १७सू०। "गर्दभस्य शिश्नात् प्राशित्रावदानं कार्य्यम् वचनात्" कर्कः।

**गर्दभशाक** पु० गर्दभोगन्धो शाकेऽस्य। १ब्रह्मयष्टिवृक्षे (वामनहाटि) जटा०। २तत्रैवार्थे स्त्री गौरा० ङीष् रत्नमा०।

**गर्दभशाखी** स्त्री गर्दभो गन्धः शाखायां यस्याः गौरा० ङीष्। १भार्ग्याम् राजनि०।

**गर्दभाण्ड** पु० गर्दभं गन्धमर्मति अम–गतौ ड। पत्रकाण्डफलादिभिरश्वत्थाकारे १प्लक्षवृक्षे (पाकुड) अमरः। (पिप्पली) ख्याते २वृक्षे शारसुन्दरी।

**गर्दभाह्वय** न० गर्दभेति आह्वयो यस्य। १कुमुदे हेमच०।

**गर्दभिका** स्त्री "मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकावृतम्। रुजाकारीं गर्दभिकाम् तां विद्यात् वातपित्तजाम्" माधवकरोक्ते रोगभेदे।

**गर्दभी** स्त्री गर्द–अभच् गौरा० ङीष्। अग्निप्रकृतिके १कीटभेदे सुश्रु० कीटशब्दे २०४८पृ० विवृतिः। स्वार्थे क। २गर्दभिकारोगे संज्ञायां कन्। ३अपराजितायाम् ४श्वेतकण्टकार्य्यां ५कटभ्याञ्च राजनि०। गर्दभ+जातौ स्त्रियां ङीष्। ६गर्दभजातिस्त्रियाञ्च तत्क्षीरादिगुणाः "बल्यं वातश्वासहरं मधुराम्लं च गार्दभम्। पयो रूक्षं दीपनञ्च सुपथ्यं परिकीर्त्तितम्। गार्दभं दधि रूक्षोष्णं लघु दीपनमुच्यते। पाचनं मधुराम्लञ्च रुचिकृत् वातदोषहृत्। गार्दभं नवनीतं च कषायं कफवातहृत्। बल्यञ्च दीपनं पाके लघूष्णं मूत्रदोषकृत्" राजनि०।

**गर्द्ध** लिप्सायां चुरा० उभ० सक० सेट्। गर्द्धयति ते अजगर्द्धत् त। गर्द्धयाम् बभूव आस चकार चक्रे। गर्द्धः गर्द्धा। गर्द्धनः। [२गर्द्धभाण्डद्रुमे च शब्दच०।

**गर्द्ध** पु० गृध–वञ् अच् वा। १अतिशयस्पृहायां, हेमच०।

**गर्द्धन** त्रि० गृध–युच्। लुब्धे अमरः।

**गर्ब** गतौ भ्वा० पर० सक० सेट्। गर्बति अगर्बीत् जगर्ब।

**गर्ब** दर्पे अद० चुरा० आत्म० अक० सेट्। गर्बयते अजगर्बत। गर्बः। गर्बितः। "तदपसारगर्बितकष्णसारम्" रघुः।

**गर्व** पु० गर्व–दर्पे भावे अच्। अहङ्कारे अमरः।

**गर्भ(र्भ)** पु० गॄ–भन् वा द्वित्वे भस्य बः। भ्रूणे देहजन्मकारके शुक्रशोणितानुबन्धजन्ये १मांसपिण्डे, २शिशौ, ३कुक्षौ, ४नाटकसन्धिभेदे, ५पनसकण्टके मेदि० ६अपवरके, हेमच० "भाद्रकृष्णचतुर्दश्यां यावदाप्लवते जलम्। तावद् गर्भं विजानीयात्" प्रा०त० उक्ते भाद्रकृष्णचर्दश्यां, गङ्गाजलाप्लावनस्थाने, ७अन्ने, ८अग्नौ, ९पुत्रे च शब्दार्थचि०। गर्भस्य देहहेतुता कायशब्दे १९०८पृ० दर्शिता कश्चिदत्र विशेषोऽभिधीयते। तत्र भावप्र०

"कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः। गर्भः सञ्जायते नार्य्याः स जातो बाल उच्यते। गर्भः शुद्धोऽशुद्धश्च अशुद्धस्तु गर्भोऽशुद्धशुक्रशोणितयोरपि दम्पत्योर्भवति यत आह "दम्पत्योः कुष्ठबाहुल्यात् दुष्टशोणितशुक्रयोः। यदपत्यन्तयोर्जातं ज्ञेयं तदपि कुष्ठितमिति"। कुष्ठं सञ्जातं यस्य तत् कुष्ठितम्, अत्र तारकादित्वादितच् प्रत्ययः। यत्तु, "वातादिदुष्टरेतसः प्रजोत्पादने न समर्थाः" इति सुश्रुतः। तत्र शुद्धप्रजोत्पादने न समर्था इति बोद्धव्यम्। रोगादिनाऽशुद्धास्तु वातादिदुष्टशुक्रा अपि प्रजा जनयन्ति जन्मान्धबधिरपङ्ग्वादिसम्भवात्। ऋतौ स्त्रीपुंसयोर्योगे मकरध्वजवेगतः। मेढ्रयोन्यभिसङ्घर्षाच्छरीरोष्माऽनिलाहतः। पुंसः सर्वशरीरस्थं रेतो द्रावयतेऽथ तत्। वायुर्मेहनमार्गेण पातयत्यङ्गनाभगे। तत् संस्रुत्य व्यात्तमुखं याति गर्भाशयं प्रति। तत्र शुक्रवदायातेनार्त्तवेन युतं भवेत्। गर्भाशयस्य स्वरूपमाह शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता। तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता। यथा रोहितमत्स्यस्य मुखं भवति रूपतः। तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः। अयमर्थः गर्भशय्याया मुखं रोहितमत्स्यस्येव भवति यथा च रोहितमत्स्यस्य स्थितिर्जले भवति तथा पित्ताशयपक्वाशयमध्ये गर्भशय्यायाः

स्थितिर्भवति रूपमपि तस्यैव भवति यथा रोहितस्य मुखं स्वल्पमाशयस्तु महानित्यर्थः। शुक्रार्त्तवसमाश्लेषोयदैव खलु जायते। जीवस्तदैव विशति युक्त शुक्रार्त्तवान्तरः। सूर्य्यांशोः सूर्य्यमणितोऽनुभयस्माद्युताद्यथा। वह्निः सञ्जायते जीवस्तथा शुक्रार्त्तवाद्युतात्। आत्माऽनादिरनन्तश्चाऽव्यक्तो वक्तुं न शक्यते। चिदानन्दैकरूपोऽयं मनसापि न गम्यते। एवं भूतोऽपि जगतो भाविन्या बलवत्तया। अविद्यया कृत कर्म्मवशो गर्भं विशत्यसौ। गर्भं चतुर्विंशतितत्त्वमयम्। स एव वेत्ता रसनो द्रष्टा घ्राता स्पृशत्यसौ। श्रोता वक्ता च कर्त्ता च गन्ता रन्तोत्सृजत्यपि। दिने व्यतीते नियतं सङ्कुचत्यम्बुजं यथा। ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा। ऋतौ रजोदर्शनात् षोड़शनिशात्मके काले योनिरत्र भगद्वारम्।

"बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ। यमावित्यभिधीयेते धर्म्मेतरपुरःसरौ। धर्म्मस्तदितरोऽधर्म्मस्तौ पुरःसरौ ययोः तेन यमौ धर्म्माधर्म्माभ्यां भवत इत्यर्थः। आधिक्ये रेतसः पुत्रः कन्या स्यादार्त्तवेऽधिके। नपुंसकं तयोः साम्ये यथेच्छा पारमेश्वरी। नन्वेवं सति कथं पुत्रोत्पत्तिः सदैवार्त्तवस्यैव बाहुल्यात् यत उक्तम् "आर्त्तवं चतुरञ्जलिप्रमाणं शुक्रं प्रसृतिमात्रमिति" वाग्भटेऽप्युक्तमात्रेयादिभिः "मज्जा मेदोवसा मूत्रपित्तश्लेष्मशकृदसृक्। रसो जलं च देहेऽस्मिंस्त्वेकैकाञ्जलिवर्द्धितम्। पृथक् च प्रसृतं प्रोक्तमोजोमस्तिष्करेतसाम्। द्वावञ्जली तु दुग्धस्य चत्वारो रजसस्तु ते। समधातोरिदं मानं विद्यात् वृद्धिक्षयावतः" इति। मैवं, यतो गर्भाशयस्थमेव शुक्रमार्त्तवं च गर्भोत्पत्तिहेतुः शुक्रं कदाचिदत्यन्तहर्षवशाद्दुग्धादिशुक्रलद्रव्यसेवनात् शुक्रबाहुल्यात् गर्भाशये बहु स्रवति कदाचिद्दैमनस्यादिना शुक्राल्पत्वादल्पमिति एवमार्त्तवमपीति न दोषः। सुश्रुतः पुनराह "वैलक्षण्याच्छरीराणामस्थायित्वात् तथैव च। दोषधातुमलानां तु परिमाणं न विद्यते"। वैलक्षण्यात् दीर्घह्रस्वकृशादिभेदेन सादृश्याभावात् अस्थायित्वात् वयोहर्निशत्तुं भुक्तेष्वेकमात्रानवस्थानात्। एवं तामभिसङ्कल्प्य पुनर्मासाद्भजेदसौ"मासादूर्द्धमिति शेषः। अर्वागमनेन गर्भद्वारविघट्टनात् गर्भच्युतिप्रसङ्गः स्यात्। केचित्तु, पुनः पुष्पदर्शनेन गर्भालाभनिश्चये मासात् पूर्वं गच्छेत् लब्धगर्भां तु नोपगच्छेदिति वदन्ति। तत्र परिहार्य्यपरिहारार्थं सद्योगृहीतगर्भाया लक्षणमाह शुक्रशोणितयोर्योनेरास्रावोऽथ श्रमोद्भवः। सक्थिसादः पिपासा च ग्लानिः स्फूर्त्तिर्भगे भवेत्। अथ तस्या एवोत्तरकालीनं लक्षणमाह स्तनयोर्मुखकार्ष्ण्यं स्याद्रोमराज्युद्गमस्तथा। अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः"।

"छर्दयेत् पथ्यभुक् चापि गन्धादुद्विजते शुभात्। प्रसेकः सदनं चैव गर्भिण्या लिङ्गमुच्यते। तत्र पुत्रगर्भवत्या लक्षणमाह पुत्रगर्भयुतायास्तु नार्य्या मासि द्वितीयके। गर्भो गर्भाशये लक्ष्यः पिण्डाकारोऽपरं शृणु। पिण्डो वर्त्तुलाकृतिः मासि द्वितीयक इत्यस्य गर्भः पिण्डाकारो लक्ष्यः इत्यनेनैवान्वयो न त्वग्रिमश्लोकेऽपि। दक्षिणाक्षिमहत्त्वं स्यात् प्राक्क्षीरं दक्षिणे स्तने। दक्षिणोरुः सुपुष्टः स्यात् प्रसन्नमुखवर्णता। पुन्नामधेय द्रव्येषु स्वप्नेष्वपि मनोरथः। आम्रादिफलमाप्नोति स्वप्नेषु कमलादि च। कन्यागर्भवतीगर्भः पेशी मासि द्वितीयके। पुत्रगर्भस्य लिङ्गानि विपरीतानि चेक्षते। पेशी दीर्घाकृतिः। नपुंसकं यदा गर्भं भवेद्गर्भोऽर्बुदाकृतिः। उन्नते भवतः पार्श्वे पुरस्तादुदरं महत्। अर्बुदं वर्त्तुलं फलार्द्धतुल्यम्।

"अपरा अपि गर्भप्रकृतीराह यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन। मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते। अनस्थिः अत्रेषदर्थे नञ् तेनाल्पको मलास्थिरित्यर्थः। ऋतुस्नाता तु या नारी स्वप्ने मैथुनमाचरेत्। आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि। मासि मासि प्रवर्द्धेत स गर्भो गर्भलक्षणः। कललं जायते तस्य वर्जितं पैतृकैर्गुणैः। गर्भलक्षणः प्रकृतगर्भलक्षणः। पैतृकैर्गुणैः केशश्मश्रुलोमनखदन्तशिरास्नायुधमनीरेतःप्रभृतिभिः। सर्पवृश्चिककुष्माण्डाकृतयो विकृताश्च ये। गर्भास्ते योषितस्ताश्च ज्ञेयाः पापकृतो भृशम्। गर्भो वातप्रकोपेण दोहदे चापमानिते। भवेत् कुब्जः कुणिः पङ्गुर्मूकोमिन्मिन एव च। पुत्राणामाहारचारचेष्टाभेदस्य हेतुमाह आहाराचारचेष्टाभिर्य्यादृशीभिः समन्वितौ। स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः। समुपेयातां संयोगं गच्छेताम्। अथ गर्भलक्षणमाह। गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकम्। प्रकृतिः सविकारा च तत्सर्वं गर्भसंज्ञितम्।

कालेन वर्द्धितो गर्भो यदाङ्गोपाङ्गसंयुतः। भवेत्तदा स मुनिभिः शरीरीति निगद्यते। अङ्गोपाङ्गसंयुतः व्यक्ताङ्गोपाङ्गः। तस्य त्वङ्गान्युपाङ्गानि ज्ञात्वा सुश्रुतशास्त्रतः। मस्तकादभिधीयन्ते शिष्याः शृणुत यत्नतः। आद्यमङ्गं शिरः प्रोक्तं तदुपाङ्गानि कुन्तलाः। तस्यान्तर्मस्तु लुङ्गं च ललाटं भ्रूयुगन्तथा। नेत्रद्वयं तयोरन्तर्वर्त्तेते द्वे कनीनिके। दृष्टिद्वयं कृष्णगोलौ श्वेतभागौ च वर्त्मनी। पक्ष्माण्यपाङ्गौ शङ्खौ च कर्णौ तच्छष्कुलीद्वयम्। पालिद्वयं कपोलौ च नासिका च प्रकीर्त्तिता। ओष्ठाधरौ च सृक्किण्यौ मुखं तालुहनुद्वयम्। दन्ताश्च दन्तवेष्टश्च रसना चिवुकङ्गलः। द्वितीयमङ्गं ग्रीवा तु यया मूर्द्धा विधार्य्यते। तृतीयं बाहुयुगलं तदुपाङ्गान्यथ ब्रुवे। तत्रोपरिगतौ स्कन्धौ प्रगण्डौ भवतस्त्वधः। कफोणियुगं तदधः प्रकोष्ठयुगलन्तथा। मणिबन्धौ तले हस्तौ तयोश्चाङ्गुलयो दश। नखाश्च दश ते ख्याता दश च्छेद्याः प्रकीर्त्तिताः। चतुर्थमङ्गं वक्षस्तु तदुपाङ्गान्यथ ब्रुवे। स्तनौ पुंसस्तथा नार्य्या विशेष उभयोरयम्। यौवनागमने नार्य्याः पीवरौ भवतः स्तनौ। गर्भवत्याः प्रसूतायास्तावेव क्षीरपूरितौ। हृदयं पुण्डरीकेण सदृशं स्यादधोमुखम्। जाग्रतस्तद्विकसति स्वपतस्तु निमीलति। आशयस्तत्तु जीवस्य चेतनास्थानमुत्तमम्। अतस्तस्मिंस्तमोव्याप्ते प्राणिनः प्रस्वपन्ति हि। चेतनास्थानमुत्तममिति अयमभिप्रायः। चेतनानामधिष्ठानं मनोदेहश्च सेन्द्रियः। केशलोमनखाग्रं च मलं द्रव्यगुणं विना” इत्युक्तवता चरकेण सकलं शरीरं चेतनास्थानमुक्तम्। तदपेक्षया हृदयं विशेषतश्चेतनास्थानमिति। कक्षयोर्वक्षसः सन्धी जत्रुणी समुदाहृते। कक्षे उभे समाख्याते तयोः स्यातां च वङ्क्षणौ। उदरं पञ्चमञ्चाङ्गं षष्ठं पार्श्वद्वयं मतम्। सपृष्ठवंशं पृष्ठं तु समस्तं सप्तमं स्मृतम्। उपाङ्गानि च कथ्यन्ते तानि जानीहि यत्नतः। शोणिताज्जायते प्लीहा वामतो हृदयादधः। रक्तवाहिशिराणां स मूलं ख्यातो महर्षिभिः। हृदयाद्वामतोऽधश्च फुस्फुसो रक्तफेनजः। अयो दक्षिणतश्चापि हृदयात् यकृतः स्थितिः। तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम्। अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति। जलवाहिशिरामूलं तृष्णाच्छादनकन्मतम्। क्लोम तिलकम्। एतत्तु वातरक्तजम्। अत्र वृद्धवाग्भटः “रक्तादनिलसंयुक्तात्कालीयकसमुद्भव इति। मेदः शोणितयोः साराद्वृक्कयोर्युगलं भवेत्। तौ तु पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः। उक्ताः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः। अर्द्धव्यामेन हीनानि योषितोऽन्त्राणि निर्द्दिशेत्। उण्डुकश्च कटी चापि त्रिकं बस्तिश्च वङ्क्षणौ। कण्डराणां प्ररोहः स्यात् स्थानं तद्वीर्य्यमूत्रयोः। स एव गर्भस्याधानं कुर्य्याद्गर्भाशये स्त्रियाः। शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता। यस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता। वृषणौ भवतः सारात् कफासृङ्मांस च मेदसाम्। वीर्य्यवाहिशिराधारौ तौ मतौ पौरुषावहौ। गुदस्य मानं सर्व्वस्य सार्द्धं स्याच्चतुरङ्गुलम्। तत्र स्युर्वलयस्तिस्रः शङ्खावर्त्तनिभास्तु ताः। प्रवाहिणी भवेत्पूर्व्वा सार्द्धाङ्गुलमिता मता। उत्सर्जनी तु तदधः सा सार्द्धाङ्गुलसम्मिता। तस्याधः संवरणी स्यादेकाङ्गुलसमा मता। अर्द्धाङ्गुलप्रमाणं तु बुधैर्गुदमुखं मतम्। मलोत्सर्गस्य मार्गोऽयं पायुर्देहे विनिर्मितः। पुंसः प्रोथौ स्मृतौ यौ तु तौ नितम्बौ च योषितः। तयोः ककुन्दरे स्यातां सक्थिनी त्वङ्गमष्टमम्। तदुपाङ्गानि च ब्रूमो जानुनी पिण्डिकाद्वयम्। जङ्घे द्वे घण्टिके पार्ष्णी तले च प्रपदे तथा। पादाङ्गुलयस्तत्र दश तासां नखा दश”। अथेदं शरीरमपरेणापि येन येन समवायिकारणेनोत्पद्यते तानि सर्वाण्याह अथ दोषाः प्रवक्ष्यन्ते धातवस्तदनन्तरम्। आहारादेर्गतिस्तस्य परिणामश्च वक्ष्यते। आर्त्तवं चाथ धातूनां मलास्तदुपधातवः। आशयाश्च कलाश्चापि वर्माण्यथ च सन्धयः। शिराश्च स्नायवश्चापि धमन्यः कण्डरास्तथा। रज्ज्वाणि भूरिस्रोतांसि जालैः कूर्चाश्च रज्जवः। सेवन्यश्चाथ सङ्घाताः सीमन्ताश्च तथा त्वचः। लोमानि लोमकूपाश्च देह एतन्मयो मतः”।

१०मेघस्य जलवर्षणयोग्यतासम्पादके निमित्तभेदे स च वृ॰सं॰ २१ अ॰ उक्तो यथा

“दैवविदवहितचित्तो द्युनिशं यो गर्भलक्षणे भवति। तस्य मुनेरिव वाणी न भवति मिथ्याम्बुनिर्देशे। किं वाऽतः परमन्यच्छास्त्रं ज्यायोऽस्ति यद्विदित्वैव। प्रध्वंसिन्यपि काले त्रिकालदर्शी कलौ भवति। केचिद्वदन्ति कार्त्तिकशुक्लान्तमतीत्य गर्भदिवसाः स्युः। न तु तन्मतं बहूनां, गर्गादीनां मतं वक्ष्ये। मार्गशिरःशुक्लपक्षप्रतिपत्प्रभृति क्षपाकरेऽषाढाम्। पूर्वां वा समुपगते गर्भाणां

नक्षत्रं ज्ञेयम्। यन्नक्षत्रमुपगते गर्भश्चन्द्रे भवेत् स चन्द्रवशात्। पञ्चनवते दिनशते १९५ तत्रैव प्रसवमायाति। सितपक्षभवाः कृष्णे, शुक्ले कार्ष्णाद्युसम्भवा रात्रौ। नक्तंप्रभवाश्चाहनि सन्ध्याजाताश्च सन्ध्यायाम्। मृगशीर्षाद्या गर्भा मन्दफलाः पौषशुक्लजाताश्च। पौषस्य कृष्णपक्षेण निर्दिशेच्छ्रावणस्य सितम्। माघसितोत्था गर्भाः श्रावणकृष्णे प्रसूतिमायान्ति। माघस्य कृष्णपक्षेण निर्दिशेद्भाद्रपदशुक्लम्। फाल्गुनशुक्लसमुत्था भाद्रपदस्यासिते विनिर्देश्याः। तस्यैव कृष्णपक्षोद्भवास्तु ये तेऽश्वयुक्शुक्ले। चैत्रसितपक्षजाताः कृष्णेऽश्वयुजस्य वारिदा गर्भाः। चैत्रासितसम्भूताः कार्त्तिकशुक्लेऽभिवर्षन्ति। पूर्वोद्भूताः पश्चादपरोत्थाः प्राग्भवन्ति जीमूताः। शेषास्वपि दिक्ष्वेवं विपर्ययो भवति वायोश्च। ह्लादिमृदूदक्शिवशक्रदिग्भवो मारुतो वियद्विमलम्। स्निग्धसितबहुलपरिवेषपरिवृतौ हिममयूखार्कौ। पृथुबहुलस्निग्धघनं घनसूचीक्षुरकलोहिताभ्रयुतम्। काकाण्डमेचकाभं वियद्विशुद्धेन्दुनक्षत्रम्। सुरचापमन्द्रगर्जितविद्युत्प्रतिसूर्यकाः शुभा सन्ध्या। शशिशिवशक्राशास्थाः शान्तरवाः पक्षिमृगसङ्घाः। विपुलाः प्रदक्षिणचराः स्निग्धमयूखा ग्रहा निरुपसर्गाः। तरवश्च निरुपसृष्टाङ्कुरा नरचतुष्पदा हृष्टाः। गर्भाणां पुष्टिकराः सर्वेषामेव योऽत्र तु विशेषः। स्वर्तुस्वभावजनितो गर्भविवृद्धौ तमभिधास्ये। पौषे समार्गशीर्षे सन्ध्यारागोऽम्बुदाः सपरिवेषाः। नात्यर्थं मृगशीर्षे शीतं पौषेऽतिहिमपातः। माघे प्रबलो वायुस्तुषारकलुषद्युती रविशशाङ्कौ। अतिशीतं सघनस्य च भानोरस्तोदयौ धन्यौ। फाल्गुनमासे रूक्षश्चण्डः पवनोऽभ्रसम्प्लवाः स्निग्धाः। परिवेषाश्चासकलाः कपिलस्ताम्रो रविश्च शुभः। पवनघनवृष्टियुक्ताश्चैत्रे गर्भाः शुभाः सपरिवेषाः। घनपवनसलिलविद्युत्स्तनितैश्च हिताय वैशाखे। मुक्तारजतनिकाशास्तमालनीलोत्पलाञ्जनाभासः। जलचरसत्त्वाकारा गर्भेषु घनाः प्रभूतजलाः। तीव्रदिवाकरकिरणाभितापिता मन्दमारुता जलदाः। रुषिता इव धाराभिर्विसृजन्त्यम्भः प्रसवकाले। गर्भोपघातलिङ्गान्युल्काशनिपांशुपातदिग्दाहाः। क्षितिकम्पखपुरकीलककेतुग्रहयुद्धनिर्घाताः। रुधिरादिवृष्टिवैकृतपरिघेन्द्रधनूंषि दर्शनं राहोः। इत्युत्पातैरेभिस्त्रिविधैश्चान्यैर्हतो गर्भः। स्वर्तुस्वभावजनितैः सामान्यैर्यैश्च लक्षणैर्वृद्धिः। गर्भाणां विपरीतैस्तैरेव विपर्ययो भवति। भाद्रपदाद्वयविश्वाम्बुदैवपैतामहेष्वथर्क्षेषु। सर्वेष्वृतुषु विवृद्धो गर्भो बहुतोयदो भवति। शतभिषगाश्लेषार्द्रास्वातिमघासंयुतः शुभो गर्भः। पुष्णाति बहून्दिवसान् हन्त्युत्पातैर्हतस्त्रिविधैः। मृगमासादिष्वष्टौ षट् षोडश विंशतिश्चतुर्युक्ता। विंशतिरथ दिवसत्रयमेकतमर्क्षेण पञ्चभ्यः। क्रूरग्रहसंयुक्ते करकाशनिमत्स्यवर्षदा गर्भाः। शशिनि रवौ वा शुभसंयुतेक्षिते भूरिवृष्टिकराः। गर्भसमयेऽतिवृष्टिर्गर्भाभावाय दुर्निमित्तकृता। द्रोणाष्टांशेऽभ्यधिके वृष्टे गर्भः स्रुतो भवति। गर्भः पुष्टः प्रसवे ग्रहोपघातादिभिर्यदि न वृष्टः। आत्मीयगर्भसमये करकामिश्रं ददात्यम्भः। काठिन्यं याति यथा चिरकालधृतं पयः पयस्विन्याः। कालातीतं तद्वत् सलिलं काठिन्यमुपयाति। पञ्चनिमित्तैः शतयोजनं तदर्धार्धमेकहान्यातः। वर्षति पञ्च समन्ताद्रूपेणैकेन यो गर्भः। द्रोणः पञ्चनिमित्ते गर्भे त्रीण्याढकानि पवनेन। षड् विद्युता नवाभ्रैः स्तनितेन द्वादश प्रसवे। पवनसलिलविद्युद्गर्जिताभ्रान्वितो यः स भवति बहुतोयः पञ्चरूपाभ्युपेतः। विसृजति यदि तोयं गर्भकालेऽतिभूरि प्रसवसमयमित्वा शीकराम्भः करोति"।

"गर्भोऽभवत् भूधरराजपत्न्याः" कुमा०। "नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी" रघुः। "गर्भो जरायुणावृत उल्वणं जहाति जन्मना" यजु०१९।७६। "यथोल्वेनावृतो गर्भस्तथा तेनेदमावृतम्" गीता। कुक्षिश्च गर्भशयस्थानम्। तत्र "गर्भे यदि विपत्तिः स्यात् दशाहं सूतकी भवेत्" शु०त० "कुन्त्या गर्भेण धारितः" भा०व० १२७अ०। "देहादुत्क्रमणं चास्मात् पुनर्गर्भे च सम्भवम्" मनुः। आधारे अभन्। ११गर्भारम्भकाले "गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्" मनुः। "तस्मात् गर्भान्विते युग्मे पतिसौभाग्यवर्द्धिनी" ज्यो०त०। १२अभ्यन्तरे "तासां मुखैरासवगन्धगर्भैः" रघुः "स्वल्पस्तु ते निर्मलिताम्बुगर्भं शरद्घनं नार्द्दति चातकोऽपि" "आविर्बभूव कुशगर्भमुखं मृगाणाम्" "निधानगर्भामिव सागराम्बराम्" रघुः। "भर्त्तुर्नाथ मधुरस्मितगर्भाः" सा०द०। "नष्टो न दृश्यते यत्र शमीगर्भे हुताशनः" भा० श० ४८ अ०। जलोत्पादकगर्भे "अष्टमासधृतं गर्भं भास्करस्य गभस्तिभिः। रसं सर्वं समुद्राणां द्यौः प्रसूते रसायनम्" रामा० कि० २७ अ०। तस्याष्टमासधृतत्वञ्च मनुनोक्तं

यथा "अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः" मनुः। गर्भोत्पन्ने पुत्रे "अस्मात्त्वमष्टमो गर्भो हन्ता, यां वहसेऽबुध !" भाग०१०।१।२४। "देवक्या जठरे गर्भं शेषाख्यं धाम मामकम्" भाग० १०।४।७। नाटकसन्धिभेदश्च सा०द०उक्तो यथा "अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति" सन्धिं लक्षयित्वा "मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः। इति पञ्चास्य भेदाः स्युः" इति तं पञ्चधा विभज्य "फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन। गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः" तल्लक्षणमुक्त्वा तस्य गर्भशब्दार्थत्वे युक्तिप्रदर्शनमुखेन उदाहृतं यथा

"फलस्य गर्भीकरणाद्गर्भः। यथा रत्नावल्यां द्वितीयेऽङ्के "सुसङ्गता सहि अदक्खिणा दानिं सि तुमं, जा एवं भट्टिणा हत्थेण गहिदावि कोवं ण मुञ्चसी" त्यादौ समुद्भेदः। पुनर्वासवदत्ताप्रवेशे ह्रासः। तृतीयेऽङ्के "तद्वार्त्तान्वेषणाय गतः कथञ्चिरयति वसन्तकः" इत्यन्वेषणम्। "विदू। ह्री ह्री भो भो कोसम्बीरज्जलम्भेणावि ण तारिसो पिअवअस्सस्स परितोसो जादिसो मम सआसादो पिअवअणं सुणिअ भविस्सदि" इत्यादौ उद्भेदः। पुनरपि वासवदत्ताप्रत्यभिज्ञानात् ह्रासः। पुनः सागरिकायाः सङ्केतस्थानगमने अन्वेषणम्। पुनर्लतापाशकरणे उद्भेदः।

"यत्र मुख्यस्य नोपाय उद्भिन्नोगर्भतोऽधिकः" सा० द०। गर्भो जातोऽस्य तारका० इतच्। गर्भित जातगर्भे काव्यदोषभेदे च। दोषशब्दे दृश्यम्। सगर्भ्यः।

**गर्भक** पु० गर्भे केशमध्ये कायति कै—क। १केशमध्यस्थे माल्ये अमरः। गर्भ+संज्ञायां कन्। २रात्रिद्वये न० हेमच०।

**गर्भकर** पु० गर्भं करोति निष्पादयति सेवनेन कृ—ट। १पुत्रजीवद्रुमे भावप्र०। २गर्भकारके त्रि०।

**गर्भकार** पु० गर्भं करोति कृ—ण्वुल्। १गर्भाधानकारके पत्यादौ। गर्भे मध्ये कारः स्तवनकर्मणि वैराजस्य यत्र। रथन्तरस्तोमयोर्मध्ये वैराजपाठरूपे २स्तोमभेदे न०। "गर्भकारञ्चेत् स्तुवीरंस्तथैव स्तोत्रियानुरूपान्" आश्व० श्रौ० ६।५। "गर्भकेदिति शेषः। रथन्तरेणाग्रे ततो वैराजेन ततो रथन्तरेण। अनेन गर्भकारस्वरूपमुच्यते" नारा० वृ०। "इद्धवैराजाभ्यां वैवम्" इस्वू०। "एवमेव गर्भकारमेवेत्यर्थः" नारा०वृ०।

**गर्भकोष** पु० गर्भस्य कोष आधार इव। गर्भाशये। गर्भकोषसमासङ्क्षोभकृत्को योनिसंवृतिः। हन्यात् स्वयं मूढगर्भे यथोक्ताश्चाप्युपद्रवाः" सुश्रुतः।

**गर्भगृह** न० गर्भइव मध्यस्थं गृहम्। गृहमध्यभागे। "वातागनविमानेषु तथा गर्भगृहेषु च" मा०उ०११७अ०। "कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या बहिः सख्याः" सा० द०। गर्भभवनादयोऽप्यत्र। "निर्गत्य गर्भभवनात्" मालतीमा०। [इत्ते रत्नमा०।

**गर्भघातिनी** स्त्री गर्भं हन्ति हन—णिनि। लाङ्गलिका-

**गर्भच्युति** स्त्री ६त०। गर्भस्रावे तत्कारणादि सुश्रुते उक्तं यथा

"ग्राम्यधर्मयानवाहनाध्वगमनप्रस्खलनप्रपतनप्रपीडनधावनाभिघातविषमशयनासनोपवासवेगाभिघातातिरूक्षकटुतिक्तभोजनशाकातिक्षारसेवनातिसारवमनविरेचनप्रेङ्खोलनाजीर्णगर्भशातनप्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः फलमिव वृन्तबन्धनादभिघातविशेषैः। स विमुक्तबन्धनो गर्भाशयमतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रंसमानः कोष्ठसङ्क्षोभमापादयति तस्या जठरसङ्क्षोभाद्वायुरपानोमूढः पार्श्ववस्तिशीर्षोदरयोनिशूलानाहमूत्रसङ्गानामन्यतममापाद्य गर्भं व्यापादयति तरुणं शोणितस्रावेण, तमेव कदाचिद्विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानमपानवैगुण्यसंमोहितं गर्भं मूढगर्भमित्याचक्षते। ततः स कीलः प्रतिखुरो बीजकः परिघ इति। तत्र ऊर्द्ध्वबाहुशिरःपादो यो योनिमुखं निरुणद्धि कील इव स कीलः। निःसृतहस्तपादशिराः कायसङ्गी प्रतिखुरः। यस्तु निर्गच्छत्येकशिरोभुजः स बीजकः। परिघ इव योनिमुखमावृत्य तिष्ठेत् स परिघ इति चतुर्विधो भवतीत्येके भाषन्ते तत्तु न सम्यक् कस्मात् स यदा विगुणानिलप्रपीडितोऽपत्यपथमनेकधा प्रतिपद्यते तदा सङ्ख्या हीयते। तत्र कश्चित् द्वाभ्यां सक्थिभ्यां योनिमुखं प्रतिपद्यते कश्चिदाभुग्नैकसक्थिरेकेन, कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्य्यगागतः। कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते। अन्तःपार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना। कश्चिदाभुग्नशिरा बाहुद्वयेन। कश्चिदाभुग्नमध्योहस्तपादशिरोभिः। कश्चिदेकेन सक्थ्ना योनिमुखमभिप्रतिपद्यतेऽपरेण पायुमित्यष्टविधा मूढगर्भगतिरुद्दिष्टाः समासेन। तत्र द्वावन्त्यावसाध्यौ मूढगर्भौ शेषानपि विपरीतेन्द्रियार्थाक्षेपकयोनिभ्रंशसंवरणमक्कल-

श्वासकासभ्रमनिपीडितान् परिहरेत्। भवन्ति चात्र। कालस्य परिणामेन मुक्तं हन्तादाथा फलम्। प्रवर्त्तते स्वभावेन नान्यथा पतितुं फलम्। एवं कालप्रकर्षेण मुक्तो नाडीनिबन्धनात्। गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते। कृमिवातानिभिघातैस्तु तद्देवोपद्रुतं फलम्। पतत्यकालेऽपि यथा तथा स्याद्गर्भविच्युतिः। आ चतुर्थात्ततो मासात्प्रस्रवेद्गर्भविच्युतिः। ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः। प्रविध्यति शिरो या तु शीताङ्गी निरपत्रपा। नीलोद्धतसिरा हन्ति सा गर्भं स च तां तथा। गर्भास्पन्दनमावीनां (गर्भवतीनाम्) प्रणाशः श्यावपाण्डुता। भवत्युच्छ्वासपूतित्वं शूलं चान्तर्गते शिशौ। मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः। गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः। वस्त्रारविपन्नायाः कुक्षिः प्रस्पन्दते यदि। तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद्भिषक्।"

गर्भविच्युति गर्भपतनादयोऽप्यत्र। (गाड़) त्रिका०।

**गर्भण्ड** पु० गर्भस्याण्ड इव गकः। नाभिगुडके (नाभिर-

**गर्भद** पु० गर्भं ददाति सेवनेन दा–क। १पुत्रजीवद्वृक्षे राजनि०। २गर्भसम्पादके औषधभेदे च।

**गर्भदात्री** स्त्री गर्भं ददाति दा–तृच् ङीप्। तापसद्रुसमानपत्रायामपत्यदायामोषधिभेदे राजनि०। "अपत्यदा तु मधुरा शीतला पित्तदाहनुत्। नारीपुष्पादिदोषहारिणी श्रमनाशिनी। गर्भसम्भवदात्री च सेवनात् परिकीर्त्तिता" राजनि०।

**गर्भदास** पु० गर्भात् गर्भमारभ्य दासः। गृहजातदासात्मतृपन्ने दासभेदे। "शूद्रस्य दानं वा दर्शनाविरोधाभ्याम्"कात्या०श्रौ०२२।१।११। सू० व्याख्यायां "शूद्रस्य दानं भवति दृश्यते हि दानं पुरुषमेधे। "सपुरुषं प्राचीदिग् घोतुः" शत०ब्रा० १३।६।२।११। "न च विरोधो गर्भदासस्य" कर्कः।

**गर्भध** न० गर्भं दधाति धा–क। रेतसि। "आऽहमजानि गर्भधमा त्वमजासि गर्भधम्" यजु० २३।१९। "गर्भधं गर्भधारकं रेतः" वेददी०।

**गर्भधारण** न० ६त०। अपत्योत्पादनार्थं शुक्रशोणितानुबन्धरूपगर्भग्रहणे। तद्धारणलिङ्गञ्च मिताक्षरायां दर्शितं यथा "गर्भधारणञ्च श्रमादिभिर्लिङ्गैरवगन्तव्यं तथाच स्मृतिः "सद्योगृहीतगर्भायाः श्रमो ग्लानिः पिपासा सक्थ्नोः निसदनं शुक्रशोणितयोरनुबन्धः स्फुरणञ्च योन्याः" गर्भशब्ददर्शिते भावप्र० वाक्ये विस्तृतिः तद्धारणाय विधिः आ० त० दर्शितो यथा "पुत्रानुत्पत्तौ पारस्करः"सा यदि गर्भं नादधीत निदिग्धिकायाः सिंहाः श्वेतपुष्प्यायाः उपोष्य पुष्येण मूलमुद्धृत्य चतुर्थेऽहनि स्नातायां निशायामुदकेन पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चतीति "इयमौषधी त्रायमाणा सहमाना सरस्वती। अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जनयत्यभित इति" "सा परिणीता ऋतुकाले कृताभिगमना यदि गर्भं न धारयति तदा उपोष्य पुष्ये नक्षत्रे श्वेतकण्टकारिकाया मूलमुत्पाट्य चतुर्थेऽहनि ऋतुस्नातायाः पत्न्या रात्रावुदकेन दक्षिणनासापुटे पतितेयमोषधी त्रायमाणा, इति मन्त्रेण सिञ्चति नस्यं ददाति दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा प्राक्शिरःसंविष्टायाः इति। आयुर्वेदेऽपि। "पिप्पल्यः शृङ्गवेरञ्च मरिचं नागकेशरम्। आज्येन सह भुञ्जीत अपि वन्ध्या प्रसूयते"। "गर्भधारणजं वाऽपि न खेदं समवाप्स्यसि" भा० व० १२६ अ०।

**गर्भनुद्** पु० गर्भं नुदति नुद–क्विप्। कलिकार्यां वृक्षे (विषलाङ्गला) भावप्र०।

**गर्भपाकिन्** पु० गर्भस्य पाको पुष्टिः साध्यत्वेनास्त्यस्य इनि। षष्टिधान्ये (षेटेरा धान) हेमच०। यथा च तस्य गर्भपोषकत्वम् तथा गर्भपोषणशब्दे वक्ष्यते।

**गर्भपात** पु० ६त०। गर्भस्रावे स तु पञ्चमादिमासस्यैव कठिनशरीरस्य भवति तत्प्रमाणं गर्भच्युतिशब्दे दृश्यम्।

**गर्भपातक** पु० गर्भं पातयति सेवनात् पत–णिच्–ण्वुल्। रक्तशोभाञ्जने जटा०।

**गर्भपातन** पु० गर्भं पातयति पाति–ल्यु।१रीठावृक्षे भावप्र० गौरा० ङीष्। २कलिकारीवृक्षे स्त्री राजनि०।

**गर्भपातिनी** स्त्री गर्भं पातयति–पत–णिच्–णिनि ङीप्। विशल्यावृक्षे जटाधरः।

**गर्भपोषण** न०६त०। गर्भस्य पुष्टिसम्पादके विधौ स च सुश्रुते दर्शितः यथा"गर्भिणी प्रथमदिवसात् प्रभृति नित्यं प्रहृष्टा शुच्यलङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवेन्मलिनविकृतहीनगात्राणि न स्पृशेद्दुर्गन्धदुर्दर्शनानि परिहरेदुद्वेजनीयाश्च कथाः, शुष्कं पर्युषितं क्वथितं क्लिन्नं चान्नं नोपभुञ्जीत बहिर्निष्क्रमणं शून्यागारचैत्यश्मशानवृक्षाश्रयान् क्रोधभयसङ्कटांश्च भाराद्युच्चैर्भाष्यादिकं परिहरेद्यानि च गर्भं व्यापादयन्ति

नचाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत नचायासयेच्छरीरं पूर्वोक्तानि च परिहरेत्। शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसंबाधं विदध्यात्। हृद्यं द्रवं मधुरप्रायं स्निग्धं दीपनीयसंस्कृतञ्च भोजनं भोजयेत् सामान्यमेतदा प्रसवात्। विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुपसेवेत। विशेषतस्तु तृतीये षष्टिकौदनं पयसा भोजयेच्चतुर्थे दध्ना पञ्चमे पयसा षष्ठे सर्पिषा चेत्येके। चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांससहितं हृद्यमन्नं भोजयेत्। पञ्चमे क्षीरसर्पिःसंसृष्टं षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेद्यवागूं वा। सप्तमे सर्पिः पृश्निपर्ण्यादिसिद्धम् एवमाप्यायते गर्भः। अष्टमे बदरोदकेन बलातिबलाशतपुष्पपललपयोदधिमस्तुतैललवणमदनफलमधुघृतमिश्रेणास्थापयेत् पुराणपुरीषशुद्ध्यर्थमनुलोमनार्थञ्च वायोः। ततः पयोमधुरकषायसिद्धेन तैलेनानुवासयेदनुलोमे हि वायौ सुखं प्रसूयते निरुपद्रवा च भवति। अत ऊर्द्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोपक्रमेदाप्रसवकालादेवमुपक्रान्ता स्निग्धा बलवती सुखमनुपद्रवा प्रसूयते" विधानपारि० तत्पोषणविधिर्मन्त्रभेदपूर्वको दर्शितो विस्तरभयान्नोक्तस्तत्रैवावसेयः।

**गर्भप्रसव** पु० ६त०। गर्भस्य तत्स्थशिशोः प्रथमप्रकाशनरूपे दर्शनयोग्यतापादनरूपकर्मभेदे तत्र कालश्च "नवमे दशमे मासि प्रबलैः सूतिमारुतैः। निःसार्य्यते वाण इव जन्तुश्छिद्रेण सज्वरः" याज्ञ०उक्तः। तद्विधानं सुश्रुते दर्शितं यथा।

"नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु बिल्वन्यग्रोधतिन्दुकभल्लातकनिर्म्मितं सर्वागारं यथासङ्ख्यं तन्मयपर्य्यङ्कमुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्राग्द्वारं दक्षिणद्वारं वाष्टहस्तायतञ्चतुर्हस्तविस्तृतं रक्षामङ्गलसम्पन्नं विधेयम्। जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने। सशूले जघने नारी ज्ञेया सा तु प्रजायिनी। तत्रोपस्थितप्रसवायाः कटीपृष्ठं प्रति समन्ताद्वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखात् श्लेष्मा च। प्रजनयिष्यमाणां कृतमङ्गलाम् उष्णोदकपरिषिक्तामथैनां कुमारपरिवृतां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां सम्भृतां यवागूमा कण्ठात् पाययेत्। ततः कृतोपधाने मृदुविस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्त्तितनखाः परिचरेयुरिति। अथास्या विशिखान्तरमनुलोममनुसुखमभ्यज्यात् ब्रूयाच्चैनामेका सुभगे! " प्रवाहयस्वेति न चाप्राप्तावी (अप्राप्तप्रसववेदनाम्) प्रवाहयस्व ततो विमुक्ते गर्भनाडीप्रबन्धे सशूलेषु श्रोणिवङ्क्षणवस्तिशिरःसु प्रवाहयेथाः शनैः शनैः। ततो गर्भनिर्गमे प्रगाढं, ततो गर्भे योनिमुखं प्रपन्ने गाढतरमा विशल्यभावात्। अकालप्रवाहणाद्वधिरं मूकं व्यस्तहनुं मूर्द्धाभिघातिनं कासश्वासशोषोपद्रुतं कुब्जं विकटं वा जनयति। तत्र प्रतिलोममनुलोमयेत्। गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्मोकेण पिण्डीतकेन वा। बध्नीयाद्धिरण्यपुष्पीमूलं हस्तपादयोर्धारयेत् सुवर्च्चलां विशल्यां वा। अथ जातस्योल्वं मुखञ्च सैन्धवसर्पिषा विशोध्य घृताक्तं मूर्द्ध्नि पिचुं दद्यात्ततो नाभिनाडीमष्टाङ्गुलामायम्य सूत्रेण बद्ध्वा छेदयेत्तत्सूत्रैकदेशञ्च कुमारस्य ग्रीवायां सम्यग्बध्नीयात्। अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्मणि कृते मधुसर्पिरनन्ताब्राह्मीरसेन सुवर्णचूर्णमङ्गुल्यानामिकया लेहयेत्ततो बलातैलेनाभ्यज्य क्षीरवृक्षकषायेण सर्वगन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनं कपित्थपत्रकषायेण वा कोष्णेन यथाकार्यं यथादोषं यथाविभवञ्च। धमनीनां हृदिस्थानां विवृतत्वादनन्तरम्। चतूरात्राच्त्रिरात्राद्वा स्त्रीणां स्तन्यं प्रवर्त्तते। तस्मात्प्रथमेऽह्नि मधुसर्पिरनन्तामिश्रं मन्त्रपूतं त्रिकालं पाययेद्द्वितीये लक्ष्मणासिद्धं सर्पिस्तृतीये च। ततः प्राङ्निवारितस्तन्यं मधुसर्पिः स्वपाणितलसम्मितं द्विकालं कालयेत्"।

**गर्भभर्मन्** न०गर्भस्य शिशोः भर्म्म भरणं भृ—भावे मनिन्। कुमारभृत्याकर्मणि तद्विधानादि सुश्रुतोक्तं कुमारभृत्याशब्दे दर्शितम्। "कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्म्मणि" रघुः।

**गर्भमास** पु०गर्भस्य तदारम्भस्य मासः तत्सहितो मासः। १गर्भारम्भमासे २गर्भसहिते मासे च "यदि नाधीयात् तृतीये गर्भमासे" आश्व० गृ० १।१३।२। "गर्भसहितो मासः गर्भमास" इति नारा०। ३गर्भमाससंख्यमासे च गर्भमासशब्दे दृश्यम्।

**गर्भयोषा** स्त्री गर्भार्था योषा। गर्भस्थानीयायां स्त्रियाम् "इयं गर्भेति नियतं प्रतिष्ठा गृहस्य रक्षायै च गर्भ-

योषा" भारते आनुशासनिकपर्वणि २अध्याये ।

**गर्भलक्षण** न० गर्भो लक्ष्यतेऽनेन लक्ष–करणे ल्युट् । गर्भ-सूचकचिह्नभेदे भावप्रकाशोक्ते गर्भशब्दे तल्लक्षणमुक्तम्

**गर्भलम्भन** न०गर्भोऽमोघवीर्य्यतया लभ्यतेऽनेन लभ–ल्युट् मुम् च । निषिक्तवीर्य्यस्यामोघतासम्पादनार्थे क्रियाभेदे"उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनञ्च" आश्व० गृ०१।१३।१ । "आम्नातमिति शेषः गर्भो लभ्यते येन कर्म्मणा निषिक्तं वीर्य्यममोघं भवति" नारा० ।

**गर्भवती** स्त्री गर्भो विद्यतेऽस्या मतुप् मस्य वः । आपन्न-गर्भायां स्त्रियाम् शब्दरत्ना० तस्या लक्षणं तत्परि-हार्य्यञ्च कायशब्दोक्तसुश्रुतवाक्ये १९२१पृ० दृश्यम् । लब्धगर्भाया गर्भस्थैर्य्यकारिविधिभेदः सुश्रुते उक्तो यथा "लब्धगर्भायाश्चैतेष्वहःसु लक्ष्मणावटशुङ्गासहदेवा-विश्वदेवानामन्यतमं क्षीरेणाभिषुत्य त्रींश्चतुरो वा विन्दून् दद्याद्दक्षिणे नासापुटे पुत्रकामायै नच तान्निष्ठीवेत् । भवन्तुतर्णां साचिध्याद्गर्भः स्याद्विधिपूर्वकः । ऋतु-क्षेत्राम्बुवीजानां सामग्र्यादङ्कुरो यथा । एवं जाता रूपवन्तो महासत्त्वाश्चिरायुषः । भवन्त्यृणस्य मोक्तारः सत्पुत्राः पुत्रिणे हिताः" । शिशौ वर्णभेदहेतुरपि तत्रोक्तः तत्र तेजोधातुः सर्ववर्णानां प्रभवः स यदा गर्भोत्पत्तावब्धातुप्रायो भवति तदा गर्भं गौरं करोति पृथिवीधातुप्रायः कृष्णं, पृथिव्याकाश-प्रायः कृष्णश्यामं, तोयाकाशधातुप्रायो गौरश्यामम् । यादृग्वर्णमाहारमुपसेवते गर्भिणी तादृग्वर्णप्रसवा भवती-त्येके भाषन्ते । तत्र दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धं करोति । तदेव रक्तानुगतं रक्ताक्षं, पित्तानुगतं पिङ्गाक्षं,श्लेष्मानुगतं शुक्लाक्षं,वातानुगतं विकृताक्षमिति" "दशैव मासान् बिभ्रति गर्भवत्यः" भा० व० १३४अ० ।

**गर्भवसति** स्त्री गर्भः कुक्षिरेव वसतिः। कुक्षिरूपे स्थाने "स तत्र गर्भवसतौ वसत्यात्मेच्छया हरिः" हरिवं०६०अ०।

**गर्भवास** पु० वसत्यस्मिन् वासः वासस्थानं गर्भ एव वासः। १कुक्षिरूपस्थाने "असकृत् गर्भवासेषु वासं जन्म च दा-रुणम्" मनुः । वस–भावे घञ् ७त०। २कुक्षौ वासे च ।

**गर्भव्यूह** पु० गर्भ इव गूढो व्यूहः । व्यूहभेदे युद्धार्थ-सैन्यनिवेशनभेदे । "पश्चाद्धै तस्य पद्मस्तु गर्भव्यूहः सु-दुर्भिदः । सूचीपद्मस्य गर्भस्थो गूढो व्यूहः कृतः पुनः" भा० द्रो० २७ अ० । स च पद्माकारः ।

**गर्भशय्या** स्त्री गर्भस्य शय्येव स्थानम् । "मज्जनाभ्याकृति-योनिस्त्र्यावर्त्ता सा च कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता" भावप्र०उक्ते गर्भोत्पत्तिस्थाने । "शिशुरधिकवया गर्भशय्यां गतो वा"इति वेणीसंहारः ।

**गर्भसंक्रमण** न० गर्भे संक्रमणं अन्यदेहपरित्यागेन देहा-न्तरोपादनार्थं प्रवेशनम् । देहाद्देहान्तरग्रहणाय कुक्षि-प्रवेशनरूपे जन्मनि । "गर्भसंक्रमणे चापि कर्मणाम-भिसर्पणे । तादृशीमेव लभते वेदनां मानवः पुनः" भा० आश्व० १७ अ० ।

**गर्भसमय** पु० ६त० । गर्भकाले स च बृहस्पतेरुत्तरपुं-योगकालः इष्ट्र्यवाय मेवगर्भकालश्च । स च गर्भशब्दे वृ०सं० वाक्ये न दर्शितः "गर्भसमयेऽतिवृष्टिर्गर्भाभावाय-दुर्निमित्तकृता" वृ० सं० ।

**गर्भस्राव** पु० स्रु–घञ् ६त० । प्रकृतिकालात् पूर्वं रोगा-दिना गर्भस्य पतने । गर्भच्युतिशब्दे विवृतिः। तत्राशौ-चनिर्णयः "रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति" मनुः । कूर्मपुराणम् "अर्वाक् षण्मासतः स्त्रीणां यदि स्यात् गर्भसंस्रवः । तदा माससमैस्तासां दिवसैः शुद्धि-रिष्यते । अत ऊर्द्धन्तु पतने स्त्रीणां स्याद्दशरात्रकम् । सद्यःशौचं सपिण्डानां गर्भस्रावाच्च वा ततः । गर्भ-च्युतावहोरात्रं सपिण्डेऽत्यन्तनिर्गुणे । यथेष्टाचरणे ज्ञातौ त्रिरात्रमिति निश्चयः" । दशरात्रकमिति स्वस्व-जात्युक्ताशौचकालपरम् । तथा चादित्यपुराणम् "षण्मासाभ्यन्तरं यावत् गर्भस्रावो भवेद् यदि । तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते । अत ऊर्द्धं स्व-जात्युक्तमशौचं तासु विद्यते" । गर्भस्रावाच्च वा तत इति तच्छब्देन सन्निधानादत ऊर्द्धमित्युक्तषण्मासोत्तर-कालः परामृश्यते । षण्मासोपरि सगुणानां सद्यः, निर्गुणानामेकाहः, अत्यन्तनिर्गुणयथेष्टाचरणज्ञातीनां त्रिरात्रम्"शु०त०। अशौचव्यवस्था अशौचशब्दे४८६पृ० उक्ता

**गर्भस्राविन्** पु० गर्भं स्रावयति स्रु–णिच्–णिनि । हि-न्तालवृक्षे । राजनि० ।

**गर्भागार** न० गर्भ इवागारम् । १गृहमध्यभागे वासगृहे । गर्भस्यागारम् ।२गर्भस्थाने अमरः। ३गर्भाशये राजनि०।

**गर्भाधान** न० गर्भ आधीयतेऽनेन कर्मणा आ+धा–करणे ल्युट् । गर्भरूपफलसंस्कारकर्म्मणि तत्र विहित-नक्षत्रादिकालभेदास्तद्विधानानि च सं०त०उक्तानि यथा "अथ गर्भाधानम् । गोभिलः 'यदा ऋतुमती भवति उपरतशोणिता तदा सम्भवकालः" ऋतुः प्रजाजनन-

योग्यकालः तन्निमित्तेन नैमित्तिकं गमनं कार्य्यम् अकुर्वतः प्रत्यवायान्नियमः "ऋतुमतीन्तु यो भार्य्यां सन्निधौ नोपसर्पति। अवाप्नोति स मन्दात्मा भ्रूणहत्यामृतावृतौ" इति स्मृतेः। ज्योतिषे "ज्येष्ठा मूला मघाश्लेषा रेवती कृत्तिकाश्विनी। उत्तरात्रितयं त्यक्त्वा पर्ववर्ज्जं व्रजेदृतौ" विष्णु पु० "चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा। पर्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव च। स्त्रीतैलमांससंभोगी विण्मूत्रनरकं व्रजेत्"। याज्ञ० "षोड़शर्त्तुनिशास्त्रीणां तासु युग्मासु संविशेत्। अत्र षोड़शाहोरात्रात्मककालस्य सावनत्वात् पुंसवननामकरणयोरपि सावनगणनायायुक्तत्वाच्च संस्कारमात्रे सावनगणना। तथा व्यवहारश्च तथा च याज्ञवल्क्यः "गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा। षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म च। अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः। षष्ठेऽन्नप्राशनं मासि चूड़ा कार्य्या यथाकुलम्। एवमेनः शमं याति वीजगर्भसमुद्भवम्"। चतुर्थे स्पन्दने ततः" इति वचनात् स्पन्दनात् पूर्वमासत्रयं पुंसवनकालः। अत्र चतुर्थमासस्य सौरत्वे चान्द्रत्वे वा निषेकमासस्यापि तथात्वे तदाद्यन्तदिननिषेके सति अधिकन्यूनकालयोगे गर्भस्पन्दनमनियतमापद्येत सावने तु नियतं तेनात्र सावनगणना युक्ता योषिद्व्यवहारप्रसिद्धा च। "अहन्येकादशे नाम" इत्यत्रापि "अशौचव्यपगमे नामधेयमिति" विष्णुसूत्रात् * सूतकोत्तरदिनपरमेकादशदिनपदम् "सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता" सूर्य्यसिद्धान्तवचनेन सूतकस्य सावनदिनघटितत्वात् तदुत्तरदिनस्यापि तथात्वम्। अतो दिनमासवर्षगणना सावनेनेति। शुभाशुभविवेचनन्तु सौरेण ज्योतिःशास्त्रात्। अतएव पितामहः "विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः"। अत्र द्वितीयादिशब्दात् संस्कारपरिग्रहः। "गर्भाधाने सदा ग्राह्याः वारा भौमरवीज्यकाः" इति। गोभिलः "दक्षिणेन पाणिना उपस्थमभिमृशेत्" विष्णुर्योनिं कल्पयत्वेतयर्चा "गर्भं धेहि सिनीवालीति च" समाप्यर्चौ सम्भवतः"। कुत्सितदेशस्य सव्येन पाणिना शौचदर्शनात् तद्वारणाय दक्षिणेनेति। उपस्थं योनिं स्पृशेत् विष्णुरिति मन्त्रेण प्रथमं, ततो "गर्भं धेहि सिनीवालीत्यादि" मन्त्रेण च। "मन्त्रान्ते कर्मादिसन्निपातः" इति न्यायात् पाठानन्तरं स्पर्शः न तु भवदेवभट्टोक्तं स्पृशन् जपतीति। ऋचौ समाप्यैव संयोगं कुरुतः न मध्ये वामदेव्यजपः। देवलः "सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता"। तेन गर्भाधानपुंसवनसीमन्तोन्नयनानि सकृदेव कर्त्तव्यानि। छन्दोगपरिशिष्टम् "विवाहादिकर्मगणोय उक्तो गर्भाधानं शुश्रुम यस्य चान्ते। विवाहादावेकमेवात्र कुर्यात् श्राद्धं नादौ कर्मणः कर्मणः स्यात्"। विवाहादिगर्भाधानान्तकर्मसु एकमेव श्राद्धं न तु प्रतिकर्मादौ, एकेनैव श्राद्धेन कृतेन सर्वाणि श्राद्धवन्तीति। अन्तशब्दोऽत्रावयवार्थः दशान्तः पट इति वत् समीपार्थे उपलक्षणं स्यात्। ततश्च विशेषणोपलक्षणसन्देहे विशेषणत्वेन ग्रहणं कार्य्यान्वितत्वात्। यत्तु "निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च" इत्यनेन भविष्यपुराणे श्राद्धं कर्माङ्गत्वेन विहितं तच्छन्दोगेतरपरम्। अत एव भवदेवभट्टेनापि तथा लिखितम्। अत्र श्राद्धोत्तरगमनेऽपि न दोषः उक्तभविष्यपुराणात् "नित्ये नान्दीमुखश्राद्धे कृते दानाद्यवर्जनम्" इति वचनान्तराच्च"।

मु०चि०पीयू०धा०विस्तरेण विहितनिषिद्धकालादिकमुक्तं यथा "गण्डान्तं त्रिविधं त्यजेन्निधनजन्मर्क्षे च मूलान्तकं दास्रं पौष्णमथोपरागदिवसं पातं तथा वैधृतिम्। पित्रोः श्राद्धदिनं दिवा च परिघाद्यार्धं स्वपत्नीगमे भान्युत्पातहतानि मृत्युभवनं जन्मर्क्षतः पापभम्" मु०चि० "गण्डान्तमिति। अत्र यदि दुष्टफलतिथ्यादिषु रजोदर्शनमुद्भूतं तत्र चतुर्थदिनानन्तरं शान्तिकं विधेयं यदाह वसिष्ठः "प्रभूतदोषं यदि दृश्यते तत्पुष्पं ततः शान्तिककर्म कार्य्यम्" विवर्ज्जयेदेव तदैकशय्यां यावद्रजो दर्शनमन्यथस्ते। ईशानतो गोमयमण्डलेन परिस्तृतेऽग्नौ जुहुयात्सदूर्वाम्। युग्मां घृताक्ताञ्च समित्प्रमाणां गायत्रिकां साष्टसहस्रसंख्याम्। शतप्रमाणामथवाथ हुत्वा शुभैर्यवैर्व्याहृतिभिस्तिलैश्च। ततः सुरान् भूमिसुरान् पितॄंश्च सन्तर्पयेदन्नसुवर्णवस्त्रैरिति"। शान्तिकप्रकारस्तु शान्तिपद्धत्यादौ द्रष्टव्यः। एवं शान्तिकं विधाय गर्भाधानं विधेयम्। तत्र स्वपत्नीगमे स्वपत्नीगमने एतान् दोषान् त्यजेदिति सर्वत्र सम्बन्धः। एतान् कान्? त्रिविधं गण्डान्तं गण्डान्तलक्षणं रत्नमालायाम् "नक्षत्रतिथिलग्नानां गण्डान्तं त्रिविधं स्मृतम्। नवपञ्चचतुर्थानां द्व्येकार्द्धघटिकामितमिति" निधनं जन्मर्क्षात् सप्तमं वधतारां, जन्मनक्षत्रं

मूलम् अन्तकं भरणीं दास्त्रमश्विनीम्। पौष्णं रेवतीं मघाम् उपरागदिवसं ग्रहणदिनं, पातं व्यतीपातम् महापातं च, वैधृतिं योगं, पित्रोर्मातापित्रोः श्राद्धदिनं, दिवा सूर्यावच्छिन्नकालं परिघयोगस्य पूर्वार्द्धम्। तथोत्पातैर्दिव्यान्तरिक्षभौमैस्त्रिविधैरुत्पातैर्हतं दूषितं, जन्मर्क्षतः जन्मलग्नाज्जन्मराशेर्वा मृत्युभवनमष्टमं लग्नं पापभं पापग्रहयुक्तं भं नक्षत्रं लग्नं वा इति" पी०धा० "भद्राषष्ठीपर्वरिक्ताश्च सन्ध्यां भौमार्कार्कीनाद्यरात्रीश्च तस्रः। गर्भाधानं त्र्युत्तरेन्द्वर्कमैत्रब्राह्मस्वातीविष्णुवस्वम्बुपे सत्" मु० चि०। "भद्रेति भद्रा प्रसिद्धा षष्ठी तिथिश्च पर्वाणि चतुर्दश्यष्टम्यमावास्या पूर्णिमा संक्रमणानि उक्तञ्च विष्णुपुराणे "चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा। पर्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव चेति" रिक्ताश्चतुर्थीनवमीचतुर्दशीः, सन्ध्यां प्रातःसन्ध्यां सायम् सन्ध्याञ्च। भौमं मङ्गलवारम् अर्कमादित्यवारम् आर्किं शनैश्चरवारं, चतस्रः आद्यरात्रीः रजोदर्शनदिनमारभ्य दिनचतुष्टयं त्यजेदित्यर्थः। तदनन्तरमपि पुत्रार्थी रजोदर्शनात् विषमदिवसं त्यजेत्। उक्तञ्चाधानाध्याये वशिष्ठेन निषेधजातं "पौष्णद्वये पित्र्यभयाम्यसार्पविष्णुद्वये नैधनजन्मभेषु। उत्पातपापग्रहदूषितेषु न कार्यमाधानमनिष्टलग्ने। उपप्लवे वैधृतपातयोश्च विष्ट्यां दिवा पारिघपूर्वभागे। सन्ध्यासु पर्वस्वपि मातृपित्रोर्मृतेऽह्नि पत्नीगमनं विवर्ज्यम्। दिनेषु युग्मेषु च वक्ष्यमाणयोगैः सुतार्थी स्वसतीमुपेयात्। दिनेष्वयुग्मेषु च कन्यकार्थी हित्वा च गण्डां स्तिथिलग्नभानामिति" वक्ष्यमाणयोगैः पुंयोगैः स्त्रीयोगैश्च। अत्र ग्रन्थकृता श्रवणधनिष्ठयोर्न निषेधः कृतः। वार्हस्पत्यसंहितायां तयोर्विशेषतो विहितत्वात्। तद्वचनमग्रेनैव वक्ष्यते। ननु षोडशिग्रहणाग्रहणवत् विहितप्रतिषिद्धत्वाद्विकल्पः कस्मान्न भवति ? सत्यम् बहूनामनुरोधोन्याय्य इति विधिरेवोचितः। अतएवोक्तं नारदेन "शुचिर्भूत्वा युग्मतिथावनग्नां कामयेत् स्त्रियम्। पुत्रार्थी पुरुषस्त्यक्त्वा पौष्णमूलाहिपित्र्यभमिति" "त्यक्त्वा पर्वतिथिं मूलमश्लेषां पैत्रभन्त्विति" काश्यपोक्तेः। तिथ्यादयः कश्यपेन कालविधाने उक्ताः। "षष्ठ्यष्टमीं पञ्चदशीं चतुर्थीं चतुर्दशीमप्युभयत्र हित्वा। शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशाङ्कार्यसितेन्दुजानामिति" अत्र वाक्ये चन्द्रबुधगुरुशुक्रवारा निषेककार्ये शुभा उक्ताः। अर्थादन्ये सूर्यभौमशनिवारा निषिद्धाः। उक्तञ्च कालनिर्णये "रिक्ता पर्वाष्टमी षष्ठी दिवा जन्मत्रयं तथा। पापग्रहाणां वाराश्च त्याज्याश्चैवान्ततो गतिरिति"। अतएव वृहस्पतिसंहितायाम् "शेषाण्युक्तानि दुष्टानि स्युर्निषेकाख्यकर्मणीत्युक्तं "सोमज्ञगुरुशुक्राणां वारा वर्गोदयाः शुभाः। तेषाञ्च दृष्टयश्चैव नेतरेषां कदाचनेति" अत्र केचिन्निषेके पुंवारा उत्तमाः स्त्रीवारौ मध्यमौ नपुंसकवारौ निषिद्धौ उक्तञ्च व्यासेन "पुरुषग्रहवाराः स्युः शुभाः सीमन्तकर्मणि। मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकाविति" अत्र सीमन्तग्रहणमुपलक्षणं गर्भाधानस्येत्याहुः। युक्तञ्चैतत् पुंस्त्रीवारेषु स्त्रीगमने पुरुषाः स्त्रियो वोत्पद्यन्ते इति तावदिष्टम्। नपुंसकवारगमने तु नपुंसकस्योत्पत्तिः स्यात्र हि सा कस्यचिदिष्टा भवेदिति नपुंसकबुधवारनिषेध एवोचितः। शनिनिषेधस्तूभयवादिसिद्ध एव दाक्षिणात्यशिष्टसमाचाराच्चातो बुधशन्योरेव निषेधोऽन्येषां ग्रहणमिति प्रतीमः। प्राच्यास्तु नैतत्सहन्ते तन्मते तु सूर्यभौमशनीनामेव निषेधः। नारदः "रजोदर्शनतोऽस्पृश्या नार्यो दिनचतुष्टयम्। ततः शुद्धाः क्रिया स्वेताः सर्ववर्णेष्वयं विधिः"। अत्रार्थवादमाह भरद्वाजः "प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी। तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति"। धर्मशास्त्रेऽपि "भर्त्तुः स्पृश्या चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला। पञ्चमेऽहनि योग्या स्याद्दैवे पित्र्ये च कर्मणि"। तस्मादेतावतो दोषांस्त्यक्त्वा स्त्रीगमनं हितमिति। ऋतुकालावधिमाह याज्ञवल्क्यः "षोडशर्त्तुर्निशाः स्त्रीणां तस्मिन् युग्मासु संविशेत्। युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु" अतः षोड़शदिनमध्ये गर्भाधानं विधेयम् तत्रैव गर्भसम्भवात्तत्र वाराः समीचीनाः प्रागुक्ता एवाधुना नक्षत्राण्याह गर्भाधानमिति। उत्तरात्रयमृगहस्तानुराधारोहिणीस्वातिश्रवणाधनिष्ठाशततारकासु गर्भाधानं सत् शुभदम्। उक्तञ्च वार्हस्पत्यसंहितायाम् "हरिहस्तानुराधाश्च स्वातीवारुणवासवम्। उत्तरात्रितयं सौम्यं रोहिणी च शुभाः स्मृताः। आधाने मूलसार्पान्त्यमशुभं सममन्यभमिति" एवं विहितनक्षत्रे सति चन्द्रबले गर्भाधानार्थं सकृदेव पत्नीगमनं कार्यमित्याह "याज्ञवल्क्यः। "एवं गच्छेत् स्त्रियं

त्तामां मघां मूलं च वर्जयेत् । सुस्थिरेन्दौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान्" चकाराद्रेवतीम् । भीमपराक्रमोऽपि "पित्र्यं पौष्णं नैर्ऋतं चापि धिष्ण्यं त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नाम् । पुष्टः क्षामां पुत्रकामोऽभिगच्छन् सल्लक्षण्यं पुत्रमाप्नोति पुष्टमिति" । तच्च गमनं मन्त्रपूर्वकम् । तदुक्तं विष्णुपुराणे "ऋतावुपगमः शस्तः स्वपत्न्यां मन्त्रतो द्विजेत्युक्तेः" इदन्त्वैवर्णिकविषयं प्रतीयते । मन्त्रास्तु "विष्णुर्योनिं कल्पयत्वित्येवमादयः । "एतैर्मन्त्रैर्दक्षिणेन पाणिना पत्न्यभिमृशेदिति गोभिलोक्तेः" पी० धा० । "केन्द्रत्रिकोणेषु शुभैश्च पापैस्त्र्यायारिगैः पुंग्रहदृष्टलग्ने । ओजांशगेऽब्जेऽपि च युग्मरात्रौ चित्रादितीज्यासु मध्यमं स्यात्" मु० चि० । अथ गर्भाधाने लग्नबलमिन्द्रवज्रयाह । केन्द्रेति अथ सामान्यतः शुभलग्नानि वसिष्ठोक्तानि वृषमिथुनकर्कसिंहकन्यातुलाधरचापझषाः शुभा भवन्ति । यदि शुभफलशालिनोऽनुकूला निधनविशुद्धियुता निषेककाले" इति । तत्र केन्द्रत्रिकोणेषु लग्नचतुर्थसप्तमदशमपञ्चमनवमस्थानेषु स्थितैः शुभग्रहैस्तथा त्र्यायारिगैस्तृतीयैकादशषष्ठस्थानस्थितैः पापग्रहैरुपलक्षिते पुंग्रहैः सूर्यभौमगुरुभिर्दृष्टे लग्ने तथौजांशगेन्दौ विषमराशिर्मेषमिथुनादिरंशोऽजादिरेव तत्र स्थिते चन्द्रे सति युग्मरात्रौ समरात्रौ गर्भाधानं कार्यम् यदाह जगन्मोहने वसिष्ठः"केन्द्रत्रिकोणेषु शुभाश्रितेषु लग्ने शशाङ्के च शुभैः समेते । पापैस्त्रिलाभारिगतैश्च यायात् पुंजन्मयोगेषु च संप्रयोगम्" नारदः "ओजराश्यंशगे चन्द्रे लग्ने पुंग्रहवीक्षिते । शुचिर्भूत्वा युग्मतिथौ ह्यनग्नां कामयेत् स्त्रियमिति । पुंग्रहादीनाह नारदः "पुंग्रहाः सूर्यजीवाराः स्त्रीग्रहौ शशिभार्गवौ । नपुंसकौ सौम्यसौरी शिरोमात्रं विधुन्तुदः" इति । अत्र पुंनपुंसकादियोगादयश्च वराहमिहिरेणोक्ताः "आधानलग्ने विषमांशराशौ जीवेन्दुजाभ्यां युतवीक्षिते वा । नान्यैः सुपुत्रस्त्वथ पापखेटैः पापी च मिश्रैर्बलिभिश्च मिश्रः । ओजर्क्षांशे लग्नगे वीर्ययुक्ते जीवेन्द्वर्कैरोजराश्यंशसंस्थैः । पुंजन्म स्याद्व्यत्यये कन्यका स्यान्मिश्रैः षण्ढो द्व्यङ्गगैर्द्विविलग्न । षण्ढो नपुंसकः "ओजांशकर्क्षाद्विषमर्क्षसंस्थः पुंजन्मकारी रविसूनुरेकः । विचार्य वीर्यं पुरुषग्रहाणां वाच्योऽत्र पुत्रस्त्वथ पुत्रिका वा । पापैश्च क्षेमं सुविचिन्त्य वाच्यमिति" । एवमन्येऽपि पुंजन्मादियोगा जातके द्रष्टव्याः । एषु यस्मिन् कस्मिंश्चित् पुंजन्मयोगे पुत्रार्थी युग्मतौ पत्नीं गच्छेत् । कन्याजन्मयोगे तु कन्यार्थी विषमरात्रौ पत्नीं गच्छेत् इति फलितोऽर्थः । अथ गर्भाधाने विहितनक्षत्राणामाप्तौ मध्यमनक्षत्राण्याह । चित्रेति चित्रापुनर्वसुपुष्याश्विनीषु तद्गर्भाधानं मध्यमं मध्यमफलदमित्यर्थः । यदाह बृहस्पतिः "चित्रादित्ये तथा तिष्यतुरगौ चेति मध्यमाः । शेषाण्यृक्षाणि दुष्टानि स्युर्निषेकाख्यकर्मणीति" अत्र केचित् दैवान्मानुषाद्वा प्रतिबन्धाद्भर्तुरसन्निधाने अनेकेषु ऋतुषु व्यतीतेषु यदि गर्भाधानाख्यः संस्कारो नाभूत्तदानीं दैवान्मध्ये भर्त्ता समागतश्चेत्तदा दक्षिणायने शुक्रास्तगुर्वस्तन्यूनाधिमासादिमहादोषसद्भावस्तदा गर्भाधानं नैव भवतीत्याहुः अतीतकालत्वात् यथा कालातीतेषु जातकर्म नामकर्मान्नप्राशनचौलादिसंस्काराः पूर्वोक्तदोषसद्भावे नैव भवन्ति । उक्तञ्च वसिष्ठेन "अतीतकालान्यखिलानि यानि कार्याणि सौम्यायनगे दिनेशे । गुरौ भृगौ वाप्यथ दृश्यमाने तदुक्तपक्षाङ्घ्रिदिनेऽथवाब्दे" इति सत्यम् । सत्यपि नर्णामतिक्रमे निमित्तानन्तरमेव नैमित्तिकमिति" न्यायेन "षोडशर्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत्" इति याज्ञवल्क्यवचसा षोडशदिनातिक्रमे ऋत्वन्तरमपेक्ष्य प्रागुक्तदिशा कालशुद्धिं विचार्य कार्यमेव । तदा बहुकालव्यापिनी कालशुद्धिरपेक्ष्यैव यतो विज्ञानेश्वरेण "तस्मिन् युग्मासु संविशेदिति" व्याख्यावसरे किमयं विधिर्नियमः परिसंख्या वेति त्रयः पक्षा उपन्यस्तास्तत्र स्त्रीगमने रागत एव प्रवृत्तेर्नियम एवायमिति सिद्धान्तितमतो गच्छेदेवेति नियमस्मरणात् ऋतावुपेयात् सर्वत्र वा प्रतिषेधवर्जमिति" गौतमस्मरणात् ऋत्वगमने प्रत्यवायोऽपि स्मर्यते "ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः" इति शातातपोक्तेः ।

"अथ गर्भाधानं विधाय पुंसा निद्रासमये किं कार्यमित्याह विष्णुः । "निद्रासमयमासाद्य ताम्बूलं वदनात् त्यजेत् । पर्यङ्कात् प्रमदां मालां पुण्ड्रपुष्पाणि मस्तकात्" इति" । पी० धा० । निषेकोत्तरं कार्य्यमाह आ० त० । "अत्र सम्यगाधानहेतुतया उत्तानकरचरणामेव कुर्व्वीत नातिर्य्यगाहितकरचरणां स्त्रियं ऋत्वभिगमनानन्तरं दक्षिणपार्श्वेन स्वापयेत् । पुरुषे स्थिते तु गर्भानुत्पत्तिरिति विशेषः । गर्भाधानञ्च गर्भस्य-

वालस्य तदाधारपात्रस्य च सीमन्तोन्नयनवत् संस्कारः "सीमन्तोन्नयनसंस्कारो गार्भपात्रसंस्कारः" इति श्रुतेः गर्भपात्रयोरयं संस्कार इति गार्भपात्रः गर्भस्य उदरस्थस्य, पात्रस्य तदाधारस्त्रियश्च। सीमन्तोनयनपदमुपलक्षणार्थम्। यदि दैवात् गर्भाधानादिसंस्कारा यथाकाले न कृतास्तदा प्रसवकालोत्तरं जातकर्माद्युत्तरसंस्कारकाले "अङ्के बालकं निधाय संस्कारः कार्य्यः यथाह राजमार्त्तण्डे "यं नार्य्यकृतसीमन्ता सूयते च कथञ्चन। अङ्के निधाय तं बालं पुनः संस्कारमर्हति"। तेन संस्कारेण च तदाधारे उत्पन्नानामपि संस्कारसिद्धिः "सकृच्च कृतसंस्काराः सीमन्ते न कुलस्त्रियः। यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत्" राजमार्त्तण्डात्।

लग्नभेदेन गर्भाधाने शुभाशुभं वृहज्जातके ४अ॰ निषेकाध्याये विस्तरेणोक्तं जातकपद्धतौ तु किञ्चित् संक्षिप्योक्तं यथा "आधानाङ्गात् सप्तमभे यादृशं कुरुते रतम्। करोति तादृक् पुरुषस्तुत्पत्तिं बलान्विताम्। रवीन्दुशुक्रभौमाश्चेत् स्वांशे वाथ गुरौ तनौ। नवमे पञ्चमे वा स्यादपत्यं पुंस्त्वशालि तत्। बलिष्ठौ स्वगृहांशेऽर्कशुक्रावुपचयर्क्षगौ। पुंसां,स्त्रीणां कुजेन्दू चेत् तदा गर्भस्य सम्भवः। भौमार्कौ सप्तमेऽर्कात् स्तो रुजे पुंसः, स्त्रिया विधोः। भौमार्किमध्ये सूर्येन्दू पुंस्त्रियोर्मृत्यवे क्रमात्। भौमार्कान्यतरेणार्कचन्द्रौ युक्तौ चितौ क्रमात्। पुंस्त्रियोर्मृत्युदौ प्रोक्तौ प्राक् सूतेः प्राक्तनैर्बुधैः। लग्ने वेन्दौ पापमध्ये शुभदृष्टिविवर्जिते। सगर्भस्त्रीमृतिः स्याद्वा यथा वामनभाषितम्। दिवा सूर्यशुक्रौ, शनीन्दू च रात्रौ, ४जले तातमातृप्रदौ व्यस्ततस्तौ। तयोः सोदरस्वस्रसंज्ञौ क्रमात्तु तयोरोजयुग्मर्क्षगौ सौख्यहेतू। कललं कठिनं हस्ताद्यस्थित्वग्लोमचेतनाः। अशनोद्वेगसूतिश्च मासेष्वीशाः क्रमादमी। भृग्वारेज्यार्कचन्द्रार्किज्ञाङ्गेशार्कदिवाकराः। मासेशे पीड़िते गर्भरोगः पुष्टिश्च सद्बले। (प्रथममासे कललं शुक्रशोणितमिश्रणरूपं तत्र शुक्रोऽधिपः। द्वितीये काठिन्यं तदीशः कुजः। तृतीयमासे हस्ताद्युत्पत्तिः गुरुस्तदीशः। चतुर्थेऽस्थ्युत्पत्तिः सूर्य्यस्तदीशः। पञ्चममासे चर्म्मोत्पत्तिश्चन्द्रोऽधिपः। षष्ठे रोमोत्पत्तिः शनिरधीशः। सप्तमे चैतन्यं बुधोऽधिपः। अष्टमे मातृभुक्तान्नादेर्नाड़ीद्वारेणाशनम्, तत्र गर्भाधानलग्नेशः स्वामी। नवमे उद्वेगः चन्द्रोऽधीशः। दशमे प्रसवः, सूर्य्यस्तदीशः आधानकाले उक्तग्रहे पीड़िते तत्तुल्यमासे गर्भपातादि बलयुक्ते तत्तन्मासे पुष्टिः)। विषमर्क्षनवांशेषु गुरुचन्द्राङ्गभानुषु। पुंजन्म समभांशेषु, स्त्रियस्तेषु समादिशेत्। सूर्य्येज्यौ विषमेंऽशे चेत् सबलौ पुंजनिप्रदौ। स्त्रियाः समांशे शुक्रेन्दू, कुजाद्द्व्यङ्गांशके यमम्। भानुमन्दज्ञदृष्टाश्चेत् पुंस्त्रीयुग्मं नवांशकात्। विषमर्क्षे शनिर्लग्नाल्लग्नं त्यक्त्वा न्टजन्मदः। इन्द्वृक्षे भसन्धिस्थैरशुभैर्मूकजन्मदः। व्ययेऽर्केन्दू दक्षवामनेत्रनाशकरौ मतौ। शनिभांशे तनौ, मन्दे सप्तमेऽब्दत्रयात् प्रयः। स्वांशे कर्कतनौ चन्द्रे द्यूने द्वादशवर्षतः। यत्संख्ये द्वादशांशे स्याच्चन्द्रः प्रश्ने ततःपरम्। तत्तुल्यराशिसहिते चन्द्रे सूतिं वदेत् सुधीः" आधानाध्यायः।

**गर्भावक्रान्ति** स्त्री अव+क्रम—भावे क्तिन् ६त॰। शारीरजीवस्य गर्भाशयप्रवेशनरूपे गर्भावतारे तच्च सुश्रुते शारीरस्थाने ३अ॰ "अथातो गर्भावक्रान्ति शारीरं व्याख्यास्यामः" इत्युपक्रम्य दर्शितं तच्च वाक्यं कायशब्दे १८२१पृ॰ दर्शितम्।

**गर्भाशय** पु॰ आशेतेऽत्र आ+शी—आधारे अच् ६त॰। गर्भाधारस्थाने गर्भशय्यायाम् "पुरुषेभ्योऽधिकाश्चान्ये नारीणामाशयास्त्रयः। एको गर्भाशयः प्रोक्तः पित्तपक्वाशयान्तरे" इति भावप्र॰ तस्य पित्तपक्वाशययोर्मध्यस्थत्वमुक्तम् "स्त्रीणां गर्भाशयोऽष्टमः"। "ततोऽग्निसोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते" "दैवसंयोगादव्ययोऽचिन्त्यः (आत्मा) भूतात्मना सहान्वक्षं सत्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाऽभिप्रेर्य्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते" इति च सुश्रुतः। तदाधारावरकत्वात् २जरायौ अमरः।

**गर्भाष्टम** पु॰ गर्भात् गर्भकालात् अष्टमः। गर्भविशिष्टे अष्टमे मासवर्षादौ। "गर्भाष्टमो दैवमासः" त्रिका॰। "गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्। गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः" मनुः "उत्तरत्र गर्भादिति निर्देशेन गर्भाष्टमे इत्यत्रापि अवध्यर्थकपञ्चम्या "सह सुपेति" पा॰ समा॰।

**गर्भास्पन्दन** न॰ गर्भस्यास्पन्दनम्। "गर्भक्षये गर्भास्पन्दनमुन्नतकुक्षिता च" सुश्रुतोक्ते गर्भक्षयचिह्ने। "गर्भास्पन्दनमावीनां(गर्भिणीनां) प्रणाशः श्यावपाण्डुता" सुश्रु॰।

**गर्भास्राव** पु॰ गर्भस्यास्रावः। गर्भस्रावे तच्छब्दे उदा॰।

**गर्भिणी** स्त्री गर्भोऽस्त्यस्याः इनि ङीप्। गर्भवत्यां सगर्भायां

स्त्रियाम् अमरः। गर्भिणीलिङ्ग गर्भवतीशब्दे उक्तम्। गर्भिणीतत्पतिकर्त्तव्याकर्त्तव्यादि नि०सि०उक्तं यथा "गर्भिणी कुञ्जराश्वादिशैलहर्म्यादिरोहणम्। व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत्। शोकं रक्तविविमोक्षं च साध्वसं कुक्कुटासनम्। व्यवायं च दिवास्वप्नं रात्रौ जागरणं त्यजेत्" कश्य०। मदनरत्ने स्कान्दे "हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्ज्वलं तथा। कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं शुभम्। केशसंस्कारकबरोकरकर्णविभूषणम्। भर्त्तुरायुष्यमिच्छन्ती वर्जयेद्गर्भिणी न हि" वृहस्पतिः "चतुर्थे मासि षष्ठे वाप्यष्टमे गर्भिणी यदा। यात्रा तया विवर्ज्या स्यादाषाढे तु विशेषतः" याज्ञवल्क्यः "दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात्। वैरूप्यं मरणं वापि तस्मात् कार्य्यं प्रियं स्त्रियाः" दौहृदं गर्भिणीप्रियम्। तत्रैवाश्वलायनः "वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः। श्राद्धञ्च सप्तमान्मासादूर्द्ध्वं चान्यत्र वेदवित्। श्राद्धं तद्भोजनमिति प्रयोगपारिजातः। कालविधाने मुहूर्त्तदीपिकायाञ्च "चौरं शवानुगमनं नखकृन्तनं च युद्धादि वास्तुकरणं त्वतिदूरयानम्। उद्वाहमौपनयनं जलधेश्च गाहमायुःक्षयार्थमिति गर्भिणिकापतीनाम्" रत्नसंग्रहे गालवः "दहनं वपनञ्चैव चौलं वै गिरिरोहणम्। नाव आरोहणं चैव वर्जयेद्गर्भिणीपतिः" अन्यत्रापि "प्रव्यक्तगर्भापतिरब्धियानं सृतस्य वाहं क्षुरकर्मसङ्गम्। तस्यानुयत्नेन गयादितीर्थं यागादिकं वास्तुविधिं न कुर्य्यात्"। प्रव्यक्तगर्भा वनिता भवेन्मासत्रयात् परम्।(मासत्रयादूर्द्ध्वम्)षण्मासात् परतः सूतिर्नवमे रिष्टवासिनी" अथ सूतिकागृहप्रवेशः "रोहिण्यैन्द्रवपौष्णेषु स्वातीवरुणयोरपि। पुनर्वसौ पुष्यहस्तधनिष्ठासूत्तरासु च। मैत्रे त्वाष्ट्रे तथाश्विन्यां सूतिकागारवेशनम्" एतच्च सम्भवे "प्रसूतिसमये काले सद्य एव प्रवेशयेदिति" वसिष्ठोक्तेः तदुक्तञ्च नैर्ऋत्यां कार्य्यम् "वारुण्यां भोजनगृहं नैर्ऋत्यामथरिष्टकमिति" वसिष्ठोक्तेः विष्णुधर्मे "दद्याद्गृहं सूतिकागारमायुधैश्च विशेषतः। वह्निना तिन्दुकालातैः पूर्णकुम्भैः प्रदीपकैः। सुयत्नेन तथा वारिवर्णकैश्चित्रितेन चेति"।

"गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः। ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं (करम्) तरेः" मनुना द्विमासोर्द्ध्वं तस्या नौशुल्कादायकत्वमुक्तम्। अतिथेरग्र एव तस्याभोजनं मनुनोक्तं यथा "सुवासिनीः कुमारांश्च रोगिणोगर्भिणीस्तथा। अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन्"। "बालं सुवासिनीवृद्धगर्भिण्यातुरकांस्तथा। "संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम्" याज्ञ०। जात्या सह कर्म्म० अस्य परनिपातः। गोगर्भिणी।

**गर्भिणीदौहद** न० ६त०। गर्भिण्याकाङ्क्षिते द्रव्यभेदे तस्य दानावश्यकता सुश्रुते उक्ता तत्र चतुर्थे यांभिप्रायमिन्द्रियार्थेषु करोतीत्यादि वाक्यं २११६ पृ० उक्तं "इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी" सुश्रुतः। [त्रिका०।

**गर्भिणीविचण** न० ६त०। कुमारभृत्यायां गर्भिणीपरिचर्य्यायाम्

**गर्भित** त्रि० गर्भो जातोऽस्य तार० इतच्। १जातगर्भे २काव्यदोषभेदे न०। दोषशब्दे विवृतिः।

**ग(र्भे)र्भाङ्क** पु० गर्भे अङ्कमध्येऽङ्कः वा अलुक्स०। "अङ्कोदरप्रविष्टो यो रङ्गद्वारा मुखादिमान्। अङ्कोऽपरः स गर्भे(र्भा)ङ्कः सबीजः फलवानपि" सा०द० उक्ते नाटकाङ्काङ्कमध्यप्रविष्टाङ्के। यथा बालरामायणे सीतास्वयंवरनामा ग(र्भे)र्भाङ्कः।

**गर्भेतृप्त** त्रि० गर्भे शिशौ अन्ने वा तृप्तः अलुक् स०। १शिशौ २अन्ने च तृप्ते। युक्तारोह्या० आद्युदात्तताऽस्य।

**गर्भोपघात** पु० गर्भस्य उपघातः। १जातगर्भस्य नाशे मेघस्य २जलोत्पादनशक्तिनाशे च तल्लिङ्गानि "गर्भोपघातलिङ्गान्युल्काशनिपांशुपातदिग्दाहाः" इत्यादि वृ०स० २१अ० उक्तं तच्च गर्भशब्दे दर्शितम्।

**गर्भोपघातिनी** स्त्री गर्भमुपहन्ति उप+हन+णिनि। गर्भघातिन्यां स्त्रीगव्यादौ अमरः।

**गर्भोपनिषद्** स्त्री गर्भस्वरूपावेदिका उपनिषद्। उपनिषदन्तर्गते गर्भस्वरूपाद्यावेदके उपनिषद्भेदे उपनिषच्छब्दे विवृतिः। तत्स्वरूपादि ऐतरेयोपनिषद्यपि संक्षेपेणोक्तं तच्च कायशब्दे १८२५ पृ० "पुरुषे ह वा आदितो गर्भः इत्याद्युक्तम्। [धान्यभेदे रत्नमाला।

**गर्मुच्छद** पु०गर्म्मुतो नडस्य छद इव छदोऽस्य। (मेडुया)

**गर्मुटिका** स्त्री गर्मुत इव उटं पर्णमस्य शक० टेः पररूपैकादेशः टापि अत इत्त्वम्। (मेडुया) इति ख्याते धान्यभेदे रत्नमाला।

**गर्म्मुत्** स्त्री गृ–बा०उति मुट् च।(मेडुया)१धान्यभेदे अमरः। २नडे तृणभेदे ३स्वर्णे च मेदि०।

**गर्व** मदे भ्वा० पर० सक० सेट्। गर्वति अगर्वीत्। जगर्व। गर्वितः। गर्वः। "खर्वे! गर्वसमूहपूरिततनो!" तारास्तवः।

**गर्व** पु० गर्व—घञ्। अभिमाने, "ऐश्वर्यरूपतारुण्यकुलविद्याबलैरपि। इष्टलाभादिनान्येषामवज्ञा गर्वः ईरितः" इत्युक्ते २अवज्ञाभेदे "गर्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः। "अवज्ञासविलासाङ्गदर्शनाऽविनयादिकृत्" सा० द० उक्ते ३व्यभिचारिभावभेदे। अमरे अहङ्कारपर्य्यायतोक्तिः ईषद्भेदमनादृत्यैव।

**गर्वाट** पु० गर्वेणाटति अट—अच् ३त०। द्वारपाले त्रिका०।

**गर्वित** त्रि० गर्व—कर्त्तरि क्त गर्वो जातोऽस्य तार० इतच् वा। १मत्ते २जातगर्वे "यूथं तदग्रसरगर्वि(र्वि)तकृष्णसारम्" "प्रेमगर्वितविपक्षमत्सरात्" रघुः।

**गर्ह** निन्दायां वा चुरा० पक्षे भ्वा० आत्म०सक०सेट्। गर्हयते गर्हते अजगर्हत अगर्हिष्ट। गर्हयाञ्चक्रे जगर्हे:गर्हणा "न गर्हयेयुरस्मान् वै पाण्डवार्थाय कर्हिचित्" भा० आ० ५७२१ श्लो०। "गर्हयन्तोऽस्य साहसम्" भा०व०१८१अ० पदव्यत्यय आर्षः। उपसर्गपूर्वकस्तु तद्द्योत्यार्थयुक्ते निन्दने। "विगर्हितं धर्मधनैर्निबर्हणम्" नैष०।

**गर्ह** कुत्सायां भ्वा० आ० सक० सेट्। गर्हते अगर्हिष्ट जगर्हे गर्हणम् गर्हितः गर्हा। "स एव धर्मो राज्ञां तु तद्वितं किन्तु गर्हणम्" भा० आ० ११८अ०। "केचिद्भीष्मं जगर्हिरे" भा० स०४१अ०। "न कुत्सयाम्यहं किञ्चिन्न गर्हे बलवत्तरम्" र० २०६अ०। "विषमां च दशां प्राप्तो देवान् गर्हति वै भृशम्" २०८ अ०। आर्षः पदव्यत्ययः। "गर्हितान्नस्य जग्धिः" मनुः।

**गर्हा** स्त्री गर्ह—अ। १निन्दायाम् "येन येनाचरेद्धर्मं तस्मिन् गर्हा न विद्यते" भा० अ० ६०५६ श्लो०। चुरा० गर्ह—भावे युच्। गर्हणाऽप्यत्र स्त्री।

**गर्ह्य** त्रि० गर्ह—ण्यत्। १निन्द्ये २अधमे अमरः।

**गर्ह्यवादिन्** त्रि० गर्ह्यं वदति वद—णिनि। कुत्सितवादिनि कद्वदे अमरः स्त्रियां ङीप्।

**गल** भक्षणे सक०स्रावे (गड़ा)अक०भ्वा०पर०सेट्। गलति अगालीत्। "निर्गलिताम्बुगर्भम्" रघुः। "गलितं त्वराविरहितासनयाः" माघः "प्राक्शोकनिर्गलितनेत्रपयःप्रवाहान्" नैष०। "विपक्षे गलितादरौ" "पर्य्यागलदच्छबिन्दुः" "सुप्रलाद्यगलत्ततः" भट्टिः। "प्रच्छदान्तगलिताश्रुबिन्दुभिः"। "विगाह्यमानो गलिताङ्गरागैः" रघुः।

**गल** स्रावणे (गालान) चुरा० आत्म० सक० सेट्। गालयते अजीगलत गालयाञ्चक्रे। गालः। गालितः। "पञ्चगोमूत्रगलितम्" चक्रदत्तः।

**गल** पु० गल—भक्षे बा० करणे अच्। १कण्ठे (गला) अमरः। कर्त्तरि अच्। २सर्ज्जरसे (धुना) ३वाद्यभेदे, ४गड़कमत्स्ये च शब्दरत्ना०। "गले गृहीत्वा क्षिप्तोऽस्मि" भा० आनु० १५४ अ०। अस्य स्वाङ्गत्वेऽपि क्रोड़ा० न ङीष्। छिन्नगला। बह्वा० स्त्रियां ङीष्। गली इत्यपि तत्रैव स्त्री।

**गलक** पु० गल—बा० वुन्। (गड़इ) १मत्स्ये शब्दार्थचि०।

**गलकम्बल** पु० गले कम्बल इव। सास्नायां गवां गलस्थिते रोमशे मांसपिण्डे अमरः।

**गलगण्ड** पु०७त०। (गरगण्ड)। रोगभेदे। तल्लक्षणादि यथा "निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले। महान् वा यदि वा ह्रस्वो गलगण्डं तमादिशेत्। निबद्धो दृढः अचलो वा। मुष्कवत् अण्डवत्। गले इति हनुमन्योरुपलक्षणम्। तथा च भोजः "महान्तं शोथमल्पं वा हनुमन्यागलाश्रयम्। मुष्कवल्लम्बमानं तु गलगण्डं विनिर्दिशेत्" संप्राप्तिमाह वातः कफश्चापि गले प्रदुष्टो मन्ये तु संसृत्य तथैव मेदः। कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः। क्रमशः शनैः शनैः स्वलिङ्गैः वातकफमेदोलक्षणैः। तत्र वातिकमाह। तोदान्वितः कृष्णसिरावनद्धः श्यावारुणो वा पवनात्मकस्तु। पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात् कदाचित्। वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः। चिरवृद्ध्यपाकः चिरेण वृद्धिरपाकश्च यस्य सः। श्लैष्मिकमाह स्थिरः सवर्णो गुरुरुग्रकण्डुः शीतो महांश्चापि कफात्मकस्तु। चिराच्च वृद्धिं भजतेऽचिराद्वा प्रपच्यते मन्दरुजः कदाचित्। माधुर्य्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगले प्रलेपः। कदाचित् प्रपच्यते वा पाकोऽपि चिराद्भवति। प्रलेपः श्लेष्मणा। मेदोजमाह स्निग्धो मृदुः पाण्डुरनिष्टगन्धो मेदोऽन्वितः कण्डुयुतोऽरुजश्च। प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः। स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेन शब्दं कुरुते च नित्यम्। देहक्षये कार्श्ये क्षयं, देहवृद्धौ वृद्धिं यातीत्यर्थः। असाध्यमाह "कृच्छ्राच्छ्वसन्तं मृदुसर्वगात्रं संवत्सरातीतमरोचकार्त्तम्।

च्चीणस्य वैद्यो गलगण्डयुक्तं भिन्नस्वरं नैव नरं चिकित्सेत्" भावप्र० । "यवमुद्गपटोलानि कटुरूक्षञ्च भोजनम्। छर्दिं सरक्तमोक्षौ च गलगण्डे प्रयोजयेत्" चक्रद० ।

**गलग्रह** पु० "आरम्भानन्तरं यत्र प्रत्यारम्भो न दृश्यते । गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रहम्" १नारदोक्ते आरम्भदिनात् परं स्वल्पज्ञानध्ययदिनपातेन प्रत्यारम्भाभाववति, पदार्थे, "कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशीचतुष्कञ्च अष्टावेते गलग्रहाः" राजमार्तण्डोक्ते २तिथ्यष्टके च । ३व्यञ्जनभेदे ४मत्स्यकण्टके शब्दार्थचि० ।

**गलतुकुष्ठ** न० कर्म० । स्वयदूचिरादौ कुष्ठभेदे । भ्रातृभार्य्याभिगमनात् गलत्कुष्ठं प्रजायते,' शातातपेन तस्य भ्रातृभार्य्यागमनकर्मविपाकतोक्ता ।

**गलन** न० गल+भावे ल्युट् । १क्षरणे (गला)"गलदा धमनयो भवन्ति गलनमासु धीयते" निरु० ६।२४ । २स्वयं पतने च कर्त्तरि ल्यु । ३स्राविणि त्रि० "गलनस्नानफलानि च दन्तस्य समानि भङ्गेन" बृह० ८४अ०।

**गलन्तिका** स्त्री गल–शतृ ङीप् अल्पार्थे कन् । स्वल्पवारिधारायुतायां (झारा) कर्कर्य्याम् "प्रपा कार्या च वैशाखे देवे देया गलन्तिका" क.दी०५अ० ।

**गलमेखला** स्त्री गलस्य मेखलेव । कण्ठाभरणभेदे हारा० ।

**गलवार्त्त** त्रि०गले गलव्यापारे यथेष्टभोजनादौ वार्त्तः निरामयः । यथेष्टभोजनयोग्ये निरामये । "दृश्यन्तेचैव तीर्थेषु गलवार्त्तास्तपस्विनः"पञ्चतन्त्रम् ।

**गलविद्रधि** पु० "सर्वं गलं व्याप्य समुत्थितोयः शोफोरुजोयत्र वसन्ति सर्वाः । स सर्वदोषो गलविद्रधिस्तु" सुश्रुतोक्ते कण्ठगते रोगभेदे "अमर्मस्थं सुपक्वञ्च भेदयेद्गलविद्रधिम्" सुश्रु० ।

**गलव्रत** स्त्री गरो गरणं सर्पभक्षणं व्रतमस्य रस्य लः। मयूरे त्रिका० स्त्रियां जातित्वात् ङीष् ।

**गलशुण्डिका** स्त्री अल्पा शुण्डा कन् शुण्डिका गले शुण्डिकेव। (आलजिव)।१उपजिह्वायाम् हेमच०। "तालूदरं वस्तिशीर्षं चिवुके गलशुण्डिके" याज्ञ० । तालुगते कण्ठशुण्डीख्याते २रोगभेदे कण्ठशुण्डीशब्दे १६६५ पृ० लक्षणादुक्तम् ।"तालुगतास्तु गलशुण्डिकेत्यादि" सुश्रु०। "श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो दीर्घः शोफो ध्मातवस्तिप्रकाशः" "गलशुण्डिका" सुश्रु० अधिमांसार्बुदार्शोऽधिजिह्वोपजिह्वोपकुशगलशुण्डिका"इत्युपक्रमे गलगण्डमाला प्रभृतयोमांसदोषजा"सुश्रुतेन तस्याः मांसदोषजत्वमुक्तम् ।

**गलस्तन** पु० गले स्तन इव । छागगलस्थे स्तनाकारे मांसपिण्डभेदे । स च दुग्धक्षरणहीनत्वात् निष्फलः यथोक्तं दृष्टान्तविधया वशिष्ठसिद्धान्ते "चलसंक्रमयुक्मासे संक्रमोऽमः स संक्रमः। अजागलस्तन इव राशिसंक्रान्तिरुच्यते" । [छाग्याम् । हेमच० ।

**गल(ले)स्तनी** स्त्री गले स्तनो यस्याः वा अलुक्स० ।

**गलहस्त** पु० गले न्यस्तो हस्तः । १अपसारणार्थं गलेऽर्पिते हस्ते (गलाटिपि) । "देवलवचनं गलहस्तः" दायभागः "अनिच्छन् गलहस्तेन तामिभिर्निर्वासितस्तदा" कथास० । स जातोऽस्य तार० इतच् । गलहस्तित जातगलहस्ते । "अर्द्धेन्दुलीलैर्गलहस्तितेव" नैष० । तदाकृतित्वात् २अर्द्धचन्द्राख्ये वाणभेदे पु० । ३कृष्णत्रिवृति स्त्री मेदि० ।

**गला** स्त्री गलति गल–अच् । लज्जालुलताभेदे, शब्दार्थचि० ।

**गलाङ्कुर** पु० "गलेऽनिलः पित्तकफौ च मूर्च्छितौ प्रदूष्य मांसं च तथैव शोणितम्। गलोपसंरोधकरैस्तथाङ्कुरैर्निहन्त्यसून् व्याधिरयं तु रोहिणी" माधवकरोक्ते रोहिणीरूपकण्ठजातरोगाङ्के अङ्कुराकारे पदार्थे। "गलेऽनिलः पित्तकफौ च मूर्च्छितौ पृथक् समस्ताश्च तथैव शोणितम् । प्रदूष्य मांसं गलरोधिनोऽङ्कुरान् सृजन्ति यान् साऽसुहरा तु रोहिणी"इति सुश्रुते रोहिणीरोगस्य गलजाताङ्कुरसर्जनकारित्वमुक्तम्।

**गलानिल** पु० गलेऽनिलः ग्रासवायुरस्य । (मलता चिङ्गिटि) मत्स्यभेदे । त्रिका० । गलाविल इति पाठः।

**गलि** पु० गडि–डस्य लः । (गडियागरु) सामर्थ्येऽपि भारावाहके १वृषे हेमच०। गल इन्। २लतायां स्त्री उज्ज्वल०।

**गलित** त्रि० गल–क्त । १पतिते मुक्ते, च्युते, हस्तादितो भ्रष्टे अमरः । गलधातौ उदा०२परिणते च । "गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्"रघुः ।

**गलितक** पु० गलित इव कायति कै–क । पतितवज्राख्यभेदे नाट्यशब्दे विवृतिः । "गलितकः" विक्रमो०५अ०।

**गलितकुष्ठ** न० कर्म० । गलत्कुष्ठे । [त्रिका० ।

**गलेगण्ड** पु० गलेगण्ड इव यस्य । पक्षिभेदे (हाड़गिला)

**गलेचोपक** त्रि० गले चुप्यतेऽसौ चुप–णि० कर्मणि ण्वुल् अलुक्स० । कण्ठे कर्त्तनीये । गलेचोपकपादहारकौ" कुश्च० ।

**गलोड्य** न०गलेन वोढ्यः पृषो० ललोपः । धान्यभेदे "शालिषष्टिकनलयञ्जुलतालीशशृङ्गाटकगलोड्यगौरीगिरिकशैवलपद्मकपलप्रभृतिभिर्धान्याम्लपिष्टैः प्रदेहो घृतमिश्रः" सुश्रु० । [ यवे निगाले अमरः ।

**गलोद्देश** पु० गलस्य उद्देशः समीपम् । गलसमीपस्थे ऽव-

**गलोद्भव** पु० गले अश्वगलदेशे उद्भवति उद्+भू–अच् । अश्वगलजाते रोचमानाख्ये रोमावर्त्तभेदे त्रिका० ।

**गलौघ** पु० गले ओघ इव । "तस्यैव (गलविद्रधेः) तुल्यः खलु सर्वजस्य । शोफो महानन्नजलावरोधी तीव्रज्वरो वातगतेर्निहन्ता । कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्यतेऽसौ" सुश्रुतोक्ते कण्ठगतरोगभेदे ।

**गलद्** स्त्री गल–क्विप् गल+पृषो०वा तेन गला गलेन वा दीयते दा–कर्मणि घञर्थे क । १वाचि निघ० गलद इति पाठान्तरम् । गलितं गल् धीयते आसु धा–घञर्थे क पृषो०धस्य दः । धमनीभेदे"आ त्वा विशन्त्विन्दव आ गलद्रा धमनीनाम्" । इमामृचमधिकृत्य गलद्रा धमनयो भवन्ति गलनमासु धीयते" निरु० ६।२४ ।

**गल्भ** धार्ष्ट्ये (प्रागल्भ्ये) भ्वा० आ० सक० सेट् । गल्भते अगल्भिष्ट जगल्भे । "या कथञ्चन सखीवचनेन प्रागभि प्रियतमं प्रजगल्भे" माघः। गल्भ+च्व्यर्थे क्यङ् गल्भायते अगल्भायिष्ट ।

**गल्या** स्त्री गलानां कण्ठानां समूहः पाशा० यत् । १कण्ठसमुदाये । गलो छन्दस्कारास्तेषां २समूहे शब्दार्थचि० ।

**गल्ल** पु० गल–ल तस्य नेत्त्वम् । (गाल) गण्डे । हेमच० ।

**गल्लक** पु० गलति क्विप् गल् तं लाति स्व्हरूपाति ला–क ततः स्वार्थे क । १चषके मद्यपानपात्रे हेमच० । २इन्द्रनीलमणौ त्रिका० । पृषो० वमध्यता इत्येके ।

**गल्लचातुरी** स्त्री गल्ले चातुरी यस्य, संज्ञात्वात् न कप् न वा ह्रस्वः (गालवालिश) ख्याते उपधानभेदे जटा० ।

**गल्वर्क** पु० गलति गल–उन् गलर्कौ दीप्तिरस्य । मसारे १मणिभेदे त्रिका० । तत्र "गल्वर्कस्तु मसारवत् । अश्मसारस्त्विन्द्रनीलः" इत्युक्तौ अश्मसारशब्दोत्तरं तुकारात् गल्वर्कशब्दस्य न इन्द्रनीलार्थता शब्दकल्पद्रुमे तदर्थतोक्तिः प्रामादिकी । २पद्मरागे मणौ च ।"मसारगल्वर्कसुवर्णरूप्यैः"भा० द्रो०१६अ० । "मसार इन्द्रनीलः(अश्मसारत्वात्) गल्वर्कः पद्मरागः" (अर्कदीप्तिकत्वात्) नील० ३चषकपात्रे हेमच० । रक्तवर्णसुरालेपेन सूर्य्यकरतुल्यवर्णत्वात्तस्य तथात्वम् ।

**गल्ह** कुत्सने भ्वा० आ० सक० सेट् । गल्हते अगल्हिष्ट । जगल्हे ।

**गवाची** स्त्री गां भूमिमञ्चति अन्च–क्विप् अवङादेशः ङीप् अचोऽल्लोपः पृषो० न दीर्घः । इन्द्रवारुण्याम् (राखालशशा) रत्नमाला ।

**गवय** पुंस्त्री गुङ् शब्दे भावे अप् गवं शब्दभेदं याति या–क, गां तदवयवं सादृश्येनायते अय–कच वा । गलकम्बलशून्ये गोसदृशे मृगभेदे अमरः "ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् । सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम् । गवयादिपदानां तु शक्तिधीरुपमाफलम्" भाषा० । "दृष्टः कथञ्चिद् गवयैर्विविग्नैः" कुमा०। स्त्रियां योपधत्वेऽपि योपधप्रतिषेधे गवयहयादीनामप्रतिषेधात् ङीष् । अस्य मांसपाकविधिर्यथा । तैले संपाचिते तप्ते हिङ्गुसैन्धवसंयुतम् । मांसं गवयसम्भूतं सुस्विन्नं भूरिवारिणा" । भावप्र० तद्गुणा उक्ता यथा "गवयो मधुरो हृद्यः स्निग्धोष्णः कफपित्तलः । विदाही गुरुविष्टम्भी विपाके विरसः सदा" । २वैवस्वतपुत्रे वानरभेदे ।"पुत्रा वैवस्वतस्यासन् पञ्च कालान्तकोपमाः । गयो गवाक्षो गवयः शरभो गन्धमादनः" रामा०उत्त० ।

**गवराज** पु० गवेन शब्देन राजते राज–अच् । वृषे शब्दच० ।

**गवल** पुंस्त्री गुङ् शब्दे भावे अप् गवं शब्दभेदं लाति ला–क । महिषे हेमच० । "गवलाजवशस्तथा" ति०त० । "गवलालिकुलाहिनिभाविसृजन्ति पयः पयोवाहाः" वृ० सं० २२अ० । "बभौ तरङ्गिर्गवलासितद्युतिः" माघः । स्त्रियां ङीष् ।

**गवलगण** पु० सञ्जयपितरि सूतभेदे । "सञ्जयो मुनिकल्पस्तु जज्ञे सूतो गवलगणात्" भा० आ० ६३अ० ।

**गवाक्ष** पु०गवामक्षीव अचि–षच् समा० नित्यमवङ्, गावः सूर्यकरा जलानि वा अक्ष्णुवन्ति व्याप्नुवन्ति एतमनेन वा अक्ष–व्याप्तौ अकर्त्तरि घञ् । वातायने (जानेला) अमरः । "गवाक्षजालैरभिनिष्पतन्त्यः" भट्टिः "उत्पक्ष्मलीलाञ्चितमा गवाक्षात्" "विलोलनेत्रभ्रमरैर्गवाक्षाः" कुमा० । "कुवलयितगवाक्षा लोचनैरङ्गनानाम्" रघुः । २वैवस्वतपुत्रे वानरभेदे रामा० गवयशब्दे दृश्यम् । गां भूमिमक्षति व्याप्नोति अक्ष गौरा० ङीष् स्त्रि० कौ०सुग्ध०घण् ईप् । ३गोदुम्बायां(गोमुक्)। अमरः।ङीप्रन्तः ४इन्द्रवारुण्याम् ( राखालशशा ) ५शाखोटे(शेओड़ा)राजनि०।६अपराजितायाम् रत्नमा०।

**गवाची** स्त्री गवचीवत् किन्तु पूर्वाणो दीर्घः।(पाँकाल)मत्स्य-भेदे "गवाच्यजीर्णकारी च गुर्वी श्लेष्मप्रकोपिनी" राजव०

**गवादन** न० गोभिरद्यते अद्—कर्मणि ल्युट् अवङ् । १घासे अमरः। इन्द्रवारुण्यां स्त्री ङीप् शब्दच०। २नीलापारि-जातायाम् स्त्री राजनि०। आधारे ल्युट् ङीप् । २गवां भक्षणाधारे पात्रे (डावा)स्त्री मेदि०।

**गवादि** पु० पा० गणसूत्रोक्ते हितार्थे यत्प्रत्ययप्रकृतिरूपे शब्दगणे स च "गो हविस् अक्षर विष बर्हिस् अष्टका स्खदा युग मेधा स्रु च (नाभि नभञ्च) (शुनः संप्रसारणं वा च दीर्घत्वं तत्सन्नियोगेन चान्तोदात्तत्वम्) ।(ऊधसो-ऽनङ् च) कूप खद दर खर असुर अध्वन् क्षर वेद वीज दीप्त। "गवादिभ्यो यत्" पा० हितादौ गव्यम्

**गवाधिका** स्त्री गवा किरणेनाधिकायति अधि—कै क । लाक्षायां त्रिका० । अत्र गवाषिकेति पाठः प्रामादिकः

**गवानृत** न० गवि गोविषयेऽनृतम् अवङादेशः । गोविषये मिथ्याकथने ; "गवानृते पञ्चशतं सहस्रं पुरुषानृते" स्मृतिः ।

**गवामयन** न०दशमाससाध्ये द्वादशमाससाध्ये च सत्रभेदे तद्वृत्तिः ता० ब्रा० ४अध्यायादौ ।

तत्र ताण्ड०ब्रा० ४अ० भाष्ये तस्य द्वैविध्यमुक्त्वा तत्रा-हानि यथा कर्त्तव्यानि तथोक्त्वा तच्छब्दप्रवृत्तिनिमित्त-ज्ञानाय श्रुतिमवतारयन् व्याचख्यौ यथा

"स्तोमानां दशरात्रस्य प्रोक्ता विष्टुतयः क्रमात् । गवाम-यनिकानां च ता एवेत्यवगम्यते। शतानि त्रीणि षष्टिश्च विषुवांश्च चतुर्थके । प्रोक्तानि गव्यसत्रस्य सुत्याहानि क्रमादिह । तानि संदृश्य वक्ष्यन्ते बुद्धिव्युत्पत्तिसिद्धये ।

द्विविधं गवामयनं दशमाससाध्यं द्वादशमाससाध्यञ्च तस्य द्वादशमासनिर्वर्त्यस्य प्रायणीयोऽतिरात्रः प्रथममह-स्ततश्चतुर्विंशः उक्थ्य आरम्भणीयः ते उभे अहनी अनु-ष्ठाय ज्योतिर्गौरायुर्गौरायुर्ज्योतिरित्याभिप्लविकः षडहः स चतुर्वारमावर्त्तनीयः ततस्त्रिवृदादिस्तोमस्तुत्यकसाध्यः पृष्ठ्यः षडहः एवं पञ्चभिः षडहैरेको मासः पूर्य्यते एत-स्यैवावर्त्तनेन पञ्च मासाः सम्पाद्याः तत्र षष्ठे मासादौ त्रयोऽभिप्लवाः षडहाः कार्य्याः ततः एकः पृष्ठ्यः षडहः ततोभिजिदेकमहः त्रयः स्वरसामान इत्येवमष्टाविंशत्य-हानि आद्याभ्यां प्रायणीयचतुर्विंशाभ्यां षष्ठमासपूरणम् । इत्थं पूर्वपक्षे अशीत्युत्तरशतसंख्यान्यहानि सम्पन्नानि । ततो विषुवमेकमहः सोऽस्य सत्रस्य प्रधानभूतः । सप्तमे मासादौ त्रयः स्वरसामानः प्रतिलोमाः कार्य्याः । ततो विश्वजिदावृत्तः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भस्त्रिवृदुत्तमः ततस्त्रयोऽभिप्लवाः षडहाः आवृत्ताः एवमष्टाविं-शत्यहानि स्युः अस्य च मासस्य महाव्रतातिरात्रौ च ततोभिधास्यमानौ पूरकौ स सप्तमो मासः। ततः पृष्ठ्यः षडहः पूर्वोक्तैश्चतुर्भिराभिप्लविकैः प्रतिलोमक्रमेणानुष्ठितै-रष्टमोमासः अनयावृत्त्या नवमदशमैकादशा अपि स-म्पाद्याः द्वादशमासस्यादौ त्रयोभिप्लवाः, षडहः, ततो गोरायुषी द्वे अहनी द्वादशाहस्य दशाहानि चेति त्रिंशाहानि स द्वादशो मासः ततो महाव्रतमुपान्त्यमहः तेन उदयनीयातिरात्रौ इत्यपि सप्तममासस्य पूरकाविति तदेतद्गवामयनसत्रं विधास्यन् तन्नामनिर्वचनप्रदर्शनाया दावाख्यायिकामाह" भा०

"गावो वा एतत् सत्रमासत तासां दशसु मासेषु शृङ्गा-ण्यजायन्त ता अब्रुवन्नरात्स्मोत्तिष्ठामोपशा नोऽज्ञतेति ता उदतिष्ठन्" ता०ब्रा०४।१।१। "पुरा खलु गावः एतत्-संवत्सरसत्रमासत अन्वतिष्ठन् आसचोदना अपरचोदना च तत्र लिङ्गमिति मीमांसकाः । अत्रासरूपपूर्वतिथे चानुष्ठाने ये वर्त्तन्ते तदन्यैरनुष्ठितम् अत इदं गवामयनमित्याचक्षते तासां सत्रस्थितानां मध्ये कासा-ञ्चिद्गवां दशसु मासु मासेषु पद्न्मासोत्यादिना मासशब्दस्य मास्भावः तेष्वनुष्ठितेषु शृङ्गाण्यजायन्त ता जातशृङ्गा अब्रुवन् परस्परमुक्तवत्यः किमिति अरात्स्म समृद्धा अभूम अतोवयमुत्तिष्ठामसत्रं समापयाम अरात्-स्मेति तदुक्तं तद्व्याचष्टे । ओपशाः आ अभितः शिरः प्रदेशमुपेत्य शेरन्ते इत्योपशाः शृङ्गाणि अज्ञत जा-तान्यभूवन्निति सम्बन्धः अज्ञतेति जनी प्रादुर्भावे इत्यस्मात् लुङि बहुवचने "मन्त्रे घसेत्यादिना च्ले-र्लुङि गमहनजनेत्युपधालोपे रूपम्। एवमुक्त्वा ता गावः सत्रादुदतिष्ठन्। ताभिरेवं दशभिर्मासैः फलस्य प्राप्तेर्दशमा-सनिर्वर्त्यमपि गवामयनमस्तीत्युक्तं भवति"भा०। द्वादशमा-सनिर्वर्त्यमयस्तीति दर्शयति ।"तासान्त्वेवाब्रुवन्नासामहा एवेमौ द्वादशौ मासौ सं संवत्सरमापयामेति तासान्द्वा-दशसु मा:सु शृङ्गाणि प्रावर्त्तन्त ताः सर्वमन्नाद्यमाप्नुवंस्ता एतास्तूपरास्तस्मात्ताः सर्वान्द्वादश मासः प्रेरते सर्वं हि ता अन्नाद्यमाप्नुवन्" ता०ब्रा० २ । "तुशब्दो वैलक्षण्य-द्योतनार्थः तासामेव गवां मध्ये काश्चिदब्रुवन् किमि-त्युच्यते, यौ द्वादशौ द्वादशसंख्यापूरकावेव शिष्टावेका-

दशद्वादशौ मासौ इमौ आसामङ्गा एवं अनुष्ठायैव अनुष्ठाय प्रारब्धं संवत्सरसाध्यं समापयामेति व्यवहिता-ख्याति सन्निधस्य व्यवहितेन सम्बन्धः। तासां गवां जातानि शृङ्गाणि द्वादशसु मासेषु मासेषु पूर्णेषु प्रावर्तन्त प्रापयन् दशभिर्मासैः शृङ्गप्राप्तिलक्षणफले सिद्धेऽपि पुनरन्यद्वया यतो मासद्वयमन्वतिष्ठन् अतो जातानामपि शृङ्गाणां पुनःपतनमित्यभिप्रायः तथा चैतरेयकम् "अथ समापयिष्यामः संवत्सरमित्यासत तासामश्रद्धया शृङ्गाणि प्राव-र्त्तन्तेति" एतास्तूपरा इति ताः पतितशृङ्गाः गावः सर्वे-त्तुभवमन्नाद्यमदनीयमन्नं प्राप्नुवन् ता गावस्तूपराः शृङ्ग-हीनाः दृश्यन्ते तस्मात्ताः सर्वान् द्वादश मासो मासान् प्रेरते प्रगच्छन्ति ईर गतौ शीतवातातपेषु सर्वदा पुष्टाङ्गा एव यथायथं गच्छन्ति शृङ्गिणो महिष्यादयस्तु कृशा भवन्ति तस्मादित्युक्तं कस्मादित्याह हि यस्मात्ता गावः सर्वमन्नाद्यमाप्नुवन् तस्मात्सर्वर्त्तुषु पुष्टाङ्गा भवन्ति तथा चैतरेयकम् "ऊर्ज्जत्वमसमन्वत तस्माद् ताः सर्वभूतान्त-रस्तुत्तिष्ठन्तीति"। उक्तार्थं जानतः फलमाह" भा०। "सर्वमन्नाद्यमाप्नोति य एवं वेद" ता०ब्रा०२। स्पष्टोऽर्थः। तदेवं दशमासनिर्वर्त्यं द्वादशमासनिर्वर्त्यं चेति द्विविधं गवामयनं प्रतिपादितं तयोर्ज्योतिष्टोमदर्शपूर्णमासादिवदे-तत्काम तत्कुर्यादिति कामफलसम्बन्धफलविशेषाश्रवणा-द्विश्वजिन्न्यायेनान्यत्राम्नातस्य स्वर्गस्य कल्पनाया अन्याय्य-त्वाद्रात्रिसत्रन्यायेनार्थवादिकस्य समृद्धिफलस्य वाक्यशेषे श्रुतत्वादनुताक्रुङ्करीय इति समृद्धिकामा एतत्सत्र-मासीरन्निति विधिरुन्नेतव्यः। तैत्तिरीयके समृद्धिफल-कत्वं स्पष्टमाम्नातम् "य एवं विद्वान् संवत्सरमुपयान्त्या-प्नुवन्त्येवेति" भा०तत:,४।१ ४कण्डिकामारभ्य। ५अ०८ख० ६क०पर्यन्ते तद्विधानमुक्ता तत्र सत्रे दीक्षाकालविधा-नार्थमेकाष्टकारम्भपक्षं निरस्य चैत्रशुक्लैकादश्यां दीक्षा-माह तत्रैव ५।६।१० कण्डिकादिषु

"चित्रापूर्णमासे दीक्षेरन्" ता०ब्रा०५।६।१०। "चित्रा-युक्तः पौर्णमासः चित्रापूर्णमासः तस्मिन् दीक्षेरन्" तदेतत् स्तौति" भा०। "चक्षुर्वा एतत् संवत्सरस्य यच्चित्रा-पूर्णमासो मुखतो वै चक्षुर्मुखत एव तत् संवत्सरस्य दीक्षन्ते तस्य न निर्यास्ति" ता०ब्रा०११। "चित्रापूर्ण-मास इति यत् एतत् संवत्सरस्य चक्षुर्वै जायमानस्य हि प्रथमं मुखञ्जायते तत्रापि चक्षुरेव प्रथममाविर्भवति अतस्तस्मादस्यादस्य चक्षुषः उक्तक्रमेण मुखतो मुखप्रदेश-एव इक्षुः, अतो मुखएव तत् संवत्सरमारभ्य गृहीत्वा दीक्षन्ते। यः फाल्गुन उक्तः सोऽप्यत्र विद्यत इत्युक्तं भवति तस्य न निर्यास्ति कश्चिदपि दोषो न विद्यते" इत्थं चित्रापौर्णमास्यां दीक्षितव्यमित्युक्तम् अथ तस्मि-न्नेव मासे शुक्लैकादश्यां दीक्षितव्यमित्याह" भा० "चतुरहे पुरस्तात् पौर्णमास्या दीक्षेरन्" ता० ब्रा०१२। "चैत्र्याः पौर्णमास्याः पुरस्ताच्चतुरहे चतुर्णामह्नां समाहारश्चतुरह-स्तस्मिन्विद्यमाने गवामयनस्य दीक्षा कार्या एवं दीक्षणस्य गुणमाह" भा० "तेषामेकाष्टकायां क्रयः सम्पद्यते तेनैकाष्ट-कान्न संवट् कुर्वन्ति" ता० ब्रा०१३। "सर्वेषां सत्राणां द्वादश दीक्षा भवन्ति तत एकादशीप्रभृति द्वादशसु गतासु रात्रिषु त्रयोदशी रात्रिरष्टमी स्यात् एकाष्टका च बहु-लाष्टमीति अस्यामेकाष्टकेत्युपचारः तस्याः क्रयः सम्प-द्यते प्रथमे ह्युपसर्जने राजक्रयस्तस्मिन् दिने प्रातः-काले प्रायणीयाद्या यज्ञावयवाः प्रक्रम्यन्ते तेन प्रक्रमेण एकाष्टकां न संवट् कुर्वन्ति क्रियानुपयोगेन व्यर्थं न कुर्वन्ति अतएव एकाष्टकापारम्भगतो गुणस्तस्मिन् पक्षेऽन्तर्भ-वति इत्यर्थः। अन्येऽपि गुणा अस्मिन् पक्ष सन्तीत्याह" भा० "तेषां पूर्वपक्षे सुत्या सम्पद्यते पूर्वपक्षे मासाः सन्तिष्ठमाना यन्ति पूर्वपक्ष उत्तिष्ठन्ति तानुत्तिष्ठतः पशव ओषधयोऽनूत्तिष्ठन्ति तान्कल्याणी वागभिवदत्य-रात्सुरिमे सत्रिण इति ते राध्नुवन्ति" ता०ब्रा० १४। "तेषामेकादश्यां दीक्षमाणानां सुत्या सोमयागः पूर्वपक्षे सम्पद्यते सत्राणां सर्वेषां द्वादशोपसदः तत्राष्टमीप्रभृति द्वादशसु गतासु त्रयोदशी शुक्लपक्षपञ्चमी तस्यां प्रथमो-ऽतिरात्र इति पूर्वपक्षे सुत्या प्रारभ्यत इत्यर्थः। त्रिंशता त्रिंशताऽहोभिर्मासेषु पूर्वपक्ष एव सर्व्वे मासाः सन्ति-ष्ठमाना यन्ति वर्त्तन्ते एवं द्वादशसु मासेषु गतेषु पूर्वपक्ष एव सत्रादुत्तिष्ठन्ति तानुत्तिष्ठतः सत्रादुत्थानं कुर्वतो यज-मानाननु पश्चात् पशव ओषधयश्चोत्तिष्ठन्ति ऊर्द्ध्वं रोहन्ति तान् यजमानान् कल्याणी शोभना वाक् यशस्करी वाक् वदति किमिति इमे सत्रिणो यजमानाः अरात्सुः स-मृद्धा अभवन्निति तदनन्तरन्ते सत्रिणो राध्नुवन्ति समृद्धा भवन्ति"। ५अध्यायसमाप्तिपर्यन्ते तस्यैव विधानभेदा उक्ताः। "गवामयनेनेयुः" कात्या०श्रौ०२४।५।२। "गवामयनं वा-ऽभिगरस्तुतेः" २४।४।४९। इदञ्च एकपदं तेन गावा-मयनिकमित्यादौ ठक् पूर्वाचोर्द्धिः। "गावामयनिके पृष्ठ्यषडहे प्रत्यहं द्वयम्" जैमिनीयन्यायमाला।

**गवामृत** न॰ गोरमृतमिव क्षीरम् अवङादेशः। गोक्षीरे "अतिथिः सर्वभूतानामग्निः सोमो गवामृतम्" भा॰ व॰ ३१२ अ॰। गोक्षीरस्य सोमवत् हूयमानत्वात् चन्द्रहेतुकत्वाद्वा सोमत्वेति "अमायां च सदा सोम ओषधीः प्रतिपद्यते। तमोषधिगतं गावः पिबन्त्यम्बुगतञ्च यत्। तत् क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः। हुतमग्निषु यज्ञेषु पुनराप्यायते शशी" कालमा॰ सोमोत्पत्तिवाक्यात् सोमस्यैव गोक्षीरहेतुत्वम्। एवञ्च गोक्षीरस्य सोमप्रसूतत्वेन पुनर्यज्ञे मन्त्रेण होमात् चन्द्राप्यायनात् तद्धोमस्य सन्तत्या सनातनत्वम्। तेन "किं स्विद्धर्मः सनातन" इति यक्षप्रश्नस्योत्तरमिदं सङ्गच्छते।

**गवाम्पति** पु॰ ६त॰ अलुक् स॰। १वृषभे "सिंहेनेव गवाम्पतिम्" भा॰ व॰ १६॰ अ॰। २गोपालके "तया दृष्ट्वा यवीयांसं सहदेवं गवांपतिम्" भा॰ वि॰ वि॰ १८ अ॰। ३गोस्वामिनि ४रुद्रे ५किरणपतौ सूर्य्यवह्न्यादौ। "प्रशान्तोऽग्निर्महाभाग! परिश्रान्तो गवांपतिः" भा॰वि॰ ११॰ अ॰। "सहस्ररश्मिसरादित्यस्तपनस्त्वं गवांपतिः रुद्रः" भा॰ व॰ ३अ॰ सूर्य्यस्तवः। खगोलशास्त्रदर्शितदिशा सूर्य्यस्य चन्द्रादिग्रहदीप्तिकारित्वात् तथात्वम् रुद्रस्य तथात्वं गोपतिशब्दे वक्ष्यते। पदद्वयमित्येके। [ मृगभेदे गवये त्रिका॰।

**गवालूक** पु॰ गवाय शब्दाय अलति अल–वा ऊकञ्।

**गवाविक** न॰ गौश्च अविश्च द्वयोः समाहारः गवाश्वा॰ नि॰ नित्यमवङादेशः कश्च। गोमेषयोः समाहारे।

**गवाश्व** न॰ समाहारद्व॰ अवङ्। गोहययोः समुच्चये।

**गवाश्वप्रभृति** न॰ पा॰ गणसूत्रोक्ते समाहारद्वन्द्वनिमित्ते शब्दसमूहे स च गणः "गवाश्वम् गवाविकम् गवैडकम् अजाविकम् अजैडकम् कुब्जवामनम् कुब्जकिरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासीमानवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् उष्ट्रशशम् मूत्रपुरीषम् यकृन्मेदः. मांसशोणितम् दर्भशरम् दर्भपूतीकम् अर्जुनशिरीषम् अर्जुनपुरुषम् तृणोलपम् दासीदासम् कुटीकुटम् भागवतीभागवतम्" "गवाश्वादीनि यथोच्चारितानि साधूनि" सि॰कौ॰।

**गवाह्निक** न॰अह्नि भवं दिनभक्षणाय पर्य्याप्तम् अहन्+ठञ् आह्निकम् ६त॰। गोर्दिनभक्षणपर्य्याप्तग्रासादौ निरुढे गवां तु यो दद्यात् मासमेकं गवाह्निकम्। एकभक्तं तथाश्नीयात् श्रूयतां तस्य यत् फलम्। इमा गावो महाभागाः पवित्रं परमं स्मृताः। त्रीन् लोकान् धारयन्ति स्म सदेवासुरमानुषान्। तासु चैव महापुण्यं शुश्रूषा च महाफला। अहन्यहनि धर्मेण युज्यते वै गवाह्निके" भा॰आनु॰ १२२ अ॰। "गवाह्निकं देवपूजा वेदाभ्यासः सरित्प्लवः। नाशयन्त्याशु पापानि महापातकजान्यपि" आ॰त॰यमः। "गवाह्निकं गोर्दिनभक्ष्यम्" आ॰त॰रघुनन्दनः।

**गविजात** पु॰गवि, गोसंज्ञायाम् पुलस्त्यकार्य्यायां वा जातः अलुक्स॰। १ऋषिभेदे स तु नहुषाय च्यवनमूल्यतया गां कल्पितवान् तत्कथा भा॰आनु॰ ५१अ॰ "तत स्तन्यो वनचरः कश्चिन्मूलफलाशनः। नहुषस्य समीपस्थो गविजातोऽभवन्मुनिः" इत्युपक्रमे "नहुषस्य वचः श्रुत्वा गविजातः प्रतापवान्। उवाच हर्षयन् सर्वानमात्यान् पार्थिवञ्च तम्। अनर्घा वै महाराज! द्विजा वर्णेषु चोत्तमाः। गावश्च, पुरुषव्याघ्र! गौर्मूल्यं परिकल्प्यताम्" पुलस्त्यस्य गोसंज्ञायां भार्य्यायां जाते २वैश्रवणे च पुलस्त्यो नाम तस्यासीन्मानसोदयितः सुतः। तस्य वैश्रवणो नाम गवि पुत्रोऽभवत् प्रभुः" भा॰ व॰ २७ अ॰। "गवि गोसंज्ञायां भार्य्यायाम् नील॰। गवीत्यस्याभवदित्यनेन सम्बन्धात् तस्येत्यस्य पुत्रेणान्वयाच्च तथात्वम् एतन्मूलकं गविपुत्रशब्दकल्पनं प्रामादिकमेव।

**गविनी** स्त्री गवां समूहः खला॰इनि। गोसमूहे।

**गविष्** त्रि॰ "गां स्तुतिवाचमिच्छति इष–क्विप्। स्तोत्रादिवाक्येच्छावति। "निरस्य रसं गविषः" ऋ॰१०।७६।७। "अगोरुधाय गविषे" ८।२४।२०।

**गविष** त्रि॰ गामिच्छति इष–क। स्तोत्रेच्छावति "अश्वेदुद्रपसं दविध्वद्गविषो सत्वा" ऋ॰४।१३।२। "सत्वा भरिषो गविषः" ४।४०।२। "गविषो गवां प्रेप्सुः" भा॰।

**गविष्टि** पु॰ इष–अन्वेषे क्तिन् ६त॰। गवामन्वेष्टरि। "आ पवस्व गविष्टये" ९।६६।१५। "गविष्टये गवामन्वेष्ट्रे" भा॰।

**गविष्ठ** पु॰ दैत्यभेदे "गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः" भा॰ आ॰ ६५ अ॰। स च द्वापरे द्रुमसेनतयाऽऽविर्भूतः यथाह भा॰ आ॰ ६७ अ॰ "गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः। द्रुमसेन इति ख्यातो पृथिव्यां समजायत"।

**गविष्ठिर** पु॰गवि वाचि स्थिरः ष त्वम् अलुक्स॰। गोत्रप्रवर्त्तके १ऋषिभेदे। तस्यापत्यम् अण्। गाविष्ठिर तद्गोत्रापत्ये पुंस्त्री॰ बहुषु तस्य लुक्। "गविष्ठिराणामात्रेयगाविष्ठिरपौर्वातिथेति" आश्व॰ श्रौ॰१२,१४।१। "गविष्ठिरो नमसा

सोममग्नौ" ऋ०५।११।१२। २कवयो मुनौ च "अग्निरत्रिं भरद्वाजं गविष्ठिरम्" ऋ०१०।१५०।५। "गविष्ठिरं कवयम्" भा०।

**गवीधुका** स्त्री गवेधुका+पृषो०। धान्यभेदे। "अनाकृति वै अर्त्तिमाय गवीधुकाय" तैत्ति० ५।४।१।२।

**गवो(वे)श्वर** इत० वा अवङ्। गोस्वामिनि अमरः।

**गवेङ्गित** न०गवामिङ्गितम् अवङ्। शुभाशुभसूचके गवां चेष्टाभेदे तच्च ह० सं० ६१ अ० उक्तं यथा।

"गावो दीनाः पार्थिवस्याशिवाय पादैर्भूमिं कुट्टयन्त्यश्च रोगान्। मृत्युं कुर्वन्त्यश्रुपूर्णायताक्ष्यः पत्युर्भीतास्तस्करानाहवन्त्यः। अकारणे क्रोशति चेदनर्थं भयाय रात्रौ वृषभः शिवाय। भृशं निरुद्धो यदि मक्षिकाभिस्तदाशु दृष्टिं सरमात्मजैर्वा। आगच्छन्त्यो गोष्ठमार्द्रा च वेश्म वस्त्रारवैश्च संविशन्त्यो गोष्ठमार्द्रा गवां गाः। आर्द्राङ्गयो वा हृष्टरोमण्यः प्रहृष्टा धन्या गावः स्युर्महिष्योऽपि चैवम्"।

[ सं०। (गड्गडे) धान्यभेदे अमरः।

**गवेडु** स्त्री गवे दीयते दीङ् रक्षणे कु पृषो० टस्य डः अलुक्।

**गवेधु** पु०गवे धीयते धाञ्-धारणे कु अलुक्स०। (गड्गडे) १धान्यभेदे तस्य गवे धारणात्तथात्वं यथोक्तम्

"अथ रुद्राय पशुपतये। रौद्रं गावेधुकं चरुं निर्वपति तदेनं रुद्र एव पशुपतिः पशुभ्यः सुवत्यथ यद् गावेधुको भवति वास्तव्यो वा एष देवो वास्तव्या गवेधुका तस्माद्गावेधुको भवति" शत० ब्रा० ५।३।३।७।

"गवेधुका तु विद्वद्भिर्गवेधुः कथिता स्त्रियाम्। गवेधुः कटुका स्वाद्वी कार्श्यकृत् कफनाशिनी" भावप्र०।

तेन शब्दक०गवेधुशब्दस्य पुंस्त्वोक्तिः प्रामादिकी।

गवेधुश्च सुश्रुते कुधान्यवर्गे उक्ता यथा

"कोरदूषकश्यामाकनीवारशान्तनुतुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखीकुरुविन्दगवेधुकामरुकतोदर्पणीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः"

**गवेन्द्र** पु० गौरिन्द्र इव नित्यमवङ्। श्रेष्ठे गवि।

**गवेरुक** न० गां गोशोभामीरयति ईर-वा० उकन् अवङ्। गैरिके विका०। गैरिकेण गोर्भूषणात्तथात्वम्।

**गवेश** पु० इत० अवङ्। १गोस्वामिनि गोरक्षके तेन निर्वृत्तादि० संकला० पाठान्तरे ततोऽण्। गावेश तन्निर्वृत्तादौ त्रि०। २रुद्रे च गोपतिशब्दे दृश्यम्। पक्षेऽव्। गवीश उक्तार्थेषु।

**गवेशकी** स्त्री। गवामीशः गौरक्षः तथाभूत इव कार्यति कै-क गौरा० ङीष्। (गोरक्षचाकुलिया) लताभेदे शब्दच०। गवेशकेति केचिदिमं टाबन्तमाहुः।

**गवेष** अन्वेषणे, अद० चुरा० आत्म० सेट्। गवेषयते अजगवेषत। गवेषयाञ्चक्रे। गवेषितः गवेषणं गवेषणा। "तीर्थेष्वितस्ततस्तस्याभिचचार गवेषयन्" भा०व०२६२अ०। आर्षः पदव्यत्ययः। तस्य स्वादित्वं तङ्वत्त्वं च क्वचित् प्रयोगे दृश्यते "गवेषमाणं महिषीकुलं जलम्" रत्ना०।

**गवेष** त्रि० गवेष+अच्। १अन्वेष्टरि भावे अच्। २अन्वेषणे पु०। तेन निर्वृत्तादि संकला० अण्। गावेष तन्निर्वृत्तादौ त्रि०।

**गवेषणा** स्त्री गवेष-भावे युच्। १अन्वेषणे अमरः। गोरुदकस्य वा एषणा। गोरुदकस्य वा२अन्वेषणे। इष-ल्यु इत०। ३गोरन्वेषके त्रि०। गवेष-ल्यु। ४अन्वेष्टरि त्रि० "अग्निरिन्द्रो गवेषणो वज्रुष्मिद्रो गवेषणः" ऋ० १। १३२।३। "अस्तीनः सत्वा गवेषणः" ऋ० ७।२०।५। "गवेषणः गवामन्वेष्टा उदकान्वेष्टा। यजमानफलस्य मार्गयिता वा" भा०। भाष्ये गवेष मार्गणे पूर्ववत् ल्यु इत्येव पाठः मुद्रितपुस्तके ल्युट् इति पाठः प्रामादिकस्तस्याकर्त्तर्येव विधानात् क्लीवत्वाच्च।

**गवेषित** त्रि० गवेष-क्त। १अन्वेषिते मार्गिते अमरः।

**गविष्ठिन्** न० दैत्यभेदे "शङ्कुकर्णो विरोधश्च गवेष्ठी दुन्दुभिस्तथा" हरिवं० ३अ०। [षयोः समाहारे।

**गवेडक** न०गोश्च एडकस्य गवाश्वा० नि० क्लीवता च। गोमे-

**गवोद्ध** पु०प्रशस्तः प्रशस्ता वा गौः "प्रशंसावचनैश्च" पा०जातेः कर्म०परनि०अवङ्। १प्रशस्ते गवि। २प्रशस्तायां गोजातिस्त्रियाञ्च अस्य नियतलिङ्गत्वात् स्त्रियामपि तथात्वम्।

**गव्य** (आत्मनो गामिच्छति क्यच् "वान्तो यि प्रत्यये" पा० अव्) आत्मसम्बन्धित्वेन गोरिच्छायाम् अक०भ्वा० पर० सेट्। गव्यति अगव्यीत्-अगवीत् गव्या (या)म् चकार" "गौरसि वीर! गव्यते" ऋ० ६।४५।८।२६।

**गव्य** त्रि०गोर्विकारः गवि भवं,गोर्हितं,गोरिदं, वा सर्वत्र यत् याहौ अव। १गोसम्बन्धिनि, 'गव्यमतके" जै० अधिकर० मा०। २सरसमर्घ्यं मधुमच्च गव्यम्" कुमा० "संवत्सरं तु गव्येन पयसा पायसेन वा।" "शैलुं गव्यञ्च पेयूषं प्रयत्नेन विवर्ज्जयेत्" मनुः। २गोर्हितादौ च। गवि इषौ नेत्रे वा साधु यत्। ३ज्यायां ४रागद्रव्ये च न० मेदि०। ज्यायाः शरक्षेपणसाधनत्वात् रागद्रव्यस्य च नेत्ररागजनकत्वात्तथात्वम्। गोर्विकारे ५गोरोचनाद्रव्ये स्त्री राजनि०। तस्य गोर्विकारत्वात्तथात्वम् तत्र ज्यायाम्

"अवशोपान्तिकनीयमानगव्यम्" माघः। समूहे पाशा॰ यत्। ६गोसमूहे, ७गव्यूतौ क्रोशयुगे च स्त्री हेमच॰।

**गव्ययी** स्त्री गोरिदम् वा॰ अयट् युडागमश्च यादौ अत् ङीप्। गोरवयवे त्वगादौ। "गव्ययी त्वगभवति" ऋ॰ ६।७०।७। "गव्ययी गोमयी त्वक्" भा॰।

**गव्ययु** त्रि॰ गामिच्छति गो+क्यच्–उन् यादौ वेदे दीर्घयलोपाभावौ। गोरिच्छावति "आ दिरसृ ष्टमश्वयुर्गव्ययुः" ऋ॰८।३६।६। "गव्ययुर्गामिच्छन्" भा॰।

**गव्यु** त्रि॰गामिच्छति क्यच् उन् यादौ अत् दीर्घयलोपाभावौ। गामिच्छति। "अश्वयुर्गव्यू रथयुर्वसूयुः" ऋ॰ १।५१।१४।

**गव्यूत** न॰ गव्यूति+पृषो॰ अदन्तादेशः। १क्रोशे २क्रोशयुगे च हेमच॰।

**गव्यूति** स्त्री गोर्यूतिः "गोर्यूतौ"पा॰ अव्। द्विसहस्रधनुर्मिते १क्रोश हेमच॰। २क्रोशद्वये अमरः। "गव्या गव्यूतगव्यूती इति दीर्घपाठदर्शनात् शब्दकल्प॰ दीर्घान्तगव्यूतिशब्दकल्पनं प्रामादिकम् तत् गव्यूतगव्यूती इयस्य द्विवचनान्ततया दीर्घान्तशब्दत्वाभावात् किञ्च यूतिरित्यस्य क्तिन्नतया निपातनात् "ऊदिकारादक्तिनः" पा॰अक्तिन्नन्तस्यैव ङीपो विधानेन ततो ङीपोऽप्रसक्तिः।

**गह** गहने अद॰ चुरा॰ उभ॰ सक॰ सेट्। गहयति ते अजगहत् त। गहनं दुर्बोधः दुष्प्रवेशो दुर्गमश्च।

**गहन** न॰ गाह–ल्युट्–"क्लृप्त गहनयोरिति" पा॰ निर्देशात्, पृषो॰वा ह्रस्वः गह–गहने ल्युट् वा।१वने अमरः। तस्य दुर्गमत्वात् तथात्वम्।२निविडे त्रि॰"जगाम गहनं वनम्" देवीमा॰ ३गह्वरे ४दुःखे च न॰मेदि॰।५दुर्गमे ६दुर्बोधे ७दुष्प्रवेशे त्रि॰। ८परमेश्वरे पु॰। "करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः"विष्णुस॰। "स्वरूपं सामर्थ्यं चेष्टितं वा तस्य ज्ञातुं न शक्यते इति गहनः" भा॰ "गभीरो गहनो गुप्तः" विष्णुस॰ "दुष्प्रवेशत्वात् गहनः अवस्थात्रयसाक्षित्वाद्वा गहनः" भा॰। "गहना कर्मणो गतिः" गीता। ९उदके निघ॰ गाहनात्तस्य तथात्वम्। १०अलङ्कारे स्त्री शब्दार्थचि॰।

**गहादि** न॰ चतुरर्थ्यां छप्रत्ययनिमित्ते पा॰ ग॰ उक्ते शब्दगणे स च गणः

"गह अन्तस्थ सम विषम (मध्य मध्यंदिन चरणे) उत्तम अङ्ग वङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाख उत्तमशाख एकशाख समानशाख समानग्राम एकग्राम एकवृक्ष एकपलाश इष्वग्र इष्वनीक अवस्यन्दन कामप्रस्थ खाड़ायन काठेरणि लावेरणि सौमित्रि शैशिरि आसुत् दैवशर्म्मि श्रौति आहिंसि आमित्रि व्याडि वैजि आध्यश्वि आन्दशर्मि शौङ्गि आग्निशर्म्मि भौजि वाराटकि वाल्मीकि क्षेमवृद्धि आश्वत्थि औद्गाहमानि ऐकबिन्दवि दन्ताग्र हंस तन्त्वग्र उत्तर अनन्तर (मुखपार्श्वतसोर्लोपः) (जनपरयोः कुक् च) (स्वस्य च) (देवस्य) (वेण्वादिभ्यश्छण्। गहादिराकृतिगणः"। "गहादिभ्यश्छः" पा॰। गहीयः।

**गह्व** न॰ गह–कर्म्मणि भावे वा बा॰व।१गाम्भीर्ये २दुष्प्रवेशे च ततः अश्मादि॰ चतुरर्थ्यां र। गह्वर तद्युक्तादौ त्रि॰।

**गह्वर** न॰ गुह–वरच् पृषो॰ नि॰। १दम्भे अमरः। २वने, ३निकुञ्जे पु॰ मेदि॰। ४रोदने, हेमच॰। ५विषमस्थाने, ६अनेकार्थसङ्कुले च न॰ शब्दार्थचि॰। "अथान्धकारं गिरिगह्वरस्थम्" रघुः। ८गुहायां न॰स्त्री स्त्रीत्वपक्षे ङीप्। "गौरीगुरोर्गह्वरमाविवेश" रघुः। "गुहाहितं गह्वरेष्ठं पुराणम्" कठो॰ अन्ववा॰॰ वल्लम्। "काव्याय च गह्वरेष्ठाय च" यजु॰१६।४।

**गा** गतौ सक॰ भ्वा॰ आ॰ अनिट्। गाते अगास्त जगे।

**गा** स्तुतौ सक॰जन्मनि अक॰जुहो॰वैदिकोऽयं धातुः सार्वधातुके अभ्यासस्येत्वञ्च। जिगाति अगासीत्। जगौ। "सोमो जिगाति गातुवित्" ऋ॰ ३।६२।१३। "जरितः सचा यज्ञो जिगाति चेतनः" ३।१२।२। "स्वेषु क्षयेषु प्रथमो जिगाति" १०।८।२। इङादेशस्य इणादेशस्य च गाते रूपं तत्तद्धातौ उक्तम्।

**गाङ्ग** पु॰ गङ्गाया अपत्यम् शिवा॰ अण्। गङ्गापुत्रे १भीष्मे २कार्त्तिकेये च गङ्गापुत्रशब्दे दृश्यम्। गङ्गाया इदम् अण्।३गङ्गासम्बन्धिनि जलादौ "गाङ्गमम्बु सितमम्बु यामुनम्" काव्यप्र॰ "गाङ्गं जलं निर्मलम्" गङ्गास्तोत्रम्। "गाङ्गं वर्षेण जीर्यतिः"प्रा॰न॰। ४मेघनिःसृते सुश्रुतोक्ते जलभेदे तल्लक्षणादि अम्बुशब्दे ३३पृ॰ उक्तम्। ५स्वर्णे "यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम्। तदुल्वं पर्वते न्यस्तं हिरण्यं समपद्यत" भा॰ व॰ उक्तेस्तस्य तज्जातत्वात् तथात्वम्। अग्निरेतःशब्दे विस्तृतिः। ६स्वर्णनामनामके धुस्तुरे अमरः ७कशेरुणि शब्दार्थ॰। ८नदीसम्बन्धिनि तटादौ त्रि॰।

**गाङ्गट** पु॰ गाङ्गं नदीतटमटति अट–अच् शक॰। (चिङ्गिड़ि) १मत्स्यभेदे शब्दरत्ना॰। स्वार्थे क। तत्रैवार्थे शब्दर॰। [तल्लोपः। (चिङ्गिड़ि) मत्स्यभेदे शब्दर॰।

**गाङ्गटेय** पु० गाङ्गे नदीतटे अटति अट–अच् पृषो०

**गाङ्गायनि** पु० गङ्गाया अपत्यम् तिका० फिञ्। १भीष्मे २कार्त्तिकेये च। प्रवरप्रवर्त्तके ३ऋषिभेदे च प्रवराध्यायः।

**गाङ्गेय** पु० गङ्गा+अपत्ये ढक्। १भीष्मे, २कार्त्तिकेये च। "यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम्। तदुल्वं पर्वते न्यस्तं हिरण्यं समपद्यत" इत्युक्तेः ३स्वर्णे, ४तन्नामनामके धुस्तूरे, ५कशेरुणि च शब्दार्थचि०। ६इल्लिशमत्स्ये पु० त्रिका०। ७भद्रमुस्तके राजनि०।

**गाङ्गेरुका** स्त्री गाङ्गं जलमीरयति क्षिपति ईर–कु स्वार्थे क गौरा० ङीष्। नागबल्याम् अमरः गोरक्षतण्डुलायाम् शब्दार्थचि०।

**गाङ्गष्ठी** स्त्री गाङ्गे नदीतटे तिष्ठति स्था–क अम्ब० षत्वम् अलुक् स० गौरा० ङीष्। (नटा) कटशर्करालतायाम् हारा०।

**गाङ्ग्य** त्रि० गाङ्गे गङ्गाकूले भवः यत्। गाङ्गसम्बन्धिनि। "उरः कच्चो न गाङ्ग्यः" ऋ०६।४५।३१। "गाङ्ग्यः गाङ्ग कूले भवः" भा०।

**गाजर** न० गज–मदे घञ् "न कादेः" पा० न कुत्वम् गाजं मदं राति रा–क। १दृञ्जने २गर्ज्जरे (गाजोर)। मूलभेदे गर्ज्जरमित्यत्र भावप्र० पाठान्तरम् गर्ज रशब्दे गुणाद्युक्तम्।

**गाडव** पु० गडराकारेणास्त्यस्य प्रज्ञा० अण् गडोर्भावो वा अण्। १गवेडुधान्ये त्रिका० २गडुभावे न०।

**गाडिक** त्रि० गडिक+चतुरर्थ्यां सुतङ्ग० इञ्। गडिकनिर्वृत्तादौ।

**गाडुल्य** न० गडुलस्य भावः ब्राह्म०ष्यञ्। गडुलभावे।

**गाढ़** न०गाह–क्त। १अतिशये दृढे। २तद्युते, ३अवगाढे, ४सेविते च त्रि०। "तपस्विगाढां तमसां प्राप्येति" रघुः। "गाढ़कान्तदशनक्षतव्यथाम्" माघः। "सद्यःकण्ठच्युतभुजलतापन्थिगाढोपगूढे" मेघ०।

**गाढ़मुष्टि** पु० गाढ़ोमुष्टिरत्र। खड्गे मेदि०।

**गाढ़ावटी** स्त्री चतुरङ्गक्रीड़ाङ्गे क्रीड़ाभेदे "नौकैका वटिकायस्य विद्यते खेलने यदि। गाढ़ावटीति विख्याता यदं तस्य न दुष्यति" ति०त०। [कारिभवादौ।

**गाणकार्थ्य** त्रि० गणकारौ भवः कुर्वादि० ण्य। गण-

**गाणगारि** पु०गणगारस्यापत्यम् इञ्। मुनिभेदे। "सर्वे समानगात्रा स्युः गाणगारिः" विश्वाद०धृतवाक्यम्। "पुनर्होमञ्च गाणगारिः" आश्व०श्रौ० २।१७।१८। स्त्रवे

**गाणपत** त्रि० गणपतेरिदम् अश्वप्त्या० अण् एकोऽपवादः। १गणपतिसम्बन्धिनि। "सारस्वतो गाणपतः सौरश्च वैष्णवः क्रमात्" ति० त०।

**गाणपत्य** त्रि० गणपतेर्भावः पत्यन्तात् यक्। गणपतिभावे "महादेवप्रसादेन गाणपत्यञ्च विन्दति" भा० व० ८२ अ०। "उपोष्य रजनीमेकां गाणपत्यमवाप्नुयात्" तत्राध्याये।

**गाणिक** त्रि० गणं वेत्त्यधीते वा उक्था०ठक्। १गणसूत्रादिपाठके २तद्वेत्तरि च। गणे गणपाठे साधुः कथा०ठक्। ३गणसूत्रकुशले त्रि०। [यञ्। वेश्यासमूहे हेम०।

**गाणिक्य** न० गणिकानां समूहः गणिकाया यञ्" वार्त्ति०

**गाणिन** पुंस्त्री गणिनोऽपत्यादि "इन्यऽगणपत्ये" पा० अपत्यार्थकेनो निषेधेऽपि गाथिविदथीत्यादिना इनोनलोपः। १गणिनोऽपत्ये २तच्छात्रे च स्त्रियां ङीप्।

**गाण्डव्य** पु० गण्डोरपत्यादि गर्गा० यञ्। गण्डोरपत्ये। यूनि यञन्तत्वात् फञ्। गाण्डव्यायन यूनि तदपत्ये लोहिता० स्त्रियां युवत्यामयुवत्याञ्च ष्फ षित्त्वात् ङीष्। गाण्डव्यायनी तदपत्यस्त्रीमात्रे।

**गाण्ड(ण्डी)** स्त्री गडि–इन् "गाण्ड्यजगात् संज्ञायाम्" पा० दीर्घनिर्द्देशात् नि० वृद्धिः। ग्रन्थौ। कृदिकारान्तत्वात् वा ङीप्। तत्रार्थे। "एष गाण्डीमयश्चापः" भा० उ० ६७अ०।

**गाण्डि(ण्डी)व** पुंन० गाण्डिरस्त्यस्य संज्ञायाम् व। १अर्जुनस्य धनुषि। तच्च धनुर्ब्रह्मणा निर्माय सोमाय दत्तं सोमेन च वरुणाय, अग्निप्रार्थितेन च वरुणेनार्जुनाय दत्तम् तत्कथा भा०आ०२२५अ०।

"तमब्रवीद्धूमकेतुः प्रतिगृह्य जलेश्वरम्। चतुर्थं लोकपालानां देवदेवं सनातनम्। सोमेन राज्ञा यद्दत्तं धनुश्चैवेषुधी च ते। तत् प्रयच्छोभयं शीघ्रं रथञ्च कपिलक्षणम्। कार्यञ्च सुमहत् पार्थो गाण्डीवेन करिष्यति। चक्रेण वासुदेवस्य तन्ममाद्य प्रदीयताम्। ददानीत्येव वरुणः पावकं प्रत्यभाषत। तदद्भुतं महावीर्यं यशःकीर्त्तिविवर्धनम्। सर्वशस्त्रैरनाधृष्यं सर्वशस्त्रप्रमाथि च। सर्वायुधमहामात्रं परसैन्यप्रधर्षणम्। एकं शतसहस्रेण संमितं राष्ट्रवर्धनम्। चित्रमुच्चावचैर्वर्णैः शोभितं श्लक्ष्णमव्रणम्। देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः। प्रादाच्चैव धनूरत्नमक्षय्यौ च महेषुधी"। "एतद्दिव्यं धनुः

श्रेष्ठं ब्रह्मणा निर्म्मितं पुरा"। "एतद्दर्षसहस्रन्तु ब्रह्मा पूर्वमधारयत्। ततोऽनन्तरमेवाथ प्रजापतिरधारयत्। त्रीणि पञ्चशतं चैव शक्रोऽशीतिं च पञ्च च। सोमः पञ्चशतं राजा तथैव वरुणः शतम्। पार्थः पञ्च च षष्टिञ्च वर्षाणि श्वेतवाहनः" भा० वि०४२ अ०। २धनुर्मात्रे मेदि०। [र्ज्जुने। "यत्र गाण्डीवधन्वा"मेघ०।

**गाण्डीवधन्वन्** पु० गाण्डीवं धनुरस्य अनङ् समा०। अ-

**गाण्डीविन्** पु० गाण्डीवमस्त्यस्य इनि। १अर्ज्जुने मध्यमपाण्डवे त्रिका०। "कृतवान् योऽबुधः कोपाद्धरिगाण्डीविविग्रहम्" भा० आ०१४८अ०। २अर्ज्जुनवृक्षे राजनि०। [२गन्तव्ये च।

**गातव्य** त्रि०गै—गाने गा गतौ वा कर्मणि तव्य। १गेये

**गातागतिक** त्रि० गतागतेन निर्वृत्तम् अक्षद्यू० ठक्। गमागमनिष्पन्ने। [ठक्। गतानुगतनिष्पन्ने।

**गातानुगतिक** त्रि० गतानुगतेन निर्वृत्तम् अक्षद्यू०

**गातु** पु०गै—गाने गाङ्—गतौ गा—स्तुतौ वा कर्त्तृभावादौ तुन्। १कोकिले २भ्रमरे ३गन्धर्वे च मेदिनिः। ४रोषणे त्रि० मेदि०। ५गायने त्रि० उणादि०। ६गाने "गातुं कृण्वन्नुषसो जनाय" ऋ०४।५१।२। "गातुं गानम्" भा०। ७गन्तव्ये मार्गादौ "उरुं नो गातुं कृणु सोममीढ्वः" ६।८५।४। "गातुं मनुषे च विन्दः" १०।१०४।८।"गातुं गन्तव्यमार्गम्"भा० ८उपाये "क्षयाय गातुं वनते" ५,६५।४। "गातुमुपायम्" भा०। गच्छन्त्यत्र गा—गतौ आधारे तुन्। ९पृथिव्यां निघ०। "नाकं स्थूर्य्युषसं गातुमग्निम्" ३।३१।१५। "गातुं पृथिवीम्" भा०। "गोभ्यो गातुं निरेतवे" ८।४४।६०। "गातुं भूमिम्"भा०। १०स्तवे। "यद्वतेब्रह्मणे गातुमैरत्"४।४।६। "गातुं स्तवम्" भा०। गातुमिच्छति क्यच् गातुयति। "ये त्वा पुरा गातुयन्तीव देवाः" १।१६८।५। गातुं वेत्ति विद्—क्विप्। गातुविद् मार्गादिवेत्तरि। "सोमोजिगाति गातुविद्देवानाम्"१।६२।१२।

**गातृ** त्रि० गै— गाने तृच्। गायके। "गाता चतुर्णां वेदानां उद्गाता प्रथमर्त्विजाम्। स नारदोऽथ विप्रर्षिः" हरिवं५५ अ०। "तस्मात्त्वोद्गातैतस्य हि गाता"क्षा०उ०

**गात्र** शैथिल्ये अद० चु० आत्म० अक० सेट्। गात्रयते अजगात्रत। गात्रयाम्—बभूव आस चक्रे।

**गात्र** न० गै—ष्ट्रन् गातुरिदम् वा अण्। १अङ्गे देहे "सा मङ्गलस्नानविशुद्धगात्री" कुमा० "दुःखदुःखेन गात्रम्" मेघ०। "स्पृशन्नङ्गगात्रमन्तिकात्"रघुः।२गात्रसम्बन्धिनि त्रि० "प्रभुर्गात्राणि पर्य्येषि" ता०ब्रा० ३हस्तिपृष्ठजङ्घादौ मेदि०। "आपस्कारात्कृतगात्रस्य भूमिम्" माघः। "लूनगात्रस्य छिन्नजङ्घस्य" मल्लि०।

**गात्रगुप्त** पु० कृष्णस्य महिषीषु लक्षणायामुत्पन्ने पुत्रभेदे "लक्षणायाः प्रजाः शृणु। गात्रवान् गात्रगुप्तश्च गात्रविन्दश्च वीर्य्यवान्। जज्ञिरे गात्रवत्याथ भगिन्यानुजया सह" हरिवं० १६२ अ०।

**गात्रभङ्गा** स्त्री भन्ज—घञ् गात्रस्य भङ्गोऽवसादो यस्याः। १स्पृक्काशिम्ब्याम्। शब्दच०।६त०।२अभङ्गे (गामोड़ा)पु०।

**गात्रमार्जनी** स्त्री गात्रं मृज्यते अनया मृज—करणे ल्युट् ङीप्। (गामछा) क्षुद्रपत्त्याम्।

**गात्ररुह** न०गात्रे रोहति रुह—क ७त०।१तनुरुहे लोमनि। "गात्ररुहेषु च हर्षः" भाग० २२।२ अ०।

**गात्रवत्** पु० १लक्षणागर्भजाते कृष्णपुत्रभेदे २तदनुजभगिन्यां स्त्री ङीप्। गात्रगुप्तशब्दे दृश्यम्। २प्रशस्तगात्रे त्रि०। स्त्रियां ङीप्। [दृश्यम्।

**गात्रविन्द** पु० लक्षणागर्भजाते कृष्णपुत्रभेदे गात्रगुप्तशब्दे

**गात्रसङ्कोचिन्** पु०गात्रं सङ्कोचयति सम्+कुच—णिच्—णिनि ६त०। जाहकजन्तौ राजनि०। [खगे हेमच०।

**गात्रसम्प्लव** पु०गात्रेण संप्लवते सम्+प्लु—अच् ३त०। प्लव-

**गात्रानुलेपनी** स्त्री गात्रमनुलिप्यतेऽनया लिप—करणे ल्युट्। अनुलेपनवर्त्तिकायाम् अमरः।

**गात्रावरण** न० गात्रमावृणोति आ+वृ—ल्यु। गात्रावरके वर्म्मणि "तूणांश्च पूर्णान् महतः शराणामाबध्य गात्रावरणानि चैव" भा०द्रो० २अ०।

**गात्रसम्मित** त्रि० गात्रं सम्मितं सम्पूर्णं यस्य। सम्पूर्णगात्रे त्रिमासोर्द्ध गर्भस्थे प्राणिनि। "पाद उत्पन्नमात्रे तु द्वौ पादौ गात्रसम्मिते। पादोनं व्रतमाचष्टे हत्वा गर्भमचेतनम्" प्रा० त०धृतवाक्यम्।

**गाथ** त्रि० गा—थन्। १स्तोत्रादौ। गायद्गाथं सुतसोमो दुरायन्" ऋ० १।१६७।६। "गाथं गातव्यं स्तोत्रम्" भा०। २श्लोके "पादे द्वादश विषमे मात्राश्चाष्टादश द्वितीये हि। पञ्चदश चेत् तुरीये कथिता गाथा तथैवार्य्या"छन्दोम०उक्तलक्षणे २मात्रावृत्तभेदे ३गानमात्रे च ४प्राकृतभाषायां मेदि०। गाथां करोति अण्। आनुलोम्यादावपि न ट। गाथाकार तत्कारके "अलाप्यदाहरन्तीमां गाथां नित्यं क्षमावताम्"भा०व०२अ०।

पितृगाथादयः। "इतिहासस्य पुराणञ्च गाथाश्च नाराशंसीश्च" अथ० १५।६।४। ६वाक्यमात्रे निघ०।

**गाथक** त्रि० गै—थकन्। गायके "कथकैरिति गाथकैः" भट्टिः।

**गाथपति** पु० ६त० ङ्यापोरिति ह्रस्व०। वाक्पतौ रुद्रे। "गाथपतिं मेधपतिं रुद्रम्" ऋ० १।४३।४।

**गाथिन्** त्रि० गाथा स्तोत्रादि अस्त्यस्य इनि। गाथायुक्ते गीयमानसामयुक्ते "इन्द्रमिद्गाथिनः" १।७।१। तस्यापत्यम् गाथिविदथीत्यादिना अपत्येऽपि न टिलोपः गाथिन तदपत्ये तच्छात्रे च। स्त्रियां ङीप्।

**गादि** पुंस्त्री गदस्यापत्यं बाह्वा० इञ्। गदरूपयादवस्यापत्ये। [ निर्वृत्ते।

**गादित्य** त्रि० गदितेन निर्वृत्तादि प्रगद्या० ञ्य। गदितेन

**गाध** प्रतिष्ठायां अक०लिप्सायाञ्च सक० भ्वा० आत्म० सेट्। गाधते अगाधिष्ट। जगाधे। ऋदित् चङि अह्रस्वः। अजगाधत्-त। गाधः। "अगाधत ततो व्योम" "गाधितासे नभो भूयः" भट्टिः।

**गाध** पु० गाध—भावादौ घञ्। १स्थाने, २लिप्सायां, च कर्मणि घञ्। ३तलस्पर्शे हेमच०।४तद्वति त्रि०।"सरितः कुर्वती गाधाः" रघुः। "अशीमहि गाधमुत प्रतिष्ठाम्" ऋ०५।४७।७।"अनासादितगाधं च पातालतलमव्ययम्" भा० आ० २१अ०।

**गाधि** पु० गाध—इन्। चन्द्रवंश्ये कान्यकुब्जाधिपे, विश्वामित्रपितरि नृपभेदे। "कस्य चित्त्वथ कालस्य कुशनाभस्य धीमतः। जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः स पिता मम काकुत्स्थ! गाधिः परमधार्मिकः" रामा० बा०१।३४अ०। रामं प्रति विश्वामित्रोक्तौ। "ऐलपुत्रानहं वक्ष्ये" इत्युपक्रमे "कुशपुत्रा बभूवुर्हि चत्वारो देववर्चसः"। कुशिकः कुशनाभश्च कुशाम्बो मूर्त्तिमांस्तथा" "कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमं विभुः। लभेयमिति "तं शक्रस्त्रासादभ्येत्य जज्ञिवान्" "पूर्णे वर्षसहस्रे वै तन्तु शक्रो ह्यपश्यत। अत्युग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः। समर्थः पुत्रजनने स्वमेवांशमवासयत्। पुत्रत्वे कल्पयामास स देवेन्द्रः सुरोत्तमः। स गाधिरभवद्राजा मघवान् कौशिकः स्वयम्। पौरकुत्स्यऽभवद्भार्य्या गाधिस्तस्यामजायत" हरिवं० २७अ०।

**गाधिज** पु०गाधेर्जायते जन—ड। विश्वामित्रे ब्रह्मर्षौ तत्कथा हरिवं० २७ अ०। "विश्वामित्रन्तु दायादं गाधिः कुशिकनन्दनः। जनयामास पुत्रन्तु तां विद्याशमात्मकम्। प्राप्य ब्रह्मर्षिसमतां योऽयं सप्तर्षितां गतः। ऋचीकशब्दे १४१४पृ० तदुत्पत्तिकथा। गाधिसुतादयोऽप्यत्र "ततोऽभ्यगात् गाधिसुतः क्षितीन्द्रम्" भट्टिः। "प्रजापतिसुतादासीत् कुशो नाम महीपतिः। कुशस्य पुत्रो बलवान् कुशनाभः सुधार्म्मिकः। कुशनाभसुतोह्यासीत् गाधिरित्येव विश्रुतः" "गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः" रामा०बा०११अ०।२विश्वरथादौ च।

**गाधिन्** पु०गाधिनामके नृपे।"शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनः सुतम्" रामा०बा०१८अ०।

**गाधिपुर** न० ६त०। कान्यकुब्जे महोदयाख्ये पुरे हेमच०। कान्यकुब्जशब्दे १८८६ पृ० कुशनाभशब्दे च दृश्यम्। गाधिनगरादयोऽप्यत्र।

**गाधेय** पु० गाधेरपत्यम् द्व्यचः इत्यनुवृत्तौ "इतोऽनिञः" पा० ढक्। गाधिपुत्रे विश्वामित्रादौ। "विश्वामित्रस्तु गाधेयो राजा विश्वरथस्तथा। विश्वकृत् विश्वजिच्चैव तथा सत्यवती नृप!" हरिवं० ३२ अ०। "गाधेयदिष्टं विरसं रसन्तम्" भट्टिः। तस्य कन्यायां २सत्यवत्यामृचीकपत्न्याम् स्त्री ङीप्। "उवाच भार्य्या गाधेयी भर्त्तारं भार्गवर्षभम्" भा० आनु० ४अ०।

**गान** न०गै—भावे—ल्युट्। १गीतौ। गानं हि द्विविधं लौकिकं वैदिकञ्च। तत्र लौकिकगानस्य लक्षणादि गीतशब्दे वक्ष्यते वैदिकस्य लक्षणादि जै०६।२।२९ सूत्रभाष्यादौ उक्तं यथा

"अर्थैकत्वात् विकल्पः स्यात्" २९सू०। "सामवेदे सहस्रं गीत्युपायाः। आह, के इमे गीत्युपायाः नाम?"। उच्यते,—गीतिर्नाम क्रिया, सा आभ्यन्तरप्रयत्न जनितस्वरविशेषाणामभिव्यञ्जिका, सा सामशब्दाभिलप्या, सा च नियतपरिमाणायामृचि गीयते, तत्सम्पादनार्थाः ऋक्षु अक्षरविकारो विश्लेषो विकर्षणमभ्यासो विरामः स्तोभ इत्येवमादयः सर्वे समधिगताः समाम्नायन्ते। तेषु संशयः,—किं समुच्चीयन्ते उत विकल्प्यन्ते?—इति। किं तावन्नः प्रतिभाति, सर्वेषां समाम्नानात् सर्वाङ्गोपसंहारित्वाच्च प्रयोगवचनस्य, समुच्चीयेरन्निति एवं प्राप्ते ब्रूमः, "अर्थैकत्वाद्विकल्पः स्यात्" इति। एकार्था हि गीत्युपायाः,—गीतिः कथं निर्वर्त्त्येतेति प्रयुज्यन्ते। तत्रान्यतरेण गीतौ निर्वृत्तायां नेतरे प्रयोगमर्हन्ति। तस्माद्विकल्प इति"। तत्र स्वराः क्रुष्टादयः षडन्ताः सप्त सामविधानब्रा०१।१। उक्ताः

यथा "तद्योऽसौ क्रुष्टतम इव साम्नः स्वरस्तं देवा उपजीवन्ति येऽवरेषां प्रथमस्तं मनुष्याः, द्वितीयस्तं गन्धर्वाप्सरसो, यस्तृतीयस्तं पशवो, यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते, यः पञ्चमस्तमसुररक्षांसि, योऽन्त्यस्तमोषधयो वनस्पतयो यच्चान्यज्जगत्, तस्मादाहुः सामैवान्नमिति साम ह्येषामुपजीवनं प्रायच्छत् । उपजीवनीयो भवति य एवं वेद तस्य ह वा एतस्य साम्न ऋगेवास्थीनि स्वरो मांसानि स्तोभा लोमानि । यो ह वै साम्नः स्वं यः सुवर्णं वेद स्वं च ह वै साम्नः सुवर्णं च भवति स्वरो वाव साम्नः स्वं तदेव सुवर्णम्" ।

छान्दोग्ये च "का साम्नो गतिरिति स्वर इति होवाच" "स्वर इति स्वरात्मकत्वात् साम्नः, यो यदात्मकः स तद्गतिस्तदाश्रयश्च भवतीति मृदाश्रय इव घटादि" भा० । सामसंहिताभाष्येऽपि तथैवोक्तं यथा

"साम-शब्द-वाच्यस्य गानस्य स्वरूपमृगक्षरेषु क्रुष्टादिभिः सप्तभिः स्वरैः, अक्षरविकारादिभिश्च निष्पाद्यते । क्रुष्टः प्रथमः द्वितीयस्तृतीयश्चतुर्थः पञ्चमः षष्ठश्च इत्येते सप्त स्वराः ते चावान्तरभेदैर्बहुधा भिन्नाः । स्वरस्य साम-निष्पादकत्वं छान्दोग्योपनिषदः प्रथमे प्रपाठके प्रश्नोत्तराभ्यामामनन्ति" ।

तत्राक्षरविकारविषये पूर्वोत्तरपक्षौ जै० ९।२।२२। सूत्रादिभाष्ययोर्दर्शितौ यथा

"सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात्" सू०२२। "इदमाम्नायते,—'रथन्तरमुत्तरयोर्गायति, यद्योन्यां तदुत्तरयोर्गायति कवतीषु रथन्तरं गायति, विराट्सु वामदेव्यम्" इति । तत्र सन्देहः,—किमुत्तरावर्णवशेन गातव्यं, किं योनिवर्णवशेन ? । कथमुत्तरावर्णवशेन गीतं भवति ? कथं वा योनिवर्णवशेन ? इति । उच्यते, किञ्चिदुदाहरणं गृहीत्वा व्याख्यास्यामः,—यदा तावत् इडन्तालव्यमाई भवति इति योनौ यस्मिन् भागे आईभावः क्रियते, ततो योनिवर्णवशेन गीतं भवति, अथ भागान्तरे इडन्तालव्यं दृष्ट्वा आईभावः क्रियते, तत उत्तरावर्णवशेन गीतं भवति । किं पुनरत्र कर्त्तव्यम् ?—योनिवर्णवशेनेति । कथम् ? । यावति भागे एकारस्य योनौ ईभावः कृतस्तं विचारयामः,—किं तत्र कृतमिति ?—एकारो नोच्चारितः, ईकाराकारौ आगमिताविति, एवञ्चेदुत्तरास्वपि तावत्येव भागे यो वर्णः, स न उच्चारयितव्यः, ईकाराकारौ आगमयितव्यौ इति । एवं, यद्योन्यां तदुत्तरये गीतं भवति । तस्माद्योनिवर्णवशेन गातव्यमिति । अपि चैवं गीतिर्न नङ्क्ष्यति, इतरथा क्वचित् प्रणश्येत् यत्र महती गीतिः अल्पेषु अक्षरेषु गीयते, तत्र व्यक्तं प्रणश्यति यदुत्तराक्षरवशेन क्रियते, तस्माद्योन्यक्षरवशेन कर्त्तव्यमिति । अपि च क्वचित् क्रम उपरुध्यते यत्रक्रमे आईभावभागवर्णः, आर्षश्च क्वचिदुपरुध्यते, यत्र प्राकृत आगमो नैव क्रियते, तत्र स्वाध्यायकाले गानेन च कर्मकालं गानमविरुद्धं कर्त्तव्यं, तस्मात् योन्यक्षरवशेन कर्त्तव्यमिति "सामप्रदेशे विकारः" आईभावादिः, "तदपेक्षः" योन्यपेक्षः, एतत् शास्त्रेण कृतः,—'यद्योन्यां तदुत्तरयोः' इति, यावति सामभागे योनौ आईभावः कृतः, तावत्येवोत्तरासु कर्त्तव्यः" भा० । "वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात्" २३सू० । "उत्तरावर्णवशेन कर्त्तव्यं बादरिर्मन्यते स्म, न योनिभागवशेन । कुतः ? । योऽसौ प्रकृतौ आईभावः कृतः, नासौ आगमः, न च तत्र एकारलोपः, किन्तर्हि ? एकारो नाम आवर्णम् ईवर्णञ्च आवर्णं संहतम्, ईवर्णं विहतम्, उभे अपि च दीर्घे, ताभ्यामसाधुभ्यां सन्ध्यक्षरं साधु जन्यते । तत्र प्रकृतौ आकारेकारौ विश्लेषितौ, नापूर्वावागमितौ, गुणस्तु तयोः कश्चिदपूर्वः कृतः । सर्वत्रात्र प्रमाणं प्रत्यक्षं तद्यत्, तावति भागेऽन्यो वर्णो भवति, न सन्ध्यक्षरं, तत् संश्लेषाभावे विश्लेषो न शक्यः कर्त्तुम्, अन्यस्मिन् भागे यत् सन्ध्यक्षरं भवति, तत् तद्वशाद्विश्लेषः क्रियते एवं, यद्योन्यान्तदुत्तरयोः कृतं भवति, योन्यां हि संश्लिष्टयोर्विश्लेषः कृतः, इहापि संश्लिष्टयोर्विश्लेषः, इतरथा व्यतिरिक्तं कल्पितं स्यात् अथ यदुक्तं,—गीतिः प्रनङ्क्ष्यतीति, न प्रनङ्क्ष्यतीति, विनामं कृत्वा अनक्षरं गायिष्यते । संश्लेषभावाच्चाशक्यो विश्लेषः, आर्षक्रमौ नोपरोत्स्येते" भा० ।

स्तोभविषये च तथैव तौ पक्षौ तत्रैव ९।२।२४।२९ सूत्रादौ दर्शितौ यथा

"स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत्" २४सू० । "कवतीषु रथन्तरं गायति, रथन्तरमुत्तरयोर्गायति यद्योन्यां तदुत्तरयोर्गायति' इति । ततोत्तरावर्णवशेन गातव्यमित्येतत् समधिगतम् । अथेदानीम् इह संदिह्यते,—किं स्तोभाः प्रदिश्यन्ते न वा ? इति । किं प्राप्तम् ?—न प्रदिश्यन्ते इति । कुतः । गीतिर्हि

साम, न स्तोभाः, या गीतिः, सा प्रदिश्यते, "यद्योन्यां तदुत्तरयोर्गायति" इति गायतिशब्दसम्बन्धात् । अपि च ऋक्शब्दार्थैरसंबध्यमानः स्तोभोऽनर्थकः स्यात्, तस्मादपि न प्रदिश्येत । अपि च क्वचिद्भवति वचनम्,— "ऐन्द्राग्नमदृश्नसाम गायति" इति, तत्रानुपपत्तिर्भवेत् गीतकर्मा चैन्द्रो वाक्यशेषेभ्योऽवगम्यते । तस्य "तपति" इत्यनेन सम्बन्धो न स्यात् । तस्मात् स्तोभस्य ऋगन्तरे निवृत्तिः, यथा ऋगक्षराणामगीतित्वात् निवृत्तिरेवं स्तोभाक्षराणामपीति" भा० । "सर्वातिदेशस्तु सामान्याल्लोकवद्विकारः स्यात्"२५सू०। "नैतदस्ति,-स्तोभानां निवृत्तिरिति, सर्वातिदेशो हि भवति, ऋक्—स्तोभ-स्वर-कालाभ्यासविशिष्टायाः गीतेः सामशब्दो वाचकः । कथमवगम्यते ? । तत्र प्रयोगात्, यदि स्तोभा निवर्त्तेरन्, तत्कृतो विशेषो नोपसंहितः स्यात् तत्र शब्दो बाध्येत ! तस्मात् स्तोभाः प्रदिश्येरन्। यत्तूक्तम्,- ऋक्शब्दार्थैः असम्बध्यमानाः स्तोभा अनर्थका भवेयुः, अत्र ब्रूमः,—"लोकवत्" न अनर्थका भविष्यन्ति । तद्यथा, लोके गायनैरक्षुब्ध्यक्षराणि यानि नाम प्रक्षिप्यन्ते, तानि गीतिकालगमनार्थानि, नार्थसम्बन्धाय उच्चार्यन्ते, सुखं ह्यक्षरैः गीतिकालः परिच्छिद्यते, तद्वदिहापि कालपरिच्छेदार्थानि स्तोभाक्षराणि अनुवर्त्तेरन्निति" भा० । "अन्वयतश्चापि दर्शयति"२६सू०।"अन्वयतश्चापि स्तोभान् दर्शयति, यत्राधिकानि पदानि निवर्त्तन्ते, "स्तोभा गेष्णावानुयन्ति" इति, "स्तोभाः" स्तोभा एव 'गेष्णाः" स्वराः । तस्मादपि स्तोभाः प्रदिश्यन्ते" भा० । "निवृत्तिर्वाऽर्थलोपात्"२७सू० ।"वाशब्दात्पक्षो विनिवर्त्त्यते । 'निवृत्तिः' 'अग्निष्टपति' इत्येवञ्जातीयकाः, गीतकर्मा चैन्द्री वाक्यशेषे उपलभ्यते,न तेनैवंजातीयकाः स्तोभाः सम्बध्येरन्निति । अन्वयात्सम्बध्यन्ते लोकवदिति यदुक्तं, तत्परिहर्त्तव्यम्" भा० । "अन्वयो वार्थवादः स्यात्" २८सू० । "अन्वीयुर्वा एवञ्जातीयकाः स्तोभाः, नहि वयमिन्द्ररूपं प्रत्यक्षमुपलभामहे, यच्च वाक्यशेषवचनं, सोऽर्थवादः" भा० ।"अधिकञ्च विवर्णञ्च जैमिनिः स्तोभशब्दत्वात्" २९सू०। "अथ कः स्तोभो नाम, ? तस्य लक्षणं कर्त्तव्यम्, उच्यते,—य ऋगक्षरेभ्योऽधिको न च तैः सवर्णः स स्तोभो नाम, ईदृशे हि लौकिकाः स्तोभशब्दमुपचरन्तीति,—तद्यथा देवदत्तेन सभायां परं प्रजपता बहुस्तोभं कथितमिति, यदर्थवचनेभ्योऽधिकं विवर्णञ्च, तत् आलोच्य एवंप्रकारो भवन्ति । लक्षण प्रयोजनं न वक्तव्यं, लक्षणकर्मणो हि तदेव प्रयोजनं, यल्लक्षितो भविष्यतीति । किमर्थमुभयं सूत्रितं ? नन्वन्यतरत् पर्याप्तम् अधिकमिति वा' इति । नेत्याह,— भवति हि किञ्चित् अधिकं न सवर्णं,—यथा अभ्यासः- "तोयाई, तोयाई" इति, तथा किञ्चित् विवर्णं,नाधिकं,- यथा विकारः,—"ओग्नाइ" इति । तस्मादुभयं सूत्रयितव्यमिति" भा० ।

विवृतञ्चैतत् सामसंहिताभाष्ये यथा

"समुच्चेया विकल्प्या वा विभिन्ना गीति-हेतवः । आद्यः प्रयोगपक्षत्वादैकत्वाद् विकल्पनम् । छान्दोग्ये तवलकारादि-शाखा-भेदेषु विलक्षणा गीति-हेतवोऽक्षर-विकारादय आम्नायन्ते, ते सर्वे कर्मानुष्ठाने समुच्चेतव्याः, कुतः ? प्रयोगवचने सर्वेषां परिगृहीतत्वात्—मैवम्, एकैक-शाखोक्तैरेवाक्षर-विकारादिभिरध्ययन-कालएव गीति-स्वरूपनिष्पत्तेस्तन्निष्पत्ति-लक्षणस्य प्रयोजनस्यैकत्वात्, प्रयोग-वचन-परिगृहीता अपि व्रीहि-यव-वद् बृहद्रथन्तरवच्च विकल्प्यन्ते" इति । गीतिहेतुषु स्तोभस्यात्यन्तप्रसिद्धत्वात्तल्लक्षणं तस्मिन्नेव पादे एकादशाधिकरणे चिन्तितम्—"स्तोभस्य लक्षणं नास्ति किं वास्ति न विवर्णता । आधिक्यमप्यतिव्याप्तं विशिष्टं लक्षणं भवेत् । न तावद् विवर्णत्वं लक्षणम्, वर्णविकारस्य विपरीत-वर्णत्वेन स्तोभत्व-प्रसङ्गात्, "अग्न-आयाहि" (ऋ,१म,१८,१) इत्यस्यामृचि अकारस्य स्थाने ओकारं कृत्वा गायन्ति "ओग्नाइ" इति (गे०प्र१सा१)। अधिको वर्णः स्तोभ इत्युक्ते सति, अभ्यासेऽतिव्याप्तिः, "पित्रासोममिन्द्रमन्दतुत्वा" इत्येतस्यामृचि दतुत्वेत्यक्षर-त्रयं गानकाले विरभ्यस्तम् । अतोविकाराभ्यासयोरतिव्याप्तेर्नास्तिलक्षणम्-इति चेद्—मैवम्, अधिकत्वे सत्यृग्विलक्षण-वर्णः स्तोभः" इति विशिष्टस्य तल्लक्षणत्वात्, लोकेऽपि सभायां विप्रलम्भकेनोच्यमानं प्रकृतार्थानन्वितं काल-क्षेप-मात्र-हेतुं शब्दराशिं स्तोभ इत्याचक्षते, तस्मादस्ति लक्षणम्" इति । अक्षर-विकार-स्तोभादिवत् वर्ण-लोपोऽपि क्वचिद् गीति-हेतुर्भवति, तल्लोपविषयश्च विचारो नवमाध्याये प्रथमपादस्याष्टादशाधिकरणेऽभिहितः—१० "इरा गिरा विकल्पः स्यादुतेरेवाविशेषतः । आद्यमैरं बाध-पूर्वमिरायाविहितत्वतः । ज्योतिष्टोमे श्रूयते "यज्ञायज्ञीयेन स्तुवीत"-इति ।

'यज्ञायज्ञा'-इत्यनेन शब्देन युक्तायामृच्युत्पन्नं साम यज्ञायज्ञीयम्, तस्यामृचि गिराशब्दः पठ्यते 'यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे'-इति। तत्र सामगा योनिगानमधीयानाः सहैव गकारेण गायन्ति 'गायिरा गिरा'-इति, ब्राह्मणे तु गकार-लोप-पूर्वक-आकार-यकारादिकगानं विधीयते 'ऐरं कृत्वोद्गेयम्'-इति, गिरा-शब्दे गकार-लोपात् इराशब्दो भवति, इरायाः सम्बन्धि गानम् ऐरम्, तादृशं कृत्वा प्रयोगकाले तद्गानं कर्त्तव्यमित्यर्थः। तत्र योनिगान-ब्राह्मणयोः समान-बलत्वेन विशेषाभावात् विकल्पेन प्रयोक्तव्यम्-इति प्राप्ते, ब्रूमः—"न गिरा गिरेति ब्रूयाद्, यद् गिरा गिरेति ब्रूयाद् आत्मानमेव तदुद्गाता गिरेत्" इति गकार-सहित गाने बाधकमुक्त्वा गकार-रहित-गिरा-पदं गेयत्वेन विधीयते, तत्पदादेरिकारस्य गानार्थमाकारोयकारइकारश्चेति त्रीन् वर्णान् प्रयुञ्जते, अतः 'आयिरा'-इत्येव गातव्यम्" इति। तत्रैवोपरितनाधिकरणे कश्चिद् विशेषश्चिन्तितः—११ "इरापदं न गेयं स्याद् गेयं वा गीत्यनुक्तितः। न गेयं गीयमानस्य स्थाने पातात् प्रगीयते। ब्राह्मणेन निहित-इराशब्दो न गातव्यः, कुतः? ऐरमिति शब्देन गीतेरनुक्तत्वात्, पाणिनीयेन 'विमुक्तादिभ्योऽण् [५,२,६१]' इति सूत्रेणेराशब्दादण्-प्रत्ययोमत्वर्थीयो विहितः, तथासतीरापदोपेतं कृत्वेत्येतावानेवार्थो भवति, यदि प्रगीतेरापद-सम्बन्धः तद्धितेन विवक्ष्येत, तदानीमाकारो यकारइकारोरेफआकारश्चैतैः पञ्चभिवर्णैर्निष्पन्नमायिरा-रूपं गीयमानेरा-शब्द-प्रातिपदिकं भवति, तादृशात् प्रातिपदिकात् पाणिनीयेन 'वृद्धाच्छः [४,२,११४]'-इति सूत्रेण छप्रत्ययान्तरे सति, आयिरीयं कृत्वेति ब्राह्मणपाठो भवेत्, तस्माद्गेयम्-इति प्राप्ते, ब्रूमः—गीयमानस्य गिरा-पदस्य स्थाने इरापदं विधीयते-इतिपदमात्रस्य बाधः, गानन्तु न बाध्यते, किञ्च विमुक्तादिसूत्रेणाण्-प्रत्ययेऽपि, पूर्वस्मात् 'मतौ छः सूक्त-साम्नोः [५,२,५९]-इति सूत्रात् सामानुवृत्तेरैरं सामेत्यर्थो भवति, सामत्वं च गीति साध्यम्, यदा तु 'तस्य विकारः [४,३,१३४]'-इत्यर्थे अण्प्रत्ययः, तदानीमिरायाविकार इति विग्रहेयथोक्तं गानं लभ्यते, तस्माद् गातव्यम्" इति। तत्रैव स्वरगन्धराणां संस्कारकृतं मानात्मकसाम्नो व्यवस्थाप्योक्ता यथा

यथोक्तस्वरगन्धराणां संस्कारकं गीत्यात्मकं यत् साम तदेतदेकैकं छन्दोगा एकैकस्यामृचि 'वेदसाम-नामके ग्रन्थेऽधीयन्त, ऊहनामके तु ग्रन्थे एकैकं साम तृचेऽधीयते सोऽयमूहग्रन्थः तस्मिन्नेव पादे प्रथमाधिकरणस्य द्वितीयवर्णके विचारितः—"ऊहग्रन्थोऽपौरुषेयः पौरुषेयोऽथवाऽग्रिमः। वेदसाम-समानत्वाद् विधि-सार्थत्वतोऽन्तिमः। यस्मिन् ग्रन्थे सामगास्तृचे तृचे सामैकैकं गायन्ति सोऽयमूहग्रन्थोनित्यो न तु पुरुषेण निर्मितः, कुतः? अनध्यायवर्जनेन कर्तृस्मरणेनाध्यापकानां वेदत्वप्रसिद्ध्या च वेदसाम-नामक-योनि-ग्रन्थ-सदृशत्वात्, इति चेत्—मैवम्, अपौरुषेयत्वे विधि-वैयर्थ्य-प्रसङ्गात्—'यद्योन्यां तदुत्तरयोर्गायति'-इति विधीयते। अयमर्थः—अपौरुषेयत्वेन सम्मतिपन्ने वेदसाम-नामके ग्रन्थे 'कया नश्चित्र आ भुवत्' इत्येतस्यां योन्यामेकस्यामृचि यद्-वामदेव्य-नामकं सामोपदिष्टं तदेवोत्तरयोर्ऋचोः 'कस्त्वासत्योमदानाम्' "अभी षु णः सखीनाम्" इत्येतयोः द्वितीयतृतीययोर्गातव्यम्-इत्ययं विधिरूहग्रन्थस्य वेदत्वे व्यर्थः स्यात्, "वेदसाम-वदध्ययनादेव तत् प्रसिद्धेः। उपरितनऋग्द्वये सामोहस्य पौरुषेयत्वेऽपि सामस्वरूपस्य तदाधारभूतानां तिसृणामृचां च वेदत्वादनध्याये वर्जनीयाः, कर्तृस्मरणं जीर्णकूपारामादिष्विव चिरकाल-व्यवधानादुपपन्नम्, अ-स्मरण-मूलिकैवाध्यापकानां वेदत्वप्रसिद्धिः यथावह्वृचानामध्यापकामहाव्रत-प्रयोग-प्रतिपादकमाश्वलायन-निर्मितं कल्पसूत्रमारण्येऽधीयमानाः पञ्चममारण्यकमिति वेदत्वेन व्यवहरन्ति तद्वत्। न च तस्यापि वेदत्वमस्त्विति वाच्यम्, प्रथमारण्यकेन पुनरुक्तत्वात्, अर्थवाद-राहित्येन ब्राह्मणसादृश्याभावाच्च। तस्मात् पञ्चमारण्यकवदूहः पौरुषेयः, पौरुषेयस्य च न्यायमूलत्वात् यत् वक्ष्यमाणन्याय-विरोध-स्तदप्रमाणम्"। अत्रेदं दिङ्मात्रमुदाह्रियते। "अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि बर्हिषि" साम्नः प्रथमा ऋक्। तस्या अक्षरविकारादिभिरेवं गानम्। यथा "ओग्नाइ आयाहीइ वोइ(यि) तोयाइ तोयाइ गृणानो ह, व्यदा तोयाइ तोयाइ नाइ होता साइ वा औ हो वा हीषि"। तत्र अग्न इत्यत्र आद्यस्य वर्णविकारे अइत्यस्य स्थाने ओरूपो विकारः। एवं ए इत्येकारस्थाने आइ इति विश्लेषणम्। आयाहि

इत्यत्र दीर्घता इति वर्णविकारः। वी इत्यत्र वीइ (यि) विश्लेषणम्। त इत्यस्य तो इति विकारः। गे इत्यत्र एकारस्य आई, इति विश्लेषे ताई इति। तोयाई तोयाई इत्यभ्यासः। मयागोह, इति ह्व्यदातय इत्यस्यैकदेशे विरामः। व्यदातवे इत्यत्र त इत्यत्र अकारस्य ओ इति विकारे ये इत्यत्र आई इति विश्लेषे च तोयाई इति तस्य चाभ्यासः। नि इत्यत्र नायि इति वर्णविकारः। हो इत्यत्र विरामः। ता इति यथास्थितम् सत्सीत्यस्य स इत्यत्र विरामः दीर्घश्चाक्षरागमः वर्णविकारः। त्सि इत्यस्य स्थाने तुषाय इति तल्लोपविकारौ। वर्हिषि इत्यस्य व इत्यत्र विरामो दीर्घश्च। औहो वा इति स्तोभः स्वरगत्यराधिकत्वात्। र्हिषि इत्यत्र दीर्घरलोपौ अक्षरविकारश्च। एवमन्यत्राप्यूहम्। एवंरूपेण अक्षरविकारादि तु नारदशिक्षाद्यनुसारेणो न्वेयम्। सामभेदाश्च रथन्तरादयः गानविशेषा एव यथाह सामसं० भाष्ये

"यदुक्तं "गीतिषु सामाख्ये"ति" जै०सू०तदेव विशदीकर्त्तुं सप्तमाध्यायस्य द्वितीयपादे रथन्तरशब्दो निरूपितः "अतिदेशं विनिश्चेतुं कवतीषु रथन्तरम्। गायतीत्यृग् गानयुक्ता शब्दार्थोगानमेव वा। इति चिन्ता गानयुक्ता त्वभित्वेत्यृक् प्रसिद्धितः। लाघवादतिदेशस्य योग्यत्वाद्गानिमोभवेत्। इदमाम्नायते—"कवतीषु रथन्तरं गायति"-इति,"कया नश्चित्र आभुवदित्याद्यास्तिस्र ऋचः कवत्यः, तासु वामदेव्यं सामाध्ययनतः प्राप्तम् तस्मादिदं रथन्तरं साम तास्वतिदिश्यते, तत्रातिदेशस्य स्वरूपं निश्चेतुं रथन्तर-शब्दार्थश्चिन्त्यते। गानविशेषयुक्ता "अभि त्वा शूर नोनुम" इतीयमृग् रथन्तरमित्युच्यते, कुतः? अध्येतृ-प्रसिद्धिनः रथन्तरं गीयतामिति केनचिदुक्ताः अध्येतारः स्वर-स्तोभविशेषयुक्ताम् अभित्वेत्यृचं पठन्ति, न तु स्वरस्तोभमात्रम् तस्माद् गान-विशिष्टायाऋचोरथन्तर-शब्दार्थत्वमिति प्राप्ते, ब्रूमः स्वरादिविशेषानुपूर्वीमात्रस्वरूपस्वरगत्यर-व्यतिरिक्तं यद् गानं तदेव रथन्तरशब्दार्थः, कुतः? लाघवात्, किञ्च कवतीष्वृक्षु गानमतिदेष्टुं योग्यम्। नत्वृचस्तद्योग्यतास्ति, कयानोऽभित्वेत्यनयोर्ऋचोर्युगपदाधाराधेयभावेन पठितुमशक्यत्वात्, तस्माद् गानविशेषएव रथन्तरशब्दार्थः इति। पुनरपि नवमाध्यायस्य द्वितीयपादे प्रथमाधिकरणस्य प्रथमवर्णके सामशब्दस्य गानमात्रवाचित्वं व्यारितम्—"सामोक्ति-बृहदाद्युक्ती गीतायामृचि केवले। गाने वा गानएवेति व्यार्यते सप्रमोदितम्। सामान्यवाची सामशब्दो विशेषवाचिनो बृहद्रथन्तरादि-शब्दाश्च गानमात्रे वर्त्तन्ते, न तु गानविशिष्टायामृचि-इत्ययं नियमः सप्तमस्य द्वितीयपादे सिद्धः"। वेदगानग्रन्थे ऊहगानग्रन्थे चास्य विस्तरः। तद्भेदाश्च सामशब्दे वक्ष्यन्ते।

गा—गतौ ल्युट्। २गमने। गा स्तुतौ ल्युट्। ३स्तवने।

**गानिन्** त्रि० गानमस्त्यस्य इनि। १गीतियुक्ते। २गीतियुक्ते ३स्तुतियुक्ते च स्त्रियां ङीप्। ४वचायाम् स्त्री शब्दच०।

**गान्तु** त्रि० गम—तुन् इडित्त्व। १गन्तरि २पथिके उज्ज्वल० ३गायके संक्षिप्तसा० वस्तुतः तत्रापि पथिक इत्येव पाठः लिपिकरप्रमादात् गायक इति।

**गान्त्री** स्त्री गन्त्र्येव गन्त्री+स्वार्थे अण् ङीप्। वृषवाह्ये शकटे रायमुकुटः। "अमुजिगमिनमीत्यादिना" सूत्रेण ष्ट्रन् इड्विच्च गान्त्रं शकटमित्युज्ज्वलदत्तोक्तेः क्लीवत्वमपि। [नदीभवे।

**गान्दिक** त्रि० गन्दिकायां भवः सिन्ध्वा० अण्। गन्दिका-

**गान्दिनी** स्त्री काशिराजदुहितरि श्वफल्कभार्य्यायामक्रूरादिमातरि त्रिका० तस्या नामनिरुक्तिः हरिवं०३५अ० उक्ता यथा "श्वफल्कः काशिराजस्य सुतां भार्य्यामविन्दत। गान्दिनी नाम सा गां तु ददौ विप्रेषु नित्यशः। सा मातुरुदरस्था तु बहून् वर्षगणान् किल। निवसन्ती न वै जज्ञे गर्भस्थां तां पिताऽब्रवीत्। जायस्व शीघ्रं भद्रन्ते किमर्थमिह तिष्ठसि। प्रोवाच चैनं गर्भस्था कन्या गाञ्च दिने दिने। यदि दद्यां ततो जाये पितरं प्रत्युवाच ह। तथेत्युक्ता च तां चास्याः पिता काममपूरयत्। दाता यज्वा च वीरश्च श्रुतवानतिथिप्रियः। अक्रूरः सुषुवे तस्यां श्वफल्काद्भूरिदक्षिणः। उपमद्गुस्तथा मद्गुर्मुदरश्चारिमेजयः। अविक्षिपस्तथोपेक्षः शत्रुघ्नोऽथारिमर्द्दनः। धर्मभृग् यतिधर्मा च गृध्रभोजान्तकस्तथा। आवाह प्रतिवाहौ च सुन्दरी च वराङ्गना"। गान्धिनीति त्रिका० पाठान्तरम्। दर्शितनिरुक्तेर्दकारयुक्तैव युक्ता। गां भूमिं दायति शोधयति दै—णिनि पृषो०। २गङ्गायां त्रिका०।

**गान्दि(न्धि)नीसुत** पु० ६त०। १भीष्मे २कार्त्तिकेये त्रिका० ३अक्रूरादौ च। गान्दिनीशब्दे तन्मूलं

द्यम्। "रिपोर्गिरा गुरुमपि गान्दिनीसुतम्" माघः। "गान्दि(न्दि)न्यास्तु श्वफल्कतः। अक्रूरप्रमुखा आसन् पुत्रा द्वादश विश्रुताः" भाग० "आसङ्गः सारमेयश्च मृदुरो मृदुरिर्गिरः। धर्मवृद्धः सुकर्मा च क्षेत्रोऽपेक्षोऽरिमर्दनः। शत्रुघ्नो गन्धमादश्च प्रतिबाहुश्च द्वादशः। तेषां स्वसा सुचार्व्वाख्या" भाग० ९।२४।९। अत्र अक्रूरप्रमुखा इत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा अक्रूरं त्यक्त्वा द्वादश तेन सह त्रयोदशेत्यर्थः। तत्सुतायां ४चार्व्यां स्त्री। गान्दिनीशब्दोक्तौ हरिवं० वाक्ये तत्पुत्राणां नामान्तरमुक्तं तच्च कल्पभेदादविरुद्धम्।

**गान्दी** स्त्री अक्रूरमातरि गान्दिन्याम्। "स्यमन्तककृते प्राज्ञो गान्दीपुत्रो महायशाः" हरिवं ४०अ०।

**गान्धपिङ्गलेय** पुंस्त्री गन्धपिङ्गलाया अपत्यम् शुभ्रा० ढक्। गन्धपिङ्गलायाः अपत्ये स्त्रियां ङीप्।

**गान्धर्व** त्रि० गन्धर्वस्येदम् अण्। १गन्धर्वसम्बन्धिनि गान्धर्वलोकः। "इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः स तु विज्ञेयः" इत्युक्ते २विवाहभेदे, गान्धर्वविवाहेऽधिकारिभेदादि नि० सि० उक्तं यथा।

"मनुः "षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरो वरान्। विट्शूद्रयोऽस्तु तानेव विद्याद्धर्म्यानराक्षसान्"। चतुरः आसुरगान्धर्वराक्षसपैशाचान्, तान् राक्षसवर्ज्यान् वैश्यशूद्रयोः। स एव "आसुरं वैश्यशूद्रयोः" हेमाद्रौ पैठीनसिः "राक्षसो वैश्यस्य, पैशाचः शूद्रस्य" प्रचेताः "पैशाचोऽसंस्कृतप्रसूतानां प्रतिलोमजानाञ्च" मनुः "राक्षसस्त्वासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः" क्षत्रियादेः संकटे पैशाचमाह माधवीये वत्सः "सर्वोपायैरसाध्या स्यात् सुकन्या पुरुषस्य या। चौर्य्येणापि विवाहेन सा विवाह्या रहःस्थिता" गान्धर्वादिविवाहेष्वप्युदकपूर्वकं दानमाह तत्रैव यमः "नोदकेन न वा वाचा कन्यायाः पतिरुच्यते। पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे" पराशरमाधवीये देवलोऽपि "गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः। कर्त्तव्यश्च त्रिभिर्वर्णैः समर्थैर्वाग्निसाक्षिकः" त्रैवर्णोक्तेः गान्धर्वादौ विप्रवर्जमधिकार उक्तः। तत्रैव परिशिष्टे "गान्धर्वासुरपैशाचा विवाहा राक्षसश्च यः। पूर्वं परिग्रहस्तेषु पश्चाद्धोमो विधीयते" अतो होमादावकृते भार्य्यात्वाभावाद्दरान्तराय देया तथा च तत्रैव वसिष्ठबौधायनौ "बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता। अन्यस्मै विधिवद्देया यथा कन्या तथैव सेति" अत्र मन्त्रसंस्काराभावेऽन्यस्मै दानस्य सर्वविवाहेषु साम्यादुबलादपहारे राक्षसपैशाचयोर्विशेषवचनं व्यर्थम्। तेन तयोर्यदि न संस्कृता संस्कृता वेत्यारत्र कन्यानुमत्यभावेऽन्यस्मै देयेति व्याख्येयम्" "द्वयोः सकामयोर्मातापितृरहितो योगो गान्धर्वः" विष्णुः। ३भारतवर्षीयोपद्वीपभेदे "भारतस्यास्य वर्षस्य नव भेदान्निशामय। इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान्। नागद्वीपस्तथा सौम्यो गा(ग)न्धर्वस्त्वथ वारुणः। अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः" पुराणस० विष्णुपु०। तस्य द्वीपस्य गन्धर्वप्रधानत्वात् गा(ग)न्धर्वसंज्ञा। ४सामवेदस्योपवेदे उपवेदशब्दे १२३०पृ० जिद्वतिः। "पदस्यस्वरसंघातस्तालेन सङ्गतस्तथा। प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते" इत्युक्ते ५सङ्गीतभेदे, न० हेमच०। गान्धर्वचित्तता च सुश्रुते वातप्रकृतिनिमित्ततयोक्ता। सप्तप्रकृतयो भवन्तीत्युपक्रमे "वातप्रकृतिलक्षणोक्तौ "तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्य्यनार्य्यो गान्धर्वचित्तः स्फुटितचरणः" इत्यादि। गान्धर्वशाला सङ्गीतशालायाम् गान्धर्वविद्या सङ्गीतविद्यायाम्। गान्धर्वविद् सङ्गीतवेत्तरि। गन्धर्वो देवताऽस्य अण्। ६तद्देवताकेऽस्त्रे। "गान्धर्वमादत्स्व सखे! ममास्त्रम्" रघुः। स्वार्थे अण्। ६अश्वे अमरः। "नानाविधाविष्कृतसामजस्वरः सहस्रवर्त्मा चपलैर्दुरध्ययः। गान्धर्वभूमिष्ठतया समानतां स सामवेदस्य दधौ बलोदधिः" माघः। सामवेदपक्षे गानम् बलपक्षे अश्वः। गान्धर्वं गानं प्रियत्वेनास्त्यस्याः प्रज्ञा०अण् ङीप्। ७दुर्गायाम् स्त्री "ह्रीं श्रीं गार्गीञ्च गान्धर्वीं योगिनीं योगदां सदा" हरिवं १७८ अ०दुर्गास्तुतौ। ८वाचि स्त्री निघण्टुः "अग्निर्गान्धर्वीं पथ्यामृतस्याग्ने मेव्यूतिईत" ऋ० १०।८०।६।

**गान्धर्विक** त्रि० गान्धर्वे कुशलः ठक्। सङ्गीतकुशले। "यास्ये माषकुलत्थाभोज्यं गान्धर्विकैर्योगः" वृ० सं० ८६अ०। काकशकुने उक्तम्।

**गान्धार** पु० गन्ध एव स्वार्थे अण् तमृच्छति ऋ—अण् उप०स०। १सिन्दूरे २देशभेदे च (कान्दार) मेदि० स च देशः वृ०स० कूर्मविभागे१५अ० उत्तरस्यामुक्तः "उत्तरतः कैलासः" इत्युपक्रमे "गान्धारयशोवतहेमतालराज-

न्यखचराश्च "गन्धारोऽभिजनोऽस्य सिन्ध्वा० अण्। पित्रादिक्रमेण ३गान्धारदेशवासिनि। ४तन्नृपे च बहुषु तस्य लुक्। गन्धाराः तद्वासिषु तन्नृपेषु च ब०व०। "क्रमेण व्यचरत् स्फीतस्ततः पञ्चनदं ययौ" "तस्मादपि च कौरव्य! गन्धारविषयं ययौ" "ततो गन्धारराजेन युद्धमासीत् किरीटिनः" भा० आनु० ८३ अ०। "शकुनेस्तनयो वीरो गन्धाराणां महारथः। निरुध्यमानस्तैश्चापि गन्धारैः पाण्डुनन्दनः"। "वध्यमानेषु तेष्वाजौ गन्धारेषु समन्ततः" ८४ अ०। गन्धारे भवः तस्य राजा वा कच्छा० अण्। ५गन्धारदेशभवे मनुष्यतत्स्थभिन्ने मनुष्यतत्स्थयोस्तु वुञ्। गान्धारक गान्धारदेशस्थे मनुष्ये तदीयहसितादौ च। "शकुनिस्तु सहानीको माद्रीपुत्रमवारयत्। गान्धारकैः सुप्रशस्तैश्चापशक्त्यृष्टि पाणिभिः" भा० द्रो० ९५ अ०। "वायुः समुद्गतो नाभे कण्ठशीर्षसमाहतः। नानागन्धवहः पुण्यो गान्धारस्तेन हेतुना" भरतोक्ते "नाभेः समुद्गतो वायुर्गन्धमोतं च चालयन्। सशब्दस्तेन निर्याति गान्धारस्तेन कथ्यते" संगी० दा० उक्ते च तन्त्रीकण्ठोत्थितसप्तस्वरान्तर्गते ५तृतीयस्वरे। "अजाविकं च गान्धारम्" इत्युक्तेः तस्याजाविकस्वरतुल्यता। "चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः। ऋषभे धैवते तिस्रो द्वे गान्धारनिषादयोः" संगी० दा०। ७गन्धरसे न० त्रिका०। गान्धारेरपत्यम् "साल्वेयगान्धारिभ्याञ्च" पा० अण्। ८गान्धारेरपत्ये पुंस्त्री स्त्रियां ङीप्।

**गान्धारि** पु० गन्धमेव गान्धं सौरभमृच्छति ऋ—इन्। १गान्धारदेशे गान्धारस्य तत्तद्देशनृपस्यापत्यम् इञ्। २तद्देशनृपापत्ये। "गान्धारिभिरसंभ्रान्तैः पार्वतीयैश्च दुर्जयैः" भा० कर्ण० ४६ अ०। "अलं द्यूतेन गान्धारे! विदुरो न प्रशंसति" भा० स० ४८ अ०। गान्धारिः शकुनिः सुबलनृपपुत्रः। "अनुज्ञातस्तु गान्धारिः कर्णेन सहितस्तदा भा० व० २३८।

**गान्धारी** स्त्री गान्धारस्यापत्यम् स्त्री इञ् ततो ङीप्। गान्धारदेशनृपकन्यायाम् १सा च अजमीढभार्याभेदः यथाह भा० आ० ९५ अ०। "अजमीढस्य चतुर्विंशं पुत्रशतं बभूव कैकय्यां गान्धार्यां विशालायामृक्षायां चेति"। धृतराष्ट्रभार्या सुबलात्मजा दुर्योधनादिमाता च यथाह भा० आ० ११० अ०। "अथ शुश्राव विप्रेभ्यो गान्धारीं सुबलात्मजाम्। आराध्य वरदं देवं भगनेत्रहरं हरम्। गान्धारी किल पुत्राणां शतं लेभे वरं शुभा। इति शुश्राव तत्त्वेन भीष्मः कुरुपितामहः। ततो गन्धारराजस्य प्रेषयामास भारत!। अचक्षुरिति तत्रासीत् सुबलस्य विचारणा। कुलं ख्यातिञ्च वृत्तञ्च बुद्ध्या तु प्रसमीक्ष्य सः। ददौ तां धृतराष्ट्राय गान्धारीं धर्मचारिणीम्। गान्धारी त्वथ शुश्राव धृतराष्ट्रमचक्षुषम्। आत्मानं दित्सितं चास्मै पित्रा मात्रा च भारत!। ततः सा पटमादाय कृत्वा बहुगुणं तदा। बबन्ध नेत्रे स्वे राजन्! पतिव्रतपरायणा। नाभ्यसूयां पतिमहमित्येवं कृतनिश्चया। ततो गान्धारराजस्य पुत्रः शकुनिरभ्यगात्"। "इडापृष्ठे तु गान्धारी मयूरगलसन्निभा। सव्यपादादिनेत्रान्तव्यापिनी परिकीर्त्तिता" तन्त्रोक्तलक्षणे ३नाड़ीभेदे। ४जिनानां शासनदेवताभेदे हेमच०। ५यवासे राजनि०। ६दुरालभायां भावप्र०। ७पार्वतीसहचरीभेदे "गौरी विद्याऽथ गान्धारी केशिनी मित्रसाह्वया" भा० व० २३०अ०।

**गान्धारीतनय** पु० ६त०। १दुर्योधनादौ तद्भगिन्यां २दुःशलायां स्त्री। तस्यां तदुत्पत्तिकथा

"क्षुच्छ्रमाभिपरिग्लानं द्वैपायनमुपस्थितम्। तोषयामास गान्धारी व्यासस्तस्यै वरं ददौ। सा वव्रे सदृशं भर्त्तुः पुत्राणां शतमात्मनः। ततः कालेन सा गर्भं धृतराष्ट्रादथाग्रहीत्। संवत्सरद्वयं तन्तु गान्धारी गर्भमाहितम्। अप्रजा धारयामास ततस्तां दुःखमाविशत्। श्रुत्वा कुन्तीसुतं जातं बालार्कसमतेजसम्। उदरस्यात्मनः स्थैर्य्यमुपलभ्यान्वचिन्तयत्। अज्ञातं धृतराष्ट्रस्य यत्नेन महता ततः। सोदरं घातयामास गान्धारी दुःखमूर्च्छिता। ततो जज्ञे मांसपेशी लोहाष्ठीलेव संहता। द्विवर्षसम्भृतां कुक्षौ तामुत्स्रष्टुं प्रचक्रमे। अथ द्वैपायनो ज्ञात्वा त्वरितः समुपागमत्। तां स मांसमयीं पेशीं ददर्श जपतां वरः। ततोऽब्रवीत् सौबलेयीं किमिदं ते चिकीर्षितम्। सा चात्मनो मतं सत्यं शशंस परमर्षये। गान्धार्युवाच। ज्येष्ठं कुन्तीसुतं जातं श्रुत्वा रविसमप्रभम्। दुःखेन परमेणेदमुदरं घातितं मया। शतञ्च किल पुत्राणां वितीर्णं मे त्वया पुरा। इयञ्च मे मांसपेशी जाता पुत्रशताय वै। व्यास उवाच। एवमेतत् सौबलेयि! नैतज्जात्वन्यथा भवेत्। वितथं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यदा। घृतपूर्णं कुण्डशतं क्षिप्रमेव विधीयताम्। सुगुप्तेषु

देशेषु रक्षा चैव विधीयताम्। शीताभिरद्भिरष्ठीलामिमाञ्च परिषेचय। वैशम्पायन उवाच। सा सिच्यमाना त्वष्ठीला अभवत् बहुधा तदा। अङ्गुष्ठपर्व्वमात्राणां गर्भाणां पृथगेव तु। एकाधिकशतं पूर्णं यथायोगं विशाम्पते!। मांसपेश्यास्तदा राजन्! क्रमशः कालपर्य्ययात्। ततस्तांस्तेषु कुम्भेषु गर्भानवदधे तदा। स्वनुगुप्तेषु देशेषु रक्षां चैवादधात्ततः। शशंस चैव भगवान् कालेनैतावता पुनः। उद्घाटनीयान्येतानि कुम्भानीति स सौबलीम्। इत्युक्त्वा भगवान् व्यासस्तथा प्रतिविधाय च। जगाम तपसे धीमान् हिमवन्तं शिलोच्चयम्। जज्ञे क्रमेण चैतेन तेषां दुर्य्योधनो नृपः!। जन्मतस्तु प्रमाणेन ज्येष्ठो राजा युधिष्ठिरः"। भा० आ० ११५ अ०।

तेषां नामानि ज्यैष्ठानुज्यैष्ठानि च तत्रैव ११७ अ० पाठक्रमेणोक्तानि यथा

"दुर्य्योधनो युयुत्सुश्च राजन्! दुःशासनस्तथा। दुःसहो दुःशलश्चैव जलसन्धः समः सहः। विन्दानुविन्दौ दुर्द्धर्षः सुबाहुर्दुष्प्रधर्षणः। दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च। विविंशतिर्विकर्णश्च शलः सत्त्वः सुलोचनः। चित्रोपचित्रौ चित्राक्षश्चारुचित्रःशरासनः। दुर्मदो दुर्विगाहश्च विवित्सुर्विकटाननः। ऊर्णनाभः सुनाभश्च तथा नन्दोपनन्दकौ। चित्रबाणश्चित्रवर्म्मा सुवर्म्मा दुर्विमोचनः। अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः। भीमवेगो भीमबलो बलाकी बलवर्द्धनः। उग्रायुधो भीमकर्म्मा कनकायुर्दृढायुधः। दृढवर्म्मा दृढक्षत्रः सोमकीर्त्तिरनूदरः। दृढसन्धो जरासन्धः सत्यसन्धः सदः सुवाक्। उग्रश्रवा उग्रसेनः सेनानीर्दुष्पराजयः। अपराजितः कुण्डशायी विशालाक्षो दुराधरः। दृढहस्तः सुहस्तश्च वातवेगसुवर्च्चसौ। आदित्यकेतुर्बह्वाशी नागदत्तोऽग्रयाय्यपि। कवची निषङ्गी कुण्डी च कुण्डधारो धनुर्द्धरः। उग्रभीमरथौ वीरौ वीरबाहुरलोलुपः। अभयो रौद्रकर्म्मा च तथा दृढरथश्च यः। अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः। प्रमथश्च प्रमाथी च दीर्घरोमश्च वीर्य्यवान्। दीर्घबाहुर्महाबाहुर्व्यूढोरुः कनकध्वजः। कुण्डाशी विरजाश्चैव दुःशला च शताधिका"। [ भगिन्यां स्त्री ङीप्।

**गान्धारेय** पु० गान्धार्य्या अपत्यम् ढक्। १दुर्य्योधनादौ २तद्-

**गान्धिक** पु० गन्धो गन्धद्रव्यं पण्यमस्य ठक्। १सुगन्धिद्रव्यव्यवहारिणि (गन्धवेणे) अम्बष्ठात् राजपुत्र्यां जाते सङ्कीर्णजातिभेदे। "शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः। आद्यशब्दात् मालाकाररजकगान्धिकादयः" सा० द०। स्वार्थे ठक्। गन्धद्रव्यमात्रे च "पणानां गान्धिकं पण्यं किमन्यैः काञ्चनादिकैः। एकैकेन च यत् क्रीतं तच्छतेन प्रदीयते" पञ्चत०। गन्धी+स्वार्थे क। ३गान्धिका कीटविशेषे स्त्री (गँधोपोका) शब्दर०। कपिशब्दे २२०० पृ० दृश्यम्।

**गान्धी** स्त्री गन्ध एव स्वार्थे प्रज्ञा० अण्। सोऽस्त्या अस्ति अच् गौरा० ङीष्। कीटभेदे (गँधोपोका) कपिशब्दे २२०० पृ० दृश्यम्।

**गामिन्** त्रि० गम+भविष्यति णिनि। भाविगमनकारके "आगामी "यद्वागामिक्रियामुख्यकालस्याप्यन्तरालवत्" छन्दोग० एतद्योगे कर्म्मणि न षष्ठी २त०। "द्वितीयगामी न हि शब्द एष नः" रघुः। कर्त्तर्य्युपमाने उपपदे गम-णिनि। तत्तुल्यगन्तरि। "हंसवारणगामिनी" मनुः। "सममेव समाक्रान्तं द्वयं द्विरदगामिना" रघुः।

**गामुक** त्रि० गम-उकञ्। गमनशीले।

**गाम्भीर्य्य** न० गम्भीरस्य भावः ष्यञ्। १अगाधत्वे तलस्पर्शनायोग्यत्वे २अविकारित्वे च। "निरस्तगाम्भीर्य्यमपास्तपुष्पकम्" माघः। "गाम्भीर्य्यमविकारित्वम् अगाधत्वञ्च" मल्लि०। सा० द० उक्ते ३पौरुषसात्त्विकगुणभेदे यथा "शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी। ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः" इति पुरुषगुणानष्टधा विभज्य "भीशोकक्रोधहर्षाद्यैर्गाम्भीर्य्यं निर्व्विकारता" इति लक्षितम्। "विकाराः सहजा यस्य हर्षक्रोधभयादिषु। भावेषु नोपलभ्यन्ते तत् गाम्भीर्य्यमिति स्मृतम्" शाकु०। यथा "आहूतस्याभिषेकाय विसृष्टस्य वनाय च। न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः"। ४अचापल्ये च "गाम्भीर्य्यमनोहरं वपुः" रघुः "गाम्भीर्य्येण अचापल्येन" मल्लि०।

**गाय** पु० गै-भावे घञ्। १गाने। "यथाविधानेन पठन् सामगायमविच्युतम्" याज्ञ०। कर्मण्युपपदे गै-कर्त्तरि अण्। तत्तत्पदार्थगायके त्रि०। "विज्ञाय तावुत्तमगायकिङ्करौ" भाग० ४।१२।१८। स्त्रियां टाप् सि० कौ०। सुखमते षत्वा ङीप्।

**गायक** त्रि० गै-ण्वुल्। १गानकर्त्तरि गानोपजीविनि २नटे। "पठन्ति पाणिस्वनिकास्तथा गायन्ति गायकाः" भा०शा०

५२ अ० । "नर्त्तकैश्चापि नृत्यद्भिर्गायकानाञ्च निःस्वनैः" भा० व्या० ७० अ० ।

गाय(त्त्री)त्री स्त्री गायन्तं त्रायते त्रै–क, गीयतेऽनेन गै–घञ् यण् नि० ह्रस्वः गयः प्राणस्तं त्रायते त्रै–क वा । षडक्षरपादके छन्दोभेदे "उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका । गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च" वृ०र० । अस्याः पादे लघुगुरुभेदविवेशनभेदात् चतुःषष्टिर्भेदाः । तेषां मध्ये भेदत्रयस्य विशेषनामानि तनुमध्या शशिवदना वसुमतीति तत्रोक्तानि । इतरभेदानां तु विशेषनामाभावेऽपि ऋग्वेदादौ बाहुल्येनोदाहरणात् तेषां गायत्रीछन्दस्कत्वम् । इयांस्तु भेदः लौकिकच्छन्दसि षडक्षरपादेन चतुश्चरणता वेदे अष्टाक्षरपादत्वेन त्रिपादतया समष्ट्या चतुर्विंशाक्षरता । यथा "अग्निमीळे पुरोहितम् यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम्" इत्यादौ अतएव कात्या० सर्वानुक्रमणिकायां ५अ० "अथ छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीत्यादिना छन्दोनामान्यभिधाय चतुर्विंशत्यक्षरादीनि चतुरुत्तराणीति गायत्र्यादीनां समष्ट्यक्षरसंख्यामुक्त्वा "प्रथमं छन्दस्त्रिपदा गायत्री" इति सा लक्षिता । तेनाष्टाक्षरपादतया त्रिपादत्वे चतुर्विंशाक्षरता इति । अनादेशे च सर्वासां गायत्रीच्छन्दस्कानामृचामग्निर्देवता "अथात्र छन्दोदेवता गायत्र्या अग्निः" इति तत्रोक्तेः गायत्रीच्छन्दसश्च यथाऽष्टाक्षरपादता तथा ता० ब्रा० भाष्ययोर्दर्शितम् ।

"साध्या वै नाम देवा आसंस्ते सर्वे यज्ञेन सह स्वर्गं लोकमायंस्ते देवाश्छन्दांस्यब्रुवन् सोममाहरतेति ते जगतीं प्राहिण्वन् सा त्रीण्यक्षराणि हित्वैकाक्षरा भूत्वाऽऽगच्छन्, त्रिष्टुभं प्राहिण्वन् सैकमक्षरं हित्वा त्र्यक्षरा भूत्वागच्छद् गायत्रीं प्राहिण्वं स्तुरक्षराणि वै तर्हि छन्दांस्यासन् सा तानि चाक्षराणि हरन्त्या गच्छदष्टाक्षरा भूत्वा" ता०ब्रा० "पूर्वं साध्याख्या देवा आसन् ते सर्वे यज्ञेन सोपकरणेन सोमादिसाधनमादायैव स्वर्गं लोकमायन्नगमन् ते प्रसिद्धा वस्वादयो देवाः आदौ स्वर्गसाधनयज्ञार्थसोमहरणाय छन्दांसि गायत्र्यादीनि "यूयं सोमं द्युलोकात् आहरत" इत्युक्तवन्तः तान्यपि तथैवाङ्गीचक्रुरिति शेषः तथोक्तास्ते जगतीं प्राहिण्वन् अप्रेरयन् सा तत्रत्यैः सोमपालैः सह युद्धा त्रीण्यक्षराणि हित्वा एकाक्षरा भूत्वा पुनर्देवानागच्छत् चतुरक्षराणि वै तर्हि छन्दांसि वक्ष्यति तदभिप्रायकमिदं पुनस्ते त्रिष्टुभं प्राहिण्वन् सापि पूर्ववत् सोमपालेभ्य एकमक्षरं हित्वा त्र्यक्षरा भूत्वा पुनरागच्छत् ते पुनर्गायत्रीं प्राहिण्वन् छन्दांसि सर्वाणि चतुरक्षराण्यासन् अतः सा गायत्री द्युलोके सोमरक्षकैः कृशानुप्रभृतिभिर्जितानि जगतीत्रिष्टुभोश्चतुरक्षराणि हरन्ती अष्टाक्षरा भूत्वा आगच्छत्" भा० ।

२गायत्रीछन्दस्के उपनयनाङ्गे मन्त्रभेदे च ।

छन्दःशास्त्रे षडक्षरपादं हि छन्दो गायत्रीशब्देनोच्यते । सर्ववेदेऽपि षडक्षरयुक्तपादका बहवो मन्त्राः सन्ति । सर्वेऽपि ते गायत्रीरूपतया वक्तुं शक्यन्ते । किन्तु यथा, "पङ्काज्जायते" इति व्युत्पत्त्या पङ्कजशब्दः पङ्कजनिकर्तृत्वयुक्तस्य पद्मस्यैव बोधकः पङ्कजातानामन्येषां कुमुदादीनामबोधकः, एवं गायत्रीशब्दोऽपि योगरूढ्या मन्त्रभेदस्यैव बोधकः । वस्तुतोऽन्यव्युत्पत्तिमत्त्वेनास्या मन्त्रभेदबोधकत्वम् । यथाह, व्यासः "गायन्तं त्रायते यस्मात् गायत्रीयं ततः स्मृता" ।

स्वोपासकत्राणकर्तृ ब्रह्मप्रतिपादकतयाऽपि उक्तमन्त्रविशेष एव गायत्रीरूपतयोच्यते । यद्यपि गायत्र्याः षडक्षरपादतया चतुर्षु चरणेषु २४ चतुर्विंशत्यक्षरावश्यकत्वं किन्तु, अन्यगायत्रीच्छन्दस्कानां मन्त्राणामिवास्मिन् २४ चतुर्विंशत्यक्षराभावस्तथापि द्यौरित्यत्रेव वरेण्यपदे वर्णविश्लेषेण २४ चतुर्विंशतिसंख्या परिपूर्य्या । वक्ष्यमाणबृहदारण्यकमाधवभाष्ये च "द्यौरित्यत्र दिऔरिति वर्णविश्लेषे सति वरेण्यमित्यत्र वरेणीअमिति वर्णविश्लेषेण व्यक्तमुक्तम् । अस्याश्च अष्टाक्षरपादतया एकैकचरणस्य भूम्यादिरूपता, गयनामप्राणत्राणतया गायत्रीशब्दनिरुक्तिश्च बृहदारण्यकब्राह्मणे दर्शिता यथा, "भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराणि, अष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत् स यावदेषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद । ऋचो यजूंषि सामानीत्यष्टावक्षराणि अष्टाक्षरं वा एकं गायत्र्यै पदमेतदु हैवास्या एतत् स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद । प्राणोऽपानो व्यानः (विआनः) इत्यष्टावक्षराणि अष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत् स यावदिदं प्राणिति तद्ध जयति योऽस्या एतदेवं पदं वेद । अथास्या

एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृशे इव एष परोरजा इति सर्वम् ह्येष रज उपर्य्युपरि तपति एवं हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद। सैषा गायत्री एतस्मिंस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठितेत्यादि। तद्वैतत् सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत् प्राणे प्रतिष्ठितमित्यादि। सा हैषा गयांस्तत्रे प्राणा वै गयास्तान् प्राणांस्तत्रे यस्माद् गयांस्तत्रे तस्माद् गायत्री नाम। स यामेवामुमन्वाहैषैव सा, स यस्मा अन्वाह तस्य प्राणांस्त्रायते"। "ब्रह्मणो हृदयाद्यनेकोपाधिविशिष्टस्योपासनमुक्तमथेदानीं गायत्र्युपाधिविशिष्टस्योपासनं वक्तव्यमित्यारभ्यते सर्वच्छन्दसां हि गायत्रीच्छन्दः प्रधानभूतं तत्प्रयोक्तृगयत्राणात् गायत्रीति वक्ष्यति। न चान्येषां छन्दसां प्रयोक्तृप्राणत्राणसामर्थ्यं प्राणात्मभूता सा, सर्वच्छन्दसां चात्मा प्राणः, "प्राणश्च क्षतः त्राणात् क्षत्त्रम्" इत्युक्तं प्राणश्च गायत्री तस्मात् तदुपासनमेवं विधित्स्यते द्विजोत्तमत्वहेतुत्वाच्च "गायत्र्या ब्राह्मणमसृजत, त्रिष्टुभा राजन्यं जगत्या वैश्यमिति" द्विजोत्तमस्य द्वितीयं जन्म गायत्रीनिमित्तं तस्मात् प्रधाना गायत्री ब्राह्मण्याद्यर्था। "यो ब्राह्मणान् अभिवदन्ति स ब्राह्मणः विपापो विरजा विचिकित्सो ब्राह्मणो भवति" इत्युक्तेन परमपुरुषार्थसम्बन्धं ब्राह्मणस्य दर्शयति तच्च ब्राह्मणत्वं गायत्रीजन्ममूलमतो वक्तव्यं गायत्र्याः सतत्त्वं, गायत्र्या हि यः सृष्टो द्विजोत्तमो निरङ्कुश एवोत्तमपुरुषार्थसाधनेऽधिक्रियते ततस्तन्मूलः परमपुरुषार्थसम्बन्धस्तस्मादेतदुपासनविधानायाह भूमिः अन्तरीक्षं द्यौः ( दिऔः ) इत्येतानि अष्टौ अक्षराणि,अष्टाक्षरम् अष्टावक्षराणि यस्य तदिदम् अष्टाक्षरं ह्वै प्रसिद्धावद्योतनौ। एकं प्रथमं गायत्र्यै, गायत्र्याः पदं पादः प्रथमो भूम्यादिलक्षणः त्रैलोक्यात्माष्टाक्षरत्वसाम्यात् एवम् एतत् त्रैलोक्यात्मकं गायत्र्याः प्रथमं पदं यो वेद तस्यैतत् फलम् स विद्वान् यावत् किञ्चिदेषु त्रिषु जेतव्यं तावत् सर्वं ह जयति योऽस्या एतदेवं पदं वेद। तथा ऋचः, यजूंषि, सामानि, इति त्रयीनामाक्षराणि एतान्यप्यष्टावेव तदेवाष्टाक्षरं ह वा एकं गायत्र्याः द्वितीयम् पदं एतदुहैवास्या एतद् ऋग्यजुःसामलक्षणम् अष्टाक्षरत्वसाम्यात् एवं स यावती इयं त्रयी विद्या त्रय्या विद्यया यावत् फलजातमाप्यते तावद्ध जयति योऽस्या एतत् गायत्र्यास्त्रैविद्यलक्षणं पदं वेद। तथा प्राणः, अपानः (विआनः) व्यानः एतान्यपि प्राणाद्यभिधानाक्षराणि अष्टौ तच्च गायत्र्यास्तृतीयं पदं यावदिदं प्राणिजातं तावद्ध जयति योऽस्या एतदेवं गायत्र्यास्तृतीयं पदं वेद। अथानन्तरं गायत्र्यास्त्रिपदायाः शब्दात्मिकायास्तुरीयं पदमुच्यते अभिधेयभूतम्। अस्याः प्रकृतायाः गायत्र्याः एतदेव वक्ष्यमाणं तुरीयं दर्शतं पदम् परोरजा य एष तपति तुरीयमित्यादि वाक्यपदार्थं स्वयमेव व्याचष्टे श्रुतिः। यद् वै चतुर्थं प्रसिद्धं लोके तदिह तुरीयशब्देनाभिधीयते। दर्शतं पदमित्यस्य कोऽर्थः? इत्युच्यते ददृश इव दृश्यते इव हि सूर्य्यमण्डलान्तर्गतः पुरुषः अतो दर्शतं पदमुच्यते। परोरजाः इत्यस्य पदस्य कोऽर्थः? इत्युच्यते सर्व्वम् समस्तम् उ हि एष मण्डलान्तर्गतः पुरुषः, रजः रजोजातं समस्तं लोकमित्यर्थः उपर्य्युपरीति वीप्सा सर्व्वलोकाधिपत्यज्ञापनार्था। ननु सर्व्वशब्देनैव सिद्धत्वात् वीप्सानर्थिका, नैष दोषः येषामुपरिष्टात् सविता दृश्यते तद्विषयः एव सर्वशब्दः स्यादित्याशङ्कानिवृत्त्यर्था वीप्सा "ये चामुष्मात् पराञ्चो लोकास्तेषाञ्चेष्टे देवकामानञ्चेति" श्रुत्यन्तरात् तस्मात् सर्वावबोधार्था वीप्सा। यथासौ सविता सर्वाधिपत्यलक्षणया श्रिया यशसा च ख्यात्या तपति एवं हैष श्रिया यशसा च तपति योऽस्या एतदेवं तुरीयं दर्शतं पदं वेद। सैषा त्रिपादा उक्ता या त्रैलोक्यत्रैविद्यप्राणाद्यात्मिका गायत्री, एतस्मिन् चतुर्थे तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता, मूर्त्तामूर्त्तरसत्वादादित्यस्य, रसापाये हि वस्तु नीरसमप्रतिष्ठितं भवति यथा काष्ठादि दग्धसारं तद्वत्। तथा मूर्त्तामूर्त्तात्मकं जगत्। त्रिपदा गायत्री च आदित्यप्रतिष्ठिता तद्रूपत्वात्। सह त्रिभिः पदैः तद्धि तुरीयं पदं सत्ये प्रतिष्ठितम् इत्यादि। तद्धि तुरीयपदाश्रयं सत्यं बले प्रतिष्ठितं किं? पुनस्तद्बलमित्याह प्राणो वै बलम् तस्मिन् प्राणे बले, प्रतिष्ठितं सत्यं तथाचोक्तं सूत्रे, "तदोतञ्च प्रोतञ्चेति" तस्मात् बले सत्यं प्रतिष्ठितमित्यादि। सैषा गायत्री प्राणः अतः गायत्र्यां जगत् प्रतिष्ठितम् यस्मिन् सर्वे देवाः एकीभवन्ति सर्वे-

वेदाः, कर्माणि फलानि च सैषा गायत्री प्राणरूपा सती जगत आत्मा सा हैषा गयांस्तत्रे त्रातवती, के? पुनर्गयाः, एते प्राणाः वागादयो वै गयाः शब्दकरणात् तान् तत्रे, सैषा गायत्री तत् यस्मात् गयांस्तत्रे तस्माद्गायत्री नाम गयत्राणात् गायत्रीति प्रथिता। स आचार्य्य उपनीय माणवकमष्टवर्षं यामेव अमूं सावित्रीं सवितृदेवताकाम् अन्वाह पच्छः अर्द्धशः समस्ताञ्च एषैव सा साक्षात् प्राणो जगतः आत्मा माणवकाय समर्पिता इहेदानीं नान्या। स आचार्य्यः यस्मै माणवकाय अन्वाह अनुवक्ति तस्य माणवकस्य गयान् प्राणान् त्रायते नरकादिपतनात्” भा०

छान्दोग्योपनिषदि गायत्र्या अन्यथा निर्वचनपूर्वकं षडक्षरपादत्वेन चतुष्पदत्वं वागादिरूपेण ध्यातव्यत्वम् स्वप्रतिपाद्यब्रह्मात्मद्वारा सर्व्वात्मकत्वञ्च दर्शितम्।

“गायत्री वा इदं सर्वं भूतं यदिदं किञ्च। वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च। या वै सा गायत्रीयं वाव सा येयं पृथिवी अस्यां हीदं सर्वं भूतं प्रतिष्ठितम् एतामेव नातिशीयते। या वै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीरम् अस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते। यद्वैतत् पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे हृदयम् अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते। सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तम्। तावानस्य महिमा ततोज्यायांश्च पुरुषः। पादोऽस्य सर्वभूतानि त्रिपादस्यामृतं दिवीति।” छ०उप०। “यत एवमतिशयफलैषा ब्रह्मविद्या अतः सा प्रकारान्तरेणापि वक्तव्येति गायत्री वा इत्यारभ्यते। गायत्रीद्वारेण चोच्यते ब्रह्म, सर्वविशेषरहितस्य नेति नेतीत्यादिविशेषप्रतिषेधगम्यस्य दुर्बोधत्वात् सत्स्वनेकेषु छन्दःसु गायत्र्या एव ब्रह्मज्ञानद्वारतयोपादानं प्राधान्यात्।” (इत्युपक्रम्य किञ्चिदुक्तोक्तम्) “गायत्रीसारत्वाच्च ब्राह्मणस्य मातरमिव हित्वा गुरुतरां गायत्रीं ततोऽन्यत् गुरुतरं न प्रतिपद्यते यथोक्तं ब्रह्मापीति तस्यामत्यन्तगौरवस्य प्रसिद्धत्वात् अतो गायत्रीमुखेनैव ब्रह्मोच्यते। गायत्री वै इत्यवधारणार्थो वैशब्दः। इदं सर्वं भूतं प्राणिजातं यत् किञ्च स्थावरं जङ्गमं वा तत्सर्वं गायत्र्येव तस्याश्छन्दोमात्रायाः सर्वभूतात्मत्वमनुपपन्नमिति गायत्रीकारणं वाचं शब्दरूपामापादयति गायत्रीं, वाग्वै गायत्रीति वाग्वा इदं सर्वं भूतम् गायति च शब्दायते (असौ गौरसावश्व) इति त्रायते च रक्षति “अमुष्मात् मा भैषीः किं? ते भयमुत्थितमित्यादि” सर्वतो भयान्निवर्त्त्यमानो वाचा त्रातः स्यात्। यत् वाक्, भूतं गायति च त्रायते च गायत्र्येव तद् गायति च त्रायते च वाचोऽनन्यत्वात् गायत्र्याः, गानात् त्राणाच्च गायत्रीत्वम्। या वै सैवंलक्षणा सर्वभूतरूपा गायत्री इयं वाव सा येयं पृथिवी, कथं? पुनरियं पृथिवी गायत्रीत्युच्यते? सर्वभूतसम्बन्धात् कथं सर्वभूतसम्बन्धः? तस्यां पृथिव्यां हि यस्मात् सर्वं स्थावरं जङ्गमं च भूतं प्रतिष्ठितम् एतामेव पृथिवीं नातिशीयते, नातिवर्त्तते इत्येतत्। यथा गानत्राणाभ्यां भूतसम्बन्धो गायत्र्या एवं भूतप्रतिष्ठानात् भूतसम्बन्धाद्वा पृथिवी अतो गायत्री पृथिवी। या वै सा पृथिवी गायत्रीयं वाव सा इदमेव, तत् किम्? यदिदमस्मिन् पुरुषे कार्य्यकारणसङ्घाते जीवति शरीरं, पार्थिवत्वाच्छरीरस्य गायत्रीत्वमुच्यते? अस्मिन् हीमे प्राणाः भूतशब्दवाच्याः प्रतिष्ठिताः। अतः पृथिवीवत् भूतशब्दवाच्य-प्राणप्रतिष्ठानात् शरीरं गायत्री एतदेव यस्माच्छरीरं नातिशीयन्ते प्राणाः। यद्वै तत् पुरुषे शरीरं गायत्री वाव तत् यदिदमस्मिन् अन्तर्मध्ये पुरुषे हृदयं पुण्डरीकाख्यमेतत् गायत्री कथम्? इत्याह अस्मिन् हीमे प्राणाः प्रतिष्ठिताः अतः शरीरवत् गायत्री हृदयम् एतदेव नातिशीयन्ते “प्राणो हि पिता प्राणो माता” “अहिंसन् सर्वभूतानीति” श्रुतेः भूतशब्दवाच्याः प्राणाः। सैषा चतुष्पदा षडक्षरपादच्छन्दोरूपा सती भवति गायत्री षड्विधा वाग्भूतपृथिवीशरीरहृदयप्राणरूपा सती षड्विधा भवति। (किञ्चिदतीत्योक्तम्) तदेतस्मिन्नर्थे एतद्गायत्र्याख्यं ब्रह्म गायत्र्यनुगतं गायत्रीमुखेनोक्तम् ऋचापि मन्त्रेण अभ्यनूक्तं प्रकाशितम्। तावान् अस्य गायत्र्याख्यस्य ब्रह्मणः समस्तस्य महिमा विभूतिविस्तारः यावान् चतुष्पाद् षड्विधश्च ब्रह्मणो विकारः, पादः गायत्रीति व्याख्यातः। अतस्तस्माद्विकारलक्षणात् गायत्र्याख्यात् ततो ज्यायान् महत्तरश्च परमार्थसत्यरूपोऽविकारः पुरुषः सर्वपूरणात् पुरिशयनाच्च। तस्यास्य पादः सर्वा सर्वाणि भूतानि तेजोऽबन्नादीनि सस्थावर-

जङ्गमानि । त्रिपाद् त्रयः पादा अस्य सोऽयं त्रिपाद् अमृतं पुरुषाख्यं समस्तस्य गायत्र्यात्मकस्य दिवि द्योतनवति स्वात्मन्यवस्थितमित्यर्थः” शा०भा० । मातृतोजन्मवतामपि सावित्र्या द्वितीयजन्माधानात् द्विजानां द्विजत्वम् । यज्जन्मैव हि सकलपुरुषार्थहेतुरिति मन्वादिशास्त्रे प्रसिद्धम् । यथा, मनुः “आचार्य्यस्त्वस्य यां जातिं विधिवद्वेदपारगः । उत्पादयति सावित्र्या सा सत्या साऽजराऽमरा । तत्र यद् ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम् । तत्रास्य माता सावित्री पिता त्वाचार्य्य उच्यते” । यद्यपि परमेश्वरः सर्व्वत्राभिन्नरूपतया वर्त्तमानस्तथापि समुपासने एव विशिष्टफलप्रदः, मान्य-इदमपि दृष्टान्ततया योगियाज्ञवल्क्ये कथितम् “गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम् । निःसृतं कर्म्मसंयुक्तं पुनस्तासां -ौषधम् । एवं स हि शरीरस्थः सर्पि-ि परमेश्वरः । विना चोपसनादेव न -ाति हितं नृषु” । गायत्र्याश्च स्ववाच्यब्रह्मणा सहाभेदात् प्राशस्त्यमाह व्यासः “न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह । सोऽहमस्मीत्युपासीत विधिना येन केनचित्” । “गायत्र्यास्यभर्गःप्रतिपाद्य ईश्वरः अहं जीवरूपोऽस्मि भवामीति जीवेश्वरयोरहङ्कारप्रतिविम्बितत्वोपाधिरहितेन चिद्रूपेणैक्यं भावयन् उपासीत” इति रघुनन्दनः । तत्र सत्स्वपि परमब्रह्मण उपासनाया बहुषूपायेषु गायत्र्येव तदुपासनायाः प्रधानोपायः इति प्राग्दर्शितेषु शास्त्रेषु प्रसिद्धम् । विशेषतः, गायत्र्यर्थः परं ब्रह्म एतदर्थमपि अनेन मन्त्रेणैव उपासना श्रेयस्करी “प्रणवव्याहृतिभ्याञ्च गायत्र्या त्रितयेन च । उपास्यं परमं ब्रह्म आत्मा यत्र प्रतिष्ठितः । वाच्यः स ईश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः । वाचकेऽपि च विज्ञाते वाच्य एव प्रसीदति” योगीश्वरवाक्येन तथाभिधानात् ।

“गायत्र्याः २४ चतुर्विंशत्यक्षराणां यथा भावना कार्य्या, तथा ब्राह्मणसर्व्वस्वे विष्णुधर्म्मोत्तरे दर्शितं यथा “कर्म्मेन्द्रियाणि पञ्चैव पञ्च बुद्धीन्द्रियाणि च । पञ्च बुद्धीन्द्रियार्थाश्च भूतानां चैव पञ्चकम् । मनोबुद्धिस्तथैवात्मा अव्यक्तञ्च यदुत्तमम् । चतुर्विंशतिरेतानि गायत्र्या अक्षराणि च । प्रणवं पुरुषं विद्धि सर्व्वगं पञ्चविंशकम् ।” अनेन पञ्चविंशतितत्त्वरूपतया सप्रणवगायत्र्यक्षराणां ध्येयतोक्ता । तत्र प्रत्यक्षरं देवताभेदमाह योगियाज्ञवल्क्यः । “अक्षराणान्तु दैवत्यं सम्प्रवक्ष्याम्यतः परम् । आग्नेयं (तत्) प्रथमं ज्ञेयं वायव्यञ्च (स) द्वितीयकम् । तृतीयं (वि) सूर्य्यदैवत्यं चतुर्थं (तुः) वैद्युतं तथा । पञ्चमं (व) यमदैवत्यं वारुणं (रे) षष्ठमुच्यते । वार्हस्पत्यं सप्तमन्तु (ण्) पार्ज्जन्यमष्टमं (यम्) विदुः । ऐन्द्रं तु नवमं (भ) ज्ञेयं गान्धर्व्वं दशमं (र्गः) तथा । पौष्णमेकादशं (दे) प्रोक्तं मैत्रावरुणं द्वादशम् (व) । त्वाष्ट्रं त्रयोदशं (स्य) ज्ञेयं वासवन्तु चतुर्दशम् (धी) । मारुतं पञ्चदशकं (म) सौम्यं षोडशकं (हि) स्मृतम् । सप्तदशं (धि) त्वाङ्गिरसं वैश्वदेवमतः परम् । (यः) । आश्विनञ्चैकोनविंशं (यः) प्राजापत्यन्तु विंशकम् (नः) । सर्व्वदेवमयं प्रोक्तमेकविंश (प्र) मतः परम् । रौद्रं द्वाविंशकं (च) प्रोक्तम् त्रयोविंशन्तु (द) ब्राह्मकम् । वैष्णवन्तु (यात्) चतुर्विंशमेता अक्षरदेवताः । जप्यकाले तु संस्मृत्य तासां सायुज्यतां व्रजेत्” ।

“तस्याश्च वेदसारता-नानाशास्त्रे दर्शिता यथा

“अष्टादशसु विद्यासु मीमांसाऽतिगरीयसी । ततोऽपि तर्कशास्त्राणि पुराणं तेभ्य एव च । ततोऽपि धर्म्मशास्त्राणि तेभ्यो गुर्व्वी श्रुतिर्द्विज । ततोऽप्युपनिषच्छ्रेष्ठा गायत्री च ततोऽधिका । दुर्लभा सर्व्वमन्त्रेषु गायत्री प्रणवान्विता । न गायत्र्यधिकं किञ्चित्त्रयीषु परिविद्यते । न गायत्रीसमो मन्त्रो न काशी सदृशी पुरी । न विश्वेशसमं लिङ्गं सत्यं सत्यं पुनः पुनः । गायत्री वेदजननी गायत्री ब्राह्मणप्रसूः । गायन्तं त्रायते यस्माद्गायत्रीति प्रगीयते । वाच्यवाचकसम्बन्धो गायत्र्याः सवितुर्द्वयोः । वाच्योऽसौ सविता साक्षाद्गायत्री वाचिका परा । प्रभावेनैव गायत्र्याः क्षत्त्रियः कौशिको वशी । राजर्षित्वं परित्यज्य ब्रह्मर्षिपदमीयिवान् । सामर्थ्यं प्राप चात्युच्चैरन्यद्भुवनसर्जने । किं किं न दद्याद्गायत्री सम्यगेवमुपासिता । न ब्राह्मणो वेदपाठान्न शास्त्रपठनादपि । देव्यास्त्रिकालमभ्यासात्ब्राह्मणः स्याद् द्विजोऽन्यथा । गायत्र्येव परो विष्णुर्गायत्र्येव परः शिवः । गायत्र्येव परो ब्रह्मा गायत्र्येव त्रयी यतः” काशी० ।

इत्थं बहुविधशास्त्रे गायत्री सर्व्वेषां वेदानां सारांशतया सर्व्वाभीष्टहेतुतया च प्रसिद्धा । तदज्ञाने ब्राह्मण्यहानिर्भवति । सेयं वेदत्रयेऽपि समानरूपा” ।

मनुः "अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः। वेदत्रयान्निरदुहत्भूर्भुवः स्वरितीति च ! । त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्"। मनुयमवृहद्विष्णवः "ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयस्तथा। त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम्।" जपेदित्यनुक्रमश्छन्दोगपरिशिष्टम् "सर्वेषां वेदानां गुह्योपनिषत्सारभूतां ततो गायत्रीम्।" योगियाज्ञवल्क्यः "गायत्रीञ्चैव वेदांश्च तुलया समतोलयन्। वेदा एकत्र साङ्गास्तु गायत्री चैकतः स्थिता।" स एव "सारभूतास्तु वेदानां गुह्योपनिषदो मताः। ताभ्यः सारस्तु गायत्री तिस्रो व्याहृतयस्तथा।" स एव "ओङ्कारपूर्विकास्तिस्रो गायत्रीं यश्च विन्दति। चरितब्रह्मचर्य्यश्च स वै श्रोत्रिय उच्यते।" स एव "एतया ज्ञातया सर्वं वाङ्मयं विदितं भवेत्। उपासितं भवेत्तेन विश्वं भुवनसप्तकम्।" स एव "एवं यस्तु विजानाति गायत्रीं ब्राह्मणस्तु सः। अन्यथा शूद्रधर्मा स्याद् वेदानामपि पारगः।" स एव "अज्ञात्वा चैव गायत्रीं ब्राह्मण्यादेव हीयते। अपवादेन संयुक्तो भवेत् श्रुतिनिदर्शनात्।" कौर्मम् "क्रियाहीनस्य मूर्खस्य महारोगिण एव च। यथेष्टाचरणस्याङ्कमरणान्तमशौचकम्।" मूर्खस्य सार्थगायत्रीरहितस्येति शुद्धितत्त्वे रघुनन्दनः। गायत्रीरहितस्येत्यन्ये। तस्याः सन्ध्यारूपतया उपस्तुतापि यथाह, योगियाज्ञवल्क्यः "या सन्ध्या सैव गायत्री द्विधा भूता व्यवस्थिता। सन्ध्या उपासिता येन विष्णुस्तेन उपासितः।" व्यासः "गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने। सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता। प्रतिग्रहाददोषाच्च पातकादुपपातकात्। गायत्री प्रोच्यते तस्मात् गायन्तं त्रायते सदा। सवितृद्योतनात् सैव सावित्री परिकीर्त्तिता। जगतः प्रसवितृत्वात् वाग्रूपत्वात् सरस्वती"। छन्दोगाह्निकतत्त्व(?)ः "सर्वात्मना हि या देवी सर्वभूतेषु संस्थिता। गायत्री मोक्षहेतुर्वै मोक्षस्थानमलक्षणम्" कूर्मपुराणम् "गायत्री वेदजननी गायत्री लोकपावनी। न गायत्र्याः परं जप्यमेतद्विज्ञानमुच्यते।" योगियाज्ञवल्क्यः "गायत्री वेदजननी गायत्री पापनाशिनी। गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम्। हस्तत्राणप्रदा देवी पततां नरकार्णवे। तस्मात्तामभ्यसेन्नित्यं ब्राह्मणोऽहृदये शुचिः। गायत्रीं निरतं हव्यकव्येषु विनियोजयेत्। तस्मिन्न तिष्ठते पापमब्बिन्दुरिव पुष्करे।" स एव "गायत्र्याः पदमर्द्धन्तु ऋचोऽर्द्धमृच एव वा। ब्रह्महत्यासुरापाणं गुरुदाराभिमर्षणम्। यच्चान्यत् दुष्कृतं सर्वं पुनातीत्याह वै मनुः।" स एव "यज्ञदानरतो विद्वान् साङ्गवेदस्य पाठकः। गायत्र्यध्यानपूतस्य कलां नार्हति षोड़शीम्।" वृहद्विष्णुः "एतयर्चा विसंयुक्ता काले च क्रियया स्वया। विप्रक्षत्रियविड्योनिर्गर्हणीया तु साधुषु।" अग्निपुराणम् "गायत्रीं जपते यस्तु द्वौ कालौ ब्राह्मणः सदा। असत्प्रतिग्रहीतापि स याति परमां गतिम्।"

गायत्र्याश्च सर्वच्छन्दसां प्रधानत्वात् "गायत्रीच्छन्दसामपि" गीतायां भगवद्विभूतित्वमुक्तम्। ३खदिरवृक्षे अमरः। खदिरस्य च "सा गायत्री सोममाहरत्" इत्युपक्रमे "खदिरेण सोममाचखाद" तस्मात् खदिर इति" शत० ब्रा० ६।२।८ गायत्र्या सोमहरणेन तत्पाने साधनत्वात् गायत्रीत्वम्। गायत्रं गायत्रीसम्बन्धि सोमहरणमस्त्यत्र पानसाधनत्वेन गायत्र+इनि। गायत्रिन् इत्यपि तत्रार्थे वैद्यकम् "उभे हरिद्रे सुरदारुशुण्ठीं गायत्रिसारं च पिबेत् समानम्" सुश्रुतः। "वह्निगायत्रिणां तथेति" वैद्यकात् इनन्तोऽपि तत्रार्थे पुंभानुदीक्षितः। पुंसाहचर्य्यात् अमरवाक्यस्य पुंलिङ्गपरतौचित्यात् तथात्वम्। "गायत्री खदिरे स्त्री स्यात्" इति रभसोक्तेः "गायत्री द्रुपदादेवीच्छन्दोभित् खदिरेषु च" कोषान्तराच्च स्त्रीत्वम् ङीबन्तता च। [illegible]गायत्र्या ऋचोपास्यायां ४देवतायाम्। सा च एकापि प्रातरादिकालभेदेन गायत्री-सावित्री सरस्वतीति-नामत्रययुता तत्र प्रातरुपास्या गायत्रीति संज्ञाऽनुपदमुक्तम्। ५दुर्गायां च "गायनाद्गमनाद्वापि गायत्री त्रिदशार्चिता" देवीपु० देवीनामनिरुक्तौ। गायत्र्या इदम् अण्। ६गायत्र गायत्रच्छन्दसि न० "गायत्रच्छन्दाह्यग्निः" ता० ब्रा० ८।८।६। गायत्रच्छन्दोऽभिमानी अग्निः" भा०। "आददे गायत्रेण छन्दसा" यजु० ११।६। गायत्र्याहृतः अण्। गायत्र्या हृते ७सोमभेदे पु० तद्धरणकथाऽग्रे वक्ष्यते "गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शाङ्करस्तथा" सुश्रुते सोमभेदकथने। तत्स्थानञ्च तत्रैवोक्तं "काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम्। गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शाङ्करस्तथा। न तान् पश्यन्त्यधर्म्मिष्ठाः कृतघ्नाश्चापि मानवाः। भेषज-

द्वेषिणश्चापि ब्राह्मणद्वेषिणस्तथा”। गायत्र्या इदम् अण्। गायत्र ८गायत्रीसम्बन्धिनि त्रि०। ६गायत्री-च्छन्दस्के स्तोत्रादौ न०। गायत्रीं तच्छन्दस्कामृच-मधिकृत्य गीतं साम अण्। गायत्र्यामृचिगेये १०साम-भेदे। “स्वादिष्ठया मदिष्ठया” इत्येकं सूक्तं तस्मिन् गायत्र्यस्तिस्र ऋचः तत्र गायत्रं संहितं चेति द्वे सा-मनी” सा० स० भाष्यम्। “ऋचा स्तोमं समर्द्धय गाय-त्रेण रथन्तरम् बृहद्गायत्रवर्त्तनि! स्वाहा” यजु०११।८। गायत्रेण साम्ना. गायत्रं सामं वर्त्तनिर्मार्गोऽस्याः वेददी० “इमां गायत्रवर्त्तनिं जुषेथां सुष्टुतिं मम” ऋ० ८।३८। ६।“गायत्रवर्त्तनिं गायत्रसाममार्गां सुष्टुतिं शोभनां स्तु-तिम्” भा०।“स्वाहा गायत्रवेपसे” ऋ०१।१४२।१२। गायत्रं साम वेपो रूपं यस्याः” भा०। गायत्रसदृशत्वात् ११प्रश-स्ते च “इन्द्रे गायत्रवेपसम्” ८।१।१०। “गायत्रवेप-सम् प्रशस्तवेगाम्” भा०। गायत्रसाम्न उपसना प्रकारादि छा० उ० दर्शितम् यथा

“मनोहिङ्कारो वाक् प्रस्तारश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम्। स य एवमेत-द्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्त्या, महामनाः स्यात्तद्व्रतम्” छा० उ०।“मनो हिङ्कारो मनसः सर्वकरणप्रवृत्तीनां प्राथम्यात्। तदानन्तर्य्याद्वाक् प्रस्तारः, चक्षुरुद्गीथः श्रैष्ठ्यात्। श्रोत्रं प्रतिहारः प्रतिहार्य्यत्वात्, प्राणो निधनं यथोक्तानां प्राणे निधानात्स्वापकाले। एतद्गायत्रं साम प्राणेषु प्रोतम् गायत्र्याः प्राणसंस्तुत-त्वात्। स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति अविकलकरणो भवतीत्येतत्। सर्वमायुरेति “शतं वर्षाणि सर्वमायुः पुरुषस्येति” श्रुतेः। ज्योगुज्ज्वलं जीवति। महान् भवति प्रजादिभिर्महांश्च कीर्त्त्या। गायत्रोपासकस्यैतद्व्रतं भवति यन्महामनास्त्वक्षुद्रचित्तः स्यादित्यर्थः” शा०भा०।

**गायत्रिन्** पु० गायत्रं स्तोत्रमस्यास्ति इनि। १उद्गातरि सामगायके “गायन्ति त्वा गायत्रिणः” ऋ० १।१०।१ २खदिरवृक्षे च गायत्रीशब्दे दृश्यम्।

**गायन** त्रि० गै–शिल्पिनि ण्युट्। गानोपजीविनि त्रिका०। “स्तेनगायनयोरन्नम्” मनुना तदन्नभक्षणं निषिद्धम् “सत्यं किलैतत् सा प्राह दैत्यानामसि गायनः” भा० आ० ७८ अ०। स्त्रियां ङीप्।

**गारित्र** न० गीर्य्यते गॄ–कर्म्मणि णित्रन्। ओदने उज्ज्वल०।

**गारुड़** न० गरुड़ायोक्तं भगवता, तस्येदम् वा अण्। १गरुड़पुराणे २विषहरमन्त्रभेदे जटाधरः। गरुडा-कृतित्वात् ३व्यूहभेदे।“गारुड़ं च महाव्यूहं चक्रे शान्त-नवस्तदा” भा० भी० ५६अ०। तस्य च गरुड़ाकृतित्वं तदुत्तरश्लोकानां पर्य्यालोचनयाऽवसेयम्। ४मरकतमणौ राजनि० तस्य च नीलवर्णतया गरुड़वर्णता तच्च गारुत्मतशब्दे वक्ष्यते। “सोऽयं वटः श्याम इति प्रतीतो राशिर्मणीनामिव गारुड़ानाम्” रघुः। ५स्वर्णे हेम० तल्लोमतुल्यवर्णत्वात्तथा। ६पातालगरुड़लतायाम् स्त्री राजनि० ङीप्। गरुड़ो देवताऽस्य अण्। ७अस्त्रभेदे। “अलं विषादेन अर्जुनेन प्रयुक्तं गारुड़म-स्त्रम्। पश्य पश्य। पक्षाघातनिपातमारुतभरोत्प्रो-त्क्षिप्तपृथ्वीधरः श्वभ्रूद्दृष्टविशालभोगभुजगः स्वर्य्योपकण्ठ-स्पृशः। सन्तोषं जनयन्त्यमी कुलगुरोस्तीक्ष्णास्तथा सा-रथेर्मन्ये वैरिन्दपप्रमाथविकसद्विक्रान्तयः पक्षिणः”। धनञ्जयवि० तत्प्रयोगकृत्यमुक्तम्। [वैद्ये शब्दरत्न०।

**गारुड़िक** पु० गारुड़ेन विषमन्त्रेण जीवति ठक्। विष-

**गारुत्मत** न० गरुत्मान् देवतास्य अण्. गरुत्मान् तद्वर्णः अस्त्यस्य सादृश्येन प्रज्ञा० अण् वा। १गरुड़-देवताके अस्त्रभेदे। “गारुत्मतं तीरगतस्तरस्वी भुज-ङ्गनाशाय समादधेऽस्त्रम्” रघुः। २मरकतमणौ अमरः। गरुत्मान् इव श्यामवर्णत्वात्तथात्वम्। “तस्योल्लसत्काञ्चन-कुण्डलाग्रप्रत्युप्तगारुत्मतरत्नभासा” माघः। “शुक-वंशपत्रकदलीशिरीषकुसुमप्रभं गुणोपेतम्। सुरपितृकार्य्ये मरकतमतीव शुभदं नृणां विधत्ते” वृ०स० ८२अ०। तल्ल-क्षणवर्णादिकमुक्तम्।

**गारुत्मतपत्रिका** स्त्री गारुत्मतमिव वर्णेन पत्रमस्याः कप् कापि अत इत्त्वम्। पाठालतायाम् राजनि०।

**गार्गि** पुंस्त्री गार्ग्याः कुत्सितमपत्यम् “गोत्रस्त्रियाः कुत्सने ण च” पा० ण पक्षे ठक्। गार्ग्याः कुत्सितेऽपत्ये पक्षे ठकि गार्गिकोऽप्यत्र। उभयत्र स्त्रियां टाप्। गार्ग्यस्य अङ्कः संघः लक्षणं वा यञन्तत्वात् अण् यलोपः। गार्ग्यसंघे ३तदङ्के च पु०। ४तल्लक्षणे न० परम्परासम्बद्धोऽङ्कः साक्षात्तु लक्षणमिति भेदः सि० कौ०। गार्ग्यादागतः “गोत्रादङ्कवत्” पा० अण् यलोपः। गार्ग्यादागते त्रि० वा वुञि गार्गकोऽपि तदर्थे त्रि०।

**गार्गिका** स्त्री “गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु” पा०

गर्ग+वुञ् वैरमैथुनिकादिवुञः क्लीवम्। गार्ग्यत्वेन १स्त्राचार्यां २तथात्वाकारे ३तद्वेते च।

**गार्गी** स्त्री गर्गस्य गोत्रापत्यं स्त्री यञ् ङीपि यलोपः। गर्गगोत्रापत्ये १स्त्रीमात्रे तत्र वचक्नोर्दुहिता गार्गी ब्रह्मविदुत्तमा तच्च ह० उ० गार्गीब्राह्मणे स्पष्टम् तच्च ब्राह्मणम् "अथैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाचेत्यादि "ततो ह गार्गी वाचक्नव्युपरराभेत्यन्तम्" षष्ठब्राह्मणम्। सैव च अष्टमब्राह्मणे द्वतप्रश्नद्वयकरणेन याज्ञवल्क्यात्तदुत्तरमाप्त्वा याज्ञवल्क्यस्य जेतत्वमन्येषां निषिध्य तस्य ब्रह्मज्ञश्रेष्ठत्वं व्यवस्थापितं यथा तत्रैवोक्तं तत्र ब्राह्मणे "साहोवाच ब्राह्मणा भवन्तस्तदेव बहु मन्येध्वम् यदस्मान्नमस्कारेण मुच्येध्वम् न वै जातु युष्माकमिमं कश्चिद् ब्रह्मोद्यं जेतेति" "ततो ह वाचक्नव्युपरराम"। २दुर्गायां गार्ग्यशब्दे उदा०। तस्या अपत्यम् ढक्। गार्गेय तदपत्ये पुंस्त्री।

**गार्गीपुत्र** पु० ६त०। गार्ग्याः पुत्रे शुक्लयजुर्वेदवंशान्तर्गते मुनिभेदे "गार्गीपुत्रात् गार्गीपुत्रः" शत०ब्रा०१४।६।४।३०। ततः अपत्ये "पुत्रान्तादन्यतरस्याम्" वा फिञ् वा कुक् च पक्षे इञ्। गार्गीपुत्रकायणि गार्गीपुत्रायणि गार्गीपुत्रि गार्गीपुत्रस्यापत्ये पुंस्त्री।

**गार्गीभू** अगार्ग्यो गार्ग्यो भवति अभूततद्भावे च्वि। "क्यच्व्योश्च" पा० च्वौ अपत्यार्थयलोपश्च। अगार्ग्यस्य गार्ग्यभवने भ्वा० प० अक० सेट्। गार्गीभवति गार्गीभूतः।

**गार्गीय** आत्मनो गार्ग्यमिच्छति क्यचि यलोपे गार्ग्येच्छायाम् पर०अक०सेट्। गार्गीयति अगार्गीयीत्।

**गार्गीय** त्रि० गार्ग्यस्येदम्, "वृद्धाच्छः" पा० छ यलोपश्च। १गार्ग्यसम्बन्धिनि २तत्प्रोक्ते च। "गार्गीयं शिखिचारं पाराशरमसितदेवलकृतञ्च" वृ०स०।

**गार्ग्य** पुंस्त्री गर्गस्यापत्यं गर्गा० यञ्। गर्गगोत्रापत्ये स्त्रियां ङीप् यलोपे गार्गी। विशेषोऽत्र गर्गशब्दे दृश्यः

**गार्त्तक** त्रि० गर्त्तदेशे भवः धूमा० वुञ्। गर्त्तदेशभवे।

**गार्त्समद** पु० गृत्समदस्यापत्यम् शिवा० अण्। गृत्समदापत्ये स च शुनकानां त्रिप्रवरान्तर्गत ऋषिभेदः। यथाह आश्व० श्रौ० १२।१०।१२ सू० "शुनकानां गृत्समदेति, त्रिप्रवरं वा भार्गवशौनहोत्रगार्त्समदेति"।

**गार्दभ** त्रि० गर्दभस्येदम् अण्। गर्दभमूत्रादौ २५४७पृ० गर्दभशब्दे विवृतिः।

**गार्दभरथिक** त्रि० गर्दभयुक्तं रथमर्हति ठक्। गर्दभयुक्तरथगमनयोग्ये।

**गार्द्ध्य** न० गृध–गर्द्ध–वा भावे घञ् गर्द्ध एव चतुर्वर्णा० स्वार्थे ष्यञ्। लोभे। "पीत्वा जलानां निधिनातिगार्द्ध्यात्" माघः। "लब्धे गार्द्ध्यं व्रजत्यलज संभक्तौ"कविक०।

**गार्ध्रपक्ष** पु० गृध्रस्यायम्–अण् गार्ध्रः पक्षः पक्षो यस्य। गृध्रपक्षयुक्ते बाणे हेमच०। गार्ध्रपत्रादयोऽप्यत्रार्थे। "विपाठाः पृथवः कस्य गार्ध्रपत्राः शिलाशिताः" भा०वि० ४२ अ०। "न हि गाण्डीवनिर्मुक्ता गार्ध्रपत्राः सुतेजनाः" भा०वि०५३अ०। गार्ध्रवाजोऽप्यत्र। गार्ध्रवाजः कृतः गार्ध्रवाज+करोत्यर्थे णिच् कर्मणि क्त। गार्ध्रवाजित कृतगृध्रपक्षे बाणे। "दृतस्ते तत्र निर्मुक्तैः काञ्चनैर्गार्ध्रवाजितैः" भा० वि० ४८अ०। "तानहं निशितैर्बाणैर्व्यधमं गार्ध्रवाजितैः" भा० व० १७३अ० क्वचित् पु० वाजितैरित्यत्र राजितैरित्यपपाठः।

**गार्ध्रवासस्** पु० गार्ध्रः पक्षः वास इव यस्य। गृध्रपक्षयुक्ते बाणे "नहि गाण्डीवसृष्टानां शराणां गार्ध्रवाससाम्" भा० व० ३०अ०।

**गार्भ** त्रि० गर्भे गर्भदृद्धौ साधु अण्। गर्भवृद्धये कर्त्तव्ये १गर्भाधानकर्मणि। "गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः," मनुः। होमैरित्युपलक्षणं गर्भाधानादेर्होमरूपत्वात्" कुल्लू०। गर्भस्येदम् अण्। २गर्भसम्बन्धिनि त्रि०। "संस्कारैर्विविधैस्तद्वत् गार्भमेनो व्यपोहति" स्मृतिः। तत्रार्थे ठक्। गार्भिकमप्यत्र। "बैजिकं गार्भिकं चैनो द्विजानामपकृष्यते"मनुः। तत्र "एनः अशुचिमातृगर्भवासजम्" कुल्लू०।

**गार्भिण** न० गर्भिणीनां समूहः भिक्षा० अण्। गर्भिणीसमूहे अमरः। भिक्षादिगणे गर्भिणीशब्दपाठात् अण एव विधानेन अत्रार्थे गार्भिण्यशब्दकल्पनं प्रामादिकमेव।

**गार्मुत** त्रि० गर्मुत इदम् अण्। गर्मुद्धान्यविशेषसम्बन्धिनि "प्राजापत्यं गार्मुतं चरुं निर्वपेत्" तैत्ति० २।४।४।७।

**गार्ष्टेय** पुंस्त्री गृष्टेरपत्यम् गृष्ट्या० ढक्। गृष्टेरपत्ये। "गार्ष्टेयो वृषभो गोभिरानट्" ऋ०१०।१११।२। "सकृत्प्रसूता गौः गृष्टिः तस्या अपत्यम्" भा०।

**गार्हपत** त्रि०गृहपतेरिदम् तस्य भावो वा अश्वपत्या०अण्। १गृहपतिसम्बन्धिनि त्रि० २गृहपतिभावे न०। "वैश्वराजन्ययोः गार्हपते"कात्या०श्रौ०१।६।१६। "नेत्यनुवर्त्तते

वैश्यराजन्ययोर्गृहपतित्वेऽपि नाधिकारः" कर्कः। "अपेतप्रजननाः स्थविरास्तदाख्यास्तेषां यो ज्येष्ठतमः स्याद्द्रव्यवत्तमो वाऽनूचानतमो वा तस्य गार्हपते दीक्षेरन्" कात्या० श्रौ० २२।४।७। "स गृहपतिः कर्त्तव्यः" कर्कः। चतुश्चत्वारिंशे स्तोमे इति शेषः।

**गार्हपत्य** पु० गृहपतिना नित्यं संयुक्तः संज्ञायां ञ्य। यजमानरूपगृहपतिसंयुक्तेऽग्निभेदे स च कृतविवाहाग्निपरिग्रहस्याग्निहोत्रादिसाधनाधानाङ्गतया प्राक् आधेयः यथाह आश्व० श्रौ० २।२।१।

"उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वाल्य दक्षिणाग्निमानीय विट्कुलादित्तवतो वैश्यकुलाद्वा इत्येके भ्रियमाणं वा प्रज्वाल्यारणिमन्तं वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत्" १सू० "अपराह्णशब्देन अह्नश्चतुर्थभागो गृह्यते। विहरणकाले गार्हपत्यं प्रादुष्कृत्य प्रज्वाल्य च दक्षिणाग्निं वैश्यगृहादानयेत्। चतुर्णां वर्णानामन्यतमस्य द्रव्यवतो वा गृहात्, गार्हपत्याद्वा धार्य्यं चेत् प्रज्वालयेत्। काले काले यदि निर्मन्थ्यः तदा मन्थेत् एषां प्रकाराणामुत्पत्तिवैशेष्याद्व्यवस्था। तेषामन्यतमप्रकारेण दक्षिणाग्निं साधयित्वा ततो गार्हपत्यात् ज्वलन्तमग्निमाहवनीयार्थं मुद्धरेत्। पात्रान्तरेण पृथक् कुर्यादित्यर्थः" नारा० "गार्हपत्ये संस्काराः" कात्या० श्रौ० १।८।२४ 'अधिश्रयणपर्य्यग्निकरणपात्रप्रतपनादयः संस्काराः वचनाभावे गार्हपत्याग्नौ भवन्ति तद्यथा शूर्पाग्निहोत्रहवण्योः प्रतपनम् स्रुक्स्रुवादीनाम् वरुणप्रघासे करम्भपात्रयवानां दक्षिणाग्नौ श्रपणेऽपि पर्य्यग्निकरणं गार्हपत्यादेव, पितृयज्ञे च धानानाम् पर्णकषायोदकस्य तु दक्षिणाग्नावेव पाकः दृष्टकापाकार्थत्वात् तत्पाकस्य दक्षिणाग्निना विधानात्" कर्कः

"श्रपणं वाहवनीये" २५ सू० हविषां श्रपणमाहवनीये वा स्यात् गार्हपत्ये वा उभयथा श्रुतत्वात् "तदाहुराहवनीये हवींषि श्रपयेयुरिति अतो गार्हपत्य एव श्रपयन्तीति च"। आदिविकल्पोऽयम् नेच्छाविकल्पः तच्छ्रापित्व इति तच्छ्रापित्वस्य नियतत्वेनानुवादात्। तदुक्तम्। "रूपं कालेऽनुनिर्वाप्यः श्रपणं देवतास्तथा। आदौ ये विघृताः पश्चात्त इमे सर्व्वदा स्मृताः" इति रूपं कर्मस्वरूपम् दाक्षायणदर्शपूर्णमासादिकम् काल उदितानुदितादिः अनुनिर्वाप्यो वैमृधादिस्तौ, श्रपणं हविःश्रपणम् गार्हपत्ये वाहवनीये वेति। देवता ऐन्द्रं भवति माहेन्द्रं वेति एतेषां विकल्पानां मध्ये यः प्रथमं स्वीकृतः स एव यावज्जीवं कर्त्तव्यः न पश्चान्तरम्। एवमेवैते पञ्चैवादिविकल्पाः अन्ये सर्वेऽपीच्छाविकल्पाः" कर्कः।

तस्य प्रतियज्ञविधानञ्च शत०ब्रा०१४।१।२८।यथा "तस्मादेनानृत्सवने सवने एव प्रतिष्ठमिच्छते" "एनान् गार्हपत्यादीन्"। त्रेताग्नेश्च च षोड़शसंस्कारान्तर्गतत्वं व्यासवाक्ये यथा "गर्भाधानं पुंसवनं सीमन्तोजातकर्म च। नामक्रिया निष्क्रमो ऽन्नप्राशनं वपनक्रिया। कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः। केशान्तस्नानमुद्वाहोविवाहाग्निपरिग्रहः। त्रेताग्निसंग्रहश्चैव संस्काराः षोड़श स्मृताः" "गार्हपत्यागारे वा देवान् वा एष उपावर्त्तते" शत०ब्रा०१।१।१।११। तत्करणप्रकारः कात्या०श्रौ०४।७।८। सूत्रादौ उक्तो यथा "अग्न्यगारे कुर्वन्ति" "पूर्वं गार्हपत्यगृहं पश्चादाहवनीयगृहम् कुर्वन्ति" कर्कः। "उदग्वंशं वाऽपरम्" ८सू० "अपरं गार्हपत्यागारं उदग्वंशं वा प्राग्वंशम् आहवनीयागारं तु प्राग्वंशमेव" कर्कः। "दक्षिणपूर्वे द्वारे" १०सू० "उत्पत्तिक्रमेण गार्हपत्यागारस्य दक्षिणद्वारमाहवनीयागारस्य प्राच्याम्। अर्थात् गार्हपत्यागारे पूर्वद्वारम् आहवनीयागारे अपरद्वारम्" कर्कः "गार्हपत्यागारे निर्मथ्याभ्यादधाति" तत्रैव १५ सूत्रम्।

**गार्हमेध** पु० गृहमेधस्येदं अण् कर्म०। गृहस्थस्वामिकर्त्तव्ये गृहस्थकर्त्तव्ये पञ्चयज्ञरूपे कर्म्मणि। "तथैव राजन्नृषिगार्हमेधवितानविद्योरुविजृम्भितेषु" भाग०५।११।१।

**गार्हस्थ्य** न० गृहस्थस्य भावः कर्म वा। गृहस्थकर्त्तव्ये पञ्चयज्ञादौ कर्मणि। "गार्हस्थ्यञ्चैव याज्याश्च सर्व्वा गृह्याश्च देवताः" भा०आश्व०७अ०। "गार्हस्थ्यं धर्ममास्थाय ह्यसितो देवलः पुरा" भा०शल्य० ५१अ०।

**गालन** न० चु० गल—स्रावणे भावे ल्युट्। निःस्रावणे (गालान) "मा चुक्षधं त्वां सोमस्य गालनेन" निरु० ६।२४। "वृथा पचेत् यथा दारुकाठिन्यातिशैथिल्यमण्डगालनरहितोऽन्नस्य पक्वश्चर्भवति" भवदेवः।

**गालव** पु० गल—घञ् तं वाति वा—क। १लोध्रवृक्षे मेदि० २केन्दुकवृक्षे शब्दच० ३मुनिभेदे, स च विश्वामित्रपुत्रभेदः। यथाह हरिवं २७अ०। "विश्वामित्रस्य च सुता देवरातादयः स्मृताः" इत्युपक्रमे

"गाङ्गतिर्गालवश्चेति सुद्गलश्चेति विश्रुताः"। तस्य शिष्यभेदश्च यथाह भा० उ० १०५ अ०। "विश्वामित्रस्तु शिष्यस्य गालवस्य तपस्विनः! शुश्रूषया च भक्त्या च प्रीतिमानित्युवाच ह" इत्युपक्रमे तस्यातिनिर्बन्धनेन स्वेष्टविश्वामित्रादिष्टगुरुदक्षिणात्वेन एकतः श्यामकर्णाश्वशताष्टकस्य दानकथा भा० उ० १०६अ० ११८ अ०पर्य्यन्ते उक्ता। तत्रेयमाख्यायिका गुरुणा तथाऽनुशिष्टस्य तस्य उपासनादितः प्रसन्नेन गरुड़ेन सह तथाभूताश्वप्राप्त्यर्थं ययातिनृपसमीपे गतिः। तत्प्रार्थनया तेन च तथाभूताश्वलाभद्वारभूतां माधवीनामककन्यां ददे। तस्यां कन्यायाञ्चैकैकपुत्रजनने तथाभूताश्वशतद्वयं शुल्कत्वेन च कल्पितं, तत्रादौ हर्य्यश्वन्द्रपेण द्वे तथाविधाश्वशते शुल्कत्वेन दत्त्वा एकपुत्रस्तस्यामुत्पादितः। ततो दिवोदासेन तथैव द्वे शते शुल्कं दत्त्वा एकः पुत्र उदपादि। तत उशीनरेण तथैव द्वे शते शुल्कं दत्त्वा एकः पुत्र उदपादि। एवं षट् तथाभूताश्वशतानि द्विशताश्वशुल्कदानेनैकपुत्रोत्पादनयोग्यां ताञ्च कन्यां गुरवे विश्वामित्राय गुरुदक्षिणात्वेन ददौ तेन च तस्यामेकः पुत्रः उदपादीति।

**गालवि** पु० गालवस्यापत्यम् इञ्। गालवर्षेः पुत्रे प्राक्श्टङ्गवदाख्ये मुनिभेदे। स हि कुणिगर्गस्यातिवृद्धां कन्यामुपयेमे तत्कथा च वृद्धकन्यासुपक्रम्य "वार्द्धक्येन च राजेन्द्र! तपसा चैव कर्षिता। सा नाशक्द्यदा गन्तुं पदात् पदमपि स्वयम्। चकार गमने बुद्धिं परलोकाय वै तदा। मोक्तुकामान्तु तां दृष्ट्वा शरीरं नारदोऽब्रवीत्। असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे!। एवन्तु श्रुतमस्माभिर्देवलोके महाव्रते!। तपः परमकं प्राप्तं न तु लोकास्त्वया जिताः। तन्नारदवचः श्रुत्वा साऽब्रवीदृषिसंसदि। तपसोऽर्द्धं प्रयच्छामि पाणिग्राहस्य सत्तम!। इत्युक्तेऽस्याश्च जग्राह पाणिं गालवसम्भवः। ऋषिः प्राक्श्टङ्गवान्नाम समयञ्चेदमब्रवीत्। समयेन तवाद्याहं पाणिं स्प्रक्ष्यामि शोभने!। यद्येकरात्रं वस्तव्यं त्वया सह मयेति ह। तथेति सा प्रतिश्रुत्य तस्मै पाणिं ददौ तदा। यथादृष्टेन विधिना हुत्वा चाग्निं विधानतः। चक्रे च पाणिग्रहणं तस्योद्वाहञ्च गालविः" भा० शल्य० ५२ अ०।

**गालि** पु० चु० गल–स्रावणे इन्। आक्रोशे शापे त्रिका०। "ददतु ददतु गालिं गालिमन्तोभवन्तो वयमिह तदभावाद्गालिदानेऽप्यशक्ताः" इद्भटः।

**गालित** त्रि० चु० गल–स्रावणे (गालान) कर्म्मणि क्त। स्रवद्रवे "गालितस्य सुवर्णस्य षोड़शांशेन सीसकम्" वैद्य०। "तथा पचेत् यथाऽगालितमखण्डस्वरूपंभवति" लालेसी पद्धतिः।

**गालिनी** स्त्री "कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरम्। तर्ज्जनीमध्यमानामाः संहताः भुग्नवर्ज्जिताः। मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता" तन्त्रसा० उक्ते मुद्राभेदे।

**गालोडि** गालोड़ितमाचष्टे णिच् इतलोपः सुग्ध० उन्मत्ताद्याख्याने अक० उभ० सेट्। गालोड़यति ते।

**गालोडित** त्रि० "उन्मादशीलो रोगार्त्तो मूर्खो गालोड़ितः स्मृतः" कलापवृत्त्युक्ते १उन्मत्ते २रोगार्त्ते ३मूर्खे च गोलो हित इति वा पाठस्तत्रार्थेषु। [वीजे राजनि०।

**गालोद्य** न०गलोद्य+स्वार्थे प्रज्ञा० अण्। १धान्यभेदे २पद्म-

**गावलगणि** पु० गवल्गणस्यापत्यम् इञ्। गवल्गणेरपत्ये सञ्जये गवल्गणशब्दे दृश्यम्। "गावल्गणिरिदं धीमान्" भा० आ० १० अ०। "सञ्जयस्य सहामात्यो विद्वान् गावल्गणिर्वशी" २अ०।

**गाविष्ठिर** पुंस्त्री गविष्ठिरस्यापत्यम् विदा० अञ्। गविष्ठिरर्षेरपत्ये। ततः हरिता०युवापत्ये फञ्। गाविष्ठिरायण तदीययुवापत्ये पुंस्त्री।

**गावेधुक** त्रि० गवेधुकाया विकारः बिल्वा० अण्। गवेधुकावयवे चर्व्वादौ। गवेधुशब्दे उदा०।

**गाह** विलोड़ने भ्वा० आत्म० सक० जदित् वेट्। गाहते अगाहिष्ट-अगाढ जगाहे। "मनस्तु मे संशयमेव गाहते" कुमा०। "अगाहताष्टादशतां जिगीषया" नैष०। "जगाहिरेऽम्बुधिं नागाः"। "समगाहिष्ट चाम्बुधिम्" "जगाहे द्यां निशाचरः" "जगाहे च दिशो दश" भट्टिः। "ब्रह्मावर्त्तं जनपदमथच्छायया गाहमानः" मेघ०। "पूर्व्वापरौ तोयनिधी वगाह्य" कुमा० अवाऽल्लोपः। पक्षे अवगाह्य। "तपस्विगाढ़ां तमसाम्" (प्राप) रघुः। अव+विपर्य्ययीकरणे च। "पक्षे साध्यावगाहि ज्ञानम्" गदा०।

**गाह** पु० गह–गहने भावे कर्म्मणि वा घञ्। १गहने। "गाहादिव आ निरमुञ्चत" ऋ० ८।१।१०।८। "गाहात् गहनात्" भा०। गाह–कर्त्तरि अच्। २गाहकर्त्तरि त्रि०

**गिद्** पु० रथपालके देवभेदे "गिदैष ते रथ एष वामश्विना" ता० ब्रा० १।७।७। "गिदो नाम रथपालकः कश्चि-

हेव:" भा०। [गिरिधारके।

**गिध्र** त्रि० गिरिं धारयति धृ—मूलविभ०क नि० रिलोपः।

**गिन्दुक** पु० गेन्दुक+पृषो०। गेन्दुके (कैन्द) इत्ये हेमच०।

**गि(री)रा** स्त्री गॄ—क्विप् वा टाप्। वाक्ये।

"रवेः कवेः किं समरस्य सारं इति" प्रश्ने "भागीरथी-तीरसमाश्रितानाम्" विदग्धमु० उत्तरम्। "गिरा मुखाम्भोजमियं युयोज" "गरोगिरः पल्लवनार्थ-लाघवे" नैषधम्"भवद्गिरामवसरप्रदानाय वचांसि नः" "गिरमुत्तरपक्षताम्" माघः। "गीर्भिष्ठा वयं वर्द्धयामो वचोविदः" ऋ० १।६१।६। अस्य पत्यादौ परे समासे अहरा०रूपत्वयम् गीष्पतिः गीर्पतिः गीःपतिः। २स्तुतौ च "पवमानो गिराद्दधम्" ऋ०६।२६।६। "गिरा स्तुत्या वर्द्धमानम्" भा०।

**गिरि** पु० गॄ—इ किच्च। १पर्वते। "कुचरो गिरिष्ठा इत्यृचो निरुक्तौ १।२०। "गिरिः पर्वतः समुद्गीर्णो भवति" इत्युक्तम्। "सदोर्द्ध्वबाहुर्योवीरो मुक्तकेशो दिगम्बरः। सर्वत्र समभावेन भावयेद्यो नरोत्तमः। इष्टदेवीधिया नारीं स गिरिः परिकीर्त्तित" इत्युक्तलक्षणे २तान्त्रि-कसंन्यासिभेदे,३परिव्राजकोपाधिभेदे च। यथा आनन्द-गिरिः। गि(र)लति लोकम् गॄ—अच्। ४बालमू-षिकायां स्त्री वा ङीप् रमानाथः। ५नेत्ररोगे मेदि०। गिरिकाणः इत० प्रकृतिस्वरः। ६गेन्दुके त्रिका०। ७पूज्ये त्रि० मेदि०। ८निगरणे स्त्री अमरः। "अथान्धकारं गिरिगह्वरस्थम्"रघुः। "गिरेस्तडित्त्वा-निव तावदुच्चकैः" माघः। ९मेघे निघ०। "गिरयो नाप उग्रा अस्पृध्रन्" ऋ० ६।६७।११। "गिरयो मेघाः" भा०। "गिरिभ्रजो नोर्मयो मदन्तः" ऋ० १०।६८।१। "गिरिभ्यो मेघेभ्यो भ्रष्टा निर्गताः"भा०। "मेघोऽपि गिरिरेतस्मादेव जलादेः संगरणं भवति" निरु० १ २०। १०पारददोषभेदे "मलं विषं वह्निगिरी च चापल्यन्नैसर्गिकं दोषमुशन्ति पारदे। उपाधिजौ द्वौ त्रपुनागयोगजौ दोषौ रसेन्द्रे कथितौ मुनीश्वरैः। मलेन मूर्च्छां, मरणं विषेण, दाहोऽग्निना कष्टतरः शरीरे। देहस्य जाड्यङ्गिरिणा सदा स्यात्, चाञ्चल्यतो वीर्य्यहृतिश्च पुंसाम्। वङ्गेन कुष्ठं भुजगेन षण्ढो भवेदतोऽसौ परिशोधनीयः। वह्निर्विषं मलञ्चेति मुख्या दोषास्त्रयो रसे। एते कुर्व्वन्ति सन्तापं मृतिं मूर्च्छां नृणां क्रमात्। अन्येऽपि कथिता दोषा भिषग्भिः पारदे यदि। तथाप्येते त्रयो दोषाः शोधनीया विशेषतः" भावप्र०। ततःपरस्य नदीनस्यादीनां गिरि-नद्यादि० पूर्वपदस्थनिमित्तत्वात् वा णत्वम्। गिरिण(न)दी गिरिण(न)खः गिरिण(न)द्धः गिरिणि(नि)तम्बः।

**गिरिक** पु० गिरौ कैलासे कायति कै—क। १शिवे। "गिरिको हिण्डुको इत्यो जीवः पुद्गल एव च" भा० शा० २८६ अ० दक्षकृतशिवनामसु। नीलकण्ठ नान्या-व्युत्पत्तिरुक्ता। गिरिं गिरिवदचेतनं देहादिकं कायति शब्दति अन्तर्भूतण्यर्थे कै—क। अचेतनमपि देहादि चेतनं करोतीत्यर्थः"। गिरि+स्वार्थे क। २बालमूषि-कायाम् स्त्री अमरः। गिरौ भवः कन्। ३पर्वतजाते त्रि०। ४उपरिचरवसुन्टपमहिष्यां स्त्री तस्या गिरितो जन्मकथा भा० आ० ६२ अ० यथा

"राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम्। पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः। अरौत्सी-च्चेतनायुक्तः कामात् कोलाहलः किल। गिरिं कोला-हलं तन्तु पदा वसुरताड़यत्। निश्चक्राम ततस्तेन प्रहारविवरेण सा। तस्यां नद्यामजनयत् मिथुनं पर्वतः स्वयम्। तस्मात् विमोक्षणात् प्रीता नदी राज्ञे न्यवेद-यत्। यः पुमानभवत् तत्र तं स राजर्षिसत्तमः। व-सुर्वसुप्रदश्चक्रे सेनापतिमरिन्दमः। चकार पत्नीं कन्यान्तु तथा तां गिरिकां नृपः। वसोः पत्नी च गिरिका कामकालं न्यवेदयत्। ऋतुकालमनुप्राप्ता स्नाता पुंसवने शुचिः। तदहः पितरश्चैनमूचुर्जहि मृगानिति। तं राजसत्तमं प्रीतास्तदा मतिमतां वर!। स पितॄणां नियोगन्तमनतिक्रम्य पार्थिवः। चचार मृगयां कामी गिरिकामेव संस्मरन्। अतीव रूपस-म्पन्नां साक्षाच्छ्रियमिवापराम्"। "चैद्योपरिचरं वीरं वसुं नामान्तरिक्षगम्। चैद्योपरिचराज्जज्ञे गिरिका सप्त मानवान्। महारथो मगधराट् विश्रुतो यो बृह-द्रथः। प्रत्यग्रहः कुशश्चैव यमाहुर्मणिवाहनम्। मा-रुतश्च यदुश्चैव मत्स्यकालो च सत्तम!" हरिवं३२ अ०।

**गिरिकच्छप** गिरौ पर्वतस्थदर्यां कच्छपः। पर्वतदरीस्थ-शायिनि स्थलकच्छपे। स च प्रमथाद्युपद्रवराहित्याय गृहे गृहस्थेन स्थापनीयः यथाह भा०आनु० १२१ अ० "गोरचना समालम्भो वचाहस्तश्च यो भवेत्। घृताक्षतं च यो दध्यात् मस्तके तत्परायणः। ये च मांसं न खादन्ति तांश्च शक्नुम हिंसितुम्। यस्य चाग्निगृहे नित्यं दिवा

राज्ञौ च दीप्यते। तरक्षोऽश्मं दंष्ट्रा च तथैव गिरिकच्छपः। आज्यधूमो बिडालश्च छागः कृष्णोऽथ पिङ्गलः। येषामेतानि तिष्ठन्ति गृहेषु गृहमेधिनाम्। तान्यधृष्यान्यगाराणि पिशिताशैः सुदारुणैः” पिशाचोक्तौ।

**गिरिकण्टक** पु० गिरेः कण्टक इव भेदकत्वात्। वज्रे त्रिका०

**गिरिकदम्ब** पु० गिरौ भवः कदम्बः। धाराकदम्बे राजनि० स्वार्थे क। तत्रार्थे “देवदारुवचाकिङ्कुष्ठं गिरिकदम्बकः” सुश्रुतः।

**गिरिकदली** स्त्री ७त०। वहुवीजायाम् वनरम्भायाम् राजनि० “गिरिरम्भा तु मधुरा हिमा बल्या च दुर्ज्जरा। तृष्णापित्तदाहशोषप्रशमनी वीर्य्यकृद्गुरुः” राजनि०।

**गिरिकर्णिका** स्त्री गिरिः कर्ण इव यस्याः कप् कापि अत इत्त्वम्। १पृथिव्यां त्रिका०। गिरेर्बालमूषिकायाः कर्णः अस्त्यस्याः तदाकारपत्रत्वात् ठन्। २अपराजिता लतायां ३श्वेतकिणिहीवृक्षे च राजनि०।

**गिरिकर्णी** स्त्री गिरेर्बालमूषिकायाः कर्ण इव कर्णः पत्रमस्याः ङीप्। १अपराजितालतायाम् अमरः। “त्रिफला गिरिकर्णी च हंसपादी च चित्रकम्” भावप्र०। २यवासे शब्दच०। [गिरिशब्दे गिरिकशब्दे च दृश्यम्।

**गिरिका** स्त्री गिरिरिव स्वार्थे क। बालमूषिकायाम् अमरः।

**गिरिकाण** त्रि० गिरिणा नेत्ररोगभेदेन काणः। नेत्ररोगभेदेन एकनेत्रहीने। अस्य ३त० प्रकृतिस्वरता।

**गिरिक्षित्** पु० गिरि वाचि क्षियति क्षि—वासे क्विप् अलुक्स०। स्तुतिरूपवाक्यस्थे परमेश्वरे “प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे” ऋ०१।१५४।३। “गिरिक्षिते गिरि वाचि, गिरिवदुच्छ्रतप्रदेशे वा तिष्ठते” भा०।

**गिरिक्षिप** त्रि० गिरिं क्षिपति क्षिप—क। १गिरेरुत्क्षेपणसामर्थ्यवति २अक्रूरभ्रातरि पु० गान्दिनीजशब्दे दृश्यम्

**गिरिगुड** पु० गिरौ गुड इव। गेन्दुके (गेन्द) हेमच०।

**गिरिचर** त्रि० गिरौ चरति चर—ट। १पर्वतचारिणि। “गिरिचर इव नागं प्राणसारं बिभर्त्ति” शकु० स्त्रियां ङीप्। २चौरे तदीये ३रुद्रभेदे पु० “नम उष्णीषिणे गिरिचराय” यजु० १६।२१। गिरिचरश्चौरः वाध्वन्यानां वस्त्रादापहर्त्तुं पर्वतादिविषमस्थानचरत्वात् तदधिपत्वाद् रुद्रोपि गिरिचरः इत्युपचारः।

**गिरिज** न० गिरौ जायते जन—ड। १शैलजे शिलाजतुनि २लोध्रे ३अभ्रके च मेदि०। ४मरिके राजनि० ५मधुकवृक्षे ६गौरशाके पु० रत्नमा०। ७हिमाद्रिजातायां पार्वत्यां स्त्री “आगतं शिववक्त्रेभ्यो गतञ्च गिरिजानने” यामलम्। “यदा यदा स गिरिजास्कन्दनामा चरागतम्” काशी० ६६अ०। ८मातुलाङ्ग्यां स्त्री मेदि०। ९श्वेतवृक्षायां रत्नमा०। १०क्षुद्रपाषाणभेदलतायां ११त्रायमाणलतायां १२कारीवृक्षे १३मल्लिकायां १४गिरिकदल्यां च स्त्री राजनि०। १५पर्वतजातमात्रे त्रि०। गिरि वाचि जायते जन—ड अलुक्स०। १६स्तुतिरूपवाक्यनिष्पन्ने च “मरुत्वते गिरिजा एवया मरुत्” ऋ०५।८७।१। गिरिजा वाचिनिष्पन्नाः” भा०। पार्वत्या हिमालयरूपगिरेर्जन्मकथा शिवपुराणे १३अ० हिमालयस्य मेनकानाम्नी पत्नी बभूवेत्युक्त्वा “प्रकृतिरभवत्तस्याः मेनायाः कन्यका शुभा” इत्युपक्रमे “तां पार्वतीत्याभिजनाच्च नामतो जुहाव तद्बन्धुजनः स्वभावतः। माता निषिद्धा तपसे यदा तु सा ययावुमाख्यां भवभक्तिभाविनी”। कालिकापुराणे तु तस्याः कालीतिनाम तत्कथा ४१।४२अ० दृश्या। १७गङ्गायाञ्च स्त्री तस्या अपि तत उत्पत्तिकथा कालिकापु० ४७ अ० दृश्या।

**गिरिजातनय** पु० ६त०। कार्त्तिकेये तस्य च यथोत्पत्तिस्तथा कार्त्तिकेयप्रसूशब्दे १९५६पृ० उक्तप्राया कालिकापु० ४७अ० विस्तरेण दृश्या। गिरिजानन्दनादयोऽप्यत्र।

**गिरिजापति** पु० ६त०। १शिवे, गिरिजेशादयोऽप्यत्र।

**गिरिजामल** न० गिरौ पर्वते मेघे घनरवे वा जायते जन—ड, तेषु अमलम्, तथाभूतञ्च तद्मलञ्च, गिरिजायाः पार्वत्या वीजरूपं मलं वा। १अभ्रके तस्य यथा च पार्वतीवीजजातत्वं तथा अभ्रकशब्दे ३१५ पृ० उक्तम् भावप्र० तस्यान्यथोत्पत्तिभेदादिकमुक्तं यथा

“पुरा बधाय वृत्रस्य वज्रिणा वज्रमुद्धृतम्। विस्फुलिङ्गास्ततस्तस्य गगने परिसर्पिताः। ते निपेतुर्घनध्वानाच्छिखरेषु महीभृताम्। तेभ्य एव समुत्पन्नं तत्तद्गिरिषु चाभ्रकम्। तद्वज्रं वज्रजातत्वादभ्रमभ्ररवोद्भवात्। गगनात् स्खलितं यस्माद् गगनञ्च ततो मतम्। विप्रक्षत्रियविट्शूद्रभेदात्तत् स्याच्चतुर्विधम्। क्रमेणैव सितं रक्तं पीतं कृष्णञ्च वर्णतः। प्रशस्यते सितन्तारे रक्तं तत्तु रसायने। पीतं हेमनि, कृष्णन्तु गदेषु द्रुतयेऽपि च। पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधम्। मुञ्चत्यग्नौ विनिक्षिप्तं पिनाकन्दलसञ्चयम्। अज्ञानाद्भक्षणं तस्य महाकुष्ठप्रदायकम्। दर्दुरं त्वग्निनिःक्षिप्तं कुरुते दर्दुरध्वनिम्। गोलकान् बहुशः कृत्वा स स्यान्मृत्यु

प्रदायकः। नागन्तु नागवद् वङ्गं फुत्कारं परिमुञ्चति। तद्भक्षितमवश्यन्तु विदधाति भगन्दरम्। वज्रन्तु वज्र-वत्तिष्ठेत्तच्चाग्नौ विकृतिं व्रजेत्। सर्वाभेदु वरं वज्रं व्याधिवार्द्धक्यमृत्युहृत्। अभ्रमुत्तरशैलोत्थं बहुसत्वं गुणाधिकम्। दक्षिणाद्रिभवं स्वल्पसत्वमल्पगुण-प्रदम्। अभ्रं कषायं मधुरं सुशीतमायुष्करं धातु-विवर्द्धनञ्च। हन्यात् त्रिदोषं व्रणमेहकुष्ठप्लीहो-दरग्रन्थिविषक्रमींश्च। रोगान् हन्ति द्रढयति वपु र्वीर्य्यवृद्धिं विधत्ते तारुण्याढ्यं रमयति शतं योषितां नित्यमेव। दीर्घायुष्कान् जनयति सुतान् विक्रमैः सिंहतुल्यान् मृत्योर्भीतिं हरति सततं सेव्यमानं मृताभ्रम्"। अभ्रशब्दे अनुक्तास्तद्गुणादिभेदा इहोक्ताः।

**गिरिज्वर** पु० गिरिं ज्वरयति ज्वर–णिच्–अच्। वज्रे शब्दर०।

**गिरि(लि)त** त्रि० गिल–क्त वा रः। भक्षिते रायमुकु०।

**गिरित्र** पु० गिरौ कैलासे स्थितस्त्रायते त्रै–क। रुद्रे। "शिवां गिरित्र तां कुरु" यजु० १६।३।

**गिरिदुर्ग** न० गिरिरेव दुर्गम् राज्ञां शत्रुभ्यो निःशङ्क-, तया वासस्थानम्। पर्वतरूपे तादृशे स्थाने (गड़)। "धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा। नृदुर्गं गिरि-दुर्गं वा समाश्रित्य वसेत् पुरम्। सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत्। एषां हि बहुगुण्येन गिरि-दुर्गं विशिष्यते"। त्रीण्याद्यान्याश्रितास्तेषां मृगगर्त्ता-श्रयाप्चराः"। त्रीण्युत्तराणि क्रमशः प्लवङ्गमनरा-मराः"मनुः। एषां मध्ये गिरिदुर्गं बहुगुणत्वात् विशिष्टं तस्य गुणाश्च दुरारोहत्वं महाप्रदेशादल्पप्राणप्रे-रितशिलादिना बहुशत्रुसैन्यविनाशनमित्यादयः" कुल्लू० "वसन्तो गिरिदुर्गेषु वनदुर्गेषु धन्विनः" भा०वि० ५ अ०।

**गिरिधातु** पु० ६त०। गैरिके उपधातुभेदे राजनि०।

**गिरिनगर** न० ह०स० कूर्मविभागे १४अ० दक्षिणस्यामुक्ते अथ दक्षिणेन लङ्केत्युपक्रमे "कालाजिनसौरिकीर्णता-लिकटाः गिरिनगरमलयदर्दुरमहेन्द्रमालिन्द्यभरुकच्छाः" इत्युक्ते देशभेदे। अस्य च संज्ञात्वेऽपि पूर्वपदस्थनिमि-त्तात् क्षुभ्नादित्वात् न णत्वम्।

**गिरिनद्यादि** पु० वार्त्ति०ग० उक्ते पूर्वपदस्थनिमित्तात् वा णत्वनिमित्ते शब्दगणे स च गणः "गिरिनदी गिरिनख गिरिनद्ध गिरिनितम्ब चक्रनदी चक्रनितम्ब तूर्य्यमाण-माषोण आर्गयन" आकृतिगणः। "गिरिनद्यादीनां वा" वार्त्ति०।

**गिरिनन्दिनी** स्त्री ६त०। हिमालयसुतायां १पार्वत्यां २गङ्गायाञ्च, गिरेर्नन्दिनीव। ३नदीमात्रे तासां गिरि-प्रभवत्वात्तथात्वम् "अन्याश्च सरितो बह्व्यः" इत्युपक्रमे "शुभाश्च गिरिनन्दिन्यः" हरिवं० १२६अ०। "कलिन्द-गिरिनन्दिनीतटसुरद्रुमालम्बिनी" रसगङ्गाधरः।

**गिरिनिम्ब** पु० ७त०। महानिम्बवृक्षे राजनि०।

**गिरिपीलु** पु० ६त०। (फालसा) इति वृक्षभेदे राजनि०।

**गिरिपुर** न० आनर्त्तदेशान्तर्गते पुरभेदे आनर्त्तशब्दे ७२७ पृ० उदा०। [जतुनि राजनि०।

**गिरिपुष्पक** न० गिरेः पुष्पमिव कायति कै–क। शिला-

**गिरिप्रिया** स्त्री गिरिः प्रियोऽस्याः। चमर्यां मृगभेदे राजनि०। [उवाचापः" शत०ब्रा० ७।४।२।१८।

**गिरिबभ्रु** स्त्री गिरिर्बभ्र इव यस्याः। अपसु। गिरिबभ्रा

**गिरिभिद्** पु०गिरिं भिनत्ति भिद्–क्विप्। १पाषाणभेदके वृक्षे भावप्र०। २इन्द्रे च। ३नद्यन्तरे। ४नदीभेदके "नद्य-न्तरेऽसंसवो गिरिभिच्चेत्"कात्या० श्रौ०२५।१४।२३। "गिरिं भित्त्वा या नद्यागता तदनन्तरे संसवो न भवति"कर्कः।

**गिरिभू** त्रि० गिरौ भवति भू–क्विप्। १पर्वतप्रभवे क्षुद्र-पाषाणभेदे २पार्वत्यां ३गङ्गायां च स्त्री ६त०। ४पर्वत-भूमौ स्त्री।

**गिरिमल्लिका** स्त्री गिरौ मल्लीव इवार्थे कन्। कुटजवृक्षे। अमरः। [ उच्चत्वात्तथात्वम्।

**गिरिमान** पु० गिरेरिव मानमस्य। गजे शब्दरत्ना०। तस्य

**गिरिमाल** पु० गिरौ मालः स्तम्बभ्योऽस्य। बाधके स्वनामख्याते यज्ञियपूपकाष्ठसाधने वृक्षभेदे "तैल्वको बाधको वा" कात्या० श्रौ० २१।३।८। "यूपो भवति तैल्वकस्तिरीशः बाधको गिरिमालः" कर्कः।

**गिरिमृद्** स्त्री ६त०। १गैरिके (गेरिमाटि) त्रिका०। २पर्व-तमृत्तिकायाञ्च।

**गिरिमृद्भव** न०गिरेर्मृदो भवति भू–अच्। गैरिके राजनि०

**गिरिमेद** पु० गिरिर्मेद इव सारोऽस्य। विट्खदिरे रत्नमा०

**गिरियक** पु० गिरिं याति या–क संज्ञायां कन्। गेन्दुके (केन्द) इति हेमच०। [किन्दुके शब्दरत्ना०।

**गिरियाक** पु०गिरिं याति–या क्विप् संज्ञायां कन् न ह्रस्वः।

**गिरिराज्** पु० गिरिषु राजते राज–क्विप् ७त०।१पर्वतश्रेष्ठे "स तयाभिहितो राजन् नाचलत् गिरिराडिव"भा०भी०

७८अ० । "गिरिराट्पादचारीव" भाग० ६।१२।२५ । २हिमाचले च ।

**गिरिराज** पु० ६त० । हिमालये । यथा च तस्य नगराजत्वं तथा अचलराजशब्दे ८३ पृ०उक्तम् ।"सोऽपि कार्पटिकस्तस्य गिरिराजस्य भाषितम्", "गिरिराजाङ्कजासखः" काशी०। "गिरिराजराजसुतान्वितवामतनुम्"शिवस्तवः ।

**गिरिवासिन्** त्रि० गिरिं वासयति सुरभीकरोति वासि—णिनि, गिरौ वसति वस—णिनि वा। हस्तिकन्दे वृक्षे राजनि० ।

**गिरिव्रज** न० गिरीणां पञ्चानां व्रजो यत्र । मगधदेशान्तर्गते जरासन्धपुरे "सोऽभिजनोऽस्य" अण् । गैरिव्रज तद्देशवासिनि त्रि० बहुषु तस्य लुक् ।"गिरिव्रजाः मगधपुण्ड्रमिथिलाश्च" ह०स०१०अ० ।

गिरिव्रजवर्णनं भा०स०२१अ०। यथा

"एष पार्थ ! महान् भाति पशुमान्नित्यमम्बुमान् । निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः । वैहारो १ विपुलः शैलो वराहः २ वृषभ ३ स्तथा । तथा ऋषिगिरि४स्तात ! शुभाश्चैत्यक५पञ्चमाः। एते पञ्च महाशृङ्गाः पर्वताः शीतलद्रुमाः । रक्षन्तीवाभिसंहत्य संहताङ्गा गिरिव्रजम्" इत्युपक्रमे ।

"अङ्गवङ्गादयश्चैव राजानः सुमहाबलाः । गौतमक्षयमभ्येत्य रमन्ते स्म पुरार्ज्जुन ! । वनराजीस्तु पश्येमाः पिप्पलानां मनोरमाः । लोध्राणाञ्च शुभाः पार्थ ! गौतमौकःसमीपजाः । अर्व्वुदः शक्रवापी च पन्नगौ शत्रुतापनौ । स्वस्तिकस्यालयश्चात्र मणिनागस्य चोत्तमः । अपरिहार्य्या मेघानां मागधा मनुना कृताः । कौशिको मुणिमांश्चैव चक्राते चाप्यनुग्रहम् । एवं प्राप्य पुरं रम्यं दुराधर्षं समन्ततः । अर्थसिद्धिं त्वनुपमां जरासन्धोऽभिमन्यते" ।

**गिरिश** पु० गिरौ शेते शी—बा० लोकेऽपि ड, गिरिरस्त्यस्य लोमा० श वा ।१शिवे अमरः ।"गिरिशमुपचचार प्रत्यहं सा सुकेशी"कुमा० । "गिरिशरमणी कालि ! सततम्" कालीस्तवः ।"शिवेन वचसा त्वा गिरिशाच्छा वदामसि" यजु० १६।४ ।

**गिरिशन्त** पु० महादेवे । "गिरिशन्ताभिचाकशीहि" यजु० १६।२ । "गिरौ कैलासे स्थितः शं सुखं प्राणिनां तनोति विस्तारयति, गिरि वाचि स्थितः शं तनोतीति वा गिरौ—मेघे स्थितो वृष्टिद्वारेण शं तनोतीति वा वेददी० । सर्वत्र तन—बा० ड । गिरि वाचीति पक्षे अलुक्स० ।

**गिरिशय** पु० गिरौ कैलासे शेते शी—अच् । महादेवे । "नमो गिरिशयाय च गिरिशाय च" यजु० १६।८ ।

**गिरिशाल** पु० गिरिं शलति आश्रयत्वेन गच्छति शल—गतौ अण् उप० स० । सुश्रुतोक्ते प्रतुदे पक्षिभेदे । कपोतपारावतेत्युपक्रमे गिरिशालङ्खानदूषकेल्यादयः प्रतुदाः" सुश्रुतः ।

**गिरिशालिनी** स्त्री गिरिं वालमूषिकाकर्णं शलते श्लाघते स्वपत्रेण शल—श्लाघायां णिनि ङीप् । गिरिकर्णिकायामपराजितायाम् "पारिभद्रं पाटला च बकुलं गिरिशालिनी" वामनपु० । तत्तुल्यपत्रत्वेन गिरेः श्लावनात् तस्यास्तथात्वम् ।

**गिरिशृङ्ग** पु० गिरेः शृङ्गमाकारेणास्त्यस्य अच् । १गणेशे शब्दरत्ना० शुण्डादण्डस्योत्तलने गिरिशृङ्गाकारत्वात् तस्य तथात्वम् । ६त०।२ पर्वतशिखरे न० ।

**गिरिषद्** पु० गिरौ सीदति सद—क्विप् षत्वम् । महादेवे ।

**गिरिष्ठा** स्त्री गिरौ तिष्ठति स्था क्विप् अम्ब० षत्वम् । १महादेवे २पर्वतस्थायिमात्रे त्रि० । "मृगो न भीमः कुचरो गिरिष्ठाः"ऋ०१।१५४।२ । "गिरिष्ठा गिरिस्थायी" निरु०

**गिरिसर्प** पु० नित्यः ७त० । दर्व्वीकरसर्पभेदे सुश्रुतः । अहिशब्दे ५८१ पृ० विवृतिः ।

**गिरिसार** पु० ६त० । १लौहे २रङ्गे धातुभेदे च "द्रोणाय प्रेषयामास गिरिसारमयौ बली" भा० भी० ५२अ० गिरिषु सारः चन्दनादिसुरभिद्रव्यवत्त्वात् श्रेष्ठः । ३ मलयपर्वते मेदिनिः ।

**गिरिसुत** पु० ६त० । १मैनाकपर्वते ।२पार्वत्याम् स्त्री । "अवतु वो गिरिसुता शशिभृतः प्रियतमा" उद्भटः । "शम्भोः शिरसीन्दुकला वृषध्वजोऽक्षि च तृतीयमप्यूर्ध्वम् । शूलं धनुः पिनाकं वामार्धे वा गिरिसुतार्धम्" ह०स० ५८ अ० ।

**गिरिस्रवा** स्त्री गिरेः स्रवति स्रु—अच् ५त० । पर्वतनद्यां "गिरिस्रवाभि ! सर्वाभिः पृष्ठतोऽनुगता शुभा" भा० आनु०१४अ० ।

**गिरिह्वा** स्त्री गिरिं वालमूषिकाकर्णं ह्वयति स्पर्द्धते तदाकारेण ह्वे—क । गिरिकर्णिकायाम् अपराजितायाम् तत्कर्णतुल्यपत्रत्वात्तस्यास्तथात्वम् ।"श्वेता गिरिह्वा किणिही सिता च" सुश्रु० । आ+ह्वे—क । गिर्य्याह्वा-

यत। 'शिरीषः कियोहि: शेलुः गिर्याह्वा रजनोद्वयम्" सुश्रु०।

**गिरीन्द्र** पु० गिरिरिन्द्र इव श्रेष्ठत्वात् इत० वा। १हिमालये पर्वते अचलराजशब्दे दृश्य० विहतिः। २महादेवे च कैलासेश्वरत्वतस्य तथात्वम्। "माधवश्च गिरीन्द्रोऽसौ सम्भावयति चेतसि" काशी० ६६ अ०।

**गिरीश** पु० गिरेः कैलासस्य ईशः। महादेवे अमरः। "सुतां गिरीशप्रतिसक्तमानसाम्"कुमा०। गिरीशामीशः। २हिमालये। गिरां वाचामीशः। ३वाचस्पतौ च मेदि०।

**गिर्वणस्** पु० गिरा स्तुत्या वन्यते वन–कर्म्मणि असुन् संज्ञात्वात् णत्वं पृषो० नोपपददीर्घः। १स्तवनीये देवभेदे। "गिर्वणा देवो भवति गोभिरेनं वनयन्ति" निरु० ६।१४। "सोमास इन्द्र! गिर्वणः" ऋ० १।५।७। "गोर्भिः स्तुतिभिः संभजनीयो देवविशेषः" भा०। कर्त्तरि असुन्। २स्तोतरि च। "धीरो गिर्वणस्यु विदानः" ऋ० १०।१११।१। "गोर्भिर्वनन्ति भजन्ते इति गिर्वणसः स्तोतारः वनतेरसुनि रूपम् उपपददीर्घाभावश्छान्दसः। तदन्तात् क्यच्। "क्याच्छन्दसि" पा० उप्रत्ययः स्तोतृन् कामयमानः" भा०। "परि त्वा गिर्वणो! गिर इमा भवन्तु विश्वतः" शत० ब्रा० ३।६।१।२४।

**गिर्वन्** पु० गिरा वन्यते वन–विच् नि० उपपददीर्घाभावः। इन्द्रादौ देवे "इन्द्रो वै गिर्वा" शत० ब्रा० ३।६।१।२४।

**गिर्वाहस्** पु० गिरा स्तुतिवाचा उह्यते नि० उपपददीर्घाभावः। "स्तुतिवाक्यवाहनीये इन्द्रादौ देवे।" "न जगृभ्रगिर्वाहो! अश्वाः" ऋ० ६।२४।६।

**गिल** गिल गिलने सक० तु० पर० सेट्। गिलति गिलन् सार्वधातुकविषयोऽयम्। गिरतेः रस्य लः इत्येके। किन्तु गिलन इति निर्द्देशात् सौत्रोऽयं धातुरित्येव ज्यायः

**गिल** त्रि० गिल–क। १भक्षके। "गिलेऽगिलस्य" वार्त्ति० एतत्परे पूर्वस्य मुम्। तिमिङ्गिलः। "तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव!" गिलस्य तु न गिलगिलः "गेलगिले च" वा०। तिमिङ्गिलगिलः इत्यादौ मुम्। २कुम्भीरे पु० शब्दच०। तस्य सर्वपदार्थस्य चर्वणाभावेन गिलनात् तथात्वम्। कर्म्मणि मूल० क। ३जम्बीरे शब्दच० तस्य दन्तशठत्वेन चर्वणान्तरेण गिलनात्तथात्वम्।

**गिलगिल** पु० गिलं कुम्भीरं गिलति गिल–क। अगिलस्येत्युक्तेः न मुम्। गिलग्राहे नक्रे (घाँगर)।

**गिलग्राह** पु० गिलं कुम्भीरं गृह्णाति ग्रह–अण् उप०स०। नक्रे राजनि०।

**गिलन** न० सौ० गिल–ल्युट् गिलन इति निर्द्देशात् न गुणः। चर्वणमन्तरेण भक्षणे(गेला) अमरः।

**गिलायु** "पञ्चिगले त्वामलकास्थिमात्रः स्थिरोऽल्परुक् स्यात् कफरक्तमूर्त्तिः। संलक्ष्यते सक्तमिवाशनञ्च स शस्त्रसाध्यस्तु गिलायुसंज्ञः" सुश्रुतोक्ते कण्ठरोगभेदे।

**गिलि** स्त्री गिल–भावे इन्। गिलने अमरटी०।

**गिलित** त्रि० गिल–क्त। भक्षिते अमरः।

**गिलोड्य** पु० मधुरफले वृक्षभेदे। "कतकाश्मिगलोपियालैलाद्युपक्रमे "समासेन मधुरो वर्गः" सुश्रुतः।

**गि(गे)ष्णु** त्रि० "गै–गादाभ्यामिष्णुच्"उणा०इष्णुच् आद्युणः। इष्णुगिति केचित् पठन्ति तन्मते आतो लोपः। १गायने २सामादिगायके पु०। उज्ज्वलदत्तीये तु इष्णुजित्येव पाठः मतान्तरे एष्णुक् इति पाठान्तरमुक्ता आतो लोपे रूपसामान्यमुक्ता चित्स्वराभावात् स्वरे भेद इत्युक्तं तेन शब्दकल्पद्रुमे गिष्णु इत्यदन्तशब्दकल्पनं भ्रमादिकम्। तथा च गिष्णुरिति, गेष्णुरिति वा शब्दरूपद्वयम्।

**गीत** न० गै–गाने भावे क्त। गाने स्वरविशेषनिष्पाद्ये शब्दभेदे। तच्च द्विविधं लौकिकं वैदिकञ्च तत्र गानशब्दे वैदिकगानलक्षणादिकमुक्तं लौकिममुनोच्यते।

"धातुमात्रासमायुक्तं गीतमित्युच्यते बुधैः। तत्र नादात्मकोधातुर्मात्रा ह्यक्षरसञ्चयः"। तद्द्विविधं यथा "गीतञ्च द्विविधं प्रोक्तं यन्त्रगात्रविभागतः। यन्त्रं स्याद्वेणुवीणादि गात्रन्तु मुखजं मतम्। निबन्धमनिबन्धञ्च गीतं द्विविधमुच्यते। अनिबन्धं भवेद्गीतं वर्णादिनियमं विना। तच्च गमकधात्वाद्यैरनिबन्धं जिनात्मकम्। निबन्धञ्च भवेद्गीतं तालमानरसाश्चितम्। छन्दोगमकधात्वाद्यैर्वर्णादिनियमैः कृतम्। ऋग्भिः पाठ्यमभूद्गीतं सामभ्यः समपद्यत। यजुर्भ्योऽभिनया जाता रसाश्चाथर्वणः स्मृताः। अथ संगीतलक्षणम् "तालवाद्यानुगं गीतं नटीभिर्यत्र गीयते नृत्यस्यानुगतं रङ्गे तत्सङ्गीतकमुच्यते। सङ्गीतकेन रम्येण सुखं यस्य न चेतसि। मनुष्यवृषभो लोके विधिनैव स वञ्चितः। संसारदुःखदग्धानां सन्तमानामनुग्रहात्। प्रभुणा शङ्करेणात्र गीतवाद्यं प्रकाशितम्। गीतं वाद्यं तथा नृत्यं तौर्य्यत्रिकमिदं मतम्। तूर्य्यशब्दोऽत्र इङ्गे स्यात् सुर-

ज्ञेऽपि च दृश्यते। गीतज्ञो यदि गीतेन नाप्नोति परमं पदम्। रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते। गीतेन हरिणा रङ्कं प्राप्नुवन्त्यपि पक्षिणः। वनादायान्ति फणिनः शिशवो न रुदन्ति च। हृदि चमत्कृतये किमतः परं फणिवरोऽश्वतरो बत पन्नगः। अपि सुतां यदवाप मदालसां मधुरगीतवशीकृतशङ्करः। परमानन्दविवर्द्धनमभिमतफलं वशीकरणम्। सकलजनचित्तहरणं चित्तक्रियाबीजं परं गीतम्"। "शुद्धशालगसङ्कीर्णभेदाद्गीतं त्रिधा मतम्। एला शाद्यभवा सपाठकरं तत् पञ्चतानेश्वरः कैराते स्वरचक्रपालविजयापत्रं त्रिभङ्गिस्तथा। टेङ्कारवर्णसरःपुटौ द्विपदिका शुक्रापलीमाहकालश्चोदकष्ठकवर्त्तनीति कथिताः शुद्धास्तु ते विंशतिः" सङ्गीतदा०। एलादीनामेतेषां विंशति संख्यकानां प्रबन्धगीतानामङ्गानि षट् भवन्ति यथा "पदं तानो विरुदश्च तालः पाठः स्वरस्तथा। एलादीनां षडङ्गानि कथितानि विरिञ्चिना। पौनरुक्त्यं न देशीये गीते दोषोऽभिजायते। शीघ्रोच्चारेण वर्णानां तथा चैव प्रसारणे। जिह्वान्यत्वे विसन्धौ च संयुक्ताक्षरमोक्षणे। परिवर्त्तेऽक्षराणाञ्च ह्रस्वदीर्घव्यतिक्रमे"। शालगस्थं यथा "ध्रुवकोमण्ठकश्चैव प्रतिमण्ठोनिसारुकः। वासकः प्रतितालश्च तथान्या चैकतालिका। यतिश्च झुमरि चेति शालगं स्थलमीरितम्"। सङ्कीर्णस्थं यथा "चैत्रोमङ्गलकस्तथा न गणिका चर्च्चतिनाटीन्नवी दोहा स्याद्कुलस्तथागुरुवस्तो गोना च गोविस्तथा। हेम्नोकोव्यथ कारिका त्रिपदिकेत्येतानि कामद्विषा संक्षेपेण चतुर्द्दश प्रकटितान्यत्राधमानि क्रमात्"सङ्गीतदा०। अधिकम् उच्चोच्यशब्दे १२७२ पृ० दृश्यम्। स्वार्थे क तत्रार्थे "काव्यालापाश्च ये केचित् गीतकान्यखिलानि च। शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः" अग्निपु०। कर्म्मणि क्त। २शब्दिते मेदि०। ३स्तुते ४गानकर्म्मणि कृतगाने त्रि०। "गीता सुगीता कर्त्तव्या" गानशब्दे उदा०।

**गीतगोविन्द** पु० गीतोगोविन्दोऽत्र। जयदेवकृते श्रीकृष्णचरितख्यापके द्वादशसर्गात्मके ग्रन्थभेदे। "यच्छृङ्गारविवेकतत्त्वमपि यत्काव्येषु लीलायितम् तत्सर्वं जयदेवपण्डितकवेः कृष्णैकतानात्मनः। सानन्दाः परिशोधयन्तु सुधियः श्रीगीतगोविन्दितः" गीतगो०।

**गीतप्रिय** त्रि० गीतं प्रियमस्य। १गानरक्ते २महादेवे पु० ३कुमारानुगतमातृकाभेदे स्त्री। "गीतप्रिया च कल्याणी कद्रुरोमाऽमिताशना" भा० शल्य० ५ अ० मातृगणोक्तौ।

**गीतमोदिन्** त्रि० गीतेन मोदते मुद–णिनि। १गीतेनामोदकर्त्तरि स्त्रियां ङीप्। २किन्नरे पु० शब्दर०।

**गीता** स्त्री गै–कर्म्मणि क्त। १गुरुशिष्यकल्पनया आत्मविद्योपदेशात्मके कथाविशेषे सा च भगवद्गीतारामगीतादिभेदात् बहुला किन्तु भगवद्गीतायामेव प्रसिद्धिः। "गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः। या स्वयं पद्मनाभस्य मुखपद्मात् विनिःसृतेति" श्रीधरस्वामिधृतवचनम्। प्रसिद्ध गीतायास्तात्पर्य्यादि नीलकण्ठेन समथ्याहि यथा "भारते सर्ववेदार्थो, भारतार्थश्च कृत्स्नशः। गीतायामस्ति, तेनेयं सर्वशास्त्रमयी मता। कर्मोपास्तिज्ञानभेदैः शास्त्रं काण्डत्रयात्मकम् भक्तिस्तूपासनाकाण्डात्तृतीयान्नातिरिच्यते। तदेव ब्रह्म त्वं विद्धि नेदं यत्तदुपासते। इति स्मृत्यैव वेद्यस्य ह्युपास्यादन्यतेरिता। इयमष्टादशाध्यायी क्रमात् षट्कत्रिकेण हि। कर्मोपास्तिज्ञानकाण्डत्रितयात्मा निगद्यते"। मधुसूदनसरस्वतीभिस्तु गीतागूढार्थदीपिन्यां तत्प्रयोजनादिकं विस्तरेण दर्शितं यथा

"सहेतुकस्य संसारस्यात्यन्तोपरमात्मकम्। परं निःश्रेयसं गीताशास्त्रस्योक्तं प्रयोजनम्। सच्चिदानन्दरूपन्तत् पूर्णं विष्णोः परं पदम्। यत्प्राप्तये समारब्धाः वेदाः काण्डत्रयात्मकाः। कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात्। तद्रूपाष्टादशाध्यायी गीता काण्डत्रयात्मिका। एकमेकेन षट्केन काण्डमत्रोपलक्षयेत्। कर्मनिष्ठाज्ञाननिष्ठे कथिते प्रथमान्त्ययोः। यतः समुच्चये नास्ति तयोरतिविरोधतः। भगवद्भक्तिनिष्ठा तु मध्यमे परिकीर्त्तिता। उभयानुगता सा हि सर्वविघ्नापनोदिनी। कर्ममिश्रा च शुद्धा च ज्ञानमिश्रा च सा त्रिधा। तत्र तु प्रथमे काण्डे कर्म तत्त्यागवर्त्मना। त्वंपदार्थो विशुद्धात्मा सोपपत्तिर्निरूप्यते। द्वितीये भगवद्भक्तिनिष्ठावर्णनया ततः। भगवान् परमानन्दस्तत्पदार्थोऽवधार्य्यते। तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम्। एवमप्यत्र काण्डानां संबन्धोऽस्ति परस्परम्। प्रत्यध्यायं विशेषन्तु तत्रतत्रैव वक्ष्यते। मुक्तिसाधनपर्वेदं शास्त्रार्थत्वेन कथ्यते। निष्कामकर्मानुष्ठानं त्यागात् काम्यनिषिद्धयोः। तत्रापि परमोधर्मो जपस्तुत्यादिकं हरेः। क्षीणपापस्य चित्तस्य विवेके योग्यता यदा। नित्यानित्यविवेकस्तु जायते सुदृढस्तदा। इहामुत्रार्थ

वैराग्यं वशीकाराभिधं क्रमात्। ततः शमादिसंपत्त्या संन्यासनिष्ठता भवेत्। एवं सर्वपरित्यागान्मुमुक्षा जायते दृढा। ततो गुरूपसदनमुपदेशग्रहस्ततः। ततः सन्देहहानाय वेदान्तश्रवणादिकम्। सर्वमुत्तरमीमांसाशास्त्रमत्रोपयुज्यते। ततस्तत्परिपाकेण निदिध्यासननिष्ठता। योगशास्त्रं तु संपूर्णमुपक्षीणं भवेदिह। क्षीणदोषे ततश्चित्ते वाक्यात्तत्त्वमतिर्भवेत्। साक्षात्कारो निर्विकल्पः शब्दादेवोपजायते। अविद्याविनिवृत्तिस्तु तत्त्वज्ञानोदये भवेत्। तत आवरणे क्षीणे क्षीयेते भ्रमसंशयौ। अनारब्धानि कर्माणि नश्यन्त्येव समन्ततः। न चागामीनि जायन्ते तत्त्वज्ञानप्रभावतः। प्रारब्धकर्मविक्षेपाद्वासना तु न नश्यति। सा सर्वतो बलवती संयमेनोपशाम्यति। संयमो धारणा ध्यानं समाधिरिति यत् त्रिकम्। यमादिपञ्चकं पूर्वं तदर्थमुपयुज्यते। ईश्वरप्रणिधानात्तु समाधिः सिध्यति द्रुतम्। ततोभवेन्मनोनाशो वासनाक्षय एव च। तत्त्वज्ञानं मनोनाशोवासनाक्षय इत्यपि। युगपत्त्रितयाभ्यासाज्जीवन्मुक्तिर्दृढा भवेत्। विद्वत्संन्यासकथनमेतदर्थं श्रुतौ कृतम्। प्रागसिद्धो यएवांशो यत्नः स्यात्तस्य साधने। निरुद्धे चेतसि पुरा सविकल्पसमाधिना। निर्विकल्पसमाधिस्तु भवेदत्र त्रिभूमिकः। व्युत्तिष्ठते स्वतस्त्वाद्ये द्वितीये परबोधितः। अन्त्ये तूत्तिष्ठते नैव सदा भवति तन्मयः। एवम्भूतो ब्राह्मणः स्याद्वरिष्ठो ब्रह्मवादिनाम्। गुणातीतः स्थितप्रज्ञो विष्णुभक्तश्च कथ्यते। अतिवर्णाश्रमी जीवन्मुक्त आत्मरतिस्तथा। एतस्य कृतकृत्यत्वाच्छास्त्रमस्मान्निवर्त्तते। यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः। इत्यादिश्रुतिमानेन कायेन मनसा गिरा। सर्वावस्थासु भगवद्भक्तिरत्रोपयुज्यते। पूर्वभूमौ कृता भक्तिरुत्तरां भूमिमानयेत्। अन्यथा विघ्नबाहुल्यात् फलसिद्धिः सुदुर्लभा। पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः। अनेकजन्मसंसिद्ध इत्यादि च वचो हरेः। यदि प्रागभवसंस्कारैरचिन्त्यत्वात्तु कश्चन। प्रागेव कृतकृत्यः स्यादकस्मात् फलपातवत्। न तं प्रतिकृतार्थत्वाच्छास्त्रमारब्धमिष्यते। प्राक्सिद्धसाधनाभ्यासाद्दुर्ज्ञेया भगवत्कृपा। एवं प्राग्भूमिसिद्धावप्युत्तरोत्तरभूमये। विधेया भगवद्भक्तिस्तां विना सा न सिद्ध्यति। जीवन्मुक्तदशायां तु न भक्तेः फलकल्पना। अद्वेष्ट्रत्वादिवत्तेषां स्वभावो भजनं हरेः। आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः। तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते। इत्यादिवचनात् प्रेमभक्तोऽयं मुख्य उच्यते। एतत् सर्वं भगवता गीताशास्त्रे प्रकाशितम्। अतो व्याख्यातुमेतन्मम उत्सहते मनः। निष्कामकर्मानुष्ठानं मूलं मोक्षस्य कीर्त्तितम्। शोकादिरासुरः पाप्मा तस्य च प्रतिबन्धकः। यतः स्वधर्मविभ्रंशः प्रतिषिद्धस्य सेवनात्। फलाभिसन्धिपूर्वा वा साहङ्कारा क्रिया भवेत्। आविष्टः पुरुषो नित्यमेवमासुरपाप्मभिः। पुमर्थलाभायोग्यः सन् लभते दुःखसन्ततिम्। दुःखं स्वभावतो द्वेष्यं सर्वेषां प्राणिनामिह। अतस्तत्साधनं त्याज्यं शोकमोहादिकं सदा। अनादिभवसन्तानिरूढं दुःखकारणम्। दुस्त्यजं शोकमोहादि केनोपायेन हीयताम्। एवमाकाङ्क्षयाविष्टं पुरुषार्थोन्मुखं नरम्। बुबोधयिषुराहेदं भगवान् शास्त्रमुत्तमम्"। व्यासगीताध्यात्मरामायणान्तर्गता रामगीता भारताश्वमेधिकोक्ते ब्राह्मणगीतानुगीते देवीभागवतोक्ता देवीगीता वैष्णवभागवतोक्ता गोपीगीता नन्दोक्ता शिवगीता इत्यादयो बह्व्यो गीताः सन्ति। ताश्च सर्वा एव अध्यात्मविद्याप्रकाशिकाः। अपराधशब्दे २२२ पृ॰ उक्तवाक्ये प्रत्यहं गीताध्यायपाठफलमुक्तम्।

**गीतायन** न॰ ६त॰। गानसाधने वेणुमृदङ्गादौ "गीतायनैः दुन्दुभिशङ्खवेणुभिः" भाग॰ ४।४।६।

**गीतासार** पु॰ गीताया भगवद्गीताया सारः संक्षेपेणार्थकथनमत्र। गरुडपुराणान्तर्गते २३५ अध्यायादित्रये भगवद्गीतार्थोक्तिसंक्षेपरूपग्रन्थे।

**गीति** स्त्री गै—भावे क्तिन्। १गाने। "तवास्मि गीतिरागेण हारिणा प्रसभं हृतः"। "अहोरागपरिवाहिणी गीतिः" शकु॰। "श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्" कुमा॰। "आर्याप्रथमदलोक्तं कथमपि लक्षणं भवेदुभयोः। दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः" वृ॰र॰ उक्ते २मात्रावृत्तभेदे।

**गीतिका** स्त्री गीतिरिव कायति कै—क। १गीतितुल्यगाथायां "गायत्रीं पठते यस्तु वर्णसङ्करजस्तथा। गाथा च गीतिका चापि तस्य सम्पद्यते नृप!" भा॰ व॰ ८५ अ॰। "गाथा स्वरनियमहीना, गद्यवन्मुखाद्भिः सरति। गाथैव साम्नगीतिवत् स्वरवर्णविकृता गीतिका" नीलक॰। "सगणो जयुग्मभरैः सलगैः कथिता बुधैरिह गीतिका" वृ॰र॰ टी॰ उक्ते २विंशत्यक्षरपादके समचतुष्पादवर्णवृत्त-

भेदे च। स्वार्थे क। गीतिका १गीतौ गाने।

**गीथा** स्त्री गै-थक्। वाचि। "एष उ वा उद्गीथः प्राणो वा उत् प्राणेन हीदं सर्वमुत्तब्धं, वागेव गीथा उच्च गीथा चेति स उद्गीथः" शत०ब्रा० १४।४।१।२५। "वागेव गीथा उद्गीथाभिव्यक्तिरूपा गायतेः शब्दार्थत्वात्" भा०

**गीरथ** पु० गीः रथ इवास्य। १गीष्पतौ त्रिका०। २जीवात्मनि शब्दार्थचि०।

**गीर्ण** त्रि० गॄ-निगरणे शब्दे कर्म्मणि क्त। १वर्णिते २स्तुते ३गिलिते च अमरः। [ अमरः।

**गीर्णि** स्त्री गॄ-भावे क्तिन्। १स्तुतौ २वर्णने ३गिलने च

**गीर्देवी** स्त्री गिरोऽधिष्ठात्री देवी। १सरस्वत्याम् शब्दरत्ना०।

**गीर्पति** पु० ६त० अहरा० वा रः। १बृहस्पतौ। २पण्डिते च पक्षे षविसर्गौ गीष्पतिः गीःपतिशब्दावप्यत्र अमरः।

**गीर्वा(र्वा)ण** पु० गीरेव बाणः कार्य्यसाधनत्वादस्य गम्य। १देवे सुरे। अन्तःस्थमध्यत्वे गिरं स्तुतिरूपां वनुते वन—याचने अण् "पूर्वपदात् संज्ञायामिति" पा० णत्वम् उप०स०। देवानां स्तुतिप्रियत्वात् तथात्वमिति भेदः।

**गीर्वा(र्वा)णकुसुम** न० गीर्वा(र्वा)णप्रियं कुसुमम्। देवकुसुमे लवङ्गे राजनि० गीर्वाणपुष्पादयोऽप्यत्र।

**गीर्लता** स्त्री गीरिव विस्तीर्णा लता। महाज्योतिष्मतीलतायाम् राजनि०।

**गीर्वत्** त्रि० गीरस्त्यस्य मतुप् "छन्दसीरः" पा० मस्य वः। वाक्ययुक्ते छन्दसीत्युक्तेः लोके न वः। गीर्मत् इति।

**गु** ध्वनौ अव्यक्तशब्दे भ्वा० आत्म० अक० अनिट्। गवते अगोष्ट। जुगुवे। "उपो वेनस्य जोगुवानः" ऋ० १।६१। १४। गुङ् अव्यक्ते शब्दे अस्मात् यङ्लुकि पदव्यत्ययेन शानच्" भा०। "विश्वासुह्व्मासु जोगुवे" ऋ० ५।६ ४।२। "जोगुवे शब्दयामीति" भा० पूर्ववत् पदव्यत्ययः।

**गु** विष्ठोत्सर्गे तुदा० कुटा० पर० अक० अनिट्। गुवति अगुत ओदित् क्त तस्य नः "दुग्वोर्दीर्घश्च" पा० दीर्घः गूनः।

**गुग्गु(ल)लु** पु० गुज-क्विप् गुक् व्याधिः ततो गुडति रक्षति गुड-क कु वा डलयोरेकत्वम्। स्वनामख्याते वृक्षभेदे, अमरः। भरतस्तु दृममदन्तमप्याह स्म। २रक्तशोभाञ्जनवृक्षे शब्दच०।

"श्रीवासकरसगुग्गुलुभल्लातककुन्दुरुकसर्जरसैः" "लाक्षाकुन्दुरुगुग्गुलुगृहधूमकपित्थविल्वमध्यानि" वृ० स० ५७अ०। तस्य पर्यायभेदगुणादि भावप्र०उक्तं यथा

"गुग्गुलु र्देवधूपश्च जटायुः कौशिकःपुरः। कुम्भालु खलकं क्लीवे महिषाक्षः पलङ्कषः। महिषाक्ष१ महानीलः२ कुमुदः ३पद्म ४इत्यपि। हिरण्यः ५पञ्चमो ज्ञेयो गुग्गुलोः पञ्च जातयः। भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इति स्मृतः। महानीलस्तु विज्ञेयः स्वनामसमलक्षणः। कुमुदः कुमुदाभः स्यात् पद्मो माणिक्यसन्निभः। हिरण्याख्यस्तु हेमाभः पञ्चानां लिङ्गमीरितम्। महिषाक्षो महानीलो गजेन्द्राणां हितावुभौ। हयानां कुमुदः पद्मः स्वस्थारोग्यकरौ परौ। विशेषेण मनुष्याणां कनकः परिकीर्त्तितः। कदाचिन्महिषाक्षश्च मतः कैश्चिन्नृणामपि। गुग्गुलुर्विशदस्तिक्तो वीर्य्योष्णः पित्तलः सरः। कषायः कटुकः पाके कटू रूक्षो लघुः परः। भग्नसन्धानकृद् वृष्यः सूक्ष्मः स्वर्यो रसायनः। दीपनः पिच्छिलो बल्यः कफवातव्रणापचीः। मेदोमेहाश्मवातांश्च क्लेद कुष्ठाममारुतान्। पिड़िकाग्रन्थिशोफार्शःगण्डमालाकृमीन् जयेत्। माधुर्य्याच्छमयेद्वातं कषायत्वाच्च पित्तहा। तिक्तत्वात् कफजित्तेन गुग्गुलुः सर्व्वदोषहा। स नवो वृंहणो वृष्यः पुराणस्त्वतिलेखनः। स्निग्धः काञ्चनसङ्काशः पक्वजम्बूफलोपमः। नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्य्यस्तु पिच्छिलः। शुष्को दुर्गन्धकश्चैव त्यक्तप्रकृतिवर्णकः। पुराणः स तु विज्ञेयः गुग्गुलुर्वीर्य्यवर्ज्जितः। अम्लं तीक्ष्णमजीर्णञ्च व्यवायं श्रममातपम्। मद्यं रोषन्त्यजेत् सम्यगगुणार्थी पुरसेवकः" पुरः गुग्गुलुः।

अस्य स्थानविशेषे जन्मादिकथनं यथा "जायन्ते पुरपादपा मरुभुवि ग्रीष्मेऽर्कसन्तापिताः शीतर्त्तौ शिशिरेऽपि गुग्गुलुरसं मुञ्चन्ति ते पञ्चधा। हेमाभं महिषाक्षितुल्यमपरं सत् पद्मरागोपमं भृङ्गाभं कुमुदद्युतिञ्च विधिना ग्राह्या परीक्षा ततः। वह्नौ ज्वलन्ति तपने विलयं प्रयान्ति क्लिद्यन्ति कोष्णसलिले पयसः समानाः। ग्राह्या शुभाः परिहरेच्चिरकालजातान् अङ्गारवर्णसमपूयविमस्त्रवर्णानिति" प्रयोगामृतम्। अस्य वह्निपु० उत्पत्तिस्थानमुक्तम् यथा

"गोरचना या मङ्गल्या संजाता सर्वकामिका। गुग्गुलुस्तु ततो जातो गोमूत्राच्छुभदर्शनः"।

**गुग्गुलुक** त्रि० गुग्गुलुः पण्यमस्य किशरा० ष्ठन्। गुग्गुलुविक्रेतरि स्त्रियां षित्त्वात् ङीष्।

**गुग्गुलुगन्धि** पुंस्त्री गुग्गुलुर्गन्धो लेशोऽस्य अल्पार्थेग-

गन्धस्येत् समा०। गवि "गावो गुग्गुलुगन्धयः" प्रा०त०यमः गुग्गुलोर्गोमूत्रभवत्वात् गोस्तथात्वम् गुग्गुलुशब्दे तत्कथा। गुग्गुलोर्गन्ध इव गन्धोऽस्य वा इत् समा०। २गुग्गुलुगन्धयुक्ते त्रि०।

**गुङ्गू** स्त्री कुहू+पृषो०। कुहूतिथौ। "या गुङ्गूर्या सिनीवाली या राका या सरस्वती" ऋ० २।३२।८। "अत्र गुङ्गूशब्देन राकासिनीवाल्योः साहचर्य्यात् कुहूरुच्यते" भा०।

**गुच्छ(त्स)** पु०गु–संप०क्विप् गुतं छ्यति स्यति वा छो–सो–वा क। कलिकाकुसुमादिसमूहवति १स्तवके, काण्डशून्ये मूलत एव शाखाप्रधानसंघातात्मके धान्यमल्लिकादेः २स्तम्बे, द्वात्रिंशद्यष्टिके ३हारभेदे, ४मयूरपुच्छे च मेदि०। ५मल्लिकादौ च "गुच्छगुल्मं तु विविधं तथैव तृणजातयः। बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च। तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना। अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" मनुना तेषां कर्म्महेतुतोक्ता। "मूलतएव यत्र लतासमूहो भवति न प्रकाण्डानि ते गुच्छा मल्लिकादयः, गुल्मा एकमूलाः संघातजाताः शरेक्षुप्रभृतयः" कुल्लू०। ६गुच्छकरञ्जे मेदि०। स्तवके पु० स्त्री राजनि० स्त्रियां ङीप्। "वधूरयुक्तच्छदगुच्छसुगन्धयः" माघः। स्वार्थे क। गुच्छक उक्तार्थेषु। संज्ञायां कन्। रीठाकरञ्जे ग्रन्थिपर्णे न० भाव०।

**गुच्छ(त्स)कणिश** पु०गुच्छः कणिशोऽस्य। धान्यभेदे राजनि०

**गुच्छ(त्स)करञ्ज** पु० गुच्छाकरः करञ्जः। करञ्जभेदे राजनि०। "कटुर्गुच्छकरञ्जस्तु तिक्तोष्णो विषवातहृत्। कण्डूविचर्चिकाकुष्ठसर्पत्वग्दोषनाशनः" राजनि०।

**गुच्छ(त्स)दन्तिका** स्त्री गुच्छीभूता दन्ताः पुष्परूपाः सन्त्यस्याः ठन्। कदल्याम् राजनि०। तस्या हि मोचकरूपे पुष्पे गुच्छाकृतिदन्तरूपत्वात्तथात्वम्।

**गुच्छ(त्स)पत्र** पु० गुच्छाकृतीनि पत्राण्यस्य। तालवृक्षे राजनि०। तस्य हि प्रत्येकपत्रस्य गुच्छात्मकत्वात्तथात्वम्।

**गुच्छ(त्स)पुष्प** पु०गु(त्सा)च्छाकृतीनि पुष्पाण्यस्य। सप्तच्छदवृक्षे २रीठाकरञ्जे ३धातक्यां स्त्री राजनि० ङीप्।

**गुच्छ(त्स)फल** पु० गु(त्सा)च्छाकृतीनि फलान्यस्य। १रीठाकरञ्जे, २राजादन्यां, ३कतके च। ४अग्निदमन्यां, ५काकमाच्यां, ६द्राक्षायां ७कदल्याञ्च स्त्री राजनि० टाप्।

**गुच्छ(त्स)बध्ना** स्त्री गुच्छेन बध्यते बन्ध–बा० रक्। गुण्डालावृक्षे राजनि०। [गुण्डालिनीतृणे राजनि०।

**गुच्छ(त्स)मूलिका** गुच्छाकृति मूलमस्या कप् अतइत्त्वम्।

**गुच्छा(त्सा)र्द्ध** पु० गु(त्स)च्छ इव ऋध्नोति ऋध–अच। चतुर्विंशतियष्टिके हारभेदे। ६त०। गुच्छ(त्स)स्यार्द्धे पु०न०। अमरः। [आ+ला–क वा। भूतृणे राजनि०।

**गुच्छा(त्सा)ल** पु०गुच्छाय अलति अल–अच् गुच्छमालाति

**गुच्छा(त्सा)ह्वकन्द** पु० गुच्छमाह्वयति आ+ह्वे–क गुच्छाह्वः कन्दोऽस्य। गुलुञ्चकन्दे राजनि०।

**गुज** ध्वनौ तुदा० कुटा० पर० अक० सेट्। गुजति अगुजिष्ट जुगोज। प्रनिगुजति। [जुगोज।

**गुज** कूजने भ्वा० पर० अक० सेट्। जोजति अगोजीत्।

**गुज** कूजने भ्वा०पर०सक०सेट् इदित्। गुञ्जति अगुञ्जीत् जुगुञ्ज गुञ्जितम् गुञ्जः गुञ्जन्। (गुनगुन) इति ध्वनितमिह कूजनम्। "न जुगुञ्ज यः कलमिति"। "न गुञ्जितं तन्न जहार यन्मनः"। "रेणून् पुपूरिरे गुञ्जा" जुगुञ्जुः करघट्टिताः" भट्टिः। "लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्" "गुञ्जन् मत्तमधुव्रतः" सा० द०।

**गुञ्ज(ञ्जे)री** स्त्री १रागिणीभेदे। तत्स्वरूपं सङ्गीतदा० उक्तं यथा "श्यामा सुकेशी मलयद्रुमाणां मृदूल्लसत्पल्लवतल्पयाता। श्रुतेः स्वराणां दधती विभागं तन्त्रीमुखात् दक्षिणगुञ्ज(ञ्ज)रीयम्" कालभेदे तस्या गानं निषिद्धं तत्रैव "नाटी गौडी वराटी च गुञ्ज(ञ्जे)री देशिरेव च। पूर्वाह्णे गानमेतेषां निषिद्धमिति तद्विदः" २रागभेदे च "गुञ्ज(ञ्जे)रीरागैकतालीतालेन गीयते" गीतगो०।

**गुञ्ज** पु० गुजि–अच्। १पुष्पस्तवके शब्दर०। भावे घञ्। गुञ्जने (गुनगुन) इति २ध्वनौ च। भावे ल्युट्। गुञ्जनमप्यत्र ध्वनौ। [शब्दच०।

**गुञ्जकृत्** पु० गुञ्जं ध्वनिभेदं करोति कृ–क्विप्। १भ्रमरे

**गुञ्जा** स्त्री गुजि–अच्। १लताभेदे (कुँच) तत्फलेऽपि हरीतक्यादित्वादणो लुक्। "तुल्या यवाभ्यां कथितात्र गुञ्जेति" लीलावती। २गोधूमद्वयमाने, राजनि० ३चतुर्धान्यमाने, वैद्यकम् "श्वेता रक्तोच्चटा प्रोक्ता कृष्णला चापि सा स्मृता। रक्ता सा काकचिञ्ची स्यात् काकणन्ती च रत्तिका। काकादनी काकपीलुः सा स्मृता काकवल्लरी" "श्वेतरक्तप्रभेदेन ज्ञेयं गुञ्जाद्वयं बुधैः। गुञ्जाद्वयं तु केश्यं स्यात् वातपित्त-

ज्वरापहम् । मुखशोषश्रमश्वासतृष्णामदविनाशनम् । नेत्रामयहरं हृष्यं बल्यं कण्डूव्रणं हरेत् । क्रमीन्द्रलुप्तकुष्ठानि रक्ता च धवलाऽपि च" भावप्र० तद्गुणा उक्ताः । सितगुञ्जा चाभिचारकर्म्मभेदे विहिता । "जपित्वा सितगुञ्जानां कुड़वं कुलिकोदवे" शा० ति० नवदुर्गामन्त्राभिचारे । तत्र स्मार्त्तवैदिकपौराणिककृत्येषु त्रियवमिता गुञ्जा वैद्यके तु चतुर्यवमितेति भेदः। कर्षशब्दे १७७४पृ०दृश्यम् । "सहसि प्लवगैरुपासितं न हि गुञ्जाफलमेति सोष्मताम्" माघः । "अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः गुञ्जाफलसमाकाराः स्वभावादेव योषितः" पञ्चत० । "तेनेयं मधुगन्धलुब्धमनसा गुञ्जालता सेव्यते" भ्रमरा० । कर्त्तरि अच् । ४पटहे । भावे अ । ५कलध्वनौ मेदि० ६चर्ञ्चायां त्रिका० । आधारे अ । ७मदिराग्टहे शब्दरत्ना० । तत्र सुरासवगन्धेन भ्रमरगुञ्जाबाहुल्यात् तथात्वम् ।

**गुञ्जिका** स्त्री गुञ्जा+संज्ञायां कन् । त्रियवपरिमाणे शब्दच० ।

**गुटिका** स्त्री वव्येव स्वार्थे क पृषो० । वटिकायाम् वर्त्तुलाकारे पदार्थे । "समुद्रे गुटिकापातः" ज्यो० । "गुटिकापातादिना व्यञ्जनं वा विभागः" दायभागः । "निर्द्धौतहारगुटिकाविशदं हिमाम्भः" रघुः । कत्रभावे ङीप् गुटीत्यपि तत्रार्थे ।

**गुटिकाञ्जन** न० "गैरिकं सैन्धवं कृष्णां नागरञ्च यथोत्तरम् । द्विगुणं पिष्टमद्भिस्तु गुटिकाञ्जनमिष्यते" सुश्रुतोक्ते १अञ्जनभेदे । गुटिका वटिका तथाभूतमञ्जनमित्यर्थः । "अञ्जनं क्रियते येन तद्द्रव्यमञ्जनं मतम् । रसो वटी तथा चूर्णमिति त्रिविधमञ्जनम्" भावप्र० । सुश्रुतेऽपि "वटिकारसचूर्णानि त्रिविधान्यञ्जनानि च" ।

**गुठ** वेष्टने चुरा० उभ० इदित् सक० सेट् । गुण्ठयति-ते अजुगुण्ठत्-त । गुण्ठितः गुण्ठनम् । "प्रतिपद्य पदा सूनुर्धरणीरेणुगुण्ठितः" भा०आ० ७४ अ० । "अग्निहोत्रं त्रयोवेदास्त्रिदण्डं भस्मगुण्ठनम् । बुद्धिपौरुषहीनानां जीविकेति वृहस्पतिः" सर्वद० । अव+समन्तात्वेष्टने । "रजनीतिमिरावगुण्ठिते पुरमार्गे" कुमा० ।

**गुड़** वेष्टने रक्षणे चूर्णने च चुरा० उभ० इदित् सक० सेट् । गुण्डयति-ते अजुगुण्डत्-त । गुण्डः गुण्डिता । गुण्डनं गुण्डा । [अगुडीत् । जुगोड ।

**गुड़** रक्षणे व्याघाते च तुदा० कुटा० पर०सक०सेट् । गुडति ।

**गुड़** पु० गु-ड कित् । १इक्षुविकारे इक्षुशब्दे ९०९ पृ० विवृतिः । "ऐक्षवं गुडवर्जितम्" ति०त० । गुडेन निर्वृत्तादि गुड+अश्मा०र । गुडर गुडनिर्वृत्ते त्रि० । गुडाय साधु गुडा० ठञ् । गौडिक गुडसाधने इक्षौ । भक्ष्येण मिश्रणे स० गुडधाना गुडौदन गुडमिश्रितधानादौ । "सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः" वैद्यकम् । २गोले वर्त्तुलाकारपदार्थे "प्रादुरासन् महीपाल ! कार्ष्णायसमया गुड़ाः" भा० द्रो० २००अ० ३हस्तिसन्नाहे मेदि० । ४ग्रासे हेमच० । ५कार्पास्यां स्त्री राजनि० । ६स्नुहीवृक्षे स्त्री गुडाप्रायाः केशा यस्य । गुडाकेशः अर्ज्जुनः । उज्ज्वलद० ।

**गुडक** त्रि० गुडेन पक्वः या० कन् । १गुडपक्वे औषधादौ गुड़+स्वार्थे क । २गोलाकारे पदार्थे । "सभुशुण्ड्यश्मगुडकाः" भा०व० १५अ० । अश्मगुडकाः वर्त्तुलीकृताः पाषाणाः" नील० । "नीतौ च तद्युक्तात्" पा० परम्परया अनुकम्पायाम् कन् । अनुकम्प्यपुत्रादौ दीयमाने ३गुडद्रव्ये च । हन्त ते धानकाः गुडका एहकि" सि०कौ० ।

**गुडकरी** स्त्री रागिणीभेदे हलायु० ।

**गुडकुष्माण्डक** न० चक्रदत्तोक्ते औषधभेदे यथा ।

"कुष्माण्डस्य पलशतं सुखिन्नं निष्कुलीकृतम् । प्रस्थं घृतस्य तैलस्य तस्मिंस्तप्ते प्रदापयेत् । त्वक्पत्रधन्याकव्योषजीरकैलाद्वयानलम् । ग्रन्थिकं चव्यमानङ्गपिप्पलीविश्वभेषजम् । शृङ्गाटकं कशेरुञ्च प्रलम्बं तालमस्तकम् । चूर्णीकृतं पलांशञ्च गुडस्य च तुलां पचेत् । शीतीभूते पलान्यष्टौ मधुनः संप्रदापयेत् । कफपित्तानिलहरं मन्दाग्नीनाञ्च शस्यते । कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम् । प्रमदासु प्रसक्तान ये च स्युः क्षीणरेतसः । क्षयेण च गृहीतानां परमेतद् भिषग्जितम् । कासं श्वासं ज्वरं हिक्कां हन्ति छर्दिमरोचम् । गुड़कुष्माण्डकं ख्यातमश्विभ्यां समुदाहृतम् । खण्डकुष्माण्डवत् पात्रं स्विन्नकुष्माण्डकद्रवः ।"

**गुडची** स्त्री गुडेन चीयते ची-ड गौ०ङीष् । गुडूच्याम् भरतः

**गुडतृण** न० गुडसाधनं तत्प्रधानं वा तृणम् शा०त० । १इक्षौ राजनि० पृषो० । गुडतृणमप्यत्र शब्दरत्ना० ।

**गुडत्वच्** स्त्री गुड इव मधुरा त्वग् यस्याः । (दारचिनि) ख्याते पदार्थे शब्दरत्ना० । "त्वक् स्वाद्वी तु गुडत्वक् स्यात् तथा दारुसिता मता । उक्ता दारुसिता स्वाद्वी तिक्ता

चानिलपित्तहृत् । सुरभिः शुक्रदा वस्या मुखशोषतृ-ष्णापहा” भावप्र० ।

**गुडत्वचा** स्त्री गुड इव मधुरा त्वचा यस्याः । १गुडत्वचि(दार-चिनि) ख्याते पदार्थे २खजभोग्ये (जयती)न० शब्दच० ।

**गुडदारु** न० गुडप्रधानं दारु शाक०त० । इक्षौ त्रिका० ।

**गुडधेनु** स्त्री दानार्थं गुडनिर्मिते धेनुभेदे । तद्विधिश्च हेमा०दा० यथा“प्रथमा गुडधेनुः स्यात् घृतधेनुस्तथाऽपरा । तिलधेनु-स्तृतीया तु चतुर्थी जलसंज्ञिता । क्षीरधेनुश्च विख्याता मधुधेनुस्तथाऽपरा । सप्तमी शर्कराधेनुर्दधिधेनुस्तथाऽष्टमी । रसधेनुर्नवमी स्याद्दशमी स्यात् स्वरूपतः” इत्युपक्रमे “ए-तासां तु विधानञ्च समाचक्ष्व जगत्पते ! । किंरूपं केन मन्त्रेण दातव्या तदिहोच्यताम् । मत्स्य उवाच । गुड-धेनुविधानस्य यद्रूपमिह यत्फलम् । तदिदानीं प्रव-क्ष्यामि सर्वपापविनाशनम् । कृष्णाजिनं चतुर्हस्तं प्रागग्रीवं विन्यसेद्भुवि । गोमयेनोपलिप्तायां दर्भाना-स्तीर्य सर्वतः । लघ्वेणकाजिनन्तद्वत्सस्य परिकल्पयेत् । प्राङ्मुखीं स्थापयेद्धेनुमुदक्पादां सवत्सकाम्” । एणका-जिनं कृष्णाजिनं प्राङ्मुखीं प्राक्शिरसमित्यर्थः । “तदु-त्तरेण वत्सोऽपि तथैव परिकल्पनीयः । “उत्तमा गुड-धेनुः स्यात्सदा भारचतुष्टयम् । वत्सम्भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता । अर्द्धभारेण वत्सः ! स्यात् निजवित्तानुसारतः” । निजवित्तानुसारत इति इय-मुत्तममध्यमादिकल्पना निजवित्तानुसारतः कर्त्तव्ये-त्यर्थः । “धेनुवत्सौ घृतास्यौ तौ सितसूक्ष्माम्बरा-वृतौ । शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ । सित-सूत्रसिरालौ तौ सितकम्बलकम्बलौ । ताम्रकद्रूक-पृष्ठौ तौ सितचामररोमकौ” । कद्रूकं ककुत्प्रदेशः । “विद्रुमभ्रूयुगोपेतौ नवनीतस्तनान्वितौ । क्षौम-पुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ । सुवर्णशृङ्गा-भरणौ राजतक्षुरसंयुतौ । नानाफलमयैर्दन्तैर्घ्राण-गन्धकरण्डकौ” । अत्र च भारतः परिमाणतश्च फल-विशेष इति यथाशक्ति सुवर्णशृङ्गादित्वमवधेयम् । “इत्येवं रचयित्वा तु धूपदीपैरथार्चयेत्” । “विधान-मेतद्धेनूनां सर्वासामिह पठ्यते” । सर्वासामन्यच-धेनुव्यतिरक्तानामित्यवमन्तव्यम् । तथा “एतदेव विधानं स्यात्त एवोपस्कराः स्मृताः । मन्त्रावाहनसंयुक्ताः सदा पर्वणिपर्वणि । यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदाः । अश्वमेधयज्ञफलदाः सर्वपापहराः शुभाः । अयने विषुवे पुण्ये व्यतीपातेऽथ वा पुनः । गुडधेन्वादयो देया उप-रागादिपर्वसु” मत्स्यपु० । अत्र घृतादिधेनुद्रव्यपरिमाणमपि गुडधेनूक्तमेव । “विधानमेतद्धेनूनां सर्वासामपि पठ्यते इत्यतिदेशात् “कुम्भाः,स्युर्द्रवधेनूनामितरासान्तु राशयः” इति तु भारचतुष्टयादिपरिमितस्य द्रवद्रव्यस्य कुम्भाधार-तयावस्थापनम्” हेमाद्रिदानखण्डम् ।

अन्यत् क्षीरधेनुशब्दे २२७२ पृ० दर्शितरीत्या कार्य्यम्” “धेनुवत्सौ तदा तौ तु सितसूक्ष्माम्बरावृतौ । शुक्ति-कर्णाविक्षुपादौ शुद्धमुक्ताफलेक्षणौ । सितसूत्रसिरालौ तु सितकम्बलकम्बलौ । ताम्रककुदपृष्ठौ तु सितचामर-रोमकौ । विद्रुमभ्रूयुगयुतौ नवनीतस्तनान्वितौ । क्षौम-पुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ । इत्येवं रचयित्वा तु धूपदीपैः समर्चयेत्” पद्मपु० ।

**गुडपाक** पु० ६त० । गुडस्य पाके वैद्यकोक्ते औषधपाकभेदे तत्पाकप्रकारः चक्रदत्तेनोक्तो यथा “तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः । क्षिप्तश्च निश्चल-स्तिष्ठेत् पतितस्तु न शीर्य्यते । यदा दर्वीविलेपः स्याद्यावद्वा तन्तुलीभवेत् । एष पाको गुडादीनां सर्वेषां परिकीर्त्तितः” । “सुखमर्द्दः सुखस्पर्शो गुडः पाकमुपा-गतः । पीडितो भजते तन्तु गन्धवर्णरसान्वितम्” ।

**गुडपिप्पलीघृत** न० चक्रदत्तोक्ते औषधभेदे ।

“सपिप्पलीगुडं सर्पिः पचेत् क्षीरचतुर्गुणे । विनि-हन्त्यम्लपित्तञ्च शूलञ्च परिणामजम्” ।

**गुड़पुष्प** पु० गुड इव मधुरं पुष्पमस्य । मधुकवृक्षे (मौल) (मङ्गया) अमरः ।

**गुड़फल** पु० गुड इव मधुरं फलमस्य । पीलुवृक्षे अमरः ।

**गुड़भल्लातक** पु० गुडेन पक्वः भल्लातकः । पाकविशेषेण गुड़-पक्वे भल्लातकादिरूपे औषधभेदे चक्र० तत्पाको यथा “भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत् । पादशेषे रसे तस्मिन् पचेद्गुडतुलां भिषक् । भल्लातकसहस्रार्द्धं छित्त्वा तत्रैव दापयेत् । सिद्धेऽस्मिंस्त्रिफलाव्योषय-मानीमुस्तसैन्धवम् । कर्षांशसम्मितं दद्यात् त्वगेलाप-त्रकेशरम् । खादेदग्निबलापेक्षी प्रातरुत्थाय मानवः ! । कुष्ठार्शःकामलामेहग्रहणीगुल्मपाण्डुताः । हन्यात् प्लीहोदरं कासक्रिमिरोगभगन्दरान् । गुडभल्लातको-ह्येष श्रेष्ठस्त्वार्शोविकारिणाम्” । प्रकारान्तरं यथा “दश-मूल्यमृता भार्गी श्वदंष्ट्रा चित्रकं शटी । भल्लातकसहस्रञ्च पलाशं क्वाथयेद् बुधः । पादशेषे जलद्रोणे रसे तस्मिन्

विपाचयेत्। दत्त्वा गुडतुलामेकां लेहीभूतं समुद्धरेत्। माक्षिकं पिप्पलीतैलं मानकञ्च दापयेत्। कुडवं कुडवञ्चात्र त्वगेलामरिचन्तथा। कर्षःकासमुदावर्त्तं पाण्डुत्वं शोथमेव च। नाशयेद्वह्निसादञ्च गुडभल्लातकः स्मृतः"।

**गुडभा** स्त्री गुड इव भाति भा—क। यावनालशर्करायाम्। राजनि०। [(कन्दुकान्दे। शब्दच०।

**गुडमूल** पु० गुड इव मधुरं मूलमस्य। क्षुद्रमारिषशाके

**गुडल** न० गुडं कारणतया लाति ला—क। १गौड्यां मदिरायां शब्दच०। २गुडोत्पन्ने त्रि०।

**गुडवीज** पु० गुड इव मधुरं वीजमस्य।१मसूरे राजनि०।

**गुडशर्करा** स्त्री गुडजाता शर्करा। गुडजातशर्करायाम् त्रिका०।

**गुडशिग्रु** पु० गुड इव मधुरः शिग्रुः। रक्तशोभाञ्जने शब्दच०

**गुडा** स्त्री गु—ड किच्च। १स्नुहीवृक्षे २वटिकायां गुटिकायां मेदि०। ३वचायां राजनि०।

**गुडाका** स्त्री गुडि वेष्टने वा० आकन् उपधालोपश्च। १आलस्ये २निद्रायाञ्च।

**गुडाकेश** पु० गुडा स्नुहीव केशा यस्य उज्ज्व० गुडाकाया निद्राया आलस्यस्य वा ईशः। २गुडावत्केशयुक्ते अर्ज्जुने। "गुडाकेशः अर्ज्जुनः" उज्ज्वल०। २जितालस्ये "एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः" गीता। "गुडाकेशो जितालस्यः" मधुसूदनः ३शिवे जटा०।

**गुडाचल** पु० दानार्थं कल्पिते गुडनिर्मिते मेरुरूपे पर्वते 'प्रथमो धान्यशैलः स्यात् द्वितीयो लवणाचलः। गुडाचलस्तृतीयस्तु" पद्मपु० दश मेरूक्तौ। गुडपर्वताद्योऽप्यत्र। तद्विधिः हेमा० दा० ब्रह्मपु०।

"पुलस्त्य उवाच। "अथात संप्रवक्ष्यामि गुडपर्वतमुत्तमम्। यत्प्रदानान्नरः स्वर्गमाप्नोति सुरपूजितम्। उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः। त्रिभिर्भारैः कनिष्ठः स्यात्तदर्द्धेनाल्पवित्तवान्"। भारः, परिभाषायां व्याख्यातः। "तद्वदामन्त्रणं पूजाहेमवृक्षसुरार्चनम्। विष्कम्भपर्वतांस्तद्वत् सरांसि वनदेवताः। होमं जागरणं तद्वल्लोकपालाधिवासनम्। धान्यपर्वतवत् कुर्यादिमं मन्त्रमुदीरयेत्। यथा देवेषु विश्वात्मा प्रवरोऽयं जनार्दनः। सामवेदस्तु वेदानां महादेवस्तु योगिनाम्। प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा। तथा रसानां प्रवरः सदैवेक्षुरसो मतः। मम तस्मात् परां लक्ष्मीं ददस्व गुडपर्वत!। यस्मात् सौभाग्यदायिन्या भ्राता त्वं गुडपर्वत!। निवासश्चापि पार्वत्यास्तस्मान्मां पाहि सर्वदा। अनेन विधिना यस्तु दद्यात् गुडमयं गिरिम्। पूज्यमानः स गन्धर्वैर्गौरीलोके महीयते। पुनः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत्। आयुरारोग्यसम्पन्नः शत्रुभिश्चापराजितः" इति पद्मपुराणोक्तो गुडपर्वतदानविधिः। "श्रीभगवानुवाच। अतः परं प्रवक्ष्यामि गुडपर्वतमुत्तमम्। सर्वपापहरं पुण्यं सौभाग्यजननं परम्। पुष्टिदं शान्तिदञ्चैव सुखदं दिव्यभोगदम्। भारैस्तं दशभिः कुर्य्याद्यथाशक्त्यापि वा भवेत्। पूर्ववत् मण्डपं कृत्वा सर्वोपकरणानि च"। पूर्ववदिति, ब्रह्माण्डपुराणोक्तधान्यपर्वतवदित्यर्थः। लोकपालसमोपेतं तथा काञ्चनशृङ्गिणम्। मुक्ताफलविचित्राङ्गं वस्त्रालङ्कृतविग्रहम्। प्रवालकलतोपेतं इक्षुखण्डोपवेणुकम्। नितम्बं राजतन्तस्य मेखलाकारसंस्कृतम्। कुर्य्यात्ताम्रमयं स्कन्धं नानाधातुविभूषितम्। कृत्वा तमीदृशं शैलं सर्वधान्यसमावृतम्। सर्वौषधिसमोपेतं सुगन्धं समहाद्रुमम्। कल्पयित्वा विधानेन सवितानं विचक्षणैः। कुण्डमेकं ततः कृत्वा चतुःकोणं स्वलङ्कृतम्। नियोज्यास्तत्र विद्वांसो ब्राह्मणाः शंसितव्रताः। पञ्चमो गुरुरुक्तस्तान् सर्वान् पूजयेत्ततः। पूजितास्ते यथान्यायं होमं कुर्य्युरतन्द्रिताः। लोकपालान् ग्रहांश्चैव ब्रह्मादींश्च विधानतः। स्वलिङ्गोक्तैश्च मन्त्रैश्च होमयेयुर्द्विजोत्तमाः। महाव्याहृतिभिश्चैव अयुतं तत्र होमयेत्। आचार्य्यः सह विप्रैस्तैर्मौनेन सुसमाहितः। ब्रह्मघोषरतस्तस्मिन् कारयित्वा महोत्सवम्। एवं विधिं तदा कृत्वा पूर्वेद्युः श्रद्धयान्वितः। दद्यात्तं माघमासस्य तृतीयायां विशेषतः। चैत्रस्य वा विधानेन तृतीयायां प्रदापयेत्। अन्येष्वपि च कालेषु ग्रहणादिषु कारयेत्। त्वं रसानां वरो नित्यं देवानाञ्च सदा प्रियः। सुखं प्रयच्छ मे नित्यं नमस्ते पर्वतोत्तम!। यावद्भूः सागरा नद्यो याञ्चन्द्रार्कतारकाः। तावन्मे त्वं सुखं यच्छ सौभाग्यमतुलं तथा। एवं संपूजयित्वा तं ब्राह्मणानां निवेदयेत्। आचार्य्यं पूजयेत्पाषाद्दीनान्धकृपणानपि। विसृज्य ब्राह्मणांस्तांस्तु कृत्वा चैव प्रदक्षिणम्। तस्मिन् दिने च भोक्तव्यं मधुरं क्षारवर्ज्जितम्। अनभ्यालेपनञ्चैव कृतकृत्यो भवेन्नरः। तस्मादेवमिदं दानं फलमुत्तममिच्छता। गतिश्च शाश्वतीं लोके सौभाग्यं रूपमेव च। अनेन विधिना चैव दातव्यो

गुडपर्वतः। विंशद्भारस्तु कर्तव्यः शेषं पूर्ववदाचरेत्। दानमेतत् प्रशस्तं स्यात् स्त्रीणां राजन् विशेषतः। सौभाग्यराज्यकामस्य सर्वस्यापि विधीयते। पूर्वोक्तञ्च फलं प्राप्य शतकल्पो हि जायते" इति ब्रह्माण्डपुराणोक्तो गुडपर्वतदानविधिः"।

**गुडादि** पु० पा० गण० उक्ते साध्वर्थे ठञ्निमित्ते शब्दगणे स च गण "गुड कुल्माष सक्तु अपूप मांसौदन इक्षु वेणु संग्राम सङ्घात संक्राम संवाह प्रवास निवास उपवास" "गुडादिभ्यष्ठञ्" पा० गुडाय साधु गौडिक इक्षुः।

**गुडापूप** पु० गुडेन मिश्रितः अपूपः। गुडमिश्रिते पिष्टके "तदस्मिन्नन्नं प्रायेण संज्ञायाम्" पा० कन् टाप्। गुडापूपिका पौर्णमास्यां सि०कौ०।

**गुडाशय** पु० गुड इव मधुररसआशेतेऽस्मिन् आ+शी आधारे अच् ६त०। आखोटवृक्षे (आखरोट) राजनि०।

**गुडगुडायन** न० "रुणद्धि मारुतं श्लेष्मा कुक्षिपार्श्वव्यवस्थितः। संनिरुद्धः करोत्याशु ध्वानं गुडगुडायनम्" सुश्रुतोक्ते श्लेष्मरुद्धवायुजनिते शब्दभेदे।

**गुडु(डू)ची** स्त्री गुड-रक्षणे बा० उ(ऊ)चट् ङीप्। स्वनामख्यातायां लतायाम्। तस्या उत्पत्तिगुणादिकं भावप्र० उक्तं यथा

"हते तस्मिन् सुरारातौ रावणे बलगर्विते। देवराजः सहस्राक्षः परितुष्टोऽसि राघवे। तत्र ये वानराः केचिद्राक्षसैर्निहता रणे। तानिन्द्रो जीवयामास संसिच्यामृतवृष्टिभिः। ततो येषु प्रदेशेषु कपिगात्रात् परिच्युताः। पीयूषबिन्दवः पेतुस्तेभ्यो जाता गुडूचिका। गुडूची मधुपर्णी स्यादमृताऽमृतवल्लरी। छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च। जीवन्ती तन्त्रिका सोमा सोमवल्ली च कुण्डली। चक्रलक्षणिका धीरा विशल्या च रसायनी। चन्द्रहासी वयस्था च मण्डली देवनिर्मिता। गुडूची कटुका तिक्ता स्वादुपाका रसायनी। संग्राहिणी कषायोष्णा लघ्वी बल्याऽग्निदीपनी। दोषत्रयामतृड्दाहमेहकासांश्च पाण्डुताम्। कामलाकुष्ठवातास्रज्वरक्रिमिवमीन् हरेत्। प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत्।" तत्कल्कगुणाः

"अमृतायाः शतं चूर्णं वाससा परिशोधितम्। पृथक् षोडश भागाः स्युर्गुडमाक्षिकसर्पिषाम्। यथाग्नि भक्षयेदेतन्नरो हितमिताशनः। नास्य कश्चिद्भवेद्व्याधिर्न जरा पलितं न च। न ज्वरा विषमा नैव मेहोऽनिलरक्तकम्। न च नेत्रगता रोगाः परमेतद्रसायनम्। मेधाकरं त्रिदोषघ्नं प्रयोगादस्य बुद्धिमान्। जीवेद्वर्षशतं साग्रं यथैवादितिजास्तथेति"। तत् पत्रगुणाः

"गुडूचीपत्रमाग्नेयं सर्वज्वरहरं लघु। कषायं कटुतिक्तञ्च स्वादुपाकं रसायनम्। बल्यमुष्णञ्च सङ्ग्राहि हन्याद् दोषत्रयं तृषाम्। दाहप्रमेहवातास्रकामलाकुष्ठपाण्डुताः"।

"गुडूची कटुका लघ्वी स्वादुपाका रसायनी। संग्राहिणी कषायोष्णा बल्या तिक्ताग्निदीपनी। कामलाकुष्ठवातास्रज्वरपित्तक्रिमीन् जयेत्। घृतेन वातं सगुडा विबन्धं पित्तं सिताढ्या मधुना कफञ्च। वातास्रमेरण्डकतैलमिश्रा शुण्ठ्यामवातं शमयेद्गुडूची" वैद्यकम्।

**गुडूच्यादि** पु० "गुडूची निम्बधन्याकं पद्मकं चन्दनानि च। एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः। हृल्लासारोचकच्छर्द्दिपिपासादाहनाशनः" इति चक्रद०त्तोक्ते गुडूच्यादिद्रव्यगणे। "आरग्वधादिगुडूच्यादिरित्यादिना सुश्रुते ऽसौ तिक्तवर्गे उक्तः तिक्तशब्दे विवृतिः।

**गुडूच्यादिकषाय** पु० "गुडूच्यतिविषाधान्यशुण्ठीबिल्वाब्दबालकैः। पाठाभूनिम्बकुटजचन्दनोशीरपद्मकैः। कषायः शीतलः पेयो ज्वरातीसारशान्तये। हृल्लासारोचकच्छर्द्दिपिपासादाहनाशनः" चक्रदत्तोक्ते पाचनभेदे।

**गुडूच्यादिघृत** न० "गुडूच्याः क्वाथकल्काभ्यां त्रिफलाया वृषस्य च। मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरान्तिहाः" चक्रदत्तोक्ते घृतभेदे।

**गुडूच्यादितैल** न० "गुडूचीक्वाथदुग्धाभ्यां तैलं लाक्षारसेन च। सिद्धमभ्यञ्जकाभ्यङ्गे रसैर्वा वातरक्तनुत्" चक्रदत्तोक्ते तैलभेदे।

**गुडेर** पु० गुडि-एरक् नलोपश्च। १गुडके (गुली) वर्त्तुलाकारे पदार्थे उज्ज्वल०२ग्रासे हेमच०। स्वार्थे क। तत्रार्थे।

**गुडोद्भवा** स्त्री उद्भवत्यस्मात् उद्+भू-अपादाने अप् गुड उद्भवोऽस्याः। १शर्करायाम् राजनि०। २गुडजातमात्रे त्रि०

**गुण** आमन्त्रणे आम्रेडने आवृत्तौ इत्येके अद०चु०उभ०सक०सेट्। गुणयति-ते अजुगुणत्-त। "गुणयान्त्यमङ्कं गुणकेन हन्यात्"। "विषमे गच्छे व्येके गुणकः स्यात्प्रः समेऽर्द्धिते वर्गः" "गुण्यः पृथग्वा गुणितः समेतः" लीला०। "वर्गेण वर्गं गुणयेत् भजेच्च" बीजग०

गुण पु० गुण-भावे कर्त्तरि वा अच्। १धनुषो मौर्व्याम् धनुराकर्षणदामनि, २रज्जुमात्रे, "गुणवन्तोऽपि सीदन्ति न गणग्राहको यदि। सगुणोऽपि पूर्णकुम्भो यथा कूपे निमज्जति" उद्भटः। ३शौर्य्यादिधर्मे, राज्ञां ४सन्धिविग्रहादिषु षट्सु साधनेषु. "षड्गुणाः शक्तयस्तिस्रः" अमरः। "षाड्गुण्यमुपयुञ्जते" इति माघः। ५ज्ञानविद्यादिषु, "गुणा गुणानुबन्धित्वादिति" रघुः। सांख्यमते पुरुषोपभोगोपकरणभूतत्वात् तद्बन्धनोपयोगित्वाच्च सत्त्वरजस्तमआदिषु ६पदार्थेषु। "प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु" गीता। ७अप्रधाने, "शौर्य्ये कृतासना गुणे" भर्तृहरिः। तद्गुणसंविज्ञानबहुव्रीहिः। न्यायमते रूपादिषु चतुर्विंशतिपदार्थेषु "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" भाष्योक्ते द्रव्यमात्राश्रिते द्रव्यभिन्ने उत्पाद्यानुत्पाद्यसमानाधिकरणे सिद्धरूपे ८वस्तुधर्मे, "अदेङ्गुणः" पा० परिभाषिते १०अकारे ११एकारे १२ओकारे च "दुष्पराजोरिवाश्रितं दोषसम्पत्तये गुणः" उद्भटः। अलङ्कारोक्तेषु १३माधुर्य्यादिषु, "तद्दोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" काव्यप्र०। "निर्दोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्" सा० द०। १४आवृत्तौ, "विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः" मनुः। १५उत्कर्षे। १६विशेषणे "समासतद्धितकृतां यत्किञ्चिदुपदेशकम्। प्रधानगुणभावे च तत्र दृष्टो विपर्ययः" साकाङ्क्षावयवं भेदे, परानाकाङ्क्षशब्दकम्। क्रियाप्रधानमेकार्थं सगुणं वाक्यमुच्यते" हरिः। सगुणं सविशेषणं क्रियान्वयिकारकादिविशेषणसहितमित्यर्थः। १७अप्रधानधर्मभेदे तेजोबलवीर्य्यैश्वर्य्यवैराग्यादिषट्कादौ स हि पराश्रितत्वादप्रधानभूतः "उपैत्यन्यज्जहात्यन्यत् दृष्टो द्रव्यान्तरेष्वपि। वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः" इत्युक्तलक्षणे १८धर्मभेदे च देशकालज्ञतादिषु चतुर्दशसु १९धर्मभेदेषु ते च "देशकालज्ञता१ दार्ढ्यं२ सर्वक्लेशसहिष्णुता३। सर्वविज्ञानता४ दाक्ष्यं५ मोजः६ संवृतमन्त्रता७। अविसंवादिता८ शौर्य्यं९ भक्तिज्ञत्वं१० कृतज्ञता११। शरणागतवात्सल्य१२ममर्षित्व१३मचापलम्१४। एते चतुर्दश गुणाः प्रोक्ताः शास्त्रेषु सूरिभिः" इत्युक्ताः। "दया सर्वभूतेषु१, क्षान्तिः२ अनसूया३ शौचम्४ अनायासः५ मङ्गलम्६ अकार्पण्यम्७ अस्पृहा८ इति"।

२०गौतमोक्तधर्मभेदे। २१सूदे२२इन्द्रिये२३त्यागे२४ज्याम् मेदि०। दोषान्यधर्मे २५विद्यादौ मुमुक्षासाधने २६विवेकवैराग्यशुश्रूषादौ च। "प्रक्षीणदोषाय गुणान्विताय" वेदान्तसा०। प्रधाननिर्वाहके २७अङ्गे। "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" जैमि०। तिथिनक्षत्रवारादिसाधनं पुण्यपापयोः प्रधानगुणभावेन स्वातन्त्र्येण न ते क्षमाः" "शब्दात्तु तदुपस्थानमुपादेये गुणो भवेत्" मकरा०। २८सादृश्यादिवस्तुधर्मे च। "लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता" काव्यप्र०। २९वस्तुधर्ममात्रे "गुणः प्रधानसंस्कारः प्रधानं प्रतिपद्यते" काव्यप्र०। "सतो गुणान्तराधानं प्रतियत्नः" सि०कौ०। "गन्धः स्पर्शो रसो रूपं शब्दश्चेति गुणाः स्मृताः। तस्य गन्धस्य वक्ष्यामि विस्तराभिहितान् गुणान्" भा० शा० १८४अ०। गन्धरूपगुणस्य "गुणादिर्निर्गुणक्रियः" इत्युक्तेः प्रसिद्धगुणशून्यत्वात् धर्ममात्रपरता "निर्गुणं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादिश्रुतौ गुणशब्दस्य धर्ममात्रपरत्वम्। "ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः। कथं चरन्ति श्रुतयः" भाग०१०।८७अ०।

३०दूर्वायाम् स्त्री राजनि० तस्या बहुतन्तुमत्त्वात्तथात्वम्। वर्णोत्पत्त्यनन्तरभाविषु शिक्षोक्तेषु ३१विवारादिषु बाह्यप्रयत्नेषु पु० "वर्णाभिव्यक्त्यनन्तरभाविनस्तु आन्तरतम्यपरीक्षोपयुक्ताः कण्ठविवरविकाशादेराबहिर्भागावच्छिन्नस्य कार्य्यस्य जनका यत्ना गुणशब्देनोच्यन्ते" शब्देन्दुशेखरः। बाह्यप्रयत्नाश्च एकादशधा विवारसंवारश्वासनादघोषाघोषाल्पप्राणमहाप्राणाः उदात्तादयश्च त्रयः स्वराः। "स्थानेऽन्तरतमः" पा०। "तुल्यास्यप्रयत्नं सवर्णमिति" पा०। "सादृश्यञ्च स्थानतो वर्णतः गुणतः प्रमाणतश्च" तत्र गुणतः (बाह्यप्रयत्नात्) यथा। नादवतो घोषवतो महाप्राणस्य संवृतकण्ठस्य हकारस्य सदृशस्तादृश एव घकारः"। सुश्रुतोक्ते ३२अष्टविधवीर्य्ये च। "केचिदाहुरष्टविधं वीर्य्यम् उष्णं शीतं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णञ्च" सुश्रुते विभज्य "वीर्य्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः" इति तेषां गुणत्वमुक्तम्। गुण-कर्मणि अच्। ३३गुणिते। "आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा। षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः" चाण०। वैद्यकोक्तद्रव्यगुणाश्च भावप्र० गुणग्रन्थे दृश्यास्तच्छब्दे

च ते प्रायेण उक्ता वक्ष्यन्ते च २४भीमसेने हेम० २५ स्त्रित्व-सङ्ख्यायाञ्च सत्त्वे निविशते इत्यस्यायमर्थः। सत्त्वं द्रव्यम्। सत्त्व एव निविशते इति सावधारणम्। तेन सत्ता व्यावर्त्त्यते। सत्ता हि न केवलं द्रव्ये वर्त्तते किन्तु द्रव्यगुणकर्मसु। ननु द्रव्य एव द्रव्यत्वं वर्त्तते इति तत्रातिव्याप्तिरतआह अपैतीति असम्बद्धो भवतीत्यर्थः अर्थात् द्रव्ये यथा पीततायां जातायां फलादेर्नीलतापैति नैवं द्रव्यत्वं द्रव्यादपैति। एवमपि गोत्वं गोषु वर्त्तते अश्वादावसम्बद्धम् तत्राति-व्याप्तिरतआह पृथग्जातिषु दृश्यत इति। गोत्वं हि द्रव्यत्वावान्तरनानाजातिषु न दृश्यते गुणस्तु दृश्यते यथा अश्वे नीलता दृष्टा तृणादिष्वपि सा दृश्यते। तेन पदार्द्धेन सकलजातेर्व्यवच्छेदः। एवं तर्हि कर्म द्रव्ये वर्त्तते ततोऽपैति, पृथग्जातिषु दृश्यते चेति तत्राति-व्याप्तिरतआह आधेयश्चाक्रियाजश्चेति। उत्पाद्यानुत्-पाद्यतासमानाधिकरणजातिमान् इत्यर्थः। तत्रोत्पाद्यो यथा घटादेः पाकजो रूपादिः। अक्रियाजः अनुत्पाद्यो यथा आकाशादेर्महत्त्वादिः। क्रिया तु सर्वाप्युत्पाद्यैव न क्वापि नित्येति तस्या नित्यत्वसामानाधिकरण्या-भावात् गुणत्वाभावः। एवमपि द्रव्यस्य गुणत्वापत्तिः अवयविद्रव्यं हि अवयवद्रव्येषु निविशते, असमवा-यिकारणसंयोगनिवृत्तौ च स्वयं विनाशात्ततोऽपैति भि-न्नजातीयेषु च हस्तपादादिषु दृश्यते। तच्च द्विविधं भ-वति नित्यानित्यभेदेन निरवयवस्यात्मपरमाण्वादेर्नित्य-त्वादवयविद्रव्यस्य तु घटादेरनित्यत्वादतआह असत्त्व-प्रकृतिरिति। अद्रव्यस्वभावः द्रव्यभिन्न इति यावत्।

वैशेषिकमतप्रसिद्धगुणभेदलक्षणादिकं कणादसूत्रवृत्त्यो-रुक्तं यथा

"रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः" १।७सू०।

"गुणत्वेन रूपेण गुणानां सर्वद्रव्याश्रितत्वं द्रव्याभिव्य-ङ्ग्यत्वं द्रव्याभिव्यञ्जकत्वञ्चेति द्रव्यानन्तरं गुणानामुद्देशं विभागञ्चाह रूपेत्यादि चकारेण गुरुत्वद्रवत्वस्नेहसंस्कार-धर्माधर्मशब्दान् समुच्चिनोति ते हि प्रसिद्धगुणभावा एवेति कण्ठतो नोक्ताः। गुणत्वञ्चामीषां यथास्थानं लक्षणतः स्वरूपतश्च वक्ष्यति तत्र रूपरसगन्धस्पर्शानां समानकालीन रूपरसगन्धस्पर्शसामानाधिकरण्यं नास्तीति सूचनार्थं समासः। सङ्ख्यापरिमाणयोस्तु समानकालीनसङ्ख्या-परिमाणसामानाधिकरण्यसूचनाय समासो बहुवचन-निर्देशश्च यद्यप्येकत्वसमाधिकरणं नैकत्वान्तरं न वा महत्त्वदीर्घत्वसमानाधिकरणं महत्त्वदीर्घत्वान्तरं तथापि द्वित्वादीनामन्योऽन्यं सामानाधिकरण्यं महत्त्वदीर्घत्वादौ नास्ति विजातीयपरिमाणयोः सामानाधिकरण्यमस्त्येव। पृथक्त्वञ्च यद्यपि द्विपृथक्त्वादिसमानाधिकरणं तेन सङ्ख्यावद्बहुत्वेनैव निर्देष्टुमर्हति तथाप्यवधिव्यङ्ग्यत्व-लक्षणं सङ्ख्यातो वैधर्म्यं दर्शयितुमेकवचननिर्देशः। संयोगविभागयोर्द्वयोरप्येककर्मजन्यत्वसूचनाय द्विवचनं, परत्वापरत्वयोरन्योन्याश्रयनिरूप्यतया दिक्कालिङ्गत्व-विशेषसूचनाय च द्विवचनं, बुद्धीनां विद्यादिभेदेन साङ्ख्याभिमतैकमात्रबुद्धिनिराकरणसूचनाय बहुवचनं, सुखदुःखयोर्द्वयोरपि भोगत्वावच्छेदेकैकार्य्यजनकत्वम् अविशेषेण चाहृष्टोत्पादकत्वं सुखस्यापि दुःखत्वेन भाव-नञ्च ख्यापयितुं द्विवचनम्। इच्छाद्वेषयोर्द्वयोरपि प्रवृत्ति प्रति कारणत्वसूचनाय द्विवचनं प्रयत्नानां विहितनिषि-द्धगोचराणां दशविधानां पुण्यहेतुत्वं, दशविधानाञ्च पाप हेतुत्वमभिसन्धाय बहुवचनमित्युन्नेदम्। यद्वा रूप-रसगन्धस्पर्शानां भौतिकेन्द्रियव्यवस्थाहेतुत्वसाधनार्थं पाकजप्रक्रियाव्यवस्थापनार्थं वा ते समस्योक्ताः सङ्ख्यायां द्वित्वबहुत्वादौ विप्रतिपत्तिरिति तन्निराकरणसूचनार्थं बहुत्वेनाभिधानं, पृथक्त्वे तु सङ्ख्याबहुत्वेनैवास्यापि बहुत्वमिति सूचनायावधिसामव्यञ्जनीयत्वं सङ्ख्यातो वैधर्म्यमिति सूचनाय च पृथगभिधानम्। परिमाणे तु दीर्घत्वह्रस्वत्वादिविप्रतिपत्तिनिरासाय बहुवचनम्। संयोग विभागयोरन्योन्यविरोधख्यापनाय द्विवचनं, परत्वापरत्व-योर्दैशिककालिकभेदेन भिन्नजातीयत्वसम्भवेन चतुष्ट्वापत्तौ गुणविभागो न्यूनः स्यात् इति तत्रापि द्विवचनमित्या-द्युन्नेयम्" उप० वृत्तिः।

"द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्" १।८सू०

"द्रव्यमाश्रयितुं शीलमस्येति द्रव्याश्रयी एतच्च द्रव्येऽपि गतमत आह अगुणवानिति तथापि कर्मण्यतिव्याप्तिरि-त्यत आह संयोगविभागेष्वकारणं तथापि संयोगविभाग-धर्माधर्मेश्वरज्ञानादीनामसङ्ग्रहःस्यादत उक्तमनपेक्ष इति अत्रानपेक्ष इत्यनन्तरं गुण इति पूरणीयं संयोगविभा-गेष्वनपेक्षः सन् कारणं यो न भवति स गुण इत्यर्थः।

संयोगविभागादीनां संयोगविभागौ प्रति सापेक्षत्वात् नित्यवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं गुणत्वं संयोगविभागौ मिलितौ प्रति समवायिकारणत्वासमवायिकारणत्वरहिते सामान्यवति यत् कारणत्वं तद्गुणत्वाभिव्यञ्जकं, संयोगविभागयोः प्रत्येकमेव संयोगविभागकारणकत्वं न मिलितयोः, धर्माधर्मेश्वरज्ञानादीनां द्वयोर्निमित्तकारणत्वमात्रं न समवायिकारणत्वं नाप्यसमवायिकारणत्वमिति तेषां संग्रहः, यद्वा संयोगविभागसमवायित्वासमवायिकारणत्वशून्यत्वं सामान्यसमानाधिकरणं गुणत्वव्यञ्जकं सामान्यवत्त्वे सति कर्मान्यत्वे च सत्यगुणवत्त्वमेव वा गुणलक्षणम् ॥” उप० वृत्तिः

“नित्यवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं गुणत्वं समवायिकारणावृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा असमवायिकारणवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा कार्य्यासमानाधिकरणकर्मावृत्तिजातिमत्त्वं वा” तत्रैवोक्तम्। कर्मत्वजातेः सत्तासाक्षाद्व्याप्यत्वेऽपि नित्यवृत्तित्वाभावात् द्रव्यत्वजातेस्तथात्वेऽपि नित्यवृत्तिनित्यवृत्तित्वाभावान्नातिव्याप्तिः गुणत्वजातेस्तु नित्येष्वात्मादिषु वर्त्तमाने नित्ये महत्त्वादौ सत्त्वात् तामादाय लक्षणसमन्वयः। व्याप्तिश्च भेदगर्भा बोध्या। तेन सत्ताव्याप्यत्वस्य स्वस्मिन्नपि सत्त्वेन तामादाय न द्रव्यकर्मणोरतिव्याप्तिः।

“तेषां मूर्त्तामूर्त्तगुणत्वादिभेदः भाषायामुक्तो यथा।

“रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम्। द्रवो गुरुत्वं स्नेहश्च वेगो मूर्त्तगुणा अमी। धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च। एतेऽमूर्त्तगुणाः सर्वे विद्वद्भिः परिकीर्त्तिताः। संख्यादिश्च विभागान्त उभयेषां गुणो मतः। संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा। द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः। अतः शेषा गुणाः सर्व्वे मता एकैकवृत्तयः। बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः। अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः। संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा। गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्त्तिताः। संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च। एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः। बाह्यैकैकेन्द्रियग्राह्या, गुरुत्वादृष्टभावनाः। अतीन्द्रिया, विभूनान्तु ये स्युर्वैशेषिका गुणाः। अकारणगुणोत्पन्ना एते तु परिकीर्त्तिताः। अपाकजास्तु स्पर्शान्ता द्रवत्वञ्च तथाविधम्। स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम्। स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः। संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः। स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके। भवेदसमवायित्व, मथ वैशेषिके गुणे। आत्मनः स्यान्निमित्तत्व, मुष्णस्पर्शगुरुत्वयोः। वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा। द्विधैव कारणत्वं, स्यादथ प्रादेशिको भवेत्। वैशेषिको विभुगुणः संयोगादिद्वयं तथा”।

एते च गुणाः द्रव्यभिन्ना गन्धशब्दे २५२४पृ० दर्शिते उपस्कारवृत्तिवाक्ये स्पष्टमुक्ताः। तद्भिन्ना अपि ते द्रव्याधीना इति वैशेषिकादय आहुः। वैदान्तिकादयस्तु द्रव्याभिन्ना एव गुणा इति मन्यन्ते यथाह शा०भा० “वैशेषिकास्तन्त्रार्थभूतान् षट् पदार्थान् द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यानत्यन्तभिन्नान् भिन्नलक्षणानभ्युपगच्छन्ति यथा मनुष्योऽश्वः शश इति। तथात्वमभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्युपगच्छन्ति। तन्नोपपद्यते कथं यथाहि लोके शशकुशपलाशप्रभृतीनामत्यन्तभिन्नानां सतां नैवेतरेतराधीनत्वं भवति एवं द्रव्यादीनामप्यत्यन्तभिन्नानां नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति। अथ च भवति द्रव्याधीनत्वं गुणादीनाम्। ततो द्रव्यभावे भावात् द्रव्याभावे चाभावात् द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग् भवति। यथा देवदत्त एकएव सन्नवस्थान्तरयोगादनेकशब्दप्रत्ययभाग् भवति तद्वत् तथासति साङ्ख्यसिद्धान्तप्रसङ्गः स्वसिद्धान्तविरोधश्चापद्येयाताम्। नन्वग्नेरन्यस्यापि सतोधूमस्याग्न्यधीनत्वं दृश्यते, सत्यं दृश्यते भेदप्रतीतिस्तु तत्राग्निधूमयोरन्यत्वं निश्चीयते इह तु शुक्लःकम्बलोरोहिणी धेनुर्नीलमुत्पलमिति द्रव्यस्यैव तस्य तस्य तेन विशेषेण प्रतीयमानत्वान्नैव द्रव्यगुणयोरग्निधूमयोरिव भेदप्रतीतिरस्ति।” इतःपरं भाष्यम् अयुतसिद्धशब्दे ३४५ पृ० दर्शितम्। तत्र च द्रव्याभिन्नत्वं गुणादीनामुक्तम्।

सां०प्रव० भा० समवायनिराकरणेनैव गुणादीनां द्रव्याभिन्नत्वमुक्तं यथा

“कादाचित्कविभागे सत्येव सम्बन्धः सिध्यति अन्यथा वक्ष्यमाणरीत्या स्वरूपेणैवोपपत्तौ सम्बन्धकल्पनानवकाशात्। स च कादाचित्को विभागो न सम्बन्धनित्यत्वे सम्भवति। अतः सम्बन्धग्राहकप्रमाणे-

नैव बाधाच्च नित्यः सम्बन्धः। नन्वेवं नित्ययोर्गुणगुणिनोर्नित्यः समवायो नोपपद्येत तत्राह” सा० भा० “न समवायोऽस्ति प्रमाणाभावात्” सा० सू०।” ननु वैशिष्ट्यप्रत्यक्षं विशिष्टबुद्ध्यन्यथानुपपत्तिश्च प्रमाणं तत्राह” भा०। “उभयत्राप्यन्यथासिद्धेर्न प्रत्यक्षमनुमानं वा” सू०। “उभयत्रापि वैशिष्ट्यप्रत्यक्षे तदनुमाने च स्वरूपेणैवान्यथासिद्धेर्न तदुभयं समवाये प्रमाणमित्यर्थः। अयं भावः। यथा समवायवैशिष्ट्यबुद्धिः तत्स्वरूपेणैवेष्यतेऽनवस्थाभयादिति तत्र प्रत्यक्षानुमाने अन्यथासिद्धे। एवं गुणगुणिप्रभृतीनां विशिष्टबुद्धिरपि गुणादिस्वरूपेणैवेष्यताम्। अतस्तत्रापि प्रत्यक्षानुमाने अन्यथासिद्धे इति। नन्वेवं संयोगोऽपि न सिद्ध्यति भूतलादौ घटादिप्रत्ययस्यापि स्वरूपेणैवान्यथासिद्धेरिति चेन्न वियोगकालेऽपि भूतलघटयोः स्वरूपतादवस्थ्येन विशिष्टबुद्धिप्रसङ्गात्। समवायस्थले च समवेतस्य कदापि स्वाश्रयवियोगो नास्तीति नायं दोषः। कश्चित्तु तादात्म्यसम्बन्धेनात्र समवायस्यान्यथासिद्धिमाह तन्न शब्दमात्रभेदात्। तादात्म्यं ह्यत्र नानन्यत्वं वक्तव्यम् गुणवियोगेऽपि गुणिसत्त्वात् वैशिष्ट्याप्रत्ययाच्च। किन्तु भेदाभेदबुद्धिनियामकः सम्बन्धविशेष एवागत्या वक्तव्यः। तथाच तस्य समवाय इति वा तादात्म्यमिति वा नाममात्रं भिन्नम् सम्बन्धिद्वयातिरिक्तः सम्बन्धस्तु सिद्ध एवेति। यदि च तादात्म्यं स्वरूपमेवोच्यते तदास्माभिरपि तदेवोक्तमिति शब्दमात्रभेद इति”।

“सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च” इत्युक्तेः शुक्लादिशब्दानां शुक्लादयो गुणा शक्यतावच्छेदका भवन्ति शुक्लादयो हि सिद्धवस्तुधर्मा गवादिकं सजातीयेभ्यो व्यवच्छिन्दन्ति इति तेषां तत्पदप्रवृत्तिनिमित्तत्वम्। साङ्ख्यमते सत्वादयो गुणाद्रव्यात्मकाः सूक्ष्मभूतोपादानत्वात् तेषाञ्च पुरुषभोगसाधनत्वेनाङ्गत्वात् तथात्वं यथाह सा०प्र०भा०।

“सत्वादीनि द्रव्याणि न वैशेषिकादिमतसिद्धा गुणाः संयोगविभागवत्त्वात् लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च। तेष्वत्र शास्त्रे श्रुत्यादौ च गुणशब्दः पुरुषोपकरणत्वात् पुरुषपशुबन्धनत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च प्रयुज्यते”।

राज्ञां नीत्यङ्गानि सन्ध्यादयश्च षट् यथा

“सन्धिविग्रहयानानि स्थानमासनमेव च। द्वैधीभावश्च विज्ञेयाः षड्गुणा नीतिवेदिनामिति”। रसाङ्गगुणाश्च “ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः। उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः इत्युपक्रमे “श्लेषः१ प्रसादः२ समता३माधुर्यं४ सुकुमारता५। अर्थव्यक्ति६रुदारत्व७मोजः८कान्ति९ समाधयः१०। इति वैदर्भीमार्गस्य प्राणा दश गुणाः स्मृताः” अन्यमतप्रसिद्धान् दश गुणानुक्त्वा तेषां त्रिष्वेवान्तर्भावात् गुणत्रैविध्यमाह स्म काव्यप्र० “माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश। केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः। अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश”। काव्यप्र०।

**गुणक** त्रि० गुणयति आवर्त्तयति गुण–ण्वुल्। गुणनकारके। “गुण्यान्त्यमङ्कं गुणकेन हन्यात्”। “विषमे गच्छे व्येके गुणकः स्याद्यः समेऽर्द्धिते वर्गः” लीला०।

**गुणकथन** न० ६त०। १गुणवर्णने “मम त्वेतां वाणीं गुणकथनपुण्येन भवतः” शिवस्तवः। २कामकृते नायकदशाभेदे। “अभिलाषश्चिन्ता स्मृतिगुणकथनोद्वेगसंप्रलापाश्च। उन्मादोऽथ व्याधिर्जड़ता मृतिरिति दशात्र कामकृता” सा०द०। रसमञ्जर्यान्तु गुणकथनमित्यत्र गुणकीर्त्तनमिति पठित्वा “विरहकालीनकान्ताविषयकप्रशंसाकथनं गुणकीर्त्तनमिति लक्षयित्वा “संस्पर्शः स्तनसंसर्गो वीक्षणम् रत्नवीक्षणम्। तस्याः कोकिलकालापसमयः समयः सखे!” इत्युदाहृतं तेन गुणकीर्त्तनमप्यत्र।

**गुणकर्मन्** न० कर्म०। १अप्रधाने कर्मणि कर्मणोऽप्रधानत्वञ्च द्विकर्मकधात्वर्थघटकाप्रधानक्रियान्वितत्वम्। “कर्त्तृकर्मणोः कृति” पा० “गुणकर्मणि वेष्यते” वार्त्ति०। “नेताश्वस्य स्रुघ्नं स्रुघ्नस्य वा” अत्र गमनानुकूलव्यापारोनयत्यर्थस्तद्विशेषणीभूतगतौ स्रुघ्नस्यान्वितत्वेन गुणकर्मत्वम्। “गुणानां सत्वादिद्रव्यरूपाणाम् कर्म। सत्वादिद्रव्यरूपजन्ये२कर्मभेदे च तानि च कर्माणि सा० का०उक्तानि यथा।

“सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः। गुरु वरणकमेव तमः प्रदीपवच्चार्थतोवृत्तिः।” सत्वमेव लघु प्रकाशकमिष्टं सांख्याचार्य्यैः, तत्र कार्य्योद्गमने हेतुर्धर्म्मोलाघवं गौरवप्रतिद्वन्द्वि यतोऽग्नेरूर्द्ध्वज्वलनं भवति तदेव लाघवं कस्यचित्तिर्य्यग्गमने हेतुर्यथा वायोः। एवं करणानां वृत्तिपटुत्वहेतु-

लौवं गुरुत्वे हि मन्दानि स्युरिति सत्वस्य प्रकाशकत्ववनुक्तम्। सत्वतमसो स्वयमक्रियतया स्वस्वकार्य्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते अवसादात् प्रच्याव्य स्वकार्य्ये ते उत्साह्य प्रयत्नं कार्य्येते तदिदमुक्तमुपष्टम्भकं रज इति। कस्मादित्यत उक्तं चलमिति। तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम्। रजस्तु चलतया परितस्त्रैगुण्यं चालयद्गुरुणावृण्वता च तमसा यत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्तते इति ततस्ततो व्यावर्त्त्य तमोनियामकमुक्तं गुरु वरणकमेव तमइति। एवकारः प्रत्येकं भिन्नक्रमः सम्बध्यते सत्वमेव रजएव तमएव। ननु परस्परविरोधशीला गुणाः सुन्दोपसुन्दवत्परस्परं ध्वंसयन्त इत्येव युक्तं प्रागेव तेषामेकक्रियाकर्त्तृतायाः, इत्यत आह "प्रदीपवच्चार्थतो वृत्तिः, दृष्टमेतत् यथा वर्त्तितैले अनलविरोधिनी अथच मिलिते सहानलेन रूपप्रकाशलक्षणं कार्य्यं कुरुतः यथा च वातपित्तश्लेष्माणः परस्परविरोधिनः शरीरधारणलक्षणकार्य्यकारिणः एवं सत्वरजस्तमांसि मिथोविरुद्धान्यपि अनुवर्त्स्यन्ति च स्वस्वकार्य्यं करिष्यन्ति च अर्थतः पुरुषार्थत इति यावत्। वक्ष्यति च "पुरुषार्थ एव हेतुर्न केनचित्कार्य्यते करणम्" इति। अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति। तेषाञ्च परस्परमभिभाव्याभिभावकभावान्नानात्वम्। तद्यथा एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति तत्कस्य हेतोः? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्। सैव स्त्री सपत्नीः दुःखाकरोति तत्कस्य हेतोः? ताः प्रति तस्या दुःखरूपसमुद्भवात्। एवं पुरुषान्तरं तामविन्दत् सैव मोहयति तत्कस्य हेतोः? तत् प्रति तस्या मोहरूपसमुद्भवात्। अनया च स्त्रिया सर्वे भावा व्याख्याताः। तत्र यत्सुखहेतुस्तत्सुखात्मकं सत्वं, यत् दुःखहेतुस्तद्दुःखात्मकं रजः, यन्मोहहेतुस्तन्मोहात्मकं तमः, सुखप्रकाशलाघवानां त्वेकस्मिन् युगपदुद्भूतावविरोधः सहदर्शनात्। तस्मात् सुखदुःखमोहैरिव विरोधिभिरेकैकगुणवृत्तिभिः सुखप्रकाशलाघवैर्न निमित्तभेदा उन्नीयन्ते एवं दुःखोपष्टम्भकत्वप्रवर्त्तकत्वैरेवं मोहगुरुत्वावरणैरिति सिद्धं त्रैगुण्यमिति।"

विस्तरेण गुणकर्म्मविभागश्च गीतायां दर्शितो यथा।

"सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः। निबध्नन्ति महाबाहो! देहे देहिनमव्ययम्। तत्र सत्वं निर्म्मलत्वात् प्रकाशकमनामयम्। सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ!। रजोरागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्। तन्निबध्नाति कौन्तेय! कर्मसङ्गेन देहिनम्। तमस्त्वज्ञानजं विद्धि मोहनं सर्व्वदेहिनाम्। प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत!। सत्वं सुखे सञ्जयति रजः कर्म्मणि भारत!। ज्ञानमावृत्य तु तु तमः प्रमादे सञ्जयत्युत। रजस्तमश्चाभिभूय सत्वं भवति भारत!। रजः सत्वं तमश्चैव तमः सत्वं रजस्तथा। सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते। ज्ञानं यदा तदा विद्याद्विवृद्धं सत्वमित्युत। लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा। रजस्येतानि जायन्ते विवृद्धे भरतर्षभ!। अप्रकाशोऽप्रवृत्तिश्च प्रमादोमोहएव च। तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन!। यदा सत्वे प्रवृद्धे तु प्रलयं याति देहभृत्। तदोत्तमविदां लोकानमलान् प्रतिपद्यते। रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते। तथा प्रलीनस्तमसि मूढयोनिषु जायते। कर्मणः सुकृतस्याहुः सात्विकं निर्म्मलं फलम्। रजसस्तु फलं दुःखमज्ञानं तमसः फलम्। सत्वात् संजायते ज्ञानं रजसोलोभएव च। प्रमादमोहौ तमसोभवतोऽज्ञानमेव च। ऊर्द्धं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः। जघन्यगुणवृत्तिस्था अधोगच्छन्ति तामसाः।"

**गुणकार** त्रि० गुणं पाकभेदेनाद्यरसरूपं गुणं करोति कृ-अण्। १सूपकारे २भीमसेने पु० त्रिका०। स हि विराटनगरे छद्मवेशेन सूपकारितां जग्राहेति तस्य तथात्वं तत्कथा भा० वि० २अ०

"पौरोगवो ब्रुवाणोऽहं वल्लवो नाम नामतः। उपस्थास्यामि राजानं विराटमिति मे मतिः। सूपानस्य करिष्यामि कुशलोऽस्मि महानसे। कृतपूर्वाणि यैरस्य व्यञ्जनानि सुशिक्षितैः। तानप्यभिभविष्यामि प्रीतिं संजनयन्नहम्। आहरिष्यामि दारूणां निचयान् महतोऽपि च। तत्प्रेक्ष्य विपुलं कर्म्म राजा प्रीतो भविष्यति। अमानुषाणि कुर्वाणं तानि कर्माणि भारत!। राज्ञस्तस्य परिप्रेष्या मंस्यन्ते मां यथा नृपम्। भक्ष्यान्नरसपानानां भविष्यामि तथेश्वरः"। तस्य पाकशास्त्रकर्त्तृत्वेन रसकारकारित्वात् तथात्वमिति तु ज्यायः।

**गुणकेशी** स्त्री मातलिकन्यायाम् "मतस्त्रिदशराजस्य मातलिर्नाम सारथिः। तस्य चैका कुले कन्या रूपतो लोकविश्रुता। गुणकेशीति विख्याता नाम्ना सा देवरूपिणी" भा० उ० ९६ अ०। तस्याश्चार्यकनागपौत्रेण सुमुखनागेन विवाहकथा च १०३अ०उक्ता तत एवावसेया।

**गुणगृह्य** त्रि० ग्रह–पक्ष्यार्थे क्यप् ६त०। गुणपक्षपातिनि।

**गुणगौरी** स्त्री गुणेन गौरी शुद्धा गौरीव वा। १गुणैः शुद्धायां २गुणः पार्वतीतुल्यायां च। "अन्तर्गिरं गुणगौरि! मा क्रुधा माम्" माघः।

**गुणग्राहिन्** त्रि० गुणं गृह्णाति ग्रह–णिनि। गुणग्रहीतरि स्त्रियां ङीप्। ण्वुल् गुणग्राहकोऽप्यत्र। "गुणवन्तोऽपि सीदन्ति न गुणग्राहको यदि" उद्भटः।

**गुणज्ञ** त्रि० गुणं जानाति ज्ञा–क ६त०। गुणज्ञातरि "गुणिनि गुणज्ञो रमते" हितो०।

**गुणधर्म्म** पु० "यो गुणेन प्रवर्त्तेत गुणधर्मः स उच्यते" इत्युक्ते मूर्द्धाभिषिक्तस्य प्रजापालनादिधर्मे।

**गुणनिका** स्त्री गुण–आम्रेडने भावे युच् स्वार्थे क। १अभ्यासे निश्चयार्थं पाठ्यग्रन्थस्य पुनःपुनरनुशीलने, "हेतुः परिचयस्थैर्य्ये वक्तुर्गुणनिकैव सा" माघः। २शून्ये, ३नृत्ये, मेदि०। ४मालायाञ्च "दरिद्राणां चिन्तामणिगुणनिका" आनन्दलहरी।

**गुणनिधि** पु० गुणानिधीयन्ते अस्मिन् नि+धा–आधारे कि ६त०। १गुणाधारे काम्पिल्लनगरवासियज्ञदत्तदीक्षितद्विजपुत्रे "आसीत् काम्पिल्लनगरे सोमराजिकुलोद्भवः। दीक्षितो यज्ञदत्ताख्यो यज्ञविद्याविशारदः। तस्य पुत्रो गुणनिधिश्चन्द्रबिम्बसमाकृतिः" काशी० १३अ०। स चाल्लन्नद्यूताद्यासङ्गेन दुष्टत्ततया पित्रा त्यक्तः इतस्ततोऽटन् अन्नालाभेन शिवचतुर्दश्यामुपोष्य रात्रौ शैवकृतशिवलिङ्गार्चनादिकं दृष्ट्वा सुप्तेषु तदर्चकेषु शिवनिर्माल्यहरणायोपचक्राम तत्र काले च शिवगृहे पूर्वप्रज्वलितप्रदीपे निर्वाणप्रायतां प्राप्ते अपहर्त्तव्यद्रव्यसम्यग्दर्शनार्थं स्ववस्त्रखण्डेन तस्य दीपस्योद्दीपनं कृत्वा शिवनैवेद्यान्नं हर्त्तुमारेभे अस्मिन्नेव काले शिवोपासकानां निद्रापगमे तैस्ताड्यमानो गुणनिधिर्मृतः तत्र प्रसङ्गेन शिवरात्रिदिनोपवासजेन शिवार्चादर्शनजेन शिवगृहदीपोद्दीपनजेन च पुण्येन कैलासं जगाम भोगावसाने कलिङ्गदेशाधिपत्यं लेभे पूर्वसंस्कारवशात् शिवभक्तः प्रादुर्भावे शिवाराधनेन कुवेरपदवीं प्राप इति तत्रत्यकथासंक्षेपः। विस्तरस्तु तत्र दृश्यः। [ कायामनुशीलने त्रिका०।

**गुणनी** स्त्री गुण्यतेऽनया गुण–ल्युट् ङीप्। गुणनि-

**गुणनीय** पु० गुण–करणे अनीयर्। १अभ्यासे हारा०। कर्म्मणि अनीयर्। २गुणितव्ये त्रि०।

**गुणपदी** स्त्री गुणौ गुणितौ पादावस्याः कुम्भपद्या० अन्त्यलोपो ङीप् च। गुणितपादायां स्त्रियाम्।

**गुणप्रवृद्ध** पु० गुणैः सत्वादिभिः प्रवृद्धः। संसाररूपवृक्षशाखादौ "अधश्चोर्द्ध्वं च प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः" गीता।

**गुणभृत्** त्रि० गुणं बिभर्त्ति, अधिष्ठातृत्वेन वा बिभर्त्ति धारयति भृ–क्विप्। १गुणधारिणि २गुणाधिष्ठातरि परमेश्वरे पु०। "गुणभृद्गुणो महान्" विष्णुस०। "सृष्टिस्थितिप्रलयकर्म्मस्वधिष्ठातृत्वात् गुणभृत्" भा०।

**गुणभ्रंश** पु० ६त०। गुणनाशे हारा०।

**गुणमय** त्रि० गुणात्मकः गुणप्रचुरो वा गुण+तादात्म्ये प्राचुर्य्ये वा मयट्। १गुणात्मके "तया बद्धमनश्चक्षुः पाशैर्गुणमयैस्तदा" भा० आ० १७१अ०। "एतैर्गुणमयैर्भावैः" गीता। स्त्रियां ङीप् "दैवी ह्येषा गुणमयी मम माया दुरत्यया" गीता। २गुणाढ्ये च।

**गुणलयनी** स्त्री गुणा गुणनिर्म्मिताः पटा लीयन्तेऽस्याम् ली–आधारे ल्युट् ङीप्। १पटमण्डपे (तांबु) इत्यायुधः। स्वार्थे क। अत इत्त्वम्। गुणलयनिका। तत्रार्थे हेम०

**गुणवचन** पु० गुणमुक्तवान् वच–कर्त्तरि भूते ल्यु। गुणवद्द्रव्यवाचके शुक्लादौ शब्दे। "वोतो गुणवचनस्य" पा०। अत्र विशेषणतया गुणवचनानामेव तथात्वं तेन गुणिवाचकत्वे सति गुणवाचकत्वं गुणवचनत्वम्। ततो रूढादिपदानामेव तथात्वम् रूपादिपदानान्तु केवलगुणवाचकत्वात् न गुणवचनत्वमिति बोध्यम्। गुणमुक्तवान् इति भूत एव ल्युट् तेन यदा कदाचिद्गुणवाचकत्वे सति इदानीं गुणवचनत्वमिति शेख० "तृतीया तत्कृतार्थेन गुणवचनेन" पा०। "गुणमात्र धर्ममात्रं तेन शङ्कुलाखण्ड इत्यादावाहृतौ खण्डनस्य क्रियारूपत्वेऽपि नासङ्गतिः" "गुणवचनब्राह्मणादिभ्यः प्यञ्" पा०। अत्र विशेषणमात्रपरम् गुणवचनं ग्राह्यम् तेन जडस्य भावः जाड्यम् इति वैशिष्ट्यमित्यादिसिद्धिः "अजादी गुणवचनादेव" पा० अत्रापि विशेषणतयैव गुणवाचिनां द्रव्यपरत्वे दृष्टनीयस्तुनौ न गुणपरत्वे इत्याकरे स्थितम् "प्रकारे गुणवचनस्य" पा० द्वित्वम्। पटुप्रकारः पटुपटुः इत्यादि।

गुणवचनशब्दे परे विस्पष्टादीनामाद्युदात्तता विस्पष्टकटुकम्” सि°कौ° ण्वुल्। गुणवाचकोऽप्यत्र।

**गुणवत्** त्रि°गुणोऽस्त्यस्य मतुप् मस्य वः।१गुणाढ्ये “गुणवन्तोऽपि सीदन्ति न गुणग्राहको यदि” उद्भटः।“सर्वत्र गुणवद्दानम्”स्मृतिः स्त्रियां ङीप्। यदुवंश्यसुनाभस्य २दौहित्रे पु° ३तत्कन्यायां स्त्री। “वज्रनाभस्य तनयः सुनाभो नाम विश्रुतः। दुहितृद्वयञ्च नृपते! तस्य रूपगुणान्वितम्। एका चन्द्रवती नाम्ना गुणवत्यथ चापरा” हरिवं°१५१अ°।“गुणवत्यपि पुत्रञ्च गुणवन्तमजीजनत्” हरिवं°१५५ अ°। ४अप्सरोभेदे स्त्री। “अलम्बुषा गुणवती स्थूलकेशी कलावती” काशी° ६अ°।

**गुणवाद** पु°गुणस्य अङ्गस्य वादः। अर्थवादभेदे तथाहि अर्थवादो विध्यसमभिव्याहृतवाक्यरूपः सोऽपि त्रिविधः“गुणवादो विरोधे स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानावर्थवादस्त्रिधा मतः” इति भट्टका°। अयमर्थः विरोधे विशेष्यविशेषणयोः सामानाधिकरण्येनान्वयविरोधे गुणवादः अङ्गकथनरूपत्वात् यथा यजमानः प्रस्तर इति अत्र हि प्रस्तरः कुशमुष्टिः तस्य यजमानेऽभेदान्वयबाधात् यजमानस्य कुशमुष्टिधारणरूपाङ्गवादरूपत्वात् गुणवादः। अवधारिते प्रमाणान्तरसिद्धेऽर्थे यो वादः सोऽनुवादः यथा “अन्तरीक्षे नाग्निश्चेतव्यः”“अग्निर्हिमस्य भेषजम्”इत्यादि च, अन्तरीक्षे अग्निचयनस्यासम्भवेन तदभावस्य, अग्नेर्हिमनाशकत्वस्य च लौकिकप्रमाणसिद्धत्वात् अनुवादः। तद्धानौ तयोर्विरोधावधारणयोरभावे भूतार्थवादः।“इन्द्रो वृत्रमहन्नित्यादि” सोऽपि द्विविधः स्तुत्यर्थवादो निन्दार्थवादश्च। “सन्ध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयमित्यादौ” स्तुत्यर्थवादः। “तैलक्षौमांससम्भोगी पर्वस्वेतेषु वै पुमान्। विण्मूत्रभोजनं नाम प्रयाति नरकं ध्रुवम्” इत्यादौ निन्दार्थवाद इति।

**गुणविधि** पु°गुणस्याङ्गस्य द्रव्यादेर्विधिः। प्राप्तस्याऽप्राप्तस्य वा कर्मणोऽङ्गद्रव्यविधाने। यथा“अग्निहोत्रं जुहोति स्वर्गकामः”इति विधिना स्वर्गसाधनत्वेन प्राप्तस्याग्निहोत्रादेरङ्गं “दध्ना जुहोतीति” वाक्येन दधिद्रव्यं विदधत् गुणविधिः। यत्र च कर्म अङ्गं च मानान्तरेणाप्राप्तं तत्रोभयविधानं यथाहि तस्य अङ्गरूपगुणविधानेन गुणविधित्वं तथा कर्मस्वरूपप्रापकत्वेन उत्पत्तिविधित्वं चेत्युभयरूपत्वम् तदेतत् गौगाक्षिप्रभृत्ये विवृतं यथा “अज्ञातार्थज्ञापको वेदभागो विधिः। स च प्रयोजनवदर्थविधानेनाऽर्थवान्। तादृशञ्चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते। यथा “अग्निहोत्रं जुहुयात् स्वर्गकामः” इति विधिः प्रमाणान्तरेणाप्राप्तस्वर्गप्रयोजनवद्धोमं विधत्ते अग्निहोत्रेण स्वर्गं भावयेदिति वाक्यार्थबोधः। यत्र कर्म प्रमाणान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रं विधत्ते। यथा“दध्ना जुहोति”इत्यत्र होमस्य“अग्निहोत्रं जुहुयात्” इत्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानं दध्ना होमं भावयेदिति। यत्र तूभयमप्राप्तं, तत्र विशिष्टं विधत्ते। यथा “सोमेन यजेत”इत्यत्र सोमद्रव्ययागयोरप्राप्तत्वात् सोमविशिष्टयागविधानम्। सोमपदे मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेदिति वाक्यार्थबोधः। न चोभयविधाने वाक्यभेदः, प्रत्येकमुभयस्याविधानात् किन्तु विशिष्टस्यैकस्यैव विधानात्। न च “ज्योतिष्टोमेन स्वर्गकामोयजेतेति” प्राप्तयागोद्देशेन सोमरूपगुणविधानमेवास्तु सोमेन यागं भावयेदिति, किं मत्वर्थलक्षणयेति वाच्यम्। तस्याधिकारविधित्वेनोत्पत्तिविधित्वासम्भवात्। ननु “उद्भिदा यजेत पशुकाम” इत्यस्येव ज्योतिष्टोमेन इत्यस्याप्युत्पत्त्यधिकारविधित्वमस्त्विति चेन्न दृष्टान्ते उत्पत्तिवाक्यान्तराभावेनान्यथानुपपत्त्या तथात्वाश्रयणात्। किञ्च ज्योतिष्टोमेनेत्यत्रोभयविधित्वे तेनैव यागस्तस्य फलसम्बन्धश्च बोधनीय इति सुदृढोवाक्यभेदस्तद्वरं सोमपदे मत्वर्थलक्षणया विशिष्टविधानम्”। अधिकं विधिशब्दे वक्ष्यते। उभयविधाने अन्यदुदाहरणं तत्त्वबोधिन्यां दर्शितं यथा

“प्रथमस्य चतुर्थे ‘वाजपेयेन स्वाराज्यकामोयजेतेति” तत्र वाजपेयशब्देन वाजमन्नं पेयं सुरादीति। तत्र तत्तद्यागमनूद्य वाजपेयद्रव्यरूपोगुणो विधीयते, किं वा वाजपेयनामा यागविशेषोऽनेन विधीयत इति संशयः तत्र विशिष्टयागान्तरकल्पने गौरवादन्नसुरात्मकं द्रव्यद्वयं गुणो विधीयते नच गुणविधित्वे वाजपेयकरणक यागेन स्वाराज्यं कुर्य्यादिति यागे वाजपेयकरणत्वेन वाजपेयसाध्यत्वस्वाराज्यसाधनत्वयोर्विरुद्धयोरेकज्ञानविषयत्वानभ्युपगमात् वाजपेयगुणवता यागेन स्वाराज्यं भावयेदिति मत्वर्थलक्षणा प्रसज्येतेतिवाच्यं सकृदुच्चरितस्य यजेतेत्यस्य तन्त्रेणोभयत्रान्वयाङ्गीकारात् वाजपेयेन द्रव्येण स्वाराज्याय यागं कुर्य्यादित्यर्थलाभान्न मत्वर्थलक्षणा। तथाच सूत्र“नामधेये गुणश्रुतेः स्याद्विधानमिति चेदिति” (जैमि° १।४।८।) प्राप्ते ब्रूमः यजेः

फले द्रव्ये च उभयत्र सम्बन्धाङ्गीकारे विरुद्धं त्रिकद्वय मापद्येत। तथा हि उपादेयत्वं गुणत्वं विधेयत्व- ञ्चेत्येकं त्रिकम् उद्देश्यत्वमनुवाद्यत्वं मुख्यत्वञ्चेत्यपरं त्रिकं तत्रोद्देश्यत्वादयस्त्रयः स्वाराज्यफलनिष्ठा धर्माः। उपादेयत्वादयस्त्रयः साधनीभूतयागनिष्ठा धर्माः फलमुद्दिश्य यागस्योपादानात् फलमनूद्य यागस्य विधा- नात् फलस्य च साध्यतया मुख्यत्वात् यागस्य साधन- त्वेनोपसर्ज्जनत्वात् तदेव च गुणत्वम्। अत्र चोपादेय- त्वोद्देश्यत्वयोः, गुणत्वमुख्यत्वयोरनुवाद्यत्वविधेयत्वयोर्वि- रोध इति त्रिकद्वयं विरुद्धम्। तथाचैकेनैकदा तादृश विरुद्धोभययोर्वैशिष्ट्यं नाङ्गीक्रियत इति भावः। अथ मा भूत्तन्त्रेण सम्बन्धः यजेतेनुषङ्गेण पृथक् फले द्रव्ये- चान्वयः स्वीक्रियतामिति चेन्न अनुषङ्गकल्पने वाजपेय द्रव्येण यजेत यागं कुर्य्यात् स्वाराज्याय यजेत यागेन स्वाराज्यं भावयेदिति वाक्यभेदापत्तेः तस्माद्वाजपेय शब्दो न द्रव्यवाचकः अपि तु यागनामधेयमिति। इत्य- श्चानुषङ्गकल्पने वाक्यभेदरूपगौरवं दोष इत्यनुषङ्गा- धिकरणसिद्धान्तः। यत्र चानुषङ्गकल्पने विशेषप्रमाण- मस्ति तत्र प्रामाणिकत्वात् तत्कल्पने गौरवं न दोषायेति ध्येयम्"।

उभयत्र च द्रव्यमात्रगुणविधाननिराकरणम् प्रयो- जनम्। क्वचित्तु गुणमात्रविधानं जै० १।४।६ सूत्र- भाष्ययोर्दर्शितं यथा

"तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः" ६सू०। "यथा "आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्येवमादयः श्रूयन्ते तत्र सन्देहः, किम् 'आग्नेयोऽग्नीषोमीयः' इत्येवमादयो गुणविधयः, कर्मनामधेयानि वा ? इति। किं तावत् प्राप्तम् ? गुणविधौ सत्यनेको गुणो विधीयेत, अग्नि- पुरोडाशाष्टाकपालाः इति, तस्मान्न गुणविधयः इत्येवं प्राप्ते ब्रूमः, तच्च कर्म, गुणाश्चास्य विधीयेरन्, अवि- भक्ता हि ते कर्मणो विधानार्थे तद्धितान्ते शब्दे, तत्र हि अष्टाकपालस्याग्नेयता विधीयते, स एष एव- माग्नेयो भवति, यदाग्नये संकल्प्य दीयते, तेनायम् अनेन प्रकारेण यागो विहितो भवति, स एवं विधीय- मानो न शक्यते सम्बन्धिनावविधाय विहित इति वक्तुम्। तस्मात् गुणविधयः, अष्टसु कपालेषु संस्क्रिय- माणो व्रीहिमयो वा पुरोडाश एव भवति, सोऽनुवादः सिद्धत्वादष्टाकपाल उच्यते, 'कपालेषु श्रपयति' इति वचनात् नान्येन श्रपितं गृह्णन्ति, तेनाविनृपच्चे न वाक्यभेदो भवति, 'न चेदन्येन शिष्टाः' यत्र पुनरन्येन वचनेन शिष्टा गुणा भवन्ति तत्र नामधेयं, यथा 'अग्निहोत्रं जुहोति।"

**गुणवृक्ष** पु० गुणानां नौकाकर्षणरज्जूनां बन्धनाधारः वृक्षइव। नौकाकर्षकदामाद्याधारे काष्ठे। (मास्तुल)। स्वार्थे क, स इव कायति कै—क वा। तत्रार्थे अमरः।

**गुणवृत्ति** स्त्री गुणेन वृत्तिः। १लक्ष्यमाणसादृश्यादिगुणा- वलम्बनेन शब्दस्य अर्थप्रकाशनरूपशक्तौ लक्षणावृत्तौ, "यस्याग्निसमीपे पौरुषाणि स गुणवृत्त्या चतुरश्चः" कात्या०श्रौ० २०।१।२८ सूत्रे कर्कः। गुणे वृत्तिर्यस्य। २गुणसामर्थ्यवति त्रि० "ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः। कथं चरन्ति ? श्रुतयः साक्षात् सदसतः परे" भाग०१०८७ अ०। गुणानां सत्वादीनां वृत्तिः। सत्वादीनां ३परिणामभेदेषु स्त्री "परिणामतापसंस्कार- दुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" पात०सू०। तासाञ्च यथाऽन्योन्यविरोधस्तथा तत्सूत्रभाष्यादिषु दर्शितम्।

"प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिगुणाः परस्परानुग्रह- तन्त्रीभूत्वा शान्तं घोरं मूढं वा प्रत्ययं त्रिगुणमेवा- रभन्ते चलञ्च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तं रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते सामा- न्यानि तु अतिशयैः सह प्रवर्त्तन्ते एवमेते गुणा इतरेतराश्रयेणोपार्ज्जितसुखदुःखमोहप्रत्यया इति सर्वे सर्वरूपा भवन्ति गुणप्रधानभावकृतस्त्वेषु विशेष इति तस्मात् दुःखमेव सर्व्वं विवेकिन" व्यासभा०।

"प्रख्याप्रवृत्तिस्थितिरूपबुद्धिरूपेण परिणता गुणाः सत्वरजस्तमांसि परस्परानुग्रहतन्त्राः शान्तं- सुखात्मकं, घोरं दुःखात्मकं, मूढं विषादात्मकमेव प्रत्ययं सुखोपभोगरूपमपि त्रिगुणं प्रारभन्ते नच सोऽपि तादृशरूपोऽस्य परिणामः स्थिरः इत्याह चलञ्च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तं नान्यैकप्रत्ययः कथं परस्परविरुद्धशान्तघोरमूढत्वान्येकदा प्रतिपद्यते ? इत्यत आह रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते सरूपास्त्वष्टौ भावा धर्म्मादयो वृत्तयः सुखा- द्यास्तदिह धर्म्मेण विपच्यमानेनाधर्म्मस्तादृशो विरुध्यते एवं ज्ञानवैराग्यैश्वर्य्यैः सुखादिभिश्च तादृशान्येव

तद्विपरीतानि विरुध्यन्ते, सामान्यानि त्वसदाचरद्रूपाणि अविशदैः असदाचरद्भिः सहाविरोधात् प्रवर्त्तन्ते इति । ननु स्वच्छोमयतत्तथापि विषयसुखस्य कुतः स्वाभाविको दुःखतेत्यत आह एवमेव इति उपादानाभेदादुपादानात्मकत्वादुपादेयस्याप्यभेद इत्यर्थः । तत्किमिदानीमात्यन्तिकमेव तादात्म्यं तथा च बुद्धिव्यपदेशभेदौ न कल्पेते इत्यत आह गुणप्रधानेति सामान्यात्मना गुणभावोऽतिशयात्मना च प्राधान्यं तस्मादुपाधितः स्वभावतश्च दुःखमेव सर्व्वं विवेकिन इति" वाच० विवरणम्

**गुणसङ्ग** पु० गुणेषु गुणकार्य्येषु सुखदुःखादिषु सङ्गः। सुखाद्यासक्तौ "कारणं गुणसङ्गोऽस्य" गीता ।

**गुणसंख्यान** न० गुणाः संख्यायन्तेऽनेन सम्–ख्या करणे ल्युट् ६त० । सांख्यप्रातज्ञलशास्त्रे ।

**गुणसम्मूढ़** त्रि० गुणैः सम्मूढ़ः । गुणकार्य्यदेहादिष्वात्माभिमानवति । "प्रकृतेर्गुणसंमूढ़ाः सज्जन्ते गुणकर्मसु" गीता ।

**गुणसागर** पु० गुणानां सागर इवाधारः । चतुर्मुखे १ब्रह्मणि शब्दच० । २बुद्धभेदे त्रिका० ३गुणाधारे च । शब्दक० अस्य स्त्रार्थे त्रिलिङ्गतोक्तिः प्रामादिकी सागरशब्दस्य नियतलिङ्गत्वात् "द्वन्द्वतत्पुरुषयोः" पा० सूत्रेण विशेषं विना उत्तरपदलिङ्गस्य नियमनात् ।

**गुणा** स्त्री गुणोऽस्त्यस्याः अच् । १दूर्वायां २मांसरोहिण्याञ्च राजनि० । तयोर्बहुतन्तुमत्त्वात्तथात्वम् ।

**गुणाकर** पु० ६त० । १बुद्धभेदे शब्दर० २गुणयुक्ते च "तपस्विभिरसन्नाथ तस्य पुत्रो गुणाकरः । सत्यवान् नाम देवर्षे !" भा०व० सावित्र्युपाख्याने । गुणसागरशब्दोक्तहेतुना शब्दक० अस्य त्रिलिङ्गतोक्तिः प्रामादिकी ।

**गुणाढ्य** त्रि० गुणैराढ्यः । सद्गुणयुक्ते ।

**गुणातीत** पु० गुणान् सत्वादिगुणधर्म्मान् सुखदुःखादीनतीतः । १परमेश्वरे स्थितप्रज्ञे २आत्मज्ञे च । गुणातीतताकारणसहितं तल्लक्षणसुक्तं गीतायां यथा

"गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् । जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते । अर्ज्जुन उवाच । कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ! । किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्त्तते । श्रीभगवानुवाच । प्रकाशञ्च प्रवृत्तिञ्च मोहमेव च पाण्डव ! । न द्वेष्टि संप्रवृत्तानि निवृत्तानि न काङ्क्षति । उदासीनवदासीनो गुणैर्यो न विचाल्यते । गुणा वर्त्तन्त इत्येवं योऽवतिष्ठति नेङ्गते । समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः । तुल्यप्रियाऽप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः । मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः । सर्वारम्भपरित्यागी गुणातीतः स उच्यते । माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते" ।

**गुणादि** "गुणादयोऽवयवाः" । ("अवयववाचिनः परे गुणादयोनान्तोदात्ताः") पा० सूत्रविहितान्तोदात्ततानिषेधनिमित्ते १शब्दगणे । स च गण "गुण अक्षर, अध्याय सूक्तछन्दस् मान"। २गुणकर्म्मजातिसमवायविशेषाभावेषु "गुणादिर्निर्गुणक्रियः" भाषा० ।

**गुणान्वित** त्रि० ३त० । १विवेकवैराग्योपरमादिभिर्मोक्षोपायैरन्विते" "प्रक्षीणदोषाय गुणान्विताय" वेदा०सा० २गुणयुक्ते च । [ हारा० ।

**गुणिका** स्त्री गुण इन् स्वार्थे क । शूनाङ्गे उच्छूनदेहे

**गुणित** त्रि० गुण–आवेष्टने कर्मणि क्त । १आहते ताड़िते पूरिते अमरः । "इष्टकृतिरष्टगुणिता व्येका दलिता विभाजितेष्टेन" लीला० ।

**गुणिन्** त्रि० गुण+अस्त्यर्थे इनि । गुणयुक्ते "गुणिगणगणनारम्भे न पतति कठिनी ससम्भ्रमा यस्य" हितो० ।

**गुणीभूत** त्रि०अगुणः गुणः भूतः गुण+च्वि+भू–क्त । अप्रधानीभूते "गुणीभूता गुणाः सर्वे तिष्ठन्ति हि पराक्रमे" भा०स०१५अ०। च्व्यर्थे कृतादित्वात् समासे उक्तार्थत्वात् ततो न च्विः । तेन गुणभूतोऽप्यत्र । "गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते" हरिः ।

**गुणीभूतव्यङ्ग्य** न० गुणीभूतं व्यङ्ग्यं यत्र । काव्यभेदे तल्लक्षणभेदादि सा०द० उक्तं यथा

"अपरन्तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये । अपरं काव्यं अनुत्तमत्वम् न्यूनतया साम्येन च संभवति । तत्र स्यादितराङ्गं १ काक्वाक्षिप्तं२च वाच्यसिद्ध्यङ्गम्३ संदिग्धप्राधान्यं४तुल्यप्राधान्य५मस्फुटं६मगूढम्७। व्यङ्ग्यमसुन्दरदमेवं भेदास्तस्योदिता अष्टौ । इतरस्य रसादेरङ्गं रसादि व्यङ्ग्यं१ यथा । "अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः । नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः" । अत्र शृङ्गारः करुणस्याङ्गम् । "मानोन्नतां प्रणयिनीमनुनेतुकामस्त्वत्सैन्यसागररवोद्गतकर्णतापः । हा हा कथं नु भवतोरिपुराजधानीप्रासादसन्ततिषु तिष्ठति

कामिलोकः"। अत्रौत्सुक्यत्रासवसन्धिसंस्कृतस्य करुणस्य राजविषयरतावङ्गभावः। "जनस्थाने भ्रान्तं कनककृग-तृष्णान्वितधिया वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्। कृता लङ्काभर्त्तुर्वदनपरिपाटीषु घटना मयाप्तं रामत्वं कुशलवसुता न त्वधिगता"। अत्र रामत्वं प्राप्तमित्य-वचनेऽपि शब्दशक्त्यैव रामत्वमवगम्यते वचनेन तु सादृश्य हेतुकतादात्म्यारोपणमाविष्कृत्य तद्गोपनमपाकृतं तेन व्यङ्ग्यं सादृश्यं वाक्यार्थान्वयोपपादकतयाऽङ्गतां नीतम्। काक्वाक्षिप्तं २यथा। "मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबाम्युरस्तः। संचूर्ण-यामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन"। अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यस्य निषेधस्य सहभावेनैव स्थितम्। "दीपयन् रोदसीरन्ध्रमेष ज्वलति सर्वतः। प्रतापस्तव राजेन्द्र! वैरिवंशदवानलः"। अत्रान्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः प्रतापस्य दवानल-त्वारोपसिद्ध्यङ्गम्३। "हरस्तु किञ्चित् परिवृत्तेत्यादौ"। विलोचनव्यापारचुम्बनाभिलाषयोः प्राधान्ये सन्देहः४। "ब्राह्मणातिक्रमत्यागो भवतामेव भूयते। जामदग्न्यस्य वोमित्रमन्यथा दुर्मनायते"। अत्र वाच्यस्य परशुरामोरक्षः-कुलक्षयं करिष्यतीति व्यङ्ग्यस्य च समं प्राधान्यम्५। "सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः। अश्वपदीन-नृपतौ न सन्धिर्न च विग्रहः"। अत्राश्वपदीनाख्ये नृपतौ दानसामादिमन्तरेण नान्यः प्रशमोपाय इति व्यङ्ग्यं व्युत्पन्नानामपि झटित्यस्फुटम्६। "अनेन लोकगुरुणा सतां धर्मोपदेशिना। अहं व्रतवती स्वैरमुक्तेन किमतः परम्"। अत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्य्यक्‌योषिति बलात्कारोपभोगः स्फुटतया वाच्यायमानत्वगूढम्७। "वाणीरकुडङ्गुड्डीणसउणिकोलाहलं सुणन्तीए। घर कम्मवावडाए सीअन्ति अङ्गाइम्"। अत्र दत्तसंकेतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सूचयन्त्याः सीदन्त्यङ्गानि इति वाक्यस्य चमत्कारः सहृदयसंवेद्य इत्यसुन्दरम् ८। किञ्च यो दीपकतुल्ययोगितादिषु उपमाद्यलङ्कारो व्यङ्ग्यः स गुणीभूतव्यङ्ग्य एव काव्यस्य दीपकादिमुखेनैव चमत्का-रविधायित्वात् तदुक्तं ध्वनिकृता "अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते। तत्परत्वं तु काव्यस्य नासौ मार्गो ध्वनेर्मतः"। यत्र च शब्दान्तरादिना गोपन-कृतचारुत्वस्य विपर्यासः यथा "दृष्ट्या केशवगोपरा-गहृतया किञ्चिन्न दृष्टं मया तेनात्र स्खलितास्मि नाथ! पतितां किं नाम नालम्बसे। एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गतिर्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम्"। अत्र गोपरागादिशब्दानां गोपे राग-इत्यादिव्यङ्ग्यार्थानां सलेशमिति पदेन स्फुटतयाऽ-वभासः। सलेशमिति पदस्य परित्यागे ध्वनिरेव। किञ्च यत्र वस्त्वलङ्काररसादिरूपव्यङ्ग्यानां रसान्तरे गुणी-भावः तत्र प्रधानकृतएव काव्यव्यवहारः तदुक्तं तेनैव "प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्। धत्ते रसादितात्पर्य्यपर्य्यालोचनया पुनः" यत्र च "यत्नो-न्मदानां प्रमदाजनानामभ्रंलिहः शोणमणीमयूखः। सन्ध्याभ्रमं प्राप्नुवतामकाण्डेऽप्यनङ्गनेपथ्यविधिं बि-भर्त्ति" इत्यादौ रसादीनां नगरीवृत्तान्तादिवस्तुमात्रेऽङ्गत्वं तत्र तेषामतात्पर्य्यविषयत्वेऽपि तैरेव गुणीभूतैः काव्य-व्यवहारः"। अस्य भेदसंख्याविस्तरभयात् नोक्तास्तत एवावसेयाः।

**गुणीश्वर** पु० ६त०। १चित्रकूटपर्वते २सत्त्वादिगुणानां नियामके परमेश्वरे शब्दरत्ना०। गुणेशोऽपि परमेश्वरे।

**गुणोत्कर्ष** पु० ६त०। गुणातिशये हेमच०। "भूयस्त्वम् गुणोत्कर्षमेते विद्ये करिष्यतः" रामा०वाल० २६अ०।

**गुण्ठित** त्रि० गुठि—क्त। १आवृते। २गुण्डिते ३क्षतधूलिधूसरे च रमानाथः।

**गुण्ड** पु० गुडि—वेष्टने अच्। १असिपत्रे तृणभेदे राजनि० यस्य कन्दः कशेरु। कशेरुशब्दे विवृतिः। भावे अच्। २चूर्णने पेषणे (गुँड़ाकरा) पु०। कर्मणि अच्। ३चूर्णीकृते त्रि०। [४स्नेहपात्रे च पु० मेदि०।

**गुण्डक** त्रि० गुडि—ण्वुल्। १मलिने। २धूलौ ३कलोक्तौ

**गुण्डकन्द** पु० ६त०। कशेरुणि (केशुर)। राजनि०।

**गुण्डारोचनिका** स्त्री गुण्डा सती रोचना हरिद्रेव इवार्थे कन् (कमलागुँडि) वृक्षभेदे रत्नमा०।

**गुण्डाला** स्त्री गुण्डं चूर्णनमालाति आ+ला—णिनि। जलो-द्भवायां क्षुपभेदे राजनि०। [लतायाम् राजनि०।

**गुण्डासिनी** गुण्डा सती आस्ते आस—णिनि। चिपिटा-

**गुण्डिक** पु० गुण्ड+अस्त्यर्थे ठन्। चूर्णीकृते तण्डुलादौ। (गुँड़ि) "गुण्डिकैः सितपीतैश्च मण्डयेच्च गृहाङ्गनम्" अनन्तव्रतकथा।

**गुण्डिचा** स्त्री जगन्नाथक्षेत्रस्थे तस्य रथयात्रानन्तरं सप्ता-हं वासार्थे मण्डपभेदे "मण्डपे वासयेत् देवान् गुण्डि-चाख्ये मनोहरे" इत्युपक्रमे "विन्दुतीर्थतटे तस्मिन्

सप्ताहानि जनार्द्दनः। तिष्ठेत् पुरा स्वयं रात्रौ यस्मेतत् समादिशत्। नन्दीशतीरे राजेन्द्र! स्थास्यामि सप्तवासरम्। सर्वतीर्थानि तत्रापि स्थास्यन्ति मयि तिष्ठति। तत्र स्नात्वा विधानेन तीर्थे तीर्थोपपावने। सप्ताहं ये प्रपश्यन्ति गुण्डिचामण्डपे स्थितम्। मात्रा रामं सुभद्राञ्च मम सायुज्यमाप्नुयुः"। तन्नामनिरुक्तिरपि तत्रोक्ता यथा "सर्वपापनियन्तृत्वात् पूज्यत्वात् सर्वदैवतैः। गुण्डिचाख्यापि सा प्रोक्ता ब्रह्मतेजोऽवगुण्ठनात्" स्का० पु० उत्कल०।

**गुण्डित** त्रि० गुडि-वेष्टने क्त। रजसाकीर्णे, रूषिते अमरः

**गुण्य** त्रि० गुण-कर्म्मणि यत्। १गुणनीये पूर्व्वे। "गुण्यस्त्वधोऽधो गुणखण्डतुल्यः"। "गुण्यान्त्यमङ्कं गुणकेन हन्यात्" लीला०। प्रशस्तो गुणोऽस्यास्ति "अन्येभ्योऽपि दृश्यते" वार्त्ति० यत्। २प्रशस्तगुणयुक्ते च। "गुण्याः ब्राह्मणाः" सि० कौ०।

**गुत्थ** पु० गुध+पृषो०। गवेधुकाधान्ये (गडगडे) रत्नमा०

**गुत्थक** न० गुच्छेन कायति कै-क पृषो०। ग्रन्थिपर्णे वृक्षे रत्नमा०। [गुच्छशब्दे २५८६पृ० विवृतिः।

**गुत्स** पु० गुध-स किच्च नि० टट्न। ग्रन्थिपर्णवृक्षे मेदि०।

**गुत्सक** पु०गुत्स+स्वार्थादौ क। १स्तवके शब्दरत्ना०। गुच्छकशब्दे दृश्यम्। २ग्रन्थपरिच्छेदे त्रिका०।"अथ वाङ्मयभेदाः सुश्रूः खण्डकथा कथा। आख्यायिका परिकथा कलापकविशेषकौ। सन्धानमनिरुद्धं च प्रकीर्णं गुत्सकादि च। सर्गोऽस्यपरिच्छेदोद्घाताध्यायाङ्कसंग्रहाः। उच्छ्वासः परिवर्त्तश्च पटलं काण्डमस्त्रियाम्। स्थानं प्रकरणं पर्वाह्निकञ्च ग्रन्थसन्धयः" त्रिका०। अत्र गुत्सकादीत्यादिपदात् स्तबकोल्लासादीनां ग्रहणम्। तत्र कुसुमाञ्जलौ स्तवकः, काव्यप्रकाशे उल्लासः। एवमन्यत्रापि यथायथं ग्रन्थनामानुसारेण तदवयववाचकशब्दविशेषेण ग्रन्थसन्धिकरणम् दृश्यते तेषां सर्वेषामादिपदग्राह्यता।

**गुद** खेले भ्वा० आत्म० अक० सेट्। गोदते अगोदिष्ट। जुगुदे। गुदम्।

**गुद** न० गुद-क। मलत्यागद्वारे अपानवायुनिःसारणद्वारे "तत्र स्थूलान्त्रप्रतिबद्धमर्द्धपञ्चाङ्गुलं गुदमाहुस्तस्मिन् वलयस्तिस्रोऽध्यर्द्धाङ्गुलान्तरभूताः प्रवाहणी १विसर्ज्जनी २संवरणी चेति। "चतुरङ्गुलायताः सर्वास्तिर्य्यगेकाङ्गुलोच्छ्रिताः। शङ्खावर्त्तनिभाश्चापि उपर्य्युपरि संस्थिताः। गजतालुनिभाश्चापि वर्णतः सम्प्रकीर्त्तिताः। रोमान्तेभ्यो यवाध्यर्द्धो गुदौष्ठः परिकीर्त्तितः" सुश्रु०। तस्य स्वरूपादिकमुक्तम्।

अस्य प्राणायतनता याज्ञ० उक्ता यथा "नाभिरोजो गुदं शुक्रं शोणितं शङ्खकौ तथा। मूर्द्धांसकण्ठहृदयं प्राणस्यायतनानि च"। अस्य उपसर्ज्जनत्वे क्रोडादौ शुकैत्यत्र गुद इति पाठान्तरं तेन स्त्रियां ङीष्। भ्रष्टगुदा इत्येव। २नाडीभेदे स्त्री बह्वादि०वा ङीष्टापौ। "आन्त्रेभ्यस्ते गुदाभ्यः" ऋ०१०।१६३।३। "गुदाभ्यः याभिर्नाडीभिरन्नरसः समानवायुना धातुषु नीयते ताभ्यो नाडीभ्यः" भा०। ३वलयाकारे गुदस्थाने पु०। "उदरं च गुदौ कोष्ठ्यौ विस्तारोऽयमतो शृणु" याज्ञ० "बाह्याद् गुदवलयात् अन्तरे गुदवलये द्वे, तौ च गुदौ कौष्ठ्यौ कोष्ठौ नाभेरधोदेशे भवौ" मिता०। वस्तुतः गुदमस्यत्र अर्श० अच्। गुदाधारस्थानपरतायामेव त्रिलिङ्गत्वम्। अतएव "गुदाः पात्राणि सूदकामधेनुः" यजु०१८।८६। व्याख्यायाम् वेददी०। "गुदाः गुदस्थानानि" इत्युक्तम् "स्थूलगुदया सर्पान् गुदाभिः" यजु०२५।७ मन्त्रव्याख्यायां च तेन गुदपरत्वे क्लीवं छान्दसमित्युक्तञ्च सङ्गच्छते "सिध्नवो गुदाः" शत० ब्रा० ६।४। ततः अश्मा० अस्त्यर्थे र। गुदर तद्युक्ते त्रि०।

**गुदकील** पु० गुदे कील इव। अर्शोरोगे राजनि०। अर्शःशब्दे विवृतिः। "स्थूलकन्दस्तु नात्युष्णः सूरणो गुदकीलहा" सुश्रु० "आनाहमेदोगुदकीलहिक्काश्वासापहो वन्यकुलत्थ एषः" सुश्रु०। स्वार्थे क। तत्रार्थे हला०।

**गुदग्रह** पु० गुदं तद्व्यापारं गृह्णाति ग्रह-अच् ६त०। उदावर्त्तरोगे हेम०। उदावर्त्तशब्दे ११६३ पृ० दृश्यम्।

**गुदपरिणद्ध** पु० ऋषिभेदे तस्यापत्यम् इञ्। गौदपरिणद्धि तदपत्ये तस्य बकनखेन द्वन्द्वे इञो लुक् बहुत्वे। बकनखगुदपरिणद्धाः।

**गुदपाक** पु० ६त०। अतिसारादिजनिते गुदस्थानस्य पूयादिनिःस्रावहेतौ पाके। "असंवृतगुदं क्षीणोदराध्मानादुपद्रुतम्। गुदे पक्वे गतोष्माणञ्चातीसारकिणं त्यजेत्" सुश्रु०। "मांसपाकेन बध्यन्ते गुदपाके च दारुणे" "गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम्" "गुदपाकस्तु पित्तेन यस्य स्यादहिताशिनः" सुश्रु०।

**गुदभ्रंश** पु० "प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः। रूक्षदुर्बलदेहस्य गुदभ्रंशं तमादिशेत्" गुदभ्रंशमिमं कृच्छ्रं पानाभ्यङ्गात् प्रसाधयेत्" सुश्रुतोक्ते रोगभेदे।

**गुदरोग** पु० ६त०। गुदस्थानभवे भगन्दरार्शोभिन्ने रोगे तस्य च शातातपेन "सुरालये जले वाऽपि शकृन्मूत्रं करोति यः। गुदरोगो भवेत्तस्य पापरूपः सुदारुणः" इति कर्म्मविपाकविशेषमुक्त्वा "मासं सुरार्चनेनैव गोदानद्वितयेन च। प्राजापत्येन चैकेन शाम्यन्ति गुदजा रुजा" भगन्दरार्शसोः पृथगुक्त्वात्तद्भिन्नता ज्ञेया

**गुदवर्त्मन्** न० गुदरूपं वर्त्म। गुदरूपे मलद्वारे जटा०।

**गुदस्तम्भ** पु० ६त०। गुदव्यापारस्य मलनिःसारणस्य प्रतिरोधे रोगभेदे। "अन्ययोनौ च गमनाद् गुदस्तम्भः प्रजायते। सहस्रकमलैः स्नानं मासं कुर्य्यात् शिवस्य च" शातातपः।

**गुदाङ्कुर** पु० गुदेऽङ्कुर इव। अर्शोरोगे हेमच०।

**गुदौष्ठ** पु० गुदस्य ओष्ठ इव। गुदावयवभेदे गुदशब्दे दर्शिते सुश्रुतवाक्ये तत्स्वरूपादि।

**गुद्र** मिथ्याकथने चुरा० उभ० सक० सेट् इदित्। गुन्द्रयति अजुगुन्द्रत्-त। गुन्द्रयां—बभूव आस चक्रे। गुन्द्रा।

**गुध** रोषणे क्र्या० पर० सक० सेट्। गुध्नाति अगोधीत्। जुगोध। सेट्कत्वेऽपि न गुणः गुधित्वा। गुधः।

**गुध** क्रीडे भ्वा० आत्म० अक० सेट्। गोधते अगोधिष्ट। जुगुधे

**गुध** वेष्टने दिवा० पर० सक० सेट्। गुध्यति अगोधीत्। जुगोध गुधित्वा।

**गुधेर** त्रि० गुध वेष्टने एरक्। गोप्तरि उज्ज्वलदत्तः।

**गुन्दल** पु० गुमित्यव्यक्तशब्देन दल्यतेऽसौ दल—णिच्—कर्मणि अच्। मर्दलशब्दे हेमच०।

**गुन्द्र** पु० गुद्रि—कर्म्मणि अच्। १शरतृणे (गोपटेर) इत्ये अमरः। "गुन्द्रः कषायो मधुरः शिशिरः पित्तरक्तजित्। स्तन्यशुक्ररजोमूत्रशोधनो मूत्रकृच्छ्रजित्" भावप्र०। २भद्रमुस्तके ३प्रियङ्गुवृक्षे च स्त्री अमरः। ४गवेधुकायां स्त्री रत्नमाला ५एरकायां स्त्री भावप्र०। [भावप्र०।

**गुन्द्रमूला** स्त्री गुन्द्रस्य मूलमिव मूलमस्याः। एरकातृणे

**गुन्द्रला** स्त्री गुन्द्रं मिथ्यावचनं लाति ला—क। जीवञ्जीवखगे चकोरके हेमच०।

**गुन्फ** ग्रन्थे तु० प० सक० सेट्। गुम्फति अगुम्फीत्। जुगुम्फ। गुम्फन् गुफितः गुम्फित्वा—गुफित्वा। नोपधत्वात् क्विपि गुन् गुनौ इत्यादि।

**गुप** गोपने सक० आत्म० सेट् कुत्सने स्वार्थे सन् अनिट् कुत्सनमिह कुत्सापूर्वकनिवृत्तिस्तत्र अक० निन्दनञ्च तत्र सक०। पापात् जुगुप्सते अजुगुप्सिष्ट। जुगुप्सां बभूव आस चक्रे जुगुप्सितः। गोपने गोपते अगोपिष्ट जुगुपे। "आदित्यानैर्गुपितो शर्हतैः बोधरक्षितः" ऋ० १०।८५।१। "तथा राष्ट्रं गुपितं क्षत्रियस्य" १०।१०९।३। तत्र निन्दार्थत्वे "जुगुप्सेरन्न चाप्येनम् संवसेयुश्च सर्वशः" मनुः "यदा बध्यति बोद्धुं लोकवृत्तं जुगुप्सते" भा०श०२११अ०।

**गुप** रक्षणे भ्वा० सक० पर० वेट् स्वार्थे सार्वधातुके नित्यमायः आर्द्धधातुके वा। गोपायति अगोपायीत् अगोपीत् अगौप्सीत्। गोपायाम्—बभूव आस चकार जुगोप। गोपायितः गुप्तः। गुप्तिः गोपायनम् गोपनम्। "जुगोपात्मानमत्रस्तः" रघुः। "आत्मानं सततं गोपायीत" श्रुतिः "जुगोप गोरूपधरामिवोर्वीम्" रघुः। "नैनं गोप्स्यति दुर्बुद्धिमद्य बाणहतं मया" भा० भी० २८६२श्लो० "अगोपिष्टां पुरोलङ्कामगौप्तां रक्षसां बलम्" भट्टिः। "यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा" मनुः।

**गुप** व्याकुलत्वे दिवा० अक० पर० सेट् इरित्। गुप्यति अगुपत् अगोपीत् जुगोप। कुपितः।

**गुप** भासने चुरा० उभ० अक० सेट्। गोपयति ते अजूगुपत् त। गोपयाम् बभूव आस चकार चक्रे। चतुर्णां गुपधातूनामुदाहरणं कविरहस्ये यथा "गोपायति क्षितिमिमां चतुरब्धिसीमां पापाज्जुगुप्सत उदारमतिः सदैव। चित्तं न गोपयति यस्तु बलीयकेभ्यो धीरो न गुप्यति महत्यपि कार्य्यजाते"।

**गुपिल** पु० गुप इलच् किच्च। १नृपे उज्ज्वल० २रक्षके त्रि०।

**गुप्त** त्रि० गुप—कर्म्मणि क्त। १त्राते रक्षिते २गूढे संवृते च अमरः। "स गुप्तमूलप्रत्यन्तः" रघुः। ३शङ्करे पु० शब्दरत्ना०। "गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः" उद्वा० त० उक्ते ४वैश्योपनामभेदे पु०। ५कपिकच्छ्वां स्त्री राजनि०। ६परकीयायां नायिकायां स्त्री। "गुप्ताविदग्धा लक्षिताकुलटानुशयानामुदिताप्रभृतीनां परकीयायामेवान्तर्भावः तत्र गुप्ता त्रिविधा वृत्तसुरतगोपना वर्त्तिष्यमाणसुरतगोपना वर्त्तमानसुरतगोपना चेति विभज्य रसमञ्जर्य्यां तिसृणामेकत्र पद्ये उदाहृतिः यथा "श्वश्रूः क्रुध्यतु निर्दहन्तु सुहृदो निन्दन्तु वा यातरस्तच्चिन्तया न मन्दिरे सखि! पुनः स्वापो विधेयो मया"। आखो राक्रमणाय कोणकुहरादुत्कालमातन्वती मार्ज्जारी नखरैः खरैः क्षतवती कां कां न मे दुर्दशाम्"।७रक्षितायां स्त्रियाञ्च (राखनी) स्त्री "आह्वर्षी यद्यगुप्तां तु सेवेतां

२अपार्थिवौ" मनुः ८परमेश्वरे पु० "गुप्तश्चक्रगदाधरः" विष्णुस० "वाङ्मनसयोरगोचरत्वात् गुप्तः "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" इति श्रुतेः" भा० ।

गुप्तक पु० जवद्रथसेनानीभेदे । "अङ्गारकः कुञ्जरो गुप्तकश्च शत्रुञ्जयः सञ्चयसंप्रहर्षौ" भा० आ० २६४अ० । स्वार्थे क । २गुप्तार्थे त्रि० । [२गूढगमने त्रि०।

गुप्तगति पु० गुप्ता गतिर्यस्य । अपसर्पे १गुप्तचरे शब्दार्थचि०।

गुप्तचर त्रि० गुप्तश्चरो यस्य । १गूढभावेन चरत्चरके । २बलभद्राख्ये यदुवंश्ये पु० त्रिका० कर्म० । ३गूढे दूतभेदे पु०

गुप्तस्नेह पु० गुप्तः स्नेहोऽत्र । १अङ्कोटकवृक्षे राजनि० । कर्म० । २गूढे स्नेहे "गुप्तस्नेहकरी(दृष्टिः)द्वतीयभवने" नीलकण्ठताजकम् ।

गुप्ति स्त्री गुप-भावे क्तिन् । १गोपने "भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था" सा० द० । २संवरणे "हृच्छयस्थितिखासार्खं गुप्तावपि मनोरमम्" कुमा० । "अविभाराह कोषगुप्तिः" काद० । "स्थानं समुदयं गुप्तिं लब्धप्रशमनादिकम्" मनुः। ३रक्षणे "सर्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः" (ईश्वरः)मनुः।४प्राङ्मन्त्रसंस्कारभेदे तन्त्रसा० गौतमीये "जननं जीवनं पश्चात् ताड़नं बोधनं तथा । तथाभिषेको विमलीकरणाप्यायने पुनः । तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः" इति विभज्य "जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम्" इति लक्षितम् । आधारे क्तिन् । ५अवस्करस्थाने ६कारागारस्थाने मेदि० । "चिरमतिरसलौल्यात् बन्धनं लम्भितानां पुनरयमुदयाय प्राप्य धाम स्वमेव । दलितदलकपाटः षट्पदानां सरोजे सरभस इव गुप्तिस्फोटमर्कः करोति" माघः ७भूगर्त्ते । करणे क्तिन् । ८अहिंसादौ योगाङ्गे यमे च हेमच० । ९गर्त्तार्थं क्षितेरुत्खनने १०नौकाछिद्रे भरतः ।

गुफ ग्रन्थे तुदा० पर० सक० सेट् मुचा० । गुम्फति अगोफीत् जुगोफ ।

गुफित त्रि०गुफ-गुम्फ-वा कर्म्मणि क्त । ग्रथिते अमरः।

गुम्फ ग्रन्थने तुदा० पर० सक० सेट् । गुम्फति अगुम्फीत् । जुगुम्फ गुम्फितः। नोपधत्वात् गुम्फित्वा क्विपि गुन् गुम्फौ गुमः इति । [ च शब्दरत्ना० ।

गुम्फ पु०गुम्फ-घञ् ।१ग्रन्थने, २बाहोर्भूषणे मेदि०३श्मश्रुणि

गुम्फना स्त्री गुम्फ-युच् । "वाच्ये शब्दार्थयोः सम्यग्रचना गुम्फना स्मृता" इत्युक्तायां १वाक्यस्य चारुरचनायाम्। २ग्रन्थने च (गाँथा) भावे ल्युट् । २ग्रन्थने न० ।

गुम्फित त्रि० गुम्फ-क्त । पुष्पादिना ग्रथिते, अमरः ।

गुर बधे गत्याञ्च दिवा० आत्म० सक० सेट् । गूर्य्यते अगोरिष्ट । जुगोर । ईदित् गूर्णः । गोरणम् ।

गुर उद्यमे तुदा० कुटा० आत्म० अक० सेट् । गुरते अगुरिष्ट जुगोर गुरणम् ईदित् गूर्णः। वेदे तु नि०गूर्त्त इत्येव । "द्रुघो द्रुवो गूर्त्ततमाः" ऋ० १।१६७।१ । "गूर्त्तौं श्रवसः शरदश्च गूर्त्ताः" ऋ० ४।१६।८ ।"अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने" स्मृतिः । "यो ब्राह्मणायावगुरेत् तं शतेन यातयात्" श्रुतिः छान्दसः पदव्यत्ययः । एवं "न कदाचिद् द्विजे तस्माद्विद्वानवगुरेदपि" मनुः ।

गुरण न० कुटा०गुर-भावे ल्युट् । हननाद्यर्थमुद्यमे अमरः। दैवादिकस्य गोरणमित्येव । तच्च बधे गत्याञ्च । अव+गोरणं हननार्थमुद्यमे इति भेदः ।

गुरु पु० गिरत्यज्ञानं ग्रणात्युपदिशति धर्मं गृ-गिरणे, गॄ-शब्दे कर्त्तरि, गीर्य्यते स्तूयते वा कर्म्मणि वा कु उच्च । १वृहस्पतौ देवाचार्य्ये अमरः । "गुरुकाव्यानुगां बिभ्रत्" माघः । "गुरोर्ब्बे गोरस्तवाल्ये"नीचस्थे सिंहगे गुरौ" ज्यो०त० । २प्रभाकराख्ये मीमांसकभेदे तस्य तन्नामता यथा "अत्र तु नोक्तम् तत्रापिनोक्तम् अतः पौनरुक्त्यम्"इत्यत्र स्वगुरोः संशये जाते प्रभाकरेण तदसन्निधाने तत्पुस्तके तुना, अपिना, इति पदच्छेदः कृतः उत्तरकाले गुरुणा तदृदृष्ट्या केनेदृशः पदच्छेदः कृतः इति पृष्टे अन्यशिष्यैद्वारा प्रभाकरकृतत्वं निश्चित्य तस्य संशयापनोदकत्वात् गुरुरिति संज्ञा कृतेति आख्यायिका "गुरोर्गिरः पञ्चदिनान्यधीत्य"सा०द० । "अर्थापत्तिर्गुरूणाम्" शब्द०प्र० । "निषेकादीनि कर्म्माणि यः करोति यथाविधि । सम्भावयति चान्नेन स विप्रो गुरुरुच्यते"मनूक्ते "स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति" याज्ञ० उक्ते च निषेकादिक्रियाकर्त्तरि ३पितरि प्रायश्चित्तविवे० । "न केवलं तद्गुरुरेकपार्थिवः"रघुः गुरुतल्पगशब्दे विवृतिः। "अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया"मनूक्ते शास्त्रोपदेशके४आचार्य्यादौ तद्विषये" पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः । गुरुराहवनीयस्तु साग्नित्रेता गरीयसी" इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् । गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते" मनुः । "तौ गुरुर्गुरुपत्नी च" रघुः । "आचार्य्यश्च पिता ज्येष्ठो भ्राता चैव महीपतिः । मातुलः श्वशुरस्त्राता मातामहपितामहौ ।

वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवो मताः" देवलोक्तेषु ५एकादशसु आचार्य्यादिषु "अनेनैकादशगुरवः सङ्कीर्तिताः" प्रा० वि०। गुरुतल्पगशब्दे विवृतिः।

"उपाध्यायः पिता ज्येष्ठभ्राता चैव महीपतिः। मातुलः श्वशुरस्त्राता मातामहपितामहौ। वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः। मातामही मातुलानी माता मातुश्च सोदराः। श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रीषु। इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विजाः!। अनुवर्त्तनमेतेषां मनोवाक्कायकर्मभिः। गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः। नैतैरुपविशेत् सार्द्धं विवदेन्नात्मकारणात्। जीवितार्थमपि द्वेषाद्गुरुभिर्नैव भाषणम्। उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः। गुरूणाञ्चैव सर्वेषां पूज्याः पञ्च विशेषतः। तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता। यो भावयति या सूते येन विद्योपदिश्यते। ज्येष्ठभ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः। आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः। पूजनीया विशेषेण पञ्चैते भूतिमिच्छता कूर्म० पु०११अ०। उक्ते पुंस्त्रीभेदेन ६उपाध्यायादौ यथायथं पुंस्त्री०।

"तथापि तन्मय्यपि ते गुरुरित्यस्ति गौरवम्"माघः। कृष्णं प्रति तत्पितृव्योद्धवोक्तिः"गुरुदयाय गुरुणोरुभयोरथ कार्ययोः" माघे ज्येष्ठभ्रातृपितृव्यपरता। ७सम्प्रदायप्रवर्त्तके ८धर्म्मोपदेशके ९कपिकच्छूवृक्षे राजनि०। "सानुस्वारो विसर्गान्तो दीर्घोयुक्तपरश्च यः। वा पादान्ते त्वसौ" वृ०र० उक्ते १०दीर्घवर्णादौ। "अगुरुचतुष्कं भवति गुरू द्वौ घनकुचयुग्मे शशिवदनासौ" श्रुतबोध० "गुरुमतोऽनृच्छ इत्यादि""गुरोश्च हलः"पा० ११महति त्रि० "मापे गुरुणि गुरुणि" प्रा०त०। १२दुर्ज्जरे १३दुष्पाके त्रि० "तत्फलं (प्रियङ्गुफलम्) मधुरं रूक्षं कषायं शीतलं गुरु" भावप्र०। १४अलघुनि गुरुत्ववति त्रि० मेदि०। "कार्ये गुरुण्यात्मसमं नियोज्ये"कुमा०। "नारदस्तु जगतो गुरुरुच्चैर्विस्मयाय गगनं विललङ्घे" नैष० "गुरुणी द्वे रसवती"भाषा० स्त्रियां ङीप्। "अलावूर्भेदिका गुर्वी" वैद्यकम्। "इयमतिजरठा प्रकाम गुर्वी"माघः। गुरुत्वं च गुरुत्वशब्दे दृश्यम् १५तान्त्रिकमन्त्रोपदेष्टरि पु० तल्लक्षणादि शा०ति० "मातृतः पितृतः शुद्धः शुद्धभावो जितेन्द्रियः। सर्वागमानां तत्त्वज्ञः सर्वशास्त्रार्थतत्त्ववित्। परोपकारनिरतो जपपूजादितत्परः। अमोघवचनः शान्तो वेदवेदार्थपारगः। योगमार्गानुसन्धाता देवताहृदयङ्गमः। इत्यादिगुणसम्पन्नो गुरुरागमसम्मतः" वर्ज्यागुरवो-राघवभट्टधृतवच०उक्ताः यथा

"नातिबालोन वृद्धश्च न स्त्रण्डो न कृशस्तथा। नाधिकाङ्गोन हीनाङ्गो न खल्वाटोन दन्तुरः"। वीरमित्रोदयधृतकल्पचिन्तामणौ"क्षयरोगी च दुश्चर्मा कुनखी श्यावदन्तकः। काणोऽन्धः कुष्ठभावश्च खल्वाटः खञ्जरीटकः"

"अङ्गहीनोऽतिरिक्ताङ्गः पिङ्गाक्षः पूतिनासिकः। वृद्धाण्डोवामनः कुब्जः श्वित्री चैव नपुंसकः"। पूतिनासिकोदुर्गन्धिनासिकः। "संस्काररहितोमूर्खो वेदशास्त्रविवर्ज्जितः। श्रौतस्मार्त्तक्रियाशून्यः शुष्कभाषः सुकुत्सितः। पुरयाजनजीवी च नरो वैद्यश्च कामुकः। क्रूरो दम्भी मत्सरी च व्यसनी कृपणः खलः। कुसङ्गी नास्तिको भीतो महापातकचिह्नितः। देवाग्निगुरुविद्यादिपूजाशिधिपराङ्मुखः। सन्ध्यातर्पणपूजादिमन्त्रस्नानविवर्ज्जितः। आलस्योपहतो भोगी धर्महीन उपश्रुतः। इत्याद्यैर्बहुभिर्दोषैरागमोक्तैश्च यत्नतः। वर्जनीयोगुरुः प्राज्ञैर्दीक्षासु स्थापनादिषु"। मत्स्यसूक्ते त्रयोदशपटले"अपुत्रश्वासपत्नीकः शक्तिहीनोऽथ वामनः। कुब्जः कुष्ठः श्यावदन्तो द्वपत्नीपतिरेव च" तन्त्रसारे रामार्च०च० सदसद्गुरुलक्षणे यथा

"शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेशवान्। शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान्। अध्यात्मध्याननिष्ठश्च मन्त्रतन्त्रविशारदः। निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते। आगमसंहितायाम् "उद्धर्त्तुञ्चैव संहर्त्तुं समर्थो ब्राह्मणोत्तमः। तपस्वी सत्यवादी च गृहस्थो गुरुरुच्यते" इति।

गुरुरपि गृहस्थ एव यथाह ज्ञानार्णवे। "सर्वशास्त्रार्थवेत्ता च गृहस्थो गुरुरुच्यते" गृहस्थेषु पुत्रवतामेवाधिकारः यथा यामले "कलत्रपुत्रवान् विप्रो दयालुः सर्वसम्मतः। दैवे पित्र्येऽरिमित्रे च गृहस्थो देशिको भवेदिति" मुण्डमालायाम् "मध्यमो वैष्णवः प्रोक्तो मध्यम. शैवदीक्षितः। परमादीक्षितो यो वै स एव परमो गुरुः"

आगमसारे "गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः। उकारःशम्भुरित्युक्तस्त्रितयात्मा गुरुः स्मृतः। गकारो ज्ञानसम्पत्त्यै रेफस्तत्त्वप्रकाशकः। उकाराच्छिवतादात्म्यं दद्यादिति गुरुः स्मृतः"। निन्द्यगुरुमाह क्रियासारसमुच्चये "श्वित्री चैव गलत्-

कुष्ठी नेत्ररोगी च वामनः। कुनखी श्यावदन्तश्च स्त्रीजितश्चाधिकाङ्गकः। हीनाङ्गः कपटी रोगी बह्वाशी बहुजल्पकः। एतैर्दोषैर्विहीनो यः स गुरुः शिष्यसम्मतः" यामले "अभिशस्तमपुत्रञ्च कदर्यं कितवं तथा। क्रियाहीनं शठञ्चापि वामनं गुरुनिन्दकम्। जलरक्तविकारं च वर्ज्जयेन्मतिमान् सदा। सदा मत्सरसंयुक्तं गुरुं मन्त्रेषु वर्ज्जयेत्"। वैशम्पायनसंहितायाम् "अपुत्रो मृतपुत्रश्च कुजश्च रोषणस्तथा"। सम्बन्धभेदाद्दूष्यतामाह योगिनीतन्त्रे "पितुर्मन्त्रं न गृह्णीयात् तथा मातामहस्य च। सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च" तथा गणेशविमर्षिण्याम् "यतेर्दीक्षा पितुर्दीक्षा दीक्षा च वनवासिनः। विविक्ताश्रमिणो दीक्षा न सा कल्याणदायिका" अस्यापवादः शक्तियामले "तीर्थाचारव्रतो मन्त्री ज्ञानवान् सुसमाहितः। नित्यनिष्ठो यतिः ख्यातो गुरुः स्यान्नैतिकोऽपि च" रुद्रयामले "न पत्नीं दीक्षयेद्भर्त्ता न पिता दीक्षयेत् सुताम्। न पुत्रञ्च तथा भ्राता भ्रातरं न च दीक्षयेत्। सिद्धमन्त्रो यदि पतिस्तदा पत्नीं स दीक्षयेत्। शक्तित्वेन वरारोहे! न च सा पुत्रिका भवेत्"। इत्यादिनिषेधवचनात् एभ्यो मन्त्रं न गृह्णीयात्। इदन्तु सिद्धमन्त्रेतरविषयं "सिद्धमन्त्रो न दुष्यतीति" वचनात् तथा च सिद्धयामले "यदि भाग्यवशेनैव सिद्धविद्यां लभेत् प्रिये!। तदैव तान्तु दीक्षेत त्यक्त्वा गुरुविचारणाम्" गणेशविमर्षिण्याम् "प्रमादाद्वा तथाऽज्ञानात् पितुर्दीक्षां समाचरन्। प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत्"। पितुरित्युपलक्षणं मातामहादीनामपि। प्रायश्चित्तन्तु अयुतसावित्रीजपः सर्वत्र तथा दर्शनात् तथा च शङ्खः "दशसाहस्रजप्येन सर्वकल्मषनाशिनी"। मत्स्यसूक्ते "निर्वीर्यञ्च पितुर्मन्त्रं शैवे शाक्ते न दुष्यति" इति वचनं कौलिकमन्त्रदीक्षापरम् योगिनीतन्त्रे "शक्तिविद्यामधिकृत्य ततो दीक्षानिषेधात्। यद्वा शाक्ते तारादिविद्यायां न दोषः मत्स्यसूक्ते "निजकुलतिलकाय ज्येष्ठपुत्राय दद्यात्" इति तारामधिकृत्य तथा प्रतिपादनात्। श्रीक्रमेऽपि "मनुर्विमृश्य दातव्यो ज्येष्ठपुत्राय धीमते" उत्तरषट्के च "अयोग्याय न दातव्यमित्याज्ञा परमेश्वरि!। सुशीलाय विनीताय ज्येष्ठपुत्राय धीमते। अनन्तदायिशिष्याय देव्या मन्त्रं प्रदीयते"। तदुक्तं "कथमपि मनुमेनं प्राप्य शिष्याय तस्मै निजकुलतिलकाय ज्येष्ठपुत्राय दद्यादिति" ताराविषयं मत्स्यसूक्ते ताराप्रकरणे तथा दृष्टेः महातीर्थे उपरागे सति सर्वत्र न दोषभाक् तथा च विष्णुमन्त्रमधिकृत्य "साधु पृष्टं त्वया ब्रह्मन् वक्ष्यामि सकलन्तव। ब्रह्मणा कथितं पूर्वं वशिष्ठाय महात्मने। वशिष्ठोऽपि स्वपौत्राय मत्पित्रे दत्तवान् स्वयम्। प्रसन्नहृदयः स्वच्छः पिता मे करुणानिधिः। कुरुक्षेत्रे महातीर्थे सूर्यपर्वणि दत्तवान्" इत्यादि वैशम्पायनसंहितायां शौनकं प्रति व्यासवाक्यम्। योगिनीतन्त्रे "निर्वीर्यञ्च पितुर्मन्त्रं तथा मातामहस्य च। स्वप्नलब्धं स्त्रिया दत्तं संस्कारेणैव शुध्यति"। यत्तु "साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया। सर्वतन्त्रार्थतत्त्वज्ञा सुशीला पूजनेरता। गुरुयोग्या भवेत् साहि विधवा परिवर्ज्जिता। स्त्रियोदीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा स्मृता"। तत्तु गुरोरुपासितमन्त्रपरम्। तथा च भैरवीतन्त्रे "स्त्रीयमन्त्रोपदेशे तु न [illegible]र्यात् गुरुचिन्तनम्"। मातुरिति उपासितेऽष्टगुणं अनुपासिते शुभफलदमित्यर्थः। सिद्धमन्त्रविषयं वेति केचित्। वस्तुतस्तु योगिनीतन्त्रे स्त्रीपदं विधवापरं एकवाक्यतावलात्। अत्र विधवापदम् अवीरापरम्। "विधवायाः सुतादेशात् कन्यायाः पितुराज्ञया। नाधिकारोयतोनार्य्या भार्यायां भर्त्तुराज्ञया" इत्युक्तं न्यायवचनात् नाधिकार इति स्वातन्त्र्येण नाधिकारः। योगिनीतन्त्रे "स्वप्नलब्धे तु कलसे गुरोर्मूर्त्तिं निवेशयेत्। वटपत्रे कुङ्कुमेन लिखित्वा ग्रहणं शुभम्। ततः शुद्धिमवाप्नोति अन्यथा विफलं भवेत्"। इदन्तु सद्गुरोरभावे तत्सम्भवे तस्मादेव गृह्णीयात् "स्वप्ने तु नियमोनहीति" नारदवचनात्। तथा विद्याधराचार्य्यधृतवचनम् "मध्यदेशे कुरुक्षेत्रनाटकोङ्कणसम्भवाः। अन्तर्वेदिप्रतिष्ठानाः आवन्त्याश्च गुरूत्तमाः। मध्यदेश आर्य्यावर्त्तः।" गौड़ाः शाल्वोद्भवाः सौराः मागधाः केरलास्तथा। कोशलाश्च दशार्णाश्च गुरवः सप्त मध्यमाः। कर्णाटनर्म्मदाराष्ट्रकच्छातीरोद्भवास्तथा। कालिङ्गाश्च कलिङ्गाश्च काम्बोजाश्चाधमा मताः। वैष्णवे वैष्णवो ग्राह्यः शैवे शैवश्च शाक्तिके। शैवः शाक्तोऽपि सर्वत्र दीक्षास्वामी न संशयः" निरुत्ततन्त्रे "गुरुं न मर्त्यं ध्यायेत यदि बुध्येत तस्य तु। न कदाचिद्भवेत् सिद्धिर्न मन्त्रैर्देवपूजनैः"
१६ परमेश्वरे पु०। "गुरुर्गुरुतमोधाम" विष्णुस०। सर्वविद्यानामुपदेष्टृत्वात् सर्वेषां जनकत्वाद्वा गुरुः" भा०। "पूर्वेषामपि गुरुः कालेनानवच्छेदात्" पात० सू०। १७ गम्भीरार्थे १८ बलवति १९ पूज्ये च त्रि० २० द्रोणाचार्य्ये

पु० शब्दार्थचि० २पुष्यनक्षत्रे तस्य गुर्वधिष्ठातृकत्वात् "भुव-गुरुकरमूलापौष्णभान्यर्कवारे" ज्यो०त०। स्वार्थे क। भारातिशययुक्ताद्यर्थे। "ततो युधिष्ठिरस्तस्य गुरुकः समपद्यत। स तु भाराभिभूतात्मा न तथाशीघ्रगोऽभवत्" भा० व० १५ ७अ०। "अतिमात्रं लघूनि स्युर्गात्राणि गुरुकाणि च"। "गुरुकावस्थिरावूरू न स्वाविव च मन्यते" सुश्रुतः।

गुरोर्भावः इमनिच् गरादेशः गरिमन् पु०। ष्यञ् गौरव न० तल् गुरुता स्त्री त्व गुरुत्व न०। गुरुभावे पतनासमवायिकारणतावति गुणभेदे। अतिशयेन गुरु इष्ठन्, ईयसुन् गरादेशः। गरिष्ठ गरीयस् अतिगुरौ त्रि० ईयसुनि स्त्रियां ङीप्। गुरुं करोति णिच् गरादेशः गरयति।

**गुरुकुण्डली** स्त्री गुरुर्जीवः प्रधानभ[illegible]दृशी कुण्डली चक्रभेदः। जन्मनक्षत्रभेदेन जन्मविध्यैकैकवर्षाधिप-ज्ञापके चक्रभेदे तत्र हि चक्रे गुरोर्मध्यस्थित्या इतरेषामष्टानां ग्रहाणामष्टदिक्षु स्थित्या च गुरुप्रधानत्वं तत्स्वरूपफलाद्युक्तं पञ्चस्वरायां यथा

"रविश्चन्द्रकुजः सौम्यो गुरुः शुक्रः शनैश्चरः। राहुः केतुश्च विज्ञेया सर्वथा गुरुकुण्डली। कृत्तिकादीनि ऋक्षाणि त्रिराष्टत्ति क्रमाद्न्यसेत्। जन्मर्क्षं खेचरे यत्र जन्माद्यब्दास्ततः क्रमात्"। कुण्डलीद्वयस्य फलमाह। शुभं विधौ बुधे च स्यात् मरणं राहुमन्दयोः। गुरुद्वये महासौख्यं दुःखं स्याद्भौमसूर्य्ययोः"। "पताकी कुण्डली केतोः कुण्डली च बृहस्पतेः। सर्वत्र पापसंयोगे संशयो जायते महान्"।

**गुरुक्रम** पु० गुरुरेव क्रमो यत्र। पारम्पर्य्योपदेशे हला०

**गुरुगीता** स्त्री गुरुस्तवनभूता गीता। गीताभेदे।

**गुरुघ्न** पु० गुरुं गुरुतां हन्ति हन—ढक्। १गौरसर्षपे राजनि० २गुरुहन्तरि त्रि०स्त्रियां ङीप्। [पृषो०। तिलमयूरे त्रि०।

**गुरुपटक** पु० गुरुं गुरुतां दुर्जरतां कराटति कटि—स्ते ये ण्वुल्

**गुरुतम** त्रि० अतिशयेन गुरुः। १अतिगुरौ "त्रयः पुरुषस्यातिगुरवो भवन्ति माता पिता चाचार्य्यश्चेति" विष्णूक्ते २मात्रादौ ३अतिगुरुत्ववति च।४परमेश्वरे पु०। "गुरुर्गुरुतमो धामसत्यः सत्यपराक्रमः" विष्णुस०। "विरिञ्च्यादीनामपि ब्रह्मविद्याप्रवर्त्तकत्वात् गुरुतमः "यो वै ब्रह्माणं विदधाति पूर्वं यश्चास्मै प्रहिणोति वेदम्" इति श्रुतेः भा०। "पूर्वेषामपि गुरुः कालेनानवच्छेदात्" पातसू०। तस्य सर्वेषां गुरूणामुपदेष्टृत्वात् गुरुतमत्वमुक्तम्।

**गुरुतल्प** पु० गुरोः पितुस्तल्पं तल्पं भार्य्या यस्य। १विमातृगन्तरि। स च महापातकी तत्प्रायश्चित्तमाह स्म मनुः। "गुरुतल्पोऽभिभाष्यैनस्तप्ते स्वप्यादयोमये। सूर्म्मीं ज्वलन्तीं वाश्लिष्येत् मृत्युना स विशुध्यति" "मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानीति विष्णुहारीताभ्यां स्वमातृगमनस्यातिपातकत्वेनाभिधानात् परिशेषात् गुरुतल्पपदं विमातृपरम् यथा च गुरुशब्दस्यात्र पितृमात्रपरता तथा गुरुतल्पगशब्दे वक्ष्यते। इत०।२गुरुभार्य्यायाम् "गत्वैतदेव कुर्वीत गुरुतल्पमकामतः" प्रा०वि०व्यासः। "ब्रह्महत्या सुरापानं गुरुतल्पगमनं ब्राह्मणस्वर्णहरणं द्विजातीनां महापातकम्" च्यवनः।

**गुरुतल्पग** पु० गुरोः पितुस्तल्पं भार्य्यां गच्छति गम—ड। विमातृगन्तरि स च महापातकी। महापातकमध्ये गुरुतल्पगमनमुक्तं तत्र गुरुतल्पशब्दार्थनिर्णये बहूनि मतानि सन्ति तानि च पूर्वपक्षीकृत्य निरस्य विमातृगमनपरत्वं प्रा० विवेके निर्णीतं यथा

"तत्र को गुरुः का चाङ्गना। तत्र कश्चित् पितैव गुरुः तथा च मनुः "निषेकादीनि कर्म्माणि यः करोति यथाविधि। सम्भावयति चान्नेन स विप्रो गुरुरुच्यते। याज्ञवल्क्यः "स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति। उपनीय ददद्वेदमाचार्य्यः स उदाहृतः"। क्रियानिषेकादिकाः। आभ्यां गर्भाधानादिक्रियाकर्त्तरि गुरुशब्दस्य सङ्केतितत्वात् पिता गुरुस्तस्याङ्गना स्त्री माता तत्सपत्नी च सा च सवर्णा चोत्तमवर्णा च न हीनवर्णा तद्गमने गुरुतल्पगमनसमानत्वस्य वक्ष्यमाणत्वात् तद्गमनं न महापातकमिति। तदसङ्गतम् आचार्य्यादेरपि गुरुत्वश्रवणात् एतयोर्वचनयोरन्यनिषेधार्थत्वाभावात्। तथा च मनुरेवान्यं गुरुमाह "पिता वै गार्हपत्योऽग्निर्मातााग्निर्दक्षिणः स्मृतः। गुरुराहवनीयस्तु साग्नित्रेता गरीयसी। इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्। गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते। अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः। तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया"। तथा गौतमः "आचार्य्यः श्रेष्ठो गुरूणां मतः" इत्येके। पितरि सङ्केतितत्वादाचार्य्ये गौणं गुरुपदमिति चेन्न आचार्य्यादावपि सङ्केतदर्शनात् यथा विष्णुः "त्रयः पुरुषस्यातिगुरवो भवन्ति माता पिता चाचार्य्यश्चेति"। तथा

देवलः "आचार्य्यश्च पिता ज्येष्ठो भ्राता चैव महीपतिः। मातुलः श्वशुरस्त्राता मातामहपितामहौ। वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवो मताः"। त्राता प्राणरक्षकः वर्णश्रेष्ठः क्षत्रियादीनां ब्राह्मणः। अनेनैकादश गुरवः सङ्केतिताः। कथमनेकेषामेकगुरुशब्दवाच्यत्वमेकस्य प्रवृत्तिनिमित्तस्याभावादिति "चेन्न गुरुरनुगन्तव्यः" इत्यादि श्रुत्वा सदापरितोषणीयत्वादिधर्मस्यैकस्योपाधित्वात् यद्यप्याचार्य्यस्यैव परितोषणीयत्वं श्रूयते तथाप्यन्येष्वतिदिश्यते ततोऽतिदिष्टधर्मोऽप्येकपदप्रवृत्तावुपाधिर्भवति द्विपदप्रवृत्ताविव तद्धर्मसम्बन्धः। शास्त्रीयगुरुशब्दप्रवृत्तिविषयत्वं वोपाधिः। भवतु वा विशेषाग्रहात् कृष्णादिशब्दवदनेकार्थत्वे को दोषः। अथाचार्य्यपरत्वे गुरुशब्दस्य कथमाचार्य्यपत्न्यभिगमने गुरुतल्पातिदेशः तथा च गोतमः "आचार्य्यपुत्रशिष्यभार्य्यासु चैवमिति" तथा याज्ञवल्क्यः "मातुःसपत्नीं भगिनीमाचार्य्यतनयान्तथा। आचार्य्याणीं स्वसुतां गच्छंस्तु गुरुतल्पगः" इति, न एतस्य हीनजातीयपत्न्यभिप्रायेणाप्युपपत्तेः अतिदेशस्योपदेशसापेक्षत्वात् प्रथमात्रगतोपजीव्यगुरुशब्दसङ्कोचे हेत्वभावात्। न च "पितृभार्य्यां समारुह्य मातृवर्ज्जं नराधमः। भगिनीञ्च निजां गत्वा निष्कृतिर्न विधीयते" इति संवर्त्तवचने पितृशब्ददर्शनात् सामान्यवाचिगुरुशब्दे सङ्कोचोऽस्त्विति वाच्यम् एतस्य प्रायश्चित्तविधिपरत्वेनाचार्य्यादिव्यवच्छेदपरत्वाभावात् अन्यथोभयपरत्वे वाक्यभेदापत्तेः। पितृपदस्य गुरोर्विशेषणरूपत्वाभावात् न सामान्यवचनसङ्कोचकत्वम् किञ्च याज्ञवल्क्यस्वरसात् निषेकादिवेददानान्तकर्मकर्त्तुरेवाङ्गना गुर्वङ्गना तद्गमने महापातकं क्षत्रियादीनां न भवेत्तेषां वेदाध्यापकत्वाभावात् किञ्चैवमवेददातृब्राह्मणस्य पितुर्गुरुत्वाभावात् तदङ्गनागमनं महापातकं न स्यात्। किञ्चैवं मातृगमनस्य महापातकत्वे "मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानीति" विष्णुहारीतवचनविरोधश्च स्यात् तस्मात् मातृव्यतिरेकैकादशगुर्वङ्गनागमनमेव महापातकमिति युज्यते देवलवचनादिति। अत्र भवदेवेनोक्तं नात्र "गुरोरङ्गना गुर्वङ्गनेति" षष्ठीसमासः षष्ठीतत्पुरुषसमासस्याश्रयणे निषादस्थपतिवत् षष्ठ्यर्थलक्षणापत्तेः। अतो गुरुश्चासावङ्गना चेति कर्म्मधारयः। गुरुत्वञ्च मातुरेव न मातुः सपत्न्याः शरीरोत्पादकत्वेनोपाधिना मातापित्रोरेव गुरुशब्दाभिधेयत्वात्। अतएवाचार्य्यादिषु गुरुशब्दो गौणस्तद्धर्म्मप्रतिपत्त्यर्थः। ग- गच्छेदित्यत्रागत्या षष्ठीसमासः पत्नीशब्दस्य स्वपरिणीतावचनत्वात्। गुरुश्चासौ पत्नी चेति यदपेक्षया गुरुत्वं तदपेक्षया पत्नीत्वायोगात् न कर्म्मधारयः। इह त्वङ्गनाशब्दस्य स्त्रीमात्रवचनत्वात् युज्यत एवेति। अतोऽत्र गुरुशब्दस्य मातृपरत्वे गुरुपत्नीं न गच्छेदित्यत्रापि मातृपरत्वमेव सामानाधिकरण्याभावात्। "गुरुतल्पोऽभिभाष्यैनः" इत्यत्र गुरुः तल्पं तल्पं कलत्रं यस्येति मातुरेव ग्रहः। अतएव मातुः सपत्नीमिति याज्ञवल्क्यवचने मातुः सपत्न्यामाचार्य्यपत्न्याञ्च गुरुतल्पातिदेशो घटते एवेति, तदसङ्गतम् "मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानीति" विष्णुहारीताभ्यां मातृगमनस्यातिपातकत्वाभिधानात्। न चात्र मातृसपत्नीपरत्वं मातृशब्दस्य मुख्यार्थत्यागापत्तेः जननीवचनत्वात्। न च षष्ठीसमासे लक्षणायामपि मुख्यार्थत्यागः किञ्च कर्म्मधारयसमासे अङ्गनापदवैयर्थ्यापत्तिः गुरुगमनमित्येतावतैवार्थसिद्धेः। दुहितुश्च पितृगमनमतिपातकमेव यथा पितुर्दुहितृगमनेऽतिपातकं पितृनिष्ठं, तथा दुहितुरपि पितृगमनेऽतिपातकं दुहितृनिष्ठम् एवं सर्व्वत्र उभयनिष्ठमेव। किञ्च गुरुपत्नीं न गच्छेदित्यादिषु बहुषु वचनेषु गुरुपत्नी गुरुतल्पगुरुभार्य्यादिपदस्थपत्न्यादिपदानामनर्थकता स्यात् गुरुपदेनैव मातुः प्राप्तेः किञ्च निःसन्दिग्धार्थम् मातृपदमेव प्रयोक्तुमुचितं मुनीनां न तु गुरुपत्न्यादिपदं सन्दिग्धार्थम्। एवं गौरवातिशयोऽपि वक्ष्यते। अतएव "सहस्रेण पितुर्माता गौरवेणातिरिच्यते" इति। जिकनस्तु आचार्य्यपितृमहीपतीनामत्र गुरुशब्देनोपादानम् यथा देवलः "उपाध्यायराजपितृभार्य्यागमनानि गुरुतल्पगमने कष्टतमानि"। पापातिशययुक्तानीत्यर्थः। उपाध्यायोऽत्राचार्य्यः यथा बौधायनः "पितुर्गुरोर्नरेन्द्रस्य भार्य्यां गत्वा प्रमादतः। गुरुतल्पी भवेत्तेन पूर्व्वोक्ता तत्र निष्कृतिः" पूर्व्वोक्ता निष्कृतिः तप्तलौहशय्याशयनादिः। गुरुरत्राचार्य्यः "नरेन्द्र-ग्रहणाद्राजाऽत्राभिषिक्तक्षत्रियः। अतएव "राज्ञी प्रव्रजिता धात्री" इत्यादिषु राज्ञीपदं वैश्यन्दपतिपत्नीपरम् "आचार्य्याणीं स्वसुतामित्याचार्य्याणीपदं हीनवर्णतत्पत्नीपरमिति तच्चिन्त्यम्। उच्यते यद्यपि देवलवचनेनैकादश गुरवो दर्शिताः तथाप्यत्र पितैव गुरुपदग्राह्यो नाचार्य्यादिः तत्पत्नीगमनस्य गुरुतल्पगमनसमत्वानुपपत्तेः अनुपा-

तकत्वश्रुतेश्च। तथा च विष्णुः "पितृपितृव्यमातामहमातुलश्वशुरन्टपपत्न्यभिगमनं गुरुदारगमनसमं पितृस्वसृमातृस्वसृस्वसृगमनं च" इत्युपक्रम्य "अनुपातकिनस्त्वेते महापातकिनो यथा। अश्वमेधेन शुद्ध्यन्ति तीर्थानुसरणेन वा"। न चात्राचार्य्यादिपत्नीनां हीनवर्णानां ग्रहणं न्टपस्य क्षत्रियेतरस्य पत्न्या इति युज्यते आचार्य्यभार्य्यादेर्विशेषत्वात् गुर्वङ्गनाशब्दस्य सामान्यत्वात् सामान्यविशेषन्यायेन गुर्वङ्गनाशब्द एव सङ्कोचस्य युक्तत्वात् पितृपत्न्यास्तु हीनवर्णाया युक्तमेव मातृगमनस्यातिपातकत्वात् सपत्नीमातृगमनस्य गुर्वङ्गनागमनत्वेन महापातकत्वात् अर्थादनुपातके लघुनि हीनवर्णायाः पितृपत्न्या ग्रहणं तथा च याज्ञवल्क्यः "मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा। आचार्य्याणीं स्वाञ्च सुतां गच्छंस्तु गुरुतल्पगः"। गुरुतल्पगो गुरुतल्पगवदित्यर्थः। भगिन्यादिषु गुरुतल्पगत्वानुपपत्तेः। अत्र सुताऽसवर्णा ग्राह्या सवर्णासुतागमनस्यातिपातकत्वात् संवर्त्तः "पितृव्यदारगमने भ्रातृभार्य्यागमे तथा। गुरुतल्पव्रतं कुर्य्यान्नान्या निष्कृतिरुच्यते"। अत्र गुरुतल्पव्रतातिदेशात् पितृव्यादिभार्य्यागमनं न गुरुतल्पगमनमित्यवगम्यते अतएव विष्णुवचने न्टपाचार्य्यपत्नीगमनस्यानुपातकत्वश्रुतेः पितुर्गुरोर्नरेन्द्रस्य" इति बौधायनवचनेऽपि गुरुतल्पपदं गौणम्। अत्रापि पितृभार्य्या हीनवर्णा ग्राह्या विष्णुवचनैकवाक्यत्वात् अतः पितैव गुरुर्मनुवचनात् तत्पत्न्येव गुर्वङ्गना सा तु न माता किन्तु सपत्नीमाता सा च सवर्णोत्तमवर्णा च न तु हीनवर्णा विष्णुवचनेऽनुपातकत्वश्रुतेः एतेनैकादशानामेव गुरूणां मुख्यपत्नीगमनं महापातकं विष्णुवचने तु पत्नीपदममुख्यपत्नीपरमिति कल्पतरूक्तं निरस्तमेव। यद्यपि पञ्चानां पितृत्वं श्रूयते यथा "जनकश्चोपनेता च यश्च विद्यां (कन्यां) प्रयच्छति। अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः" इति तथापि जनकव्यतिरिक्ते तद्गौणं लोके जनक एवाभिधानात् एकस्य प्रवृत्तिनिमित्तस्याभावात् ननु जनकस्यापि संस्कारकर्त्तुरेव मनुना गुरुत्वमुक्तं याज्ञवल्क्येन च "वेददातृत्वेनेति कथं संस्कारकर्त्तुः पितुरवेददातृणां क्षत्रियादीनाञ्च गुरुत्वमिति न देवलवचनेन पितृमात्रेण गुरुत्वावगतेः संस्कारकर्तृत्वं वेददातृत्वञ्चातिशयार्थमिति" प्रा०वि०

**गुरुतल्पिन्** पु० गुरोस्तल्पं गन्तृत्वेनास्त्यस्य इनि। विमातृगन्तरि गुरुतल्पगशब्दे उदा०।

**गुरुताल** पु० "एकएव गुरुर्यत्र गुरुतालः स कथ्यते" संगी०दा० उक्ते अन्यवर्णरहिते गुरुतालवति तालभेदे।

**गुरुत्व** न० गुरोर्भावः त्व। वैशेषिकादिमतसिद्धे पतनहेतौ द्रव्यनिष्ठे गुणभेदे "अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत्। अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम्। तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि" भाषा० "पतने आद्यपतने" मुक्ताव०। तस्याप्रत्यक्षत्वे कारणं कणा० सू०वृत्त्योर्दर्शितं यथा

"ननु गुरुत्वमप्यनेकद्रव्यसमवेतं रूपमहत्त्वसमानाधिकरणञ्चेति कथं न प्रत्यक्षमत आह" उप०सू० "तस्य भावादव्यभिचारः" सू०।

"तस्य रूपत्वादेः सामान्यस्य उद्भवस्य च गुरुत्वेऽभावान्न गुरुत्वं प्रत्यक्षम्। ननु मा भूत् तत्र रूपत्वादिकं तथापि तत्प्रत्यक्षं स्यादत आह अव्यभिचार इति एकैकेन्द्रियग्राह्यत्वं प्रति रूपत्वादीनां पञ्चानां जातीनाम् अव्यभिचारो नियम एव यत्रैव रूपत्वादिपञ्चकान्यतमत् तत्रैव बाह्यैकैकेन्द्रियग्राह्यत्वं तद्व्यतिरेकादित्यर्थः, स्तुते तु गुरुत्वाधिकारस्यास्फुटत्वात् प्रशस्तदेवैरतीन्द्रियेषु मध्ये परिगणितमपि वल्लभाचार्य्यैः स्पार्शनमुक्तं गुरुत्वे।" उप० सू०।

गुरुत्वञ्च प्रतिबन्धकाभावे एव यथा पतनेऽसमवायिकारणं तथा "संयोगाभावे गुरुत्वात् पतनमित्यादि-" "संस्काराभावे गुरुत्वात् पतनमित्यन्तं कणादसूत्रवृत्तिवाक्यं ५४२पृ०दर्शितम्। तच्च गुरुत्वं पृथ्वीसलिलयोर्धर्मः इति नैयायिकादयः सांख्यास्तु "गुरु वरणकमेव तमः" इत्युक्तेः तमोगुणस्यैव धर्म इत्याहुः तच्च वाक्यं गुणवृत्तिशब्दे २६०८पृ० दर्शितम् "स्टष्टिगुरुत्वाद्वपुषोनरेन्द्रः" "मेने पराद्ध्यमात्मानं गुरुत्वेन जगद्गुरोः" रघुः। तल्। गुरुताप्यत्र स्त्री "नाकृतिगुरुता गुरुता विक्रमगुरुता गरीयसी ख्याता" उद्भटः। "अवधार्य्य कार्य्यगुरुताम्" माघः। "गुरुता महत्त्वेन" त्वमुनीत्व०ता उक्ते मण्डलैश्वर्य्ये च। [ शब्दे ४६८पृ० दृश्यम्।

**गुरुदैवत** पु० गुरुर्दैवतमस्य। पुष्यनक्षत्रे हेमच०। अश्लेषा-

**गुरुपत्नी** स्त्री ६त०। गुरुः आचार्य्यः पतिर्यस्या वा ङुङ् ङीष्। गुरोः सवर्णायामसमवर्णायाञ्च स्त्रियाम्। तयोर्द्वित्तिभेदो मनुनोक्तो यथा

"गुरुवत् प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः। असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः। अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च। गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम्। गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः। पूर्णविंशतिवर्षेण गुणदोषौ विजानता" "कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि। विधिवद्वन्दनं कुर्य्यादसावहमिति ब्रुवन्। विप्रोष्य पादग्रहणमन्वहं चाभिवादनम्"। "गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन्" मनुः। गुरोः पितुः स्त्री। २मातरि ३विमातरि च। [शब्दरत्ना० ४वङ्गे धातौ न० हेम०।

**गुरुपत्रा** स्त्री गुरु पाके दुर्ज्जरं पत्रमस्याः। १तिन्तिडीवृक्षे

**गुरुपुत्र** पु० ६त०। आचार्यादिगुरूणां पुत्रे। तत्र वृत्तिभेदो मनुना दर्शितो यथा

"श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत्। गुरुपुत्रेषु चार्य्येषु गुरोश्चैव स्वबन्धुषु" मनुः "गुरुपुत्रश्चाताऽध्याप्योऽधिकवयाश्च बोद्धव्यः शिष्यबालसमवयसामनन्तरं विशेषस्य वक्ष्यमाणत्वात्" कुल्लू०। "बालः समानजन्मा वा शिष्यो वा यज्ञकर्मणि। अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति। उत्सादनञ्च गात्राणां स्नापनोच्छिष्टभोजने। न कुर्य्यात् गुरुपुत्रस्य पादयोश्चावनेजनम्" मनुः

**गुरुभ** न० ६त०। १पुष्यनक्षत्रे "गुरुभं श्रवणस्तथाश्विनीहस्तम्।" वृ०सं० ५५अ०। २धनुषि ३मीने च राशौ।

**गुरुमर्द्दल** पु० नित्यकर्म०। डिण्डिमवाद्ये शब्दर०।

**गुरुरत्न** न० गुरोः प्रियं रत्नम्। १पुष्परागे मणौ राजनि०। २गोमेदे च तस्य तत्प्रियत्वं नवरत्नशब्दे दृश्यम् गुरुमण्यादयोऽप्यत्र।

**गुरुराहु** पु० गुरुणा सह राहुर्यत्र। कालाशुद्धिहेतौ राहुजीवयोर्योगे "प्रतदीचे न कुर्वीत तमोयुक्ते बृहस्पतौ" प्रतदीचे इति नित्येतरकर्मोपलक्षणपरम् "एकराशौ स्थितौ स्यातां यदि राहुबृहस्पती। विवाहव्रतयज्ञादि सर्वं तत्र विवर्ज्जयेत्" स्मृतिसारे ज्यो० वचनात्। "ऋक्षभेदेऽप्येकराशौ सम्पर्कौ यदि वाऽनयोः। गुरुराह्वोरपि तदा त्यजेद्दिह्नाश्च संशयः" भविष्यपु०। अत्र गुरोर्दूषितत्वं हेतुः। "यत्र यत्र स्थितो जीव स्तमोयोगेन दुष्यते। उपहासाय किन्न स्यादसतृष्णो मनीषिणाम्"। गुरुचाण्डालादयोऽप्यत्र।

**गुरुवर्च्चोघ्न** पु० गुरुवर्च्चो विष्टाविबन्धस्तं हन्ति हन–टक्। (पातिलेबु) जिम्बाके शब्दच०।

**गुरुवर्त्तिन्** पु० गुरौ गुरुकुले वर्त्तते वृत–णिनि। १गुरुकुलवासिनि ब्रह्मचारिणि गुरुवासिन्प्रभृतयोऽप्यत्र। "अष्टाशीतिसहस्राणां यतीनामूर्द्ध्वरेतसाम्। स्मृतं स्थानं तु यत्तेषां तदेव गुरुवासिनाम्" शब्दार्थचि० धृतवाक्यम्। गुरौ वर्त्तते णिनि। २गुरुशुश्रूषके च।

**गुरुवर्ष** न०पु० ६ त० ज्योतिषोक्ते गुरोर्मध्यगत्या राशिभोगकालात्मके वर्षभेदे वृ०सं० ८अ० वृहस्पतिचाराध्याये तद्वर्षमध्ये गुरोरस्तोदयात् तन्नामभेद उक्तो यथा "नक्षत्रेण सहोदयमुपगच्छति येन देवपतिमन्त्री। तत्सञ्ज्ञं वक्तव्यं वर्षं मासक्रमेणैव। वर्षाणि कार्त्तिकादीन्याग्नेयाद्भद्वयानुयोगीनि। क्रमशस्त्रिभं तु पञ्चममुपान्त्यमन्त्यं च तद्वर्षम्"। "सहोदयमस्तं वा येन यातीति" पाठं प्रकल्प्य

"नक्षत्रेण गुरुभुज्यमाननक्षत्रेण आग्नेयं कृत्तिका। पञ्चमं फाल्गुनम् अन्त्यमाश्विनं उपान्त्यं भाद्रपदम्। "अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभोमतः। शेषामासाद्विभाज्ञेयाः कृत्तिकादिव्यवस्थया, इति वचनात्। "द्वे द्वे चित्रादितारानां पूर्णपर्वेन्दुसङ्गते। मासाश्चैत्रादयोज्ञेयास्त्रिकैः षष्ठान्त्यसप्तमाः इति सङ्क्षेपवाक्यात् पर्वेन्दुसङ्गते पौर्णमासीसंयुते। तदेकवाक्यतया पूर्ववचने पौर्णमासीलाभः। तथा च यथा मासानां पौर्णमास्यां कृत्तिकादिसम्बन्धात् कार्त्तिकादित्वं तथा वर्षाणां वृहस्पतेरस्तोदयसम्बन्धात् कार्त्तिकादित्वं तेन कृत्तिकारोहिण्योरेकतरस्मिन् वृहस्पतेरस्तोदयैकतरलाभे कार्त्तिकवर्षम् एवं मार्गशीर्षादि। यत्र वर्षद्वयघटकयोर्नक्षत्रयोरेकतरस्मिन्नस्तं गतो गुरुरन्यस्मिन्नुदेति तत्र का गतिरिति चेत् कार्त्तिकोत्तरं मार्गशीर्षं तदुत्तरं पौषमित्यादिक्रमाद्गतिः" मल० त० व्याख्यातम्। "नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्वान्तयोगतः। कार्त्तिक्यादिषु संयोगे कृत्तिकादिद्वयं द्वयम्। अन्त्योपान्त्यौ पञ्चमश्च त्रिधा मासत्रयं स्मृतम्। वैशाखादिषु कृष्णे च योगः पञ्चदशे तिथौ। कार्त्तिकादीनि वर्षाणि गुरोरस्तोदयात् तथा" सू० सि० तस्य रङ्ग० व्याख्या अब्दशब्दे ३७१ पृ० दर्शितापि स्मरणार्थं दिङ्मात्रमत्रोच्यते "बृहस्पतेः सूर्य्यसान्निध्यदूरत्वाभ्यामस्तादुदयाद्वा वैशाखादिषु द्वादशसु मासेषु कृष्णपक्षे पञ्चदशे तिथौ अमायामित्यर्थः चकारः पौर्णमासीसम्बन्धसमुच्चयार्थकः। योगो दिननक्षत्रसम्बन्धः। कार्त्तिकादीनि द्वादश वर्षाणि। वैशाखकृष्णपञ्चदश्याममायां गुरोरस्ते तस्य (पौर्णमास्यां वा)

उदये जाते सति तदादि गुरुवर्षं कृत्तिकादिनक्षत्रसम्बन्धात् कार्त्तिकसंज्ञं भवति। अमेत्यत्युपलक्षणम् तेन यद्दिने गुरोरस्तोदयौ तद्दिने यच्चन्द्राधिष्ठितनक्षत्रं तत्संज्ञं वार्हस्पत्यं वर्षं भवतीति तात्पर्य्यम्” संक्षेपः। अत्र चन्द्राक्रान्तनक्षत्रवशेन गुरुवर्षसंज्ञायाः कार्त्तिकादिशब्दस्य योगरूढत्वमाश्रित्य रघुनाथेनोक्तिः। तथाहि “नक्षत्रेण युक्तः कालः” पा० सूत्रे नक्षत्रपदस्य चन्द्राधिष्ठिततत्समीपस्थनक्षत्रपरत्वमन्यथाराशिचक्रान्तर्गततत्तन्नक्षत्राणां कालभेदेनोदयात्तद्योगस्य प्रतिदिनं सत्त्वेन नक्षत्रयोगमात्रस्याव्यावर्त्तकत्वम्। तस्य च “लुबविशेषे” पा० लुप् लुप्ताऽणा प्रत्ययेन च चन्द्राधिष्ठितकृत्तिकादिनक्षत्रयुक्तस्य तत्समीपस्थरोहिण्यादियुक्तस्य च कालस्य बोधनम् न तु गुरुभुज्यमाननक्षत्रयुक्तकालस्य बोधनम्। स च कालः यत्रास्ति अर्श०अचि कार्त्तिकादेर्वर्षस्य बोधः। रघु०मते तु कार्त्तिकशब्दे १८४८पृ०दर्शितजयादित्यव्याख्यानुसारेण “साऽस्मिन् पौर्णमासीति संज्ञायामिति” पा०सूत्रे अस्मिन्निति पदस्यार्थमासमासवर्षपरत्वेऽपि वर्षपरत्वपक्षे अनेकपूर्णिमायाः वर्षघटकत्वेन तद्योगेन संज्ञाविशेषानाधायकत्वेन योगार्थाभावात् केवलरूढत्वं पारिभाषिकत्वं वाश्रित्य गुरुभुज्यमाननक्षत्रे गुरोरस्तोदयवशात् तन्नामोक्तिरिति मतभेदः। उभयमतेऽपि उदयशब्दस्य सूर्य्यसान्निध्यविशेषोत्तरमुदयपरता न तु प्रत्यहं कालभेदेन जायमानोदयगिरिसम्बन्धमात्रपरता तस्य सदातनत्वेनाविशेषात्। तत्राप्ययं विशेषः यद्दिने गुरोरस्तोदयौ तद्दिने यच्चन्द्राधिष्ठितनक्षत्रं तत्संज्ञं वार्हस्पत्यं वर्षमिति रघुनाथोक्तिः अमायामस्तोदययोरेव बोध्या। अमायां हि सूर्यचन्द्रयोरेकराशिस्थत्वेन गुरोरपि तत्रस्थितत्वेनास्तत्वात्। पूर्णिमायान्तु नैतत्सम्भवः तदा चन्द्रस्य सूर्य्यात् सप्तमराशिस्थत्वेन गुरोश्चन्द्राधिष्ठितनक्षत्रस्थत्वेऽस्तत्वासम्भवात्। अत्र पूर्णिमायां गुरोरस्तोदययोश्चन्द्राधिष्ठितनक्षत्रं विनाऽपि सम्भवात् तत्र जीवभुज्यमाननक्षत्रनाम्नैव वर्षसंज्ञा तदभिप्रायेणैव “ज्यैष्ठाभूद्योपगे जीवे” इति वक्ष्यमाणवचनं द्रष्टव्यम् नक्षत्रेण सहोदयमित्यस्य “नक्षत्रेण गुरुभुज्यमाननक्षत्रेणेति” रघु०व्याख्या च बोध्या। रघुनाथमते तु नक्षत्रेण चन्द्राक्रान्तनक्षत्रेण सह चन्द्रार्काभ्यां समभित्येव व्याख्या अमायाञ्च तयोरेकराशिस्थत्वात् तयोरुक्तिः अस्मिन् पक्षे च सह शब्दस्य सार्थक्यं रघु०मते तु सहशब्दवैयर्थ्यं बोध्यम्। वस्तुतः चान्द्रमाससंज्ञाभेदे चन्द्राक्रान्तनक्षत्रस्य प्रयोजकत्ववत् गुरुवर्षसंज्ञाभेदे गुरुभुज्यमाननक्षत्रस्यैव प्रयोजकत्वं युक्तमन्यवर्षसंज्ञाभेदेऽन्याक्रान्तनक्षत्रस्य प्रयोजकत्वानौचित्यात्। अत्रेदं बोध्यम् “द्वादशप्रतिभं हत्यस्ते इत्युक्तेः” ७२द्वादशतिथ्यावनदिनैर्वार्द्धक्यास्तत्ववाल्यसम्भवेन वार्द्धक्यवाल्यकालपरित्यागेन अस्तकालस्य तिथ्यात्मकत्वेनामायामस्तत्वे पूर्णिमायामुदयः पूर्णिमायामस्तत्वेऽमायामुदयः। अमाया अपि द्वादशभागात्मकत्वेन सूर्य्याक्रान्तांशात् “एकादशमरेजस्य” सू०सि० उक्तकादशांशातिक्रमे गुरोरुदयसम्भवः। रघुनाथेन “संहितायामस्तोदयसम्बन्धात् वर्षोक्तिः परन्त्विदानीमुदयादुवर्षव्यवहारो गणकैर्मन्यते इत्युक्तत्वात् गुरोरुदयवशादेव तद्वर्षगणना कार्य्या। अतएव “अस्तोदयात्तथा” सू०सि० वाक्यस्य अस्तोत्तरं सूर्य्यसान्निध्यविशेषाधीनास्तकालादुत्तरम् उदय इति व्याख्या अतएवैकवचनप्रयोगः अतएव च हृ०स०“नक्षत्रेण सहोदयमुपगच्छति येनेति” उदयमात्रस्य वर्षनामप्रयोजकतोक्तिः। तत्र “नक्षत्रेण सहोदयमस्तं वा येन यातीति रघुनन्दनधृतपाठश्छन्दोभङ्गदोषादनादेयः। अत्रेदं बोध्यं पक्षमतेन्यूनाधिकसम्भावनया ततोऽर्वाक् पश्चाद्वा उदयः सम्भाव्यते इत्यतोऽमेत्युपलक्षणमित्युक्तम्। चन्द्राधिष्ठितनक्षत्रद्योतनायैव सू०सि०“वैशाखादिषु कृष्णे च योगे पञ्चदशे तिथावित्युक्तं “या वैशाखस्यामावास्या या रोहिण्या संवध्यते” इत्युक्तेः प्रायेण तस्यां रोहिणीसम्बन्धः सम्भाव्यते रोहिणीसम्बन्धे च वर्षस्य कार्त्तिकत्वं रौहिण्याश्चन्द्राधिष्ठितकृत्तिकासमीपस्थत्वात् अतएव नक्षत्रद्वयसम्बन्धेन कार्त्तिकत्वादित्वकथनम्। तथा चायमर्थः। ३।४। नक्षत्रयोः कार्त्तिकम्। ५।६। मार्गशीर्षम्। ७।८। पौषम्। ९।१०। माघम्। ११।१२।१३। फाल्गुनम्। १४।१५। चैत्रम्। १६।१७। वैशाखम्। १८।१९। ज्यैष्ठम्। २०।२१। आषाढ़म् २२।२३। श्रावणम्। २४।२५।२६। भाद्रम्। २७।१।२। नक्षत्रेषु आश्विनं वर्षम्। एवं द्वादश वर्षाणि भवन्ति। तेन चन्द्राधिष्ठितशब्दस्य तदाक्रान्ततत्समीपस्थपरत्वम् “नक्षत्रेण युक्तः कालः” पा०नक्षत्रशब्दस्य तादर्थ्यकत्वेन तत्प्रत्ययार्थकप्रयोगेन तदर्थत्वौचित्यात्। अतः कार्त्तिकवर्षस्य रोहिणीनक्षत्रसम्बन्धेऽपि सम्भवः। अतएव “ज्यैष्ठे संवत्सरे चैव ज्यैष्ठमासस्य पूर्णिमा” इति “ज्येष्ठा

मूलोपगे जीवे वर्षं स्यात् षष्ठदैवतम्” इत्युक्तिर्दृष्टा। एवं कार्त्तिकादिगुरुवर्षनिमित्तेऽवधारिते इदानीं चिन्त्यते यथा चान्द्रमासस्य तत्तन्नक्षत्रयुक्तपौर्णमासी-युक्तत्वेऽपि तद्घटितत्वेन शुक्लप्रतिपदादिदर्शान्तस्य “साऽस्मिन् पौर्णमासीति संज्ञायाम्” पा॰ इत्यण्प्रत्यया-न्तार्थतया ग्राह्यता तथा “वैशाखादिष्वित्यादिना गुरोरस्तोदयसम्बन्धात् गुरुवर्षत्वेऽपि तस्य कतम आद्य-न्तकाल इति सन्देहे अविशेषात् चान्द्रवर्षस्य सौरवर्षस्य वा आद्यन्तकाल एव तस्याद्यन्तकाल इति केचित्। तन्न नक्षत्रसम्बन्धेन चान्द्रमासस्य पक्षे “साऽस्मिन् पौर्णमासीति” पा॰विहिताण्ण तत्तन्नक्षत्रयुक्तपौर्णमासी-घटितकालस्य बोधनात् तदादित्वौचित्यात्। गुरुवर्षपक्षे तु तथाभूतपौर्णमासीसम्बन्धाप्रयोजकत्वात् न चान्द्रादि-वर्षादित्वकल्पनं किन्तु गुरोर्मध्यगत्या राशिभोगारम्भा-न्तकाल एव कार्त्तिकादिगुरुवर्षाद्यन्तकालः वक्ष्यमाणवच-नजातेभ्यः। रघु॰ना॰मते तदादीत्युक्तेः माघादिवत् गुरो-रस्तोदयादिकालाद्यन्तकाल एव आश्विनादेर्गुरुवर्षतया तदाद्यन्तकालो युक्त इतरस्यासन्निहितत्वात् इति भेदः। तत्र वर्षं तदीयोदयादियुक्ततदीयमध्यमराशिभोगावच्छि-न्नकालः, अवदयाब्दे२७१पृष्ठे दर्शितायाः “वृहस्पतेरस्त उ-दये वा जाते सति तदादि वृहस्पतिवर्षमिति” सूर्य्यसिद्धा-न्तटीकायां रङ्गनाथेन तदादीत्युक्तेः तदादित्वेति भेदः। तन्मते मध्यमराशिपदं च राशिचक्रान्तर्गतत्रिंशांशपरं तेन यतमांशे उदयः पुनः राश्यन्तरे ततमेऽंशे उदय-कालपर्य्यन्तः राशिशब्दार्थः। अन्यमते तु राशिपदं मेषादिराशिपरं तेन तदीयराशिभोगारम्भकालावधि तदवसानपर्य्यन्त एवाश्विनादिवर्षाणामाद्यन्तकालः। इदमेव न्याय्यः “वृहस्पतेर्मध्यमराशिभोगात् संवत्सरं सांहितिका वदन्ति” सि॰ शि॰ उक्तेः “कल्पा-दितो मध्यमजीवभुक्ता ये राशयः षड्हृतावशेषाः। संवत्सरास्ते विजयाश्विनाद्या इतीष्यमाने किल संहितो-क्तमिति” तत्प्रत्यपाठान्तरात् “कल्पाद्यभक्ता गुरुराशयो ये संवत्सराः स्युर्विजयादयस्ते। बभाषिरे सांहितिका हि पूर्वं वर्षाणि तस्याश्विनपूर्वकाणि” श्रीपतिसमुच्चयोक्तेश्च। तेन मध्यमराशिभोगकालस्य गुरोरस्तोदयादाश्विनादिवर्ष-संज्ञा। तथा च गुरोरेकैकमध्यमराशिभोगकालावच्छिन्नं गुरुवर्षमिति स्थिते यस्मिन् वर्षे गुरोरुदयास्तकाले अश्वि-न्यादियोगस्तस्य वर्षस्याश्विनादिसंज्ञा एवं गुरुवर्षस्यैव चान्द्रवर्षसौरवर्षयोरप्रवेशद्विप्रवेशाभ्यां तदीयाधिमासलुप्त-वर्षोत्कीर्त्तनस्य सङ्गच्छते यथाह मुहूर्त्तकल्पद्रुमे “चेत् स्पष्टया वाप्यथ मध्यगत्या राश्यन्तरं यत्र च चान्द्रवर्षे। गुरुर्न यायादधिवत्सरोऽधिमासेन तुल्यः स शुभेषु वर्ज्यः”। यशोधरतन्त्रे “एकस्मिन् रविवर्षे गौरववर्षद्वया-वसानं चेत्। तत्रवदस्युगेनमेयं विलुप्तसंवत्सरं प्राहुः”। ज्योतिर्विदाभरणे “गुरुसंक्रमयुग्मवत्समा गदिता सा ननु लुप्तसंज्ञिता। न बुधैर्गदिता शुभेहिताऽधिसमा गीष्पति संक्रमोज्झिता”। अतः सौरचान्द्रवर्षातिरिक्त एव आश्वि-नादिगुरुवर्षः गुरोः उदयकालावधिः पुनरुदयकालपर्यन्तः, तदीयैकैकमध्यमराशिभोगकालावच्छिन्नो वा स्वीकार्य्यः इति तदादित्वमेव तस्येत्येवमवसीयते। एवञ्च महा-ज्यैष्ठ्यादियोगेऽपि तदाद्यन्त एव ज्यैष्ठोग्राह्यः।

कार्त्तिकादिगुरुवर्षफलं तद्वर्षस्यैव विष्णादिद्वादशवर्षद्व-पयुगानि प्रत्येकतदन्तर्गतसंवत्सरादिवर्षपञ्चकस्य विशेष संज्ञा इत्येवं षष्टिवर्षास्तत्फलञ्च वृ॰ सं॰ उक्तं यथा “शकटानलोपजीवकगोपीडाव्याधिशस्त्रकोपश्च। वृद्धिस्तु रक्तपीतककुसुमानां कार्त्तिके१ वर्षे। सौम्ये२ (मार्गे) ऽब्देऽनावृष्टिर्मृगाखुशलभाण्डजैश्च सस्यवधः। व्या-धिभयं मित्रैरपि भूपानां जायते वैरम्। शुभ-कृज्जगतः पौषो३ निवृत्तवैराः परस्परं क्षितिपाः। द्वित्रिगुणो धान्यार्घः पौष्टिककर्मप्रसिद्धिश्च। पितृपूजा-परिवृद्धिर्माघे४ महर्द्धिः सर्वभूतानाम्। आरोग्यवृष्टि-धान्यार्घसम्पदो मित्रलाभश्च। फाल्गुनवर्षे५ विद्यात् क्वचित् क्वचित् क्षेमवृष्टिसस्यानि। दौर्भाग्यं प्रमदानां प्रबलाश्चौरा नृपाश्चोग्राः। चैत्रे६ मन्दा वृष्टिः प्रिय-मन्नं क्षेममवनिपा मृदवः। वृद्धिस्तु कोशधान्यस्य भवति पीडा च रूपवताम्। वैशाखे७ धर्मपरा विगतभयाः प्रमुदिताः प्रजाः सनृपाः। यज्ञक्रियाप्रवृत्तिर्निष्पत्तिः सर्वसस्यानाम्। ज्यैष्ठे८ जातिकुलधनश्रेणीश्रेष्ठा नृपाः सधर्मज्ञाः। पीड्यन्ते धान्यानि च हित्वा कङ्गुं शमी-जातिम्। आषाढे९ जायन्ते सस्यानि क्वचिद्वृष्टि-रन्यत्र। योगक्षेमं मध्यं व्यग्राश्च भवन्ति भूपालाः। श्रावणवर्षे१० क्षेमं सम्यक् सस्यानि पाकमुपयान्ति। क्षुद्रा ये पाषण्डाः पीड्यन्ते ये च तद्भक्ताः। भाद्रपदे११ वल्लीजं निष्पत्तिं याति पूर्वसस्यं च। न भवत्यपरं सस्यं क्वचित् सुभिक्षं क्वचिच्च भयम्। आश्वयुजे१२ऽब्देऽजस्रं पतति जलं प्रमुदिताः प्रजाः क्षेमम्। प्राणचयः

प्राणभृतां सर्वेषामन्नबाहुल्यम् । उदगारोग्यसुभिक्ष-
क्षेमकरो वाक्पतिश्चरन् भानाम् । याम्ये तद्विपरीतो
मध्येन तु मध्यफलदायी । विचरन् भद्वयमिष्टस्तस्मार्धं
वत्सरेण मध्यफलः । सस्यानां विध्वंसी विचरेदधिकं
यदि कदाचित् । अनलभयमनलवर्णे व्याधिः पीते
रणागमः श्यामे । हरिते च तस्करेभ्यः पीड़ा रक्ते
तु शस्त्रभयम् । धूमाभेऽनावृष्टिस्त्रिदशगुरौ नृपवधो
दिवा दृष्टे । विपुलेऽमले सुतारे रात्रौ दृष्टे प्रजाः
स्वस्थाः । रोहिण्योऽनलभं च वत्सरतनुर्नाभिस्त्वषाढ़ा-
द्वयं सार्पं९ हृत् पितृदैवतं१० च कुसुमं शुद्धैः शुभं तैः
फलम् । देहे क्रूरनिपीड़ितेऽग्न्यनिलजं नाभ्यां भयं
क्षुत्कृतम्, पुष्पे मूलफलक्षयोऽथ हृदये सस्यस्य नाशो
ध्रुवम् । गतानि वर्षाणि शकेन्द्रकालाद्धतानि रुद्रैः११गु-
णयेच्चतुर्भिः । नवाष्टपञ्चाष्टयुतानि कृत्वा विभाजयेच्छून्य-
शरागरामैः३७५० । फलेन युक्तं शकभूपकालं संशोध्य
षष्ट्या विषयैः५ र्विभज्य । युगानि नारायणपूर्वकाणि ल-
ब्धानि शेषाः क्रमशः समाः स्युः । एकैकमब्देषु नवा-
हतेषु दत्त्वा पृथग्द्वादशकं क्रमेण । हृत्वा चतुर्भि-
र्वसुदेवताद्यान्युडूनि शेषांशकपूर्वमब्दम् । विष्णुः१
सुरेज्यो२ वलभिद्३ हुताश४ स्त्वष्टो५ त्तरप्रोष्ठपदाधि-
पश्च६ । क्रमाद्युगेशाः पितृ७ विश्व८ सोमाः९
शक्रानलाख्या१० ऽश्वि११ भगाः१२ प्रदिष्टाः । संवत्सरो-
ऽग्निः परिवत्सरोऽर्कः इदादिकः शीतमयूखमाली ।
प्रजापतिश्चाप्यनुवत्सरः स्या दिद्वत्सरः शैलसुतापतिश्च ।
वृष्टिः समाद्ये प्रमुखे द्वितीये प्रभूततोया कथिता तृतीये ।
पश्चाज्जलं मुञ्चति यच्चतुर्थं स्वल्पोदकं पञ्चममब्दमुक्तम् ।
चत्वारि मुख्यानि युगान्यथैषां विष्णिन्द्रजीवानलदैव-
तानि । चत्वारि मध्यानि च मध्यमानि चत्वारि चा-
न्त्यान्यधमानि विद्यात् । आद्यं धनिष्ठांशमभिप्रपन्नो
माघे यदा यात्युदयं सुरेज्यः । षष्ट्यब्दपूर्वः प्रभवः स
नाम्ना प्रवर्त्तते भूतहितस्तदाब्दः । क्वचित्त्ववृष्टिः पव-
नाग्निकोपः सन्तीतयः श्लेष्मकृताश्च रोगाः । संवत्स-
रेऽस्मिन् प्रभवे प्रवृत्ते न दुःखमाप्नोति जनस्तथापि ।
तस्मात्तु द्वितीयो विभवः२ प्रदिष्टः शुक्लः३ तृतीयः परतः
प्रमोदः४ । प्रजापतिश्चेति५ यथोत्तराणि शस्तानि वर्षाणि
फलानि चैषाम् । निष्पन्नशालीक्षुयवादिसस्यां भयैर्विमुक्ता-
मुपशान्तवैराम् । संहृष्टलोकां कलिदोषमुक्तां क्षत्रं तदा
शास्ति च भूतधात्रीम् । आद्योऽङ्गिराः१ श्रीमुख२भाव-
साह्वो३ युवाथ४ धातेति५ युगे द्वितीये । वर्षाणि पञ्चैव
यथाक्रमेण त्रीण्यत्र शस्तानि समे परे द्वे । त्रिष्वङ्गि-
राद्येषु निकामवर्षी देवो निरातङ्कभयाश्च लोकाः । अ-
ब्दद्वयेऽन्त्येऽपि समा सुवृष्टिः किन्त्वत्र रोगाः समराग-
मश्च । शाक्रे युगे पूर्वमथेश्वराख्यं१ वर्षं द्वितीयं बहुधा-
न्य२माहुः । प्रमाथिनं३ विक्रम४मप्यतोऽन्यद्वृषं५ च
विद्याद्गुरुचारयोगात् । आद्यं द्वितीयं च शुभे तु वर्षे
कृतानुकारं कुरुतः प्रजानाम् । पापः प्रमाथी वृषवि-
क्रमौ तु सुभिक्षदौ रोगभयप्रदौ च । श्रेष्ठं चतुर्थस्य
युगस्य पूर्वं यच्चित्रभानुं१ कथयन्ति वर्षम् । मध्यं द्वितीयं
तु सुभानु२संज्ञं रोगप्रदं मृत्युकरं न तच्च । तारणं३ त-
दनु भूरिवारिदं सस्यवृद्धिमुदितं च पार्थिवम् । पञ्चमं
व्ययमुशन्ति शोभनं५ मन्मथप्रबलमुत्सवाकुलम्४ । त्वाष्ट्रे
युगे सर्वजि१दाद्य उक्तः संवत्सरोऽन्यः खलु सर्वधारी२ ।
तस्माद्विरोधी३ विकृतः४ खरश्च५ शस्तो द्वितीयोऽत्र भयाय
शेषाः । नन्दनो१ऽथ विजयो२ जय३स्तथा मन्मथो४ऽस्य
परतश्च दुर्मुखः५ । कान्तमत्र युग आदितस्त्रयं मन्मथः
समफलोऽधमोऽपरः । हेमलम्ब१ इति सप्तमे युगे स्या-
द्विलम्बि२ परतो विकारि३ च । शर्वरीति४ तदनु प्लवः५
स्मृतो वत्सरो गुरुवशेन पञ्चमः । ईतिप्रायः प्रचुरपवनो
वृष्टिरब्दे तु पूर्वे मन्दं सस्यं न बहुसलिलं वत्सरेऽतो
द्वितीये । अत्युद्वेगः प्रचुरसलिलः स्यात्तृतीयश्चतुर्थो
दुर्भिक्षाय प्लव इति ततः शोभनो भूरितोयः । वैश्वे युगे
शोभकृ१दित्यथाद्यः संवत्सरोऽतः शुभकृद्२द्वितीयः । क्रोधी३
तृतीयः परतः क्रमेण विश्वावसु४श्चेति पराभव५श्च । पूर्वा-
परौ प्रीतिकरौ प्रजानामेषां तृतीयो बहुदोषदोऽब्दः ।
अन्त्यौ समौ किन्तु पराभवेऽग्निः शस्त्रामयार्त्तिर्द्विजगो-
भयं च । आद्यः प्लवङ्गो१ नवमे युगेऽब्दः स्यात्कीलको२
ऽन्यः परतश्च सौम्यः३ । साधारणो४ रोधकृ५दित्यथाब्दाः
शुभप्रदौ कीलकसौम्यसंज्ञौ । कष्टः प्लवङ्गो बहुशः प्रजा-
नां साधारणेऽल्पं जलमीतयश्च । यः पञ्चमो रोधकृदि-
त्यथाब्दश्चित्रं जलं तत्र च सस्यसम्पत् । इन्द्राग्निदैवं
दशमं युगं यत् तत्राद्यमब्दं परिधावि१संज्ञम् । प्रमादि२-
थानन्द३मतः परं यत् स्याद्राक्षसं४ चानल५संज्ञितं च ।
परिधाविनि मध्यदेशनाशो नृपहानिर्जलमल्पमग्निकोपः ।
अलसस्तु जनः प्रमादिसंज्ञे डमरं रक्तकपुष्पबीजनाशः ।
तत्परः सकललोकनन्दनो राक्षसः क्षयकरोऽनलस्तथा ।
शोषणात्मजननोऽत्र राक्षसो वह्निकोपमरकप्रदोऽनलः ।

एकादशे पिङ्गल१कालयुक्त२सिद्धार्थ३रौद्राः४ खलु दुर्म-तिश्च५। आद्ये तु वृष्टिर्महती सचौरा श्वासो हनूकम्पयुतश्च कासः। यत्कालयुक्तं तदनेकदोषं सिद्धार्थसंज्ञे बहवो गुणाश्च। रौद्रोऽतिरौद्रः क्षयकृत् प्रदिष्टो यो दुर्मति-र्मध्यमवृष्टिकृत् सः। भाग्ये युगे दुन्दुभि१संज्ञमाद्यं सस्यस्य वृद्धिं महतीं करोति। उद्गारि२संज्ञं तदनु क्षयाय नरे-श्वराणां, विषमा च वृष्टिः। रक्ताक्ष३मब्दं कथितं तृती-यं यस्मिन् भयं दंष्ट्रिकृतं गदाश्च। क्रोधं४ बहुक्रोधकरं चतुर्थं राष्ट्राणि शून्यीकुरुते विरोधैः। क्षयमिति५ यु-गस्यान्त्यस्यान्त्यं बहुक्षयकारकं जनयति भयं तद्विप्राणां कृषीवलवृद्धिदम्। उपचयकरं विट्शूद्राणां परस्वहृतां तथा कथितमखिलं षष्ट्यब्दे यत्तदत्र समासतः। अक-लुषांशुजटिलः पृथुमूर्त्तिः कुमुदकुन्दकुसुमस्फटिकाभः। ग्रहहतो न यदि सत्पथवर्त्ती कृतकरोऽमरगुरुर्मनुजा-नाम्"। "वार्हस्पत्येन षष्ट्यब्दम्" सू॰सि॰।

**गुरुवृत्ति** स्त्री गुरौ वृत्तिः। आचार्य्यादिगुरौ शिष्येण कर्त्तव्ये आचारभेदे सा च मनुनोक्ता यथा

"नोदितो गुरुणा नित्यमप्रचोदित एव वा। कुर्य्या-दध्ययने यत्नमाचार्य्यस्य हितेषु च। शरीरञ्चैव वाचं च बुद्धीन्द्रियमनांसि च। नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम्। नित्यमुद्धृतपाणिः स्यात् साध्वाचारः सुसंयतः। आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः। हीनान्नवस्त्रवेशः स्यात् सर्वदा गुरुसन्निधौ। उत्तिष्ठेत् प्रथमञ्चास्य चरमञ्चैव संविशेत्। प्रतिश्रवण-सम्भाषे शयानो न समाचरेत्। नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः। आसीनस्य स्थितः कुर्य्यादभि-गच्छंस्तु तिष्ठतः। प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः। पराङ्मुखस्याभिमुखो दूरस्थस्यैत्य चान्तिकम्। प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः। नीचं शय्यासन-ञ्चास्य सर्वदा गुरुसन्निधौ। गुरोस्तु चक्षुर्विषये न यथेष्टा-सनो भवेत्। नोदाहरेदस्य नाम परोक्षमपि केवलम् (श्रीपूर्वम्)। न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम्। गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते। कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः। परीवादात् खरो भवति श्वा वै भवति निन्दकः। परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी। दूरस्थो नार्च्चयेदेनं न क्रुद्धं नान्तिके स्त्रियाः। यानासने न चैवैनमवरुह्याभिवा-दयेत्। प्रतिवातेऽनुवाते च नासीत गुरुणा सह। असंश्रवे चैव गुरोर्न किञ्चिदपि कीर्त्तयेत्। गोऽश्वो-ष्ट्रयानप्रासादस्रस्तरेषु कटेषु च। नासीत गुरुणा सार्द्धं शिलाफलकनौषु च। गुरोर्गुरौ सन्निहिते गुरुवद्वृत्ति-माचरेत्। न चानिसृष्टो गुरुणा स्वान् गुरूनभि-वादयेत्। विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु। प्रतिषेधत्सु चाधर्मात् हितञ्चोपदिशत्स्वपि।"

तान्त्रिकगुरौ वृत्तिभेदः तन्त्रसारे उक्तो यथा "गुरौ सन्निहिते यस्तु पूजयेदग्रतो न तम्। स दुर्गतिमवा-प्नोति पूजा च विफला भवेत्" क्रियासारे। "एकग्रामे स्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद्गुरुम्। क्रोशमात्रस्थितो भक्त्या गुरुं प्रतिदिनं नमेत्। अर्द्धयोजनतः शिष्यः प्रणमेत् पञ्चपर्वसु। एकयोजनमारभ्य योजनद्वादशावधि। दूरदेशस्थितः शिष्यो भक्त्या तत्सन्निधिं गतः। तत्र योजनसंख्योक्तमानेन प्रणमेद्गुरुम्"। ज्ञानार्णवे "गुरौ मनुष्यबुद्धिन्तु मन्त्रे चाक्षरभावनाम्। प्रति-मासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत्। जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः। गुरुर्विशेषतः पूज्यो धर्मा-धर्मप्रदर्शकः। गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः। शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन। गुरोर्हितं प्रकर्त्तव्यं वाङ्मनःकायकर्मभिः। अहिताचरणाद्देवि! विष्ठायां जायते कृमिः। मन्त्रत्यागाद्भवेन्मृत्युर्गुरुत्या-गाद्दरिद्रता। गुरुमन्त्रपरित्यागाद्रौरवं नरकं व्रजेत्। गुरौ सन्निहिते यस्तु पूजयेदन्यदेवताम्। स याति नरकं घोरं पूजा च विफला भवेत्। एकत्र गुरुणा सार्द्धं गच्छेद्वोपविशेत्तु यः। स याति नरकं घोरं यावदिन्द्राश्चतुर्दश। गुरुवाक्यं हृतं कृत्वा आत्मवाक्यं तु योजयेत्। गुरूक्तं लङ्घयेद्यस्तु पतेत् स नरकाय वै"। श्रीक्रमे "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता। तस्मान्मन्येत सततं पितुरप्यधिकं गुरुम्। गुरुवद्-गुरुपुत्रेषु गुरुवत्तत्सुतादिषु। अविद्यो वा सविद्यो वा गुरुरेव च दैवतम्। अमार्गस्थोऽपि मार्गस्थो गुरुरेव सदा गतिः। आयान्तमग्रतो गच्छेद् गच्छन्तं तमनुव्र-जेत्। आसने शयने वापि न तिष्ठेदग्रतो गुरोः। च-तुर्थं प्राप्य तिष्ठेच्च नैवं पापमवाप्नुयात्"। क्रिया-सारे "गुरुर्माता पिता स्वामी बान्धवः सुहृदः शिवः। इत्याधाय मनो नित्यं भजेत् सर्वात्मना गुरुम्"

**गुरुशिंशपा** स्त्री नित्यकर्म॰। शिंशपाभेदे शब्दार्थचि॰।

**गुरुसारा** स्त्री गुरुः गुरुत्वात् सारो यस्याः। (शिशु)

१शिंशपायाम् । शब्दार्थचि० । २महासारे वस्तुमात्रे त्रि०

**गुरुस्कन्ध** पु० गुरुः स्कन्धोऽस्य ।१श्लेष्मपर्वतभेदे । "गुरुस्कन्धो महेन्द्रश्च माल्यवान् पर्वतस्तथा । एते पर्वतराजानः" भा० आश्व० ४३ अ० । २श्लेष्मातकवृक्षे शब्दार्थचि० ।

**गुरुहन्** पु० गुरुं गुरुपाकं हन्ति हन–क्विप् । १दुर्जरघ्ने गौरसर्षपे हेमच० २गुरुहन्तरि त्रि० ।

**गुरूत्तम** त्रि०गुरुषु गुरूणां वा उत्तमः । १पूज्यतमे २परमेश्वरे पु० । "तस्मै पूर्वगुरूत्तमाय जगतामीशाय पित्रे नमः" काश० त्रि० । अत्र "न निर्द्धारणे" पा० षष्ठीसमासनिषेधात् सप्तमीतत्पुरुष इति बहवः । कैयटस्तु "यस्मान्निर्द्धार्य्यते यश्च निर्द्धार्य्यते यश्च निर्द्धारणहेतुरेतत्त्रितयसन्निधाने सत्येवायं निषेधः इति "द्विवचने विभज्योपपदे" पा० सूत्रे भाष्यकार आह स्म । पुरुषोत्तम इत्यादौ त्रितयसन्निधानाभावात् न निर्द्धारणविभक्तिः किन्तु सम्बन्धसामान्ये षष्ठीति तया समासः । अतएव "हलादिः शेषः" पा० सूत्रे "हलामादिरिति षष्ठीसमास" इत्युक्तं भाष्ये इत्युवाच "न निर्द्धारणे इति"सूत्रवृत्तौ नृणां द्विजः श्रेष्ठः इत्युदाहरता च कौमुदीकारेण त्रितयसन्निधान एव समासाभावः सूचितः । यत्तु गदाधरेण एतदनालोच्य, षष्ठीसप्तमीसमासयोः स्वरकृतवैलक्षण्यज्ञानालोच्य "न निर्द्धारणे" इत्यस्य षष्ठीसमासप्रकरणज्ञानवेच्य निर्द्धारणषष्ठ्या समासनिषेधे तदर्थकसप्तमीसमासोऽपि निषिद्धः अन्यथा प्रयोगसामग्र्यात् सूत्रवैयर्थ्यमतो गुरूत्तम इत्यत्र पञ्चमीतत्पुरुषोऽङ्गीकृतः, तत्तु साहसमात्रम् तथा हि "पञ्चमी विभक्ते"पा०सूत्रे निर्द्धार्य्यमाणस्य भेद एव पञ्चमीविधानात् तयोः सामान्यधर्माक्रान्तत्वाभावे एव तस्याः प्रवृत्तेः । यथा माथुराः पाटलिपुत्रेभ्य आढ्यतमाः अत्र पाटलिपुत्रस्थलोकानां माथुराणां च केनापि रूपेण सामान्यधर्मत्वाभावेन उभयोर्भेद एव इति तत्र पञ्चमीप्रवृत्तिः । गुरूत्तम इत्यादौ तु ईशस्यान्यगुरुनिष्ठगुरुत्वरूपसामान्यधर्माक्रान्तत्वात्तदप्रवृत्तेर्न पञ्चमीसमासः "अक्षरादपि चोत्तमः" (गीता) इत्यादौ तु अक्षराच्चेतनवर्गात् तमपेक्ष्येति व्याख्या न्यायमते जीवेश्वरयोर्भेदेऽपि चेतनत्वसामान्यधर्माक्रान्तत्वेन तयोर्भेदाभावात् न पञ्चमीप्रसक्तिः । वेदान्तिमते अक्षरशब्दस्य मायापरत्वात् ईशमाययोर्भेदसम्भवात् पञ्चमीप्रसक्तिसम्भावनायामपि तया पञ्चम्या न समासप्रसक्तिः पञ्चमीतत्पुरुषस्य वक्ष्यमाणसूत्रेभ्यो विषयविशेषनियतत्वेनात्र तदप्रसक्तेः । अक्षरशब्दस्य मायापरत्वञ्च गीताव्याख्यायां मधुसूदनेन दर्शितं यथा

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" गीता । "द्वौ इमौ पृथग्राशीभूतौ पुरुषोपाधित्वेन पुरुषशब्दव्यपदेश्यौ लोके संसारे, कौ तावित्याह क्षरश्चाक्षर एव च । क्षरतीति क्षरो विनाशी कार्य्यराशिरेकश्च पुरुषः, न क्षरतीत्यक्षरो विनाशरहितः । क्षरस्य पुरुषस्योत्पत्तिबीजं भगवतो मायाशक्तिर्द्वितीयः पुरुषः । तौ पुरुषौ, व्याचष्टे स्वयमेव भगवान्, क्षरः सर्वाणि भूतानि समस्तं कार्य्यजातमित्यर्थः कूटस्थः कूटो यथार्थवस्त्वाच्छादनेनायथार्थवस्तुप्रकाशनं वञ्चनं मायेत्यनर्थान्तरं तेनावरणविक्षेपशक्तिद्वयरूपेण स्थितः कूटस्थः भगवन्मायाशक्तिरूपः कारणोपाधिः संसारबीजत्वेनानन्त्यादक्षर उच्यते । केचित्तु क्षरशब्देनाचेतनवर्गमुक्त्वा कूटस्थोऽक्षर उच्यत इत्यनेन जीवमाहुः तन्न सम्यक्, जीवस्यैवेह पुरुषोत्तमत्वेन प्रतिपाद्यत्वात् तस्मात् क्षराक्षरशब्दाभ्यां कार्य्यकारणोपाधी उभावपि जड़ावेवोच्येते इत्येव युक्तम् । आभ्यां क्षराक्षराभ्यां विलक्षणः क्षराक्षरोपाधिद्वयदोषेणास्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः" (गीता) । उत्तम उत्कृष्टतमः पुरुषस्त्वन्यः अन्य एव अत्यन्तविलक्षण आभ्यां जड़राशिभ्याम्, उभयभासकस्तृतीयश्चेतनराशिरित्यर्थः । परमात्मेत्युदाहृतः अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेभ्यः पञ्चभ्योऽविद्याकल्पितात्मभ्यः परमः प्रकृष्टोऽकल्पितः "ब्रह्म पुच्छं प्रतिष्ठा" इत्युक्त आत्मा च सर्वभूतानां प्रत्यक्चेतन इत्यतः परमात्मेत्युक्तो वेदान्तेषु यः परमात्मा लोकत्रयं भूर्भुवःस्वराख्यं सर्वं जगदिति यावत् आविश्य स्वकीयया मायया शक्त्याधिष्ठाय बिभर्त्ति सत्तास्फूर्त्तिप्रदानेन धारयति पोषयति च कीदृशः अव्ययः सर्वविकारशून्यः ईश्वरः सर्वस्य नियन्ता नारायणः स उत्तमः पुरुषः परमात्मेत्युदाहृत इत्यन्वयः" । अतः "यस्मात् क्षरमतीतोऽक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" गीतावाक्ये अक्षरादितिल्यब्लोपे पञ्चमी मध्यपदलोपः अक्षरमतीत्य उत्तम इत्यर्थः । पुरुषोत्तम इत्यत्र पुरुषपदार्थानां पुरुषोपाधिद्वयतद्विलक्षणमुख्यपुरुषाणां मध्ये उत्तम

इत्यर्थः द्वाविमाविति क्षराक्षरपुरुषयोः “उत्तमः पुरुषस्त्वन्य” इति तयोरामेव पूर्वं प्रक्रान्तत्वात्तेषां मध्ये एव परमात्मन उत्तमत्वेन निर्द्धार्य्यमाणत्वात् अतो न तत्रापि पञ्चमीसमासः। तथाहि “पञ्चमी भयेन” पा० “अपेतापोढमुक्तपतितापत्रस्तैरल्पशः” “स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन” पा० सूत्रैः पञ्चमीतत्पुरुषस्य विधानात् तन्मध्ये च एतत्पञ्चम्याः पाठाभावात् नात्र पञ्चमीतत्पुरुषः किन्तु सप्तमीसमासः षष्ठीसमासो वेत्यवेति ज्यायः।

**गु(गू)र्जर** पु० दक्षिणदेशस्थे देशभेदे सोऽभिजनोऽस्य अण्। गौर्ज्जर तद्देशवासिनि बहुषु लुक्। महाराष्ट्राश्च तैलिङ्गाद्रविड़ा गु(गू)र्ज्जरास्तथा” इत्यविधवाज्ञापकथने।

**गु(गू)र्द्द** कूर्दने भ्वा० आत्म० अक० सेट्। गूर्दते अगूर्द्दिष्ट। जुगूर्द्दे। सम्पुयुक्तस्य क्विपि गूः गुरौ गुरः। दीर्घान्वितस्य गूः गूरौ गूर इति भेदः।

**गु(गू)र्द्द** निवासे कूर्द्दने च चुरा० उभ० अक० सेट्। गु(गू)र्दयति ते अजुगु(गू)र्द्दत्-त।

**गुर्व्व** उद्यमे भ्वा० पर० अक० सेट्। गुर्वति अगुर्वीत्। जुगुर्व ईदित् गूर्णः।

**गुर्व्विणी** स्त्री गुरुर्गर्भोऽस्त्यस्याः व्रीह्यादित्वात् इनि नि० णत्वाभावः, गर्व-गतौ “गर्वेरत उच्चेति” उणा० इनन् गौरा० ङीष् वा। गर्भिण्याम्। “उत्तरां त्वमवेक्षस्व गुर्विणीं मा शुचः शुभे!” भा० आश्व० ६१अ०। “गुर्विणीं नानुगच्छन्ति न स्पृशन्ति रजस्वलाम्” अनायुष्योक्तौ।

**गुर्व्वादित्य** पु० गुरुणा सह आदित्यो यत्र। ज्योतिषोक्ते कालाशुद्धिहेतौ एकराश्येकनक्षत्रस्थयोर्जीवादित्ययोर्योगभेदे “गुर्वादित्ये दशाहिकम्” ज्यो०त०। “एकराशौ गतौ स्यातामेकर्क्षविषये यदि। गुर्वादित्यौ, तदा त्याज्या यज्ञोद्वाहादिकाक्रियाः” राजमा०। “गुर्वादित्ये दशाहे त्विति” नक्षत्रभेदविषयम्। अत्यन्तावश्यकत्वे भुजबलभीमः “जीवोऽर्केण युतः करोति मरणं, वार्त्तांशुको भागुरिः नक्षत्रैकगतो वदन्ति मरणं, पादस्थितो देवलः” तथा च एकराशिस्थत्वेऽकालः अत्यन्तावश्यकत्वे एकनक्षत्रपादस्थितौ दशाहं त्यक्त्वा यज्ञादि कर्त्तुं शक्यते इति व्यवस्था।

**गुर्व्वी** स्त्री गुरु-ङीष्। १गर्भवत्याम् “न हि बन्ध्या विजानाति गुर्वीप्रसववेदनाम्” हितो० २गौरवयुक्तस्त्रीलिङ्गार्थकपदार्थे च “गुर्वीरजस्रं दृषदः समन्तात्” माघः। यत्तु “अनन्यगुर्वास्तव केन केवलम् पुराणमूर्त्तेः” इ पद्यो अन्यगुर्व्या इति पाठं कल्पयित्वा शब्दक० उदाजहार तत् प्रामादिकं “न विद्यतेऽन्या गुरुर्यस्यास्तस्या अनन्यगुर्व्या इत्यनीकारान्तः पाठः एव साधुः समासात् प्राङ् ङीषि “नद्यृतश्चेति” पा० कप्प्रत्ययः स्यात् पश्चात् अनुपसर्जनाधिकारात् “वोतो गुणवचनादिति” न प्राप्नोतीति। तद्रूपसिद्धिस्तु “ङिति ह्रस्वश्चेति” पा० वा नदीसंज्ञत्वायाम् “आण्नद्याः” पा० इत्याडागमात्” मल्लि०। समासान्तस्य विधेरनित्यकल्पनेन कबभावकल्पनस्यागतिकविषयएव स्वीकारात् अत्र तथाऽकल्पनेऽपि छन्दोदोषाप्रसङ्गात्” इति विभाव्यम्। ३गुरुस्त्रियाञ्च। [टाप् मेदि०।

**गुल** पु० गुड+डस्य लः। १ऐक्षवे गुडे २स्तुहीवृक्षे स्त्री

**गुलञ्चकन्द** पु० गुलं गुडरसमञ्चति अन्च-अण् शक०। गुलञ्चः कन्दोऽस्य। (कुली) भाषाप्रसिद्धे कन्दभेदे राजनि०

**गुलिका** स्त्री गुडः गोलाकारः अस्त्यस्य ठन्। १गुटिकायां गोलाकारायां वटिकायां (वसन्त) २रोगभेदे च मेदि०। “इतेन गुडयुक्तेन गोलकूष्माण्डखण्डकान्। रञ्जितान् जीरमरिचैरिमांस्तु गुलिकां विदुः” इत्युक्ते ३पक्वकूष्माण्डभेदे च। [याम् (वसन्त) २रोगे च मेदि०।

**गुली** स्त्री गुडाकारोऽस्त्यस्याः अच् गौरा० ङीष्। १गुटिका-

**गुलगुधा** अव्य०। सहार्थे। उर्य्यादि० पा० ग० सू०।

**गुलुच्छ** गुच्छ+पृषो०। गुच्छे स्तबके त्रिका०। “कोषातकीपुष्पगुलुच्छ(ञ्छ)कान्तिभिः” माघः।

**गुलुञ्छ** पु० गुड-क्विप् गुलं गोलाकारमुञ्छति बध्नाति उछि-बन्धने अण् उप० समा० डस्य लः। स्तबके हेमच०। खलु। गुलुञ्छक तत्रार्थे शब्दरत्ना०। गुलुञ्च इति हारा० पाठः तत्रार्थे। तत्र ग्लुन्च-अच् पृषो० साधु

**गुल्फ** पु० गुल-फक् नि० अस्तोच्च। पादग्रन्थौ। “षड्ङ्गुलीनां द्वे पाष्णर्योर्गुल्फेषु च चतुष्टयम्” याज्ञ०। “आगुल्फकीर्णापणमार्गपुष्पम्” कुमा०। “गुल्फैरतितनुभिरतिदृढ़ैर्ब्बा” ह०स० ६१अ०। गुल्फस्य मूलं कर्णा० जाहच्। गुल्फजाह गुल्फमूले न०।

**गुल्म** पु० गुड-रक्षणे वेष्टने वा मक् डलयोरैक्यात् डस्य लः। १प्रधानपुरुषाधिष्ठिते रक्षके पुरुषसंघे, (गजाः ९, रथाः ९, अश्वाः २७, पदातयः ४५) एतत्संख्यान्विते २सैन्यसमुदाये, स्नुनामख्याते ३रोगभेदे, अमरः। घट्टदेशे रक्षणार्थं स्थापिते ४सैन्ये, ५अप्रकाण्डे लतादौ मेदि० एकमूलेषु सङ्घातजातेषु शरेक्षुप्रभृतिषु ६तृणभेदेषु, कुल्लू०।

गुच्छगुल्ममित्यादि मनुवचनस्य गुच्छशब्दे दर्शितस्य कुल्लूकभट्टव्याख्या २५८६पृ० दृश्या। ७प्लीहरोगे अमरः। "त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते १६०पृ०अनीकिनीशब्दे दर्शितम् भा०उ०वाक्यम्। "प्रच्छन्नस्तरुगहनैः स गुल्मजालैः" किरा०। "गुल्मगुच्छलुपलतेत्यादि" याज्ञ०। "स्थावराणां तु भूतानां जातयः षट् प्रकीर्त्तिताः। गुच्छगुल्मलतावल्लीत्वक्सारास्तृणजातयः भा० आनु०५८अ०। रक्षणार्थं गुल्मनिवेशनप्रकारो मनुनोक्तो यथा "द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम्। तथा ग्रामशतानां च कुर्य्याद्राष्ट्रस्य संग्रहम्"। "द्वयो र्ग्रामयोर्मध्ये त्रयाणां वा ग्रामाणां पञ्चानां वा ग्रामशतानां गुल्मं रक्षितृपुरुषसमूहं सत्वप्रधानपुरुषाधिष्ठितं राष्ट्रस्य संग्रहं रक्षास्थानं कुर्य्यात् अस्य लाघवगौरवापेक्षयोक्तविकल्पः" कुल्लू०। "गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः। स्थाने युद्धे च कुशलानभीरूनविकारिणः" मनुः गुल्मरोगलक्षणादि सुश्रुतोक्तं यथा "अथातो गुल्मप्रतिषेधं व्याख्यास्यामः। यथोक्तैः कोपनैर्दोषाः कुपिताः कोष्ठमागताः। जनयन्ति नृणां गुल्मं स पञ्चविध उच्यते। हृद्वस्त्योरन्तरे ग्रन्थिः सञ्चारी यदि वाचलः। चयापचयवान् वृत्तः स गुल्म इति कीर्त्तितः। पञ्च गुल्माश्रया नॄणां पार्श्वे हृन्नाभिवस्तयः। कुपितानिलमूलत्वाद्गूढमूलोदयादपि। गुल्मवद्वा विशालत्वात् गुल्म इत्यभिधीयते। स यस्मादात्मनि चयं गच्छत्यप्स्विव बुद्बुदः। अन्तःसरति यस्माच्च न पाकमुपयात्यतः। स व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः। पुरुषाणां, तथा स्त्रीणां ज्ञेयो रक्तेन चापरः। मदनं मन्दता वह्नेराटोपोऽन्त्रविकूजनम्। विण्मूत्रानिलसङ्गश्च सौहित्यासहता तथा। द्वेषोऽन्ने वायुरूर्द्ध्वश्च पूर्व्वरूपेषु गुल्मिनाम्। हृत्कुक्षिशूलं मुखकण्ठशोषो वायोर्निरोधो विषमाग्निता च। ते ते विकाराः पवनात्मकाश्च भवन्ति गुल्मेऽनिलसम्भवे तु। स्वेदज्वराहारविकारदाहास्तृण्णाङ्गरागः कटुवक्त्रता च। पित्तस्य लिङ्गान्यखिलानि यानि पित्तात्मके तानि भवन्ति गुल्मे। स्तैमित्यमन्नेऽरुचिरङ्गसादश्छर्दिः प्रसेको मधुरास्यता च। कफस्य लिङ्गानि च यानि तानि भवन्ति गुल्मे कफसम्भवे तु। सर्व्वात्मकः सर्व्वविकारयुक्तः सोऽसाध्य उक्तः क्षतजश्च वक्ष्ये। नवप्रसूताऽहितभोजना या याचाममगर्भं विसृजेदृतौ वा। वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम्। पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणं चाप्यपरं निबोध। न स्पन्दते नोदरमेति वृद्धिं भवन्ति लिङ्गानि च गर्भिणीनाम्। तं गर्भकालातिगमे चिकित्स्यमसृग्भवं गुल्ममुशन्ति तज्ज्ञाः"।

**गुल्मकेतु** पु० गुल्मः केतुरस्य। अम्लवेतसे राजनि०।

**गुल्ममूल** न० गुल्म इव मूलमस्य। आर्द्रके (आदा) शब्दर०।

**गुल्मवल्ली** स्त्री गुल्मप्रधाना वल्ली। सोमलतायाम् राजनि०।

**गुल्मशूल** न० शूलरोगभेदे शूलशब्दे विवृतिः।

**गुल्मिन्** त्रि० गुल्म+अस्त्यर्थे इनि। १गुल्मरोगयुक्ते। गुल्मशब्दे सुश्रुतः। स्त्रियां ङीप् सा च विस्तृतवनायां २द्राक्षाताम्बूलीप्रभृतौ अमरः।

**गुल्मी** स्त्री गुल्मस्तदाकारफलत्वात् गुल्मरोगहन्तृत्वाद्वा अस्तीत्यर्थे अच् गौ०ङीष्। १आमलक्यां, २एलायाम्, ३वस्त्रनिर्म्मितगृहे, मेदि०४लवल्याम् शब्दार्थचि०५गन्धनखीवृक्षे, (गुड़काओली) शब्दच०। [स्वादौ हेम०।

**गुल्य** त्रि० गुडं तद्वद्रसमर्हति यत् डस्य लः। मधुरे

**गु(गू)वाक** पु० गु–पिनाकादित्वात् आक नि० दीर्घः। (सुपारी) क्रमुके अमरः "घोरण्टः पूगी पूगश्च गु(गू)वाकः क्रमुकोऽस्य तु। फलं पूगीफलं प्रोक्तमुद्वेगञ्च तदीरितम्। पूगङ्गुरु हिमं रूक्षं कषायं कफपित्तजित्। मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम्। आर्द्रं तद्गुर्व्वभिष्यन्दि वह्निदृष्टिहरं स्मृतम्। स्विन्नं दोषत्रयच्छेदि दृढमध्यं तदुत्तमम्" भावप्र०। "प्रभाते पूगमधिकं मध्याह्ने खदिरं तथा। निशासु चूर्णमधिकं ताम्बूले भक्षयेत् सदा" भावप्र०।

**गुम्फित** न० गुम्फ भावे–क्त वेदे नि०। गुम्फने वृक्षादेः शाखानिर्गमरूपे ग्रन्थने "व्रततेरिव गुष्पितमोजो दासस्य सम्भवः" ऋ० ८।४०।६। "गुष्पितं निर्गता शाखा" भा०।

**गुह** संवरणे भ्वा० उभ० सक० वेट्। गूहति ते अगूहीत् अघुक्षत्। अगूहिष्ट अगूढ़ अघुक्षत अगूहिषत अघुक्षन्त। अगूहिषि अघुक्षि। अगूहिष्वहि अगुह्वहि अघुक्षावहि। जुगूह जुगुहे "गूहिता गोढ़ा। गुह्यात्। गूहिषीष्ट घुक्षीष्ट गूहिष्यति-ते-घोक्ष्यति-ते, गुहम् गोह्यम्। गूहनं गुहः गुहा। सन् जुघुक्षति "जुगूह तस्याः पथि लक्ष्मणो यत् रघुः। "जुगूहोच्छ्रायकैर्दिशः" गूहिष्यामि क्षितिं कृत्स्नां" भट्टिः "गूहेत् कूर्म इवाङ्गानि"

मनुः। "जुगूहे दक्षिणे पार्श्वे" भा०वि० २३५ श्लो०। "गूहन्ति मेघा इव रश्मिवन्तम्" भा०भी० ७८२श्लो०। "आकारो गूहितुं शक्यः" भा० द्रो० ४४७ श्लो०। "अगूढसद्भावमितीङ्गितज्ञया" कुमा०। णिच् गूहयति ते अजूगुहत् त। "न देवानामपि हुतः सुमतिं न जुगुक्षतः" ऋ० ८।२१।७। क्विप् घुट् गुहौ गुहः। "विश्वायुरग्ने गुहा गुहं गाः" ऋ० १।६७।२।

अप+अपनयने "अपागूहन्नमृतां मर्त्येभ्यः" ऋ० १०।१७।२। "अपागूहन् अपनीतवन्तः" भा०। संवरणे च। "आत्मानमप गूहथाः" अथ० ४।२०।५।

अव+सम्यग्संवरणे। "यूपशकलमवगूहति" शत० ब्रा० ३।७।१।२२। "उष्णीषं संहृत्य पुरस्तादवगूहति" ५।२।५।२३। [ ३।२।१।१५।

उद्+उत्क्षिप्य संवरणे। "नीविमुद्गूहते" शत० ब्रा०

उप+आलिङ्गने "गाढं चोपजुगूहैनम्" भट्टिः "छाया-च्छलेनोपजुगूह लक्ष्मीः" रघुः। "उपगूढानि सवेपथूनि च" कुमा०। "तरङ्गहस्तैरुपगूहतीव" रघुः आश्लेषणे च। "कश्चित् कराभ्यामुपगूढनालम्" रघुः।

नि+अतिशयसंवरणे। "देवात्मशक्तिं स्वगुणैर्निगूढाम्" श्वेता०उप०। समादिपूर्वस्य तत्तदुपसर्गद्योत्यार्थसंयुतसंवरणे

**गुह** पु० गूहति देवसेनाम् गुह—क। १ कार्त्तिकेये "सैनापत्येन देवानामभिषिक्तो गुहस्तदा" भा०व० २८ अ०। "अथैनमभ्ययुः सर्वा देवसेनाः सहस्रशः। अस्माकं त्वं पतिरिति ब्रुवाणाः सर्वतो दिशः" भा०व० २२८ अ०। "गुहोऽपि येषां प्रथमाप्तजन्मनाम्" कुमा० तस्य देवसेनारक्षकत्वेन सेनापतित्वात् तथात्वम्। भा०आनु० ८५ अ० गुहनामनिरुक्तिरन्यथोक्ता यथा "स्कन्नत्वात् स्कन्दनामायं गुहावासाद्गुहोऽभवत्"। अत्र पक्षे गुहा आवासत्वेनास्त्यस्य अच्। २अश्वे पुंस्त्री शब्द-रत्ना०एतदाशयेन "यत्राश्वा बिलयोनयः" कुमा०उक्तम्। देवखातरूपबिलोत्पन्नत्वात्तथात्वम्। ३परमेश्वरे। "करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" विष्णुस०। "गूहति संवृणोति स्वरूपं माययेति गुहः" भा० "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति गीतोक्तेस्तस्य स्वमायया स्वात्मरूपसंवरणात्तथात्वम्। गुहारूपमाया-हृदयाद्याश्रयत्वात् वा तथात्वम्। गुहाशयशब्दे दृश्यम्। रामायणप्रसिद्धे शृङ्गवेरपुराधीशे चण्डालजातीये ४राममित्रे च पु०। "आससाद महावीरः शृङ्गवेरपुरं प्रति" इत्युपक्रमे "यत्र राजा गुहो नाम रामस्यात्म-समः सखा। निषादजात्यो बलवान् स्थपतिश्चेति विश्रुतः" इत्यादिना "सह सौमित्रिणा रामः समागच्छत् गुहेन स" इत्यन्तेन रामा० अयोध्याकाण्डे तत्सख्यमु-क्तम्। ५सिंहपुच्छीलतायाम् (चाकुलिया) ६पर्वतादिग-ह्वरे स्त्री मेदि०। तस्य सर्वसत्वसंवारकत्वात् तथात्वम्। "गुहानिबद्धप्रतिशब्ददीर्घम्" "प्रतिस्वनेनास्य गुहागतेन" रघुः ८शालपर्ण्याञ्च (शालपाण) राजनि० अकृत्रिमे ९देवखाते,१०हृदये च स्त्री शब्दार्थचि०। हृदयस्य गुहा-तुल्यत्वात् तथात्वम् यथाह शत० ब्रा० ११।२।६।५। "तस्मादिदं गुहा हृदयम्"। "गुहां प्रविष्टौ सुकृतस्य लोके" श्रुतिः ११मायायां च। "योन वेद निहितं गुहायां परमव्योमन्" श्रुतिः गुहाहितं गह्वरेष्ठं पुराणम्" "आत्मा गुहायां निहितः" श्रुतिः। इषा०आद्युदात्तः। १२गुहाधिष्ठातृदेवतायाम् स्त्री। "गुहाभ्यः किरातम्" यजु० ३०।१७। पुरुषमेधे। १३बुद्धौ। गुह—भावे भिदा० अङ्। १४संवरणे स्त्री। गुह+अश्मा० अस्त्यर्थे र। गुहर तद्युक्ते त्रि०। [दृश्यम्।

**गुहराज** पु० वृ०सं० ५५।अ० लक्षिते प्रासादभेदे प्रासादशब्दे

**गुहलु** पु० गोत्रप्रवर्त्तके ऋषिभेदे ततो गर्गा० अपत्ये यञ्। गौहलव्य तद्गोत्रापत्ये पुंस्त्री।

**गुहषष्ठी** स्त्री गुहप्रिया षष्ठी तज्जन्मदिनत्वात् शाक० त०। "येयं मार्गशिरे मासि षष्ठी भरतसत्तम!। पुण्या पापहरा धन्या शिवा शान्ता गुहप्रिया" ति० त० भविष्योक्ते मार्गशुक्लषष्ठीतिथौ। इयं वारभेदादि-योगेन चम्पेति कीर्त्त्यते यथाह नि० सि० ब्रह्मा० पु० "मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता। रविवारेण संयुक्ता सा चम्पेतीह कीर्त्तिता" "विशाखाभौम-योगेन सा चम्पेतीह कीर्त्त्यते" इति मदनरत्ने पाठः। गुहस्य षष्ठ्यां कृतार्थतोक्ता भा०व०२२४अ० "तस्मिन् कुण्डे प्रतिपदि कामिन्या स्वाहया तदा। तत् स्कन्नं तेजसा तत्र संवृतं जनयत् सुतम्" इत्युपक्रमे "द्वितीया-यामिति व्यक्तस्तृतीयायां शिशुर्बभौ। अङ्गप्रत्यङ्गसम्भूत-श्चतुर्थ्यामभवद्गुहः" इत्युक्त्वा २२८अ० "तदा तदाश्रया-लक्ष्मीः स्वयं देवी शरीरिणाम्। श्रीजुष्टं पञ्चमीं स्कन्दस्तस्मात् श्रीपञ्चमी स्मृता। षष्ठीं कृतार्थोऽभूद्य-स्मात् तस्मात् षष्ठी महातिथिः" उक्तम्। इयमेव स्कन्द-षष्ठीति नि० सि० उक्तम्। ति० त० तु चैत्रशुक्लषष्ठ्यां

एव स्कन्दषष्ठीत्वं व्यवस्थापितं तच्च स्कन्दषष्ठीशब्दे वक्ष्यते। देशभेदाद्व्यवस्था

**गुहाचर** न० गुह्यन्ते ज्ञातृत्वेयज्ञानपदार्थी अस्याम् गुह–वअर्थे क गुहा बुद्धिस्तत्र चरति विषयतया चर–ट। १ब्रह्मणि।

"मनसैवानुद्रष्टव्यम्" इति श्रुतौ तस्य मनोवृत्तिमात्रवेद्यत्वात्तथात्वम्। "आविः सन्निहितं गुहाचरं नाम महत् पदमत्रैतत् समर्पितम्" माण्डू० उ०।

"आविः प्रकाशं सन्निहितं रागाद्युपाधिभिश्चरति भ्राजतीति श्रुत्यन्तराच्छब्दादीनुपलभमानवदवभासते। दर्शनश्रवणमननविज्ञानाद्युपाधिधर्मैराविर्भूतं सल्लक्ष्यते हृदि सर्वप्राणिनाम्। यदेतदाविर्भूतं ब्रह्म सन्निहितं सम्यक् स्थितं हृदि तद् गुहाचरं नाम गुहायाञ्चरतीति दर्शनश्रवणादिप्रकारैर्गुहाचरमिति प्रख्यातम्" भा०

**गुहावदरी** स्त्री गुहा गुह्या वदरीव। (शालपाश) इत्ये वैद्यकम्।

**गुहाशय** पु०स्त्री–गुहायां गर्त्ते शेते शी–अच्। १मूषिके शब्दार्थचि० २सिंहादिषु जन्तुषु भावप्र०यथा "सिंहव्याघ्र वृका ऋक्षतरक्षुद्वीपिनस्तथा। बभ्रुजम्बुकमार्ज्जार इत्याद्याः स्युर्गुहाशयाः"। तन्मांसगुणा भाव०प्र० उक्ता यथा "गुहाशया वातहरा गुरूष्णा मधुराश्च ते। स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविकारिणाम्"। स्त्रियासुभयत्र जातित्वेऽपि योपधत्वात् टाप्। गुहायां हृदि शेते। ३परमात्मनि। "एवं हि यो वेद गुहाशयं प्रभुम्" भा०आश्व०४०अ०। "सर्वभूतगुहाशयः" श्वेता०उ०। "गुहायां बुद्धौ शेते इति सर्वभूतगुहाशयः" भा० स्वापकाले हृदयेषु शायिनि ४प्राणे "सप्त इमे लोकायेषु चरन्ति प्राणा गुहाशयानिहिताः सप्त सप्त" मुण्ड०उ०

**गुहाहित** पु० गुहायां बुद्धौ हृदये वा आहितः। हृदिस्थे बुद्ध्यारूढे परमात्मनि। "गुहाहितं गह्वरेष्ठं पुराणम्" कठ०उ०

**गुहिन** न० गुह–बा० इनन्। वने शब्दरत्ना०

**गुहिल** न० गुह–गुपा० इलच् किच्च। १धने उज्ज्व०द०। गुहा+काशा०चतुरर्थ्याम् इलः। २गुहासन्निकृष्टदेशादौ त्रि०

**गुहेर** त्रि० गुह–एरक्। १गोप्तरि २लोहकारे सि०कौ०।

**गुह्य** त्रि० गुह–भावादौ–क्यप् काशिका। १गोपने २गोप्ये अमरः "गुह्यातिगुह्यगोप्ता त्वम्" जपसमापनमन्त्रः। ३उपस्थे स्त्रीपुंसचिह्ने न०। गुहामर्हति दण्डादि०यत्। ४कमठे पु०स्त्री स्त्रियां योपधत्वात् टाप्। ५दम्भे पु० मेदि०। "गुह्यो गभीरो गहनः" विष्णुस० उक्ते ६विष्णौपु० "गूहितुं योग्यं गुह्यं वेदरहस्यं तद्वेद्यत्वात् लक्षणया गुह्यो विष्णुः गुहायां हृदाकाशे निहित इति वा गुह्यः" भा०।

**गुह्यक** पु०गूहन्ति रक्षन्ति निधिं गुह–ण्वुल् पृषो०यगागमः। "निधिं गूहन्ति ये यक्षास्ते स्युर्गुह्यकसंज्ञकाः इति व्याडिः। गुह्यं कुत्सितं कायति कै–शब्दे कः गुह्यं गोपनीयं कं सुखं येषामिति वा अनयोः पक्षयोः "शंसिदुहिगुहिभ्योवेति" काशिकावचनात् गुहेः क्यप्। १देवयोनिभेदे तल्लोकप्राप्तिकर्मभेदाः काशी० ख० उक्ता यथा "गुह्यकानामयं लोकस्त्वेते वै गुह्यकाः स्मृताः" "न्यायेनोपार्ज्य वित्तानि गूहयन्ति च ये भुवि। स्वमार्गगा धनाढ्याश्च शूद्रप्रायाः कुटुम्बिनः। संविभज्य च भोक्तारः क्रोधासूयाविवर्जिताः। न तिथिं नैव वारञ्च संक्रान्त्यादि न पर्व च। नाधर्मञ्च न धर्मञ्च विदन्त्येते सदासुखाः। एकमेव हि जानन्ति कुलपूज्योहि यो द्विजः। तस्मै गाः संप्रयच्छन्ति मन्यन्ते तद्वचः स्फुटम्। सच्छिभाजोह्यत्रापि तेन पुण्येन गुह्यकाः। भुञ्जते स्वर्गसौख्यानि देववन्मकुतोभयाः"। २पकान्नभेदे तत्पाकप्रकारो यथा "समितां सर्पिषा भृष्टां सिताद्राक्षादिसंभृताम्। एलालवङ्गकर्पूरमरीचपरिवासिताम्। क्षिप्त्वाथ समितालम्बपुटे वेष्ट्य घृते पचेत्। ततः खण्डे न्यसेत् पक्वं गुह्यकोऽयमुदाहृतः। गुह्यको बृंहणोहृद्यो हृद्यः पित्तानिलापहः मधुरोऽतिगुरुः पाके किञ्चित् सन्धानकृत्परः" पाकशा०

**गुह्यकाली** स्त्री नित्यकर्म०। विश्वसारतन्त्रोक्ते देवीमूर्त्तिकाली भेदे तन्मन्त्राद्युक्तं तत्र यथा "अथ वक्ष्ये महेशानि! विद्यां सर्वफलप्रदाम्। चतुर्वर्गप्रदां साक्षात् महापातकनाशिनीम्। सर्वसिद्धिप्रदां नित्यां भक्तिमुक्तिप्रदायिनीम्। गुह्यकालीं महाविद्यां त्रैलोक्ये चातिदुर्लभाम्। इन्द्रादि(र)रुद्रं वर्गाद्यं रतिबिन्दुविभूषितम् (क्रीं)। त्रिगुणञ्च ततः कृत्वा ईशानञ्च समुद्धरेत्। षष्ठस्वर समायुक्तं बिन्दुनादकलान्वितम् (हूं)। द्विगुणञ्च ततः कृत्वा ईशवर्णं समुद्धरेत्। वामाक्षिवह्निसंयुक्तं नादबिन्दुकलायुतम् (ह्रीं)। तद्गुह्ये कालिके चोक्त्वा चाथवा दक्षिणे वदेत्। सप्तबीजं ततः पश्चात् त्रैलोक्यमोहिनी

तियम्"। अथ वेति गुह्ये कालिके। दक्षिणे कालिके" वा

**गुह्यकेश्वर** पु° ६त°। कुबेरे।

**गुह्यगुरु** पु° कर्म°। शिवे महादेवे त्रिका°

**गुह्यदीपक** पु° स्वयं गुह्यः सन् दीपयति दीपि—ण्वुल्। गुह्यदीप इव कायति कै—क वा। खद्योते (जोनाकीपोका) शब्दमा°। [अच्। मूले राजनि°

**गुह्यनिष्यन्द** पु° गुह्यात् उपस्थात् निष्यन्दते नि+स्यन्द

**गुह्यपुष्प** पु° गुह्यं पुष्पमस्य। अश्वत्थवृक्षे राजनि°

**गुह्यभाषित** न° गुह्यं गुप्तं भाषितम्। १मन्त्रे जटाध°। २गुप्तवाक्ये च।

**गुह्यमय** पु° गुह्यप्रचुरः प्राचुर्ये मयट्। कार्त्तिकेये "आग्नेयः कृत्तिकापुत्रो रौद्रो गाङ्गेय इत्यपि। श्रूयते भगवान् देवो सर्वगुह्यमयो गुहः" भा°आ°१२७अ°

**गुह्यबीज** पु° गुह्यं बीजमस्य। भूतृणे राजनि°

**गुह्याष्टक** न° भारभूत्यादितीर्थाष्टके। तच्च यथा "भारभूत्याषाढिडिण्डिमुण्डाकुल्लमरपुष्कराः। प्रभासनैमिषौ चेति गुह्याष्टकमिदं जले" इति खगेन्द्र° स°।

**गू** विष्ठात्यागे तुदा° कुटा°पर°अक°सेट्। गुवति अगुवीत् जुगाव। ओदित् गूनः। गूयम्।

**गू** स्त्री गच्छत्यपानेन देहात् गम—कू टिलोपश्च। १विष्ठायां, २मले च। गूधातोः क्विप्प्रत्ययान्ततकथनं पुंलिङ्गताकथनञ्च प्रामादिकम्।

**गूढ** त्रि° गुह—क्त। १गुप्ते २संवृते च अमरमेदिन्यौ। "कामिनीकुचकलशवत् गूढं चमत्करोति" सा°द° "गूढाकारेङ्गितस्य च" रघुः।

**गूढचारिन्** त्रि°गूढः सन् चरति चर—ट। १गुप्तीभूयचारिणि गुप्तचरणञ्च चौर्यशङ्काहेतुः यथोक्तं याज्ञवल्क्येन "अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः। द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः। परद्रव्यगृहाणाञ्च प्रच्छका गूढचारिणः। निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः। गृहीतः शङ्कया चौर्ये नात्मानं चेद्विशोधयेत्। दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत्"।

**गूढज** पु° गूढ—गुप्तः सन् जायते जन—ड। पुत्रभेदे "गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतोमतः" याज्ञ°। गूढोत्पन्नशब्दे विवृतिः।

**गूढनीड** पुंस्त्री गूढं नीडं वासस्थानं यस्य। खञ्जनखगे शब्दमाला तद्वासस्थानं हि केनापि न दृष्टचरम् स्त्रियां जातित्वात् ङीष्। [जनि°।

**गूढपत्र** पु° गूढं पत्रमस्य। १अङ्कोठे, २करीरे च रा°

**गूढपथ** पु° गूढः पन्थायस्य अच् समा°। १अन्तःकरणे शब्दार्थचि°कर्म°। २गुप्ते मार्गे च

**गूढपाद्** पुंस्त्री गूढः पादोऽस्य पृषो°। १सर्पे अमरः

**गूढपाद** पुंस्त्री गूढः पादोऽस्य। १सर्पे शब्दरत्ना° "महीधरमिव श्वेतं गूढपादैर्विशेषणैः" भा° कर्ण° ११ अ°। स्त्रियां जातित्वात् ङीपि पादः पदादेशः गूढपदी। २गुप्तपादमात्रे त्रि° "उपानद्गूढपादश्च" स्मृतौ।

**गूढपुरुष** पु°कर्म°। गुप्तचरे, प्रणिधौ अमरः। [राजनि°।

**गूढपुष्पक** पु° गूढानि संवृतानि पुष्पाण्यस्य। वकुलवृक्षे।

**गूढफल** पु°गूढं यथा तथा फलति अच्। वदरे शब्दार्थचि°

**गूढमार्ग** पु°नि°कर्म°। भूमेरन्तर्गते सुरङ्गाख्ये पथि हेमच°

**गूढमैथुन** पुंस्त्री गूढं केनाप्यदृश्यं मैथुनं यस्य। काके। स्त्रियां जातित्वात् ङीष्।

**गूढवर्चस्** पुंस्त्री गूढवर्च्चोऽस्य। भेके त्रिका°।

**गूढवल्लिका** स्त्री कर्म°। अङ्कोठवृक्षे राजनि°।

**गूढव्यङ्ग्या** स्त्री गूढं काव्यार्थभावनापरिपक्वबुद्धिमात्रवेद्यम् व्यङ्ग्यं यत्र। लक्षणाभेदे "व्यङ्ग्यस्य गूढागूढत्वात् द्विधा स्यात् फललक्षणा" सा°द°। यथा "उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्। विदधदीदृशमेव सदा सखे! सुखितमास्स्व ततः शरदां शतम्"

**गूढसाक्षिन्** पु° कर्म°। "अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। यः श्राव्यते तदा गूढं गूढसाक्षी स उच्यते" नारदोक्ते साक्षिभेदे।

**गूढाङ्ग** पुंस्त्री गूढान्यङ्गान्यस्य। कच्छपे राजनि° स्त्रियां जातित्वात् ङीष् २गुप्तदेहमात्रे त्रि° तत्र स्त्रियां स्वाङ्गत्वात् वा ङीष्। [मिदन्तत्वात् वा ङीष्।

**गूढाङ्घ्रि** पुंस्त्री गूढः अङ्घ्रिरस्य। सर्पे राजनि° स्त्रिया-

**गूढोत्पन्न** पु° गूढं यथा तथोत्पन्नः। "उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः" इति मनूक्ते पुत्रभेदे। "यस्य गृहे अवस्थितायां भार्यायां यः पुत्र उत्पद्यते सजातीयोऽयं भवतीति ज्ञातोऽपि कस्मात् पुरुषविशेषाज्जातोऽयमिति न ज्ञायते स गृहे अप्रकाशमुत्पन्नस्तस्य पुत्रः स्याद्यदीयायां भार्यायां जातः" कुल्लू°। "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" याज्ञ°उक्तेः

सजातीयत्वनिश्चये एव तस्य पुत्रता। स च पूर्वषट्क पातित्वात् बन्धुदायहरः यथाह मनुः "औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादबान्धवाश्च षट्"।

**गूढात्मन्** पु० गूढ आत्मा पृषो०। परमात्मनि। "भवेद्वर्णागमात् हंसः सिंहो वर्णविपर्ययात्। गूढात्मा वर्णविकृतेर्वर्णलोपे पृषोदरः" व्या० का०। "एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते" श्रुतिः तस्य सर्वान्तर्यामित्वेन स्थितावपि अविदुषामगम्यत्वात् गूढत्वम्।

**गूथ** पु०न०। गू-थक् अर्द्धर्चा०। विष्ठायाम् अमरः।

**गूथलक्त** पुंस्त्री गूथे रक्त आसक्त रस्य लः। (गुयेसालिक) प्रसिद्धे खगे शब्दच०। स्त्रियां जातित्वात् ङीष्।

**गून** त्रि० गू-क्त तस्य नः। कृतविष्ठोत्सर्गे अमरः। [गूरणम्

**गूर** उद्यमे चुरा०आत्म० अक० सेट्। गूरयते अजुगुरत।

**गूर** बधे गतौ च दिवा० आत्म० सक० सेट्। गूर्य्यते अगूरिष्ट। जुगूरे ईदित् गूर्णः

**गूर्त्त(र्त्त)** त्रि० गूरी उद्यमे क्त ईदित्वात् नेट् वेदे नि० नत्वाभावः। उद्युक्ते "प्रहोता गूर्त्तमना उराणः" ऋ०६।६३।४ "इदमित्था रौद्रं गूर्त्तवचाः" ऋ० १०। ६१।१।२।२प्रशस्ते च "पुरां गूर्त्तश्रवसं दर्माणम्" ऋ० १।६१।५ "गूर्त्तश्रवसम् प्रशस्तान्नम्"भा०। लोके निष्ठातस्य नत्वे गूर्ण इत्येव।

**गूर्त्ति** त्रि० गृणन्ति स्तुवन्ति गृ-कर्त्तरि क्तिच् "बहुलं छन्दसि" पा०उत्वम्। १स्तोतरि "गूर्त्तयो नेमानिषः" ऋ०।।५६।२"गूर्त्तयः स्तोतारः"भा०। भावे क्तिन्। २स्तुतौ स्त्री "शिशुं न यज्ञैः स्वदयन्त गूर्त्तिभिः" ऋ०८।१५।१ "गूर्त्तिभिः स्तुतिभिः" भा० लोके तु गीर्णिरित्येव।

**गूर्द्द** स्तुतौ सक०चु०उभ० सेट्। गूर्द्दयति ते अजुगूर्द्दत् त। "गूर्द्दयतिः स्तुतिकर्म्मा" निघ०"तं गूर्द्दय स्वर्णरम्" ऋ० ७।१८।१ "गूर्द्दय स्तुहि" भा० क्रीडार्थे गुर्द्दवत्।

**गूवाक** पु० गुवाक+पृषो०। गुवाकशब्दार्थे पूगवृक्षे राजनि०

**गूषणा** स्त्री मयूरपिच्छचन्द्रे शब्दच०।

**गॄ** सेके भ्वा० पर०सक०अनिट्। गरति अगार्षीत्। जगार।

**गृज** ध्वनौ भ्वा० पर० अक० सेट् गर्जति। अगर्जीत् जगर्ज "गर्ज गर्ज क्षणं मूढ!" देवीमा०"गर्जन् हरिः साम्भसि शैलकुञ्जे" भट्टिः। भावे गृज्यते। अगर्जि

**गृज** ध्वनौ भ्वा०पर०अक० सेट् इदित्। गृञ्जति अगृञ्जीत्। जगृञ्ज गृञ्जनम्। भावे गृञ्ज्यते अगृञ्जि

**गृञ्जन** पु० गृञ्जति रोगभेदनाशाय ध्वनति गृजि-कर्त्तरि ल्यु। १मूलभेदे मेदि० २रक्तलशुने राजनि०। "गृञ्जनः पित्तलः ग्राही तीक्ष्णोष्णो रोगनाशनः। गन्धाकृति गुणैस्तुल्यः सूक्ष्मनालः पलाण्डुना" इत्युक्तलक्षणे (सलगम) प्रसिद्धे ३ मूलभेदे पु०। "कटुष्णं कफवातघ्नं गृञ्जनं गुल्मनाशनम्। रुचिकृत् दीपनं हृद्यं दुर्गन्धि परिकीर्त्तितम् इत्युक्तगुणे (लशुन) ख्याते ४मूलभेदे न० "लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च" अभक्ष्ये मनुः। (गाजर) इति ख्याते ५मूलभेदे च६विषदिग्धपशुमांसे न० मेदि० स्वार्थे क। तत्रार्थे। "शोभाञ्जनः कोविदारस्तथा गृञ्जनकादयः" भा०आनु०८१ अ० अभक्ष्यीयोक्तौ।

**गृञ्जिम** पु० यदुवंश्ये शूरस्य पुत्रे वसुदेवभ्रातृभेदे। "महिष्यां जज्ञिरे शूरात् भोज्यायां पुरुषत्ता दश। वसुदेवो महाबाहुः" इत्युपक्रमे "अनाधृष्टिः कनवको वत्सवानथ गृञ्जिमः" हरिव० ३५ अ०।

**गृणीषन्** पु० गृ-णिक् गृणिः स्तोत्रं तस्येच्छा इष-भावे बा०कनिन् ६त०। स्तोत्रेच्छायाम् "देवं देवं वोऽवस इन्द्रमिन्द्रं गृणीषणि" ऋ०८।१२।१८ "गृणीषणि स्तोत्रेच्छायाम्" भा०। [ङीष्।

**गृण्डीव** पुंस्त्री स्थूलशृगाले हेम० स्त्रियां जातित्वात्

**गृत्स** पु० गृध्यति अनेन गृध-स। १कामदेवे उज्ज्वलद० २स्तोतरि ३स्तुत्ये च त्रि० माधवः "गृत्सं कविं विश्वविदमसूरम्" ऋ० ३।१८।१ "गृत्सं गृणन्तम्" भा० "गृत्सो राजा वरुणस्य एतम्" ऋ० ७।८७।५ "गृत्सः स्तुत्यः" भा०। ४मेधाविनि त्रि० निरु०। अग्निस्तरुणश्चिदस्तु" ऋ०७।४।२ "गृत्सो मेधावी"भा०। ५विषयाभिलाषुके त्रि०६रुद्रभेदे पु० "गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमः" यजु०१६।२५ [उदा०दृश्यम्।

**गृत्सपति** पु० ६त०। रुद्रभेदे गृत्सशब्दे यजुर्वाक्यं

**गृत्समति** पु० बृहस्पतिवंश्ये सुहोत्रपुत्रभेदे नृपे "सुहोत्रस्य सुतद्वयम्" "काशकश्च महासत्वस्तथा गृत्समतिर्नृपः" हरिव० ३२ अ०।

**गृत्समद** पु० शौनकगोत्रप्रवरे सुनहोत्रस्य १पुत्रभेदे सुनहोत्रस्य दायादास्त्रयः परमधार्मिकाः। काशः शाल्मश्च द्वावेतौ तथा गृत्समदः प्रभुः" हरिव०२९ अ० "शुनकानां गृत्समदेति त्रिप्रवरं वा भार्गवशौनहोत्रगार्त्समदेति" आश्व०श्रौ० १२।१०।१२ "बृहिर्गृत्सम-

दोनाम शक्रस्य दयितः सखा” भा० आनु०१८ अ०। स च ऋग्वेदिनां तर्पणीयर्षिभेदः “अथर्षिषयः शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजोवशिष्ठः” इति आश्व०गृह्य०सू०३।४।२ “वीतहव्यो महाराज! ब्रह्मवादित्वमेव च। तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः। शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत्। ऋग्वेदे वर्त्तते चाग्र्या श्रुतिर्यस्य महात्मनः। यत्र गृत्समदो ब्रह्मन् ब्राह्मणैः स महीयते। स ब्रह्मचारी विप्रर्षिः श्रीमान् गृत्समदोऽभवत्” आनु० ३० अ०उक्ते २वीतहव्यपुत्रे ऋषिभेदे च।

**गृध** लिप्सायां दिवा०पर०सक० सेट्। गृध्यति इरित् अगृधत्—अगर्धीत्। जगर्द्ध। गर्द्धित्वा-गृद्ध्वा गृध्नुः।

**गृधु** त्रि० गृध—कु। १अभिलाषुके २कामे पु० उणादि०।

**गृधू** स्त्री गृध—कू १बुद्धौ २कुत्सिते ३अपाने च संक्षिप्तसा०

**गृध्नु** त्रि०गृध—क्नु। लुब्धे अमरः “अगृध्नुराददे सोऽर्थान्” रघुः “चातकस्तोयगृध्नुः” मेघदू० “मा ते गृध्नुरविश्वस्तातिहायच्छिद्रागात्माधि” अथ० १।१६।२०

**गृध्य** त्रि० गृध—कर्मणि क्यप्। १अभिकाङ्क्षणीये “गृध्यमर्थमपाप्स्यसि” भट्टिः। भावे क्यप्। २लिप्सायां न०। ततो ऽस्त्यर्थे इनि। गृध्यिन् लिप्सावति त्रि०। “नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृध्यिनः” भा० आनु० ७२ अ०। स्त्रियां ङीप्।

**गृध्र** पुंस्त्री गृध—क्रन्। (शकुनि) पक्षिभेदे राजनि०। “आसन्नश्चोर्नियतं चरन्ति गृध्रादयो मूर्ध्नि गृहोर्द्ध्वभागे” शकुनशास्त्रम्। “कौशिकगृध्रप्रभृतिभिरनिष्टविहगैः परित्यक्ते” वृ०स० ४८ अ०। गृध्रस्येदम् गार्ध्रं गृध्रसम्बन्धिनि त्रि० गार्ध्रपक्षशब्दे २५८५पृ०उदा० “गृध्रच्छाये वरूथिनी” २पक्षिमात्रे च “तौ सीतान्वेषिणौ गृध्रं (जटायुषम्) लूनपक्षमपश्यताम्” रघुः। २लुब्धे त्रि० “प्रत्यग्रसंशितैः शस्त्रैर्जयगृध्राः प्रहारिणः” भा०द्रो०७ अ०। गृध्रपक्षिजातिश्च श्येनीजाता यथाह “श्येनी श्येनांश्च गृध्रांश्च तथोलूकानजायत” रामा० गृध्रीशब्दे दृश्यम्। स्त्रियां ङीष्।

**गृध्रकूट** पु० गृध्रप्रधानं कूटमस्य। मगधदेशस्थपर्वतभेदे। “गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः” (वृहद्रथः) भा०शा० ४६ अ०। “चरणाद्रिं समारभ्य गृध्रकूटान्तकं शिवे!। तावत् कीकटदेशः स्यात्तदन्तर्मगधो भवेत्” शक्ति० सङ्ग० ३०७ पट०

**गृध्रनखी** स्त्री गृध्रस्य नखस्तदाकारोऽस्त्यस्याः अच् गौरा० ङीष्। (कुलियाखाडा)१कुलिकवृक्षे रत्नमा०। २कोलिवृक्षे वदर्याम् त्रिका० “करमर्द्दत्रिकण्टकसौवीरकशतावरीगृध्रनख्यश्चेति कण्टकसंज्ञः। रक्तपित्तहरौ ह्येतौ वल्ली कुण्ठसंज्ञकौ। सर्वमेहहरौ चैव शुक्रदोषविनाशनौ” सुश्रुते तस्याः कण्टकसंज्ञत्वमुक्त्वा गुणा उक्ताः।

**गृध्रपत्रा** स्त्री गृध्र इव धूम्रं पत्रं यस्याः। धूम्रपत्रावृक्षे राजनि०। गृध्रस्य पत्रं पत्रं पक्षोऽस्य। गृध्रपक्षिपक्षकृतपक्षे २बाणभेदे। गृध्रवाजादयोऽप्यत्र “शतेन गृध्रवाजानां शराणां नतपर्वणाम्” भा० शल्य० २७ अ०। “येऽन्ये स्कान्दस्य सैनिका” इत्युपक्रमे “सञ्चारकः कोकनदो गृध्रपत्रश्च जम्बुकः” भा०श०४६ अ०। उक्ते ३स्कन्दसैन्यभेदे।

**गृध्रयातु** पु० गृध्ररूपेण याति या—तुन्। गृध्ररूपे राक्षसभेदे। “सुपर्णयातुमुतगृध्रयातुम्” ऋ०७। १०४।२२।

**गृध्रराज** पु० ६त०गृध्रोराजेवेति वा उपमितस०। गरुडात्मजे जटायुपक्षिणि। “निर्बिभेद सुतीक्ष्णाग्रैर्गृध्रराजं शिलाशितैः” रामा०आर०। गृध्रपत्यादयोऽप्यत्र।

**गृध्रवट** पु० गृध्रोपलक्षितो वटोऽत्र स्थाने। तीर्थभेदे “ततो गृध्रवटं गच्छेत् स्थानं देवस्य धीमतः। स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम्। ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम्। इतरेषां तु वर्णानां सर्वपापं प्रणश्यति” भा०व०८४ अ०

**गृध्रसी** स्त्री गृध्रमपि स्यति सो—क गौरा०ङीष् ६त०। वातरोगभेदे यथाह सुश्रुतः “पार्ष्णिप्रत्यङ्गुलीनां तु स्तम्भकृत् यानिलार्द्दिता। सक्थ्नोः क्षेपं निगृह्णीयाद् गृध्रसीति हि सा स्मृता”। माधवकरोऽप्याह। “स्फिक्पूर्वोरुकटीपृष्ठजानुजङ्घापदं क्रमात्। गृध्रसीस्तम्भकृत् तोदैर्गृह्णाति स्पन्दते मुहुः। वाताद्वातः कफात्तन्द्रा गौरवाऽरोचकान्विता”। भावप्रकाशे विस्तरेणोक्तम् यथाह “स्फिकपूर्व्वोरुकटीपृष्ठजानुजङ्घापदं क्रमात्। गृध्रसीस्तम्भकृत् तोदैर्गृह्णाति स्पन्दते मुहुः। वाताद्वातकफाभ्यां सा विज्ञेया द्विविधा पुनः। वातजायां भवेत्तोदो देहस्यातीव वक्रता। जानुजङ्घोरुसन्धीनां स्फुरणं स्तम्भता भृशम्। वातश्लेष्मोद्भवायान्तु गौरवं वह्निमार्द्दवम्। तन्द्रा मुखप्रसेकश्च भक्तद्वेषस्तथैव च। गृध्रसी वातात् केवलात् स्फिगादिपर्य्यन्तं स्तम्भकृत् तोदैर्गृह्णाति। क्रमात् वृद्धिक्रमात् तेन यथा यथा

वर्द्धते तथा तथा स्फिगादीन्याक्रामति । नात्र ग्रहणे निर्द्देशक्रमनियमः । तथा सुश्रुः सन्दते स्फिगादिषु शिराकम्पं करोतीत्यर्थः” ।

**गृध्राणा** पुं० गृध इवानिति अन–अच् गौरा० ङीष् संज्ञायां णत्वम् । धूम्रपत्रा इत्ये वैद्यकम् ।

**गृध्री** स्त्री कश्यपपत्न्याः सुताभेदे । “षट् सुताश्च महासत्वास्ताम्नायाः परिकीर्त्तिताः । काकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिका । शेत्रनी शेत्रनांस्तथा भासी भासान् गृध्रांश्च गृध्र्यपि” हरिवं०३अ० ।

**गृभ** न० गृह+वेदे हस्य भः । गृहे “न्यु भ्रियन्ते यशसो गृभादा” ऋ० ७।२२।२ गृभात् गृहात्” भा०

**गृभि** पुं० ग्रह–कि सम्प्र० वेदे हस्य भः । ग्रहणे । “वनस्पतीनां गृभिरोषधीनाम्” अथ० १२।१।५७

**गृभीत** त्रि०ग्रह–क्त वेदे हस्य भः । गृहीते “रात्रिं गृभीतां मुखतो नयन्ति” ऋ०१।१६२।२ “गृभीतां गृहीताम्” भा० २गृहीतयज्ञे च “यदि गृभीततातये” ऋ० ५।७४।४ “गृभीततातये गृहीतयज्ञसन्तानाय” भा० क्वचित् आर्षेऽपि प्रयोगे लोके भः । “जयजय जह्यजामजितदोषगृभीतगुणाम्” भाग०१०।८७। ११ श्लो० ।

**गृष्टि** स्त्री गृह्णाति सकृत् गर्भम् ग्रह–कर्त्तरि क्तिच् पृषो० । १सकृत्प्रसूतायां गवि । “गृष्टिः ससुव स्थविरं तवागाम्” ऋ०४।१८।१० “आपीनभारोद्वहनप्रयत्नात् गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः” रघुः । “भजमानस्य चपलो गृष्टेः स प्रचचार ह” हरि०३०७अ० । जात्या सहास्य कर्म० । विशेषणत्वेऽपि परनिपातः गोगृष्टिः । इदन्तत्वात् वा ङीप् । “पृष्ठौहीनां पीवराणाञ्च तावदग्र्याः गृष्टीधेनवः सुव्रताश्च” भा० आनु० ९३ अ० । २सकृत्प्रसूतस्त्रीमात्रे अतएव गृष्टेर्गोमात्रपरत्वे “चतुष्पादो गर्भिण्याः” पा० सूत्रान्तरमारब्धं शब्दार्थचि० गृष्टेरपत्यम् गृष्ट्यादि ढक् । गार्ष्टेय तदपत्ये पुंस्त्री । कर्मणि क्तिन् । ३वराहक्रान्तायाम् अमरः । ४बदरवृक्षे मेदि० । ५काश्मर्यां राजनि० । स्वार्थे क तत्रार्थे । सप्तपर्णारग्वधेत्याद्युपक्रमे “मधुकभूनिम्ब गृष्टिका इति समभागाः कल्कः” सुश्रुतः ।

**गृष्ट्यादि** अपत्यार्थे ढक्प्रत्ययनिमित्ते पा०ग०सूत्रोक्ते शब्दगणे स च गणः “गृष्टि हृष्टि बलि हलि विश्रि कुद्रि अजवस्ति मित्रयु” । [गृहयालुः ।

**गृह** ग्रहणे अद०चु० आत्म०सक०सेट् । गृहयते अजगृहत

**गृह** न० गृह्यते धर्माचरणाय ग्रह–गेहार्थे क । इष्टकामृत्तिकादिरचिते १गेहे । अर्द्धर्चादित्वादयमुभयलिङ्गः तत्र एकगृहे न० पुंलिङ्गस्तु बहुवचनान्त एव “तत्रागारं धनपतिगृहानुत्तरेणास्मदीयम्” मेघदू० । “जालागताभ्योऽधिगृहं गृहिण्यः” “गृहाणि नीलैरिव तत्र रेजुः”लिप्तेषु भासा गृहदेहलीनाम्” गृहैर्विशालैरपि भूरिशालैः” माघः । पुं०गृह–ग्रहणे कर्मणि अच् । २कलत्रे “न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते” इति स्मृतिः । ३नामनि शब्दर०४मेषादिभवने राशौ च । गेहनिर्माणप्रयोजनमाह वशिष्ठः “वास्तुज्ञानं प्रवक्ष्यामि यदुक्तं ब्रह्मणा पुरा । ग्रामसद्मपुरादीनां निर्माणं वक्ष्यते मया” । भवि०पु० “गृहस्थस्य क्रियाः सर्व्वाः न सिध्यन्ति गृहं विना । यतस्तस्माद् गृहारम्भप्रवेशसमयं ब्रुवे । परगेहे कृताः सर्वाः श्रौतस्मार्त्तादिकाः क्रियाः । निष्फलाः स्युर्यतस्तासामधीशः फलमश्नुते” तत्र ग्रामादिभेदे पुरुषभेदस्य शुभाशुभं राशिभेदेन द्वारनिवेशनञ्चोक्तम् “यद्भं द्व्यङ्कसुतेशदिङ्मितमभौ ग्रामः शुभोनामभात्स्वं वर्गं द्विगुणं विधाय परवर्गाढ्यं गजैः शेषितम् । काकिण्यस्त्वनयोश्च तद्विवरतो यस्याधिकाः सोऽर्थदोऽथ द्वारं द्विजवैश्यशूद्रनृपराशीनां हितं पूर्वतः” मु० चि० । “व्यवहारप्रसिद्धं यन्नाम (नीलकण्ठः) इत्यादिकं तस्यावकहडचक्रानुसारेण यदनुराधादिकं नक्षत्रं ततो यद्वृश्चिकादिराशिः स्यात्तन्नामभमेवं यस्मिन् ग्रामे नगरे वा वस्तुमिष्यते तस्य (चरणाद्रिः)इत्यादिकं यन्नाम तस्माज्जातो यो राशिर्मीनादिस्तद्ग्रामभम् एवं नामभद्वयं ज्ञात्वा नामभात् पुरुषनामराशेः सकाशात् यद्भं यस्य ग्रामस्य भं राशिः यदा द्वितीयो नवमः पञ्चमः एकादशसङ्ख्योदशमश्च स्यात्तदासौ ग्रामः स्वस्य शुभो फलदाता स्यात् अन्यथा न भवतीत्यर्थः । यथा नीलकण्ठस्य वृश्चिकराशितः पञ्चमोमीनराशिरतश्चरणाद्रिर्नीलकण्ठस्य वासयोग्यः सन् शुभफलदो न वाराणस्यादिः । उक्तञ्च मुहूर्त्तमार्तण्डे “नामर्क्षात् द्विसुताङ्कदिग्भवगतो ग्रामः शुभोनाऽन्यथेति” । अत्र काकिण्यादौ नामराशिरेव ग्राह्यः । उक्तञ्च “काकिण्यां वर्गशुद्धौ च वादे द्यूते-स्वरोदये । मन्त्रे पुनर्भूवरणे नामराशेः प्रधानतेति” अथ ग्रामात्मनोरुत्तमर्णत्वमधमर्णत्वं चाह स्वं वर्गमिति । वर्गास्तु “अकचटतपयशाः खगेशमार्जारसिंहशुनाम् । सर्पाखुमृगावीनां निजपञ्चमवैरिणामष्टौ”

इत्युक्तास्तत्र यस्य पुंसः यत्नं स्याक्रोवर्गोगरुडादिः स्यात्तद्वर्गसंख्यां द्विगुणां विधाय कृत्वा परस्य ग्रामस्य वर्गसंख्यया आढ्यां च कृत्वा गजैरष्टभिः शेषितमवशिष्टनाः काकिण्योऽस्य पुंसः । एवं ग्रामस्यापि स्ववर्गसंख्यां द्विगुणां कृत्वा परस्य पुंसः वर्गसंख्यया युक्तां च कृत्वा गजभक्तावशिष्टाः ग्रामस्य काकिण्यो भवन्ति एवमनयोः पुरुषग्रामयोः काकिण्यःस्युः । तत्र तद्विवरतः पुरुषकाकिणीनां ग्रामकाकिणीनां विवरमन्तरन्तस्मिन् क्रियमाणे यस्य ग्रामस्य दातृत्वात् पुंसः काकिण्याविशेषे पुंसोद्रव्यहानिः । ग्रामस्य प्रतिपत्तौ दत्त्वादित्यर्थः । यथा । नीलकण्ठस्य वर्गः सर्पः तत्संख्या ५ द्विगुणा १०चरणाद्रेर्वर्गःसिंहस्तत्संख्यया २ युक्ता १२ गजभक्तशेषं ५ नीलकण्ठस्य काकिण्यः । एवं ग्रामवर्गसंख्या ३ द्विगुणा ६ नीलकण्ठवर्ग ५ संख्या युक्ता ११ अष्टभक्तावशेषं ३ ग्रामस्य काकिण्यः द्वयोरन्तरे शेषं २ नीलकण्ठस्य दातृत्वात् स्वद्रव्यहानिरित्यर्थः । उक्तञ्च "स्ववर्गं द्विगुणं कृत्वा परवर्गेण योजयेत् । अष्टभिस्तु हरेद्भागं योऽधिकः स ऋणी भवेत्" इति । इतोऽन्यथाहुः कश्यपवशिष्ठनारदाः "अकारादिषु वर्गेषु दिक्षु प्रागादिषु क्रमात् । गृध्रमार्जारसिंहाश्वसर्पाखुगजमेषकाः । दिग्वर्गाणामियं योनिः स्ववर्गात्पञ्चमो रिपुः । रिपुवर्गं परित्यज्य शेषवर्गाः शुभप्रदाः । साध्यवर्गं पुरः स्थाप्य पृष्ठतः साधकं न्यसेत् । विभजेदष्टभिः शेषं साधकस्य धनं स्मृतम् । व्यत्ययेनागतं शेषं साधकस्य ऋणं स्मृतम् । धनाधिकं स्वल्पऋणं सर्वसंपत्प्रदं स्मृतम्" इति । गृध्रोऽत्र गरुडः गरुडसर्पयोर्महावैरसत्त्वात् साध्य इत्यर्थः । साध्यो वासयोग्यो ग्रामादिस्तस्य वर्गं वर्गसंख्यां पुरः संस्थाप्य साधकस्य नीलकण्ठादेः वर्गसंख्यां पृष्ठतोन्यसेत् । एवं विशिष्टोऽङ्कोऽष्टभिर्भक्तः शेषं साधकस्य ऋणं स्यात् । यथा साध्यवर्गसंख्या ३पुरःस्थापिता साधकस्य ५वर्गसंख्या च पृष्ठतः साचैवम् ५३ एतास्त्रिपञ्चाशत् अष्टभक्तावशिष्टं साध्यस्य ५धनं साधकस्य साध्यस्य च संख्या विपरीतस्थापित३५ अष्टभक्तं शेषं साधकस्य ३ऋणं स्यात् । अथ द्वारनिवेशनमाह । ध्वजेति । द्विजादिराशिमतां पुंसां क्रमेण पूर्वतः प्राच्यादिदिक्चतुष्टये द्वारं हितं यथा द्विजराशयः कर्कटवृश्चिकमीनास्तेषां पूर्वदिशि । वैश्यराशयो वृषकन्यामकरास्तेषां दक्षिणदिशि । शूद्रराशयो मिथुनतुला कुम्भास्तेषां पश्चिमदिशि न्यपराशयो मेषसिंहधनुर्धरास्तेषामुत्तरदिशि द्वारनिवेश इत्यर्थः" पीयु० धा० अत्रेदं बोध्यम् "शेषाङ्केन फले बोध्ये शेषाभावे तु हारकात् । अङ्कादेव फलं बोध्यमिति तन्त्रविदां मतम्" ज्यो० त० वचनादङ्काभावे हारकाङ्कात् फलनिर्णयः । राशिविशेषस्य ग्रामादिस्थानविशेषे निवासनिषेधमाह । "गोसिंहनक्रमिथुनं निवसेन्न मध्ये ग्रामस्य पूर्वककुभोऽलिझषाङ्गनाश्च । कर्कौ धनुस्तुलभमेषघटाश्च तद्वद्वर्गाः स्वपञ्चमपरा बलिनः सुरेन्द्राः" मु०चि० "वस्तुमिष्टस्य ग्रामस्य वस्त्वविभागवन्नवधा विभागं कृत्वा मध्ये मध्यमविभागे गोसिंहनक्रमिथुनं समाहारद्वन्द्वः न निवसेत् वृषसिंहमकरमिथुनराशिमन्तः पुरुषा न वसेयुः । अथ पूर्वककुभः पूर्वदिशातोऽष्टदिक्षु अलिझषिकः तदा दिराशिमन्तः पुरुषाः न वसेयुः । यथा । पूर्वस्यां वृश्चिकः आग्नेय्यां झषो मीनः, दक्षिणस्यां कन्या, नैरृत्यां कर्कः . पश्चिमायां धनुः । वायव्यां तुला उत्तरस्यां मेषः ऐशान्यां कुम्भः न वसेदित्यर्थः । अथ वर्गाः । अकचटतपयशवर्गाः अष्टौ ऐन्द्र्याः पूर्वदिशमारभ्य अष्टदिक्षु बलिनः । यथा अवर्गः पूर्वस्याम् । कवर्ग आग्नेय्याम् । चवर्गो दक्षिणस्याम् टवर्गो नैरृत्याम् । तवर्गः पश्चिमायाम् पवर्गो वायव्याम् । यवर्गः उत्तरस्याम् । शवर्ग ऐशान्यां बलीत्यर्थः । कीदृशाः वर्गाः स्वपञ्चमपराः स्वस्मात् पञ्चमः परः शत्रुर्येषां ते । यस्य अवर्गः पूर्वस्यां बली तेन स्वपञ्चमपश्चिमायां द्वारं निवासो वा न विधेयः एवं कवर्गादीनामाग्नेय्यादिसप्तदिक्षु बलित्वं तत् पञ्चमस्य रिपुत्वञ्च ज्ञेयम्" । पी० धा०

तत्र गृहयोग्यभूमिपरीक्षा विश्वकर्मणोक्ता यथा "अथातः संप्रवक्ष्यामि लोकानां हितकाम्यया । श्वेता रक्ता तथा पीता कृष्णा वर्णानुपूर्वशः । सुगन्धा ब्राह्मणी भूमीरक्तगन्धा तु क्षत्रिणी । मधुगन्धा भवेद्वैश्या मद्यगन्धा च शूद्रिणी । मधुरा ब्राह्मणी भूमिः कषाया क्षत्रियान्विता । अम्ला वैश्या भवेद्भूमिस्तिक्ता शूद्रा प्रकीर्त्तिता । चतुरस्रा द्विपाकारा सिंहा वृषभरूपिणी । वृत्तं च भद्रपीठं च त्रिशूलं लिङ्गसन्निभम् । प्रासादध्वजकुम्भादिदेवानामपि दुर्लभम् । त्रिकोणां शकटाकारां शूर्पव्यजनसन्निभाम् । सुरजाकारसदृशीं सर्पमण्डूकरूपिणीम् । खराजगरसंकाशां वक्रां चिपिटरूपिणीम् । मुद्गराभां तथा लूककाकसर्पनिभां तथा ।

शूकरोष्ट्राजसदृशीं धनुःपरशुरूपभाम्। कृकलासशवाकारां दुर्गन्धां च विवर्जयेत्। मनोरमाऽत्र या भूमिः परीक्ष्येत्तां प्रयत्नतः। द्वितीया दृढ़भूमिश्च निम्ना चोत्तरपर्व्वके। गम्भीरा ब्राह्मणी भूमिर्न्नृपाणां तुङ्गमाश्रिता। वैश्यानां समभूमिश्च शूद्राणां विकटा स्मृता। सर्व्वेषां चैव वर्णानां समभूमिः शुभावहा। शुक्लवर्णा च सर्व्वेषां शुभा भूमिरुदाहृता। कुशकाशयुता ब्राह्मी दूर्व्वान्नृपतिवल्लभा। फलपुष्पयुता वैश्या शूद्राणां तृणसंयुता। नदीपाताश्रितां तद्वत् महापाषाणसंयुताम्। सुशलाभां महाघोरां वायुना वापि पीड़िताम्। वल्लभल्लकसंयुक्तां मध्ये विकटरूपिणीम्। श्वसृगालनिभां रूक्षां दन्तिकैः परिवारिताम्। चैत्यश्मशानवल्मीकधूर्त्तान्तिकेषु वर्त्तिनीम्। चतुष्पथमहादृत्यदेवमन्त्रिनिवासतः। अदूरस्थां श्वभ्रगर्त्तयुक्ताञ्चैव विवर्जयेत्" भूमिभेदे फलानि तत्रैव "सुवर्णगन्धा सुरसा धनधान्य शुभावहा। व्यत्यये व्यत्ययफला ततः कार्यं परीक्षणम्। चतुरस्रा महाधन्या द्विपाभा धनदायिनी। सिंहाभा सद्गुणान्यूना वृषाभा पशुवृद्धिदा। वृत्ता सद्वृत्तदा भूमिर्भद्रपीठनिभा तथा। त्रिशूलरूपा वीराणां सत्स्वनिर्धनसौख्यदा। लिङ्गाभा लिङ्गिता श्रेष्ठा प्रासादध्वजसन्निभा। पदोन्नतिं प्रकुरुते कुम्भाभा धनवर्द्धिनी। त्रिकोणशकटाकारा शूर्पव्यजनसन्निभा। क्रमेण सुतसौख्यार्थधर्महानिकरी स्मृता। सुरजा वंशहा सर्पमण्डूकाभा भयावहा। नैःस्वा खरानुकारा च मृत्युदाऽजगरान्विता। चिपिटा पौरुषैर्हीना वक्राकारा तथैव च। काकोलूकनिभा तद्वद्दुःखशोकभयप्रदा। सर्पाभा पुत्रपौत्रघ्नी वंशाभा वंशहानिदा। शूकरोष्ट्राजसदृशी धनुःपरशुरूपिणी। कुचेलान्मलितान् मूर्खान् ब्रह्मघ्नान् जनयेत् सुतान्। कृकलासशवाकारा मृतपुत्रा धनार्त्तिदा। दुर्गन्धां पापिनीं दुष्टप्रजां भूमिं परित्यजेत्। मनोरमा सुतप्रदा दृढ़ा धनप्रदा मता। सुतार्थदा तथाप्युदक्सुरेशादिक्प्लवा मही। गम्भीरशब्दा जनयेत् पुत्रान् गम्भीरनिःस्वनान्। तुङ्गा पदान्वितान् कुर्यात् सदा सौभाग्यदायिनी। विकटा शूद्रजातीनां तथा दुर्गमवासिनाम्। शुभदा न परेषां च तस्कराणां शुभावहा। सुवर्णवर्णा स्वान् वर्णान् वर्णानामाधिपं सदा। शुक्लवर्णा च सर्व्वेषां पुत्रपौत्रप्रवर्द्धिनी। कुशकाशान्विता ब्रह्मवर्चसान् कुरुते सुतान्। दूर्वान्विता वीरजनिः फलाढ्या धनपुत्रदा। नदीपाताश्रिता मूर्खान् मृतवत्सांस्तथैव च। दरिद्रानश्ममध्यस्था गर्त्तान्तस्था मृषायुतान्। विवरा पशुपुत्रार्त्तिदायिनी सौख्यहारिणी। वक्रातिवक्रा जनयेत् पुत्रान् विद्याविहीनकान्। शूर्पमार्जारलगुडनिभा भीतिसुतार्तिदा। सुशला सुशलान् पुत्रान् जनयेद्वंशघातकान्। घोराघोरप्रदा वायुपीड़िता वायुभीतिदा। वल्लभल्लकसंयुक्ता पशुहानिप्रदा सदा। विकटा विकटान् पुत्रान् श्वसृगालनिभा तथा। ददाति रूक्षा परुषा दुर्बलान् जनयेत् सुतान्। गृहस्वामिभयं चैव वल्मीके विपदः स्मृताः। धूर्त्तालयसमीपे तु पुत्रस्य मरणं ध्रुवम्। चतुःपथे त्वकीर्त्तिः स्यादुद्वेगो देवसद्मनि। अर्थहानिश्च सचिवे श्वभ्रे विपद उत्कटाः। गर्त्तायां तु पिपासा स्यात् कूर्माभं धननाशदम्। दशखण्डादिपर्यन्तं पीड्यन्ते पुरवासिनः। चैत्यश्मशानदेवानां गृहाणि परिवर्जयेत्। निखनेद्धस्तमात्रेण पुनस्तेनैव पूरयेत्। पांशुनाधिकमध्योनाः श्रेष्ठमध्याधमाः क्रमात्। जलेनापूरयेत् श्वभ्रं शीघ्रं गत्वा शतं पदम्। तथैवागत्य वीक्षेत न हीनं सलिलांशुना। अरत्निमात्रे श्वभ्रे वा ह्यनुलिप्ते च सर्वतः। कृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयम्। ज्वाल-येद्भूपरीक्षार्थं सम्पूर्णं सर्वदिङ्मुखम्। दीप्ता पूर्वादि गृह्णीयाद्वर्णानामनुपूर्वशः। हलाकृष्टे तथोद्देशे सर्व्वबीजानि वापयेत्। त्रिपञ्चसप्तरात्रेण संप्ररोहन्ति तान्यपि। उप्तबीजा त्रिरात्रेण साङ्कुरा शोभना मही। मध्यमा पञ्चरात्रेण सप्तरात्रेण निन्दिता। तिलान्वा वापयेत्तत्र यवांश्चापि च सर्षपान्। अथ वा सर्वधान्यानि वापयेच्च समन्ततः। यत्र नैव प्ररोहन्ति तां प्रयत्नेन वर्जयेत्। व्रीहयः शालयो मुद्गाः गोधूमाः सर्षपास्तिलाः। यवाश्चौषधयः सप्त सर्वबीजानि चैव हि। सुवर्णताम्रपुष्पाणि श्वभ्रमध्यं गतानि च। यस्य नाद्य समायान्ति स भूमिस्तस्य शोभना। पांसवो रेणुतां नीता निरीक्ष्याश्चान्तरिक्षगाः। अधोमध्योर्द्ध्वगा नृणां गतितुल्यफलप्रदाः"।

भूमेः पूर्वादिदिक्प्लवफलं तत्रैवोक्तम् 'चतुरस्रां समां शुद्धां भूमिं कृत्वा प्रयत्नतः। तस्मिन् दिक्साधनं कार्यं वृत्तमध्ये गते दिशि। पूर्वप्लवे भवेल्लक्ष्मीराग्नेय्यां शोकमादिशेत्। याम्यां याति यमद्वारं नैरृते च महाभयम्। पश्चिमे कलहं कुर्याद्वायव्यां मृत्युमादिशेत्। उत्तरे वंशवृद्धिः स्यादीशाने रत्नसञ्चयम्। दिङ्मूढे कुलनाशः स्याद्वक्रे दारिद्र्यमादिशेत्"।

मटके आयामविस्तारभेदेन ध्वजाद्यायास्तत्फलं वर्णदिग्भेदेन ध्वजादीनां विधिनिषेधौ चाह तत्रैव "विस्तारेण हतं दैर्घ्यं विभजेदष्टभिस्ततः। यच्छेषं स भवेदायो ध्वजाद्यास्ते सुरेष्टधा। ध्वजो धूमो हरिः श्वा गौः खरेभौ वायसोऽष्टमः। पूर्वादिदिक्षु चाष्टानां ध्वजादीनामवस्थितिः। स्वस्थानात् पञ्चमे स्थाने वैरत्वं च मह-द्भवेत्। विषमायः शुभः प्रोक्तः समायः शोकदुःखदः। स्वस्थानगा वलिष्ठाः स्युर्नचान्यस्थानगाः शुभाः। ध्वजः सिंहे तौ च गजे द्योते गवि शुभप्रदाः। वृषो न पूजितोऽन्यत्र ध्वजः सर्वत्र पूजितः। वृषसिंहगजाश्चैव कुण्डे कर्कटकीटयोः। द्विपः पुनः प्रयोक्तव्यो वापीकूप-सरःसु च। मृगेन्द्रमासने दद्याच्छयनेषु गजं पुनः। वृषं भोजनपात्रेषु छत्रादिषु पुनर्ध्वजम्। अग्निवेश्मसु सर्वेषु, गृहे वह्न्युपजीविनाम्। धूमं नियोजयेत् केचित् श्वानं म्लेच्छादिजातिषु। खरो वैश्यगृहे शस्तोध्वाङ्क्षः शेष कुटीषु च। वृषसिंहगजाश्चापि प्रासादपुरवेश्मसु। गजाये वा ध्वजाये वा गजानां सदनं शुभम्। अश्वालयं ध्वजाये च खराये वृषभेऽपि वा। उष्ट्राणां मन्दिरं कार्यं गजाये वा वृषध्वजे। पशुसद्म वृषाये च ध्वजाये वा शुभ-प्रदम्। शय्यासु वृषभः शस्तः पीठे सिंहः शुभप्रदः। अमत्रच्छत्रवस्त्राणां वृषाये वा ध्वजेऽपि वा। पादुकोपानहौ कार्यौ सिंहायेऽथवा वा ध्वजे। स्वर्णरौप्यादिवाह्नामन्येषां तु ध्वजः स्मृतः। ब्राह्मणे तु ध्वजः श्रेष्ठः प्रतीच्यां कारयेन्मुखम्। सिंहश्च भूभृतां शस्त उदीच्यां च मुखं शुभम्। विशां वृषः प्राग्वदनं शूद्राणां दक्षिणे गजः। सर्वेषामेव चायानां ध्वजः श्रेष्ठतमो मतः। ध्वजायः क्षत्रियविशोः प्रशस्तो गुरुरब्रवीत्। सिंहायः सर्वथा त्याज्यो ब्राह्मणेन वृषस्तथा। सिंहाये शुनि चाये च कल्यायासं प्रजायते। ध्वजाये पूर्ण-सिद्धिः स्याद्वृषायः पशुवृद्धिदः। गजाये सम्पदां वृद्धिः शेषायाः शोकदुःखदाः"। तथा च ध्वजाद्या आया यत्र स्युस्तद्दिङ्मुखद्वाराणि स्युरिति फलितार्थः "प्रत्यग्ध्वजे द्वारमथोत्तरे पूर्वं हरावुदक् स्यात् द्विरदे च याम्यम्" इति श्रीपत्युक्तेः "सर्वद्वार इह ध्वजो वरुणादिग्द्वारं च हित्वा हरिः प्राग्द्वारो वृषभो गजो यमसुरेशाशामुखे स्याच्छुभः" महेश्वरोक्तेश्च। "पश्चादुदक्पूर्वयमे द्विजादितः" मु॰चि॰ ब्राह्मणादिवर्णभेदेन द्वारनिवेशनमुक्तम् द्विजादितः ब्राह्मणादिवर्णभेदेन पश्चादादि दिक्षु गृहद्वारं स्यात्। यथा ब्राह्मणस्य पश्चान्मुखं गृहद्वारं क्षत्रियस्योदग्दिशि वैश्यस्य पूर्वस्यां, शूद्रस्य यमे दक्षिणस्याम् इत्यर्थः। उक्तञ्च श्रीपतिना "ध्वजे प्रतीच्यां मुखमग्रजानामुदङ्मुखं भूमिभृताञ्च सिंहे। विशो वृषे प्राग्वदनं गजे तु शूद्रस्य याम्याननमामनन्तीति"। टोडरानन्दे च्यवनः "ध्वजे पराख्यं विप्राणां राज्ञां सिंहेऽप्युदङ्मुखम्। गजे शूद्रस्य याम्यास्यं विशः पूर्वमुखं वृषे इति॥" पी॰धा॰ गृहाणामायवारांशादिकं तत्फलञ्च विश्व॰ उक्तं यथा "पिण्डे नवाङ्काङ्गगजैरग्निनागाष्टसामरैः। नागैश्च गुणिते भक्ते क्रमादेते पदार्थकाः। नागाद्रिनवसूर्यार्क्षतिथ्यृक्षभानुभिः। आयो वारोऽंशको द्रव्य-मृणमृक्षन्तिथिर्युतिः। आयुश्चाथ गृहेशर्क्षंगृहभैक्यं मृतिप्रदम्। संपूर्णाः शुभदा ह्येते ह्यसंपूर्णास्त्वनिष्टदाः"। अस्यार्थः। इष्टगृहदीर्घः १७हस्ताः विस्तारः ७हस्ताः। "तथायते तद्भुजकोटिघातः" लीला॰उक्तदिशा क्षेत्रफलम् २०३ इदं पिण्डं नवधा स्थापितम् यथाक्रमम् नवाद्यङ्कैर्गुणिते नागाद्यङ्कैर्हृते आयादयः स्युः। यथा २०३ पिण्डे ६ गुणिते १८२७। ८भक्ते शेषाङ्कात् ३ आयः सिंहाख्यः। ६हतः १८२७। ७भक्तः शेषः७ तेन वारः शनिः। ६गुणः १२१८। ९भक्तः ३शेषः अंशकः (नवांशकः)। ८गुणः १६२४। १२भक्तः ४धनम्। ३गुणः ६०९। ८भक्तः शेषः १ऋणम्। ८गुणः १६२४। २७ भक्तः शेषः ४नक्षत्रं रोहिणी। ८गुणः १६२४। १५भक्तः। शेषः ४चतुर्थी तिथिः। ४गुणः ८१२। २७भक्तः शेषः २प्रीतिर्योगः। ८गुणः १६२४। १२०भक्तः शेषः६४ वर्षा आयुः। आयादीनां प्रयोजनं पी॰धा॰ दर्शितं यथा अथैषामायादीनां प्रयोजनमुच्यते। आयस्य तावत् "विषमायः शुभायैव समायः शोकदुःखदः" इति वशिष्ठोक्तम्। "वाराणां च सूर्यारवारराश्यंशाः सदा वह्निभयप्रदाः। शेषग्रहाणां वारांशाः कर्त्तुरिष्टार्थसिद्धिदाः" इति यथा गणितेनागतो भौमवारः सोऽपि निन्द्यः तद्राशी मेष-वृश्चिकौ निन्द्यौ एवमन्येष्वपि राशिषु तन्नवांशानिन्द्याः "गृहस्यागतभं यत्तु तद्द्विराश्यात्मकं यदि। मन्नवांश-वशात्तत्र ज्ञातव्यं सर्वदा गृहमिति" तथा च कृत्तिका द्विराश्यात्मिका तत्रैकावशेषे मेषः। मृगेऽपि द्व्यादिके शेषे मिथुनमन्यथा वृषः। पुनर्वसावप्यंशकत्रयं यावन्मिथुनमन्यथा कर्कः। एवमुत्तराफाल्गुन्यादिषु द्विराश्यात्मकेषूहनीयं वि-

द्धिः । न तु निःसन्दिग्धेष्वेकराशपात्मकेषु अश्विन्यादिषु । धनर्णयोश्च फलम् "धनाधिकं गृहं हृद्यं निर्द्धनाय क्षयाधिकमिति" । नक्षत्रस्य फलम् "विपत्प्रदा विपत्तारा प्रत्यरिः प्रतिकूलदः । निधनाख्या तारका तु सर्वथा निधनप्रदा । विवर्ज्य तारकास्त्वेतास्त्विमाः शुभप्रदम् । कुर्वन्नज्ञानतो मोहाद्दुःखभाग्व्याधिभाग्भवेत् । अत्र गृहनक्षत्राद्दिनभं यत्संख्यं तन्नवभक्तमवशिष्टतारका विपत्तारादिकाः स्युश्चेत्तदानिष्टास्तद्दिने गृहारम्भं न कुर्यात्तन्यस्मिन् दिने शुभतारासु गृहारम्भं कुर्यादित्यर्थः इति केचित् । अपरे तु गृहकर्तुर्नामनक्षत्राद्गृहभं संगण्य नवभक्तमवशिष्टं विपत्तारादिकं स्यात्तद्गृहमनिष्टमन्यथा शुभमिति यदाह कश्यपः "दत्ते दुःखं तृतीयर्क्षं पञ्चमर्क्षं यशःक्षयम् । आयुःक्षयं सप्तमर्क्षं कर्तुर्भाद्यदि सप्तममिति" वास्तुशास्त्रेऽपि "गृहभात् स्वामिभं गण्यं भक्तं च नवभिः पुनः । यच्छेषं सा भवेत्तारा सप्तपञ्चत्रिका ऽधमेति" प्राहुः । यदा तु गृहकर्तुर्गृहस्य चैकं नक्षत्रं स्यात्तदा तच्छुभमशुभं वेति निर्णयमाह । वसिष्ठः "गृहस्य तत्पतेस्त्वेकं धिष्ण्यं चेन्निधनप्रदमिति" निधनं मरणम् । राशेरैक्येऽयं दोषः न तु भिन्नराशित्वे तद्वाक्यस्य विवाहप्रकरणोक्तत्वात् । केचिदन्यदपि प्रयोजनमुक्तं तदुक्तं व्यवहारसमुच्चये "त्रिभिस्त्रिभिर्विमर्शनि कृत्तिकाद्यैरुक्केदपुत्राग्निधनानि शोकम् । शत्रोर्भयं राजभयं च मृत्युः सुखं प्रवासश्च नव प्रभेदाः" इति । गृहभवशाद्राशिस्थानेऽपि प्रयोजनमाह स एव । (विश्वकर्मा) राशिकूटादिकमित्यादि (तद्वाक्यमनुपदं दर्शयम्) वास्तुशास्त्रे कृत्तिकादिषु द्विराशिषु भेषु राशिनिर्णयो यथा "अश्विन्यादित्रयं मेषे सिंहे प्रोक्तं मघात्रयम् । मूलादित्रितयं चापे शेषेषु नव राशय" इति । शेषेषु भेषु रोहिण्यादिषु नव राशयो ज्ञेयाः । यथा रोहिणीमृगयोर्वृषः । आर्द्रापुनर्वस्वोर्मिथुनम् । पुष्याश्लेषयोः कर्कः । एवं हस्तादिके श्रवणादिद्विके च कन्यामकराद्याराशयः स्युरित्यर्थः अयं च पक्षो वास्तुशास्त्रे नवांशानुक्तेरुक्तः । अत्र राशिकूटे नाडीवेधो न दोषाय । उक्तं च ज्योतिश्चिन्तामणौ "सेव्यसेवकयोश्चैव गृहतत्स्वामिनोरपि । परस्परं मित्रयोश्चैकनाडी प्रशस्यते" इति । तिथिप्रयोजनं तिथ्यानयनप्रकारान्तरं च वास्तुशास्त्रे "शक्राहतं क्षेत्रफलं त्रिंशद्भक्तावशेषकम् । तिथ्यः प्रतिपदाद्याःस्युर्दर्शे रिक्तां च वर्जयेदिति" । तत्क्रमायत्वाच्च भाशुभप्रकरणोक्तं नेष्टयोगवर्जनं च योगानां, प्रयोजनं स्पष्टमेव आयुषः प्रयोजनं तावत्कालं गृहस्थितिरिति" पी०धा० आयादिफलं विश्व०वास्तुशास्त्रे "धिष्ण्यं च वसुभिर्भक्ते व्ययः स्यात्स्वेष्टकाङ्कके । धनाधिकं गृहं हृद्यं निर्द्धनाय क्षयाधिकम् । व्ययान्विते क्षेत्रफले भुवाद्यक्षरसंयुते । त्रिभिः शेषे क्रमादिन्द्रयमभूमिपांशकाः । इन्द्रांशे पदवीवृद्धिर्मित्रसौख्यं प्रजायते । यमांशे मरणं नूनं रोगशोकमनेकधा । राजांशे धनधान्यानि पुत्रवृद्धिश्च जायते । राशिकूटादिकं सर्वं दम्पत्योरिव चिन्तयेत् । नैःस्वं द्विद्वादशे नूनं त्रिकोणे त्वनपत्यता । षट्काष्टके नैधनं स्याद्ग्रत्यये मध्यमं स्मृतम् । (त्र्यये द्वादशद्वितीयादौ) दूनस्थिते पुत्रलाभः स्त्रीलाभश्च तथैव च । जन्मतृतीये च तथा धनधान्यागमो भवेत् । दशमैकादशे चन्द्रे धनायुर्भद्रपदः । चतुर्थाष्टमरिष्फस्थो मृत्युपुत्रविनाशदः । त्रिकोणेऽत्वनपत्यं स्यात् केचिद् बन्धुगृहे शुभम् । वदन्ति चन्द्रेतनयोर्नैतन्मम मतं स्मृतम् । अश्विन्यादित्रयम् इत्यादिकम् (अनुपदमुक्तम्) । सूर्यारवारराशंशाः सदा वह्निभयप्रदाः । शेषग्रहाणां वारांशाः कर्तुरिष्टार्थसिद्धिदाः । गृहस्वामतभं यत्तु तद्धि राशप्रात्मकं यदि । तन्नवांशवशात्तत्र ज्ञातव्यं सर्वदा गृहम् । विपत्प्रदा विपत्तारा प्रत्यरिः प्रतिकूलदः । निधनाख्या तु या तारा सर्वथा निधनप्रदा । विवर्ज्य तारकास्त्वेतास्त्विमाः शुभप्रदम् । प्रत्यरितारा भयदा निरंशर्चेत मृत्युभीः । निधानाख्या तु या तारा स्त्रीसुतार्त्तिप्रदायिनी । कुर्वन्नज्ञानतो मोहाद्दुःखभाग्व्याधिभाग्भवेत् । तिथौ रिक्ते दरिद्रत्वं दर्शे गर्भनिपातनम् । कुयोगे धनधान्यादिनाशः पातश्च मृत्युदः । वैधृतौ सर्वनाशाय नक्षत्रैक्ये तथैव च । आयुर्विहीने गेहे तु दुर्भगत्वं प्रजायते । नाडीवेधो न शुभदस्तारा रोगभयप्रदा । गणवैरे पुत्रहानिर्धनहानिस्तथैव च । योनौ कलिर्महादुःखं यमांशे मरणं ध्रुवम् । नक्षत्रैक्ये स्वामिमृत्युर्वैरे वंशविनाशनम् । पापवारे दरिद्रत्वं शिशूनां मरणं तथा । केचिच्छनिं प्रशंसन्ति चौरभीतिस्तु जायते" । आयादिकचिन्ताया मर्यादां दिग्भेदेन स्वद्रूभेदनियोगमाह विश्वकर्मा "एकादशकराद्दूर्ध्वं यावद्द्वात्रिंशहस्तकम् । तावदायादिकं चिन्त्यं तदूर्ध्वं नैव चिन्तयेत् । आय-

व्ययौ मासशुद्धिं नीर्वे चिन्तयेद्गृहे । शिलान्यासं प्रकुर्वीत मध्ये तस्य विधानतः । ऐशान्यां देवतागेहं पूर्वस्यां स्नानमन्दिरम् । आग्नेयां पाकसदनं शयनं दक्षिणे न्यसेत् । शस्त्रगेहं च नैरृत्यां पश्चिमे भोजनालयम् । वायव्यां धान्यसदनं भाण्डारागारमुत्तरे । आग्नेयीपूर्वयोर्मध्ये दधिमन्थनमन्दिरम् । अग्निप्रेते शयोर्मध्ये आज्यगेहं प्रशस्यते । याम्यनैरृतयोर्मध्ये पुरीषत्यागमन्दिरम् । नैरृत्यम्बुपयोर्मध्ये विद्याभ्यासस्य मन्दिरम् । पश्चिमानिलयोर्मध्ये रोदनार्थं गृहं स्मृतम् । वायव्योत्तरयोर्मध्ये रतिगेहं प्रशस्यते । उत्तरेशानयोर्मध्ये औषधार्थं च कारयेत् । ईशानपूर्वयोर्मध्ये शेषं सर्वगृहं स्मृतम् । नैरृत्यां सूतिकागेहं नृपाणां गेहमिष्यते । आसन्नप्रसवे मासि कुर्याच्चैव विशेषतः । तद्वत् प्रसवकाले स्यादिति शास्त्रेषु निश्चितम् । मासे तु नवमे प्राप्ते पूर्वपक्षे शुभे दिने । प्रसूति सम्भवे काले गृहारम्भणमिष्यते” ।

अलिन्दभेदेन गृहनामभेदान् तत्फलमलिन्दशब्दार्थञ्चाह तत्रैव “गुरोरधो लघुः स्थाप्यः पुरस्तादूर्द्ध्वगं न्यसेत् । गुरुभिः पश्चिमे पूर्वं सर्वलघ्ववधिर्विधिः । स्यादलिन्दं लघुस्थाने नालिन्दं गुरुमाश्रितम् । प्रदक्षिणैर्गृहद्वारादलिन्दैर्दशषड्विधैः १६ । ध्रुवसंज्ञं१ गृहं त्वाद्यं धनधान्यसुखप्रदम् । धन्यं२ धान्यप्रदं नृणां जयं३स्याद्विजयप्रदम् । मन्दं४ स्त्रीहानिदं नूनं खरं५ सम्पद्विनाशनम् । पुत्रपौत्रप्रदं कान्तं६ श्रीदं स्यान्मनोरमम्७ । सुवक्त्रं८ भोगदं नूनं दुर्मुखं९ विमुखप्रदम् । सर्वदुःखप्रदं क्रूरं१० विपक्षं११ शत्रुभीतिदम् । धनदं१२ धनदं गेहं क्षयं१३ सर्वक्षयावहम् । आक्रन्दं१४ शोकजननं विपुलं श्रीयशःप्रदम् । विपुलं१५ नामसदृशं धनदं विजयाभिधम्१६ । प्रदक्षिणं यदग्रस्थादलिन्दं विद्यालघुस्थानसमाश्रितं च । गृहस्य पूर्वादिगतैरलिन्दैरेवं भवेयुर्दश षट् कभेदाः १६ । भवेत् पुनः शुभालिन्दयुतं कापालसंज्ञकम् । विस्तारात् द्विगुणं गेहं गृहस्वामिविनाशनम् । त्रिरर्थकं तद्गृहं स्यात् भयं वा राजसम्भवम् । केचिदलिन्दं द्वारं तु प्रवदन्ति मनीषिणः । केचिदलिन्दं शालाञ्च केचिच्चालिन्दकं च तत् । गृहाद्बहिश्च ये कोणा गृहस्यान्तर्गताश्च ये । तेषां कोणोत्थितं तिर्य्यग्गेहं चालिन्दसंज्ञकम् । स्तम्भहीनं गृहाद्बाह्यान्निर्गतं कोणनिर्मितम् । मध्यादूर्द्ध्वं तत्र गेहं शालालिन्दसंज्ञकम् । यत्रालिन्दं च तत्रैव द्वारमार्गः प्रशस्यते । अलिन्दद्वारहीनं च गृहं कोटीसमं स्मृतम् । यत्रालिन्दं तत्र शाला तत्र द्वारं च शोभनम् । शालालिन्दद्वारहीनं न गृहं कारयेद्बुधः” अयमर्थः । “प्रस्तारे तु लघुं न्यस्य प्रथमस्य गुरोरधः । यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् । ऊने दद्याद्गुरूनेव यावत् सर्वलघुर्भवेत्” इ०र०उक्तरीत्या चतुर्द्वारकूपचतुर्गुरुप्रकल्पनेन प्रस्तारे लघुं द्वारं प्रकल्प्य षोडश भेदाः स्वरूपतो दर्श्यन्ते यथा

१ | ऽऽऽऽ ऊर्द्ध्वसुखम् ध्रुवं शुभदम् ।
२ | ।ऽऽऽ प्राङ्मुखं धान्यं शुभम् ।
३ | ऽ।ऽऽ दक्षिणद्वारम् जयं शुभदम् ।
४ | ।।ऽऽ प्राग्दक्षिणद्वारम् मन्दमशुभदम् ।
५ | ऽऽ।ऽ पश्चिमद्वारं खरमशुभदम् ।
६ | ।ऽ।ऽ प्राक्पश्चिममुखम् कान्तं शुभदम् ।
७ | ऽ।।ऽ दक्षिणपश्चिमास्यम् मनोरमं शुभदम् ।
८ | ।।।ऽ प्राग्दक्षिणपश्चिमास्यं सुमुखं शुभदम् ।
९ | ऽऽऽ। उत्तरास्यम्—दुर्मुखमशुभदम् ।
१० | ।ऽऽ। पूर्वोत्तरद्वारम्—उग्रमशुभदम् ।
११ | ऽ।ऽ। दक्षिणोत्तरास्यम् विपक्षमशुभदम् ।
१२ | ।।ऽ। प्राग्दक्षिणादिगास्यम् धनदं शुभदम् ।
१३ | ।ऽ।। पश्चिमोत्तरास्यम् क्षयमशुभदम् ।
१४ | ।ऽ।। पूर्वपश्चिमोत्तरास्यम् आक्रन्दमशुभदम् ।
१५ | ऽ।।। दक्षिणपश्चिमोत्तरद्वारम् विपुलं शुभदम् ।
१६ | ।।।। चतुर्दिग्द्वारम् विजयं सर्वत्र शुभदम् ।

दिग्भेदेनैकशालादिनिर्माणप्रकारं तत्राह

“यद्वास्तुनि च विस्तारः सैवोच्छ्रायः शुभः स्मृतः । एकशालो गृहः कार्य्यो विस्ताराद्द्विगुणोच्छ्रयः । चतुःशालगृहस्यैवमुच्छ्रायो व्याससंमितः । विस्ताराद्द्विगुणं दैर्घ्यमेकशालेषु शस्यते । विस्तीर्णं यद्भवेद्गेहं तदूर्द्ध्वं त्वेकशालके । द्विशाले द्विगुणं प्रोक्तं त्रिशाले त्रिगुणं तथा । चतुःशाले पञ्चगुणं तदूर्द्ध्वं नैव कारयेत् । शिखा चैव त्रिभागे तु गृहं चोत्तमसंज्ञकम् । एकं नागेन्द्रसंयुक्तौ द्वे च दक्षिणपश्चिमे । त्रिशालं पूर्वतोहीनं कार्य्यं वा सौख्यवर्जितम् । ऊर्द्ध्वभागत्रयं त्यक्त्वा अधोभागद्वयं तथा । मध्ये नाभिं विजानीयादिति प्राह पराशरः । पूर्वादिषु चतुर्दिक्षु वाममेकादयो ध्रुवाः । विस्तारस्याथ दैर्घ्यस्य तथैवैकैकसंयुताः । वामं वामादिकोणेषु ध्रुवं

विस्तारदैर्घ्ययोः। एकाद्याः स्वेच्छया सर्वे कार्या वेदसमन्विताः। अनेनैव प्रकारेण क्रियमाणे च वास्तुनि। आयव्ययादिसंशुद्धिं न चिन्तयति पूर्वतः” अस्यार्थः यदि वास्तुनि एकमेव गृहं क्रियते तदा नागेन्द्रसंशुद्धग्रासौम्यवर्जितं उत्तरशालाहीनं गृहं कार्यं यदि द्विशालकं गृहं क्रियते तदा दक्षिणपश्चिमे शाले कार्ये त्रिशाले पूर्वतोहीनं कार्यम् उत्तरशालयां वा हीनं कार्यम्। शालाविभागस्तु अनेनैव विधानेन कार्यः पूर्वतः अर्द्धभागत्रयं त्यक्त्वा पश्चिमे भागद्वयं त्यक्त्वा यो मध्यगतो भागः स नाभिः तत्र शाला न विधेया अनेनैव प्रकारेण पूर्वादिदिक्षु शालकयो विस्तारस्य दैर्घ्यस्य एकैकभागं संयोज्य वातादिकोणेषु उत्तरशाला हीनत्वाच्च देयं सर्वे एकाद्याश्चतुःशालान्ता वेदसमन्विताः कार्याः अनेनैव प्रकारेण शालायुते गृहवास्तुनि आयव्ययादिशुद्धिर्न चिन्तनीया। एकशाले आयव्ययादिविचारः कर्त्तव्यः द्विशालादिगृहे आयव्ययादिशुद्धिर्न विचारणीया यतः निर्गमालिन्दनिर्यूहादीनि यानि चतुर्दिशं वेश्मनां तानि न ग्राह्याणि इति। वर्णभेदेनैकशालादिविशेषभेदादिकमाह तत्रैव “ब्राह्मणानां चतुःशालं क्षत्रियाणां त्रिशालकम्। द्विशालकं च वैश्यानां शूद्राणामेकशालकम्। सर्वेषामेव वर्णानामेकशालं प्रशस्यते। एकशालं द्विशालं वा त्रिशालं तुर्यशालकम्। यथालिन्दगृहं कुर्यात्ता हक्शाला प्रशस्यते। शालाभेदो न कर्त्तव्यो न कुर्यात्तु क्रमनिम्नकम्। समां शालां ततः कुर्यात्सम प्राकारमेव च। कुलीरो वृश्चिको मीन उत्तरद्वारसंस्थिताः। मेषसिंहधनुर्द्धारी पूर्वद्वारेषु संस्थिताः। वृषभो मकरः कन्या याम्यद्वारसमाश्रिताः। मिथुनं तुलकुम्भौ च पश्चिमद्वारमाश्रिताः। ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव यथाक्रमम्। यदीशा राशयः प्रोक्तास्तेषां तु शाला प्रवर्त्तते। अथ पूर्वविभागे तु ब्राह्मणा उत्तरे नृपाः। वैश्याश्च दक्षिणे भागे पश्चिमे शूद्रकास्तथा। आग्नेयादिक्रमेणैवापभ्रंशावर्णसङ्कराः। जातिभ्रष्टाश्च चौराश्च विदिक्स्थाः शोभनाः स्मृताः। ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः ग्रामादिषु स्मृताः”। नृपादीनां गृहमानभेदमाह तत्रैव। “अष्टोत्तरं हस्तशतं विस्तारे नृपमन्दिरम्। कार्यं प्रधानमन्यानि तथाष्टाष्टोनितानि तु। विस्तारपादसंयुक्तं तेषां दैर्घ्यं प्रकल्पयेत्। एवं नृपाणां पञ्चैव गृहाणि शुभदानि च। सेनानीनां च पञ्चैव गृहाणि शुभदानि च। षड्भिः षड्भिर्विहीनानि चतुःषष्टिमितानि च। पञ्चैव, तस्य विस्तारे दैर्घ्यं षड्भागसंयुतम्। षष्टिश्चतुर्विहीनानि वेश्मानि सचिवस्य च। पञ्चस्वष्टांशसंयुक्तं दैर्घ्यं तस्याष्टमेव च। नृपाणां महिषीणाञ्च प्रशस्तं पञ्च चैव हि। षड्भिः षड्भिश्च वर्ज्यानि अशीत्याश्च तथैव च। त्रिंशद्युतञ्च दैर्घ्यं च युवराजगृहाणि च। पञ्च अर्द्धं च तस्यैव भ्रातृणां प्रभवन्ति हि। नृपमन्त्रिगृहाणाञ्च अन्तरे यत्प्रमाणकम्। सामन्तराजमुख्यानां प्रवराणां गृहं स्मृतम्। नृपाणां युवराजस्य गृहाणामन्तरेण यत्। तत् गृहं कञ्चुकीवेश्म कलाज्ञानां तथैव च। युवराजमन्त्रिगृहान्तरं यद्भवेदिह। अध्यक्षाणां तु तद्गेहं तत्संकुशलाय मेवं अध्यक्षाधिकृतानां च रतिकोशप्रमाणकम्। चत्वारिंशच्चतुर्हीना पञ्च गेहा भवन्ति हि। षड्भागसंयुतं दैर्घ्यं दैवज्ञभिषजां तथा। पुरोहितानां शुभ[illegible] कथयाम्यतः। हस्तात् द्वात्रिंशता युक्तं विस्तारश्च द्विजालयम्। विस्तारं षडंशं तु दैर्घ्यं तस्य प्रकल्पयेत्। त्रयाणां चत्रियादीनामालयं पूर्वचोदितम्। नृपसेनापतिगेहस्यान्तरं यद्भवेदिह। तत्कोशगेहं भवति रतिगेहं तथैव च। सेना[illegible]पतेर्गेहस्यान्तरं यत्प्रमाणकम्। चातुर्वर्ण्यस्य यद्गेहं [illegible] पूज्यमस्मातम्। अथ पारशवादीनां मातापित्रोर्यदन्तरम्। ब्राह्मणस्य च यन्मानं शूद्रेण यह तद्भवेत्। शतहस्तोच्छ्रितं कार्यं चतुःशालं गृहं भवेत्। प्रमितन्त्वेकशालन्तु शुभदं तत्प्रकीर्त्तितम्। सेनापतिनृपादीनां सप्तत्या सहिते कृते। व्यासे चतुर्दश हृते शालामानं विनिर्दिशेत्। पञ्चत्रिंशद्धृतेऽस्यालिन्दमानं भवेच्च तत्। शाला त्रिभागतुल्या च कर्त्तव्या वीथिकाबहिः। भवनात् पूर्वं सोष्णीषं पश्चात्साश्रयं भवेत्। सावष्टम्भं पार्श्वयोस्तु सर्वतः सुस्थिरं भवेत्। विस्तारषोडशांशस्तु चतुर्हस्तयुतोच्छ्रयः। तदन्तरस्योच्छ्रयं प्रमाणं प्रवदेद्बुधः। द्वादशभागेनोनं च समस्तानां प्रकल्पयेत्। यजन्ते राजसूयाद्यैः क्रतुभिर्येऽवनीश्वराः। नलैरष्टशतैस्तेषां कारयेद्भवनोत्तमम्। तथा च सप्तभिरेव विप्राणां कारयेद्गृहम्। सार्द्धषड्भिः क्षत्रियाणां वैश्यानां सार्द्धपञ्चभिः। त्रिभिः सार्द्धैश्च शूद्राणां भवनं शुभदं स्मृतम्। स्वगृहाणां विभागेन प्रमाणमिह वर्ण्यते।